# महाभारत

## आदिपर्व

श्रीगणेशाय नमः

अथ प्रथमोऽध्यायः

ॐ नारायणं नमस्कृत्य नरं चैव नरोत्तमम्
देवीं सरस्वतीं चैव ततो जयमुदीरयेत्
लोमहर्षणपुत्र उग्रश्रवाः सूतः पौराणिको
नैमिषारण्ये शौनकस्य कुलपतेर्द्वादशवार्षिके सत्रे १
समासीनानभ्यगच्छद्ब्रह्मर्षीन् संशितव्रतान्
विनयावनतो भूत्वा कदाचित् सूतनन्दनः २
तमाश्रममनुप्राप्तं नैमिषारण्यवासिनः
चित्राः श्रोतुं कथास्तत्र परिवव्रुस्तपस्विनः ३
अभिवाद्य मुनींस्तांस्तु सर्वानेव कृताञ्जलि
अपृच्छत्स तपोवृद्धिं सद्भिश्चैवाभिनन्दितः ४
अथ तेषूपविष्टेषु सर्वेष्वेव तपस्विषु
निर्दिष्टमासनं भेजे विनयाल्लोमहर्षणिः ५
सुखासीनं ततस्तंतु विश्रान्तमुपलक्ष्य च
अथापृच्छदृषिस्तत्र कश्चित्प्रस्तावयन्कथाः ६
कुत आगम्यते सौते क्व चायं विहृतस्त्वया
कालः कमलपत्राक्ष शंसैतत्पृच्छतो मम ७
सूत उवाच
जनमेजयस्य राजर्षेः सर्पसत्रे महात्मनः
समीपे पार्थिवेन्द्रस्य सम्यक्पारिक्षितस्य च ८
कृष्णद्वैपायनप्रोक्ताः सुपुण्या विविधाः कथाः
कथिताश्चापि विधिवद्या वैशंपायनेन वै ९
श्रुत्वाहं ता विचित्रार्था महाभारतसंश्रिताः
बहूनि संपरिक्रम्य तीर्थान्यायतनानि च १०
समन्तपञ्चकं नाम पुण्यं द्विजनिषेवितम्
गतवानस्मि तं देशं युद्धं यत्राभवत्पुरा

पाण्डवानां कुरूणां च सर्वेषां च महीक्षिताम् ११
दिदृक्षुरागतस्तस्मात्समीपं भवतामिह
आयुष्मन्तः सर्व एव ब्रह्मभूता हि मे मताः १२
अस्मिन्यज्ञे महाभागाः सूर्यपावकवर्चस
कृताभिषेकाः शुचयः कृतजप्या हुताग्नयः
भवन्त आसते स्वस्था ब्रवीमि किमहं द्विजाः १३
पुराणसंश्रिताः पुण्याः कथा वा धर्मसंश्रिताः
इतिवृत्तं नरेन्द्राणामृषीणां च महात्मनाम् १४
ऋषय ऊचुः
द्वैपायनेन यत्प्रोक्तं पुराणं परमर्षिणा
सुरैर्ब्रह्मर्षिभिश्चैव श्रुत्वा यदभिपूजितम् १५
तस्याख्यानवरिष्ठस्य विचित्रपदपर्वणः
सूक्ष्मार्थन्याययुक्तस्य वेदार्थैर्भूषितस्य च १६
भारतस्येतिहासस्य पुण्यां ग्रन्थार्थसंयुताम्
संस्कारोपगतां ब्राह्मीं नानाशास्त्रोपबृंहिताम् १७
जनमेजयस्य यां राज्ञो वैशंपायन उक्तवान्
यथावत्स ऋषिस्तुष्ट्या सत्रे द्वैपायनाज्ञया १८
वेदैश्चतुर्भिः समितां व्यासस्याद्भुतकर्मणः
संहितां श्रोतुमिच्छामो धर्म्यां पापभयापहाम् १९
सूत उवाच
आद्यं पुरुषमीशानं पुरुहूतं पुरुष्टुतम्
ऋतमेकाक्षरं ब्रह्म व्यक्ताव्यक्तं सनातनम् २०
असच्च सच्चैव च यद्विश्वं सदसतः परम्
परावराणां स्रष्टारं पुराणं परमव्ययम् २१
मङ्गल्यं मङ्गलं विष्णुं वरेण्यमनघं शुचिम्
नमस्कृत्य हृषीकेशं चराचरगुरुं हरिम् २२
महर्षेः पूजितस्येह सर्वलोके महात्मनः
प्रवक्ष्यामि मतं कृत्स्नं व्यासस्यामिततेजसः २३
आचख्युः कवयः केचित्संप्रत्याचक्षते परे
आख्यास्यन्ति तथैवान्ये इतिहासमिमं भुवि २४

इदं तु त्रिषु लोकेषु महज्ज्ञानं प्रतिष्ठितम्
विस्तरैश्च समासैश्च धार्यते यद्द्विजातिभिः २५
अलंकृतं शुभैः शब्दैः समयैर्दिव्यमानुषैः
छन्दोवृत्तैश्च विविधैरन्वितं विदुषां प्रियम् २६
निष्प्रभेऽस्मिन्निरालोके सर्वतस्तमसावृते
बृहदण्डमभूदेकं प्रजानां बीजमक्षयम् २७
युगस्यादौ निमित्तं तन्महद्दिव्यं प्रचक्षते
यस्मिंस्तच्छ्रूयते सत्य ज्योतिर्ब्रह्म सनातनम् २८
अद्भुतं चाप्यचिन्त्यं च सर्वत्र समतां गतम्
अव्यक्तं कारणं सूक्ष्मं यत्तत्सदसदात्मकम् २९
यस्मात्पितामहो जज्ञे प्रभुरेकः प्रजापतिः
ब्रह्मा सुरगुरुः स्थाणुर्मनुः कः परमेष्ठ्यथ ३०
प्राचेतसस्तथा दक्षो दक्षपुत्राश्च सप्त ये
ततः प्रजानां पतयः प्राभवन्नेकविंशतिः ३१
पुरुषश्चाप्रमेयात्मा यं सर्वमृषयो विदुः
विश्वेदेवास्तथादित्या वसवोऽथाश्विनावपि ३२
यक्षाः साध्याः पिशाचाश्च गुह्यकाः पितरस्तथा
ततः प्रसूता विद्वांसः शिष्टा ब्रह्मर्षयोऽमलाः ३३
राजर्षयश्च बहवः सर्वैः समुदिता गुणैः
आपो द्यौः पृथिवी वायुरन्तरिक्षं दिशस्तथा ३४
संवत्सरर्तवो मासाः पक्षाहोरात्रयः क्रमात्
यच्चान्यदपि तत्सर्वं संभूतं लोकसाक्षिकम् ३५
यदिदं दृश्यते किंचिद्भूतं स्थावरजंगमम्
पुनः संक्षिप्यते सर्वं जगत्प्राप्ते युगक्षये ३६
यथर्तावृतुलिगानि नानारूपाणि पर्यये
दृश्यन्ते तानि तान्येव तथा भावा युगादिषु ३७
एवमेतदनाद्यन्तं भूतसंहारकारकम्
अनादिनिधनं लोके चक्रं संपरिवर्तते ३८
त्रयस्त्रिंशत्सहस्राणि त्रयस्त्रिंशच्छतानि च
त्रयस्त्रिंशच्च देवानां सृष्टिः संक्षेपलक्षणा ३९

दिवस्पुत्रो बृहद्भानुश्चक्षुरात्मा विभावसुः
सविता स ऋचीकोऽर्को भानुराशावहो रविः ४०
पुत्रा विवस्वतः सर्वे मह्यस्तेषां तथावरः
देवभ्राट् तनयस्तस्य तस्मात्सुभ्राडिति स्मृतः ४१
सुभ्राजस्तु त्रयः पुत्राः प्रजावन्तो बहुश्रुताः
दशज्योतिः शतज्योतिः सहस्रज्योतिरात्मवान् ४२
दश पुत्रसहस्राणि दशज्योतेर्महात्मनः
ततो दशगुणाश्चान्ये शतज्योतेरिहात्मजाः ४३
भूयस्ततो दशगुणाः सहस्रज्योतिषः सुताः
तेभ्योऽय कुरुवंशश्च यदूनां भरतस्य च ४४
ययातीक्ष्वाकुवंशश्च राजर्षीणां च सर्वशः
संभूता बहवो वंशा भूतसर्गाः सविस्तराः ४५
भूतस्थानानि सर्वाणि रहस्यं विविधं च यत्
वेदयोगं सविज्ञानं धर्मोऽथ काम एव च ४६
धर्मकामार्थशास्त्राणि शास्त्राणि विविधानि च
लोकयात्राविधानं च संभूतं दृष्टवानृषिः ४७
इतिहासाः सवैयाख्या विविधाः श्रुतयोऽपि च
इह सर्वमनुक्रान्तमुक्तं ग्रन्थस्य लक्षणम् ४८
विस्तीर्यैतन्महज्ज्ञानमृषिः संक्षेपमब्रवीत्
इष्टं हि विदुषां लोके समासव्यासधारणम् ४९
मन्वादि भारतं केचिदास्तीकादि तथापरे
तथोपरिचराद्यन्ये विप्राः सम्यगधीयते ५०
विविधं संहिताज्ञानं दीपयन्ति मनीषिणः
व्याख्यातुं कुशलाः केचिद्ग्रन्थं धारयितुं परे ५१
तपसा ब्रह्मचर्येण व्यस्य वेदं सनातनम्
इतिहासमिमं चक्रे पुण्यं सत्यवतीसुतः ५२
पराशरात्मजो विद्वान्ब्रह्मर्षिः संशितव्रतः
मातुर्नियोगाद्धर्मात्मा गांगेयस्य च धीमतः ५३
क्षेत्रे विचित्रवीर्यस्य कृष्णद्वैपायनः पुरा
त्रीनग्नीनिव कौरव्याञ्जनयामास वीर्यवान् ५४

उत्पाद्य धृतराष्ट्रं च पाण्डुं विदुरमेव च
जगाम तपसे धीमान्पुनरेवाश्रमं प्रति ५५
तेषु जातेषु वृद्धेषु गतेषु परमां गतिम्
अब्रवीद्भारतं लोके मानुषेऽस्मिन्महानृषिः ५६
जनमेजयेन पृष्टः सन्ब्राह्मणैश्च सहस्रशः
शशास शिष्यमासीनं वैशम्पायनमन्तिके ५७
स सदस्यैः सहासीनः श्रावयामास भारतम्
कर्मान्तरेषु यज्ञस्य चोद्यमानः पुनः पुनः ५८
विस्तरं कुरुवंशस्य गान्धार्या धर्मशीलताम्
क्षत्तुः प्रज्ञां धृतिं कुन्त्याः सम्यग्द्वैपायनोऽब्रवीत् ५९
वासुदेवस्य माहात्म्यं पाण्डवानां च सत्यताम्
दुर्वृत्तं धार्तराष्ट्राणामुक्तवान्भगवानृषिः ६०
चतुर्विंशतिसाहस्रीं चक्रे भारतसंहिताम्
उपाख्यानैर्विना तावद्भारतं प्रोच्यते बुधैः ६१
ततोऽध्यर्ध शतं भूयः संक्षेपंकृतवानृषिः
अनुक्रमणिमध्यायं वृत्तान्तानां सपर्वणाम् ६२
इदं द्वैपायनः पूर्वं पुत्रमध्यापयच्छुकम्
ततोऽन्येभ्योऽनुरूपेभ्यः शिष्येभ्यः प्रददौ प्रभुः ६३
नारदोऽश्रावयद्देवानसितो देवलः पितॄन्
गन्धर्वयक्षरक्षांसि श्रावयामास वै शुकः ६४
दुर्योधनो मन्युमयो महाद्रुमः स्कन्धः कर्णः शकुनिस्तस्य शाखाः
दुःशासनः पुष्पफले समृद्धे मूलं राजा धृतराष्ट्रोऽमनीषी ६५
युधिष्ठिरो धर्ममयो महाद्रुमः स्कन्धोऽर्जुनो भीमसेनोऽस्य शाखाः
माद्रीसुतौ पुष्पफले समृद्धे मूलं कृष्णो ब्रह्म च ब्राह्मणाश्च ६६
पाण्डुर्जित्वा बहून् देशान् युधा विक्रमणेन च
अरण्ये मृगयाशीलो न्यवसत्सजनस्तदा ६७
मृगव्यवायनिधने कृच्छ्रां प्राप स आपदम्
जन्मप्रभृति पार्थानां तत्राचारविधिक्रमः ६८
मात्रोरभ्युपपत्तिश्च धर्मोपनिषदं प्रति
धर्मस्य वायोः शक्रस्य देवयोश्च तथाश्विनोः ६९

तापसैः सह संवृद्धा मातृभ्यां परिरक्षिताः
मेध्यारण्येषु पुण्येषु महतामाश्रमेषु च ७०
ऋषिभिश्च तदानीता धार्तराष्ट्रान् प्रति स्वयम्
शिशवश्चाभिरूपाश्च जटिला ब्रह्मचारिणः ७१
पुत्राश्च भ्रातरश्चेमे शिष्याश्च सुहृदश्च वः
पाण्डवा एत इत्युक्त्वा मुनयोऽन्तर्हितास्ततः ७२
तांस्तैर्निवेदितान्दृष्ट्वा पाण्डवान् कौरवास्तदा
शिष्टाश्च वर्णाः पौरा ये ते हर्षाच्चुक्रुशुर्भृशम् ७३
आहुः केचिन्न तस्यैते तस्यैत इति चापरे
यदा चिरमृतः पाण्डुः कथं तस्येति चापरे ७४
स्वागतं सर्वथा दिष्ट्या पाण्डोः पश्याम संततिम्
उच्यतां स्वागतमिति वाचोऽश्रूयन्त सर्वशः ७५
तस्मिन्नुपरते शब्दे दिशः सर्वा विनादयन्
अन्तर्हितानां भूतानां निस्वनस्तुमुलोऽभवत् ७६
पुष्पवृष्टिः शुभा गन्धाः शङ्खदुन्दुभिनिःस्वनाः
आसन् प्रवेशे पार्थानां तदद्भुतमिवाभवत् ७७
तत्प्रीत्या चैव सर्वेषां पौराणां हर्षसंभवः
शब्द आसीन्महांस्तत्र दिवस्पृक्कीर्तिवर्धनः ७८
तेऽप्यधीत्याखिलान्वेदाञ्शास्त्राणि विविधानि च
न्यवसन्पाण्डवास्तत्र पूजिता अकुतोभयाः ७९
युधिष्ठिरस्य शौचेन प्रीताः प्रकृतयोऽभवन्
धृत्या च भीमसेनस्य विक्रमेणार्जुनस्य च ८०
गुरुशुश्रूषया कुन्त्या यमयोर्विनयेन च
तुतोष लोकः सकलस्तेषां शौर्यगुणेन च ८१
समवाये ततो राज्ञां कन्यां भर्तृस्वयंवराम्
प्राप्तवानर्जुनः कृष्णां कृत्वा कर्म सुदुष्करम् ८२
ततः प्रभृति लोकेऽस्मिन्पूज्यः सर्वधनुष्मताम्
आदित्य इव दुष्प्रेक्ष्यः समरेष्वपि चाभवत् ८३
स सर्वान्पार्थिवाञ्जित्वा सर्वांश्च महतो गणान्
आजहारार्जुनो राज्ञे राजसूयं महाक्रतुम् ८४

अन्नवान्दक्षिणावांश्च सर्वैः समुदितो गुणैः
युधिष्ठिरेण संप्राप्तो राजसूयो महाक्रतुः ८५
सुनयाद्वासुदेवस्य भीमार्जुनबलेन च
घातयित्वा जरासंधं चैद्यं च बलगर्वितम् ८६
दुर्योधनं समागच्छन्नर्हणानि ततस्ततः
मणिकांचनरत्नानि गोहस्त्यश्वधनानि च ८७
समृद्धां तां तथा दृष्ट्वा पाण्डवानां तदा श्रियम्
ईर्ष्यासमुत्थः सुमहांस्तस्य मन्युरजायत ८८
विमानप्रतिमां चापि स येन सुकृतां सभाम्
पाण्डवानामुपहृतां स दृष्ट्वा पर्यतप्यत ८९
तत्रावहसितश्चासीत् प्रस्कन्दन्निव संभ्रमात्
प्रत्यक्षं वासुदेवस्य भीमेनानभिजातवत् ९०
स भोगान्विविधान्भुञ्जन्रत्नानि विविधानि च
कथितो धृतराष्ट्रस्य विवर्णो हरिणः कृशः ९१
अन्वजानात्ततो द्यूतं धृतराष्ट्रः सुतप्रियः
तच्छ्रुत्वा वासुदेवस्य कोपः समभवन्महान् ९२
नातिप्रीतमनाश्चासीद्विवादांश्चान्वमोदत
द्यूतादीननयान्घोरान्प्रवृद्धांश्चाप्युपैक्षत ९३
निरस्य विदुरं द्रोणं भीष्मं शारद्वतं कृपम्
विग्रहे तुमुले तस्मिन्नहन्क्षत्रं परस्परम् ९४
जयत्सु पाण्डुपुत्रेषु श्रुत्वा सुमहदप्रियम्
दुर्योधनमतं ज्ञात्वा कर्णस्य शकुनेस्तदा
धृतराष्ट्रश्चिरं ध्यात्वा संजयं वाक्यमब्रवीत् ९५
शृणु संजय मे सर्वं न मेऽसूयितुमर्हसि
श्रुतवानसि मेधावी बुद्धिमान्प्राज्ञसम्मतः ९६
न विग्रहे मम मतिर्न च प्रीये कुरुक्षये
न मे विशेषः पुत्रेषु स्वेषु पाण्डुसुतेषु च ९७
वृद्धं मामभ्यसूयन्ति पुत्रा मन्युपरायणाः
अहं त्वचक्षुः कार्पण्यात् पुत्रप्रीत्या सहामि तत्
मुह्यन्तं चानुमुह्यामि दुर्योधनमचेतनम् ९८

राजसूये श्रियं दृष्ट्वा पाण्डवस्य महौजसः
तच्चावहसनं प्राप्य सभारोहणदर्शने ९९
अमर्षितः स्वयं जेतुमशक्तः पाण्डवान्रणे
निरुत्साहश्च सम्प्राप्तुं श्रियमक्षत्रियो यथा
गान्धारराजसहितश्छद्मद्यूतममन्त्रयत् १००
तत्र यद्यद्यथा ज्ञातं मया संजय तच्छृणु
श्रुत्वा हि मम वाक्यानि बुद्ध्या युक्तानि तत्त्वतः
ततो ज्ञास्यसि मां सौते प्रज्ञाचक्षुषमित्युत १०१
यदाश्रौषं धनुरायम्य चित्रं विद्धं लक्ष्यं पातितं वै पृथिव्याम्
कृष्णां हृतां पश्यतां सर्वराज्ञां तदा नाशंसे विजयाय संजय १०२
यदाश्रौषं द्वारकायां सुभद्रां प्रसह्योढां माधवीमर्जुनेन
इन्द्रप्रस्थं वृष्णिवीरौ च यातौ तदा नाशंसे विजयाय संजय १०३
यदाश्रौषं देवराजं प्रवृष्टं शरैर्दिव्यैर्वारितं चार्जुनेन
अग्निं तथातर्पितं खाण्डवे च तदा नाशंसे विजयाय संजय १०४
यदाश्रौषं हृतराज्यं युधिष्ठिरं पराजितं सौबलेनाक्षवत्याम्
अन्वागतं भ्रातृभिरप्रमेयैस्तदा नाशंसे विजयाय संजय १०५
यदाश्रौषं द्रौपदीमश्रुकण्ठीं सभां नीतां दुःखितामेकवस्त्राम्
रजस्वलां नाथवतीमनाथवत्तदा नाशंसे विजयाय संजय १०६
यदाश्रौषं विविधास्तात चेष्टा धर्मात्मनां प्रस्थितानां वनाय
ज्येष्ठप्रीत्या क्लिश्यतां पाण्डवानां तदा नाशंसे विजयाय संजय १०७
यदाश्रौषं स्नातकानां सहस्रैरन्वागतं धर्मराजं वनस्थम्
भिक्षाभुजां ब्राह्मणानां महात्मनां तदा नाशंसे विजयाय संजय १०८
यदाश्रौषमर्जुनो देवदेवं किरातरूपं त्र्यम्बकं तोष्य युद्धे
अवाप तत् पाशुपतं महास्त्रं तदा नाशंसे विजयाय संजय १०९
यदाश्रौषं त्रिदिवस्थं धनंजयं शक्रात्साक्षाद्दिव्यमस्त्रं यथावत्
अधीयानं शंसितं सत्यसंधं तदा नाशंसे विजयाय संजय ११०
यदाश्रौषं वैश्रवणेन सार्धं समागतं भीममन्यांश्च पार्थान्
तस्मिन्देशे मानुषाणामगम्ये तदा नाशंसे विजयाय संजय १११
यदाश्रौषं घोषयात्रागतानां बन्धं गन्धर्वैर्मोक्षणं चाऽजुनेन
स्वेषां सुतानां कर्णबुद्धौ रतानां तदा नाशंसे विजयाय संजय ११२

यदाश्रौषं यक्षरूपेण धर्मं समागतं धर्मराजेन सूत
प्रश्नानुक्तान्विब्रुवन्तं च सम्यक् तदा नाशंसे विजयाय संजय ११३
यदाश्रौषं मामकानां वरिष्ठान्धनंजयेनैकरथेन भग्नान्
विराटराष्ट्रे वसता महात्मना तदा नाशंसे विजयाय संजय ११४
यदाश्रौषं सत्कृतां मत्स्यराज्ञा सुतां दत्तामुत्तरामर्जुनाय
तां चार्जुनः प्रत्यगृह्णात्सुतार्थे तदा नाशंसे विजयाय संजय ११५
यदाश्रौषं निर्जितस्याधनस्य प्रव्राजितस्य स्वजनात्प्रच्युतस्य
अक्षौहिणीः सप्त युधिष्ठिरस्य तदा नाशंसे विजयाय संजय ११६
यदाश्रौषं नरनारायणौ तौ कृष्णार्जुनौ वदतो नारदस्य
अहं द्रष्टा ब्रह्मलोके सदेति तदा नाशंसे विजयाय संजय ११७
यदाश्रौषं माधवं वासुदेवं सर्वात्मना पाण्डवार्थे निविष्टम्
यस्येमां गां विक्रममेकमाहुस्तदा नाशंसे विजयाय संजय ११८
यदाश्रौषं कर्णदुर्योधनाभ्यां बुद्धिं कृतां निग्रहे केशवस्य
तं चात्मानं बहुधा दर्शयानं तदा नाशंसे विजयाय संजय ११९
यदाश्रौषं वासुदेवे प्रयाते रथस्यैकामग्रतस्तिष्ठमानाम्
आर्तां पृथां सान्त्वितां केशवेन तदा नाशंसे विजयाय संजय १२०
यदाश्रौषं मंत्रिणं वासुदेवं तथा भीष्मं शान्तनवं च तेषाम्
भारद्वाजं चाशिषोऽनुब्रवाणं तदा नाशंसे विजयाय संजय १२१
यदाश्रौषं कर्ण उवाच भीष्मं नाहं योत्स्ये युध्यमाने त्वयीति
हित्वा सेनामपचक्राम चैव तदा नाशंसे विजयाय संजय १२२
यदाश्रौषं वासुदेवार्जुनौ तौ तथा धनुर्गाण्डिवमप्रमेयम्
त्रीण्युग्रवीर्याणि समागतानि तदा नाशंसे विजयाय संजय १२३
यदाश्रौषं कश्मलेनाभिपन्ने रथोपस्थे सीदमानेऽर्जुने वै
कृष्णं लोकान्दर्शयानं शरीरे तदा नाशंसे विजयाय संजय १२४
यदाश्रौषं भीष्ममभित्रकर्शनं निघ्नन्तमाजावयुतं रथानाम्
नैषां कश्चिद्वध्यते दृश्यरूपस्तदा नाशंसे विजयाय संजय १२५
यदाश्रौषं भीष्ममत्यंतशूरं हतं पार्थेनाहवेष्वप्रधृष्यम्
शिखण्डिनं पुरतः स्थापयित्वा तदा नाशंसे विजयाय संजय १२६
यदाश्रौषं शरतल्पे शयानं वृद्धं वीरं सादितंचित्रपुङ्खैः
भीष्मं कृत्वा सोमकानल्पशेषांस्तदा नाशंसे विजयाय संजय १२७

यदाश्रौषं शान्तनवे शयाने पानीयार्थे चोदितेनार्जुनेन
भूमिं भित्त्वा तर्पितं तत्र भीष्मं तदा नाशंसे विजयाय संजय १२८
यदाश्रौषं शुक्रसूर्यौ च युक्तौ कौन्तेयानामनुलोमौ जयाय
नित्यं चास्माञ्श्वापदा व्याभषन्तस्तदा नाशंसे विजयाय संजय १२९
यदा द्रोणो विविधानस्त्रमार्गाविदर्शयन् समरे चित्रयोधी
न पाण्डवाञ्छ्रेष्ठतमान्निहन्ति तदा नाशंसे विजयाय संजय १३०
यदाश्रौषं चास्मदीयान्महारथान्व्यवस्थितानर्जुनस्यान्तकाय
संशप्तकान्निहतानर्जुनेन तदा नाशंसे विजयाय संजय १३१
यदाश्रौषं व्यूहमभेद्यमन्यैर्भारद्वाजेनात्तशस्त्रेण गुप्तम्
भित्त्वा सौभद्रं वीरमेकं प्रविष्टं तदा नाशंसे विजयाय संजय १३२
यदाभिमन्युं परिवार्य बालं सर्वे हत्वा हृष्टरूपा बभूवुः
महारथाः पार्थमशक्नुवन्त तदा नाशंसे विजयाय संजय १३३
यदाश्रौषमाभिमन्युं निहत्य हर्षान्मूढान् क्रोशतो धार्तराष्ट्रान्
क्रोधं मुक्तं सैंधवे चार्जुनेन तदा नाशंसे विजयाय संजय १३४
यदाश्रौषं सैन्धवार्थे प्रतिज्ञां प्रतिज्ञातां तद्वधायार्जुनेन
सत्यां निस्तीर्णां शत्रुमध्ये च तेन तदा नाशंसे विजयाय संजय १३५
यदाश्रौषं श्रान्तहये धनंजये मुक्त्वा हयान्पाययित्वोपवृत्तान्
पुनर्युक्त्वा वासुदेवं प्रयातं तदा नाशंसे विजयाय संजय १३६
यदाश्रौषं वाहनेष्वाश्वसत्सु रथोपस्थे तिष्ठता गाण्डिवेन
सर्वान्योधान्वारितानर्जुनेन तदा नाशंसे विजयाय संजय १३७
यदाश्रौषं नागबलैर्दुरुत्सहं द्रोणानीकं युयुधानं प्रमथ्य
यातं वार्ष्णेयं यत्र तौ कृष्णपार्थौ तदा नाशंसे विजयाय संजय १३८
यदाश्रौषं कर्णमासाद्य मुक्तं वधाद्भीमं कुत्सयित्वा वचोभिः
धनुष्कोट्या तुद्य कर्णेन वीरं तदा नाशंसे विजयाय संजय १३९
यदा द्रोणः कृतवर्मा कृपश्च कर्णो द्रौणिर्मद्रराजश्च शूरः
अमर्षयन्सैन्धवं वध्यमानं तदा नाशंसे विजयाय संजय १४०
यदाश्रौषं देवराजेन दत्तां दिव्यां शक्तिं व्यंसितां माधवेन
घटोत्कचे राक्षसे घोररूपे तदा नाशंसे विजयाय संजय १४१
यदाश्रौषं कर्णघटोत्कचाभ्यां युद्धे मुक्तां सूतपुत्रेण शक्तिम्
यया वध्यः समरे सव्यसाची तदा नाशंसे विजयाय संजय १४२

यदाश्रौषं द्रोणमाचार्यमेकं धृष्टद्युम्नेनाभ्यतिक्रम्य धर्मम्
रथोपस्थे प्रायगतं विशस्तं तदा नाशंसे विजयाय संजय १४३
यदाश्रौषं द्रौणिना द्वैरथस्थं माद्रीसुतं नकुलं लोकमध्ये
समं युद्धे पाण्डवं युध्यमानं तदा नाशंसे विजयाय संजय १४४
यदा द्रोणे निहते द्रोणपुत्रो नारायणं दिव्यमस्त्रं विकुर्वन्
नैषामन्तं गतवान्पाण्डवानां तदा नाशंसे विजयाय संजय १४५
यदाश्रौषं कर्णमत्यंतशूरं हतं पार्थेनाहवेष्वप्रधृष्यम्
तस्मिन्भ्रातॄणां विग्रहे देवगुह्ये तदा नाशंसे विजयाय संजय १४६
यदाश्रौषं द्रोणपुत्रं कृपं च दुःशासनं कृतवर्माणमुग्रम्
युधिष्ठिरं शून्यमधर्षयन्तं तदा नाशंसे विजयाय संजय १४७
यदाश्रौषं निहतं मद्रराजं रणे शूरं धर्मराजेन सूत
सदा स्त्रंगामे स्पर्धते य स कृष्णं तदा नाशंसे विजयाय संजय १४८
यदाश्रौषं कलहद्यूतमूलं मायाबलं सौबलं पाण्डवेन
हतं संग्रामे सहदेवेन पापं तदा नाशंसे विजयाय संजय १४९
यदाश्रौषं श्रान्तमेकं शयानं ह्रदं गत्वा स्तम्भयित्वा तदम्भः
दुर्योधनं विरथं भग्नदर्पं तदा नाशंसे विजयाय संजय १५०
यदाश्रौषं पांडवांस्तिष्ठमानाग्नंगाह्रदे वासुदेवेन सार्धम्
अमर्षणं धर्षयतः सुतं मे तदा नाशंसे विजयाय संजय १५१
यदाश्रौषं विविधांस्तात मार्गान्गदायुद्धे मण्डलं संचरन्तम्
मिथ्या हतं वासुदेवस्य बुद्ध्या तदा नाशंसे विजयाय संजय १५२
यदाश्रौषं द्रोणपुत्रादिभिस्तैर्हतान्पांचालान्द्रौपदेयांश्च सुप्तान्
कृतं बीभत्समयशस्यं च कर्म तदा नाशंसे विजयाय संजय १५३
यदाश्रौषं भीमसेनानुयातेनाश्वत्थाम्ना परमास्त्रं प्रयुक्तम्
क्रुद्धेनैषीकमवधीद्येन गर्भं तदा नाशंसे विजयाय संजय १५४
यदाश्रौषं ब्रह्मशिरोऽजुनेन मुक्तं स्वस्तीत्यस्त्रमस्त्रेण शान्तम्
अश्वत्थाम्ना मणिरत्नं च दत्तं तदा नाशंसे विजयाय संजय १५५
यदाश्रौषं द्रोणपुत्रेण गर्भे वैराट्या वै पात्यमाने महास्त्रे
द्वैपायनः केशवो द्रोणपुत्रं परस्परेणाभिशापैः शशाप १५६
शोच्या गान्धारी पुत्रपौत्रैर्विहीना तथा वध्वः पितृभिर्भ्रातृभिश्च
कृतं कार्यं दुष्करं पाण्डवैयैः प्राप्तं राज्यमसपत्नं पुनस्तैः १५७

कष्टं युद्धे दश शेषाः श्रुता मे त्रयोऽस्माकं पाण्डवानां च सप्त
द्व्यूना विंशतिराहताक्षौहिणीनां तस्मिन्संग्रामे विग्रहे क्षत्रियाणाम् १५८
तमसा त्वभ्यवस्तीर्णो मोह आविशतीव माम्
संज्ञां नोपलभे सूत मनो विह्वलतीव मे १५९
इत्युक्त्वा धृतराष्ट्रोऽथ विलप्य बहु दुःखितः
मूर्च्छितः पुनराश्वस्तः संजयं वाक्यमब्रवीत् १६०
संजयैवंगते प्राणांस्त्यक्तुमिच्छामि मा चिरम्
स्तोकं ह्यपि न पश्यामि फलं जीवितधारणे १६१
तं तथा वादिनं दीनं विलपन्तं महीपतिम्
गावल्गणिरिदं धीमान् महार्थं वाक्यमब्रवीत् १६२
श्रुतवानसि वै राज्ञो महोत्साहान् महाबलान्
द्वैपायनस्य वदतो नारदस्य च धीमतः १६३
महत्सु राजवंशेषु गुणैः समुदितेषु च
जातान्दिव्यास्त्रविदुषः शक्रप्रतिमतेजसः १६४
धर्मेण पृथिवीं जित्वा यज्ञैरिष्ट्वाप्तदक्षिणैः
अस्मिँल्लोके यशः प्राप्य ततः कालवशं गताः १६५
वैन्यं महारथं वीरं संजयं जयतां वरम्
सुहोत्रं रन्तिदेवं च कक्षीवन्तं तथौशिजम् १६६
बाह्लीकं दमनं शैब्यं शर्यातिमजितं जितम्
विश्वामित्रममित्रघ्नमम्बरीषं महाबलम् १६७
मरुत्तं मनुमिक्ष्वाकुं गयं भरतमेव च
रामं दाशरथिं चैव शशबिन्दुं भगीरथम् १६८
ययातिं शुभकर्माणं देवैर्यो याजितः स्वयम्
चैत्ययूपांकिता भूमिर्यस्येयं सवनाकरा १६९
इति राज्ञां चतुर्विंशन्नारदेन सुरर्षिणा
पुत्रशोकाभितप्ताय पुरा शैब्याय कीर्तिताः १७०
तेभ्यश्चान्ये गताः पूर्वं राजानो बलवत्तराः
महारथा महात्मानः सर्वैः समुदिता गुणैः १७१
पूरुः कुरुर्यदुः शूरो विष्वगश्वो महाधृतिः
अनेन युवनाश्वश्च ककुत्स्थो विक्रमी रघुः १७२

विजिती वीतिहोत्रश्च भवः श्वेतो बृहद्गुरुः
उशीनरः शतरथः कङ्को दुलिदुहौ द्रुमः १७३
दंभोद्भवः परो वेनः सगरः संकृतिर्निमिः
अजेयः परशुः पुण्ड्रः शम्भुर्देवावृधोऽनघः १७४
देवाह्वयः सुप्रतिमः सुप्रतीको बृहद्रथः
महोत्साहो विनीतात्मा सुक्रतुर्नैषधो नलः १७५
सत्यव्रतः शान्तभयः सुमित्रः सुबलः प्रभुः
जानुजङ्घोऽनरण्योऽक प्रियभृत्यः शुभव्रतः १७६
बलबन्धुर्निरामर्दः केतुशृंगो बृहद्बलः
धृष्टकेतुर्बृहत्केतुर्दीप्तकेतुर्निरामयः १७७
अविक्षित्प्रबलो धूर्तः कृतवन्धुर्दृढेषुधिः
महापुराणः संभाव्यः प्रत्यंगः परहा श्रुतिः १७८
एते चान्ये च राजानः शतशोऽथ सहस्रशः
श्रूयन्तेऽयुतशश्चान्ये संख्याताश्चापि पद्मशः १७९
हित्वा सुविपुलान्भोगान्बुद्धिमन्तो महाबलाः
राजानो निधनं प्राप्तास्तव पुत्रैर्महत्तमाः १८०
येषां दिव्यानि कर्माणि विक्रमस्त्याग एव च
माहात्म्यमपि चास्तिक्यं सत्यता शौचमार्जवम् १८१
विद्वद्भिः कथ्यते लोके पुराणैः कविसत्तमैः
सर्वर्द्धिगुणसम्पन्नास्ते चापि निधनं गताः १८२
तव पुत्रा दुरात्मानः प्रतप्ताश्चैव मन्युना
लुब्धा दुर्वृत्तभूयिष्ठा न ताञ्शोचितुमर्हसि १८३
श्रुतवानसि मेधावी बुद्धिमान्प्राज्ञसंमतः
येषां शास्त्रानुगा बुद्धिर्न ते मुह्यन्ति भारत १८४
निग्रहानुग्रहौ चापि विदितौ ते नराधिप
नात्यन्तमेवानुवृत्तिः श्रूयते पुत्ररक्षणे १८५
भवितव्यं तथा तच्च नातः शोचितुमर्हसि
दैवं प्रज्ञाविशेषेण को निवर्तितुमर्हति १८६
विधातृविहितं मार्गं न कश्चिदतिवर्तते
कालमूलमिदं सर्वं भावाभावौ सुखासुखे १८७

कालः पचति भूतानि कालः संहरति प्रजाः
निर्दहन्तं प्रजाः कालं कालः शमयते पुनः १८८
कालो वि कुरुते भावान्सर्वाँल्लोके शुभाशुभान्
कालः संक्षिपते सर्वाः प्रजा विसृजते पुनः
कालः सर्वेषु भूतेषु चरत्यविधृतः समः १८९
अतीतानागता भावा ये च वर्तन्ति साम्प्रतम्
तान्कालनिर्मितान्बुद्ध्वा न संज्ञां हातुमर्हसि १९०
सूत उवाच
अत्रोपनिषदं पुण्यां कृष्णद्वैपायनोऽब्रवीत्
भारताध्ययनात्पुण्यादपि पादमधीयतः
श्रद्दधानस्य पूयन्ते सर्वपापान्यशेषतः १९१
देवर्षयो ह्यत्र पुण्या ब्रह्मराजर्षयस्तथा
कीर्त्यन्ते शुभकर्माणस्तथा यक्षमहोरगाः १९२
भगवान्वासुदेवश्च कीर्त्यतेऽत्र सनातनः
स हि सत्यमृतं चैव पवित्रं पुण्यमेव च १९३
शाश्वतं ब्रह्म परमं ध्रुवं ज्योतिः सनातनम्
यस्य दिव्यानि कर्माणि कथयन्ति मनीषिणः १९४
असत्सत्सदसच्चैव यस्माद्देवात्प्रवर्तते
संततिश्च प्रवृत्तिश्च जन्म मृत्युः पुनर्भवः १९५
अध्यात्मं श्रूयते यच्च पञ्चभूतगुणात्मकम्
अव्यक्तादि परं यच्च स एव परिगीयते १९६
यत्तद्यतिवरा युक्ता ध्यानयोगबलान्विताः
प्रतिबिम्बमिवादर्शे पश्यन्त्यात्मन्यवस्थितम् १९७
श्रद्दधानः सदोद्युक्तः सत्यधर्मपरायणः
आसेवन्निममध्यायं नरः पापात्प्रमुच्यते १९८
अनुक्रमणिमध्यायं भारतस्येममादितः
आस्तिकः सततं शृण्वन्न कृच्छ्रेष्ववसीदति १९९
उभे संध्ये जपन् किंचित् सद्यो मुच्येत किल्बिषात्
अनुक्रमण्या यावत्स्यादह्ना रात्र्या च संचितम् २००
भारतस्य वपुर्ह्येतत्सत्यं चामृतमेव च

नवनीतं यथा दध्नो द्विपदां ब्राह्मणो यथा २०१
ह्रदानामुदधिः श्रेष्ठो गौर्वरिष्ठा चतुष्पदाम्
यथैतानि वरिष्ठानि तथा भारतमुच्यते २०२
यश्चैनं श्रावयेच्छ्राद्धे ब्राह्मणान्पादमन्ततः
अक्षय्यमन्नपानं वै पितृंस्तस्योपतिष्ठति २०३
इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्
बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति २०४
कार्ष्णं वेदमिमं विद्वाञ्श्रावयित्वार्थमश्नुते
भ्रूणहत्याकृतं चापि पापं जह्यान्न संशयः २०५
य इमं शुचिरध्यायं पठेत् पर्वणि पर्वणि
अधीतं भारतं तेन कृत्स्नं स्यादिति मे मतिः २०६
यश्चेमं शृणुयान्नित्यमार्षं श्रद्धासमन्वितः
स दीर्घमायुः कीर्तिं च स्वर्गतिं चाप्नुयान्नरः २०७
चत्वार एकतो वेदा भारतं चैकमेकतः
समागतैः सुरर्षिभिस्तुलामारोपितं पुरा
महत्वे च गुरुत्वे च ध्रियमाणं ततोऽधिकम् २०८
महत्वाद्भारवत्त्वाच्च महाभारतमुच्यते
निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते २०९
तपो न कल्कोऽध्ययनं न कल्कः स्वाभाविको वेदविधिर्न कल्कः
प्रसह्य वित्ताहरणं न कल्कस्तान्येव भावोपहतानि कल्कः २१०
इति श्रीमहाभारते आदिपर्वणि प्रथमोऽध्यायः १

अथ द्वितीयोऽध्यायः

ऋषय ऊचुः
समन्तपञ्चकमिति यदुक्तं सूतनन्दन
एतत्सर्वं यथान्यायं श्रोतुमिच्छामहे वयम् १
सूत उवाच
शुश्रूषा यदि वो विप्रा ब्रुवतश्च कथाः शुभाः
समन्तपञ्चकाख्यं च श्रोतुमर्हथ सत्तमाः २
त्रेताद्वापरयोः संधौ रामः शस्त्रभृतां वरः

असकृत्पार्थिवं क्षत्रं जघानामर्षचोदितः ३
ससर्वं क्षत्रमुत्साद्य स्ववीर्येणानलद्युतिः
समन्तपञ्चके पञ्च चकार रुधिरह्रदान् ४
स तेषु रुधिराम्भस्सु ह्रदेषु क्रोधमूर्च्छितः
पितॄन्संतर्पयामास रुधिरेणेति नः श्रुतम् ५
अथर्चीकादयोऽभ्येत्य पितरो ब्राह्मणर्षभम्
तं क्षमस्वेति सिषिधुस्ततः स विरराम ह ६
तेषां समीपे यो देशो ह्रदानां रुधिराम्भसाम्
समन्तपञ्चकमिति पुण्यं तत्परिकीर्तितम् ७
येन लिङ्गेन यो देशो युक्तः समुपलक्ष्यते
तेनैव नाम्ना तं देशं वाच्यमाहुर्मनीषिणः ८
अन्तरे चैव संप्राप्ते कलिद्वापरयोरभूत्
समन्तपञ्चके युद्धं कुरु-पाण्डव-सेनयोः ९
तस्मिन्परमधर्मिष्ठे देशे भूदोषवर्जिते
अष्टादश समाजग्मुरक्षौहिण्यो युयुत्सया १०
एवं नामाभिनिर्वृत्तं तस्य देशस्य वै द्विजाः
पुण्यश्च रमणीयश्च स देशो वः प्रकीर्तितः ११
तदेतत्कथितं सर्वं मया वो मुनिसत्तमाः
यथा देशः स विख्यातस्त्रिषु लोकेषु विश्रुतः १२
ऋषय ऊचुः
अक्षौहिण्य इति प्रोक्तं यत्त्वया सूतनन्दन
एतदिच्छामहे श्रोतुं सर्वमेव यथातथम् १३
अक्षौहिण्याः परीमाणं रथाश्वनरदन्तिनाम्
यथावच्चैव नो ब्रूहि सर्वं हि विदितं तव १४
सूत उवाच
एको रथो गजश्चैको नराः पञ्च पदातयः
त्रयश्च तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते १५
पत्तिं तु त्रिगुणामेतामाहुः सेनामुखं बुधाः
त्रीणि सेनामुखान्येको गुल्म इत्यभिधीयते १६
त्रयो गुल्मा गणो नाम वाहिनी तु गणास्त्रयः

स्मृतास्तिस्रस्तु वाहिन्यः पृतनेति विचक्षणैः १७
चमूस्तु पृतनास्तिस्रस्तिस्रश्चम्वस्त्वनीकिनी
अनीकिनीं दशगुणां प्राहुरक्षौहिणीं बुधाः १८
अक्षौहिण्याः प्रसंख्यानं रथानां द्विजसत्तमाः
संख्यागणिततत्त्वज्ञैः सहस्राण्येकविंशतिः १९
शतान्युपरि चैवाष्टौ तथा भूयश्च सप्ततिः
गजानां तु परीमाणमेतदेवात्र निर्दिशेत् २०
ज्ञेयं शतसहस्रं तु सहस्राणि तथा नव
नराणामपि पञ्चाशच्छतानि त्रीणि चानघाः २१
पञ्चषष्ठिसहस्राणि तथाश्वानां शतानि च
दशोत्तराणि षट् प्राहुर्यथावदिह संख्यया २२
एतामक्षौहिणीं प्राहुः संख्यातत्त्वविदो जनाः
यां वः कथितवानस्मि विस्तरेण द्विजोत्तमाः २३
एतया संख्यया ह्यासन्कुरुपाण्डवसेनयोः
अक्षौहिण्यो द्विजश्रेष्ठाः पिण्डेनाष्टादशैव ताः २४
समेतास्तत्र वै देशे तत्रैव निधनं गताः
कौरवान्कारणं कृत्वा कालेनाद्भुतकर्मणा २५
अहानि युयुधे भीष्मो दशैव परमास्त्रवित्
अहानि पञ्च द्रोणस्तु ररक्ष कुरुवाहिनीम् २६
अहनी युयुधे द्वे तु कर्णः परबलार्दनः
शल्योऽधदिवसं त्वासीत् गदायुद्धमतः परम् २७
तस्यैव तु दिनस्यान्ते हार्दिक्यद्रौणिगौतमाः
प्रसुप्तं निशि विश्वस्तं जघ्नुर्यौधिष्ठिरं बलम् २८
यत्तु शौनकसत्रे ते भारताख्यानविस्तरम्
आख्यास्ये तत्र पौलोममाख्यानं चादितः परम् २९
विचित्रार्थपदाख्यानमनेकसमयान्वितम्
अभिपन्नं नरैः प्राज्ञैर्वैराग्यमिव मोक्षिभिः ३०
आत्मेव वेदितव्येषु प्रियेष्विव च जीवितम्
इतिहासः प्रधानार्थः श्रेष्ठः सर्वागमेष्वयम् ३१
इतिहासोत्तमे ह्यस्मिन्नर्पिता बुद्धिरुत्तमा

स्वरव्यञ्जनयोः कृत्स्ना लोकवेदाश्रयेव वाक् ३२
अस्य प्रज्ञाभिपन्नस्य विचित्रपदपर्वणः
भारतस्येतिहासस्य श्रूयतां पर्वसंग्रहः ३३
पर्वानुक्रमणी पूर्वं द्वितीयं पर्वसंग्रहः
पौष्यं पौलोममास्तीकमादिवंशावतारणम् ३४
ततः संभवपर्वोक्तमद्भुतं देवनिर्मितम्
दाहो जतुगृहस्यात्र हैंडिम्बं पर्व चोच्यते ३५
ततो बकवधः पर्व पर्व चैत्ररथं ततः
ततः स्वयंवरं देव्याः पाञ्चाल्याः पर्व चोच्यते ३६
क्षत्रधर्मेण निर्जित्य ततो वैवाहिकं स्मृतम्
विदुरागमनं पर्व राज्यलम्भस्तथैव च ३७
अर्जुनस्य वने वासः सुभद्राहरणं ततः
सुभद्राहरणादूर्ध्वं ज्ञेयं हरणहारिकम् ३८
ततः खाण्डवदाहाख्यं तत्रैव मयदर्शनम्
सभापर्व ततः प्रोक्तं मन्त्रपर्व ततः परम् ३९
जरासन्धवधः पर्व पर्व दिग्विजयस्तथा
पर्व दिग्विजयादूर्ध्वं राजसूयिकमुच्यते ४०
ततश्चार्घाभिहरणं शिशुपालवधस्ततः
द्यूतपर्व ततः प्रोक्तमनुद्यूतमतः परम् ४१
तत आरण्यकं पर्व किर्मीरवध एव च
ईश्वरार्जुनयोर्युद्धं पर्व कैरातसंज्ञितम् ४२
इन्द्रलोकाभिगमनं पर्व ज्ञेयमतः परम्
तीर्थयात्रा ततः पर्व कुरुराजस्य धीमतः ४३
जटासुरवधः पर्व यक्षयुद्धमतः परम्
तथैवाजगरं पर्व विज्ञेयं तदनन्तरम् ४४
मार्कण्डेयसमस्या च पर्वोक्तं तदनन्तरम्
संवादश्च ततः पर्व द्रौपदीसत्यभामयोः ४५
घोषयात्रा ततः पर्व मृगस्वप्नभयं ततः
व्रीहिद्रौणिकमाख्यानं ततोऽनन्तरमुच्यते ४६
द्रौपदीहरणं पर्व सैन्धवेन वनात्ततः

कुण्डलाहरणं पर्व ततः परमिहोच्यते ४७
आरणेयं ततः पर्व वैराटं तदनन्तरम्
कीचकानां वधः पर्व पर्व गोग्रहणं ततः ४८
अभिमन्युना च वैराट्याः पर्व वैवाहिकं स्मृतम्
उद्योगपर्व विज्ञेयमत ऊर्ध्वं महाद्भुतम् ४९
ततः संजययानाख्यं पर्व ज्ञेयमतः परम्
प्रजागरं ततः पर्व धृतराष्ट्रस्य चिन्तया ५०
पर्व सानत्सुजातं च गुह्यमध्यात्मदर्शनम्
यानसंधिस्ततः पर्व भगवद्यानमेव च ५१
ज्ञेयं विवादपर्वात्र कर्णस्यापि महात्मनः
निर्याणं पर्व च ततः कुरुपाण्डवसेनयोः ५२
रथातिरथसंख्या च पर्वोक्तं तदनन्तरम्
उलूकदूतागमनं पर्वामर्षविवर्धनम् ५३
अम्बोपाख्यानमपि च पर्व ज्ञेयमतः परम्
भीष्माभिषेचनं पर्व ज्ञेयमद्भुतकारणम् ५४
जम्बूखण्डविनिर्माणं पर्वोक्तं तदनन्तरम्
भूमिपर्व ततो ज्ञेयं द्वीपविस्तरकीर्तनम् ५५
पर्वोक्तं भगवद्गीता पर्व भीष्मवधस्ततः
द्रोणाभिषेकः पर्वोक्तं संशप्तकवधस्ततः ५६
अभिमन्युवधः पर्व प्रतिज्ञापर्व चोच्यते
जयद्रथवधः पर्व घटोत्कचवधस्ततः ५७
ततो द्रोणवधः पर्व विज्ञेयं लोमहर्षणम्
मोक्षो नारायणास्त्रस्य पर्वानन्तरमुच्यते ५८
कर्णपर्व ततो ज्ञेयं शल्यपर्व ततः परम्
ह्रदप्रवेशनं पर्व गदायुद्धमतः परम् ५९
सारस्वतं ततः पर्व तीर्थवंशगुणान्वितम्
अत ऊर्ध्वं तु बीभत्सं पर्व सौप्तिकमुच्यते ६०
एषीकं पर्व निर्दिष्टमत ऊर्ध्वं सुदारुणम्
जलप्रदानिकं पर्व स्त्रीपर्व च ततः परम् ६१
श्राद्धपर्व ततो ज्ञेयं कुरूणामौर्ध्वदेहिकम्

आभिषेचनिकं पर्व धर्मराजस्य धीमतः ६२
चार्वाकनिग्रहः पर्व रक्षसो ब्रह्मरूपिणः
प्रविभागो गृहाणां च पर्वोक्तं तदनन्तरम् ६३
शान्तिपर्व ततो यत्र राजधर्मानुकीर्तनम्
आपद्धर्मश्च पर्वोक्तं मोक्षधर्मस्ततः परम् ६४
ततः पर्व परिज्ञेयमानुशासनिकं परम्
स्वर्गारोहणिकं पर्व ततो भीष्मस्य धीमतः ६५
ततोऽश्वमेधिकं पर्व सर्वपापप्रणाशनम्
अनुगीता ततः पर्व ज्ञेयमध्यात्मवाचकम् ६६
पर्व चाश्रमवासाख्यं पुत्रदर्शनमेव च
नारदागमनं पर्व ततः परमिहोच्यते ६७
मौसलं पर्व च ततो घोरं समनुवर्ण्यते
महाप्रस्थानिकं पर्व स्वर्गारोहणिकं ततः ६८
हरिवंशस्ततः पर्व पुराणं खिलसंज्ञितम्
भविष्यत्पर्व चाप्युक्तं खिलेष्वेवाद्भुतं महत् ६९
एतत्पर्वशतं पूर्णं व्यासेनोक्तं महात्मना
यथावत्सूतपुत्रेण लोमहर्षणिना पुनः ७०
कथितं नैमिषारण्ये पर्वाण्यष्टादशैव तु
समासो भारतस्यायं तत्रोक्तः पर्वसंग्रहः ७१
पौष्ये पर्वणि माहात्म्यमुत्तङ्कस्योपवर्णितम्
पौलोमे भृगुवंशस्य विस्तारः परिकीर्तितः ७२
आस्तीके सर्वनागानां गरुडस्य च संभवः
क्षीरोदमथनं चैव जन्मोच्चैःश्रवसस्तथा ७३
यजतः सर्पसत्रेण राज्ञः पारीक्षितस्य च
कथेयमभिनिर्वृत्ता भारतानां महात्मनाम् ७४
विविधाः संभवा राज्ञामुक्ताः संभवपर्वणि
अन्येषां चैव विप्राणामृषेर्द्वैपायनस्य च ७५
अंशावतरणं चात्र देवानां परिकीर्तितम्
दैत्यानां दानवानां च यक्षाणां च महौजसाम् ७६
नागानामथ सर्पाणां गन्धर्वाणां पतत्रिणाम्

अन्येषां चैव भूतानां विविधानां समुद्भवः ७७
वसूनां पुनरुत्पत्तिर्भागीरथ्यां महात्मनाम्
शंतनोर्वेश्मनि पुनस्तेषां चारोहणं दिवि ७८
तेजोंशानां च संघाताद् भीष्मस्याप्यत्र संभवः
राज्यान्निवर्तनं चैव ब्रह्मचर्यव्रते स्थितिः ७९
प्रतिज्ञापालनं चैव रक्षा चित्राङ्गदस्य च
हते चित्रांङ्गदे चैव रक्षा भ्रातुर्यवीयसः ८०
विचित्रवीर्यस्य तथा राज्ये संप्रतिपादनम्
धर्मस्य नृषु संभूतिरणीमाण्डव्यशापजा ८१
कृष्णद्वैपायनाच्चैव प्रसूतिर्वरदानजा
धृतराष्ट्रस्य पाण्डोश्च पाण्डवानां च संभवः ८२
वारणावतयात्रा च मन्त्रो दुर्योधनस्य च
विदुरस्य च वाक्येन सुरङ्गोपक्रमक्रिया ८३
पाण्डवानां वने घोरे हिडिम्बायाश्च दर्शनम्
घटोत्कचस्य चोत्पत्तिरत्रैव परिकीर्तिता ८४
अज्ञातचर्या पाण्डूनां वासो ब्राह्मणवेश्मनि
बकस्य निधनं चैव नागराणां च विस्मयः ८५
अङ्गारपर्णं निर्जित्य गङ्गाकूलेऽजुनस्तदा
भ्रातृभिः सहितः सर्वैः पाञ्चालानभितो ययौ ८६
तापत्यमथ वासिष्ठमौर्वं चाख्यानमुत्तमम्
पञ्चेन्द्राणामुपाख्यानमत्रैवाद्भुतमुच्यते ८७
पञ्चानामेकपत्नीत्वे विमर्शो द्रुपदस्य च
द्रौपद्या देवविहितो विवाहश्चाप्यमानुषः ८८
विदुरस्य च संप्राप्तिर्दर्शनं केशवस्य च
खाण्डवप्रस्थवासश्च तथा राज्यार्धशासनम् ८९
नारदस्याज्ञया चैव द्रौपद्याः समयक्रिया
सुन्दोपसुन्दयोस्तत्र उपाख्यानं प्रकीर्तितम् ९०
पार्थस्य वनवासश्च उलूप्या पथि संगमः
पुण्यतीर्थानुसंयानं बभ्रुवाहनजन्म च ९१
द्वारकायां सुभद्रा च कामयानेन कामिनी

वासुदेवस्यानुमते प्राप्ता चैव किरीटिना ९२
हरणं गृह्य संप्राप्ते कृष्णे देवकिनन्दने
संप्राप्तिश्चक्रधनुषोः खाण्डवस्य च दाहनम् ९३
अभिमन्योः सुभद्रायां जन्म चोत्तमतेजसः
मयस्य मोक्षो ज्वलनाद्भुजंगस्य च मोक्षणम्
महर्षेर्मन्दपालस्य शाङ्ग्र्यां तनयसंभवः ९४
इत्येतदादिपर्वोक्तं प्रथमं बहुविस्तरम्
अध्यायानां शते द्वे तु संख्याते परमर्षिणा
अष्टादशैव चाध्याया व्यासेनोत्तमतेजसा ९५
सप्त श्लोकसहस्राणि तथा नव शतानि च
श्लोकाश्च चतुराशीतिर्दृष्टो ग्रन्थो महात्मना ९६
द्वितीयं तु सभापर्व बहुवृत्तान्तमुच्यते
सभाक्रिया पाण्डवानां किंकराणां च दर्शनम् ९७
लोकपालसभाख्यानं नारदाद्देवदर्शनात्
राजसूयस्य चारम्भो जरासंधवधस्तथा ९८
गिरिव्रजे निरुद्धानां राज्ञां कृष्णेन मोक्षणम्
राजसूयेऽघसंवादे शिशुपालवधस्तथा ९९
यज्ञे विभूतिं तां दृष्ट्वा दुःखामर्षान्वितस्य च
दुर्योधनस्यावहासो भीमेन च सभातले १००
यत्रास्य मन्युरुद्भूतो येन द्यूतमकारयत्
यत्र धर्मसुतं द्यूते शकुनिः कितवोऽजयत् १०१
यत्र द्यूतार्णवे मग्नान्द्रौपदी नौरिवार्णवात्
तारयामास तांस्तीर्णाञ्ज्ञात्वा दुर्योधनो नृपः
पुनरेव ततो द्यूते समाह्वयत पाण्डवान् १०२
एतत्सर्वं सभापर्व समाख्यातं महात्मना
अध्यायाः सप्ततिर्ज्ञेयास्तथा द्वौ चात्र संख्यया १०३
श्लोकानां द्वे सहस्रे तु पञ्च श्लोकशतानि च
श्लोकाश्चैकादश ज्ञेयाः पर्वण्यस्मिन्प्रकीर्तिताः १०४
अतः परं तृतीयं तु ज्ञेयमारण्यकं महत्
पौरानुगमनं चैव धर्मपुत्रस्य धीमतः १०५

वृष्णीनामागमो यत्र पाञ्चालानां च सर्वशः
यत्र सौभवधाख्यानं किर्मीरवध एव च
अस्त्रहेतोर्विवासश्च पार्थस्यामिततेजसः १०६
महादेवेन युद्धं च किरातवपुषा सह
दर्शनं लोकपालानां स्वर्गारोहणमेव च १०७
दर्शनं बृहदश्वस्य महर्षेर्भावितात्मनः
युधिष्ठिरस्य चार्तस्य व्यसने परिदेवनम् १०८
नलोपाख्यानमत्रैव धर्मिष्ठं करुणोदयम्
दमयन्त्याः स्थितिर्यत्र नलस्य व्यसनागमे १०९
वनवासगतानां च पाण्डवानां महात्मनाम्
स्वर्गे प्रवृत्तिराख्याता लोमशेनार्जुनस्य वै ११०
तीर्थयात्रा तथैवात्र पाण्डवानां महात्मनाम्
जटासुरस्य तत्रैव वधः समुपवर्ण्यते १११
नियुक्तो भीमसेनश्च द्रौपद्या गन्धमादने
यत्र मन्दारपुष्पार्थं नलिनीं तामधर्षयत् ११२
यत्रास्य सुमहद्युद्धमभवत्सह राक्षसैः
यक्षैश्चापि महावीर्यैर्मणिमत्प्रमुखैस्तथा ११३
आगस्त्यमपि चाख्यानं यत्र वातापिभक्षणम्
लोपामुद्राभिगमनमपत्यार्थमृषेरपि ११४
ततः श्येनकपोतीयमुपाख्यानमनन्तरम्
इन्द्रोऽग्निर्यत्र धर्मश्च अजिज्ञासञ्शिबिं नृपम् ११५
ऋृश्यशृङ्गस्य चरितं कौमारब्रह्मचारिणः
जामदग्न्यस्य रामस्य चरितं भूरितेजसः ११६
कार्तवीर्यवधो यत्र हैहयानां च वर्ण्यते
सौकन्यमपि चाख्यानं च्यवनो यत्र भार्गवः ११७
शर्यातियज्ञे नासत्यौ कृतवान्सोमपीथिनौ
ताभ्यां च यत्र स मुनिर्यौवनं प्रतिपादितः ११८
जन्तूपाख्यानमत्रैव यत्र पुत्रेण सोमकः
पुत्रार्थमयजद्राजा लेभे पुत्रशतं च सः ११९
अष्टावक्रीयमत्रैव विवादे यत्र बन्दिनम्

विजित्य सागरं प्राप्तं पितरं लब्धवानृषिः १२०
अवाप्य दिव्यान्यस्त्राणि गुर्वर्थे सव्यसाचिना
निवातकवचैर्युद्धं हिरण्यपुरवासिभिः १२१
समागमश्च पार्थस्य भ्रातृभिर्गन्धमादने
घोषयात्रा च गन्धर्वैर्यत्र युद्धं किरीटिनः १२२
पुनरागमनं चैव तेषां द्वैतवनं सह
जयद्रथेनापहारो द्रौपद्याश्चाश्रमान्तरात् १२३
यत्रैनमन्वयाद्भीमो वायुवेगसमो जवे
मार्कण्डेयसमस्यायामुपाख्यानानि भागशः १२४
संदर्शनं च कृष्णस्य संवादश्चैव सत्यया
व्रीहिद्रौणिकमाख्यानमैन्द्रद्युम्नं तथैव च १२५
सावित्र्यौद्दालकीयं च वैन्योपाख्यानमेव च
रामायणमुपाख्यानमत्रैव बहुविस्तरम् १२६
कर्णस्य परिमोषोऽत्र कुण्डलाभ्यां पुरन्दरात्
आरण्येयमुपाख्यानं यत्र धर्मोऽन्वशात्सुतम्
जग्मुर्लब्धवरा यत्र पाण्डवाः पश्चिमां दिशम् १२७
एतदारण्यकं पर्व तृतीयं परिकीर्तितम्
अत्राध्यायशते द्वे तु संख्याते परमर्षिणा
एकोनसप्ततिश्चैव तथाध्यायाः प्रकीर्तिताः १२८
एकादश सहस्राणि श्लोकानां षट्शतानि च
चतुःषष्टिस्तथा श्लोकाः पर्वैतत्परिकीर्तितम् १२९
अतः परं निबोधेदं वैराटं पर्वविस्तरम्
विराटनगरं गत्वा श्मशाने विपुलां शमीम्
दृष्ट्वा संनिदधुस्तत्र पाण्डवा आयुधान्युत १३०
यत्र प्रविश्य नगरं छद्मभिर्न्यवसन्त ते
दुरात्मनो वधो यत्र कीचकस्य वृकोदरात् १३१
गोग्रहे यत्र पार्थेन निर्जिताः कुरवो युधि
गोधनं च विराटस्य मोक्षितं यत्र पाण्डवैः १३२
विराटेनोत्तरा दत्ता स्नुषा यत्र किरीटिनः
अभिमन्युं समुद्दिश्य सौभद्रमरिघातिनम् १३३

चतुर्थमेतद्विपुलं वैराटं पर्व वर्णितम्
अत्रापि परिसंख्यातमध्यायानां महात्मना १३४
सप्तषष्टिरथो पूर्णा श्लोकाग्रमपि मे शृणु
श्लोकानां द्वे सहस्रे तु श्लोकाः पञ्चाशदेव तु
पर्वण्यस्मिन्समाख्याताः संख्यया परमर्षिणा १३५
उद्योगपर्व विज्ञेयं पञ्चमं शृण्वतः परम्
उपप्लव्ये निविष्टेषु पाण्डवेषु जिगीषया
दुर्योधनोऽजुनश्चैव वासुदेवमुपस्थितौ १३६
साहाय्यमस्मिन्समरे भवान्नौ कर्तुमर्हति
इत्युक्ते वचने कृष्णो यत्रोवाच महामतिः १३७
अयुध्यमानमात्मानं मन्त्रिणं पुरुषर्षभौ
अक्षौहिणीं वा सैन्यस्य कस्य वा किं ददाम्यहम् १३८
वव्रे दुर्योधनः सैन्यं मन्दात्मा यत्र दुर्मतिः
अयुध्यमानं सचिवं वव्रे कृष्णं धनंजयः १३९
संजयं प्रेषयामास शमार्थं पाण्डवान्प्रति
यत्र दूतं महाराजो धृतराष्ट्रः प्रतापवान् १४०
श्रुत्वा च पाण्डवान्यत्र वासुदेवपुरोगमान्
प्रजागरः संप्रजज्ञे धृतराष्ट्रस्य चिन्तया १४१
विदुरो यत्र वाक्यानि विचित्राणि हितानि च
श्रावयामास राजानं धृतराष्ट्रं मनीषिणम् १४२
तथा सनत्सुजातेन यत्राध्यात्ममनुत्तमम्
मनस्तापान्वितो राजा श्रावितः शोकलालसः १४३
प्रभाते राजसमितौ संजयो यत्र चाभिभोः
एकात्म्यं वासुदेवस्य प्रोक्तवानर्जुनस्य च १४४
यत्र कृष्णो दयापन्नः संधिमिच्छन्महायशाः
स्वयमागाच्छमं कर्तुं नगरं नागसाह्वयम् १४५
प्रत्याख्यानं च कृष्णस्य राज्ञा दुर्योधनेन वै
शमार्थं याचमानस्य पक्षयोरुभयोर्हितम् १४६
कर्णदुर्योधनादीनां दुष्टं विज्ञाय मन्त्रितम्
योगेश्वरत्वं कृष्णेन यत्र राजसु दर्शितम् १४७

रथमारोप्य कृष्णेन यत्र कर्णोऽनुमन्त्रितः
उपायपूर्वं शौराडीर्यात्प्रत्याख्यातश्च तेन सः १४८
ततश्चाप्यभिनिर्यात्रा रथाश्वनरदन्तिनाम्
नगराद्धास्तिनपुराद्बलसंख्यानमेव च १४९
यत्र राज्ञा उलूकस्य प्रेषणं पाराडवान्प्रति
श्वोभाविनि महायुद्धे दूत्येन क्रूरवादिना
रथातिरथसंख्यानमम्बोपाख्यानमेव च १५०
एतत्सुबहुवृत्तान्तं पञ्चमं पर्व भारते
उद्योगपर्व निर्दिष्टं संधिविग्रहसंश्रितम् १५१
अध्यायाः संख्यया त्वत्र षडशीतिशतं स्मृतम्
श्लोकानां षट् सहस्राणि तावन्त्येव शतानि च १५२
श्लोकाश्च नवतिः प्रोक्तास्तथैवाष्टौ महात्मना
व्यासेनोदारमतिना पर्वरायस्मिंस्तपोधनाः १५३
अत ऊर्ध्वं विचित्रार्थं भीष्मपर्व प्रचक्षते
जम्बूखराडविनिर्माणं यत्रोक्तं संजयेन ह १५४
यत्र युद्धमभूद्घोरं दशाहान्यतिदारुणम्
यत्र यौधिष्ठिरं सैन्यं विषादमगमत्परम् १५५
कश्मलं यत्र पार्थस्य वासुदेवो महामतिः
मोहजं नाशयामास हेतुभिर्मोक्षदर्शिभिः १५६
शिखरिडनं पुरस्कृत्य यत्र पार्थो महाधनुः
विनिघ्नन्निशितैर्बाणै रथाद्भीष्ममपातयत् १५७
षष्ठमेतन्महापर्व भारते परिकीर्तितम्
अध्यायानां शतं प्रोक्तं सप्तदश तथापरे १५८
पञ्च श्लोकसहस्राणि संख्ययाष्टौ शतानि च
श्लोकाश्च चतुराशीतिः पर्वरायस्मिन्प्रकीर्तिताः
व्यासेन वेदविदुषा संख्याता भीष्मपर्वणि १५९
द्रोणपर्व ततश्चित्रं बहुवृत्तान्तमुच्यते
यत्र संशप्तकाः पार्थमपनिन्यू रणाजिरात् १६०
भगदत्तो महाराजो यत्र शक्रसमो युधि
सुप्रतीकेन नागेन सह शस्तः किरीटिना १६१

यत्राभिमन्युं बहवो जघ्नुर्लोकमहारथाः
जयद्रथमुखा बालं शूरमप्राप्तयौवनम् १६२
हतेऽभिमन्यौ क्रुद्धेन यत्र पार्थेन संयुगे
अक्षौहिणीः सप्त हत्वा हतो राजा जयद्रथः
संशप्तकावशेषं च कृतं निःशेषमाहवे १६३
अलम्बुसः श्रुतायुश्च जलसंधश्च वीर्यवान्
सौमदत्तिर्विराटश्च द्रुपदश्च महारथः
घटोत्कचादयश्चान्ये निहता द्रोणपर्वणि १६४
अश्वत्थामापि चात्रैव द्रोणे युधि निपातिते
अस्त्रं प्रादुश्चकारोग्रं नारायणममर्षितः १६५
सप्तमं भारते पर्व महदेतदुदाहृतम्
अत्र ते पृथिवीपालाः प्रायशो निधनं गताः
द्रोणपर्वणि ये शूरा निर्दिष्टाः पुरुषर्षभाः १६६
अध्यायानां शतं प्रोक्तमध्यायाः सप्ततिस्तथा
अष्टौ श्लोकसहस्राणि तथा नव शतानि च १६७
श्लोका नव तथैवात्र संख्यातास्तत्त्वदर्शिना
पाराशर्येण मुनिना संचिन्त्य द्रोणपर्वणि १६८
अतः परं कर्णपर्व प्रोच्यते परमाद्भुतम्
सारथ्ये विनियोगश्च मद्रराजस्य धीमतः
आख्यातं यत्र पौराणं त्रिपुरस्य निपातनम् १६९
प्रयाणे परुषश्चात्र संवादः कर्णशल्ययोः
हंसकाकीयमाख्यानमत्रैवाक्षेपसंहितम् १७०
अन्योन्यं प्रति च क्रोधो युधिष्ठिरकिरीटिनोः
द्वैरथे यत्र पार्थेन हतः कर्णो महारथः १७१
अष्टमं पर्व निर्दिष्टमेतद्भारतचिन्तकैः
एकोनसप्ततिः प्रोक्ता अध्यायाः कर्णपर्वणि
चत्वार्येव सहस्राणि नव श्लोकशतानि च १७२
अतः परं विचित्रार्थं शल्यपर्व प्रकीर्तितम्
हतप्रवीरे सैन्ये तु नेता मद्रेश्वरोऽभवत् १७३
वृत्तानि रथयुद्धानि कीर्त्यन्ते यत्र भागशः

विनाशः कुरुमुख्यानां शल्यपर्वणि कीर्त्यते १७४
शल्यस्य निधनं चात्र धर्मराजान्महारथात्
गदायुद्धं तु तुमुलमत्रैव परिकीर्तितम्
सरस्वत्याश्च तीर्थानां पुण्यता परिकीर्तिता १७५
नवमं पर्व निर्दिष्टमेतदद्भुतमर्थवत्
एकोनषष्टिरध्यायास्तत्र संख्याविशारदैः १७६
संख्याता बहुवृत्तान्ताः श्लोकाग्रं चात्र शस्यते
त्रीणि श्लोकसहस्राणि द्वे शते विंशतिस्तथा
मुनिना संप्रणीतानि कौरवाणां यशोभृताम् १७७
अतः परं प्रवक्ष्यामि सौप्तिकं पर्व दारुणम्
भग्नोरुं यत्र राजानं दुर्योधनममर्षणम् १७८
व्यपयातेषु पार्थेषु त्रयस्तेऽभ्याययू रथाः
कृतवर्मा कृपो द्रौणिः सायाह्ने रुधिरोक्षिताः १७९
प्रतिजज्ञे दृढक्रोधो द्रौणिर्यत्र महारथः
अहत्वा सर्वपाञ्चालान्धृष्टद्युम्नपुरोगमान्
पाण्डवांश्च सहामात्यान्न विमोक्ष्यामि दंशनम् १८०
प्रसुप्तान्निशि विश्वस्तान्यत्र ते पुरुषर्षभाः
पाञ्चालान्सपरीवाराञ्जघ्नुर्द्रौणिपुरोगमाः १८१
यत्रामुच्यन्त पार्थास्ते पञ्च कृष्णबलाश्रयात्
सात्यकिश्च महेष्वासः शेषाश्च निधनं गताः १८२
द्रौपदी पुत्रशोकार्ता पितृभ्रातृवधार्दिता
कृतानशनसंकल्पा यत्र भर्तॄनुपाविशत् १८३
द्रौपदीवचनाद्यत्र भीमो भीमपराक्रमः
अन्वधावत संक्रुद्धो भारद्वाजं गुरोः सुतम् १८४
भीमसेनभयाद्यत्र दैवेनाभिप्रचोदितः
अपाण्डवायेति रुषा द्रौणिरस्त्रमवासृजत् १८५
मैवमित्यब्रवीत्कृष्णः शमयंस्तस्य तद्वचः
यत्रास्त्रमस्त्रेण च तच्छमयामास फाल्गुनः १८६
द्रौणिद्वैपायनादीनां शापाश्चान्योन्यकारिताः
तोयकर्मणि सर्वेषां राज्ञामुदकदानिके १८७

गूढोत्पन्नस्य चाख्यानं कर्णस्य पृथयात्मनः
सुतस्यैतदिह प्रोक्तं दशमं पर्व सौप्तिकम् १८८
अष्टादशास्मिन्नध्यायाः पर्वण्युक्ता महात्मना
श्लोकाग्रमत्र कथितं शतान्यष्टौ तथैव च १८९
श्लोकाश्च सप्ततिः प्रोक्ता यथावदभिसंख्यया
सौप्तिकैषीकसंबन्धे पर्वण्यमितबुद्धिना १९०
अत ऊर्ध्वमिदं प्राहुः स्त्रीपर्व करुणोदयम्
विलापो वीरपत्नीनां यत्रातिकरुणः स्मृतः
क्रोधावेशः प्रसादश्च गांधारीधृतराष्ट्रयोः १९१
यत्र तान्क्षत्रियाञ्शूरान्दिष्टान्ताननिवर्तिनः
पुत्रान्भ्रातॄन्पितॄंश्चैव ददृशुर्निहतान्रणे १९२
यत्र राजा महाप्राज्ञः सर्वधर्मभृतां वरः
राज्ञां तानि शरीराणि दाहयामास शास्त्रतः १९३
एतदेकादशं प्रोक्तं पर्वातिकरुणं महत्
सप्तविंशतिरध्यायाः पर्वण्यस्मिन्नुदाहृताः १९४
श्लोकाः सप्तशतं चात्र पञ्चसप्ततिरुच्यते
संख्यया भारताख्यानं कर्त्रा ह्यत्र महात्मना
प्रणीतं सज्जनमनोवैक्लव्याश्रुप्रवर्तकम् १९५
अतः परं शान्तिपर्व द्वादशं बुद्धिवर्धनम्
यत्र निर्वेदमापन्नो धर्मराजो युधिष्ठिरः
घातयित्वा पितॄन्भ्रातॄन्पुत्रान्संबन्धिबान्धवान् १९६
शान्तिपर्वणि धर्माश्च व्याख्याताः शरतल्पिकाः
राजभिर्वेदितव्या ये सम्यङ्नयबुभुत्सुभिः १९७
आपद्धर्माश्च तत्रैव कालहेतुप्रदर्शकाः
यान्बुद्ध्वा पुरुषः सम्यक्सर्वज्ञत्वमवाप्नुयात्
मोक्षधर्माश्च कथिता विचित्रा बहुविस्तराः १९८
द्वादशं पर्व निर्दिष्टमेतत्प्राज्ञजनप्रियम्
पर्वण्यत्र परिज्ञेयमध्यायानां शतत्रयम्
त्रिंशच्चैव तथाध्याया नव चैव तपोधनाः १९९
श्लोकानां तु सहस्राणि कीर्तितानि चतुर्दश

पञ्च चैव शतान्याहुः पञ्चविंशतिसंख्यया २००
अत ऊर्ध्वं तु विज्ञेयमानुशासनमुत्तमम्
यत्र प्रकृतिमापन्नः श्रुत्वा धर्मविनिश्चयम्
भीष्माद्भागीरथीपुत्रात्कुरुराजो युधिष्ठिरः २०१
व्यवहारोऽत्र कार्त्स्न्येन धर्मार्थीयो निदर्शितः
विविधानां च दानानां फलयोगाः पृथग्विधाः २०२
तथा पात्रविशेषाश्च दानानां च परो विधिः
आचारविधियोगश्च सत्यस्य च परा गतिः २०३
एतत्सुबहुवृत्तान्तमुत्तमं चानुशासनम्
भीष्मस्यात्रैव संप्राप्तिः स्वर्गस्य परिकीर्तिता २०४
एतत्त्रयोदशं पर्व धर्मनिश्चयकारकम्
अध्यायानां शतं चात्र षट्चत्वारिंशदेव च
श्लोकानां तु सहस्राणि षट् सप्तैव शतानि च २०५
ततोऽश्वमेधिकं नाम पर्व प्रोक्तं चतुर्दशम्
तत्संवर्तमरुत्तीयं यत्राख्यानमनुत्तमम् २०६
सुवर्णकोशसंप्राप्तिर्जन्म चोक्तं परीक्षितः
दग्धस्यास्त्राग्निना पूर्वं कृष्णात्संजीवनं पुनः २०७
चर्यायां हयमुत्सृष्टं पाण्डवस्यानुगच्छतः
तत्र तत्र च युद्धानि राजपुत्रैरमर्षणैः २०८
चित्राङ्गदायाः पुत्रेण पुत्रिकाया धनंजयः
संग्रामे बभ्रुवाहेन संशयः चात्र दर्शितः
अश्वमेधे महायज्ञे नकुलाख्यानमेव च २०९
इत्याश्वमेधिकं पर्व प्रोक्तमेतन्महाद्भुतम्
अत्राध्यायशतं त्रिंशत्त्रयोऽध्यायाश्च शब्दिताः २१०
त्रीणि श्लोकसहस्राणि तावन्त्येव शतानि च
विंशतिश्च यथा श्लोकाः संख्यातास्तत्त्वदर्शिना २११
तत आश्रमवासाख्यं पर्व पञ्चदशं स्मृतम्
यत्र राज्यं परित्यज्य गांधारीसहितो नृपः
धृतराष्ट्राश्रमपदं विदुरश्च जगाम ह २१२
यं दृष्ट्वा प्रस्थितं साध्वी पृथाप्यनुययौ तदा

पुत्रराज्यं परित्यज्य गुरुशुश्रूषणे रता २१३
यत्र राजा हतान्पुत्रान्पौत्रानन्यांश्च पार्थिवान्
लोकान्तरगतान्वीरानपश्यत्पुनरागतान् २१४
ऋषेः प्रसादात्कृष्णस्य दृष्ट्वाश्चर्यमनुत्तमम्
त्यक्त्वा शोकं सदारश्च सिद्धिं परमिकां गतः २१५
यत्र धर्मं समाश्रित्य विदुरः सुगतिं गतः
संजयश्च महामात्रो विद्वाग्नावल्गणिर्वशी २१६
ददर्श नारदं यत्र धर्मराजो युधिष्ठिरः
नारदाच्चैव शुश्राव वृष्णीनां कदनं महत् २१७
एतदाश्रमवासाख्यं पर्वोक्तं सुमहाद्भुतम्
द्विचत्वारिंशदध्यायाः पर्वैतदभिसंख्यया २१८
सहस्रमेकं श्लोकानां पञ्च श्लोकशतानि च
षडेव च तथा श्लोकाः संख्यातास्तत्त्वदर्शिना २१९
अतः परं निबोधेदं मौसलं पर्व दारुणं
यत्र ते पुरुषव्याघ्राः शस्त्रस्पर्शसहा युधि
ब्रह्मदण्डविनिष्पिष्टाः समीपे लवणाम्भसः २२०
आपाने पानगलिता दैवेनाभिप्रचोदिताः
एरकारूपिभिर्वज्रैर्निजघ्नुरितरेतरम् २२१
यत्र सर्वक्षयं कृत्वा तावुभौ रामकेशवौ
नातिचक्रमतुः कालं प्राप्तं सर्वहरं समम् २२२
यत्रार्जुनो द्वारवतीमेत्य वृष्णिविनाकृताम्
दृष्ट्वा विषादमगमत्परां चार्तिं नरर्षभः २२३
स सत्कृत्य यदुश्रेष्ठं मातुलं शौरिमात्मनः
ददर्श यदुवीराणामापाने वैशसं महत् २२४
शरीरं वासुदेवस्य रामस्य च महात्मनः
संस्कारं लम्भयामास वृष्णीनां च प्रधानतः २२५
स वृद्धबालमादाय द्वारवत्यास्ततो जनम्
ददर्शापदि कष्टायां गाण्डीवस्य पराभवम् २२६
सर्वेषां चैव दिव्यानामस्त्राणामप्रसन्नताम्
नाशं वृष्णिकलत्राणां प्रभावानामनित्यताम् २२७

दृष्ट्वा निर्वेदमापन्नो व्यासवाक्यप्रचोदितः
धर्मराजं समासाद्य संन्यासं समरोचयत् २२८
इत्येतन्मौसलं पर्व षोडशं परिकीर्तितम्
अध्यायाष्टौ समाख्याताः श्लोकानां च शतत्रयम् २२९
महाप्रस्थानिकं तस्मादूर्ध्वं सप्तदशं स्मृतम्
यत्र राज्यं परित्यज्य पाण्डवाः पुरुषर्षभाः
द्रौपद्या सहिता देव्या सिद्धिं परमिकां गताः २३०
अत्राध्यायास्त्रयः प्रोक्ताः श्लोकानां च शतं तथा
विंशतिश्च तथा श्लोकाः संख्यातास्तत्त्वदर्शिना २३१
स्वर्गपर्व ततो ज्ञेयं दिव्यं यत्तदमानुषम्
अध्यायाः पञ्च संख्याताः पर्वैतदभिसंख्यया
श्लोकानां द्वे शते चैव प्रसंख्याते तपोधनाः २३२
अष्टादशैवमेतानि पर्वाण्युक्तान्यशेषतः
खिलेषु हरिवंशश्च भविष्यच्च प्रकीर्तितम् २३३
एतदखिलमाख्यातं भारतं पर्वसंग्रहात्
अष्टादश समाजग्मुरक्षौहिण्यो युयुत्सया
तन्महद्दारुणं युद्धमहान्यष्टादशाभवत् २३४
यो विद्याच्चतुरो वेदान्साङ्गोपनिषदान्द्विजः
न चाख्यानमिदं विद्यान्नैव स स्याद्विचक्षणः २३५
श्रुत्वा त्विदमुपाख्यानं श्राव्यमन्यन्न रोचते
पुंस्कोकिलरुतं श्रुत्वा रूक्षा ध्वाङ्क्षस्य वागिव २३६
इतिहासोत्तमादस्माज्जायन्ते कविबुद्धयः
पञ्चभ्य इव भूतेभ्यो लोकसंविधयस्त्रयः २३७
अस्याख्यानस्य विषये पुराणं वर्तते द्विजाः
अन्तरिक्षस्य विषये प्रजा इव चतुर्विधाः २३८
क्रियागुणानां सर्वेषामिदमाख्यानमाश्रयः
इन्द्रियाणां समस्तानां चित्रा इव मनःक्रियाः २३९
अनाश्रित्यैतदाख्यानं कथा भुवि न विद्यते
आहारमनपाश्रित्य शरीरस्येव धारणम् २४०
इदं सर्वैः कविवरैराख्यानमुपजीव्यते

उदयप्रेप्सुभिर्भृत्यैरभिजात इवेश्वरः २४१
द्वैपायनौष्ठपुटनिःसृतमप्रमेयं पुण्यं पवित्रमथ पापहरं शिवं च
यो भारतं समधिगच्छति वाच्यमानं किं तस्य पुष्करजलैरभिषेचनेन २४२
आख्यानं तदिदमनुत्तमं महार्थं विन्यस्तं महदिह पर्वसंग्रहेण
श्रुत्वादौ भवति नृणां सुखावगाहं विस्तीर्णं लवणजलं यथा प्लवेन २४३
इति श्री महाभारते आदि पर्वणि द्वितीयोऽध्यायः २४५३

अथ तृतीयोऽध्यायः

सूत उवाच
जनमेजयः पारिक्षितः सह भ्रातृभिः कुरुक्षेत्रे दीर्घसत्रमुपास्ते
तस्य भ्रातरस्त्रयः श्रुतसेन उग्रसेनो भीमसेन इति १
तेषु तत्सत्रमुपासीनेषु तत्र श्वाभ्यागच्छत्सारमेयः
स जनमेजयस्य भ्रातृभिरभिहतो रोरूयमाणो मातुः समीपमुपागच्छत् २
तं माता रोरूयमाणमुवाच किं रोदिषि केनास्यभिहत इति ३
स एवमुक्तो मातरं प्रत्युवाच जनमेजयस्य भातृभिरभिहतोऽस्मीति ४
तं माता प्रत्युवाच व्यक्तं त्वया तत्रापराद्धं येनास्यभिहत इति ५
स तां पुनरुवाच नापराध्यामि किंचित् नावेक्षे हवींषि नावलिह इति ६
तच्छ्रुत्वा तस्य माता सरमा पुत्रशोकार्ता
तत्सत्रमुपागच्छद्यत्र स जनमेजयः सह भ्रातृभिर्दीर्घसत्रमुपास्ते ७
स तया क्रुद्धया तत्रोक्तःअयं मे पुत्रो न किंचिदपराध्यति किमर्थमभिहत इति
यस्माच्चायमभिहतोऽनपकारी तस्माददृष्टं त्वां भयमागमिष्यतीति ८
स जनमेजय एवमुक्तो देवशुन्या सरमया दृढं संभ्रान्तो विषण्णश्चासीत् ९
स तस्मिन्सत्रे समाप्ते हास्तिनपुरं प्रत्येत्य
पुरोहितमनुरूपमन्विच्छमानः परं यत्नमकरोद्यो मे पापकृत्यां शमयेदिति १०
स कदाचिन्मृगयां यातः परिक्षितो
जनमेजयः कस्मिंश्चित्स्वविषयोद्देशे आश्रममपश्यत् ११
तत्र कश्चिदृषिरासांचक्रे श्रुतश्रवा नाम
तस्याभिमतः पुत्र आस्ते सोमश्रवा नाम १२
तस्य तं पुत्रमभिगम्य जनमेजयः पारिक्षितः पौरोहित्याय वव्रे १३
स नमस्कृत्य तमृषिमुवाच

भगवन्नयं तव पुत्रो मम पुरोहितोऽस्त्विति १४
स एवमुक्तः प्रत्युवाच भो जनमेजय पुत्रोऽय मम सर्प्यां जातः महातपस्वी स्वाध्यायसंपन्नो मत्तपोवीर्यसंभृतो मच्छुक्रं पीतवत्यास्तस्याः कुक्षौ संवृद्धः समर्थोयं भवतः सर्वाः पापकृत्याः शमयितुमन्तरेण महादेवकृत्याम्
अस्य त्वेकमुपांशुव्रतम् यदेनं कश्चिद्ब्राह्मणः कंचिदर्थमभियाचेत्तं तस्मै दद्यादयम् यद्येतदुत्सहसे ततो नयस्वैनमिति १५
तेनैवमुक्तो जनमेजयस्तं प्रत्युवाच भगवंस्तथा भविष्यतीति १६
स तं पुरोहितमुपादायोपावृत्तो भ्रातृनुवाच
मयायं वृतं उपाध्यायः यदयं ब्रूयात्तत्कार्यमविचारयद्भिरिति १७
तेनैवमुक्तं भ्रातरस्तस्य तथा चक्रुः स तथा भ्रातृन्संदिश्य
तक्षशिलां प्रत्यभिप्रतस्थे तं च देशं वशे स्थापयामास १८
एतस्मिन्नन्तरे कश्चिदृषिर्धौम्यो नामायोदः
तस्य शिष्यास्त्रयो बभूवुरुपमन्युरारुणिर्वेदश्चेति १९
स एकं शिष्यमारुणिं पाञ्चाल्यं प्रेषयामास
गच्छ केदारखण्डं बधानेति २०
स उपाध्यायेन संदिष्ट आरुणिः पाञ्चाल्यस्तत्र गत्वा तत्केदारखण्डं बद्धुं नाशक्नोत् २१
स क्लिश्यमानोऽपश्यदुपायम्
भवत्वेवं करिष्यामीति २२
स तत्र संविवेश केदारखण्डे
शयाने तस्मिंस्तदुदकं तस्थौ २३
ततः कदाचिदुपाध्याय आयोदो धौम्यः शिष्यानपृच्छत्
क्व आरुणिः पाञ्चाल्यो गत इति २४
ते प्रत्यूचुः भगवतैव प्रेषितो गच्छ केदारखण्डं बधानेति २५
स एवमुक्तस्ताञ्शिष्यान्प्रत्युवाच
तस्मात्सर्वे तत्र गच्छामो यत्र स इति २६
स तत्र गत्वा तस्याह्वानाय शब्दं चकार
भो आरुणे पाञ्चाल्य क्वासि वत्सैहीति २७
स तच्छ्रुत्वा आरुणिरुपाध्यायवाक्यं तस्मात्केदारखण्डा-
त्सहसोत्थाय तमुपाध्यायमुपतस्थे प्रोवाच चैनम्

अयमस्म्यत्र केदारखण्डे निःसरमाणमुदकमवारणीयं संरोद्धुं-
संविष्टो भगवच्छब्दं श्रुत्वैव सहसा विदार्य केदारखण्डं भवन्तमुपस्थितः
तदभिवादये भगवन्तम् आज्ञापयतु भवान् किं करवाणीति २८
तमुपाध्यायोऽब्रवीत् यस्माद्भवान्केदारखण्डमवदा-
र्योत्थितस्तस्माद्भवानुद्दालक एव नाम्ना भविष्यतीति २९
स उपाध्यायेनानुगृहीतः यस्मात्त्वया मद्वचोऽनुष्ठितं
तस्माच्छ्रेयोऽवाप्स्यसीति
सर्वे च ते वेदाः प्रतिभास्यन्ति सर्वाणि च धर्मशास्त्राणीति ३०
स एवमुक्त उपाध्यायेनेष्टं देशं जगाम ३१
अथापरः शिष्यस्तस्यैवायोदस्य धौम्यस्योपमन्युर्नाम ३२
तमुपाध्यायः प्रेषयामास वत्सोपमन्यो गा रक्षस्वेति ३३
स उपाध्यायवचनादरक्षद्गाः स चाहनि गा रक्षित्वा-
दिवसक्षयेऽभ्यागम्योपाध्यायस्याग्रतः स्थित्वा नमश्चक्रे ३४
तमुपाध्यायः पीवानमपश्यत् उवाच चैनम्
वत्सोपमन्यो केन वृत्तिं कल्पयसि पीवानसि दृढमिति ३५
स उपाध्यायं प्रत्युवाच भैक्षेण वृत्तिं कल्पयामीति ३६
तमुपाध्यायः प्रत्युवाच ममानिवेद्य भैक्षं नोपयोक्तव्यमिति ३७
स तथेत्युक्त्वा पुनररक्षद्गाः रक्षित्वा चागम्य
तथैवोपाध्यायस्याग्रतः स्थित्वा नमश्चक्रे ३८
तमुपाध्यायस्तथापि पीवानमेव दृष्ट्वोवाच
वत्सोपमन्यो सर्वमशेषतस्ते भैक्षं गृह्णामि
केनेदानीं वृत्तिं कल्पयसीति ३९
स एवमुक्त उपाध्यायेन प्रत्युवाच
भगवते निवेद्य पूर्वमपरं चरामि
तेन वृत्तिं कल्पयामीति ४०
तमुपाध्यायः प्रत्युवाच नैषा न्याय्या गुरुवृत्तिः
अन्येषामपिवृत्त्युपरोधं करोष्येवं वर्तमानः लुब्धोऽसीति ४१
स तथेत्युक्त्वा गा अरक्षत् रक्षित्वा च
पुनरुपाध्यायगृहमागम्योपाध्यायस्याग्रतः स्थित्वा नमश्चक्रे ४२
तमुपाध्यायस्तथापि पीवानमेव दृष्ट्वा पुनरुवाच

अहं ते सर्वं भैक्षं गृह्णामि न चान्यच्चरसि
पीवानसि केन वृत्तिं कल्पयसीति ४३
स उपाध्यायं प्रत्युवाच भो एतासां गवां पयसां वृत्तिं कल्पयामीति ४४
तमुपाध्यायः प्रत्युवाच नैतन्न्याय्यं पय उपयोक्तुं भवतो मयाननुज्ञातमिति ४५
स तथेति प्रतिज्ञाय गा रक्षित्वा पुनरुपाध्यायगृहानेत्य
गुरोरग्रतः स्थित्वा नमश्चक्रे ४६
तमुपाध्यायः पीवानमेवापश्यत् उवाच चैनम्
भैक्षं नाश्नासि न चान्यच्चरसि पयो न पिबसि
पीवानसि केन वृत्तिं कल्पयसीति ४७
स एवमुक्त उपाध्यायं प्रत्युवाच
भोः फेनं पिबामि यमिमे वत्सा मातॄणां स्तनं पिबन्त उद्गिरन्तीति ४८
तमुपाध्यायः प्रत्युवाच
एते त्वदनुकम्पया गुणवन्तो वत्साः प्रभूततरं फेनमुद्गिरन्ति तदेवमपि वत्सानां वृत्त्युपरोधं करोष्येवं वर्तमानः
फेनमपि भवान्न पातुमर्हतीति ४९
स तथेति प्रतिज्ञाय निराहारस्ता गा अरक्षत्
तथा प्रतिषिद्धो भैक्षं नाश्नाति न चान्यच्चरति
पयो न पिबति फेनं नोपयुंक्ते ५०
स कदाचिदरण्ये क्षुधार्तोऽर्कपत्राण्यभक्षयत् ५१
स तैरर्कपत्रैर्भक्षितैः क्षारकटूष्णविपाकिभिश्चक्षुष्युपहतोऽन्धोऽभवत्
सोऽन्धोऽपि चङ्क्रम्यमाणः कूपेऽपतत् ५२
अथ तस्मिन्ननाच्छत्युपाध्यायः शिष्यानवोचत्
मयोपमन्युः सर्वतः प्रतिषिद्धः स नियतं कुपितः
ततो नागच्छति चिरगतश्चेति ५३
स एवमुक्त्वा गत्वारण्यमुपमन्योराह्वानं चक्रे
भो उपमन्योक्वासि वत्सैहीति ५४
स तदाह्वानमुपाध्यायाच्छ्रुत्वा प्रत्युवाचोच्चैः
अयमस्मि भो उपाध्याय कूपे पतित इति ५५
तमुपाध्यायः प्रत्युवाच कथमसि कूपे पतित इति ५६

स तं प्रत्युवाच  अर्कपत्राणि भक्षयित्वान्धीभूतोऽस्मि
अतः कूपे पतित इति ५७
तमुपाध्यायः प्रत्युवाच  अश्विनौ स्तुहि  तौ त्वां चक्षुष्मन्तं करिष्यतो
देवभिषजाविति ५८
स एवमुक्त उपाध्यायेन स्तोतुं प्रचक्रमे देवावश्विनौ वाग्भिर्ऋग्भिः ५९
प्रपूर्वगौ पूर्वजौ चित्रभानू गिरा वा शंसामि तपनावनन्तौ
दिव्यौ सुपर्णौ विरजौ विमानावधिक्षियन्तौ भुवनानि विश्वा ६०
हिरण्मयौ शकुनी सांपरायौ नासत्यदस्रौ सुनसौ वैजयन्तौ
शुक्रं वयन्तौ तरसा सुवेमावभि व्ययन्तावसितं विवस्वत् ६१
ग्रस्तां सुपर्णस्य बलेन वर्तिकाममुञ्चतामश्विनौ सौभगाय
तावत्सुवृत्तावनमन्त मायया सत्तमा गा अरुणा उदावहन् ६२
षष्टिश्च गावस्त्रिशताश्च धेनव एकं वत्सं सुवते तं दुहन्ति
नानागोष्ठा विहिता एकदोहनास्तावश्विनौ दुहतो घर्ममुक्थ्यम् ६३
एकां नाभिं सप्तशता अराः श्रिताः प्रधिष्वन्या विंशतिरर्पिता अराः
अनेमि चक्रं परिवर्ततेऽजरं मायाश्विनौ समनक्ति चर्षणी ६४
एकं चक्रं वर्तते द्वादशारं प्रधिषण्णाभिमेकाक्षममृतस्य धारणम्
यस्मिन्देवा अधि विश्वे विषक्तास्तावश्विनौ मुञ्चत मा विषीदतम् ६५
अश्विनाविन्द्रममृतं वृत्तभूयौ तिरोधत्तामश्विनौ दासपत्नी
भित्त्वा गिरिमश्विनौ गामुदाचरन्तौ तद्वृष्टमह्ना प्रथिता वलस्य ६६
युवां दिशो जनयथो दशाग्रे समानं मूर्ध्नि रथया वियन्ति
तासां यातमृषयोऽनुप्रयान्ति देवा मनुष्याः क्षितिमाचरन्ति ६७
युवां वर्णान्विकुरुथो विश्वरूपांस्तेऽधिक्षियन्ति भुवनानि विश्वा
ते भानवोऽप्यनुसृताश्चरन्ति देवा मनुष्याः क्षितिमाचरन्ति ६८
तौ नासत्यावश्विनावामहे वां स्रजं च यां बिभृथः पुष्करस्य
तौ नासत्यावमृतावृतावृधावृते देवास्तत्प्रपदेन सूते ६९
मुखेन गर्भं लभतां युवानौ गतासुरेतत्प्रपदेन सूते
सद्यो जातो मातरमत्ति गर्भस्तावश्विनौ मुंचथो जीवसे गाः ७०
एवं तेनाभिष्टुतावश्विनावाजग्मतुः  आहतुश्चैनम्
प्रीतौस्वः  एष तेऽपूपः अशानैममिति ७१
स एवमुक्तः प्रत्युवाच  नानृतमूचतुर्भवन्तौ

न त्वहमेतमपूपमुपयोक्तुमुत्सहे अनिवेद्य गुरव इति ७२
ततस्तमश्विनावूचतुः  आवाभ्यां पुरस्ताद्भवत
उपाध्यायेनैवमेवाभिष्टुताभ्यामपूपः प्रीताभ्यां दत्तः  उपयुक्तश्च स तेनाविवेद्य गुरवे
त्वमपि तथैव कुरुष्व यथा कृतमुपाध्यायेनेति ७३
स एवमुक्तः पुनरेव प्रत्युवाचैतौ  प्रत्यनुनये भवन्तावश्विनौ
नोत्सहेऽहमनिवेद्योपाध्यायायोपयोक्तुमिति ७४
तमश्विनावाहतुः  प्रीतौ स्वस्तवानया गुरुवृत्त्या  उपाध्यायस्य ते कार्ष्णायसा दन्ताः
भवतो हिरण्मया भविष्यन्ति  चक्षुष्मांश्च भविष्यसि  श्रेयश्चावाप्स्यसीति ७५
स एवमुक्तोऽश्विभ्यां
लब्धचक्षुरुपाध्यायसकाशमागम्योपाध्यायमभिवाद्याचचक्षे
स चास्य प्रीतिमानभूत् ७६
आह चैनम्  यथाश्विनावाहतुस्तथा त्वं श्रेयोऽवाप्स्यसीति
सर्वे च ते वेदाः प्रतिभास्यन्तीति ७७
एषा तस्यापि परीक्षोपमन्योः ७८
अथापरः शिष्यस्तस्यैवायोदस्य धौम्यस्य वेदो नाम ७९
तमुपाध्यायः संदिदेश  वत्स वेद इहास्यताम्
भवता मद्गृहे कंचित्कालं शुश्रूषमाणेन भवितव्यम्
श्रेयस्ते भविष्यतीति ८०
स तथेत्युक्त्वा गुरुकुले दीर्घकालं गुरुशुश्रूषणपरोऽवसत्
गौरिव नित्यं गुरुषु धूर्षु नियुज्यमानः
शीतोष्णक्षुत्तृष्णादुःखसहः सर्वत्राप्रतिकूलः ८१
तस्य महता कालेन गुरुः परितोषं जगाम
तत्परितोषाच्च श्रेयः सर्वज्ञतां चावाप
एषा तस्यापि परीक्षा वेदस्य ८२
स उपाध्यायेनानुज्ञातः समावृत्तस्तस्माद्गुरुकुलवासाद्गृहाश्रमं प्रत्यपद्यत
तस्यापि स्वगृहे वसतस्त्रयः शिष्या बभूवुः ८३
स शिष्यान्न किंचिदुवाच  कर्म वा क्रियतां गुरुशुश्रूषा वेति
दुःखाभिज्ञो हि गुरुकुलवासस्य शिष्यान्परिक्लेशेन योजयितुं नेयेष ८४

अथ कस्यचित्कालस्य वेदं ब्राह्मणं जनमेजयः
पौष्यश्च क्षत्रियावुपेत्योपाध्यायं बरयांचक्रतुः ८५
स कदाचिद्याज्यकार्येणाभिप्रस्थित उत्तङ्कं नाम शिष्यं नियोजयामास
भो उत्तङ्क यत्किंचिदस्मद्गृहे परिहीयते तदिच्छाम्यहमपरिहीणं भवता
क्रियमाणमिति ८६
स एवं प्रतिसमादिश्योत्तङ्कं वेदः प्रवासं जगाम ८७
अथोत्तङ्को गुरुशुश्रूषुर्गुरुनियोगमनुतिष्ठमानस्तत्र गुरुकुले वसति स्म ८८
स वसंस्तत्रोपाध्यायस्त्रीभिः सहिताभिराहूयोक्तः
उपाध्यायिनी ते ऋतुमती  उपाध्यायश्च प्रोषितः
अस्या यथायमृतुर्वन्ध्यो न भवति तथा क्रियताम्  एतद्विषीदतीति ८९
स एवमुक्तस्ताः स्त्रियः प्रत्युवाच  न मया स्त्रीणां वचनादिदमकार्यं कार्यम्
न ह्यहमुपाध्यायेन संदिष्टः  अकार्यमपि त्वया कार्यमिति ९०
तस्य पुनरुपाध्यायः कालान्तरेण गृहानुपजगाम तस्मात्प्रवासात्
स तद्वृत्तं तस्याशेषमुपलभ्य प्रीतिमानभूत् ९१
उवाच चैनम्  वत्सोत्तङ्क किं ते प्रियं करवाणीति
धर्मतो हि शुश्रूषितोऽस्मि भवता  तेन प्रीतिः परस्परेण नौ संवृद्धा
तदनुजाने भवन्तम्  सर्वामेव सिद्धिं प्राप्स्यसि  गम्यतामिति ९२
स एवमुक्तः प्रत्युवाच  किं ते प्रियं करवाणीति  एवं ह्याहुः ९३
यश्चाधर्मेण विब्रूयाद्यश्चाधर्मेण पृच्छति
तयोरन्यतरः प्रैति विद्वेषं चाधिगच्छति ९४
सोऽहमनुज्ञातो भवता इच्छामीष्टं तं गुर्वर्थमुपहर्तुमिति ९५
तेनैवमुक्त उपाध्यायः प्रत्युवाच  वत्सोत्तङ्क उष्यतां तावदिति ९६
स कदाचित्तमुपाध्यायमाहोत्तंकः  आज्ञापयतु भवान्
किं ते प्रियमुपहरामि गुर्वर्थमिति ९७
तमुपाध्यायः प्रत्युवाच  वत्सोत्तंक बहुशो मां चोदयसि गुर्वर्थमुपहरेयमिति
तद्गच्छ  एनां प्रविश्योपाध्यायिनीं पृच्छ किमुपहरामीति
एषा यद्ब्रवीति तदुपहरस्वेति ९८
स एवमुक्त उपाध्यायेनोपाध्यायिनीमपृच्छत्
भवत्युपाध्यायेनास्म्यनुज्ञातो गृहं गन्तुम्  तदिच्छामीष्टं ते गुर्वर्थमुपहृत्यानृणो
गन्तुम्  तदाज्ञापयतु भवती  किमुपहरामि गुर्वर्थमिति ९९

सैवमुक्तोपाध्यायिन्युत्तङ्कं प्रत्युवाच
गच्छ पौष्यं राजानम्  भिक्षस्व तस्य क्षत्रियया पिनद्धे कुण्डले
ते आनयस्व  इतश्चतुर्थेऽहनि पुण्यकं भविता
ताभ्यामाबद्धाभ्यां ब्राह्मणान्परिवेष्टुमिच्छामि
शोभमाना यथा ताभ्यां कुण्डलाभ्यां तस्मिन्नहनि संपादयस्व
श्रेयो हि ते स्यात्क्षणं कुर्वत इति १००
स एवमुक्त उपाध्यायिन्या प्रातिष्ठतोत्तङ्कः
स पथि गच्छन्नपश्यदृषभमतिप्रमाणं तमधि रूढं च पुरुषमतिप्रमाणमेव १०१
स पुरुष उत्तङ्कमभ्यभाषत  उत्तङ्कैतत्पुरीषमस्य ऋषभस्य भक्षयस्वेति १०२
स एवमुक्तो नैच्छत् १०३
तमाह पुरुषो भूयः  भक्षयस्वोत्तङ्क  मा विचारय
उपाध्यायेनापि ते भक्षितं पूर्वमिति १०४
स एवमुक्तो बाढमित्युक्त्वा तदा तदृषभस्य पुरीषं मूत्रं
च भक्षयित्वोत्तङ्कः प्रतस्थे यत्र स क्षत्रियः पौष्यः १०५
तमुपेत्यापश्यदुत्तङ्क आसीनम्
स तमुपेत्याशीर्भिरभिनन्द्योवाच
अर्थी भवन्तमुपगतोऽस्मीति १०६
स एनमभिवाद्योवाच
भगवन्पौष्यः खल्वहम्
किं करवाणीति १०७
तमुवाचोत्तङ्कः
गुर्वर्थे कुण्डलाभ्यामर्थ्यागतोऽस्मीति ये ते
क्षत्रियया पिनद्धे कुण्डले ते भवान्दातुमर्हतीति १०८
तं पौष्यः प्रत्युवाच  प्रविश्यान्तः पुरं क्षत्रिया याच्यतामिति १०९
स तेनैवमुक्तः प्रविश्यान्तः पुरं क्षत्रियां नापश्यत् ११०
स पौष्यं पुनरुवाच  न युक्तं भवता वयमनृतेनोपचरितुम्
न हि ते क्षत्रियान्तः पुरे संनिहिता  नैनां पश्यामीति १११
स एवमुक्तः पौष्यस्तं प्रत्युवाच
संप्रति भवानुच्छिष्टः  स्मर तावत्
न हि सा क्षत्रिया उच्छिष्टेनाशुचिना वा शक्या द्रष्टुम्

पतिव्रतात्वादेषा नाशुचेर्दर्शनमुपैतीति ११२
अथैवमुक्त उत्तङ्कः स्मृत्वोवाच
अस्ति खलु मयोच्छिष्टेनोपस्पृष्टं शीघ्रं गच्छता चेति ११३
तं पौष्यः प्रत्युवाच एतत्तदेवं हि
न गच्छतोपस्पृष्टं भवति न स्थितेनेति ११४
अथोत्तङ्कस्तथेत्युक्त्वा प्राङ्मुख उपविश्य सुप्रक्षालितपाणिपाद-
वदनोऽशब्दाभिहृदयंगमाभिरद्भिरुपस्पृश्य त्रिः पीत्वा द्विः परिमृज्य
खान्यद्भिरुपस्पृश्यान्तःपुरं प्रविश्य तां क्षत्रियामपश्यत् ११५
सा च दृष्ट्वैवोत्तंकमभ्युत्थायाभिवाद्योवाच स्वागतं ते भगवन्
आज्ञापय किं करवाणीति ११६
स तामुवाच एते कुण्डले गुर्वर्थं मे भिक्षिते दातुमर्हसीति ११७
सा प्रीता तेन तस्य सद्भावेन पात्रमयमनतिक्रमणीयश्चेति
मत्वा ते कुण्डले अवमुच्यास्मै प्रायच्छत् ११८
आह चैनम् एते कुण्डले तक्षको नागराजः प्रार्थयति
अप्रमत्तो नेतुमर्हसीति ११९
स एवमुक्तस्तां क्षत्रियां प्रत्युवाच
भवति सुनिर्वृता भव न मां शक्तस्तक्षको नागराजो धर्षयितुमिति १२०
स एवमुक्त्वा तां क्षत्रियामामन्त्र्य पौष्यसकाशमागच्छत् १२१
स तं दृष्ट्वोवाच भो पौष्य प्रीतोऽस्मीति १२२
तं पौष्यः प्रत्युवाच भगवंश्चिरस्य पात्रमासाद्यते
भवांश्च गुणवानतिथिः तत्करिष्ये श्राद्धम् क्षणः क्रियतामिति १२३
तमुत्तङ्कः प्रत्युवाच कृतक्षण एवास्मि
शीघ्रमिच्छामि यथोपपन्नमन्नमुपहृतं भवतेति १२४
स तथेत्युक्त्वा यथोपपन्नेनान्नेनैनं भोजयामास १२५
अथोत्तङ्कः शीतमन्नं सकेशं दृष्ट्वा अशुच्येतदिति मत्वा पौष्यमुवाच
यस्मान्मे अशुच्यन्नं ददासि तस्मादन्धो भविष्यसीति १२६
तं पौष्यः प्रत्युवाच यस्मात्त्वमप्यदुष्टमन्नं दूषयसि
तस्मादनपत्यो भविष्यसीति १२७
सोऽथ पौष्यस्तस्याशुचिभावमन्नस्यागमयामास १२८
अथ तदन्नं मुक्तकेश्या स्त्रियोपहृतं सकेशमशुचि मत्वोत्तङ्कं प्रसादयामास

भगवन्नज्ञानादेतदन्नं सकेशमुपहृतं शीतं च तत्क्षामये भवन्तम् न भवेयमन्ध
इति १२९
तमुत्तङ्कः प्रत्युवाच न मृषा ब्रवीमि
भूत्वा त्वमन्धो नचिरादनन्धो भविष्यसीति
ममापि शापो न भवेद्भवता दत्त इति १३०
तं पौष्यः प्रत्युवाच नाहं शक्तः शापं प्रत्यादातुम्
न हि मे मन्युरद्याप्युपशमं गच्छति
किं चैतद्भवता न ज्ञायते यथा १३१
नावनीतं हृदयं ब्राह्मणस्य वाचि क्षुरो निहितस्तीक्ष्णधारः
विपरीतमेतदुभयं क्षत्रियस्य वाङ्नावनीती हृदयं तीक्ष्णधारम् १३२
तदेवं गते न शक्तोऽह तीक्ष्णहृदयत्वात्तं शापमन्यथा कर्तुम् गम्यतामिति
१३३
तमुत्तङ्कः प्रत्युवाच भवताहमन्नस्याशुचिभागमागमय्य प्रत्यनुनीतः
प्राक्चतेऽभिहितम् यस्माददुष्टमन्नं दूषयसि तस्मादनपत्यो भविष्यसीति
दुष्टे चान्ने नैष मम शापो भविष्यतीति १३४
साधयामस्तावदित्युक्त्वा प्रातिष्ठतोत्तङ्कस्ते कुण्डले गृहीत्वा १३५
सोऽपश्यत्पथि नग्नं श्रमणमागच्छन्तं मुहुर्मुहुर्दृश्यमानमदृश्यमानं च
अथोत्तङ्कस्ते कुण्डले भूमौ निक्षिप्योदकार्थं प्रचक्रमे १३६
एतस्मिन्नन्तरे स श्रमणस्त्वरमाण उपसृत्य ते कुण्डले गृहीत्वा प्राद्रवत्
तमुत्तङ्कोऽभिसृत्य जग्राह स तद्रूपं विहाय तक्षकरूपं कृत्वा
सहसा धरण्यां विवृतं महाबिलं विवेश १३७
प्रविश्य च नागलोकं स्वभवनमगच्छत्
तमुत्तङ्कोऽन्वाविवेश तेनैव बिलेन
प्रविश्य च नागानस्तुवदेभिः श्लोकैः १३८
य एरावतराजानः सर्पाः समितिशोभनाः
वर्षन्त इव जीमूताः सविद्युत्पवनेरिताः १३९
सुरूपाश्च विरूपाश्च तथा कल्माषकुण्डलाः
आदित्यवन्नाकपृष्ठे रेजुरैरावतोद्भवाः १४०
बहूनि नागवर्त्मानि गङ्गायास्तीर उत्तरे
इच्छेत्कोऽकाशुसेनायां चर्तुमैरावतं विना १४१

शतान्यशीतिरष्टौ च सहस्राणि च विंशतिः
सर्पाणां प्रग्रहा यान्ति धृतराष्ट्रो यदेजति १४२
ये चैनमुपसर्पन्ति ये च दूरंपरं गताः
अहमैरावतज्येष्ठभ्रातृभ्योऽकरवं नमः १४३
यस्य वासः कुरुक्षेत्रे खाण्डवे चाभवत्सदा
तं काद्रवेयमस्तौषं कुण्डलार्थाय तक्षकम् १४४
तक्षकश्चाश्वसेनश्च नित्यं सहचरावुभौ
कुरुक्षेत्रे निवसतां नदीमिक्षुमतीमनु १४५
जघन्यजस्तक्षकस्य श्रुतसेनेति यः श्रुतः
अवसद्यो महद्द्युम्नि प्रार्थयन्नागमुख्यताम्
करवाणि सदा चाहं नमस्तस्मै महात्मने १४६
एवं स्तुवन्नपि नागान्यदा ते कुण्डले नालभत्तथापश्यत्स्त्रियौ
तन्त्रे अधिरोप्य पटं वयन्त्यौ १४७
तस्मिंश्च तन्त्रे कृष्णाः सिताश्च तन्तवः
चक्रं चापश्यद्षड्भिः कुमारैः परिवर्त्यमानम्
पुरुषं चापश्यद्दर्शनीयम् १४८
स तान्सर्वांस्तुष्टाव एभिर्मन्त्रवादश्लोकैः १४९
त्रीण्यर्पितान्यत्र शतानि मध्ये षष्टिश्च नित्यं चरति ध्रुवेऽस्मिन्
चक्रे चतुर्विंशतिपर्वयोगे षडयत्कुमाराः परिवर्तयन्ति १५०
तन्त्रं चेदं विश्वरूपं युवत्यौ वयतस्तन्तून्सततं वर्तयन्त्यौ
कृष्णान्सितांश्चैव विवर्तयन्त्यौ भूतान्यजस्त्रं भुवनानि चैव १५१
वज्रस्य भर्ता भुवनस्य गोप्ता वृत्रस्य हन्ता नमुचेर्निहन्ता
कृष्णे वसानो वसने महात्मा सत्यानृते यो विविनक्ति लोके १५२
यो वाजिनं गर्भमपां पुराणं वैश्वानरं वाहनमभ्युपेतः
नमः सदास्मै जगदीश्वराय लोकत्रयेशाय पुरंदराय १५३
ततः स एनं पुरुषः प्राह प्रीतोऽस्मि तेऽहमनेन स्तोत्रेण
किं ते प्रियं करवाणीति १५४
स तमुवाच नागा मे वशमीयुरिति १५५
स एनं पुरुषः पुनरुवाच एतमश्वमपाने धमस्वेति १५६
स तमश्वमपानेऽधमत् अथाश्वाद्धम्यमानात्सर्वस्त्रोतोभ्यः

सधूमा अर्चिषोऽग्नेर्निष्पेतुः १५७
ताभिर्नागलोको धूपितः १५८
अथ ससंभ्रमस्तक्षकोऽग्नितेजोभयविषण्णस्ते कुण्डले गृहीत्वा सहसा स्वभवनान्निष्क्रम्योत्तङ्कमुवाच एते कुण्डले प्रतिगृह्णातु भवानिति १५९
स ते प्रतिजग्राहोत्तङ्कः कुण्डले प्रतिगृह्याचिन्तयत्
अद्य तत्पुण्यकमुपाध्यायिन्याः दूरं चाहमभ्यागतः
कथं नु खलु संभावयेयमिति १६०
तत एनं चिन्तयानमेव स पुरुष उवाच उत्तङ्क एनमश्वमधिरोह एष त्वां क्षणादेवोपाध्यायकुलं प्रापयिष्यति १६१
स तथेत्युक्त्वा तमश्वमधिरुह्य प्रत्याजगामोपाध्यायकुलम् उपाध्यायिनी च स्नाता केशानावपयन्त्युपविष्टोत्तङ्को नागच्छतीति शापायास्य मनो दधे १६२
अथोत्तङ्कः प्रविश्य उपाध्यायिनीमभ्यवादयत्
ते चास्यै कुंडले प्रायच्छत् १६३
सा चैनं प्रत्युवाच उत्तङ्क देशे कालेऽभ्यागतः स्वागतं ते वत्स मनागसि मया न शप्तः श्रेयस्तवोपस्थितम् सिद्धिमाप्नुहीति १६४
अथोत्तङ्क उपाध्यायमभ्यवादयत् तमुपाध्यायः प्रत्युवाच
वत्सोत्तङ्क स्वागतं ते किं चिरं कृतमिति १६५
तमुत्तङ्क उपाध्यायं प्रत्युवाच
भोस्तक्षकेण नागराजेन विघ्नः कृतोऽस्मिन्कर्मणि
तेनास्मि नागलोकं नीतः १६६
तत्र च मया दृष्टे स्त्रियौ तन्त्रेऽधिरोप्य पटं वयन्त्यौ
तस्मिंश्चतन्त्रे कृष्णाः सिताश्च तन्तवः किं तत् १६७
तत्र च मया चक्रं दृष्टं द्वादशारम्
षट्चैनं कुमाराः परिवर्तयन्ति तदपि किम् १६८
पुरुषश्चापि मया दृष्टः स पुनः कः १६९
अश्वश्चातिप्रमाणयुक्तः स चापि कः १७०
पथि गच्छता मया ऋषभो दृष्टः तं च पुरुषोऽधिरूढः
तेनास्मि सोपचारमुक्तः उत्तङ्कास्य ऋषभस्य पुरीषं भक्षय उपाध्यायेनापि ते भक्षितमिति ततस्तद्वचनान्मया तदृषभस्य पुरीषमुपयुक्तम् तदिच्छामि भवतोपदिष्टं किं तदिति १७१

तेनैवमुक्त उपाध्यायः प्रत्युवाच
ये ते स्त्रियौ धाता विधाता च
ये च ते कृष्णाः सिताश्च तन्तवस्ते रात्र्यहनी १७२
यदपि तच्चक्रं द्वादशारं षट्कुमाराः परिवर्तयन्ति ते ऋतवः षट्
संवत्सरश्चक्रम्
यः पुरुषः स पर्जन्यः  योऽश्व सोऽग्नि १७३
य ऋषभस्त्वया पथि गच्छता दृष्टः स एरावतो नागराजः
यश्चैनमधिरूढः पुरुषः स इन्द्रः
यदपि ते पुरीषं भक्षितं तस्य ऋषभस्य तदमृतम् १७४
तेन खल्वसि न व्यापन्नस्तस्मिन्नागभवने
स मम सखा इन्द्रः १७५
तदनुग्रहात्कुण्डले गृहीत्वा पुनरभ्यागतोऽसि  तत्सौम्य गम्यताम्  अनुजाने
भवन्तम्  श्रेयोऽवाप्स्यसीति १७६
स उपाध्यायेनानुज्ञात उत्तङ्कः क्रुद्धस्तक्षकस्य
प्रतिचिकीर्षमाणो हास्तिनपुरं प्रतस्थे १७७
स हास्तिनपुरं प्राप्य नचिराद्द्विजसत्तमः
समागच्छत राजानमुत्तङ्को जनमेजयम् १७८
पुरा तक्षशिलातस्तं निवृत्तमपराजितम्
सम्यग्विजयिनं दृष्ट्वा समन्तान्मन्त्रिभिर्वृतम् १७९
तस्मै जयाशिषः पूर्वं यथान्यायं प्रयुज्य सः
उवाचैनं वचः काले शब्दसंपन्नया गिरा १८०
अन्यस्मिन्करणीये त्वं कार्ये पार्थिवसत्तम
बाल्यादिवान्यदेव त्वं कुरुषे नृपसत्तम १८१
एवमुक्तस्तु विप्रेण स राजा प्रत्युवाच ह
जनमेजयः प्रसन्नात्मा सम्यक्संपूज्य तं मुनिम् १८२
आसां प्रजानां परिपालनेन स्वं क्षत्रधर्मं परिपालयामि
प्रब्रूहि वा किं क्रियतां द्विजेन्द्र शुश्रूषुरस्म्यद्य वचस्त्वदीयम् १८३
स एवमुक्तस्तु नृपोत्तमेन द्विजोत्तमः पुण्यकृतां वरिष्ठः
उवाच राजानमदीनसत्त्वं स्वमेव कार्यं नृपतेश्च यत्तत् १८४
तक्षकेण नरेन्द्रेन्द्र येन ते हिंसितः पिता

तस्मै प्रतिकुरुष्व त्वं पन्नगाय दुरात्मने १८५
कार्यकालं च मन्येऽह विधिदृष्टस्य कर्मणः
तद्गच्छापचितिं राजन्पितुस्तस्य महात्मनः १८६
तेन ह्यनपराधी स दष्टो दुष्टान्तरात्मना
पञ्चत्वमगमद्राजा वज्राहत इव द्रुमः १८७
बलदर्पसमुत्सिक्तस्तक्षकः पन्नगाधमः
अकार्यं कृतवान्पापो योऽदशत्पितरं तव १८८
राजर्षिवंशगोप्तारममरप्रतिमं नृपम्
जघान काश्यपं चैव न्यवर्तयत पापकृत् १८९
दग्धुमर्हसि तं पापं ज्वलिते हव्यवाहने
सर्पसत्रे महाराज त्वयि तद्धि विधीयते १९०
एवं पितुश्चापचितिं गुतवांस्त्वं भविष्यसि
मम प्रियं च सुमहत्कृतं राजन्भविष्यति १९१
कर्मणः पृथिवीपाल मम येन दुरात्मना
विघ्नः कृतो महाराज गुर्वर्थं चरतोऽनघ १९२
एतच्छ्रुत्वा तु नृपतिस्तक्षकस्य चुकोप ह
उत्तङ्कवाक्यहविषा दीप्तोऽग्निर्हविषा यथा १९३
अपृच्छच्च तदा राजा मन्त्रिणः स्वान्सुदुःखितः
उत्तङ्कस्यैव सान्निध्ये पितुः स्वर्गगतिं प्रति १९४
तदैव हि स राजेन्द्रो दुःखशोकाप्लुतोऽभवत्
यदैव पितरं वृत्तमुत्तङ्कादशृणोत्तदा १९५

इति श्रीमहाभारते आदिपर्वणि तृतीयोऽध्यायः ३
समाप्तं पौष्यपर्व ६४८

अथ चतुर्थोऽध्यायः

लोमहर्षणपुत्र उग्रश्रवाः सूतः पौराणिको नैमिषारण्ये शौनकस्य
कुलपतेर्द्वादशवार्षिके सत्रे ऋषीनभ्यागतानुपतस्थे १
पौराणिकः पुराणे कृतश्रमः स तान्कृताञ्जलिरुवाच
किं भवन्तः श्रोतुमिच्छन्ति किमहं ब्रवाणीति २
तमृषय ऊचुः

परमं लोमहर्षणे प्रक्ष्यामस्त्वां वक्ष्यसि च नः शुश्रूषतां कथायोगम्
तद्भगवांस्तु तावच्छौनकोऽग्निशरणमध्यास्ते ३
योऽसौ दिव्याः कथा वेद देवतासुरसंकथाः
मनुष्योरगगन्धर्वकथा वेद च सर्वशः ४
स चाप्यस्मिन्मखे सौते विद्वान्कुलपतिर्द्विजः
दक्षो धृतव्रतो धीमाञ्शास्त्रे चारण्यके गुरुः ५
सत्यवादी शमपरस्तपस्वी नियतव्रतः
सर्वेषामेव नो मान्यः स तावत्प्रतिपाल्यताम् ६
तस्मिन्नध्यासति गुरावासनं परमार्चितम्
ततो वक्ष्यसि यत्त्वां स प्रक्ष्यति द्विजसत्तमः ७
सूत उवाच
एवमस्तु गुरौ तस्मिन्नुपविष्टे महात्मनि
तेन पृष्टः कथाः पुण्या वक्ष्यामि विविधाश्रयाः ८
सोऽथ विप्रर्षभः कार्यं कृत्वा सर्वं यथाक्रमम्
देवान्वाग्भिः पितॄनद्भिस्तर्पयित्वाजगाम ह ९
यत्र ब्रह्मर्षयः सिद्धास्त आसीना यतव्रताः
यज्ञायतनमाश्रित्य सूतपुत्रपुरःसराः १०
ऋत्विक्ष्वथ सदस्येषु स वै गृहपतिस्ततः
उपविष्टेषूपविष्टः शौनकोऽथाब्रवीदिदम् ११

इति श्रीमहाभारते आदिपर्वणि चतुर्थोऽध्यायः ४

## अथ पञ्चमोऽध्यायः

शौनक उवाच
पुराणमखिलं तात पिता तेऽधीतवान्पुरा
कच्चित्त्वमपि तत्सर्वमधीषे लोमहर्षणे १
पुराणे हि कथा दिव्या आदिवंशाश्च धीमताम्
कथ्यन्ते ताः पुरास्माभिः श्रुताः पूर्वं पितुस्तव २
तत्र वंशमहं पूर्वं श्रोतुमिच्छामि भार्गवम्
कथयस्व कथामेतां कल्याः स्म श्रवणे तव ३
सूत उवाच

यदधीतं पुरा सम्यग्द्विजश्रेष्ठ महात्मभिः
वैशंपायनविप्राद्यैस्तैश्चापि कथितं पुरा ४
यदधीतं च पित्रा मे सम्यक्चैव ततो मया
तत्तावच्छृणु यो देवैः सेन्द्रैः साग्निमरुद्गणैः
पूजितः प्रवरो वंशो भृगूणां भृगुनन्दन ५
इमं वंशमहं ब्रह्मन्भार्गवं ते महामुने
निगदामि कथायुक्तं पुराणाश्रयसंयुतम् ६
भृगोः सुदयितः पुत्रश्च्यवनो नाम भार्गवः
च्यवनस्यापि दायादः प्रमतिर्नाम धार्मिकः
प्रमतेरप्यभूत्पुत्रो घृताच्यां रुरुरित्युत ७
रुरोरपि सुतो जज्ञे शुनको वेदपारगः
प्रमद्वरायां धर्मात्मा तव पूर्वपितामहात् ८
तपस्वी च यशस्वी च श्रुतवान्ब्रह्मवित्तमः
धर्मिष्ठः सत्यवादी च नियतो नियतेन्द्रियः ९
शौनक उवाच
सूतपुत्र यथा तस्य भार्गवस्य महात्मनः
च्यवनत्वं परिख्यातं तन्ममाचक्ष्व पृच्छतः १०
सूत उवाच
भृगोः सुदयिता भार्या पुलोमेत्यभिविश्रुता
तस्यां गर्भः समभवद्भृगोर्वीर्यसमुद्भवः ११
तस्मिन्गर्भे संभृतेऽथ पुलोमायां भृगूद्वह
समये समशीलिन्यां धर्मपत्न्यां यशस्विनः १२
अभिषेकाय निष्क्रान्ते भृगौ धर्मभृतां वरे
आश्रमं तस्य रक्षोऽथ पुलोमाभ्याजगाम ह १३
तं प्रविश्याश्रमं दृष्ट्वा भृगोर्भार्यामनिन्दिताम्
हृच्छयेन समाविष्टो विचेताः समपद्यत १४
अभ्यागतं तु तद्रक्षः पुलोमा चारुदर्शना
न्यमन्त्रयत वन्येन फलमूलादिना तदा १५
तां तु रक्षस्तदा ब्रह्मन्हृच्छयेनाभिपीडितम्
दृष्ट्वा हृष्टमभूत्तत्र जिहीर्षुस्तामनिन्दिताम् १६

अथाग्निशरणेऽपश्यज्ज्वलितं जातवेदसम्
तमपृच्छत्ततो रक्षः पावकं ज्वलितं तदा १७
शंश मे कस्य भार्येयमग्ने पृष्ट ऋतेन वै
सत्यस्त्वमसि सत्यं मे वद पावक पृच्छते १८
मया हीयं पूर्ववृता भार्यार्थे वरवर्णिनी
पश्चात्त्विमां पिता प्रादाद्भृगवेऽनृतकारिणे १९
सेयं यदि वरारोहा भृगोर्भार्या रहोगता
तथा सत्यं समाख्याहि जिहीर्षाम्याश्रमादिमाम् २०
मन्युर्हि हृदयं मेऽद्य प्रदहन्निव तिष्ठति
मत्पूर्वभार्यां यदिमां भृगुः प्राप सुमध्याम् २१
तद्रक्ष एवमामन्त्र्य ज्वलितं जातवेदसम्
शङ्कमानो भृगोर्भार्यां पुनः पुनरपृच्छत २२
त्वमग्ने सर्वभूतानामन्तश्चरसि नित्यदा
साक्षिवत्पुण्यपापेषु सत्यं ब्रूहि कवे वचः २३
मत्पूर्वभार्यापहृता भृगुणानृतकारिणा
सेयं यदि तथा मे त्वं सत्यमाख्यातुमर्हसि २४
श्रुत्वा त्वत्तो भृगोर्भार्यां हरिष्याम्यहमाश्रमात्
जातवेदः पश्यतस्ते वद सत्यां गिरं मम २५
तस्य तद्वचनं श्रुत्वा सप्तार्चिर्दुःखितो भृशम्
भीतोऽनृताच्च शापाच्च भृगोरित्यब्रवीच्छनैः २६
इति श्रीमहाभारते आदिपर्वणि पञ्चमोऽध्यायः ५

अथ षष्ठोऽध्यायः

सूत उवाच
अग्नेरथ वचः श्रुत्वा तद्रक्षः प्रजहार ताम्
ब्रह्मन्वराहरूपेण मनोमारुतरंहसा १
ततः स गर्भो निवसन्कुक्षौ भृगुकुलोद्वह
रोषान्मातुश्च्युतः कुक्षेश्च्यवनस्तेन सोऽभवत् २
तं दृष्ट्वा मातुरुदराच्च्युतमादित्यवर्चसम्
तद्रक्षो भस्मसाद्भूतं पपात परिमुच्य ताम् ३

सा तमादाय सुश्रोणी ससार भृगुनन्दनम्
च्यवनं भार्गवं ब्रह्मन्पुलोमा दुःखमूर्च्छिता ४
तां ददर्श स्वयं ब्रह्मा सर्वलोकपितामहः
रुदतीं बाष्पपूर्णाक्षीं भृगोर्भार्यामनिन्दिताम्
सान्त्वयामास भगवान्वधूं ब्रह्मा पितामहः ५
अश्रुबिन्दूद्भवा तस्याः प्रावर्तत महानदी
अनुवर्तती सृतिं तस्या भृगोः पत्न्या यशस्विनः ६
तस्या मार्गं सृतवतीं दृष्ट्वा तु सरितं तदा
नाम तस्यास्तदा नद्याश्चक्रे लोकपितामहः
वधूसरेति भगवांश्च्यवनस्याश्रमं प्रति ७
स एवं च्यवनो जज्ञे भृगोः पुत्रः प्रतापवान्
तं ददर्श पिता तत्र च्यवनं तां च भामिनीम् ८
स पुलोमां ततो भार्यां पप्रच्छ कुपितो भृगुः
केनासि रक्षसे तस्मै कथितेह जिहीर्षवे
न हि त्वां वेद तद्रक्षो मद्भार्यां चारुहासिनीम् ९
तत्त्वमाख्याहि तं ह्यद्य शप्तुमिच्छाम्यहं रुषा
बिभेति को न शापान्मे कस्य चायं व्यतिक्रमः १०
पुलोमोवाच
अग्निना भगवंस्तस्मै रक्षसेऽह निवेदिता
ततो मामनयद्रक्षः क्रोशन्तीं कुररीमिव ११
साहं तव सुतस्यास्य तेजसा परिमोक्षिता
भस्मीभूतं च तद्रक्षो मामुत्सृज्य पपात वै १२
सूत उवाच
इति श्रुत्वा पुलोमाया भृगुः परममन्युमान्
शशापाग्निमभिक्रुद्धः सर्वभक्षो भविष्यसि १३
इति श्रीमहाभारते आदिपर्वणि षष्ठोऽध्यायः ६

अथ सप्तमोऽध्यायः

सूत उवाच
शप्तस्तु भृगुणा वह्निः क्रुद्धो वाक्यमथाब्रवीत्

किमिदं साहसं ब्रह्मन्कृतवानसि सांप्रतम् १
धर्मे प्रयतमानस्य सत्यं च वदतः समम्
पृष्टो यदब्रुवं सत्यं व्यभिचारोऽत्र को मम २
पृष्टो हि साक्षी यः साक्ष्यं जानमानोऽन्यथा वदेत्
स पूर्वानात्मनः सप्त कुले हन्यात्तथा परान् ३
यश्च कार्यार्थतत्त्वज्ञो जानमानो न भाषते
सोऽपि तेनैव पापेन लिप्यते नात्र संशयः ४
शक्तोऽहमपि शप्तुं त्वां मान्यास्तु ब्राह्मणा मम
जानतोऽपि च ते व्यक्तं कथयिष्ये निबोध तत् ५
योगेन बहुधात्मानं कृत्वा तिष्ठामि मूर्तिषु
अग्निहोत्रेषु सत्रेषु क्रियास्वथ मखेषु च ६
वेदोक्तेन विधानेन मयि यद्धूयते हविः
देवताः पितरश्चैव तेन तृप्ता भवन्ति वै ७
आपो देवगणाः सर्वे आपः पितृगणास्तथा
दर्शश्च पौर्णमासश्च देवानां पितृभिः सह ८
देवताः पितरस्तस्मात् पितरश्चापि देवताः
एकीभूताश्च पूज्यन्ते पृथक्त्वेन च पर्वसु ९
देवताः पितरश्चैव जुह्वते मयि यत्सदा
त्रिदशानां पितृणां च मुखमेवमहं स्मृतः १०
अमावास्यां च पितरः पौर्णमास्यां च देवताः
मन्मुखेनैव हूयन्ते भुञ्जते च हुतं हविः
सर्वभक्षः कथं तेषां भविष्यामि मुखं त्वहम् ११
चिन्तयित्वा ततो वह्निश्चक्रे संहारमात्मनः
द्विजानामग्निहोत्रेषु यज्ञसत्रक्रियासु च १२
निरोङ्कारवषट्काराः स्वधास्वाहाविवर्जिताः
विनाग्निना प्रजाः सर्वास्तत आसन्सुदुःखिताः १३
अथर्षयः समुद्विग्ना देवान्गत्वाब्रुवन्वचः
अग्निनाशात्क्रियाभ्रंशाद्भ्रान्ता लोकास्त्रयोऽनघाः
विधध्वमत्र यत्कार्यं न स्यात्कालात्ययो यथा १४
अथर्षयश्च देवाश्च ब्रह्माणमुपगम्य तु

अग्नेरावेदयञ्शापं क्रियासंहारमेव च १५
भृगुणा वै महाभाग शप्तोऽग्नि कारणान्तरे
कथं देवमुखो भूत्वा यज्ञभागाग्रभुक्तथा
हुतभुक्सर्वलोकेषु सर्वभक्षत्वमेष्यति १६
श्रुत्वा तु तद्वचस्तेषामग्निमाहूय लोककृत्
उवाच वचनं श्लक्ष्णं भूतभावनमव्ययम् १७
लोकानामिह सर्वेषां त्वं कर्ता चान्त एव च
त्वं धारयसि लोकांस्त्रीन्क्रियाणां च प्रवर्तकः
स तथा कुरु लोकेश नोच्छिद्येरन्क्रिया यथा १८
कस्मादेवं विमूढस्त्वमीश्वरः सन्हुताशनः
त्वं पवित्रं यदा लोके सर्वभूतगतश्च ह १९
न त्वं सर्वशरीरेण सर्वभक्षत्वमेष्यसि
उपादानेऽचिषो यास्ते सर्वं धक्ष्यन्ति ताः शिखिन् २०
यथा सूर्यांशुभिः स्पृष्टं सर्वं शुचि विभाव्यते
तथा त्वदर्चिर्निर्दग्धं सर्वं शुचि भविष्यति २१
तदग्ने त्वं महत्तेजः स्वप्रभावाद्विनिर्गतम्
स्वतेजसैव तं शापं कुरु सत्यमृषेर्विभो
देवानां चात्मनो भागं गृहाण त्वं मुखे हुतम् २२
एवमस्त्विति तं वह्निः प्रत्युवाच पितामहम्
जगाम शासनं कर्तुं देवस्य परमेष्ठिनः २३
देवर्षयश्च मुदितास्ततो जग्मुर्यथागतम्
ऋषयश्च यथापूर्वं क्रियाः सर्वाः प्रचक्रिरे २४
दिवि देवा मुमुदिरे भूतसंघाश्च लौकिकाः
अग्निश्च परमां प्रीतिमवाप हतकल्मषः २५
एवमेष पुरावृत्त इतिहासोऽग्निशापजः
पुलोमस्य विनाशश्च च्यवनस्य च संभवः २६
इति श्रीमहाभारते आदिपर्वणि सप्तमोऽध्यायः ७

अथाष्टमोऽध्यायः

सूत उवाच

स चापि च्यवनो ब्रह्मन्भार्गवोऽजनयत्सुतम्
सुकन्यायां महात्मानं प्रमतिं दीप्ततेजसम् १
प्रमतिस्तु रुरुं नाम घृताच्यां समजीजनत्
रुरुः प्रमद्वरायां तु शुनकं समजीजनत् २
तस्या ब्रह्मन्रुरोः सर्वं चरितं भूरितेजसः
विस्तरेण प्रवक्ष्यामि तच्छृणु त्वमशेषतः ३
ऋषिरासीन्महान्पूर्वं तपोविद्यासमन्वितः
स्थूलकेश इति ख्यातः सर्वभूतहिते रतः ४
एतस्मिन्नेव काले तु मेनकायां प्रजज्ञिवान्
गन्धर्वराजो विप्रर्षे विश्वावसुरिति श्रुतः ५
अथाप्सरा मेनका सा तं गर्भं भृगुनन्दन
उत्ससर्ज यथाकालं स्थूलकेशाश्रमं प्रति ६
उत्सृज्य चैव तं गर्भं नद्यास्तीरे जगाम ह
कन्याममरगर्भाभां ज्वलन्तीमिव च श्रिया ७
तां ददर्श समुत्सृष्टां नदीतीरे महानृषिः
स्थूलकेशः स तेजस्वी विजने बन्धुवर्जिताम् ८
स तां दृष्ट्वा तदा कन्यां स्थूलकेशो द्विजोत्तमः
जग्राहाथ मुनिश्रेष्ठः कृपाविष्टः पुपोष च
ववृधे सा वरारोहा तस्याश्रमपदे शुभा ९
प्रमदाभ्यो वरा सा तु सत्त्वरूपगुणान्विता
ततः प्रमद्वरेत्यस्या नाम चक्रे महानृषिः १०
तामाश्रमपदे तस्य रुरुर्दृष्ट्वा प्रमद्वराम्
बभूव किल धर्मात्मा मदनानुगतात्मवान् ११
पितरं सखिभिः सोऽथ वाचयामास भार्गवः
प्रमतिश्चाभ्ययाच्छ्रुत्वा स्थूलकेशं यशस्विनम् १२
ततः प्रादात्पिता कन्यां रुरवे तां प्रमद्वराम्
विवाहं स्थापयित्वाग्रे नक्षत्रे भगदैवते १३
ततः कतिपयाहस्य विवाहे समुपस्थिते
सखीभिः क्रीडती सार्धं सा कन्या वरवर्णिनी १४
नापश्यत प्रसुप्तं वै भुजगं तिर्यगायतम्

पदा चैनं समाक्रामन्मुमूर्षुः कालचोदिता १५
स तस्याः संप्रमत्तायाश्चोदितः कालधर्मणा
विषोपलिप्तान्दशनान्भृशमङ्गे न्यपातयत् १६
सा दष्टा सहसा भूमौ पतिता गतचेतना
व्यसुरप्रेक्षणीयापि प्रेक्षणीयतमाकृतिः १७
प्रसुप्तेवाभवच्चापि भुवि सर्पविषार्दिता
भूयो मनोहरतरा बभूव तनुमध्यमा १८
ददर्श तां पिता चैव ते चैवान्ये तपस्विनः
विचेष्टमानां पतितां भूतले पद्मवर्चसम् १९
ततः सर्वे द्विजवराः समाजग्मुः कृपान्विताः
स्वस्त्यात्रेयो महाजानुः कुशिकः शङ्खमेखलः २०
भारद्वाजः कौणकुत्स आर्ष्टिषेणोऽथ गौतमः
प्रमतिः सह पुत्रेण तथान्ये वनवासिनः २१
तां ते कन्यां व्यसुं दृष्ट्वा भुजङ्गस्य विषार्दिताम्
रुरुदुः कृपयाविष्टा रुरुस्त्वार्तो बहिर्ययौ २२
इति श्रीमहाभारते आदिपर्वणि अष्टमोऽध्यायः

अथ नवमोऽध्यायः

सूत उवाच
तेषु तत्रोपविष्टेषु ब्राह्मणेषु समन्ततः
रुरुश्चुक्रोश गहनं वनं गत्वा सुदुःखितः १
शोकेनाभिहतः सोऽथ विलपन्करुणं बहु
अब्रवीद्वचनं शोचन्प्रियां चिन्त्य प्रमद्वराम् २
शेते सा भुवि तन्वङ्गी मम शोकविवर्धिनी
बान्धवानां च सर्वेषां किं नु दुःखमतः परम् ३
यदि दत्तं तपस्तप्तं गुरवो वा मया यदि
सम्यगाराधितास्तेन संजीवतु मम प्रिया ४
यथा जन्मप्रभृति वै यतात्माहं धृतव्रतः
प्रमद्वरा यथाद्यैव समुत्तिष्ठतु भामिनी ५
देवदूत उवाच

अभिधत्से ह यद्वाचा रुरो दुःखेन तन्मृषा
न तु मर्त्यस्य धर्मात्मन्नायुरस्ति गतायुषः ६
गतायुरेषा कृपणा गन्धर्वाप्सरसोः सुता
तस्माच्छोके मनस्तात मा कृथास्त्वं कथंचन ७
उपायश्चात्र विहितः पूर्वं देवैर्महात्मभिः
तं यदीच्छसि कर्तुं त्वं प्राप्स्यसीमां प्रमद्वराम् ८
रुरुरुवाच
क उपायः कृतो देवैर्ब्रूहि तत्त्वेन खेचर
करिष्ये तं तथा श्रुत्वा त्रातुमर्हति मां भवान् ९
देवदूत उवाच
आयुषोऽध प्रयच्छस्व कन्यायै भृगुनन्दन
एवमुत्थास्यति रुरो तव भार्या प्रमद्वरा १०
रुरुरुवाच
आयुषोऽध प्रयच्छामि कन्यायै खेचरोत्तम
शृङ्गाररूपाभरणा उत्तिष्ठतु मम प्रिया ११
सूत उवाच
ततो गन्धर्वराजश्च देवदूतश्च सत्तमौ
धर्मराजमुपेत्येदं वचनं प्रत्यभाषताम् १२
धर्मराजायुषोऽधेन रुरोर्भार्या प्रमद्वरा
समुत्तिष्ठतु कल्याणी मृतैव यदि मन्यसे १३
धर्मराज उवाच
प्रमद्वरा रुरोर्भार्या देवदूत यदीच्छसि
उत्तिष्ठत्वायुषोऽधेन रुरोरेव समन्विता १४
सूत उवाच
एवमुक्ते ततः कन्या सोदतिष्ठत्प्रमद्वरा
रुरोस्तस्यायुषोऽधेन सुप्तेव वरवर्णिनी १५
एतद्दृष्टं भविष्ये हि रुरोरुत्तमतेजसः
आयुषोऽतिप्रवृद्धस्य भार्यार्थेऽध ह्रसत्विति १६
तत इष्टेऽहनि तयोः पितरौ चक्रतुर्मुदा
विवाहं तौ च रेमाते परस्परहितैषिणौ १७

स लब्ध्वा दुर्लभां भार्यां पद्मकिंजल्कसप्रभाम्
व्रतं चक्रे विनाशाय जिह्मगानां धृतव्रतः १८
स दृष्ट्वा जिह्मगान्सर्वांस्तीव्रकोपसमन्वितः
अभिहन्ति यथासन्नं गृह्य प्रहरणं सदा १९
स कदादिद्वनं विप्रो रुरुरभ्यगमन्महत्
शयानं तत्र चापश्यड्डुण्डुभं वयसान्वितम् २०
तत उद्यम्य दण्डं स कालदण्डोपमं तदा
अभ्यघ्नद्रुषितो विप्रस्तमुवाचाथ डुण्डुभः २१
नापराध्यामि ते किंचिदहमद्य तपोधन
संरम्भात्तत्किमर्थं मामभिहंसि रुषान्वितः २२
इति श्रीमहाभारते आदिपर्वणि नवमोऽध्यायः ९

अथ दशमोऽध्यायः

रुरुरुवाच
मम प्राणसमा भार्या दष्टासीद्भुजगेन ह
तत्र मे समयो घोर आत्मनोरग वै कृतः १
हन्यां सदैव भुजगं यं यं पश्येयमित्युत
ततोऽह त्वां जिघांसामि जीवितेन विमोक्ष्यसे २
डुण्डुभ उवाच
अन्ये ते भुजगा विप्र ये दशन्तीह मानवान्
डुण्डुभानहिगन्धेन न त्वं हिंसितुमर्हसि ३
एकानर्थान्पृथगर्थानेकदुःखान्पृथक्सुखान्
डुण्डुभान्धर्मविद्भूत्वा न त्वं हिंसितुमर्हसि ४
सूत उवाच
इति श्रुत्वा वचस्तस्य भुजगस्य रुरुस्तदा
नावधीद्भयसंविग्न ऋषिं मत्वाथ डुण्डुभम् ५
उवाच चैनं भगवन्रुरुः संशमयन्निव
कामया भुजग ब्रूहि कोऽसीमां विक्रियां गतः ६
डुण्डुभ उवाच
अहं पुरा रुरो नाम्ना ऋषिरासं सहस्रपात्

सोऽह शापेन विप्रस्य भुजगत्वमुपागतः ७
रुरुरुवाच
किमर्थं शप्तवान्क्रुद्धो द्विजस्त्वां भुजगोत्तम
कियन्तं चैव कालं ते वपुरेतद्भविष्यति ८
इति श्रीमहाभारते आदिपर्वणि दशमोऽध्यायः १०

अथैकादशोऽध्यायः

डुण्डुभ उवाच
सखा बभूव मे पूर्वं खगमो नाम वै द्विजः
भृशं संशितवाक्तात तपोबलसमन्वितः १
स मया क्रीडता बाल्ये कृत्वा तार्णमथोरगम्
अग्निहोत्रे प्रसक्तः सन्भीषितः प्रमुमोह वै २
लब्ध्वा च स पुनः संज्ञां मामुवाच तपोधनः
निर्दहन्निव कोपेन सत्यवाक्संशितव्रतः ३
यथावीर्यस्त्वया सर्पः कृतोऽय मद्विभीषया
तथावीर्यो भुजङ्गस्त्वं मम कोपाद्भविष्यसि ४
तस्याहं तपसो वीर्यं जानमानस्तपोधन
भृशमुद्विग्नहृदयस्तमवोचं वनौकसम् ५
प्रयतः संभ्रमाच्चैव प्राञ्जलि प्रणतः स्थितः
सखेति हसतेदं ते नर्मार्थं वै कृतं मया ६
क्षन्तुमर्हसि मे ब्रह्मञ्शापोऽय विनिवर्त्यताम्
सोऽथ मामब्रवीद्दृष्ट्वा भृशमुद्विग्नचेतसम् ७
मुहुरुष्णं विनिःश्वस्य सुसंभ्रान्तस्तपोधनः
नानृतं वै मया प्रोक्तं भवितेदं कथंचन ८
यत्तु वक्ष्यामि ते वाक्यं शृणु तन्मे धृतव्रत
श्रुत्वा च हृदि ते वाक्यमिदमस्तु तपोधन ९
उत्पत्स्यति रुरुर्नाम प्रमतेरात्मजः शुचिः
तं दृष्ट्वा शापमोक्षस्ते भविता नचिरादिव १०
स त्वं रुरुरिति ख्यातः प्रमतेरात्मजः शुचिः
स्वरूपं प्रतिलभ्याहमद्य वक्ष्यामि ते हितम् ११

अहिंसा परमो धर्मः सर्वप्राणभृतां स्मृतः
तस्मात्प्राणभृतः सर्वान्न हिंस्याद्ब्राह्मणः क्वचित् १२
ब्राह्मणः सौम्य एवेह जायतेति परा श्रुतिः
वेदवेदाङ्गवित्तात सर्वभूताभयप्रदः १३
अहिंसा सत्यवचनं क्षमा चेति विनिश्चितम्
ब्राह्मणस्य परो धर्मो वेदानां धारणादपि १४
क्षत्रियस्य तु यो धर्मः स नेहेष्यति वै तव
दण्डधारणमुग्रत्वं प्रजानां परिपालनम् १५
तदिदं क्षत्रियस्यासीत्कर्म वै शृणु मे रुरो
जनमेजयस्य धर्मात्मन्सर्पाणां हिंसनं पुरा १६
परित्राणं च भीतानां सर्पाणां ब्राह्मणादपि
तपोवीर्यबलोपेताद्वेदवेदाङ्गपारगात्
आस्तीकाद्द्विजमुख्याद्वै सर्पसत्रे द्विजोत्तम १७
इति श्रीमहाभारते आदिपर्वणि एकादशोऽध्यायः ११

अथद्वादशोऽध्यायः

रुरुरुवाच
कथं हिंसितवान्सर्पान्क्षत्रियो जनमेजयः
सर्पा वा हिंसितास्तात किमर्थं द्विजसत्तम १
किमर्थं मोक्षिताश्चैव पन्नगास्तेन शंस मे
आस्तीकेन तदाचक्ष्व श्रोतुमिच्छाम्यशेषतः २
ऋषिरुवाच
श्रोष्यसि त्वं रुरो सर्वमास्तीकचरितं महत्
ब्राह्मणानां कथयतामित्युक्त्वान्तरधीयत ३
सूत उवाच
रुरुश्चापि वनं सर्वं पर्यधावत्समन्ततः
तमृषिं द्रष्टुमन्विच्छन्संश्रान्तो न्यपतद्भुवि ४
लब्धसंज्ञो रुरुश्चायात्तच्चाचख्यौ पितुस्तदा
पिता चास्य तदाख्यानं पृष्टः सर्वं न्यवेदयत् ५
इति श्रीमहाभारते आदिपर्वणि द्वादशोऽध्यायः १२

अथत्रयोदशोऽध्यायः

शौनक उवाच
किमर्थं राजशार्दूलः स राजा जनमेजयः
सर्पसत्रेण सर्पाणां गतोऽन्त तद्वदस्व मे १
आस्तीकश्च द्विजश्रेष्ठः किमर्थं जपतां वरः
मोक्षयामास भुजगान्दीप्तात्तस्माद्धुताशनात् २
कस्य पुत्रः स राजासीत्सर्पसत्रं य आहरत्
स च द्विजातिप्रवरः कस्य पुत्रो वदस्व मे ३
सूत उवाच
महदाख्यानमास्तीकं यत्रैतत्प्रोच्यते द्विज
सर्वमेतदशेषेण शृणु मे वदतां वर ४
शौनक उवाच
श्रोतुमिच्छाम्यशेषेण कथामेतां मनोरमाम्
आस्तीकस्य पुराणस्य ब्राह्मणस्य यशस्विनः ५
सूत उवाच
इतिहासमिमं वृद्धाः पुराणं परिचक्षते
कृष्णद्वैपायनप्रोक्तं नैमिषारण्यवासिनः ६
पूर्वं प्रचोदितः सूतः पिता मे लोमहर्षणः
शिष्यो व्यासस्य मेधावी ब्राह्मणैरिदमुक्तवान् ७
तस्मादहमुपश्रुत्य प्रवक्ष्यामि यथातथम्
इदमास्तीकमाख्यानं तुभ्यं शौनक पृच्छते ८
आस्तीकस्य पिता ह्यासीत्प्रजापतिसमः प्रभुः
ब्रह्मचारी यताहारस्तपस्युग्रे रतः सदा ९
जरत्कारुरिति ख्यात ऊर्ध्वरेता महानृषिः
यायावराणां धर्मज्ञः प्रवरः संशितव्रतः १०
अटमानः कदाचित्स स्वान्ददर्श पितामहान्
लम्बमानान्महागर्ते पादैरूर्ध्वैरधोमुखान् ११
तानब्रवीत्स दृष्ट्वैव जरत्कारुः पितामहान्
के भवन्तोऽवलम्बन्ते गर्तेऽस्मिन्वा अधोमुखाः १२
वीरणस्तम्बके लग्नाः सर्वतः परिभक्षिते

मूषकेन निगूढेन गर्तेऽस्मिन्नित्यवासिना १३
पितर ऊचुः
यायावरा नाम वयमृषयः संशितव्रताः
संतानप्रक्षयाद्ब्रह्मन्नधो गच्छाम मेदिनीम् १४
अस्माकं संततिस्त्वेको जरत्कारुरिति श्रुतः
मन्दभाग्योऽल्पभाग्यानां तप एव समास्थितः १५
न स पुत्राञ्जनयितुं दारान्मूढश्चिकीर्षति
तेन लम्बामहे गर्ते सन्तानप्रक्षयादिह १६
अनाथास्तेन नाथेन यथा दुष्कृतिनस्तथा
कस्त्वं बन्धुरिवास्माकमनुशोचसि सत्तम १७
ज्ञातुमिच्छामहे ब्रह्मन्को भवानिह धिष्ठितः
किमर्थं चैव नः शोच्याननुकम्पितुमर्हसि १८
जरत्कारुरुवाच
मम पूर्वे भवन्तो वै पितरः सपितामहाः
ब्रूत किं करवाण्यद्य जरत्कारुरहं स्वयम् १९
पितर ऊचुः
यतस्व यत्नवांस्तात संतानाय कुलस्य नः
आत्मनोऽर्थेऽस्मदर्थे च धर्म इत्येव चाभिभो २०
न हि धर्मफलैस्तात न तपोभिः सुसंचितैः
तां गतिं प्राप्नुवन्तीह पुत्रिणो यां व्रजन्ति ह २१
तद्दारग्रहणे यत्नं संतत्यां च मनः कुरु
पुत्रकास्मन्नियोगात्त्वमेतन्नः परमं हितम् २२
जरत्कारुरुवाच
न दारान्वै करिष्यामि सदा मे भावितं मनः
भवतां तु हितार्थाय करिष्ये दारसंग्रहम् २३
समयेन च कर्ताहमनेन विधिपूर्वकम्
तथा यद्युपलप्स्यामि करिष्ये नान्यथा त्वहम् २४
सनाम्नी या भवित्री मे दित्सिता चैव बन्धुभिः
भैक्ष्यवत्तामहं कन्यामुपयंस्ये विधानतः २५
दरिद्राय हि मे भार्यां को दास्यति विशेषतः

प्रतिग्रहीष्ये भिक्षां तु यदि कश्चित्प्रदास्यति २६
एवं दारक्रियाहेतोः प्रयतिष्ये पितामहाः
अनेन विधिना शश्वन्न करिष्येऽहमन्यथा २७
तत्र चोत्पत्स्यते जन्तुर्भवतां तारणाय वै
शाश्वतं स्थानमासाद्य मोदन्तां पितरो मम २८
सूत उवाच
ततो निवेशाय तदा स विप्रः संशितव्रतः
महीं चचार दारार्थी न च दारानविन्दत २९
स कदाचिद्वनं गत्वा विप्रः पितृवचः स्मरन्
चुक्रोश कन्याभिक्षार्थी तिस्रो वाचः शनैरिव ३०
तं वासुकिः प्रत्यगृह्णादुद्यम्य भगिनीं तदा
न स तां प्रतिजग्राह न सनाम्नीति चिन्तयन् ३१
सनाम्नीमुद्यतां भार्यां गृह्णीयामिति तस्य हि
मनो निविष्टमभवज्जरत्कारोर्महात्मनः ३२
तमुवाच महाप्राज्ञो जरत्कारुर्महातपाः
किंनाम्नी भगिनीयं ते ब्रूहि सत्यं भुजङ्गम ३३
वासुकिरुवाच
जरत्कारो जरत्कारुः स्वसेयमनुजा मम
त्वदर्थं रक्षिता पूर्वं प्रतीच्छेम द्विजोत्तम ३४
सूत उवाच
मात्रा हि भुजगाः शप्ताः पूर्वं ब्रह्मविदां वर
जनमेजयस्य वो यज्ञे धक्ष्यत्यनिलसारथिः ३५
तस्य शापस्य शान्त्यर्थं प्रददौ पन्नगोत्तमः
स्वसारमृषये तस्मै सुव्रताय तपस्विने ३६
स च तां प्रतिजग्राह विधिदृष्टेन कर्मणा
आस्तीको नाम पुत्रश्च तस्यां जज्ञे महात्मनः ३७
तपस्वी च महात्मा च वेदवेदांगपारगः
समः सर्वस्य लोकस्य पितृमातृभयापहः ३८
अथ कालस्य महतः पाण्डवेयो नराधिपः
आजहार महायज्ञं सर्पसत्रमिति श्रुतिः ३९

तस्मिन्प्रवृत्ते सत्रे तु सर्पाणामन्तकाय वै
मोचयामास तं शापमास्तीकः सुमहायशाः ४०
नागांश्च मातुलांश्चैव तथा चान्यान्स बान्धवान्
पितॄंश्च तारयामास संतत्या तपसा यथा
व्रतैश्च विविधैर्ब्रह्मन्स्वाध्यायैश्चाऽनृणोऽभवत् ४१
देवांश्च तर्पयामास यज्ञैर्विविधदक्षिणैः
ऋषींश्च ब्रह्मचर्येण संतत्या च पितामहान् ४२
अपहृत्य गुरुं भारं पितॄणां संशितव्रतः
जरत्कारुर्गतः स्वर्गं सहितः स्वैः पितामहैः ४३
आस्तीकं च सुतं प्राप्य धर्मं चानुत्तमं मुनिः
जरत्कारुः सुमहता कालेन स्वर्गमीयिवान् ४४
एतदाख्यानमास्तीकं यथावत्कीर्तितं मया
प्रब्रूहि भृगुशार्दूल किं भूयः कथ्यतामिति ४५
इति श्रीमहाभारते आदिपर्वणि त्रयोदशोऽध्यायः १३

## अथ चतुर्दशोऽध्यायः

शौनक उवाच
सौते कथय तामेतां विस्तरेण कथां पुनः
आस्तीकस्य कवेः साधोः शुश्रूषा परमा हि नः १
मधुरं कथ्यते सौम्य श्लक्ष्णाक्षरपदं त्वया
प्रीयामहे भृशं तात पितेवेदं प्रभाषसे २
अस्मच्छुश्रूषणे नित्यं पिता हि निरतस्तव
आचष्टैतद्यथाख्यानं पिता ते त्वं तथा वद ३
सूत उवाच
आयुष्यमिदमाख्यानमास्तीकं कथयामि ते
यथा श्रुतं कथयतः सकाशाद्वै पितुर्मया ४
पुरा देवयुगे ब्रह्मन्प्रजापतिसुते शुभे
आस्तां भगिन्यौ रूपेण समुपेतेऽद्भुतेऽनघे ५
ते भार्ये कश्यपस्यास्तां कद्रूश्च विनता च ह
प्रादात्ताभ्यां वरं प्रीतः प्रजापतिसमः पतिः ६

वरातिसर्गं श्रुत्वैव कश्यपादुत्तमं च ते
हर्षादप्रतिमां प्रीतिं प्रापतुः स्म वरस्त्रियौ ७
वव्रे कद्रूः सुतान्नागान्सहस्रं तुल्यतेजसः
द्वौ पुत्रौ विनता वव्रे कद्रूपुत्राधिकौ बले
ओजसा तेजसा चैव विक्रमेणाधिकौ सुतौ ८
तस्यै भर्ता वरं प्रादादध्यर्धं पुत्रमीप्सितम्
एवमस्त्विति तं चाह कश्यपं विनता तदा ९
कृतकृत्या तु विनता लब्ध्वा वीर्याधिकौ सुतौ
कद्रूश्च लब्ध्वा पुत्राणां सहस्रं तुल्यतेजसाम् १०
धार्यौ प्रयत्नतो गर्भावित्युक्त्वा स महातपाः
ते भार्ये वरसंहृष्टे कश्यपो वनमाविशत् ११
कालेन महता कद्रूरण्डानां दशतीर्दश
जनयामास विप्रेन्द्र द्वे अण्डे विनता तदा १२
तयोरण्डानि निदधुः प्रहृष्टाः परिचारकाः
सोपस्वेदेषु भाण्डेषु पञ्च वर्षशतानि च १३
ततः पञ्चशते काले कद्रूपुत्रा विनिःसृताः
अण्डाभ्यां विनतायास्तु मिथुनं न व्यदृश्यत १४
ततः पुत्रार्थिनी देवी व्रीडिता च तपस्विनी
अण्डं बिभेद विनता तत्र पुत्रमदृक्षत १५
पूर्वार्धकायसंपन्नमितरेणाप्रकाशता
स पुत्रो रोषसंपन्नः शशापैनामिति श्रुतिः १६
योऽहमेवं कृतो मातस्त्वया लोभपरीतया
शरीरेणासमग्रोऽद्य तस्माद्दासी भविष्यसि १७
पञ्च वर्षशतान्यस्या यया विस्पर्धसे सह
एष च त्वां सुतो मातर्दास्यत्वान्मोक्षयिष्यति १८
यद्येनमपि मातस्त्वं मामिवाण्डविभेदनात्
न करिष्यस्यदेहं वा व्यङ्गं वापि तपस्विनम् १९
प्रतिपालयितव्यस्ते जन्मकालोऽस्य धीरया
विशिष्टबलमीप्सन्त्या पञ्चवर्षशतात्परः २०
एवं शप्त्वा ततः पुत्रो विनतामन्तरिक्षगः

अरुणो दृश्यते ब्रह्मन्प्रभातसमये सदा २१
गरुडोऽपि यथाकालं जज्ञे पन्नगसूदनः
स जातमात्रो विनतां परित्यज्य खमाविशत् २२
आदास्यन्नात्मनो भोज्यमन्नं विहितमस्य यत्
विधात्रा भृगुशार्दूल क्षुधितस्य बुभुक्षतः २३
इति श्रीमहाभारते आदिपर्वणि चतुर्दशोऽध्यायः १४

अथ पञ्चदशोऽध्यायः

सूत उवाच
एतस्मिन्नेव काले तु भगिन्यौ ते तपोधन
अपश्यतां समायान्तमुच्चैःश्रवसमन्तिकात् १
यं तं देवगणाः सर्वे हृष्टरूपा अपूजयन्
मथ्यमानेऽमृते जातमश्वरत्नमनुत्तमम् २
महौघबलमश्वानामुत्तमं जवतां वरम्
श्रीमन्तमजरं दिव्यं सर्वलक्षणलक्षितम् ३
शौनक उवाच
कथं तदमृतं देवैर्मथितं क्व च शंस मे
यत्र जज्ञे महावीर्यः सोऽश्वराजो महाद्युतिः ४
सूत उवाच
ज्वलन्तमचलं मेरुं तेजोराशिमनुत्तमम्
आक्षिपन्तं प्रभां भानोः स्वशृङ्गैः काञ्चनोज्ज्वलैः ५
काञ्चनाभरणं चित्रं देवगन्धर्वसेवितम्
अप्रमेयमनाधृष्यमधर्मबहुलैर्जनैः ६
व्यालैराचरितं घोरैर्दिव्यौषधिविदीपितम्
नाकमावृत्य तिष्ठन्तमुच्छ्रयेण महागिरिम् ७
अगम्यं मनसाप्यन्यैर्नदीवृक्षसमन्वितम्
नानापतगसङ्घैश्च नादितं सुमनोहरैः ८
तस्य पृष्ठमुपारुह्य बहुरत्नाचितं शुभम्
अनन्तकल्पमुद्विद्धं सुराः सर्वे महौजसः ९
ते मन्त्रयितुमारब्धास्तत्रासीना दिवौकसः

अमृतार्थे समागम्य तपोनियमसंस्थिताः १०
तत्र नारायणो देवो ब्रह्माणमिदमब्रवीत्
चिन्तयत्सु सुरेष्वेवं मन्त्रयत्सु च सर्वशः ११
देवैरसुरसङ्घैश्च मथ्यतां कलशोदधिः
भविष्यत्यमृतं तत्र मथ्यमाने महोदधौ १२
सर्वौषधीः समावाप्य सर्वरत्नानि चैव हि
मन्थध्वमुदधिं देवा वेत्स्यध्वममृतं ततः १३
इति श्रीमहाभारते आदिपर्वणि पञ्चदशोऽध्यायः १५

अथ षोडशोऽध्यायः

सूत उवाच
ततोऽभ्रशिखराकारैर्गिरिशृङ्गैरलंकृतम्
मन्दरं पर्वतवरं लताजालसमावृतम् १
नानाविहगसंघुष्टं नानादंष्ट्रिसमाकुलम्
किंनरैरप्सरोभिश्च देवैरपि च सेवितम् २
एकादश सहस्राणि योजनानां समुच्छ्रितम्
अधो भूमेः सहस्रेषु तावत्स्वेव प्रतिष्ठितम् ३
तमुद्धर्तुं न शक्ता वै सर्वे देवगणास्तदा
विष्णुमासीनमभ्येत्य ब्रह्माणं चेदमब्रुवन् ४
भवन्तावत्र कुरुतां बुद्धिं नैःश्रेयसीं पराम्
मन्दरोद्धरणे यत्नः क्रियतां च हिताय नः ५
तथेति चाब्रवीद्विष्णुर्ब्रह्मणा सह भार्गव
ततोऽनन्तः समुत्थाय ब्रह्मणा परिचोदितः
नारायणेन चाप्युक्तस्तस्मिन्कर्मणि वीर्यवान् ६
अथ पर्वतराजानं तमनन्तो महाबलः
उज्जहार बलाद्ब्रह्मन्सवनं सवनौकसम् ७
ततस्तेन सुराः सार्धं समुद्रमुपतस्थिरे
तमूचुरमृतार्थाय निर्मथिष्यामहे जलम् ८
अपांपतिरथोवाच ममाप्यंशो भवेत्ततः
सोढास्मि विपुलं मर्दं मन्दरभ्रमणादिति ९

ऊचुश्च कूर्मराजानमकूपारं सुरासुराः
गिरेरधिष्ठानमस्य भवान्भवितुमर्हसि १०
कूर्मेण तु तथेत्युक्त्वा पृष्ठमस्य समर्पितम्
तस्य शैलस्य चाग्रं वै यन्त्रेणेन्द्रोऽभ्यपीडयत् ११
मन्थानं मन्दरं कृत्वा तथा नेत्रं च वासुकिम्
देवा मथितुमारब्धाः समुद्रं निधिमम्भसाम्
अमृतार्थिनस्ततो ब्रह्मन्सहिता दैत्यदानवाः १२
एकमन्तमुपाश्लिष्टा नागराज्ञो महासुराः
विबुधाः सहिताः सर्वे यतः पुच्छं ततः स्थिताः १३
अनन्तो भगवान्देवो यतो नारायणस्ततः
शिर उद्यम्य नागस्य पुनः पुनरवाक्षिपत् १४
वासुकेरथ नागस्य सहसाक्षिप्यतः सुरैः
सधूमाः सार्चिषो वाता निष्पेतुरसकृन्मुखात् १५
ते धूमसङ्घाः संभूता मेघसंघाः सविद्युतः
अभ्यवर्षन्सुरगणाञ्श्रमसंतापकर्शितान् १६
तस्माच्च गिरिकूटाग्रात्प्रच्युताः पुष्पवृष्टयः
सुरासुरगणान्माल्यैः सर्वतः समवाकिरन् १७
बभूवात्र महाघोषो महामेघरवोपमः
उदधेर्मथ्यमानस्य मन्दरेण सुरासुरैः १८
तत्र नानाजलचरा विनिष्पिष्टा महाद्रिणा
विलयं समुपाजग्मुः शतशो लवणाम्भसि १९
वारुणानि च भूतानि विविधानि महीधरः
पातालतलवासीनि विलयं समुपानयत् २०
तस्मिंश्च भ्राम्यमाणेऽद्रौ संघृष्यन्तः परस्परम्
न्यपतन्पतगोपेताः पर्वताग्रान्महाद्रुमाः २१
तेषां संघर्षजश्चाग्निरर्चिर्भिः प्रज्वलन्मुहुः
विद्युद्भिरिव नीलाभ्रमावृणोन्मन्दरं गिरिम् २२
ददाह कुञ्जरांश्चैव सिंहांश्चैव विनिःसृतान्
विगतासूनि सर्वाणि सत्त्वानि विविधानि च २३
तमग्निममरश्रेष्ठः प्रदहन्तं ततस्ततः

वारिणा मेघजेनेन्द्रः शमयामास सर्वतः २४
ततो नानाविधास्तत्र सुस्रुवुः सागराम्भसि
महाद्रुमाणां निर्यासा बहवश्चौषधीरसाः २५
तेषाममृतवीर्याणां रसानां पयसैव च
अमरत्वं सुरा जग्मुः काञ्चनस्य च निःस्रवात् २६
अथ तस्य समुद्रस्य तज्जातमुदकं पयः
रसोत्तमैर्विमिश्रं च ततः क्षीरादभूद्घृतम् २७
ततो ब्रह्माणमासीनं देवा वरदमब्रुवन्
श्रान्ताः स्म सुभृशं ब्रह्मन्नोद्भवत्यमृतं च तत् २८
ऋते नारायणं देवं दैत्या नागोत्तमास्तथा
चिरारब्धमिदं चापि सागरस्यापि मन्थनम् २९
ततो नारायणं देवं ब्रह्मा वचनमब्रवीत्
विधत्स्वैषां बलं विष्णो भवानत्र परायणम् ३०
विष्णुरुवाच
बलं ददामि सर्वेषां कर्मैतद्ये समास्थिताः
क्षोभ्यतां कलशः सर्वैर्मन्दरः परिवर्त्यताम् ३१
सूत उवाच
नारायणवचः श्रुत्वा बलिनस्ते महोदधेः
तत्पयः सहिता भूयश्चक्रिरे भृशमाकुलम् ३२
ततः शतसहस्रांशुः समान इव सागरात्
प्रसन्नभाः समुत्पन्नः सोमः शीतांशुरुज्ज्वलः ३३
श्रीरनन्तरमुत्पन्ना घृतात्पाण्डुरवासिनी
सुरा देवी समुत्पन्ना तुरगः पाण्डुरस्तथा ३४
कौस्तुभश्च मणिर्दिव्य उत्पन्नोऽमृतसंभवः
मरीचिविकचः श्रीमान्नारायणउरोगतः ३५
श्रीः सुरा चैव सोमश्च तुरगश्च मनोजवः
यतो देवास्ततो जग्मुरादित्यपथमाश्रिताः ३६
धन्वन्तरिस्ततो देवो वपुष्मानुदतिष्ठत
श्वेतं कमण्डलुं बिभ्रदमृतं यत्र तिष्ठति ३७
एतदत्यद्भुतं दृष्ट्वा दानवानां समुत्थितः

अमृतार्थे महान्नादो ममेदमिति जल्पताम् ३८
ततो नारायणो मायामास्थितो मोहिनीं प्रभुः
स्त्रीरूपमद्भुतं कृत्वा दानवानभिसंश्रितः ३९
ततस्तदमृतं तस्यै ददुस्ते मूढचेतसः
स्त्रियै दानवदैतेयाः सर्वे तद्गतमानसाः ४०
इति श्रीमहाभारते आदिपर्वणि षोडशोऽध्यायः १६

अथ सप्तदशोऽध्यायः

सूत उवाच
अथावरणमुख्यानि नानाप्रहरणानि च
प्रगृह्याभ्यद्रवन्देवान्सहिता दैत्यदानवाः १
ततस्तदमृतं देवो विष्णुरादाय वीर्यवान्
जहार दानवेन्द्रेभ्यो नरेण सहितः प्रभुः २
ततो देवगणाः सर्वे पपुस्तदमृतं तदा
विष्णोः सकाशात्संप्राप्य संभ्रमे तुमुले सति ३
ततः पिबत्सु तत्कालं देवेष्वमृतमीप्सितम्
राहुर्विबुधरूपेण दानवः प्रापिबत्तदा ४
तस्य कण्ठमनुप्राप्ते दानवस्यामृते तदा
आख्यातं चन्द्रसूर्याभ्यां सुराणां हितकाम्यया ५
ततो भगवता तस्य शिरश्छिन्नमलंकृतम्
चक्रायुधेन चक्रेण पिबतोऽमृतमोजसा ६
तच्छैलशृङ्गप्रतिमं दानवस्य शिरो महत्
चक्रेणोत्कृत्तमपतच्चालयद्वसुधातलम् ७
ततो वैरविनिर्बन्धः कृतो राहुमुखेन वै
शाश्वतश्चन्द्रसूर्याभ्यां ग्रसत्यद्यापि चैव तौ ८
विहाय भगवांश्चापि स्त्रीरूपमतुलं हरिः
नानाप्रहरणैर्भीमैर्दानवान्समकम्पयत् ९
ततः प्रवृत्तः संग्रामः समीपे लवणाम्भसः
सुराणामसुराणां च सर्वघोरतरो महान् १०
प्रासाः सुविपुलास्तीक्ष्णा न्यपतन्त सहस्रशः

तोमराश्च सुतीक्ष्णाग्राः शस्त्राणि विविधानि च ११
ततोऽसुराश्चक्रभिन्ना वमन्तो रुधिरं बहु
असिशक्तिगदारुग्णा निपेतुर्धरणीतले १२
छिन्नानि पट्टिशैश्चापि शिरांसि युधि दारुणे
तप्तकाञ्चनजालानि निपेतुरनिशं तदा १३
रुधिरेणावलिप्ताङ्गा निहताश्च महासुराः
अद्रीणामिव कूटानि धातुरक्तानि शेरते १४
हाहाकारः समभवत्तत्र तत्र सहस्रशः
अन्योन्यं छिन्दतां शस्त्रैरादित्ये लोहितायति १५
परिघैश्चायसैः पीतैः संनिकर्षे च मुष्टिभिः
निघ्नतां समरेऽन्योन्यं शब्दो दिवमिवास्पृशत् १६
छिन्धि भिन्धि प्रधावध्वं पातयाभिसरेति च
व्यश्रूयन्त महाघोराः शब्दास्तत्र समन्ततः १७
एवं सुतुमुले युद्धे वर्तमाने भयावहे
नरनारायणौ दैवौ समाजग्मतुराहवम् १८
तत्र दिव्यं धनुर्दृष्ट्वा नरस्य भगवानपि
चिन्तयामास वै चक्रं विष्णुर्दानवसूदनम् १९
ततोऽम्बराच्चिन्तितमात्रमागतं महाप्रभं चक्रममित्रतापनम्
विभावसोस्तुल्यमकुण्ठमण्डलं सुदर्शनं भीममजय्यमुत्तमम् २०
तदागतं ज्वलितहुताशनप्रभं भयंकरं करिकरबाहुरच्युतः
मुमोच वै चपलमुदग्रवेगवन्महाप्रभं परनगरावदारणम् २१
तदन्तकज्वलनसमानवर्चसं पुनः पुनर्न्यपतत वेगवत्तदा
विदारयद्दितिदनुजान्सहस्रशः करेरितं पुरुषवरेण संयुगे २२
दहत्क्वचिज्ज्वलन इवावलेलिहत्प्रसह्य तानसुरगणान्न्यकृन्तत
प्रवेरितं वियति मुहुः क्षितौ तदा पपौ रणे रुधिरमथो पिशाचवत् २३
अथासुरा गिरिभिरदीनचेतसो मुहुर्मुहुः सुरगणमर्दयंस्तदा
महाबला विगलितमेघवर्चसः सहस्रशो गगनमभिप्रपद्य ह २४
अथाम्बराद्भयजननाः प्रपेदिरे सपादपा बहुविधमेघरूपिणः
महाद्रयः प्रविगलिताग्रसानवः परस्परं द्रुतमभिहत्य सस्वनाः २५
ततो मही प्रविचलिता सकानना महाद्रिपाताभिहता समन्ततः

परस्परं भृशमभिगर्जतां मुहू रणाजिरे भृशमभिसंप्रवर्तिते २६
नरस्ततो वरकनकाग्रभूषणैर्महेषुभिर्गगनपथं समावृणोत्
विदारयन्गिरिशिखराणि पत्रिभिर्महाभयेऽसुरगणविग्रहे तदा २७
ततो महीं लवणजलं च सागरं महासुराः प्रविविशुरर्दिताः सुरैः
वियद्गतं ज्वलितहुताशनप्रभं सुदर्शनं परिकुपितं निशाम्य च २८
ततः सुरैर्विजयमवाप्य मन्दरः स्वमेव देशं गमितः सुपूजितः
विनाद्य खं दिवमपि चैव सर्वशस्ततो गताः सलिलधरा यथागतम् २९
ततोऽमृतं सुनिहितमेव चक्रिरे सुराः परां मुदमभिगम्य पुष्कलाम्
ददौ च तं निधिममृतस्य रक्षितुं किरीटिने बलभिदथामरैः सह ३०
इति श्रीमहाभारते आदिपर्वणि सप्तदशोऽध्यायः १७

अथाष्टादशोऽध्यायः

सूत उवाच
एतत्ते सर्वमाख्यातममृतं मथितं यथा
यत्र सोऽश्व समुत्पन्नः श्रीमानतुलविक्रमः १
यं निशाम्य तदा कद्रूर्विनतामिदमब्रवीत्
उच्चैःश्रवा नु किंवर्णो भद्रे जानीहि माचिरम् २
विनतोवाच
श्वेत एवाश्वराजोऽय किं वा त्वं मन्यसे शुभे
ब्रूहि वर्णं त्वमप्यस्य ततोऽत्र विपणावहे ३
कद्रूरुवाच
कृष्णवालमहं मन्ये हयमेनं शुचिस्मिते
एहि सार्धं मया दीव्य दासीभावाय भामिनि ४
सूत उवाच
एवं ते समयं कृत्वा दासीभावाय वै मिथः
जग्मतुः स्वगृहानेव श्वो द्रक्ष्याव इति स्म ह ५
ततः पुत्रसहस्रं तु कद्रूर्जिह्मं चिकीर्षती
आज्ञापयामास तदा वाला भूत्वाञ्जनप्रभाः ६
आविशध्वं हयं क्षिप्रं दासी न स्यामहं यथा
तद्वाक्यं नान्वपद्यन्त ताञ्शशाप भुजङ्गमान् ७

सर्पसत्रे वर्तमाने पावको वः प्रधक्ष्यति
जनमेजयस्य राजर्षेः पाण्डवेयस्य धीमतः ८
शापमेनं तु शुश्राव स्वयमेव पितामहः
अतिक्रूरं समुद्दिष्टं कद्र्वा दैवादतीव हि ९
सार्धं देवगणैः सर्वैर्वाचं तामन्वमोदत
बहुत्वं प्रेक्ष्य सर्पाणां प्रजानां हितकाम्यया १०
तिग्मवीर्यविषा ह्येते दन्दशूका महाबलाः
तेषां तीक्ष्णविषत्वाद्धि प्रजानां च हिताय वै
प्रादाद्विषहरणीं विद्यां काश्यपाय महात्मने ११
इति श्रीमहाभारते आदिपर्वणि अष्टादशोऽध्यायः १८

## अथैकोनविंशोऽध्यायः

सूत उवाच
ततो रजन्यां व्युष्टायां प्रभात उदिते रवौ
कद्रूश्च विनता चैव भगिन्यौ ते तपोधन १
अमर्षिते सुसंरब्धे दास्ये कृतपणे तदा
जग्मतुस्तुरगं द्रष्टुमुच्चैश्रवसमन्तिकात् २
ददृशाते तदा तत्र समुद्रं विधिमम्भसाम्
तिमिंगिलझषाकीर्णं मकरैरावृतं तथा ३
सत्त्वैश्च बहुसाहस्रैर्नानारूपैः समावृतम्
उग्रैर्नित्यमनाधृष्यं कूर्मग्राहसमाकुलम् ४
आकरं सर्वरत्नानामालयं वरुणस्य च
नागानामालयं रम्यमुत्तमं सरितां पतिम् ५
पातालज्वलनावासमसुराणां च बन्धनम्
भयंकरं च सत्त्वानां पयसां निधिमर्णवम् ६
शुभं दिव्यममर्त्यानाममृतस्याकरं परम्
अप्रमेयमचिन्त्यं च सुपुण्यजलमद्भुतम् ७
घोरं जलचरारावरौद्रं भैरवनिस्वनम्
गम्भीरावर्तकलिलं सर्वभूतभयंकरम् ८
वेलादोलानिलचलं क्षोभोद्वेगसमुत्थितम्

वीचीहस्तैः प्रचलितैर्नृत्यन्तमिव सर्वशः ९
चन्द्रवृद्धिक्षयवशादुद्वृत्तोर्मिदुरासदम्
पाञ्चजन्यस्य जननं रत्नाकरमनुत्तमम् १०
गां विन्दता भगवता गोविन्देनामितौजसा
वराहरूपिणा चान्तर्विक्षोभितजलाविलम् ११
ब्रह्मर्षिणा च तपता वर्षाणां शतमत्रिणा
अनासादितगाधं च पातालतलमव्ययम् १२
अध्यात्मयोगनिद्रां च पद्मनाभस्य सेवतः
युगादिकालशयनं विष्णोरमिततेजसः १३
वडवामुखदीप्ताग्नेस्तोयहव्यप्रदं शुभम्
अगाधपारं विस्तीर्णमप्रमेयं सरित्पतिम् १४
महानदीभिर्बह्वीभिः स्पर्धयेव सहस्रशः
अभिसार्यमाणमनिशं ददृशाते महार्णवम् १५
गम्भीरं तिमिमकरोग्रसंकुलं तं गर्जन्तं जलचररावरौद्र नादैः
विस्तीर्णं ददृशतुरम्बरप्रकाशं तेऽगाधं निधिमुरुमम्भसामनन्तम् १६
इत्येवं झषमकरोर्मिसंकुलं तं गम्भीरं विकसितमम्बरप्रकाशम्
पातालज्वलनशिखाविदीपितं तं पश्यन्त्यौ द्रुतमभिपेततुस्तदानीन् १७
इति श्रीमहाभारते आदिपर्वणि एकोनविंशोऽध्यायः १९

## अथविंशोऽध्यायः

सूत उवाच
तं समुद्रमतिक्रम्य कद्रूर्विनतया सह
न्यपतत्तुरगाभ्याशे नचिरादिव शीघ्रगा १
निशाम्य च बहून्वालान्कृष्णान्पुच्छं समाश्रितान्
विनतां विषण्णवदनां कद्रूर्दास्ये न्ययोजयत् २
ततः सा विनता तस्मिन्पणितेन पराजिता
अभवद्दुःखसंतप्ता दासीभावं समास्थिता ३
एतस्मिन्नन्तरे चैव गरुडः काल आगते
विना मात्रा महातेजा विदार्याण्डमजायत ४
अग्निराशिरिवोद्भासन्समिद्धोऽतिभयंकरः

प्रवृद्धः सहसा पक्षी महाकायो नभोगतः ५
तं दृष्ट्वा शरणं जग्मुः प्रजाः सर्वा विभावसुम्
प्रणिपत्याब्रुवंश्चैनमासीनं विश्वरूपिणम् ६
अग्ने मा त्वं प्रवर्धिष्ठाः कच्चिन्नो न दिधक्षसि
असौ हि राशिः सुमहान्समिद्धस्तव सर्पति ७
अग्निरुवाच
नैतदेवं यथा यूयं मन्यध्वमसुरार्दनाः
गरुडो बलवानेष मम तुल्यः स्वतेजसा ८
सूत उवाच
एवमुक्तास्ततो गत्वा गरुडं वाग्भिरस्तुवन्
अदूरादभ्युपेत्यैनं देवाः सर्षिगणास्तदा ९
त्वं ऋषिस्त्वं महाभागस्त्वं देवः पतगेश्वरः
त्वं प्रभुस्तपनप्रख्यस्त्वं नस्त्राणमनुत्तमम् १०
बलोर्मिमान्साधुरदीनसत्त्वः समृद्धिमान्दुष्प्रसहस्त्वमेव
तपः श्रुतं सर्वमहीनकीर्ते अनागतं चोपगतं च सर्वम् ११
त्वमुत्तमः सर्वमिदं चराचरं गभस्तिभिर्भानुरिवावभाससे
समाक्षिपन्भानुमतः प्रभां मुहुस्त्वमन्तकः सर्वमिदं ध्रुवाध्रुवम् १२
दिवाकरः परिकुपितो यथा दहेत्प्रजास्तथा दहसि हुताशनप्रभ
भयङ्करः प्रलय इवाग्निरुत्थितो विनाशयन्युगपरिवर्तनान्तकृत् १३
खगेश्वरं शरणमुपस्थिता वयं महौजसं वितिमिरमभ्रगोचरम्
महाबलं गरुडमुपेत्य खेचरं परावरं वरदमयय्विक्रमम् १४
एवं स्तुतः सुपर्णस्तु देवैः सर्षिगणैस्तदा
तेजसः प्रतिसंहारमात्मनः स चकार ह १५
इति श्रीमहाभारते आदिपर्वणि विंशोऽध्यायः २०

## अथैकविंशोऽध्यायः

सूत उवाच
ततः कामगमः पक्षी महावीर्यो महाबलः
मातुरन्तिकमागच्छत्परं तीरं महोदधेः १
यत्र सा विनता तस्मिन्पणितेन पराजिता

अतीव दुःखसंतप्ता दासीभावमुपागता २
ततः कदाचिद्विनतां प्रवणां पुत्रसंनिधौ
काल आहूय वचनं कद्रूरिदमभाषत ३
नागानामालयं भद्रे सुरम्यं रमणीयकम्
समुद्रकुक्षावेकान्ते तत्र मां विनते वह ४
ततः सुपर्णमाता तामवहत्सर्पमातरम्
पन्नगान्गरुडश्चापि मातुर्वचनचोदितः ५
स सूर्यस्याभितो याति वैनतेयो विहंगमः
सूर्यरश्मिपरीताश्च मूर्च्छिताः पन्नगाभवन्
तदवस्थान्सुतान्दृष्ट्वा कद्रूः शक्रमथास्तुवत् ६
नमस्ते देवदेवश नमस्ते बलसूदन
नमुचिघ्न नमस्तेऽस्तु सहस्राक्ष शचीपते ७
सर्पाणां सूर्यतप्तानां वारिणा त्वं प्लवो भव
त्वमेव परमं त्राणमस्माकममरोत्तम ८
ईशो ह्यसि पयः स्रष्टुं त्वमनल्पं पुरंदर
त्वमेव मेघस्त्वं वायुस्त्वमग्निर्वैद्युतोऽम्बरे ९
त्वमभ्रघनविक्षेप्ता त्वामेवाहुः पुनर्घनम्
त्वं वज्रमतुलं घोरं घोषवांस्त्वं बलाहकः १०
स्रष्टा त्वमेव लोकानां संहर्ता चापराजितः
त्वं ज्योतिः सर्वभूतानां त्वमादित्यो विभावसुः ११
त्वं महद्भूतमाश्चर्यं त्वं राजा त्वं सुरोत्तमः
त्वं विष्णुस्त्वं सहस्राक्षस्त्वं देवस्त्वं परायणम् १२
त्वं सर्वममृतं देव त्वं सोमः परमार्चितः
त्वं मुहूर्तस्तिथिश्च त्वं लवस्त्वं वै पुनः क्षणः १३
शुक्लस्त्वं बहुलश्चैव कला काष्ठा त्रुटिस्तथा
संवत्सरर्तवो मासा रजन्यश्च दिनानि च १४
त्वमुत्तमा सगिरिवना वसुंधरा सभास्करं वितिमिरमम्बरं तथा
महोदधिः सतिमितिमिंगिलस्तथा महोर्मिमान्बहुमकरो झषालयः १५
महद्यशस्त्वमिति सदाभिपूज्यसे मनीषिभिर्मुदितमना महर्षिभिः
अभिष्टुतः पिबसि च सोममध्वरे वषट्कृतान्यपि च हवींषि भूतये १६

त्वं विप्रैः सततमिहेज्यसे फलार्थं वेदाङ्गेष्वतुलबलौघ गीयसे च
त्वद्धेतोर्यजनपरायणा द्विजेन्द्रा वेदाङ्गान्यभिगमयन्ति सर्ववेदैः १७
इति श्रीमहाभारते आदिपर्वणि एकविंशोऽध्यायः २१

## अथद्वाविंशोऽध्यायः

सूत उवाच
एवं स्तुतस्तदा कद्र्वा भगवान्हरिवाहनः
नीलजीमूतसंघातैर्व्योम सर्वं समावृणोत् १
ते मेघा मुमुचुस्तोयं प्रभूतं विद्युदुज्ज्वलाः
परस्परमिवात्यर्थं गर्जन्तः सततं दिवि २
संघ्राततितमिवाकाशं जलदैः सुमहाद्भुतैः
सृजद्भिरतुलं तोयमजस्रं सुमहारवैः ३
संप्रनृत्तमिवाकाशं धारोर्मिभिरनेकशः
मेघस्तनितनिर्घोषमम्बरं समपद्यत ४
नागानामुत्तमो हर्षस्तदा वर्षति वासवे
आपूर्यत मही चापि सलिलेन समन्ततः ५
इति श्रीमहाभारते आदिपर्वणि द्वाविंशोऽध्यायः २२

## त्रयोविंशोऽध्यायः

सूत उवाच
सुपर्णेनोह्यमानास्ते जग्मुस्तं देशमाशु वै
सागराम्बुपरिक्षिप्तं पक्षिसंघनिनादितम् १
विचित्रफलपुष्पाभिर्वनराजिभिरावृतम्
भवनैरावृतं रम्यैस्तथा पद्माकरैरपि २
प्रसन्नसलिलैश्चापि ह्रदैश्चित्रैर्विभूषितम्
दिव्यगन्धवहैः पुण्यैर्मारुतैरुपवीजितम् ३
उपजिघ्रद्भिराकाशं वृक्षैर्मलयजैरपि
शोभितं पुष्पवर्षाणि मुञ्चद्भिर्मारुतोद्धुतैः ४
किरद्भिरिव तत्रस्थान्नागान्पुष्पाम्बुवृष्टिभिः
मनःसंहर्षणं पुण्यं गन्धर्वाप्सरसां प्रियम्

नानापक्षिरुतं रम्यं कद्रुपुत्रप्रहर्षणम् ५
तत्ते वनं समासाद्य विजह्रुः पन्नगा मुदा
अब्रुवंश्च महावीर्यं सुपर्णं पतगोत्तमम् ६
वहास्मानपरं द्वीपं सुरम्यं विपुलोदकम्
त्वं हि देशान्बहून्रम्यान्पतन्पश्यसि खेचर ७
स विचिन्त्याब्रवीत्पक्षी मातरं विनतां तदा
किं कारणं मया मातः कर्तव्यं सर्पभाषितम् ८
विनतोवाच
दासीभूतास्म्यनार्याया भगिन्याः पतगोत्तम
पणं वितथमास्थाय सर्पैरुपधिना कृतम् ९
सूत उवाच
तस्मिंस्तु कथिते मात्रा कारणे गगनेचरः
उवाच वचनं सर्पांस्तेन दुःखेन दुःखितः १०
किमाहृत्य विदित्वा वा किं वा कृत्वेह पौरुषम्
दास्याद्वो विप्रमुच्येयं सत्यं शंसत लेलिहाः ११
श्रुत्वा तमब्रुवन्सर्पा आहरामृतमोजसा
ततो दास्याद्विप्रमोक्षो भविता तव खेचर १२
इति श्रीमहाभारते आदिपर्वणि त्रयोविंशोऽध्यायः २३

अथ चतुर्विंशोऽध्यायः

सूत उवाच
इत्युक्तो गरुडः सर्पैस्ततो मातरमब्रवीत्
गच्छाम्यमृतमाहर्तुं भक्ष्यमिच्छामि वेदितुम् १
विनतोवाच
समुद्रकुक्षावेकान्ते निषादालयमुत्तमम्
सहस्राणामनेकानां तान्भुक्त्वामृतमानय २
न तु ते ब्राह्मणं हन्तुं कार्या बुद्धिः कथंचन
अवध्यः सर्वभूतानां ब्राह्मणो ह्यनलोपमः ३
अग्निरर्को विषं शस्त्रं विप्रो भवति कोपितः
भूतानामग्रभुग्विप्रो वर्णश्रेष्ठः पिता गुरुः ४

गरुड उवाच
यथाहमभिजानीयां ब्राह्मणं लक्षणैः शुभैः
तन्मे कारणतो मातः पृच्छतो वक्तुमर्हसि ५
विनतोवाच
यस्ते कण्ठमनुप्राप्तो निगीर्णं बडिशं यथा
दहेदङ्गारवत्पुत्र तं विद्याद्ब्राह्मणर्षभम् ६
सूत उवाच
प्रोवाच चैनं विनता पुत्रहार्दादिदं वचः
जानन्त्यप्यतुलं वीर्यमाशीर्वादसमन्वितम् ७
पक्षौ ते मारुतः पातु चन्द्रः पृष्ठं तु पुत्रक
शिरस्तु पातु ते वह्निर्भास्करः सर्वमेव तु ८
अहं च ते सदा पुत्र शान्तिस्वस्तिपरायणा
अरिष्टं व्रज पन्थानं वत्स कार्यार्थसिद्धये ९
ततः स मातुर्वचनं निशम्य वितत्य पक्षौ नभ उत्पपात
ततो निषादान्बलवानुपागमद्बुभुक्षितः काल इवान्तको महान् १०
स तान्निषादानुपसंहरंस्तदा रजः समुद्धूय नभःस्पृशं महत्
समुद्रकुक्षौ च विशोषयन्पयः समीपगान्भूमिधरान्विचालयन् ११
ततः स चक्रे महदाननं तदा निषादमार्गं प्रतिरुध्य पक्षिराट्
ततो निषादास्त्वरिताः प्रवव्रजुर्यतो मुखं तस्य भुजङ्गभोजिनः १२
तदाननं विवृतमतिप्रमाणवत्समभ्ययुर्गगनमिवार्दिताः खगाः
सहस्रशः पवनरजोऽभ्रमोहिता महानिलप्रचलितपादपे वने १३
ततः खगो वदनममित्रतापनः समाहरत्परिचपलो महाबलः
निषूदयन्बहुविधमत्स्यभक्षिणो बुभुक्षितो गगनचरेश्वरस्तदा १४
इति श्रीमहाभारते आदिपर्वणि चतुर्विंशोऽध्यायः २४

अथ पञ्चविंशोऽध्यायः

सूत उवाच
तस्य कण्ठमनुप्राप्तो ब्राह्मणः सह भार्यया
दहन्दीप्त इवाङ्गारस्तमुवाचान्तरिक्षगः १
द्विजोत्तम विनिर्गच्छ तूर्णमास्यादपावृतात्

न हि मे ब्राह्मणो वध्यः पापेष्वपि रतः सदा २
ब्रुवाणमेवं गरुडं ब्राह्मणः समभाषत
निषादी मम भार्येयं निर्गच्छतु मया सह ३
गरुड उवाच
एतामपि निषादीं त्वं परिगृह्याशु निष्पत
तूर्णं संभावयात्मानमजीर्णं मम तेजसा ४
सूत उवाच
ततः स विप्रो निष्क्रान्तो निषादीसहितस्तदा
वर्धयित्वा च गरुडमिष्टं देशं जगाम ह ५
सहभार्ये विनिष्क्रान्ते तस्मिन्विप्रे स पक्षिराट्
वितत्य पक्षावाकाशमुत्पपात मनोजवः ६
ततोऽपश्यत्स पितरं पृष्टश्चाख्यातवान्पितुः
अहं हि सर्पैः प्रहितः सोममाहर्तुमुद्यतः
मातुर्दास्यविमोक्षार्थमाहरिष्ये तमद्य वै ७
मात्रा चास्मि समादिष्टो निषादान्भक्षयेति वै
न च मे तृप्तिरभवद्भक्षयित्वा सहस्रशः ८
तस्माद्भोक्तव्यमपरं भगवन्प्रदिशस्व मे
यद्भुक्त्वामृतमाहर्तुं समर्थः स्यामहं प्रभो ९
कश्यप उवाच
आसीद्विभावसुर्नाम महर्षिः कोपनो भृशम्
भ्राता तस्यानुजश्चासीत्सुप्रतीको महातपाः १०
स नेच्छति धनं भ्रात्रा सहैकस्थं महामुनिः
विभागं कीर्तयत्येव सुप्रतीकोऽथ नित्यशः ११
अथाब्रवीच्च तं भ्राता सुप्रतीकं विभावसुः
विभागं बहवो मोहात्कर्तुमिच्छन्ति नित्यदा
ततो विभक्ता अन्योन्यं नाद्रियन्तेऽथमोहिताः १२
ततः स्वार्थपरान्मूढान्पृथग्भूतान्स्वकैर्धनैः
विदित्वा भेदयन्त्येतानमित्रा मित्ररूपिणः १३
विदित्वा चापरे भिन्नानन्तरेषु पतन्त्यथ
भिन्नानामतुलो नाशः क्षिप्रमेव प्रवर्तते १४

तस्माच्चैव विभागार्थं न प्रशंसन्ति पण्डिताः
गुरुशास्त्रे निबद्धानामन्योन्यमभिशङ्किनाम् १५
नियन्तुं न हि शक्यस्त्वं भेदतो धनमिच्छसि
यस्मात्तस्मात्सुप्रतीक हस्तित्वं समवाप्स्यसि १६
शप्तस्त्वेवं सुप्रतीको विभावसुमथाब्रवीत्
त्वमप्यन्तर्जलचरः कच्छपः संभविष्यसि १७
एवमन्योन्यशापात्तौ सुप्रतीकविभावसू
गजकच्छपतां प्राप्तावर्थार्थं मूढचेतसौ १८
रोषदोषानुषङ्गेण तिर्यग्योनिगतावपि
परस्परद्वेषरतौ प्रमाणबलदर्पितौ १९
सरस्यस्मिन्महाकायौ पूर्ववैरानुसारिणौ
तयोरेकतरः श्रीमान्समुपैति महागजः २०
तस्य बृंहितशब्देन कूर्मोऽप्यन्तर्जलेशयः
उत्थितोऽसौ महाकायः कृत्स्नं संक्षोभयन्सरः २१
तं दृष्ट्वावेष्टितकरः पतत्येष गजो जलम्
दन्तहस्ताग्रलाङ्गूलपादवेगेन वीर्यवान् २२
तं विक्षोभयमाणं तु सरो बहुझषाकुलम्
कूर्मोऽप्यभ्युद्यतशिरा युद्धायाभ्येति वीर्यवान् २३
षडुच्छ्रितो योजनानि गजस्तद्द्विगुणायतः
कूर्मस्त्रियोजनोत्सेधो दशयोजनमण्डलः २४
तावेतौ युद्धसंमत्तौ परस्परजयैषिणौ
उपयुज्याशु कर्मेदं साधयेप्सितमात्मनः २५
सूत उवाच
तच्छ्रुत्वा तु पितुर्वाक्यं भीमवेगोऽन्तरिक्षगः
नखेन गजमेकेन कूर्ममेकेन चाक्षिपत् २६
समुत्पपात चाकाशं तत उच्चैर्विहंगमः
सोऽलम्बतीर्थमासाद्य देववृक्षानुपागमत् २७
ते भीताः समकम्पन्त तस्य पक्षानिलाहताः
न नो भञ्ज्यादिति तदा दिव्याः कनकशाखिनः २८
प्रचलाङ्गान्स तान्दृष्ट्वा मनोरथफलाङ्कुरान्

अन्यानतुलरूपाङ्गानुपचक्राम खेचरः २९
काञ्चनै राजतैश्चैव फलैर्वैडूर्यशाखिनः
सागराम्बुपरिक्षिप्तान्भ्राजमानान्महाद्रुमान् ३०
तमुवाच खगश्रेष्ठं तत्र रोहिणपादपः
अतिप्रवृद्धः सुमहानापतन्तं मनोजवम् ३१
यैषा मम महाशाखा शतयोजनमायता
एतामास्थाय शाखां त्वं खादेमौ गजकच्छपौ ३२
ततो द्रुमं पतगसहस्रसेवितं महीधरप्रतिमवपुः प्रकम्पयन्
खगोत्तमो द्रुतमभिपत्य वेगवान्बभञ्ज तामविरलपत्रसंवृताम् ३३
इति श्रीमहाभारते आदिपर्वणि पञ्चविंशोऽध्यायः २५

अथ षड्विंशोऽध्यायः

सूत उवाच
स्पृष्टमात्रा तु पद्भ्यां सा गरुडेन बलीयसा
अभज्यत तरोः शाखा भग्नां चैनामधारयत् १
तां भग्नां स महाशाखां स्मयन्समवलोकयन्
अथात्र लम्बतोऽपश्यद्वालखिल्यानधोमुखान् २
स तद्विनाशसंत्रासादनुपत्य खगाधिपः
शाखामास्येन जग्राह तेषामेवान्ववेक्षया
शनैः पर्यपतत्पक्षी पर्वतान्प्रविशातयन् ३
एवं सोऽभ्यपतद्देशान्बहून्सगजकच्छपः
दयार्थं बालखिल्यानां न च स्थानमविन्दत ४
स गत्वा पर्वतश्रेष्ठं गन्धमादनमव्ययम्
ददर्श कश्यपं तत्र पितरं तपसि स्थितम् ५
ददर्श तं पिता चापि दिव्यरूपं विहंगमम्
तेजोवीर्यबलोपेतं मनोमारुतरंहसम् ६
शैलशृङ्गप्रतीकाशं ब्रह्मदण्डमिवोद्यतम्
अचिन्त्यमनभिज्ञेयं सर्वभूतभयंकरम् ७
मायावीर्यधरं साक्षादग्निमिद्धमिवोद्यतम्
अप्रधृष्यमजेयं च देवदानवराक्षसैः ८

भेत्तारं गिरिशृङ्गाणां नदीजलविशोषणम्
लोकसंलोडनं घोरं कृतान्तसमदर्शनम् ९
तमागतमभिप्रेक्ष्य भगवान्कश्यपस्तदा
विदित्वा चास्य संकल्पमिदं वचनमब्रवीत् १०
पुत्र मा साहसं कार्षीर्मा सद्यो लप्स्यसे व्यथाम्
मा त्वा दहेयुः संक्रुद्धा वालखिल्या मरीचिपाः ११
प्रसादयामास स तान्कश्यपः पुत्रकारणात्
वालखिल्यांस्तपःसिद्धानिदमुद्दिश्य कारणम् १२
प्रजाहितार्थमारम्भो गरुडस्य तपोधनाः
चिकीर्षति महत्कर्म तदनुज्ञातुमर्हथ १३
एवमुक्ता भगवता मुनयस्ते समभ्ययुः
मुक्त्वा शाखां गिरिं पुण्यं हिमवन्तं तपोऽर्थिनः १४
ततस्तेष्वपयातेषु पितरं विनतात्मजः
शाखाव्याक्षिप्तवदनः पर्यपृच्छत कश्यपम् १५
भगवन्क्व विमुञ्चामि तरुशाखामिमामहम्
वर्जितं ब्राह्मणैर्देशमाख्यातु भगवान्मम १६
ततो निष्पुरुषं शैलं हिमसंरुद्धकन्दरम्
अगम्यं मनसाप्यन्यैस्तस्याचख्यौ स कश्यपः १७
तं पर्वतमहाकुक्षिमाविश्य मनसा खगः
जवेनाभ्यपतत्तार्क्ष्यः सशाखागजकच्छपः १८
न तां वध्रः परिणहेच्छतचर्मा महानणुः
शाखिनो महतीं शाखां यां प्रगृह्य ययौ खगः १९
ततः स शतसाहस्रं योजनान्तरमागतः
कालेन नातिमहता गरुडः पततां वरः २०
स तं गत्वा क्षणेनैव पर्वतं वचनात्पितुः
अमुञ्चन्महतीं शाखां सस्वनां तत्र खेचरः २१
पक्षानिलहतश्चास्य प्राकम्पत स शैलराट्
मुमोच पुष्पवर्षं च समागलितपादपः २२
शृङ्गाणि च व्यशीर्यन्त गिरेस्तस्य समन्ततः
मणिकाञ्चनचित्राणि शोभयन्ति महागिरिम् २३

शाखिनो बहवश्चापि शाखयाभिहतास्तया
काञ्चनैः कुसुमैर्भान्ति विद्युत्वन्त इवाम्बुदाः २४
ते हेमविकचा भूतो युक्ताः पर्वतधातुभिः
व्यराजञ्शाखिनस्तत्र सूर्यांशुप्रतिरञ्जिताः २५
ततस्तस्य गिरेः शृङ्गमास्थाय स खगोत्तमः
भक्षयामास गरुडस्तावुभौ गजकच्छपौ २६
ततः पर्वतकूटाग्रादुत्पपात मनोजवः
प्रावर्तन्ताथ देवानामुत्पाता भयवेदिनः २७
इन्द्रस्य वज्रं दयितं प्रजज्वाल व्यथान्वितम्
सधूमा चापतत्सार्चिर्दिवोल्का नभसश्च्युता २८
तथा वसूनां रुद्राणामादित्यानां च सर्वशः
साध्यानां मरुतां चैव ये चान्ये देवतागणाः
स्वं स्वं प्रहरणं तेषां परस्परमुपाद्रवत् २९
अभूतपूर्वं संग्रामे तदा देवासुरेऽपि च
ववुर्वाताः सनिर्घाता पेतुरुल्काः समन्ततः ३०
निरभ्रमपि चाकाशं प्रजगर्ज महास्वनम्
देवानामपि यो देवः सोऽप्यवर्षदसृक्तदा ३१
मम्लुर्माल्यानि देवानां शेमुस्तेजांसि चैव हि
उत्पातमेघा रौद्राश्च ववर्षुः शोणितं बहु
रजांसि मुकुटान्येषामुत्थितानि व्यधर्षयन् ३२
ततस्त्राससमुद्विग्नः सह देवैः शतक्रतुः
उत्पातान्दारुणान्पश्यन्नित्युवाच बृहस्पतिम् ३३
किमर्थं भगवन्घोरा महोत्पाताः समुत्थिताः
न च शत्रुं प्रपश्यामि युधि यो नः प्रधर्षयेत् ३४
बृहस्पतिरुवाच
तवापराधाद्देवेन्द्र प्रमादाच्च शतक्रतो
तपसा वालखिल्यानां भूतमुत्पन्नमद्भुतम् ३५
कश्यपस्य मुनेः पुत्रो विनतायाश्च खेचरः
हर्तुं सोममनुप्राप्तो बलवान्कामरूपवान् ३६
समर्थो बलिनां श्रेष्ठो हर्तुं सोमं विहंगमः

सर्वं संभावयाम्यस्मिन्नसाध्यमपि साधयेत् ३७
सूत उवाच
श्रुत्वैतद्वचनं शक्रः प्रोवाचामृतरक्षिणः
महावीर्यबलः पक्षी हर्तुं सोममिहोद्यतः ३८
युष्मान्संबोधयाम्येष यथा स न हरेद्बलात्
अतुलं हि बलं तस्य बृहस्पतिरुवाच मे ३९
तच्छ्रुत्वा विबुधा वाक्यं विस्मिता यत्नमास्थिताः
परिवार्यामृतं तस्थुर्वज्री चेन्द्रः शतक्रतुः ४०
धारयन्तो महार्हाणि कवचानि मनस्विनः
काञ्चनानि विचित्राणि वैडूर्यविकृतानि च ४१
विविधानि च शस्त्राणि घोररूपाण्यनेकशः
शिततीक्ष्णाग्रधाराणि समुद्यम्य सहस्रशः ४२
सविस्फुलिगज्वालानि सधूमानि च सर्वशः
चक्राणि परिघांश्चैव त्रिशूलानि परश्वधान् ४३
शक्तीश्च विविधास्तीक्ष्णाः करवालांश्च निर्मलान्
स्वदेहरूपाण्यादाय गदाश्चोग्रप्रदर्शनाः ४४
तैः शस्त्रैर्भानुमद्भिस्ते दिव्याभरणभूषिताः
भानुमन्तः सुरगणास्तस्थुर्विगतकल्मषाः ४५
अनुपमबलवीर्यतेजसो धृतमनसः परिरक्षणेऽमृतस्य
असुरपुरविदारणाः सुरा ज्वलनसमिद्धवपुःप्रकाशिनः ४६
इति समरवरं सुरास्थितं परिघसहस्रशतैः समाकुलम्
विगलितमिव चाम्बरान्तरे तपनमरीचिविभासितं बभौ ४७
इति श्रीमहाभारते आदिपर्वणि षड्विंशोऽध्यायः २६

अथ सप्तविंशोऽध्यायः

शौनक उवाच
कोऽपराधो महेन्द्रस्य कः प्रमादश्च सूतज
तपसा वालखिल्यानां संभूतो गरुडः कथम् १
कश्यपस्य द्विजातेश्च कथं वै पक्षिराट् सुतः
अधृष्यः सर्वभूतानामवध्यश्चाभवत्कथम् २

कथं च कामचारी स कामवीर्यश्च खेचरः
एतदिच्छाम्यहं श्रोतुं पुराणे यदि पठ्यते ३
सूत उवाच
विषयोऽय पुराणस्य यन्मां त्वं परिपृच्छसि
शृणु मे वदतः सर्वमेतत्संक्षेपतो द्विज ४
यजतः पुत्रकामस्य कश्यपस्य प्रजापतेः
साहाय्यमृषयो देवा गन्धर्वाश्च ददुः किल ५
तत्रेध्मानयने शक्रो नियुक्तः कश्यपेन ह
मुनयो वालखिल्याश्च ये चान्ये देवतागणाः ६
शक्रस्तु वीर्यसदृशमिध्मभारं गिरिप्रभम्
समुद्यम्यानयामास नातिकृच्छ्रादिव प्रभुः ७
अथापश्यदृषीन्ह्रस्वानङ्गुष्ठोदरपर्वणः
पलाशवृन्तिकामेकां सहितान्वहतः पथि ८
प्रलीनान्स्वेष्विवाङ्गेषु निराहारांस्तपोधनान्
क्लिश्यमानान्मन्दबलान्गोष्पदे संप्लुतोदके ९
तांश्च सर्वान्स्मयाविष्टो वीर्योन्मत्तः पुरंदरः
अवहस्यात्यगाच्छीघ्रं लङ्घयित्वावमन्य च १०
तेऽथ रोषसमाविष्टाः सुभृशं जातमन्यवः
आरेभिरे महत्कर्म तदा शक्रभयंकरम् ११
जुहुवुस्ते सुतपसो विधिवज्जातवेदसम्
मन्त्रैरुच्चावचैर्विप्रा येन कामेन तच्छृणु १२
कामवीर्यः कामगमो देवराजभयप्रदः
इन्द्रोऽन्य सर्वदेवानां भवेदिति यतव्रताः १३
इन्द्राच्छतगुणः शौर्ये वीर्ये चैव मनोजवः
तपसो नः फलेनाद्य दारुणः संभवत्विति १४
तद्बुद्ध्वा भृशसंतप्तो देवराजः शतक्रतुः
जगाम शरणं तत्र कश्यपं संशितव्रतम् १५
तच्छ्रुत्वा देवराजस्य कश्यपोऽथ प्रजापतिः
वालखिल्यानुपागम्य कर्मसिद्धिमपृच्छत १६
एवमस्त्विति तं चापि प्रत्यूचुः सत्यवादिनः

तान्कश्यप उवाचेदं सान्त्वपूर्वं प्रजापतिः १७
अयमिन्द्रस्त्रिभुवने नियोगाद्ब्रह्मणः कृतः
इन्द्रार्थं च भवन्तोऽपि यत्नवन्तस्तपोधनाः १८
न मिथ्या ब्रह्मणो वाक्यं कर्तुमर्हथ सत्तमाः
भवतां च न मिथ्यायं संकल्पो मे चिकीर्षितः १९
भवत्वेष पतत्रीणामिन्द्रोऽतिबलसत्त्ववान्
प्रसादः क्रियतां चैव देवराजस्य याचतः २०
एवमुक्ताः कश्यपेन वालखिल्यास्तपोधनाः
प्रत्यूचुरभिसंपूज्य मुनिश्रेष्ठं प्रजापतिम् २१
इन्द्रार्थोऽय समारम्भः सर्वेषां नः प्रजापते
अपत्यार्थं समारम्भो भवतश्चायमीप्सितः २२
तदिदं सफलं कर्म त्वया वै प्रतिगृह्यताम्
तथा चैव विधत्स्वात्र यथा श्रेयोऽनुपश्यसि २३
एतस्मिन्नेव काले तु देवी दाक्षायणी शुभा
विनता नाम कल्याणी पुत्रकामा यशस्विनी २४
तपस्तप्त्वा व्रतपरा स्नाता पुंसवने शुचिः
उपचक्राम भर्तारं तामुवाचाथ कश्यपः २५
आरम्भः सफलो देवि भवितायं तवेप्सितः
जनयिष्यसि पुत्रौ द्वौ वीरौ त्रिभुवनेश्वरौ २६
तपसा वालखिल्यानां मम संकल्पजौ तथा
भविष्यतो महाभागौ पुत्रौ ते लोकपूजितौ २७
उवाच चैनां भगवान्मारीचः पुनरेव ह
धार्यतामप्रमादेन गर्भोऽय सुमहोदयः २८
एकः सर्वपतत्रीणामिन्द्रत्वं कारयिष्यति
लोकशंभावितो वीरः कामवीर्यो विहंगमः २९
शतक्रतुमथोवाच प्रीयमाणः प्रजापतिः
त्वत्सहायौ खगावेतौ भ्रातरौ ते भविष्यतः ३०
नैताभ्यां भविता दोषः सकाशात्ते पुरंदर
व्येतु ते शक्र संतापस्त्वमेवेन्द्रो भविष्यति ३१
न चाप्येवं त्वया भूयः क्षेप्तव्या ब्रह्मवादिनः

न चावमान्या दर्पात्ते वाग्विषा भृशकोपनाः ३२
एवमुक्तो जगामेन्द्रो निर्विशङ्कस्त्रिविष्टपम्
विनता चापि सिद्धार्था बभूव मुदिता तदा ३३
जनयामास पुत्रौ द्वावरुणं गरुडं तथा
अरुणस्तयोस्तु विकल आदित्यस्य पुरःसरः ३४
पतत्रीणां तु गरुड इन्द्रत्वेनाभ्यषिच्यत
तस्यैतत्कर्म सुमहच्छ्रूयतां भृगुनन्दन ३५
इति श्रीमहाभारते आदिपर्वणि सप्तविंशोऽध्यायः २७

अथाष्टाविंशोऽध्यायः

सूत उवाच
ततस्तस्मिन्द्विजश्रेष्ठ समुदीर्णे तथाविधे
गरुत्मान्पक्षिराट् तूर्णं संप्राप्तो विबुधान्प्रति १
तं दृष्ट्वातिबलं चैव प्राकम्पन्त समन्ततः
परस्परं च प्रत्यघ्नन्सर्वप्रहरणान्यपि २
तत्र चासीदमेयात्मा विद्युदग्निसमप्रभः
भौवनः सुमहावीर्यः सोमस्य परिरक्षिता ३
स तेन पतगेन्द्रेण पक्षतुण्डनखैः क्षतः
मुहूर्तमतुलं युद्धं कृत्वा विनिहतो युधि ४
रजश्चोद्धूय सुमहत्पक्षवातेन खेचरः
कृत्वा लोकान्निरालोकांस्तेन देवानवाकिरत् ५
तेनावकीर्णा रजसा देवा मोहमुपागमन्
न चैनं ददृशुश्छन्ना रजसामृतरक्षिणः ६
एवं संलोडयामास गरुडस्त्रिदिवालयम्
पक्षतुण्डप्रहारैश्च देवान्स विददार ह ७
ततो देवः सहस्राक्षस्तूर्णं वायुमचोदयत्
विक्षिपेमां रजोवृष्टिं तवैतत्कर्म मारुत ८
अथ वायुरपोवाह तद्रजस्तरसा बली
ततो वितिमिरे जाते देवाः शकुनिमार्दयन् ९
ननाद चोच्चैर्बलवान्महामेघरवः खगः

वध्यमानः सुरगणैः सर्वभूतानि भीषयन्
उत्पपात महावीर्यः पक्षिराट् परवीरहा १०
तमुत्पत्यान्तरिक्षस्थं देवानामुपरि स्थितम्
वर्मिणो विबुधाः सर्वे नानाशस्त्रैरवाकिरन् ११
पट्टिशैः परिधैः शूलैर्गदाभिश्च सवासवाः
क्षुरान्तैर्ज्वलितैश्चापि चक्रैरादित्यरूपिभिः १२
नानाशस्त्रविसर्गैश्च वध्यमानः समन्ततः
कुर्वन्सुतुमुलं युद्धं पक्षिराण्न व्यकम्पत १३
विनर्दन्निव चाकाशे वैनतेयः प्रतापवान्
पक्षाभ्यामुरसा चैव समन्ताद्व्याक्षिपत्सुरान् १४
ते विक्षिप्तास्ततो देवाः प्रजग्मुर्गरुडार्दिताः
नखतुण्डक्षताश्चैव सुस्रुवुः शोणितं बहु १५
साध्याः प्राचीं सगन्धर्वा वसवो दक्षिणां दिशम्
प्रजग्मुः सहिता रुद्रैः पतगेन्द्रप्रधर्षिताः १६
दिशं प्रतीचीमादित्या नासत्या उत्तरां दिशम्
मुहुर्मुहुः प्रेक्षमाणा युध्यमाना महौजसम् १७
अश्वक्रन्देन वीरेण रेणुकेन च पक्षिणा
क्रथनेन च शूरेण तपनेन च खेचरः १८
उलूकश्वसनाभ्यां च निमेषेण च पक्षिणा
प्ररुजेन च संयुद्धं चकार प्रलिहेन च १९
तान्पक्षनखतुण्डाग्रैरभिनद्विनतासुतः
युगान्तकाले संक्रुद्धः पिनाकीव महाबलः २०
महावीर्या महोत्साहास्तेन ते बहुधा क्षताः
रेजुरभ्रघनप्रख्या रुधिरौघप्रवर्षिणः २१
तान्कृत्वा पतगश्रेष्ठः सर्वानुत्क्रान्तजीवितान्
अतिक्रान्तोऽमृतस्यार्थे सर्वतोऽग्निमपश्यत २२
आवृण्वानं महाज्वालमर्चिर्भिः सर्वतोऽम्बरम्
दहन्तमिव तीक्ष्णांशुं घोरं वायुसमीरितम् २३
ततो नवत्या नवतीर्मुखानां कृत्वा तरस्वी गरुडो महात्मा
नदीः समापीय मुखैस्ततस्तैः सुशीघ्रमागम्य पुनर्जवेन २४

ज्वलन्तमग्निं तममित्रतापनः समास्तरत्पत्ररथो नदीभिः
ततः प्रचक्रे वपुरन्यदल्पं प्रवेष्टुकामोऽग्निमभिप्रशाम्य २५
इति श्रीमहाभारते आदिपर्वणि अष्टाविंशोऽध्यायः २८

अथैकोनत्रिंशोऽध्यायः

सूत उवाच
जाम्बूनदमयो भूत्वा मरीचिविकचोज्ज्वलः
प्रविवेश बलात्पक्षी वारिवेग इवार्णवम् १
स चक्रं क्षुरपर्यन्तमपश्यदमृतान्तिके
परिभ्रमन्तमनिशं तीक्ष्णधारमयस्मयम् २
ज्वलनार्कप्रभं घोरं छेदनं सोमहारिणाम्
घोररूपं तदत्यर्थं यन्त्रं देवैः सुनिर्मितम् ३
तस्यान्तरं स दृष्ट्वैव पर्यवर्तत खेचरः
अरान्तरेणाभ्यपतत्संक्षिप्याङ्गं क्षणेन ह ४
अधश्चक्रस्य चैवात्र दीप्तानलसमद्युती
विद्युज्जिह्वौ महाघोरौ दीप्तास्यौ दीप्तलोचनौ ५
चक्षुर्विषौ महावीर्यौ नित्यक्रुद्धौ तरस्विनौ
रक्षार्थमेवामृतस्य ददर्श भुजगोत्तमौ ६
सदा संरब्धनयनौ सदा चानिमिषेक्षणौ
तयोरेकोऽपि यं पश्येत्स तूर्णं भस्मसाद्भवेत् ७
तयोश्चक्षूंषि रजसा सुपर्णस्तूर्णमावृणोत्
अदृष्टरूपस्तौ चापि सर्वतः पर्यकालयत् ८
तयोरङ्गं समाक्रम्य वैनतेयोऽन्तरिक्षगः
आच्छिनत्तरसा मध्ये सोममभ्यद्रवत्ततः ९
समुत्पाट्यामृतं तत्तु वैनतेयस्ततो बली
उत्पपात जवेनैव यन्त्रमुन्मथ्य वीर्यवान् १०
अपीत्वैवामृतं पक्षी परिगृह्याशु वीर्यवान्
अगच्छदपरिश्रान्त आवार्यार्कप्रभां खगः ११
विष्णुना तु तदाकाशे वैनतेयः समेयिवान्
तस्य नारायणस्तुष्टस्तेनालौल्येन कर्मणा १२

तमुवाचाव्ययो देवो वरदोऽस्मीति खेचरम्
स वव्रे तव तिष्ठेयमुपरीत्यन्तरिक्षगः १३
उवाच चैनं भूयोऽपि नारायणमिदं वचः
अजरश्चामरश्च स्याममृतेन विनाप्यहम् १४
प्रतिगृह्य वरौ तौ च गरुडो विष्णुमब्रवीत्
भवतेऽपि वरं दद्मि वृणीतां भगवानपि १५
तं वव्रे वाहनं कृष्णो गरुत्मन्तं महाबलम्
ध्वजं च चक्रे भगवानुपरि स्थास्यसीति तम् १६
अनुपत्य खगं त्विन्द्रो वज्रेणाङ्गेऽभ्यताडयत्
विहंगमं सुरामित्रं हरन्तममृतं बलात् १७
तमुवाचेन्द्रमाक्रन्दे गरुडः पततां वरः
प्रहसञ्श्लक्ष्णया वाचा तथा वज्रसमाहतः १८
ऋषेर्मानं करिष्यामि वज्रं यस्यास्थिसंभवम्
वज्रस्य च करिष्यामि तव चैव शतक्रतो १९
एष पत्रं त्यजाम्येकं यस्यान्तं नोपलप्स्यसे
न हि वज्रनिपातेन रुजा मेऽस्ति कदाचन २०
तत्र तं सर्वभूतानि विस्मितान्यब्रुवंस्तदा
सुरूपं पत्रमालक्ष्य सुपर्णोऽय भवत्विति २१
दृष्ट्वा तदद्भुतं चापि सहस्राक्षः पुरंदरः
खगो महदिदं भूतमिति मत्वाभ्यभाषत २२
बलं विज्ञातुमिच्छामि यत्ते परमनुत्तमम्
सख्यं चानन्तमिच्छामि त्वया सह खगोत्तम २३

इति श्री महाभारते आदिपर्वणि ऊनत्रिंशोऽध्यायः २९

अथ त्रिंशोऽध्यायः

गरुड उवाच
सख्यं मेऽस्तु त्वया देव यथेच्छसि पुरंदर
बलं तु मम जानीहि महच्चासह्यमेव च १
कामं नैतत्प्रशंशन्ति सन्तः स्वबलसंस्तवम्
गुणसंकीर्तनं चापि स्वयमेव शतक्रतो २

सखेति कृत्वा तु सखे पृष्टो वक्ष्याम्यहं त्वया
न ह्यात्मस्तवसंयुक्तं वक्तव्यमनिमित्ततः ३
सपर्वतवनामुर्वीं ससागरवनामिमाम्
पक्षनाड्यैकया शक्र त्वां चैवात्रावलम्बिनम् ४
सर्वान्संपिण्डितान्वापि लोकान्सस्थाणुजङ्गमान्
वहेयमपरिश्रान्तो विद्धीदं मे महद्बलम् ५
सूत उवाच
इत्युक्तवचनं वीरं किरीटी श्रीमतां वरः
आह शौनक देवेन्द्रः सर्वभूतहितः प्रभुः ६
प्रति गृह्यतामिदानीं मे सख्यमानन्त्यमुत्तमम्
न कार्यं तव सोमेन मम सोमः प्रदीयताम्
अस्मांस्ते हि प्रबाधेयुर्येभ्यो दद्याद्भवानिमम् ७
गरुड उवाच
किंचित्कारणमुद्दिश्य सोमोऽय नीयते मया
न दास्यामि समादातुं सोमं कस्मैचिदप्यहम् ८
यत्रेमं तु सहस्राक्ष निक्षिपेयमहं स्वयम्
त्वमादाय ततस्तूर्णं हरेथास्त्रिदशेश्वर ९
शक्र उवाच
वाक्येनानेन तुष्टोऽह यत्त्वयोक्तमिहाण्डज
यदिच्छसि वरं मत्तस्तद्गृहाण खगोत्तम १०
सूत उवाच
इत्युक्तः प्रत्युवाचेदं कद्रूपुत्राननुस्मरन्
स्मृत्वा चैवोपधिकृतं मातुर्दास्यनिमित्ततः ११
ईशोऽहमपि सर्वस्य करिष्यामि तु तेऽथिताम्
भवेयुर्भुजगाः शक्र मम भक्ष्या महाबलाः १२
तथेत्युक्त्वान्वगच्छत्तं ततो दानवसूदनः
हरिष्यामि विनिक्षिप्तं सोममित्यनुभाष्य तम् १३
आजगाम ततस्तूर्णं सुपर्णो मातुरन्तिकम्
अथ सर्पानुवाचेदं सर्वान्परमहृष्टवत् १४
इदमानीतममृतं निक्षेप्स्यामि कुशेषु वः

स्नाता मङ्गलसंयुक्तास्ततः प्राश्नीत पन्नगाः १५
अदासी चैव मातेयमद्यप्रभृति चास्तु मे
यथोक्तं भवतामेतद्वचो मे प्रतिपादितम् १६
ततः स्नातुं गताः सर्पाः प्रत्युक्त्वा तं तथेत्युत
शक्रोऽप्यमृतमाक्षिप्य जगाम त्रिदिवं पुनः १७
अथागतास्तमुद्देशं सर्पाः सोमार्थिनस्तदा
स्नाताश्च कृतजप्याश्च प्रहृष्टाः कृतमङ्गलाः १८
तद्विज्ञाय हृतं सर्पाः प्रतिमायाकृतं च तत्
सोमस्थानमिदं चेति दर्भांस्ते लिलिहुस्तदा १९
ततो द्वैधीकृता जिह्वा सर्पाणां तेन कर्मणा
अभवंश्चामृतस्पर्शाद्दर्भास्तेऽथ पवित्रिणः २०
ततः सुपर्णः परमप्रहृष्टवान्विहृत्य मात्रा सह तत्र कानने
भुजङ्गभक्षः परमार्चितः खगैरहीनकीर्तिर्विनतामनन्दयत् २१
इमां कथां यः शृणुयान्नरः सदा पठेत वा द्विजजनमुख्यसंसदि
असंशयं त्रिदिवमियात्स पुण्यभाङ्महात्मनः पतगपतेः प्रकीर्तनात् २२
इति श्रीमहाभारते आदिपर्वणि त्रिंशोऽध्यायः ३०

अथैकत्रिंशोऽध्यायः

शौनक उवाच
भुजङ्गमानां शापस्य मात्रा चैव सुतेन च
विनतायास्त्वया प्रोक्तं कारणं सूतनन्दन १
वरप्रदानं भर्त्रा च कद्रूविनतयोस्तथा
नामनी चैव ते प्रोक्ते पक्षिणोर्वैनतेययोः २
पन्नगानां तु नामानि न कीर्तयसि सूतज
प्राधान्येनापि नामानि श्रोतुमिच्छामहे वयम् ३
सूत उवाच
बहुत्वान्नामधेयानि भुजगानां तपोधन
न कीर्तयिष्ये सर्वेषां प्राधान्येन तु मे शृणु ४
शेषः प्रथमतो जातो वासुकिस्तदनन्तरम्
ऐरावतस्तक्षकश्च कर्कोटकधनंजयौ ५

कालियो मणिनागश्च नागश्चापूरणस्तथा
नागस्तथापिञ्जरक एलापत्रोऽथ वामनः ६
नीलानीलौ तथा नागौ कल्माषशबलौ तथा
आर्यकश्चादिकश्चैव नागश्च शलपोतकः ७
सुमनोमुखो दधिमुखस्तथा विमलपिण्डकः
आप्तः कोटनकश्चैव शङ्खो वालशिखस्तथा ८
निष्टयूनको हेमगुहो नहुषः पिङ्गलस्तथा
बाह्यकर्णो हस्तिपदस्तथा मुद्गरपिण्डकः ९
कम्बलाश्वतरौ चापि नागः कालीयकस्तथा
वृत्तसंवर्तकौ नागौ द्वौ च पद्माविति श्रुतौ १०
नागः शङ्खनकश्चैव तथा च स्फण्डकोऽपरः
क्षेमकश्च महानागो नागः पिण्डारकस्तथा ११
करवीरः पुष्पदंष्ट्र एलको बिल्वपाण्डुकः
मूषकादः शङ्खशिराः पूर्णदंष्ट्रो हरिद्रकः १२
अपराजितो ज्योतिकश्च पन्नगः श्रीवहस्तथा
कौरव्यो धृतराष्ट्रश्च पुष्करः शल्यकस्तथा १३
विरजाश्च सुबाहुश्च शालिपिण्डश्च वीर्यवान्
हस्तिभद्रः पिठरको मुखरः कोणवासनः १४
कुञ्जरः कुररश्चैव तथा नागः प्रभाकरः
कुमुदः कुमुदाक्षश्च तित्तिरिर्हलिकस्तथा
कर्कराकर्करौ चोभौ कुण्डोदरमहोदरौ १५
एते प्राधान्यतो नागाः कीर्तिता द्विजसत्तम
बहुत्वान्नामधेयानामितरे न प्रकीर्तिताः १६
एतेषां प्रसवो यश्च प्रसवस्य च संततिः
असंख्येयेति मत्वा तान्न ब्रवीमि द्विजोत्तम १७
बहूनीह सहस्राणि प्रयुतान्यर्बुदानि च
अशक्यान्येव संख्यातुं भुजगानां तपोधन १८
इति श्रीमहाभारते आदिपर्वणि एकत्रिंशोऽध्यायः ३१

अथ द्वात्रिंशोऽध्यायः

शौनक उवाच
जाता वै भुजगास्तात वीर्यवन्तो दुरासदाः
शापं तं त्वथ विज्ञाय कृतवन्तो नु किं परम् १
सूत उवाच
तेषां तु भगवाञ्शेषस्त्यक्त्वा कद्रूं महायशाः
तपो विपुलमातस्थे वायुभक्षो यतव्रतः २
गंधमादनमासाद्य बदर्यां च तपोरतः
गोकर्णे पुष्करारण्ये तथा हिमवतस्तटे ३
तेषु तेषु च पुण्येषु तीर्थेष्वायतनेषु च
एकान्तशीली नियतः सततं विजितेन्द्रियः ४
तप्यमानं तपो घोरं तं ददर्श पितामहः
परिशुष्कमांसत्वक्स्नायुं जटाचीरधरं प्रभुम् ५
तमब्रवीत्सत्यधृतिं तप्यमानं पितामहः
किमिदं कुरुषे शेष प्रजानां स्वस्ति वै कुरु ६
त्वं हि तीव्रेण तपसा प्रजास्तापयसेऽनघ
ब्रूहि कामं च मे शेष यत्ते हृदि चिरं स्थितम् ७
शेष उवाच
सोदर्या मम सर्वे हि भ्रातरो मन्दचेतसः
सह तैर्नोत्सहे वस्तुं तद्भवाननुमन्यताम् ८
अभ्यसूयन्ति सततं परस्परममित्रवत्
ततोऽह तप आतिष्ठे नैतान्पश्येयमित्युत ९
न मर्षयन्ति सततं विनतां ससुतां च ते
अस्माकं चापरो भ्राता वैनतेयः पितामह १०
तं च द्विषन्ति तेऽत्यर्थं स चापि सुमहाबलः
वरप्रदानात्स पितुः कश्यपस्य महात्मनः ११
सोऽह तपः समास्थाय मोक्ष्यामीदं कलेवरम्
कथं मे प्रेत्यभावेऽपि न तैः स्यात्सह संगमः १२
ब्रह्मोवाच
जानामि शेष सर्वेषां भ्रातॄणां ते विचेष्टितम्

मातुश्चाप्यपराधाद्वै भ्रातॄणां ते महद्भयम् १३
कृतोऽत्र परिहारश्च पूर्वमेव भुजङ्गम
भ्रातॄणां तव सर्वेषां न शोकं कर्तुमर्हसि १४
वृणीष्व च वरं मत्तः शेष यत्तेऽभिकाङ्क्षितम्
दित्सामि हि वरं तेऽद्य प्रीतिर्मे परमा त्वयि १५
दिष्ट्या च बुद्धिर्धर्मे ते निविष्टा पन्नगोत्तम
अतो भूयश्च ते बुद्धिर्धर्मे भवतु सुस्थिरा १६
शेष उवाच
एष एव वरो मेऽद्य काङ्क्षितः प्रपितामह
धर्मे मे रमतां बुद्धिः शमे तपसि चेश्वर १७
ब्रह्मोवाच
प्रीतोऽस्म्यनेन ते शेष दमेन प्रशमेन च
त्वया त्विदं वचः कार्यं मन्नियोगात्प्रजाहितम् १८
इमां महीं शैलवनोपपन्नां ससागरां साकरपत्तनां च
त्वं शेष सम्यक्चलितां यथावत्संगृह्य तिष्ठस्व यथाचला स्यात् १९
शेष उवाच
यथाह देवो वरदः प्रजापतिर्महीपतिर्भूतपतिर्जगत्पतिः
तथा महीं धारयितास्मि निश्चलां प्रयच्छ तां मे शिरसि प्रजापते २०
ब्रह्मोवाच
अधो महीं गच्छ भुजङ्गमोत्तम स्वयं तवैषा विवरं प्रदास्यति
इमां धरां धारयता त्वया हि मे महत्प्रियं शेष कृतं भविष्यति २१
सूत उवाच
तथेति कृत्वा विवरं प्रविश्य स प्रभुर्भुवो भुजगवराग्रजः स्थितः
बिभर्ति देवीं शिरसा महीमिमां समुद्रनेमिं परिगृह्य सर्वतः २२
ब्रह्मोवाच
शेषोऽसि नागोत्तम धर्मदेवो महीमिमां धारयसे यदेकः
अनन्तभोगः परिगृह्य सर्वां यथाहमेवं बलभिद्यथा वा २३
सूत उवाच
अधो भूमेर्वसत्येवं नागोऽनन्तः प्रतापवान्
धारयन्वसुधामेकः शासनाद्ब्रह्मणो विभुः २४

सुपर्णं च सखायं वै भगवानमरोत्तमः
प्रादादनन्ताय तदा वैनतेयं पितामहः २५
इति श्रीमहाभारते आदिपर्वणि द्वात्रिंशोऽध्यायः ३२

अथ त्रयस्त्रिंशोऽध्यायः

सूत उवाच
मातुः सकाशात्तं शापं श्रुत्वा पन्नगसत्तमः
वासुकिश्चिन्तयामास शापोऽय न भवेत्कथम् १
ततः स मन्त्रयामास भ्रातृभिः सह सर्वशः
एरावतप्रभृतिभिर्ये स्म धर्मपरायणाः २
वासुकिरुवाच
अयं शापो यथोद्दिष्टो विदितं वस्तथानघाः
तस्य शापस्य मोक्षार्थं मन्त्रयित्वा यतामहे ३
सर्वेषामेव शापानां प्रतिघातो हि विद्यते
न तु मात्राभिशप्तानां मोक्षो विद्येत पन्नगाः ४
अव्ययस्याप्रमेयस्य सत्यस्य च तथाग्रतः
शप्ता इत्येव मे श्रुत्वा जायते हृदि वेपथुः ५
नूनं सर्वविनाशोऽयमस्माकं समुदाहृतः
न ह्येनां सोऽव्ययो देवः शपन्तीं प्रत्यषेधयत् ६
तस्मात्संमन्त्रयामोऽत्र भुजगानामनामयम्
यथा भवेत सर्वेषां मा नः कालोऽत्यगादयम् ७
अपि मन्त्रयमाणा हि हेतुं पश्याम मोक्षणे
यथा नष्टं पुरा देवा गूढमग्निं गुहागतम् ८
यथा स यज्ञो न भवेद्यथा वापि पराभवेत्
जनमेजयस्य सर्पाणां विनाशकरणाय हि ९
सूत उवाच
तथेत्युक्त्वा तु ते सर्वे काद्रवेयाः समागताः
समयं चक्रिरे तत्र मन्त्रबुद्धिविशारदाः १०
एके तत्राब्रुवन्नागा वयं भूत्वा द्विजर्षभाः
जनमेजयं तु भिक्षामो यज्ञस्ते न भवेदिति ११

अपरे त्वब्रुवन्नागास्तत्र पण्डितमानिनः
मन्त्रिणोऽस्य वयं सर्वे भविष्यामः सुसंमताः १२
स नः प्रक्ष्यति सर्वेषु कार्येष्वर्थविनिश्चयम्
तत्र बुद्धिं प्रवक्ष्यामो यथा यज्ञो निवर्तते १३
स नो बहुमतान्राजा बुद्ध्वा बुद्धिमतां वरः
यज्ञार्थं प्रक्ष्यति व्यक्तं नेति वक्ष्यामहे वयम् १४
दर्शयन्तो बहून्दोषान्प्रेत्य चेह च दारुणान्
हेतुभिः कारणैश्चैव यथा यज्ञो भवेन्न सः १५
अथवा य उपाध्यायः क्रतौ तस्मिन्भविष्यति
सर्पसत्रविधानज्ञो राजकार्यहिते रतः १६
तं गत्वा दशतां कश्चिद्भुजगः स मरिष्यति
तस्मिन्हते यज्ञकरे क्रतुः स न भविष्यति १७
ये चान्ये सर्पसत्रज्ञा भविष्यन्त्यस्य ऋत्विजः
तांश्च सर्वान्दशिष्यामः कृतमेवं भविष्यति १८
तत्रापरेऽमन्त्रयन्त धर्मात्मानो भुजंगमाः
अबुद्धिरेषा युष्माकं ब्रह्महत्या न शोभना १९
सम्यक्सद्धर्ममूला हि व्यसने शान्तिरुत्तमा
अधर्मोत्तरता नाम कृत्स्नं व्यापादयेज्जगत् २०
अपरे त्वब्रुवन्नागाः समिद्धं जातवेदसम्
वर्षैर्निर्वापयिष्यामो मेघा भूत्वा सविद्युतः २१
स्रुग्भाण्डं निशि गत्वा वा अपरे भुजगोत्तमाः
प्रमत्तानां हरन्त्वाशु विघ्न एवं भविष्यति २२
यज्ञे वा भुजगास्तस्मिञ्शतशोऽथ सहस्रशः
जनं दशन्तु वै सर्वमेवं त्रासो भविष्यति २३
अथवा संस्कृतं भोज्यं दूषयन्तु भुजंगमाः
स्वेन मूत्रपुरीषेण सर्वभोज्यविनाशिना २४
अपरे त्वब्रुवंस्तत्र ऋत्विजोऽस्य भवामहे
यज्ञविघ्नं करिष्यामो दीयतां दक्षिणा इति
वश्यतां च गतोऽसौ नः करिष्यति यथेप्सितम् २५
अपरे त्वब्रुवंस्तत्र जले प्रक्रीडितं नृपम्

गृहमानीय बध्नीमः क्रतुरेवं भवेन्न सः २६
अपरे त्वब्रुवंस्तत्र नागाः सुकृतकारिणः
दशामैनं प्रगृह्याशु कृतमेवं भविष्यति
छिन्नं मूलमनर्थानां मृते तस्मिन्भविष्यति २७
एषा वै नैष्ठिकी बुद्धिः सर्वेषामेव संमता
यथा वा मन्यसे राजंस्तत्क्षिप्रं संविधीयताम् २८
इत्युक्त्वा समुदैक्षन्त वासुकिं पन्नगेश्वरम्
वासुकिश्चापि संचिन्त्य तानुवाच भुजङ्गमान् २९
नैषा वो नैष्ठिकी बुद्धिर्मता कर्तुं भुजङ्गमाः
सर्वेषामेव मे बुद्धिः पन्नगानां न रोचते ३०
किं त्वत्र संविधातव्यं भवतां यद्भवेद्धितम्
अनेनाहं भृशं तप्ये गुणदोषौ मदाश्रयौ ३१
इति श्रीमहाभारते आदिपर्वणि त्रयस्त्रिंशोऽध्यायः ३३

## अथ चतुस्त्रिंशोऽध्यायः

सूत उवाच
श्रुत्वा तु वचनं तेषां सर्वेषामिति चेति च
वासुकेश्च वचः श्रुत्वा एलापत्रोऽब्रवीदिदम् १
न स यज्ञो न भविता न स राजा तथाविधः
जनमेजयः पाण्डवेयो यतोऽस्माकं महाभयम् २
दैवेनोपहतो राजन्यो भवेदिह पूरुषः
स दैवमेवाश्रयते नान्यत्तत्र परायणम् ३
तदिदं दैवमस्माकं भयं पन्नगसत्तमाः
दैवमेवाश्रयामोऽत्र शृणुध्वं च वचो मम ४
अहं शापे समुत्सृष्टे समश्रौषं वचस्तदा
मातुरुत्सङ्गमारूढो भयात्पन्नगसत्तमाः ५
देवानां पन्नगश्रेष्ठास्तीक्ष्णास्तीक्ष्णा इति प्रभो
पितामहमुपागम्य दुःखार्तानां महाद्युते ६
देवा ऊचुः
का हि लब्ध्वा प्रियान्पुत्राञ्शपेदेवं पितामह

ऋते कद्रूं तीक्ष्णरूपां देवदेव तवाग्रतः ७
तथेति च वचस्तस्यास्त्वयाप्युक्तं पितामह
एतदिच्छाम विज्ञातुं कारणं यन्न वारिता ८
ब्रह्मोवाच
बहवः पन्नगास्तीक्ष्णा भीमवीर्या विषोल्बणाः
प्रजानां हितकामोऽह न निवारितवांस्तदा ९
ये दन्दशूकाः क्षुद्राश्च पापचारा विषोल्बणाः
तेषां विनाशो भविता न तु ये धर्मचारिणः १०
यन्निमित्तं च भविता मोक्षस्तेषां महाभयात्
पन्नगानां निबोधध्वं तस्मिन्काले तथागते ११
यायावरकुले धीमान्भविष्यति महानृषिः
जरत्कारुरिति ख्यातस्तेजस्वी नियतेन्द्रियः १२
तस्य पुत्रो जरत्कारोरुत्पत्स्यति महातपाः
आस्तीको नाम यज्ञं स प्रतिषेत्स्यति तं तदा
तत्रमोक्ष्यन्तिभुजगा ये भविष्यन्ति धार्मिकाः १३
देवा ऊचुः
स मुनिप्रवरो देव जरत्कारुर्महातपाः
कस्यां पुत्रं महात्मानं जनयिष्यति वीर्यवान् १४
ब्रह्मोवाच
सनामायां सनामा स कन्यायां द्विजसत्तमः
अपत्यं वीर्यवान्देवा वीर्यवज्जनयिष्यति १५
एलापत्र उवाच
एवमस्त्विति तं देवाः पितामहमथाब्रुवन्
उक्त्वा चैवं गता देवाः स च देवः पितामहः १६
सोऽहमेवं प्रपश्यामि वासुके भगिनीं तव
जरत्कारुरिति ख्यातां तां तस्मै प्रतिपादय १७
भैक्षवद्भिक्षमाणाय नागानां भयशान्तये
ऋषये सुव्रताय त्वमेष मोक्षः श्रुतो मया १८
इति श्रीमहाभारते आदिपर्वणि चतुस्त्रिंशोऽध्यायः ३४

## अथ पञ्च त्रिंशोऽध्यायः

सूत उवाच
एलापत्रस्य तु वचः श्रुत्वा नागा द्विजोत्तम
सर्वे प्रहृष्टमनसः साधु साध्वित्यपूजयन् १
ततः प्रभृति तां कन्यां वासुकिः पर्यरक्षत
जरत्कारुं स्वसारं वै परं हर्षमवाप च २
ततो नातिमहान्कालः समतीत इवाभवत्
अथ देवासुराः सर्वे ममन्थुर्वरुणालयम् ३
तत्र नेत्रमभून्नागो वासुकिर्बलिनां वरः
समाप्यैव च तत्कर्म पितामहमुपागमन् ४
देवा वासुकिना सार्धं पितामहमथाब्रुवन्
भगवञ्शापभीतोऽय वासुकिस्तप्यते भृशम् ५
तस्येदं मानसं शल्यं समुद्धर्तुं त्वमर्हसि
जनन्यां शापजं देव ज्ञातीनां हितकाङ्क्षिणः ६
हितो ह्ययं सदास्माकं प्रियकारी च नागराट्
कुरु प्रसादं देवेश शमयास्य मनोज्वरम् ७
ब्रह्मोवाच
मयैवैतद्वितीर्णं वै वचनं मनसामराः
एलापत्रेण नागेन यदस्याभिहितं पुरा ८
तत्करोत्वेष नागेन्द्रः प्राप्तकालं वचस्तथा
विनशिष्यन्ति ये पापा न तु ये धर्मचारिणः ९
उत्पन्नः स जरत्कारुस्तपस्युग्रे रतो द्विजः
तस्यैष भगिनीं काले जरत्कारुं प्रयच्छतु १०
यदेलापत्रेण वचस्तदोक्तं भुजगेन ह
पन्नगानां हितं देवास्तत्तथा न तदन्यथा ११
सूत उवाच
एतच्छ्रुत्वा स नागेन्द्रः पितामहवचस्तदा
सर्पान्वहूञ्जरत्कारौ नित्ययुक्तान्समादधत् १२
जरत्कारुर्यदा भार्यामिच्छेद्वरयितुं प्रभुः
शीघ्रमेत्य ममाख्येयं तन्नः श्रेयो भविष्यति १३

इति श्रीमहाभारते आदिपर्वणि पञ्चत्रिंशोऽध्यायः ३५

अथ षट्त्रिंशोऽध्यायः

शौनक उवाच
जरत्कारुरिति प्रोक्तं यत्त्वया सूतनन्दन
इच्छाम्येतदहं तस्य ऋषेः श्रोतुं महात्मनः १
किं कारणं जरत्कारोर्नामैतत्प्रथितं भुवि
जरत्कारुनिरुक्तं त्वं यथावद्वक्तुमर्हसि २
सूत उवाच
जरेति क्षयमाहुर्वै दारुणं कारुसंज्ञितम्
शरीरं कारु तस्यासीत्तत्स धीमाञ्शनैः शनैः ३
क्षपयामास तीव्रेण तपसेत्यत उच्यते
जरत्कारुरिति ब्रह्मन्वासुकेर्भगिनी तथा ४
एवमुक्तस्तु धर्मात्मा शौनकः प्राहसत्तदा
उग्रश्रवसमामन्त्र्य उपपन्नमिति ब्रुवन् ५
सूत उवाच
अथ कालस्य महतः स मुनिः संशितव्रतः
तपस्यभिरतो धीमान्न दारानभ्यकाङ्क्षत ६
स ऊर्ध्वरेतास्तपसि प्रसक्तः स्वाध्यायवान्वीतभयक्लमः सन्
चचार सर्वां पृथिवीं महात्मा न चापि दारान्मनसाप्यकाङ्क्षत् ७
ततोऽपरस्मिन्संप्राप्ते काले कस्मिंश्चिदेव तु
परिक्षिदिति विख्यातो राजा कौरववंशभृत् ८
यथा पाण्डुर्महाबाहुर्धनुर्धरवरो भुवि
बभूव मृगयाशीलः पुरास्य प्रपितामहः ९
मृगान्विध्यन्वराहांश्च तरक्षून्महिषांस्तथा
अन्यांश्च विविधान्वन्यांश्चचार पृथिवीपतिः १०
स कदाचिन्मृगं विद्ध्वा बाणेन नतपर्वणा
पृष्ठतो धनुरादाय ससार गहने वने ११
यथा हि भगवान्रुद्रो विद्ध्वा यज्ञमृगं दिवि
अन्वगच्छद्धनुष्पाणिः पर्यन्वेषं ततस्ततः १२

न हि तेन मृगो विद्धो जीवन्गच्छति वै वनम्
पूर्वरूपं तु तन्नूनमासीत्स्वर्गगतिं प्रति
परिक्षितस्तस्य राज्ञो विद्धो यन्नष्टवान्मृगः १३
दूरं चापहृतस्तेन मृगेण स महीपतिः
परिश्रान्तः पिपासार्त आससाद मुनिं वने १४
गवां प्रचारेष्वासीनं वत्सानां मुखनिःसृतम्
भूयिष्ठमुपयुञ्जानं फेनमापिबतां पयः १५
तमभिद्रुत्य वेगेन स राजा संशितव्रतम्
अपृच्छद्धनुरुद्यम्य तं मुनिं क्षुच्छ्रमान्वितः १६
भो भो ब्रह्मन्नहं राजा परिक्षिदभिमन्युजः
मया विद्धो मृगो नष्टः कच्चित्त्वं दृष्टवानसि १७
स मुनिस्तस्य नोवाच किंचिन्मौनव्रते स्थितः
तस्य स्कन्धे मृतं सर्पं क्रुद्धो राजा समासजत् १८
धनुष्कोट्या समुत्क्षिप्य स चैनं समुदैक्षत
न स किंचिदुवाचैनं शुभं वा यदि वाशुभम् १९
स राजा क्रोधमुत्सृज्य व्यथितस्तं तथागतम्
दृष्ट्वा जगाम नगरमृषिस्त्वास्ते तथैव सः २०
तरुणस्तस्य पुत्रोऽभूत्तिग्मतेजा महातपाः
शृङ्गी नाम महाक्रोधो दुष्प्रसादो महाव्रतः २१
स देवं परमीशानं सर्वभूतहिते रतम्
ब्रह्माणमुपतस्थे वै काले काले सुसंयतः
स तेन समनुज्ञातो ब्रह्मणा गृहमीयिवान् २२
सख्योक्तः क्रीडमानेन स तत्र हसता किल
संरंभी कोपनोऽतीव विषकल्प ऋषेः सुतः
ऋषिपुत्रेण नर्मार्थं कृशेन द्विजसत्तम २३
तेजस्विनस्तव पिता तथैव च तपस्विनः
शवं स्कन्धेन वहति मा शृङ्गिन्गर्वितो भव २४
व्याहरत्स्वृषिपुत्रेषु मा स्म किंचिद्वचो वदीः
अस्मद्विधेषु सिद्धेषु ब्रह्मवित्सु तपस्विषु २५
क्व ते पुरुषमानित्वं क्व ते वाचस्तथाविधाः

दर्पजाः पितरं यस्त्वं द्रष्टा शवधरं तथा २६
इति श्रीमहाभारते आदिपर्वणि षट्त्रिंशोऽध्यायः ३६

अथ सप्तत्रिंशोऽध्यायः

सूत उवाच
एवमुक्तः स तेजस्वी शृङ्गी कोपसमन्वितः
मृतधारं गुरुं श्रुत्वा पर्यतप्यत मन्युना १
स तं कृशमभिप्रेक्ष्य सूनृतां वाचमुत्सृजन्
अपृच्छत कथं तातः स मेऽद्य मृतधारकः २
कृश उवाच
राज्ञा परिक्षिता तात मृगयां परिधावता
अवसक्तः पितुस्तेऽद्य मृतः स्कन्धे भुजङ्गमः ३
शृङ्ग्युवाच
किं मे पित्रा कृतं तस्य राज्ञोऽनिष्टं दुरात्मनः
ब्रूहि त्वं कृश तत्त्वेन पश्य मे तपसो बलम् ४
कृश उवाच
स राजा मृगयां यातः परिक्षिदभिमन्युजः
ससार मृगमेकाकी विद्ध्वा बाणेन पत्रिणा ५
न चापश्यन्मृगं राजा चरंस्तस्मिन्महावने
पितरं ते स दृष्ट्वैव पप्रच्छानभिभाषिणम् ६
तं स्थाणुभूतं तिष्ठन्तं क्षुत्पिपासाश्रमातुरः
पुनः पुनर्मृगं नष्टं पप्रच्छ पितरं तव ७
स च मौनव्रतोपेतो नैव तं प्रत्यभाषत
तस्य राजा धनुष्कोट्या सर्पं स्कन्धे समासृजत् ८
शृङ्गिंस्तव पिताद्यासौ तथैवास्ते यतव्रतः
सोऽपि राजा स्वनगरं प्रतियातो गजाह्वयम् ९
सूत उवाच
श्रुत्वैवमृषिपुत्रस्तु दिवं स्तब्ध्वेव विष्ठितः
कोपसंरक्तनयनः प्रज्वलन्निव मन्युना १०
आविष्टः स तु कोपेन शशाप नृपतिं तदा

वार्युपस्पृश्य तेजस्वी क्रोधवेगबलात्कृतः ११
शृङ्ग्युवाच
योऽसौ वृद्धस्य तातस्य तथा कृच्छ्रगतस्य च
स्कन्धे मृतमवास्राक्षीत्पन्नगं राजकिल्बिषी १२
तं पापमतिसंक्रुद्धस्तक्षकः पन्नगोत्तमः
आशीविषस्तिग्मतेजा मद्वाक्यबलचोदितः १३
सप्तरात्रादितो नेता यमस्य सदनं प्रति
द्विजानामवमन्तारं कुरूणामयशस्करम् १४
सूत उवाच
इति शप्त्वा नृपं क्रुद्धः शृङ्गी पितरमभ्ययात्
आसीनं गोचरे तस्मिन्वहन्तं शवपन्नगम् १५
स तमालक्ष्य पितरं शृङ्गी स्कन्धगतेन वै
शवेन भुजगेनासीद्भूयः क्रोधसमन्वितः १६
दुःखाच्चाश्रूणि मुमुचे पितरं चेदमब्रवीत्
श्रुत्वेमां धर्षणां तात तव तेन दुरात्मना १७
राज्ञा परिक्षिता कोपादशपं तमहं नृपम्
यथार्हति स एवोग्रं शापं कुरुकुलाधमः १८
सप्तमेऽहनि तं पापं तक्षकः पन्नगोत्तमः
वैवस्वतस्य भवनं नेता परमदारुणम् १९
तमब्रवीत्पिता ब्रह्मंस्तथा कोपसमन्वितम्
न मे प्रियं कृतं तात नैष धर्मस्तपस्विनाम् २०
वयं तस्य नरेन्द्रस्य विषये निवसामहे
न्यायतो रक्षितास्तेन तस्य पापं न रोचये २१
सर्वथा वर्तमानस्य राज्ञो ह्यस्मद्विधैः सदा
क्षन्तव्यं पुत्र धर्मो हि हतो हन्ति न संशयः २२
यदि राजा न रक्षेत पीडा वै नः परा भवेत्
न शक्नुयाम चरितुं धर्मं पुत्र यथासुखम् २३
रक्ष्यमाणा वयं तात राजभिः शास्त्रदृष्टिभिः
चरामो विपुलं धर्मं तेषां चांशोऽस्ति धर्मतः २४
परिक्षित्तु विशेषेण यथाऽस्य प्रपितामहः

रक्षत्यस्मान्यथा राज्ञा रक्षितव्याः प्रजास्तथा २५
तेनेह क्षुधितेनाद्य श्रान्तेन च तपस्विना
अजानता व्रतमिदं कृतमेतदसंशयम् २६
तस्मादिदं त्वया बाल्यात्सहसा दुष्कृतं कृतम्
न ह्यर्हति नृपः शापमस्मत्तः पुत्र सर्वथा २७
इति श्रीमहाभारते आदिपर्वणि सप्तत्रिंशोऽध्यायः ३७

अथाष्टत्रिंशोऽध्यायः

शृङ्ग्युवाच
यद्येतत्साहसं तात यदि वा दुष्कृतं कृतम्
प्रियं वाप्यप्रियं वा ते वागुक्ता न मृषा मया १
नैवान्यथेदं भविता पितरेष ब्रवीमि ते
नाहं मृषा प्रब्रवीमि स्वैरेष्वपि कुतः शपन् २
शमीक उवाच
जानाम्युग्रप्रभावं त्वां पुत्र सत्यगिरं तथा
नानृतं ह्युक्तपूर्वं ते नैतन्मिथ्या भविष्यति ३
पित्रा पुत्रो वयःस्थोऽपि सततं वाच्य एव तु
यथा स्याद्गुणसंयुक्तः प्राप्नुयाच्च महद्यशः ४
किं पुनर्बाल एव त्वं तपसा भावितं प्रभो
वर्धते च प्रभवतां कोपोऽतीव महात्मनाम् ५
सोऽह पश्यामि वक्तव्यं त्वयि धर्मभृतां वर
पुत्रत्वं बालतां चैव तवावेक्ष्य च साहसम् ६
स त्वं शमयुतो भूत्वा वन्यमाहारमाहरन्
चर क्रोधमिमं त्यक्त्वा नैवं धर्मं प्रहास्यसि ७
क्रोधो हि धर्मं हरति यतीनां दुःखसंचितम्
ततो धर्मविहीनानां गतिरिष्टा न विद्यते ८
शम एव यतीनां हि क्षमिणां सिद्धिकारकः
क्षमावतामयं लोकः परश्चैव क्षमावताम् ९
तस्माच्चरेथाः सततं क्षमाशीलो जितेन्द्रियः
क्षमया प्राप्स्यसे लोकान्ब्रह्मणः समनन्तरान् १०

मया तु शममास्थाय यच्छक्यं कर्तुमद्य वै
तत्करिष्येऽद्य ताताहं प्रेषयिष्ये नृपाय वै ११
मम पुत्रेण शप्तोऽसि बालेनाकृतबुद्धिना
ममेमां धर्षणां त्वत्तः प्रेक्ष्य राजन्नमर्षिणा १२
सूत उवाच
एवमादिश्य शिष्यं स प्रेषयामास सुव्रतः
परिक्षिते नृपतये दयापन्नो महातपाः १३
संदिश्य कुशलप्रश्नं कार्यवृत्तान्तमेव च
शिष्यं गौरमुखं नाम शीलवन्तं समाहितम् १४
सोऽभिगम्य ततः शीघ्रं नरेन्द्रं कुरुवर्धनम्
विवेश भवनं राज्ञः पूर्वं द्वाःस्थैर्निवेदितः १५
पूजितश्च नरेन्द्रेण द्विजो गौरमुखस्ततः
आचख्यौ परिविश्रान्तो राज्ञे सर्वमशेषतः
शमीकवचनं घोरं यथोक्तं मन्त्रिसंनिधौ १६
शमीको नाम राजेन्द्र विषये वर्तते तव
ऋषिः परमधर्मात्मा दान्तः शान्तो महातपाः १७
तस्य त्वया नरव्याघ्र सर्पः प्राणैर्वियोजितः
अवसक्तो धनुष्कोट्या स्कन्धे भरतसत्तम
क्षान्तवांस्तव तत्कर्म पुत्रस्तस्य न चक्षमे १८
तेन शप्तोऽसि राजेन्द्र पितुरज्ञातमद्य वै
तक्षकः सप्तरात्रेण मृत्युस्ते वै भविष्यति १९
तत्र रक्षां कुरुष्वेति पुनः पुनरथाब्रवीत्
तदन्यथा न शक्यं च कर्तुं केनचिदप्युत २०
न हि शक्नोति संयन्तुं पुत्रं कोपसमन्वितम्
ततोऽह प्रेषितस्तेन तव राजन्हितार्थिना २१
इति श्रुत्वा वचो घोरं स राजा कुरुनन्दनः
पर्यतप्यत तत्पापं कृत्वा राजा महातपाः २२
तं च मौनव्रतधरं श्रुत्वा मुनिवरं तदा
भूय एवाभवद्राजा शोकसंतप्तमानसः २३
अनुक्रोशात्मतां तस्य शमीकस्यावधार्य तु

पर्यतप्यत भूयोऽपि कृत्वा तत्किल्विषं मुनेः २४
न हि मृत्युं तथा राजा श्रुत्वा वै सोऽन्वतप्यत
अशोचदमरप्रख्यो यथा कृत्वेह कर्म तत् २५
ततस्तं प्रेषयामास राजा गौरमुखं तदा
भूयः प्रसादं भगवान्करोत्विति ममेति वै २६
तस्मिंश्च गतमात्रे वै राजा गौरमुखे तदा
मन्त्रिभिर्मन्त्रयामास सह संविग्नमानसः २७
निश्चित्य मन्त्रिभिश्चैव सहितो मन्त्रतत्त्ववित्
प्रासादं कारयामास एकस्तम्भं सुरक्षितम् २८
रक्षां च विदधे तत्र भिषजश्चौषधानि च
ब्राह्मणान्सिद्धमन्त्रांश्च सर्वतो वै न्यवेशयत् २९
राजकार्याणि तत्रस्थः सर्वाण्येवाकरोच्च सः
मन्त्रिभिः सह धर्मज्ञः समन्तात्परिरक्षितः ३०
प्राप्ते तु दिवसे तस्मिन्सप्तमे द्विजसत्तम
काश्यपोऽभ्यागमद्विद्वांस्तं राजानं चिकित्सितुम् ३१
श्रुतं हि तेन तदभूदद्य तं राजसत्तमम्
तक्षकः पन्नगश्रेष्ठो नेष्यते यमसादनम् ३२
तं दष्टं पन्नगेन्द्रेण करिष्येऽहमपज्वरम्
तत्र मेऽर्थश्च धर्मश्च भवितेति विचिन्तयन् ३३
तं ददर्श स नागेन्द्रस्तक्षकः काश्यपं पथि
गच्छन्तमेकमनसं द्विजो भूत्वा वयोऽतिगः ३४
तमब्रवीत्पन्नगेन्द्रः काश्यपं मुनिपुङ्गवम्
क्व भवांस्त्वरितो याति किं च कार्यं चिकीर्षति ३५
काश्यप उवाच
नृपं कुरुकुलोत्पन्नं परिक्षितमरिंदमम्
तक्षकः पन्नगश्रेष्ठस्तेजसाद्य प्रधक्ष्यति ३६
तं दष्टं पन्नगेन्द्रेण तेनाग्निसमतेजसा
पाण्डवानां कुलकरं राजानममितौजसम्
गच्छामि सौम्य त्वरितं सद्यः कर्तुमपज्वरम् ३७
तक्षक उवाच

अहं स तक्षको ब्रह्मंस्तं धक्ष्यामि महीपतिम्
निवर्तस्व न शक्तस्त्वं मया दष्टं चिकित्सितुम् ३८
काश्यप उवाच
अहं तं नृपतिं नाग त्वया दृष्टमपज्वरम्
करिष्य इति मे बुद्धिर्विद्याबलमुपाश्रितः ३९
इति श्रीमहाभारते आदिपर्वणि अष्टत्रिंशोऽध्यायः ३८

अथैकोनचत्वारिंशोऽध्यायः

तक्षक उवाच
दष्टं यदि मयेह त्वं शक्तः किंचिच्चिकित्सितुम्
ततो वृक्षं मया दष्टमिमं जीवय काश्यप १
परं मन्त्रबलं यत्ते तद्दर्शय यतस्व च
न्यग्रोधमेनं धक्ष्यामि पश्यतस्ते द्विजोत्तम २
काश्यप उवाच
दश नागेन्द्र वृक्षं त्वं यमेनमभिमन्यसे
अहमेनं त्वया दष्टं जीवयिष्ये भुजङ्गम ३
सूत उवाच
एवमुक्तः स नागेन्द्रः काश्यपेन महात्मना
अदशद्वृक्षमभ्येत्य न्यग्रोधं पन्नगोत्तमः ४
स वृक्षस्तेन दष्टः सन्सद्य एव महाद्युते
आशीविषविषोपेतः प्रजज्वाल समन्ततः ५
तं दग्ध्वा स नगं नागः काश्यपं पुनरब्रवीत्
कुरु यत्नं द्विजश्रेष्ठ जीवयैनं वनस्पतिम् ६
भस्मीभूतं ततो वृक्षं पन्नगेन्द्रस्य तेजसा
भस्म सर्वं समाहृत्य काश्यपो वाक्यमब्रवीत् ७
विद्याबलं पन्नगेन्द्र पश्य मेऽस्मिन्वनस्पतौ
अहं संजीवयाम्येनं पश्यतस्ते भुजङ्गम ८
ततः स भगवान्विद्वान्काश्यपो द्विजसत्तमः
भस्मराशीकृतं वृक्षं विद्यया समजीवयत् ९
अङ्कुरं तं स कृतवांस्ततः पर्णद्वयान्वितम्

पलाशिनं शाखिनं च यथा विटपिनं पुनः १०
तं दृष्ट्वा जीवितं वृक्षं काश्यपेन महात्मना
उवाच तक्षको ब्रह्मन्नेतदत्यद्भुतं त्वयि ११
विप्रेन्द्र यद्विषं हन्या मम वा मद्विधस्य वा
कं त्वमर्थमभिप्रेप्सुर्यासि तत्र तपोधन १२
यत्तेऽभिलषितं प्राप्तुं फलं तस्मान्नृपोत्तमात्
अहमेव प्रदास्यामि तत्ते यद्यपि दुर्लभम् १३
विप्रशापाभिभूते च क्षीणायुषि नराधिपे
घटमानस्य ते विप्र सिद्धिः संशयिता भवेत् १४
ततो यशः प्रदीप्तं ते त्रिषु लोकेषु विश्रुतम्
विरश्मिरिव घर्मांशुरन्तर्धानमितो व्रजेत् १५
काश्यप उवाच
धनार्थी याम्यहं तत्र तन्मे दित्स भुजङ्गम
ततोऽह विनिवर्तिष्ये गृहायोरगसत्तम १६
तक्षक उवाच
यावद्धनं प्रार्थयसे तस्माद्राज्ञस्ततोऽधिकम्
अहं तेऽद्य प्रदास्यामि निवर्तस्व द्विजोत्तम १७
सूत उवाच
तक्षकस्य वचः श्रुत्वा काश्यपो द्विजसत्तमः
प्रदध्यौ सुमहातेजा राजानं प्रति बुद्धिमान् १८
दिव्यज्ञानः स तेजस्वी ज्ञात्वा तं नृपतिं तदा
क्षीणायुषं पाण्डवेयमपावर्तत काश्यपः
लब्ध्वा वित्तं मुनिवरस्तक्षकाद्यावदीप्सितम् १९
निवृत्ते काश्यपे तस्मिन्समयेन महात्मनि
जगाम तक्षकस्तूर्णं नगरं नागसाह्वयम् २०
अथ शुश्राव गच्छन्स तक्षको जगतीपतिम्
मन्त्रागदैर्विषहरै रक्ष्यमाणं प्रयत्नतः २१
स चिन्तयामास तदा मायायोगेन पार्थिवः
मया वञ्चयितव्योऽसौ क उपायो भवेदिति २२
ततस्तापसरूपेण प्राहिणोत्स भुजङ्गमान्

फलपत्रोदकं गृह्य राज्ञे नागोऽथ तक्षकः २३
तक्षक उवाच
गच्छध्वं यूयमव्यग्रा राजानं कार्यवत्तया
फलपत्रोदकं नाम प्रतिग्राहयितुं नृपम् २४
सूत उवाच
ते तक्षकसमादिष्टास्तथा चक्रुर्भुजङ्गमाः
उपनिन्युस्तथा राज्ञे दर्भानापः फलानि च २५
तच्च सर्वं स राजेन्द्रः प्रतिजग्राह वीर्यवान्
कृत्वा च तेषां कार्याणि गम्यतामित्युवाच तान् २६
गतेषु तेषु नागेषु तापसच्छद्मरूपिषु
अमात्यान्सुहृदश्चैव प्रोवाच स नराधिपः २७
भक्षयन्तु भवन्तो वै स्वादूनीमानि सर्वशः
तापसैरुपनीतानि फलानि सहिता मया २८
ततो राजा ससचिवः फलान्यादातुमैच्छत
यद्गृहीतं फलं राज्ञा तत्र कृमिरभूदणुः
ह्रस्वकः कृष्णनयनस्ताम्रो वर्णेन शौनक २९
स तं गृह्य नृपश्रेष्ठः सचिवानिदमब्रवीत्
अस्तमभ्येति सविता विषादद्य न मे भयम् ३०
सत्यवागस्तु स मुनिः कृमिको मां दशत्वयम्
तक्षको नाम भूत्वा वै तथा परिहृतं भवेत् ३१
ते चैनमन्ववर्तन्त मन्त्रिणः कालचोदिताः
एवमुक्त्वा स राजेन्द्रो ग्रीवायां संन्निवेश्य ह
कृमिकं प्राहसत्तूर्णं मुमूर्षुर्नष्टचेतनः ३२
हसन्नेव च भोगेन तक्षकेणाभिवेष्टितः
तस्मात्फलाद्विनिष्क्रम्य यत्तद्राज्ञे निवेदितम् ३३
इति श्रीमहाभारते आदिपर्वणि एकोनचत्वारिंशोऽध्यायः३९

अथ चत्वारिंशोऽध्यायः

सूत उवाच
तं तथा मन्त्रिणो दृष्ट्वा भोगेन परिवेष्टितम्

विवर्णवदनाः सर्वे रुरुदुर्भृशदुःखिताः १
तं तु नादं ततः श्रुत्वा मन्त्रिणस्ते प्रदुद्रुवुः
अपश्यंश्चैव ते यान्तमाकाशे नागमद्भुतम् २
सीमन्तमिव कुर्वाणं नभसः पद्मवर्चसम्
तक्षकं पन्नगश्रेष्ठं भृशं शोकपरायणाः ३
ततस्तु ते तद्गृहमग्निना वृतं प्रदीप्यमानं विषजेन भोगिनः
भयात्परित्यज्य दिशः प्रपेदिरे पपात तच्चाशनिताडितं यथा ४
ततो नृपे तक्षकतेजसा हते प्रयुज्य सर्वाः परलोकसत्क्रियाः
शुचिर्द्विजो राजपुरोहितस्तदा तथैव ते तस्य नृपस्य मन्त्रिणः ५
नृपं शिशुं तस्य सुतं प्रचक्रिरे समेत्य सर्वे पुरवासिनो जनाः
नृपं यमाहुस्तममित्रघातिनं कुरुप्रवीरं जनमेजयं जनाः ६
स बाल एवार्यमतिर्नृपोत्तमः सहैव तैर्मन्त्रिपुरोहितैस्तदा
शशास राज्यं कुरुपुङ्गवाग्रजो यथास्य वीरः प्रपितामहस्तथा ७
ततस्तु राजानममित्रतापनं समीक्ष्य ते तस्य नृपस्य मन्त्रिणः
सुवर्णवर्माणमुपेत्य काशिपं वपुष्टमार्थं वरयांप्रचक्रमुः ८
ततः स राजा प्रददौ वपुष्टमां कुरुप्रवीराय परीक्ष्य धर्मतः
स चापि तां प्राप्य मुदा युतोऽभवन्न चान्यनारीषु मनो दधे क्वचित् ९
सरःसु फुल्लेषु वनेषु चैव ह प्रसन्नचेता विजहार वीर्यवान्
तथा स राजन्यवरो विजह्रिवान्यथोर्वशीं प्राप्य पुरा पुरुरवाः १०
वपुष्टमा चापि वरं पतिं तदा प्रतीतरूपं समवाप्य भूमिपम्
भावेन रामा रमयाम्बभूव वै विहारकालेष्ववरोधसुन्दरी ११
इति श्रीमहाभारते आदिपर्वणि चत्वारिंशोऽध्यायः ४०

## अथैक चत्वारिंशोऽध्यायः

सूत उवाच
एतस्मिन्नेव काले तु जरत्कारुर्महातपाः
चचार पृथिवीं कृत्स्नां यत्रसायंगृहो मुनिः १
चरन्दीक्षां महातेजा दुश्चरामकृतात्मभिः
तीर्थेष्वाप्लवनं कुर्वन्पुण्येषु विचचार ह २
वायुभक्षो निराहारः शुष्यन्नहरहर्मुनिः

स ददर्श पितॄन्गर्ते लम्बमानानधोमुखान् ३
एकतन्त्ववशिष्टं वै वीरणस्तम्बमाश्रितान्
तं च तन्तुं शनैराखुमाददानं बिलाश्रयम् ४
निराहारान्कृशान्दीनान्गर्तेऽतास्त्राणमिच्छतः
उपसृत्य स तान्दीनान्दीनरूपोऽभ्यभाषत ५
के भवन्तोऽवलम्बन्ते वीरणस्तम्बमाश्रिताः
दुर्बलं खादितैर्मूलैराखुना बिलवासिना ६
वीरणस्तम्बके मूलं यदप्येकमिह स्थितम्
तदप्ययं शनैराखुरादत्ते दशनैः शितैः ७
छेत्स्यतेऽल्पावशिष्टत्वादेतदप्यचिरादिव
ततः स्थ पतितारोऽत्र गर्ते अस्मिन्नधोमुखाः ८
ततो मे दुःखमुत्पन्नं दृष्ट्वा युष्मानधोमुखान्
कृच्छ्रामापदमापन्नान्प्रियं किं करवाणि वः ९
तपसोऽस्य चतुर्थेन तृतीयेनापि वा पुनः
अर्धेन वापि निस्तर्तुमापदं ब्रूत माचिरम् १०
अथवापि समग्रेण तरन्तु तपसा मम
भवन्तः सर्व एवास्मात्काममेवं विधीयताम् ११
पितर ऊचुः
वृद्धो भवान्ब्रह्मचारी यो नस्त्रातुमिहेच्छति
न तु विप्राग्र्य तपसा शक्यमेतद्व्यपोहितुम् १२
अस्ति नस्तात तपसः फलं प्रवदतां वर
संतानप्रक्षयाद्ब्रह्मन्पतामो निरयेऽशुचौ १३
लम्बतामिह नस्तात न ज्ञानं प्रतिभाति वै
येन त्वां नाभिजानीमो लोके विख्यातपौरुषम् १४
वृद्धो भवान्महाभागो यो नः शोच्यान्सुदुःखितान्
शोचस्युपेत्य कारुण्याच्छृणु ये वै वयं द्विज १५
यायावरा नाम वयमृषयः संशितव्रताः
लोकात्पुण्यादिह भ्रष्टाः संतानप्रक्षयाद्विभो १६
प्रनष्टं नस्तपः पुण्यं न हि नस्तन्तुरस्ति वै
अस्ति त्वेकोऽद्य नस्तन्तुः सोऽपि नास्ति यथा तथा १७

मन्दभाग्योऽल्पभाग्यानां बन्धुः स किल नः कुले
जरत्कारुरिति ख्यातो वेदवेदाङ्गपारगः
नियतात्मा महात्मा च सुव्रतः सुमहातपाः १८
तेन स्म तपसो लोभात्कृच्छ्रमापादिता वयम्
न तस्य भार्या पुत्रो वा बान्धवो वास्ति कश्चन १९
तस्माल्लम्बामहे गर्ते नष्टसंज्ञा ह्यनाथवत्
स वक्तव्यस्त्वया दृष्ट्वा अस्माकं नाथवत्तया २०
पितरस्तेऽवलम्बन्ते गर्ते दीना अधोमुखाः
साधु दारान्कुरुष्वेति प्रजायस्वेति चाभिभो
कुलतन्तुर्हि नः शिष्टस्त्वमेवैकस्तपोधन २१
यत्तु पश्यसि नो ब्रह्मन्वीरणस्तम्बमाश्रितान्
एषोऽस्माकं कुलस्तम्ब आसीत्स्वकुलवर्धनः २२
यानि पश्यसि वै ब्रह्मन्मूलानीहास्य बीरुधः
एते नस्तन्तवस्तात कालेन परिभक्षिताः २३
यत्त्वेतत्पश्यसि ब्रह्मन्मूलमस्यार्धभक्षितम्
तत्र लम्बामहे सर्वे सोऽप्येकस्तप आस्थितः २४
यमाखुं पश्यसि ब्रह्मन्काल एष महाबलः
स तं तपोरतं मन्दं शनैः क्षपयते तुदन्
जरत्कारुं तपोलुब्धं मन्दात्मानमचेतसम् २५
न हि नस्तत्तपस्तस्य तारयिष्यति सत्तम
छिन्नमूलान्परिभ्रष्टान्कालोपहतचेतसः
नरकप्रतिष्ठान्पश्यास्मान्यथा दुष्कृतिनस्तथा २६
अस्मासु पतितेष्वत्र सह पूर्वैः पितामहैः
छिन्नः कालेन सोऽप्यत्र गन्ता वै नरकं ततः २७
तपो वाप्यथवा यज्ञो यच्चान्यत्पावनं महत्
तत्सर्वं न समं तात संतत्येति सतां मतम् २८
स तात दृष्ट्वा ब्रूयास्त्वं जरत्कारुं तपस्विनम्
यथादृष्टमिदं चास्मै त्वयाख्येयमशेषतः २९
यथा दारान्प्रकुर्यात्स पुत्रांश्चोत्पादयेद्यथा
तथा ब्रह्मंस्त्वया वाच्यः सोऽस्माकं नाथवत्तया ३०

इति श्रीमहाभारते आदिपर्वणि एकचत्वारिंशोऽध्यायः ४१

अथ द्विचत्वारिंशोऽध्यायः

सूत उवाच
एतच्छ्रुत्वा जरत्कारुर्दुःखशोकपरायणः
उवाच स्वान्पितॄन्दुःखाद्बाष्पसंदिग्धया गिरा १
अहमेव जरत्कारुः किल्बिषी भवतां सुतः
तद्दण्डं धारयत मे दुष्कृतेरकृतात्मनः २
पितर ऊचुः
पुत्र दिष्ट्यासि संप्राप्त इमं देशं यदृच्छया
किमर्थं च त्वया ब्रह्मन्न कृतो दारसंग्रहः ३
जरत्कारुरुवाच
ममायं पितरो नित्यं हृद्यर्थः परिवर्तते
ऊर्ध्वरेताः शरीरं वै प्रापयेयममुत्र वै ४
एवं दृष्ट्वा तु भवतः शकुन्तानिव लम्बतः
मया निवर्तिता बुद्धिर्ब्रह्मचर्यात्पितामहाः ५
करिष्ये वः प्रियं कामं निवेक्ष्ये नात्र संशयः
सनाम्नीं यद्यहं कन्यामुपलप्स्ये कदाचन ६
भविष्यति च या काचिद्भैक्ष्यवत्स्वयमुद्यता
प्रतिग्रहीता तामस्मि न भरेय च यामहम् ७
एवंविधमहं कुर्यां निवेशं प्राप्नुयां यदि
अन्यथा न करिष्ये तु सत्यमेतत्पितामहाः ८
सूत उवाच
एवमुक्त्वा तु स पितॄंश्चचार पृथिवीं मुनिः
न च स्म लभते भार्यां वृद्धोऽयमिति शौनक ९
यदा निर्वेदमापन्नः पितृभिश्चोदितस्तथा
तदारण्यं स गत्वोच्चैश्चुक्रोश भृशदुःखितः १०
यानि भूतानि सन्तीह स्थावराणि चराणि च
अन्तर्हितानि वा यानि तानि शृण्वन्तु मे वचः ११
उग्रे तपसि वर्तन्तं पितरश्चोदयन्ति माम्

निविशस्वेति दुःखार्तास्तेषां प्रियचिकीर्षया १२
निवेशार्थ्यखिलां भूमिं कन्याभैक्षं चरामि भोः
दरिद्रो दुःखशीलश्च पितृभिः संनियोजितः १३
यस्य कन्यास्ति भूतस्य ये मयेह प्रकीर्तिताः
ते मे कन्यां प्रयच्छन्तु चरतं सर्वतो दिशम् १४
मम कन्या सनाम्नी या भैक्षवच्चोद्यता भवेत्
भरेयं चैव यां नाहं तां मे कन्यां प्रयच्छत १५
ततस्ते पन्नगा ये वै जरत्कारौ समाहिताः
तामादाय प्रवृत्तिं ते वासुकेः प्रत्यवेदयन् १६
तेषां श्रुत्वा स नागेन्द्रः कन्यां तां समलंकृताम्
प्रगृह्यारण्यमगमत्समीपं तस्य पन्नगः १७
तत्र तां भैक्षवत्कन्यां प्रादात्तस्मै महात्मने
नागेन्द्रो वासुकिर्ब्रह्मन्न स तां प्रत्यगृह्णत १८
असनामेति वै मत्वा भरणे चाविचारिते
मोक्षभावे स्थितश्चापि द्वन्द्वीभूतः परिग्रहे १९
ततो नाम स कन्यायाः पप्रच्छ भृगुनन्दन
वासुके भरणं चास्या न कुर्यामित्युवाच ह २०
इति श्रीमहाभारते आदिपर्वणि द्विचत्वारिंशोऽध्यायः ४२

अथ त्रिचत्वारिंशोऽध्यायः

सूत उवाच
वासुकिस्त्वब्रवीद्वाक्यं जरत्कारुमृषिं तदा
सनामा तव कन्येयं स्वसा मे तपसान्विता १
भरिष्यामि च ते भार्यां प्रतीच्छेमां द्विजोत्तम
रक्षणं च करिष्येऽस्या सर्वशक्त्या तपोधन २
प्रतिश्रुते तु नागेन भरिष्ये भगिनीमिति
जरत्कारुस्तदा वेश्म भुजगस्य जगाम ह ३
तत्र मन्त्रविदां श्रेष्ठस्तपोवृद्धो महाव्रतः
जग्राह पाणिं धर्मात्मा विधिमन्त्रपुरस्कृतम् ४
ततो वासगृहं शुभ्रं पन्नगेन्द्रस्य संमतम्

जगाम भार्यामादाय स्तूयमानो महर्षिभिः ५
शयनं तत्र वै क्लृप्तं स्पर्ध्यास्तरणसंवृतम्
तत्र भार्यासहायः स जरत्कारुरुवास ह ६
स तत्र समयं चक्रे भार्यया सह सत्तमः
विप्रियं मे न कर्तव्यं न च वाच्यं कदाचन ७
त्यजेयमप्रिये हि त्वां कृते वासं च ते गृहे
एतद्बुहाण वचनं मया यत्समुदीरितम् ८
ततः परमसंविग्ना स्वसा नागपतेस्तु सा
अतिदुःखान्विता वाचं तमुवाचैवमस्त्विति ९
तथैव सा च भर्तारं दुःखशीलमुपाचरत्
उपायैः श्वेतकाकीयैः प्रियकामा यशस्विनी १०
ऋतुकाले ततः स्नाता कदाचिद्वासुकेः स्वसा
भर्तारं तं यथान्यायमुपतस्थे महामुनिम् ११
तत्र तस्याः समभवद्गर्भो ज्वलनसंनिभः
अतीव तपसा युक्तो वैश्वानरसमद्युतिः
शुक्लपक्षे यथा सोमो व्यवर्धत तथैव सः १२
ततः कतिपयाहस्य जरत्कारुर्महातपाः
उत्सङ्गेऽस्या शिरः कृत्वा सुष्वाप परिखिन्नवत् १३
तस्मिंश्च सुप्ते विप्रेन्द्रे सवितास्तमियाद्गिरिम्
अह्नः परिक्षये ब्रह्मंस्ततः साचिन्तयत्तदा
वासुकेर्भगिनी भीता धर्मलोपान्मनस्विनी १४
किं नु मे सुकृतं भूयाद्भर्तुरुत्थापनं न वा
दुःखशीलो हि धर्मात्मा कथं नास्यापराध्नुयाम् १५
कोपो वा धर्मशीलस्य धर्मलोपोऽथवा पुनः
धर्मलोपो गरीयान्वै स्यादत्रेत्यकरोन्मनः १६
उत्थापयिष्ये यद्येनं ध्रुवं कोपं करिष्यति
धर्मलोपो भवेदस्य सन्ध्यातिक्रमणे ध्रुवम् १७
इति निश्चित्य मनसा जरत्कारुर्भुजङ्गमा
तमृषिं दीप्ततपसं शयानमनलोपमम्
उवाचेदं वचः श्लक्ष्णं ततो मधुरभाषिणी १८

उत्तिष्ठ त्वं महाभाग सूर्योऽस्तमुपगच्छति
सन्ध्यामुपास्स्व भगवन्नपः स्पृष्ट्वा यतव्रतः १९
प्रादुष्कृताग्निहोत्रोऽय मुहूर्तो रम्यदारुणः
सन्ध्या प्रवर्तते चेयं पश्चिमायां दिशि प्रभो २०
एवमुक्तः स भगवाञ्जरत्कारुर्महातपाः
भार्यां प्रस्फुरमाणोष्ठ इदं वचनमब्रवीत् २१
अवमानः प्रयुक्तोऽय त्वया मम भुजङ्गमे
समीपे ते न वत्स्यामि गमिष्यामि यथागतम् २२
न हि तेजोऽस्ति वामोरु मयि सुप्ते विभावसोः
अस्तं गन्तुं यथाकालमिति मे हृदि वर्तते २३
न चाप्यवमतस्येह वस्तुं रोचेत कस्यचित्
किं पुनर्धर्मशीलस्य मम वा मद्विधस्य वा २४
एवमुक्ता जरत्कारुर्भर्त्रा हृदयकम्पनम्
अब्रवीद्भगिनी तत्र वासुकेः संनिवेशने २५
नावमानात्कृतवती तवाहं प्रतिबोधनम्
धर्मलोपो न ते विप्र स्यादित्येतत्कृतं मया २६
उवाच भार्यामित्युक्तो जरत्कारुर्महातपाः
ऋषिः कोपसमाविष्टस्त्यक्तुकामो भुजङ्गमाम् २७
न मे वागनृतं प्राह गमिष्येऽह भुजङ्गमे
समयो ह्येष मे पूर्वं त्वया सह मिथः कृतः २८
सुखमस्म्युषितो भद्रे ब्रूयास्त्वं भ्रातरं शुभे
इतो मयि गते भीरु गतः स भगवानिति
त्वं चापि मयि निष्क्रान्ते न शोकं कर्तुमर्हसि २९
इत्युक्ता सानवद्याङ्गी प्रत्युवाच पतिं तदा
जरत्कारुं जरत्कारुश्चिन्ताशोकपरायणा ३०
बाष्पगद्गदया वाचा मुखेन परिशुष्यता
कृताञ्जलिर्वरारोहा पर्यश्रुनयना ततः
धैर्यमालम्ब्य वामोरूर्हृदयेन प्रवेपता ३१
न मामर्हसि धर्मज्ञ परित्यक्तुमनागसम्
धर्मे स्थितां स्थितो धर्मे सदा प्रियहिते रताम् ३२

प्रदाने कारणं यच्च मम तुभ्यं द्विजोत्तम
तदलब्धवतीं मन्दां किं मां वक्ष्यति वासुकिः ३३
मातृशापाभिभूतानां ज्ञातीनां मम सत्तम
अपत्यमीप्सितं त्वत्तस्तच्च तावन्न दृश्यते ३४
त्वत्तो ह्यपत्यलाभेन ज्ञातीनां मे शिवं भवेत्
संप्रयोगो भवेन्नायं मम मोघस्त्वया द्विज ३५
ज्ञातीनां हितमिच्छन्ती भगवंस्त्वां प्रसादये
इममव्यक्तरूपं मे गर्भमाधाय सत्तम
कथं त्यक्त्वा महात्मा सन्गन्तुमिच्छस्यनागसम् ३६
एवमुक्तस्तु स मुनिर्भार्यां वचनमब्रवीत्
यद्युक्तमनुरूपं च जरत्कारुस्तपोधनः ३७
अस्त्येष गर्भः सुभगे तव वैश्वानरोपमः
ऋषिः परमधर्मात्मा वेदवेदाङ्गपारगः ३८
एवमुक्त्वा स धर्मात्मा जरत्कारुर्महानृषिः
उग्राय तपसे भूयो जगाम कृतनिश्चयः ३९
इति श्रीमहाभारते आदिपर्वणि त्रिचत्वारिंशोऽध्यायः ४३

अथ चतुश्चत्वारिंशोऽध्यायः

सूत उवाच
गतमात्रं तु भर्तारं जरत्कारुरवेदयत्
भ्रातुस्त्वरितमागम्य यथातथ्यं तपोधन १
ततः स भुजगश्रेष्ठः श्रुत्वा सुमहदप्रियम्
उवाच भगिनीं दीनां तदा दीनतरः स्वयम् २
जानासि भद्रे यत्कार्यं प्रदाने कारणं च यत्
पन्नगानां हितार्थाय पुत्रस्ते स्यात्ततो यदि ३
स सर्पसत्रात्किल नो मोक्षयिष्यति वीर्यवान्
एवं पितामहः पूर्वमुक्तवान्मां सुरैः सह ४
अप्यस्ति गर्भः सुभगे तस्मात्ते मुनिसत्तमात्
न चेच्छाम्यफलं तस्य दारकर्म मनीषिणः ५
कामं च मम न न्याय्यं प्रष्टुं त्वां कार्यमीदृशम्

किं तु कार्यगरीयस्त्वात्ततस्त्वाहमचूचुदम् ६
दुर्वासतां विदित्वा च भर्तुस्तेऽतितपस्विनः
नैनमन्वागमिष्यामि कदाचिद्धि शपेत्स माम् ७
आचक्ष्व भद्रे भर्तुस्त्वं सर्वमेव विचेष्टितम्
शल्यमुद्धर मे घोरं भद्रे हृदि चिरस्थितम् ८
जरतकारुस्ततो वाक्यमित्युक्ता प्रत्यभाषत
आश्वासयन्ती संतप्तं वासुकिं पन्नगेश्वरम् ९
पृष्टो मयापत्यहेतोः स महात्मा महातपाः
अस्तीत्युदरमुद्दिश्य ममेदं गतवांश्च सः १०
स्वैरेष्वपि न तेनाहं स्मरामि वितथं क्वचित्
उक्तपूर्वं कुतो राजन्सांपराये स वक्ष्यति ११
न संतापस्त्वया कार्यः कार्यं प्रति भुजङ्गमे
उत्पत्स्यति हि ते पुत्रो ज्वलनार्कसमद्युतिः १२
इत्युक्त्वा हि स मां भ्रातर्गतो भर्ता तपोवनम्
तस्माद्व्येतु परं दुःखं तवेदं मनसि स्थितम् १३
एतच्छ्रुत्वा स नागेन्द्रो वासुकिः परया मुदा
एवमस्त्विति तद्वाक्यं भगिन्याः प्रत्यगृह्णत १४
सान्त्वमानार्थदानैश्च पूजया चानुरूपया
सोदर्यां पूजयामास स्वसारं पन्नगोत्तमः १५
ततः स ववृधे गर्भो महातेजा रविप्रभः
यथा सोमो द्विजश्रेष्ठ शुक्लपक्षोदितो दिवि १६
यथाकालं तु सा ब्रह्मन्प्रजज्ञे भुजगस्वसा
कुमारं देवगर्भाभं पितृमातृभयापहम् १७
ववृधे स च तत्रैव नागराजनिवेशने
वेदांश्चाधिजगे साङ्गान्भार्गवाच्च्यवनात्मजात् १८
चरितव्रतो बाल एव बुद्धिसत्त्वगुणान्वितः
नाम चास्याभवत्ख्यातं लोकेष्वास्तीक इत्युत १९
अस्तीत्युक्त्वा गतो यस्मात्पिता गर्भस्थमेव तम्
वनं तस्मादिदं तस्य नामास्तीकेति विश्रुतम् २०
स बाल एव तत्रस्थश्चरन्नमितबुद्धिमान्

गृहे पन्नगराजस्य प्रयत्नात्पर्यरक्ष्यत २१
भगवानिव देवेशः शूलपाणिर्हिरण्यदः
विवर्धमानः सर्वांस्तान्पन्नगानभ्यहर्षयत् २२
इति श्रीमहाभारते आदिपर्वणि चतुश्चत्वारिंशोऽध्यायः ४४

अथ पञ्चचत्वारिंशोऽध्यायः

शौनक उवाच
यदपृच्छत्तदा राजा मन्त्रिणो जनमेजयः
पितुः स्वर्गगतिं तन्मे विस्तरेण पुनर्वद १
सूत उवाच
शृणु ब्रह्मन्यथा पृष्टा मन्त्रिणो नृपतेस्तदा
आख्यातवन्तस्ते सर्वे निधनं तत्परिक्षितः २
जनमेजय उवाच
जानन्ति तु भवन्तस्तद्यथावृत्तः पिता मम
आसीद्यथा च निधनं गतः काले महायशाः ३
श्रुत्वा भवत्सकाशाद्धि पितुर्वृत्तमशेषतः
कल्याणं प्रतिपत्स्यामि विपरीतं न जातुचित् ४
सूत उवाच
मन्त्रिणोऽथाब्रुवन्वाक्यं पृष्टास्तेन महात्मना
सर्वधर्मविदः प्राज्ञा राजानं जनमेजयम् ५
धर्मात्मा च महात्मा च प्रजापालः पिता तव
आसीदिह यथावृत्तः स महात्मा शृणुष्व तत् ६
चातुर्वर्ण्यं स्वधर्मस्थं स कृत्वा पर्यरक्षत
धर्मतो धर्मविद्राजा धर्मो विग्रहवानिव ७
ररक्ष पृथिवीं देवीं श्रीमानतुलविक्रमः
द्वेष्टारस्तस्य नैवासन्स च न द्वेष्टि कंचन
समः सर्वेषुभूतेषु प्रजापतिरिवा भवत् ८
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव स्वकर्मसु
स्थिताः सुमनसो राजंस्तेन राज्ञा स्वनुष्ठिताः ९
विधवानाथकृपणान्विकलांश्च बभार सः

सुदर्शः सर्वभूतानामासीत्सोम इवापरः १०
तुष्टपुष्टजनः श्रीमान्सत्यवाग्दृढविक्रमः
धनुर्वेदे तु शिष्योऽभून्नृपः शारद्वतस्य सः ११
गोविन्दस्य प्रियश्चासीत्पिता ते जनमेजय
लोकस्य चैव सर्वस्य प्रिय आसीन्महायशाः १२
परिक्षीणेषु कुरुषु उत्तरायामजायत
परिक्षिदभवत्तेन सौभद्रस्यात्मजो बली १३
राजधर्मार्थकुशलो युक्तः सर्वगुणैर्नृपः
जितेन्द्रियश्चात्मवांश्च मेधावी वृद्धसेवितः १४
षड्वर्गविन्महाबुद्धिर्नीतिधर्मविदुत्तमः
प्रजाइमास्तवपिताषष्टिंवर्षाण्यपालयत्
ततो दिष्टान्तमापन्नः सर्पेणानतिवर्तितम् १५
ततस्त्वं पुरुषश्रेष्ठ धर्मेण प्रतिपेदिवान्
इदं वर्षसहस्राय राज्यं कुरुकुलागतम्
बाल एवाभिजातोऽसि सर्वभूतानुपालकः १६
जनमेजय उवाच
नास्मिन्कुले जातु बभूव राजा यो न प्रजानां हितकृत्प्रियश्च
विशेषतः प्रेक्ष्य पितामहानां वृत्तं महद्वृत्तपरायणानाम् १७
कथं निधनमापन्नः पिता मम तथाविधः
आचक्षध्वं यथावन्मे श्रोतुमिच्छामि तत्त्वतः १८
सूत उवाच
एवं संचोदिता राज्ञा मन्त्रिणस्ते नराधिपम्
ऊचुः सर्वे यथावृत्तं राज्ञः प्रियहिते रताः १९
बभूव मृगयाशीलस्तव राजन्पिता सदा
यथा पाण्डुर्महाभागो धनुर्धरवरो युधिं
अस्मास्वासज्य सर्वाणि राजकार्याण्यशेषतः २०
स कदाचिद्वनचरो मृगं विव्याध पत्रिणा
विद्ध्वा चान्वसरत्तूर्णं तं मृगं गहने वने २१
पदातिर्बद्धनिस्त्रिंशस्ततायुधकलापवान्
न चाससाद गहने मृगं नष्टं पिता तव २२

परिश्रान्तो वयःस्थश्च षष्टिवर्षो जरान्वितः
क्षुधितः स महारण्ये ददर्श मुनिमन्तिके २३
स तं पप्रच्छ राजेंद्रो मुनिं मौनव्रतान्वितम्
न च किंचिदुवाचैनं स मुनिः पृच्छतोऽपि सन् २४
ततो राजा क्षुच्छ्रमार्तस्तं मुनिं स्थाणुवत्स्थितम्
मौनव्रतधरं शान्तं सद्यो मन्युवशं ययौ २५
न बुबोध हि तं राजा मौनव्रतधरं मुनिम्
स तं मन्युसमाविष्टो धर्षयामास ते पिता २६
मृतं सर्पं धनुष्कोट्या समुत्क्षिप्य धरातलात्
तस्य शुद्धात्मनः प्रादात्स्कन्धे भरतसत्तम २७
न चोवाच स मेधावी तमथो साध्वसाधु वा
तस्थौ तथैव चाक्रुध्यन्सर्पं स्कन्धेन धारयन् २८
इति श्रीमहाभारते आदिपर्वणि पञ्चचत्वारिंशोऽध्यायः ४५

अथ षट्चत्वारिंशोऽध्यायः

मन्त्रिण ऊचुः
ततः स राजा राजेन्द्र स्कन्धे तस्य भुजङ्गमम्
मुनेः क्षुत्क्षाम आसज्य स्वपुरं पुनराययौ १
ऋषेस्तस्य तु पुत्रोऽभूद्गवि जातो महायशाः
शृङ्गी नाम महातेजास्तिग्मवीर्योऽतिकोपनः २
ब्रह्माणं सोऽभ्युपागम्य मुनिः पूजां चकार ह
अनुज्ञातो गतस्तत्र शृङ्गी शुश्राव तं तदा
सख्युः सकाशात्पितरं पित्रा ते धर्षितं तथा ३
मृतं सर्पं समासक्तं पित्रा ते जनमेजय
वहन्तं कुरुशार्दूल स्कन्धेनानपकारिणम् ४
तपस्विनमतीवाथ तं मुनिप्रवरं नृप
जितेन्द्रियं विशुद्धं च स्थितं कर्मण्यथाद्भुते ५
तपसा द्योतितात्मानं स्वेष्वङ्गेषु यतं तथा
शुभाचारं शुभकथं सुस्थितं तमलोलुपम् ६
अक्षुद्रमनसूयं च वृद्धं मौनव्रते स्थितम्

शरण्यं सर्वभूतानां पित्रा विप्रकृतं तव ७
शशापाथ स तच्छ्रुत्वा पितरं ते रुषान्वितः
ऋषेः पुत्रो महातेजा बालोऽपि स्थविरैर्वरः ८
स क्षिप्रमुदकं स्पृष्ट्वा रोषादिदमुवाच ह
पितरं तेऽभिसंधाय तेजसा प्रज्वलन्निव ९
अनागसि गुरौ यो मे मृतं सर्पमवासृजत्
तं नागस्तक्षकः क्रुद्धस्तेजसा सादयिष्यति
सप्तरात्रादितः पापं पश्य मे तपसो बलम् १०
इत्युक्त्वा प्रययौ तत्र पिता यत्रास्य सोऽभवत्
दृष्ट्वा च पितरं तस्मै शापं तं प्रत्यवेदयत् ११
स चापि मुनिशार्दूलः प्रेषयामास ते पितुः
शप्तोऽसि मम पुत्रेण यत्तो भव महीपते
तक्षकस्त्वां महाराज तेजसा सादयिष्यति १२
श्रुत्वा तु तद्वचो घोरं पिता ते जनमेजय
यत्तोऽभवत्परित्रस्तस्तक्षकात्पन्नगोत्तमात् १३
ततस्तस्मिंस्तु दिवसे सप्तमे समुपस्थिते
राज्ञः समीपं ब्रह्मर्षिः काश्यपो गन्तुमैच्छत १४
तं ददर्शाथ नागेन्द्रः काश्यपं तक्षकस्तदा
तमब्रवीत्पन्नगेन्द्रः काश्यपं त्वरितं व्रजन्
क्व भवांस्त्वरितो याति किं च कार्यं चिकीर्षति १५
काश्यप उवाच
यत्र राजा कुरुश्रेष्ठः परिक्षिन्नाम वै द्विज
तक्षकेण भुजङ्गेन धक्ष्यते किल तत्र वै १६
गच्छाम्यहं तं त्वरितः सद्यः कर्तुमपज्वरम्
मयाभिपन्नं तं चापि न सर्पो धर्षयिष्यति १७
तक्षक उवाच
किमर्थं तं मया दष्टं संजीवयितुमिच्छसि
ब्रूहि काममहं तेऽद्य दद्मि स्वं वेश्म गम्यताम् १८
मन्त्रिण ऊचुः
धनलिप्सुरहं तत्र यामीत्युक्तश्च तेन सः

तमुवाच महात्मानं मानयञ्श्लक्ष्णया गिरा १९
यावद्धनं प्रार्थयसे तस्माद्राज्ञस्ततोऽधिकम्
गृहाण मत्त एव त्वं संनिवर्तस्व चानघ २०
स एवमुक्तो नागेन काश्यपो द्विपदां वरः
लब्ध्वा वित्तं निववृते तक्षकाद्यावदीप्सितम् २१
तस्मिन्प्रतिगते विप्रे छद्मनोपेत्य तक्षकः
तं नृपं नृपतिश्रेष्ठ पितरं धार्मिकं तव २२
प्रासादस्थं यत्तमपि दग्धवान्विषवह्निना
ततस्त्वं पुरुषव्याघ्र विजयायाभिषेचितः २३
एतद्दृष्टं श्रुतं चापि यथावन्नृपसत्तम
अस्माभिर्निखिलं सर्वं कथितं ते सुदारुणम् २४
श्रुत्वा चैतं नृपश्रेष्ठ पार्थिवस्य पराभवम्
अस्य चर्षेरुत्तङ्कस्य विधत्स्व यदनन्तरम् २५
जनमेजय उवाच
एतत्तु श्रोतुमिच्छामि अटव्यां निर्जने वने
संवादं पन्नगेन्द्रस्य काश्यपस्य च यत्तदा २६
केन दृष्टं श्रुतं चापि भवतां श्रोत्रमागतम्
श्रुत्वा चाथ विधास्यामि पन्नगान्तकरीं मतिम् २७
मन्त्रिण ऊचुः
शृणु राजन्यथास्माकं येनैतत्कथितं पुरा
समागमं द्विजेन्द्रस्य पन्नगेन्द्रस्य चाध्वनि २८
तस्मिन्वृक्षे नरः कश्चिदिन्धनार्थाय पार्थिव
विचिन्वन्पूर्वमारूढः शुष्कशाखं वनस्पतिम्
अबुध्यमानौ तं तत्र वृक्षस्थं पन्नगद्विजौ २९
स तु तेनैव वृक्षेण भस्मीभूतोऽभवत्तदा
द्विजप्रभावाद्राजेन्द्र जीवितः सवनस्पतिः ३०
तेन गत्वा नृपश्रेष्ठ नगरेऽस्मिन्निवेदितम्
यथावृत्तं तु तत्सर्वं तक्षकस्य द्विजस्य च ३१
एतत्ते कथितं राजन्यथावृत्तं यथाश्रुतम्
श्रुत्वा तु नृपशार्दूल प्रकुरुष्व यथेप्सितम् ३२

सूत उवाच
मन्त्रिणां तु वचः श्रुत्वा स राजा जनमेजयः
पर्यतप्यत दुःखार्तः प्रत्यपिंषत्करे करम् ३३
निःश्वासमुष्णमसकृद्दीर्घं राजीवलोचनः
मुमोचाश्रूणि च तदा नेत्राभ्यां प्रततं नृपः
उवाच च महीपालो दुःखशोकसमन्वितः ३४
श्रुत्वैतद्भवतां वाक्यं पितुर्मे स्वर्गतिं प्रति
निश्चितेयं मम मतिर्या वै तां मे निबोधत ३५
अनन्तरमहं मन्ये तक्षकाय दुरात्मने
प्रतिकर्तव्यमित्येव येन मे हिंसितः पिता ३६
ऋषेर्हि शृङ्गेर्वचनं कृत्वा दग्ध्वा च पार्थिवम्
यदि गच्छदसौ पापो ननु जीवेत्पिता मम ३७
परिहीयेत किं तस्य यदि जीवेत्स पार्थिवः
काश्यपस्य प्रसादेन मन्त्रिणां सुनयेन च ३८
स तु वारितवान्मोहात्काश्यपं द्विजसत्तमम्
संजिजीवयिषुं प्राप्तं राजानमपराजितम् ३९
महानतिक्रमो ह्येष तक्षकस्य दुरात्मनः
द्विजस्य योऽददद्द्रव्यं मा नृपं जीवयेदिति ४०
उत्तङ्कस्य प्रियं कुर्वन्नात्मनश्च महत्प्रियम्
भवतां चैव सर्वेषां यास्याम्यपचितिं पितुः ४१
इति श्रीमहाभारते आदिपर्वणि षट्चत्वारिंशोऽध्यायः ४६

अथ सप्तचत्वारिंशोऽध्यायः

सूत उवाच
एवमुक्त्वा ततः श्रीमान्मन्त्रिभिश्चानुमोदितः
आरुरोह प्रतिज्ञां स सर्पसत्राय पार्थिवः
ब्रह्मन्भरतशार्दूलो राजा पारिक्षितस्तदा १
पुरोहितमथाहूय ऋत्विजं वसुधाधिपः
अब्रवीद्वाक्यसंपन्नः संपदर्थकरं वचः २
यो मे हिंसितवांस्तातं तक्षकः स दुरात्मवान्

प्रतिकुर्यां यथा तस्य तद्भवन्तो ब्रुवन्तु मे ३
अपि तत्कर्म विदितं भवतां येन पन्नगम्
तक्षकं संप्रदीप्तेऽग्नौ प्राप्स्येऽह सहबान्धवम् ४
यथा तेन पिता मह्यं पूर्वं दग्धो विषाग्निना
तथाहमपि तं पापं दग्धुमिच्छामि पन्नगम् ५
ऋत्विज ऊचुः
अस्ति राजन्महत्सत्रं त्वदर्थं देवनिर्मितम्
सर्पसत्रमिति ख्यातं पुराणे कथ्यते नृप ६
आहर्ता तस्य सत्रस्य त्वन्नान्योऽस्ति नराधिप
इति पौराणिकाः प्राहुरस्माकं चास्ति स क्रतुः ७
सूत उवाच
एवमुक्तः स राजर्षिर्मेने सर्पं हि तक्षकम्
हुताशनमुखं दीप्तं प्रविष्टमिति सत्तम ८
ततोऽब्रवीन्मन्त्रविदस्तान्राजा ब्राह्मणांस्तदा
आहरिष्यामि तत्सत्रं संभाराः संभ्रियन्तु मे ९
ततस्ते ऋत्विजस्तस्य शास्त्रतो द्विजसत्तम
देशं तं मापयामासुर्यज्ञायतनकारणात्
यथावज्ज्ञानविदुषः सर्वे बुद्ध्या परं गताः १०
ऋद्ध्या परमया युक्तमिष्टं द्विजगणायुतम्
प्रभूतधनधान्याढ्यमृत्विग्भिः सुनिवेशितम् ११
निर्माय चापि विधिवद्यज्ञायतनमीप्सितम्
राजानं दीक्षयामासुः सर्पसत्राप्तये तदा १२
इदं चासीत्तत्र पूर्वं सर्पसत्रे भविष्यति
निमित्तं महदुत्पन्नं यज्ञविघ्नकरं तदा १३
यज्ञस्यायतने तस्मिन्क्रियमाणे वचोऽब्रवीत्
स्थपतिर्बुद्धिसंपन्नो वास्तुविद्याविशारदः १४
इत्यब्रवीत्सूत्रधारः सूतः पौराणिकस्तदा
यस्मिन्देशे च काले च मापनेयं प्रवर्तिता
ब्राह्मणं कारणं कृत्वा नायं संस्थास्यते क्रतुः १५
एतच्छ्रुत्वा तु राजा स प्राग्दीक्षाकालमब्रवीत्

द्वात्तारं नेह मे कश्चिदज्ञातः प्रविशेदिति १६
ततः कर्म प्रववृते सर्पसत्रे विधानतः
पर्यक्रामंश्च विधिवत्स्वे स्वे कर्मणि याजकाः १७
परिधाय कृष्णवासांसि धूमसंरक्तलोचनाः
जुहुवुर्मन्त्रवच्चैव समिद्धं जातवेदसम् १८
कम्पयन्तश्च सर्वेषामुरगाणां मनांसि ते
सर्पानाजुहुवुस्तत्र सर्वानग्निमुखे तदा १९
ततः सर्पाः समापेतुः प्रदीप्ते हव्यवाहने
विवेष्टमानाः कृपणा आह्वयन्तः परस्परम् २०
विस्फुरन्तः श्वसन्तश्च वेष्टयन्तस्तथा परे
पुच्छैः शिरोभिश्च भृशं चित्रभानुं प्रपेदिरे २१
श्वेताः कृष्णाश्च नीलाश्च स्थविराः शिशवस्तथा
रुवन्तो भैरवान्नादान्पेतुर्दीप्ते विभावसौ २२
एवं शतसहस्राणि प्रयुतान्यर्बुदानि च
अवशानि विनष्टानि पन्नगानां द्विजोत्तम २३
इन्दुरा इव तत्रान्ये हस्तिहस्ता इवापरे
मत्ता इव च मातङ्गा महाकाया महाबलाः २४
उच्चावचाश्च बहवो नानावर्णा विषोल्बणाः
घोराश्च परिघप्रख्या दन्दशूका महाबलाः
प्रपेतुरग्नावुरगा मातृवाग्दण्डपीडिताः २५
इति श्रीमहाभारते आदिपर्वणि सप्तचत्वारिंशोऽध्यायः ४७

## अष्टचत्वारिंशोऽध्यायः

शौनक उवाच
सर्पसत्रे तदा राज्ञः पाण्डवेयस्य धीमतः
जनमेजयस्य के त्वासन्नृत्विजः परमर्षयः १
के सदस्या बभूवुश्च सर्पसत्रे सुदारुणे
विषादजननेऽत्यर्थं पन्नगानां महाभये २
सर्वं विस्तरतस्तात भवाञ्शंसितुमर्हति
सर्पसत्रविधानज्ञा विज्ञेयास्ते हि सूतज ३

सूत उवाच
हन्त ते कथयिष्यामि नामानीह मनीषिणाम्
ये ऋत्विजः सदस्याश्च तस्यासन्नृपतेस्तदा ४
तत्र होता बभूवाथ ब्राह्मणश्चण्डभार्गवः
च्यवनस्यान्वये जातः ख्यातो वेदविदां वरः ५
उद्गाता ब्राह्मणो वृद्धो विद्वान्कौत्सार्यजैमिनिः
ब्रह्माभवच्छार्ङ्गरवो अध्वर्युर्बोधपिङ्गलः ६
सदस्यश्चाभवद्व्यासः पुत्रशिष्यसहायवान्
उद्दालकः शमठकः श्वेतकेतुश्च पञ्चमः ७
असितो देवलश्चैव नारदः पर्वतस्तथा
आत्रेयः कुण्डजठरो द्विजः कुटिघटस्तथा ८
वात्स्यः श्रुतश्रवा वृद्धस्तपःस्वाध्यायशीलवान्
कहोडो देवशर्मा च मौद्गल्यः शमसौभरः ९
एते चान्ये च बहवो ब्राह्मणाः संशितव्रताः
सदस्या अभवंस्तत्र सत्रे पारिक्षितस्य ह १०
जुह्वत्स्वृत्विक्ष्वथ तदा सर्पसत्रे महाक्रतौ
अहयः प्रापतंस्तत्र घोराः प्राणिभयावहाः ११
वसामेदोवहाः कुल्या नागानां स्त्रंपवर्तिताः
ववौ गन्धश्च तुमुलो दह्यतामनिशं तदा १२
पततां चैव नागानां धिष्ठितानां तथाम्बरे
अश्रूयतानिशं शब्दः पच्यतां चाग्निना भृशम् १३
तक्षकस्तु स नागेन्द्रः पुरन्दरनिवेशनम्
गतः श्रुत्वैव राजानं दीक्षितं जनमेजयम् १४
ततः सर्वं यथावृत्तमाख्याय भुजगोत्तमः
अगच्छच्छरणं भीत आगस्कृत्वा पुरन्दरम् १५
तमिन्द्रः प्राह सुप्रीतो न तवास्तीह तक्षक
भयं नागेन्द्र तस्माद्वै सर्पसत्रात्कथंचन १६
प्रसादितो मया पूर्वं तवार्थाय पितामहः
तस्मात्तव भयं नास्ति व्येतु ते मानसो ज्वरः १७
एवमाश्वासितस्तेन ततः स भुजगोत्तमः

उवास भवने तत्र शक्रस्य मुदितः सुखी १८
अजस्रं निपतत्स्वग्नौ नागेषु भृशदुःखितः
अल्पशेषपरीवारो वासुकिः पर्यतप्यत १९
कश्मलं चाविशद्घोरं वासुकिं पन्नगेश्वरम्
स घूर्णमानहृदयो भगिनीमिदमब्रवीत् २०
दह्यन्तेऽङ्गानि मे भद्रे दिशो न प्रतिभान्ति च
सीदामीव च संमोहाद्घूर्णतीव च मे मनः २१
दृष्टिर्भ्रमति मेऽतीव हृदयं दीर्यतीव च
पतिष्याम्यवशोऽद्याहं तस्मिन्दीप्ते विभावसौ २२
पारिक्षितस्य यज्ञोऽसौ वर्ततेऽस्मज्जिघांसया
व्यक्तं मयापि गन्तव्यं पितृराजनिवेशनम् २३
अयं स कालः संप्राप्तो यदर्थमसि मे स्वसः
जरत्कारोः पुरा दत्ता सा त्राह्यस्मान्सबान्धवान् २४
आस्तीकः किल यज्ञं तं वर्तन्तं भुजगोत्तमे
प्रतिषेत्स्यति मां पूर्वं स्वयमाह पितामहः २५
तद्वत्से ब्रूहि वत्सं स्वं कुमारं वृद्धसंमतम्
ममाद्य त्वं सभृत्यस्य मोक्षार्थं वेदवित्तमम् २६
इति श्रीमहाभारते आदिपर्वणि अष्टचत्वारिंशोऽध्यायः ४८

## एकोनपञ्चाशत्तमोऽध्यायः

सूत उवाच
तत आहूय पुत्रं स्वं जरत्कारुर्भुजङ्गमा
वासुकेर्नागराजस्य वचनादिदमब्रवीत् १
अहं तव पितुः पुत्र भ्रात्रा दत्ता निमित्ततः
कालः स चायं संप्राप्तस्तत्कुरुष्व यथातथम् २
आस्तीक उवाच
किंनिमित्तं मम पितुर्दत्ता त्वं मातुलेन मे
तन्ममाचक्ष्व तत्त्वेन श्रुत्वा कर्तास्मि तत्तथा ३
सूत उवाच
तत आचष्ट सा तस्मै बान्धवानां हितैषिणी

भगिनी नागराजस्य जरत्कारुरविक्लवा ४
भुजगानामशेषाणां माता कद्रूरिति श्रुतिः
तया शप्ता रुषितया सुता यस्मान्निबोध तत् ५
उच्चैःश्रवाः सोऽश्वराजो यन्मिथ्या न कृतो मम
विनतानिमित्तं पणिते दासभावाय पुत्रकाः ६
जनमेजयस्य वो यज्ञे धक्ष्यत्यनिलसारथिः
तत्र पञ्चत्वमापन्नाः प्रेतलोकं गमिष्यथ ७
तां च शप्तवतीमेवं साक्षाल्लोकपितामहः
एवमस्त्विति तद्वाक्यं प्रोवाचानुमुमोद च ८
वासुकिश्चापि तच्छ्रुत्वा पितामहवचस्तदा
अमृते मथिते तात देवाञ्शरणमीयिवान् ९
सिद्धार्थाश्च सुराः सर्वे प्राप्यामृतमनुत्तमम्
भ्रातरं मे पुरस्कृत्य प्रजापतिमुपागमन् १०
ते तं प्रसादयामासुर्देवाः सर्वे पितामहम्
राज्ञा वासुकिना सार्धं स शापो न भवेदिति ११
वासुकिर्नागराजोऽय दुःखितो ज्ञातिकारणात्
अभिशापः स मात्रास्य भगवन्न भवेदिति १२
ब्रह्मोवाच
जरर्तकारुर्जरत्कारुं यां भार्यां समवाप्स्यति
तत्र जातो द्विजः शापाद्भुजगान्मोक्षयिष्यति १३
जरत्कारुरुवाच
एतच्छ्रुत्वा तु वचनं वासुकिः पन्नगेश्वरः
प्रादान्माममरप्रख्य तव पित्रे महात्मने
प्रागेवानागते काले तत्र त्वं मय्यजायथाः १४
अयं स कालः संप्राप्तो भयान्नस्त्रातुमर्हसि
भ्रातरं चैव मे तस्मात्त्रातुमर्हसि पावकात् १५
अमोघं नः कृतं तत्स्याद्यदहं तव धीमते
पित्रे दत्ता विमोक्षार्थं कथं वा पुत्र मन्यसे १६
सूत उवाच
एवमुक्तस्तथेत्युक्त्वा सोऽस्तीको मातरं तदा

अब्रवीद्दुःखसंतप्तं वासुकिं जीवयन्निव १७
अहं त्वां मोक्षयिष्यामि वासुके पन्नगोत्तम
तस्माच्छापान्महासत्त्व सत्यमेतद्ब्रवीमि ते १८
भव स्वस्थमना नाग न हि ते विद्यते भयम्
प्रयतिष्ये तथा सौम्य यथा श्रेयो भविष्यति
न मे वागनृतं प्राह स्वैरेष्वपि कुतोऽन्यथा १९
तं वै नृपवरं गत्वा दीक्षितं जनमेजयम्
वाग्भिर्मङ्गलयुक्ताभिस्तोषयिष्येऽद्य मातुल
यथा स यज्ञो नृपतेर्निर्वर्तिष्यति सत्तम २०
स संभावय नागेन्द्र मयि सर्वं महामते
न ते मयि मनो जातु मिथ्या भवितुमर्हति २१
वासुकिरुवाच
आस्तीक परिघूर्णामि हृदयं मे विदीर्यते
दिशश्च न प्रजानामि ब्रह्मदण्डनिपीडितः २२
आस्तीक उवाच
न संतापस्त्वया कार्यः कथंचित्पन्नगोत्तम
दीप्तादग्नेः समुत्पन्नं नाशयिष्यामि ते भयम् २३
ब्रह्मदण्डं महाघोरं कालाग्निसमतेजसम्
नाशयिष्यामि मात्र त्वं भयं कार्षीः कथंचन २४
सूत उवाच
ततः स वासुकेर्घोरमपनीय मनोज्वरम्
आधाय चात्मनोऽङ्गेषु जगाम त्वरितो भृशम् २५
जनमेजयस्य तं यज्ञं सर्वैः समुदितं गुणैः
मोक्षाय भुजगेन्द्राणामास्तीको द्विजसत्तमः २६
स गत्वापश्यदास्तीको यज्ञायतनमुत्तमम्
वृतं सदस्यैर्बहुभिः सूर्यवह्निसमप्रभैः २७
स तत्र वारितो द्वाःस्थैः प्रविशन्द्विजसत्तमः
अभितुष्टाव तं यज्ञं प्रवेशार्थी द्विजोत्तमः २८
इति श्रीमहाभारते आदिपर्वणि एकोनपञ्चाशत्तमोऽध्यायः ४९

## पञ्चाशत्तमोऽध्यायः

आस्तीक उवाच
सोमस्य यज्ञो वरुणस्य यज्ञः प्रजापतेर्यज्ञ आसीत्प्रयागे
तथा यज्ञोऽय तव भारताग्र्य पारिक्षित स्वस्ति नोऽस्तु प्रियेभ्यः १
शक्रस्य यज्ञः शतसंख्य उक्तस्तथापरस्तुल्यसंख्यः शतं वै
तथा यज्ञोऽय तव भारताग्र्य पारिक्षित स्वस्ति नोऽस्तु प्रियेभ्यः २
यमस्य यज्ञो हरिमेधसश्च यथा यज्ञो रन्तिदेवस्य राज्ञः
तथा यज्ञोऽय तव भारताग्र्य पारिक्षित स्वस्ति नोऽस्तु प्रियेभ्यः ३
गयस्य यज्ञः शशबिन्दोश्च राज्ञो यज्ञस्तथा वैश्रवणस्य राज्ञः
तथा यज्ञोऽय तव भारताग्र्य पारिक्षित स्वस्ति नोऽस्तु प्रियेभ्यः ४
नृगस्य यज्ञस्त्वजमीढस्य चासीद्यथा यज्ञो दाशरथेश्च राज्ञः
तथा यज्ञोऽय तव भारताग्र्य पारिक्षित स्वस्ति नोऽस्तु प्रियेभ्यः ५
यज्ञः श्रुतो नो दिवि देवसूनोर्युधिष्ठिरस्याजमीढस्य राज्ञः
तथा यज्ञोऽय तव भारताग्र्य पारिक्षित स्वस्ति नोऽस्तु प्रियेभ्यः ६
कृष्णस्य यज्ञः सत्यवत्याः सुतस्य स्वयं च कर्म प्रचकार यत्र
तथा यज्ञोऽय तव भारताग्र्य पारिक्षित स्वस्ति नोऽस्तु प्रियेभ्यः ७
इमे हि ते सूर्यहुताशवर्चसः समासते वृत्रहणः क्रतुं यथा
नैषां ज्ञानं विद्यते ज्ञातुमद्य दत्तं येभ्यो न प्रणश्येत्कथंचित् ८
ऋत्विक्समो नास्ति लोकेषु चैव द्वैपायनेनेति विनिश्चितं मे
एतस्य शिष्या हि क्षितिं चरन्ति सर्वर्त्विजः कर्मसु स्वेषु दक्षाः ९
विभावसुश्चित्रभानुर्महात्मा हिरण्यरेता विश्वभुक्कृष्णवर्त्मा
प्रदक्षिणावर्तशिखः प्रदीप्तो हव्यं तवेदं हुतभुग्वष्टि देवः १०
नेह त्वदन्यो विद्यते जीवलोके समो नृपः पालयिता प्रजानाम्
धृत्या च ते प्रीतमनाः सदाहं त्वं वा राजा धर्मराजो यमो वा ११
शक्रः साक्षाद्वज्रपाणिर्यथेह त्राता लोकेऽस्मिस्त्वं तथेह प्रजानाम्
मतस्त्वं नः पुरुषेन्द्रेह लोके न च त्वदन्यो गृहपतिरस्ति यज्ञे १२
खट्वाङ्गनाभागदिलीपकल्पो ययातिमान्धातृसमप्रभावः
आदित्यतेजःप्रतिमानतेजा भीष्मो यथा भ्राजसि सुव्रतस्त्वम् १३
वाल्मीकिवत्ते निभृतं सुधैर्यं वसिष्ठवत्ते नियतश्च कोपः
प्रभुत्वमिन्द्रेण समं मतं मे द्युतिश्च नारायणवद्विभाति १४

यमो यथा धर्मविनिश्चयज्ञः कृष्णो यथा सर्वगुणोपपन्नः
श्रियां निवासोऽसि यथा वसूनां निधानभूतोऽसि तथा क्रतूनाम् १५
दम्भोद्भवेनासि समो बलेन रामो यथा शस्त्रविदस्त्रविच्च
और्वत्रिताभ्यामसि तुल्यतेजा दुष्प्रेक्षणीयोऽसि भगीरथो वा १६
सूत उवाच
एवं स्तुताः सर्व एव प्रसन्ना राजा सदस्या ऋत्विजो हव्यवाहः
तेषां दृष्ट्वा भावितानीङ्गितानि प्रोवाच राजा जनमेजयोऽथ १७
इति श्रीमहाभारते आदिपर्वणि पञ्चाशत्तमोऽध्यायः ५०

## एकपञ्चाशत्तमोऽध्यायः

जनमेजय उवाच
बालो वाक्यं स्थविर इव प्रभाषते नायं बालः स्थविरोऽय मतो मे
इच्छाम्यहं वरमस्मै प्रदातुं तन्मे विप्रा वितरध्वं समेताः १
सदस्या ऊचुः
बालोऽपि विप्रो मान्य एवेह राज्ञां यश्चाविद्वान्यश्च विद्वान्यथावत्
सर्वान्कामांस्त्वत्त एषोऽहतेऽद्य यथा च नस्तक्षक एति शीघ्रम् २
सूत उवाच
व्याहर्तुकामे वरदे नृपे द्विजं वरं वृणीष्वेति ततोऽभ्युवाच
होता वाक्यं नातिहृष्टान्तरात्मा कर्मण्यस्मिंस्तक्षको नैति तावत् ३
जनमेजय उवाच
यथा चेदं कर्म समाप्यते मे यथा च नस्तक्षक एति शीघ्रम्
तथा भवन्तः प्रयतन्तु सर्वे परं शक्त्या स हि मे विद्विषाणः ४
ऋत्विज उचुः
यथा शास्त्राणि नः प्राहुर्यथा शंसति पावकः
इन्द्रस्य भवने राजंस्तक्षको भयपीडितः ५
सूत उवाच
यथा सूतो लोहिताक्षो महात्मा पौराणिको वेदितवान्पुरस्तात्
स राजानं प्राह पृष्टस्तदानीं यथाहुर्विप्रास्तद्वदेतन्नृदेव ६
पुराणमागम्य ततो ब्रवीम्यहं दत्तं तस्मै वरमिन्द्रेण राजन्
वसेह त्वं मत्सकाशे सुगुप्तो न पावकस्त्वां प्रदहिष्यतीति ७

एतच्छ्रुत्वा दीक्षितस्तप्यमान आस्ते होतारं चोदयन्कर्मकाले
होता च यत्तः स जुहाव मन्त्रैरथो इन्द्रः स्वयमेवाजगाम ८
विमानमारुह्य महानुभावः सर्वैर्देवैः परिसंस्तूयमानः
बलाहकैश्चाप्यनुगम्यमानो विद्याधरैरप्सरसां गणैश्च ९
तस्योत्तरीये निहितः स नागो भयोद्विग्नः शर्म नैवाभ्यगच्छत्
ततो राजा मन्त्रविदोऽब्रवीत्पुनः क्रुद्धो वाक्यं तक्षकस्यान्तमिच्छन् १०
इन्द्रस्य भवने विप्रा यदि नागः स तक्षकः
तमिन्द्रेणैव सहितं पातयध्वं विभावसौ ११
ऋत्विज ऊचुः
अयमायाति वै तूर्णं तक्षकस्ते वशं नृप
श्रूयतेऽस्य महान्नादो रुवतो भैरवं भयात् १२
नूनं मुक्तो वज्रभृता स नागो भ्रष्टश्चाङ्कान्मन्त्रविस्रस्तकायः
घूर्णन्नाकाशे नष्टसंज्ञोऽभ्युपैति तीव्रान्निःश्वासान्निःश्वसन्पन्नगेन्द्रः १३
वर्तते तव राजेन्द्र कर्मैतद्विधिवत्प्रभो
अस्मै तु द्विजमुख्याय वरं त्वं दातुमर्हसि १४
जनमेजय उवाच
बालाभिरूपस्य तवाप्रमेय वरं प्रयच्छामि यथानुरूपम्
वृणीष्व यत्तेऽभिमतं हृदि स्थितं तत्ते प्रदास्याम्यपि चेददेयम् १५
सूत उवाच
पतिष्यमाणे नागेन्द्रे तक्षके जातवेदसि
इदमन्तरमित्येवं तदास्तीकोऽभ्यचोदयत् १६
वरं ददासि चेन्मह्यं वृणोमि जनमेजय
सत्रं ते विरमत्वेतन्न पतेयुरिहोरगाः १७
एवमुक्तस्ततो राजा ब्रह्मन्पारिक्षितस्तदा
नातिहृष्टमना वाक्यमास्तीकमिदमब्रवीत् १८
सुवर्णं रजतं गाश्च यच्चान्यन्मन्यसे विभो
तत्ते दद्यां वरं विप्र न निवर्तेत्क्रतुर्मम १९
आस्तीक उवाच
सुवर्णं रजतं गाश्च न त्वां राजन्वृणोम्यहम्
सत्रं ते विरमत्वेतत्स्वस्ति मातृकुलस्य नः २०

सूत उवाच
आस्तीकेनैवमुक्तस्तु राजा पारिक्षितस्तदा
पुनः पुनरुवाचेदमास्तीकं वदतां वरम् २१
अन्यं वरय भद्रं ते वरं द्विजवरोत्तम
अयाचत न चाप्यन्यं वरं स भृगुनन्दन २२
ततो वेदविदस्तत्र सदस्याः सर्व एव तम्
राजानमूचुः सहिता लभतां ब्राह्मणो वरम् २३
इति श्रीमहाभारते आदिपर्वणि एकपञ्चाशत्तमोऽध्यायः ५१

## द्विपञ्चाशत्तमोऽध्यायः

शौनक उवाच
ये सर्पाः सर्पसत्रेऽस्मिन्पतिता हव्यवाहने
तेषां नामानि सर्वेषां श्रोतुमिच्छामि सूतज १
सूत उवाच
सहस्राणि बहून्यस्मिन्प्रयुतान्यर्बुदानि च
न शक्यं परिसंख्यातुं बहुत्वाद्वेदवित्तम २
यथास्मृति तु नामानि पन्नगानां निबोध मे
उच्यमानानि मुख्यानां हुतानां जातवेदसि ३
वासुकेः कुलजांस्तावत्प्राधान्येन निबोध मे
नीलरक्तान्सितान्घोरान्महाकायान्विषोल्बणान् ४
कोटिको मानसः पूर्णः सहः पैलो हलीसकः
पिच्छिलः कोणपश्चक्रः कोणवेगः प्रकालनः ५
हिरण्यवाहः शरणः कक्षकः कालदन्तकः
एते वासुकिजा नागाः प्रविष्टा हव्यवाहनम् ६
तक्षकस्य कुले जातान्प्रवक्ष्यामि निबोध तान्
पुच्छण्डको मण्डलकः पिण्डभेत्ता रभेणकः ७
उच्छिखः सुरसो द्रङ्गो बलहेडो विरोहणः
शिलीशलकरो मूकः सुकुमारः प्रवेपनः ८
मुद्गरः शशरोमा च सुमना वेगवाहनः
एते तक्षकजा नागाः प्रविष्टा हव्यवाहनम् ९

पारावतः पारियात्रः पाण्डरो हरिणः कृशः
विहङ्गः शरभो मोदः प्रमोदः संहताङ्गदः १०
एरावतकुलादेते प्रविष्टा हव्यवाहनम्
कौरव्यकुलजान्नागाञ्शृणु मे द्विजसत्तम ११
एरिडलः कुण्डलो मुण्डो वेणिस्कन्धः कुमारकः
बाहुकः शृङ्गवेगश्च धूर्तकः पातपातरौ १२
धृतराष्ट्रकुले जाताञ्शृणु नागान्यथातथम्
कीर्त्यमानान्मया ब्रह्मन्वातवेगान्विषोल्बणान् १३
शङ्कुकर्णः पिङ्गलकः कुठारमुखमेचकौ
पूर्णाङ्गदः पूर्णमुखः प्रहसः शकुनिर्हरिः १४
आमाहठः कोमठकः श्वसनो मानवो वटः
भैरवो मुण्डवेदाङ्गः पिशङ्गश्चोद्रपारगः १५
ऋषभो वेगवान्नाम पिण्डारकमहाहनू
रक्ताङ्गः सर्वसारङ्गः समृद्धः पाटराक्षसौ १६
वराहको वारणकः सुमित्रश्चित्रवेदिकः
पराशरस्तरुणको मणिस्कन्धस्तथारुणिः १७
इति नागा मया ब्रह्मन्कीर्तिताः कीर्तिवर्धनाः
प्राधान्येन बहुत्वात्तु न सर्वे परिकीर्तिताः १८
एतेषां पुत्रपौत्रास्तु प्रसवस्य च संततिः
न शक्याः परिसंख्यातुं ये दीप्तं पावकं गताः १९
सप्तशीर्षा द्विशीर्षाश्च पञ्चशीर्षास्तथापरे
कालानलविषा घोरा हुताः शतसहस्रशः २०
महाकाया महावीर्याः शैलशृङ्गसमुच्छ्रयाः
योजनायामविस्तारा द्वियोजनसमायताः २१
कामरूपाः कामगमा दीप्तानलविषोल्बणाः
दग्धास्तत्र महासत्रे ब्रह्मदण्डनिपीडिताः २२

इति श्रीमहाभारते आदिपर्वणि द्विपञ्चाशत्तमोऽध्यायः ५२

त्रिपञ्चाशत्तमोऽध्यायः

सूत उवाच

इदमत्यद्भुतं चान्यदास्तीकस्यानुशुश्रुमः
तथा वरैश्छन्द्यमाने राज्ञा पारिक्षितेन ह १
इन्द्रहस्ताच्च्युतो नागः ख एव यदतिष्ठत
ततश्चिन्तापरो राजा बभूव जनमेजयः २
हूयमाने भृशं दीप्ते विधिवत्पावके तदा
न स्म स प्रापतद्वह्नौ तक्षको भयपीडितः ३
शौनक उवाच
किं सूत तेषां विप्राणां मन्त्रग्रामो मनीषिणाम्
न प्रत्यभात्तदाग्नौ यन्न पपात स तक्षकः ४
सूत उवाच
तमिन्द्रहस्ताद्विस्रस्तं विसंज्ञं पन्नगोत्तमम्
आस्तीकस्तिष्ठ तिष्ठेति वाचस्तिस्रोऽभ्युदैरयत् ५
वितस्थे सोऽन्तरिक्षेऽथ हृदयेन विदूयता
यथा तिष्ठेत वै कश्चिद्गोचक्रस्यान्तरा नरः ६
ततो राजाब्रवीद्वाक्यं सदस्यैश्चोदितो भृशम्
काममेतद्भवत्वेवं यथास्तीकस्य भाषितम् ७
समाप्यतामिदं कर्म पन्नगाः सन्त्वनामयाः
प्रीयतामयमास्तीकः सत्यं सूतवचोऽस्तु तत् ८
ततो हलहलाशब्दः प्रीतिजः समवर्तत
आस्तीकस्य वरे दत्ते तथैवोपरराम च ९
स यज्ञः पाण्डवेयस्य राज्ञः पारिक्षितस्य ह
प्रीतिमांश्चाभवद्राजा भारतो जनमेजयः १०
ऋत्विग्भ्यः ससदस्येभ्यो ये तत्रासन्समागताः
तेभ्यश्च प्रददौ वित्तं शतशोऽथ सहस्रशः ११
लोहिताक्षाय सूताय तथा स्थपतये विभुः
येनोक्तं तत्र सत्राग्रे यज्ञस्य विनिवर्तनम् १२
निमित्तं ब्राह्मण इति तस्मै वित्तं ददौ बहु
ततश्चकारावभृथं विधिदृष्टेन कर्मणा १३
आस्तीकं प्रेषयामास गृहानेव सुसत्कृतम्
राजा प्रीतमनाः प्रीतं कृतकृत्यं मनीषिणम् १४

पुनरागमनं कार्यमिति चैनं वचोऽब्रवीत्
भविष्यसि सदस्यो मे वाजिमेधे महाक्रतौ १५
तथेत्युक्त्वा प्रदुद्राव स चास्तीको मुदा युतः
कृत्वा स्वकार्यमतुलं तोषयित्वा च पार्थिवम् १६
स गत्वा परमप्रीतो मातरं मातुलं च तम्
अभिगम्योपसंगृह्य यथावृत्तं न्यवेदयत् १७
एतच्छ्रुत्वा प्रीयमाणाः समेता ये तत्रासन्पन्नगा वीतमोहाः
तेऽस्तीके वै प्रीतिमन्तो बभूवुरूचुश्चैनं वरमिष्टं वृणीष्व १८
भूयो भूयः सर्वशस्तेऽब्रुवंस्तं किं ते प्रियं करवामोऽद्य विद्वन्
प्रीता वयं मोक्षिताश्चैव सर्वे कामं किं ते करवामोऽद्य वत्स १९
आस्तीक उवाच
सायं प्रातः सुप्रसन्नात्मरूपा लोके विप्रा मानवाश्चेतरेऽपि
धर्माख्यानं ये वदेयुर्ममेदं तेषां युष्मद्भ्यो नैव किंचिद्भयं स्यात् २०
सूत उवाच
तैश्चाप्युक्तो भागिनेयः प्रसन्नैरेतत्सत्यं काममेवं चरन्तः
प्रीत्या युक्ता ईप्सितं सर्वशस्ते कर्तारः स्म प्रवणा भागिनेय २१
जरत्कारोर्जरत्कार्वां समुत्पन्नो महायशाः
आस्तीकः सत्यसंधो मां पन्नगेभ्योऽभिरक्षतु २२
असितं चार्तिमन्तं च सुनीथं चापि यः स्मरेत्
दिवा वा यदि वा रात्रौ नास्य सर्पभयं भवेत् २३
सूत उवाच
मोक्षयित्वा स भुजगान्सर्पसत्राद्द्विजोत्तमः
जगाम काले धर्मात्मा दिष्टान्तं पुत्रपौत्रवान् २४
इत्याख्यानं मयास्तीकं यथावत्कीर्तितं तव
यत्कीर्तयित्वा सर्पेभ्यो न भयं विद्यते क्वचित् २५
श्रुत्वा धर्मिष्ठमाख्यानमास्तीकं पुण्यवर्धनम्
आस्तीकस्य कवेर्विप्र श्रीमच्चरितमादितः २६
शौनक उवाच
भृगुवंशात्प्रभृत्येव त्वया मे कथितं महत्
आख्यानमखिलं तात सौते प्रीतोऽस्मि तेन ते २७

प्रद्त्यामि चैव भूयस्त्वां यथावत्सूतनन्दन
यां कथां व्याससंपन्नां तां च भूयः प्रचद्त्व मे २८
तस्मिन्परमदुष्प्रापे सर्पसत्रे महात्मनाम्
कर्मान्तरेषु विधिवत्सदस्यानां महाकवे २९
या बभूवुः कथाश्चित्रा येष्वर्थेषु यथातथम्
त्वत्त इच्छामहे श्रोतुं सौते त्वं वै विचद्तणः ३०
सूत उवाच
कर्मान्तरेष्वकथयन्द्विजा वेदाश्रयाः कथाः
व्यासस्त्वकथयन्नित्यमाख्यानं भारतं महत् ३१
शौनक उवाच
महाभारतमाख्यानं पाराडवानां यशस्करम्
जनमेजयेन यत्पृष्टः कृष्णाद्वैपायनस्तदा ३२
श्रावयामास विधिवत्तदा कर्मान्तरेषु सः
तामहं विधिवत्पुरायां श्रोतुमिच्छामि वै कथाम् ३३
मनःसागरसंभूतां महर्षेः पुरायकर्मणः
कथयस्व सतां श्रेष्ठ न हि तृप्यामि सूतज ३४
सूत उवाच
हन्त ते कथयिष्यामि महदाख्यानमुत्तमम्
कृष्णाद्वैपायनमतं महाभारतमादितः ३५
तज्जुषस्वोत्तम मते कथ्यमानं मयाद्विज
शंसितुं तन्मनो हर्षो ममापीह प्रवर्तते ३६
इति श्रीमहाभारते ग्रादिपर्वणि त्रिपञ्चाशत्तमोऽध्यायः ५३

चतुःपञ्चाशत्तमोऽध्यायः

सूत उवाच
श्रुत्वा तु सर्पसत्राय दीद्तितं जनमेजयम्
ग्रभ्यागच्छदृषिर्विद्वान्कृष्णाद्वैपायनस्तदा १
जनयामास यं काली शक्तेः पुत्रात्पराशरात्
कन्यैव यमुनाद्वीपे पाराडवानां पितामहम् २
जातमात्रश्च यः सद्य इष्टया देहमवीवृधत्

वेदांश्चाधिजगे साङ्गान्सेतिहासान्महायशाः ३
यं नाति तपसा कश्चिन्न वेदाध्ययनेन च
न व्रतैर्नोपवासैश्च न प्रसूत्या न मन्युना ४
विव्यासैकं चतुर्धा यो वेदं वेदविदां वरः
परावरज्ञो ब्रह्मर्षिः कविः सत्यव्रतः शुचिः ५
यः पाण्डुं धृतराष्ट्रं च विदुरं चाप्यजीजनत्
शन्तनोः सन्ततिं तन्वन्पुण्यकीर्तिर्महायशाः ६
जनमेजयस्य राजर्षेः स तद्यज्ञसदस्तदा
विवेश शिष्यैः सहितो वेदवेदाङ्गपारगैः ७
तत्र राजानमासीनं ददर्श जनमेजयम्
वृतं सदस्यैर्बहुभिर्देवैरिव पुरन्दरम् ८
तथा मूर्धावसिक्तैश्च नानाजनपदेश्वरः
ऋत्विग्भिर्देवकल्पैश्च कुशलैर्यज्ञसंस्तरे ९
जनमेजयस्तु राजर्षिर्दृष्ट्वा तमृषिमागतम्
सगणोऽभ्युद्ययौ तूर्णं प्रीत्या भरतसत्तमः १०
काञ्चनं विष्टरं तस्मै सदस्यानुमते प्रभुः
आसनं कल्पयामास यथा शक्रो बृहस्पतेः ११
तत्रोपविष्टं वरदं देवर्षिगणपूजितम्
पूजयामास राजेन्द्रः शास्त्रदृष्टेन कर्मणा १२
पाद्यमाचमनीयं च अर्घ्यं गां च विधानतः
पितामहाय कृष्णाय तदर्हाय न्यवेदयत् १३
प्रतिगृह्य च तां पूजां पाण्डवाज्जनमेजयात्
गां चैव समनुज्ञाय व्यासः प्रीतोऽभवत्तदा १४
तथा संपूजयित्वा तं यत्नेन प्रपितामहम्
उपोपविश्य प्रीतात्मा पर्यपृच्छदनामयम् १५
भगवानपि तं दृष्ट्वा कुशलं प्रतिवेद्य च
सदस्यैः पूजितः सर्वैः सदस्यानभ्यपूजयत् १६
ततस्तं सत्कृतं सर्वैः सदस्यैर्जनमेजयः
इदं पश्चाद्द्विजश्रेष्ठं पर्यपृच्छत्कृताञ्जलि १७
कुरूणां पाण्डवानां च भवान्प्रत्यक्षदर्शिवान्

तेषां चरितमिच्छामि कथ्यमानं त्वया द्विज १८
कथं समभवद्भेदस्तेषामक्लिष्टकर्मणाम्
तच्च युद्धं कथं वृत्तं भूतान्तकरणं महत् १९
पितामहानां सर्वेषां दैवेनाविष्टचेतसाम्
कार्त्स्न्येनैतत्समाचक्ष्व भगवन्कुशलो ह्यसि २०
तस्य तद्वचनं श्रुत्वा कृष्णद्वैपायनस्तदा
शशास शिष्यमासीनं वैशम्पायनमन्तिके २१
कुरूणां पाण्डवानां च यथा भेदोऽभवत्पुरा
तदस्मै सर्वमाचक्ष्व यन्मत्तः श्रुतवानसि २२
गुरोर्वचनमाज्ञाय स तु विप्रर्षभस्तदा
आचचक्षे ततः सर्वमितिहासं पुरातनम् २३
तस्मै राज्ञे सदस्येभ्यः क्षत्रियेभ्यश्च सर्वशः
भेदं राज्यविनाशं च कुरुपाण्डवयोस्तदा २४
इति श्रीमहाभारते आदिपर्वणि चतुःपञ्चाशत्तमोऽध्यायः ५४

पञ्चपञ्चाशत्तमोऽध्यायः

वैशपायन उवाच
गुरवे प्राङ्नमस्कृत्य मनोबुद्धिसमाधिभिः
संपूज्य च द्विजान्सर्वांस्तथान्यान्विदुषो जनान् १
महर्षेः सर्वलोकेषु विश्रुतस्यास्य धीमतः
प्रवक्ष्यामि मतं कृत्स्नं व्यासस्यामिततेजसः २
श्रोतुं पात्रं च राजंस्त्वं प्राप्येमां भारतीं कथाम्
गुरोर्वक्तुं परिस्पन्दो मुदा प्रोत्साहतीव माम् ३
शृणु राजन्यथा भेदः कुरुपाण्डवयोरभूत्
राज्यार्थे द्यूतसंभूतो वनवासस्तथैव च ४
यथा च युद्धमभवत्पृथिवीक्षयकारकम्
तत्तेऽह संप्रवक्ष्यामि पृच्छते भरतर्षभ ५
मृते पितरि ते वीरा वनादेत्य स्वमन्दिरम्
नचिरादिव विद्वांसो वेदे धनुषि चाभवन् ६
तांस्तथा रूपवीर्यौजःसंपन्नान्पौरसंमतान्

नामृष्यन्कुरवो दृष्ट्वा पाण्डवाञ्श्रीयशोभृतः ७
ततो दुर्योधनः क्रूरः कर्णश्च सहसौबलः
तेषां निग्रहनिर्वासान्विविधांस्ते समाचरन् ८
ददावथ विषं पापो भीमाय धृतराष्ट्रजः
जरयामास तद्वीरः सहान्नेन वृकोदरः ९
प्रमाणकोट्यां संसुप्तं पुनर्बद्ध्वा वृकोदरम्
तोयेषु भीमं गङ्गायाः प्रक्षिप्य पुरमाव्रजत् १०
यदा प्रबुद्धः कौन्तेयस्दा संछिद्य बन्धनम्
उदतिष्ठन्महाराज भीमसेनो गतव्यथः ११
आशीविषैः कृष्णसर्पैः सुप्तं चैनमदंशयत्
सर्वेष्वेवाङ्गदेशेषु न ममार च शत्रुहा १२
तेषां तु विप्रकारेषु तेषु तेषु महामतिः
मोक्षणे प्रतिघाते च विदुरोऽवहितोऽभवत् १३
स्वर्गस्थो जीवलोकस्य यथा शक्रः सुखावहः
पाण्डवानां तथा नित्यं विदुरोऽपि सुखावहः १४
यदा तु विविधोपायैः संवृतैर्विवृतैरपि
नाशक्नोद्विनिहन्तुं तान्दैवभाव्यर्थरक्षितान् १५
ततः संमन्त्र्य सचिवैर्वृषदुःशासनादिभिः
धृतराष्ट्रमनुज्ञाप्य जातुषं गृहमादिशत् १६
तत्र तान्वासयामास पाण्डवानमितौजसः
अदाहयच्च विस्रब्धान्पावकेन पुनस्तदा १७
विदुरस्यैव वचनात्खनित्री विहिता ततः
मोक्षयामास योगेन ते मुक्ताः प्राद्रवन्भयात् १८
ततो महावने घोरे हिडिम्बं नाम राक्षसम्
भीमसेनोऽवधीत्क्रुद्धो भुवि भीमपराक्रमः १९
अथ संधाय ते वीरा एकचक्रां व्रजंस्तदा
ब्रह्मरूपधरा भूत्वा मात्रा सह परंतपाः २०
तत्र ते ब्राह्मणार्थाय बकं हत्वा महाबलम्
ब्राह्मणैः सहिता जग्मुः पाञ्चालानां पुरं ततः २१
ते तत्र द्रौपदीं लब्ध्वा परिसंवत्सरोषिताः

विदिता हास्तिनपुरं प्रत्याजग्मुररिन्दमाः २२
त उक्ता धृतराष्ट्रेण राज्ञा शान्तनवेन च
भ्रातृभिर्विग्रहस्तात कथं वो न भवेदिति
अस्माभिः खाण्डवप्रस्थे युष्मद्वासोऽनुचिन्तितः २३
तस्माज्जनपदोपेतं सुविभक्तमहापथम्
वासाय खाण्डवप्रस्थं व्रजध्वं गतमन्यवः २४
तयोस्ते वचनाज्जग्मुः सह सर्वैः सुहृज्जनैः
नगरं खाण्डवप्रस्थं रत्नान्यादाय सर्वशः २५
तत्र ते न्यवसन्राजन्संवत्सरगणान्बहून्
वशे शस्त्रप्रतापेन कुर्वन्तोऽन्यान्महीक्षितः २६
एवं धर्मप्रधानास्ते सत्यव्रतपरायणाः
अप्रमत्तोत्थिताः क्षान्ताः प्रतपन्तोऽहितांस्तदा २७
अजयद्भीमसेनस्तु दिशं प्राचीं महाबलः
उदीचीमर्जुनो वीरः प्रतीचीं नकुलस्तथा २८
दक्षिणां सहदेवस्तु विजिग्ये परवीरहा
एवं चक्रुरिमां सर्वे वशे कृत्स्नां वसुन्धराम् २९
पञ्चभिः सूर्यसंकाशैः सूर्येण च विराजता
षट्सूर्येवाबभौ पृथ्वी पाण्डवैः सत्यविक्रमैः ३०
ततो निमित्ते कस्मिंश्चिद्धर्मराजो युधिष्ठिरः
वनं प्रस्थापयामास भ्रातरं वै धनंजयम् ३१
स वै संवत्सरं पूर्णं मासं चैकं वनेऽवसत्
ततोऽगच्छद्धृषीकेशं द्वारवत्यां कदाचन ३२
लब्धवांस्तत्र बीभत्सुर्भार्यां राजीवलोचनाम्
अनुजां वासुदेवस्य सुभद्रां भद्रभाषिणीम् ३३
सा शचीव महेन्द्रेण श्रीः कृष्णेनेव संगता
सुभद्रा युयुजे प्रीता पाण्डवेनार्जुनेन ह ३४
अतर्पयच्च कौन्तेयः खाण्डवे हव्यवाहनम्
बीभत्सुर्वासुदेवेन सहितो नृपसत्तम ३५
नातिभारो हि पार्थस्य केशवेनाभवत्सह
व्यवसायसहायस्य विष्णोः शत्रुवधेष्विव ३६

पार्थायाग्निर्ददौ चापि गाण्डीवं धनुरुत्तमम्
इषुधी चाक्षयैर्बाणै रथं च कपिलक्षणम् ३७
मोक्षयामास बीभत्सुर्मयं तत्र महासुरम्
स चकार सभां दिव्यां सर्वरत्नसमाचिताम् ३८
तस्यां दुर्योधनो मन्दो लोभं चक्रे सुदुर्मतिः
ततोऽक्षैर्वञ्चयित्वा च सौबलेन युधिष्ठिरम् ३९
वनं प्रस्थापयामास सप्त वर्षाणि पञ्च च
अज्ञातमेकं राष्ट्रे च तथा वर्षं त्रयोदशम् ४०
ततश्चतुर्दशे वर्षे याचमानाः स्वकं वसु
नालभन्त महाराज ततो युद्धमवर्तत ४१
ततस्ते सर्वमुत्साद्य हत्वा दुर्योधनं नृपम्
राज्यं विद्रुतभूयिष्ठं प्रत्यपद्यन्त पाण्डवाः ४२
एवमेतत्पुरावृत्तं तेषामक्लिष्टकर्मणाम्
भेदो राज्यविनाशश्च जयश्च जयतां वर ४३
इति श्रीमहाभारते आदिपर्वणि पञ्चपञ्चाशत्तमोऽध्यायः ५५

षट्पञ्चाशत्तमोऽध्यायः

जनमेजय उवाच
कथितं वै समासेन त्वया सर्वं द्विजोत्तम
महाभारतमाख्यानं कुरूणां चरितं महत् १
कथां त्वनघ चित्रार्थामिमां कथयति त्वयि
विस्तरश्रवणे जातं कौतूहलमतीव मे २
स भवान्विस्तरेणेमां पुनराख्यातुमर्हति
न हि तृप्यामि पूर्वेषां शृण्वानश्चरितं महत् ३
न तत्कारणमल्पं हि धर्मज्ञा यत्र पाण्डवाः
अवध्यान्सर्वशो जघ्नुः प्रशस्यन्ते च मानवैः ४
किमर्थं ते नरव्याघ्राः शक्ताः सन्तो ह्यनागसः
प्रयुज्यमानान्संक्लेशान्क्षान्तवन्तो दुरात्मनाम् ५
कथं नागायुतप्राणो बाहुशाली वृकोदरः
परिक्लिश्यन्नपि क्रोधं धृतवान्वै द्विजोत्तम ६

कथं सा द्रौपदी कृष्णा क्लिश्यमाना दुरात्मभिः
शक्ता सती धार्तराष्ट्रान्नादहद्घोरचक्षुषा ७
कथं व्यतिक्रमन्द्यूते पार्थौ माद्रीसुतौ तथा
अनुव्रजन्नरव्याघ्रं वञ्च्यमानं दुरात्मभिः ८
कथं धर्मभृतां श्रेष्ठः सुतो धर्मस्य धर्मवित्
अनर्हः परमं क्लेशं सोढवान्स युधिष्ठिरः ९
कथं च बहुलाः सेनाः पाण्डवः कृष्णसारथिः
अस्यन्नेकोऽनयत्सर्वाः पितृलोकं धनञ्जयः १०
एतदाचक्ष्व मे सर्वं यथावृत्तं तपोधन
यद्यच्च कृतवन्तस्ते तत्र तत्र महारथाः ११
वैशम्पायन उवाच
महर्षेः सर्वलोकेषु पूजितस्य महात्मनः
प्रवक्ष्यामि मतं कृत्स्नं व्यासस्यामिततेजसः १२
इदं शतसहस्रं हि श्लोकानां पुण्यकर्मणाम्
सत्यवत्यात्मजेनेह व्याख्यातममितौजसा १३
य इदं श्रावयेद्विद्वान्यश्चेदं शृणुयान्नरः
ते ब्रह्मणः स्थानमेत्य प्राप्नुयुर्देवतुल्यताम् १४
इदं हि वेदैः समितं पवित्रमपि चोत्तमम्
श्राव्याणामुत्तमं चेदं पुराणमृषिसंस्तुतम् १५
अस्मिन्नर्थश्च धर्मश्च निखिलेनोपदिश्यते
इतिहासे महापुण्ये बुद्धिश्च परिनैष्ठिकी १६
अक्षुद्रान्दानशीलांश्च सत्यशीलाननास्तिकान्
कार्ष्णं वेदमिमं विद्वाञ्श्रावयित्वार्थमश्नुते १७
भ्रूणहत्याकृतं चापि पापं जह्यादसंशयम्
इतिहासमिमं श्रुत्वा पुरुषोऽपि सुदारुणः १८
जयो नामेतिहासोऽय श्रोतव्यो विजिगीषुणा
महीं विजयते सर्वां शत्रूंश्चापि पराजयेत् १९
इदं पुंसवनं श्रेष्ठमिदं स्वस्त्ययनं महत्
महिषीयुवराजाभ्यां श्रोतव्यं बहुशस्तथा २०
अर्थशास्त्रमिदं पुण्यं धर्मशास्त्रमिदं परम्

मोक्षशास्त्रमिदं प्रोक्तं व्यासेनामितबुद्धिना २१
संप्रत्याचक्षते चैव आख्यास्यन्ति तथापरे
पुत्राः शुश्रूषवः सन्ति प्रेष्याश्च प्रियकारिणः २२
शरीरेण कृतं पापं वाचा च मनसैव च
सर्वं तत्त्यजति क्षिप्रमिदं शृण्वन्नरः सदा २३
भारतानां महज्जन्म शृण्वतामनसूयताम्
नास्ति व्याधिभयं तेषां परलोकभयं कुतः २४
धन्यं यशस्यमायुष्यं स्वर्ग्यं पुण्यं तथैव च
कृष्णद्वैपायनेनेदं कृतं पुण्यचिकीर्षुणा २५
कीर्तिं प्रथयता लोके पाण्डवानां महात्मनाम्
अन्येषां क्षत्रियाणां च भूरिद्रविणतेजसाम् २६
यथा समुद्रो भगवान्यथा च हिमवान्गिरिः
ख्यातावुभौ रत्ननिधी तथा भारतमुच्यते २७
य इदं श्रावयेद्विद्वान्ब्राह्मणानिह पर्वसु
धूतपाप्मा जितस्वर्गो ब्रह्मभूयं स गच्छति २८
यश्चेदं श्रावयेच्छ्राद्धे ब्राह्मणान्पादमन्ततः
अक्षय्यं तस्य तच्छ्राद्धमुपतिष्ठेत्पितॄनपि २९
अह्ना यदेनश्चाज्ञानात्प्रकरोति नरश्चरन्
तन्महाभारताख्यानं श्रुत्वैव प्रविलीयते ३०
भारतानां महज्जन्म महाभारतमुच्यते
निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते ३१
त्रिभिर्वर्षैः सदोत्थायी कृष्णद्वैपायनो मुनिः
महाभारतमाख्यानं कृतवानिदमुत्तमम् ३२
धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित् ३३
इति श्रीमहाभारते आदिपर्वणि षट्पञ्चाशत्तमोऽध्यायः ५६

सप्तपञ्चाशत्तमोऽध्यायः

वैशम्पायन उवाच
राजोपरिचरो नाम धर्मनित्यो महीपतिः

बभूव मृगयां गन्तुं स कदाचिद्धृतव्रतः १
स चेदिविषयं रम्यं वसुः पौरवनन्दनः
इन्द्रोपदेशाज्जग्राह ग्रहणीयं महीपतिः २
तमाश्रमे न्यस्तशस्त्रं निवसन्तं तपोरतिम्
देवः साक्षात्स्वयं वज्री समुपायान्महीपतिम् ३
इन्द्रत्वमर्हो राजायं तपसेत्यनुचिन्त्य वै
तं सान्त्वेन नृपं साक्षात्तपसः संन्यवर्तयत् ४
इन्द्र उवाच
न संकीर्येत धर्मोऽय पृथिव्यां पृथिवीपते
त्वं पाहि धर्मो हि धृतः कृत्स्नं धारयते जगत् ५
लोक्यं धर्मं पालय त्वं नित्ययुक्तः समाहितः
धर्मयुक्तस्ततो लोकान्पुण्यानाप्स्यसि शाश्वतान् ६
दिविष्ठस्य भुविष्ठस्त्वं सखा भूत्वा मम प्रियः
ऊधः पृथिव्या यो देशस्तमावस नराधिप ७
पशव्यश्चैव पुण्यश्च सुस्थिरो धनधान्यवान्
स्वारक्ष्यश्चैव सौम्यश्च भोग्यैर्भूमिगुणैर्युतः ८
अत्यन्यानेष देशो हि धनरत्नादिभिर्युतः
वसुपूर्णा च वसुधा वस चेदिषु चेदिप ९
धर्मशीला जनपदाः सुसंतोषाश्च साधवः
न च मिथ्याप्रलापोऽत्र स्वैरेष्वपि कुतोऽन्यथा १०
न च पित्रा विभज्यन्ते नरा गुरुहिते रताः
युञ्जते धुरि नो गाश्च कृशाः संधुक्षयन्ति च ११
सर्वे वर्णाः स्वधर्मस्थाः सदा चेदिषु मानद
न तेऽस्त्यविदितं किंचित्त्रिषु लोकेषु यद्भवेत् १२
देवोपभोग्यं दिव्यं च आकाशे स्फाटिकं महत्
आकाशगं त्वां मद्दत्तं विमानमुपपत्स्यते १३
त्वमेकः सर्वमर्त्येषु विमानवरमास्थितः
चरिष्यस्युपरिस्थो वै देवो विग्रहवानिव १४
ददामि ते वैजयन्तीं मालामम्लानपङ्कजाम्
धारयिष्यति संग्रामे या त्वां शस्त्रैरविक्षतम् १५

लक्षणं चैतदेवेह भविता ते नराधिप
इन्द्रमालेति विख्यातं धन्यमप्रतिमं महत् १६
वैशम्पायन उवाच
यष्टिं च वैणवीं तस्मै ददौ वृत्रनिषूदनः
इष्टप्रदानमुद्दिश्य शिष्टानां परिपालिनीम् १७
तस्याः शक्रस्य पूजार्थं भूमौ भूमिपतिस्तदा
प्रवेशं कारयामास गते संवत्सरे तदा १८
ततः प्रभृति चाद्यापि यष्ट्याः क्षितिपसत्तमैः
प्रवेशः क्रियते राजन्यथा तेन प्रवर्तितः १९
अपरेद्युस्तथा चास्याः क्रियते उच्छ्रयो नृपैः
अलंकृतायाः पिटकैर्गन्धैर्माल्यैश्च भूषणैः
माल्यदामपरिक्षिप्ता विधिवत्क्रियतेऽपि च २०
भगवान्पूज्यते चात्र हास्यरूपेण शंकरः
स्वयमेव गृहीतेन वसोः प्रीत्या महात्मनः २१
एतां पूजां महेन्द्रस्तु दृष्ट्वा देव कृतां शुभाम्
वसुना राजमुख्येन प्रीतिमानब्रवीद्विभुः २२
ये पूजयिष्यन्ति नरा राजानश्च महं मम
कारयिष्यन्ति च मुदा यथा चेदिपतिर्नृपः २३
तेषां श्रीर्विजयश्चैव सराष्ट्राणां भविष्यति
तथा स्फीतो जनपदो मुदितश्च भविष्यति २४
एवं महात्मना तेन महेन्द्रेण नराधिप
वसुः प्रीत्या मघवता महाराजोऽभिसत्कृतः २५
उत्सवं कारयिष्यन्ति सदा शक्रस्य ये नराः
भूमिदानादिभिर्दानैर्यथा पूता भवन्ति वै
वरदानमहायज्ञैस्तथा शक्रोत्सवेन ते २६
संपूजितो मघवता वसुश्चेदिपतिस्तदा
पालयामास धर्मेण चेदिस्थः पृथिवीमिमाम्
इन्द्रप्रीत्या भूमिपतिश्चकारेन्द्रमहं वसुः २७
पुत्राश्चास्य महावीर्याः पञ्चासन्नमितौजसः
नानाराज्येषु च सुतान्स सम्राडभ्यषेचयत् २८

महारथो मगधराड्विश्रुतो यो बृहद्रथः
प्रत्यग्रहः कुशाम्बश्च यमाहुर्मणिवाहनम्
मच्छिल्लश्च यदुश्चैव राजन्यश्चापराजितः २९
एते तस्य सुता राजन्राजर्षेर्भूरितेजसः
न्यवेशयन्नामभिः स्वैस्ते देशांश्च पुराणि च
वासवाः पञ्च राजानः पृथग्वंशाश्च शाश्वताः ३०
वसन्तमिन्द्रप्रासादे आकाशे स्फाटिके च तम्
उपतस्थुर्महात्मानं गन्धर्वाप्सरसो नृपम्
राजोपरिचरेत्येवं नाम तस्याथ विश्रुतम् ३१
पुरोपवाहिनीं तस्य नदीं शुक्तिमतीं गिरिः
अरौत्सीच्चेतनायुक्तः कामात्कोलाहलः किल ३२
गिरिं कोलाहलं तं तु पदा वसुरताडयत्
निश्चक्राम नदी तेन प्रहारविवरेण सा ३३
तस्यां नद्यामजनयन्मिथुनं पर्वतः स्वयम्
तस्माद्विमोक्षणात्प्रीता नदी राज्ञे न्यवेदयत् ३४
यः पुमानभवत्तत्र तं स राजर्षिसत्तमः
वसुर्वसुप्रदश्चक्रे सेनापतिमरिन्दमम्
चकार पत्नीं कन्यां तु दयितां गिरिकां नृपः ३५
वसोः पत्नी तु गिरिका कामात्काले न्यवेदयत्
ऋतुकालमनुप्राप्तं स्नाता पुंसवने शुचिः ३६
तदहः पितरश्चैनमूचुर्जहि मृगानिति
तं राजसत्तमं प्रीतास्तदा मतिमतां वरम् ३७
स पितॄणां नियोगं तमव्यतिक्रम्य पार्थिवः
चचार मृगयां कामी गिरिकामेव संस्मरन्
अतीव रूपसंपन्नां साक्षाच्छ्रियमिवापराम् ३८
तस्य रेतः प्रचस्कन्द चरतो रुचिरे वने
स्कन्नमात्रं च तद्रेतो वृक्षपत्रेण भूमिपः ३९
प्रतिजग्राह मिथ्या मे न स्कंदेद्रेत इत्युत
ऋतुश्च तस्याः पत्न्या मे न मोघः स्यादिति प्रभुः ४०
संचिन्त्यैवं तदा राजा विचार्य च पुनः पुनः

अमोघत्वं च विज्ञाय रेतसो राजसत्तमः ४१
शुक्रप्रस्थापने कालं महिष्याः प्रसमीक्ष्य सः
अभिमन्त्र्याथ तच्छुक्रमारात्तिष्ठन्तमाशुगम्
सूक्ष्मधर्मार्थतत्त्वज्ञो ज्ञात्वा श्येनं ततोऽब्रवीत् ४२
मत्प्रियार्थमिदं सौम्य शुक्रं मम गृहं नय
गिरिकायाः प्रयच्छाशु तस्या ह्यार्तवमद्य वै ४३
गृहीत्वा तत्तदा श्येनस्तूर्णमुत्पत्य वेगवान्
जवं परममास्थाय प्रदुद्राव विहंगमः ४४
तमपश्यदथायान्तं श्येनं श्येनस्तथापरः
अभ्यद्रवच्च तं सद्यो दृष्ट्वैवामिषशङ्कया ४५
तुण्डयुद्धमथाकाशे तावुभौ संप्रचक्रतुः
युध्यतोरपतद्रेतस्तच्चापि यमुनाम्भसि ४६
तत्राद्रिकेति विख्याता ब्रह्मशापाद्वराप्सराः
मीनभावमनुप्राप्ता बभूव यमुनाचरी ४७
श्येनपादपरिभ्रष्टं तद्वीर्यमथ वासवम्
जग्राह तरसोपेत्य साद्रिका मत्स्यरूपिणी ४८
कदाचिदथ मत्सीं तां बबन्धुर्मत्स्यजीविनः
मासे च दशमे प्राप्ते तदा भरतसत्तम
उज्जह्रुरुदरात्तस्याः स्त्रीपुमांसं च मानुषम् ४९
आश्चर्यभूतं मत्वा तद्राज्ञस्ते प्रत्यवेदयन्
काये मत्स्या इमौ राजन्संभूतौ मानुषाविति ५०
तयोः पुमांसं जग्राह राजोपरिचरस्तदा
स मत्स्यो नाम राजासीद्धार्मिकः सत्यसंगरः ५१
साप्सरा मुक्तशापा च क्षणेन समपद्यत
पुरोक्ता या भगवता तिर्यग्योनिगता शुभे
मानुषौ जनयित्वां त्वं शापमोक्षमवाप्स्यसि ५२
ततः सा जनयित्वा तौ विशस्ता मत्स्यघातिना
संत्यज्य मत्स्यरूपं सा दिव्यं रूपमवाप्य च
सिद्धर्षिचारणपथं जगामाथ वराप्सराः ५३
या कन्या दुहिता तस्या मत्स्या मत्स्यसगन्धिनी

राज्ञा दत्ताथ दाशाय इयं तव भवत्विति
रूपसत्त्वसमायुक्ता सर्वैः समुदिता गुणैः ५४
सा तु सत्यवती नाम मत्स्यघात्यभिसंश्रयात्
आसीन्मत्स्यसगन्धैव कंचित्कालं शुचिस्मिता ५५
शुश्रूषार्थं पितुर्नावं तां तु वाहयतीं जले
तीर्थयात्रां परिक्रामन्नपश्यद्वै पराशरः ५६
अतीव रूपसंपन्नां सिद्धानामपि काङ्क्षिताम्
दृष्ट्वैव च स तान्धीमांश्चकमे चारुदर्शनाम्
विद्वांस्तां वासवीं कन्यां कार्यवान्मुनिपुङ्गवः ५७
साब्रवीत्पश्य भगवन्पारावारे ऋषीन्स्थितान्
आवयोर्दृश्यतोरेभिः कथं तु स्यात्समागमः ५८
एवं तयोक्तो भगवान्नीहारमसृजत्प्रभुः
येन देशः स सर्वस्तु तमोभूत इवाभवत् ५९
दृष्ट्वा सृष्टं तु नीहारं ततस्तं परमर्षिणा
विस्मिता चाब्रवीत्कन्या व्रीडिता च मनस्विनी ६०
विद्धि मां भगवन्कन्यां सदा पितृवशानुगाम्
त्वत्संयोगाच्च दुष्येत कन्याभावो ममानघ ६१
कन्यात्वे दूषिते चापि कथं शक्ष्ये द्विजोत्तम
गन्तुं गृहं गृहे चाहं धीमन्न स्थातुमुत्सहे
एतत्संचिन्त्य भगवन्विधत्स्व यदनन्तरम् ६२
एवमुक्तवतीं तां तु प्रीतिमानृषिसत्तमः
उवाच मत्प्रियं कृत्वा कन्यैव त्वं भविष्यसि ६३
वृणीष्व च वरं भीरु यं त्वमिच्छसि भामिनि
वृथा हि न प्रसादो मे भूतपूर्वः शुचिस्मिते ६४
एवमुक्ता वरं वव्रे गात्रसौगन्ध्यमुत्तमम्
स चास्यै भगवान्प्रादान्मनसः काङ्क्षितं प्रभुः ६५
ततो लब्धवरा प्रीता स्त्रीभावगुणभूषिता
जगाम सह संसर्गमृषिणाद्भुतकर्मणा ६६
तेन गन्धवतीत्येव नामास्याः प्रथितं भुवि
तस्यास्तु योजनाद्गन्धमाजिघ्रन्ति नरा भुवि ६७

ततो योजनगन्धेति तस्य नाम परिश्रुतम्
पराशरोऽपि भगवाञ्जगाम स्वं निवेशनम् ६८
इति सत्यवती हृष्टा लब्ध्वा वरमनुत्तमम्
पराशरेण संयुक्ता सद्यो गर्भं सुषाव सा
जज्ञे च यमुनाद्वीपे पाराशर्यः स वीर्यवान् ६९
स मातरमुपस्थाय तपस्येव मनो दधे
स्मृतोऽहं दर्शयिष्यामि कृत्येष्विति च सोऽब्रवीत् ७०
एवं द्वैपायनो जज्ञे सत्यवत्यां पराशरात्
द्वीपे न्यस्तः स यद्बालस्तस्माद्द्वैपायनोऽभवत् ७१
पादापसारिणं धर्मं विद्वान् स तु युगे युगे
आयुः शक्तिं च मर्त्यानां युगानुगमवेक्ष्य च ७२
ब्रह्मणो ब्राह्मणानां च यथानुग्रहकाम्यया
विव्यास वेदान्यस्माच्च तस्माद्व्यास इति स्मृतः ७३
वेदानध्यापयामास महाभारतपञ्चमान्
सुमन्तुं जैमिनिं पैलं शुकं चैव स्वमात्मजम् ७४
प्रभुर्वरिष्ठो वरदो वैशम्पायनमेव च
संहितास्तैः पृथक्त्वेन भारतस्य प्रकाशिताः ७५
तथा भीष्मः शान्तनवो गङ्गायाममितद्युतिः
वसुवीर्यात्समभवन्महावीर्यो महायशाः ७६
शूले प्रोतः पुराणर्षिरचोरश्चोरशङ्कया
अणीमाण्डव्य इति वै विख्यातः सुमहायशाः ७७
स धर्ममाहूय पुरा महर्षिरिदमुक्तवान्
इषीकया मया बाल्यादेका विद्धा शकुन्तिका ७८
तत्किल्बिषं स्मरे धर्म नान्यत्पापमहं स्मरे
तन्मे सहस्रसमितं कस्मान्नेहाजयत्तपः ७९
गरीयान्ब्राह्मणवधः सर्वभूतवधाद्यतः
तस्मात्त्वं किल्बिषादस्माच्छूद्रयोनौ जनिष्यसि ८०
तेन शापेन धर्मोऽपि शूद्रयोनावजायत
विद्वान्विदुररूपेण धार्मी तनुरकिल्बिषी ८१
सञ्जयो मुनिकल्पस्तु जज्ञे सूतो गवल्गणात्

सूर्याच्च कुन्तिकन्यायां जज्ञे कर्णो महारथः
सहजं कवचं बिभ्रत्कुण्डलोद्द्योतिताननः ८२
अनुग्रहार्थं लोकानां विष्णुर्लोकनमस्कृतः
वसुदेवात्तु देवक्याः प्रादुर्भूतो महायशाः ८३
अनादिनिधनो देवः स कर्ता जगतः प्रभुः
अव्यक्तमक्षरं ब्रह्म प्रधानं त्रिगुणात्मकम् ८४
आत्मानमव्ययं चैव प्रकृतिं प्रभवं परम्
पुरुषं विश्वकर्माणं सत्त्वयोगं ध्रुवाक्षरम् ८५
अनन्तमचलं देवं हंसं नारायणं प्रभुम्
धातारमजरं नित्यं तमाहुः परमव्ययम् ८६
पुरुषः स विभुः कर्ता सर्वभूतपितामहः
धर्मसंवर्धनार्थाय प्रजज्ञेऽन्धकवृष्णिषु ८७
अस्त्रज्ञौ तु महावीर्यौ सर्वशस्त्रविशारदौ
सात्यकिः कृतवर्मा च नारायणमनुव्रतौ
सत्यकाद्धृदिकाच्चैव जज्ञातेऽस्त्रविशारदौ ८८
भरद्वाजस्य च स्कन्नं द्रोण्यां शुक्रमवर्धत
महर्षेरुग्रतपसस्तस्माद्द्रोणो व्यजायत ८९
गौतमान्मिथुनं जज्ञे शरस्तम्बाच्छरद्वतः
अश्वत्थाम्नश्च जननी कृपश्चैव महाबलः
अश्वत्थामा ततो जज्ञे द्रोणादस्त्रभृतां वरः ९०
तथैव धृष्टद्युम्नोऽपि साक्षादग्निसमद्युतिः
वैताने कर्मणि तते पावकात्समजायत
वीरो द्रोणविनाशाय धनुषा सह वीर्यवान् ९१
तथैव वेद्यां कृष्णापि जज्ञे तेजस्विनी शुभा
विभ्राजमाना वपुषा बिभ्रती रूपमुत्तमम् ९२
प्रह्लादशिष्यो नग्नजित्सुबलश्चाभवत्ततः
तस्य प्रजा धर्महन्त्री जज्ञे देवप्रकोपनात् ९३
गान्धारराजपुत्रोऽभूच्छकुनिः सौबलस्तथा
दुर्योधनस्य माता च जज्ञातेऽथविदावुभौ ९४
कृष्णाद्द्वैपायनाज्जज्ञे धृतराष्ट्रो जनेश्वरः

क्षेत्रे विचित्रवीर्यस्य पाण्डुश्चैव महाबलः ९५
पाण्डोस्तु जज्ञिरे पञ्च पुत्रा देवसमाः पृथक्
द्वयोः स्त्रियोर्गुणज्येष्ठस्तेषामासीद्युधिष्ठिरः ९६
धर्माद्युधिष्ठिरो जज्ञे मारुतात्तु वृकोदरः
इन्द्राद्धनञ्जयः श्रीमान्सर्वशस्त्रभृतां वरः ९७
जज्ञाते रूपसंपन्नावश्विभ्यां तु यमावुभौ
नकुलः सहदेवश्च गुरुशुश्रूषणे रतौ ९८
तथा पुत्रशतं जज्ञे धृतराष्ट्रस्य धीमतः
दुर्योधनप्रभृतयो युयुत्सुः करणस्तथा ९९
अभिमन्युः सुभद्रायामर्जुनादभ्यजायत
स्वस्त्रीयो वासुदेवस्य पौत्रः पाण्डोर्महात्मनः १००
पाण्डवेभ्योऽपि पञ्चभ्यः कृष्णायां पञ्च जज्ञिरे
कुमारा रूपसम्पन्नाः सर्वशस्त्रविशारदाः १०१
प्रतिविन्ध्यो युधिष्ठिरात्सुतसोमो वृकोदरात्
अर्जुनाच्छ्रुतकीर्तिस्तु शतानीकस्तु नाकुलि १०२
तथैव सहदेवाच्च श्रुतसेनः प्रतापवान्
हिडिम्बायां च भीमेन वने जज्ञे घटोत्कचः १०३
शिखण्डी द्रुपदाज्जज्ञे कन्या पुत्रत्वमागता
यां यक्षः पुरुषं चक्रे स्थूणः प्रियचिकीर्षया १०४
कुरूणां विग्रहे तस्मिन्समागच्छन्बहून्यथ
राज्ञां शतसहस्राणि योत्स्यमानानि संयुगे १०५
तेषामपरिमेयानि नामधेयानि सर्वशः
न शक्यं परिसंख्यातुं वर्षाणामयुतैरपि
एते तु कीर्तिता मुख्या यैराख्यानमिदं ततम् १०६
इति श्रीमहाभारते आदिपर्वणि सप्तपञ्चाशत्तमोऽध्यायः ५७

अष्टपञ्चाशत्तमोऽध्यायः

जनमेजय उवाच
य एते कीर्तिता ब्रह्मन्ये चान्ये नानुकीर्तिताः
सम्यक्ताञ्श्रोतुमिच्छामि राज्ञश्चान्यान्सुवर्चसः १

यदर्थमिह संभूता देवकल्पा महारथाः
भुवि तन्मे महाभाग सम्यगाख्यातुमर्हसि २
वैशम्पायन उवाच
रहस्यं खल्विदं राजन्देवानामिति नः श्रुतम्
तत्तु ते कथयिष्यामि नमस्कृत्वा स्वयंभुवे ३
त्रिः सप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां पुरा
जामदग्न्यस्तपस्तेपे महेन्द्रे पर्वतोत्तमे ४
तदा निःक्षत्रिये लोके भार्गवेण कृते सति
ब्राह्मणान्क्षत्रिया राजन्गर्भार्थिन्योऽभिचक्रमुः ५
ताभिः सह समापेतुर्ब्राह्मणाः संशितव्रताः
ऋतावृतौ नरव्याघ्र न कामान्नानृतौ तथा ६
तेभ्यस्तु लेभिरे गर्भान्क्षत्रियास्ताः सहस्रशः
ततः सुषुविरे राजन्क्षत्रियान्वीर्यसंमतान्
कुमारांश्च कुमारीश्च पुनः क्षत्राभिवृद्धये ७
एवं तद्ब्राह्मणैः क्षत्रं क्षत्रियासु तपस्विभिः
जातमृध्यत धर्मेण सुदीर्घेणायुषान्वितम्
चत्वारोऽपि तदा वर्णा बभूवुर्ब्राह्मणोत्तराः ८
अभ्यगच्छन्नृतौ नारीं न कामान्नानृतौ तथा
तथैवान्यानि भूतानि तिर्यग्योनिगतान्यपि
ऋतौ दारांश्च गच्छन्ति तदा स्म भरतर्षभ ९
ततोऽवर्धन्त धर्मेण सहस्रशतजीविनः
ताः प्रजाः पृथिवीपाल धर्मव्रतपरायणाः
आधिभिर्व्याधिभिश्चैव विमुक्ताः सर्वशो नराः १०
अथेमां सागरापाङ्गां गां गजेन्द्रगताखिलाम्
अध्यतिष्ठत्पुनः क्षत्रं सशैलवनकाननाम् ११
प्रशासति पुनः क्षत्रे धर्मेणेमां वसुंधराम्
ब्राह्मणाद्यास्तदा वर्णा लेभिरे मुदमुत्तमाम् १२
कामक्रोधोद्भवान्दोषान्निरस्य च नराधिपाः
दण्डं दण्ड्येषु धर्मेण प्रणयन्तोऽन्वपालयन् १३
तथा धर्मपरे क्षत्रे सहस्राक्षः शतक्रतुः

स्वादु देशे च काले च ववर्षाप्याययन्प्रजाः १४
न बाल एव म्रियते तदा कश्चिन्नराधिप
न च स्त्रियं प्रजानाति कश्चिदप्राप्तयौवनः १५
एवमायुष्मतीभिस्तु प्रजाभिर्भरतर्षभ
इयं सागरपर्यन्ता समापूर्यत मेदिनी १६
ईजिरे च महायज्ञैः क्षत्रिया बहुदक्षिणैः
साङ्गोपनिषदान्वेदान्विप्राश्चाधीयते तदा १७
न च विक्रीणते ब्रह्म ब्राह्मणाः स्म तदा नृप
न च शूद्रसमाभ्याशे वेदानुच्चारयन्त्युत १८
कारयन्तः कृषिं गोभिस्तथा वैश्याः क्षिताविह
न गामयुञ्जन्त धुरि कृशाङ्गाश्चाप्यजीवयन् १९
फेनपांश्च तथा वत्सान्न दुहन्ति स्म मानवाः
न कूटमानैर्वणिजः पण्यं विक्रीणते तदा २०
कर्माणि च नरव्याघ्र धर्मोपेतानि मानवाः
धर्ममेवानुपश्यन्तश्चक्रुर्धर्मपरायणाः २१
स्वकर्मनिरताश्चासन्सर्वे वर्णा नराधिप
एवं तदा नरव्याघ्र धर्मो न ह्रसते क्वचित् २२
काले गावः प्रसूयन्ते नार्यश्च भरतर्षभ
फलन्त्यृतुषु वृक्षाश्च पुष्पाणि च फलानि च २३
एवं कृतयुगे सम्यग्वर्तमाने तदा नृप
आपूर्यत मही कृत्स्ना प्राणिभिर्बहुभिर्भृशम् २४
ततः समुदिते लोके मानुषे भरतर्षभ
असुरा जज्ञिरे क्षेत्रे राज्ञां मनुजपुंगव २५
आदित्यैर्हि तदा दैत्या बहुशो निर्जिता युधि
ऐश्वर्याद्भ्रंशिताश्चापि संबभूवुः क्षिताविह २६
इह देवत्वमिच्छन्तो मानुषेषु मनस्विनः
जज्ञिरे भुवि भूतेषु तेषु तेष्वसुरा विभो २७
गोष्वश्वेषु च राजेन्द्र खरोष्ट्रमहिषेषु च
क्रव्यादेषु च भूतेषु गजेषु च मृगेषु च २८
जातैरिह महीपाल जायमानैश्च तैर्मही

न शशाकात्मनात्मानमियं धारयितुं धरा २९
अथ जाता महीपालाः केचिद्बलसमन्विताः
दितेः पुत्रा दनोश्चैव तस्माल्लोकादिह च्युताः ३०
वीर्यवन्तोऽवलिप्तास्ते नानारूपधरा महीम्
इमां सागरपर्यन्तां परीयुररिमर्दनाः ३१
ब्राह्मणान्क्षत्रियान्वैश्याञ्शूद्रांश्चैवाप्यपीडयन्
अन्यानि चैव भूतानि पीडयामासुरोजसा ३२
त्रासयन्तो विनिघ्नन्तस्तांस्तान्भूतगणांश्च ते
विचेरुः सर्वतो राजन्महीं शतसहस्रशः ३३
आश्रमस्थान्महर्षींश्च धर्षयन्तस्ततस्ततः
अब्रह्मण्या वीर्यमदा मत्ता मदबलेन च ३४
एवं बीर्यबलोत्सिक्तैर्भूरियं तैर्महासुरैः
पीड्यमाना महीपाल ब्रह्माणमुपचक्रमे ३५
न हीमां पवनो राजन्न नागा न नगा महीम्
तदा धारयितुं शेकुराक्रान्तां दानवैर्बलात् ३६
ततो मही महीपाल भारार्ता भयपीडिता
जगाम शरणं देवं सर्वभूतपितामहम् ३७
सा संवृतं महाभागैर्देवद्विजमहर्षिभिः
ददर्श देवं ब्रह्माणं लोककर्तारमव्ययम् ३८
गन्धर्वैरप्सरोभिश्च बन्दिकर्मसु निष्ठितैः
वन्द्यमानं मुदोपेतैर्ववन्दे चैनमेत्य सा ३९
अथ विज्ञापयामास भूमिस्तं शरणार्थिनी
संनिधौ लोकपालानां सर्वेषामेव भारत ४०
तत्प्रधानात्मनस्तस्य भूमेः कृत्यं स्वयंभुवः
पूर्वमेवाभवद्राजन्विदितं परमेष्ठिनः ४१
स्रष्टा हि जगतः कस्मान्न संबुध्येत भारत
सुरासुराणां लोकानामशेषेण मनोगतम् ४२
तमुवाच महाराज भूमिं भूमिपतिर्विभुः
प्रभवः सर्वभूतानामीशः शंभुः प्रजापतिः ४३
यदर्थमसि संप्राप्ता मत्सकाशं वसुंधरे

तदर्थं संनियोक्ष्यामि सर्वानेव दिवौकसः ४४
इत्युक्त्वा स महीं देवो ब्रह्मा राजन्विसृज्य च
आदिदेश तदा सर्वान्विबुधान्भूतकृत्स्वयम् ४५
अस्या भूमेर्निरसितुं भारं भागैः पृथक्पृथक्
अस्यामेव प्रसूयध्वं विरोधायेति चाब्रवीत् ४६
तथैव च समानीय गन्धर्वाप्सरसां गणान्
उवाच भगवान्सर्वानिदं वचनमुत्तमम्
स्वैरंशैः संप्रसूयध्वं यथेष्टं मानुषेष्विति ४७
अथ शक्रादयः सर्वे श्रुत्वा सुरगुरोर्वचः
तथ्यमर्थ्यं च पथ्यं च तस्य ते जगृहुस्तदा ४८
अथ ते सर्वशोंऽशै स्वैर्गन्तुं भूमिं कृतक्षणाः
नारायणममित्रघ्नं वैकुण्ठमुपचक्रमुः ४९
यः स चक्रगदापाणिः पीतवासासितप्रभः
पद्मनाभः सुरारिघ्नः पृथुचार्वञ्चितेक्षणः ५०
तं भुवः शोधनायेन्द्र उवाच पुरुषोत्तमम्
अंशेनावतरस्वेति तथेत्याह च तं हरिः ५१
इति श्रीमहाभारते आदिपर्वणि अष्टपञ्चाशत्तमोऽध्यायः ५८

## एकोनषष्टितमोऽध्यायः

वैशम्पायन उवाच
अथ नारायणेनेन्द्रश्चकार सह संविदम्
अवतर्तुं महीं स्वर्गादंशतः सहितः सुरैः १
आदिश्य च स्वयं शक्रः सर्वानेव दिवौकसः
निर्जगाम पुनस्तस्मात्क्षयान्नारायणस्य ह २
तेऽमरारिविनाशाय सर्वलोकहिताय च
अवतेरुः क्रमेणेमां महीं स्वर्गाद्दिवौकसः ३
ततो ब्रह्मर्षिवंशेषु पार्थिवर्षिकुलेषु च
जज्ञिरे राजशार्दूल यथाकामं दिवौकसः ४
दानवान्राक्षसांश्चैव गन्धर्वान्पन्नगांस्तथा
पुरुषादानि चान्यानि जघ्नुः सत्त्वान्यनेकशः ५

दानवा राक्षसाश्चैव गन्धर्वाः पन्नगास्तथा
न तान्बलस्थान्बाल्येऽपि जघ्नुर्भरतसत्तम ६
जनमेजय उवाच
देवदानवसङ्घानां गन्धर्वाप्सरसां तथा
मानवानां च सर्वेषां तथा वै यक्षरक्षसाम् ७
श्रोतुमिच्छामि तत्त्वेन संभवं कृत्स्नमादितः
प्राणिनां चैव सर्वेषां सर्वशः सर्वविद्ध्यसि ८
वैशम्पायन उवाच
हन्त ते कथयिष्यामि नमस्कृत्वा स्वयंभुवे
सुरादीनामहं सम्यग्लोकानां प्रभवाप्ययम् ९
ब्रह्मणो मानसाः पुत्रा विदिताः षण्महर्षयः
मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः १०
मरीचेः कश्यपः पुत्रः कश्यपात्तु इमाः प्रजाः
प्रजज्ञिरे महाभागा दक्षकन्यास्त्रयोदश ११
अदितिर्दितिर्दनुः काला अनायुः सिंहिका मुनिः
क्रोधा प्रावा अरिष्टा च विनता कपिला तथा १२
कद्रूश्च मनुजव्याघ्र दक्षकन्यैव भारत
एतासां वीर्यसंपन्नं पुत्रपौत्रमनन्तकम् १३
अदित्यां द्वादशादित्याः संभूता भुवनेश्वराः
ये राजन्नामतस्तांस्ते कीर्तयिष्यामि भारत १४
धाता मित्रोऽयमा शक्रो वरुणश्चांश एव च
भगो विवस्वान्पूषा च सविता दशमस्तथा १५
एकादशस्तथा त्वष्टा विष्णुर्द्वादश उच्यते
जघन्यजः स सर्वेषामादित्यानां गुणाधिकः १६
एक एव दितेः पुत्रो हिरण्यकशिपुः स्मृतः
नाम्ना ख्यातास्तु तस्येमे पुत्राः पञ्च महात्मनः १७
प्रह्रादः पूर्वजस्तेषां संह्रादस्तदनन्तरम्
अनुह्रादस्तृतीयोऽभूत्तस्माच्च शिबिबाष्कलौ १८
प्रह्रादस्य त्रयः पुत्राः ख्याताः सर्वत्र भारत
विरोचनश्च कुम्भश्च निकुम्भश्चेति विश्रुताः १९

विरोचनस्य पुत्रोऽभूद्बलिरेकः प्रतापवान्
बलेश्च प्रथितः पुत्रो बाणो नाम महासुरः २०
चत्वारिंशद्दनोः पुत्राः ख्याताः सर्वत्र भारत
तेषां प्रथमजो राजा विप्रचित्तिर्महायशाः २१
शम्बरो नमुचिश्चैव पुलोमा चेति विश्रुतः
असिलोमा च केशी च दुर्जयश्चैव दानवः २२
अयःशिरा अश्वशिरा अयःशंकुश्च वीर्यवान्
तथा गगनमूर्धा च वेगवान्केतुमांश्च यः २३
स्वर्भानुरश्वोऽश्वपतिर्वृषपर्वाजकस्तथा
अश्वग्रीवश्च सूक्ष्मश्च तुहुण्डश्च महासुरः २४
इसृपा एकचक्रश्च विरूपाक्षो हराहरौ
निचन्द्रश्च निकुम्भश्च कुपथः कापथस्तथा २५
शरभः शलभश्चैव सूर्याचन्द्रमसौ तथा
इति ख्याता दनोर्वंशे दानवाः परिकीर्तिताः
अन्यौ तु खलु देवानां सूर्याचन्द्रमसौ स्मृतौ २६
इमे च वंशे प्रथिताः सत्त्ववन्तो महाबलाः
दनुपुत्रा महाराज दश दानवपुंगवाः २७
एकाक्षो मृतपा वीरः प्रलम्बनरकावपि
वातापिः शत्रुतपनः शठश्चैव महासुरः २८
गविष्ठश्च दनायुश्च दीर्घजिह्वश्च दानवः
असंख्येयाः स्मृतास्तेषां पुत्राः पौत्राश्च भारत २९
सिंहिका सुषुवे पुत्रं राहुं चन्द्रार्कमर्दनम्
सुचन्द्रं चन्द्रहन्तारं तथा चन्द्रविमर्दनम् ३०
क्रूरस्वभावं क्रूरायाः पुत्रपौत्रमनन्तकम्
गणः क्रोधवशो नाम क्रूरकर्मारिमर्दनः ३१
अनायुषः पुनः पुत्राश्चत्वारोऽसुरपुङ्गवाः
विक्षरो बलवीरौ च वृत्रश्चैव महासुरः ३२
कालायाः प्रथिताः पुत्राः कालकल्पाः प्रहारिणः
भुवि ख्याता महावीर्या दानवेषु परंतपाः ३३
विनाशनश्च क्रोधश्च हन्ता क्रोधस्य चापरः

क्रोधशत्रुस्तथैवान्यः कालेया इति विश्रुताः ३४
असुराणामुपाध्यायः शुक्रस्त्वृषिसुतोऽभवत्
ख्याताश्चोशनसः पुत्राश्चत्वारोऽसुरयाजकाः ३५
त्वष्टावरस्तथात्रिश्च द्वावन्यौ मन्त्रकर्मिणौ
तेजसा सूर्यसंकाशा ब्रह्मलोकप्रभावनाः ३६
इत्येष वंशप्रभवः कथितस्ते तरस्विनाम्
असुराणां सुराणां च पुराणे संश्रुतो मया ३७
एतेषां यदपत्यं तु न शक्यं तदशेषतः
प्रसंख्यातुं महीपाल गुणभूतमनन्तकम् ३८
तार्क्ष्यश्चारिष्टनेमिश्च तथैव गरुडारुणौ
आरुणिर्वारुणिश्चैव वैनतेया इति स्मृताः ३९
शेषोऽनन्तो वासुकिश्च तक्षकश्च भुजङ्गमः
कूर्मश्च कुलिकश्चैव काद्रवेया महाबलाः ४०
भीमसेनोग्रसेनौ च सुपर्णो वरुणस्तथा
गोपतिर्धृतराष्ट्रश्च सूर्यवर्चाश्च सप्तमः ४१
पत्रवानर्कपर्णश्च प्रयुतश्चैव विश्रुतः
भीमश्चित्ररथश्चैव विख्यातः सर्वविद्वशी ४२
तथा शालिशिरा राजन्प्रद्युम्नश्च चतुर्दशः
कलि पञ्चदशश्चैव नारदश्चैव षोडशः
इत्येते देवगन्धर्वा मौनेयाः परिकीर्तिताः ४३
अतस्तु भूतान्यन्यानि कीर्तयिष्यामि भारत
अनवद्यामनुवशामनूनामरुणां प्रियाम्
अनूपां सुभगां भासीमिति प्रावा व्यजायत ४४
सिद्धः पूर्णश्च बर्ही च पूर्णाशश्च महायशाः
ब्रह्मचारी रतिगुणः सुपर्णश्चैव सप्तमः ४५
विश्वावसुश्च भानुश्च सुचन्द्रो दशमस्तथा
इत्येते देवगन्धर्वाः प्रावेयाः परिकीर्तिताः ४६
इमं त्वप्सरसां वंशं विदितं पुण्यलक्षणम्
प्रावासूत महाभागा देवी देवर्षितः पुरा ४७
अलम्बुसा मिश्रकेशी विद्युत्पर्णा तुलानघा

अरुणा रक्षिता चैव रम्भा तद्वन्मनोरमा ४८
असिता च सुबाहुश्च सुव्रता सुभुजा तथा
सुप्रिया चातिबाहुश्च विख्यातौ च हहाहुहू
तुम्बरुश्चेति चत्वारः स्मृता गन्धर्वसत्तमाः ४९
अमृतं ब्राह्मणा गावो गन्धर्वाप्सरसस्तथा
अपत्यं कपिलायास्तु पुराणे परिकीर्तितम् ५०
इति ते सर्वभूतानां संभवः कथितो मया
यथावत्परिसंख्यातो गंधर्वाप्सरसां तथा ५१
भुजगानां सुपर्णानां रुद्राणां मरुतां तथा
गवां च ब्राह्मणानां च श्रीमतां पुण्यकर्मणाम् ५२
आयुष्यश्चैव पुण्यश्च धन्यः श्रुतिसुखावहः
श्रोतव्यश्चैव सततं श्राव्यश्चैवानसूयता ५३
इमं तु वंशं नियमेन यः पठेन्महात्मनां ब्राह्मणदेवसंनिधौ
अपत्यलाभं लभते स पुष्कलं श्रियं यशः प्रेत्य च शोभनां गतिम् ५४
इति श्रीमहाभारते आदिपर्वणि एकोनषष्ठितमोऽध्यायः ५९

षष्ठितमोऽध्यायः

वैशम्पायन उवाच
ब्रह्मणो मानसाः पुत्रा विदिताः षण्महर्षयः
एकादश सुताः स्थाणोः ख्याताः परममानसाः १
मृगव्याधश्च शर्वश्च निरृतिश्च महायशाः
अजैकपादहिर्बुध्न्यः पिनाकी च परंतपः २
दहनोऽथेश्वरश्चैव कपाली च महाद्युतिः
स्थाणुर्भवश्च भगवान्रुद्रा एकादश स्मृताः ३
मरीचिरङ्गिरा अत्रिः पुलस्त्यः पुलहः क्रतुः
षडेते ब्रह्मणः पुत्रा वीर्यवन्तो महर्षयः ४
त्रयस्त्वङ्गिरसः पुत्रा लोके सर्वत्र विश्रुताः
बृहस्पतिरुतथ्यश्च संवर्तश्च धृतव्रताः ५
अत्रेस्तु बहवः पुत्राः श्रूयन्ते मनुजाधिप
सर्वे वेदविदः सिद्धाः शान्तात्मानो महर्षयः ६

राक्षसास्तु पुलस्त्यस्य वानराः किंनरास्तथा
पुलहस्य मृगाः सिंहा व्याघ्राः किंपुरुषास्तथा ७
क्रतोः क्रतुसमाः पुत्राः पतङ्गसहचारिणः
विश्रुतास्त्रिषु लोकेषु सत्यव्रतपरायणाः ८
दक्षस्त्वजायताङ्गुष्ठाद्दक्षिणाद्भगवानृषिः
ब्रह्मणः पृथिवीपाल पुत्रः पुत्रवतां वरः ९
वामादजायताङ्गुष्ठाद्भार्या तस्य महात्मनः
तस्यां पञ्चाशतं कन्याः स एवाजनयन्मुनिः १०
ताः सर्वास्त्वनवद्याङ्ग्यः कन्याः कमललोचनाः
पुत्रिकाः स्थापयामास नष्टपुत्रः प्रजापतिः ११
ददौ स दश धर्माय सप्तविंशतिमिन्दवे
दिव्येन विधिना राजन्कश्यपाय त्रयोदश १२
नामतो धर्मपत्न्यस्ताः कीर्त्यमाना निबोध मे
कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया तथा १३
बुद्धिर्लज्जा मतिश्चैव पत्न्यो धर्मस्य ता दश
द्वाराण्येतानि धर्मस्य विहितानि स्वयंभुवा १४
सप्तविंशति सोमस्य पत्न्यो लोके परिश्रुताः
कालस्य नयने युक्ताः सोमपत्न्यः शुभव्रताः
सर्वा नक्षत्रयोगिन्यो लोकयात्राविधौ स्थिताः १५
पितामहो मुनिर्देवस्तस्य पुत्रः प्रजापतिः
तस्याष्टौ वसवः पुत्रास्तेषां वक्ष्यामि विस्तरम् १६
धरो ध्रुवश्च सोमश्च अहश्चैवानिलोऽनलः
प्रत्यूषश्च प्रभासश्च वसवोऽष्टाविति स्मृताः १७
धूम्रायाश्च धरः पुत्रो ब्रह्मविद्यो ध्रुवस्तथा
चन्द्रमास्तु मनस्विन्याः श्वसायाः श्वसनस्तथा १८
रतायाश्चाप्यहः पुत्रः शाण्डिल्याश्च हुताशनः
प्रत्यूषश्च प्रभासश्च प्रभातायाः सुतौ स्मृतौ १९
धरस्य पुत्रो द्रविणो हुतहव्यवहस्तथा
ध्रुवस्य पुत्रो भगवान्कालो लोकप्रकालनः २०
सोमस्य तु सुतो वर्चा वर्चस्वी येन जायते

मनोहरायाः शिशिरः प्राणोऽथ रमणस्तथा २१
अह्नः सुतः स्मृतो ज्योतिः श्रमः शान्तस्तथा मुनिः
अग्नेः पुत्रः कुमारस्तु श्रीमाञ्शरवणालयः २२
तस्य शाखो विशाखश्च नैगमेशश्च पृष्ठजः
कृत्तिकाभ्युपपत्तेश्च कार्तिकेय इति स्मृतः २३
अनिलस्य शिवा भार्या तस्याः पुत्रः पुरोजवः
अविज्ञातगतिश्चैव द्वौ पुत्रावनिलस्य तु २४
प्रत्यूषस्य विदुः पुत्रमृषिं नाम्नाथ देवलम्
द्वौ पुत्रौ देवलस्यापि क्षमावन्तौ मनीषिणौ २५
बृहस्पतेस्तु भगिनी वरस्त्री ब्रह्मचारिणी
योगसिद्धा जगत्सर्वमसक्तं विचरत्युत
प्रभासस्य तु भार्या सा वसूनामष्टमस्य ह २६
विश्वकर्मा महाभागो जज्ञे शिल्पप्रजापतिः
कर्ता शिल्पसहस्राणां त्रिदशानां च वर्धकिः २७
भूषणानां च सर्वेषां कर्ता शिल्पवतां वरः
यो दिव्यानि विमानानि देवतानां चकार ह २८
मनुष्याश्चोपजीवन्ति यस्य शिल्पं महात्मनः
पूजयन्ति च यं नित्यं विश्वकर्माणमव्ययम् २९
स्तनं तु दक्षिणं भित्त्वा ब्रह्मणो नरविग्रहः
निःसृतो भगवान्धर्मः सर्वलोकसुखावहः ३०
त्रयस्तस्य वराः पुत्राः सर्वभूतमनोहराः
शमः कामश्च हर्षश्च तेजसा लोकधारिणः ३१
कामस्य तु रतिर्भार्या शमस्य प्राप्तिरङ्गना
नन्दी तु भार्या हर्षस्य यत्र लोकाः प्रतिष्ठिताः ३२
मरीचेः कश्यपः पुत्रः कश्यपस्य सुरासुराः
जज्ञिरे नृपशार्दूल लोकानां प्रभवस्तु सः ३३
त्वाष्ट्री तु सवितुर्भार्या वडवारूपधारिणी
असूयत महाभागा सान्तरिक्षेऽश्विनावुभौ ३४
द्वादशैवादितेः पुत्राः शक्रमुख्या नराधिप
तेषामवरजो विष्णुर्यत्र लोकाः प्रतिष्ठिताः ३५

त्रयस्त्रिंशत इत्येते देवास्तेषामहं तव
अन्वयं संप्रवक्ष्यामि पक्षैश्च कुलतो गणान् ३६
रुद्राणामपरः पक्षः साध्यानां मरुतां तथा
वसूनां भार्गवं विद्याद्विश्वेदेवांस्तथैव च ३७
वैनतेयस्तु गरुडो बलवानरुणस्तथा
बृहस्पतिश्च भगवानादित्येष्वेव गण्यते ३८
अश्विभ्यां गुह्यकान्विद्धि सर्वौषध्यस्तथा पशून्
एष देवगणो राजन्कीर्तितस्तेऽनुपूर्वशः
यं कीर्तयित्वा मनुजः सर्वपापैः प्रमुच्यते ३९
ब्रह्मणो हृदयं भित्त्वा निःसृतो भगवान्भृगुः
भृगोः पुत्रः कविर्विद्वाञ्शुक्रः कविसुतो ग्रहः ४०
त्रैलोक्यप्राणयात्रार्थे वर्षावर्षे भयाभये
स्वयंभुवा नियुक्तः सन्भुवनं परिधावति ४१
योगाचार्यो महाबुद्धिर्दैत्यानामभवद्गुरुः
सुराणां चापि मेधावी ब्रह्मचारी यतव्रतः ४२
तस्मिन्नियुक्ते विभुना योगक्षेमाय भार्गवे
अन्यमुत्पादयामास पुत्रं भृगुरनिन्दितम् ४३
च्यवनं दीप्ततपसं धर्मात्मानं मनीषिणम्
यः स रोषाच्च्युतो गर्भान्मातुर्मोक्षाय भारत ४४
आरुषी तु मनोः कन्या तस्य पत्नी मनीषिणः
और्वस्तस्यां समभवदूरुं भित्त्वा महायशाः
महातपा महातेजा बाल एव गुणैर्युतः ४५
ऋचीकस्तस्य पुत्रस्तु जमदग्निस्ततोऽभवत्
जमदग्नेस्तु चत्वार आसन्पुत्रा महात्मनः ४६
रामस्तेषां जघन्योऽभूदजघन्यैर्गुणैर्युतः
सर्वशस्त्रास्त्रकुशलः क्षत्रियान्तकरो वशी ४७
और्वस्यासीत्पुत्रशतं जमदग्निपुरोगमम्
तेषां पुत्रसहस्राणि बभूवुर्भृगुविस्तरः ४८
द्वौ पुत्रौ ब्रह्मणस्त्वन्यौ ययोस्तिष्ठति लक्षणम्
लोके धाता विधाता च यौ स्थितौ मनुना सह ४९

तयोरेव स्वसा देवी लक्ष्मीः पद्मगृहा शुभा
तस्यास्तु मानसाः पुत्रास्तुरगा व्योमचारिणः ५०
वरुणस्य भार्या ज्येष्ठा तु शुक्राद्देवी व्यजायत
तस्याः पुत्रं बलं विद्धि सुरां च सुरनन्दिनीम् ५१
प्रजानामन्नकामानामन्योन्यपरिभक्षणात्
अधर्मस्तत्र संजातः सर्वभूतविनाशनः ५२
तस्यापि निर्ऋतिर्भार्या नैर्ऋता येन राक्षसाः
घोरास्तस्यास्त्रयः पुत्राः पापकर्मरताः सदा
भयो महाभयश्चैव मृत्युर्भूतान्तकस्तथा ५३
काकीं श्येनीं च भासीं च धृतराष्ट्रीं तथा शुकीम्
ताम्रा तु सुषुवे देवी पञ्चैता लोकविश्रुताः ५४
उलूकान्सुषुवे काकी श्येनी श्येनान्व्यजायत
भासी भासानजनयद्गृध्रांश्चैव जनाधिप ५५
धृतराष्ट्री तु हंसांश्च कलहंसांश्च सर्वशः
चक्रवाकांश्च भद्रं ते प्रजज्ञे सा तु भामिनी ५६
शुकी विजज्ञे धर्मज्ञ शुकानेव मनस्विनी
कल्याणगुणसंपन्ना सर्वलक्षणपूजिता ५७
नव क्रोधवशा नारीः प्रजज्ञेऽप्यात्मसंभवाः
मृगीं च मृगमन्दां च हरिं भद्रमनामपि ५८
मातङ्गीमथ शार्दूलद्यं श्वेतां सुरभिमेव च
सर्वलक्षणसंपन्नां सुरसां च यशस्विनीम् ५९
अपत्यं तु मृगाः सर्वे मृग्या नरवरात्मज
ऋक्षाश्च मृगमन्दायाः सृमराश्चमरा अपि ६०
ततस्त्वैरावतं नागं जज्ञे भद्रमना सुतम्
एरावतः सुतस्तस्या देवनागो महागजः ६१
हर्याश्च हरयोऽपत्यं वानराश्च तरस्विनः
गोलाङ्गूलांश्च भद्रं ते हर्याः पुत्रान्प्रचक्षते ६२
प्रजज्ञे त्वथ शार्दूली सिंहान्व्याघ्रांश्च भारत
द्वीपिनश्च महाभाग सर्वानेव न संशयः ६३
मातङ्ग्यास्त्वथ मातङ्गा अपत्यानि नराधिप

दिशागजं तु श्वेताख्यं श्वेताजनयदाशुगम् ६४
तथा दुहितरौ राजन्सुरभिर्वै व्यजायत
रोहिणीं चैव भद्रं ते गन्धर्वीं तु यशस्विनीम्
रोहिण्यां जज्ञिरे गावो गन्धर्व्यां वाजिनः सुताः ६५
सुरसाजनयन्नागान्राजन्कद्रूश्च पन्नगान्
सप्त पिण्डफलान्वृक्षाननलापि व्यजायत
अनलायाः शुकी पुत्री कद्र्वास्तु सुरसा सुता ६६
अरुणस्य भार्या श्येनी तु वीर्यवन्तौ महाबलौ
संपातिं जनयामास तथैव च जटायुषम्
द्वौ पुत्रौ विनतायास्तु विख्यातौ गरुडारुणौ ६७
इत्येष सर्वभूतानां महतां मनुजाधिप
प्रभवः कीर्तितः सम्यङ्मया मतिमतां वर ६८
यं श्रुत्वा पुरुषः सम्यक्पूतो भवति पाप्मनः
सर्वज्ञतां च लभते गतिमग्र्यां च विन्दति ६९
इति श्रीमहाभारते आदिपर्वणि षष्ठितमोऽध्यायः ६०

एकषष्ठितमोऽध्यायः

जनमेजय उवाच
देवानां दानवानां च यक्षाणामथ रक्षसाम्
अन्येषां चैव भूतानां सर्वेषां भगवन्नहम् १
श्रोतुमिच्छामि तत्त्वेन मानुषेषु महात्मनाम्
जन्म कर्म च भूतानामेतेषामनुपूर्वशः २
वैशम्पायन उवाच
मानुषेषु मनुष्येन्द्र संभूता ये दिवौकसः
प्रथमं दानवांश्चैव तांस्ते वक्ष्यामि सर्वशः ३
विप्रचित्तिरिति ख्यातो य आसीद्दानवर्षभः
जरासन्ध इति ख्यातः स आसीन्मनुजर्षभः ४
दितेः पुत्रस्तु यो राजन्हिरण्यकशिपुः स्मृतः
स यज्ञे मानुषे लोके शिशुपालो नरर्षभः ५
संह्राद इति विख्यातः प्रह्रादस्यानुजस्तु यः

स शल्य इति विख्यातो जज्ञे बाह्लीकपुङ्गवः ६
अनुह्लादस्तु तेजस्वी योऽभूत्ख्यातो जघन्यजः
धृष्टकेतुरिति ख्यातः स आसीन्मनुजेश्वरः ७
यस्तु राजञ्शिबिर्नाम दैतेयः परिकीर्तितः
द्रुम इत्यभिविख्यातः स आसीद्भुवि पार्थिवः ८
वाष्कलो नाम यस्तेषामासीदसुरसत्तमः
भगदत्त इति ख्यातः स आसीन्मनुजेश्वरः ९
अयःशिरा अश्वशिरा अयःशङ्कुश्च वीर्यवान्
तथा गगनमूर्धा च वेगवांश्चात्र पञ्चमः १०
पञ्चैते जज्ञिरे राजन्वीर्यवन्तो महासुराः
केकयेषु महात्मानः पार्थिवर्षभसत्तमाः ११
केतुमानिति विख्यातो यस्ततोऽन्य प्रतापवान्
अमितौजा इति ख्यातः पृथिव्यां सोऽभवन्नृपः १२
स्वर्भानुरिति विख्यातः श्रीमान्यस्तु महासुरः
उग्रसेन इति ख्यात उग्रकर्मा नराधिपः १३
यस्त्वश्व इति विख्यातः श्रीमानासीन्महासुरः
अशोको नाम राजासीन्महावीर्यपराक्रमः १४
तस्मादवरजो यस्तु राजन्नश्वपतिः स्मृतः
दैतेयः सोऽभवद्राजा हार्दिक्यो मनुजर्षभः १५
वृषपर्वेति विख्यातः श्रीमान्यस्तु महासुरः
दीर्घप्रज्ञ इति ख्यातः पृथिव्यां सोऽभवन्नृपः १६
अजकस्त्वनुजो राजन्य आसीद्वृषपर्वणः
स मल्ल इति विख्यातः पृथिव्यामभवन्नृपः १७
अश्वग्रीव इति ख्यातः सत्त्ववान्यो महासुरः
रोचमान इति ख्यातः पृथिव्यां सोऽभवन्नृपः १८
सूक्ष्मस्तु मतिमान्राजन्कीर्तिमान्यः प्रकीर्तितः
बृहन्त इति विख्यातः क्षितावासीत्स पार्थिवः १९
तुहुण्ड इति विख्यातो य आसीदसुरोत्तमः
सेनाबिन्दुरिति ख्यातः स बभूव नराधिपः २०
इसृपा नाम यस्तेषामसुराणां बलाधिकः

पापजिन्नाम राजासीद्भुवि विख्यातविक्रमः २१
एकचक्र इति ख्यात आसीद्यस्तु महासुरः
प्रतिविन्ध्य इति ख्यातो बभूव प्रथितः क्षितौ २२
विरूपाक्षस्तु दैतेयश्चित्रयोधी महासुरः
चित्रवर्मेति विख्यातः क्षितावासीत्स पार्थिवः २३
हरस्त्वरिहरो वीर आसीद्यो दानवोत्तमः
सुवास्तुरिति विख्यातः स जज्ञे मनुजर्षभः २४
अहरस्तु महातेजाः शत्रुपक्षक्षयंकरः
बाह्लीको नाम राजा स बभूव प्रथितः क्षितौ २५
निचन्द्रश्चन्द्रवक्त्रश्च य आसीदसुरोत्तमः
मुञ्जकेश इति ख्यातः श्रीमानासीत्स पार्थिवः २६
निकुम्भस्त्वजितः संख्ये महामतिरजायत
भूमौ भूमिपतिः श्रेष्ठो देवाधिप इति स्मृतः २७
शरभो नाम यस्तेषां दैतेयानां महासुरः
पौरवो नाम राजर्षिः स बभूव नरेष्विह २८
द्वितीयः शलभस्तेषामसुराणां बभूव यः
प्रह्लादो नाम बाह्लीकः स बभूव नराधिपः २९
चन्द्रस्तु दितिजश्रेष्ठो लोके ताराधिपोत्तमः
ऋषिको नाम राजर्षिर्बभूव नृपसत्तमः ३०
मृतपा इति विख्यातो य आसीदसुरोत्तमः
पश्चिमानूपकं विद्धि तं नृपं नृपसत्तम ३१
गविष्ठस्तु महातेजा यः प्रख्यातो महासुरः
द्रुमसेन इति ख्यातः पृथिव्यां सोऽभवन्नृपः ३२
मयूर इति विख्यातः श्रीमान्यस्तु महासुरः
स विश्व इति विख्यातो बभूव पृथिवीपतिः ३३
सुपर्ण इति विख्यातस्तस्मादवरजस्तु यः
कालकीर्तिरिति ख्यातः पृथिव्यां सोऽभवन्नृपः ३४
चन्द्रहन्तेति यस्तेषां कीर्तितः प्रवरोऽसुरः
शुनको नाम राजर्षिः स बभूव नराधिपः ३५
विनाशनस्तु चन्द्रस्य य आख्यातो महासुरः

जानकिर्नाम राजर्षिः स बभूव नराधिपः ३६
दीर्घजिह्वस्तु कौरव्य य उक्तो दानवर्षभः
काशिराज इति ख्यातः पृथिव्यां पृथिवीपतिः ३७
ग्रहं तु सुषुवे यं तं सिंही चन्द्रार्कमर्दनम्
क्राथ इत्यभिविख्यातः सोऽभवन्मनुजाधिपः ३८
अनायुषस्तु पुत्राणां चतुर्णां प्रवरोऽसुरः
विक्षरो नाम तेजस्वी वसुमित्रोऽभवन्नृपः ३९
द्वितीयो विक्षराद्यस्तु नराधिप महासुरः
पांसुराष्ट्राधिपइतिविश्रुतः सोऽभवन्नृपः ४०
बलवीर इति ख्यातो यस्त्वासीदसुरोत्तमः
पौण्ड्रमत्स्यक इत्येव स बभूव नराधिपः ४१
वृत्र इत्यभिविख्यातो यस्तु राजन्महासुरः
मणिमान्नाम राजर्षिः स बभूव नराधिपः ४२
क्रोधहन्तेति यस्तस्य बभूवावरजोऽसुरः
दण्ड इत्यभिविख्यातः स आसीन्नृपतिः क्षितौ ४३
क्रोधवर्धन इत्येव यस्त्वन्यः परिकीर्तितः
दण्डधार इति ख्यातः सोऽभवन्मनुजेश्वरः ४४
कालकायास्तु ये पुत्रास्तेषामष्टौ नराधिपाः
जज्ञिरे राजशार्दूल शार्दूलसमविक्रमाः ४५
मगधेषु जयत्सेनः श्रीमानासीत्स पार्थिवः
अष्टानां प्रवरस्तेषां कालेयानां महासुरः ४६
द्वितीयस्तु ततस्तेषां श्रीमान्हरिहयोपमः
अपराजित इत्येव स बभूव नराधिपः ४७
तृतीयस्तु महाराज महाबाहुर्महासुरः
निषादाधिपतिर्जज्ञे भुवि भीमपराक्रमः ४८
तेषामन्यतमो यस्तु चतुर्थः परिकीर्तितः
श्रेणिमानिति विख्यातः क्षितौ राजर्षिसत्तमः ४९
पञ्चमस्तु बभूवैषां प्रवरो यो महासुरः
महौजा इति विख्यातो बभूवेह परंतपः ५०
षष्ठस्तु मतिमान्यो वै तेषामासीन्महासुरः

अभीरुरिति विख्यातः क्षितौ राजर्षिसत्तमः ५१
समुद्रसेनस्तु नृपस्तेषामेवाभवद्गणात्
विश्रुतः सागरान्तायां क्षितौ धर्मार्थतत्त्ववित् ५२
बृहन्नामाष्टमस्तेषां कालेयानां परंतपः
बभूव राजन्धर्मात्मा सर्वभूतहिते रतः ५३
गणः क्रोधवशो नाम यस्ते राजन्प्रकीर्तितः
ततः संजज्ञिरे वीराः क्षिताविह नराधिपाः ५४
नन्दिकः कर्णवेष्टश्च सिद्धार्थः कीटकस्तथा
सुवीरश्च सुबाहुश्च महावीरोऽथ बाह्लिकः ५५
क्रोधो विचित्यः सुरसः श्रीमान्नीलश्च भूमिपः
वीरधामा च कौरव्य भूमिपालश्च नामतः ५६
दन्तवक्त्रश्च नामासीद्दुर्जयश्चैव नामतः
रुक्मी च नृपशार्दूलो राजा च जनमेजयः ५७
आषाढो वायुवेगश्च भूरितेजास्तथैव च
एकलव्यः सुमित्रश्च वाटधानोऽथ गोमुखः ५८
कारूषकाश्च राजानः क्षेमधूर्तिस्तथैव च
श्रुतायुरुद्धवश्चैव बृहत्सेनस्तथैव च ५९
क्षेमोग्रतीर्थः कुहरः कलिङ्गेषु नराधिपः
मतिमांश्च मनुष्येन्द्र ईश्वरश्चेति विश्रुतः ६०
गणात्क्रोधवशादेवं राजपूगोऽभवत्क्षितौ
जातः पुरा महाराज महाकीर्तिर्महाबलः ६१
यस्त्वासीद्देवको नाम देवराजसमद्युतिः
स गन्धर्वपतिर्मुख्यः क्षितौ जज्ञे नराधिपः ६२
बृहस्पतेर्बृहत्कीर्तेर्देवर्षेर्विद्धि भारत
अंशाद्द्रोणं समुत्पन्नं भारद्वाजमयोनिजम् ६३
धन्विनां नृपशार्दूल यः स सर्वास्त्रवित्तमः
बृहत्कीर्तिर्महातेजाः संजज्ञे मनुजेष्विह ६४
धनुर्वेदे च वेदे च यं तं वेदविदो विदुः
वरिष्ठमिन्द्रकर्माणं द्रोणं स्वकुलवर्धनम् ६५
महादेवान्तकाभ्यां च कामात्क्रोधाच्च भारत

एकत्वमुपपन्नानां जज्ञे शूरः परंतपः ६६
अश्वत्थामा महावीर्यः शत्रुपक्षक्षयंकरः
वीरः कमलपत्राक्षः क्षितावासीन्नराधिप ६७
जज्ञिरे वसवस्त्वष्टौ गङ्गायां शन्तनोः सुताः
वसिष्ठस्य च शापेन नियोगाद्वासवस्य च ६८
तेषामवरजो भीष्मः कुरूणामभयंकरः
मतिमान्वेदविद्वाग्मी शत्रुपक्षक्षयंकरः ६९
जामदग्न्येन रामेण यः स सर्वविदां वरः
अयुध्यत महातेजा भार्गवेण महात्मना ७०
यस्तु राजन्कृपो नाम ब्रह्मर्षिरभवत्क्षितौ
रुद्राणां तं गणाद्विद्धि संभूतमतिपौरुषम् ७१
शकुनिर्नाम यस्त्वासीद्राजा लोके महारथः
द्वापरं विद्धि तं राजन्संभूतमरिमर्दनम् ७२
सात्यकिः सत्यसन्धस्तु योऽसौ वृष्णिकुलोद्वहः
पक्षात्स जज्ञे मरुतां देवानामरिमर्दनः ७३
द्रुपदश्चापि राजर्षिस्तत एवाभवद्गणात्
मानुषे नृप लोकेऽस्मिन्सर्वशस्त्रभृतां वरः ७४
ततश्च कृतवर्माणं विद्धि राजञ्जनाधिपम्
जातमप्रतिकर्माणं क्षत्रियर्षभसत्तमम् ७५
मरुतां तु गणाद्विद्धि संजातमरिमर्दनम्
विराटं नाम राजर्षिं परराष्ट्रप्रतापनम् ७६
अरिष्टायास्तु यः पुत्रो हंस इत्यभिविश्रुतः
स गन्धर्वपतिर्जज्ञे कुरुवंशविवर्धनः ७७
धृतराष्ट्र इति ख्यातः कृष्णद्वैपायनादपि
दीर्घबाहुर्महातेजाः प्रज्ञाचक्षुर्नराधिपः
मातुर्दोषादृषेः कोपादन्ध एव व्यजायत ७८
अत्रेस्तु सुमहाभागं पुत्रं पुत्रवतां वरम्
विदुरं विद्धि लोकेऽस्मिञ्जातं बुद्धिमतां वरम् ७९
कलेरंशात्तु संजज्ञे भुवि दुर्योधनो नृपः
दुर्बुद्धिर्दुर्मतिश्चैव कुरूणामयशस्करः ८०

जगतो यः स सर्वस्य विद्विष्टः कलिपूरुषः
यः सर्वां घातयामास पृथिवीं पुरुषाधमः
येन वैरं समुद्दीप्तं भूतान्तकरणं महत् ८१
पौलस्त्या भ्रातरः सर्वे जज्ञिरे मनुजेष्विह
शतं दुःशासनादीनां सर्वेषां क्रूरकर्मणाम् ८२
दुर्मुखो दुःसहश्चैव ये चान्ये नानुशब्दिताः
दुर्योधनसहायास्ते पौलस्त्या भरतर्षभ ८३
धर्मस्यांशं तु राजानं विद्धि राजन्युधिष्ठिरम्
भीमसेनं तु वातस्य देवराजस्य चार्जुनम् ८४
अश्विनोस्तु तथैवांशौ रूपेणाप्रतिमौ भुवि
नकुलः सहदेवश्च सर्वलोकमनोहरौ ८५
यः सुवर्चा इति ख्यातः सोमपुत्रः प्रतापवान्
अभिमन्युर्बृहत्कीर्तिरर्जुनस्य सुतोऽभवत् ८६
अग्नेरंशं तु विद्धि त्वं धृष्टद्युम्नं महारथम्
शिखण्डिनमथो राजन्स्त्रीपुंसं विद्धि राक्षसम् ८७
द्रौपदेयाश्च ये पञ्च बभूवुर्भरतर्षभ
विश्वेदेवगणान्राजंस्तान्विद्धि भरतर्षभ ८८
आमुक्तकवचः कर्णो यस्तु जज्ञे महारथः
दिवाकरस्य तं विद्धि देवस्यांशमनुत्तमम् ८९
यस्तु नारायणो नाम देवदेवः सनातनः
तस्यांशो मानुषेष्वासीद्वासुदेवः प्रतापवान् ९०
शेषस्यांशस्तु नागस्य बलदेवो महाबलः
सनत्कुमारं प्रद्युम्नं विद्धि राजन्महौजसम् ९१
एवमन्ये मनुष्येन्द्र बहवोंऽशा दिवौकसाम्
जज्ञिरे वसुदेवस्य कुले कुलविवर्धनाः ९२
गणस्त्वप्सरसां यो वै मया राजन्प्रकीर्तितः
तस्य भागः क्षितौ जज्ञे नियोगाद्वासवस्य च ९३
तानि षोडश देवीनां सहस्राणि नराधिप
बभूवुर्मानुषे लोके नारायणपरिग्रहः ९४
श्रियस्तु भागः संजज्ञे रत्यर्थं पृथिवीतले

द्रुपदस्य कुले कन्या वेदिमध्यादनिन्दिता ९५
नातिह्रस्वा न महती नीलोत्पलसुगन्धिनी
पद्मायताक्षी सुश्रोणी असितायतमूर्धजा ९६
सर्वलक्षणसंपन्ना वैडूर्यमणिसंनिभा
पञ्चानां पुरुषेन्द्राणां चित्तप्रमथिनी रहः ९७
सिद्धिर्धृतिश्च ये देव्यौ पञ्चानां मातरौ तु ते
कुन्ती माद्री च जज्ञाते मतिस्तु सुबलात्मजा ९८
इति देवासुराणां ते गन्धर्वाप्सरसां तथा
अंशावतरणं राजन्राक्षसानां च कीर्तितम् ९९
ये पृथिव्यां समुद्भूता राजानो युद्धदुर्मदाः
महात्मानो यदूनां च ये जाता विपुले कुले १००
धन्यं यशस्यं पुत्रीयमायुष्यं विजयावहम्
इदमंशावतरणं श्रोतव्यमनसूयता १०१
अंशावतरणं श्रुत्वा देवगन्धर्वरक्षसाम्
प्रभवाप्ययवित्प्राज्ञो न कृच्छ्रेष्ववसीदति १०२
इति श्रीमहाभारते आदिपर्वणि एकषष्ठितमोऽध्यायः ६१

द्विषष्ठितमोऽध्यायः

जनमेजय उवाच
त्वत्तः श्रुतमिदं ब्रह्मन्देवदानवरक्षसाम्
अंशावतरणं सम्यग्गन्धर्वाप्सरसां तथा १
इमं तु भूय इच्छामि कुरूणां वंशमादितः
कथ्यमानं त्वया विप्र विप्रर्षिगणसंनिधौ २
वैशम्पायन उवाच
पौरवाणां वंशकरो दुःषन्तो नाम वीर्यवान्
पृथिव्याश्चतुरन्ताया गोप्ता भरतसत्तम ३
चतुर्भागं भुवः कृत्स्नं स भुङ्क्ते मनुजेश्वरः
समुद्रावरणांश्चापि देशान्स समितिंजयः ४
आम्लेच्छाटविकान्सर्वान्स भुङ्क्ते रिपुमर्दनः
रत्नाकरसमुद्रान्तांश्चातुर्वर्ण्यजनावृतान् ५

न वर्णसंकरकरो नाकृष्यकरकृज्जनः
न पापकृत्कश्चिदासीत्तस्मिन्राजनि शासति ६
धर्म्यां रतिं सेवमाना धर्मार्थावभिपेदिरे
तदा नरा नरव्याघ्र तस्मिञ्जनपदेश्वरे ७
नासीच्चोरभयं तात न क्षुधाभयमण्वपि
नासीद्व्याधिभयं चापि तस्मिञ्जनपदेश्वर ८
स्वैर्धर्मै रेमिरे वर्णा दैवे कर्मणि निःस्पृहाः
तमाश्रित्य महीपालमासंश्चैवाकुतोभयाः ९
कालवर्षी च पर्जन्यः सस्यानि फलवन्ति च
सर्वरत्नसमृद्धा च मही वसुमती तदा १०
स चाद्भुतमहावीर्यो वज्रसंहननो युवा
उद्यम्य मन्दरं दोर्भ्यां हरेत्सवनकाननम् ११
धुनष्यथ गदायुद्धे त्सरुप्रहरणेषु च
नागपृष्ठेऽश्वपृष्ठे च बभूव परिनिष्ठितः १२
बले विष्णुसमश्चासीत्तेजसा भास्करोपमः
अक्षुब्धत्वेऽर्णवसमः सहिष्णुत्वे धरासमः १३
संमतः स महीपालः प्रसन्नपुरराष्ट्रवान्
भूयो धर्मपरैर्भावैर्विदितं जनमावसत् १४
इति श्रीमहाभारते आदिपर्वणि द्विषष्ठितमोऽध्यायः ६२

## त्रिषष्ठितमोऽध्यायः

वैशम्पायन उवाच
स कदाचिन्महाबाहुः प्रभूतबलवाहनः
वनं जगाम गहनं हयनागशतैर्वृतः १
खड्गशक्तिधरैर्वी रैर्गदामुसलपाणिभिः
प्रासतोमरहस्तैश्च ययौ योधशतैर्वृतः २
सिंहनादैश्च योधानां शङ्खदुन्दुभिनिस्वनैः
रथनेमिस्वनैश्चापि सनागवरबृंहितैः ३
हेषितस्वनमिश्रैश्च क्ष्वेडितास्फोटितस्वनैः
आसीत्किलकिलाशब्दस्तस्मिन्गच्छति पार्थिवे ४

प्रासादवरशृङ्गस्थाः परया नृपशोभया
ददृशुस्तं स्त्रियस्तत्र शूरमात्मयशस्करम् ५
शक्रोपमममित्रघ्नं परवारणवारणम्
पश्यन्तः स्त्रीगणास्तत्र शस्त्रपाणिं स्म मेनिरे ६
अयं स पुरुषव्याघ्रो रणेऽद्भुतपराक्रमः
यस्य बाहुबलं प्राप्य न भवन्त्यसुहृद्गणाः ७
इति वाचो ब्रुवन्त्यस्ताः स्त्रियः प्रेम्णा नराधिपम्
तुष्टुवुः पुष्पवृष्टीश्च ससृजुस्तस्य मूर्धनि ८
तत्र तत्र च विप्रेन्द्रैः स्तूयमानः समन्ततः
निर्ययौ परया प्रीत्या वनं मृगजिघांसया ९
सुदूरमनुजग्मुस्तं पौरजानपदास्तदा
न्यवर्तन्त ततः पश्चादनुज्ञाता नृपेण ह १०
सुपर्णप्रतिमेनाथ रथेन वसुधाधिपः
महीमापूरयामास घोषेण त्रिदिवं तथा ११
स गच्छन्ददृशे धीमान्नन्दनप्रतिमं वनम्
बिल्वार्कखदिराकीर्णं कपित्थधवसंकुलम् १२
विषमं पर्वतप्रस्थैरश्मभिश्च समावृतम्
निर्जलं निर्मनुष्यं च बहुयोजनमायतम्
मृगसंघैर्वृतं घोरैरन्यैश्चापि वनेचरैः १३
तद्वनं मनुजव्याघ्रः सभृत्यबलवाहनः
लोडयामास दुःषन्तः सूदयन्विविधान्मृगान् १४
बाणगोचरसंप्राप्तांस्तत्र व्याघ्रगणान्बहून्
पातयामास दुःषन्तो निर्बिभेद च सायकैः १५
दूरस्थान्सायकैः कांश्चिदभिनत्स नरर्षभः
अभ्याशमागतांश्चान्यान्खड्गेन निरकृन्तत १६
कांश्चिदेणान्स निर्जघ्ने शक्त्या शक्तिमतां वरः
गदामण्डलतत्त्वज्ञश्चचारामितविक्रमः १७
तोमरैरसिभिश्चापि गदामुसलकर्षणैः
चचार स विनिघ्नन्वै वन्यांस्तत्र मृगद्विजान् १८
राज्ञा चाद्भुतवीर्येण योधैश्च समरप्रियैः

लोडयमानं महारण्यं तत्यजुश्च महामृगाः १९
तत्र विद्रुतसंघानि हतयूथपतीनि च
मृगयूथान्यथौत्सुक्याच्छब्दं चक्रुस्ततस्ततः २०
शुष्कां चापि नदीं गत्वा जलनैराश्यकर्शिताः
व्यायामक्लान्तहृदयाः पतन्ति स्म विचेतसः २१
क्षुत्पिपासापरीताश्च श्रान्ताश्च पतिता भुवि
केचित्तत्र नरव्याघ्रैरभक्ष्यन्त बुभुक्षितैः २२
केचिदग्निमथोत्पाद्य समिध्य च वनेचराः
भक्षयन्ति स्म मांसानि प्रकुट्य विधिवत्तदा २३
तत्र केचिद्गजा मत्ता बलिनः शस्त्रविक्षताः
संकोच्याग्रकरान्भीताः प्रद्रवन्ति स्म वेगिताः २४
शकृन्मूत्रं सृजन्तश्च क्षरन्तः शोणितं बहु
वन्या गजवरास्तत्र ममृदुर्मनुजान्बहून् २५
तद्वनं बलमेघेन शरधारेण संवृतम्
व्यरोचन्महिषाकीर्णं राज्ञा हतमहामृगम् २६
इति श्रीमहाभारते आदिपर्वणि त्रिषष्ठितमोऽध्यायः ६३

## चतुःषष्ठितमोऽध्यायः

वैशम्पायन उवाच
ततो मृगसहस्राणि हत्वा विपुलवाहनः
राजा मृगप्रसङ्गेन वनमन्यद्विवेश ह १
एक एवोत्तमबलः क्षुत्पिपासासमन्वितः
स वनस्यान्तमासाद्य महदीरिणमासदत् २
तच्चाप्यतीत्य नृपतिरुत्तमाश्रमसंयुतम्
मनःप्रह्लादजननं दृष्टिकान्तमतीव च
शीतमारुतसंयुक्तं जगामान्यन्महद्वनम् ३
पुष्पितैः पादपैः कीर्णमतीव सुखशाद्वलम्
विपुलं मधुरारावैर्नादितं विहगैस्तथा ४
प्रवृद्धविटपैर्वृक्षैः सुखच्छायैः समावृतम्
षट्पदाघूर्णितलतं लक्ष्म्या परमयायुतम् ५

नापुष्पः पादपः कश्चिन्नाफलो नापि कराटकी
षट्पदैर्वाप्यनाकीर्णस्तस्मिन्वै काननेऽभवत् ६
विहगैर्नादितं पुष्पैरलंकृतमतीव च
सर्वर्तुकुसुमैर्वृक्षैरतीव सुखशाद्वलम्
मनोरमं महेष्वासो विवेश वनमुत्तमम् ७
मारुतागलितास्तत्र द्रुमाः कुसुमशालिनः
पुष्पवृष्टिं विचित्रां स्म व्यसृजंस्ते पुनः पुनः ८
दिवस्पृशोऽथ संघुष्टाः पक्षिभिर्मधुरस्वरैः
विरेजुः पादपास्तत्र विचित्रकुसुमाम्बराः ९
तेषां तत्र प्रवालेषु पुष्पभारावनामिषु
रुवन्ति रावं विहगाः षट्पदैः सहिता मृदु १०
तत्र प्रदेशांश्च बहून्कुसुमोत्करमरिडतान्
लतागृहपरिक्षिप्तान्मनसः प्रीतिवर्धनान्
संपश्यन्स महातेजा बभूव मुदितस्तदा ११
परस्पराश्लिष्टशाखैः पादपैः कुसुमाचितैः
अशोभत वनं तत्तैर्महेन्द्रध्वजसंनिभैः १२
सुखशीतः सुगन्धी च पुष्परेणुवहोऽनिलः
परिक्रामन्वने वृक्षानुपैतीव रिरंसया १३
एवंगुणसमायुक्तं ददर्श स वनं नृपः
नदीकच्छोद्भवं कान्तमुच्छ्रितध्वजसंनिभम् १४
प्रेक्षमाणो वनं तत्तु सुप्रहृष्टविहङ्गमम्
आश्रमप्रवरं रम्यं ददर्श च मनोरमम् १५
नानावृक्षसमाकीर्णं संप्रज्वलितपावकम्
यतिभिर्वालखिल्यैश्च वृतं मुनिगणान्वितम् १६
अग्न्यागारैश्च बहुभिः पुष्पसंस्तरसंस्तृतम्
महाकच्छैर्बृहद्भिश्च विभ्राजितमतीव च १७
मालिनीमभितो राजन्नदीं पुरायां सुखोदकाम्
नैकपक्षिगणाकीर्णां तपोवनमनोरमाम्
तत्र व्यालमृगान्सौम्यान्पश्यन्प्रीतिमवाप सः १८
तं चाप्यतिरथः श्रीमानाश्रमं प्रत्यपद्यत

देवलोकप्रतीकाशं सर्वतः सुमनोहरम् १९
नदीमाश्रमसंश्लिष्टां पुरायतोयां ददर्श सः
सर्वप्राणभृतां तत्र जननीमिव विष्ठिताम् २०
सचक्रवाकपुलिनां पुष्पफेनप्रवाहिनीम्
सकिंनरगणावासां वानरर्क्षनिषेविताम् २१
पुरायस्वाध्यायसंघुष्टां पुलिनैरुपशोभिताम्
मत्तवारणशार्दूलभुजगेन्द्रनिषेविताम् २२
नदीमाश्रमसंबद्धां दृष्ट्वाश्रमपदं तथा
चकाराभिप्रवेशाय मतिं स नृपतिस्तदा २३
अलंकृतं द्वीपवत्या मालिन्या रम्यतीरया
नरनारायणस्थानं गंगयेवोपशोभितम्
मत्तबर्हिणसंघुष्टं प्रविवेश महद्वनम् २४
तत्स चैत्ररथप्रख्यं समुपेत्य नरेश्वरः
अतीव गुणसंपन्नमनिर्देश्यं च वर्चसा
महर्षिं काश्यपं द्रष्टुमथ कण्वं तपोधनम् २५
रथिनीमश्वसंबाधां पदातिगणसंकुलाम्
अवस्थाप्य वनद्वारि सेनामिदमुवाच सः २६
मुनिं विरजसं द्रष्टुं गमिष्यामि तपोधनम्
काश्यपं स्थीयतामत्र यावदागमनं मम २७
तद्वनं नन्दनप्रख्यमासाद्य मनुजेश्वरः
क्षुत्पिपासे जहौ राजा हर्षं चावाप पुष्कलम् २८
सामात्यो राजलिङ्गानि सोऽपनीय नराधिपः
पुरोहितसहायश्च जगामाश्रममुत्तमम्
दिदृक्षुस्तत्र तमृषिं तपोराशिमथाव्ययम् २९
ब्रह्मलोकप्रतीकाशमाश्रमं सोऽभिवीक्ष्य च
षट्पदोद्गीतसंघुष्टं नानाद्विजगणायुतम् ३०
ऋचो बह्वृचमुख्यैश्च प्रेर्यमाणाः पदक्रमैः
शुश्राव मनुजव्याघ्रो विततेष्विह कर्मसु ३१
यज्ञविद्याङ्गविद्भिश्च क्रमद्भिश्च क्रमानपि
अमितात्मभिः सुनियतैः शुशुभे स तदाश्रमः ३२

अथर्ववेदप्रवराः पूगयाज्ञिकसंमताः
संहितामीरयन्ति स्म पदक्रमयुतां तु ते ३३
शब्दसंस्कारसंयुक्तं ब्रुवद्भिश्चापरैर्द्विजैः
नादितः स बभौ श्रीमान्ब्रह्मलोक इवाश्रमः ३४
यज्ञसंस्कारविद्भिश्च क्रमशिक्षाविशारदैः
न्यायतत्त्वार्थविज्ञानसंपन्नैर्वेदपारगैः ३५
नानावाक्यसमाहारसमवायविशारदैः
विशेषकार्यविद्भिश्च मोक्षधर्मपरायणैः ३६
स्थापनाक्षेपसिद्धान्तपरमार्थज्ञतां गतैः
लोकायतिकमुख्यैश्च समन्तादनुनादितम् ३७
तत्र तत्र च विप्रेन्द्रान्नियतान्संशितव्रतान्
जपहोमपरान्सिद्धान्ददर्श परवीरहा ३८
आसनानि विचित्राणि पुष्पवन्ति महीपतिः
प्रयत्नोपहितानि स्म दृष्ट्वा विस्मयमागमत् ३९
देवतायतनानां च पूजां प्रेक्ष्य कृतां द्विजैः
ब्रह्मलोकस्थमात्मानं मेने स नृपसत्तमः ४०
स काश्यपतपोगुप्तमाश्रमप्रवरं शुभम्
नातृप्यत्प्रेक्षमाणो वै तपोधनगुणैर्युतम् ४१
स काश्यपस्यायतनं महाव्रतैर्वृतं समन्तादृषिभिस्तपोधनैः
विवेश सामात्यपुरोहितोऽरिहा विविक्तमत्यर्थमनोहरं शिवम् ४२
इति श्रीमहाभारते आदिपर्वणि चतुःषष्ठितमोऽध्यायः ६४

## पञ्चषष्ठितमोऽध्यायः

वैशम्पायन उवाच
ततो गच्छन्महाबाहुरेकोऽमात्यान्विसृज्य तान्
नापश्यदाश्रमे तस्मिंस्तमृषिं संशितव्रतम् १
सोऽपश्यमानस्तमृषिं शून्यं दृष्ट्वा तमाश्रमम्
उवाच क इहेत्युच्चैर्वनं संनादयन्निव २
श्रुत्वाथ तस्य तं शब्दं कन्या श्रीरिव रूपिणी
निश्चक्रामाश्रमात्तस्मात्तापसीवेषधारिणी ३

सा तं दृष्ट्वैव राजानं दुःषन्तमसितेक्षणा
स्वागतं त इति क्षिप्रमुवाच प्रतिपूज्य च ४
आसनेनार्चयित्वा च पाद्येनार्घ्येण चैव हि
पप्रच्छानामयं राजन्कुशलं च नराधिपम् ५
यथावदर्चयित्वा सा पृष्ट्वा चानामयं तदा
उवाच स्मयमानेव किं कार्यं क्रियतामिति ६
तामब्रवीत्ततो राजा कन्यां मधुरभाषिणीम्
दृष्ट्वा सर्वानवद्याङ्गीं यथावत्प्रतिपूजितः ७
आगतोऽहं महाभागमृषिं कण्वमुपासितुम्
क्व गतो भगवान्भद्रे तन्ममाचक्ष्व शोभने ८
शकुन्तलोवाच
गतः पिता मे भगवान्फलान्याहर्तुमाश्रमात्
मुहूर्तं संप्रतीक्षस्व द्रक्ष्यस्येनमिहागतम् ९
वैशम्पायन उवाच
अपश्यमानस्तमृषिं तया चोक्तस्तथा नृपः
तां च दृष्ट्वा वरारोहां श्रीमतीं चारुहासिनीम् १०
विभ्राजमानां वपुषा तपसा च दमेन च
रूपयौवनसंपन्नामित्युवाच महीपतिः ११
कासि कस्यासि सुश्रोणि किमर्थं चागता वनम्
एवंरूपगुणोपेता कुतस्त्वमसि शोभने १२
दर्शनादेव हि शुभे त्वया मेऽपहृतं मनः
इच्छामि त्वामहं ज्ञातुं तन्ममाचक्ष्व शोभने १३
एवमुक्ता तदा कन्या तेन राज्ञा तदाश्रमे
उवाच हसती वाक्यमिदं सुमधुराक्षरम् १४
कण्वस्याहं भगवतो दुःषन्त दुहिता मता
तपस्विनो धृतिमतो धर्मज्ञस्य यशस्विनः १५
दुःषन्त उवाच
ऊर्ध्वरेता महाभागो भगवाँल्लोकपूजितः
चलेद्धि वृत्ताद्धर्मोऽपि न चलेत्संशितव्रतः १६
कथं त्वं तस्य दुहिता संभूता वरवर्णिनी

संशयो मे महानत्र तं मे छेत्तुमिहार्हसि १७
शकुन्तलोवाच
यथायमागमो मह्यं यथा चेदमभूत्पुरा
शृणु राजन्यथातत्त्वं यथास्मि दुहिता मुनेः १८
ऋषिः कश्चिदिहागम्य मम जन्माभ्यचोदयत्
तस्मै प्रोवाच भगवान्यथा तच्छृणु पार्थिव १९
तप्यमानः किल पुरा विश्वामित्रो महत्तपः
सुभृशं तापयामास शक्रं सुरगणेश्वरम् २०
तपसा दीप्तवीर्योऽय स्थानान्मां च्यावयेदिति
भीतः पुरंदरस्तस्मान्मेनकामिदमब्रवीत् २१
गुणैर्दिव्यैरप्सरसां मेनके त्वं विशिष्यसे
श्रेयो मे कुरु कल्याणि यत्त्वां वक्ष्यामि तच्छृणु २२
असावादित्यसंकाशो विश्वामित्रो महातपाः
तप्यमानस्तपो घोरं मम कम्पयते मनः २३
मेनके तव भारोऽय विश्वामित्रः सुमध्यमे
संशितात्मा सुदुर्धर्ष उग्रे तपसि वर्तते २४
स मां न च्यावयेत्स्थानात्तं वै गत्वा प्रलोभय
चर तस्य तपोविघ्नं कुरु मे प्रियमुत्तमम् २५
रूपयौवनमाधुर्यचेष्टितस्मितभाषितैः
लोभयित्वा वरारोहे तपसः संनिवर्तय २६
मेनकोवाच
महातेजाः स भगवान्सदैव च महातपाः
कोपनश्च तथा ह्येनं जानाति भगवानपिं २७
तेजसस्तपसश्चैव कोपस्य च महात्मनः
त्वमप्युद्विजसे यस्य नोद्विजेयमहं कथम् २८
महाभागं वसिष्ठं यः पुत्रैरिष्टैर्व्ययोजयत्
क्षत्रे जातश्च यः पूर्वमभवद्ब्राह्मणो बलात् २९
शौचार्थं यो नदीं चक्रे दुर्गमां बहुभिर्जलैः
यां तां पुण्यतमां लोके कौशिकीति विदुर्जनाः ३०
बभार यत्रास्य पुरा काले दुर्गे महात्मनः

दारान्मतङ्गो धर्मात्मा राजर्षिर्व्याधतां गतः ३१
अतीतकाले दुर्भिक्षे यत्रैत्य पुनराश्रमम्
मुनिः पारेति नद्या वै नाम चक्रे तदा प्रभुः ३२
मतङ्गं याजयांचक्रे यत्र प्रीतमनाः स्वयम्
त्वं च सोमं भयाद्यस्य गतः पातुं सुरेश्वर ३३
अति नक्षत्रवंशांश्च क्रुद्धो नक्षत्रसम्पदा
प्रति श्रवणपूर्वाणि नक्षत्राणि ससर्ज यः ३४
एतानि यस्य कर्माणि तस्याहं भृशमुद्विजे
यथा मां न दहेत्क्रुद्धस्तथाज्ञापय मां विभो ३५
तेजसा निर्दहेल्लोकान्कम्पयेद्धरणीं पदा
संक्षिपेच्च महामेरुं तूर्णमावर्तयेत्तथा ३६
तादृशं तपसा युक्तं प्रदीप्तमिव पावकम्
कथमस्मद्विधा बाला जितेन्द्रियमभिस्पृशेत् ३७
हुताशनमुखं दीप्तं सूर्यचन्द्राक्षितारकम्
कालजिह्वं सुरश्रेष्ठ कथमस्मद्विधा स्पृशेत् ३८
यमश्च सोमश्च महर्षयश्च साध्या विश्वे वालखिल्याश्च सर्वे
एतेऽपि यस्योद्विजन्ते प्रभावात्कस्मात्तस्मान्मादृशी नोद्विजेत ३९
त्वयैवमुक्ता च कथं समीपमृषेर्न गच्छेयमहं सुरेन्द्र
रक्षां तु मे चिन्तय देवराज यथा त्वदर्थं रक्षिताहं चरेयम् ४०
कामं तु मे मारुतस्तत्र वासः प्रक्रीडिताया विवृणोतु देव
भवेच्च मे मन्मथस्तत्र कार्ये सहायभूतस्तव देव प्रसादात् ४१
वनाच्च वायुः सुरभिः प्रवायेत्तस्मिन्काले तमृषिं लोभयन्त्याः
तथेत्युक्त्वा विहिते चैव तस्मिंस्ततो ययौ साश्रमं कौशिकस्य ४२
इति श्रीमहाभारते आदिपर्वणि पञ्चषष्ठितमोऽध्यायः ६५

## षट् षष्ठितमोऽध्यायः

शकुन्तलोवाच
एवमुक्तस्तया शक्रः संदिदेश सदागतिम्
प्रातिष्ठत तदा काले मेनका वायुना सह १
अथापश्यद्वरारोहा तपसा दग्धकिल्बिषम्

विश्वामित्रं तपस्यन्तं मेनका भीरुराश्रमे २
अभिवाद्य ततः सा तं प्राक्रीडदृषिसंनिधौ
अपोवाह च वासोऽस्या मारुतः शशिसंनिभम् ३
सागच्छत्त्वरिता भूमिं वासस्तदभिलिङ्गती
उत्स्मयन्तीव सव्रीडं मारुतं वरवर्णिनी ४
गृद्धां वाससि संभ्रान्तां मेनकां मुनिसत्तमः
अनिर्देश्यवयोरूपामपश्यद्विवृतां तदा ५
तस्या रूपगुणं दृष्ट्वा स तु विप्रर्षभस्तदा
चकार भावं संसर्गे तया कामवशं गतः ६
न्यमन्त्रयत चाप्येना सा चाप्यैच्छदनिन्दिता
तौ तत्र सुचिरं कालं वने व्यहरतामुभौ
रममाणौ यथाकामं यथैकदिवसं यथा ७
जनयामास स मुनिर्मेनकायां शकुन्तलाम्
प्रस्थे हिमवतो रम्ये मालिनीमभितो नदीम् ८
जातमुत्सृज्य तं गर्भं मेनका मालिनीमनु
कृतकार्या ततस्तूर्णमगच्छच्छक्रसंसदम् ९
तं वने विजने गर्भं सिंहव्याघ्रसमाकुले
दृष्ट्वा शयानं शकुनाः समन्तात्पर्यवारयन् १०
नेमां हिंस्युर्वने बालां क्रव्यादा मांसगृद्धिनः
पर्यरक्षन्त तां तत्र शकुन्ता मेनकात्मजाम् ११
उपस्प्रष्टुं गतश्चाहमपश्यं शयितामिमाम्
निर्जने विपिनेऽरण्ये शकुन्तैः परिवारिताम्
आनयित्वा ततश्चैनां दुहितृत्वे न्ययोजयम् १२
शरीरकृत्प्राणदाता यस्य चान्नानि भुञ्जते
क्रमेण ते त्रयोऽप्युक्ताः पितरो धर्मनिश्चये १३
निर्जने च वने यस्माच्छकुन्तैः परिरक्षिता
शकुन्तलेति नामास्याः कृतं चापि ततो मया १४
एवं दुहितरं विद्धि मम सौम्य शकुन्तलाम्
शकुन्तला च पितरं मन्यते मामनिन्दिता १५
एतदाचष्ट पृष्टः सन्मम जन्म महर्षये

सुतां करावस्य मामेवं विद्धि त्वं मनुजाधिप १६
कराव हि पितरं मन्ये पितरं स्वमजानती
इति ते कथितं राजन्यथावृत्तं श्रुतं मया १७
इति श्रीमहाभारते स्रादिपर्वणि षट्षष्ठितमोऽध्यायः ६६

सप्तषष्ठितमोऽध्यायः

दुःषन्त उवाच
सुव्यक्तं राजपुत्री त्वं यथा कल्याणि भाषसे
भार्या मे भव सुश्रोणि ब्रूहि किं करवाणि ते १
सुवर्णमाला वासांसि कुराडले परिहाटके
नानापत्तनजे शुभ्रे मणिरत्ने च शोभने २
स्राहरामि तवाद्याहं निष्कादीन्यजिनानि च
सर्वं राज्यं तवाद्यास्तु भार्या मे भव शोभने ३
गान्धर्वेण च मां भीरु विवाहेनैहि सुंदरि
विवाहानां हि रम्भोरु गान्धर्वः श्रेष्ठ उच्यते ४
शकुन्तलोवाच
फलाहारो गतो राजन्पिता मे इत स्राश्रमात्
तं मुहूर्तं प्रतीक्षस्व स मां तुभ्यं प्रदास्यति ५
दुःषन्त उवाच
इच्छामि त्वां वरारोहे भजमानामनिन्दिते
त्वदर्थं मां स्थितं विद्धि त्वद्गतं हि मनो मम ६
स्रात्मनो बन्धुरात्मैव गतिरात्मैव चात्मनः
स्रात्मनैवात्मनो दानं कर्तुमर्हसि धर्मतः ७
स्रष्टावेव समासेन विवाहा धर्मतः स्मृताः
ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथासुरः ८
गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमः स्मृतः
तेषां धर्मान्यथापूर्वं मनुः स्वायंभुवोऽब्रवीत् ९
प्रशस्तांश्चतुरः पूर्वान्ब्राह्मणस्योपधारय
षडानुपूर्व्या क्षत्रस्य विद्धि धर्म्याननिन्दिते १०
राज्ञां तु राक्षसोऽप्युक्तो विट्शूद्रेष्वासुरः स्मृतः

पञ्चानां तु त्रयो धर्म्या द्वावधर्म्यौ स्मृताविह ११
पैशाचश्चासुरश्चैव न कर्तव्यौ कथंचन
अनेन विधिना कार्यो धर्मस्यैषा गतिः स्मृता १२
गान्धर्वराक्षसौ क्षत्रे धर्म्यौ तौ मा विशङ्किथाः
पृथग्वा यदि वा मिश्रौ कर्तव्यौ नात्र संशयः १३
सा त्वं मम सकामस्य सकामा वरवर्णिनि
गान्धर्वेण विवाहेन भार्या भवितुमर्हसि १४
शकुन्तलोवाच
यदि धर्मपथस्त्वेष यदि चात्मा प्रभुर्मम
प्रदाने पौरवश्रेष्ठ शृणु मे समयं प्रभो १५
सत्यं मे प्रतिजानीहि यत्वां वक्ष्याम्यहं रहः
मम जायेत यः पुत्रः स भवेत्त्वदनन्तरम् १६
युवराजो महाराज सत्यमेतद्ब्रवीहि मे
यद्येतदेवं दुःषन्त अस्तु मे संगमस्त्वया १७
वैशम्पायन उवाच
एवमस्त्विति तां राजा प्रत्युवाचाविचारयन्
अपि च त्वां नयिष्यामि नगरं स्वं शुचिस्मिते १८
एवमुक्त्वा स राजर्षिस्तामनिन्दितगामिनीम्
जग्राह विधिवत्पाणावुवास च तया सह १९
विश्वास्य चैनां स प्रायादब्रवीच्च पुनः पुनः
प्रेषयिष्ये तवार्थाय वाहिनीं चतुरङ्गिणीम्
तयात्वामानयिष्यामि निवासं स्वं शुचिस्मिते २०
इति तस्याः प्रतिश्रुत्य स नृपो जनमेजय
मनसा चिन्तयन्प्रायात्काश्यपं प्रति पार्थिवः २१
भगवांस्तपसा युक्तः श्रुत्वा किं नु करिष्यति
एवं संचिन्तयन्नेव प्रविवेश स्वकं पुरम् २२
मुहूर्तयाते तस्मिंस्तु कण्वोऽप्याश्रममागमत्
शकुन्तला च पितरं ह्रिया नोपजगाम तम् २३
विज्ञायाथ च तां कण्वो दिव्यज्ञानो महातपाः
उवाच भगवान्प्रीतः पश्यन्दिव्येन चक्षुषा २४

त्वयाद्य राजान्वयया मामनादृत्य यत्कृतः
पुंसा सह समायोगो न स धर्मोपघातकः २५
क्षत्रियस्य हि गान्धर्वो विवाहः श्रेष्ठ उच्यते
सकामायाः सकामेन निर्मन्त्रो रहसि स्मृतः २६
धर्मात्मा च महात्मा च दुःषन्तः पुरुषोत्तमः
अभ्यगच्छः पतिं यं त्वं भजमानं शकुन्तले २७
महात्मा जनिता लोके पुत्रस्तव महाबलः
य इमां सागरापाङ्गां कृत्स्नां भोक्ष्यति मेदिनीम् २८
परं चाभिप्रयातस्य चक्रं तस्य महात्मनः
भविष्यत्यप्रतिहतं सततं चक्रवर्तिनः २९
ततः प्रक्षाल्य पादौ सा विश्रान्तं मुनिमब्रवीत्
विनिधाय ततो भारं संनिधाय फलानि च ३०
मया पतिर्वृतो योऽसौ दुःषन्तः पुरुषोत्तमः
तस्मै ससचिवाय त्वं प्रसादं कर्तुमर्हसि ३१
कण्व उवाच
प्रसन्न एव तस्याहं त्वत्कृते वरवर्णिनि
गृहाण च वरं मत्तस्तत्कृते यदभीप्सितम् ३२
वैशम्पायन उवाच
ततो धर्मिष्ठतां वव्रे राज्याच्चास्खलनं तथा
शकुन्तला पौरवाणां दुःषन्तहितकाम्यया ३३
इति श्रीमहाभारते आदिपर्वणि सप्तषष्ठितमोऽध्यायः ६७

## अष्ट षष्ठितमोऽध्यायः

वैशम्पायन उवाच
प्रतिज्ञाय तु दुःषन्ते प्रतियाते शकुन्तला
गर्भं सुषाव वामोरूः कुमारममितौजसम् १
त्रिषु वर्षेषु पूर्णेषु दीप्तानलसमद्युतिम्
रूपौदार्यगुणोपेतं दौःषन्तिं जनमेजय २
जातकर्मादिसंस्कारं कण्वः पुण्यकृतां वरः
तस्याथ कारयामास वर्धमानस्य धीमतः ३

दन्तैः शुक्लैः शिखरिभिः सिंहसंहननो युवा
चक्रांकितकरः श्रीमान्महामूर्धा महाबलः
कुमारो देवगर्भाभः स तत्राशु व्यवर्धत ४
षड्वर्ष एव बालः स कगवाश्रमपदं प्रति
व्याघ्रानिंसहान्वराहांश्च गजांश्च महिषांस्तथा ५
बद्ध्वा वृन्नेषु बलवानाश्रमस्य समन्ततः
ऋारोहन्दमयंश्चैव क्रीडंश्च परिधावति ६
ततोऽस्य नाम चक्रुस्ते कगवाश्रमनिवासिनः
ऋस्त्वयं सर्वदमनः सर्वं हि दमयत्ययम् ७
स सर्वदमनो नाम कुमारः समपद्यत
विक्रमेणौजसा चैव बलेन च समन्वितः ८
तं कुमारमृषिर्दृष्ट्वा कर्म चास्यातिमानुषम्
समयो यौवराज्यायेत्यब्रवीच्च शकुन्तलाम् ९
तस्य तद्बलमाज्ञाय कगवः शिष्यानुवाच ह
शकुन्तलामिमां शीघ्रं सहपुत्रामितोऽश्रमात्
भर्त्रे प्रापयताद्यैव सर्वलन्नणपूजिताम् १०
नारीणां चिरवासो हि बान्धवेषु न रोचते
कीर्तिचारित्रधर्मघ्नस्तस्मान्नयत माचिरम् ११
तथेत्युक्त्वा तु ते सर्वे प्रातिष्ठन्तामितौजसः
शकुन्तलां पुरस्कृत्य सपुत्रां गजसाह्वयम् १२
गृहीत्वामरगर्भाभं पुत्रं कमललोचनम्
ऋाजगाम ततः शुभ्रा दुःषन्तविदिताद्वनात् १३
ऋभिसृत्य च राजानं विदिता सा प्रवेशिता
सह तेनैव पुत्रेण तरुणादित्यवर्चसा १४
पूजयित्वा यथान्यायमब्रवीत्तं शकुन्तला
ऋयं पुत्रस्त्वया राजन्यौवराज्येऽभिषिच्यताम् १५
त्वया ह्ययं सुतो राजन्मय्युत्पन्नः सुरोपमः
यथासमयमेतस्मिन्वर्तस्व पुरुषोत्तम १६
यथा समागमे पूर्वं कृतः स समयस्त्वया
तं स्मरस्व महाभाग कगवाश्रमपदं प्रति १७

सोऽथ श्रुत्वैव तद्वाक्यं तस्या राजा स्मरन्नपि
अब्रवीन्न स्मरामीति कस्य त्वं दुष्टतापसि १८
धर्मकामार्थसंबन्धं न स्मरामि त्वया सह
गच्छ वा तिष्ठ वा कामं यद्वापीच्छसि तत्कुरु १९
सैवमुक्ता वरारोहा व्रीडितेव मनस्विनी
विसंज्ञेव च दुःखेन तस्थौ स्थाणुरिवाचला २०
संरम्भामर्षताम्राक्षी स्फुरमाणोष्ठसंपुटा
कटाक्षैर्निर्दहन्तीव तिर्यग्राजानमैक्षत २१
आकारं गूहमाना च मन्युनाभिसमीरिता
तपसा संभृतं तेजो धारयामास वै तदा २२
सा मुहूर्तमिव ध्यात्वा दुःखामर्षसमन्विता
भर्तारमभिसंप्रेक्ष्य क्रुद्धा वचनमब्रवीत् २३
जानन्नपि महाराज कस्मादेवं प्रभाषसे
न जानामीति निःसङ्गं यथान्यः प्राकृतस्तथा २४
अत्र ते हृदयं वेद सत्यस्यैवानृतस्य च
कल्याण बत साक्षी त्वं मात्मानमवमन्यथाः २५
योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते
किं तेन न कृतं पापं चोरेणात्मापहारिणा २६
एकोऽहमस्मीतिचमन्यसेत्वं न हृच्छयं वेत्सि मुनिं पुराणम्
योवेदिता कर्मणः पापकस्य यस्यान्तिके त्वं वृजिनं करोषि २७
मन्यते पापकं कृत्वा न कश्चिद्वेत्ति मामिति
विदन्ति चैनं देवाश्च स्वश्चैवान्तरपूरुषः २८
आदित्यचन्द्रावनिलानलौ च द्यौर्भूमिरापो हृदयं यमश्च
अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तम् २९
यमो वैवस्वतस्तस्य निर्यातयति दुष्कृतम्
हृदि स्थितः कर्मसाक्षी क्षेत्रज्ञो यस्य तुष्यति ३०
न तु तुष्यति यस्यैष पुरुषस्य दुरात्मनः
तं यमः पापकर्माणं निर्यातयति दुष्कृतम् ३१
अवमन्यात्मनात्मानमन्यथा प्रतिपद्यते
देवा न तस्य श्रेयांसो यस्यात्मापि न कारणम् ३२

स्वयं प्राप्तेति मामेवं मावमंस्थाः पतिव्रताम्
अर्घ्यार्हां नार्चयसि मां स्वयं भार्यामुपस्थिताम् ३३
किमर्थं मां प्राकृतवदुपप्रेक्षसि संसदि
न खल्वहमिदं शून्ये रौमि किं न शृणोषि मे ३४
यदि मे याचमानाया वचनं न करिष्यसि
दुःषन्त शतधा मूर्धा ततस्तेऽद्य फलिष्यति ३५
भार्यां पतिः संप्रविश्य स यस्माज्जायते पुनः
जायाया इति जायात्वं पुराणाः कवयो विदुः ३६
यदागमवतः पुंसस्तदपत्यं प्रजायते
तत्तारयति संतत्या पूर्वप्रेतान्पितामहान् ३७
पुन्नाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः
तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयंभुवा ३८
सा भार्या या गृहे दक्षा सा भार्या या प्रजावती
सा भार्या या पतिप्राणा सा भार्या या पतिव्रता ३९
अर्धं भार्या मनुष्यस्य भार्या श्रेष्ठतमः सखा
भार्या मूलं त्रिवर्गस्य भार्या मित्रं मरिष्यतः ४०
भार्यावन्तः क्रियावन्तः सभार्या गृहमेधिनः
भार्यावन्तः प्रमोदन्ते भार्यावन्तः श्रियान्विताः ४१
सखायः प्रविविक्तेषु भवन्त्येताः प्रियंवदाः
पितरो धर्मकार्येषु भवन्त्यार्तस्य मातरः ४२
कान्तारेष्वपि विश्रामो नरस्याध्वनिकस्य वै
यः सदारः स विश्वास्यस्तस्माद्दाराः परा गतिः ४३
संसरन्तमपि प्रेतं विषमेष्वेकपातिनम्
भार्यैवान्वेति भर्तारं सततं या पतिव्रता ४४
प्रथमं संस्थिता भार्या पतिं प्रेत्य प्रतीक्षते
पूर्वं मृतं च भर्तारं पश्चात्साध्व्यनुगच्छति ४५
एतस्मात्कारणाद्राजन्पाणिग्रहणमिष्यते
यदाप्नोति पतिर्भार्यामिह लोके परत्र च ४६
आत्मात्मनैव जनितः पुत्र इत्युच्यते बुधैः
तस्माद्भार्यां नरः पश्येन्मातृवत्पुत्रमातरम् ४७

भार्यायां जनितं पुत्रमादर्शे स्वमिवाननम्
ह्लादते जनिता प्रेक्ष्य स्वर्गं प्राप्येव पुण्यकृत् ४८
दह्यमाना मनोदुःखैर्व्याधिभिश्चातुरा नराः
ह्लादन्ते स्वेषु दारेषु घर्मार्ताः सलिलेष्विव ४९
सुसंरब्धोऽपि रामाणां न ब्रूयादप्रियं बुधः
रतिं प्रीतिं च धर्मं च तास्वायत्तमवेक्ष्य च ५०
आत्मनो जन्मनः क्षेत्रं पुण्यं रामाः सनातनम्
ऋषीणामपि का शक्तिः स्रष्टुं रामामृते प्रजाः ५१
परिपत्य यदा सूनुर्धरणीरेणुगुण्ठितः
पितुराश्लिष्यतेऽङ्गानि किमिवास्त्यधिकं ततः ५२
स त्वं स्वयमनुप्राप्तं साभिलाषमिमं सुतम्
प्रेक्षमाणं च कांक्षेण किमर्थमवमन्यसे ५३
अण्डानि बिभ्रति स्वानि न भिन्दन्ति पिपीलिकाः
न भरेथाः कथं नु त्वं धर्मज्ञः सन्स्वमात्मजम् ५४
न वाससां न रामाणां नापां स्पर्शस्तथा सुखः
शिशोरालिङ्ग्यमानस्य स्पर्शः सूनोर्यथा सुखः ५५
ब्राह्मणो द्विपदां श्रेष्ठो गौर्वरिष्ठा चतुष्पदाम्
गुरुर्गरीयसां श्रेष्ठः पुत्रः स्पर्शवतां वरः ५६
स्पृशतु त्वां समाश्लिष्य पुत्रोऽय प्रियदर्शनः
पुत्रस्पर्शात्सुखतरः स्पर्शो लोके न विद्यते ५७
त्रिषु वर्षेषु पूर्णेषु प्रजाताहमरिंदम
इमं कुमारं राजेन्द्र तव शोकप्रणाशनम् ५८
आहर्ता वाजिमेधस्य शतसङ्ख्यस्य पौरव
इति वागंतरिक्षे मां सूतकेऽभ्यवदत्पुरा ५९
ननु नामाङ्कमारोप्य स्नेहाद्ग्रामान्तरं गताः
मूर्ध्नि पुत्रानुपाघ्राय प्रतिनंदन्ति मानवाः ६०
वेदेष्वपि वदंतीमं मंत्रवादं द्विजातयः
जातकर्मणि पुत्राणां तवापि विदितं तथा ६१
अङ्गादङ्गात्संभवसि हृदयादभिजायसे
आत्मा वै पुत्रनामासि स जीव शरदः शतम् ६२

पोषो हि त्वदधीनो मे संतानमपि चाक्षयम्
तस्मात्त्वं जीव मे पुत्र सुसुखी शरदां शतम् ६३
त्वदङ्गेभ्यः प्रसूतोऽय पुरुषात्पुरुषोऽपरः
सरसीवामलेऽत्मानं द्वितीयं पश्य मे सुतम् ६४
यथा ह्याहवनीयोऽग्निर्गार्हपत्यात्प्रणीयते
तथा त्वत्तः प्रसूतोऽय त्वमेकः सन्द्विधा कृतः ६५
मृगापकृष्टेन हि ते मृगयां परिधावता
अहमासादिता राजन्कुमारी पितुराश्रमे ६६
उर्वशी पूर्वचित्तिश्च सहजन्या च मेनका
विश्वाची च घृताची च षडेवाप्सरसां वराः ६७
तासां मां मेनका नाम ब्रह्मयोनिर्वराप्सराः
दिवः संप्राप्य जगतीं विश्वामित्रादजीजनत् ६८
सा मां हिमवतः पृष्ठे सुषुवे मेनकाप्सराः
अवकीर्य च मां याता परात्मजमिवासती ६९
किं नु कर्माशुभं पूर्वं कृतवत्यस्मि जन्मनि
यदहं बान्धवैस्त्यक्ता बाल्ये सांपति च त्वया ७०
कामं त्वया परित्यक्ता गमिष्याम्यहमाश्रमम्
इमं तु बालं संत्यक्तुं नार्हस्यात्मजमात्मना ७१
दुःषन्त उवाच
न पुत्रमभिजानामि त्वयि जातं शकुन्तले
असत्यवचना नार्यः कस्ते श्रद्धास्यते वचः ७२
मेनका निरनुक्रोशा बन्धकी जननी तव
यया हिमवतः पृष्ठे निर्माल्येव प्रवेरिता ७३
स चापि निरनुक्रोशः क्षत्रयोनिः पिता तव
विश्वामित्रो ब्राह्मणत्वे लुब्धः कामपरायणः ७४
मेनकाप्सरसां श्रेष्ठा महर्षीणां च ते पिता
तयोरपत्यं कस्मात्त्वं पुंश्चलीवाभिधास्यसि ७५
अश्रद्धेयमिदं वाक्यं कथयन्ती न लज्जसे
विशेषतो मत्सकाशे दुष्टतापसि गम्यताम् ७६
क्व महर्षिः सदैवोग्रः साप्सरा क्व च मेनका

क्व च त्वमेवं कृपणा तापसीवेषधारिणी ७७
अतिकायश्च पुत्रस्ते बालोऽपि बलवानयम्
कथमल्पेन कालेन शालस्कन्ध इवोद्गतः ७८
सुनिकृष्टा च योनिस्ते पुंश्चली प्रतिभासि मे
यदृच्छया कामरागाज्जाता मेनकया ह्यसि ७९
सर्वमेतत्परोक्षं मे यत्त्वं वदसि तापसि
नाहं त्वामभिजानामि यथेष्टं गम्यतां त्वया ८०
इति श्रीमहाभारते आदिपर्वणि अष्टषष्ठितमोऽध्यायः ६८

## एकोनसप्ततितमोऽध्यायः

शकुन्तलोवाच
राजन्सर्षपमात्राणि परच्छिद्राणि पश्यसि
आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यसि १
मेनका त्रिदशेष्वेव त्रिदशाश्चानु मेनकाम्
ममैवोद्रिच्यते जन्म दुःषन्त तव जन्मतः २
क्षितावटसि राजंस्त्वमन्तरिक्षे चराम्यहम्
आवयोरन्तरं पश्य मेरुसर्षपयोरिव ३
महेन्द्रस्य कुबेरस्य यमस्य वरुणस्य च
भवनान्यनुसंयामि प्रभावं पश्य मे नृप ४
सत्यश्चापि प्रवादोऽय यं प्रवक्ष्यामि तेऽनघ
निदर्शनार्थं न द्वेषात्तच्छ्रुत्वा क्षन्तुमर्हसि ५
विरूपो यावदादर्शे नात्मनः पश्यते मुखम्
मन्यते तावदात्मानमन्येभ्यो रूपवत्तरम् ६
यदा तु मुखमादर्शे विकृतं सोऽभिवीक्षते
तदेतरं विजानाति आत्मानं नेतरं जनम् ७
अतीव रूपसम्पन्नो न किंचिदवमन्यते
अतीव जल्पन्दुर्वाचो भवतीह विहेठकः ८
मूर्खो हि जल्पतां पुंसां श्रुत्वा वाचः शुभाशुभाः
अशुभं वाक्यमादत्ते पुरीषमिव सूकरः ९
प्राज्ञस्तु जल्पतां पुंसां श्रुत्वा वाचः शुभाशुभाः

गुणवद्वाक्यमादत्ते हंसः क्षीरमिवाम्भसः १०
अन्यान्परिवदन्साधुर्यथा हि परितप्यते
तथा परिवदन्नन्यांस्तुष्टो भवति दुर्जनः ११
अभिवाद्य यथा वृद्धान्सन्तो गच्छन्ति निर्वृतिम्
एवं सज्जनमाक्रुश्य मूर्खो भवति निर्वृतः १२
सुखं जीवन्त्यदोषज्ञा मूर्खा दोषानुदर्शिनः
यत्र वाच्याः परैः सन्तः परानाहुस्तथाविधान् १३
अतो हास्यतरं लोके किंचिदन्यन्न विद्यते
यत्र दुर्जन इत्याह दुर्जनः सज्जनं स्वयम् १४
सत्यधर्मच्युतात्पुंसः क्रुद्धादाशीविषादिव
अनास्तिकोऽप्युद्विजते जनः किं पुनरास्तिकः १५
स्वयमुत्पाद्य वै पुत्रं सदृशं योऽवमन्यते
तस्य देवाः श्रियं घ्नन्ति न च लोकानुपाश्नुते १६
कुलवंशप्रतिष्ठां हि पितरः पुत्रमब्रुवन्
उत्तमं सर्वधर्माणां तस्मात्पुत्रं न संत्यजेत् १७
स्वपत्नीप्रभवान्पञ्च लब्धान्क्रीतान्विवर्धितान्
कृतानन्यासु चोत्पन्नान्पुत्रान्वै मनुरब्रवीत् १८
धर्मकीर्त्यावहा नृणां मनसः प्रीतिवर्धनाः
त्रायन्ते नरकाज्जाताः पुत्रा धर्मप्लवाः पितॄन् १९
स त्वं नृपतिशार्दूल न पुत्रं त्यक्तुमर्हसि
आत्मानं सत्यधर्मौ च पालयानो महीपते
नरेन्द्रसिंह कपटं न वोढुं त्वमिहार्हसि २०
वरं कूपशताद्वापी वरं वापीशतात्क्रतुः
वरं क्रतुशतात्पुत्रः सत्यं पुत्रशताद्वरम् २१
अश्वमेधसहस्रं च सत्यं च तुलया धृतम्
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते २२
सर्ववेदाधिगमनं सर्वतीर्थावगाहनम्
सत्यं च वदतो राजन्समं वा स्यान्न वा समम् २३
नास्ति सत्यात्परो धर्मो न सत्याद्विद्यते परम्
न हि तीव्रतरं किंचिदनृतादिह विद्यते २४

राजन्सत्यं परं ब्रह्म सत्यं च समयः परः
मा त्याक्षीः समयं राजन्सत्यं संगतमस्तु ते २५
अनृते चेत्प्रसङ्गस्ते श्रद्दधासि न चेत्स्वयम्
आत्मनो हन्त गच्छामि त्वादृशे नास्ति संगतम् २६
ऋतेऽपि त्वयि दुःषन्त शैलराजावतंसकाम्
चतुरन्तामिमामुर्वीं पुत्रो मे पालयिष्यति २७
वैशम्पायन उवाच
एतावदुक्त्वा वचनं प्रातिष्ठत शकुन्तला
अथान्तरिक्षे दुःषन्तं वागुवाचाशरीरिणी
ऋत्विक्पुरोहिताचार्यैर्मन्त्रिभिश्चावृतं तदा २८
भस्त्रा माता पितुः पुत्रो येन जातः स एव सः
भरस्व पुत्रं दुःषन्त मावमंस्थाः शकुंतलाम् २९
रेतोधाः पुत्रः उन्नयति नरदेव यमक्षयात्
त्वं चास्य धाता गर्भस्य सत्यमाह शकुन्तला ३०
जाया जनयते पुत्रमात्मनोऽङ्ग द्विधा कृतम्
तस्माद्भरस्व दुःषन्त पुत्रं शाकुन्तलं नृप ३१
अभूतिरेषा कस्त्यज्याज्जीवञ्जीवन्तमात्मजम्
शाकुन्तलं महात्मानं दौःषन्तिं भर पौरव ३२
भर्तव्योऽय त्वया यस्मादस्माकं वचनादपि
तस्माद्भवत्वयं नाम्ना भरतो नाम ते सुतः ३३
तच्छ्रुत्वा पौरवो राजा व्याहृतं वै दिवौकसाम्
पुरोहितममात्यांश्च संप्रहृष्टोऽब्रवीदिदम् ३४
शृणवन्त्वेतद्भवन्तोऽस्य देवदूतस्य भाषितम्
अहमप्येवमेवैनं जानामि स्वयमात्मजम् ३५
यद्यहं वचनादेव गृह्णीयामिममात्मजम्
भवेद्धि शङ्का लोकस्य नैवं शुद्धो भवेदयम् ३६
तं विशोध्य तदा राजा देवदूतेन भारत
हृष्टः प्रमुदितश्चापि प्रतिजग्राह तं सुतम् ३७
मूर्ध्नि चैनमुपाघ्राय सस्नेहं परिषस्वजे
सभाज्यमानो विप्रैश्च स्तूयमानश्च बन्दिभिः

स मुदं परमां लेभे पुत्रसंस्पर्शजां नृपः ३८
तां चैव भार्यां धर्मज्ञः पूजयामास धर्मतः
अब्रवीच्चैव तां राजा सान्त्वपूर्वमिदं वचः ३९
कृतो लोकपरोक्षोऽय सम्बन्धो वै त्वया सह
तस्मादेतन्मया देवि त्वच्छुद्ध्यर्थं विचारितम् ४०
मन्यते चैव लोकस्ते स्त्रीभावान्मयि संगतम्
पुत्रश्चायं वृतो राज्ये मया तस्माद्विचारितम् ४१
यच्च कोपितयात्यर्थं त्वयोक्तोऽस्म्यप्रियं प्रिंये
प्रणयिन्या विशालाक्षि तत्क्षान्तं ते मया शुभे ४२
तामेवमुक्त्वा राजर्षिर्दुःषन्तो महिषीं प्रियाम्
वासोभिरन्नपानैश्च पूजयामास भारत ४३
दुःषन्तश्च ततो राजा पुत्रं शाकुन्तलं तदा
भरतं नामतः कृत्वा यौवराज्येऽभ्यषेचयत् ४४
तस्य तत्प्रथितं चक्रं प्रावर्तत महात्मनः
भास्वरं दिव्यमजितं लोकसंनादनं महत् ४५
स विजित्य महीपालांश्चकार वशवर्तिनः
चचार च सतां धर्मं प्राप चानुत्तमं यशः ४६
स राजा चक्रवर्त्यासीत्सार्वभौमः प्रतापवान्
ईजे च बहुभिर्यज्ञैर्यथा शक्रो मरुत्पतिः ४७
याजयामास तं कण्वो दक्षवद्भूरिदक्षिणम्
श्रीमाग्नोविततं नाम वाजिमेधमवाप सः
यस्मिन्सहस्रं पद्मानां कण्वाय भरतो ददौ ४८
भरताद्भारती कीर्तिर्येनेदं भारतं कुलम्
अपरे ये च पूर्वे च भारता इति विश्रुताः ४९
भरतस्यान्ववाये हि देवकल्पा महौजसः
बभूवुर्ब्रह्मकल्पाश्च बहवो राजसत्तमाः ५०
येषामपरिमेयानि नामधेयानि सर्वशः
तेषां तु ते यथामुख्यं कीर्तयिष्यामि भारत
महाभागान्देवकल्पान्सत्यार्जवपरायणान् ५१
इति श्रीमहाभारते आदिपर्वणि एकोनसप्ततितमोऽध्यायः ६९

## सप्ततितमोऽध्यायः

वैशम्पायन उवाच
प्रजापतेस्तु दक्षस्य मनोर्वैवस्वतस्य च
भरतस्य कुरोः पूरोरजमीढस्य चान्वये १
यादवानामिमं वंशं पौरवाणां च सर्वशः
तथैव भारतानां च पुण्यं स्वस्त्ययनं महत्
धन्यं यशस्यमायुष्यं कीर्तयिष्यामि तेऽनघ २
तेजोभिरुदिताः सर्वे महर्षिसमतेजसः
दश प्रचेतसः पुत्राः सन्तः पूर्वजनाः स्मृताः
मेघजेनाग्निना ये ते पूर्वं दग्धा महौजसः ३
तेभ्यः प्राचेतसो जज्ञे दक्षो दक्षादिमाः प्रजाः
संभूताः पुरुषव्याघ्र स हि लोकपितामहः ४
वीरिण्या सह संगम्य दक्षः प्राचेतसो मुनिः
आत्मतुल्यानजनयत्सहस्रं संशितव्रतान् ५
सहस्रसंख्यान्समितान्सुतान्दक्षस्य नारदः
मोक्षमध्यापयामास सांख्यज्ञानमनुत्तमम् ६
ततः पञ्चाशतं कन्याः पुत्रिका अभिसंदधे
प्रजापतिः प्रजा दक्षः सिसृक्षुर्जनमेजय ७
ददौ स दश धर्माय कश्यपाय त्रयोदश
कालस्य नयने युक्ताः सप्तविंशतिमिन्दवे ८
त्रयोदशानां पत्नीनां या तु दाक्षायणी वरा
मारीचः कश्यपस्तस्यामादित्यान्समजीजनत्
इन्द्रादीन्वीर्यसंपन्नान्विवस्वन्तमथापि च ९
विवस्वतः सुतो जज्ञे यमो वैवस्वतः प्रभुः
मार्तण्डश्च यमस्यापि पुत्रो राजन्नजायत १०
मार्तण्डस्य मनुर्धीमानजायत सुतः प्रभुः
मनोर्वंशो मानवानां ततोऽय प्रथितोऽभवत्
ब्रह्मक्षत्रादयस्तस्मान्मनोर्जातास्तु मानवाः ११
तत्राभवत्तदा राजन्ब्रह्म क्षत्रेण संगतम्
ब्राह्मणा मानवास्तेषां साङ्गं वेदमदीधरन् १२

वेनं धृष्णुं नरिष्यन्तं नाभागेक्ष्वाकुमेव च
करूषमथ शर्यातिं तथैवात्राष्टमीमिलाम् १३
पृषध्रनवमानाहुः क्षत्रधर्मपरायणान्
नाभागारिष्टदशमान्मनोः पुत्रान्महाबलान् १४
पञ्चाशतं मनोः पुत्रास्तथैवान्येऽभवन्क्षितौ
अन्योन्यभेदात्ते सर्वे विनेशुरिति नः श्रुतम् १५
पूरूरवास्ततो विद्वानिलायां समपद्यत
सा वै तस्याभवन्माता पिता चेति हि नः श्रुतम् १६
त्रयोदश समुद्रस्य द्वीपानश्नन्पुरूरवाः
अमानुषैर्वृतः सत्त्वैर्मानुषः सन्महायशाः १७
विप्रैः स विग्रहं चक्रे वीर्योन्मत्तः पुरूरवाः
जहार च स विप्राणां रत्नान्युत्क्रोशतामपि १८
सनत्कुमारस्तं राजन्ब्रह्मलोकादुपेत्य ह
अनुदर्शयां ततश्चक्रे प्रत्यगृह्णान्न चाप्यसौ १९
ततो महर्षिभिः क्रुद्धैः शप्तः सद्यो व्यनश्यत
लोभान्वितो मदबलान्नष्टसंज्ञो नराधिपः २०
स हि गन्धर्वलोकस्थ उर्वश्या सहितो विराट्
आनिनाय क्रियार्थेऽग्नीन्यथावद्विहितांस्त्रिधा २१
षट् पुत्रा जज्ञिरेऽथैलादायुर्धीमानमावसुः
दृढायुश्च वनायुश्च श्रुतायुश्चोर्वशीसुताः २२
नहुषं वृद्धशर्माणं रजिं रम्भमनेनसम्
स्वर्भानवीसुतानेतानायोः पुत्रान्प्रचक्षते २३
आयुषो नहुषः पुत्रो धीमान्सत्यपराक्रमः
राज्यं शशास सुमहद्धर्मेण पृथिवीपतिः २४
पितृन्देवानृषीन्विप्रान्गन्धर्वोरगराक्षसान्
नहुषः पालयामास ब्रह्मक्षत्रमथो विशः २५
स हत्वा दस्युसंघातानृषीन्करमदापयत्
पशुवच्चैव तान्पृष्ठे वाहयामास वीर्यवान् २६
कारयामास चेन्द्रत्वमभिभूय दिवौकसः
तेजसा तपसा चैव विक्रमेणौजसा तथा २७

यतिं ययातिं संयातिमायातिं पाञ्चमुद्धवम्
नहुषो जनयामास षट् पुत्रान्प्रियवाससि २८
ययातिर्नाहुषः सम्राडासीत्सत्यपराक्रमः
स पालयामास महीमीजे च विविधैः सवैः २९
अतिशक्त्या पितॄनर्चन्देवांश्च प्रयतः सदा
अन्वगृह्णात्प्रजाः सर्वा ययातिरपराजितः ३०
तस्य पुत्रा महेष्वासाः सर्वैः समुदिता गुणैः
देवयान्यां महाराज शर्मिष्ठायां च जज्ञिरे ३१
देवयान्यामजायेतां यदुस्तुर्वसुरेव च
द्रुह्युश्चानुश्च पूरुश्च शर्मिष्ठायां प्रजज्ञिरे ३२
स शाश्वतीः समा राजन्प्रजा धर्मेण पालयन्
जरामार्छन्महाघोरां नाहुषो रूपनाशिनीम् ३३
जराभिभूतः पुत्रान्स राजा वचनमब्रवीत्
यदुं पूरुं तुर्वसुं च द्रुह्युं चानुं च भारत ३४
यौवनेन चरन्कामान्युवा युवतिभिः सह
विहर्तुमहमिच्छामि साह्यं कुरुत पुत्रकाः ३५
तं पुत्रो देवयानेयः पूर्वजो यदुरब्रवीत्
किं कार्यं भवतः कार्यमस्माभिर्यौवनेन च ३६
ययातिरब्रवीत्तं वै जरा मे प्रतिगृह्यताम्
यौवनेन त्वदीयेन चरेयं विषयानहम् ३७
यजतो दीर्घसत्रैर्मे शापाच्चोशनसो मुनेः
कामार्थः परिहीणो मे तप्येऽहं तेन पुत्रकाः ३८
मामकेन शरीरेण राज्यमेकः प्रशास्तु वः
अहं तन्वाभिनवया युवा कामानवाप्नुयाम् ३९
न ते तस्य प्रत्यगृह्णन्यदुप्रभृतयो जराम्
तमब्रवीत्ततः पूरुः कनीयान्सत्यविक्रमः ४०
राजंश्चराभिनवया तन्वा यौवनगोचरः
अहं जरां समास्थाय राज्ये स्थास्यामि तेऽज्ञया ४१
एवमुक्तः स राजर्षिस्तपोवीर्यसमाश्रयात्
संचारयामास जरां तदा पुत्रे महात्मनि ४२

पौरवेणाथ वयसा राजा यौवनमास्थितः
यायातेनापि वयसा राज्यं पूरुरकारयत् ४३
ततो वर्षसहस्रान्ते ययातिरपराजितः
अतृप्त एव कामानां पूरुं पुत्रमुवाच ह ४४
त्वया दायादवानस्मि त्वं मे वंशकरः सुतः
पौरवो वंश इति ते ख्यातिं लोके गमिष्यति ४५
ततः स नृपशार्दूलः पूरुं राज्येऽभिषिच्य च
कालेन महता पश्चात्कालधर्ममुपेयिवान् ४६
इति श्रीमहाभारते आदिपर्वणि सप्ततितमोऽध्यायः ७०

## एकसप्ततितमोऽध्यायः

जनमेजय उवाच
ययातिः पूर्वकोऽस्माकं दशमो यः प्रजापतेः
कथं स शुक्रतनयां लेभे परमदुर्लभाम् १
एतदिच्छाम्यहं श्रोतुं विस्तरेण द्विजोत्तम
आनुपूर्व्या च मे शंस पूरोर्वंशकरान्पृथक् २
वैशम्पायन उवाच
ययातिरासीद्राजर्षिर्देवराजसमद्युतिः
तं शुक्रवृषपर्वाणौ वव्राते वै यथा पुरा ३
तत्तेऽह सम्प्रवक्ष्यामि पृच्छतो जनमेजय
देवयान्याश्च संयोगं ययातेर्नाहुषस्य च ४
सुराणामसुराणां च समजायत वै मिथः
एश्वर्यं प्रति संघर्षस्त्रैलोक्ये सचराचरे ५
जिगीषया ततो देवा वव्रिरेऽङ्गिरसं मुनिम्
पौरोहित्येन याज्यार्थे काव्यं तूशनसं परे
ब्राह्मणौ तावुभौ नित्यमन्योन्यस्पर्धिनौ भृशम् ६
तत्र देवा निजघ्नुर्यान्दानवान्युधि संगतान्
तान्पुनर्जीवयामास काव्यो विद्याबलाश्रयात्
ततस्ते पुनरुत्थाय योधयाञ्चक्रिरे सुरान् ७
असुरास्तु निजघ्नुर्यान्सुरान्समरमूर्धनि

न तान्संजीवयामास बृहस्पतिरुदारधीः ८
न हि वेद स तां विद्यां यां काव्यो वेद वीर्यवान्
संजीवनीं ततो देवा विषादमगमन्परम् ९
ते तु देवा भयोद्विग्नाः काव्यादुशनसस्तदा
ऊचुः कचमुपागम्य ज्येष्ठं पुत्रं बृहस्पतेः १०
भजमानान्भजस्वास्मान्कुरु नः साह्यमुत्तमम्
यासौ विद्या निवसति ब्राह्मणेऽमिततेजसि
शुक्रे तामाहर क्षिप्रं भागभाङ्नो भविष्यसि ११
वृषपर्वसमीपे स शक्यो द्रष्टुं त्वया द्विजः
रक्षते दानवांस्तत्र न स रक्षत्यदानवान् १२
तमाराधयितुं शक्तो भवान्पूर्ववयाः कविम्
देवयानीं च दयितां सुतां तस्य महात्मनः १३
त्वमाराधयितुं शक्तो नान्यः कश्चन विद्यते
शीलदाक्षिण्यमाधुर्यैराचारेण दमेन च
देवयान्यां हि तुष्टायां विद्यां तां प्राप्स्यसि ध्रुवम् १४
तथेत्युक्त्वा ततः प्रायाद्बृहस्पतिसुतः कचः
तदाभिपूजितो देवैः समीपं वृषपर्वणः १५
स गत्वा त्वरितो राजन्देवैः सम्प्रेषितः कचः
असुरेन्द्रपुरे शुक्रं दृष्ट्वा वाक्यमुवाच ह १६
ऋषेरंगिरसः पौत्रं पुत्रं साक्षाद्बृहस्पतेः
नाम्ना कच इति ख्यातं शिष्यं गृह्णातु मां भवान् १७
ब्रह्मचर्यं चरिष्यामि त्वय्यहं परमं गुरौ
अनुमन्यस्व मां ब्रह्मन्सहस्रं परिवत्सरान् १८
शुक्र उवाच
कच सुस्वागतं तेऽस्तु प्रतिगृह्णामि ते वचः
अर्चयिष्येऽहमर्च्यं त्वामर्चितोऽस्तु बृहस्पतिः १९
वैशम्पायन उवाच
कचस्तु तं तथेत्युक्त्वा प्रतिजग्राह तद्व्रतम्
आदिष्टं कविपुत्रेण शुक्रेणोशनसा स्वयम् २०
व्रतस्य व्रतकालं स यथोक्तं प्रत्यगृह्णत

आराधयन्नुपाध्यायं देवयानीं च भारत २१
नित्यमाराधयिष्यंस्तां युवा यौवनगोऽमुखे
गायन्नृत्यन्वादयंश्च देवयानीमतोषयत् २२
संशीलयन्देवयानीं कन्यां संप्राप्तयौवनाम्
पुष्पैः फलैः प्रेषणैश्च तोषयामास भारत २३
देवयान्यपि तं विप्रं नियमव्रतचारिणम्
अनुगायमाना ललना रहः पर्यचरत्तदा २४
पञ्च वर्षशतान्येवं कचस्य चरतो व्रतम्
तत्रातीयुरथो बुद्ध्वा दानवास्तं ततः कचम् २५
गा रक्षन्तं वने दृष्ट्वा रहस्येकममर्षिताः
जघ्नुर्बृहस्पतेर्द्वेषाद्विद्यारक्षार्थमेव च
हत्वा शालावृकेभ्यश्च प्रायच्छंस्तिलशः कृतम् २६
ततो गावो निवृत्तास्ता अगोपाः स्वं निवेशनम्
ता दृष्ट्वा रहिता गास्तु कचेनाभ्यागता वनात्
उवाच वचनं काले देवयान्यथ भारत २७
अहुतं चाग्निहोत्रं ते सूर्यश्चास्तं गतः प्रभो
अगोपाश्चागता गावः कचस्तात न दृश्यते २८
व्यक्तं हतो मृतो वापि कचस्तात भविष्यति
तं विना न च जीवेयं कचं सत्यं ब्रवीमि ते २९
शुक्र उवाच
अयमेहीति शब्देन मृतं संजीवयाम्यहम् ३०
वैशम्पायन उवाच
ततः संजीवनीं विद्यां प्रयुज्य कचमाह्वयत्
आहूतः प्रादुरभवत्कचोऽरिष्टोऽथ विद्यया
हतोऽहमिति चाचख्यौ पृष्टो ब्राह्मणकन्यया ३१
स पुनर्देवयान्योक्तः पुष्पाहारो यदृच्छया
वनं ययौ ततो विप्रो ददृशुर्दानवाश्च तम् ३२
ततो द्वितीयं हत्वा तं दग्ध्वा कृत्वा च चूर्णशः
प्रायच्छन्ब्राह्मणायैव सुरायामसुरास्तदा ३३
देवयान्यथ भूयोऽपि वाक्यं पितरमब्रवीत्

पुष्पाहारः प्रेषणकृत्कचस्तात न दृश्यते ३४
शुक्र उवाच
बृहस्पतेः सुतः पुत्रि कचः प्रेतगतिं गतः
विद्यया जीवितोऽप्येवं हन्यते करवाणि किम् ३५
मैवं शुचो मा रुद देवयानि न त्वादृशी मर्त्यमनुप्रशोचेत्
सुराश्च विश्वे च जगच्च सर्वमुपस्थितां वैकृतिमानमन्ति ३६
देवयान्युवाच
यस्याङ्गिरा वृद्धतमः पितामहो बृहस्पतिश्चापि पिता तपोधनः
ऋषेः पुत्रं तमथो वापि पौत्रं कथं न शोचेयमहं न रुद्याम् ३७
स ब्रह्मचारी च तपोधनश्च सदोत्थितः कर्मसु चैव दक्षः
कचस्य मार्गं प्रतिपत्स्ये न भोक्ष्ये प्रियो हि मे तात कचोऽभिरूपः ३८
शुक्र उवाच
असंशयं मामसुरा द्विषन्ति ये मे शिष्यं नागसं सूदयन्ति
अब्राह्मणं कर्तुमिच्छन्ति रौद्रास्ते मां यथा प्रस्तुतं दानवैर्हि
अप्यस्य पापस्य भवेदिहान्तः कं ब्रह्महत्या न दहेदपीन्द्रम् ३९
वैशम्पायन उवाच
संचोदितो देवयान्या महर्षिः पुनराह्वयत्
संरम्भेणैव काव्यो हि बृहस्पतिसुतं कचम् ४०
गुरोर्भीतो विद्यया चोपहूतः शनैर्वाचं जठरे व्याजहार
तमब्रवीत्केन पथोपनीतो ममोदरे तिष्ठसि ब्रूहि विप्र ४१
कच उवाच
भवत्प्रसादान्न जहाति मां स्मृतिः स्मरे च सर्वं यच्च यथा च वृत्तम्
न त्वेवं स्यात्तपसो व्ययो मे ततः क्लेशं घोरमिमं सहामि ४२
असुरैः सुरायां भवतोऽस्मि दत्तो हत्वा दग्ध्वा चूर्णयित्वा च काव्य
ब्राह्मीं मायामासुरी चैव माया त्वयि स्थिते कथमेवातिवर्तेत् ४३
शुक्र उवाच
किं ते प्रियं करवाण्यद्य वत्से वधेन मे जीवितं स्यात्कचस्य
नान्यत्र कुक्षेर्मम भेदनेन दृश्येत्कचो मद्गतो देवयानि ४४
देवयान्युवाच
द्वौ मां शोकावग्निकल्पौ दहेतां कचस्य नाशस्तव चैवोपघातः

कचस्य नाशे मम नास्ति शर्म तवोपघाते जीवितुं नास्मि शक्ता ४५
शुक्र उवाच
संसिद्धरूपोऽसि बृहस्पतेः सुत यत्त्वां भक्तं भजते देवयानी
विद्यामिमां प्राप्नुहि जीवनीं त्वं न चेदिन्द्रः कचरूपी त्वमद्य ४६
न निवर्तेत्पुनर्जीवन्कश्चिदन्यो ममोदरात्
ब्राह्मणं वर्जयित्वैकं तस्माद्विद्यामवाप्नुहि ४७
पुत्रो भूत्वा भावय भावितो मामस्माद्देहादुपनिष्क्रम्य तात
समीक्षेथा धर्मवतीमवेक्षां गुरोः सकाशात्प्राप्य विद्यां सविद्यः ४८
वैशम्पायन उवाच
गुरोः सकाशात्समवाप्य विद्यां भित्त्वा कुक्षिं निर्विचक्राम विप्रः
कचोऽभिरूपो दक्षिणं ब्राह्मणस्य शुक्लात्यये पौर्णमास्यामिवेन्दुः ४९
दृष्ट्वा च तं पतितं ब्रह्मराशिमुत्थापयामास मृतं कचोऽपि
विद्यां सिद्धां तामवाप्याभिवाद्य ततः कचस्तं गुरुमित्युवाच ५०
ऋतस्य दातारमनुत्तमस्य निधिं निधीनां चतुरन्वयानाम्
ये नाद्रियन्ते गुरुमर्चनीयं पापाँल्लोकांस्ते व्रजन्त्यप्रतिष्ठान् ५१
वैशम्पायन उवाच
सुरापानाद्वञ्चनां प्रापयित्वा संज्ञानाशं चैव तथातिघोरम्
दृष्ट्वा कचं चापि यथाभिरूपं पीतं तदा सुरया मोहितेन ५२
समन्युरुत्थाय महानुभावस्तदोशना विप्रहितं चिकीर्षुः
काव्यः स्वयं वाक्यमिदं जगाद सुरापानं प्रति वै जातशङ्कः ५३
यो ब्राह्मणोऽद्य प्रभृतीह कश्चिन्मोहात्सुरां पास्यति मन्दबुद्धिः
अपेतधर्मो ब्रह्महा चैव स स्यादस्मिँल्लोके गर्हितः स्यात्परे च ५४
मया चेमां विप्रधर्मोक्तिसीमां मर्यादां वै स्थापितां सर्वलोके
सन्तो विप्राः शुश्रुवांसो गुरूणां देवा लोकाश्चोपशृण्वन्तु सर्वे ५५
इतीदमुक्त्वा स महानुभावस्तपोनिधीनां निधिरप्रमेयः
तान्दानवान्दैवविमूढबुद्धीनिदं समाहूय वचोऽभ्युवाच ५६
आचक्षे वो दानवा बालिशाः स्थ सिद्धः कचो वत्स्यति मत्सकाशे
संजीवनीं प्राप्य विद्यां महार्थां तुल्यप्रभावो ब्रह्मणा ब्रह्मभूतः ५७
गुरोरुष्य सकाशे तु दश वर्षशतानि सः
अनुज्ञातः कचो गन्तुमियेष त्रिदशालयम् ५८

इति श्रीमहाभारते आदिपर्वणि एकसप्ततितमोऽध्यायः ७१

द्विसप्तितमोऽध्यायः

वैशम्पायन उवाच
समावृत्तव्रतं तं तु विसृष्टं गुरुणा तदा
प्रस्थितं त्रिदशावासं देवयान्यब्रवीदिदम् १
ऋषेरङ्गिरसः पौत्र वृत्तेनाभिजनेन च
भ्राजसे विद्यया चैव तपसा च दमेन च २
ऋषिर्यथाङ्गिरा मान्यः पितुर्मम महायशाः
तथा मान्यश्च पूज्यश्च भूयो मम बृहस्पतिः ३
एवं ज्ञात्वा विजानीहि यद्ब्रवीमि तपोधन
व्रतस्थे नियमोपेते तथा वर्ताम्यहं त्वयि ४
स समावृत्तविद्यो मां भक्तां भजितुमर्हसि
गृहाण पाणिं विधिवन्मम मन्त्रपुरस्कृतम् ५
कच उवाच
पूज्यो मान्यश्च भगवान्यथा तव पिता मम
तथा त्वमनद्याङ्गि पूजनीयतरा मम ६
आत्मप्राणैः प्रियतमा भार्गवस्य महात्मनः
त्वं भद्रे धर्मतः पूज्या गुरुपुत्री सदा मम ७
यथा मम गुरुर्नित्यं मान्यः शुक्रः पिता तव
देवयानि तथैव त्वं नैवं मां वक्तुमर्हसि ८
देवयान्युवाच
गुरुपुत्रस्य पुत्रो वै न तु त्वमसि मे पितुः
तस्मान्मान्यश्च पूज्यश्च ममापि त्वं द्विजोत्तम ९
असुरैर्हन्यमाने च कच त्वयि पुनः पुनः
तदा प्रभृति या प्रीतिस्तां त्वमेव स्मरस्व मे १०
सौहार्दे चानुरागे च वेत्थ मे भक्तिमुत्तमाम्
न मामर्हसि धर्मज्ञ त्यक्तुं भक्तामनागसम् ११
कच उवाच
अनियोज्ये नियोगे मां नियुनङ्क्षि शुभव्रते

प्रसीद सुभ्रु त्वं मह्यं गुरोर्गुरुतरी शुभे १२
यत्रोषितं विशालाक्षि त्वया चन्द्रनिभानने
तत्राहमुषितो भद्रे कुक्षौ काव्यस्य भामिनि १३
भगिनी धर्मतो मे त्वं मैवं वोचः शुभानने
सुखमस्म्युषितो भद्रे न मन्युर्विद्यते मम १४
आपृच्छे त्वां गमिष्यामि शिवमाशंस मे पथि
अविरोधेन धर्मस्य स्मर्तव्योऽस्मि कथान्तरे
अप्रमत्तोत्थिता नित्यमाराधय गुरुं मम १५
देवयान्युवाच
यदि मां धर्मकामार्थे प्रत्याख्यास्यसि चोदितः
ततः कच न ते विद्या सिद्धिमेषा गमिष्यति १६
कच उवाच
गुरुपुत्रीति कृत्वाहं प्रत्याचक्षे न दोषतः
गुरुणा चाभ्यनुज्ञातः काममेवं शपस्व माम् १७
आर्षं धर्मं ब्रुवाणोऽह देवयानि यथा त्वया
शप्तो नार्होऽस्मि शापस्य कामतोऽद्य न धर्मतः १८
तस्माद्भवत्या यः कामो न तथा स भविष्यति
ऋषिपुत्रो न ते कश्चिज्जातु पाणिं ग्रहीष्यति १९
फलिष्यति न ते विद्या यत्त्वं मामात्थ तत्तथा
अध्यापयिष्यामि तु यं तस्य विद्या फलिष्यति २०
वैशम्पायन उवाच
एवमुक्त्वा द्विजश्रेष्ठो देवयानीं कचस्तदा
त्रिदशेशालयं शीघ्रं जगाम द्विजसत्तमः २१
तमागतमभिप्रेक्ष्य देवा इन्द्रपुरोगमाः
बृहस्पतिं सभाज्येदं कचमाहुर्मुदान्विताः २२
यत्त्वमस्मद्धितं कर्म चकर्थ परमाद्भुतम्
न ते यशः प्रणशिता भागभाङ् नो भविष्यसि २३
इति श्रीमहाभारते आदिपर्वणि द्विसप्ततितमोऽध्यायः ७२

## त्रिसप्ततितमोऽध्यायः

वैशम्पायन उवाच
कृतविद्ये कचे प्राप्ते हृष्टरूपा दिवौकसः
कचादधीत्य तां विद्यां कृतार्था भरतर्षभ १
सर्व एव समागम्य शतक्रतुमथाब्रुवन्
कालस्ते विक्रमस्याद्य जहि शत्रून्पुरन्दर २
एवमुक्तस्तु सहितैस्त्रिदशैर्मघवांस्तदा
तथेत्युक्त्वोपचक्राम सोऽपश्यत वने स्त्रियः ३
क्रीडन्तीनां तु कन्यानां वने चैत्ररथोपमे
वायुभूतः स वस्त्राणि सर्वाण्येव व्यमिश्रयत् ४
ततो जलात्समुत्तीर्य कन्यास्ताः सहितास्तदा
वस्त्राणि जगृहुस्तानि यथासन्नान्यनेकशः ५
तत्र वासो देवयान्याः शर्मिष्ठा जगृहे तदा
व्यतिमिश्रमजानन्ती दुहिता वृषपर्वणः ६
ततस्तयोर्मिथस्तत्र विरोधः समजायत
देवयान्याश्च राजेन्द्र शर्मिष्ठायाश्च तत्कृते ७
देवयान्युवाच
कस्माद्गृह्णासि मे वस्त्रं शिष्या भूत्वा ममासुरि
समुदाचारहीनाया न ते श्रेयो भविष्यति ८
शर्मिष्ठोवाच
आसीनं च शयानं च पिता ते पितरं मम
स्तौति वन्दति चाभीक्ष्णं नीचैः स्थित्वा विनीतवत् ९
याचतस्त्वं हि दुहिता स्तुवतः प्रतिगृह्णतः
सुताहं स्तूयमानस्य ददतोऽप्रतिगृह्णतः १०
अनायुधा सायुधाया रिक्ता क्षुभ्यसि भिक्षुकि
लप्स्यसे प्रतियोद्धारं न हि त्वां गणयाम्यहम् ११
वैशम्पायन उवाच
समुच्छ्रयं देवयानीं गतां सक्तां च वाससि
शर्मिष्ठा प्राक्षिपत्कूपे ततः स्वपुरमाव्रजत् १२
हतेयमिति विज्ञाय शर्मिष्ठा पापनिश्चया

अनवेक्ष्य ययौ वेश्म क्रोधवेगपरायणा १३
अथ तं देशमभ्यागाद्ययातिर्नहुषात्मजः
श्रान्तयुग्यः श्रान्तहयो मृगलिप्सुः पिपासितः १४
स नाहुषः प्रेक्षमाण उदपानं गतोदकम्
ददर्श कन्यां तां तत्र दीप्तामग्निशिखामिव १५
तामपृच्छत्स दृष्ट्वैव कन्याममरवर्णिनीम्
सान्त्वयित्वा नृपश्रेष्ठः साम्ना परमवल्गुना १६
का त्वं ताम्रनखी श्यामा सुमृष्टमणिकुण्डला
दीर्घं ध्यायसि चात्यर्थं कस्माछ्वसिषि चातुरा १७
कथं च पतितास्यस्मिन्कूपे वीरुत्तृणावृते
दुहिता चैव कस्य त्वं वद सत्यं सुमध्यमे १८
देवयान्युवाच
योऽसौ देवैर्हतान्दैत्यानुत्थापयति विद्यया
तस्य शुक्रस्य कन्याहं स मां नूनं न बुध्यते १९
एष मे दक्षिणो राजन्पाणिस्ताम्रनखाङ्गुलि
समुद्धर गृहीत्वा मां कुलीनस्त्वं हि मे मतः २०
जानामि हि त्वां संशान्तं वीर्यवन्तं यशस्विनम्
तस्मान्मां पतितामस्मात्कूपादुद्धर्तुमर्हसि २१
वैशम्पायन उवाच
तामथ ब्राह्मणीं स्त्रीं च विज्ञाय नहुषात्मजः
गृहीत्वा दक्षिणे पाणावुज्जहार ततोऽवटात् २२
उद्धृत्य चैनां तरसा तस्मात्कूपान्नराधिपः
आमन्त्रयित्वा सुश्रोणीं ययातिः स्वपुरं ययौ २३
देवयान्युवाच
त्वरितं घूर्णिके गच्छ सर्वमाचक्ष्व मे पितुः
नेदानीं हि प्रवेक्ष्यामि नगरं वृषपर्वणः २४
वैशम्पायन उवाच
सा तु वै त्वरितं गत्वा घूर्णिकासुरमन्दिरम्
दृष्ट्वा काव्यमुवाचेदं सम्भ्रमाविष्टचेतना २५
आचक्षे ते महाप्राज्ञ देवयानी वने हता

शर्मिष्ठया महाभाग दुहित्रा वृषपर्वणः २६
श्रुत्वा दुहितरं काव्यस्तत्र शर्मिष्ठया हताम्
त्वरया निर्ययौ दुःखान्मार्गमाणः सुतां वने २७
दृष्ट्वा दुहितरं काव्यो देवयानीं ततो वने
बाहुभ्यां संपरिष्वज्य दुःखितो वाक्यमब्रवीत् २८
आत्मदोषैर्नियच्छन्ति सर्वे दुःखसुखे जनाः
मन्ये दुश्चरितं तेऽस्ति यस्येयं निष्कृतिः कृता २९
देवयान्युवाच
निष्कृतिर्मेऽस्तु वा मास्तु शृणुष्वावहितो मम
शर्मिष्ठया यदुक्तास्मि दुहित्रा वृषपर्वणः
सत्यं किलैतत्सा प्राह दैत्यानामसि गायनः ३०
एवं हि मे कथयति शर्मिष्ठा वार्षपर्वणी
वचनं तीक्ष्णपरुषं क्रोधरक्तेक्षणा भृशम् ३१
स्तुवतो दुहिता हि त्वं याचतः प्रतिगृह्णतः
सुताहं स्तूयमानस्य ददतोऽप्रतिगृह्णतः ३२
इति मामाह शर्मिष्ठा दुहिता वृषपर्वणः
क्रोधसंरक्तनयना दर्पपूर्णा पुनः पुनः ३३
यद्यहं स्तुवतस्तात दुहिता प्रतिगृह्णतः
प्रसादयिष्ये शर्मिष्ठामित्युक्ता हि सखी मया ३४
शुक्र उवाच
स्तुवतो दुहिता न त्वं भद्रे न प्रतिगृह्णतः
अस्तोतुः स्तूयमानस्य दुहिता देवयान्यसि ३५
वृषपर्वैव तद्वेद शक्रो राजा च नाहुषः
अचिन्त्यं ब्रह्म निर्द्वन्द्वमैश्वरं हि बलं मम ३६
इति श्रीमहाभारते आदिपर्वणि त्रिसप्ततितमोऽध्यायः ७३

## चतुःसप्ततितमोऽध्यायः

शुक्र उवाच
यः परेषां नरो नित्यमतिवादांस्तितिक्षति
देवयानि विजानीहि तेन सर्वमिदं जितम् १

यः समुत्पतितं क्रोधं निगृह्णाति हयं यथा
स यन्तेत्युच्यते सद्भिर्न यो रश्मिषु लम्बते २
यः समुत्पतितं क्रोधमक्रोधेन निरस्यति
देवयानि विजानीहि तेन सर्वमिदं जितम् ३
यः समुत्पतितं क्रोधं क्षमयेह निरस्यति
यथोरगस्त्वचं जीर्णां स वै पुरुष उच्यते ४
यः संधारयते मन्युं योऽतिवादांस्तितिक्षति
यश्च तप्तो न तपति दृढं सोऽर्थस्य भाजनम् ५
यो यजेदपरिश्रान्तो मासि मासि शतं समाः
न क्रुद्धेद्यश्च सर्वस्य तयोरक्रोधनोऽधिकः ६
यत्कुमारा कुमार्यश्च वैरं कुर्युरचेतसः
न तत्प्राज्ञोऽनुकुर्वीत विदुस्ते न बलाबलम् ७
देवयान्युवाच
वेदाहं तात बालापि धर्माणां यदिहान्तरम्
अक्रोधे चातिवादे च वेद चापि बलाबलम् ८
शिष्यस्याशिष्यवृत्तेर्हि न क्षन्तव्यं बुभूषता
तस्मात्संकीर्णवृत्तेषु वासो मम न रोचते ९
पुमांसो ये हि निन्दन्ति वृत्तेनाभिजनेन च
न तेषु निवसेत्प्राज्ञः श्रेयोऽर्थी पापबुद्धिषु १०
ये त्वेनमभिजानन्ति वृत्तेनाभिजनेन च
तेषु साधुषु वस्तव्यं स वासः श्रेष्ठ उच्यते ११
वाग्दुरुक्तं महाघोरं दुहितुर्वृषपर्वणः
न ह्यतो दुष्करतरं मन्ये लोकेष्वपि त्रिषु
यः सपत्नश्रियं दीप्तां हीनश्रीः पर्युपासते १२

इति श्रीमहाभारते आदिपर्वणि चतुःसप्ततितमोऽध्यायः ७४

पञ्चसप्ततितमोऽध्यायः

वैशम्पायन उवाच
ततः काव्यो भृगुश्रेष्ठः समन्युरुपगम्य ह
वृषपर्वाणमासीनमित्युवाचाविचारयन् १

नाधर्मश्चरितो राजन्सद्यः फलति गौरिव
पुत्रेषु वा नप्तृषु वा न चेदात्मनि पश्यति
फलत्येव ध्रुवं पापं गुरुभुक्तमिवोदरे २
यदघातयथा विप्रं कचमांगिरसं तदा
अपापशीलं धर्मज्ञं शुश्रूषुं मद्गृहे रतम् ३
वधादनर्हतस्तस्य वधाच्च दुहितुर्मम
वृषपर्वन्निबोधेदं त्यक्ष्यामि त्वां सबान्धवम्
स्थातुं त्वद्विषये राजन्न शक्ष्यामि त्वया सह ४
अहो मामभिजानासि दैत्य मिथ्याप्रलापिनम्
यथेममात्मनो दोषं न नियच्छस्युपेक्षसे ५
वृषपर्वोवाच
नाधर्मं न मृषावादं त्वयि जानामि भार्गव
त्वयि धर्मश्च सत्यं च तत्प्रसीदतु नो भवान् ६
यद्यस्मानपहाय त्वमितो गच्छसि भार्गव
समुद्रं संप्रवेक्ष्यामो नान्यदस्ति परायणम् ७
शुक्र उवाच
समुद्रं प्रविशध्वं वा दिशो वा द्रवतासुराः
दुहितुर्नाप्रियं सोढुं शक्तोऽह दयिता हि मे ८
प्रसाद्यतां देवयानी जीवितं ह्यत्र मे स्थितम्
योगक्षेमकरस्तेऽहमिन्द्रस्येव बृहस्पतिः ९
वृषपर्वोवाच
यत्किंचिदसुरेन्द्राणां विद्यते वसु भार्गव
भुवि हस्तिगवाश्वं च तस्य त्वं मम चेश्वरः १०
शुक्र उवाच
यत्किंचिदस्ति द्रविणं दैत्येन्द्राणां महासुर
तस्येश्वरोऽस्मि यदि ते देवयानी प्रसाद्यताम् ११
देवयान्युवाच
यदि त्वमीश्वरस्तात राज्ञो वित्तस्य भार्गव
नाभिजानामि तत्तेऽह राजा तु वदतु स्वयम् १२
वृषपर्वोवाच

यं काममभिकामासि देवयानि शुचिस्मिते
तत्तेऽह संप्रदास्यामि यदि चेदपि दुर्लभम् १३
देवयान्युवाच
दासीं कन्यासहस्रेण शर्मिष्ठामभिकामये
अनु मां तत्र गच्छेत्सा यत्र दास्यति मे पिता १४
वृषपर्वोवाच
उत्तिष्ठ हे संग्रहीत्रि शर्मिष्ठां शीघ्रमानय
यं च कामयते कामं देवयानी करोतु तम् १५
वैशम्पायन उवाच
ततो धात्री तत्र गत्वा शर्मिष्ठां वाक्यमब्रवीत्
उत्तिष्ठ भद्रे शर्मिष्ठे ज्ञातीनां सुखमावह १६
त्यजति ब्राह्मणः शिष्यान्देवयान्या प्रचोदितः
सा यं कामयते कामं स कार्योऽद्य त्वयानघे १७
शर्मिष्ठोवाच
सा यं कामयते कामं करवाण्यहमद्य तम्
मा त्वेवापगमच्छुक्रो देवयानी च मत्कृते १८
वैशम्पायन उवाच
ततः कन्यासहस्रेण वृता शिबिकया तदा
पितुर्नियोगात्त्वरिता निश्चक्राम पुरोत्तमात् १९
शर्मिष्ठोवाच
अहं कन्यासहस्रेण दासी ते परिचारिका
अनु त्वां तत्र यास्यामि यत्र दास्यति ते पिता २०
देवयान्युवाच
स्तुवतो दुहिता तेऽह बन्दिनः प्रतिगृह्णतः
स्तूयमानस्य दुहिता कथं दासी भविष्यसि २१
शर्मिष्ठोवाच
येन केनचिदार्तानां ज्ञातीनां सुखमावहेत्
अतस्त्वामनुयास्यामि यत्र दास्यति ते पिता २२
वैशम्पायन उवाच
प्रतिश्रुते दासभावे दुहित्रा वृषपर्वणः

देवयानी नृपश्रेष्ठ पितरं वाक्यमब्रवीत् २३
प्रविशामि पुरं तात तुष्टास्मि द्विजसत्तम
अमोघं तव विज्ञानमस्ति विद्याबलं च ते २४
एवमुक्तो दुहित्रा स द्विजश्रेष्ठो महायशाः
प्रविवेश पुरं हृष्टः पूजितः सर्वदानवैः २५
इति श्रीमहाभारते आदिपर्वणि पञ्चसप्ततितमोऽध्यायः ७५

षट् सप्ततितमोऽध्यायः

वैशम्पायन उवाच
अथ दीर्घस्य कालस्य देवयानी नृपोत्तम
वनं तदेव निर्याता क्रीडार्थं वरवर्णिनी १
तेन दासीसहस्रेण सार्धं शर्मिष्ठया तदा
तमेव देशं संप्राप्ता यथाकामं चचार सा
ताभिः सखीभिः सहिता सर्वाभिर्मुदिता भृशम् २
क्रीडन्त्योऽभिरताः सर्वाः पिबन्त्यो मधुमाधवीम्
खादन्त्यो विविधान्भक्ष्यान्विदशन्त्यः फलानि च ३
पुनश्च नाहुषो राजा मृगलिप्सुर्यदृच्छया
तमेव देशं संप्राप्तो जलार्थी श्रमकर्शितः ४
ददृशे देवयानीं च शर्मिष्ठां ताश्च योषितः
पिबन्तीर्ललमानाश्च दिव्याभरणभूषिताः ५
उपविष्टां च ददृशे देवयानीं शुचिस्मिताम्
रूपेणाप्रतिमां तासां स्त्रीणां मध्ये वराङ्गनाम्
शर्मिष्ठया सेव्यमानां पादसंवाहनादिभिः ६
ययातिरुवाच
द्वाभ्यां कन्यासहस्राभ्यां द्वे कन्ये परिवारिते
गोत्रे च नामनी चैव द्वयोः पृच्छामि वामहम् ७
देवयान्युवाच
आख्यास्याम्यहमादत्स्व वचनं मे नराधिप
शुक्रो नामासुरगुरुः सुतां जानीहि तस्य माम् ८
इयं च मे सखी दासी यत्राहं तत्र गामिनी

दुहिता दानवेन्द्रस्य शर्मिष्ठा वृषपर्वणः ९
ययातिरुवाच
कथं नु ते सखी दासी कन्येयं वरवर्णिनी
असुरेन्द्रसुता सुभ्रु परं कौतूहलं हि मे १०
देवयान्युवाच
सर्व एव नरव्याघ्र विधानमनुवर्तते
विधानविहितं मत्वा मा विचित्राः कथाः कृथाः ११
राजवद्रूपवेषौ ते ब्राह्मीं वाचं बिभर्षि च
किंनामा त्वं कुतश्चासि कस्य पुत्रश्च शंस मे १२
ययातिरुवाच
ब्रह्मचर्येण कृत्स्नो मे वेदः श्रुतिपथं गतः
राजाहं राजपुत्रश्च ययातिरिति विश्रुतः १३
देवयान्युवाच
केनास्यर्थेन नृपते इमं देशमुपागतः
जिघृक्षुर्वारिजं किंचिदथवा मृगलिप्सया १४
ययातिरुवाच
मृगलिप्सुरहं भद्रे पानीयार्थमुपागतः
बहु चाप्यनुयुक्तोऽस्मि तन्मानुज्ञातुमर्हसि १५
देवयान्युवाच
द्वाभ्यां कन्यासहस्राभ्यां दास्या शर्मिष्ठया सह
त्वदधीनास्मि भद्रं ते सखा भर्ता च मे भव १६
ययातिरुवाच
विद्ध्यौशनसि भद्रं ते न त्वामर्होऽस्मि भामिनि
अविवाह्या हि राजानो देवयानि पितुस्तव १७
देवयान्युवाच
संसृष्टं ब्रह्मणा क्षत्रं क्षत्रं च ब्रह्मसंहितम्
ऋषिश्च ऋषिपुत्रश्च नाहुषाङ्ग वहस्व माम् १८
ययातिरुवाच
एकदेहोद्भवा वर्णाश्चत्वारोऽपि वराङ्गने
पृथग्धर्माः पृथक्शौचास्तेषां तु ब्राह्मणो वरः १९

देवयान्युवाच
पाणिधर्मो नाहुषायं न पुंभिः सेवितः पुरा
तं मे त्वमग्रहीरग्रे वृणोमि त्वामहं ततः २०
कथं नु मे मनस्विन्याः पाणिमन्यः पुमान्स्पृशेत्
गृहीतमृषिपुत्रेण स्वयं वाप्यृषिणा त्वया २१
ययातिरुवाच
क्रुद्धादाशीविषात्सर्पाज्ज्वलनात्सर्वतोमुखात्
दुराधर्षतरां विप्रः पुरुषेण विजानता २२
देवयान्युवाच
कथमाशीविषात्सर्पाज्ज्वलनात्सर्वतोमुखात्
दुराधर्षतरो विप्र इत्यात्थ पुरुषर्षभ २३
ययातिरुवाच
एकमाशीविषो हन्ति शस्त्रेणैकश्च वध्यते
हन्ति विप्रः सराष्ट्राणि पुराण्यपि हि कोपितः २४
दुराधर्षतरो विप्रस्तस्माद्भीरु मतो मम
अतोऽदत्तां च पित्रा त्वां भद्रे न विवहाम्यहम् २५
देवयान्युवाच
दत्तां वहस्व पित्रा मां त्वं हि राजन्वृतो मया
अयाचतो भयं नास्ति दत्तां च प्रतिगृह्णतः २६
वैशम्पायन उवाच
त्वरितं देवयान्याथ प्रेषितं पितुरात्मनः
श्रुत्वैव च स राजानं दर्शयामास भार्गवः २७
दृष्ट्वैव चागतं शुक्रं ययातिः पृथिवीपतिः
ववन्दे ब्राह्मणं काव्यं प्राञ्जलि प्रणतः स्थितः २८
देवयान्युवाच
राजायं नाहुषस्तात दुर्गे मे पाणिमग्रहीत्
नमस्ते देहि मामस्मै नान्यं लोके पतिं वृणे २९
शुक्र उवाच
वृतोऽनया पतिर्वीर सुतया त्वं ममेष्टया
गृहाणेमां मया दत्तां महिषीं नहुषात्मज ३०

ययातिरुवाच
अधर्मो न स्पृशेदेवं महान्मामिह भार्गव
वर्णसंकरजो ब्रह्मन्निति त्वां प्रवृणोम्यहम् ३१
शुक्र उवाच
अधर्मात्त्वां विमुञ्चामि वरयस्व यथेप्सितम्
अस्मिन्विवाहे मा ग्लासीरहं पापं नुदामि ते ३२
वहस्व भार्यां धर्मेण देवयानीं सुमध्यमाम्
अनया सह संप्रीतिमतुलां समवाप्स्यसि ३३
इयं चापि कुमारी ते शर्मिष्ठा वार्षपर्वणी
संपूज्या सततं राजन्मा चैनां शयने ह्वयेः ३४
वैशम्पायन उवाच
एवमुक्तो ययातिस्तु शुक्रं कृत्वा प्रदक्षिणम्
जगाम स्वपुरं हृष्टो अनुज्ञातो महात्मना ३५
इति श्रीमहाभारते आदिपर्वणि षट्सप्ततितमोऽध्यायः ७६

## सप्त सप्ततितमोऽध्यायः

वैशम्पायन उवाच
ययातिः स्वपुरं प्राप्य महेन्द्रपुरसन्निभम्
प्रविश्यान्तःपुरं तत्र देवयानीं न्यवेशयत् १
देवयान्याश्चानुमते तां सुतां वृषपर्वणः
अशोकवनिकाभ्याशे गृहं कृत्वा न्यवेशयत् २
वृतां दासीसहस्रेण शर्मिष्ठामासुरायणीम्
वासोभिरन्नपानैश्च संविभज्य सुसत्कृताम् ३
देवयान्या तु सहितः स नृपो नहुषात्मजः
विजहार बहूनब्दान्देववन्मुदितो भृशम् ४
ऋतुकाले तु संप्राप्ते देवयानी वराङ्गना
लेभे गर्भं प्रथमतः कुमारं च व्यजायत ५
गते वर्षसहस्रे तु शर्मिष्ठा वार्षपर्वणी
ददर्श यौवनं प्राप्ता ऋतुं सा चान्वचिन्तयत् ६
ऋतुकालश्च संप्राप्तो न च मेऽस्ति पतिर्वृतः

किं प्राप्तं किं नु कर्तव्यं किं वा कृत्वा कृतं भवेत् ७
देवयानी प्रजातासौ वृथाहं प्राप्तयौवना
यथा तया वृतो भर्ता तथैवाहं वृणोमि तम् ८
राज्ञा पुत्रफलं देयमिति मे निश्चिता मतिः
अपीदानीं स धर्मात्मा इयान्मे दर्शनं रहः ९
अथ निष्क्रम्य राजासौ तस्मिन्काले यदृच्छया
अशोकवनिकाभ्याशे शर्मिष्ठां प्राप्य विष्ठितः १०
तमेकं रहिते दृष्ट्वा शर्मिष्ठा चारुहासिनी
प्रत्युद्गम्याञ्जलिं कृत्वा राजानं वाक्यमब्रवीत् ११
सोमस्येन्द्रस्य विष्णोर्वा यमस्य वरुणस्य वा
तव वा नाहुष कुले कः स्त्रियं स्प्रष्टुमर्हति १२
रूपाभिजनशीलैर्हि त्वं राजन्वेत्थ मां सदा
सा त्वां याचे प्रसाद्याहमृतुं देहि नराधिप १३
ययातिरुवाच
वेद्मि त्वां शीलसंपन्नां दैत्यकन्यामनिन्दिताम्
रूपे च ते न पश्यामि सूच्यग्रमपि निन्दितम् १४
अब्रवीदुशना काव्यो देवयानीं यदावहम्
नेयमाह्वयितव्या ते शयने वार्षपर्वणी १५
शर्मिष्ठोवाच
न नर्मयुक्तं वचनं हिनस्ति न स्त्रीषु राजन्न विवाहकाले
प्राणात्यये सर्वधनापहारे पञ्चानृतान्याहुरपातकानि १६
पृष्टं तु साक्ष्ये प्रवदन्तमन्यथा वदन्ति मिथ्योपहितं नरेन्द्र
एकार्थतायां तु समाहितायां मिथ्या वदन्तमनृतं हिनस्ति १७
ययातिरुवाच
राजा प्रमाणं भूतानां स नश्येत मृषा वदन्
अर्थकृच्छ्रमपि प्राप्य न मिथ्या कर्तुमुत्सहे १८
शर्मिष्ठोवाच
समावेतौ मतौ राजन्पतिः सख्याश्च यः पतिः
समं विवाहमित्याहुः सख्या मेऽसि पतिर्वृतः १९
ययातिरुवाच

दातव्यं याचमानेभ्य इति मे व्रतमाहितम्
त्वं च याचसि मां कामं ब्रूहि किं करवाणि ते २०
शर्मिष्ठोवाच
अधर्मात्त्राहि मां राजन्धर्मं च प्रतिपादय
त्वत्तोऽपत्यवती लोके चरेयं धर्ममुत्तमम् २१
त्रय एवाधना राजन्भार्या दासस्तथा सुतः
यत्ते समधिगच्छन्ति यस्य ते तस्य तद्धनम् २२
देवयान्या भुजिष्यास्मि वश्या च तव भार्गवी
सा चाहं च त्वया राजन्भरणीये भजस्व माम् २३
वैशम्पायन उवाच
एवमुक्तस्तु राजा स तथ्यमित्येव जज्ञिवान्
पूजयामास शर्मिष्ठां धर्मं च प्रत्यपादयत् २४
समागम्य च शर्मिष्ठां यथाकाममवाप्य च
अन्योन्यमभिसंपूज्य जग्मतुस्तौ यथागतम् २५
तस्मिन्समागमे सुभ्रूः शर्मिष्ठा चारुहासिनी
लेभे गर्भं प्रथमतस्तस्मान्नृपतिसत्तमात् २६
प्रजज्ञे च ततः काले राजन्राजीवलोचना
कुमारं देवगर्भाभं राजीवनिभलोचनम् २७
इति श्रीमहाभारते आदिपर्वणि सप्तसप्ततितमोऽध्यायः ७७

## अष्टसप्ततितमोऽध्यायः

वैशम्पायन उवाच
श्रुत्वा कुमारं जातं तु देवयानी शुचिस्मिता
चिन्तयामास दुःखार्ता शर्मिष्ठां प्रति भारत १
अभिगम्य च शर्मिष्ठां देवयान्यब्रवीदिदम्
किमिदं वृजिनं शुभ्रु कृतं ते कामलुब्धया २
शर्मिष्ठोवाच
ऋषिरभ्यागतः कश्चिद्धर्मात्मा वेदपारगः
स मया वरदः कामं याचितो धर्मसंहितम् ३
नाहमन्यायतः काममाचरामि शुचिस्मिते

तस्मादृषेर्ममापत्यमिति सत्यं ब्रवीमि ते ४
देवयान्युवाच
शोभनं भीरु सत्यं चेदथ स ज्ञायते द्विजः
गोत्रनामाभिजनतो वेत्तुमिच्छामि तं द्विजम् ५
शर्मिष्ठोवाच
ओजसा तेजसा चैव दीप्यमानं रविं यथा
तं दृष्ट्वा मम संप्रष्टुं शक्तिर्नासीच्छुचिस्मिते ६
देवयान्युवाच
यद्येतदेवं शर्मिष्ठे न मन्युर्विद्यते मम
अपत्यं यदि ते लब्धं ज्येष्ठाच्छ्रेष्ठाच्च वै द्विजात् ७
वैशम्पायन उवाच
अन्योन्यमेवमुक्त्वा तु संप्रहस्य च ते मिथः
जगाम भार्गवी वेश्म तथ्यमित्येव जज्ञुषी ८
ययातिर्देवयान्यां तु पुत्रावजनयन्नृपः
यदुं च तुर्वसुं चैव शक्रविष्णू इवापरौ ९
तस्मादेव तु राजर्षेः शर्मिष्ठा वार्षपर्वणी
द्रुह्युं चानुं च पूरुं च त्रीन्कुमारानजीजनत् १०
ततः काले तु कस्मिंश्चिद्देवयानी शुचिस्मिता
ययातिसहिता राजन्निर्जगाम महावनम् ११
ददर्श च तदा तत्र कुमारान्देवरूपिणः
क्रीडमानान्सुविश्रब्धान्विस्मिता चेदमब्रवीत् १२
कस्यैते दारका राजन्देवपुत्रोपमाः शुभाः
वर्चसा रूपतश्चैव सदृशा मे मतास्तव १३
एवं पृष्ट्वा तु राजानं कुमारान्पर्यपृच्छत
किंनामधेयगोत्रो वः पुत्रका ब्राह्मणः पिता
विब्रूत मे यथातथ्यं श्रोतुमिच्छामि तं ह्यहम् १४
तेऽदर्शयन्प्रदेशिन्या तमेव नृपसत्तमम्
शर्मिष्ठां मातरं चैव तस्याचख्युश्च दारकाः १५
इत्युक्त्वा सहितास्ते तु राजानमुपचक्रमुः
नाभ्यनन्दत तान्राजा देवयान्यास्तदान्तिके

रुदन्तस्तेऽथ शर्मिष्ठामभ्ययुर्बालकास्ततः १६
दृष्ट्वा तु तेषां बालानां प्रणयं पार्थिवं प्रति
बुद्ध्वा च तत्त्वतो देवी शर्मिष्ठामिदमब्रवीत् १७
मदधीना सती कस्मादकार्षीर्विप्रियं मम
तमेवासुरधर्मं त्वमास्थिता न बिभेषि किम् १८
शर्मिष्ठोवाच
यदुक्तमृषिरित्येव तत्सत्यं चारुहासिनि
न्यायतो धर्मतश्चैव चरन्ती न बिभेमि ते १९
यदा त्वया वृतो राजा वृत एव तदा मया
सखीभर्ता हि धर्मेण भर्ता भवति शोभने २०
पूज्यासि मम मान्या च ज्येष्ठा श्रेष्ठा च ब्राह्मणी
त्वत्तोऽपि मे पूज्यतमो राजर्षिः किं न वेत्थ तत् २१
वैशम्पायन उवाच
श्रुत्वा तस्यास्ततो वाक्यं देवयान्यब्रवीदिदम्
राजन्नाद्येह वत्स्यामि विप्रियं मे कृतं त्वया २२
सहसोत्पतितां श्यामां दृष्ट्वा तां साश्रुलोचनाम्
त्वरितं सकाशं काव्यस्य प्रस्थितां व्यथितस्तदा २३
अनुवव्राज संभ्रान्तः पृष्ठतः सान्त्वयन्नृपः
न्यवर्तत न चैव स्म क्रोधसंरक्तलोचना २४
अविब्रुवन्ती किंचित्तु राजानं चारुलोचना
अचिरादेव संप्राप्ता काव्यस्योशनसोऽन्तिकम् २५
सा तु दृष्ट्वैव पितरमभिवाद्याग्रतः स्थिता
अनन्तरं ययातिस्तु पूजयामास भार्गवम् २६
देवयान्युवाच
अधर्मेण जितो धर्मः प्रवृत्तमधरोत्तरम्
शर्मिष्ठयातिवृत्तास्मि दुहित्रा वृषपर्वणः २७
त्रयोऽस्या जनिताः पुत्रा राज्ञानेन ययातिना
दुर्भगाया मम द्वौ तु पुत्रौ तात ब्रवीमि ते २८
धर्मज्ञ इति विख्यात एष राजा भृगूद्वह
अतिक्रान्तश्च मर्यादां काव्यैतत्कथयामि ते २९

शुक्र उवाच
धर्मज्ञः सन्महाराज योऽधर्ममकृथाः प्रियम्
तस्माज्जरा त्वामचिराद्धर्षयिष्यति दुर्जया ३०
ययातिरुवाच
ऋतुं वै याचमानाया भगवन्नान्यचेतसा
दुहितुर्दानवेन्द्रस्य धर्म्यमेतत्कृतं मया ३१
ऋतुं वै याचमानाया न ददाति पुमान्वृतः
भ्रूणहेत्युच्यते ब्रह्मन्स इह ब्रह्मवादिभिः ३२
अभिकामां स्त्रियं यस्तु गम्यां रहसि याचितः
नोपैति स च धर्मेषु भ्रूणहेत्युच्यते बुधैः ३३
इत्येतानि समीक्ष्याहं कारणानि भृगूद्वह
अधर्मभयसंविग्नः शर्मिष्ठामुपजग्मिवान् ३४
शुक्र उवाच
नन्वहं प्रत्यवेक्ष्यस्ते मदधीनोऽसि पार्थिव
मिथ्याचारस्य धर्मेषु चौर्यं भवति नाहुष ३५
वैशम्पायन उवाच
क्रुद्धेनोशनसा शप्तो ययातिर्नाहुषस्तदा
पूर्वं वयः परित्यज्य जरां सद्योऽन्वपद्यत ३६
ययातिरुवाच
अतृप्तो यौवनस्याहं देवयान्यां भृगूद्वह
प्रसादं कुरु मे ब्रह्मञ्जरेयं मा विशेत माम् ३७
शुक्र उवाच
नाहं मृषा ब्रवीम्येतज्जरां प्राप्तोऽसि भूमिप
जरां त्वेतां त्वमन्यस्मै संक्रामय यदीच्छसि ३८
ययातिरुवाच
राज्यभाक्स भवेद्ब्रह्मन्पुण्यभाक्कीर्तिभाक्तथा
यो मे दद्याद्वयः पुत्रस्तद्भवाननुमन्यताम् ३९
शुक्र उवाच
संक्रामयिष्यसि जरां यथेष्टं नहुषात्मज
मामनुध्याय भावेन न च पापमवाप्स्यसि ४०

वयो दास्यति ते पुत्रो यः स राजा भविष्यति
आयुष्मान्कीर्तिमांश्चैव बह्वपत्यस्तथैव च ४१
इति श्रीमहाभारते आदिपर्वणि अष्टसप्ततितमोऽध्यायः ७८

## एकोनाशीतितमोऽध्यायः

वैशम्पायन उवाच
जरां प्राप्य ययातिस्तु स्वपुरं प्राप्य चैव हि
पुत्रं ज्येष्ठं वरिष्ठं च यदुमित्यब्रवीद्वचः १
जरा वली च मां तात पलितानि च पर्यगुः
काव्यस्योशनसः शापान्न च तृप्तोऽस्मि यौवने २
त्वं यदो प्रतिपद्यस्व पाप्मानं जरया सह
यौवनेन त्वदीयेन चरेयं विषयानहम् ३
पूर्णे वर्षसहस्रे तु पुनस्ते यौवनं त्वहम्
दत्त्वा स्वं प्रतिपत्स्यामि पाप्मानं जरया सह ४
यदुरुवाच
सितश्मश्रुशिरा दीनो जरया शिथिलीकृतः
वलीसंततगात्रश्च दुर्दर्शो दुर्बलः कृशः ५
अशक्तः कार्यकरणे परिभूतः स यौवनैः
सहोपजीविभिश्चैव तां जरां नाभिकामये ६
ययातिरुवाच
यत्त्वं मे हृदयाज्जातो वयः स्वं न प्रयच्छसि
तस्मादराज्यभाक्तात प्रजा ते वै भविष्यति ७
तुर्वसो प्रतिपद्यस्व पाप्मानं जरया सह
यौवनेन चरेयं वै विषयांस्तव पुत्रक ८
पूर्णे वर्षसहस्रे तु पुनर्दास्यामि यौवनम्
स्वं चैव प्रतिपत्स्यामि पाप्मानं जरया सह ९
तुर्वसुरुवाच
न कामये जरां तात कामभोगप्रणाशिनीम्
बलरूपान्तकरणीं बुद्धिप्राणप्रणाशिनीम् १०
ययातिरुवाच

यत्त्वं मे हृदयाज्ञातो वयः स्वं न प्रयच्छसि
तस्मात्प्रजा समुच्छेदं तुर्वसो तव यास्यति ११
संकीर्णाचारधर्मेषु प्रतिलोमचरेषु च
पिशिताशिषु चान्त्येषु मूढ राजा भविष्यसि १२
गुरुदारप्रसक्तेषु तिर्यग्योनिगतेषु च
पशुधर्मिषु पापेषु म्लेच्छेषु प्रभविष्यसि १३
वैशम्पायन उवाच
एवं स तुर्वसुं शप्त्वा ययातिः सुतमात्मनः
शर्मिष्ठायाः सुतं द्रुह्युमिदं वचनमब्रवीत् १४
द्रुह्यो त्वं प्रतिपद्यस्व वर्णरूपविनाशिनीम्
जरां वर्षसहस्रं मे यौवनं स्वं ददस्व च १५
पूर्णे वर्षसहस्रे तु प्रतिदास्यामि यौवनम्
स्वं चादास्यामि भूयोऽह पाप्मानं जरया सह १६
द्रुह्युरुवाच
न गजं न रथं नाश्वं जीर्णो भुंक्ते न च स्त्रियम्
वाग्भङ्गश्चास्य भवति तज्जरां नाभिकामये १७
ययातिरुवाच
यत्त्वं मे हृदयाज्ञातो वयः स्वं न प्रयच्छसि
तस्माद्द्रुह्यो प्रियः कामो न ते संपत्स्यते क्वचित् १८
उडुपप्लवसंतारो यत्र नित्यं भविष्यति
अराजा भोजशब्दं त्वं तत्रावाप्स्यसि सान्वयः १९
अनो त्वं प्रतिपद्यस्व पाप्मानं जरया सह
एकं वर्षसहस्रं तु चरेयं यौवनेन ते २०
अनुरुवाच
जीर्णः शिशुवदादत्तेऽकालेऽन्नमशुचिर्यथा
न जुहोति च कालेऽग्नि तां जरां नाभिकामये २१
ययातिरुवाच
यत्त्वं मे हृदयाज्ञातो वयं स्वं न प्रयच्छसि
जरादोषस्त्वयोक्तोऽय तस्मात्त्वं प्रतिपत्स्यसे २२
प्रजाश्च यौवनप्राप्ता विनशिष्यन्त्यनो तव

अग्निप्रस्कन्दनपरस्त्वं चाप्येवं भविष्यसि २३
पूरो त्वं मे प्रियः पुत्रस्त्वं वरीयान्भविष्यसि
जरा वली च मे तात पलितानि च पर्यगुः
काव्यस्योशनसः शापान्न च तृप्तोऽस्मि यौवने २४
पूरो त्वं प्रतिपद्यस्व पाप्मानं जरया सह
कंचित्कालं चरेयं वै विषयान्वयसा तव २५
पूर्णे वर्षसहस्रे तु प्रतिदास्यामि यौवनम्
स्वं चैव प्रतिपत्स्यामि पाप्मानं जरया सह २६
वैशम्पायन उवाच
एवमुक्तः प्रत्युवाच पूरुः पितरमञ्जसा
यथात्थ मां महाराज तत्करिष्यामि ते वचः २७
प्रतिपत्स्यामि ते राजन्पाप्मानं जरया सह
गृहाण यौवनं मत्तश्चर कामान्यथेप्सितान् २८
जरयाहं प्रतिच्छन्नो वयोरूपधरस्तव
यौवनं भवते दत्वा चरिष्यामि यथात्थ माम् २९
ययातिरुवाच
पूरो प्रीतोऽस्मि ते वत्स प्रीतश्चेदं ददामि ते
सर्वकामसमृद्धा ते प्रजा राज्ये भविष्यति ३०
इति श्रीमहाभारते आदिपर्वणि एकोनाशीतितमोऽध्यायः ७९

## अशीतितमोऽध्यायः

वैशम्पायन उवाच
पौरवेणाथ वयसा ययातिर्नहुषात्मजः
प्रीतियुक्तो नृपश्रेष्ठश्चचार विषयान्प्रियान् १
यथाकामं यथोत्साहं यथाकालं यथासुखम्
धर्माविरुद्धान्राजेन्द्रो यथार्हति स एव हि २
देवानतर्पयद्यज्ञैः श्राद्धैस्तद्वत्पितॄनपि
दीनाननुग्रहैरिष्टैः कामैश्च द्विजसत्तमान् ३
अतिथीनन्नपानैश्च विशश्च परिपालनैः
आनृशंस्येन शूद्रांश्च दस्यून् संनिग्रहेण च ४

धर्मेण च प्रजाः सर्वा यथावदनुरञ्जयन्
ययातिः पालयामास साक्षादिन्द्र इवापरः ५
स राजा सिंहविक्रान्तो युवा विषयगोचरः
अविरोधेन धर्मस्य चचार सुखमुत्तमम् ६
स संप्राप्य शुभान्कामांस्तृप्तः खिन्नश्च पार्थिवः
कालं वर्षसहस्रान्तं सस्मार मनुजाधिपः ७
परिसंख्याय कालज्ञः कलाः काष्ठाश्च वीर्यवान्
पूर्णं मत्वा ततः कालं पूरुं पुत्रमुवाच ह ८
यथाकामं यथोत्साहं यथाकालमरिंदम
सेविता विषयाः पुत्र यौवनेन मया तव ९
पूरो प्रीतोऽस्मि भद्रं ते गृहाणेदं स्वयौवनम्
राज्यं चैव गृहाणेदं त्वं हि मे प्रियकृत्सुतः १०
प्रतिपेदे जरां राजा ययातिर्नाहुषस्तदा
यौवनं प्रतिपेदे च पूरुः स्वं पुनरात्मनः ११
अभिषेक्तुकामं नृपतिं पूरुं पुत्रं कनीयसम्
ब्राह्मणप्रमुखा वर्णा इदं वचनमब्रुवन् १२
कथं शुक्रस्य नप्तारं देवयान्याः सुतं प्रभो
ज्येष्ठं यदुमतिक्रम्य राज्यं पूरोः प्रदास्यसि १३
यदुर्ज्येष्ठस्तव सुतो जातस्तमनु तुर्वसुः
शर्मिष्ठायाः सुतो द्रुह्युस्ततोऽनु पूरुरेव च १४
कथं ज्येष्ठानतिक्रम्य कनीयान्राज्यमर्हति
एतत्संबोधयामस्त्वां धर्मं त्वमनुपालय १५
ययातिरुवाच
ब्राह्मणप्रमुखा वर्णाः सर्वे शृणवन्तु मे वचः
ज्येष्ठं प्रति यथा राज्यं न देयं मे कथंचन १६
मम ज्येष्ठेन यदुना नियोगो नानुपालितः
प्रतिकूलः पितुर्यश्च न स पुत्रः सतां मतः १७
मातापित्रोर्वचनकृद्धितः पथ्यश्च यः सुतः
स पुत्रः पुत्रवद्यश्च वर्तते पितृमातृषु १८
यदुनाहमवज्ञातस्तथा तुर्वसुनापि च

द्रुह्युना चानुना चैव मय्यवज्ञा कृता भृशम् १९
पूरुणा मे कृतं वाक्यं मानितश्च विशेषतः
कनीयान्मम दायादो जरा येन धृता मम
मम कामः स च कृतः पूरुणा पुत्ररूपिणा २०
शुक्रेण च वरो दत्तः काव्येनोशनसा स्वयम्
पुत्रो यस्त्वानुवर्तेत स राजा पृथिवीपतिः
भवतोऽनुनयाम्येवं पुरू राज्येऽभिषिच्यताम् २१
प्रकृतय ऊचुः
यः पुत्रो गुणसंपन्नो मातापित्रोर्हितः सदा
सर्वमर्हति कल्याणं कनीयानपि स प्रभो २२
अर्हः पूरुरिदं राज्यं यः सुतः प्रियकृत्तव
वरदानेन शुक्रस्य न शक्यं वक्तुमुत्तरम् २३
वैशम्पायन उवाच
पौरजानपदैस्तुष्टैरित्युक्तो नाहुषस्तदा
अभ्यषिञ्चत्ततः पूरुं राज्ये स्वे सुतमात्मजम् २४
दत्त्वा च पूरवे राज्यं वनवासाय दीक्षितः
पुरात्स निर्ययौ राजा ब्राह्मणैस्तापसैः सह २५
यदोस्तु यादवा जातास्तुर्वसोर्यवनाः सुताः
द्रुह्योरपि सुता भोजा अनोस्तु म्लेच्छजातयः २६
पूरोस्तु पौरवो वंशो यत्र जातोऽसि पार्थिव
इदं वर्षसहस्राय राज्यं कारयितुं वशी २७
इति श्रीमहाभारते आदिपर्वणि अशीतितमोऽध्यायः ८०

## एकाशीतितमोऽध्यायः

वैशम्पायन उवाच
एवं स नाहुषो राजा ययातिः पुत्रमीप्सितम्
राज्येऽभिषिच्य मुदितो वानप्रस्थोऽभवन्मुनिः १
उषित्वा च वने वासं ब्राह्मणैः सह संश्रितः
फलमूलाशनो दान्तो यथा स्वर्गमितो गतः २
स गतः सुरवासं तं निवसन्मुदितः सुखम्

कालस्य नातिमहतः पुनः शक्रेण पातितः ३
निपतन्प्रच्युतः स्वर्गादप्राप्तो मेदिनीतलम्
स्थित आसीदन्तरिक्षे स तदेति श्रुतं मया ४
तत एव पुनश्चापि गतः स्वर्गमिति श्रुतिः
राज्ञा वसुमता सार्धमष्टकेन च वीर्यवान्
प्रतर्दनेन शिबिना समेत्य किल संसदि ५
जनमेजय उवाच
कर्मणा केन स दिवं पुनः प्राप्तो महीपतिः
सर्वमेतदशेषेण श्रोतुमिच्छामि तत्त्वतः
कथ्यमानं त्वया विप्रं विप्रर्षिगणसंनिधौ ६
देवराजसमो ह्यासीद्ययातिः पृथिवीपतिः
वर्धनः कुरुवंशस्य विभावसुसमद्युतिः ७
तस्य विस्तीर्णयशसः सत्यकीर्तेर्महात्मनः
चरितं श्रोतुमिच्छामि दिवि चेह च सर्वशः ८
वैशम्पायन उवाच
हन्त ते कथयिष्यामि ययातेरुत्तरां कथाम्
दिवि चेह च पुण्यार्थां सर्वपापप्रणाशिनीम् ९
ययातिर्नाहुषो राजा पूरुं पुत्रं कनीयसम्
राज्येऽभिषिच्य मुदितः प्रवव्राज वनं तदा १०
अन्तेषु स विनिक्षिप्य पुत्रान्यदुपुरोगमान्
फलमूलाशनो राजा वने संन्यवसच्चिरम् ११
संशितात्मा जितक्रोधस्तर्पयन्पितृदेवताः
अग्नींश्च विधिवज्जुह्वन्वानप्रस्थविधानतः १२
अतिथीन्पूजयामास वन्येन हविषा विभुः
शिलोञ्छवृत्तिमास्थाय शेषान्नकृतभोजनः १३
पूर्णं वर्षसहस्रं च एवंवृत्तिरभून्नृपः
अब्भक्षः शरदस्त्रिंशदासीन्नियतवाङ्मनाः १४
ततश्च वायुभक्षोऽभूत्संवत्सरमतन्द्रितः
पञ्चाग्निमध्ये च तपस्तेपे संवत्सरं नृपः १५
एकपादस्थितश्चासीत्षण्मासाननिलाशनः

पुण्यकीर्तिस्ततः स्वर्गं जगामावृत्य रोदसी १६
इति श्रीमहाभारते आदिपर्वणि एकाशीतितमोऽध्यायः ८१

द्व्यशीतितमोऽध्यायः

वैशम्पायन उवाच
स्वर्गतः स तु राजेन्द्रो निवसन्देवसद्मनि
पूजितस्त्रिदशैः साध्यैर्मरुद्भिर्वसुभिस्तथा १
देवलोकाद्ब्रह्मलोकं संचरन्पुण्यकृद्वशी
अवसत्पृथिवीपालो दीर्घकालमिति श्रुतिः २
स कदाचिन्नृपश्रेष्ठो ययातिः शक्रमागमत्
कथान्ते तत्र शक्रेण पृष्टः स पृथिवीपतिः ३
शक्र उवाच
यदा स पूरुस्तव रूपेण राजञ्जरां गृहीत्वा प्रचचार भूमौ
तदा राज्यं संप्रदायैव तस्मै त्वया किमुक्तः कथयेह सत्यम् ४
ययातिरुवाच
गङ्गायमुनयोर्मध्ये कृत्स्नोऽय विषयस्तव
मध्ये पृथिव्यास्त्वं राजा भ्रातरोऽन्त्याधिपास्तव ५
अक्रोधनः क्रोधनेभ्यो विशिष्टस्तथा तितिक्षुरतितिक्षोर्विशिष्टः
अमानुषेभ्यो मानुषाश्च प्रधाना विद्वांस्तथैवाविदुषः प्रधानः ६
आक्रुश्यमानो नाक्रोशेन्मन्युरेव तितिक्षतः
आक्रोष्टारं निर्दहति सुकृतं चास्य विन्दति ७
नारुन्तुदः स्यान्न नृशंसवादी न हीनतः परमभ्याददीत
ययास्य वाचा पर उद्विजेत न तां वदेद्रुशतीं पापलोक्याम् ८
अरुन्तुदं पुरुषं रूक्षवाचं वाक्कण्टकैर्वितुदन्तं मनुष्यान्
विद्यादलक्ष्मीकतमं जनानां मुखे निबद्धां निर्ऋतिं वहन्तम् ९
सद्भिः पुरस्तादभिपूजितः स्यात्सद्भिस्तथा पृष्ठतो रक्षितः स्यात्
सदासतामतिवादांस्तितिक्षेत्सतां वृत्तं चाददीतार्यवृत्तः १०
वाक्सायका वदनान्निष्पतन्ति यैराहतः शोचति रात्र्यहानि
परस्य वा मर्मसु ये पतन्ति तान्पण्डितो नावसृजेत्परेषु ११
न हीदृशं संवननं त्रिषु लोकेषु विद्यते

यथा मैत्री च भूतेषु दानं च मधुरा च वाक् १२
तस्मात्सान्त्वं सदा वाच्यं न वाच्यं परुषं क्वचित्
पूज्यान्संपूजयेद्दद्यान्न च याचेत्कदाचन १३
इति श्रीमहाभारते आदिपर्वणि द्व्यशीतितमोऽध्यायः ८२

त्र्यशीतितमोऽध्यायः

इन्द्र उवाच
सर्वाणि कर्माणि समाप्य राजन्गृहान्परित्यज्य वनं गतोऽसि
तत्त्वां पृच्छामि नहुषस्य पुत्र केनासि तुल्यस्तपसा ययाते १
ययातिरुवाच
नाहं देवमनुष्येषु न गन्धर्वमहर्षिषु
आत्मनस्तपसा तुल्यं कंचित्पश्यामि वासव २
इन्द्र उवाच
यदावमंस्थाः सदृशः श्रेयसश्च पापीयसश्चाविदितप्रभावः
तस्माल्लोका अन्तवन्तस्तवेमे क्षीणे पुण्ये पतितास्यद्य राजन् ३
ययातिरुवाच
सुरर्षिगन्धर्वनरावमानात्क्षयं गता मे यदि शक्र लोकाः
इच्छेयं वै सुरलोकाद्विहीनः सतां मध्ये पतितुं देवराज ४
इन्द्र उवाच
सतां सकाशे पतितासि राजंश्च्युतः प्रतिष्ठां यत्र लब्धासि भूयः
एवं विदित्वा तु पुनर्ययाते न तेऽवमान्याः सदृशः श्रेयसश्च ५
वैशम्पायन उवाच
ततः प्रहायामरराजजुष्टान्पुण्याँल्लोकान्पतमानं ययातिम्
संप्रेक्ष्य राजर्षिवरोऽष्टकस्तमुवाच सद्धर्मविधानगोप्ता ६
कस्त्वं युवा वासवतुल्यरूपः स्वतेजसा दीप्यमानो यथाग्निः
पतस्युदीर्णाम्बुधरान्धकारात्खात्खेचराणां प्रवरो यथार्कः ७
दृष्ट्वा च त्वां सूर्यपथात्पतन्तं वैश्वानरार्कद्युतिमप्रमेयम्
किं नु स्विदेतत्पततीति सर्वे वितर्कयन्तः परिमोहिताः स्मः ८
दृष्ट्वा च त्वां विष्ठितं देवमार्गे शक्रार्कविष्णुप्रतिमप्रभावम्
अभ्युद्गतास्त्वां वयमद्य सर्वे तत्त्वं पाते तव जिज्ञासमानाः ९

न चापि त्वां धृष्णुमः प्रष्टुमग्रे न च त्वमस्मान्पृच्छसि ये वयं स्मः
तत्त्वां पृच्छामः स्पृहणीयरूपं कस्य त्वं वा किंनिमित्तं त्वमागाः १०
भयं तु ते व्येतु विषादमोहौ त्यजाशु देवेन्द्रसमानरूप
त्वां वर्तमानं हि सतां सकाशे नालं प्रसोढुं बलहापि शक्रः ११
सन्तः प्रतिष्ठा हि सुखच्युतानां सतां सदैवामरराजकल्प
ते संगताः स्थावरजङ्गमेशाः प्रतिष्ठितस्त्वं सदृशेषु सत्सु १२
प्रभुरग्निः प्रतपने भूमिरावपने प्रभुः
प्रभुः सूर्यः प्रकाशित्वे सतां चाभ्यागतः प्रभुः १३
इति श्रीमहाभारते आदिपर्वणि त्र्यशीतितमोऽध्यायः ८३

## चतुरशीतितमोऽध्यायः

ययातिरुवाच
अहं ययातिर्नहुषस्य पुत्रः पूरोः पिता सर्वभूतावमानात्
प्रभ्रंशितः सुरसिद्धर्षिलोकात्परिच्युतः प्रपताम्यल्पपुण्यः १
अहं हि पूर्वो वयसा भवद्भ्यस्तेनाभिवादं भवतां न प्रयुञ्जे
यो विद्यया तपसा जन्मना वा वृद्धः स पूज्यो भवति द्विजानाम् २
अष्टक उवाच
अवादीश्चेद्वयसा यः स वृद्ध इति राजन्नाभ्यवदः कथंचित्
यो वै विद्वान्वयसा सन्स्म वृद्धः स एव पूज्यो भवति द्विजानाम् ३
ययातिरुवाच
प्रतिकूलं कर्मणां पापमाहुस्तद्वर्ततेऽप्रवणे पापलोक्यम्
सन्तोऽसतां नानुवर्तन्ति चैतद्यथा आत्मैषामनुकूलवादी ४
अभूद्धनं मे विपुलं महद्वै विचेष्टमानो नाधिगन्ता तदस्मि
एवं प्राधार्यात्महिते निविष्टो यो वर्तते स विजानाति जीवन् ५
नानाभावा बहवो जीवलोके दैवाधीना नष्टचेष्टाधिकाराः
तत्तत्प्राप्य न विहन्येत धीरो दिष्टं बलीय इति मत्वात्मबुद्ध्या ६
सुखं हि जन्तुर्यदि वापि दुःखं दैवाधीनं विन्दते नात्मशक्त्या
तस्माद्दिष्टं बलवन्मन्यमानो न संज्वरेन्नापि हृष्येत्कदाचित् ७
दुःखे न तप्येन्न सुखेन हृष्येत्समेन वर्तेत सदैव धीरः
दिष्टं बलीय इति मन्यमानो न संज्वरेन्नापि हृष्येत्कदाचित् ८

भये न मुह्याम्यष्टकाहं कदाचित्संतापी मे मानसो नास्ति कश्चित्
धाता यथा मां विदधाति लोके ध्रुवं तथाहं भवितेति मत्वा ९
संस्वेदजा अण्डजा उद्भिदाश्च सरीसृपाः कृमयोऽथाप्सु मत्स्याः
तथाश्मानस्तृणकाष्ठं च सर्वं दिष्टक्षये स्वां प्रकृतिं भजन्ते १०
अनित्यतां सुखदुःखस्य बुद्ध्वा कस्मात्संतापमष्टकाहं भजेयम्
किं कुर्यां वै किं च कृत्वा न तप्ये तस्मात्संतापं वर्जयाम्यप्रमत्तः ११
अष्टक उवाच
ये ये लोकाः पार्थिवेन्द्र प्रधानास्त्वया भुक्ता यं च कालं यथा च
तन्मे राजन्ब्रूहि सर्वं यथावत्क्षेत्रज्ञवद्भाषसे त्वं हि धर्मान् १२
ययातिरुवाच
राजाहमासमिह सार्वभौमस्ततो लोकान्महतो अजयं वै
तत्रावसं वर्षसहस्रमात्रं ततो लोकं परमस्म्यभ्युपेतः १३
ततः पुरीं पुरुहूतस्य रम्यां सहस्रद्वारां शतयोजनायताम्
अध्यावसं वर्षसहस्रमात्रं ततो लोकं परमस्म्यभ्युपेतः १४
ततो दिव्यमजरं प्राप्य लोकं प्रजापतेर्लोकपतेर्दुरापम्
तत्रावसं वर्षसहस्रमात्रं ततो लोकं परमस्म्यभ्युपेतः १५
देवस्य देवस्य निवेशने च विजित्य लोकानवसं यथेष्टम्
संपूज्यमानस्त्रिदशैः समस्तैस्तुल्यप्रभावद्युतिरीश्वराणाम् १६
तथावसं नन्दने कामरूपी संवत्सराणामयुतं शतानाम्
सहाप्सरोभिर्विहरन्पुण्यगन्धान्पश्यन्नगान्पुष्पितांश्चारुरूपान् १७
तत्रस्थं मां देवसुखेषु सक्तं कालेऽतीते महति ततोऽतिमात्रम्
दूतो देवानामब्रवीदुग्ररूपो ध्वंसेत्युच्चैस्त्रिः प्लुतेन स्वरेण १८
एतावन्मे विदितं राजसिंह ततो भ्रष्टोऽहं नन्दनात्क्षीणपुण्यः
वाचोऽश्रौषं चान्तरिक्षे सुराणामनुक्रोशाच्छोचतां मानवेन्द्र १९
अहो कष्टं क्षीणपुण्यो ययातिः पतत्यसौ पुण्यकृत्पुण्यकीर्तिः
तानब्रुवं पतमानस्ततोऽहं सतां मध्ये निपतेयं कथं नु २०
तैराख्याता भवतां यज्ञभूमिः समीक्ष्य चैनां त्वरितमुपागतोऽस्मि
हविर्गन्धं देशिकं यज्ञभूमेर्धूमापाङ्गं प्रतिगृह्य प्रतीतः २१
इति श्रीमहाभारते आदिपर्वणि चतुरशीतितमोऽध्यायः ८४

## पञ्चाशीतितमोऽध्यायः

अष्टक उवाच
यदावसो नन्दने कामरूपी संवत्सराणामयुतं शतानाम्
किं कारणं कार्तयुगप्रधान हित्वा तत्त्वं वसुधामन्वपद्यः १
ययातिरुवाच
ज्ञातिः सुहृत्स्वजनो यो यथेह क्षीणे वित्ते त्यज्यते मानवैर्हि
तथा तत्र क्षीणपुण्यं मनुष्यं त्यजन्ति सद्यः सेश्वरा देवसङ्घाः २
अष्टक उवाच
कथं तस्मिन्क्षीणपुण्या भवन्ति संमुह्यते मेऽत्र मनोऽतिमात्रम्
किंविशिष्टाः कस्य धामोपयान्ति तद्वै ब्रूहि क्षेत्रवित्त्वं मतो मे ३
ययातिरुवाच
इमं भौमं नरकं ते पतन्ति लालप्यमाना नरदेव सर्वे
ये कङ्कगोमायुबलाशनार्थं क्षीणा विवृद्धिं बहुधा व्रजन्ति ४
तस्मादेतद्वर्जनीयं नरेण दुष्टं लोके गर्हणीयं च कर्म
आख्यातं ते पार्थिव सर्वमेतद्भूयश्चेदानीं वद किं ते वदामि ५
अष्टक उवाच
यदा तु तान्वितुदन्ते वयांसि तथा गृध्राः शितिकण्ठाः पतङ्गाः
कथं भवन्ति कथमाभवन्ति न भौममन्यं नरकं शृणोमि ६
ययातिरुवाच
ऊर्ध्वं देहात्कर्मणो जृम्भमाणाद्व्यक्तं पृथिव्यामनुसंचरन्ति
इमं भौमं नरकं ते पतन्ति नावेक्षन्ते वर्षपूगाननेकान् ७
षष्टिं सहस्राणि पतन्ति व्योम्नि तथा अशीतिं परिवत्सराणि
तान्वै तुदन्ति प्रपततः प्रपातं भीमा भौमा राक्षसास्तीक्ष्णदंष्ट्राः ८
अष्टक उवाच
यदेनसस्ते पततस्तुदन्ति भीमा भौमा राक्षसास्तीक्ष्णदंष्ट्राः
कथं भवन्ति कथमाभवन्ति कथंभूता गर्भभूता भवन्ति ९
ययातिरुवाच
अस्त्रं रेतः पुष्पफलानुपृक्तमन्वेति तद्वै पुरुषेण सृष्टम्
स वै तस्या रज आपद्यते वै स गर्भभूतः समुपैति तत्र १०
वनस्पतींश्चौषधीश्चाविशन्ति अपो वायुं पृथिवीं चान्तरिक्षम्

चतुष्पदं द्विपदं चापि सर्वमेवंभूता गर्भभूता भवन्ति ११
अष्टक उवाच
अन्यद्वपुर्विदधातीह गर्भ उताहो स्वित्स्वेन कामेन याति
आपद्यमानो नरयोनिमेतामाचक्ष्व मे संशयात्प्रब्रवीमि १२
शरीरदेहादिसमुच्छ्रयं च चक्षुःश्रोत्रे लभते केन संज्ञाम्
एतत्तत्त्वं सर्वमाचक्ष्व पृष्टः क्षेत्रज्ञं त्वां तात मन्याम सर्वे १३
ययातिरुवाच
वायुः समुत्कर्षति गर्भयोनिमृतौ रेतः पुष्परसानुपृक्तम्
स तत्र तन्मात्रकृताधिकारः क्रमेण संवर्धयतीह गर्भम् १४
स जायमानो विगृहीतगात्रः षड्ज्ञाननिष्ठायतनो मनुष्यः
स श्रोत्राभ्यां वेदयतीह शब्दं सर्वं रूपं पश्यति चक्षुषा च १५
घ्राणेन गन्धं जिह्वयाथो रसं च त्वचा स्पर्शं मनसा वेद भावम्
इत्यष्टकेहोपचितिं च विद्धि महात्मनः प्राणभृतः शरीरे १६
अष्टक उवाच
यः संस्थितः पुरुषो दह्यते वा निखन्यते वापि निघृष्यते वा
अभावभूतः स विनाशमेत्य केनात्मानं चेतयते पुरस्तात् १७
ययातिरुवाच
हित्वा सोऽसून्सुप्तवन्निष्टनित्वा पुरोधाय सुकृतं दुष्कृतं च
अन्यां योनिं पवनाग्रानुसारी हित्वा देहं भजते राजसिंह १८
पुण्यां योनिं पुण्यकृतो व्रजन्ति पापां योनिं पापकृतो व्रजन्ति
कीटाः पतङ्गाश्च भवन्ति पापा न मे विवक्षास्ति महानुभाव १९
चतुष्पदा द्विपदाः षट्पदाश्च तथाभूता गर्भभूता भवन्ति
आख्यातमेतन्निखिलेन सर्वं भूयस्तु किं पृच्छसि राजसिंह २०
अष्टक उवाच
किं स्वित्कृत्वा लभते तात लोकान्मर्त्यः श्रेष्ठांस्तपसा विद्यया वा
तन्मे पृष्टः शंस सर्वं यथावच्छुभाँल्लोकान्येन गच्छेत्क्रमेण २१
ययातिरुवाच
तपश्च दानं च शमो दमश्च ह्रीरार्जवं सर्वभूतानुकम्पा
नश्यन्ति मानेन तमोऽभिभूताः पुंसः सदैवेति वदन्ति सन्तः २२
अधीयानः पण्डितं मन्यमानो यो विद्यया हन्ति यशः परेषाम्

तस्यान्तवन्तश्च भवन्ति लोका न चास्य तद्ब्रह्म फलं ददाति २३
चत्वारि कर्माण्यभयंकराणि भयं प्रयच्छन्त्ययथाकृतानि
मानाग्निहोत्रमुत मानमौनं मानेनाधीतमुत मानयज्ञः २४
न मान्यमानो मुदमाददीत न संतापं प्राप्नुयाच्चावमानात्
सन्तः सतः पूजयन्तीह लोके नासाधवः साधुबुद्धिं लभन्ते २५
इति दद्यादिति यजेदित्यधीयीत मे व्रतम्
इत्यस्मिन्नभयान्याहुस्तानि वर्ज्यानि नित्यशः २६
येनाश्रयं वेदयन्ते पुराणं मनीषिणो मानसमानभक्तम्
तन्निःश्रेयस्तैजसं रूपमेत्य परां शान्तिं प्राप्नुयुः प्रेत्य चेह २७
इति श्रीमहाभारते आदिपर्वणि पञ्चाशीतितमोऽध्यायः ८५

## षडशीतितमोऽध्यायः

अष्टक उवाच
चरग्गृहस्थः कथमेति देवान्कथं भिक्षुः कथमाचार्यकर्मा
वानप्रस्थः सत्पथे संनिविष्टो बहून्यस्मिन्संप्रति वेदयंति १
ययातिरुवाच
आहूताध्यायी गुरुकर्मस्वचोद्यः पूर्वोत्थायी चरमं चोपशायी
मृदुर्दान्तो धृतिमानप्रमत्तः स्वाध्यायशीलः सिध्यति ब्रह्मचारी २
धर्मागतं प्राप्य धनं यजेत दद्यात्सदैवातिथीन्भोजयेच्च
अनाददानश्च परैरदत्तं सैषा गृहस्थोपनिषत्पुराणी ३
स्ववीर्यजीवी वृजिनान्निवृत्तो दाता परेभ्यो न परोपतापी
तादृङ्मुनिः सिद्धिमुपैति मुख्यां वसन्नरण्ये नियताहारचेष्टः ४
अशिल्पजीवी नगृहश्च नित्यं जितेन्द्रियः सर्वतो विप्रमुक्तः
अनोकसारी लघुरल्पचारश्चरन्देशानेकचरः स भिक्षुः ५
रात्र्या यया चाभिजिताश्च लोका भवन्ति कामा विजिताः सुखाश्च
तामेव रात्रिं प्रयतेत विद्वानरण्यसंस्थो भवितुं यतात्मा ६
दशैव पूर्वान्दश चापरांस्तु ज्ञातीन्सहात्मानमथैकविंशम्
अरण्यवासी सुकृते दधाति विमुच्यारण्ये स्वशरीरधातून् ७
अष्टक उवाच
कति स्विदेव मुनयो मौनानि कति चाप्युत

भवन्तीति तदाचद्त्व श्रोतुमिच्छामहे वयम् ८
ययातिरुवाच
अरणये वसतो यस्य ग्रामो भवति पृष्ठतः
ग्रामे वा वसतोऽरणयं स मुनिः स्याज्जनाधिप ९
अष्टक उवाच
कथं स्विद्वसतोऽरणये ग्रामो भवति पृष्ठतः
ग्रामे वा वसतोऽरणयं कथं भवति पृष्ठतः १०
ययातिरुवाच
न ग्राम्यमुपयुञ्जीत य आरणयो मुनिर्भवेत्
तथास्य वसतोऽरणये ग्रामो भवति पृष्ठतः ११
अनग्निरनिकेतश्च अगोत्रचरणो मुनिः
कौपीनाच्छादनं यावत्तावदिच्छेच्च चीवरम् १२
यावत्प्राणाभिसंधानं तावदिच्छेच्च भोजनम्
तथास्य वसतो ग्रामेऽरणयं भवति पृष्ठतः १३
यस्तु कामान्परित्यज्य त्यक्तकर्मा जितेन्द्रियः
आतिष्ठेत मुनिर्मौनं स लोके सिद्धिमाप्नुयात् १४
धौतदन्तं कृत्तनखं सदा स्नातमलंकृतम्
असितं सितकर्मस्थं कस्तं नार्चितुमर्हति १५
तपसा कर्शितः द्मामः द्मीणमांसास्थिशोणितः
यदा भवति निर्द्वन्द्वो मुनिर्मौनं समास्थितः
अथ लोकमिमं जित्वा लोकं विजयते परम् १६
आस्येन तु यदाहारं गोवन्मृगयते मुनिः
अथास्य लोकः पूर्वो यः सोऽमृतत्वाय कल्पते १७
इति श्रीमहाभारते आदिपर्वणि षडशीतितमोऽध्यायः ८६

## सप्ताशीतितमोऽध्यायः

अष्टक उवाच
कतरस्त्वेतयोः पूर्वं देवानामेति सात्म्यताम्
उभयोर्धावतो राजन्सूर्याचन्द्रमसोरिव १
ययातिरुवाच

अनिकेतो गृहस्थेषु कामवृत्तेषु संयतः
ग्राम एव वसन्भिक्षुस्तयोः पूर्वतरं गतः २
अप्राप्य दीर्घमायुस्तु यः प्राप्तो विकृतिं चरेत्
तप्येत यदि तत्कृत्वा चरेत्सोऽन्यत्ततस्तपः ३
यद्वै नृशंसं तदपथ्यमाहुर्यः सेवते धर्ममनर्थबुद्धिः
अस्वोऽप्यनीशश्च तथैव राजंस्तदार्जवं स समाधिस्तदार्यम् ४
अष्टक उवाच
केनासि दूतः प्रहितोऽद्य राजन्युवा स्रग्वी दर्शनीयः सुवर्चाः
कुत आगतः कतरस्यां दिशि त्वमुताहो स्वित्पार्थिवं स्थानमस्ति ५
ययातिरुवाच
इमं भौमं नरकं क्षीणपुण्यः प्रवेष्टुमुर्वीं गगनाद्विप्रकीर्णः
उक्त्वाहं वः प्रपतिष्याम्यनन्तरं त्वरन्ति मां ब्राह्मणा लोकपालाः ६
सतां सकाशे तु वृतः प्रपातस्ते संगता गुणवन्तश्च सर्वे
शक्राच्च लब्धो हि वरो मयैष पतिष्यता भूमितले नरेंद्र ७
अष्टक उवाच
पृच्छामि त्वां मा प्रपत प्रपातं यदि लोकाः पार्थिव सन्ति मेऽत्र
यद्यन्तरिक्षे यदि वा दिवि श्रिताः क्षेत्रज्ञं त्वां तस्य धर्मस्य मन्ये ८
ययातिरुवाच
यावत्पृथिव्यां विहितं गवाश्वं सहारण्यैः पशुभिः पर्वतैश्च
तावल्लोका दिवि ते संस्थिता वै तथा विजानीहि नरेन्द्रसिंह ९
अष्टक उवाच
तांस्ते ददामि मा प्रपत प्रपातं ये मे लोका दिवि राजेन्द्र सन्ति
यद्यन्तरिक्षे यदि वा दिवि श्रितास्तानाक्रम क्षिप्रममित्रसाह १०
ययातिरुवाच
नास्मद्विधोऽब्राह्मणो ब्रह्मविच्च प्रतिग्रहे वर्तते राजमुख्य
यथा प्रदेयं सततं द्विजेभ्यस्तथाददं पूर्वमहं नरेन्द्र ११
नाब्राह्मणः कृपणो जातु जीवेद्या चापि स्याद्ब्राह्मणी वीरपत्नी
सोऽह यदैवाकृतपूर्वं चरेयं विवित्समानः किमु तत्र साधु १२
प्रतर्दन उवाच
पृच्छामि त्वां स्पृहणीयरूप प्रतर्दनोऽह यदि मे सन्ति लोकाः

यद्यन्तरिक्षे यदि वा दिवि श्रिताः क्षेत्रज्ञं त्वां तस्य धर्मस्य मन्ये १३
ययातिरुवाच
सन्ति लोका बहवस्ते नरेन्द्र अप्येकैकः सप्त सप्ताप्यहानि
मधुच्युतो घृतपृक्ता विशोकास्ते नान्तवन्तः प्रतिपालयन्ति १४
प्रतर्दन उवाच
तांस्ते ददामि मा प्रपत प्रपातं ये मे लोकास्तव ते वै भवन्तु
यद्यन्तरिक्षे यदि वा दिवि श्रितास्तानाक्रम क्षिप्रमपेतमोहः १५
ययातिरुवाच
न तुल्यतेजाः सुकृतं कामयेत योगक्षेमं पार्थिव पार्थिवः सन्
दैवादेशादापदं प्राप्य विद्वांश्चरेन्नृशंसं न हि जातु राजा १६
धर्म्यं मार्गं चेतयानो यशस्यं कुर्यान्नृपो धर्ममवेक्षमाणः
न मद्विधो धर्मबुद्धिः प्रजानन्कुर्यादेवं कृपणं मां यथात्थ
कुर्यामपूर्वं न कृतं यदन्यैर्विवित्समानः किमु तत्र साधु १७
ब्रुवाणमेवं नृपतिं ययातिं नृपोत्तमो वसुमनाब्रवीत्तम् १८
इति श्रीमहाभारते आदिपर्वणि सप्ताशीतितमोऽध्यायः ८७

अष्टाशीतितमोऽध्यायः

वसुमना उवाच
पृच्छामि त्वां वसुमना रौशदश्विर्यद्यस्ति लोको दिवि मह्यं नरेन्द्र
यद्यन्तरिक्षे प्रथितो महात्मन्क्षेत्रज्ञं त्वां तस्य धर्मस्य मन्ये १
ययातिरुवाच
यदन्तरिक्षं पृथिवी दिशश्च यत्तेजसा तपते भानुमांश्च
लोकास्तावन्तो दिवि संस्थिता वै ते नान्तवन्तः प्रतिपालयन्ति २
वसुमना उवाच
तांस्ते ददामिपत मा प्रपातं ये मे लोकास्तव ते वै भवन्तु
क्रीणीष्वैनांस्तृणकेनापि राजन्प्रतिग्रहस्ते यदि सम्यक्प्रदुष्टः ३
ययातिरुवाच
न मिथ्याहं विक्रयं वै स्मरामि वृथा गृहीतं शिशुकाच्छङ्कमानः
कुर्यां न चैवाकृतपूर्वमन्यैर्विवित्समानः किमु तत्र साधु ४
वसुमना उवाच

तांस्त्वं लोकान्प्रतिपद्यस्व राजन्मया दत्तान्यदि नेष्टः क्रयस्ते
अहं न तान्वै प्रतिगन्ता नरेन्द्र सर्वे लोकास्तव ते वै भवन्तु ५
शिबिरुवाच
पृच्छामि त्वां शिबिरौशीनरोऽह ममापि लोका यदि सन्तीह तात
यद्यन्तरिक्षे यदि वा दिवि श्रिताः क्षेत्रज्ञं त्वां तस्य धर्मस्य मन्ये ६
ययातिरुवाच
न त्वं वाचा हृदयेनापि विद्वन्परीप्समानान्नावमंस्था नरेन्द्र
तेनानन्ता दिवि लोकाः श्रितास्ते विद्युद्रूपाः स्वनवन्तो महान्तः ७
शिबिरुवाच
तांस्त्वं लोकान्प्रतिपद्यस्व राजन्मया दत्तान्यदि नेष्टः क्रयस्ते
न चाहं तान्प्रतिपत्स्येह दत्त्वा यत्र गत्वा त्वमुपास्से ह लोकान् ८
ययातिरुवाच
यथा त्वमिन्द्रप्रतिमप्रभावस्ते चाप्यनन्ता नरदेव लोकाः
तथाद्य लोके न रमेऽन्यदत्ते तस्माच्छिबे नाभिनन्दामि दायम् ९
अष्टक उवाच
न चेदेकैकशो राजँल्लोकान्नः प्रतिनन्दसि
सर्वे प्रदाय भवते गन्तारो नरकं वयम् १०
ययातिरुवाच
यदर्हाय ददध्वं तर्तसन्तः सत्यानृशंस्यतः
अहं तु नाभिधृष्णोमि यत्कृतं न मया पुरा ११
अष्टक उवाच
कस्यैते प्रतिदृश्यन्ते रथाः पञ्च हिरण्मयाः
उच्चैः सन्तः प्रकाशन्ते ज्वलन्तोऽग्निशिखा इव १२
ययातिरुवाच
युष्मानेते हि वक्ष्यन्ति रथाः पञ्च हिरण्मयाः
उच्चैः सन्तः प्रकाशन्ते ज्वलन्तोऽग्निशिखा इव १३
अष्टक उवाच
आतिष्ठस्व रथं राजन्विक्रमस्व विहायसा
वयमप्यनुयास्यामो यदा कालो भविष्यति १४
ययातिरुवाच

सर्वैरिदानीं गन्तव्यं सहस्वर्गजितो वयम्
एष नो विरजाः पन्था दृश्यते देवसद्मनः १५
वैशम्पायन उवाच
तेऽधिरुह्य रथान्सर्वे प्रयाता नृपसत्तमाः
आक्रमन्तो दिवं भाभिर्धर्मेणावृत्य रोदसी १६
अष्टक उवाच
अहं मन्ये पूर्वमेकोऽस्मि गन्ता सखा चेन्द्रः सर्वथा मे महात्मा
कस्मादेवं शिबिरौशीनरोऽयमेकोऽत्यगात्सर्ववेगेन वाहान् १७
ययातिरुवाच
अददाद्देवयानाय यावद्वित्तमविन्दत
उशीनरस्य पुत्रोऽय तस्माच्छ्रेष्ठो हि नः शिबिः १८
दानं तपः सत्यमथापि धर्मो ह्रीः श्रीः क्षमा सौम्य तथा तितिक्षा
राजन्नेतान्यप्रतिमस्य राज्ञः शिबेः स्थितान्यनृशंसस्य बुद्ध्या
एवंवृत्तो ह्रीनिषेधश्च यस्मात्तस्माच्छिबिरत्यगाद्वै रथेन १९
वैशम्पायन उवाच
अथाष्टकः पुनरेवान्वपृच्छन्मातामहं कौतुकादिन्द्रकल्पम्
पृच्छामि त्वां नृपते ब्रूहि सत्यं कुतश्च कस्यासि सुतश्च कस्य
कृतं त्वया यद्धि न तस्य कर्ता लोके त्वदन्यः क्षत्रियो ब्राह्मणो वा २०
ययातिरुवाच
ययातिरस्मि नहुषस्य पुत्रः पूरोः पिता सार्वभौमस्त्विहासम्
गुह्यमर्थं मामकेभ्यो ब्रवीमि मातामहोऽह भवतां प्रकाशः २१
सर्वामिमां पृथिवीं निर्जिगाय प्रस्थे बद्ध्वा ह्यददं ब्राह्मणेभ्यः
मेध्यानश्वानेकशफान्सुरूपांस्तदा देवाः पुण्यभाजो भवन्ति २२
अदामहं पृथिवीं ब्राह्मणेभ्यः पूर्णामिमामखिलां वाहनस्य
गोभिः सुवर्णेन धनैश्च मुख्यैस्तत्रासन्गाः शतमर्बुदानि २३
सत्येन मे द्यौश्च वसुंधरा च तथैवाग्निर्ज्वलते मानुषेषु
न मे वृथा व्याहृतमेव वाक्यं सत्यं हि सन्तः प्रतिपूजयन्ति
सर्वे च देवा मुनयश्च लोकाः सत्येन पूज्या इति मे मनोगतम् २४
यो नः स्वर्गजितः सर्वान्यथावृत्तं निवेदयेत्
अनसूयुर्द्विजाग्रेभ्यः स लभेन्नः सलोकताम् २५

वैशम्पायन उवाच
एवं राजा स महात्मा ह्यतीव स्वैर्दौहित्रैस्तारितोऽमित्रसाहः
त्यक्त्वा महीं परमोदारकर्मा स्वर्गं गतः कर्मभिर्व्याप्य पृथ्वीम् २६
इति श्रीमहाभारते आदिपर्वणि अष्टाशीतितमोऽध्यायः ८८

## एकोननवतितमोऽध्यायः

जनमेजय उवाच
भगवञ्श्रोतुमिच्छामि पूरोर्वंशकरान्नृपान्
यद्वीर्या यादृशाश्चैव यावन्तो यत्पराक्रमाः १
न ह्यस्मिञ्शीलहीनो वा निर्वीर्यो वा नराधिपः
प्रजाविरहितो वापि भूतपूर्वः कदाचन २
तेषां प्रथितवृत्तानां राज्ञां विज्ञानशालिनाम्
चरितं श्रोतुमिच्छामि विस्तरेण तपोधन ३
वैशम्पायन उवाच
हंत ते कथयिष्यामि यन्मां त्वं परिपृच्छसि
पूरोर्वंशधरान्वीराञ्शक्रप्रतिमतेजसः ४
प्रवीरेश्वररौद्राश्वस्त्रयः पुत्रा महारथाः
पूरोः पौष्ट्यामजायन्त प्रवीरस्तत्र वंशकृत् ५
मनस्युरभवत्तस्माच्छूरः श्येनीसुतः प्रभुः
पृथिव्याश्चतुरन्ताया गोप्ता राजीवलोचनः ६
सुभ्रूः संहननो वाग्मी सौवीरीतनयास्त्रयः
मनस्योरभवन्पुत्राः शूराः सर्वे महारथाः ७
रौद्राश्वस्य महेष्वासा दशाप्सरसि सूनवः
यज्वानो जज्ञिरे शूराः प्रजावन्तो बहुश्रुताः
सर्वे सर्वास्त्रविद्वांसः सर्वे धर्मपरायणाः ८
ऋचेपुरथ कक्षेपुः कृकणेपुश्च वीर्यवान्
स्थण्डिलेपुर्वनेपुश्च स्थलेपुश्च महारथः ९
तेजेपुर्बलवान्धीमान्सत्येपुश्चेन्द्रविक्रमः
धर्मेपुः संनतेपुश्च दशमो देवविक्रमः
अनाधृष्टिसुतास्तात राजसूयाश्वमेधिनः १०

मतिनारस्ततो राजा विद्वांश्चर्चेपुतोऽभवत्
मतिनारसुता राजंश्चत्वारोऽमितविक्रमाः
तंसुर्महानतिरथो द्रुह्युश्चाप्रतिमद्युतिः ११
तेषां तंसुर्महावीर्यः पौरवं वंशमुद्वहन्
आजहार यशो दीप्तं जिगाय च वसुन्धराम् १२
इलिनं तु सुतं तंसुर्जनयामास वीर्यवान्
सोऽपि कृत्स्नामिमां भूमिं विजिग्ये जयतां वरः १३
रथन्तर्यां सुतान्पञ्च पञ्चभूतोपमांस्ततः
इलिनो जनयामास दुःषन्तप्रभृतीन्नृप १४
दुःषन्तं शूरभीमौ च प्रपूर्वं वसुमेव च
तेषां ज्येष्ठोऽभवद्राजा दुःषन्तो जनमेजय १५
दुःषन्ताद्भरतो जज्ञे विद्वाञ्शाकुन्तलो नृपः
तस्माद्भरतवंशस्य विप्रतस्थे महद्यशः १६
भरतस्तिसृषु स्त्रीषु नव पुत्रानजीजनत्
नाभ्यनन्दत तान्राजा नानुरूपा ममेत्युत १७
ततो महद्भिः क्रतुभिरीजानो भरतस्तदा
लेभे पुत्रं भरद्वाजाद्भुमन्युं नाम भारत १८
ततः पुत्रिणमात्मानं ज्ञात्वा पौरवनन्दनः
भुमन्युं भरतश्रेष्ठ यौवराज्येऽभ्यषेचयत् १९
ततस्तस्य महीन्द्रस्य वितथः पुत्रकोऽभवत्
ततः स वितथो नाम भुमन्योरभवत्सुतः २०
सुहोत्रश्च सुहोता च सुहविः सुयजुस्तथा
पुष्करिण्यामृचीकस्य भुमन्योरभवन्सुताः २१
तेषां ज्येष्ठः सुहोत्रस्तु राज्यमाप महीक्षिताम्
राजसूयाश्वमेधाद्यैः सोऽयजद्बहुभिः सवैः २२
सुहोत्रः पृथिवीं सर्वां बुभुजे सागराम्बराम्
पूर्णां हस्तिगवाश्वस्य बहुरत्नसमाकुलाम् २३
ममज्जेव मही तस्य भूरिभारावपीडिता
हस्त्यश्वरथसंपूर्णा मनुष्यकलिला भृशम् २४
सुहोत्रे राजनि तदा धर्मतः शासति प्रजाः

चैत्ययूपाङ्किता चासीद्भूमिः शतसहस्रशः
प्रवृद्धजनसस्या च सहदेवा व्यरोचत २५
ऐक्ष्वाकी जनयामास सुहोत्रात्पृथिवीपतेः
अजमीढं सुमीढं च पुरुमीढं च भारत २६
अजमीढो वरस्तेषां तस्मिन्वंशः प्रतिष्ठितः
षट् पुत्रान्सोऽप्यजनयत्तिसृषु स्त्रीषु भारत २७
ऋक्षं धूमिन्यथो नीली दुःषन्तपरमेष्ठिनौ
केशिन्यजनयज्जह्नुमुभौ च जनरूपिणौ २८
तथेमे सर्वपाञ्चाला दुःषन्तपरमेष्ठिनोः
अन्वयाः कुशिका राजञ्जह्नोरमिततेजसः २९
जनरूपिणयोर्ज्येष्ठमृक्षमाहुर्जनाधिपम्
ऋक्षात्संवरणो जज्ञे राजन्वंशकरस्तव ३०
आर्क्षे संवरणे राजन्प्रशासति वसुंधराम्
संक्षयः सुमहानासीत्प्रजानामिति शुश्रुमः ३१
व्यशीर्यत ततो राष्ट्रं क्षयैर्नानाविधैस्तथा
क्षुन्मृत्युभ्यामनावृष्ट्या व्याधिभिश्च समाहतम्
अभ्यघ्नन्भारतांश्चैव सपत्नानां बलानि च ३२
चालयन्वसुधां चैव बलेन चतुरङ्गिणा
अभ्ययात्तं च पाञ्चाल्यो विजित्य तरसा महीम्
अक्षौहिणीभिर्दशभिः स एनं समरेऽजयत् ३३
ततः सदारः सामात्यः सपुत्रः ससुहृज्जनः
राजा संवरणस्तस्मात्पलायत महाभयात् ३४
सिन्धोर्नदस्य महतो निकुञ्जे न्यवसत्तदा
नदीविषयपर्यन्ते पर्वतस्य समीपतः
तत्रावसन्बहून्कालान्भारता दुर्गमाश्रिताः ३५
तेषां निवसतां तत्र सहस्रं परिवत्सरान्
अथाभ्यगच्छद्भरतान्वसिष्ठो भगवानृषिः ३६
तमागतं प्रयत्नेन प्रत्युद्गम्याभिवाद्य च
अर्घ्यमभ्याहरंस्तस्मै ते सर्वे भारतास्तदा
निवेद्य सर्वमृषये सत्कारेण सुवर्चसे ३७

तं समामष्टमीमुष्टं राजा वव्रे स्वयं तदा
पुरोहितो भवन्नोऽस्तु राज्याय प्रयतामहे
ओमित्येवं वसिष्ठोऽपि भारतान्प्रत्यपद्यत ३८
अथाभ्यषिञ्चत्साम्राज्ये सर्वक्षत्रस्य पौरवम्
विषाणभूतं सर्वस्यां पृथिव्यामिति नः श्रुतम् ३९
भरताध्युषितं पूर्वं सोऽध्यतिष्ठत्पुरोत्तमम्
पुनर्बलिभृतश्चैव चक्रे सर्वमहीक्षितः ४०
ततः स पृथिवीं प्राप्य पुनरीजे महाबलः
आजमीढो महायज्ञैर्बहुभिर्भूरिदक्षिणैः ४१
ततः संवरणात्सौरी सुषुवे तपती कुरुम्
राजत्वे तं प्रजाः सर्वा धर्मज्ञ इति वव्रिरे ४२
तस्य नाम्नाभिविख्यातं पृथिव्यां कुरुजाङ्गलम्
कुरुक्षेत्रं स तपसा पुण्यं चक्रे महातपाः ४३
अश्ववन्तमभिष्वन्तं तथा चित्ररथं मुनिम्
जनमेजयं च विख्यातं पुत्रांश्चास्यानुशुश्रुमः
पञ्चैतान्वाहिनी पुत्रान्व्यजायत मनस्विनी ४४
अभिष्वतः परिक्षित्तु शबलाश्वश्च वीर्यवान्
अभिराजो विराजश्च शल्मलश्च महाबलः ४५
उच्चैःश्रवा भद्रकारो जितारिश्चाष्टमः स्मृतः
एतेषामन्ववाये तु ख्यातास्ते कर्मजैर्गुणैः ४६
जनमेजयादयः सप्त तथैवान्ये महाबलाः
परिक्षितोऽभवन्पुत्राः सर्वे धर्मार्थकोविदाः ४७
कक्षसेनोग्रसेनौ च चित्रसेनश्च वीर्यवान्
इन्द्रसेनः सुषेणश्च भीमसेनश्च नामतः ४८
जनमेजयस्य तनया भुवि ख्याता महाबलाः
धृतराष्ट्रः प्रथमजः पाण्डुर्बाह्लीक एव च ४९
निषधश्च महातेजास्तथा जाम्बूनदो बली
कुण्डोदरः पदातिश्च वसातिश्चाष्टमः स्मृतः
सर्वे धर्मार्थकुशलाः सर्वे भूतहिते रताः ५०
धृतराष्ट्रोऽथ राजासीत्तस्य पुत्रोऽथ कुण्डिकः

हस्ती वितर्कः क्राथश्च कुण्डलश्चापि पञ्चमः
हविःश्रवास्तथेन्द्राभः सुमन्युश्चापराजितः ५१
प्रतीपस्य त्रयः पुत्रा जज्ञिरे भरतर्षभ
देवापिः शन्तनुश्चैव बाह्लीकश्च महारथः ५२
देवापिस्तु प्रवव्राज तेषां धर्मपरीप्सया
शन्तनुश्च महीं लेभे बाह्लीकश्च महारथः ५३
भरतस्यान्वये जाताः सत्त्ववन्तो महारथाः
देवर्षिकल्पा नृपते बहवो राजसत्तमाः ५४
एवंविधाश्चाप्यपरे देवकल्पा महारथाः
जाता मनोरन्ववाये एलवंशविवर्धनाः ५५
इति श्रीमहाभारते आदिपर्वणि एकोननवतितमोऽध्यायः ८९

नवतितमोऽध्यायः

जनमेजय उवाच
श्रुतस्त्वत्तो मया विप्र पूर्वेषां संभवो महान्
उदाराश्चापि वंशेऽस्मिन्राजानो मे परिश्रुताः १
किंतु लघ्वर्थसंयुक्तं प्रियाख्यानं न मामति
प्रीणात्यतो भवान्भूयो विस्तरेण ब्रवीतु मे २
एतामेव कथां दिव्यामा प्रजापतितो मनोः
तेषामाजननं पुण्यं कस्य न प्रीतिमावहेत् ३
सद्धर्मगुणमाहात्म्यैरभिवर्धितमुत्तमम्
विष्टभ्य लोकांस्त्रीनेषां यशः स्फीतमवस्थितम् ४
गुणप्रभाववीर्यौजःसत्त्वोत्साहवतामहम्
न तृप्यामि कथां शृण्वन्नमृतास्वादसंमिताम् ५
वैशम्पायन उवाच
शृणु राजन्पुरा सम्यङ् मया द्वैपायनाच्छ्रुतम्
प्रोच्यमानमिदं कृत्स्नं स्ववंशजननं शुभम् ६
दक्षस्यादितिः अदितेर्विवस्वान् विवस्वतो मनुः मनोरिला इलायाः
पुरूरवाः पुरूरवस आयुः
आयुषो नहुषः नहुषस्ययातिः ७

ययातेर्द्वे भार्ये बभूवतुः उशनसो दुहिता देवयानी वृषपर्वणश्च दुहिता
शर्मिष्ठा नाम अत्रानुवंशो भवति ८
यदुं च तुर्वसुं चैव देवयानी व्यजायत
द्रुह्युं चानुं च पूरुं च शर्मिष्ठा वार्षपर्वणी ९
तत्र यदोर्यादवाः पूरोः पौरवाः १०
पूरोर्भार्या कौसल्या नाम तस्यामस्य जज्ञे जनमेजयो नाम
यस्त्रीनश्वमेधानाजहार विश्वजिता चेष्ट्वा वनं प्रविवेश ११
जनमेजयः खल्वनन्तां नामोपयेमे माधवीम्
तस्यामस्य जज्ञे प्राचिन्वान्
यः प्राचीं दिशं जिगाय यावत्सूर्योदयात्
ततस्तस्य प्राचिन्वत्वम् १२
प्राचिन्वान्खल्वश्मकीमुपयेमे
तस्यामस्य जज्ञे संयातिः १३
संयातिः खलु दृषद्वतो दुहितरं वराङ्गीं नामोपयेमे
तस्यामस्य जज्ञे अहंपातिः १४
अहंपातिस्तु खलु कृतवीर्यदुहितरमुपयेमे भानुमतीं नाम
तस्यामस्य जज्ञे सार्वभौमः १५
सार्वभौमः खलु जित्वाजहार कैकेयीं सुनन्दां नाम
तस्यामस्य जज्ञे जयत्सेनः १६
जयत्सेनः खलु वैदर्भीमुपयेमे सुषुवां नाम
तस्यामस्य जज्ञे अराचीनः १७
अराचीनोऽपि वैदर्भीमेवापरामुपयेमे मर्यादां नाम
तस्यामस्य जज्ञे महाभौमः १८
महाभौमः खलु प्रासेनजितीमुपयेमे सुयज्ञां नाम
तस्यामस्य जज्ञे अयुतनायी यः पुरुषमेधानामयुतमानयत्
तदस्यायुतनायित्वम् १९
अयुतनायी खलु पृथुश्रवसो दुहितरमुपयेमे भासां नाम
तस्यामस्य जज्ञे अक्रोधनः २०
अक्रोधनः खलु कालिङ्गीं करण्डुं नामोपयेमे
तस्यामस्य जज्ञे देवातिथिः २१

देवातिथिः खलु वैदेहीमुपयेमे मर्यादां नाम  तस्यामस्य जज्ञे ऋचः २२
ऋचः खल्वाङ्गेयीमुपयेमे सुदेवां नाम तस्यां पुत्रमजनयदृक्षम् २३
ऋक्षः खलु तक्षकदुहितरमुपयेमे ज्वालां नाम
तस्यां पुत्रं मतिनारं नामोत्पादयामास २४
मतिनारः खलु सरस्वत्यां द्वादशवार्षिकं सत्रमाजहार २५
निवृत्ते च सत्रे सरस्वत्यभिगम्य तं भर्तारं वरयामास
तस्यां पुत्रमजनयत्तंसुं नाम २६
अत्रानुवंशो भवति २७
तंसुं सरस्वती पुत्रं मतिनारादजीजनत्
इलिनं जनयामास कालिन्द्यां तंसुरात्मजम् २८
इलिनस्तु रथन्तर्यां दुःषन्ताद्यान्पञ्च पुत्रानजनयत् २९
दुःषन्तः खलु विश्वामित्रदुहितरं शकुन्तलां नामोपयेमे
तस्यामस्य जज्ञे भरतः  तत्र श्लोकौ भवतः ३०
माता भस्त्रा पितुः पुत्रो येन जातः स एव सः
भरस्व पुत्रं दुःषन्त मावमंस्थाः शकुन्तलाम् ३१
रेतोधाः पुत्र उन्नयति नरदेव यमक्षयात्
त्वं चास्य धाता गर्भस्य सत्यमाह शकुन्तला ३२
ततोऽस्य भरतत्वम् ३३
भरतः खलु काशेयीमुपयेमे सार्वसेनीं सुनन्दां नाम
तस्यामस्य जज्ञे भुमन्युः ३४
भुमन्युः खलु दाशार्हीमुपयेमे जयां नाम  तस्यामस्य जज्ञे सुहोत्रः ३५
सुहोत्रः खल्विक्ष्वाकुकन्यामुपयेमे सुवर्णां नाम  तस्यामस्य जज्ञे हस्ती
य इदं हास्तिनपुरं मापयामास  एतदस्य हास्तिनपुरत्वम् ३६
हस्ती खलु त्रैगर्तीमुपयेमे यशोधरां नाम  तस्यामस्य जज्ञे विकुण्ठनः ३७
विकुण्ठनः खलु दाशार्हीमुपयेमे सुदेवां नाम  तस्यामस्य जज्ञे अजमीढः
३८
अजमीढस्य चतुर्विंशं पुत्रशतं बभूव कैकेय्यां नागायां गान्धार्यां विमला-
यामृक्षायां चेति  पृथक्पृथग्वंशकरा नृपतयः  तत्र वंशकरः संवरणः ३९
संवरणः खलु वैवस्वतीं तपतीं नामोपयेमे  तस्यामस्य जज्ञे कुरुः ४०
कुरुः खलु दाशार्हीमुपयेमे शुभाङ्गीं नाम  तस्यामस्य जज्ञे विडूरथः ४१

विडूरथस्तु मागधीमुपयेमे संप्रियां नाम  तस्यामस्य जज्ञे अरुग्वान्नाम ४२
अरुग्वान्खलु मागधीमुपयेमे अमृतां नाम  तस्यामस्य जज्ञे परिक्षित् ४३
परिक्षित्खलु बाहुदामुपयेमे सुयशां नाम  तस्यामस्य जज्ञे भीमसेनः ४४
भीमसेनः खलु कैकेयीमुपयेमे सुकुमारीं नाम
तस्यामस्य जज्ञे पर्यश्रवाः  यमाहुः प्रतीपं नाम ४५
प्रतीपः खलु शैब्यामुपयेमे सुनन्दां नाम
तस्यां पुत्रानुत्पादयामास देवापिं शन्तनुं बाह्लीकं चेति ४६
देवापिः खलु बाल एवारण्यं प्रविवेश
शन्तनुस्तु महीपालोऽभवत्  अत्राऽनुवंशो भवति ४७
यं यं कराभ्यां स्पृशति जीर्णं स सुखमश्नुते
पुनर्युवा च भवति तस्मात्तं शन्तनुं विदुः ४८
तदस्य शन्तनुत्वम् ४९
शन्तनुः खलु गङ्गां भागीरथीमुपयेमे
तस्यामस्य जज्ञे देवव्रतः  यमाहुर्भीष्म इति ५०
भीष्मः खलु पितुः प्रियचिकीर्षया सत्यवतीमुदवहन्मातरम्
यामाहुर्गन्धकालीति ५१
तस्यां कानीनो गर्भः पराशराद्द्वैपायनः
तस्यामेव शन्तनोर्द्वौ पुत्रौ बभूवतुः
चित्राङ्गदो विचित्रवीर्यश्च ५२
तयोरप्राप्तयौवन एव चित्राङ्गदो गन्धर्वेण हतः
विचित्रवीर्यस्तु राजा समभवत् ५३
विचित्रवीर्यः खलु कौसल्यात्मजे अम्बिकाम्बालिके
काशिराजदुहितरावुपयेमे ५४
विचित्रवीर्यस्त्वनपत्य एव विदेहत्वं प्राप्तः ५५
ततः सत्यवती चिन्तयमास  दौःषन्तो वंश उच्छिद्यते इति ५६
सा द्वैपायनमृषिं चिन्तयामास ५७
स तस्याः पुरतः स्थितः किं करवाणीति ५८
सा तमुवाच  भ्राता तवानपत्य एव स्वर्यातो विचित्रवीर्यः  साध्वपत्यं
तस्योत्पादयेति ५९
स परमित्युक्त्वा त्रीन्पुत्रानुत्पादयामास धृतराष्ट्रं पाण्डुं विदुरं चेति ६०

तत्र धृतराष्ट्रस्य राज्ञः पुत्रशतं बभूव गान्धार्यां वरदानाद्द्वैपायनस्य ६१
तेषां धृतराष्ट्रस्य पुत्राणां चत्वारः प्रधाना बभूवुर्दुर्योधनो
दुःशासनो विकर्णश्चित्रसेन इति ६२
पाण्डोस्तु द्वे भार्ये बभूवतुः कुन्ती माद्री चेत्युभे स्त्रीरत्ने ६३
अथ पाण्डुर्मृगयां चरन्मैथुनगतमृषिमपश्यन्मृग्यां वर्तमानम्
तथैवाऽप्लुतमनासादितकामरसमतृप्तं बाणेनाभिजघान ६४
स बाणविद्ध उवाच पाण्डुम्  चरता धर्ममिमं येन त्वयाभिज्ञेन
कामरसस्याहमनवाप्तकामरसोऽभिहतस्तस्मात्त्वमप्येतामवस्थामासाद्यानवाप्त
-कामरसः पञ्चत्वमाप्स्यसि क्षिप्रमेवेति ६५
स विवर्णरूपः पाण्डुः शापं परिहरमाणो नोपासर्पत भार्ये ६६
वाक्यं चोवाच  स्वचापल्यादिदं प्राप्तवानहम्
शृणोमि च नानपत्यस्य लोकाः सन्तीति ६७
सा त्वं मदर्थे पुत्रानुत्पादयेति कुन्तीमुवाच ६८
सा तत्र पुत्रानुत्पादयामास धर्माद्युधिष्ठिरं मारुताद्भीमसेनं शक्रादर्जुनमिति ६९
स तां हृष्टरूपः पाण्डुरुवाच  इयं ते सपत्न्यनपत्या
साध्वस्यामपत्यमुत्पाद्यतामिति ७०
स एवमस्त्वित्युक्तः कुन्त्या ७१
ततो माद्र्यामश्विभ्यां नकुलसहदेवावुत्पादितौ ७२
माद्रीं खल्वलंकृतां दृष्ट्वा पाण्डुर्भावं चक्रे ७३
स तां स्पृष्ट्वैव विदेहत्वं प्राप्तः ७४
तत्रैनं चितास्थं माद्री समन्वारुरोह ७५
उवाच कुन्तीम्  यमयोरार्ययाप्रमत्तया भवितव्यमिति ७६
ततस्ते पञ्च पाण्डवाः कुन्त्या सहिता हास्तिनपुरमानीय
तापसैर्भीष्मस्य विदुरस्य च निवेदिताः ७७
तत्रापि जतुगृहे दग्धुं समारब्धा न शकिता विदुरमन्त्रितेन ७८
ततश्च हिडिम्बमन्तरा हत्वा एकचक्रां गताः ७९
तस्यामप्येकचक्रायां बकं नाम राक्षसं हत्वा पाञ्चालनगरमभिगताः ८०
तस्माद्द्रौपदीं भार्यामविन्दन्स्वविषयं चाजग्मुः कुशलिनः ८१
पुत्रांश्चोत्पादयामासुः  प्रतिविन्ध्यं युधिष्ठिरः  सुतसोमं वृकोदरः

श्रुतकीर्तिमर्जुनः शतानीकं नकुलः श्रुतकर्माणं सहदेव इति ८२
युधिष्ठिरस्तु गोवासनस्य शैब्यस्य देविकां नाम कन्यां स्वयंवरे लेभे
तस्यां पुत्रं जनयामास यौधेयं नाम ८३
भीमसेनोऽपि काश्यां बलधरां नामोपयेमे वीर्यशुल्काम्
तस्यां पुत्रं सर्वगं नामोत्पादयामास ८४
अर्जुनः खलु द्वारवतीं गत्वा भगिनीं वासुदेवस्य सुभद्रां नाम भार्यामुदवहत्
तस्यां पुत्रमभिमन्युं नाम जनयामास ८५
नकुलस्तु चैद्यां करेणुवतीं नाम भार्यामुदवहत्
तस्यां पुत्रं निरमित्रं नामाजनयत् ८६
सहदेवोऽपि माद्रीमेव स्वयंवरे विजयां नामोपयेमे
तस्यां पुत्रमजनयत्सुहोत्रं नाम ८७
भीमसेनस्तु पूर्वमेव हिडिम्बायां राक्षस्यां घटोत्कचं नाम पुत्रं जनयामास ८८
इत्येते एकादश पाण्डवानां पुत्राः ८९
विराटस्य दुहितरमुत्तरां नामाभिमन्युरुपयेमे
तस्यामस्य परासुर्गर्भोऽजायत ९०
तमुत्सङ्गेन प्रतिजग्राह पृथानियोगात्पुरुषोत्तमस्य वासुदेवस्य
षाण्मासिकं गर्भमहमेनं जीवयिष्यामीति ९१
संजीवयित्वा चैनमुवाच परिक्षीणे कुले जातो भवत्वयं परिक्षिन्नामेति ९२
परिक्षित्तु खलु माद्रवतीं नामोपयेमे तस्यामस्य जनमेजयः ९३
जनमेजयात्तु वपुष्टमायां द्वौ पुत्रौ शतानीकः शङ्कुश्च ९४
शतानीकस्तु खलु वैदेहीमुपयेमे तस्यामस्य जज्ञे पुत्रोऽश्वमेधदत्तः ९५
इत्येष पूरोर्वंशस्तु पाण्डवानां च कीर्तितः
पुरोर्वंशमिमं श्रुत्वा सर्वपापैः प्रमुच्यते ९६
इति श्रीमहाभारते आदिपर्वणि नवतितमोऽध्यायः ९०

## एक नवतितमोऽध्यायः

वैशम्पायन उवाच
इक्ष्वाकुवंशप्रभवो राजासीत्पृथिवीपतिः
महाभिष इति ख्यातः सत्यवाक्सत्यविक्रमः १

सोऽश्वमेधसहस्रेण वाजपेयशतेन च
तोषयामास देवेन्द्रं स्वर्गं लेभे ततः प्रभुः २
ततः कदाचिद्ब्रह्माणमुपासाञ्चक्रिरे सुराः
तत्र राजर्षयो आसन्स च राजा महाभिषः ३
अथ गङ्गा सरिच्छ्रेष्ठा समुपायात्पितामहम्
तस्या वासः समुद्धूतं मारुतेन शशिप्रभम् ४
ततोऽभवन्सुरगणाः सहसावाङ्मुखास्तदा
महाभिषस्तु राजर्षिरशङ्को दृष्टवान्नदीम् ५
अपध्यातो भगवता ब्रह्मणा स महाभिषः
उक्तश्च जातो मर्त्येषु पुनर्लोकानवाप्स्यसि ६
स चिन्तयित्वा नृपतिर्नृपान्सर्वांस्तपोधनान्
प्रतीपं रोचयामास पितरं भूरिवर्चसम् ७
महाभिषं तु तं दृष्ट्वा नदी धैर्याच्च्युतं नृपम्
तमेव मनसाध्यायमुपावर्तत्सरिद्वरा ८
सा तु विध्वस्तवपुषः कश्मलाभिहतौजसः
ददर्श पथि गच्छन्ती वसून्देवान्दिवौकसः ९
तथारूपांश्च तान्दृष्ट्वा पप्रच्छ सरितां वरा
किमिदं नष्टरूपाः स्थ कच्चित्क्षेमं दिवौकसाम् १०
तामूचुर्वसवो देवाः शप्ताः स्मो वै महानदि
अल्पेऽपराधे संरम्भाद्वसिष्ठेन महात्मना ११
विमूढा हि वयं सर्वे प्रच्छन्नमृषिसत्तमम्
सन्ध्यां वसिष्ठमासीनं तमत्यभिसृताः पुरा १२
तेन कोपाद्वयं शप्ता योनौ संभवतेति ह
न शक्यमन्यथा कर्तुं यदुक्तं ब्रह्मवादिना १३
त्वं तस्मान्मानुषी भूत्वा सूष्व पुत्रान्वसून्भुवि
न मानुषीणां जठरं प्रविशेमाशुभं वयम् १४
इत्युक्ता तान्वसून्गङ्गा तथेत्युक्त्वाब्रवीदिदम्
मर्त्येषु पुरुषश्रेष्ठः को वः कर्ता भविष्यति १५
वसव ऊचुः
प्रतीपस्य सुतो राजा शन्तनुर्नाम धार्मिकः

भविता मानुषे लोके स नः कर्ता भविष्यति १६
गङ्गोवाच
ममाप्येवं मतं देवा यथावदत मानघाः
प्रियं तस्य करिष्यामि युष्माकं चैतदीप्सितम् १७
वसव ऊचुः
जातान्कुमारान्स्वानप्सु प्रक्षेप्तुं वै त्वमर्हसि
यथा नचिरकालं नो निष्कृतिः स्यात्त्रिलोकगे १८
गङ्गोवाच
एवमेतत्करिष्यामि पुत्रस्तस्य विधीयताम्
नास्य मोघः संगमः स्यात्पुत्रहेतोर्मया सह १९
वसव ऊचुः
तुरीयार्धं प्रदास्यामो वीर्यस्यैकैकशो बयम्
तेन वीर्येण पुत्रस्ते भविता तस्य चेप्सितः २०
न संपत्स्यति मर्त्येषु पुनस्तस्य तु संततिः
तस्मादपुत्रः पुत्रस्ते भविष्यति स वीर्यवान् २१
वैशम्पायन उवाच
एवं ते समयं कृत्वा गङ्गया वसवः सह
जग्मुः प्रहृष्टमनसो यथासंकल्पमञ्जसा २२
इति श्रीमहाभारते आदिपर्वणि एकनवतितमोऽध्यायः ९१

## द्विनवतितमोऽध्यायः

वैशम्पायन उवाच
ततः प्रतीपो राजा स सर्वभूतहिते रतः
निषसाद समा बह्वीर्गङ्गातीरगतो जपन् १
तस्य रूपगुणोपेता गङ्गा श्रीरिव रूपिणी
उत्तीर्य सलिलात्तस्माल्लोभनीयतमाकृतिः २
अधीयानस्य राजर्षेर्दिव्यरूपा मनस्विनी
दक्षिणं शालसङ्काशमूरुं भेजे शुभानना ३
प्रतीपस्तु महीपालस्तामुवाच मनस्विनीम्
करवाणि किं ते कल्याणि प्रियं यत्तेऽभिकांक्षितम् ४

स्त्र्युवाच
त्वामहं कामये राजन्कुरुश्रेष्ठ भजस्व माम्
त्यागः कामवतीनां हि स्त्रीणां सद्भिर्विगर्हितः ५
प्रतीप उवाच
नाहं परस्त्रियं कामाद्गच्छेयं वरवर्णिनि
न चासवर्णां कल्याणि धर्म्यं तद्विद्धि मे व्रतम् ६
स्त्र्युवाच
नाश्रेयस्यस्मि नागम्या न वक्तव्या च कर्हिचित्
भज मां भजमानां त्वं राजन्कन्यां वरस्त्रियम् ७
प्रतीप उवाच
मयातिवृत्तमेतत्ते यन्मां चोदयसि प्रियम्
अन्यथा प्रतिपन्नं मां नाशयेद्धर्मविप्लवः ८
प्राप्य दक्षिणमूरुं मे त्वमाश्लिष्टा वराङ्गने
अपत्यानां स्नुषाणां च भीरु विद्ध्येतदासनम् ९
सव्यतः कामिनीभागस्त्वया स च विवर्जितः
तस्मादहं नाचरिष्ये त्वयि कामं वराङ्गने १०
स्नुषा मे भव कल्याणि पुत्रार्थे त्वां वृणोम्यहम्
स्नुषापक्षं हि वामोरु त्वमागम्य समाश्रिता ११
स्त्र्युवाच
एवमप्यस्तु धर्मज्ञ संयुज्येयं सुतेन ते
त्वद्भक्त्यैव भजिष्यामि प्रख्यातं भारतं कुलम् १२
पृथिव्यां पार्थिवा ये च तेषां यूयं परायणम्
गुणा न हि मया शक्या वक्तुं वर्षशतैरपि
कुलस्य ये वः प्रस्थितास्तत्साधुत्वमनुत्तमम् १३
स मे नाभिजनज्ञः स्यादाचरेयं च यद्विभो
तत्सर्वमेव पुत्रस्ते न मीमांसेत कर्हिचित् १४
एवं वसन्ती पुत्रे ते वर्धयिष्याम्यहं प्रियम्
पुत्रैः पुण्यैः प्रियैश्चापि स्वर्गं प्राप्स्यति ते सुतः १५
वैशम्पायन उवाच
तथेत्युक्त्वा तु सा राजंस्तत्रैवान्तरधीयत

पुत्रजन्म प्रतीक्षंस्तु स राजा तदधारयत् १६
एतस्मिन्नेव काले तु प्रतीपः क्षत्रियर्षभः
तपस्तेपे सुतस्यार्थे सभार्यः कुरुनन्दन १७
तयोः समभवत्पुत्रो वृद्धयोः स महाभिषः
शान्तस्य जज्ञे सन्तानस्तस्मादासीत्स शन्तनुः १८
संस्मरंश्चाक्षयाँल्लोकान्विजातान्स्वेन कर्मणा पुण्यकर्मकृदेवासीच्छन्तनुः कुरुसत्तम १९
प्रतीपः शन्तनुं पुत्रं यौवनस्थं ततोऽन्वशात्
पुरा मां स्त्री समभ्यागाच्छन्तनो भूतये तव २०
त्वामाव्रजेद्यदि रहः सा पुत्र वरवर्णिनी
कामयानाभिरूपाढ्या दिव्या स्त्री पुत्रकाम्यया
सा त्वया नानुयोक्तव्या कासि कस्यासि वाङ्गने २१
यच्च कुर्यान्न तत्कार्यं प्रष्टव्या सा त्वयानघ
मन्नियोगाद्भजन्तीं तां भजेथा इत्युवाच तम् २२
एवं संदिश्य तनयं प्रतीपः शन्तनुं तदा
स्वे च राज्येऽभिषिच्यैनं वनं राजा विवेश ह २३
स राजा शन्तनुर्धीमान्ख्यातः पृथ्व्यां धनुर्धरः
बभूव मृगयाशीलः सततं वनगोचरः २४
स मृगान्महिषांश्चैव विनिघ्नन्राजसत्तमः
गङ्गामनुचचारैकः सिद्धचारणसेविताम् २५
स कदाचिन्महाराज ददर्श परमस्त्रियम्
जाज्वल्यमानां वपुषा साक्षात्पद्मामिव श्रियम् २६
सर्वानवद्यां सुदतीं दिव्याभरणभूषिताम्
सूक्ष्माम्बरधरामेकां पद्मोदरसमप्रभाम् २७
तां दृष्ट्वा हृष्टरोमाभूद्विस्मितो रूपसंपदा
पिबन्निव च नेत्राभ्यां नातृप्यत नराधिपः २८
सा च दृष्ट्वैव राजानं विचरन्तं महाद्युतिम्
स्नेहादागतसौहार्दा नातृप्यत विलासिनी २९
तामुवाच ततो राजा सान्त्वयञ्श्लक्ष्णया गिरा
देवी वा दानवी वा त्वं गन्धर्वी यदि वाप्सराः ३०

यक्षी वा पन्नगी वापि मानुषी वा सुमध्यमे
या वा त्वं सुरगर्भाभे भार्या मे भव शोभने ३१
एतच्छ्रुत्वा वचो राज्ञः सस्मितं मृदु वल्गु च
वसूनां समयं स्मृत्वा अभ्यगच्छदनिन्दिता ३२
उवाच चैव राज्ञः सा ह्लादयन्ती मनो गिरा
भविष्यामि महीपाल महिषी ते वशानुगा ३३
यत्तु कुर्यामहं राजञ्शुभं वा यदि वाशुभम्
न तद्वारयितव्यास्मि न वक्तव्या तथाप्रियम् ३४
एवं हि वर्तमानेऽह त्वयि वत्स्यामि पार्थिव
वारिता विप्रियं चोक्ता त्यजेयं त्वामसंशयम् ३५
तथेति राज्ञा सा तूक्ता तदा भरतसत्तम
प्रहर्षमतुलं लेभे प्राप्य तं पार्थिवोत्तमम् ३६
आसाद्य शन्तनुस्तां च बुभुजे कामतो वशी
न प्रष्टव्येति मन्वानो न स तां किंचिदूचिवान् ३७
स तस्याः शीलवृत्तेन रूपौदार्यगुणेन च
उपचारेण च रहस्तुतोष जगतीपतिः ३८
दिव्यरूपा हि सा देवी गङ्गा त्रिपथगा नदी
मानुषं विग्रहं श्रीमत्कृत्वा सा वरवर्णिनी ३९
भाग्योपनतकामस्य भार्येवोपस्थिता भवत्
शन्तनो राजसिंहस्य देवराजसमद्युतेः ४०
संभोगस्नेहचातुर्यैर्हावलास्यैर्मनोहरैः
राजानं रमयामास यथा रेमे तथैव सः ४१
स राजा रतिसक्तत्वादुत्तमस्त्रीगुणैर्हृतः
संवत्सरानृतून्मासान्न बुबोध न बहूग्नतान् ४२
रममाणस्तया सार्धं यथाकामं जनेश्वरः
अष्टावजनयत्पुत्रांस्तस्याममरवर्णिनः ४३
जातं जातं च सा पुत्रं क्षिपत्यम्भसि भारत
प्रीणामि त्वाहमित्युक्त्वा गङ्गास्त्रोतस्यमज्जयत् ४४
तस्य तन्न प्रियं राज्ञः शन्तनोरभवत्तदा
न च तां किंचनोवाच त्यागाद्भीतो महीपतिः ४५

अथ तामष्टमे पुत्रे जाते प्रहसितामिव
उवाच राजा दुःखार्तः परीप्सन्पुत्रमात्मनः ४६
मा वधीः कासि कस्यासि किं हिंससि सुतानिति
पुत्रघ्नि सुमहत्पापं मा प्रापस्तिष्ठ गर्हिते ४७
स्त्र्युवाच
पुत्रकाम न ते हन्मि पुत्रं पुत्रवतां वर
जीर्णस्तु मम वासोऽय यथा स समयः कृतः ४८
अहं गङ्गा जह्नुसुता महर्षिगणसेविता
देवकार्यार्थसिद्ध्यर्थमुषिताहं त्वया सह ४९
अष्टेमे वसवो देवा महाभागा महौजसः
वसिष्ठशापदोषेण मानुषत्वमुपागताः ५०
तेषां जनयिता नान्यस्त्वदृते भुवि विद्यते
मद्विधा मानुषी धात्री न चैवास्तीह काचन ५१
तस्मात्तज्जननीहेतोर्मानुषत्वमुपागता
जनयित्वा वसूनष्टौ जिता लोकास्त्वयाक्षयाः ५२
देवानां समयस्त्वेष वसूनां संश्रुतो मया
जातं जातं मोक्षयिष्ये जन्मतो मानुषादिति ५३
तत्ते शापाद्विनिर्मुक्ता आपवस्य महात्मनः
स्वस्ति तेऽस्तु गमिष्यामि पुत्रं पाहि महाव्रतम् ५४
एष पर्यायवासो मे वसूनां संनिधौ कृतः
मत्प्रसूतं विजानीहि गङ्गादत्तमिमं सुतम् ५५
इति श्रीमहाभारते आदिपर्वणि द्विनवतितमोऽध्यायः ९२

त्रिनवतितमोऽध्यायः

शन्तनुरुवाच
आपवो नाम को न्वेष वसूनां किं च दुष्कृतम्
यस्याभिशापात्ते सर्वे मानुषीं तनुमागताः १
अनेन च कुमारेण गङ्गादत्तेन किं कृतम्
यस्य चैव कृतेनायं मानुषेषु निवत्स्यति २
ईशानाः सर्वलोकस्य वसवस्ते च वै कथम्

मानुषेषूदपद्यन्त तन्ममाचक्ष्व जाह्नवि ३
वैशम्पायन उवाच
सैवमुक्ता ततो गङ्गा राजानमिदमब्रवीत्
भर्तारं जाह्नवी देवी शन्तनुं पुरुषर्षभम् ४
यं लेभे वरुणः पुत्रं पुरा भरतसत्तम
वसिष्ठो नाम स मुनिः ख्यात आपव इत्युत ५
तस्याश्रमपदं पुण्यं मृगपक्षिगणान्वितम्
मेरोः पार्श्वे नगेन्द्रस्य सर्वर्तुकुसुमावृतम् ६
स वारुणिस्तपस्तेपे तस्मिन्भरतसत्तम
वने पुण्यकृतां श्रेष्ठः स्वादुमूलफलोदके ७
दक्षस्य दुहिता या तु सुरभीत्यतिगर्विता
गां प्रजाता तु सा देवी कश्यपाद्भरतर्षभ ८
अनुग्रहार्थं जगतः सर्वकामदुघां वराम्
तां लेभे गां तु धर्मात्मा होमधेनुं स वारुणिः ९
सा तस्मिंस्तापसारण्ये वसन्ती मुनिसेविते
चचार रम्ये धर्म्ये च गौरपेतभया तदा १०
अथ तद्वनमाजग्मुः कदाचिद्भरतर्षभ
पृथ्वाद्या वसवः सर्वे देवदेवर्षिसेवितम् ११
ते सदारा वनं तच्च व्यचरन्त समन्ततः
रेमिरे रमणीयेषु पर्वतेषु वनेषु च १२
तत्रैकस्य तु भार्या वै वसोर्वासवविक्रम
सा चरन्ती वने तस्मिन्गां ददर्श सुमध्यमा
या सा वसिष्ठस्य मुनेः सर्वकामधुगुत्तमा १३
सा विस्मयसमाविष्टा शीलद्रविणसंपदा
दिवे वै दर्शयामास तां गां गोवृषभेक्षण १४
स्वापीनां च सुदोग्ध्रीं च सुवालधिमुखां शुभाम्
उपपन्नां गुणैः सर्वैः शीलेनानुत्तमेन च १५
एवंगुणसमायुक्तां वसवे वसुनन्दिनी
दर्शयामास राजेन्द्र पुरा पौरवनन्दन १६
द्यौस्तदा तां तु दृष्ट्वैव गां गजेन्द्रेन्द्रविक्रम

उवाच राजंस्तां देवीं तस्या रूपगुणान्वदन् १७
एषा गौरुत्तमा देवि वारुणेरसितेक्षणे
ऋषेस्तस्य वरारोहे यस्येदं वनमुत्तमम् १८
अस्याः क्षीरं पिबेन्मर्त्यः स्वादु यो वै सुमध्यमे
दश वर्षसहस्राणि स जीवेत्स्थिरयौवनः १९
एतच्छ्रुत्वा तु सा देवी नृपोत्तम सुमध्यमा
तमुवाचानवद्याङ्गी भर्तारं दीप्ततेजसम् २०
अस्ति मे मानुषे लोके नरदेवात्मजा सखी
नाम्ना जिनवती नाम रूपयौवनशालिनी २१
उशीनरस्य राजर्षेः सत्यसन्धस्य धीमतः
दुहिता प्रथिता लोके मानुषे रूपसंपदा २२
तस्या हेतोर्महाभाग सवत्सां गां ममेप्सिताम्
आनयस्वामरश्रेष्ठ त्वरितं पुण्यवर्धन २३
यावदस्याः पयः पीत्वा सा सखी मम मानद
मानुषेषु भवत्वेका जरारोगविवर्जिता २४
एतन्मम महाभाग कर्तुमर्हस्यनिन्दित
प्रियं प्रियतरं ह्यस्मान्नास्ति मेऽन्यत्कथंचन २५
एतच्छ्रुत्वा वचस्तस्या देव्याः प्रियचिकीर्षया
पृथ्वाद्यैर्भ्रातृभिः सार्धं द्यौस्तदा तां जहार गाम् २६
तया कमलपत्राक्ष्या नियुक्तो द्यौस्तदा नृप
ऋषेस्तस्य तपस्तीव्रं न शशाक निरीक्षितुम्
हृता गौः सा तदा तेन प्रपातस्तु न तर्कितः २७
अथाश्रमपदं प्राप्तः फलान्यादाय वारुणिः
न चापश्यत गां तत्र सवत्सां काननोत्तमे २८
ततः स मृगयामास वने तस्मिंस्तपोधनः
नाध्यगच्छच्च मृगयंस्तां गां मुनिरुदारधीः २९
ज्ञात्वा तथापनीतां तां वसुभिर्दिव्यदर्शनः
ययौ क्रोधवशं सद्यः शशाप च वसूंस्तदा ३०
यस्मान्मे वसवो जह्रुर्गां वै दोग्ध्रीं सुवालधिम्
तस्मात्सर्वे जनिष्यन्ति मानुषेषु न संशयः ३१

एवं शशाप भगवान्वसूंस्तान्मुनिसत्तमः
वशं कोपस्य संप्राप्त आपवो भरतर्षभ ३२
शप्त्वा च तान्महाभागस्तपस्येव मनो दधे
एवं स शप्तवान्राजन्वसूनष्टौ तपोधनः
महाप्रभावो ब्रह्मर्षिर्देवान्रोषसमन्वितः ३३
अथाश्रमपदं प्राप्य तं स्म भूयो महात्मनः
शप्ताः स्म इति जानन्त ऋषिं तमुपचक्रमुः ३४
प्रसादयन्तस्तमृषिं वसवः पार्थिवर्षभ
न लेभिरे च तस्मात्ते प्रसादमृषिसत्तमात्
आपवात्पुरुषव्याघ्र सर्वधर्मविशारदात् ३५
उवाच च स धर्मात्मा सप्त यूयं धरादयः
अनुसंवत्सराच्छापमोक्षं वै समवाप्स्यथ ३६
अयं तु यत्कृते यूयं मया शप्ताः स वत्स्यति
द्यौस्तदा मानुषे लोके दीर्घकालं स्वकर्मणा ३७
नानृतं तच्चिकीर्षामि युष्मान्क्रुद्धो यदब्रुवम्
न प्रजास्यति चाप्येष मानुषेषु महामनाः ३८
भविष्यति च धर्मात्मा सर्वशास्त्रविशारदः
पितुः प्रियहिते युक्तः स्त्रीभोगान्वर्जयिष्यति
एवमुक्त्वा वसून्सर्वाञ्जगाम भगवानृषिः ३९
ततो मामुपजग्मुस्ते समस्ता वसवस्तदा
अयाचन्त च मां राजन्वरं स च मया कृतः
जाताञ्जातान्प्रक्षिपास्मान्स्वयं गङ्गे त्वमम्भसि ४०
एवं तेषामहं सम्यक् शप्तानां राजसत्तम
मोक्षार्थं मानुषाल्लोकाद्यथावत्कृतवत्यहम् ४१
अयं शापादृषेस्तस्य एक एव नृपोत्तम
द्यौ राजन्मानुषे लोके चिरं वत्स्यति भारत ४२
एतदाख्याय सा देवी तत्रैवान्तरधीयत
आदाय च कुमारं तं जगामाथ यथेप्सितम् ४३
स तु देवव्रतो नाम गाङ्गेय इति चाभवत्
द्विनामा शंतनोः पुत्रः शंतनोरधिको गुणैः ४४

शंतनुश्चापि शोकार्तो जगाम स्वपुरं ततः
तस्याहं कीर्तयिष्यामि शन्तनोरमितागुणान् ४५
महाभाग्यं च नृपतेर्भारतस्य यशस्विनः
यस्येतिहासो द्युतिमान्महाभारतमुच्यते ४६
इति श्रीमहाभारते आदिपर्वणि त्रिनवतितमोऽध्यायः ९३

चतुर्नवतितमोऽध्यायः

वैशम्पायन उवाच
स एवं शन्तनुर्धीमान्देवराजर्षिसत्कृतः
धर्मात्मा सर्वलोकेषु सत्यवागिति विश्रुतः १
दमो दानं क्षमा बुद्धिर्ह्रीर्धृतिस्तेज उत्तमम्
नित्यान्यासन्महासत्त्वे शन्तनौ पुरुषर्षभे २
एवं स गुणसंपन्नो धर्मार्थकुशलो नृपः
आसीद्भरतवंशस्य गोप्ता साधुजनस्य च ३
कम्बुग्रीवः पृथुव्यंसो मत्तवारणविक्रमः
धर्म एव परः कामादर्थाच्चेति व्यवस्थितः ४
एतान्यासन्महासत्त्वे शंतनौ भरतर्षभ
न चास्य सदृशः कश्चित्क्षत्रियो धर्मतोऽभवत् ५
वर्तमानं हि धर्मे स्वे सर्वधर्मविदां वरम्
तं महीपा महीपालं राजराज्येऽभ्यषेचयन् ६
वीतशोकभयाबाधाः सुखस्वप्नविबोधनाः
प्रति भारतगोप्तारं समपद्यन्त भूमिपाः ७
शंतनुप्रमुखैर्गुप्ते लोके नृपतिभिस्तदा
नियमात्सर्ववर्णानां ब्रह्मोत्तरमवर्तत ८
ब्रह्म पर्यचरत्क्षत्रं विशः क्षत्रमनुव्रताः
ब्रह्मक्षत्रानुरक्ताश्च शूद्राः पर्यचरन्विशः ९
स हास्तिनपुरे रम्ये कुरूणां पुटभेदने
वसन्सागरपर्यन्तामन्वशाद्वै वसुंधराम् १०
स देवराजसदृशो धर्मज्ञः सत्यवागृजुः
दानधर्मतपोयोगाच्छ्रिया परमया युतः ११

अरागद्वेषसंयुक्तः सोमवत्प्रियदर्शनः
तेजसा सूर्यसंकाशो वायुवेगसमो जवे
अन्तकप्रतिमः कोपे क्षमया पृथिवीसमः १२
वधः पशुवराहाणां तथैव मृगपक्षिणाम्
शंतनौ पृथिवीपाले नावर्तत वृथा नृप १३
धर्मब्रह्मोत्तरे राज्ये शंतनुर्विनयात्मवान्
समं शशास भूतानि कामरागविवर्जितः १४
देवर्षिपितृयज्ञार्थमारभ्यन्त तदा क्रियाः
न चाधर्मेण केषांचित्प्राणिनामभवद्वधः १५
असुखानामनाथानां तिर्यग्योनिषु वर्तताम्
स एव राजा भूतानां सर्वेषामभवत्पिता १६
तस्मिन्कुरुपतिश्रेष्ठे राजराजेश्वरे सति
श्रिता वागभवत्सत्यं दानधर्माश्रितं मनः १७
स समाः षोडशाष्टौ च चतस्रोऽष्टौ तथापराः
रतिमप्राप्नुवन्स्त्रीषु बभूव वनगोचरः १८
तथारूपस्तथाचारस्तथावृत्तस्तथाश्रुतः
गाङ्गेयस्तस्य पुत्रोऽभून्नाम्ना देवव्रतो वसुः १९
सर्वास्त्रेषु स निष्णातः पार्थिवेष्वितरेषु च
महाबलो महासत्त्वो महवीर्यो महारथः २०
स कदाचिन्मृगं विद्ध्वा गङ्गामनुसरन्नदीम्
भागीरथीमल्पजलां शंतनुर्दृष्टवान्नृपः २१
तां दृष्ट्वा चिन्तयामास शंतनुः पुरुषर्षभः
स्यन्दते किं न्वियं नाद्य सरिच्छ्रेष्ठा यथा पुरा २२
ततो निमित्तमन्विच्छन्ददर्श स महामनाः
कुमारं रूपसंपन्नं बृहन्तं चारुदर्शनम् २३
दिव्यमस्त्रं विकुर्वाणं यथा देवं पुरन्दरम्
कृत्स्नां गङ्गां समावृत्य शरस्तीक्ष्णैरवस्थितम् २४
तां शरैरावृतां दृष्ट्वा नदीं गङ्गां तदन्तिके
अभवद्विस्मितो राजा कर्म दृष्ट्वातिमानुषम् २५
जातमात्रं पुरा दृष्टं तं पुत्रं शंतनुस्तदा

नोपलेभे स्मृतिं धीमानभिज्ञातुं तमात्मजम् २६
स तु तं पितरं दृष्ट्वा मोहयामास मायया
संमोह्य तु ततः क्षिप्रं तत्रैवान्तरधीयत २७
तदद्भुतं तदा दृष्ट्वा तत्र राजा स शंतनुः
शङ्कमानः सुतं गङ्गामब्रवीद्दर्शयेति ह २८
दर्शयामास तं गङ्गा बिभ्रती रूपमुत्तमम्
गृहीत्वा दक्षिणे पाणौ तं कुमारमलंकृतम् २९
अलंकृतामाभरणैररजोम्बरधारिणीम्
दृष्टपूर्वामपि सतीं नाभ्यजानात्स शंतनुः ३०
गङ्गोवाच
यं पुत्रमष्टमं राजंस्त्वं पुरा मय्यजायिथाः
स तेऽय पुरुषव्याघ्र नयस्वैनं गृहान्तिकम् ३१
वेदानधिजगे साङ्गान्वसिष्ठादेव वीर्यवान्
कृतास्त्रः परमेष्वासो देवराजसमो युधि ३२
सुराणां संमतो नित्यमसुराणां च भारत
उशना वेद यच्छास्त्रमयं तद्वेद सर्वशः ३३
तथैवाङ्गिरसः पुत्रः सुरासुरनमस्कृतः
यद्वेद शास्त्रं तच्चापि कृत्स्नमस्मिन्प्रतिष्ठितम्
तव पुत्रे महाबाहौ साङ्गोपाङ्गं महात्मनि ३४
ऋषिः परैरनाधृष्यो जामदग्न्यः प्रतापवान्
यदस्त्रं वेद रामश्च तदप्यस्मिन्प्रतिष्ठितम् ३५
महेष्वासमिमं राजन्राजधर्मार्थकोविदम्
मया दत्तं निजं पुत्रं वीरं वीर गृहान्नय ३६
वैशम्पायन उवाच
तयैवं समनुज्ञातः पुत्रमादाय शंतनुः
भ्राजमानं यथादित्यमाययौ स्वपुरं प्रति ३७
पौरवः स्वपुरं गत्वा पुरन्दरपुरोपमम्
सर्वकामसमृद्धार्थं मेने आत्मानमात्मना
पौरवेषु ततः पुत्रं यौवराज्येऽभ्यषेचयत् ३८
पौरवाञ्शंतनोः पुत्रः पितरं च महायशाः

राष्ट्रं च रञ्जयामास वृत्तेन भरतर्षभ ३९
स तथा सह पुत्रेण रममाणो महीपतिः
वर्तयामास वर्षाणि चत्वार्यमितविक्रमः ४०
स कदाचिद्वनं यातो यमुनामभितो नदीम्
महीपतिरनिर्देश्यमाजिघ्रद्गन्धमुत्तमम् ४१
तस्य प्रभवमन्विच्छन्विचचार समन्ततः
स ददर्श तदा कन्यां दाशानां देवरूपिणीम् ४२
तामपृच्छत्स दृष्ट्वैव कन्यामसितलोचनाम्
कस्य त्वमसि का चासि किं च भीरु चिकीर्षसि ४३
साब्रवीद्दाशकन्यास्मि धर्मार्थं वाहये तरीम्
पितुर्नियोगाद्भद्रं ते दाशराज्ञो महात्मनः ४४
रूपमाधुर्यगन्धैस्तां संयुक्तां देवरूपिणीम्
समीक्ष्य राजा दाशेयीं कामयामास शंतनुः ४५
स गत्वा पितरं तस्या वरयामास तां तदा
पर्यपृच्छत्ततस्तस्याः पितरं चात्मकारणात् ४६
स च तं प्रत्युवाचेदं दाशराजो महीपतिम्
जातमात्रैव मे देया वराय वरवर्णिनी
हृदि कामस्तु मे कश्चित्तं निबोध जनेश्वर ४७
यदीमां धर्मपत्नीं त्वं मत्तः प्रार्थयसेऽनघ
सत्यवागसि सत्येन समयं कुरु मे ततः ४८
समयेन प्रदद्यां ते कन्यामहमिमां नृप
न हि मे त्वत्समः कश्चिद्वरो जातु भविष्यति ४९
शंतनुरुवाच
श्रुत्वा तव वरं दाश व्यवस्येयमहं न वा
दातव्यं चेत्प्रदास्यामि न त्वदेयं कथंचन ५०
दाश उवाच
अस्यां जायेत यः पुत्रः स राजा पृथिवीपतिः
त्वदूर्ध्वमभिषेक्तव्यो नान्यः कश्चन पार्थिव ५१
वैशम्पायन उवाच
नाकामयत तं दातुं वरं दाशाय शंतनुः

शरीरजेन तीव्रेण दह्यमानोऽपि भारत ५२
स चिन्तयन्नेव तदा दाशकन्यां महीपतिः
प्रत्ययाद्धास्तिनपुरं शोकोपहतचेतनः ५३
ततः कदाचिच्छोचन्तं शंतनुं ध्यानमास्थितम्
पुत्रो देवव्रतोऽभ्येत्य पितरं वाक्यमब्रवीत् ५४
सर्वतो भवतः क्षेमं विधेयाः सर्वपार्थिवाः
तत्किमर्थमिहाभीक्ष्णं परिशोचसि दुःखितः
ध्यायन्निव च किं राजन्नाभिभाषसि किंचन ५५
एवमुक्तः स पुत्रेण शंतनुः प्रत्यभाषत
असंशयं ध्यानपरं यथा मात्थ तथास्म्युत ५६
अपत्यं नस्त्वमेवैकः कुले महति भारत
अनित्यता च मर्त्यानामतः शोचामि पुत्रक ५७
कथंचित्तव गाङ्गेय विपत्तौ नास्ति नः कुलम्
असंशयं त्वमेवैकः शतादपि वरः सुतः ५८
न चाप्यहं वृथा भूयो दारान्कर्तुमिहोत्सहे
सन्तानस्याविनाशाय कामये भद्रमस्तु ते
अनपत्यतैकपुत्रत्वमित्याहुर्धर्मवादिनः ५९
अग्निहोत्रं त्रयो वेदा यज्ञाश्च सहदक्षिणाः
सर्वाण्येतान्यपत्यस्य कलां नार्हन्ति षोडशीम् ६०
एवमेव मनुष्येषु स्याच्च सर्वप्रजास्वपि
यदपत्यं महाप्राज्ञ तत्र मे नास्ति संशयः
एषा त्रयी पुराणानामुत्तमानां च शाश्वती ६१
त्वं च शूरः सदामर्षी शस्त्रनित्यश्च भारत
नान्यत्र शस्त्रात्तस्मात्ते निधनं विद्यतेऽनघ ६२
सोऽस्मि संशयमापन्नस्त्वयि शान्ते कथं भवेत्
इति ते कारणं तात दुःखस्योक्तमशेषतः ६३
ततस्तत्कारणं ज्ञात्वा कृत्स्नं चैवमशेषतः
देवव्रतो महाबुद्धिः प्रययावनुचिन्तयन् ६४
अभ्यगच्छत्तदैवाशु वृद्धामात्यं पितुर्हितम्
तमपृच्छत्तदाभ्येत्य पितुस्तच्छोककारणम् ६५

तस्मै स कुरुमुख्याय यथावत्परिपृच्छते
वरं शशंस कन्यां तामुद्दिश्य भरतर्षभ ६६
ततो देवव्रतो वृद्धैः क्षत्रियैः सहितस्तदा
अभिगम्य दाशराजानं कन्यां वव्रे पितुः स्वयम् ६७
तं दाशः प्रतिजग्राह विधिवत्प्रतिपूज्य च
अब्रवीच्चैनमासीनं राजसंसदि भारत ६८
त्वमेव नाथः पर्याप्तः शंतनो पुरुषर्षभ
पुत्रः पुत्रवतां श्रेष्ठः किं नु वक्ष्यामि ते वचः ६९
को हि संबन्धकं श्लाघ्यमीप्सितं यौनमीदृशम्
अतिक्रामन्न तप्येत साक्षादपि शतक्रतुः ७०
अपत्यं चैतदार्यस्य यो युष्माकं समो गुणैः
यस्य शुक्रात्सत्यवती प्रादुर्भूता यशस्विनी ७१
तेन मे बहुशस्तात पिता ते परिकीर्तितः
अर्हः सत्यवतीं वोढुं सर्वराजसु भारत ७२
असितो ह्यपि देवर्षिः प्रत्याख्यातः पुरा मया
सत्यवत्या भृशं ह्यर्थी स आसीदृषिसत्तमः ७३
कन्यापितृत्वात्किंचित्तु वक्ष्यामि भरतर्षभ
बलवत्सपत्नतामत्र दोषं पश्यामि केवलं ७४
यस्य हि त्वं सपत्नः स्या गन्धर्वस्यासुरस्य वा
न स जातु सुखं जीवेत्त्वयि क्रुद्धे परंतप ७५
एतावानत्र दोषो हि नान्यः कश्चन पार्थिव
एतज्जानीहि भद्रं ते दानादाने परंतप ७६
एवमुक्तस्तु गाङ्गेयस्तद्युक्तं प्रत्यभाषत
शृण्वतां भूमिपालानां पितुरर्थाय भारत ७७
इदं मे मतमादत्स्व सत्यं सत्यवतां वर
नैव जातो न वाजात ईदृशं वक्तुमुत्सहेत् ७८
एवमेतत्करिष्यामि यथा त्वमनुभाषसे
योऽस्या जनिष्यते पुत्रः स नो राजा भविष्यति ७९
इत्युक्तः पुनरेवाथ तं दाशः प्रत्यभाषत
चिकीर्षुर्दुष्करं कर्म राज्यार्थे भरतर्षभ ८०

त्वमेव नाथः पर्याप्तः शंतनोरमितद्युतेः
कन्यायाश्चैव धर्मात्मन्प्रभुर्दानाय चेश्वरः ८१
इदं तु वचनं सौम्य कार्यं चैव निबोध मे
कौमारिकाणां शीलेन वक्ष्याम्यहमरिंदम ८२
यत्त्वया सत्यवत्यर्थे सत्यधर्मपरायण
राजमध्ये प्रतिज्ञातमनुरूपं तवैव तत् ८३
नान्यथा तन्महाबाहो संशयोऽत्र न कश्चन
तवापत्यं भवेद्यत्तु तत्र नः संशयो महान् ८४
तस्य तन्मतमाज्ञाय सत्यधर्मपरायणः
प्रत्यजानात्तदा राजन्पितुः प्रियचिकीर्षया ८५
देवव्रत उवाच
दाशराज निबोधेदं वचनं मे नृपोत्तम
शृणवतां भूमिपालानां यद्ब्रवीमि पितुः कृते ८६
राज्यं तावत्पूर्वमेव मया त्यक्तं नराधिप
अपत्यहेतोरपि च करोम्येष विनिश्चयम् ८७
अद्य प्रभृति मे दाश ब्रह्मचर्यं भविष्यति
अपुत्रस्यापि मे लोका भविष्यन्त्यक्षया दिवि ८८
वैशम्पायन उवाच
तस्य तद्वचनं श्रुत्वा संप्रहृष्टतनूरुहः
ददानीत्येव तं दाशो धर्मात्मा प्रत्यभाषत ८९
ततोऽन्तरिक्षेऽप्सरसो देवा सर्षिगणास्तथा
अभ्यवर्षन्त कुसुमैर्भीष्मोऽयमिति चाब्रुवन् ९०
ततः स पितुरर्थाय तामुवाच यशस्विनीम्
अधिरोह रथं मातर्गच्छावः स्वगृहानिति ९१
एवमुक्त्वा तु भीष्मस्तां रथमारोप्य भामिनीम्
आगम्य हास्तिनपुरं शंतनोः संन्यवेदयत् ९२
तस्य तद्दुष्करं कर्म प्रशशंसुर्नराधिपाः
समेताश्च पृथक्चैव भीष्मोऽयमिति चाब्रुवन् ९३
तद्दृष्ट्वा दुष्करं कर्म कृतं भीष्मेण शंतनुः
स्वच्छन्दमरणं तस्मै ददौ तुष्टः पिता स्वयम् ९४

इति श्रीमहाभारते आदिपर्वणि चतुर्नवतितमोऽध्यायः ९४

पञ्चनवतितमोऽध्यायः

वैशम्पायन उवाच
ततो विवाहे निर्वृत्ते स राजा शंतनुर्नृपः
तां कन्यां रूपसंपन्नां स्वगृहे संन्यवेशयत् १
ततः शान्तनवो धीमान्सत्यवत्यामजायत
वीरश्चित्राङ्गदो नाम वीर्येण मनुजानति २
अथापरं महेष्वासं सत्यवत्यां पुनः प्रभुः
विचित्रवीर्यं राजानं जनयामास वीर्यवान् ३
अप्राप्तवति तस्मिंश्च यौवनं भरतर्षभ
स राजा शंतनुर्धीमान्कालधर्ममुपेयिवान् ४
स्वर्गते शंतनौ भीष्मश्चित्राङ्गदमरिंदमम्
स्थापयामास वै राज्ये सत्यवत्या मते स्थितः ५
स तु चित्राङ्गदः शौर्यात्सर्वांश्चिक्षेप पार्थिवान्
मनुष्यं न हि मेने स कंचित्सदृशमात्मनः ६
तं क्षिपन्तं सुरांश्चैव मनुष्यानसुरांस्तथा
गन्धर्वराजो बलवांस्तुल्यनामाभ्ययात्तदा
तेनास्य सुमहद्युद्धं कुरुक्षेत्रे बभूव ह ७
तयोर्बलवतोस्तत्र गन्धर्वकुरुमुख्ययोः
नद्यास्तीरे हिरण्वत्याः समास्तिस्रोऽभवद्रणः ८
तस्मिन्विमर्दे तुमुले शस्त्रवृष्टिसमाकुले
मायाधिकोऽवधीद्वीरं गन्धर्वः कुरुसत्तमम् ९
चित्राङ्गदं कुरुश्रेष्ठं विचित्रशरकार्मुकम्
अन्ताय कृत्वा गन्धर्वो दिवमाचक्रमे ततः १०
तस्मिन्नृपतिशार्दूले निहते भूरिवर्चसि
भीष्मः शान्तनवो राजन्प्रेतकार्याण्यकारयत् ११
विचित्रवीर्यं च तदा बालमप्राप्तयौवनम्
कुरुराज्ये महाबाहुरभ्यषिञ्चदनन्तरम् १२
विचित्रवीर्यस्तु तदा भीष्मस्य वचने स्थितः

अन्वशासन्महाराज पितृपैतामहं पदम् १३
स धर्मशास्त्रकुशलो भीष्मं शान्तनवं नृपः
पूजयामास धर्मेण स चैनं प्रत्यपालयत् १४
इति श्रीमहाभारते आदिपर्वणि पञ्चनवतितमोऽध्यायः ९५

षरणवतितमोऽध्यायः

वैशम्पायन उवाच
हते चित्राङ्गदे भीष्मो बाले भ्रातरि चानघ
पालयामास तद्राज्यं सत्यवत्या मते स्थितः १
संप्राप्तयौवनं पश्यन्भ्रातरं धीमतां वरम्
भीष्मो विचित्रवीर्यस्य विवाहायाकरोन्मतिम् २
अथ काशिपतेर्भीष्मः कन्यास्तिस्रोऽप्सरःसमाः
शुश्राव सहिता राजन्वृणवतीर्वै स्वयं वरम् ३
ततः स रथिनां श्रेष्ठो रथेनैकेन वर्मभृत्
जगामानुमते मातुः पुरीं वाराणसीं प्रति ४
तत्र राज्ञः समुदितान्सर्वतः समुपागतान्
ददर्श कन्यास्ताश्चैव भीष्मः शंतनुनन्दनः ५
कीर्त्यमानेषु राज्ञां तु नाम स्वथ सहस्रशः
भीष्मः स्वयं तदा राजन्वरयामास ताः प्रभुः ६
उवाच च महीपालान्राजञ्जलदनिःस्वनः
रथमारोप्य ताः कन्या भीष्मः प्रहरतां वरः ७
आहूय दानं कन्यानां गुणवद्भ्यः स्मृतं बुधैः
अलंकृत्य यथाशक्ति प्रदाय च धनान्यपि ८
प्रयच्छन्त्यपरे कन्यां मिथुनेन गवामपि
वित्तेन कथितेनान्ये बलेनान्येऽनुमान्य च ९
प्रमत्तामुपयान्त्यन्ये स्वयमन्ये च विन्दते
अष्टमं तमथो वित्त विवाहं कविभिः स्मृतम् १०
स्वयंवरं तु राजन्याः प्रशंसन्त्युपयान्ति च
प्रमथ्य तु हृतामाहुर्ज्यायसीं धर्मवादिनः ११
ता इमाः पृथिवीपाला जिहीर्षामि बलादितः

ते यतध्वं परं शक्त्या विजयायेतराय वा
स्थितोऽह पृथिवीपाला युद्धाय कृतनिश्चयः १२
एवमुक्त्वा महीपालान्काशिराजं च वीर्यवान्
सर्वाः कन्याः स कौरव्यो रथमारोपयत्स्वकम्
आमन्त्र्य च स तान्प्रायाच्छीघ्रं कन्याः प्रगृह्य ताः १३
ततस्ते पार्थिवाः सर्वे समुत्पेतुरमर्षिताः
संस्पृशन्तः स्वकान्बाहून्दशंतो दशनच्छदान् १४
तेषामाभरणान्याशु त्वरितानां विमुञ्चताम्
आमुञ्चतां च वर्माणि संभ्रमः सुमहानभूत् १५
ताराणामिव संपातो बभूव जनमेजय
भूषणानां च शुभ्राणां कवचानां च सर्वशः १६
सवर्मभिर्भूषणैस्ते द्राग्भ्राजद्भिरितस्ततः
सक्रोधामर्षजिह्मभ्रूसकषायदृशस्तथा १७
सूतोपक्लृप्तान्रुचिरान्सदश्वोद्यतधूर्गतान्
रथानास्थाय ते वीराः सर्वप्रहरणान्विताः
प्रयान्तमेकं कौरव्यमनुसस्रुरुदायुधाः १८
ततः समभवद्युद्धं तेषां तस्य च भारत
एकस्य च बहूनां च तुमुलं लोमहर्षणम् १९
ते त्विषून्दशसाहस्रांस्तस्मै युगपदाक्षिपन्
अप्राप्तांश्चैव तानाशु भीष्मः सर्वांस्तदाच्छिनत् २०
ततस्ते पार्थिवाः सर्वे सर्वतः परिवारयन्
ववर्षुः शरवर्षेण वर्षेणेवाद्रिमम्बुदाः २१
स तद्बाणमयं वर्षं शरैरावार्य सर्वतः
ततः सर्वान्महीपालान्प्रत्यविध्यत्त्रिभिस्त्रिभिः २२
तस्याति पुरुषानन्याल्लाँघवं रथचारिणः
रक्षणं चात्मनः संख्ये शत्रवोऽप्यभ्यपूजयन् २३
तान्विनिर्जित्य तु रणे सर्वशस्त्रविशारदः
कन्याभिः सहितः प्रायाद्भारतो भारतान्प्रति २४
ततस्तं पृष्ठतो राजञ्शाल्वराजो महारथः
अभ्याहनदमेयात्मा भीष्मं शान्तनवं रणे २५

वारणं जघने निघ्नन्दन्ताभ्यामपरो यथा
वाशितामनुसंप्राप्तो यूथपो बलिनां वरः २६
स्त्रीकाम तिष्ठ तिष्ठेति भीष्ममाह स पार्थिवः
शाल्वराजो महाबाहुरमर्षेणाभिचोदितः २७
ततः स पुरुषव्याघ्रो भीष्मः परबलार्दनः
तद्वाक्याकुलितः क्रोधाद्विधूमोऽग्निरिव ज्वलन् २८
क्षत्रधर्मं समास्थाय व्यपेतभयसंभ्रमः
निवर्तयामास रथं शाल्वं प्रति महारथः २९
निवर्तमानं तं दृष्ट्वा राजानः सर्व एव ते
प्रेक्षकाः समपद्यन्त भीष्मशाल्वसमागमे ३०
तौ वृषाविव नर्दन्तौ बलिनौ वाशितान्तरे
अन्योन्यमभिवर्तेतां बलविक्रमशालिनौ ३१
ततो भीष्मं शान्तनवं शरैः शतसहस्रशः
शाल्वराजो नरश्रेष्ठः समवाकिरदाशुगैः ३२
पूर्वमभ्यर्दितं दृष्ट्वा भीष्मं शाल्वेन ते नृपाः
विस्मिताः समपद्यन्त साधु साध्विति चाब्रुवन् ३३
लाघवं तस्य ते दृष्ट्वा संयुगे सर्वपार्थिवाः
अपूजयन्त संहृष्टा वाग्भिः शाल्वं नराधिपाः ३४
क्षत्रियाणां तदा वाचः श्रुत्वा परपुरंजयः
क्रुद्धः शान्तनवो भीष्मस्तिष्ठ तिष्ठेत्यभाषत ३५
सारथिं चाब्रवीत्क्रुद्धो याहि यत्रैष पार्थिवः
यावदेनं निहन्म्यद्य भुजङ्गमिव पक्षिराट् ३६
ततोऽस्त्र वारुणं सम्यग्योजयामास कौरवः
तेनाश्वांश्चतुरोऽमृद्नाच्छाल्वराज्ञो नराधिप ३७
अस्त्रैरस्त्राणि संवार्य शाल्वराज्ञः स कौरवः
भीष्मो नृपतिशार्दूल न्यवधीत्तस्य सारथिम्
अस्त्रेण चाप्यथैकेन न्यवधीत्तुरगोत्तमान् ३८
कन्याहेतोर्नरश्रेष्ठ भीष्मः शांतनवस्तदा
जित्वा विसर्जयामास जीवन्तं नृपसत्तमम्
ततः शाल्वः स्वनगरं प्रययौ भरतर्षभ ३९

राजानो ये च तत्रासन्स्वयंवरदिदृक्षवः
स्वान्येव तेऽपि राष्ट्राणि जग्मुः परपुरंजय ४०
एवं विजित्य ताः कन्या भीष्मः प्रहरतां वरः
प्रययौ हास्तिनपुरं यत्र राजा स कौरवः ४१
सोऽचिरेणैव कालेन अत्यक्रामन्नराधिप
वनानि सरितश्चैव शैलांश्च विविधद्रुमान् ४२
अक्षतः क्षपयित्वारीन्संख्येऽसख्येयविक्रमः
आनयामास काश्यस्य सुताः सागरगासुतः ४३
स्नुषा इव स धर्मात्मा भगिन्य इव चानुजाः
यथा दुहितरश्चैव प्रतिगृह्य ययौ कुरून् ४४
ताः सर्वा गुणसंपन्ना भ्राता भ्रात्रे यवीयसे
भीष्मो विचित्रवीर्याय प्रददौ विक्रमाहृताः ४५
सतां धर्मेण धर्मज्ञः कृत्वा कर्मातिमानुषम्
भ्रातुर्विचित्रवीर्यस्य विवाहायोपचक्रमे
सत्यवत्यासह मिथः कृत्वा निश्चयमात्मवान् ४६
विवाहं कारयिष्यन्तं भीष्मं काशिपतेः सुता
ज्येष्ठा तासामिदं वाक्यमब्रवीद्ध सती तदा ४७
मया सौभपतिः पूर्वं मनसाभिवृतः पतिः
तेन चास्मि वृता पूर्वमेष कामश्च मे पितुः ४८
मया वरयितव्योऽभूच्छाल्वस्तस्मिन्स्वयंवरे
एतद्विज्ञाय धर्मज्ञ ततस्त्वं धर्ममाचर ४९
एवमुक्तस्तया भीष्मः कन्यया विप्रसंसदि
चिन्तामभ्यगमद्वीरो युक्तां तस्यैव कर्मणः ५०
स विनिश्चित्य धर्मज्ञो ब्राह्मणैर्वेदपारगैः
अनुजज्ञे तदा ज्येष्ठामम्बां काशिपतेः सुताम् ५१
अम्बिकाम्बालिके भार्ये प्रादाद्भ्रात्रे यवीयसे
भीष्मो विचित्रवीर्याय विधिदृष्टेन कर्मणा ५२
तयोः पाणिं गृहीत्वा स रूपयौवनदर्पितः
विचित्रवीर्यो धर्मात्मा कामात्मा समपद्यत ५३
ते चापि बृहती श्यामे नीलकुञ्चितमूर्धजे

रक्ततुङ्गनखोपेते पीनश्रोणिपयोधरे ५४
आत्मनः प्रतिरूपोऽसौ लब्धः पतिरिति स्थिते
विचित्रवीर्यं कल्याणं पूजयामासतुस्तु ते ५५
स चाश्विरूपसदृशो देवसत्त्वपराक्रमः
सर्वासामेव नारीणां चित्तप्रमथनोऽभवत् ५६
ताभ्यां सह समाः सप्त विहरन्पृथिवीपतिः
विचित्रवीर्यस्तरुणो यक्ष्माणं समपद्यत ५७
सुहृदां यतमानानामाप्तैः सह चिकित्सकैः
जगामास्तमिवादित्यः कौरव्यो यमसादनम् ५८
प्रेतकार्याणि सर्वाणि तस्य सम्यगकारयत्
राज्ञो विचित्रवीर्यस्य सत्यवत्या मते स्थितः
ऋत्विग्भिः सहितो भीष्मः सर्वैश्च कुरुपुङ्गवैः ५९
इति श्रीमहाभारते आदिपर्वणि षण्णवतितमोऽध्यायः ९६

## सप्त नवतितमोऽध्यायः

वैशम्पायन उवाच
ततः सत्यवती दीना कृपणा पुत्रगृद्धिनी
पुत्रस्य कृत्वा कार्याणि स्नुषाभ्यां सह भारत १
धर्मं च पितृवंशं च मातृवंश च मानिनी
प्रसमीक्ष्य महाभागा गाङ्गेयं वाक्यमब्रवीत् २
शंतनोर्धर्मनित्यस्य कौरव्यस्य यशस्विनः
त्वयि पिण्डश्च कीर्तिश्च संतानं च प्रतिष्ठितम् ३
यथा कर्म शुभं कृत्वा स्वर्गोपगमनं ध्रुवम्
यथा चायुर्ध्रुवं सत्ये त्वयि धर्मस्तथा ध्रुवः ४
वेत्थ धर्मांश्च धर्मज्ञ समासेनेतरेण च
विविधास्त्वं श्रुतीर्वेत्थवेत्थ वेदांश्च सर्वशः ५
व्यवस्थानं च ते धर्मे कुलाचारं च लक्षये
प्रतिपत्तिं च कृच्छ्रेषु शुक्राङ्गिरसयोरिव ६
तस्मात्सुभृशमाश्वस्य त्वयि धर्मभृतां वर
कार्ये त्वांविनियोक्ष्यामि तच्छ्रुत्वा कर्तुमर्हसि ७

मम पुत्रस्तव भ्राता वीर्यवान्सुप्रियश्च ते
बाल एव गतः स्वर्गमपुत्रः पुरुषर्षभ ८
इमे महिष्यौ भ्रातुस्ते काशिराजसुते शुभे
रूपयौवनसंपन्ने पुत्रकामे च भारत ९
तयोरुत्पादयापत्यं संतानाय कुलस्य नः
मन्नियोगान्महाभाग धर्मं कर्तुमिहार्हसि १०
राज्ये चैवाभिषिच्यस्व भारताननुशाधि च
दारांश्च कुरु धर्मेण मा निमज्जीः पितामहान् ११
तथोच्यमानो मात्रा च सुहृद्भिश्च परंतपः
प्रत्युवाच स धर्मात्मा धर्म्यमेवोत्तरं वचः १२
असंशयं परो धर्मस्त्वया मातरुदाहृतः
त्वमपत्यं प्रति च मे प्रतिज्ञां वेत्थ वै पराम् १३
जानासि च यथावृत्तं शुल्कहेतोस्त्वदन्तरे
स सत्यवति सत्यं ते प्रतिजानाम्यहं पुनः १४
परित्यजेयं त्रैलोक्यं राज्यं देवेषु वा पुनः
यद्वाप्यधिकमेताभ्यां न तु सत्यं कथंचन १५
त्यजेच्च पृथिवी गन्धमापश्च रसमात्मनः
ज्योतिस्तथा त्यजेद्रूपं वायुः स्पर्शगुणं त्यजेत् १६
प्रभां समुत्सृजेदर्को धूमकेतुस्तथोष्णताम्
त्यजेच्छब्दं तथाकाशः सोमः शीतांशुतां त्यजेत् १७
विक्रमं वृत्रहा जह्याद्धर्मं जह्याच्च धर्मराट्
न त्वहं सत्यमुत्स्रष्टुं व्यवसेयं कथंचन १८
एवमुक्ता तु पुत्रेण भूरिद्रविणतेजसा
माता सत्यवती भीष्ममुवाच तदनन्तरम् १९
जानामि ते स्थितिं सत्ये परां सत्यपराक्रम
इच्छन्सृजेथास्त्रीँल्लोकानन्यांस्त्वं स्वेन तेजसा २०
जानामि चैवं सत्यं तन्मदर्थं यदभाषथाः
आपद्धर्ममवेक्षस्व वह पैतामहीं धुरम् २१
यथा ते कुलतन्तुश्च धर्मश्च न पराभवेत्
सुहृदश्च प्रहृष्येरंस्तथा कुरु परंतप २२

लालप्यमानां तामेवं कृपणां पुत्रगृद्धिनीम्
धर्मादपेतं ब्रुवतीं भीष्मो भूयोऽब्रवीदिदम् २३
राज्ञि धर्मानवेक्षस्व मा नः सर्वान्व्यनीनशः
सत्याच्च्युतिः क्षत्रियस्य न धर्मेषु प्रशस्यते २४
शंतनोरपि संतानं यथा स्यादक्षयं भुवि
तत्ते धर्मं प्रवक्ष्यामि क्षात्रं राज्ञि सनातनम् २५
श्रुत्वा तं प्रतिपद्येथाः प्राज्ञैः सह पुरोहितैः
आपद्धर्मार्थकुशलैर्लोकतन्त्रमवेक्ष्य च २६
इति श्रीमहाभारते आदिपर्वणि सप्तनवतितमोऽध्यायः ९७

अष्टनवतितमोऽध्यायः

भीष्म उवाच
जामदग्न्येन रामेण पितुर्वधममृष्यता
क्रुद्धेन च महाभागे हैहयाधिपतिर्हतः
शतानि दश बाहूनां निकृत्तान्यर्जुनस्य वै १
पुनश्च धनुरादाय महास्त्राणि प्रमुञ्चता
निर्दग्धं क्षत्रमसकृद्रथेन जयता महीम् २
एवमुच्चावचैरस्त्रैर्भार्गवेण महात्मना
त्रिः सप्तकृत्वः पृथिवी कृता निः क्षत्रिया पुरा ३
ततः संभूय सर्वाभिः क्षत्रियाभिः समन्ततः
उत्पादितान्यपत्यानि ब्राह्मणैर्नियतात्मभिः ४
पाणिग्राहस्य तनय इति वेदेषु निश्चितम्
धर्मं मनसि संस्थाप्य ब्राह्मणांस्ताः समभ्ययुः
लोकेऽप्याचरितो दृष्टः क्षत्रियाणां पुनर्भवः ५
अथोतथ्य इति ख्यात आसीद्धीमानृषिः पुरा
ममता नामतस्यासीद्भार्या परम संमता ६
उतथ्यस्य यवीयांस्तु पुरोधास्त्रिदिवौकसाम्
बृहस्पतिर्बृहत्तेजा ममतां सोऽन्वपद्यत ७
उवाच ममता तं तु देवरं वदतां वरम्
अन्तर्वत्नी अहं भ्रात्रा ज्येष्ठेनारम्यतामिति ८

अयं च मे महाभाग कुक्षावेव बृहस्पते
औतथ्यो वेदमत्रैव षडङ्गं प्रत्यधीयत ९
अमोघरेतास्त्वं चापि नूनं भवितुमर्हसि
तस्मादेवंगतेऽद्य त्वमुपारमितुमर्हसि १०
एवमुक्तस्तया सम्यग्बृहत्तेजा बृहस्पतिः
कामात्मानं तदात्मानं न शशाक नियच्छितुम् ११
संबभूव ततः कामी तया सार्धमकामया
उत्सृजन्तं तु तं रेतः स गर्भस्थोऽभ्यभाषत १२
भोस्तात कन्यस वदे द्वयोर्नास्त्यत्र संभवः
अमोघशुक्रश्च भवान्पूर्वं चाहमिहागतः १३
शशाप तं ततः क्रुद्ध एवमुक्तो बृहस्पतिः
उतथ्यपुत्रं गर्भस्थं निर्भर्त्स्य भगवानृषिः १४
यस्मात्त्वमीदृशे काले सर्वभूतेप्सिते सति
एवमात्थ वचस्तस्मात्तमो दीर्घं प्रवेक्ष्यसि १५
स वै दीर्घतमा नाम शापादृषिरजायत
बृहस्पतेर्बृहत्कीर्तेर्बृहस्पतिरिवौजसा १६
स पुत्राञ्जनयामास गौतमादीन्महायशाः
ऋषेरुतथ्यस्य तदा सन्तानकुलवृद्धये १७
लोभमोहाभिभूतास्ते पुत्रास्तं गौतमादयः
काष्ठे समुद्गे प्रक्षिप्य गङ्गायां समवासृजन् १८
न स्यादन्धश्च वृद्धश्च भर्तव्योऽयमिति स्म ते
चिन्तयित्वा ततः क्रूराः प्रतिजग्मुरथो गृहान् १९
सोऽनुस्रोतस्तदा राजन्प्लवमान ऋषिस्ततः
जगाम सुबहून्देशानन्धस्तेनोडुपेन ह २०
तं तु राजा बलिर्नाम सर्वधर्मविशारदः
अपश्यन्मज्जनगतः स्रोतसाभ्याशमागतम् २१
जग्राह चैनं धर्मात्मा बलि सत्यपराक्रमः
ज्ञात्वा चैवं स वव्रेऽथ पुत्रार्थं मनुजर्षभ २२
संतानार्थं महाभाग भार्यासु मम मानद
पुत्रान्धर्मार्थकुशलानुत्पादयितुमर्हसि २३

एवमुक्तः स तेजस्वी तं तथेत्युक्तवानृषिः
तस्मै स राजा स्वां भार्यां सुदेष्णां प्राहिणोत्तदा २४
अन्धं वृद्धं च तं मत्वा न सा देवी जगाम ह
स्वां तु धात्रेयिकां तस्मै वृद्धाय प्राहिणोत्तदा २५
तस्यां काक्षीवदादीन्स शूद्रयोनावृषिर्वशी
जनयामास धर्मात्मा पुत्रानेकादशैव तु २६
काक्षीवदादीन्पुत्रांस्तान्दृष्ट्वा सर्वानधीयतः
उवाच तमृषिं राजा ममैत इति वीर्यवान् २७
नेत्युवाच महर्षिस्तं ममैवैत इति ब्रुवन्
शूद्रयोनौ मया हीमे जाताः काक्षीवदादयः २८
अन्धं वृद्धं च मां मत्वा सुदेष्णा महिषी तव
अवमन्य ददौ मूढा शूद्रां धात्रेयिकां हि मे २९
ततः प्रसादयामास पुनस्तमृषिसत्तमम्
बलि सुदेष्णां भार्यां च तस्मै तां प्राहिणोत्पुनः ३०
तां स दीर्घतमाङ्गेषु स्पृष्ट्वा देवीमथाब्रवीत्
भविष्यति कुमारस्ते तेजस्वी सत्यवागिति ३१
तत्राङ्गो नाम राजर्षिः सुदेष्णायामजायत
एवमन्ये महेष्वासा ब्राह्मणैः क्षत्रिया भुवि ३२
जाताः परमधर्मज्ञा वीर्यवन्तो महाबलाः
एतच्छ्रुत्वा त्वमप्यत्र मातः कुरु यथेप्सितम् ३३
इति श्रीमहाभारते आदि पर्वणि अष्टनवतितमोऽध्यायः ९८

## एकोनशततमोऽध्यायः

भीष्म उवाच
पुनर्भरतवंशस्य हेतुं सन्तानवृद्धये
वक्ष्यामि नियतं मातस्तन्मे निगदतः शृणु १
ब्राह्मणो गुणवान्कश्चिद्धनेनोपनिमन्त्र्यताम्
विचित्रवीर्यक्षेत्रेषु यः समुत्पादयेत्प्रजाः २
वैशम्पायन उवाच
ततः सत्यवती भीष्मं वाचा संसज्जमानया

विहसन्तीव सव्रीडमिदं वचनमब्रवीत् ३
सत्यमेतन्महाबाहो यथा वदसि भारत
विश्वासात्ते प्रवक्ष्यामि सन्तानाय कुलस्य च
न ते शक्यमनाख्यातुमापद्धीयं तथाविधा ४
त्वमेव नः कुले धर्मस्त्वं सत्यं त्वं परा गतिः
तस्मान्निशम्य वाक्यं मे कुरुष्व यदनन्तरम् ५
धर्मयुक्तस्य धर्मात्मन्पितुरासीत्तरी मम
सा कदाचिदहं तत्र गता प्रथमयौवने ६
अथ धर्मभृतां श्रेष्ठः परमर्षिः पराशरः
आजगाम तरीं धीमांस्तरिष्यन्यमुनां नदीम् ७
स तार्यमाणो यमुनां मामुपेत्याब्रवीत्तदा
सान्त्वपूर्वं मुनिश्रेष्ठः कामार्तो मधुरं बहु ८
तमहं शापभीता च पितुर्भीता च भारत
वरैरसुलभैरुक्ता न प्रत्याख्यातुमुत्सहे ९
अभिभूय स मां बालां तेजसा वशमानयत्
तमसा लोकमावृत्य नौगतामेव भारत १०
मत्स्यगन्धो महानासीत्पुरा मम जुगुप्सितः
तमपास्य शुभं गन्धमिमं प्रादात्स मे मुनिः ११
ततो मामाह स मुनिर्गर्भमुत्सृज्य मामकम्
द्वीपेऽस्या एव सरितः कन्यैव त्वं भविष्यसि १२
पाराशर्यो महायोगी स बभूव महानृषिः
कन्यापुत्रो मम पुरा द्वैपायन इति स्मृतः १३
यो व्यस्य वेदांश्चतुरस्तपसा भगवानृषिः
लोके व्यासत्वमापेदे कार्ष्ण्यात्कृष्णत्वमेव च १४
सत्यवादी शमपरस्तपस्वी दग्धकिल्बिषः
स नियुक्तो मया व्यक्तं त्वया च अमितद्युते
भ्रातुः क्षेत्रेषु कल्याणमपत्यं जनयिष्यति १५
स हि मामुक्तवांस्तत्र स्मरेः कृत्येषु मामिति
तं स्मरिष्ये महाबाहो यदि भीष्म त्वमिच्छसि १६
तव ह्यनुमते भीष्म नियतं स महातपाः

विचित्रवीर्यक्षेत्रेषु पुत्रानुत्पादयिष्यति १७
महर्षेः कीर्तने तस्य भीष्मः प्राञ्जलिरब्रवीत्
धर्ममर्थं च कामं च त्रीनेतान्योऽनुपश्यति १८
अर्थमर्थानुबन्धं च धर्मं धर्मानुबन्धनम्
कामं कामानुबन्धं च विपरीतान्पृथक्पृथक्
यो विचिन्त्य धिया सम्यग्व्यवस्यति स बुद्धिमान् १९
तदिदं धर्मयुक्तं च हितं चैव कुलस्य नः
उक्तं भवत्या यच्छ्रेयः परमं रोचते मम २०
ततस्तस्मिन्प्रतिज्ञाते भीष्मेण कुरुनन्दन
कृष्णद्वैपायनं काली चिन्तयामास वै मुनिम् २१
स वेदान्विब्रुवन्धीमान्मातुर्विज्ञाय चिन्तितम्
प्रादुर्बभूवाविदितः क्षणेन कुरुनन्दन २२
तस्मै पूजां तदा दत्त्वा सुताय विधिपूर्वकम्
परिष्वज्य च बाहुभ्यां प्रस्नवैरभिषिच्य च
मुमोच वाष्पं दाशेयी पुत्रं दृष्ट्वा चिरस्य तम् २३
तामद्भिः परिषिच्यार्तां महर्षिरभिवाद्य च
मातरं पूर्वजः पुत्रो व्यासो वचनमब्रवीत् २४
भवत्या यदभिप्रेतं तदहं कर्तुमागतः
शाधि मां धर्मतत्त्वज्ञे करवाणि प्रियं तव २५
तस्मै पूजां ततोऽकार्षीत्पुरोधाः परमर्षये
स च तां प्रतिजग्राह विधिवन्मन्त्रपूर्वकम् २६
तमासनगतं माता पृष्ट्वा कुशलमव्ययम्
सत्यवत्यभिवीक्ष्यैनमुवाचेदमनन्तरम् २७
मातापित्रोः प्रजायन्ते पुत्राः साधारणाः कवे
तेषां पिता यथा स्वामी तथा माता न संशयः २८
विधातृविहितः स त्वं यथा मे प्रथमः सुतः
विचित्रवीर्यो ब्रह्मर्षे तथा मेऽवरजः सुतः २९
यथैव पितृतो भीष्मस्तथा त्वमपि मातृतः
भ्राता विचित्रवीर्यस्य यथा वा पुत्र मन्यसे ३०
अयं शान्तनवः सत्यं पालयन्सत्यविक्रमः

बुद्धिं न कुरुतेऽपत्ये तथा राज्यानुशासने ३१
स त्वं व्यपेक्षया भ्रातुः सन्तानाय कुलस्य च
भीष्मस्य चास्य वचनान्नियोगाच्च ममानघ ३२
अनुक्रोशाच्च भूतानां सर्वेषां रक्षणाय च
आनृशंस्येन यद्ब्रूयां तच्छ्रुत्वा कर्तुमर्हसि ३३
यवीयसस्तव भ्रातुर्भार्ये सुरसुतोपमे
रूपयौवनसंपन्ने पुत्रकामे च धर्मतः ३४
तयोरुत्पादयापत्यं समर्थो ह्यसि पुत्रक
अनुरुपं कुलस्यास्य संतत्याः प्रसवस्य च ३५
व्यास उवाच
वेत्थ धर्मं सत्यवति परं चापरमेव च
यथा च तव धर्मज्ञे धर्मे प्रणिहिता मतिः ३६
तस्मादहं त्वन्नियोगाद्धर्ममुद्दिश्य कारणम्
ईप्सितं ते करिष्यामि दृष्टं ह्येतत्पुरातनम् ३७
भ्रातुः पुत्रान्प्रदास्यामि मित्रावरुणयोः समान्
व्रतं चरेतां ते देव्यौ निर्दिष्टमिह यन्मया ३८
संवत्सरं यथान्यायं ततः शुद्धे भविष्यतः
न हि मामव्रतोपेता उपेयात्काचिदङ्गना ३९
सत्यवत्युवाच
यथा सद्यः प्रपद्येत देवी गर्भं तथा कुरु
अराजकेषु राष्ट्रेषु नास्ति वृष्टिर्न देवताः ४०
कथमराजकं राष्ट्रं शक्यं धारयितुं प्रभो
तस्माद्गर्भं समाधत्स्व भीष्मस्तं वर्धयिष्यति ४१
व्यास उवाच
यदि पुत्रः प्रदातव्यो मया क्षिप्रमकालिकम्
विरूपतां मे सहतामेतदस्याः परं व्रतम् ४२
यदि मेसहते गन्धं रूपं वेषं तथा वपुः
अद्यैव गर्भं कौसल्या विशिष्टं प्रतिपद्यताम् ४३
वैशम्पायन उवाच
समागमनमाकाङ्क्षन्निति सोऽन्तर्हितो मुनिः

ततोऽभिगम्य सा देवी स्नुषां रहसि संगताम्
धर्म्यमर्थसमायुक्तमुवाच वचनं हितम् ४४
कौसल्ये धर्मतन्त्रं यद्ब्रवीमि त्वां निबोध मे
भरतानां समुच्छेदो व्यक्तं मद्भाग्यसंक्षयात् ४५
व्यथितां मां च संप्रेक्ष्य पितृवंशं च पीडितम्
भीष्मो बुद्धिमदान्मेऽत्र धर्मस्य च विवृद्धये ४६
सा च बुद्धिस्तवाधीना पुत्रि ज्ञातं मयेति ह
नष्टं च भारतं वंशं पुनरेव समुद्धर ४७
पुत्रं जनय सुश्रोणि देवराजसमप्रभम्
स हि राज्यधुरं गुर्वीमुद्वक्ष्यति कुलस्य नः ४८
सा धर्मतोऽनुनीयैनां कथंचिद्धर्मचारिणीम्
भोजयामास विप्रांश्च देवर्षीनतिथींस्तथा ४९
इति श्रीमहाभारते आदिपर्वणि एकोनशततमोऽध्यायः ९९

शततमोध्यायः

वैशम्पायन उवाच
ततः सत्यवती काले वधूं स्नातामृतौ तदा
संवेशयन्तीशयने शनकैर्वाक्यमब्रवीत् १
कौसल्ये देवरस्तेऽस्ति सोऽद्य त्वानुप्रवेक्ष्यति
अप्रमत्ता प्रतीक्षैनं निशीथे आगमिष्यति २
श्वश्र्वास्तद्वचनं श्रुत्वा शयाना शयने शुभे
साचिन्तयत्तदा भीष्ममन्यांश्च कुरुपुङ्गवान् ३
ततोऽम्बिकायां प्रथमं नियुक्तः सत्यवागृषिः
दीप्यमानेषु दीपेषु शयनं प्रविवेश ह ४
तस्य कृष्णस्य कपिला जटा दीप्ते च लोचने
बभ्रूणि चैव श्मश्रूणि दृष्ट्वा देवी न्यमीलयत् ५
संबभूव तया रात्रौ मातुः प्रियचिकीर्षया
भयात्काशिसुता तं तु नाशक्नोदभिवीक्षितुम् ६
ततो निष्क्रान्तमासाद्य माता पुत्रमथाब्रवीत्
अप्यस्यां गुणवान्पुत्र राजपुत्रो भविष्यति ७

निशम्य तद्वचो मातुर्व्यासः परमबुद्धिमान्
प्रोवाचातीन्द्रियज्ञानो विधिना संप्रचोदितः ८
नागायुतसमप्राणो विद्वान्राजर्षिसत्तमः
महाभागो महावीर्यो महाबुद्धिर्भविष्यति ९
तस्य चापि शतं पुत्रा भविष्यन्ति महाबलाः
किं तु मातुः स वैगुण्यादन्धएव भविष्यति १०
तस्य तद्वचनं श्रुत्वा माता पुत्रमथाब्रवीत्
नान्धः कुरूणां नृपतिरनुरूपस्तपोधन ११
ज्ञातिवंशस्य गोप्तारं पितॄणां वंशवर्धनम्
द्वितीयं कुरुवंशस्य राजानं दातुमर्हसि १२
स तथेति प्रतिज्ञाय निश्चक्राम महातपाः
सापि कालेन कौसल्या सुषुवेऽन्ध तमात्मजम् १३
पुनरेव तु सा देवी परिभाष्य स्नुषां ततः
ऋषिमावाहयत्सत्या यथापूर्वमनिन्दिता १४
ततस्तेनैव विधिना महर्षिस्तामपद्यत
अम्बालिकामथाभ्यागादृषिं दृष्ट्वा च सापि तम्
विषण्णा पाण्डुसंकाशा समपद्यत भारत १५
तां भीतां पाण्डुसंकाशां विषण्णां प्रेक्ष्य पार्थिव
व्यासः सत्यवतीपुत्र इदं वचनमब्रवीत् १६
यस्मात्पाण्डुत्वमापन्ना विरूपं प्रेक्ष्य मामपि
तस्मादेष सुतस्तुभ्यं पाण्डुरेव भविष्यति १७
नाम चास्य तदेवेह भविष्यति शुभानने
इत्युक्त्वा स निराक्रामद्भगवानृषिसत्तमः १८
ततो निष्क्रान्तमालोक्य सत्या पुत्रमभाषत
शशंस स पुनर्मात्रे तस्य बालस्य पाण्डुताम् १९
तं माता पुनरेवान्यमेकं पुत्रमयाचत
तथेति च महर्षिस्तां मातरं प्रत्यभाषत २०
ततः कुमारं सा देवी प्राप्तकालमजीजनत्
पाण्डुं लक्षणसंपन्नं दीप्यमानमिव श्रिया
तस्य पुत्रा महेष्वासा जज्ञिरे पञ्च पाण्डवाः २१

ऋतुकाले ततो ज्येष्ठां वधूं तस्मै न्ययोजयत्
सा तु रूपं च गन्धं च महर्षेः प्रविचिन्त्य तम्
नाकरोद्वचनं देव्या भयात्सुरसुतोपमा २२
ततः स्वैर्भूषणैर्दासीं भूषयित्वाप्सरोपमाम्
प्रेषयामास कृष्णाय ततः काशिपतेः सुता २३
दासी ऋषिमनुप्राप्तं प्रत्युद्गम्याभिवाद्य च
संविवेशाभ्यनुज्ञाता सत्कृत्योपचचार ह २४
कामोपभोगेन तु स तस्यांतुष्टिमगादृषिः
तया सहोषितो रात्रिं महर्षिः प्रीयमाणया २५
उत्तिष्ठन्नब्रवीदेनामभुजिष्या भविष्यसि
अयं च ते शुभे गर्भः श्रेयानुदरमागतः
धर्मात्मा भविता लोके सर्वबुद्धिमतां वरः २६
स जज्ञे विदुरो नाम कृष्णद्वैपायनात्मजः
धृतराष्ट्रस्य च भ्राता पाण्डोश्चामितबुद्धिमान् २७
धर्मो विदुररूपेण शापात्तस्य महात्मनः
माण्डव्यस्यार्थतत्त्वज्ञः कामक्रोधविवर्जितः २८
स धर्मस्यानृणो भूत्वा पुनर्मात्रा समेत्य च
तस्यै गर्भं समावेद्य तत्रैवान्तरधीयत २९
एते विचित्रवीर्यस्य क्षेत्रे द्वैपायनादपि
जज्ञिरे देवगर्भाभाः कुरुवंशविवर्धनाः ३०
इति श्रीमहाभारते आदिपर्वणि शततमोऽध्यायः १००

## एकाधिक शततमोऽध्यायः

जनमेजय उवाच
किं कृतं कर्म धर्मेण येन शापमुपेयिवान्
कस्य शापाच्च ब्रह्मर्षे शूद्रयोनावजायत १
वैशम्पायन उवाच
बभूव ब्राह्मणः कश्चिन्माण्डव्य इति विश्रुतः
धृतिमान्सर्वधर्मज्ञः सत्ये तपसि च स्थितः २
स आश्रमपदद्वारि वृक्षमूले महातपाः

ऊर्ध्वबाहुर्महायोगी तस्थौ मौनव्रतान्वितः ३
तस्य कालेन महता तस्मिंस्तपसि तिष्ठतः
तमाश्रमपदं प्राप्ता दस्यवो लोप्त्रहारिणः
अनुसार्यमाणा बहुभी रक्षिभिर्भरतर्षभ ४
ते तस्यावसथे लोप्त्रं निदधुः कुरुसत्तम
निधाय च भयाल्लीनास्तत्रैवान्वागते बले ५
तेषु लीनेष्वथो शीघ्रं ततस्तद्रक्षिणां बलम्
आजगाम ततोऽपश्यंस्तमृषिं तस्करानुगाः ६
तमपृच्छंस्ततो राजंस्तथावृत्तं तपोधनम्
कतरेण पथा याता दस्यवो द्विजसत्तम
तेन गच्छामहे ब्रह्मन्पथा शीघ्रतरं वयम् ७
तथा तु रक्षिणां तेषां ब्रुवतां स तपोधनः
न किंचिद्वचनं राजन्नवदत्साध्वसाधु वा ८
ततस्ते राजपुरुषा विचिन्वानास्तमाश्रमम्
ददृशुस्तत्र संलीनांस्तांश्चोरान्द्रव्यमेव च ९
ततः शङ्का समभवद्रक्षिणां तं मुनिं प्रति
संयम्यैनं ततोराज्ञे दस्यूंश्चैव न्यवेदयन् १०
तं राजा सह तैश्चौरैरन्वशाद्वध्यतामिति
स वध्यघातैरज्ञातः शूले प्रोतो महातपाः ११
ततस्ते शूलमारोप्य तं मुनिं रक्षिणस्तदा
प्रतिजग्मुर्महीपालं धनान्यादाय तान्यथ १२
शूलस्थः स तु धर्मात्मा कालेन महता ततः
निराहारोऽपि विप्रर्षिर्मरणं नाभ्युपागमत्
धारयामास च प्राणानृषींश्च समुपानयत् १३
शूलाग्रे तप्यमानेन तपस्तेन महात्मना
संतापं परमं जग्मुर्मुनयोऽथ परंतप १४
ते रात्रौ शकुना भूत्वा संन्यवर्तन्त सर्वतः
दर्शयन्तो यथाशक्ति तमपृच्छन्द्विजोत्तमम्
श्रोतुमिच्छामहे ब्रह्मन्किं पापं कृतवानसि १५
ततः स मुनिशार्दूलस्तानुवाच तपोधनान्

दोषतः कं गमिष्यामि न हि मेऽन्योऽपराध्यति १६
राजा च तमृषिं श्रुत्वा निष्क्रम्य सह मन्त्रिभिः
प्रसादयामासतदा शूलस्थमृषिसत्तमम् १७
यन्मयापकृतं मोहादज्ञानादृषिसत्तम
प्रसादये त्वां तत्राहं न मे त्वं क्रोद्धुमर्हसि १८
एवमुक्तस्ततो राज्ञा प्रसादमकरोन्मुनिः
कृतप्रसादो राजा तं ततः समवतारयत् १९
अवतार्य च शूलाग्रात्तच्छूलं निश्चकर्ष ह
अशक्नुवंश्च निष्क्रष्टुं शूलं मूले स चिच्छिदे २०
स तथान्तर्गतेनैव शूलेन व्यचरन्मुनिः
स तेन तपसा लोकान्विजिग्ये दुर्लभान्परैः
अणीमाण्डव्य इति च ततो लोकेषु कथ्यते २१
स गत्वा सदनं विप्रो धर्मस्य परमार्थवित्
आसनस्थं ततो धर्मं दृष्ट्वोपालभत प्रभुः २२
किं नु तद्दुष्कृतं कर्म मया कृतमजानता
यस्येयं फलनिर्वृत्तिरीदृश्यासादिता मया
शीघ्रमाचक्ष्व मे तत्त्वं पश्य मे तपसो बलम् २३
धर्म उवाच
पतंगकानां पुच्छेषु त्वयेषीका प्रवेशिता
कर्मणस्तस्य ते प्राप्तं फलमेतत्तपोधन २४
अणीमाण्डव्य उवाच
अल्पेऽपराधे विपुलो मम दण्डस्त्वया कृतः
शूद्रयोनावतो धर्म मानुषः संभविष्यसि २५
मर्यादां स्थापयाम्यद्य लोके धर्मफलोदयाम्
आ चतुर्दशकाद्वर्षान्न भविष्यति पातकम्
परेण कुर्वतामेवं दोष एव भविष्यति २६
वैशम्पायन उवाच
एतेन त्वपराधेन शापात्तस्य महात्मनः
धर्मो विदुररूपेण शूद्रयोनावजायत २७
धर्मे चार्थे च कुशलो लोभक्रोधविवर्जितः

दीर्घदर्शी शमपरः कुरूणां च हिते रतः २८
इति श्रीमहाभारते आदिपर्वणि एकाधिकशततमोऽध्यायः १०१

द्व्यधिक शततमोऽध्यायः

वैशम्पायन उवाच
तेषु त्रिषु कुमारेषु जातेषु कुरुजाङ्गलम्
कुरवोऽथ कुरुक्षेत्रं त्रयमेतदवर्धत १
ऊर्ध्वसस्याभवद्भूमिः सस्यानि फलवन्ति च
यथर्तुवर्षी पर्जन्यो बहुपुष्पफला द्रुमाः २
वाहनानि प्रहृष्टानि मुदिता मृगपक्षिणः
गन्धवन्ति च माल्यानि रसवन्ति फलानि च ३
वणिग्भिश्चावकीर्यन्त नगराण्यथ शिल्पिभिः
शूराश्च कृतविद्याश्च सन्तश्च सुखिनोऽभवन् ४
नाभवन्दस्यवः केचिन्नाधर्मरुचयो जनाः
प्रदेशेष्वपि राष्ट्राणां कृतं युगमवर्तत ५
दानक्रियाधर्मशीला यज्ञव्रतपरायणाः
अन्योन्यप्रीतिसंयुक्ता व्यवर्धन्त प्रजास्तदा ६
कामक्रोधविहीनाश्च जना लोभविवर्जिताः
अन्योन्यमभ्यवर्धन्त धर्मोत्तरमवर्तत ७
तन्महोदधिवत्पूर्णं नगरं वै व्यरोचत
द्वारतोरणनिर्यूहैर्युक्तमभ्रचयोपमैः
प्रासादशतसंबाधं महेन्द्रपुरसंनिभम् ८
नदीषु वनखण्डेषु वापीपल्वलसानुषु
काननेषु च रम्येषु विजह्रुर्मुदिता जनाः ९
उत्तरैः कुरुभिः सार्धं दक्षिणाः कुरवस्तदा
विस्पर्धमाना व्यचरंस्तथा सिद्धर्षिचारणैः
नाभवत्कृपणः कश्चिन्नाभवन्विधवाः स्त्रियः १०
तस्मिञ्जनपदे रम्ये बहवः कुरुभिः कृताः
कूपारामसभावाप्यो ब्राह्मणावसथास्तथा
भीष्मेण शास्त्रतो राजन्सर्वतः परिरक्षिते ११

बभूव रमणीयश्च चैत्ययूपशताङ्कितः
स देशः परराष्ट्राणि प्रतिगर्ह्याभिवर्धितः
भीष्मेण विहितं राष्ट्रे धर्मचक्रमवर्तत १२
क्रियमाणेषु कृत्येषु कुमाराणां महात्मनाम्
पौरजानपदाः सर्वे बभूवुः सततोत्सवाः १३
गृहेषु कुरुमुख्यानां पौराणां च नराधिप
दीयतां भुज्यतां चेति वाचोऽश्रूयन्त सर्वशः १४
धृतराष्ट्रश्च पाण्डुश्च विदुरश्च महामतिः
जन्मप्रभृति भीष्मेण पुत्रवत्परिपालितः १५
संस्कारैः संस्कृतास्ते तु व्रताध्ययनसंयुताः
श्रमव्यायामकुशलाः समपद्यन्त यौवनम् १६
धनुर्वेदेऽश्वपृष्ठे च गदायुद्धेऽसिचर्मणि
तथैव गजशिक्षायां नीतिशास्त्रे च पारगाः १७
इतिहासपुराणेषु नानाशिक्षासु चाभिभो
वेदवेदाङ्गतत्त्वज्ञाः सर्वत्र कृतनिश्रमाः १८
पाण्डुर्धनुषि विक्रान्तो नरेभ्योऽभ्यधिकोऽभवत्
अत्यन्याान्बलवानासीद्धृतराष्ट्रो महीपतिः १९
त्रिषु लोकेषु न त्वासीत्कश्चिद्विदुरसंमितः
धर्मनित्यस्ततो राजन्धर्मे च परमं गतः २०
प्रनष्टं शन्तनोर्वंशं समीक्ष्य पुनरुद्धृतम्
ततो निर्वचनं लोकेसर्वराष्ट्रेष्ववर्तत २१
वीरसूनां काशिसुते देशानां कुरुजाङ्गलम्
सर्वधर्मविदां भीष्मः पुराणां गजसाह्वयम् २२
धृतराष्ट्रस्त्वचक्षुष्ट्वाद्राज्यं न प्रत्यपद्यत
करणत्वाच्च विदुरः पाण्डुरासीन्महीपतिः २३
इति श्रीमहाभारते आदिपर्वणि द्व्यधिकशततमोऽध्यायः १०२

त्र्यधिकशततमोऽध्यायः

भीष्म उवाच
गुणैः समुदितं सम्यगिदं नः प्रथितं कुलम्

अत्यन्यान्पृथिवीपालान्पृथिव्यामधिराज्यभाक् १
रक्षितं राजभिः पूर्वैर्धर्मविद्भिर्महात्मभिः
नोत्सादमगमच्चेदं कदाचिदिह नः कुलम् २
मया च सत्यवत्या च कृष्णेन च महात्मना
समवस्थापितं भूयो युष्मासु कुलतन्तुषु ३
वर्धते तदिदं पुत्र कुलं सागरवद्यथा
तथा मया विधातव्यं त्वया चैव विशेषतः ४
श्रूयते यादवी कन्या अनुरूपा कुलस्य नः
सुबलस्यात्मजा चैव तथा मद्रेश्वरस्य च ५
कुलीना रूपवत्यश्च नाथवत्यश्च सर्वशः
उचिताश्चैव संबन्धे तेऽस्माकं क्षत्रियर्षभाः ६
मन्ये वरयितव्यास्ता इत्यहं धीमतां वरः
सन्तानार्थं कुलस्यास्य यद्वा विदुर मन्यसे ७
विदुर उवाच
भवान्पिता भवान्माता भवान्नः परमो गुरुः
तस्मात्स्वयं कुलस्यास्य विचार्य कुरु यद्धितम् ८
वैशम्पायन उवाच
अथ शुश्राव विप्रेभ्यो गान्धारीं सुबलात्मजाम्
आराध्य वरदं देवं भगनेत्रहरं हरम्
गान्धारी किल पुत्राणां शतं लेभे वरं शुभा ९
इति श्रुत्वा च तत्त्वेन भीष्मः कुरुपितामहः
ततो गान्धारराजस्य प्रेषयामास भारत १०
अचक्षुरिति तत्रासीत्सुबलस्य विचारणा
कुलं ख्यातिं च वृत्तं च बुद्ध्या तु प्रसमीक्ष्य सः
ददौ तां धृतराष्ट्राय गान्धारीं धर्मचारिणीम् ११
गान्धारी त्वपि शुश्राव धृतराष्ट्रमचक्षुषम्
आत्मानं दित्सितं चास्मै पित्रा मात्रा च भारत १२
ततः सा पट्टमादाय कृत्वा बहुगुणं शुभा
बबन्ध नेत्रे स्वे राजन्पतिव्रतपरायणा
नात्यश्नीयां पतिमहमित्येवं कृतनिश्चया १३

ततो गान्धारराजस्य पुत्रः शकुनिरभ्ययात्
स्वसारं परया लक्ष्म्या युक्तामादाय कौरवान् १४
दत्त्वा स भगिनीं वीरो यथार्हं च परिच्छदम्
पुनरायात्स्वनगरं भीष्मेण प्रतिपूजितः १५
गान्धार्यपि वरारोहा शीलाचारविचेष्टितैः
तुष्टिं कुरूणां सर्वेषां जनयामास भारत १६
वृत्तेनाराध्य तान्सर्वान्पतिव्रतपरायणा
वाचापि पुरुषानन्यान्सुव्रता नान्वकीर्तयत् १७
इति श्रीमहाभारते आदिपर्वणि त्र्यधिकशततमोऽध्यायः १०३

## चतुरधिकशततमोऽध्यायः

वैशम्पायन उवाच
शूरो नाम यदुश्रेष्ठो वसुदेवपिताभवत्
तस्य कन्या पृथा नाम रूपेणासदृशी भुवि १
पैतृष्वसेयाय स तामनपत्याय वीर्यवान्
अग्र्यमग्रे प्रतिज्ञाय स्वस्यापत्यस्य वीर्यवान् २
अग्रजातेति तां कन्यामग्र्यानुग्रहकाङ्क्षिणे
प्रददौ कुन्तिभोजाय सखा सख्ये महात्मने ३
सा नियुक्ता पितुर्गेहे देवतातिथिपूजने
उग्रं पर्यचरद्घोरं ब्राह्मणं संशितव्रतम् ४
निगूढनिश्चयं धर्मे यं तं दुर्वाससं विदुः
तमुग्रं संशितात्मानं सर्वयत्नैरतोषयत् ५
तस्यै स प्रददौ मन्त्रमापद्धर्मान्ववेक्षया
अभिचाराभिसंयुक्तमब्रवीच्चैव तां मुनिः ६
यं यं देवं त्वमेतेन मन्त्रेणावाहयिष्यसि
तस्य तस्य प्रभावेण पुत्रस्तव भविष्यति ७
तथोक्ता सातु विप्रेण तेन कौतूहलात्तदा
कन्या सती देवमर्कमाजुहाव यशस्विनी ८
सा ददर्श तमायान्तं भास्करं लोकभावनम्
विस्मिता चानवद्याङ्गी दृष्ट्वा तन्महदद्भुतम् ९

प्रकाशकर्मा तपनः तस्यां गर्भं दधौ ततः
अजीजनत्ततो वीरं सर्वशस्त्रभृतां वरम्
आमुक्तकवचः श्रीमान्देवगर्भश्रियावृतः १०
सहजं कवचं बिभ्रत्कुण्डलोद्द्योतिताननः
अजायत सुतः कर्णः सर्वलोकेषु विश्रुतः ११
प्रादाच्च तस्याः कन्यात्वं पुनः स परमद्युतिः
दत्त्वा च ददतां श्रेष्ठो दिवमाचक्रमे ततः १२
गूहमानापचारं तं बन्धुपक्षभयात्तदा
उत्ससर्ज जले कुन्ती तं कुमारं सलक्षणम् १३
तमुत्सृष्टं तदा गर्भं राधाभर्ता महायशाः
पुत्रत्वे कल्पयामास सभार्यः सूतनन्दनः १४
नामधेयं च चक्राते तस्य बालस्य तावुभौ
वसुना सह जातोऽय वसुषेणो भवत्विति १५
स वर्धमानो बलवान्सर्वास्त्रेषूद्यतोऽभवत्
आ पृष्ठतापादादित्यमुपतस्थे स वीर्यवान् १६
यस्मिन्काले जपन्नास्ते स वीरः सत्यसंगरः
नादेयं ब्राह्मणेष्वासीत्तस्मिन्काले महात्मनः १७
तमिन्द्रो ब्राह्मणो भूत्वा भिक्षार्थं भूतभावनः
कुण्डले प्रार्थयामास कवचं स महाद्युतिः १८
उत्कृत्य विमनाः स्वाङ्गात्कवचं रुधिरस्त्रवम्
कर्णस्तु कुण्डले छित्त्वा प्रायच्छत्स कृताञ्जलि १९
शक्तिं तस्मै ददौ शक्रः विस्मितो वाक्यमब्रवीत्
देवासुरमनुष्याणां गन्धर्वोरगरक्षसाम्
यस्मै क्षेप्स्यसि रुष्टः सन्सोऽनया न भविष्यति २०
पुरा नाम तु तस्यासीद्वसुषेण इति श्रुतम्
ततो वैकर्तनः कर्णः कर्मणा तेन सोऽभवत् २१
इति श्रीमहाभारते आदिपर्वणि चतुरधिकशततमोऽध्यायः १०४

पञ्चाधिक शततमोऽध्यायः

वैशम्पायन उवाच

रूपसत्त्वगुणोपेता धर्मारामा महाव्रता
दुहिता कुन्तिभोजस्य कृते पित्रा स्वयंवरे १
सिंहदंष्ट्रं गजस्कन्धमृषभाक्षं महाबलम्
भूमिपालसहस्राणां मध्ये पाण्डुमविन्दत २
स तया कुन्तिभोजस्य दुहित्रा कुरुनन्दनः
युयुजेऽमितसौभाग्यः पौलोम्या मघवानिव ३
यात्वा देवव्रतेनापि मद्राणां पुटभेदनम्
विश्रुता त्रिषु लोकेषु माद्री मद्रपतेः सुता ४
सर्वराजसु विख्याता रूपेणासदृशी भुवि
पाण्डोरर्थे परिक्रीता धनेन महता तदा ५
सिंहोरस्कं गजस्कन्धमृषभाक्षं मनस्विनम्
पाण्डुं दृष्ट्वां नरव्याघ्रं व्यस्मयन्त नरा भुवि ६
कृतोद्वाहस्ततः पाण्डुर्बलोत्साहसमन्वितः
जिगीषमाणो वसुधां ययौ शत्रूननेकशः ७
पूर्वमागस्कृतो गत्वा दशार्णाः समरे जिताः
पाण्डुना नरसिंहेन कौरवाणां यशोभृता ८
ततः सेनामुपादाय पाण्डुर्नानाविधध्वजाम्
प्रभूतहस्त्यश्वरथां पदातिगणसंकुलाम् ९
आगस्कृत्सर्ववीराणां वैरी सर्वमहीभृताम्
गोप्ता मगधराष्ट्रस्य दार्वो राजगृहे हतः १०
ततः कोशं समादाय वाहनानि बलानि च
पाण्डुना मिथिलां गत्वा विदेहाः समरे जिताः ११
तथा काशिषु सुह्मेषु पुण्ड्रेषु भरतर्षभ
स्वबाहुबलवीर्येण कुरूणामकरोद्यशः १२
तं शरौघमहाज्वालमस्त्रार्चिषमरिन्दमम्
पाण्डुपावकमासाद्य व्यदह्यन्त नराधिपाः १३
ते ससेनाः ससेनेन विध्वंसितबला नृपाः
पाण्डुना वशगाः कृत्वा कुरुकर्मसु योजिताः १४
तेन ते निर्जिताः सर्वे पृथिव्यां सर्वपार्थिवाः
तमेकं मेनिरे शूरं देवेष्विव पुरन्दरम् १५

तं कृताञ्जलयः सर्वे प्रणता वसुधाधिपाः
उपाजग्मुर्धनं गृह्य रत्नानि विविधानि च १६
मणिमुक्ताप्रवालं च सुवर्णं रजतं तथा
गोरत्नान्यश्वरत्नानि रथरत्नानि कुञ्जरान् १७
खरोष्ट्रमहिषांश्चैव यच्च किंचिदजाविकम्
तत्सर्वं प्रतिजग्राह राजा नागपुराधिपः १८
तदादाय ययौ पाण्डुः पुनर्मुदितवाहनः
हर्षयिष्यन्स्वराष्ट्राणि पुरं च गजसाह्वयम् १९
शंतनो राजसिंहस्य भरतस्य च धीमतः
प्रनष्टः कीर्तिजः शब्दः पाण्डुना पुनरुद्धृतः २०
ये पुरा कुरुराष्ट्राणि जह्रुः कुरुधनानि च
ते नागपुरसिंहेन पाण्डुना करदाः कृताः २१
इत्यभाषन्त राजानो राजामात्याश्च संगताः
प्रतीतमनसो हृष्टाः पौरजानपदैः सह २२
प्रत्युद्ययुस्तं संप्राप्तं सर्वे भीष्मपुरोगमाः
ते नदूरमिवाध्वानं गत्वा नागपुरालयाः
आवृतं ददृशुर्लोकं हृष्टा बहुविधैर्जनैः २३
नानायानसमानीतै रत्नैरुच्चावचैस्तथा
हस्त्यश्वरथरत्नैश्च गोभिरुष्ट्रैरथाविकैः
नान्तं ददृशुरासाद्य भीष्मेण सह कौरवाः २४
सोऽभिवाद्य पितुः पादौ कौसल्यानन्दवर्धनः
यथार्हं मानयामास पौरजानपदानपि २५
प्रमृद्य परराष्ट्राणि कृतार्थं पुनरागतम्
पुत्रमासाद्य भीष्मस्तु हर्षादश्रूण्यवर्तयत् २६
स तूर्यशतसंघानां भेरीणां च महास्वनैः
हर्षयन्सर्वशः पौरान्विवेश गजसाह्वयम् २७
इति श्रीमहाभारते आदिपर्वणि पञ्चाधिकशततमोऽध्यायः १०५

षडधिकशततमोऽध्यायः

वैशम्पायन उवाच

धृतराष्ट्राभ्यनुज्ञातः स्वबाहुविजितं धनम्
भीष्माय सत्यवत्यै च मात्रे चोपजहार सः १
विदुराय च वै पाण्डुः प्रेषयामास तद्धनम्
सुहृदश्चापि धर्मात्मा धनेन समतर्पयत् २
ततः सत्यवतीं भीष्मः कौसल्यां च यशस्विनीम्
शुभैः पाण्डुजितै रत्नैस्तोषयामास भारत ३
ननन्द माता कौसल्या तमप्रतिमतेजसम्
जयन्तमिव पौलोमी परिष्वज्य नरर्षभम् ४
तस्य वीरस्य विक्रान्तैः सहस्रशतदक्षिणैः
अश्वमेधशतैरीजे धृतराष्ट्रो महामखैः ५
संप्रयुक्तश्च कुन्त्या च माद्र्या च भरतर्षभ
जिततन्द्रीस्तदा पाण्डुर्बभूव वनगोचरः ६
हित्वा प्रासादनिलयं शुभानि शयनानि च
अरण्यनित्यः सततं बभूव मृगयापरः ७
स चरन्दक्षिणं पार्श्वं रम्यं हिमवतो गिरेः
उवास गिरिपृष्ठेषु महाशालवनेषु च ८
रराज कुन्त्या माद्र्या च पाण्डुः सह वने वसन्
करेण्वोरिव मध्यस्थः श्रीमान्पौरन्दरो गजः ९
भारतं सह भार्याभ्यां बाणखड्गधनुर्धरम्
विचित्रकवचं वीरं परमास्त्रविदं नृपम्
देवोऽयमित्यमन्यन्त चरन्तं वनवासिनः १०
तस्य कामांश्च भोगांश्च नरा नित्यमतन्द्रिताः
उपजह्रुर्वनान्तेषु धृतराष्ट्रेण चोदिताः ११
अथ पारशवीं कन्यां देवकस्य महीपतेः
रूपयौवनसंपन्नां स शुश्रावापगासुतः १२
ततस्तु वरयित्वा तामानाय्य पुरुषर्षभः
विवाहं कारयामास विदुरस्य महामतेः १३
तस्यां चोत्पादयामास विदुरः कुरुनन्दनः
पुत्रान्विनयसंपन्नानात्मनः सदृशान्गुणैः १४
इति श्रीमहाभारते आदिपर्वणि षडधिकशततमोऽध्यायः १०६

## सप्ताधिक शततमोऽध्यायः

वैशम्पायन उवाच
ततः पुत्रशतं जज्ञे गान्धार्यां जनमेजय
धृतराष्ट्रस्य वैश्यायामेकश्चापि शतात्परः १
पाराडोः कुन्त्यां च माद्र्यां च पञ्च पुत्रा महारथाः
देवेभ्यः समपद्यन्त सन्तानाय कुलस्य वै २
जनमेजय उवाच
कथं पुत्रशतं जज्ञे गान्धार्यां द्विजसत्तम
कियता चैव कालेन तेषामायुश्च किं परम् ३
कथं चैकः स वैश्यायां धृतराष्ट्रसुतोऽभवत्
कथं च सदृशीं भार्यां गन्धारीं धर्मचारिणीम्
ऋानुकूल्ये वर्तमानां धृतराष्ट्रोऽत्यवर्तत ४
कथं च शप्तस्य सतः पाराडोस्तेन महात्मना
समुत्पन्ना दैवतेभ्यः पुत्राः पञ्च महारथाः ५
एतद्विद्वन्यथावृत्तं विस्तरेरा तपोधन
कथयस्व न मे तृप्तिः कथ्यमानेषु बन्धुषु ६
वैशम्पायन उवाच
ज्ञुच्छ्रमाभिपरिग्लानं द्वैपायनमुपस्थितम्
तोषयामास गान्धारी व्यासस्तस्यै वरं ददौ ७
सा वव्रे सदृशं भर्तुः पुत्रारां शतमात्मनः
ततः कालेन सा गर्भं धृतराष्ट्रादथाग्रहीत् ८
संवत्सरद्वयं तं तु गान्धारी गर्भमाहितम्
ऋप्रजा धारयामास ततस्तां दुःखमाविशत् ९
श्रुत्वा कुन्तीसुतं जातं बालार्कसमतेजसम्
उदरस्यात्मनः स्थैर्यमुपलभ्यान्वचिन्तयत् १०
ऋज्ञातं धृतराष्ट्रस्य यत्नेन महता ततः
सोदरं पातयामास गान्धारी दुःखमूर्च्छिता ११
ततो जज्ञे मांसपेशी लोहाष्ठीलेव संहता
द्विवर्षसंभृतां कुक्षौ तामुत्स्रष्टुं प्रचक्रमे १२
ऋथ द्वैपायनो ज्ञात्वा त्वरितः समुपागमत्

तां स मांसमयीं पेशीं ददर्श जपतां वरः १३
ततोऽब्रवीत्सौबलेयीं किमिदं ते चिकीर्षितम्
सा चात्मनो मतं सत्यं शशंस परमर्षये १४
ज्येष्ठं कुन्तीसुतं जातं श्रुत्वा रविसमप्रभम्
दुःखेन परमेणेदमुदरं पातितं मया १५
शतं च किल पुत्राणां वितीर्णं मे त्वया पुरा
इयं च मे मांसपेशी जाता पुत्रशताय वै १६
व्यास उवाच
एवमेतत्सौबलेयि नैतज्जात्वन्यथा भवेत्
वितथं नोक्तपूर्वं मे स्वैरेष्वपि कुतोऽन्यथा १७
घृतपूर्णं कुण्डशतं क्षिप्रमेव विधीयताम्
शीताभिरद्भिरष्ठीलामिमां च परिषिञ्चत १८
वैशम्पायन उवाच
सा सिच्यमाना अष्ठीला अभवच्छतधा तदा
अङ्गुष्ठपर्वमात्राणां गर्भाणां पृथगेव तु १९
एकाधिकशतं पूर्णं यथायोगं विशां पते
मांसपेश्यास्तदा राजन्क्रमशः कालपर्ययात् २०
ततस्तांस्तेषु कुण्डेषु गर्भानवदधे तदा
स्वनुगुप्तेषु देशेषु रक्षां च व्यदधात्ततः २१
शशास चैव भगवान्कालेनैतावता पुनः
विघट्टनीयान्येतानि कुण्डानीति स्म सौबलीम् २२
इत्युक्त्वा भगवान्व्यासस्तथा प्रतिविधाय च
जगाम तपसे धीमान्हिमवन्तं शिलोच्चयम् २३
जज्ञे क्रमेण चैतेन तेषां दुर्योधनो नृपः
जन्मतस्तु प्रमाणेन ज्येष्ठो राजा युधिष्ठिरः २४
जातमात्रे सुते तस्मिन्धृतराष्ट्रोऽब्रवीदिदम्
समानीय बहून्विप्रान्भीष्मं विदुरमेव च २५
युधिष्ठिरो राजपुत्रो ज्येष्ठो नः कुलवर्धनः
प्राप्तः स्वगुणतो राज्यं न तस्मिन्वाच्यमस्ति नः २६
अयं त्वनन्तरस्तस्मादपि राजा भविष्यति

एतद्धि ब्रूत मे सत्यं यदत्र भविता ध्रुवम् २७
वाक्यस्यैतस्य निधने दिक्षु सर्वासु भारत
क्रव्यादाः प्राणदन्घोराः शिवाश्चाशिवशंसिनः २८
लक्षयित्वा निमित्तानि तानि घोराणि सर्वशः
तेऽब्रुवन्ब्राह्मणा राजन्विदुरश्च महामतिः २९
व्यक्तं कुलान्तकरणो भवितैष सुतस्तव
तस्य शान्तिः परित्यागे पुष्ट्या त्वपनयो महान् ३०
शतमेकोनमप्यस्तु पुत्राणां ते महीपते
एकेन कुरु वै क्षेमं लोकस्यच कुलस्य च ३१
त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत्
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ३२
स तथा विदुरेणोक्तस्तैश्च सर्वैर्द्विजोत्तमैः
न चकार तथा राजा पुत्रस्नेहसमन्वितः ३३
ततः पुत्रशतं सर्वं धृतराष्ट्रस्य पार्थिव
मासमात्रेण संजज्ञे कन्या चैका शताधिका ३४
गान्धार्यां क्लिश्यमानायामुदरेण विवर्धता
धृतराष्ट्रं महाबाहुं वैश्या पर्यचरत्किल ३५
तस्मिन्संवत्सरे राजन्धृतराष्ट्रान्महायशाः
जज्ञे धीमांस्ततस्तस्यां युयुत्सुः करणो नृप ३६
एवं पुत्रशतं जज्ञे धृतराष्ट्रस्य धीमतः
महारथानां वीराणां कन्या चैकाथ दुःशला ३७

इति श्रीमहाभारते आदिपर्वणि सप्ताधिकशततमोऽध्यायः १०७

## अष्टाधिक शततमोऽध्यायः

जनमेजय उवाच
ज्येष्ठानुज्येष्ठतां तेषां नामधेयानि चाभिभो
धृतराष्ट्रस्य पुत्राणामानुपूर्व्येण कीर्तय १
वैशम्पायन उवाच
दुर्योधनो युयुत्सुश्च राजन्दुःशासनस्तथा
दुःसहो दुःशलश्चैव जलसन्धः समः सहः २

विन्दानुविन्दौ दुर्धर्षः सुबाहुर्दुष्प्रधर्षणः
दुर्मर्षणो दुर्मुखश्च दुष्कर्णः कर्ण एव च ३
विविंशतिर्विकर्णश्च जलसंधः सुलोचनः
चित्रोपचित्रौ चित्राक्षश्चारुचित्रः शरासनः ४
दुर्मदो दुष्प्रगाहश्च विवित्सुर्विकटः समः
ऊर्णनाभः सुनाभश्च तथा नन्दोपनन्दकौ ५
सेनापतिः सुषेणश्च कुण्डोदरमहोदरौ
चित्रबाणश्चित्रवर्मा सुवर्मा दुर्विमोचनः ६
अयोबाहुर्महाबाहुश्चित्राङ्गश्चित्रकुण्डलः
भीमवेगो भीमबलो बलाकी बलवर्धनः ७
उग्रायुधो भीमकर्मा कनकायुर्दृढायुधः
दृढवर्मा दृढक्षत्रः सोमकीर्तिरनूदरः ८
दृढसन्धो जरासन्धः सत्यसन्धः सदःसुवाक्
उग्रश्रवा अश्वसेनः सेनानीर्दुष्पराजयः ९
अपराजितः पण्डितको विशालाक्षो दुरावरः
दृढहस्तः सुहस्तश्च वातवेगसुवर्चसौ १०
आदित्यकेतुर्बह्वाशी नागदन्तोग्रयायिनौ
कवची निषङ्गी पाशी च दण्डधारो धनुर्ग्रहः ११
उग्रो भीमरथो वीरो वीरबाहुरलोलुपः
अभयो रौद्रकर्मा च तथा दृढरथस्त्रयः १२
अनाधृष्यः कुण्डभेदी विरावी दीर्घलोचनः
दीर्घबाहुर्महाबाहुर्व्यूढोरुः कनकध्वजः १३
कुण्डाशी विरजाश्चैव दुःशला च शताधिका
एतदेकशतं राजन्कन्या चैका प्रकीर्तिता १४
नामधेयानुपूर्व्येण विद्धि जन्मक्रमं नृप
सर्वे त्वतिरथाः शूराः सर्वे युद्धविशारदाः १५
सर्वे वेदविदश्चैव राजशास्त्रेषु कोविदाः
सर्वे संसर्गविद्यासु विद्याभिजनशोभिनः १६
सर्वेषामनुरूपाश्च कृता दारा महीपते
धृतराष्ट्रेण समये समीक्ष्य विधिवत्तदा १७

दुःशलां समये राजा सिन्धुराजाय भारत
जयद्रथाय प्रददौ सौबलानुमते तदा १८
इति श्रीमहाभारते आदिपर्वणि अष्टाधिकशततमोऽध्यायः १०८

नवाधिकशततमोऽध्यायः

जनमेजय उवाच
कथितो धार्तराष्ट्राणामार्षः संभव उत्तमः
अमानुषो मानुषाणां भवता ब्रह्मवित्तम १
नामधेयानि चाप्येषां कथ्यमानानि भागशः
त्वत्तः श्रुतानि मे ब्रह्मन्पाण्डवानां तु कीर्तय २
ते हि सर्वे महात्मानो देवराजपराक्रमाः
त्वयैवांशावतरणे देवभागाः प्रकीर्तिताः ३
तस्मादिच्छाम्यहं श्रोतुमतिमानुषकर्मणाम्
तेषामाजननं सर्वं वैशम्पायन कीर्तय ४
वैशम्पायन उवाच
राजा पाण्डुर्महारण्ये मृगव्यालनिषेविते
वने मैथुनकालस्थं ददर्श मृगयूथपम् ५
ततस्तां च मृगीं तं च रुक्मपुङ्खैः सुपत्रिभिः
निर्बिभेद शरैस्तीक्ष्णैः पाण्डुः पञ्चभिराशुगैः ६
स च राजन्महातेजा ऋषिपुत्रस्तपोधनः
भार्यया सह तेजस्वी मृगरूपेण संगतः ७
संसक्तस्तु तया मृग्या मानुषीमीरयग्गिरम्
क्षणेन पतितो भूमौ विललापाकुलेन्द्रियः ८
मृग उवाच
काममन्युपरीतापि बुद्ध्यङ्गरहितापि च
वर्जयन्ति नृशंसानि पापेष्वभिरता नराः ९
न विधिं ग्रसते प्रज्ञा प्रज्ञां तु ग्रसते विधिः
विधिपर्यागतानर्थान्प्रज्ञा न प्रतिपद्यते १०
शश्वद्धर्मात्मनां मुख्ये कुले जातस्य भारत
कामलोभाभिभूतस्य कथं ते चलिता मतिः ११

पाण्डुरुवाच
शत्रूणां या वधे वृत्तिः सा मृगाणां वधे स्मृता
राज्ञां मृग न मां मोहात्त्वं गर्हयितुमर्हसि १२
अच्छद्मनामायया च मृगाणां वध इष्यते
स एव धर्मो राज्ञां तु तद्विद्वान्किं नु गर्हसे १३
अगस्त्यः सत्रमासीनश्चचार मृगयामृषिः
आरण्यान्सर्वदैवत्यान्मृगान्प्रोक्ष्य महावने १४
प्रमाणदृष्टधर्मेण कथमस्मान्विगर्हसे
अगस्त्यस्याभिचारेण युष्माकं वै वपा हुता १५
मृग उवाच
न रिपून्वै समुद्दिश्य विमुञ्चन्ति पुरा शरान्
रन्ध्र एषां विशेषेण वधकालः प्रशस्यते १६
पाण्डुरुवाच
प्रमत्तमप्रमत्तं वा विवृतं घ्नन्ति चौजसा
उपायैरिषुभिस्तीक्ष्णैः कस्मान्मृग विगर्हसे १७
मृग उवाच
नाहं घ्नन्तं मृगान्राजन्विगर्हे आत्मकारणात्
मैथुनं तु प्रतीक्ष्यं मे स्यात्त्वयेहानृशंसतः १८
सर्वभूतहिते काले सर्वभूतेप्सिते तथा
को हि विद्वान्मृगं हन्याच्चरन्तं मैथुनं वने
पुरुषार्थफलं कान्तं तु यत्त्वया वितथं कृतम् १९
पौरवाणामृषीणां च तेषामक्लिष्टकर्मणाम्
वंशे जातस्य कौरव्य नानुरूपमिदं तव २०
नृशंसं कर्म सुमहत्सर्वलोकविगर्हितम्
अस्वर्ग्यमयशस्यं च अधर्मिष्ठं च भारत २१
स्त्रीभोगानां विशेषज्ञः शास्त्रधर्मार्थतत्त्ववित्
नार्हस्त्वं सुरसंकाश कर्तुमस्वर्ग्यमीदृशम् २२
त्वया नृशंसकर्तारः पापाचाराश्च मानवाः
निग्राह्याः पार्थिवश्रेष्ठ त्रिवर्गपरिवर्जिताः २३
किं कृतं ते नरश्रेष्ठ निघ्नतो मामनागसम्

मुनिं मूलफलाहारं मृगवेषधरं नृप
वसमानमरण्येषु नित्यं शमपरायणम् २४
त्वयाहं हिंसितो यस्मात्तस्मात्त्वामप्यसंशयम्
द्वयोर्नृशंसकर्तारमवशं काममोहितम्
जीवितान्तकरो भाव एवमेवागमिष्यति २५
अहं हि किंदमो नाम तपसाप्रतिमो मुनिः
व्यपत्रपन्मनुष्याणां मृग्यां मैथुनमाचरम् २६
मृगो भूत्वा मृगैः सार्धं चरामि गहने वने
न तु ते ब्रह्महत्येयं भविष्यत्यविजानतः
मृगरूपधरं हत्वा मामेवं काममोहितम् २७
अस्य तु त्वं फलं मूढ प्राप्स्यसीदृशमेव हि
प्रियया सह संवासं प्राप्य कामविमोहितः
त्वमप्यस्यामवस्थायां प्रेतलोकं गमिष्यसि २८
अन्तकाले च संवासं यया गन्तासि कान्तया
प्रेतराजवशं प्राप्तं सर्वभूतदुरत्ययम्
भक्त्या मतिमतां श्रेष्ठ सैव त्वामनुयास्यति २९
वर्तमानः सुखे दुःखं यथाहं प्रापितस्त्वया
तथा सुखं त्वां संप्राप्तं दुःखमभ्यागमिष्यति ३०
वैशम्पायन उवाच
एवमुक्त्वा सुदुःखार्तो जीवितात्स व्ययुज्यत
मृगः पाण्डुश्च शोकार्तः क्षणेन समपद्यत ३१
इति श्रीमहाभारते आदिपर्वणि नवाधिकशततमोऽध्यायः १०९

## दशाधिकशततमोऽध्यायः

वैशम्पायन उवाच
तं व्यतीतमतिक्रम्य राजा स्वमिव बान्धवम्
सभार्यः शोकदुःखार्तः पर्यदेवयदातुरः १
पाण्डुरुवाच
सतामपि कुले जाताः कर्मणा बत दुर्गतिम्
प्राप्नुवन्त्यकृतात्मानः कामजालविमोहिताः २

शश्वद्धर्मात्मना जातो बाल एव पिता मम
जीवितान्तमनुप्राप्तः कामात्मैवेति नः श्रुतम् ३
तस्य कामात्मनः क्षेत्रे राज्ञः संयतवागृषिः
कृष्णद्वैपायनः साक्षाद्भगवान्मामजीजनत् ४
तस्याद्य व्यसने बुद्धिः संजातेयं ममाधमा
त्यक्तस्य देवैरनयान्मृगयायां दुरात्मनः ५
मोक्षमेव व्यवस्यामि बन्धो हि व्यसनं महत्
सुवृत्तिमनुवर्तिष्ये तामहं पितुरव्ययाम्
अतीव तपसात्मानं योजयिष्याम्यसंशयम् ६
तस्मादेकोऽहमेकाहमेकैकस्मिन्वनस्पतौ
चरन्भैक्षं मुनिर्मुण्डश्चरिष्यामि महीमिमाम् ७
पांसुना समवच्छन्नः शून्यागारप्रतिश्रयः
वृक्षमूलनिकेतो वा त्यक्तसर्वप्रियाप्रियः ८
न शोचन्न प्रहृष्यंश्च तुल्यनिन्दात्मसंस्तुतिः
निराशीर्निर्नमस्कारो निर्द्वन्द्वो निष्परिग्रहः ९
न चाप्यवहसन्कंचिन्न कुर्वन्भ्रुकुटीं क्वचित्
प्रसन्नवदनो नित्यं सर्वभूतहिते रतः १०
जङ्गमाजङ्गमं सर्वमविहिंसंश्चतुर्विधम्
स्वासु प्रजास्विव सदा समः प्राणभृतां प्रति ११
एककालं चरन्भैक्षं कुलानि द्वे च पञ्च च
असंभवे वा भैक्षस्य चरन्ननशनान्यपि १२
अल्पमल्पं यथाभोज्यं पूर्वलाभेन जातुचित्
नित्यं नातिचरँल्लाभे अलाभे सप्त पूरयन् १३
वास्यैकं तक्षतो बाहुं चन्दनेनैकमुक्षतः
नाकल्याणं न कल्याणं प्रध्यायन्नुभयोस्तयोः १४
नजिजीविषुवत्किंचिन्न मुमूर्षुवदाचरन्
मरणं जीवितं चैव नाभिनन्दन्न च द्विषन् १५
याः काश्चिज्जीवता शक्याः कर्तुमभ्युदयक्रियाः
ताः सर्वाः समतिक्रम्य निमेषादिष्ववस्थितः १६
तासु सर्वास्ववस्थासु त्यक्तसर्वेन्द्रियक्रियः

संपरित्यक्तधर्मात्मा सुनिर्णिक्तात्मकल्मषः १७
निर्मुक्तः सर्वपापेभ्यो व्यतीतः सर्ववागुराः
न वशे कस्यचित्तिष्ठन्सधर्मा मातरिश्वनः १८
एतया सततं वृत्त्या चरन्नेवंप्रकारया
देहं संधारयिष्यामि निर्भयं मार्गमास्थितः १९
नाहं श्वाचरिते मार्गे अवीर्यकृपणोचिते
स्वधर्मात्सततापेते रमेयं वीर्यवर्जितः २०
सत्कृतोऽसत्कृतो वापि योऽन्या कृपणचक्षुषा
उपैति वृत्तिं कामात्मा स शुनां वर्तते पथि २१
वैशम्पायन उवाच
एवमुक्त्वा सुदुःखार्तो निःश्वासपरमो नृपः
अवेक्षमाणः कुन्तीं च माद्रीं च समभाषत २२
कौशल्या विदुरः क्षत्ता राजा च सह बन्धुभिः
आर्या सत्यवती भीष्मस्ते च राजपुरोहिताः २३
ब्राह्मणाश्च महात्मानः सोमपाः संशितव्रताः
पौरवृद्धाश्च ये तत्र निवसन्त्यस्मदाश्रयाः
प्रसाद्य सर्वे वक्तव्याः पाण्डुः प्रव्रजितो वनम् २४
निशम्य वचनं भर्तुर्वनवासे धृतात्मनः
तत्समं वचनं कुन्ती माद्री च समभाषताम् २५
अन्येऽपि ह्याश्रमाः सन्ति ये शक्या भरतर्षभ
आवाभ्यां धर्मपत्नीभ्यां सह तप्त्वा तपो महत्
त्वमेव भविता सार्थः स्वर्गस्यापि न संशयः २६
प्रणिधायेन्द्रियग्रामं भर्तृलोकपरायणे
त्यक्तकामसुखे ह्यावां तप्स्यावो विपुलं तपः २७
यदि आवां महाप्राज्ञ त्यक्ष्यसि त्वं विशां पते
अद्यैवावां प्रहास्यावो जीवितं नात्र संशयः २८
पाण्डुरुवाच
यदि व्यवसितं ह्येतद्युवयोर्धर्मसंहितम्
स्ववृत्तिमनुवर्तिष्ये तामहं पितुरव्ययाम् २९
त्यक्तग्राम्यसुखाचारस्तप्यमानो महत्तपः

वल्कली फलमूलाशी चरिष्यामि महावने ३०
अग्निं जुह्वन्नुभौ कालावुभौ कालावुपस्पृशन्
कृशः परिमिताहारश्चीरचर्मजटाधरः ३१
शीतवातातपसहः क्षुत्पिपासाश्रमान्वितः
तपसा दुश्चरेणेदं शरीरमुपशोषयन् ३२
एकान्तशीली विमृशन्पक्वापक्वेन वर्तयन्
पितॄन्देवांश्च वन्येन वाग्भिरद्भिश्च तर्पयन् ३३
वानप्रस्थजनस्यापि दर्शनं कुलवासिनाम्
नाप्रियाण्याचरञ्जातु किं पुनर्ग्रामवासिनाम् ३४
एवमारण्यशास्त्राणामुग्रमुग्रतरं विधिम्
काङ्क्षमाणोऽहमासिष्ये देहस्यास्य समापनात् ३५
वैशम्पायन उवाच
इत्येवमुक्त्वा भार्ये ते राजा कौरववंशजः
ततश्चूडामणिं निष्कमङ्गदे कुण्डलानि च
वासांसि च महार्हाणि स्त्रीणामाभरणानि च ३६
प्रदाय सर्वं विप्रेभ्यः पाण्डुः पुनरभाषत
गत्वा नागपुरं वाच्यं पाण्डुः प्रव्रजितो वनम् ३७
अर्थं कामं सुखं चैव रतिं च परमात्मिकाम्
प्रतस्थे सर्वमुत्सृज्य सभार्यः कुरुपुंगवः ३८
ततस्तस्यानुयात्राणि ते चैव परिचारकाः
श्रुत्वा भरतसिंहस्य विविधाः करुणा गिरः
भीममार्तस्वरं कृत्वा हाहेति परिचुक्रुशुः ३९
उष्णमश्रु विमुञ्चन्तस्तं विहाय महीपतिम्
ययुर्नागपुरं तूर्णं सर्वमादाय तद्वचः ४०
श्रुत्वा च तेभ्यस्तत्सर्वं यथावृत्तं महावने
धृतराष्ट्रो नरश्रेष्ठः पाण्डुमेवान्वशोचत ४१
राजपुत्रस्तु कौरव्यः पाण्डुर्मूलफलाशनः
जगाम सह भार्याभ्यां ततो नागसभं गिरिम् ४२
स चैत्ररथमासाद्य वारिषेणमतीत्य च
हिमवन्तमतिक्रम्य प्रययौ गन्धमादनम् ४३

रक्ष्यमाणो महाभूतैः सिद्धैश्च परमर्षिभिः
उवास स तदा राजा समेषु विषमेषु च ४४
इन्द्रद्युम्नसरः प्राप्य हंसकूटमतीत्य च
शतशृङ्गे महाराज तापसः समपद्यत ४५
इति श्रीमहाभारते आदिपर्वणि दशाधिकशततमोऽध्यायः ११०

## एकादशाधिक शततमोऽध्यायः

वैशम्पायन उवाच
तत्रापि तपसि श्रेष्ठे वर्तमानः स वीर्यवान्
सिद्धचारणसङ्घानां बभूव प्रियदर्शनः १
शुश्रूषुरनहंवादी संयतात्मा जितेन्द्रियः
स्वर्गं गन्तुं पराक्रान्तः स्वेन वीर्येण भारत २
केषांचिदभवद्भ्राता केषांचिदभवत्सखा
ऋषयस्त्वपरे चैनं पुत्रवत्पर्यपालयन् ३
स तु कालेन महता प्राप्य निष्कल्मषं तपः
ब्रह्मर्षिसदृशः पाण्डुर्बभूव भरतर्षभ ४
स्वर्गपारं तितीर्षन्स शतशृङ्गादुदङ्मुखः
प्रतस्थे सह पत्नीभ्यामब्रुवंस्तत्र तापसाः
उपर्युपरि गच्छन्तः शैलराजमुदङ्मुखाः ५
दृष्टवन्तो गिरेरस्य दुर्गान्देशान्बहून्वयम्
आक्रीडभूतान्देवानां गन्धर्वाप्सरसां तथा ६
उद्यानानि कुबेरस्य समानि विषमाणि च
महानदीनितम्बांश्च दुर्गांश्च गिरिगह्वरान् ७
सन्ति नित्यहिमा देशा निर्वृक्षमृगपक्षिणः
सन्ति केचिन्महावर्षा दुर्गाः केचिद्दुरासदाः ८
अतिक्रामेन्न पक्षी यान्कुत एवेतरे मृगाः
वायुरेकोऽतिगाद्यत्र सिद्धाश्च परमर्षयः ९
गच्छन्त्यौ शैलराजेऽस्मिन्राजपुत्र्यौ कथं त्विमे
न सीदेतामदुःखार्हे मा गमो भरतर्षभ १०
पाण्डुरुवाच

अप्रजस्य महाभागा न द्वारं परिचक्षते
स्वर्गे तेनाभितप्तोऽहमप्रजस्तद्ब्रवीमि वः ११
ऋणैश्चतुर्भिः संयुक्ता जायन्ते मनुजा भुवि
पितृदेवर्षिमनुजदेयैः शतसहस्रशः १२
एतानि तु यथाकालं यो न बुध्यति मानवः
न तस्य लोकाः सन्तीति धर्मविद्भिः प्रतिष्ठितम् १३
यज्ञैश्च देवान्प्रीणाति स्वाध्यायतपसा मुनीन्
पुत्रैः श्राद्धैः पितृंश्चापि आनृशंस्येन मानवान् १४
ऋषिदेवमनुष्याणां परिमुक्तोऽस्मि धर्मतः
पित्र्यादृणादनिर्मुक्तस्तेन तप्ये तपोधनाः १५
देहनाशे ध्रुवो नाशः पितॄणामेष निश्चयः
इह तस्मात्प्रजाहेतोः प्रजायन्ते नरोत्तमाः १६
यथैवाहं पितुः क्षेत्रे सृष्टस्तेन महात्मना
तथैवास्मिन्मम क्षेत्रे कथं वै संभवेत्प्रजा १७
तापसा ऊचुः
अस्ति वै तव धर्मात्मन्विद्म देवोपमं शुभम्
अपत्यमनघं राजन्वयं दिव्येन चक्षुषा १८
दैवदिष्टं नरव्याघ्र कर्मणेहोपपादय
अक्लिष्टं फलमव्यग्रो विन्दते बुद्धिमान्नरः १९
तस्मिन्दृष्टे फले तात प्रयत्नं कर्तुमर्हसि
अपत्यं गुणसंपन्नं लब्ध्वा प्रीतिमवाप्स्यसि २०
वैशम्पायन उवाच
तच्छ्रुत्वा तापसवचः पाण्डुश्चिन्तापरोऽभवत्
आत्मनो मृगशापेन जानन्नुपहतां क्रियाम् २१
सोऽब्रवीद्द्विजने कुन्तीं धर्मपत्नीं यशस्विनीम्
अपत्योत्पादने योगमापदि प्रसमर्थयन् २२
अपत्यं नाम लोकेषु प्रतिष्ठा धर्मसंहिता
इति कुन्ति विदुर्धीराः शाश्वतं धर्ममादितः २३
इष्टं दत्तं तपस्तप्तं नियमश्च स्वनुष्ठितः
सर्वमेवानपत्यस्य न पावनमिहोच्यते २४

सोऽहमेवं विदित्वैतत्प्रपश्यामि शुचिस्मिते
अनपत्यः शुभाँल्लोकान्नावाप्स्यामीति चिन्तयन् २५
मृगाभिशापान्नष्टं मे प्रजनं ह्यकृतात्मनः
नृशंसकारिणो भीरु यथैवोपहतं तथा २६
इमे वै बन्धुदायादाः षट् पुत्रा धर्मदर्शने
षडेवाबन्धुदायादाः पुत्रास्ताञ्शृणु मे पृथे २७
स्वयंजातः प्रणीतश्च परिक्रीतश्च यः सुतः
पौनर्भवश्च कानीनः स्वैरिण्यां यश्च जायते २८
दत्तः क्रीतः कृत्रिमश्च उपगच्छेत्स्वयं च यः
सहोढो जातरेताश्च हीनयोनिधृतश्च यः २९
पूर्वपूर्वतमाभावे मत्वा लिप्सेत वै सुतम्
उत्तमादवराः पुंसः काङ्क्षन्ते पुत्रमापदि ३०
अपत्यं धर्मफलदं श्रेष्ठं विन्दन्ति साधवः
आत्मशुक्रादपि पृथे मनुः स्वायंभुवोऽब्रवीत् ३१
तस्मात्प्रहेष्याम्यद्य त्वां हीनः प्रजननात्स्वयम्
सदृशाच्छ्रेयसो वा त्वं विद्ध्यपत्यं यशस्विनि ३२
शृणु कुन्ति कथां चेमां शारदण्डायनीं प्रति
या वीरपत्नी गुरुभिर्नियुक्तापत्यजन्मनि ३३
पुष्पेण प्रयता स्नाता निशि कुन्ति चतुष्पथे
वरयित्वा द्विजं सिद्धं हुत्वा पुंसवनेऽनलम् ३४
कर्मण्यवसिते तस्मिन्सा तेनैव सहावसत्
तत्र त्रीञ्जनयामास दुर्जयादीन्महारथान् ३५
तथा त्वमपि कल्याणि ब्राह्मणात्तपसाधिकात्
मन्नियोगाद्यत क्षिप्रमपत्योत्पादनं प्रति ३६
इति श्रीमहाभारते आदिपर्वणि एकादशाधिकशततमोऽध्यायः १११

द्वादशाधिक शततमोऽध्यायः

वैशम्पायन उवाच
एवमुक्ता महाराज कुन्ती पाण्डुमभाषत
कुरूणामृषभं वीरं तदा भूमिपतिं पतिम् १

न मामर्हसि धर्मज्ञ वक्तुमेवं कथंचन
धर्मपत्नीमभिरतां त्वयि राजीवलोचन २
त्वमेव तु महाबाहो मय्यपत्यानि भारत
वीर वीर्योपपन्नानि धर्मतो जनयिष्यसि ३
स्वर्गं मनुजशार्दूल गच्छेयं सहिता त्वया
अपत्याय च मां गच्छ त्वमेव कुरुनन्दन ४
न ह्यहं मनसाप्यन्यं गच्छेयं त्वदृते नरम्
त्वत्तः प्रतिविशिष्टश्च कोऽन्योऽस्ति भुवि मानवः ५
इमां च तावद्धर्म्यां त्वं पौराणीं शृणु मे कथाम्
परिश्रुतां विशालाक्ष कीर्तयिष्यामि यामहम् ६
व्युषिताश्व इति ख्यातो बभूव किल पार्थिवः
पुरा परमधर्मिष्ठः पूरोर्वंशविवर्धनः ७
तस्मिंश्च यजमाने वै धर्मात्मनि महात्मनि
उपागमंस्ततो देवाः सेन्द्राः सह महर्षिभिः ८
अमाद्यदिन्द्रः सोमेन दक्षिणाभिर्द्विजातयः
व्युषिताश्वस्य राजर्षेस्ततो यज्ञे महात्मनः ९
व्युषिताश्वस्ततो राजन्नति मर्त्यान्व्यरोचत
सर्वभूतान्यति यथा तपनः शिशिरात्यये १०
स विजित्य गृहीत्वा च नृपतीन्राजसत्तमः
प्राच्यानुदीच्यान्मध्यांश्च दक्षिणात्यानकालयत् ११
अश्वमेधे महायज्ञे व्युषिताश्वः प्रतापवान्
बभूव स हि राजेन्द्रो दशनागबलान्वितः १२
अप्यत्र गाथां गायन्ति ये पुराणविदो जनाः
व्युषिताश्वः समुद्रान्तां विजित्येमां वसुन्धराम्
अपालयत्सर्ववर्णान्पिता पुत्रानिवौरसान् १३
यजमानो महायज्ञैर्ब्राह्मणेभ्यो ददौ धनम्
अनन्तरत्नान्यादाय आजहार महाक्रतून्
सुषाव च बहून्सोमान्सोमसंस्थास्ततान च १४
आसीत्काक्षीवती चास्य भार्या परमसंमता
भद्रा नाम मनुष्येन्द्र रूपेणासदृशी भुवि १५

कामयामासतुस्तौ च परस्परमिति श्रुतिः
स तस्यां कामसंमत्तो यक्ष्माणं समपद्यत १६
तेनाचिरेण कालेन जगामास्तमिवांशुमान्
तस्मिन्प्रेते मनुष्येन्द्रे भार्यास्य भृशदुःखिता १७
अपुत्रा पुरुषव्याघ्र विललापेति नः श्रुतम्
भद्रा परमदुःखार्ता तन्निबोध नराधिप १८
नारी परमधर्मज्ञ सर्वा पुत्रविनाकृता
पतिं विना जीवति या न सा जीवति दुःखिता १९
पतिं विना मृतं श्रेयो नार्याः क्षत्रियपुङ्गव
त्वद्गतिं गन्तुमिच्छामि प्रसीदस्व नयस्व माम् २०
त्वया हीना क्षणमपि नाहं जीवितुमुत्सहे
प्रसादं कुरु मे राजन्नितस्तूर्णं नयस्व माम् २१
पृष्ठतोऽनुगमिष्यामि समेषु विषमेषु च
त्वामहं नरशार्दूल गच्छन्तमनिवर्तिनम् २२
छायेवानपगा राजन्सततं वशवर्तिनी
भविष्यामि नरव्याघ्र नित्यं प्रियहिते रता २३
अद्य प्रभृति मां राजन्कष्टा हृदयशोषणाः
आधयोऽभिभविष्यन्ति त्वदृते पुष्करेक्षण २४
अभाग्यया मया नूनं वियुक्ताः सहचारिणः
संयोगा विप्रयुक्तावा पूर्वदेहेषु पार्थिव २५
तदिदं कर्मभिः पापैः पूर्वदेहेषु संचितम्
दुःखं मामनुसंप्राप्तं राजंस्त्वद्विप्रयोगजम् २६
अद्य प्रभृत्यहं राजन्कुशप्रस्तरशायिनी
भविष्याम्यसुखाविष्टा त्वद्दर्शनपरायणा २७
दर्शयस्व नरव्याघ्र साधु मामसुखान्विताम्
दीनामनाथां कृपणां विलपन्तीं नरेश्वर २८
एवं बहुविधं तस्यांविलपन्त्यां पुनः पुनः
तं शवं संपरिष्वज्य वाक्किलान्तर्हिताब्रवीत् २९
उत्तिष्ठ भद्रे गच्छ त्वं ददानीह वरं तव
जनयिष्याम्यपत्यानि त्वय्यहं चारुहासिनि ३०

आत्मीये च वरारोहे शयनीये चतुर्दशीम्
अष्टमीं वा ऋतुस्नाता संविशेथा मया सह ३१
एवमुक्ता तु सा देवी तथा चक्रे पतिव्रता
यथोक्तमेव तद्वाक्यं भद्रा पुत्रार्थिनी तदा ३२
सा तेन सुषुवे देवी शवेन मनुजाधिप
त्रीञ्शाल्वांश्चतुरो मद्रान्सुतान्भरतसत्तम ३३
तथा त्वमपि मय्येव मनसा भरतर्षभ
शक्तो जनयितुं पुत्रांस्तपोयोगबलान्वयात् ३४
इति श्रीमहाभारते आदिपर्वणि द्वादशाधिकशततमोऽध्यायः११२

त्रयोदशाधिकशततमोऽध्यायः

वैशम्पायन उवाच
एवमुक्तस्तया राजा तां देवीं पुनरब्रवीत्
धर्मविद्धर्मसंयुक्तमिदं वचनमुत्तमम् १
एवमेतत्पुरा कुन्ति व्युषिताश्वश्चकार ह
यथा त्वयोक्तं कल्याणि स ह्यासीदमरोपमः २
अथ त्विमं प्रवक्ष्यामि धर्मं त्वेतं निबोध मे
पुराणमृषिभिर्दृष्टं धर्मविद्भिर्महात्मभिः ३
अनावृताः किल पुरा स्त्रिय आसन्वरानने
कामचारविहारिण्यः स्वतन्त्राश्चारुलोचने ४
तासां व्युच्चरमाणानां कौमारात्सुभगे पतीन्
नाधर्मोऽभूद्वरारोहे स हि धर्मः पुराभवत् ५
तं चैव धर्मं पौराणं तिर्यग्योनिगताः प्रजाः
अद्याप्यनुविधीयन्ते कामद्वेषविवर्जिताः
पुराणदृष्टो धर्मोऽय पूज्यते च महर्षिभिः ६
उत्तरेषु च रम्भोरु कुरुष्वद्यापि वर्तते
स्त्रीणामनुग्रहकरः स हि धर्मः सनातनः ७
अस्मिंस्तु लोके नचिरान्मर्यादेयं शुचिस्मिते
स्थापिता येन यस्माच्च तन्मे विस्तरतः शृणु ८
बभूवोद्दालको नाम महर्षिरिति नः श्रुतम्

श्वेतकेतुरिति ख्यातः पुत्रस्तस्याभवन्मुनिः ९
मर्यादेयं कृता तेन मानुषेष्विति नः श्रुतम्
कोपात्कमलपत्राक्षि यदर्थं तन्निबोध मे १०
श्वेतकेतोः किल पुरा समक्षं मातरं पितुः
जग्राह ब्राह्मणः पाणौ गच्छाव इति चाब्रवीत् ११
ऋषिपुत्रस्ततः कोपं चकारामर्षितस्तदा
मातरं तां तथा दृष्ट्वा नीयमानां बलादिव १२
क्रुद्धं तं तु पिता दृष्ट्वा श्वेतकेतुमुवाच ह
मा तात कोपं कार्षीस्त्वमेष धर्मः सनातनः १३
अनावृता हि सर्वेषां वर्णानामङ्गना भुवि
यथा गावः स्थितास्तात स्वे स्वे वर्णे तथा प्रजाः १४
ऋषिपुत्रोऽथ तं धर्मं श्वेतकेतुर्न चक्षमे
चकार चैव मर्यादामिमां स्त्रीपुंसयोर्भुवि १५
मानुषेषु महाभागे न त्वेवान्येषु जन्तुषु
तदा प्रभृति मर्यादा स्थितेयमिति नः श्रुतम् १६
व्युच्चरन्त्याः पतिं नार्या अद्य प्रभृति पातकम्
भ्रूणहत्याकृतं पापं भविष्यत्यसुखावहम् १७
भार्यां तथा व्युच्चरतः कौमारीं ब्रह्मचारिणीम्
पतिव्रतामेतदेव भविता पातकं भुवि १८
पत्या नियुक्ता या चैव पत्न्यपत्यार्थमेव च
न करिष्यति तस्याश्च भविष्यत्येतदेव हि १९
इति तेन ऋषिणा भीरु मर्यादा स्थापिता बलात्
उद्दालकस्य पुत्रेण धर्म्या वै श्वेतकेतुना २०
सौदासेन च रम्भोरु नियुक्तापत्यजन्मनि
मदयन्ती जगामर्षिं वसिष्ठमिति नः श्रुतम् २१
तस्माल्लेभे च सा पुत्रमश्मकं नाम भामिनी
भार्या कल्माषपादस्य भर्तुः प्रियचिकीर्षया २२
अस्माकमपि ते जन्म विदितं कमलेक्षणे
कृष्णद्वैपायनाद्भीरु कुरूणां वंशवृद्धये २३
अत एतानि सर्वाणि कारणानि समीक्ष्य वै

ममैतद्वचनं धर्म्यं कर्तुमर्हस्यनिन्दिते २४
ऋतावृतौ राजपुत्रि स्त्रिया भर्ता यतव्रते
नातिवर्तव्य इत्येवं धर्मं धर्मविदो विदुः २५
शेषेष्वन्येषु कालेषु स्वातन्त्र्यं स्त्री किलार्हति
धर्ममेतं जनाः सन्तः पुराणं परिचक्षते २६
भर्ता भार्यां राजपुत्रि धर्म्यं वाधर्म्यमेव वा
यद्ब्रूयात्तत्तथा कार्यमिति धर्मविदो विदुः २७
विशेषतः पुत्रगृद्धी हीनः प्रजननात्स्वयम्
यथाहमनवद्याङ्गि पुत्रदर्शनलालसः २८
तथा रक्ताङ्गुलितलः पद्मपत्रनिभः शुभे
प्रसादार्थं मया तेऽय शिरस्यभ्युद्यतोऽञ्जलि २९
मन्नियोगात्सुकेशान्ते द्विजातेस्तपसाधिकात्
पुत्राङ्गुणसमायुक्तानुत्पादयितुमर्हसि
त्वत्कृतेऽह पृथुश्रोणि गच्छेयं पुत्रिणां गतिम् ३०
एवमुक्ताः ततः कुन्ती पाण्डुं परपुरञ्जयम्
प्रत्युवाच वरारोहा भर्तुः प्रियहिते रता ३१
पितृवेश्मन्यहं बाला नियुक्तातिथिपूजने
उग्रं पर्यचरं तत्र ब्राह्मणं संशितव्रतम् ३२
निगूढनिश्चयं धर्मे यं तं दुर्वाससं विदुः
तमहं संशितात्मानं सर्वयत्नैरतोषयम् ३३
स मेऽभिचारसंयुक्तमाचष्ट भगवान्वरम्
मन्त्रग्रामं च मे प्रादादब्रवीच्चैव मामिदम् ३४
यं यं देवं त्वमेतेन मन्त्रेणावाहयिष्यसि
अकामो वा सकामो वा स ते वशमुपैष्यति ३५
इत्युक्ताहं तदा तेन पितृवेश्मनि भारत
ब्राह्मणेन वचस्तथ्यं तस्य कालोऽयमागतः ३६
अनुज्ञाता त्वया देवामाह्वयेयमहं नृप
तेन मन्त्रेण राजर्षे यथा स्यान्नौ प्रजा विभो ३७
आवाहयामि कं देवं ब्रूहि तत्त्वविदां वर
त्वत्तोऽनुज्ञाप्रतीक्षां मां विद्ध्यस्मिन्कर्मणि स्थिताम् ३८

पाण्डुरुवाच
अद्यैव त्वं वरारोहे प्रयतस्व यथाविधि
धर्ममावाहय शुभे स हि देवेषु पुण्यभाक् ३९
अधर्मेण न नो धर्मः संयुज्येत कथंचन
लोकश्चायं वरारोहे धर्मोऽयमिति मंस्यते ४०
धार्मिकश्च कुरूणां स भविष्यति न संशयः
दत्तस्यापि च धर्मेण नाधर्मे रंस्यते मनः ४१
तस्माद्धर्मं पुरस्कृत्य नियता त्वं शुचिस्मिते
उपचाराभिचाराभ्यां धर्ममाराधयस्व वै ४२
वैशम्पायन उवाच
सा तथोक्ता तथेत्युक्त्वा तेन भर्त्रा वराङ्गना
अभिवाद्याभ्यनुज्ञाता प्रदक्षिणमवर्तत ४३
इति श्रीमहाभारते आदिपर्वणि त्रयोदशाधिकशततमोऽध्यायः ११३

## चतुर्दशाधिकशततमोऽध्यायः

वैशम्पायन उवाच
संवत्सराहिते गर्भे गान्धार्या जनमेजय
आह्वयामास वै कुन्ती गर्भार्थं धर्ममच्युतम् १
सा बलि त्वरिता देवी धर्मायोपजहार ह
जजाप जप्यं विधिवद्दत्तं दुर्वाससा पुरा २
संगम्य सा तु धर्मेण योगमूर्तिधरेण वै
लेभे पुत्रं वरारोहा सर्वप्राणभृतां वरम् ३
एन्द्रे चन्द्रसमायुक्ते मुहूर्तेऽभिजितेऽष्टमे
दिवा मध्यगते सूर्ये तिथौ पुण्येऽभिपूजिते ४
समृद्धयशसं कुन्ती सुषाव समये सुतम्
जातमात्रे सुते तस्मिन्वागुवाचाशरीरिणी ५
एष धर्मभृतां श्रेष्ठो भविष्यति न संशयः
युधिष्ठिर इति ख्यातः पाण्डोः प्रथमजः सुतः ६
भविता प्रथितो राजा त्रिषु लोकेषु विश्रुतः
यशसा तेजसा चैव वृत्तेन च समन्वितः ७

धार्मिकं तं सुतं लब्ध्वा पाण्डुस्तां पुनरब्रवीत्
प्राहुः क्षत्रं बलज्येष्ठं बलज्येष्ठं सुतं वृणु ८
ततस्तथोक्ता पत्या तु वायुमेवाजुहाव सा
तस्माज्जज्ञे महाबाहुर्भीमो भीमपराक्रमः ९
तमप्यतिबलं जातं वागभ्यवददच्युतम्
सर्वेषां बलिनां श्रेष्ठो जातोऽयमिति भारत १०
इदमत्यद्भुतं चासीज्जातमात्रे वृकोदरे
यदङ्कात्पतितो मातुः शिलां गात्रैरचूर्णयत् ११
कुन्ती व्याघ्रभयोद्विग्ना सहसोत्पतिता किल
नान्वबुध्यत संसुप्तमुत्सङ्गे स्वे वृकोदरम् १२
ततः स वज्रसंघातः कुमारोऽभ्यपतद्गिरौ
पतता तेन शतधा शिला गात्रैर्विचूर्णिता
तां शिलां चूर्णितां दृष्ट्वा पाण्डुर्विस्मयमागमत् १३
यस्मिन्नहनि भीमस्तु जज्ञे भरतसत्तम
दुर्योधनोऽपि तत्रैव प्रजज्ञे वसुधाधिप १४
जाते वृकोदरे पाण्डुरिदं भूयोऽन्वचिन्तयत्
कथं नु मे वरः पुत्रो लोकश्रेष्ठो भवेदिति १५
दैवे पुरुषकारे च लोकोऽय हि प्रतिष्ठितः
तत्र दैवं तु विधिना कालयुक्तेन लभ्यते १६
इन्द्रो हि राजा देवानां प्रधान इति नः श्रुतम्
अप्रमेयबलोत्साहो वीर्यवानमितद्युतिः १७
तं तोषयित्वा तपसा पुत्रं लप्स्ये महाबलम्
यं दास्यति स मे पुत्रं स वरीयान्भविष्यति
कर्मणा मनसा वाचा तस्मात्तप्स्ये महत्तपः १८
ततः पाण्डुर्महातेजा मन्त्रयित्वा महर्षिभिः
दिदेश कुन्त्याः कौरव्यो व्रतं सांवत्सरं शुभम् १९
आत्मना च महाबाहुरेकपादस्थितोऽभवत्
उग्रं स तप आतस्थे परमेण समाधिना २०
आरिराधयिषुर्देवं त्रिदशानां तमीश्वरम्
सूर्येण सह धर्मात्मा पर्यवर्तत भारत २१

तं तु कालेन महता वासवः प्रत्यभाषत
पुत्रं तव प्रदास्यामि त्रिषु लोकेषु विश्रुतम् २२
देवानां ब्राह्मणानां च सुहृदां चार्थसाधकम्
सुतं तेऽग्र्य प्रदास्यामि सर्वामित्रविनाशनम् २३
इत्युक्तः कौरवो राजा वासवेन महात्मना
उवाच कुन्तीं धर्मात्मा देवराजवचः स्मरन् २४
नीतिमन्तं महात्मानमादित्यसमतेजसम्
दुराधर्षं क्रियावन्तमतीवाद्भुतदर्शनम् २५
पुत्रं जनय सुश्रोणि धाम क्षत्रियतेजसाम्
लब्धः प्रसादो देवेन्द्रात्तमाह्वय शुचिस्मिते २६
एवमुक्ता ततः शक्रमाजुहाव यशस्विनी
अथाजगाम देवेन्द्रो जनयामास चार्जुनम् २७
जातमात्रे कुमारे तु वागुवाचाशरीरिणी
महागम्भीरनिर्घोषा नभो नादयती तदा २८
कार्तवीर्यसमः कुन्ति शिबितुल्यपराक्रमः
एष शक्र इवाजेयो यशस्ते प्रथयिष्यति २९
अदित्या विष्णुना प्रीतिर्यथाभूदभिवर्धिता
तथा विष्णुसमः प्रीतिं वर्धयिष्यति तेऽजुनः ३०
एष मद्रान्वशे कृत्वा कुरूंश्च सह केकयैः
चेदिकाशिकरूषांश्च कुरुलक्ष्म सुधास्यति ३१
एतस्य भुजवीर्येण खाण्डवे हव्यवाहनः
मेदसा सर्वभूतानां तृप्तिं यास्यति वै पराम् ३२
ग्रामणीश्च महीपालानेष जित्वा महाबलः
भ्रातृभिः सहितो वीरस्त्रीन्मेधानाहरिष्यति ३३
जामदग्न्यसमः कुन्ति विष्णुतुल्यपराक्रमः
एष वीर्यवतां श्रेष्ठो भविष्यत्यपराजितः ३४
तथा दिव्यानि चास्त्राणि निखिलान्याहरिष्यति
विप्रनष्टां श्रियं चायमाहर्ता पुरुषर्षभः ३५
एतामत्यद्भुतां वाचं कुन्तीपुत्रस्य सूतके
उक्तवान्वायुराकाशे कुन्ती शुश्राव चास्य ताम् ३६

वाचमुच्चारितामुच्चैस्तां निशम्य तपस्विनाम्
बभूव परमो हर्षः शतशृङ्गनिवासिनाम् ३७
तथा देवऋषीणां च सेन्द्राणां च दिवौकसाम्
आकाशे दुन्दुभीनां च बभूव तुमुलः स्वनः ३८
उदतिष्ठन्महाघोषः पुष्पवृष्टिभिरावृतः
समवेत्य च देवानां गणाः पार्थमपूजयन् ३९
काद्रवेया वैनतेया गन्धर्वाप्सरसस्तथा
प्रजानां पतयः सर्वे सप्त चैव महर्षयः ४०
भरद्वाजः कश्यपो गौतमश्च विश्वामित्रो जमदग्निर्वसिष्ठः
यश्चोदितो भास्करेऽभूत्प्रनष्टे सोऽप्यत्रात्रिर्भगवानाजगाम ४१
मरीचिरङ्गिराश्चैव पुलस्त्यः पुलहः क्रतुः
दक्षः प्रजापतिश्चैव गन्धर्वाप्सरसस्तथा ४२
दिव्यमाल्याम्बरधराः सर्वालङ्कारभूषिताः
उपगायन्ति बीभत्सुमुपनृत्यन्ति चाप्सराः
गन्धर्वैः सहितः श्रीमान्प्रागायत च तुम्बुरुः ४३
भीमसेनोग्रसेनौ च ऊर्णायुरनघस्तथा
गोपतिर्धृतराष्ट्रश्च सूर्यवर्चाश्च सप्तमः ४४
युगपस्तृणपः कार्ष्णिर्नन्दिश्चित्ररथस्तथा
त्रयोदशः शालिशिराः पर्जन्यश्च चतुर्दशः ४५
कलि पञ्चदशश्चात्र नारदश्चैव षोडशः
सद्वा बृहद्वा बृहकः करालश्च महायशाः ४६
ब्रह्मचारी बहुगुणः सुपर्णश्चेति विश्रुतः
विश्वावसुर्भुमन्युश्च सुचन्द्रो दशमस्तथा ४७
गीतमाधुर्यसंपन्नौ विख्यातौ च हहाहुहू
इत्येते देवगन्धर्वा जगुस्तत्र नरर्षभम् ४८
तथैवाप्सरसो हृष्टाः सर्वालङ्कारभूषिताः
ननृतुर्वै महाभागा जगुश्चायतलोचनाः ४९
अनूना चानवद्या च प्रियमुख्या गुणावरा
अद्रिका च तथा साची मिश्रकेशी अलम्बुसा ५०
मरीचिः शुचिका चैव विद्युत्पर्णा तिलोत्तमा

अम्बिका लक्षणा क्षेमा देवी रम्भा मनोरमा ५१
असिता च सुबाहुश्च सुप्रिया सुवपुस्तथा
पुण्डरीका सुगन्धा च सुरथा च प्रमाथिनी ५२
काम्या शारद्वती चैव ननृतुस्तत्र सङ्घशः
मेनका सहजन्या च पर्णिका पुञ्जिकस्थला ५३
क्रतुस्थला घृताची च विश्वाची पूर्वचित्त्यपि
उम्लोचेत्यभिविख्याता प्रम्लोचेति च ता दश
उर्वश्येकादशीत्येता जगुरायतलोचनाः ५४
धातार्यमा च मित्रश्च वरुणोंऽशो भगस्तथा
इन्द्रो विवस्वान्पूषा च त्वष्टा च सविता तथा ५५
पर्जन्यश्चैव विष्णुश्च आदित्याः पावकार्चिषः
महिमानं पाण्डवस्य वर्धयन्तोऽम्बरे स्थिताः ५६
मृगव्याधश्च शर्वश्च निर्ऋतिश्च महायशाः
अजैकपादहिर्बुध्न्यः पिनाकी च परन्तपः ५७
दहनोऽथेश्वरश्चैव कपाली च विशां पते
स्थाणुर्भवश्च भगवान्रुद्रास्तत्रावतस्थिरे ५८
अश्विनौ वसवश्चाष्टौ मरुतश्च महाबलाः
विश्वेदेवास्तथा साध्यास्तत्रासन्परिसंस्थिताः ५९
कर्कोटकोऽथ शेषश्च वासुकिश्च भुजङ्गमः
कच्छपश्चापकुण्डश्च तक्षकश्च महोरगः ६०
आययुस्तेजसा युक्ता महाक्रोधा महाबलाः
एते चान्ये च बहवस्तत्र नागा व्यवस्थिताः ६१
तार्क्ष्यश्चारिष्टनेमिश्च गरुडश्चासितध्वजः
अरुणश्चारुणिश्चैव वैनतेया व्यवस्थिताः ६२
तद्दृष्ट्वा महदाश्चर्यं विस्मिता मुनिसत्तमाः
अधिकां स्म ततो वृत्तिमवर्तन्पाण्डवान्प्रति ६३
पाण्डुस्तु पुनरेवैनां पुत्रलोभान्महायशाः
प्राहिणोद्दर्शनीयाङ्गीं कुन्ती त्वेनमथाब्रवीत् ६४
नातश्चतुर्थं प्रसवमापत्स्वपि वदन्त्युत
अतः परं चारिणी स्यात्पञ्चमे बन्धकी भवेत् ६५

स त्वं विद्वन्धर्ममिमं बुद्धिगम्यं कथं नु माम्
अपत्यार्थं समुत्क्रम्य प्रमादादिव भाषसे ६६
इति श्रीमहाभारते आदिपर्वणि चतुर्दशाधिकशततमोऽध्यायः ११४

पञ्चदशाधिकशततमोऽध्यायः
वैशम्पायन उवाच
कुन्तीपुत्रेषु जातेषु धृतराष्ट्रात्मजेषु च
मद्रराजसुता पाण्डुं रहो वचनमब्रवीत् १
न मेऽस्ति त्वयि संतापो विगुणेऽपि परन्तप
नावरत्वे वरार्हायाः स्थित्वा चानघ नित्यदा २
गान्धार्याश्चैव नृपते जातं पुत्रशतं तथा
श्रुत्वा न मे तथा दुःखमभवत्कुरुनन्दन ३
इदं तु मे महद्दुःखं तुल्यतायामपुत्रता
दिष्ट्या त्विदानीं भर्तुर्मे कुन्त्यामप्यस्ति सन्ततिः ४
यदि त्वपत्यसंतानं कुन्तिराजसुता मयि
कुर्यादनुग्रहो मे स्यात्तव चापि हितं भवेत् ५
स्तम्भो हि मे सपत्नीत्वाद्वक्तुं कुन्तिसुतां प्रति
यदि तु त्वं प्रसन्नो मे स्वयंमेनांप्रचोदय ६
पाण्डुरुवाच
ममाप्येष सदा माद्रि हृद्यर्थः परिवर्तते
न तु त्वां प्रसहे वक्तुमिष्टानिष्टविवक्षया ७
तव त्विदं मतं ज्ञात्वा प्रयतिष्याम्यतः परम्
मन्ये ध्रुवं मयोक्ता सा वचो मे प्रतिपत्स्यते ८
वैशम्पायन उवाच
ततः कुन्तीं पुनः पाण्डुर्विविक्त इदमब्रवीत्
कुलस्य मम सन्तानं लोकस्य च कुरु प्रियम् ९
मम चापिण्डनाशाय पूर्वेषामपि चात्मनः
मत्प्रियार्थं च कल्याणि कुरु कल्याणमुत्तमम् १०
यशसोऽथाय चैव त्वं कुरु कर्म सुदुष्करम्
प्राप्याधिपत्यमिन्द्रेण यज्ञैरिष्टं यशोऽथिना ११

तथा मन्त्रविदो विप्रास्तपस्तप्त्वा सुदुष्करम्
गुरूनभ्युपगच्छन्ति यशसोऽथाय भामिनि १२
तथा राजर्षयः सर्वे ब्राह्मणाश्च तपोधनाः
चक्रुरुच्चावचं कर्म यशसोऽथाय दुष्करम् १३
सा त्वं माद्रीं प्लवेनेव तारयेमामनिन्दिते
अपत्यसंविभागेन परां कीर्तिमवाप्नुहि १४
एवमुक्त्वाब्रवीन्माद्रीं सकृच्चिन्तय दैवतम्
तस्मात्ते भवितापत्यमनुरूपमसंशयम् १५
ततो माद्री विचार्यैव जगाम मनसाश्विनौ
तावागम्य सुतौ तस्यां जनयामासतुर्यमौ १६
नकुलं सहदेवं च रूपेणाप्रतिमौ भुवि
तथैव तावपि यमौ वागुवाचाशरीरिणी १७
रूपसत्त्वगुणोपेतावेतावन्याञ्जनानति
भासतस्तेजसात्यर्थं रूपद्रविणसम्पदा १८
नामानि चक्रिरे तेषां शतशृङ्गनिवासिनः
भक्त्या च कर्मणा चैव तथाशीर्भिर्विशां पते १९
ज्येष्ठं युधिष्ठिरेत्याहुर्भीमसेनेति मध्यमम्
अर्जुनेति तृतीयं च कुन्तीपुत्रानकल्पयन् २०
पूर्वजं नकुलेत्येवं सहदेवेति चापरम्
माद्रीपुत्रावकथयंस्ते विप्राः प्रीतमानसाः
अनुसंवत्सरं जाता अपि ते कुरुसत्तमाः २१
कुन्तीमथ पुनः पाण्डुर्माद्र्यर्थे समचोदयत्
तमुवाच पृथा राजन्रहस्युक्ता सती सदा २२
उक्ता सकृद्द्वन्द्वमेषा लेभे तेनास्मि वञ्चिता
बिभेम्यस्याः परिभवान्नारीणां गतिरीदृशी २३
नाज्ञासिषमहं मूढा द्वन्द्वाह्वाने फलद्वयम्
तस्मान्नाहं नियोक्तव्या त्वयैषोऽस्तु वरो मम २४
एवं पाण्डोः सुताः पञ्च देवदत्ता महाबलाः
संभूताः कीर्तिमन्तस्ते कुरुवंशविवर्धनाः २५
शुभलक्षणसंपन्नाः सोमवत्प्रियदर्शनाः

सिंहदर्पा महेष्वासाः सिंहविक्रान्तगामिनः
सिंहग्रीवा मनुष्येन्द्रा ववृधुर्देवविक्रमाः २६
विवर्धमानास्ते तत्र पुराये हैमवते गिरौ
विस्मयं जनयामासुर्महर्षीणां समेयुषाम् २७
ते च पञ्च शतं चैव कुरुवंशविवर्धनाः
सर्वे ववृधुरल्पेन कालेनाप्स्विव नीरजाः २८
इति श्रीमहाभारते ऋादिपर्वणि पञ्चदशाधिकशततमोऽध्यायः ११५

षोडशाधिकशततमोऽध्यायः

वैशम्पायन उवाच
दर्शनीयांस्ततः पुत्रान्पाराडुः पञ्च महावने
तान्पश्यन्पर्वते रेमे स्वबाहुबलपालितान् १
सुपुष्पितवने काले कदाचिन्मधुमाधवे
भूतसंमोहने राजा सभार्यो व्यचरद्वनम् २
पलाशैस्तिलकैश्चूतैश्चम्पकैः पारिभद्रकैः
ऋन्यैश्च बहुभिर्वृक्षैः फलपुष्पसमृद्धिभिः ३
जलस्थानैश्च विविधैः पद्मिनीभिश्च शोभितम्
पाराडोर्वनं तु संप्रेक्ष्य प्रजज्ञे हृदि मन्मथः ४
प्रहृष्टमनसं तत्र विहरन्तं यथामरम्
तं माद्र्यनुजगामैका वसनं बिभ्रती शुभम् ५
समीक्षमाराः स तु तां वयःस्थां तनुवाससम्
तस्य कामः प्रववृधे गहनेऽग्निरिवोत्थितः ६
रहस्यात्मसमां दृष्ट्वा राजा राजीवलोचनाम्
न शशाक नियन्तुं तं कामं कामबलात्कृतः ७
तत एनां बलाद्राजा निजग्राह रहोगताम्
वार्यमाणस्तया देव्या विस्फुरन्त्या यथाबलम् ८
स तु कामपरीतात्मा तं शापं नान्वबुध्यत
माद्रीं मैथुनधर्मेण गच्छमानो बलादिव ९
जीवितान्ताय कौरव्यो मन्मथस्य वशं गतः
शापजं भयमुत्सृज्य जगामैव बलात्प्रियाम् १०

तस्य कामात्मनो बुद्धिः साक्षात्कालेन मोहिता
संप्रमथ्येन्द्रियग्रामं प्रनष्टा सह चेतसा ११
स तया सह संगम्य भार्यया कुरुनन्दन
पाण्डुः परमधर्मात्मा युयुजे कालधर्मणा १२
ततो माद्री समालिङ्ग्य राजानं गतचेतसम्
मुमोच दुःखजं शब्दं पुनः पुनरतीव ह १३
सह पुत्रैस्ततः कुन्ती माद्रीपुत्रौ च पाण्डवौ
आजग्मुः सहितास्तत्र यत्र राजा तथागतः १४
ततो माद्र्यब्रवीद्राजन्नार्ता कुन्तीमिदं वचः
एकैव त्वमिहागच्छ तिष्ठन्त्वत्रैव दारकाः १५
तच्छ्रुत्वा वचनं तस्यास्तत्रैवावार्य दारकान्
हताहमिति विक्रुश्य सहसोपजगाम ह १६
दृष्ट्वा पाण्डुं च माद्रीं च शयानौ धरणीतले
कुन्ती शोकपरीताङ्गी विललाप सुदुःखिता १७
रक्ष्यमाणो मया नित्यं वीरः सततमात्मवान्
कथं त्वमभ्यतिक्रान्तः शापं जानन्वनौकसः १८
ननु नाम त्वया माद्रि रक्षितव्यो जनाधिपः
सा कथं लोभितवती विजने त्वं नराधिपम् १९
कथं दीनस्य सततं त्वामासाद्य रहोगताम्
तं विचिन्तयतः शापं प्रहर्षः समजायत २०
धन्या त्वमसि बाह्लीकि मत्तो भाग्यतरा तथा
दृष्टवत्यसि यद्वक्त्रं प्रहृष्टस्य महीपतेः २१
माद्र्युवाच
विलोभ्यमानेन मया वार्यमाणेन चासकृत्
आत्मा न वारितोऽनेन सत्यं दिष्टं चिकीर्षुणा २२
कुन्त्युवाच
अहं ज्येष्ठा धर्मपत्नी ज्येष्ठं धर्मफलं मम
अवश्यं भाविनो भावान्मा मां माद्रि निवर्तय २३
अन्वेष्यामीह भर्तारमहं प्रेतवशं गतम्
उत्तिष्ठ त्वं विसृज्यैनमिमान्रक्षस्व दारकान् २४

माद्र्युवाच
अहमेवानुयास्यामि भर्तारमपलायिनम्
न हि तृप्तास्मि कामानां तज्ज्येष्ठा अनुमन्यताम् २५
मां चाभिगम्य क्षीणोऽय कामाद्भरतसत्तमः
तमुच्छिन्द्यामस्य कामं कथं नु यमसादने २६
न चाप्यहं वर्तयन्ती निर्विशेषं सुतेषु ते
वृत्तिमार्ये चरिष्यामि स्पृशेदेनस्तथा हि माम् २७
तस्मान्मे सुतयोः कुन्ति वर्तितव्यं स्वपुत्रवत्
मां हि कामयमानोऽय राजा प्रेतवशं गतः २८
राज्ञः शरीरेण सह ममापीदं कलेवरम्
दग्धव्यं सुप्रतिच्छन्नमेतदार्ये प्रियं कुरु २९
दारकेष्वप्रमत्ता च भवेथाश्च हिता मम
अतोऽन्यन्न प्रपश्यामि संदेष्टव्यं हि किंचन ३०
वैशम्पायन उवाच
इत्युक्त्वा तं चिताग्निस्थं धर्मपत्नी नरर्षभम्
मद्रराजात्मजा तूर्णमन्वारोहद्यशस्विनी ३१
इति श्रीमहाभारते आदिपर्वणि षोडशाधिकशततमोऽध्यायः ११६

सप्तदशाधिक शततमोऽध्यायः

वैशम्पायन उवाच
पाण्डोरवभृथं कृत्वा देवकल्पा महर्षयः
ततो मन्त्रमकुर्वन्त ते समेत्य तपस्विनः १
हित्वा राज्यं च राष्ट्रं च स महात्मा महातपाः
अस्मिन्स्थाने तपस्तप्तुं तापसाञ्शरणं गतः २
स जातमात्रान्पुत्रांश्च दारांश्च भवतामिह
प्रदायोपनिधिं राजा पाण्डुः स्वर्गमितो गतः ३
ते परस्परमामन्त्र्य सर्वभूतहिते रताः
पाण्डोः पुत्रान्पुरस्कृत्य नगरं नागसाह्वयम् ४
उदारमनसः सिद्धा गमने चक्रिरे मनः
भीष्माय पाण्डवान्दातुं धृतराष्ट्राय चैव हि ५

तस्मिन्नेव क्षणे सर्वे तानादाय प्रतस्थिरे
पाण्डोर्दारांश्च पुत्रांश्च शरीरं चैव तापसाः ६
सुखिनी सा पुरा भूत्वा सततं पुत्रवत्सला
प्रपन्ना दीर्घमध्वानं संक्षिप्तं तदमन्यत ७
सा न दीर्घेण कालेन संप्राप्ता कुरुजाङ्गलम्
वर्धमानपुरद्वारमाससाद यशस्विनी ८
तं चारणसहस्राणां मुनीनामागमं तदा
श्रुत्वा नागपुरे नृणां विस्मयः समजायत ९
मुहूर्तोदित आदित्ये सर्वे धर्मपुरस्कृताः
सदारास्तापसान्द्रष्टुं निर्ययुः पुरवासिनः १०
स्त्रीसङ्घाः क्षत्रसङ्घाश्च यानसंघान् समास्थिताः
ब्राह्मणैः सह निर्जग्मुर्ब्राह्मणानांचयोषितः ११
तथा विट् शूद्रसङ्घानां महान् व्यतिकरोऽभवत्
न कश्चिदकरोदीर्ष्यामभवन् धर्मवुद्धयः १२
तथा भीष्मः शान्तनवः सोमदत्तोऽथ बाह्लिकः
प्रज्ञाचक्षुश्च राजर्षिः क्षत्ता च विदुरः स्वयम् १३
सा च सत्यवती देवी कौसल्या च यशस्विनी
राजदारैः परिवृता गान्धारी च विनिर्ययौ १४
धृतराष्ट्रस्य दायादा दुर्योधनपुरोगमाः
भूषिता भूषणैश्चित्रैः शतसङ्ख्या विनिर्ययुः १५
तान्महर्षिगणान्सर्वाञ्शिरोभिरभिवाद्य च
उपोपविविशुः सर्वे कौरव्याः सपुरोहिताः १६
तथैव शिरसा भूमावभिवाद्य प्रणम्य च
उपोपविविशुः सर्वे पौरजानपदा अपि १७
तमकूजमिवाज्ञाय जनौघं सर्वशस्तदा
भीष्मो राज्यं च राष्ट्रं च महर्षिभ्यो न्यवेदयत् १८
तेषामथो वृद्धतमः प्रत्युत्थाय जटाजिनी
महर्षि मतमाज्ञाय महर्षिरिदमब्रवीत् १९
यः स कौरव्यदायादः पाण्डुर्नाम नराधिपः
कामभोगान्परित्यज्य शतशृङ्गमितो गतः २०

ब्रह्मचर्यव्रतस्थस्य तस्य दिव्येन हेतुना
साक्षाद्धर्मादयं पुत्रस्तस्य जातो युधिष्ठिरः २१
तथेमं बलिनां श्रेष्ठं तस्य राज्ञो महात्मनः
मातरिश्वा ददौ पुत्रं भीमं नाम महाबलम् २२
पुरुहूतादयं जज्ञे कुन्त्यां सत्यपराक्रमः
यस्य कीर्तिर्महेष्वासान्सर्वानभिभविष्यति २३
यौ तु माद्री महेष्वासावसूत कुरुसत्तमौ
अश्विभ्यां मनुजव्याघ्राविमौ तावपि तिष्ठतः २४
चरता धर्मनित्येन वनवासं यशस्विना
एष पैतामहो वंशः पाण्डुना पुनरुद्धृतः २५
पुत्राणां जन्म वृद्धिं च वैदिकाध्ययनानि च
पश्यतः सततं पाण्डोः शश्वत्प्रीतिरवर्धत २६
वर्तमानः सतां वृत्ते पुत्रलाभमवाप्य च
पितृलोकं गतः पाण्डुरितः सप्तदशेऽहनि २७
तं चितागतमाज्ञाय वैश्वानरमुखे हुतम्
प्रविष्टा पावकं माद्री हित्वा जीवितमात्मनः २८
सा गता सह तेनैव पतिलोकमनुव्रता
तस्यास्तस्य च यत्कार्यं क्रियतां तदनन्तरम् २९
इमे तयोः शरीरे द्वे सुताश्चेमे तयोर्वराः
क्रियाभिरनुगृह्यन्तां सह मात्रा परन्तपाः ३०
प्रेतकार्ये च निर्वृत्ते पितृमेधं महायशाः
लभतां सर्वधर्मज्ञः पाण्डुः कुरुकुलोद्वहः ३१
एवमुक्त्वा कुरून्सर्वान्कुरूणामेव पश्यताम्
क्षणेनान्तर्हिताः सर्वे चारणा गुह्यकैः सह ३२
गन्धर्वनगराकारं तत्रैवान्तर्हितं पुनः
ऋषिसिद्धगणं दृष्ट्वा विस्मयं ते परं ययुः ३३
इति श्रीमहाभारते आदिपर्वणि सप्तदशाधिकशततमोऽध्यायः ११७

## अष्टादशाधिकशततमोऽध्यायः

धृतराष्ट्र उवाच

पाण्डोर्विदुर सर्वाणि प्रेतकार्याणि कारय
राजवद्राजसिंहस्य माद्र्याश्चैव विशेषतः १
पशून्वासांसि रत्नानि धनानि विविधानि च
पाण्डोः प्रयच्छ माद्र्याश्च येभ्यो यावच्च वाञ्छितम् २
यथा च कुन्ती सत्कारं कुर्यान्माद्र्यास्तथा कुरु
यथा न वायुर्नादित्यः पश्येतां तां सुसंवृताम् ३
नः शोच्यः पाण्डुरनघः प्रशस्यः स नराधिपः
यस्य पञ्च सुता वीरा जाताः सुरसुतोपमाः ४
वैशम्पायन उवाच
विदुरस्तं तथेत्युक्त्वा भीष्मेण सह भारत
पाण्डुं संस्कारयामास देशे परमसंवृते ५
ततस्तु नगरात्तूर्णमाज्यहोमपुरस्कृताः
निर्हृताः पावका दीप्ताः पाण्डो राजन्पुरोहितैः ६
अथैनमार्तवैर्गन्धैर्माल्यैश्च विविधैर्वरैः
शिबिकां समलंचक्रुर्वाससाच्छाद्य सर्वशः ७
तां तथा शोभितां माल्यैर्वासोभिश्च महाधनैः
अमात्या ज्ञातयश्चैव सुहृदश्चोपतस्थिरे ८
नृसिंहं नरयुक्तेन परमालंकृतेन तम्
अवहन्यानमुख्येन सह माद्र्या सुसंवृतम् ९
पाण्डुरेणातपत्रेण चामरव्यजनेन च
सर्ववादित्रनादैश्च समलंचक्रिरे ततः १०
रत्नानि चाप्युपादाय बहूनि शतशो नराः
प्रददुः काङ्क्षमाणेभ्यः पाण्डोस्तत्रौर्ध्वदेहिकम् ११
अथ छत्राणि शुभ्राणि पाण्डुराणि बृहन्ति च
आजह्रुः कौरवस्यार्थे वासांसि रुचिराणि च १२
याजकैः शुक्लवासोभिर्हूयमाना हुताशनाः
अगच्छन्नग्रतस्तस्य दीप्यमानाः स्वलंकृताः १३
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव सहस्रशः
रुदन्तः शोकसंतप्ता अनुजग्मुर्नराधिपम् १४
अयमस्मानपाहाय दुःखे चाधाय शाश्वते

कृत्वा नाथान्परोनाथः क्वयास्यति नराधिपः १५
क्रोशन्तः पाराडवाः सर्वे भीष्मो विदुर एव च
रमणीये वनोद्देशे गङ्गातीरे समे शुभे १६
न्यासयामासुरथ तां शिबिकां सत्यवादिनः
सभार्यस्य नृसिंहस्य पाराडोरक्लिष्टकर्मणः १७
ततस्तस्य शरीरं तत्सर्वगन्धनिषेवितम्
शुचिकालीयकादिग्धं मुख्यस्नानाधिवासितम्
पर्यषिञ्चञ्जलेनाशु शातकुम्भमयैर्घटैः १८
चन्दनेन च मुख्येन शुक्लेन समलेपयन्
कालागुरुविमिश्रेण तथा तुङ्गरसेन च १९
अथैनं देशजैः शुक्लैर्वासोभिः समयोजयन्
आच्छन्नः स तु वासोभिर्जीवन्निव नरर्षभः
शुशुभे पुरुषव्याघ्रो महार्हशयनोचियः २०
याजकैरभ्यनुज्ञातं प्रेतकर्मणि निष्ठितैः
घृतावसिक्तं राजानं सह माद्र्या स्वलंकृतम् २१
तुङ्गपद्मकमिश्रेण चन्दनेन सुगन्धिना
अन्यैश्च विविधैर्गन्धैरनल्पैः समदाहयन् २२
ततस्तयोः शरीरे ते दृष्ट्वा मोहवशं गता
हा हा पुत्रेति कौसल्या पपात सहसा भुवि २३
तां प्रेक्ष्य पतितामार्तां पौरजानपदो जनः
रुरोद सस्वनं सर्वो राजभक्त्या कृपान्वितः २४
क्लान्तानीवार्तनादेन सर्वाणि च विचुक्रुशुः
मानुषैः सह भूतानि तिर्यग्योनिगतान्यपि २५
तथा भीष्मः शान्तनवो विदुरश्च महामतिः
सर्वशः कौरवाश्चैव प्राणदन्भृशदुःखिताः २६
ततो भीष्मोऽथ विदुरो राजा च सह बन्धुभिः
उदकं चक्रिरे तस्य सर्वाश्च कुरुयोषितः २७
कृतोदकांस्तानादाय पाराडवाञ्शोककर्शितान्
सर्वाः प्रकृतयो राजञ्शोचन्त्यः पर्यवारयन् २८
यथैव पाराडवा भूमौ सुषुपुः सह बान्धवैः

तथैव नागरा राजञ्शिश्यिरे ब्राह्मणादयः २९
तदनानन्दमस्वस्थमाकुमारमहृष्टवत्
बभूव पाण्डवैः सार्धं नगरं द्वादश क्षपाः ३०
इति श्रीमहाभारते आदिपर्वणि अष्टादशाधिकशततमोऽध्यायः ११८

## एकोनविंशत्यधिक शततमोऽध्यायः

वैशम्पायन उवाच
ततः क्षत्ता च राजा च भीष्मश्च सह बन्धुभिः
ददुः श्राद्धं तदा पाण्डोः स्वधामृतमयं तदा १
कुरूंश्च विप्रमुख्यांश्च भोजयित्वा सहस्रशः
रत्नौघान्द्विजमुख्येभ्यो दत्वा ग्रामवरानपि २
कृतशौचांस्ततस्तांस्तु पाण्डवान्भरतर्षभान्
आदाय विविशुः पौराः पुरं वारणसाह्वयम् ३
सततं स्मान्वतप्यन्त तमेव भरतर्षभम्
पौरजानपदाः सर्वे मृतं स्वमिव बान्धवम् ४
श्राद्धावसाने तु तदा दृष्ट्वा तं दुःखितं जनम्
संमूढां दुःखशोकार्तां व्यासो मातरमब्रवीत् ५
अतिक्रान्तसुखाः कालाः प्रत्युपस्थितदारुणाः
श्वः श्वः पापीयदिवसाः पृथिवी गतयौवना ६
बहुमायासमाकीर्णो नानादोषसमाकुलः
लुप्तधर्मक्रियाचारो घोरः कालो भविष्यति ७
गच्छ त्वं त्यागमास्थाय युक्ता वस तपोवने
मा द्रक्ष्यसि कुलस्यास्य घोरं संक्षयमात्मनः ८
तथेति समनुज्ञाय सा प्रविश्याब्रवीत्स्नुषाम्
अम्बिके तव पुत्रस्य दुर्नयात्किल भारताः
सानुबन्धा विनङ्क्ष्यन्ति पौत्राश्चैवेति नः श्रुतम् ९
तत्कौसल्यामिमामार्तां पुत्रशोकाभिपीडिताम्
वनमादाय भद्रं ते गच्छावो यदि मन्यसे १०
तथेत्युक्ते अम्बिकया भीष्ममामन्त्र्य सुव्रता
वनं ययौ सत्यवती स्नुषाभ्यां सह भारत ११

ताः सुघोरं तपः कृत्वा देव्यो भरतसत्तम
देहं त्यक्त्वा महाराज गतिमिष्टां ययुस्तदा १२
अवाप्नुवन्त वेदोक्तान्संस्कारान्पाण्डवास्तदा
अवर्धन्त च भोगांस्ते भुञ्जानाः पितृवेश्मनि १३
धार्तराष्ट्रैश्च सहिताः क्रीडन्तः पितृवेश्मनि
बालक्रीडासु सर्वासु विशिष्टाः पाण्डवाभवन् १४
जवे लक्ष्याभिहरणे भोज्ये पांसुविकर्षणे
धार्तराष्ट्रान्भीमसेनः सर्वान्स परिमर्दति १५
हर्षादेतान्क्रीडमानाग्गृह्य काकनिलीयने
शिरःसु च निगृह्यैनान्योधयामास पाण्डवः १६
शतमेकोत्तरं तेषां कुमाराणां महौजसाम्
एक एव विमृद्नाति नातिकृच्छ्राद्वृकोदरः १७
पादेषु च निगृह्यैनान्विनिहत्य बलाद्बली
चकर्ष क्रोशतो भूमौ घृष्टजानुशिरोक्षिकान् १८
दश बालाञ्जले क्रीडन्भुजाभ्यां परिगृह्य सः
आस्ते स्म सलिले मग्नः प्रमृतांश्च विमुञ्चति १९
फलानि वृक्षमारुह्य प्रचिन्वन्ति च ते यदा
तदा पादप्रहारेण भीमः कम्पयते द्रुमम् २०
प्रहारवेगाभिहताद्द्रुमाद्व्याघूर्णितास्ततः
सफलाः प्रपतन्ति स्म द्रुतं स्रस्ताः कुमारकाः २१
न ते नियुद्धे न जवे न योग्यासु कदाचन
कुमारा उत्तरं चक्रुः स्पर्धमाना वृकोदरम् २२
एवं स धार्तराष्ट्राणां स्पर्धमानो वृकोदरः
अप्रियेऽतिष्ठदत्यन्तं बाल्यान्न द्रोहचेतसा २३
ततो बलमतिख्यातं धार्तराष्ट्रः प्रतापवान्
भीमसेनस्य तज्ज्ञात्वा दुष्टभावमदर्शयत् २४
तस्य धर्मादपेतस्य पापानि परिपश्यतः
मोहादैश्वर्यलोभाच्च पापा मतिरजायत २५
अयं बलवतां श्रेष्ठः कुन्तीपुत्रो वृकोदरः
मध्यमः पाण्डुपुत्राणां निकृत्या संनिहन्यताम् २६

अथ तस्मादवरजं ज्येष्ठं चैव युधिष्ठिरम्
प्रसह्य बन्धने बद्ध्वा प्रशासिष्ये वसुन्धराम् २७
एवं स निश्चयं पापः कृत्वा दुर्योधनस्तदा
नित्यमेवान्तरप्रेक्षी भीमस्यासीन्महात्मनः २८
ततो जलविहारार्थं कारयामास भारत
चेलकम्बलवेश्मानि विचित्राणि महान्ति च २९
प्रमाणकोट्यामुद्देशं स्थलं किंचिदुपेत्य च
क्रीडावसाने सर्वे ते शुचिवस्त्राः स्वलंकृताः
सर्वकामसमृद्धं तदन्नंबुभुजिरे शनैः ३०
दिवसान्ते परिश्रान्ता विहृत्य च कुरूद्वहाः
विहारावसथेष्वेव वीरा वासमरोचयन् ३१
खिन्नस्तु बलवान्भीमो व्यायामाभ्यधिकस्तदा
वाहयित्वा कुमारांस्ताञ्जलक्रीडागतान्विभुः
प्रमाणकोट्यां वासार्थी सुष्वापारुह्य तत्स्थलम् ३२
शीतं वासं समासाद्य श्रान्तो मदविमोहितः
निश्चेष्टः पाण्डवो राजन्सुष्वाप मृतकल्पवत् ३३
ततो बद्ध्वा लतापाशैर्भीमं दुर्योधनः शनैः
गम्भीरं भीमवेगं च स्थलाज्जलमपातयत्  ३४
ततः प्रबुद्धः कौन्तेयः सर्वं संछिद्य बन्धनम्
उदतिष्ठज्जलाद्भूयो भीमः प्रहरतां वरः ३५
सुप्तं चापि पुनः सर्पैस्तीक्ष्णदंष्ट्रैर्महाविषैः
कुपितैर्दंशयामास सर्वेष्वेवाङ्गमर्मसु ३६
दंष्ट्राश्च दंष्ट्रिणां तेषां मर्मस्वपि निपातिताः
त्वचं नैवास्य बिभिदुः सारत्वात्पृथुवक्षसः ३७
प्रतिबुद्धस्तु भीमस्तान्सर्वान्सर्पानपोथयत्
सारथिं चास्य दयितमपहस्तेन जघ्निवान् ३८
भोजने भीमसेनस्य पुनः प्राक्षेपयद्विषम्
कालकूटं नवं तीक्ष्णं संभृतं लोमहर्षणम् ३९
वैश्यापुत्रस्तदाचष्ट पार्थानां हितकाम्यया
तच्चापि मुक्त्वाजरयदविकारो वृकोदरः ४०

विकारं न ह्यजनयत्सुतीक्ष्णमपि तद्विषम्
भीमसंहननो भीमस्तदप्यजरयत्ततः ४१
एवं दुर्योधनः कर्णः शकुनिश्चापि सौबलः
अनेकैरभ्युपायैस्ताञ्जिघांसन्ति स्म पाण्डवान् ४२
पाण्डवाश्चापि तत्सर्वं प्रत्यजानन्नरिंदमाः
उद्भावनमकुर्वन्तो विदुरस्य मते स्थिताः ४३
इति श्रीमहाभारते आदिपर्वणि एकोनविंशत्यधिकशततमोऽध्यायः ११९

## विंशत्यधिक शततमोऽध्यायः

जनमेजय उवाच
कृपस्यापि महाब्रह्मन्संभवं वक्तुमर्हसि
शरस्तम्बात्कथं जज्ञे कथं चास्त्राण्यवाप्तवान् १
वैशम्पायन उवाच
महर्षेर्गौतमस्यासीच्छरद्वान्नाम नामतः
पुत्रः किल महाराज जातः सह शरैर्विभो २
न तस्य वेदाध्ययने तथा बुद्धिरजायत
यथास्य बुद्धिरभवद्धनुर्वेदे परंतप ३
अधिजग्मुर्यथा वेदांस्तपसा ब्रह्मवादिनः
तथा स तपसोपेतः सर्वाण्यस्त्राण्यवाप ह ४
धनुर्वेदपरत्वाच्च तपसा विपुलेन च
भृशं संतापयामास देवराजं स गौतमः ५
ततो जालपदीं नाम देवकन्यां सुरेश्वरः
प्राहिणोत्तपसो विघ्नं कुरु तस्येति कौरव ६
साभिगम्याश्रमपदं रमणीयं शरद्वतः
धनुर्बाणधरं बाला लोभयामास गौतमम् ७
तामेकवसनां दृष्ट्वा गौतमोऽप्सरसं वने
लोकेऽप्रतिमसंस्थानामुत्फुल्लनयनोऽभवत् ८
धनुश्च हि शराश्चास्य कराभ्यां प्रापतन्भुवि
वेपथुश्चास्य तां दृष्ट्वा शरीरे समजायत ९
स तु ज्ञानगरीयत्वात्तपसश्च समन्वयात्

अवतस्थे महाप्राज्ञो धैर्येण परमेण ह १०
यस्त्वस्य सहसा राजन्विकारः समपद्यत
तेन सुस्राव रेतोऽस्य स च तन्नावबुध्यत ११
स विहायाश्रमं तं च तां चैवाप्सरसं मुनिः
जगाम रेतस्तत्तस्य शरस्तम्बे पपात ह १२
शरस्तम्बे च पतितं द्विधा तदभवन्नृप
तस्याथ मिथुनं जज्ञे गौतमस्य शरद्वतः १३
मृगयां चरतो राज्ञः शंतनोस्तु यदृच्छया
कश्चित्सेनाचरोऽरण्ये मिथुनं तदपश्यत १४
धनुश्च सशरं दृष्ट्वा तथा कृष्णाजिनानि च
व्यवस्य ब्राह्मणापत्यं धनुर्वेदान्तगस्य तत्
स राज्ञे दर्शयामास मिथुनं सशरं तदा १५
स तदादाय मिथुनं राजाथ कृपयान्वितः
आजगाम गृहानेव मम पुत्राविति ब्रुवन् १६
ततः संवर्धयामास संस्कारैश्चाप्ययोजयत्
गौतमोऽपि तदापेत्य धनुर्वेदपरोऽभवत् १७
कृपया यन्मया बालाविमौ संवर्धिताविति
तस्मात्तयोर्नाम चक्रे तदेव स महीपतिः १८
निहितौ गौतमस्तत्र तपसा तावविन्दत
आगम्य चास्मै गोत्रादि सर्वमाख्यातवांस्तदा १९
चतुर्विधं धनुर्वेदमस्त्राणि विविधानि च
निखिलेनास्य तत्सर्वं गुह्यमाख्यातवांस्तदा
सोऽचिरेणैव कालेन परमाचार्यतां गतः २०
ततोऽधिजग्मुः सर्वे ते धनुर्वेदं महारथाः
धृतराष्ट्रात्मजाश्चैव पाण्डवाश्च महाबलाः
वृष्णयश्च नृपाश्चान्ये नानादेशसमागताः २१
इति श्रीमहाभारते आदिपर्वणि विंशत्यधिकशततमोऽध्यायः १२०

एकविंशत्यधिक शततमोऽध्यायः

वैशम्पायन उवाच

विशेषार्थी ततो भीष्मः पौत्राणां विनयेप्सया
इष्वस्त्रज्ञान्पर्यपृच्छदाचार्यान्वीर्यसंमतान् १
नाल्पधीर्नामहाभागस्तथानानास्त्रकोविदः
नादेवसत्त्वो विनयेत्कुरूनस्त्रे महाबलान् २
महर्षिस्तु भरद्वाजो हविर्धाने चरन्पुरा
ददर्शाप्सरसं साक्षाद्घृताचीमाप्लुतामृषिः ३
तस्या वायुः समुद्धूतो वसनं व्यपकर्षत
ततोऽस्य रेतश्चस्कन्द तदृषिर्द्रोण आदधे ४
तस्मिन्समभवद्द्रोणः कलशे तस्य धीमतः
अध्यगीष्ट स वेदांश्च वेदाङ्गानि च सर्वशः ५
अग्निवेश्यं महाभागं भरद्वाजः प्रतापवान्
प्रत्यपादयदाग्नेयमस्त्रं धर्मभृतां वरः ६
अग्निष्टुज्जातः स मुनिस्ततो भरतसत्तम
भारद्वाजं तदाग्नेयं महास्त्रं प्रत्यपादयत् ७
भरद्वाजसखा चासीत्पृषतो नाम पार्थिवः
तस्यापि द्रुपदो नाम तदा समभवत्सुतः ८
स नित्यमाश्रमं गत्वा द्रोणेन सह पार्षतः
चिक्रीडाध्ययनं चैव चकार क्षत्रियर्षभः ९
ततो व्यतीते पृषते स राजा द्रुपदोऽभवत्
पाञ्चालेषु महाबाहुरुत्तरेषु नरेश्वरः १०
भरद्वाजोऽपि भगवानारुरोह दिवं तदा
ततः पितृनियुक्तात्मा पुत्रलोभान्महायशाः
शारद्वतीं ततो द्रोणः कृपीं भार्यामविन्दत ११
अग्निहोत्रे च धर्मे च दमे च सततं रता
अलभद्गौतमी पुत्रमश्वत्थामानमेव च १२
स जातमात्रो व्यनदद्यथैवोच्चैःश्रवा हयः
तच्छ्रुत्वान्तर्हितं भूतमन्तरिक्षस्थमब्रवीत् १३
अश्वस्येवास्य यत्स्थाम नदतः प्रदिशो गतम्
अश्वत्थामैव बालोऽय तस्मान्नाम्ना भविष्यति १४
सुतेन तेन सुप्रीतो भारद्वाजस्ततोऽभवत्

तत्रैव च वसन्धीमान्धनुर्वेदपरोऽभवत् १५
स शुश्राव महात्मानं जामदग्न्यं परंतपम्
ब्राह्मणेभ्यस्तदा राजन्दित्सन्तं वसु सर्वशः १६
वनं तु प्रस्थितं रामं भारद्वाजस्तदाब्रवीत्
आगतं वित्तकामं मां विद्धि द्रोणं द्विजर्षभम् १७
राम उवाच
हिरण्यं मम यच्चान्यद्वसु किंचन विद्यते
ब्राह्मणेभ्यो मया दत्तं सर्वमेव तपोधन १८
तथैवेयं धरा देवी सागरान्ता सपत्तना
कश्यपाय मया दत्ता कृत्स्ना नगरमालिनी १९
शरीरमात्रमेवाद्य मयेदमवशेषितम्
अस्त्राणि च महार्हाणि शस्त्राणि विविधानि च
वृणीष्व किं प्रयच्छामि तुभ्यं द्रोणं वदाशु तत् २०
द्रोण उवाच
अस्त्राणि मे समग्राणि ससंहाराणि भार्गव
सप्रयोगरहस्यानि दातुमर्हस्यशेषतः २१
वैशम्पायन उवाच
तथेत्युक्त्वा ततस्तस्मै प्रादादस्त्राणि भार्गवः
सरहस्यव्रतं चैव धनुर्वेदमशेषतः २२
प्रतिगृह्य तु तत्सर्वं कृतास्त्रो द्विजसत्तमः
प्रियं सखायं सुप्रीतो जगाम द्रुपदं प्रति २३

इति श्रीमहाभारते आदिपर्वणि एकविंशत्यधिकशततमोऽध्यायः १२१

## द्वाविंशत्यधिक शततमोऽध्यायः

वैशम्पायन उवाच
ततो द्रुपदमासाद्य भारद्वाजः प्रतापवान्
अब्रवीत्पार्षतं राजन्सखायं विद्धि मामिति १
द्रुपद उवाच
अकृतेयं तव प्रज्ञा ब्रह्मन्नातिसमञ्जसी
यन्मां ब्रवीषि प्रसभं सखा तेऽहमिति द्विज २

न हि राज्ञामुदीर्णानामेवंभूतैर्नरैः क्वचित्
सख्यं भवति मन्दात्मञ्श्रिया हीनैर्धनच्युतैः ३
सौहृदान्यपि जीर्यन्ते कालेन परिजीर्यताम्
सौहृदं मे त्वया ह्यासीत्पूर्वं सामर्थ्यबन्धनम् ४
न सख्यमजरं लोके जातु दृश्येत कर्हिचित्
कामो वैनं विहरति क्रोधश्चैनं प्रवृश्चति ५
मैवं जीर्णमुपासिष्ठाः सख्यं नवमुपाकुरु
आसीत्सख्यं द्विजश्रेष्ठ त्वया मेऽथनिबन्धनम् ६
न दरिद्रो वसुमतो नाविद्वान्विदुषः सखा
शूरस्य न सखा क्लीबः सखिपूर्वं किमिष्यते ७
ययोरेव समं वित्तं ययोरेव समं कुलम्
तयोः सख्यं विवाहश्च न तु पुष्टविपुष्टयोः ८
नाश्रोत्रियः श्रोत्रियस्य नारथी रथिनः सखा
नाराज्ञा संगतं राज्ञः सखिपूर्वं किमिष्यते ९
वैशम्पायन उवाच
द्रुपदेनैवमुक्तस्तु भारद्वाजः प्रतापवान्
मुहूर्तं चिन्तयामास मन्युनाभिपरिप्लुतः १०
स विनिश्चित्य मनसा पाञ्चालं प्रति बुद्धिमान्
जगाम कुरुमुख्यानां नगरं नागसाह्वयम् ११
कुमारास्त्वथ निष्क्रम्य समेता गजसाह्वयात्
क्रीडन्तो वीटया तत्र वीराः पर्यचरन्मुदा १२
पपात कूपे सा वीटा तेषां वै क्रीडतां तदा
न च ते प्रत्यपद्यन्त कर्म वीटोपलब्धये १३
अथ द्रोणः कुमारांस्तान्दृष्ट्वा कृत्यवतस्तदा
प्रहस्य मन्दं पैशल्यादभ्यभाषत वीर्यवान् १४
अहो नु धिग्बलं क्षात्रं धिगेतां वः कृतास्त्रताम्
भरतस्यान्वये जाता ये वीटां नाधिगच्छत १५
एष मुष्टिरिषीकाणां मयास्त्रेणाभिमन्त्रितः
अस्य वीर्यं निरीक्षध्वं यदन्यस्य न विद्यते १६
वेत्स्यामीषीकया वीटां तामिषीकामथान्यया

तामन्यया समायोगो वीटाया ग्रहणे मम १७
तदपश्यन्कुमारास्ते विस्मयोत्फुल्ललोचनाः
अवेक्ष्य चोद्धृतां वीटां वीटावेद्धारमब्रुवन् १८
अभिवादयामहे ब्रह्मन्नैतदन्येषु विद्यते
कोऽसि कं त्वाभिजानीमो वयं किं करवामहे १९
द्रोण उवाच
आचक्षध्वं च भीष्माय रूपेण च गुणैश्च माम्
स एव सुमहाबुद्धिः सांप्रतं प्रतिपत्स्यते २०
वैशम्पायन उवाच
तथेत्युक्त्वा तु ते सर्वे भीष्ममूचुः पितामहम्
ब्राह्मणस्य वचस्तथ्यं तच्च कर्म विशेषवत् २१
भीष्मः श्रुत्वा कुमाराणां द्रोणं तं प्रत्यजानत
युक्तरूपः स हि गुरुरित्येवमनुचिन्त्य च २२
अथैनमानीय तदा स्वयमेव सुसत्कृतम्
परिपप्रच्छ निपुणं भीष्मः शस्त्रभृतां वरः
हेतुमागमने तस्य द्रोणः सर्वं न्यवेदयत् २३
महर्षेरग्निवेश्यस्य सकाशमहमच्युत
अस्त्रार्थमगमं पूर्वं धनुर्वेदजिघृक्षया २४
ब्रह्मचारी विनीतात्मा जटिलो बहुलाः समाः
अवसं तत्र सुचिरं धनुर्वेदचिकीर्षया २५
पाञ्चालराजपुत्रस्तु यज्ञसेनो महाबलः
मया सहाकरोद्विद्यां गुरोः श्राम्यन्समाहितः २६
स मे तत्र सखा चासीदुपकारी प्रियश्च मे
तेनाहं सह संगम्य रतवान्सुचिरं बत
बाल्यात्प्रभृति कौरव्य सहाध्ययनमेव च २७
स समासाद्य मां तत्र प्रियवादी प्रियंवदः
अब्रवीदिति मां भीष्म वचनं प्रीतिवर्धनम् २८
अहं प्रियतमः पुत्रः पितुर्द्रोण महात्मनः
अभिषेक्ष्यति मां राज्ये स पाञ्चाल्यो यदा तदा २९
त्वद्भोज्यं भविता राज्यं सखे सत्येन ते शपे

मम भोगाश्च वित्तं च त्वदधीनं सुखानि च ३०
एवमुक्तः प्रवव्राज कृतास्त्रोऽह धनेप्सया
अभिषिक्तं च श्रुत्वैनं कृतार्थोऽस्मीति चिन्तयन् ३१
प्रियं सखायं सुप्रीतो राज्यस्थं पुनराव्रजम्
संस्मरन्संगमं चैव वचनं चैव तस्य तत् ३२
ततो द्रुपदमागम्य सखिपूर्वमहं प्रभो
अब्रुवं पुरुषव्याघ्र सखायं विद्धि मामिति ३३
उपस्थितं तु द्रुपदः सखिवच्चाभिसंगतम्
स मां निराकारमिव प्रहसन्निदमब्रवीत् ३४
अकृतेयं तव प्रज्ञा ब्रह्मन्नातिसमञ्जसी
यदात्थ मां त्वं प्रसभं सखा तेऽहमिति द्विज ३५
न हि राज्ञामुदीर्णानामेवंभूतैर्नरैः क्वचित्
सख्यं भवति मन्दात्मञ्श्रिया हीनैर्धनच्युतैः ३६
नाश्रोत्रियः श्रोत्रियस्य नारथी रथिनः सखा
नाराजा पार्थिवस्यापि सखिपूर्वं किमिष्यते ३७
द्रुपदेनैवमुक्तोऽह मन्युनाभिपरिप्लुतः
अभ्यागच्छं कुरून्भीष्म शिष्यैरर्थी गुणान्वितैः ३८
प्रतिजग्राह तं भीष्मो गुरुं पाण्डुसुतैः सह
पौत्रानादाय तान्सर्वान्वसूनि विविधानि च ३९
शिष्या इति ददौ राजन्द्रोणाय विधिपूर्वकम्
स च शिष्यान्महेष्वासः प्रतिजग्राह कौरवान् ४०
प्रतिगृह्य च तान्सर्वान्द्रोणो वचनमब्रवीत्
रहस्येकः प्रतीतात्मा कृतोपसदनांस्तदा ४१
कार्यं मे काङ्क्षितं किंचिद्धृदि संपरिवर्तते
कृतास्त्रैस्तत्प्रदेयं मे तदृतं वदतानघाः ४२
तच्छ्रुत्वा कौरवेयास्ते तूष्णीमासन्विशां पते
अर्जुनस्तु ततः सर्वं प्रतिजज्ञे परंतपः ४३
ततोऽर्जुनं मूर्ध्नि तदा समाघ्राय पुनः पुनः
प्रीतिपूर्वं परिष्वज्य प्ररुरोद मुदा तदा ४४
ततो द्रोणः पाण्डुपुत्रानस्त्राणि विविधानि च

ग्राहयामास दिव्यानि मानुषाणि च वीर्यवान् ४५
राजपुत्रास्तथैवान्ये समेत्य भरतर्षभ
अभिजग्मुस्ततो द्रोणमस्त्रार्थे द्विजसत्तमम्
वृष्णयश्चान्धकाश्चैव नानादेश्याश्च पार्थिवाः ४६
सूतपुत्रश्च राधेयो गुरुं द्रोणमियात्तदा
स्पर्धमानस्तु पार्थेन सूतपुत्रोऽत्यमर्षणः
दुर्योधनमुपाश्रित्य पाण्डवानत्यमन्यत ४७
इति श्रीमहाभारते आदिपर्वणि द्वाविंशत्यधिकशततमोऽध्यायः १२२

## त्रयोविंशत्यधिकशततमोऽध्यायः

वैशम्पायन उवाच
अर्जुनस्तु परं यत्नमातस्थे गुरुपूजने
अस्त्रे च परमं योगं प्रियो द्रोणस्य चाभवत् १
द्रोणेन तु तदाहूय रहस्युक्तोऽन्नसाधकः
अन्धकारेऽर्जुनायान्नं न देयं ते कथंचन २
ततः कदाचिद्भुञ्जाने प्रववौ वायुरर्जुने
तेन तत्र प्रदीपः स दीप्यमानो निवापितः ३
भुङ्क्त एवार्जुनो भक्तं न चास्यास्याद्व्यमुह्यत
हस्तस्तेजस्विनो नित्यमन्नग्रहणकारणात्
तदभ्यासकृतं मत्वा रात्रावभ्यस्त पाण्डवः ४
तस्य ज्यातलनिर्घोषं द्रोणः शुश्राव भारत
उपेत्य चैनमुत्थाय परिष्वज्येदमब्रवीत् ५
प्रयतिष्ये तथा कर्तुं यथा नान्यो धनुर्धरः
त्वत्समो भविता लोके सत्यमेतद्ब्रवीमि ते ६
ततो द्रोणोऽर्जुनं भूयो रथेषु च गजेषु च
अश्वेषु भूमावपि च रणशिक्षामशिक्षयत् ७
गदायुद्धेऽसिचर्यायां तोमरप्रासशक्तिषु
द्रोणः संकीर्णयुद्धेषु शिक्षयामास पाण्डवम् ८
तस्य तत्कौशलं दृष्ट्वा धनुर्वेदजिघृक्षवः
राजानो राजपुत्राश्च समाजग्मुः सहस्रशः ९

ततो निषादराजस्य हिरण्यधनुषः सुतः
एकलव्यो महाराज द्रोणमभ्याजगाम ह १०
न स तं प्रतिजग्राह नैषादिरिति चिन्तयन्
शिष्यं धनुषि धर्मज्ञस्तेषामेवान्ववेक्षया ११
स तु द्रोणस्य शिरसा पादौ गृह्य परंतपः
अरण्यमनुसंप्राप्तः कृत्वा द्रोणं महीमयम् १२
तस्मिन्नाचार्यवृत्तिं च परमामास्थितस्तदा
इष्वस्त्रे योगमातस्थे परं नियममास्थितः १३
परया श्रद्धया युक्तो योगेन परमेण च
विमोक्षादानसंधाने लघुत्वं परमाप सः १४
अथ द्रोणाभ्यनुज्ञाताः कदाचित्कुरुपाण्डवाः
रथैर्विनिर्ययुः सर्वे मृगयामरिमर्दनाः १५
तत्रोपकरणं गृह्य नरः कश्चिद्यदृच्छया
राजन्ननुजगामैकः श्वानमादाय पाण्डवान् १६
तेषां विचरतां तत्र तत्तत्कर्म चिकीर्षताम्
श्वा चरन्स वने मूढो नैषादिं प्रति जग्मिवान् १७
स कृष्णं मलदिग्धाङ्गं कृष्णाजिनधरं वने
नैषादिं श्वा समालक्ष्य भषंस्तस्थौ तदन्तिके १८
तदा तस्याथ भषतः शुनः सप्त शरान्मुखे
लाघवं दर्शयन्नस्त्रे मुमोच युगपद्यथा १९
स तु श्वा शरपूर्णास्यः पाण्डवानाजगाम ह
तं दृष्ट्वा पाण्डवा वीरा विस्मयं परमं ययुः २०
लाघवं शब्दवेधित्वं दृष्ट्वा तत्परमं तदा
प्रेक्ष्य तं व्रीडिताश्चासन्प्रशशंसुश्च सर्वशः २१
तं ततोऽन्वेषमाणास्ते वने वननिवासिनम्
ददृशुः पाण्डवा राजन्नस्यन्तमनिशं शरान् २२
न चैनमभिजानंस्ते तदा विकृतदर्शनम्
अथैनं परिपप्रच्छुः को भवान्कस्य वेत्युत २३
एकलव्य उवाच
निषादाधिपतेर्वीरा हिरण्यधनुषः सुतम्

द्रोणशिष्यं च मां वित्त धनुर्वेदकृतश्रमम् २४
वैशम्पायन उवाच
ते तमाज्ञाय तत्त्वेन पुनरागम्य पाण्डवाः
यथावृत्तं च ते सर्वं द्रोणायाचख्युरद्भुतम् २५
कौन्तेयस्त्वर्जुनो राजन्नेकलव्यमनुस्मरन्
रहो द्रोणं समागम्य प्रणयादिदमब्रवीत् २६
नन्वहं परिरभ्यैकः प्रीतिपूर्वमिदं वचः
भवतोक्तो न मे शिष्यस्त्वद्विशिष्टो भविष्यति २७
अथ कस्मान्मद्विशिष्टो लोकादपि च वीर्यवान्
अस्त्यन्यो भवतः शिष्यो निषादाधिपतेः सुतः २८
मुहूर्तमिव तं द्रोणश्चिन्तयित्वा विनिश्चयम्
सव्यसाचिनमादाय नैषादिं प्रति जग्मिवान् २९
ददर्श मलदिग्धाङ्गं जटिलं चीरवाससम्
एकलव्यं धनुष्पाणिमस्यन्तमनिशं शरान् ३०
एकलव्यस्तु तं दृष्ट्वा द्रोणमायान्तमन्तिकात्
अभिगम्योपसंगृह्य जगाम शिरसा महीम् ३१
पूजयित्वा ततो द्रोणं विधिवत्स निषादजः
निवेद्य शिष्यमात्मानं तस्थौ प्राञ्जलिरग्रतः ३२
ततो द्रोणोऽब्रवीद्राजन्नेकलव्यमिदं वचः
यदि शिष्योऽसि मे तूर्णं वेतनं संप्रदीयताम् ३३
एकलव्यस्तु तच्छ्रुत्वा प्रीतमाणोऽब्रवीदिदम्
किं प्रयच्छामि भगवन्नाज्ञापयतु मां गुरुः ३४
न हि किंचिददेयं मे गुरवे ब्रह्मवित्तम
तमब्रवीत्त्वयाङ्गुष्ठो दक्षिणो दीयतां मम ३५
एकलव्यस्तु तच्छ्रुत्वा वचो द्रोणस्य दारुणम्
प्रतिज्ञामात्मनो रक्षन्सत्ये च निरतः सदा ३६
तथैव हृष्टवदनस्तथैवादीनमानसः
छित्त्वाविचार्य तं प्रादाद्द्रोणायाङ्गुष्ठमात्मनः ३७
ततः परं तु नैषादिरङ्गुलीभिर्व्यकर्षत
न तथा स तु शीघ्रोऽभूद्यथा पूर्वं नराधिप ३८

ततोऽजुनः प्रीतमना बभूव विगतज्वरः
द्रोणश्च सत्यवागासीन्नान्योऽभ्यभवदर्जुनम् ३९
द्रोणस्य तु तदा शिष्यौ गदायोग्यां विशेषतः
दुर्योधनश्च भीमश्च कुरूणामभ्यगच्छताम् ४०
अश्वत्थामा रहस्येषु सर्वेष्वभ्यधिकोऽभवत्
तथाति पुरुषानन्यान्त्सारुकौ यमजावुभौ
युधिष्ठिरो रथश्रेष्ठः सर्वत्र तु धनञ्जयः ४१
प्रथितः सागरान्तायां रथयूथपयूथपः
बुद्धियोगबलोत्साहैः सर्वास्त्रेषु च पाण्डवः ४२
अस्त्रे गुर्वनुरागे च विशिष्टोऽभवदर्जुनः
तुल्येष्वस्त्रोपदेशेषु सौष्ठवेन च वीर्यवान्
एकः सर्वकुमाराणां बभूवातिरथोऽजुनः ४३
प्राणाधिकं भीमसेनं कृतविद्यं धनञ्जयम्
धार्तराष्ट्रा दुरात्मानो नाऽमृष्यन्त नराधिप ४४
तांस्तु सर्वान्समानीय सर्वविद्यासु निष्ठितान्
द्रोणः प्रहरणज्ञाने जिज्ञासुः पुरुषर्षभ ४५
कृत्रिमं भासमारोप्य वृक्षाग्रे शिल्पिभिः कृतम्
अविज्ञातं कुमाराणां लक्ष्यभूतमुपादिशत् ४६
द्रोण उवाच
शीघ्रं भवन्तः सर्वे वै धनूंष्यादाय सत्वराः
भासमेतं समुद्दिश्य तिष्ठन्तां संहितेषवः ४७
मद्वाक्यसमकालं च शिरोऽस्य विनिपात्यताम्
एकैकशो नियोक्ष्यामि तथा कुरुत पुत्रकाः ४८
वैशम्पायन उवाच
ततो युधिष्ठिरं पूर्वमुवाचाङ्गिरसां वरः
संधत्स्व बाणं दुर्धर्ष मद्वाक्यान्ते विमुञ्च च ४९
ततो युधिष्ठिरः पूर्वं धनुर्गृह्य महारवम्
तस्थौ भासं समुद्दिश्य गुरुवाक्यप्रचोदितः ५०
ततो विततधन्वानं द्रोणस्तं कुरुनन्दनम्
स मुहूर्तादुवाचेदं वचनं भरतर्षभ ५१

पश्यस्येनं द्रुमाग्रस्थं भासं नरवरात्मज
पश्यामीत्येवमाचार्यं प्रत्युवाच युधिष्ठिरः ५२
स मुहूर्तादिव पुनर्द्रोणस्तं प्रत्यभाषत
अथ वृक्षमिमं मां वा भ्रातॄन्वापि प्रपश्यसि ५३
तमुवाच स कौन्तेयः पश्याम्येनं वनस्पतिम्
भवन्तं च तथा भ्रातॄन्भासं चेति पुनः पुनः ५४
तमुवाचापसर्पेति द्रोणोऽप्रीतमना इव
नैतच्छक्यं त्वया वेद्धुं लक्ष्यमित्येव कुत्सयन् ५५
ततो दुर्योधनादींस्तान्धार्तराष्ट्रान्महायशाः
तेनैव क्रमयोगेन जिज्ञासुः पर्यपृच्छत ५६
अन्यांश्च शिष्यान्भीमादीन्राज्ञश्चैवान्यदेशजान्
तथा च सर्वे सर्वं तत्पश्याम इति कुत्सिताः ५७
ततो धनञ्जयं द्रोणः स्मयमानोऽभ्यभाषत
त्वयेदानीं प्रहर्तव्यमेतल्लक्ष्यं निशम्यताम् ५८
मद्वाक्यसमकालं ते मोक्तव्योऽत्र भवेच्छरः
वितत्य कार्मुकं पुत्र तिष्ठ तावन्मुहूर्तकम् ५९
एवमुक्तः सव्यसाची मण्डलीकृतकार्मुकः
तस्थौ लक्ष्यं समुद्दिश्य गुरुवाक्यप्रचोदितः ६०
मुहूर्तादिव तं द्रोणस्तथैव समभाषत
पश्यस्येनं स्थितं भासं द्रुमं मामपि वेत्युत ६१
पश्याम्येनं भासमिति द्रोणं पार्थोऽभ्यभाषत
न तु वृक्षं भवन्तं वा पश्यामीति च भारत ६२
ततः प्रीतमना द्रोणो मुहूर्तादिव तं पुनः
प्रत्यभाषत दुर्धर्षः पाण्डवानां रथर्षभम् ६३
भासं पश्यसि यद्येनं तथा ब्रूहि पुनर्वचः
शिरः पश्यामि भासस्य न गात्रमिति सोऽब्रवीत् ६४
अर्जुनेनैवमुक्तस्तु द्रोणो हृष्टतनूरुहः
मुञ्चस्वेत्यब्रवीत्पार्थं स मुमोचाविचारयन् ६५
ततस्तस्य नगस्थस्य क्षुरेण निशितेन ह
शिर उत्कृत्य तरसा पातयामास पाण्डवः ६६

तस्मिन्कर्मणि संसिद्धे पर्यष्वजत फल्गुनम्
मेने च द्रुपदं सङ्ख्ये सानुबन्धं पराजितम् ६७
कस्यचित्त्वथ कालस्य सशिष्योऽङ्गिरसां वरः
जगाम गङ्गामभितो मज्जितुं भरतर्षभ ६८
अवगाढमथो द्रोणं सलिले सलिलेचरः
ग्राहो जग्राह बलवाञ्जङ्घान्ते कालचोदितः ६९
स समर्थोऽपि मोक्षाय शिष्यान्सर्वानचोदयत्
ग्राहं हत्वा मोक्षयध्वं मामिति त्वरयन्निव ७०
तद्वाक्यसमकालं तु बीभत्सुर्निशितैः शरैः
आवापैः पञ्चभिर्ग्राहं मग्नमम्भस्यताडयत्
इतरे तु विसंमूढास्तत्र तत्र प्रपेदिरे ७१
तं च दृष्ट्वा क्रियोपेतं द्रोणोऽमन्यत पाण्डवम्
विशिष्टं सर्वशिष्येभ्यः प्रीतिमांश्चाभवत्तदा ७२
स पार्थबाणैर्बहुधा खण्डशः परिकल्पितः
ग्राहः पञ्चत्वमापेदे जङ्घां त्यक्त्वा महात्मनः ७३
अथाब्रवीन्महात्मानं भारद्वाजो महारथम्
गृहाणेदं महाबाहो विशिष्टमतिदुर्धरम्
अस्त्रं ब्रह्मशिरो नाम सप्रयोगनिवर्तनम् ७४
न च ते मानुषेष्वेतत्प्रयोक्तव्यं कथंचन
जगद्विनिर्दहेदेतदल्पतेजसि पातितम् ७५
असामान्यमिदं तात लोकेष्वस्त्रं निगद्यते
तद्धारयेथाः प्रयतः शृणु चेदं वचो मम ७६
बाधेतामानुषः शत्रुर्यदा त्वां वीर कश्चन
तद्वधाय प्रयुञ्जीथास्तदास्त्रमिदमाहवे ७७
तथेति तत्प्रतिश्रुत्य बीभत्सुः स कृताञ्जलि
जग्राह परमास्त्रं तदाह चैनं पुनर्गुरुः
भविता त्वत्समो नान्यः पुमाँल्लोके धनुर्धरः ७८
इति श्रीमहाभारते आदिपर्वणि त्रयोविंशत्यधिकशततमोऽध्यायः १२३

## चतुर्विंशत्यधिक शततमोऽध्यायः

वैशम्पायन उवाच
कृतास्त्रान्धार्तराष्ट्रांश्च पाण्डुपुत्रांश्च भारत
दृष्ट्वा द्रोणोऽब्रवीद्राजन्धृतराष्ट्रं जनेश्वरम् १
कृपस्य सोमदत्तस्य बाह्लीकस्य च धीमतः
गाङ्गेयस्य च सांनिध्ये व्यासस्य विदुरस्य च २
राजन्संप्राप्तविद्यास्ते कुमाराः कुरुसत्तम
ते दर्शयेयुः स्वां शिक्षां राजन्ननुमते तव ३
ततोऽब्रवीन्महाराजः प्रहृष्टेनान्तरात्मना
भारद्वाज महत्कर्म कृतं ते द्विजसत्तम ४
यदा तु मन्यसे कालं यस्मिन्देशे यथा यथा
तथा तथा विधानाय स्वयमाज्ञापयस्व माम् ५
स्पृहयाम्यद्य निर्वेदात्पुरुषाणां सचक्षुषाम्
अस्त्रहेतोः पराक्रान्तान्ये मे द्रक्ष्यन्ति पुत्रकान् ६
क्षत्तर्यद्गुरुराचार्यो ब्रवीति कुरु तत्तथा
न हीदृशं प्रियं मन्ये भविता धर्मवत्सल ७
ततो राजानमामन्त्र्य विदुरानुगतो बहिः
भारद्वाजो महाप्राज्ञो मापयामास मेदिनीम्
समामवृक्षां निर्गुल्मामुदक्प्रवणसंस्थिताम् ८
तस्यां भूमौ बलि चक्रे तिथौ नक्षत्रपूजिते
अवघुष्टं पुरे चापि तदर्थं वदतां वर ९
रङ्गभूमौ सुविपुलं शास्त्रदृष्टं यथाविधि
प्रेक्षागारं सुविहितं चक्रुस्तत्र च शिल्पिनः
राज्ञः सर्वायुधोपेतं स्त्रीणां चैव नरर्षभ १०
मञ्चांश्च कारयामासुस्तत्र जानपदा जनाः
विपुलानुच्छ्रयोपेताञ्शिबिकाश्च महाधनाः ११
तस्मिंस्ततोऽहनि प्राप्ते राजा ससचिवस्तदा
भीष्मं प्रमुखतः कृत्वा कृपं चाचार्यसत्तमम् १२
मुक्ताजालपरिक्षिप्तं वैडूर्यमणिभूषितम्
शातकुम्भमयं दिव्यं प्रेक्षागारमुपागमत् १३

गान्धारी च महाभागा कुन्ती च जयतां वर
स्त्रियश्च सर्वा या राज्ञः सप्रेष्याः सपरिच्छदाः
हर्षादारुरुहुर्मञ्चान्मेरुं देवस्त्रियो यथा १४
ब्राह्मणक्षत्रियाद्यं च चातुर्वर्ण्यं पुराद्द्रुतम्
दर्शनेप्सु समभ्यागात्कुमाराणां कृतास्त्रताम् १५
प्रवादितैश्च वादित्रैर्जनकौतूहलेन च
महार्णव इव क्षुब्धः समाजः सोऽभवत्तदा १६
ततः शुक्लाम्बरधरः शुक्लयज्ञोपवीतवान्
शुक्लकेशः सितश्मश्रुः शुक्लमाल्यानुलेपनः १७
रङ्गमध्यं तदाचार्यः सपुत्रः प्रविवेश ह
नभो जलधरैर्हीनं साङ्गारक इवांशुमान् १८
स यथासमयं चक्रे बलिं बलवतां वरः
ब्राह्मणांश्चात्र मन्त्रज्ञान्वाचयामास मङ्गलम् १९
अथ पुण्याहघोषस्य पुण्यस्य तदनन्तरम्
विविशुर्विविधं गृह्य शस्त्रोपकरणं नराः २०
ततो बद्धतनुत्राणा बद्धकक्ष्या महाबलाः
बद्धतूणाः सधनुषो विविशुर्भरतर्षभाः २१
अनुज्येष्ठं च ते तत्र युधिष्ठिरपुरोगमाः
चक्रुरस्त्रं महावीर्याः कुमाराः परमाद्भुतम् २२
केचिच्छराक्षेपभयाच्छिरांस्यवननामिरे
मनुजा धृष्टमपरे वीक्षांचक्रुः सविस्मयाः २३
ते स्म लक्ष्याणि विविधुर्बाणैर्नामाङ्कशोभितैः
विविधैर्लाघवोत्सृष्टैरुह्यन्तो वाजिभिर्द्रुतम् २४
तत्कुमारबलं तत्र गृहीतशरकार्मुकम्
गन्धर्वनगराकारं प्रेक्ष्य ते विस्मिताभवन् २५
सहसा चुक्रुशुस्तत्र नराः शतसहस्रशः
विस्मयोत्फुल्लनयनाः साधु साध्विति भारत २६
कृत्वा धनुषि ते मार्गान्रथचर्यासु चासकृत्
गजपृष्ठेऽश्वपृष्ठे च नियुद्धे च महाबलाः २७
गृहीतखड्गचर्माणस्ततो भूयः प्रहारिणः

त्सरुमार्गान्यथोद्दिष्टांश्चेरुः सर्वासु भूमिषु २८
लाघवं सौष्ठवं शोभां स्थिरत्वं दृढमुष्टिताम्
ददृशुस्तत्र सर्वेषां प्रयोगे खड्गचर्मणाम् २९
अथ तौ नित्यसंहृष्टौ सुयोधनवृकोदरौ
अवतीर्णौ गदाहस्तावेकशृङ्गाविवाचलौ ३०
बद्धकक्षौ महाबाहू पौरुषे पर्यवस्थितौ
बृंहन्तौ वाशिताहेतोः समदाविव कुञ्जरौ ३१
तौ प्रदक्षिणसव्यानि मण्डलानि महाबलौ
चेरतुर्निर्मलगदौ समदाविव गोवृषौ ३२
विदुरो धृतराष्ट्राय गान्धार्यै पाण्डवारणिः
न्यवेदयेतां तत्सर्वं कुमाराणां विचेष्टितम् ३३
इति श्रीमहाभारते आदिपर्वणि चतुर्विंशत्यधिकशततमोऽध्यायः १२४

## पञ्चविंशत्यधिकशततमोऽध्यायः

वैशम्पायन उवाच
कुरुराजे हि रङ्गस्थे भीमे च बलिनां वरे
पक्षपातकृतस्नेहः स द्विधेवाभवज्जनः १
हा वीर कुरुराजेति हा भीमेति च नर्दताम्
पुरुषाणां सुविपुलाः प्रणादाः सहसोत्थिताः २
ततः क्षुब्धार्णवनिभं रङ्गमालोक्य बुद्धिमान्
भारद्वाजः प्रियं पुत्रमश्वत्थामानमब्रवीत् ३
वारयैतौ महावीर्यौ कृतयोग्यावुभावपि
मा भूद्रङ्गप्रकोपोऽय भीमदुर्योधनोद्भवः ४
ततस्तावुद्यतगदौ गुरुपुत्रेण वारितौ
युगान्तानिलसंक्षुब्धौ महावेगाविवार्णवौ ५
ततो रङ्गाङ्गणगतो द्रोणो वचनमब्रवीत्
निवार्य वादित्रगणं महामेघसमस्वनम् ६
यो मे पुत्रात्प्रियतरः सर्वास्त्रविदुषां वरः
एन्द्रिरिन्द्रानुजसमः स पार्थो दृश्यतामिति ७
आचार्यवचनेनाथ कृतस्वस्त्ययनो युवा

बद्धगोधाङ्गुलित्राणः पूर्णतूणः सकार्मुकः ८
काञ्चनं कवचं बिभ्रत्प्रत्यदृश्यत फल्गुनः
सार्कः सेन्द्रायुधतडित्ससंध्य इव तोयदः ९
ततः सर्वस्य रङ्गस्य समुत्पिञ्जोऽभवन्महान्
प्रावाद्यन्त च वाद्यानि सशङ्खानि समन्ततः १०
एष कुन्तीसुतः श्रीमानेष पाण्डवमध्यमः
एष पुत्रो महेन्द्रस्य कुरूणामेष रक्षिता ११
एषोऽस्त्रविदुषां श्रेष्ठ एष धर्मभृतां वरः
एष शीलवतां चापि शीलज्ञाननिधिः परः १२
इत्येवमतुला वाचः शृण्वन्त्याः प्रेक्षकेरिताः
कुन्त्याः प्रस्नवसंमिश्रैरस्रैः क्लिन्नमुरोऽभवत् १३
तेन शब्देन महता पूर्णश्रुतिरथाब्रवीत्
धृतराष्ट्रो नरश्रेष्ठो विदुरं हृष्टमानसः १४
क्षत्तः क्षुब्धार्णवनिभः किमेष सुमहास्वनः
सहसैवोत्थितो रङ्गे भिन्दन्निव नभस्तलम् १५
विदुर उवाच
एष पार्थो महाराज फल्गुनः पाण्डुनन्दनः
अवतीर्णः सकवचस्तत्रैष सुमहास्वनः १६
धृतराष्ट्र उवाच
धन्योऽस्म्यनुगृहीतोऽस्मि रक्षितोऽस्मि महामते
पृथारणिसमुद्भूतैस्त्रिभिः पाण्डववह्निभिः १७
वैशम्पायन उवाच
तस्मिन्समुदिते रङ्गे कथंचित्पर्यवस्थिते
दर्शयामास बीभत्सुराचार्यादस्त्रलाघवम् १८
आग्नेयेनासृजद्वह्निं वारुणेनासृजत्पयः
वायव्येनासृजद्वायुं पार्जन्येनासृजद्घनान् १९
भौमेन प्राविशद्भूमिं पार्वतेनासृजद्गिरीन्
अन्तर्धानेन चास्त्रेण पुनरन्तर्हितोऽभवत् २०
क्षणात्प्रांशुः क्षणाद्ध्रस्वः क्षणाच्च रथधूर्गतः
क्षणेन रथमध्यस्थः क्षणेनावापतन्महीम् २१

सुकुमारं च सूक्ष्मं च गुरुं चापि गुरुप्रियः
सौष्ठवेनाभिसंयुक्तः सोऽविध्यद्विविधैः शरैः २२
भ्रमतश्च वराहस्य लोहस्य प्रमुखे समम्
पञ्च बाणानसंसक्तान्स मुमोचैकबाणवत् २३
गव्ये विषाणकोशे च चले रज्ज्ववलम्बिते
निचखान महावीर्यः सायकानेकविंशतिम् २४
इत्येवमादि सुमहत्खड्गे धनुषि चाभवत्
गदायां शस्त्रकुशलो दर्शनानि व्यदर्शयत् २५
ततः समाप्तभूयिष्ठे तस्मिन्कर्मणि भारत
मन्दीभूते समाजे च वादित्रस्य च निस्वने २६
द्वारदेशात्समुद्भूतो माहात्म्यबलसूचकः
वज्रनिष्पेषसदृशः शुश्रुवे भुजनिस्वनः २७
दीर्यन्ते किं नु गिरयः किंस्विद्भूमिर्विदीर्यते
किं स्विदापूर्यते व्योम जलभारघनैर्घनैः २८
रङ्गस्यैवं मतिरभूत्क्षणेन वसुधाधिप
द्वारं चाभिमुखाः सर्वे बभूवुः प्रेक्षकास्तदा २९
पञ्चभिर्भ्रातृभिः पार्थैर्द्रोणः परिवृतो बभौ
पञ्चतारेण संयुक्तः सावित्रेणेव चन्द्रमाः ३०
अश्वत्थाम्ना च सहितं भ्रातॄणां शतमूर्जितम्
दुर्योधनममित्रघ्नमुत्थितं पर्यवारयत् ३१
स तैस्तदा भ्रातृभिरुद्यतायुधैर्वृतो गदापाणिरवस्थितैः स्थितः
बभौ यथा दानवसंक्षये पुरा पुरन्दरो देवगणैः समावृतः ३२
इति श्रीमहाभारते आदिपर्वणि पञ्चविंशत्यधिकशततमोऽध्यायः १२५

## षड्विंशत्यधिकशततमोऽध्यायः

वैशम्पायन उवाच
दत्तेऽवकाशे पुरुषैर्विस्मयोत्फुल्ललोचनैः
विवेश रङ्गं विस्तीर्णं कर्णः परपुरंजयः १
सहजं कवचं बिभ्रत्कुण्डलोद्द्योतिताननः
सधनुर्बद्धनिस्त्रिंशः पादचारीव पर्वतः २

कन्यागर्भः पृथुयशाः पृथायाः पृथुलोचनः
तीक्ष्णांशोर्भास्करस्यांशः कर्णोऽरिगणसूदनः ३
सिंहर्षभगजेन्द्राणां तुल्यवीर्यपराक्रमः
दीप्तिकान्तिद्युतिगुणैः सूर्येन्दुज्वलनोपमः ४
प्रांशुः कनकतालाभः सिंहसंहननो युवा
असंख्येयगुणः श्रीमान्भास्करस्यात्मसंभवः ५
स निरीक्ष्य महाबाहुः सर्वतो रङ्गमण्डलम्
प्रणामं द्रोणकृपयोर्नात्यादृतमिवाकरोत् ६
स समाजजनः सर्वो निश्चलः स्थिरलोचनः
कोऽयमित्यागतक्षोभः कौतूहलपरोऽभवत् ७
सोऽब्रवीन्मेघधीरेण स्वरेण वदतां वरः
भ्राता भ्रातरमज्ञातं सावित्रः पाकशासनिम् ८
पार्थ यत्ते कृतं कर्म विशेषवदहं ततः
करिष्ये पश्यतां नृणां मात्मना विस्मयं गमः ९
असमाप्ते ततस्तस्य वचने वदतां वर
यन्त्रोत्क्षिप्त इव क्षिप्रमुत्तस्थौ सर्वतो जनः १०
प्रीतिश्च पुरुषव्याघ्र दुर्योधनमथास्पृशत्
ह्रीश्च क्रोधश्च बीभत्सुं क्षणेनान्वविशच्च ह ११
ततो द्रोणाभ्यनुज्ञातः कर्णः प्रियरणः सदा
यत्कृतं तत्र पार्थेन तच्चकार महाबलः १२
अथ दुर्योधनस्तत्र भ्रातृभिः सह भारत
कर्णं परिष्वज्य मुदा ततो वचनमब्रवीत् १३
स्वागतं ते महाबाहो दिष्ट्या प्राप्तोऽसि मानद
अहं च कुरुराज्यं च यथेष्टमुपभुज्यताम् १४
कर्ण उवाच
कृतं सर्वेण मेऽन्येन सखित्वं च त्वया वृणे
द्वन्द्वयुद्धं च पार्थेन कर्तुमिच्छामि भारत १५
दुर्योधन उवाच
भुङ्क्ष्व भोगान्मया सार्धं बन्धूनां प्रियकृद्भव
दुर्हृदां कुरु सर्वेषां मूर्ध्नि पादमरिन्दम १६

वैशम्पायन उवाच
ततः क्षिप्तमिवात्मानं मत्वा पार्थोऽभ्यभाषत
कर्णं भ्रातृसमूहस्य मध्येऽचलमिव स्थितम् १७
अनाहूतोपसृप्तानामनाहूतोपजल्पिनाम्
ये लोकास्तान्हतः कर्ण मया त्वं प्रतिपत्स्यसे १८
कर्ण उवाच
रङ्गोऽय सर्वसामान्यः किमत्र तव फल्गुन
वीर्यश्रेष्ठाश्च राजन्या बलं धर्मोऽनुवर्तते १९
किं क्षेपैर्दुर्बलाश्वासैः शरैः कथय भारत
गुरोः समक्षं यावत्ते हराम्यद्य शिरः शरैः २०
वैशम्पायन उवाच
ततो द्रोणाभ्यनुज्ञातः पार्थः परपुरञ्जयः
भ्रातृभिस्त्वरयाश्लिष्टो रणायोपजगाम तम् २१
ततो दुर्योधनेनापि सभ्रात्रा समरोद्यतः
परिष्वक्तः स्थितः कर्णः प्रगृह्य सशरं धनुः २२
ततः सविद्युत्स्तनितैः सेन्द्रायुधपुरोजवैः
आवृतं गगनं मेघैर्बलाकापङ्क्तिहासिभिः २३
ततः स्नेहाद्धरिहयं दृष्ट्वा रङ्गावलोकिनम्
भास्करोऽप्यनयन्नाशं समीपोपगतान्घनान् २४
मेघच्छायोपगूढस्तु ततोऽदृश्यत पाण्डवः
सूर्यातपपरिक्षिप्तः कर्णोऽपि समदृश्यत २५
धार्तराष्ट्रा यतः कर्णस्तस्मिन्देशे व्यवस्थिताः
भारद्वाजः कृपो भीष्मो यतः पार्थस्ततोऽभवन् २६
द्विधा रङ्गः समभवत्स्त्रीणां द्वैधमजायत
कुन्तिभोजसुता मोहं विज्ञातार्था जगाम ह २७
तां तथा मोहसंपन्नां विदुरः सर्वधर्मवित्
कुन्तीमाश्वासयामास प्रोक्ष्याद्भिश्चन्दनोक्षितैः २८
ततः प्रत्यागतप्राणा तावुभावपि दंशितौ
पुत्रौ दृष्ट्वा सुसंतप्ता नान्वपद्यत किंचन २९
तावुद्यतमहाचापौ कृपः शारद्वतोऽब्रवीत्

द्वन्द्वयुद्धसमाचारे कुशलः सर्वधर्मवित् ३०
अयं पृथायास्तनयः कनीयान्पाण्डुनन्दनः
कौरवो भवता सार्धं द्वन्द्वयुद्धं करिष्यति ३१
त्वमप्येवं महाबाहो मातरं पितरं कुलम्
कथयस्व नरेन्द्राणां येषां त्वं कुलवर्धनः
ततो विदित्वा पार्थस्त्वां प्रतियोत्स्यति वा न वा ३२
एवमुक्तस्य कर्णस्य व्रीडावनतमाननम्
बभौ वर्षाम्बुभिः क्लिन्नं पद्ममागलितं यथा ३३
दुर्योधन उवाच
आचार्य त्रिविधा योनी राज्ञां शास्त्रविनिश्चये
तत्कुलीनश्च शूरश्च सेनां यश्च प्रकर्षति ३४
यद्ययं फल्गुनो युद्धे नाराज्ञा योद्धुमिच्छति
तस्मादेषोऽङ्गविषये मया राज्येऽभिषिच्यते ३५
वैशम्पायन उवाच
ततस्तस्मिन्क्षणे कर्णः सलाजकुसुमैर्घटैः
काञ्चनैः काञ्चने पीठे मन्त्रविद्भिर्महारथः
अभिषिक्तोऽङ्गराज्ये स श्रिया युक्तो महाबलः ३६
सच्छत्रवालव्यजनो जयशब्दान्तरेण च
उवाच कौरवं राजा राजानं तं वृषस्तदा ३७
अस्य राज्यप्रदानस्य सदृशं किं ददानि ते
प्रब्रूहि राजशार्दूल कर्ता ह्यस्मि तथा नृप
अत्यन्तं सख्यमिच्छामीत्याह तं स सुयोधनः ३८
एवमुक्तस्ततः कर्णस्तथेति प्रत्यभाषत
हर्षाच्चोभौ समाश्लिष्य परां मुदमवापतुः ३९
इति श्रीमहाभारते आदिपर्वणि षड्विंशत्यधिकशततमोऽध्यायः १२६

सप्तविंशत्यधिकशतमोऽध्यायः

वैशम्पायन उवाच
ततः स्रस्तोत्तरपटः सप्रस्वेदः सवेपथुः
विवेशाधिरथो रङ्गं यष्टिप्राणो ह्वयन्निव १

तमालोक्य धनुस्त्यक्त्वा पितृगौरवयन्त्रितः
कर्णोऽभिषेकार्द्रशिराः शिरसा समवन्दत २
ततः पादाववच्छाद्य पटान्तेन ससंभ्रमः
पुत्रेति परिपूर्णार्थमब्रवीद्रथसारथिः ३
परिष्वज्य च तस्याथ मूर्धानं स्नेहविक्लवः
अङ्गराज्याभिषेकार्द्रमश्रुभिः सिषिचे पुनः ४
तं दृष्ट्वा सूतपुत्रोऽयमिति निश्चित्य पाण्डवः
भीमसेनस्तदा वाक्यमब्रवीत्प्रहसन्निव ५
न त्वमर्हसि पार्थेन सूतपुत्र रणे वधम्
कुलस्य सदृशस्तूर्णं प्रतोदो गृह्यतां त्वया ६
अङ्गराज्यं च नार्हस्त्वमुपभोक्तुं नराधम
श्वा हुताशसमीपस्थं पुरोडाशमिवाध्वरे ७
एवमुक्तस्ततः कर्णः किंचित्प्रस्फुरिताधरः
गगनस्थं विनिःश्वस्य दिवाकरमुदैक्षत ८
ततो दुर्योधनः कोपादुत्पपात महाबलः
भ्रातृपद्मवनात्तस्मान्मदोत्कट इव द्विपः ९
सोऽब्रवीद्भीमकर्माणं भीमसेनमवस्थितम्
वृकोदर न युक्तं ते वचनं वक्तुमीदृशम् १०
क्षत्रियाणां बलं ज्येष्ठं योद्धव्यं क्षत्रबन्धुना
शूराणां च नदीनां च प्रभवा दुर्विदाः किल ११
सलिलादुत्थितो वह्निर्येन व्याप्तं चराचरम्
दधीचस्यास्थितो वज्रं कृतं दानवसूदनम् १२
आग्नेयः कृत्तिकापुत्रो रौद्रो गाङ्गेय इत्यपि
श्रूयते भगवान्देवः सर्वगुह्यमयो गुहः १३
क्षत्रियाभ्यश्च ये जाता ब्राह्मणास्ते च विश्रुताः
आचार्यः कलशाज्जातः शरस्तम्बाद्गुरुः कृपः
भवतां च यथा जन्म तदप्यागमितं नृपैः १४
सकुण्डलं सकवचं दिव्यलक्षणलक्षितम्
कथमादित्यसंकाशं मृगी व्याघ्रं जनिष्यति १५
पृथिवीराज्यमर्होऽय नाङ्गराज्यं नरेश्वरः

अनेन बाहुवीर्येण मया चाज्ञानुवर्तिना १६
यस्य वा मनुजस्येदं न क्षान्तं मद्विचेष्टितम्
रथमारुह्य पद्भ्यां वा विनामयतु कार्मुकम् १७
ततः सर्वस्य रङ्गस्य हाहाकारो महानभूत्
साधुवादानुसंबद्धः सूर्यश्चास्तमुपागमत् १८
ततो दुर्योधनः कर्णमालम्ब्याथ करे नृप
दीपिकाग्निकृतालोकस्तस्माद्रङ्गाद्विनिर्ययौ १९
पाण्डवाश्च सहद्रोणाः सकृपाश्च विशां पते
भीष्मेण सहिताः सर्वे ययुः स्वं स्वं निवेशनम् २०
अर्जुनेति जनः कश्चित्कश्चित्कर्णेति भारत
कश्चिद्दुर्योधनेत्येवं ब्रुवन्तः प्रस्थितास्तदा २१
कुन्त्याश्च प्रत्यभिज्ञाय दिव्यलक्षणसूचितम्
पुत्रमङ्गेश्वरं स्नेहाच्छन्ना प्रीतिरवर्धत २२
दुर्योधनस्यापि तदा कर्णमासाद्य पार्थिव
भयमर्जुनसंजातं क्षिप्रमन्तरधीयत २३
स चापि वीरः कृतशस्त्रनिश्रमः परेण साम्नाभ्यवदत्सुयोधनम्
युधिष्ठिरस्याप्यभवत्तदा मतिर्न कर्णतुल्योऽस्ति धनुर्धरः क्षितौ २४
इति श्रीमहाभारते आदिपर्वणि सप्तविंशत्यधिकशततमोऽध्यायः १२७

## अष्टाविंशत्यधिक शततमोऽध्यायः

वैशम्पायन उवाच
ततः शिष्यान्समानीय आचार्यार्थमचोदयत्
द्रोणः सर्वानशेषेण दक्षिणार्थं महीपते १
पाञ्चालराजं द्रुपदं गृहीत्वा रणमूर्धनि
पर्यानयत भद्रं वः सा स्यात्परमदक्षिणा २
तथेत्युक्त्वा तु ते सर्वे रथैस्तूर्णं प्रहारिणः
आचार्यधनदानार्थं द्रोणेन सहिता ययुः ३
ततोऽभिजग्मुः पाञ्चालान्निघ्नन्तस्ते नरर्षभाः
ममृदुस्तस्य नगरं द्रुपदस्य महौजसः ४
ते यज्ञसेनं द्रुपदं गृहीत्वा रणमूर्धनि

उपाजह्रुः सहामात्यं द्रोणाय भरतर्षभाः ५
भग्नदर्पं हृतधनं तथा च वशमागतम्
स वैरं मनसा ध्यात्वा द्रोणो द्रुपदमब्रवीत् ६
प्रमृद्य तरसा राष्ट्रं पुरं ते मृदितं मया
प्राप्य जीवन्रिपुवशं सखिपूर्वं किमिष्यते ७
एवमुक्त्वा प्रहस्यैनं निश्चित्य पुनरब्रवीत्
मा भैः प्राणभयाद्राजन्क्षमिणो ब्राह्मणा वयम् ८
आश्रमे क्रीडितं यत्तु त्वया बाल्ये मया सह
तेन संवर्धितः स्नेहस्त्वया मे क्षत्रियर्षभ ९
प्रार्थयेयं त्वया सख्यं पुनरेव नरर्षभ
वरं ददामि ते राजन्राज्यस्यार्धमवाप्नुहि १०
अराजा किल नो राज्ञां सखा भवितुमर्हति
अतः प्रयतितं राज्ये यज्ञसेन मया तव ११
राजासि दक्षिणे कूले भागीरथ्याहमुत्तरे
सखायं मां विजानीहि पाञ्चाल यदि मन्यसे १२
द्रुपद उवाच
अनाश्चर्यमिदं ब्रह्मन्विक्रान्तेषु महात्मसु
प्रीये त्वयाहं त्वत्तश्च प्रीतिमिच्छामि शाश्वतीम् १३
वैशम्पायन उवाच
एवमुक्तस्तु तं द्रोणो मोक्षयामास भारत
सत्कृत्य चैनं प्रीतात्मा राज्यार्धं प्रत्यपादयत् १४
माकन्दीमथ गङ्गायास्तीरे जनपदायुताम्
सोऽध्यावसद्दीनमनाः काम्पिल्यं च पुरोत्तमम्
दक्षिणांश्चैव पाञ्चालान्यावच्चर्मण्वती नदी १५
द्रोणेन वैरं द्रुपदः संस्मरन्न शशाम ह
क्षात्रेण च बलेनास्य नापश्यत्स पराजयम् १६
हीनं विदित्वा चात्मानं ब्राह्मणेन बलेन च
पुत्रजन्म परीप्सन्वै स राजा तदधारयत्
अहिच्छत्रं च विषयं द्रोणः समभिपद्यत १७
एवं राजन्नहिच्छत्रा पुरी जनपदायुता

युधि निर्जित्य पार्थेन द्रोणाय प्रतिपादिता १८
इति श्रीमहाभारते आदिपर्वणि अष्टाविंशत्यधिकशततमोऽध्यायः १२८

एकोनत्रिंशदधिक शततमोऽध्यायः

वैशम्पायन उवाच
प्राणाधिकं भीमसेनं कृतविद्यं धनञ्जयम्
दुर्योधनो लक्षयित्वा पर्यतप्यत दुर्मतिः १
ततो वैकर्तनः कर्णः शकुनिश्चापि सौबलः
अनेकैरभ्युपायैस्तांजिघांसन्ति स्म पाण्डवान् २
पाण्डवाश्चापि तत्सर्वं प्रत्यजानन्नरिंदमाः
उद्भावनमकुर्वन्तो विदुरस्य मते स्थिताः ३
गुणैः समुदितान्दृष्ट्वा पौराः पाण्डुसुतांस्तदा
कथयन्ति स्म संभूय चत्वरेषु सभासु च ४
प्रज्ञाचक्षुरचक्षुष्ट्वाद्धृतराष्ट्रो जनेश्वरः
राज्यमप्राप्तवान्पूर्वं स कथं नृपतिर्भवेत् ५
तथा भीष्मः शान्तनवः सत्यसन्धो महाव्रतः
प्रत्याख्याय पुरा राज्यं नाद्य जातु ग्रहीष्यति ६
ते वयं पाण्डवं ज्येष्ठं तरुणं वृद्धशीलिनम्
अभिषिञ्चाम साध्वद्य सत्यं करुणवेदिनम् ७
स हि भीष्मं शान्तनवं धृतराष्ट्रं च धर्मवित्
सपुत्रं विविधैर्भोगैर्योजयिष्यति पूजयन् ८
तेषां दुर्योधनः श्रुत्वा तानि वाक्यानि भाषताम्
युधिष्ठिरानुरक्तानां पर्यतप्यत दुर्मतिः ९
स तप्यमानो दुष्टात्मा तेषां वाचो न चक्षमे
ईर्ष्यया चाभिसंतप्तो धृतराष्ट्रमुपागमत् १०
ततो विरहितं दृष्ट्वा पितरं प्रतिपूज्य सः
पौरानुरागसंतप्तः पश्चादिदमभाषत ११
श्रुता मे जल्पतां तात पौराणामशिवा गिरः
त्वामनादृत्य भीष्मं च पतिमिच्छन्ति पाण्डवम् १२
मतमेतच्च भीष्मस्य न स राज्यं बुभूषति

अस्माकं तु परां पीडां चिकीर्षन्ति पुरे जनाः १३
पितृतः प्राप्तवान्राज्यं पाण्डुरात्मगुणैः पुरा
त्वमप्यगुणसंयोगात्प्राप्तं राज्यं न लब्धवान् १४
स एष पाण्डोर्दायाद्यं यदि प्राप्नोति पाण्डवः
तस्य पुत्रो ध्रुवं प्राप्तस्तस्य तस्येति चापरः १५
ते वयं राजवंशेन हीनाः सह सुतैरपि
अवज्ञाता भविष्यामो लोकस्य जगतीपते १६
सततं निरयं प्राप्ताः परपिण्डोपजीविनः
न भवेम यथा राजंस्तथा शीघ्रं विधीयताम् १७
अभविष्यः स्थिरो राज्ये यदि हि त्वं पुरा नृप
ध्रुवं प्राप्स्याम च वयं राज्यमप्यवशे जने १८
इति श्रीमहाभारते आदिपर्वणि एकोनत्रिंशदधिकशततमोऽध्यायः १२९

## त्रिंशदधिक शततमोऽध्यायः

वैशम्पायन उवाच
धृतराष्ट्रस्तु पुत्रस्य श्रुत्वा वचनमीदृशम्
मुहूर्तमिव संचिन्त्य दुर्योधनमथाब्रवीत् १
धर्मनित्यः सदा पाण्डुर्ममासीत्प्रियकृद्धितः
सर्वेषु ज्ञातिषु तथा मयि त्वासीद्विशेषतः २
नास्य किंचिन्न जानामि भोजनादि चिकीर्षितम्
निवेदयति नित्यं हि मम राज्यं धृतव्रतः ३
तस्य पुत्रो यथा पाण्डुस्तथा धर्मपरायणः
गुणवाँल्लोकविख्यातः पौराणां च सुसंमतः ४
स कथं शक्यमस्माभिरपक्रष्टुं बलादितः
पितृपैतामहाद्राज्यात्ससहायो विशेषतः ५
भृता हि पाण्डुनामात्या बलं च सततं भृतम्
भृताः पुत्राश्च पौत्राश्च तेषामपि विशेषतः ६
ते पुरा सत्कृतास्तात पाण्डुना पौरवा जनाः
कथं युधिष्ठिरस्यार्थे न नो हन्युः सबान्धवान् ७
दुर्योधन उवाच

एवमेतन्मया तात भावितं दोषमात्मनि
दृष्ट्वा प्रकृतयः सर्वा अर्थमानेन योजिताः ८
ध्रुवमस्मत्सहायास्ते भविष्यन्ति प्रधानतः
अर्थवर्गः सहामात्यो मत्संस्थोऽद्य महीपते ९
स भवान्पाण्डवानाशु विवासयितुमर्हति
मृदुनैवाभ्युपायेन नगरं वारणावतम् १०
यदा प्रतिष्ठितं राज्यं मयि राजन्भविष्यति
तदा कुन्ती सहापत्या पुनरेष्यति भारत ११
धृतराष्ट्र उवाच
दुर्योधन ममाप्येतद्धृदि संपरिवर्तते
अभिप्रायस्य पापत्वान्नैतत्तु विवृणोम्यहम् १२
न च भीष्मो न च द्रोणो न क्षत्ता न च गौतमः
विवास्यमानान्कौन्तेयाननुमंस्यन्ति कर्हिचित् १३
समा हि कौरवेयाणां वयमेते च पुत्रक
नैते विषममिच्छेयुर्धर्मयुक्ता मनस्विनः १४
ते वयं कौरवेयाणामेतेषां च महात्मनाम्
कथं न वध्यतां तात गच्छेम जगतस्तथा १५
दुर्योधन उवाच
मध्यस्थः सततं भीष्मो द्रोणपुत्रो मयि स्थितः
यतः पुत्रस्ततो द्रोणो भविता नात्र संशयः १६
कृपः शारद्वतश्चैव यत एते त्रयस्ततः
द्रोणं च भागिनेयं च न स त्यक्ष्यति कर्हिचित् १७
क्षत्तार्थबद्धस्त्वस्माकं प्रच्छन्नं तु यतः परे
न चैकः स समर्थोऽस्मान्पाण्डवार्थे प्रबाधितुम् १८
स विश्रब्धः पाण्डुपुत्रान्सह मात्रा विवासय
वारणावतमद्यैव नात्र दोषो भविष्यति १९
विनिद्रकरणं घोरं हृदि शल्यमिवार्पितम्
शोकपावकमुद्भूतं कर्मणैतेन नाशय २०
इति श्रीमहाभारते आदिपर्वणि त्रिंशदधिकशततमोऽध्यायः १३०

## एकत्रिंशदधिक शततमोऽध्यायः

वैशम्पायन उवाच
ततो दुर्योधनो राजा सर्वास्ताः प्रकृतीः शनैः
अर्थमानप्रदानाभ्यां संजहार सहानुजः १
धृतराष्ट्रप्रयुक्तास्तु केचित्कुशलमन्त्रिणः
कथयाञ्चक्रिरे रम्यं नगरं वारणावतम् २
अयं समाजः सुमहान्रमणीयतमो भुवि
उपस्थितः पशुपतेर्नगरे वारणावते ३
सर्वरत्नसमाकीर्णे पुंसां देशे मनोरमे
इत्येवं धृतराष्ट्रस्य वचनाच्चक्रिरे कथाः ४
कथ्यमाने यथा रम्ये नगरे वारणावते
गमने पाण्डुपुत्राणां जज्ञे तत्र मतिर्नृप ५
यदा त्वमन्यत नृपो जातकौतूहला इति
उवाचैनानथ तदा पाण्डवानम्बिकासुतः ६
ममेमे पुरुषा नित्यं कथयन्ति पुनः पुनः
रमणीयतरं लोके नगरं वारणावतम् ७
ते तात यदि मन्यध्वमुत्सवं वारणावते
सगणाः सानुयात्राश्च विहरध्वं यथामराः ८
ब्राह्मणेभ्यश्च रत्नानि गायनेभ्यश्च सर्वशः
प्रयच्छध्वं यथाकामं देवा इव सुवर्चसः ९
कंचित्कालं विहृत्यैवमनुभूय परां मुदम्
इदं वै हास्तिनपुरं सुखिनः पुनरेष्यथ १०
धृतराष्ट्रस्य तं काममनुबुद्ध्वा युधिष्ठिरः
आत्मनश्चासहायत्वं तथेति प्रत्युवाच तम् ११
ततो भीष्मं महाप्राज्ञं विदुरं च महामतिम्
द्रोणं च बाह्लिकं चैव सोमदत्तं च कौरवम् १२
कृपमाचार्यपुत्रं च गान्धारीं च यशस्विनीम्
युधिष्ठिरः शनैर्दीनमुवाचेदं वचस्तदा १३
रमणीये जनाकीर्णे नगरे वारणावते
सगणास्तात वत्स्यामो धृतराष्ट्रस्य शासनात् १४

प्रसन्नमनसः सर्वे पुरया वाचो विमुञ्चत
आशीर्भिर्वर्धितानस्मान्न पापं प्रसहिष्यति १५
एवमुक्तास्तु ते सर्वे पाराडुपुत्रेण कौरवाः
प्रसन्नवदना भूत्वा तेऽभ्यवर्तन्त पाराडवान् १६
स्वस्त्यस्तु वः पथि सदा भूतेभ्यश्चैव सर्वशः
मा च वोऽस्त्वशुभं किंचित्सर्वतः पाराडुनन्दनाः १७
ततः कृतस्वस्त्ययना राज्यलाभाय पाराडवाः
कृत्वा सर्वाणि कार्याणि प्रययुर्वारणावतम् १८
इति श्रीमहाभारते आदिपर्वणि एकत्रिंशदधिकशततमोऽध्यायः १३१

द्वात्रिंशदधिकशततमोऽध्यायः

वैशम्पायन उवाच
एवमुक्तेषु राज्ञा तु पाराडवेषु महात्मसु
दुर्योधनः परं हर्षमाजगाम दुरात्मवान् १
स पुरोचनमेकान्तमानीय भरतर्षभ
गृहीत्वा दक्षिणे पाणौ सचिवं वाक्यमब्रवीत् २
ममेयं वसुसंपूर्णा पुरोचन वसुन्धरा
यथेयं मम तद्वत्ते स तां रक्षितुमर्हसि ३
न हि मे कश्चिदन्योऽस्ति वैश्वासिकतरस्त्वया
सहायो येन संधाय मन्त्रयेयं यथा त्वया ४
संरक्ष तात मन्त्रं च सपत्नांश्च ममोद्धर
निपुणेनाभ्युपायेन यद्ब्रवीमि तथा कुरु ५
पाराडवा धृतराष्ट्रेण प्रेषिता वारणावतम्
उत्सवे विहरिष्यन्ति धृतराष्ट्रस्य शासनात् ६
स त्वं रासभयुक्तेन स्यन्दनेनाशुगामिना
वारणावतमद्यैव यथा यासि तथा कुरु ७
तत्र गत्वा चतुःशालं गृहं परमसंवृतम्
आयुधागारमाश्रित्य कारयेथा महाधनम् ८
शणसर्जरसादीनि यानि द्रव्याणि कानिचित्
आग्नेयान्युत सन्तीह तानि सर्वाणि दापय ९

सर्पिषा च सतैलेन लाक्षया चाप्यनल्पया
मृत्तिकां मिश्रयित्वा त्वं लेपं कुड्येषु दापयेः १०
शणान्वंशं घृतं दारु यन्त्राणि विविधानि च
तस्मिन्वेश्मनि सर्वाणि निक्षिपेथाः समन्ततः ११
यथा च त्वां न शङ्केरन्परीक्षन्तोऽपि पाण्डवाः
आग्नेयमिति तत्कार्यमिति चान्ये च मानवाः १२
वेश्मन्येवं कृते तत्र कृत्वा तान्परमार्चितान्
वासयेः पाण्डवेयांश्च कुन्तीं च ससुहृज्जनाम् १३
तत्रासनानि मुख्यानि यानानि शयनानि च
विधातव्यानि पाण्डूनां यथा तुष्येत मे पिता १४
यथा रमेरन्विश्रब्धा नगरे वारणावते
तथा सर्वं विधातव्यं यावत्कालस्य पर्ययः १५
ज्ञात्वा तु तान्सुविश्वस्ताञ्शयानानकुतोभयान्
अग्निस्ततस्त्वया देयो द्वारतस्तस्य वेश्मनः १६
दग्धानेवं स्वके गेहे दग्धा इति ततो जनाः
ज्ञातयो वा वदिष्यन्ति पाण्डवार्थाय कर्हिचित् १७
तत्तथेति प्रतिज्ञाय कौरवाय पुरोचनः
प्रायाद्रासभयुक्तेन नगरं वारणावतम् १८
स गत्वा त्वरितो राजन्दुर्योधनमते स्थितः
यथोक्तं राजपुत्रेण सर्वं चक्रे पुरोचनः १९
इति श्रीमहाभारते आदिपर्वणि द्वात्रिंशदधिकशततमोऽध्यायः १३२

## त्रयस्त्रिंशदधिक शततमोऽध्यायः

वैशम्पायन उवाच
पाण्डवास्तु रथान्युक्त्वा सदश्वैरनिलोपमैः
आरोहमाणा भीष्मस्य पादौ जगृहुरार्तवत् १
राज्ञश्च धृतराष्ट्रस्य द्रोणस्य च महात्मनः
अन्येषां चैव वृद्धानां विदुरस्य कृपस्य च २
एवं सर्वान्कुरून्वृद्धानभिवाद्य यतव्रताः
समालिङ्ग्य समानांश्च बालैश्चाप्यभिवादिताः ३

सर्वा मातॄस्तथापृष्ट्वा कृत्वा चैव प्रदक्षिणम्
सर्वाः प्रकृतयश्चैव प्रययुर्वारणावतम् ४
विदुरश्च महाप्राज्ञस्तथान्ये कुरुपुङ्गवाः
पौराश्च पुरुषव्याघ्रानन्वयुः शोककर्शिताः ५
तत्र केचिद्ब्रुवन्ति स्म ब्राह्मणा निर्भयास्तदा
शोचमानाः पाण्डुपुत्रानतीव भरतर्षभ ६
विषमं पश्यते राजा सर्वथा तमसावृतः
धृतराष्ट्रः सुदुर्बुद्धिर्न च धर्मं प्रपश्यति ७
न हि पापमपापात्मा रोचयिष्यति पाण्डवः
भीमो वा बलिनां श्रेष्ठः कौन्तेयो वा धनञ्जयः
कुत एव महाप्राज्ञौ माद्रीपुत्रौ करिष्यतः ८
तद्राज्यं पितृतः प्राप्तं धृतराष्ट्रो न मृष्यते
अधर्ममखिलं किं नु भीष्मोऽयमनुमन्यते
विवास्यमानानस्थाने कौन्तेयान्भरतर्षभान् ९
पितेव हि नृपोऽस्माकमभूच्छान्तनवः पुरा
विचित्रवीर्यो राजर्षिः पाण्डुश्च कुरुनन्दनः १०
स तस्मिन्पुरुषव्याघ्रे दिष्टभावं गते सति
राजपुत्रानिमान्बालान्धृतराष्ट्रो न मृष्यते ११
वयमेतदमृष्यन्तः सर्व एव पुरोत्तमात्
गृहान्विहाय गच्छामो यत्र याति युधिष्ठिरः १२
तांस्तथावादिनः पौरान्दुःखितान्दुःखकर्शितः
उवाच परमप्रीतो धर्मराजो युधिष्ठिरः १३
पिता मान्यो गुरुः श्रेष्ठो यदाह पृथिवीपतिः
अशङ्कमानैस्तत्कार्यमस्माभिरिति नो व्रतम् १४
भवन्तः सुहृदोऽस्माकमस्मान्कृत्वा प्रदक्षिणम्
आशीर्भिरभिनन्द्यास्मान्निवर्तध्वं यथागृहम् १५
यदा तु कार्यमस्माकं भवद्भिरुपपत्स्यते
तदा करिष्यथ मम प्रियाणि च हितानि च १६
ते तथेति प्रतिज्ञाय कृत्वा चैतान्प्रदक्षिणम्
आशीर्भिरभिनन्द्यैनाञ्जग्मुर्नगरमेव हि १७

पौरेषु तु निवृत्तेषु विदुरः सर्वधर्मवित्
बोधयन्पाण्डवश्रेष्ठमिदं वचनमब्रवीत्
प्राज्ञः प्राज्ञं प्रलापज्ञः सम्यग्धर्मार्थदर्शिवान् १८
विज्ञायेदं तथा कुर्यादापदं निस्तरेद्यथा
अलोहं निशितं शस्त्रं शरीरपरिकर्तनम्
यो वेत्ति न तमाघ्नन्ति प्रतिघातविदं द्विषः १९
कक्षघ्नः शिशिरघ्नश्च महाकक्षे बिलौकसः
न दहेदिति चात्मानं यो रक्षति स जीवति २०
नाचक्षुर्वेत्ति पन्थानं नाचक्षुर्विन्दते दिशः
नाधृतिर्भूतिमाप्नोति बुध्यस्वैवं प्रबोधितः २१
अनाप्तैर्दत्तमादत्ते नरः शस्त्रमलोहजम्
श्वाविच्छरणमासाद्य प्रमुच्येत हुताशनात् २२
चरन्मार्गान्विजानाति नक्षत्रैर्विन्दते दिशः
आत्मना चात्मनः पञ्च पीडयन्नानुपीड्यते २३
अनुशिष्टानुगत्वा च कृत्वा चैनान्प्रदक्षिणम्
पाण्डवानभ्यनुज्ञाय विदुरः प्रययौ गृहान् २४
निवृत्ते विदुरे चैव भीष्मे पौरजने तथा
अजातशत्रुमामन्त्र्य कुन्ती वचनमब्रवीत् २५
क्षत्ता यदब्रवीद्वाक्यं जनमध्येऽब्रुवन्निव
त्वया च तत्तथेत्युक्तो जानीमो न च तद्वयम् २६
यदि तच्छक्यमस्माभिः श्रोतुं न च सदोषवत्
श्रोतुमिच्छामि तत्सर्वं संवादं तव तस्य च २७
युधिष्ठिर उवाच
विषादग्नेश्च बोद्धव्यमिति मां विदुरोऽब्रवीत्
पन्थाश्च वो नाविदितः कश्चित्स्यादिति चाब्रवीत् २८
जितेन्द्रियश्च वसुधां प्राप्स्यसीति च माब्रवीत्
विज्ञातमिति तत्सर्वमित्युक्तो विदुरो मया २९
वैशम्पायन उवाच
अष्टमेऽहनि रोहिण्यां प्रयाताः फल्गुनस्य ते
वारणावतमासाद्य ददृशुर्नागरं जनम् ३०

इति श्रीमहाभारते आदिपर्वणि त्रयस्त्रिंशदधिकशततमोऽध्यायः १३३

चतुस्त्रिंशदधिक शततमोऽध्यायः

वैशम्पायन उवाच
ततः सर्वाः प्रकृतयो नगराद्वारणावतात्
सर्वमङ्गलसंयुक्ता यथाशास्त्रमतन्द्रिताः १
श्रुत्वागतान्पाण्डुपुत्रान्नानायानैः सहस्रशः
अभिजग्मुर्नरश्रेष्ठाञ्श्रुत्वैव परया मुदा २
ते समासाद्य कौन्तेयान्वारणावतका जनाः
कृत्वा जयाशिषः सर्वे परिवार्योपतस्थिरे ३
तैर्वृतः पुरुषव्याघ्रो धर्मराजो युधिष्ठिरः
विबभौ देवसङ्काशो वज्रपाणिरिवामरैः ४
सत्कृतास्ते तु पौरैश्च पौरान्सत्कृत्य चानघाः
अलंकृतं जनाकीर्णं विविशुर्वारणावतम् ५
ते प्रविश्य पुरं वीरास्तूर्णं जग्मुरथो गृहान्
ब्राह्मणानां महीपाल रतानां स्वेषु कर्मसु ६
नगराधिकृतानां च गृहाणि रथिनां तथा
उपतस्थुर्नरश्रेष्ठा वैश्यशूद्रगृहानपि ७
अर्चिताश्च नरैः पौरैः पाण्डवा भरतर्षभाः
जग्मुरावसथं पश्चात्पुरोचनपुरस्कृताः ८
तेभ्यो भक्ष्यान्नपानानि शयनानि शुभानि च
आसनानि च मुख्यानि प्रददौ स पुरोचनः ९
तत्र ते सत्कृतास्तेन सुमहार्हपरिच्छदाः
उपास्यमानाः पुरुषैरूषुः पुरनिवासिभिः १०
दशरात्रोषितानां तु तत्र तेषां पुरोचनः
निवेदयामास गृहं शिवाख्यमशिवं तदा ११
तत्र ते पुरुषव्याघ्रा विविशुः सपरिच्छदाः
पुरोचनस्य वचनात्कैलासमिव गुह्यकाः १२
तत्त्वगारमभिप्रेक्ष्य सर्वधर्मविशारदः
उवाचाग्नेयमित्येवं भीमसेनं युधिष्ठिरः

जिघ्रन्सोम्य वसागन्धं सर्पिर्जतुविमिश्रितम् १३
कृतं हि व्यक्तमाग्नेयमिदं वेश्म परंतप
शणसर्जरसं व्यक्तमानीतं गृहकर्मणि
मुञ्जबल्वजवंशादि द्रव्यं सर्वं घृतोक्षितम् १४
शिल्पिभिः सुकृतं ह्याप्तैर्विनीतैर्वेश्मकर्मणि
विश्वस्तं मामयं पापो दग्धुकामः पुरोचनः १५
इमां तु तां महाबुद्धिर्विदुरो दृष्टवांस्तदा
आपदं तेन मां पार्थ स संबोधितवान्पुरा १६
ते वयं बोधितास्तेन बुद्धवन्तोऽशिवं गृहम्
आचार्यैः सुकृतं गूढैर्दुर्योधनवशानुगैः १७
भीम उवाच
यदिदं गृहमाग्नेयं विहितं मन्यते भवान्
तत्रैव साधु गच्छामो यत्र पूर्वोषिता वयम् १८
युधिष्ठिर उवाच
इह यत्तैर्निराकारैर्वस्तव्यमिति रोचते
नष्टैरिव विचिन्वद्भिर्गतिमिष्टां ध्रुवामितः १९
यदि विन्देत चाकारमस्माकं हि पुरोचनः
शीघ्रकारी ततो भूत्वा प्रसह्यापि दहेत नः २०
नायं बिभेत्युपक्रोशादधर्माद्वा पुरोचनः
यथा हि वर्तते मन्दः सुयोधनमते स्थितः २१
अपि चेह प्रदग्धेषु भीष्मोऽस्मासु पितामहः
कोपं कुर्यात्किमर्थं वा कौरवान्कोपयेत सः
धर्म इत्येव कुप्येत तथान्ये कुरुपुङ्गवाः २२
वयं तु यदि दाहस्य बिभ्यतः प्रद्रवेम हि
स्पशैर्नो घातयेत्सर्वान्राज्यलुब्धः सुयोधनः २३
अपदस्थान्पदे तिष्ठन्नपक्षान्पक्षसंस्थितः
हीनकोशान्महाकोशः प्रयोगैर्घातयेद्ध्रुवम् २४
तदस्माभिरिमं पापं तं च पापं सुयोधनम्
वञ्चयद्भिर्निवस्तव्यं छन्नवासं क्वचित्क्वचित् २५
ते वयं मृगयाशीलाश्चराम वसुधामिमाम्

तथा नो विदिता मार्गा भविष्यन्ति पलायताम् २६
भौमं च बिलमद्यैव करवाम सुसंवृतम्
गूढोच्छ्वासान्न नस्तत्र हुताशः संप्रधक्ष्यति २७
वसतोऽत्र यथा चास्मान्न बुध्येत पुरोचनः
पौरो वापि जनः कश्चित्तथा कार्यमतन्द्रितैः २८
इति श्रीमहाभारते आदिपर्वणि चतुस्त्रिंशदधिकशततमोऽध्यायः १३४

पञ्चत्रिंशदधिक शततमोऽध्यायः

वैशम्पायन उवाच
विदुरस्य सुहृत्कश्चित्खनकः कुशलः क्वचित्
विविक्ते पाण्डवान्राजन्निदं वचनमब्रवीत् १
प्रहितो विदुरेणास्मि खनकः कुशलो भृशम्
पाण्डवानां प्रियं कार्यमिति किं करवाणि वः २
प्रच्छन्नं विदुरेणोक्तः श्रेयस्त्वमिह पाण्डवान्
प्रतिपादय विश्वासादिति किं करवाणि वः ३
कृष्णपक्षे चतुर्दश्यां रात्रावस्य पुरोचनः
भवनस्य तव द्वारि प्रदास्यति हुताशनम् ४
मात्रा सह प्रदग्धव्याः पाण्डवाः पुरुषर्षभाः
इति व्यवसितं पार्थ धार्तराष्ट्रस्य मे श्रुतम् ५
किंचिच्च विदुरेणोक्तो म्लेच्छवाचासि पाण्डव
त्वया च तत्तथेत्युक्तमेतद्विश्वासकारणम् ६
उवाच तं सत्यधृतिः कुन्तीपुत्रो युधिष्ठिरः
अभिजानामि सौम्य त्वां सुहृदं विदुरस्य वै ७
शुचिमाप्तं प्रियं चैव सदा च दृढभक्तिकम्
न विद्यते कवेः किंचिदभिज्ञानप्रयोजनम् ८
यथा नः स तथा नस्त्वं निर्विशेषा वयं त्वयि
भवतः स्म यथा तस्य पालयास्मान्यथा कविः ९
इदं शरणमाग्नेयं मदर्थमिति मे मतिः
पुरोचनेन विहितं धार्तराष्ट्रस्य शासनात् १०
स पापः कोशवांश्चैव ससहायश्च दुर्मतिः

अस्मानपि च दुष्टात्मा नित्यकालं प्रबाधते ११
स भवान्मोक्षयत्वस्मान्यत्नेनास्माद्धुताशनात्
अस्मास्विह हि दग्धेषु सकामः स्यात्सुयोधनः १२
समृद्धमायुधागारमिदं तस्य दुरात्मनः
वप्रान्ते निष्प्रतीकारमाश्लिष्येदं कृतं महत् १३
इदं तदशुभं नूनं तस्य कर्म चिकीर्षितम्
प्रागेव विदुरो वेद तेनास्मानन्वबोधयत् १४
सेयमापदनुप्राप्ता क्षत्ता यां दृष्टवान्पुरा
पुरोचनस्याविदितानस्मांस्त्वं विप्रमोचय १५
स तथेति प्रतिश्रुत्य खनको यत्नमास्थितः
परिखामुत्किरन्नाम चकार सुमहद्बिलम् १६
चक्रे च वेश्मनस्तस्य मध्ये नातिमहन्मुखम्
कपाटयुक्तमज्ञातं समं भूम्या च भारत १७
पुरोचनभयाच्चैव व्यदधात्संवृतं मुखम्
स तत्र च गृहद्वारि वसत्यशुभधीः सदा १८
तत्र ते सायुधाः सर्वे वसन्ति स्म क्षपां नृप
दिवा चरन्ति मृगयां पाण्डवेया वनाद्वनम् १९
विश्वस्तवदविश्वस्ता वञ्चयन्तः पुरोचनम्
अतुष्टास्तुष्टवद्राजन्नूषुः परमदुःखिताः २०
न चैनानन्वबुध्यन्त नरा नगरवासिनः
अन्यत्र विदुरामात्यात्तस्मात्खनकसत्तमात् २१

इति श्रीमहाभारते आदिपर्वणि पञ्चत्रिंशदधिकशततमोऽध्यायः १३५

## षट्त्रिंशदधिक शततमोऽध्यायः

वैशम्पायन उवाच
तांस्तु दृष्ट्वा सुमनसः परिसंवत्सरोषितान्
विश्वस्तानिव संलक्ष्य हर्षं चक्रे पुरोचनः १
पुरोचने तथा हृष्टे कौन्तेयोऽथ युधिष्ठिरः
भीमसेनार्जुनौ चैव यमौ चोवाच धर्मवित् २
अस्मानयं सुविश्वस्तान्वेत्ति पापः पुरोचनः

वञ्चितोऽय नृशंसात्मा कालं मन्ये पलायने ३
आयुधागारमादीप्य दग्ध्वा चैव पुरोचनम्
षट् प्राणिनो निधायेह द्रवामोऽनभिलक्षिताः ४
अथ दानापदेशेन कुन्ती ब्राह्मणभोजनम्
चक्रे निशि महद्राजन्नाजग्मुस्तत्र योषितः ५
ता विहृत्य यथाकामं भुक्त्वा पीत्वा च भारत
जग्मुर्निशि गृहानेव समनुज्ञाप्य माधवीम् ६
निषादी पञ्चपुत्रा तु तस्मिन्भोज्ये यदृच्छया
अन्नार्थिनी समभ्यागात्सपुत्रा कालचोदिता ७
सा पीत्वा मदिरां मत्ता सपुत्रा मदविह्वला
सह सर्वैः सुतै राजंस्तस्मिन्नेव निवेशने
सुष्वाप विगतज्ञाना मृतकल्पा नराधिप ८
अथ प्रवाते तुमुले निशि सुप्ते जने विभो
तदुपादीपयद्भीमः शेते यत्र पुरोचनः ९
ततः प्रतापः सुमहाञ्शब्दश्चैव विभावसोः
प्रादुरासीत्तदा तेन बुबुधे स जनव्रजः १०
पौरा ऊचुः
दुर्योधनप्रयुक्तेन पापेनाकृतबुद्धिना
गृहमात्मविनाशाय कारितं दाहितं च तत् ११
अहो धिग्धृतराष्ट्रस्य बुद्धिर्नातिसमञ्जसी
यः शुचीन्पाण्डवान्बालान्दाहयामास मन्त्रिणा १२
दिष्ट्या त्विदानीं पापात्मा दग्धोऽयमतिदुर्मतिः
अनागसः सुविश्वस्तान्यो ददाह नरोत्तमान् १३
वैशम्पायन उवाच
एवं ते विलपन्ति स्म वारणावतका जनाः
परिवार्य गृहं तच्च तस्थू रात्रौ समन्ततः १४
पाण्डवाश्चापि ते राजन्मात्रा सह सुदुःखिताः
बिलेन तेन निर्गत्य जग्मुः गूढमलक्षिताः १५
तेन निद्रोपरोधेन साध्वसेन च पाण्डवाः
न शेकुः सहसा गन्तुं सह मात्रा परंतपाः १६

भीमसेनस्तु राजेन्द्र भीमवेगपराक्रमः
जगाम भ्रातॄनादाय सर्वान्मातरमेव च १७
स्कन्धमारोप्य जननीं यमावङ्केन वीर्यवान्
पार्थौ गृहीत्वा पाणिभ्यां भ्रातरौ सुमहाबलौ १८
तरसा पादपान्भञ्जन्महीं पद्भ्यां विदारयन्
स जगामाशु तेजस्वी वातरंहा वृकोदरः १९
इति श्रीमहाभारते आदिपर्वणि षट्त्रिंशदधिकशततमोऽध्यायः १३६

## सप्तत्रिंशदधिक शततमोऽध्यायः

वैशम्पायन उवाच
अथ रात्र्यां व्यतीतायामशेषो नागरो जनः
तत्राजगाम त्वरितो दिदृक्षुः पाण्डुनन्दनान् १
निर्वापयन्तो ज्वलनं ते जना ददृशुस्ततः
जातुषं तद्गृहं दग्धममात्यं च पुरोचनम् २
नूनं दुर्योधनेनेदं विहितं पापकर्मणा
पाण्डवानां विनाशाय इत्येवं चुक्रुशुर्जनाः ३
विदिते धृतराष्ट्रस्य धार्तराष्ट्रो न संशयः
दग्धवान्पाण्डुदायादान्न ह्येनं प्रतिषिद्धवान् ४
नूनं शान्तनवो भीष्मो न धर्ममनुवर्तते
द्रोणश्च विदुरश्चैव कृपश्चान्ये च कौरवाः ५
ते वयं धृतराष्ट्रस्य प्रेषयामो दुरात्मनः
संवृत्तस्ते परः कामः पाण्डवान्दग्धवानसि ६
ततो व्यपोहमानास्ते पाण्डवार्थे हुताशनम्
निषादीं ददृशुर्दग्धां पञ्चपुत्रामनागसम् ७
खनकेन तु तेनैव वेश्म शोधयता बिलम्
पांसुभिः प्रत्यपिहितं पुरुषैस्तैरलक्षितम् ८
ततस्ते प्रेषयामासुर्धृतराष्ट्रस्य नागराः
पाण्डवानग्निना दग्धानमात्यं च पुरोचनम् ९
श्रुत्वा तु धृतराष्ट्रस्तद्राजा सुमहदप्रियम्
विनाशं पाण्डुपुत्राणां विललाप सुदुःखितः १०

अद्य पाण्डुर्मृतो राजा भ्राता मम सुदुर्लभः
तेषु वीरेषु दग्धेषु मात्रा सह विशेषतः ११
गच्छन्तु पुरुषाः शीघ्रं नगरं वारणावतम्
सत्कारयन्तु तान्वीरान्कुन्तिराजसुतां च ताम् १२
कारयन्तु च कुल्यानि शुभानि च महान्ति च
ये च तत्र मृतास्तेषां सुहृदोऽचन्तु तानपि १३
एवं गते मया शक्यं यद्यत्कारयितुं हितम्
पाण्डवानां च कुन्त्याश्च तत्सर्वं क्रियतां धनैः १४
एवमुक्त्वा ततश्चक्रे ज्ञातिभिः परिवारितः
उदकं पाण्डुपुत्राणां धृतराष्ट्रोऽम्बिकासुतः १५
चुक्रुशुः कौरवः सर्वे भृशं शोकपरायणाः
विदुरस्त्वल्पशश्चक्रे शोकं वेद परं हि सः १६
पाण्डवाश्चापि निर्गत्य नगराद्वारणावतात्
जवेन प्रययू राजन्दक्षिणां दिशमाश्रिताः १७
विज्ञाय निशि पन्थानं नक्षत्रैर्दक्षिणामुखाः
यतमाना वनं राजन्गहनं प्रतिपेदिरे १८
ततः श्रान्ताः पिपासार्ता निद्रान्धाः पाण्डुनन्दनाः
पुनरूचुर्महावीर्यं भीमसेनमिदं वचः १९
इतः कष्टतरं किं नु यद्वयं गहने वने
दिशश्च न प्रजानीमो गन्तुं चैव न शक्नुमः २०
तं च पापं न जानीमो यदि दग्धः पुरोचनः
कथं नु विप्रमुच्येम भयादस्मादलक्षिताः २१
पुनरस्मानुपादाय तथैव व्रज भारत
त्वं हि नो बलवानेको यथा सततगस्तथा २२
इत्युक्तो धर्मराजेन भीमसेनो महाबलः
आदाय कुन्तीं भ्रातॄंश्च जगामाशु महाबलः २३
इति श्रीमहाभारते आदिपर्वणि सप्तत्रिंशदधिकशततमोऽध्यायः १३७

अष्टत्रिंशदधिक शततमोऽध्यायः

वैशम्पायन उवाच

तेन विक्रमता तूर्णमूरुवेगसमीरितम्
प्रववावनिलो राजञ्शुचिशुक्रागमे यथा १
स मृद्नन्पुष्पितांश्चैव फलितांश्च वनस्पतीन्
आरुजन्दारुगुल्मांश्च पथस्तस्य समीपजान् २
तथा वृक्षान्भञ्जमानो जगामामितविक्रमः
तस्य वेगेन पाण्डूनां मूर्च्छेव समजायत ३
असकृच्चापि संतीर्य दूरपारं भुजप्लवैः
पथि प्रच्छन्नमासेदुर्धार्तराष्ट्रभयात्तदा ४
कृच्छ्रेण मातरं त्वेकां सुकुमारीं यशस्विनीम्
अवहत्तत्र पृष्ठेन रोधःसु विषमेषु च ५
आगमंस्ते वनोद्देशमल्पमूलफलोदकम्
क्रूरपक्षिमृगं घोरं सायाह्ने भरतर्षभाः ६
घोरा समभवत्सन्ध्या दारुणा मृगपक्षिणः
अप्रकाशा दिशः सर्वा वातैरासन्ननार्तवैः ७
ते श्रमेण च कौरव्यास्तृष्णया च प्रपीडिताः
नाशक्नुवंस्तदा गन्तुं निद्रया च प्रवृद्धया ८
ततो भीमो वनं घोरं प्रविश्य विजनं महत्
न्यग्रोधं विपुलच्छायं रमणीयमुपाद्रवत् ९
तत्र निक्षिप्य तान्सर्वानुवाच भरतर्षभः
पानीयं मृगयामीह विश्रमध्वमिति प्रभो १०
एते रुवन्ति मधुरं सारसा जलचारिणः
ध्रुवमत्र जलस्थायो महानिति मतिर्मम ११
अनुज्ञातः स गच्छेति भ्रात्रा ज्येष्ठेन भारत
जगाम तत्र यत्र स्म रुवन्ति जलचारिणः १२
स तत्र पीत्वा पानीयं स्नात्वा च भरतर्षभ
उत्तरीयेण पानीयमाजहार तदा नृप १३
गव्यूतिमात्रादागत्य त्वरितो मातरं प्रति
स सुप्तां मातरं दृष्ट्वा भ्रातॄंश्च वसुधातले
भृशं दुःखपरीतात्मा विललाप वृकोदरः १४
शयनेषु परार्ध्येषु ये पुरा वारणावते

नाधिजग्मुस्तदा निद्रां तेऽद्य सुप्ता महीतले १५
स्वसारं वसुदेवस्य शत्रुसङ्घावमर्दिनः
कुन्तिभोजसुतां कुन्तीं सर्वलक्षणपूजिताम् १६
स्नुषां विचित्रवीर्यस्य भार्यां पाण्डोर्महात्मनः
प्रासादशयनां नित्यं पुण्डरीकान्तरप्रभाम् १७
सुकुमारतरां स्त्रीणां महार्हशयनोचिताम्
शयानां पश्यताद्येह पृथिव्यामतथोचिताम् १८
धर्मादिन्द्राच्च वायोश्च सुषुवे या सुतानिमान्
सेयं भूमौ परिश्रान्ता शेते ह्यद्यातथोचिता १९
किं नु दुःखतरं शक्यं मया द्रष्टुमतः परम्
योऽहमद्य नरव्याघ्रान्सुप्तान्पश्यामि भूतले २०
त्रिषु लोकेषु यद्राज्यं धर्मविद्योऽर्हते नृपः
सोऽय भूमौ परिश्रान्तः शेते प्राकृतवत्कथम् २१
अयं नीलाम्बुदश्यामो नरेष्वप्रतिमो भुवि
शेते प्राकृतवद्भूमावतो दुःखतरं नु किम् २२
अश्विनाविव देवानां याविमौ रूपसंपदा
तौ प्राकृतवदद्येमौ प्रसुप्तौ धरणीतले २३
ज्ञातयो यस्य नैव स्युर्विषमाः कुलपांसनाः
स जीवेत्सुसुखं लोके ग्रामे द्रुम इवैकजः २४
एको वृक्षो हि यो ग्रामे भवेत्पर्णफलान्वितः
चैत्यो भवति निर्ज्ञातिरर्चनीयः सुपूजितः २५
येषां च बहवः शूरा ज्ञातयो धर्मसंश्रिताः
ते जीवन्ति सुखं लोके भवन्ति च निरामयाः २६
बलवन्तः समृद्धार्था मित्रबान्धवनन्दनाः
जीवन्त्यन्योन्यमाश्रित्य द्रुमाः काननजा इव २७
वयं तु धृतराष्ट्रेण सपुत्रेण दुरात्मना
विवासिता न दग्धाश्च कथंचित्तस्य शासनात् २८
तस्मान्मुक्ता वयं दाहादिमं वृक्षमुपाश्रिताः
कां दिशं प्रतिपत्स्यामः प्राप्ताः क्लेशमनुत्तमम् २९
नातिदूरे च नगरं वनादस्माद्धि लक्षये

जागर्तव्ये स्वपन्तीमे हन्त जागर्म्यहं स्वयम् ३०
पास्यन्तीमे जलं पश्चात्प्रतिबुद्धा जितक्लमाः
इति भीमो व्यवस्यैव जजागार स्वयं तदा ३१
इति श्रीमहाभारते आदिपर्वणि अष्टत्रिंशदधिकशततमोऽध्यायः १३८

## एकोनचत्वारिंशदधिक शततमोऽध्यायः

वैशम्पायन उवाच
तत्र तेषु शयानेषु हिडिम्बो नाम राक्षसः
अविदूरे वनात्तस्माच्छालवृक्षमुपाश्रितः १
क्रूरो मानुषमांसादो महावीर्यो महाबलः
विरूपरूपः पिङ्गाक्षः करालो घोरदर्शनः
पिशितेप्सुः क्षुधार्तस्तानपश्यत यदृच्छया २
ऊर्ध्वाङ्गुलि स कण्डूयन्धुन्वन्रूक्षाञ्शिरोरुहान्
जृम्भमाणो महावक्त्रः पुनः पुनरवेक्ष्य च ३
दुष्टो मानुषमांसादो महाकायो महाबलः
आघ्राय मानुषं गन्धं भगिनीमिदमब्रवीत् ४
उपपन्नश्चिरस्याद्य भक्ष्यो मम मनःप्रियः
स्नेहस्त्रवान्प्रस्त्रवति जिह्वा पर्येति मे मुखम् ५
अष्टौ दंष्ट्राः सुतीक्ष्णाग्राश्चिरस्यापातदुःसहाः
देहेषु मज्जयिष्यामि स्निग्धेषु पिशितेषु च ६
आक्रम्य मानुषं कण्ठमाच्छिद्य धमनीमपि
उष्णं नवं प्रपास्यामि फेनिलं रुधिरं बहु ७
गच्छ जानीहि के त्वेते शेरते वनमाश्रिताः
मानुषो बलवान्गन्धो घ्राणं तर्पयतीव मे ८
हत्वैतान्मानुषान्सर्वानानयस्व ममान्तिकम्
अस्मद्विषयसुप्तेभ्यो नैतेभ्यो भयमस्ति ते ९
एषां मांसानि संस्कृत्य मानुषाणां यथेष्टतः
भक्षयिष्याव सहितौ कुरु तूर्णं वचो मम १०
भ्रातुर्वचनमाज्ञाय त्वरमाणेव राक्षसी
जगाम तत्र यत्र स्म पाण्डवा भरतर्षभ ११

ददर्श तत्र गत्वा सा पाण्डवान्पृथया सह
शयानान्भीमसेनं च जाग्रतं त्वपराजितम् १२
दृष्ट्वैव भीमसेनं सा शालस्कन्धमिवोद्गतम्
राक्षसी कामयामास रूपेणाप्रतिमं भुवि १३
अयं श्यामो महाबाहुः सिंहस्कन्धो महाद्युतिः
कम्बुग्रीवः पुष्कराक्षो भर्ता युक्तो भवेन्मम १४
नाहं भ्रातुर्वचो जातु कुर्यां क्रूरोपसंहितम्
पतिस्नेहोऽतिबलवान्न तथा भ्रातृसौहृदम् १५
मुहूर्तमिव तृप्तिश्च भवेद्भ्रातुर्ममैव च
हतैरेतैरहत्वा तु मोदिष्ये शाश्वतीः समाः १६
सा कामरूपिणी रूपं कृत्वा मानुषमुत्तमम्
उपतस्थे महाबाहुं भीमसेनं शनैः शनैः १७
विलज्जमानेव लता दिव्याभरणभूषिता
स्मितपूर्वमिदं वाक्यं भीमसेनमथाब्रवीत् १८
कुतस्त्वमसि संप्राप्तः कश्चासि पुरुषर्षभ
क इमे शेरते चेह पुरुषा देवरूपिणः १९
केयं च बृहती श्यामा सुकुमारी तवानघ
शेते वनमिदं प्राप्य विश्वस्ता स्वगृहे यथा २०
नेदं जानाति गहनं वनं राक्षससेवितम्
वसति ह्यत्र पापात्मा हिडिम्बो नाम राक्षसः २१
तेनाहं प्रेषिता भ्रात्रा दुष्टभावेन रक्षसा
बिभक्षयिषता मांसं युष्माकममरोपम २२
साहं त्वामभिसंप्रेक्ष्य देवगर्भसमप्रभम्
नान्यं भर्तारमिच्छामि सत्यमेतद्ब्रवीमि ते २३
एतद्विज्ञाय धर्मज्ञ युक्तं मयि समाचर
कामोपहतचित्ताङ्गीं भजमानां भजस्व माम् २४
त्रास्येऽहं त्वां महाबाहो राक्षसात्पुरुषादकात्
वत्स्यावो गिरिदुर्गेषु भर्ता भव ममानघ २५
अन्तरिक्षचरा ह्यस्मि कामतो विचरामि च
अतुलामाप्नुहि प्रीतिं तत्र तत्र मया सह २६

भीम उवाच
मातरं भ्रातरं ज्येष्ठं कनिष्ठानपरानिमान्
परित्यजेत को न्वद्य प्रभवन्निह राक्षसि २७
को हि सुप्तानिमान्भ्रातॄन्दत्त्वा राक्षसभोजनम्
मातरं च नरो गच्छेत्कामार्त इव मद्विधः २८
राक्षस्युवाच
यत्ते प्रियं तत्करिष्ये सर्वानेतान्प्रबोधय
मोक्षयिष्यामि वः कामं राक्षसात्पुरुषादकात् २९
भीम उवाच
सुखसुप्तान्वने भ्रातॄन्मातरं चैव राक्षसि
न भयाद्बोधयिष्यामि भ्रातुस्तव दुरात्मनः ३०
न हि मे राक्षसा भीरु सोढुं शक्ताः पराक्रमम्
न मनुष्या न गन्धर्वा न यक्षाश्चारुलोचने ३१
गच्छ वा तिष्ठ वा भद्रे यद्वापीच्छसि तत्कुरु
तं वा प्रेषय तन्वङ्गि भ्रातरं पुरुषादकम् ३२
इति श्रीमहाभारते आदिपर्वणि एकोनचत्वारिंशदधिकशततमोऽध्यायः १३९

## चत्वारिंशदधिक शततमोऽध्यायः

वैशम्पायन उवाच
तां विदित्वा चिरगतां हिडिम्बो राक्षसेश्वरः
अवतीर्य द्रुमात्तस्मादाजगामाथ पाण्डवान् १
लोहिताक्षो महाबाहुरूर्ध्वकेशो महाबलः
मेघसङ्घातवर्ष्मा च तीक्ष्णदंष्ट्रोज्ज्वलाननः २
तमापतन्तं दृष्ट्वैव तथा विकृतदर्शनम्
हिडिम्बोवाच वित्रस्ता भीमसेनमिदं वचः ३
आपतत्येष दुष्टात्मा संक्रुद्धः पुरुषादकः
त्वामहं भ्रातृभिः सार्धं यद्ब्रवीमि तथा कुरु ४
अहं कामगमा वीर रक्षोबलसमन्विता
आरुहेमां मम श्रोणिं नेष्यामि त्वां विहायसा ५
प्रबोधयैनान्संसुप्तान्मातरं च परंतप

सर्वानेव गमिष्यामि गृहीत्वा वो विहायसा ६
भीम उवाच
मा भैस्त्वं विपुलश्रोणि नैष कश्चिन्मयि स्थिते
अहमेनं हनिष्यामि प्रेक्षन्त्यास्ते सुमध्यमे ७
नायं प्रतिबलो भीरु राक्षसापसदो मम
सोढुं युधि परिस्पन्दमथवा सर्वराक्षसाः ८
पश्य बाहू सुवृत्तौ मे हस्तिहस्तनिभाविमौ
ऊरू परिघसङ्काशौ संहतं चाप्युरो मम ९
विक्रमं मे यथेन्द्रस्य साद्य द्रक्ष्यसि शोभने
मावमंस्थाः पृथुश्रोणि मत्वा मामिह मानुषम् १०
हिडिम्बोवाच
नावमन्ये नरव्याघ्र त्वामहं देवरूपिणम्
दृष्टापदानस्तु मया मानुषेष्वेव राक्षसः ११
वैशम्पायन उवाच
तथा संजल्पतस्तस्य भीमसेनस्य भारत
वाचः शुश्राव ताः क्रुद्धो राक्षसः पुरुषादकः १२
अवेक्षमाणस्तस्याश्च हिडिम्बो मानुषं वपुः
स्रग्दामपूरितशिखं समग्रेन्दुनिभाननम् १३
सुभ्रूनासाक्षिकेशान्तं सुकुमारनखत्वचम्
सर्वाभरणसंयुक्तं सुसूक्ष्माम्बरवाससम् १४
तां तथा मानुषं रूपं बिभ्रतीं सुमनोहरम्
पुंस्कामां शङ्कमानश्च चुक्रोध पुरुषादकः १५
संक्रुद्धो राक्षसस्तस्या भगिन्याः कुरुसत्तम
उत्फाल्य विपुले नेत्रे ततस्तामिदमब्रवीत् १६
को हि मे भोक्तुकामस्य विघ्नं चरति दुर्मतिः
न बिभेषि हिडिम्बे किं मत्कोपाद्विप्रमोहिता १७
धिक्त्वामसति पुंस्कामे मम विप्रियकारिणि
पूर्वेषां राक्षसेन्द्राणां सर्वेषामयशस्करि १८
यानिमानाश्रिताकार्षीरप्रियं सुमहन्मम
एष तानद्य वै सर्वान्हनिष्यामि त्वया सह १९

एवमुक्त्वा हिडिम्बां स हिडिम्बो लोहितेक्षणः
वधायाभिपपातैनां दन्तैर्दन्तानुपस्पृशन् २०
तमापतन्तं संप्रेक्ष्य भीमः प्रहरतां वरः
भर्त्सयामास तेजस्वी तिष्ठ तिष्ठेति चाब्रवीत् २१
इति श्रीमहाभारते आदिपर्वणि चत्वारिंशदधिकशततमोऽध्यायः १४०

## एक चत्वारिंशदधिक शततमोऽध्यायः

वैशम्पायन उवाच
भीमसेनस्तु तं दृष्ट्वा राक्षसं प्रहसन्निव
भगिनीं प्रति संक्रुद्धमिदं वचनमब्रवीत् १
किं ते हिडिम्ब एतैर्वा सुखसुप्तैः प्रबोधितैः
मामासादय दुर्बुद्धे तरसा त्वं नराशन २
मय्येव प्रहरैहि त्वं न स्त्रियं हन्तुमर्हसि
विशेषतोऽनपकृते परेणापकृते सति ३
न हीयं स्ववशा बाला कामयत्यद्य मामिह
चोदितैषा ह्यनङ्गेन शरीरान्तरचारिणा
भगिनी तव दुर्बुद्धे राक्षसानां यशोहर ४
त्वन्नियोगेन चैवेयं रूपं मम समीक्ष्य च
कामयत्यद्य मां भीरुर्नैषा दूषयते कुलम् ५
अनङ्गेन कृते दोषे नेमां त्वमिह राक्षस
मयि तिष्ठति दुष्टात्मन्न स्त्रियं हन्तुमर्हसि ६
समागच्छ मया सार्धमेकेनैको नराशन
अहमेव नयिष्यामि त्वामद्य यमसादनम् ७
अद्य ते तलनिष्पिष्टं शिरो राक्षस दीर्यताम्
कुञ्जरस्येव पादेन विनिष्पिष्टं बलीयसः ८
अद्य गात्राणि क्रव्यादाः श्येना गोमायवश्च ते
कर्षन्तु भुवि संहृष्टा निहतस्य मया मृधे ९
क्षणेनाद्य करिष्येऽहमिदं वनमकण्टकम्
पुरस्ताद्दूषितं नित्यं त्वया भक्षयता नरान् १०
अद्य त्वां भगिनी पाप कृष्यमाणं मया भुवि

द्रक्ष्यत्यद्रिप्रतीकाशं सिंहेनेव महाद्विपम् ११
निराबाधास्त्वयि हते मया राक्षसपांसन
वनमेतच्चरिष्यन्ति पुरुषा वनचारिणः १२
हिडिम्ब उवाच
गर्जितेन वृथा किं ते कत्थितेन च मानुष
कृत्वैतत्कर्मणा सर्वं कत्थेथा मा चिरं कृथाः १३
बलिनं मन्यसे यच्च आत्मानमपराक्रमम्
ज्ञास्यस्यद्य समागम्य मयात्मानं बलाधिकम् १४
न तावदेतान्हिंसिष्ये स्वपन्त्वेते यथासुखम्
एष त्वामेव दुर्बुद्धे निहन्म्यद्याप्रियंवदम् १५
पीत्वा तवासृग्गात्रेभ्यस्ततः पश्चादिमानपि
हनिष्यामि ततः पश्चादिमां विप्रियकारिणीम् १६
वैशम्पायन उवाच
एवमुक्त्वा ततो बाहुं प्रगृह्य पुरुषादकः
अभ्यधावत संक्रुद्धो भीमसेनमरिन्दमम् १७
तस्याभिपततस्तूर्णं भीमो भीमपराक्रमः
वेगेन प्रहृतं बाहुं निजग्राह हसन्निव १८
निगृह्य तं बलाद्भीमो विस्फुरन्तं चकर्ष ह
तस्माद्देशाद्धनूंष्यष्टौ सिंहः क्षुद्रमृगं यथा १९
ततः स राक्षसः क्रुद्धः पाण्डवेन बलाद्धृतः
भीमसेनं समालिङ्ग्य व्यनदद्भैरवं रवम् २०
पुनर्भीमो बलादेनं विचकर्ष महाबलः
मा शब्दः सुखसुप्तानां भ्रातॄणां मे भवेदिति २१
अन्योन्यं तौ समासाद्य विचकर्षतुरोजसा
राक्षसो भीमसेनश्च विक्रमं चक्रतुः परम् २२
बभञ्जतुर्महावृक्षाल्लँताश्चाकर्षतुस्ततः
मत्ताविव सुसंरब्धौ वारणौ षष्टिहायनौ २३
तयोः शब्देन महता विबुधास्ते नरर्षभाः
सह मात्रा च ददृशुर्हिडिम्बामग्रतः स्थिताम् २४
इति श्रीमहाभारते आदिपर्वणि एकचत्वारिंशदधिकशततमोऽध्यायः १४१

## द्विचत्वारिंशदधिक शततमोऽध्यायः

वैशम्पायन उवाच
प्रबुद्धास्ते हिडिम्बाया रूपं दृष्ट्वातिमानुषम्
विस्मिताः पुरुषव्याघ्रा बभूवुः पृथया सह १
ततः कुन्ती समीक्ष्यैनां विस्मिता रूपसम्पदा
उवाच मधुरं वाक्यं सान्त्वपूर्वमिदं शनैः २
कस्य त्वं सुरगर्भाभे का चासि वरवर्णिनि
केन कार्येण सुश्रोणि कुतश्चागमनं तव ३
यदि वास्य वनस्यासि देवता यदि वाप्सराः
आचक्ष्व मम तत्सर्वं किमर्थं चेह तिष्ठसि ४
हिडिम्बोवाच
यदेतत्पश्यसि वनं नीलमेघनिभं महत्
निवासो राक्षसस्यैतद्धिडिम्बस्य ममैव च ५
तस्य मां राक्षसेन्द्रस्य भगिनीं विद्धि भामिनि
भ्रात्रा संप्रेषितामार्ये त्वां सपुत्रां जिघांसता ६
क्रूरबुद्धेरहं तस्य वचनादागता इह
अद्राक्षं हेमवर्णाभं तव पुत्रं महौजसम् ७
ततोऽह सर्वभूतानां भावे विचरता शुभे
चोदिता तव पुत्रस्य मन्मथेन वशानुगा ८
ततो वृतो मया भर्ता तव पुत्रो महाबलः
अपनेतुं च यतितो न चैव शकितो मया ९
चिरायमाणां मां ज्ञात्वा ततः स पुरुषादकः
स्वयमेवागतो हन्तुमिमान्सर्वांस्तवात्मजान् १०
स तेन मम कान्तेन तव पुत्रेण धीमता
बलादितो विनिष्पिष्य व्यपकृष्टो महात्मना ११
विकर्षन्तौ महावेगौ गर्जमानौ परस्परम्
पश्यध्वं युधि विक्रान्तावेतौ तौ नरराक्षसौ १२
वैशम्पायन उवाच
तस्याः श्रुत्वैव वचनमुत्पपात युधिष्ठिरः
अर्जुनो नकुलश्चैव सहदेवश्च वीर्यवान् १३

तौ ते ददृशुरासक्तौ विकर्षन्तौ परस्परम्
काङ्क्षमाणौ जयं चैव सिंहाविव रणोत्कटौ १४
तावन्योन्यं समाश्लिष्य विकर्षन्तौ परस्परम्
दावाग्निधूमसदृशं चक्रतुः पार्थिवं रजः १५
वसुधारेणुसंवीतौ वसुधाधरसंनिभौ
विभ्राजेतां यथा शैलौ नीहारेणाभिसंवृतौ १६
राक्षसेन तदा भीमं क्लिश्यमानं निरीक्ष्य तु
उवाचेदं वचः पार्थः प्रहसञ्शनकैरिव १७
भीम मा भैर्महाबाहो न त्वां बुध्यामहे वयम्
समेतं भीमरूपेण प्रसुप्ताः श्रमकर्शिताः १८
साहाय्येऽस्मि स्थितः पार्थ योधयिष्यामि राक्षसम्
नकुलः सहदेवश्च मातरं गोपयिष्यतः १९
भीम उवाच
उदासीनो निरीक्षस्व न कार्यः संभ्रमस्त्वया
न जात्वयं पुनर्जीवेन्मद्बाह्वन्तरमागतः २०
अर्जुन उवाच
किमनेन चिरं भीम जीवता पापरक्षसा
गन्तव्यं न चिरं स्थातुमिह शक्यमरिन्दम २१
पुरा संरज्यते प्राची पुरा संध्या प्रवर्तते
रौद्रे मुहूर्ते रक्षांसि प्रबलानि भवन्ति च २२
त्वरस्व भीम मा क्रीड जहि रक्षो विभीषणम्
पुरा विकुरुते मायां भुजयोः सारमर्पय २३
वैशम्पायन उवाच
अर्जुनेनैवमुक्तस्तु भीमो भीमस्य रक्षसः
उत्क्षिप्याभ्रामयद्देहं तूर्णं गुणशताधिकम् २४
भीम उवाच
वृथामांसैर्वृथा पुष्टो वृथा वृद्धो वृथामतिः
वृथामरणमर्हस्त्वं वृथाद्य न भविष्यसि २५
अर्जुन उवाच
अथ वा मन्यसे भारं त्वमिमं राक्षसं युधि

करोमि तव साहाय्यं शीघ्रमेव निहन्यताम् २६
अथ वाप्यहमेवैनं हनिष्यामि वृकोदर
कृतकर्मा परिश्रान्तः साधु तावदुपारम २७
वैशम्पायन उवाच
तस्य तद्वचनं श्रुत्वा भीमसेनोऽत्यमर्षणः
निष्पिष्यैनं बलाद्भूमौ पशुमारममारयत् २८
स मार्यमाणो भीमेन ननाद विपुलं स्वनम्
पूरयंस्तद्वनं सर्वं जलार्द्र इव दुन्दुभिः २९
भुजाभ्यां योक्त्रयित्वा तं बलवान्पाण्डुनन्दनः
मध्ये भङ्क्त्वा स बलवान्हर्षयामास पाण्डवान् ३०
हिडिम्बं निहतं दृष्ट्वा संहृष्टास्ते तरस्विनः
अपूजयन्नरव्याघ्रं भीमसेनमरिंदमम् ३१
अभिपूज्य महात्मानं भीमं भीमपराक्रमम्
पुनरेवार्जुनो वाक्यमुवाचेदं वृकोदरम् ३२
नदूरे नगरं मन्ये वनादस्मादहं प्रभो
शीघ्रं गच्छाम भद्रं ते न नो विद्यात्सुयोधनः ३३
ततः सर्वे तथेत्युक्त्वा सह मात्रा परंतपाः
प्रययुः पुरुषव्याघ्रा हिडिम्बा चैव राक्षसी ३४
इति श्रीमहाभारते आदिपर्वणि द्विचत्वारिंशदधिकशततमोऽध्यायः १४२

## त्रिचत्वारिंशदधिक शततमोऽध्यायः

भीम उवाच
स्मरन्ति वैरं रक्षांसि मायामाश्रित्य मोहिनीम्
हिडिम्बे व्रज पन्थानं त्वं वै भ्रातृनिषेवितम् १
युधिष्ठिर उवाच
क्रुद्धोऽपि पुरुषव्याघ्र भीम मा स्म स्त्रियं वधीः
शरीरगुप्त्याभ्यधिकं धर्मं गोपय पाण्डव २
वधाभिप्रायमायान्तमवधीस्त्वं महाबलम्
रक्षसस्तस्य भगिनी किं नः क्रुद्धा करिष्यति ३
वैशम्पायन उवाच

हिडिम्बा तु ततः कुन्तीमभिवाद्य कृताञ्जलि
युधिष्ठिरं तु कौन्तेयमिदं वचनमब्रवीत् ४
आर्ये जानासि यद्दुःखमिह स्त्रीणामनङ्गजम्
तदिदं मामनुप्राप्तं भीमसेनकृतं शुभे ५
सोढं तत्परमं दुःखं मया कालप्रतीक्षया
सोऽयमभ्यागतः कालो भविता मे सुखाय वै ६
मया ह्युत्सृज्य सुहृदः स्वधर्मं स्वजनं तथा
वृतोऽय पुरुषव्याघ्रस्तव पुत्रः पतिः शुभे ७
वरेणापि तथानेन त्वया चापि यशस्विनि
तथा ब्रुवन्ती हि तदा प्रत्याख्याता क्रियां प्रति ८
त्वं मां मूढेति वा मत्वा भक्ता वानुगतेति वा
भर्त्रानेन महाभागे संयोजय सुतेन ते ९
तमुपादाय गच्छेयं यथेष्टं देवरूपिणम्
पुनश्चैवागमिष्यामि विश्रम्भं कुरु मे शुभे १०
अहं हि मनसा ध्याता सर्वान्नेष्यामि वः सदा
वृजिने तारयिष्यामि दुर्गेषु च नरर्षभान् ११
पृष्ठेन वो वहिष्यामि शीघ्रां गतिमभीप्सतः
यूयं प्रसादं कुरुत भीमसेनो भजेत माम् १२
आपदस्तरणे प्राणान्धारयेद्येन येन हि
सर्वमादृत्य कर्तव्यं तद्धर्ममनुवर्तता १३
आपत्सु यो धारयति धर्मं धर्मविदुत्तमः
व्यसनं ह्येव धर्मस्य धर्मिणामापदुच्यते १४
पुण्यं प्राणान्धारयति पुण्यं प्राणदमुच्यते
येन येनाचरेद्धर्मं तस्मिन्गर्हा न विद्यते १५
युधिष्ठिर उवाच
एवमेतद्यथात्थ त्वं हिडिम्बे नात्र संशयः
स्थातव्यं तु त्वया धर्मे यथा ब्रूयां सुमध्यमे १६
स्नातं कृताह्निकं भद्रे कृतकौतुकमङ्गलम्
भीमसेनं भजेथास्त्वं प्रागस्तगमनाद्रवेः १७
अहःसु विहरानेन यथाकामं मनोजवा

अयं त्वानयितव्यस्ते भीमसेनः सदा निशि १८
वैशम्पायन उवाच
तथेति तत्प्रतिज्ञाय हिडिम्बा राक्षसी तदा
भीमसेनमुपादाय ऊर्ध्वमाचक्रमे ततः १९
शैलशृङ्गेषु रम्येषु देवतायतनेषु च
मृगपक्षिविघुष्टेषु रमणीयेषु सर्वदा २०
कृत्वा च परमं रूपं सर्वाभरणभूषिता
सञ्जल्पन्ती सुमधुरं रमयामास पाण्डवम् २१
तथैव वनदुर्गेषु पुष्पितद्रुमसानुषु
सरःसु रमणीयेषु पद्मोत्पलयुतेषु च २२
नदीद्वीपप्रदेशेषु वैडूर्यसिकतासु च
सुतीर्थवनतोयासु तथा गिरिनदीषु च २३
सागरस्य प्रदेशेषु मणिहेमचितेषु च
पत्तनेषु च रम्येषु महाशालवनेषु च २४
देवारण्येषु पुण्येषु तथा पर्वतसानुषु
गुह्यकानां निवासेषु तापसायतनेषु च २५
सर्वर्तुफलपुष्पेषु मानसेषु सरःसु च
बिभ्रती परमं रूपं रमयामास पाण्डवम् २६
रमयन्ती तथा भीमं तत्र तत्र मनोजवा
प्रजज्ञे राक्षसी पुत्रं भीमसेनान्महाबलम् २७
विरूपाक्षं महावक्त्रं शङ्कुकर्णं विभीषणम्
भीमरूपं सुताम्रोष्ठं तीक्ष्णदंष्ट्रं महाबलम् २८
महेष्वासं महावीर्यं महासत्त्वं महाभुजम्
महाजवं महाकायं महामायमरिंदमम् २९
अमानुषं मानुषजं भीमवेगं महाबलम्
यः पिशाचानतीवान्यान्बभूवाति स मानुषान् ३०
बालोऽपि यौवनं प्राप्तो मानुषेषु विशां पते
सर्वास्त्रेषु परं वीरः प्रकर्षमगमद्बली ३१
सद्यो हि गर्भं राक्षस्यो लभन्ते प्रसवन्ति च
कामरूपधराश्चैव भवन्ति बहुरूपिणः ३२

प्रणम्य विकचः पादावगृह्णात्स पितुस्तदा
मातुश्च परमेष्वासस्तौ च नामास्य चक्रतुः ३३
घटभासोत्कच इति मातरं सोऽभ्यभाषत
अभवत्तेन नामास्य घटोत्कच इति स्म ह ३४
अनुरक्तश्च तानासीत्पाण्डवान्स घटोत्कचः
तेषां च दयितो नित्यमात्मभूतो बभूव सः ३५
संवाससमयो जीर्ण इत्यभाषत तं ततः
हिडिम्बा समयं कृत्वा स्वां गतिं प्रत्यपद्यत ३६
कृत्यकाल उपस्थास्ये पितॄनिति घटोत्कचः
आमन्त्र्य राक्षसश्रेष्ठः प्रतस्थे चोत्तरां दिशम् ३७
स हि सृष्टो मघवता शक्तिहेतोर्महात्मना
कर्णस्याप्रतिवीर्यस्य विनाशाय महात्मनः ३८
इति श्रीमहाभारते आदिपर्वणि त्रिचत्वारिंशदधिकशततमोऽध्यायः १४३

## चतुश्चत्वारिंशदधिक शततमोऽध्यायः

वैशम्पायन उवाच
ते वनेन वनं वीरा घ्नन्तो मृगगणान्बहून्
अपक्रम्य ययू राजंस्त्वरमाणा महारथाः १
मत्स्यांस्त्रिगर्तान्पञ्चालान्कीचकानन्तरेण च
रमणीयान्वनोद्देशान्प्रेक्षमाणाः सरांसि च २
जटाः कृत्वात्मनः सर्वे वल्कलाजिनवाससः
सह कुन्त्या महात्मानो बिभ्रतस्तापसं वपुः ३
क्वचिद्वहन्तो जननीं त्वरमाणा महारथाः
क्वचिच्छन्देन गच्छन्तस्ते जग्मुः प्रसभं पुनः ४
ब्राह्मं वेदमधीयाना वेदाङ्गानि च सर्वशः
नीतिशास्त्रं च धर्मज्ञा ददृशुस्ते पितामहम् ५
तेऽभिवाद्य महात्मानं कृष्णद्वैपायनं तदा
तस्थुः प्राञ्जलयः सर्वे सह मात्रा परंतपाः ६
व्यास उवाच
मयेदं मनसा पूर्वं विदितं भरतर्षभाः

यथा स्थितैरधर्मेण धार्तराष्ट्रैर्विवासिताः ७
तद्विदित्वास्मि संप्राप्तश्चिकीर्षुः परमं हितम्
न विषादोऽत्र कर्तव्यः सर्वमेतत्सुखाय वः ८
समास्ते चैव मे सर्वे यूयं चैव न संशयः
दीनतो बालतश्चैव स्नेहं कुर्वन्ति बान्धवाः ९
तस्मादभ्यधिकः स्नेहो युष्मासु मम सांप्रतम्
स्नेहपूर्वं चिकीर्षामि हितं वस्तन्निबोधत १०
इदं नगरमभ्याशे रमणीयं निरामयम्
वसतेह प्रतिच्छन्ना ममागमनकाङ्क्षिणः ११
वैशम्पायन उवाच
एवं स तान्समाश्वास्य व्यासः पार्थानरिंदमान्
एकचक्रामभिगतः कुन्तीमाश्वासयत्प्रभुः १२
जीव पुत्रि सुतस्तेऽय धर्मपुत्रो युधिष्ठिरः
पृथिव्यां पार्थिवान्सर्वान्प्रशासिष्यति धर्मराट् १३
धर्मेण जित्वा पृथिवीमखिलां धर्मविद्वशी
भीमसेनार्जुनबलाद्भोक्ष्यत्ययमसंशयः १४
पुत्रास्तव च माद्र्याश्च सर्व एव महारथाः
स्वराष्ट्रे विहरिष्यन्ति सुखं सुमनसस्तदा १५
यक्ष्यन्ति च नरव्याघ्रा विजित्य पृथिवीमिमाम्
राजसूयाश्वमेधाद्यैः क्रतुभिर्भूरिदक्षिणैः १६
अनुगृह्य सुहृद्वर्गं धनेन च सुखेन च
पितृपैतामहं राज्यमिह भोक्ष्यन्ति ते सुताः १७
एवमुक्त्वा निवेश्यैनान्ब्राह्मणस्य निवेशने
अब्रवीत्पार्थिवश्रेष्ठमृषिर्द्वैपायनस्तदा १८
इह मां संप्रतीक्षध्वमागमिष्याम्यहं पुनः
देशकालौ विदित्वैव वेत्स्यध्वं परमां मुदम् १९
स तैः प्राञ्जलिभिः सर्वैस्तथेत्युक्तो नराधिप
जगाम भगवान्व्यासो यथाकाममृषिः प्रभुः २०
इति श्रीमहाभारते आदिपर्वणि चतुश्चत्वारिंशदधिकशततमोऽध्यायः १४४

## पञ्चचत्वारिंशदधिकशततमोऽध्यायः

जनमेजय उवाच
एकचक्रां गतास्ते तु कुन्तीपुत्रा महारथाः
अतः परं द्विजश्रेष्ठ किमकुर्वत पाराडवाः १
वैशम्पायन उवाच
एकचक्रां गतास्ते तु कुन्तीपुत्रा महारथाः
ऊषुर्नातिचिरं कालं ब्राह्मणस्य निवेशने २
रमणीयानि पश्यन्तो वनानि विविधानि च
पार्थिवानपि चोद्देशान्सरितश्च सरांसि च ३
चेरुर्भैक्षं तदा ते तु सर्व एव विशां पते
बभूवुर्नागराणां च स्वैर्गुणैः प्रियदर्शनाः ४
निवेदयन्ति स्म च ते भैक्षं कुन्त्याः सदा निशि
तया विभक्तान्भागांस्ते भुञ्जते स्म पृथक्पृथक् ५
अर्धं ते भुञ्जते वीराः सह मात्रा परंतपाः
अर्धं भैक्षस्य सर्वस्य भीमो भुङ्क्ते महाबलः ६
तथा तु तेषां वसतां तत्र राजन्महात्मनाम्
अतिचक्राम सुमहान्कालोऽथ भरतर्षभ ७
ततः कदाचिद्भैक्षाय गतास्ते भरतर्षभाः
संगत्या भीमसेनस्तु तत्रास्ते पृथया सह ८
अथार्तिजं महाशब्दं ब्राह्मणस्य निवेशने
भृशमुत्पतितं घोरं कुन्ती शुश्राव भारत ९
रोरूयमाणांस्तान्सर्वान्परिदेवयतश्च सा
कारुरायात्साधुभावाच्च देवी राजन्न चक्षमे १०
मथ्यमानेव दुःखेन हृदयेन पृथा ततः
उवाच भीमं कल्याणी कृपान्वितमिदं वचः ११
वसामः सुसुखं पुत्र ब्राह्मणस्य निवेशने
अज्ञाता धार्तराष्ट्राणां सत्कृता वीतमन्यवः १२
सा चिन्तये सदा पुत्र ब्राह्मणस्यास्य किं न्वहम्
प्रियं कुर्यामिति गृहे यत्कुर्युरुषिताः सुखम् १३
एतावान्पुरुषस्तात कृतं यस्मिन्न नश्यति

यावच्च कुर्यादन्योऽस्य कुर्यादभ्यधिकं ततः १४
तदिदं ब्राह्मणस्यास्य दुःखमापतितं ध्रुवम्
तत्रास्य यदि साहाय्यं कुर्याम सुकृतं भवेत् १५
भीम उवाच
ज्ञायतामस्य यद्दुःखं यतश्चैव समुत्थितम्
विदिते व्यवसिष्यामि यद्यपि स्यात्सुदुष्करम् १६
वैशम्पायन उवाच
तथा हि कथयन्तौ तौ भूयः शुश्रुवतुः स्वनम्
आर्तिजं तस्य विप्रस्य सभार्यस्य विशां पते १७
अन्तःपुरं ततस्तस्य ब्राह्मणस्य महात्मनः
विवेश कुन्ती त्वरिता बद्धवत्सेव सौरभी १८
ततस्तं ब्राह्मणं तत्र भार्यया च सुतेन च
दुहित्रा चैव सहितं ददर्श विकृताननम् १९
ब्राह्मण उवाच
धिगिदं जीवितं लोकेऽलनसारमनर्थकम्
दुःखमूलं पराधीनं भृशमप्रियभागि च २०
जीविते परमं दुःखं जीविते परमो ज्वरः
जीविते वर्तमानस्य द्वन्द्वानामागमो ध्रुवः २१
एकात्मापि हि धर्मार्थौ कामं च न निषेवते
एतैश्च विप्रयोगोऽपि दुःखं परमकं मतम् २२
आहुः केचित्परं मोक्षं स च नास्ति कथंचन
अर्थप्राप्तौ च नरकः कृत्स्न एवोपपद्यते २३
अर्थेप्सुता परं दुःखमर्थप्राप्तौ ततोऽधिकम्
जातस्नेहस्य चार्थेषु विप्रयोगे महत्तरम् २४
न हि योगं प्रपश्यामि येन मुच्येयमापदः
पुत्रदारेण वा सार्धं प्राद्रवेयमनामयम् २५
यतितं वै मया पूर्वं यथा त्वं वेत्थ ब्राह्मणि
यतः क्षेमं ततो गन्तुं त्वया तु मम न श्रुतम् २६
इह जाता विवृद्धास्मि पिता चेह ममेति च
उक्तवत्यसि दुर्मेधे याच्यमाना मयासकृत् २७

स्वर्गतो हि पिता वृद्धस्तथा माता चिरं तव
बान्धवा भूतपूर्वाश्च तत्र वासे तु का रतिः २८
सोऽय ते बन्धुकामाया अशृणवन्त्या वचो मम
बन्धुप्रणाशः संप्राप्तो भृशं दुःखकरो मम २९
अथवा मद्विनाशोऽय न हि शक्ष्यामि कंचन
परित्यक्तुमहं बन्धुं स्वयं जीवन्नृशंसवत् ३०
सहधर्मचरीं दान्तां नित्यं मातृसमां मम
सखायं विहितां देवैर्नित्यं परमिकां गतिम् ३१
मात्रा पित्रा च विहितां सदा गार्हस्थ्यभागिनीम्
वरयित्वा यथान्यायं मन्त्रवत्परिणीय च ३२
कुलीनां शीलसंपन्नामपत्यजननीं मम
त्वामहं जीवितस्यार्थे साध्वीमनपकारिणीम्
परित्यक्तुं न शक्ष्यामि भार्यां नित्यमनुव्रताम् ३३
कुत एव परित्यक्तुं सुतां शक्ष्याम्यहं स्वयम्
बालामप्राप्तवयसमजातव्यञ्जनाकृतिम् ३४
भर्तुरर्थाय निक्षिप्तां न्यासं धात्रा महात्मना
यस्यां दौहित्रजाँल्लोकानाशंसे पितृभिः सह
स्वयमुत्पाद्य तां बालां कथमुत्स्रष्टुमुत्सहे ३५
मन्यन्ते केचिदधिकं स्नेहं पुत्रे पितुर्नराः
कन्यायां नैव तु पुनर्मम तुल्यावुभौ मतौ ३६
यस्मिँल्लोकाः प्रसूतिश्च स्थिता नित्यमथो सुखम्
अपापां तामहं बालां कथमुत्स्रष्टुमुत्सहे ३७
आत्मानमपि चोत्सृज्य तप्स्ये प्रेतवशं गतः
त्यक्ता ह्येते मया व्यक्तं नेह शक्ष्यन्ति जीवितुम् ३८
एषां चान्यतमत्यागो नृशंसो गर्हितो बुधैः
आत्मत्यागे कृते चेमे मरिष्यन्ति मया विना ३९
स कृच्छ्रामहमापन्नो न शक्तस्तर्तुमापदम्
अहो धिक्तां गतिं त्वद्य गमिष्यामि सबान्धवः
सर्वैः सह मृतं श्रेयो न तु मे जीवितं क्षमम् ४०
इति श्रीमहाभारते आदिपर्वणि पञ्चचत्वारिंशदधिकशततमोऽध्यायः १४५

## षट्चत्वारिंशदधिकशततमोऽध्यायः

ब्राह्मण्युवाच
न संतापस्त्वया कार्यः प्राकृतेनेव कर्हिचित्
न हि संतापकालोऽप वैद्यस्य तव विद्यते १
अवश्यं निधनं सर्वैर्गन्तव्यमिह मानवैः
अवश्यभाविन्यर्थे वै संतापो नेह विद्यते २
भार्या पुत्रोऽथ दुहिता सर्वमात्मार्थमिष्यते
व्यथां जहि सुबुद्ध्या त्वं स्वयं यास्यामि तत्र वै ३
एतद्धि परमं नार्याः कार्यं लोके सनातनम्
प्राणानपि परित्यज्य यद्भर्तृहितमाचरेत् ४
तच्च तत्र कृतं कर्म तवापीह सुखावहम्
भवत्यमुत्र चाक्षय्यं लोकेऽस्मिंश्च यशस्करम् ५
एष चैव गुरुर्धर्मो यं प्रवक्ष्याम्यहं तव
अर्थश्च तव धर्मश्च भूयानत्र प्रदृश्यते ६
यदर्थमिष्यते भार्या प्राप्तः सोऽथस्त्वया मयि
कन्या चैव कुमारश्च कृताहमनृणा त्वया ७
समर्थः पोषणे चासि सुतयो रक्षणे तथा
न त्वहं सुतयोः शक्ता तथा रक्षणपोषणे ८
मम हि त्वद्विहीनायाः सर्वकामा न आपदः
कथं स्यातां सुतौ बालौ भवेयं च कथं त्वहम् ९
कथं हि विधवानाथा बालपुत्रा विना त्वया
मिथुनं जीवयिष्यामि स्थिता साधुगते पथि १०
अहंकृतावलिप्तैश्च प्रार्थ्यमानामिमां सुताम्
अयुक्तैस्तव संबन्धे कथं शक्ष्यामि रक्षितुम् ११
उत्सृष्टमामिषं भूमौ प्रार्थयन्ति यथा खगाः
प्रार्थयन्ति जनाः सर्वे वीरहीनां तथा स्त्रियम् १२
साहं विचाल्यमाना वै प्रार्थ्यमाना दुरात्मभिः
स्थातुं पथि न शक्ष्यामि सज्जनेष्टे द्विजोत्तम १३
कथं तव कुलस्यैकामिमां बालामसंस्कृताम्
पितृपैतामहे मार्गे नियोक्तुमहमुत्सहे १४

कथं शक्ष्यामि बालेऽस्मिन्गुणानाधातुमीप्सितान्
अनाथे सर्वतो लुप्ते यथा त्वं धर्मदर्शिवान् १५
इमामपि च ते बालामनाथां परिभूय माम्
अनर्हाः प्रार्थयिष्यन्ति शूद्रा वेदश्रुतिं यथा १६
तां चेदहं न दित्सेयं त्वद्गुणैरुपबृंहिताम्
प्रमथ्यैनां हरेयुस्ते हविर्ध्वाङ्क्षा इवाध्वरात् १७
संप्रेक्षमाणा पुत्रं ते नानुरूपमिवात्मनः
अनर्हवशमापन्नामिमां चापि सुतां तव १८
अवज्ञाता च लोकस्य तथात्मानमजानती
अवलिप्तैर्नरैर्ब्रह्मन्मरिष्यामि न संशयः १९
तौ विहीनौ मया बालौ त्वया चैव ममात्मजौ
विनश्येतां न सन्देहो मत्स्याविव जलक्षये २०
त्रितयं सर्वथाप्येवं विनशिष्यत्यसंशयम्
त्वया विहीनं तस्मात्त्वं मां परित्यक्तुमर्हसि २१
व्युष्टिरेषा परा स्त्रीणां पूर्वं भर्तुः परा गतिः
न तु ब्राह्मण पुत्राणां विषये परिवर्तितुम् २२
परित्यक्तः सुतश्चायं दुहितेयं तथा मया
बान्धवाश्च परित्यक्तास्त्वदर्थं जीवितं च मे २३
यज्ञैस्तपोभिर्नियमैर्दानैश्च विविधैस्तथा
विशिष्यते स्त्रिया भर्तुर्नित्यं प्रियहिते स्थितिः २४
तदिदं यच्चिकीर्षामि धर्म्यं परमसंमतम्
इष्टं चैव हितं चैव तव चैव कुलस्य च २५
इष्टानि चाप्यपत्यानि द्रव्याणि सुहृदः प्रियाः
आपद्धर्मविमोक्षाय भार्या चापि सतां मतम् २६
एकतो वा कुलं कृत्स्नमात्मा वा कुलवर्धन
न समं सर्वमेवेति बुधानामेष निश्चयः २७
स कुरुष्व मया कार्यं तारयात्मानमात्मना
अनुजानीहि मामार्य सुतौ मे परिरक्ष च २८
अवध्याः स्त्रिय इत्याहुर्धर्मज्ञा धर्मनिश्चये
धर्मज्ञान्राक्षसानाहुर्न हन्यात्स च मामपि २९

निःसंशयो वधः पुंसां स्त्रीणां संशयितो वधः
अतो मामेव धर्मज्ञ प्रस्थापयितुमर्हसि ३०
भुक्तं प्रियाण्यवाप्तानि धर्मश्च चरितो मया
त्वत्प्रसूतिः प्रिया प्राप्ता न मां तप्स्यत्यजीवितम् ३१
जातपुत्रा च वृद्धा च प्रियकामा च ते सदा
समीक्ष्यैतदहं सर्वं व्यवसायं करोम्यतः ३२
उत्सृज्यापि हि मामार्य वेत्स्यस्यन्यामपि स्त्रियम्
ततः प्रतिष्ठितो धर्मो भविष्यति पुनस्तव ३३
न चाप्यधर्मः कल्याण बहुपत्नीकता नृणाम्
स्त्रीणामधर्मः सुमहान्भर्तुः पूर्वस्य लङ्घने ३४
एतत्सर्वं समीक्ष्य त्वमात्मत्यागं च गर्हितम्
आत्मानं तारय मया कुलं चेमौ च दारकौ ३५
वैशम्पायन उवाच
एवमुक्तस्तया भर्ता तां समालिङ्ग्य भारत
मुमोच बाष्पं शनकैः सभार्यो भृशदुःखितः ३६
इति श्रीमहाभारते आदिपर्वणि षट्चत्वारिंशदधिकशततमोऽध्यायः १४६

## सप्तचत्वारिंशदधिक शततमोऽध्यायः

वैशम्पायन उवाच
तयोर्दुःखितयोर्वाक्यमतिमात्रं निशम्य तत्
भृशं दुःखपरीताङ्गी कन्या तावभ्यभाषत १
किमिदं भृशदुःखार्तौ रोरवीथो अनाथवत्
ममापि श्रूयतां किंचिच्छ्रुत्वा च क्रियतां क्षमम् २
धर्मतोऽह परित्याज्या युवयोर्नात्र संशयः
त्यक्तव्यां मां परित्यज्य त्रातं सर्वं मयैकया ३
इत्यर्थमिष्यतेऽपत्यं तारयिष्यति मामिति
तस्मिन्नुपस्थिते काले तरतं प्लववन्मया ४
इह वा तारयेद्दुर्गादुत वा प्रेत्य तारयेत्
सर्वथा तारयेत्पुत्रः पुत्र इत्युच्यते बुधैः ५
आकाङ्क्षन्ते च दौहित्रानपि नित्यं पितामहाः

तान्स्वयं वै परित्रास्ये रक्षन्ती जीवितं पितुः ६
भ्राता च मम बालोऽय गते लोकममुं त्वयि
अचिरेणैव कालेन विनश्येत न संशयः ७
तातेऽपि हि गते स्वर्गं विनष्टे च ममानुजे
पिण्डः पितॄणां व्युच्छिद्येत्तत्तेषामप्रियं भवेत् ८
पित्रा त्यक्ता तथा मात्रा भ्रात्रा चाहमसंशयम्
दुःखाद्दुःखतरं प्राप्य म्रियेयमतथोचिता ९
त्वयि त्व्ंगे निर्मुक्ते माता भ्राता च मे शिशुः
सन्तानश्चैव पिण्डश्च प्रतिष्ठास्यत्यसंशयम् १०
आत्मा पुत्रः सखा भार्या कृच्छ्रं तु दुहिता किल
स कृच्छ्रान्मोचयात्मानं मां च धर्मेण योजय ११
अनाथा कृपणा बाला यत्रक्वचनगामिनी
भविष्यामि त्वया तात विहीना कृपणा बत १२
अथवाहं करिष्यामि कुलस्यास्य विमोक्षणम्
फलसंस्था भविष्यामि कृत्वा कर्म सुदुष्करम् १३
अथवा यास्यसे तत्र त्यक्त्वा मां द्विजसत्तम
पीडिताहं भविष्यामि तदवेक्षस्व मामपि १४
तदस्मदर्थं धर्मार्थं प्रसवार्थं च सत्तम
आत्मानं परिरक्षस्व त्यक्तव्यां मां च संत्यज १५
अवश्यकरणीयेऽथे मा त्वां कालोऽत्यगादयम्
त्वया दत्तेन तोयेन भविष्यति हितं च मे १६
किं न्वतः परमं दुःखं यद्वयं स्वर्गते त्वयि
याचमानाः परादन्नं परिधावेमहि श्ववत् १७
त्वयि त्वरोगे निर्मुक्ते क्लेशादस्मात्सबान्धवे
अमृते वसती लोके भविष्यामि सुखान्विता १८
एवं बहुविधं तस्या निशम्य परिदेवितम्
पिता माता च सा चैव कन्या प्ररुरुदुस्त्रयः १९
ततः प्ररुदितान्सर्वान्निशम्याथ सुतस्तयोः
उत्फुल्लनयनो बालः कलमव्यक्तमब्रवीत् २०
मा रोदीस्तात मा मातर्मा स्वसस्त्वमिति ब्रुवन्

प्रहसन्निव सर्वांस्तानेकैकं सोपसर्पति २१
ततः स तृणमादाय प्रहृष्टः पुनरब्रवीत्
अनेन तं हनिष्यामि राक्षसं पुरुषादकम् २२
तथापि तेषां दुःखेन परीतानां निशम्य तत्
बालस्य वाक्यमव्यक्तं हर्षः समभवन्महान् २३
अयं काल इति ज्ञात्वा कुन्ती समुपसृत्य तान्
गतासूनमृतेनेव जीवयन्तीदमब्रवीत् २४
इति श्रीमहाभारते आदिपर्वणि सप्तचत्वारिंशदधिकशततमोऽध्यायः १४७

## अष्टचत्वारिंशदधिक शततमोऽध्यायः

कुन्त्युवाच
कुतोमूलमिदं दुःखं ज्ञातुमिच्छामि तत्त्वतः
विदित्वा अपकर्षेयं शक्यं चेदपकर्षितुम् १
ब्राह्मण उवाच
उपपन्नं सतामेतद्यद्ब्रवीषि तपोधने
न तु दुःखमिदं शक्यं मानुषेण व्यपोहितुम् २
समीपे नगरस्यास्य बको वसति राक्षसः
ईशो जनपदस्यास्य पुरस्य च महाबलः ३
पुष्टो मानुषमांसेन दुर्बुद्धिः पुरुषादकः
रक्षत्यसुरराण्नित्यमिमं जनपदं बली ४
नगरं चैव देशं च रक्षोबलसमन्वितः
तत्कृते परचक्राच्च भूतेभ्यश्च न नो भयम् ५
वेतनं तस्य विहितं शालिवाहस्य भोजनम्
महिषौ पुरुषश्चैको यस्तदादाय गच्छति ६
एकैकश्चैव पुरुषस्तत्प्रयच्छति भोजनम्
स वारो बहुभिर्वर्षैर्भवत्यसुतरो नरैः ७
तद्विमोक्षाय ये चापि यतन्ते पुरुषाः क्वचित्
सपुत्रदारांस्तान्हत्वा तद्रक्षो भक्षयत्युत ८
वेत्रकीयगृहे राजा नायं नयमिहास्थितः
अनामयं जनस्यास्य येन स्यादद्य शाश्वतम् ९

एतदर्हा वयं नूनं वसामो दुर्बलस्य ये
विषये नित्यमुद्विग्नाः कुराजानमुपाश्रिताः १०
ब्राह्मणाः कस्य वक्तव्याः कस्य वा छन्दचारिणः
गुणैरेते हि वास्यन्ते कामगाः पक्षिणो यथा ११
राजानं प्रथमं विन्देत्ततो भार्यां ततो धनम्
त्रयस्य संचये चास्य ज्ञातीन्पुत्रांश्च धारयेत् १२
विपरीतं मया चेदं त्रयं सर्वमुपार्जितम्
त इमामापदं प्राप्य भृशं तप्स्यामहे वयम् १३
सोऽयमस्माननुप्राप्तो वारः कुलविनाशनः
भोजनं पुरुषश्चैकः प्रदेयं वेतनं मया १४
न च मे विद्यते वित्तं संक्रेतुं पुरुषं क्वचित्
सुहृज्जनं प्रदातुं च न शक्ष्यामि कथंचन
गतिं चापि न पश्यामि तस्मान्मोक्षाय रक्षसः १५
सोऽह दुःखार्णवे मग्नो महत्यसुतरे भृशम्
सहैवैतैर्गमिष्यामि बान्धवैरद्य राक्षसम्
ततो नः सहितान्क्षुद्रः सर्वानेवोपभोक्ष्यति १६
इति श्रीमहाभारते आदिपर्वणि अष्टचत्वारिंशदधिकशततमोऽध्यायः १४८

## एकोनपञ्चाशदधिक शततमोऽध्यायः

कुन्त्युवाच
न विषादस्त्वया कार्यो भयादस्मात्कथंचन
उपायः परिदृष्टोऽत्र तस्मान्मोक्षाय रक्षसः १
एकस्तव सुतो बालः कन्या चैका तपस्विनी
न ते तयोस्तथा पत्न्या गमनं तत्र रोचये २
मम पञ्च सुता ब्रह्मंस्तेषामेको गमिष्यति
त्वदर्थं बलिमादाय तस्य पापस्य रक्षसः ३
ब्राह्मण उवाच
नाहमेतत्करिष्यामि जीवितार्थी कथंचन
ब्राह्मणस्यातिथेश्चैव स्वार्थे प्राणवियोजनम् ४
न त्वेतदकुलीनासु नाधर्मिष्ठासु विद्यते

यद्ब्राह्मणार्थे विसृजेदात्मानमपि चात्मजम् ५
आत्मनस्तु मया श्रेयो बोद्धव्यमिति रोचये
ब्रह्मवध्यात्मवध्या वा श्रेयो आत्मवधो मम ६
ब्रह्मवध्या परं पापं निष्कृतिर्नात्र विद्यते
अबुद्धिपूर्वं कृत्वापि श्रेयो आत्मवधो मम ७
न त्वहं वधमाकाङ्क्षे स्वयमेवात्मनः शुभे
परैः कृते वधे पापं न किंचिन्मयि विद्यते ८
अभिसन्धिकृते तस्मिन्ब्राह्मणस्य वधे मया
निष्कृतिं न प्रपश्यामि नृशंसं क्षुद्रमेव च ९
आगतस्य गृहे त्यागस्तथैव शरणार्थिनः
याचमानस्य च वधो नृशंसं परमं मतम् १०
कुर्यान्न निन्दितं कर्म न नृशंसं कदाचन
इति पूर्वे महात्मान आपद्धर्मविदो विदुः ११
श्रेयांस्तु सहदारस्य विनाशोऽद्य मम स्वयम्
ब्राह्मणस्य वधं नाहमनुमंस्ये कथंचन १२
कुन्त्युवाच
ममाप्येषा मतिर्ब्रह्मन्विप्रा रक्ष्या इति स्थिरा
न चाप्यनिष्टः पुत्रो मे यदि पुत्रशतं भवेत् १३
न चासौ राक्षसः शक्तो मम पुत्रविनाशने
वीर्यवान्मन्त्रसिद्धश्च तेजस्वी च सुतो मम १४
राक्षसाय च तत्सर्वं प्रापयिष्यति भोजनम्
मोक्षयिष्यति चात्मानमिति मे निश्चिता मतिः १५
समागताश्च वीरेण दृष्टपूर्वाश्च राक्षसाः
बलवन्तो महाकाया निहताश्चाप्यनेकशः १६
न त्विदं केषुचिद्ब्रह्मन्व्याहर्तव्यं कथंचन
विद्यार्थिनो हि मे पुत्रान्विप्रकुर्युः कुतूहलात् १७
गुरुणा चाननुज्ञातो ग्राहयेद्यं सुतो मम
न स कुर्यात्तया कार्यं विद्ययेति सतां मतम् १८
वैशम्पायन उवाच
एवमुक्तस्तु पृथया स विप्रो भार्यया सह

हृष्टः संपूजयामास तद्वाक्यममृतोपमम् १९
ततः कुन्ती च विप्रश्च सहितावनिलात्मजम्
तमब्रूतां कुरुष्वेति स तथेत्यब्रवीच्च तौ २०
इति श्रीमहाभारते आदिपर्वणि एकोनपञ्चाशदधिकशततमोऽध्यायः १४९

पञ्चाशदधिकशततमोऽध्यायः

वैशम्पायन उवाच
करिष्य इति भीमेन प्रतिज्ञाते तु भारत
आजग्मुस्ते ततः सर्वे भैक्षमादाय पाण्डवाः १
आकारेणैव तं ज्ञात्वा पाण्डुपुत्रो युधिष्ठिरः
रहः समुपविश्यैकस्ततः पप्रच्छ मातरम् २
किं चिकीर्षत्ययं कर्म भीमो भीमपराक्रमः
भवत्यनुमते कच्चिदयं कर्तुमिहेच्छति ३
कुन्त्युवाच
ममैव वचनादेष करिष्यति परंतपः
ब्राह्मणार्थे महत्कृत्यं मोक्षाय नगरस्य च ४
युधिष्ठिर उवाच
किमिदं साहसं तीक्ष्णं भवत्या दुष्करं कृतम्
परित्यागं हि पुत्रस्य न प्रशंसन्ति साधवः ५
कथं परसुतस्यार्थे स्वसुतं त्यक्तुमिच्छसि
लोकवृत्तिविरुद्धं वै पुत्रत्यागात्कृतं त्वया ६
यस्य बाहू समाश्रित्य सुखं सर्वे स्वपामहे
राज्यं चापहृतं क्षुद्रैराजिहीर्षामहे पुनः ७
यस्य दुर्योधनो वीर्यं चिन्तयन्नमितौजसः
न शेते वसतीः सर्वा दुःखाच्छकुनिना सह ८
यस्य वीरस्य वीर्येण मुक्ता जतुगृहाद्वयम्
अन्येभ्यश्चैव पापेभ्यो निहतश्च पुरोचनः ९
यस्य वीर्यं समाश्रित्य वसुपूर्णां वसुन्धराम्
इमां मन्यामहे प्राप्तां निहत्य धृतराष्ट्रजान् १०
तस्य व्यवसितस्त्यागो बुद्धिमास्थाय कां त्वया

कच्चिन्न दुःखैर्बुद्धिस्ते विप्लुता गतचेतसः ११
कुन्त्युवाच
युधिष्ठिर न संतापः कार्यः प्रति वृकोदरम्
न चायं बुद्धिदौर्बल्याद्व्यवसायः कृतो मया १२
इह विप्रस्य भवने वयं पुत्र सुखोषिताः
तस्य प्रतिक्रिया तात मयेयं प्रसमीक्षिता
एतावानेव पुरुषः कृतं यस्मिन्न नश्यति १३
दृष्ट्वा भीमस्य विक्रान्तं तदा जतुगृहे महत्
हिडिम्बस्य वधाच्चैव विश्वासो मे वृकोदरे १४
बाह्वोर्बलं हि भीमस्य नागायुतसमं महत्
येन यूयं गजप्रख्या निर्व्यूढा वारणावतात् १५
वृकोदरबलो नान्यो न भूतो न भविष्यति
योऽभ्युदीयाद्युधि श्रेष्ठमपि वज्रधरं स्वयम् १६
जातमात्रः पुरा चैष ममाङ्कात्पतितो गिरौ
शरीरगौरवात्तस्य शिला गात्रैर्विचूर्णिता १७
तदहं प्रज्ञया स्मृत्वा बलं भीमस्य पाण्डव
प्रतिकारं च विप्रस्य ततः कृतवती मतिम् १८
नेदं लोभान्न चाज्ञानान्न च मोहाद्विनिश्चितम्
बुद्धिपूर्वं तु धर्मस्य व्यवसायः कृतो मया १९
अर्थौ द्वावपि निष्पन्नौ युधिष्ठिर भविष्यतः
प्रतीकारश्च वासस्य धर्मश्च चरितो महान् २०
यो ब्राह्मणस्य साहाय्यं कुर्यादर्थेषु कर्हिचित्
क्षत्रियः स शुभाँल्लोकान्प्राप्नुयादिति मे श्रुतम् २१
क्षत्रियः क्षत्रियस्यैव कुर्वाणो वधमोक्षणम्
विपुलां कीर्तिमाप्नोति लोकेऽस्मिंश्च परत्र च २२
वैश्यस्यैव तु साहाय्यं कुर्वाणः क्षत्रियो युधि
स सर्वेष्वपि लोकेषु प्रजा रञ्जयते ध्रुवम् २३
शूद्रं तु मोक्षयन्राजा शरणार्थिनमागतम्
प्राप्नोतीह कुले जन्म सद्रव्ये राजसत्कृते २४
एवं स भगवान्व्यासः पुरा कौरवनन्दन

प्रोवाच सुतरां प्राज्ञस्तस्मादेतच्चिकीर्षितम् २५
युधिष्ठिर उवाच
उपपन्नमिदं मातस्त्वया यद्बुद्धिपूर्वकम्
आर्तस्य ब्राह्मणस्यैवमनुक्रोशादिदं कृतम्
ध्रुवमेष्यति भीमोऽय निहत्य पुरुषादकम् २६
यथा त्विदं न विन्देयुर्नरा नगरवासिनः
तथायं ब्राह्मणो वाच्यः परिग्राह्यश्च यत्नतः २७
इति श्रीमहाभारते आदिपर्वणि पञ्चाशदधिकशततमोऽध्यायः १५०

एक पञ्चाशदधिक शततमोऽध्यायः
वैशम्पायन उवाच
ततो रात्र्यां व्यतीतायामन्नमादाय पाण्डवः
भीमसेनो ययौ तत्र यत्रासौ पुरुषादकः १
आसाद्य तु वनं तस्य रक्षसः पाण्डवो बली
आजुहाव ततो नाम्ना तदन्नमुपयोजयन् २
ततः स राक्षसः श्रुत्वा भीमसेनस्य तद्वचः
आजगाम सुसंक्रुद्धो यत्र भीमो व्यवस्थितः ३
महाकायो महावेगो दारयन्निव मेदिनीम्
त्रिशिखां भृकुटिं कृत्वा संदश्य दशनच्छदम् ४
भुञ्जानमन्नं तं दृष्ट्वा भीमसेनं स राक्षसः
विवृत्य नयने क्रुद्ध इदं वचनमब्रवीत् ५
कोऽयमन्नमिदं भुङ्क्ते मदर्थमुपकल्पितम्
पश्यतो मम दुर्बुद्धिर्यियासुर्यमसादनम् ६
भीमसेनस्तु तच्छ्रुत्वा प्रहसन्निव भारत
राक्षसं तमनादृत्य भुङ्क्त एव पराङ्मुखः ७
ततः स भैरवं कृत्वा समुद्यम्य करावुभौ
अभ्यद्रवद्भीमसेनं जिघांसुः पुरुषादकः ८
तथापि परिभूयैनं नेक्षमाणो वृकोदरः
राक्षसं भुङ्क्त एवान्नं पाण्डवः परवीरहा ९
अमर्षेण तु संपूर्णः कुन्तीपुत्रस्य राक्षसः

जघान पृष्ठं पाणिभ्यामुभाभ्यां पृष्ठतः स्थितः १०
तथा बलवता भीमः पाणिभ्यां भृशमाहतः
नैवावलोकयामास राक्षसं भुङ्क्त एव सः ११
ततः स भूयः संक्रुद्धो वृक्षमादाय राक्षसः
ताडयिष्यंस्तदा भीमं पुनरभ्यद्रवद्बली १२
ततो भीमः शनैर्भुक्त्वा तदन्नं पुरुषर्षभः
वार्युपस्पृश्य संहृष्टस्तस्थौ युधि महाबलः १३
क्षिप्तं क्रुद्धेन तं वृक्षं प्रतिजग्राह वीर्यवान्
सव्येन पाणिना भीमः प्रहसन्निव भारत १४
ततः स पुनरुद्यम्य वृक्षान्बहुविधान्बली
प्राहिणोद्भीमसेनाय तस्मै भीमश्च पाण्डवः १५
तद्वृक्षयुद्धमभवन्महीरुहविनाशनम्
घोररूपं महाराज बकपाण्डवयोर्महत् १६
नाम विश्राव्य तु बकः समभिद्रुत्य पाण्डवम्
भुजाभ्यां परिजग्राह भीमसेनं महाबलम् १७
भीमसेनोऽपि तद्रक्षः परिरभ्य महाभुजः
विस्फुरन्तं महावेगं विचकर्ष बलाद्बली १८
स कृष्यमाणो भीमेन कर्षमाणश्च पाण्डवम्
समयुज्यत तीव्रेण श्रमेण पुरुषादकः १९
तयोर्वेगेन महता पृथिवी समकम्पत
पादपांश्च महाकायांश्चूर्णयामासतुस्तदा २०
हीयमानं तु तद्रक्षः समीक्ष्य भरतर्षभ
निष्पिष्य भूमौ पाणिभ्यां समाजघ्ने वृकोदरः २१
ततोऽस्य जानुना पृष्ठमवपीड्य बलादिव
बाहुना परिजग्राह दक्षिणेन शिरोधराम् २२
सव्येन च कटीदेशे गृह्य वाससि पाण्डवः
तद्रक्षो द्विगुणं चक्रे नदन्तं भैरवान्रवान् २३
ततोऽस्य रुधिरं वक्त्रात्प्रादुरासीद्विशां पते
भज्यमानस्य भीमेन तस्य घोरस्य रक्षसः २४

इति श्रीमहाभारते आदिपर्वणि एकपञ्चाशदधिकशततमोऽध्यायः १५१

द्विपञ्चाशदधिक शततमोऽध्यायः

वैशम्पायन उवाच
तेन शब्देन वित्रस्तो जनस्तस्याथ रक्षसः
निष्पपात गृहाद्राजन्सहैव परिचारिभिः १
तान्भीतान्विगतज्ञानान्भीमः प्रहरतां वरः
सान्त्वयामास बलवान्समये च न्यवेशयत् २
न हिंस्या मानुषा भूयो युष्माभिरिह कर्हिचित्
हिंसतां हि वधः शीघ्रमेवमेव भवेदिति ३
तस्य तद्वचनं श्रुत्वा तानि रक्षांसि भारत
एवमस्त्विति तं प्राहुर्जगृहुः समयं च तम् ४
ततः प्रभृति रक्षांसि तत्र सौम्यानि भारत
नगरे प्रत्यदृश्यन्त नरैर्नगरवासिभिः ५
ततो भीमस्तमादाय गतासुं पुरुषादकम्
द्वारदेशे विनिक्षिप्य जगामानुपलक्षितः ६
ततः स भीमस्तं हत्वा गत्वा ब्राह्मणवेश्म तत्
आचचक्षे यथावृत्तं राज्ञः सर्वमशेषतः ७
ततो नरा विनिष्क्रान्ता नगरात्काल्यमेव तु
ददृशुर्निहतं भूमौ राक्षसं रुधिरोक्षितम् ८
तमद्रिकूटसदृशं विनिकीर्णं भयावहम्
एकचक्रां ततो गत्वा प्रवृत्तिं प्रददुः पुरे ९
ततः सहस्रशो राजन्नरा नगरवासिनः
तत्राजग्मुर्बकं द्रष्टुं सस्त्रीवृद्धकुमारकाः १०
ततस्ते विस्मिताः सर्वे कर्म दृष्ट्वातिमानुषम्
दैवतान्यर्चयांचक्रुः सर्व एव विशां पते ११
ततः प्रगणयामासुः कस्य वारोऽद्य भोजने
ज्ञात्वा चागम्य तं विप्रं पप्रच्छुः सर्व एव तत् १२
एवं पृष्टस्तु बहुशो रक्षमाणश्च पाण्डवान्
उवाच नागरान्सर्वानिदं विप्रर्षभस्तदा १३
आज्ञापितं मामशने रुदन्तं सह बन्धुभिः
ददर्श ब्राह्मणः कश्चिन्मन्त्रसिद्धो महाबलः १४

परिपृच्छ्य स मां पूर्वं परिक्लेशं पुरस्य च
अब्रवीद्ब्राह्मणश्रेष्ठ आश्वास्य प्रहसन्निव १५
प्रापयिष्याम्यहं तस्मै इदमन्नं दुरात्मने
मन्निमित्तं भयं चापि न कार्यमिति वीर्यवान् १६
स तदन्नमुपादाय गतो बकवनं प्रति
तेन नूनं भवेदेतत्कर्म लोकहितं कृतम् १७
ततस्ते ब्राह्मणाः सर्वे क्षत्रियाश्च सुविस्मिताः
वैश्याः शूद्राश्च मुदिताश्चक्रुर्ब्रह्ममहं तदा १८
ततो जानपदाः सर्वे आजग्मुर्नगरं प्रति
तदद्भुततमं दृष्ट्वा पार्थास्तत्रैव चावसन् १९
इति श्रीमहाभारते आदिपर्वणि द्विपञ्चाशदधिकशततमोऽध्यायः १५२

## त्रिपञ्चाशदधिक शततमोऽध्यायः

जनमेजय उवाच
ते तथा पुरुषव्याघ्रा निहत्य बकराक्षसम्
अत ऊर्ध्वं ततो ब्रह्मन्किमकुर्वत पाण्डवाः १
वैशम्पायन उवाच
तत्रैव न्यवसन्राजन्निहत्य बकराक्षसम्
अधीयानाः परं ब्रह्म ब्राह्मणस्य निवेशने २
ततः कतिपयाहस्य ब्राह्मणः संशितव्रतः
प्रतिश्रयार्थं तद्वेश्म ब्राह्मणस्याजगाम ह ३
स सम्यक्पूजयित्वा तं विद्वान्विप्रर्षभस्तदा
ददौ प्रतिश्रयं तस्मै तदा सर्वातिथिव्रती ४
ततस्ते पाण्डवाः सर्वे सह कुन्त्या नरर्षभाः
उपासाञ्चक्रिरे विप्रं कथयानं कथास्तदा ५
कथयामास देशान्स तीर्थानि विविधानि च
राज्ञां च विविधाश्चर्याः पुराणि विविधानि च ६
स तत्राकथयद्विप्रः कथान्ते जनमेजय
पाञ्चालेष्वद्भुताकारं याज्ञसेन्याः स्वयंवरम् ७
धृष्टद्युम्नस्य चोत्पत्तिमुत्पत्तिं च शिखण्डिनः

अयोनिजत्वं कृष्णाया द्रुपदस्य महामखे ८
तदद्भुततमं श्रुत्वा लोके तस्य महात्मनः
विस्तरेणैव पप्रच्छुः कथां तां पुरुषर्षभाः ९
कथं द्रुपदपुत्रस्य धृष्टद्युम्नस्य पावकात्
वेदिमध्याच्च कृष्णायाः संभवः कथमद्भुतः १०
कथं द्रोणान्महेष्वासात्सर्वाण्यस्त्राण्यशिक्षत
कथं प्रियसखायौ तौ भिन्नौ कस्य कृतेन च ११
एवं तैश्चोदितो राजन्स विप्रः पुरुषर्षभैः
कथयामास तत्सर्वं द्रौपदीसंभवं तदा १२
इति श्रीमहाभारते आदिपर्वणि त्रिपञ्चाशदधिकशततमोऽध्यायः १५३

चतुः पञ्चाशदधिक शततमोऽध्यायः

ब्राह्मण उवाच
गङ्गाद्वारं प्रति महान्बभूवर्षिर्महातपाः
भरद्वाजो महाप्राज्ञः सततं संशितव्रतः १
सोऽभिषेक्तुं गतो गङ्गां पूर्वमेवागतां सतीम्
ददर्शाप्सरसं तत्र घृताचीमाप्लुतामृषिः २
तस्या वायुर्नदीतीरे वसनं व्यहरत्तदा
अपकृष्टाम्बरां दृष्ट्वा तामृषिश्चकमे ततः ३
तस्यां संसक्तमनसः कौमारब्रह्मचारिणः
हृष्टस्य रेतश्चस्कन्द तदृषिर्द्रोण आदधे ४
ततः समभवद्द्रोणः कुमारस्तस्य धीमतः
अध्यगीष्ट स वेदांश्च वेदाङ्गानि च सर्वशः ५
भरद्वाजस्य तु सखा पृषतो नाम पार्थिवः
तस्यापि द्रुपदो नाम तदा समभवत्सुतः ६
स नित्यमाश्रमं गत्वा द्रोणेन सह पार्षतः
चिक्रीडाध्ययनं चैव चकार क्षत्रियर्षभः ७
ततस्तु पृषतेऽतीते स राजा द्रुपदोऽभवत्
द्रोणोऽपि रामं शुश्राव दित्सन्तं वसु सर्वशः ८
वनं तु प्रस्थितं रामं भरद्वाजसुतोऽब्रवीत्

आगतं वित्तकामं मां विद्धि द्रोणं द्विजर्षभ ९
राम उवाच
शरीरमात्रमेवाद्य मयेदमवशेषितम्
अस्त्राणि वा शरीरं वा ब्रह्मन्नन्यतरं वृणु १०
द्रोण उवाच
अस्त्राणि चैव सर्वाणि तेषां संहारमेव च
प्रयोगं चैव सर्वेषां दातुमर्हति मे भवान् ११
ब्राह्मण उवाच
तथेत्युक्त्वा ततस्तस्मै प्रददौ भृगुनन्दनः
प्रतिगृह्य ततो द्रोणः कृतकृत्योऽभवत्तदा १२
संप्रहृष्टमनाश्चापि रामात्परमसंमतम्
ब्रह्मास्त्रं समनुप्राप्य नरेष्वभ्यधिकोऽभवत् १३
ततो द्रुपदमासाद्य भारद्वाजः प्रतापवान्
अब्रवीत्पुरुषव्याघ्रः सखायं विद्धि मामिति १४
द्रुपद उवाच
नाश्रोत्रियः श्रोत्रियस्य नारथी रथिनः सखा
नाराजा पार्थिवस्यापि सखिपूर्वं किमिष्यते १५
ब्राह्मण उवाच
स विनिश्चित्य मनसा पाञ्चाल्यं प्रति बुद्धिमान्
जगाम कुरुमुख्यानां नगरं नागसाह्वयम् १६
तस्मै पौत्रान्समादाय वसूनि विविधानि च
प्राप्ताय प्रददौ भीष्मः शिष्यान्द्रोणाय धीमते १७
द्रोणः शिष्यांस्ततः सर्वानिदं वचनमब्रवीत्
समानीय तदा विद्वान्द्रुपदस्यासुखाय वै १८
आचार्यवेतनं किंचिद्धृदि संपरिवर्तते
कृतास्त्रैस्तत्प्रदेयं स्यात्तदृतं वदतानघाः १९
यदा च पाण्डवाः सर्वे कृतास्त्राः कृतनिश्रमाः
ततो द्रोणोऽब्रवीद्भूयो वेतनार्थमिदं वचः २०
पार्षतो द्रुपदो नाम छत्रवत्यां नरेश्वरः
तस्यापकृष्य तद्राज्यं मम शीघ्रं प्रदीयताम् २१

ततः पाराडुसुताः पञ्च निर्जित्य द्रुपदं युधि
द्रोणाय दर्शयामासुर्बद्ध्वा ससचिवं तदा २२
द्रोण उवाच
प्रार्थयामि त्वया सख्यं पुनरेव नराधिप
अराजा किल नो राज्ञः सखा भवितुमर्हति २३
अतः प्रयतितं राज्ये यज्ञसेन मया तव
राजासि दक्षिणे कूले भागीरथ्याहमुत्तरे २४
ब्राह्मण उवाच
असत्कारः स सुमहान्मुहूर्तमपि तस्य तु
न व्येति हृदयाद्राज्ञो दुर्मनाः स कृशोऽभवत् २५
इति श्रीमहाभारते आदिपर्वणि चतुःपञ्चाशदधिकशततमोऽध्यायः १५४

## पञ्चपञ्चाशदधिक शततमोऽध्यायः

ब्राह्मण उवाच
अमर्षी द्रुपदो राजा कर्मसिद्धान्द्विजर्षभान्
अन्विच्छन्परिचक्राम ब्राह्मणावसथान्बहून् १
पुत्रजन्म परीप्सन्वै शोकोपहतचेतनः
नास्ति श्रेष्ठं ममापत्यमिति नित्यमचिन्तयत् २
जातान्पुत्रान्स निर्वेदाद्धिग्बन्धूनिति चाब्रवीत्
निःश्वासपरमश्चासीद् द्रोणं प्रति चिकीर्षया ३
प्रभावं विनयं शिक्षां द्रोणस्य चरितानि च
क्षात्रेण च बलेनास्य चिन्तयन्नान्वपद्यत
प्रतिकर्तुं नृपश्रेष्ठो यतमानोऽपि भारत ४
अभितः सोऽथ कल्माषीं गङ्गाकूले परिभ्रमन्
ब्राह्मणावसथं पुरायमाससाद महीपतिः ५
तत्र नास्नातकः कश्चिन्न चासीदव्रती द्विजः
तथैव नामहाभागः सोऽपश्यत्संशितव्रतौ ६
याजोपयाजौ ब्रह्मर्षी शाम्यन्तौ पृषतात्मजः
संहिताध्ययने युक्तौ गोत्रतश्चापि काश्यपौ ७
तारणे युक्तरूपौ तौ ब्राह्मणावृषिसत्तमौ

स तावामन्त्रयामास सर्वकामैरतन्द्रितः ८
बुद्ध्वा तयोर्बलं बुद्धिं कनीयांसमुपह्वरे
प्रपेदे छन्दयन्कामैरुपयाजं धृतव्रतम् ९
पादशुश्रूषणे युक्तः प्रियवाक्सर्वकामदः
अर्हयित्वा यथान्यायमुपयाजमुवाच सः १०
येन मे कर्मणा ब्रह्मन्पुत्रः स्याद्द्रोणमृत्यवे
उपयाज कृते तस्मिन्गवां दातास्मि तेऽर्बुदम् ११
यद्वा तेऽन्यद्द्विजश्रेष्ठ मनसः सुप्रियं भवेत्
सर्वं तत्ते प्रदाताहं न हि मेऽस्त्यत्र संशयः १२
इत्युक्तो नाहमित्येवं तमृषिः प्रत्युवाच ह
आराधयिष्यन्द्रुपदः स तं पर्यचरत्पुनः १३
ततः संवत्सरस्यान्ते द्रुपदं स द्विजोत्तमः
उपयाजोऽब्रवीद्राजन्काले मधुरया गिरा १४
ज्येष्ठो भ्राता ममागृह्णाद्विचरन्वननिर्झरे
अपरिज्ञातशौचायां भूमौ निपतितं फलम् १५
तदपश्यमहं भ्रातुरसांप्रतमनुव्रजन्
विमर्शं संकरादाने नायं कुर्यात्कथंचन १६
दृष्ट्वा फलस्य नापश्यद्दोषा येऽस्यानुबन्धिकाः
विविनक्ति न शौचं यः सोऽन्यत्रापि कथं भवेत् १७
संहिताध्ययनं कुर्वन्वसन्गुरुकुले च यः
भैक्ष्यमुच्छिष्टमन्येषां भुङ्क्ते चापि सदा सदा
कीर्तयन्गुणमन्नानामघृणी च पुनः पुनः १८
तमहं फलार्थिनं मन्ये भ्रातरं तर्कचक्षुषा
तं वै गच्छस्व नृपते स त्वां संयाजयिष्यति १९
जुगुप्समानो नृपतिर्मनसेदं विचिन्तयन्
उपयाजवचः श्रुत्वा नृपतिः सर्वधर्मवित्
अभिसंपूज्य पूजार्हमृषिं याजमुवाच ह २०
अयुतानि ददान्यष्टौ गवां याजय मां विभो
द्रोणवैराभिसंतप्तं त्वं ह्लादयितुमर्हसि २१
स हि ब्रह्मविदां श्रेष्ठो ब्रह्मास्त्रे चाप्यनुत्तमः

तस्माद्द्रोणः पराजैषीन्मां वै स सखिविग्रहे २२
क्षत्रियो नास्ति तुल्योऽस्य पृथिव्यां कश्चिदग्रणीः
कौरवाचार्यमुख्यस्य भारद्वाजस्य धीमतः २३
द्रोणस्य शरजालानि प्राणिदेहहराणि च
षडरत्नि धनुश्चास्य दृश्यतेऽप्रतिमं महत् २४
स हि ब्राह्मणवेगेन क्षात्रं वेगमसंशयम्
प्रतिहन्ति महेष्वासो भारद्वाजो महामनाः २५
क्षत्रोच्छेदाय विहितो जामदग्न्य इवास्थितः
तस्य ह्यस्त्रबलं घोरमप्रसह्यं नरैर्भुवि २६
ब्राह्ममुच्चारयंस्तेजो हुताहुतिरिवानलः
समेत्य स दहत्याजौ क्षत्रं ब्रह्मपुरःसरः
ब्रह्मक्षत्रे च विहिते ब्रह्मतेजो विशिष्यते २७
सोऽह क्षत्रबलाद्धीनो ब्रह्मतेजः प्रपेदिवान्
द्रोणाद्विशिष्टमासाद्य भवन्तं ब्रह्मवित्तमम् २८
द्रोणान्तकमहं पुत्रं लभेयं युधि दुर्जयम्
तत्कर्म कुरु मे याज निर्वपाम्यर्बुदं गवाम् २९
तथेत्युक्वा तु तं याजो याज्यार्थमुपकल्पयत्
गुर्वर्थ इति चाकाममुपयाजमचोदयत्
याजो द्रोणविनाशाय प्रतिजज्ञे तथा च सः ३०
ततस्तस्य नरेन्द्रस्य उपयाजो महातपाः
आचख्यौ कर्म वैतानं तदा पुत्रफलाय वै ३१
स च पुत्रो महावीर्यो महातेजा महाबलः
इष्यते यद्विधो राजन्भविता ते तथाविधः ३२
भारद्वाजस्य हन्तारं सोऽभिसंधाय भूमिपः
आजह्रे तत्तथा सर्वं द्रुपदः कर्मसिद्धये ३३
याजस्तु हवनस्यान्ते देवीमाह्वापयत्तदा
प्रैहि मां राज्ञि पृषति मिथुनं त्वामुपस्थितम् ३४
देव्युवाच
अवलिप्तं मे मुखं ब्रह्मन्पुण्यान्गन्धान्बिभर्मि च
सुतार्थेनोपरुद्धास्मि तिष्ठ याज मम प्रिये ३५

याज उवाच
याजेन श्रपितं हव्यमुपयाजेन मन्त्रितम्
कथं कामं न संदध्यात्सा त्वं विप्रैहि तिष्ठ वा ३६
ब्राह्मण उवाच
एवमुक्ते तु याजेन हुते हविषि संस्कृते
उत्तस्थौ पावकात्तस्मात्कुमारो देवसंनिभः ३७
ज्वालावर्णो घोररूपः किरीटी वर्म चोत्तमम्
बिभ्रत्सखड्गः सशरो धनुष्मान्विनदन्मुहुः ३८
सोऽध्यारोहद्रथवरं तेन च प्रययौ तदा
ततः प्रणेदुः पाञ्चालाः प्रहृष्टाः साधु साध्विति ३९
भयापहो राजपुत्रः पाञ्चालानां यशस्करः
राज्ञः शोकापहो जात एष द्रोणवधाय वै
इत्युवाच महद्भूतमदृश्यं खेचरं तदा ४०
कुमारी चापि पाञ्चाली वेदिमध्यात्समुत्थिता
सुभगा दर्शनीयाङ्गी वेदिमध्या मनोरमा ४१
श्यामा पद्मपलाशाक्षी नीलकुञ्चितमूर्धजा
मानुषं विग्रहं कृत्वा साक्षादमरवर्णिनी ४२
नीलोत्पलसमो गन्धो यस्याः क्रोशात्प्रवायति
या बिभर्ति परं रूपं यस्या नास्त्युपमा भुवि ४३
तां चापि जातां सुश्रोणीं वागुवाचाशरीरिणी
सर्वयोषिद्वरा कृष्णा क्षयं क्षत्रं निनीषति ४४
सुरकार्यमियं काले करिष्यति सुमध्यमा
अस्या हेतोः क्षत्रियाणां महदुत्पत्स्यते भयम् ४५
तच्छ्रुत्वा सर्वपाञ्चालाः प्रणेदुः सिंहसङ्घवत्
न चैतान्हर्षसंपूर्णानियं सेहे वसुन्धरा ४६
तौ दृष्ट्वा पृषती याजं प्रपेदे वै सुतार्थिनी
न वै मदन्यां जननीं जानीयातामिमाविति ४७
तथेत्युवाच तां याजो राज्ञः प्रियचिकीर्षया
तयोश्च नामनी चक्रुर्द्विजाः संपूर्णमानसाः ४८
धृष्टत्वादतिधृष्णुत्वाद्धर्माद्द्युत्संभवादपि

धृष्टद्युम्नः कुमारोऽय द्रुपदस्य भवत्विति ४९
कृष्णेत्येवाब्रुवन्कृष्णां कृष्णाभूत्सा हि वर्णतः
तथा तन्मिथुनं जज्ञे द्रुपदस्य महामखे ५०
धृष्टद्युम्नं तु पाञ्चाल्यमानीय स्वं विवेशनम्
उपाकरोदस्त्रहेतोर्भारद्वाजः प्रतापवान् ५१
अमोक्षणीयं दैवं हि भावि मत्वा महामतिः
तथा तत्कृतवान्द्रोण आत्मकीर्त्यनुरक्षणात् ५२
इति श्रीमहाभारते आदिपर्वणि पञ्चपञ्चाशदधिकशततमोऽध्यायः १५५

षट्पञ्चाशदधिक शततमोऽध्यायः

वैशम्पायन उवाच
एतच्छ्रुत्वा तु कौन्तेयाः शल्यविद्धा इवाभवन्
सर्वे चास्वस्थमनसो बभूवुस्ते महारथाः १
ततः कुन्ती सुतान्दृष्ट्वा विभ्रान्तान्गतचेतसः
युधिष्ठिरमुवाचेदं वचनं सत्यवादिनी २
चिररात्रोषिताः स्मेह ब्राह्मणस्य निवेशने
रममाणाः पुरे रम्ये लब्धभैक्षा युधिष्ठिर ३
यानीह रमणीयानि वनान्युपवनानि च
सर्वाणि तानि दृष्टानि पुनः पुनररिंदम ४
पुनर्दृष्टानि तान्येव प्रीणयन्ति न नस्तथा
भैक्षं च न तथा वीर लभ्यते कुरुनन्दन ५
ते वयं साधु पाञ्चालान्गच्छाम यदि मन्यसे
अपूर्वदर्शनं तात रमणीयं भविष्यति ६
सुभिक्षाश्चैव पाञ्चालाः श्रूयन्ते शत्रुकर्शन
यज्ञसेनश्च राजासौ ब्रह्मण्य इति शुश्रुमः ७
एकत्र चिरवासो हि क्षमो न च मतो मम
ते तत्र साधु गच्छामो यदि त्वं पुत्र मन्यसे ८
युधिष्ठिर उवाच
भवत्या यन्मतं कार्यं तदस्माकं परं हितम्
अनुजांस्तु न जानामि गच्छेयुर्नेति वा पुनः ९

वैशम्पायन उवाच
ततः कुन्ती भीमसेनमर्जुनं यमजौ तथा
उवाच गमनं ते च तथेत्येवाब्रुवंस्तदा १०
तत आमन्त्र्य तं विप्रं कुन्ती राजन्सुतैः सह
प्रतस्थे नगरीं रम्यां द्रुपदस्य महात्मनः ११
इति श्रीमहाभारते आदिपर्वणि षट्पञ्चाशदधिकशततमोऽध्यायः १५६

## सप्तपञ्चाशदधिक शततमोऽध्यायः

वैशम्पायन उवाच
वसत्सु तेषु प्रच्छन्नं पाण्डवेषु महात्मसु
आजगामाथ तान्द्रष्टुं व्यासः सत्यवतीसुतः १
तमागतमभिप्रेक्ष्य प्रत्युद्गम्य परंतपाः
प्रणिपत्याभिवाद्यैनं तस्थुः प्राञ्जलयस्तदा २
समनुज्ञाप्य तान्सर्वानासीनान्मुनिरब्रवीत्
प्रसन्नः पूजितः पार्थैः प्रीतिपूर्वमिदं वचः ३
अपि धर्मेण वर्तध्वं शास्त्रेण च परंतपाः
अपि विप्रेषु वः पूजा पूजार्हेषु न हीयते ४
अथ धर्मार्थवद्वाक्यमुक्त्वा स भगवानृषिः
विचित्राश्च कथास्तास्ताः पुनरेवेदमब्रवीत् ५
आसीत्तपोवने काचिदृषेः कन्या महात्मनः
विलग्नमध्या सुश्रोणी सुभ्रूः सर्वगुणान्विता ६
कर्मभिः स्वकृतैः सा तु दुर्भगा समपद्यत
नाध्यगच्छत्पतिं सा तु कन्या रूपवती सती ७
तपस्तप्तुमथारेभे पत्यर्थमसुखा ततः
तोषयामास तपसा सा किलोग्रेण शंकरम् ८
तस्याः स भगवांस्तुष्टस्तामुवाच तपस्विनीम्
वरं वरय भद्रं ते वरदोऽस्मीति भामिनी ९
अथेश्वरमुवाचेदमात्मनः सा वचो हितम्
पतिं सर्वगुणोपेतमिच्छामीति पुनः पुनः १०
तामथ प्रत्युवाचेदमीशानो वदतां वरः

पञ्च ते पतयो भद्रे भविष्यन्तीति शंकरः ११
प्रतिब्रुवन्तीमेकं मे पतिं देहीति शंकरम्
पुनरेवाब्रवीद्देव इदं वचनमुत्तमम् १२
पञ्चकृत्वस्त्वया उक्तः पतिं देहीत्यहं पुनः
देहमन्यं गतायास्ते यथोक्तं तद्भविष्यति १३
द्रुपदस्य कुले जाता कन्या सा देवरूपिणी
निर्दिष्टाः भवतां पत्नी कृष्णा पार्षत्यनिन्दिता १४
पाञ्चालनगरं तस्मात्प्रविशध्वं महाबलाः
सुखिनस्तामनुप्राप्य भविष्यथ न संशयः १५
एवमुक्त्वा महाभागः पाण्डवानां पितामहः
पार्थानामन्त्र्य कुन्तीं च प्रातिष्ठत महातपाः १६
इति श्रीमहाभारते आदिपर्वणि सप्तपञ्चाशदधिकशततमोऽध्यायः १५७

## अष्टपञ्चाशदधिक शततमोऽध्यायः

वैशम्पायन उवाच
ते प्रतस्थुः पुरस्कृत्य मातरं पुरुषर्षभाः
समैरुदङ्मुखैर्मार्गैर्यथोद्दिष्टं परंतपाः १
ते गच्छन्तस्त्वहोरात्रं तीर्थं सोमश्रवायणम्
आसेदुः पुरुषव्याघ्रा गङ्गायां पाण्डुनन्दनाः २
उल्मुकं तु समुद्यम्य तेषामग्रे धनञ्जयः
प्रकाशार्थं ययौ तत्र रक्षार्थं च महायशाः ३
तत्र गङ्गाजले रम्ये विविक्ते क्रीडयन्स्त्रियः
ईर्ष्युर्गन्धर्वराजः स्म जलक्रीडामुपागतः ४
शब्दं तेषां स शुश्राव नदीं समुपसर्पताम्
तेन शब्देन चाविष्टश्चुक्रोध बलवद्बली ५
स दृष्ट्वा पाण्डवांस्तत्र सह मात्रा परन्तपान्
विस्फारयन्धनुर्घोरमिदं वचनमब्रवीत् ६
सन्ध्या संरज्यते घोरा पूर्वरात्रागमेषु या
अशीतिभिस्त्रुटैर्हीनं तं मुहूर्तं प्रचक्षते ७
विहितं कामचाराणां यक्षगन्धर्वरक्षसाम्

शेषमन्यन्मनुष्याणां कामचारमिह स्मृतम् ८
लोभात्प्रचारं चरतस्तासु वेलासु वै नरान्
उपक्रान्ता निगृह्णीमो राक्षसैः सह बालिशान् ९
ततो रात्रौ प्राप्नुवतो जलं ब्रह्मविदो जनाः
गर्हयन्ति नरान्सर्वान्बलस्थान्नृपतीनपि १०
आरात्तिष्ठत मा मह्यं समीपमुपसर्पत
कस्मान्मां नाभिजानीत प्राप्तं भागीरथीजलम् ११
अङ्गारपर्णं गन्धर्वं वित्त मां स्वबलाश्रयम्
अहं हि मानी चेर्ष्युश्च कुबेरस्य प्रियः सखा १२
अङ्गारपर्णमिति च ख्यातं वनमिदं मम
अनु गङ्गां च वाकां च चित्रं यत्र वसाम्यहम् १३
न कुणपाः शृङ्गिणो वा न देवा न च मानुषाः
इदं समुपसर्पन्ति तत्किं समुपसर्पथ १४
अर्जुन उवाच
समुद्रे हिमवत्पार्श्वे नद्यामस्यां च दुर्मते
रात्रावहनि सन्धौ च कस्य क्लृप्तः परिग्रहः १५
वयं च शक्तिसंपन्ना अकाले त्वामधृष्णुमः
अशक्ता हि क्षणे क्रूरे युष्मानर्चन्ति मानवाः १६
पुरा हिमवतश्चैषा हेमशृङ्गाद्विनिःसृता
गङ्गा गत्वा समुद्राम्भः सप्तधा प्रतिपद्यते १७
इयं भूत्वा चैकवप्रा शुचिराकाशगा पुनः
देवेषु गङ्गा गन्धर्व प्राप्नोत्यलकनन्दताम् १८
तथा पितॄन्वैतरणी दुस्तरा पापकर्मभिः
गङ्गा भवति गन्धर्व यथा द्वैपायनोऽब्रवीत् १९
असंबाधा देवनदी स्वर्गसंपादनी शुभा
कथमिच्छसि तां रोद्धुं नैष धर्मः सनातनः २०
अनिवार्यमसंबाधं तव वाचा कथं वयम्
न स्पृशेम यथाकामं पुण्यं भागीरथीजलम् २१
वैशम्पायन उवाच
अङ्गारपर्णस्तच्छ्रुत्वा क्रुद्ध आनम्य कार्मुकम्

मुमोच सायकान्दीप्तानहीनाशीविषानिव २२
उल्मुकं भ्रामयंस्तूर्णं पाराडवश्चर्म चोत्तमम्
व्यपोवाह शरांस्तस्य सर्वानेव धनञ्जयः २३
अर्जुन उवाच
बिभीषिकैषा गन्धर्व नास्त्रज्ञेषु प्रयुज्यते
अस्त्रज्ञेषु प्रयुक्तैषा फेनवत्प्रविलीयते २४
मानुषानति गन्धर्वान्सर्वान्गन्धर्व लक्षये
तस्मादस्त्रेण दिव्येन योत्स्येऽहं न तु मायया २५
पुरास्त्रमिदमाग्नेयं प्रादात्किल बृहस्पतिः
भरद्वाजस्य गन्धर्व गुरुपुत्रः शतक्रतोः २६
भरद्वाजादग्निवेश्यो अग्निवेश्याद्गुरुर्मम
स त्विदं मह्यमददाद्द्रोणो ब्राह्मणसत्तमः २७
वैशम्पायन उवाच
इत्युक्त्वा पाराडवः क्रुद्धो गन्धर्वाय मुमोच ह
प्रदीप्तमस्त्रमाग्नेयं ददाहास्य रथं तु तत् २८
विरथं विप्लुतं तं तु स गन्धर्वं महाबलम्
अस्त्रतेजःप्रमूढं च प्रपतन्तमवाङ्मुखम् २९
शिरोरुहेषु जग्राह माल्यवत्सु धनञ्जयः
भ्रातॄन्प्रति चकर्षाथ सोऽस्त्रपातादचेतसम् ३०
युधिष्ठिरं तस्य भार्या प्रपेदे शरणार्थिनी
नाम्ना कुम्भीनसी नाम पतित्राणमभीप्सती ३१
गन्धर्व्युवाच
त्राहि त्वं मां महाराज पतिं चेमं विमुञ्च मे
गन्धर्वीं शरणं प्राप्तां नाम्ना कुम्भीनसीं प्रभो ३२
युधिष्ठिर उवाच
युद्धे जितं यशोहीनं स्त्रीनाथमपराक्रमम्
को नु हन्याद्रिपुं त्वादृङ् मुञ्चेमं रिपुसूदन ३३
अर्जुन उवाच
अङ्गेमं प्रतिपद्यस्व गच्छ गन्धर्व मा शुचः
प्रदिशत्यभयं तेऽद्य कुरुराजो युधिष्ठिरः ३४

गन्धर्व उवाच
जितोऽह पूर्वकं नाम मुञ्चाम्यङ्गारपर्णताम्
न च श्लाघे बलेनाद्य न नाम्ना जनसंसदि ३५
साध्विमं लब्धवाँल्लाभं योऽह दिव्यास्त्रधारिणम्
गान्धर्व्या मायया योद्धुमिच्छामि वयसा वरम् ३६
अस्त्राग्निना विचित्रोऽय दग्धो मे रथ उत्तमः
सोऽह चित्ररथो भूत्वा नाम्ना दग्धरथोऽभवम् ३७
संभृता चैव विद्येयं तपसेह पुरा मया
निवेदयिष्ये तामद्य प्राणदाय महात्मने ३८
संस्तम्भितं हि तरसा जितं शरणमागतम्
योऽरि संयोजयेत्प्राणैः कल्याणं किं न सोऽहति ३९
चाक्षुषी नाम विद्येयं यां सोमाय ददौ मनुः
ददौ स विश्वावसवे मह्यं विश्वावसुर्ददौ ४०
सेयं कापुरुषं प्राप्ता गुरुदत्ता प्रणश्यति
आगमोऽस्या मया प्रोक्तो वीर्यं प्रतिनिबोध मे ४१
यच्चक्षुषा द्रष्टुमिच्छेत्त्रिषु लोकेषु किंचन
तत्पश्येद्यादृशं चेच्छेत्तादृशं द्रष्टुमर्हति ४२
समानपद्ये षण्मासान्स्थितो विद्यां लभेदिमाम्
अनुनेष्याम्यहं विद्यां स्वयं तुभ्यं व्रते कृते ४३
विद्यया ह्यनया राजन्वयं नृभ्यो विशेषिताः
अविशिष्टाश्च देवानामनुभावप्रवर्तिताः ४४
गन्धर्वजानामश्वानामहं पुरुषसत्तम
भ्रातृभ्यस्तव पञ्चभ्यः पृथग्दाता शतं शतम् ४५
देवगन्धर्ववाहास्ते दिव्यगन्धा मनोगमाः
क्षीणाः क्षीणा भवन्त्येते न हीयन्ते च रंहसः ४६
पुरा कृतं महेन्द्रस्य वज्रं वृत्रनिबर्हणे
दशधा शतधा चैव तच्छीर्णं वृत्रमूर्धनि ४७
ततो भागीकृतो देवैर्वज्रभाग उपास्यते
लोके यत्साधनं किंचित्सा वै वज्रतनुः स्मृता ४८
वज्रपाणिर्ब्राह्मणः स्यात्क्षत्रं वज्ररथं स्मृतम्

वैश्या वै दानवज्राश्च कर्मवज्रा यवीयसः ४९
वज्रं क्षत्रस्य वाजिनो अवध्या वाजिनः स्मृताः
रथाङ्गं वडवा सूते सूताश्चाश्वेषु ये मताः ५०
कामवर्णाः कामजवाः कामतः समुपस्थिताः
इमे गन्धर्वजाः कामं पूरयिष्यन्ति ते हयाः ५१
अर्जुन उवाच
यदि प्रीतेन वा दत्तं संशये जीवितस्य वा
विद्या वित्तं श्रुतं वापि न तद्गन्धर्व कामये ५२
गन्धर्व उवाच
संयोगो वै प्रीतिकरः संसत्सु प्रतिदृश्यते
जीवितस्य प्रदानेन प्रीतो विद्यां ददामि ते ५३
त्वत्तो ह्यहं ग्रहीष्यामि अस्त्रमाग्नेयमुत्तमम्
तथैव सख्यं बीभत्सो चिराय भरतर्षभ ५४
अर्जुन उवाच
त्वत्तोऽस्त्रेण वृणोम्यश्वान्संयोगः शाश्वतोऽस्तु नौ
सखे तद्ब्रूहि गन्धर्व युष्मभ्यो यद्भयं त्यजेत् ५५
इति श्रीमहाभारते आदिपर्वणि अष्टपञ्चाशदधिकशततमोऽध्यायः १५८

## एकोनषष्ट्यधिक शततमोऽध्यायः

अर्जुन उवाच
कारणं ब्रूहि गन्धर्व किं तद्येन स्म धर्षिताः
यान्तो ब्रह्मविदः सन्तः सर्वे रात्रावरिन्दम १
गन्धर्व उवाच
अनग्नयोऽनाहुतयो न च विप्रपुरस्कृताः
यूयं ततो धर्षिताः स्थ मया पाण्डवनन्दन २
यक्षराक्षसगन्धर्वाः पिशाचोरगदानवाः
विस्तरं कुरुवंशस्य श्रीमतः कथयन्ति ते ३
नारदप्रभृतीनां च देवर्षीणां मया श्रुतम्
गुणान्कथयतां वीर पूर्वेषां तव धीमताम् ४
स्वयं चापि मया दृष्टश्चरता सागराम्बराम्

इमां वसुमतीं कृत्स्नां प्रभावः स्वकुलस्य ते ५
वेदे धनुषि चाचार्यमभिजानामि तेऽर्जुन
विश्रुतं त्रिषु लोकेषु भारद्वाजं यशस्विनम् ६
धर्मं वायुं च शक्रं च विजानाम्यश्विनौ तथा
पाण्डुं च कुरुशार्दूल षडेतान्कुलवर्धनान्
पितॄनेतानहं पार्थ देवमानुषसत्तमान् ७
दिव्यात्मानो महात्मानः सर्वशस्त्रभृतां वराः
भवन्तो भ्रातरः शूराः सर्वे सुचरितव्रताः ८
उत्तमां च मनोबुद्धिं भवतां भावितात्मनाम्
जानन्नपि च वः पार्थ कृतवानिह धर्षणाम् ९
स्त्रीसकाशे च कौरव्य न पुमान्क्षन्तुमर्हति
धर्षणामात्मनः पश्यन्बाहुद्रविणमाश्रितः १०
नक्तं च बलमस्माकं भूय एवाभिवर्धते
यतस्ततो मां कौन्तेय सादरं मन्युराविशत् ११
सोऽह त्वयेह विजितः संख्ये तापत्यवर्धन
येन तेनेह विधिना कीर्त्यमानं निबोध मे १२
ब्रह्मचर्यं परो धर्मः स चापि नियतस्त्वयि
यस्मात्तस्मादहं पार्थ रणेऽस्मिन्विजितस्त्वया १३
यस्तु स्यात्क्षत्रियः कश्चित्कामवृत्तः परन्तप
नक्तं च युधि युध्येत न स जीवेत्कथंचन १४
यस्तु स्यात्कामवृत्तोऽपि राजा तापत्य संगरे
जयेन्नक्तंचरान्सर्वान्स पुरोहितधूर्गतः १५
तस्मात्तापत्य यत्किंचिन्नृणां श्रेय इहेप्सितम्
तस्मिन्कर्मणि योक्तव्या दान्तात्मानः पुरोहिताः १६
वेदे षडङ्गे निरताः शुचयः सत्यवादिनः
धर्मात्मानः कृतात्मानः स्युर्नृपाणां पुरोहिताः १७
जयश्च नियतो राज्ञः स्वर्गश्च स्यादनन्तरम्
यस्य स्याद्धर्मविद्वाग्मी पुरोधाः शीलवाञ्शुचिः १८
लाभं लब्धुमलब्धं हि लब्धं च परिरक्षितुम्
पुरोहितं प्रकुर्वीत राजा गुणसमन्वितम् १९

पुरोहितमते तिष्ठेद्य इच्छेत्पृथिवीं नृपः
प्राप्तुं मेरुवरोत्तंसां सर्वशः सागराम्बराम् २०
न हि केवलशौर्येण तापत्याभिजनेन च
जयेदब्राह्मणः कश्चिद्भूमिं भूमिपतिः क्वचित् २१
तस्मादेवं विजानीहि कुरूणां वंशवर्धन
ब्राह्मणप्रमुखं राज्यं शक्यं पालयितुं चिरम् २२
इति श्रीमहाभारते आदिपर्वणि एकोनषष्ट्यधिकशततमोऽध्यायः १५९

## षष्ठ्यधिक शततमोऽध्यायः

अर्जुन उवाच
तापत्य इति यद्वाक्यमुक्तवानसि मामिह
तदहं ज्ञातुमिच्छामि तापत्यार्थविनिश्चयम् १
तपती नाम का चैषा तापत्या यत्कृते वयम्
कौन्तेया हि वयं साधो तत्त्वमिच्छामि वेदितुम् २
वैशम्पायन उवाच
एवमुक्तः स गन्धर्वः कुन्तीपुत्रं धनञ्जयम्
विश्रुतां त्रिषु लोकेषु श्रावयामास वै कथाम् ३
गन्धर्व उवाच
हन्त ते कथयिष्यामि कथामेतां मनोरमाम्
यथावदखिलां पार्थ धर्म्यां धर्मभृतां वर ४
उक्तवानस्मि येन त्वां तापत्य इति यद्वचः
तत्तेऽहं कथयिष्यामि शृणुष्वैकमना मम ५
य एष दिवि धिष्ण्येन नाकं व्याप्नोति तेजसा
एतस्य तपती नाम बभूवासदृशी सुता ६
विवस्वतो वै कौन्तेय सावित्र्यवरजा विभो
विश्रुता त्रिषु लोकेषु तपती तपसा युता ७
न देवी नासुरी चैव न यक्षी न च राक्षसी
नाप्सरा न च गन्धर्वी तथा रूपेण काचन ८
सुविभक्तानवद्याङ्गी स्वसितायतलोचना
स्वाचारा चैव साध्वी च सुवेषा चैव भामिनी ९

न तस्याः सदृशं कंचित्त्रिषु लोकेषु भारत
भर्तारं सविता मेने रूपशीलकुलश्रुतैः १०
संप्राप्तयौवनां पश्यन्देयां दुहितरं तु ताम्
नोपलेभे ततः शान्तिं संप्रदानं विचिन्तयन् ११
अथर्क्षपुत्रः कौन्तेय कुरूणामृषभो बली
सूर्यमाराधयामास नृपः संवरणः तदा १२
अर्घ्यमाल्योपहारैश्च शश्वच्च नृपतिर्यतः
नियमैरुपवासैश्च तपोभिर्विविधैरपि १३
शुश्रूषुरनहंवादी शुचिः पौरवनन्दनः
अंशुमन्तं समुद्यन्तं पूजयामास भक्तिमान् १४
ततः कृतज्ञं धर्मज्ञं रूपेणासदृशं भुवि
तपत्याः सदृशं मेने सूर्यः संवरणं पतिम् १५
दातुमैच्छत्ततः कन्यां तस्मै संवरणाय ताम्
नृपोत्तमाय कौरव्य विश्रुताभिजनाय वै १६
यथा हि दिवि दीप्तांशुः प्रभासयति तेजसा
तथा भुवि महीपालो दीप्त्या संवरणोऽभवत् १७
यथार्चयन्ति चादित्यमुद्यन्तं ब्रह्मवादिनः
तथा संवरणं पार्थ ब्राह्मणावरजाः प्रजाः १८
स सोममति कान्तत्वादादित्यमति तेजसा
बभूव नृपतिः श्रीमान्सुहृदां दुर्हृदामपि १९
एवंगुणस्य नृपतेस्तथावृत्तस्य कौरव
तस्मै दातुं मनश्चक्रे तपतीं तपनः स्वयम् २०
स कदाचिदथो राजा श्रीमानुरुयशा भुवि
चचार मृगयां पार्थ पर्वतोपवने किल २१
चरतो मृगयां तस्य क्षुत्पिपासाश्रमान्वितः
ममार राज्ञः कौन्तेय गिरावप्रतिमो हयः २२
स मृताश्वश्चरन्पार्थ पद्भ्यामेव गिरौ नृपः
ददर्शासदृशीं लोके कन्यामायतलोचनाम् २३
स एक एकामासाद्य कन्यां तामरिमर्दनः
तस्थौ नृपतिशार्दूलः पश्यन्नविचलेक्षणः २४

स हि तां तर्कयामास रूपतो नृपतिः श्रियम्
पुनः संतर्कयामास रवेर्भ्रष्टामिव प्रभाम् २५
गिरिप्रस्थे तु सा यस्मिन्स्थिता स्वसितलोचना
स सवृक्षक्षुपलतो हिरण्मय इवाभवत् २६
अवमेने च तां दृष्ट्वा सर्वप्राणभृतां वपुः
अवाप्तं चात्मनो मेने स राजा चक्षुषः फलम् २७
जन्मप्रभृति यत्किंचिद्दृष्टवान्स महीपतिः
रूपं न सदृशं तस्यास्तर्कयामास किंचन २८
तया बद्धमनश्चक्षुः पाशैर्गुणमयैस्तदा
न चचाल ततो देशाद्बुबुधे न च किंचन २९
अस्या नूनं विशालाक्ष्याः सदेवासुरमानुषम्
लोकं निर्मथ्य धात्रेदं रूपमाविष्कृतं कृतम् ३०
एवं स तर्कयामास रूपद्रविणसंपदा
कन्यामसदृशीं लोके नृपः संवरणस्तदा ३१
तां च दृष्ट्वैव कल्याणीं कल्याणाभिजनो नृपः
जगाम मनसा चिन्तां काममार्गणपीडितः ३२
दह्यमानः स तीव्रेण नृपतिर्मन्मथाग्निना
अप्रगल्भां प्रगल्भः स तामुवाच यशस्विनीम् ३३
कासि कस्यासि रम्भोरु किमर्थं चेह तिष्ठसि
कथं च निर्जनेऽरण्ये चरस्येका शुचिस्मिते ३४
त्वं हि सर्वानवद्याङ्गी सर्वाभरणभूषिता
विभूषणमिवैतेषां भूषणानामभीप्सितम् ३५
न देवीं नासुरीं चैव न यक्षीं न च राक्षसीम्
न च भोगवतीं मन्ये न गन्धर्वीं न मानुषीम् ३६
या हि दृष्टा मया काश्चिच्छ्रुता वापि वराङ्गनाः
न तासां सदृशीं मन्ये त्वामहं मत्तकाशिनि ३७
एवं तां स महीपालो बभाषे न तु सा तदा
कामार्तं निर्जनेऽरण्ये प्रत्यभाषत किंचन ३८
ततो लालप्यमानस्य पार्थिवस्यायतेक्षणा
सौदामिनीव साभ्रेषु तत्रैवान्तरधीयत ३९

तामन्विच्छन्स नृपतिः परिचक्राम तत्तदा
वनं वनजपत्राक्षीं भ्रमन्नुन्मत्तवत्तदा ४०
अपश्यमानः स तु तां बहु तत्र विलप्य च
निश्चेष्टः कौरवश्रेष्ठो मुहूर्तं स व्यतिष्ठत ४१
इति श्रीमहाभारते आदिपर्वणि षष्ट्यधिकशततमोऽध्यायः १६०

एक षष्ठ्यधिक शततमोऽध्यायः

गन्धर्व उवाच
अथ तस्यामदृश्यायां नृपतिः काममोहितः
पातनः शत्रुसङ्घानां पपात धरणीतले १
तस्मिन्निपतिते भूमावथ सा चारुहासिनी
पुनः पीनायतश्रोणी दर्शयामास तं नृपम् २
अथाबभाषे कल्याणी वाचा मधुरया नृपम्
तं कुरूणां कुलकरं कामाभिहतचेतसम् ३
उत्तिष्ठोत्तिष्ठ भद्रं ते न त्वमर्हस्यरिन्दम
मोहं नृपतिशार्दूल गन्तुमाविष्कृतः क्षितौ ४
एवमुक्तोऽथ नृपतिर्वाचा मधुरया तदा
ददर्श विपुलश्रोणीं तामेवाभिमुखे स्थिताम् ५
अथ तामसितापाङ्गीमाबभाषे नराधिपः
मन्मथाग्निपरीतात्मा संदिग्धाक्षरया गिरा ६
साधु मामसितापाङ्गे कामार्तं मत्तकाशिनि
भजस्व भजमानं मां प्राणा हि प्रजहन्ति माम् ७
त्वदर्थं हि विशालाक्षि मामयं निशितैः शरैः
कामः कमलगर्भाभे प्रतिविध्यन्न शाम्यति ८
ग्रस्तमेवमनाक्रन्दे भद्रे काममहाहिना
सा त्वं पीनायतश्रोणि पर्याप्नुहि शुभानने ९
त्वय्यधीना हि मे प्राणा किंनरोद्गीतभाषिणि
चारुसर्वानवद्याङ्गि पद्मेन्दुसदृशानने १०
न ह्यहं त्वदृते भीरु शक्ष्ये जीवितुमात्मना
तस्मात्कुरु विशालाक्षि मय्यनुक्रोशमङ्गने ११

भक्तं मामसितापाङ्गे न परित्यक्तुमर्हसि
त्वं हि मां प्रीतियोगेन त्रातुमर्हसि भामिनि १२
गान्धर्वेण च मां भीरु विवाहेनैहि सुंदरि
विवाहानां हि रम्भोरु गान्धर्वः श्रेष्ठ उच्यते १३
तपत्युवाच
नाहमीशात्मनो राजन्कन्या पितृमती ह्यहम्
मयि चेदस्ति ते प्रीतिर्याचस्व पितरं मम १४
यथा हि ते मया प्राणाः संगृहीता नरेश्वर
दर्शनादेव भूयस्त्वं तथा प्राणान्ममाहरः १५
न चाहमीशा देहस्य तस्मान्नृपतिसत्तम
समीपं नोपगच्छामि न स्वतन्त्रा हि योषितः १६
का हि सर्वेषु लोकेषु विश्रुताभिजनं नृपम्
कन्या नाभिलषेन्नाथं भर्तारं भक्तवत्सलम् १७
तस्मादेवंगते काले याचस्व पितरं मम
आदित्यं प्रणिपातेन तपसा नियमेन च १८
स चेत्कामयते दातुं तव मामरिमर्दन
भविष्याम्यथ ते राजन्सततं वशवर्तिनी १९
अहं हि तपती नाम सावित्र्यवरजा सुता
अस्य लोकप्रदीपस्य सवितुः क्षत्रियर्षभ २०
इति श्रीमहाभारते आदिपर्वणि एकषष्ट्यधिकशततमोऽध्यायः १६१

## द्विषष्ट्यधिकशततमोऽध्यायः

गन्धर्व उवाच
एवमुक्त्वा ततस्तूर्णं जगामोर्ध्वमनिन्दिता
स तु राजा पुनर्भूमौ तत्रैव निपपात ह १
अमात्यः सानुयात्रस्तु तं ददर्श महावने
क्षितौ निपतितं काले शक्रध्वजमिवोच्छ्रितम् २
तं हि दृष्ट्वा महेष्वासं निरश्वं पतितं क्षितौ
बभूव सोऽस्य सचिवः संप्रदीप्त इवाग्निना ३
त्वरया चोपसंगम्य स्नेहादागतसंभ्रमः

तं समुत्थापयामास नृपतिं काममोहितम् ४
भूतलाद्भूमिपालेशं पितेव पतितं सुतम्
प्रज्ञया वयसा चैव वृद्धः कीर्त्या दमेन च ५
अमात्यस्तं समुत्थाप्य बभूव विगतज्वरः
उवाच चैनं कल्याणया वाचा मधुरयोत्थितम्
मा भैर्मनुजशार्दूल भद्रं चास्तु तवानघ ६
क्षुत्पिपासापरिश्रान्तं तर्कयामास तं नृपम्
पतितं पातनं संख्ये शात्रवाणां महीतले ७
वारिणाथ सुशीतेन शिरस्तस्याभ्यषेचयत्
अस्पृशन्मुकुटं राज्ञः पुण्डरीकसुगन्धिना ८
ततः प्रत्यागतप्राणस्तद्बलं बलवान्नृपः
सर्वं विसर्जयामास तमेकं सचिवं विना ९
ततस्तस्याज्ञया राज्ञो विप्रतस्थे महद्बलम्
स तु राजा गिरिप्रस्थे तस्मिन्पुनरुपाविशत् १०
ततस्तस्मिन्गिरिवरे शुचिर्भूत्वा कृताञ्जलि
आरिराधयिषुः सूर्यं तस्थावूर्ध्वभुजः क्षितौ ११
जगाम मनसा चैव वसिष्ठमृषिसत्तमम्
पुरोहितममित्रघ्नस्तदा संवरणो नृपः १२
नक्तंदिनमथैकस्थे स्थिते तस्मिञ्जनाधिपे
अथाजगाम विप्रर्षिस्तदा द्वादशमेऽहनि १३
स विदित्वैव नृपतिं तपत्या हृतमानसम्
दिव्येन विधिना ज्ञात्वा भावितात्मा महानृषिः १४
तथा तु नियतात्मानं स तं नृपतिसत्तमम्
आबभाषे स धर्मात्मा तस्यैवार्थचिकीर्षया १५
स तस्य मनुजेन्द्रस्य पश्यतो भगवानृषिः
ऊर्ध्वमाचक्रमे द्रष्टुं भास्करं भास्करद्युतिः १६
सहस्रांशुं ततो विप्रः कृताञ्जलिरुपस्थितः
वसिष्ठोऽहमिति प्रीत्या स चात्मानं न्यवेदयत् १७
तमुवाच महातेजा विवस्वान्मुनिसत्तमम्
महर्षे स्वागतं तेऽस्तु कथयस्व यथेच्छसि १८

इति श्रीमहाभारते आदिपर्वणि द्विषष्ट्यधिकशततमोऽध्यायः १६२

त्रिषष्ठ्यधिक शततमोऽध्यायः

वसिष्ठ उवाच
यैषा ते तपती नाम सावित्र्यवरजा सुता
तां त्वां संवरणस्यार्थे वरयामि विभावसो १
स हि राजा बृहत्कीर्तिर्धर्मार्थविदुदारधीः
युक्तः संवरणो भर्ता दुहितुस्ते विहङ्गम २
गन्धर्व उवाच
इत्युक्तः सविता तेन ददानीत्येव निश्चितः
प्रत्यभाषत तं विप्रं प्रतिनन्द्य दिवाकरः ३
ततः संवरणो राज्ञां त्वमृषीणां वरो मुने
तपती योषितां श्रेष्ठा किमन्यत्रापवर्जनात् ४
ततः सर्वानवद्याङ्गीं तपतीं तपनः स्वयम्
ददौ संवरणस्यार्थे वसिष्ठाय महात्मने
प्रतिजग्राह तां कन्यां महर्षिस्तपतीं तदा ५
वसिष्ठोऽथ विसृष्टश्च पुनरेवाजगाम ह
यत्र विख्यातकीर्तिः स कुरूणामृषभोऽभवत् ६
स राजा मन्मथाविष्टस्तद्गतेनान्तरात्मना
दृष्ट्वा च देवकन्यां तां तपतीं चारुहासिनीम्
वसिष्ठेन सहायान्तीं संहृष्टोऽभ्यधिकं बभौ ७
कृच्छ्रे द्वादशरात्रे तु तस्य राज्ञः समापिते
आजगाम विशुद्धात्मा वसिष्ठो भगवानृषिः ८
तपसाराध्य वरदं देवं गोपतिमीश्वरम्
लेभे संवरणो भार्यां वसिष्ठस्यैव तेजसा ९
ततस्तस्मिन्गिरिश्रेष्ठे देवगन्धर्वसेविते
जग्राह विधिवत्पाणिं तपत्याः स नरर्षभः १०
वसिष्ठेनाभ्यनुज्ञातस्तस्मिन्नेव धराधरे
सोऽकामयत राजर्षिर्विहर्तुं सह भार्यया ११
ततः पुरे च राष्ट्रे च वाहनेषु बलेषु च

आदिदेश महीपालस्तमेव सचिवं तदा १२
नृपतिं त्वभ्यनुज्ञाय वसिष्ठोऽथापचक्रमे
सोऽपि राजा गिरौ तस्मिन्विजहारामरोपमः १३
ततो द्वादश वर्षाणि काननेषु जलेषु च
रेमे तस्मिन्गिरौ राजा तयैव सह भार्यया १४
तस्य राज्ञः पुरे तस्मिन्समा द्वादश सर्वशः
न ववर्ष सहस्राक्षो राष्ट्रे चैवास्य सर्वशः १५
तत्क्षुधार्तैर्निरानन्दैः शवभूतैस्तदा नरैः
अभवत्प्रेतराजस्य पुरं प्रेतैरिवावृतम् १६
ततस्तत्तादृशं दृष्ट्वा स एव भगवानृषिः
अभ्यपद्यत धर्मात्मा वसिष्ठो राजसत्तमम् १७
तं च पार्थिवशार्दूलमानयामास तत्पुरम्
तपत्या सहितं राजन्नुषितं द्वादशीः समाः १८
ततः प्रवृष्टस्तत्रासीद्यथापूर्वं सुरारिहा
तस्मिन्नृपतिशार्दूले प्रविष्टे नगरं पुनः १९
ततः सराष्ट्रं मुमुदे तत्पुरं परया मुदा
तेन पार्थिवमुख्येन भावितं भावितात्मना २०
ततो द्वादश वर्षाणि पुनरीजे नराधिपः
पत्न्या तपत्या सहितो यथा शक्रो मरुत्पतिः २१
एवमासीन्महाभागा तपती नाम पौर्विकी
तव वैवस्वती पार्थ तापत्यस्त्वं यया मतः २२
तस्यां संजनयामास कुरुं संवरणो नृपः
तपत्यां तपतां श्रेष्ठ तापत्यस्त्वं ततोऽजुन २३
इति श्रीमहाभारते आदिपर्वणि त्रिषष्ट्यधिकशततमोऽध्यायः १६३

## चतुःषष्ठ्यधिक शततमोऽध्यायः

वैशम्पायन उवाच
स गन्धर्ववचः श्रुत्वा तत्तदा भरतर्षभ
अर्जुनः परया प्रीत्या पूर्णचन्द्र इवाबभौ १
उवाच च महेष्वासो गन्धर्वं कुरुसत्तमः

जातकौतूहलोऽतीव वसिष्ठस्य तपोबलात् २
वसिष्ठ इति यस्यैतदृषेर्नाम त्वयेरितम्
एतदिच्छाम्यहं श्रोतुं यथावत्तद्वदस्व मे ३
य एष गन्धर्वपते पूर्वेषां नः पुरोहितः
आसीदेतन्ममाचक्ष्व क एष भगवानृषिः ४
गन्धर्व उवाच
तपसा निर्जितौ शश्वदजेयावमरैरपि
कामक्रोधावुभौ यस्य चरणौ संववाहतुः ५
यस्तु नोच्छेदनं चक्रे कुशिकानामुदारधीः
विश्वामित्रापराधेन धारयन्मन्युमुत्तमम् ६
पुत्रव्यसनसंतप्तः शक्तिमानपि यः प्रभुः
विश्वामित्रविनाशाय न मेने कर्म दारुणम् ७
मृतांश्च पुनराहर्तुं यः स पुत्रान्यमक्षयात्
कृतान्तं नातिचक्राम वेलामिव महोदधिः ८
यं प्राप्य विजितात्मानं महात्मानं नराधिपाः
इक्ष्वाकवो महीपाला लेभिरे पृथिवीमिमाम् ९
पुरोहितवरं प्राप्य वसिष्ठमृषिसत्तमम्
ईजिरे क्रतुभिश्चापि नृपास्ते कुरुनन्दन १०
स हि तान्याजयामास सर्वान्नृपतिसत्तमान्
ब्रह्मर्षिः पाण्डवश्रेष्ठ बृहस्पतिरिवामरान् ११
तस्माद्धर्मप्रधानात्मा वेदधर्मविदीप्सितः
ब्राह्मणो गुणवान्कश्चित्पुरोधाः प्रविमृश्यताम् १२
क्षत्रियेण हि जातेन पृथिवीं जेतुमिच्छता
पूर्वं पुरोहितः कार्यः पार्थ राज्याभिवृद्धये १३
महीं जिगीषता राज्ञा ब्रह्म कार्यं पुरःसरम्
तस्मात्पुरोहितः कश्चिद्गुणवानस्तु वो द्विजः १४
इति श्रीमहाभारते आदिपर्वणि चतुःषष्ट्यधिकशततमोऽध्यायः १६४

पञ्चषष्ट्यधिक शततमोऽध्यायः

अर्जुन उवाच

किंनिमित्तमभूद्वैरं विश्वामित्रवसिष्ठयोः
वसतोराश्रमे पुराये शंस नः सर्वमेव तत् १
गन्धर्व उवाच
इदं वासिष्ठमाख्यानं पुराणं परिचक्षते
पार्थ सर्वेषु लोकेषु यथावत्तन्निबोध मे २
कन्यकुब्जे महानासीत्पार्थिवो भरतर्षभ
गाधीति विश्रुतो लोके सत्यधर्मपरायणः ३
तस्य धर्मात्मनः पुत्रः समृद्धबलवाहनः
विश्वामित्र इति ख्यातो बभूव रिपुमर्दनः ४
स चचार सहामात्यो मृगयां गहने वने
मृगान्विध्यन्वराहांश्च रम्येषु मरुधन्वसु ५
व्यायामकर्शितः सोऽथ मृगलिप्सुः पिपासितः
आजगाम नरश्रेष्ठ वसिष्ठस्याश्रमं प्रति ६
तमागतमभिप्रेक्ष्य वसिष्ठः श्रेष्ठभागृषिः
विश्वामित्रं नरश्रेष्ठं प्रतिजग्राह पूजया ७
पाद्यार्घ्याचमनीयेन स्वागतेन च भारत
तथैव परिजग्राह वन्येन हविषा तथा ८
तस्याथ कामधुग्धेनुर्वसिष्ठस्य महात्मनः
उक्ता कामान्प्रयच्छेति सा कामान्दुदुहे ततः ९
ग्राम्यारणया ओषधीश्च दुदुहे पय एव च
षड्रसं चामृतरसं रसायनमनुत्तमम् १०
भोजनीयानि पेयानि भक्ष्याणि विविधानि च
लेह्यान्यमृतकल्पानि चोष्याणि च तथार्जुन ११
तैः कामैः सर्वसंपूर्णैः पूजितः स महीपतिः
सामात्यः सबलश्चैव तुतोष स भृशं नृपः १२
षडायतां सुपार्श्वोरुं त्रिपृथुं पञ्चसंवृताम्
मराडूकनेत्रां स्वाकारां पीनोधसमनिन्दिताम् १३
सुवालधिं शङ्कुकर्णां चारुशृङ्गां मनोरमाम्
पुष्टायतशिरोग्रीवां विस्मितः सोऽभिवीक्ष्य ताम् १४
अभिनन्दति तां नन्दीं वसिष्ठस्य पयस्विनीम्

अब्रवीच्च भृशं तुष्टो विश्वामित्रो मुनिं तदा १५
अर्बुदेन गवां ब्रह्मन्मम राज्येन वा पुनः
नन्दिनीं संप्रयच्छस्व भुङ्क्ष्व राज्यं महामुने १६
वसिष्ठ उवाच
देवतातिथिपित्रर्थमाज्यार्थं च पयस्विनी
अदेया नन्दिनीयं मे राज्येनापि तवानघ १७
विश्वामित्र उवाच
क्षत्रियोऽह भवान्विप्रस्तपःस्वाध्यायसाधनः
ब्राह्मणेषु कुतो वीर्यं प्रशान्तेषु धृतात्मसु १८
अर्बुदेन गवां यस्त्वं न ददासि ममेप्सिताम्
स्वधर्मं न प्रहास्यामि नयिष्ये ते बलेन गाम् १९
वसिष्ठ उवाच
बलस्थश्चासि राजा च बाहुवीर्यश्च क्षत्रियः
यथेच्छसि तथा क्षिप्रं कुरु त्वं मा विचारय २०
गन्धर्व उवाच
एवमुक्तस्तदा पार्थ विश्वामित्रो बलादिव
हंसचन्द्रप्रतीकाशां नन्दिनीं तां जहार गाम् २१
कशादण्डप्रतिहता काल्यमाना ततस्ततः
हम्भायमाना कल्याणी वसिष्ठस्याथ नन्दिनी २२
आगम्याभिमुखी पार्थ तस्थौ भगवदुन्मुखी
भृशं च ताड्यमानापि न जगामाश्रमात्ततः २३
वसिष्ठ उवाच
शृणोमि ते रवं भद्रे विनदन्त्याः पुनः पुनः
बलाद्ध्रियसि मे नन्दि क्षमावान्ब्राह्मणो ह्यहम् २४
गन्धर्व उवाच
स तु तेषां बलान्नन्दी बलानां भरतर्षभ
विश्वामित्रभयोद्विग्ना वसिष्ठं समुपागमत् २५
गौरुवाच
पाषाणदण्डाभिहतां क्रन्दन्तीं मामनाथवत्
विश्वामित्रबलैर्घोरैर्भगवन्किमुपेक्षसे २६

गन्धर्व उवाच
एवं तस्यां तदा पार्थ धर्षितायां महामुनिः
न चुक्षुभे न धैर्याच्च विचचाल धृतव्रतः २७
वसिष्ठ उवाच
क्षत्रियाणां बलं तेजो ब्राह्मणानां क्षमा बलम्
क्षमा मां भजते यस्माद्गम्यतां यदि रोचते २८
गौरुवाच
किं नु त्यक्तास्मि भगवन्यदेवं मां प्रभाषसे
अत्यक्ताहं त्वया ब्रह्मन्न शक्या नयितुं बलात् २९
वसिष्ठ उवाच
न त्वां त्यजामि कल्याणि स्थीयतां यदि शक्यते
दृढेन दाम्ना बद्ध्वैष वत्सस्ते ह्रियते बलात् ३०
गन्धर्व उवाच
स्थीयतामिति तच्छ्रुत्वा वसिष्ठस्य पयस्विनी
ऊर्ध्वाञ्चितशिरोग्रीवा प्रबभौ घोरदर्शना ३१
क्रोधरक्तेक्षणा सा गौर्हम्भारवघनस्वना
विश्वामित्रस्य तत्सैन्यं व्यद्रावयत सर्वशः ३२
कशाग्रदण्डाभिहता काल्यमाना ततस्ततः
क्रोधदीप्तेक्षणा क्रोधं भूय एव समादधे ३३
आदित्य इव मध्याह्ने क्रोधदीप्तवपुर्बभौ
अङ्गारवर्षं मुञ्चन्ती मुहुर्वालधितो महत् ३४
असृजत्पह्लवान्पुच्छाच्छकृतः शबराञ्शकान्
मूत्रतश्चासृजच्चापि यवनान्क्रोधमूर्च्छिता ३५
पुण्ड्रान्किरातान्द्रमिडान्सिंहलान्बर्बरांस्तथा
तथैव दरदान्म्लेच्छान्फेनतः सा ससर्ज ह ३६
तैर्विसृष्टैर्महत्सैन्यं नानाम्लेच्छगणैस्तदा
नानावरणसंछन्नैर्नानायुधधरैस्तथा
अवाकीर्यत संरब्धैर्विश्वामित्रस्य पश्यतः ३७
एकैकश्च तदा योधः पंञ्चाभिः सप्तभिर्वृतः
अस्त्रवर्षेण महता काल्यमानं बलं ततः

प्रभग्नं सर्वतस्त्रस्तं विश्वामित्रस्य पश्यतः ३८
न च प्राणैर्वियुज्यन्त केचित्ते सैनिकास्तदा
विश्वामित्रस्य संक्रुद्धैर्वासिष्ठैर्भरतर्षभ ३९
विश्वामित्रस्य सैन्यं तु काल्यमानं त्रियोजनम्
क्रोशमानं भयोद्विग्नं त्रातारं नाध्यगच्छत ४०
दृष्ट्वा तन्महदाश्चर्यं ब्रह्मतेजोभवं तदा
विश्वामित्रः क्षत्रभावान्निर्विण्णो वाक्यमब्रवीत् ४१
धिग्बलं क्षत्रियबलं ब्रह्मतेजोबलं बलम्
बलाबलं विनिश्चित्य तप एव परं बलम् ४२
स राज्यं स्फीतमुत्सृज्य तां च दीप्तां नृपश्रियम्
भोगांश्च पृष्ठतः कृत्वा तपस्येव मनो दधे ४३
स गत्वा तपसा सिद्धिं लोकान्विष्टभ्य तेजसा
तताप सर्वान्दीप्तौजा ब्राह्मणत्वमवाप च
अपिबच्च सुतं सोममिन्द्रेण सह कौशिकः ४४
इति श्रीमहाभारते आदिपर्वणि पञ्चषष्ट्यधिकशततमोऽध्यायः १६५

षट्षष्ट्यधिक शततमोऽध्यायः

गन्धर्व उवाच
कल्माषपाद इत्यस्मिँल्लोके राजा बभूव ह
इक्ष्वाकुवंशजः पार्थ तेजसासदृशो भुवि १
स कदाचिद्वनं राजा मृगयां निर्ययौ पुरात्
मृगान्विध्यन्वराहांश्च चचार रिपुमर्दनः २
स तु राजा महात्मानं वासिष्ठमृषिसत्तमम्
तृषार्तश्च क्षुधार्तश्च एकायनगतः पथि ३
अपश्यदजितः संख्ये मुनिं प्रतिमुखागतम्
शक्तिं नाम महाभागं वसिष्ठकुलनन्दनम्
ज्येष्ठं पुत्रशतात्पुत्रं वसिष्ठस्य महात्मनः ४
अपगच्छ पथोऽस्माकमित्येवं पार्थिवोऽब्रवीत्
तथा ऋषिरुवाचैनं सान्त्वयञ्श्लक्ष्णया गिरा ५
ऋषिस्तु नापचक्राम तस्मिन्धर्मपथे स्थितः

नापि राजा मुनेर्मानात्क्रोधाच्चापि जगाम ह ६
अमुञ्चन्तं तु पन्थानं तमृषिं नृपसत्तमः
जघान कशया मोहात्तदा राक्षसवन्मुनिम् ७
कशाप्रहाराभिहतस्ततः स मुनिसत्तमः
तं शशाप नृपश्रेष्ठं वासिष्ठः क्रोधमूर्च्छितः ८
हंसि राक्षसवद्यस्माद्राजापसद तापसम्
तस्मात्त्वमद्य प्रभृति पुरुषादो भविष्यसि ९
मनुष्यपिशिते सक्तश्चरिष्यसि महीमिमाम्
गच्छ राजाधमेत्युक्तः शक्तिना वीर्यशक्तिना १०
ततो याज्यनिमित्तं तु विश्वामित्रवसिष्ठयोः
वैरमासीत्तदा तं तु विश्वामित्रोऽन्वपद्यत ११
तयोर्विवदतोरेवं समीपमुपचक्रमे
ऋषिरुग्रतपाः पार्थ विश्वामित्रः प्रतापवान् १२
ततः स बुबुधे पश्चात्तमृषिं नृपसत्तमः
ऋषेः पुत्रं वसिष्ठस्य वसिष्ठमिव तेजसा १३
अन्तर्धाय तदात्मानं विश्वामित्रोऽपि भारत
तावुभावुपचक्राम चिकीर्षन्नात्मनः प्रियम् १४
स तु शप्तस्तदा तेन शक्तिना वै नृपोत्तमः
जगाम शरणं शक्तिं प्रसादयितुमर्हयन् १५
तस्य भावं विदित्वा स नृपतेः कुरुनन्दन
विश्वामित्रस्ततो रक्ष आदिदेश नृपं प्रति १६
स शापात्तस्य विप्रर्षेर्विश्वामित्रस्य चाज्ञया
राक्षसः किंकरो नाम विवेश नृपतिं तदा १७
रक्षसा तु गृहीतं तं विदित्वा स मुनिस्तदा
विश्वामित्रोऽप्यपक्रामत्तस्माद्देशादरिन्दम १८
ततः स नृपतिर्विद्वान्रक्षन्नात्मानमात्मना
बलवत्पीड्यमानोऽपि रक्षसान्तर्गतेन ह १९
ददर्श तं द्विजः कश्चिद्राजानं प्रस्थितं पुनः
ययाचे क्षुधितश्चैनं समांसं भोजनं तदा २०
तमुवाचाथ राजर्षिर्द्विजं मित्रसहस्तदा

आस्स्व ब्रह्मंस्त्वमत्रैव मुहूर्तमिति सान्त्वयन् २१
निवृत्तः प्रतिदास्यामि भोजनं ते यथेप्सितम्
इत्युक्त्वा प्रययौ राजा तस्थौ च द्विजसत्तमः २२
अन्तर्गतं तु तद्राज्ञस्तदा ब्राह्मणभाषितम्
सोऽन्तपुरं प्रविश्याथ संविवेश नराधिपः २३
ततोऽधरात्र उत्थाय सूदमानाय्य सत्वरम्
उवाच राजा संस्मृत्य ब्राह्मणस्य प्रतिश्रुतम् २४
गच्छामुष्मिन्नसौ देशे ब्राह्मणो मां प्रतीक्षते
अन्नार्थी त्वं तमन्नेन समांसेनोपपादय २५
एवमुक्तस्तदा सूदः सोऽनासाद्यामिषं क्वचित्
निवेदयामास तदा तस्मै राज्ञे व्यथान्वितः २६
राजा तु रक्षसाविष्टः सूदमाह गतव्यथः
अप्येनं नरमांसेन भोजयेति पुनः पुनः २७
तथेत्युक्त्वा ततः सूदः संस्थानं वध्यघातिनाम्
गत्वा जहार त्वरितो नरमांसमपेतभीः २८
स तत्संस्कृत्य विधिवदन्नोपहितमाशु वै
तस्मै प्रादाद्ब्राह्मणाय क्षुधिताय तपस्विने २९
स सिद्धचक्षुषा दृष्ट्वा तदन्नं द्विजसत्तमः
अभोज्यमिदमित्याह क्रोधपर्याकुलेक्षणः ३०
यस्मादभोज्यमन्नं मे ददाति स नराधिपः
तस्मात्तस्यैव मूढस्य भविष्यत्यत्र लोलुपा ३१
सक्तो मानुषमांसेषु यथोक्तः शक्तिना पुरा
उद्वेजनीयो भूतानां चरिष्यति महीमिमाम् ३२
द्विरनुव्याहृते राज्ञः स शापो बलवानभूत्
रक्षोबलसमाविष्टो विसंज्ञश्चाभवत्तदा ३३
ततः स नृपतिश्रेष्ठो रक्षसोपहतेन्द्रियः
उवाच शक्तिं तं दृष्ट्वा नचिरादिव भारत ३४
यस्मादसदृशः शापः प्रयुक्तोऽय त्वया मयि
तस्मात्त्वत्तः प्रवर्तिष्ये खादितुं मानुषानहम् ३५
एवमुक्त्वा ततः सद्यस्तं प्राणैर्विप्रयुज्य सः

शक्तिनं भक्षयामास व्याघ्रः पशुमिवेप्सितम् ३६
शक्तिनं तु हतं दृष्ट्वा विश्वामित्रस्ततः पुनः
वसिष्ठस्यैव पुत्रेषु तद्रक्षः संदिदेश ह ३७
स ताञ्शतावरान्पुत्रान्वसिष्ठस्य महात्मनः
भक्षयामास संक्रुद्धः सिंहः क्षुद्रमृगानिव ३८
वसिष्ठो घातिताञ्श्रुत्वा विश्वामित्रेण तान्सुतान्
धारयामास तं शोकं महाद्रिरिव मेदिनीम् ३९
चक्रे चात्मविनाशाय बुद्धिं स मुनिसत्तमः
न त्वेव कुशिकोच्छेदं मेने मतिमतां वरः ४०
स मेरुकूटादात्मानं मुमोच भगवानृषिः
शिरस्तस्य शिलायां च तूलराशाविवापतत् ४१
न ममार च पातेन स यदा तेन पाण्डव
तदाग्निमिद्ध्वा भगवान्संविवेश महावने ४२
तं तदा सुसमिद्धोऽपि न ददाह हुताशनः
दीप्यमानोऽप्यमित्रघ्न शीतोऽग्निरभवत्ततः ४३
स समुद्रमभिप्रेत्य शोकाविष्टो महामुनिः
बद्ध्वा कण्ठे शिलां गुर्वीं निपपात तदम्भसि ४४
स समुद्रोर्मिवेगेन स्थले न्यस्तो महामुनिः
जगाम स ततः खिन्नः पुनरेवाश्रमं प्रति ४५
इति श्रीमहाभारते आदिपर्वणि षट्षष्ट्यधिकशततमोऽध्यायः १६६

## सप्तषष्ठ्यधिक शततमोऽध्यायः

गन्धर्व उवाच
ततो दृष्ट्वाश्रमपदं रहितं तैः सुतैर्मुनिः
निर्जगाम सुदुःखार्तः पुनरेवाश्रमात्ततः १
सोऽपश्यत्सरितं पूर्णां प्रावृट्काले नवाम्भसा
वृक्षान्बहुविधान्पार्थ वहन्तीं तीरजान्बहून् २
अथ चिन्तां समापेदे पुनः पौरवनन्दन
अम्भस्यस्या निमज्जेयमिति दुःखसमन्वितः ३
ततः पाशैस्तदात्मानं गाढं बद्ध्वा महामुनिः

तस्या जले महानद्या निममज्ज सुदुःखितः ४
अथ छित्वा नदी पाशांस्तस्यारिबलमर्दन
समस्थं तमृषिं कृत्वा विपाशं समवासृजत् ५
उत्ततार ततः पाशैर्विमुक्तः स महानृषिः
विपाशेति च नामास्या नद्याश्चक्रे महानृषिः ६
शोके बुद्धिं ततश्चक्रे न चैकत्र व्यतिष्ठत
सोऽगच्छत्पर्वतांश्चैव सरितश्च सरांसि च ७
ततः स पुनरेवर्षिर्नदीं हैमवतीं तदा
चण्डग्राहवतीं दृष्ट्वा तस्याः स्रोतस्यवापतत् ८
सा तमग्निसमं विप्रमनुचिन्त्य सरिद्वरा
शतधा विद्रुता यस्माच्छतद्रुरिति विश्रुता ९
ततः स्थलगतं दृष्ट्वा तत्राप्यात्मानमात्मना
मर्तुं न शक्यमित्युक्त्वा पुनरेवाश्रमं ययौ १०
वध्वादृश्यन्त्यानुगत आश्रमाभिमुखो व्रजन्
अथ शुश्राव संगत्या वेदाध्ययननिःस्वनम्
पृष्ठतः परिपूर्णार्थैः षड्भिरङ्गैरलंकृतम् ११
अनुव्रजति को न्वेष मामित्येव च सोऽब्रवीत्
अहं त्वदृश्यती नाम्ना तं स्नुषा प्रत्यभाषत
शक्तेर्भार्या महाभाग तपोयुक्ता तपस्विनी १२
वसिष्ठ उवाच
पुत्रि कस्यैष साङ्गस्य वेदस्याध्ययनस्वनः
पुरा साङ्गस्य वेदस्य शक्तेरिव मया श्रुतः १३
अदृश्यन्त्युवाच
अयं कुक्षौ समुत्पन्नः शक्तेर्गर्भः सुतस्य ते
समा द्वादश तस्येह वेदानभ्यसतो मुने १४
गन्धर्व उवाच
एवमुक्तस्ततो हृष्टो वसिष्ठः श्रेष्ठभागृषिः
अस्ति संतानमित्युक्त्वा मृत्योः पार्थ न्यवर्तत १५
ततः प्रतिनिवृत्तः स तया वध्वा सहानघ
कल्माषपादमासीनं ददर्श विजने वने १६

स तु दृष्ट्वैव तं राजा क्रुद्ध उत्थाय भारत
आविष्टो रक्षसोग्रेण इयेषात्तुं ततः स्म तम् १७
अदृश्यन्ती तु तं दृष्ट्वा क्रूरकर्माणमग्रतः
भयसंविग्नया वाचा वसिष्ठमिदमब्रवीत् १८
असौ मृत्युरिवोग्रेण दण्डेन भगवन्नितः
प्रगृहीतेन काष्ठेन राक्षसोऽभ्येति भीषणः १९
तं निवारयितुं शक्तो नान्योऽस्ति भुवि कश्चन
त्वदृतेऽद्य महाभाग सर्ववेदविदां वर २०
त्राहि मां भगवन्पापादस्माद्दारुणदर्शनात्
रक्षो अत्तुमिह ह्यावां नूनमेतच्चिकीर्षति २१
इति श्रीमहाभारते आदिपर्वणि सप्तषष्ट्यधिकशततमोऽध्यायः १६७

## अष्टषष्ठ्यधिक शततमोऽध्यायः

वसिष्ठ उवाच
मा भैः पुत्रि न भेतव्यं राक्षसस्ते कथंचन
नैतद्रक्षो भयं यस्मात्पश्यसि त्वमुपस्थितम् १
राजा कल्माषपादोऽय वीर्यवान्प्रथितो भुवि
स एषोऽस्मिन्वनोद्देशे निवसत्यतिभीषणः २
गन्धर्व उवाच
तमापतन्तं संप्रेक्ष्य वसिष्ठो भगवानृषिः
वारयामास तेजस्वी हुंकारेणैव भारत ३
मन्त्रपूतेन च पुनः स तमभ्युक्ष्य वारिणा
मोक्षयामास वै घोराद्राक्षसाद्राजसत्तमम् ४
स हि द्वादश वर्षाणि वसिष्ठस्यैव तेजसा
ग्रस्त आसीद्ग्रहेणेव पर्वकाले दिवाकरः ५
रक्षसा विप्रमुक्तोऽथ स नृपस्तद्वनं महत्
तेजसा रञ्जयामास सन्ध्याभ्रमिव भास्करः ६
प्रतिलभ्य ततः संज्ञामभिवाद्य कृताञ्जलि
उवाच नृपतिः काले वसिष्ठमृषिसत्तमम् ७
सौदासोऽह महाभाग याज्यस्ते द्विजसत्तम

अस्मिन्काले यदिष्टं ते ब्रूहि किं करवाणि ते ८
वसिष्ठ उवाच
वृत्तमेतद्यथाकालं गच्छ राज्यं प्रशाधि तत्
ब्राह्मणांश्च मनुष्येन्द्र मावमंस्थाः कदाचन ९
राजोवाच
नावमंस्याम्यहं ब्रह्मन्कदाचिद्ब्राह्मणर्षभान्
त्वन्निदेशे स्थितः शश्वत्पूजयिष्याम्यहं द्विजान् १०
इक्ष्वाकूणां तु येनाहमनृणः स्यां द्विजोत्तम
तत्त्वत्तः प्राप्तुमिच्छामि वरं वेदविदां वर ११
अपत्यायेप्सितां मह्यं महिषीं गन्तुमर्हसि
शीलरूपगुणोपेतामिक्ष्वाकुकुलवृद्धये १२
गन्धर्व उवाच
ददानीत्येव तं तत्र राजानं प्रत्युवाच ह
वसिष्ठः परमेष्वासं सत्यसंधो द्विजोत्तमः १३
ततः प्रतिययौ काले वसिष्ठः सहितोऽनघ
ख्यातं पुरवरं लोकेष्वयोध्यां मनुजेश्वरः १४
तं प्रजाः प्रतिमोदन्त्यः सर्वाः प्रत्युद्ययुस्तदा
विपाप्मानं महात्मानं दिवौकस इवेश्वरम् १५
अचिरात्स मनुष्येन्द्रो नगरीं पुण्यकर्मणाम्
विवेश सहितस्तेन वसिष्ठेन महात्मना १६
ददृशुस्तं ततो राजन्नयोध्यावासिनो जनाः
पुष्येण सहितं काले दिवाकरमिवोदितम् १७
स हि तां पूरयामास लक्ष्म्या लक्ष्मीवतां वरः
अयोध्यां व्योम शीतांशुः शरत्काल इवोदितः १८
संसिक्तमृष्टपन्थानं पताकोच्छ्रयभूषितम्
मनः प्रह्लादयामास तस्य तत्पुरमुत्तमम् १९
तुष्टपुष्टजनाकीर्णा सा पुरी कुरुनन्दन
अशोभत तदा तेन शक्रेणेवामरावती २०
ततः प्रविष्टे राजेन्द्र तस्मिन्राजनि तां पुरीम्
तस्य राज्ञोऽज्ञया देवी वसिष्ठमुपचक्रमे २१

ऋतावथ महर्षिः स संबभूव तया सह
देव्या दिव्येन विधिना वसिष्ठः श्रेष्ठभागृषिः २२
अथ तस्यां समुत्पन्ने गर्भे स मुनिसत्तमः
राज्ञाभिवादितस्तेन जगाम पुनराश्रमम् २३
दीर्घकालधृतं गर्भं सुषाव न तु तं यदा
साथ देव्यश्मना कुक्षिं निर्बिभेद तदा स्वकम् २४
द्वाद्वशेऽथ ततो वर्षे स जज्ञे मनुजर्षभ
अश्मको नाम राजर्षिः पोतनं यो न्यवेशयत् २५
इति श्रीमहाभारते आदिपर्वणि अष्टषष्ट्यधिकशततमोऽध्यायः १६८

एकोन सप्तत्यधिक शततमोऽध्यायः

गन्धर्व उवाच
आश्रमस्था ततः पुत्रमदृश्यन्ती व्यजायत
शक्तेः कुलकरं राजन्द्वितीयमिव शक्तिनम् १
जातकर्मादिकास्तस्य क्रियाः स मुनिपुंगवः
पौत्रस्य भरतश्रेष्ठ चकार भगवान्स्वयम् २
परासुश्च यतस्तेन वसिष्ठः स्थापितस्तदा
गर्भस्थेन ततो लोके पराशर इति स्मृतः ३
अमन्यत स धर्मात्मा वसिष्ठं पितरं तदा
जन्मप्रभृति तस्मिंश्च पितरीव व्यवर्तत ४
स तात इति विप्रर्षिं वसिष्ठं प्रत्यभाषत
मातुः समक्षं कौन्तेय अदृश्यन्त्याः परंतप ५
तातेति परिपूर्णार्थं तस्य तन्मधुरं वचः
अदृश्यन्त्यश्रुपूर्णाक्षी शृणवन्ती तमुवाच ह ६
मा तात तात तातेति न ते तातो महामुनिः
रक्षसा भक्षितस्तात तव तातो वनान्तरे ७
मन्यसे यं तु तातेति नैष तातस्तवानघ
आर्यस्त्वेष पिता तस्य पितुस्तव महात्मनः ८
स एवमुक्तो दुःखार्तः सत्यवागृषिसत्तमः
सर्वलोकविनाशाय मतिं चक्रे महामनाः ९

तं तथा निश्चितात्मानं महात्मानं महातपाः
वसिष्ठो वारयामास हेतुना येन तच्छृणु १०
वसिष्ठ उवाच
कृतवीर्य इति ख्यातो बभूव नृपतिः क्षितौ
याज्यो वेदविदां लोके भृगूणां पार्थिवर्षभः ११
स तानग्रभुजस्तात धान्येन च धनेन च
सोमान्ते तर्पयामास विपुलेन विशां पतिः १२
तस्मिन्नृपतिशार्दूले स्वर्यातेऽथ कदाचन
बभूव तत्कुलेयानां द्रव्यकार्यमुपस्थितम् १३
ते भृगूणां धनं ज्ञात्वा राजानः सर्व एव ह
याचिष्णवोऽभिजग्मुस्तांस्तात भार्गवसत्तमान् १४
भूमौ तु निदधुः केचिद्भृगवो धनमक्षयम्
ददुः केचिद्द्विजातिभ्यो ज्ञात्वा क्षत्रियतो भयम् १५
भृगवस्तु ददुः केचित्तेषां वित्तं यथेप्सितम्
क्षत्रियाणां तदा तात कारणान्तरदर्शनात् १६
ततो महीतलं तात क्षत्रियेण यदृच्छया
खनताधिगतं वित्तं केनचिद्भृगुवेश्मनि
तद्वित्तं ददृशुः सर्वे समेताः क्षत्रियर्षभाः १७
अवमन्य ततः कोपाद्भृगूंस्ताञ्शरणागतान्
निजघ्नुस्ते महेष्वासाः सर्वांस्तान्निशितैः शरैः
आ गर्भादनुकृन्तन्तश्चेरुश्चैव वसुंधराम् १८
तत उच्छिद्यमानेषु भृगुष्वेवं भयात्तदा
भृगुपत्न्यो गिरिं तात हिमवन्तं प्रपेदिरे १९
तासामन्यतमा गर्भं भयाद्दाधार तैजसम्
ऊरुणैकेन वामोरुर्भर्तुः कुलविवृद्धये
ददृशुर्ब्राह्मणीं तां ते दीप्यमानां स्वतेजसा २०
अथ गर्भः स भित्त्वोरुं ब्राह्मण्या निर्जगाम ह
मुष्णन्दृष्टीः क्षत्रियाणां मध्याह्न इव भास्करः
ततश्चक्षुर्वियुक्तास्ते गिरिदुर्गेषु बभ्रमुः २१
ततस्ते मोघसंकल्पा भयार्ताः क्षत्रियर्षभाः

ब्राह्मणीं शरणं जग्मुर्दृष्ट्यर्थं तामनिन्दिताम् २२
ऊचुश्चैनां महाभागां क्षत्रियास्ते विचेतसः
ज्योतिःप्रहीणा दुःखार्ताः शान्तार्चिष इवाग्नयः २३
भगवत्याः प्रसादेन गच्छेत्क्षत्रं सचक्षुषम्
उपारम्य च गच्छेम सहिताः पापकर्मणः २४
सपुत्रा त्वं प्रसादं नः सर्वेषां कर्तुमर्हसि
पुनर्दृष्टिप्रदानेन राज्ञः संत्रातुमर्हसि २५
इति श्रीमहाभारते आदिपर्वणि एकोनसप्तत्यधिकशततमोऽध्यायः १६९

## सप्तत्यधिक शततमोऽध्यायः

ब्राह्मण्युवाच
नाहं गृह्णामि वस्तात दृष्टीर्नास्मि रुषान्विता
अयं तु भार्गवो नूनमूरुजः कुपितोऽद्य वः १
तेन चक्षूंषि वस्तात नूनं कोपान्महात्मना
स्मरता निहतान्बन्धूनादत्तानि न संशयः २
गर्भानपि यदा यूयं भृगूणां घ्नत पुत्रकाः
तदायमूरुणा गर्भो मया वर्षशतं धृतः ३
षडङ्गश्चाखिलो वेद इमं गर्भस्थमेव हि
विवेश भृगुवंशस्य भूयः प्रियचिकीर्षया ४
सोऽय पितृवधान्नूनं क्रोधाद्वो हन्तुमिच्छति
तेजसा यस्य दिव्येन चक्षूंषि मुषितानि वः ५
तमिमं तात याचध्वमौर्वं मम सुतोत्तमम्
अयं वः प्रणिपातेन तुष्टो दृष्टीर्विमोक्ष्यति ६
गन्धर्व उवाच
एवमुक्तास्ततः सर्वे राजानस्ते तमूरुजम्
ऊचुः प्रसीदेति तदा प्रसादं च चकार सः ७
अनेनैव च विख्यातो नाम्ना लोकेषु सत्तमः
स और्व इति विप्रर्षिरूरुं भित्त्वा व्यजायत ८
चक्षूंषि प्रतिलभ्याथ प्रतिजग्मुस्ततो नृपाः
भार्गवस्तु मुनिर्मेने सर्वलोकपराभवम् ९

स चक्रे तात लोकानां विनाशाय महामनाः
सर्वेषामेव कार्त्स्न्येन मनः प्रवणमात्मनः १०
इच्छन्नपचितिं कर्तुं भृगूणां भृगुसत्तमः
सर्वलोकविनाशाय तपसा महतैधितः ११
तापयामास लोकान्स सदेवासुरमानुषान्
तपसोग्रेण महता नन्दयिष्यन्पितामहान् १२
ततस्तं पितरस्तात विज्ञाय भृगुसत्तमम्
पितृलोकादुपागम्य सर्व ऊचुरिदं वचः १३
और्व दृष्टः प्रभावस्ते तपसोग्रस्य पुत्रक
प्रसादं कुरु लोकानां नियच्छ क्रोधमात्मनः १४
नानीशैर्हि तदा तात भृगुभिर्भावितात्मभिः
वधोऽभ्युपेक्षितः सर्वैः क्षत्रियाणां विहिंसताम् १५
आयुषा हि प्रकृष्टेन यदा नः खेद आविशत्
तदास्माभिर्वधस्तात क्षत्रियैरीप्सितः स्वयम् १६
निखातं तद्धि वै वित्तं केनचिद्भृगुवेश्मनि
वैरायैव तदा न्यस्तं क्षत्रियान्कोपयिष्णुभिः
किं हि वित्तेन नः कार्यं स्वर्गेप्सूनां द्विजर्षभ १७
यदा तु मृत्युरादातुं न नः शक्नोति सर्वशः
तदास्माभिरयं दृष्ट उपायस्तात संमतः १८
आत्महा च पुमांस्तात न लोकाँल्लभते शुभान्
ततोऽस्माभिः समीक्ष्यैवं नात्मनात्मा विनाशितः १९
न चैतन्नः प्रियं तात यदिदं कर्तुमिच्छसि
नियच्छेदं मनः पापात्सर्वलोकपराभवात् २०
न हि नः क्षत्रियाः केचिन्न लोकाः सप्त पुत्रक
दूषयन्ति तपस्तेजः क्रोधमुत्पतितं जहि २१
इति श्रीमहाभारते आदिपर्वणि सप्तत्यधिकशततमोऽध्यायः १७०

एकसप्तत्यधिक शततमोऽध्यायः

और्व उवाच
उक्तवानस्मि यां क्रोधात्प्रतिज्ञां पितरस्तदा

सर्वलोकविनाशाय न सा मे वितथा भवेत् १
वृथारोषप्रतिज्ञो हि नाहं जीवितुमुत्सहे
अनिस्तीर्णो हि मां रोषो दहेदग्निरिवारणिम् २
यो हि कारणतः क्रोधं संजातं क्षन्तुमर्हति
नालं स मनुजः सम्यक्त्रिवर्गं परिरक्षितुम् ३
अशिष्टानां नियन्ता हि शिष्टानां परिरक्षिता
स्थाने रोषः प्रयुक्तः स्यान्नृपैः सर्वजिगीषुभिः ४
अश्रौषमहमूरुस्थो गर्भशय्यागतस्तदा
आरावं मातृवर्गस्य भृगूणां क्षत्रियैर्वधे ५
सामरैर्हि यदा लोकैर्भृगूणां क्षत्रियाधमैः
आगर्भोत्सादनं क्षान्तं तदा मां मन्युराविशत् ६
आपूर्णकोशाः किल मे मातरः पितरस्तथा
भयात्सर्वेषु लोकेषु नाधिजग्मुः परायणम् ७
तान्भृगूणां यदा दारान्कश्चिन्नाभ्यवपद्यत
यदा तदा दधारेयमूरुणैकेन मां शुभा ८
प्रतिषेद्धा हि पापस्य यदा लोकेषु विद्यते
तदा सर्वेषु लोकेषु पापकृन्नोपपद्यते ९
यदा तु प्रतिषेद्धारं पापो न लभते क्वचित्
तिष्ठन्ति बहवो लोके तदा पापेषु कर्मसु १०
जानन्नपि च यः पापं शक्तिमान्न नियच्छति
ईशः सन्सोऽपि तेनैव कर्मणा संप्रयुज्यते ११
राजभिश्चेश्वरैश्चैव यदि वै पितरो मम
शक्तैर्न शकिता त्रातुमिष्टं मत्वेह जीवितम् १२
अत एषामहं क्रुद्धो लोकानामीश्वरोऽद्य सन्
भवतां तु वचो नाहमलं समतिवर्तितुम् १३
मम चापि भवेदेतदीश्वरस्य सतो महत्
उपेक्षमाणस्य पुनर्लोकानां किल्बिषाद्भयम् १४
यश्चायं मन्युजो मेऽग्निर्लोकानादातुमिच्छति
दहेदेष च मामेव निगृहीतः स्वतेजसा १५
भवतां च विजानामि सर्वलोकहितेप्सुताम्

तस्माद्विदध्वं यच्छ्रेयो लोकानां मम चेश्वराः १६
पितर ऊचुः
य एष मन्युजस्तेऽग्निर्लोकानादातुमिच्छति
अप्सु तं मुञ्च भद्रं ते लोका ह्यप्सु प्रतिष्ठिताः १७
आपोमयाः सर्वरसाः सर्वमापोमयं जगत्
तस्मादप्सु विमुञ्चेमं क्रोधाग्निं द्विजसत्तम १८
अयं तिष्ठतु ते विप्र यदीच्छसि महोदधौ
मन्युजोऽग्निर्दहन्नापो लोका ह्यापोमयाः स्मृताः १९
एवं प्रतिज्ञा सत्येयं तवानघ भविष्यति
न चैव सामरा लोका गमिष्यन्ति पराभवम् २०
वसिष्ठ उवाच
ततस्तं क्रोधजं तात और्वोऽग्निं वरुणालये
उत्ससर्ज स चैवाप उपयुङ्क्ते महोदधौ २१
महद्धयशिरो भूत्वा यत्तद्वेदविदो विदुः
तमग्निमुद्गिरन्वक्त्रात्पिबत्यापो महोदधौ २२
तस्मात्त्वमपि भद्रं ते न लोकान्हन्तुमर्हसि
पराशर परान्धर्माञ्जानञ्ज्ञानवतां वर २३
इति श्रीमहाभारते आदिपर्वणि एकसप्तत्यधिकशततमोऽध्यायः १७१

## द्विसप्तत्यधिक शततमोऽध्यायः

गन्धर्व उवाच
एवमुक्तः स विप्रर्षिर्वसिष्ठेन महात्मना
न्ययच्छदात्मनः कोपं सर्वलोकपराभवात् १
ईजे च स महातेजाः सर्ववेदविदां वरः
ऋषी राक्षससत्रेण शाक्तेयोऽथ पराशरः २
ततो वृद्धांश्च बालांश्च राक्षसान्स महामुनिः
ददाह वितते यज्ञे शक्तेर्वधमनुस्मरन् ३
न हि तं वारयामास वसिष्ठो रक्षसां वधात्
द्वितीयामस्य मा भाङ्क्षं प्रतिज्ञामिति निश्चयात् ४
त्रयाणां पावकानां स सत्रे तस्मिन्महामुनिः

आसीत्पुरस्ताद्दीप्तानां चतुर्थ इव पावकः ५
तेन यज्ञेन शुभ्रेण हूयमानेन युक्तितः
तद्विदीपितमाकाशं सूर्येणेव घनात्यये ६
तं वसिष्ठादयः सर्वे मुनयस्तत्र मेनिरे
तेजसा दिवि दीप्यन्तं द्वितीयमिव भास्करम् ७
ततः परमदुष्प्रापमन्यैर्ऋषिरुदारधीः
समापिपयिषुः सत्रं तमत्रिः समुपागमत् ८
तथा पुलस्त्यः पुलहः क्रतुश्चैव महाक्रतुम्
उपाजग्मुरमित्रघ्न रक्षसां जीवितेप्सया ९
पुलस्त्यस्तु वधात्तेषां रक्षसां भरतर्षभ
उवाचेदं वचः पार्थ पराशरमरिन्दमम् १०
कच्चित्तातापविघ्नं ते कच्चिन्नन्दसि पुत्रक
अजानतामदोषाणां सर्वेषां रक्षसां वधात् ११
प्रजोच्छेदमिमं मह्यं सर्वं सोमपसत्तम
अधर्मिष्ठं वरिष्ठः सन्कुरुषे त्वं पराशर
राजा कल्माषपादश्च दिवमारोढुमिच्छति १२
ये च शक्त्यवराः पुत्रा वसिष्ठस्य महामुनेः
ते च सर्वे मुदा युक्ता मोदन्ते सहिताः सुरैः
सर्वमेतद्वसिष्ठस्य विदितं वै महामुने १३
रक्षसां च समुच्छेद एष तात तपस्विनाम्
निमित्तभूतस्त्वं चात्र क्रतौ वासिष्ठनन्दन
स सत्रं मुञ्च भद्रं ते समाप्तमिदमस्तु ते १४
एवमुक्तः पुलस्त्येन वसिष्ठेन च धीमता
तदा समापयामास सत्रं शाक्तिः पराशरः १५
सर्वराक्षससत्राय संभृतं पावकं मुनिः
उत्तरे हिमवत्पार्श्वे उत्ससर्ज महावने १६
स तत्राद्यापि रक्षांसि वृक्षानश्मान एव च
भक्षयन्दृश्यते वह्निः सदा पर्वणि पर्वणि १७

इति श्रीमहाभारते आदिपर्वणि द्विसप्तत्यधिकशततमोऽध्यायः १७२

## त्रिसप्तत्यधिक शततमोऽध्यायः

अर्जुन उवाच
राज्ञा कल्माषपादेन गुरौ ब्रह्मविदां वरे
कारणं किं पुरस्कृत्य भार्या वै संनियोजिता १
जानता च परं धर्मं लोक्यं तेन महात्मना
अगम्यागमनं कस्माद्वसिष्ठेन महात्मना
कृतं तेन पुरा सर्वं वक्तुमर्हसि पृच्छतः २
गन्धर्व उवाच
धनञ्जय निबोधेदं यन्मां त्वं परिपृच्छसि
वसिष्ठं प्रति दुर्धर्षं तथामित्रसहं नृपम् ३
कथितं ते मया पूर्वं यथा शप्तः स पार्थिवः
शक्तिना भरतश्रेष्ठ वासिष्ठेन महात्मना ४
स तु शापवशं प्राप्तः क्रोधपर्याकुलेक्षणः
निर्जगाम पुराद्राजा सहदारः परन्तपः ५
अरण्यं निर्जनं गत्वा सदारः परिचक्रमे
नानामृगगणाकीर्णं नानासत्त्वसमाकुलम् ६
नानागुल्मलताच्छन्नं नानाद्रुमसमावृतम्
अरण्यं घोरसंनादं शापग्रस्तः परिभ्रमन् ७
स कदाचित्क्षुधाविष्टो मृगयन्भक्षमात्मनः
ददर्श सुपरिक्लिष्टः कस्मिंश्चिद्वननिर्झरे
ब्राह्मणीं ब्राह्मणं चैव मिथुनायोपसंगतौ ८
तौ समीक्ष्य तु वित्रस्तावकृतार्थौ प्रधावितौ
तयोश्च द्रवतोर्विप्रं जग्राह नृपतिर्बलात् ९
दृष्ट्वा गृहीतं भर्तारमथ ब्राह्मण्यभाषत
शृणु राजन्वचो मह्यं यत्त्वां वक्ष्यामि सुव्रत १०
आदित्यवंशप्रभवस्त्वं हि लोकपरिश्रुतः
अप्रमत्तः स्थितो धर्मे गुरुशुश्रूषणे रतः ११
शापं प्राप्तोऽसि दुर्धर्ष न पापं कर्तुमर्हसि
ऋतुकाले तु संप्राप्ते भर्त्रास्म्यद्य समागता १२
अकृतार्था ह्यहं भर्त्रा प्रसवार्थश्च मे महान्

प्रसीद नृपतिश्रेष्ठ भर्ता मेऽय विसृज्यताम् १३
एवं विक्रोशमानायास्तस्याः स सुनृशंसकृत्
भर्तारं भक्षयामास व्याघ्रो मृगमिवेप्सितम् १४
तस्याः क्रोधाभिभूताया यदश्रु न्यपतद्भुवि
सोऽग्नि समभवद्दीप्तस्तं च देशं व्यदीपयत् १५
ततः सा शोकसंतप्ता भर्तृव्यसनदुःखिता
कल्माषपादं राजर्षिमशपद्ब्राह्मणी रुषा १६
यस्मान्ममाकृतार्थायास्त्वया क्षुद्र नृशंसवत्
प्रेक्षन्त्या भक्षितो मेऽद्य प्रभुर्भर्ता महायशाः १७
तस्मात्त्वमपि दुर्बुद्धे मच्छापपरिविक्षतः
पत्नीमृतावनुप्राप्य सद्यस्त्यक्षसि जीवितम् १८
यस्य चर्षेर्वसिष्ठस्य त्वया पुत्रा विनाशिताः
तेन संगम्य ते भार्या तनयं जनयिष्यति
स ते वंशकरः पुत्रो भविष्यति नृपाधम १९
एवं शप्त्वा तु राजानं सा तमाङ्गिरसी शुभा
तस्यैव संनिधौ दीप्तं प्रविवेश हुताशनम् २०
वसिष्ठश्च महाभागः सर्वमेतदपश्यत
ज्ञानयोगेन महता तपसा च परन्तप २१
मुक्तशापश्च राजर्षिः कालेन महता ततः
ऋतुकालेऽभिपतितो मदयन्त्या निवारितः २२
न हि सस्मार नृपतिस्तं शापं काममोहितः
देव्याः सोऽथ वचः श्रुत्वा स तस्या नृपसत्तमः
तं च शापमनुस्मृत्य पर्यतप्यद्भृशं तदा २३
एतस्मात्कारणाद्राजा वसिष्ठं संन्ययोजयत्
स्वदारे भरतश्रेष्ठ शापदोषसमन्वितः २४

इति श्रीमहाभारते आदिपर्वणि त्रिसप्तत्यधिकशततमोऽध्यायः १७३

## चतुः सप्तत्यधिक शततमोऽध्यायः

अर्जुन उवाच
अस्माकमनुरूपो वै यः स्याद्गन्धर्व वेदवित्

पुरोहितस्तमाचक्ष्व सर्वं हि विदितं तव १
गन्धर्व उवाच
यवीयान्देवलस्यैष वने भ्राता तपस्यति
धौम्य उत्कोचके तीर्थे तं वृणुध्वं यदीच्छथ २
वैशम्पायन उवाच
ततोऽर्जुनोऽस्त्रमाग्नेयं प्रददौ तद्यथाविधि
गन्धर्वाय तदा प्रीतो वचनं चेदमब्रवीत् ३
त्वय्येव तावत्तिष्ठन्तु हया गन्धर्वसत्तम
कर्मकाले ग्रहीष्यामि स्वस्ति तेऽस्त्विति चाब्रवीत् ४
तेऽन्योन्यमभिसंपूज्य गन्धर्वः पाण्डवाश्च ह
रम्याद्भागीरथीकच्छाद्यथाकामं प्रतस्थिरे ५
ततः उत्कोचकं तीर्थं गत्वा धौम्याश्रमं तु ते
तं वव्रुः पाण्डवा धौम्यं पौरोहित्याय भारत ६
तान्धौम्यः प्रतिजग्राह सर्ववेदविदां वरः
पाद्येन फलमूलेन पौरोहित्येन चैव ह ७
ते तदाशंसिरे लब्धां श्रियं राज्यं च पाण्डवाः
तं ब्राह्मणं पुरस्कृत्य पाञ्चाल्याश्च स्वयंवरम् ८
मातृषष्ठास्तु ते तेन गुरुणा संगतास्तदा
नाथवन्तमिवात्मानं मेनिरे भरतर्षभाः ९
स हि वेदार्थतत्त्वज्ञस्तेषां गुरुरुदारधीः
तेन धर्मविदा पार्था याज्याः सर्वविदा कृताः १०
वीरांस्तु स हि तान्मेने प्राप्तराज्यान्स्वधर्मतः
बुद्धिवीर्यबलोत्साहैर्युक्तान्देवानिवापरान् ११
कृतस्वस्त्ययनास्तेन ततस्ते मनुजाधिपाः
मेनिरे सहिता गन्तुं पाञ्चाल्यास्तं स्वयंवरम् १२
इति श्रीमहाभारते आदिपर्वणि चतुःसप्तत्यधिकशततमोऽध्यायः १७४

पञ्चसप्तत्यधिक शततमोऽध्यायः

वैशम्पायन उवाच
ततस्ते नरशार्दूला भ्रातरः पञ्च पाण्डवाः

प्रययुर्द्रौपदीं द्रष्टुं तं च देवमहोत्सवम् १
ते प्रयाता नरव्याघ्रा मात्रा सह परन्तपाः
ब्राह्मणान्ददृशुर्मार्गे गच्छतः सगणान्बहून् २
तानूचुर्ब्राह्मणा राजन्पाण्डवान्ब्रह्मचारिणः
क्व भवन्तो गमिष्यन्ति कुतो वागच्छतेति ह ३
युधिष्ठिर उवाच
आगतानेकचक्रायाः सोदर्यान्देवदर्शिनः
भवन्तो हि विजानन्तु सहितान्मातृचारिणः ४
ब्राह्मणा ऊचुः
गच्छताद्यैव पाञ्चालान्द्रुपदस्य निवेशनम्
स्वयंवरो महांस्तत्र भविता सुमहाधनः ५
एकसार्थं प्रयाताः स्मो वयमप्यत्र गामिनः
तत्र ह्यद्भुतसंकाशो भविता सुमहोत्सवः ६
यज्ञसेनस्य दुहिता द्रुपदस्य महात्मनः
वेदिमध्यात्समुत्पन्ना पद्मपत्रनिभेक्षणा ७
दर्शनीयानवद्याङ्गी सुकुमारी मनस्विनी
धृष्टद्युम्नस्य भगिनी द्रोणशत्रोः प्रतापिनः ८
यो जातः कवची खड्गी सशरः सशरासनः
सुसमिद्धे महाबाहुः पावके पावकप्रभः ९
स्वसा तस्यानवद्याङ्गी द्रौपदी तनुमध्यमा
नीलोत्पलसमो गन्धो यस्याः क्रोशात्प्रवायति १०
तां यज्ञसेनस्य सुतां स्वयंवरकृतक्षणाम्
गच्छामहे वयं द्रष्टुं तं च देवमहोत्सवम् ११
राजानो राजपुत्राश्च यज्वानो भूरिदक्षिणाः
स्वाध्यायवन्तः शुचयो महात्मानो यतव्रताः १२
तरुणा दर्शनीयाश्च नानादेशसमागताः
महारथाः कृतास्त्राश्च समुपैष्यन्ति भूमिपाः १३
ते तत्र विविधान्दायान्विजयार्थं नरेश्वराः
प्रदास्यन्ति धनं गाश्च भक्ष्यं भोज्यं च सर्वशः १४
प्रतिगृह्य च तत्सर्वं दृष्ट्वा चैव स्वयंवरम्

अनुभूयोत्सवं चैव गमिष्यामो यथेप्सितम् १५
नटा वैतालिकाश्चैव नर्तकाः सूतमागधाः
नियोधकाश्च देशेभ्यः समेष्यन्ति महाबलाः १६
एवं कौतूहलं कृत्वा दृष्ट्वा च प्रतिगृह्य च
सहास्माभिर्महात्मानः पुनः प्रतिनिवर्त्स्यथ १७
दर्शनीयांश्च वः सर्वान्देवरूपानवस्थितान्
समीक्ष्य कृष्णा वरयेत्संगत्यान्यतमं वरम् १८
अयं भ्राता तव श्रीमान्दर्शनीयो महाभुजः
नियुध्यमानो विजयेत्संगत्या द्रविणं बहु १९
युधिष्ठिर उवाच
परमं भो गमिष्यामो द्रष्टुं देवमहोत्सवम्
भवद्भिः सहिताः सर्वे कन्यायास्तं स्वयंवरम् २०
इति श्रीमहाभारते आदिपर्वणि पञ्चसप्तत्यधिकशततमोऽध्यायः १७५

## षट्सप्तत्यधिकशततमोऽध्यायः

वैशम्पायन उवाच
एवमुक्ताः प्रयातास्ते पाण्डवा जनमेजय
राज्ञा दक्षिणपाञ्चालान्द्रुपदेनाभिरक्षितान् १
ततस्ते तं महात्मानं शुद्धात्मानमकल्मषम्
ददृशुः पाण्डवा राजन्पथि द्वैपायनं तदा २
तस्मै यथावत्सत्कारं कृत्वा तेन च सान्त्विताः
कथान्ते चाभ्यनुज्ञाताः प्रययुर्द्रुपदक्षयम् ३
पश्यन्तो रमणीयानि वनानि च सरांसि च
तत्र तत्र वसन्तश्च शनैर्जग्मुर्महारथाः ४
स्वाध्यायवन्तः शुचयो मधुराः प्रियवादिनः
आनुपूर्व्येण संप्राप्ताः पाञ्चालान्कुरुनन्दनाः ५
ते तु दृष्ट्वा पुरं तच्च स्कन्धावारं च पाण्डवाः
कुम्भकारस्य शालायां निवेशं चक्रिरे तदा ६
तत्र भैक्ष्यं समाजह्रुर्ब्राह्मीं वृत्तिं समाश्रिताः
तांश्च प्राप्तांस्तदा वीराञ्जज्ञिरे न नराः क्वचित् ७

यज्ञसेनस्य कामस्तु पाराडवाय किरीटिने
कृष्णां दद्यामिति सदा न चैतद्विवृणोति सः ८
सोऽन्वेषमाणः कौन्तेयान्पाञ्चाल्यो जनमेजय
दृढं धनुरनायम्यं कारयामास भारत ९
यन्त्रं वैहायसं चापि कारयामास कृत्रिमम्
तेन यन्त्रेण सहितं राजा लक्ष्यं च काञ्चनम् १०
द्रुपद उवाच
इदं सज्यं धनुः कृत्वा सज्येनानेन सायकैः
अतीत्य लक्ष्यं यो वेद्धा स लब्धा मत्सुतामिति ११
वैशम्पायन उवाच
इति स द्रुपदो राजा सर्वतः समघोषयत्
तच्छ्रुत्वा पार्थिवाः सर्वे समीयुस्तत्र भारत १२
ऋषयश्च महात्मानः स्वयंवरदिदृक्षया
दुर्योधनपुरोगाश्च सकर्णाः कुरवो नृप १३
ब्राह्मणाश्च महाभागा देशेभ्यः समुपागमन्
तेऽभ्यर्चिता राजगणा द्रुपदेन महात्मना १४
ततः पौरजनाः सर्वे सागरोद्धूतनिःस्वनाः
शिशुमारपुरं प्राप्य न्यविशंस्ते च पार्थिवाः १५
प्रागुत्तरेण नगराद्भूमिभागे समे शुभे
समाजवाटः शुशुभे भवनैः सर्वतो वृतः १६
प्राकारपरिखोपेतो द्वारतोरणमरिडतः
वितानेन विचित्रेण सर्वतः समवस्तृतः १७
तूर्यौघशतसंकीर्णः पराध्यागुरुधूपितः
चन्दनोदकसिक्तश्च माल्यदामैश्च शोभितः १८
कैलासशिखरप्रख्यैर्नभस्तलविलेखिभिः
सर्वतः संवृतैर्नद्धः प्रासादैः सुकृतोच्छ्रितैः १९
सुवर्णजालसंवीतैर्मणिकुट्टिमभूषितैः
सुखारोहणसोपानैर्महासनपरिच्छदैः २०
अग्राम्यसमवच्छन्नैरगुरूत्तमवासितैः
हंसाच्छवर्णैर्बहुभिरायोजनसुगन्धिभिः २१

असंबाधशतद्वारैः शयनासनशोभितैः
बहुधातुपिनद्धाङ्गैर्हिमवच्छिखरैरिव २२
तत्र नानाप्रकारेषु विमानेषु स्वलंकृताः
स्पर्धमानास्तदान्योन्यं निषेदुः सर्वपार्थिवाः २३
तत्रोपविष्टान्ददृशुर्महासत्त्वपराक्रमान्
राजसिंहान्महाभागान्कृष्णागुरुविभूषितान् २४
महाप्रसादान्ब्रह्मण्यान्स्वराष्ट्रपरिरक्षिणः
प्रियान्सर्वस्य लोकस्य सुकृतैः कर्मभिः शुभैः २५
मञ्चेषु च परार्ध्येषु पौरजानपदा जनाः
कृष्णादर्शनतुष्ट्यर्थं सर्वतः समुपाविशन् २६
ब्राह्मणैस्ते च सहिताः पाण्डवाः समुपाविशन्
ऋद्धिं पाञ्चालराजस्य पश्यन्तस्तामनुत्तमाम् २७
ततः समाजो ववृधे स राजन्दिवसान्बहून्
रत्नप्रदानबहुलः शोभितो नटनर्तकैः २८
वर्तमाने समाजे तु रमणीयेऽह्नि षोडशे
आप्लुताङ्गी सुवसना सर्वाभरणभूषिता २९
वीरकांस्यमुपादाय काञ्चनं समलंकृतम्
अवतीर्णा ततो रङ्गं द्रौपदी भरतर्षभ ३०
पुरोहितः सोमकानां मंत्रविद्ब्राह्मणः शुचिः
परिस्तीर्य जुहावाग्निमाज्येन विधिना तदा ३१
स तर्पयित्वा ज्वलनं ब्राह्मणान्स्वस्ति वाच्य च
वारयामास सर्वाणि वादित्राणि समन्ततः ३२
निःशब्दे तु कृते तस्मिन्धृष्टद्युम्नो विशां पते
रङ्गमध्यगतस्तत्र मेघगम्भीरया गिरा
वाक्यमुच्चैर्जगादेदं श्लक्ष्णमर्थवदुत्तमम् ३३
इदं धनुर्लक्ष्यमिमे च बाणाः शृणवन्तु मे पार्थिवाः सर्व एव
यन्त्रच्छिद्रेणाभ्यतिक्रम्य लक्ष्यं समर्पयध्वं खगमैर्दशार्धैः ३४
एतत्कर्ता कर्म सुदुष्करं यः कुलेन रूपेण बलेन युक्तः
तस्याद्य भार्या भगिनी ममेयं कृष्णा भवित्री न मृषा ब्रवीमि ३५
तानेवमुक्त्वा द्रुपदस्य पुत्रः पश्चादिदं द्रौपदीमभ्युवाच

नाम्ना च गोत्रेण च कर्मणा च संकीर्तयंस्तान्नृपतीन्समेतान् ३६
इति श्रीमहाभारते आदिपर्वणि षट्सप्तत्यधिकशततमोऽध्यायः १७६

## सप्तसप्तत्यधिक शततमोऽध्यायः

धृष्टद्युम्न उवाच
दुर्योधनो दुर्विषहो दुर्मुखो दुष्प्रधर्षणः
विविंशतिर्विकर्णश्च सहो दुःशासनः समः १
युयुत्सुर्वातवेगश्च भीमवेगधरस्तथा
उग्रायुधो बलाकी च कनकायुर्विरोचनः २
सुकुण्डलश्चित्रसेनः सुवर्चाः कनकध्वजः
नन्दको बाहुशाली च कुण्डजो विकटस्तथा ३
एते चान्ये च बहवो धार्तराष्ट्रा महाबलाः
कर्णेन सहिता वीरास्त्वदर्थं समुपागताः
शतसंख्या महात्मानः प्रथिताः क्षत्रियर्षभाः ४
शकुनिश्च बलश्चैव वृषकोऽथ बृहद्बलः
एते गान्धारराजस्य सुताः सर्वे समागताः ५
अश्वत्थामा च भोजश्च सर्वशस्त्रभृतां वरौ
समवेतौ महात्मानौ त्वदर्थेसमलंकृतौ ६
बृहन्तो मणिमांश्चैव दण्डधारश्च वीर्यवान्
सहदेवो जयत्सेनो मेघसन्धिश्च मागधः ७
विराटः सह पुत्राभ्यां शङ्खेनैवोत्तरेण च
वार्धक्षेमिः सुवर्चाश्च सेनाबिन्दुश्च पार्थिवः ८
अभिभूः सह पुत्रेण सुदाम्ना च सुवर्चसा
सुमित्रः सुकुमारश्च वृकः सत्यधृतिस्तथा ९
सूर्यध्वजो रोचमानो नीलश्चित्रायुधस्तथा
अंशुमांश्चेकितानश्च श्रेणिमांश्च महाबलः १०
समुद्रसेनपुत्रश्च चन्द्रसेनः प्रतापवान्
जलसन्धः पितापुत्रौ सुदण्डो दण्ड एव च ११
पौण्ड्रको वासुदेवश्च भगदत्तश्च वीर्यवान्
कलिङ्गस्ताम्रलिप्तश्च पत्तनाधिपतिस्तथा १२

मद्रराजस्तथा शल्यः सहपुत्रो महारथः
रुक्माङ्गदेन वीरेण तथा रुक्मरथेन च १३
कौरव्यः सोमदत्तश्च पुत्राश्चास्य महारथाः
समवेतास्त्रयः शूरा भूरिर्भूरिश्रवाः शलः १४
सुदक्षिणश्च काम्बोजो दृढधन्वा च कौरवः
बृहद्बलः सुषेणश्च शिबिरौशीनरस्तथा १५
संकर्षणो वासुदेवो रौक्मिणेयश्च वीर्यवान्
साम्बश्च चारुदेष्णश्च सारणोऽथ गदस्तथा १६
अक्रूरः सात्यकिश्चैव उद्धवश्च महाबलः
कृतवर्मा च हार्दिक्यः पृथुर्विपृथुरेव च १७
विडूरथश्च कङ्कश्च समीकः सारमेजयः
वीरो वातपतिश्चैव झिल्ली पिण्डारकस्तथा
उशीनरश्च विक्रान्तो वृष्णयस्ते प्रकीर्तिताः १८
भगीरथो बृहत्क्षत्रः सैन्धवश्च जयद्रथः
बृहद्रथो बाह्लिकश्च श्रुतायुश्च महारथः १९
उलूकः कैतवो राजा चित्राङ्गदशुभाङ्गदौ
वत्सराजश्च धृतिमान्कोसलाधिपतिस्तथा २०
एते चान्ये च बहवो नानाजनपदेश्वराः
त्वदर्थमागता भद्रे क्षत्रियाः प्रथिता भुवि २१
एते वेत्स्यन्ति विक्रान्तास्त्वदर्थं लक्ष्यमुत्तमम्
विध्येत य इमं लक्ष्यं वरयेथाः शुभेऽद्य तम् २२
इति श्रीमहाभारते आदिपर्वणि सप्तसप्तत्यधिकशततमोऽध्यायः १७७

## अष्ट सप्तत्यधिक शततमोऽध्यायः

वैशम्पायन उवाच
तेऽलकृताः कुण्डलिनो युवानः परस्परं स्पर्धमानाः समेताः
अस्त्रं बलं चात्मनि मन्यमानाः सर्वे समुत्पेतुरहंकृतेन १
रूपेण वीर्येण कुलेन चैव धर्मेण चैवापि च यौवनेन
समृद्धदर्पा मदवेगभिन्ना मत्ता यथा हैमवता गजेन्द्राः २
परस्परं स्पर्धया प्रेक्षमाणाः संकल्पजेनापि परिप्लुताङ्गाः

कृष्णा ममैषेत्यभिभाषमाणा नृपासनेभ्यः सहसोपतस्थुः ३
ते क्षत्रिया रङ्गगताः समेता जिगीषमाणा द्रुपदात्मजां ताम्
चकाशिरे पर्वतराजकन्यामुमां यथा देवगणाः समेताः ४
कन्दर्पबाणाभिनिपीडिताङ्गाः कृष्णागतैस्ते हृदयैर्नरेन्द्राः
रङ्गावतीर्णा द्रुपदात्मजार्थं द्वेष्यान्हि चक्रुः सुहृदोऽपि तत्र ५
अथाययुर्देवगणा विमानै रुद्रादित्या वसवोऽथाश्विनौ च
साध्याश्च सर्वे मरुतस्तथैव यमं पुरस्कृत्य धनेश्वरं च ६
दैत्याः सुपर्णाश्च महोरगाश्च देवर्षयो गुह्यकाश्चारणाश्च
विश्वावसुर्नारदपर्वतौ च गन्धर्वमुख्याश्च सहाप्सरोभिः ७
हलायुधस्तत्र च केशवश्च वृष्ण्यन्धकाश्चैव यथा प्रधानाः
प्रेक्षां स्म चक्रुर्यदुपुङ्गवास्ते स्थिताश्च कृष्णस्य मते बभूवुः ८
दृष्ट्वा हि तान्मत्तगजेन्द्ररूपान्पञ्चाभिपद्मानिव वारणेन्द्रान्
भस्मावृताङ्गानिव हव्यवाहान्पार्थान्प्रदध्यौ स यदुप्रवीरः ९
शशंस रामाय युधिष्ठिरं च भीमं च जिष्णुं च यमौ च वीरौ
शनैः शनैस्तांश्च निरीक्ष्य रामो जनार्दनं प्रीतमना ददर्श १०
अन्ये तु नानानृपपुत्रपौत्राः कृष्णागतैर्नेत्रमनःस्वभावैः
व्यायच्छमाना ददृशुर्भ्रमन्तीं संदष्टदन्तच्छदताम्रवक्त्राः ११
तथैव पार्थाः पृथुबाहवस्ते वीरौ यमौ चैव महानुभावौ
तां द्रौपदीं प्रेक्ष्य तदा स्म सर्वे कन्दर्पबाणाभिहता बभूवुः १२
देवर्षिगन्धर्वसमाकुलं तत्सुपर्णनागासुरसिद्धजुष्टम्
दिव्येन गन्धेन समाकुलं च दिव्यैश्च माल्यैरवकीर्यमाणम् १३
महास्वनैर्दुन्दुभिनादितैश्च बभूव तत्संकुलमन्तरिक्षम्
विमानसंबाधमभूत्समन्तात्सवेणुवीणापणवानुनादम् १४
ततस्तु ते राजगणाः क्रमेण कृष्णानिमित्तं नृप विक्रमन्तः
तत्कार्मुकं संहननोपपन्नं सज्यं न शेकुस्तरसापि कर्तुम् १५
ते विक्रमन्तःस्फुरता दृढेन निष्कृष्यमाणा धनुषा नरेन्द्राः
विचेष्टमाना धरणीतलस्था दीना अदृश्यन्त विभग्नचित्ताः १६
हाहाकृतं तद्धनुषा दृढेन निष्पिष्टभग्नाङ्गदकुण्डलं च
कृष्णानिमित्तं विनिवृत्तभावं राज्ञां तदा मण्डलमार्तमासीत् १७
तस्मिंस्तु सम्भ्रान्तजने समाजे निक्षिप्तवादेषु नराधिपेषु

कुन्तीसुतो जिष्णुरियेष कर्तुं सज्यं धनुस्तत्सशरं स वीरः १८
इति श्रीमहाभारते आदिपर्वणि अष्टसप्तत्यधिकशततमोऽध्यायः १७८

## एकोनाशीत्यधिक शततमोऽध्यायः

वैशम्पायन उवाच
यदा निवृत्ता राजानो धनुषः सज्यकर्मणि
अथोदतिष्ठद्विप्राणां मध्याज्जिष्णुरुदारधीः १
उदक्रोशन्विप्रमुख्या विधुन्वन्तोऽजिनानि च
दृष्ट्वा संप्रस्थितं पार्थमिन्द्रकेतुसमप्रभम् २
केचिदासन्विमनसः केचिदासन्मुदा युताः
आहुः परस्परं केचिन्निपुणा बुद्धिजीविनः ३
यत्कर्णशल्यप्रमुखैः पार्थिवैर्लोकविश्रुतैः
नानतं बलवद्भिर्हि धनुर्वेदपरायणैः ४
तत्कथं त्वकृतास्त्रेण प्राणतो दुर्बलीयसा
बटुमात्रेण शक्यं हि सज्यं कर्तुं धनुर्द्विजाः ५
अवहास्या भविष्यन्ति ब्राह्मणाः सर्वराजसु
कर्मण्यस्मिन्नसंसिद्धे चापलादपरीक्षिते ६
यद्येष दर्पाद्धर्षाद्वा यदि वा ब्रह्मचापलात्
प्रस्थितो धनुरायन्तुं वार्यतां साधु मा गमत् ७
नावहास्या भविष्यामो न च लाघवमास्थिताः
न च विद्विष्टतां लोके गमिष्यामो महीक्षिताम् ८
केचिदाहुर्युवा श्रीमान्नागराजकरोपमः
पीनस्कन्धोरुबाहुश्च धैर्येण हिमवानिव ९
संभाव्यमस्मिन्कर्मेदमुत्साहाच्चानुमीयते
शक्तिरस्य महोत्साहा न ह्यशक्तः स्वयं व्रजेत् १०
न च तद्विद्यते किंचित्कर्म लोकेषु यद्भवेत्
ब्राह्मणानामसाध्यं च त्रिषु संस्थानचारिषु ११
अब्भक्षा वायुभक्षाश्च फलाहारा दृढव्रताः
दुर्बला हि बलीयांसो विप्रा हि ब्रह्मतेजसा १२
ब्राह्मणो नावमन्तव्यः सद्वासद्वा समाचरन्

सुखं दुःखं महद्ध्रस्वं कर्म यत्समुपागतम् १३
एवं तेषां विलपतां विप्राणां विविधा गिरः
अर्जुनो धनुषोऽभ्याशे तस्थौ गिरिरिवाचलः १४
स तद्धनुः परिक्रम्य प्रदक्षिणमथाकरोत्
प्रणम्य शिरसा हृष्टो जगृहे च परंतपः १५
सज्यं च चक्रे निमिषान्तरेण शरांश्च जग्राह दशार्धसंङ्ख्यान्
विव्याध लक्ष्यं निपपात तच्च छिद्रेण भूमौ सहसातिविद्धम् १६
ततोऽन्तरिक्षे च बभूव नादः समाजमध्ये च महान्निनादः
पुष्पाणि दिव्यानि ववर्ष देवः पार्थस्य मूर्ध्नि द्विषतां निहन्तुः १७
चेलावेधांस्ततश्चक्रुर्हाहाकारांश्च सर्वशः
न्यपतंश्चात्र नभसः समन्तात्पुष्पवृष्टयः १८
शताङ्गानि च तूर्याणि वादकाश्चाप्यवादयन्
सूतमागधसंघाश्च अस्तुवंस्तत्र सुस्वनाः १९
तं दृष्ट्वा द्रुपदः प्रीतो बभूवारिनिषूदनः
सहसैन्यश्च पार्थस्य साहाय्यार्थमियेष सः २०
तस्मिंस्तु शब्दे महति प्रवृत्ते युधिष्ठिरो धर्मभृतां वरिष्ठः
आवासमेवोपजगाम शीघ्रं सार्धं यमाभ्यां पुरुषोत्तमाभ्याम् २१
विद्धं तु लक्ष्यं प्रसमीक्ष्य कृष्णा पार्थं च शक्रप्रतिमं निरीक्ष्य
आदाय शुक्लं वरमाल्यदाम जगाम कुन्तीसुतमुत्स्मयन्ती २२
स तामुपादाय विजित्य रङ्गे द्विजातिभिस्तैरभिपूज्यमानः
रङ्गान्निरक्रामदचिन्त्यकर्मा पत्न्या तया चाप्यनुगम्यमानः २३
इति श्रीमहाभारते आदिपर्वणि एकोनाशीत्यधिकशततमोऽध्यायः १७९

## अशीत्यधिक शततमोऽध्यायः

वैशम्पायन उवाच
तस्मै दित्सति कन्यां तु ब्राह्मणाय महात्मने
कोप आसीन्महीपानामालोक्यान्योन्यमन्तिकात् १
अस्मानयमतिक्रम्य तृणीकृत्य च संगतान्
दातुमिच्छति विप्राय द्रौपदीं योषितां वराम् २
निहन्मैनं दुरात्मानं योऽयमस्मान्न मन्यते

न ह्यर्हत्येष सत्कारं नापि वृद्धक्रमं गुणैः ३
हन्मैनं सह पुत्रेण दुराचारं नृपद्विषम्
अयं हि सर्वानाहूय सत्कृत्य च नराधिपान्
गुणवद्भोजयित्वा च ततः पश्चाद्विनिन्दति ४
अस्मिन्राजसमावाये देवानामिव संनये
किमयं सदृशं कंचिन्नृपतिं नैव दृष्टवान् ५
न च विप्रेष्वधीकारो विद्यते वरणं प्रति
स्वयंवरः क्षत्रियाणामितीयं प्रथिता श्रुतिः ६
अथवा यदि कन्येयं नेह कंचिद्बुभूषति
अग्नावेनां परिक्षिप्य याम राष्ट्राणि पार्थिवाः ७
ब्राह्मणो यदि वा बाल्याल्लोभाद्वा कृतवानिदम्
विप्रियं पार्थिवेन्द्राणां नैष वध्यः कथंचन ८
ब्राह्मणार्थं हि नो राज्यं जीवितं च वसूनि च
पुत्रपौत्रं च यच्चान्यदस्माकं विद्यते धनम् ९
अवमानभयादेतत्स्वधर्मस्य च रक्षणात्
स्वयंवराणां चान्येषां मा भूदेवंविधा गतिः १०
इत्युक्त्वा राजशार्दूला हृष्टाः परिघबाहवः
द्रुपदं संजिघृक्षन्तः सायुधाः समुपाद्रवन् ११
तान्गृहीतशराचापान्क्रुद्धानापततो नृपान्
द्रुपदो वीक्ष्य संत्रासाद्ब्राह्मणाञ्शरणं गतः १२
वेगेनापततस्तांस्तु प्रभिन्नानिव वारणान्
पाण्डुपुत्रौ महावीर्यौ प्रतीयतुररिन्दमौ १३
ततः समुत्पेतुरुदायुधास्ते महीक्षितो बद्धतलाङ्गुलित्राः
जिघांसमानाः कुरुराजपुत्रावमर्षयन्तोऽजुनभीमसेनौ १४
ततस्तु भीमोऽद्भुतवीर्यकर्मा महाबलो वज्रसमानवीर्यः
उत्पाट्य दोर्भ्यां द्रुममेकवीरो निष्पत्रयामास यथा गजेन्द्रः १५
तं वृक्षमादाय रिपुप्रमाथी दण्डीव दण्डं पितृराज उग्रम्
तस्थौ समीपे पुरुषर्षभस्य पार्थस्य पार्थः पृथुदीर्घबाहुः १६
तत्प्रेक्ष्य कर्मातिमनुष्यबुद्धेर्जिष्णोः सहभ्रातुरचिन्त्यकर्मा
दामोदरो भ्रातरमुग्रवीर्यं हलायुधं वाक्यमिदं बभाषे १७

य एष मत्तर्षभतुल्यगामी महद्धनुः कर्षति तालमात्रम्
एषोऽजुनो नात्र विचार्यमस्ति यद्यस्मि संकर्षण वासुदेवः १८
य एष वृक्षं तरसावरुज्य राज्ञां विकारे सहसा निवृत्तः
वृकोदरो नान्य इहैतदद्य कर्तुं समर्थो भुवि मर्त्यधर्मा १९
योऽसौ पुरस्तात्कमलायताक्षस्तनुर्महासिंहगतिर्विनीतः
गौरः प्रलम्बोज्ज्वलचारुघोणो विनिःसृतः सोऽच्युत धर्मराजः २०
यौ तौ कुमाराविव कार्तिकेयौ द्वावश्विनेयाविति मे प्रतर्कः
मुक्ता हि तस्माज्जतुवेश्मदाहान्मया श्रुताः पाण्डुसुताः पृथा च २१
तमब्रवीन्निर्जलतोयदाभो हलायुधोऽनन्तरजं प्रतीतः
प्रीतोऽस्मि दिष्ट्या हि पितृष्वसा नः पृथा विमुक्ता सह कौरवाग्र्यैः २२
इति श्रीमहाभारते आदिपर्वणि अशीत्यधिकशततमोऽध्यायः १८०

## एकाशीत्यधिक शततमोऽध्यायः

वैशम्पायन उवाच
अजिनानि विधुन्वन्तः करकांश्च द्विजर्षभाः
ऊचुस्तं भीर्न कर्तव्या वयं योत्स्यामहे परान् १
तानेवं वदतो विप्रानर्जुनः प्रहसन्निव
उवाच प्रेक्षका भूत्वा यूयं तिष्ठत पार्श्वतः २
अहमेनानजिह्माग्रैः शतशो विकिरञ्शरैः
वारयिष्यामि संक्रुद्धान्मन्त्रैराशीविषानिव ३
इति तद्धनुरादाय शुल्कावाप्तं महारथः
भ्रात्रा भीमेन सहितस्तस्थौ गिरिरिवाचलः ४
ततः कर्णमुखान्क्रुद्धान्क्षत्रियांस्तान्रुषोत्थितान्
संपेततुरभीतौ तौ गजौ प्रतिगजानिव ५
ऊचुश्च वाचः परुषास्ते राजानो जिघांसवः
आहवे हि द्विजस्यापि वधो दृष्टो युयुत्सतः ६
ततो वैकर्तनः कर्णो जगामार्जुनमोजसा
युद्धार्थी वाशिताहेतोर्गजः प्रतिगजं यथा ७
भीमसेनं ययौ शल्यो मद्राणामीश्वरो बली
दुर्योधनादयस्त्वन्ये ब्राह्मणैः सह संगताः

मृदुपूर्वमयत्नेन प्रत्ययुध्यंस्तदाहवे ८
ततोऽजुनः प्रत्यविध्यदापतन्तं त्रिभिः शरैः
कर्णं वैकर्तनं धीमान्विकृष्य बलवद्धनुः ९
तेषां शराणां वेगेन शितानां तिग्मतेजसाम्
विमुह्यमानो राधेयो यत्नात्तमनुधावति १०
तावुभावप्यनिर्देश्यौ लाघवाज्जयतां वरौ
अयुध्येतां सुसंरब्धावन्योन्यविजयैषिणौ ११
कृते प्रतिकृतं पश्य पश्य बाहुबलं च मे
इति शूरार्थवचनैराभाषेतां परस्परम् १२
ततोऽजुनस्य भुजयोर्वीर्यमप्रतिमं भुवि
ज्ञात्वा वैकर्तनः कर्णः संरब्धः समयोधयत् १३
अर्जुनेन प्रयुक्तांस्तान्बाणान्वेगवतस्तदा
प्रतिहत्य ननादोच्चैः सैन्यास्तमभिपूजयन् १४
कर्ण उवाच
तुष्यामि ते विप्रमुख्य भुजवीर्यस्य संयुगे
अविषादस्य चैवास्य शस्त्रास्त्रविनयस्य च १५
किं त्वं साक्षाद्धनुर्वेदो रामो वा विप्रसत्तम
अथ साक्षाद्धरिहयः साक्षाद्वा विष्णुरच्युतः १६
आत्मप्रच्छादनार्थं वै बाहुवीर्यमुपाश्रितः
विप्ररूपं विधायेदं ततो मां प्रतियुध्यसे १७
न हि मामाहवे क्रुद्धमन्यः साक्षाच्छचीपतेः
पुमान्योधयितुं शक्तः पाण्डवाद्वा किरीटिनः १८
वैशम्पायन उवाच
तमेवंवादिनं तत्र फल्गुनः प्रत्यभाषत
नास्मि कर्ण धनुर्वेदो नास्मि रामः प्रतापवान्
ब्राह्मणोऽस्मि युधां श्रेष्ठः सर्वशस्त्रभृतां वरः १९
ब्राह्मे पौरंदरे चास्त्रे निष्ठितो गुरुशासनात्
स्थितोऽस्म्यद्य रणे जेतुं त्वां वीराविचलो भव २०
एवमुक्तस्तु राधेयो युद्धात्कर्णो न्यवर्तत
ब्राह्मं तेजस्तदाजय्यं मन्यमानो महारथः २१

युद्धं तूपेयतुस्तत्र राजञ्शल्यवृकोदरौ
बलिनौ युगपन्मत्तौ स्पर्धया च बलेन च २२
अन्योन्यमाह्वयन्तौ तौ मत्ताविव महागजौ
मुष्टिभिर्जानुभिश्चैव निघ्नन्तावितरेतरम्
मुहूर्तं तौ तथान्योन्यं समरे पर्यकर्षताम् २३
ततो भीमः समुत्क्षिप्य बाहुभ्यां शल्यमाहवे
न्यवधीद्बलिनां श्रेष्ठो जहसुर्ब्राह्मणास्ततः २४
तत्राश्चर्यं भीमसेनश्चकार पुरुषर्षभः
यच्छल्यं पतितं भूमौ नाहनद्बलिनं बली २५
पातिते भीमसेनेन शल्ये कर्णे च शङ्किते
शङ्किताः सर्वराजानः परिवव्रुर्वृकोदरम् २६
ऊचुश्च सहितास्तत्र साध्विमे ब्राह्मणर्षभाः
विज्ञायन्तां क्वजन्मानः क्वनिवासास्तथैव च २७
को हि राधासुतं कर्णं शक्तो योधयितुं रणे
अन्यत्र रामाद्द्रोणाद्वा कृपाद्वापि शरद्वतः २८
कृष्णाद्वा देवकीपुत्रात्फल्गुनाद्वा परंतपात्
को वा दुर्योधनं शक्तः प्रतियोधयितुं रणे २९
तथैव मद्रराजानं शल्यं बलवतां वरम्
बलदेवादृते वीरात्पाण्डवाद्वा वृकोदरात् ३०
क्रियतामवहारोऽस्माद्युद्धाद्ब्राह्मणसंयुतात्
अथैनानुपलभ्येह पुनर्योत्स्यामहे वयम् ३१
तत्कर्म भीमस्य समीक्ष्य कृष्णः कुन्तीसुतौ तौ परिशङ्कमानः
निवारयामास महीपतींस्तान्धर्मेण लब्धेत्यनुनीय सर्वान् ३२
त एवं संनिवृत्तास्तु युद्धाद्युद्धविशारदाः
यथावासं ययुः सर्वे विस्मिता राजसत्तमाः ३३
वृत्तो ब्रह्मोत्तरो रङ्गः पाञ्चाली ब्राह्मणैर्वृता
इति ब्रुवन्तः प्रययुर्ये तत्रासन्समागताः ३४
ब्राह्मणैस्तु प्रतिच्छन्नौ रौरवाजिनवासिभिः
कृच्छ्रेण जग्मतुस्तत्र भीमसेनधनञ्जयौ ३५
विमुक्तौ जनसंबाधाच्छत्रुभिः परिविक्षतौ

कृष्णयानुगतौ तत्र नृवीरौ तौ विरेजतुः ३६
तेषां माता बहुविधं विनाशं पर्यचिन्तयत्
अनागच्छत्सु पुत्रेषु भैक्ष्यकालेऽतिगच्छति ३७
धार्तराष्ट्रैर्हता न स्युर्विज्ञाय कुरुपुङ्गवाः
मायान्वितैर्वा रक्षोभिः सुघोरैर्दृढवैरिभिः ३८
विपरीतं मतं जातं व्यासस्यापि महात्मनः
इत्येवं चिन्तयामास सुतस्नेहान्विता पृथा ३९
महत्यथापराह्णे तु घनैः सूर्य इवावृतः
ब्राह्मणैः प्राविशत्तत्र जिष्णुर्ब्रह्मपुरस्कृतः ४०
इति श्रीमहाभारते आदिपर्वणि एकाशीत्यधिकशततमोऽध्यायः १८१

द्व्यशीत्यधिक शततमोऽध्यायः

वैशम्पायन उवाच
गत्वा तु तां भार्गवकर्मशालां पार्थौ पृथां प्राप्य महानुभावौ
तां याज्ञसेनीं परमप्रतीतौ भिक्षेत्यथावेदयतां नराग्र्यौ १
कुटीगता सा त्वनवेक्ष्य पुत्रानुवाच भुङ्क्तेति समेत्य सर्वे
पश्चात्तु कुन्ती प्रसमीक्ष्य कन्यां कष्टं मया भाषितमित्युवाच २
साधर्मभीता हि विलज्जमाना तां याज्ञसेनीं परमप्रतीताम्
पाणौ गृहीत्वोपजगाम कुन्ती युधिष्ठिरं वाक्यमुवाच चेदम् ३
इयं हि कन्या द्रुपदस्य राज्ञस्तवानुजाभ्यां मयि संनिसृष्टा
यथोचितं पुत्र मयापि चोक्तं समेत्य भुङ्क्तेति नृप प्रमादात् ४
कथं मया नानृतमुक्तमद्य भवेत्कुरूणामृषभ ब्रवीहि
पाञ्चालराजस्य सुतामधर्मो न चोपवर्तेत नभूतपूर्वः ५
मुहूर्तमात्रं त्वनुचिन्त्य राजा युधिष्ठिरो मातरमुत्तमौजाः
कुन्तीं समाश्वास्य कुरुप्रवीरो धनञ्जयं वाक्यमिदं बभाषे ६
त्वया जिता पाण्डव याज्ञसेनी त्वया च तोषिष्यति राजपुत्री
प्रज्वाल्यतां हूयतां चापि वह्निर्गृहाण पाणिं विधिवत्त्वमस्याः ७
अर्जुन उवाच
मा मां नरेन्द्र त्वमधर्मभाजं कृथा न धर्मो ह्ययमीप्सितोऽन्यै
भवान्निवेश्यः प्रथमं ततोऽय भीमो महाबाहुरचिन्त्यकर्मा ८

अहं ततो नकुलोऽनन्तरं मे माद्रीसुतः सहदेवो जघन्यः
वृकोदरोऽह च यमौ च राजन्नियं च कन्या भवतः स्म सर्वे ९
एवंगते यत्करणीयमत्र धर्म्यं यशस्यं कुरु तत्प्रचिन्त्य
पाञ्चालराजस्य च यत्प्रियं स्यात्तद्ब्रूहि सर्वे स्म वशे स्थितास्ते १०
वैशम्पायन उवाच
ते दृष्ट्वा तत्र तिष्ठन्तीं सर्वे कृष्णां यशस्विनीम्
संप्रेक्ष्यान्योन्यमासीना हृदयैस्तामधारयन् ११
तेषां हि द्रौपदीं दृष्ट्वा सर्वेषाममितौजसाम्
संप्रमथ्येन्द्रियग्रामं प्रादुरासीन्मनोभवः १२
काम्यं रूपं हि पाञ्चाल्या विधात्रा विहितं स्वयम्
बभूवाधिकमन्याभ्यः सर्वभूतमनोहरम् १३
तेषामाकारभावज्ञः कुन्तीपुत्रो युधिष्ठिरः
द्वैपायनवचः कृत्स्नं संस्मरन्वै नरर्षभ १४
अब्रवीत्स हि तान्भ्रातॄन्मिथोभेदभयान्नृपः
सर्वेषां द्रौपदी भार्या भविष्यति हि नः शुभा १५
इति श्रीमहाभारते आदिपर्वणि द्व्यशीत्यधिकशततमोऽध्यायः १८२

## त्र्यशीत्यधिक शततमोऽध्यायः

वैशम्पायन उवाच
भ्रातुर्वचस्तत्प्रसमीक्ष्य सर्वे ज्येष्ठस्य पाण्डोस्तनयास्तदानीम्
तमेवार्थं ध्यायमाना मनोभिरासांचक्रुरथ तत्रामितौजाः १
वृष्णिप्रवीरस्तु कुरुप्रवीरानाशङ्कमानः सहरौहिणेयः
जगाम तां भार्गवकर्मशालां यत्रासते ते पुरुषप्रवीराः २
तत्रोपविष्टं पृथुदीर्घबाहुं ददर्श कृष्णः सहरौहिणेयः
अजातशत्रुं परिवार्य तांश्च उपोपविष्टाञ्ज्वलनप्रकाशान् ३
ततोऽब्रवीद्वासुदेवोऽभिगम्य कुन्तीसुतं धर्मभृतां वरिष्ठम्
कृष्णोऽहमस्मीति निपीड्य पादौ युधिष्ठिरस्याजमीढस्य राज्ञः ४
तथैव तस्याप्यनु रौहिणेयस्तौ चापि हृष्टाः कुरवोऽभ्यनन्दन्
पितृष्वसुश्चापि यदुप्रवीरावगृह्णतां भारतमुख्य पादौ ५
अजातशत्रुश्च कुरुप्रवीरः पप्रच्छ कृष्णं कुशलं निवेद्य

कथं वयं वासुदेव त्वयेह गूढा वसन्तो विदिताः स्म सर्वे ६
तमब्रवीद्वासुदेवः प्रहस्य गूढोऽप्यग्निर्ज्ञायत एव राजन्
तं विक्रमं पाण्डवेयानतीत्य कोऽन्य कर्ता विद्यते मानुषेषु ७
दिष्ट्या तस्मात्पावकात्संप्रमुक्ता यूयं सर्वे पाण्डवाः शत्रुसाहाः
दिष्ट्या पापो धृतराष्ट्रस्य पुत्रः सहामात्यो न सकामोऽभविष्यत् ८
भद्रं वोऽस्तु निहितं यद्गुहायां विवर्धध्वं ज्वलन इवेध्यमानः
मा वो विद्युः पार्थिवाः केचनेह यास्यावहे शिबिरायैव तावत्
सोऽनुज्ञातः पाण्डवेनाव्ययश्रीः प्रायाच्छीघ्रं बलदेवेन सार्धम् ९
इति श्रीमहाभारते आदिपर्वणि त्र्यशीत्यधिकशततमोऽध्यायः १८३

## चतुरशीत्यधिक शततमोऽध्यायः

वैशम्पायन उवाच
धृष्टद्युम्नस्तु पाञ्चाल्यः पृष्ठतः कुरुनन्दनौ
अन्वगच्छत्तदा यान्तौ भार्गवस्य निवेशनम् १
सोऽज्ञायमानः पुरुषानवधाय समन्ततः
स्वयमारान्निविष्टोऽभूद्भार्गवस्य निवेशने २
सायेऽथ भीमस्तु रिपुप्रमाथी जिष्णुर्यमौ चापि महानुभावौ
भैक्षं चरित्वा तु युधिष्ठिराय निवेदयाञ्चक्रुरदीनसत्त्वा ३
ततस्तु कुन्ती द्रुपदात्मजां तामुवाच काले वचनं वदान्या
अतोऽग्रमादाय कुरुष्व भद्रे बलिं च विप्राय च देहि भिक्षाम् ४
ये चान्नमिच्छन्ति ददस्व तेभ्यः परिश्रिता ये परितो मनुष्याः
ततश्च शेषं प्रविभज्य शीघ्रमर्धं चतुर्णां मम चात्मनश्च ५
अर्धं च भीमाय ददाहि भद्रे य एष मत्तर्षभतुल्यरूपः
श्यामो युवा संहननोपपन्न एषो हि वीरो बहुभुक्सदैव ६
सा हृष्टरूपैव तु राजपुत्री तस्या वचः साध्वविशङ्कमाना
यथावदुक्तं प्रचकार साध्वी ते चापि सर्वेऽभ्यवजह्रुरन्नम् ७
कुशैस्तु भूमौ शयनं चकार माद्रीसुतः सहदेवस्तरस्वी
यथात्मीयान्यजिनानि सर्वे संस्तीर्य वीराः सुषुपुर्धरण्याम् ८
अगस्त्यशास्तामभितो दिशं तु शिरांसि तेषां कुरुसत्तमानाम्
कुन्ती पुरस्तात्तु बभूव तेषां कृष्णा तिरश्चैव बभूव पत्तः ९

अशेत भूमौ सह पाण्डुपुत्रैः पादोपधानेव कृता कुशेषु
न तत्र दुःखं च बभूव तस्या न चावमेने कुरुपुङ्गवांस्तान् १०
ते तत्र शूराः कथयांबभूबुः कथा विचित्राः पृतनाधिकाराः
अस्त्राणि दिव्यानि रथांश्च नागान्खड्गान्गदाश्चापि परश्वधांश्च ११
तेषां कथास्ताः परिकीर्त्यमानाः पाञ्चालराजस्य सुतस्तदानीम्
शुश्राव कृष्णां च तथा निषण्णां ते चापि सर्वे ददृशुर्मनुष्याः १२
धृष्टद्युम्नो राजपुत्रस्तु सर्वं वृत्तं तेषां कथितं चैव रात्रौ
सर्वं राज्ञे द्रुपदायाखिलेन निवेदयिष्यंस्त्वरितो जगाम १३
पञ्चालराजस्तु विषण्णरूपस्तान्पाण्डवानप्रतिविन्दमानः
धृष्टद्युम्नं पर्यपृच्छन्महात्मा क्व सा गता केन नीता च कृष्णा १४
कच्चिन्न शूद्रेण न हीनजेन वैश्येन वा करदेनोपपन्ना
कच्चित्पदं मूर्ध्नि न मे निदिग्धं कच्चिन्माला पतिता न श्मशाने १५
कच्चित्सवर्णप्रवरो मनुष्य उद्रिक्तवर्णोऽप्युत वेह कच्चित्
कच्चिन्न वामो मम मूर्ध्नि पादः कृष्णाभिमर्शेन कृतोऽद्य पुत्र १६
कच्चिच्च यक्ष्ये परमप्रतीतः संयुज्य पार्थेन नरर्षभेण
ब्रवीहि तत्त्वेन महानुभावः कोऽसौ विजेता दुहितुर्ममाद्य १७
विचित्रवीर्यस्य तु कच्चिदद्य कुरुप्रवीरस्य धरन्ति पुत्राः
कच्चित्तु पार्थेन यवीयसाद्य धनुर्गृहीतं निहितं च लक्ष्यम् १८
इति श्रीमहाभारते आदिपर्वणि चतुरशीत्यधिकशततमोऽध्यायः १८४

## पञ्चाशीत्याधिक शततमोऽध्यायः

वैशम्पायन उवाच
ततस्तथोक्तः परिहृष्टरूपः पित्रे शशंसाथ स राजपुत्रः
धृष्टद्युम्नः सोमकानां प्रबर्हो वृत्तं यथा येन हृता च कृष्णा १
योऽसौ युवा स्वायतलोहिताक्षः कृष्णाजिनी देवसमानरूपः
यः कार्मुकाग्र्यं कृतवानधिज्यं लक्ष्यं च तत्पातितवान्पृथिव्याम् २
असज्जमानश्च गतस्तरस्वी वृतो द्विजाग्र्यैरभिपूज्यमानः
चक्राम वज्रीव दितेः सुतेषु सर्वैश्च देवैर्ऋषिभिश्च जुष्टः ३
कृष्णा च गृह्याजिनमन्वयात्तं नागं यथा नागवधूः प्रहृष्टा
अमृष्यमाणेषु नराधिपेषु क्रुद्धेषु तं तत्र समापतत्सु ४

ततोऽपरः पार्थिवराजमध्ये प्रवृद्धमारुज्य महीप्ररोहम्
प्रकालयन्नेव स पार्थिवौघान्क्रुद्धोऽन्तकः प्राणभृतो यथैव ५
तौ पार्थिवानां मिषतां नरेन्द्र कृष्णामुपादाय गतौ नराग्र्यौ
विभ्राजमानाविव चन्द्रसूर्यौ बाह्यं पुराद्भार्गवकर्मशालाम् ६
तत्रोपविष्टार्चिरिवानलस्य तेषां जनित्रीति मम प्रतर्कः
तथाविधैरेव नरप्रवीरैरुपोपविष्टैस्त्रिभिरग्निकल्पैः ७
तस्यास्ततस्तावभिवाद्य पादावुक्त्वा च कृष्णामभिवादयेति
स्थितौ च तत्रैव निवेद्य कृष्णां भैक्षप्रचाराय गता नराग्र्याः ८
तेषां तु भैक्ष्यं प्रतिगृह्य कृष्णा कृत्वा बलिं ब्राह्मणसाच्च कृत्वा
तां चैव वृद्धां परिविष्य तांश्च नरप्रवीरान्स्वयमप्यभुङ्क्त ९
सुप्तास्तु ते पार्थिव सर्व एव कृष्णा तु तेषां चरणोपधानम्
आसीत्पृथिव्यां शयनं च तेषां दर्भाजिनाग्र्यास्तरणोपपन्नम् १०
ते नर्दमाना इव कालमेघाः कथा विचित्राः कथयांबभूवुः
न वैश्यशूद्रौपयिकीः कथास्ता न च द्विजातेः कथयन्ति वीराः ११
निःसंशयं क्षत्रियपुङ्गवास्ते यथा हि युद्धं कथयन्ति राजन्
आशा हि नो व्यक्तमियं समृद्धा मुक्तान्हि पार्थाञ्शृणुमोऽग्निदाहात् १२
यथा हि लक्ष्यं निहितं धनुश्च सज्यं कृतं तेन तथा प्रसह्य
यथा च भाषन्ति परस्परं ते छन्ना ध्रुवं ते प्रचरन्ति पार्थाः १३
ततः स राजा द्रुपदः प्रहृष्टः पुरोहितं प्रेषयां तत्र चक्रे
विद्याम युष्मानिति भाषमाणो महात्मनः पाण्डुसुताः स्थ कच्चित् १४
गृहीतवाक्यो नृपतेः पुरोधा गत्वा प्रशंसामभिधाय तेषाम्
वाक्यं यथावन्नृपतेः समग्रमुवाच तान्स क्रमवित्क्रमेण १५
विज्ञातुमिच्छत्यवनीश्वरो वः पाञ्चालराजो द्रुपदो वरार्हाः
लक्ष्यस्य वेद्धारमिमं हि दृष्ट्वा हर्षस्य नान्तं परिपश्यते सः १६
तदाचड्ढ्वं ज्ञातिकुलानुपूर्वीं पदं शिरःसु द्विषतां कुरुध्वम्
प्रह्लादयध्वं हृदयं ममेयं पाञ्चालराजस्य सहानुगस्य १७
पाण्डुर्हि राजा द्रुपदस्य राज्ञः प्रियः सखा चात्मसमो बभूव
तस्यैष कामो दुहिता ममेयं स्नुषा यदि स्यादिति कौरवस्य १८
अयं च कामो द्रुपदस्य राज्ञो हृदि स्थितो नित्यमनिन्दिताङ्गाः
यदर्जुनो वै पृथुदीर्घबाहुर्धर्मेण विन्देत सुतां ममेति १९

तथोक्तवाक्यं स पुरोहितं तं स्थितं विनीतं समुदीक्ष्य राजा
समीपस्थं भीममिदं शशास प्रदीयतां पाद्यमर्घ्यं तथास्मै २०
मान्यः पुरोधा द्रुपदस्य राज्ञस्तस्मै प्रयोज्याभ्यधिकैव पूजा
भीमस्तथा तत्कृतवान्नरेन्द्र तां चैव पूजां प्रतिसंगृहीत्वा २१
सुखोपविष्टं तु पुरोहितं तं युधिष्ठिरो ब्राह्मणमित्युवाच
पाञ्चालराजेन सुता निसृष्टा स्वधर्भदृष्टेन यथानुकामम् २२
प्रदिष्टशुल्का द्रुपदेन राज्ञा सानेन वीरेण तथानुवृत्ता
न तत्र वर्णेषु कृता विवक्षा न जीवशिल्पे न कुले न गोत्रे २३
कृतेन सज्येन हि कार्मुकेण विद्धेन लक्ष्येण च संनिसृष्टा
सेयं तथानेन महात्मनेह कृष्णा जिता पार्थिवसङ्घमध्ये २४
नैवंगते सौमकिरद्य राजा संतापमर्हत्यसुखाय कर्तुम्
कामश्च योऽसौ द्रुपदस्य राज्ञः स चापि संपत्स्यति पार्थिवस्य २५
अप्राप्यरूपां हि नरेन्द्रकन्यामिमामहं ब्राह्मण साधु मन्ये
न तद्धनुर्मन्दबलेन शक्यं मौर्व्या समायोजयितुं तथा हि
न चाकृतास्त्रेण न हीनजेन लक्ष्यं तथा पातयितुं हि शक्यम् २६
तस्मान्न तापं दुहितुर्निमित्तं पाञ्चालराजोऽहति कर्तुमद्य
न चापि तत्पातनमन्यथेह कर्तुं विषह्यं भुवि मानवेन २७
एवं ब्रुवत्येव युधिष्ठिरे तु पाञ्चालराजस्य समीपतोऽन्य
तत्राजगामाशु नरो द्वितीयो निवेदयिष्यन्निह सिद्धमन्नम् २८
इति श्रीमहाभारते आदिपर्वणि पञ्चाशीत्यधिकशततमोऽध्यायः १८५

## षडशीत्यधिक शततमोऽध्यायः

दूत उवाच
जन्यार्थमन्नं द्रुपदेन राज्ञा विवाहहेतोरुपसंस्कृतं च
तदाप्नुवध्वं कृतसर्वकार्याः कृष्णा च तत्रैव चिरं न कार्यम् १
इमे रथाः काञ्चनपद्मचित्राः सदश्वयुक्ता वसुधाधिपार्हाः
एतान्समारुह्य परैत सर्वे पाञ्चालराजस्य निवेशनं तत् २
वैशम्पायन उवाच
ततः प्रयाताः कुरुपुङ्गवास्ते पुरोहितं तं प्रथमं प्रयाप्य
आस्थाय यानानि महान्ति तानि कुन्ती च कृष्णा च सहैव याते ३

श्रुत्वा तु वाक्यानि पुरोहितस्य यान्युक्तवान्भारत धर्मराजः
जिज्ञासयैवाथ कुरूत्तमानां द्रव्याण्यनेकान्युपसंजहार ४
फलानि माल्यानि सुसंस्कृतानि चर्माणि वर्माणि तथासनानि
गाश्चैव राजन्नथ चैव रज्जूर्द्रव्याणि चान्यानि कृषीनिमित्तम् ५
अन्येषु शिल्पेषु च यान्यपि स्युः सर्वाणि क्लृप्तान्यखिलेन तत्र
क्रीडानिमित्तानि च यानि तानि सर्वाणि तत्रोपजहार राजा ६
रथाश्ववर्माणि च भानुमन्ति खड्गा महान्तोऽश्वरथाश्च चित्राः
धनूंषि चाग्र्याणि शराश्च मुख्याः शक्त्यृष्टयः काञ्चनभूषिताश्च ७
प्रासा भुशुण्ड्यश्च परश्वधाश्च सांग्रामिकं चैव तथैव सर्वम्
शय्यासनान्युत्तमसंस्कृतानि तथैव चासन्विविधानि तत्र ८
कुन्ती तु कृष्णां परिगृह्य साध्वीमन्तःपुरं द्रुपदस्याविवेश
स्त्रियश्च तां कौरवराजपत्नीं प्रत्यर्चयांचक्रुरदीनसत्त्वाः ९
तान्सिंहविक्रान्तगतीनवेक्ष्य महर्षभाक्षानजिनोत्तरीयान्
गूढोत्तरांसान्भुजगेन्द्रभोगप्रलम्बबाहून्पुरुषप्रवीरान् १०
राजा च राज्ञः सचिवाश्च सर्वे पुत्राश्च राज्ञः सुहृदस्तथैव
प्रेष्याश्च सर्वे निखिलेन राजन्हर्षं समापेतुरतीव तत्र ११
ते तत्र वीराः परमासनेषु सपादपीठेष्वविशङ्कमानाः
यथानुपूर्व्या विविशुर्नराग्र्यास्तदा महार्हेषु न विस्मयन्तः १२
उच्चावचं पार्थिवभोजनीयं पात्रीषु जाम्बूनदराजतीषु
दासाश्च दास्यश्च सुमृष्टवेषाः भोजापकाश्चाप्युपजह्रुरन्नम् १३
ते तत्र भुक्त्वा पुरुषप्रवीरा यथानुकामं सुभृशं प्रतीताः
उत्क्रम्य सर्वाणि वसूनि तत्र साङ्ग्रामिकान्याविविशुर्नृवीराः १४
तल्लक्षयित्वा द्रुपदस्य पुत्रो राजा च सर्वैः सह मन्त्रिमुख्यैः
समर्चयामासुरुपेत्य हृष्टाः कुन्तीसुतान्पार्थिवपुत्रपौत्रान् १५
इति श्रीमहाभारते आदिपर्वणि षडशीत्यधिकशततमोऽध्यायः १८६

## सप्ताशीत्यधिक शततमोऽध्यायः

वैशम्पायन उवाच
तत आहूय पाञ्चाल्यो राजपुत्रं युधिष्ठिरम्
परिग्रहेण ब्राह्मेण परिगृह्य महाद्युतिः १

पर्यपृच्छददीनात्मा कुन्तीपुत्रं सुवर्चसम्
कथं जानीम भवतः क्षत्रियान्ब्राह्मणानुत २
वैश्यान्वा गुणसंपन्नानुत वा शूद्रयोनिजान्
मायामास्थाय वा सिद्धांश्चरतः सर्वतोदिशम् ३
कृष्णाहेतोरनुप्राप्तान्दिवः सन्दर्शनार्थिनः
ब्रवीतु नो भवान्सत्यं संदेहो ह्यत्र नो महान् ४
अपि नः संशयस्यान्ते मनस्तुष्टिरिहाविशेत्
अपि नो भागधेयानि शुभानि स्युः परंतप ५
कामया ब्रूहि सत्यं त्वं सत्यं राजसु शोभते
इष्टापूर्तेन च तथा वक्तव्यमनृतं न तु ६
श्रुत्वा ह्यमरसंकाश तव वाक्यमरिंदम
ध्रुवं विवाहकरणमास्थास्यामि विधानतः ७
युधिष्ठिर उवाच
मा राजन्विमना भूस्त्वं पाञ्चाल्य प्रीतिरस्तु ते
ईप्सितस्ते ध्रुवः कामः संवृत्तोऽयमसंशयम् ८
वयं हि क्षत्रिया राजन्पाण्डोः पुत्रा महात्मनः
ज्येष्ठं मां विद्धि कौन्तेयं भीमसेनार्जुनाविमौ
याभ्यां तव सुता राजन्निर्जिता राजसंसदि ९
यमौ तु तत्र राजेन्द्र यत्र कृष्णा प्रतिष्ठिता
व्येतु ते मानसं दुःखं क्षत्रियाः स्मो नरर्षभ
पद्मिनीव सुतेयं ते ह्रदादन्यं ह्रदं गता १०
इति तथ्यं महाराज सर्वमेतद्ब्रवीमि ते
भवान्हि गुरुरस्माकं परमं च परायणम् ११
वैशम्पायन उवाच
ततः स द्रुपदो राजा हर्षव्याकुललोचनः
प्रतिवक्तुं तदा युक्तं नाशकत्तं युधिष्ठिरम् १२
यत्नेन तु स तं हर्षं संनिगृह्य परंतपः
अनुरूपं तदा राजा प्रत्युवाच युधिष्ठिरम् १३
पप्रच्छ चैनं धर्मात्मा यथा ते प्रद्रुताः पुरा
स तस्मै सर्वमाचख्यावानुपूर्व्येण पाण्डवः १४

तच्छ्रुत्वा द्रुपदो राजा कुन्तीपुत्रस्य भाषितम्
विगर्हयामास तदा धृतराष्ट्रं जनेश्वरम् १५
आश्वासयामास च तं कुन्तीपुत्रं युधिष्ठिरम्
प्रतिजज्ञे च राज्याय द्रुपदो वदतां वरः १६
ततः कुन्ती च कृष्णा च भीमसेनार्जुनावपि
यमौ च राज्ञा संदिष्टौ विविशुर्भवनं महत् १७
तत्र ते न्यवसन्राजन्यज्ञसेनेन पूजिताः
प्रत्याश्वस्तांस्ततो राजा सह पुत्रैरुवाच तान् १८
गृह्णातु विधिवत्पाणिमद्यैव कुरुनन्दनः
पुण्येऽहनि महाबाहुरर्जुनः कुरुतां क्षणम् १९
ततस्तमब्रवीद्राजा धर्मपुत्रो युधिष्ठिरः
ममापि दारसम्बन्धः कार्यस्तावद्विशां पते २०
द्रुपद उवाच
भवान्वा विधिवत्पाणिं गृह्णातु दुहितुर्मम
यस्य वा मन्यसे वीर तस्य कृष्णामुपादिश २१
युधिष्ठिर उवाच
सर्वेषां द्रौपदी राजन्महिषी नो भविष्यति
एवं हि व्याहृतं पूर्वं मम मात्रा विशां पते २२
अहं चाप्यनिविष्टो वै भीमसेनश्च पाण्डवः
पार्थेन विजिता चैषा रत्नभूता च ते सुता २३
एष नः समयो राजन्रत्नस्य सहभोजनम्
न च तं हातुमिच्छामः समयं राजसत्तम २४
सर्वेषां धर्मतः कृष्णा महिषी नो भविष्यति
आनुपूर्व्येण सर्वेषां गृह्णातु ज्वलने करम् २५
द्रुपद उवाच
एकस्य बह्व्यो विहिता महिष्यः कुरुनन्दन
नैकस्या बहवः पुंसो विधीयन्ते कदाचन २६
लोकवेदविरुद्धं त्वं नाधर्मं धार्मिकः शुचिः
कर्तुमर्हसि कौन्तेय कस्मात्ते बुद्धिरीदृशी २७
युधिष्ठिर उवाच

सूक्ष्मो धर्मो महाराज नास्य विद्मो वयं गतिम्
पूर्वेषामानुपूर्व्येण यातं वर्त्मानुयामहे २८
न मे वागनृतं प्राह नाधर्मे धीयते मतिः
एवं चैव वदत्यम्बा मम चैव मनोगतम् २९
एष धर्मो ध्रुवो राजंश्चरैनमविचारयन्
मा च तेऽत्र विशङ्का भूत्कथंचिदपि पार्थिव ३०
द्रुपद उवाच
त्वं च कुन्ती च कौन्तेय धृष्टद्युम्नश्च मे सुतः
कथयन्त्वितिकर्तव्यं श्वः काले करवामहे ३१
वैशम्पायन उवाच
ते समेत्य ततः सर्वे कथयन्ति स्म भारत
अथ द्वैपायनो राजन्नभ्यागच्छद्यदृच्छया ३२
इति श्रीमहाभारते आदिपर्वणि सप्ताशीत्यधिकशततमोऽध्यायः १८७

## अष्टाशीत्यधिक शततमोऽध्यायः

वैशम्पायन उवाच
ततस्ते पाण्डवाः सर्वे पाञ्चाल्यश्च महायशाः
प्रत्युत्थाय महात्मानं कृष्णं दृष्ट्वाभ्यपूजयन् १
प्रतिनन्द्य स तान्सर्वान्पृष्ट्वा कुशलमन्ततः
आसने काञ्चने शुभ्रे निषसाद महामनाः २
अनुज्ञातास्तु ते सर्वे कृष्णेनामिततेजसा
आसनेषु महार्हेषु निषेदुर्द्विपदां वराः ३
ततो मुहूर्तान्मधुरां वाणीमुच्चार्य पार्षतः
पप्रच्छ तं महात्मानं द्रौपद्यर्थे विशां पतिः ४
कथमेका बहूनां स्यान्न च स्याद्धर्मसंकरः
एतन्नो भगवान्सर्वं प्रब्रवीतु यथातथम् ५
व्यास उवाच
अस्मिन्धर्मे विप्रलब्धे लोकवेदविरोधके
यस्य यस्य मतं यद्यच्छ्रोतुमिच्छामि तस्य तत् ६
द्रुपद उवाच

अधर्मोऽय मम मतो विरुद्धो लोकवेदयोः
न ह्येका विद्यते पत्नी बहूनां द्विजसत्तम ७
न चाप्याचरितः पूर्वैरयं धर्मो महात्मभिः
न च धर्मोऽप्यनेकस्थश्चरितव्यः सनातनः ८
अतो नाहं करोम्येवं व्यवसायं क्रियां प्रति
धर्मसंदेहसंदिग्धं प्रतिभाति हि मामिदम् ९
धृष्टद्युम्न उवाच
यवीयसः कथं भार्यां ज्येष्ठो भ्राता द्विजर्षभ
ब्रह्मन्समभिवर्तेत सद्वृत्तः संस्तपोधन १०
न तु धर्मस्य सूक्ष्मत्वाद्गतिं विद्मः कथंचन
अधर्मो धर्म इति वा व्यवसायो न शक्यते ११
कर्तुमस्मद्विधैर्ब्रह्मंस्ततो न व्यवसाम्यहम्
पञ्चानां महिषी कृष्णा भवत्विति कथंचन १२
युधिष्ठिर उवाच
न मे वागनृतं प्राह नाधर्मे धीयते मतिः
वर्तते हि मनो मेऽत्र नैषोऽधर्मः कथंचन १३
श्रूयते हि पुराणेऽपि जटिला नाम गौतमी
ऋषीनध्यासितवती सप्त धर्मभृतां वर १४
गुरोश्च वचनं प्राहुर्धर्मं धर्मज्ञसत्तम
गुरूणां चैव सर्वेषां जनित्री परमो गुरुः १५
सा चाप्युक्तवती वाचं भैक्षवद्भुज्यतामिति
तस्मादेतदहं मन्ये धर्मं द्विजवरोत्तम १६
कुन्त्युवाच
एवमेतद्यथाहायं धर्मचारी युधिष्ठिरः
अनृतान्मे भयं तीव्रं मुच्येयमनृतात्कथम् १७
व्यास उवाच
अनृतान्मोक्षसे भद्रे धर्मश्चैष सनातनः
न तु वक्ष्यामि सर्वेषां पाञ्चाल शृणु मे स्वयम् १८
यथायं विहितो धर्मो यतश्चायं सनातनः
यथा च प्राह कौन्तेयस्तथा धर्मो न संशयः १९

वैशम्पायन उवाच
तत उत्थाय भगवान्व्यासो द्वैपायनः प्रभुः
करे गृहीत्वा राजानं राजवेश्म समाविशत् २०
पाण्डवाश्चापि कुन्ती च धृष्टद्युम्नश्च पार्षतः
विचेतसस्ते तत्रैव प्रतीक्षन्ते स्म तावुभौ २१
ततो द्वैपायनस्तस्मै नरेन्द्राय महात्मने
आचख्यौ तद्यथा धर्मो बहूनामेकपत्निता २२
इति श्रीमहाभारते आदिपर्वणि अष्टाशीत्यधिकशततमोऽध्यायः १८८

एकोनवत्यधिकशततमोऽध्यायः

व्यास उवाच
पुरा वै नैमिषारण्ये देवाः सत्रमुपासते
तत्र वैवस्वतो राजञ्शामित्रमकरोत्तदा १
ततो यमो दीक्षितस्तत्र राजन्नामारयत्किंचिदपि प्रजाभ्यः
ततः प्रजास्ता बहुला बभूवुः कालातिपातान्मरणात्प्रहीणाः २
ततस्तु शक्रो वरुणः कुबेरः साध्या रुद्रा वसवश्चाश्विनौ च
प्रणेतारं भुवनस्य प्रजापतिं समाजग्मुस्तत्र देवास्तथान्ये ३
ततोऽब्रुवँल्लोकगुरुं समेता भयं नस्तीव्रं मानुषाणां विवृद्ध्या
तस्माद्भयादुद्विजन्तः सुखेप्सवः प्रयाम सर्वे शरणं भवन्तम् ४
ब्रह्मोवाच
किं वो भयं मानुषेभ्यो यूयं सर्वे यदामराः
मा वो मर्त्यसकाशाद्वै भयं भवतु कर्हिचित् ५
देवा ऊचुः
मर्त्या ह्यमर्त्याः संवृत्ता न विशेषोऽस्ति कश्चन
अविशेषादुद्विजन्तो विशेषार्थमिहागताः ६
ब्रह्मोवाच
वैवस्वतो व्यापृतः सत्रहेतोस्तेन त्विमे न म्रियन्ते मनुष्याः
तस्मिन्नेकाग्रे कृतसर्वकार्ये तत एषां भवितैवान्तकालः ७
वैवस्वतस्यापि तनुर्विभूता वीर्येण युष्माकमुत प्रयुक्ता
सैषामन्तो भविता ह्यन्तकाले तनुर्हि वीर्यं भविता नरेषु ८

व्यास उवाच
ततस्तु ते पूर्वजदेववाक्यं श्रुत्वा देवा यत्र देवा यजन्ते
समासीनास्ते समेता महाबला भागीरथ्यां ददृशुः पुण्डरीकम् ९
दृष्ट्वा च तद्विस्मितास्ते बभूवुस्तेषामिन्द्रस्तत्र शूरो जगाम
सोऽपश्यद्योषामथ पावकप्रभां यत्र गङ्गा सततं संप्रसूता १०
सा तत्र योषा रुदतीजलार्थिनी गङ्गां देवीं व्यवगाह्यावतिष्ठत्
तस्याश्रुबिन्दुः पतितो जले वै तत्पद्ममासीदथ तत्र काञ्चनम् ११
तदद्भुतं प्रेक्ष्य वज्री तदानीमपृच्छत्तां योषितमन्तिकाद्वै
का त्वं कथं रोदिषि कस्य हेतोर्वाक्यं तथ्यं कामयेह ब्रवीहि १२
स्त्र्युवाच
त्वं वेत्स्यसे मामिह यास्मि शक्र यदर्थं चाहं रोदिमि मन्दभाग्या
आगच्छ राजन्पुरतोऽह गमिष्ये द्रष्टासि तद्रोदिमि यत्कृतेऽहम् १३
व्यास उवाच
तां गच्छन्तीमन्वगच्छत्तदानीं सोऽपश्यदारात्तरुणं दर्शनीयम्
सिंहासनस्थं युवतीसहायं क्रीडन्तमक्षैर्गिरिराजमूर्ध्नि १४
तमब्रवीद्देवराजो ममेदं त्वं विद्धि विश्वं भुवनं वशे स्थितम्
ईशोऽहमस्मीति समन्युरब्रवीद्दृष्ट्वा तमक्षैः सुभृशं प्रमत्तम् १५
क्रुद्धं तु शक्रं प्रसमीक्ष्य देवो जहास शक्रं च शनैरुदैक्षत
संस्तम्भितोऽभूदथ देवराजस्तेनेक्षितः स्थाणुरिवावतस्थे १६
यदा तु पर्याप्तमिहास्य क्रीडया तदा देवीं रुदतीं तामुवाच
आनीयतामेष यतोऽहमारान्मैनं दर्पः पुनरप्याविशेत १७
ततः शक्रः स्पृष्टमात्रस्तया तु स्रस्तैरङ्गैः पतितोऽभूद्धरण्याम्
तमब्रवीद्भगवानुग्रतेजा मैवं पुनः शक्र कृथाः कथंचित् १८
विवर्तयैनं च महाद्रिराजं बलं च वीर्यं च तवाप्रमेयम्
विवृत्य चैवाविश मध्यमस्य यत्रासते त्वद्विधाः सूर्यभासः १९
स तद्विवृत्य शिखरं महागिरेस्तुल्यद्युतींश्चतुरोऽन्यान्ददर्श
स तानभिप्रेक्ष्य बभूव दुःखितः कच्चिन्नाहं भविता वै यथेमे २०
ततो देवो गिरिशो वज्रपाणिं विवृत्य नेत्रे कुपितोऽभ्युवाच
दरीमेतां प्रविश त्वं शतक्रतो यन्मां बाल्यादवमंस्थाः पुरस्तात् २१
उक्तस्त्वेवं विभुना देवराजः प्रवेपमानो भृशमेवाभिषङ्गात्

स्रस्तैरङ्गैरनिलेनेव नुन्नमश्वत्थपत्रं गिरिराजमूर्ध्नि २२
स प्राञ्जलिर्विनतेनाननेन प्रवेपमानः सहसैवमुक्तः
उवाच चेदं बहुरूपमुग्रं द्रष्टा शेषस्य भगवंस्त्वं भवाद्य २३
तमब्रवीदुग्रधन्वा प्रहस्य नैवंशीलाः शेषमिहाप्नुवन्ति
एतेऽप्येनं भवितारः पुरस्तात्तस्मादेतां दरीमाविश्य शेध्वम् २४
शेषोऽप्येवं भविता वो न संशयो योनिं सर्वे मानुषीमाविशध्वम्
तत्र यूयं कर्म कृत्वाविषह्यं बहूनन्यान्निधनं प्रापयित्वा २५
आगन्तारः पुनरेवेन्द्रलोकं स्वकर्मणा पूर्वजितं महार्हम्
सर्वं मया भाषितमेतदेवं कर्तव्यमन्यद्विविधार्थवच्च २६
पूर्वेन्द्रा ऊचुः
गमिष्यामो मानुषं देवलोकाद्दुराधरो विहितो यत्र मोक्षः
देवास्त्वस्मानादधीरञ्जनन्यां धर्मो वायुर्मघवानश्विनौ च २७
व्यास उवाच
एतच्छ्रुत्वा वज्रपाणिर्वचस्तु देवश्रेष्ठं पुनरेवेदमाह
वीर्येणाहं पुरुषं कार्यहेतोर्दद्यामेषां पञ्चमं मत्प्रसूतम् २८
तेषां कामं भगवानुग्रधन्वा प्रादादिष्टं सन्निसर्गाद्यथोक्तम्
तां चाप्येषां योषितं लोककान्तां श्रियं भार्यां व्यदधान्मानुषेषु २९
तैरेव सार्धं तु ततः स देवो जगाम नारायणमप्रमेयम्
स चापि तद्व्यदधात्सर्वमेव ततः सर्वे संबभूवुर्धरण्याम् ३०
स चापि केशौ हरिरुद्बबर्ह शुक्लमेकमपरं चापि कृष्णम्
तौ चापि केशौ विशतां यदूनां कुले स्त्रियौ रोहिणीं देवकीं च
तयोरेको बलदेवो बभूव कृष्णो द्वितीयः केशवः संबभूव ३१
ये ते पूर्वं शक्ररूपा निरुद्धास्तस्यां दर्यां पर्वतस्योत्तरस्य
इहैव ते पाण्डवा वीर्यवन्तः शक्रस्यांशः पाण्डवः सव्यसाची ३२
एवमेते पाण्डवाः संबभूवुर्ये ते राजन्पूर्वमिन्द्रा बभूवुः
लक्ष्मीश्चैषां पूर्वमेवोपदिष्टा भार्या यैषा द्रौपदी दिव्यरूपा ३३
कथं हि स्त्री कर्मणोऽन्ते महीतलात्समुत्तिष्ठेदन्यतो दैवयोगात्
यस्या रूपं सोमसूर्यप्रकाशं गन्धश्चाग्र्यः क्रोशमात्रात्प्रवाति ३४
इदं चान्यत्प्रीतिपूर्वं नरेन्द्र ददामि ते वरमत्यद्भुतं च
दिव्यं चक्षुः पश्य कुन्तीसुतांस्त्वं पुण्यैर्दिव्यैः पूर्वदेहैरुपेतान् ३५

वैशम्पायन उवाच
ततो व्यासः परमोदारकर्मा शुचिर्विप्रस्तपसा तस्य राज्ञः
चक्षुर्दिव्यं प्रददौ तान्स सर्वान्राजापश्यत्पूर्वदेहैर्यथावत् ३६
ततो दिव्यान्हेमकिरीटमालिनः शुक्रप्रख्यान्पावकादित्यवर्णान्
बद्धापीडांश्चारुरूपांश्च यूनो व्यूढोरस्कांस्तालमात्रान्ददर्श ३७
दिव्यैर्वस्त्रैररजोभिः सुवर्णैर्माल्यैश्चाग्र्यैः शोभमानानतीव
साक्षात्त्र्यक्षान्वसवो वाथ दिव्यानादित्यान्वा सर्वगुणोपपन्नान्
तान्पूर्वेन्द्रानेवमीक्ष्याभिरूपान्प्रीतो राजा द्रुपदो विस्मितश्च ३८
दिव्यां मायां तामवाप्याप्रमेयां तां चैवाग्र्यां श्रियमिव रूपिणीं च
योग्यां तेषां रूपतेजोयशोभिः पत्नीमृद्धां दृष्टवान्पार्थिवेन्द्रः ३९
स तद्दृष्ट्वा महदाश्चर्यरूपं जग्राह पादौ सत्यवत्याः सुतस्य
नैतच्चित्रं परमर्षे त्वयीति प्रसन्नचेताः स उवाच चैनम् ४०
व्यास उवाच
आसीत्तपोवने काचिदृषेः कन्या महात्मनः
नाध्यगच्छत्पतिं सा तु कन्या रूपवती सती ४१
तोषयामास तपसा सा किलोग्रेण शङ्करम्
तामुवाचेश्वरः प्रीतो वृणु काममिति स्वयम् ४२
सैवमुक्ताब्रवीत्कन्या देवं वरदमीश्वरम्
पतिं सर्वगुणोपेतमिच्छामीति पुनः पुनः ४३
ददौ तस्यै स देवेशस्तं वरं प्रीतिमांस्तदा
पञ्च ते पतयः भद्रे भविष्यन्तीति शंकरः ४४
सा प्रसादयती देवमिदं भूयोऽभ्यभाषत
एकं पतिं गुणोपेतं त्वत्तोऽर्हामीति वै तदा
तां देवदेवः प्रीतात्मा पुनः प्राह शुभं वचः ४५
पञ्चकृत्वस्त्वया उक्तः पतिं देहीत्यहं पुनः
तत्तथा भविता भद्रे तव तद्भद्रमस्तु ते
देहमन्यं गतायास्ते यथोक्तं तद्भविष्यति ४६
द्रुपदैषा हि सा जज्ञे सुता ते देवरूपिणी
पञ्चानां विहिता पत्नी कृष्णा पार्षत्यनिन्दिता ४७
स्वर्गश्री पाण्डवार्थाय समुत्पन्ना महामखे

सेह तप्त्वा तपो घोरं दुहितृत्वं तवागता ४८
सैषा देवी रुचिरा देवजुष्टा पञ्चानामेका स्वकृतेन कर्मणा
स्रष्टा स्वयं देवपत्नी स्वयंभुवा श्रुत्वा राजन्द्रुपदेष्टं कुरुष्व ४९
इति श्रीमहाभारते आदिपर्वणि एकोननवत्यधिकशततमोऽध्यायः १८९

## नवत्यधिक शततमोऽध्यायः

द्रुपद उवाच
अश्रुत्वैवं वचनं ते महर्षे मया पूर्वं यतितं कार्यमेतत्
न वै शक्यं विहितस्यापयातुं तदेवेदमुपपन्नं विधानम् १
दिष्टस्य ग्रन्थिरनिवर्तनीयः स्वकर्मणा विहितं नेह किंचित्
कृतं निमित्तं हि वरैकहेतोस्तदेवेदमुपपन्नं बहूनाम् २
तथैव कृष्णोक्तवती पुरस्तान्नैकान्पतीन्मे भगवान्ददातु
स चाप्येवं वरमित्यब्रवीत्तां देवो हि वेत्ता परमं यदत्र ३
यदि वायं विहितः शंकरेण धर्मोऽधर्मो वा नात्र ममापराधः
गृह्णन्त्विमे विधिवत्पाणिमस्या यथोपजोषं विहितैषां हि कृष्णा ४
वैशम्पायन उवाच
ततोऽब्रवीद्भगवान्धर्मराजमद्य पुण्याहमुत पाण्डवेय
अद्य पौष्यं योगमुपैति चन्द्रमाः पाणिं कृष्णायास्त्वं गृहाणाद्य पूर्वम् ५
ततो राजा यज्ञसेनः सपुत्रो जन्यार्थमुक्तं बहु तत्तदग्र्यम्
समानयामास सुतां च कृष्णामाप्लाव्य रत्नैर्बहुभिर्विभूष्य ६
ततः सर्वे सुहृदस्तत्र तस्य समाजग्मुः सचिवा मन्त्रिणश्च
द्रष्टुं विवाहंपरमप्रतीता द्विजाश्च पौराश्च यथाप्रधानाः ७
तत्तस्य वेश्मार्थिजनोपशोभितं विकीर्णपद्मोत्पलभूषिताजिरम्
महार्हरत्नौघविचित्रमाबभौ दिवं यथा निर्मलतारकाचितम् ८
ततस्तु ते कौरवराजपुत्रा विभूषिताः कुण्डलिनो युवानः
महार्हवस्त्रा वरचन्दनोक्षिताः कृताभिषेकाः कृतमङ्गलक्रियाः ९
पुरोहितेनाग्निसमानवर्चसा सहैव धौम्येन यथाविधि प्रभो
क्रमेण सर्वे विविशुश्च तत्सदो महर्षभा गोष्ठमिवाभिनन्दिनः १०
ततः समाधाय स वेदपारगो जुहाव मन्त्रैर्ज्वलितं हुताशनम्
युधिष्ठिरं चाप्युपनीय मन्त्रविन्नियोजयामास सहैव कृष्णया ११

प्रदक्षिणं तौ प्रगृहीतपाणी समानयामास स वेदपारगः
ततोऽभ्यनुज्ञाय तमाजिशोभिनं पुरोहितो राजगृहाद्विनिर्ययौ १२
क्रमेण चानेन नराधिपात्मजा वरस्त्रियास्ते जगृहुस्तदा करम्
अहन्यहन्युत्तमरूपधारिणो महारथाः कौरववंशवर्धनाः १३
इदं च तत्राद्भुतरूपमुत्तमं जगाद विप्रर्षिरतीतमानुषम्
महानुभावा किल सा सुमध्यमा बभूव कन्यैव गते गतेऽहनि १४
कृते विवाहे द्रुपदो धनं ददौ महारथेभ्यो बहुरूपमुत्तमम्
शतं रथानां वरहेमभूषिणां चतुर्युजां हेमखलीनमालिनाम् १५
शतं गजानामभिपद्मिनां तथा शतं गिरीणामिव हेमशृङ्गिणाम्
तथैव दासीशतमग्र्ययौवनं महार्हवेषाभरणाम्बरस्त्रजम् १६
पृथक्पृथक् चैव दशायुतान्वितं धनं ददौ सौमकिरग्निसाक्षिकम्
तथैव वस्त्राणि च भूषणानि प्रभावयुक्तानि महाधनानि १७
कृते विवाहे च ततः स्म पाण्डवाः प्रभूतरत्नामुपलभ्य तां श्रियम्
विजह्रुरिन्द्रप्रतिमा महाबलाः पुरे तु पाञ्चालनृपस्य तस्य ह १८
इति श्रीमहाभारते आदिपर्वणि नवत्यधिकशततमोऽध्यायः १९०

## एकनवत्यधिक शततमोऽध्यायः

वैशम्पायन उवाच
पाण्डवैः सह संयोगं गतस्य द्रुपदस्य तु
न बभूव भयं किंचिद्देवेभ्योऽपि कथंचन १
कुन्तीमासाद्य ता नार्यो द्रुपदस्य महात्मनः
नाम संकीर्तयन्त्यस्ताः पादौ जग्मुः स्वमूर्धभिः २
कृष्णा च क्षौमसंवीता कृतकौतुकमङ्गला
कृताभिवादना श्वश्र्वास्तस्थौ प्रह्वा कृताञ्जलि ३
रूपलक्षणसंपन्नां शीलाचारसमन्विताम्
द्रौपदीमवदत्प्रेम्णा पृथाशीर्वचनं स्नुषाम् ४
यथेन्द्राणी हरिहये स्वाहा चैव विभावसौ
रोहिणी च यथा सोमे दमयन्ती यथा नले ५
यथा वैश्रवणे भद्रा वसिष्ठे चाप्यरुन्धती
यथा नारायणे लक्ष्मीस्तथा त्वं भव भर्तृषु ६

जीवसूर्वीरसूर्भद्रे बहुसौख्यसमन्विता
सुभगा भोगसंपन्ना यज्ञपत्नी स्वनुव्रता ७
अतिथीनागतान्साधून्बालान्वृद्धान्गुरूंस्तथा
पूजयन्त्या यथान्यायं शश्वद्गच्छन्तु ते समाः ८
कुरुजाङ्गलमुख्येषु राष्ट्रेषु नगरेषु च
अनु त्वमभिषिच्यस्व नृपतिं धर्मवत्सलम् ९
पतिभिर्निर्जितामुर्वीं विक्रमेण महाबलैः
कुरु ब्राह्मणसात्सर्वामश्वमेधे महाक्रतौ १०
पृथिव्यां यानि रत्नानि गुणवन्ति गुणान्विते
तान्याप्नुहि त्वं कल्याणि सुखिनी शरदां शतम् ११
यथा च त्वाभिनन्दामि वध्वद्य क्षौमसंवृताम्
तथा भूयोऽभिनन्दिष्ये सूतपुत्रां गुणान्विताम् १२
ततस्तु कृतदारेभ्यः पाण्डुभ्यः प्राहिणोद्धरिः
मुक्तावैडूर्यचित्राणि हैमान्याभरणानि च १३
वासांसि च महार्हाणि नानादेश्यानि माधवः
कम्बलाजिनरत्नानि स्पर्शवन्ति शुभानि च १४
शयनासनयानानि विविधानि महान्ति च
वैडूर्यवज्रचित्राणि शतशो भाजनानि च १५
रूपयौवनदाक्षिण्यैरुपेताश्च स्वलंकृताः
प्रेष्याः संप्रददौ कृष्णो नानादेश्याः सहस्रशः १६
गजान्विनीतान्भद्रांश्च सदश्वांश्च स्वलंकृतान्
रथांश्च दान्तान्सौवर्णैः शुभ्रैः पट्टैरलंकृतान् १७
कोटिशश्च सुवर्णं स तेषामकृतकं तथा
वीतीकृतममेयात्मा प्राहिणोन्मधुसूदनः १८
तत्सर्वं प्रतिजग्राह धर्मराजो युधिष्ठिरः
मुदा परमया युक्तो गोविन्दप्रियकाम्यया १९
इति श्रीमहाभारते आदिपर्वणि एकनवत्यधिकशततमोऽध्यायः १९१

## द्विनवत्यधिकशततमोऽध्यायः

वैशम्पायन उवाच

ततो राज्ञां चरैराप्तैश्चारः समुपनीयत
पाण्डवैरुपसंपन्ना द्रौपदी पतिभिः शुभा १
येन तद्धनुरायम्य लक्ष्यं विद्धं महात्मना
सोऽर्जुनो जयतां श्रेष्ठो महाबाणधनुर्धरः २
यः शल्यं मद्रराजानमुत्क्षिप्याभ्रामयद्बली
त्रासयंश्चापि संक्रुद्धो वृक्षेण पुरुषान्रणे ३
न चापि संभ्रमः कश्चिदासीत्तत्र महात्मनः
स भीमो भीमसंस्पर्शः शत्रुसेनाङ्गपातनः ४
ब्रह्मरूपधराञ्श्रुत्वा पाण्डुराजसुतांस्तदा
कौन्तेयान्मनुजेन्द्राणां विस्मयः समजायत ५
सपुत्रा हि पुरा कुन्ती दग्धा जतुगृहे श्रुता
पुनर्जातानिति स्मैतान्मन्यन्ते सर्वपार्थिवाः ६
धिक्कुर्वन्तस्तदा भीष्मं धृतराष्ट्रं च कौरवम्
कर्मणा सुनृशंसेन पुरोचनकृतेन वै ७
वृत्ते स्वयंवरे चैव राजानः सर्व एव ते
यथागतं विप्रजग्मुर्विदित्वा पाण्डवान्वृतान् ८
अथ दुर्योधनो राजा विमना भ्रातृभिः सह
अश्वत्थाम्ना मातुलेन कर्णेन च कृपेण च ९
विनिवृत्तो वृतं दृष्ट्वा द्रौपद्या श्वेतवाहनम्
तं तु दुःशासनो व्रीडन्मन्दं मन्दमिवाब्रवीत् १०
यद्यसौ ब्राह्मणो न स्याद्विन्देत द्रौपदीं न सः
न हि तं तत्त्वतो राजन्वेद कश्चिद्धनञ्जयम् ११
दैवं तु परमं मन्ये पौरुषं तु निरर्थकम्
धिगस्मत्पौरुषं तात यद्धरन्तीह पाण्डवाः १२
एवं संभाषमाणास्ते निन्दन्तश्च पुरोचनम्
विविशुर्हास्तिनपुरं दीना विगतचेतसः १३
त्रस्ता विगतसंकल्पा दृष्ट्वा पार्थान्महौजसः
मुक्तान्हव्यवहाच्चैनान्संयुक्तान्द्रुपदेन च १४
धृष्टद्युम्नं तु संचिन्त्य तथैव च शिखण्डिनम्
द्रुपदस्यात्मजांश्चान्यान्सर्वयुद्धविशारदान् १५

विदुरस्त्वथ ताञ्श्रुत्वा द्रौपद्या पाण्डवान्वृतान्
व्रीडितान्धार्तराष्ट्रांश्च भग्नदर्पानुपागतान् १६
ततः प्रीतमनाः क्षत्ता धृतराष्ट्रं विशां पते
उवाच दिष्ट्या कुरवो वर्धन्त इति विस्मितः १७
वैचित्रवीर्यस्तु नृपो निशम्य विदुरस्य तत्
अब्रवीत्परमप्रीतो दिष्ट्या दिष्ट्येति भारत १८
मन्यते हि वृतं पुत्रं ज्येष्ठं द्रुपदकन्यया
दुर्योधनमविज्ञानात्प्रज्ञाचक्षुर्नरेश्वरः १९
अथ त्वाज्ञापयामास द्रौपद्या भूषणं बहु
आनीयतां वै कृष्णेति पुत्रं दुर्योधनं तदा २०
अथास्य पश्चाद्विदुर आचख्यौ पाण्डवान्वृतान्
सर्वान्कुशलिनो वीरान्पूजितान्द्रुपदेन च
तेषां संबन्धिनश्चान्यान्बहून्बलसमन्वितान् २१
धृतराष्ट्र उवाच
यथैव पाण्डोः पुत्रास्ते तथैवाभ्यधिका मम
सेयमभ्यधिका प्रीतिर्वृद्धिर्विदुर मे मता
यत्ते कुशलिनो वीरा मित्रवन्तश्च पाण्डवाः २२
को हि द्रुपदमासाद्य मित्रं क्षत्तः सबान्धवम्
न बुभूषेद्भवेनार्थी गतश्रीरपि पार्थिवः २३
वैशम्पायन उवाच
तं तथा भाषमाणं तु विदुरः प्रत्यभाषत
नित्यं भवतु ते बुद्धिरेषा राजञ्शतं समाः २४
ततो दुर्योधनश्चैव राधेयश्च विशां पते
धृतराष्ट्रमुपागम्य वचोऽब्रूतामिदं तदा २५
संनिधौ विदुरस्य त्वां वक्तुं नृप न शक्नुवः
विविक्तमिति वक्ष्यावः किं तवेदं चिकीर्षितम् २६
सपत्नवृद्धिं यत्तात मन्यसे वृद्धिमात्मनः
अभिष्टौषि च यत्क्षत्तुः समीपे द्विपदां वर २७
अन्यस्मिन्नृप कर्तव्ये त्वमन्यत्कुरुषेऽनघ
तेषां बलविघातो हि कर्तव्यस्तात नित्यशः २८

ते वयं प्राप्तकालस्य चिकीर्षां मन्त्रयामहे
यथा नो न ग्रसेयुस्ते सपुत्रबलबान्धवान् २९
इति श्रीमहाभारते आदिपर्वणि द्विनवत्यधिकशततमोऽध्यायः १९२

त्रिनवत्यधिक शततमोऽध्यायः

धृतराष्ट्र उवाच
अहमप्येवमेवैतच्चिन्तयामि यथा युवाम्
विवेक्तुं नाहमिच्छामि त्वाकारं विदुरं प्रति १
अतस्तेषां गुणानेव कीर्तयामि विशेषतः
नावबुध्येत विदुरो ममाभिप्रायमिङ्गितैः २
यच्च त्वं मन्यसे प्राप्तं तद्ब्रूहि त्वं सुयोधन
राधेय मन्यसे त्वं च यत्प्राप्तं तद्ब्रवीहि मे ३
दुर्योधन उवाच
अद्य तान्कुशलैर्विप्रैः सुकृतैराप्तकारिभिः
कुन्तीपुत्रान्भेदयामो माद्रीपुत्रौ च पाण्डवौ ४
अथवा द्रुपदो राजा महद्भिर्वित्तसंचयैः
पुत्राश्चास्य प्रलोभ्यन्ताममात्याश्चैव सर्वशः ५
परित्यजध्वं राजानं कुन्तीपुत्रं युधिष्ठिरम्
अथ तत्रैव वा तेषां निवासं रोचयन्तु ते ६
इहैषां दोषवद्वासं वर्णयन्तु पृथक्पृथक्
ते भिद्यमानास्तत्रैव मनः कुर्वन्तु पाण्डवाः ७
अथवा कुशलाः केचिदुपायनिपुणा नराः
इतरेतरतः पार्थान्भेदयन्त्वनुरागतः ८
व्युत्थापयन्तु वा कृष्णां बहुत्वात्सुकरं हि तत्
अथवा पाण्डवांस्तस्यां भेदयन्तु ततश्च ताम् ९
भीमसेनस्य वा राजन्नुपायकुशलैर्नरैः
मृत्युर्विधीयतां छन्नैः स हि तेषां बलाधिकः १०
तस्मिंस्तु निहते राजन्हतोत्साहा हतौजसः
यतिष्यन्ते न राज्याय स हि तेषां व्यपाश्रयः ११
अजेयो ह्यर्जुनः सङ्ख्ये पृष्ठगोपे वृकोदरे

तमृते फल्गुनो युद्धे राधेयस्य न पादभाक् १२
ते जानमाना दौर्बल्यं भीमसेनमृते महत्
अस्मान्बलवतो ज्ञात्वा नशिष्यन्त्यबलीयसः १३
इहागतेषु पार्थेषु निदेशवशवर्तिषु
प्रवर्तिष्यामहे राजन्यथाश्रद्धं निबर्हणे १४
अथवा दर्शनीयाभिः प्रमदाभिर्विलोभ्यताम्
एकैकस्तत्र कौन्तेयस्ततः कृष्णा विरज्यताम् १५
प्रेष्यतां वापि राधेयस्तेषामागमनाय वै
ते लोप्त्रहारैः संधाय वध्यन्तामाप्तकारिभिः १६
एतेषामभ्युपायानां यस्ते निर्दोषवान्मतः
तस्य प्रयोगमातिष्ठ पुरा कालोऽतिवर्तते १७
यावद्ध्याकृतविश्वासा द्रुपदे पार्थिवर्षभे
तावदेवाद्य ते शक्या न शक्यास्तु ततः परम् १८
एषा मम मतिस्तात निग्रहाय प्रवर्तते
साधु वा यदि वासाधु किं वा राधेय मन्यसे १९
इति श्रीमहाभारते आदिपर्वणि त्रिनवत्यधिकशततमोऽध्यायः १९३

## चतुर्नवत्यधिक शततमोऽध्यायः

कर्ण उवाच
दुर्योधन तव प्रज्ञा न सम्यगिति मे मतिः
न ह्युपायेन ते शक्याः पाण्डवाः कुरुनन्दन १
पूर्वमेव हि ते सूक्ष्मैरुपायैर्यतितास्त्वया
निग्रहीतुं यदा वीर शकिता न तदा त्वया २
इहैव वर्तमानास्ते समीपे तव पार्थिव
अजातपक्षाः शिशवः शकिता नैव बाधितुम् ३
जातपक्षा विदेशस्था विवृद्धाः सर्वशोऽद्य ते
नोपायसाध्याः कौन्तेया ममैषा मतिरच्युत ४
न च ते व्यसनैर्योक्तुं शक्या दिष्टकृता हि ते
शङ्किताश्चेप्सवश्चैव पितृपैतामहं पदम् ५
परस्परेण भेदश्च नाधातुं तेषु शक्यते

एकस्यां ये रताः पत्न्यां न भिद्यन्ते परस्परम् ६
न चापि कृष्णा शक्येत तेभ्यो भेदयितुं परैः
परिद्यूनान्वृतवती किमुताद्य मृजावतः ७
ईप्सितश्च गुणः स्त्रीणामेकस्या बहुभर्तृता
तं च प्राप्तवती कृष्णा न सा भेदयितुं सुखम् ८
आर्यवृत्तश्च पाञ्चाल्यो न स राजा धनप्रियः
न संत्यक्ष्यति कौन्तेयान्राज्यदानैरपि ध्रुवम् ९
तथास्य पुत्रो गुणवाननुरक्तश्च पाण्डवान्
तस्मान्नोपायसाध्यांस्तानहं मन्ये कथंचन १०
इदं त्वद्य क्षमं कर्तुमस्माकं पुरुषर्षभ
यावन्न कृतमूलास्ते पाण्डवेया विशां पते
तावत्प्रहरणीयास्ते रोचतां तव विक्रमः ११
अस्मत्पक्षो महान्यावद्यावत्पाञ्चालको लघुः
तावत्प्रहरणं तेषां क्रियतां मा विचारय १२
वाहनानि प्रभूतानि मित्राणि बहुलानि च
यावन्न तेषां गान्धारे तावदेवाशु विक्रम १३
यावच्च राजा पाञ्चाल्यो नोद्यमे कुरुते मनः
सह पुत्रैर्महावीर्यैस्तावदेवाशु विक्रम १४
यावन्नायाति वार्ष्णेयः कर्षन्यादववाहिनीम्
राज्यार्थे पाण्डवेयानां तावदेवाशु विक्रम १५
वसूनि विविधान्भोगान्राज्यमेव च केवलम्
नात्याज्यमस्ति कृष्णस्य पाण्डवार्थे महीपते १६
विक्रमेण मही प्राप्ता भरतेन महात्मना
विक्रमेण च लोकांस्त्रीञ्जितवान्पाकशासनः १७
विक्रमं च प्रशंसन्ति क्षत्रियस्य विशां पते
स्वको हि धर्मः शूराणां विक्रमः पार्थिवर्षभ १८
ते बलेन वयं राजन्महता चतुरङ्गिणा
प्रमथ्य द्रुपदं शीघ्रमानयामेह पाण्डवान् १९
न हि साम्ना न दानेन न भेदेन च पाण्डवाः
शक्याः साधयितुं तस्माद्विक्रमेणैव ताञ्जहि २०

तान्विक्रमेण जित्वेमामखिलां भुङ्क्ष्व मेदिनीम्
नान्यमत्र प्रपश्यामि कार्योपायं जनाधिप २१
वैशम्पायन उवाच
श्रुत्वा तु राधेयवचो धृतराष्ट्रः प्रतापवान्
अभिपूज्य ततः पश्चादिदं वचनमब्रवीत् २२
उपपन्नं महाप्राज्ञे कृतास्त्रे सूतनन्दने
त्वयि विक्रमसंपन्नमिदं वचनमीदृशम् २३
भूय एव तु भीष्मश्च द्रोणो विदुर एव च
युवां न कुरुतां बुद्धिं भवेद्या नः सुखोदया २४
तत आनाय्य तान्सर्वान्मन्त्रिणः सुमहायशाः
धृतराष्ट्रो महाराज मन्त्रयामास वै तदा २५
इति श्रीमहाभारते आदिपर्वणि चतुर्नवत्यधिकशततमोऽध्यायः १९४

## पञ्चनवत्यधिकशततमोऽध्यायः

भीष्म उवाच
न रोचते विग्रहो मे पाण्डुपुत्रैः कथंचन
यथैव धृतराष्ट्रो मे तथा पाण्डुरसंशयम् १
गान्धार्याश्च यथा पुत्रास्तथा कुन्तीसुता मताः
यथा च मम ते रक्ष्या धृतराष्ट्र तथा तव २
तथा च मम राज्ञश्च तथा दुर्योधनस्य ते
तथा कुरूणां सर्वेषामन्येषामपि भारत ३
एवं गते विग्रहं तैर्न रोचये संधाय वीरैर्दीयतामद्य भूमिः
तेषामपीदं प्रपितामहानां राज्यं पितुश्चैव कुरूत्तमानाम् ४
दुर्योधन यथा राज्यं त्वमिदं तात पश्यसि
मम पैतृकमित्यैवं तेऽपि पश्यन्ति पाण्डवाः ५
यदि राज्यं न ते प्राप्ताः पाण्डवेयास्तपस्विनः
कुत एव तवापीदं भारतस्य च कस्यचित् ६
अथ धर्मेण राज्यं त्वं प्राप्तवान्भरतर्षभ
तेऽपि राज्यमनुप्राप्ताः पूर्वमेवेति मे मतिः ७
मधुरेणैव राज्यस्य तेषामर्धं प्रदीयताम्

एतद्धि पुरुषव्याघ्र हितं सर्वजनस्य च ८
अतोऽन्यथा चेत्क्रियते न हितं नो भविष्यति
तवाप्यकीर्तिः सकला भविष्यति न संशयः ९
कीर्तिरक्षणमातिष्ठ कीर्तिर्हि परमं बलम्
नष्टकीर्तेर्मनुष्यस्य जीवितं ह्यफलं स्मृतम् १०
यावत्कीर्तिर्मनुष्यस्य न प्रणश्यति कौरव
तावज्जीवति गान्धारे नष्टकीर्तिस्तु नश्यति ११
तमिमं समुपातिष्ठ धर्मं कुरुकुलोचितम्
अनुरूपं महाबाहो पूर्वेषामात्मनः कुरु १२
दिष्ट्या धरन्ति ते वीरा दिष्ट्या जीवति सा पृथा
दिष्ट्या पुरोचनः पापो नसकामोऽत्ययं गतः १३
तदा प्रभृति गान्धारे न शक्नोम्यभिवीक्षितुम्
लोके प्राणभृतां कंचिच्छ्रुत्वा कुन्तीं तथागताम् १४
न चापि दोषेण तथा लोको वैति पुरोचनम्
यथा त्वां पुरुषव्याघ्र लोको दोषेण गच्छति १५
तदिदं जीवितं तेषां तव किल्मषनाशनम्
संमन्तव्यं महाराज पाण्डवानां च दर्शनम् १६
न चापि तेषां वीराणां जीवतां कुरुनन्दन
पित्र्योंऽश शक्य आदातुमपि वज्रभृता स्वयम् १७
ते हि सर्वे स्थिता धर्मे सर्वे चैवैकचेतसः
अधर्मेण निरस्ताश्च तुल्ये राज्ये विशेषतः १८
यदि धर्मस्त्वया कार्यो यदि कार्यं प्रियं च मे
क्षेमं च यदि कर्तव्यं तेषामर्धं प्रदीयताम् १९
इति श्रीमहाभारते आदिपर्वणि पञ्चनवत्यधिकशततमोऽध्यायः १९५

## षण्णवत्यधिक शततमोऽध्यायः

द्रोण उवाच
मन्त्राय समुपानीतैर्धृतराष्ट्रहितैर्नृप
धर्म्यं पथ्यं यशस्यं च वाच्यमित्यनुशुश्रुमः १
ममाप्येषा मतिस्तात या भीष्मस्य महात्मनः

संविभज्यास्तु कौन्तेया धर्म एष सनातनः २
प्रेष्यतां द्रुपदायाशु नरः कश्चित्प्रियंवदः
बहुलं रत्नमादाय तेषामर्थाय भारत ३
मिथःकृत्यं च तस्मै स आदाय बहु गच्छतु
वृद्धिं च परमां ब्रूयात्तत्संयोगोद्भवां तथा ४
संप्रीयमाणं त्वां ब्रूयाद्राजन्दुर्योधनं तथा
असकृद्द्रुपदे चैव धृष्टद्युम्ने च भारत ५
उचितत्वं प्रियत्वं च योगस्यापि च वर्णयेत्
पुनः पुनश्च कौन्तेयान्माद्रीपुत्रौ च सान्त्वयन् ६
हिरण्मयानि शुभ्राणि बहून्याभरणानि च
वचनात्तव राजेन्द्र द्रौपद्याः संप्रयच्छतु ७
तथा द्रुपदपुत्राणां सर्वेषां भरतर्षभ
पाण्डवानां च सर्वेषां कुन्त्या युक्तानि यानि च ८
एवं सान्त्वसमायुक्तं द्रुपदं पाण्डवैः सह
उक्त्वाथानन्तरं ब्रूयात्तेषामागमनं प्रति ९
अनुज्ञातेषु वीरेषु बलं गच्छतु शोभनम्
दुःशासनो विकर्णश्च पाण्डवानानयन्त्विह १०
ततस्ते पार्थिवश्रेष्ठ पूज्यमानाः सदा त्वया
प्रकृतीनामनुमते पदे स्थास्यन्ति पैतृके ११
एवं तव महाराज तेषु पुत्रेषु चैव ह
वृत्तमौपयिकं मन्ये भीष्मेण सह भारत १२
कर्ण उवाच
योजितावर्थमानाभ्यां सर्वकार्येष्वनन्तरौ
न मन्त्रयेतां त्वच्छ्रेयः किमद्भुततरं ततः १३
दुष्टेन मनसा यो वै प्रच्छन्नेनान्तरात्मना
ब्रूयान्निःश्रेयसं नाम कथं कुर्यात्सतां मतम् १४
न मित्राण्यर्थकृच्छ्रेषु श्रेयसे वेतराय वा
विधिपूर्वं हि सर्वस्य दुःखं वा यदि वा सुखम् १५
कृतप्रज्ञोऽकृतप्रज्ञो बालो वृद्धश्च मानवः
ससहायोऽसहायश्च सर्वं सर्वत्र विन्दति १६

श्रूयते हि पुरा कश्चिदम्बुवीच इति श्रुतः
आसीद्राजगृहे राजा मागधानां महीक्षिताम् १७
स हीनः करणैः सर्वैरुच्छ्वासपरमो नृपः
अमात्यसंस्थः कार्येषु सर्वेष्वेवाभवत्तदा १८
तस्यामात्यो महाकर्णिर्बभूवैकेश्वरः पुरा
स लब्धबलमात्मानं मन्यमानोऽवमन्यते १९
स राज्ञ उपभोग्यानि स्त्रियो रत्नधनानि च
आददे सर्वशो मूढ एश्वर्यं च स्वयं तदा २०
तदादाय च लुब्धस्य लोभाल्लोभो व्यवर्धत
तथा हि सर्वमादाय राज्यमस्य जिहीर्षति २१
हीनस्य करणैः सर्वैरुच्छ्वासपरमस्य च
यतमानोऽपि तद्राज्यं न शशाकेति नः श्रुतम् २२
किमन्यद्विहितान्नूनं तस्य सा पुरुषेन्द्रता
यदि ते विहितं राज्यं भविष्यति विशां पते २३
मिषतः सर्वलोकस्य स्थास्यते त्वयि तद्ध्रुवम्
अतोऽन्यथा चेद्विहितं यतमानो न लप्स्यसे २४
एवं विद्वन्नुपादत्स्व मन्त्रिणां साध्वसाधुताम्
दुष्टानां चैव बोद्धव्यमदुष्टानां च भाषितम् २५
द्रोण उवाच
विद्म ते भावदोषेण यदर्थमिदमुच्यते
दुष्टः पाण्डवहेतोस्त्वं दोषं ख्यापयसे हि नः २६
हितं तु परमं कर्ण ब्रवीमि कुलवर्धनम्
अथ त्वं मन्यसे दुष्टं ब्रूहि यत्परमं हितम् २७
अतोऽन्यथा चेत्क्रियते यद्ब्रवीमि परं हितम्
कुरवो विनशिष्यन्ति नचिरेणेति मे मतिः २८
इति श्रीमहाभारते आदिपर्वणि षण्णवत्यधिकशततमोऽध्यायः १९६

## सप्तनवत्यधिक शततमोऽध्यायः

विदुर उवाच
राजन्निःसंशयं श्रेयो वाच्यस्त्वमसि बान्धवैः

न त्वशुश्रूषमाणेषु वाक्यं संप्रतितिष्ठति १
हितं हि तव तद्वाक्यमुक्तवान्कुरुसत्तमः
भीष्मः शान्तनवो राजन्प्रतिगृह्णासि तन्न च २
तथा द्रोणेन बहुधा भाषितं हितमुत्तमम्
तच्च राधासुतः कर्णो मन्यते न हितं तव ३
चिन्तयंश्च न पश्यामि राजंस्तव सुहृत्तमम्
आभ्यां पुरुषसिंहाभ्यां यो वा स्यात्प्रज्ञयाधिकः ४
इमौ हि वृद्धौ वयसा प्रज्ञया च श्रुतेन च
समौ च त्वयि राजेन्द्र तेषु पाण्डुसुतेषु च ५
धर्मे चानवमौ राजन्सत्यतायां च भारत
रामाद्दाशरथेश्चैव गयाच्चैव न संशयः ६
न चोक्तवन्तावश्रेयः पुरस्तादपि किंचन
न चाप्यपकृतं किंचिदनयोर्लक्ष्यते त्वयि ७
ताविमौ पुरुषव्याघ्रावनागसि नृप त्वयि
न मन्त्रयेतां त्वच्छ्रेयः कथं सत्यपराक्रमौ ८
प्रज्ञावन्तौ नरश्रेष्ठावस्मिँल्लोके नराधिप
त्वन्निमित्तमतो नेमौ किंचिज्जिह्मं वदिष्यतः
इति मे नैष्ठिकी बुद्धिर्वर्तते कुरुनन्दन ९
न चार्थहेतोर्धर्मज्ञौ वक्ष्यतः पक्षसंश्रितम्
एतद्धि परमं श्रेयो मेनाते तव भारत १०
दुर्योधनप्रभृतयः पुत्रा राजन्यथा तव
तथैव पाण्डवेयास्ते पुत्रा राजन्न संशयः ११
तेषु चेदहितं किंचिन्मन्त्रयेयुरबुद्धितः
मन्त्रिणस्ते न ते श्रेयः प्रपश्यन्ति विशेषतः १२
अथ ते हृदये राजन्विशेषस्तेषु वर्तते
अन्तरस्थं विवृण्वानाः श्रेयः कुर्युर्न ते ध्रुवम् १३
एतदर्थमिमौ राजन्महात्मानौ महाद्युती
नोचतुर्विवृतं किंचिन्न ह्येष तव निश्चयः १४
यच्चाप्यशक्यतां तेषामाहतुः पुरुषर्षभौ
तत्तथा पुरुषव्याघ्र तव तद्भद्रमस्तु ते १५

कथं हि पाण्डवः श्रीमान्सव्यसाची परंतपः
शक्यो विजेतुं संग्रामे राजन्मघवता अपि १६
भीमसेनो महाबाहुर्नागायुतबलो महान्
कथं स्म युधि शक्येत विजेतुममरैरपि १७
तथैव कृतिनौ युद्धे यमौ यमसुताविव
कथं विषहितुं शक्यौ रणे जीवितुमिच्छता १८
यस्मिन्धृतिरनुक्रोशः क्षमा सत्यं पराक्रमः
नित्यानि पाण्डवश्रेष्ठे स जीयेत कथं रणे १९
येषां पक्षधरो रामो येषां मन्त्री जनार्दनः
किं नु तैरजितं संख्ये येषां पक्षे च सात्यकिः २०
द्रुपदः श्वशुरो येषां येषां श्यालाश्च पार्षताः
धृष्टद्युम्नमुखा वीरा भ्रातरो द्रुपदात्मजाः २१
सोऽशक्यतां च विज्ञाय तेषामग्रेण भारत
दायाद्यतां च धर्मेण सम्यक्तेषु समाचर २२
इदं निर्दिग्धमयशः पुरोचनकृतं महत्
तेषामनुग्रहेणाद्य राजन्प्रक्षालयात्मनः २३
द्रुपदोऽपि महान्राजा कृतवैरश्च नः पुरा
तस्य संग्रहणं राजन्स्वपक्षस्य विवर्धनम् २४
बलवन्तश्च दाशार्हा बहवश्च विशां पते
यतः कृष्णस्ततस्ते स्युर्यतः कृष्णस्ततो जयः २५
यच्च साम्नैव शक्येत कार्यं साधयितुं नृप
को दैवशप्तस्तत्कर्तुं विग्रहेण समाचरेत् २६
श्रुत्वा च जीवतः पार्थान्पौरजानपदो जनः
बलवद्दर्शने गृध्नुस्तेषां राजन्कुरु प्रियम् २७
दुर्योधनश्च कर्णश्च शकुनिश्चापि सौबलः
अधर्मयुक्ता दुष्प्रज्ञा बाला मैषां वचः कृथाः २८
उक्तमेतन्मया राजन्पुरा गुणवतस्तव
दुर्योधनापराधेन प्रजेयं विनशिष्यति २९

इति श्रीमहाभारते आदिपर्वणि सप्तनवत्यधिकशततमोऽध्यायः १९७

## अष्टनवत्यधिक शततमोऽध्यायः

धृतराष्ट्र उवाच
भीष्मः शान्तनवो विद्वान्द्रोणश्च भगवानृषिः
हितं परमकं वाक्यं त्वं च सत्यं ब्रवीषि माम् १
यथैव पाण्डोस्ते वीराः कुन्तीपुत्रा महारथाः
तथैव धर्मतः सर्वे मम पुत्रा न संशयः २
यथैव मम पुत्राणामिदं राज्यं विधीयते
तथैव पाण्डुपुत्राणामिदं राज्यं न संशयः ३
क्षत्तरानय गच्छैतान्सह मात्रा सुसत्कृतान्
तया च देवरूपिण्या कृष्णया सह भारत ४
दिष्ट्या जीवन्ति ते पार्था दिष्ट्या जीवति सा पृथा
दिष्ट्या द्रुपदकन्यां च लब्धवन्तो महारथाः ५
दिष्ट्या वर्धामहे सर्वे दिष्ट्या शान्तः पुरोचनः
दिष्ट्या मम परं दुःखमपनीतं महाद्युते ६
वैशम्पायन उवाच
ततो जगाम विदुरो धृतराष्ट्रस्य शासनात्
सकाशं यज्ञसेनस्य पाण्डवानां च भारत ७
तत्र गत्वा स धर्मज्ञः सर्वशास्त्रविशारदः
द्रुपदं न्यायतो राजन्संयुक्तमुपतस्थिवान् ८
स चापि प्रतिजग्राह धर्मेण विदुरं ततः
चक्रतुश्च यथान्यायं कुशलप्रश्नसंविदम् ९
ददर्श पाण्डवांस्तत्र वासुदेवं च भारत
स्नेहात्परिष्वज्य स तान्पप्रच्छानामयं ततः १०
तैश्चाप्यमितबुद्धिः स पूजितोऽथ यथाक्रमम्
वचनाद्धृतराष्ट्रस्य स्नेहयुक्तं पुनः पुनः ११
पप्रच्छानामयं राजंस्ततस्तान्पाण्डुनन्दनान्
प्रददौ चापि रत्नानि विविधानि वसूनि च १२
पाण्डवानां च कुन्त्याश्च द्रौपद्याश्च विशां पते
द्रुपदस्य च पुत्राणां यथा दत्तानि कौरवैः १३
प्रोवाच चामितमतिः प्रश्रितं विनयान्वितः

द्रुपदं पाण्डुपुत्राणां संनिधौ केशवस्य च १४
राजञ्शृणु सहामात्यः सपुत्रश्च वचो मम
धृतराष्ट्रः सपुत्रस्त्वां सहामात्यः सबान्धवः १५
अब्रवीत्कुशलं राजन्प्रीयमाणः पुनः पुनः
प्रीतिमांस्ते दृढं चापि संबन्धेन नराधिप १६
तथा भीष्मः शान्तनवः कौरवैः सह सर्वशः
कुशलं त्वां महाप्राज्ञः सर्वतः परिपृच्छति १७
भारद्वाजो महेष्वासो द्रोणः प्रियसखस्तव
समाश्लेषमुपेत्य त्वां कुशलं परिपृच्छति १८
धृतराष्ट्रश्च पाञ्चाल्य त्वया संबन्धमीयिवान्
कृतार्थं मन्यतेऽत्मानं तथा सर्वेऽपि कौरवाः १९
न तथा राज्यसंप्राप्तिस्तेषां प्रीतिकरी मता
यथा संबन्धकं प्राप्य यज्ञसेन त्वया सह २०
एतद्विदित्वा तु भवान्प्रस्थापयतु पाण्डवान्
द्रष्टुं हि पाण्डुदायादांस्त्वरन्ते कुरवो भृशम् २१
विप्रोषिता दीर्घकालमिमे चापि नरर्षभाः
उत्सुका नगरं द्रष्टुं भविष्यन्ति पृथा तथा २२
कृष्णामपि च पाञ्चालद्यं सर्वाः कुरुवरस्त्रियः
द्रष्टुकामाः प्रतीक्षन्ते परं च विषयं च नः २३
स भवान्पाण्डुपुत्राणामाज्ञापयतु माचिरम्
गमनं सहदाराणामेतदागमनं मम २४
विसृष्टेषु त्वया राजन्पाण्डवेषु महात्मसु
ततोऽह प्रेषयिष्यामि धृतराष्ट्रस्य शीघ्रगान्
आगमिष्यन्ति कौन्तेयाः कुन्ती च सह कृष्णया २५
इति श्रीमहाभारते आदिपर्वणि अष्टनवत्यधिकशततमोऽध्यायः १९८

एकोनद्विशततमोऽध्यायः

द्रुपद उवाच
एवमेतन्महाप्राज्ञ यथात्थ विदुराद्य माम्
ममापि परमो हर्षः संबन्धेऽस्मिन्कृते विभो १

गमनं चापि युक्तं स्याद्गृहमेषां महात्मनाम्
न तु तावन्मया युक्तमेतद्वक्तुं स्वयं गिरा २
यदा तु मन्यते वीरः कुन्तीपुत्रो युधिष्ठिरः
भीमसेनार्जुनौ चैव यमौ च पुरुषर्षभौ ३
रामकृष्णौ च धर्मज्ञौ तदा गच्छन्तु पाण्डवाः
एतौ हि पुरुषव्याघ्रावेषां प्रियहिते रतौ ४
युधिष्ठिर उवाच
परवन्तो वयं राजंस्त्वयि सर्वे सहानुगाः
यथा वक्ष्यसि नः प्रीत्या करिष्यामस्तथा वयम् ५
वैशम्पायन उवाच
ततोऽब्रवीद्वासुदेवो गमनं मम रोचते
यथा वा मन्यते राजा द्रुपदः सर्वधर्मवित् ६
द्रुपद उवाच
यथैव मन्यते वीरो दाशार्हः पुरुषोत्तमः
प्राप्तकालं महाबाहुः सा बुद्धिर्निश्चिता मम ७
यथैव हि महाभागाः कौन्तेया मम सांप्रतम्
तथैव वासुदेवस्य पाण्डुपुत्रा न संशयः ८
न तद्ध्यायति कौन्तेयो धर्मपुत्रो युधिष्ठिरः
यदेषां पुरुषव्याघ्रः श्रेयो ध्यायति केशवः ९
वैशम्पायन उवाच
ततस्ते समनुज्ञाता द्रुपदेन महात्मना
पाण्डवाश्चैव कृष्णश्च विदुरश्च महामतिः १०
आदाय द्रौपदीं कृष्णां कुन्तीं चैव यशस्विनीम्
सविहारं सुखं जग्मुर्नगरं नागसाह्वयम् ११
श्रुत्वा चोपस्थितान्वीरान्धृतराष्ट्रोऽपि कौरवः
प्रतिग्रहाय पाण्डूनां प्रेषयामास कौरवान् १२
विकर्णं च महेष्वासं चित्रसेनं च भारत
द्रोणं च परमेष्वासं गौतमं कृपमेव च १३
तैस्ते परिवृता वीराः शोभमाना महारथाः
नगरं हास्तिनपुरं शनैः प्रविविशुस्तदा १४

कौतूहलेन नगरं दीर्यमाणमिवाभवत्
यत्र ते पुरुषव्याघ्राः शोकदुःखविनाशनाः १५
तत उच्चावचा वाचः प्रियाः प्रियचिकीर्षुभिः
उदीरिता अशृणवंस्ते पाण्डवा हृदयंगमाः १६
अयं स पुरुषव्याघ्रः पुनरायाति धर्मवित्
यो नः स्वानिव दायादान्धर्मेण परिरक्षति १७
अद्य पाण्डुर्महाराजो वनादिव वनप्रियः
आगतः प्रियमस्माकं चिकीर्षुर्नात्र संशयः १८
किं नु नाद्य कृतं तावत्सर्वेषां नः परं प्रियम्
यन्नः कुन्तीसुता वीरा भर्तारः पुनरागताः १९
यदि दत्तं यदि हुतं विद्यते यदि नस्तपः
तेन तिष्ठन्तु नगरे पाण्डवाः शरदां शतम् २०
ततस्ते धृतराष्ट्रस्य भीष्मस्य च महात्मनः
अन्येषां च तदर्हाणां चक्रुः पादाभिवन्दनम् २१
कृत्वा तु कुशलप्रश्नं सर्वेण नगरेण ते
समाविशन्त वेश्मानि धृतराष्ट्रस्य शासनात् २२
विश्रान्तास्ते महात्मानः कंचित्कालं महाबलाः
आहूता धृतराष्ट्रेण राज्ञा शान्तनवेन च २३
धृतराष्ट्र उवाच
भ्रातृभिः सह कौन्तेय निबोधेदं वचो मम
पुनर्वो विग्रहो मा भूत्खाण्डवप्रस्थमाविश २४
न च वो वसतस्तत्र कश्चिच्छक्तः प्रबाधितुम्
संरक्ष्यमाणान्पार्थेन त्रिदशानिव वज्रिणा
अर्धं राज्यस्य संप्राप्य खाण्डवप्रस्थमाविश २५
वैशम्पायन उवाच
प्रतिगृह्य तु तद्वाक्यं नृपं सर्वे प्रणम्य च
प्रतस्थिरे ततो घोरं वनं तन्मनुजर्षभाः
अर्धं राज्यस्य संप्राप्य खाण्डवप्रस्थमाविशन् २६
ततस्ते पाण्डवास्तत्र गत्वा कृष्णपुरोगमाः
मण्डयांचक्रिरे तद्वै पुरं स्वर्गवदच्युताः २७

ततः पुण्ये शिवे देशे शान्तिं कृत्वा महारथाः
नगरं मापयामासुर्द्वैपायनपुरोगमाः २८
सागरप्रतिरूपाभिः परिखाभिरलंकृतम्
प्राकारेण च संपन्नं दिवमावृत्य तिष्ठता २९
पाण्डुराभ्रप्रकाशेन हिमराशिनिभेन च
शुशुभे तत्पुरश्रेष्ठं नागैर्भोगवती यथा ३०
द्विपक्षगरुडप्रख्यैर्द्वारैर्घोरप्रदर्शनैः
गुप्तमभ्रचयप्रख्यैर्गोपुरैर्मन्दरोपमैः ३१
विविधैरतिनिर्विद्धैः शस्त्रोपेतैः सुसंवृतैः
शक्तिभिश्चावृतं तद्धि द्विजिह्वैरिव पन्नगैः
तल्पैश्चाभ्यासिकैर्युक्तं शुशुभे योधरक्षितम् ३२
तीक्ष्णाङ्कुशशतघ्नीभिर्यन्त्रजालैश्च शोभितम्
आयसैश्च महाचक्रैः शुशुभे तत्पुरोत्तमम् ३३
सुविभक्तमहारथ्यं देवताबाधवर्जितम्
विरोचमानं विविधैः पाण्डुरैर्भवनोत्तमैः ३४
तत्त्रिविष्टपसंकाशमिन्द्रप्रस्थं व्यरोचत
मेघवृन्दमिवाकाशे वृद्धं विद्युत्समावृतम् ३५
तत्र रम्ये शुभे देशे कौरव्यस्य निवेशनम्
शुशुभे धनसंपूर्णं धनाध्यक्षक्षयोपमम् ३६
तत्रागच्छन्द्विजा राजन्सर्ववेदविदां वराः
निवासं रोचयन्ति स्म सर्वभाषाविदस्तथा ३७
वणिजश्चाभ्ययुस्तत्र देशे दिग्भ्यो धनार्थिनः
सर्वशिल्पविदश्चैव वासायाभ्यागमंस्तदा ३८
उद्यानानि च रम्याणि नगरस्य समन्ततः
आम्रैराम्रातकैर्नीपैरशोकैश्चम्पकैस्तथा ३९
पुंनागैर्नागपुष्पैश्च लकुचैः पनसैस्तथा
शालतालकदम्बैश्च बकुलैश्च सकेतकैः ४०
मनोहरैः पुष्पितैश्च फलभारावनामितैः
प्राचीनामलकैर्लोध्रैरङ्कोलैश्च सुपुष्पितैः ४१
जम्बूभिः पाटलाभिश्च कुब्जकैरतिमुक्तकैः

करवीरैः पारिजातैरन्यैश्च विविधैर्द्रुमैः ४२
नित्यपुष्पफलोपैतैर्नानाद्विजगणायुतम्
मत्तबर्हिणसंघुष्टं कोकिलैश्च सदामदैः ४३
गृहैरादर्शविमलैर्विविधैश्च लतागृहैः
मनोहरैश्चित्रगृहैस्तथा जगतिपर्वतैः
वापीभिर्विविधाभिश्च पूर्णाभिः परमाम्भसा ४४
सरोभिरतिरम्यैश्च पद्मोत्पलसुगन्धिभिः
हंसकारण्डवयुतैश्चक्रवाकोपशोभितैः ४५
रम्याश्च विविधास्तत्र पुष्करिण्यो वनावृताः
तडागानि च रम्याणि बृहन्ति च महान्ति च ४६
तेषां पुण्यजनोपेतं राष्ट्रमावसतां महत्
पाण्डवानां महाराज शश्वत्प्रीतिरवर्धत ४७
तत्र भीष्मेण राज्ञा च धर्मप्रणयने कृते
पाण्डवाः समपद्यन्त खाण्डवप्रस्थवासिनः ४८
पञ्चभिस्तैर्महेष्वासैरिन्द्रकल्पैः समन्वितम्
शुशुभे तत्पुरश्रेष्ठं नागैर्भोगवती यथा ४९
तान्निवेश्य ततो वीरो रामेण सह केशवः
ययौ द्वारवतीं राजन्पाण्डवानुमते तदा ५०
इति श्रीमहाभारते आदिपर्वणि एकोनद्विशततमोऽध्यायः १९९

द्विशततमोऽध्यायः

जनमेजय उवाच
एवं संप्राप्य राज्यं तदिन्द्रप्रस्थे तपोधन
अत ऊर्ध्वं महात्मानः किमकुमर्वन्त पाण्डवाः १
सर्व एव महात्मानः पूर्वे मम पितामहाः
द्रौपदी धर्मपत्नी च कथं तानन्ववर्तत २
कथं वा पञ्च कृष्णायामेकस्यां ते नराधिपाः
वर्तमाना महाभागा नाभिद्यन्त परस्परम् ३
श्रोतुमिच्छाम्यहं सर्वं विस्तरेण तपोधन
तेषां चेष्टितमन्योन्यं युक्तानां कृष्णया तया ४

वैशम्पायन उवाच
धृतराष्ट्राभ्यनुज्ञाताः कृष्णया सह पाण्डवाः
रेमिरे पुरुषव्याघ्राः प्राप्तराज्याः परंतपाः ५
प्राप्य राज्यं महातेजाः सत्यसन्धो युधिष्ठिरः
पालयामास धर्मेण पृथिवीं भ्रातृभिः सह ६
जितारयो महाप्राज्ञाः सत्यधर्मपरायणाः
मुदं परमिकां प्राप्तास्तत्रोषुः पाण्डुनन्दनाः ७
कुर्वाणाः पौरकार्याणि सर्वाणि पुरुषर्षभाः
आसांचक्रुर्महार्हेषु पार्थिवेष्वासनेषु च ८
अथ तेषूपविष्टेषु सर्वेष्वेव महात्मसु
नारदस्त्वथ देवर्षिराजगाम यदृच्छया
आसनं रुचिरं तस्मै प्रददौ स्वं युधिष्ठिरः ९
देवर्षेरुपविष्टस्य स्वयमर्घ्यं यथाविधि
प्रादाद्युधिष्ठिरो धीमान्राज्यं चास्मै न्यवेदयत् १०
प्रतिगृह्य तु तां पूजामृषिः प्रीतमनाभवत्
आशीर्भिर्वर्धयित्वा च तमुवाचास्यतामिति ११
निषसादाभ्यनुज्ञातस्ततो राजा युधिष्ठिरः
प्रेषयामास कृष्णायै भगवन्तमुपस्थितम् १२
श्रुत्वैव द्रौपदी चापि शुचिर्भूत्वा समाहिता
जगाम तत्र यत्रास्ते नारदः पाण्डवैः सह १३
तस्याभिवाद्य चरणौ देवर्षेर्धर्मचारिणी
कृताञ्जलि सुसंवीता स्थिताथ द्रुपदात्मजा १४
तस्याश्चापि स धर्मात्मा सत्यवागृषिसत्तमः
आशिषो विविधाः प्रोच्य राजपुत्र्यास्तु नारदः
गम्यतामिति होवाच भगवांस्तामनिन्दिताम् १५
गतायामथ कृष्णायां युधिष्ठिरपुरोगमान्
विविक्ते पाण्डवान्सर्वानुवाच भगवानृषिः १६
पाञ्चाली भवतामेका धर्मपत्नी यशस्विनी
यथा वो नात्र भेदः स्यात्तथा नीतिर्विधीयताम् १७
सुन्दोपसुन्दावसुरौ भ्रातरौ सहितावुभौ

आस्तामवध्यावन्येषां त्रिषु लोकेषु विश्रुतौ १८
एकराज्यावेकगृहावेकशय्यासनाशनौ
तिलोत्तमायास्तौ हेतोरन्योन्यमभिजघ्नतुः १९
रक्ष्यतां सौहृदं तस्मादन्योन्यप्रतिभाविकम्
यथा वो नात्र भेदः स्यात्तत्कुरुष्व युधिष्ठिर २०
युधिष्ठिर उवाच
सुन्दोपसुन्दावसुरौ कस्य पुत्रौ महामुने
उत्पन्नश्च कथं भेदः कथं चान्योन्यमघ्नताम् २१
अप्सरा देवकन्या वा कस्य चैषा तिलोत्तमा
यस्याः कामेन संमत्तौ जघ्नतुस्तौ परस्परम् २२
एतत्सर्वं यथावृत्तं विस्तरेण तपोधन
श्रोतुमिच्छामहे विप्र परं कौतूहलं हि नः २३
इति श्रीमहाभारते आदिपर्वणि द्विशततमोऽध्यायः २००६४४८

## एकाधिक द्विशततमोऽध्यायः

नारद उवाच
शृणु मे विस्तरेणेममितिहासं पुरातनम्
भ्रातृभिः सहितः पार्थ यथावृत्तं युधिष्ठिर १
महासुरस्यान्ववाये हिरण्यकशिपोः पुरा
निकुम्भो नाम दैत्येन्द्रस्तेजस्वी बलवानभूत् २
तस्य पुत्रौ महावीर्यौ जातौ भीमपराक्रमौ
सहान्योन्येन भुञ्जाते विनान्योन्यं न गच्छतः ३
अन्योन्यस्य प्रियकरावन्योन्यस्य प्रियंवदौ
एकशीलसमाचारौ द्विधैवैकं यथा कृतौ ४
तौ विवृद्धौ महावीर्यौ कार्येष्वप्येकनिश्चयौ
त्रैलोक्यविजयार्थाय समास्थायैकनिश्चयम् ५
कृत्वा दीक्षां गतौ विन्ध्यं तत्रोग्रं तेपतुस्तपः
तौ तु दीर्घेण कालेन तपोयुक्तौ बभूवतुः ६
क्षुत्पिपासापरिश्रान्तौ जटावल्कलधारिणौ
मलोपचितसर्वाङ्गौ वायुभक्षौ बभूवतुः ७

आत्ममांसानि जुह्वन्तौ पादाङ्गुष्ठाग्रधिष्ठितौ
ऊर्ध्वबाहू चानिमिषौ दीर्घकालं धृतव्रतौ ८
तयोस्तपःप्रभावेण दीर्घकालं प्रतापितः
धूमं प्रमुमुचे विन्ध्यस्तदद्भुतमिवाभवत् ९
ततो देवाभवन्भीता उग्रं दृष्ट्वा तयोस्तपः
तपोविघातार्थमथो देवा विघ्नानि चक्रिरे १०
रत्नैः प्रलोभयामासुः स्त्रीभिश्चोभौ पुनः पुनः
न च तौ चक्रतुर्भङ्गं व्रतस्य सुमहाव्रतौ ११
अथ मायां पुनर्देवास्तयोश्चक्रुर्महात्मनोः
भगिन्यो मातरो भार्यास्तयोः परिजनस्तथा १२
परिपात्यमाना वित्रस्ताः शूलहस्तेन रक्षसा
स्रस्ताभरणकेशान्ता एकान्तभ्रष्टवाससः १३
अभिधाव्य ततः सर्वास्तौ त्राहीति विचुक्रुशुः
न च तौ चक्रतुर्भङ्गं व्रतस्य सुमहाव्रतौ १४
यदा क्षोभं नोपयाति नार्तिमन्यतरस्तयोः
ततः स्त्रियस्ता भूतं च सर्वमन्तरधीयत १५
ततः पितामहः साक्षादभिगम्य महासुरौ
वरेण छन्दयामास सर्वलोकपितामहः १६
ततः सुन्दोपसुन्दौ तौ भ्रातरौ दृढविक्रमौ
दृष्ट्वा पितामहं देवं तस्थतुः प्राञ्जली तदा १७
ऊचतुश्च प्रभुं देवं ततस्तौ सहितौ तदा
आवयोस्तपसानेन यदि प्रीतः पितामहः १८
मायाविदावस्त्रविदौ बलिनौ कामरूपिणौ
उभावप्यमरौ स्यावः प्रसन्नो यदि नौ प्रभुः १९
पितामह उवाच
ऋतेऽमरत्वमन्यद्वां सर्वमुक्तं भविष्यति
अन्यद्वृणीतां मृत्योश्च विधानममरैः समम् २०
करिष्यावेदमिति यन्महदभ्युत्थितं तपः
युवयोर्हेतुनानेन नामरत्वं विधीयते २१
त्रैलोक्यविजयार्थाय भवद्भ्यामास्थितं तपः

हेतुनानेन दैत्येन्द्रौ न वां कामं करोम्यहम् २२
सुन्दोपसुन्दावूचतुः
त्रिषु लोकेषु यद्भूतं किंचित्स्थावरजङ्गम्
सर्वस्मान्नौ भयं न स्यादृतेऽन्योन्यं पितामह २३
पितामह उवाच
यत्प्रार्थितं यथोक्तं च काममेतद्ददानि वाम्
मृत्योर्विधानमेतच्च यथावद्वां भविष्यति २४
नारद उवाच
ततः पितामहो दत्त्वा वरमेतत्तदा तयोः
निवर्त्य तपसस्तौ च ब्रह्मलोकं जगाम ह २५
लब्ध्वा वराणि सर्वाणि दैत्येन्द्रावपि तावुभौ
अवध्यौ सर्वलोकस्य स्वमेव भवनं गतौ २६
तौ तु लब्धवरौ दृष्ट्वा कृतकामौ महासुरौ
सर्वः सुहृज्जनस्ताभ्यां प्रमोदमुपजग्मिवान् २७
ततस्तौ तु जटां हित्वा मौलिनौ संबभूवतुः
महार्हाभरणोपेतौ विरजोम्बरधारिणौ २८
अकालकौमुदीं चैव चक्रतुः सार्वकामिकीम्
दैत्येन्द्रौ परमप्रीतौ तयोश्चैव सुहृज्जनः २९
भक्ष्यतां भुज्यतां नित्यं रम्यतां गीयतामिति
पीयतां दीयतां चेति वाच आसन्गृहे गृहे ३०
तत्र तत्र महापानैरुत्कृष्टतलनादितैः
हृष्टं प्रमुदितं सर्वं दैत्यानामभवत्पुरम् ३१
तैस्तैर्विहारैर्बहुभिर्दैत्यानां कामरूपिणाम्
समाः संक्रीडतां तेषामहरेकमिवाभवत् ३२
इति श्रीमहाभारते आदिपर्वणि एकाधिकद्विशततमोऽध्यायः २०१

## द्व्यधिकद्विशततमोऽध्यायः

नारद उवाच
उत्सवे वृत्तमात्रे तु त्रैलोक्याकाङ्क्षिणावुभौ
मन्त्रयित्वा ततः सेनां तावाज्ञापयतां तदा १

सुहृद्भिरभ्यनुज्ञातौ दैत्यवृद्धैश्च मन्त्रिभिः
कृत्वा प्रास्थानिकं रात्रौ मघासु ययतुस्तदा २
गदापट्टिशधारिण्या शूलमुद्गरहस्तया
प्रस्थितौ सहधर्मिण्या महत्या दैत्यसेनया ३
मङ्गलैः स्तुतिभिश्चापि विजयप्रतिसंहितैः
चारणैः स्तूयमानौ तु जग्मतुः परया मुदा ४
तावन्तरिक्षमुत्पत्य दैत्यौ कामगमावुभौ
देवानामेव भवनं जग्मतुर्युद्धदुर्मदौ ५
तयोरागमनं ज्ञात्वा वरदानं च तत्प्रभोः
हित्वा त्रिविष्टपं जग्मुर्ब्रह्मलोकं ततः सुराः ६
ताविन्द्रलोकं निर्जित्य यक्षरक्षोगणांस्तथा
खेचराण्यपि भूतानि जिग्यतुस्तीव्रविक्रमौ ७
अन्तर्भूमिगतान्नागाञ्जित्वा तौ च महासुरौ
समुद्रवासिनः सर्वान्म्लेच्छजातीन्विजिग्यतुः ८
ततः सर्वां महीं जेतुमारब्धावुग्रशासनौ
सैनिकांश्च समाहूय सुतीक्ष्णां वाचमूचतुः ९
राजर्षयो महायज्ञैर्हव्यकव्यैर्द्विजातयः
तेजो बलं च देवानां वर्धयन्ति श्रियं तथा १०
तेषामेवं प्रवृद्धानां सर्वेषामसुरद्विषाम्
संभूय सर्वैरस्माभिः कार्यः सर्वात्मना वधः ११
एवं सर्वान्समादिश्य पूर्वतीरे महोदधेः
क्रूरां मतिं समास्थाय जग्मतुः सर्वतोमुखम् १२
यज्ञैर्यजन्ते ये केचिद्याजयन्ति च ये द्विजाः
तान्सर्वान्प्रसभं दृष्ट्वा बलिनौ जघ्नतुस्तदा १३
आश्रमेष्वग्निहोत्राणि ऋषीणां भावितात्मनाम्
गृहीत्वा प्रक्षिपन्त्यप्सु विश्रब्धाः सैनिकास्तयोः १४
तपोधनैश्च ये शापाः क्रुद्धैरुक्ता महात्मभिः
नाक्रामन्ति तयोस्तेऽपि वरदानेन जृम्भतोः १५
नाक्रामन्ति यदा शापा बाणा मुक्ताः शिलास्विव
नियमांस्तदा परित्यज्य व्यद्रवन्त द्विजातयः १६

पृथिव्यां ये तपःसिद्धा दान्ताः शमपरायणाः
तयोर्भयादुद्द्रुवुस्ते वैनतेयादिवोरगाः १७
मथितैराश्रमैर्भग्नैर्विकीर्णकलशस्रुवैः
शून्यमासीज्जगत्सर्वं कालेनेव हतं यथा १८
राजर्षिभिरदृश्यद्भिर्ऋषिभिश्च महासुरौ
उभौ विनिश्चयं कृत्वा विकुर्वाते वधैषिणौ १९
प्रभिन्नकरटौ मत्तौ भूत्वा कुञ्जररूपिणौ
संलीनानपि दुर्गेषु निन्यतुर्यमसादनम् २०
सिंहौ भूत्वा पुनर्व्याघ्रौ पुनश्चान्तर्हितावुभौ
तैस्तैरुपायैस्तौ क्रूरावृषीन्दृष्ट्वा निजघ्नतुः २१
निवृत्तयज्ञस्वाध्याया प्रणष्टनृपतिद्विजा
उत्सन्नोत्सवयज्ञा च बभूव वसुधा तदा २२
हाहाभूता भयार्ता च निवृत्तविपणापणा
निवृत्तदेवकार्या च पुण्योद्वाहविवर्जिता २३
निवृत्तकृषिगोरक्षा विध्वस्तनगराश्रमा
अस्थिकङ्कालसंकीर्णा भूर्बभूवोग्रदर्शना २४
निवृत्तपितृकार्यं च निर्वषट्कारमङ्गलम्
जगत्प्रतिभयाकारं दुष्प्रेक्ष्यमभवत्तदा २५
चन्द्रादित्यौ ग्रहास्तारा नक्षत्राणि दिवौकसः
जग्मुर्विषादं तत्कर्म दृष्ट्वा सुन्दोपसुन्दयोः २६
एवं सर्वा दिशो दैत्यौ जित्वा क्रूरेण कर्मणा
निःसपत्नौ कुरुक्षेत्रे निवेशमभिचक्रतुः २७
इति श्रीमहाभारते आदिपर्वणि द्व्यधिकद्विशततमोऽध्यायः २०२

## त्र्यधिकद्विशततमोऽध्यायः

नारद उवाच
ततो देवर्षयः सर्वे सिद्धाश्च परमर्षयः
जग्मुस्तदा परामार्तिं दृष्ट्वा तत्कदनं महत् १
तेऽभिजग्मुर्जितक्रोधा जितात्मानो जितेन्द्रियाः
पितामहस्य भवनं जगतः कृपया तदा २

ततो ददृशुरासीनं सह देवैः पितामहम्
सिद्धैर्ब्रह्मर्षिभिश्चैव समन्तात्परिवारितम् ३
तत्र देवो महादेवस्तत्राग्निर्वायुना सह
चन्द्रादित्यौ च धर्मश्च परमेष्ठी तथा बुधः ४
वैखानसा वालखिल्या वानप्रस्था मरीचिपाः
अजाश्चैवाविमूढाश्च तेजोगर्भास्तपस्विनः
ऋषयः सर्व एवैते पितामहमुपासते ५
ततोऽभिगम्य सहिताः सर्व एव महर्षयः
सुन्दोपसुन्दयोः कर्म सर्वमेव शशंसिरे ६
यथाकृतं यथा चैव कृतं येन क्रमेण च
न्यवेदयंस्ततः सर्वमखिलेन पितामहे ७
ततो देवगणाः सर्वे ते चैव परमर्षयः
तमेवार्थं पुरस्कृत्य पितामहमचोदयन् ८
ततः पितामहः श्रुत्वा सर्वेषां तद्वचस्तदा
मुहूर्तमिव संचिन्त्य कर्तव्यस्य विनिश्चयम् ९
तयोर्वधं समुद्दिश्य विश्वकर्माणमाह्वयत्
दृष्ट्वा च विश्वकर्माणं व्यादिदेश पितामहः
सृज्यतां प्रार्थनीयेह प्रमदेति महातपाः १०
पितामहं नमस्कृत्य तद्वाक्यमभिनन्द्य च
निर्ममे योषितं दिव्यां चिन्तयित्वा प्रयत्नतः ११
त्रिषु लोकेषु यत्किंचिद्भूतं स्थावरजङ्गमम्
समानयद्दर्शनीयं तत्तद्यत्नात्ततस्ततः १२
कोटिशश्चापि रत्नानि तस्या गात्रे न्यवेशयत्
तां रत्नसंघातमयीमसृजद्देवरूपिणीम् १३
सा प्रयत्नेन महता निर्मिता विश्वकर्मणा
त्रिषु लोकेषु नारीणां रूपेणाप्रतिमाभवत् १४
न तस्याः सूक्ष्ममप्यस्ति यद्गात्रे रूपसंपदा
न युक्तं यत्र वा दृष्टिर्न सज्जति निरीक्षताम् १५
सा विग्रहवतीव श्रीः कान्तरूपा वपुष्मती
जहार सर्वभूतानां चक्षूंषि च मनांसि च १६

तिलं तिलं समानीय रत्नानां यद्विनिर्मिता
तिलोत्तमेत्यतस्तस्या नाम चक्रे पितामहः १७
पितामह उवाच
गच्छ सुन्दोपसुन्दाभ्यामसुराभ्यां तिलोत्तमे
प्रार्थनीयेन रूपेण कुरु भद्रे प्रलोभनम् १८
त्वत्कृते दर्शनादेव रूपसंपत्कृतेन वै
विरोधः स्याद्यथा ताभ्यामन्योन्येन तथा कुरु १९
नारद उवाच
सा तथेति प्रतिज्ञाय नमस्कृत्य पितामहम्
चकार मण्डलं तत्र विबुधानां प्रदक्षिणम् २०
प्राङ्मुखो भगवानास्ते दक्षिणेन महेश्वरः
देवाश्चैवोत्तरेणासन्सर्वतस्त्वृषयोऽभवन् २१
कुर्वन्त्या तु तया तत्र मण्डलं तत्प्रदक्षिणम्
इन्द्रः स्थाणुश्च भगवान्धैर्येण प्रत्यवस्थितौ २२
द्रष्टुकामस्य चात्यर्थं गतायाः पार्श्वतस्तदा
अन्यदञ्चितपक्ष्मान्तं दक्षिणं निःसृतं मुखम् २३
पृष्ठतः परिवर्तन्त्याः पश्चिमं निःसृतं मुखम्
गतायाश्चोत्तरं पार्श्वमुत्तरं निःसृतं मुखम् २४
महेद्रस्यापि नेत्राणां पार्श्वतः पृष्ठतोऽग्रतः
रक्तान्तानां विशालानां सहस्रं सर्वतोऽभवत् २५
एवं चतुर्मुखः स्थाणुर्महादेवोऽभवत्पुरा
तथा सहस्रनेत्रश्च बभूव बलसूदनः २६
तथा देवनिकायानामृषीणां चैव सर्वशः
मुखान्यभिप्रवर्तन्ते येन याति तिलोत्तमा २७
तस्या गात्रे निपतिता तेषां दृष्टिर्महात्मनाम्
सर्वेषामेव भूयिष्ठमृते देवं पितामहम् २८
गच्छन्त्यास्तु तया देवाः सर्वे च परमर्षयः
कृतमित्येव तत्कार्यं मेनिरे रूपसंपदा २९
तिलोत्तमायां तु तदा गतायां लोकभावनः
सर्वान्विसर्जयामास देवानृषिगणांश्च तान् ३०

इति श्रीमहाभारते आदिपर्वणि त्र्यधिकद्विशततमोऽध्यायः २०३

## चतुरधिकद्विशततमोऽध्यायः

नारद उवाच
जित्वा तु पृथिवीं दैत्यौ निःसपत्नौ गतव्यथौ
कृत्वा त्रैलोक्यमव्यग्रं कृतकृत्यौ बभूवतुः १
देवगन्धर्वयक्षाणां नागपार्थिवरक्षसाम्
आदाय सर्वरत्नानि परां तुष्टिमुपागतौ २
यदा न प्रतिषेद्धारस्तयोः सन्तीह केचन
निरुद्योगौ तदा भूत्वा विजह्रातेऽमराविव ३
स्त्रीभिर्माल्यैश्च गन्धैश्च भक्षैर्भोज्यैश्च पुष्कलैः
पानैश्च विविधैर्हृद्यैः परां प्रीतिमवापतुः ४
अन्तःपुरे वनोद्याने पर्वतोपवनेषु च
यथेप्सितेषु देशेषु विजह्रातेऽमराविव ५
ततः कदाचिद्विन्ध्यस्य पृष्ठे समशिलातले
पुष्पिताग्रेषु शालेषु विहारमभिजग्मतुः ६
दिव्येषु सर्वकामेषु समानीतेषु तत्र तौ
वरासनेषु संहृष्टौ सह स्त्रीभिर्निषेदतुः ७
ततो वादित्रनृत्ताभ्यामुपातिष्ठन्त तौ स्त्रियः
गीतैश्च स्तुतिसंयुक्तैः प्रीत्यर्थमुपजग्मिरे ८
ततस्तिलोत्तमा तत्र वने पुष्पाणि चिन्वती
वेषमाक्षिप्तमाधाय रक्तेनैकेन वाससा ९
नदीतीरेषु जातान्सा कर्णिकारान्विचिन्वती
शनैर्जगाम तं देशं यत्रास्तां तौ महासुरौ १०
तौ तु पीत्वा वरं पानं मदरक्तान्तलोचनौ
दृष्ट्वैव तां वरारोहां व्यथितौ संबभूवतुः ११
तावुत्पत्यासनं हित्वा जग्मतुर्यत्र सा स्थिता
उभौ च कामसंमत्तावुभौ प्रार्थयतश्च ताम् १२
दक्षिणे तां करे सुभ्रूं सुन्दो जग्राह पाणिना
उपसुन्दोऽपि जग्राह वामे पाणौ तिलोत्तमाम् १३

वरप्रदानमत्तौ तावौरसेन बलेन च
धनरत्नमदाभ्यां च सुरापानमदेन च १४
सर्वैरेतैर्मदैर्मत्तावन्योन्यं भ्रुकुटीकृतौ
मदकामसमाविष्टौ परस्परमथोचतुः १५
मम भार्या तव गुरुरिति सुन्दोऽभ्यभाषत
मम भार्या तव वधूरुपसुन्दोऽभ्यभाषत १६
नैषा तव ममैषेति ततस्तौ मन्युराविशत्
तस्या हेतोर्गदे भीमे तावुभावप्यगृह्णताम् १७
तौ प्रगृह्य गदे भीमे तस्याः कामेन मोहितौ
अहं पूर्वमहं पूर्वमित्यन्योन्यं निजघ्नतुः १८
तौ गदाभिहतौ भीमौ पेततुर्धरणीतले
रुधिरेणावलिप्ताङ्गौ द्वाविवार्कौ नभश्च्युतौ १९
ततस्ता विद्रुता नार्यः स च दैत्यगणस्तदा
पातालमगमत्सर्वो विषादभयकम्पितः २०
ततः पितामहस्तत्र सह देवैर्महर्षिभिः
आजगाम विशुद्धात्मा पूजयिष्यंस्तिलोत्तमाम् २१
वरेण छन्दिता सा तु ब्रह्मणा प्रीतिमेव ह
वरयामास तत्रैनां प्रीतः प्राह पितामहः २२
आदित्यचरिताँल्लोकान्विचरिष्यसि भामिनि
तेजसा च सुदृष्टां त्वां न करिष्यति कश्चन २३
एवं तस्मै वरं दत्त्वा सर्वलोकपितामहः
इन्द्रे त्रैलोक्यमाधाय ब्रह्मलोकं गतः प्रभुः २४
एवं तौ सहितौ भूत्वा सर्वर्थेष्वेकनिश्चयौ
तिलोत्तमार्थे संक्रुद्धावन्योन्यमभिजघ्नतुः २५
तस्माद्ब्रवीमि वः स्नेहात्सर्वान्भरतसत्तमान्
यथा वो नात्र भेदः स्यात्सर्वेषां द्रौपदीकृते
तथा कुरुत भद्रं वो मम चेत्प्रियमिच्छथ २६
वैशम्पायन उवाच
एवमुक्ता महात्मानो नारदेन महर्षिणा
समयं चक्रिरे राजंस्तेऽन्योन्येन समागताः

समक्षं तस्य देवर्षेर्नारदस्यामितौजसः २७
द्रौपद्या नः सहासीनमन्योन्यं योऽभिदर्शयेत्
स नो द्वादश वर्षाणि ब्रह्मचारी वने वसेत् २८
कृते तु समये तस्मिन्पाण्डवैर्धर्मचारिभिः
नारदोऽप्यगमत्प्रीत इष्टं देशं महामुनिः २९
एवं तैः समयः पूर्वं कृतो नारदचोदितैः
न चाभिद्यन्त ते सर्वे तदान्योन्येन भारत ३०
इति श्रीमहाभारते आदिपर्वणि चतुरधिकद्विशततमोऽध्यायः २०४

पञ्चाधिकद्विशततमोऽध्यायः

वैशम्पायन उवाच
एवं ते समयं कृत्वा न्यवसंस्तत्र पाण्डवाः
वशे शस्त्रप्रतापेन कुर्वन्तोऽन्यान्महीक्षितः १
तेषां मनुजसिंहानां पञ्चानाममितौजसाम्
बभूव कृष्णा सर्वेषां पार्थानां वशवर्तिनी २
ते तया तैश्च सा वीरैः पतिभिः सह पञ्चभिः
बभूव परमप्रीता नागैरिव सरस्वती ३
वर्तमानेषु धर्मेण पाण्डवेषु महात्मसु
व्यवर्धन्कुरवः सर्वे हीनदोषाः सुखान्विताः ४
अथ दीर्घेण कालेन ब्राह्मणस्य विशां पते
कस्यचित्तस्कराः केचिज्जह्रुर्गा नृपसत्तम ५
ह्रियमाणे धने तस्मिन्ब्राह्मणः क्रोधमूर्च्छितः
आगम्य खाण्डवप्रस्थमुदक्रोशत पाण्डवान् ६
ह्रियते गोधनं क्षुद्रैर्नृशंसैरकृतात्मभिः
प्रसह्य वोऽस्माद्विषयादभिधावत पाण्डवाः ७
ब्राह्मणस्य प्रमत्तस्य हविर्ध्वाङ्क्षैर्विलुप्यते
शार्दूलस्य गुहां शून्यां नीचः क्रोष्टाभिमर्शति ८
ब्राह्मणस्वे हृते चोरैर्धर्मार्थे च विलोपिते
रोरूयमाणे च मयि क्रियतामस्त्रधारणम् ९
रोरूयमाणस्याभ्याशे तस्य विप्रस्य पाण्डवः

तानि वाक्यानि शुश्राव कुन्तीपुत्रो धनञ्जयः १०
श्रुत्वा चैव महाबाहुर्मा भैरित्याह तं द्विजम्
आयुधानि च यत्रासन्पाण्डवानां महात्मनाम्
कृष्णया सह तत्रासीद्धर्मराजो युधिष्ठिरः ११
स प्रवेशाय चाशक्तो गमनाय च पाण्डवः
तस्य चार्तस्य तैर्वाक्यैश्चोद्यमानः पुनः पुनः
आक्रन्दे तत्र कौन्तेयश्चिन्तयामास दुःखितः १२
ह्रियमाणे धने तस्मिन्ब्राह्मणस्य तपस्विनः
अश्रुप्रमार्जनं तस्य कर्तव्यमिति निश्चितः १३
उपप्रेक्षणजोऽधर्मः सुमहान्स्यान्महीपतेः
यद्यस्य रुदतो द्वारि न करोम्यद्य रक्षणम् १४
अनास्तिक्यं च सर्वेषामस्माकमपि रक्षणे
प्रतितिष्ठेत लोकेऽस्मिन्नधर्मश्चैव नो भवेत् १५
अनाप्रच्छ्य च राजानं गते मयि न संशयः
अजातशत्रोर्नृपतेर्मम चैवाप्रियं भवेत् १६
अनुप्रवेशे राज्ञस्तु वनवासो भवेन्मम
अधर्मो वा महानस्तु वने वा मरणं मम
शरीरस्यापि नाशेन धर्म एव विशिष्यते १७
एवं विनिश्चित्य ततः कुन्तीपुत्रो धनञ्जयः
अनुप्रविश्य राजानमापृच्छ्य च विशां पते १८
धनुरादाय संहृष्टो ब्राह्मणं प्रत्यभाषत
ब्राह्मणागम्यतां शीघ्रं यावत्परधनैषिणः १९
न दूरे ते गताः क्षुद्रास्तावद्गच्छामहे सह
यावदावर्तयाम्यद्य चोरहस्ताद्धनं तव २०
सोऽनुसृत्य महाबाहुर्धन्वी वर्मी रथी ध्वजी
शरैर्विध्वंसितांश्चोरानवजित्य च तद्धनम् २१
ब्राह्मणस्य उपाहृत्य यशः पीत्वा च पाण्डवः
आजगाम पुरं वीरः सव्यसाची परंतपः २२
सोऽभिवाद्य गुरून्सर्वांस्तैश्चापि प्रतिनन्दितः
धर्मराजमुवाचेदं व्रतमादिश्यतां मम २३

समयः समतिक्रान्तो भवत्संदर्शनान्मया
वनवासं गमिष्यामि समयो ह्येष नः कृतः २४
इत्युक्तो धर्मराजस्तु सहसा वाक्यमप्रियम्
कथमित्यब्रवीद्वाचा शोकार्तः सज्जमानया
युधिष्ठिरो गुडाकेशं भ्राता भ्रातरमच्युतम् २५
प्रमाणमस्मि यदि ते मत्तः शृणु वचोऽनघ
अनुप्रवेशे यद्वीर कृतवांस्त्वं ममाप्रियम्
सर्वं तदनुजानामि व्यलीकं न च मे हृदि २६
गुरोरनुप्रवेशो हि नोपघातो यवीयसः
यवीयसोऽनुप्रवेशो ज्येष्ठस्य विधिलोपकः २७
निवर्तस्व महाबाहो कुरुष्व वचनं मम
न हि ते धर्मलोपोऽस्ति न च मे धर्षणा कृता २८
अर्जुन उवाच
न व्याजेन चरेद्धर्ममिति मे भवतः श्रुतम्
न सत्याद्विचलिष्यामि सत्येनायुधमालभे २९
वैशम्पायन उवाच
सोऽभ्यनुज्ञाप्य राजानं ब्रह्मचर्याय दीक्षितः
वने द्वादश वर्षाणि वासायोपजगाम ह ३०

इति श्रीमहाभारते आदिपर्वणि पञ्चाधिकद्विशततमोऽध्यायः २०५

## षडधिक द्विशततमोऽध्यायः

वैशम्पायन उवाच
तं प्रयान्तं महाबाहुं कौरवाणां यशस्करम्
अनुजग्मुर्महात्मानो ब्राह्मणा वेदपारगाः १
वेदवेदाङ्गविद्वांसस्तथैवाध्यात्मचिन्तकाः
चौक्षाश्च भगवद्भक्ताः सूताः पौराणिकाश्च ये २
कथकाश्चापरे राजञ्श्रमणाश्च वनौकसः
दिव्याख्यानानि ये चापि पठन्ति मधुरं द्विजाः ३
एतैश्चान्यैश्च बहुभिः सहायैः पाण्डुनन्दनः
वृतः श्लक्ष्णकथैः प्रायान्मरुद्भिरिव वासवः ४

रमणीयानि चित्राणि वनानि च सरांसि च
सरितः सागरांश्चैव देशानपि च भारत ५
पुण्यानि चैव तीर्थानि ददर्श भरतर्षभः
स गङ्गाद्वारमासाद्य निवेशमकरोत्प्रभुः ६
तत्र तस्याद्भुतं कर्म शृणु मे जनमेजय
कृतवान्यद्विशुद्धात्मा पाण्डूनां प्रवरो रथी ७
निविष्टे तत्र कौन्तेये ब्राह्मणेषु च भारत
अग्निहोत्राणि विप्रास्ते प्रादुश्चक्रुरनेकशः ८
तेषु प्रबोध्यमानेषु ज्वलितेषु हुतेषु च
कृतपुष्पोपहारेषु तीरान्तरगतेषु च ९
कृताभिषेकैर्विद्वद्भिर्नियतैः सत्पथि स्थितैः
शुशुभेऽतीव तद्राजन्गङ्गाद्वारं महात्मभिः १०
तथा पर्याकुले तस्मिन्निवेशे पाण्डुनन्दनः
अभिषेकाय कौन्तेयो गङ्गामवततार ह ११
तत्राभिषेकं कृत्वा स तर्पयित्वा पितामहान्
उत्तितीर्षुर्जलाद्राजन्नग्निकार्यचिकीर्षया १२
अपकृष्टो महाबाहुर्नागराजस्य कन्यया
अन्तर्जले महाराज उलूप्या कामयानया १३
ददर्श पाण्डवस्तत्र पावकं सुसमाहितम्
कौरव्यस्याथ नागस्य भवने परमार्चिते १४
तत्राग्निकार्यं कृतवान्कुन्तीपुत्रो धनञ्जयः
अशङ्कमानेन हुतस्तेनातुष्यद्धुताशनः १५
अग्निकार्यं स कृत्वा तु नागराजसुतां तदा
प्रहसन्निव कौन्तेय इदं वचनमब्रवीत् १६
किमिदं साहसं भीरु कृतवत्यसि भामिनि
कश्चायं सुभगो देशः का च त्वं कस्य चात्मजा १७
उलूप्युवाच
ऐरावतकुले जातः कौरव्यो नाम पन्नगः
तस्यास्मि दुहिता पार्थ उलूपी नाम पन्नगी १८
साहं त्वामभिषेकार्थमवतीर्णं समुद्रगाम्

दृष्टवत्येव कौन्तेय कन्दर्पेणास्मि मूर्च्छिता १९
तां मामनङ्गमथितां त्वत्कृते कुरुनन्दन
अनन्यां नन्दयस्वाद्य प्रदानेनात्मनो रहः २०
अर्जुन उवाच
ब्रह्मचर्यमिदं भद्रे मम द्वादशवार्षिकम्
धर्मराजेन चादिष्टं नाहमस्मि स्वयंवशः २१
तव चापि प्रियं कर्तुमिच्छामि जलचारिणि
अनृतं नोक्तपूर्वं च मया किंचन कर्हिचित् २२
कथं च नानृतं तत्स्यात्तव चापि प्रियं भवेत्
न च पीड्येत मे धर्मस्तथा कुर्यां भुजङ्गमे २३
उलूप्युवाच
जानाम्यहं पाण्डवेय यथा चरसि मेदिनीम्
यथा च ते ब्रह्मचर्यमिदमादिष्टवान्गुरुः २४
परस्परं वर्तमानान्द्रुपदस्यात्मजां प्रति
यो नोऽनुप्रविशेन्मोहात्स नो द्वादशवार्षिकम्
वने चरेद्ब्रह्मचर्यमिति वः समयः कृतः २५
तदिदं द्रौपदीहेतोरन्योन्यस्य प्रवासनम्
कृतं वस्तत्र धर्मार्थमत्र धर्मो न दुष्यति २६
परित्राणं च कर्तव्यमार्तानां पृथुलोचन
कृत्वा मम परित्राणं तव धर्मो न लुप्यते २७
यदि वाप्यस्य धर्मस्य सूक्ष्मोऽपि स्याद्व्यतिक्रमः
स च ते धर्म एव स्याद्दत्वा प्राणान्ममार्जुन २८
भक्तां भजस्व मां पार्थ सतामेतन्मतं प्रभो
न करिष्यसि चेदेवं मृतां मामुपधारय २९
प्राणदानान्महाबाहो चर धर्ममनुत्तमम्
शरणं च प्रपन्नास्मि त्वामद्य पुरुषोत्तम ३०
दीनाननाथान्कौन्तेय परिरक्षसि नित्यशः
साहं शरणमभ्येमि रोरवीमि च दुःखिता ३१
याचे त्वामभिकामाहं तस्मात्कुरु मम प्रियम्
स त्वमात्मप्रदानेन सकामां कर्तुमर्हसि ३२

वैशम्पायन उवाच
एवमुक्तस्तु कौन्तेयः पन्नगेश्वरकन्यया
कृतवांस्तत्तथा सर्वं धर्ममुद्दिश्य कारणम् ३३
स नागभवने रात्रिं तामुषित्वा प्रतापवान्
उदितेऽभ्युत्थितः सूर्ये कौरव्यस्य निवेशनात् ३४
इति श्रीमहाभारते आदिपर्वणि षडधिकद्विशततमोऽध्यायः २०६

सप्ताधिक द्विशततमोऽध्यायः

वैशम्पायन उवाच
कथयित्वा तु तत्सर्वं ब्राह्मणेभ्यः स भारत
प्रययौ हिमवत्पार्श्वं ततो वज्रधरात्मजः १
अगस्त्यवटमासाद्य वसिष्ठस्य च पर्वतम्
भृगुतुङ्गे च कौन्तेयः कृतवाञ्शौचमात्मनः २
प्रददौ गोसहस्राणि तीर्थेष्वायतनेषु च
निवेशांश्च द्विजातिभ्यः सोऽददत्कुरुसत्तमः ३
हिरण्यबिन्दोस्तीर्थे च स्नात्वा पुरुषसत्तमः
दृष्टवान्पर्वतश्रेष्ठं पुण्यान्यायतनानि च ४
अवतीर्य नरश्रेष्ठो ब्राह्मणैः सह भारत
प्राचीं दिशमभिप्रेप्सुर्जगाम भरतर्षभः ५
आनुपूर्व्येण तीर्थानि दृष्टवान्कुरुसत्तमः
नदीं चोत्पलिनीं रम्यामरण्यं नैमिषं प्रति ६
नन्दामपरनन्दां च कौशिकीं च यशस्विनीम्
महानदीं गयां चैव गङ्गामपि च भारत ७
एवं सर्वाणि तीर्थानि पश्यमानस्तथाश्रमान्
आत्मनः पावनं कुर्वन्ब्राह्मणेभ्यो ददौ वसु ८
अङ्गवङ्गकलिङ्गेषु यानि पुण्यानि कानिचित्
जगाम तानि सर्वाणि तीर्थान्यायतनानि च
दृष्ट्वा च विधिवत्तानि धनं चापि ददौ ततः ९
कलिङ्गराष्ट्रद्वारेषु ब्राह्मणाः पाण्डवानुगाः
अभ्यनुज्ञाय कौन्तेयमुपावर्तन्त भारत १०

स तु तैरभ्यनुज्ञातः कुन्तीपुत्रो धनञ्जयः
सहायैरल्पकैः शूरः प्रययौ येन सागरम् ११
स कलिङ्गानतिक्रम्य देशानायतनानि च
धर्म्याणि रमणीयानि प्रेक्षमाणो ययौ प्रभुः १२
महेन्द्रपर्वतं दृष्ट्वा तापसैरुपशोभितम्
समुद्रतीरेण शनैर्मणलूरं जगाम ह १३
तत्र सर्वाणि तीर्थानि पुण्यान्यायतनानि च
अभिगम्य महाबाहुरभ्यगच्छन्महीपतिम्
मणलूरेश्वरं राजन्धर्मज्ञं चित्रवाहनम् १४
तस्य चित्राङ्गदा नाम दुहिता चारुदर्शना
तां ददर्श पुरे तस्मिन्विचरन्तीं यदृच्छया १५
दृष्ट्वा च तां वरारोहां चकमे चैत्रवाहिनीम्
अभिगम्य च राजानं ज्ञापयत्स्वं प्रयोजनम्
तमुवाचाथ राजा स सान्त्वपूर्वमिदं वचः १६
राजा प्रभंकरो नाम कुले अस्मिन्बभूव ह
अपुत्रः प्रसवेनार्थी तपस्तेपे स उत्तमम् १७
उग्रेण तपसा तेन प्रणिपातेन शंकरः
ईश्वरस्तोषितस्तेन महादेव उमापतिः १८
स तस्मै भगवान्प्रादादेकैकं प्रसवं कुले
एकैकः प्रसवस्तस्माद्भवत्यस्मिन्कुले सदा १९
तेषां कुमाराः सर्वेषां पूर्वेषां मम जज्ञिरे
कन्या तु मम जातेयं कुलस्योत्पादनी ध्रुवम् २०
पुत्रो ममेयमिति मे भावना पुरुषोत्तम
पुत्रिका हेतुविधिना संज्ञिता भरतर्षभ २१
एतच्छुल्कं भवत्वस्याः कुलकृज्जायतामिह
एतेन समयेनेमां प्रतिगृह्णीष्व पाण्डव २२
स तथेति प्रतिज्ञाय कन्यां तां प्रतिगृह्य च
उवास नगरे तस्मिन्कौन्तेयस्त्रिहिमाः समाः २३
इति श्रीमहाभारते आदिपर्वणि सप्ताधिकद्विशततमोऽध्यायः २०७

## अष्टाधिक द्विशततमोऽध्यायः

वैशम्पायन उवाच
ततः समुद्रे तीर्थानि दक्षिणे भरतर्षभः
अभ्यगच्छत्सुपुण्यानि शोभनानि तपस्विभिः १
वर्जयन्ति स्म तीर्थानि पञ्च तत्र तु तापसाः
आचीर्णानि तु यान्यासन्पुरस्तात्तु तपस्विभिः २
अगस्त्यतीर्थं सौभद्रं पौलोमं च सुपावनम्
कारन्धमं प्रसन्नं च हयमेधफलं च यत्
भारद्वाजस्य तीर्थं च पापप्रशमनं महत् ३
विविक्तान्युपलक्ष्याथ तानि तीर्थानि पाण्डवः
दृष्ट्वा च वर्ज्यमानानि मुनिभिर्धर्मबुद्धिभिः ४
तपस्विनस्ततोऽपृच्छत्प्राञ्जलि कुरुनन्दनः
तीर्थानीमानि वर्ज्यन्ते किमर्थं ब्रह्मवादिभिः ५
तापसा ऊचुः
ग्राहाः पञ्च वसन्त्येषु हरन्ति च तपोधनान्
अत एतानि वर्ज्यन्ते तीर्थानि कुरुनन्दन ६
वैशम्पायन उवाच
तेषां श्रुत्वा महाबाहुर्वार्यमाणस्तपोधनैः
जगाम तानि तीर्थानि द्रष्टुं पुरुषसत्तमः ७
ततः सौभद्रमासाद्य महर्षेस्तीर्थमुत्तमम्
विगाह्य सहसा शूरः स्नानं चक्रे परंतपः ८
अथ तं पुरुषव्याघ्रमन्तर्जलचरो महान्
निजग्राह जले ग्राहः कुन्तीपुत्रं धनञ्जयम् ९
स तमादाय कौन्तेयो विस्फुरन्तं जलेचरम्
उदतिष्ठन्महाबाहुर्बलेन बलिनां वरः १०
उत्कृष्ट एव तु ग्राहः सोऽजुनेन यशस्विना
बभूव नारी कल्याणी सर्वाभरणभूषिता
दीप्यमाना श्रिया राजन्दिव्यरूपा मनोरमा ११
तदद्भुतं महद्दृष्ट्वा कुन्तीपुत्रो धनंजयः
तां स्त्रियं परमप्रीत इदं वचनमब्रवीत् १२

का वै त्वमसि कल्याणि कुतो वासि जलेचरी
किमर्थं च महत्पापमिदं कृतवती पुरा १३
नार्युवाच
अप्सरास्मि महाबाहो देवारण्यविचारिणी
इष्टा धनपतेर्नित्यं वर्गा नाम महाबल १४
मम सख्यश्चतस्रोऽन्या सर्वाः कामगमाः शुभाः
ताभिः सार्धं प्रयातास्मि लोकपालनिवेशनम् १५
ततः पश्यामहे सर्वा ब्राह्मणं संशितव्रतम्
रूपवन्तमधीयानमेकमेकान्तचारिणम् १६
तस्य वै तपसा राजंस्तद्वनं तेजसावृतम्
आदित्य इव तं देशं कृत्स्नं स व्यवभासयत् १७
तस्य दृष्ट्वा तपस्तादृग्रूपं चाद्भुतदर्शनम्
अवतीर्णाः स्म तं देशं तपोविघ्नचिकीर्षया १८
अहं च सौरभेयी च समीची बुद्बुदा लता
यौगपद्येन तं विप्रमभ्यगच्छाम भारत १९
गायन्त्यो वै हसन्त्यश्च लोभयन्त्यश्च तं द्विजम्
स च नास्मासु कृतवान्मनो वीर कथंचन
नाकम्पत महातेजाः स्थितस्तपसि निर्मले २०
सोऽशपत्कुपितोऽस्मास्तु ब्राह्मणः क्षत्रियर्षभ
ग्राहभूता जले यूयं चरिष्यध्वं शतं समाः २१
इति श्रीमहाभारते आदिपर्वणि अष्टाधिकद्विशततमोऽध्यायः २०८

## नवाधिकद्विशततमोऽध्यायः

वर्गोवाच
ततो वयं प्रव्यथिताः सर्वा भरतसत्तम
आयाम शरणं विप्रं तं तपोधनमच्युतम् १
रूपेण वयसा चैव कन्दर्पेण च दर्पिताः
अयुक्तं कृतवत्यः स्म क्षन्तुमर्हसि नो द्विज २
एष एव वधोऽस्माकं सुपर्याप्तस्तपोधन
यद्वयं संशितात्मानं प्रलोब्धुं त्वामिहागताः ३

अवध्यास्तु स्त्रियः सृष्टा मन्यन्ते धर्मचिन्तकाः
तस्माद्धर्मेण धर्मज्ञ नास्मान्हिंसितुमर्हसि ४
सर्वभूतेषु धर्मज्ञ मैत्रो ब्राह्मण उच्यते
सत्यो भवतु कल्याण एष वादो मनीषिणाम् ५
शरणं च प्रपन्नानां शिष्टाः कुर्वन्ति पालनम्
शरणं त्वां प्रपन्नाः स्म तस्मात्त्वं क्षन्तुमर्हसि ६
वैशम्पायन उवाच
एवमुक्तस्तु धर्मात्मा ब्राह्मणः शुभकर्मकृत्
प्रसादं कृतवान्वीर रविसोमसमप्रभः ७
ब्राह्मण उवाच
शतं सहस्रं विश्वं च सर्वमक्षयवाचकम्
परिणामं शतं त्वेतन्नैतदक्षयवाचकम् ८
यदा च वो ग्राहभूता गृह्णन्तीः पुरुषाञ्जले
उत्कर्षति जलात्कश्चित्स्थलं पुरुषसत्तमः ९
तदा यूयं पुनः सर्वाः स्वरूपं प्रतिपत्स्यथ
अनृतं नोक्तपूर्वं मे हसतापि कदाचन १०
तानि सर्वाणि तीर्थानि इतः प्रभृति चैव ह
नारीतीर्थानि नाम्नेह ख्यातिं यास्यन्ति सर्वशः
पुण्यानि च भविष्यन्ति पावनानि मनीषिणाम् ११
वर्गोवाच
ततोऽभिवाद्य तं विप्रं कृत्वा चैव प्रदक्षिणम्
अचिन्तयामोपसृत्य तस्माद्देशात्सुदुःखिताः १२
क्व नु नाम वयं सर्वाः कालेनाल्पेन तं नरम्
समागच्छेम यो नस्तद्रूपमापादयेत्पुनः १३
ता वयं चिन्तयित्वैवं मुहूर्तादिव भारत
दृष्टवत्यो महाभागं देवर्षिमुत नारदम् १४
सर्वा हृष्टाः स्म तं दृष्ट्वा देवर्षिममितद्युतिम्
अभिवाद्य च तं पार्थ स्थिताः स्म व्यथिताननाः १५
स नोऽपृच्छद्दुःखमूलमुक्तवत्यो वयं च तत्
श्रुत्वा तच्च यथावृत्तमिदं वचनमब्रवीत् १६

दक्षिणे सागरानूपे पञ्च तीर्थानि सन्ति वै
पुण्यानि रमणीयानि तानि गच्छत माचिरम् १७
तत्राशु पुरुषव्याघ्रः पाण्डवो वो धनञ्जयः
मोक्षयिष्यति शुद्धात्मा दुःखादस्मान्न संशयः १८
तस्य सर्वा वयं वीर श्रुत्वा वाक्यमिहागताः
तदिदं सत्यमेवाद्य मोक्षिताहं त्वयानघ १९
एतास्तु मम वै सख्यश्चतस्रोऽन्या जले स्थिताः
कुरु कर्म शुभं वीर एताः सर्वा विमोक्षय २०
वैशम्पायन उवाच
ततस्ताः पाण्डवश्रेष्ठः सर्वा एव विशां पते
तस्माच्छापाददीनात्मा मोक्षयामास वीर्यवान् २१
उत्थाय च जलात्तस्मात्प्रतिलभ्य वपुः स्वकम्
तास्तदाप्सरसो राजन्नदृश्यन्त यथा पुरा २२
तीर्थानि शोधयित्वा तु यथानुज्ञाय ताः प्रभुः
चित्राङ्गदां पुनर्द्रष्टुं मणलूरपुरं ययौ २३
तस्यामजनयत्पुत्रं राजानं बभ्रुवाहनम्
तं दृष्ट्वा पाण्डवो राजन्गोकर्णमभितोऽगमत् २४
इति श्रीमहाभारते आदिपर्वणि नवाधिकद्विशततमोऽध्यायः २०९

## दशाधिक द्विशततमोऽध्यायः

वैशम्पायन उवाच
सोऽपरान्तेषु तीर्थानि पुण्यान्यायतनानि च
सर्वाण्येवानुपूर्व्येण जगामामितविक्रमः १
समुद्रे पश्चिमे यानि तीर्थान्यायतनानि च
तानि सर्वाणि गत्वा स प्रभासमुपजग्मिवान् २
प्रभासदेशं संप्राप्तं बीभत्सुमपराजितम्
तीर्थान्यनुचरन्तं च शुश्राव मधुसूदनः ३
ततोऽभ्यगच्छत्कौन्तेयमज्ञातो नाम माधवः
ददृशाते तदान्योन्यं प्रभासे कृष्णपाण्डवौ ४
तावन्योन्यं समाश्लिष्य पृष्ट्वा च कुशलं वने

आस्तां प्रियसखायौ तौ नरनारायणावृषी ५
ततोऽर्जुनं वासुदेवस्तां चर्यां पर्यपृच्छत
किमर्थं पाण्डवेमानि तीर्थान्यनुचरस्युत ६
ततोऽर्जुनो यथावृत्तं सर्वमाख्यातवांस्तदा
श्रुत्वोवाच च वार्ष्णेय एवमेतदिति प्रभुः ७
तौ विहृत्य यथाकामं प्रभासे कृष्णपाण्डवौ
महीधरं रैवतकं वासायैवाभिजग्मतुः ८
पूर्वमेव तु कृष्णस्य वचनात्तं महीधरम्
पुरुषाः समलंचक्रुरुपजह्रुश्च भोजनम् ९
प्रतिगृह्यार्जुनः सर्वमुपभुज्य च पाण्डवः
सहैव वासुदेवेन दृष्टवान्नटनर्तकान् १०
अभ्यनुज्ञाप्य तान्सर्वानर्चयित्वा च पाण्डवः
सत्कृतं शयनं दिव्यमभ्यगच्छन्महाद्युतिः ११
तीर्थानां दर्शनं चैव पर्वतानां च भारत
आपगानां वनानां च कथयामास सात्वते १२
स कथाः कथयन्नेव निद्रया जनमेजय
कौन्तेयोऽपहृतस्तस्मिञ्शयने स्वर्गसंमिते १३
मधुरेण स गीतेन वीणाशब्देन चानघ
प्रबोध्यमानो बुबुधे स्तुतिभिर्मङ्गलैस्तथा १४
स कृत्वावश्यकार्याणि वार्ष्णेयेनाभिनन्दितः
रथेन काञ्चनाङ्गेन द्वारकामभिजग्मिवान् १५
अलंकृता द्वारका तु बभूव जनमेजय
कुन्तीसुतस्य पूजार्थमपि निष्कुटकेष्वपि १६
दिदृक्षवश्च कौन्तेयं द्वारकावासिनो जनाः
नरेन्द्रमार्गमाजग्मुस्तूर्णं शतसहस्रशः १७
अवलोकेषु नारीणां सहस्राणि शतानि च
भोजवृष्ण्यन्धकानां स समवायो महानभूत् १८
स तथा सत्कृतः सर्वैर्भोजवृष्ण्यन्धकात्मजैः
अभिवाद्याभिवाद्यांश्च सर्वैश्च प्रतिनन्दितः १९
कुमारैः सर्वशो वीरः सत्कारेणाभिवादितः

समानवयसः सर्वानाश्लिष्य स पुनः पुनः २०
कृष्णस्य भवने रम्ये रत्नभोज्यसमावृते
उवास सह कृष्णेन बहुलास्तत्र शर्वरीः २१
इति श्रीमहाभारते आदिपर्वणि दशाधिकद्विशततमोऽध्यायः २१०

## एकादशाधिक द्विशततमोऽध्यायः

वैशम्पायन उवाच
ततः कतिपयाहस्य तस्मिन्रैवतके गिरौ
वृष्ण्यन्धकानामभवत्सुमहानुत्सवो नृप १
तत्र दानं ददुर्वीरा ब्राह्मणानां सहस्रशः
भोजवृष्ण्यन्धकाश्चैव महे तस्य गिरेस्तदा २
प्रासादै रत्नचित्रैश्च गिरेस्तस्य समन्ततः
स देशः शोभितो राजन्दीपवृक्षैश्च सर्वशः ३
वादित्राणि च तत्र स्म वादकाः समवादयन्
ननृतुर्नर्तकाश्चैव जगुर्गानानि गायनाः ४
अलंकृताः कुमाराश्च वृष्णीनां सुमहौजसः
यानैर्हाटकचित्राङ्गैश्चञ्चूर्यन्ते स्म सर्वशः ५
पौराश्च पादचारेण यानैरुच्चावचैस्तथा
सदाराः सानुयात्राश्च शतशोऽथ सहस्रशः ६
ततो हलधरः क्षीबो रेवतीसहितः प्रभुः
अनुगम्यमानो गन्धर्वैरचरत्तत्र भारत ७
तथैव राजा वृष्णीनामुग्रसेनः प्रतापवान्
उपगीयमानो गन्धर्वैः स्त्रीसहस्रसहायवान् ८
रौक्मिणेयश्च साम्बश्च क्षीबौ समरदुर्मदौ
दिव्यमाल्याम्बरधरौ विजह्रातेऽमराविव ९
अक्रूरः सारणश्चैव गदो भानुर्विडूरथः
विशठश्चारुदेष्णश्च पृथुर्विपृथुरेव च १०
सत्यकः सात्यकिश्चैव भङ्गकारसहाचरौ
हार्दिक्यः कृतवर्मा च ये चान्ये नानुकीर्तिताः ११
एते परिवृताः स्त्रीभिर्गन्धर्वैश्च पृथक्पृथक्

तमुत्सवं रैवतके शोभयाञ्चक्रिरे तदा १२
तदा कोलाहले तस्मिन्वर्तमाने महाशुभे
वासुदेवश्च पार्थश्च सहितौ परिजग्मतुः १३
तत्र चङ्क्रम्यमाणौ तौ वसुदेवसुतां शुभाम्
अलंकृतां सखीमध्ये सुभद्रां ददृशतुस्तदा १४
दृष्ट्वैव तामर्जुनस्य कन्दर्पः समजायत
तं तदैकाग्रमनसं कृष्णः पार्थमलक्षयत् १५
अथाब्रवीत्पुष्कराक्षः प्रहसन्निव भारत
वनेचरस्य किमिदं कामेनालोड्यते मनः १६
ममैषा भगिनी पार्थ सारणस्य सहोदरा
यदि ते वर्तते बुद्धिर्वक्ष्यामि पितरं स्वयम् १७
अर्जुन उवाच
दुहिता वसुदेवस्य वासुदेवस्य च स्वसा
रूपेण चैव संपन्ना कमिवैषा न मोहयेत् १८
कृतमेव तु कल्याणं सर्वं मम भवेद्ध्रुवम्
यदि स्यान्मम वार्ष्णेयी महिषीयं स्वसा तव १९
प्राप्तौ तु क उपायः स्यात्त्वंब्रवीहि जनार्दन
आस्थास्यामि तदा सर्वं यदि शक्यं नरेण तत् २०
वासुदेव उवाच
स्वयंवरः क्षत्रियाणां विवाहः पुरुषर्षभ
स च संशयितः पार्थ स्वभावस्यानिमित्ततः २१
प्रसह्य हरणं चापि क्षत्रियाणां प्रशस्यते
विवाहहेतोः शूराणामिति धर्मविदो विदुः २२
स त्वमर्जुन कल्याणीं प्रसह्य भगिनीं मम
हर स्वयंवरे ह्यस्याः को वै वेद चिकीर्षितम् २३
वैशम्पायन उवाच
ततोऽजुनश्च कृष्णश्च विनिश्चित्येतिकृत्यताम्
शीघ्रगान्पुरुषान्राजन्प्रेषयामासतुस्तदा २४
धर्मराजाय तत्सर्वमिन्द्रप्रस्थगताय वै
श्रुत्वैव च महाबाहुरनुजज्ञे स पाण्डवः २५

इति श्रीमहाभारते आदिपर्वणि एकादशाधिकद्विशततमोऽध्यायः २११

## द्वादशाधिकद्विशततमोऽध्यायः

वैशम्पायन उवाच
ततः संवादिते तस्मिन्ननुज्ञातो धनंजयः
गतां रैवतके कन्यां विदित्वा जनमेजय १
वासुदेवाभ्यनुज्ञातः कथयित्वेतिकृत्यताम्
कृष्णस्य मतमाज्ञाय प्रययौ भरतर्षभः २
रथेन काञ्चनाङ्गेन कल्पितेन यथाविधि
सैन्यसुग्रीवयुक्तेन किङ्किणीजालमालिना ३
सर्वशस्त्रोपपन्नेन जीमूतरवनादिना
ज्वलिताग्निप्रकाशेन द्विषतां हर्षघातिना ४
संनद्धः कवची खड्गी बद्धगोधाङ्गुलित्रवान्
मृगयाव्यपदेशेन यौगपद्येन भारत ५
सुभद्रा त्वथ शैलेन्द्रमभ्यर्च्य सह रैवतम्
दैवतानि च सर्वाणि ब्राह्मणान्स्वस्ति वाच्य च ६
प्रदक्षिणं गिरिं कृत्वा प्रययौ द्वारकां प्रति
तामभिद्रुत्य कौन्तेयः प्रसह्यारोपयद्रथम् ७
ततः स पुरुषव्याघ्रस्तामादाय शुचिस्मिताम्
रथेनाकाशगेनैव प्रययौ स्वपुरं प्रति ८
ह्रियमाणां तु तां दृष्ट्वा सुभद्रां सैनिको जनः
विक्रोशन्प्राद्रवत्सर्वो द्वारकामभितः पुरीम् ९
ते समासाद्य सहिताः सुधर्मामभितः सभाम्
सभापालस्य तत्सर्वमाचख्युः पार्थविक्रमम् १०
तेषां श्रुत्वा सभापालो भेरीं सांनाहिकीं ततः
समाजघ्ने महाघोषां जाम्बूनदपरिष्कृताम् ११
क्षुब्धास्तेनाथ शब्देन भोजवृष्ण्यन्धकास्तदा
अन्नपानमपास्याथ समापेतुः सभां ततः १२
ततो जाम्बूनदाङ्गानि स्पर्ध्यास्तरणवन्ति च
मणिविद्रुमचित्राणि ज्वलिताग्निप्रभाणि च १३

भेजिरे पुरुषव्याघ्रा वृष्ण्यन्धकमहारथाः
सिंहासनानि शतशो धिष्ण्यानीव हुताशनाः १४
तेषां समुपविष्टानां देवानामिव संनये
आचख्यौ चेष्टितं जिष्णोः सभापालः सहानुगः १५
तच्छ्रुत्वा वृष्णिवीरास्ते मदरक्तान्तलोचनाः
अमृष्यमाणाः पार्थस्य समुत्पेतुरहंकृताः १६
योजयध्वं रथानाशु प्रासानाहरतेति च
धनूंषि च महार्हाणि कवचानि बृहन्ति च १७
सूतानुच्चुक्रुशुः केचिद्रथान्योजयतेति च
स्वयं च तुरगान्केचिन्निन्युर्हेमविभूषितान् १८
रथेष्वानीयमानेषु कवचेषु ध्वजेषु च
अभिक्रन्दे नृवीराणां तदासीत्संकुलं महत् १९
वनमाली ततः क्षीबः कैलासशिखरोपमः
नीलवासा मदोत्सिक्त इदं वचनमब्रवीत् २०
किमिदं कुरुथाप्रज्ञास्तूष्णीं भूते जनार्दने
अस्य भावमविज्ञाय संक्रुद्धा मोघगर्जिताः २१
एष तावदभिप्रायमाख्यातु स्वं महामतिः
यदस्य रुचितं कर्तुं तत्कुरुध्वमतन्द्रिताः २२
ततस्ते तद्वचः श्रुत्वा ग्राह्यरूपं हलायुधात्
तूष्णीं भूतास्ततः सर्वे साधु साध्विति चाब्रुवन् २३
समं वचो निशम्येति बलदेवस्य धीमतः
पुनरेव सभामध्ये सर्वे ते समुपाविशन् २४
ततोऽब्रवीत्कामपालो वासुदेवं परंतपम्
किमवागुपविष्टोऽसि प्रेक्ष्यमाणो जनार्दन २५
सत्कृतस्त्वत्कृते पार्थः सर्वैरस्माभिरच्युत
न च सोऽहति तां पूजां दुर्बुद्धिः कुलपांसनः २६
को हि तत्रैव भुक्त्वान्नं भाजनं भेत्तुमर्हति
मन्यमानः कुले जातमात्मानं पुरुषः क्वचित् २७
ईप्समानश्च सम्बन्धं कृतपूर्वं च मानयन्
को हि नाम भवेनार्थी साहसेन समाचरेत् २८

सोऽवमन्य च नामास्माननादृत्य च केशवम्
प्रसह्य हृतवानद्य सुभद्रां मृत्युमात्मनः २९
कथं हि शिरसो मध्ये पदं तेन कृतं मम
मर्षयिष्यामि गोविन्द पादस्पर्शमिवोरगः ३०
अद्य निष्कौरवामेकः करिष्यामि वसुन्धराम्
न हि मे मर्षणीयोऽयमर्जुनस्य व्यतिक्रमः ३१
तं तथा गर्जमानं तु मेघदुन्दुभिनिःस्वनम्
अन्वपद्यन्त ते सर्वे भोजवृष्ण्यन्धकास्तदा ३२
इति श्रीमहाभारते आदिपर्वणि द्वादशाधिकद्विशततमोऽध्यायः २१२

त्रयोदशाधिक द्विशततमोऽध्यायः

वैशम्पायन उवाच
उक्तवन्तो यदा वाक्यमसकृत्सर्ववृष्णयः
ततोऽब्रवीद्वासुदेवो वाक्यं धर्मार्थसंहितम् १
नावमानं कुलस्यास्य गुडाकेशः प्रयुक्तवान्
संमानोऽभ्यधिकस्तेन प्रयुक्तोऽयमसंशयम् २
अर्थलुब्धान्न वः पार्थो मन्यते सात्वतान्सदा
स्वयंवरमनाधृष्यं मन्यते चापि पाण्डवः ३
प्रदानमपि कन्यायाः पशुवत्कोऽनुमंस्यते
विक्रयं चाप्यपत्यस्य कः कुर्यात्पुरुषो भुवि ४
एतान्दोषांश्च कौन्तेयो दृष्टवानिति मे मतिः
अतः प्रसह्य हृतवान्कन्यां धर्मेण पाण्डवः ५
उचितश्चैव संबन्धः सुभद्रा च यशस्विनी
एष चापीदृशः पार्थः प्रसह्य हृतवानिति ६
भरतस्यान्वये जातं शन्तनोश्च महात्मनः
कुन्तिभोजात्मजापुत्रं को बुभूषेत नार्जुनम् ७
न च पश्यामि यः पार्थं विक्रमेण पराजयेत्
अपि सर्वेषु लोकेषु सेन्द्ररुद्रेषु मारिष ८
स च नाम रथस्तादृङ्मदीयास्ते च वाजिनः
योद्धा पार्थश्च शीघ्रास्त्रः को नु तेन समो भवेत् ९

तमनुद्रुत्य सान्त्वेन परमेण धनंजयम्
निवर्तयध्वं संहृष्टा ममैषा परमा मतिः १०
यदि निर्जित्य वः पार्थो बलाद्गच्छेत्स्वकं पुरम्
प्रणश्येद्वो यशः सद्यो न तु सान्त्वे पराजयः ११
तच्छ्रुत्वा वासुदेवस्य तथा चक्रुर्जनाधिप
निवृत्तश्चार्जुनस्तत्र विवाहं कृतवांस्ततः १२
उषित्वा तत्र कौन्तेयः संवत्सरपराः क्षपाः
पुष्करेषु ततः शिष्टं कालं वर्तितवान्प्रभुः
पूर्णे तु द्वादशे वर्षे खाण्डवप्रस्थमाविशत् १३
अभिगम्य च राजानं नियमेन समाहितः
अभ्यर्च्य ब्राह्मणान्पार्थो द्रौपदीमभिजग्मिवान् १४
तं द्रौपदी प्रत्युवाच प्रणयात्कुरुनन्दनम्
तत्रैव गच्छ कौन्तेय यत्र सा सात्वतात्मजा
सुबद्धस्यापि भारस्य पूर्वबन्धः श्लथायते १५
तथा बहुविधं कृष्णां विलपन्तीं धनंजयः
सान्त्वयामास भूयश्च क्षमयामास चासकृत् १६
सुभद्रां त्वरमाणश्च रक्तकौशेयवाससम्
पार्थः प्रस्थापयामास कृत्वा गोपालिकावपुः १७
साधिकं तेन रूपेण शोभमाना यशस्विनी
भवनं श्रेष्ठमासाद्य वीरपत्नी वराङ्गना
ववन्दे पृथुताम्राक्षी पृथां भद्रा यशस्विनी १८
ततोऽभिगम्य त्वरिता पूर्णेन्दुसदृशानना
ववन्दे द्रौपदीं भद्रा प्रेष्याहमिति चाब्रवीत् १९
प्रत्युत्थाय च तां कृष्णा स्वसारं माधवस्य ताम्
सस्वजे चावदत्प्रीता निःसपत्नोऽस्तु ते पतिः
तथैव मुदिता भद्रा तामुवाचैवमस्त्विति २०
ततस्ते हृष्टमनसः पाण्डवेया महारथाः
कुन्ती च परमप्रीता बभूव जनमेजय २१
श्रुत्वा च पुण्डरीकाक्षः संप्राप्तं स्वपुरोत्तमम्
अर्जुनं पाण्डवश्रेष्ठमिन्द्रप्रस्थगतं तदा २२

आजगाम विशुद्धात्मा सह रामेण केशवः
वृष्ण्यन्धकमहामात्रैः सह वीरैर्महारथैः २३
भ्रातृभिश्च कुमारैश्च योधैश्च शतशो वृतः
सैन्येन महता शौरिरभिगुप्तः परंतपः २४
तत्र दानपतिर्धीमानाजगाम महायशाः
अक्रूरो वृष्णिवीराणां सेनापतिररिन्दमः २५
अनाधृष्टिर्महातेजा उद्धवश्च महायशाः
साक्षाद्बृहस्पतेः शिष्यो महाबुद्धिर्महायशाः २६
सत्यकः सात्यकिश्चैव कृतवर्मा च सात्वतः
प्रद्युम्नश्चैव साम्बश्च निशठः शङ्कुरेव च २७
चारुदेष्णश्च विक्रान्तो झिल्ली विपृथुरेव च
सारणश्च महाबाहुर्गदश्च विदुषां वरः २८
एते चान्ये च बहवो वृष्णिभोजान्धकास्तथा
आजग्मुः खाण्डवप्रस्थमादाय हरणं बहु २९
ततो युधिष्ठिरो राजा श्रुत्वा माधवमागतम्
प्रतिग्रहार्थं कृष्णस्य यमौ प्रास्थापयत्तदा ३०
ताभ्यां प्रतिगृहीतं तद्वृष्णिचक्रं समृद्धिमत्
विवेश खाण्डवप्रस्थं पताकाध्वजशोभितम् ३१
सिक्तसंमृष्टपन्थानं पुष्पप्रकरशोभितम्
चन्दनस्य रसैः शीतैः पुण्यगन्धैर्निषेवितम् ३२
दह्यतागुरुणा चैव देशे देशे सुगन्धिना
सुसंमृष्टजनाकीर्णं वणिग्भिरुपशोभितम् ३३
प्रतिपेदे महाबाहुः सह रामेण केशवः
वृष्ण्यन्धकमहाभोजैः संवृतः पुरुषोत्तमः ३४
संपूज्यमानः पौरैश्च ब्राह्मणैश्च सहस्रशः
विवेश भवनं राज्ञः पुरन्दरगृहोपमम् ३५
युधिष्ठिरस्तु रामेण समागच्छद्यथाविधि
मूर्ध्नि केशवमाघ्राय पर्यष्वजत बाहुना ३६
तं प्रीयमाणं कृष्णस्तु विनयेनाभ्यपूजयत्
भीमं च पुरुषव्याघ्रं विधिवत्प्रत्यपूजयत् ३७

तांश्च वृष्ण्यन्धकश्रेष्ठान्धर्मराजो युधिष्ठिरः
प्रतिजग्राह सत्कारैर्यथाविधि यथोपगम् ३८
गुरुवत्पूजयामास कांश्चित्कांश्चिद्वयस्यवत्
कांश्चिदभ्यवदत्प्रेम्णा कैश्चिदप्यभिवादितः ३९
ततो ददौ वासुदेवो जन्यार्थे धनमुत्तमम्
हरणं वै सुभद्राया ज्ञातिदेयं महायशाः ४०
रथानां काञ्चनाङ्गानां किङ्किणीजालमालिनाम्
चतुर्युजामुपेतानां सूतैः कुशलसंमतैः
सहस्रं प्रददौ कृष्णो गवामयुतमेव च ४१
श्रीमान्माथुरदेश्यानां दोग्ध्रीणां पुण्यवर्चसाम्
वडवानां च शुभ्राणां चन्द्रांशुसमवर्चसाम्
ददौ जनार्दनः प्रीत्या सहस्रं हेमभूषणम् ४२
तथैवाश्वतरीणां च दान्तानां वातरंहसाम्
शतान्यञ्जनकेशीनां श्वेतानां पञ्च पञ्च च ४३
स्नापनोत्सादने चैव सुयुक्तं वयसान्वितम्
स्त्रीणां सहस्रं गौरीणां सुवेषाणां सुवर्चसाम् ४४
सुवर्णशतकण्ठीनामरोगाणां सुवाससाम्
परिचर्यासु दक्षाणां प्रददौ पुष्करेक्षणः ४५
कृताकृतस्य मुख्यस्य कनकस्याग्निवर्चसः
मनुष्यभारान्दाशार्हो ददौ दश जनार्दनः ४६
गजानां तु प्रभिन्नानां त्रिधा प्रस्रवतां मदम्
गिरिकूटनिकाशानां समरेष्वनिवर्तिनाम् ४७
क्लृप्तानां पटुघण्टानां वराणां हेममालिनाम्
हस्त्यारोहैरुपेतानां सहस्रं साहसप्रियः ४८
रामः पादग्राहणिकं ददौ पार्थाय लाङ्गली
प्रीयमाणो हलधरः संबन्धप्रीतिमावहन् ४९
स महाधनरत्नौघो वस्त्रकम्बलफेनवान्
महागजमहाग्राहः पताकाशैवलाकुलः ५०
पाण्डुसागरमाविद्धः प्रविवेश महानदः
पूर्णमापूरयंस्तेषां द्विषच्छोकावहोऽभवत् ५१

प्रतिजग्राह तत्सर्वं धर्मराजो युधिष्ठिरः
पूजयामास तांश्चैव वृष्ण्यन्धकमहारथान् ५२
ते समेता महात्मानः कुरुवृष्ण्यन्धकोत्तमाः
विजह्रुरमरावासे नराः सुकृतिनो यथा ५३
तत्र तत्र महानानैरुत्कृष्टतलनादितैः
यथायोगं यथाप्रीति विजह्रुः कुरुवृष्णयः ५४
एवमुत्तमवीर्यास्ते विहृत्य दिवसान्बहून्
पूजिताः कुरुभिर्जग्मुः पुनर्द्वारवतीं पुरीम् ५५
रामं पुरस्कृत्य ययुर्वृष्ण्यन्धकमहारथाः
रत्नान्यादाय शुभ्राणि दत्तानि कुरुसत्तमैः ५६
वासुदेवस्तु पार्थेन तत्रैव सह भारत
उवास नगरे रम्ये शक्रप्रस्थे महामनाः
व्यचरद्यमुनाकूले पार्थेन सह भारत ५७
ततः सुभद्रा सौभद्रं केशवस्य प्रिया स्वसा
जयन्तमिव पौलोमी द्युतिमन्तमजीजनत् ५८
दीर्घबाहुं महासत्त्वमृषभाक्षमरिंदमम्
सुभद्रा सुषुवे वीरमभिमन्युं नरर्षभम् ५९
अभीश्च मन्युमांश्चैव ततस्तमरिमर्दनम्
अभिमन्युमिति प्राहुरार्जुनिं पुरुषर्षभम् ६०
स सात्वत्यामतिरथः संबभूव धनंजयात्
मखे निर्मथ्यमानाद्वा शमीगर्भाद्धुताशनः ६१
यस्मिञ्जाते महाबाहुः कुन्तीपुत्रो युधिष्ठिरः
अयुतं गा द्विजातिभ्यः प्रादान्निष्कांश्च तावतः ६२
दयितो वासुदेवस्य बाल्यात्प्रभृति चाभवत्
पितॄणां चैव सर्वेषां प्रजानामिव चन्द्रमाः ६३
जन्मप्रभृति कृष्णश्च चक्रे तस्य क्रियाः शुभाः
स चाऽपि ववृधे बालः शुक्लपक्षे यथा शशी ६४
चतुष्पादं दशविधं धनुर्वेदमरिंदमः
अर्जुनाद्वेद वेदज्ञात्सकलं दिव्यमानुषम् ६५
विज्ञानेष्वपि चास्त्राणां सौष्ठवे च महाबलः

क्रियास्वपि च सर्वासु विशेषानभ्यशिक्षयत् ६६
आगमे च प्रयोगे च चक्रे तुल्यमिवात्मनः
तुतोष पुत्रं सौभद्रं प्रेक्षमाणो धनंजयः ६७
सर्वसंहननोपेतं सर्वलक्षणलक्षितम्
दुर्धर्षमृषभस्कन्धं व्यात्ताननमिवोरगम् ६८
सिंहदर्पं महेष्वासं मत्तमातङ्गविक्रमम्
मेघदुन्दुभिनिर्घोषं पूर्णचन्द्रनिभाननम् ६९
कृष्णस्य सदृशं शौर्ये वीर्ये रूपे तथाकृतौ
ददर्श पुत्रं बीभत्सुर्मघवानिव तं यथा ७०
पाञ्चाल्यपि च पञ्चभ्यः पतिभ्यः शुभलक्षणा
लेभे पञ्च सुतान्वीराञ्शुभान्पञ्चाचलानिव ७१
युधिष्ठिरात्प्रतिविन्ध्यं सुतसोमं वृकोदरात्
अर्जुनाच्छ्रुतकर्माणं शतानीकं च नाकुलिम् ७२
सहदेवाच्छ्रुतसेनमेतान्पञ्च महारथान्
पाञ्चाली सुषुवे वीरानादित्यानदितिर्यथा ७३
शास्त्रतः प्रतिविन्ध्यं तमूचुर्विप्रा युधिष्ठिरम्
परप्रहरणज्ञाने प्रतिविन्ध्यो भवत्वयम् ७४
सुते सोमसहस्रे तु सोमार्कसमतेजसम्
सुतसोमं महेष्वासं सुषुवे भीमसेनतः ७५
श्रुतं कर्म महत्कृत्वा निवृत्तेन किरीटिना
जातः पुत्रस्तवेत्येवं श्रुतकर्मा ततोऽभवत् ७६
शतानीकस्य राजर्षेः कौरव्यः कुरुनन्दनः
चक्रे पुत्रं सनामानं नकुलः कीर्तिवर्धनम् ७७
ततस्त्वजीजनत्कृष्णा नक्षत्रे वह्निदैवते
सहदेवात्सुतं तस्माच्छ्रुतसेनेति तं विदुः ७८
एकवर्षान्तरास्त्वेव द्रौपदेया यशस्विनः
अन्वजायन्त राजेन्द्र परस्परहिते रताः ७९
जातकर्माण्यानुपूर्व्याच्चूडोपनयनानि च
चकार विधिवद्धौम्यस्तेषां भरतसत्तम ८०
कृत्वा च वेदाध्ययनं ततः सुचरितव्रताः

जगृहुः सर्वमिष्वस्त्रमर्जुनाद्दिव्यमानुषम् ८१
दिव्यगर्भोपमैः पुत्रैर्व्यूढोरस्कैर्महाबलैः
अन्विता राजशार्दूल पाण्डवा मुदमाप्नुवन् ८२
इति श्रीमहाभारते आदिपर्वणि त्रयोदशाधिकद्विशततमोऽध्यायः २१३

## चतुर्दशाधिकद्विशततमोऽध्यायः

वैशम्पायन उवाच
इन्द्रप्रस्थे वसन्तस्ते जघ्नुरन्यान्नराधिपान्
शासनाद्धृतराष्ट्रस्य राज्ञः शान्तनवस्य च १
आश्रित्य धर्मराजानं सर्वलोकोऽवसत्सुखम्
पुण्यलक्षणकर्माणं स्वदेहमिव देहिनः २
स समं धर्मकामार्थान्सिषेवे भरतर्षभः
त्रीनिवात्मसमान्बन्धून्बन्धुमानिव मानयन् ३
तेषां समविभक्तानां क्षितौ देहवतामिव
बभौ धर्मार्थकामानां चतुर्थ इव पार्थिवः ४
अध्येतारं परं वेदाः प्रयोक्तारं महाध्वराः
रक्षितारं शुभं वर्णा लेभिरे तं जनाधिपम् ५
अधिष्ठानवती लक्ष्मीः परायणवती मतिः
बन्धुमानखिलो धर्मस्तेनासीत्पृथिवीक्षिता ६
भ्रातृभिः सहितो राजा चतुर्भिरधिकं बभौ
प्रयुज्यमानैर्विततो वेदैरिव महाध्वरः ७
तं तु धौम्यादयो विप्राः परिवार्योपतस्थिरे
बृहस्पतिसमा मुख्याः प्रजापतिमिवामराः ८
धर्मराजे अतिप्रीत्या पूर्णचन्द्र इवामले
प्रजानां रेमिरे तुल्यं नेत्राणि हृदयानि च ९
न तु केवलदैवेन प्रजा भावेन रेमिरे
यद्बभूव मनःकान्तं कर्मणा स चकार तत् १०
न ह्ययुक्तं न चासत्यं नानृतं न च विप्रियम्
भाषितं चारुभाषस्य जज्ञे पार्थस्य धीमतः ११
स हि सर्वस्य लोकस्य हितमात्मन एव च

चिकीर्षुः सुमहातेजा रेमे भरतसत्तमः १२
तथा तु मुदिताः सर्वे पाराडवा विगतज्वराः
ग्रवसन्पृथिवीपालांस्त्रासयन्तः स्वतेजसा १३
ततः कतिपयाहस्य बीभत्सुः कृष्णमब्रवीत्
उष्णानि कृष्ण वर्तन्ते गच्छामो यमुनां प्रति १४
सुहृज्जनवृतास्तत्र विहृत्य मधुसूदन
सायाह्ने पुनरेष्यामो रोचतां ते जनार्दन १५
वासुदेव उवाच
कुन्तीमातर्ममाप्येतद्रोचते यद्वयं जले
सुहृज्जनवृताः पार्थ विहरेम यथासुखम् १६
वैशम्पायन उवाच
ग्रामन्त्र्य धर्मराजानमनुज्ञाप्य च भारत
जग्मतुः पार्थगोविन्दौ सुहृज्जनवृतौ ततः १७
विहारदेशं संप्राप्य नानाद्रुमवदुत्तमम्
गृहैरुच्चावचैर्युक्तं पुरंदरगृहोपमम् १८
भक्ष्यैर्भोज्यैश्च पेयैश्च रसवद्भिर्महाधनैः
माल्यैश्च विविधैर्युक्तं युक्तं वार्ष्णेयपार्थयोः १९
ग्राविवेशतुरापूर्णं रत्नैरुच्चावचैः शुभैः
यथोपजोषं सर्वश्च जनश्चिक्रीड भारत २०
वने काश्चिज्जले काश्चित्काश्चिद्वेश्मसु चाङ्गनाः
यथादेशं यथाप्रीति चिक्रीडुः कृष्णपार्थयोः २१
द्रौपदी च सुभद्रा च वासांस्याभरणानि च
प्रयच्छेतां महार्हाणि स्त्रीणां ते स्म मदोत्कटे २२
काश्चित्प्रहृष्टा ननृतुश्चुक्रुशुश्च तथापराः
जहसुश्चापरा नार्यः पपुश्चान्या वरासवम् २३
रुरुदुश्चापरास्तत्र प्रजघ्नुश्च परस्परम्
मन्त्रयामासुरन्याश्च रहस्यानि परस्परम् २४
वेणुवीणामृदङ्गानां मनोज्ञानां च सर्वशः
शब्देनापूर्यते ह स्म तद्वनं सुसमृद्धिमत् २५
तस्मिंस्तथा वर्तमाने कुरुदाशार्हनन्दनौ

समीपे जग्मतुः कंचिदुद्देशं सुमनोहरम् २६
तत्र गत्वा महात्मानौ कृष्णौ परपुरंजयौ
महार्हासनयो राजंस्ततस्तौ संनिषीदतुः २७
तत्र पूर्वव्यतीतानि विक्रान्तानि रतानि च
बहूनि कथयित्वा तौ रेमाते पार्थमाधवौ २८
तत्रोपविष्टौ मुदितौ नाकपृष्ठेऽश्विनाविव
अभ्यागच्छत्तदा विप्रो वासुदेवधनञ्जयौ २९
बृहच्छालप्रतीकाशः प्रतप्तकनकप्रभः
हरिपिङ्गो हरिश्मश्रुः प्रमाणायामतः समः ३०
तरुणादित्यसंकाशः कृष्णवासा जटाधरः
पद्मपत्राननः पिङ्गस्तेजसा प्रज्वलन्निव ३१
उपसृष्टं तु तं कृष्णौ भ्राजमानं द्विजोत्तमम्
अर्जुनो वासुदेवश्च तूर्णमुत्पत्य तस्थतुः ३२
इति श्रीमहाभारते आदिपर्वणि चतुर्दशाधिकद्विशततमोऽध्यायः २१४

पञ्चदशाधिक द्विशततमोऽध्यायः

वैशम्पायन उवाच
सोऽब्रवीदर्जुनं चैव वासुदेवं च सात्वतम्
लोकप्रवीरौ तिष्ठन्तौ खाण्डवस्य समीपतः १
ब्राह्मणो बहुभोक्तास्मि भुञ्जेऽपरिमितं सदा
भिक्षे वार्ष्णेयपार्थौ वामेकां तृप्तिं प्रयच्छताम् २
एवमुक्तौ तमब्रूतां ततस्तौ कृष्णपाण्डवौ
केनान्नेन भवांस्तृप्येत्तस्यान्नस्य यतावहे ३
एवमुक्तः स भगवानब्रवीत्तावुभौ ततः
भाषमाणौ तदा वीरौ किमन्नं क्रियतामिति ४
नाहमन्नं बुभुक्षे वै पावकं मां निबोधतम्
यदन्नमनुरूपं मे तद्युवां संप्रयच्छतम् ५
इदमिन्द्रः सदा दावं खाण्डवं परिरक्षति
तं न शक्नोम्यहं दग्धुं रक्ष्यमाणं महात्मना ६
वसत्यत्र सखा तस्य तक्षकः पन्नगः सदा

सगणस्तत्कृते दावं परिरक्षति वज्रभृत् ७
तत्र भूतान्यनेकानि रक्ष्यन्ते स्म प्रसङ्गतः
तं दिधक्षुर्न शक्नोमि दग्धुं शक्रस्य तेजसा ८
स मां प्रज्वलितं दृष्ट्वा मेघाम्भोभिः प्रवर्षति
ततो दग्धुं न शक्नोमि दिधक्षुर्दावमीप्सितम् ९
स युवाभ्यां सहायाभ्यामस्त्रविद्भ्यां समागतः
दहेयं खाण्डवं दावमेतदन्नं वृतं मया १०
युवां ह्युदकधारास्ता भूतानि च समन्ततः
उत्तमास्त्रविदौ सम्यक्सर्वतो वारयिष्यथः ११
एवमुक्ते प्रत्युवाच बीभत्सुर्जातवेदसम्
दिधक्षुं खाण्डवं दावमकामस्य शतक्रतोः १२
उत्तमास्त्राणि मे सन्ति दिव्यानि च बहूनि च
यैरहं शक्नुयां योद्धुमपि वज्रधरान्बहून् १३
धनुर्मे नास्ति भगवन्बाहुवीर्येण संमितम्
कुर्वतः समरे यत्नं वेगं यद्विषहेत मे १४
शरैश्च मेऽथो बहुभिरक्षयैः क्षिप्रमस्यतः
न हि वोढुं रथः शक्तः शरान्मम यथेप्सितान् १५
अश्वांश्च दिव्यानिच्छेयं पाण्डुरान्वातरंहसः
रथं च मेघनिर्घोषं सूर्यप्रतिमतेजसम् १६
तथा कृष्णस्य वीर्येण नायुधं विद्यते समम्
येन नागान्पिशाचांश्च निहन्यान्माधवो रणे १७
उपायं कर्मणः सिद्धौ भगवन्वक्तुमर्हसि
निवारयेयं येनेन्द्रं वर्षमाणं महावने १८
पौरुषेण तु यत्कार्यं तत्कर्तारौ स्व पावक
करणानि समर्थानि भगवन्दातुमर्हसि १९
इति श्रीमहाभारते आदिपर्वणि पञ्चदशाधिकद्विशततमोऽध्यायः २१५

## षोडशाधिक द्विशततमोऽध्यायः

वैशम्पायन उवाच
एवमुक्तस्तु भगवान्धूमकेतुर्हुताशनः

चिन्तयामास वरुणं लोकपालं दिदृक्षया
आदित्यमुदके देवं निवसन्तं जलेश्वरम् १
स च तच्चिन्तितं ज्ञात्वा दर्शयामास पावकम्
तमब्रवीद्धूमकेतुः प्रतिपूज्य जलेश्वरम्
चतुर्थं लोकपालानां रक्षितारं महेश्वरम् २
सोमेन राज्ञा यद्दत्तं धनुश्चैवेषुधी च ते
तत्प्रयच्छोभयं शीघ्रं रथं च कपिलक्षणम् ३
कार्यं हि सुमहत्पार्थो गाण्डीवेन करिष्यति
चक्रेण वासुदेवश्च तन्मदर्थे प्रदीयताम्
ददानीत्येव वरुणः पावकं प्रत्यभाषत ४
ततोऽद्भुतं महावीर्यं यशःकीर्तिविवर्धनम्
सर्वशस्त्रैरनाधृष्यं सर्वशस्त्रप्रमाथि च
सर्वायुधमहामात्रं परसेनाप्रधर्षणम् ५
एकं शतसहस्रेण संमितं राष्ट्रवर्धनम्
चित्रमुच्चावचैर्वर्णैः शोभितं श्लक्ष्णमव्रणम् ६
देवदानवगन्धर्वैः पूजितं शाश्वतीः समाः
प्रादाद्वै धनुरत्नं तदक्षय्यौ च महेषुधी ७
रथं च दिव्याश्वयुजं कपिप्रवरकेतनम्
उपेतं राजतैरश्वैर्गान्धर्वैर्हेममालिभिः
पाण्डराभ्रप्रतीकाशैर्मनोवायुसमैर्जवे ८
सर्वोपकरणैर्युक्तमजय्यं देवदानवैः
भानुमन्तं महाघोषं सर्वरत्नमनोहरम् ९
ससर्ज यत्स्वतपसा भौवनो भुवनप्रभुः
प्रजापतिरनिर्देश्यं यस्य रूपं रवेरिव १०
यं स्म सोमः समारुह्य दानवानजयत्प्रभुः
नगमेघप्रतीकाशं ज्वलन्तमिव च श्रिया ११
आश्रिता तं रथश्रेष्ठं शक्रायुधसमा शुभा
तापनीया सुरुचिरा ध्वजयष्टिरनुत्तमा १२
तस्यां तु वानरो दिव्यः सिंहशार्दूललक्षणः
विनर्दन्निव तत्रस्थः संस्थितो मूर्ध्न्यशोभत १३

ध्वजे भूतानि तत्रासन्विविधानि महान्ति च
नादेन रिपुसैन्यानां येषां संज्ञा प्रणश्यति १४
स तं नानापताकाभिः शोभितं रथमुत्तमम्
प्रदक्षिणमुपावृत्य दैवतेभ्यः प्रणम्य च १५
संनद्धः कवची खड्गी बद्धगोधाङ्गुलित्रवान्
आरुरोह रथं पार्थो विमानं सुकृती यथा १६
तच्च दिव्यं धनुःश्रेष्ठं ब्रह्मणा निर्मितं पुरा
गाण्डीवमुपसंगृह्य बभूव मुदितोऽर्जुनः १७
हुताशनं नमस्कृत्य ततस्तदपि वीर्यवान्
जग्राह बलमास्थाय ज्यया च युयुजे धनुः १८
मौर्व्यां तु योज्यमानायां बलिना पाण्डवेन ह
येऽशृण्वन्कूजितं तत्र तेषां वै व्यथितं मनः १९
लब्ध्वा रथं धनुश्चैव तथाक्षय्यौ महेषुधी
बभूव कल्यः कौन्तेयः प्रहृष्टः साह्यकर्मणि २०
वज्रनाभं ततश्चक्रं ददौ कृष्णाय पावकः
आग्नेयमस्त्रं दयितं स च कल्योऽभवत्तदा २१
अब्रवीत्पावकश्चैनमेतेन मधुसूदन
अमानुषानपि रणे विजेष्यसि न संशयः २२
अनेन त्वं मनुष्याणां देवानामपि चाहवे
रक्षःपिशाचदैत्यानां नागानां चाधिकः सदा
भविष्यसि न संदेहः प्रवरारिनिबर्हणे २३
क्षिप्तं क्षिप्तं रणे चैतत्त्वया माधव शत्रुषु
हत्वाप्रतिहतं सङ्ख्ये पाणिमेष्यति ते पुनः २४
वरुणश्च ददौ तस्मै गदामशनिनिःस्वनाम्
दैत्यान्तकरणीं घोरां नाम्ना कौमोदकीं हरेः २५
ततः पावकमब्रूतां प्रहृष्टौ कृष्णपाण्डवौ
कृतास्त्रौ शस्त्रसंपन्नौ रथिनौ ध्वजिनावपि २६
कल्यौ स्वो भगवन्योद्धुमपि सर्वैः सुरासुरैः
किं पुनर्वज्रिणैकेन पन्नगार्थे युयुत्सुना २७
अर्जुन उवाच

चक्रमस्त्रं च वार्ष्णेयो विसृजन्युधि वीर्यवान्
त्रिषु लोकेषु तन्नास्ति यन्न जीयाज्जनार्दनः २८
गाण्डीवं धनुरादाय तथाक्षय्यौ महेषुधी
अहमप्युत्सहे लोकान्विजेतुं युधि पावक २९
सर्वतः परिवार्यैनं दावेन महता प्रभो
कामं संप्रज्वलाद्यैव कल्यौ स्वः साह्यकर्मणि ३०
वैशम्पायन उवाच
एवमुक्तः स भगवान्दाशार्हेणार्जुनेन च
तैजसं रूपमास्थाय दावं दग्धुं प्रचक्रमे ३१
सर्वतः परिवार्याथ सप्तार्चिर्ज्वलनस्तदा
ददाह खाण्डवं क्रुद्धो युगान्तमिव दर्शयन् ३२
परिगृह्य समाविष्टस्तद्वनं भरतर्षभ
मेघस्तनितनिर्घोषं सर्वभूतानि निर्दहन् ३३
दह्यतस्तस्य विबभौ रूपं दावस्य भारत
मेरोरिव नगेन्द्रस्य काञ्चनस्य महाद्युतेः ३४
इति श्रीमहाभारते आदिपर्वणि षोडशाधिकद्विशततमोऽध्यायः २१६

## सप्तदशाधिक द्विशततमोऽध्यायः

वैशम्पायन उवाच
तौ रथाभ्यां नरव्याघ्रौ दावस्योभयतः स्थितौ
दिक्षु सर्वासु भूतानां चक्राते कदनं महत् १
यत्र यत्र हि दृश्यन्ते प्राणिनः खाण्डवालयाः
पलायन्तस्तत्र तत्र तौ वीरौ पर्यधावताम् २
छिद्रं हि न प्रपश्यन्ति रथयोराशुविक्रमात्
आविद्धाविव दृश्येते रथिनौ तौ रथोत्तमौ ३
खाण्डवे दह्यमाने तु भूतान्यथ सहस्रशः
उत्पेतुर्भैरवान्नादान्विनदन्तो दिशो दश ४
दग्धैकदेशा बहवो निष्टप्ताश्च तथापरे
स्फुटिताक्षा विशीर्णाश्च विप्लुताश्च विचेतसः ५
समालिङ्ग्य सुतानन्ये पितॄन्मातॄंस्तथापरे

त्यक्तुं न शेकुः स्नेहेन तथैव निधनं गताः ६
विकृतैर्दर्शनैरन्ये समुत्पेतुः सहस्रशः
तत्र तत्र विघूर्णन्तः पुनरग्नौ प्रपेदिरे ७
दग्धपक्षाक्षिचरणा विचेष्टन्तो महीतले
तत्र तत्र स्म दृश्यन्ते विनश्यन्तः शरीरिणः ८
जलस्थानेषु सर्वेषु क्वाथ्यमानेषु भारत
गतसत्त्वाः स्म दृश्यन्ते कूर्ममत्स्याः सहस्रशः ९
शरीरैः संप्रदीप्तैश्च देहवन्त इवाग्नयः
अदृश्यन्त वने तस्मिन्प्राणिनः प्राणसंक्षये १०
तांस्तथोत्पततः पार्थः शरैः संछिद्य खण्डशः
दीप्यमाने ततः प्रास्यत्प्रहसन्कृष्णवर्त्मनि ११
ते शराचितसर्वाङ्गा विनदन्तो महारवान्
ऊर्ध्वमुत्पत्य वेगेन निपेतुः पावके पुनः १२
शरैरभ्याहतानां च दह्यतां च वनौकसाम्
विरावः श्रूयते ह स्म समुद्रस्येव मथ्यतः १३
वह्नेश्चापि प्रहृष्टस्य खमुत्पेतुर्महार्चिषः
जनयामासुरुद्वेगं सुमहान्तं दिवौकसाम् १४
ततो जग्मुर्महात्मानः सर्व एव दिवौकसः
शरणं देवराजानं सहस्राक्षं पुरंदरम् १५
देवा ऊचुः
किं न्विमे मानवाः सर्वे दह्यन्ते कृष्णवर्त्मना
कच्चिन्न संक्षयः प्राप्तो लोकानाममरेश्वर १६
वैशम्पायन उवाच
तच्छ्रुत्वा वृत्रहा तेभ्यः स्वयमेवान्ववेक्ष्य च
खाण्डवस्य विमोक्षार्थं प्रययौ हरिवाहनः १७
महता मेघजालेन नानारूपेण वज्रभृत्
आकाशं समवस्तीर्य प्रववर्ष सुरेश्वरः १८
ततोऽक्षमात्रा विसृजन्धाराः शतसहस्रशः
अभ्यवर्षत्सहस्राक्षः पावकं खाण्डवं प्रति १९
असंप्राप्तास्तु ता धारास्तेजसा जातवेदसः

ख एव समशुष्यन्त न काश्चित्पावकं गताः २०
ततो नमुचिहा क्रुद्धो भृशमर्चिष्मतस्तदा
पुनरेवाभ्यवर्षत्तमम्भः प्रविसृजन्बहु २१
अर्चिर्धाराभिसंबद्धं धूमविद्युत्समाकुलम्
बभूव तद्वनं घोरं स्तनयित्नुसघोषवत् २२
इति श्रीमहाभारते आदिपर्वणि सप्तदशाधिकद्विशततमोऽध्यायः २१७

अष्टादशाधिक द्विशततमोऽध्यायः

वैशम्पायन उवाच
तस्याभिवर्षतो वारि पाण्डवः प्रत्यवारयत्
शरवर्षेण बीभत्सुरुत्तमास्त्राणि दर्शयन् १
शरैः समन्ततः सर्वं खाण्डवं चापि पाण्डवः
छादयामास तद्वर्षमपकृष्य ततो वनात् २
न च स्म किंचिच्छक्नोति भूतं निश्चरितुं ततः
संछाद्यमाने खगमैरस्यता सव्यसाचिना ३
तक्षकस्तु न तत्रासीत्सर्पराजो महाबलः
दह्यमाने वने तस्मिन्कुरुक्षेत्रेऽभवत्तदा ४
अश्वसेनस्तु तत्रासीत्तक्षकस्य सुतो बली
स यत्नमकरोत्तीव्रं मोक्षार्थं हव्यवाहनात् ५
न शशाक विनिर्गन्तुं कौन्तेयशरपीडितः
मोक्षयामास तं माता निगीर्य भुजगात्मजा ६
तस्य पूर्वं शिरो ग्रस्तं पुच्छमस्य निगीर्यते
ऊर्ध्वमाचक्रमे सा तु पन्नगी पुत्रगृद्धिनी ७
तस्यास्तीक्ष्णेन भल्लेन पृथुधारेण पाण्डवः
शिरश्चिच्छेद गच्छन्त्यास्तामपश्यत्सुरेश्वरः ८
तं मुमोचयिषुर्वज्री वातवर्षेण पाण्डवम्
मोहयामास तत्कालमश्वसेनस्त्वमुच्यत ९
तां च मायां तदा दृष्ट्वा घोरां नागेन वञ्चितः
द्विधा त्रिधा च चिच्छेद खगतानेव भारत १०
शशाप तं च संक्रुद्धो बीभत्सुर्जिह्मगामिनम्

पावको वासुदेवश्च अप्रतिष्ठो भवेदिति ११
ततो जिष्णुः सहस्राक्षं खं वितत्येषुभिः शितैः
योधयामास संक्रुद्धो वञ्चनां तामनुस्मरन् १२
देवराडपि तं दृष्ट्वा संरब्धमिव फल्गुनम्
स्वमस्त्रमसृजद्दीप्तं यत्ततानाखिलं नभः १३
ततो वायुर्महाघोषः क्षोभयन्सर्वसागरान्
वियत्स्थोऽजनयन्मेघाञ्जलधारामुचोऽकुलान् १४
तद्विघातार्थमसृजदर्जुनोऽप्यस्त्रमुत्तमम्
वायव्यमेवाभिमन्त्र्य प्रतिपत्तिविशारदः १५
तेनेन्द्राशनिमेघानां वीर्यौजस्तद्विनाशितम्
जलधाराश्च ताः शोषं जग्मुर्नेशुश्च विद्युतः १६
क्षणेन चाभवद्व्योम संप्रशान्तरजस्तमः
सुखशीतानिलगुणं प्रकृतिस्थार्कमण्डलम् १७
निष्प्रतीकारहृष्टश्च हुतभुग्विविधाकृतिः
प्रजज्वालातुलार्चिष्मान्स्वनादैः पूरयञ्जगत् १८
कृष्णाभ्यां रक्षितं दृष्ट्वा तं च दावमहंकृताः
समुत्पेतुरथाकाशं सुपर्णाद्याः पतत्रिणः १९
गरुडा वज्रसदृशैः पक्षतुण्डनखैस्तथा
प्रहर्तुकामाः संपेतुराकाशात्कृष्णपाण्डवौ २०
तथैवोरगसङ्घाताः पाण्डवस्य समीपतः
उत्सृजन्तो विषं घोरं निश्चेरुर्ज्वलिताननाः २१
तांश्चकर्त शरैः पार्थः सरोषान्दृश्य खेचरान्
विवशाश्चापतन्दीप्तं देहाभावाय पावकम् २२
ततः सुराः सगन्धर्वा यक्षराक्षसपन्नगाः
उत्पेतुर्नादमतुलमुत्सृजन्तो रणार्थिनः २३
अयःकणपचक्राश्मभुशुण्ड्युद्यतबाहवः
कृष्णपार्थौ जिघांसन्तः क्रोधसंमूर्च्छितौजसः २४
तेषामभिव्याहरतां शस्त्रवर्षं च मुञ्चताम्
प्रममाथोत्तमाङ्गानि बीभत्सुर्निशितैः शरैः २५
कृष्णश्च सुमहातेजाश्चक्रेणारिनिहा तदा

दैत्यदानवसङ्घानां चकार कदनं महत् २६
अथापरे शरैर्विद्धाश्चक्रवेगेरितास्तदा
वेलामिव समासाद्य व्यातिष्ठन्त महौजसः २७
ततः शक्रोऽभिसंक्रुद्धस्त्रिदशानां महेश्वरः
पाण्डुरं गजमास्थाय तावुभौ समभिद्रवत् २८
अशनिं गृह्य तरसा वज्रमस्त्रमवासृजत्
हतावेताविति प्राह सुरानसुरसूदनः २९
ततः समुद्यतां दृष्ट्वा देवेन्द्रेण महाशनिम्
जगृहुः सर्वशस्त्राणि स्वानि स्वानि सुरास्तदा ३०
कालदण्डं यमो राजा शिबिकां च धनेश्वरः
पाशं च वरुणस्तत्र विचक्रं च तथा शिवः ३१
ओषधीर्दीप्यमानाश्च जगृहातेऽश्विनावपि
जगृहे च धनुर्धाता मुसलं च जयस्तथा ३२
पर्वतं चापि जग्राह क्रुद्धस्त्वष्टा महाबलः
अंशस्तु शक्तिं जग्राह मृत्युर्देवः परश्वधम् ३३
प्रगृह्य परिघं घोरं विचचारार्यमा अपि
मित्रश्च क्षुरपर्यन्तं चक्रं गृह्य व्यतिष्ठत ३४
पूषा भगश्च संक्रुद्धः सविता च विशां पते
आत्तकार्मुकनिस्त्रिंशाः कृष्णपार्थावभिद्रुताः ३५
रुद्राश्च वसवश्चैव मरुतश्च महाबलाः
विश्वेदेवास्तथा साध्या दीप्यमाना स्वतेजसा ३६
एते चान्ये च बहवो देवास्तौ पुरुषोत्तमौ
कृष्णपार्थौ जिघांसन्तः प्रतीयुर्विविधायुधाः ३७
तत्राऽद्भुतान्यदृश्यन्त निमित्तानि महाहवे
युगान्तसमरूपाणि भूतोत्सादाय भारत ३८
तथा तु दृष्ट्वा संरब्धं शक्रं देवैः सहाच्युतौ
अभीतौ युधि दुर्धर्षौ तस्थतुः सज्जकार्मुकौ ३९
आगतांश्चैव तान्दृष्ट्वा देवानेकैकशस्ततः
न्यवारयेतां संक्रुद्धौ बाणैर्वज्रोपमैस्तदा ४०
असकृद्भग्नसंकल्पाः सुराश्च बहुशः कृताः

भयाद्रणं परित्यज्य शक्रमेवाभिशिश्रियुः ४१
दृष्ट्वा निवारितान्देवान्माधवेनार्जुनेन च
आश्चर्यमगमंस्तत्र मुनयो दिवि विष्ठिताः ४२
शक्रश्चापि तयोर्वीर्यमुपलभ्यासकृद्रणे
बभूव परमप्रीतो भूयश्चैतावयोधयत् ४३
ततोऽश्मवर्षं सुमहद्व्यसृजत्पाकशासनः
भूय एव तदा वीर्यं जिज्ञासुः सव्यसाचिनः
तच्छरैरर्जुनो वर्षं प्रतिजघ्नेऽत्यमर्षणः ४४
विफलं क्रियमाणं तत्संप्रेक्ष्य च शतक्रतुः
भूयः संवर्धयामास तद्वर्षं देवराडथ ४५
सोऽश्मवर्षं महावेगैरिषुभिः पाकशासनिः
विलयं गमयामास हर्षयन्पितरं तदा ४६
समुत्पाट्य तु पाणिभ्यां मन्दराच्छिखरं महत्
सद्रुमं व्यसृजच्छक्रो जिघांसुः पाण्डुनन्दनम् ४७
ततोऽजुनो वेगवद्भिर्ज्वलिताग्रैरजिह्मगैः
बाणैर्विध्वंसयामास गिरेः शृङ्गं सहस्रधा ४८
गिरेर्विशीर्यमाणस्य तस्य रूपं तदा बभौ
सार्कचन्द्रग्रहस्येव नभसः प्रविशीर्यतः ४९
तेनावाक्पतता दावे शैलेन महता भृशम्
भूय एव हतास्तत्र प्राणिनः खाण्डवालयाः ५०
इति श्रीमहाभारते आदिपर्वणि अष्टादशाधिकद्विशततमोऽध्यायः २१८

## एकोनविंशत्यधिक द्विशततमोऽध्यायः

वैशम्पायन उवाच
तथा शैलनिपातेन भीषिताः खाण्डवालयाः
दानवाराक्षसा नागास्तरक्ष्वृक्षवनौकसः
द्विपाः प्रभिन्नाः शार्दूलाः सिंहाः केसरिणस्तथा १
मृगाश्च महिषाश्चैव शरभाः पक्षिणस्तथा
समुद्विग्ना विससृपुस्तथान्या भूतजातयः २
तं दावं समुदीक्षन्तः कृष्णौ चाभ्युद्यतायुधौ

उत्पातनादशब्देन संत्रासित इवाभवन् ३
स्वतेजोभास्वरं चक्रमुत्ससर्ज जनार्दनः
तेन ता जातयः क्षुद्राः सदानवनिशाचराः
निकृत्ताः शतशः सर्वा निपेतुरनलं क्षणात् ४
अदृश्यन्राक्षसास्तत्र कृष्णचक्रविदारिताः
वसा रुधिरसंपृक्ताः सन्ध्यायामिव तोयदाः ५
पिशाचान्पक्षिणो नागान्पशूंश्चापि सहस्रशः
निघ्नंश्चरति वार्ष्णेयः कालवत्तत्र भारत ६
क्षिप्तं क्षिप्तं हि तच्चक्रं कृष्णस्यामित्रघातिनः
हत्वानेकानि सत्त्वानि पाणिमेति पुनः पुनः ७
तथा तु निघ्नतस्तस्य सर्वसत्त्वानि भारत
बभूव रूपमत्युग्रं सर्वभूतात्मनस्तदा ८
समेतानां च देवानां देवतानां च सर्वशः
विजेता नाभवत्कश्चित्कृष्णपाण्डवयोर्मृधे ९
तयोर्बलात्परित्रातुं तं दावं तु यदा सुराः
नाशक्नुवञ्शमयितुं तदाभूवन्पराङ्मुखाः १०
शतक्रतुश्च संप्रेक्ष्य विमुखान्देवतागणान्
बभूवावस्थितः प्रीतः प्रशंसन्कृष्णपाण्डवौ ११
निवृत्तेषु तु देवेषु वागुवाचाशरीरिणी
शतक्रतुमभिप्रेक्ष्य महागम्भीरनिःस्वना १२
न ते सखा संनिहितस्तक्षकः पन्नगोत्तमः
दाहकाले खाण्डवस्य कुरुक्षेत्रं गतो ह्यसौ १३
न च शक्यौ त्वया जेतुं युद्धेऽस्मिन्समवस्थितौ
वासुदेवार्जुनौ शक्र निबोधेदं वचो मम १४
नरनारायणौ देवौ तावेतौ विश्रुतौ दिवि
भवानप्यभिजानाति यद्वीर्यौ यत्पराक्रमौ १५
नैतौ शक्यौ दुराधर्षौ विजेतुमजितौ युधि
अपि सर्वेषु लोकेषु पुराणावृषिसत्तमौ १६
पूजनीयतमावेतावपि सर्वैः सुरासुरैः
सयक्षरक्षोगन्धर्वनरकिंनरपन्नगैः १७

तस्मादितः सुरैः सार्धं गन्तुमर्हसि वासव
दिष्टं चाप्यनुपश्यैतत्खाण्डवस्य विनाशनम् १८
इति वाचमभिश्रुत्य तथ्यमित्यमरेश्वरः
कोपामर्षौ समुत्सृज्य संप्रतस्थे दिवं तदा १९
तं प्रस्थितं महात्मानं समवेक्ष्य दिवौकसः
त्वरिताः सहिता राजन्ननुजग्मुः शतक्रतुम् २०
देवराजं तदा यान्तं सह देवैरुदीक्ष्य तु
वासुदेवार्जुनौ वीरौ सिंहनादं विनेदतुः २१
देवराजे गते राजन्प्रहृष्टौ कृष्णपाण्डवौ
निर्विशङ्कं पुनर्दावं दाहयामासतुस्तदा २२
स मारुत इवाभ्राणि नाशयित्वार्जुनः सुरान्
व्यधमच्छरसङ्घातैः प्राणिनः खाण्डवालयान् २३
न च स्म किंचिच्छक्नोति भूतं निश्चरितुं ततः
संछिद्यमानमिषुभिरस्यता सव्यसाचिना २४
नाशकंस्तत्र भूतानि महान्त्यपि रणेऽजुनम्
निरीक्षितुममोघेषुं करिष्यन्ति कुतो रणम् २५
शतेनैकं च विव्याध शतं चैकेन पत्रिणा
व्यसवस्तेऽपतन्नग्नौ साक्षात्कालहता इव २६
न चालभन्त ते शर्म रोधःसु विषमेषु च
पितृदेवनिवासेषु संतापश्चाप्यजायत २७
भूतसंघसहस्राश्च दीनाश्चक्रुर्महास्वनम्
रुरुवुर्वारणाश्चैव तथैव मृगपक्षिणः
तेन शब्देन वित्रेसुर्गङ्गोदधिचरा झषाः २८
न ह्यर्जुनं महाबाहुं नापि कृष्णं महाबलम्
निरीक्षितुं वै शक्नोति कश्चिद्योद्धुं कुतः पुनः २९
एकायनगता येऽपि निष्पतन्त्यत्र केचन
राक्षसान्दानवान्नागाञ्जघ्ने चक्रेण तान्हरिः ३०
ते विभिन्नशिरोदेहाश्चक्रवेगाद्गतासवः
पेतुरास्ये महाकाया दीप्तस्य वसुरेतसः ३१
स मांसरुधिरौघैश्च मेदोघैश्च समीरितः

उपर्याकाशगो वह्निर्विधूमः समदृश्यत ३२
दीप्ताक्षो दीप्तजिह्वश्च दीप्तव्यात्तमहाननः
दीप्तोर्ध्वकेशः पिङ्गाक्षः पिबन्प्राणभृतां वसाम् ३३
तां स कृष्णार्जुनकृतां सुधां प्राप्य हुताशनः
बभूव मुदितस्तृप्तः परां निर्वृतिमागतः ३४
ग्रथासुरं मयं नाम तक्षकस्य निवेशनात्
विप्रद्रवन्तं सहसा ददर्श मधुसूदनः ३५
तमग्निः प्रार्थयामास दिधक्षुर्वातसारथिः
देहवान्वै जटी भूत्वा नदंश्च जलदो यथा
जिघांसुर्वासुदेवश्च चक्रमुद्यम्य विष्ठितः ३६
स चक्रमुद्यतं दृष्ट्वा दिधक्षुं च हुताशनम्
ग्रभिधावार्जुनेत्येवं मयश्चुक्रोश भारत ३७
तस्य भीतस्वनं श्रुत्वा मा भैरिति धनंजयः
प्रत्युवाच मयं पार्थो जीवयन्निव भारत ३८
तं पार्थेनाभये दत्ते नमुचेर्भ्रातरं मयम्
न हन्तुमैच्छद्दाशार्हः पावको न ददाह च ३९
तस्मिन्वने दह्यमाने षडग्निर्न ददाह च
ग्रश्वसेनं मयं चापि चतुरः शार्ङ्गकानिति ४०

इति श्रीमहाभारते ग्रादिपर्वणि एकोनविंशत्यधिकद्विशततमोऽध्यायः

## विंशत्यधिक द्विशततमोऽध्यायः

जनमेजय उवाच
किमर्थं शार्ङ्गकानग्निर्न ददाह तथागते
तस्मिन्वने दह्यमाने ब्रह्मन्नेतद्वदाशु मे १
ग्रदाहे ह्यश्वसेनस्य दानवस्य मयस्य च
कारणं कीर्तितं ब्रह्मञ्शार्ङ्गकानां न कीर्तितम् २
तदेतदद्भुतं ब्रह्मञ्शार्ङ्गनामविनाशनम्
कीर्तयस्वाग्निसंमर्दे कथं ते न विनाशिताः ३
वैशम्पायन उवाच
यदर्थं शार्ङ्गकानग्निर्न ददाह तथागते

तत्ते सर्वं यथावृत्तं कथयिष्यामि भारत ४
धर्मज्ञानां मुख्यतमस्तपस्वी संशितव्रतः
आसीन्महर्षिः श्रुतवान्मन्दपाल इति श्रुतः ५
स मार्गमास्थितो राजन्नृषीणामूर्ध्वरेतसाम्
स्वाध्यायवान्धर्मरतस्तपस्वी विजितेन्द्रियः ६
स गत्वा तपसः पारं देहमुत्सृज्य भारत
जगाम पितृलोकाय न लेभे तत्र तत्फलम् ७
स लोकानफलान्दृष्ट्वा तपसा निर्जितानपि
पप्रच्छ धर्मराजस्य समीपस्थान्दिवौकसः ८
किमर्थमावृता लोका ममैते तपसार्जिताः
किं मया न कृतं तत्र यस्येदं कर्मणः फलम् ९
तत्राहं तत्करिष्यामि यदर्थमिदमावृतम्
फलमेतस्य तपसः कथयध्वं दिवौकसः १०
देवा ऊचुः
ऋणिनो मानवा ब्रह्मञ्जायन्ते येन तच्छृणु
क्रियाभिर्ब्रह्मचर्येण प्रजया च न संशयः ११
तदपाक्रियते सर्वं यज्ञेन तपसा सुतैः
तपस्वी यज्ञकृच्चासि न तु ते विद्यते प्रजा १२
त इमे प्रसवस्यार्थे तव लोकाः समावृताः
प्रजायस्व ततो लोकानुपभोक्तासि शाश्वतान् १३
पुन्नाम्नो नरकात्पुत्रस्त्रातीति पितरं मुने
तस्मादपत्यसंताने यतस्व द्विजसत्तम १४
वैशम्पायन उवाच
तच्छ्रुत्वा मन्दपालस्तु तेषां वाक्यं दिवौकसाम्
क्व नु शीघ्रमपत्यं स्याद्बहुलं चेत्यचिन्तयत् १५
स चिन्तयन्नभ्यगच्छद्बहुलप्रसवान्खगान्
शार्ङ्गिकां शार्ङ्गको भूत्वा जरितां समुपेयिवान् १६
तस्यां पुत्रानजनयच्चतुरो ब्रह्मवादिनः
तानपास्य स तत्रैव जगाम लपितां प्रति
बालान्सुतानण्डगतान्मात्रासह मुनिर्वने १७

तस्मिन्गते महाभागे लपितां प्रति भारत
अपत्यस्नेहसंविग्ना जरिता बह्वचिन्तयत् १८
तेन त्यक्तानसंत्याज्यानृषीनण्डगतान्वने
नाजहत्पुत्रकानार्ता जरिता खाण्डवे नृप
बभार चैतान्संजातान्स्ववृत्त्या स्नेहविक्लवा १९
ततोऽग्निं खाण्डवं दग्धुमायान्तं दृष्ट्वानृषिः
मन्दपालश्चरंस्तस्मिन्वने लपितया सह २०
तं संकल्पं विदित्वास्य ज्ञात्वा पुत्रांश्च बालकान्
सोऽभितुष्टाव विप्रर्षिर्ब्राह्मणो जातवेदसम्
पुत्रान्परिददद्भीतो लोकपालं महौजसम् २१
मन्दपाल उवाच
त्वमग्ने सर्वदेवानां मुखं त्वमसि हव्यवाट्
त्वमन्तः सर्वभूतानां गूढश्चरसि पावक २२
त्वामेकमाहुः कवयस्त्वामाहुस्त्रिविधं पुनः
त्वामष्टधा कल्पयित्वा यज्ञवाहमकल्पयन् २३
त्वया सृष्टमिदं विश्वं वदन्ति परमर्षयः
त्वदृते हि जगत्कृत्स्नं सद्यो न स्याद्धुताशन २४
तुभ्यं कृत्वा नमो विप्राः स्वकर्मविजितां गतिम्
गच्छन्ति सह पत्नीभिः सुतैरपि च शाश्वतीम् २५
त्वामग्ने जलदानाहुः खे विषक्तान्सविद्युतः
दहन्ति सर्वभूतानि त्वत्तो निष्क्रम्य हायनाः २६
जातवेदस्तवैवेयं विश्वसृष्टिर्महाद्युते
तवैव कर्म विहितं भूतं सर्वं चराचरम् २७
त्वयापो विहिताः पूर्वं त्वयि सर्वमिदं जगत्
त्वयि हव्यं च कव्यं च यथावत्संप्रतिष्ठितम् २८
अग्ने त्वमेव ज्वलनस्त्वं धाता त्वं बृहस्पतिः
त्वमश्विनौ यमौ मित्रः सोमस्त्वमसि चानिलः २९
वैशम्पायन उवाच
एवं स्तुतस्ततस्तेन मन्दपालेन पावकः
तुतोष तस्य नृपते मुनेरमिततेजसः

उवाच चैनं प्रीतात्मा किमिष्टं करवाणि ते ३०
तमब्रवीन्मन्दपालः प्राञ्जलिर्हव्यवाहनम्
प्रदहन्खाराडवं दावं मम पुत्रान्विसर्जय ३१
तथेति तत्प्रतिश्रुत्य भगवान्हव्यवाहनः
खाराडवे तेन कालेन प्रजज्वाल दिधक्षया ३२
इति श्रीमहाभारते आदिपर्वणि विंशत्यधिकद्विशततमोऽध्यायः २२०

एक विंशत्यधिक द्विशततमोऽध्यायः

ततः प्रज्वलिते शुक्रे शार्ङ्गकास्ते सुदुःखिताः
व्यथिताः परमोद्विग्ना नाधिजग्मुः परायणम् १
निशाम्य पुत्रकान्बालान्माता तेषां तपस्विनी
जरिता दुःखसंतप्ता विललाप नरेश्वर २
अयमग्निर्दहन्कक्षमित आयाति भीषणः
जगत्सन्दीपयन्भीमो मम दुःखविवर्धनः ३
इमे च मां कर्षयन्ति शिशवो मन्दचेतसः
अबर्हाश्चरणैर्हीनाः पूर्वेषां नः परायणम्
त्रासयंश्चायमायाति लेलिहानो महीरुहान् ४
अशक्तिमत्त्वाच्च सुता न शक्ताः सरणे मम
आदाय च न शक्नोमि पुत्रांस्तरितुमन्यतः ५
न च त्यक्तुमहं शक्ता हृदयं दूयतीव मे
कं नु जह्यामहं पुत्रं कमादाय व्रजाम्यहम् ६
किं नु मे स्यात्कृतं कृत्वा मन्यध्वं पुत्रकाः कथम्
चिन्तयाना विमोक्षं वो नाधिगच्छामि किंचन
छादयित्वा च वो गात्रैः करिष्ये मरणं सह ७
जरितारौ कुलं हीदं ज्येष्ठत्वेन प्रतिष्ठितम्
सारिसृक्वः प्रजायेत पितॄणां कुलवर्धनः ८
स्तम्बमित्रस्तपः कुर्याद्द्रोणो ब्रह्मविदुत्तमः
इत्येवमुक्त्वा प्रययौ पिता वो निर्घृणः पुरा ९
कमुपादाय शक्येत गन्तुं कस्यापदुत्तमा
किं नु कृत्वा कृतं कार्यं भवेदिति च विह्वला १०

नापश्यत्स्वधिया मोक्षं स्वसुतानां तदानलात्
एवं ब्रुवन्ती शार्ङ्गास्ते प्रत्यूचुरथ मातरम् ११
स्नेहमुत्सृज्य मातस्त्वं पत यत्र न हव्यवाट्
अस्मासु हि विनष्टेषु भवितारः सुतास्तव
त्वयि मातर्विनष्टायां न नः स्यात्कुलसन्ततिः १२
अन्ववेक्ष्यैतदुभयं क्षेमं स्याद्यत्कुलस्य नः
तद्वै कर्तुं परः कालो मातरेष भवेत्तव १३
मा वै कुलविनाशाय स्नेहं कार्षीः सुतेषु नः
न हीदं कर्म मोघं स्याल्लोककामस्य नः पितुः १४
जरितोवाच
इदमाखोर्बिलं भूमौ वृक्षस्यास्य समीपतः
तदाविशध्वं त्वरिता वह्नेरत्र न वो भयम् १५
ततोऽह पांसुना छिद्रमपिधास्यामि पुत्रकाः
एवं प्रतिकृतं मन्ये ज्वलतः कृष्णवर्त्मनः १६
तत एष्याम्यतीतेऽग्नौ विहर्तुं पांसुसंचयम्
रोचतामेष वोपायो विमोक्षाय हुताशनात् १७
शार्ङ्गका ऊचुः
अबर्हान्मांसभूतान्नः क्रव्यादाखुर्विनाशयेत्
पश्यमाना भयमिदं न शक्ष्यामो निषेवितुम् १८
कथमग्निर्न नो दह्यात्कथमाखुर्न भक्षयेत्
कथं न स्यात्पिता मोघः कथं माता ध्रियेत नः १९
बिल आखोर्विनाशः स्यादग्नेराकाशचारिणाम्
अन्ववेक्ष्यैतदुभयं श्रेयान्दाहो न भक्षणम् २०
गर्हितं मरणं न स्यादाखुना खादता बिले
शिष्टादिष्टः परित्यागः शरीरस्य हुताशनात् २१
इति श्रीमहाभारते आदिपर्वणि एकविंशत्यधिकद्विशततमोऽध्यायः २२१

## द्वाविंशत्यधिकद्विशततमोऽध्यायः

जरितोवाच
अस्माद्बिलान्निष्पतितं श्येन आखुं जहार तम्

क्षुद्रं गृहीत्वा पादाभ्यां भयं न भविता ततः १
शार्ङ्गका ऊचुः
न हृतं तं वयं विद्मः श्येनेनाखुं कथंचन
अन्येऽपि भवितारोऽत्र तेभ्योऽपि भयमेव नः २
संशयो ह्यग्निरागच्छेद्दृष्टं वायोर्निवर्तनम्
मृत्युर्नो बिलवासिभ्यो भवेन्मातरसंशयम् ३
निःसंशयात्संशयितो मृत्युर्मातर्विशिष्यते
चर खे त्वं यथान्यायं पुत्रान्वेत्स्यसि शोभनान् ४
जरितोवाच
अहं वै श्येनमायान्तमद्राक्षं बिलमन्तिकात्
संचरन्तं समादाय जहाराखुं बिलाद्बली ५
तं पतन्तमहं श्येनं त्वरिता पृष्ठतोऽन्वगाम्
आशिषोऽस्य प्रयुञ्जाना हरतो मूषकं बिलात् ६
यो नो द्वेष्टारमादाय श्येनराज प्रधावसि
भव त्वं दिवमास्थाय निरमित्रो हिरण्मयः ७
यदा स भक्षितस्तेन क्षुधितेन पतत्रिणा
तदाहं तमनुज्ञाप्य प्रत्युपायां गृहान्प्रति ८
प्रविशध्वं बिलं पुत्रा विश्रब्धा नास्ति वो भयम्
श्येनेन मम पश्यन्त्या हृत आखुर्न संशयः ९
शार्ङ्गका ऊचुः
न विद्म वै वयं मातर्हृतमाखुमितः पुरा
अविज्ञाय न शक्ष्यामो बिलमाविशतुं वयम् १०
जरितोवाच
अहं हि तं प्रजानामि हृतं श्येनेन मूषकम्
अत एव भयं नास्ति क्रियतां वचनं मम ११
शार्ङ्गका ऊचुः
न त्वं मिथ्योपचारेण मोक्षयेथा भयं महत्
समाकुलेषु ज्ञानेषु न बुद्धिकृतमेव तत् १२
न चोपकृतमस्माभिर्न चास्मान्वेत्थ ये वयम्
पीड्यमाना भरस्यस्मान्का सती के वयं तव १३

तरुणी दर्शनीयासि समर्था भर्तुरेषणे
अनुगच्छ स्वभर्तारं पुत्रानाप्स्यसि शोभनान् १४
वयमप्यग्निमाविश्य लोकानाप्स्यामहे शुभान्
अथास्मान्न दहेदग्निरायास्त्वं पुनरेव नः १५
वैशम्पायन उवाच
एवमुक्ता ततः शार्ङ्गी पुत्रानुत्सृज्य खाण्डवे
जगाम त्वरिता देशं क्षेममग्नेरनाश्रयम् १६
ततस्तीक्ष्णार्चिरभ्यागाज्ज्वलितो हव्यवाहनः
यत्र शार्ङ्गा बभूवुस्ते मन्दपालस्य पुत्रकाः १७
ते शार्ङ्गा ज्वलितं दृष्ट्वा ज्वलनं स्वेन तेजसा
जरितारिस्ततो वाचं श्रावयामास पावकम् १८
इति श्रीमहाभारते आदिपर्वणि द्वाविंशत्यधिकद्विशततमोऽध्यायः २२२

## त्रयोविंशत्यधिक द्विशततमोऽध्यायः

जरितारिरुवाच
पुरतः कृच्छ्रकालस्य धीमाञ्जागर्ति पूरुषः
स कृच्छ्रकालं संप्राप्य व्यथां नैवैति कर्हिचित् १
यस्तु कृच्छ्रमसम्प्राप्तं विचेतानावबुध्यते
स कृच्छ्रकाले व्यथितो न प्रजानाति किञ्चन २
सारिसृक्व उवाच
धीरस्त्वमसि मेधावी प्राणकृच्छ्रमिदं च नः
शूरः प्राज्ञो बहूनां हि भवत्येको न संशयः ३
स्तम्बमित्र उवाच
ज्येष्ठस्त्राता भवति वै ज्येष्ठो मुञ्चति कृच्छ्रतः
ज्येष्ठश्चेन्न प्रजानाति कनीयान्किं करिष्यति ४
द्रोण उवाच
हिरण्यरेतास्त्वरितो ज्वलन्नायाति नः क्षयम्
सप्तजिह्वोऽनलः क्षामो लेलिहानोपसर्पति ५
वैशम्पायन उवाच
एवमुक्तो भ्रातृभिस्तु जरितारिर्विभावसुम्

तुष्टाव प्राञ्जलिर्भूत्वा यथा तच्छृणु पार्थिव ६
जरितारिरुवाच
आत्मासि वायोः पवनः शरीरमुत वीरुधाम्
योनिरापश्च ते शुक्रं योनिस्त्वमसि चाम्भसः ७
ऊर्ध्वं चाधश्च गच्छन्ति विसर्पन्ति च पार्श्वतः
अर्चिषस्ते महावीर्य रश्मयः सवितुर्यथा ८
सारिसृक्व उवाच
माता प्रपन्ना पितरं न विद्मः पक्षाश्च नो न प्रजाताब्जकेतो
न नस्त्राता विद्यतेऽग्ने त्वदन्यस्तस्माद्धि नः परिरक्षैकवीर ९
यदग्ने ते शिवं रूपं ये च ते सप्त हेतयः
तेन नः परिरक्षाद्य ईडितः शरणैषिणः १०
त्वमेवैकस्तपसे जातवेदो नान्यस्तप्ता विद्यते गोषु देव
ऋषीनस्मान्बालकान्पालयस्व परेणास्मान्प्रैहि वै हव्यवाह ११
स्तम्बमित्र उवाच
सर्वमग्ने त्वमेवैकस्त्वयि सर्वमिदं जगत्
त्वं धारयसि भूतानि भुवनं त्वं बिभर्षि च १२
त्वमग्निर्हव्यवाहस्त्वं त्वमेव परमं हविः
मनीषिणस्त्वां जानन्ति बहुधा चैकधैव च १३
सृष्ट्वा लोकांस्त्रीनिमान्हव्यवाह प्राप्ते काले पचसि पुनः समिद्धः
सर्वस्यास्य भुवनस्य प्रसूतिस्त्वमेवाग्ने भवसि पुनः प्रतिष्ठा १४
त्वमन्नं प्राणिनां भुक्तमन्तर्भूतो जगत्पते
नित्यं प्रवृद्धः पचसि त्वयि सर्वं प्रतिष्ठितम् १५
द्रोण उवाच
सूर्यो भूत्वा रश्मिभिर्जातवेदो भूमेरम्भो भूमिजातान्रसांश्च
विश्वानादाय पुनरुत्सर्गकाले सृष्ट्वा वृष्ट्या भावयसीह शुक्र १६
त्वत्त एताः पुनः शुक्र वीरुधो हरितच्छदाः
जायन्ते पुष्करिण्यश्च समुद्रश्च महोदधिः १७
इदं वै सद्म तिग्मांशो वरुणस्य परायणम्
शिवस्त्राता भवास्माकं मास्मानद्य विनाशय १८
पिङ्गाक्ष लोहितग्रीव कृष्णवर्त्मन्हुताशन

परेण प्रैहि मुञ्चास्मान्सागरस्य गृहानिव १९
वैशम्पायन उवाच
एवमुक्तो जातवेदा द्रोणेनाक्लिष्टकर्मणा
द्रोणमाह प्रतीतात्मा मन्दपालप्रतिज्ञया २०
ऋषिर्द्रोणस्त्वमसि वै ब्रह्मैतद्व्याहृतं त्वया
ईप्सितं ते करिष्यामि न च ते विद्यते भयम् २१
मन्दपालेन यूयं हि मम पूर्वं निवेदिताः
वर्जयेः पुत्रकान्मह्यं दहन्दावमिति स्म ह २२
यच्च तद्वचनं तस्य त्वया यच्चेह भाषितम्
उभयं मे गरीयस्तद्ब्रूहि किं करवाणि ते
भृशं प्रीतोऽस्मि भद्रं ते ब्रह्मन्स्तोत्रेण ते विभो २३
द्रोण उवाच
इमे मार्जारकाः शुक्र नित्यमुद्वेजयन्ति नः
एतान्कुरुष्व दंष्ट्रासु हव्यवाह सबान्धवान् २४
वैशम्पायन उवाच
तथा तत्कृतवान्वह्निरभ्यनुज्ञाय शार्ङ्गकान्
ददाह खाण्डवं चैव समिद्धो जनमेजय २५
इति श्रीमहाभारते आदिपर्वणि त्रयोविंशत्यधिकद्विशततमोऽध्यायः २२३

## चतुर्विंशत्यधिक द्विशततमोऽध्यायः

वैशम्पायन उवाच
मन्दपालोऽपि कौरव्य चिन्तयानः सुतांस्तदा
उक्तवानप्यशीतांशुं नैव स स्म न तप्यते १
स तप्यमानः पुत्रार्थे लपितामिदमब्रवीत्
कथं न्वशक्ताः प्लवने लपिते मम पुत्रकाः २
वर्धमाने हुतवहे वाते शीघ्रं प्रवायति
असमर्था विमोक्षाय भविष्यन्ति ममात्मजाः ३
कथं न्वशक्ता त्राणाय माता तेषां तपस्विनी
भविष्यत्यसुखाविष्टा पुत्रत्राणमपश्यती ४
कथं नु सरणेऽशक्तान्पतने च ममात्मजान्

संतप्यमाना अभितो वाशमानाभिधावती ५
जरितारिः कथं पुत्रः सारिसृक्वः कथं च मे
स्तम्बमित्रः कथं द्रोणः कथं सा च तपस्विनी ६
लालप्यमानं तमृषिं मन्दपालं तथा वने
लपिता प्रत्युवाचेदं सासूयमिव भारत ७
न ते सुतेष्ववेक्षास्ति तानृषीनुक्तवानसि
तेजस्विनो वीर्यवन्तो न तेषां ज्वलनाद्भयम् ८
तथाग्नौ ते परीत्ताश्च त्वया हि मम संनिधौ
प्रतिश्रुतं तथा चेति ज्वलनेन महात्मना ९
लोकपालोऽनृतां वाचं न तु वक्ता कथंचन
समर्थास्ते च वक्तारो न ते तेष्वस्ति मानसम् १०
तामेव तु ममामित्रीं चिन्तयन्परितप्यसे
ध्रुवं मयि न ते स्नेहो यथा तस्यां पुराभवत् ११
न हि पक्षवता न्याय्यं निःस्नेहेन सुहृज्जने
पीड्यमान उपद्रष्टुं शक्तेनात्मा कथंचन १२
गच्छ त्वं जरितामेव यदर्थं परितप्यसे
चरिष्याम्यहमप्येका यथा कापुरुषे तथा १३
मन्दपाल उवाच
नाहमेवं चरे लोके यथा त्वमभिमन्यसे
अपत्यहेतोर्विचरे तच्च कृच्छ्रगतं मम १४
भूतं हित्वा भविष्येऽर्थे योऽवलम्बेत मन्दधीः
अवमन्येत तं लोको यथेच्छसि तथा कुरु १५
एष हि ज्वलमानोऽग्निर्लेलिहानो महीरुहान्
द्वेष्यं हि हृदि संतापं जनयत्यशिवं मम १६
वैशम्पायन उवाच
तस्माद्देशादतिक्रान्ते ज्वलने जरिता ततः
जगाम पुत्रकानेव त्वरिता पुत्रगृद्धिनी १७
सा तान्कुशलिनः सर्वान्निर्मुक्ताञ्जातवेदसः
रोरूयमाणा कृपणा सुतान्दृष्टवती वने १८
अश्रद्धेयतमं तेषां दर्शनं सा पुनः पुनः

एकैकशश्च तान्पुत्रान्क्रोशमानान्वपद्यत १९
ततोऽभ्यगच्छत्सहसा मन्दपालोऽपि भारत
अथ ते सर्व एवैनं नाभ्यनन्दन्त वै सुताः २०
लालप्यमानमेकैकं जरितां च पुनः पुनः
नोचुस्ते वचनं किंचित्तमृषिं साध्वसाधु वा २१
मन्दपाल उवाच
ज्येष्ठः सुतस्ते कतमः कतमस्तदनन्तरः
मध्यमः कतमपुत्रः कनिष्ठः कतमश्च ते २२
एवं ब्रुवन्तं दुःखार्तं किं मां न प्रतिभाषसे
कृतवानस्मि हव्याशे नैव शान्तिमितो लभे २३
जरितोवाच
किं ते ज्येष्ठे सुते कार्यं किमनन्तरजेन वा
किं च ते मध्यमे कार्यं किं कनिष्ठे तपस्विनि २४
यस्त्वं मां सर्वशो हीनामुत्सृज्यासि गतः पुरा
तामेव लपितां गच्छ तरुणीं चारुहासिनीम् २५
मन्दपाल उवाच
न स्त्रीणां विद्यते किंचिदन्यत्र पुरुषान्तरात्
सापत्नकमृते लोके भवितव्यं हि तत्तथा २६
सुव्रतापि हि कल्याणि सर्वलोकपरिश्रुता
अरुन्धती पर्यशङ्कद्वसिष्ठमृषिसत्तमम् २७
विशुद्धभावमत्यन्तं सदा प्रियहिते रतम्
सप्तर्षिमध्यगं वीरमवमेने च तं मुनिम् २८
अपध्यानेन सा तेन धूमारुणसमप्रभा
लक्ष्यालक्ष्या नाभिरूपा निमित्तमिव लक्ष्यते २९
अपत्यहेतोः संप्राप्तं तथा त्वमपि मामिह
इष्टमेवंगते हित्वा सा तथैव च वर्तसे ३०
नैव भार्येति विश्वासः कार्यः पुंसा कथंचन
न हि कार्यमनुध्याति भार्या पुत्रवती सती ३१
वैशम्पायन उवाच
ततस्ते सर्व एवैनं पुत्राः सम्यगुपासिरे

स च तानात्मजान्राजन्नाश्वासयितुमारभत् ३२
इति श्रीमहाभारते आदिपर्वणि चतुर्विंशत्यधिकद्विशततमोऽध्यायः २२४

पञ्चविंशत्यधिकद्विशततमोऽध्यायः

मन्दपाल उवाच
युष्माकं परिरक्षार्थं विज्ञप्तो ज्वलनो मया
अग्निना च तथेत्येवं पूर्वमेव प्रतिश्रुतम् १
अग्नेर्वचनमाज्ञाय मातुर्धर्मज्ञतां च वः
युष्माकं च परं वीर्यं नाहं पूर्वमिहागतः २
न संतापो हि वः कार्यः पुत्रका मरणं प्रति
ऋषीन्वेद हुताशोऽपि ब्रह्म तद्विदितं च वः ३
वैशम्पायन उवाच
एवमाश्वास्य पुत्रान्स भार्यां चादाय भारत
मन्दपालस्ततो देशादन्यं देशं जगाम ह ४
भगवानपि तिग्मांशुः समिद्धं खाण्डवं वनम्
ददाह सह कृष्णाभ्यां जनयञ्जगतोऽभयम् ५
वसामेदोवहाः कुल्यास्तत्र पीत्वा च पावकः
अगच्छत्परमां तृप्तिं दर्शयामास चार्जुनम् ६
ततोऽन्तरिक्षाद्भगवानवतीर्य सुरेश्वरः
मरुद्गणवृतः पार्थं माधवं चाब्रवीदिदम् ७
कृतं युवाभ्यां कर्मेदममरैरपि दुष्करम्
वरान्वृणीतं तुष्टोऽस्मि दुर्लभानप्यमानुषान् ८
पार्थस्तु वरयामास शक्रादस्त्राणि सर्वशः
ग्रहीतुं तच्च शक्रोऽस्य तदा कालं चकार ह ९
यदा प्रसन्नो भगवान्महादेवो भविष्यति
तुभ्यं तदा प्रदास्यामि पाण्डवास्त्राणि सर्वशः १०
अहमेव च तं कालं वेत्स्यामि कुरुनन्दन
तपसा महता चापि दास्यामि तव तान्यहम् ११
आग्नेयानि च सर्वाणि वायव्यानि तथैव च
मदीयानि च सर्वाणि ग्रहीष्यसि धनंजय १२

वासुदेवोऽपि जग्राह प्रीतिं पार्थेन शाश्वतीम्
ददौ च तस्मै देवेन्द्रस्तं वरं प्रीतिमांस्तदा १३
दत्त्वा ताभ्यां वरं प्रीतः सह देवैर्मरुत्पतिः
हुताशनमनुज्ञाप्य जगाम त्रिदिवं पुनः १४
पावकश्चापि तं दावं दग्ध्वा समृगपक्षिणम्
अहानि पञ्च चैकं च विरराम सुतर्पितः १५
जग्ध्वा मांसानि पीत्वा च मेदांसि रुधिराणि च
युक्तः परमया प्रीत्या तावुवाच विशां पते १६
युवाभ्यां पुरुषाग्र्याभ्यां तर्पितोऽस्मि यथासुखम्
अनुजानामि वां वीरौ चरतं यत्र वाञ्छितम् १७
एवं तौ समनुज्ञातौ पावकेन महात्मना
अर्जुनो वासुदेवश्च दानवश्च मयस्तथा १८
परिक्रम्य ततः सर्वे त्रयोऽपि भरतर्षभ
रमणीये नदीकूले सहिताः समुपाविशन् १९

इति श्रीमहाभारते आदिपर्वणि पञ्चविंशत्यधिकद्विशततमोऽध्यायः २२५

आदिपर्व समाप्तं

श्री गणेशाय नमः
ॐ नारायणं नमस्कृत्य नरं चैव नरोत्तमम्
देवीं सरस्वतीं चैव ततो जयमुदीरयेत्

## अथ प्रथमोऽध्यायः

वैशम्पायन उवाच
ततोऽब्रवीन्मयः पार्थं वासुदेवस्य संनिधौ
प्राञ्जलि श्लक्ष्णया वाचा पूजयित्वा पुनः पुनः १
अस्माच्च कृष्णात्संक्रुद्धात्पावकाच्च दिधक्षतः
त्वया त्रातोऽस्मि कौन्तेय ब्रूहि किं करवाणि ते २
अर्जुन उवाच
कृतमेव त्वया सर्वं स्वस्ति गच्छ महासुर
प्रीतिमान्भव मे नित्यं प्रीतिमन्तो वयं च ते ३
मय उवाच
युक्तमेतत्त्वयि विभो यथात्थ पुरुषर्षभ
प्रीतिपूर्वमहं किंचित्कर्तुमिच्छामि भारत ४
अहं हि विश्वकर्मा वै दानवानां महाकविः
सोऽह वै त्वत्कृते किंचित्कर्तुमिच्छामि पाण्डव ५
अर्जुन उवाच
प्राणकृच्छ्राद्विमुक्तं त्वमात्मानं मन्यसे मया
एवं गते न शक्ष्यामि किंचित्कारयितुं त्वया ६
न चापि तव संकल्पं मोघमिच्छामि दानव
कृष्णस्य क्रियतां किंचित्तथा प्रतिकृतं मयि ७
वैशम्पायन उवाच
चोदितो वासुदेवस्तु मयेन भरतर्षभ
मुहूर्तमिव संदध्यौ किमयं चोद्यतामिति ८
चोदयामास तं कृष्णः सभा वै क्रियतामिति
धर्मराजस्य दैतेय यादृशीमिह मन्यसे ९
यां कृतां नानुकुर्युस्ते मानवाः प्रेक्ष्य विस्मिताः
मनुष्यलोके कृत्स्नेऽस्मिंस्तादृशीं कुरु वै सभाम् १०

यत्र दिव्यानभिप्रायान्पश्येम विहितांस्त्वया
आसुरान्मानुषांश्चैव तां सभां कुरु वै मय ११
प्रतिगृह्य तु तद्वाक्यं संप्रहृष्टो मयस्तदा
विमानप्रतिमां चक्रे पाण्डवस्य सभां मुदा १२
ततः कृष्णश्च पार्थश्च धर्मराजे युधिष्ठिरे
सर्वमेतद्यथावेद्य दर्शयामासतुर्मयम् १३
तस्मै युधिष्ठिरः पूजां यथार्हमकरोत्तदा
स तु तां प्रतिजग्राह मयः सत्कृत्य सत्कृतः १४
स पूर्वदेवचरितं तत्र तत्र विशां पते
कथयामास दैतेयः पाण्डुपुत्रेषु भारत १५
स कालं कंचिदाश्वस्य विश्वकर्मा प्रचिन्त्य च
सभां प्रचक्रमे कर्तुं पाण्डवानां महात्मनाम् १६
अभिप्रायेण पार्थानां कृष्णस्य च महात्मनः
पुण्येऽहनि महातेजाः कृतकौतुकमङ्गलः १७
तर्पयित्वा द्विजश्रेष्ठान्पायसेन सहस्रशः
धनं बहुविधंदत्त्वा तेभ्य एव च वीर्यवान् १८
सर्वर्तुगुणसंपन्नां दिव्यरूपां मनोरमाम्
दशकिष्कुसहस्रां तां मापयामास सर्वतः १९
इति श्रीमहाभारते सभापर्वणि प्रथमोऽध्यायः १

## अथ द्वितीयोऽध्यायः

वैशम्पायन उवाच
उषित्वा खाण्डवप्रस्थे सुखवासं जनार्दनः
पार्थैः प्रीतिसमायुक्तैः पूजनार्होऽभिपूजितः १
गमनाय मतिं चक्रे पितुर्दर्शनलालसः
धर्मराजमथामन्त्र्य पृथां च पृथुलोचनः २
ववन्दे चरणौ मूर्ध्ना जगद्वन्द्यः पितृष्वसुः
स तया मूर्ध्न्युपाघ्रातः परिष्वक्तश्च केशवः ३
ददर्शानन्तरं कृष्णो भगिनीं स्वां महायशाः
तामुपेत्य हृषीकेशः प्रीत्या वाष्पसमन्वितः ४

अर्थ्यं तथ्यं हितं वाक्यं लघु युक्तमनुत्तमम्
उवाच भगवान्भद्रां सुभद्रां भद्रभाषिणीम् ५
तया स्वजनगामीनि श्रावितो वचनानि सः
संपूजितश्चाप्यसकृच्छिरसा चाभिवादितः ६
तामनुज्ञाप्य वार्ष्णेयः प्रतिनन्द्य च भामिनीम्
ददर्शानन्तरं कृष्णां धौम्यं चापि जनार्दनः ७
ववन्दे च यथान्यायं धौम्यं पुरुषसत्तमः
द्रौपदीं सान्त्वयित्वा च आमन्त्र्य च जनार्दनः ८
भ्रातॄनभ्यगमद्धीमान्पार्थेन सहितो बली
भ्रातृभिः पञ्चभिः कृष्णो वृतः शक्र इवामरैः ९
अर्चयामास देवांश्च द्विजांश्च यदुपुंगवः
माल्यजप्य नमस्कारै र्गन्धैरुच्चावचैरपि
स कृत्वा सर्वकार्याणि प्रतस्थे तस्थुषां वरः १०
स्वस्ति वाच्यार्हतो विप्रान्दधिपात्रफलाक्षतैः
वसु प्रदाय च ततः प्रदक्षिणमवर्तत ११
काञ्चनं रथमास्थाय तार्क्ष्यकेतनमाशुगम्
गदाचक्रासिशार्ङ्गाद्यैरायुधैश्च समन्वितम् १२
तिथावथ च नक्षत्रे मुहूर्ते च गुणान्विते
प्रययौ पुण्डरीकाक्षः सैन्यसुग्रीववाहनः १३
अन्वारुरोह चाप्येनं प्रेम्णा राजा युधिष्ठिरः
अपास्य चास्य यन्तारं दारुकं यन्तृसत्तमम्
अभीषून्संप्रजग्राह स्वयं कुरुपतिस्तदा १४
उपारुह्यार्जुनश्चापि चामरव्यजनं सितम्
रुक्मदण्डं बृहन्मूर्ध्नि दुधावाभिप्रदक्षिणम् १५
तथैव भीमसेनोऽपि यमाभ्यां सहितो वशी
पृष्ठतोऽनुययौ कृष्णमृत्विक्पौरजनैर्वृतः १६
स तथा भ्रातृभिः सार्धं केशवः परवीरहा
अनुगम्यमानः शुशुभे शिष्यैरिव गुरुः प्रियैः १७
पार्थमामन्त्र्य गोविन्दः परिष्वज्य च पीडितम्
युधिष्ठिरं पूजयित्वा भीमसेनं यमौ तथा १८

परिष्वक्तो भृशं ताभ्यां यमाभ्यामभिवादितः
ततस्तैः संविदं कृत्वा यथावन्मधुसूदनः १९
निवर्तयित्वा च तदा पाण्डवान्सपदानुगान्
स्वां पुरीं प्रययौ कृष्णः पुरंदर इवापरः २०
लोचनैरनुजग्मुस्ते तमादृष्टिपथात्तदा
मनोभिरनुजग्मुस्ते कृष्णं प्रीतिसमन्वयात् २१
अतृप्तमनसामेव तेषां केशवदर्शने
क्षिप्रमन्तर्दधे शौरिश्चक्षुषां प्रियदर्शनः २२
अकामा इव पार्थास्ते गोविन्दगतमानसाः
निवृत्योपययुः सर्वे स्वपुरं पुरुषर्षभाः
स्यन्दनेनाथ कृष्णोऽपि समये द्वारकामगात् २३
इति श्रीमहाभारते सभापर्वणि द्वितीयोऽध्यायः २

अथ तृतीयोऽध्यायः

वैशम्पायन उवाच
अथाब्रवीन्मयः पार्थमर्जुनं जयतां वरम्
आपृच्छे त्वां गमिष्यामि क्षिप्रमेष्यामि चाप्यहम् १
उत्तरेण तु कैलासं मैनाकं पर्वतं प्रति
यक्ष्यमाणेषु सर्वेषु दानवेषु तदा मया
कृतं मणिमयं भाण्डं रम्यं बिन्दुसरः प्रति २
सभायां सत्यसन्धस्य यदासीद्वृषपर्वणः
आगमिष्यामि तद्गृह्य यदि तिष्ठति भारत ३
ततः सभां करिष्यामि पाण्डवाय यशस्विने
मनःप्रह्लादिनीं चित्रां सर्वरत्नविभूषिताम् ४
अस्ति बिन्दुसरस्येव गदा श्रेष्ठा कुरूद्वह
निहिता यौवनाश्वेन राज्ञा हत्वा रणे रिपून्
सुवर्णबिन्दुभिश्चित्रा गुर्वी भारसहा दृढा ५
सा वै शतसहस्रस्य संमिता सर्वघातिनी
अनुरूपा च भीमस्य गाण्डीवं भवतो यथा ६
वारुणश्च महाशंखो देवदत्तः सुघोषवान्

सर्वमेतत्प्रदास्यामि भवते नात्र संशयः
इत्युक्त्वा सोऽसुरः पार्थं प्रागुदीचीमगाद्दिशम् ७
उत्तरेण तु कैलासं मैनाकं पर्वतं प्रति
हिरण्यशृङ्गो भगवान्महामणिमयो गिरिः ८
रम्यं बिन्दुसरोनाम यत्र राजा भगीरथः
दृष्ट्वा भागीरथीं गङ्गामुवास बहुलाः समाः ९
यत्रेष्ट्वा सर्वभूतानामीश्वरेण महात्मना
आहृताः क्रतवो मुख्याः शतं भरतसत्तम १०
यत्र यूपा मणिमयाश्चित्याश्चापि हिरण्मयाः
शोभार्थं विहितास्तत्र न तु दृष्टान्ततः कृताः ११
यत्रेष्ट्वा स गतः सिद्धिं सहस्राक्षः शचीपतिः
यत्र भूतपतिः सृष्ट्वा सर्वलोकान्सनातनः
उपास्यते तिग्मतेजा वृतो भूतैः सहस्रशः १२
नरनारायणौ ब्रह्मा यमः स्थाणुश्च पञ्चमः
उपासते यत्र सत्रं सहस्रयुगपर्यये १३
यत्रेष्टं वासुदेवेन सत्रैर्वर्षसहस्रकैः
श्रद्दधानेन सततं शिष्टसंप्रतिपत्तये १४
सुवर्णमालिनो यूपाश्चित्याश्चाप्यति भास्वराः
ददौ यत्र सहस्राणि प्रयुतानि च केशवः १५
तत्र गत्वा स जग्राह गदां शङ्खं च भारत
स्फाटिकं च सभाद्रव्यं यदासीद्वृषपर्वणः
किंकरैः सह रक्षोभिरगृह्णात्सर्वमेव तत् १६
तदाहृत्य तु तां चक्रे सोऽसुरोऽप्रतिमां सभाम्
विश्रुतां त्रिषु लोकेषु दिव्यां मणिमयीं शुभाम् १७
गदां च भीमसेनाय प्रवरां प्रददौ तदा
देवदत्तं च पार्थाय ददौ शङ्खमनुत्तमम् १८
सभा तु सा महाराज शातकुम्भमयद्रुमा
दशकिष्कुसहस्राणि समन्तादायताभवत् १९
यथा वह्नेर्यथार्कस्य सोमस्य च यथैव सा
भ्राजमाना तथा दिव्या बभार परमं वपुः २०

प्रतिघ्नतीव प्रभया प्रभामर्कस्य भास्वराम्
प्रबभौ ज्वलमानेव दिव्या दिव्येन वर्चसा २१
नगमेघप्रतीकाशा दिवमावृत्य विष्ठिता
आयता विपुला श्लक्ष्णा विपाप्मा विगतक्लमा २२
उत्तमद्रव्यसंपन्ना मणिप्राकारमालिनी
बहुरत्ना बहुधना सुकृता विश्वकर्मणा २३
न दाशार्ही सुधर्मा वा ब्रह्मणो वापि तादृशी
आसीद्रूपेण संपन्ना यां चक्रेऽप्रतिमां मयः २४
तां स्म तत्र मयेनोक्ता रक्षन्ति च वहन्ति च
सभामष्टौ सहस्राणि किंकरा नाम राक्षसाः २५
अन्तरिक्षचरा घोरा महाकाया महाबलाः
रक्ताक्षाः पिंगलाक्षाश्च शुक्तिकर्णाः प्रहारिणः २६
तस्यां सभायां नलिनीं चकाराप्रतिमां मयः
वैडूर्यपत्रविततां मणिनालमयाम्बुजाम् २७
पद्मसौगन्धिकवतीं नानाद्विजगणायुताम्
पुष्पितैः पङ्कजैश्चित्रां कूर्ममत्स्यैश्च शोभिताम् २८
सूपतीर्थामकलुषां सर्वर्तुसलिलां शुभाम्
मारुतेनैव चोद्धूतैर्मुक्ताबिन्दुभिराचिताम् २९
मणिरत्नचितां तां तु केचिदभ्येत्य पार्थिवाः
दृष्ट्वापि नाभ्यजानन्त तेऽज्ञानात्प्रपतन्त्युत ३०
तां सभामभितो नित्यं पुष्पवन्तो महाद्रुमाः
आसन्नानाविधा नीलाः शीतच्छाया मनोरमाः ३१
काननानि सुगन्धीनि पुष्करिण्यश्च सर्वशः
हंसकारण्डवयुताश्चक्रवाकोपशोभिताः ३२
जलजानां च माल्यानां स्थलजानां च सर्वशः
मारुतो गन्धमादाय पाण्डवान्स्म निषेवते ३३
ईदृशीं तां सभां कृत्वा मासैः परिचतुर्दशैः
निष्ठितां धर्मराजाय मयो राज्ञे न्यवेदयत् ३४

इति श्रीमहाभारते सभापर्वणि तृतीयोऽध्यायः ३

## अथ चतुर्थोऽध्यायः

वैशम्पायन उवाच
ततः प्रवेशनं चक्रे तस्यां राजा युधिष्ठिरः
अयुतं भोजयामास ब्राह्मणानां नराधिपः १
घृतपायसेन मधुना भक्ष्यैर्मूलफलैस्तथा
अहतैश्चैव वासोभिर्माल्यैरुच्चावचैरपि २
ददौ तेभ्यः सहस्राणि गवां प्रत्येकशः प्रभुः
पुण्याहघोषस्तत्रासीद्दिवस्पृगिव भारत ३
वादित्रैर्विविधैर्गीतै र्गन्धैरुच्चावचैरपि
पूजयित्वा कुरुश्रेष्ठो दैवतानि निवेश्य च ४
तत्र मल्ला नटा झल्लाः सूता वैतालिकास्तथा
उपतस्थुर्महात्मानं सप्तरात्रं युधिष्ठिरम् ५
तथा स कृत्वा पूजां तां भ्रातृभिः सह पाण्डवः
तस्यां सभायां रम्यायां रेमे शक्रो यथा दिवि ६
सभायामृषयस्तस्यां पाण्डवैः सह आसते
आसांचक्रुर्नरेन्द्राश्च नानादेशसमागताः ७
असितो देवलः सत्यः सर्पमाली महाशिराः
अर्वावसुः सुमित्रश्च मैत्रेयः शुनको बलि ८
बको दाल्भ्यः स्थूलशिराः कृष्णद्वैपायनः शुकः
सुमन्तुर्जैमिनिः पैलो व्यासशिष्यास्तथा वयम् ९
तित्तिरिर्याज्ञवल्क्यश्च ससुतो लोमहर्षणः
अप्सुहोम्यश्च धौम्यश्च अणीमाण्डव्यकौशिकौ १०
दामोष्णीषस्त्रैवणिश्च पर्णादो घटजानुकः
मौञ्जायनो वायुभक्षः पाराशर्यश्च सारिकौ ११
बलवाकः शिनीवाकः सुत्यपालः कृतश्रमः
जातूकर्णः शिखावांश्च सुबलः पारिजातकः १२
पर्वतश्च महाभागो मार्कण्डेयस्तथा मुनिः
पवित्रपाणिः सावर्णिर्भालुकिर्गालवस्तथा १३
जङ्घाबन्धुश्च रैभ्यश्च कोपवेगश्रवा भृगुः
हरिबभ्रुश्च कौण्डिन्यो बभ्रुमाली सनातनः १४

कक्षीवानौशिजश्चैव नाचिकेतोऽथ गौतमः
पैङ्गो वराहः शुनकः शाण्डिल्यश्च महातपाः
कर्करो वेणुजङ्घश्च कलापः कठ एव च १५
मुनयो धर्मसहिता धृतात्मानो जितेन्द्रियाः
एते चान्ये च बहवो वेदवेदाङ्गपारगाः १६
उपासते महात्मानं सभायामृषिसत्तमाः
कथयन्तः कथाः पुण्या धर्मज्ञाः शुचयोऽमलाः १७
तथैव क्षत्रियश्रेष्ठा धर्मराजमुपासते
श्रीमान्महात्मा धर्मात्मा मुञ्जकेतुर्विवर्धनः १८
संग्रामजिद्दुर्मुखश्च उग्रसेनश्च वीर्यवान्
कक्षसेनः क्षितिपतिः क्षेमकश्चापराजितः
काम्बोजराजः कमलः कम्पनश्च महाबलः १९
सततं कम्पयामास यवनानेक एव यः
यथासुरान्कालकेयान्देवो वज्रधरस्तथा २०
जटासुरो मद्रकान्तश्च राजा कुन्तिः कुणिन्दश्च किरातराजः
तथाङ्गवङ्गौ सह पुण्ड्रकेण पाण्ड्योड्रराजौ सह चान्ध्रकेण २१
किरातराजः सुमना यवनाधिपतिस्तथा
चाणूरो देवरातश्च भोजो भीमरथश्च यः २२
श्रुतायुधश्च कालिगो जयत्सेनश्च मागधः
सुशर्मा चेकितानश्च सुरथोऽमित्रकर्षणः २३
केतुमान्वसुदानश्च वैदेहोऽथ कृतक्षणः
सुधर्मा चानिरुद्धश्च श्रुतायुश्च महाबलः २४
अनूपराजो दुर्धर्षः क्षेमजिच्च सुदक्षिणः
शिशुपालः सहसुतः करूषाधिपतिस्तथा २५
वृष्णीनां चैव दुर्धर्षाः कुमारा देवरूपिणः
आहुको विपृथुश्चैव गदः सारण एव च २६
अक्रूरः कृतवर्मा च सात्यकिश्च शिनेः सुतः
भीष्मकोऽथाहृतिश्चैव द्युमत्सेनश्च वीर्यवान्
केकयाश्च महेष्वासा यज्ञसेनश्च सौमकिः २७
अर्जुनं चापि संश्रित्य राजपुत्रा महाबलाः

अशिक्षन्त धनुर्वेदं रौरवाजिनवाससः २८
तत्रैव शिक्षिता राजन्कुमारा वृष्णिनन्दनाः
रौक्मिणेयश्च साम्बश्च युयुधानश्च सात्यकिः २९
एते चान्ये च बहवो राजानः पृथिवीपते
धनञ्जयसखा चात्र नित्यमास्ते स्म तुम्बुरुः ३०
चित्रसेनः सहामात्यो गन्धर्वाप्सरसस्तथा
गीतवादित्रकुशलाः शम्यातालविशारदाः ३१
प्रमाणेऽथ लयस्थाने किंनराः कृतनिश्रमाः
संचोदितास्तुम्बुरुणा गन्धर्वाः सहिता जगुः ३२
गायन्ति दिव्यतानैस्ते यथान्यायं मनस्विनः
पाण्डुपुत्रानृषींश्चैव रमयन्त उपासते ३३
तस्यां सभायामासीनाः सुव्रताः सत्यसंगराः
दिवीव देवा ब्रह्माणं युधिष्ठिरमुपासते ३४
इति श्रीमहाभारते सभापर्वणि चतुर्थोऽध्यायः ४

पञ्चमोऽध्यायः

वैशम्पायन उवाच
तथा तत्रोपविष्टेषु पाण्डवेषु महात्मसु
महत्सु चोपविष्टेषु गन्धर्वेषु च भारत १
लोकाननुचरन्सर्वानागमत्तां सभामृषिः
नारदः सुमहातेजा ऋषिभिः सहितस्तदा २
पारिजातेन राजेन्द्र रैवतेन च धीमता
सुमुखेन च सौम्येन देवर्षिरमितद्युतिः
सभास्थान्पाण्डवान्द्रष्टुं प्रीयमाणो मनोजवः ३
तमागतमृषिं दृष्ट्वा नारदं सर्वधर्मवित्
सहसा पाण्डवश्रेष्ठः प्रत्युत्थायानुजैःसह
अभ्यवादयत प्रीत्या विनयावनतस्तदा ४
तदर्हमासनं तस्मै संप्रदाय यथाविधि
अर्चयामास रत्नैश्च सर्वकामैश्च धर्मवित् ५
सोऽचितः पाण्डवैः सर्वैर्महर्षिर्वेदपारगः

धर्मकामार्थसंयुक्तं पप्रच्छेदं युधिष्ठिरम् ६
नारद उवाच
कच्चिदर्थाश्च कल्पन्ते धर्मे च रमते मनः
सुखानि चानुभूयन्ते मनश्च न विहन्यते ७
कच्चिदाचरितां पूर्वैर्नरदेवपितामहैः
वर्तसे वृत्तिमक्षीणां धर्मार्थसहितां नृषु ८
कच्चिदर्थेन वा धर्मं धर्मेणार्थमथापि वा
उभौ वा प्रीतिसारेण न कामेन प्रबाधसे ९
कच्चिदर्थं च धर्मं च कामं च जयतां वर
विभज्य काले कालज्ञ सदा वरद सेवसे १०
कच्चिद्राजगुणैः षड्भिः सप्तोपायांस्तथानघ
बलाबलं तथा सम्यक्चतुर्दश परीक्षसे ११
कच्चिदात्मानमन्वीक्ष्य परांश्च जयतां वर
तथा संधाय कर्माणि अष्टौ भारत सेवसे १२
कच्चित्प्रकृतयः षट् ते न लुप्ता भरतर्षभ
आढ्यास्तथाव्यसनिनः स्वनुरक्ताश्च सर्वशः १३
कच्चिन्न तर्कैर्दूतैर्वा ये चाप्यपरिशङ्किताः
त्वत्तो वा तव वामात्यैर्भिद्यते जातु मन्त्रितम् १४
कच्चित्संधिं यथाकालं विग्रहं चोपसेवसे
कच्चिद्वृत्तिमुदासीने मध्यमे चानुवर्त्तसे १५
कच्चिदात्मसमा बुद्ध्या शुचयो जीवितक्षमाः
कुलीनाश्चानुरक्ताश्च कृतास्ते वीर मन्त्रिणः १६
विजयो मन्त्रमूलो हि राज्ञां भवति भारत
सुसंवृतो मन्त्रधनैरमात्यैः शास्त्रकोविदैः १७
कच्चिन्निद्रावशं नैषि कच्चित्काले विबुध्यसे
कच्चिच्चापररात्रेषु चिन्तयस्यर्थमर्थवित् १८
कच्चिन्मन्त्रयसे नैकः कच्चिन्न बहुभिः सह
कच्चित्ते मन्त्रितो मन्त्रो न राष्ट्रमनुधावति १९
कच्चिदर्थान्विनिश्चित्य लघुमूलान्महोदयान्
क्षिप्रमारभसे कर्तुं न विघ्नयसि तादृशान् २०

कच्चिन्न सर्वे कर्मान्ताः परोक्षास्ते विशङ्किताः
सर्वे वा पुनरुत्सृष्टाः संसृष्टं ह्यत्र कारणम् २१
कच्चिद्राजन्कृतान्येव कृतप्रायाणि वा पुनः
विदुस्ते वीर कर्माणि नानवाप्तानि कानिचित् २२
कच्चित्कारणिकाः सर्वे सर्वशास्त्रेषु कोविदाः
कारयन्ति कुमारांश्च योधमुख्यांश्च सर्वशः २३
कच्चित्सहस्रैर्मूर्खाणामेकं क्रीणासि पण्डितम्
पण्डितो ह्यर्थकृच्छ्रेषु कुर्यान्निःश्रेयसं परम् २४
कच्चिद्दुर्गाणि सर्वाणि धनधान्यायुधोदकैः
यन्त्रैश्च परिपूर्णानि तथा शिल्पिधनुर्धरैः २५
एकोऽप्यमात्यो मेधावी शूरो दान्तो विचक्षणः
राजानं राजपुत्रं वा प्रापयेन्महतीं श्रियम् २६
कच्चिदष्टादशान्येषु स्वपक्षे दश पञ्च च
त्रिभिस्त्रिभिरविज्ञातैर्वेत्सि तीर्थानि चारकैः २७
कच्चिद्द्विषामविदितः प्रतियत्तश्च सर्वदा
नित्ययुक्तो रिपून्सर्वान्वीक्षसे रिपुसूदन २८
कच्चिद्विनयसंपन्नः कुलपुत्रो बहुश्रुतः
अनसूयुरनुप्रष्टा सत्कृतस्ते पुरोहितः २९
कच्चिदग्निषु ते युक्तो विधिज्ञो मतिमानृजुः
हुतं च होष्यमाणं च काले वेदयते सदा ३०
कच्चिदङ्गेषु निष्णातो ज्योतिषां प्रतिपादकः
उत्पातेषु च सर्वेषु दैवज्ञः कुशलस्तव ३१
कच्चिन्मुख्या महत्स्वेव मध्यमेषु च मध्यमाः
जघन्याश्च जघन्येषु भृत्याः कर्मसु योजिताः ३२
अमात्यानुपधातीतान्पितृपैतामहाञ्शुचीन्
श्रेष्ठाञ्श्रेष्ठेषु कच्चित्त्वं नियोजयसि कर्मसु ३३
कच्चिन्नोग्रेण दण्डेन भृशमुद्वेजितप्रजाः
राष्ट्रं तवानुशासन्ति मन्त्रिणो भरतर्षभ ३४
कच्चित्त्वां नावजानन्ति याजकाः पतितं यथा
उग्रप्रतिग्रहीतारं कामयानमिव स्त्रियः ३५

कच्चिद्धृष्टश्च शूरश्च मतिमान्धृतिमाञ्शुचिः
कुलीनश्चानुरक्तश्च दक्षः सेनापतिस्तव ३६
कच्चिद्बलस्य ते मुख्याः सर्वेयुद्धविशारदाः
दृष्टापदाना विक्रान्तास्त्वया सत्कृत्य मानिताः ३७
कच्चिद्बलस्य भक्तं च वेतनं च यथोचितम्
संप्राप्तकालं दातव्यं ददासि न विकर्षसि ३८
कालातिक्रमणाद्ध्येते भक्तवेतनयोर्भृताः
भर्तुः कुप्यन्ति दौर्गत्यात्सोऽनर्थः सुमहान्स्मृतः ३९
कच्चित्सर्वेऽनुरक्तास्त्वां कुलपुत्राः प्रधानतः
कच्चित्प्राणांस्तवार्थेषु संत्यजन्ति सदा युधि ४०
कच्चिन्नैको बहूनर्थान्सर्वशः सांपरायिकान्
अनुशास्सि यथाकामं कामात्मा शासनातिगः ४१
कच्चित्पुरुषकारेण पुरुषः कर्म शोभयन्
लभते मानमधिकं भूयो वा भक्तवेतनम् ४२
कच्चिद्विद्याविनीतांश्च नराञ्ज्ञानविशारदान्
यथार्हं गुणतश्चैव दानेनाभ्यवपद्यसे ४३
कच्चिद्दारान्मनुष्याणां तवार्थे मृत्युमेयुषाम्
व्यसनं चाभ्युपेतानां विभर्षि भरतर्षभ ४४
कच्चिद्भयादुपनतं क्लीबं वा रिपुमागतम्
युद्धे वा विजितं पार्थ पुत्रवत्परिरक्षसि ४५
कच्चित्त्वमेव सर्वस्याः पृथिव्याः पृथिवीपते
समश्च नाभिशङ्क्यश्च यथा माता यथा पिता ४६
कच्चिद्व्यसनिनं शत्रुं निशम्य भरतर्षभ
अभियासि जवेनैव समीक्ष्य त्रिविधं बलम् ४७
पार्ष्णिमूलं च विज्ञाय व्यवसायं पराजयम्
बलस्य च महाराज दत्त्वा वेतनमग्रतः ४८
कच्चिच्च बलमुख्येभ्यः परराष्ट्रे परंतप
उपच्छन्नानि रत्नानि प्रयच्छसि यथार्हतः ४९
कच्चिदात्मानमेवाग्रे विजित्य विजितेन्द्रियः
पराञ्जिगीषसे पार्थ प्रमत्तानजितेन्द्रियान् ५०

कच्चित्ते यास्यतः शत्रून्पूर्वं यान्ति स्वनुष्ठिताः
साम दानं च भेदश्च दण्डश्च विधिवद्गुणाः ५१
कच्चिन्मूलं दृढं कृत्वा यात्रां यासि विशां पते
तांश्च विक्रमसे जेतुं जित्वा च परिरक्षसि ५२
कच्चिदष्टांगसंयुक्ता चतुर्विधबला चमूः
बलमुख्यैः सुनीता ते द्विषतां प्रतिबाधनी ५३
कच्चिल्लवं च मुष्टिं च परराष्ट्रे परंतप
अविहाय महाराज विहंसि समरे रिपून् ५४
कच्चित्स्वपरराष्ट्रेषु बहवोऽधिकृतास्तव
अर्थान्समनुतिष्ठन्ति रक्षन्ति च परस्परम् ५५
कच्चिदभ्यवहार्याणि गात्रसंस्पर्शकानि च
घ्रेयाणि च महाराज रक्षन्त्यनुमतास्तव ५६
कच्चित्कोशं च कोष्ठं च वाहनं द्वारमायुधम्
आयश्च कृतकल्याणैस्तव भक्तैरनुष्ठितः ५७
कच्चिदाभ्यन्तरेभ्यश्च वाह्येभ्यश्च विशां पते
रक्षस्यात्मानमेवाग्रे तांश्च स्वेभ्यो मिथश्च तान् ५८
कच्चिन्न पाने द्यूते वा क्रीडासु प्रमदासु च
प्रतिजानन्ति पूर्वाह्णे व्ययं व्यसनजं तव ५९
कच्चिदायस्य चार्धेन चतुर्भागेन वा पुनः
पादभागैस्त्रिभिर्वापि व्ययः संशोध्यते तव ६०
कच्चिज्ज्ञातीन्गुरून्वृद्धान्वणिजः शिल्पिनः श्रितान्
अभीक्ष्णमनुगृह्णासि धनधान्येन दुर्गतान् ६१
कच्चिदायव्यये युक्ताः सर्वे गणकलेखकाः
अनुतिष्ठन्ति पूर्वाह्णे नित्यमायव्ययं तव ६२
कच्चिदर्थेषु संप्रौढान्हितकामाननुप्रियान्
नापकर्षसि कर्मभ्यः पूर्वमप्राप्य किल्विषम् ६३
कच्चिद्विदित्वा पुरुषानुत्तमाधममध्यमान्
त्वं कर्मस्वनुरूपेषु नियोजयसि भारत ६४
कच्चिन्न लुब्धाश्चौरा वा वैरिणो वा विशां पते
अप्राप्तव्यवहारा वा तव कर्मस्वनुष्ठिताः ६५

कच्चिन्न लुब्धैश्चौरैर्वा कुमारैः स्त्रीबलेन वा
त्वया वा पीड्यते राष्ट्रं कच्चित्पुष्टाः कृषीवलाः ६६
कच्चिद्राष्ट्रेतडागानि पूर्णानि च महान्ति च
भागशो विनिविष्टानि न कृषिर्देवमातृका ६७
कच्चिद्बीजं च भक्तं च कर्षकायावसीदते
प्रतिकं च शतं वृद्ध्या ददास्यृणमनुग्रहम् ६८
कच्चित्स्वनुष्ठिता तात वार्त्ता ते साधुभिर्जनैः
वार्त्तायां संश्रितस्तात लोकोऽय सुखमेधते ६९
कच्चिच्छुचिकृतः प्राज्ञाः पञ्च पञ्च स्वनुष्ठिताः
क्षेमं कुर्वन्ति संहत्य राजञ्जनपदे तव ७०
कच्चिन्नगरगुप्त्यर्थंगामा नगरवत्कृताः
ग्रामवच्च कृता रक्षा ते च सर्वे तदर्पणाः ७१
कच्चिद्बलेनानुगताः समानि विषमाणि च
पुराणचौराः साध्यक्षाश्चरन्ति विषये तव ७२
कच्चित्स्त्रियः सान्त्वयसि कच्चित्ताश्च सुरक्षिताः
कच्चिन्न श्रद्दधास्यासां कच्चिद्गुह्यं न भाषसे ७३
कच्चिच्चारान्निशि श्रुत्वा तत्कार्यमनुचिन्त्य च
प्रियाण्यनुभवञ्शेषे विदित्वाभ्यन्तरं जनम् ७४
कच्चिद्द्वौ प्रथमौ यामौ रात्र्यांसुप्त्वा विशां पते
संचिन्तयसि धर्मार्थौ याम उत्थाय पश्चिमे ७५
कच्चिद्दर्शयसे नित्यं मनुष्यान्समलंकृतान्
उत्थाय काले कालज्ञः सह पाण्डव मंत्रिभिः ७६
कच्चिद्रक्ताम्बरधराः खड्गहस्ताः स्वलंकृताः
अभितस्त्वामुपासन्ते रक्षणार्थमरिन्दम ७७
कच्चिद्दण्ड्येषु यमवत्पूज्येषु च विशां पते
परीक्ष्य वर्तसे सम्यगप्रियेषु प्रियेषु च ७८
कच्चिच्छारीरमाबाधमौषधैर्नियमेन वा
मानसं वृद्धसेवाभिः सदा पार्थापकर्षसि ७९
कच्चिद्वैद्याश्चिकित्सायामष्टाङ्गायां विशारदाः
सुहृदश्चानुरक्ताश्च शरीरे ते हिताः सदा ८०

कच्चिन्न मानान्मोहाद्वा कामाद्वापि विशां पते
अर्थिप्रत्यर्थिनः प्राप्तानपास्यसि कथंचन ८१
कच्चिन्न लोभान्मोहाद्वा विश्रम्भात्प्रणयेन वा
आश्रितानां मनुष्याणां वृत्तिं त्वं संरुणत्सि च ८२
कच्चित्पौरा न सहिता ये च ते राष्ट्रवासिनः
त्वया सह विरुध्यन्ते परैः क्रीताः कथंचन ८३
कच्चित्ते दुर्बलः शत्रुर्बलेनोपनिपीडितः
मन्त्रेण बलवान्कश्चिदुभाभ्यां वा युधिष्ठिर ८४
कच्चित्सर्वेऽनुरक्तास्त्वां भूमिपालाः प्रधानतः
कच्चित्प्राणांस्त्वदर्थेषु संत्यजन्ति त्वया हृताः ८५
कच्चित्ते सर्वविद्यासु गुणतोऽर्चा प्रवर्तते
ब्राह्मणानां च साधूनां तव निःश्रेयसे शुभा ८६
कच्चिद्धर्मे त्रयीमूले पूर्वैराचरितैः जनैः
वर्तमानस्तथा कर्तुं तस्मिन्कर्मणि वर्तसे ८७
कच्चित्तव गृहेऽन्नानिस्वादून्यश्नन्ति वै द्विजाः
गुणवन्ति गुणोपेतास्तवाध्यक्षं सदक्षिणम् ८८
कच्चित्क्रतूनेकचित्तो वाजपेयांश्च सर्वशः
पुण्डरीकांश्च कार्त्स्न्येन यतसे कर्तुमात्मवान् ८९
कच्चिज्ज्ञातीन्गुरून्वृद्धान्दैवतां स्तापसानपि
चैत्यांश्च वृक्षान्कल्याणान्ब्राह्मणांश्च नमस्यसि ९०
कच्चिदेषा च ते बुद्धिर्वृत्तिरेषा च तेऽनघ
आयुष्या च यशस्या च धर्मकामार्थदर्शिनी ९१
एतया वर्तमानस्य बुद्ध्या राष्ट्रं न सीदति
विजित्य च महीं राजा सोऽत्यन्तं सुखमेधते ९२
कच्चिदार्यो विशुद्धात्मा क्षारितश्चौरकर्मणि
अदृष्टशास्त्रकुशलैर्न लोभाद्बध्यते शुचिः ९३
पृष्टो गृहीतस्तत्कारी तज्ज्ञैर्दृष्टः सकारणः
कच्चिन्न मुच्यते स्तेनो द्रव्यलोभान्नरर्षभ ९४
व्युत्पन्ने कच्चिदाढ्यस्य दरिद्रस्य च भारत
अर्थान्न मिथ्या पश्यन्ति तवामात्या हृता धनैः ९५

नास्तिक्यमनृतं क्रोधं प्रमादं दीर्घसूत्रताम्
अदर्शनं ज्ञानवतामालस्यं क्षिप्तचित्तताम् ९६
एकचिन्तनमर्थानामनर्थज्ञैश्च चिन्तनम्
निश्चितानामनारम्भं मन्त्रस्यापरिरक्षणम् ९७
मङ्गलस्याप्रयोगं च प्रसङ्गं विषयेषु च
कच्चित्त्वं वर्जयस्येतान्राजदोषांश्चतुर्दश ९८
कच्चित्ते सफला वेदाः कच्चित्ते सफलं धनम्
कच्चित्ते सफला दाराः कच्चित्ते सफलं श्रुतम् ९९
युधिष्ठिर उवाच
कथं वै सफला वेदाः कथं वै सफलं धनम्
कथं वै सफला दाराः कथं वै सफलं श्रुतम् १००
नारद उवाच
अग्निहोत्रफला वेदा दत्तभुक्तफलं धनम्
रतिपुत्रफला दाराः शीलवृत्तफलं श्रुतम् १०१
वैशम्पायन उवाच
एतदाख्याय स मुनिर्नारदः सुमहातपाः
पप्रच्छानन्तरमिदं धर्मात्मानं युधिष्ठिरम् १०२
नारद उवाच
कच्चिदभ्यागता दूराद्वणिजो लाभकारणात्
यथोक्तमवहार्यन्ते शुल्कं शुल्कोपजीविभिः १०३
कच्चित्ते पुरुषा राजन्पुरे राष्ट्रे च मानिताः
उपानयन्ति पण्यानि उपधाभिरवञ्चिताः १०४
कच्चिच्छृणोषि वृद्धानां धर्मार्थसहिता गिरः
नित्यमर्थविदां तात तथा धर्मानुदर्शिनाम् १०५
कच्चित्ते कृषितन्त्रेषु गोषु पुष्पफलेषु च
धर्मार्थं च द्विजातिभ्यो दीयते मधुसर्पिषी १०६
द्रव्योपकरणं कच्चित्सर्वदा सर्वशिल्पिनाम्
चातुर्मास्यावरं सम्यङ्िनयतं संप्रयच्छसि १०७
कच्चित्कृतं विजानीषे कर्तारं च प्रशंससि
सतां मध्ये महाराज सत्करोषि च पूजयन् १०८

कच्चित्सूत्राणि सर्वाणि गृह्णासि भरतर्षभ
हस्तिसूत्राश्वसूत्राणि रथसूत्राणि चाभिभो १०९
कच्चिदभ्यस्यते शश्वद्गृहे ते भरतर्षभ
धनुर्वेदस्य सूत्रं च यन्त्रसूत्रं च नागरम् ११०
कच्चिदस्त्राणि सर्वाणि ब्रह्मदण्डश्च तेऽनघ
विषयोगाश्च ते सर्वे विदिताः शत्रुनाशनाः १११
कच्चिदग्निभयाच्चैव सर्पव्यालभयात्तथा
रोगरक्षोभयाच्चैव राष्ट्रं स्वं परिरक्षसि ११२
कच्चिदन्धांश्च मूकांश्च पङ्गून्व्यङ्गानबान्धवान्
पितेव पासि धर्मज्ञ तथा प्रव्रजितानपि ११३
वैशम्पायन उवाच
एताः कुरूणामृषभो महात्मा श्रुत्वा गिरो ब्राह्मणसत्तमस्य
प्रणम्य पादावभिवाद्य हृष्टो राजाब्रवीन्नारदं देवरूपम् ११४
एवं करिष्यामि यथा त्वयोक्तं प्रज्ञा हि मे भूय एवाभिवृद्धा
उक्त्वा तथा चैव चकार राजा लेभे महीं सागरमेखलां च ११५
नारद उवाच
एवं यो वर्तते राजा चातुर्वर्ण्यस्य रक्षणे
स विहृत्येह सुसुखी शक्रस्यैति सलोकताम् ११६
इति श्रीमहाभारते सभापर्वणि पञ्चमोऽध्यायः ५

अथषष्ठोऽध्यायः

वैशम्पायन उवाच
संपूज्याथाभ्यनुज्ञातो महर्षेर्वचनात्परम्
प्रत्युवाचानुपूर्व्येण धर्मराजो युधिष्ठिरः १
भगवन्न्याय्यमाहैतं यथावद्धर्मनिश्चयम्
यथाशक्ति यथान्यायं क्रियतेऽय विधिर्मया २
राजभिर्यद्यथा कार्यं पुरा तत्तन्न संशयः
यथान्यायोपनीतार्थं कृतं हेतुमदर्थवत् ३
वयं तु सत्पथं तेषां यातुमिच्छामहे प्रभो
न तु शक्यं तथा गन्तुं यथा तैर्नियतात्मभिः ४

एवमुक्त्वा स धर्मात्मा वाक्यं तदभिपूज्य च
मुहूर्तात्प्राप्तकालं च दृष्ट्वा लोकचरं मुनिम् ५
नारदं स्वस्थमासीनमुपासीनो युधिष्ठिरः
अपृच्छत्पाण्डवस्तत्र राजमध्ये महामतिः ६
भवान्संचरते लोकान्सदा नानाविधान्बहून्
ब्रह्मणा निर्मितान्पूर्वं प्रेक्षमाणो मनोजवः ७
ईदृशी भवता काचिद्दृष्टपूर्वा सभा क्वचित्
इतो वा श्रेयसी ब्रह्मंस्तन्ममाचक्ष्व पृच्छतः ८
तच्छ्रुत्वा नारदस्तस्य धर्मराजस्य भाषितम्
पाण्डवं प्रत्युवाचेदं स्मयन्मधुरया गिरा ९
मानुषेषु न मे तात दृष्टपूर्वा न च श्रुता
सभा मणिमयी राजन्यथेयं तव भारत १०
सभां तु पितृराजस्य वरुणस्य च धीमतः
कथयिष्ये तथेन्द्रस्य कैलासनिलयस्य च ११
ब्रह्मणश्च सभां दिव्यां कथयिष्ये गतक्लमाम्
यदि ते श्रवणे बुद्धिर्वर्तते भरतर्षभ १२
नारदेनैवमुक्तस्तु धर्मराजो युधिष्ठिरः
प्राञ्जलिर्भ्रातृभिः सार्धं तैश्च सर्वैर्नृपैर्वृतः १३
नारदं प्रत्युवाचेदं धर्मराजो महामनाः
सभाः कथय ताः सर्वाः श्रोतुमिच्छामहे वयम् १४
किं द्रव्यास्ताः सभा ब्रह्मन्किं विस्ताराः किमायताः
पितामहं च के तस्यां सभायां पर्युपासते १५
वासवं देवराजं च यमं वैवस्वतं च के
वरुणं च कुबेरं च सभायां पर्युपासते १६
एतत्सर्वं यथातत्त्वं देवर्षे वदतस्तव
श्रोतुमिच्छाम सहिताः परं कौतूहलं हि नः १७
एवमुक्तः पाण्डवेन नारदः प्रत्युवाच तम्
क्रमेण राजन्दिव्यास्ताः श्रूयन्तामिह नः सभाः १८
इति श्रीमहाभारते सभापर्वणि षष्ठोऽध्यायः ६

## सप्तमोऽध्यायः

नारद उवाच
शक्रस्य तु सभा दिव्या भास्वरा कर्मभिर्जिता
स्वयं शक्रेण कौरव्य निर्मितार्कसमप्रभा १
विस्तीर्णा योजनशतं शतमध्यर्धमायता
वैहायसी कामगमा पञ्चयोजनमुच्छ्रिता २
जराशोकक्लमापेता निरातङ्का शिवा शुभा
वेश्मासनवती रम्या दिव्यपादपशोभिता ३
तस्यां देवेश्वरः पार्थ सभायां परमासने
आस्ते शच्या महेन्द्राण्या श्रिया लक्ष्म्या च भारत ४
बिभ्रद्वपुरनिर्देश्यं किरीटी लोहिताङ्गदः
विरजोम्बरश्चित्रमाल्यो ह्रीकीर्तिद्युतिभिः सह ५
तस्यामुपासते नित्यं महात्मानं शतक्रतुम्
मरुतः सर्वतो राजन्सर्वे च गृहमेधिनः
सिद्धा देवर्षयश्चैव साध्या देवगणास्तथा ६
एते सानुचराः सर्वे दिव्यरूपाः स्वलंकृताः
उपासते महात्मानं देवराजमरिंदमम् ७
तथा देवर्षयः सर्वे पार्थ शक्रमुपासते
अमला धूतपाप्मानो दीप्यमाना इवाग्नयः
तेजस्विनः सोमयुजो विपापा विगतक्लमाः ८
पराशरः पर्वतश्च तथा सावर्णिगालवौ
शङ्खश्च लिखितश्चैव तथा गौरशिरा मुनिः ९
दुर्वासाश्च दीर्घतपा याज्ञवल्क्योऽथ भालुकिः
उद्दालकः श्वेतकेतुस्तथा शाट्यायनः प्रभुः १०
हविष्मांश्च गविष्ठश्च हरिश्चन्द्रश्च पार्थिवः
हृद्यश्चोदरशाण्डिल्यः पाराशर्यः कृषीह्वलः ११
वातस्कन्धो विशाखश्च विधाता काल एव च
अनन्तदन्तस्त्वष्टा च विश्वकर्मा च तुम्बुरुः १२
अयोनिजा योनिजाश्च वायुभक्षा हुताशिनः
ईशानं सर्वलोकस्य वज्रिणं समुपासते १३

सहदेवः सुनीथश्च वाल्मीकिश्च महातपाः
समीकः सत्यवांश्चैव प्रचेताःसत्यसंगरः १४
मेधातिथिर्वामदेवः पुलस्त्यः पुलहः क्रतुः
मरुत्तश्च मरीचिश्च स्थाणुश्चात्रिर्महातपाः १५
कक्षीवान्गौतमस्तार्क्ष्यस्तथा वैश्वानरो मुनिः
मुनिः कालकवृक्षीय आश्राव्योऽथ हिरण्यदः
संवर्तो देवहव्यश्च विष्वक्सेनश्च वीर्यवान् १६
दिव्या आपस्तथौषध्यः श्रद्धा मेधा सरस्वती
अर्थो धर्मश्च कामश्च विद्युतश्चापि पाण्डव १७
जलवाहास्तथा मेघा वायवः स्तनयित्नवः
प्राची दिग्यज्ञवाहाश्च पावकाः सप्तविंशतिः १८
अग्नीषोमौ तथेन्द्राग्नी मित्रोऽथ सवितार्यमा
भगो विश्वे च साध्याश्च शुक्रो मन्थी च भारत १९
यज्ञाश्च दक्षिणाश्चैव ग्रहाः स्तोभाश्च सर्वशः
यज्ञवाहाश्च ये मन्त्राः सर्वे तत्र समासते २०
तथैवाप्सरसो राजन्गन्धर्वाश्च मनोरमाः
नृत्यवादित्रगीतैश्च हास्यैश्च विविधैरपि
रमयन्ति स्म नृपते देवराजं शतक्रतुम् २१
स्तुतिभिर्मङ्गलैश्चैव स्तुवन्तः कर्मभिस्तथा
विक्रमैश्च महात्मानं बलवृत्रनिषूदनम् २२
ब्रह्मराजर्षयः सर्वे सर्वे देवर्षयस्तथा
विमानैर्विविधैर्दिव्यैर्भ्राजमानैरिवाग्निभिः २३
स्रग्विणो भूषिताश्चान्ये यान्ति चायान्ति चापरे
बृहस्पतिश्च शुक्रश्च तस्यामाययतुः सह २४
एते चान्ये च बहवो यतात्मानो यतव्रताः
विमानैश्चन्द्रसंकाशैः सोमवत्प्रियदर्शनाः
ब्रह्मणो वचनाद्राजन्भृगुः सप्तर्षयस्तथा २५
एषा सभा मया राजन्दृष्टा पुष्करमालिनी
शतक्रतोर्महाराज याम्यां शृणु ममानघ २६

इति महाभारते सभापर्वणि सप्तमोऽध्यायः ७

## अष्टमोऽध्यायः

नारद उवाच
कथयिष्ये सभां दिव्यां युधिष्ठिर निबोध ताम्
वैवस्वतस्य यामर्थे विश्वकर्मा चकार ह १
तैजसी सा सभा राजन्बभूव शतयोजना
विस्तारायामसंपन्ना भूयसी चापि पाण्डव २
अर्कप्रकाशा भ्राजिष्णुः सर्वतः कामचारिणी
नैवातिशीता नात्युष्णा मनसश्च प्रहर्षिणी ३
न शोको न जरा तस्यां क्षुत्पिपासे न चाप्रियम्
न च दैन्यं क्लमो वापि प्रतिकूलं न चाप्युत ४
सर्वे कामाः स्थितास्तस्यां ये दिव्या ये च मानुषाः
रसवच्च प्रभूतं च भक्ष्यभोज्यमरिन्दम ५
पुण्यगन्धाः स्रजस्तत्र नित्यपुष्पफलद्रुमाः
रसवन्ति च तोयानि शीतान्युष्णानिचैव ह ६
तस्यां राजर्षयः पुण्यास्तथा ब्रह्मर्षयोऽमलाः
यमं वैवस्वतं तात प्रहृष्टाः पर्युपासते ७
ययातिर्नहुषः पूरुर्मान्धाता सोमको नृगः
त्रसदस्युश्च तुरयः कृतवीर्यः श्रुतश्रवाः ८
अरिप्रणुत्सुसिंहश्च कृतवेगः कृतिर्निमिः
प्रतर्दनः शिबिर्मत्स्यः पृथ्वक्षोऽथ बृहद्रथः ९
एडो मरुत्तः कुशिकः सांकाश्यः सांकृतिर्भवः
चतुरश्वः सदश्वोर्मिः कार्तवीर्यश्च पार्थिवः १०
भरतस्तथा सुरथः सुनीथो नैषधो नलः
दिवोदासोऽथ सुमना अम्बरीषो भगीरथः ११
व्यश्वः सदश्वो बध्र्यश्वः पञ्चहस्तः पृथुश्रवाः
रुषद्गुर्वृषसेनश्च क्षुपश्च सुमहाबलः १२
रुषदश्वो वसुमनाः पुरुकुत्सो ध्वजी रथी
आर्ष्टिषेणो दिलीपश्च महात्मा चाप्युशीनरः १३
औशीनरः पुण्डरीकः शर्यातिः शरभः शुचिः
अङ्गोऽरिष्टश्च वेनश्च दुःषन्तः सञ्जयो जयः १४

भाङ्गास्वरिः सुनीथश्च निषधोऽथ त्विषीरथः
करन्धमो बाह्लिकश्च सुद्युम्नो बलवान्मधुः १५
कपोतरोमा तृणकः सहदेवार्जुनो तथा
रामो दाशरथिश्चैव लक्ष्मणोऽथ प्रतर्दनः १६
अलर्कः कक्षसेनश्च गयो गौराश्व एव च
जामदग्न्योऽथ रामोऽत्र नाभागसगरौ तथा १७
भूरिद्युम्नो महाश्वश्च पृथ्वश्वो जनकस्तथा
वैन्यो राजा वारिषेणः पुरुजो जनमेजयः १८
ब्रह्मदत्तस्त्रिगर्तश्च राजोपरिचरस्तथा
इन्द्रद्युम्नो भीमजानुर्गयः पृष्ठो नयोऽनघः १९
पद्मोऽथ मुचुकुन्दश्च भूरिद्युम्नः प्रसेनजित्
अरिष्टनेमिः प्रद्युम्नः पृथुगश्वोऽजकस्तथा २०
शतं मत्स्या नृपतयः शतं नीपाः शतं हयाः
धृतराष्ट्राश्चैकशतमशीतिर्जनमेजयाः २१
शतं च ब्रह्मदत्तानामीरिणां वैरिणां शतम्
शन्तनुश्चैव राजर्षिः पाण्डुश्चैव पिता तव २२
उशद्गवः शतरथो देवराजो जयद्रथः
वृषादर्भिश्च राजर्षिर्धाम्ना सह समन्त्रिणा २३
अथापरे सहस्राणि ये गताः शशबिन्दवः
इष्ट्वाश्वमेधैर्बहुभिर्महद्भिर्भूरिदक्षिणैः २४
एते राजर्षयः पुण्याः कीर्तिमन्तो बहुश्रुताः
तस्यां सभायां राजर्षे वैवस्वतमुपासते २५
अगस्त्योऽथ मतङ्गश्च कालो मृत्युस्तथैव च
यज्वानश्चैव सिद्धाश्च ये च योगशरीरिणः २६
अग्निष्वात्ताश्च पितरः फेनपाश्चोष्मपाश्च ये
स्वधावन्तो बर्हिषदो मूर्तिमन्तस्तथापरे २७
कालचक्रं च साक्षाच्च भगवान्हव्यवाहनः
नरा दुष्कृतकर्माणो दक्षिणायनमृत्यवः २८
कालस्य नयने युक्ता यमस्य पुरुषाश्च ये
तस्यां शिंशपपालाशास्तथा काशकुशादयः

उपासते धर्मराजं मूर्तिमन्तो निरामयाः २९
एते चान्ये च बहवः पितृराजसभासदः
अशक्याः परिसंख्यातुं नामभिः कर्मभिस्तथा ३०
असंबाधा हि सा पार्थ रम्या कामगमा सभा
दीर्घकालं तपस्तप्त्वा निर्मिता विश्वकर्मणा ३१
प्रभासन्ती ज्वलन्तीव तेजसा स्वेन भारत
तामुग्रतपसो यान्ति सुव्रताः सत्यवादिनः ३२
शान्ताः संन्यासिनः सिद्धाः पूताः पुण्येन कर्मणा
सर्वे भास्वरदेहाश्च सर्वे च विरजोम्बराः ३३
चित्राङ्गदाश्चित्रमाल्याः सर्वे ज्वलितकुण्डलाः
सुकृतैः कर्मभिः पुण्यैः परिबर्हैर्विभूषिताः ३४
गन्धर्वाश्च महात्मानः शतशश्चाप्सरोगणाः
वादित्रं नृत्तगीतं च हास्यं लास्यं च सर्वशः ३५
पुण्याश्च गन्धाः शब्दाश्च तस्यां पार्थ समन्ततः
दिव्यानि माल्यानि च तामुपतिष्ठन्ति सर्वशः ३६
शतं शतसहस्राणि धर्मिणां तं प्रजेश्वरम्
उपासते महात्मानं रूपयुक्ता मनस्विनः ३७
ईदृशी सा सभा राजन्पितृराज्ञो महात्मनः
वरुणस्यापि वक्ष्यामि सभां पुष्करमालिनीम् ३८
इति श्रीमहाभारते सभापर्वणि अष्टमोऽध्यायः ८

## नवमोऽध्यायः

नारद उवाच
युधिष्ठिर सभा दिव्या वरुणस्य सितप्रभा
प्रमाणेन यथा याम्या शुभ्रप्राकारतोरणा १
अन्तः सलिलमास्थाय विहिता विश्वकर्मणा
दिव्यरत्नमयैर्वृक्षैः फलपुष्पप्रदैर्युता २
नीलपीतासितश्यामैः सितैर्लोहितकैरपि
अवतानैस्तथा गुल्मैः पुष्पमञ्जरिधारिभिः ३
तथा शकुनयस्तस्यां नानारूपा मृदुस्वराः

अनिर्देश्या वपुष्मन्तः शतशोऽथ सहस्रशः ४
सा सभा सुखसंस्पर्शा न शीता न च घर्मदा
वेश्मासनवती रम्या सिता वरुणपालिता ५
यस्यामास्ते स वरुणो वारुण्या सह भारत
दिव्यरत्नाम्बरधरो भूषणैरुपशोभितः ६
स्रग्विणो भूषिताश्चापि दिव्यमाल्यानुकर्षिणः
आदित्यास्तत्र वरुणं जलेश्वरमुपासते ७
वासुकिस्तक्षकश्चैव नागश्चैरावतस्तथा
कृष्णश्च लोहितश्चैव पद्मश्चित्रश्च वीर्यवान् ८
कम्बलाश्वतरौ नागौ धृतराष्ट्रबलाहकौ
मणिमान्कुण्डलधरः कर्कोटकधनञ्जयौ ९
प्रह्लादो मूषिकादश्च तथैव जनमेजयः
पताकिनो मण्डलिनः फणवन्तश्च सर्वशः १०
एते चान्ये च बहवः सर्पास्तस्यां युधिष्ठिर
उपासते महात्मानं वरुणं विगतक्लमाः ११
बलिर्वैरोचनो राजा नरकः पृथिवींजयः
प्रह्लादो विप्रचित्तिश्च कालखञ्जाश्च सर्वशः १२
सुहनुर्दुर्मुखः शंखः सुमनाः सुमतिः स्वनः
घटोदरो महापार्श्वः क्रथनः पिठरस्तथा १३
विश्वरूपः सुरूपश्च विरूपोऽथ महाशिराः
दशग्रीवश्च वाली च मेघवासा दशावरः १४
कैटभो विटटूतश्च संह्रादश्चेन्द्रतापनः
दैत्यदानवसंघाश्च सर्वे रुचिरकुण्डलाः १५
स्रग्विणो मौलिनः सर्वे तथा दिव्यपरिच्छदाः
सर्वे लब्धवराः शूराः सर्वे विगतमृत्यवः १६
ते तस्यां वरुणं देवं धर्मपाशस्थिताः सदा
उपासते महात्मानं सर्वे सुचरितव्रताः १७
तथा समुद्राश्चत्वारो नदी भागीरथी च या
कालिन्दी विदिशा वेण्णा नर्मदा वेगवाहिनी १८
विपाशा च शतद्रुश्च चन्द्रभागा सरस्वती

इरावती वितस्ता च सिन्धुर्देवनदस्तथा १९
गोदावरी कृष्णवेरणा कावेरी च सरिद्वरा
एताश्चान्याश्च सरितस्तीर्थानि च सरांसि च २०
कूपाश्च सप्रस्रवणा देहवन्तो युधिष्ठिर
पल्वलानि तडागानि देहवन्त्यथ भारत २१
दिशस्तथा मही चैव तथा सर्वे महीधराः
उपासते महात्मानं सर्वे जलचरास्तथा २२
गीतवादित्रवन्तश्च गन्धर्वाप्सरसां गणाः
स्तुवन्तो वरुणं तस्यां सर्व एव समासते २३
महीधरा रत्नवन्तो रसा येषु प्रतिष्ठिताः
सर्वे विग्रहवन्तस्ते तमीश्वरमुपासते २४
एषा मया संपतता वारुणी भरतर्षभ
दृष्टपूर्वा सभा रम्या कुबेरस्य सभां शृणु २५
इति श्रीमहाभारते सभापर्वणि नवमोऽध्यायः ९

दशमोऽध्यायः

नारद उवाच
सभा वैश्रवणी राजञ्शतयोजनमायता
विस्तीर्णा सप्ततिश्चैव योजनानि सितप्रभा १
तपसा निर्मिता राजन्स्वयं वैश्रवणेन सा
शशिप्रभा खेचरीणां कैलासशिखरोपमा २
गुह्यकैरुह्यमाना सा खे विषक्तेव दृश्यते
दिव्या हेममयैरुच्चैः पादपैरुपशोभिता ३
रश्मिवती भास्वरा च दिव्यगन्धा मनोरमा
सिताभ्रशिखराकारा प्लवमानेव दृश्यते ४
तस्यां वैश्रवणो राजा विचित्राभरणाम्बरः
स्त्रीसहस्रावृतः श्रीमानास्ते ज्वलितकुण्डलः ५
दिवाकरनिभे पुण्ये दिव्यास्तरणसंवृते
दिव्यपादोपधाने च निषण्णः परमासने ६
मन्दाराणामुदाराणां वनानि सुरभीणि च

सौगन्धिकानां चादाय गन्धान्गन्धवहः शुचिः ७
नलिन्याश्चालकाख्यायाश्चन्दनानां वनस्य च
मनोहृदयसंह्लादी वायुस्तमुपसेवते ८
तत्र देवाः सगन्धर्वा गणैरप्सरसां वृताः
दिव्यतानेन गीतानि गान्ति दिव्यानि भारत ९
मिश्रकेशी च रम्भा च चित्रसेना शुचिस्मिता
चारुनेत्रा घृताची च मेनका पुञ्जिकस्थला १०
विश्वाची सहजन्या च प्रम्लोचा उर्वशी इरा
वर्गा च सौरभेयी च समीची बुद्बुदा लता ११
एताः सहस्रशश्चान्या नृत्तगीतविशारदाः
उपतिष्ठन्ति धनदं पाण्डवाप्सरसां गणाः १२
अनिशं दिव्यवादित्रैर्नृत्तैर्गीतैश्च सा सभा
अशून्या रुचिरा भाति गन्धर्वाप्सरसां गणैः १३
किंनरा नाम गन्धर्वा नरा नाम तथापरे
मणिभद्रोऽथ धनदः श्वेतभद्रश्च गुह्यकः १४
कशेरको गण्डकण्डुः प्रद्योतश्च महाबलः
कुस्तुम्बुरूः पिशाचश्च गजकर्णो विशालकः १५
वराहकर्णः सान्द्रोष्ठः फलभक्षः फलोदकः
अङ्गचूडः शिखावर्तो हेमनेत्रो विभीषणः १६
पुष्पाननः पिङ्गलकः शोणितोदः प्रवालकः
वृक्षवास्यनिकेतश्च चीरवासाश्च भारत १७
एते चान्ये च बहवो यक्षाः शतसहस्रशः
सदा भगवती च श्रीस्तथैव नलकूबरः १८
अहं च बहुशस्तस्यां भवन्त्यन्ये च मद्विधाः
आचार्याश्चाभवंस्तत्र तथा देवर्षयोऽपरे १९
भगवान्भूतसंघैश्च वृतः शतसहस्रशः
उमापतिः पशुपतिः शूलधृग्भगनेत्रहा २०
त्र्यम्बको राजशार्दूल देवी च विगतक्लमा
वामनैर्विकटैः कुब्जैः क्षतजाक्षैर्मनोजवैः २१
मांसमेदोवसाहारैरुग्रश्रवणदर्शनैः

नानाप्रहरणैर्घोरैर्वार्तैरिव महाजवैः
वृतः सखायमन्वास्ते सदैव धनदं नृप २२
सा सभा तादृशी राजन्मया दृष्टान्तरिक्षगा
पितामहसभां राजन्कथयिष्ये गतक्लमाम् २३
इति श्रीमहाभारते सभापर्वणि दशमोऽध्यायः १०

एकादशोऽध्यायः

नारद उवाच
पुरा देवयुगे राजन्नादित्यो भगवान्दिवः
आगच्छन्मानुषं लोकं दिदृक्षुर्विगतक्लमः १
चरन्मानुषरूपेण सभां दृष्ट्वा स्वयंभुवः
सभामकथयन्मह्यं ब्राह्मीं तत्त्वेन पाण्डव २
अप्रमेयप्रभां दिव्यां मानसीं भरतर्षभ
अनिर्देश्यां प्रभावेन सर्वभूतमनोरमाम् ३
श्रुत्वा गुणानहं तस्याः सभायाः पाण्डुनन्दन
दर्शनेप्सुस्तथा राजन्नादित्यमहमब्रुवम् ४
भगवन्द्रष्टुमिच्छामि पितामहसभामहम्
येन सा तपसा शक्या कर्मणा वापि गोपते ५
औषधैर्वा तथा युक्तैरुत वा मायया यया
तन्ममाचक्ष्व भगवन्पश्येयं तां सभां कथम् ६
ततः स भगवान्सूर्यो मामुपादाय वीर्यवान्
अगच्छत्तां सभां ब्राह्मीं विपापां विगतक्लमाम् ७
एवंरूपेति सा शक्या न निर्देष्टुं जनाधिप
क्षणेन हि बिभर्त्यन्यदनिर्देश्यं वपुस्तथा ८
न वेद परिमाणं वा संस्थानं वापि भारत
न च रूपं मया तादृग्दृष्टपूर्वं कदाचन ९
सुसुखा सा सभा राजन्न शीता न च घर्मदा
न क्षुत्पिपासे न ग्लानिं प्राप्य तां प्राप्नुवन्त्युत १०
नानारूपैरिव कृता सुविचित्रैः सुभास्वरैः
स्तम्भैर्न च धृता सा तु शाश्वती न च सा क्षरा ११

अति चन्द्रं च सूर्यं च शिखिनं च स्वयं प्रभा
दीप्यते नाकपृष्ठस्था भासयन्तीव भास्करम् १२
तस्यां स भगवानास्ते विदधद्देवमायया
स्वयमेकोऽनिशं राजल्लोँकाल्लोँकपितामहः १३
उपतिष्ठन्ति चाप्येनं प्रजानां पतयः प्रभुम्
दक्षः प्रचेताः पुलहो मरीचिः कश्यपस्तथा १४
भृगुरत्रिर्वसिष्ठश्च गौतमश्च तथाङ्गिराः
मनोऽन्तरिक्षं विद्याश्च वायुस्तेजो जलं मही १५
शब्दः स्पर्शस्तथा रूपं रसो गन्धश्च भारत
प्रकृतिश्च विकारश्च यच्चान्यत्कारणं भुवः १६
चन्द्रमाः सह नक्षत्रैरादित्यश्च गभस्तिमान्
वायवः क्रतवश्चैव संकल्पः प्राण एव च १७
एते चान्ये च बहवः स्वयंभुवमुपस्थिताः
अर्थो धर्मश्च कामश्च हर्षो द्वेषस्तपो दमः १८
आयान्ति तस्यां सहिता गन्धर्वाप्सरसस्तथा
विंशतिः सप्तचैवान्ये लोकपालाश्च सर्वशः १९
शुक्रो बृहस्पतिश्चैव बुधोऽङ्गारक एव च
शनैश्चरश्च राहुश्च ग्रहाः सर्वे तथैव च २०
मन्त्रो रथन्तरश्चैव हरिमान्वसुमानपि
आदित्याः साधिराजानो नामद्वन्द्वैरुदाहृताः २१
मरुतो विश्वकर्मा च वसवश्चैव भारत
तथा पितृगणाः सर्वे सर्वाणि च हवींष्यथ २२
ऋग्वेदः सामवेदश्च यजुर्वेदश्च पाण्डव
अथर्ववेदश्च तथा पर्वाणि च विशां पते २३
इतिहासोपवेदाश्च वेदाङ्गानि च सर्वशः
ग्रहा यज्ञाश्च सोमश्च दैवतानि च सर्वशः २४
सावित्री दुर्गतरणी वाणी सप्तविधा तथा
मेधा धृतिः श्रुतिश्चैव प्रज्ञा बुद्धिर्यशः क्षमा २५
सामानि स्तुतिशस्त्राणि गाथाश्च विविधास्तथा
भाष्याणि तर्कयुक्तानि देहवन्ति विशां पते २६

क्षणा लवा मुहूर्ताश्च दिवा रात्रिस्तथैव च
अर्धमासाश्च मासाश्च ऋतवः षट् च भारत २७
संवत्सराः पञ्चयुगमहोरात्राश्चतुर्विधाः
कालचक्रं च यद्दिव्यं नित्यमक्षयमव्ययम् २८
अदितिर्दितिर्दनुश्चैव सुरसा विनता इरा
कालका सुरभिर्देवी सरमा चाथ गौतमी २९
आदित्या वसवो रुद्रा मरुतश्चाश्विनावपि
विश्वेदेवाश्च साध्याश्च पितरश्च मनोजवाः ३०
राक्षसाश्च पिशाचाश्च दानवा गुह्यकास्तथा
सुपर्णनागपशवः पितामहमुपासते ३१
देवो नारायणस्तस्यां तथा देवर्षयश्च ये
ऋषयो वालखिल्याश्च योनिजायोनिजास्तथा ३२
यच्च किंचित्त्रिलोकेऽस्मिन्दृश्यते स्थाणुजङ्गमम्
सर्वं तस्यां मया दृष्टं तद्विद्धि मनुजाधिप ३३
अष्टाशीतिसहस्राणि यतीनामूर्ध्वरेतसाम्
प्रजावतां च पञ्चाशदृषीणामपि पाण्डव ३४
ते स्म तत्र यथाकामं दृष्ट्वा सर्वे दिवौकसः
प्रणम्य शिरसा तस्मै प्रतियान्ति यथागतम् ३५
अतिथीनागतान्देवान्दैत्यान्नागान्मुनींस्तथा
यक्षान्सुपर्णान्कालेयान्गन्धर्वाप्सरसस्तथा ३६
महाभागानमितधीर्ब्रह्मा लोकपितामहः
दयावान्सर्वभूतेषु यथार्हं प्रतिपद्यते ३७
प्रतिगृह्य तु विश्वात्मा स्वयंभूरमितप्रभः
सान्त्वमानार्थसंभोगैर्युनक्ति मनुजाधिप ३८
तथा तैरुपयातैश्च प्रतियातैश्च भारत
आकुला सा सभा तात भवति स्म सुखप्रदा ३९
सर्वतेजोमयी दिव्या ब्रह्मर्षिगणसेविता
ब्राह्म्या श्रिया दीप्यमाना शुशुभे विगतक्लमा ४०
सा सभा तादृशी दृष्टा सर्वलोकेषु दुर्लभा
सभेयं राजशार्दूल मनुष्येषु यथा तव ४१

एता मया दृष्टपूर्वाः सभा देवेषु पाराडव
तवेयं मानुषे लोके सर्वश्रेष्ठतमा सभा ४२
युधिष्ठिर उवाच
प्रायशो राजलोकस्ते कथितो वदतां वर
वैवस्वतसभायां तु यथा वदसि वै प्रभो ४३
वरुणस्य सभायां तु नागास्ते कथिता विभो
दैत्येन्द्राश्चैव भूयिष्ठाः सरितः सागरस्तथा ४४
तथा धनपतेर्यक्षा गुह्यका राक्षसास्तथा
गन्धर्वाप्सरसश्चैव भगवांश्च वृषध्वजः ४५
पितामहसभायां तु कथितास्ते महर्षयः
सर्वदेवनिकायाश्च सर्वशास्त्राणि चैव हि ४६
शतक्रतुसभायां तु देवाः संकीर्तिता मुने
उद्देशतश्च गन्धर्वा विविधाश्च महर्षयः ४७
एक एव तु राजर्षिर्हरिश्चन्द्रो महामुने
कथितस्ते सभानित्यो देवेन्द्रस्य महात्मनः ४८
किं कर्म तेनाचरितं तपो वा नियतव्रतम्
येनासौ सह शक्रेण स्पर्धते स्म महायशाः ४९
पितृलोकगतश्चापि त्वया विप्र पिता मम
दृष्टः पाराडुर्महाभागः कथं चासि समागतः ५०
किमुक्तवांश्च भगवन्नेतदिच्छामि वेदितुम्
त्वत्तः श्रोतुमहं सर्वं परं कौतूहलं हि मे ५१
नारद उवाच
यन्मां पृच्छसि राजेन्द्र हरिश्चन्द्रं प्रति प्रभो
तत्तेऽहं संप्रवक्ष्यामि महात्म्यं तस्य धीमतः ५२
स राजा बलवानासीत्सम्राट् सर्वमहीक्षिताम्
तस्य सर्वे महीपालाः शासनावनताः स्थिताः ५३
तेनैकं रथमास्थाय जैत्रं हेमविभूषितम्
शस्त्रप्रतापेन जिता द्वीपाः सप्त नरेश्वर ५४
स विजित्य महीं सर्वां सशैलवनकाननाम्
आजहार महाराज राजसूयं महाक्रतुम् ५५

तस्य सर्वे महीपाला धनान्याजह्रुराज्ञया
द्विजानां परिवेष्टारस्तस्मिन्यज्ञे च तेऽभवन् ५६
प्रादाच्च द्रविणं प्रीत्या याजकानांनरेश्वरः
यथोक्तं तत्र तैस्तस्मिंस्ततः पञ्चगुणाधिकम् ५७
अतर्पयच्च विविधैर्वसुभिर्ब्राह्मणांस्तथा
प्रासर्पकाले संप्राप्ते नानादिग्भ्यः समागतान् ५८
भक्ष्यैर्भोज्यैश्च विविधैर्यथाकामपुरस्कृतैः
रत्नौघतर्पितैस्तुष्टैर्द्विजैश्च समुदाहृतम्
तेजस्वी च यशस्वी च नृपेभ्योऽभ्यधिकोऽभवत् ५९
एतस्मात्कारणात्पार्थ हरिश्चन्द्रो विराजते
तेभ्यो राजसहस्रेभ्यस्तद्विद्धि भरतर्षभ ६०
समाप्य च हरिश्चन्द्रो महायज्ञं प्रतापवान्
अभिषिक्तः स शुशुभे साम्राज्येन नराधिप ६१
ये चान्येऽपि महीपाला राजसूयं महाक्रतुम्
यजन्ते ते महेन्द्रेण मोदन्ते सह भारत ६२
ये चापि निधनं प्राप्ताः संग्रामेष्वपलायिनः
ते तत्सदः समासाद्य मोदन्ते भरतर्षभ ६३
तपसा ये च तीव्रेण त्यजन्तीह कलेवरम्
तेऽपि तत्स्थानमासाद्य श्रीमन्तो भान्ति नित्यशः ६४
पिता च त्वाह कौन्तेय पाण्डुःकौरवनन्दनः
हरिश्चन्द्रे श्रियं दृष्ट्वा नृपतौ जातविस्मयः ६५
समर्थोऽसि महीं जेतुं भ्रातरस्ते वशे स्थिताः
राजसूयं क्रतुश्रेष्ठमाहरस्वेति भारत ६६
तस्य त्वं पुरुषव्याघ्र संकल्पं कुरु पाण्डव
गन्तारस्ते महेन्द्रस्य पूर्वैः सह सलोकताम् ६७
बहुविघ्नश्च नृपते क्रतुरेष स्मृतो महान्
छिद्राण्यत्र हि वाञ्छन्ति यज्ञघ्ना ब्रह्मराक्षसाः ६८
युद्धं च पृष्ठगमनं पृथिवीक्षयकारकम्
किंचिदेव निमित्तं च भवत्यत्र क्षयावहम् ६९
एतत्संचिन्त्य राजेन्द्र यत्क्षमं तत्समाचर

अप्रमत्तोस्थितो नित्यं चातुर्वर्ण्यस्य रक्षणे
भव एधस्व मोदस्व दानैस्तर्पय च द्विजान् ७०
एतत्ते विस्तरेणोक्तं यन्मां त्वं परिपृच्छसि
आपृच्छे त्वां गमिष्यामि दाशार्हनगरीं प्रति ७१
वैशम्पायन उवाच
एवमाख्याय पार्थेभ्यो नारदो जनमेजय
जगाम तैर्वृतो राजन्नृषिभिर्यैः समागतः ७२
गते तु नारदे पार्थो भ्रातृभिः सह कौरव
राजसूयं क्रतुश्रेष्ठं चिन्तयामास भारत ७३
इति श्रीमहाभारते सभापर्वणि एकादशोऽध्यायः ११

## द्वादशोऽध्यायः

वैशम्पायन उवाच
ऋषेस्तद्वचनं श्रुत्वा निशश्वास युधिष्ठिरः
चिन्तयन्राजसूयाप्तिं न लेभे शर्म भारत १
राजर्षीणां हि तं श्रुत्वा महिमानं महात्मनाम्
यज्वनां कर्मभिः पुण्यैर्लोकप्राप्तिं समीक्ष्य च २
हरिश्चन्द्रं च राजर्षिं रोचमानं विशेषतः
यज्वानं यज्ञमाहर्तुं राजसूयमियेष सः ३
युधिष्ठिरस्ततः सर्वानर्चयित्वा सभासदः
प्रत्यर्चितश्च तैः सर्वैर्यज्ञायैव मनो दधे ४
स राजसूयं राजेन्द्र कुरूणामृषभः क्रतुम्
आहर्तुं प्रवणं चक्रे मनःसंचिन्त्य सोऽसकृत् ५
भूयश्चाद्भुतवीर्यौजा धर्ममेवानुपालयन्
किं हितं सर्वलोकानां भवेदिति मनो दधे ६
अनुगृह्णन्प्रजाः सर्वाः सर्वधर्मविदां वरः
अविशेषेण सर्वेषां हितं चक्रे युधिष्ठिरः ७
एवं गते ततस्तस्मिन्पितरीवाश्वसञ्जनाः
न तस्य विद्यते द्वेष्टा ततोऽस्याजातशत्रुता ८
स मन्त्रिणः समानाय्य भ्रातॄंश्च वदतां वरः

राजसूयं प्रति तदा पुनः पुनरपृच्छत ९
ते पृच्छ्यमानाः सहिता वचोऽर्थ्य मन्त्रिणस्तदा
युधिष्ठिरं महाप्राज्ञं यियक्षुमिदमब्रुवन् १०
येनाभिषिक्तो नृपतिर्वारुणं गुणमृच्छति
तेन राजापि सन्कृत्स्नं सम्राड्गुणमभीप्सति ११
तस्य सम्राड्गुणार्हस्य भवतः कुरुनन्दन
राजसूयस्य समयं मन्यन्ते सुहृदस्तव १२
तस्य यज्ञस्य समयः स्वाधीनः क्षत्रसंपदा
साम्ना षडग्नयो यस्मिंश्चीयन्ते संशितव्रतैः १३
दर्वीहोमानुपादाय सर्वान्यः प्राप्नुते क्रतून्
अभिषेकं च यज्ञान्ते सर्वजित्तेन चोच्यते १४
समर्थोऽसि महाबाहो सर्वे ते वशगा वयम्
अविचार्य महाराज राजसूये मनः कुरु १५
इत्येवं सुहृदः सर्वे पृथक्च सह चाब्रुवन्
स धर्म्यं पाण्डवस्तेषां वचः श्रुत्वा विशां पते
धृष्टमिष्टं वरिष्ठं च जग्राह मनसारिहा १६
श्रुत्वा सुहृद्वचस्तच्च जानंश्चाप्यात्मनः क्षमम्
पुनः पुनर्मनो दध्रे राजसूयाय भारत १७
स भ्रातृभिः पुनर्धीमानृत्विग्भिश्च महात्मभिः
धौम्यद्वैपायनाद्यैश्च मन्त्रयामास मन्त्रिभिः १८
युधिष्ठिर उवाच
इयं या राजसूयस्य सम्राडर्हस्य सुक्रतोः
श्रद्दधानस्य वदतः स्पृहा मे सा कथं भवेत् १९
वैशम्पायन उवाच
एवमुक्तास्तु ते तेन राज्ञा राजीवलोचन
इदमूचुर्वचः काले धर्मात्मानं युधिष्ठिरम्
अर्हस्त्वमसि धर्मज्ञ राजसूयं महाक्रतुम् २०
अथैवमुक्ते नृपतावृत्विग्भिर्ऋषिभिस्तथा
मन्त्रिणो भ्रातरश्चास्य तद्वचः प्रत्यपूजयन् २१
स तु राजा महाप्राज्ञः पुनरेवात्मनात्मवान्

भूयो विममृशे पार्थो लोकानां हितकाम्यया २२
सामर्थ्ययोगं संप्रेक्ष्य देशकालौ व्ययागमौ
विमृश्य सम्यक्च धिया कुर्वन्प्राज्ञो न सीदति २३
न हि यज्ञसमारम्भः केवलात्मविपत्तये
भवतीति समाज्ञाय यत्नतः कार्यमुद्वहन् २४
स निश्चयार्थं कार्यस्य कृष्णमेव जनार्दनम्
सर्वलोकात्परं मत्वा जगाम मनसा हरिम् २५
अप्रमेयं महाबाहुं कामाज्जातमजं नृषु
पाण्डवस्तर्कयामास कर्मभिर्देवसंमितैः २६
नास्य किंचिदविज्ञातं नास्य किंचिदकर्मजम्
न स किंचिन्न विषहेदिति कृष्णममन्यत २७
स तु तां नैष्ठिकीं बुद्धिं कृत्वा पार्थो युधिष्ठिरः
गुरुवद्भूतगुरवे प्राहिणोद्दूतमञ्जसा २८
शीघ्रगेन रथेनाशु स दूतः प्राप्य यादवान्
द्वारकावासिनं कृष्णं द्वारवत्यां समासदत् २९
दर्शनाकाङ्क्षिणं पार्थं दर्शनाकाङ्क्षयाच्युतः
इन्द्रसेनेन सहित इन्द्रप्रस्थं ययौ तदा ३०
व्यतीत्य विविधान्देशांस्त्वरावान्क्षिप्रवाहनः
इन्द्रप्रस्थगतं पार्थमभ्यगच्छज्जनार्दनः ३१
स गृहे भ्रातृवद्भ्रात्रा धर्मराजेन पूजितः
भीमेन च ततोऽपश्यत्स्वसारं प्रीतिमान्पितुः ३२
प्रीतः प्रीयेण सुहृदा रेमे स सहितस्तदा
अर्जुनेन यमाभ्यां च गुरुवत्पर्युपस्थितः ३३
तं विश्रान्तं शुभे देशे क्षणिनं कल्यमच्युतम्
धर्मराजः समागम्य ज्ञापयत्स्वं प्रयोजनम् ३४
युधिष्ठिर उवाच
प्रार्थितो राजसूयो मे न चासौ केवलेप्सया
प्राप्यते येन तत्तेह विदितं कृष्ण सर्वशः ३५
यस्मिन्सर्वं संभवति यश्च सर्वत्र पूज्यते
यश्च सर्वेश्वरो राजा राजसूयं स विन्दति ३६

तं राजसूयं सुहृदः कार्यमाहुः समेत्य मे
तत्र मे निश्चिततमं तव कृष्ण गिरा भवेत् ३७
केचिद्धि सौहृदादेव न दोषं परिचक्षते
अर्थहेतोस्तथैवान्ये प्रियमेव वदन्त्युत ३८
प्रियमेव परीप्सन्ते केचिदात्मनि यद्धितम्
एवं प्रायाश्च दृश्यन्ते जनवादाः प्रयोजने ३९
त्वं तु हेतूनतीत्यैतान्कामक्रोधौ व्यतीत्य च
परमं नः क्षमं लोके यथावद्वक्तुमर्हसि ४०
इति श्रीमहाभारते सभापर्वणि द्वादशोऽध्यायः १२

त्रयोदशोऽध्यायः

श्रीकृष्ण उवाच
सर्वैर्गुणैर्महाराज राजसूयं त्वमर्हसि
जानतस्त्वेव ते सर्वं किंचिद्वक्ष्यामि भारत १
जामदग्न्येन रामेण क्षत्रं यदवशेषितम्
तस्मादवरजं लोके यदिदं क्षत्रसंज्ञितम् २
कृतोऽय कुलसंकल्पः क्षत्रियैर्वसुधाधिप
निदेशवाग्भिस्तत्ते ह विदितं भरतर्षभ ३
एलस्येक्ष्वाकुवंशस्य प्रकृतिं परिचक्षते
राजानः श्रेणिबद्धाश्च ततोऽन्ये क्षत्रिया भुवि ४
एलवंश्यास्तु ये राजंस्तथैवेक्ष्वाकवो नृपाः
तानि चैकशतं विद्धि कुलानि भरतर्षभ ५
ययातेस्त्वेव भोजानां विस्तरोऽतिगुणो महान्
भजते च महाराज विस्तरःस चतुर्दिशम् ६
तेषां तथैव तां लक्ष्मीं सर्वक्षत्रमुपासते
सोऽवनीं मध्यमां भुक्त्वा मिथोभेदेष्वमन्यत ७
चतुर्युस्त्वपरो राजा यस्मिन्नेकशतोऽभवत्
स साम्राज्यं जरासंधः प्राप्तो भवति योनितः ८
तं स राजा महाप्राज्ञ संश्रित्य किल सर्वशः
राजन्सेनापतिर्जातः शिशुपालः प्रतापवान् ९

तमेव च महाराज शिष्यवत्समुपस्थितः
वक्रः करूषाधिपतिर्मायायोधी महाबलः १०
अपरौ च महावीर्यौ महात्मानौ समाश्रितौ
जरासन्धं महावीर्यं तौ हंसडिभकावुभौ ११
दन्तवक्रः करूषश्च कलभो मेघवाहनः
मूर्ध्ना दिव्यं मणिं बिभ्रद्यं तं भूतमणिं विदुः १२
मुरं च नरकं चैव शास्ति यो यवनाधिपौ
अपर्यन्तबलो राजा प्रतीच्यां वरुणो यथा १३
भगदत्तो महाराज बृद्धस्तव पितुः सखा
स वाचा प्रणतस्तस्य कर्मणा चैव भारत १४
स्नेहबद्धस्तु पितृवन्मनसा भक्तिमांस्त्वयि
प्रतीच्यां दक्षिणं चान्तं पृथिव्याः पाति यो नृपः १५
मातुलो भवतः शूरः पुरुजित्कुन्तिवर्धनः
स ते संनतिमानेकः स्नेहतः शत्रुतापनः १६
जरासंधं गतस्त्वेवं पुरा यो न मया हतः
पुरुषोत्तमविज्ञातो योऽसौ चेदिषु दुर्मतिः १७
आत्मानं प्रतिजानाति लोकेऽस्मिन्पुरुषोत्तमम्
आदत्ते सततं मोहाद्यः स चिह्नं च मामकम् १८
वङ्गपुण्ड्रकिरातेषु राजा बलसमन्वितः
पौण्ड्रको वासुदेवेति यौऽसौ लोकेषु विश्रुतः १९
चतुर्युः स महाराज भोज इन्द्रसखो बली
विद्याबलाद्यो व्यजयत्पाण्ड्यक्रथककैशिकान् २०
भ्राता यस्याहृतिः शूरो जामदग्न्यसमो युधि
स भक्तो मागधं राजा भीष्मकः परवीरहा २१
प्रियाण्याचरतः प्रह्वान्सदा संबन्धिनः सतः
भजतो न भजत्यस्मानप्रियेषु व्यवस्थितः २२
न कुलं न बलं राजन्नभिजानंस्तथात्मनः
पश्यमानो यशो दीप्तं जरासंधमुपाश्रितः २३
उदीच्यभोजाश्च तथा कुलान्यष्टादशाभिभो
जरासंधभयादेव प्रतीचीं दिशमाश्रिताः २४

शूरसेना भद्रकारा बोधाः शाल्वाः पटच्चराः
सुस्थराश्च सुकुट्टाश्च कुणिन्दाः कुन्तिभिः सह २५
शाल्वेयानां च राजानः सोदर्यानुचरैः सह
दक्षिणा ये च पाञ्चालाः पूर्वाःकुन्तिषु कोशलाः २६
तथोत्तरां दिशं चापि परित्यज्य भयार्दिताः
मत्स्याः संन्यस्तपादाश्च दक्षिणां दिशमाश्रिताः २७
तथैव सर्वपाञ्चाला जरासंधभयार्दिताः
स्वराष्ट्रं संपरित्यज्य विद्रुताः सर्वतोदिशम् २८
कस्यचित्त्वथ कालस्य कंसो निर्मथ्य बान्धवान्
बार्हद्रथसुते देव्यावुपागच्छद्वृथामतिः २९
अस्तिः प्राप्तिश्च नाम्ना ते सहदेवानुजेऽबले
बलेन तेन स ज्ञातीनभिभूय वृथामतिः ३०
श्रैष्ठ्यं प्राप्तः स तस्यासीदतीवापनयो महान्
भोजराजन्यवृद्धैस्तु पीड्यमानैर्दुरात्मना ३१
ज्ञातित्राणमभीप्सद्भिरस्मत्संभावना कृता
दत्त्वाक्रूराय सुतनुं तामाहुकसुतां तदा ३२
संकर्षणद्वितीयेन ज्ञातिकार्यं मया कृतम्
हतौ कंससुनामानौ मया रामेण चाप्युत ३३
भये तु समुपक्रान्ते जरासंधे समुद्यते
मन्त्रोऽय मन्त्रितो राजन्कुलैरष्टादशावरैः ३४
अनारमन्तो निघ्नन्तो महास्त्रैः शतघातिभिः
न हन्याम वयं तस्य त्रिभिर्वर्षशतैर्बलम् ३५
तस्य ह्यमरसंकाशौ बलेन बलिनां वरौ
नामभ्यां हंसडिभकावित्यास्तां योधसत्तमौ ३६
तावुभौ सहितौ वीरौ जरासंधश्च वीर्यवान्
त्रयस्त्रयाणां लोकानां पर्याप्ता इति मे मतिः ३७
न हि केवलमस्माकं यावन्तोऽन्ये च पार्थिवाः
तथैव तेषामासीच्च बुद्धिर्बुद्धिमतां वर ३८
अथ हंस इति ख्यातः कश्चिदासीन्महान्नृपः
स चान्यैः सहितो राजन्संग्रामेऽष्टादशावरैः ३९

हतो हंस इति प्रोक्तमथ केनापि भारत
तच्छ्रुत्वा डिभको राजन्यमुनाम्भस्यमज्जत ४०
विना हंसेन लोकेऽस्मिन्नाहं जीवितुमुत्सहे
इत्येतां मतिमास्थाय डिभको निधनं गतः ४१
तथा तु डिभकं श्रुत्वा हंसः परपुरंजयः
प्रपेदे यमुनामेव सोऽपि तस्यां न्यमज्जत ४२
तौ स राजा जरासंधः श्रुत्वाप्सु निधनं गतौ
स्वपुरं शूरसेनानां प्रययौ भरतर्षभ ४३
ततो वयममित्रघ्न तस्मिन्प्रतिगते नृपे
पुनरानन्दिताः सर्वे मथुरायां वसामहे ४४
यदा त्वभ्येत्य पितरं सा वै राजीवलोचना
कंसभार्या जरासंधं दुहिता मागधं नृपम् ४५
चोदयत्येव राजेन्द्र पतिव्यसनदुःखिता
पतिघ्नं मे जहीत्येवं पुनः पुनररिंदम ४६
ततो वयं महाराज तं मन्त्रं पूर्वमन्त्रितम्
संस्मरन्तो विमनसो व्यपयाता नराधिप ४७
पृथक्त्वेन द्रुता राजन्संक्षिप्य महतीं श्रियम्
प्रपतामो भयात्तस्य सधनज्ञातिबान्धवाः ४८
इति संचिन्त्य सर्वे स्म प्रतीचीं दिशमाश्रिताः
कुशस्थलह्यं पुरीं रम्यां रैवतेनोपशोभिताम् ४९
पुनर्निवेशनं तस्यां कृतवन्ता वयं नृप
तथैव दुर्गसंस्कारं देवैरपि दुरासदम् ५०
स्त्रियोऽपि यस्यां युध्येयुः किं पुनर्वृष्णिपुंगवाः
तस्यां वयममित्रघ्न निवसामोऽकुतोभयाः ५१
आलोक्य गिरिमुख्यं तं माधवीतीर्थमेव च
माधवाः कुरुशार्दूल परां मुदमवाप्नुवन् ५२
एवं वयं जरासन्धादादितःकृतकिल्विषाः
सामर्थ्यवन्तः संबन्धाद्भवन्तं समुपाश्रिताः ५३
त्रियोजनायतं सद्म त्रिस्कन्धं योजनादधि
योजनान्ते शतद्वारं विक्रमक्रमतोरणम्

अष्टादशावरैर्नद्धं क्षत्रियैर्युद्धदुर्मदैः ५४
अष्टादश सहस्राणि व्रातानां सन्ति नः कुले
आहुकस्य शतं पुत्रा एकैकस्त्रिशतावरः ५५
चारुदेष्णः सह भ्राता चक्रदेवोऽथ सात्यकिः
अहं च रौहिणेयश्च साम्बः शौरिसमो युधि ५६
एवमेते रथाः सप्त राजन्नन्यान्निबोध मे
कृतवर्मा अनाधृष्टिः समीकः समितिंजयः ५७
कह्वः शङ्कुर्निदान्तश्च सप्तैवैते महारथाः
पुत्रौ चान्धकभोजस्य वृद्धो राजा च ते दश ५८
लोकसंहनना वीरा वीर्यवन्तो महाबलाः
स्मरन्तो मध्यमं देशं वृष्णिमध्ये गतव्यथाः ५९
स त्वं सम्राड्गुणैर्युक्तः सदा भरतसत्तम
क्षत्रे सम्राजमात्मानं कर्तुमर्हसि भारत ६०
न तु शक्यं जरासन्धे जीवमाने महाबले
राजसूयस्त्वया प्राप्तुमेषा राजन्मतिर्मम ६१
तेन रुद्धा हि राजानः सर्वे जित्वा गिरिव्रजे
कन्दरायां गिरीन्द्रस्य सिंहेनेव महाद्विपाः ६२
सोऽपि राजा जरासंधो यियक्षुर्वसुधाधिपैः
आराध्य हि महादेवं निर्जितास्तेन पार्थिवाः ६३
स हि निर्जित्य निर्जित्य पार्थिवान्पृतनागतान्
पुरमानीय बद्ध्वा च चकार पुरुषव्रजम् ६४
वयं चैव महाराज जरासन्धभयात्तदा
मथुरां संपरित्यज्य गता द्वारवतीं पुरीम् ६५
यदि त्वेनं महाराज यज्ञं प्राप्तुमिहेच्छसि
यतस्व तेषां मोक्षाय जरासन्धबधाय च ६६
समारम्भो हि शक्योऽय नान्यथा कुरुनन्दन
राजसूयस्य कार्त्स्न्येन कर्तुं मतिमतां वर ६७
इत्येषा मे मती राजन्यथा वा मन्यसेऽनघ
एवं गते ममाचक्ष्व स्वयं निश्चित्य हेतुभिः ६८

इति श्रीमहाभारते सभापर्वणि त्रयोदशोऽध्यायः १३

## चतुर्दशोऽध्यायः

युधिष्ठिर उवाच
उक्तं त्वया बुद्धिमता यन्नान्यो वक्तुमर्हति
संशयानां हि निर्मोक्ता त्वन्नान्यो विद्यते भुवि १
गृहे गृहे हि राजानः स्वस्य स्वस्य प्रियंकराः
न च साम्राज्यमाप्तास्ते सम्राट्शब्दो हि कृत्स्नभाक् २
कथं परानुभावज्ञः स्वं प्रशंसितुमर्हति
परेण समवेतस्तु यः प्रशस्तः स पूज्यते ३
विशाला बहुला भूमिर्बहुरत्नसमार्चिता
दूरं गत्वा विजानाति श्रेयो वृष्णिकुलोद्वह ४
शममेव परं मन्ये न तु मोक्षाद्भवेच्छमः
आरम्भे पारमेष्ठ्यं तु न प्राप्यमिति मे मतिः ५
एवमेवाभिजानन्ति कुले जाता मनस्विनः
कश्चित्कदाचिदेतेषां भवेच्छ्रेष्ठो जनार्दन ६
भीम उवाच
अनारम्भपरो राजा वल्मीक इव सीदति
दुर्बलश्चानुपायेन बलिनं योऽधितिष्ठति ७
अतन्द्रितस्तु प्रायेण दुर्बलो बलिनं रिपुम्
जयेत्सम्यङ्नयो राजन्नीत्यार्थानात्मनो हितान् ८
कृष्णे नयो मयि बलं जयः पार्थे धनञ्जये
मागधं साधयिष्यामो वयं त्रय इवाग्नयः ९
कृष्ण उवाच
आदत्तेऽथपरो बालो नानुबन्धमवेक्षते
तस्मादरिं न मृष्यन्ति बालमर्थपरायणम् १०
हित्वा करान्यौवनाश्वः पालनाच्च भगीरथः
कार्तवीर्यस्तपोयोगाद्बलात्तु भरतो विभुः
ऋद्ध्या मरुत्तस्तान्पञ्च सम्राज इति शुश्रुमः ११
निग्राह्यलक्षणं प्राप्तो धर्मार्थनयलक्षणैः
बार्हद्रथो जरासन्धस्तद्विद्धि भरतर्षभ १२
न चैनमनुरुध्यन्ते कुलान्येकशतं नृपाः

तस्मादेतद्बलादेव साम्राज्यं कुरुतेऽद्य सः १३
रत्नभाजो हि राजानो जरासन्धमुपासते
न च तुष्यति तेनापि बाल्यादनयमास्थितः १४
मूर्धाभिषिक्तं नृपतिं प्रधानपुरुषं बलात्
आदत्ते न च नो दृष्टोऽभागः पुरुषतः क्वचित् १५
एवं सर्वान्वशे चक्रे जरासन्धः शतावरान्
तं दुर्बलतरो राजा कथं पार्थ उपैष्यति १६
प्रोक्षितानां प्रमृष्टानां राज्ञां पशुपतेर्गृहे
पशूनामिव का प्रीतिर्जीविते भरतर्षभ १७
क्षत्रियः शस्त्रमरणो यदा भवति सत्कृतः
ननु स्म मागधं सर्वे प्रतिबाधेम यद्वयम् १८
षडशीतिः समानीताः शेषा राजंश्चतुर्दश
जरासन्धेन राजानस्ततः क्रूरं प्रपत्स्यते १९
प्राप्नुयात्स यशो दीप्तं तत्र यो विघ्नमाचरेत्
जयेद्यश्च जरासंधं स सम्राण्नियतं भवेत् २०
इति श्रीमहाभारते सभापर्वणि चतुर्दशोऽध्यायः १४

पञ्चदशोऽध्यायः

युधिष्ठिर उवाच
सम्राड्गुणमभीप्सन्वै युष्मान्स्वार्थपरायणः
कथं प्रहिणुयां भीमं बलात्केबलसाहसात् १
भीमार्जुनावुभौ नेत्रे मनो मन्ये जनार्दनम्
मनश्चक्षुर्विहीनस्य कीदृशं जीवितं भवेत् २
जरासंधबलं प्राप्य दुष्पारं भीमविक्रमम्
श्रमो हि वः पराजय्यात्किमु तत्र विचेष्टितम् ३
अस्मिन्नर्थान्तरे युक्तमनर्थः प्रतिपद्यते
यथाहं विमृशाम्येकस्तत्तावच्छ्रूयतां मम ४
संन्यासं रोचये साधु कार्यस्यास्य जनार्दन
प्रतिहन्ति मनो मेऽद्य राजसूयो दुरासदः ५
वैशम्पायन उवाच

पार्थः प्राप्य धनुःश्रेष्ठमक्षय्यौ च महेषुधी
रथं ध्वजं सभां चैव युधिष्ठिरमभाषत ६
अर्जुन उवाच
धनुरस्त्रं शरा वीर्यं पक्षो भूमिर्यशो बलम्
प्राप्तमेतन्मया राजन्दुष्प्रापं यदभीप्सितम् ७
कुले जन्म प्रशंसन्ति वैद्याः साधु सुनिष्ठिताः
बलेन सदृशं नास्ति वीर्यं तु मम रोचते ८
कृतवीर्यकुले जातो निर्वीर्यः किं करिष्यति
क्षत्रियः सर्वशो राजन्यस्य वृत्तिः पराजये ९
सर्वैरपि गुणैर्हीनो वीर्यवान्हि तरेद्रिपून्
सर्वैरपि गुणैर्युक्तो निर्वीर्यः किं करिष्यति १०
द्रव्यभूता गुणाः सर्वे तिष्ठन्ति हि पराक्रमे
जयस्य हेतुः सिद्धिर्हि कर्म दैवं च संश्रितम् ११
संयुक्तो हि बलैः कश्चित्प्रमादान्नोपयुज्यते
तेन द्वारेण शत्रुभ्यः क्षीयते सबलो रिपुः १२
दैन्यं यथाबलवति तथा मोहो बलान्विते
तावुभौ नाशकौ हेतू राज्ञा त्याज्यौ जयार्थिना १३
जरासन्धविनाशं च राज्ञां च परिमोक्षणम्
यदि कुर्याम यज्ञार्थं किं ततः परमं भवेत् १४
अनारम्भे तु नियतो भवेदगुणनिश्चयः
गुणान्निःसंशयाद्राजन्नैर्गुण्यं मन्यसे कथम् १५
काषायं सुलभं पश्चान्मुनीनां शममिच्छताम्
साम्राज्यं तु तवेच्छन्तो वयं योत्स्यामहे परैः १६
इति श्रीमहाभारते सभापर्वणि पञ्चदशोऽध्यायः १५

## षोडशोऽध्यायः

वासुदेव उवाच
जातस्य भारते वंशे तथा कुन्त्याः सुतस्य च
या वै युक्ता मतिः सेयमर्जुनेन प्रदर्शिता १
न मृत्योः समयं विद्म रात्रौ वा यदि वा दिवा

न चापि कंचिदमरमयुद्धेनापि शुश्रुमः २
एतावदेव पुरुषैः कार्यं हृदयतोषणम्
नयेन विधिदृष्टेन यदुपक्रमते परान् ३
सुनयस्यानपायस्य संयुगे परमः क्रमः
संशयो जायते साम्ये साम्यं च न भवेद्द्वयोः ४
ते वयं नयमास्थाय शत्रुदेहसमीपगाः
कथमन्तं न गच्छेम वृक्षस्येव नदीरयाः
पररन्ध्रे पराक्रान्ताः स्वरन्ध्रावरणे स्थिताः ५
व्यूढानीकैरनु बलैर्नोपेयाद्बलवत्तरम्
इति बुद्धिमतां नीतिस्तन्ममापीह रोचते ६
अनवद्या ह्यसंबुद्धाः प्रविष्टाः शत्रुसद्म तत्
शत्रुदेहमुपाक्रम्य तं कामं प्राप्नुयामहे ७
एको ह्येव श्रियं नित्यं बिभर्ति पुरुषर्षभ
अन्तरात्मेव भूतानां तत्क्षये वै बलक्षयः ८
अथ चेत्तं निहत्याजौ शेषेणाभिसमागताः
प्राप्नुयाम ततःस्वर्गं ज्ञातित्राणपरायणाः ९
युधिष्ठिर उवाच
कृष्ण कोऽय जरासन्धः किंवीर्यः किंपराक्रमः
यस्त्वां स्पृष्ट्वाग्निसदृशं न दग्धः शलभो यथा १०
कृष्ण उवाच
शृणु राजञ्जरासन्धो यद्वीर्यो यत्पराक्रमः
यथाचोपेक्षितोऽस्माभिर्बहुशः कृतविप्रियः ११
अक्षौहिणीनां तिसृणामासीत्समरदर्पितः
राजा बृहद्रथो नाम मगधाधिपतिः पतिः १२
रूपवान्वीर्यसम्पन्नः श्रीमानतुलविक्रमः
नित्यं दीक्षाकृशतनुः शतक्रतुरिवापरः १३
तेजसा सूर्यसदृशः क्षमया पृथिवीसमः
यमान्तकसमःकोपे श्रिया वैश्रवणोपमः १४
तस्याभिजन संयुक्तैर्गुणैर्भरतसत्तम
व्याप्तेयं पृथिवी सर्वा सूर्यस्येव गभस्तिभिः १५

सकाशिराजस्य सुते यमजे भरतर्षभ
उपयेमे महावीर्यो रूपद्रविणसंमते १६
तयोश्चकार समयं मिथः स पुरुषर्षभः
नातिवर्तिष्य इत्येवं पत्नीभ्यां संनिधौ तदा १७
स ताभ्यां शुशुभे राजा पत्नीभ्यां मनुजाधिप
प्रियाभ्यामनुरूपाभ्यां करेणुभ्यामिव द्विपः १८
तयोर्मध्यगतश्चापि रराज वसुधाधिपः
गङ्गायमुनयोर्मध्ये मूर्तिमानिव सागरः १९
विषयेषु निमग्नस्य तस्य यौवनमत्यगात्
न च वंशकरः पुत्रस्तस्याजायत कश्चन २०
मङ्गलैर्बहुभिर्होमैः पुत्रकामाभिरिष्टिभिः
नाससाद नृपश्रेष्ठः पुत्रं कुलविवर्धनम् २१
अथ काक्षीवतः पुत्रं गौतमस्य महात्मनः
शुश्राव तपसि श्रान्तमुदारं चण्डकौशिकम् २२
यदृच्छयागतं तं तु वृक्षमूलमुपाश्रितम्
पत्नीभ्यां सहितो राजा सर्वरत्नैरतोषयत् २३
तमब्रवीत्सत्यधृतिः सत्यवागृषिसत्तमः
परितुष्टोऽस्मि ते राजन्वरं वरय सुव्रत २४
ततः सभार्यः प्रणतस्तमुवाच बृहद्रथः
पुत्रदर्शननैराश्याद्बाष्पगद्गदया गिरा २५
बृहद्रथ उवाच
भगवन्राज्यमुत्सृज्य प्रस्थितस्य तपोवनम्
किं वरेणाल्प भाग्यस्य किं राज्येनाप्रजस्य मे २६
कृष्ण उवाच
एतच्छ्रुत्वा मुनिर्ध्यानमगमत्क्षुभितेन्द्रियः
तस्यैव चाम्रवृक्षस्य छायायां समुपाविशत् २७
तस्योपविष्टस्य मुनेरुत्सङ्गे निपपात ह
अवातमशुकादष्टमेकमाम्रफलं किल २८
तत्प्रगृह्य मुनिश्रेष्ठो हृदयेनाभिमन्त्र्य च
राज्ञे ददावप्रतिमं पुत्रसंप्राप्तिकारकम् २९

उवाच चमहाप्राज्ञस्तं राजानं महामुनिः
गच्छ राजन्कृतार्थोऽसि निवर्त मनुजाधिप ३०
यथासमयमाज्ञाय तदा स नृपसत्तमः
द्वाभ्यामेकं फलं प्रादात्पत्नीभ्यां भरतर्षभ ३१
ते तदाम्रं द्विधा कृत्वा भक्षयामासतुः शुभे
भावित्वादपि चार्थस्य सत्यवाक्यात्तथा मुनेः ३२
तयोः समभवद्गर्भः फलप्राशनसंभवः
ते च दृष्ट्वा नरपतिः परां मुदमवाप ह ३३
अथ काले महाप्राज्ञ यथासमयमागते
प्रजायेतामुभे राजञ्शरीरशकले तदा ३४
एकाक्षिबाहुचरणे अर्धोदरमुखस्फिजे
दृष्ट्वा शरीरशकले प्रवेपाते उभे भृशम् ३५
उद्विग्ने सह संमन्त्र्य ते भगिन्यौ तदाबले
सजीवे प्राणिशकले तत्यजाते सुदुःखिते ३६
तयोर्धात्र्यौ सुसंवीते कृत्वा ते गर्भसंप्लवे
निर्गम्यान्तः पुरद्वारात्समुत्सृज्याशु जग्मतुः ३७
ते चतुष्पथनिक्षिप्ते जरा नामाथ राक्षसी
जग्राह मनुजव्याघ्र मांसशोणितभोजना ३८
कर्तुकामा सुखवहे शकले सा तु राक्षसी
संघट्टयामास तदा विधानबलचोदिता ३९
ते समानीतमात्रे तु शकले पुरुषर्षभ
एकमूर्तिकृते वीरः कुमारः समपद्यत ४०
ततः सा राक्षसी राजन्विस्मयोत्फुल्ललोचना
न शशाक समुद्वोढुं वज्रसारमयं शिशुम् ४१
बालस्ताम्रतलं मुष्टिं कृत्वा चास्ये निधाय सः
प्राक्रोशदतिसंरम्भात्सतोय इव तोयदः ४२
तेन शब्देन संभ्रान्तः सहसान्तःपुरे जनः
निर्जगाम नरव्याघ्र राज्ञा सह परंतप ४३
ते चाबले परिग्लाने पयःपूर्ण पयोधरे
निराशे पुत्रलाभाय सहसैवाभ्यगच्छताम् ४४

अथ दृष्ट्वा तथाभूते राजानं चेष्टसंततिम्
तं च बालं सुबलिनं चिन्तयामास राक्षसी ४५
नार्हामि विषये राज्ञो वसन्ती पुत्रगृद्धिनः
बालं पुत्रमुपादातुं मेघलेखेव भास्करम् ४६
सा कृत्वा मानुषं रूपमुवाच मनुजाधिपम्
बृहद्रथ सुतस्ते यं मद्दत्तः प्रतिगृह्यताम् ४७
तव पत्नीद्वये जातो द्विजातिवरशासनात्
धात्रीजनपरित्यक्तो मयायं परिरक्षितः ४८
ततस्ते भरतश्रेष्ठ काशिराजसुते शुभे
तं बालमभिपत्याशु प्रस्रवैरभिषिञ्चताम् ४९
ततः स राजा संहृष्टः सर्वं तदुपलभ्य च
अपृच्छन्नवहेमाभां राक्षसीं तामराक्षसीम् ५०
का त्वं कमलगर्भाभे मम पुत्रप्रदायिनी
कामया ब्रूहि कल्याणि देवता प्रतिभासि मे ५१
इति श्रीमहाभारते सभापर्वणि षोडशोऽध्यायः १६

सप्तदशोऽध्यायः

राक्षस्युवाच
जरा नामास्मि भद्रं ते राक्षसी कामरूपिणी
तव वेश्मनि राजेन्द्र पूजिता न्यवसं सुखम् १
साहं प्रत्युपकारार्थं चिन्तयन्त्यनिशं नृप
तवेमे पुत्रशकले दृष्टवत्यस्मि धार्मिक २
संश्लेषिते मया दैवात्कुमारः समपद्यत
तव भाग्यैर्महाराज हेतुमात्रमहं त्विह ३
कृष्ण उवाच
एवमुक्त्वा तु सा राजंस्तत्रैवान्तरधीयत
स गृह्य च कुमारं तं प्राविशत्स्वगृहं नृपः ४
तस्य बालस्य यत्कृत्यं तच्चकार नृपस्तदा
आज्ञापयच्च राक्षस्या मागधेषु महोत्सवम् ५
तस्य नामाकरोत्तत्र प्रजापतिसमः पिता

जरया संधितो यस्माज्जरासंधस्ततोऽभवत् ६
सोऽवर्धत महातेजा मगधाधिपतेः सुतः
प्रमाणबलसंपन्नो हुताहुतिरिवानलः ७
कस्यचित्त्वथ कालस्य पुनरेव महातपाः
मगधानुपचक्राम भगवांश्चण्डकौशिकः ८
तस्यागमनसंहृष्टः सामात्यः सपुरः सरः
सभार्यः सह पुत्रेण निर्जगाम बृहद्रथः ९
पाद्यार्घ्याचमनीयैस्तमर्चयामास भारत
स नृपो राज्यसहितं पुत्रं चास्मै न्यवेदयत् १०
प्रतिगृह्य तु तां पूजां पार्थिवाद्भगवानृषिः
उवाच मागधं राजन्प्रहृष्टेनान्तरात्मना ११
सर्वमेतन्मया राजन्विज्ञातं ज्ञानचक्षुषा
पुत्रस्तु शृणु राजेन्द्र यादृशोऽय भविष्यति १२
अस्य वीर्यवतो वीर्यं नानुयास्यन्ति पार्थिवाः
दैवैरपि विसृष्टानि शस्त्राण्यस्य महीपते
न रुजं जनयिष्यन्ति गिरेरिव नदीरयाः १३
सर्वमूर्धाभिषिक्तानामेष मूर्ध्नि ज्वलिष्यति
सर्वेषां निष्प्रभकरो ज्योतिषामिव भास्करः १४
एनमासाद्य राजानः समृद्धबलवाहनाः
विनाशमुपयास्यन्ति शलभा इव पावकम् १५
एष श्रियः समुदितां सर्वराज्ञां ग्रहीष्यति
वर्षास्विवोद्धतजला नदीर्नदनदीपतिः १६
एष धारयिता सम्यक्चातुर्वर्ण्यं महाबलः
शुभाशुभमिव स्फीता सर्वसस्यधरा धरा १७
अस्याज्ञावशगाः सर्वे भविष्यन्ति नराधिपाः
सर्वभूतात्मभूतस्य वायोरिव शरीरिणः १८
एष रुद्रं महादेवं त्रिपुरान्तकरं हरम्
सर्वलोकेष्वतिबलः स्वयं द्रक्ष्यति मागधः १९
एवं ब्रुवन्नेव मुनिः स्वकार्यार्थं विचिन्तयन्
विसर्जयामास नृपं बृहद्रथमथारिहन् २०

प्रविश्य नगरं चैव ज्ञातिसंबन्धिभिर्वृतः
अभिषिच्य जरासन्धं मगधाधिपतिस्तदा
बृहद्रथो नरपतिः परां निर्वृतिमाययौ २१
अभिषिक्ते जरासन्धे तदा राजा बृहद्रथः
पत्नीद्वयेनानुगतस्तपोवनरतोऽभवत् २२
तपोवनस्थे पितरि मातृभ्यां सह भारत
जरासन्धः स्ववीर्येण पार्थिवानकरोद्वशे २३
अथ दीर्घस्य कालस्य तपोवनगतो नृपः
सभार्यः स्वर्गमगमत्तपस्तप्त्वा बृहद्रथः २४
तस्याऽस्ता हंसडिभकावशस्त्रनिधनावुभौ
मन्त्रे मतिमतां श्रेष्ठौ युद्धशास्त्रविशारदौ २५
यौ तौ मया ते कथितौ पूर्वमेव महाबलौ
त्रयस्त्रयाणां लोकानां पर्याप्ता इति मे मतिः २६
एवमेष तदा वीर बलिभिः कुकुरान्धकैः
वृष्णिभिश्च महाराज नीतिहेतोरुपेक्षितः २७
इति श्रीमहाभारते सभापर्वणि सप्तदशोऽध्यायः १७

अष्टादशोऽध्यायः

वासुदेव उवाच
पतितौ हंसडिभकौ कंसामात्यौ निपातितौ
जरासन्धस्य निधने कालोऽय समुपागतः १
न स शक्यो रणे जेतुं सर्वैरपि सुरासुरैः
प्राणयुद्धेन जेतव्यः स इत्युपलभामहे २
मयि नीतिर्बलं भीमे रक्षिता चावयोर्जुनः
साधयिष्यामि तं राजन्वयं त्रय इवाग्नयः ३
त्रिभिरासादितोऽस्माभिर्विजने स नराधिपः
न संदेहो यथा युद्धमेकेनाभ्युपयास्यति ४
अवमानाच्च लोकस्य व्यायतत्वाच्च धर्षितः
भीमसेनेन युद्धाय ध्रुवमभ्युपयास्यति ५
अलं तस्य महाबाहुर्भीमसेनो महाबलः

लोकस्य समुदीर्णस्य निधनायान्तको यथा ६
यदि ते हृदयं वेत्ति यदि ते प्रत्ययो मयि
भीमसेनार्जुनौ शीघ्रं न्यासभूतौ प्रयच्छ मे ७
वैशम्पायन उवाच
एवमुक्तो भगवता प्रत्युवाच युधिष्ठिरः
भीमपार्थौ समालोक्य संप्रहृष्टमुखौ स्थितौ ८
अच्युताच्युत मा मैवं व्याहरामित्रकर्षण
पाण्डवानां भवान्नाथो भवन्तं चाश्रिता वयम् ९
यथा वदसि गोविन्द सर्वं तदुपपद्यते
न हि त्वमग्रतस्तेषां येषां लक्ष्मीः पराङ्मुखी १०
निहतश्च जरासंधो मोक्षिताश्च महीक्षितः
राजसूयश्च मे लब्धो निदेशे तव तिष्ठतः ११
क्षिप्रकारिन्यथा त्वेतत्कार्यं समुपपद्यते
मम कार्यं जगत्कार्यं तथा कुरु नरोत्तम १२
त्रिभिर्भवद्भिर्हि विना नाहं जीवितुमुत्सहे
धर्मार्थ कामरहितो रोगार्त इव दुर्गतः १३
न शौरिणा विना पार्थो न शौरिः पाण्डवं विना
नाजेयोऽस्त्यनयोर्लोके कृष्णयोरिति मे मतिः १४
अयं च बलिनां श्रेष्ठः श्रीमानपि वृकोदरः
युवाभ्यां सहितो वीरः किं न कुर्यान्महायशाः १५
सुप्रणीतो बलौघो हि कुरुते कार्यमुत्तमम्
अन्धं बलं जडं प्राहुः प्रणेतव्यं विचक्षणैः १६
यतो हि निम्नं भवति नयन्तीह ततो जलम्
यतच्छिद्रं ततश्चापि नयन्ते धीधना बलम् १७
तस्मान्नयविधानज्ञं पुरुषं लोकविश्रुतम्
वयमाश्रित्य गोविन्दं यतामः कार्यसिद्धये १८
एवं प्रज्ञानयबलं क्रियोपायसमन्वितम्
पुरस्कुर्वीत कार्येषु कृष्ण कार्यार्थसिद्धये १९
एवमेव यदुश्रेष्ठं पार्थः कार्यार्थसिद्धये
अर्जुनः कृष्णमन्वेतु भीमोऽन्वेतु धनंजयम्

नयो जयो बलं चैव विक्रमे सिद्धिमेष्यति २०
एवमुक्तास्ततः सर्वे भ्रातरो विपुलौजसः
वार्ष्णेयः पाराडवेयौ च प्रतस्थुर्मागधं प्रति २१
वर्चस्विनां ब्राह्मणानां स्नातकानां परिच्छदान्
स्राच्छाद्य सुहृदां वाक्यैर्मनोज्ञैरभिनन्दिताः २२
स्रमर्षादभितप्तानां ज्ञात्यर्थं मुख्यवाससाम्
रविसोमाग्निवपुषां भीममासीत्तदा वपुः २३
हतं मेने जरासंधं दृष्ट्वा भीमपुरोगमौ
एककार्यसमुद्युक्तौ कृष्णौ युद्धेऽपराजितौ २४
ईशौ हि तौ महात्मानौ सर्वकार्यप्रवर्तने
धर्मार्थकामकार्याणां कार्याणामिव निग्रहे २५
कुरुभ्यः प्रस्थितास्ते तु मध्येन कुरुजाङ्गलम्
रम्यं पद्मसरो गत्वा कालकूटमतीत्य च २६
गराडकीयां तथा शोणं सदानीरां तथैव च
एकपर्वतके नद्यः क्रमेणैत्य व्रजन्ति ते २७
संतीर्य सरयूं रम्यां दृष्ट्वा पूर्वांश्च कोसलान्
स्रतीत्य जग्मुर्मिथिलां मालां चर्मरावतीं नदीम् २८
उत्तीर्य गङ्गां शोणं च सर्वे ते प्राङ्मुखास्त्रयः
कुरवोरश्छदं जग्मुर्मागधं क्षेत्रमच्युताः २९
ते शश्वद्गोधनाकीर्णमम्बुमन्तं शुभद्रुमम्
गोरथं गिरिमासाद्य ददृशुर्मागधं पुरम् ३०
इति श्रीमहाभारते सभापर्वणि स्रष्टादशोऽध्यायः १८

## एकोनविंशोऽध्यायः

वासुदेव उवाच
एष पार्थ महान्स्वादुः पशुमान्नित्यमम्बुमान्
निरामयः सुवेश्माढ्यो निवेशो मागधः शुभः १
वैहारो विपुलः शैलो वराहो वृषभस्तथा
तथैवर्षिगिरिस्तात शुभाश्चैत्यकपञ्चमाः २
एते पञ्चमहाशृङ्गाः पर्वताः शीतलद्रुमाः

रक्षन्तीवाऽभिसंहत्य संहताङ्गा गिरिव्रजम् ३
पुष्पवेष्टित शाखाग्रैर्गन्धवद्भिर्मनोरमैः
निगूढा इव लोध्राणां वनैः कामिजनप्रियैः ४
शूद्रायां गौतमो यत्र महात्मा संशितव्रतः
औशीनर्यामजनयत्काक्षीवादीन्सुतानृषिः ५
गौतमः क्षयणादस्मादथासौ तत्र वेश्मनि
भजते मागधं वंशं स नृपाणामनुग्रहात् ६
अङ्गवङ्गादयश्चैव राजानः सुमहाबलाः
गौतमक्षयमभ्येत्य रमन्ते स्म पुरार्जुन ७
वनराजीस्तु पश्येमाः प्रियालानां मनोरमाः
लोध्राणां च शुभाः पार्थ गौतमौकःसमीपजाः ८
अर्बुदः शक्रवापी च पन्नगौ शत्रुतापनौ
स्वस्तिकस्यालयश्चाऽत्र मणिनागस्य चोत्तमः ९
अपरिहार्या मेघानां मागधेयं मणेः कृते
कौशिको मणिमांश्चैव ववृधाते ह्यनुग्रहम् १०
अर्थसिद्धिं त्वनपगां जरासंधोऽभिमन्यते
वयमासादने तस्य दर्पमद्य निहन्म हि ११
वैशम्पायन उवाच
एवमुक्त्वा ततः सर्वे भ्रातरो विपुलौजसः
वार्ष्णेयः पाण्डवेयौ च प्रतस्थुर्मागधं पुरम् १२
तुष्टपुष्टजनोपेतं चातुर्वर्ण्यजनाकुलम्
स्फीतोत्सवमनाधृष्यमासेदुश्च गिरिव्रजम् १३
तेऽथ द्वारमनासाद्य पुरस्य गिरिमुच्छ्रितम्
बार्हद्रथैः पूज्यमानं तथा नगरवासिभिः १४
यत्र माषादमृषभमाससाद बृहद्रथः
तं हत्वा माषनालाश्च तिस्रो भेरीरकारयत् १५
आनह्य चर्मणा तेन स्थापयामास स्वे पुरे
यत्र ताः प्राणदन्भेर्यो दिव्यपुष्पावचूर्णितः १६
मागधानां सुरुचिरं चैत्यकान्तं समाद्रवन्
शिरसीव जिघासन्तो जरासन्धजिघांसवः १७

स्थिरं सुविपुलं शृङ्गं सुमहान्तं पुरातनम्
अर्चितं माल्यदामैश्च सततं सुप्रतिष्ठितम् १८
विपुलैर्बाहुभिर्वीरास्तेऽभि हत्याभ्यपातयन्
ततस्ते मागधं दृष्ट्वा पुरं प्रविविशुस्तदा १९
एतस्मिन्नेव काले तु जरासंधं समर्चयन्
पर्यग्नि कुर्वंश्च नृपं द्विरदस्थं पुरोहिताः २०
स्नातकव्रतिनस्ते तु बाहुशस्त्रा निरायुधाः
युयुत्सवः प्रविविशुर्जरासन्धेन भारत २१
भक्ष्यमाल्यापणानां च ददृशुः श्रियमुत्तमाम्
स्फीतां सर्वगुणोपेतां सर्वकामसमृद्धिनीम् २२
तां तु दृष्ट्वा समृद्धिं ते वीथ्यां तस्यां नरोत्तमाः
राजमार्गेण गच्छन्तः कृष्णभीमधनंजयाः २३
बलाद्गृहीत्वा माल्यानि मालाकारान्महाबलाः
विरागवसनाःसर्वे स्रग्विणो मृष्टकुण्डलाः २४
निवेशनमथाजग्मुर्जरासन्धस्य धीमतः
गोवासमिव वीक्षन्तः सिंहा हैमवता यथा २५
शैलस्तम्भनिभास्तेषां चन्दनागुरुभूषिताः
अशोभन्त महाराज बाहवो बाहुशालिनाम् २६
तान्दृष्ट्वा द्विरदप्रख्याञ्शालस्कन्धानिवोद्गतान्
व्यूढोरस्कान्मागधानां विस्मयः समजायत २७
ते त्वतीत्य जनाकीर्णास्तिस्त्रः कक्ष्या नरर्षभाः
अहंकारेण राजानमुपतस्थुर्महाबलाः २८
तान्पाद्यमधुपर्कार्हान्मानार्हान्त्सत्कृतिं गतान्
प्रत्युत्थाय जरासंध उपतस्थे यथाविधि २९
उवाच चैतान्राजासौ स्वागतं वोऽस्त्विति प्रभुः
तस्य ह्येतद्व्रतं राजन्बभूव भुवि विश्रुतम् ३०
स्नातकान्ब्राह्मणान्प्राप्ताञ्श्रुत्वा स समितिंजयः
अप्यर्धरात्रे नृपतिः प्रत्युद्गच्छति भारत ३१
तांस्त्वपूर्वेण वेषेण दृष्ट्वा नृपतिसत्तमः
उपतस्थे जरासन्धो विस्मितश्चाभवत्तदा ३२

ते तु दृष्ट्वैव राजानं जरासन्धं नरर्षभाः
इदमूचुरमित्रघ्नाः सर्वे भरतसत्तम ३३
स्वस्त्यस्तु कुशलं राजन्निति सर्वे व्यवस्थिताः
तं नृपं नृपशार्दूल विप्रैक्षन्त परस्परम् ३४
तानब्रवीज्जरासन्धस्तदा यादवपाण्डवान्
आस्यतामिति राजेन्द्र ब्राह्मणच्छद्मसंवृतान् ३५
अथोपविविशुः सर्वे त्रयस्ते पुरुषर्षभाः
संप्रदीप्तास्त्रयो लक्ष्म्या महाध्वर इवाग्नयः ३६
तानुवाच जरासन्धः सत्यसन्धो नराधिपः
विगर्हमाणः कौरव्य वेषग्रहणकारणात् ३७
न स्नातकव्रता विप्रा बहिर्माल्यानुलेपनाः
भवन्तीति नृलोकेऽस्मिन्विदितं मम सर्वशः ३८
ते यूयं पुष्पवन्तश्च भुजैर्ज्याघातलक्षणैः
बिभ्रतः क्षात्रमोजश्च ब्राह्मण्यं प्रतिजानथ ३९
एवं विरागवसना बहिर्माल्यानुलेपनाः
सत्यं वदत के यूयं सत्यं राजसु शोभते ४०
चैत्यकं च गिरेः शृङ्गं भित्त्वा किमिव सद्म नः
अद्वारेण प्रविष्टाः स्थ निर्भया राजकिल्बिषात् ४१
कर्म चैतद्विलिङ्गस्य किं वाद्य प्रसमीक्षितम्
वदध्वं वाचि वीर्यं च ब्राह्मणस्य विशेषतः ४२
एवं च मामुपास्थाय कस्माच्च विधिनार्हणाम्
प्रणीतां नो न गृह्णीत कार्यं किं चास्मदागमे ४३
एवमुक्तस्ततः कृष्णः प्रत्युवाच महामनाः
स्निग्धगम्भीरया वाचा वाक्यं वाक्यविशारदः ४४
स्नातकव्रतिनो राजन्ब्राह्मणाः क्षत्रिया विशः
विशेषनियमाश्चैषामविशेषाश्च सन्त्युत ४५
विशेषवांश्च सततं क्षत्रियः श्रियमर्छति
पुष्पवत्सु ध्रुवा श्रीश्च पुष्पवन्तस्ततो वयम् ४६
क्षत्रियो बाहुवीर्यस्तु न तथा वाक्यवीर्यवान्
अप्रगल्भं वचस्तस्य तस्माद्बार्हद्रथे स्मृतम् ४७

स्ववीर्यं क्षत्रियाणां च बाह्वोर्धाता न्यवेशयत्
तद्दिदृक्षसि चेद्राजन्द्रष्टाऽस्यद्य न संशयः ४८
अद्वारेण रिपोर्गेहं द्वारेण सुहृदो गृहम्
प्रविशन्ति सदा सन्तो द्वारं नो वर्जितं ततः ४९
कार्यवन्तो गृहानेत्य शत्रुतो नार्हणां वयम्
प्रतिगृह्णीम तद्विद्धि एतन्नः शाश्वतं व्रतम् ५०
इति श्रीमहाभारते सभापर्वणि एकोनविंशोऽध्यायः १९

## विंशोऽध्यायः

जरासन्ध उवाच
न स्मरेयं कदा वैरं कृतं युष्माभिरित्युत
चिन्तयंश्च न पश्यामि भवतां प्रति वैकृतम् १
वैकृते चासति कथं मन्यध्वं मामनागसम्
अरिं विब्रूत तद् विप्राः सतां समय एष हि २
अर्थधर्मोपघाताद्धि मनः समुपतप्यते
योऽनागसि प्रसृजति क्षत्रियोऽपि न संशयः ३
अतोऽन्यथाचरँल्लोके धर्मज्ञः सन्महाव्रतः
वृजिनां गतिमाप्नोति श्रेयसोऽप्युपहन्ति च ४
त्रैलोक्ये क्षत्रधर्माद्धि श्रेयांसं साधुचारिणाम्
अनागसं प्रजानानाः प्रमादादिव जल्पथ ५
वासुदेव उवाच
कुलकार्यं महाराज कश्चिदेकः कुलोद्वहः
वहते तन्नियोगाद्वै वयमभ्युत्थितास्त्रयः ६
त्वया चोपहृता राजन्क्षत्रिया लोकवासिनः
तदागः क्रूरमुत्पाद्य मन्यसे किं त्वनागमम् ७
राजा राज्ञः कथं साधून्हिंस्यान्नृपतिसत्तम
तद्राज्ञः संनिगृह्य त्वं रुद्रायोपजिहीर्षसि ८
अस्मांस्तदेनो गच्छेत त्वया बार्हद्रथे कृतम्
वयं हि शक्ता धर्मस्य रक्षणे धर्मचारिणः ९
मनुष्याणां समालम्भो न च दृष्टः कदाचन

स कथं मानुषैर्देवं यष्टुमिच्छसि शंकरम् १०
सवर्णो हि सवर्णानां पशुसंज्ञां करिष्यति
कोऽन्य एवं यथा हि त्वं जरासन्ध वृथामतिः ११
ते त्वां ज्ञाति क्षयकरं वयमार्तानुसारिणः
ज्ञातिवृद्धिनिमित्तार्थं विनियन्तुमिहागताः १२
नास्ति लोके पुमानन्यः क्षत्रियेष्विति चैव यत्
मन्यसे स च ते राजन्सुमहान्बुद्धिविप्लवः १३
को हि जानन्नभिजनमात्मनः क्षत्रियो नृप
नाविशेत्स्वर्गमतुलं रणानन्तरमव्ययम् १४
स्वर्गं ह्येव समास्थाय रणयज्ञेषु दीक्षिताः
यजन्ते क्षत्रिया लोकांस्तद्विद्धि मगधाधिप १५
स्वर्गयोनिर्जयो राजन् स्वर्गयोनिर्महद्यशः
स्वर्गयोनिस्तपो युद्धे मार्गः सोऽव्यभिचारवान् १६
एष ह्येन्द्रो वैजयन्तो गुणो नित्यं समाहितः
येनासुरान्पराजित्य जगत्पाति शतक्रतुः १७
स्वर्गमास्थाय कस्य स्याद्विग्रहित्वं यथा तव
मागधैर्विपुलैः सैन्यैर्बाहुल्यबलदर्पितैः १८
मावमंस्थाः परान्राजन्नास्ति वीर्यं नरे नरे
समं तेजस्त्वया चैव केवलं मनुजेश्वर १९
यावदेव न संबुद्धं तावदेव भवेत्तव
विषह्यमेतदस्माकमतो राजन्ब्रवीमि ते २०
जहि त्वं सदृशेष्वेव मानं दर्पं च मागध
मा गमः ससुतामात्यः सबलश्च यमक्षयम् २१
दम्भोद्भवः कार्तवीर्य उत्तरश्च बृहद्रथः
श्रेयसो ह्यवमन्येह विनेशुः सबला नृपाः २२
मुमुक्षमाणास्त्वत्तश्च न वयं ब्राह्मणब्रुवाः
शौरिरस्मि हृषीकेशो नृवीरौ पाण्डवाविमौ २३
त्वामाह्वयामहे राजन्स्थिरो युध्यस्व मागध
मुञ्च वा नृपतीन्सर्वान्मागमस्त्वं यमक्षयम् २४
जरासन्ध उवाच

नाजितान्वै नरपतीनहमाददमि कांश्चन
जितः कः पर्यवस्थाता कोऽत्र यो न मया जितः २५
क्षत्रियस्यैतदेवाहुर्धर्म्यं कृष्णोपजीवनम्
विक्रम्य वशमानीय कामतो यत्समाचरेत् २६
देवतार्थमुपाकृत्य राज्ञः कृष्ण कथं भयात्
अहमद्य विमुञ्चेयं क्षात्रं व्रतमनुस्मरन् २७
सैन्यं सैन्येन व्यूढेन एक एकेन वा पुनः
द्वाभ्यां त्रिभिर्वा योत्स्येऽह युगपत्पृथगेव वा २८
वैशम्पायन उवाच
एवमुक्त्वा जरासन्धः सहदेवाभिषेचनम्
आज्ञापयत्तदा राजा युयत्सुर्भीमकर्मभिः २९
स तु सेनापती राजा सस्मार भरतर्षभ
कौशिकं चित्रसेनं च तस्मिन्युद्ध उपस्थिते ३०
ययोस्ते नामनी लोके हंसेति डिभकेति च
पूर्वसंकथिते पुम्भिर्नृलोके लोकसत्कृते ३१
तं तु राजन्विभुः शौरी राजानं बलिनां वरम्
स्मृत्वा पुरुषशार्दूलः शार्दूलसमविक्रमम् ३२
सत्यसन्धो जरासन्धं भुवि भीमपराक्रमम्
भागमन्यस्य निर्दिष्टं वध्यं भूमिभृदच्युतः ३३
नात्मनात्मवतां मुख्य इयेष मधुसूदनः
ब्रह्मणोऽज्ञा पुरस्कृत्य हन्तुं हलधरानुजः ३४
इति श्रीमहाभारते सभापर्वणि विंशोऽध्यायः २०

## एक विंशोऽध्यायः

वैशम्पायन उवाच
ततस्तं निश्चितात्मानं युद्धाय यदुनन्दनः
उवाच वाग्मी राजानं जरासन्धमधोक्षजः १
त्रयाणां केन ते राजन्योद्धुं वितरते मनः
अस्मदन्यतमेनेह सज्जीभवतु को युधि २
एवमुक्तः स कृष्णेन युद्धं वव्रे महाद्युतिः

जरासंधस्ततो राजन्भीमसेनेन मागधः ३
धारयन्नगदान्मुख्यान्निर्वृतीर्वेदनानि च
उपतस्थे जरासन्धं युयुत्सुं वै पुरोहितः ४
कृतस्वस्त्ययनो विद्वान्ब्राह्मणेन यशस्विना
समनह्यज्जरासन्धः क्षत्रधर्ममनुव्रतः ५
अवमुच्य किरीटं स केशान्समनुमृज्य च
उदतिष्ठज्जरासन्धो वेलातिग इवार्णवः ६
उवाच मतिमान्राजाभीमं भीमपराक्रमम्
भीम योत्स्ये त्वया सार्धं श्रेयसा निर्जितं वरम् ७
एवमुक्त्वा जरासन्धो भीमसेनमरिन्दमः
प्रत्युद्ययौ महातेजाः शक्रं बलिरिवासुरः ८
ततः संमन्त्र्य कृष्णेन कृतस्वस्त्ययनो बली
भीमसेनो जरासन्धमाससाद युयुत्सया ९
ततस्तौ नरशार्दूलौ बाहुशस्त्रौ समीयतुः
वीरौ परमसंहृष्टावन्योन्यजयकाङ्क्षिणौ १०
तयोरथ भुजाघातान्निग्रहप्रग्रहात्तथा
आसीत्सुभीमसंह्रादो वज्रपर्वतयोरिव ११
उभौ परमसंहृष्टौ बलेनातिबलावुभौ
अन्योन्यस्यान्तरं प्रेप्सू परस्परजयैषिणौ १२
तद्भीममुत्सार्यजनं युद्धमासीदुपह्वरे
बलिनोः संयुगे राजन्वृत्रवासवयोरिव १३
प्रकर्षणाकर्षणाभ्यामभ्याकर्षविकर्षणैः
आकर्षेतां तथान्योन्यं जानुभिश्चाभिजघ्नतुः १४
ततः शब्देन महता भर्त्सयन्तौ परस्परम्
पाषाणसंघातनिभैः प्रहारैरभिजघ्नतुः १५
व्यूढोरस्कौ दीर्घभुजौ नियुद्धकुशलावुभौ
बाहुभिः समसज्जेतामायसैः परिघैरिव १६
कार्त्तिकस्य तु मासस्य प्रवृत्तं प्रथमेऽहनि
अनारतं दिवारात्रमविश्रान्तमवर्तत १७
तद्वृत्तं तु त्रयोदश्यां समवेतं महात्मनोः

चतुर्दश्यां निशायां तु निवृत्तो मागधः क्लमात् १८
तं राजानं तथा क्लान्तं दृष्ट्वा राजञ्जनार्दनः
उवाच भीमकर्माणं भीमं संबोधयन्निव १९
क्लान्तः शत्रुर्न कौन्तेय लभ्यः पीडयितुं रणे
पीड्यमानो हि कार्त्स्न्येन जह्याज्जीवितमात्मनः २०
तस्मात्ते नैव कौन्तेय पीडनीयो नराधिपः
सममेतेन युध्यस्व बाहुभ्यां भरतर्षभ २१
एवमुक्तः स कृष्णेन पाण्डवः परवीरहा
जरासंधस्य तद्रन्ध्रं ज्ञात्वा चक्रे मतिं वधे २२
ततस्तमजितं जेतुं जरासंधं वृकोदरः
संरभ्य बलिनां मुख्यो जग्राह कुरुनन्दनः २३

इति श्रीमहाभारते सभापर्वणि एकविंशोऽध्यायः १९

## द्वाविंशोऽध्यायः

वैशम्पायन उवाच
भीमसेनस्ततः कृष्णमुवाच यदुनन्दनम्
बुद्धिमास्थाय विपुलां जरासंध जिघांसया १
नायं पापो मया कृष्ण युक्तः स्यादनुरोधितुम्
प्राणेन यदुशार्दूल बद्धवङ्क्षणवाससा २
एवमुक्तस्ततः कृष्णः प्रत्युवाच वृकोदरम्
त्वरयन्पुरुषव्याघ्रो जरासंधवधेप्सया ३
यत्ते दैवं परं सत्त्वं यच्च ते मातरिश्वनः
बलं भीम जरासंधे दर्शयाशु तदद्य नः ४
एवमुक्तस्तदा भीमो जरासंधमरिन्दमः
उत्क्षिप्य भ्रामयद्राजन्बलवन्तं महाबलः ५
भ्रामयित्वा शतगुणं भुजाभ्यां भरतर्षभ
बभञ्ज पृष्ठे संक्षिप्य निष्पिष्य विननाद च ६
तस्य निष्पिष्यमाणस्य पाण्डवस्य च गर्जतः
अभवत्तुमुलो नादः सर्वप्राणिभयंकरः ७
वित्रेसुर्मागधाः सर्वे स्त्रीणां गर्भाश्च सुस्रुवुः

भीमसेनस्य नादेन जरासंधस्य चैव ह ८
किं नु स्विद्धिमवान्भिन्नः किं नु स्विद्दीर्यते मही
इति स्म मागधा जज्ञुर्भीमसेनस्य निस्वनात् ९
ततो राजकुलद्वारि प्रसुप्तमिव तं नृपम्
रात्रौ परासुमुत्सृज्य निश्चक्रमुररिंदमाः १०
जरासंधरथं कृष्णो योजयित्वा पताकिनम्
आरोप्य भ्रातरौ चैव मोक्षयामास बान्धवान् ११
ते वै रत्नभुजं कृष्णं रत्नार्हं पृथिवीश्वराः
राजानश्चक्रुरासाद्य मोक्षिता महतो भयात् १२
अक्षतः शस्त्रसंपन्नो जितारिः सह राजभिः
रथमास्थाय तं दिव्यं निर्जगाम गिरिव्रजात् १३
यः स सोदर्यवान्नाम द्वियोधः कृष्णसारथिः
अभ्यासघाती संदृश्यो दुर्जयः सर्वराजभिः १४
भीमार्जुनाभ्यां योधाभ्यामास्थितः कृष्णसारथिः
शशुभे रथवर्योऽसौ दुर्जयः सर्वधन्विभिः १५
शक्रविष्णू हि संग्रामे चेरतुस्तारकामये
रथेन तेन तं कृष्ण उपारुह्य ययौ तदा १६
तप्तचामीकराभेण किङ्किणीजालमालिना
मेघनिर्घोषनादेन जैत्रेणामित्रघातिना १७
येन शक्रो दानवानां जघान नवतीर्नव
तं प्राप्य समहृष्यन्त रथं ते पुरुषर्षभाः १८
ततः कृष्णं महाबाहुं भ्रातृभ्यां सहितं तदा
रथस्थं मागधा दृष्ट्वा समपद्यन्त विस्मिताः १९
हयैर्दिव्यैः समायुक्तो रथो वायुसमो जवे
अधिष्ठितः स शुशुभे कृष्णेनातीव भारत २०
असङ्गी देवविहितस्तस्मिन्रथवरे ध्वजः
योजनाद्ददृशे श्रीमानिन्द्रायुधसमप्रभः २१
चिन्तयामास कृष्णोऽथ गरुत्मन्तं स चाभ्ययात्
क्षणे तस्मिन्स तेनासीच्चैत्ययूप इवोच्छ्रितः २२
व्यादितास्यैर्महानादैः सह भूतैर्ध्वजालयैः

तस्थौ रथवरे तस्मिन् गरुत्मान्पन्नगाशनः २३
दुर्निरीक्ष्यो हि भूतानां तेजसाभ्यधिकं बभौ
आदित्य इव मध्याह्ने सहस्रकिरणावृतः २४
न स सज्जति वृक्षेषु शस्त्रैश्चापि न रिष्यते
दिव्यो ध्वजवरो राजन्दृश्यते देवमानुषैः २५
तमास्थाय रथं दिव्यं पर्जन्यसमनिस्वनम्
निर्ययौ पुरुषव्याघ्रः पाण्डवाभ्यां सहाच्युतः २६
यं लेभे वासवाद्राजा वसुस्तस्माद्बृहद्रथः
बृहद्रथात्क्रमेणैव प्राप्तो बार्हद्रथं नृपम् २७
स निर्ययौ महाबाहुः पुण्डरीकेक्षणस्ततः
गिरिव्रजाद्बहिस्तस्थौ समे देशे महायशाः २८
तत्रैनं नागराः सर्वे सत्कारेणाभ्ययुस्तदा
ब्राह्मणप्रमुखा राजन्विधिदृष्टेन कर्मणा २९
बन्धनाद्विप्रमुक्ताश्च राजानो मधुसूदनम्
पूजयामासुरूचुश्च सांत्वपूर्वमिदं वचः ३०
नैतच्चित्रं महाबाहो त्वयि देवकिनन्दन
भीमार्जुनबलोपेते धर्मस्य परिपालनम् ३१
जरासंधह्रदे घोरे दुःखपङ्के निमज्जताम्
राज्ञां समभ्युद्धरणं यदिदं कृतमद्य ते ३२
विष्णो समवसन्नानां गिरिदुर्गे सुदारुणे
दिष्ट्या मोक्षाद्यशो दीप्तमाप्तं ते पुरुषोत्तम ३३
किं कुर्म पुरुषव्याघ्र ब्रवीहि पुरुषर्षभ
कृतमित्येव तज्ज्ञेयं नृपैर्यद्यपि दुष्करम् ३४
तानुवाच हृषीकेशः समाश्वास्य महामनाः
युधिष्ठिरो राजसूयं क्रतुमाहर्तुमिच्छति ३५
तस्य धर्मप्रवृत्तस्य पार्थिवत्वं चिकीर्षतः
सर्वैर्भवद्भिर्यज्ञार्थे साहाय्यं दीयतामिति ३६
ततः प्रतीतमनसस्ते नृपा भरतर्षभ
तथेत्येवाब्रुवन्सर्वे प्रतिजज्ञुश्च तां गिरम् ३७
रत्नभाजं च दाशार्हं चक्रुस्ते पृथिवीश्वराः

कृच्छ्राज्जग्राह गोविन्दस्तेषां तदनुकम्पया ३८
जरासन्धात्मजश्चैव सहदेवो महारथः
निर्ययौ सजनामात्यः पुरस्कृत्य पुरोहितम् ३९
स नीचैः प्रश्रितो भूत्वा बहुरत्नपुरोगमः
सहदेवो नृणां देवं वासुदेवमुपस्थितः ४०
भयार्ताय ततस्तस्मै कृष्णो दत्त्वाभयं तदा
अभ्यषिञ्चत तत्रैव जरासन्धात्मजं तदा ४१
गत्वैकत्वं च कृष्णेन पार्थाभ्यां चैव सत्कृतः
विवेश राजा मतिमान्पुनर्बार्हद्रथं पुरम् ४२
कृष्णस्तु सह पार्थाभ्यां श्रिया परमया ज्वलन्
रत्नान्यादाय भूरीणि प्रययौ पुष्करेक्षणः ४३
इन्द्रप्रस्थमुपागम्य पाण्डवाभ्यां सहाच्युतः
समेत्य धर्मराजानं प्रीयमाणोऽभ्यभाषत ४४
दिष्ट्या भीमेन बलवाञ्जरासन्धो निपातितः
राजानो मोक्षिताश्चेमे बन्धनान्नृपसत्तम ४५
दिष्ट्या कुशलिनौ चेमौ भीमसेनधनंजयौ
पुनः स्वनगरं प्राप्तावक्षताविति भारत ४६
ततो युधिष्ठिरः कृष्णं पूजयित्वा यथार्हतः
भीसेनार्जुनौ चैव प्रहृष्टः परिषस्वजे ४७
ततः क्षीणे जरासन्धे भ्रातृभ्यां विहितं जयम्
अजातशत्रुरासाद्य मुमुदे भ्रातृभिः सह ४८
यथावयः समागम्य राजभिस्तैश्च पाण्डवः
सत्कृत्य पूजयित्वा च विससर्ज नराधिपान् ४९
युधिष्ठिराभ्यनुज्ञातास्ते नृपा हृष्टमानसाः
जग्मुः स्वदेशांस्त्वरिता यानैरुच्चावचैस्ततः ५०
एवं पुरुषशार्दूलो महाबुद्धिर्जनार्दनः
पाण्डवैर्घातयामास जरासंधमरिं तदा ५१
घातयित्वा जरासन्धं बुद्धिपूर्वमरिन्दमः
धर्मराजमनुज्ञाप्य पृथां कृष्णां च भारत ५२
सुभद्रां भीमसेनं च फल्गुनं यमजौ तथा

धौम्यमामन्त्रयित्वा च प्रययौ स्वां पुरीं प्रति ५३
तेनैव रथमुख्येन तरुणादित्यवर्चसा
धर्मराजविसृष्टेन दिव्येनानादयन्दिशः ५४
ततो युधिष्ठिरमुखाः पाण्डवा भरतर्षभ
प्रदक्षिणमकुर्वन्त कृष्णमक्लिष्टकारिणम् ५५
ततो गते भगवति कृष्णे देवकिनन्दने
जयं लब्ध्वा सुविपुलं राज्ञामभयदास्तदा ५६
संवर्धितौजसो भूयः कर्मणा तेन भारत
द्रौपद्याः पाण्डवा राजन्परां प्रीतिमवर्धयन् ५७
तस्मिन्काले तु यद्युक्तं धर्मकामार्थसंहितम्
तद्राजा धर्मतश्चक्रे राज्यपालनकीर्तिमान् ५८
इति श्रीमहाभारते सभापर्वणि द्वाविंशोऽध्यायः २२

त्रयोविंशोऽध्यायः

वैशम्पायन उवाच
पार्थः प्राप्य धनुः श्रेष्ठमक्षय्यौ च महेषुधी
रथं ध्वजं सभां चैव युधिष्ठिरमभाषत १
धनुरस्त्रं शरा वीर्यं पक्षो भूमिर्यशो बलम्
प्राप्तमेतन्मया राजन्दुष्प्रापं यदभीप्सितम् २
तत्र कृत्यमहं मन्ये कोशस्यास्य विवर्धनम्
करमाहारयिष्यामि राज्ञः सर्वान्नृपोत्तम ३
विजयाय प्रयास्यामि दिशं धनदरक्षिताम्
तिथावथ मुहूर्ते च नक्षत्रे च तथा शिवे ४
धनंजयवचः श्रुत्वाधर्मराजो युधिष्ठिरः
स्निग्धगम्भीरनादिन्या तं गिरा प्रत्यभाषत ५
स्वस्ति वाच्यार्हतो विप्रान्प्रयाहि भरतर्षभ
दुर्हृदामप्रहर्षाय सुहृदां नन्दनाय च
विजयस्ते ध्रुवं पार्थ प्रियं काममवाप्नुहि ६
इत्युक्तः प्रययौ पार्थः सैन्येन महता वृतः
अग्निदत्तेन दिव्येन रथेनाद्भुतकर्मणा ७

तथैव भीमसेनोऽपि यमौ च पुरुषर्षभौ
ससैन्याः प्रययुःसर्वे धर्मराजाभिपूजिताः ८
दिशं धनपतेरिष्टामजयत्पाकशासनिः
भीमसेनस्तथा प्राचीं सहदेवस्तु दक्षिणाम् ९
प्रतीचीं नकुलो राजन्दिशं व्यजयदस्त्रवित्
खाण्डवप्रस्थमध्यास्ते धर्मराजो युधिष्ठिरः १०
जनमेजय उवाच
दिशामभिजयं ब्रह्मन्विस्तरेणानुकीर्तय
न हि तृप्यामि पूर्वेषां शृण्वानश्चरितं महत् ११
वैशम्पायन उवाच
धनंजयस्य वक्ष्यामि विजयं पूर्वमेव ते
यौगपद्येन पार्थैर्हि विजितेयं वसुन्धरा १२
पूर्वं कुणिन्दविषये वशे चक्रे महीपतीन्
धनंजयो महाबाहुर्नातितीव्रेण कर्मणा १३
आनर्तान्कालकूटांश्च कुणिन्दांश्च विजित्य सः
सुमण्डलं पापजितं कृतवाननुसैनिकम् १४
स तेन सहितो राजन्सव्यसाची परंतपः
विजिग्ये सकलं द्वीपं प्रतिविन्ध्यं च पार्थिवम् १५
सकलद्वीपवासांश्च सप्तद्वीपे च ये नृपाः
अर्जुनस्य च सैन्यानां विग्रहस्तुमुलोऽभवत् १६
स तानपि महेष्वासो विजित्य भरतर्षभ
तैरेव सहितः सर्वैः प्राग्ज्योतिषमुपाद्रवत् १७
तत्र राजा महानासीद्भगदत्तो विशां पते
तेनासीत्सुमहद्युद्धं पाण्डवस्य महात्मनः १८
स किरातैश्च चीनैश्च वृतः प्राग्ज्योतिषोऽभवत्
अन्यैश्च बहुभिर्योधैः सागरानूपवासिभिः १९
ततः स दिवसानष्टौ योधयित्वा धनंजयम्
प्रहसन्नब्रवीद्राजा संग्रामे विगतक्लमः २०
उपपन्नं महाबाहो त्वयि पाण्डवनन्दन
पाकशासनदायादे वीर्यमाहवशोभिनि २१

अयं सखा सुरेन्द्रस्य शक्रादनवमो रणे
न च शक्नोमि ते तात स्थातुं प्रमुखतो युधि २२
किमीप्सितं पाण्डवेय ब्रूहि किं करवाणि ते
यद्वक्ष्यसि महाबाहो तत्करिष्यामि पुत्रक २३
अर्जुन उवाच
कुरूणामृषभो राजा धर्मपुत्रो युधिष्ठिरः
तस्य पार्थिवतामीप्से करस्तस्मै प्रदीयताम् २४
भवान्पितृसखा चैव प्रीयमाणो मयापि च
ततो नाज्ञापयामि त्वां प्रीतिपूर्वं प्रदीयताम् २५
कुन्तीमातर्यथा मे त्वं तथा राजा युधिष्ठिरः
सर्वमेतत्करिष्यामि किं चान्यत्करवाणि ते २६
इति श्रीमहाभारते सभापर्वणि त्रयोविंशोऽध्यायः २३

चतुर्विंशोऽध्यायः

वैशम्पायन उवाच
तं विजित्य महाबाहुः कुन्तीपुत्रो धनंजयः
प्रययावुत्तरां तस्माद्दिशं धनदपालिताम् १
अन्तर्गिरिं च कौन्तेयस्तथैव च बहिर्गिरिम्
तथोपरिगिरिं चैव विजिग्ये पुरुषर्षभः २
विजित्य पर्वतान्सर्वान्ये च तत्र नराधिपाः
तान्वशे स्थापयित्वा स रत्नान्यादाय सर्वशः ३
तैरेव सहितः सर्वैरनुरज्य च तान्नृपान्
कुलूतवासिनं राजन्बृहन्तमुपजग्मिवान् ४
मृदङ्गवरनादेन रथनेमिस्वनेन च
हस्तिनां च निनादेन कम्पयन्वसुधामिमाम् ५
ततो बृहन्तस्तरुणो बलेन चतुरङ्गिणा
निष्क्रम्य नगरात्तस्माद्योधयामास पाण्डवम् ६
सुमहान्संनिपातोऽभूद्धनंजय बृहन्तयोः
न शशाक बृहन्तस्तु सोढुं पाण्डवविक्रमम् ७
सोऽविषह्यतमं ज्ञात्वा कौन्तेयं पर्वतेश्वरः

उपावर्तत दुर्मेधा रत्नान्यादाय सर्वशः ८
स तद्राज्यमवस्थाप्य कुलूतसहितो ययौ
सेनाबिन्दुमथो राजन्राज्यादाशु समाक्षिपत् ९
मोदापुरं वामदेवं सुदामानं सुसंकुलम्
कुलूतानुत्तरांश्चैव तांश्च राज्ञः समानयत् १०
तत्रस्थः पुरुषैरेव धर्मराजस्य शासनात्
व्यजयद्धनंजयो राजन्देशान्पञ्च प्रमाणतः ११
स दिवःप्रस्थमासाद्य सेनाबिन्दोः पुरं महत्
बलेन चतुरङ्गेण निवेशमकरोत्प्रभुः १२
स तैः परिवृतः सर्वैर्विष्वगश्वं नराधिपम्
अभ्यगच्छन्महातेजाः पौरवं पुरुषर्षभः १३
विजित्य चाहवे शूरान्पार्वतीयान्महारथान्
ध्वजिन्या व्यजयद्राजन्पुरं पौरवरक्षितम् १४
पौरवं तु विनिर्जित्य दस्यून्पर्वतवासिनः
गणानुत्सवसङ्केतानजयत्सप्त पाण्डवः १५
ततः काश्मीरकान्वीरान्क्षत्रियान्क्षत्रियर्षभः
व्यजयल्लोहितं चैव मण्डलैर्दशभिः सह १६
ततस्त्रिगर्तान्कौन्तेयोदार्वान्कोकनदाश्च ये
क्षत्रिया बहवो राजन्नुपावर्तन्त सर्वशः १७
अभिसारीं ततो रम्यां विजिग्ये कुरुनन्दनः
उरगावासिनं चैव रोचमानं रणेऽजयत् १८
ततं सिंहपुरं रम्यं चित्रायुधसुरक्षितम्
प्रामथद्ब्रलमास्थाय पाकशासनिराहवे १९
ततःसुह्मांश्च चोलांश्च किरीटी पाण्डवर्षभः
सहितः सर्वसैन्येन प्रामथत्कुरुनन्दनः २०
ततः परमविक्रान्तो बाह्लीकान्कुरुनन्दनः
महता परिमर्देन वशे चक्रे दुरासदान् २१
गृहीत्वा तु बलं सारं फल्गु चोत्सृज्य पाण्डवः
दरदान्सह काम्बोजैरजयत्पाकशासनिः २२
प्रागुत्तरां दिशं ये च वसन्त्याश्रित्य दस्यवः

निवसन्ति वने ये च तान्सर्वानजयत्प्रभुः २३
लोहान्परम काम्बोजानृषिकानुत्तरानपि
सहितांस्तान्महाराज व्यजयत्पाकशासनिः २४
ऋषिकेषु तु संग्रामो बभूवातिभयंकरः
तारकामयसंकाशः परमर्षिकपार्थयोः २५
स विजित्य ततो राजन्नृषिकान्रणमूर्धनि
शुकोदरसमप्रख्यान्हयानष्टौ समानयत्
मयूरसदृशानन्यानुभयानेव चापरान् २६
स विनिर्जित्य सङ्ग्रामे हिमवन्तं सनिष्कुटम्
श्वेतपर्वतमासाद्य न्यवसत्पुरुषर्षभः २७
इति श्रीमहाभारते सभापर्वणि चतुर्विंशोऽध्यायः २४

## पञ्चविंशोऽध्यायः

वैशम्पायन उवाच
स श्वेतपर्वतं वीरः समतिक्रम्य भारत
देशं किंपुरुषावासं द्रुमपुत्रेण रक्षितम् १
महता संनिपातेन क्षत्रियान्तकरेण ह
व्यजयत्पाण्डवश्रेष्ठः करे चैव न्यवेशयत् २
तं जित्वा हाटकं नाम देशं गुह्यकरक्षितम्
पाकशासनिरव्यग्रः सहसैन्यः समासदत् ३
तांस्तु सान्त्वेन निर्जित्य मानसं सर उत्तमम्
ऋषिकुल्याश्च ताः सर्वा ददर्श कुरुनन्दनः ४
सरो मानसमासाद्य हाटकानभितः प्रभुः
गन्धर्वरक्षितं देशं व्यजयत्पाण्डवस्ततः ५
तत्र तित्तिरिकल्माषान्मण्डूकाक्षान्हयोत्तमान्
लेभे स करमत्यन्तं गन्धर्वनगरात्तदा ६
उत्तरं हरिवर्षं तु समासाद्य स पाण्डवः
इयेष जेतुं तं देशं पाकशासननन्दनः ७
तत एनं महाकाया महावीर्या महाबला
द्वारपालाः समासाद्य हृष्टा वचनमब्रुवन् ८

पार्थ नेदं त्वया शक्यं पुरं जेतुं कथंचन
उपावर्तस्व कल्याण पर्याप्तमिदमच्युत ९
इदं पुरं यः प्रविशेद्ध्रुवं न स भवेन्नरः
प्रीयामहे त्वया वीर पर्याप्तो विजयस्तव १०
न चापि किंचिज्जेतव्यमर्जुनात्र प्रदृश्यते
उत्तराः कुरवो ह्येते नात्र युद्धं प्रवर्तते ११
प्रविष्टश्चापि कौन्तेय नेह द्रक्ष्यसि किंचन
न हि मानुषदेहेन शक्यमत्राभिवीक्षितुम् १२
अथेह पुरुषव्याघ्र किंचिदन्यच्चिकीर्षसि
तद्ब्रवीहि करिष्यामो वचनात्तव भारत १३
ततस्तानब्रवीद्राजन्नर्जुनः पाकशासनिः
पार्थिवत्वं चिकीर्षामि धर्मराजस्य धीमतः १४
न प्रवेक्ष्यामि वो देशं बाध्यत्वं यदि मानुषैः
युधिष्ठिराय यत्किंचित्करवन्नः प्रदीयताम् १५
ततो दिव्यानि वस्त्राणि दिव्यान्याभरणानि च
मोकाजिनानि दिव्यानि तस्मै ते प्रददुः करम् १६
एवं स पुरुषव्याघ्रो विजिग्ये दिशमुत्तराम्
संग्रामान्सुबहून्कृत्वा क्षत्रियैर्दस्युभिस्तथा १७
स विनिर्जित्य राज्ञस्तान्करे च विनिवेश्य ह
धनान्यादाय सर्वेभ्यो रत्नानि विविधानि च १८
हयांस्तित्तिरिकल्माषाञ्शुक पत्रनिभानपि
मयूरसदृशांश्चान्यान्सर्वाननिलरंहसः १९
वृतः सुमहता राजन्बलेन चतुरङ्गिणा
आजगाम पुनर्वीरः शक्रप्रस्थं पुरोत्तमम् २०
इति श्रीमहाभारते सभापर्वणि पञ्चविंशोऽध्यायः २५

षड्विंशोऽध्यायः

वैशम्पायन उवाच
एतस्मिन्नेव काले तु भीमसेनोऽपि वीर्यवान्
धर्मराजमनुज्ञाप्य ययौ प्राचीं दिशं प्रति १

महता बलचक्रेण परराष्ट्रावमर्दिना
वृतो भरतशार्दूलो द्विषच्छोकविवर्धनः २
स गत्वा राजशार्दूलः पाञ्चालानां पुरं महत्
पञ्चालान्विविधोपायैः सान्त्वयामास पाण्डवः ३
ततः स गण्डकीं शूरो विदेहांश्च नरर्षभः
विजित्याल्पेन कालेन दशार्णानगमत्प्रभुः ४
तत्र दाशार्णको राजा सुधर्मा लोमहर्षणम्
कृतवान्कर्म भीमेन महद्युद्धं निरायुधम् ५
भीमसेनस्तु तद्दृष्ट्वा तस्य कर्म परंतपः
अधिसेनापतिं चक्रे सुधर्माणं महाबलम् ६
ततः प्राचीं दिशं भीमो ययौ भीमपराक्रमः
सैन्येन महता राजन्कम्पयन्निव मेदिनीम् ७
सोऽश्वमेधेश्वरं राजन्रोचमानं सहानुजम्
जिगाय समरे वीरो बलेन बलिनां वरः ८
स तं निर्जित्य कौन्तेयो नातितीव्रेण कर्मणा
पूर्वदेशं महावीर्यो विजिग्ये कुरुनन्दनः ९
ततो दक्षिणमागम्य पुलिन्दनगरं महत्
सुकुमारं वशे चक्रे सुमित्रं च नराधिपम् १०
ततस्तु धर्मराजस्य शासनाद्भरतर्षभः
शिशुपालं महावीर्यमभ्यगाज्जनमेजय ११
चेदिराजोऽपि तच्छ्रुत्वा पाण्डवस्य चिकीर्षितम्
उपनिष्क्रम्य नगरात्प्रत्यगृह्णात्परंतपः १२
तौ समेत्य महाराज कुरुचेदिवृषौ तदा
उभयोरात्मकुलयोः कौशल्यं पर्यपृच्छताम् १३
ततो निवेद्य तद्राष्ट्रं चेदिराजो विशां पते
उवाच भीमं प्रहसन्किमिदं कुरुषेऽनघ १४
तस्य भीमस्तदाचख्यौ धर्मराजचिकीर्षितम्
स च तत्प्रतिगृह्यैव तथा चक्रे नराधिपः १५
ततो भीमस्तत्र राजन्नुषित्वा त्रिदशाः क्षपाः
सत्कृतः शिशुपालेन ययौ सबलवाहनः १६

इति श्रीमहाभारते सभापर्वणि षड्विंशोऽध्यायः २६

सप्तविंशोऽध्यायः

वैशम्पायन उवाच
ततः कुमारविषये श्रेणिमन्तमथाजयत्
कोसलाधिपतिं चैव बृहद्बलमरिन्दमः १
अयोध्यायां तु धर्मज्ञं दीर्घप्रज्ञं महाबलम्
अजयत्पाण्डवश्रेष्ठो नातितीव्रेण कर्मणा २
ततो गोपालकच्छं च सोत्तमानपि चोत्तरान्
मल्लानामधिपं चैव पार्थिवं व्यजयत्प्रभुः ३
ततो हिमवतः पार्श्वे समभ्येत्य जरद्गवम्
सर्वमल्पेन कालेन देशं चक्रे वशे बली ४
एवं बहुविधान्देशान्विजित्य पुरुषर्षभः
उन्नाटमभितो जिग्ये कुक्षिमन्तं च पर्वतम्
पाण्डवः सुमहावीर्यो बलेन बलिनां वरः ५
स काशिराजं समरे सुबन्धुमनिवर्तिनम्
वशे चक्रे महाबाहुर्भीमो भीमपराक्रमः ६
ततः सुपार्श्वमभितस्तथा राजपतिं क्रथम्
युध्यमानं बलात्संख्ये विजिग्ये पाण्डवर्षभः ७
ततो मत्स्यान्महातेजा मलयांश्च महाबलान्
अनवद्यान्गयांश्चैव पशुभूमिं च सर्वशः ८
निवृत्य च महाबाहुर्मदर्वीकं महीधरम्
सोपदेशं विनिर्जित्य प्रययावुत्तरामुखः
वत्सभूमिं च कौन्तेयो विजिग्ये बलवान्बलात् ९
भर्गाणामधिपं चैव निषादाधिपतिं तथा
विजिग्ये भूमिपालांश्च मणिमत्प्रमुखान्बहून् १०
ततो दक्षिणमल्लांश्च भोगवन्तं च पाण्डवः
तरसैवाजयद्भीमो नातितीव्रेण कर्मणा ११
शर्मकान्वर्मकांश्चैव सान्त्वेनैवाजयत्प्रभुः
वैदेहकं च राजानं जनकं जगतीपतिम्

विजिग्ये पुरुषव्याघ्रो नातितीव्रेण कर्मणा १२
वैदेहस्थस्तु कौन्तेय इन्द्रपर्वतमन्तिकात्
किरातानामधिपतीन्व्यजयत्सप्त पाण्डवः १३
ततः सुह्मान्प्राच्यसुह्मान्समक्षांश्चैव वीर्यवान्
विजित्य युधि कौन्तेयो मागधानुपयाद्बली १४
दण्डं च दण्डधारं च विजित्य पृथिवीपतीन्
तैरेव सहितः सर्वैर्गिरिव्रजमुपाद्रवत् १५
जारासन्धिं सान्त्वयित्वा करे च विनिवेश्य ह
तैरेव सहितो राजन्कर्णमभ्यद्रवद्बली १६
स कम्पयन्निव महीं बलेन चतुरङ्गिणा
युयुधे पाण्डवश्रेष्ठः कर्णेनामित्रघातिना १७
स कर्णं युधि निर्जित्य वशे कृत्वा च भारत
ततो विजिग्ये वलवान्राज्ञः पर्वतवासिनः १८
अथ मोदागिरिं चैव राजानं बलवत्तरम्
पाण्डवो बाहुवीर्येण निजघान महामृधे १९
ततः पौण्ड्राधिपं वीरं वासुदेवं महाबलम्
कौशिकीकच्छनिलयं राजानं च महौजसम् २०
उभौ बलवृतौ वीरावुभौ तीव्रपराक्रमौ
निर्जित्याजौ महाराज वङ्गराजमुपाद्रवत् २१
समुद्रसेनं निर्जित्य चन्द्रसेनं च पार्थिवम्
ताम्रलिप्तं च राजानं काचं वङ्गाधिपं तथा २२
सुह्मानामधिपं चैव ये च सागरवासिनः
सर्वान्म्लेच्छगणांश्चैव विजिग्ये भरतर्षभः २३
एवं बहुविधान्देशान्विजित्य पवनात्मजः
वसु तेभ्य उपादाय लौहित्यमगमद्बली २४
स सर्वान्म्लेच्छनृपतीन्सागरद्वीपवासिनः
करमाहारयामास रत्नानि विविधानि च २५
चन्दनागुरुवस्त्राणि मणिमुक्तमनुत्तमम्
काञ्चनं रजतं वज्रं विद्रुमं च महाधनम् २६
स कोटिशतसंख्येन धनेन महता तदा

अभ्यवर्षदमेयात्मा धनवर्षेण पाण्डवम् २७
इन्द्रप्रस्थमथागम्य भीमो भीमपराक्रमः
निवेदयामास तदा धर्मराजाय तद्धनम् २८
इति श्रीमहाभारते सभापर्वणि सप्तविंशोऽध्यायः २७

अष्टाविंशोऽध्यायः

वैशम्पायन उवाच
तथैव सहदेवोऽपि धर्मराजेन पूजितः
महत्या सेनया सार्धंप्रययौ दक्षिणां दिशम् १
स शूरसेनान्कात्स्न्र्येन पूर्वमेवाजयत्प्रभुः
मत्स्यराजं च कौरव्यो वशे चक्रे बलाद्बली २
अधिराजाधिपं चैव दन्तवक्रं महाहवे
जिगाय करदं चैव स्वराज्ये संन्यवेशयत् ३
सुकुमारं वशे चक्रे सुमित्रं च नराधिपम्
तथैवापरमत्स्यांश्च व्यजयत्स पटच्चरान् ४
निषादभूमिं गोशृङ्गं पर्वतप्रवरं तथा
तरसा व्यजयद्धीमाञ्श्रेणिमन्तं च पार्थिवम् ५
नवराष्ट्रं विनिर्जित्य कुन्तिभोजमुपाद्रवत्
प्रीतिपूर्वं च तस्यासौ प्रतिजग्राह शासनम् ६
ततश्चर्मण्वतीकूले जम्भकस्यात्मजं नृपम्
ददर्श वासुदेवेन शेषितं पूर्ववैरिणा ७
चक्रे तत्र स संग्रामं सह भोजेन भारत
स तमाजौ विनिर्जित्य दक्षिणाभिमुखो ययौ ८
करांस्तेभ्य उपादाय रत्नानि विविधानि च
ततस्तैरेव सहितो नर्मदामभितो ययौ ९
विन्दानुविन्दावावन्त्यौ सैन्येन महता वृतौ
जिगाय समरे वीरावाश्विनेयः प्रतापवान् १०
ततो रत्नान्युपादाय पुरीं माहिष्मतीं ययौ
तत्र नीलेन राज्ञा स चक्रे युद्धं नरर्षभः ११
पाण्डवः परवीरघ्नः सहदेवः प्रतापवान्

ततोऽस्य सुमहद्युद्धमासीद्भीरुभयंकरम् १२
सैन्यक्षयकरं चैव प्राणानां संशयाय च
चक्रे तस्य हि साहाय्यं भगवान्हव्यवाहनः १३
ततो हया रथा नागाः पुरुषाः कवचानि च
प्रदीप्तानि व्यदृश्यन्त सहदेवबले तदा १४
ततः सुसंभ्रान्तमना बभूव कुरुनन्दनः
नोत्तरं प्रतिवक्तुं च शक्तोऽभूज्जनमेजय १५
जनमेजय उवाच
किमर्थं भगवानग्निः प्रत्यमित्रोऽभवद्युधि
सहदेवस्य यज्ञार्थं घटमानस्य वै द्विज १६
वैशम्पायन उवाच
तत्र माहिष्मतीवासी भगवान्हव्यवाहनः
श्रूयते निगृहीतो वै पुरस्तात्पारदारिकः १७
नीलस्य राज्ञः पूर्वेषामुपनीतश्च सोऽभवत्
तदा ब्राह्मणरूपेण चरमाणो यदृच्छया १८
तं तु राजा यथाशास्त्रमन्वशाद्धार्मिकस्तदा
प्रजज्वाल ततः कोपाद्भगवान्हव्यवाहनः १९
तं दृष्ट्वा विस्मितो राजा जगाम शिरसा कविम्
चक्रे प्रसादं च तदा तस्य राज्ञो विभावसुः २०
वरेण छन्दयामास तं नृपं स्विष्टकृत्तमः
अभयं च स जग्राह स्वसैन्ये वै महीपतिः २१
ततः प्रभृति ये केचिदज्ञानात्तां पुरीं नृपाः
जिगीषन्ति बलाद्राजंस्ते दह्यन्तीह वह्निना २२
तस्यां पुर्यां तदा चैव माहिष्मत्यां कुरूद्वह
बभूवुरनभिग्राह्या योषितश्छन्दतः किल २३
एवमग्निर्वरं प्रादात्स्त्रीणामप्रतिवारणे
स्वैरिण्यस्तत्र नार्यो हि यथेष्टः प्रचरन्त्युत २४
वर्जयन्ति च राजानस्तद्राष्ट्रं पुरुषोत्तम
भयादग्नेर्महाराज तदा प्रभृति सर्वदा २५
सहदेवस्तु धर्मात्मा सैन्यं दृष्ट्वा भयार्दितम्

परीतमग्निना राजन्नाकम्पत यथा गिरिः २६
उपस्पृश्य शुचिर्भूत्वा सोऽब्रवीत्पावकं ततः
त्वदर्थोऽय समारम्भः कृष्णवर्त्मन्नमोऽस्तु ते २७
मुखं त्वमसि देवानां यज्ञस्त्वमसि पावक
पावनात्पावकश्चासि वहनाद्धव्यवाहनः २८
वेदास्त्वदर्थं जाताश्च जातवेदास्ततो ह्यसि
यज्ञविघ्नमिमंकर्तुं नार्हस्त्वं हव्यवाहन २९
एवमुक्त्वा तु माद्रेयः कुशैरास्तीर्य मेदिनीम्
विधिवत्पुरुषव्याघ्रः पावकं प्रत्युपाविशत् ३०
प्रमुखे सर्वसैन्यस्य भीतोद्विग्नस्य भारत
न चैनमत्यगाद्वह्निर्वेलामिव महोदधिः ३१
तमभ्येत्य शनैर्वह्निरुवाच कुरुनन्दनम्
सहदेवं नृणां देवं सान्त्वपूर्वमिदं वचः ३२
उत्तिष्ठोत्तिष्ठ कौरव्य जिज्ञासेयं कृता मया
वेद्मि सर्वमभिप्रायं तव धर्मसुतस्य च ३३
मया तु रक्षितव्येयं पुरी भरतसत्तम
यावद्राज्ञोऽस्य नीलस्य कुलवंशधरा इति
ईप्सितं तु करिष्यामि मनसस्तव पाण्डव ३४
तत उत्थाय हृष्टात्मा प्राञ्जलि शिरसानतः
पूजयामास माद्रेयः पावकं पुरुषर्षभः ३५
पावके विनिवृत्ते तु नीलो राजाभ्ययात्तदा
सत्कारेण नरव्याघ्रं सहदेवं युधां पतिम् ३६
प्रतिगृह्य च तां पूजां करे च विनिवेश्य तम्
माद्रीसुतस्ततः प्रायाद्विजयी दक्षिणां दिशम् ३७
त्रैपुरं स वशे कृत्वा राजानममितौजसम्
निजग्राह महाबाहुस्तरसा पोतनेश्वरम् ३८
आहृतिं कौशिकाचार्यं यत्नेन महता ततः
वशे चक्रे महाबाहुः सुराष्ट्राधिपतिं तथा ३९
सुराष्ट्रविषयस्थश्च प्रेषयामास रुक्मिणे
राज्ञे भोजकटस्थाय महामात्राय धीमते ४०

भीष्मकाय स धर्मात्मा साक्षादिन्द्रसखाय वै
स चास्य ससुतो राजन्प्रतिजग्राह शासनम् ४१
प्रीतिपूर्वं महाबाहुर्वासुदेवमवेक्ष्य च
ततः स रत्नान्यादाय पुनः प्रायाद्युधां पतिः ४२
ततः शूर्पारकं चैव गणं चोपकृताह्वयम्
वशे चक्रे महातेजा दण्डकांश्च महाबलः ४३
सागरद्वीपवासांश्च नृपतीन्म्लेच्छयोनिजान्
निषादान्पुरुषादांश्च कर्णप्रावरणानपि ४४
ये च कालमुखा नाम नरा राक्षसयोनयः
कृत्स्नं कोल्लगिरिं चैव मुरचीपत्तनं तथा ४५
द्वीपं ताम्राह्वयं चैव पर्वतं रामकं तथा
तिमिङ्गिलं च नृपतिं वशे चक्रे महामतिः ४६
एकपादांश्च पुरुषान्केवलान्वनवासिनः
नगरीं संजयन्तीं च पिच्छण्डं करहाटकम्
दूतैरेव वशे चक्रे करं चैनानदापयत् ४७
पाण्ड्यांश्च द्रविडांश्चैव सहितांश्चोड्रकेरलैः
अन्ध्रांस्तलवनांश्चैव कलिङ्गानोष्ट्रकर्णिकान् ४८
अन्ताखीं चैव रोमां च यवनानां पुरं तथा
दूतैरेव वशे चक्रे करं चैनानदापयत् ४९
भरुकच्छं गतो धीमान्दूतान्माद्रवतीसुतः
प्रेषयामास राजेन्द्र पौलस्त्याय महात्मने
विभीषणाय धर्मात्मा प्रीतिपूर्वमरिन्दमः ५०
स चास्य प्रतिजग्राह शासनं प्रीतिपूर्वकम्
तच्च कालकृतं धीमानन्वमन्यत स प्रभुः ५१
ततः संप्रेषयामास रत्नानि विविधानि च
चन्दनागुरुमुख्यानि दिव्यान्याभरणानि च ५२
वासांसि च महार्हाणि मणींश्चैव महाधनान्
न्यवर्तत ततो धीमान्सहदेवः प्रतापवान् ५३
एवं निर्जित्य तरसा सान्त्वेन विजयेन च
करदान्पार्थिवान्कृत्वा प्रत्यागच्छदरिंदमः ५४

धर्मराजाय तत्सर्वं निवेद्य भरतर्षभ
कृतकर्मा सुखं राजन्नुवास जनमेजय ५५
इति श्रीमहाभारते सभापर्वणि अष्टाविंशोऽध्यायः २८

## एकोनत्रिंशोऽध्यायः

वैशम्पायन उवाच
नकुलस्य तु वक्ष्यामि कर्माणि विजयं तथा
वासुदेवजितामाशां यथासौ व्यजयत्प्रभुः १
निर्याय खाण्डवप्रस्थात्प्रतीचीमभितो दिशम्
उद्दिश्य मतिमान्प्रायान्महत्या सेनया सह २
सिंहनादेन महता योधानां गर्जितेन च
रथनेमिनिनादैश्च कल्पयन्वसुधामिमाम् ३
ततो बहुधनं रम्यं गवाश्वधनधान्यवत्
कार्त्तिकेयस्य दयितं रोहीतकमुपाद्रवत् ४
तत्र युद्धं महद्वृत्तं शूरैर्मत्तमयूरकैः
मरुभूमिंच कात्स्न्येन तथैव बहुधान्यकम् ५
शैरीषकं महेच्छं च वशे चक्रे महाद्युतिः
शिबींस्त्रिगर्तानम्बष्ठान्मालवान्पञ्चकर्पटान् ६
तथा मध्यमिकायांश्च वाटधानान्द्विजानथ
पुनश्च परिवृत्याथ पुष्करारण्यवासिनः ७
गणानुत्सवसङ्केतान्व्यजयत्पुरुषर्षभः
सिन्धुकूलाश्रिता ये च ग्रामणेया महाबलाः ८
शूद्राभीरगणाश्चैव ये चाश्रित्य सरस्वतीम्
वर्तयन्ति च ये मत्स्यैर्ये च पर्वतवासिनः ९
कृत्स्नं पञ्चनदं चैव तथैवापरपर्यटम्
उत्तरज्योतिकं चैव तथा वृन्दाटकं पुरम्
द्वारपालं च तरसा वशे चक्रे महाद्युतिः १०
रमठान्हारहूणांश्च प्रतीच्याश्चैव ते नृपाः
तान्सर्वान्स वशे चक्रे शासनादेव पाण्डवः ११
तत्रस्थः प्रेषयामास वासुदेवाय चाभिभुः

स चास्य दशभी राज्यैः प्रतिजग्राह शासनम् १२
ततः शाकलमभ्येत्य मद्राणां पुटभेदनम्
मातुलं प्रीतिपूर्वेण शल्यं चक्रे वशे बली १३
स तस्मिन्सत्कृतो राज्ञा सत्कारार्हो विशांपते
रत्नानि भूरीण्यादाय संप्रतस्थे युधां पतिः १४
ततः सागरकुक्षिस्थान्म्लेच्छान्परमदारुणान्
पह्लवान्बर्बरांश्चैव तान्सर्वाननयद्वशम् १५
ततो रत्नान्युपादाय वशे कृत्वा च पार्थिवान्
न्यवर्तत नरश्रेष्ठो नकुलश्चित्रमार्गवित् १६
करभाणां सहस्राणि कोशं तस्य महात्मनः
ऊहुर्दश महाराज कृच्छ्रादिव महाधनम् १७
इन्द्रप्रस्थगतं वीरमभ्येत्य स युधिष्ठिरम्
ततो माद्रीसुतः श्रीमान्धनं तस्मै न्यवेदयत् १८
एवं प्रतीचींनकुलो दिशं वरुणपालिताम्
विजिग्ये वासुदेवेन निर्जितां भरतर्षभः १९
इति श्रीमहाभारतेसभापर्वणि एकोनत्रिंशोऽध्यायः २९

## त्रिंशोऽध्यायः

वैशम्पायन उवाच
रक्षणाद्धर्मराजस्य सत्यस्य परिपालनात्
शत्रूणां क्षपणाच्चैव स्वकर्मनिरताः प्रजाः १
बलीनां सम्यगादानाद्धर्मतश्चानुशासनात्
निकामवर्षी पर्जन्यः स्फीतो जनपदोऽभवत् २
सर्वारम्भाः सुप्रवृत्ता गोरक्षं कर्षणं वणिक्
विशेषात्सर्वमेवैतत्संजज्ञे राजकर्मणः ३
दस्युभ्यो वञ्चकेभ्यो वा राजन्प्रति परस्परम्
राजवल्लभतश्चैव नाश्रूयन्त मृषा गिरः ४
अवर्षं चातिवर्षं च व्याधिपावकमूर्छनम्
सर्वमेतत्तदा नासीद्धर्मनित्ये युधिष्ठिरे ५
प्रियं कर्तुमुपस्थातुं बलिकर्म स्वभावजम्

अभिहर्तुं नृपा जग्मुर्नान्यैः कार्यैः पृथक्पृथक् ६
धर्म्यैर्धनागमैस्तस्य ववृधे निचयो महान्
कर्तुं यस्य न शक्येत क्षयो वर्षशतैरपि ७
स्वकोशस्य परीमाणं कोष्ठस्य च महीपतिः
विज्ञाय राजा कौन्तेयो यज्ञायैव मनो दधे ८
सुहृदश्चैव तं सर्वे पृथक्च सह चाब्रुवन्
यज्ञकालस्तव विभो क्रियतामत्र सांप्रतम् ९
अथैवं ब्रुवतामेव तेषामभ्याययौ हरिः
ऋषिः पुराणो वेदात्मा दृश्यश्चापि विजानताम् १०
जगतस्तस्थुषां श्रेष्ठः प्रभवश्चाप्ययश्च ह
भूतभव्यभवन्नाथः केशवः केशिसूदनः ११
प्राकारः सर्ववृष्णीनामापत्स्वभयदोऽरिहा
बलाधिकारे निक्षिप्य संहत्यानकदुन्दुभिम् १२
उच्चावचमुपादाय धर्मराजाय माधवः
धनौघं पुरुषव्याघ्रो बलेन महता वृतः १३
तं धनौघमपर्यन्तं रत्नसागरमक्षयम्
नादयन्रथघोषेण प्रविवेश पुरोत्तमम् १४
असूर्यमिव सूर्येण निवातमिव वायुना
कृष्णेन समुपेतेन जहृषे भारतं पुरम् १५
तं मुदाभिसमागम्य सत्कृत्य च यथाविधि
संपृष्ट्वा कुशलं चैव सुखासीनं युधिष्ठिरः १६
धौम्यद्वैपायनमुखैर्ऋत्विग्भिः पुरुषर्षभः
भीमार्जुनयमैश्चापि सहितः कृष्णमब्रवीत् १७
त्वत्कृते पृथिवी सर्वा मद्वशे कृष्ण वर्तते
धनं च बहु वार्ष्णेय त्वत्प्रसादादुपार्जितम् १८
सोऽहमिच्छामि तत्सर्वं विधिवद्देवकीसुत
उपयोक्तुं द्विजाग्र्येषु हव्यवाहे च माधव १९
तदहं यष्टुमिच्छामि दाशार्ह सहितस्त्वया
अनुजैश्च महाबाहो तन्मानुज्ञातुमर्हसि २०
स दीक्षापय गोविन्द त्वमात्मानं महाभुज

त्वयीष्टवति दाशार्ह विपाप्मा भविता ह्यहम् २१
मां वाप्यभ्यनुजानीहि सहैभिरनुजैर्विभो
अनुज्ञातस्त्वया कृष्ण प्राप्नुयां क्रतुमुत्तमम् २२
तं कृष्णः प्रत्युवाचेदं बहूक्त्वा गुणविस्तरम्
त्वमेव राजशार्दूल सम्राडर्हो महाक्रतुम्
संप्राप्नुहि त्वया प्राप्ते कृतकृत्यास्ततो वयम् २३
यजस्वाभीप्सितं यज्ञं मयि श्रेयस्यवस्थिते
नियुङ्क्ष्व चापि मां कृत्ये सर्वं कर्तास्मि ते वचः २४
युधिष्ठिर उवाच
सफलः कृष्ण संकल्पः सिद्धिश्च नियता मम
यस्य मे त्वं हृषीकेश यथेप्सितमुपस्थितः २५
वैशम्पायन उवाच
अनुज्ञातस्तु कृष्णेन पाण्डवो भ्रातृभिः सह
ईहितुं राजसूयाय साधनान्युपचक्रमे २६
तत आज्ञापयामास पाण्डवोऽरिनिबर्हणः
सहदेवं युधां श्रेष्ठं मन्त्रिणश्चैव सर्वशः २७
अस्मिन्क्रतौ यथोक्तानि यज्ञाङ्गानि द्विजातिभिः
तथोपकरणं सर्वं मङ्गलानि च सर्वशः २८
अधियज्ञांश्च सम्भारान्धौम्योक्तान्क्षिप्रमेव हि
समानयन्तु पुरुषा यथायोगं यथाक्रमम् २९
इन्द्रसेनो विशोकश्च पूरुश्चार्जुनसारथिः
अन्नाद्याहरणे युक्ताः सन्तु मत्प्रियकाम्यया ३०
सर्वकामाश्च कार्यन्तां रसगन्धसमन्विताः
मनोहराः प्रीतिकरा द्विजानां कुरुसत्तम ३१
तद्वाक्यसमकालं तु कृतं सर्वमवेदयत्
सहदेवो युधां श्रेष्ठो धर्मराजे महात्मनि ३२
ततो द्वैपायनो राजन्नृत्विजः समुपानयत्
वेदानिव महाभागान्साक्षान्मूर्तिमतो द्विजान् ३३
स्वयं ब्रह्मत्वमकरोत्तस्य सत्यवतीसुतः
धनञ्जयानामृषभः सुसामा सामगोऽभवत् ३४

याज्ञवल्क्यो बभूवाथ ब्रह्मिष्ठोऽध्वर्युसत्तमः
पैलो होता वसोः पुत्रो धौम्येन सहितोऽभवत् ३५
एतेषां शिष्यवर्गाश्च पुत्राश्च भरतर्षभ
बभूवुर्होत्रगाः सर्वे वेदवेदाङ्गपारगाः ३६
ते वाचयित्वा पुण्याहमीहयित्वा च तं विधिम्
शास्त्रोक्तं योजयामासुस्तद्देवयजनं महत् ३७
तत्र चक्रुरनुज्ञाताः शरणान्युत शिल्पिनः
रत्नवन्ति विशालानि वेश्मानीव दिवौकसाम् ३८
तत आज्ञापयामास स राजा राजसत्तमः
सहदेवं तदासद्यो मन्त्रिणं कुरुसत्तमः ३९
आमन्त्रणार्थं दूतांस्त्वं प्रेषयस्वाशुगान्द्रुतम्
उपश्रुत्य वचो राज्ञः स दूतान्प्राहिणोत्तदा ४०
आमन्त्रयध्वं राष्ट्रेषु ब्राह्मणान्भूमिपानपि
विशश्च मान्याञ्शूद्रांश्च सर्वानानयतेति च ४१
ते सर्वान्पृथिवीपालान्पाण्डवेयस्य शासनात्
आमन्त्रयांबभूवुश्च प्रेषयामास चापरान् ४२
ततस्ते तु यथाकालं कुन्तीपुत्रं युधिष्ठिरम्
दीक्षयाञ्चक्रिरे विप्रा राजसूयाय भारत ४३
दीक्षितः स तु धर्मात्मा धर्मराजो युधिष्ठिरः
जगाम यज्ञायतनं वृतो विप्रैः सहस्रशः ४४
भ्रातृभिर्ज्ञातिभिश्चैव सुहृद्भिः सचिवैस्तथा
क्षत्रियैश्च मनुष्येन्द्र नानादेशसमागतैः
अमात्यैश्च नृपश्रेष्ठो धर्मो विग्रहवानिव ४५
आजग्मुर्ब्राह्मणास्तत्र विषयेभ्यस्ततस्ततः
सर्वविद्यासु निष्णाता वेदवेदाङ्गपारगाः ४६
तेषामावसथांश्चक्रुर्धर्मराजस्य शासनात्
बह्वन्नाञ्शयनैर्युक्तान्सगणानां पृथक्पृथक्
सर्वर्तुगुणसम्पन्नाञ्शिल्पिनोऽथ सहस्रशः ४७
तेषु ते न्यवसन्राजन्ब्राह्मणा भृशसत्कृताः
कथयन्तः कथा बह्वीःपश्यन्तो नटनर्तकान् ४८

भुञ्जतां चैव विप्राणां वदतां च महास्वनः
अनिशं श्रूयते स्मात्र मुदितानां महात्मनाम् ४९
दीयतां दीयतामेषां भुज्यतां भुज्यतामिति
एवं प्रकाराः संजल्पाः श्रूयन्ते स्मात्र नित्यशः ५०
गवां शतसहस्राणि शयनानां च भारत
रुक्मस्य योषितां चैव धर्मराजः पृथग्ददौ ५१
प्रावर्ततैवं यज्ञः स पाण्डवस्य महात्मनः
पृथिव्यामेकवीरस्य शक्रस्येव त्रिविष्टपे ५२
ततो युधिष्ठिरो राजा प्रेषयामास पाण्डवम्
नकुलं हास्तिनपुरं भीष्माय भरतर्षभ ५३
द्रोणाय धृतराष्ट्राय विदुराय कृपाय च
भ्रातृणां चैव सर्वेषां येऽनुरक्ता युधिष्ठिरे ५४
इति श्रीमहाभारते सभापर्वणि त्रिंशोऽध्यायः ३०

एकत्रिंशोऽध्यायः

वैशम्पायन उवाच
स गत्वा हास्तिनपुरं नकुलः समितिंजयः
भीष्ममामन्त्रयामास धृतराष्ट्रं च पाण्डवः १
प्रययुः प्रीतमनसो यज्ञं ब्रह्मपुरः सराः
संश्रुत्य धर्मराजस्य यज्ञं यज्ञविदस्तदा २
अन्ये च शतशस्तुष्टैर्मनोभिर्मनुजर्षभ
द्रष्टुकामाः सभां चैव धर्मराजं च पाण्डवम् ३
दिग्भ्यः सर्वे समापेतुः पार्थिवास्तत्र भारत
समुपादाय रत्नानि विविधानि महान्ति च ४
धृतराष्ट्रश्च भीष्मश्च विदुरश्च महामतिः
दुर्योधनपुरोगाश्च भ्रातरः सर्व एव ते ५
सत्कृत्यामन्त्रिताः सर्वे आचार्यप्रमुखा नृपाः
गान्धारराजः सुबलः शकुनिश्च महाबलः ६
अचलो वृषकश्चैव कर्णश्च रथिनां वरः
ऋतः शल्यो मद्रराजो बाह्लिकश्च महारथः ७

सोमदत्तोऽथ कौरव्यो भूरिर्भूरिश्रवाः शलः
अश्वत्थामा कृपो द्रोणः सैन्धवश्च जयद्रथः ८
यज्ञसेनः सपुत्रश्च शाल्वश्च वसुधाधिपः
प्राग्ज्योतिषश्च नृपतिर्भगदत्तो महायशाः ९
सह सर्वैस्तथा म्लेच्छैः सागरानूपवासिभिः
पार्वतीयाश्च राजानो राजा चैव बृहद्बलः १०
पौण्ड्रको वासुदेवश्च वङ्गः कालिङ्गकस्तथा
आकर्षः कुन्तलश्चैव वानवास्यान्ध्रकास्तथा ११
द्रविडाः सिंहलाश्चैव राजा काश्मीरकस्तथा
कुन्तिभोजो महातेजाः सुह्मश्च सुमहाबलः १२
बाह्लिकाश्चापरे शूरा राजानः सर्व एव ते
विराटः सह पुत्रैश्च माचेल्लश्च महारथः
राजानो राजपुत्राश्च नानाजनपदेश्वराः १३
शिशुपालो महावीर्यः सह पुत्रेण भारत
आगच्छत्पाण्डवेयस्य यज्ञं संग्राममदुर्मदः १४
रामश्चैवानिरुद्धश्च बभ्रुश्च सहसारणः
गदप्रद्युम्नसाम्बाश्च चारुदेष्णश्च वीर्यवान् १५
उल्मुको निशठश्चैव वीरः प्राद्युम्निरेव च
वृष्णयो निखिलेनान्ये समाजग्मुर्महारथाः १६
एते चान्ये च बहवो राजानो मध्यदेशजाः
आजग्मुः पाण्डुपुत्रस्य राजसूयं महाक्रतुम् १७
ददुस्तेषामावसथान्धर्मराजस्य शासनात्
बहुकक्ष्यान्वितान्राजन्दीर्घिकावृक्षशोभितान् १८
तथा धर्मात्मजस्तेषां चक्रे पूजामनुत्तमाम्
सत्कृताश्च यथोद्दिष्टाञ्जग्मुरावसथान्नृपाः १९
कैलासशिखरप्रख्यान्मनोज्ञान्द्रव्यभूषितान्
सर्वतः संवृतानुच्चैः प्राकारैः सुकृतैः सितैः २०
सुवर्णजाल संवीतान्मणि कुट्टिमशोभितान्
सुखारोहण सोपानान्महासन परिच्छदान् २१
स्रग्दामसम वच्छन्नानुत्तमागुरुगन्धिनः

हंसांसुवर्ण सदृशानायोजनसुदर्शनान् २२
असंबाधान्समद्वारान्युतानुच्चावचैर्गुणैः
बहुधातुपिनद्धाङ्गान्हिमवच्छिखरानिव २३
विश्रान्तास्ते ततोऽपश्यन्भूमिपा भूरिदक्षिणम्
वृतं सदस्यैर्बहुभिर्धर्मराजं युधिष्ठिरम् २४
तत्सदः पार्थिवैः कीर्णं ब्राह्मणैश्च महात्मभिः
भ्राजते स्म तदा राजन्नाकपृष्ठमिवामरैः २५
इति श्रीमहाभारते सभापर्वणि एकत्रिंशोऽध्यायः ३१

द्वात्रिंशोऽध्यायः

वैशम्पायन उवाच
पितामहं गुरुं चैव प्रत्युद्गम्य युधिष्ठिरः
अभिवाद्य ततो राजन्निदं वचनमब्रवीत्
भीष्मं द्रोणं कृपं द्रौणिं दुर्योधनविविंशती १
अस्मिन्यज्ञे भवन्तो मामनुगृह्णन्तु सर्वशः
इदं वः स्वमहं चैव यदिहास्ति धनं मम
प्रीणयन्तु भवन्तो मां यथेष्टमनियन्त्रिताः २
एवमुक्त्वा स तान्सर्वान्दीक्षितः पाण्डवाग्रजः
युयोज ह यथायोगमधिकारेष्वनन्तरम् ३
भक्ष्यभोज्याधिकारेषु दुःशासनमयोजयत्
परिग्रहे ब्राह्मणानामश्वत्थामानमुक्तवान् ४
राज्ञां तु प्रतिपूजार्थं संजयं सन्ययोजयत्
कृताकृतपरिज्ञाने भीष्मद्रोणौ महामती ५
हिरण्यस्य सुवर्णस्य रत्नानां चान्ववेक्षणे
दक्षिणानां च वै दाने कृपं राजा न्ययोजयत्
तथान्यान्पुरुषव्याघ्रांस्तस्मिंस्तस्मिन्न्ययोजयत् ६
बाह्लिको धृतराष्ट्रश्च सोमदत्तो जयद्रथः
नकुलेन समानीताः स्वामिवत्तत्र रेमिरे ७
क्षत्ता व्ययकरस्त्वासीद्विदुरः सर्वधर्मवित्
दुर्योधनस्त्वर्हणानि प्रतिजग्राह सर्वशः ८

सर्वलोकः समावृत्तः पिप्रीषुः फलमुत्तमम्
द्रष्टुकामः सभां चैव धर्मराजं च पाराडवम् ९
न कश्चिदाहरत्तत्र सहस्रावरमर्हणम्
रत्नैश्च बहुभिस्तत्र धर्मराजमवर्धयन् १०
कथं नु मम कौरव्यो रत्नदानैः समाप्नुयात्
यज्ञमित्येव राजानः स्पर्धमाना ददुर्धनम् ११
भवनैः सविमानाग्रैः सोदर्कैर्बलसंवृतैः
लोकराजविमानैश्च ब्राह्मणावसथैः सह १२
कृतैरावसथैर्दिव्यैर्विमानप्रतिमैस्तथा
विचित्रैरत्नवद्भिश्च ऋद्ध्या परमया युतैः १३
राजभिश्च समावृत्तैरतीवश्रीसमृद्धिभिः
अशोभत सदो राजन्कौन्तेयस्य महात्मनः १४
ऋद्ध्या च वरुणं देवं स्पर्धमानो युधिष्ठिरः
षडग्निनाथ यज्ञेन सोऽयजद्दक्षिणावता
सर्वाञ्जनान्सर्वकामैः समृद्धैः समतर्पयत् १५
अन्नवान्बहुभक्ष्यश्च भुक्तवज्जनसंवृतः
रत्नोपहारकर्मरायो बभूव स समागमः १६
इडाज्यहोमाहुतिभिर्मन्त्र शिक्षासमन्वितैः
तस्मिन्हि ततृपुर्देवास्तते यज्ञे महर्षिभिः १७
यथा देवास्तथा विप्रा दक्षिणान्नमहाधनैः
ततृपुः सर्ववर्णाश्च तस्मिन्यज्ञे मुदान्विताः १८
इति श्रीमहाभारते सभापर्वणि द्वात्रिंशोऽध्यायः ३२

## त्रयस्त्रिंशोऽध्यायः

वैशम्पायन उवाच
ततोऽभिषेचनीयेऽह्नि ब्राह्मणा राजभिः सह
अन्तर्वेदीं प्रविविशुः सत्कारार्थं महर्षयः १
नारदप्रमुखास्तस्यामन्तर्वेद्यां महात्मनः
समासीनाः शुशुभिरे सह राजर्षिभिस्तदा २
समेता ब्रह्मभवने देवा देवर्षयो यथा

कर्मान्तरमुपासन्तो जजल्पुरमितौजसः ३
इदमेवं न चाप्येवमेवमेतन्न चान्यथा
इत्यूचुर्बहवस्तत्र वितण्डानाः परस्परम् ४
कृशानर्थांस्तथा केचिदकृशांस्तत्र कुर्वते
अकृशांश्च कृशांश्चक्रुर्हेतुभिः शास्त्रनिश्चितैः ५
तत्र मेधाविनः केचिदर्थमन्यैः प्रपूरितम्
विचिच्छिपुर्यथा श्येना नभोगतमिवामिषम् ६
केचिद्धर्मार्थसंयुक्ताः कथास्तत्र महाव्रताः
रेमिरे कथयन्तश्च सर्ववेदविदां वराः ७
सा वेदिर्वेदसंपन्नैर्देवद्विजमहर्षिभिः
आबभासे समाकीर्णा नक्षत्रैर्द्यौरिवामला ८
न तस्यां संनिधौ शूद्रः कश्चिदासीन्न चाव्रतः
अन्तर्वेद्यां तदा राजन्युधिष्ठिरनिवेशने ९
तां तु लक्ष्मीवतो लक्ष्मीं तदा यज्ञविधानजाम्
तुतोष नारदः पश्यन्धर्मराजस्य धीमतः १०
अथ चिन्तां समापेदे स मुनिर्मनुजाधिप
नारदस्तं तदा पश्यन्सर्वक्षत्रसमागमम् ११
सस्मार च पुरावृत्तां कथां तां भरतर्षभ
अंशावतरणे यासौ ब्रह्मणो भवनेऽभवत् १२
देवानां संगमं तं तु विज्ञाय कुरुनन्दन
नारदः पुण्डरीकाक्षं सस्मार मनसा हरिम् १३
साक्षात्स विबुधारिघ्नः क्षत्रे नारायणो विभुः
प्रतिज्ञां पालयन्धीमाञ्जातः परपुरंजयः १४
संदिदेश पुरा योऽसौ विबुधान्भूतकृत्स्वयम्
अन्योन्यमभिनिघ्नन्तः पुनर्लोकानवाप्स्यथ १५
इति नारायणः शम्भुर्भगवाञ्जगतः प्रभुः
आदिश्य विवुधान्सर्वानजायत यदुक्षये १६
क्षितावन्धकवृष्णीनां वंशे वंशभृतां वरः
परया शुशुभे लक्ष्म्या नक्षत्राणामिवोडुराट् १७
यस्य बाहुबलं सेन्द्राः सुराः सर्व उपासते

सोऽय मानुषवन्नाम हरिरास्तेऽरिमर्दनः १८
अहो बत महद्भूतं स्वयंभूर्यदिदं स्वयम्
आदास्यति पुनः क्षत्रमेवं बलसमन्वितम् १९
इत्येतां नारदश्चिन्तां चिन्तयामास धर्मवित्
हरिं नारायणं ज्ञात्वा यज्ञैरीड्यं तमीश्वरम् २०
तस्मिन्धर्मविदां श्रेष्ठो धर्मराजस्य धीमतः
महाध्वरे महाबुद्धिस्तस्थौ स बहुमानतः २१
ततो भीष्मोऽब्रवीद्राजन्धर्मराजं युधिष्ठिरम्
क्रियतामर्हणं राज्ञां यथार्हमिति भारत २२
आचार्यमृत्विजं चैव संयुक्तं च युधिष्ठिर
स्नातकं च प्रियं चाहुः षडर्घ्यार्हान्नृपं तथा २३
एतनर्हानभिगतानाहुः संवत्सरोषितान्
त इमे कालपूगस्य महतोऽस्मानुपागताः २४
एषामेकैकशो राजन्नर्घ्यमानीयतामिति
अथ चैषां वरिष्ठाय समर्थायोपनीयताम् २५
युधिष्ठिर उवाच
कस्मै भवान्मन्यतेऽघमेकस्मै कुरुनन्दन
उपनीयमानं युक्तं च तन्मे ब्रूहि पितामह २६
वैशम्पायन उवाच
ततो भीष्मः शान्तनवो बुद्ध्या निश्चित्य भारत
वार्ष्णेयं मन्यते कृष्णमर्हणीयतमं भुवि २७
एष ह्येषां समेतानां तेजोबलपराक्रमैः
मध्ये तपन्निवाभाति ज्योतिषामिव भास्करः २८
असूर्यमिव सूर्येण निवातमिव वायुना
भासितं ह्लादितं चैव कृष्णेनेदं सदो हि नः २९
तस्मै भीष्माभ्यनुज्ञातः सहदेवः प्रतापवान्
उपजह्रेऽथ विधिवद्वार्ष्णेयायार्घ्यमुत्तमम् ३०
प्रतिजग्राह तत्कृष्णः शास्त्रदृष्टेन कर्मणा
शिशुपालस्तु तां पूजां वासुदेवे न चक्षमे ३१
स उपालभ्य भीष्मं च धर्मराजं च संसदि

अपाह्निपद्वासुदेवं चेदिराजो महाबलः ३२
इति श्रीमहाभारते सभापर्वणि त्रयस्त्रिंशोऽध्यायः ३३

## चतुस्त्रिंशोऽध्यायः

शिशुपाल उवाच
नायमर्हति वार्ष्णेयस्तिष्ठत्स्विह महात्मसु
महीपतिषु कौरव्य राजवत्पार्थिवार्हणम् १
नायं युक्तः समाचारः पाण्डवेषु महात्मसु
यत्कामात्पुण्डरीकाक्षं पाण्डवार्चितवानसि २
बाला यूयं न जानीध्वं धर्मः सूक्ष्मो हि पाण्डवाः
अयं तत्राभ्यतिक्रान्त आपगेयोऽल्पदर्शनः ३
त्वादृशो धर्मयुक्तो हि कुर्वाणः प्रियकाम्यया
भवत्यभ्यधिकं भीष्मो लोकेष्ववमतः सताम् ४
कथं ह्यराजा दाशार्हो मध्ये सर्वमहीक्षिताम्
अर्हणामर्हति तथा यथा युष्माभिरर्चितः ५
अथ वा मन्यसे कृष्णं स्थविरं भरतर्षभ
वसुदेवे स्थिते वृद्धे कथमर्हति तत्सुतः ६
अथ वा वासुदेवोऽपि प्रियकामोऽनुवृत्तवान्
द्रुपदे तिष्ठति कथं माधवोऽहति पूजनम् ७
आचार्यं मन्यसे कृष्णमथवा कुरुपुंगव
द्रोणे तिष्ठति वार्ष्णेयं कस्मादर्चितवानसि ८
ऋत्विजं मन्यसे कृष्णमथवा कुरुनन्दन
द्वैपायने स्थिते विप्रे कथं कृष्णोऽचितस्त्वया ९
नैव ऋत्विङ्नचाचार्यो न राजा मधुसूदनः
अर्चितश्च कुरुश्रेष्ठ किमन्यत्प्रियकाम्यया १०
अथ वाप्यर्चनीयोऽय युष्माकं मधुसूदनः
किं राजभिरिहानीतैरवमानाय भारत ११
वयं तु न भयादस्य कौन्तेयस्य महात्मनः
प्रयच्छामःकरान्सर्वे न लोभान्न च सान्त्वनात् १२
अस्य धर्मप्रवृत्तस्य पार्थिवत्वं चिकीर्षतः

करानस्मै प्रयच्छामः सोऽयमस्मान्न मन्यते १३
किमन्यदवमानाद्धि यदिमं राजसंसदि
अप्राप्तलक्षणं कृष्णमर्घ्येणार्चितवानसि १४
अकस्माद्धर्मपुत्रस्य धर्मात्मेति यशो गतम्
को हि धर्मच्युते पूजामेवं युक्तां प्रयोजयेत्
योऽय वृष्णिकुले जातो राजानं हतवान्पुरा १५
अद्य धर्मात्मता चैव व्यपकृष्टा युधिष्ठिरात्
कृपणत्वं निविष्टं च कृष्णेऽर्घ्यस्य निवेदनात् १६
यदि भीताश्च कौन्तेयाः कृपणाश्च तपस्विनः
ननु त्वयापि बोद्धव्यं यां पूजां माधवोऽहति १७
अथ वा कृपणैरेतामुपनीतां जनार्दन
पूजामनर्हः कस्मात्त्वमभ्यनुज्ञातवानसि १८
अयुक्तामात्मनः पूजां त्वं पुनर्बहु मन्यसे
हविषः प्राप्य निष्यन्दं प्राशितुं श्वेव निर्जने १९
न त्वयं पार्थिवेन्द्राणामवमानः प्रयुज्यते
त्वामेव कुरवो व्यक्तं प्रलम्भन्ते जनार्दन २०
क्लीवे दारक्रिया यादृगन्धे वा रूपदर्शनम्
अराज्ञो राजवत्पूजा तथा ते मधुसूदन २१
दृष्टो युधिष्ठिरो राजा दृष्टो भीष्मश्च यादृशः
वासुदेवोऽप्ययं दृष्टः सर्वमेतद्यथातथम् २२
इत्युक्त्वा शिशुपालस्तानुत्थाय परमासनात्
निर्ययौ सदसस्तस्मात्सहितो राजभिस्तदा २३

इति श्रीमहाभारते सभापर्वणि चतुस्त्रिंशोऽध्यायः ३४

## पञ्चत्रिंशोऽध्यायः

वैशम्पायन उवाच
ततो युधिष्ठिरो राजा शिशुपालमुपाद्रवत्
उवाच चैनं मधुरं सान्त्वपूर्वमिदं वचः १
नेदं युक्तं महीपाल यादृशं वै त्वमुक्तवान्
अधर्मश्च परो राजन्पारुष्यं च निरर्थकम् २

न हि धर्मं परं जातु नावबुध्येत पार्थिव
भीष्मः शान्तनवस्त्वेनं मावमंस्था अतोऽन्यथा ३
पश्य चैमान्महीपालांस्त्वत्तो वृद्धतमान्बहून्
मृष्यन्ते चार्हणां कृष्णे तद्वत्त्वं क्षन्तुमर्हसि ४
वेद तत्त्वेन कृष्णं हि भीष्मश्चेदिपते भृशम्
न ह्येनं त्वं तथा वेत्थ यथैनं वेद कौरवः ५
भीष्म उवाच
नास्मा अनुनयो देयो नायमर्हति सान्त्वनम्
लोकवृद्धतमे कृष्णे योऽहणां नानुमन्यते ६
क्षत्रियः क्षत्रियं जित्वा रणे रणकृतां वरः
यो मुञ्चति वशे कृत्वा गुरुर्भवति तस्य सः ७
अस्यां च समितौ राज्ञामेकमप्यजितं युधि
न पश्यामि महीपालं सात्वतीपुत्रतेजसा ८
न हि केवलमस्माकमयमर्च्यतमोऽच्युतः
त्रयाणामपि लोकानामर्चनीयो जनार्दनः ९
कृष्णेन हि जिता युद्धे बहवः क्षत्रियर्षभाः
जगत्सर्वं च वार्ष्णेये निखिलेन प्रतिष्ठितम् १०
तस्मात्सत्स्वपि वृद्धेषु कृष्णमर्चाम नेतरान्
एवं वक्तुं न चार्हस्त्वं मा भूत्ते बुद्धिरीदृशी ११
ज्ञानवृद्धा मया राजन्बहवः पर्युपासिताः
तेषां कथयतां शौरेरहं गुणवतो गुणान्
समागतानामश्रौषं बहून्बहुमतान्सताम् १२
कर्माण्यपि च यान्यस्य जन्मप्रभृति धीमतः
बहुशः कथ्यमानानि नरैर्भूयः श्रुतानि मे १३
न केवलं वयं कामाच्चेदिराज जनार्दनम्
न संबन्धं पुरस्कृत्य कृतार्थं वा कथंचन १४
अर्चामहेऽचितं सद्भिर्भुवि भौमसुखावहम्
यशः शौर्यं जयं चास्य विज्ञायार्चां प्रयुज्महे १५
न हि कश्चिदिहास्माभिः सुबालोऽप्यपरीक्षितः
गुणैर्वृद्धानतिक्रम्य हरिरर्च्यतमो मतः १६

ज्ञानवृद्धो द्विजातीनां क्षत्रियाणां बलाधिकः
पूज्ये ताविह गोविन्दे हेतू द्वावपि संस्थितौ १७
वेदवेदाङ्गविज्ञानं बलं चाप्यमितं तथा
नृणां हि लोके कस्यास्ति विशिष्टं केशवादृते १८
दानं दाक्ष्यं श्रुतं शौर्यं ह्रीः कीर्तिर्बुद्धिरुत्तमा
संनतिः श्रीर्धृतिस्तुष्टिः पुष्टिश्च नियताच्युते १९
तमिमं सर्वसंपन्नमाचार्यं पितरं गुरुम्
अर्च्यमर्चितमर्चार्हं सर्वे संमन्तुमर्हथ २०
ऋत्विग्गुरुर्विवाह्यश्च स्नातको नृपतिः प्रियः
सर्वमेतद्धृषीकेशे तस्मादभ्यर्चितोऽच्युतः २१
कृष्ण एव हि लोकानामुत्पत्तिरपि चाप्ययः
कृष्णस्य हि कृते भूतमिदं विश्वं समर्पितम् २२
एष प्रकृतिरव्यक्ता कर्ता चैव सनातनः
परश्च सर्वभूतेभ्यस्तस्माद्वृद्धतमोऽच्युतः २३
बुद्धिर्मनो महान्वायुस्तेजोऽम्भ खं मही च या
चतुर्विधं च यद्भूतं सर्वं कृष्णे प्रतिष्ठितम् २४
आदित्यश्चन्द्रमाश्चैव नक्षत्राणि ग्रहाश्च ये
दिशश्चोपदिशश्चैव सर्वं कृष्णे प्रतिष्ठितम् २५
अयं तु पुरुषो बालः शिशुपालो न बुध्यते
सर्वत्र सर्वदा कृष्णं तस्मादेवं प्रभाषते २६
यो हि धर्मं विचिनुयादुत्कृष्टं मतिमान्नरः
स वै पश्येद्यथाधर्मं न तथा चेदिराडयम् २७
सवृद्धबालेष्वथ वा पार्थिवेषु महात्मसु
को नार्हं मन्यते कृष्णं को वाप्येनं न पूजयेत् २८
अथेमां दुष्कृतां पूजां शिशुपालो व्यवस्यति
दुष्कृतायां यथान्यायं तथायं कर्तुमर्हति २९

इति श्रीमहाभारते सभापर्वणि पञ्चत्रिंशोऽध्यायः ३५

## षट्त्रिंशोऽध्यायः

वैशम्पायन उवाच

एवमुक्त्वा ततो भीष्मो विरराम महायशाः
व्याजहारोत्तरं तत्र सहदेवोऽथवद्वचः १
केशवं केशिहन्तारमप्रमेयपराक्रमम्
पूज्यमानं मया यो वः कृष्णं न सहते नृपाः २
सर्वेषां बलिनां मूर्ध्नि मयेदं निहितं पदम्
एवमुक्ते मया सम्यगुत्तरं प्रबवीतु सः ३
मतिमन्तस्तु ये केचिदाचार्यं पितरं गुरुम्
अर्च्यमर्चितमर्चार्हमनुजानन्तु ते नृपाः ४
ततो न व्याजहारैषां कश्चिद्बुद्धिमतां सताम्
मानिनां बलिनां राज्ञां मध्ये संदर्शिते पदे ५
ततोऽपतत्पुष्पवृष्टिः सहदेवस्य मूर्धनि
अदृश्यरूपा वाचश्चाप्यब्रुवन्साधु साध्विति ६
आविध्यदजिनं कृष्णं भविष्यद्भूतजल्पकः
सर्वसंशयनिर्मोक्ता नारदः सर्वलोकवित् ७
तत्राहूतागताः सर्वे सुनीथप्रमुखा गणाः
सम्पादृश्यन्त संक्रुद्धा विवर्णवदनास्तथा ८
युधिष्ठिराभिषेकं च वासुदेवस्य चार्हणम्
अब्रुवंस्तत्र राजानो निर्वेदादात्मनिश्चयात् ९
सुहृद्भिर्वार्यमाणानां तेषां हि वपुराबभौ
आमिषादपकृष्टानां सिंहानामिव गर्जताम् १०
तं बलौघमपर्यन्तं राजसागरमक्षयम्
कुर्वाणं समयं कृष्णो युद्धाय बुबुधे तदा ११
पूजयित्वा च पूजार्हं ब्रह्मक्षत्रं विशेषतः
सहदेवो नृणां देवः समापयत कर्म तत् १२
तस्मिन्नभ्यर्चिते कृष्णे सुनीथः शत्रुकर्षणः
अतिताम्रेक्षणः कोपादुवाच मनुजाधिपान् १३
स्थितः सेनापतिर्वोऽहं मन्यध्वं किं नु सांप्रतम्
युधि तिष्ठाम संनह्य समेतान्वृष्णिपाण्डवान् १४
इति सर्वान्समुत्साह्य राज्ञस्तांश्चेदिपुङ्गवः
यज्ञोपघाताय ततः सोऽमन्त्रयत राजभिः १५

इति श्री महाभारते सभावर्पणि षट्त्रिंशोध्यायः ३६

सप्तत्रिंशोऽध्यायः

वैशम्पायन उवाच
ततः सागरसंकाशं दृष्ट्वा नृपतिसागरम्
रोषात्प्रचलितं सर्वमिदमाह युधिष्ठिरः १
भीष्मं मतिमतां श्रेष्ठं वृद्धं कुरुपितामहम्
बृहस्पतिं बृहत्तेजाः पुरुहूत इवारिहा २
असौ रोषात्प्रचलितो महान्नृपतिसागरः
अत्र यत्प्रतिपत्तव्यं तन्मे ब्रूहि पितामह ३
यज्ञस्य च न विघ्नः स्यात्प्रजानां च शिवं भवेत्
यथा सर्वत्र तत्सर्वं ब्रूहि मेऽद्य पितामह ४
इत्युक्तवति धर्मज्ञे धर्मराजे युधिष्ठिरे
उवाचेदं वचो भीष्मस्ततः कुरुपितामहः ५
मा भैस्त्वं कुरुशार्दूल श्वा सिंहं हन्तुमर्हति
शिवः पन्थाः सुनीतोऽत्र मया पूर्वतरं वृतः ६
प्रसुप्ते हि यथा सिंहे श्वानस्तत्र समागताः
भषेयुः सहिताः सर्वे तथेमे वसुधाधिपाः ७
वृष्णिसिंहस्य सुप्तस्य तथेमे प्रमुखे स्थिताः
भषन्ते तात संक्रुद्धाः श्वानः सिंहस्य संनिधौ ८
न हि संबुध्यते तावत्सुप्तः सिंह इवाच्युतः
तेन सिंहीकरोत्येतान्नृसिंहश्चेदिपुङ्गवः ९
पार्थिवान्पार्थिवश्रेष्ठ शिशुपालोऽल्पचेतनः
सर्वान्सर्वात्मना तात नेतुकामो यमक्षयम् १०
नूनमेतत्समादातुं पुनरिच्छत्यधोक्षजः
यदस्य शिशुपालस्थं तेजस्तिष्ठति भारत ११
विप्लुता चास्य भद्रं ते बुद्धिर्बुद्धिमतां वर
चेदिराजस्य कौन्तेय सर्वेषां च महीक्षिताम् १२
आदातुं हि नरव्याघ्रो यं यमिच्छत्ययं यदा
तस्य विप्लवते बुद्धिरेवं चेदिपतेर्यथा १३

चतुर्विधानां भूतानां त्रिषु लोकेषु माधवः
प्रभवश्चैव सर्वेषां निधनं च युधिष्ठिर १४
इति तस्य वचः श्रुत्वा ततश्चेदिपतिर्नृपः
भीष्मं रूक्षाक्षरा वाचः श्रावयामास भारत १५
इति श्रीमहाभारते सभापर्वणि सप्तत्रिंशोऽध्यायः ३७

अष्टत्रिंशोऽध्यायः

शिशुपाल उवाच
विभीषिकाभिर्बह्वीभिर्भीषयन्सर्वपार्थिवान्
न व्यपत्रपसे कस्माद्वृद्धः सन्कुलपांसनः १
युक्तमेतत्तृतीयायां प्रकृतौ वर्तता त्वया
वक्तुं धर्मादपेतार्थं त्वं हि सर्वकुरूत्तमः २
नावि नौरिव संबद्धा यथान्धो वान्धमन्वियात्
तथाभूता हि कौरव्या भीष्म येषां त्वमग्रणीः ३
पूतनाघातपूर्वाणि कर्माण्यस्य विशेषतः
त्वया कीर्तयतास्माकं भूयः प्रच्यावितं मनः ४
अवलिप्तस्य मूर्खस्य केशवं स्तोतुमिच्छतः
कथं भीष्म न ते जिह्वा शतधेयं विदीर्यते ५
यत्र कुत्सा प्रयोक्तव्या भीष्म बालतरैर्नरैः
तमिमं ज्ञानवृद्धः सन्गोपं संस्तोतुमिच्छसि ६
यद्यनेन हता बाल्ये शकुनिश्चित्रमत्र किम्
तौ वाश्ववृषभौ भीष्म यौ न युद्धविशारदौ ७
चेतनारहितं काष्ठं यद्यनेन निपातितम्
पादेन शकटं भीष्म तत्र किं कृतमद्भुतम् ८
वल्मीकमात्रः सप्ताहं यद्यनेन धृतोऽचलः
तदा गोवर्धनो भीष्म न तच्चित्रं मतं मम ९
भुक्तमेतेन बह्वन्नं क्रीडता नगमूर्धनि
इति ते भीष्म शृण्वानाः परं विस्मयमागताः १०
यस्य चानेन धर्मज्ञ भुक्तमन्नं बलीयसः
स चानेन हतः कंस इत्येतन्न महाद्भुतम् ११

न ते श्रुतमिदं भीष्म नूनं कथयतां सताम्
यद्वद्दये त्वामधर्मज्ञ वाक्यं कुरुकुलाधम १२
स्त्रीषु गोषु न शस्त्राणि पातयेद्ब्राह्मणेषु च
यस्य चान्नानि भुञ्जीत यश्च स्याच्छरणागतः १३
इति सन्तोऽनुशासन्ति सज्जना धर्मिणः सदा
भीष्म लोके हि तत्सर्वं वितथं त्वयि दृश्यते १४
ज्ञानवृद्धं च वृद्धं च भूयांसं केशवं मम
अजानत इवाख्यासि संस्तुवन्कुरुसत्तम
गोघ्नः स्त्रीघ्नश्च सन्भीष्म कथं संस्तवमर्हति १५
असौ मतिमतां श्रेष्ठो य एष जगतः प्रभुः
संभावयति यद्येवं त्वद्वाक्याच्च जनार्दनः
एवमेतत्सर्वमिति सर्वं तद्वितथं ध्रुवम् १६
न गाथा गाथिनं शास्ति बहु चेदपि गायति
प्रकृतिं यान्ति भूतानि भूलिङ्गशकुनिर्यथा १७
नूनं प्रकृतिरेषा ते जघन्या नात्र संशयः
अतः पापीयसी चैषां पाण्डवानामपीष्यते १८
येषामर्च्यतमः कृष्णस्त्वं च येषां प्रदर्शकः
धर्मवाक्त्वमधर्मज्ञः सतां मार्गादवप्लुतः १९
को हि धर्मिणमात्मानं जानञ्ज्ञानवतां वरः
कुर्याद्यथा त्वया भीष्म कृतं धर्ममवेक्षता २०
अन्यकामा हि धर्मज्ञ कन्यका प्राज्ञमानिना
अम्बा नामेति भद्रं ते कथं सापहृता त्वया २१
यां त्वयापहृतां भीष्म कन्यां नैषितवान्नृपः
भ्राता विचित्रवीर्यस्ते सतां वृत्तमनुष्ठितः २२
दारयोर्यस्य चान्येन मिषतः प्राज्ञमानिनः
तव जातान्यपत्यानि सज्जनाचरिते पथि २३
न हि धर्मोऽस्ति ते भीष्म ब्रह्मचर्यमिदं वृथा
यद्धारयसि मोहाद्वा क्लीबत्वाद्वा न संशयः २४
न त्वहं तव धर्मज्ञ पश्याम्युपचयं क्वचित्
न हि ते सेविता वृद्धा य एवं धर्ममब्रुवन् २५

इष्टं दत्तमधीतं च यज्ञाश्च बहुदक्षिणाः
सर्वमेतदपत्यस्य कलां नार्हति षोडशीम् २६
व्रतोपवासैर्बहुभिः कृतं भवति भीष्म यत्
सर्वंतदनपत्यस्य मोघं भवति निश्चयात् २७
सोऽनपत्यश्च वृद्धश्च मिथ्याधर्मानुशासनात्
हंसवत्त्वमपीदानीं ज्ञातिभ्यः प्राप्नुया वधम् २८
एवं हि कथयन्त्यन्ये नरा ज्ञानविदः पुरा
भीष्म यत्तदहं सम्यग्वक्ष्यामि तव शृण्वतः २९
वृद्धः किल समुद्रान्ते कश्चिद्धंसोऽभवत्पुरा
धर्मवागन्यथावृत्तः पक्षिणःसोऽनुशास्ति ह ३०
धर्मं चरत माधर्ममिति तस्य वचः किल
पक्षिणः शुश्रुवुर्भीष्म सततं धर्मवादिनः ३१
अथास्य भक्षमाजह्रुः समुद्रजलचारिणः
अण्डजा भीष्म तस्यान्ये धर्मार्थमिति शुश्रुम ३२
तस्य चैव समभ्याशे निक्षिप्याण्डानि सर्वशः
समुद्राम्भस्यमोदन्त चरंतो भीष्म पक्षिणः ३३
तेषामण्डानि सर्वेषां भक्षयामास पापकृत्
स हंसः संप्रमत्तानामप्रमत्तः स्वकर्मणि ३४
ततः प्रक्षीयमाणेषु तेष्वण्डेष्वण्डजोऽपरः
अशङ्कत महाप्राज्ञस्तं कदाचिद्ददर्श ह ३५
ततः स कथयामास दृष्ट्वा हंसस्य किल्बिषम्
तेषां परमदुःखार्तः स पक्षी सर्वपक्षिणाम् ३६
ततः प्रत्यक्षतो दृष्ट्वा पक्षिणस्ते समागताः
निजघ्नुस्तं तदा हंसं मिथ्यावृत्तं कुरूद्वह ३७
ते त्वां हंससधर्माणमपीमे वसुधाधिपाः
निहन्युर्भीष्म संक्रुद्धाः पक्षिणस्तमिवाण्डजम् ३८
गाथामप्यत्र गायन्ति ये पुराणविदो जनाः
भीष्म यां तां च ते सम्यक्कथयिष्यामि भारत ३९
अन्तरात्मनि विनिहिते रौषि पत्ररथ वितथम्
अण्डभक्षणमशुचि ते कर्म वाचमतिशयते ४०

इति श्रीमहाभारते सभापर्वणि अष्टत्रिंशोऽध्यायः ३८

एकोनचत्वारिंशोऽध्यायः

शिशुपाल उवाच
स मे बहुमतो राजा जरासंधो महाबलः
योऽनेन युद्धं नेयेष दासोऽयमिति संयुगे १
केशवेन कृतं यत्तु जरासंधवधे तदा
भीमसेनार्जुनाभ्यां च कस्तत्साध्विति मन्यते २
अद्वारेण प्रविष्टेन छद्मना ब्रह्मवादिना
दृष्टः प्रभावः कृष्णेन जरासंधस्य धीमतः ३
येन धर्मात्मनात्मानं ब्रह्मण्यमभिजानता
नैषितं पाद्यमस्मै तद्दातुमग्रे दुरात्मने ४
भुज्यतामिति तेनोक्ताः कृष्णभीमधनंजयाः
जरासंधेन कौरव्य कृष्णेन विकृतं कृतम् ५
यद्ययं जगतः कर्ता यथैनं मूर्ख मन्यसे
कस्मान्न ब्राह्मणं सम्यगात्मानमवगच्छति ६
इदं त्वाश्चर्यभूतं मे यदिमे पाण्डवास्त्वया
अपकृष्टाः सतां मार्गान्मन्यन्ते तच्च साध्विति ७
अथ वा नैतदाश्चर्यं येषां त्वमसि भारत
स्त्रीसधर्मा च वृद्धश्च सर्वार्थानां प्रदर्शकः ८
वैशम्पायन उवाच
तस्य तद्वचनं श्रुत्वा रूक्षं रूक्षाक्षरं बहु
चुकोप बलिनां श्रेष्ठो भीमसेनः प्रतापवान् ९
तस्य पद्मप्रतीकाशे स्वभावायतविस्तृते
भूयः क्रोधाभिताम्रान्ते रक्ते नेत्रे बभूवतुः १०
त्रिशिखां भ्रुकुटीं चास्य ददृशुः सर्वपार्थिवाः
ललाटस्थां त्रिकूटस्थां गङ्गां त्रिपथगामिव ११
दन्तान्संदशतस्तस्य कोपाद्ददृशुराननम्
युगान्ते सर्वभूतानि कालस्येव दिधक्षतः १२
उत्पतन्तं तु वेगेन जग्राहैनं मनस्विनम्

भीष्म एव महाबाहुर्महासेनमिवेश्वरः १३
तस्य भीमस्य भीष्मेण वार्यमाणस्य भारत
गुरुणा विविधैर्वाक्यैः क्रोधः प्रशममागतः १४
नातिचक्राम भीष्मस्य स हि वाक्यमरिंदमः
समुद्धूतो घनापाये वेलामिव महोदधिः १५
शिशुपालस्तु संक्रुद्धे भीमसेने नराधिप
नाकम्पत तदा वीरः पौरुषे स्वे व्यवस्थितः १६
उत्पतन्तं तु वेगेन पुनः पुनररिंदमः
न स तं चिन्तयामास सिंहः क्षुद्रमृगं यथा १७
प्रहसंश्चाब्रवीद्वाक्यं चेदिराजः प्रतापवान्
भीमसेनमतिक्रुद्धं दृष्ट्वा भीमपराक्रमम् १८
मुञ्चैनं भीष्म पश्यन्तु यावदेनं नराधिपाः
मत्प्रतापाग्निनिर्दग्धं पतङ्गमिव वह्निना १९
ततश्चेदिपतेर्वाक्यं तच्छ्रुत्वा कुरुसत्तमः
भीमसेनमुवाचेदं भीष्मो मतिमतां वरः २०

इति श्रीमहाभारते सभापर्वणि एकोनचत्त्वारिंशोऽध्यायः ३९

## चत्वारिंशोऽध्यायः

भीष्म उवाच
चेदिराजकुले जातस्त्र्यक्ष एष चतुर्भुजः
रासभारावसदृशं रुराव च ननाद च १
तेनास्य मातापितरौ त्रेसतुस्तौ सबान्धवौ
वैकृतं तच्च तौ दृष्ट्वा त्यागाय कुरुतां मतिम् २
ततः सभार्यं नृपतिं सामात्यं सपुरोहितम्
चिन्तासंमूढहृदयं वागुवाचाशरीरिणी ३
एष ते नृपते पुत्रः श्रीमाञ्जातो महाबलः
तस्मादस्मान्न भेतव्यमव्यग्रः पाहि वै शिशुम् ४
न चैवैतस्य मृत्युस्त्वं न कालः प्रत्युपस्थितः
मृत्युर्हन्तास्य शस्त्रेण स चोत्पन्नो नराधिप ५
संश्रुत्योदाहृतं वाक्यं भूतमन्तर्हितं ततः

पुत्रस्नेहाभिसंतप्ता जननी वाक्यमब्रवीत् ६
येनेदमीरितं वाक्यं ममैव तनयं प्रति
प्राञ्जलिस्तं नमस्यामि ब्रवीतु स पुनर्वचः ७
श्रोतुमिच्छामि पुत्रस्य कोऽस्य मृत्युर्भविष्यति
अन्तर्हितं ततो भूतमुवाचेदं पुनर्वचः ८
येनोत्सङ्गे गृहीतस्य भुजावभ्यधिकावुभौ
पतिष्यतः क्षितितले पञ्चशीर्षाविवोरगौ ९
तृतीयमेतद्बालस्य ललाटस्थं च लोचनम्
निमज्जिष्यति यं दृष्ट्वा सोऽस्य मृत्युर्भविष्यति १०
त्र्यक्षं चतुर्भुजं श्रुत्वा तथा च समुदाहृतम्
धरण्यां पार्थिवाः सर्वे अभ्यागच्छन्दिदृक्षवः ११
तान्पूजयित्वा संप्राप्तान्यथार्हं स महीपतिः
एकैकस्य नृपस्याङ्के पुत्रमारोपयत्तदा १२
एवं राजसहस्राणां पृथक्त्वेन यथाक्रमम्
शिशुरङ्के समारूढो न तत्प्राप निदर्शनम् १३
ततश्चेदिपुरं प्राप्तौ संकर्षणजनार्दनौ
यादवौ यादवीं द्रष्टुं स्वसारं तां पितुस्तदा १४
अभिवाद्य यथान्यायं यथाज्येष्ठं नृपांश्च तान्
कुशलानामयं पृष्ट्वा निषण्णौ रामकेशवौ १५
अभ्यर्चितौ तदा वीरौ प्रीत्या चाभ्यधिकं ततः
पुत्रं दामोदरोत्सङ्गे देवी संन्यदधात्स्वयम् १६
न्यस्तमात्रस्य तस्याङ्के भुजावभ्यधिकावुभौ
पेततुस्तच्च नयनं निममज्ज ललाटजम् १७
तद्दृष्ट्वा व्यथितात्रस्ता वरं कृष्णमयाचत
ददस्व मे वरं कृष्ण भयार्ताया महाभुज १८
त्वं ह्यार्तानां समाश्वासो भीतानामभयंकरः
पितृष्वसारं मा भैषीरित्युवाच जनार्दनः १९
ददानि कं वरं किं वा करवाणि पितृष्वसः
शक्यं वा यदि वाशक्यं करिष्यामि वचस्तव २०
एवमुक्ता ततः कृष्णमब्रवीद्यदुनन्दनम्

शिशुपालस्यापराधान्क्षमेथास्त्वं महाबल २१
कृष्ण उवाच
अपराधशतं क्षाम्यं मया ह्यस्य पितृष्वसः
पुत्रस्य ते वधार्हाणां मा त्वं शोके मनः कृथाः २२
भीष्म उवाच
एवमेष नृपः पापः शिशुपालः सुमन्दधीः
त्वां समाह्वयते वीर गोविन्दवरदर्पितः २३
इति श्रीमहाभारते सभापर्वणि चत्वारिंशोऽध्यायः ४०

## एक चत्वारिंशोऽध्यायः

भीष्म उवाच
नैषा चेदिपतेर्बुद्धिर्यया त्वाह्वयतेऽच्युतम्
नूनमेष जगद्भर्तुः कृष्णस्यैव विनिश्चयः १
को हि मां भीमसेनाद्य क्षितावर्हति पार्थिवः
क्षेप्तुं दैवपरीतात्मा यथैष कुलपांसनः २
एष ह्यस्य महाबाहो तेजोंशश्च हरेर्ध्रुवम्
तमेव पुनरादातुमिच्छत्पृथुयशा हरिः ३
येनैष कुरुशार्दूल शार्दूल इव चेदिराट्
गर्जत्यतीव दुर्बुद्धिः सर्वानस्मानचिन्तयन् ४
वैशम्पायन उवाच
ततो न ममृषे चैद्यस्तद्भीष्मवचनं तदा
उवाच चैनं संक्रुद्धः पुनर्भीष्ममथोत्तरम् ५
शिशुपाल उवाच
द्विषतां नोऽस्तु भीष्मैष प्रभावः केशवस्य यः
यस्य संस्तववक्ता त्वं बन्दिवत्सततोत्थितः ६
संस्तवाय मनो भीष्म परेषां रमते सदा
यदि संस्तौषि राज्ञस्त्वमिमं हित्वा जनार्दनम् ७
दरदं स्तुहि बाह्लीकमिमं पार्थिवसत्तमम्
जायमानेन येनेयमभवद्दारिता मही ८
वङ्गाङ्गविषयाध्यक्षं सहस्राक्षसमं बले

स्तुहि कर्णमिमं भीष्म महाचापविकर्षणम् ९
द्रोणं द्रौणिं च साधु त्वं पितापुत्रौ महारथौ
स्तुहि स्तुत्याविमौ भीष्म सततं द्विजसत्तमौ १०
ययोरन्यतरो भीष्म स्त्रंकुद्धः सचराचरम्
इमां वसुमतीं कुर्यादशेषामिति मे मतिः ११
द्रोणस्य हि समं युद्धे न पश्यामि नराधिपम्
अश्वत्थाम्नस्तथा भीष्म न चैतौ स्तोतुमिच्छसि १२
शल्यादीनपि कस्मात्त्वं न स्तौषि वसुधाधिपान्
स्तवाय यदि ते बुद्धिर्वर्तते भीष्म सर्वदा १३
किं हि शक्यं मया कर्तुं यद्वृद्धानां त्वया नृप
पुरा कथयतां नूनं न श्रुतं धर्मवादिनाम् १४
आत्मनिन्दात्मपूजा च परनिन्दा परस्तवः
अनाचरितमार्याणां वृत्तमेतच्चतुर्विधम् १५
यदस्तव्यमिमं शश्वन्मोहात्संस्तौषि भक्तितः
केशवं तच्च ते भीष्म न कश्चिदनुमन्यते १६
कथं भोजस्य पुरुषे वर्गपाले दुरात्मनि
समावेशयसे सर्वं जगत्केवलकाम्यया १७
अथ वैषा न ते भक्तिः प्रकृतिं याति भारत
मयैव कथितं पूर्वं भूलिङ्गशकुनिर्यथा १८
भूलिङ्गशकुनिर्नाम पार्श्वे हिमवतः परे
भीष्म तस्याः सदा वाचः श्रूयन्तेऽथविगर्हिताः १९
मा साहसमितीदं सा सततंवाशते किल
साहसं चात्मनातीव चरन्ती नावबुध्यते २०
सा हि मांसार्गलं भीष्म मुखात्सिंहस्य खादतः
दन्तान्तरविलग्नं यत्तदादत्तेऽल्पचेतना २१
इच्छतः सा हि सिंहस्य भीष्म जीवत्यसंशयम्
तद्वत्त्वमप्यधर्मज्ञ सदा वाचः प्रभाषसे २२
इच्छतां पार्थिवेन्द्राणां भीष्म जीवस्यसंशयम्
लोकविद्विष्टकर्मा हि नान्योऽस्ति भवता समः २३
वैशम्पायन उवाच

ततश्चेदिपतेः श्रुत्वा भीष्मः स कटुकं वचः
उवाचेदं वचो राजंश्चेदिराजस्य शृगवतः २४
इच्छतां किल नामाहं जीवाम्येषां महीक्षिताम्
योऽह न गणयाम्येतांस्तृणानीव नराधिपान् २५
एवमुक्ते तु भीष्मेण ततः संचुक्रुधुर्नृपाः
केचिज्जहृषिरे तत्र केचिद्भीष्मं जगर्हिरे २६
केचिदूचुर्महेष्वासाः श्रुत्वा भीष्मस्य तद्वचः
पापोऽवलिप्तो वृद्धश्च नायं भीष्मोऽहति क्षमाम् २७
हन्यतां दुर्मतिर्भीष्मः पशुवत्साध्वयं नृपैः
सर्वैः समेत्य संरब्धैर्दह्यतां वा कटाग्निना २८
इति तेषां वचः श्रुत्वा ततः कुरुपितामहः
उवाच मतिमान्भीष्मस्तानेव वसुधाधिपान् २९
उक्तस्योक्तस्य नेहान्तमहं समुपलक्षये
यत्तु वक्ष्यामि तत्सर्वं शृणुध्वं वसुधाधिपाः ३०
पशुवद्घातनं वा मे दहनं वा कटाग्निना
क्रियतां मूर्ध्नि वो न्यस्तं मयेदं सकलं पदम् ३१
एष तिष्ठति गोविन्दः पूजितोऽस्माभिरच्युतः
यस्य वस्त्वरते बुद्धिर्मरणाय स माधवम् ३२
कृष्णमाह्वयतामद्य युद्धे शार्ङ्गगदाधरम्
यावदस्यैव देवस्य देहं विशतु पातितः ३३
इति श्रीमहाभारते सभापर्वणि एकचत्वारिंशोऽध्यायः ४१

द्विचत्वारिंशोऽध्यायः

वैशम्पायन उवाच
ततः श्रुत्वैव भीष्मस्य चेदिराडुरुविक्रमः
युयुत्सुर्वासुदेवेन वासुदेवमुवाच ह १
आह्वये त्वां रणं गच्छ मया सार्धं जनार्दन
यावदद्य निहन्मि त्वां सहितं सर्वपाण्डवैः २
सह त्वया हि मे वध्याः पाण्डवाः कृष्ण सर्वथा
नृपतीन्समतिक्रम्य यैरराजा त्वमर्चितः ३

ये त्वां दासमराजानं बाल्यादर्चन्ति दुर्मतिम्
अनर्हमर्हवत्कृष्ण वध्यास्त इति मे मतिः
इत्युक्त्वा राजशार्दूलस्तस्थौ गर्जन्नमर्षणः ४
एवमुक्ते ततः कृष्णो मृदुपूर्वमिदं वचः
उवाच पार्थिवान्सर्वांस्तत्समक्षं च पाण्डवान् ५
एष नः शत्रुरत्यन्तं पार्थिवाः सात्वतीसुतः
सात्वतानां नृशंसात्मा न हितोऽनपकारिणाम् ६
प्राग्ज्योतिषपुरं यातानस्माञ्ज्ञात्वा नृशंसकृत्
अदहद्द्वारकामेष स्वस्रीयः सन्नराधिपाः ७
क्रीडतो भोजराजन्यानेष रैवतके गिरौ
हत्वा बद्ध्वा च तान्सर्वानुपायात्स्वपुरं पुरा ८
अश्वमेधे हयं मेध्यमुत्सृष्टं रक्षिभिर्वृतम्
पितुर्मे यज्ञविघ्नार्थमहरत्पापनिश्चयः ९
सौवीरान्प्रतिपत्तौ च बभ्रोरेष यशस्विनः
भार्यामभ्यहरन्मोहादकामां तामितो गताम् १०
एष मायाप्रतिच्छन्नः करूषार्थे तपस्विनीम्
जहार भद्रां वैशालद्यं मातुलस्य नृशंसकृत् ११
पितृष्वसुः कृते दुःखं सुमहन्मर्षयाम्यहम्
दिष्ट्या त्विदं सर्वराज्ञां संनिधावद्य वर्तते १२
पश्यन्ति हि भवन्तोऽद्य मय्यतीव व्यतिक्रमम्
कृतानि तु परोक्षं मे यानि तानि निबोधत १३
इमं त्वस्य न शक्ष्यामि क्षन्तुमद्य व्यतिक्रमम्
अवलेपाद्वधार्हस्य समग्रे राजमण्डले १४
रुक्मिण्यामस्य मूढस्य प्रार्थनासीन्मुमूर्षतः
न च तां प्राप्तवान्मूढः शूद्रो वेदश्रुतिं यथा १५
एवमादि ततः सर्वे सहितास्ते नराधिपाः
वासुदेववचः श्रुत्वा चेदिराजं व्यगर्हयन् १६
ततस्तद्वचनं श्रुत्वा शिशुपालः प्रतापवान्
जहास स्वनवद्धासं प्रहस्येदमुवाचह १७
मत्पूर्वां रुक्मिणीं कृष्ण संसत्सु परिकीर्तयन्

विशेषतः पार्थिवेषु व्रीडां न कुरुषे कथम् १८
मन्यमानो हि कः सत्सु पुरुषः परिकीर्तयेत्
अन्यपूर्वां स्त्रियं जातु त्वदन्यो मधुसूदन १९
क्षम वा यदि ते श्रद्धा मा वा कृष्ण मम क्षम
क्रुद्धाद्वापि प्रसन्नाद्वा किं मे त्वत्तो भविष्यति २०
तथा ब्रुवत एवास्य भगवान्मधुसूदनः
व्यपाहरच्छिरः क्रुद्धश्चक्रेणामित्रकर्षणः
स पपात महाबाहुर्वज्राहत इवाचलः २१
ततश्चेदिपतेर्देहात्तेजोऽग्र्य ददृशुर्नृपाः
उत्पतन्तं महाराज गगनादिव भास्करम् २२
ततः कमलपत्राक्षं कृष्णं लोकनमस्कृतम्
ववन्दे तत्तदा तेजो विवेश च नराधिप २३
तदद्भुतममन्यन्त दृष्ट्वा सर्वे महीक्षितः
यद्विवेश महाबाहुं तत्तेजः पुरुषोत्तमम् २४
अनभ्रे प्रववर्ष द्यौः पपात ज्वलिताशनिः
कृष्णेन निहते चैद्ये चचाल च वसुन्धरा २५
ततः केचिन्महीपाला नाब्रुवंस्तत्र किंचन
अतीतवाक्पथे काले प्रेक्षमाणा जनार्दनम् २६
हस्तैर्हस्ताग्रमपरे प्रत्यपीषन्नमर्षिताः
अपरे दशनैरोष्ठानदशन्क्रोधमूर्च्छिताः २७
रहस्तु केचिद्वार्ष्णेयं प्रशशंसुर्नराधिपाः
केचिदेव तु संरब्धा मध्यस्थास्त्वपरेऽभवन् २८
प्रहृष्टाः केशवं जग्मुः संस्तुवन्तो महर्षयः
ब्राह्मणाश्च महात्मानः पार्थिवाश्च महाबलाः २९
पाण्डवस्त्वब्रवीद्भ्रातॄन्सत्कारेण महीपतिम्
दमघोषात्मजं वीरं संसाधयत मा चिरम्
तथा च कृतवन्तस्ते भ्रातुर्वै शासनं तदा ३०
चेदीनामाधिपत्ये च पुत्रमस्य महीपतिम्
अभ्यषिञ्चत्तदा पार्थः सह तैर्वसुधाधिपैः ३१
ततः स कुरुराजस्य क्रतुः सर्वसमृद्धिमान्

यूनां प्रीतिकरो राजन्संबभौ विपुलौजसः ३२
शान्तविघ्नः सुखारम्भः प्रभूतधनधान्यवान्
अन्नवान्बहुभक्षश्च केशवेन सुरक्षितः ३३
समापयामास च तं राजसूयं महाक्रतुम्
तं तु यज्ञं महाबाहुरासमाप्तेर्जनार्दनः
ररक्ष भागवाञ्शौरिः शार्ङ्गचक्रगदाधरः ३४
ततस्त्ववभृथस्नातं धर्मराजं युधिष्ठिरम्
समस्तं पार्थिवं क्षत्रमभिगम्येदमब्रवीत् ३५
दिष्ट्या वर्धसि धर्मज्ञ साम्राज्यं प्राप्तवान्विभो
आजमीढाजमीढानां यशः संवर्धितं त्वया
कर्मणैतेन राजेन्द्र धर्मश्च सुमहान्कृतः ३६
आपृच्छामो नरव्याघ्र सर्वकामैः सुपूजिताः
स्वराष्ट्राणि गमिष्यामस्तवनुज्ञातुमर्हसि ३७
श्रुत्वा तु वचनं राज्ञां धर्मराजो युधिष्ठिरः
यथार्हं पूज्य नृपतीन्भ्रातॄन्सर्वानुवाच ह ३८
राजानः सर्व एवैते प्रीत्यास्मान्समुपागताः
प्रस्थिताः स्वानि राष्ट्राणि मामापृच्छ्य परंतपाः
तेऽनुव्रजत भद्रं वो विषयान्तं नृपोत्तमान् ३९
भ्रातुर्वचनमाज्ञाय पाण्डवा धर्मचारिणः
यथार्हं नृपमुख्यांस्तानेकैकं समन्वव्रजन् ४०
विराटमन्वयात्तूर्णं धृष्टद्युम्नः प्रतापवान्
धनञ्जयो यज्ञसेनं महात्मानं महारथः ४१
भीष्मं च धृतराष्ट्रं च भीमसेनो महाबलः
द्रोणं च ससुतं वीरं सहदेवो महारथः ४२
नकुलः सुबलं राजन्सहपुत्रं समन्वयात्
द्रौपदेयाः ससौभद्राः पार्वतीयान्महीपतीन् ४३
अन्वगच्छंस्तथैवान्यान्क्षत्रियान्क्षत्रियर्षभाः
एवं संपूजितास्ते वै जग्मुर्विप्राश्च सर्वशः ४४
गतेषु पार्थिवेन्द्रेषु सर्वेषु भरतर्षभ
युधिष्ठिरमुवाचेदं वासुदेवः प्रतापवान् ४५

आपृच्छे त्वां गमिष्यामि द्वारकां कुरुनन्दन
राजसूयं क्रतुश्रेष्ठं दिष्ट्या त्वं प्राप्तवानसि ४६
तमुवाचैवमुक्तस्तु धर्मराणमधुसूदनम्
तव प्रसादाद्गोविन्द प्राप्तवानस्मि वै क्रतुम् ४७
समस्तं पार्थिवं क्षत्रं त्वत्प्रसादाद्वशानुगम्
उपादाय बलि मुख्यं मामेव समुपस्थितम् ४८
न वयं त्वामृते वीर रंस्यामेह कथंचन
अवश्यं चापि गन्तव्या त्वया द्वारवती पुरी ४९
एवमुक्तः स धर्मात्मा युधिष्ठिरसहायवान्
अभिगम्याब्रवीत्प्रीतः पृथां पृथुयशा हरिः ५०
साम्राज्यं समनुप्राप्ताः पुत्रास्तेऽद्य पितृष्वसः
सिद्धार्था वसुमन्तश्च सा त्वं प्रीतिमवाप्नुहि ५१
अनुज्ञातस्त्वया चाहं द्वारकां गन्तुमुत्सहे
सुभद्रां द्रौपदीं चैव सभाजयत केशवः ५२
निष्क्रम्यान्तःपुराश्चैव युधिष्ठिरसहायवान्
स्नातश्च कृतजप्यश्च ब्राह्मणान्स्वस्ति वाच्य च ५३
ततो मेघवरप्रख्यं स्यन्दनं वै सुकल्पितम्
योजयित्वा महाराज दारुकः प्रत्युपस्थितः ५४
उपस्थितं रथं दृष्ट्वा तार्क्ष्यप्रवरकेतनम्
प्रदक्षिणमुपावृत्य समारुह्य महामनाः
प्रययौ पुण्डरीकाक्षस्ततो द्वारवतीं पुरीम् ५५
तं पद्भ्यामनुवव्राज धर्मराजो युधिष्ठिरः
भ्रातृभिः सहितः श्रीमान्वासुदेवं महाबलम् ५६
ततो मुहूर्तं संगृह्य स्यन्दनप्रवरं हरिः
अब्रवीत्पुण्डरीकाक्षः कुन्तीपुत्रं युधिष्ठिरम् ५७
अप्रमत्तः स्थितो नित्यं प्रजाः पाहि विशां पते
पर्जन्यमिव भूतानि महाद्रुममिवाण्डजाः
बान्धवास्त्वोपजीवन्तु सहस्राक्षमिवामराः ५८
कृत्वा परस्परेणैवं संविदं कृष्णपाण्डवौ
अन्योन्यं समनुज्ञाप्य जग्मतुः स्वगृहान्प्रति ५९

गते द्वारवतीं कृष्णे सात्वतप्रवरे नृप
एको दुर्योधनो राजा शकुनिश्चापि सौबलः
तस्यां सभायां दिव्यायामूषतुस्तौ नरर्षभौ ६०
इति श्रीमहाभारते सभापर्वणि द्विचत्वारिंशोऽध्यायः ४२

त्रिचत्वारिंशोऽध्यायः

वैशम्पायन उवाच
वसन्दुर्योधनस्तस्यां सभायां भरतर्षभ
शनैर्ददर्श तां सर्वां सभां शकुनिना सह १
तस्यां दिव्यानभिप्रायान्ददर्श कुरुनन्दनः
न दृष्टपूर्वा ये तेन नगरे नागसाह्वये २
स कदाचित्सभामध्ये धार्तराष्ट्रो महीपतिः
स्फाटिकं तलमासाद्य जलमित्यभिशङ्कया ३
स्ववस्त्रोत्कर्षणं राजा कृतवान्बुद्धिमोहितः
दुर्मना विमुखश्चैव परिचक्राम तां सभाम् ४
ततः स्फाटिकतोयां वै स्फाटिकाम्बुजशोभिताम्
वापीं मत्वा स्थलमिति सवासाः प्रापतज्जले ५
जले निपतितं दृष्ट्वा किंकरा जहसुर्भृशम्
वासांसि च शुभान्यस्मै प्रददुः राजशासनात् ६
तथागतं तु तं दृष्ट्वा भीमसेनो महाबलः
अर्जुनश्च यमौ चोभौ सर्वे ते प्राहसंस्तदा ७
नामर्षयत्ततस्तेषा मवहासममर्षणः
आकारं रक्षमाणस्तु न स तान्समुदैक्षत ८
पुनर्वसनमुत्क्षिप्य प्रतरिष्यन्निव स्थलम्
आरुरोह ततः सर्वे जहसुस्ते पुनर्जनाः ९
द्वारं च विवृताकारं ललाटेन समाहनत्
संवृतं चेति मन्वानो द्वारदेशादुपारमत् १०
एवं प्रलम्भान्विविधान्प्राप्य तत्र विशां पते
पाण्डवेयाभ्यनुज्ञातस्ततो दुर्योधनो नृपः ११
अप्रहृष्टेन मनसा राजसूये महाक्रतौ

प्रेक्ष्य तामद्भुतामृद्धिं जगाम गजसाह्वयम् १२
पाण्डवश्रीप्रतप्तस्य ध्यानग्लानस्य गच्छतः
दुर्योधनस्य नृपतेः पापा मतिरजायत १३
पार्थान्सुमनसो दृष्ट्वा पार्थिवांश्च वशानुगान्
कृत्स्नं चापि हितं लोकमाकुमारं कुरूद्वह १४
महिमानं परं चापि पाण्डवानां महात्मनाम्
दुर्योधनो धार्तराष्ट्रो विवर्णः समपद्यत १५
स तु गच्छन्ननेकाग्रः सभामेवानुचिन्तयन्
श्रियं च तामनुपमां धर्मराजस्य धीमतः १६
प्रमत्तो धृतराष्ट्रस्य पुत्रो दुर्योधनस्तदा
नाभ्यभाषत्सुबलजं भाषमाणं पुनः पुनः १७
अनेकाग्रं तु तं दृष्ट्वा शकुनिः प्रत्यभाषत
दुर्योधन कुतोमूलं निःश्वसन्निव गच्छसि १८
दुर्योधन उवाच
दृष्ट्वेमां पृथिवीं कृत्स्नां युधिष्ठिरवशानुगाम्
जितामस्त्रप्रतापेन श्वेताश्वस्य महात्मनः १९
तं च यज्ञं तथाभूतं दृष्ट्वा पार्थस्य मातुल
यथा शक्रस्य देवेषु तथाभूतं महाद्युते २०
अमर्षेण सुसंपूर्णो दह्यमानो दिवानिशम्
शुचिशुक्रागमे काले शुष्ये तोयमिवाल्पकम् २१
पश्य सात्वतमुख्येन शिशुपालं निपातितम्
न च तत्र पुमानासीत्कश्चित्तस्य पदानुगः २२
दह्यमाना हि राजानः पाण्डवोत्थेन वह्निना
क्षान्तवन्तोऽपराधं तं को हि तं क्षन्तुमर्हति २३
वासुदेवेन तत्कर्म तथायुक्तं महत्कृतम्
सिद्धं च पाण्डवेयानां प्रतापेन महात्मनाम् २४
तथा हि रत्नान्यादाय विविधानि नृपा नृपम्
उपतिष्ठन्ति कौन्तेयं वैश्या इव करप्रदाः २५
श्रियं तथाविधां दृष्ट्वा ज्वलन्तीमिव पाण्डवे
अमर्षवशमापन्नो दह्येऽहमतथोचितः २६

वह्निमेव प्रवेक्ष्यामि भक्षयिष्यामि वा विषम्
अपो वापि प्रवेक्ष्यामि न हि शक्ष्यामि जीवितुम् २७
को हि नाम पुमाँल्लोके मर्षयिष्यति सत्त्ववान्
सपत्नानृध्यतो दृष्ट्वा हानिमात्मन एव च २८
सोऽह न स्त्री न चाप्यस्त्री न पुमान्नापुमानपि
योऽह तां मर्षयाम्यद्य तादृशीं श्रियमागताम् २९
ईश्वरत्वं पृथिव्याश्च वसुमत्तां च तादृशीम्
यज्ञं च तादृशं दृष्ट्वा मादृशः को न संज्वरेत् ३०
अशक्तश्चैक एवाहं तामाहर्तुं नृपश्रियम्
सहायांश्च न पश्यामि तेन मृत्युं विचिन्तये ३१
दैवमेव परं मन्ये पौरुषं तु निरर्थकम्
दृष्ट्वा कुन्तीसुते शुभ्रां श्रियं तामाहृतां तथा ३२
कृतो यत्नो मया पूर्वं विनाशे तस्य सौबल
तच्च सर्वमतिक्रम्य स वृद्धोऽप्स्विव पङ्कजम् ३३
तेन दैवं परं मन्ये पौरुषं तु निरर्थकम्
धार्तराष्ट्रा हि हीयन्ते पार्था वर्धन्ति नित्यशः ३४
सोऽह श्रियं च तां दृष्ट्वा सभां तां च तथाविधाम्
रक्षिभिश्चावहासं तं परितप्ये यथाग्निना ३५
स मामभ्यनुजानीहि मातुलाद्य सुदुःखितम्
अमर्षं च समाविष्टं धृतराष्ट्रे निवेदय ३६
इति श्रीमहाभारते सभापर्वणि त्रिचत्वारिंशोऽध्यायः ४३

## चतुश्चत्वारिंशोऽध्यायः

शकुनिरुवाच
दुर्योधन न तेऽमर्षः कार्यः प्रति युधिष्ठिरम्
भागधेयानि हि स्वानि पाण्डवा भुञ्जते सदा १
अनेकैरभ्युपायैश्च त्वयारब्धाः पुरासकृत्
विमुक्ताश्च नरव्याघ्रा भागधेयपुरस्कृताः २
तैर्लब्धा द्रौपदी भार्या द्रुपदश्च सुतैः सह
सहायः पृथिवीलाभे वासुदेवश्च वीर्यवान् ३

लब्धश्च नाभिभूतोऽथ पित्र्योंऽश पृथिवीपते
विवृद्धस्तेजसा तेषां तत्र का परिदेवना ४
धनंजयेन गाण्डीवमक्षय्यौ च महेषुधी
लब्धान्यस्त्राणि दिव्यानि तर्पयित्वा हुताशनम् ५
तेन कार्मुकमुख्येन बाहुवीर्येण चात्मनः
कृता वशे महीपालास्तत्र का परिदेवना ६
अग्निदाहान्मयं चापि मोक्षयित्वा स दानवम्
सभां तां कारयामास सव्यसाची परंतपः ७
तेन चैव मयेनोक्ताः किंकरा नाम राक्षसाः
वहन्ति तां सभां भीमास्तत्र का परिदेवना ८
यच्चासहायतां राजन्नुक्तवानसि भारत
तन्मिथ्या भ्रातरो हीमे सहायास्ते महारथाः ९
द्रोणस्तव महेष्वासः सह पुत्रेण धीमता
सूतपुत्रश्च राधेयो गौतमश्च महारथः १०
अहं च सह सोदर्यैः सौमदत्तिश्च वीर्यवान्
एतैस्त्वं सहितः सर्वैर्जय कृत्स्नां वसुन्धराम् ११
दुर्योधन उवाच
त्वया च सहितो राजन्नेतैश्चान्यैर्महारथैः
एतानेव विजेष्यामि यदि त्वमनुमन्यसे १२
एतेषु विजितेष्वद्य भविष्यति मही मम
सर्वे च पृथिवीपालाः सभा सा च महाधना १३
शकुनिरुवाच
धनंजयो वासुदेवो भीमसेनो युधिष्ठिरः
नकुलः सहदेवश्च द्रुपदश्च सहात्मजैः १४
नैते युधि बलाज्जेतुं शक्याः सुरगणैरपि
महारथा महेष्वासाः कृतास्त्रा युद्धदुर्मदाः १५
अहं तु तद्विजानामि विजेतुं येन शक्यते
युधिष्ठिरं स्वयं राजंस्तन्निबोध जुषस्व च १६
दुर्योधन उवाच
अप्रमादेन सुहृदामन्येषां च महात्मनाम्

यदि शक्या विजेतुं ते तन्ममाचक्ष्व मातुल १७
शकुनिरुवाच
द्यूतप्रियश्च कौन्तेयो न च जानाति देवितुम्
समाहूतश्च राजेन्द्रो न शक्ष्यति निवर्तितुम् १८
देवने कुशलश्चाहं न मेऽस्ति सदृशो भुवि
त्रिषु लोकेषु कौन्तेयं तं त्वं द्यूते समाह्वय १९
तस्याक्षकुशलो राजन्नादास्येऽहमसंशयम्
राज्यं श्रियं च तां दीप्तां त्वदर्थं पुरुषर्षभ २०
इदं तु सर्वं त्वं राज्ञे दुर्योधन निवेदय
अनुज्ञातस्तु ते पित्रा विजेष्ये तं न संशयः २१
दुर्योधन उवाच
त्वमेव कुरुमुख्याय धृतराष्ट्राय सौबल
निवेदय यथान्यायं नाहं शक्ष्ये निशंसितुम् २२
इति श्रीमहाभारते सभापर्वणि चतुश्चत्वारिंशोऽध्यायः ४४

## पञ्चचत्वारिंशोऽध्यायः

वैशम्पायन उवाच
अनुभूय तु राज्ञस्तं राजसूयं महाक्रतुम्
युधिष्ठिरस्य नृपतेर्गान्धारीपुत्रसंयुतः १
प्रियकृन्मतमाज्ञाय पूर्वं दुर्योधनस्य तत्
प्रज्ञाचक्षुषमासीनं शकुनिः सौबलस्तदा २
दुर्योधनवचः श्रुत्वा धृतराष्ट्रं जनाधिपम्
उपगम्य महाप्राज्ञं शकुनिर्वाक्यमब्रवीत् ३
दुर्योधनो महाराज विवर्णो हरिणः कृशः
दीनश्चिन्तापरश्चैव तद्विद्धि भरतर्षभ ४
न वै परीक्षसे सम्यगसह्यं शत्रुसंभवम्
ज्येष्ठपुत्रस्य शोकं त्वं किमर्थं नावबुध्यसे ५
धृतराष्ट्र उवाच
दुर्योधन कुतोमूलं भृशमार्तोऽसि पुत्रक
श्रोतव्यश्चेन्मया सोऽथो ब्रूहि मे कुरुनन्दन ६

अयं त्वां शकुनिः प्राह विवर्णं हरिणं कृशम्
चिन्तयंश्च न पश्यामि शोकस्य तव संभवम् ७
एश्वर्यं हि महत्पुत्र त्वयि सर्वं समर्पितम्
भ्रातरः सुहृदश्चैव नाचरन्ति तवाप्रियम् ८
आच्छादयसि प्रावारानश्नासि पिशितौदनम्
आजानेया वहन्ति त्वां केनासि हरिणः कृशः ९
शयनानि महार्हाणि योषितश्च मनोरमाः
गुणवन्ति च वेश्मानि विहाराश्च यथासुखम् १०
देवानामिव ते सर्वं वाचि बद्धं न संशयः
स दीन इव दुर्धर्षः कस्माच्छोचसि पुत्रक ११
दुर्योधन उवाच
अश्नाम्याच्छादये चाहं यथा कुपुरुषस्तथा
अमर्षं धारये चोग्रं तितिक्षन्कालपर्ययम् १२
अमर्षणःस्वाः प्रकृतीरभिभूय परे स्थिताः
क्लेशान्मुमुक्षुः परजान्स वै पुरुष उच्यते १३
संतोषो वै श्रियं हन्ति अभिमानश्च भारत
अनुक्रोशभये चोभे यैर्वृतो नाश्नुते महत् १४
न मामवति तद्भुक्तं श्रियं दृष्ट्वा युधिष्ठिरे
ज्वलन्तीमिव कौन्तेये विवर्णकरणीं मम १५
सपत्नानृध्यतोऽत्मानं हीयमानं निशाम्य च
अदृश्यामपि कौन्तेये स्थितां पश्यन्निवोद्यताम्
तस्मादहं विवर्णश्च दीनश्च हरिणः कृशः १६
अष्टाशीतिसहस्राणि स्नातका गृहमेधिनः
त्रिंशद्दासीक एकैको यान्बिभर्ति युधिष्ठिरः १७
दशान्यानि सहस्राणि नित्यं तत्रान्नमुत्तमम्
भुञ्जते रुक्मपात्रीभिर्युधिष्ठिरनिवेशने १८
कदलीमृगमोकानि कृष्णश्यामारुणानि च
काम्बोजः प्राहिणोत्तस्मै परार्ध्यानपिकम्बलान् १९
रथयोषिद्गवाश्वस्य शतशोऽथ सहस्रशः
त्रिंशतं चोष्ट्रवामीनां शतानि विचरन्त्युत २०

पृथग्विधानि रत्नानि पार्थिवाः पृथिवीपते
आहरन्क्रतुमुख्येऽस्मिन्कुन्तीपुत्राय भूरिशः २१
न क्वचिद्धि मया दृष्टस्तादृशो नैव च श्रुतः
यादृग्धनागमो यज्ञे पाण्डुपुत्रस्य धीमतः २२
अपर्यन्तं धनौघं तं दृष्ट्वा शत्रोरहं नृप
शर्म नैवाधिगच्छामि चिन्तयानोऽनिशं विभो २३
ब्राह्मणा वाटधानाश्च गोमन्तः शतसंघशः
त्रैखर्वं बलिमादाय द्वारि तिष्ठन्ति वारिताः २४
कमण्डलूनुपादाय जातरूपमयाञ्शुभान्
एवं बलि समादाय प्रवेशं लेभिरे ततः २५
यन्नैव मधु शक्राय धारयन्त्यमरस्त्रियः
तदस्मै कांस्यमाहार्षीद्वारुणं कलशोदधिः २६
शैक्यं रुक्मसहस्रस्य बहुरत्नविभूषितम्
दृष्ट्वा च मम तत्सर्वं ज्वररूपमिवाभवत् २७
गृहीत्वा तत्तु गच्छन्ति समुद्रौ पूर्वदक्षिणौ
तथैव पश्चिमं यान्ति गृहीत्वा भरतर्षभ २८
उत्तरं तु न गच्छन्ति विना तात पतत्रिभिः
इदं चाद्भुतमत्रासीत्तन्मे निगदतः शृणु २९
पूर्णे शतसहस्रे तु विप्राणां परिविष्यताम्
स्थापिता तत्र संज्ञाभूच्छङ्खो ध्मायति नित्यशः ३०
मुहुर्मुहुः प्रणदतस्तस्य शङ्खस्य भारत
उत्तमं शब्दमश्रौषं ततो रोमाणि मेऽहृषन् ३१
पार्थिवैर्बहुभिः कीर्णमुपस्थानं दिदृक्षुभिः
सर्वरत्नान्युपादाय पार्थिवा वै जनेश्वर ३२
यज्ञे तस्य महाराज पाण्डुपुत्रस्य धीमतः
वैश्या इव महीपाला द्विजातिपरिवेषकाः ३३
न सा श्रीर्देवराजस्य यमस्य वरुणस्य वा
गुह्यकाधिपतेर्वापि या श्री राजन्युधिष्ठिरे ३४
तां दृष्ट्वा पाण्डुपुत्रस्य श्रियं परमिकामहम्
शान्तिं न परिगच्छामि दह्यमानेन चेतसा ३५

शकुनिरुवाच
यामेतामुत्तमां लक्ष्मीं दृष्टवानसि पाण्डवे
तस्याः प्राप्तावुपायं मे शृणु सत्यपराक्रम ३६
अहमक्षेष्वभिज्ञातः पृथिव्यामपि भारत
हृदयज्ञः पणज्ञश्च विशेषज्ञश्च देवने ३७
द्यूतप्रियश्च कौन्तेयो न च जानाति देवितुम्
आहूतश्चैष्यति व्यक्तं दीव्यावेत्याह्वयस्व तम् ३८
वैशम्पायन उवाच
एवमुक्तः शकुनिना राजा दुर्योधनस्तदा
धृतराष्ट्रमिदं वाक्यमपदान्तरमब्रवीत् ३९
अयमुत्सहते राजञ्श्रियमाहर्तुमक्षवित्
द्यूतेन पाण्डुपुत्रस्य तदनुज्ञातुमर्हसि ४०
धृतराष्ट्र उवाच
क्षत्ता मन्त्री महाप्राज्ञः स्थितो यस्यास्मि शासने
तेन संगम्य वेत्स्यामि कार्यस्यास्य विनिश्चयम् ४१
स हि धर्मं पुरस्कृत्य दीर्घदर्शी परं हितम्
उभयोः पक्षयोर्युक्तं वक्ष्यत्यर्थविनिश्चयम् ४२
दुर्योधन उवाच
निवर्तयिष्यति त्वासौ यदि क्षत्ता समेष्यति
निवृत्ते त्वयि राजेन्द्र मरिष्येऽहमसंशयम् ४३
स मयि त्वं मृते राजन्विदुरेण सुखी भव
भोक्ष्यसे पृथिवीं कृत्स्नां किं मया त्वं करिष्यसि ४४
वैशम्पायन उवाच
आर्तवाक्यं तु तत्तस्य प्रणयोक्तं निशम्य सः
धृतराष्ट्रोऽब्रवीत्प्रेष्यान्दुर्योधनमते स्थितः ४५
स्थूणासहस्रैर्बृहतीं शतद्वारां सभां मम
मनोरमां दर्शनीयामाशु कुर्वन्तु शिल्पिनः ४६
ततः संस्तीर्य रत्नैस्तामक्षानावाप्य सर्वशः
सुकृतां सुप्रवेशां च निवेदयत मे शनैः ४७
दुर्योधनस्य शान्त्यर्थमिति निश्चित्य भूमिपः

धृतराष्ट्रो महाराज प्राहिणोद्विदुराय वै ४८
अपृष्ट्वा विदुरं ह्यस्य नाशीत्कश्चिद्विनिश्चयः
द्यूतदोषांश्च जानन्स पुत्रस्नेहादकृष्यत ४९
तच्छ्रुत्वा विदुरो धीमान्कलिद्वारमुपस्थितम्
विनाशमुखमुत्पन्नं धृतराष्ट्रमुपाद्रवत् ५०
सोऽभिगम्य महात्मानं भ्राता भ्रातरमग्रजम्
मूर्ध्ना प्रणम्य चरणाविदं वचनमब्रवीत् ५१
नाभिनन्दामि ते राजन्व्यवसायमिमं प्रभो
पुत्रैर्भेदो यथा न स्याद्द्यूतहेतोस्तथा कुरु ५२
धृतराष्ट्र उवाच
क्षत्तः पुत्रेषु पुत्रैर्मे कलहो न भविष्यति
दिवि देवाः प्रसादं नः करिष्यन्ति न संशयः ५३
अशुभं वा शुभं वापि हितं वायदि वाहितम्
प्रवर्ततां सुहृद्द्यूतं दिष्टमेतन्न संशयः ५४
मयि संनिहिते चैव भीष्मे च भरतर्षभे
अनयो दैवविहितो न कथंचिद्भविष्यति ५५
गच्छ त्वं रथमास्थाय हयैर्वातसमैर्जवे
खाण्डवप्रस्थमद्यैव समानय युधिष्ठिरम् ५६
न वार्यो ब्यवसायो मे विदुरैतद्ब्रवीमि ते
दैवमेव परंमन्ये येनैतदुपपद्यते ५७
इत्युक्तो विदुरो धीमान्नैदमस्तीति चिन्तयन्
आपगेयं महाप्राज्ञमभ्यगच्छत्सुदुःखितः ५८
इति श्रीमहाभारते सभापर्वणि पञ्चचत्वारिंशोऽध्यायः ४५

## षट्चत्वारिंशोऽध्यायः

जनमेजय उवाच
कथं समभवद्द्यूतं भ्रातॄणां तन्महात्ययम्
यत्र तद्व्यसनं प्राप्तं पाण्डवैर्मे पितामहैः १
के च तत्र सभास्तारा राजानो ब्रह्मवित्तम
के चैनमन्वमोदन्त के चैनं प्रत्यषेधयन् २

विस्तरेणैतदिच्छामि कथ्यमानं त्वया द्विज
मूलं ह्येतद्विनाशस्य पृथिव्या द्विजसत्तम ३
सूत उवाच
एवमुक्तस्तदा राज्ञा व्यासशिष्यः प्रतापवान्
आचचक्षे यथावृत्तं तत्सर्वं सर्ववेदवित् ४
वैशम्पायन उवाच
शृणु मे विस्तरेणेमां कथां भरतसत्तम
भूय एव महाराज यदि ते श्रवणे मतिः ५
विदुरस्य मतं ज्ञात्वा धृतराष्ट्रोऽम्बिकासुतः
दुर्योधनमिदं वाक्यमुवाच विजने पुनः ६
अलं द्यूतेन गान्धारे विदुरो न प्रशंसति
नह्यसौ सुमहाबुद्धिरहितं नो वदिष्यति ७
हितं हि परमं मन्ये विदुरो यत्प्रभाषते
क्रियतां पुत्र तत्सर्वमेतन्मन्ये हितं तव ८
देवर्षिर्वासवगुरुर्देवराजाय धीमते
यत्प्राह शास्त्रं भगवान्बृहस्पतिरुदारधीः ९
तद्वेद विदुरः सर्वं सरहस्यं महाकविः
स्थितश्च वचने तस्य सदाहमपि पुत्रक १०
विदुरो वाऽपि मेधावी कुरूणां प्रवरो मतः
उद्धवो वा महाबुद्धिर्वृष्णीनामर्चितो नृप ११
द्यूतेन तदलं पुत्र द्यूते भेदो हि दृश्यते
भेदे विनाशो राज्यस्य तत्पुत्र परिवर्जय १२
पित्रा मात्रा च पुत्रस्य यद्वै कार्यं परं स्मृतम्
प्राप्तस्त्वमसि तत्तात पितृपैतामहं पदम् १३
अधीतवान्कृती शास्त्रे लालितः सततं गृहे
भ्रातृज्येष्ठः स्थितो राज्ये विन्दसे किं न शोभनम् १४
पृथग्जनैरलभ्यं यद्भोजनाच्छादनं परम्
तत्प्राप्तोऽसि महाबाहो कस्माच्छोचसि पुत्रक १५
स्फीतंराष्ट्रं महाबाहो पितृपैतामहं महत्
नित्यमाज्ञापयन्भासि दिवि देवेश्वरो यथा १६

तस्य ते विदितप्रज्ञ शोकमूलमिदं कथम्
समुत्थितं दुःखतरं तन्मे शंसितुमर्हसि १७
दुर्योधन उवाच
अश्नाम्याच्छादयामीति प्रपश्यन्पापपूरुषः
नामर्षं कुरुते यस्तु पुरुषः सोऽधमः स्मृतः १८
न मां प्रीणाति राजेन्द्र लक्ष्मीः साधारणा विभो
ज्वलितामिव कौन्तेये श्रियं दृष्ट्वा च विव्यथे १९
सर्वां हि पृथिवीं दृष्ट्वा युधिष्ठिरवशानुगाम्
स्थिरोऽस्मि योऽह जीवामि दुःखादेतद्ब्रवीमि ते २०
आवर्जिता इवाभान्ति निघ्नाश्चैत्रकिकौकुराः
कारस्करा लोहजङ्घा युधिष्ठिरनिवेशने २१
हिमवत्सागराऽनूपाः सर्वरत्नाकरास्तथा
अन्त्याः सर्वे पर्युदस्ता युधिष्ठिरनिवेशने २२
ज्येष्ठोऽयमिति मां मत्वा श्रेष्ठश्चेति विशां पते
युधिष्ठिरेण सत्कृत्य युक्तो रत्नपरिग्रहे २३
उपस्थितानां रत्नानां श्रेष्ठानामर्घहारिणाम्
नादृश्यत परः प्रान्तो नापरस्तत्र भारत २४
न मे हस्तः समभवद्वसु तत्प्रतिगृह्णतः
प्रातिष्ठन्त मयि श्रान्ते गृह्य दूराहृतं वसु २५
कृतां बिन्दुसरोरत्नैर्मयेन स्फाटिकच्छदाम्
अपश्यं नलिनीं पूर्णामुदकस्येव भारत २६
वस्त्रमुत्कर्षति मयि प्राहसत्स वृकोदरः
शत्रोर्ऋद्धिविशेषेण विमूढं रत्नवर्जितम् २७
तत्र स्म यदि शक्तः स्यां पातयेऽय वृकोदरम्
सपत्नेनाऽवहासो हि स मां दहति भारत २८
पुनश्च तादृशीमेव वापीं जलजशालिनीम्
मत्वा शिलासमां तोये पतितोऽस्मि नराधिप २९
तत्र मां प्राहसत्कृष्णः पार्थेन सह सस्वनम्
द्रौपदी च सह स्त्रीभिर्व्यथयन्ती मनो मम ३०
क्लिन्नवस्त्रस्य तु जले किंकरा राजचोदिताः

ददुर्वासांसि मेऽन्यानि तच्च दुःखतरं मम ३१
प्रलम्भं च शृणुष्वान्यं गदतो मे नराधिप
अद्वारेण विनिर्गच्छन्द्वारसंस्थानरूपिणा
अभिहत्य शिलां भूयो ललाटेनास्मि विक्षतः ३२
तत्र मां यमजौ दूरादालोक्य ललितौ किल
बाहुभिः परिगृह्णीतां शोचन्तौ सहितावुभौ ३३
उवाच सहदेवस्तु तत्र मां विस्मयन्निव
इदं द्वारमितो गच्छ राजन्निति पुनः पुनः ३४
नामधेयानि रत्नानां पुरस्तान्न श्रुतानि मे
यानि दृष्टानि मे तस्यां मनस्तपति तच्च मे ३५
इति श्रीमहाभारते सभापर्वणि षट्चत्वारिंशोऽध्यायः ४६

## सप्तचत्वारिंशोऽध्यायः

दुर्योधन उवाच
यन्मया पाण्डवानां तु दृष्टं तच्छृणु भारत
आहृतं भूमिपालैर्हि वसु मुख्यं ततस्ततः १
न विन्दे दृढमात्मानं दृष्ट्वाहं तदरेर्धनम्
फलतो भूमितो वापि प्रतिपद्यस्व भारत २
एण्डाञ्चैलान्वार्षदंशाञ्जातरूपपरिष्कृतान्
प्रावाराजिनमुख्यांश्च काम्बोजः प्रददौ वसु ३
अश्वांस्तित्तिरिकल्माषांस्त्रिशतं शुकनासिकान्
उष्ट्रवामीस्त्रिशतं च पुष्टाः पीलुशमीङ्गुदैः ४
गोवासना ब्राह्मणाश्च दासमीयाश्च सर्वशः
प्रीत्यर्थं ते महाभागा धर्मराज्ञो महात्मनः
त्रिखर्वं बलिमादाय द्वारि तिष्ठन्ति वारिताः ५
कमण्डलूनुपादाय जातरूपमयाञ्शुभान्
एवं बलि प्रदायाथ प्रवेशं लेभिरे ततः ६
शतं दासीसहस्राणां कार्पासिकनिवासिनाम्
श्यामास्तन्व्यो दीर्घकेश्यो हेमाभरणभूषिताः
शूद्रा विप्रोत्तमार्हाणि राङ्कवान्यजिनानि च ७

बलि च कृत्स्नमादाय भरुकच्छनिवासिनः
उपनिन्युर्महाराज हयान्गान्धारदेशजान् ८
इन्द्रकृष्टैर्वर्तयन्ति धान्यैर्नदीमुखैश्च ये
समुद्रनिष्कुटे जाताः परिसिन्धु च मानवाः ९
ते वैरामाः पारदाश्च वङ्गाश्च कितवैः सह
विविधं बलिमादाय रत्नानि विविधानि च १०
अजाविकं गोहिरण्यं खरोष्ट्रं फलजं मधु
कम्बलान्विविधांश्चैव द्वारि तिष्ठन्ति वारिताः ११
प्राग्ज्योतिषाधिपः शूरो म्लेच्छानामधिपो बली
यवनैः सहितो राजा भगदत्तो महारथः १२
आजानेयान्हयाञ्शीघ्रा नादायानिलरंहसः
बलि च कृत्स्नमादाय द्वारि तिष्ठति वारितः १३
अश्मसारमयं भाण्डं शुद्धदन्तत्सरूनसीन्
प्राग्ज्योतिषाऽथ तद्दत्त्वा भगदत्तोऽव्रजत्तदा १४
द्व्यक्षांस्त्र्यक्षाल्ललँलाटाक्षान्नानादिग्भ्यः समागतान्
औष्णीषाननिवासांश्च बाहुकान्पुरुषादकान् १५
एकपादांश्च तत्राहमपश्यं द्वारि वारितान्
बल्यर्थं ददतस्तस्मै हिरण्यं रजतं बहु १६
इन्द्रगोपकवर्णाभाञ्शुक वर्णान्मनोजवान्
तथैवेन्द्रायुधनिभान्सन्ध्याभ्र सदृशानपि १७
अनेकवर्णानारण्यान्गृहीत्वाश्वान्मनोजवान्
जातरूपमनर्घ्यं च ददुस्तस्यैकपादकाः १८
चीनान्हूणाञ्शकानोड्रान्पर्वतान्तरवासिनः
वार्ष्णेयान्हारहूणांश्च कृष्णान्हैमवतांस्तथा १९
न पारयाम्यभिगतान्विविधान्द्वारि वारितान्
बल्यर्थं ददतस्तस्य नानारूपाननेकशः २०
कृष्णग्रीवान्महाकायान्रासभाञ्शतपातिनः
आहार्षुर्दशसाहस्रान्विनीतान्दिक्षु विश्रुतान् २१
प्रमाणरागस्पर्शाढ्यं बाह्लीचीनसमुद्भवम्
और्णं च राङ्कवं चैव कीटजं पट्टजं तथा २२

कुट्टीकृतं तथैवान्यत्कमलाभं सहस्रशः
श्लक्ष्णं वस्त्रमकार्पासमाविकं मृदु चाजिनम् २३
निशितांश्चैव दीर्घासीनृष्टिशक्तिपरश्वधान्
अपरान्तसमुद्भूतांस्तथैव परशूञ्शितान् २४
रसान्गन्धांश्च विविधान्रत्नानि च सहस्रशः
बलि च कृत्स्नमादाय द्वारि तिष्ठन्ति वारिताः २५
शकास्तुखाराः कङ्काश्च रोमशाः शृङ्गिणो नराः
महागमान्दूरगमान्गणितानर्बुदं हयान् २६
कोटिशश्चैव बहुशः सुवर्णं पद्मसंमितम्
बलिमादाय विविधं द्वारि तिष्ठन्ति वारिताः २७
आसनानि महार्हाणि यानानि शयनानि च
मणिकाञ्चनचित्राणि गजदन्तमयानि च २८
रथांश्चविविधाकाराञ्जातरूपपरिष्कृतान्
हयैर्विनीतैः संपन्नान्वैयाघ्रपरिवारणान् २९
विचित्रांश्च परिस्तोमान्रत्नानि च सहस्रशः
नाराचानर्धनाराचाञ्शस्त्राणि विविधानि च ३०
एतद्दत्त्वा महद्द्रव्यं पूर्वदेशाधिपा नृपः
प्रविष्टो यज्ञसदनं पाण्डवस्य महात्मनः ३१
इति श्रीमहाभारते सभापर्वणि सप्तचत्वारिंशोऽध्यायः ४७

## अष्टचत्वारिंशोऽध्यायः

दुर्योधन उवाच
दायं तु तस्मै विविधं शृणु मे गदतोऽनघ
यज्ञार्थं राजभिर्दत्तं महान्तं धनसंचयम् १
मेरुमन्दरयोर्मध्ये शैलोदामभितो नदीम्
ये ते कीचकवेणूनां छायां रम्यामुपासते २
खशा एकाशनाज्योहाः प्रदरा दीर्घवेणवः
पशुपाश्च कुणिन्दाश्च तङ्गणाः परतङ्गणाः ३
ते वै पिपीलिकं नाम वरदत्तं पिपीलिकैः
जातरूपं द्रोणमेयमहार्षुः पुञ्जशो नृपाः ४

कृष्णाल्लँलामांश्चमराञ्शुक्लांश्चान्याञ्शशिप्रभान्
हिमवत्पुष्पजं चैव स्वादु क्षौद्रं तथा बहु ५
उत्तरेभ्यः कुरुभ्यश्चाप्यपोढं माल्यमम्बुभिः
उत्तरादपि कैलासादोषधीः सुमहाबलाः ६
पार्वतीया बलि चान्यमाहृत्य प्रणताः स्थिताः
अजातशत्रोर्नृपतेर्द्वारि तिष्ठन्ति वारिताः ७
ये परार्धे हिमवतः सूर्योदयगिरौ नृपाः
वारिषेण समुद्रान्ते लोहित्यमभितश्च ये
फलमूलाशना ये च किराताश्चर्मवाससः ८
चन्दनागुरुकाष्ठानां भारान्कालीयकस्य च
चर्मरत्नसुवर्णानां गन्धानां चैव राशयः ९
कैरातिकानामयुतं दासीनां च विशां पते
आहृत्य रमणीयार्थादूरन्जान्मृगपक्षिणः १०
निचितं पर्वतेभ्यश्च हिरण्यं भूरिवर्चसम्
बलि च कृत्स्नमादाय द्वारि तिष्ठन्ति वारिताः ११
कायव्या दरदा दार्वाः शूरा वैयमकास्तथा
औदुम्बराः दुर्विभागाः पारदा बाह्लिकैः सह १२
काश्मीरा कुन्दमानाश्च पौरका हंसकायनाः
शिबित्रिगर्तयौधेया राजन्या मद्रकेकयाः १३
अम्बष्ठाः कौकुरास्तार्क्ष्या वस्त्रपाः पह्लवैः सह
वसातयः समौलेयाः सह क्षुद्रकमालवैः १४
शौण्डिकाः कुक्कुराश्चैव शकाश्चैव विशां पते
अङ्गा वङ्गाश्च पुण्ड्राश्च शानवत्या गयास्तथा १५
सुजातयः श्रेणिमन्तः श्रेयांसः शस्त्रपाणयः
आहार्षुः क्षत्रिया वित्तं शतशोऽजातशत्रवे १६
वङ्गा कलिङ्गपतयस्ताम्रलिप्ताः सपुण्ड्रकाः
दुकूलं कौशिकं चैव पत्रोर्णं प्रावरानपि १७
तत्र स्म द्वारपालैस्ते प्रोच्यन्ते राजशासनात्
कृतकाराः सुबलयस्ततो द्वारमवाप्स्यथ १८
ईषादन्तान्हेमकक्षान्पद्म वर्णान्कुथावृतान्

शैलाभान्नित्यमत्तांश्च अभितः काम्यकं सरः १९
दत्त्वैकैको दशशतान्कुञ्जरान्कवचावृतान्
क्षमावतः कुलीनांश्च द्वारेण प्राविशंस्ततः २०
एते चान्ये च बहवो गणा दिग्भ्यः समागताः
अन्यैश्चोपाहृतान्यत्र रत्नानीह महात्मभिः २१
राजा चित्ररथो नाम गन्धर्वो वासवानुगः
शतानि चत्वार्यददद्धयानां वातरंहसाम् २२
तुम्बुरुस्तु प्रमुदितो गन्धर्वो वाजिनां शतम्
आम्रपत्रसवर्णानामददद्धेममालिनाम् २३
कृती तु राजा कौरव्य शूकराणां विशां पते
अददद्गजरत्नानां शतानि सुबहून्यपि २४
विराटेन तु मत्स्येन बल्यर्थं हेममालिनाम्
कुञ्जराणां सहस्रे द्वे मत्तानां समुपाहृते २५
पांशुराष्ट्राद्वसुदानो राजा षड्विंशतिं गजान्
अश्वानां च सहस्रे द्वे राजन्काञ्चनमालिनाम् २६
जवसत्त्वोपपन्नानां वयस्थानां नराधिप
बलि च कृत्स्नमादाय पाण्डवेभ्यो न्यवेदयत् २७
यज्ञसेनेन दासीनां सहस्राणि चतुर्दश
दासानामयुतं चैव सदाराणां विशां पते २८
गजयुक्ता महाराज रथाः षड्विंशतिस्तथा
राज्यं च कृत्स्नं पार्थेभ्यो यज्ञार्थं वै निवेदितम् २९
समुद्रसारं वैडूर्यं मुक्ताः शङ्खास्तथैव च
शतशश्च कुथांस्तत्र सिंहलाः समुपाहरन् ३०
संवृता मणिचीरैस्तु श्यामास्ताम्रान्तलोचनाः
तान्गृहीत्वा नरास्तत्र द्वारि तिष्ठन्ति वारिताः ३१
प्रीत्यर्थं ब्राह्मणाश्चैव क्षत्रियाश्च विनिर्जिताः
उपाजह्रुर्विशश्चैव शूद्राः शुश्रूषवोऽपि च
प्रीत्या च बहुमानाच्च अभ्यगच्छन्युधिष्ठिरम् ३२
सर्वे म्लेच्छाः सर्ववर्णा आदिमध्यान्तजास्तथा
नानादेशसमुत्थैश्च नानाजातिभिरागतैः

पर्यस्त इव लोकोऽय युधिष्ठिरनिवेशने ३३
उच्चावचानुपग्राहान्राजभिः प्रहितान्बहून्
शत्रूणां पश्यतो दुःखान्मुमूर्षा मेऽद्य जायते ३४
भृत्यास्तु ये पाण्डवानां तांस्ते वक्ष्यामि भारत
येषामामं च पक्वं च संविधत्ते युधिष्ठिरः ३५
अयुतं त्रीणि पद्मानि गजारोहाः ससादिनः
रथानामर्बुदं चापि पादाता बहवस्तथा ३६
प्रमीयमाणमारब्धं पच्यमानं तथैव च
विसृज्यमानं चान्यत्र पुण्याहस्वन एव च ३७
नाभुक्तवन्तं नाहृष्टं नासुभिक्षं कथंचन
अपश्यं सर्ववर्णानां युधिष्ठिरनिवेशने ३८
अष्टाशीतिसहस्राणि स्नातका गृहमेधिनः
त्रिंशद्दासीक एकैको यान्बिभर्ति युधिष्ठिरः
सुप्रीताः परितुष्टाश्च तेऽप्याशंसन्त्यरिक्षयम् ३९
दशान्यानि सहस्राणि यतीनामूर्ध्वरेतसाम्
भुञ्जते रुक्मपात्रीषु युधिष्ठिरनिवेशने ४०
भुक्ताभुक्तं कृताकृतं सर्वमाकुब्जवामनम्
अभुञ्जाना याज्ञसेनी प्रत्यवैक्षद्विशां पते ४१
द्वौ करं न प्रयच्छेतां कुन्तीपुत्राय भारत
वैवाहिकेन पाञ्चालाः सख्येनान्धकवृष्णयः ४२
इति श्रीमहाभारते सभापर्वणि अष्टचत्वारिंशोऽध्यायः ४८

## एकोन पञ्चाशोऽध्यायः

दुर्योधन उवाच
आर्यास्तु ये वै राजानः सत्यसन्धा महाव्रताः
पर्याप्तविद्या वक्तारो वेदान्तावभृथाप्लुताः १
धृतिमन्तो ह्रीनिषेधा धर्मात्मानो यशस्विनः
मूर्धाभिषिक्तास्ते चैनं राजानः पर्युपासते २
दक्षिणार्थं समानीता राजभिः कांस्यदोहनाः
आरण्या बहुसाहस्रा अपश्यंस्तत्र तत्र गाः ३

आजह्रुस्तत्र सत्कृत्य स्वयमुद्यम्य भारत
अभिषेकार्थमव्यग्रा भाण्डमुच्चावचं नृपाः ४
बाह्लीको रथमाहार्षीज्जाम्बूनदपरिष्कृतम्
सुदक्षिणस्तं युयुजे श्वेतैः काम्बोजजैर्हयैः ५
सुनीथोऽप्रतिमं तस्य अनुकर्षं महायशाः
ध्वजं चेदिपतिः क्षिप्रमहार्षीत्स्वयमुद्यतम् ६
दाक्षिणात्यः संनहनं स्रगुष्णीषे च मागधः
वसुदानो महेष्वासो गजेन्द्रं षष्टिहायनम् ७
मत्स्यस्त्वक्षानवाबध्नादेकलव्य उपानहौ
आवन्त्यस्त्वभिषेकार्थमापो बहुविधास्तथा ८
चेकितान उपासङ्गं धनुः काश्य उपाहरत्
असिं रुक्मत्सरुं शल्यः शैक्यं काञ्चनभूषणम् ९
अभ्यषिंचत्ततो धौम्यो व्यासश्च सुमहातपाः
नारदं वै पुरस्कृत्य देवलं चासितं मुनिम् १०
प्रीतिमन्त उपातिष्ठन्नभिषेकं महर्षयः
जामदग्न्येन सहितास्तथान्ये वेदपारगाः ११
अभिजग्मुर्महात्मानं मन्त्रवद्भूरिदक्षिणम्
महेन्द्रमिव देवेन्द्रं दिवि सप्तर्षयो यथा १२
अधारयच्छत्रमस्य सात्यकिः सत्यविक्रमः
धनञ्जयश्च व्यजने भीमसेनश्च पाण्डवः १३
उपागृह्णाद्यमिन्द्राय पुराकल्पे प्रजापतिः
तमस्मै शङ्खमाहार्षीद्वारुणं कलशोदधिः १४
सिक्तं निष्कसहस्रेण सुकृतं विश्वकर्मणा
तेनाभिषिक्तः कृष्णेन तत्र मे कश्मलोऽभवत् १५
गच्छन्ति पूर्वादपरं समुद्रं चापि दक्षिणम्
उत्तरं तु न गच्छन्ति विना तात पतत्रिभिः १६
तत्र स्म दध्मुः शतशः शङ्खान्मङ्गल्यकारणात्
प्राणदंस्ते समाध्मातास्तत्र रोमाणि मेऽहृषन् १७
प्रणताभूमिपाश्चापि पेतुर्हीनाः स्वतेजसा
धृष्टद्युम्नः पाण्डवाश्च सात्यकिः केशवोऽष्टमः १८

सत्त्वस्थाः शौर्यसंपन्ना अन्योन्यप्रियकारिणः
विसंज्ञान्भूमिपान्दृष्ट्वा मां च ते प्राहसंस्तदा १९
ततः प्रहृष्टो बीभत्सुः प्रादाद्धेमविषाणिनाम्
शतान्यनडुहां पञ्च द्विजमुख्येषु भारत २०
नैवं शम्बरहन्ताभूद्यौवनाश्वो मनुर्न च
न च राजा पृथुर्वैन्यो न चाप्यासीद्भगीरथः २१
यथातिमात्रं कौन्तेयः श्रिया परमया युतः
राजसूयमवाप्यैवं हरिश्चन्द्र इव प्रभुः २२
एतां दृष्ट्वा श्रियं पार्थे हरिश्चन्द्रे यथा विभो
कथं नु जीवितं श्रेयो मम पश्यसि भारत २३
अन्धेनेव युगं नद्धं विपर्यस्तं नराधिप
कनीयांसो विवर्धन्ते ज्येष्ठा हीयन्ति भारत २४
एवं दृष्ट्वा नाभिविन्दामि शर्म परीक्षमाणोऽपि कुरुप्रवीर
तेनाहमेवं कृशतां गतश्च विवर्णतां चैव सशोकतां च २५
इति श्रीमहाभारते सभापर्वणि एकोनपञ्चाशोऽध्यायः ४९

पञ्चाशोऽध्यायः

धृतराष्ट्र उवाच
त्वं वै ज्येष्ठो ज्यैष्ठिनेयः पुत्र मा पाण्डवान्द्विषः
द्वेष्टा ह्यसुखमादत्ते यथैव निधनं तथा १
अव्युत्पन्नं समानार्थं तुल्यमित्रं युधिष्ठिरम्
अद्विषन्तं कथं द्विष्यात्त्वादृशो भरतर्षभ २
तुल्याभिजनवीर्यश्च कथं भ्रातुः श्रियं नृप
पुत्र कामयसे मोहान्मैवं भूः शाम्य साध्विह ३
अथ यज्ञविभूतिं तां काङ्क्षसे भरतर्षभ
ऋत्विजस्तव तन्वन्तु सप्ततन्तुं महाध्वरम् ४
आहरिष्यन्ति राजानस्तवापि विपुलं धनम्
प्रीत्या च बहुमानाच्च रत्नान्याभरणानि च ५
अनर्थाचरितं तात परस्वस्पृहणं भृशम्
स्वसंतुष्टः स्वधर्मस्थो यः स वै सुखमेधते ६

अव्यापारः परार्थेषु नित्योद्योगः स्वकर्मसु
उद्यमो रक्षणे स्वेषामेतद्वैभवलक्षणम् ७
विपत्तिष्वव्यथो दक्षो नित्यमुत्थानवान्नरः
अप्रमत्तो विनीतात्मा नित्यं भद्राणि पश्यति ८
अन्तर्वेद्यां ददद्वित्तं कामाननुभवान्प्रियान्
क्रीडन्स्त्रीभिर्निरातङ्कः प्रशाम्य भरतर्षभ ९
दुर्योधन उवाच
जानन्वै मोहयसि मां नावि नौरिव संयता
स्वार्थे किं नावधानं ते उताहो द्वेष्टि मां भवान् १०
न सन्तीमे धार्तराष्ट्रा येषां त्वमनुशासिता
भविष्यमर्थमाख्यासि सदा त्वं कृत्यमात्मनः ११
परप्रणेयोऽग्रणीर्हि यश्च मार्गात्प्रमुह्यति
पन्थानमनुगच्छेयुः कथं तस्य पदानुगाः १२
राजन्परिगतप्रज्ञो वृद्धसेवी जितेन्द्रियः
प्रतिपन्नान्स्वकार्येषु संमोहयसि नो भृशम् १३
लोकवृत्ताद्राजवृत्तमन्यदाह बृहस्पतिः
तस्माद्राज्ञा प्रयत्नेन स्वार्थश्चिन्त्यः सदैव हि १४
क्षत्रियस्य महाराज जये वृत्तिः समाहिता
स वै धर्मस्त्वधर्मो वा स्ववृत्तौ भरतर्षभ १५
प्रकालयेद्दिशः सर्वाः प्रतोदेनेव सारथिः
प्रत्यमित्रश्रियं दीप्तां बुभूषुर्भरतर्षभ १६
प्रच्छनो वा प्रकाशो वा यो योगो रिपुबाधनः
तद्वै शस्त्रं शस्त्रविदां न शस्त्रं छेदनं स्मृतम् १७
असंतोषः श्रियो मूलं तस्मात्तं कामयाम्यहम्
समुच्छ्रये यो यतते स राजन्परमो नयी १८
ममत्वं हि न कर्तव्यमैश्वर्ये वा धनेऽपि वा
पूर्वावाप्तं हरन्त्यन्ये राजधर्मं हि तं विदुः १९
अद्रोहे समयं कृत्वा चिच्छेद नमुचेः शिरः
शक्रः सा हि मता तस्य रिपौ वृत्तिः सनातनी २०
द्वावेतौ ग्रसते भूमिः सर्पो बिलशयानिव

राजानं चाविरोद्धारं ब्राह्मणं चाप्रवासिनम् २१
नास्ति वै जातितः शत्रुः पुरुषस्य विशां पते
येन साधारणी वृत्तिः स शत्रुर्नेतरो जनः २२
शत्रुपक्षंसमृध्यन्तं यो मोहात्समुपेक्षते
व्याधिराप्यायित इव तस्य मूलं छिनत्ति सः २३
अल्पोऽपि ह्यरिरत्यन्तं वर्धमानपराक्रमः
वल्मीको मूलजः इव ग्रसते वृक्षमन्तिकात् २४
आजमीढ रिपोर्लक्ष्मीर्मा ते रोचिष्ट भारत
एष भारः सत्त्ववतां नयः शिरसि धिष्ठितः २५
जन्मवृद्धिमिवार्थानां यो वृद्धिमभिकाङ्क्षते
एधते ज्ञातिषु स वै सद्यो वृद्धिर्हि विक्रमः २६
नाप्राप्य पाण्डवैश्वर्यं संशयो मे भविष्यति
अवाप्स्ये वा श्रियं तां हि शेष्ये वा निहतो युधि २७
अतादृशस्य किं मेऽद्य जीवितेन विशां पते
वर्धन्ते पाण्डवा नित्यं वयं तु स्थिरवृद्धयः २८
इति श्रीमहाभारते सभापर्वणि पञ्चाशोऽध्यायः ५०

एक पञ्चाशोऽध्यायः

शकुनिरुवाच
यां त्वमेतां श्रियं दृष्ट्वा पाण्डुपुत्रे युधिष्ठिरे
तप्यसे तां हरिष्यामि द्यूतेनाहूयतां परः १
अगत्वा संशयमहमयुद्ध्वा च चमूमुखे
अक्षान्क्षिपन्नक्षतः सन्विद्वानविदुषो जये २
ग्लहान्धनूंषि मे विद्धि शरानक्षांश्च भारत
अक्षाणां हृदयं मे ज्यां रथं विद्धि ममास्तरम् ३
दुर्योधन उवाच
अयमुत्सहते राजञ्श्रियमाहर्तुमक्षवित्
द्यूतेन पाण्डुपुत्रेभ्यस्तत्तुभ्यं तात रोचताम् ४
धृतराष्ट्र उवाच
स्थितोऽस्मि शासने भ्रातुर्विदुरस्य महात्मनः

तेन संगम्य वेत्स्यामि कार्यस्यास्य विनिश्चयम् ५
दुर्योधन उवाच
विहनिष्यति ते बुद्धिं विदुरो मुक्तसंशयः
पाण्डवानां हिते युक्तो न तथा मम कौरव ६
नारभेत्परसामर्थ्यात्पुरुषः कार्यमात्मनः
मतिसाम्यं द्वयोर्नास्ति कार्येषु कुरुनन्दन ७
भयं परिहरन्मन्द आत्मानं परिपालयन्
वर्षासु क्लिन्नकटवत्तिष्ठन्नेवावसीदिति ८
न व्याधयो नापि यमः श्रेयःप्राप्तिं प्रतीक्षते
यावदेव भवेत्कल्पस्तावच्छ्रेयः समाचरेत् ९
धृतराष्ट्र उवाच
सर्वथा पुत्र बलिभिर्विग्रहं ते न रोचते
वैरं विकारं सृजति तद्वै शस्त्रमनायसम् १०
अनर्थमर्थं मन्यसे राजपुत्र संग्रन्थनं कलहस्यातिघोरम्
तद्वै प्रवृत्तं तु यथाकथंचिद्विमोक्षयेच्चाप्यसिसायकांश्च ११
दुर्योधन उवाच
द्यूते पुराणैर्व्यवहारः प्रणीतस्तत्रात्ययो नास्ति न संप्रहारः
तद्रोचतां शकुनेर्वाक्यमद्य सभां क्षिप्रं त्वमिहाज्ञापयस्व १२
स्वर्गद्वारं दीव्यतां नो विशिष्टं तद्वर्तिनां चापि तथैव युक्तम्
भवेदेवं ह्यात्मना तुल्यमेव दुरोदरं पाण्डवैस्त्वं कुरुष्व १३
धृतराष्ट्र उवाच
वाक्यं न मे रोचते यत्त्वयोक्तं यत्ते प्रियं तत्क्रियतां नरेन्द्र
पश्चात्तप्स्यसे तदुपाक्रम्य वाक्यं न हीदृशं भावि वचो हि धर्म्यम् १४
दृष्टं ह्येतद्विदुरेणैवमेव सर्वं पूर्वं बुद्धिविद्यानुगेन
तदेवैतदवशस्याभ्युपैति महद्भयं क्षत्रियबीजघाति १५
वैशम्पायन उवाच
एवमुक्त्वा धृतराष्ट्रो मनीषी दैवं मत्वा परमं दुस्तरं च
शशासोच्चैः पुरुषान्पुत्रवाक्ये स्थितो राजा दैवसंमूढचेताः १६
सहस्रस्तम्भां हेमवैडूर्यचित्रां शतद्वारां तोरणस्फाटिशृङ्गाम्
सभामग्र्यां क्रोशमात्रायतां ते तद्विस्तारमाशु कुर्वन्तु युक्ताः १७

श्रुत्वा तस्य त्वरिता निर्विशङ्काः प्राज्ञा दक्षास्तां तदा चक्रुराशु
सर्वद्रव्याण्युपजह्रुः सभायां सहस्रशः शिल्पिनश्चापि युक्ताः १८
कालेनाल्पेनाथ निष्ठां गतां तां सभां रम्यां बहुरत्नां विचित्राम्
चित्रैर्हैमैरासनैरभ्युपेतामाचख्युस्ते तस्य राज्ञः प्रतीताः १९
ततो विद्वान्विदुरं मन्त्रिमुख्यमुवाचेदं धृतराष्ट्रो नरेन्द्रः
युधिष्ठिरं राजपुत्रं च गत्वा मद्वाक्येन क्षिप्रमिहानयस्व २०
सभेयं मे बहुरत्ना विचित्रा शय्यासनैरुपपन्ना महार्हैः
सा दृश्यतां भ्रातृभिः सार्धमेत्य सुहृद्द्यूतं वर्ततामत्र चेति २१
मतमाज्ञाय पुत्रस्य धृतराष्ट्रो नराधिपः
मत्वा च दुस्तरं दैवमेतद्राजा चकार ह २२
अन्यायेन तथोक्तस्तु विदुरो विदुषां वरः
नाभ्यनन्दद्वचो भ्रातुर्वचनं चेदमब्रवीत् २३
नाभिनन्दामि नृपते प्रैषमेतं मैवं कृथाः कुलनाशाद्बिभेमि
पुत्रैर्भिन्नैः कलहस्ते ध्रुवं स्यादेतच्छङ्के द्यूतकृते नरेन्द्र २४
धृतराष्ट्र उवाच
नेह क्षत्तः कलहस्तप्स्यते मां न चेद्दैवं प्रतिलोमं भविष्यत्
धात्रा तु दिष्टस्य वशे किलेदं सर्वं जगच्चेष्टति न स्वतन्त्रम् २५
तदद्य विदुर प्राप्य राजानं मम शासनात्
क्षिप्रमानय दुर्धर्षं कुन्तीपुत्रं युधिष्ठिरम् २६
इति श्रीमहाभारते सभापर्वणि एकपञ्चाशोऽध्यायः ५१

## द्विपञ्चाशोऽध्यायः

वैशम्पायन उवाच
ततः प्रायाद्विदुरोऽश्वैरुदारैर्महाजवैर्बलिभिः साधुदान्तैः
बलान्नियुक्तो धृतराष्ट्रेण राज्ञा मनीषिणां पाण्डवानां सकाशम् १
सोऽभिपत्य तदध्वानमासाद्य नृपतेः पुरम्
प्रविवेश महाबुद्धिः पूज्यमानो द्विजातिभिः २
स राजगृहमासाद्य कुबेरभवनोपमम्
अभ्यागच्छत धर्मात्मा धर्मपुत्रं युधिष्ठिरम् ३
तं वै राजा सत्यधृतिर्महात्मा अजातशत्रुर्विदुरं यथावत्

पूजापूर्वं प्रतिगृह्याजमीढस्ततोऽपृच्छद्धृतराष्ट्रं सपुत्रम् ४
युधिष्ठिर उवाच
विज्ञायते ते मनसो न प्रहर्षः कच्चित्क्षत्तः कुशलेनागतोऽसि
कच्चित्पुत्राः स्थविरस्यानुलोमा वशानुगाश्चापि विशोऽपि कच्चित् ५
विदुर उवाच
राजा महात्मा कुशली सपुत्र आस्ते वृतो ज्ञातिभिरिन्द्रकल्पैः
प्रीतो राजन्पुत्रगुणैर्विनीतैर्विशोक एवात्मरतिर्दृढात्मा ६
इदं तु त्वां कुरुराजोऽभ्युवाच पूर्वं पृष्ट्वा कुशलं चाव्ययं च
इयं सभा त्वत्सभातुल्यरूपा भ्रातॄणां ते पश्य तामेत्य पुत्र ७
समागम्य भ्रातृभिः पार्थ तस्यां सुहृद्द्यूतं क्रियतां रम्यतां च
प्रीयामहे भवतः संगमेन समागताः कुरवश्चैव सर्वे ८
दुरोदरा विहिता ये तु तत्र महात्मना धृतराष्ट्रेण राज्ञा
तान्द्रक्ष्यसे कितवान्सन्निविष्टानित्यागतोऽहं नृपते तज्जुषस्व ९
युधिष्ठिर उवाच
द्यूते क्षत्तः कलहो विद्यते नः को वै द्यूतं रोचयेद्बुध्यमानः
किं वा भवान्मन्यते युक्तरूपं भवद्वाक्ये सर्व एव स्थिताः स्म १०
विदुर उवाच
जानाम्यहं द्यूतमनर्थमूलं कृतश्च यत्नोऽस्य मया निवारणे
राजा तु मां प्राहिणोत्त्वत्सकाशं श्रुत्वा विद्वञ्श्रेय इहाचरस्व ११
युधिष्ठिर उवाच
के तत्रान्ये कितवा दीव्यमाना विना राज्ञो धृतराष्ट्रस्य पुत्रैः
पृच्छामि त्वां विदुर ब्रूहि नस्तान्यैर्दीव्यामः शतशः संनिपत्य १२
विदुर उवाच
गान्धारराजः शकुनिर्विशां पते राजातिदेवी कृतहस्तो मताक्षः
विविंशतिश्चित्रसेनश्च राजा सत्यव्रतः पुरुमित्रो जयश्च १३
युधिष्ठिर उवाच
महाभयाः कितवाः संनिविष्टा मायोपधा देवितारोऽत्र सन्ति
धाता तु दिष्टस्य वशे किलेदं नादेवनं कितवैरद्य तैर्मे १४
नाहं राज्ञो धृतराष्ट्रस्य शासनान्न गन्तुमिच्छामि कवे दुरोदरम्
इष्टो हि पुत्रस्य पिता सदैव तदस्मि कर्ता विदुरात्थ मां यथा १५

न चाकामः शकुनिना देविताहं न चेन्मां धृष्णुराह्वयिता सभायाम्
आहूतोऽह न निवर्ते कदाचित्तदाहितं शाश्वतं वै व्रतं मे १६
वैशम्पायन उवाच
एवमुक्त्वा विदुरं धर्मराजः प्रायात्रिकं सर्वमाज्ञाप्य तूर्णम्
प्रायाच्छ्वोभूते सगणः सानुयात्रः सह स्त्रीभिर्द्रौपदीमादिकृत्वा १७
दैवं प्रज्ञां तु मुष्णाति तेजश्चक्षुरिवापतत्
धातुश्च वशमन्वेति पाशैरिव नरः सितः १८
इत्युक्त्वा प्रययौ राजा सह क्षत्त्रा युधिष्ठिरः
अमृष्यमाणस्तत्पार्थः समाह्वानमरिन्दमः १९
बाह्लिकेन रथं दत्तमास्थाय परवीरहा
परिच्छन्नौ ययौ पार्थो भ्रातृभिः सह पाण्डवः २०
राजश्रिया दीप्यमानो ययौ ब्रह्मपुरःसरः
धृतराष्ट्रेण चाहूतः कालस्य समयेन च २१
स हास्तिनपुरं गत्वा धृतराष्ट्रगृहं ययौ
समियाय च धर्मात्मा धृतराष्ट्रेण पाण्डवः २२
तथा द्रोणेन भीष्मेण कर्णेन च कृपेण च
समियाय यथान्यायं द्रौणिना च विभुः सह २३
समेत्य च महाबाहुः सोमदत्तेन चैव ह
दुर्योधनेन शल्येन सौबलेन च वीर्यवान् २४
ये चान्ये तत्र राजानः पूर्वमेव समागताः
जयद्रथेन च तथा कुरुभिश्चापि सर्वशः २५
ततः सर्वैर्महाबाहुर्भ्रातृभिः परिवारितः
प्रविवेश गृहं राज्ञो धृतराष्ट्रस्य धीमतः २६
ददर्श तत्र गान्धारीं देवीं पतिमनुव्रताम्
स्नुषाभिः संवृतां शश्वत्ताराभिरिव रोहिणीम् २७
अभिवाद्य स गान्धारीं तया च प्रतिनन्दितः
ददर्श पितरं वृद्धं प्रज्ञाचक्षुषमीश्वरम् २८
राज्ञा मूर्धन्युपाघ्रातास्ते च कौरवनन्दनाः
चत्वारः पाण्डवा राजन्भीमसेनपुरोगमाः २९
ततो हर्षः समभवत्कौरवाणां विशां पते

तान्दृष्ट्वा पुरुषव्याघ्रान्पाण्डवान्प्रियदर्शनान् ३०
विविशुस्तेऽभ्यनुज्ञाता रत्नवन्ति गृहाण्यथ
ददृशुश्चोपयातास्तान्द्रौपदीप्रमुखाः स्त्रियः ३१
याज्ञसेन्याः परामृद्धिं दृष्ट्वा प्रज्वलितामिव
स्नुषास्ता धृतराष्ट्रस्य नातिप्रमनसोऽभवन् ३२
ततस्ते पुरुषव्याघ्रा गत्वा स्त्रीभिस्तु संविदम्
कृत्वा व्यायामपूर्वाणि कृत्यानि प्रतिकर्म च ३३
ततः कृताह्निकाः सर्वे दिव्यचन्दनरूषिताः
कल्याणमनसश्चैव ब्राह्मणान्स्वस्ति वाच्य च ३४
मनोज्ञमशनं भुक्त्वा विविशुः शरणान्यथ
उपगीयमाना नारीभिरस्वपन्कुरुनन्दनाः ३५
जगाम तेषां सा रात्रिः पुण्या रतिविहारिणाम्
स्तूयमानाश्च विश्रान्ताः काले निद्रामथात्यजन् ३६
सुखोषितास्तां रजनीं प्रातः सर्वे कृताह्निकाः
सभां रम्यां प्रविविशुः कितवैरभिसंवृताम् ३७
इति श्रीमहाभारते सभापर्वणि द्विपञ्चाशोऽध्यायः ५२

त्रिपञ्चाशोऽध्यायः

शकुनिरुवाच
उपस्तीर्णा सभा राजन्रन्तुं चैते कृतक्षणाः
अक्षानुप्त्वा देवनस्य समयोऽस्तु युधिष्ठिर १
युधिष्ठिर उवाच
निकृतिर्देवनं पापं न क्षात्रोऽत्र पराक्रमः
न च नीतिर्ध्रुवा राजन्किं त्वं द्यूतं प्रशंससि २
न हि मानं प्रशंसन्ति निकृतौ कितवस्य ह
शकुने मैव नो जैषीरमार्गेण नृशंसवत् ३
शकुनिरुवाच
योऽन्वेति संख्यां निकृतौ विधिज्ञश्चेष्टास्वखिन्नः कितवोऽक्षजासु
महामतिर्यश्च जानाति द्यूतं स वै सर्वं सहते प्रक्रियासु ४
अक्षग्लहः सोऽभिभवेत्परं नस्तेनैव कालो भवतीदमात्थ

दीव्यामहे पार्थिव मा विशङ्कां कुरुष्व पाणं च चिरं च मा कृथाः ५
युधिष्ठिर उवाच
एवमाहायमसितो देवलो मुनिसत्तमः
इमानि लोकद्वाराणि यो वै संचरते सदा ६
इदं वै देवनं पापं मायया कितवैः सह
धर्मेण तु जयो युद्धे तत्परं साधु देवनम् ७
नार्या म्लेच्छन्ति भाषाभिर्मायया न चरन्त्युत
अजिह्ममशठं युद्धमेतत्सत्पुरुषव्रतम् ८
शक्तितो ब्राह्मणान्वन्द्याञ्शिक्षितुं प्रयतामहे
तद्वै वित्तं मातिदेवीर्मा जैषीः शकुने परम् ९
नाहं निकृत्या कामये सुखान्युत धनानि वा
कितवस्याप्यनिकृतेर्वृत्तमेतन्न पूज्यते १०
शकुनिरुवाच
श्रोत्रियोऽश्रोत्रियमुत निकृत्यैव युधिष्ठिर
विद्वानविदुषोऽभ्येति नाहुस्तां निकृतिं जनाः ११
एवं त्वं मामिहाभ्येत्य निकृतिं यदि मन्यसे
देवनाद्विनिवर्तस्व यदि ते विद्यते भयम् १२
युधिष्ठिर उवाच
आहूतो न निवर्तेयमिति मे व्रतमाहितम्
विधिश्च बलवान्राजन्दिष्टस्यास्मि वशे स्थितः १३
अस्मिन्समागमे केन देवनं मे भविष्यति
प्रतिपाणश्च कोऽन्योऽस्ति ततो द्यूतं प्रवर्तताम् १४
दुर्योधन उवाच
अहं दातास्मि रत्नानां धनानां च विशां पते
मदर्थे देविता चायं शकुनिर्मातुलो मम १५
युधिष्ठिर उवाच
अन्येनान्यस्य विषमं देवनं प्रतिभाति मे
एतद्विद्वन्नुपादत्स्व काममेवं प्रवर्तताम् १६
वैशम्पायन उवाच
उपोह्यमाने द्यूते तु राजानः सर्व एव ते

धृतराष्ट्रं पुरस्कृत्य विविशुस्तां सभां ततः १७
भीष्मो द्रोणः कृपश्चैव विदुरश्च महामतिः
नातीवप्रीतमनसस्तेऽन्ववर्तन्त भारत १८
ते द्वंद्वशः पृथक्चैव सिंहग्रीवा महौजसः
सिंहासनानि भूरीणि विचित्राणि च भेजिरे १९
शुशुभे सा सभा राजन्राजभिस्तैः समागतैः
देवैरिव महाभागैः समवेतैस्त्रिविष्टपम् २०
सर्वे वेदविदः शूराः सर्वे भास्वरमूर्तयः
प्रावर्तत महाराज सुहृद्द्यूतमनन्तरम् २१
युधिष्ठिर उवाच
अयं बहुधनो राजन्सागरावर्तसंभवः
मणिर्हारोत्तरः श्रीमान्कनकोत्तमभूषणः २२
एतद्राजन्धनं मह्यं प्रतिपाणस्तु कस्तव
भवत्वेष क्रमस्तात जयाम्येनं दुरोदरम् २३
दुर्योधन उवाच
सन्ति मे मणयश्चैव धनानि विविधानि च
मत्सरश्च न मेऽथेषु जयाम्येनं दुरोदरम् २४
वैशम्पायन उवाच
ततो जग्राह शकुनिस्तानक्षानक्षतत्त्ववित्
जितमित्येव शकुनिर्युधिष्ठिरमभाषत २५
इति श्रीमहाभारते सभापर्वणि त्रिपञ्चाशोऽध्यायः ५३

## चतुः पञ्चाशोऽध्यायः

युधिष्ठिर उवाच
मत्तः कैतवकेनैव यज्जितोऽस्मि दुरोदरम्
शकुने हन्त दीव्यामो ग्लहमानाः सहस्रशः १
इमे निष्कसहस्रस्य कुण्डिनो भरिताः शतम्
कोशो हिरण्यमक्षय्यं जातरूपमनेकशः
एतद्राजन्धनं मह्यं तेन दीव्याम्यहं त्वया २
वैशम्पायन उवाच

इत्युक्तः शकुनिः प्राह जितमित्येव तं नृपम् ३
युधिष्ठिर उवाच
अयं सहस्रसमितो वैयाघ्रः सुप्रवर्तितः
सुचक्रोपस्करः श्रीमान्किङ्किणीजालमण्डितः ४
संह्लादनो राजरथो य इहास्मानुपावहत्
जैत्रो रथवरः पुण्यो मेघसागरनिःस्वनः ५
अष्टौ यं कुररच्छायाः सदश्वा राष्ट्रसंमताः
वहन्ति नैषामुच्येत पदा भूमिमुपस्पृशन्
एतद्राजन्धनं मह्यं तेन दीव्याम्यहं त्वया ६
वैशम्पायन उवाच
एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ७
युधिष्ठिर उवाच
सहस्रसंख्या नागा मे मत्तास्तिष्ठन्ति सौबल
हेमकक्षाः कृतापीडाः पद्मिनो हेममालिनः ८
सुदान्ता राजवहनाः सर्वशब्दक्षमा युधि
ईषादन्ता महाकायाः सर्वे चाष्टकरेणवः ९
सर्वे च पुरभेत्तारो नगमेघनिभा गजाः
एतद्राजन्धनं मह्यं तेन दीव्याम्यहं त्वया १०
वैशम्पायन उवाच
तमेवंवादिनं पार्थं प्रहसन्निव सौबलः
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ११
युधिष्ठिर उवाच
शतं दासीसहस्राणि तरुण्यो मे प्रभद्रिकाः
कम्बुकेयूरधारिण्यो निष्ककण्ठ्यः स्वलंकृताः १२
महार्हमाल्याभरणाः सुवस्त्राश्चन्दनोक्षिताः
मणीन्हेम च बिभ्रत्यः सर्वा वै सूक्ष्मवाससः १३
अनुसेवां चरन्तीमाः कुशला नृत्यसामसु
स्नातकानाममात्यानां राज्ञां च मम शासनात्
एतद्राजन्धनं मह्यं तेन दीव्याम्यहं त्वया १४

वैशम्पायन उवाच
एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः
जितमित्येव शकुनिर्युधिष्ठिरमभाषत १५
युधिष्ठिर उवाच
एतावन्त्येव दासानां सहस्राण्युत सन्ति मे
प्रदक्षिणानुलोमाश्च प्रावारवसनाः सदा १६
प्राज्ञा मेधाविनो दक्षा युवानो मृष्टकुण्डलाः
पात्रीहस्ता दिवारात्रमतिथीन्भोजयन्त्युत
एतद्राजन्धनं मह्यं तेन दीव्याम्यहं त्वया १७
वैशम्पायन उवाच
एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः
जितमित्येव शकुनिर्युधिष्ठिरमभाषत १८
युधिष्ठिर उवाच
रथास्तावन्त एवेमे हेमभाण्डाः पताकिनः
हयैर्विनीतैः संपन्ना रथिभिश्चित्रयोधिभिः १९
एकैको यत्र लभते सहस्रपरमां भृतिम्
युध्यतोऽयुध्यतो वापि वेतनं मासकालिकम्
एतद्राजन्धनं मह्यं तेन दीव्याम्यहं त्वया २०
वैशम्पायन उवाच
इत्येवमुक्ते पार्थेन कृतवैरो दुरात्मवान्
जितमित्येव शकुनिर्युधिष्ठिरमभाषत २१
युधिष्ठिर उवाच
अश्वांस्तित्तिरि कल्माषान्गान्धर्वान्हेममालिनः
ददौ चित्ररथस्तुष्टो यांस्तान्गाण्डीवधन्वने
एतद्राजन्धनं मह्यं तेन दीव्याम्यहं त्वया २२
वैशम्पायन उवाच
एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः
जितमित्येव शकुनिर्युधिष्ठिरमभाषत २३
युधिष्ठिर उवाच
रथानां शकटानां च हयानां चायुतानि मे

युक्तानामेव तिष्ठन्ति वाहैरुच्चावचैर्वृताः २४
एवं वर्णस्य वर्णस्य समुच्चीय सहस्त्रशः
क्षीरं पिबन्तस्तिष्ठन्ति भुञ्जानाः शालितण्डुलान् २५
षष्टिस्तानि सहस्राणि सर्वे पृथुलवक्षसः
एतद्राजन्धनं मह्यं तेन दीव्याम्यहं त्वया २६
वैशम्पायन उवाच
एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः
जितमित्येव शकुनिर्युधिष्ठिरमभाषत २७
युधिष्ठिर उवाच
ताम्रलोहैः परिवृता निधयो ये चतुःशताः
पञ्चद्रौणिक एकैकः सुवर्णस्याहतस्य वै
एतद्राजन्धनं मह्यं तेन दीव्याम्यहं त्वया २८
वैशम्पायन उवाच
एतच्छ्रुत्वा व्यवसितो निकृतं समुपाश्रितः
जितमित्येव शकुनिर्युधिष्ठिरमभाषत २९
इति श्रीमहाभारते सभापर्वणि चतुःपञ्चाशोऽध्यायः ५४

पञ्चपञ्चाशोऽध्यायः

विदुर उवाच
महाराज विजानीहि यत्त्वां वक्ष्यामि तच्छृणु
मुमूर्षोरौषधमिव न रोचेतापि ते श्रुतम् १
यद्वै पुरा जातमात्रो रुराव गोमायुवद्विस्वरं पापचेताः
दुर्योधनो भारतानां कुलघ्नः सोऽय युक्तो भविता कालहेतुः २
गृहे वसन्तं गोमायुं त्वं वै मत्वा न बुध्यसे
दुर्योधनस्य रूपेण शृणु काव्यां गिरं मम ३
मधु वै माध्विको लब्ध्वा प्रपातं नावबुध्यते
आरुह्य तं मज्जति वा पतनं वाधिगच्छति ४
सोऽय मत्तोऽक्षदेवेन मधुवन्न परीक्षते
प्रपातं बुध्यते नैव वैरं कृत्वा महारथैः ५
विदितं ते महाराज राजस्वेवासमञ्जसम्

अन्धका यादवा भोजाः समेताः कंसमत्यजन् ६
नियोगाच्च हते तस्मिन्कृष्णेनामित्रघातिना
एवं ते ज्ञातयः सर्वे मोदमानाः शतं समाः ७
त्वन्नियुक्तः सव्यसाची निगृह्णातु सुयोधनम्
निग्रहादस्य पापस्य मोदन्तां कुरवः सुखम् ८
काकेनेमांश्चित्र बर्हाञ्शार्दूलान्क्रोष्टुकेन च
क्रीणीष्व पाण्डवान्राजन्मा मज्जीः शोकसागरे ९
त्यजेत्कुलार्थे पुरुषं ग्रामस्यार्थे कुलं त्यजेत्
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् १०
सर्वज्ञः सर्वभावज्ञः सर्वशत्रुभयंकरः
इति स्म भाषते काव्यो जम्भत्यागे महासुरान् ११
हिरण्यष्ठीविनः कश्चित्पक्षिणो वनगोचरान्
गृहे किल कृतावासाँल्लोभाद्राजन्नपीडयत् १२
सदोपभोज्याँल्लोभान्धो हिरण्यार्थे परन्तप
आयतिं च तदात्वं च उभे सद्यो व्यनाशयत् १३
तदात्वकामः पाण्डूंस्त्वं मा द्रुहो भरतर्षभ
मोहात्मा तप्यसे पश्चात्पक्षिहा पुरुषो यथा १४
जातं जातं पाण्डवेभ्यः पुष्पमादत्स्व भारत
मालाकारइवारामे स्नेहं कुर्वन्पुनः पुनः १५
वृक्षानङ्गारकारीव मैनान्धाक्षीः समूलकान्
मा गमः ससुतामात्यःसबलश्च पराभवम् १६
समवेतान्हि कः पार्थान्प्रतियुध्येत भारत
मरुद्भिः सहितो राजन्नपि साक्षान्मरुत्पतिः १७
इति श्रीमहाभारते सभापर्वणि पञ्चपञ्चाशोऽध्यायः ५५

## षट् पञ्चाशोऽध्यायः

विदुर उवाच
द्यूतं मूलं कलहस्यानुपाति मिथोभेदाय महते वा रणाय
यदास्थितोऽय धृतराष्ट्रस्य पुत्रो दुर्योधनः सृजते वैरमुग्रम् १
प्रातिपीयाः शान्तनवा भैमसेनाः सबाह्लिकाः

दुर्योधनापराधेन कृच्छ्रं प्राप्स्यन्ति सर्वशः २
दुर्योधनो मदेनैव क्षेमं राष्ट्रादपोहति
विषाणं गौरिव मदात्स्वयमारुजते बलात् ३
यश्चित्तमन्वेति परस्य राजन्वीरः कविः स्वामतिपत्य दृष्टिम्
नावं समुद्र इव बालनेत्रामारुह्य घोरे व्यसने निमज्जेत् ४
दुर्योधनो ग्लहते पाण्डवेन प्रियायसे त्वं जयतीति तच्च
अतिनर्माज्जायते संप्रहारो यतो विनाशः समुपैति पुंसाम् ५
आकर्षस्तेऽवाक्फलः कुप्रणीतो हृदि प्रौढो मन्त्रपदः समाधिः
युधिष्ठिरेण सफलः संस्तवोऽस्तु साम्नः सुरिक्तोऽरिमतेः सुधन्वा ६
प्रातिपीयाः शान्तनवाश्च राजन्काव्यां वाचं शृणुत मात्यगाद्वः
वैश्वानरं प्रज्वलितं सुघोरमयुद्धेन प्रशमयतोत्पतन्तम् ७
यदा मन्युं पाण्डवोऽजातशत्रुर्न संयच्छेदक्षमयाभिभूतः
वृकोदरः सव्यसाची यमौ च कोऽत्र द्वीपः स्यात्तुमुले वस्तदानीम् ८
महाराज प्रभवस्त्वं धनानां पुरा द्यूतान्मनसा यावदिच्छेः
बहु वित्तं पाण्डवांश्चेज्जयेस्त्वं किं तेन स्याद्वसु विन्देह पार्थान् ९
जानीमहे देवितं सौबलस्य वेद द्यूते निकृतिं पार्वतीयः
यतः प्राप्तः शकुनिस्तत्र यातु मायायोधी भारत पार्वतीयः १०
इति श्रीमहाभारते सभापर्वणि षट्पञ्चाशोऽध्यायः ५६

सप्त पञ्चाशोऽध्यायः

दुर्योधन उवाच
परेषामेव यशसा श्लाघसे त्वं सदा छन्नः कुत्सयन्धार्तराष्ट्रान्
जानीमस्त्वां विदुर यत्प्रियस्त्वं बालानिवास्मानवमन्यसे त्वम् १
सुविज्ञेयः पुरुषोऽन्यत्रकामो निन्दाप्रशंशे हि तथा युनक्ति
जिह्वा मनस्ते हृदयं निर्व्यनक्ति ज्यायो निराह मनसः प्रातिकूल्यम् २
उत्सङ्गेन व्याल इवाहृतोऽसि मार्जारवत्पोषकं चोपहंसि
भर्तृघ्नत्वान्न हि पापीय आहुस्तस्मात्क्षत्तः किं न बिभेषि पापात् ३
जित्वा शत्रून्फलमाप्तं महन्नो मास्मान्क्षत्तः परुषाणीह वोचः
द्विषद्भिस्त्वं संप्रयोगाभिनन्दी मुहुर्द्वेषं यासि नः संप्रमोहात् ४
अमित्रतां याति नरोऽक्षमं ब्रुवन्निगूहते गुह्यममित्रसंस्तवे

तदाश्रितापत्रपा किं न बाधते यदिच्छसि त्वं तदिहाद्य भाषसे ५
मा नोऽवमंस्था विद्म मनस्तवेदं शिक्षस्व बुद्धिं स्थविराणां सकाशात्
यशो रक्षस्व विदुर संप्रणीतं मा व्यापृतः परकार्येषु भूस्त्वम् ६
अहं कर्तेति विदुर मावमंस्था मा नो नित्यं परुषाणीह वोचः
न त्वां पृच्छामि विदुर यद्धितं मे स्वस्ति क्षत्तर्मा तितिक्षून्क्षिणु त्वम् ७
एकः शास्ता न द्वितीयोऽस्ति शास्ता गर्भे शयानं पुरुषं शास्ति शास्ता
तेनानुशिष्टः प्रवणादिवाम्भो यथा नियुक्तोऽस्मि तथा वहामि ८
भिनत्ति शिरसा शैलमहिं भोजयते च यः
स एव तस्य कुरुते कार्याणामनुशासनम् ९
यो बलादनुशास्तीह सोऽमित्रं तेन विन्दति
मित्रतामनुवृत्तं तु समुपेक्षेत पण्डितः १०
प्रदीप्य यः प्रदीप्ताग्निं प्राक्त्वरन्नाभिधावति
भस्मापि न स विन्देत शिष्टं क्वचन भारत ११
न वासयेत्पारवर्ग्यं द्विषन्तं विशेषतः क्षत्तरहितं मनुष्यम्
स यत्रेच्छसि विदुर तत्र गच्छ सुसान्त्वितापि ह्यसती स्त्री जहाति १२
विदुर उवाच
एतावता ये पुरुषं त्यजन्ति तेषां सख्यमन्तवद्ब्रूहि राजन्
राज्ञां हि चित्तानि परिप्लुतानि सान्त्वं दत्त्वा मुसलैर्घातयन्ति १३
अबालस्त्वं मन्यसे राजपुत्र बालोऽहमित्येव सुमन्दबुद्धे
यः सौहृदे पुरुषं स्थापयित्वा पश्चादेनं दूषयते स बालः १४
न श्रेयसे नीयते मन्दबुद्धिः स्त्री श्रोत्रियस्येव गृहे प्रदुष्टा
ध्रुवं न रोचेद्भरतर्षभस्य पतिः कुमार्या इव षष्टिवर्षः १५
अनुप्रियं चेदनुकाङ्क्षसे त्वं सर्वेषु कार्येसु हिताहितेषु
स्त्रियश्च राजञ्जडपङ्गुकांश्च पृच्छ त्वं वै तादृशांश्चैव मूढान् १६
लभ्यः खलु प्रातिपीय नरोऽनुप्रियवागिह
अप्रियस्य तु पथ्यस्य वक्ता श्रोता च दुर्लभः १७
यस्तु धर्मे पराश्वस्य हित्वा भर्तुः प्रियाप्रिये
अप्रियाण्याह पथ्यानि तेन राजा सहायवान् १८
अव्याधिजं कटुकं तीक्ष्णमुष्णं यशोमुषं परुषं पूतिगन्धि
सतां पेयं यन्नपिबन्त्यसन्तो मन्युं महाराज पिब प्रशाम्य १९

वैचित्रवीर्यस्य यशो धनं च वाञ्छाम्यहं सहपुत्रस्य शश्वत्
यथा तथा वोऽस्तु नमश्च वोऽस्तु ममापि च स्वस्ति दिशन्तु विप्राः २०
आशीविषान्नेत्रविषान्कोपयेन्न तु पण्डितः
एवं तेऽह वदामीदं प्रयतः कुरुनन्दन २१
इति श्रीमहाभारते सभापर्वणि सप्तपञ्चाशोऽध्यायः ५७

अष्टपञ्चाशोऽध्यायः

शकुनिरुवाच
बहु वित्तं पराजैषीः पाण्डवानां युधिष्ठिर
आचक्ष्व वित्तं कौन्तेय यदि तेऽस्त्यपराजितम् १
युधिष्ठिर उवाच
मम वित्तमसंख्येयं यदहं वेद सौबल
अथ त्वं शकुने कस्माद्वित्तं समनुपृच्छसि २
अयुतं प्रयुतं चैव खर्वं पद्मं तथार्बुदम्
शंखं चैव निखर्वं च समुद्रं चात्र पण्यताम्
एतन्मम धनं राजंस्तेन दीव्याम्यहं त्वया ३
वैशम्पायन उवाच
एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ४
युधिष्ठिर उवाच
गवाश्वं बहुधेनूकमसंख्येयमजाविकम्
यत्किंचिदनुवर्णानां प्राक्सिन्धोरपि सौबल
एतन्मम धनंराजंस्तेन दीव्याम्यहं त्वया ५
वैशम्पायन उवाच
एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ६
युधिष्ठिर उवाच
पुरं जनपदो भूमिरब्राह्मणधनैः सह
अब्राह्मणाश्च पुरुषा राजञ्शिष्टं धनं मम
एतद्राजन्धनं मह्यं तेन दीव्याम्यहं त्वया ७

वैशम्पायन उवाच
एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ८
युधिष्ठिर उवाच
राजपुत्रा इमे राजञ्शोभन्ते येन भूषिताः
कुण्डलानि च निष्काश्च सर्वं चाङ्गविभूषणम्
एतन्मम धनं राजंस्तेन दीव्याम्यहं त्वया ९
वैशम्पायन उवाच
एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः
जितमित्येव शकुनिर्युधिष्ठिरमभाषत १०
युधिष्ठिर उवाच
श्यामो युवा लोहिताक्षः सिंहस्कन्धो महाभुजः
नकुलो ग्लह एको मे यच्चैतत्स्वगतं धनम् ११
शकुनिरुवाच
प्रियस्ते नकुलो राजन्राजपुत्रो युधिष्ठिर
अस्माकं धनतां प्राप्तो भूयस्त्वं केन दीव्यसि १२
वैशम्पायन उवाच
एवमुक्त्वा तु शकुनिस्तानक्षान्प्रत्यपद्यत
जितमित्येव शकुनिर्युधिष्ठिरमभाषत १३
युधिष्ठिर उवाच
अयं धर्मान्सहदेवोऽनुशास्ति लोके ह्यस्मिन्पण्डिताख्यां गतश्च
अनर्हता राजपुत्रेण तेन त्वया दीव्याम्यप्रियवत्प्रियेण १४
वैशम्पायन उवाच
एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः
जितमित्येव शकुनिर्युधिष्ठिरमभाषत १५
शकुनिरुवाच
माद्रीपुत्रौ प्रियौ राजंस्तवेमौ विजितौ मया
गरीयांसौ तु ते मन्ये भीमसेनधनञ्जयौ १६
युधिष्ठिर उवाच
अधर्मं चरसे नूनं यो नावेक्षसि वै नयम्

योनः सुमनसां मूढ विभेदं कर्तुमिच्छसि १७
शकुनिरुवाच
गर्ते मत्तः प्रपतति प्रमत्तः स्थाणुमृच्छति
ज्येष्ठो राजन्वरिष्ठोऽसि नमस्ते भरतर्षभ १८
स्वप्ने न तानि पश्यन्ति जाग्रतो वा युधिष्ठिर
कितवा यानि दीव्यन्तः प्रलपन्त्युत्कटा इव १९
युधिष्ठिर उवाच
यो नः संख्ये नौरिव पारनेता जेता रिपूणां राजपुत्रस्तरस्वी
अनर्हता लोकवीरेण तेन दीव्याम्यहं शकुने फल्गुनेन २०
वैशम्पायन उवाच
एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः
जितमित्येव शकुनिर्युधिष्ठिरमभाषत २१
शकुनिरुवाच
अयं मया पाण्डवानां धनुर्धरः पराजितः पाण्डवः सव्यसाची
भीमेन राजन्दयितेन दीव्य यत्कैतव्यं पाण्डव तेऽवशिष्टम् २२
युधिष्ठिर उवाच
यो नो नेता यो युधां नः प्रणेता यथा वज्री दानवशत्रुरेकः
तिर्यग्प्रेक्षी संहतभ्रूर्महात्मा सिंहस्कन्धो यश्च सदात्यमर्षी २३
बलेन तुल्यो यस्य पुमान्न विद्यते गदाभृतामग्र्य इहारिमर्दनः
अनर्हता राजपुत्रेण तेन दीव्याम्यहं भीमसेनेन राजन् २४
वैशम्पायन उवाच
एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः
जितमित्येव शकुनिर्युधिष्ठिरभाषत २५
शकुनिरुवाच
बहु वित्तं पराजैषीर्भ्रातॄंश्च सहयद्विपान्
आचक्ष्व वित्तं कौन्तेय यदि तेऽस्त्वपराजितम् २६
युधिष्ठिर उवाच
अहं विशिष्टः सर्वेषां भ्रातॄणां दयितस्तथा
कुर्यामस्ते जिताः कर्म स्वयमात्मन्युपप्लवे २७
वैशम्पायन उवाच

एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः
जितमित्येव शकुनिर्युधिष्ठिरमभाषत २८
शकुनिरुवाच
एतत्पापिष्ठमकरोर्यदात्मानं पराजितः
शिष्टे सति धने राजन्पाप आत्मपराजयः २९
वैशम्पायन उवाच
एवमुक्त्वा मताक्षस्तान्ग्लहे सर्वानवस्थितान्
पराजयल्लोकवीरानाक्षेपेण पृथक्पृथक् ३०
शकुनिरुवाच
अस्ति वै ते प्रिया देवी ग्लह एकोऽपराजितः
पणस्व कृष्णां पञ्चालीं तयात्मानं पुनर्जय ३१
युधिष्ठिर उवाच
नैव ह्रस्वा न महती नातिकृष्णा न रोहिणी
सरागरक्तनेत्रा च तया दीव्याम्यहं त्वया ३२
शारदोत्पलपत्राक्ष्या शारदोत्पलगन्धया
शारदोत्पलसेविन्या रूपेण श्रीसमानया ३३
तथैव स्यादानृशंस्यात्तथा स्याद्रूपसंपदा
तथा स्याच्छीलसंपत्त्या यामिच्छेत्पुरुषः स्त्रियम् ३४
चरमं संविशति या प्रथमं प्रतिबुध्यते
आ गोपालाविपालेभ्यः सर्वं वेद कृताकृतम् ३५
आभाति पद्मवद्वक्त्रं सस्वेदं मल्लिकेव च
वेदीमध्या दीर्घकेशी ताम्राक्षी नातिरोमशा ३६
तयैवंविधया राजन्पाञ्चाल्याहं सुमध्यया
ग्लहं दीव्यामि चार्वङ्ग्या द्रौपद्या हन्त सौबल ३७
वैशम्पायन उवाच
एममुक्ते तु वचने धर्मराजेन भारत
धिग्धिगित्येव वृद्धानां सभ्यानां निःसृता गिरः ३८
चुक्षुभे सा सभा राजन्राज्ञां संजज्ञिरे कथाः
भीष्मद्रोणकृपादीनां स्वेदश्च समजायत ३९
शिरो गृहीत्वा विदुरो गतसत्व इवाभवत्

आस्ते ध्यायन्नधोवक्त्रो निःश्वसन्पन्नगो यथा ४०
धृतराष्ट्रस्तु संहृष्टः पर्यपृच्छत्पुनः पुनः
किं जितं किं जितमिति ह्याकारं नाभ्यरक्षत ४१
जहर्ष कर्णोऽतिभृशं सह दुःशासनादिभिः
इतरेषां तु सभ्यानां नेत्रेभ्यः प्रापतज्जलम् ४२
सौबलस्त्वविचार्यैव जितकाशी मदोत्कटः
जितमित्येव तानक्षान्पुनरेवान्वपद्यत ४३
इति महाभारते सभापर्वणि अष्टपञ्चाशोऽध्यायः ५८

एकोनषष्ठितमोऽध्यायः

दुर्योधन उवाच
एहि क्षत्तर्द्रौपदीमानयस्व प्रियां भार्यां संमतां पाण्डवानाम्
संमार्जतां वेश्म परैतु शीघ्रमानन्दो नः सह दासीभिरस्तु १
विदुर उवाच
दुर्विभाव्यं भवति त्वादृशेन न मन्द संबुध्यसि पाशबद्धः
प्रपाते त्वं लम्बमानो न वेत्सि व्याघ्रान्मृगः कोपयसेऽतिबाल्यात् २
आशीविषाः शिरसि ते पूर्णकोशा महाविषाः
मा कोपिष्ठाः सुमन्दात्मन्मा गमस्त्वं यमक्षयम् ३
न हि दासीत्वमापन्ना कृष्णा भवति भारत
अनीशेन हि राज्ञैषा पणे न्यस्तेऽति मे मतिः ४
अयं धत्ते वेणुरिवात्मघाती फलं राजा धृतराष्ट्रस्य पुत्रः
द्यूतं हि वैराय महाभयाय पक्वो न बुध्यत्ययमन्तकाले ५
नारुंतुदः स्यान्न नृशंसवादी न हीनतः परमभ्याददीत
ययास्य वाचा पर उद्विजेत न तां वदेद्रुशतीं पापलोक्याम् ६
समुच्चरन्त्यतिवादा हि वक्त्राद्यैराहतः शोचति रात्र्यहानि
परस्य नामर्मसु ते पतन्ति तान्पण्डितो नावसृजेत्परेषु ७
अजो हि शस्त्रमखनत्किलैकः शस्त्रे विपन्ने पद्भिरपास्य भूमिम्
निकृन्तनं स्वस्य कण्ठस्य घोरं तद्वद्वैरं मा खनीः पाण्डुपुत्रैः ८
न किंचिदीड्यं प्रवदन्ति पापं वनेचरं वा गृहमेधिनं वा
तपस्विनं संपरिपूर्णविद्यं भषन्ति हैवं श्वनराः सदैव ९

द्वारं सुघोरं नरकस्य जिह्मं न बुध्यसे धृतराष्ट्रस्य पुत्र
त्वामन्वेतारो बहवः कुरूणां द्यूतोदये सह दुःशासनेन १०
मज्जन्त्यलाबूनि शिलाः प्लवन्ते मुह्यन्ति नावोऽम्भसि शश्वदेव
मूढो राजा धृतराष्ट्रस्य पुत्रो न मे वाचः पथ्यरूपाः शृणोति ११
अन्तो नूनं भवितायं कुरूणां सुदारुणः सर्वहरो विनाशः
वाचः काव्याः सुहृदां पथ्यरूपा न श्रूयन्ते वर्धते लोभ एव १२
इति श्रीमहाभारते सभावर्पणि एकोनषष्टितमोऽध्यायः ५९

## षष्टितमोऽध्यायः

वैशम्पायन उवाच
धिगस्तु क्षत्तारमिति ब्रुवाणो दर्पेण मत्तो धृतराष्ट्रस्य पुत्रः
अवैक्षत प्रातिकामीं सभायामुवाच चैनं परमार्यमध्ये १
त्वं प्रातिकामिन्द्रौपदीमानयस्व न ते भयं विद्यते पाण्डवेभ्यः
क्षत्ता ह्ययं विवदत्येव भीरुर्न चास्माकं वृद्धिकामः सदैव २
एवमुक्तः प्रातिकामी स सूतः प्रायाच्छीघ्रं राजवचो निशम्य
प्रविश्य च श्वेव स सिंहगोष्ठं समासदन्महिषीं पाण्डवानाम् ३
प्रातिकाम्युवाच
युधिष्ठिरे द्यूतमदेन मत्ते दुर्योधनो द्रौपदि त्वामजैषीत्
सा प्रपद्य त्वं धृतराष्ट्रस्य वेश्म नयामि त्वां कर्मणे याज्ञसेनि ४
द्रौपद्युवाच
कथं त्वेवं वदसि प्रातिकामिन्को हि दीव्येद्भार्यया राजपुत्रः
मूढो राजा द्यूतमदेन मत्त आहो नान्यत्कैतवमस्य किंचित् ५
प्रातिकाम्युवाच
यदा नाभूत्कैतवमन्यदस्य तदादेवीत्पाण्डवोऽजातशत्रुः
न्यस्ताः पूर्वं भ्रातरस्तेन राज्ञा स्वयं चात्मा त्वमथो राजपुत्रि ६
द्रौपद्युवाच
गच्छ त्वं कितवं गत्वा सभायां पृच्छ सूतज
किं नु पूर्वं पराजैषीरात्मानं मां नु भारत
एतज्ज्ञात्वा त्वमागच्छ ततो मां नय सूतज ७
वैशम्पायन उवाच

सभां गत्वा स चोवाच द्रौपद्यास्तद्वचस्तदा
कस्येशो नः पराजैषीरिति त्वामाह द्रौपदी
किं नु पूर्वं पराजैषीरात्मानमथ वापि माम् ८
युधिष्ठिरस्तु निश्चेष्टो गतसत्त्व इवाभवत्
न तं सूतं प्रत्युवाच वचनं साध्वसाधु वा ९
दुर्योधन उवाच
इहैत्य कृष्णा पाञ्चाली प्रश्नमेतं प्रभाषताम्
इहैव सर्वे शृरावन्तु तस्या अस्य च यद्वचः १०
वैशम्पायन उवाच
स गत्वा राजभवनं दुर्योधनवशानुगः
उवाच द्रौपदीं सूतः प्रातिकामी व्यथन्निव ११
सभ्यास्त्वमी राजपुत्र्याह्वयन्ति मन्ये प्राप्तः संक्षयः कौरवाणाम्
न वै समृद्धिं पालयते लघीयान्यत्त्वं सभामेष्यसि राजपुत्रि १२
द्रौपद्युवाच
एवं नूनं व्यदधात्संविधाता स्पर्शाबुभौ स्पृशतो धीरबालौ
धर्मं त्वेकं परमं प्राह लोके स नः शमं धास्यति गोप्यमानः १३
वैशम्पायन उवाच
युधिष्ठिरस्तु तच्छ्रुत्वा दुर्योधनचिकीर्षितम्
द्रौपद्याः संमतं दूतं प्राहिणोद्भरतर्षभ १४
एकवस्त्रा अधोनीवी रोदमाना रजस्वला
सभामागम्य पाञ्चाली श्वशुरस्याग्रतोऽभवत् १५
ततस्तेषां मुखमालोक्य राजा दुर्योधनः सूतमुवाच हृष्टः
इहैवैतामानय प्रातिकामिन्प्रत्यक्षमस्याः कुरवो ब्रुवन्तु १६
ततः सूतस्तस्य वशानुगामी भीतश्च कोपाद्द्रुपदात्मजायाः
विहाय मानं पुनरेव सभ्यानुवाच कृष्णां किमहं ब्रवीमि १७
दुर्योधन उवाच
दुःशासनैष मम सूतपुत्रो वृकोदरादुद्विजतेऽल्पचेताः
स्वयं प्रगृह्यानय याज्ञसेनीं किं ते करिष्यन्त्यवशाः सपत्नाः १८
ततः समुत्थाय स राजपुत्रः श्रुत्वा भ्रातुः कोपविरक्तदृष्टिः
प्रविश्य तद्वेश्म महारथानामित्यब्रवीद्द्रौपदीं राजपुत्रीम् १९

एह्येहि पाञ्चालि जितासि कृष्णे दुर्योधनं पश्य विमुक्तलज्जा
कुरून्भजस्वायतपद्मनेत्रे धर्मेण लब्धासि सभां परैहि २०
ततः समुत्थाय सुदुर्मनाः सा विवर्णमामृज्य मुखं करेण
आर्ता प्रदुद्राव यतः स्त्रियस्ता वृद्धस्य राज्ञः कुरुपुङ्गवस्य २१
ततो जवेनाभिससार रोषाद्दुःशासनस्तामभिगर्जमानः
दीर्घेषु नीलेष्वथ चोर्मिमत्सु जग्राह केशेषु नरेन्द्रपत्नीम् २२
ये राजसूयावभृथे जलेन महाक्रतौ मन्त्रपूतेन सिक्ताः
ते पाण्डवानां परिभूय वीर्यं बलात्प्रमृष्टा धृतराष्ट्रजेन २३
स तां परामृश्य सभासमीपमानीय कृष्णामतिकृष्णकेशीम्
दुःशासनो नाथवतीमनाथवच्चकर्ष वायुः कदलीमिवार्ताम् २४
सा कृष्यमाणा नमिताङ्गयष्टिः शनैरुवाचाद्य रजस्वलास्मि
एकं च वासो मम मन्दबुद्धे सभां नेतुं नार्हसि मामनार्य २५
ततोऽब्रवीत्तां प्रसभं निगृह्य केशेषु कृष्णेषु तदा स कृष्णाम्
कृष्णं च जिष्णुं च हरिं नरं च त्राणाय विक्रोश नयामि हि त्वाम् २६
रजस्वला वा भव याज्ञसेनि एकाम्बरा वाप्यथ वा विवस्त्रा
द्यूते जिता चासि कृतासि दासी दासीषु कामश्च यथोपजोषम् २७
प्रकीर्णकेशी पतितार्धवस्त्रा दुःशासनेन व्यवधूयमाना
ह्रीमत्यमर्षेण च दह्यमाना शनैरिदं वाक्यमुवाच कृष्णा २८
इमे सभायामुपदिष्टशास्त्राः क्रियावन्तः सर्व एवेन्द्रकल्पाः
गुरुस्थाना गुरवश्चैव सर्वे तेषामग्रे नोत्सहे स्थातुमेवम् २९
नृशंसकर्मंस्त्वमनार्यवृत्त मा मां विवस्त्रां कुरु मा विकार्षीः
न मर्षयेयुस्तव राजपुत्राः सेन्द्रापि देवा यदि ते सहायाः ३०
धर्मे स्थितो धर्मसुतश्च राजा धर्मश्च सूक्ष्मो निपुणोपलभ्यः
वाचापि भर्तुः परमाणुमात्रं नेच्छामि दोषं स्वगुणान्विसृज्य ३१
इदं त्वनार्यं कुरुवीरमध्ये रजस्वलां यत्परिकर्षसे माम्
न चापि कश्चित्कुरुतेऽत्र पूजां ध्रुवं तवेदं मतमन्वपद्यन् ३२
धिगस्तु नष्टः खलु भारतानां धर्मस्तथा क्षत्रविदां च वृत्तम्
यत्राभ्यतीतां कुरुधर्मवेलां प्रेक्षन्ति सर्वे कुरवः सभायाम् ३३
द्रोणस्य भीष्मस्य च नास्ति सत्त्वं ध्रुवं तथैवास्य महात्मनोऽपि
राज्ञस्तथा हीममधर्ममुग्रं न लक्षयन्ते कुरुवृद्धमुख्याः ३४

तथा बुवन्ती करुणं सुमध्यमा काद्मेण भर्तॄन्कुपितानपश्यत्
सा पाण्डवान्कोपपरीतदेहान्संदीपयामास कटाक्षपातैः ३५
हृतेन राज्येन तथा धनेन रत्नैश्च मुख्यैर्न तथा बभूव
यथार्तया कोपसमीरितेन कृष्णाकटाक्षेण बभूव दुःखम् ३६
दुःशासनश्चापि समीक्ष्य कृष्णामवेक्षमाणां कृपणान्पतींस्तान्
आधूय वेगेन विसंज्ञकल्पामुवाच दासीति हसन्निवोग्रः ३७
कर्णस्तु तद्वाक्यमतीव हृष्टः संपूजयामास हसन्सशब्दम्
गान्धारराजः सुबलस्य पुत्रस्तथैव दुःशासन मभ्यनन्दत् ३८
सभ्यास्तु ये तत्र बभूवुरन्ये ताभ्यामृते धार्तराष्ट्रेणचैव
तेषामभूद्दुःखमतीव कृष्णां दृष्ट्वा सभायां परिकृष्यमाणाम् ३९
भीष्म उवाच
न धर्मसौक्ष्म्यात्सुभगे विवेक्तुं शक्नोमि ते प्रश्नमिमं यथावत्
अस्वो ह्यशक्तः पणितुं परस्वं स्त्रियश्च भर्तुर्वशतां समीक्ष्य ४०
त्यजेत सर्वां पृथिवींसमृद्धां युधिष्ठिरः सत्यमथो न जह्यात्
उक्तं जितोऽस्मीति च पाण्डवेन तस्मान्न शक्नोमि विवेक्तुमेतत् ४१
द्यूतेऽद्वितीयः शकुनिर्नरेषु कुन्तीसुतस्तेन निसृष्टकामः
न मन्यते तां निकृतिं महात्मा तस्मान्न ते प्रश्नमिमं ब्रवीमि ४२
द्रौपद्युवाच
आहूय राजा कुशलैः सभायां दुष्टात्मभिर्नैकृतिकैरनार्यैः
द्यूतप्रियैर्नातिकृतप्रयत्नः कस्मादयं नाम निसृष्टकामः ४३
स शुद्धभावो निकृतिप्रवृत्तिमबुध्यमानः कुरुपाण्डवाग्र्यः
संभूय सर्वैश्च जितोऽपि यस्मात्पश्चाच्च यत्कैतवमभ्युपेतः ४४
तिष्ठन्ति चेमे कुरवः सभायामीशाः सुतानां च तथास्नुषाणाम्
समीक्ष्य सर्वे मम चापि वाक्यं विब्रूत मे प्रश्नमिमं यथावत् ४५
वैशम्पायन उवाच
तथा ब्रुवन्तीं करुणं रुदन्तीमवेक्षमाणामसकृत्पतींस्तान्
दुःशासनः परुषाण्यप्रियाणि वाक्यान्युवाचामधुराणि चैव ४६
तां कृष्यमाणां च रजस्वलां च स्रस्तोत्तरीयामतदर्हमाणाम्
वृकोदरः प्रेक्ष्य युधिष्ठिरं च चकार कोपं परमार्तरूपः ४७
इति श्रीमहाभारते सभापर्वणि षष्टितमोऽध्यायः ६०

## एक षष्ठितमोऽध्यायः

भीम उवाच
भवन्ति देशे बन्धक्यः कितवानां युधिष्ठिर
न ताभिरुत दीव्यन्ति दया चैवास्ति तास्वपि १
काश्यो यद्बलिमाहार्षीद्द्रव्यं यच्चान्यदुत्तमम्
तथान्ये पृथिवीपाला यानि रत्नान्युपाहरन् २
वाहनानि धनं चैव कवचान्यायुधानि च
राज्यमात्मा वयं चैव कैतवेन हृतं परैः ३
न च मे तत्र कोपोऽभूत्सर्वस्येशो हि नो भवान्
इदं त्वतिकृतं मन्ये द्रौपदी यत्र पणयते ४
एषा ह्यनर्हती बाला पाण्डवान्प्राप्य कौरवैः
त्वत्कृते क्लिश्यते क्षुद्रैर्नृशंसैर्निकृतिप्रियैः ५
अस्याः कृते मन्युरयं त्वयि राजन्निपात्यते
बाहू ते संप्रधक्ष्यामि सहदेवाग्निमानय ६
अर्जुन उवाच
न पुरा भीमसेन त्वमीदृशीर्वदिता गिरः
परैस्ते नाशितं नूनं नृशंसैर्धर्मगौरवम् ७
न सकामाः परे कार्या धर्ममेवाचरोत्तमम्
भ्रातरं धार्मिकं ज्येष्ठं नातिक्रमितुमर्हति ८
आहूतो हि परै राजा क्षात्रधर्ममनुस्मरन्
दीव्यते परकामेन तन्नः कीर्तिकरंमहत् ९
भीमसेन उवाच
एवमस्मिकृतं विद्यां यदस्याह धनञ्जय
दीप्तेऽग्नौ सहितौबाहू निर्दहेयं बलादिव १०
वैशम्पायन उवाच
तथा तान्दुःखितान्दृष्ट्वा पाण्डवान्धृतराष्ट्रजः
क्लिश्यमानां च पाञ्चालद्यं विकर्ण इदमब्रवीत् ११
याज्ञसेन्या यदुक्तं तद्वाक्यं विब्रूत पार्थिवाः
अविवेकेन वाक्यस्य नरकः सद्य एव नः १२
भीष्मश्च धृतराष्ट्रश्च कुरुवृद्धतमावुभौ

समेत्य नाहतुः किंचिद्विदुरश्च महामतिः १३
भारद्वाजोऽपि सर्वेषामाचार्यः कृप एव च
अत एतावपि प्रश्नं नाहतुर्द्विजसत्तमौ १४
ये त्वन्ये पृथिवीपालाः समेताः सर्वतो दिशः
कामक्रोधौ समुत्सृज्य ते ब्रुवन्तु यथामति १५
यदिदं द्रौपदी वाक्यमुक्तवत्यसकृच्छुभा
विमृश्य कस्य कः पक्षः पार्थिवा वदतोत्तरम् १६
एवं स बहुशः सर्वानुक्तवांस्तान्सभासदः
न च ते पृथिवीपालास्तमूचुः साध्वसाधु वा १७
उक्त्वा तथासकृत्सर्वान्विकर्णः पृथिवीपतीन्
पाणिं पाणौ विनिष्पिष्य निःश्वसन्निदमब्रवीत् १८
विब्रूत पृथिवीपाला वाक्यं मा वा कथंचन
मन्ये न्याय्यं यदत्राहं तद्धि वक्ष्यामि कौरवाः १९
चत्वार्याहुर्नरश्रेष्ठा व्यसनानि महीक्षिताम्
मृगया पानमक्षांश्च ग्राम्ये चैवातिसक्तताम् २०
एतेषु हि नरः सक्तो धर्ममुत्सृज्य वर्तते
तथायुक्तेन च कृतां क्रियां लोको न मन्यते २१
तदयं पाण्डुपुत्रेण व्यसने वर्तता भृशम्
समाहूतेन कितवैरास्थितो द्रौपदीपणः २२
साधारणी च सर्वेषां पाण्डवानामनिन्दिता
जितेन पूर्वं चानेन पाण्डवेन कृतः पणः २३
इयं च कीर्तिता कृष्णा सौबलेन पणार्थिना
एतत्सर्वं विचार्याहं मन्ये न विजितामिमाम् २४
एतच्छ्रुत्वा महान्नादः सभ्यानामुदतिष्ठत
विकर्णं शंसमानानां सौबलं च विनिन्दताम् २५
तस्मिन्नुपरते शब्दे राधेयः क्रोधमूर्च्छितः
प्रगृह्य रुचिरं बाहुमिदं वचनमब्रवीत् २६
दृश्यन्ते वै विकर्णे हि वैकृतानि बहून्यपि
तज्जस्तस्य विनाशाय यथाग्निररणिप्रजः २७
एते न किंचिदप्याहुश्चोद्यमानापि कृष्णया

धर्मेण विजितां मन्ये मन्यन्ते द्रुपदात्मजाम् २८
त्वं तु केवलबाल्येन धार्तराष्ट्र विदीर्यसे
यद्ब्रवीषि सभामध्ये बालः स्थविरभाषितम् २९
न च धर्मं यथातत्त्वं वेत्सि दुर्योधनावरः
यद्ब्रवीषि जितां कृष्णामजितेति सुमन्दधीः ३०
कथं ह्यविजितां कृष्णां मन्यसे धृतराष्ट्रज
यदा सभायां सर्वस्वं न्यस्तवान्पाण्डवाग्रजः ३१
अभ्यन्तरा च सर्वस्वे द्रौपदी भरतर्षभ
एवं धर्मजितां कृष्णां मन्यसे न जितां कथम् ३२
कीर्तिता द्रौपदी वाचा अनुज्ञाता च पाण्डवैः
भवत्यविजिता केन हेतुनैषा मया तव ३३
मन्यसे वा सभामेतामानीतामेकवाससम्
अधर्मेणेति तत्रापि शृणु मे वाक्यमुत्तरम् ३४
एको भर्ता स्त्रिया देवैर्विहितः कुरुनन्दन
इयं त्वनेकवशगा बन्धकीति विनिश्चिता ३५
अस्याः सभामानयनं न चित्रमिति मे मतिः
एकाम्बरधरत्वं वाप्यथ वापि विवस्त्रता ३६
यच्चैषांद्रविणं किंचिद्या चैषा ये च पाण्डवाः
सौबलेनेह तत्सर्वं धर्मेण विजितं वसु ३७
दुःशासन सुबालोऽय विकर्णः प्राज्ञवादिकः
पाण्डवानां च वासांसि द्रौपद्याश्चाप्युपाहर ३८
तच्छ्रुत्वा पाण्डवाः सर्वे स्वानि वासांसि भारत
अवकीर्योत्तरीयाणि सभायां समुपाविशन् ३९
ततो दुःशासनो राजन्द्रौपद्या वसनं बलात्
सभामध्ये समाक्षिप्य व्यपाक्रष्टुं प्रचक्रमे ४०
आकृष्यमाणे वसने द्रौपद्यास्तु विशां पते
तद्रूपमपरं वस्त्रं प्रादुरासीदनेकशः ४१
ततो हलहलाशब्दस्तत्रासीद्घोरनिस्वनः
तदद्भुततमं लोके वीक्ष्य सर्वे महीक्षिताम् ४२
शशाप तत्र भीमस्तु राजमध्ये महास्वनः

क्रोधाद्विस्फुरमाणोष्ठो विनिष्पिष्य करे करम् ४३
इदं मे वाक्यमादद्ध्वं क्षत्रिया लोकवासिनः
नोक्तपूर्वं नरैरन्यैर्न चान्यो यद्वदिष्यति ४४
यद्येतदेवमुक्त्वा तु न कुर्यां पृथिवीश्वराः
पितामहानां सर्वैषां नाहं गतिमवाप्नुयाम् ४५
अस्य पापस्य दुर्जातेर्भारतापसदस्य च
न पिबेयं बलाद्वक्षो भित्त्वा चेद्रुधिरं युधि ४६
तस्य ते वचनं श्रुत्वा सर्वलोकप्रहर्षणम्
प्रचक्रुर्बहुलां पूजां कुत्सन्तो धृतराष्ट्रजम् ४७
यदा तु वाससां राशिः सभामध्ये समाचितः
ततो दुःशासनः श्रान्तो व्रीडितः समुपाविशत् ४८
धिक्शब्दस्तु ततस्तत्र समभूल्लोमहर्षणः
सभ्यानां नरदेवानां दृष्ट्वा कुन्तीसुतांस्तथा ४९
न विब्रुवन्ति कौरव्याः प्रश्नमेतमिति स्म ह
स जनः क्रोशति स्मात्र धृतराष्ट्रं विगर्हयन् ५०
ततो बाहू समुच्छ्रित्य निवार्य च सभासदः
विदुरः सर्वधर्मज्ञ इदं वचनमब्रवीत् ५१
विदुर उवाच
द्रौपदी प्रश्नमुक्त्वैवं रोरवीति ह्यनाथवत्
न च विब्रूत तं प्रश्नं सभ्या धर्मोऽत्र पीड्यते ५२
सभां प्रपद्यते ह्यार्तः प्रज्वलन्निव हव्यवाट्
तं वै सत्येन धर्मेण सभ्याः प्रशमयन्त्युत ५३
धर्मप्रश्नमथो ब्रूयादार्तः सभ्येषु मानवः
विब्रूयुस्तत्र ते प्रश्नंकामक्रोधवशातिगाः ५४
विकर्णेन यथाप्रज्ञमुक्तः प्रश्नो नराधिपाः
भवन्तोऽपि हि तं प्रश्नं विब्रुवन्तु यथामति ५५
यो हि प्रश्नं न विब्रूयाद्धर्मदर्शी सभां गतः
अनृते या फलावाप्तिस्तस्याः सोऽध समश्नुते ५६
यः पुनर्वितथं ब्रूयाद्धर्मदर्शी सभां गतः
अनृतस्य फलं कृत्स्नं सम्प्राप्नोतीति निश्चयः ५७

अत्राप्युदाहरन्तीममितिहासं पुरातनम्
प्रह्लादस्य च संवादं मुनेराङ्गिरसस्य च ५८
प्रह्लादो नाम दैत्येन्द्रस्तस्य पुत्रो विरोचनः
कन्याहेतोराङ्गिरसं सुधन्वानमुपाद्रवत् ५९
अहं ज्यायानहं ज्यायानिति कन्येप्सया तदा
तयोर्देवनमत्रासीत्प्राणयोरिति नः श्रुतम् ६०
तयोः प्रश्नविवादोऽभूत्प्रह्लादं तावपृच्छताम्
ज्यायान्क आवयोरेकः प्रश्नं प्रब्रूहि मा मृषा ६१
स वै विवदनाद्भीतः सुधन्वानं व्यलोकयत्
तं सुधन्वाब्रवीत्क्रुद्धो ब्रह्मदण्ड इव ज्वलन् ६२
यदि वै वक्ष्यसि मृषा प्रह्लादाथ न वक्ष्यसि
शतधा ते शिरो वज्री वज्रेण प्रहरिष्यति ६३
सुधन्वना तथोक्तः सन्व्यथितोऽश्वत्थपर्णवत्
जगाम कश्यपं दैत्यः परिप्रष्टुं महौजसम् ६४
प्रह्लाद उवाच
त्वं वै धर्मस्य विज्ञाता दैवस्येहासुरस्य च
ब्राह्मणस्य महाप्राज्ञ धर्मकृच्छ्रमिदं शृणु ६५
यो वै प्रश्नं न विब्रूयाद्वितथं वापि निर्दिशेत्
के वै तस्य परे लोकास्तन्ममाचक्ष्व पृच्छतः ६६
कश्यप उवाच
जानन्न विब्रुवन्प्रश्नं कामात्क्रोधात्तथा भयात्
सहस्रं वारुणान्पाशानात्मनि प्रतिमुञ्चति ६७
तस्य संवत्सरे पूर्णे पाश एकः प्रमुच्यते
तस्मात्सत्यं तु वक्तव्यं जानता सत्यमञ्जसा ६८
विद्धो धर्मो ह्यधर्मेण सभां यत्र प्रपद्यते
न चास्य शल्यं कृन्तन्ति विद्धास्तत्र सभासदः ६९
अर्धं हरति वै श्रेष्ठः पादो भवति कर्तृषु
पादश्चैव सभासत्सु ये न निन्दन्ति निन्दितम् ७०
अनेना भवति श्रेष्ठो मुच्यन्ते च सभासदः
एनो गच्छति कर्तारं निन्दार्हो यत्र निन्द्यते ७१

वितथं तु वदेयुर्ये धर्मं प्रह्लाद पृच्छते
इष्टापूर्तं च ते घ्नन्ति सप्त चैव परावरान् ७२
हृतस्वस्य हि यद्दुःखं हतपुत्रस्य चापि यत्
ऋणिनं प्रति यच्चैव राज्ञा ग्रस्तस्य चापि यत् ७३
स्त्रियाः पत्या विहीनायाः सार्थाद्भ्रष्टस्य चैव यत्
अध्यूढायाश्च यद्दुःखं साक्षिभिर्विहितस्य च ७४
एतानि वै समान्याहुर्दुःखानि त्रिदशेश्वराः
तानि सर्वाणि दुःखानि प्राप्नोति वितथं ब्रुवन् ७५
समक्षदर्शनात्साक्ष्यं श्रवणाच्चेति धारणात्
तस्मात्सत्यं ब्रुवन्साक्षी धर्मार्थाभ्यां न हीयते ७६
विदुर उवाच
कश्यपस्य वचः श्रुत्वा प्रह्लादः पुत्रमब्रवीत्
श्रेयान्सुधन्वा त्वत्तो वै मत्तः श्रेयांस्तथाङ्गिराः ७७
माता सुधन्वनश्चापि श्रेयसी मातृतस्तव
विरोचन सुधन्वायं प्राणानामीश्वरस्तव ७८
सुधन्वोवाच
पुत्रस्नेहं परित्यज्य यस्त्वं धर्मे प्रतिष्ठितः
अनुजानामि ते पुत्रं जीवत्वेष शतं समाः ७९
विदुर उवाच
एवं वै परमं धर्मं श्रुत्वा सर्वे सभासदः
यथाप्रश्नं तु कृष्णायाः मन्यध्वं तत्र किं परम् ८०
वैशम्पायन उवाच
विदुरस्य वचः श्रुत्वा नोचुः किंचन पार्थिवाः
कर्णो दुःशासनं त्वाह कृष्णां दासीं गृहान्नय ८१
तां वेपमानां सव्रीडां प्रलपन्तीं स्म पाण्डवान्
दुःशासनः सभामध्ये विचकर्ष तपस्विनीम् ८२
इति श्रीमहाभारते सभापर्वणि एकषष्टितमोऽध्यायः ६१

द्विषष्टितमोऽध्यायः

द्रौपद्युवाच

पुरस्तात्करणीयं मे न कृतं कार्यमुत्तरम्
विह्वलास्मि कृतानेन कर्षता बलिना बलात् १
अभिवादं करोम्येषां गुरूणां कुरुसंसदि
न मेस्यादपराधोऽय यदिदं न कृतं मया २
वैशम्पायन उवाच
सा तेन च समुद्धूता दुःखेन च तपस्विनी
पतिता विललापेदं सभायामतथोचिता ३
द्रौपद्युवाच
स्वयंवरे यास्मि नृपैर्दृष्टा रङ्गे समागतैः
न दृष्टपूर्वा चान्यत्र साहमद्य सभां गता ४
यां न वायुर्नचादित्यो दृष्टवन्तौ पुरा गृहे
साहमद्य सभामध्ये दृश्यामि कुरुसंसदि ५
यां न मृष्यन्ति वातेन स्पृश्यमानां पुरा गृहे
स्पृश्यमानां सहन्तेऽद्य पाण्डवास्तां दुरात्मना ६
मृष्यन्ते कुरवश्चेमे मन्ये कालस्य पर्ययम्
स्नुषां दुहितरं चैव क्लिश्यमानामनर्हतीम् ७
किं त्वतः कृपणं भूयो यदहं स्त्री सती शुभा
सभामध्यं विगाहेऽद्य क्व नु धर्मो महीक्षिताम् ८
धर्म्याः स्त्रियः सभां पूर्वं न नयन्तीति नः श्रुतम्
स नष्टः कौरवेयेषु पूर्वो धर्मः सनातनः ९
कथं हि भार्या पाण्डूनां पार्षतस्य स्वसा सती
वासुदेवस्य च सखी पार्थिवानां सभामियाम् १०
तामिमां धर्मराजस्य भार्यां सदृशवर्णजाम्
ब्रूत दासीमदासीं वा तत्करिष्यामि कौरवाः ११
अयं हि मां दृढं क्षुद्रः कौरवाणां यशोहरः
क्लिश्नाति नाहं तत्सोढुं चिरं शक्ष्यामि कौरवाः १२
जितां वाप्यजितां वापि मन्यध्वं वा यथा नृपाः
तथा प्रत्युक्तमिच्छामि तत्करिष्यामि कौरवाः १३
भीष्म उवाच
उक्तवानस्मि कल्याणि धर्मस्य तु परां गतिम्

लोके न शक्यते गन्तुमपि विप्रैर्महात्मभिः १४
बलवांस्तु यथा धर्मं लोके पश्यति पूरुषः
स धर्मो धर्मवेलायां भवत्यभिहितःपरैः १५
न विवेक्तुं च ते प्रश्नमेतं शक्नोमि निश्चयात्
सूक्ष्मत्वाद्गहनत्वाच्च कार्यस्यास्य च गौरवात् १६
नूनमन्तः कुलस्यास्य भविता नचिरादिव
तथा हि कुरवः सर्वे लोभमोहपरायणाः १७
कुलेषु जाताः कल्याणि व्यसनाभ्याहता भृशम्
धर्म्यान्मार्गान्न च्यवन्ते यथा नस्त्वं वधूः स्थिता १८
उपपन्नं च पाञ्चालि तवेदं वृत्तमीदृशम्
यत्कृच्छ्रमपि संप्राप्ता धर्ममेवान्ववेक्षसे १९
एते द्रोणादयश्चैव वृद्धा धर्मविदो जनाः
शून्यैः शरीरैस्तिष्ठन्ति गतासव इवानताः २०
युधिष्ठिरस्तु प्रश्नेऽस्मिन्प्रमाणमिति मे मतिः
अजितां वा जितां वापि स्वयं व्याहर्तुमर्हति २१
वैशम्पायन उवाच
तथा तु दृष्ट्वा बहु तत्तदेवं रोरूयमाणां कुररीमिवार्ताम्
नोचुर्वचः साध्वथ वाप्यसाधु महीक्षितो धार्तराष्ट्रस्य भीताः २२
दृष्ट्वा तु पार्थिवपुत्रपौत्रांस्तूष्णींभूतान्धृतराष्ट्रस्य पुत्रः
स्मयन्निवेदं वचनं बभाषे पाञ्चालराजस्य सुतां तदानीम् २३
तिष्ठत्वयं प्रश्न उदारसत्त्वे भीमेऽजुने सहदेवे तथैव
पत्यौ च ते नकुले याज्ञसेनि वदन्त्त्वेते वचनं त्वत्प्रसूतम् २४
अनीश्वरं विब्रुवन्त्वार्यमध्ये युधिष्ठिरं तव पाञ्चालि हेतोः
कुर्वन्तु सर्वे चानृतं धर्मराजं पञ्चालि त्वं मोक्ष्यसे दासभावात् २५
धर्मे स्थितो धर्मराजो महात्मा स्वयं चेदं कथयत्विन्द्रकल्पः
ईशो वा ते यद्यनीशोऽथ वैष वाक्यादस्य क्षिप्रमेकं भजस्व २६
सर्वे हीमे कौरवेयाः सभायां दुःखान्तरे वर्तमानास्तवैव
न विब्रुवन्त्यार्यसत्त्वा यथावत्पतींश्च ते समवेक्ष्याल्पभाग्यान् २७
ततः सभ्याः कुरुराजस्य तत्र वाक्यं सर्वे प्रशशंसुस्तदोच्चैः
चेलावेधांश्चापि चक्रुर्नदन्तो हा हेत्यासीदपि चैवात्र नादः

सर्वे चासन्पार्थिवाः प्रीतिमन्तः कुरुश्रेष्ठं धार्मिकं पूजयन्तः २८
युधिष्ठिरं च ते सर्वे समुदैक्षन्त पार्थिवाः
किं नु वक्ष्यति धर्मज्ञ इति साचीकृताननाः २९
किं नु वक्ष्यति बीभत्सुरजितो युधि पाण्डवः
भीमसेनो यमौ चेति भृशं कौतूहलान्विताः ३०
तस्मिन्नुपरते शब्दे भीमसेनोऽब्रवीदिदम्
प्रगृह्य विपुलं वृत्तं भुजं चन्दनरूषितम् ३१
यद्येष गुरुरस्माकं धर्मराजो युधिष्ठिरः
च प्रभुः स्यात्कुलस्यास्य न वयं मर्षयेमहि ३२
ईशो नः पुण्यतपसां प्राणानामपि चेश्वरः
मन्यते जितमात्मानं यद्येष विजिता वयम् ३३
न हि मुच्येत जीवन्मे पदा भूमिमुपस्पृशन्
मर्त्यधर्मा परामृश्य पाञ्चाल्या मूर्धजानिमान् ३४
पश्यध्वमायतौ वृत्तौ भुजौ मे परिघाविव
नैतयोरन्तरं प्राप्य मुच्येतापि शतक्रतुः ३५
धर्मपाशसितस्त्वेवं नाधिगच्छामि सङ्कटम्
गौरवेण निरुद्धश्च निग्रहादर्जुनस्य च ३६
धर्मराजनिसृष्टस्तु सिंहः क्षुद्रमृगानिव
धार्तराष्ट्रानिमान्पापान्निष्पिषेयं तलासिभिः ३७
तमुवाच तदा भीष्मो द्रोणो विदुर एव च
क्षम्यतामेवमित्येवं सर्वं संभवति त्वयि ३८
इति श्रीमहाभारते सभापर्वणि द्विषष्टितमोऽध्यायः ६२

त्रिषष्ठितमोऽध्यायः

कर्ण उवाच
त्रयः किलेमे अधना भवन्ति दासः शिष्यश्चास्वतन्त्रा च नारी
दासस्य पत्नी त्वं धनमस्य भद्रे हीनेश्वरा दासधनं च दासी १
प्रविश्य सा नः परिचारैर्भजस्व तत्ते कार्यं शिष्टमावेश्म वेश्म
ईशाः स्म सर्वे तव राजपुत्रि भवन्ति ते धार्तराष्ट्रा न पार्थाः २
अन्यं वृणीष्व पतिमाशु भामिनि यस्माद्दास्यं न लभसे देवनेन

अनवद्या वै पतिषु कामवृत्तिर्नित्यं दास्ये विदितं वै तवास्तु ३
पराजितो नकुलो भीमसेनो युधिष्ठिरः सहदेवोऽजुनश्च
दासीभूता प्रविश याज्ञसेनि पराजितास्ते पतयो न सन्ति ४
प्रयोजनं चात्मनि किं नु मन्यते पराक्रमं पौरुषं चेह पार्थः
पाञ्चालस्य द्रुपदस्यात्मजामिमां सभामध्ये योऽतिदेवीद्ग्लहेषु ५
वैशम्पायन उवाच
तद्वै श्रुत्वा भीमसेनोऽत्यमर्षी भृशं निशश्वास तदार्तरूपः
राजानुगो धर्मपाशानुबद्धो दहन्निवैनं कोपविरक्तदृष्टिः ६
भीम उवाच
नाहं कुप्ये सूतपुत्रस्य राजन्नेष सत्यं दासधर्मः प्रविष्टः
किं विद्विषो वाद्य मां धारयेयुर्नादेवीस्त्वं यद्यनया नरेन्द्र ७
वैशम्पायन उवाच
राधेयस्य वचः श्रुत्वा राजा दुर्योधनस्तदा
युधिष्ठिरमुवाचेदं तूष्णींभूतमचेतसम् ८
भीमार्जुनौ यमौ चैव स्थितौ ते नृप शासने
प्रश्नं प्रब्रूहि कृष्णां त्वमजितां यदि मन्यसे ९
एवमुक्त्वा स कौन्तेयमपोह्य वसनं स्वकम्
स्मयन्निवैक्षत्पाञ्चालीमैश्वर्य मदमोहितः १०
कदलीदण्डसदृशं सर्वलक्षणपूजितम्
गजहस्तप्रतीकाशं वज्रप्रतिमगौरवम् ११
अभ्युत्स्मयित्वा राधेयं भीममाधर्षयन्निव
द्रौपद्याः प्रेक्षमाणायाः सव्यमूरुमदर्शयत् १२
वृकोदरस्तदालोक्य नेत्रे उत्फाल्य लोहिते
प्रोवाच राजमध्ये तं सभां विश्रावयन्निव १३
पितृभिः सह सालोक्यं मा स्म गच्छेद्वृकोदरः
यद्येतमूरुं गदया न भिन्द्यां ते महाहवे १४
क्रुद्धस्य तस्य स्रोतोभ्यः सर्वेभ्यः पावकार्चिषः
वृक्षस्येव विनिश्चेरुः कोटरेभ्यः प्रदह्यतः १५
विदुर उवाच
परं भयं पश्यत भीमसेनाद्बुध्यध्वं राज्ञो वरुणस्येव पाशात्

दैवेरितो नूनमयं पुरस्तात्परोऽनयो भरतेषूदपादि १६
अतिद्यूतं कृतमिदं धार्तराष्ट्रा येऽस्या स्त्रियं विवदध्वं सभायाम्
योगक्षेमा दृश्यते वो महाभयः पापान्मन्त्रान्कुरवो मन्त्रयन्ति १७
इमं धर्मं कुरवो जानताशु दुर्दृष्टेऽस्मिन्परिषत्संप्रदुष्येत्
इमां चेत्पूर्वं कितवोऽग्लहीष्यदीशोऽभविष्यदपराजितात्मा १८
स्वप्ने यथैतद्धि धनं जितं स्यात्तदेवं मन्ये यस्य दीव्यत्यनीशः
गान्धारिपुत्रस्य वचो निशम्य धर्मादस्मात्कुरवो मापयात १९
दुर्योधन उवाच
भीमस्य वाक्ये तद्वदेवार्जुनस्य स्थितोऽह वै यमयोश्चैवमेव
युधिष्ठिरं चेत्प्रवदन्त्वनीशमथो दास्यान्मोक्ष्यसे याज्ञसेनि २०
अर्जुन उवाच
ईशो राजा पूर्वमासीद्ग्लहे नः कुन्ती पुत्रो धर्मराजो महात्मा
ईशस्त्वयं कस्य पराजितात्मा तज्जानीध्वं कुरवः सर्व एव २१
वैशम्पायन उवाच
ततो राज्ञो धृतराष्ट्रस्य गेहे गोमायुरुच्चैर्व्याहरदग्निहोत्रे
तं रासभाःप्रत्यभाषन्त राजन्समन्ततः पक्षिणश्चैव रौद्राः २२
तं च शब्दं विदुरस्तत्त्ववेदी शुश्राव घोरं सुबलात्मजा च
भीष्मद्रोणौ गौतमश्चापि विद्वान्स्वस्ति स्वस्तीत्यपि चैवाहुरुच्चैः २३
ततो गान्धारी विदुरश्चैव विद्वांस्तमुत्पातं घोरमालक्ष्य राज्ञे
निवेदयामासतुरार्तवत्तदा ततो राजा वाक्यमिदं बभाषे २४
हतोऽसि दुर्योधन मन्दबुद्धे यस्त्वं सभायां कुरुपुंगवानाम्
स्त्रियं समाभाषसि दुर्विनीत विशेषतो द्रौपदीं धर्मपत्नीम् २५
एवमुक्त्वा धृतराष्ट्रो मनीषी हितान्वेषी बान्धवानामपायात्
कृष्णां पाञ्चालीमब्रवीत्सान्त्वपूर्वं विमृश्यैतत्प्रज्ञया तत्त्वबुद्धिः २६
धृतराष्ट्र उवाच
वरं वृणीष्व पाञ्चालि मत्तो यदभिकाङ्क्षसि
वधूनां हि विशिष्टा मे त्वं धर्मपरमा सती २७
द्रौपद्युवाच
ददासि चेद्वरं मह्यं वृणोमि भरतर्षभ
सर्वधर्मानुगः श्रीमानदासोऽस्तु युधिष्ठिरः २८

मनस्विनमजानन्तो मा वै ब्रूयुः कुमारकाः
एष वै दासपुत्रेति प्रतिविन्ध्यं तमागतम् २९
राजपुत्रः पुरा भूत्वा यथा नान्यः पुमान्क्वचित्
लालितो दासपुत्रत्वं पश्यन्नश्येद्धि भारत ३०
धृतराष्ट्र उवाच
द्वितीयं ते वरं भद्रे ददानि वरयस्व माम्
मनो हि मे वितरति नैकं त्वं वरमर्हसि ३१
द्रौपद्युवाच
सरथौ सधनुष्कौ च भीमसेनधनञ्जयौ
नकुलं सहदेवं च द्वितीयं वरये वरम् ३२
धृतराष्ट्र उवाच
तृतीयं वरयास्मत्तो नासि द्वाभ्यां सुसत्कृता
त्व हि सर्वस्नुषाणां मे श्रेयसी धर्मचारिणी ३३
द्रौपद्युवाच
लोभो धर्मस्य नाशाय भगवन्नाहमुत्सहे
अनर्हा वरमादातुं तृतीयं राजसत्तम ३४
एकमाहुर्वैश्यवरं द्वौ तु क्षत्रस्त्रिया वरौ
त्रयस्तु राज्ञो राजेन्द्र ब्राह्मणस्य शतं वराः ३५
पापीयांस इमे भूत्वा संतीर्णाः पतयो मम
वेत्स्यन्ति चैव भद्राणि राजन्पुण्येन कर्मणा ३६
इति श्रीमहाभारते सभापर्वणि त्रिषष्टितमोऽध्यायः ६३

## चतुःषष्ठितमोऽध्यायः

कर्ण उवाच
या नः श्रुता मनुष्येषु स्त्रियो रूपेण संमताः
तासामेतादृशं कर्म न कस्यांचन शुश्रुमः १
क्रोधाविष्टेषु पार्थेषु धार्तराष्ट्रेषु चाप्यति
द्रौपदी पाण्डुपुत्राणां कृष्णा शान्तिरिहाभवत् २
अप्लवेऽम्भसि मग्नानामप्रतिष्ठे निमज्जताम्
पाञ्चाली पाण्डुपुत्राणां नौरेषा पारगाभवत् ३

वैशम्पायन उवाच
तद्वै श्रुत्वा भीमसेनः कुरुमध्येऽत्यमर्षणः
स्त्री गतिः पाण्डुपुत्राणामित्युवाच सुदुर्मनाः ४
भीम उवाच
त्रीणि ज्योतींषि पुरुष इति वै देवलोऽब्रवीत्
अपत्यं कर्म विद्या च यतः सृष्टः प्रजास्ततः ५
अमेध्ये वै गतप्राणे शून्ये ज्ञातिभिरुज्झिते
देहे त्रितयमेवैतत्पुरुषस्योपजायते ६
तन्नो ज्योतिरभिहतं दाराणामभिमर्शनात्
धनञ्जय कथं स्वित्स्यादपत्यमभिमृष्टजम् ७
अर्जुन उवाच
न चैवोक्ता न चानुक्ता हीनतः परुषा गिरः
भारताः प्रतिजल्पन्ति सदा तूत्तमपूरुषाः ८
स्मरन्ति सुकृतान्येव न वैराणि कृतानि च
सन्तः प्रतिविजानन्तो लब्ध्वा प्रत्ययमात्मनः ९
भीम उवाच
इहैवैतांस्तुरा सर्वान्हन्मि शत्रून्समागतान्
अथ निष्क्रम्य राजेन्द्र समूलान्कृन्धि भारत १०
किं नो विवदितेनेह किं नः क्लेशेन भारत
अद्यैवैतान्निहन्मीह प्रशाधि वसुधामिमाम् ११
वैशम्पायन उवाच
इत्युक्त्वा भीमसेनस्तु कनिष्ठैर्भ्रातृभिर्वृतः
मृगमध्ये यथा सिंहो मुहुः परिघमैक्षत १२
सान्त्व्यमानो वीज्यमानः पार्थेनाक्लिष्टकर्मणा
स्विद्यते च महाबाहुरन्तर्दाहेन वीर्यवान् १३
क्रुद्धस्य तस्य स्रोतोभ्यः कर्णादिभ्यो नराधिप
सधूमः सस्फुलिङ्गार्चिः पावकः समजायत १४
भ्रुकुटीपुटदुष्प्रेक्ष्यमभवत्तस्य तन्मुखम्
युगान्तकाले संप्राप्ते कृतान्तस्येव रूपिणः १५
युधिष्ठिरस्तमावार्य बाहुना बाहुशालिनम्

मैवमित्यब्रवीच्चैनं जोषमास्स्वेति भारत १६
निवार्य तं महाबाहुं कोपसंरक्तलोचनम्
पितरं समुपातिष्ठद्धृतराष्ट्रं कृताञ्जलि १७
इति श्रीमहाभारते सभापर्वणि चतुःषष्टितमोऽध्यायः ६४

पञ्चषष्ठितमोऽध्यायः

युधिष्ठिर उवाच
राजन्किं करवामस्ते प्रशाध्यस्मांस्त्वमीश्वरः
नित्यं हि स्थातुमिच्छामस्तव भारत शासने १
धृतराष्ट्र उवाच
अजातशत्रो भद्रं ते अरिष्टं स्वस्ति गच्छत
अनुज्ञाताः सहधनाः स्व राज्यमनुशासत २
इदं त्वेवावबोद्धव्यं वृद्धस्य मम शासनम्
धिया निगदितं कृत्स्नं पथ्यं निःश्रेयसं परम् ३
वेत्त्थ त्वं तात धर्माणां गतिं सूक्ष्मां युधिष्ठिर
विनीतोऽसि महाप्राज्ञ वृद्धानां पर्युपासिता ४
यतो बुद्धिस्ततः शान्तिः प्रशमं गच्छ भारत
नादारौ क्रमते शस्त्रं दारौ शस्त्रं निपात्यते ५
न वैराण्यभिजानन्ति गुणान्पश्यन्ति नागुणान्
विरोधं नाधिगच्छन्ति ये त उत्तमपूरुषाः ६
संवादे परुषाण्याहुर्युधिष्ठिर नराधमाः
प्रत्याहुर्मध्यमास्त्वेतानुक्ताः परुषमुत्तरम् ७
नैवोक्ता नैव चानुक्ता अहिताः परुषा गिरः
प्रतिजल्पन्ति वै धीराः सदा उत्तमपूरुषाः ८
स्मरन्ति सुकृतान्येव न वैराणि कृतान्यपि
सन्तः प्रतिविजानन्तो लब्ध्वा प्रत्ययमात्मनः ९
तथाचरितमार्येण त्वयास्मिन्सत्समागमे
दुर्योधनस्य पारुष्यं तत्तात हृदि मा कृथाः १०
मातरं चैव गान्धारीं मां च त्वद्गुणकाङ्क्षिणम्
उपस्थितं वृद्धमन्धं पितरं पश्य भारत ११

प्रेक्षापूर्वं मया द्यूतमिदमासीदुपेक्षितम्
मित्राणि द्रष्टुकामेन पुत्राणां च बलाबलम् १२
अशोच्याः कुरवो राजन्येषां त्वमनुशासिता
मन्त्री च विदुरो धीमान्सर्वशास्त्रविशारदः १३
त्वयि धर्मोऽर्जुने वीर्यं भीमसेने पराक्रमः
श्रद्धा च गुरुशुश्रूषा यमयोः पुरुषाग्र्ययोः १४
अजातशत्रो भद्रं ते खाण्डवप्रस्थमाविश
भ्रातृभिस्तेऽस्तु सौभ्रात्रं धर्मे ते धीयतां मनः १५
वैशम्पायन उवाच
इत्युक्तो भरतश्रेष्ठो धर्मराजो युधिष्ठिरः
कृत्वार्यसमयं सर्वं प्रतस्थे भ्रातृभिः सह १६
ते रथान्मेघसङ्काशानास्थाय सह कृष्णया
प्रययुर्हृष्टमनस इन्द्रप्रस्थं पुरोत्तमम् १७
इति श्रीमहाभारते सभापर्वणि पञ्चषष्टितमोऽध्यायः ६५

षट् षष्टितमोऽध्यायः

जनमेजय उवाच
अनुज्ञातांस्तान्विदित्वा सरत्नधनसंचयान्
पाण्डवान्धार्तराष्ट्राणां कथमासीन्मनस्तदा १
वैशम्पायन उवाच
अनुज्ञातांस्तान्विदित्वा धृतराष्ट्रेण धीमता
राजन्दुःशासनः क्षिप्रं जगाम भ्रातरं प्रति २
दुर्योधनं समासाद्य सामात्यं भरतर्षभ
दुःखार्तो भरतश्रेष्ठ इदं वचनमब्रवीत् ३
दुःखेनैतत्समानीतं स्थविरो नाशयत्यसौ
शत्रुसाद्गमयद्द्रव्यं तद्बुध्यध्वं महारथाः ४
अथ दुर्योधनः कर्णः शकुनिश्चापि सौबलः
मिथः संगम्य सहिताः पाण्डवान्प्रति मानिनः ५
वैचित्रवीर्यं राजानं धृतराष्ट्रं मनीषिणम्
अभिगम्य त्वरायुक्ताः श्लक्ष्णं वचनमब्रुवन् ६

दुर्योधन उवाच
न त्वयेदं श्रुतं राजन्यज्जगाद बृहस्पतिः
शक्रस्य नीतिं प्रवदन्विद्वान्देवपुरोहितः ७
सर्वोपावैर्निहन्तव्याः शत्रवः शत्रुकर्षण
पुरा युद्धाद्बलाद्वापि प्रकुर्वन्ति तवाहितम् ८
ते वयं पाराडवधनैः सर्वान्संपूज्य पार्थिवान्
यदि तान्योधयिष्यामः किं वा नः परिहास्यति ९
अहीनाशीविषान्क्रुद्धान्दंशाय समुपस्थितान्
कृत्वा कराठे च पृष्ठे च कः समुत्स्रष्टुमर्हति १०
आत्तशस्त्रा रथगताः कुपितास्तात पाराडवाः
निःशेषं नः करिष्यन्ति क्रुद्धा ह्याशीविषा यथा ११
संनद्धो ह्यर्जुनो याति विवृत्य परमेषुधी
गाराडीवं मुहुरादत्ते निःश्वसंश्च निरीक्षते १२
गदां गुर्वीं समुद्यम्य त्वरितश्च वृकोदरः
स्वरथं योजयित्वाशु निर्यात इति नः श्रुतम् १३
नकुलः खड्गमादाय चर्म चाप्यष्टचन्द्रकम्
सहदेवश्च राजा च चक्रुराकारमिङ्गितैः १४
ते त्वास्थाय रथान्सर्वे बहुशस्त्रपरिच्छदान्
अभिघ्नन्तो रथव्रातान्सेनायोगाय निर्ययुः १५
न क्षंस्यन्ते तथास्माभिर्जातु विप्रकृता हि ते
द्रौपद्याश्च परिक्लेशं कस्तेषां क्षन्तुमर्हति १६
पुनर्दीव्याम भद्रं ते वनवासाय पाराडवैः
एवमेतान्वशे कर्तुं शक्ष्यामो भरतर्षभ १७
ते वा द्वादश वर्षाणि वयं वा द्यूतनिर्जिताः
प्रविशेम महाररायमजिनैः प्रतिवासिताः १८
त्रयोदशं च सजने अज्ञाताः परिवत्सरम्
ज्ञाताश्च पुनरन्यानि वने वर्षाणि द्वादश १९
निवसेम वयं ते वा तथा द्यूतं प्रवर्तताम्
अक्षानुप्त्वा पुनर्द्यूतमिदं दीव्यन्तु पाराडवाः २०
एतत्कृत्यतमं राजन्नस्माकं भरतर्षभ

अयं हि शकुनिर्वेद सविद्यामक्षसंपदम् २१
दृढमूला वयं राज्ये मित्राणि परिगृह्य च
सारवद्विपुलं सैन्यं सत्कृत्य च दुरासदम् २२
ते च त्रयोदशे वर्षे पारयिष्यन्ति चेद्व्रतम्
जेष्यामस्तान्वयं राजन्रोचतां ते परन्तप २३
धृतराष्ट्र उवाच
तूर्णं प्रत्यानयस्वैतान्कामं व्यध्वगतानपि
आगच्छन्तु पुनर्द्यूतमिदं कुर्वन्तु पाण्डवाः २४
वैशम्पायन उवाच
ततो द्रोणः सोमदत्तो बाह्लीकश्च महारथः
विदुरो द्रोणपुत्रश्च वैश्यापुत्रश्च वीर्यवान् २५
भूरिश्रवाः शान्तनवो विकर्णश्च महारथः
मा द्यूतमित्यभाषन्त शमोऽस्त्विति च सर्वशः २६
अकामानां च सर्वेषां सुहृदामर्थदर्शिनाम्
अकरोत्पाण्डवाह्वानं धृतराष्ट्रः सुतप्रियः २७
अथाब्रवीन्महाराज धृतराष्ट्रं जनेश्वरम्
पुत्रहार्दाद्धर्मयुक्तं गान्धारी शोककर्शिता २८
जाते दुर्योधने क्षत्ता महामतिरभाषत
नीयतां परलोकाय साध्वयं कुलपांसनः २९
व्यनदज्जातमात्रो हि गोमायुरिव भारत
अन्तो नूनं कुलस्यास्य कुरवस्तन्निबोधत ३०
मा बालानामशिष्टानामभिमंस्था मतिं प्रभो
मा कुलस्य क्षये घोरे कारणं त्वं भविष्यसि ३१
बद्धं सेतुं को नु भिन्द्याद्धमेच्छान्तं च पावकम्
शमे धृतान्पुनः पार्थान्कोपयेत्को नु भारत ३२
स्मरन्तं त्वामाजमीढ स्मारयिष्याम्यहं पुनः
शास्त्रं न शास्ति दुर्बुद्धिं श्रेयसे वेतराय वा ३३
न वै वृद्धो बालमतिर्भवेद्राजन्कथंचन
त्वन्नेत्राः सन्तु ते पुत्रा मा त्वां दीर्णाः प्रहासिषुः ३४
शमेन धर्मेण परस्य बुद्ध्या जाता बुद्धिः सास्तु ते मा प्रतीपा

प्रध्वंसिनी क्रूरसमाहिता श्रीर्मृदुप्रौढा गच्छति पुत्रपौत्रान् ३५
अथाब्रवीन्महाराजो गान्धारीं धर्मदर्शिनीम्
अन्तः कामं कुलस्यास्तु न शक्ष्यामि निवारितुम् ३६
यथेच्छन्ति तथैवास्तु प्रत्यागच्छन्तु पाण्डवाः
पुनर्द्यूतं प्रकुर्वन्तु मामकाः पाण्डवैः सह ३७
इति श्रीमहाभारते सभापर्वणि षट्षष्टितमोऽध्यायः ६६

सप्तषष्टितमोऽध्यायः
वैशम्पायन उवाच
ततो व्यध्वगतं पार्थं प्रातिकामी युधिष्ठिरम्
उवाचवचनाद्राज्ञो धृतराष्ट्रस्य धीमतः १
उपस्तीर्णा सभा राजन्नक्षानुप्त्वा युधिष्ठिर
एहि पाण्डव दीव्येति पिता त्वामाह भारत २
युधिष्ठिर उवाच
धातुर्नियोगाद्भूतानि प्राप्नुवन्ति शुभाशुभम्
न निवृत्तिस्तयोरस्ति देवितव्यं पुनर्यदि ३
अक्षद्यूते समाह्वानं नियोगात्स्थविरस्य च
जानन्नपि क्षयकरं नातिक्रमितुमुत्सहे ४
वैशम्पायन उवाच
इति ब्रुवन्निववृते भ्रातृभिः सह पाण्डवः
जानंश्च शकुनेर्मायां पार्थो द्यूतमियात्पुनः ५
विविशुस्ते सभां तां तु पुनरेव महारथाः
व्यथयन्ति स्म चेतांसि सुहृदां भरतर्षभाः ६
यथोपजोषमासीनाः पुनर्द्यूतप्रवृत्तये
सर्वलोकविनाशाय दैवेनोपनिपीडिताः ७
शकुनिरुवाच
अमुञ्चत्स्थविरो यद्वो धनं पूजितमेव तत्
महाधनं ग्लहं त्वेकं शृणु मे भरतर्षभ ८
वयं द्वादश वर्षाणि युष्माभिर्द्यूतनिर्जिताः
प्रविशेम महारण्यं रौरवाजिनवाससः ९

त्रयोदशं च सजने अज्ञाताः परिवत्सरम्
ज्ञाताश्च पुनरन्यानि वने वर्षाणि द्वादश १०
अस्माभिर्वा जिता यूयं वने वर्षाणि द्वादश
वसध्वं कृष्णाया सार्धमजिनैः प्रतिवासिताः ११
त्रयोदशे च निर्वृत्ते पुनरेव यथोचितम्
स्वराज्यं प्रतिपत्तव्यमितरैरथ वेतरैः १२
अनेन व्यवसायेन सहास्माभिर्युधिष्ठिर
अक्षानुप्त्वा पुनर्द्यूतमेहि दीव्यस्व भारत १३
सभासदा ऊचुः
अहो धिग्वान्धवा नैनं बोधयन्ति महद्भयम्
बुद्ध्या बोध्यं न बुध्यन्ते स्वयं च भरतर्षभाः १४
वैशम्पायन उवाच
जनप्रवादान्सुबहूनिति शृणवन्नराधिपः
ह्रिया च धर्मसङ्गाच्च पार्थो द्यूतमियात्पुनः १५
जानन्नपि महाबुद्धिः पुनर्द्यूतमवर्तयत्
अप्ययं न विनाशः स्यात्कुरूणामिति चिन्तयन् १६
युधिष्ठिर उवाच
कथं वै मद्विधो राजा स्वधर्ममनुपालयन्
आहूतो विनिवर्तेत दीव्यामि शकुने त्वया १७
शकुनिरुवाच
गवाश्वं बहुधेनूकमपर्यन्तमजाविकम्
गजाः कोशो हिरण्यं च दासीदासं च सर्वशः १८
एष नो ग्लह एवैको वनवासाय पाण्डवाः
यूयं वयं वा विजिता वसेम वनमाश्रिताः १९
अनेन व्यवसायेन दीव्याम भरतर्षभ
समुत्क्षेपेण चैकेन वनवासाय भारत २०
वैशम्पायन उवाच
प्रतिजग्राह तं पार्थो ग्लहं जग्राह सौबलः
जितमित्येव शकुनिर्युधिष्ठिरमभाषत २१
इति श्रीमहाभारते सभापर्वणि सप्तषष्टितमोऽध्यायः ६७

अ्रष्ट षष्ठितमोऽध्यायः

वनवासाय चक्रुस्ते मतिं पार्थाः पराजिताः
अ्रजिनान्युत्तरीयाणि जगृहुश्च यथाक्रमम् १
अ्रजिनैः संवृतान्दृष्ट्वा हृतराज्यानरिन्दमान्
प्रस्थितान्वनवासाय ततो दुःशासनोऽब्रवीत् २
प्रवृत्तं धार्तराष्ट्रस्य चक्रं राज्ञो महात्मनः
पराभूताः पाण्डुपुत्रा विपत्तिं परमां गताः ३
अ्रद्य देवाः संप्रयाताः समैर्वर्त्मभिरस्थलैः
गुणज्येष्ठास्तथा ज्येष्ठा भूयांसो यद्वयं परैः ४
नरकं पातिताः पार्था दीर्घकालमनन्तकम्
सुखाच्च हीना राज्याच्च विनष्टाः शाश्वतीः समाः ५
बलेन मत्ता ये ते स्म धार्तराष्ट्रान्प्रहासिषुः
ते निर्जिता हृतधना वनमेष्यन्ति पाण्डवाः ६
चित्रान्संनाहानवमुञ्चन्तु चैषां वासांसि दिव्यानि च भानुमन्ति
निवास्यन्तां रुरुचर्माणि सर्वे यथा ग्लहं सौबलस्याभ्युपेताः ७
न सन्ति लोकेषु पुमांस ईदृशा इत्येव ये भावितबुद्धयः सदा
ज्ञास्यन्ति तेऽत्मानमिमेऽद्य पाण्डवा विपर्यये षण्ढतिला इवाफलाः ८
अ्रयं हि वासोदय ईदृशानां मनस्विनां कौरव मा भवेद्वः
अ्रदीक्षितानामजिनानि यद्वद्वलीयसां पश्यत पाण्डवानाम् ९
महाप्राज्ञः सोमको यज्ञसेनः कन्यां पाञ्चालद्यं पाण्डवेभ्यः प्रदाय
अ्रकार्षीद्वै दुष्कृतं नेह सन्ति क्लीबाः पार्थाः पतयो याज्ञसेन्याः १०
सूक्ष्मान्प्रावारानजिनानि चोदितान्दृष्ट्वारण्ये निर्धनानप्रतिष्ठान्
कां त्वं प्रीतिं लप्स्यसे याज्ञसेनि पतिं वृणीष्व यमिहान्यमिच्छसि ११
एते हि सर्वे कुरवः समेताः क्षान्ता दान्ताः सुद्रविणोपपन्नाः
एषां वृणीष्वैकतमं पतित्वे न त्वां तपेत्कालविपर्ययोऽयम् १२
यथाफलाः षण्ढतिला यथा चर्ममया मृगाः
तथैव पाण्डवाः सर्वे यथा काकयवा अ्रपि १३
किं पाण्डवांस्त्वं पतितानुपास्से मोघः श्रमः षण्ढतिलानुपास्य
एवं नृशंसः परुषाणि पार्थानश्रावयद्धृतराष्ट्रस्य पुत्रः १४
तद्वै श्रुत्वा भीमसेनोऽत्यमर्षी निर्भर्त्स्योच्चैस्तं निगृह्यैव रोषात्

उवाचेदं सहसैवोपगम्य सिंहो यथा हैमवतः शृगालम् १५
भीमसेन उवाच
क्रूर पापजनैर्जुष्टमकृतार्थं प्रभाषसे
गान्धारविद्यया हि त्वं राजमध्ये विकत्थसे १६
यथा तुदसि मर्माणि वाक्शरैरिह नो भृशम्
तथा स्मारयिता तेऽह कृन्तन्मर्माणि संयुगे १७
ये च त्वामनुवर्तन्ते कामलोभवशानुगाः
गोप्तारः सानुबन्धांस्तान्नेष्यामि यमसादनम् १८
वैशम्पायन उवाच
एवं ब्रुवाणमजिनैर्विवासितं दुःखाभिभूतं परिनृत्यति स्म
मध्ये कुरूणां धर्मनिबद्धमार्गं गौर्गौरिति स्माह्वयन्मुक्तलज्जः १९
भीमसेन उवाच
नृशंसं परुषं क्रूरं शक्यं दुःशासन त्वया
निकृत्या हि धनं लब्ध्वा को विकत्थितुमर्हति २०
मा ह स्म सुकृताँल्लोकान्गच्छेत्पार्थो वृकोदरः
यदि वक्षसि भित्त्वा ते न पिबेच्छोणितं रणे २१
धार्तराष्ट्रान्रणे हत्वा मिषतां सर्वधन्विनाम्
शमं गन्तास्मि न चिरात्सत्यमेतद्ब्रवीमि वः २२
वैशम्पायन उवाच
तस्य राजा सिंहगतेः सखेलं दुर्योधनो भीमसेनस्य हर्षात्
गतिं स्वगत्यानुचकार मन्दो निर्गच्छतां पाण्डवानां सभायाः २३
नैतावता कृतमित्यब्रवीत्तं वृकोदरः संनिवृत्तार्धकायः
शीघ्रं हि त्वां निहतं सानुबन्धं संस्मार्याहं प्रतिवक्ष्यामि मूढ २४
एतत्समीक्ष्यात्मनि चावमानं नियम्य मन्युं बलवान्स मानी
राजानुगः संसदि कौरवाणां विनिष्क्रमन्वाक्यमुवाच भीमः २५
अहं दुर्योधनं हन्ता कर्णं हन्ता धनञ्जयः
शकुनिं चाक्षकितवं सहदेवो हनिष्यति २६
इदं च भूयो वक्ष्यामि सभामध्ये बृहद्वचः
सत्यं देवाः करिष्यन्ति यन्नो युद्धं भविष्यति २७
सुयोधनमिमं पापं हन्तास्मि गदया युधि

शिरः पादेन चास्याहमधिष्ठास्यामि भूतले २८
वाक्यशूरस्य चैवास्य पुरुषस्य दुरात्मनः
दुःशासनस्यरुधिरं पातास्मि मृगराडिव २९
अर्जुन उवाच
नैव वाचा व्यवसितं भीम विज्ञायते सताम्
इतश्चतुर्दशे वर्षे द्रष्टारो यद्भविष्यति ३०
दुर्योधनस्य कर्णस्य शकुनेश्च दुरात्मनः
दुःशासनचतुर्थानां भूमिः पास्यति शोणितम् ३१
असूयितारं वक्तारं प्रस्तष्टारं दुरात्मनाम्
भीमसेन नियोगात्ते हन्ताहं कर्णमाहवे ३२
अर्जुनः प्रतिजानीते भीमस्य प्रियकाम्यया
कर्णं कर्णानुगांश्चैव रणे हन्तास्मि पत्रिभिः ३३
ये चान्ये प्रतियोत्स्यन्ति बुद्धिमोहेन मां नृपाः
तांश्च सर्वाञ्शितैर्बाणैर्नेतास्मि यमसादनम् ३४
चलेद्धि हिमवान्स्थानान्निष्प्रभः स्याद्दिवाकरः
शैत्यं सोमात्प्रणश्येत मत्सत्यं विचलेद्यदि ३५
न प्रदास्यति चेद्राज्यमितो वर्षे चतुर्दशे
दुर्योधनो हि सकृत्य सत्यमेतद्भविष्यति ३६
वैशम्पायन उवाच
इत्युक्तवति पार्थे तु श्रीमान्माद्रवतीसुतः
प्रगृह्य विपुलं बाहुं सहदेवः प्रतापवान् ३७
सौबलस्य वधं प्रेप्सुरिदं वचनमब्रवीत्
क्रोधसंरक्तनयनो निःश्वसन्निव पन्नगः ३८
अक्षान्यान्मन्यसे मूढ गान्धाराणां यशोहर
नैतेऽक्षा निशिता बाणास्त्वयैते समरे वृताः ३९
यथा चैवोक्तवान्भीमस्त्वामुद्दिश्य सबान्धवम्
कर्ताहं कर्मणस्तस्य कुरु कार्याणि सर्वशः ४०
हन्तास्मि तरसा युद्धे त्वां विक्रम्य सबान्धवम्
यदि स्थास्यसि संग्रामे क्षत्रधर्मेण सौबल ४१
सहदेववचः श्रुत्वा नकुलोऽपि विशां पते

दर्शनीयतमो नृणामिदं वचनमब्रवीत् ४२
सुतेयं यज्ञसेनस्य द्यूतेऽस्मिन्धृतराष्ट्रजैः
यैर्वाचः श्राविता रूक्षाः स्थितैर्दुर्योधनप्रिये ४३
तान्धार्तराष्ट्रान्दुर्वृत्तान्मुमूर्षून्काल चोदितान्
दर्शयिष्यामि भूयिष्ठमहं वैवस्वतक्षयम् ४४
निदेशाद्धर्मराजस्य द्रौपद्याः पदवीं चरन्
निर्धार्तराष्ट्रां पृथिवीं कर्तास्मि नचिरादिव ४५
एवं ते पुरुषव्याघ्राः सर्वे व्यायतबाहवः
प्रतिज्ञा बहुलाः कृत्वा धृतराष्ट्रमुपागमन् ४६
इति श्रीमहाभारते सभापर्वणि अष्टषष्टितमोऽध्यायः ६८

## एकोन सप्ततितमोऽध्यायः

युधिष्ठिर उवाच
आमन्त्रयामि भरतांस्तथा वृद्धं पितामहम्
राजानं सोमदत्तं च महाराजं च बाह्लिकम् १
द्रोणं कृपं नृपांश्चान्यानश्वत्थामानमेव च
विदुरं धृतराष्ट्रं च धार्तराष्ट्रांश्च सर्वशः २
युयुत्सुं संजयं चैव तथैवान्यान्सभासदः
सर्वानामन्त्र्य गच्छामि द्रष्टास्मि पुनरेत्य वः ३
वैशम्पायन उवाच
न च किंचित्तदोचुस्ते ह्रिया सन्तो युधिष्ठिरम्
मनोभिरेव कल्याणं दध्युस्ते तस्य धीमतः ४
विदुर उवाच
आर्या पृथा राजपुत्री नारण्यं गन्तुमर्हति
सुकुमारी च वृद्धा च नित्यं चैव सुखोचिता ५
इह वत्स्यति कल्याणी सत्कृता मम वेश्मनि
इति पार्था विजानीध्वमगदं वोऽस्तु सर्वशः ६
युधिष्ठिर विजानीहि ममेदं भरतर्षभ
नाधर्मेण जितः कश्चिद्व्यथते वै पराजयात् ७
त्वं वै धर्मान्विजानीषे युधां वेत्ता धनंजयः

हन्तारीणां भीमसेनो नकुलस्त्वर्थसंग्रही ८
संयन्ता सहदेवस्तु धौम्यो ब्रह्मविदुत्तमः
धर्मार्थकुशला चैव द्रौपदी धर्मचारिणी ९
अन्योन्यस्य प्रियाः सर्वे तथैव प्रियवादिनः
परैरभेद्याः संतुष्टाः को वो न स्पृहयेदिह १०
एष वै सर्वकल्याणः समाधिस्तव भारत
नैनं शत्रुर्विषहते शक्रेणापि समोऽच्युत ११
हिमवत्यनुशिष्टोऽसि मेरुसावर्णिना पुरा
द्वैपायनेन कृष्णेन नगरे वारणावते १२
भृगुतुङ्गे च रामेण दृषद्वत्यां च शंभुना
अश्रौषीरसितस्यापि महर्षेरञ्जनं प्रति १३
द्रष्टा सदा नारदस्ते धौम्यस्तेऽय पुरोहितः
मा हार्षीः साम्पराये त्वं बुद्धिं तामृषिपूजिताम् १४
पुरूरवसमैलं त्वं बुद्ध्या जयसि पाण्डव
शक्त्या जयसि राज्ञोऽन्यानृषीन्धर्मोपसेवया १५
एन्द्रे जये धृतमना याम्ये कोपविधारणे
विसर्गे चैव कौबेरे वारुणे चैव संयमे १६
आत्मप्रदानं सौम्यत्वमद्भ्यश्चैवोपजीवनम्
भूमेः क्षमा च तेजश्च समग्रं सूर्यमण्डलात् १७
वायोर्बलं विद्धि स त्वं भूतेभ्यश्चात्मसंभवम्
अगदं वोऽस्तु भद्रं वो द्रक्ष्यामि पुनरागतान् १८
आपद्धर्मार्थकृच्छ्रेषु सर्वकार्येषु वा पुनः
यथावत्प्रतिपद्येथाः काले काले युधिष्ठिर १९
आपृष्टोऽसीह कौन्तेय स्वस्ति प्राप्नुहि भारत
कृतार्थं स्वस्तिमन्तं त्वां द्रक्ष्यामः पुनरागतम् २०
वैशम्पायन उवाच
एवमुक्तस्तथेत्युक्त्वा पाण्डवः सत्यविक्रमः
भीष्मद्रोणौ नमस्कृत्य प्रातिष्ठत युधिष्ठिरः २१
इति श्रीमहाभाते सभापर्वणि एकोनसप्ततितमोऽध्यायः ६९

सप्ततितमोऽध्यायः

वैशम्पायन उवाच

तस्मिन्संप्रस्थिते कृष्णा पृथां प्राप्य यशस्विनीम्
आपृच्छद्भृशदुःखार्ता याश्चान्यास्तत्र योषितः १
यथार्हं वन्दनाश्लेषान्कृत्वा गन्तुमियेष सा
ततो निनादः सुमहान्पाण्डवान्तःपुरेऽभवत् २
कुन्ती च भृशसंतप्ता द्रौपदीं प्रेक्ष्य गच्छतीम्
शोकविह्वलया वाचा कृच्छ्राद्वचनमब्रवीत् ३
वत्से शोको न ते कार्यः प्राप्येदं व्यसनं महत्
स्त्रीधर्माणामभिज्ञासि शीलाचारवती तथा ४
न त्वां संदेष्टुमर्हामि भर्तॄन्प्रति शुचिस्मिते
साध्वीगुणसमाधानैर्भूषितं ते कुलद्वयम् ५
सभाग्याः कुरवश्चेमे ये न दग्धास्त्वयानघे
अरिष्टं व्रज पन्थानं मदनुध्यानबृंहिता ६
भाविन्यर्थे हि सत्स्त्रीणां वैक्लव्यं नोपजायते
गुरुधर्माभिगुप्ता च श्रेयः क्षिप्रमवाप्स्यसि ७
सहदेवश्च मे पुत्रः सदावेक्ष्यो वने वसन्
यथेदं व्यसनं प्राप्य नास्य सीदेन्महन्मनः ८
तथेत्युक्त्वा तु सा देवी स्रवन्नेत्रजलाविला
शोणिताक्तैकवसना मुक्तकेश्यभिनिर्ययौ ९
तां क्रोशन्तीं पृथा दुःखादनुवव्राज गच्छतीम्
अथापश्यत्सुतान्सर्वान्हृता भरणवाससः १०
रुरुचर्मावृततनून्ह्रिया किंचिदवाङ्मुखान्
परैः परीतान्संहृष्टैः सुहृद्भिश्चानुशोचितान् ११
तदवस्थान्सुतान्सर्वानुपसृत्यातिवत्सला
सस्वजानावदच्छोकात्तत्तद्विलपती बहु १२
कथं सद्धर्मचारित्रवृत्तस्थितिविभूषितान्
अक्षुद्रान्दृढभक्तांश्च दैवतेज्यापरान्सदा १३
व्यसनं वः समभ्यागात्कोऽय विधिविपर्ययः
कस्यापध्यानजं चेदमागः पश्यामि वो धिया १४

स्यात्तु मद्भाग्यदोषोऽय याहं युष्मानजीजनम्
दुःखायासभुजोऽत्यर्थं युक्तानप्युत्तमैर्गुणैः १५
कथं वत्स्यथ दुर्गेषु वनेष्वृद्धिविनाकृताः
वीर्यसत्त्वबलोत्साहतेजोभिरकृशाः कृशाः १६
यद्येतदहमज्ञास्यं वनवासो हि वो ध्रुवम्
शतशृङ्गान्मृते पाण्डौ नागमिष्यं गजाह्वयम् १७
धन्यं वः पितरं मन्ये तपोमेधान्वितं तथा
यः पुत्राधिमसंप्राप्य स्वर्गेच्छामकरोत्प्रियाम् १८
धन्यां चातीन्द्रियज्ञानामिमां प्राप्तां परां गतिम्
मन्येऽद्य माद्रीं धर्मज्ञां कल्याणीं सर्वथैव हि १९
रत्या मत्या च गत्या च ययाहमभिसन्धिता
जीवितप्रियतां मह्यं धिगिमां क्लेशभागिनीम् २०
एवं विलपतीं कुन्तीमभिसान्त्व्य प्रणम्य च
पाण्डवा विगतानन्दा वनायैव प्रवव्रजुः २१
विदुरादयश्च तामार्तां कुन्तीमाश्वास्य हेतुभिः
प्रावेशयन्गृहं क्षत्तुः स्वयमार्ततराः शनैः २२
राजा च धृतराष्ट्रः स शोकाकुलितचेतनः
क्षत्तुः स्त्रंप्रेषयामास शीघ्रमागम्यतामिति २३
ततो जगाम विदुरो धृतराष्ट्रनिवेशनम्
तं पर्यपृच्छत्संविग्नो धृतराष्ट्रो नराधिपः २४
इति श्रीमहाभारते सभापर्वणि सप्ततितमोऽध्यायः ७०

## एक सप्ततितमोऽध्यायः

धृतराष्ट्र उवाच
कथं गच्छति कौन्तेयो धर्मराजो युधिष्ठिरः
भीमसेनः सव्यसाची माद्रीपुत्रौ च तावुभौ १
धौम्यश्चैव कथं क्षत्तर्द्रौपदी वा तपस्विनी
श्रोतुमिच्छाम्यहं सर्वं तेषामङ्गविचेष्टितम् २
विदुर उवाच
वस्त्रेण संवृत्य मुखं कुन्तीपुत्रो युधिष्ठिरः

बाहू विशालौ कृत्वा तु भीमो गच्छति पाराडवः ३
सिकता वपन्सव्यसाची राजानमनुगच्छति
माद्रीपुत्रः सहदेवो मुखमालिप्य गच्छति ४
पांसूपलिप्तसर्वाङ्गो नकुलश्चित्तविह्वलः
दर्शनीयतमो लोके राजानमनुगच्छति ५
कृष्णा केशैः प्रतिच्छाद्य मुखमायतलोचना
दर्शनीया प्ररुदती राजानमनुगच्छति ६
धौम्यो याम्यानि सामानि रौद्राणि च विशां पते
गायन्गच्छति मार्गेषु कुशानादाय पाणिना ७
धृतराष्ट्र उवाच
विविधानीह रूपाणि कृत्वा गच्छन्ति पाराडवाः
तन्ममाचक्ष्व विदुर कस्मादेवं व्रजन्ति ते ८
विदुर उवाच
निकृतस्यापि ते पुत्रैर्हृते राज्ये धनेषु च
न धर्माच्चलते बुद्धिर्धर्मराजस्य धीमतः ९
योऽसौ राजा घृणी नित्यं धार्तराष्ट्रेषु भारत
निकृत्या क्रोधसंतप्तो नोन्मीलयति लोचने १०
नाहं जनं निर्दहेयं दृष्ट्वा घोरेण चक्षुषा
स पिधाय मुखं राजा तस्माद्गच्छति पाराडवः ११
यथा च भीमो व्रजति तन्मे निगदतः शृणु
बाह्वोर्बले नास्ति समो ममेति भरतर्षभ १२
बाहू विशालौ कृत्वा तु तेन भीमोऽपि गच्छति
बाहू दर्शयमानो हि बाहुद्रविणदर्पितः
चिकीर्षन्कर्म शत्रुभ्यो बाहुद्रव्यानुरूपतः १३
प्रदिशञ्शर संपातान्कुन्तीपुत्रोऽर्जुनस्तदा
सिकता वपन्सव्यसाची राजानमनुगच्छति १४
असक्ताः सिकतास्तस्य यथा संप्रति भारत
अशक्तं शरवर्षाणि तथा मोक्ष्यति शत्रुषु १५
न मे कश्चिद्विजानीयान्मुखमद्येति भारत
मुखमालिप्य तेनासौ सहदेवोऽपि गच्छति १६

नाहं मनांस्याददेयं मार्गे स्त्रीणामिति प्रभो
पांसूपचितसर्वाङ्गो नकुलस्तेन गच्छति १७
एकवस्त्रा तु रुदती मुक्तकेशी रजस्वला
शोणिताक्तार्द्रवसना द्रौपदी वाक्यमब्रवीत् १८
यत्कृतेऽहमिमां प्राप्ता तेषां वर्षे चतुर्दशे
हतपत्यो हतसुता हतबन्धुजनप्रियाः १९
बन्धुशोणितदिग्धाङ्ग्यो मुक्तकेश्यो रजस्वलाः
एवं कृतोदका नार्यः प्रवेक्ष्यन्ति गजाह्वयम् २०
कृत्वा तु नैरृतान्दर्भान्धीरो धौम्यः पुरोहितः
सामानिगायन्याम्यानि पुरतो याति भारत २१
हतेषु भारतेष्वाजौ कुरूणां गुरवस्तदा
एवं सामानि गास्यन्तीत्युक्त्वा धौम्योऽपि गच्छति २२
हा हा गच्छन्ति नो नाथाः समवेक्षध्वमीदृशम्
इति पौराः सुदुःखार्ताः क्रोशन्ति स्म समन्ततः २३
एवमाकारलिङ्गैस्ते व्यवसायं मनोगतम्
कथयन्तः स्म कौन्तेया वनं जग्मुर्मनस्विनः २४
एवं तेषु नराग्र्येषु निर्यत्सु गजसाह्वयात्
अनभ्रे विद्युतश्चासन्भूमिश्च समकम्पत २५
राहुरग्रसदादित्यमपर्वणि विशां पते
उल्का चाप्यपसव्यं तु परं कृत्वा व्यशीर्यत २६
प्रव्याहरन्ति क्रव्यादा गृध्रगोमायुवायसाः
देवायतनचैत्येषु प्राकाराट्टालकेषु च २७
एवमेते महोत्पाता वनं गच्छति पाण्डवे
भारतानामभावाय राजन्दुर्मन्त्रिते तव २८
नारदश्च सभामध्ये कुरूणामग्रतः स्थितः
महर्षिभिः परिवृतो रौद्रं वाक्यमुवाच ह २९
इतश्चतुर्दशे वर्षे विनङ्क्ष्यन्तीह कौरवाः
दुर्योधनापराधेन भीमार्जुनबलेन च ३०
इत्युक्त्वा दिवमाक्रम्य क्षिप्रमन्तरधीयत
ब्राह्मीं श्रियं सुविपुलां बिभ्रद्देवर्षिसत्तमः ३१

ततो दुर्योधनः कर्णः शकुनिश्चापि सौबलः
द्रोणं द्वीपममन्यन्त राज्यं चास्मै न्यवेदयन् ३२
अथाब्रवीत्ततो द्रोणो दुर्योधनममर्षणम्
दुःशासनं च कर्णं च सर्वानेव च भारतान् ३३
अवध्यान्पाण्डवानाहुर्देवपुत्रान्द्विजातयः
अहं तु शरणं प्राप्तान्वर्तमानो यथाबलम् ३४
गतान्सर्वात्मना भक्त्या धार्तराष्ट्रान्सराजकान्
नोत्सहे समभित्यक्तुं दैवमूलमतः परम् ३५
धर्मतः पाण्डुपुत्रा वै वनं गच्छन्ति निर्जिताः
ते च द्वादश वर्षाणि वने वत्स्यन्ति कौरवाः ३६
चरितब्रह्मचर्याश्च क्रोधामर्षवशानुगाः
वैरं प्रत्यानयिष्यन्ति मम दुःखाय पाण्डवाः ३७
मया तु भ्रंशितो राज्याद्द्रुपदः सखिविग्रहे
पुत्रार्थमयजत्क्रोधाद्वधाय मम भारत ३८
याजोपयाजतपसा पुत्रं लेभे स पावकात्
धृष्टद्युम्नं द्रौपदीं च वेदीमध्यात्सुमध्यमाम् ३९
ज्वालावर्णो देवदत्तो धनुष्मान्कवची शरी
मर्त्यधर्मतया तस्मादिति मां भयमाविशत् ४०
गतो हि पक्षतां तेषां पार्षतः पुरुषर्षभः
सृष्टप्राणो भृशतरं तस्माद्योत्स्ये तवारिभिः ४१
मद्वधाय श्रुतो ह्येष लोके चाप्यतिविश्रुतः
नूनं सोऽयमनुप्राप्तस्त्वत्कृते कालपर्ययः ४२
त्वरिताः कुरुत श्रेयो नैतदेतावता कृतम्
मुहूर्तं सुखमेवैतत्तालच्छायेव हैमनी ४३
यजध्वं च महायज्ञैर्भोगानाश्नीत दत्त च
इतश्चतुर्दशे वर्षे महत्प्राप्स्यथ वैशसम् ४४
दुर्योधन निशम्यैतत्प्रतिपद्य यथेच्छसि
साम वा पाण्डवेयेषु प्रयुङ्क्ष्व यदि मन्यसे ४५
वैशम्पायन उवाच
द्रोणस्य वचनं श्रुत्वा धृतराष्ट्रोऽब्रवीदिदम्

सम्यगाह गुरुः क्षत्तरुपावर्तय पाराडवान् ४६
यदि वा न निवर्तन्ते सत्कृता यान्तु पाराडवाः
सशस्त्ररथपादाता भोगवन्तश्च पुत्रकाः ४७
इति श्रीमहाभारते सभापर्वणि एकसप्ततितमोऽध्यायः ७१

द्विसप्ततितमोऽध्यायः
वैशम्पायन उवाच
वनं गतेषु पार्थेषु निर्जितेषु दुरोदरे
धृतराष्ट्रं महाराज तदा चिन्ता समाविशत् १
तं चिन्तयानमासीनं धृतराष्ट्रं जनेश्वरम्
निःश्वसन्तमनेकाग्रमिति होवाच संजयः २
अवाप्य वसुसंपूर्णां वसुधां वसुधाधिप
प्रव्राज्य पाराडवान्राज्याद्राजन्किमनुशोचसि ३
धृतराष्ट्र उवाच
अशोच्यं तु कुतस्तेषां येषां वैरं भविष्यति
पाराडवैर्युद्धशौराडैर्हि मित्रवद्भिर्महारथैः ४
संजय उवाच
तवेदं सुकृतं राजन्महद्वैरं भविष्यति
विनाशः सर्वलोकस्य सानुबन्धो भविष्यति ५
वार्यमाणोऽपि भीष्मेण द्रोणेन विदुरेण च
पाराडवानां प्रियां भार्यां द्रौपदीं धर्मचारिणीम् ६
प्राहिणोदानयेहेति पुत्रो दुर्योधनस्तव
सूतपुत्रं सुमन्दात्मा निर्लज्जः प्रातिकामिनम् ७
धृतराष्ट्र उवाच
यस्मै देवाः प्रयच्छन्ति पुरुषाय पराभवम्
बुद्धिं तस्यापकर्षन्ति सोऽपाचीनानि पश्यति ८
बुद्धौ कलुषभूतायां विनाशे प्रत्युपस्थिते
अनयो नयसङ्काशो हृदयान्नापसर्पति ९
अनर्थाश्चार्थरूपेण अर्थाश्चानर्थरूपिणः
उत्तिष्ठन्ति विनाशान्ते नूनं तच्चास्य रोचते १०

न कालो दण्डमुद्यम्य शिरः कृन्तति कस्यचित्
कालस्य बलमेतावद्विपरीतार्थदर्शनम् ११
आसादितमिदं घोरं तुमुलं लोमहर्षणम्
पाञ्चालीमपकर्षद्भिः सभामध्ये तपस्विनीम् १२
अयोनिजां रूपवतीं कुले जातां विभावरीम्
को नु तां सर्वधर्मज्ञां परिभूय यशस्विनीम् १३
पर्यानयेत्सभामध्यमृते दुर्द्यूतदेविनम्
स्त्रीधर्मिणीं वरारोहां शोणितेन समुक्षिताम् १४
एकवस्त्रां च पाञ्चालद्यं पाण्डवानभ्यवेक्षतीम्
हृतस्वान्भ्रष्टचित्तांस्तान्हृतदारान्हृतश्रियः १५
विहीनान्सर्वकामेभ्यो दासभाववशं गतान्
धर्मपाशपरिक्षिप्तानशक्तानिव विक्रमे १६
क्रुद्धाममर्षितां कृष्णां दुःखितां कुरुसंसदि
दुर्योधनश्च कर्णश्च कटुकान्यभ्यभाषताम् १७
तस्याः कृपणचक्षुर्भ्यां प्रदह्येतापि मेदिनी
अपि शेषं भवेदद्य पुत्राणां मम संजय १८
भारतानां स्त्रियः सर्वा गान्धार्या सह सङ्गताः
प्राक्रोशन्भैरवं तत्र दृष्ट्वा कृष्णां सभागताम् १९
अग्निहोत्राणि सायाह्ने न चाहूयन्त सर्वशः
ब्राह्मणाः कुपिताश्चासन्द्रौपद्याः परिकर्षणे २०
आसीन्निष्टानको घोरो निर्घातश्च महानभूत्
दिवोल्काश्चापतन्घोरा राहुश्चार्कमुपाग्रसत्
अपर्वणि महाघोरं प्रजानां जनयन्भयम् २१
तथैव रथशालासु प्रादुरासीद्धुताशनः
ध्वजाश्च व्यवशीर्यन्त भरतानामभूतये २२
दुर्योधनस्याग्निहोत्रे प्राक्रोशन्भैरवं शिवाः
तास्तदा प्रत्यभाषन्त रासभाः सर्वतोदिशम् २३
प्रातिष्ठत ततो भीष्मो द्रोणेन सह संजय
कृपश्च सोमदत्तश्च बाह्लीकश्च महारथः २४
ततोऽहमब्रुवं तत्र विदुरेण प्रचोदितः

वरं ददानि कृष्णायै काङ्क्षितं यद्यदिच्छति २५
अवृणोत्तत्र पाञ्चाली पाण्डवानमितौजसः
सरथान्सधनुष्कांश्चाप्यनुज्ञासिषमप्यहम् २६
अथाब्रवीन्महाप्राज्ञो विदुरः सर्वधर्मवित्
एतदन्ताः स्थ भरता यद्वः कृष्णा सभां गता २७
एषा पाञ्चालराजस्य सुतैषा श्रीरनुत्तमा
पाञ्चाली पाण्डवानेतान्दैवसृष्टोपसर्पति २८
तस्याः पार्थाः परिक्लेशं न क्षंस्यन्तेऽत्यमर्षणाः
वृष्णयो वा महेष्वासाः पाञ्चाला वा महौजसः २९
तेन सत्याभिसन्धेन वासुदेवेन रक्षिताः
आगमिष्यति बीभत्सुः पाञ्चालैरभिरक्षितः ३०
तेषां मध्ये महेष्वासो भीमसेनो महाबलः
आगमिष्यति धुन्वानो गदां दण्डमिवान्तकः ३१
ततो गाण्डीवनिर्घोषं श्रुत्वा पार्थस्य धीमतः
गदावेगं च भीमस्य नालं सोढुं नराधिपाः ३२
तत्र मे रोचते नित्यं पार्थैः सार्धं न विग्रहः
कुरुभ्यो हि सदा मन्ये पाण्डवाञ्शक्तिमत्तरान् ३३
तथा हि बलवान्राजा जरासंधो महाद्युतिः
बाहुप्रहरणेनैव भीमेन निहतो युधि ३४
तस्य ते शम एवास्तु पाण्डवैर्भरतर्षभ
उभयोः पक्षयोर्युक्तं क्रियतामविशङ्कया ३५
एवं गावल्गणे क्षत्ता धर्मार्थसहितं वचः
उक्तवान्न गृहीतं च मया पुत्रहितेप्सया ३६

इति श्रीमहाभारते सभापर्वणि द्विसप्ततितमोऽध्यायः ७२

सभापर्व समाप्त

श्रीगणेशाय नमः
ॐ नारायणं नमस्कृत्य नरं चैव नरोत्तमम्
देवीं सरस्वतीं चैव ततो जयमुदीरयेत्

## प्रथमोऽध्यायः

जनमेजय उवाच
एवं द्यूतजिताः पार्थाः कोपिताश्च दुरात्मभिः
धार्तराष्ट्रैः सहामात्यैर्निकृत्या द्विजसत्तम १
श्राविताः परुषा वाचः सृजद्भिर्वैरमुत्तमम्
किमकुर्वन्त कौरव्या मम पूर्वपितामहाः २
कथं चैश्वर्यविभ्रष्टाः सहसा दुःखमेयुषः
वने विजह्रिरे पार्थाः शक्रप्रतिमतेजसः ३
के चैनानन्ववर्तन्त प्राप्तान्व्यसनमुत्तमम्
किमाहाराः किमाचाराः क्व च वासो महात्मनाम् ४
कथं द्वादश वर्षाणि वने तेषां महात्मनाम्
व्यतीयुर्ब्राह्मणश्रेष्ठ शूराणामरिघातिनाम् ५
कथं च राजपुत्री सा प्रवरा सर्वयोषिताम्
पतिव्रता महाभागा सततं सत्यवादिनी
वनवासमदुःखार्हा दारुणं प्रत्यपद्यत ६
एतदाचक्ष्व मे सर्वं विस्तरेण तपोधन
श्रोतुमिच्छामि चरितं भूरिद्रविणतेजसाम्
कथ्यमानं त्वया विप्र परं कौतूहलं हि मे ७
वैशम्पायन उवाच
एवं द्यूतजिताः पार्थाः कोपिताश्च दुरात्मभिः
धार्तराष्ट्रैः सहामात्यैर्निर्ययुर्गजसाह्वयात् ८
वर्धमानपुरद्वारेणाभिनिष्क्रम्य ते तदा
उदङ्मुखाः शस्त्रभृतः प्रययुः सह कृष्णया ९
इन्द्रसेनादयश्चैनान्भृत्याः परिचतुर्दश
रथैरनुययुः शीघ्रैः स्त्रिय आदाय सर्वशः १०
व्रजतस्तान्विदित्वा तु पौराः शोकाभिपीडिताः

गर्हयन्तोऽसकृद्भीष्मविदुरद्रोणगौतमान्
ऊचुर्विगतसंत्रासाः समागम्य परस्परम् ११
नेदमस्ति कुलं सर्वं न वयं न च नो गृहाः
यत्र दुर्योधनः पापः सौबलेयेन पालितः
कर्णदुःशासनाभ्यां च राज्यमेतच्चिकीर्षति १२
नो चेत्कुलं न चाचारो न धर्मोऽथ कुतः सुखम्
यत्र पापसहायोऽय पापो राज्यं बुभूषते १३
दुर्योधनो गुरुद्वेषी त्यक्ताचारसुहृज्जनः
अर्थलुब्धोऽभिमानी च नीचः प्रकृतिनिर्घृणः १४
नेयमस्ति मही कृत्स्ना यत्र दुर्योधनो नृपः
साधु गच्छामहे सर्वे यत्र गच्छन्ति पाण्डवाः १५
सानुक्रोशा महात्मानो विजितेन्द्रियशत्रवः
ह्रीमन्तः कीर्तिमन्तश्च धर्माचारपरायणाः १६
एवमुक्त्वानुजग्मुस्तान्पाण्डवांस्ते समेत्य च
ऊचुः प्राञ्जलयः सर्वे तान्कुन्तीमाद्रिनन्दनान् १७
क्व गमिष्यथ भद्रं वस्त्यक्त्वास्मान्दुःखभागिनः
वयमप्यनुयास्यामो यत्र यूयं गमिष्यथ १८
अधर्मेण जिताञ्श्रुत्वा युष्मांस्त्यक्तघृणैः परैः
उद्विग्नाः स्म भृशं सर्वे नास्मान्हातुमिहार्हथ १९
भक्तानुरक्ताः सुहृदः सदा प्रियहिते रतान्
कुराजाधिष्ठिते राज्ये न विनश्येम सर्वशः २०
श्रूयतां चाभिधास्यामो गुणदोषान्नरर्षभाः
शुभाशुभाधिवासेन संसर्गं कुरुते यथा २१
वस्त्रमापस्तिलान्भूमिं गन्धो वासयते यथा
पुष्पाणामधिवासेन तथा संसर्गजा गुणाः २२
मोहजालस्य योनिर्हि मूढैरेव समागमः
अहन्यहनि धर्मस्य योनिः साधुसमागमः २३
तस्मात्प्राज्ञैश्च वृद्धैश्च सुस्वभावैस्तपस्विभिः
सद्भिश्च सह संसर्गः कार्यः शमपरायणैः २४
येषां त्रीण्यवदातानि योनिर्विद्या च कर्म च

तान्सेवेत्तैः समास्या हि शास्त्रेभ्योऽपि गरीयसी २५
निरारम्भा ह्यपि वयं पुण्यशीलेषु साधुषु
पुण्यमेवाप्नुयामेह पापं पापोपसेवनात् २६
असतां दर्शनात्स्पर्शात्संजल्पनसहासनात्
धर्माचाराः प्रहीयन्ते न च सिध्यन्ति मानवाः २७
बुद्धिश्च हीयते पुंसां नीचैः सह समागमात्
मध्यमैर्मध्यतां याति श्रेष्ठतां याति चोत्तमैः २८
येगुणाः कीर्तिता लोके धर्मकामार्थसंभवाः
लोकाचारात्मसंभूता वेदोक्ताः शिष्टसंमताः २९
ते युष्मासु समस्ताश्च व्यस्ताश्चैवेह सद्गुणाः
इच्छामो गुणवन्मध्ये वस्तुं श्रेयोऽभिकाङ्क्षिणः ३०
युधिष्ठिर उवाच
धन्या वयं यदस्माकं स्नेहकारुण्ययन्त्रिताः
असतोऽपि गुणानाहुर्ब्राह्मणप्रमुखाः प्रजाः ३१
तदहं भ्रातृसहितः सर्वान्विज्ञापयामि वः
नान्यथा तद्धि कर्तव्यमस्मत्स्नेहानुकम्पया ३२
भीष्मः पितामहो राजा विदुरो जननी च मे
सुहृज्जनश्च प्रायो मे नगरे नागसाह्वये ३३
ते त्वस्मद्धितकामार्थं पालनीयाः प्रयत्नतः
युष्माभिः सहितैः सर्वैः शोकसंतापविह्वलाः ३४
निवर्ततागता दूरं समागमनशापिताः
स्वजने न्यासभूते मे कार्या स्नेहान्विता मतिः ३५
एतद्धि मम कार्याणां परमं हृदि संस्थितम्
सुकृतानेन मे तुष्टिः सत्कारश्च भविष्यति ३६
वैशम्पायन उवाच
तथानुमन्त्रितास्तेन धर्मराजेन ताः प्रजाः
चक्रुरार्तस्वरं घोरं हा राजन्निति दुःखिताः ३७
गुणान्पार्थस्य संस्मृत्य दुःखार्ताः परमातुराः
अकामाः संन्यवर्तन्त समागम्याथ पाण्डवान् ३८
निवृत्तेषु तु पौरेषु रथानास्थाय पाण्डवाः

प्रजग्मुर्जाह्नवीतीरे प्रमाणाख्यं महावटम् ३९
तं ते दिवसशेषेण वटं गत्वा तु पाण्डवाः
ऊषुस्तां रजनीं वीराः संस्पृश्य सलिलं शुचिः
उदकेनैव तां रात्रिमूषुस्ते दुःखकर्शिताः ४०
अनुजग्मुश्च तत्रैतान्स्नेहात्केचिद् द्विजातयः
साग्नयोऽनग्नयश्चैव सशिष्यगणबान्धवाः
स तैः परिवृतो राजा शुशुभे ब्रह्मवादिभिः ४१
तेषां प्रादुष्कृताग्नीनां मुहूर्ते रम्यदारुणे
ब्रह्मघोषपुरस्कारः संजल्पः समजायत ४२
राजानं तु कुरुश्रेष्ठं ते हंसमधुरस्वराः
आश्वासयन्तो विप्राग्र्याः क्षपां सर्वां व्यनोदयन् ४३
इति श्रीमहाभारते आरण्यकपर्वणि प्रथमोऽध्यायः १

द्वितीयोऽध्यायः

वैशम्पायन उवाच
प्रभातायां तु शर्वर्यां तेषामक्लिष्टकर्मणाम्
वनं यियासतां विप्रास्तस्थुर्भिक्षाभुजोऽग्रतः
तानुवाच ततो राजा कुन्तीपुत्रो युधिष्ठिरः १
वयं हि हृतसर्वस्वा हृतराज्या हृतश्रियः
फलमूलामिषाहारा वनं यास्याम दुःखिताः २
वनं च दोषबहुलं बहुव्यालसरीसृपम्
परिक्लेशश्च वो मन्ये ध्रुवं तत्र भविष्यति ३
ब्राह्मणानां परिक्लेशो दैवतान्यपि सादयेत्
किं पुनर्मामितो विप्रा निवर्तध्वं यथेष्टतः ४
ब्राह्मणा ऊचुः
गतिर्या भवतां राजंस्तां वयं गन्तुमुद्यताः
नार्हथास्मान्परित्यक्तुं भक्तान्सद्धर्मदर्शिनः ५
अनुकम्पां हि भक्तेषु दैवतान्यपि कुर्वते
विशेषतो ब्राह्मणेषु सदाचारावलम्बिषु ६
युधिष्ठिर उवाच

ममापि परमा भक्तिर्ब्राह्मणेषु सदा द्विजाः
सहायविपरिभ्रंशस्त्वयं सादयतीव माम् ७
आहरेयुर्हि मे येऽपि फलमूलमृगांस्तथा
त इमे शोकजैर्दुःखैर्भ्रातरो मे विमोहिताः ८
द्रौपद्या विप्रकर्षेण राज्यापहरणेन च
दुःखान्वितानिमान्क्लेशैर्नाहं योक्तुमिहोत्सहे ९
ब्राह्मणा ऊचुः
अस्मत्पोषणजा चिन्ता मा भूत्ते हृदि पार्थिव
स्वयमाहृत्य वन्यानि अनुयास्यामहे वयम् १०
अनुध्यानेन जप्येन विधास्यामः शिवं तव
कथाभिश्चानुकूलाभिः सह रंस्यामहे वने ११
युधिष्ठिर उवाच
एवमेतन्न संदेहो रमेयं ब्राह्मणैः सह
न्यूनभावात्तु पश्यामि प्रत्यादेशमिवात्मनः १२
कथं द्रक्ष्यामि वः सर्वान्स्वयमाहृतभोजनान्
मद्भक्त्या क्लिश्यतोऽनर्हान्धिक्पापान्धृतराष्ट्रजान् १३
वैशम्पायन उवाच
इत्युक्त्वा स नृपः शोचन्निषसाद महीतले
तमध्यात्मरतिर्विद्वाञ्शौनको नाम वै द्विजः
योगे सांख्ये च कुशलो राजानमिदमब्रवीत् १४
शोकस्थानसहस्राणि भयस्थानशतानि च
दिवसे दिवसे मूढमाविशन्ति न पण्डितम् १५
न हि ज्ञानविरुद्धेषु बहुदोषेषु कर्मसु
श्रेयोघातिषु सज्जन्ते बुद्धिमन्तो भवद्विधाः १६
अष्टाङ्गां बुद्धिमाहुर्यां सर्वाश्रेयोविघातिनीम्
श्रुतिस्मृतिसमायुक्तां सा राजंस्त्वय्यवस्थिता १७
अर्थकृच्छ्रेषु दुर्गेषु व्यापत्सु स्वजनस्य च
शारीरमानसैर्दुःखैर्न सीदन्ति भवद्विधाः १८
श्रूयतां चाभिधास्यामि जनकेन यथा पुरा
आत्मव्यवस्थानकरा गीताः श्लोका महात्मना १९

मनोदेहसमुत्थाभ्यां दुःखाभ्यामर्दितं जगत्
तयोर्व्याससमासाभ्यां शमोपायमिमं शृणु २०
व्याधेरनिष्टसंस्पर्शाच्छ्रमादिष्टविवर्जनात्
दुःखं चतुर्भिः शारीरं कारणैः संप्रवर्तते २१
तदाशुप्रतिकाराच्च सततं चाविचिन्तनात्
आधिव्याधिप्रशमनं क्रियायोगद्वयेन तु २२
मतिमन्तो ह्यतो वैद्याः शमं प्रागेव कुर्वते
मानसस्य प्रियाख्यानैः संभोगोपनयैर्नृणाम् २३
मानसेन हि दुःखेन शरीरमुपतप्यते
अयःपिण्डेन तप्तेन कुम्भसंस्थमिवोदकम् २४
मानसं शमयेत्तस्माज्ज्ञानेनाग्निमिवाम्बुना
प्रशान्ते मानसे दुःखे शारीरमुपशाम्यति २५
मनसो दुःखमूलं तु स्नेह इत्युपलभ्यते
स्नेहात्तु सज्जते जन्तुर्दुःखयोगमुपैति च २६
स्नेहमूलानि दुःखानि स्नेहजानि भयानि च
शोकहर्षौ तथायासः सर्वं स्नेहात्प्रवर्तते २७
स्नेहात्कारणरागश्च प्रजज्ञे वैषयस्तथा
अश्रेयस्कावुभावेतौ पूर्वस्तत्र गुरुः स्मृतः २८
कोटराग्निर्यथाशेषं समूलं पादपं दहेत्
धर्मार्थिनं तथाल्पोऽपि रागदोषो विनाशयेत् २९
विप्रयोगे न तु त्यागी दोषदर्शी समागमात्
विरागं भजते जन्तुर्निर्वैरो निष्परिग्रहः ३०
तस्मात्स्नेहं स्वपक्षेभ्यो मित्रेभ्यो धनसंचयात्
स्वशरीरसमुत्थं तु ज्ञानेन विनिवर्तयेत् ३१
ज्ञानान्वितेषु मुख्येषु शास्त्रज्ञेषु कृतात्मसु
न तेषु सज्जते स्नेहः पद्मपत्रेष्विवोदकम् ३२
रागाभिभूतः पुरुषः कामेन परिकृष्यते
इच्छा संजायते तस्य ततस्तृष्णा प्रवर्तते ३३
तृष्णा हि सर्वपापिष्ठा नित्योद्वेगकरी नृणाम्
अधर्मबहुला चैव घोरा पापानुबन्धिनी ३४

या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः
योऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखम् ३५
अनाद्यन्ता तु सा तृष्णा अन्तर्देहगता नृणाम्
विनाशयति संभूता अयोनिज इवानलः ३६
यथैधः स्वसमुत्थेन वह्निना नाशमृच्छति
तथाकृतात्मा लोभेन सहजेन विनश्यति ३७
राजतः सलिलादग्नेश्चोरतः स्वजनादपि
भयमर्थवतां नित्यं मृत्योः प्राणभृतामिव ३८
यथा ह्यामिषमाकाशे पक्षिभिः श्वापदैर्भुवि
भक्ष्यते सलिले मत्स्यैस्तथा सर्वेण वित्तवान् ३९
अर्थ एव हि केषांचिदनर्थो भविता नृणाम्
अर्थश्रेयसि चासक्तो न श्रेयो विन्दते नरः
तस्मादर्थागमाः सर्वे मनोमोहविवर्धनाः ४०
कार्पण्यं दर्पमानौ च भयमुद्वेग एव च
अर्थजानि विदुः प्राज्ञा दुःखान्येतानि देहिनाम् ४१
अर्थस्योपार्जने दुःखं पालने च क्षये तथा
नाशे दुःखं व्यये दुःखं घ्नन्ति चैवार्थकारणात् ४२
अर्था दुःखं परित्यक्तुं पालिताश्चापि तेऽसुखाः
दुःखेन चाधिगम्यन्ते तेषां नाशं न चिन्तयेत् ४३
असन्तोषपरा मूढाः सन्तोषं यान्ति पण्डिताः
अन्तो नास्ति पिपासायाः सन्तोषं परमं सुखम्
तस्मात्संतोषमेवेह धनं पश्यन्ति पण्डिताः ४४
अनित्यं यौवनं रूपं जीवितं द्रव्यसंचयः
एश्वर्यं प्रियसंवासो गृध्येदेषु न पण्डितः ४५
त्यजेत संचयांस्तस्मात्तज्जं क्लेशं सहेत कः
न हि संचयवान्कश्चिद् दृश्यते निरुपद्रवः ४६
अतश्च धर्मिभिः पुम्भिरनीहार्थः प्रशस्यते
प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् ४७
युधिष्ठरैवमर्थेषु न स्पृहां कर्तुमर्हसि
धर्मेण यदि ते कार्यं विमुक्तेच्छो भवार्थतः ४८

युधिष्ठिर उवाच
नार्थोपभोगलिप्सार्थमियमर्थेप्सुता मम
भरणार्थं तु विप्राणां ब्रह्मन्काङ्क्षे न लोभतः ४९
कथं ह्यस्मद्विधो ब्रह्मन्वर्तमानो गृहाश्रमे
भरणं पालनं चापि न कुर्यादनुयायिनाम् ५०
संविभागो हि भूतानां सर्वेषामेव शिष्यते
तथैवापचमानेभ्यः प्रदेयं गृहमेधिना ५१
तृणानि भूमिरुदकं वाक्चतुर्थी च सूनृता
सतामेतानि गेहेषु नोच्छिद्यन्ते कदाचन ५२
देयमार्तस्य शयनं स्थितश्रान्तस्य चासनम्
तृषितस्य च पानीयं क्षुधितस्य च भोजनम् ५३
चक्षुर्दद्यान्मनो दद्याद्वाचं दद्याच्च सूनृताम्
प्रत्युद्गम्याभिगमनं कुर्यान्न्यायेन चार्चनम् ५४
अग्निहोत्रमनड्वांश्च ज्ञातयोऽतिथिबान्धवाः
पुत्रदारभृताश्चैव निर्दहेयुरपूजिताः ५५
नात्मार्थं पाचयेदन्नं न वृथा घातयेत्पशून्
न च तत्स्वयमश्नीयाद्विधिवद्यन्न निर्वपेत् ५६
श्वभ्यश्च श्वपचेभ्यश्च वयोभ्यश्चावपेद्भुवि
वैश्वदेवं हि नामैतत्सायंप्रातर्विधीयते ५७
विघसाशी भवेत्तस्मान्नित्यं चामृतभोजनः
विघसं भृत्यशेषं तु यज्ञशेषं तथामृतम् ५८
एतां यो वर्तते वृत्तिं वर्तमानो गृहाश्रमे
तस्य धर्मं परं प्राहुः कथं वा विप्र मन्यसे ५९
शौनक उवाच
अहो बत महत्कष्टं विपरीतमिदं जगत्
येनापत्रपते साधुरसाधुस्तेन तुष्यति ६०
शिश्नोदरकृतेऽप्राज्ञः करोति विघसं बहु
मोहरागसमाक्रान्त इन्द्रियार्थवशानुगः ६१
ह्रियते बुध्यमानोऽपि नरो हारिभिरिन्द्रियैः
विमूढसंज्ञो दुष्टाश्वैरुद्भ्रान्तैरिव सारथिः ६२

षडिन्द्रियाणि विषयं समागच्छन्ति वै यदा
तदा प्रादुर्भवत्येषां पूर्वसंकल्पजं मनः ६३
मनो यस्येन्द्रियग्रामविषयं प्रति चोदितम्
तस्यौत्सुक्यं संभवति प्रवृत्तिश्चोपजायते ६४
ततः संकल्पवीर्येण कामेन विषयेषुभिः
विद्धः पतति लोभाग्नौ ज्योतिर्लोभात्पतङ्गवत् ६५
ततो विहारैराहारैर्मोहितश्च विशां पते
महामोहमुखे मग्नो नात्मानमवबुध्यते ६६
एवं पतति संसारे तासु तास्विह योनिषु
अविद्याकर्मतृष्णाभिर्भ्राम्यमाणोऽथ चक्रवत् ६७
ब्रह्मादिषु तृणान्तेषु भूतेषु परिवर्तते
जले भुवि तथाकाशे जायमानः पुनः पुनः ६८
अबुधानां गतिस्त्वेषा बुधानामपि मे शृणु
ये धर्मे श्रेयसि रता विमोक्षरतयो जनाः ६९
यदिदं वेदवचनं कुरु कर्म त्यजेति च
तस्माद्धर्मानिमान्सर्वान्नाभिमानात्समाचरेत् ७०
इज्याध्ययनदानानि तपः सत्यं क्षमा दमः
अलोभ इति मार्गोऽय धर्मस्याष्टविधः स्मृतः ७१
तत्र पूर्वश्चतुर्वर्गः पितृयानपथे स्थितः
कर्तव्यमिति यत्कार्यं नाभिमानात्समाचरेत् ७२
उत्तरो देवयानस्तु सद्भिराचरितः सदा
अष्टाङ्गेनैव मार्गेण विशुद्धात्मा समाचरेत् ७३
सम्यक्संकल्पसंबन्धात्सम्यक्चेन्द्रियनिग्रहात्
सम्यग्व्रतविशेषाच्च सम्यक्च गुरुसेवनात् ७४
सम्यगाहारयोगाच्च सम्यक्चाध्ययनागमात्
सम्यक्कर्मोपसंन्यासात्सम्यक्चित्तनिरोधनात्
एवं कर्माणि कुर्वन्ति संसारविजिगीषवः ७५
रागद्वेषविनिर्मुक्ता एश्वर्यं देवता गताः
रुद्राः साध्यास्तथादित्या वसवोऽथाश्विनावपि
योगैश्वर्येण संयुक्ता धारयन्ति प्रजा इमाः ७६

तथा त्वमपि कौन्तेय शममास्थाय पुष्कलम्
तपसा सिद्धिमन्विच्छ योगसिद्धिं च भारत ७७
पितृमातृमयी सिद्धिः प्राप्ता कर्ममयी च ते
तपसा सिद्धिमन्विच्छ द्विजानां भरणाय वै ७८
सिद्धा हि यद्यदिच्छन्ति कुर्वते तदनुग्रहात्
तस्मात्तपः समास्थाय कुरुष्वात्ममनोरथम् ७९
इति श्रीमहाभारते आरण्यकपर्वणि द्वितीयोऽध्यायः २

## तृतीयोऽध्यायः

वैशम्पायन उवाच
शौनकेनैवमुक्तस्तु कुन्तीपुत्रो युधिष्ठिरः
पुरोहितमुपागम्य भ्रातृमध्येऽब्रवीदिदम् १
प्रस्थितं मानुयान्तीमे ब्राह्मणा वेदपारगाः
न चास्मि पालने शक्तो बहुदुःखसमन्वितः २
परित्यक्तुं न शक्नोमि दानशक्तिश्च नास्ति मे
कथमत्र मया कार्यं भगवांस्तद्ब्रवीतु मे ३
मुहूर्तमिव स ध्यात्वा धर्मेणान्विष्य तां गतिम्
युधिष्ठिरमुवाचेदं धौम्यो धर्मभृतां वरः ४
पुरा सृष्टानि भूतानि पीडयन्ते क्षुधया भृशम्
ततोऽनुकम्पया तेषां सविता स्वपिता इव ५
गत्वोत्तरायणं तेजोरसानुद्धृत्य रश्मिभिः
दक्षिणायनमावृत्तो महीं निविशते रविः ६
क्षेत्रभूते ततस्तस्मिन्नोषधीरोषधीपतिः
दिवस्तेजः समुद्धृत्य जनयामास वारिणा ७
निषिक्तश्चन्द्रतेजोभिः सूयते भूगतो रविः
ओषध्यः षड्रसा मेध्यास्तदन्नं प्राणिनां भुवि ८
एवं भानुमयं ह्यन्नं भूतानां प्राणधारणम्
पितैष सर्वभूतानां तस्मात्तं शरणं व्रज ९
राजानो हि महात्मानो योनिकर्मविशोधिताः
उद्धरन्ति प्रजाः सर्वास्तप आस्थाय पुष्कलम् १०

भीमेन कार्तवीर्येण वैन्येन नहुषेण च
तपोयोगसमाधिस्थैरुद्धृता ह्यापदः प्रजाः ११
तथा त्वमपि धर्मात्मन्कर्मणा च विशोधितः
तप आस्थाय धर्मेण द्विजातीन्भर भारत १२
एवमुक्तस्तु धौम्येन तत्कालसदृशं वचः
धर्मराजो विशुद्धात्मा तप आतिष्ठदुत्तमम् १३
पुष्पोपहारैर्बलिभिरर्चयित्वा दिवाकरम्
योगमास्थाय धर्मात्मा वायुभक्षो जितेन्द्रियः
गाङ्गेयं वार्युपस्पृश्य प्राणायामेन तस्थिवान् १४
जनमेजय उवाच
कथं कुरूणामृषभः स तु राजा युधिष्ठिरः
विप्रार्थमाराधितवान्सूर्यमद्भुतविक्रमम् १५
वैशम्पायन उवाच
शृणुष्वावहितो राजञ्शुचिर्भूत्वा समाहितः
क्षणं च कुरु राजेन्द्र सर्वं वक्ष्याम्यशेषतः १६
धौम्येन तु यथा प्रोक्तं पार्थाय सुमहात्मने
नाम्नामष्टशतं पुण्यं तच्छृणुष्व महामते १७
सूर्योऽयमा भगस्त्वष्टा पूषार्कः सविता रविः
गभस्तिमानजः कालो मृत्युर्धाता प्रभाकरः १८
पृथिव्यापश्च तेजश्च खं वायुश्च परायणम्
सोमो बृहस्पतिः शुक्रो बुधोऽङ्गारक एव च १९
इन्द्रो विवस्वान्दीप्तांशुः शुचिः गौरिः शनैश्चरः
ब्रह्मा विष्णुश्च रुद्रश्च स्कन्दो वैश्रवणो यमः २०
वैद्युतो जाठरश्चाग्निरैन्धनस्तेजसां पतिः
धर्मध्वजो वेदकर्ता वेदाङ्गो वेदवाहनः २१
कृतं त्रेता द्वापरश्च कलि सर्वामराश्रयः
कला काष्ठा मुहूर्ताश्च पक्षा मासा ऋतुस्तथा २२
संवत्सरकरोऽश्वत्थः कालचक्रो विभावसुः
पुरुषः शाश्वतो योगी व्यक्ताव्यक्तः सनातनः २३
लोकाध्यक्षः प्रजाध्यक्षो विश्वकर्मा तमोनुदः

वरुणः सागरोंऽशुश्च जीमूतो जीवनोऽरिहा २४
भूताश्रयो भूतपतिः सर्वभूतनिषेवितः
मणिःसुवर्णो भूतादिः कामदः सर्वतोमुखः २५
जयो विशालो वरदः शीघ्रगः प्राणधारणः
धन्वन्तरिर्धूमकेतुरादिदेवोऽदितेः सुतः २६
द्वादशात्मारविन्दाक्षः पिता माता पितामहः
स्वर्गद्वारं प्रजाद्वारं मोक्षद्वारं त्रिविष्टपम् २७
देहकर्ता प्रशान्तात्मा विश्वात्मा विश्वतोमुखः
चराचरात्मा सूक्ष्मात्मा मैत्रेण वपुषान्वितः २८
एतद्वै कीर्तनीयस्य सूर्यस्यैव महात्मनः
नाम्नामष्टशतं पुण्यं शक्रेणोक्तं महात्मना २९
शक्राच्च नारदः प्राप्तो धौम्यश्च तदन्तरम्
धौम्याद्युधिष्ठिरः प्राप्य सर्वान्कामानवाप्तवान् ३०
सुरपितृगणयक्षसेवितं ह्यसुरनिशाचरसिद्धवन्दितम्
वरकनकहुताशनप्रभं तवमपि मनस्यभिधेहि भास्करम् ३१
सूर्योदये यस्तु समाहितः पठेत्स पुत्रलाभं धनरत्नसंचयान्
लभेत जातिस्मरतां सदा नरः स्मृतिं च मेधां च स विन्दते पराम् ३२
इमं स्तवं देववरस्य यो नरः प्रकीर्तयेच्छुचिसुमनाः समाहितः
स मुच्यते शोकदवाग्निसागराल्लभेत कामान्मनसा यथेप्सितान् ३३
इति श्रीमहाभारते आरण्यकपर्वणि तृतीयोऽध्यायः ३

## चतुर्थोऽध्यायः

वैशम्पायन उवाच
ततो दिवाकरः प्रीतो दर्शयामास पाण्डवम्
दीप्यमानः स्ववपुषा ज्वलन्निव हुताशनः १
यत्तेऽभिलषितं राजन्सर्वमेतदवाप्स्यसि
अहमन्नं प्रदास्यामि सप्त पञ्च च ते समाः २
फलमूलामिषं शाकं संस्कृतं यन्महानसे
चतुर्विधं तदन्नाद्यमक्षय्यं ते भविष्यति
धनं च विविधं तुभ्यमित्युक्त्वान्तरधीयत ३

लब्ध्वा वरं तु कौन्तेयो जलादुत्तीर्य धर्मवित्
जग्राह पादौ धौम्यस्य भ्रातॄंश्चास्वजताच्युतः ४
द्रौपद्या सह संगम्य पश्यमानोऽभ्ययात्प्रभुः
महानसे तदान्नं तु साधयामास पाण्डवः ५
संस्कृतं प्रसवं याति वन्यमन्नं चतुर्विधम्
अक्षय्यं वर्धते चान्नं तेन भोजयते द्विजान् ६
भुक्तवत्सु च विप्रेषु भोजयित्वानुजानपि
शेषं विघससंज्ञं तु पश्चाद्भुङ्क्ते युधिष्ठिरः
युधिष्ठिरं भोजयित्वा शेषमश्नाति पार्षती ७
एवं दिवाकरात्प्राप्य दिवाकरसमद्युतिः
कामान्मनोभिलषितान्ब्राह्मणेभ्यो ददौ प्रभुः ८
पुरोहितपुरोगाश्च तिथिनक्षत्रपर्वसु
यज्ञियार्थाः प्रवर्तन्ते विधिमन्त्रप्रमाणतः ९
ततः कृतस्वस्त्ययना धौम्येन सह पाण्डवाः
द्विजसङ्घैः परिवृताः प्रययुः काम्यकं वनम् १०
इति श्रीमहाभारते आरण्यकपर्वणि चतुर्थोऽध्यायः ४

पञ्चमोऽध्यायः

वैशम्पायन उवाच
वनं प्रविष्टेष्वथ पाण्डवेषु प्रज्ञाचक्षुस्तप्यमानोऽम्बिकेयः
धर्मात्मानं विदुरमगाधबुद्धिं सुखासीनो वाक्यमुवाच राजा १
प्रज्ञा च ते भार्गवस्येव शुद्धा धर्मं च त्वं परमं वेत्थ सूक्ष्मम्
समश्च त्वं संमतः कौरवाणां पथ्यं चैषां मम चैव ब्रवीहि २
एवं गते विदुर यदद्य कार्यं पौराश्चेमे कथमस्मान्भजेरन्
ते चाप्यस्मान्नोद्धरेयुः समूलान्न कामये तांश्च विनश्यमानान् ३
विदुर उवाच
त्रिवर्गोऽय धर्ममूलो नरेन्द्र राज्यं चेदं धर्ममूलं वदन्ति
धर्मे राजन्वर्तमानः स्वशक्त्या पुत्रान्सर्वान्पाहि कुन्तीसुतांश्च ४
स वै धर्मो विप्रलुप्तः सभायां पापात्मभिः सौबलेयप्रधानैः
आहूयकुन्तीसुतमक्षवत्यां पराजैषीत्सत्यसन्धं सुतस्ते ५

एतस्य ते दुष्प्रणीतस्य राजञ्शेषस्याहं परिपश्याम्युपायम्
यथा पुत्रस्तव कौरव्य पापान्मुक्तो लोको प्रतितिष्ठेत साधु ६
तद्वै सर्वं पाण्डुपुत्रा लभन्तां यत्तद्राजन्नतिसृष्टं त्वयासीत्
एष धर्मः परमो यत्स्वकेन राजा तुष्येन्न परस्वेषु गृध्येत् ७
एतत्कार्यं तव सर्वप्रधानं तेषां तुष्टिः शकुनेश्चावमानः
एवं शेषं यदि पुत्रेषु ते स्यादेतद्राजंस्त्वरमाणः कुरुष्व ८
अथैतदेवं न करोषि राजन्ध्रुवं कुरूणां भविता विनाशः
न हि क्रुद्धो भीमसेनोऽजुनो वा शेषं कुर्याच्छात्रवाणामनीके ९
येषां योद्धा सव्यसाची कृतास्त्रो धनुर्येषां गाण्डिवं लोकसारम्
येषां भीमो बाहुशाली च योद्धा तेषां लोके किं नु न प्राप्यमस्ति १०
उक्तं पूर्वं जातमात्रे सुते ते मया यत्ते हितमासीत्तदानीम्
पुत्रं त्यजेममहितं कुलस्येत्येतद्राजन्न च तत्त्वं चकर्थ
इदानीं ते हितमुक्तं न चेत्त्वं कर्तासि राजन्परितप्तासि पश्चात् ११
यद्येतदेवमनुमन्ता सुतस्ते संप्रीयमाणः पाण्डवैरेकराज्यम्
तापो न ते वै भविता प्रीतियोगात्त्वं चेन्न गृह्णासि सुतं सहायैः
अथापरो भवति हि तं निगृह्य पाण्डोः पुत्रं प्रकुरुष्वाधिपत्ये १२
अजातशत्रुर्हि विमुक्तरागो धर्मेणेमां पृथ्वद्यं शास्तु राजन्
ततो राजन्पार्थिवाः सर्व एव वैश्या इवास्मानुपतिष्ठन्तु सद्यः १३
दुर्योधनः शकुनिः सूतपुत्रः प्रीत्या राजन्पाण्डुपुत्रान्भजन्ताम्
दुःशासनो याचतु भीमसेनं सभामध्ये द्रुपदस्यात्मजां च १४
युधिष्ठिरं त्वं परिसान्त्वयस्व राज्ये चैनं स्थापयस्वाभिपूज्य
त्वया पृष्टः किमहमन्यद्वदेयमेतत्कृत्वा कृतकृत्योऽसि राजन् १५
धृतराष्ट्र उवाच
एतद्वाक्यं विदुर यत्ते सभायामिह प्रोक्तं पाण्डवान्प्राप्य मां च
हितं तेषामहितं मामकानामेतत्सर्वं मम नोपैति चेतः १६
इदं त्विदानीं कुत एव निश्चितं तेषामर्थे पाण्डवानां यदात्थ
तेनाद्य मन्ये नासि हितो ममेति कथं हि पुत्रं पाण्डवार्थे त्यजेयम् १७
असंशयं तेऽपि ममैव पुत्रा दुर्योधनस्तु मम देहात्प्रसूतः
स्वं वै देहं परहेतोस्त्यजेति को नु ब्रूयात्समतामन्ववेक्षन् १८
स मा जिह्मं विदुर सर्वं ब्रवीषि मानं च तेऽहमधिकं धारयामि

यथेच्छकं गच्छ वा तिष्ठ वा त्वं सुसान्त्व्यमानाप्यसती स्त्री जहाति १९
वैशम्पायन उवाच
एतावदुक्त्वा धृतराष्ट्रोऽन्वपद्यदन्तर्वेश्म सहसोत्थाय राजन्
नेदमस्तीत्यथ विदुरो भाषमाणः संप्राद्रवद्यत्र पार्था बभूवुः २०
इति श्रीमहाभारते आरगयकपर्वणि पञ्चमोऽध्यायः ५

षष्ठोऽध्यायः

वैशम्पायन उवाच
पागडवास्तु वने वासमुद्दिश्य भरतर्षभाः
प्रययुर्जाह्नवीकूलात्कुरुक्षेत्रं सहानुगाः १
सरस्वतीदृषद्वत्यौ यमुनां च निषेव्य ते
ययुर्वनेनैव वनं सततं पश्चिमां दिशम् २
ततः सरस्वतीकूले समेषु मरुधन्वसु
काम्यकं नाम ददृशुर्वनं मुनिजनप्रियम् ३
तत्र ते न्यवसन्वीरा वने बहुमृगद्विजे
अन्वास्यमाना मुनिभिः सान्त्व्यमानाश्च भारत ४
विदुरस्त्वपि पागडूनां तदा दर्शनलालसः
जगामैकरथेनैव काम्यकं वनमृद्धिमत् ५
ततो यात्वा विदुरः काननं तच्छीघ्रैरश्वैर्वाहिना स्यन्दनेन
ददर्शासीनं धर्मराजं विविक्ते सार्धं द्रौपद्या भ्रातृभिर्ब्राह्मणैश्च ६
ततोऽपश्यद्विदुरं तूर्णमारादभ्यायान्तं सत्यसन्धः स राजा
अथाब्रवीद्भ्रातरं भीमसेनं किं नु क्षत्ता वक्ष्यति नः समेत्य ७
कच्चिन्नायं वचनात्सौबलस्य समाह्वाता देवनायोपयाति
कच्चित्क्षुद्रः शकुनिर्नायुधानि जेष्यत्यस्मान्पुनरेवाक्षवत्याम् ८
समाहूतः केनचिदाद्रवेति नाहं शक्तो भीमसेनापयातुम्
गागडीवे वा संशयिते कथंचिद्राज्यप्राप्तिः संशयिता भवेन्नः ९
तत उत्थाय विदुरं पागडवेयाः प्रत्यगृह्णन्नृपते सर्व एव
तैः सत्कृतः स च तानाजमीढो यथोचितं पागडुपुत्रान्समेयात् १०
समाश्वस्तं विदुरं ते नरर्षभास्ततोऽपृच्छन्नागमनाय हेतुम्
स चापि तेभ्यो विस्तरतः शशंस यथावृत्तो धृतराष्ट्रोऽम्बिकेयः ११

विदुर उवाच
अवोचन्मां धृतराष्ट्रोऽनुगुप्तमजातशत्रो परिगृह्याभिपूज्य
एवं गते समतामभ्युपेत्य पथ्यं तेषां मम चैव ब्रवीहि १२
मयाप्युक्तं यत्क्षमं कौरवाणां हितं पथ्यं धृतराष्ट्रस्य चैव
तद्वै पथ्यं तन्मनो नाभ्युपैति ततश्चाहं क्षममन्यन्न मन्ये १३
परं श्रेयः पाण्डवेया मयोक्तं न मे तच्च श्रुतवानाम्बिकेयः
यथातुरस्येव हि पथ्यमन्नं न रोचते स्मास्य तदुच्यमानम् १४
न श्रेयसे नीयतेऽजातशत्रो स्त्री श्रोत्रियस्येव गृहे प्रदुष्टा
ब्रुवन्न रुच्यै भरतर्षभस्य पतिः कुमार्या इव षष्टिवर्षः १५
ध्रुवं विनाशो नृप कौरवाणां न वै श्रेयो धृतराष्ट्रः परैति
यथा पर्णे पुष्करस्येव सिक्तं जलं न तिष्ठेत्पथ्यमुक्तं तथास्मिन् १६
ततः क्रुद्धो धृतराष्ट्रोऽब्रवीन्मां यत्र श्रद्धा भारत तत्र याहि
नाहं भूयः कामये त्वां सहायं महीमिमां पालयितुं पुरं वा १७
सोऽह त्यक्तो धृतराष्ट्रेण राजंस्त्वां शासितुमुपयातस्त्वरावान्
तद्वै सर्वं यन्मयोक्तं सभायां तद्धार्यतां यत्प्रवक्ष्यामि भूयः १८
क्लेशैस्तीव्रैर्युज्यमानः सपत्नैः क्षमां कुर्वन्कालमुपासते यः
संवर्धयंस्तोकमिवाग्निमात्मवान्स वै भुङ्क्ते पृथिवीमेक एव १९
यस्याविभक्तं वसु राजन्सहायैस्तस्य दुःखेऽप्यश भाजः सहायाः
सहायानामेष संग्रहणेऽभ्युपायः सहायाप्तौ पृथिवीप्राप्तिमाहुः २०
सत्यं श्रेष्ठं पाण्डव निष्प्रलापं तुल्यं चान्नं सह भोज्यं सहायैः
आत्मा चैषामग्रतो नातिवर्तेदेवंवृत्तिर्वर्धते भूमिपालः २१
युधिष्ठिर उवाच
एवं करिष्यामि यथा ब्रवीषि परां बुद्धिमुपगम्याप्रमत्तः
यच्चाप्यन्यद्देशकालोपपन्नं तद्वै वाच्यं तत्करिष्यामि कृत्स्नम् २२
इति श्रीमहाभारते आरण्यकपर्वणि षष्ठोऽध्यायः ६

सप्तमोऽध्यायः

वैशम्पायन उवाच
गते तु विदुरे राजन्नाश्रमं पाण्डवान्प्रति
धृतराष्ट्रो महाप्राज्ञः पर्यतप्यत भारत १

स सभाद्वारमागम्य विदुरस्मारमोहितः
समक्षं पार्थिवेन्द्राणां पपाताविष्टचेतनः २
स तु लब्ध्वा पुनः संज्ञां समुत्थाय महीतलात्
समीपोपस्थितं राजा सञ्जयं वाक्यमब्रवीत् ३
भ्राता मम सुहृच्चैव साक्षाद्धर्म इवापरः
तस्य स्मृत्वाद्य सुभृशं हृदयं दीर्यतीव मे ४
तमानयस्व धर्मज्ञं मम भ्रातरमाशु वै
इति ब्रुवन्स नृपतिः करुणं पर्यदेवयत् ५
पश्चात्तापाभिसंतप्तो विदुरस्मारकर्शितः
भ्रातृस्नेहादिदं राजन्सञ्जयं वाक्यमब्रवीत् ६
गच्छ सञ्जय जानीहि भ्रातरं विदुरं मम
यदि जीवति रोषेण मया पापेन निर्धुतः ७
न हि तेन मम भ्रात्रा सुसूक्ष्ममपि किंचन
व्यलीकं कृतपूर्वं मे प्राज्ञेनामितबुद्धिना ८
स व्यलीकं कथं प्राप्तो मत्तः परमबुद्धिमान्
न जह्याज्जीवितं प्राज्ञस्तं गच्छानय संजय ९
तस्य तद्वचनं श्रुत्वा राज्ञस्तमनुमान्य च
संजयो बाढमित्युक्त्वा प्राद्रवत्काम्यकं वनम् १०
सोऽचिरेण समासाद्य तद्वनं यत्र पाण्डवाः
रौरवाजिनसंवीतं ददर्शाथ युधिष्ठिरम् ११
विदुरेण सहासीनं ब्राह्मणैश्च सहस्रशः
भ्रातृभिश्चाभिसंगुप्तं देवैरिव शतक्रतुम् १२
युधिष्ठिरमथाभ्येत्य पूजयामास सञ्जयः
भीमार्जुनयमांश्चापि तदर्हं प्रत्यपद्यत १३
राज्ञा पृष्टः स कुशलं सुखासीनश्च सञ्जयः
शशंसागमने हेतुमिदं चैवाब्रवीद्वचः १४
राजा स्मरति ते क्षत्तर्धृतराष्ट्रोऽम्बिकासुतः
तं पश्य गत्वा त्वं क्षिप्रं संजीवय च पार्थिवम् १५
सोऽनुमान्य नरश्रेष्ठान्पाण्डवान्कुरुनन्दनान्
नियोगाद्राजसिंहस्य गंतुमर्हसि मानद १६

एवमुक्तस्तु विदुरो धीमान्स्वजनवत्सलः
युधिष्ठिरस्यानुमते पुनरायाद्गजाह्वयम् १७
तमब्रवीन्महाप्राज्ञं धृतराष्ट्रः प्रतापवान्
दिष्ट्या प्राप्तोऽसि धर्मज्ञ दिष्ट्या स्मरसि मेऽनघ १८
अद्य रात्रौ दिवा चाहं त्वत्कृते भरतर्षभ
प्रजागरे प्रपश्यामि विचित्रं देहमात्मनः १९
सोऽङ्कमादाय विदुरं मूर्ध्न्युपाघ्राय चैव ह
क्षम्यतामिति चोवाच यदुक्तोऽसि मया रुषा २०
विदुर उवाच
क्षान्तमेव मया राजन्गुरुर्नः परमो भवान्
तथा ह्यस्म्यागतः क्षिप्रं त्वद्दर्शनपरायणः २१
भवन्ति हि नरव्याघ्र पुरुषा धर्मचेतसः
दीनाभिपातिनो राजन्नात्र कार्या विचारणा २२
पाण्डोः सुता यादृशा मे तादृशा मे सुतास्तव
दीना इति हि मे बुद्धिरभिपन्नाद्य तान्प्रति २३
वैशम्पायन उवाच
अन्योन्यमनुनीयैवं भ्रातरौ तौ महाद्युती
विदुरो धृतराष्ट्रश्च लेभाते परमां मुदम् २४
इति श्रीमहाभारते आरण्यकपर्वणि सप्तमोऽध्यायः ७

अष्टमोऽध्यायः

वैशम्पायन उवाच
श्रुत्वा च विदुरं प्राप्तं राज्ञा च परिसान्त्वितम्
धृतराष्ट्रात्मजो राजा पर्यतप्यत दुर्मतिः १
स सौबलं समानाय्य कर्णदुःशासनावपि
अब्रवीद्वचनं राजा प्रविश्याबुद्धिजं तमः २
एष प्रत्यागतो मन्त्री धृतराष्ट्रस्य संमतः
विदुरः पाण्डुपुत्राणां सुहृद्विद्वान्हिते रतः ३
यावदस्य पुनर्बुद्धिं विदुरो नापकर्षति
पाण्डवानयने तावन्मन्त्रयध्वं हितं मम ४

अथ पश्याम्यहं पार्थान्प्राप्तानिह कथंचन
पुनः शोषं गमिष्यामि निरासुर्निरवग्रह ५
विषमुद्बन्धनं वापि शस्त्रमग्निप्रवेशनम्
करिष्ये न हि तानृद्धान्पुनर्द्रष्टुमिहोत्सहे ६
शकुनिरुवाच
किं बालिशां मतिं राजन्नास्थितोऽसि विशां पते
गतास्ते समयं कृत्वा नैतदेवं भविष्यति ७
सत्यवाक्ये स्थिताः सर्वे पागडवा भरतर्षभ
पितुस्ते वचनं तात न ग्रहीष्यन्ति कर्हिचित् ८
अथ वा ते ग्रहीष्यन्ति पुनरेष्यन्ति वा पुरम्
निरस्य समयं भूयः पणोऽस्माकं भविष्यति ९
सर्वे भवामो मध्यस्था राज्ञश्छन्दानुवर्तिनः
छिद्रं बहु प्रपश्यन्तः पागडवानां सुसंवृताः १०
दुःशासन उवाच
एवमेतन्महाप्राज्ञ यथा वदसि मातुल
नित्यं हि मे कथयतस्तव बुद्धिर्हि रोचते ११
कर्ण उवाच
काममीक्षामहे सर्वे दुर्योधन तवेप्सितम्
एकमत्यं हि नो राजन्सर्वेषामेव लक्ष्यते १२
वैशम्पायन उवाच
एवमुक्तस्तु कर्णेन राजा दुर्योधनस्तदा
नातिहृष्टमनाः क्षिप्रमभवत्स पराङ्मुखः १३
उपलभ्य ततः कर्णो विवृत्य नयने शुभे
रोषाद्दुःशासनं चैव सौबलेयं च तावुभौ १४
उवाच परमक्रुद्ध उद्यम्यात्मानमात्मना
अहो मम मतं यत्तन्निबोधत नराधिपाः १५
प्रियं सर्वे चिकीर्षामो राज्ञः किंकरपाणयः
न चास्य शक्नुमः सर्वे प्रिये स्थातुमतन्द्रिताः १६
वयं तु शस्त्राणयादाय रथानास्थाय दंशिताः
गच्छामः सहिता हन्तुं पागडवान्वनगोचरान् १७

तेषु सर्वेषु शान्तेषु गतेष्वविदितां गतिम्
निर्विवादा भविष्यन्ति धार्तराष्ट्रास्तथा वयम् १८
यावदेव परिद्यूना यावच्छोकपरायणाः
यावन्मित्रविहीनाश्च तावच्छक्या मतं मम १९
तस्य तद्वचनं श्रुत्वा पूजयन्तः पुनः पुनः
बाढमित्येव ते सर्वे प्रत्यूचुः सूतजं तदा २०
एवमुक्त्वा तु संक्रुद्धा रथैः सर्वे पृथक्पृथक्
निर्ययुः पाण्डवान्हन्तुं संघशः कृतनिश्चयाः २१
तान्प्रस्थितान्परिज्ञाय कृष्णद्वैपायनस्तदा
आजगाम विशुद्धात्मा दृष्ट्वा दिव्येन चक्षुषा २२
प्रतिषिध्याथ तान्सर्वान्भगवाँल्लोकपूजितः
प्रज्ञाचक्षुषमासीनमुवाचाभ्येत्य सत्वरः २३
इति श्रीमहाभारते आरण्यकपर्वणि अष्टमोऽध्यायः ८

नवमोऽध्यायः

व्यास उवाच
धृतराष्ट्र महाप्राज्ञ निबोध वचनं मम
वक्ष्यामि त्वा कौरवाणां सर्वेषां हितमुत्तमम् १
न मे प्रियं महाबाहो यद्गताः पाण्डवा वनम्
निकृत्या निर्जिताश्चैव दुर्योधनवशानुगैः २
ते स्मरन्तः परिक्लेशान्वर्षे पूर्णे त्रयोदशे
विमोक्ष्यन्ति विषं क्रुद्धाः कौरवेयेषु भारत ३
तदयं किं नु पापात्मा तव पुत्रः सुमन्दधीः
पाण्डवान्नित्यसंक्रुद्धो राज्यहेतोर्जिघांसति ४
वार्यतां साध्वयं मूढः शमं गच्छतु ते सुतः
वनस्थांस्तानयं हन्तुमिच्छन्प्राणैर्विमोक्ष्यते ५
यथाह विदुरः प्राज्ञो यथा भीष्मो यथा वयम्
यथा कृपश्च द्रोणश्च तथा साधु विधीयताम् ६
विग्रहो हि महाप्राज्ञ स्वजनेन विगर्हितः
अधर्म्यमयशस्यं च मा राजन्प्रतिपद्यथाः ७

समीक्षा यादृशी ह्यस्य पाण्डवान्प्रति भारत
उपेक्ष्यमाणा सा राजन्महान्तमनयं स्पृशेत् ८
अथ वायं सुमन्दात्मा वनं गच्छतु ते सुतः
पाण्डवैः सहितो राजन्नेक एवासहायवान् ९
ततः संसर्गजः स्नेहः पुत्रस्य तव पाण्डवैः
यदि स्यात्कृतकार्योऽद्य भवेस्त्वं मनुजेश्वर १०
अथ वा जायमानस्य यच्छीलमनुजायते
श्रूयते तन्महाराज नामृतस्यापसर्पति ११
कथं वा मन्यते भीष्मो द्रोणो वा विदुरोऽपि वा
भवान्वात्र क्षमं कार्यं पुरा चार्थोऽतिवर्तते १२
इति श्रीमहाभारते आरण्यकपर्वणि नवमोऽध्यायः ९

दशमोऽध्यायः

धृतराष्ट्र उवाच
भगवन्नाहमप्येतद्रोचये द्यूतसंस्तवम्
मन्ये तद्विधिनाक्रम्य कारितोऽस्मीति वै मुने १
नैतद्रोचयते भीष्मो न द्रोणो विदुरो न च
गान्धारी नेच्छति द्यूतं तच्च मोहात्प्रवर्तितम् २
परित्यक्तुं न शक्नोमि दुर्योधनमचेतनम्
पुत्रस्नेहेन भगवञ्जानन्नपि यतव्रत ३
व्यास उवाच
वैचित्रवीर्य नृपते सत्यमाह यथा भवान्
दृढं वेद्मि परं पुत्रं परं पुत्रान्न विद्यते ४
इन्द्रोऽप्यश्रुनिपातेन सुरभ्या प्रतिबोधितः
अन्यैः समृद्धैरप्यर्थैर्न सुताद्विद्यते परम् ५
अत्र ते वर्तयिष्यामि महदाख्यानमुत्तमम्
सुरभ्याश्चैव संवादमिन्द्रस्य च विशां पते ६
त्रिविष्टपगता राजन्सुरभिः प्रारुदत्किल
गवां माता पुरा तात तामिन्द्रोऽन्वकृपायत ७
इन्द्र उवाच

किमिदं रोदिषि शुभे कच्चित्क्षेमं दिवौकसाम्
मानुषेष्वथ वा गोषु नैतदल्पं भविष्यति ८
सुरभिरुवाच
विनिपातो न वः कश्चिद्दृश्यते त्रिदशाधिप
अहं तु पुत्रं शोचामि तेन रोदिमि कौशिक ९
पश्यैनं कर्षकं रौद्रं दुर्बलं मम पुत्रकम्
प्रतोदेनाभिनिघ्नन्तं लाङ्गलेन निपीडितम् १०
एतं दृष्ट्वा भृशं श्रान्तं वध्यमानं सुराधिप
कृपाविष्टास्मि देवेन्द्र मनश्चोद्विजते मम ११
एकस्तत्र बलोपेतो धुरमुद्वहतेऽधिकाम्
अपरोऽल्पबलप्राणः कृशो धमनिसन्ततः
कृच्छ्रादुद्वहते भारं तं वै शोचामि वासव १२
वध्यमानः प्रतोदेन तुद्यमानः पुनः पुनः
नैव शक्नोति तं भारमुद्वोढुं पश्य वासव १३
ततोऽह तस्य दुःखार्ता विरौमि भृशदुःखिता
अश्रूण्यावर्तयन्ती च नेत्राभ्यां करुणायती १४
इन्द्र उवाच
तव पुत्रसहस्रेषु पीड्यमानेषु शोभने
किं कृपायितमस्त्यत्र पुत्र एकोऽत्र पीड्यते १५
सुरभिरुवाच
यदि पुत्रसहस्रं मे सर्वत्र सममेव मे
दीनस्य तु सतः शक्र पुत्रस्याभ्यधिका कृपा १६
व्यास उवाच
तदिन्द्रः सुरभीवाक्यं निशम्य भृशविस्मितः
जीवितेनापि कौरव्य मेनेऽभ्यधिकमात्मजम् १७
प्रववर्ष च तत्रैव सहसा तोयमुल्बणम्
कर्षकस्याचरन्विघ्नं भगवान्पाकशासनः १८
तद्यथा सुरभिः प्राह सममेवास्तु ते तथा
सुतेषु राजन्सर्वेषु दीनेष्वभ्यधिका कृपा १९
यादृशो मे सुतः पाण्डुस्तादृशो मेऽसि पुत्रक

विदुरश्च महाप्राज्ञः स्नेहादेतद्ब्रवीम्यहम् २०
चिराय तव पुत्राणां शतमेकश्च पार्थिव
पाण्डोः पञ्चैव लक्ष्यन्ते तेऽपि मन्दाः सुदुःखिताः २१
कथं जीवेयुरत्यन्तं कथं वर्धेयुरित्यपि
इति दीनेषु पार्थेषु मनो मे परितप्यते २२
यदि पार्थिव कौरव्याञ्जीवमानानिहेच्छसि
दुर्योधनस्तव सुतः शमं गच्छतु पाण्डवैः २३
इति श्रीमहाभारते आरण्यकपर्वणि दशमोऽध्यायः १०

## एकादशोऽध्यायः

धृतराष्ट्र उवाच
एवमेतन्महाप्राज्ञ यथा वदसि नो मुने
अहं चैव विजानामि सर्वे चेमे नराधिपाः १
भवांस्तु मन्यते साधु यत्कुरूणां सुखोदयम्
तदेव विदुरोऽप्याह भीष्मो द्रोणश्च मां मुने २
यदि त्वहमनुग्राह्यः कौरवेषु दया यदि
अनुशाधि दुरात्मानं पुत्रं दुर्योधनं मम ३
व्यास उवाच
अयमायाति वै राजन्मैत्रेयो भगवानृषिः
अन्वीय पाण्डवान्भ्रातॄनिहैवास्मद्दिदृक्षया ४
एष दुर्योधनं पुत्रं तव राजन्महानृषिः
अनुशास्ता यथान्यायं शमायास्य कुलस्य ते ५
ब्रूयाद्यदेष राजेन्द्र तत्कार्यमविशङ्कया
अक्रियायां हि कार्यस्य पुत्रं ते शप्स्यते रुषा ६
वैशम्पायन उवाच
एवमुक्त्वा ययौ व्यासो मैत्रेयः प्रत्यदृश्यत
पूजया प्रतिजग्राह सपुत्रस्तं नराधिपः ७
दत्त्वार्घ्याद्याः क्रियाः सर्वा विश्रान्तं मुनिपुंगवम्
प्रश्रयेणाब्रवीद्राजा धृतराष्ट्रोऽम्बिकासुतः ८
सुखेनागमनं कच्चिद्भगवन्कुरुजाङ्गले

कच्चित्कुशलिनो वीरा भ्रातरः पञ्च पाण्डवाः ९
समये स्थातुमिच्छन्ति कच्चिच्च पुरुषर्षभाः
कच्चित्कुरूणां सौभ्रात्रमव्युच्छिन्नं भविष्यति १०
मैत्रेय उवाच
तीर्थयात्रामनुक्रामन्प्राप्तोऽस्मि कुरुजाङ्गलम्
यदृच्छया धर्मराजं दृष्टवान्काम्यके वने ११
तं जटाजिनसंवीतं तपोवननिवासिनम्
समाजग्मुर्महात्मानं द्रष्टुं मुनिगणाः प्रभो १२
तत्राश्रौषं महाराज पुत्राणां तव विभ्रमम्
अनयं द्यूतरूपेण महापायमुपस्थितम् १३
ततोऽह त्वामनुप्राप्तः कौरवाणामवेक्षया
सदा ह्यभ्यधिकः स्नेहः प्रीतिश्च त्वयि मे प्रभो १४
नैतदौपयिकं राजंस्त्वयि भीष्मे च जीवति
यदन्योन्येन ते पुत्रा विरुध्यन्ते नराधिप १५
मेढीभूतः स्वयं राजन्निग्रहे प्रग्रहे भवान्
किमर्थमनयं घोरमुत्पतन्तमुपेक्षसे १६
दस्यूनामिव यद्वृत्तं सभायां कुरुनन्दन
तेन न भ्राजसे राजंस्तापसानां समागमे १७
वैशम्पायन उवाच
ततो व्यावृत्य राजानं दुर्योधनममर्षणम्
उवाच श्लक्ष्णया वाचा मैत्रेयो भगवानृषिः १८
दुर्योधन महाबाहो निबोध वदतां वर
वचनं मे महाप्राज्ञ ब्रुवतो यद्धितं तव १९
मा द्रुहः पाण्डवान्राजन्कुरुष्व हितमात्मनः
पाण्डवानां कुरूणां च लोकस्य च नरर्षभ २०
ते हि सर्वे नरव्याघ्राः शूरा विक्रान्तयोधिनः
सर्वे नागायुतप्राणा वज्रसंहनना दृढाः २१
सत्यव्रतपराः सर्वे सर्वे पुरुषमानिनः
हन्तारो देवशत्रूणां रक्षसां कामरूपिणाम्
हिडिम्बबकमुख्यानां किर्मीरस्य च रक्षसः २२

इतः प्रच्यवतां रात्रौ यः स तेषां महात्मनाम्
आवृत्य मार्गं रौद्रात्मा तस्थौ गिरिरिवाचलः २३
तं भीमः समरश्लाघी बलेन बलिनां वरः
जघान पशुमारेण व्याघ्रः क्षुद्रमृगं यथा २४
पश्य दिग्विजये राजन्यथा भीमेन पातितः
जरासन्धो महेष्वासो नागायुतबलो युधि २५
संबन्धी वासुदेवश्च येषां श्यालश्च पार्षतः
कस्तान्युधि समासीत जरामरणवान्नरः २६
तस्य ते शम एवास्तु पाण्डवैर्भरतर्षभ
कुरु मे वचनं राजन्मा मृत्युवशमन्वगाः २७
एवं तु ब्रुवतस्तस्य मैत्रेयस्य विशां पते
ऊरुंगजकराकारं करेणाभिजघान सः २८
दुर्योधनः स्मितं कृत्वा चरणेनालिखन्महीम्
न किंचिदुक्त्वा दुर्मेधास्तस्थौ किंचिदवाङ्मुखः २९
तमशुश्रूषमाणं तु विलिखन्तं वसुन्धराम्
दृष्ट्वा दुर्योधनं राजन्मैत्रेयं कोप आविशत् ३०
स कोपवशमापन्नो मैत्रेयो मुनिसत्तमः
विधिना संप्रयुक्तश्च शापायास्य मनो दधे ३१
ततः स वार्युपस्पृश्य कोपसंरक्तलोचनः
मैत्रेयो धार्तराष्ट्रं तमशपद्दुष्टचेतसम् ३२
यस्मात्त्वं मामनादृत्य नेमां वाचं चिकीर्षसि
तस्मादस्याभिमानस्य सद्यः फलमवाप्नुहि ३३
त्वदभिद्रोहसंयुक्तं युद्धमुत्पत्स्यते महत्
तत्र भीमो गदापातैस्तवोरुं भेत्स्यते बली ३४
इत्येवमुक्ते वचने धृतराष्ट्रो महीपतिः
प्रसादयामास मुनिं नैतदेवं भवेदिति ३५
मैत्रेय उवाच
शमं यास्यति चेत्पुत्रस्तव राजन्यथा तथा
शापो न भविता तात विपरीते भविष्यति ३६
वैशम्पायन उवाच

स विलक्षस्तु राजेन्द्र दुर्योधनपिता तदा
मैत्रेयं प्राह किर्मीरः कथं भीमेन पातितः ३७
मैत्रेय उवाच
नाहं वक्ष्याम्यसूया ते न ते शुश्रूषते सुतः
एष ते विदुरः सर्वमाख्यास्यति गते मयि ३८
वैशम्पायन उवाच
इत्येवमुक्त्वा मैत्रेयः प्रातिष्ठत यथागतम्
किर्मीरवधसंविग्नो बहिर्दुर्योधनोऽगमत् ३९
इति श्रीमहाभारते आरण्यकपर्वणि एकादशोऽध्यायः ११

द्वादशोऽध्यायः

धृतराष्ट्र उवाच
किर्मीरस्य वधं क्षत्तः श्रोतुमिच्छामि कथ्यताम्
रक्षसा भीमसेनस्य कथमासीत्समागमः १
विदुर उवाच
शृणु भीमस्य कर्मेदमतिमानुषकर्मणः
श्रुतपूर्वं मया तेषां कथान्तेषु पुनः पुनः २
इतः प्रयाता राजेन्द्र पाण्डवा द्यूतनिर्जिताः
जग्मुस्त्रिभिरहोरात्रैः काम्यकं नाम तद्वनम् ३
रात्रौ निशीथे स्वाभीले गतेऽधसमये नृप
प्रचारे पुरुषादानां रक्षसां भीमकर्मणाम् ४
तद्वनं तापसा नित्यं शेषाश्च वनचारिणः
दूरात्परिहरन्ति स्म पुरुषादभयात्किल ५
तेषां प्रविशतां तत्र मार्गमावृत्य भारत
दीप्ताक्षं भीषणं रक्षः सोल्मुकं प्रत्यदृश्यत ६
बाहू महान्तौ कृत्वा तु तथास्यं च भयानकम्
स्थितमावृत्य पन्थानं येन यान्ति कुरूद्वहाः ७
दष्टोष्ठदंष्ट्रं ताम्राक्षं प्रदीप्तोर्ध्वशिरोरुहम्
सार्करश्मितडिच्चक्रं सबलाकमिवाम्बुदम् ८
सृजन्तं राक्षसीं मायां महारावविराविणम्

मुञ्चन्तं विपुलं नादं सतोयमिव तोयदम् ९
तस्य नादेन संत्रस्ताः पक्षिणः सर्वतोदिशम्
विमुक्तनादाः संपेतुः स्थलजा जलजैः सह १०
संप्रद्रुतमृगद्वीपिमहिषर्क्षसमाकुलम्
तद्वनं तस्य नादेन संप्रस्थितमिवाभवत् ११
तस्योरुवाताभिहता ताम्रपल्लवबाहवः
विदूरजाताश्च लताः समाश्लिष्यन्त पादपान् १२
तस्मिन्क्षणेऽथ प्रववौ मारुतो भृशदारुणः
रजसा संवृतं तेन नष्टर्क्षमभवन्नभः १३
पञ्चानां पाण्डुपुत्राणामविज्ञातो महारिपुः
पञ्चानामिन्द्रियाणां तु शोकवेग इवातुलः १४
स दृष्ट्वा पाण्डवान्दूरात्कृष्णाजिनसमावृतान्
आवृणोत्तद्वनद्वारं मैनाक इव पर्वतः १५
तं समासाद्य वित्रस्ता कृष्णा कमललोचना
अदृष्टपूर्वं संत्रासान्न्यमीलयत लोचने १६
दुःशासनकरोत्सृष्टविप्रकीर्णशिरोरुहा
पञ्चपर्वतमध्यस्था नदीवाकुलतां गता १७
मोमुह्यमानां तां तत्र जगृहुः पञ्च पाण्डवाः
इन्द्रियाणि प्रसक्तानि विषयेषु यथा रतिम् १८
अथ तां राक्षसीं मायामुत्थितां घोरदर्शनाम्
रक्षोघ्नैर्विविधैर्मन्त्रैर्धौम्यः सम्यक्प्रयोजितैः
पश्यतां पाण्डुपुत्राणां नाशयामास वीर्यवान् १९
स नष्टमायोऽतिबलः क्रोधविस्फारितेक्षणः
काममूर्तिधरः क्षुद्रः कालकल्पो व्यदृश्यत २०
तमुवाच ततो राजा दीर्घप्रज्ञो युधिष्ठिरः
को भवान्कस्य वा किं ते क्रियतां कार्यमुच्यताम् २१
प्रत्युवाचाथ तद्रक्षो धर्मराजं युधिष्ठिरम्
अहं बकस्य वै भ्राता किर्मीर इति विश्रुतः २२
वनेऽस्मिन्काम्यके शून्ये निवसामि गतज्वरः
युधि निर्जित्य पुरुषानाहारं नित्यमाचरन् २३

के यूयमिह संप्राप्ता भक्ष्यभूता ममान्तिकम्
युधि निर्जित्य वः सर्वान्भक्षयिष्ये गतज्वरः २४
युधिष्ठिरस्तु तच्छ्रुत्वा वचस्तस्य दुरात्मनः
आचचक्षे ततः सर्वं गोत्रनामादि भारत २५
पाण्डवो धर्मराजोऽह यदि ते श्रोत्रमागतः
सहितो भ्रातृभिः सर्वैर्भीमसेनार्जुनादिभिः २६
हृतराज्यो वने वासं वस्तुं कृतमतिस्ततः
वनमभ्यागतो घोरमिदं तव परिग्रहम् २७
किर्मीरस्त्वब्रवीदेनं दिष्ट्या देवैरिदं मम
उपपादितमद्येह चिरकालान्मनोगतम् २८
भीमसेनवधार्थं हि नित्यमभ्युद्यतायुधः
चरामि पृथिवीं कृत्स्नां नैनमासादयाम्यहम् २९
सोऽयमासादितो दिष्ट्या भ्रातृहा कांक्षितश्चिरम्
अनेन हि मम भ्राता बको विनिहतः प्रियः ३०
वेत्रकीयगृहे राजन्ब्राह्मणच्छद्मरूपिणा
विद्याबलमुपाश्रित्य न ह्यस्त्यस्यौरसं बलम् ३१
हिडिम्बश्च सखा मह्यं दयितो वनगोचरः
हतो दुरात्मनानेन स्वसा चास्य हृता पुरा ३२
सोऽयमभ्यागतो मूढो ममेदं गहनं वनम्
प्रचारसमयेऽस्माकमर्धरात्रे समास्थिते ३३
अद्यास्य यातयिष्यामि तद्वैरं चिरसंभृतम्
तर्पयिष्यामि च बकं रुधिरेणास्य भूरिणा ३४
अद्याहमनृणो भूत्वा भ्रातुः सख्युस्तथैव च
शान्तिं लब्धास्मि परमां हत्वा राक्षसकण्टकम् ३५
यदि तेन पुरा मुक्तो भीमसेनो बकेन वै
अद्यैनं भक्षयिष्यामि पश्यतस्ते युधिष्ठिर ३६
एनं हि विपुलप्राणमद्य हत्वा वृकोदरम्
संभक्ष्य जरयिष्यामि यथागस्त्यो महासुरम् ३७
एवमुक्तस्तु धर्मात्मा सत्यसन्धो युधिष्ठिरः
नैतदस्तीति सक्रोधो भर्त्सयामास राक्षसम् ३८

ततो भीमो महाबाहुरारुज्य तरसा द्रुमम्
दशव्याममिवोद्विद्धं निष्पत्रमकरोत्तदा ३९
चकार सज्यं गाण्डीवं वज्रनिष्पेषगौरवम्
निमेषान्तरमात्रेण तथैव विजयोऽर्जुनः ४०
निवार्य भीमो जिष्णुं तु तद्रक्षो घोरदर्शनम्
अभिद्रुत्याब्रवीद्वाक्यं तिष्ठ तिष्ठेति भारत ४१
इत्युक्त्वैनमभिक्रुद्धः कक्ष्यामुत्पीड्य पाण्डवः
निष्पिष्य पाणिना पाणिं संदष्टोष्ठपुटो बली
तमभ्यधावद्वेगेन भीमो वृक्षायुधस्तदा ४२
यमदण्डप्रतीकाशं ततस्तं तस्य मूर्धनि
पातयामास वेगेन कुलिशं मघवानिव ४३
असंभ्रान्तं तु तद्रक्षः समरे प्रत्यदृश्यत
चिक्षेप चोल्मुकं दीप्तमशनिं ज्वलितामिव ४४
तदुदस्तमलातं तु भीमः प्रहरतां वरः
पदा सव्येन चिक्षेप तद्रक्षः पुनराव्रजत् ४५
किर्मीरश्चापि सहसा वृक्षमुत्पाट्य पाण्डवम्
दण्डपाणिरिव क्रुद्धः समरे प्रत्ययुध्यत ४६
तद्वृक्षयुद्धमभवन्महीरुहविनाशनम्
वालिसुग्रीवयोर्भ्रात्रोर्यथा श्रीकांक्षिणोः पुरा ४७
शीर्षयोः पतिता वृक्षा बिभिदुर्नैकधा तयोः
यथैवोत्पलपद्मानि मत्तयोर्द्विपयोस्तथा ४८
मुञ्जवज्जर्जरीभूता बहवस्तत्र पादपाः
चीराणीव व्युदस्तानि रेजुस्तत्र महावने ४९
तद्वृक्षयुद्धमभवत्सुमुहूर्तं विशां पते
राक्षसानां च मुख्यस्य नराणामुत्तमस्य च ५०
ततः शिलां समुत्क्षिप्य भीमस्य युधि तिष्ठतः
प्राहिणोद्राक्षसः क्रुद्धो भीमसेनश्चचाल ह ५१
तं शिलाताडनजडं पर्यधावत्स राक्षसः
बाहुविक्षिप्तकिरणः स्वर्भानुरिव भास्करम् ५२
तावन्योन्यं समाश्लिष्य प्रकर्षन्तौ परस्परम्

उभावपि चकाशेते प्रयुद्धौ वृषभाविव ५३
तयोरासीत्सुतुमुलः संप्रहारः सुदारुणः
नखदंष्ट्रायुधवतोर्व्याघ्रयोरिव दृप्तयोः ५४
दुर्योधननिकाराच्च बाहुवीर्याच्च दर्पितः
कृष्णानयनदृष्टश्च व्यवर्धत वृकोदरः ५५
अभिपत्याथ बाहुभ्यां प्रत्यगृह्णादमर्षितः
मातङ्ग इव मातङ्गं प्रभिन्नकरटामुखः ५६
तं चाप्यथ ततो रक्षः प्रतिजग्राह वीर्यवान्
तमाक्षिपद्भीमसेनो बलेन बलिनां वरः ५७
तयोर्भुजविनिष्पेषादुभयोर्बलिनोस्तदा
शब्दः समभवद्घोरो वेणुस्फोटसमो युधि ५८
अथैनमाक्षिप्य बलाद् गृह्य मध्ये वृकोदरः
धूनयामास वेगेन वायुश्चण्ड इव द्रुमम् ५९
स भीमेन परामृष्टो दुर्बलो बलिना रणे
व्यस्पन्दत यथाप्राणं विचकर्ष च पाण्डवम् ६०
तत एनं परिश्रान्तमुपलभ्य वृकोदरः
योक्त्रयामास बाहुभ्यां पशुं रशनया यथा ६१
विनदन्तं महानादं भिन्नभेरीसमस्वनम्
भ्रामयामास सुचिरं विस्फुरन्तमचेतसम् ६२
तं विषीदन्तमाज्ञाय राक्षसं पाण्डुनन्दनः
प्रगृह्यतरसा दोर्भ्यां पशुमारममारयत् ६३
आक्रम्य च कटीदेशे जानुना राक्षसाधमम्
अपीडयत बाहुभ्यां कण्ठं तस्य वृकोदरः ६४
अथ तं जडसर्वाङ्गं व्यावृत्तनयनोल्बणम्
भूतले पातयामास वाक्यं चेदमुवाच ह ६५
हिडिम्बबकयोः पाप न त्वमश्रुप्रमार्जनम्
करिष्यसि गतश्चासि यमस्य सदनं प्रति ६६
इत्येवमुक्त्वा पुरुषप्रवीरस्तं राक्षसं क्रोधविवृत्तनेत्रः
प्रस्रस्तवस्त्राभरणं स्फुरन्तमुदभ्रान्तचित्तं व्यसुमुत्ससर्ज ६७
तस्मिन्हते तोयदतुल्यरूपे कृष्णां पुरस्कृत्य नरेन्द्रपुत्राः

भीमं प्रशस्याथ गुणैरनेकैर्हृष्टास्ततो द्वैतवनाय जग्मुः ६८
एवं विनिहतः संख्ये किर्मीरो मनुजाधिप
भीमेन वचनात्तस्य धर्मराजस्य कौरव ६९
ततो निष्कण्टकं कृत्वा वनं तदपराजितः
द्रौपद्या सह धर्मज्ञो वसतिं तामुवास ह ७०
समाश्वास्य च ते सर्वे द्रौपदीं भरतर्षभाः
प्रहृष्टमनसः प्रीत्या प्रशशंसुर्वृकोदरम् ७१
भीमबाहुबलोत्पिष्टे विनष्टे राक्षसे ततः
विविशुस्तद्वनं वीराः क्षेमं निहतकण्टकम् ७२
स मया गच्छता मार्गे विनिकीर्णो भयावहः
वने महति दुष्टात्मा दृष्टो भीमबलाद्धतः ७३
तत्राश्रौषमहं चैतत्कर्म भीमस्य भारत
ब्राह्मणानां कथयतां ये तत्रासन्समागताः ७४
वैशम्पायन उवाच
एवं विनिहतं संख्ये किर्मीरं राक्षसोत्तमम्
श्रुत्वा ध्यानपरो राजा निशश्वासार्तवत्तदा ७५
इति श्रीमहाभारते आरण्यकपर्वणि द्वादशोऽध्यायः १२

## त्रयोदशोऽध्यायः

वैशम्पायन उवाच
भोजाः प्रव्रजिताञ्श्रुत्वा वृष्णयश्चान्धकैः सह
पाण्डवान्दुःखसंतप्तान्समाजग्मुर्महावने १
पाञ्चालस्य च दायादा धृष्टकेतुश्च चेदिपः
केकयाश्च महावीर्या भ्रातरो लोकविश्रुताः २
वने तेऽभिययुः पार्थान्क्रोधामर्षसमन्विताः
गर्हयन्तो धार्तराष्ट्रान्किं कुर्म इति चाब्रुवन् ३
वासुदेवं पुरस्कृत्य सर्वे ते क्षत्रियर्षभाः
परिवार्योपविविशुर्धर्मराजं युधिष्ठिरम् ४
वासुदेव उवाच
दुर्योधनस्य कर्णस्य शकुनेश्च दुरात्मनः

दुःशासनचतुर्थानां भूमिः पास्यति शोणितम् ५
ततः सर्वेऽभिषिञ्चामो धर्मराजं युधिष्ठिरम्
निकृत्योपचरन्वध्य एष धर्मः सनातनः ६
वैशम्पायन उवाच
पार्थानामभिषङ्गेण तथा क्रुद्धं जनार्दनम्
अर्जुनः शमयामास दिधक्षन्तमिव प्रजाः ७
संक्रुद्धं केशवं दृष्ट्वा पूर्वदेहेषु फल्गुनः
कीर्तयामास कर्माणि सत्यकीर्तेर्महात्मनः ८
पुरुषस्याप्रमेयस्य सत्यस्यामिततेजसः
प्रजापतिपतेर्विष्णोर्लोकनाथस्य धीमतः ९
अर्जुन उवाच
दश वर्षसहस्राणि यत्रसायंगृहो मुनिः
व्यचरस्त्वं पुरा कृष्ण पर्वते गन्धमादने १०
दश वर्षसहस्राणि दश वर्षशतानि च
पुष्करेष्ववसः कृष्ण त्वमपो भक्षयन्पुरा ११
ऊर्ध्वबाहुर्विशालायां बदर्यां मधुसूदन
अतिष्ठ एकपादेन वायुभक्षः शतं समाः १२
अपकृष्टोत्तरासङ्गः कृशो धमनिसन्ततः
आसीः कृष्ण सरस्वत्यां सत्रे द्वादशवार्षिके १३
प्रभासं चाप्यथासाद्य तीर्थं पुण्यजनोचितम्
तथा कृष्ण महातेजा दिव्यं वर्षसहस्रकम्
आतिष्ठस्तप एकेन पादेन नियमे स्थितः १४
क्षेत्रज्ञः सर्वभूतानामादिरन्तश्च केशव
निधानं तपसां कृष्ण यज्ञस्त्वं च सनातनः १५
निहत्य नरकं भौममाहृत्य मणिकुण्डले
प्रथमोत्पादितं कृष्ण मेध्यमश्वमवासृजः १६
कृत्वा तत्कर्म लोकानामृषभः सर्वलोकजित्
अवधीस्त्वं रणे सर्वान्समेतान्दैत्यदानवान् १७
ततः सर्वेश्वरत्वं च संप्रदाय शचीपतेः
मानुषेषु महाबाहो प्रादुर्भूतोऽसि केशव १८

स त्वं नारायणो भूत्वा हरिरासीः परन्तप
ब्रह्मा सोमश्च सूर्यश्च धर्मो धाता यमोऽनलः १९
वायुर्वैश्रवणो रुद्रः कालः खं पृथिवी दिशः
अजश्चराचरगुरुः स्रष्टा त्वं पुरुषोत्तम २०
तुरायणादिभिर्देव क्रतुभिर्भूरिदक्षिणैः
अयजो भूरितेजा वै कृष्ण चैत्ररथे वने २१
शतं शतसहस्राणि सुवर्णस्य जनार्दन
एकैकस्मिंस्तदा यज्ञे परिपूर्णानि भागशः २२
अदितेरपि पुत्रत्वमेत्य यादवनन्दन
त्वं विष्णुरिति विख्यात इन्द्रादवरजो भुवि २३
शिशुर्भूत्वा दिवं खं च पृथिवीं च परन्तप
त्रिभिर्विक्रमणैः कृष्ण क्रान्तवानसि तेजसा २४
संप्राप्य दिवमाकाशमादित्यसदने स्थितः
अत्यरोचश्च भूतात्मन्भास्करं स्वेन तेजसा २५
सादिता मौरवाः पाशा निसुन्दनरकौहतौ
कृतः क्षेमः पुनः पन्थाः पुरं प्राग्ज्योतिषं प्रति २६
जारूथ्यामाहुतिः क्राथः शिशुपालो जनैः सह
भीमसेनश्च शैब्यश्च शतधन्वा च निर्जितः २७
तथा पर्जन्यघोषेण रथेनादित्यवर्चसा
अवाक्षीर्महिषीं भोज्यां रणे निर्जित्य रुक्मिणम् २८
इन्द्रद्युम्नो हतः कोपाद्यवनश्च कशेरुमान्
हतः सौभपतिः शाल्वस्त्वया सौभं च पातितम् २९
इरावत्यां तथा भोजः कार्तवीर्यसमो युधि
गोपतिस्तालकेतुश्च त्वया विनिहतावुभौ ३०
तां च भोगवतीं पुण्यामृषिकान्तां जनार्दन
द्वारकामात्मसात्कृत्वा समुद्रं गमयिष्यसि ३१
न क्रोधो न च मात्सर्यं नानृतं मधुसूदन
त्वयि तिष्ठति दाशार्ह न नृशंस्यं कुतोऽनृजु ३२
आसीनं चित्तमध्ये त्वां दीप्यमानं स्वतेजसा
आगम्य ऋषयः सर्वेऽयाचन्ताभयमच्युत ३३

युगान्ते सर्वभूतानि संक्षिप्य मधुसूदन
आत्मन्येवात्मसात्कृत्वा जगदास्से परन्तप ३४
नैवं पूर्वे नापरे वा करिष्यन्ति कृतानि ते
कर्माणि यानि देव त्वं बाल एव महाद्युते ३५
कृतवान्पुण्डरीकाक्ष बलदेवसहायवान्
वैराजभवनेचापि ब्रह्मणा न्यवसः सह ३६
वैशम्पायन उवाच
एवमुक्त्वातदात्मानमात्मा कृष्णस्य पाण्डवः
तूष्णीमासीत्ततः पार्थमित्युवाच जनार्दनः ३७
ममैव त्वं तवैवाहं ये मदीयास्तवैव ते
यस्त्वां द्वेष्टि स मां द्वेष्टि यस्त्वामनु स मामनु ३८
नरस्त्वमसि दुर्धर्ष हरिर्नारायणो ह्यहम्
लोकाल्लोकमिमं प्राप्तौ नरनारायणावृषी ३९
अनन्यः पार्थ मत्तस्त्वमहं त्वत्तश्चभारत
नावयोरन्तरं शक्यं वेदितुं भरतर्षभ ४०
तस्मिन्वीरसमावाये संरब्धेष्वथ राजसु
धृष्टद्युम्नमुखैर्वीरैर्भ्रातृभिः परिवारिता ४१
पाञ्चाली पुण्डरीकाक्षमासीनं यादवैः सह
अभिगम्याब्रवीत्कृष्णाशरण्यं शरणैषिणी ४२
पूर्वेप्रजानिसर्गे त्वामाहुरेकं प्रजापतिम्
स्रष्टारं सर्वभूतानामसितो देवलोऽब्रवीत् ४३
विष्णुस्त्वमसि दुर्धर्ष त्वं यज्ञो मधुसूदन
यष्टा त्वमसि यष्टव्यो जामदग्न्यो यथाब्रवीत् ४४
ऋषयस्त्वां क्षमामाहुः सत्यं च पुरुषोत्तम
सत्याद्यज्ञोऽसि संभूतः कश्यपस्त्वां यथाब्रवीत् ४५
साध्यानामपि देवानां वसूनामीश्वरेश्वरः
लोकभावन लोकेश यथा त्वां नारदोऽब्रवीत् ४६
दिवं ते शिरसा व्याप्तं पद्भ्यां च पृथिवी विभो
जठरं ते इमे लोकाः पुरुषोऽसि सनातनः ४७
विद्यातपोभितप्तानां तपसा भावितात्मनाम्

आत्मदर्शनसिद्धानामृषीणामृषिसत्तम ४८
राजर्षीणां पुण्यकृतामाहवेष्वनिवर्तिनाम्
सर्वधर्मोपपन्नानां त्वं गतिः पुरुषोत्तम ४९
त्वं प्रभुस्त्वं विभुस्त्वं भूरात्मभूस्त्वं सनातनः
लोकपालाश्चलोकाश्च नक्षत्राणि दिशो दश
नभश्चन्द्रश्च सूर्यश्च त्वयि सर्वं प्रतिष्ठितम् ५०
मर्त्यता चैव भूतानाममरत्वं दिवौकसाम्
त्वयि सर्वं महाबाहो लोककार्यं प्रतिष्ठितम् ५१
सा तेऽह दुःखमाख्यास्ये प्रणयान्मधुसूदन
ईशस्त्वं सर्वभूतानां ये दिव्या ये च मानुषाः ५२
कथं नु भार्या पार्थानां तव कृष्ण सखी विभो
धृष्टद्युम्नस्य भगिनी सभां कृष्येत मादृशी ५३
स्त्रीधर्मिणी वेपमाना रुधिरेण समुक्षिता
एकवस्त्रा विकृष्टास्मि दुःखिता कुरुसंसदि ५४
राजमध्ये सभायां तु रजसाभिसमीरिताम्
दृष्ट्वा च मां धार्तराष्ट्राः प्राहसन्पापचेतसः ५५
दासीभावेन भोक्तुं मामीषुस्ते मधुसूदन
जीवत्सु पाण्डुपुत्रेषु पाञ्चालेष्वथ वृष्णिषु ५६
नन्वहं कृष्ण भीष्मस्य धृतराष्ट्रस्य चोभयोः
स्नुषा भवामि धर्मेण साहं दासीकृताबलात् ५७
गर्हये पाण्डवांस्त्वेव युधि श्रेष्ठान्महाबलान्
ये क्लिश्यमानां प्रेक्षन्ते धर्मपत्नीं यशस्विनीम् ५८
धिग्बलं भीमसेनस्य धिक्पार्थस्य धनुष्मताम्
यौ मां विप्रकृतां क्षुद्रैर्मर्षयेतां जनार्दन ५९
शाश्वतोऽय धर्मपथः सद्भिराचरितः सदा
यद्भार्यां परिरक्षन्ति भर्तारोऽल्पबला अपि ६०
भार्यायां रक्ष्यमाणायां प्रजा भवति रक्षिता
प्रजायां रक्ष्यमाणायामात्मा भवति रक्षितः ६१
आत्मा हि जायते तस्यां तस्माज्जाया भवत्युत
भर्ता च भार्यया रक्ष्यः कथं जायान्ममोदरे ६२

नन्विमे शरणं प्राप्तान्न त्यजन्ति कदाचन
ते मां शरणमापन्नां नान्वपद्यन्त पाण्डवाः ६३
पञ्चेमे पञ्चभिर्जाताः कुमाराश्चामितौजसः
एतेषामप्यवेक्षार्थं त्रातव्यास्मि जनार्दन ६४
प्रतिविन्ध्योयुधिष्ठिरात्सुतसोमो वृकोदरात्
अर्जुनाच्छ्रुतकीर्तिस्तु शतानीकस्तु नाकुलि ६५
कनिष्ठाच्छ्रुतकर्मा तु सर्वे सत्यपराक्रमाः
प्रद्युम्नो यादृशः कृष्ण तादृशास्ते महारथाः ६६
नन्विमे धनुषि श्रेष्ठा अजेया युधि शात्रवैः
किमर्थं धार्तराष्ट्राणां सहन्ते दुर्बलीयसाम् ६७
अधर्मेण हृतं राज्यं सर्वे दासाः कृतास्तथा
सभायां परिकृष्टाहमेकवस्त्रा रजस्वला ६८
नाधिज्यमपि यच्छक्यं कर्तुमन्येन गाण्डिवम्
अन्यत्रार्जुनभीमाभ्यां त्वया वा मधुसूदन ६९
धिग्भीमसेनस्य बलं धिक्पार्थस्य च गाण्डिवम्
यत्र दुर्योधनः कृष्ण मुहूर्तमपि जीवति ७०
य एतानाक्षिपद्राष्ट्रात्सह मात्राविहिंसकान्
अधीयानान्पुरा बालान्व्रतस्थान्मधुसूदन ७१
भोजने भीमसेनस्य पापः प्राक्षेपयद्विषम्
कालकूटं नवं तीक्ष्णं संभृतं लोमहर्षणम् ७२
तज्जीर्णमविकारेण सहान्नेन जनार्दन
सशेषत्वान्महाबाहो भीमस्य पुरुषोत्तम ७३
प्रमाणकोट्यां विश्वस्तं तथा सुप्तं वृकोदरम्
बद्ध्वैनं कृष्ण गङ्गायां प्रक्षिप्य पुनराव्रजत् ७४
यदा विबुद्धः कौन्तेयस्तदा संछिद्य बन्धनम्
उदतिष्ठन्महाबाहुर्भीमसेनो महाबलः ७५
आशीविषैः कृष्णसर्पैः सुप्तं चैनमदंशयत्
सर्वेष्वेवाङ्गदेशेषु न ममार च शत्रुहा ७६
प्रतिबुद्धस्तु कौन्तेयः सर्वान्सर्पानपोथयत्
सारथिं चास्य दयितमपहस्तेन जघ्निवान् ७७

पुनः सुप्तानुपाधाक्षीद्बालकान्वारणावते
शयानानार्यया सार्धं को नु तत्कर्तुमर्हति ७८
यत्रार्या रुदती भीता पाण्डवानिदमब्रवीत्
महद्व्यसनमापन्ना शिखिना परिवारिता ७९
हा हतास्मि कुतोन्वद्य भवेच्छान्तिरिहानलात्
अनाथा विनशिष्यामि बालकैः पुत्रकैः सह ८०
तत्र भीमो महाबाहुर्वायुवेगपराक्रमः
आर्यामाश्वासयामास भ्रातृंश्चापि वृकोदरः ८१
वैनतेयो यथा पक्षी गरुडः पततां वरः
तथैवाभिपतिष्यामि भयं वो नेह विद्यते ८२
आर्यामङ्केन वामेन राजानं दक्षिणेन च
अंसयोश्च यमौ कृत्वा पृष्ठे बीभत्सुमेव च ८३
सहसोत्पत्य वेगेन सर्वानादाय वीर्यवान्
भ्रातॄनार्यां च बलवान्मोक्षयामास पावकात् ८४
ते रात्रौ प्रस्थिताः सर्वे मात्रा सह यशस्विनः
अभ्यगच्छन्महारण्यं हिडिम्बवनमन्तिकात् ८५
श्रान्ताः प्रसुप्तास्तत्रेमे मात्रा सह सुदुःखिताः
सुप्तांश्चैनानभ्यगच्छद्धिडिम्बा नाम राक्षसी ८६
भीमस्य पादौ कृत्वा तु स्व उत्सङ्गे ततो बलात्
पर्यमर्दत संहृष्टा कल्याणी मृदुपाणिना ८७
तामबुध्यदमेयात्मा बलवान्सत्यविक्रमः
पर्यपृच्छच्च तां भीमः किमिहेच्छस्यनिन्दिते ८८
तयोः श्रुत्वा तु कथितमागच्छद्राक्षसाधमः
भीमरूपो महानादान्विसृजन्भीमदर्शनः ८९
केन सार्धं कथयसि आनयैनं ममान्तिकम्
हिडिम्बे भक्षयिष्यावो न चिरं कर्तुहर्महसि ९०
सा कृपासंगृहीतेन हृदयेन मनस्वनी
नैवमैच्छत्तदाख्यातुमनुक्रोशादनिन्दिता ९१
स नादान्विनदन्घोरान्राक्षसः पुरुषादकः
अभ्यद्रवत वेगेन भीमसेनं तदा किल ९२

तमभिद्रुत्य संक्रुद्धो वेगेन महता बली
अगृह्णात्पाणिना पाणिं भीमसेनस्य राक्षसः ९३
इन्द्राशनिसमस्पर्शं वज्रसंहननं दृढम्
संहत्य भीमसेनाय व्याक्षिपत्सहसा करम् ९४
गृहीतं पाणिना पाणिं भीमसेनोऽथ रक्षसा
नामृष्यत महाबाहुस्तत्राक्रुध्यद् वृकोदरः ९५
तत्रासीत्तुमुलं युद्धं भीमसेनहिडिम्बयोः
सर्वास्त्रविदुषोर्घोरं वृत्रवासवयोरिव ९६
हत्वा हिडिम्बं भीमोऽथ प्रस्थितो भ्रातृभिः सह
हिडिम्बामग्रतः कृत्वा यस्यां जातो घटोत्कचः ९७
ततश्च प्राद्रवन्सर्वे सह मात्रा यशस्विनः
एकचक्रामभिमुखाः संवृता ब्राह्मणव्रजैः ९८
प्रस्थाने व्यास एषां च मन्त्री प्रियहितोऽभवत्
ततोऽगच्छन्नेकचक्रां पाण्डवाः संशितव्रताः ९९
तत्राप्यासादयामासुर्बकं नाम महाबलम्
पुरुषादं प्रतिभयं हिडिम्बेनैव संमितम् १००
तं चापि विनिहत्योग्रं भीमः प्रहरतां वरः
सहितो भ्रातृभिः सर्वैर्द्रुपदस्य पुरं ययौ १०१
लब्धाहमपि तत्रैव वसता सव्यसाचिना
यथा त्वया जिता कृष्ण रुक्मिणी भीष्मकात्मजा १०२
एवं सुयुद्धे पार्थेन जिताहं मधुसूदन
स्वयंवरे महत्कर्म कृत्वा न सुकरं परैः १०३
एवं क्लेशैः सुबहुभिः क्लिश्यमानाः सुदुःखिताः
निवसामार्यया हीनाः कृष्ण धौम्यपुरःसराः १०४
त इमे सिंहविक्रान्ता वीर्येणाभ्यधिकाः परैः
विहीनैः परिक्लिश्यन्तीं समुपेक्षन्त मां कथम् १०५
एतादृशानि दुःखानि सहन्ते दुर्बलीयसाम्
दीर्घकालं प्रदीप्तानि पापानां क्षुद्रकर्मणाम् १०६
कुले महति जातास्मि दिव्येन विधिना किल
पाण्डवानां प्रिया भार्या स्नुषा पाण्डोर्महात्मनः १०७

कचग्रहमनुप्राप्ता सास्मि कृष्ण वरा सती
पञ्चानामिन्द्रकल्पानां प्रेक्षतां मधुसूदन १०८
इत्युक्त्वा प्रारुदत्कृष्णा मुखं प्रच्छाद्य पाणिना
पद्मकोशप्रकाशेन मृदुना मृदुभाषिणी १०९
स्तनावपतितौ पीनौ सुजातौ शुभलक्षणौ
अभ्यवर्षत पाञ्चाली दुःखजैरश्रुबिन्दुभिः ११०
चक्षुषी परिमार्जन्ती निःश्वसन्ती पुनः पुनः
बाष्पपूर्णेन कराठेन क्रुद्धा वचनमब्रवीत् १११
नैव मे पतयः सन्ति न पुत्रा मधुसूदन
न भ्रातरो न च पिता नैव त्वं न च बान्धवाः ११२
ये मां विप्रकृतां क्षुद्रैरुपेक्षध्वं विशोकवत्
न हि मे शाम्यते दुःखं कर्णो यत्प्राहसत्तदा ११३
अथैनामब्रवीत्कृष्णस्तस्मिन्वीरसमागमे
रोदिष्यन्ति स्त्रियो ह्येवं येषां क्रुद्धासि भामिनि ११४
बीभत्सुशरसंछन्नाञ्शोणितौघपरिप्लुतान्
निहताञ्जीवितं त्यक्त्वा शयानान्वसुधातले ११५
यत्समर्थं पाराडवानां तत्करिष्यामि मा शुचः
सत्यं ते प्रतिजानामि राज्ञां राज्ञी भविष्यसि ११६
पतेद् द्यौर्हिमवाञ्शीर्येत्पृथिवी शकलीभवेत्
शुष्येत्तोयनिधिः कृष्णे न मे मोघं वचो भवेत् ११७
धृष्टद्युम्न उवाच
अहं द्रोणं हनिष्यामि शिखराडी तु पितामहम्
दुर्योधनं भीमसेनः कर्णं हन्ता धनञ्जयः ११८
रामकृष्णौ व्यपाश्रित्य अजेयाः स्म शुचिस्मिते
अपि वृत्रहणा युद्धे किं पुनर्धृतराष्ट्रजैः ११९
वैशम्पायन उवाच
इत्युक्तेऽभिमुखाः वीरा वासुदेवमुपस्थिताः
तेषां मध्ये महाबाहुः केशवो वाक्यमब्रवीत् १२०
इति श्रीमहाभारते आरगयकपर्वणि त्रयोदशोऽध्यायः १३

चतुर्दशोऽध्यायः

वासुदेव उवाच
नेदं कृच्छ्रमनुप्राप्तो भवान्स्याद्वसुधाधिप
यद्यहं द्वारकायां स्यां राजन्संनिहितः पुरा १
आगच्छेयमहं द्यूतमनाहूतोऽपि कौरवैः
आम्बिकेयेन दुर्धर्ष राज्ञा दुर्योधनेन च २
वारयेयमहं द्यूतं बहून्दोषान्प्रदर्शयन्
भीष्मद्रोणौ समानाय्य कृपं बाह्लीकमेव च ३
वैचित्रवीर्यं राजानमलं द्यूतेन कौरव
पुत्राणां तव राजेन्द्र त्वन्निमित्तमिति प्रभो ४
तत्र वक्ष्याम्यहं दोषान्यैर्भवानवरोपितः
वीरसेनसुतो यैश्च राज्यात्प्रभ्रंशितः पुरा ५
अभक्षितविनाशं च देवनेन विशां पते
सातत्यं च प्रसंगस्य वर्णयेयं यथातथम् ६
स्त्रियोऽक्षा मृगया पानमेतत्कामसमुत्थितम्
व्यसनं चतुष्टयं प्रोक्तं यै राजन्भ्रश्यते श्रियः ७
तत्र सर्वत्र वक्तव्यं मन्यन्ते शास्त्रकोविदाः
विशेषतश्च वक्तव्यं द्यूते पश्यन्ति तद्विदः ८
एकाह्ना द्रव्यनाशोऽत्र ध्रुवं व्यसनमेव च
अभुक्तनाशश्चार्थानां वाक्पारुष्यं च केवलम् ९
एतच्चान्यच्च कौरव्य प्रसङ्गि कटुकोदयम्
द्यूते ब्रूयां महाबाहो समासाद्याम्बिकासुतम् १०
एवमुक्तो यदि मया गृह्णीयाद्वचनं मम
अनामयं स्याद्धर्मस्य कुरूणां कुरुनन्दन ११
न चेत्स मम राजेन्द्र गृह्णीयान्मधुरं वचः
पथ्यं च भरतश्रेष्ठ निगृह्णीयां बलेन तम् १२
अथैनानभिनीयैवं सुहृदो नाम दुर्हृदः
सभासदश्च तान्सर्वान्भेदयेयं दुरोदरान् १३
असान्निध्यं तु कौरव्य ममानर्तेष्वभूत्तदा
येनेदं व्यसनं प्राप्ता भवन्तो द्यूतकारितम् १४

सोऽहमेत्य कुरुश्रेष्ठ द्वारकां पाराडुनन्दन
अश्रौषं त्वां व्यसनिनं युयुधानाद्यथातथम् १५
श्रुत्वैव चाहं राजेन्द्र परमोद्विग्नमानसः
तूर्णमभ्यागतोऽस्मि त्वां द्रष्टुकामो विशां पते १६
अहो कृच्छ्रमनुप्राप्ताः सर्वे स्म भरतर्षभ
ये वयं त्वां व्यसनिनं पश्यामः सह सोदरैः १७
इति श्रीमहाभारते आरगयकपर्वणि चतुर्दशोऽध्यायः १४

पञ्चदशोऽध्यायः

युधिष्ठिर उवाच
असान्निध्यं कथं कृष्ण तवासीद् वृष्णिनन्दन
क्व चासीद्विप्रवासस्ते किं वाकार्षीः प्रवासकः १
कृष्ण उवाच
शाल्वस्य नगरं सौभं गतोऽह भरतर्षभ
विनिहन्तुं नरश्रेष्ठ तत्र मे शृणु कारणम् २
महातेजा महाबाहुर्यः स राजा महायशाः
दमघोषात्मजो वीरः शिशुपालो मया हतः ३
यज्ञे ते भरतश्रेष्ठ राजसूयेऽहणां प्रति
स रोषवशसंप्राप्तो नामृष्यत दुरात्मवान् ४
श्रुत्वा तं निहतं शाल्वस्तीव्ररोषसमन्वितः
उपायाद्द्वारकां शून्यामिहस्थे मयि भारत ५
स तत्र योधितो राजन्बालकैर्वृष्णिपुङ्गवैः
आगतः कामगं सौभमारुह्यैव नृशंसकृत् ६
ततो वृष्णिप्रवीरांस्तान्बालान्हत्वा बहूंस्तदा
पुरोद्यानानि सर्वाणि भेदयामास दुर्मतिः ७
उक्तवांश्च महाबाहो क्वासौ वृष्णिकुलाधमः
वासुदेवः सुमन्दात्मा वसुदेवसुतो गतः ८
तस्य युद्धार्थिनो दर्पं युद्धे नाशयितास्म्यहम्
आनर्ताः सत्यमाख्यात तत्र गन्तास्मि यत्र सः ९
तं हत्वा विनिवर्तिष्ये कंसकेशिनिषूदनम्

अहत्वा न निवर्तिष्ये सत्येनायुधमालभे १०
क्वासौ क्वासाविति पुनस्तत्र तत्र विधावति
मया किल रणे युद्धं काङ्क्षमाणः स सौभराट् ११
अद्य तं पापकर्माणं क्षुद्रं विश्वासघातिनम्
शिशुपालवधामर्षाद्गमयिष्ये यमक्षयम् १२
मम पापस्वभावेन भ्राता येन निपातितः
शिशुपालो महीपालस्तं वधिष्ये महीतले १३
भ्राता बालश्च राजा च न च सङ्ग्राममूर्धनि
प्रमत्तश्च हतो वीरस्तं हनिष्ये जनार्दनम् १४
एवमादि महाराज विलप्य दिवमास्थितः
कामगेन स सौभेन क्षिप्त्वा मां कुरुनन्दन १५
तमश्रौषमहं गत्वा यथा वृत्तः सुदुर्मतिः
मयि कौरव्य दुष्टात्मा मार्तिकावतको नृपः १६
ततोऽहमपि कौरव्य रोषव्याकुललोचनः
निश्चित्य मनसा राजन्वधायास्य मनो दधे १७
आनर्तेषु विमर्दं च क्षेपं चात्मनि कौरव
प्रवृद्धमवलेपं च तस्य दुष्कृतकर्मणः १८
ततः सौभवधायाहं प्रतस्थे पृथिवीपते
स मया सागरावर्ते दृष्ट आसीत्परीप्सता १९
ततः प्रध्माप्य जलजं पाञ्चजन्यमहं नृप
आहूय शाल्वं समरे युद्धाय समवस्थितः २०
सुमुहूर्तमभूद्युद्धं तत्र मे दानवैः सह
वशीभूताश्च मे सर्वे भूतले च निपातिताः २१
एतत्कार्यं महाबाहो येनाहं नागमं तदा
श्रुत्वैव हास्तिनपुरं द्यूतं चाविनयोत्थितम् २२

इति श्रीमहाभारते आरण्यकपर्वणि पञ्चदशोऽध्यायः १५

## षोडशोऽध्यायः

युधिष्ठिर उवाच
वासुदेव महाबाहो विस्तरेण महामते

सौभस्य वधमाचक्ष्व न हि तृप्यामि कथ्यतः १
वासुदेव उवाच
हतं श्रुत्वा महाबाहो मया श्रौतश्रवं नृपम्
उपायाद्भरतश्रेष्ठ शाल्वो द्वारवतीं पुरीम् २
अरुन्धत्तां सुदुष्टात्मा सर्वतः पाण्डुनन्दन
शाल्वो वैहायसं चापि तत्पुरं व्यूह्य विष्ठितः ३
तत्रस्थोऽथ महीपालो योधयामास तां पुरीम्
अभिसारेण सर्वेण तत्र युद्धमवर्तत ४
पुरी समन्ताद्विहिता सपताका सतोरणा
सचक्रा सहुडा चैव सयन्त्रखनका तथा ५
सोपतल्पप्रतोलीका साट्टाट्टालकगोपुरा
सकचग्रहणी चैव सोल्कालातावपोथिका ६
सोष्ट्रिका भरतश्रेष्ठ सभेरीपणवानका
समित्तृणकुशा राजन्सशतघ्नीकलाङ्गला ७
सभुशुण्ड्यश्मलगुडा सायुधा सपरश्वधा
लोहचर्मवती चापि साग्निः सहुडशृङ्गिका ८
शास्त्रदृष्टेन विधिना संयुक्ता भरतर्षभ
द्रव्यैरनेकैर्विविधैर्गदसाम्बोद्धवादिभिः ९
पुरुषैः कुरुशार्दूल समर्थैः प्रतिबाधने
अभिख्यातकुलैर्वीरैर्दृष्टवीर्यैश्च संयुगे १०
मध्यमेन च गुल्मेन रक्षिता सारसंज्ञिता
उत्क्षिप्तगुल्मैश्च तथा हयैश्चैव पदातिभिः ११
आघोषितं च नगरे न पातव्या सुरेति ह
प्रमादं परिरक्षद्भिरुग्रसेनोद्धवादिभिः १२
प्रमत्तेष्वभिघातं हि कुर्याच्छाल्वो नराधिपः
इति कृत्वाप्रमत्तास्ते सर्वे वृष्ण्यन्धकाः स्थिताः १३
आनर्ताश्च तथा सर्वे नटनर्तकगायनाः
बहिर्विवासिताः सर्वे रक्षद्भिर्वित्तसंचयान् १४
संक्रमा भेदिताः सर्वे नावश्च प्रतिषेधिताः
परिखाश्चापि कौरव्य कीलैः सुनिचिताः कृताः १५

उदपानाः कुरुश्रेष्ठ तथैवाप्यम्बरीषकाः
समन्तातत्क्रोशमात्रं च कारिता विषमा च भूः १६
प्रकृत्या विषमं दुर्गं प्रकृत्या च सुरक्षितम्
प्रकृत्या चायुधोपेतं विशेषेण तदानघ १७
सुरक्षितं सुगुप्तं च सर्वायुधसमन्वितम्
तत्पुरं भरतश्रेष्ठ यथेन्द्रभवनं तथा १८
न चामुद्रोऽभिनिर्याति न चामुद्रः प्रवेश्यते
वृष्ण्यन्धकपुरे राजंस्तदा सौभसमागमे १९
अनुरथ्यासु सर्वासु चत्वरेषु च कौरव
बलं बभूव राजेन्द्र प्रभूतगजवाजिमत् २०
दत्तवेतनभक्तं च दत्तायुधपरिच्छदम्
कृतापदानं च तदा बलमासीन्महाभुज २१
न कुप्यवेतनी कश्चिन्न चातिक्रान्तवेतनी
नानुग्रहभृतः कश्चिन्न चादृष्टपराक्रमः २२
एवं सुविहिता राजन्द्वारका भूरिदक्षिणैः
आहुकेन सुगुप्ता च राज्ञा राजीवलोचन २३
इति श्रीमहाभारते आरण्यकपर्वणि षोडशोऽध्यायः १६

## सप्तदशोऽध्यायः

वासुदेव उवाच
तां तूपयात्वा राजेन्द्र शाल्वः सौभपतिस्तदा
प्रभूतनरनागेन बलेनोपविवेश ह १
समे निविष्टा सा सेना प्रभूतसलिलाशये
चतुरङ्गबलोपेता शाल्वराजाभिपालिता २
वर्जयित्वा श्मशानानि देवतायतनानि च
वल्मीकांश्चैव चैत्यांश्च तन्निविष्टमभूद्बलम् ३
अनीकानां विभागेन पन्थानः षट्कृता भवन्
प्रवणा नव चैवासञ्शाल्वस्य शिबिरे नृप ४
सर्वायुधसमोपेतं सर्वशस्त्रविशारदम्
रथनागाश्वकलिलं पदातिध्वजसंकुलम् ५

तुष्टपुष्टजनोपेतं वीरलक्षणलक्षितम्
विचित्रध्वजसंनाहं विचित्ररथकार्मुकम् ६
संनिवेश्य च कौरव्य द्वारकायां नरर्षभ
अभिसारयामास तदा वेगेन पतगेन्द्रवत् ७
तदापतन्तं संदृश्य बलं शाल्वपतेस्तदा
निर्याय योधयामासुः कुमारा वृष्णिनन्दनाः ८
असहन्तोऽभियानं तच्छाल्वराजस्य कौरव
चारुदेष्णश्च साम्बश्च प्रद्युम्नश्च महारथः ९
ते रथैर्दंशिताः सर्वे विचित्राभरणध्वजाः
संसक्ताः शाल्वराजस्य बहुभिर्योधपुङ्गवैः १०
गृहीत्वा तु धनुः साम्बः शाल्वस्य सचिवं रणे
योधयामास संहृष्टः क्षेमवृद्धिं चमूपतिम् ११
तस्य बाणमयं वर्षं जाम्बवत्याः सुतो महत्
मुमोच भरत श्रेष्ठ यथा वर्षं सहस्रदृक् १२
तद्बाणवर्षं तुमुलं विषेहे स चमूपतिः
क्षेमवृद्धिर्महाराज हिमवानिव निश्चलः १३
ततः साम्बाय राजेन्द्र क्षेमवृद्धिरपि स्म ह
मुमोच मायाविहितं शरजालं महत्तरम् १४
ततो मायामयं जालं माययैव विदार्य सः
साम्बः शरसहस्रेण रथमस्याभ्यवर्षत १५
ततः स विद्धः साम्बेन क्षेमवृद्धिश्चमूपतिः
अपायाज्जवनैरश्वैः साम्बबाणप्रपीडितः १६
तस्मिन्विप्रद्रुते क्रूरे शाल्वस्याथ चमूपतौ
वेगवान्नाम दैतेयः सुतं मेऽभ्यद्रवद्बली १७
अभिपन्नस्तु राजेन्द्र साम्बो वृष्णिकुलोद्वहः
वेगं वेगवतो राजंस्तस्थौ वीरो विधारयन् १८
स वेगवति कौन्तेय साम्बो वेगवतीं गदाम्
चिक्षेप तरसा वीरो व्याविध्य सत्यविक्रमः १९
तया त्वभिहतो राजन्वेगवानपतद्भुवि
वातरुग्ण इव क्षुण्णो जीर्णमूलो वनस्पतिः २०

तस्मिन्निपतिते वीरे गदानुन्ने महासुरे
प्रविश्य महतीं सेनां योधयामास मे सुतः २१
चारुदेष्णेन संसक्तो विविन्ध्यो नाम दानवः
महारथः समाज्ञातो महाराज महाधनुः २२
ततः सुतुमुलं युद्धं चारुदेष्णविविन्ध्ययोः
वृत्रवासवयो राजन्यथा पूर्वं तथाभवत् २३
अन्योन्यस्याभिसंक्रुद्धावन्योन्यं जघ्नतुः शरैः
विनदन्तौ महाराज सिंहाविव महाबलौ २४
रौक्मिणेयस्ततो बाणमग्न्यर्कोपमवर्चसम्
अभिमन्त्र्य महास्त्रेण संदधे शत्रुनाशनम् २५
स विविन्ध्याय सक्रोधः समाहूय महारथः
चिक्षेप मे सुतो राजन्स गतासुरथापतत् २६
विविन्ध्यं निहतं दृष्ट्वा तां च विक्षोभितां चमूम्
कामगेन स सौभेन शाल्वः पुनरुपागमत् २७
ततो व्याकुलितं सर्वं द्वारकावासि तद्बलम्
दृष्ट्वा शाल्वं महाबाहो सौभस्थं पृथिवीगतम् २८
ततो निर्याय कौरव्य व्यवस्थाप्य च तद्बलम्
आनर्तानां महाराज प्रद्युम्नो वाक्यमब्रवीत् २९
सर्वे भवन्तस्तिष्ठन्तु सर्वे पश्यन्तु मां युधि
निवारयन्तं संग्रामे बलात्सौभं सराजकम् ३०
अहं सौभपतेः सेनामायसैर्भुजगैरिव
धनुर्भुजविनिर्मुक्तैर्नाशयाम्यद्य यादवाः ३१
आश्वसध्वं न भीः कार्या सौभराडद्य नश्यति
मयाभिपन्नो दुष्टात्मा ससौभो विनशिष्यति ३२
एवं ब्रुवति संहृष्टे प्रद्युम्ने पाण्डुनन्दन
विष्ठितं तद्बलं वीर युयुधे च यथासुखम् ३३
इति श्रीमहाभारते आरण्यकपर्वणि सप्तदशोऽध्यायः १७

## अष्टादशोऽध्यायः

वासुदेव उवाच

एवमुक्त्वा रौक्मिणेयो यादवान्भरतर्षभ
दंशितैर्हरिभिर्युक्तं रथमास्थाय काञ्चनम् १
उच्छ्रित्य मकरं केतुं व्यात्ताननमलंकृतम्
उत्पतद्भिरिवाकाशं तैर्हयैरन्वयात्परान् २
विक्षिपन्नादयंश्चापि धनुःश्रेष्ठं महाबलः
तूणखड्गधरः शूरो बद्धगोधांगुलित्रवान् ३
स विद्युच्चलितं चापं विहरन्वै तलात्तलम्
मोहयामास दैतेयान्सर्वान्सौभनिवासिनः ४
नास्य विक्षिपतश्चापं संदधानस्य चासकृत्
अन्तरं ददृशे कश्चिन्निघ्नतः शात्रवान्रणे ५
मुखस्य वर्णो न विकल्पतेऽस्य चेलुश्च गात्राणि न चापि तस्य
सिंहोन्नतं चाप्यभिगर्जतोऽस्य शुश्राव लोकोऽद्भुतरूपमग्र्यम् ६
जलेचरः काञ्चनयष्टिसंस्थो व्यात्ताननः सर्वतिमिप्रमाथी
वित्रासयन्राजति वाहमुख्ये शाल्वस्य सेनाप्रमुखे ध्वजाग्र्यः ७
ततः स तूर्णं निष्पत्य प्रद्युम्नः शत्रु कर्शनः
शाल्वमेवाभिदुद्राव विधास्यन्कलहं नृप ८
अभियानं तु वीरेण प्रद्युम्नेन महाहवे
नामर्षयत संक्रुद्धः शाल्वः कुरुकुलोद्वह ९
स रोषमदमत्तो वै कामगादवरुह्य च
प्रद्युम्नं योधयामास शाल्वः परपुरञ्जयः १०
तयोः सुतुमुलं युद्धं शाल्ववृष्णिप्रवीरयोः
समेता ददृशुर्लोका बलिवासयोरिव ११
तस्य मायामयो वीर रथो हेमपरिष्कृतः
सध्वजः सपताकश्च सानुकर्षः सतूणवान् १२
स तं रथवरं श्रीमान्समारुह्य किल प्रभो
मुमोच बाणान्कौरव्य प्रद्युम्नाय महाबलः १३
ततो बाणमयं वर्षं व्यसृजत्तरसा रणे
प्रद्युम्नो भुजवेगेन शाल्वं संमोहयन्निव १४
स तैरभिहतः संख्ये नामर्षयत सौभराट्
शरान्दीप्ताग्निसंकाशान्मुमोच तनये मम १५

स शाल्वबाणै राजेन्द्र विद्धो रुक्मिणिनन्दनः
मुमोच बाणं त्वरितो मर्मभेदिनमाहवे १६
तस्य वर्म विभिद्याशु स बाणो मत्सुतेरितः
विभेद हृदयं पत्री स पपात मुमोह च १७
तस्मिन्निपतिते वीरे शाल्वराजे विचेतसि
संप्राद्रवन्दानवेन्द्रा दारयन्तो वसुन्धराम् १८
हाहाकृतमभूत्सैन्यं शाल्वस्य पृथिवीपते
नष्टसंज्ञे निपतिते तदा सौभपतौ नृपे १९
तत उत्थाय कौरव्य प्रतिलभ्य च चेतनाम्
मुमोच बाणं तरसा प्रद्युम्नाय महाबलः २०
तेन विद्धो महाबाहुः प्रद्युम्नः समरे स्थितः
जत्रुदेशे भृशं वीरो व्यवासीदद्रथे तदा २१
तं स विद्ध्वा महाराज शाल्वो रुक्मिणिनन्दनम्
ननाद सिंहनादं वै नादेनापूरयन्महीम् २२
ततो मोहं समापन्ने तनये मम भारत
मुमोच बाणांस्त्वरितः पुनरन्यान्दुरासदान् २३
स तैरभिहतो बाणैर्बहुभिस्तेन मोहितः
निश्चेष्टः कौरवश्रेष्ठ प्रद्युम्नोऽभूद्रणाजिरे २४
इति श्रीमहाभारते आरण्यकपर्वणि अष्टादशोऽध्यायः १८

## एकोनविंशोऽध्यायः

वासुदेव उवाच
शाल्वबाणार्दि ते तस्मिन्प्रद्युम्ने बलिनां वरे
वृष्णयो भग्नसंकल्पा विव्यथुः पृतनागताः १
हाहाकृतमभूत्सर्वं वृष्ण्यन्धकबलं तदा
प्रद्युम्ने पतिते राजन्परे च मुदिताभवन् २
तं तथा मोहितं दृष्ट्वा सारथिर्जवनैर्हयैः
रणादपाहरत्तूर्णं शिक्षितो दारुकिस्ततः ३
नातिदूरापयाते तु रथे रथवरप्रणुत्
धनुर्गृहीत्वा यन्तारं लब्धसंज्ञोऽब्रवीदिदम् ४

सौते किं ते व्यवसितं कस्माद्यासि पराङ्मुखः
नैष वृष्णिप्रवीराणामाहवे धर्म उच्यते ५
कच्चित्सौते न ते मोहः शाल्वं दृष्ट्वा महाहवे
विषादो वा रणं दृष्ट्वा ब्रूहि मे त्वं यथातथम् ६
सूत उवाच
जानार्दने न मे मोहो नापि मे भयमाविशत्
अतिभारं तु ते मन्ये शाल्वं केशवनन्दन ७
सोऽपयामि शनैर्वीर वलवानेष पापकृत्
मोहितश्च रणे शूरो रक्ष्यः सारथिना रथी ८
आयुष्मंस्त्वं मया नित्यं रक्षितव्यस्त्वयाप्यहम्
रक्षितव्यो रथी नित्यमिति कृत्वापयाम्यहम् ९
एकश्चासि महाबाहो बहवश्चापि दानवाः
न समं रौक्मिणेयाहं रणे मत्वापयाम्यहम् १०
वासुदेव उवाच
एवं ब्रुवति सूते तु तदा मकरकेतुमान्
उवाच सूतं कौरव्य निवर्त्तय रथं पुनः ११
दारुकात्मज मैवंत्वं पुनः कार्षीः कथंचन
व्यपयानं रणात्सौते जीवतो मम कर्हिचित् १२
न स वृष्णिकुले जातो यो वै त्यजति संगरम्
यो वा निपतितं हन्ति तवास्मीति च वादिनम् १३
तथा स्त्रियं वै यो हन्ति वृद्धं बालं तथैव च
विरथं विप्रकीर्णं च भग्नशस्त्रायुधं तथा १४
त्वं च सूतकुले जातो विनीतः सूतकर्मणि
धर्मज्ञश्चासि वृष्णीनामाहवेष्वपि दारुके १५
स जानंश्चरितं कृत्स्नं वृष्णीनां पृतनामुखे
अपयानं पुनः सौते मैवं कार्षीः कथंचन १६
अपयातं हतं पृष्ठे भीतं रणपलायिनम्
गदाग्रजो दुराधर्षः किं मां वक्ष्यति माधवः १७
केशवस्याग्रजो वापि नीलवासा मदोत्कटः
किं वक्ष्यति महाबाहुर्बलदेवः समागतः १८

किं वक्ष्यति शिनेर्नप्ता नरसिंहो महाधनुः
अपयातं रणात्सौते साम्बश्च समितिञ्जयः १९
चारुदेष्णश्च दुर्धर्षस्तथैव गदसारणौ
अक्रूरश्च महाबाहुः किं मां वक्ष्यति सारथे २०
शूरं संभावितं सन्तं नित्यं पुरुषमानिनम्
स्त्रियश्च वृष्णिवीराणां कि मां वक्ष्यन्ति संगताः २१
प्रद्युम्नोऽयमुपायाति भीतस्त्यक्त्वा महाहवम्
धिगेनमिति वक्ष्यन्ति न तु वक्ष्यन्ति साध्विति २२
धिग्वाचा परिहासोऽपि मम वा मद्विधस्य वा
मृत्युनाभ्यधिकः सौते स त्वं मा व्यपयाः पुनः २३
भारं हि मयि संन्यस्य यातो मधुनिहा हरिः
यज्ञं भरतसिंहस्य पार्थस्यामिततेजसः २४
कृतवर्मा मया वीरो निर्यास्यन्नेव वारितः
शाल्वं निवारयिष्येऽह तिष्ठ त्वमिति सूतज २५
स च संभावयन्मां वै निवृत्तो हृदिकात्मजः
तं समेत्य रणं त्यक्त्वा किं वक्ष्यामि महारथम् २६
उपयान्तं दुराधर्षं शङ्खचक्रगदाधरम्
पुरुषं पुण्डरीकाक्षं किं वक्ष्यामि महाभुजम् २७
सात्यकिं बलदेवं च ये चान्येऽन्धकवृष्णयः
मया स्पर्धन्ति सततं किं नु वक्ष्यामि तानहम् २८
त्यक्त्वा रणमिमं सौते पृष्ठतोऽभ्याहतः शरैः
त्वयापनीतो विवशो न जीवेयं कथंचन २९
स निवर्त रथेनाशु पुनर्दारुकनन्दन
न चैतदेवं कर्तव्यमथापत्सु कथंचन ३०
न जीवितमहं सौते बहु मन्ये कदाचन
अपयातो रणाद्भीतः पृष्ठतोऽभ्याहतः शरैः ३१
कदा वा सूतपुत्र त्वं जानीषे मां भयार्दितम्
अपयातं रणं हित्वा यथा कापुरुषं तथा ३२
न युक्तं भवता त्यक्तुं सङ्ग्रामं दारुकात्मज
मयि युद्धार्थिनि भृशं स त्वं याहि यतो रणम् ३३

इति श्रीमहाभारते आरगयकपर्वणि एकोनविंशोऽध्यायः १९

विंशोऽध्यायः

वासुदेव उवाच
एवमुक्तस्तु कौन्तेय सूतपुत्रस्तदा मृधे
प्रद्युम्नमब्रवीच्छ्लक्ष्णं मधुरं वाक्यमञ्जसा १
न मे भयं रौक्मिणेय सङ्ग्रामे यच्छतो हयान्
युद्धज्ञश्चास्मि वृष्णीनां नात्र किंचिदतोऽन्यथा २
आयुष्मन्नुपदेशस्तु सारथ्ये वर्ततां स्मृतः
सर्वार्थेषु रथी रक्ष्यस्त्वं चापि भृशपीडितः ३
त्वं हि शाल्वप्रयुक्तेन पत्रिणाऽभिहतो भृशम्
कश्मलाभिहतो वीर ततोऽहमपयातवान् ४
स त्वं सात्वतमुख्याद्य लब्धसंज्ञो यदृच्छया
पश्य मे हयसंयाने शिक्षां केशवनन्दन ५
दारुकेणाहमुत्पन्नो यथावच्चैव शिक्षितः
वीतभीः प्रविशाम्येतां शाल्वस्य महतीं चमूम् ६
एवमुक्त्वा ततो वीर हयान्संचोद्य सङ्गरे
रश्मिभिश्च समुद्यम्य जवेनाभ्यपतत्तदा ७
मण्डलानि विचित्राणि यमकानीतराणि च
सव्यानि च विचित्राणि दक्षिणानि च सर्वशः ८
प्रतोदेनाहता राजन्रश्मिभिश्च समुद्यताः
उत्पतन्त इवाकाशं विबभुस्ते हयोत्तमाः ९
ते हस्तलाघवोपेतं विज्ञाय नृप दारुकिम्
दह्यमाना इव तदा पस्पृशुश्चरणैर्महीम् १०
सोऽपसव्यां चमूं तस्य शाल्वस्य भरतर्षभ
चकार नातियत्नेन तदद्भुतमिवाभवत् ११
अमृष्यमाणोऽपसव्यं प्रद्युम्नेन स सौभराट्
यन्तारमस्य सहसा त्रिभिर्बाणैः समर्पयत् १२
दारुकस्य सुतस्तं तु बाणवेगमचिन्तयन्
भूय एव महाबाहो प्रययौ हयसंमतः १३

ततो बाणान्बहुविधान्पुनरेव स सौभराट्
मुमोच तनये वीरे मम रुक्मिणिनन्दने १४
तानप्राप्ताञ्शितैर्बाणैश्चिच्छेद परवीरहा
रौक्मिणेयः स्मितं कृत्वा दर्शयन्हस्तलाघवम् १५
छिन्नान्दृष्ट्वा तु तान्बाणान्प्रद्युम्नेन स सौभराट्
आसुरीं दारुणीं मायामास्थाय व्यसृजच्छरान् १६
प्रयुज्यमानमाज्ञाय दैतेयास्त्रं महाबलः
ब्रह्मास्त्रेणान्तरा छित्त्वा मुमोचान्यान्पतत्रिणः १७
ते तदस्त्रं विधूयाशु विव्यधू रुधिराशनाः
शिरस्युरसि वक्त्रे च स मुमोह पपात च १८
तस्मिन्निपतिते क्षुद्रे शाल्वे बाणप्रपीडिते
रौक्मिणेयोऽपरं बाणं संदधे शत्रुनाशनम् १९
तमर्चितं सर्वदाशार्हपूगैराशीर्भिरर्कज्वलनप्रकाशम्
दृष्ट्वा शरं ज्यामभिनीयमानं बभूव हाहाकृतमन्तरिक्षम् २०
ततो देवगणाः सर्वे सेन्द्राः सहधनेश्वराः
नारदं प्रेषयामासुः श्वसनं च महाबलम् २१
तौ रौक्मिणेयमागम्य वचोऽब्रूतां दिवौकसाम्
नैष वध्यस्त्वया वीर शाल्वराजः कथंचन २२
संहरस्व पुनर्बाणमवध्योऽय त्वया रणे
एतस्य च शरस्याजौ नावध्योऽस्ति पुमान्क्वचित् २३
मृत्युरस्य महाबाहो रणे देवकिनन्दनः
कृष्णः संकल्पितो धात्रा तन्न मिथ्या भवेदिति २४
ततः परमसंहृष्टः प्रद्युम्नः शरमुत्तमम्
संजहार धनुःश्रेष्ठात्तूणे चैव न्यवेशयत् २५
तत उत्थाय राजेन्द्र शाल्वः परमदुर्मनाः
व्यपायात्सबलस्तूर्णं प्रद्युम्नशरपीडितः २६
स द्वारकां परित्यज्य क्रूरो वृष्णिभिरर्दितः
सौभमास्थाय राजेन्द्र दिवमाचक्रमे तदा २७

इति श्रीमहाभारते आरण्यकपर्वणि विंशोऽध्यायः २०

एकविंशतितमोऽध्यायः

वासुदेव उवाच
आनर्तनगरं मुक्तं ततोऽहमगमं तदा
महाक्रतौ राजसूये निवृत्ते नृपते तव १
अपश्यं द्वारकां चाहं महाराज हतत्विषम्
निःस्वाध्यायवषट्कारां निर्भूषणवरस्त्रियम् २
अनभिज्ञेयरूपाणि द्वारकोपवनानि च
दृष्ट्वा शङ्कोपपन्नोऽहमपृच्छं हृदिकात्मजम् ३
अस्वस्थनरनारीकमिदं वृष्णिपुरं भृशम्
किमिदं नरशार्दूल श्रोतुमिच्छामहे वयम् ४
एवमुक्तस्तु स मया विस्तरेणेदमब्रवीत्
रोधं मोक्षं च शाल्वेन हार्दिक्यो राजसत्तम ५
ततोऽह कौरवश्रेष्ठ श्रुत्वा सर्वमशेषतः
विनाशे शाल्वराजस्य तदैवाकरवं मतिम् ६
ततोऽह भरतश्रेष्ठ समाश्वास्य पुरे जनम्
राजानमाहुकं चैव तथैवानकदुन्दुभिम्
सर्ववृष्णिप्रवीरांश्च हर्षयन्नब्रुवं तदा ७
अप्रमादः सदा कार्यो नगरे यादवर्षभाः
शाल्वराजविनाशाय प्रयातं मां निबोधत ८
नाहत्वा तं निवर्तिष्ये पुरीं द्वारवतीं प्रति
सशाल्वं सौभनगरं हत्वा द्रष्टास्मि वः पुनः
त्रिसामा हन्यतामेषा दुन्दुभिः शत्रुभीषणी ९
ते मयाश्वासिता वीरा यथावद्भरतर्षभ
सर्वे मामब्रुवन्हृष्टाः प्रयाहि जहि शात्रवान् १०
तैः प्रहृष्टात्मभिर्वीरैराशीर्भिरभिनन्दितः
वाचयित्वा द्विजश्रेष्ठान्प्रणम्य शिरसाहुकम् ११
सैन्यसुग्रीवयुक्तेन रथेनानादयन्दिशः
प्रध्माप्य शङ्खप्रवरं पाञ्चजन्यमहं नृप १२
प्रयातोऽस्मि नरव्याघ्र बलेन महता वृतः
क्लृप्तेन चतुरङ्गेण बलेन जितकाशिना १३

समतीत्य बहून्देशान्गिरींश्च बहुपादपान्
सरांसि सरितश्चैव मार्तिकावतमासदम् १४
तत्राश्रौषं नरव्याघ्र शाल्वं नगरमन्तिकात्
प्रयातं सौभमास्थाय तमहं पृष्ठतोऽन्वयाम् १५
ततः सागरमासाद्य कुक्षौ तस्य महोर्मिणः
समुद्रनाभ्यां शाल्वोऽभूत्सौभमास्थाय शत्रुहन् १६
स समालोक्य दूरान्मां स्मयन्निव युधिष्ठिर
आह्वयामास दुष्टात्मा युद्धायैव मुहुर्मुहुः १७
तस्य शार्ङ्गविनिर्मुक्तैर्बहुभिर्मर्मभेदिभिः
पुरं नासाद्यत शरैस्ततो मां रोष आविशत् १८
स चापि पापप्रकृतिर्दैतेयापसदो नृप
मय्यवर्षत दुर्धर्षः शरधाराः सहस्रशः १९
सैनिकान्मम सूतं च हयांश्च समवाकिरत्
अचिन्तयन्तस्तु शरान्वयं युध्याम भारत २०
ततः शतसहस्राणि शराणां नतपर्वणाम्
चिक्षिपुः समरे वीरा मयि शाल्वपदानुगाः २१
ते हयान्मे रथं चैव तदा दारुकमेव च
छादयामासुरसुरा बाणैर्मर्मविभेदिभिः २२
न हया न रथो वीर न यन्ता मम दारुकः
अदृश्यन्त शरैश्छन्नास्तथाहं सैनिकाश्च मे २३
ततोऽहमपि कौन्तेय शराणामयुतान्बहून्
अभिमन्त्रितानां धनुषा दिव्येन विधिनाक्षिपम् २४
न तत्र विषयस्त्वासीन्मम सैन्यस्य भारत
खे विषक्तं हि तत्सौभं क्रोशमात्र इवाभवत् २५
ततस्ते प्रेक्षकाः सर्वे रङ्गवाट इव स्थिताः
हर्षयामासुरुच्चैर्मां सिंहनादतलस्वनैः २६
मत्कार्मुकविनिर्मुक्ता दानवानां महारणे
अङ्गेषु रुधिराक्तास्ते विविशुः शलभा इव २७
ततो हलहलाशब्दः सौभमध्ये व्यवर्धत
वध्यतां विशिखैस्तीक्ष्णैः पततां च महार्णवे २८

ते निकृत्तभुजस्कन्धाः कबन्धाकृतिदर्शनाः
नदन्तो भैरवान्नादान्निपतन्ति स्म दानवाः २९
ततो गोक्षीरकुन्देन्दुमृणालरजतप्रभम्
जलजं पाञ्चजन्यं वै प्राणेनाहमपूरयम् ३०
तान्दृष्ट्वा पतितांस्तत्र शाल्वः सौभपतिस्तदा
मायायुद्धेन महता योधयामास मां युधि ३१
ततो हुडहुडाः प्रासाः शक्तिशूलपरश्वधाः
पट्टिशाश्च भुशुण्ड्यश्च प्रापतन्ननिशं मयि ३२
तानहं माययैवाशु प्रतिगृह्य व्यनाशयम्
तस्यां हतायां मायायां गिरिशृङ्गैरयोधयत् ३३
ततोऽभवत्तम इव प्रभातमिव चाभवत्
दुर्दिनं सुदिनं चैव शीतमुष्णं च भारत ३४
एवं मायां विकुर्वाणो योधयामास मां रिपुः
विज्ञाय तदहं सर्वं माययैव व्यनाशयम्
यथाकालं तु युद्धेन व्यधमं सर्वतः शरैः ३५
ततो व्योम महाराज शतसूर्यमिवाभवत्
शतचन्द्रं च कौन्तेय सहस्रायुततारकम् ३६
ततो नाज्ञायत तदा दिवारात्रं तथा दिशः
ततोऽह मोहमापन्नः प्रज्ञास्त्रं समयोजयम्
ततस्तदस्त्रमस्त्रेण विधूतं शरतूलवत् ३७
तथा तदभवद्युद्धं तुमुलं लोमहर्षणम्
लब्धालोकश्च राजेन्द्र पुनः शत्रुमयोधयम् ३८
इति श्रीमहाभारते आरगयकपर्वणि एकविंशोऽध्यायः २१

## द्वाविंशतितमोऽध्यायः

वासुदेव उवाच
एवं स पुरुषव्याघ्र शाल्वो राज्ञां महारिपुः
युध्यमानो मया संख्ये वियदभ्यागमत्पुनः १
ततः शतघ्नीश्च महागदाश्च दीप्तांश्च शूलान्मुसलानसींश्च
चिक्षेप रोषान्मयि मन्दबुद्धिः शाल्वो महाराज जयाभिकाङ्क्षी २

तानाशुगैरापततोऽहमाशु निवार्य तूर्णं खगमान्ख एव
द्विधा त्रिधा चाच्छिनमाशु मुक्तैस्ततोऽन्तरिक्षे निनदो बभूव ३
ततः शतसहस्रेण शराणां नतपर्वणाम्
दारुकं वाजिनश्चैव रथं च समवाकिरत् ४
ततो मामब्रवीद्वीर दारुको विह्वलन्निव
स्थातव्यमिति तिष्ठामि शाल्वबाणप्रपीडितः ५
इति तस्य निशम्याहं सारथेः करुणं वचः
अवेक्षमाणो यन्तारमपश्यं शरपीडितम् ६
न तस्योरसि नो मूर्ध्नि न काये न भुजद्वये
अन्तरं पाण्डवश्रेष्ठ पश्यामि न हतं शरैः ७
स तु बाणवरोत्पीडाद्विस्रवत्यसृगुल्बणम्
अभिवृष्टो यथा मेघैर्गिरिर्गैरिकधातुमान् ८
अभीषुहस्तं तं दृष्ट्वा सीदन्तं सारथिं रणे
अस्तम्भयं महाबाहो शाल्वबाणप्रपीडितम् ९
अथ मां पुरुषः कश्चिद्द्वारकानिलयोऽब्रवीत्
त्वरितो रथमभ्येत्यसौहृदादिव भारत १०
आहुकस्य वचो वीर तस्यैव परिचारकः
विषण्णः सन्नकण्ठो वै तन्निबोध युधिष्ठिर ११
द्वारकाधिपतिर्वीर आह त्वामाहुको वचः
केशवेह विजानीष्व यत्त्वां पितृसखोऽब्रवीत् १२
उपयात्वाद्य शाल्वेन द्वारकां वृष्णिनन्दन
विषक्ते त्वयि दुर्धर्ष हतः शूरसुतो बलात् १३
तदलं साधु युद्धेन निवर्तस्व जनार्दन
द्वारकामेव रक्षस्व कार्यमेतन्महत्तव १४
इत्यहं तस्य वचनं श्रुत्वा परमदुर्मनाः
निश्चयं नाधिगच्छामि कर्तव्यस्येतरस्य वा १५
सात्यकिं बलदेवं च प्रद्युम्नं च महारथम्
जगर्हे मनसा वीर तच्छ्रुत्वा विप्रियं वचः १६
अहं हि द्वारकायाश्च पितुश्च कुरुनन्दन
तेषु रक्षां समाधाय प्रयातः सौभपातने १७

बलदेवो महाबाहुः कच्चिज्जीवति शत्रुहा
सात्यकी रौक्मिणेयश्च चारुदेष्णश्च वीर्यवान्
साम्बप्रभृतयश्चैवेत्यहमासं सुदुर्मनाः १८
एतेषु हि नरव्याघ्र जीवत्सु न कथंचन
शक्यः शूरसुतो हन्तुमपि वज्रभृता स्वयम् १९
हतः शूरसुतो व्यक्तं व्यक्तं ते च परासवः
बलदेवमुखाः सर्वे इति मे निश्चिता मतिः २०
सोऽह सर्वविनाशं तं चिन्तयानो मुहुर्मुहुः
सुविह्वलो महाराज पुनः शाल्वमयोधयम् २१
ततोऽपश्यं महाराज प्रपतन्तमहं तदा
सौभाच्छूरसुतं वीर ततो मां मोह आविशत् २२
तस्य रूपं प्रपततः पितुर्मम नराधिप
ययातेः क्षीणपुरायस्य स्वर्गादिव महीतलम् २३
विशीर्णगलितोष्णीषः प्रकीर्णाम्बरमूर्धजः
प्रपतन्दृश्यते ह स्म क्षीणपुराय इव ग्रहः २४
ततः शार्ङ्गं धनुःश्रेष्ठं करात्प्रपतितं मम
मोहात्सन्नश्च कौन्तेय रथोपस्थ उपाविशम् २५
ततो हाहाकृतं सर्वं सैन्यं मे गतचेतनम्
मां दृष्ट्वा रथनीडस्थं गतासुमिव भारत २६
प्रसार्य बाहू पततः प्रसार्य चरणावपि
रूपं पितुरपश्यं तच्छकुनेः पततो यथा २७
तं पतन्तं महाबाहो शूलपट्टिशपाणयः
अभिघ्नन्तो भृशं वीर मम चेतो व्यकम्पयन् २८
ततो मुहूर्तात्प्रतिलभ्य संज्ञामहं तदा वीर महाविमर्दे
न तत्र सौभं न रिपुं न शाल्वं पश्यामि वृद्धं पितरं न चापि २९
ततो ममासीन्मनसि मायेयमिति निश्चितम्
प्रबुद्धोऽस्मि ततो भूयः शतशो विकिरञ्शरान् ३०

इति श्रीमहाभारते आरगयकपर्वणि द्वाविंशोऽध्यायः २२

## त्रयोविंशोऽध्यायः

वासुदेव उवाच
ततोऽहं भरतश्रेष्ठ प्रगृह्य रुचिरं धनुः
शरैरपातयं सौभाच्छिरांसि विबुधद्विषाम् १
शरांश्चाशीविषाकारानूर्ध्वगांस्तिग्मतेजसः
अप्रैषं शाल्वराजाय शार्ङ्गमुक्तान्सुवाससः २
ततो नादृश्यत तदा सौभं कुरुकुलोद्वह
अन्तर्हितं माययाभूत्ततोऽहं विस्मितोऽभवम् ३
अथ दानवसंघास्ते विकृताननमूर्धजाः
उदक्रोशन्महाराज विष्ठिते मयि भारत ४
ततोऽस्त्रं शब्दसाहं वै त्वरमाणो महाहवे
अयोजयं तद्वधाय ततः शब्द उपारमत् ५
हतास्ते दानवाः सर्वे यैः स शब्द उदीरितः
शरैरादित्यसङ्काशैर्ज्वलितैः शब्दसाधनैः ६
तस्मिन्नुपरते शब्दे पुनरेवान्यतोऽभवत्
शब्दोऽपरो महाराज तत्रापि प्राहरं शरान् ७
एवं दश दिशः सर्वास्तिर्यगूर्ध्वं च भारत
नादयामासुरसुरास्ते चापि निहता मया ८
ततः प्राग्ज्योतिषं गत्वा पुनरेव व्यदृश्यत
सौभं कामगमं वीर मोहयन्ममचक्षुषी ९
ततो लोकान्तकरणो दानवो वानराकृतिः
शिलावर्षेण सहसा महता मां समावृणोत् १०
सोऽहं पर्वतवर्षेण वध्यमानः समन्ततः
वल्मीक इव राजेन्द्र पर्वतोपचितोऽभवम् ११
ततोऽहं पर्वतचितः सहयः सहसारथिः
अप्रख्यातिमियां राजन्सध्वजः पर्वतैश्चितः १२
ततो वृष्णिप्रवीरा ये ममासन्सैनिकास्तदा
ते भयार्ता दिशः सर्वाः सहसा विप्रदुद्रुवुः १३
ततो हाहाकृतं सर्वमभूत्किल विशां पते
द्यौश्च भूमिश्च खं चैवादृश्यमाने तथा मयि १४
ततो विषण्णमनसो मम राजन्सुहृज्जनाः

रुरुदुश्चुक्रुशुश्चैव दुःखशोकसमन्विताः १५
द्विषतां च प्रहर्षोऽभूदार्तिश्चाद्विषतामपि
एवं विजितवान्वीर पश्चादश्रौषमच्युत १६
ततोऽहमस्त्रं दयितं सर्वपाषाण भेदनम्
वज्रमुद्यम्य तान्सर्वान्पर्वतान्समशातयम् १७
ततः पर्वतभारार्ता मन्दप्राणविचेष्टिताः
हया मम महाराज वेपमाना इवाभवन् १८
मेघजालमिवाकाशे विदार्याभ्युदितं रविम्
दृष्ट्वा मां बान्धवा सर्वे हर्षमाहारयन्पुनः १९
ततो मामब्रवीत्सूतः प्राञ्जलि प्रणतो नृप
साधु संपश्य वार्ष्णेय शाल्वं सौभपतिं स्थितम् २०
अलं कृष्णावमन्यैनं साधु यत्नं समाचर
मार्दवं सखितां चैव शाल्वादद्य व्यपाहर २१
जहि शाल्वं महाबाहो मैनं जीवय केशव
सर्वैः पराक्रमैर्वीर वध्यः शत्रुरमित्रहन् २२
न शत्रुरवमन्तव्यो दुर्बलोऽपि बलीयसा
योऽपि स्यात्पीठगः कश्चित्किं पुनः समरे स्थितः २३
स त्वं पुरुषशार्दूल सर्वयत्नैरिमं प्रभो
जहि वृष्णिकुलश्रेष्ठ मा त्वां कालोऽत्यगात्पुनः २४
नैष मार्दवसाध्यो वै मतो नापि सखा तव
येन त्वं योधितो वीर द्वारका चावमर्दिता २५
एवमादि तु कौन्तेय श्रुत्वाहं सारथेर्वचः
तत्त्वमेतदिति ज्ञात्वा युद्धे मतिमधारयम् २६
वधाय शाल्वराजस्य सौभस्य च निपातने
दारुकं चाब्रुवं वीर मुहूर्तं स्थीयतामिति २७
ततोऽप्रतिहतं दिव्यमभेद्यमतिवीर्यवत्
आग्नेयमस्त्रं दयितं सर्वसाहं महाप्रभम् २८
यक्षाणां राक्षसानां च दानवानां च संयुगे
राज्ञां च प्रतिलोमानां भस्मान्तकरणं महत् २९
क्षुरान्तममलं चक्रं कालान्तकयमोपमम्

अभिमन्त्र्याहमतुलं द्विषतां च निबर्हणम् ३०
जहि सौभं स्ववीर्येण ये चात्र रिपवो मम
इत्युक्त्वा भुजवीर्येण तस्मै प्राहिणवं रुषा ३१
रूपं सुदर्शनस्यासीदाकाशे पततस्तदा
द्वितीयस्येव सूर्यस्य युगान्ते परिविष्यतः ३२
तत्समासाद्य नगरं सौभं व्यपगतत्विषम्
मध्येन पाटयामास क्रकचो दार्विवोच्छ्रितम् ३३
द्विधा कृतं ततः सौभं सुदर्शनबलाद्धतम्
महेश्वरशरोद्धूतं पपात त्रिपुरं यथा ३४
तस्मिन्निपतिते सौभे चक्रमागात्करं मम
पुनश्चोद्धूय वेगेन शाल्वायेत्यहमब्रुवम् ३५
ततः शाल्वं गदां गुर्वीमाविध्यन्तं महाहवे
द्विधा चकार सहसा प्रजज्वाल च तेजसा ३६
तस्मिन्निपतिते वीरे दानवास्त्रस्तचेतसः
हाहाभूता दिशो जग्मुरर्दिता मम सायकैः ३७
ततोऽह समवस्थाप्य रथं सौभसमीपतः
शङ्खं प्रध्माप्य हर्षेण सुहृदः पर्यहर्षयम् ३८
तन्मेरुशिखराकारं विध्वस्ताट्टालगोपुरम्
दह्यमानमभिप्रेक्ष्य स्त्रियस्ताः संप्रदुद्रुवुः ३९
एवं निहत्य समरे शाल्वं सौभं निपात्य च
आनर्तान्पुनरागम्य सुहृदां प्रीतिमावहम् ४०
एतस्मात्कारणाद्राजन्नागमं नागसाह्वयम्
यद्यगां परवीरघ्न न हि जीवेत्सुयोधनः ४१
वैशम्पायन उवाच
एवमुक्त्वा महाबाहुः कौरवं पुरुषोत्तमः
आमन्त्र्य प्रययौ श्रीमान्पाण्डवान्मधुसूदनः ४२
अभिवाद्य महाबाहुर्धर्मराजं युधिष्ठिरम्
राज्ञा मूर्धन्युपाघ्रातो भीमेन च महाभुजः ४३
सुभद्रामभिमन्युं च रथमारोप्य काञ्चनम्
आरुरोह रथं कृष्णः पाण्डवैरभिपूजितः ४४

सैन्यसुग्रीवयुक्तेन रथेनादित्यवर्चसा
द्वारकां प्रययौ कृष्णः समाश्वास्य युधिष्ठिरम् ४५
ततः प्रयाते दाशार्हे धृष्टद्युम्नोऽपि पार्षतः
द्रौपदेयानुपादाय प्रययौ स्वपुरं तदा ४६
धृष्टकेतुः स्वसारं च समादायाथ चेदिराट्
जगामपाराडवान्दृष्ट्वा रम्यां शुक्तिमतीं पुरीम् ४७
कैकेयाश्चाप्यनुज्ञाताः कौन्तेयेनामितौजसा
आमन्त्र्य पाराडवान्सर्वान्प्रययुस्तेऽपि भारत ४८
ब्राह्मणाश्च विशश्चैव तथा विषयवासिनः
विसृज्यमानाः सुभृशं न त्यजन्ति स्म पाराडवान् ४९
समवायः स राजेन्द्र सुमहाद्भुतदर्शनः
आसीन्महात्मनां तेषां काम्यके भरतर्षभ ५०
युधिष्ठिरस्तु विप्रांस्ताननुमान्य महामनाः
शशास पुरुषान्काले रथान्योजयतेति ह ५१
इति श्रीमहाभारते आरगयकपर्वणि त्रयोविंशोऽध्यायः २३

## चतुर्विंशतितमोऽध्यायः

वैशम्पायन उवाच
तस्मिन्दशार्हाधिपतौ प्रयाते युधिष्ठिरो भीमसेनार्जुनौ च
यमौ च कृष्णा च पुरोहितश्च रथान्महार्हान्परमाश्वयुक्तान् १
आस्थाय वीराः सहिता वनाय प्रतस्थिरे भूतपतिप्रकाशाः
हिरगयनिष्कान्वसनानि गाश्च प्रदाय शिक्षाक्षरमन्त्रविद्भ्यः २
प्रेष्याः पुरो विंशतिरात्तशस्त्रा धनूंषि वर्माणि शरांश्च पीतान्
मौर्वीश्च यन्त्राणि च सायकांश्च सर्वे समादाय जघन्यमीयुः ३
ततस्तु वासांसि च राजपुत्र्या धात्र्यश्च दास्यश्च विभूषणं च
तदिन्द्रसेनस्त्वरितं प्रगृह्य जघन्यमेवोपययौ रथेन ४
ततः कुरुश्रेष्ठमुपेत्य पौराः प्रदक्षिणं चक्रुरदीनसत्त्वाः
तं ब्राह्मणाश्चाभ्यवदन्प्रसन्ना मुख्याश्च सर्वे कुरुजाङ्गलानाम् ५
स चापि तानभ्यवदत्प्रसन्नः सहैव तैर्भ्रातृभिर्धर्मराजः
तस्थौ च तत्राधिपतिर्महात्मा दृष्ट्वा जनौघं कुरुजाङ्गलानाम् ६

पितेव पुत्रेषु स तेषु भावं चक्रे कुरूणामृषभो महात्मा
ते चापि तस्मिन्भरतप्रबर्हे तदा बभूवुः पितरीव पुत्राः ७
ततः समासाद्य महाजनौघाः कुरुप्रवीरं परिवार्य तस्थुः
हा नाथ हा धर्म इति ब्रुवन्तो ह्रिया च सर्वेऽश्रुमुखा बभूवुः ८
वरः कुरूणामधिपः प्रजानां पितेव पुत्रानपहाय चास्मान्
पौरानिमाञ्जानपदांश्च सर्वान्हित्वा प्रयातः क्व नु धर्मराजः ९
धिग्धार्तराष्ट्रं सुनृशंसबुद्धिं ससौबलं पापमतिं च कर्णम्
अनर्थमिच्छन्ति नरेन्द्र पापा ये धर्मनित्यस्य सतस्तवोग्राः १०
स्वयं निवेश्याप्रतिमं महात्मा पुरं महद्देवपुरप्रकाशम्
शतक्रतुप्रस्थममोघकर्मा हित्वा प्रयातः क्व नु धर्मराजः ११
चकार यामप्रतिमां महात्मा सभां मयो देवसभाप्रकाशाम्
तां देवगुप्तामिव देवमायां हित्वा प्रयातः क्व नु धर्मराजः १२
तान्धर्मकामार्थ विदुत्तमौजा बीभत्सुरुच्चैः सहितानुवाच
आदास्यते वासमिमं निरुष्य वनेषु राजा द्विषतां यशांसि १३
द्विजातिमुख्याः सहिताः पृथक्च भवद्भिरासाद्य तपस्विनश्च
प्रसाद्य धर्मार्थविदश्च वाच्या यथार्थसिद्धिः परमा भवेन्नः १४
इत्येवमुक्ते वचनेऽजुनेन ते ब्राह्मणाः सर्ववर्णाश्च राजन्
मुदाभ्यनन्दन्सहिताश्च चक्रुः प्रदक्षिणं धर्मभृतां वरिष्ठम् १५
आमन्त्र्य पार्थं च वृकोदरं च धनञ्जयं याज्ञसेनीं यमौ च
प्रतस्थिरे राष्ट्रमपेतहर्षा युधिष्ठिरेणानुमता यथास्वम् १६
इति श्रीमहाभारते आरण्यकपर्वणि चतुर्विंशोऽध्यायः २४

पञ्चविंशोऽध्यायः

वैशम्पायन उवाच
ततस्तेषु प्रयातेषु कौन्तेयः सत्यसङ्गरः
अभ्यभाषत धर्मात्मा भ्रातॄन्सर्वान्युधिष्ठिरः १
द्वादशेमाः समास्माभिर्वस्तव्यं निर्जने वने
समीक्षध्वं महारण्ये देशं बहुमृगद्विजम् २
बहुपुष्पफलं रम्यं शिवं पुण्यजनोचितम्
यत्रेमाः शरदः सर्वाः सुखं प्रतिवसेमहि ३

एवमुक्ते प्रत्युवाच धर्मराजं धनञ्जयः
गुरुवन्मानवगुरुं मानयित्वा मनस्विनम् ४
अर्जुन उवाच
भवानेव महर्षीणां वृद्धानां पर्युपासिता
अज्ञातं मानुषे लोके भवतो नास्ति किंचन ५
त्वया ह्युपासिता नित्यं ब्राह्मणा भरतर्षभ
द्वैपायनप्रभृतयो नारदश्च महातपाः ६
यः सर्वलोकद्वाराणि नित्यं संचरते वशी
देवलोकाद्ब्रह्मलोकं गन्धर्वाप्सरसामपि ७
सर्वा गतीर्विजानासि ब्राह्मणानां न संशयः
प्रभावांश्चैव वेत्थ त्वं सर्वेषामेव पार्थिव ८
त्वमेव राजञ्जानासि श्रेयःकारणमेव च
यत्रेच्छसि महाराज निवासं तत्र कुर्महे ९
इदं द्वैतवनं नाम सरः पुगयजनोचितम्
बहुपुष्पफलं रम्यं नानाद्विजनिषेवितम् १०
अत्रेमा द्वादश समा विहरेमेति रोचये
यदि तेऽनुमतं राजन्किं वान्यन्मन्यते भवान् ११
युधिष्ठिर उवाच
ममाप्येतन्मतं पार्थ त्वया यत्समुदाहृतम्
गन्छाम पुगयं विख्यातं महद्द्वैतवनं सरः १२
वैशम्पायन उवाच
ततस्ते प्रययुः सर्वे पाडवा धर्मचारिणः
ब्राह्मणैर्बहुभिः सार्धं पुगयं द्वैतवनं सरः १३
ब्राह्मणाः साग्निहोत्राश्च तथैव च निरग्नयः
स्वाध्यायिनो भिक्षवश्च सजपा वनवासिनः १४
बहवो ब्राह्मणास्तत्र परिवब्रुर्युधिष्ठिरम्
तपस्विनः सत्यशीलाः शतशः संशितव्रताः १५
ते यात्वा पागडवास्तत्र बहुभिर्ब्राह्मणैः सह
पुगयं द्वैतवनं रम्यं विविशुर्भरतर्षभाः १६
तच्छालतालाम्रमधूकनीपकदम्बसर्जार्जुनकर्णिकारैः

तपात्यये पुष्पधरैरुपेतं महावनं राष्ट्रपतिर्ददर्श १७
महाद्रुमाणां शिखरेषु तस्थुर्मनोरमां वाचमुदीरयन्तः
मयूरदात्यूहचकोरसंघास्तस्मिन्वने काननकोकिलाश्च १८
करेणुयूथैः सह यूथपानां मदोत्कटानामचलप्रभाणाम्
महान्ति यूथानि महाद्विपानां तस्मिन्वने राष्ट्रपतिर्ददर्श १९
मनोरमां भोगवतीमुपेत्य धृतात्मनां चीरजटाधराणाम्
तस्मिन्वने धर्मभृतां निवासे ददर्श सिद्धर्षिगणाननेकान् २०
ततः स यानादवरुह्य राजा सभ्रातृकः सजनः काननं तत्
विवेश धर्मात्मवतां वरिष्ठस्त्रिविष्टपं शक्र इवामितौजाः २१
तं सत्यसन्धं सहिताभिपेतुर्दिदृक्षवश्चारणसिद्धसंघाः
वनौकसश्चापि नरेन्द्रसिहं मनस्विनं संपरिवार्य तस्थुः २२
स तत्र सिद्धानभिवाद्य सर्वान्प्रत्यर्चितो राजवद्देववच्च
विवेश सर्वैः सहितो द्विजाग्र्यैः कृताञ्जलिर्धर्मभृतां वरिष्ठः २३
स पुण्यशीलः पितृवन्महात्मा तपस्विभिर्धर्मपरैरुपेत्य
प्रत्यर्चितः पुष्पधरस्य मूले महाद्रुमस्योपविवेश राजा २४
भीमश्च कृष्णा च धनञ्जयश्च यमौ च ते चानुचरा नरेन्द्रम्
विमुच्य वाहानवरुह्य सर्वे तत्रोपतस्थुर्भरतप्रबर्हाः २५
लतावतानावनतः स पाण्डवैर्महाद्रुमः पञ्चभिरुग्रधन्विभिः
बभौ निवासोपगतैर्महात्मभिर्महागिरिर्वारणयूथपैरिव २६
इति श्रीमहाभारते आरण्यकपर्वणि पञ्चविंशोऽध्यायः २५

## षड्विंशोऽध्यायः

वैशम्पायन उवाच
तत्काननं प्राप्य नरेन्द्रपुत्राः सुखोचिता वासमुपेत्य कृच्छ्रम्
विजह्रुरिन्द्रप्रतिमाः शिवेषु सरस्वतीशालवनेषु तेषु १
यतींश्च सर्वान्स मुनींश्च राजा तस्मिन्वने मूलफलैरुदग्रैः
द्विजातिमुख्यानृषभः कुरूणां संतर्पयामास महानुभावः २
इष्टीश्च पित्र्याणि तथाग्रियाणि महावने वसतां पाण्डवानाम्
पुरोहितः सर्वसमृद्धतेजाश्चकार धौम्यः पितृवत्कुरूणाम् ३
अपेत्य राष्ट्राद्वसतां तु तेषामृषिः पुराणोऽतिथिराजगाम

तमाश्रमं तीव्रसमृद्धतेजा मार्कण्डेयः श्रीमतां पाण्डवानाम् ४
स सर्वविद् द्रौपदीं प्रेक्ष्य कृष्णां युधिष्ठिरं भीमसेनार्जुनौ च
संस्मृत्य रामं मनसा महात्मा तपस्विमध्येऽस्मयतामितौजाः ५
तं धर्मराजो विमना इवाब्रवीत्सर्वे ह्रिया सन्ति तपस्विनोऽमी
भवानिदं किं स्मयतीव हृष्टस्तपस्विनां पश्यतां मामुदीक्ष्य ६
मार्कण्डेय उवाच
न तात हृष्यामि न च स्मयामि प्रहर्षजो मां भजते न दर्पः
तवापदं त्वद्य समीक्ष्य रामं सत्यव्रतं दाशरथिं स्मरामि ७
स चापि राजा सह लक्ष्मणेन वने निवासं पितुरेव शासनात्
धन्वी चरन्पार्थ पुरा मयैव दृष्टो गिरेर्ऋष्यमूकस्य सानौ ८
सहस्रनेत्रप्रतिमो महात्मा मयस्य जेता नमुचेश्च हन्ता
पितुर्निदेशादनघः स्वधर्मं वने वासं दाशरथिश्चकार ९
स चापि शक्रस्य समप्रभावो महानुभावः समरेष्वजेयः
विहाय भोगानचरद्वनेषु नेशे बलस्येति चरेदधर्मम् १०
नृपाश्च नाभाग भगीरथादयो महीमिमां सागरान्तां विजित्य
सत्येन तेऽप्यजयंस्तात लोकान्नेशे बलस्येतिचरेदधर्मम् ११
अलर्कमाहुर्नरवर्य सन्तं सत्यव्रतं काशिकरूषराजम्
विहाय राष्ट्राणि वसूनि चैव नेशे बलस्येति चरेदधर्मम् १२
धात्रा विधिर्यो विहितः पुराणस्तं पूजयन्तो नरवर्य सन्तः
सप्तर्षयः पार्थ दिवि प्रभान्ति नेशे बलस्येति चरेदधर्मम् १३
महाबलान्पर्वतकूटमात्रान्विषाणिनः पश्य गजान्नरेन्द्र
स्थितान्निदेशे नरवर्य धातुर्नेशे बलस्येति चरेदधर्मम् १४
सर्वाणि भूतानि नरेन्द्र पश्य यथा यथावद्विहितं विधात्रा
स्वयोनितस्तत्कुरुते प्रभावान्नेशे बलस्येति चरेदधर्मम् १५
सत्येन धर्मेण यथार्हवृत्त्या ह्रिया तथा सर्वभूतान्यतीत्य
यशश्च तेजश्च तवापि दीप्तं विभावसोर्भास्करस्येव पार्थ १६
यथाप्रतिज्ञं च महानुभाव कृच्छ्रं वने वासमिमं निरुष्य
ततः श्रियं तेजसा स्वेन दीप्तामादास्यसे पार्थिव कौरवेभ्यः १७
वैशम्पायन उवाच
तमेवमुक्त्वा वचनं महर्षिस्तपस्विमध्ये सहितं सुहृद्भिः

आमन्त्र्य धौम्यं सहितांश्च पार्थांस्ततः प्रतस्थे दिशमुत्तरां सः १८
इति श्रीमहाभारते आरण्यकपर्वणि षड्विंशोऽध्यायः २६

सप्तविंशोऽध्यायः

वैशम्पायन उवाच
वसत्स्वथ द्वैतवने पाण्डवेषु महात्मसु
अनुकीर्णं महारण्यं ब्राह्मणैः समपद्यत १
ईर्यमाणेन सततं ब्रह्मघोषेण सर्वतः
ब्रह्मलोकसमं पुण्यमासीद्द्वैतवनं सरः २
यजुषामृचां च साम्नां च गद्यानां चैव सर्वशः
आसीदुच्चार्यमाणानां निस्वनो हृदयङ्गमः ३
ज्याघोषः पाण्डवेयानां ब्रह्मघोषश्च धीमताम्
संसृष्टं ब्रह्मणा क्षत्रं भूय एव व्यरोचत ४
अथाब्रवीद्बको दाल्भ्यो धर्मराजं युधिष्ठिरम्
सन्ध्यां कौन्तेयमासीनमृषिभिः परिवारितम् ५
पश्य द्वैतवने पार्थ ब्राह्मणानां तपस्विनाम्
होमवेलां कुरुश्रेष्ठ संप्रज्वलितपावकाम् ६
चरन्ति धर्मं पुण्येऽस्मिंस्त्वया गुप्ता धृतव्रताः
भृगवोऽङ्गिरसश्चैव वासिष्ठाः काश्यपैः सह ७
आगस्त्याश्च महाभागा आत्रेयाश्चोत्तमव्रताः
सर्वस्य जगतः श्रेष्ठा ब्राह्मणाः संगतास्त्वया ८
इदं तु वचनं पार्थ शृणवेकाग्रमना मम
भ्रातृभिः सह कौन्तेय यत्त्वा वक्ष्यामि कौरव ९
ब्रह्म क्षत्रेण संसृष्टं क्ष्स्त्रं च ब्रह्मणा सह
उदीर्णौ दहतः शत्रून्वनानीवाग्निमारुतौ १०
नाब्राह्मणस्तात चिरं बुभूषेदिच्छन्निमं लोकममुं च जेतुम्
विनीतधर्मार्थमपेतमोहं लब्ध्वा द्विजं नुदति नृपः सपत्नान् ११
चरन्नैःश्रेयसं धर्मं प्रजापालनकारितम्
नाध्यगच्छद्बलिर्लोके तीर्थमन्यत्र वै द्विजात् १२
अनूनमासीदसुरस्य कामैर्वैरोचनेः श्रीरपि चाक्षयासीत्

लब्ध्वा महीं ब्राह्मणसंप्रयोगात्तेष्वाचरन्दुष्टमतो व्यनश्यत् १३
नाब्राह्मणं भूमिरियं सभूतिर्वर्णं द्वितीयं भजते चिराय
समुद्रनेमिर्नमते तु तस्मै यं ब्राह्मणः शास्ति नयैर्विनीतः १४
कुञ्जरस्येव संग्रामेऽपरिगृह्याङ्कुशग्रहम्
ब्राह्मणैर्विप्रहीणस्य क्षत्रस्य क्षीयते बलम् १५
ब्रह्मण्यनुपमा दृष्टिः क्षात्रमप्रतिमं बलम्
तौ यदा चरतः सार्धमथ लोकः प्रसीदति १६
यथा हि सुमहानग्निः कक्षं दहति सानिलः
तथा दहति राजन्यो ब्राह्मणेन समं रिपून् १७
ब्राह्मणेभ्योऽथ मेधावी बुद्धिपर्येषणं चरेत्
अलब्धस्य च लाभाय लब्धस्य च विवृद्धये १८
अलब्धलाभाय च लब्धवृद्धये यथार्हतीर्थप्रतिपादनाय
यशस्विनं वेदविदं विपश्चितं बहुश्रुतं ब्राह्मणमेव वासय १९
ब्राह्मणेषूत्तमा वृत्तिस्तव नित्यं युधिष्ठिर
तेन ते सर्वलोकेषु दीप्यते प्रथितं यशः २०
ततस्ते ब्राह्मणाः सर्वे बकं दाल्भ्यमपूजयन्
युधिष्ठिरे स्तूयमाने भूयः सुमनसोऽभवन् २१
द्वैपायनो नारदश्च जामदग्न्यः पृथुश्रवाः
इन्द्रद्युम्नो भालुकिश्च कृतचेताः सहस्रपात् २२
कर्णश्रवाश्च मुञ्जश्च लवणाश्वश्च काश्यपः
हारीतः स्थूणकर्णश्च अग्निवेश्योऽथ शौनकः २३
ऋतवाक्च सुवाक्चैव बृहदश्व ऋतावसुः
ऊर्ध्वरेता वृषामित्रः सुहोत्रो होत्रवाहनः २४
एते चान्ये च बहवो ब्राह्मणाः संशितव्रताः
अजातशत्रुमानर्चुः पुरन्दरमिवर्षयः २५

इति श्रीमहाभारते आरण्यकपर्वणि सप्तविंशोऽध्यायः २७

## अष्टाविंशोऽध्यायः

वैशम्पायन उवाच
ततो वनगताः पार्थाः सायाह्ने सह कृष्णया

उपविष्टाः कथाश्चक्रुर्दुःखशोकपरायणाः १
प्रिया च दर्शनीया च पण्डिता च पतिव्रता
ततःकृष्णा धर्मराजमिदं वचनमब्रवीत् २
न नूनं तस्य पापस्य दुःखमस्मासु किंचन
विद्यते धार्तराष्ट्रस्य नृशंसस्य दुरात्मनः ३
यस्त्वां राजन्मया सार्धमजिनैः प्रतिवासितम्
भ्रातृभिश्च तथा सर्वैर्नाभ्यभाषत किंचन
वनं प्रस्थाप्य दुष्टात्मा नान्वतप्यत दुर्मतिः ४
आयसं हृदयं नूनं तस्य दुष्कृतकर्मणः
यस्त्वां धर्मपरं श्रेष्ठं रूक्षाण्यश्रावयत्तदा ५
सुखोचितमदुःखार्हं दुरात्मा ससुहृद्गणः
ईदृशं दुःखमानीय मोदते पापपूरुषः ६
चतुर्णामेव पापानामश्रु वै नापतत्तदा
त्वयि भारत निष्क्रान्ते वनायाजिनवाससि ७
दुर्योधनस्य कर्णस्य शकुनेश्च दुरात्मनः
दुर्भ्रातुस्तस्य चोग्रस्य तथा दुःशासनस्य च ८
इतरेषां तु सर्वेषां कुरूणां कुरुसत्तम
दुःखेनाभिपरीतानां नेत्रेभ्यः प्रापतज्जलम् ९
इदं च शयनं दृष्ट्वा यच्चासीत्ते पुरातनम्
शोचामि त्वां महाराज दुःखानर्हं सुखोचितम् १०
दान्तं यच्च सभामध्ये आसनं रत्नभूषितम्
दृष्ट्वा कुशबृसीं चेमां शोको मां रुन्धयत्ययम् ११
यदपश्यं सभायां त्वां राजभिः परिवारितम्
तच्च राजन्नपश्यन्त्याः का शान्तिर्हृदयस्य मे १२
या त्वाहं चन्दनादिग्धमपश्यं सूर्यवर्चसम्
सा त्वा पङ्कमलादिग्धं दृष्ट्वा मुह्यामि भारत १३
या वै त्वा कौशिकैर्वस्त्रैः शुभ्रैर्बहुधनैः पुरा
दृष्टवत्यस्मि राजेन्द्र सा त्वा पश्यामि चीरिणम् १४
यच्च तद्रुक्मपात्रीभिर्ब्राह्मणेभ्यः सहस्रशः
जिह्रते ते गृहादन्नं संस्कृतं सार्वकामिकम् १५

यतीनामगृहाणां ते तथैव गृहमेधिनाम्
दीयते भोजनं राजन्नतीव गुणवत्प्रभो
तच्च राजन्नपश्यन्त्याः का शान्तिर्हृदयस्य मे १६
यांस्ते भ्रातॄन्महाराज युवानो मृष्टकुण्डलाः
अभोजयन्त मृष्टान्नैः सूदाः परमसंस्कृतैः १७
सर्वांस्तानद्य पश्यामि वने वन्येन जीवतः
अदुःखार्हान्मनुष्येन्द्र नोपशाम्यति मे मनः १८
भीमसेनमिमं चापि दुःखितं वनवासिनम्
ध्यायन्तं किं न मन्युस्ते प्राप्ते काले विवर्धते १९
भीमसेनं हि कर्माणि स्वयं कुर्वाणमच्युत
सुखार्हं दुःखितं दृष्ट्वा कस्मान्मन्युर्न वर्धते २०
सत्कृतं विविधैर्यानैर्वस्त्रैरुच्चावचैस्तथा
तं ते वनगतं दृष्ट्वा कस्मान्मन्युर्न वर्धते २१
कुरूनपि हि यः सर्वान्हन्तुमुत्सहते प्रभुः
त्वत्प्रसादं प्रतीक्षंस्तु सहतेऽय वृकोदरः २२
योऽर्जुनेनार्जुनस्तुल्यो द्विबाहुर्बहुबाहुना
शरातिसर्गे शीघ्रत्वात्कालान्तकयमोपमः २३
यस्य शस्त्रप्रतापेन प्रणताः सर्वपार्थिवाः
यज्ञे तव महाराज ब्राह्मणानुपतस्थिरे २४
तमिमं पुरुषव्याघ्रं पूजितं देवदानवैः
ध्यायन्तमर्जुनं दृष्ट्वा कस्मान्मन्युर्न वर्धते २५
दृष्ट्वा वनगतं पार्थमदुःखार्हं सुखोचितम्
न च ते वर्धते मन्युस्तेन मुह्यामि भारत २६
यो देवांश्च मनुष्यांश्च सर्पांश्चैकरथोऽजयत्
तं ते वनगतं दृष्ट्वा कस्मान्मन्युर्न वर्धते २७
यो यानैरद्भुताकारैर्हयैर्नागैश्च संवृतः
प्रसह्य वित्तान्यादत्त पार्थिवेभ्यःपरन्तपः २८
क्षिपत्येकेन वेगेन पञ्च बाणशतानि यः
तं ते वनगतं दृष्ट्वा कस्मान्मन्युर्न वर्धते २९
श्यामं बृहन्तं तरुणं चर्मिणामुत्तमं रणे

नकुलं ते वने दृष्ट्वा कस्मान्मन्युर्न वर्धते ३०
दर्शनीयं च शूरं च माद्रीपुत्रं युधिष्ठिर
सहदेवं वने दृष्टा कस्मान्मन्युर्न वर्धते ३१
द्रुपदस्य कुले जातां स्नुषां पाण्डोर्महात्मनः
मां ते वनगतां दृष्ट्वा कस्मान्मन्युर्न वर्धते ३२
नूनं च तव नैवास्ति मन्युर्भरतसत्तम
यत्ते भ्रातृंश्च मां चैव दृष्ट्वा न व्यथते मनः ३३
न निर्मन्युः क्षत्रियोऽस्ति लोके निर्वचनं स्मृतम्
तदद्य त्वयि पश्यामि क्षत्रिये विपरीतवत् ३४
यो न दर्शयते तेजः क्षत्रियः काल आगते
सर्वभूतानि तं पार्थ सदा परिभवन्त्युत ३५
तत्त्वया न क्षमा कार्या शत्रून्प्रति कथंचन
तेजसैव हि ते शक्या निहन्तुं नात्र संशयः ३६
तथैव यः क्षमाकाले क्षत्रियो नोपशाम्यति
अप्रियः सर्वभूतानां सोऽमुत्रेह च नश्यति ३७
इति श्रीमहाभारते आरण्यकपर्वणि अष्टाविंशोऽध्यायः २८

## एकोनत्रिंशोऽध्यायः

द्रौपद्युवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
प्रह्लादस्य च संवादं बलेर्वैरोचनस्य च १
असुरेन्द्रं महाप्राज्ञं धर्माणामागतागमम्
बलि पप्रच्छ दैत्येन्द्रं प्रह्लादं पितरं पितुः २
क्षमा स्विच्छ्रेयसी तात उताहो तेज इत्युत
एतन्मे संशयं तात यथावद्ब्रूहि पृच्छते ३
श्रेयो यदत्र धर्मज्ञ ब्रूहि मे तदसंशयम्
करिष्यामि हि तत्सर्वं यथावदनुशासनम् ४
तस्मै प्रोवाच तत्सर्वमेवं पृष्टः पितामहः
सर्वनिश्चयवित्प्राज्ञः संशयं परिपृच्छते ५
प्रह्लाद उवाच

न श्रेयः सततं तेजो न नित्यं श्रेयसी क्षमा
इति तात विजानीहि द्वयमेतदसंशयम् ६
यो नित्यं क्षमते तात बहून्दोषान्स विन्दति
भृत्याः परिभवन्त्येनमुदासीनास्तथैव च ७
सर्वभूतानि चाप्यस्य न नमन्ते कदाचन
तस्मान्नित्यं क्षमा तात पण्डितैरपवादिता ८
अवज्ञाय हि तं भृत्या भजन्ते बहुदोषताम्
आदातुं चास्य वित्तानि प्रार्थयन्तेऽल्पचेतसः ९
यानं वस्त्राण्यलङ्काराञ्शयनान्यासनानि च
भोजनान्यथ पानानि सर्वोपकरणानि च १०
आददीरन्नधिकृता यथाकाममचेतसः
प्रदिष्टानि च देयानि न दद्युर्भर्तृशासनात् ११
न चैनं भर्तृपूजाभिः पूजयन्ति कदाचन
अवज्ञानं हि लोकेऽस्मिन्मरणादपि गर्हितम् १२
क्षमिणं तादृशं तात ब्रुवन्ति कटुकान्यपि
प्रेष्याः पुत्राश्च भृत्याश्च तथोदासीनवृत्तयः १३
अप्यस्य दारानिच्छन्ति परिभूय क्षमावतः
दाराश्चास्य प्रवर्तन्ते यथाकाममचेतसः १४
तथा च नित्यमुदिता यदि स्वल्पमपीश्वरात्
दण्डमर्हन्ति दुष्यन्ति दुष्टाश्चाप्यपकुर्वते १५
एते चान्ये च बहवो नित्यं दोषाः क्षमावताम्
अथ वैरोचने दोषानिमान्विद्ध्यक्षमावताम् १६
अस्थाने यदि वा स्थाने सततं रजसावृतः
क्रुद्धो दण्डान्प्रणयति विविधान्स्वेन तेजसा १७
मित्रैः सह विरोधं च प्राप्नुते तेजसावृतः
प्राप्नोति द्वेष्यतां चैव लोकात्स्वजनतस्तथा १८
सोऽवमानादर्थहानिमुपालम्भमनादरम्
संतापद्वेषलोभांश्च शत्रूंश्च लभते नरः १९
क्रोधाद्दण्डान्मनुष्येषु विविधान्पुरुषो नयन्
भ्रश्यते शीघ्रमैश्वर्यात्प्राणेभ्यः स्वजनादपि २०

योऽपकर्तॄंश्च कर्तॄंश्च तेजसैवोपगच्छति
तस्मादुद्विजते लोकः सर्पाद्वेश्मगतादिव २१
यस्मादुद्विजते लोकः कथं तस्य भवो भवेत्
अन्तरं ह्यस्य दृष्ट्वैव लोको विकुरुते ध्रुवम्
तस्मान्नात्युत्सृजेत्तेजो न च नित्यं मृदुर्भवेत् २२
काले मृदुर्यो भवति काले भवति दारुणः
स वै सुखमवाप्नोति लोकेऽमुष्मिन्निहैव च २३
क्षमाकालांस्तु वक्ष्यामि शृणु मे विस्तरेण तान्
ये ते नित्यमसंत्याज्या यथा प्राहुर्मनीषिणः २४
पूर्वोपकारी यस्तु स्यादपराधेऽगरीयसि
उपकारेण तत्तस्य क्षन्तव्यमपराधिनः २५
अबुद्धिमाश्रितानां च क्षन्तव्यमपराधिनाम्
न हि सर्वत्र पाण्डित्यं सुलभं पुरुषेण वै २६
अथ चेद्बुद्धिजं कृत्वा ब्रूयुस्ते तदबुद्धिजम्
पापान्स्वल्पेऽपि तान्हन्यादपराधे तथानृजून् २७
सर्वस्यैकोऽपराधस्ते क्षन्तव्यः प्राणिनो भवेत्
द्वितीये सति वध्यस्तु स्वल्पेऽप्यपकृते भवेत् २८
अजानता भवेत्कश्चिदपराधः कृतो यदि
क्षन्तव्यमेव तस्याहुः सुपरीक्ष्य परीक्षया २९
मृदुना मार्दवं हन्ति मृदुना हन्ति दारुणम्
नासाध्यं मृदुना किंचित्तस्मात्तीक्ष्णतरो मृदुः ३०
देशकालौ तु संप्रेक्ष्य बलाबलमथात्मनः
नादेशकाले किंचित्स्याद्देशः कालः प्रतीक्ष्यते
तथा लोकभयाच्चैव क्षन्तव्यमपराधिनः ३१
एत एवंविधाः कालाः क्षमायाः परिकीर्तिताः
अतोऽन्यथानुवर्तत्सु तेजसः काल उच्यते ३२
द्रौपद्युवाच
तदहं तेजसः कालं तव मन्ये नराधिप
धार्तराष्ट्रेषु लुब्धेषु सततं चापकारिषु ३३
न हि कश्चित्क्षमाकालो विद्यतेऽद्य कुरून्प्रति

तेजसश्चागते काले तेज उत्स्रष्टुमर्हसि ३४
मृदुर्भवत्यवज्ञातस्तीक्ष्णादुद्विजिते जनः
काले प्राप्ते द्वयं ह्येतद्यो वेद स महीपतिः ३५
इति श्रीमहाभारते आरण्यकपर्वणि एकोनत्रिंशोऽध्यायः २९

त्रिंशोऽध्यायः

युधिष्ठिर उवाच
क्रोधो हन्ता मनुष्याणां क्रोधो भावयिता पुनः
इति विद्धि महाप्राज्ञे क्रोधमूलौ भवाभवौ १
यो हि संहरते क्रोधं भावस्तस्य सुशोभने
यः पुनः पुरुषः क्रोधं नित्यं न सहते शुभे
तस्याभावाय भवति क्रोधः परमदारुणः २
क्रोधमूलो विनाशो हि प्रजानामिह दृश्यते
तत्कथं मादृशः क्रोधमुत्सृजेल्लोकनाशनम् ३
क्रुद्धः पापं नरः कुर्यात्क्रुद्धो हन्याद्गुरूनपि
क्रुद्धः परुषया वाचा श्रेयसोऽप्यवमन्यते ४
वाच्यावाच्ये हि कुपितो न प्रजानाति कर्हिचित्
नाकार्यमस्ति क्रुद्धस्य नावाच्यं विद्यते तथा ५
हिंस्यात्क्रोधादवध्यांश्च वध्यान्संपूजयेदपि
आत्मानमपि च क्रुद्धः प्रेषयेद्यमसादनम् ६
एतान्दोषान्प्रपश्यद्भिर्जितः क्रोधो मनीषिभिः
इच्छद्भिः परमं श्रेय इह चामुत्र चोत्तमम् ७
तं क्रोधं वर्जितं धीरैः कथमस्मद्विधश्चरेत्
एतद् द्रौपदि संधाय न मे मन्युः प्रवर्धते ८
आत्मानं च परं चैव त्रायते महतो भयात्
क्रुध्यन्तमप्रतिक्रुध्यन्द्वयोरेष चिकित्सकः ९
मूढो यदि क्लिश्यमानः क्रुध्यतेऽशक्तिमान्नरः
बलीयसां मनुष्याणां त्यजत्यात्मानमन्ततः १०
तस्यात्मानं संत्यजतो लोका नश्यन्त्यनात्मनः
तस्माद् द्रौपद्यशक्तस्य मन्योर्नियमनं स्मृतम् ११

विद्वांस्तथैव यः शक्तः क्लिश्यमानो न कुप्यति
स नाशयित्वा क्लेष्टारं परलोके च नन्दति १२
तस्माद्बलवता चैव दुर्बलेन च नित्यदा
क्षन्तव्यं पुरुषेणाहुरापत्स्वपि विजानता १३
मन्योर्हि विजयं कृष्णे प्रशंसन्तीह साधवः
क्षमावतो जयो नित्यं साधोरिह सतां मतम् १४
सत्यं चानृततः श्रेयो नृशंसाच्चानृशंसता
तमेवं बहुदोषं तु क्रोधं साधुविवर्जितम्
मादृशः प्रसृजेत्कस्मात्सुयोधनवधादपि १५
तेजस्वीति यमाहुर्वै पण्डिता दीर्घदर्शिनः
न क्रोधोऽभ्यन्तरस्तस्य भवतीति विनिश्चितम् १६
यस्तु क्रोधं समुत्पन्नं प्रज्ञया प्रतिबाधते
तेजस्विनं तं विद्वांसो मन्यन्ते तत्त्वदर्शिनः १७
क्रुद्धो हि कार्यं सुश्रोणि न यथावत्प्रपश्यति
न कार्यं न च मर्यादां नरः क्रुद्धोऽनुपश्यति १८
हन्त्यवध्यानपि क्रुद्धो गुरून्रूक्षैस्तुदत्यपि
तस्मात्तेजसि कर्तव्ये क्रोधो दूरात्प्रतिष्ठितः १९
दाक्ष्यं ह्यमर्षः शौर्यं च शीघ्रत्वमिति तेजसः
गुणाः क्रोधाभिभूतेन न शक्याः प्राप्तुमञ्जसा २०
क्रोधं त्यक्त्वा तु पुरुषः सम्यक्तेजोऽभिपद्यते
कालयुक्तं महाप्राज्ञे क्रुद्धैस्तेजः सुदुःसहम् २१
क्रोधस्त्वपण्डितैः शश्वत्तेज इत्यभिधीयते
रजस्तल्लोकनाशाय विहितं मानुषान्प्रति २२
तस्माच्छश्वत्त्यजेत्क्रोधं पुरुषः सम्यगाचरन्
श्रेयान्स्वधर्मानपगो न क्रुद्ध इति निश्चितम् २३
यदि सर्वमबुद्धीनामतिक्रान्तममेधसाम्
अतिक्रमो मद्विधस्य कथं स्वित्स्यादनिन्दिते २४
यदि न स्युर्मनुष्येषु क्षमिणः पृथिवीसमाः
न स्यात्संधिर्मनुष्याणां क्रोधमूलो हि विग्रहः २५
अभिषक्तो ह्यभिषजेदाहन्याद्गुरुणा हतः

एवं विनाशो भूतानामधर्मः प्रथितो भवेत् २६
आक्रुष्टः पुरुषः सर्वः प्रत्याक्रोशेदनन्तरम्
प्रतिहन्याद्धतश्चैव तथा हिंस्याच्च हिंसितः २७
हन्युर्हि पितरः पुत्रान्पुत्राश्चापि तथा पितॄन्
हन्युश्च पतयो भार्याः पतीन्भार्यास्तथैव च २८
एवं संकुपिते लोके जन्म कृष्णे न विद्यते
प्रजानां सन्धिमूलं हि जन्म विद्धि शुभानने २९
ताः क्षीयेरन्प्रजाः सर्वाः क्षिप्रं द्रौपदि तादृशे
तस्मान्मन्युर्विनाशाय प्रजानामभवाय च ३०
यस्मात्तु लोके दृश्यन्ते क्षमिणः पृथिवीसमाः
तस्माज्जन्म च भूतानां भवश्च प्रतिपद्यते ३१
क्षन्तव्यं पुरुषेणेह सर्वास्वापत्सु शोभने
क्षमा भवो हि भूतानां जन्म चैव प्रकीर्तितम् ३२
आक्रुष्टस्ताडितः क्रुद्धः क्षमते यो बलीयसा
यश्च नित्यं जितक्रोधो विद्वानुत्तमपूरुषः ३३
प्रभाववानपि नरस्तस्य लोकाः सनातनाः
क्रोधनस्त्वल्पविज्ञानः प्रेत्य चेह च नश्यति ३४
अत्राप्युदाहरन्तीमा गाथा नित्यं क्षमावताम्
गीताः क्षमावता कृष्णे काश्यपेन महात्मना ३५
क्षमा धर्मः क्षमा यज्ञः क्षमावेदाः क्षमा श्रुतम्
यस्तामेवं विजानाति स सर्वं क्षन्तुमर्हति ३६
क्षमा ब्रह्म क्षमासत्यं क्षमा भूतं च भावि च
क्षमा तपः क्षमा शौचं क्षमया चोद्धृतं जगत् ३७
अति ब्रह्मविदां लोकानति चापि तपस्विनाम्
अति यज्ञ विदां चैव क्षमिणः प्राप्नुवन्ति तान् ३८
क्षमा तेजस्विनां तेजः क्षमा ब्रह्म तपस्विनाम्
क्षमा सत्यं सत्यवतां क्षमा दानं क्षमा यशः ३९
तां क्षमामीदृशीं कृष्णे कथमस्मद्विधस्त्यजेत्
यस्यां ब्रह्म च सत्यं च यज्ञा लोकाश्च विष्ठिताः
भुज्यन्ते यज्वनां लोकाः क्षमिणामपरे तथा ४०

क्षन्तव्यमेव सततं पुरुषेण विजानता
यदा हि क्षमते सर्वं ब्रह्म संपद्यते तदा ४१
क्षमावतामयं लोकः परश्चैव क्षमावताम्
इह संमानमृच्छन्ति परत्र च शुभां गतिम् ४२
येषां मन्युर्मनुष्याणां क्षमया निहतः सदा
तेषां परतरे लोकास्तस्मात्क्षान्तिः परा मता ४३
इति गीताः काश्यपेन गाथा नित्यं क्षमावताम्
श्रुत्वा गाथाः क्षमायास्त्वं तुष्य द्रौपदि मा क्रुधः ४४
पितामहः शांतनवः शमं संपूजयिष्यति
आचार्यो विदुरः क्षत्ता शममेव वदिष्यतः
कृपश्च संजयश्चैव शममेव वदिष्यतः ४५
सोमदत्तो युयुत्सुश्च द्रोणपुत्रस्तथैव च
पितामहश्च नो व्यासः शमं वदति नित्यशः ३६
एतैर्हि राजा नियतं चोद्यमानं शमं प्रति
राज्यं दातेति मे बुद्धिर्न चेल्लोभान्नशिष्यति ४७
कालोऽय दारुणः प्राप्तो भरतानामभूतये
निश्चितं मे सदैवैतत्पुरस्तादपि भामिनि ४८
सुयोधनो नार्हतीति क्षमामेवं न विन्दति
अर्हस्तस्याहमित्येव तस्मान्मां निन्दते क्षमा ४९
एतदात्मवतां वृत्तमेष धर्मः सनातनः
क्षमा चैवानृशंस्यं च तत्कर्तास्म्यहमञ्जसा ५०
इति श्रीमहाभारते आरण्यकपर्वणि त्रिंशोऽध्यायः ३०

## एकत्रिंशोऽध्यायः

द्रौपद्युवाच
नमो धात्रे विधात्रे च यौ मोहं चक्रतुस्तव
पितृपैतामहे वृत्ते वोढव्ये तेऽन्यथा मतिः १
नेह धर्मानृशंस्याभ्यां न क्षान्त्या नार्जवेन च
पुरुषः श्रियमाप्नोति न घृणित्वेन कर्हिचित् २
त्वां चेद्व्यसनमभ्यागादिदं भारत दुःसहम्

यत्त्वं नार्हसि नापीमे भ्रातरस्ते महौजसः ३
न हि तेऽध्यगमज्ञातु तदानीं नाद्य भारत
धर्मात्प्रियतरं किंचिदपि चेज्जीवितादिह ४
धर्मार्थमेव ते राज्यं धर्मार्थं जीवितं च ते
ब्राह्मणा गुरवश्चैव जानन्त्यपि च देवताः ५
भीमसेनार्जुनौ चैव माद्रेयौ च मया सह
त्यजेस्त्वमिति मे बुद्धिर्न तु धर्मं परित्यजेः ६
राजानं धर्मगोप्तारं धर्मो रक्षति रक्षितः
इति मे श्रुतमार्याणां त्वां तु मन्ये न रक्षति ७
अनन्या हि नरव्याघ्र नित्यदा धर्ममेव ते
बुद्धिःसततमन्वेति छायेव पुरुषं निजा ८
नावमंस्था हि सदृशान्नावराञ्श्रेयसः कुतः
अवाप्य पृथिवीं कृत्स्नां न ते शृङ्गमवर्धत ९
स्वाहाकारैः स्वधाभिश्च पूजाभिरपि च द्विजान्
दैवतानि पितृंश्चैव सततं पार्थ सेवसे १०
ब्राह्मणाः सर्वकामैस्ते सततं पार्थ तर्पिताः
यतयो मोक्षिणश्चैव गृहस्थाश्चैव भारत ११
आरण्यकेभ्यो लौहानि भाजनानि प्रयच्छसि
नादेयं ब्राह्मणेभ्यस्ते गृहे किंचन विद्यते १२
यदिदं वैश्वदेवान्ते सायं प्रातः प्रदीयते
तद्दत्त्वातिथिभृत्येभ्यो राजञ्शेषेण जीवसि १३
इष्टयः पशुबन्धाश्च काम्यनैमित्तिकाश्च ये
वर्तन्ते पाकयज्ञाश्च यज्ञकर्म च नित्यदा १४
अस्मिन्नपि महारण्ये विजने दस्युसेविते
राष्ट्रादपेत्य वसतो धर्मस्ते नावसीदति १५
अश्वमेधो राजसूयः पुण्डरीकोऽथ गोसवः
एतैरपि महायज्ञैरिष्टं ते भूरिदक्षिणैः १६
राजन्परीतया बुद्ध्या विषमेऽक्षपराजये
राज्यं वसून्यायुधानि भ्रातृन्मां चासि निर्जितः १७
ऋजोर्मृदोर्वदान्यस्य ह्रीमतः सत्यवादिनः

कथमक्षव्यसनजा बुद्धिरापतिता तव १८
अतीव मोहमायाति मनश्च परिदूयते
निशाम्य ते दुःखमिदमिमां चापदमीदृशीम् १९
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
ईश्वरस्य वशे लोकस्तिष्ठते नात्मनो यथा २०
धातैव खलु भूतानां सुखदुःखे प्रियाप्रिये
दधाति सर्वमीशानः पुरस्ताच्छुक्रमुच्चरन् २१
यथा दारुमयी योषा नरवीर समाहिता
ईरयत्यङ्गमङ्गानि तथा राजन्निमाः प्रजाः २२
आकाश इव भूतानि व्याप्य सर्वाणि भारत
ईश्वरो विदधातीह कल्याणं यच्च पापकम् २३
शकुनिस्तन्तुबद्धो वा नियतोऽयमनीश्वरः
ईश्वरस्य वशे तिष्ठन्नान्येषां नात्मनः प्रभुः २४
मणिः सूत्र इव प्रोतो नस्योत इव गोवृषः
धातुरादेशमन्वेति तन्मयो हि तदर्पणः २५
नात्माधीनो मनुष्योऽय कालं भवति कंचन
स्रोतसो मध्यमापन्नः कूलाद्वृक्ष इव च्युतः २६
अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः
ईश्वरप्रेरितो गच्छेत्स्वर्गं नरकमेव च २७
यथा वायोस्तृणाग्राणि वशं यान्ति बलीयसः
धातुरेवं वशं यान्ति सर्वभूतानि भारत २८
आर्यकर्मणि युञ्जानः पापे वा पुनरीश्वरः
व्याप्य भूतानि चरते न चायमिति लक्ष्यते २९
हेतुमात्रमिदं धातुः शरीरं क्षेत्रसंज्ञितम्
येन कारयते कर्म शुभाशुभफलं विभुः ३०
पश्य मायाप्रभावोऽयमीश्वरेण यथा कृतः
यो हन्ति भूतैर्भूतानि मोहयित्वात्ममायया ३१
अन्यथा परिदृष्टानि मुनिभिर्वेददर्शिभिः
अन्यथा परिवर्तन्ते वेगा इव नभस्वतः ३२
अन्यथैव हि मन्यन्ते पुरुषास्तानि तानि च

अन्यथैव प्रभुस्तानि करोति विकरोति च ३३
यथा काष्ठेन वा काष्ठमश्मानं चाश्मना पुनः
अयसा चाप्ययश्छिन्द्यान्निर्विचेष्टमचेतनम् ३४
एवं स भगवान्देवः स्वयंभूः प्रपितामहः
हिनस्ति भूतैर्भूतानि छद्म कृत्वा युधिष्ठिर ३५
संप्रयोज्य वियोज्यायं कामकारकरः प्रभुः
क्रीडते भगवान्भूतैर्बालः क्रीडनकैरिव ३६
न मातृपितृवद्राजन्धाता भूतेषु वर्तते
रोषादिव प्रवृत्तोऽय यथायमितरो जनः ३७
आर्याञ्शीलवतो दृष्ट्वा ह्रीमतो वृत्तिकर्शितान्
अनार्यान्सुखिनश्चैव विह्वलामीव चिन्तया ३८
तवेमामापदं दृष्ट्वा समृद्धिं च सुयोधने
धातारं गर्हये पार्थ विषमं योऽनुपश्यति ३९
आर्यशास्त्रातिगे क्रूरे लुब्धे धर्मापचायिनि
धार्तराष्ट्रे श्रियं दत्त्वा धाता किं फलमश्नुते ४०
कर्म चेत्कृतमन्वेति कर्तारं नान्यमृच्छति
कर्मणा तेन पापेन लिप्यते नूनमीश्वरः ४१
अथ कर्म कृतं पापं न चेत्कर्तारमृच्छति
कारणं बलमेवेह जनाञ्छोचामि दुर्बलान् ४२
इति श्रीमहाभारते आरण्यकपर्वणि एकत्रिंशोऽध्यायः ३१

## द्वात्रिंशोऽध्यायः

युधिष्ठिर उवाच
वल्गु चित्रपदं श्लक्ष्णं याज्ञसेनि त्वया वचः
उक्तं तच्छ्रुतमस्माभिर्नास्तिक्यं तु प्रभाषसे १
नाहं कर्मफलान्वेषी राजपुत्रि चराम्युत
ददामि देयमित्येव यजे यष्टव्यमित्युत २
अस्तु वात्र फलं मा वा कर्तव्यं पुरुषेण यत्
गृहानावसता कृष्णे यथाशक्ति करोमि तत् ३
धर्मं चरामि सुश्रोणि न धर्मफलकारणात्

आगमाननतिक्रम्य सतां वृत्तमवेक्ष्य च
धर्म एव मनः कृष्णे स्वभावाच्चैव मे धृतम् ४
न धर्मफलमाप्नोति यो धर्मं दोग्धुमिच्छति
यश्चैनं शङ्कते कृत्वा नास्तिक्यात्पापचेतनः ५
अतिवादान्मदाच्चैव मा धर्ममतिशङ्किथाः
धर्मातिशंकी पुरुषस्तिर्यग्गतिपरायणः ६
धर्मो यस्यातिशंक्यः स्यादार्षं वा दुर्बलात्मनः
वेदाच्छूद्र इवापेयात्स लोकादजरामरात् ७
वेदाध्यायी धर्मपरः कुले जातो यशस्विनि
स्थविरेषु स योक्तव्यो राजभिर्धर्मचारिभिः ८
पापीयान्हि स शूद्रेभ्यस्तस्करेभ्यो विशेषतः
शास्त्रातिगो मन्दबुद्धिर्यो धर्ममतिशङ्कते ९
प्रत्यक्षं हि त्वया दृष्ट ऋषिर्गच्छन्महातपाः
मार्कण्डेयोऽप्रमेयात्मा धर्मेण चिरजीविताम् १०
व्यासो वसिष्ठो मैत्रेयो नारदो लोमशः शुकः
अन्ये च ऋषयः सिद्धा धर्मेणैव सुचेतसः ११
प्रत्यक्षं पश्यसि ह्येतान्दिव्ययोगसमन्वितान्
शापानुग्रहणे शक्तान्देवैरपि गरीयसः १२
एते हि धर्ममेवादौ वर्णयन्ति सदा मम
कर्तव्यममरप्रख्याः प्रत्यक्षागमबुद्धयः १३
अतो नार्हसि कल्याणि धातारं धर्ममेव च
रजोमूढेन मनसा क्षेप्तुं शङ्कितुमेव च १४
धर्मातिशङ्की नान्यस्मिन्प्रमाणमधिगच्छति
आत्मप्रमाण उन्नद्धः श्रेयसो ह्यवमन्यकः १५
इन्द्रियप्रीतिसंबद्धं यदिदं लोकसाक्षिकम्
एतावन्मन्यते बालो मोहमन्यत्र गच्छति १६
प्रायश्चित्तं न तस्यास्ति यो धर्ममतिशङ्कते
ध्यायन्स कृपणः पापो न लोकान्प्रतिपद्यते १७
प्रमाणान्यतिवृत्तो हि वेदशास्त्रार्थनिन्दकः
कामलोभानुगो मूढो नरकं प्रतिपद्यते १८

यस्तु नित्यं कृतमतिर्धर्ममेवाभिपद्यते
अशङ्कमानः कल्याणि सोऽमुत्रानन्त्यमश्नुते १९
आर्षं प्रमाणमुत्क्रम्य धर्मानपरिपालयन्
सर्वशास्त्रातिगो मूढः शं जन्मसु न विन्दति २०
शिष्टैराचरितं धर्मं कृष्णे मा स्मातिशंकिथाः
पुराणमृषिभिः प्रोक्तं सर्वज्ञैः सर्वदर्शिभिः २१
धर्म एव प्लवो नान्यः स्वर्गं द्रौपदि गच्छताम्
सैव नौः सागरस्यैव वणिजः पारमृच्छतः २२
अफलो यदि धर्मः स्याच्चरितो धर्मचारिभिः
रप्रतिष्ठे तमस्येतज्जगन्मज्जेदनिन्दिते २३
निर्वाणं नाधिगच्छेयुर्जीवेयुः पशुजीविकाम्
विधातेनैव युज्येयुर्न चार्थं किंचिदाप्नुयुः २४
तपश्च ब्रह्मचर्यं च यज्ञः स्वाध्याय एव च
दानमार्जवमेतानि यदि स्युरफलानि वै २५
नाचरिष्यन्परे धर्मं परे परतरे च ये
विप्रलम्भो ऽयमत्यन्तं यदि स्युरफलाः क्रियाः २६
ऋषयश्चैव देवाश्च गन्धर्वासुरराक्षसाः
ईश्वराः कस्य हेतोस्ते चरेयुर्धर्ममादृताः २७
फलदं त्विह विज्ञाय धातारं श्रेयसि ध्रुवे
धर्मं ते ह्याचरन्कृष्णे तद्धि धर्म सनातनम् २८
स चायं सफलो धर्मो न धर्मोऽफल उच्यते
दृश्यन्तेऽपि हि विद्यानां फलानि तपसां तथा २९
त्वय्येतद्वै विजानीहि जन्म कृष्णे यथा श्रुतम्
वेत्थ चापि यथा जातो धृष्टद्युम्नः प्रतापवान् ३०
एतावदेव पर्याप्तमुपमानं शुचिस्मिते
कर्मणां फलमस्तीति धीरोऽल्पेनापि तुष्यति ३१
बहुनापि ह्यविद्वांसो नैव तुष्यन्त्यबुद्धयः
तेषां न धर्मजं किंचित्प्रेत्य शर्मास्ति कर्म वा ३२
कर्मणामुतपुरायानां पापानां च फलोदयः
प्रभवश्चाप्ययश्चैव देवगुह्यानि भामिनि ३३

नैतानि वेद यः कश्चिन्मुह्यन्त्यत्र प्रजा इमाः
रक्ष्याण्येतानि देवानां गूढमाया हि देवताः ३४
कृशाङ्गाः सुव्रताश्चैव तपसा दग्धकिल्बिषाः
प्रसन्नैर्मानसैर्युक्ताः पश्यन्त्येतानि वै द्विजाः ३५
न फलादर्शनाद्धर्मः शङ्कितव्यो न देवताः
यष्टव्यं चाप्रमत्तेन दातव्यं चानसूयता ३६
कर्मणां फलमस्तीति तथैतद्धर्म शाश्वतम्
ब्रह्मा प्रोवाच पुत्राणां यदृषिर्वेद कश्यपः ३७
तस्मात्ते संशयः कृष्णे नीहार इव नश्यतु
व्यवस्य सर्वमस्तीति नास्तिक्यं भावमुत्सृज ३८
ईश्वरं चापि भूतानां धातारं मा विचिक्षिपः
शिक्षस्वैनं नमस्वैनं मा ते भूद्बुद्धिरीदृशी ३९
यस्य प्रसादात्तद्भक्तो मर्त्यो गच्छत्यमर्त्यताम्
उत्तमं दैवतं कृष्णे मातिवोचः कथंचन ४०
इति श्रीमहाभारते आरण्यकपर्वणि द्वात्रिंशोऽध्यायः ३२

## त्रयस्त्रिंशोऽध्यायः

द्रौपद्युवाच
नावमन्ये न गर्हे च धर्मं पार्थ कथंचन
ईश्वरं कुत एवाहमवमंस्ये प्रजापतिम् १
आर्ताहं प्रलपामीदमिति मां विद्धि भारत
भूयश्च विलपिष्यामि सुमनास्तन्निबोध मे २
कर्म खल्विह कर्तव्यं जातेनामित्रकर्शन
अकर्माणो हि जीवन्ति स्थावरा नेतरे जनाः ३
आ मातृस्तनपानाच्च यावच्छय्योपसर्पणम्
जङ्गमाः कर्मणा वृत्तिमाप्नुवन्ति युधिष्ठिर ४
जङ्गमेषु विशेषेण मनुष्या भरतर्षभ
इच्छन्ति कर्मणा वृत्तिमवाप्तुं प्रेत्य चेह च ५
उत्थानमभिजानन्ति सर्वभूतानि भारत
प्रत्यक्षं फलमश्नन्ति कर्मणां लोकसाक्षिकम् ६

पश्यामि स्वं समुत्थानमुपजीवन्ति जन्तवः
अपि धाता विधाता च यथायमुदके बकः ७
स्वकर्म कुरु मा ग्लासीः कर्मणा भव दंशितः
कृत्यं हि योऽभिजानाति सहस्रे नास्ति सोऽस्ति वा ८
तस्य चापि भवेत्कार्यं विवृद्धौ रक्षणे तथा
भक्ष्यमाणो ह्यनावापः क्षीयते हिमवानपि ९
उत्सीदेरन्प्रजाः सर्वा न कुर्युः कर्म चेद्यदि
अपि चाप्यफलं कर्म पश्यामः कुर्वतो जनान्
नान्यथा ह्यभिजानन्ति वृत्तिं लोके कथंचन १०
यश्च दिष्टपरो लोके यश्चायं हठवादकः
उभावपसदावेतौ कर्मबुद्धिः प्रशस्यते ११
यो हि दिष्टमुपासीनो निर्विचेष्टः सुखं स्वपेत्
अवसीदेत्सुदुर्बुद्धिरामो घट इवाम्भसि १२
तथैव हठबुद्धिर्यः शक्तः कर्मगयकर्मकृत्
आसीत न चिरं जीवेदनाथइव दुर्बलः १३
अकस्मादपि यः कश्चिदर्थं प्राप्नोति पूरुषः
तं हठेनेति मन्यन्ते स हि यत्नो न कस्यचित् १४
यच्चापि किंचित्पुरुषो दिष्टं नाम लभत्युत
दैवेन विधिना पार्थ तद्दैवमिति निश्चितम् १५
यत्स्वयं कर्मणा किंचित्फलमाप्नोति पूरुषः
प्रत्यक्षं चक्षुषा दृष्टं तत्पौरुषमिति स्मृतम् १६
स्वभावतः प्रवृत्तोऽन्य प्राप्नोत्यर्थानकारणात्
तत्स्वभावात्मकं विद्धि फलं पुरुषसत्तम १७
एवं हठाच्च दैवाच्च स्वभावात्कर्मणस्तथा
यानि प्राप्नोति पुरुषस्तत्फलं पूर्वकर्मणः १८
धातापि हि स्वकर्मैव तैस्तैर्हेतुभिरीश्वरः
विदधाति विभज्येह फलं पूर्वकृतं नृणाम् १९
यद्ध्ययं पुरुषः किंचित्कुरुते वै शुभाशुभम्
तद्धातृविहितं विद्धि पूर्वकर्मफलोदयम् २०
कारणं तस्य देहोऽय धातुः कर्मणि कर्मणि

स यथा प्रेरयत्येनं तथायं कुरुतेऽवशः २१
तेषु तेषु हि कृत्येषु विनियोक्ता महेश्वरः
सर्वभूतानि कौन्तेय कारयत्यवशान्यपि २२
मनसार्थान्विनिश्चित्य पश्चात्प्राप्नोति कर्मणा
बुद्धिपूर्वं स्वयं धीरः पुरुषस्तत्र कारणम् २३
संख्यातुं नैव शक्यानि कर्माणि पुरुषर्षभ
अगारनगराणां हि सिद्धिः पुरुषहैतुकी २४
तिले तैलं गवि क्षीरं काष्ठे पावकमन्ततः
धिया धीरो विजानीयादुपायं चास्य सिद्धये २५
ततःप्रवर्तते पश्चात्कारणेष्वस्य सिद्धये
तां सिद्धिमुपजीवन्ति कर्मणामिह जन्तवः २६
कुशलेन कृतं कर्म कर्त्रा साधुविनिश्चितम्
इदं त्वकुशलेनेति विशेषादुपलभ्यते २७
इष्टापूर्तफलं न स्यान्न शिष्यो न गुरुर्भवेत्
पुरुषः कर्मसाध्येषु स्याच्चेदयमकारणम् २८
कर्तृत्वादेव पुरुषः कर्मसिद्धौ प्रशस्यते
असिद्धौ निन्द्यते चापि कर्मनाशः कथं त्विह २९
सर्वमेव हठेनैके दिष्टेनैके वदन्त्युत
पुरुषप्रयत्नजं केचित्त्रैधमेतन्निरुच्यते ३०
न चैवैतावता कार्यं मन्यन्त इति चापरे
अस्ति सर्वमदृश्यं तु दिष्टं चैव तथा हठः
दृश्यते हि हठाच्चैव दिष्टाच्चार्थस्य संततिः ३१
किंचिद्दैवाद्धठात्किंचित्किंचिदेव स्वकर्मतः
पुरुषः फलमाप्नोति चतुर्थं नात्र कारणम्
कुशलाः प्रतिजानन्ति ये तत्त्वविदुषो जनाः ३२
तथैव धाता भूतानामिष्टानिष्टफलप्रदः
यदि न स्यान्न भूतानां कृपणो नाम कश्चन ३३
यं यमर्थमभिप्रेप्सुः कुरुते कर्म पूरुषः
तत्तत्सफलमेव स्याद्यदि न स्यात्पुराकृतम् ३४
त्रिद्वारामर्थसिद्धिं तु नानुपश्यन्ति ये नराः

तथैवानर्थसिद्धिं च यथा लोकास्तथैव ते ३५
कर्तव्यं त्वेव कर्मेति मनोरेष विनिश्चयः
एकान्तेन ह्यनीहोऽय पराभवति पूरुषः ३६
कुर्वतो हि भवत्येव प्रायेणेह युधिष्ठिर
एकान्तफलसिद्धिं तु न विन्दत्यलसः क्वचित् ३७
असंभवे त्वस्य हेतुः प्रायश्चित्तं तु लक्ष्यते
कृते कर्मणि राजेन्द्र तथानृणयमवाप्यते ३८
अलक्ष्मीराविशत्येनं शयानमलसं नरम्
निःसंशयं फलं लब्ध्वा दक्षो भूतिमुपाश्नुते ३९
अनर्थं संशयावस्थं वृणवते मुक्तसंशयाः
धीरा नराः कर्मरता न तु निःसंशयं क्वचित् ४०
एकान्तेन ह्यनर्थोऽय वर्ततेऽस्मासु सांप्रतम्
न तु निःसंशयं न स्यात्त्वयि कर्मणयवस्थिते ४१
अथ वा सिद्धिरेव स्यान्महिमा तु तथैव ते
वृकोदरस्य बीभत्सोर्भ्रात्रोश्च यमयोरपि ४२
अन्येषां कर्मसफलमस्माकमपि वा पुनः
विप्रकर्षेण बुध्येत कृतकर्मा यथा फलम् ४३
पृथिवीं लाङ्गलेनैव भित्त्वा बीजं वपत्युत
आस्तेऽथ कर्षकस्तूष्णीं पर्जन्यस्तत्र कारणम् ४४
वृष्टिश्चेन्नानुगृह्णीयादनेनास्तत्र कर्षकः
यदन्यः पुरुषः कुर्यात्कृतं तत्सकलं मया ४५
तच्चेदफलमस्माकं नापराधोऽस्ति नः क्वचित्
इति धीरोऽन्ववेक्ष्यैव नात्मानं तत्र गर्हयेत् ४६
कुर्वतो नार्थसिद्धिर्मे भवतीति ह भारत
निर्वेदो नात्र गन्तव्यो द्वावेतौ ह्यस्य कर्मणः
सिद्धिर्वाप्यथ वासिद्धिरप्रवृत्तिरतोऽन्यथा ४७
बहूनां समवाये हि भावानां कर्म सिध्यति
गुणाभावे फलं न्यूनं भवत्यफलमेव वा
अनारम्भे तु न फलं न गुणो दृश्यतेऽच्युत ४८
देशकालावुपायांश्च मङ्गलं स्वस्ति वृद्धये

युनक्ति मेधया धीरो यथाशक्ति यथाबलम् ४९
अप्रमत्तेन तत्कार्यमुपदेष्टा पराक्रमः
भूयिष्ठं कर्मयोगेषु सर्व एव पराक्रमः ५०
यं तु धीरोऽन्ववेक्षेत श्रेयांसं बहुभिर्गुणैः
साम्नैवार्थं ततो लिप्सेत्कर्म चास्मै प्रयोजयेत् ५१
व्यसनं वास्य कांक्षेत विनाशं वा युधिष्ठिर
अपि सिन्धोर्गिरेर्वापि किं पुनर्मर्त्यधर्मिणः ५२
उत्थानयुक्तः सततं परेषामन्तरैषणे
आनृण्यमाप्नोति नरः परस्यात्मन एव च ५३
न चैवात्मावमन्तव्यः पुरुषेण कदाचन
न ह्यात्मपरिभूतस्य भूतिर्भवति भारत ५४
एवं संस्थितिका सिद्धिरियं लोकस्य भारत
चित्रा सिद्धिगतिः प्रोक्ता कालावस्थाविभागतः ५५
ब्राह्मणं मे पिता पूर्वं वासयामास पण्डितम्
सोऽस्मा अर्थमिमं प्राह पित्रे मे भरतर्षभ ५६
नीतिं बृहस्पतिप्रोक्तां भ्रातॄन्मेग्राहयत्पुरा
तेषां सांकथ्यमश्रौषमहमेतत्तदा गृहे ५७
स मां राजन्कर्मवतीमागतामाह सान्त्वयन्
शुश्रूषमाणामासीनां पितुरङ्के युधिष्ठिर ५८
इति श्रीमहाभारते आरण्यकपर्वणि त्रयस्त्रिंशोऽध्यायः ३३

## चतुस्त्रिंशोऽध्यायः

वैशम्पायन उचाच
याज्ञसेन्या वचः श्रुत्वा भीमसेनोऽत्यमर्षणः
निःश्वसन्नुपसंगम्य क्रुद्धो राजानमब्रवीत् १
राज्यस्य पदवीं धर्म्यां व्रज सत्पुरुषोचिताम्
धर्मकामार्थहीनानां किं नो वस्तुं तपोवने २
नैव धर्मेण तद्राज्यं नार्जवेन न चौजसा
अक्षकूटमधिष्ठाय हृतं दुर्योधनेन नः ३
गोमायुनेव सिंहानां दुर्बलेन बलीयसाम्

आमिषं विघसाशेन तद्वद्राज्यं हि नो हृतम् ४
धर्मलेशप्रतिच्छन्नः प्रभवं धर्मकामयोः
अर्थमुत्सृज्य किं राजन्दुर्गेषु परितप्यसे ५
भवतोऽनुविधानेन राज्यं नः पश्यतां हृतम्
अहार्यमपि शक्रेण गुप्तं गाण्डीवधन्वना ६
कुणीनामिव बिल्वानि पंगूनामिव धेनवः
हृतमैश्वर्यमस्माकं जीवतां भवतःकृते ७
भवतः प्रियमित्येवं महद्व्यसनमीदृशम्
धर्मकामे प्रतीतस्य प्रतिपन्नाः स्म भारत ८
कर्शयामः स्वमित्राणि नन्दयामश्च शात्रवान्
आत्मानं भवतः शास्त्रे नियम्य भरतर्षभ ९
यद्वयं न तद्वैतान्धार्तराष्ट्रान्निहन्महि
भवतः शास्त्रमादाय तन्नस्तपति दुष्कृतम् १०
अथैनामन्ववेक्षस्व मृगचर्यामिवात्मनः
अवीराचरितां राजन्न बलस्थैर्निषेविताम् ११
यां न कृष्णो न बीभत्सुर्नाभिमन्युर्न सृञ्जयः
न चाहमभिनन्दामि न च माद्रीसुतावुभौ १२
भवान्धर्मो धर्म इति सततं व्रतकर्शितः
कच्चिद्राजन्न निर्वेदादापन्नः क्लीबजीविकाम् १३
दुर्मनुष्या हि निर्वेदमफलं सर्वघातिनम्
अशक्ताः श्रियमाहर्तुमात्मनः कुर्वते प्रियम् १४
स भवान्दृष्टिमाञ्शक्तः पश्यन्नात्मनि पौरुषम्
आनृशंस्यपरो राजन्नानर्थमवबुध्यसे १५
अस्मानमी धार्तराष्ट्राः क्षममाणानलं सतः
अशक्तानेव मन्यन्ते तद्दुःखं नाहवे वधः १६
तत्र चेद्युध्यमानानामजिह्ममनिवर्तिनाम्
सर्वशो हि वधः श्रेयान्प्रेत्य लोकाँल्लभेमहि १७
अथ वा वयमेवैतान्निहत्य भरतर्षभ
आददीमहि गां सर्वां तथापि श्रेय एव नः १८
सर्वथा कार्यमेतन्नः स्वधर्ममनुतिष्ठताम्

कांक्षतां विपुलां कीर्तिं वैरं प्रतिचिकीर्षताम् १९
आत्मार्थं युध्यमानानां विदिते कृत्यलक्षणे
अन्यैरपहृते राज्ये प्रशंसैव न गर्हणा २०
कर्शनार्थो हि यो धर्मो मित्राणामात्मनस्तथा
व्यसनं नाम तद्राजन्न स धर्मः कुधर्म तत् २१
सर्वथा धर्मनित्यं तु पुरुषं धर्मदुर्बलम्
जहतस्तात धर्मार्थौ प्रेतं दुःखसुखे यथा २२
यस्य धर्मो हि धर्मार्थं क्लेशभाङ्न स पण्डितः
न स धर्मस्य वेदार्थं सूर्यस्यान्धः प्रभामिव २३
यस्य चार्थार्थमेवार्थः स च नार्थस्य कोविदः
रक्षते भृतकोऽरण्यं यथा स्यात्तादृगेव सः २४
अतिवेलं हि योऽथार्थी नेतरावनुतिष्ठति
स वध्यः सर्वभूतानां ब्रह्महेव जुगुप्सितः २५
सततं यश्च कामार्थी नेतरावनुतिष्ठति
मित्राणि तस्य नश्यन्ति धर्मार्थाभ्यां च हीयते २६
तस्य धर्मार्थहीनस्य कामान्ते निधनं ध्रुवम्
कामतो रममाणस्य मीनस्येवाम्भसः क्षये २७
तस्माद्धमार्थयोर्नित्यं न प्रमाद्यन्ति पण्डिताः
प्रकृतिः सा हि कामस्य पावकस्यारणिर्यथा २८
सर्वथा धर्ममूलोऽथो धर्मश्चार्थपरिग्रहः
इतरेतरयोनी तौ विद्धि मेघोदधी यथा २९
द्रव्यार्थस्पर्शसंयोगे या प्रीतिरुपजायते
स कामश्चित्तसंकल्पः शरीरं नास्य विद्यते ३०
अर्थार्थी पुरुषो राजन्बृहन्तं धर्ममृच्छति
अर्थमृच्छति कामार्थी न कामादन्यमृच्छति ३१
न हि कामेन कामोऽन्य साध्यते फलमेव तत्
उपयोगात्फलस्येव काष्ठाद्भस्मेव पण्डितः ३२
इमाञ्शकुनिकान्राजन्हन्ति वैतंसिको यथा
एतद्रूपमधर्मस्य भूतेषु च विहिंसताम् ३३
कामाल्लोभाच्च धर्मस्य प्रवृत्तिं यो न पश्यति

स वध्यः सर्वभूतानां प्रेत्य चेह च दुर्मतिः ३४
व्यक्तं ते विदितो राजन्नर्थो द्रव्यपरिग्रहः
प्रकृतिं चापि वेत्थास्य विकृतिं चापि भूयसीम् ३५
तस्य नाशं विनाशं वा जरया मरणेन वा
अनर्थमिति मन्यन्ते सोऽयमस्मासु वर्तते ३६
इन्द्रियाणां च पञ्चानां मनसो हृदयस्य च
विषये वर्तमानानां या प्रीतिरुपजायते
स काम इति मे बुद्धिः कर्मणां फलमुत्तमम् ३७
एवमेव पृथग्दृष्ट्वा धर्मार्थौ काममेव च
न धर्मपर एव स्यान्न चार्थपरमो नरः
न कामपरमो वा स्यात्सर्वान्सेवेत सर्वदा ३८
धर्मं पूर्वं धनं मध्ये जघन्ये काममाचरेत्
अहन्यनुचरेदेवमेष शास्त्रकृतो विधिः ३९
कामं पूर्वं धनं मध्ये जघन्ये धर्ममाचरेत्
वयस्यनुचरेदेवमेष शास्त्रकृतो विधिः ४०
धर्मं चार्थं च कामं च यथावद्वदतां वर
विभज्य काले कालज्ञः सर्वान्सेवेत पण्डितः ४१
मोक्षो वा परमं श्रेय एष राजन्सुखार्थिनाम्
प्राप्तिर्वा बुद्धिमास्थाय सोपायां कुरुनन्दन ४२
तद्वाशु क्रियतां राजन्प्राप्तिर्वाप्यधिगम्यताम्
जीवितं ह्यातुरस्येव दुःखमन्तरवर्तिनः ४३
विदितश्चैव ते धर्मः सततं चरितश्च ते
जानते त्वयि शंसन्ति सुहृदः कर्मचोदनाम् ४४
दानं यज्ञः सतां पूजा वेदधारणमार्जवम्
एष धर्मः परो राजन्फलवान्प्रेत्य चेह च ४५
एष नार्थविहीनेन शक्यो राजन्निषेवितुम्
अखिलाः पुरुषव्याघ्र गुणाः स्युर्यद्यपीतरे ४६
धर्ममूलं जगद्राजन्नान्यद्धर्माद्विशिष्यते
धर्मश्चार्थेन महता शक्यो राजन्निषेवितुम् ४७
न चार्थो भैक्षचर्येण नापि क्लैब्येन कर्हिचित्

वेत्तुं शक्यः सदा राजन्केवलं धर्मबुद्धिना ४८
प्रतिषिद्धा हि ते याञ्चा यया सिध्यति वै द्विजः
तेजसैवार्थलिप्सायां यतस्व पुरुषर्षभ ४९
भैक्षचर्या न विहिता न च विट्शूद्रजीविका
क्षत्रियस्य विशेषेण धर्मस्तु बलमौरसम् ५०
उदारमेव विद्वांसो धर्मं प्राहुर्मनीषिणः
उदारं प्रतिपद्यस्व नावरे स्थातुमर्हसि ५१
अनुबुद्ध्यस्व राजेन्द्र वेत्थ धर्मान्सनातनान्
क्रूरकर्माभिजातोऽसि यस्मादुद्विजते जनः ५२
प्रजापालनसंभूतं फलं तव न गर्हितम्
एष ते विहितो राजन्धात्रा धर्मः सनातनः ५३
तस्माद्विचलितः पार्थ लोके हास्यं गमिष्यसि
स्वधर्माद्धि मनुष्याणां चलनं न प्रशस्यते ५४
स क्षात्रं हृदयं कृत्वा त्यक्त्वेदं शिथिलं मनः
वीर्यमास्थाय कौन्तेय धुरमुद्वह धुर्यवत् ५५
न हि केवलधर्मात्मा पृथिवीं जातु कश्चन
पार्थिवो व्यजयद्राजन्न भूतिं न पुनः श्रियम् ५६
जिह्वां दत्त्वा बहूनां हि क्षुद्राणां लुब्धचेतसाम्
निकृत्या लभते राज्यमाहारमिव शल्यकः ५७
भ्रातरः पूर्वजाताश्च सुसमृद्धाश्च सर्वशः
निकृत्या निर्जिता देवैरसुराः पाण्डवर्षभ ५८
एवं बलवतः सर्वमिति बुद्ध्वा महीपते
जहिशत्रून्महाबाहो परां निकृतिमास्थितः ५९
न ह्यर्जुनसमः कश्चिद्युधि योद्धा धनुर्धरः
भविता वा पुमान्कश्चिन्मत्समो वा गदाधरः ६०
सत्त्वेन कुरुते युद्धं राजन्सुबलवानपि
न प्रमाणेन नोत्साहात्सत्त्वस्थो भव पाण्डव ६१
सत्त्वं हि मूलमर्थस्य वितथं यदतोऽन्यथा
न तु प्रसक्तं भवति वृक्षच्छायेव हैमनी ६२
अर्थत्यागो हि कार्यः स्यादर्थं श्रेयांसमिच्छता

बीजौपम्येन कौन्तेय मा ते भूदत्र संशयः ६३
अर्थेन तु समोऽनर्थो यत्र लभ्येत नोदयः
न तत्र विपणः कार्यः खरकण्डूयितं हि तत् ६४
एवमेव मनुष्येन्द्र धर्मं त्यक्त्वाल्पकं नरः
बृहन्तं धर्ममाप्नोति स बुद्ध इति निश्चितः ६५
अमित्रं मित्रसंपन्नं मित्रैर्भिन्दन्ति पण्डिताः
भिन्नैर्मित्रैः परित्यक्तं दुर्बलं कुरुते वशे ६६
सत्त्वेन कुरुते युद्धं राजन्सुबलवानपि
नोद्यमेन न होत्राभिः सर्वाः स्वीकुरुते प्रजाः ६७
सर्वथा संहतैरेव दुर्बलैर्बलवानपि
अमित्रः शक्यते हन्तुं मधुहा भ्रमरैरिव ६८
यथा राजन्प्रजाः सर्वाः सूर्यः पाति गभस्तिभिः
अत्ति चैव तथैव त्वं सवितुः सदृशो भव ६९
एतद्ध्यपि तपो राजन्पुराणमिति नः श्रुतम्
विधिना पालनं भूमेर्यत्कृतं नः पितामहैः ७०
अपेयात्किल भाः सूर्याल्लक्ष्मीश्चन्द्रमसस्तथा
इति लोको व्यवसितो दृष्ट्वेमां भवतो व्यथाम् ७१
भवतश्च प्रशंसाभिर्निन्दाभिरितरस्य च
कथायुक्ताः परिषदः पृथग्राजन्समागताः ७२
इदमभ्यधिकं राजन्ब्राह्मणा गुरवश्च ते
समेताः कथयन्तीह मुदिताः सत्यसन्धताम् ७३
यन्न मोहान्न कार्पण्यान्न लोभान्न भयादपि
अनृतं किंचिदुक्तं ते न कामान्नार्थकारणात् ७४
यदेनः कुरुते किंचिद्राजा भूमिमवाप्नुवन्
सर्वं तन्नुदते पश्चाद्यज्ञैर्विपुलदक्षिणैः ७५
ब्राह्मणेभ्यो ददद्ग्रामान्गाश्च राजन्सहस्रशः
मुच्यते सर्वपापेभ्यस्तमोभ्य इव चन्द्रमाः ७६
पौरजानपदाः सर्वे प्रायशः कुरुनन्दन
सवृद्धबालाः सहिताः शंसन्ति त्वां युधिष्ठिर ७७
श्वदृतौ क्षीरमासक्तं ब्रह्म वा बृषले यथा

सत्यं स्तेने बलं नार्यां राज्यं दुर्योधने तथा ७८
इति निर्वचनं लोके चिरं चरति भारत
अपि चैतत्स्त्रियो बालाः स्वाध्यायमिव कुर्वते ७९
स भवान्रथमास्थाय सर्वोपकरणान्वितम्
त्वरमाणोऽभिनिर्यातु चिरमर्थोपपादकम् ८०
वाचयित्वा द्विजश्रेष्ठानद्यैव गजसाह्वयम्
अस्त्रविद्भिः परिवृतो भ्रातृभिर्दृढधन्विभिः
आशीविषसमैर्वीरैर्मरुद्भिरिव वृत्रहा ८१
अमित्रांस्तेजसा मृद्नन्नसुरेभ्य इवारिहा
श्रियमादत्स्व कौन्तेय धार्तराष्ट्रान्महाबल ८२
न हि गाण्डीवमुक्तानां शराणां गार्ध्रवाससाम्
स्पर्शमाशीविषाभानां मर्त्यः कश्चन संसहेत् ८३
न स वीरो न मातङ्गो न सदश्वोऽस्ति भारत
यः सहेत गदावेगं मम क्रुद्धस्य संयुगे ८४
सृञ्जयैः सह कैकेयैर्वृष्णीनामृषभेण च
कथं स्विद्युधि कौन्तेय राज्यं न प्राप्नुयामहे ८५
इति श्री महाभारते आरण्यकपर्वणि चतुस्त्रिंशोऽध्यायः ३४

## पञ्चत्रिंशोऽध्यायः

युधिष्ठिर उवाच
असंशयं भारत सत्यमेतद्यन्मा तुदन्वाक्यशल्यैः क्षिणोषि
न त्वा विगर्हे प्रतिकूलमेतन्ममानयाद्धि व्यसनं व आगात् १
अहं ह्यक्षानन्वपद्यं जिहीर्षन्राज्यं सराष्ट्रं धृतराष्ट्रस्य पुत्रात्
तन्मा शठः कितवः प्रत्यदेवीत्सुयोधनार्थं सुबलस्यपुत्रः २
महामायः शकुनिः पार्वतीयः सदा सभायां प्रवपन्नक्षपूगान्
अमायिनं मायया प्रत्यदेवीत्ततोऽपश्यं वृजिनं भीमसेन ३
अक्षान्हि दृष्ट्वा शकुनेर्यथावत्कामानुलोमानयुजो युजश्च
शक्यं नियन्तुमभविष्यदात्मा मन्युस्तु हन्ति पुरुषस्य धैर्यम् ४
यन्तुं नात्मा शक्यते पौरुषेण मानेन वीर्येण च तात नद्धः
न ते वाचं भीमसेनाभ्यसूये मन्ये तथा तद्भवितव्यमासीत् ५

स नो राजा धृतराष्ट्रस्य पुत्रो न्यपातयद्व्यसने राज्यमिच्छन्
दास्यं च नोऽगमयद्भीमसेन यत्राभवच्छरणं द्रौपदी नः ६
त्वं चापि तद्वेत्थ धनञ्जयश्च पुनर्द्यूतायागतानां सभां नः
यन्माब्रवीद्धृतराष्ट्रस्य पुत्र एकग्लहार्थं भरतानां समक्षम् ७
वने समा द्वादश राजपुत्र यथाकामं विदितमजातशत्रो
अथापरं चाविदितं चरेथाः सर्वैः सह भ्रातृभिश्छद्मगूढः ८
त्वां चेच्छ्रुत्वा तात तथा चरन्तमवभोत्स्यन्ते भारतानां चराः स्म
अन्यांश्चरेथास्तावतोऽब्दास्ततस्त्वं निश्चित्य तत्प्रतिजानीहि पार्थ ९
चरैश्चन्ऽविदितः कालमेतं युक्तो राजन्मोहयित्वा मदीयान्
ब्रवीमि सत्यं कुरुसंसदीह तवैव ता भारत पञ्च नद्यः १०
वयं चैवं भ्रातरः सर्व एव त्वया जिताः कालमपास्य भोगान्
वसेम इत्याह पुरा स राजा मध्ये कुरूणां स मयोक्तस्तथेति ११
तत्र द्यूतमभवन्नो जघन्यं तस्मिञ्जिताः प्रव्रजिताश्च सर्वे
इत्थं च देशाननुसंचरामो वनानि कृच्छ्राणि च कृच्छ्ररूपाः १२
सुयोधनश्चापि न शान्तिमिच्छन्भूयः स मन्योर्वशमन्वगच्छत्
उद्योजयामास कुरूंश्च सर्वान्ये चास्य केचिद्वशमन्वगच्छन् १३
तं सन्धिमास्थाय सतां सकाशे को नाम जह्यादिह राज्यहेतोः
आर्यस्य मन्ये मरणाद्गरीयो यद्धर्ममुत्क्रम्य महीं प्रशिष्यात् १४
तदैव चेद्वीरकर्माकरिष्यो यदा द्यूते परिघं पर्यमृक्षः
बाहू दिधक्षन्वारितः फल्गुनेन किं दुष्कृतं भीम तदाभविष्यत् १५
प्रागेव चैवं समयक्रियायाः किं नाब्रवीः पौरुषमाविदानः
प्राप्तं तु कालं त्वभिपद्य पश्चात्किं मामिदानीमतिवेलमात्थ १६
भूयोऽपि दुःखं मम भीमसेन दूये विषस्येव रसं विदित्वा
यद्याज्ञसेनीं परिकृष्यमाणां संदृश्य तत्क्षान्तमिति स्म भीम १७
न त्वद्य शक्यं भरतप्रवीर कृत्वा यदुक्तं कुरुवीरमध्ये
कालं प्रतीक्षस्व सुखोदयस्य पक्तिं फलानामिव बीजवापः १८
यदा हि पूर्वं निकृतो निकृत्या वैरं सपुष्पं सफलं विदित्वा
महागुणं हरति हि पौरुषेण तदा वीरो जीवति जीवलोके १९
श्रियं च लोके लभते समग्रां मन्ये चास्मै शत्रवः संनमन्ते
मित्राणि चैनमतिरागाद्भजन्ते देवा इवेन्द्रमनुजीवन्ति चैनम् २०

मम प्रतिज्ञां च निबोध सत्यां वृणे धर्ममममृताज्जीविताच्च
राज्यं च पुत्राश्च यशो धनं च सर्वं न सत्यस्य कलामुपैति २१
इति श्रीमहाभारते आरण्यकपर्वणि पञ्चत्रिंशोऽध्यायः ३५

षट्त्रिंशोऽध्यायः

भीमसेन उवाच
संधिं कृत्वैव कालेन अन्तकेन पतत्रिणा
अनन्तेनाप्रमेयेन स्रोतसा सर्वहारिणा १
प्रत्यक्षं मन्यसे कालं मर्त्यः सन्कालबन्धनः
फेनधर्मा महाराज फलधर्मा तथैव च २
निमेषादपि कौन्तेय यस्यायुरपचीयते
सूच्येवाञ्जनचूर्णस्य किमिति प्रतिपालयेत् ३
यो नूनममितायुः स्यादथ वापि प्रमाणवित्
स कालं वै प्रतीक्षेत सर्वप्रत्यक्षदर्शिवान् ४
प्रतीक्षमाणान्कालो नः समा राजंस्त्रयोदश
आयुषोऽपचयं कृत्वा मरणायोपनेष्यति ५
शरीरिणां हि मरणं शरीरे नित्यमाश्रितम्
प्रागेव मरणात्तस्माद्राज्यायैव घटामहे ६
यो न याति प्रसंख्यानमस्पष्टो भूमिवर्धनः
अयातयित्वा वैराणि सोऽवसीदति गौरिव ७
यो न यातयते वैरमल्पसत्त्वोद्यमः पुमान्
अफलं तस्य जन्माहं मन्ये दुर्जातजायिनः ८
हैरण्यौ भवतो बाहू श्रुतिर्भवति पार्थिव
हत्वा द्विषन्तं संग्रामे भुक्त्वा बाह्वर्जितं वसु ९
हत्वा चेत्पुरुषो राजन्निकर्तारमरिन्दम
अह्नाय नरकं गच्छेत्स्वर्गेणास्य स संमितः १०
अमर्षजो हि संतापः पावकाद्दीप्तिमत्तरः
येनाहमभिसंतप्तो न नक्तं न दिवा शये ११
अयं च पार्थो बीभत्सुर्वरिष्ठो ज्याविकर्षणे
आस्ते परमसंतप्तो नूनं सिंह इवाशये १२

योऽयमेकोऽभिमनुते सर्वाल्लोके धनुर्भृतः
सोऽयमात्मजमूष्माणं महाहस्तीव यच्छति १३
नकुलः सहदेवश्च वृद्धा माता च वीरसूः
तवैव प्रियमिच्छन्त ग्रासते जडमूकवत् १४
सर्वे ते प्रियमिच्छन्ति बान्धवाः सह सृञ्जयैः
ग्रहमेकोऽभिसंतप्तो माता च प्रतिविन्ध्यतः १५
प्रियमेव तु सर्वेषां यद्ब्रवीम्युत किंचन
सर्वे हि व्यसनं प्राप्ताः सर्वे युद्धाभिनन्दिनः १६
नेतः पापीयसी काचिदापद्राजन्भविष्यति
यन्नो नीचैरल्पबलै राज्यमाच्छिद्य भुज्यते १७
शीलदोषाद्घृणाविष्ट ग्रानृशंस्यात्परन्तप
क्लेशांस्तितिद्मसे राजन्नान्यः कश्चित्प्रशंसति १८
घृणी ब्राह्मणरूपोऽसि कथं द्मत्रे ग्रजायथाः
ग्रस्यां हि योनौ जायन्ते प्रायशः क्रूरबुद्धयः १९
ग्रश्रौषीस्त्वं राजधर्मान्यथा वै मनुरब्रवीत्
क्रूरान्निकृतिसंयुक्तान्विहितानशमात्मकान् २०
कर्तव्ये पुरुषव्याघ्र किमास्से पीठसर्पवत्
बुद्ध्या वीर्येण संयुक्तः श्रुतेनाभिजनेन च २१
तृणानां मुष्टिनैकेन हिमवन्तं तु पर्वतम्
छन्नमिच्छसि कौन्तेय योऽस्मान्संवर्तुमिच्छसि २२
ग्रज्ञातचर्या गूढेन पृथिव्यां विश्रुतेन च
दिवीव पार्थ सूर्येण न शक्या चरितुं त्वया २३
बृहच्छाल इवानूपे शाखापुष्पपलाशवान्
हस्ती श्वेत इवाज्ञातः कथं जिष्णुश्चरिष्यति २४
इमौ च सिंहसङ्काशौ भ्रातरौ सहितौ शिशू
नकुलः सहदेवश्च कथं पार्थ चरिष्यतः २५
पुरायकीर्ती राजपुत्री द्रौपदी वीरसूरियम्
विश्रुता कथमज्ञाता कृष्णा पार्थ चरिष्यति २६
मां चापिराजञ्जानन्ति ग्राकुमारमिमाः प्रजाः
ग्रज्ञातचर्यां पश्यामि मेरोरिव निगूहनम् २७

तथैव बहवोऽस्माभीः राष्ट्रेभ्यो विप्रवासिताः
राजानो राजपुत्राश्च धृतराष्ट्रमनुव्रताः २८
न हि तेऽप्युपशाम्यन्ति निकृतानां निराकृताः
अवश्यं तैर्निकर्तव्यमस्माकं तत्प्रियैषिभिः २९
तेऽप्यस्मासु प्रयुञ्जीरन्प्रच्छन्नान्सुबहूञ्जनान्
आचक्षीरंश्च नो ज्ञात्वा तन्नः स्यात्सुमहद्भयम् ३०
अस्माभिरुषिताः सम्यग्वने मासास्त्रयोदश
परिमाणेन तान्पश्य तावतः परिवत्सरान् ३१
अस्ति मासः प्रतिनिधिर्यथा प्राहुर्मनीषिणः
पूतीकानिव सोमस्य तथेदं क्रियतामिति ३२
अथ वानडुहे राजन्साधवे साधुवाहिने
सौहित्यदानादेकस्मादेनसः प्रतिमुच्यते ३३
तस्माच्छत्रुवधे राजन्क्रियतां निश्चयस्त्वया
क्षत्रियस्य तु सर्वस्य नान्यो धर्मोऽस्ति संयुगात् ३४
इति श्रीमहाभारते आरण्यकपर्वणि षट्त्रिंशोऽध्यायः ३६

## सप्तत्रिंशोऽध्यायः

वैशम्पायन उवाच
भीमसेनवचः श्रुत्वा कुन्तीपुत्रो युधिष्ठिरः
निःश्वस्य पुरुषव्याघ्रः संप्रदध्यौ परन्तपः १
स मुहूर्तमिव ध्यात्वा विनिश्चित्येतिकृत्यताम्
भीमसेनमिदं वाक्यमपदान्तरमब्रवीत् २
एवमेतन्महाबाहो यथा वदसि भारत
इदमन्यत्समाधत्स्व वाक्यं मे वाक्यकोविद ३
महापापानि कर्माणि यानि केवलसाहसात्
आरभ्यन्ते भीमसेन व्यथन्ते तानि भारत ४
सुमन्त्रिते सुविक्रान्ते सुकृते सुविचारिते
सिध्यन्त्यर्था महाबाहो दैवं चात्र प्रदक्षिणम् ५
त्वं तु केवलचापल्याद्बलदर्पोच्छ्रितः स्वयम्
आरब्धव्यमिदं कर्म मन्यसे शृणु तत्र मे ६

भूरिश्रवाः शलश्चैव जलसन्धश्च वीर्यवान्
भीष्मो द्रोणश्च कर्णश्च द्रोणपुत्रश्च वीर्यवान् ७
धार्तराष्ट्रा दुराधर्षा दुर्योधनपुरोगमाः
सर्व एव कृतास्त्राश्च सततं चाततायिनः ८
राजानः पार्थिवाश्चैव येऽस्माभिरुपतापिताः
संश्रिताः कौरवं पक्षं जातस्नेहाश्च सांप्रतम् ९
दुर्योधनहिते युक्ता न तथास्मासु भारत
पूर्णकोशा बलोपेताः प्रयतिष्यन्ति रक्षणे १०
सर्वे कौरवसैन्यस्य सपुत्रामात्यसैनिकाः
संविभक्ता हि मात्राभिर्भोगैरपि च सर्वशः ११
दुर्योधनेन ते वीरा मानिताश्च विशेषतः
प्राणांस्त्यक्ष्यन्ति संग्रामे इति मे निश्चिता मतिः १२
समा यद्यपि भीष्मस्य वृत्तिरस्मासु तेषु च
द्रोणस्य च महाबाहो कृपस्य च महात्मनः १३
अवश्यं राजपिण्डस्तैर्निर्वेश्य इति मे मतिः
तस्मात्त्यक्ष्यन्ति संग्रामे प्राणानपि सुदुस्त्यजान् १४
सर्वे दिव्यास्त्रविद्वांसः सर्वे धर्मपरायणाः
अजेयाश्चेति मे बुद्धिरपि देवैः सवासवैः १५
अमर्षी नित्यसंहृष्टस्तत्र कर्णो महारथः
सर्वास्त्रविदनाधृष्य अभेद्यकवचावृतः १६
अनिर्जित्य रणे सर्वानेतान्पुरुषसत्तमान्
अशक्यो ह्यसहायेन हन्तुं दुर्योधनस्त्वया १७
न निद्रामधिगच्छामि चिन्तयानो वृकोदर
अति सर्वान्धनुर्ग्राहान्सूतपुत्रस्य लाघवम् १८
एतद्वचनमाज्ञाय भीमसेनोऽत्यमर्षणः
बभूव विमनास्त्रस्तो न चैवोवाच किंचन १९
तयोः संवदतोरेवं तदा पाण्डवयोर्द्वयोः
आजगाम महायोगी व्यासः सत्यवतीसुतः २०
सोऽभिगम्य यथान्यायं पाण्डवैः प्रतिपूजितः
युधिष्ठिरमिदं वाक्यमुवाच वदतां वरः २१

युधिष्ठिर महाबाहो वेद्मि ते हृदि मानसम्
मनीषया ततः क्षिप्रमागतोऽस्मि नरर्षभ २२
भीष्माद्द्रोणात्कृपात्कर्णाद्द्रोणपुत्राच्च भारत
यत्ते भयममित्रघ्न हृदि संपरिवर्तते २३
तत्तेऽहं नाशयिष्यामि विधिदृष्टेन हेतुना
तच्छ्रुत्वा धृतिमास्थाय कर्मणा प्रतिपादय २४
तत एकान्तमुन्नीय पाराशर्यो युधिष्ठिरम्
अब्रवीदुपपन्नार्थमिदं वाक्यविशारदः २५
श्रेयसस्ते परः कालः प्राप्तो भरतसत्तम
येनाभिभविता शत्रून्रणे पार्थो धनञ्जयः २६
गृहाणेमां मया प्रोक्तां सिद्धिं मूर्तिमतीमिव
विद्यां प्रतिस्मृतिं नाम प्रपन्नाय ब्रवीमि ते
यामवाप्य महाबाहुरर्जुनः साधयिष्यति २७
अस्त्रहेतोर्महेन्द्रं च रुद्रं चैवाभिगच्छतु
वरुणं च धनेशं च धर्मराजं च पाण्डव
शक्तो ह्येष सुरान्द्रष्टुं तपसा विक्रमेण च २८
ऋषिरेष महातेजा नारायणसहायवान्
पुराणः शाश्वतो देवो विष्णोरंशः सनातनः २९
अस्त्राणीन्द्राच्च रुद्राच्च लोकपालेभ्य एव च
समादाय महाबाहुर्महत्कर्म करिष्यति ३०
वनादस्माच्च कौन्तेय वनमन्यद्विचिन्त्यताम्
निवासार्थाय यद्युक्तं भवेद्वः पृथिवीपते ३१
एकत्र चिरवासो हि न प्रीतिजननो भवेत्
तापसानां च शान्तानां भवेदुद्वेगकारकः ३२
मृगाणामुपयोगश्च वीरुदोषधिसंक्षयः
बिभर्षि हि बहून्विप्रान्वेदवेदाङ्गपारगान् ३३
एवमुक्त्वा प्रपन्नाय शुचये भगवान्प्रभुः
प्रोवाच योगतत्त्वज्ञो योगविद्यामनुत्तमाम् ३४
धर्मराज्ञे तदा धीमान्व्यासः सत्यवतीसुतः
अनुज्ञाय च कौन्तेयं तत्रैवान्तरधीयत ३५

युधिष्ठिरस्तु धर्मात्मा तद्ब्रह्म मनसा यतः
धारयामास मेधावी काले काले समभ्यसन् ३६
स व्यासवाक्यमुदितो वनाद्द्वैतवनात्ततः
ययौ सरस्वतीतीरे काम्यकं नाम काननम् ३७
तमन्वयुर्महाराज शिक्षाक्षरविदस्तथा
ब्राह्मणास्तपसा युक्ता देवेन्द्रमृषयो यथा ३८
ततः काम्यकमासाद्य पुनस्ते भरतर्षभाः
न्यविसन्त महात्मानः सामात्याः सपदानुगाः ३९
तत्र ते न्यवसन्राजन्कंचित्कालं मनस्विनः
धनुर्वेदपरा वीराः शृण्वाना वेदमुत्तमम् ४०
चरन्तो मृगयां नित्यं शुद्धैर्बाणैर्मृगार्थिनः
पितृदैवतविप्रेभ्यो निर्वपन्तो यथाविधि ४१
इति श्रीमहाभारते आरण्यकपर्वणि सप्तत्रिंशोऽध्यायः ३७

## अष्टात्रिंशोऽध्यायः

वैशम्पायन उवाच
कस्यचित्त्वथ कालस्य धर्मराजो युधिष्ठिरः
संस्मृत्य मुनिसंदेशमिदं वचनमब्रवीत् १
विविक्ते विदितप्रज्ञमर्जुनं भरतर्षभम्
सान्त्व पूर्वं स्मितं कृत्वा पाणिना परिसंस्पृशन् २
स मुहूर्तमिव ध्यात्वा वनवासमरिन्दमः
धनञ्जयं धर्मराजो रहसीदमुवाच ह ३
भीष्मे द्रोणे कृपे कर्णे द्रोणपुत्रे च भारत
धनुर्वेदश्चतुष्पाद एतेष्वद्य प्रतिष्ठितः ४
ब्राह्मं दैवमासुरं च स प्रयोगचिकित्सितम्
सर्वास्त्राणां प्रयोगं च तेऽभिजानन्ति कृत्स्नशः ५
ते सर्वे धृतराष्ट्रस्य पुत्रेण परिसान्त्विताः
संविभक्ताश्च तुष्टाश्च गुरुवत्तेषु वर्तते ६
सर्वयोधेषु चैवास्य सदा वृत्तिरनुत्तमा
शक्तिं न हापयिष्यन्ति ते काले प्रतिपूजिताः ७

अद्य चेयं मही कृत्स्ना दुर्योधनवशानुगा
त्वयि व्यपाश्रयोऽस्माकं त्वयि भारःसमाहितः
तत्र कृत्यं प्रपश्यामि प्राप्तकालमरिन्दम ८
कृष्णद्वैपायनात्तात गृहीतोपनिषन्मया
तया प्रयुक्तया सम्यग्जगत्सर्वं प्रकाशते ९
तेन त्वं ब्रह्मणा तात संयुक्तः सुसमाहितः
देवतानां यथाकालं प्रसादं प्रतिपालय १०
तपसा योजयात्मानमुग्रेण भरतर्षभ
धनुष्मान्कवची खड्गी मुनिः सारसमन्वितः
न कस्यचिद्ददन्मार्गं गच्छ तातोत्तरां दिशम् ११
इन्द्रे ह्यस्त्राणि दिव्यानि समस्तानि धनञ्जय
वृत्राद्भीतैस्तदा देवैर्बलमिन्द्रे समर्पितम्
तान्येकस्थानि सर्वाणि ततस्त्वं प्रतिपत्स्यसे १२
शक्रमेव प्रपद्यस्व स तेऽस्त्राणि प्रदास्यति
दीक्षितोऽद्यैव गच्छ त्वं द्रष्टुं देवं पुरन्दरम् १३
एवमुक्त्वा धर्मराजस्तमध्यापयत प्रभुः
दीक्षितं विधिना तेन यतवाक्कायमानसम्
अनुजज्ञे ततो वीरं भ्राता भ्रातरमग्रजः १४
निदेशाद्धर्मराजस्य द्रष्टुं देवं पुरन्दरम्
धनुर्गाण्डीवमादाय तथाक्षय्यौ महेषुधी १५
कवची सतलत्राणो बद्धगोधांगुलित्रवान्
हुत्वाग्निं ब्राह्मणान्निष्कैः स्वस्ति वाच्य महाभुजः १६
प्रातिष्ठत महाबाहुः प्रगृहीतशरासनः
वधाय धार्तराष्ट्राणां निःश्वस्योर्ध्वमुदीक्ष्य च १७
तं दृष्ट्वा तत्र कौन्तेयं प्रगृहीतशरासनम्
अब्रुवन्ब्राह्मणाः सिद्धा भूतान्यन्तर्हितानि च
क्षिप्रं प्राप्नुहि कौन्तेय मनसा यद्यदिच्छसि १८
तं सिंहमिव गच्छन्तं शालस्कन्धोरुमर्जुनम्
मनांस्यादाय सर्वेषां कृष्णा वचनमब्रवीत् १९
यत्ते कुन्ती महाबाहो जातस्यैच्छद्धनञ्जय

तत्तेऽस्तु सर्वं कौन्तेय यथा च स्वयमिच्छसि २०
मास्माकं क्षत्रियकुले जन्म कश्चिदवाप्नुयात्
ब्राह्मणेभ्यो नमो नित्यं येषां युद्धे न जीविका २१
नूनं ते भ्रातरः सर्वे त्वत्कथाभिः प्रजागरे
रंस्यन्ते वीरकर्माणि कीर्तयन्तः पुनः पुनः २२
नैव नः पार्थ भोगेषु न धने नोत जीविते
तुष्टिर्बुद्धिर्भवित्री वा त्वयि दीर्घप्रवासिनि २३
त्वयि नः पार्थ सर्वेषां सुखदुःखे समाहिते
जीवितं मरणं चैव राज्यमैश्वर्यमेव च
आपृष्टो मेऽसि कौन्तेय स्वस्ति प्राप्नुहि पाण्डव २४
नमो धात्रे विधात्रे च स्वस्ति गच्छ ह्यनामयम्
स्वस्ति तेऽस्त्वान्तरिक्षेभ्यः पार्थिवेभ्यश्च भारत
दिव्येभ्यश्चैव भूतेभ्यो ये चान्ये परिपन्थिनः २५
ततः प्रदक्षिणं कृत्वा भ्रातॄन्धौम्यं च पाण्डवः
प्रातिष्ठत महाबाहुः प्रगृह्य रुचिरं धनुः २६
तस्य मार्गादपाक्रामन्सर्वभूतानि गच्छतः
युक्तस्यैन्द्रेण योगेन पराक्रान्तस्य शुष्मिणः २७
सोऽगच्छत्पर्वतं पुण्यमेकाह्नैव महामनाः
मनोजवगतिर्भूत्वा योगयुक्तो यथानिलः २८
हिमवन्तमतिक्रम्य गन्धमादनमेव च
अत्यक्रामत्स दुर्गाणि दिवारात्रमतन्द्रितः २९
इन्द्रकीलं समासाद्य ततोऽतिष्ठद्धनञ्जयः
अन्तरिक्षे हि शुश्राव तिष्ठेति स वचस्तदा ३०
ततोऽपश्यत्सव्यसाची वृक्षमूले तपस्विनम्
ब्राह्म्या श्रिया दीप्यमानं पिङ्गलं जटिलं कृशम् ३१
सोऽब्रवीदर्जुनं तत्र स्थितं दृष्ट्वा महातपाः
कस्त्वं तातेह संप्राप्तो धनुष्मान्कवची शरी
निबद्धासितलत्राणः क्षत्रधर्ममनुव्रतः ३२
नेह शस्त्रेण कर्तव्यं शान्तानामयमालयः
विनीतक्रोधहर्षाणां ब्राह्मणानां तपस्विनाम् ३३

नेहास्ति धनुषा कार्यं न संग्रामेण कर्हिचित्
निक्षिपैतद्धनुस्तात प्राप्तोऽसि परमां गतिम् ३४
इत्यनन्तौजसं वीरं यथा चान्यं पृथग्जनम्
तथा वाचमथाभीक्ष्णं ब्राह्मणोऽजुनमब्रवीत्
न चैनं चालयामास धैर्यात्सुदृढनिश्चयम् ३५
तमुवाच ततः प्रीतः स द्विजः प्रहसन्निव
वरं वृणीष्व भद्रं ते शक्रोऽहमरिसूदन ३६
एवमुक्तः प्रत्युवाच सहस्राक्षं धनञ्जयः
प्राञ्जलि प्रणतो भूत्वा शूरः कुरुकुलोद्वहः ३७
ईप्सितो ह्येष मे कामो वरं चैनं प्रयच्छ मे
त्वत्तोऽद्य भगवन्नस्त्रं कृत्स्नमिच्छामि वेदितुम् ३८
प्रत्युवाच महेन्द्रस्तं प्रीतात्मा प्रहसन्निव
इह प्राप्तस्य किं कार्यमस्त्रैस्तव धनञ्जय
कामान्वृणीष्व लोकांश्च प्राप्तोऽसि परमां गतिम् ३९
एवमुक्तः प्रत्युवाच सहस्राक्षं धनञ्जयः
न लोकान्न पुनः कामान्न देवत्वं कुतः सुखम् ४०
न च सर्वामरैश्वर्यं कामये त्रिदशाधिप
भ्रातॄंस्तान्विपिने त्यक्त्वा वैरमप्रतियात्य च
अकीर्तिं सर्वलोकेषु गच्छेयं शाश्वतीः समाः ४१
एवमुक्तः प्रत्युवाच वृत्रहा पाण्डुनन्दनम्
सान्त्वयञ्श्लक्ष्णया वाचा सर्वलोकनमस्कृतः ४२
यदा द्रक्ष्यसि भूतेशं त्र्यक्षं शूलधरं शिवम्
तदा दातास्मि ते तात दिव्यान्यस्त्राणि सर्वशः ४३
क्रियतां दर्शने यत्नो देवस्य परमेष्ठिनः
दर्शनात्तस्य कौन्तेय संसिद्धः स्वर्गमेष्यसि ४४
इत्युक्त्वा फल्गुनं शक्रो जगामादर्शनं ततः
अर्जुनोऽप्यथ तत्रैव तस्थौ योगसमन्वितः ४५
इति श्रीमहाभारते आरण्यकपर्वणि अष्टात्रिंशोऽध्यायः ३८

## एकोनचत्वारिंशोऽध्यायः

जनमेजय उवाच
भगवञ्श्रोतुमिच्छामि पार्थस्याक्लिष्टकर्मणः
विस्तरेण कथामेतां यथास्त्राण्युपलब्धवान् १
कथं स पुरुषव्याघ्रो दीर्घबाहुर्धनञ्जयः
वनं प्रविष्टस्तेजस्वी निर्मनुष्यमभीतवत् २
किं च तेन कृतं तत्र वसता ब्रह्मवित्तम
कथं च भगवान्स्थाणुर्देवराजश्च तोषितः ३
एतदिच्छाम्यहं श्रोतुं त्वत्प्रसादाद्द्विजोत्तम
त्वं हि सर्वज्ञ दिव्यं च मानुषं चैव वेत्थ ह ४
अत्यद्भुतं महाप्राज्ञ रोमहर्षणमर्जुनः
भवेन सह संग्रामं चकाराप्रतिमं किल
पुरा प्रहरतां श्रेष्ठः संग्रामेष्वपराजितः ५
यच्छ्रुत्वा नरसिंहानां दैन्यहर्षातिविस्मयात्
शूराणामपि पार्थानां हृदयानि चकम्पिरे ६
यद्यच्च कृतवानन्यत्पार्थस्तदखिलं वद
न ह्यस्य निन्दितं जिष्णोः सुसूक्ष्ममपि लक्षये
चरितं तस्य शूरस्य तन्मे सर्वं प्रकीर्तय ७
वैशम्पायन उवाच
कथयिष्यामि ते तात कथामेतां महात्मनः
दिव्यां कौरवशार्दूल महतीमद्भुतोपमाम् ८
गात्रसंस्पर्शसंबन्धं त्र्यम्बकेण सहानघ
पार्थस्य देवदेवेन शृणु सम्यक्समागमम् ९
युधिष्ठिरनियोगात्स जगामामितविक्रमः
शक्रं सुरेश्वरं द्रष्टुं देवदेवं च शंकरम् १०
दिव्यं तद्धनुरादाय खड्गं च पुरुषर्षभः
महाबलो महाबाहुरर्जुनः कार्यसिद्धये
दिशं ह्युदीचीं कौरव्यो हिमवच्छिखरं प्रति ११
ऐन्द्रिः स्थिरमना राजन्सर्वलोकमहारथः
त्वरया परया युक्तस्तपसे धृतनिश्चयः

वनं कराटकितं घोरमेक एवान्वपद्यत १२
नानापुष्पफलोपेतं नानापक्षिनिषेवितम्
नानामृगगणाकीर्णं सिद्धचारणसेवितम् १३
ततः प्रयाते कौन्तेये वनं मानुषवर्जितम्
शङ्खानां पटहानां च शब्दः समभवद्दिवि १४
पुष्पवर्षं च सुमहन्निपपात महीतले
मेघजालं च विततं छादयामास सर्वतः १५
अतीत्य वनदुर्गाणि संनिकर्षे महागिरेः
शुशुभे हिमवत्पृष्ठे वसमानोऽजुनस्तदा १६
तत्रापश्यद् द्रुमान्फुल्लान्विहगैर्वल्गु नादितान्
नदीश्च विपुलावर्ता नीलवैडूर्यसंनिभाः १७
हंसकारराडवोद्गीताः सारसाभिरुतास्तथा
पुंस्कोकिलरुताश्चैव क्रौञ्चबर्हिणनादिताः १८
मनोहरवनोपेतास्तस्मिन्नतिरथोऽजुनः
पुरायशीतामलजलाः पश्यन्प्रीतमनाभवत् १९
रमणीये वनोद्देशे रममाणोऽजुनस्तदा
तपस्युग्रे वर्तमान उग्रतेजा महामनाः २०
दर्भचीरं निवस्याथ दराडाजिनविभूषितः
पूर्णे पूर्णे त्रिरात्रे तु मासमेकं फलाशनः
द्विगुणेनैव कालेन द्वितीयं मासमत्यगात् २१
तृतीयमपि मासं स पक्षेणाहारमाचरन्
शीर्णं च पतितं भूमौ पर्णं समुपयुक्तवान् २२
चतुर्थे त्वथ स्त्रंपाप्ते मासि पूर्णे ततः परम्
वायुभक्षो महाबाहुरभवत्पाराडुनन्दनः
ऊर्ध्वबाहुर्निरालम्बः पादाङ्गुष्ठाग्रविष्ठितः २३
सदोपस्पर्शनाच्चास्य बभूवुरमितौजसः
विद्युदम्भोरुहनिभा जटास्तस्य महात्मनः २४
ततो महर्षयः सर्वे जग्मुर्देवं पिनाकिनम्
शितिकराठं महाभागं प्रणिपत्य प्रसाद्य च
सर्वे निवेदयामासुः कर्म तत्फल्गुनस्य ह २५

एष पार्थो महातेजा हिमवत्पृष्ठमाश्रितः
उग्रे तपसि दुष्पारे स्थितो धूमाययन्दिशः २६
तस्य देवेश न वयं विद्मः सर्वे चिकीर्षितम्
संतापयति नः सर्वानसौ साधु निवार्यताम् २७
महेश्वर उवाच
शीघ्रं गच्छत संहृष्टा यथागतमतन्द्रिताः
अहमस्य विजानामि संकल्पं मनसि स्थितम् २८
नास्य स्वर्गस्पृहा काचिन्नैश्वर्यस्य न चायुषः
यत्त्वस्य काङ्क्षितं सर्वं तत्करिष्येऽहमद्य वै २९
वैशम्पायन उवाच
ते श्रुत्वा शर्ववचनमृषयः सत्यवादिनः
प्रहृष्टमनसो जग्मुर्यथास्वं पुनराश्रमान् ३०
इति श्रीमहाभारते आरण्यकपर्वणि एकोनचत्वारिंशोऽध्यायः ३९

चत्वारिंशोऽध्यायः

वैशम्पायन उवाच
गतेषु तेषु सर्वेषु तपस्विषु महात्मसु
पिनाकपाणिर्भगवान्सर्वपापहरो हरः १
कैरातं वेषमास्थाय काञ्चनद्रुमसंनिभम्
विभ्राजमानो वपुषा गिरिर्मेरुरिवापरः २
श्रीमद्धनुरुपादाय शरांश्चाशीविषोपमान्
निष्पपात महार्चिष्मान्दहन्कक्षमिवानलः ३
देव्या सहोमया श्रीमान्समानव्रतवेषया
नानावेषधरैर्हृष्टैर्भूतैरनुगतस्तदा ४
किरातवेषप्रच्छन्नः स्त्रीभिश्चानु सहस्रशः
अशोभत तदा राजन्स देवोऽतीव भारत ५
क्षणेन तद्वनं सर्वं निःशब्दमभवत्तदा
नादः प्रस्रवणानां च पक्षिणां चाप्युपारमत् ६
स संनिकर्षमागम्य पार्थस्याक्लिष्टकर्मणः
मूकं नाम दितेः पुत्रं ददर्शाद्भुतदर्शनम् ७

वाराहं रूपमास्थाय तर्कयन्तमिवार्जुनम्
हन्तुं परमदुष्टात्मा तमुवाचाथ फल्गुनः ८
गाण्डीवं धनुरादाय शरांश्चाशीविषोपमान्
सज्यं धनुर्वरं कृत्वा ज्याघोषेण निनादयन् ९
यन्मां प्रार्थयसे हन्तुमनागसमिहागतम्
तस्मात्त्वां पूर्वमेवाहं नेष्यामि यमसादनम् १०
तं दृष्ट्वा प्रहरिष्यन्तं फल्गुनं दृढधन्विनम्
किरातरूपी सहसा वारयामास शंकरः ११
मयैष प्रार्थितः पूर्वं नीलमेघसमप्रभः
अनादृत्यैव तद्वाक्यं प्रजहाराथ फल्गुनः १२
किरातश्च समं तस्मिन्नेकलक्ष्ये महाद्युतिः
प्रमुमोचाशनिप्रख्यं शरमग्निशिखोपमम् १३
तौ मुक्तौ सायकौ ताभ्यां समं तत्र निपेततुः
मूकस्य गात्रे विस्तीर्णे शैलसंहनने तदा १४
यथाशनिविनिष्पेषो वज्रस्येव च पर्वते
तथा तयोः संनिपातः शरयोरभवत्तदा १५
स विद्धो बहुभिर्बाणैर्दीप्तास्यैः पन्नगैरिव
ममार राक्षसं रूपं भूयः कृत्वा विभीषणम् १६
ददर्शाथ ततो जिष्णुः पुरुषं काञ्चनप्रभम्
किरातवेषप्रच्छन्नं स्त्रीसहायममित्रहा
तमब्रवीत्प्रीतमनाः कौन्तेयः प्रहसन्निव १७
को भवानटते शून्ये वने स्त्रीगणसंवृतः
न त्वमस्मिन्वने घोरे बिभेषि कनकप्रभ १८
किमर्थं च त्वया विद्धो मृगोऽय मत्परिग्रहः
मयाभिपन्नः पूर्वं हि राक्षसोऽयमिहागतः १९
कामात्परिभवाद्वापि न मे जीवन्विमोक्ष्यसे
न ह्येष मृगयाधर्मो यस्त्वयाद्य कृतो मयि
तेन त्वां भ्रंशयिष्यामि जीवितात्पर्वताश्रय २०
इत्युक्तः पाण्डवेयेन किरातः प्रहसन्निव
उवाच श्लक्ष्णया वाचा पाण्डवं सव्यसाचिनम् २१

ममैवायं लद्दयभूतः पूर्वमेव परिग्रहः
ममैव च प्रहारेण जीविताद्व्यवरोपितः २२
दोषान्स्वान्नार्हसेऽन्यस्मै वक्तुं स्वबलदर्पितः
अभिषक्तोऽस्मि मन्दात्मन्न मे जीवन्विमोद्दयसे २३
स्थिरो भवस्व मोद्दयामि सायकानशनीनिव
घटस्व परया शक्त्या मुञ्च त्वमपि सायकान् २४
ततस्तौ तत्र संरब्धौ गर्जमानौ मुहुर्मुहुः
शरैराशीविषाकारैस्ततद्गाते परस्परम् २५
ततोऽजुनः शरवर्षं किराते समवासृजत्
तत्प्रसन्नेन मनसा प्रतिजग्राह शंकरः २६
मुहूर्तं शरवर्षं तत्प्रतिगृह्य पिनाकधृक्
अद्गतेन शरीरेण तस्थौ गिरिरिवाचलः २७
स दृष्ट्वा वाणवर्षं तन्मोघीभूतं धनञ्जयः
परमं विस्मयं चक्रे साधु साध्विति चाब्रवीत् २८
अहोऽय सुकुमाराङ्गो हिमवच्छिखरालयः
गागडीवमुक्तान्नाराचान्प्रतिगृह्णात्यविह्वलः २९
कोऽय देवो भवेत्साद्गाद्रुद्रो यद्गः सुरेश्वरः
विद्यते हि गिरिश्रेष्ठे त्रिदशानां समागमः ३०
न हि मद्वाणजालानामुत्सृष्टानां सहस्रशः
शक्तोऽन्य सहितुं वेगमृते देवं पिनाकिनम् ३१
देवो वा यदि वा यद्गो रुद्रादन्यो व्यवस्थितः
अहमेनं शरैस्तीद्दणैर्नयामि यमसादनम् ३२
ततो हृष्टमना जिष्णुर्नाराचान्मर्मभेदिनः
व्यसृजच्छतधा राजन्मयूखानिव भास्करः ३३
तान्प्रसन्नेन मनसा भगवाँल्लोकभावनः
शूलपाणिः प्रत्यगृह्णाच्छिलावर्षमिवाचलः ३४
द्गणेन द्गीणबाणोऽथ संवृत्तः फल्गुनस्तदा
वित्रासं च जगामाथ तं दृष्ट्वा शरसंद्गयम् ३५
चिन्तयामास जिष्णुस्तु भगवन्तं हुताशनम्
पुरस्तादद्गयौ दत्तौ तूणौ येनास्य खागडवे ३६

किं नु मोक्ष्यामि धनुषा यन्मे वाणाः क्षयं गताः
अयं च पुरुषः कोऽपि बाणान्ग्रसति सर्वशः ३७
अहमेनं धनुष्कोट्या शूलाग्रेणेव कुञ्जरम्
नयामि दण्डधारस्य यमस्य सदनं प्रति ३८
संप्रायुध्यद्धनुष्कोट्या कौन्तेयः परवीरहा
तदप्यस्य धनुर्दिव्यं जग्रास गिरिगोचरः ३९
ततोऽर्जुनो ग्रस्तधनुः खड्गपाणिरतिष्ठत
युद्धस्यान्तमभीप्सन्वै वेगेनाभिजगाम तम् ४०
तस्य मूर्ध्नि शितं खड्गमसक्तं पर्वतेष्वपि
मुमोच भुजवीर्येण विक्रम्य कुरुनन्दनः
तस्य मूर्धानमासाद्य पफालासिवरो हि सः ४१
ततो वृक्षैः शिलाभिश्च योधयामास फल्गुनः
यथा वृक्षान्महाकायः प्रत्यगृह्णादथो शिलाः ४२
किरातरूपी भगवांस्ततः पार्थो महाबलः
मुष्टिभिर्वज्रसंस्पर्शैर्धूममुत्पादयन्मुखे
प्रजहार दुराधर्षे किरातसमरूपिणि ४३
ततः शक्राशनिसमैर्मुष्टिभिर्भृशदारुणैः
किरातरूपी भगवानर्दयामास फल्गुनम् ४४
ततश्चटचटाशब्दः सुघोरः समजायत
पाण्डवस्य च मुष्टीनां किरातस्य च युध्यतः ४५
सुमुहुर्तं महद्युद्धमासीत्तल्लोमहर्षणम्
भुजप्रहारसंयुक्तं वृत्रवासवयोरिव ४६
जहाराथ ततो जिष्णुः किरातमुरसा बली
पाण्डवं च विचेष्टन्तं किरातोऽप्यहनद्बलात् ४७
तयोर्भुजविनिष्पेषात्संघर्षेणोरसोस्तथा
समजायत गात्रेषु पावकोऽङ्गारधूमवान् ४८
तत एनं महादेवः पीड्य गात्रैः सुपीडितम्
तेजसा व्याक्रमद्रोषाच्चेतस्तस्य विमोहयन् ४९
ततो निपीडितैर्गात्रैः पिण्डीकृत इवाबभौ
फल्गुनो गात्रसंरुद्धो देवदेवेन भारत ५०

निरुच्छ्वासोऽभवच्चैव संनिरुद्धो महात्मना
ततः पपात संमूढस्ततः प्रीतोऽभवद्भवः ५१
भगवानुवाच
भो भो फल्गुन तुष्टोऽस्मि कर्मणाप्रतिमेन ते
शौर्येणानेन धृत्या च क्षत्रियो नास्ति ते समः ५२
समं तेजश्च वीर्यं च ममाद्य तव चानघ
प्रीतस्तेऽह महाबाहो पश्य मां पुरुषर्षभ ५३
ददानि ते विशालाक्ष चक्षुः पूर्वऋृषिर्भवान्
विजेष्यसि रणे शत्रूनपि सर्वान्दिवौकसः ५४
वैशम्पायन उवाच
ततो देवं महादेवं गिरिशं शूलपाणिनम्
ददर्श फल्गुनस्तत्र सह देव्या महाद्युतिम् ५५
स जानुभ्यां महीं गत्वा शिरसा प्रणिपत्य च
प्रसादयामास हरं पार्थः परपुरञ्जयः ५६
अर्जुन उवाच
कपर्दिन्सर्वभूतेश भगनेत्रनिपातन
व्यतिक्रमं मे भगवन्क्षन्तुमर्हसि शंकर ५७
भगवद्दर्शनाकांक्षी प्राप्तोऽस्मीमं महागिरिम्
दयितं तव देवेश तापसालयमुत्तमम् ५८
प्रसादये त्वां भगवन्सर्वभूतनमस्कृत
न मे स्यादपराधोऽय महादेवातिसाहसात् ५९
कृतो मया यदज्ञानाद्विमर्दोऽय त्वया सह
शरणं संप्रपन्नाय तत्क्षमस्वाद्य शंकर ६०
वैशम्पायन उवाच
तमुवाच महातेजाः प्रहस्य वृषभध्वजः
प्रगृह्य रुचिरं बाहुं क्षान्तमित्येव फल्गुनम् ६१
इति श्रीमहाभारते आरगयकपर्वणि चत्वारिंशोऽध्यायः ४०

## एकचत्वारिंशोऽध्यायः

भगवानुवाच

नरस्त्वं पूर्वदेहे वै नारायणसहायवान्
बदर्यां तप्तवानुग्रं तपो वर्षायुतान्बहून् १
त्वयि वा परमं तेजो विष्णौ वा पुरुषोत्तमे
युवाभ्यां पुरुषाग्र्याभ्यां तेजसा धार्यते जगत् २
शक्राभिषेके सुमहद्धनुर्जलदनिस्वनम्
प्रगृह्य दानवाः शस्तास्त्वया कृष्णेन च प्रभो ३
एतत्तदेव गाण्डीवं तव पार्थ करोचितम्
मायामास्थाय यद्ग्रस्तं मया पुरुषसत्तम
तूणौ चाप्यक्षयौ भूयस्तव पार्थ यथोचितौ ४
प्रीतिमानस्मि वै पार्थ तव सत्यपराक्रम
गृहाण वरमस्मत्तः कांक्षितं यन्नरर्षभ ५
न त्वया पुरुषः कश्चित्पुमान्मर्त्येषु मानद
दिवि वा विद्यते क्षत्रं त्वत्प्रधानमरिन्दम ६
अर्जुन उवाच
भगवन्ददासि चेन्मह्यं कामं प्रीत्या वृषध्वज
कामये दिव्यमस्त्रं तद्घोरं पाशुपतं प्रभो ७
यत्तद्ब्रह्मशिरो नाम रौद्रं भीमपराक्रमम्
युगान्ते दारुणे प्राप्ते कृत्स्नं संहरते जगत् ८
दहेयं येन संग्रामे दानवान्राक्षसांस्तथा
भूतानि च पिशाचांश्च गन्धर्वानथ पन्नगान् ९
यतः शूलसहस्राणि गदाश्चोग्रप्रदर्शनाः
शराश्चाशीविषाकाराः संभवन्त्यनुमन्त्रिताः १०
युध्येयं येन भीष्मेण द्रोणेन च कृपेण च
सूतपुत्रेण च रणे नित्यं कटुकभाषिणा ११
एष मे प्रथमः कामो भगवन्भगनेत्रहन्
त्वत्प्रसादाद्विनिर्वृत्तः समर्थः स्यामहं यथा १२
भगवानुवाच
ददानि तेऽस्त्र दयितमहं पाशुपतं महत्
समर्थो धारणे मोक्षे संहारे चापि पाण्डव १३
नैतद्वेद महेन्द्रोऽपि न यमो न च यक्षराट्

वरुणो वाथ वा वायुः कुतो वेत्स्यन्ति मानवाः १४
न त्वेतत्सहसा पार्थ मोक्तव्यं पुरुषे क्वचित्
जगद्विनिर्दहेत्सर्वमल्पतेजसि पातितम् १५
अवध्यो नाम नास्त्यस्य त्रैलोक्ये सचराचरे
मनसा चक्षुषा वाचा धनुषा च निपात्यते १६
वैशम्पायन उवाच
तच्छ्रुत्वा त्वरितः पार्थः शुचिर्भूत्वा समाहितः
उपसंगृह्य विश्वेशमधीष्वेति च सोऽब्रवीत् १७
ततस्त्वध्यापयामास सरहस्यनिवर्तनम्
तदस्त्रं पाण्डवश्रेष्ठं मूर्तिमन्तमिवान्तकम् १८
उपतस्थे महात्मानं यथा त्र्यक्षमुमापतिम्
प्रतिजग्राह तच्चापि प्रीतिमानर्जुनस्तदा १९
ततश्चचाल पृथिवी सपर्वतवनद्रुमा
ससागरवनोद्देशा सग्रामनगराकरा २०
शङ्खदुन्दुभिघोषाश्च भेरीणां च सहस्रशः
तस्मिन्मुहूर्ते स्त्रंपाप्ते निर्घाताश्च महानभूत् २१
अथास्त्रं जाज्वलद्घोरं पाण्डवस्यामितौजसः
मूर्तिमद्विष्ठितं पार्श्वे ददृशुर्देवदानवाः २२
स्पृष्टस्य च त्र्यम्बकेन फल्गुनस्यामितौजसः
यत्किंचिदशुभं देहे तत्सर्वं नाशमेयिवत् २३
स्वर्गं गन्छेत्यनुज्ञातस्त्र्यम्बकेन तदार्जुनः
प्रणम्य शिरसा पार्थः प्राञ्जलिर्देवमैक्षत २४
ततः प्रभुस्त्रिदिवनिवासिनां वशी महामतिर्गिरिश उमापतिः शिवः
धनुर्महद्दितिजपिशाचसूदनं ददौ भवः पुरुषवराय गाण्डिवम् २५
ततः शुभं गिरिवरमीश्वरस्तदा सहोमया सिततटसानुकन्दरम्
विहाय तं पतगमहर्षिसेवितं जगाम खं पुरुषवरस्य पश्यतः २६
इति श्रीमहाभारते आरण्यकपर्वणि एकचत्वारिंशोऽध्यायः ४१

## द्विचत्वारिंशोऽध्यायः

वैशम्पायन उवाच

तस्य संपश्यतस्त्वेव पिनाकी वृषभध्वजः
जगामादर्शनं भानुर्लोकस्येवास्तमेयिवान् १
ततोऽर्जुनः परं चक्रे विस्मयं परवीरहा
मया साक्षान्महादेवो दृष्ट इत्येव भारत २
धन्योऽस्म्यनुगृहीतोऽस्मि यन्मया त्र्यम्बको हरः
पिनाकी वरदो रूपी दृष्टः स्पृष्टश्च पाणिना ३
कृतार्थं चावगच्छामि परमात्मानमात्मना
शत्रूंश्च विजितान्सर्वान्निर्वृत्तं च प्रयोजनम् ४
ततो वैडूर्यवर्णाभो भासयन्सर्वतो दिशः
यादोगणवृतः श्रीमानाजगाम जलेश्वरः ५
नगैर्नदैर्नदीभिश्च दैत्यैः साध्यैश्च दैवतैः
वरुणो यादसां भर्ता वशी तं देशमागमत् ६
अथ जाम्बूनदवपुर्विमानेन महार्चिषा
कुबेरः समनुप्राप्तो यक्षैरनुगतः प्रभुः ७
विद्योतयन्निवाकाश मद्भुतोपमदर्शनः
धनानामीश्वरः श्रीमानर्जुनं द्रष्टुमागतः ८
तथा लोकान्तकृच्छ्रीमान्यमः साक्षात्प्रतापवान्
मूर्त्यमूर्तिधरैः सार्धं पितृभिर्लोकभावनैः ९
दण्डपाणिरचिन्त्यात्मा सर्वभूतविनाशकृत्
वैवस्वतो धर्मराजो विमानेनावभासयन् १०
त्रील्लोँकान्गुह्यकांश्चैव गन्धर्वांश्च सपन्नगान्
द्वितीय इव मार्तण्डो युगान्ते समुपस्थिते ११
भानुमन्ति विचित्राणि शिखराणि महागिरेः
समास्थायार्जुनं तत्र ददृशुस्तपसान्वितम् १२
ततो मुहूर्ताद्भगवानैरावतशिरोगतः
आजगाम सहेन्द्राण्या शक्रः सुरगणैर्वृतः १३
पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्धनि
शुशुभे तारकाराजः सितमभ्रमिवास्थितः १४
संस्तूयमानो गन्धर्वैरृषिभिश्च तपोधनैः
शृङ्गं गिरेः समासाद्य तस्थौ सूर्य इवोदितः १५

अथ मेघस्वनो धीमान्व्याजहार शुभां गिरम्
यमः परमधर्मज्ञो दक्षिणां दिशमास्थितः १६
अर्जुनार्जुन पश्यास्माँल्लोकपालान्समागतान्
दृष्टिं ते वितरामोऽद्य भवानर्हो हि दर्शनम् १७
पूर्वर्षिरमितात्मा त्वं नरो नाम महाबलः
नियोगाद्ब्रह्मणस्तात मर्त्यतां समुपागतः
त्वं वासवसमुद्भूतो महावीर्यपराक्रमः १८
क्षत्रं चाग्निसमस्पर्शं भारद्वाजेन रक्षितम्
दानवाश्च महावीर्या ये मनुष्यत्वमागताः
निवातकवचाश्चैव संसाध्याः कुरुनन्दन १९
पितुर्ममांशो देवस्य सर्वलोकप्रतापिनः
कर्णः स सुमहावीर्यस्त्वया वध्यो धनञ्जय २०
अंशाश्च क्षितिसंप्राप्ता देवगन्धर्वरक्षसाम्
त्वया निपातिता युद्धे स्वकर्मफलनिर्जिताम्
गतिं प्राप्स्यन्ति कौन्तेय यथास्वमरिकर्शन २१
अक्षया तव कीर्तिश्च लोके स्थास्यति फल्गुन
त्वया साक्षान्महादेवस्तोषितो हि महामृधे
लघ्वी वसुमती चापि कर्तव्या विष्णुना सह २२
गृहाणास्त्रं महाबाहो दण्डमप्रतिवारणम्
अनेनास्त्रेण सुमहत्त्वं हि कर्म करिष्यसि २३
प्रतिजग्राह तत्पार्थो विधिवत्कुरुनन्दनः
समन्त्रं सोपचारं च समोक्षं सनिवर्तनम् २४
ततो जलधरश्यामो वरुणो यादसां पतिः
पश्चिमां दिशमास्थाय गिरमुच्चारयन्प्रभुः २५
पार्थ क्षत्रियमुख्यस्त्वं क्षत्रधर्मे व्यवस्थितः
पश्य मां पृथुताम्राक्ष वरुणोऽस्मि जलेश्वरः २६
मया समुद्यतान्पाशान्वारुणाननिवारणान्
प्रतिगृह्णीष्व कौन्तेय सरहस्यनिवर्तनान् २७
एभिस्तदा मया वीर संग्रामे तारकामये
दैतेयानां सहस्राणि संयतानि महात्मनाम् २८

तस्मादिमान्महासत्त्व मत्प्रसादात्समुत्थितान्
गृहाण न हि ते मुच्येदन्तकोऽप्याततायिनः २९
अनेन त्वं यदास्त्रेण संग्रामे विचरिष्यसि
तदा निःक्षत्रिया भूमिर्भविष्यति न संशयः ३०
ततः कैलासनिलयो धनाध्यक्षोऽभ्यभाषत
दत्तेष्वस्त्रेषु दिव्येषु वरुणेन यमेन च ३१
सव्यसाचिन्महाबाहो पूर्वदेव सनातन
सहास्माभिर्भवाञ्श्रान्तः पुराकल्पेषु नित्यशः ३२
मत्तोऽपि त्वं गृहाणास्त्रमन्तर्धानं प्रियं मम
ओजस्तेजोद्युतिहरं प्रस्वापनमरातिहन् ३३
ततोऽजुनो महाबाहुर्विधिवत्कुरुनन्दनः
कौबेरमपि जग्राह दिव्यमस्त्रं महाबलः ३४
ततोऽब्रवीद्देवराजः पार्थमक्लिष्टकारिणम्
सान्त्वयञ्श्लक्ष्णया वाचा मेघदुन्दुभिनिस्वनः ३५
कुन्तीमातर्महाबाहो त्वमीशानः पुरातनः
परां सिद्धिमनुप्राप्तः साक्षाद्देवगतिं गतः ३६
देव कार्यं हि सुमहत्त्वया कार्यमरिन्दम
आरोढव्यस्त्वया स्वर्गः सज्जीभव महाद्युते ३७
रथो मातलिसंयुक्त आगन्ता त्वत्कृते महीम्
तत्र तेऽह प्रदास्यामि दिव्यान्यस्त्राणि कौरव ३८
तान्दृष्ट्वा लोकपालांस्तु समेतान्गिरिमूर्धनि
जगाम विस्मयं धीमान्कुन्तीपुत्रो धनञ्जयः ३९
ततोऽजुनो महातेजा लोकपालान्समागतान्
पूजयामास विधिवद्वाग्भिरद्भिः फलैरपि ४०
ततः प्रतिययुर्देवाः प्रतिपूज्य धनञ्जयम्
यथागतेन विबुधाः सर्वे काममनोजवाः ४१
ततोऽज्नो मुदं लेभे लब्धास्त्रः पुरुषर्षभः
कृतार्थमिव चात्मानं स मेने पूर्णमानसः ४२
इति श्रीमहाभारते आरण्यकपर्वणि द्विचत्वारिंशोऽध्यायः ४२

त्रिचत्वारिंशोऽध्यायः

वैशम्पायन उवाच
गतेषु लोकपालेषु पार्थः शत्रुनिबर्हणः
चिन्तयामास राजेन्द्र देवराजरथागमम् १
ततश्चिन्तयमानस्य गुडाकेशस्य धीमतः
रथो मातलिसंयुक्त आजगाम महाप्रभः २
नभो वितिमिरं कुर्वञ्जलदान्पाटयन्निव
दिशः संपूरयन्नादैर्महामेघरवोपमैः ३
असयः शक्तयो भीमा गदाश्चोग्रप्रदर्शनाः
दिव्यप्रभावा प्रासाश्च विद्युतश्च महाप्रभाः ४
तथैवाशनयस्तत्र चक्रयुक्ता हुडागुडाः
वायुस्फोटाः सनिर्घाता बर्हिमेघनिभस्वनाः ५
तत्र नागा महाकाया ज्वलितास्याः सुदारुणाः
सिताभ्रकूटप्रतिमाः संहताश्च यथोपलाः ६
दश वाजिसहस्राणि हरीणां वातरंहसाम्
वहन्ति यं नेत्रमुषं दिव्यं मायामयं रथम् ७
तत्रापश्यन्महानीलं वैजयन्तं महाप्रभम्
ध्वजमिन्दीवरश्यामं वंशं कनकभूषणम् ८
तस्मिन्रथे स्थितं सूतं तप्तहेमविभूषितम्
दृष्ट्वा पार्थो महाबाहुर्देवमेवान्वतर्कयत् ९
तथा तर्कयतस्तस्य फल्गुनस्याथ मातलि
संनतः प्रश्रितो भूत्वा वाक्यमर्जुनमब्रवीत् १०
भो भो शक्रात्मज श्रीमाञ्शक्रस्त्वां द्रष्टुमिच्छति
आरोहतु भवाञ्शीघ्रं रथमिद्रस्य संमतम् ११
आह माममरश्रेष्ठः पिता तव शतक्रतुः
कुन्तीसुतमिह प्राप्तं पश्यन्तु त्रिदशालयाः १२
एष शक्रः परिवृतो देवैरृषिगणैस्तथा
गन्धर्वैरप्सरोभिश्च त्वां दिदृक्षुः प्रतीक्षते १३
अस्माल्लोकाद्देवलोकं पाकशासनशासनात्
आरोह त्वं मया सार्धं लब्धास्त्रः पुनरेष्यसि १४

अर्जुन उवाच
मातले गच्छ शीघ्रं त्वमारोहस्व रथोत्तमम्
राजसूयाश्वमेधानां शतैरपि सुदुर्लभम् १५
पार्थिवैः सुमहाभागैर्यज्वभिर्भूरिदक्षिणैः
दैवतैर्वा समारोढुं दानवैर्वा रथोत्तमम् १६
नातप्ततपसा शक्य एष दिव्यो महारथः
द्रष्टुं वाप्यथ वा स्प्रष्टुमारोढुं कुत एव तु १७
त्वयि प्रतिष्ठिते साधो रथस्थे स्थिरवाजिनि
पश्चादहमथारोक्ष्ये सुकृती सत्पथं यथा १८
वैशम्पायन उवाच
तस्य तद्वचनं श्रुत्वा मातलि शक्रसारथिः
आरुरोह रथं शीघ्रं हयान्येमे च रश्मिभिः १९
ततोऽजुनो हृष्टमना गङ्गायामाप्लुतः शुचिः
जजाप जप्यं कौन्तेयो विधिवत्कुरुनन्दनः २०
ततः पितॄन्यथान्यायं तर्पयित्वा यथाविधि
मन्दरं शैलराजं तमाप्रष्टुमुपचक्रमे २१
साधूनां पुण्यशीलानां मुनीनां पुण्यकर्मणाम्
त्वं सदा संश्रयः शैल स्वर्गमार्गाभिकांक्षिणाम् २२
त्वत्प्रसादात्सदा शैल ब्राह्मणाः क्षत्रिया विशः
स्वर्गं प्राप्ताश्चरन्ति स्म देवैः सह गतव्यथाः २३
अद्रिराज महाशैल मुनिसंश्रय तीर्थवन्
गच्छाम्यामन्त्रयामि त्वां सुखमस्म्युषितस्त्वयि २४
तव सानूनि कुञ्जाश्च नद्यः प्रस्त्रवणानि च
तीर्थानि च सुपुण्यानि मया दृष्टान्यनेकशः २५
एवमुक्त्वार्जुनः शैलमामन्त्र्य परवीरहा
आरुरोह रथं दिव्यं द्योतयन्निव भास्करः २६
स तेनादित्यरूपेण दिव्येनाद्भुतकर्मणा
ऊर्ध्वमाचक्रमे धीमान्प्रहृष्टः कुरुनन्दनः २७
सोऽदर्शनपथं यात्वा मर्त्यानां भूमिचारिणाम्
ददर्शाद्भुतरूपाणि विमानानि सहस्त्रशः २८

न तत्र सूर्यः सोमो वा द्योतते न च पावकः
स्वयैव प्रभया तत्र द्योतन्ते पुगयलब्धया २९
तारारूपाणि यानीह दृश्यन्ते द्युतिमन्ति वै
दीपवद्विप्रकृष्टत्वादणूनि सुमहान्त्यपि ३०
तानि तत्र प्रभास्वन्ति रूपवन्ति च पागडवः
ददर्श स्वेषु धिष्गयेषु दीप्तिमन्ति स्वयार्चिषा ३१
तत्र राजर्षयः सिद्धा वीराश्च निहता युधि
तपसा च जितस्वर्गाः संपेतुः शतसंघशः ३२
गन्धर्वाणां सहस्राणि सूर्यज्वलनतेजसाम्
गुह्यकानामृषीणां च तथैवाप्सरसां गणाः ३३
लोकानात्मप्रभान्पश्यन्फल्गुनो विस्मयान्वितः
पप्रच्छ मातलि प्रीत्या स चाप्येनमुवाच ह ३४
एते सुकृतिनः पार्थ स्वेषु धिष्गयेष्ववस्थिताः
यान्दृष्टवानसि विभो तारारूपाणि भूतले ३५
ततोऽपश्यत्स्थितं द्वारि सितं वैजयिनं गजम्
एरावतं चतुर्दन्तं कैलासमिव शृङ्गिणम् ३६
स सिद्धमार्गमाक्रम्य कुरुपागडवसत्तमः
व्यरोचत यथा पूर्वं मान्धाता पार्थिवोत्तमः ३७
अतिचक्राम लोकान्स राज्ञां राजीवलोचनः
ततो ददर्श शक्रस्य पुरींताममरावतीम् ३८
इति श्रीमहाभारते आरगयकपर्वणि त्रिचत्वारिंशोऽध्यायः ४३

## चतुश्चत्वारिंशोऽध्यायः

वैशम्पायन उवाच
स ददर्श पुरीं रम्यां सिद्धचारणसेविताम्
सर्वर्तुकुसुमैः पुगयैः पादपैरुपशोभिताम् १
तत्र सौगन्धिकानां स द्रुमाणां पुगयगन्धिनाम्
उपवीज्यमानो मिश्रेण वायुना पुगयगन्धिना २
नन्दनं च वनं दिव्यमप्सरोगणसेवितम्
ददर्श दिव्यकुसुमैराह्वयद्भिरिव द्रुमैः ३

नातप्ततपसा शक्यो द्रष्टुं नानाहिताग्निना
स लोकः पुरायकर्तॄणां नापि युद्धपराङ्मुखैः ४
नायज्वभिर्नानृतकैर्न वेदश्रुतिवर्जितैः
नानाप्लुताङ्गैस्तीर्थेषु यज्ञदानबहिष्कृतैः ५
नापि यज्ञहनैः ज्ञुद्रैर्द्रष्टुं शक्यः कथंचन
पानपैर्गुरुतल्पैश्च मांसादैर्वा दुरात्मभिः ६
स तद्दिव्यं वनं पश्यन्दिव्यगीतनिनादितम्
प्रविवेश महाबाहुः शक्रस्य दयितां पुरीम् ७
तत्र देवविमानानि कामगानि सहस्रशः
संस्थितान्यभियातानि ददर्शायुतशस्तदा ८
संस्तूयमानो गन्धर्वैरप्सरोभिश्च पारडवः
पुष्पगन्धवहैः पुरायैर्वायुभिश्चानुवीजितः ९
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः
हृष्टाः संपूजयामासुः पार्थमक्लिष्टकारिणम् १०
श्राशीर्वादैः स्तूयमानो दिव्यवादित्रनिस्वनैः
प्रतिपेदे महाबाहुः शङ्खदुन्दुभिनादितम् ११
नक्षत्रमार्गं विपुलं सुरवीथीति विश्रुतम्
इन्द्राज्ञया ययौ पार्थः स्तूयमानः समन्ततः १२
तत्र साध्यास्तथा विश्वे मरुतोऽथाश्विनावपि
श्रादित्या वसवो रुद्रास्तथा ब्रह्मर्षयोऽमलाः १३
राजर्षयश्च बहवो दिलीपप्रमुखा नृपाः
तुम्बुरुर्नारदश्चैव गन्धर्वौ च हहाहुहू १४
तान्सर्वान्स समागम्य विधिवत्कुरुनन्दनः
ततोऽपश्यद्देवराजं शतक्रतुमरिन्दमम् १५
ततः पार्थो महाबाहुरवतीर्य रथोत्तमात्
ददर्श साक्षाद्देवेन्द्रं पितरं पाकशासनम् १६
पारडुरेणातपत्रेण हेमदराडेन चारुणा
दिव्यगन्धाधिवासेन व्यजनेन विधूयता १७
विश्वावसुप्रभृतिभिर्गन्धर्वैः स्तुतिवन्दनैः
स्तूयमानं द्विजाग्र्यैश्च ऋग्यजुःसामसंस्तवैः १८

ततोऽभिगम्य कौन्तेयः शिरसाभ्यनमद्बली
स चैनमनुवृत्ताभ्यां भुजाभ्यां प्रत्यगृह्णत १९
ततः शक्रासने पुगये देवराजर्षिपूजिते
शक्रः पाणौ गृहीत्वैनमुपावेशयदन्तिके २०
मूर्ध्नि चैनमुपाघ्राय देवेन्द्रः परवीरहा
अंकमारोपयामास प्रश्रयावनतं तदा २१
सहस्राक्षनियोगात्स पार्थः शक्रासनं तदा
अध्यक्रामदमेयात्मा द्वितीय इव वासवः २२
ततः प्रेम्णा वृत्रशत्रुरर्जुनस्य शुभं मुखम्
पस्पर्श पुगयगन्धेन करेण परिसान्त्वयन् २३
परिमार्जमानः शनकैर्बाहू चास्यायतौ शुभौ
ज्याशरक्षेपकठिनौ स्तम्भाविव हिरगमयौ २४
वज्रग्रहणचिह्नेन करेण बलसूदनः
मुहुर्मुहुर्वज्रधरो बाहू संस्फालयञ्शनैः २५
स्मयन्निव गुडाकेशं प्रेक्षमाणः सहस्रदृक्
हर्षेणोत्फुल्लनयनो न चातृप्यत वृत्रहा २६
एकासनोपविष्टौ तौ शोभयाञ्चक्रतुः सभाम्
सूयाचन्द्रमसौ व्योम्नि चतुर्दश्यामिवोदितौ २७
तत्र स्म गाथा गायन्ति साम्ना परमवल्गुना
गन्धर्वास्तुम्बुरुश्रेष्ठाः कुशला गीतसामसु २८
घृताची मेनका रम्भा पूर्वचित्तिः स्वयंप्रभा
उर्वशी मिश्रकेशी च डुगडुर्गौरी वरूथिनी २९
गोपाली सहजन्या च कुम्भयोनिः प्रजागरा
चित्रसेना चित्रलेखा सहा च मधुरस्वरा ३०
एताश्चान्याश्च ननृतुस्तत्र तत्र वराङ्गनाः
चित्तप्रमथने युक्ताः सिद्धानां पद्मलोचनाः ३१
महाकटितटश्रोगयः कम्पमानैः पयोधरैः
कटाक्षहावमाधुर्यैश्चेतोबुद्धिमनोहराः ३२

इति श्रीमहाभारते आरगयकपर्वणि चतुश्चत्वारिंशोऽध्यायः ४४

पञ्चचत्वारिंशोऽध्यायः

वैशम्पायन उवाच
ततो देवाः सगन्धर्वाः समादायार्घ्यमुत्तमम्
शक्रस्य मतमाज्ञाय पार्थमानर्चुरञ्जसा १
पाद्यमाचमनीयं च प्रतिग्राह्य नृपात्मजम्
प्रवेशयामासुरथो पुरन्दरनिवेशनम् २
एवं संपूजितो जिष्णुरुवास भवने पितुः
उपशिक्षन्महास्त्राणि ससंहाराणि पाण्डवः ३
शक्रस्य हस्ताद्दयितं वज्रमस्त्रं दुरुत्सहम्
अशनीश्च महानादा मेघबर्हिणलक्षणाः ४
गृहीतास्त्रस्तु कौन्तेयो भ्रातॄन्सस्मार पाण्डवः
पुरन्दरनियोगाच्च पञ्चाब्दमवसत्सुखी ५
ततः शक्रोऽब्रवीत्पार्थं कृतास्त्रं काल आगते
नृत्तं गीतं च कौन्तेय चित्रसेनादवाप्नुहि ६
वादित्रं देवविहितं नृलोके यन्न विद्यते
तदर्जयस्व कौन्तेय श्रेयो वै ते भविष्यति ७
सखायं प्रददौ चास्य चित्रसेनं पुरन्दरः
स तेन सह संगम्य रेमे पार्थो निरामयः ८
कदाचिदटमानस्तु महर्षिरुत लोमशः
जगाम शक्रभवनं पुरन्दरदिदृक्षया ९
स समेत्य नमस्कृत्य देवराजं महामुनिः
ददर्शार्धासनगतं पाण्डवं वासवस्य ह १०
ततः शक्राभ्यनुज्ञात आसने विष्टरोत्तरे
निषसाद द्विजश्रेष्ठः पूज्यमानो महर्षिभिः ११
तस्य दृष्ट्वाभवद्बुद्धिः पार्थमिन्द्रासने स्थितम्
कथं नु क्षत्रियः पार्थः शक्रासनमवाप्तवान् १२
किं त्वस्य सुकृतं कर्म लोका वा के विनिर्जिताः
य एवमुपसंप्राप्तः स्थानं देवनमस्कृतम् १३
तस्य विज्ञाय संकल्पं शक्रो वृत्रनिषूदनः
लोमशं प्रहसन्वाक्यमिदमाह शचीपतिः १४

ब्रह्मर्षे श्रूयतां यत्ते मनसैतद्विवक्षितम्
नायं केवलमर्त्यो वै क्षत्रियत्वमुपागतः १५
महर्षे मम पुत्रोऽय कुन्त्यां जातो महाभुजः
अस्त्रहेतोरिह प्राप्तः कस्माच्चित्कारणान्तरात् १६
अहो नैनं भवान्वेत्ति पुराणमृषिसत्तमम्
शृणु मे वदतो ब्रह्मन्योऽय यच्चास्य कारणम् १७
नरनारायणौ यौ तौ पुराणावृषिसत्तमौ
ताविमावभिजानीहि हृषीकेशधनञ्जयौ १८
यन्न शक्यं सुरैर्द्रष्टुमृषिभिर्वा महात्मभिः
तदाश्रमपदं पुण्यं बदरी नाम विश्रुतम् १९
स निवासोऽभवद्विप्र विष्णोर्जिष्णोस्तथैव च
यतः प्रववृते गंगा सिद्धचारणसेविता २०
तौ मन्नियोगाद् ब्रह्मर्षे क्षितौ जातौ महाद्युती
भूमेर्भारावतरणं महावीर्यौ करिष्यतः २१
उद्वृत्ता ह्यसुराः केचिन्निवातकवचा इति
विप्रियेषु स्थितास्माकं वरदानेन मोहिताः २२
तर्कयन्ते सुरान्हन्तुं बलदर्पसमन्विताः
देवान्न गणयन्ते च तथा दत्तवरा हि ते २३
पातालवासिनो रौद्रा दनोः पुत्रा महाबलाः
सर्वे देवनिकाया हि नालं योधयितुं स्म तान् २४
योऽसौ भूमिगतः श्रीमान्विष्णुर्मधुनिषूदनः
कपिलो नाम देवोऽसौ भगवानजितो हरिः २५
येन पूर्वं महात्मानः खनमाना रसातलम्
दर्शनादेव निहताः सगरस्यात्मजा विभो २६
तेन कार्यं महत्कार्यमस्माकं द्विजसत्तम
पार्थेन च महायुद्धे समेताभ्यामसंशयम् २७
अयं तेषां समस्तानां शक्तः प्रतिसमासने
तान्निहत्य रणे शूरः पुनर्यास्यति मानुषान् २८
भवांश्चास्मन्नियोगेन यातु तावन्महीतलम्
काम्यके द्रक्ष्यसे वीरं निवसन्तं युधिष्ठिरम् २९

स वाच्यो मम सन्देशाद्धर्मात्मा सत्यसंगरः
नोत्कराठा फल्गुने कार्या कृतास्त्रः शीघ्रमेष्यति ३०
नाशुद्धबाहुवीर्येण नाकृतास्त्रेण वा रणे
भीष्मद्रोणादयो युद्धे शक्याः प्रतिसमासितुम् ३१
गृहीतास्त्रो गुडाकेशो महाबाहुर्महामनाः
नृत्तवादित्रगीतानां दिव्यानां पारमेयिवान् ३२
भवानपि विविक्तानि तीर्थानि मनुजेश्वर
भ्रातृभिः सहितः सर्वैर्द्रष्टुमर्हत्यरिन्दम ३३
तीर्थेष्वाप्लुत्य पुरायेषु विपाप्मा विगतज्वरः
राज्यं भोद्त्यसि राजेन्द्र सुखी विगतकल्मषः ३४
भवांश्चैनं द्विजश्रेष्ठं पर्यटन्तं महीतले
त्रातुमर्हति विप्राग्र्य तपोबलसमन्वितः ३५
गिरिदुर्गेषु हि सदा देशेषु विषमेषु च
वसन्ति राद्तसाः रौद्रास्तेभ्यो रद्तेत्सदा भवान् ३६
स तथेति प्रतिज्ञाय लोमशः सुमहातपाः
काम्यकं वनमुद्दिश्य समुपायान्महीतलम् ३७
ददर्श तत्र कौन्तेयं धर्मराजमरिन्दमम्
तापसैर्भ्रातृभिश्चैव सर्वतः परिवारितम् ३८
इति श्रीमहाभारते ग्रारगयकपर्वणि पञ्चचत्वारिंशोऽध्यायः ४५

षट्चत्वारिंशोऽध्यायः

जनमेजय उवाच
ग्रत्यद्भुतमिदं कर्म पार्थस्यामिततेजसः
धृतराष्ट्रो महातेजाः श्रुत्वा विप्र किमब्रवीत् १
वैशम्पायन उवाच
शक्रलोकगतं पार्थं श्रुत्वा राजाम्बिकासुतः
द्वैपायनादृषिश्रेष्ठात्संजयं वाक्यमब्रवीत् २
श्रुतं मे सूत कात्स्न्र्येन कर्म पार्थस्य धीमतः
कच्चित्तवापि विदितं यथातथ्येन सारथे ३
प्रमत्तो ग्राम्यधर्मेषु मन्दात्मा पापनिश्चयः

मम पुत्रः सुदुर्बुद्धिः पृथिवीं घातयिष्यति ४
यस्य नित्यमृता वाचः स्वैरेष्वपि महात्मनः
त्रैलोक्यमपि तस्य स्याद्योद्धा यस्य धनञ्जयः ५
अस्यतः कर्णिनाराचांस्तीक्ष्णाग्रांश्च शिलाशितान्
कोऽजुनस्याग्रतस्तिष्ठेदपि मृत्युर्जरातिगः ६
मम पुत्रा दुरात्मानः सर्वे मृत्युवशं गताः
येषां युद्धं दुराधर्षैः पाराडवैः प्रत्युपस्थितम् ७
तस्यैव च न पश्यामि युधि गाराडीवधन्वनः
अनिशं चिन्तयानोऽपि य एनमुदियाद्रथी ८
द्रोणकर्णौ प्रतीयातां यदि भीष्मोऽपि वा रणे
महान्स्यात्संशयो लोके न तु पश्यामि नो जयम् ९
घृणी कर्णः प्रमादी च आचार्यः स्थविरो गुरुः
अमर्षी वलवान्पार्थः संरम्भी दृढविक्रमः १०
भवेत्सुतुमुलं युद्धं सर्वशोऽप्यपराजितम्
सर्वे ह्यस्त्रविदः शूराः सर्वे प्राप्ता महद्यशः ११
अपि सर्वेश्वरत्वं हि न वाञ्छेरन्पराजिताः
वधे नूनं भवेच्छान्तिस्तेषां वा फल्गुनस्य वा १२
न तु हन्तार्जुनस्यास्ति जेता वास्य न विद्यते
मन्युस्तस्य कथं शाम्येन्मन्दान्प्रति समुत्थितः १३
त्रिदशेशसमो वीरः खाराडवेऽग्निमतर्पयत्
जिगाय पार्थिवान्सर्वान्राजसूये महाक्रतौ १४
शेषं कुर्याद्गिरेर्वज्रं निपतन्मूर्ध्नि संजय
न तु कुर्युः शराः शेषमस्तास्तात किरीटिना १५
यथा हि किरणा भानोस्तपन्तीह चराचरम्
तथा पार्थभुजोत्सृष्टाः शरास्तप्स्यन्ति मे सुतान् १६
अपि वा रथघोषेण भयार्ता सव्यसाचिनः
प्रतिभाति विदीर्णेव सर्वतो भारती चमूः १७
यदुद्वपन्प्रवपंश्चैव बाणान्स्थाताततायी समरे किरीटी
सृष्टोऽन्तकः सर्वहरो विधात्रा भवेद्यथा तद्वदपारणीयः १८
सञ्जय उवाच

यदेतत्कथितं राजंस्त्वथा दुर्योधनं प्रति
सर्वमेतद्यथात्थ त्वं नैतन्मिथ्या महीपते १९
मन्युना हि समाविष्टाः पाण्डवास्तेऽमितौजसः
दृष्ट्वा कृष्णां सभां नीतां धर्मपत्नीं यशस्विनीम् २०
दुःशासनस्य ता वाचः श्रुत्वा ते दारुणोदयाः
कर्णस्य च महाराज न स्वप्स्यन्तीति मे मतिः २१
श्रुतं हि ते महाराज यथा पार्थेन संयुगे
एकादशतनुः स्थाणुर्धनुषा परितोषितः २२
कैरातं वेषमास्थाय योधयामास फल्गुनम्
जिज्ञासुः सर्वदेवेशः कपर्दी भगवान्स्वयम् २३
तत्रैनं लोकपालास्ते दर्शयामासुरर्जुनम्
अस्त्रहेतोः पराक्रान्तं तपसा कौरवर्षभम् २४
नैतदुत्सहतेऽन्यो हि लब्धुमन्यत्र फल्गुनात्
साक्षाद्दर्शनमेतेषामीश्वराणां नरो भुवि २५
महेश्वरेण यो राजन्न जीर्णो ग्रस्तमूर्तिमान्
कस्तमुत्सहते वीरं युद्धे जरयितुं पुमान् २६
आसादितमिदं घोरं तुमुलं लोमहर्षणम्
द्रौपदीं परिकर्षद्भिः कोपयद्भिश्च पाण्डवान् २७
यत्र विस्फुरमाणोष्ठो भीमः प्राह वचो महत्
दृष्ट्वा दुर्योधनेनोरू द्रौपद्या दर्शितावुभौ २८
ऊरू भेत्स्यामि ते पाप गदया वज्रकल्पया
त्रयोदशानां वर्षाणामन्ते दुर्द्यूतदेविनः २९
सर्वे प्रहरतां श्रेष्ठाः सर्वे चामिततेजसः
सर्वे सर्वास्त्रविद्वांसो देवैरपि सुदुर्जयाः ३०
मन्ये मन्युसमुद्धूताः पुत्राणां तव संयुगे
अन्तं पार्थाः करिष्यन्ति वीर्यामर्षसमन्विताः ३१
धृतराष्ट्र उवाच
किं कृतं सूत कर्णेन वदता परुषं वचः
पर्याप्तं वैरमेतावद्यत्कृष्णा सा सभां गता ३२
अपीदानीं मम सुतास्तिष्ठेरन्मन्दचेतसः

येषां भ्राता गुरुर्ज्येष्ठो विनये नावतिष्ठते ३३
ममापि वचनं सूत न शुश्रूषति मन्दभाक्
दृष्ट्वा मां चक्षुषा हीनं निर्विचेष्टमचेतनम् ३४
ये चास्य सचिवा मन्दाः कर्णसौबलकादयः
तेऽप्यस्य भूयसो दोषान्वर्धयन्ति विचेतसः ३५
स्वैरमुक्ता अपि शराः पार्थेनामिततेजसा
निर्दहेयुर्मम सुतान्किं पुनर्मन्युनेरिताः ३६
पार्थबाहुबलोत्सृष्टा महाचापविनिःसृताः
दिव्यास्त्रमन्त्रमुदिताः सादयेयुः सुरानपि ३७
यस्य मन्त्री च गोप्ता च सुहृच्चैव जनार्दनः
हरिस्त्रैलोक्यनाथः स किं नु तस्य न निर्जितम् ३८
इदं च सुमहच्चित्रमर्जुनस्येह सञ्जय
महादेवेन बाहुभ्यां यत्समेत इति श्रुतिः ३९
प्रत्यक्षं सर्वलोकस्य खाण्डवे यत्कृतं पुरा
फल्गुनेन सहायार्थे वह्नेर्दामोदरेण च ४०
सर्वथा नास्ति मे पुत्रः सामात्यः सहबान्धवः
क्रुद्धे पार्थे च भीमे च वासुदेवे च सात्वते ४१
इति श्रीमहाभारते आरण्यकपर्वणि षट्चत्वारिंशोऽध्यायः ४६

## सप्तचत्वारिंशोऽध्यायः

जनमेजय उवाच
यदिदं शोचितं राज्ञा धृतराष्ट्रेण वै मुने
प्रव्राज्य पाण्डवान्वीरान्सर्वमेतन्निरर्थकम् १
कथं हि राजा पुत्रं स्वमुपेक्षेताल्पचेतसम्
दुर्योधनं पाण्डुपुत्रान्कोपयानं महारथान् २
किमासीत्पाण्डुपुत्राणां वने भोजनमुच्यताम्
वानेयमथ वा कृष्टमेतदाख्यातु मे भवान् ३
वैशम्पायन उवाच
वानेयं च मृगांश्चैव शुद्धैर्बाणैर्निपातितान्
ब्राह्मणानां निवेद्याग्रमभुञ्जन्पुरुषर्षभाः ४

तांस्तु शूरान्महेष्वासांस्तदा निवसतो वने
अन्वयुर्ब्राह्मणा राजन्साग्नयोऽनग्नयस्तथा ५
ब्राह्मणानां सहस्राणि स्नातकानां महात्मनाम्
दश मोक्षविदां तद्वद्यान्बिभर्ति युधिष्ठिरः ६
रुरून्कृष्णमृगांश्चैव मेध्यांश्चान्यान्वनेचरान्
बाणैरुन्मथ्य विधिविद्ब्राह्मणेभ्यो न्यवेदयत् ७
न तत्र कश्चिद् दुर्वर्णो व्याधितो वाप्यदृश्यत
कृशो वा दुर्बलो वापि दीनो भीतोऽपि वा नरः ८
पुत्रानिव प्रियाञ्ज्ञातीन्भ्रातॄनिव सहोदरान्
पुपोष कौरवश्रेष्ठो धर्मराजो युधिष्ठिरः ९
पतींश्च द्रौपदी सर्वान्द्विजांश्चैव यशस्विनी
मातेव भोजयित्वाग्रे शिष्टमाहारयत्तदा १०
प्राचीं राजा दक्षिणां भीमसेनो यमौ प्रतीचीमथ वाप्युदीचीम्
धर्नुधरा मांसहेतोर्मृगाणां क्षयं चक्रुर्नित्यमेवोपगम्य ११
तथा तेषां वसतां काम्यके वै विहीनानामर्जुनेनोत्सुकानाम्
पञ्चैव वर्षाणि तदा व्यतीयुरधीयतां जपतां जुह्वतां च १२
इति श्रीमहाभारते आरण्यक पर्वणि सप्तचत्वारिंशोऽध्यायः ४७

## अष्टचत्वारिंशोऽध्यायः

वैशम्पायन उवाच
सुदीर्घमुष्णं निःश्वस्य धृतराष्ट्रोऽम्बिकासुतः
अब्रवीत्सञ्जयं सूतमामन्त्र्य भरतर्षभ १
देवपुत्रौ महाभागौ देवराजसमद्युती
नकुलः सहदेवश्च पाण्डवौ युद्धदुर्मदौ २
दृढायुधौ दूरपातौ युद्धे च कृतनिश्चयौ
शीघ्रहस्तौ दृढक्रोधौ नित्ययुक्तौ तरस्विनौ ३
भीमार्जुनौ पुरोधाय यदा तौ रणमूर्धनि
स्थास्येते सिंहविक्रान्तावश्विनाविव दुःसहौ
न शेषमिह पश्यामि तदा सैन्यस्य सञ्जय ४
तौ ह्यप्रतिरथौ युद्धे देवपुत्रौ महारथौ

द्रौपद्यास्तं परिक्लेशं न क्षंस्येते त्वमर्षिणौ ५
वृष्णयो वा महेष्वासा पाञ्चाला वा महौजसः
युधि सत्याभिसन्धेन वासुदेवेन रक्षिताः
प्रधक्ष्यन्ति रणे पार्थाः पुत्राणां मम वाहिनीम् ६
रामकृष्णप्रणीतानां वृष्णीनां सूतनन्दन
न शक्यः सहितुं वेगः पर्वतैरपि संयुगे ७
तेषां मध्ये महेष्वासो भीमो भीमपराक्रमः
शैक्यया वीरघातिन्या गदया विचरिष्यति ८
तथा गाण्डीवनिर्घोषं विस्फूर्जितमिवाशनेः
गदावेगं च भीमस्य नालं सोढुं नराधिपाः ९
ततोऽह सुहृदां वाचो दुर्योधनवशानुगः
स्मरणीयाः स्मरिष्यामि मया या न कृताः पुरा १०
सञ्जय उवाच
व्यतिक्रमोऽय सुमहांस्त्वया राजन्नुपेक्षितः
समर्थेनापि यन्मोहात्पुत्रस्ते न निवारितः ११
श्रुत्वा हि निर्जितान्द्यूते पाण्डवान्मधुसूदनः
त्वरितः काम्यके पार्थान्समभावयदच्युतः १२
द्रुपदस्य तथा पुत्रा धृष्टद्युम्नपुरोगमाः
विराटो धृष्टकेतुश्च केकयाश्च महारथाः १३
तैश्च यत्कथितं तत्र दृष्ट्वा पार्थान्पराजितान्
चारेण विदितं सर्वं तन्मया वेदितं च ते १४
समागम्य वृतस्तत्र पाण्डवैर्मधुसूदनः
सारथ्ये फल्गुनस्याजौ तथेत्याह च तान्हरिः १५
अमर्षितो हि कृष्णोऽपि दृष्ट्वा पार्थांस्तथागतान्
कृष्णाजिनोत्तरासङ्गानब्रवीच्च युधिष्ठिरम् १६
या सा समृद्धिः पार्थानामिन्द्रप्रस्थे बभूव ह
राजसूये मया दृष्टा नृपैरन्यैः सुदुर्लभा १७
यत्र सर्वान्महीपालाञ्शस्त्रतेजोभयार्दितान्
सवङ्गाङ्गान्सपौण्ड्रोड्रान्सचोलद्रविडान्ध्रकान् १८
सागरानूपगांश्चैव ये च पत्तनवासिनः

सिंहलान्बर्बरान्म्लेच्छान्ये च जाङ्गलवासिनः १९
पश्चिमानि च राज्यानि शतशः सागरान्तिकान्
पह्लवान्दरदान्सर्वान्किरातान्यवनाञ्शकान् २०
हारहूणांश्च चीनांश्च तुखारान्सैन्धवांस्तथा
जागुडान्रामठान्मुण्डान्स्त्रीराज्यानथ तङ्गणान् २१
एते चान्ये च बहवो ये च ते भरतर्षभ
आगतानहमद्राक्षं यज्ञे ते परिवेषकान् २२
सा ते समृद्धिर्यैरात्ता चपला प्रतिसारिणी
आदाय जीवितं तेषामाहरिष्यामि तामहम् २३
रामेण सह कौरव्य भीमार्जुनयमैस्तथा
अक्रूरगदसाम्बैश्च प्रद्युम्नेनाहुकेन च
धृष्टद्युम्नेन वीरेण शिशुपालात्मजेन च २४
दुर्योधनं रणे हत्वा सद्यः कर्णं च भारत
दुःशासनं सौबलेयं यश्चान्यः प्रतियोत्स्यते २५
ततस्त्वं हास्तिनपुरे भ्रातृभिः सहितो वसन्
धार्तराष्ट्रीं श्रियं प्राप्य प्रशाधि पृथिवीमिमाम् २६
अथैनमब्रवीद्राजा तस्मिन्वीरसमागमे
शृण्वत्सु तेषु सर्वेषु धृष्टद्युम्नमुखेषु च २७
प्रतिगृह्णामि ते वाचं सत्यामेतां जनार्दन
अमित्रान्मे महाबाहो सानुबन्धान्हनिष्यसि २८
वर्षात्त्रयोदशादूर्ध्वं सत्यं मां कुरु केशव
प्रतिज्ञातो वने वासो राजमध्ये मया ह्ययम् २९
तद्धर्मराजवचनं प्रतिश्रुत्य सभासदः
धृष्टद्युम्नपुरोगास्ते शमयामासुरञ्जसा
केशवं मधुरैर्वाक्यैः कालयुक्तैरमर्षितम् ३०
पाञ्चालद्यं चाहुरक्लिष्टां वासुदेवस्य शृण्वतः
दुर्योधनस्तव क्रोधाद्देवि त्यक्ष्यति जीवितम्
प्रतिजानीम ते सत्यं मा शुचो वरवर्णिनि ३१
ये स्म ते कुपितां कृष्णे दृष्ट्वा त्वां प्राहसंस्तदा
मांसानि तेषां खादन्तो हसिष्यन्ति मृगद्विजाः ३२

पास्यन्ति रुधिरं तेषां गृध्रा गोमायवस्तथा
उत्तमाङ्गानि कर्षन्तो यैस्त्वं कृष्टा सभातले ३३
तेषां द्रक्ष्यसि पाञ्चालि गात्राणि पृथिवीतले
क्रव्यादैः कृष्यमाणानि भक्ष्यमाणानि चासकृत् ३४
परिक्लिष्टासि यैस्तत्र यैश्चापि समुपेक्षिता
तेषामुत्कृत्तशिरसां भूमिः पास्यति शोणितम् ३५
एवं बहुविधा वाचस्तदोचुः पुरुषर्षभाः
सर्वे तेजस्विनः शूराः सर्वे चाहतलक्षणाः ३६
ते धर्मराजेन वृता वर्षादूर्ध्वं त्रयोदशात्
पुरस्कृत्योपयास्यन्ति वासुदेवं महारथाः ३७
रामश्च कृष्णश्च धनञ्जयश्च प्रद्युम्नसाम्बौ युयुधानभीमौ
माद्रीसुतौ केकयराजपुत्राः पाञ्चालपुत्राःसह धर्मराज्ञा ३८
एतान्सर्वाल्लोँकवीरानजेयान्महात्मनः सानुबन्धान्ससैन्यान्
को जीवितार्थी समरे प्रत्युदीयात्क्रुद्धान्सिंहान्केसरिणो यथ्व ३९
धृतराष्ट्र उवाच
यन्माब्रवीद्विदुरो द्यूतकाले त्वं पाण्डवाञ्जेष्यसि चेन्नरेन्द्र
ध्रुवं कुरूणामयमन्तकालो महाभयो भविता शोणितौघः ४०
मन्ये तथा तद्भवितेति सूत यथा क्षत्ता प्राह वचः पुरा माम्
असंशयं भविता युद्धमेतद्गते काले पाण्डवानां यथोक्तम् ४१
इति श्रीमहाभारते आरण्यकपर्वणि अष्टचत्वारिंशोऽध्यायः ४८

## एकोनपञ्चाशोऽध्यायः

जनमेजय उवाच
अस्त्रहेतोर्गते पार्थे शक्रलोकं महात्मनि
युधिष्ठिरप्रभृतयः किमकुर्वन्त पाण्डवाः १
वैशम्पायन उवाच
अस्त्रहेतोर्गते पार्थे शक्रलोकं महात्मनि
न्यवसन्कृष्णया सार्धं काम्यके पुरुषर्षभाः २
ततः कदाचिदेकान्ते विविक्त इव शाद्वले
दुःखार्ता भरतश्रेष्ठा निषेदुः सह कृष्णया

धनञ्जयं शोचमानाः साश्रुकण्ठाः सुदुःखिताः ३
तद्वियोगाद्धितान्सर्वाञ्शोकः समभिपुप्लुवे
धनञ्जयवियोगाच्च राज्यनाशाच्च दुःखिताः ४
अथ भीमो महाबाहुर्युधिष्ठिरमभाषत
निदेशात्ते महाराज गतोऽसौ पुरुषर्षभः
अर्जुनः पाण्डुपुत्राणां यस्मिन्प्राणाः प्रतिष्ठिताः ५
यस्मिन्विनष्टे पाञ्चालाः सह पुत्रैस्तथा वयम्
सात्यकिर्वासुदेवश्च विनश्येयुरसंशयम् ६
योऽसौ गच्छति तेजस्वी बहून्क्लेशानचिन्तयन्
भवन्नियोगाद्बीभत्सुस्ततो दुःखतरं नु किम् ७
यस्य बाहू समाश्रित्य वयं सर्वे महात्मनः
मन्यामहे जितानाजौ परान्प्राप्तां च मेदिनीम् ८
यस्य प्रभावान्न मया सभामध्ये धनुष्मतः
नीता लोकममुं सर्वे धार्तराष्ट्राः ससौबलाः ९
ते वयं बाहुबलिनः क्रोधमुत्थितमात्मनः
सहामहे भवन्मूलं वासुदेवेन पालिताः १०
वयं हि सह कृष्णेन हत्वा कर्णमुखान्परान्
स्वबाहुविजितां कृत्स्नां प्रशासेम वसुन्धराम् ११
भवतो द्यूतदोषेण सर्वे वयमुपप्लुताः
अहीनपौरुषा राजन्बलिभिर्बलवत्तमाः १२
क्षात्रं धर्मं महाराज समवेक्षितुमर्हसि
न हि धर्मो महाराज क्षत्रियस्य वनाश्रयः
राज्यमेव परं धर्मं क्षत्रियस्य विदुर्बुधाः १३
स क्षत्रधर्मविद्राजन्मा धर्म्यान्नीनशः पथः
प्राग्द्वादश समा राजन्धार्तराष्ट्रान्निहन्महि १४
निवर्त्य च वनात्पार्थमानाय्य च जनार्दनम्
व्यूढानीकान्महाराज जवेनैव महाहवे
धार्तराष्ट्रानमुं लोकं गमयामि विशां पते १५
सर्वानहं हनिष्यामि धार्तराष्ट्रान्ससौबलान्
दुर्योधनं च कर्णं च यो वान्यः प्रतियोत्स्यते १६

मया प्रशमिते पश्चात्त्वमेष्यसि वनात्पुनः
एवं कृते न ते दोषो भविष्यति विशां पते १७
यज्ञैश्च विविधैस्तात कृतं पापमरिन्दम
अवधूय महाराज गच्छेम स्वर्गमुत्तमम् १८
एवमेतद्भवेद्राजन्यदि राजा न बालिशः
अस्माकं दीर्घसूत्रः स्याद्भवान्धर्मपरायणः १९
निकृत्या निकृतिप्रज्ञा हन्तव्या इति निश्चयः
न हि नैकृतिकं हत्वा निकृत्या पापमुच्यते २०
तथा भारत धर्मेषु धर्मज्ञैरिह दृश्यते
अहोरात्रं महाराज तुल्यं संवत्सरेण हि २१
तथैव वेदवचनं श्रूयते नित्यदा विभो
संवत्सरो महाराज पूर्णो भवति कृच्छ्रतः २२
यदि वेदाः प्रमाणं ते दिवसादूर्ध्वमच्युत
त्रयोदश समाः कालो ज्ञायतां परिनिष्ठितः २३
कालो दुर्योधनं हन्तुं सानुबन्धमरिन्दम
एकाग्रां पृथिवीं सर्वां पुरा राजन्करोति सः २४
एवं ब्रुवाणं भीमं तु धर्मराजो युधिष्ठिरः
उवाच सान्त्वयन् राजा मूर्ध्न्युपाघ्राय पाण्डवम् २५
असंशयं महाबाहो हनिष्यसि सुयोधनम्
वर्षात्त्रयोदशादूर्ध्वं सह गाण्डीवधन्वना २६
यच्च मा भाषसे पार्थ प्राप्तः काल इति प्रभो
अनृतं नोत्सहे वक्तुं न ह्येतन्मयि विद्यते २७
अन्तरेणापि कौन्तेय निकृतिं पापनिश्चयम्
हन्ता त्वमसि दुर्धर्ष सानुबन्धं सुयोधनम् २८
एवं ब्रुवति भीमं तु धर्मराजे युधिष्ठिरे
आजगाम महाभागो बृहदश्वो महानृषिः २९
तमभिप्रेक्ष्य धर्मात्मा संप्राप्तं धर्मचारिणम्
शास्त्रवन्मधुपर्केण पूजयामास धर्मराट् ३०
आश्वस्तं चैनमासीनमुपासीनो युधिष्ठिरः
अभिप्रेक्ष्य महाबाहुः कृपणं बह्वभाषत ३१

अक्षद्यूतेन भगवन्धनं राज्यं च मे हृतम्
आहूय निकृतिप्रज्ञैः कितवैरक्षकोविदैः ३२
अनक्षज्ञस्य हि सतो निकृत्या पापनिश्चयैः
भार्या च मे सभां नीता प्राणेभ्योऽपि गरीयसी ३३
अस्ति राजा मया कश्चिदल्पभाग्यतरो भुवि
भवता दृष्टपूर्वो वा श्रुतपूर्वोऽपि वा भवेत्
न मत्तो दुःखिततरः पुमानस्तीति मे मतिः ३४
बृहदश्व उवाच
यद्ब्रवीषि महाराज न मत्तो विद्यते क्वचित्
अल्पभाग्यतरः कश्चित्पुमानस्तीति पाण्डव ३५
अत्र ते कथयिष्यामि यदि शुश्रूषसेऽनघ
यस्त्वत्तो दुःखिततरो राजासीत्पृथिवीपते ३६
वैशम्पायन उवाच
अथैनमब्रवीद्राजा ब्रवीतु भगवानिति
इमामवस्थां संप्राप्तं श्रोतुमिच्छामि पार्थिवम् ३७
बृहदश्व उवाच
शृणु राजन्नवहितः सह भ्रातृभिरच्युत
यस्त्वत्तो दुःखिततरो राजासीत्पृथिवीपते ३८
निषधेषु महीपालो वीरसेन इति स्म ह
तस्य पुत्रोऽभवन्नाम्ना नलो धर्मार्थदर्शिवान् ३९
स निकृत्या जितो राजा पुष्करेणेति नः श्रुतम्
वनवासमदुःखार्हो भार्यया न्यवसत्सह ४०
न तस्याश्वो न च रथो न भ्राता न च बान्धवाः
वने निवसतो राजञ्शिष्यन्ते स्म कदाचन ४१
भवान्हि संवृतो वीरैर्भ्रातृभिर्देवसंमितैः
ब्रह्मकल्पैर्द्विजाग्र्यैश्च तस्मान्नार्हसि शोचितुम् ४२
युधिष्ठिर उवाच
विस्तरेणाहमिच्छामि नलस्य सुमहात्मनः
चरितं वदतां श्रेष्ठ तन्ममाख्यातुमर्हसि ४३
इति श्रीमहाभारते आरण्यकपर्वणि एकोनपञ्चाशोऽध्यायः ४९

पञ्चाशोऽध्यायः

बृहदश्व उवाच
आसीद्राजा नलो नाम वीरसेनसुतो बली
उपपन्नो गुणैरिष्टै रूपवानश्वकोविदः १
अतिष्ठन्मनुजेन्द्राणां मूर्ध्नि देवपतिर्यथा
उपर्युपरि सर्वेषामादित्य इव तेजसा २
ब्रह्मण्यो वेदविच्छूरो निषधेषु महीपतिः
अक्षप्रियः सत्यवादी महानक्षौहिणीपतिः ३
ईप्सितो वरनारीणामुदारो संयतेन्द्रियः
रक्षिता धन्विनां श्रेष्ठः साक्षादिव मनुः स्वयम् ४
तथैवासीद्विदर्भेषु भीमो भीमपराक्रमः
शूरः सर्वगुणैर्युक्तः प्रजाकामः स चाप्रजः ५
स प्रजार्थे परं यत्नमकरोत्सुसमाहितः
तमभ्यगच्छद्ब्रह्मर्षिर्दमनो नाम भारत ६
तं स भीमः प्रजाकामस्तोषयामास धर्मवित्
महिष्या सह राजेन्द्र सत्कारेण सुवर्चसम् ७
तस्मै प्रसन्नो दमनः सभार्याय वरं ददौ
कन्यारत्नं कुमारांश्च त्रीनुदारान्महायशाः ८
दमयन्तीं दमं दान्तं दमनं च सुवर्चसम्
उपपन्नान्गुणैः सर्वैर्भीमान्भीमपराक्रमान् ९
दमयन्ती तु रूपेण तेजसा यशसा श्रिया
सौभाग्येन च लोकेषु यशः प्राप सुमध्यमा १०
अथ तां वयसि प्राप्ते दासीनां समलंकृतम्
शतं सखीनां च तथा पर्युपास्ते शचीमिव ११
तत्र स्म भ्राजते भैमी सर्वाभरणभूषिता
सखीमध्येऽनवद्याङ्गी विद्युत्सौदामिनी यथा
अतीव रूपसम्पन्नाश्रीरिवायतलोचना १२
न देवेषु न यक्षेषु तादृग्रूपवती क्वचित्
मानुषेष्वपि चान्येषु दृष्टपूर्वा न च श्रुता
चित्तप्रमाथिनी बाला देवानामपि सुन्दरी १३

नलश्च नरशार्दूलो रूपेणाप्रतिमो भुवि
कन्दर्प इव रूपेण मूर्तिमानभवत्स्वयम् १४
तस्याः समीपे तु नलं प्रशशंसुः कुतूहलात्
नैषधस्य समीपे तु दमयन्तीं पुनः पुनः १५
तयोरदृष्टकामोऽभूच्छृरावतोः सततं गुणान्
अन्योन्यं प्रति कौन्तेय स व्यवर्धत हृच्छयः १६
अशक्नुवन्नलः कामं तदा धारयितुं हृदा
अन्तःपुरसमीपस्थे वन आस्ते रहोगतः १७
स ददर्श तदा हंसाञ्जातरूपपरिच्छदान्
वने विचरतां तेषामेकं जग्राह पक्षिणम् १८
ततोऽन्तरिक्षगो वाचं व्याजहार तदा नलं
न हन्तव्योऽस्मि ते राजन्करिष्यामि हि ते प्रियम् १९
दमयन्तीसकाशे त्वां कथयिष्यामि नैषध
यथा त्वदन्यं पुरुषं न सा मंस्यति कर्हिचित् २०
एवमुक्तस्ततो हंसमुत्ससर्ज महीपतिः
ते तु हंसाः समुत्पत्य विदर्भानगमंस्ततः २१
विदर्भनगरीं गत्वा दमयन्त्यास्तदान्तिके
निपेतुस्ते गरुत्मन्तः सा ददर्शाथ तान्खगान् २२
सा तानद्भुतरूपान्वै दृष्ट्वा सखिगणावृता
हृष्टा ग्रहीतुं खगमांस्त्वरमाणोपचक्रमे २३
अथो हंसा विससृपुः सर्वतः प्रमदावने
एकैकशस्ततः कन्यास्तान्हंसान्समुपाद्रवन् २४
दमयन्ती तु यं हंसं समुपाधावदन्तिके
स मानुषीं गिरं कृत्वा दमयन्तीमथाब्रवीत् २५
दमयन्ति नलो नाम निषधेषु महीपतिः
अश्विनोः सदृशो रूपे न समास्तस्य मानुषाः २६
तस्य वै यदि भार्या त्वं भवेथा वरवर्णिनि
सफलं ते भवेज्जन्म रूपं चेदं सुमध्यमे २७
वयं हि देवगन्धर्वमनुष्योरगराक्षसान्
दृष्टवन्तो न चास्माभिर्दृष्टपूर्वस्तथाविधः २८

त्वं चापि रत्नं नारीणां नरेषु च नलो वरः
विशिष्टाया विशिष्टेन संगमो गुणवान्भवेत् २९
एवमुक्ता तु हंसेन दमयन्ती विशां पते
अब्रवीत्तत्र तं हंसं तमप्येवं नलं वद ३०
तथेत्युक्त्वाण्डजः कन्यां वैदर्भस्य विशां पते
पुनरागम्य निषधान्नले सर्वं न्यवेदयत् ३१
इति श्रीमहाभारते आरण्यकपर्वणि पञ्चाशोऽध्यायः ५०

एकपञ्चाशोऽध्यायः

बृहदश्व उवाच
दमयन्ती तु तच्छ्रुत्वा वचो हंसस्य भारत
तदा प्रभृति न स्वस्था नलं प्रति बभूव सा १
ततश्चिन्तापरा दीना विवर्णवदना कृशा
बभूव दमयन्ती तु निःश्वासपरमा तदा २
ऊर्ध्वदृष्टिर्ध्यानपरा बभूवोन्मत्तदर्शना
न शय्यासनभोगेषु रतिं विन्दति कर्हिचित् ३
न नक्तं न दिवा शेते हा हेति वदती मुहुः
तामस्वस्थां तदाकारां सख्यस्ता जज्ञुरिङ्गितैः ४
ततो विदर्भपतये दमयन्त्याः सखीगणः
न्यवेदयत न स्वस्थां दमयन्तीं नरेश्वर ५
तच्छ्रुत्वा नृपतिर्भीमो दमयन्तीसखीगणात्
चिन्तयामास तत्कार्यं सुमहत्स्वां सुतां प्रति ६
स समीक्ष्य महीपालः स्वां सुतां प्राप्तयौवनाम्
अपश्यदात्मनः कार्यं दमयन्त्याः स्वयंवरम् ७
स संनिपातयामास महीपालान्विशां पते
अनुभूयतामयं वीराः स्वयंवर इति प्रभो ८
श्रुत्वा तु पार्थिवाः सर्वे दमयन्त्याः स्वयंवरम्
अभिजग्मुस्तदा भीमं राजानो भीमशासनात् ९
हस्त्यश्वरथघोषेण नादयन्तो वसुन्धराम्
विचित्रमाल्याभरणैर्बलैर्दृश्यैः स्वलंकृतैः १०

एतस्मिन्नेव काले तु पुराणावृषिसत्तमौ
अटमानौ महात्मानाविन्द्रलोकमितो गतौ ११
नारदः पर्वतश्चैव महात्मानौ महाव्रतौ
देवराजस्य भवनं विविशाते सुपूजितौ १२
तावर्चित्वा सहस्राक्षस्ततः कुशलमव्ययम्
पप्रच्छानामयं चापि तयोः सर्वगतं विभुः १३
नारद उवाच
आवयोः कुशलं देव सर्वत्रगतमीश्वर
लोके च मघवन्कृत्स्ने नृपाः कुशलिनो विभो १४
बृहदश्व उवाच
नारदस्य वचः श्रुत्वा पप्रच्छ बलवृत्रहा
धर्मज्ञाः पृथिवीपालास्त्यक्तजीवितयोधिनः १५
शस्त्रेण निधनं काले ये गच्छन्त्यपराङ्मुखाः
अयं लोकोऽक्षयस्तेषां यथैव मम कामधुक् १६
क्व नु ते क्षत्रियाः शूरा न हि पश्यामि तानहम्
आगच्छतो महीपालानतिथीन्दयितान्मम १७
एवमुक्तस्तु शक्रेण नारदः प्रत्यभाषत
शृणु मे भगवन्येन न दृश्यन्ते महीक्षितः १८
विदर्भराजदुहिता दमयन्तीति विश्रुता
रूपेण समतिक्रान्ता पृथिव्यां सर्वयोषितः १९
तस्याः स्वयंवरः शक्र भविता नचिरादिव
तत्र गच्छन्ति राजानो राजपुत्राश्च सर्वशः २०
तां रत्नभूतां लोकस्य प्रार्थयन्तो महीक्षितः
काङ्क्षन्ति स्म विशेषेण बलवृत्रनिषूदन २१
एतस्मिन्कथ्यमाने तु लोकपालाश्च साग्निकाः
आजग्मुर्देवराजस्य समीपममरोत्तमाः २२
ततस्तच्छुश्रुवुः सर्वे नारदस्य वचो महत्
श्रुत्वा चैवाब्रुवन्हृष्टा गच्छामो वयमप्युत २३
ततः सर्वे महाराज सगणाः सहवाहनाः
विदर्भानभितो जग्मुर्यत्र सर्वे महीक्षितः २४

नलोऽपि राजा कौन्तेय श्रुत्वा राज्ञां समागमम्
अभ्यगच्छददीनात्मा दमयन्तीमनुव्रतः २५
अथ देवाः पथि नलं ददृशुर्भूतले स्थितम्
साक्षादिव स्थितं मूर्त्या मन्मथं रूपसंपदा २६
तं दृष्ट्वा लोकपालास्ते भ्राजमानं यथा रविम्
तस्थुर्विगतसंकल्पा विस्मिता रूपसंपदा २७
ततोऽन्तरिक्षे विष्टभ्य विमानानि दिवौकसः
अब्रुवन्नैषधं राजन्नवतीर्य नभस्तलात् २८
भो भो नैषध राजेन्द्र नल सत्यव्रतो भवान्
अस्माकं कुरु साहाय्यं दूतो भव नरोत्तम २९
इति श्रीमहाभारते आरण्यकपर्वणि एकपञ्चाशोऽध्यायः ५१

द्विपञ्चाशोऽध्यायः

बृहदश्व उवाच
तेभ्यः प्रतिज्ञाय नलः करिष्य इति भारत
अथैनान्परिपप्रच्छ कृताञ्जलिरवस्थितः १
के वै भवन्तः कश्चासौ यस्याहं दूत ईप्सितः
किं च तत्र मया कार्यं कथयध्वं यथातथम् २
एवमुक्ते नैषधेन मघवान्प्रत्यभाषत
अमरान्वै निबोधास्मान्दमयन्त्यर्थमागतान् ३
अहमिन्द्रोऽयमग्निश्च तथैवायमपांपतिः
शरीरान्तकरो नृणां यमोऽयमपि पार्थिव ४
स वै त्वमागतानस्मान्दमयन्त्यै निवेदय
लोकपालाः सहेन्द्रास्त्वां समायान्ति दिदृक्षवः ५
प्राप्तुमिच्छन्ति देवास्त्वां शक्रोऽग्निर्वरुणो यमः
तेषामन्यतमं देवं पतित्वे वरयस्व ह ६
एवमुक्तः स शक्रेण नलः प्राञ्जलिरब्रवीत्
एकार्थसमवेतं मां न प्रेषयितुमर्हथ ७
देवा ऊचुः
करिष्य इति संश्रुत्य पूर्वमस्मासु नैषध

न करिष्यसि कस्मात्त्वं व्रज नैषध माचिरम् ८
बृहदश्व उवाच
एवमुक्तः स देवैस्तैर्नैषधः पुनरब्रवीत्
सुरक्षितानि वेश्मानि प्रवेष्टुं कथमुत्सहे ९
प्रवेक्ष्यसीति तं शक्रः पुनरेवाभ्यभाषत
जगाम स तथेत्युक्त्वा दमयन्त्या निवेशनम् १०
ददर्श तत्र वैदर्भीं सखीगणसमावृताम्
देदीप्यमानां वपुषा श्रिया च वरवर्णिनीम् ११
अतीव सुकुमाराङ्गीं तनुमध्यां सुलोचनाम्
आक्षिपन्तीमिव च भाः शशिनः स्वेन तेजसा १२
तस्य दृष्ट्वैव ववृधे कामस्तां चारुहासिनीम्
सत्यं चिकीर्षमाणस्तु धारयामास हृच्छयम् १३
ततस्ता नैषधं दृष्ट्वा संभ्रान्ताः परमाङ्गनाः
आसनेभ्यः समुत्पेतुस्तेजसा तस्य धर्षिताः १४
प्रशशंसुश्च सुप्रीता नलं ता विस्मयान्विताः
न चैनमभ्यभाषन्त मनोभिस्त्वभ्यचिन्तयन् १५
अहो रूपमहो कान्तिरहो धैर्यं महात्मनः
कोऽय देवो नु यक्षो नु गन्धर्वो नु भविष्यति १६
न त्वेनं शक्नुवन्ति स्म व्याहर्तुमपि किंचन
तेजसा धर्षिताः सर्वा लज्जावत्यो वराङ्गनाः १७
अथैनं स्मयमानेव स्मितपूर्वाभिभाषिणी
दमयन्ती नलं वीरमभ्यभाषत विस्मिता १८
कस्त्वं सर्वानवद्याङ्ग मम हृच्छयवर्धन
प्राप्तोऽस्यमरवद्वीर ज्ञातुमिच्छामि तेऽनघ १९
कथमागमनं चेह कथं चासि न लक्षितः
सुरक्षितं हि मे वेश्म राजा चैवोग्रशासनः २०
एवमुक्तस्तु वैदर्भ्या नलस्तां प्रत्युवाच ह
नलं मां विद्धि कल्याणि देवदूतमिहागतम् २१
देवास्त्वां प्राप्तुमिच्छन्ति शक्रोऽग्निर्वरुणो यमः
तेषामन्यतमं देवं पतिं वरय शोभने २२

तेषामेव प्रभावेन प्रविष्टोऽहमलक्षितः
प्रविशन्तं हि मां कश्चिन्नापश्यन्नाप्यवारयत् २३
एतदर्थमहं भद्रे प्रेषितः सुरसत्तमैः
एतच्छ्रुत्वा शुभे बुद्धिं प्रकुरुष्व यथेच्छसि २४
इति श्रीमहाभारते आरण्यकपर्वणि द्विपञ्चाशोऽध्यायः ५२

त्रिपञ्चाशोऽध्यायः

बृहदश्व उवाच
सा नमस्कृत्य देवेभ्यः प्रहस्य नलमब्रवीत्
प्रणयस्व यथाश्रद्धं राजन्किं करवाणि ते १
अहं चैव हि यच्चान्यन्ममास्ति वसु किंचन
सर्वं तत्तव विश्रब्धं कुरु प्रणयमीश्वर २
हंसानां वचनं यत्तत्तन्मां दहति पार्थिव
त्वत्कृते हि मया वीर राजानः संनिपातिताः३
यदि चेद्भजमानां मां प्रत्याख्यास्यसि मानद
विषमग्निं जलं रज्जुमास्थास्ये तव कारणात् ४
एवमुक्तस्तु वैदर्भ्या नलस्तां प्रत्युवाच ह
तिष्ठत्सु लोकपालेषु कथं मानुषमिच्छसि ५
येषामहं लोककृतामीश्वराणां महात्मनाम्
न पादरजसा तुल्यो मनस्ते तेषु वर्तताम् ६
विप्रियं ह्याचरन्मर्त्यो देवानां मृत्युमृच्छति
त्राहि मामनवद्याङ्गि वरयस्व सुरोत्तमान् ७
ततो वाष्पकलां वाचं दमयन्ती शुचिस्मिता
प्रव्याहरन्ती शनकैर्नलं राजानमब्रवीत् ८
अस्त्युपायो मया दृष्टो निरपायो नरेश्वर
येन दोषो न भविता तव राजन्कथंचन ९
त्वं चैव हि नरश्रेष्ठ देवाश्चाग्निपुरोगमाः
आयान्तु सहिताः सर्वे मम यत्र स्वयंवरः १०
ततोऽह लोकपालानां संनिधौ त्वां नरेश्वर
वरयिष्ये नरव्याघ्र नैवं दोषो भविष्यति ११

एवमुक्तस्तु वैदर्भ्या नलो राजा विशां पते
आजगाम पुनस्तत्र यत्र देवाः समागताः १२
तमपश्यंस्तथायान्तं लोकपालाः सहेश्वराः
दृष्ट्वा चैनं ततोऽपृच्छन्वृत्तान्तं सर्वमेव तत् १३
देवा ऊचुः
कच्चिद् दृष्टा त्वया राजन्दमयन्ती शुचिस्मिता
किमब्रवीच्च नः सर्वान्वद भूमिपतेऽनघ १४
नल उवाच
भवद्भिरहमादिष्टो दमयन्त्या निवेशनम्
प्रविष्टः सुमहाकक्ष्यं दण्डिभिः स्थविरैर्वृतम् १५
प्रविशन्तं च मां तत्र न कश्चिद् दृष्टवान्नरः
ऋते तां पार्थिवसुतां भवतामेव तेजसा १६
सख्यश्चास्या मया दृष्टास्ताभिश्चाप्युपलक्षितः
विस्मिताश्चाभवन्दृष्ट्वा सर्वा मां विबुधेश्वराः १७
वर्ण्यमानेषु च मया भवत्सु रुचिरानना
मामेव गतसंकल्पा वृणीते सुरसत्तमाः १८
अब्रवीच्चैव मां बाला आयान्तु सहिताः सुराः
त्वया सह नरश्रेष्ठ मम यत्र स्वयंवरः १९
तेषामहं संनिधौ त्वां वरयिष्ये नरोत्तम
एवं तव महाबाहो दोषो न भवितेति ह २०
एतावदेव विबुधा यथावृत्तमुदाहृतम्
मयाशेषं प्रमाणं तु भवन्तस्त्रिदशेश्वराः २१
इति श्रीमहाभारते आरण्यकपर्वणि त्रिपञ्चाशोऽध्यायः ५३

चतुःपञ्चाशोऽध्यायः

बृहदश्व उवाच
अथ काले शुभे प्राप्ते तिथौ पुण्ये क्षणे तथा
आजुहाव महीपालान्भीमो राजा स्वयंवरे १
तच्छ्रुत्वा पृथिवीपालाः सर्वे हृच्छयपीडिताः
त्वरिताः समुपाजग्मुर्दमयन्तीमभीप्सवः २

कनकस्तम्भरुचिरं तोरणेन विराजितम्
विविशुस्ते महारङ्गं नृपाः सिंहा इवाचलम् ३
तत्रासनेषु विविधेष्वासीनाः पृथिवीक्षितः
सुरभिस्रग्धराः सर्वे सुमृष्टमणिकुण्डलाः ४
तां राजसमितिं पूर्णां नागैर्भोगवतीमिव
संपूर्णां पुरुषव्याघ्रैर्व्याघ्रैर्गिरिगुहामिव ५
तत्र स्म पीना दृश्यन्ते बाहवः परिघोपमाः
आकारवन्तः सुश्लक्ष्णाः पञ्चशीर्षा इवोरगाः ६
सुकेशान्तानि चारूणि सुनासानि शुभानि च
मुखानि राज्ञां शोभन्ते नक्षत्राणि यथा दिवि ७
दमयन्ती ततो रङ्गं प्रविवेश शुभानना
मुष्णन्ती प्रभया राज्ञां चक्षूंषि च मनांसि च ८
तस्या गात्रेषु पतिता तेषां दृष्टिर्महात्मनाम्
तत्र तत्रैव सक्ताभून्न चचाल च पश्यताम् ९
ततः संकीर्त्यमानेषु राज्ञां नामसु भारत
ददर्श भैमी पुरुषान्पञ्च तुल्याकृतीनिव १०
तान्समीक्ष्य ततः सर्वान्निर्विशेषाकृतीन्स्थितान्
संदेहादथ वैदर्भी नाभ्यजानान्नलं नृपम्
यं यं हि ददृशे तेषां तं तं मेने नलं नृपम् ११
सा चिन्तयन्ती बुद्ध्याथ तर्कयामास भामिनी
कथं नु देवाञ्जानीयां कथं विद्यां नलं नृपम् १२
एवं संचिन्तयन्ती सा वैदर्भी भृशदुःखिता
श्रुतानि देवलिङ्गानि तर्कयामास भारत १३
देवानां यानि लिङ्गानि स्थविरेभ्यः श्रुतानि मे
तानीह तिष्ठतां भूमावेकस्यापि न लक्षये १४
सा विनिश्चित्य बहुधा विचार्य च पुनः पुनः
शरणं प्रति देवानां प्राप्तकालममन्यत १५
वाचा च मनसा चैव नमस्कारं प्रयुज्य सा
देवेभ्यः प्राञ्जलिर्भूत्वा वेपमानेदमब्रवीत् १६
हंसानां वचनं श्रुत्वा यथा मे नैषधो वृतः

पतित्वे तेन सत्येन देवास्तं प्रदिशन्तु मे १७
वाचा च मनसा चैव यथा नाभिचराम्यहम्
तेन सत्येन विबुधास्तमेव प्रदिशन्तु मे १८
यथा देवैः स मे भर्ता विहितो निषधाधिपः
तेन सत्येन मे देवास्तमेव प्रदिशन्तु मे १९
स्वं चैव रूपं पुष्यन्तु लोकपालाः सहेश्वराः
यथाहमभिजानीयां पुण्यश्लोकं नराधिपम् २०
निशम्य दमयन्त्यास्तत्करुणं परिदेवितम्
निश्चयं परमं तथ्यमनुरागं च नैषधे २१
मनोविशुद्धिं बुद्धिं च भक्तिं रागं च भारत
यथोक्तं चक्रिरे देवाः सामर्थ्यं लिङ्गधारणे २२
सापश्यद्विबुधान्सर्वानस्वेदान्स्तब्धलोचनान्
हृषितस्रग्रजोहीनान्स्थितानस्पृशतः क्षितिम् २३
छायाद्वितीयो म्लानस्रग्रजः स्वेदसमन्वितः
भूमिष्ठो नैषधश्चैव निमेषेण च सूचितः २४
सा समीक्ष्य ततो देवान्पुण्यश्लोकं च भारत
नैषधं वरयामास भैमी धर्मेण भारत २५
विलज्जमाना वस्त्रान्ते जग्राहायतलोचना
स्कन्धदेशेऽसृजच्चास्य स्रजं परमशोभनाम्
वरयामास चैवैनं पतित्वे वरवर्णिनी २६
ततो हा हेति सहसा शब्दो मुक्तो नराधिपैः
देवैर्महर्षिभिश्चैव साधु साध्विति भारत
विस्मितैरीरितः शब्दः प्रशंसद्भिर्नलं नृपम् २७
वृते तु नैषधे भैम्या लोकपाला महौजसः
प्रहृष्टमनसः सर्वे नलायाष्टौ वरान्ददुः २८
प्रत्यक्षदर्शनं यज्ञे गतिं चानुत्तमां शुभाम्
नैषधाय ददौ शक्रः प्रीयमाणः शचीपतिः २९
अग्निरात्मभवं प्रादाद्यत्र वाञ्छति नैषधः
लोकानात्मप्रभांश्चैव ददौ तस्मै हुताशनः ३०
यमस्त्वन्नरसं प्रादाद्धर्मे च परमां स्थितिम्

अपांपतिरपां भावं यत्र वाञ्छति नैषधः ३१
स्रजं चोत्तमगन्धाढ्यां सर्वे च मिथुनं ददुः
वरानेवं प्रदायास्य देवास्ते त्रिदिवं गताः ३२
पार्थिवाश्चानुभूयास्या विवाहं विस्मयान्विताः
दमयन्त्याः प्रमुदिताः प्रतिजग्मुर्यथागतम् ३३
अवाप्य नारीरत्नं तत्पुण्यश्लोकोऽपि पार्थिवः
रेमे सह तया राजा शच्येव बलवृत्रहा ३४
अतीव मुदितो राजा भ्राजमानोंऽशुमानिव
अरञ्जयत्प्रजा वीरो धर्मेण परिपालयन् ३५
ईजे चाप्यश्वमेधेन ययातिरिव नाहुषः
अन्यैश्च क्रतुभिर्धीमान्बहुभिश्चाप्तदक्षिणैः ३६
पुनश्च रमणीयेषु वनेषूपवनेषु च
दमयन्त्या सह नलो विजहारामरोपमः ३७
एवं स यजमानश्च विहरंश्च नराधिपः
ररक्ष वसुसंपूर्णां वसुधां वसुधाधिपः ३८
इति श्रीमहाभारते आरण्यकपर्वणि चतुःपञ्चाशोऽध्यायः ५४

पञ्चपञ्चाशोऽध्यायः

बृहदश्व उवाच
वृते तु नैषधे भैम्या लोकपाला महौजसः
यान्तो ददृशुरायान्तं द्वापरं कलिना सह १
अथाब्रवीत्कलिं शक्रः संप्रेक्ष्य बलवृत्रहा
द्वापरेण सहायेन कले ब्रूहि क्व यास्यसि २
ततोऽब्रवीत्कलिः शक्रं दमयन्त्याः स्वयंवरम्
गत्वाहं वरयिष्ये तां मनो हि मम तद्गतम् ३
तमब्रवीत्प्रहस्येन्द्रो निर्वृत्तः स स्वयंवरः
वृतस्तया नलो राजा पतिरस्मत्समीपतः ४
एवमुक्तस्तु शक्रेण कलिः कोपसमन्वितः
देवानामन्त्र्य तान्सर्वानुवाचेदं वचस्तदा ५
देवानां मानुषं मध्ये यत्सा पतिमविन्दत

ननु तस्या भवेन्न्याय्यं विपुलं दण्डधारणम् ६
एवमुक्ते तु कलिना प्रत्यूचुस्ते दिवौकसः
अस्माभिः समनुज्ञातो दमयन्त्या नलो वृतः ७
कश्च सर्वगुणोपेतं नाश्रयेत नलं नृपम्
यो वेद धर्मानखिलान्यथावच्चरितव्रतः ८
यस्मिन्सत्यं धृतिर्दानं तपः शौचं दमः शमः
ध्रुवाणि पुरुषव्याघ्रे लोकपालसमे नृपे ९
आत्मानं स शपेन्मूढो हन्याच्चात्मानमात्मना
एवंगुणं नलं यो वै कामयेच्छपितुं कले १०
कृच्छ्रे स नरके मज्जेदगाधे विपुलेऽप्लवे
एवमुक्त्वा कलि देवा द्वापरं च दिवं ययुः ११
ततो गतेषु देवेषु कलिर्द्वापरमब्रवीत्
संहर्तुं नोत्सहे कोपं नले वत्स्यामि द्वापर १२
भ्रंशयिष्यामि तं राज्यान्न भैम्या सह रंस्यते
त्वमप्यक्षान्समाविश्य कर्तुं साहाय्यमर्हसि १३
इति श्रीमहाभारते आरण्यकपर्वणि पञ्चपञ्चाशोऽध्यायः ५५

षट्पञ्चाशोऽध्यायः

बृहदश्व उवाच
एवं स समयं कृत्वा द्वापरेण कलि सह
आजगाम ततस्तत्र यत्र राजा स नैषधः १
स नित्यमन्तरप्रेक्षी निषधेष्ववसच्चिरम्
अथास्य द्वादशे वर्षे ददर्श कलिरन्तरम् २
कृत्वा मूत्रमुपस्पृश्य सन्ध्यामास्ते स्म नैषधः
अकृत्वा पादयोः शौचं तत्रैनं कलिराविशत् ३
स समाविश्य तु नलं समीपं पुष्करस्य ह
गत्वा पुष्करमाहेदमेहि दीव्य नलेन वै ४
अक्षद्यूते नलं जेता भवान्हि सहितो मया
निषधान्प्रतिपद्यस्व जित्वा राजन्नलं नृपम् ५
एवमुक्तस्तु कलिना पुष्करो नलमभ्ययात्

कलिश्चैव वृषो भूत्वा गवां पुष्करमभ्ययात् ६
आसाद्य तु नलं वीरं पुष्करः परवीरहा
दीव्यावेत्यब्रवीद्भ्राता वृषेणेति मुहुर्मुहुः ७
न चक्षमे ततो राजा समाह्वानं महामनाः
वैदर्भ्याः प्रेक्षमाणायाः पणकालममन्यत ८
हिरगयस्य सुवर्णस्य यानयुग्यस्य वाससाम्
आविष्टः कलिना द्यूते जीयते स्म नलस्तदा ९
तमक्षमदसंमत्तं सुहृदां न तु कश्चन
निवारणेऽभवच्छक्तो दीव्यमानमचेतसम् १०
ततः पौरजनः सर्वो मन्त्रिभिः सह भारत
राजानं द्रष्टुमागच्छन्निवारयितुमातुरम् ११
ततः सूत उपागम्य दमयन्त्यै न्यवेदयत्
एष पौरजनः सर्वो द्वारि तिष्ठति कार्यवान् १२
निवेद्यतां नैषधाय सर्वाः प्रकृतयः स्थिताः
अमृष्यमाणा व्यसनं राज्ञो धर्मार्थदर्शिनः १३
ततः सा बाष्पकलया वाचा दुःखेन कर्शिता
उवाच नैषधं भैमी शोकोपहतचेतना १४
राजन्पौरजनो द्वारि त्वां दिदृक्षुरवस्थितः
मन्त्रिभिः सहितः सर्वै राजभक्तिपुरस्कृतः
तं द्रष्टुमर्हसीत्येवं पुनः पुनरभाषत १५
तां तथा रुचिरापाङ्गीं विलपन्तीं सुमध्यमाम्
आविष्टः कलिना राजा नाभ्यभाषत किंचन १६
ततस्ते मन्त्रिणः सर्वे ते चैव पुरवासिनः
नायमस्तीति दुःखार्ता व्रीडिता जग्मुरालयान् १७
तथा तदभवद् द्यूतं पुष्करस्य नलस्य च
युधिष्ठिर बहून्मासान्पुगयश्लोकस्त्वजीयत १८
इति श्रीमहाभारते आरगयकपर्वणि षट्पञ्चाशोऽध्यायः ५६

## सप्तपञ्चाशोऽध्यायः

बृहदश्व उवाच

दमयन्ती ततो दृष्ट्वा पुरायश्लोकं नराधिपम्
उन्मत्तवदनुन्मत्ता देवने गतचेतसम् १
भयशोकसमाविष्टा राजन्भीमसुता ततः
चिन्तयामास तत्कार्यं सुमहत्पार्थिवं प्रति २
सा शङ्कमाना तत्पापं चिकीर्षन्ती च तत्प्रियम्
नलं च हृतसर्वस्वमुपलभ्येदमब्रवीत् ३
बृहत्सेने व्रजामात्यानानाय्य नलशासनात्
आचक्ष्व यद्धृतं द्रव्यमवशिष्टं च यद्वसु ४
ततस्ते मन्त्रिणः सर्वे विज्ञाय नलशासनम्
अपि नो भागधेयं स्यादित्युक्त्वा पुनराव्रजन् ५
तास्तु सर्वाः प्रकृतयो द्वितीयं समुपस्थिताः
न्यवेदयद्भीमसुता न च तत्प्रत्यनन्दत ६
वाक्यमप्रतिनन्दन्तं भर्तारमभिवीक्ष्य सा
दमयन्ती पुनर्वेश्म व्रीडिता प्रविवेश ह ७
निशम्य सततं चाक्षान्पुरायश्लोकपराङ्मुखान्
नलं च हृतसर्वस्वं धात्रीं पुनरुवाच ह ८
बृहत्सेने पुनर्गच्छ वार्ष्णेयं नलशासनात्
सूतमानय कल्याणि महत्कार्यमुपस्थितम् ९
बृहत्सेना तु तच्छ्रुत्वा दमयन्त्याः प्रभाषितम्
वार्ष्णेयमानयामास पुरुषैराप्तकारिभिः १०
वार्ष्णेयं तु ततो भैमी सान्त्वयञ्श्लक्ष्णया गिरा
उवाच देशकालज्ञा प्राप्तकालमनिन्दिता ११
जानीषे त्वं यथा राजा सम्यग्वृत्तः सदा त्वयि
तस्य त्वं विषमस्थस्य साहाय्यं कर्तुमर्हसि १२
यथा यथा हि नृपतिः पुष्करेणेह जीयते
तथा तथास्य द्यूते वै रागो भूयोऽभिवर्धते १३
यथा च पुष्करस्याक्षा वर्तन्ते वशवर्तिनः
तथा विपर्ययश्चापि नलस्याक्षेषु दृश्यते १४
सुहृत्स्वजनवाक्यानि यथावन्न शृणोति च
नूनं मन्ये न शेषोऽस्ति नैषधस्य महात्मनः १५

यत्र मे वचनं राजा नाभिनन्दन्ति मोहितः
शरणं त्वां प्रपन्नास्मि सारथे कुरु मद्वचः
न हि मे शुध्यते भावः कदाचिद्विनशेदिति १६
नलस्य दयितानश्वान्योजयित्वा महाजवान्
इदमारोप्य मिथुनं कुण्डिनं यातुमर्हसि १७
मम ज्ञातिषु निक्षिप्य दारकौ स्यन्दनं तथा
अश्वांश्चैतान्यथाकामं वस वान्यत्र गच्छ वा १८
दमयन्त्यास्तु तद्वाक्यं वार्ष्णेयो नलसारथिः
न्यवेदयदशेषेण नलामात्येषु मुख्यशः १९
तैः समेत्य विनिश्चित्य सोऽनुज्ञातो महीपते
ययौ मिथुनमारोप्य विदर्भांस्तेन वाहिना २०
हयांस्तत्र विनिक्षिप्य सूतो रथवरं च तम्
इन्द्रसेनां च तां कन्यामिन्द्रसेनं च बालकम् २१
आमन्त्र्य भीमं राजानमार्तः शोचन्नलं नृपम्
अटमानस्ततोऽयोध्यां जगाम नगरीं तदा २२
ऋतुपर्णं स राजानमुपतस्थे सुदुःखितः
भृतिं चोपययौ तस्य सारथ्येन महीपतेः २३
इति श्रीमहाभारते आरण्यकपर्वणि सप्तपञ्चाशोऽध्यायः ५७

## अष्टपञ्चाशोऽध्यायः

बृहदश्व उवाच
ततस्तु याते वार्ष्णेये पुण्यश्लोकस्य दीव्यतः
पुष्करेण हृतं राज्यं यच्चान्यद्वसु किंचन १
हृतराज्यं नलं राजन्प्रहसन्पुष्करोऽब्रवीत्
द्यूतं प्रवर्ततां भूयः प्रतिपाणोऽस्ति कस्तव २
शिष्टा ते दमयन्त्येका सर्वमन्यद्धृतं मया
दमयन्त्याः पणः साधु वर्ततां यदि मन्यसे ३
पुष्करेणैवमुक्तस्य पुण्यश्लोकस्य मन्युना
व्यदीर्यतेव हृदयं न चैनं किंचिदब्रवीत् ४
ततः पुष्करमालोक्य नलः परममन्युमान्

उत्सृज्य सर्वगात्रेभ्यो भूषणानि महायशाः ५
एकवासा असंवीतः सुहृच्छोकविवर्धनः
निश्चक्राम तदा राजा त्यक्त्वा सुविपुलां श्रियम् ६
दमयन्त्येकवस्त्रा तं गच्छन्तं पृष्ठतोऽन्वियात्
स तया वाह्यतः सार्धं त्रिरात्रं नैषधोऽवसत् ७
पुष्करस्तु महाराज घोषयामास वै पुरे
नले यः सम्यगातिष्ठेत्स गच्छेद्वध्यतां मम ८
पुष्करस्य तु वाक्येन तस्य विद्वेषणेन च
पौरा न तस्मिन्सत्कारं कृतवन्तो युधिष्ठिर ९
स तथा नगराभ्याशे सत्कारार्हो न सत्कृतः
त्रिरात्रमुषितो राजा जलमात्रेण वर्तयन् १०
क्षुधा संपीड्यमानस्तु नलो बहुतिथेऽहनि
अपश्यच्छकुनान्कांश्चिद्धिरण्यसदृशच्छदान् ११
स चिन्तयामास तदा निषधाधिपतिर्बली
अस्ति भक्षो ममाद्यायं वसुचेदं भविष्यति १२
ततस्तानन्तरीयेण वाससा समवास्तृणोत्
तस्यान्तरीयमादाय जग्मुः सर्वे विहायसा १३
उत्पतन्तः खगास्ते तु वाक्यमाहुस्तदा नलम्
दृष्ट्वा दिग्वाससं भूमौ स्थितं दीनमधोमुखम् १४
वयमक्षाः सुदुर्बुद्धे तव वासो जिहीर्षवः
आगता न हि नः प्रीतिः सवाससि गते त्वयि १५
तान्समीक्ष्यगतानक्षानात्मानं च विवाससम्
पुण्यश्लोकस्ततो राजा दमयन्तीमथाब्रवीत् १६
येषां प्रकोपादैश्वर्यात्प्रच्युतोऽहमनिन्दिते
प्राणयात्रां न विन्दे च दुःखितः क्षुधयार्दितः १७
येषां कृते न सत्कारमकुर्वन्मयि नैषधाः
त इमे शकुना भूत्वा वासोऽप्यपहरन्ति मे १८
वैषम्यं परमं प्राप्तो दुःखितो गतचेतनः
भर्ता तेऽह निबोधेदं वचनं हितमात्मनः १९
एते गच्छन्ति बहवः पन्थानो दक्षिणापथम्

अवन्तीमृक्षवन्तं च समतिक्रम्य पर्वतम् २०
एष विन्ध्यो महाशैलः पयोष्णी च समुद्रगा
आश्रमाश्च महर्षीणाममी पुष्पफलान्विताः २१
एष पन्था विदर्भाणामयं गच्छति कोसलान्
अतः परं च देशोऽय दक्षिणे दक्षिणापथः २२
ततः सा वाष्पकलया वाचा दुःखेन कर्शिता
उवाच दमयन्ती तं नैषधं करुणं वचः २३
उद्वेपते मे हृदयं सीदन्त्यङ्गानि सर्वशः
तव पार्थिव संकल्पं चिन्तयन्त्याः पुनः पुनः २४
हृतराज्यं हृतधनं विवस्त्रं क्षुच्छ्रमान्वितम्
कथमुत्सृज्य गच्छेयमहं त्वां विजने वने २५
श्रान्तस्य ते क्षुधार्तस्य चिन्तयानस्य तत्सुखम्
वने घोरे महाराज नाशयिष्यामि ते क्लमम् २६
न च भार्यासमं किंचिद्विद्यते भिषजां मतम्
औषधं सर्वदुःखेषु सत्यमेतद्ब्रवीमि ते २७
नल उवाच
एवमेतद्यथात्थ त्वं दमयन्ति सुमध्यमे
नास्ति भार्यासमं मित्रं नरस्यार्तस्य भेषजम् २८
न चाहं त्यक्तुकामस्त्वां किमर्थं भीरु शङ्कसे
त्यजेयमहमात्मानं न त्वेव त्वामनिन्दिते २९
दमयन्त्युवाच
यदि मां त्वं महाराज न विहातुमिहेच्छसि
तत्किमर्थं विदर्भाणां पन्थाः समुपदिश्यते ३०
अवैमि चाहं नृपते न त्वं मां त्यक्तुमर्हसि
चेतसा त्वपकृष्टेन मां त्यजेथा महीपते ३१
पन्थानं हि ममाभीक्ष्णमाख्यासि नरसत्तम
अतोनिमित्तं शोकं मे वर्धयस्यमरप्रभ ३२
यदि चायमभिप्रायस्तव राजन्व्रजेदिति
सहितावेव गच्छावो विदर्भान्यदि मन्यसे ३३
विदर्भराजस्तत्र त्वां पूजयिष्यति मानद

तेन त्वं पूजितो राजन्सुखं वत्स्यसि नो गृहे ३४
इति श्रीमहाभारते आरण्यकपर्वणि अष्टपञ्चाशोऽध्यायः ५८

## एकोनषष्टितमोऽध्यायः

नल उवाच
यथा राज्यं पितुस्ते तत्तथा मम न संशयः
न तु तत्र गमिष्यामि विषमस्थः कथंचन १
कथं समृद्धो गत्वाहं तव हर्षविवर्धनः
परिद्यूनो गमिष्यामि तव शोकविवर्धनः २
बृहदश्व उवाच
इति ब्रुवन्नलो राजा दमयन्तीं पुनः पुनः
सान्त्वयामास कल्याणीं वाससोऽर्धेन संवृताम् ३
तावेकवस्त्रसंवीतावटमानावितस्ततः
क्षुत्पिपासापरिश्रान्तौ सभां कांचिदुपेयतुः ४
तां सभामुपसंप्राप्य तदा स निषधाधिपः
वैदर्भ्या सहितो राजा निषसाद महीतले ५
स वै विवस्त्रो मलिनो विकचः पांसुगुण्ठितः
दमयन्त्या सह श्रान्तः सुष्वाप धरणीतले ६
दमयन्त्यपि कल्याणी निद्रयापहृता ततः
सहसा दुःखमासाद्य सुकुमारी तपस्विनी ७
सुप्तायां दमयन्त्यां तु नलो राजा विशां पते
शोकोन्मथितचित्तात्मा न स्म शेते यथा पुरा ८
स तद्राज्यापहरणं सुहृत्त्यागं च सर्वशः
वने च तं परिध्वंसं प्रेक्ष्य चिन्तामुपेयिवान् ९
किं नु मे स्यादिदं कृत्वा किं नु मे स्यादकुर्वतः
किं नु मे मरणं श्रेयः परित्यागो जनस्य वा १०
मामियं ह्यनुरक्तेदं दुःखमाप्नोति मत्कृते
मद्विहीना त्वियं गच्छेत्कदाचित्स्वजनं प्रति ११
मया निःसशयं दुःखमियं प्राप्स्यत्यनुत्तमा
उत्सर्गे संशयः स्यात्तु विन्देतापि सुखं क्वचित् १२

स विनिश्चित्य बहुधा विचार्य च पुनः पुनः
उत्सर्गेऽमन्यत श्रेयो दमयन्त्या नराधिपः १३
सोऽवस्त्रतामात्मनश्च तस्याश्चाप्येकवस्त्रताम्
चिन्तयित्वाध्यगाद्राजा वस्त्रार्धस्यावकर्तनम् १४
कथं वासो विकर्तेयं न च बुध्येत मे प्रिया
चिन्त्यैवं नैषधो राजा सभां पर्यचरत्तदा १५
परिधावन्नथ नल इतश्चेतश्च भारत
आससाद सभोद्देशे विकोशं खड्गमुत्तमम् १६
तेनार्धं वाससश्छित्वा निवस्य च परन्तपः
सुप्तामुत्सृज्य वैदर्भीं प्राद्रवद्गतचेतनः १७
ततो निबद्धहृदयः पुनरागम्य तां सभाम्
दमयन्तीं तथा दृष्ट्वा रुरोद निषधाधिपः १८
यां न वायुर्न चादित्यः पुरा पश्यति मे प्रियाम्
सेयमद्य सभामध्ये शेते भूमावनाथवत् १९
इयं वस्त्रावकर्तेन संवीता चारुहासिनी
उन्मत्तेव वरारोहा कथं बुद्ध्वा भविष्यति २०
कथमेका सती भैमी मया विरहिता शुभा
चरिष्यति वने घोरे मृगव्यालनिषेविते २१
गत्वा गत्वा नलो राजा पुनरेति सभां मुहुः
आकृष्यमाणः कलिना सौहृदेनापकृष्यते २२
द्विधेव हृदयं तस्य दुःखितस्याभवत्तदा
दोलेव मुहुरायाति याति चैव सभां मुहुः २३
सोऽपकृष्टस्तु कलिना मोहितःप्राद्रवन्नलः
सुप्तामुत्सृज्य तां भार्यां विलप्य करुणं बहु २४
नष्टात्मा कलिना स्पृष्टस्तत्तद्विगणयन्नृपः
जगामैव वने शून्ये भार्यामुत्सृज्य दुःखितः २५

इति श्रीमहाभारते आरण्यकपर्वणि एकोनषष्टितमोऽध्यायः ५९

## षष्टितमोऽध्यायः

बृहदश्व उवाच

अपक्रान्ते नले राजन्दमयन्ती गतक्लमा
अबुध्यत वरारोहा संत्रस्ता विजने वने १
सापश्यमाना भर्तारं दुःखशोकसमन्विता
प्राक्रोशदुच्चैः संत्रस्ता महाराजेति नैषधम् २
हा नाथ हा महाराज हा स्वामिन्किं जहासि माम्
हा हतास्मि विनष्टास्मि भीतास्मि विजने वने ३
ननु नाम महाराज धर्मज्ञः सत्यवागसि
कथमुक्त्वा तथासत्यं सुप्तामुत्सृज्य मां गतः ४
कथमुत्सृज्य गन्तासि वश्यां भार्यामनुव्रताम्
विशेषतोऽनपकृते परेणापकृते सति ५
शक्यसे ता गिरः सत्याः कर्तुं मयि नरेश्वर
यास्त्वया लोकपालानां संनिधौ कथिताः पुरा ६
पर्याप्तः परिहासोऽयमेतावान्पुरुषर्षभ
भीताहमस्मि दुर्धर्ष दर्शयात्मानमीश्वर ७
दृश्यसे दृश्यसे राजन्नेष तिष्ठसि नैषध
आवार्य गुल्मैरात्मानं किं मां न प्रतिभाषसे ८
नृशंसं बत राजेन्द्र यन्मामेवंगतामिह
विलपन्तीं समालिङ्ग्य नाश्वासयसि पार्थिव ९
न शोचाम्यहमात्मानं न चान्यदपि किंचन
कथं नु भवितास्येक इति त्वां नृप शोचिमि १०
कथं नु राजंस्तृषितः क्षुधितः श्रमकर्शितः
सायाह्ने वृक्षमूलेषु मामपश्यन्भविष्यसि ११
ततः सा तीव्रशोकार्ता प्रदीप्तेव च मन्युना
इतश्चेतश्च रुदती पर्यधावत दुःखिता १२
मुहुरुत्पतते बाला मुहुः पतति विह्वला
मुहुरालीयते भीता मुहुः क्रोशति रोदिति १३
सा तीव्रशोकसंतप्ता मुहुर्निःश्वस्य विह्वला
उवाच भैमी निष्क्रम्य रोदमाना पतिव्रता १४
यस्याभिशापाद्दुःखार्तो दुःखं विन्दति नैषधः
तस्य भूतस्य तद्दुःखाद्दुःखमभ्यधिकं भवेत् १५

अपापचेतसं पापो य एवं कृतवान्नलम्
तस्माद्दुःखतरं प्राप्य जीवत्वसुखजीविकाम् १६
एवं तु विलपन्ती सा राज्ञो भार्या महात्मनः
अन्वेषति स्म भर्तारं वने श्वापदसेविते १७
उन्मत्तवद्भीमसुता विलपन्ती ततस्ततः
हा हा राजन्निति मुहुरितश्चेतश्च धावति १८
तां शुष्यमाणामत्यर्थं कुररीमिव वाशतीम्
करुणं बहु शोचन्तीं विलपन्तीं मुहुर्मुहुः १९
सहसाभ्यागतां भैमीमभ्याशपरिवर्तिनीम्
जग्राहाजगरो ग्राहो महाकायः क्षुधान्वितः २०
सा ग्रस्यमाना ग्राहेण शोकेन च पराजिता
नात्मानं शोचति तथा यथा शोचति नैषधम् २१
हा नाथ मामिह वने ग्रस्यमानामनाथवत्
ग्राहेणानेन विपिने किमर्थं नाभिधावसि २२
कथं भविष्यसि पुनर्मामनुस्मृत्य नैषध
पापान्मुक्तः पुनर्लब्ध्वा बुद्धिं चेतो धनानि च २३
श्रान्तस्य ते क्षुधार्तस्य परिग्लानस्य नैषध
कः श्रमं राजशार्दूल नाशयिष्यति मानद २४
तामकस्मान्मृगव्याधो विचरन्गहने वने
आक्रन्दतीमुपाश्रुत्य जवेनाभिससार ह २५
तां स दृष्ट्वा यथा ग्रस्तामुरगेणायतेक्षणाम्
त्वरमाणो मृगव्याधः समभिक्रम्य वेगितः २६
मुखतः पाटयामास शस्त्रेण निशितेन ह
निर्विचेष्टं भुजङ्गं तं विशस्य मृगजीवनः २७
मोक्षयित्वा च तां व्याधः प्रक्षाल्य सलिलेन च
समाश्वास्य कृताहारामथ पप्रच्छ भारत २८
कस्य त्वं मृगशावाक्षि कथं चाभ्यागता वनम्
कथं चेदं महत्कृच्छ्रं प्राप्तवत्यसि भामिनि २९
दमयन्ती तथा तेन पृच्छ्यमाना विशां पते
सर्वमेतद्यथावृत्तमाचचक्षेऽस्य भारत ३०

तामर्धवस्त्रसंवीतां पीनश्रोणिपयोधराम्
सुकुमारानवद्याङ्गीं पूर्णचन्द्रनिभाननाम् ३१
अरालपक्ष्मनयनां तथा मधुरभाषिणीम्
लक्षयित्वा मृगव्याधः कामस्य वशमेयिवान् ३२
तामथ श्लक्ष्णया वाचा लुब्धको मृदुपूर्वया
सान्त्वयामास कामार्तस्तदबुध्यत भामिनी ३३
दमयन्ती तु तं दुष्टमुपलभ्य पतिव्रता
तीव्ररोषसमाविष्टा प्रजज्वालेव मन्युना ३४
स तु पापमतिः क्षुद्रः प्रधर्षयितुमातुरः
दुर्धर्षां तर्कयामास दीप्तामग्निशिखामिव ३५
दमयन्ती तु दुःखार्ता पतिराज्यविनाकृता
अतीतवाक्पथे काले शशापैनं रुषा किल ३६
यथाहं नैषधादन्यं मनसापि न चिन्तये
तथायं पततां क्षुद्रः परासुर्मृगजीवनः ३७
उक्तमात्रे तु वचने तया स मृगजीवनः
व्यसुः पपात मेदिन्यामग्निदग्ध इव द्रुमः ३८
इति श्रीमहाभारते आरण्यकपर्वणि षष्टितमोऽध्यायः ६०

## एकषष्टितमोऽध्यायः

बृहदश्व उवाच
सा निहत्य मृगव्याधं प्रतस्थे कमलेक्षणा
वनं प्रतिभयं शून्यं झिल्लिकागणनादितम् १
सिंहव्याघ्रवराहर्क्षरुरुद्वीपिनिषेवितम्
नानापक्षिगणाकीर्णं म्लेच्छतस्करसेवितम् २
शालवेणुधवाश्वत्थतिन्दुकेंगुदकिंशुकैः
अर्जुनारिष्टसंछन्नं चन्दनैश्च सशाल्मलैः ३
जम्ब्वाम्रलोध्रखदिरशाकवेत्रसमाकुलम्
काश्मर्यामलकप्लक्षकदम्बोदुम्बरावृतम् ४
बदरीबिल्वसंछन्नं न्यग्रोधैश्च समाकुलम्
प्रियालतालखर्जूरहरीतकबिभीतकैः ५

नानाधातुशतैर्नद्धान्विविधानपि चाचलान्
निकुञ्जान्पक्षिसंघुष्टान्दरीश्चाद्भुतदर्शनाः
नदीः सरांसि वापीश्च विविधांश्च मृगद्विजान् ६
सा बहून्भीमरूपांश्च पिशाचोरगराक्षसान्
पल्वलानि तडागानि गिरिकूटानि सर्वशः
सरितः सागरांश्चैव ददर्शाद्भुतदर्शनान् ७
यूथशो ददृशे चात्र विदर्भाधिपनन्दिनी
महिषान्वराहान्गोमायूनृक्षवानरपन्नगान् ८
तेजसा यशसा स्थित्या श्रिया च परया युता
वैदर्भी विचरत्येका नलमन्वेषती तदा ९
नाबिभ्यत्सा नृपसुता भैमी तत्राथ कस्यचित्
दारुणामटवीं प्राप्य भर्तृव्यसनकर्शिता १०
विदर्भतनया राजन्विललाप सुदुःखिता
भर्तृशोकपरीताङ्गी शिलातलसमाश्रिता ११
दमयन्त्युवाच
सिंहोरस्क महाबाहो निषधानां जनाधिप
क्व नु राजन्गतोऽसीह त्यक्त्वा मां निर्जने वने १२
अश्वमेधादिभिर्वीर क्रतुभिः स्वाप्तदक्षिणैः
कथमिष्ट्वा नरव्याघ्र मयि मिथ्या प्रवर्तसे १३
यत्त्वयोक्तं नरव्याघ्र मत्समक्षं महाद्युते
कर्तुमर्हसि कल्याण तदृतं पार्थिवर्षभ १४
यथोक्तं विहगैर्हंसैः समीपे तव भूमिप
मत्सकाशे च तैरुक्तं तदवेक्षितुमर्हसि १५
चत्वार एकतो वेदाः साङ्गोपाङ्गाः सविस्तराः
स्वधीता मानवश्रेष्ठ सत्यमेकं किलैकतः १६
तस्मादर्हसि शत्रुघ्न सत्यं कर्तुं नरेश्वर
उक्तवानसि यद्वीर मत्सकाशे पुरा वचः १७
हा वीर ननु नामाहमिष्टा किल तवानघ
अस्यामटव्यां घोरायां किं मां न प्रतिभाषसे १८
भर्त्सयत्येष मां रौद्रो व्यात्तास्यो दारुणाकृतिः

अरण्यराट्क्षुधाविष्टः किं मां न त्रातुमर्हसि १९
न मे त्वदन्या सुभगे प्रिया इत्यब्रवीस्तदा
तामृतां कुरु कल्याण पुरोक्तां भारतीं नृप २०
उन्मत्तां विलपन्तीं मां भार्यामिष्टां नराधिप
ईप्सितामीप्सितो नाथ किं मां न प्रतिभाषसे २१
कृशां दीनां विवर्णां च मलिनां वसुधाधिप
वस्त्रार्धप्रावृतामेकां विलपन्तीमनाथवत् २२
यूथभ्रष्टामिवैकां मां हरिणीं पृथुलोचन
न मानयसि मानार्ह रुदतीमरिकर्शन २३
महाराज महारण्ये मामिहैकाकिनीं सतीम्
आभाषमाणां स्वां पत्नीं किं मां न प्रतिभाषसे २४
कुलशीलोपसंपन्नं चारुसर्वाङ्गशोभनम्
नाद्य त्वामनुपश्यामि गिरावस्मिन्नरोत्तम
वने चास्मिन्महाघोरे सिंहव्याघ्रनिषेविते २५
शयानमुपविष्टं वा स्थितं वा निषधाधिप
प्रस्थितं वा नरश्रेष्ठ मम शोकविवर्धन २६
कं नु प्रच्छामि दुःखार्ता त्वदर्थे शोककर्शिता
कच्चिद्दृष्टस्त्वयारण्ये संगत्येह नलो नृपः २७
को नु मे कथयेदद्य वनेऽस्मिन्विष्ठितं नलम्
अभिरूपं महात्मानं परव्यूहविनाशनम् २८
यमन्वेषसि राजानं नलं पद्मनिभेक्षणम्
अयं स इति कस्याद्य श्रोष्यामि मधुरां गिरम् २९
अरण्यराडयं श्रीमांश्चतुर्दंष्ट्रो महाहनुः
शार्दूलोऽभिमुखः प्रैति पृच्छाम्येनमशंकिता ३०
भवान्मृगाणामधिपस्त्वमस्मिन्कानने प्रभुः
विदर्भराजतनयां दमयन्तीति विद्धि माम् ३१
निषधाधिपतेर्भार्यां नलस्यामित्रघातिनः
पतिमन्वेषतीमेकां कृपणां शोककर्शिताम्
आश्वासय मृगेन्द्रेह यदि दृष्टस्त्वया नलः ३२
अथ वारण्यनृपते नलं यदि न शंससि

मामदस्व मृगश्रेष्ठ विशोकां कुरु दुःखिताम् ३३
श्रुत्वारण्ये विलपितं ममैष मृगराट् स्वयम्
यात्येतां मृष्टसलिलामापगां सागरंगमाम् ३४
इमं शिलोच्चयं पुण्यं शृङ्गैर्बहुभिरुच्छ्रितैः
विराजद्भिर्दिवस्पृग्भिर्नैकवर्णैर्मनोरमैः ३५
नानाधातुसमाकीर्णं विविधोपलभूषितम्
अस्यारण्यस्य महतः केतुभूतमिवोच्छ्रितम् ३६
सिंहशार्दूलमातंगवराहर्क्षमृगायुतम्
पतत्रिभिर्बहुविधैः समन्तादनुनादितम् ३७
किंशुकाशोकबकुलपुंनागैरुपशोभितम्
सरिद्भिः सविहङ्गाभिः शिखरैश्चोपशोभितम्
गिरिराजमिमं तावत्पृच्छामि नृपतिं प्रति ३८
भगवन्नचलश्रेष्ठ दिव्यदर्शन विश्रुत
शरण्य बहुकल्याण नमस्तेऽस्तु महीधर ३९
प्रणमे त्वाभिगम्याहं राजपुत्रीं निबोध माम्
राज्ञः स्नुषां राजभार्यां दमयन्तीति विश्रुताम् ४०
राजा विदर्भाधिपतिः पिता मम महारथः
भीमो नाम क्षितिपतिश्चातुर्वर्ण्यस्य रक्षिता ४१
राजसूयाश्वमेधानां क्रतूनां दक्षिणावताम्
आहर्ता पार्थिवश्रेष्ठः पृथुचार्वञ्चितेक्षणः ४२
ब्रह्मण्यः साधुवृत्तश्च सत्यवागनसूयकः
शीलवान्सुसमाचारः पृथुश्रीर्धर्मविच्छुचिः ४३
सम्यग्गोप्ता विदर्भाणां निर्जितारिगणः प्रभुः
तस्य मां विद्धि तनयां भगवंस्त्वामुपस्थिताम् ४४
निषधेषु महाशैल श्वशुरो मे नृपोत्तमः
सुगृहीतनामा विख्यातो वीरसेन इति स्म ह ४५
तस्य राज्ञः सुतो वीरः श्रीमान्सत्यपराक्रमः
क्रमप्राप्तं पितुः स्वं यो राज्यं समनुशास्ति ह ४६
नलो नामारिदमनः पुण्यश्लोक इति श्रुतः
ब्रह्मण्यो वेदविद्वाग्मी पुण्यकृत्सोमपोऽग्निचित् ४७

यष्टा दाता च योद्धा च सम्यक्चैव प्रशासिता
तस्य मामचलश्रेष्ठ विद्धि भार्यामिहागताम् ४८
त्यक्तश्रियं भर्तृहीनामनाथां व्यसनान्विताम्
अन्वेषमाणां भर्तारं तं वै नरवरोत्तमम् ४९
खमुल्लिखद्भिरेतैर्हि त्वया शृङ्गशतैर्नृपः
कच्चिद् दृष्टोऽचलश्रेष्ठ वनेऽस्मिन्दारुणे नलः ५०
गजेन्द्रविक्रमो धीमान्दीर्घबाहुरमर्षणः
विक्रान्तः सत्यवाग्धीरो भर्ता मम महायशाः
निषधानामधिपतिः कच्चिद् दृष्टस्त्वया नलः ५१
किं मां विलपतीमेकां पर्वतश्रेष्ठ दुःखिताम्
गिरा नाश्वासयस्यद्य स्वां सुतामिव दुःखिताम् ५२
वीर विक्रान्त धर्मज्ञ सत्यसन्ध महीपते
यद्यस्यस्मिन्वने राजन्दर्शयात्मानमात्मना ५३
कदा नु स्निग्धगम्भीरां जीमूतस्वनसंनिभाम्
श्रोष्यामि नैषधस्याहं वाचंताममृतोपमाम् ५४
वैदर्भीत्येव कथितां शुभां राज्ञो महात्मनः
आम्नायसारिणीमृद्धां मम शोकनिबर्हिणीम् ५५
इति सा तं गिरिश्रेष्ठमुक्त्वा पार्थिवनन्दिनी
दमयन्ती ततो भूयो जगाम दिशमुत्तराम् ५६
सा गत्वा त्रीनहोरात्रान्ददर्श परमाङ्गना
तापसारण्यमतुलं दिव्यकाननदर्शनम् ५७
वसिष्ठभृग्वत्रिसमैस्तापसैरुपशोभितम्
नियतैः संयताहारैर्दमशौचसमन्वितैः ५८
अब्भक्षैर्वायुभक्षैश्च पत्राहारैस्तथैव च
जितेन्द्रियैर्महाभागैः स्वर्गमार्गदिदृक्षुभिः ५९
वल्कलाजिनसंवीतैर्मुनिभिः संयतेन्द्रियैः
तापसाध्युषितं रम्यं ददर्शाश्रममण्डलम् ६०
सा दृष्ट्वैवाश्रमपदं नानामृगनिषेवितम्
शाखामृगगणैश्चैव तापसैश्च समन्वितम् ६१
सुभ्रूः सुकेशी सुश्रोणी सुकुचा सुद्विजानना

वर्चस्विनी सुप्रतिष्ठा स्वञ्चितोद्यतगामिनी ६२
सा विवेशाश्रमपदं वीरसेनसुतप्रिया
योषिद्रत्नं महाभागा दमयन्ती मनस्विनी ६३
साभिवाद्य तपोवृद्धान्विनयावनता स्थिता
स्वागतं त इति प्रोक्ता तैः सर्वैस्तापसैश्च सा ६४
पूजां चास्या यथान्यायं कृत्वा तत्र तपोधनाः
आस्यतामित्यथोचुस्ते ब्रूहि किं करवामहे ६५
तानुवाच वरारोहा कच्चिद्भगवतामिह
तपस्यग्निषु धर्मेषु मृगपक्षिषु चानघाः
कुशलं वो महाभागाः स्वधर्माचरणेषु च ६६
तैरुक्ता कुशलं भद्रे सर्वत्रेति यशस्विनी
ब्रूहि सर्वानवद्याङ्गि का त्वं किं च चिकीर्षसि ६७
दृष्ट्वैव ते परं रूपं द्युतिं च परमामिह
विस्मयो नः समुत्पन्नः समाश्वसिहि मा शुचः ६८
अस्यारगयस्य महती देवता वा महीभृतः
अस्या नु नद्याः कल्याणि वद सत्यमनिन्दिते ६९
साब्रवीत्तानृषीन्नाहमरगयस्यास्य देवता
न चाप्यस्य गिरेर्विप्रा न नद्या देवताप्यहम् ७०
मानुषीं मां विजानीत यूयं सर्वे तपोधनाः
विस्तरेणाभिधास्यामि तन्मे शृणुत सर्वशः ७१
विदर्भेषु महीपालो भीमो नाम महाद्युतिः
तस्य मां तनयां सर्वे जानीत द्विजसत्तमाः ७२
निषधाधिपतिर्धीमान्नलो नाम महायशाः
वीरः संग्रामजिद्विद्वान्मम भर्ता विशां पतिः ७३
देवताभ्यर्चनपरो द्विजातिजनवत्सलः
गोप्ता निषधवंशस्य महाभागो महाद्युतिः ७४
सत्यवाग्धर्मवित्प्राज्ञः सत्यसंधोऽरिमर्दनः
ब्रह्मगयो दैवतपरः श्रीमान्परपुरञ्जयः ७५
नलो नाम नृपश्रेष्ठो देवराजसमद्युतिः
मम भर्ता विशालाक्षः पूर्णेन्दुवदनोऽरिहा ७६

आहर्ता क्रतुमुख्यानां वेदवेदाङ्गपारगः
सपत्नानां मृधे हन्ता रविसोमसमप्रभः ७७
स कैश्चिन्निकृतिप्रज्ञैरकल्याणैर्नराधमैः
आहूय पृथिवीपालः सत्यधर्मपरायणः
देवने कुशलैर्जिह्मैर्जितो राज्यं वसूनि च ७८
तस्य मामवगच्छध्वं भार्यां राजर्षभस्य वै
दमयन्तीति विख्यातां भर्तृदर्शनलालसाम् ७९
सा वनानि गिरींश्चैव सरांसि सरितस्तथा
पल्वलानि च रम्याणि तथारण्यानि सर्वशः ८०
अन्वेषमाणा भर्तारं नलं रणविशारदम्
महात्मानं कृतास्त्रं च विचरामीह दुःखिता ८१
कच्चिद्भगवतां पुण्यं तपोवनमिदं नृपः
भवेत्प्राप्तो नलो नाम निषधानां जनाधिपः ८२
यत्कृतेऽहमिदं विप्राः प्रपन्ना भृशदारुणम्
वनं प्रतिभयं घोरं शार्दूलमृगसेवितम् ८३
यदि कैश्चिदहोरात्रैर्न द्रक्ष्यामि नलं नृपम्
आत्मानं श्रेयसा योक्ष्ये देहस्यास्य विमोचनात् ८४
को नु मे जीवितेनार्थस्तमृते पुरुषर्षभम्
कथं भविष्याम्यद्याहं भर्तृशोकाभिपीडिता ८५
एवं विलपतीमेकामरण्ये भीमनन्दिनीम्
दमयन्तीमथोचुस्ते तापसाः सत्यवादिनः ८६
उदर्कस्तत्र कल्याणि कल्याणो भविता शुभे
वयं पश्याम तपसा क्षिप्रं द्रक्ष्यसि नैषधम् ८७
निषधानामधिपतिं नलं रिपुनिघातिनम्
भैमि धर्मभृतां श्रेष्ठं द्रक्ष्यसे विगतज्वरम् ८८
विमुक्तं सर्वपापेभ्यः सर्वरत्नसमन्वितम्
तदेव नगरश्रेष्ठं प्रशासन्तमरिन्दमम् ८९
द्विषतां भयकर्तारं सुहृदां शोकनाशनम्
पतिं द्रक्ष्यसि कल्याणि कल्याणाभिजनं नृपम् ९०
एवमुक्त्वा नलस्येष्टां महिषीं पार्थिवात्मजाम्

अन्तर्हितास्तापसास्ते साग्निहोत्राश्रमास्तदा ९१
सा दृष्ट्वा महदाश्चर्यं विस्मिता अभवत्तदा
दमयन्त्यनवद्याङ्गी वीरसेननृपस्नुषा ९२
किं नु स्वप्नो मया दृष्टः कोऽय विधिरिहाभवत्
क्व नु ते तापसाः सर्वे क्व तदाश्रममगडलम् ९३
क्व सा पुगयजला रम्या नानाद्विजनिषेविता
नदी ते च नगा हृद्याः फलपुष्पोपशोभिताः ९४
ध्यात्वा चिरं भीमसुता दमयन्ती शुचिस्मिता
भर्तृशोकपरा दीना विवर्णवदनाभवत् ९५
सा गत्वाथापरां भूमिं बाष्पसंदिग्धया गिरा
विललापाश्रुपूर्णाच्ची दृष्ट्वाशोकतरुं ततः ९६
उपगम्य तरुश्रेष्ठमशोकं पुष्पितं तदा
पल्लवापीडितं हृद्यं विहंगैरनुनादितम् ९७
अहो बतायमगमः श्रीमानस्मिन्वनान्तरे
आपीडैर्बहुभिर्भाति श्रीमान्द्रमिडराडिव ९८
विशोकां कुरु मां चिप्रमशोक प्रियदर्शन
वीतशोकभयाबाधं कच्चित्त्वं दृष्टवान्नृपम् ९९
नलं नामारिदमनं दमयन्त्याः प्रियं पतिम्
निषधानामधिपतिं दृष्टवानसि मे प्रियम् १००
एकवस्त्रार्धसंवीतं सुकुमारतनुत्वचम्
व्यसनेनार्दितं वीरमरगयमिदमागतम् १०१
यथा विशोका गच्छेयमशोकनग तत्कुरु
सत्यनामा भवाशोक मम शोकविनाशनात् १०२
एवं साशोकवृच्चं तमार्ता त्रिः परिगम्य ह
जगाम दारुगतरं देशं भैमी वराङ्गना १०३
सा ददर्श नगान्नैकान्नैकाश्च सरितस्तथा
नैकांश्च पर्वतान्रम्यान्नैकांश्च मृगपच्चिगः १०४
कन्दरांश्च नितम्बांश्च नदांश्चाद्भुतदर्शनान्
ददर्श सा भीमसुता पतिमन्वेषती तदा १०५
गत्वा प्रकृष्टमध्वानं दमयन्ती शुचिस्मिता

ददर्शाथ महासार्थं हस्त्यश्वरथसंकुलम् १०६
उत्तरन्तं नदीं रम्यां प्रसन्नसलिलां शुभाम्
सुशीततोयां विस्तीर्णां ह्रदिनीं वेतसैर्वृताम् १०७
प्रोद्घुष्टां क्रौञ्चकुररैश्चक्रवाकोपकूजिताम्
कूर्मग्राहझषाकीर्णां पुलिनद्वीपशोभिताम् १०८
सा दृष्ट्वैव महासार्थं नलपत्नी यशस्विनी
उपसर्प्य वरारोहा जनमध्यं विवेश ह १०९
उन्मत्तरूपा शोकार्ता तथा वस्त्रार्धसंवृता
कृशा विवर्णा मलिना पांसुध्वस्तशिरोरुहा ११०
तां दृष्ट्वा तत्र मनुजाः केचिद्भीताः प्रदुद्रुवुः
केचिच्चिन्तापरास्तस्थुः केचित्तत्र विचुक्रुशुः १११
प्रहसन्ति स्म तां केचिदभ्यसूयन्त चापरे
चक्रुस्तस्यां दयां केचित्पप्रच्छुश्चापि भारत ११२
कासि कस्यासि कल्याणि किं वा मृगयसे वने
त्वां दृष्ट्वा व्यथिताः स्मेह कच्चित्त्वमसि मानुषी ११३
वद सत्यं वनस्यास्य पर्वतस्याथ वा दिशः
देवता त्वं हि कल्याणि त्वां वयं शरणं गताः ११४
यक्षी वा राक्षसी वा त्वमुताहोऽसि वराङ्गना
सर्वथा कुरु नः स्वस्ति रक्षस्वास्माननिन्दिते ११५
यथायं सर्वथा सार्थः क्षेमी शीघ्रमितो व्रजेत्
तथा विधत्स्व कल्याणि त्वां वयं शरणं गताः ११६
तथोक्ता तेन सार्थेन दमयन्ती नृपात्मजा
प्रत्युवाच ततः साध्वी भर्तृव्यसनदुःखिता
सार्थवाहं च सार्थं च जना ये चात्र केचन ११७
यूनः स्थविरबालाश्च सार्थस्य च पुरोगमाः
मानुषीं मां विजानीत मनुजाधिपतेः सुताम्
नृपस्नुषां राजभार्यां भर्तृदर्शनलालसाम् ११८
विदर्भराण्मम पिता भर्ता राजा च नैषधः
नलो नाम महाभागस्तं मार्गाम्यपराजितम् ११९
यदि जानीत नृपतिं क्षिप्रं शंसत मे प्रियम्

नलं पार्थिवशार्दूलममित्रगणसूदनम् १२०
तामुवाचानवद्याङ्गीं सार्थस्य महतः प्रभुः
सार्थवाहः शुचिर्नाम शृणु कल्याणि मद्वचः १२१
अहं सार्थस्य नेता वै सार्थवाहः शुचिस्मिते
मनुष्यं नलनामानं न पश्यामि यशस्विनि १२२
कुञ्जरद्वीपिमहिषशार्दूलर्क्षमृगानपि
पश्याम्यस्मिन्वने कष्टे अमनुष्यनिषेविते
तथा नो यक्षराडद्य मणिभद्रः प्रसीदतु १२३
साब्रवीद्वणिजः सर्वान्सार्थवाहं च तं ततः
क्व नु यास्यति सार्थोऽयमेतदाख्यातुमर्हथ १२४
सार्थवाह उवाच
सार्थोऽय चेदिराजस्य सुबाहोः सत्यवादिनः
क्षिप्रं जनपदं गन्ता लाभाय मनुजात्मजे १२५
इति श्रीमहाभारते आरगयकपर्वणि एकषष्टितमोऽध्यायः ६१

## द्विषष्टितमोऽध्यायः

बृहदश्व उवाच
सा तच्छ्रुत्वानवद्याङ्गी सार्थवाहवचस्तदा
अगच्छत्तेन वै सार्धं भर्तृदर्शनलालसा १
अथ काले बहुतिथे वने महति दारुणे
तडागं सर्वतोभद्रं पद्मसौगन्धिकं महत् २
ददृशुर्वणिजो रम्यं प्रभूतयवसेन्धनम्
बहुमूलफलोपेतं नानापक्षिगणैर्वृतम् ३
तं दृष्ट्वा मृष्टसलिलं मनोहरसुखावहम्
सुपरिश्रान्तवाहास्ते निवेशाय मनो दधुः ४
संमते सार्थवाहस्य विविशुर्वनमुत्तमम्
उवास सार्थः सुमहान्वेलामासाद्य पश्चिमाम् ५
अथार्धरात्रसमये निःशब्दस्तिमिते तदा
सुप्ते सार्थे परिश्रान्ते हस्तियूथमुपागमत्
पानीयार्थं गिरिनदीं मदप्रस्रवणाविलाम् ६

मार्गं संरुध्य संसुप्तं पद्मिन्याः सार्थमुत्तमम्
सुप्तं ममर्द सहसा चेष्टमानं महीतले ७
हाहारवं प्रमुञ्चन्तः सार्थिकाः शरणार्थिनः
वनगुल्मांश्च धावन्तो निद्रान्धा महतो भयात्
केचिद्दन्तैः करैः केचित्केचित्पद्भ्यां हता नराः ८
गोखरोष्ट्राश्वबहुलं पदातिजनसंकुलम्
भयार्तं धावमानं तत्परस्परहतं तदा ९
घोरान्नादान्विमुञ्चन्तो निपेतुर्धरणीतले
वृक्षेष्वासज्य संभग्नाः पतिता विषमेषु च
तथा तन्निहतं सर्वं समृद्धं सार्थमण्डलम् १०
अथापरेद्युः संप्राप्ते हतशिष्टा जनास्तदा
वनगुल्माद्विनिष्क्रम्य शोचन्तो वैशसं कृतम्
भ्रातरं पितरं पुत्रं सखायं च जनाधिप ११
अशोचत्तत्र वैदर्भी किं नु मे दुष्कृतं कृतम्
योऽपि मे निर्जनेऽरण्येसम्प्राप्तोऽय जनार्णवः
हतोऽय हस्तियूथेन मन्दभाग्यान्ममैव तु १२
प्राप्तव्यं सुचिरं दुःखं मया नूनमसंशयम्
नाप्राप्तकालो म्रियते श्रुतं वृद्धानुशासनम् १३
यन्नाहमद्य मृदिता हस्तियूथेन दुःखिता
न ह्यदैवकृतं किंचिन्नराणामिह विद्यते १४
न च मे बालभावेऽपि किंचिद्व्यपकृतं कृतम्
कर्मणा मनसा वाचा यदिदं दुःखमागतम् १५
मन्ये स्वयंवरकृते लोकपालाः समागताः
प्रत्याख्याता मया तत्र नलस्यार्थाय देवताः
नूनं तेषां प्रभावेन वियोगं प्राप्तवत्यहम् १६
एवमादीनि दुःखानि सा विलप्य वराङ्गना
हतशिष्टैः सह तदा ब्राह्मणैर्वेदपारगैः
अगच्छद्राजशार्दूल दुःखशोकपरायणा १७
गच्छन्ती सा चिरात्कालात्पुरमासादयन्महत्
सायाह्ने चेदिराजस्य सुबाहोः सत्यवादिनः

वस्त्रार्धकर्तसंवीता प्रविवेश पुरोत्तमम् १८
तां विवर्णां कृशां दीनां मुक्तकेशीममार्जनाम्
उन्मत्तामिव गच्छन्तीं ददृशुः पुरवासिनः १९
प्रविशन्तीं तु तां दृष्ट्वा चेदिराजपुरीं तदा
अनुजग्मुस्ततो बाला ग्रामिपुत्राः कुतूहलात् २०
सा तैः परिवृतागच्छत्समीपं राजवेश्मनः
तां प्रासादगतापश्यद्राजमाता जनैर्वृताम् २१
सा जनं वारयित्वा तं प्रासादतलमुत्तमम्
आरोप्य विस्मिता राजन्दमयन्तीमपृच्छत २२
एवमप्यसुखाविष्टा बिभर्षि परमं वपुः
भासि विद्युदिवाभ्रेषु शंस मे कासि कस्य वा २३
न हि ते मानुषं रूपं भूषणैरपि वर्जितम्
असहाया नरेभ्यश्च नोद्विजस्यमरप्रभे २४
तच्छ्रुत्वा वचनं तस्या भैमी वचनमब्रवीत्
मानुषीं मां विजानीहि भर्तारं समनुव्रताम् २५
सैरन्ध्रीं जातिसंपन्नां भुजिष्यां कामवासिनीम्
फलमूलाशनामेकां यत्रसायंप्रतिश्रयाम् २६
असंख्येयगुणो भर्ता मां च नित्यमनुव्रतः
भर्तारमपि तं वीरं छायेवानपगा सदा २७
तस्य दैवात्प्रसङ्गोऽभूदतिमात्रं स्म देवने
द्यूते स निर्जितश्चैव वनमेकोऽभ्युपेयिवान् २८
तमेकवसनं वीरमुन्मत्तमिव विह्वलम्
आश्वासयन्ती भर्तारमहमन्वगमं वनम् २९
स कदाचिद्वने वीरः कस्मिंश्चित्कारणान्तरे
क्षुत्परीतः सुविमनास्तदप्येकं व्यसर्जयत् ३०
तमेकवसनं नग्नमुन्मत्तं गतचेतसम्
अनुव्रजन्ती बहुला न स्वपामि निशाः सदा ३१
ततो बहुतिथे काले सुप्तामुत्सृज्य मां क्वचित्
वाससोऽध परिच्छिद्य त्यक्तवान्मामनागसम् ३२
तं मार्गमाणा भर्तारं दह्यमाना दिनक्षपाः

न विन्दाम्यमरप्रख्यं प्रियं प्राणधनेश्वरम् ३३
तामश्रुपरिपूर्णाक्षीं विलपन्तीं तथा बहु
राजमाताब्रवीदार्तां भैमीमार्ततरा स्वयम् ३४
वसस्व मयि कल्याणि प्रीतिर्मे त्वयि वर्तते
मृगयिष्यन्ति ते भद्रे भर्तारं पुरुषा मम ३५
अथ वा स्वयमागच्छेत्परिधावन्नितस्ततः
इहैव वसती भद्रे भर्तारमुपलप्स्यसे ३६
राजमातुर्वचः श्रुत्वा दमयन्ती वचोऽब्रवीत्
समयेनोत्सहे वस्तुं त्वयि वीरप्रजायिनि ३७
उच्छिष्टं नैव भुञ्जीयां न कुर्यां पादधावनम्
न चाहं पुरुषानन्यान्संभाषेयं कथंचन ३८
प्रार्थयेद्यदि मां कश्चिद्दण्डयस्ते स पुमान्भवेत्
भर्तुरन्वेषणार्थं तु पश्येयं ब्राह्मणानहम् ३९
यद्येवमिह कर्तव्यं वसाम्यहमसंशयम्
अतोऽन्यथा न मे वासो वर्तते हृदये क्वचित् ४०
तां प्रहृष्टेन मनसा राजमातेदमब्रवीत्
सर्वमेतत्करिष्यामि दिष्ट्या ते व्रतमीदृशम् ४१
एवमुक्त्वा ततो भैमीं राजमाता विशां पते
उवाचेदं दुहितरं सुनन्दां नाम भारत ४२
सैरन्ध्रीमभिजानीष्व सुनन्दे देवरूपिणीम्
एतया सह मोदस्व निरुद्विग्नमनाः स्वयम् ४३
इति श्रीमहाभारते आरण्यकपर्वणि द्विषष्टितमोऽध्यायः ६२

त्रिषष्टितमोऽध्यायः

बृहदश्व उवाच
उत्सृज्य दमयन्तीं तु नलो राजा विशां पते
ददर्श दावं दह्यन्तं महान्तं गहने वने १
तत्र शुश्राव मध्येऽग्नौ शब्दं भूतस्य कस्यचित्
अभिधाव नलेत्युच्चैः पुण्यश्लोकेति चासकृत् २
मा भैरिति नलश्चोक्त्वा मध्यमग्नेः प्रविश्य तम्

ददर्श नागराजानं शयानं कुण्डलीकृतम् ३
स नागः प्राञ्जलिर्भूत्वा वेपमानो नलं तदा
उवाच विद्धि मां राजन्नागं कर्कोटकं नृप ४
मया प्रलब्धो ब्रह्मर्षिरनागाः सुमहातपाः
तेन मन्युपरीतेन शप्तोऽस्मि मनुजाधिप ५
तस्य शापान्न शक्नोमि पदाद्विचलितुं पदम्
उपदेक्ष्यामि ते श्रेयस्त्रातुमर्हति मां भवान् ६
सखा च ते भविष्यामि मत्समो नास्ति पन्नगः
लघुश्च ते भविष्यामि शीघ्रमादाय गच्छ माम् ७
एवमुक्त्वा स नागेन्द्रो बभूवाङ्गुष्ठमात्रकः
तं गृहीत्वा नलः प्रायादुद्देशं दाववर्जितम् ८
आकाशदेशमासाद्य विमुक्तं कृष्णवर्त्मना
उत्स्रष्टुकामं तं नागः पुनः कर्कोटकोऽब्रवीत् ९
पदानि गणयन्गच्छ स्वानि नैषध कानिचित्
तत्र तेऽह महाराज श्रेयो धास्यामि यत्परम् १०
ततः संख्यातुमारब्धमदशद्दशमे पदे
तस्य दष्टस्य तद्रूपं क्षिप्रमन्तरधीयत ११
स दृष्ट्वा विस्मितस्तस्थावात्मानं विकृतं नलः
स्वरूपधारिणं नागं ददर्श च महीपतिः १२
ततः कर्कोटको नागः सान्त्वयन्नलमब्रवीत्
मया तेऽन्तर्हितं रूपं न त्वा विद्युर्जना इति १३
यत्कृते चासि निकृतो दुःखेन महता नल
विषेण स मदीयेन त्वयि दुःखं निवत्स्यति १४
विषेण संवृतैर्गात्रैर्यावत्त्वां न विमोक्ष्यति
तावत्त्वयि महाराज दुःखं वै स निवत्स्यति १५
अनागा येन निकृतस्त्वमनर्हो जनाधिप
क्रोधादसूययित्वा तं रक्षा मे भवतः कृता १६
न ते भयं नरव्याघ्र दंष्ट्रिभ्यः शत्रुतोऽपि वा
ब्रह्मविद्भ्यश्च भविता मत्प्रसादान्नराधिप १७
राजन्विषनिमित्ता च न ते पीडा भविष्यति

संग्रामेषु च राजेन्द्र शश्वज्जयमवाप्स्यसि १८
गच्छ राजन्नितः सूतो बाहुकोऽहमिति ब्रुवन्
समीपमृतुपर्णस्य स हि वेदाक्षनैपुणम्
अयोध्यां नगरीं रम्यामद्यैव निषधेश्वर १९
स तेऽक्षहृदयं दाता राजाश्वहृदयेन वै
इक्ष्वाकुकुलजः श्रीमान्मित्रं चैव भविष्यति २०
भविष्यसि यदाक्षज्ञः श्रेयसा योक्ष्यसे तदा
समेष्यसि च दारैस्त्वं मा स्म शोके मनः कृथाः
राज्येन तनयाभ्यां च सत्यमेतद्ब्रवीमि ते २१
स्वरूपं च यदा द्रष्टुमिच्छेथास्त्वं नराधिप
संस्मर्तव्यस्तदा तेऽह वासश्चेदं निवासयेः २२
अनेन वाससाच्छन्नः स्वरूपं प्रतिपत्स्यसे
इत्युक्त्वा प्रददावस्मै दिव्यं वासोयुगं तदा २३
एवं नलं समादिश्य वासो दत्त्वा च कौरव
नागराजस्ततो राजंस्तत्रैवान्तरधीयत २४
इति श्रीमहाभारते आरण्यकपर्वणि त्रिषष्टितमोऽध्यायः ६३

## चतुःषष्टितमोऽध्यायः

बृहदश्व उवाच
तस्मिन्नन्तर्हिते नागे प्रययौ नैषधो नलः
ऋतुपर्णस्य नगरं प्राविशद्दशमेऽहनि १
स राजानमुपातिष्ठद्बाहुकोऽहमिति ब्रुवन्
अश्वानां वाहने युक्तः पृथिव्यां नास्ति मत्समः २
अर्थकृच्छ्रेषु चैवाहं प्रष्टव्यो नैपुणेषु च
अन्नसंस्कारमपि च जानाम्यन्यैर्विशेषतः ३
यानि शिल्पानि लोकेऽस्मिन्यच्चाप्यन्यत्सुदुष्करम्
सर्वं यतिष्ये तत्कर्तुमृतुपर्ण भरस्व माम् ४
ऋतुपर्ण उवाच
वस बाहुक भद्रं ते सर्वमेतत्करिष्यसि

शीघ्रयाने सदा बुद्धिर्धीयते मे विशेषतः ५
स त्वमातिष्ठ योगं तं येन शीघ्रा हया मम
भवेयुरश्वाध्यक्षोऽसि वेतनं ते शतं शताः ६
त्वामुपस्थास्यतश्चेमौ नित्यं वार्ष्णेयजीवलौ
एताभ्यां रंस्यसे सार्धं वस वै मयि बाहुक ७
बृहदश्व उवाच
एवमुक्तो नलस्तेन न्यवसत्तत्र पूजितः
ऋतुपर्णस्य नगरे सहवार्ष्णेय जीवलः ८
स तत्र निवसन्राजा वैदर्भीमनुचिन्तयन्
सायं सायं सदा चेमं श्लोकमेकं जगाद ह ९
क्व नु सा क्षुत्पिपासार्ता श्रान्ता शेते तपस्विनी
स्मरन्ती तस्य मन्दस्य कं वा साद्योपतिष्ठति १०
एवं ब्रुवन्तं राजानं निशायां जीवलोऽब्रवीत्
कामेनां शोचसे नित्यं श्रोतुमिच्छामि बाहुक ११
तमुवाच नलो राजा मन्दप्रज्ञस्य कस्यचित्
आसीद्बहुमता नारी तस्या दृढतरं च सः १२
स वै केनचिदर्थेन तया मन्दो व्ययुज्यत
विप्रयुक्तश्च मन्दात्मा भ्रमत्यसुखपीडितः १३
दह्यमानः स शोकेन दिवारात्रमतन्द्रितः
निशाकाले स्मरंस्तस्याः श्लोकमेकं स्म गायति १४
स वै भ्रमन्महीं सर्वां क्वचिदासाद्य किंचन
वसत्यनर्हस्तद्दुःखं भूय एवानुसंस्मरन् १५
सा तु तं पुरुषं नारी कृच्छ्रेऽप्यनुगता वने
त्यक्ता तेनाल्पपुगयेन दुष्करं यदि जीवति १६
एका बालानभिज्ञा च मार्गाणामतथोचिता
क्षुत्पिपासापरीता च दुष्करं यदि जीवति १७
श्वापदाचरिते नित्यं वने महति दारुणे
त्यक्ता तेनाल्पपुगयेन मन्दप्रज्ञेन मारिष १८
इत्येवं नैषधो राजा दमयन्तीमनुस्मरन्
अज्ञातवासमवसद्राज्ञस्तस्य निवेशने १९

इति श्रीमहाभारते आरण्यकपर्वणि चतुःषष्टितमोऽध्यायः ६४

पञ्चषष्टितमोऽध्यायः

बृहदश्व उवाच
हृतराज्ये नले भीमः सभार्ये प्रेष्यतां गते
द्विजान्प्रस्थापयामास नलदर्शनकाङ्क्षया १
सन्दिदेश च तान्भीमो वसु दत्त्वा च पुष्कलम्
मृगयध्वं नलं चैव दमयन्तीं च मे सुताम् २
अस्मिन्कर्मणि निष्पन्ने विज्ञाते निषधाधिपे
गवां सहस्रं दास्यामि यो वस्तावानयिष्यति
अग्रहारं च दास्यामि ग्रामं नगरसंमितम् ३
न चेच्छक्याविहानेतुं दमयन्ती नलोऽपि वा
ज्ञातमात्रेऽपि दास्यामि गवां दशशतं धनम् ४
इत्युक्तास्ते ययुर्हृष्टा ब्राह्मणाः सर्वतोदिशम्
पुरराष्ट्राणि चिन्वन्तो नैषधं सह भार्यया ५
ततश्चेदिपुरीं रम्यां सुदेवो नाम वै द्विजः
विचिन्वानोऽथ वैदर्भीमपश्यद्राजवेश्मनि
पुण्याहवाचने राज्ञः सुनन्दासहितां स्थिताम् ६
मन्दप्रख्यायमानेन रूपेणाप्रतिमेन ताम्
पिनद्धां धूमजालेन प्रभामिव विभावसोः ७
तां समीक्ष्य विशालाक्षीमधिकं मलिनां कृशाम्
तर्कयामास भैमीति कारणैरुपपादयन् ८
सुदेव उवाच
यथेयं मे पुरा दृष्टा तथारूपेयमङ्गना
कृतार्थोऽस्म्यद्य दृष्ट्वेमां लोककान्तामिव श्रियम् ९
पूर्णचन्द्राननां श्यामां चारुवृत्तपयोधराम्
कुर्वन्तीं प्रभया देवीं सर्वा वितिमिरा दिशः १०
चारुपद्मपलाशाक्षीं मन्मथस्य रतीमिव
इष्टां सर्वस्य जगतः पूर्णचन्द्रप्रभामिव ११
विदर्भसरसस्तस्माद्दैव दोषादिवोद्धृताम्

मलपङ्कानुलिप्ताङ्गीं मृणालीमिव तां भृशम् १२
पौर्णमासीमिव निशां राहुग्रस्तनिशाकराम्
पतिशोकाकुलां दीनां शुष्कस्रोतां नदीमिव १३
विध्वस्तपर्णकमलां वित्रासितविहङ्गमाम्
हस्तिहस्तपरिक्लिष्टां व्याकुलामिव पद्मिनीम् १४
सुकुमारीं सुजाताङ्गीं रत्नगर्भगृहोचिताम्
दह्यमानामिवोष्णेन मृणालीमचिरोद्धृताम् १५
रूपौदार्यगुणोपेतां मण्डनार्हाममण्डिताम्
चन्द्रलेखामिव नवां व्योम्नि नीलाभ्रसंवृताम् १६
कामभोगैः प्रियैर्हीनां हीनां बन्धुजनेन च
देहं धारयतीं दीनां भर्तृदर्शनकाङ्क्षया १७
भर्ता नाम परं नार्या भूषणं भूषणैर्विना
एषा विरहिता तेन शोभनापि न शोभते १८
दुष्करं कुरुतेऽत्यर्थं हीनो यदनया नलः
धारयत्यात्मनो देहं न शोकेनावसीदति १९
इमामसितकेशान्तां शतपत्रायतेक्षणाम्
सुखार्हां दुःखितां दृष्ट्वा ममापि व्यथते मनः २०
कदा नु खलु दुःखस्य पारं यास्यति वै शुभा
भर्तुः समागमात्साध्वी रोहिणी शशिनो यथा २१
अस्या नूनं पुनर्लाभान्नैषधः प्रीतिमेष्यति
राजा राज्यपरिभ्रष्टः पुनर्लब्ध्वेव मेदिनीम् २२
तुल्यशीलवयोयुक्तां तुल्याभिजनसंयुताम्
नैषधोऽर्हति वैदर्भीं तं चेयमसितेक्षणा २३
युक्तं तस्याप्रमेयस्य वीर्यसत्त्ववतो मया
समाश्वासयितुं भार्यां पतिदर्शनलालसाम् २४
अयमाश्वासयाम्येनां पूर्णचन्द्रनिभाननाम्
अदृष्टपूर्वां दुःखस्य दुःखार्तां ध्यानतत्पराम् २५
बृहदश्व उवाच
एवं विमृश्य विविधैः कारणैर्लक्षणैश्च ताम्
उपगम्य ततो भैमीं सुदेवो ब्राह्मणोऽब्रवीत् २६

अहं सुदेवो वैदर्भि भ्रातुस्ते दयितः सखा
भीमस्य वचनाद्राज्ञस्त्वामन्वेष्टुमिहागतः २७
कुशली ते पिता राज्ञि जनित्री भ्रातरश्च ते
आयुष्मन्तौ कुशलिनौ तत्रस्थौ दारकौ च ते
त्वत्कृते बन्धुवर्गाश्च गतसत्त्वा इवासते २८
अभिज्ञाय सुदेवं तु दमयन्ती युधिष्ठिर
पर्यपृच्छत्ततः सर्वान्क्रमेण सुहृदः स्वकान् २९
रुरोद च भृशं राजन्वैदर्भी शोककर्शिता
दृष्ट्वा सुदेवं सहसा भ्रातुरिष्टं द्विजोत्तमम् ३०
ततो रुदन्तीं तां दृष्ट्वा सुनन्दा शोककर्शिताम्
सुदेवेन सहैकान्ते कथयन्तीं च भारत ३१
जनित्र्यै प्रेषयामास सैरन्ध्री रुदते भृशम्
ब्राह्मणेन समागम्य तां वेद यदि मन्यसे ३२
अथ चेदिपतेर्माता राज्ञश्चान्तः पुरात्तदा
जगाम यत्र सा बाला ब्राह्मणेन सहाभवत् ३३
ततः सुदेवमानाय्य राजमाता विशां पते
पप्रच्छ भार्या कस्येयं सुता वा कस्य भामिनी ३४
कथं च नष्टा ज्ञातिभ्यो भर्तुर्वा वामलोचना
त्वया च विदिता विप्र कथमेवंगता सती ३५
एतदिच्छाम्यहं त्वत्तो ज्ञातुं सर्वमशेषतः
तत्त्वेन हि ममाचक्ष्व पृच्छन्त्या देवरूपिणीम् ३६
एवमुक्तस्तया राजन्सुदेवो द्विजसत्तमः
सुखोपविष्ट आचष्ट दमयन्त्या यथातथम् ३७
इति श्रीमहाभारते आरण्यकपर्वणि पञ्चषष्टितमोऽध्यायः ६५

## षट्षष्टितमोऽध्यायः

सुदेव उवाच
विदर्भराजो धर्मात्मा भीमो भीमपराक्रमः
सुतेयं तस्य कल्याणी दमयन्तीति विश्रुता १
राजा तु नैषधो नाम वीरसेनसुतो नलः

भार्येयं तस्य कल्याणी पुरायश्लोकस्य धीमतः २
स वै द्यूते जितो भ्रात्रा हृतराज्यो महीपतिः
दमयन्त्या गतः सार्धं न प्राज्ञायत कर्हिचित् ३
ते वयं दमयन्त्यर्थे चरामः पृथिवीमिमाम्
सेयमासादिता बाला तव पुत्रनिवेशने ४
अस्या रूपेण सदृशी मानुषी नेह विद्यते
अस्याश्चैव भ्रुवोर्मध्ये सहजः पिप्लुरुत्तमः
श्यामायाः पद्मसंकाशो लक्षितोऽन्तर्हितो मया ५
मलेन संवृतो ह्यस्यास्तन्वभ्रेणेव चन्द्रमाः
चिह्नभूतो विभूत्यर्थमयं धात्रा विनिर्मितः ६
प्रतिपत्कलुषेवेन्दोर्लेखा नाति विराजते
न चास्या नश्यते रूपं वपुर्मलसमाचितम्
असंस्कृतमपि व्यक्तं भाति काञ्चनसंनिभम् ७
अनेन वपुषा बाला पिप्लुनानेन चैव ह
लक्षितेयं मया देवी पिहितोऽग्निरिवोष्मणा ८
बृहदश्व उवाच
तच्छ्रुत्वा वचनं तस्य सुदेवस्य विशां पते
सुनन्दा शोधयामास पिप्लुप्रच्छादनं मलम् ९
स मलेनापकृष्टेन पिप्लुस्तस्या व्यरोचत
दमयन्त्यास्तदा व्यभ्रे नभसीव निशाकरः १०
पिप्लुं दृष्ट्वा सुनन्दा च राजमाता च भारत
रुदन्त्यौ तां परिष्वज्य मुहूर्तमिव तस्थतुः
उत्सृज्य बाष्पं शनकै राजमातेदमब्रवीत् ११
भगिन्या दुहिता मेऽसि पिप्लुनानेन सूचिता
अहं च तव माता च राजन्यस्य महात्मनः
सुते दशार्णाधिपतेः सुदाम्नश्चारुदर्शने १२
भीमस्य राज्ञः सा दत्ता वीरबाहोरहं पुनः
त्वं तु जाता मया दृष्टा दशार्णेषु पितुर्गृहे १३
यथैव ते पितुर्गेहं तथेदमपि भामिनि
यथैव हि ममैश्वर्यं दमयन्ति तथा तव १४

तां प्रहृष्टेन मनसा दमयन्ती विशां पते
अभिवाद्य मातुर्भगिनीमिदं वचनमब्रवीत् १५
अज्ञायमानापि सती सुखमस्म्युषितेह वै
सर्वकामैः सुविहिता रक्ष्यमाणा सदा त्वया १६
सुखात्सुखतरो वासो भविष्यति न संशयः
चिरविप्रोषितां मातर्मामनुज्ञातुमर्हसि १७
दारकौ च हि मे नीतौ वसतस्तत्र बालकौ
पित्रा विहीनौ शोकार्तौ मया चैव कथं नु तौ १८
यदि चापि प्रियं किंचिन्मयि कर्तुमिहेच्छसि
विदर्भान्यातुमिच्छामि शीघ्रं मे यानमादिश १९
बाढमित्येव तामुक्त्वा हृष्टा मातृष्वसा नृप
गुप्तां बलेन महता पुत्रस्यानुमते ततः २०
प्रस्थापयद्राजमाता श्रीमता नरवाहिना
यानेन भरतश्रेष्ठ स्वन्नपानपरिच्छदाम् २१
ततः सा नचिरादेव विदर्भानगमच्छुभा
तां तु बन्धुजनः सर्वः प्रहृष्टः प्रत्यपूजयत् २२
सर्वान्कुशलिनो दृष्ट्वा बान्धवान्दारकौ च तौ
मातरं पितरं चैव सर्वं चैव सखीजनम् २३
देवताः पूजयामास ब्राह्मणांश्च यशस्विनी
विधिना परेणकल्याणी दमयन्ती विशांपते २४
अतर्पयत्सुदेवं च गोसहस्रेण पार्थिवः
प्रीतो दृष्ट्वैव तनयां ग्रामेण द्रविणेन च २५
सा व्युष्टा रजनीं तत्र पितुर्वेश्मनि भामिनी
विश्रान्ता मातरं राजन्निदं वचनमब्रवीत् २६
इति श्रीमहाभारते आरण्यकपर्वणि षट्षष्टितमोऽध्यायः ६६

## सप्तषष्टितमोऽध्यायः

दमयन्त्युवाच
मां चेदिच्छसि जीवन्तीं मातः सत्यं ब्रवीमि ते
नरवीरस्य वै तस्य नलस्यानयने यत १

बृहदश्व उवाच
दमयन्त्या तथोक्ता तु सा देवी भृशदुःखिता
बाष्पेण पिहिता राजन्नोत्तरं किंचिदब्रवीत् २
तदवस्थां तु तां दृष्ट्वा सर्वमन्तःपुरं तदा
हाहाभूतमतीवासीद् भृशं च प्ररुरोद ह ३
ततोभीमं महाराज भार्या वचनमब्रवीत्
दमयन्ती तव सुता भर्तारमनुशोचति ४
अपकृष्य च लज्जां सा स्वयमुक्तवती नृप
प्रयतन्तु तव प्रेष्याः पुण्यश्लोकस्य दर्शने ५
तया प्रचोदितो राजा ब्राह्मणान्वशवर्तिनः
प्रास्थापयद्दिशः सर्वा यतध्वं नलदर्शने ६
ततो विदर्भाधिपतेर्नियोगाद्ब्राह्मणर्षभाः
दमयन्तीमथो दृष्ट्वा प्रस्थिताः स्मेत्यथाब्रुवन् ७
अथ तानब्रवीद्भैमी सर्वराष्ट्रेष्विदं वचः
ब्रुवध्वं जनसंसत्सु तत्र तत्र पुनः पुनः ८
क्व नु त्वं कितव छित्त्वा वस्त्रार्धं प्रस्थितो मम
उत्सृज्य विपिने सुप्तामनुरक्तां प्रियां प्रिय ९
सा वै यथा समादिष्टा तत्रास्ते त्वत्प्रतीक्षिणी
दह्यमाना भृशं बाला वस्त्रार्धेनाभिसंवृता १०
तस्या रुदन्त्याः सततं तेन शोकेन पार्थिव
प्रसादं कुरु वै वीर प्रतिवाक्यं ददस्व च ११
एतदन्यच्च वक्तव्यं कृपां कुर्याद्यथा मयि
वायुना धूयमानो हि वनं दहति पावकः १२
भर्तव्या रक्षणीया च पत्नी हि पतिना सदा
तन्नष्टमुभयं कस्माद्धर्मज्ञस्य सतस्तव १३
ख्यातः प्राज्ञः कुलीनश्च सानुक्रोशश्च त्वं सदा
संवृत्तो निरनुक्रोशः शंके मद्भाग्यसंक्षयात् १४
स कुरुष्व महेष्वास दयां मयि नरर्षभ
आनृशंस्यं परो धर्मस्त्वत्त एव हि मे श्रुतम् १५
एवं ब्रुवाणान्यदि वः प्रतिब्रूयाद्धि कश्चन

स नरः सर्वथा ज्ञेयः कश्चासौ क्व च वर्तते १६
यच्च वो वचनं श्रुत्वा ब्रूयात्प्रतिवचो नरः
तदादाय वचः क्षिप्रं ममावेद्यं द्विजोत्तमाः १७
यथा च वो न जानीयाच्चरतो भीमशासनात्
पुनरागमनं चैव तथा कार्यमतन्द्रितैः १८
यदि वासौ समृद्धः स्याद्यदि वाप्यधनो भवेत्
यदि वाप्यर्थकामः स्याज्ज्ञेयमस्य चिकीर्षितम् १९
एवमुक्तास्त्वगच्छंस्ते ब्राह्मणाः सर्वतोदिशम्
नलं मृगयितुं राजंस्तथा व्यसनिनं तदा २०
ते पुराणि सराष्ट्राणि ग्रामान्घोषांस्तथाश्रमान्
अन्वेषन्तो नलं राजन्नाधिजग्मुर्द्विजातयः २१
तच्च वाक्यं तथा सर्वे तत्र तत्र विशां पते
श्रावयांचक्रिरे विप्रा दमयन्त्या यथेरितम् २२
इति श्रीमहाभारते आरण्यकपर्वणि सप्तषष्टितमोऽध्यायः ६७

## अष्टषष्टितमोऽध्यायः

बृहदश्व उवाच
अथ दीर्घस्य कालस्य पर्णादो नाम वै द्विजः
प्रत्येत्य नगरं भैमीमिदं वचनमब्रवीत् १
नैषधं मृगयानेन दमयन्ति दिवानिशम्
अयोध्यां नगरीं गत्वा भाङ्गस्वरिरुपस्थितः २
श्रावितश्च मया वाक्यं त्वदीयं स महाजने
ऋतुपर्णो महाभागो यथोक्तं वरवर्णिनि ३
तच्छ्रुत्वा नाब्रवीत्किञ्चिदृतुपर्णो नराधिपः
न च पारिषदः कश्चिद्भाष्यमाणो मयासकृत् ४
अनुज्ञातं तु मां राज्ञा विजने कश्चिदब्रवीत्
ऋतुपर्णस्य पुरुषो बाहुको नाम नामतः ५
सूतस्तस्य नरेन्द्रस्य विरूपो ह्रस्वबाहुकः
शीघ्रयाने सुकुशलो मृष्टकर्ता च भोजने ६
स विनिःश्वस्य बहुशो रुदित्वा च मुहुर्मुहुः

कुशलं चैव मां पृष्ट्वा पश्चादिदमभाषत ७
वैषम्यमपि संप्राप्ता गोपायन्ति कुलस्त्रियः
आत्मानमात्मना सत्यो जितस्वर्गा न संशयः
रहिता भर्तृभिश्चैव न क्रुध्यन्ति कदाचन ८
विषमस्थेन मूढेन परिभ्रष्टसुखेन च
यत्सा तेन परित्यक्ता तत्र न क्रोद्धुमर्हति ९
प्राणयात्रां परिप्रेप्सोः शकुनैर्हृतवाससः
आधिभिर्दह्यमानस्य श्यामा न क्रोद्धुमर्हति १०
सत्कृतासत्कृता वापि पतिं दृष्ट्वा तथागतम्
भ्रष्टराज्यं श्रिया हीनं श्यामा न क्रोद्धुमर्हति ११
तस्य तद्वचनं श्रुत्वा त्वरितोऽहमिहागतः
श्रुत्वा प्रमाणं भवती राज्ञश्चैव निवेदय १२
एतच्छ्रुत्वाश्रुपूर्णाक्षी पर्णादस्य विशां पते
दमयन्ती रहोऽभ्येत्य मातरं प्रत्यभाषत १३
अयमर्थो न संवेद्यो भीमे मातः कथंचन
त्वत्संनिधौ समादेक्ष्ये सुदेवं द्विजसत्तमम् १४
यथा न नृपतिर्भीमः प्रतिपद्येत मे मतम्
तथा त्वया प्रयत्तव्यं मम चेत्प्रियमिच्छसि १५
यथा चाहं समानीता सुदेवेनाशु बान्धवान्
तेनैव मङ्गलेनाशु सुदेवो यातु माचिरम्
समानेतुं नलं मातरयोध्यां नगरीमितः १६
विश्रान्तं च ततः पश्चात्पर्णादं द्विजसत्तमम्
अर्चयामासवैदर्भी धनेनातीव भामिनी १७
नले चेहागते विप्र भूयो दास्यामि ते वसु
त्वया हि मे बहु कृतं यथा नान्यः करिष्यति
यद्भर्त्राहं समेष्यामि शीघ्रमेव द्विजोत्तम १८
एवमुक्तोऽर्चयित्वा तामाशीर्वादैः समुङ्गलैः
गृहानुपययौ चापि कृतार्थः स महामनाः १९
ततश्चानाय्य तं विप्रं दमयन्ती युधिष्ठिर
अब्रवीत्संनिधौ मातुर्दुःखशोकसमन्विता २०

गत्वा सुदेव नगरीमयोध्यावासिनं नृपम्
ऋतुपर्णं वचो ब्रूहि पतिमन्यं चिकीर्षती
आस्थास्यति पुनर्भैमी दमयन्ती स्वयंवरम् २१
तत्र गच्छन्ति राजानो राजपुत्राश्च सर्वशः
यथा च गणितः कालः श्वोभूते स भविष्यति २२
यदि संभावनीयं ते गच्छ शीघ्रमरिन्दम
सूर्योदये द्वितीयं सा भर्तारं वरयिष्यति
न हि स ज्ञायते वीरो नलो जीवन्मृतोऽपि वा २३
एवं तया यथोक्तं वै गत्वा राजानमब्रवीत्
ऋतुपर्णं महाराज सुदेवो ब्राह्मणस्तदा २४
इति श्रीमहाभारते आरण्यकपर्वणि अष्टषष्टितमोऽध्यायः ६८

## एकोनसप्ततितमोऽध्यायः

बृहदश्व उवाच
श्रुत्वा वचः सुदेवस्य ऋतुपर्णो नराधिपः
सान्त्वयञ्श्लक्ष्णया वाचा बाहुकं प्रत्यभाषत १
विदर्भान्यातुमिच्छामि दमयन्त्याः स्वयंवरम्
एकाह्ना हयतत्त्वज्ञ मन्यसे यदि बाहुक २
एवमुक्तस्य कौन्तेय तेन राज्ञा नलस्य ह
व्यदीर्यत मनो दुःखात्प्रदध्यौ च महामनाः ३
दमयन्ती भवेदेतत्कुर्याद्दुःखेन मोहिता
अस्मदर्थे भवेद्वायमुपायश्चिन्तितो महान् ४
नृशंसं बत वैदर्भी कर्तुकामा तपस्विनी
मया क्षुद्रेण निकृता पापेनाकृतबुद्धिना ५
स्त्री स्वभावश्चलो लोके मम दोषश्च दारुणः
स्यादेवमपि कुर्यात्सा विवशा गतसौहृदा
मम शोकेन संविग्ना नैराश्यात्तनुमध्यमा ६
न चैवं कर्हिचित्कुर्यात्सापत्या च विशेषतः
यदत्र तथ्यं पथ्यं च गत्वा वेत्स्यामि निश्चयम्
ऋतुपर्णस्य वै काममात्मार्थं च करोम्यहम् ७

इति निश्चित्य मनसा बाहुको दीनमानसः
कृताञ्जलिरुवाचेदमृतुपर्णं नराधिपम् ८
प्रतिजानामि ते सत्यं गमिष्यसि नराधिप
एकाह्ना पुरुषव्याघ्र विदर्भनगरीं नृप ९
ततः परीक्षामश्वानां चक्रे राजन्स बाहुकः
अश्वशालामुपागम्य भाङ्गस्वरिनृपाज्ञया १०
स त्वर्यमाणो बहुश ऋतुपर्णेन बाहुकः
अध्यगच्छत्कृशानश्वान्समर्थानध्वनि क्षमान् ११
तेजोबलसमा युक्तान्कुलशीलसमन्वितान्
वर्जिताँल्लक्षणैर्हीनैः पृथुप्रोथान्महाहनून्
शुद्धान्दशभिरावर्तैः सिन्धुजान्वातरंहसः १२
दृष्ट्वा तानब्रवीद्राजा किंचित्कोपसमन्वितः
किमिदं प्रार्थितं कर्तुं प्रलब्धव्या हि ते वयम् १३
कथमल्पबलप्राणा वक्ष्यन्तीमे हया मम
महानध्वा च तुरगैर्गन्तव्यः कथमीदृशैः १४
बाहुक उवाच
एते हया गमिष्यान्ति विदर्भान्नात्र संशयः
अथान्यान्मन्यसे राजन्ब्रूहि कान्योजयामि ते १५
ऋतुपर्ण उवाच
त्वमेव हयतत्त्वज्ञः कुशलश्चासि बाहुक
यान्मन्यसे समर्थांस्त्वं क्षिप्रं तानेव योजय १६
बृहदश्व उवाच
ततः सदश्वांश्चतुरः कुलशीलसमन्वितान्
योजयामास कुशलो जवयुक्तान्रथे नलः १७
ततो युक्तं रथं राजा समारोहत्त्वरान्वितः
अथ पर्यपतन्भूमौ जानुभिस्ते हयोत्तमाः १८
ततो नरवरः श्रीमान्नलो राजा विशां पते
सान्त्वयामास तानश्वांस्तेजोबलसमन्वितान् १९
रश्मिभिश्च समुद्यम्य नलो यातुमियेष सः
सूतमारोप्य वार्ष्णेयं जवमास्थाय वै परम् २०

ते चोद्यमाना विधिना बाहुकेन हयोत्तमाः
समुत्पेतुरिवाकाशं रथिनं मोहयन्निव २१
तथा तु दृष्ट्वा तानश्वान्वहतो वातरंहसः
अयोध्याधिपतिर्धीमान्विस्मयं परमं ययौ २२
रथघोषं तु तं श्रुत्वा हयसंग्रहणं च तत्
वार्ष्णेयश्चिन्तयामास बाहुकस्य हयज्ञताम् २३
किं नु स्यान्मातलिरयं देवराजस्य सारथिः
तथा हि लक्षणं वीरे बाहुके दृश्यते महत् २४
शालिहोत्रोऽथ किं नु स्याद्धयानां कुलतत्त्ववित्
मानुषं समनुप्राप्तो वपुः परमशोभनम् २५
उताहो स्विद्भवेद्राजा नलः परपुरञ्जयः
सोऽय नृपतिरायात इत्येवं समचिन्तयत् २६
अथ वा यां नलो वेद विद्यां तामेव बाहुकः
तुल्यं हि लक्षये ज्ञानं बाहुकस्य नलस्य च २७
अपि चेदं वयस्तुल्यमस्य मन्ये नलस्य च
नायं नलो महावीर्यस्तद्विद्यस्तु भविष्यति २८
प्रच्छन्ना हि महात्मानश्चरन्ति पृथिवीमिमाम्
दैवेन विधिना युक्ताः शास्त्रोक्तैश्च विरूपणैः २९
भवेत्तु मतिभेदो मे गात्रवैरूप्यतां प्रति
प्रमाणात्परिहीनस्तु भवेदिति हि मे मतिः ३०
वयः प्रमाणं तत्तुल्यं रूपेण तु विपर्ययः
नलं सर्वगुणैर्युक्तं मन्ये बाहुकमन्ततः ३१
एवं विचार्य बहुशो वार्ष्णेयः पर्यचिन्तयत्
हृदयेन महाराज पुण्यश्लोकस्य सारथिः ३२
ऋतुपर्णस्तु राजेन्द्र बाहुकस्य हयज्ञताम्
चिन्तयन्मुमुदे राजा सहवार्ष्णेयसारथिः ३३
बलं वीर्यं तथोत्साहं हयसंग्रहणं च तत्
परं यत्नं च संप्रेक्ष्य परां मुदमवाप ह ३४

इति श्रीमहाभारते आरण्यकपर्वणि एकोनसप्ततितमोऽध्यायः ६९

सप्ततितमोऽध्यायः
स नदीःपर्वतांश्चैव वनानि च सरांसि च
अचिरेणातिचक्राम खेचरः खे चरन्निव १
तथा प्रयाते तु रथे तदा भाङ्गस्वरिर्नृपः
उत्तरीयमथापश्यद्भ्रष्टं परपुरञ्जयः २
ततः स त्वरमाणस्तु पटे निपतिते तदा
ग्रहीष्यामीति तं राजा नलमाह महामनाः ३
निगृह्णीष्व महाबुद्धे हयानेतान्महाजवान्
वार्ष्णेयो यावदेतं मे पटमानयतामिति ४
नलस्तं प्रत्युवाचाथ दूरे भ्रष्टः पटस्तव
योजनं समतिक्रान्तो न स शक्यस्त्वया पुनः ५
एवमुक्ते नलेनाथ तदा भाङ्गस्वरिर्नृपः
आससाद वने राजन्फलवन्तं बिभीतकम् ६
तं दृष्ट्वा बाहुकं राजा त्वरमाणोऽभ्यभाषत
ममापि सूत पश्य त्वं संख्याने परमं बलम् ७
सर्वः सर्वं न जानाति सर्वज्ञो नास्ति कश्चन
नैकत्र परिनिष्ठास्ति ज्ञानस्य पुरुषे क्वचित् ८
वृक्षेऽस्मिन्यानि पर्णानि फलान्यपि च बाहुक
पतितानि च यान्यत्र तत्रैकमधिकं शतम्
एकपत्राधिकं पत्रं फलमेकं च बाहुक ९
पञ्च कोट्योऽथ पत्राणां द्वयोरपि च शाखयोः
प्रचिनुह्यस्य शाखे द्वे याश्चाप्यन्याः प्रशाखिकाः
आभ्यां फलसहस्रे द्वे पञ्चोनं शतमेव च १०
ततो रथादवप्लुत्य राजानं बाहुकोऽब्रवीत्
परोक्षमिव मे राजन्कत्थसे शत्रुकर्शन ११
अथ ते गणिते राजन्विद्यते न परोक्षता
प्रत्यक्षं ते महाराज गणयिष्ये बिभीतकम् १२
अहं हि नाभिजानामि भवेदेवं न वेति च
संख्यास्यामि फलान्यस्य पश्यतस्ते जनाधिप
मुहूर्तमिव वार्ष्णेयो रश्मीन्यच्छतु वाजिनाम् १३

तमब्रवीन्नृपः सूतं नायं कालो विलम्बितुम्
बाहुकस्त्वब्रवीदेनं परं यत्नं समास्थितः १४
प्रतीक्षस्व मुहूर्तं त्वमथ वा त्वरते भवान्
एष याति शिवःपन्था याहि वार्ष्णेयसारथिः १५
अब्रवीदृतुपर्णस्तं सान्त्वयन्कुरुनन्दन
त्वमेव यन्ता नान्योऽस्ति पृथिव्यामपि बाहुक १६
त्वत्कृते यातुमिच्छामि विदर्भान्हयकोविद
शरणं त्वां प्रपन्नोऽस्मि न विघ्नं कर्तुमर्हसि १७
कामं च ते करिष्यामि यन्मां वक्ष्यसि बाहुक
विदर्भान्यदि यात्वाद्य सूर्यं दर्शयितासि मे १८
अथाब्रवीद्बाहुकस्तं संख्यायेमं बिभीतकम्
ततो विदर्भान्यास्यामि कुरुष्वेदं वचो मम १९
अकाम इव तं राजा गणयस्वेत्युवाच ह
सोऽवतीर्य रथात्तूर्णं शातयामास तं द्रुमम् २०
ततः स विस्मयाविष्टो राजानमिदमब्रवीत्
गणयित्वा यथोक्तानि तावन्त्येव फलानि च २१
अत्यद्भुतमिदं राजन्दृष्टवानस्मि ते बलम्
श्रोतुमिच्छामि तां विद्यां यथैतज्ज्ञायते नृप २२
तमुवाच ततो राजा त्वरितो गमने तदा
विद्ध्यक्षहृदयज्ञं मां संख्याने च विशारदम् २३
बाहुकस्तमुवाचाथ देहि विद्यामिमां मम
मत्तोऽपि चाश्वहृदयं गृहाण पुरुषर्षभ २४
ऋतुपर्णस्ततो राजा बाहुकं कार्यगौरवात्
हयज्ञानस्य लोभाच्च तथेत्येवाब्रवीद्वचः २५
यथेष्टं त्वं गृहाणेदमक्षाणां हृदयं परम्
निक्षेपो मेऽश्वहृदयं त्वयि तिष्ठतु बाहुक
एवमुक्त्वा ददौ विद्यामृतुपर्णो नलाय वै २६
तस्याक्षहृदयज्ञस्य शरीरान्निःसृतः कलि
कर्कोटकविषं तीक्ष्णं मुखात्सततमुद्वमन् २७
कलेस्तस्य तदार्तस्य शापाग्निः स विनिःसृतः

स तेन कर्शितो राजा दीर्घ कालमनात्मवान् २८
ततो विषविमुक्तात्मा स्वरूपमकरोत्कलि
तं शप्तुमैच्छत्कुपितो निषधाधिपतिर्नलः २९
तमुवाच कलिर्भीतो वेपमानः कृताञ्जलि
कोपं संयच्छ नृपते कीर्तिं दास्यामि ते पराम् ३०
इन्द्रसेनस्य जननी कुपिता माशपत्पुरा
यदा त्वया परित्यक्ता ततोऽह भृशपीडतः ३१
अवसं त्वयि राजेन्द्र सुदुःखमपराजित
विषेण नागराजस्य दह्यमानो दिवानिशम् ३२
ये च त्वां मनुजा लोके कीर्तयिष्यन्त्यतन्द्रिताः
मत्प्रसूतं भयं तेषां न कदाचिद्भविष्यति ३३
एवमुक्तो नलो राजा न्ययच्छत्कोपमात्मनः
ततो भीतः कलि क्षिप्रं प्रविवेश बिभीतकम्
कलिस्त्वन्येन नादृश्यत्कथया नैषधेन वै ३४
ततो गतज्वरो राजा नैषधः परवीरहा
स्त्रंपनष्टे कलौ राजन्संख्यायाथ फलान्युत ३५
मुदा परमया युक्तस्तेजसा च परेण ह
रथमारुह्य तेजस्वी प्रययौ जवनैर्हयैः
बिभीतकश्चाप्रशस्तः संवृत्तः कलिसंश्रयात् ३६
हयोत्तमानुत्पततो द्विजानिव पुनः पुनः
नलः संच्दयामास प्रहृष्टेनान्तरात्मना ३७
विदर्भाभिमुखो राजा प्रययौ स महामनाः
नले तु समतिक्रान्ते कलिरप्यगमद्गृहान् ३८
ततो गतज्वरो राजा नलोऽभूत्पृथिवीपते
विमुक्तः कलिना राजन्रूपमात्रवियोजितः ३९
इति श्रीमहाभारते आरगयकपर्वणि सप्ततितमोऽध्यायः ७०

## एकसप्ततितमोऽध्यायः

बृहदश्व उवाच
ततो विदर्भान्संप्राप्तं सायाह्ने सत्यविक्रमम्

ऋतुपर्णं जना राज्ञे भीमाय प्रत्यवेदयन् १
स भीमवचनाद्राजा कुण्डिनं प्राविशत्पुरम्
नादयन्रथघोषेण सर्वाः सोपदिशो दश २
ततस्तं रथनिर्घोषं नलाश्वास्तत्र शुश्रुवुः
श्रुत्वा तु समहृष्यन्त पुरेव नलसंनिधौ ३
दमयन्ती तु शुश्राव रथघोषं नलस्य तम्
यथा मेघस्य नदतो गम्भीरं जलदागमे ४
नलेन संगृहीतेषु पुरेव नलवाजिषु
सदृशं रथनिर्घोषं मेने भैमी तथा हयाः ५
प्रासादस्थाश्च शिखिनः शालस्थाश्चैव वारणाः
हयाश्च शुश्रवुस्तत्र रथघोषं महीपतेः ६
ते श्रुत्वा रथ निर्घोषं वारणाः शिखिनस्तथा
प्रणेदुरुन्मुखा राजन्मेघोदयमिवेक्ष्य ह ७
दमयन्त्युवाच
यथासौ रथनिर्घोषः पूरयन्निव मेदिनीम्
मम ह्लादयते चेतो नल एष महीपतिः ८
अथ चन्द्राभवक्त्रं तं न पश्यामि नलं यदि
असंख्येयगुणं वीरं विनशिष्याम्यसंशयम् ९
यदि वै तस्य वीरस्य बाह्वोर्नाद्याहमन्तरम्
प्रविशामि सुखस्पर्शं विनशिष्याम्यसंशयम् १०
यदि मां मेघनिर्घोषो नोपगच्छति नैषधः
अद्य चामीकरप्रख्यो विनशिष्याम्यसंशयम् ११
यदि मां सिंहविक्रान्तो मत्तवारणवारणः
नाभिगच्छति राजेन्द्रो विनशिष्याम्यसंशयम् १२
न स्मराम्यनृतं किंचिन्न स्मराम्यनुपाकृतम्
न च पर्युषितं वाक्यं स्वैरेष्वपि महात्मनः १३
प्रभुः क्षमावान्वीरश्च मृदुर्दान्तो जितेन्द्रियः
रहोऽनीचानुवर्ती च क्लीबवन्मम नैषधः १४
गुणांस्तस्य स्मरन्त्या मे तत्पराया दिवानिशम्
हृदयं दीर्यत इदं शोकात्प्रियविनाकृतम् १५

बृहदश्व उवाच
एवं विलपमाना सा नष्टसंज्ञेव भारत
आरुरोह महद्वेश्म पुगयश्लोकदिदृक्षया १६
ततो मध्यमकक्षायां ददर्श रथमास्थितम्
ऋतुपर्णं महीपालं सहवार्ष्णेयबाहुकम् १७
ततोऽवतीर्य वार्ष्णेयो बाहुकश्च रथोत्तमात्
हयांस्तानवमुच्याथ स्थापयामासतू रथम् १८
सोऽवतीर्य रथोपस्थादृतुपर्णो नराधिपः
उपतस्थे महाराज भीमं भीमपराक्रमम् १९
तं भीमः प्रतिजग्राह पूजया परया ततः
अकस्मात्सहसा प्राप्तं स्त्रीमन्त्रं न स्म विन्दति २०
किं कार्यं स्वागतं तेऽस्तु राज्ञा पृष्टश्च भारत
नाभिजज्ञे स नृपतिर्दुहित्रर्थे समागतम् २१
ऋतुपर्णोऽपि राजा स धीमान्सत्यपराक्रमः
राजानं राजपुत्रं वा न स्म पश्यति कंचन
नैवस्वयंवरकथां न च विप्रसमागमम् २२
ततो विगणयन्राजा मनसा कोसलाधिपः
आगतोऽस्मीत्युवाचैनं भवन्तमभिवादकः २३
राजापि च स्मयन्भीमो मनसाभिविचिन्तयत्
अधिकं योजनशतं तस्यागमनकारणम् २४
ग्रामान्बहूनतिक्रम्य नाध्यगच्छद्यथातथम्
अल्पकार्यं विनिर्दिष्टं तस्यागमनकारणम् २५
नैतदेवं स नृपतिस्तं सत्कृत्य व्यसर्जयत्
विश्राम्यतामिति वदन्क्लान्तोऽसीति पुनः पुनः २६
स सत्कृतः प्रहृष्टात्मा प्रीतः प्रीतेन पार्थिवः
राजप्रेष्यैरनुगतो दिष्टं वेश्म समाविशत् २७
ऋतुपर्णे गते राजन्वार्ष्णेयसहिते नृपे
बाहुको रथमास्थाय रथशालामुपागमत् २८
स मोचयित्वा तानश्वान्परिचार्य च शास्त्रतः
स्वयं चैतान्समाश्वास्य रथोपस्थ उपाविशत् २९

दमयन्ती तु शोकार्ता दृष्ट्वा भाङ्गस्वरिं नृपम्
सूतपुत्रं च वार्ष्णेयं बाहुकं च तथाविधम् ३०
चिन्तयामास वैदर्भी कस्यैष रथनिस्वनः
नलस्येव महानासीन्न च पश्यामि नैषधम् ३१
वार्ष्णेयेन भवेन्नूनं विद्या सैवोपशिक्षिता
तेनास्य रथनिर्घोषो नलस्येव महानभूत् ३२
आहो स्विदृतुपर्णोऽपि यथा राजा नलस्तथा
ततोऽय रथनिर्घोषो नैषधस्येव लक्ष्यते ३३
एवं वितर्कयित्वा तु दमयन्ती विशां पते
दूतीं प्रस्थापयामास नैषधान्वेषणे नृप ३४
इति श्रीमहाभारते आरण्यकपर्वणि एकसप्ततितमोऽध्यायः ७१

द्विसप्ततितमोऽध्यायः

दमयन्त्युवाच
गच्छ केशिनि जानीहि क एष रथवाहकः
उपविष्टो रथोपस्थे विकृतो ह्रस्वबाहुकः १
अभ्येत्य कुशलं भद्रे मृदुपूर्वं समाहिता
पृच्छेथाः पुरुषं ह्येनं यथातत्त्वमनिन्दिते २
अत्र मे महती शङ्का भवेदेष नलो नृपः
तथा च मे मनस्तुष्टिर्हृदयस्य च निर्वृतिः ३
ब्रूयाश्चैनं कथान्ते त्वं पर्णादवचनं यथा
प्रतिवाक्यं च सुश्रोणि बुध्येथास्त्वमनिन्दिते ४
बृहदश्व उवाच
एवं समाहिता गत्वा दूती बाहुकमब्रवीत्
दमयन्त्यपि कल्याणी प्रासादस्थान्ववैक्षत ५
केशिन्युवाच
स्वागतं ते मनुष्येन्द्र कुशलं ते ब्रवीम्यहम्
दमयन्त्या वचः साधु निबोध पुरुषर्षभ ६
कदा वै प्रस्थिता यूयं किमर्थमिह चागताः
तत्त्वं ब्रूहि यथान्यायं वैदर्भी श्रोतुमिच्छति ७

बाहुक उवाच
श्रुतः स्वयंवरो राज्ञा कौसल्येन यशस्विना
द्वितीयो दमयन्त्या वै श्वोभूत इति भामिनि ८
श्रुत्वा तं प्रस्थितो राजा शतयोजनयायिभिः
हयैर्वातजवैर्मुख्यैरहमस्य च सारथिः ९
केशिन्युवाच
अथ योऽसौ तृतीयो वः स कुतः कस्य वा पुनः
त्वं च कस्य कथं चेदं त्वयि कर्म समाहितम् १०
बाहुक उवाच
पुण्यश्लोकस्य वै सूतो वार्ष्णेय इति विश्रुतः
स नले विद्रुते भद्रे भाङ्गस्वरिमुपस्थितः ११
अहमप्यश्वकुशलः सूदत्वे च सुनिष्ठितः
ऋतुपर्णेन सारथ्ये भोजने च वृतः स्वयम् १२
केशिन्युवाच
अथ जानाति वार्ष्णेयः क्व नु राजा नलो गतः
कथंचित्त्वयि वैतेन कथितं स्यात्तु बाहुक १३
बाहुक उवाच
इहैव पुत्रौ निक्षिप्य नलस्याशुभकर्मणः
गतस्ततो यथाकामं नैष जानाति नैषधम् १४
न चान्यः पुरुषः कश्चिन्नलं वेत्ति यशस्विनि
गूढश्चरति लोकेऽस्मिन्नष्टरूपो महीपतिः १५
आत्मैव हि नलं वेत्ति या चास्य तदनन्तरा
न हि वै स्वानि लिगानि नलः शंसन्ति कर्हिचित् १६
केशिन्युवाच
योऽसावयोध्यां प्रथमं गतवान्ब्राह्मणस्तदा
इमानि नारीवाक्यानि कथयानः पुनः पुनः १७
क्व नु त्वं कितव छित्त्वा वस्त्रार्धं प्रस्थितो मम
उत्सृज्य विपिने सुप्तामनुरक्तां प्रियां प्रिय १८
सा वै यथा समादिष्टा तत्रास्ते त्वत्प्रतीक्षिणी
दह्यमाना दिवारात्रं वस्त्रार्धेनाभिसंवृता १९

तस्या रुदन्त्याः सततं तेन दुःखेन पार्थिव
प्रसादं कुरु वै वीर प्रतिवाक्यं प्रयच्छ च २०
तस्यास्तत्प्रियमाख्यानं प्रब्रवीहि महामते
तदेव वाक्यं वैदर्भी श्रोतुमिच्छत्यनिन्दिता २१
एतच्छ्रुत्वा प्रतिवचस्तस्य दत्तं त्वया किल
यत्पुरा तत्पुनस्त्वत्तो वैदर्भी श्रोतुमिच्छति २२
बृहदश्व उवाच
एवमुक्तस्य केशिन्या नलस्य कुरुनन्दन
हृदयं व्यथितं चासीदश्रुपूर्णे च लोचने २३
स निगृह्यात्मनो दुःखं दह्यमानो महीपतिः
बाष्पसंदिग्धया वाचा पुनरेवेदमब्रवीत् २४
वैषम्यमपि संप्राप्ता गोपायन्ति कुलस्त्रियः
आत्मानमात्मना सत्यो जितस्वर्गा न संशयः २५
रहिता भर्तृभिश्चैव न क्रुध्यन्ति कदाचन
प्राणांश्चारित्रकवचा धारयन्तीह सत्स्त्रियः २६
प्राणयात्रां परिप्रेप्सोः शकुनैर्हृतवाससः
आधिभिर्दह्यमानस्य श्यामा न क्रोद्धुमर्हति २७
सत्कृतासत्कृता वापि पतिं दृष्ट्वा तथागतम्
भ्रष्टं राज्यं श्रिया हीनं क्षुधितं व्यसनाप्लुतम् २८
एवं ब्रुवाणस्तद्वाक्यं नलः परमदुःखितः
न बाष्पमशकत्सोढुं प्ररुरोद च भारत २९
ततः सा केशिनी गत्वा दमयन्त्यै न्यवेदयत्
तत्सर्वं कथितं चैव विकारं चैव तस्य तम् ३०
इति श्रीमहाभारतने आरण्यकपर्वणि द्विसप्ततितमोऽध्यायः ७२

त्रिसप्ततितमोऽध्यायः

बृहदश्व उवाच
दमयन्ती तु तच्छ्रुत्वा भृशं शोकपरायणा
शङ्कमाना नलं तं वै केशिनीमिदमब्रवीत् १
गच्छ केशिनि भूयस्त्वं परीक्षां कुरु बाहुके

अब्रुवाणा समीपस्था चरितान्यस्य लक्षय २
यदा च किंचित्कुर्यात्स कारणं तत्र भामिनि
तत्र संचेष्टमानस्य संलक्ष्यं तं विचेष्टितम् ३
न चास्य प्रतिबन्धेन देयोऽग्निरपि भामिनि
याचते न जलं देयं सम्यगत्वरमाणया ४
एतत्सर्वं समीक्ष्य त्वं चरितं मे निवेदय
यच्चान्यदपि पश्येथास्तच्चाख्येयं त्वया मम ५
दमयन्त्यैवमुक्ता सा जगामाथाशु केशिनी
निशाम्य च हयज्ञस्य लिङ्गानि पुनरागमत् ६
सा तत्सर्वं यथावृत्तं दमयन्त्यै न्यवेदयत्
निमित्तं यत्तदा दृष्टं बाहुके दिव्यमानुषम् ७
केशिन्युवाच
दृढं शुच्युपचारोऽसौ न मया मानुषः क्वचित्
दृष्टपूर्वः श्रुतो वापि दमयन्ति तथाविधः ८
ह्रस्वमासाद्य संचारं नासौ विनमते क्वचित्
तं तु दृष्ट्वा यथासङ्गमुत्सर्पति यथासुखम्
संकटेऽप्यस्य सुमहद्विवरं जायतेऽधिकम् ९
ऋतुपर्णस्य चार्थाय भोजनीयमनेकशः
प्रेषितं तत्र राज्ञा च मांसं सुबहु पाशवम् १०
तस्य प्रक्षालनार्थाय कुम्भस्तत्रोपकल्पितः
स तेनावेक्षितः कुम्भः पूर्ण एवाभवत्तदा ११
ततः प्रक्षालनं कृत्वा समधिश्रित्य बाहुकः
तृणमुष्टिं समादाय आविध्यैनं समादधत् १२
अथ प्रज्वलितस्तत्र सहसा हव्यवाहनः
तदद्भुततमं दृष्ट्वा विस्मिताहमिहागता १३
अन्यच्च तस्मिन्सुमहदाश्चर्यं लक्षितं मया
यदग्निमपि संस्पृश्य नैव दह्यत्यसौ शुभे १४
छन्देन चोदकं तस्य वहत्यावर्जितं द्रुतम्
अतीव चान्यत्सुमहदाश्चर्यं दृष्टवत्यहम् १५
यत्स पुष्पाण्युपादाय हस्ताभ्यां ममृदे शनैः

मृद्यमानानि पाणिभ्यां तेन पुष्पाणि तान्यथ १६
भूय एव सुगन्धीनि हृषितानि भवन्ति च
एतान्यद्भुत कल्पानि हृषितानि भवन्ति च
एतान्यद्भुतकल्पानि दृष्ट्वाहं द्रुतमागता १७
बृहदश्व उवाच
दमयन्ती तु तच्छ्रुत्वा पुण्यश्लोकस्य चेष्टितम्
अमन्यत नलं प्राप्तं कर्मचेष्टाभिसूचितम् १८
सा शङ्कमाना भर्तारं नलं बाहुकरूपिणम्
केशिनीं श्लक्ष्णया वाचा रुदती पुनरब्रवीत् १९
पुनर्गच्छ प्रमत्तस्य बाहुकस्योपसंस्कृतम्
महानसाच्छृतं मांसं समादायैहि भामिनि २०
सा गत्वा बाहुके व्यग्रे तन्मांसमपकृष्य च
अत्युष्णमेव त्वरिता तत्क्षणं प्रियकारिणी
दमयन्त्यै ततः प्रादात्केशिनी कुरुनन्दन २१
सोचिता नलसिद्धस्य मांसस्य बहुशः पुरा
प्राश्य मत्वा नलं सूदं प्राक्रोशद् भृशदुःखिता २२
वैक्लव्यं च परं गत्वा प्रक्षाल्य च मुखं ततः
मिथुनं प्रेषयामास केशिन्या सह भारत २३
इन्द्रसेनां सह भ्रात्रा समभिज्ञाय बाहुकः
अभिद्रुत्य ततो राजा परिष्वज्याङ्कमानयत् २४
बाहुकस्तु समासाद्य सुतौ सुरसुतोपमौ
भृशं दुःखपरीतात्मा सुस्वरं प्ररुरोद ह २५
नैषधो दर्शयित्वा तु विकारमसकृत्तदा
उत्सृज्य सहसा पुत्रौ केशिनीमिदमब्रवीत् २६
इदं सुसदृशं भद्रे मिथुनं मम पुत्रयोः
ततो दृष्ट्वैव सहसा वाष्पमुत्सृष्टवानहम् २७
बहुशः संपतन्तीं त्वां जनः शङ्केत दोषतः
वयं च देशातिथयो गच्छ भद्रे नमोऽस्तु ते २८
इति श्रीमहाभारते आरण्यकपर्वणि त्रिसप्ततितमोऽध्यायः ७३

## चतुःसप्ततितमोऽध्यायः

बृहदश्व उवाच
सर्वं विकारं दृष्ट्वा तु पुण्यश्लोकस्य धीमतः
आगत्य केशिनी क्षिप्रं दमयन्त्यै न्यवेदयत् १
दमयन्ती ततो भूयः प्रेषयामास केशिनीम्
मातुः सकाशं दुःखार्ता नलशङ्कासमुत्सुका २
परीक्षितो मे बहुशो बाहुको नलशङ्कया
रूपे मे संशयस्त्वेकः स्वयमिच्छामि वेदितुम् ३
स वा प्रवेश्यतां मातर्मां वानुज्ञातुमर्हसि
विदितं वाथ वाज्ञातं पितुर्मे संविधीयताम् ४
एवमुक्ता तु वैदर्भ्या सा देवी भीममब्रवीत्
दुहितुस्तमभिप्रायमन्वजानाच्च पार्थिवः ५
सा वै पित्राभ्यनुज्ञाता मात्रा च भरतर्षभ
नलं प्रवेशयामास यत्र तस्याः प्रतिश्रयः ६
तं तु दृष्ट्वा तथायुक्तं दमयन्ती नलं तदा
तीव्रशोकसमाविष्टा बभूव वरवर्णिनी ७
ततः काषायवसना जटिला मलपंकिनी
दमयन्ती महाराज बाहुकं वाक्यमब्रवीत् ८
दृष्ट पूर्वस्त्वया कश्चिद्धर्मज्ञो नाम बाहुक
सुप्तामुत्सृज्य विपिने गतो यः पुरुषः स्त्रियम् ९
अनागसं प्रियां भार्यां विजने श्रममोहिताम्
अपहाय तु को गच्छेत्पुण्यश्लोकमृते नलम् १०
किं नु तस्य मया कार्यमपराद्धं महीपतेः
यो मामुत्सृज्य विपिने गतवान्निद्रया हृताम् ११
साक्षाद्देवानपाहाय वृतो यः स मया पुरा
अनुव्रतां साभिकामां पुत्रिणीं त्यक्तवान्कथम् १२
अग्नौ पाणिगृहीतां च हंसानां वचने स्थिताम्
भविष्यामीति सत्यं च प्रतिश्रुत्य क्व तद्गतम् १३
दमयन्त्या ब्रुवन्त्यास्तु सर्वमेतदरिन्दम
शोकजं वारि नेत्राभ्यामसुखं प्रास्रवद्बहु १४

अतीव कृष्णताराभ्यां रक्तान्ताभ्यां जलं तु तत्
परिस्रवन्नलो दृष्ट्वा शोकार्त इदमब्रवीत् १५
मम राज्यं प्रनष्टं यन्नाहं तत्कृतवान्स्वयम्
कलिना तत्कृतं भीरु यच्च त्वामहमत्यजम् १६
त्वया तु धर्मभृच्छ्रेष्ठे शापेनाभिहतः पुरा
वनस्थया दुःखितया शोचन्त्या मां विवाससम् १७
स मच्छरीरे त्वच्छापाद्दह्यमानोऽवसत्कलि
त्वच्छापदग्धः सततं सोऽग्नाविव समाहितः १८
मम च व्यवसायेन तपसा चैव निर्जितः
दुःखस्यान्तेन चानेन भवितव्यं हि नौ शुभे १९
विमुच्य मां गतः पापः स ततोऽहमिहागतः
त्वदर्थं विपुलश्रोणि न हि मेऽन्यत्प्रयोजनम् २०
कथं तु नारी भर्तारमनुरक्तमनुव्रतम्
उत्सृज्य वरयेदन्यं यथा त्वं भीरु कर्हिचित् २१
दूताश्चरन्ति पृथिवीं कृत्स्नां नृपतिशासनात्
भैमी किल स्म भर्तारं द्वितीयं वरयिष्यति २२
स्वैरवृत्ता यथाकाममनुरूपमिवात्मनः
श्रुत्वैव चैवं त्वरितो भाङ्गस्वरिरुपस्थितः २३
दमयन्ती तु तच्छ्रुत्वा नलस्य परिदेवितम्
प्राञ्जलिर्वेपमाना च भीता वचनमब्रवीत् २४
इति श्रीमहाभारते आरण्यकपर्वणि चतुःसप्ततितमोऽध्यायः ७४

## पञ्चसप्ततितमोऽध्यायः

दमयन्त्युवाच
न मामर्हसि कल्याण पापेन परिशङ्कितुम्
मया हि देवानुत्सृज्य वृतस्त्वं निषधाधिप १
तवाभिगमनार्थं तु सर्वतो ब्राह्मणाः गताः
वाक्यानि मम गाथाभिर्गायमाना दिशो दश २
ततस्त्वां ब्राह्मणो विद्वान्पर्णादो नाम पार्थिव
अभ्यगच्छत्कोसलायामृतुपर्णनिवेशने ३

तेन वाक्ये हृते सम्यक्प्रतिवाक्ये तथाहृते
उपायोऽय मया दृष्टो नैषधानयने तव ४
त्वामृते न हि लोकेऽन्य एकाह्ना पृथिवीपते
समर्थो योजनशतं गन्तुमश्वैर्नराधिप ५
तथा चेमौ महीपाल भजेऽह चरणौ तव
यथा नासत्कृतं किंचिन्मनसापि चराम्यहम् ६
अयं चरति लोकेऽस्मिन्भूतसाक्षी सदागतिः
एष मुञ्चतु मे प्राणान्यदि पापं चराम्यहम् ७
तथा चरति तिग्मांशुः परेण भुवनं सदा
स विमुञ्चतु मे प्राणान्यदि पापं चराम्यहम् ८
चन्द्रमाः सर्वभूतानामन्तश्चरति साक्षिवत्
स विमुञ्चतु मे प्राणान्यदि पापं चराम्यहम् ९
एते देवास्त्रयः कृत्स्नं त्रैलोक्यं धारयन्ति वै
विब्रुवन्तु यथासत्यमेते वाद्य त्यजन्तु माम् १०
एवमुक्ते ततो वायुरन्तरिक्षादभाषत
नैषा कृतवती पापं नल सत्यं ब्रवीमि ते ११
राजञ्शीलनिधिः स्फीतो दमयन्त्या सुरक्षितः
साक्षिणो रक्षिणश्चास्या वयं त्रीन्परिवत्सरान् १२
उपायो विहितश्चायं त्वदर्थमतुलोऽनया
न ह्येकाह्ना शतं गन्ता त्वदृतेऽन्य पुमानिह १३
उपपन्ना त्वया भैमी त्वं च भैम्या महीपते
मात्र शङ्का त्वया कार्या संगच्छ सह भार्यया १४
तथा ब्रुवति वायौ तु पुष्पवृष्टिः पपात ह
देवदुन्दुभयो नेदुर्ववौ च पवनः शिवः १५
तदद्भुततमं दृष्ट्वा नलो राजाथ भारत
दमयन्त्यां विशङ्कां तां व्यपाकर्षदरिन्दमः १६
ततस्तद्वस्त्रमरजः प्रावृणोद्वसुधाधिपः
संस्मृत्य नागराजानं ततो लेभे वपुः स्वकम् १७
स्वरूपिणं तु भर्तारं दृष्ट्वा भीमसुता तदा
प्राक्रोशदुच्चैरालिङ्ग्य पुण्यश्लोकमनिन्दिता १८

भैमीमपि नलो राजा भ्राजमानो यथा पुरा
सस्वजे स्वसुतौ चापि यथावत्प्रत्यनन्दत १९
ततः स्वोरसि विन्यस्य वक्त्रं तस्य शुभानना
परीता तेन दुःखेन निशश्वासायतेक्षणा २०
तथैव मलदिग्धाङ्गी परिष्वज्य शुचिस्मिता
सुचिरं पुरुषव्याघ्रं तस्थौ साश्रुपरिप्लुता २१
ततः सर्वं यथावृत्तं दमयन्त्या नलस्य च
भीमायाकथयत्प्रीत्या वैदर्भ्या जननी नृप २२
ततोऽब्रवीन्महाराजः कृतशौचमहं नलम्
दमयन्त्या सहोपेतं काल्यं द्रष्टा सुखोषितम् २३
ततस्तौ सहितौ रात्रिं कथयन्तौ पुरातनम्
वने विचरितं सर्वमूषतुर्मुदितौ नृप २४
स चतुर्थे ततो वर्षे संगम्य सह भार्यया
सर्वकामैः सुसिद्धार्थो लब्धवान्परमां मुदम् २५
दमयन्त्यपि भर्तारमवाप्याप्यापिता भृशम्
अर्धसंजातसस्येव तोयं प्राप्य वसुन्धरा २६
सैवं समेत्य व्यपनीततन्द्री शान्तज्वरा हर्षविवृद्धसत्त्वा
रराज भैमी समवाप्तकामा शीतांशुना रात्रिरिवोदितेन २७
इति श्रीमहाभारते आरण्यकपर्वणि पञ्चसप्ततितमोऽध्यायः ७५

## षट्सप्ततितमोऽध्यायः

बृहदश्व उवाच
अथ तां व्युषितो रात्रिं नलो राजा स्वलंकृतः
वैदर्भ्या सहितः काल्यं ददर्श वसुधाधिपम् १
ततोऽभिवादयामास प्रयतः श्वशुरं नलः
तस्यानु दमयन्ती च ववन्दे पितरं शुभा २
तं भीमः प्रतिजग्राह पुत्रवत्परया मुदा
यथार्हं पूजयित्वा च समाश्वासयत प्रभुः
नलेन सहितां तत्र दमयन्तीं पतिव्रताम् ३
तामर्हणां नलो राजा प्रतिगृह्य यथाविधि

परिचर्यां स्वकां तस्मै यथावत्प्रत्यवेदयत् ४
ततो बभूव नगरे सुमहान्हर्षनिस्वनः
जनस्य संप्रहृष्टस्य नलं दृष्ट्वा तथातगम् ५
अशोभयच्च नगरं पताकाध्वजमालिनम्
सिक्तसंमृष्टपुष्पाढ्या राजमार्गाः कृतास्तदा ६
द्वारि द्वारि च पौराणां पुष्पभङ्गः प्रकल्पितः
अर्चितानि च सर्वाणि देवतायतनानि च ७
ऋतुपर्णोऽपि शुश्राव बाहुकच्छद्मिनं नलम्
दमयन्त्या समायुक्तं जहृषे च नराधिपः ८
तमानाय्य नलो राजा क्षमयामास पार्थिवम्
स च तं क्षमयामास हेतुभिर्बुद्धिसंमतः ९
स सत्कृतो महीपालो नैषधं विस्मयान्वितः
दिष्ट्या समेतो दारैः स्वैर्भवानित्यभ्यनन्दत १०
कच्चित्तु नापराधं ते कृतवानस्मि नैषध
अज्ञातवासं वसतो मद्गृहे निषधाधिप ११
यदि वा बुद्धिपूर्वाणि यद्यबुद्धानि कानिचित्
मया कृतान्यकार्याणि तानि मे क्षन्तुमर्हसि १२
नल उवाच
न मेऽपराधं कृतवांस्त्वं स्वल्पमपि पार्थिव
कृतेऽपि च न मे कोपः क्षन्तव्यं हि मया तव १३
पूर्वं ह्यपि सखा मेऽसि संबन्धी च नराधिप
अतः उर्ध्वं तु भूयस्त्वं प्रीतिमाहर्तुमर्हसि १४
सर्वकामैः सुविहितः सुखमस्म्युषितस्त्वयि
न तथा स्वगृहे राजन्यथा तव गृहे सदा १५
इदं चैव हयज्ञानं त्वदीयं मयि तिष्ठति
तदुपाकर्तुमिच्छामि मन्यसे यदि पार्थिव १६
बृहदश्व उवाच
एवमुक्त्वा ददौ विद्यामृतुपर्णाय नैषधः
स च तां प्रतिजग्राह विधिदृष्टेन कर्मणा १७
ततो गृह्याश्वहृदयं तदा भाङ्गस्वरिर्नृपः

सूतमन्यमुपादाय ययौ स्वपुरमेव हि १८
ऋतुपर्णे प्रतिगते नलो राजा विशां पते
नगरे कुण्डिने कालं नातिदीर्घमिवावसत् १९
इति श्रीमहाभारते आरण्यकपर्वणि षट्सप्ततितमोऽध्यायः ७६

सप्तसप्ततितमोऽध्यायः

बृहदश्व उवाच
स मासमुष्य कौन्तेय भीममामन्त्र्य नैषधः
पुरादल्पपरीवारो जगाम निषधान्प्रति १
रथेनैकेन शुभ्रेण दन्तिभिः परिषोडशैः
पञ्चाशद्भिर्हयैश्चैव षट्शतैश्च पदातिभिः २
स कम्पयन्निव महीं त्वरमाणो महीपतिः
प्रविवेशातिसंरब्धस्तरसैव महामनाः ३
ततः पुष्करमासाद्य वीरसेनसुतो नलः
उवाच दीव्याव पुनर्बहु वित्तं मयार्जितम् ४
दमयन्ती च यच्चान्यन्मया वसु समर्जितम्
एष वै मम संन्यासस्तव राज्यं तु पुष्कर ५
पुनः प्रवर्ततां द्यूतमिति मे निश्चिता मतिः
एकपाणेन भद्रं ते प्राणयोश्च पणावहे ६
जित्वा परस्वमाहृत्य राज्यं वा यदि वा वसु
प्रतिपाणः प्रदातव्यः परं हि धनमुच्यते ७
न चेद्वाञ्छसि तद्द्यूतं युद्धद्यूतं प्रवर्तताम्
द्वैरथेनास्तु वै शान्तिस्तव वा मम वा नृप ८
वंशभोज्यमिदं राज्यं मार्गितव्यं यथा तथा
येन तेनाप्युपायेन वृद्धानामिति शासनम् ९
द्वयोरेकतरे बुद्धिः क्रियतामद्य पुष्कर
कैतवेनाक्षवत्यां वा युद्धे वा नम्यतां धनुः १०
नैषधेनैवमुक्तस्तु पुष्करः प्रहसन्निव
ध्रुवमात्मजयं मत्वा प्रत्याह पृथिवीपतिम् ११
दिष्ट्या त्वयार्जितं वित्तं प्रतिपाणाय नैषध

दिष्ट्या च दुष्कृतं कर्म दमयन्त्याः क्षयं गतम्
दिष्ट्या च ध्रियसे राजन्सदारोऽरिनिबर्हण १२
धनेनानेन वैदर्भी जितेन समलंकृता
मामुपस्थास्यति व्यक्तं दिवि शक्रमिवाप्सराः १३
नित्यशो हि स्मरामि त्वां प्रतीक्षामि च नैषध
देवने च मम प्रीतिर्न भवत्यसुहृद्गणैः १४
जित्वा त्वद्य वरारोहां दमयन्तीमनिन्दिताम्
कृतकृत्यो भविष्यामि सा हि मे नित्यशो हृदि १५
श्रुत्वा तु तस्य ता वाचो बह्वबद्धप्रलापिनः
इयेष स शिरश्छेत्तुं खड्गेन कुपितो नलः १६
स्मयंस्तु रोषताम्राक्षस्तमुवाच ततो नृपः
पणावः किं व्याहरसे जित्वा वै व्याहरिष्यसि १७
ततः प्रावर्तत द्यूतं पुष्करस्य नलस्य च
एकपाणेन भद्रं ते नलेन स पराजितः
सरत्नकोशनिचयः प्राणेन पणितोऽपि च १८
जित्वा च पुष्करं राजा प्रहसन्निदमब्रवीत्
मम सर्वमिदं राज्यमव्यग्रं हतकण्टकम् १९
वैदर्भी न त्वया शक्या राजापसद वीक्षितुम्
तस्यास्त्वं सपरीवारो मूढ दासत्वमागतः २०
न तत्त्वया कृतं कर्म येनाहं निर्जितः पुरा
कलिना तत्कृतं कर्म त्वं तु मूढ न बुध्यसे
नाहं परकृतं दोषं त्वय्याधास्ये कथंचन २१
यथासुखं त्वं जीवस्व प्राणानभ्युत्सृजामि ते
तथैव च मम प्रीतिस्त्वयि वीर न संशयः २२
सौभ्रात्रं चैव मे त्वत्तो न कदाचित्प्रहास्यति
पुष्कर त्वं हि मे भ्राता संजीवस्व शतं समाः २३
एवं नलः सान्त्वयित्वा भ्रातरं सत्यविक्रमः
स्वपुरं प्रेषयामास परिष्वज्य पुनः पुनः २४
सान्त्वितो नैषधेनैवं पुष्करः प्रत्युवाच तम्
पुण्यश्लोकं तदा राजन्नभिवाद्य कृताञ्जलि २५

कीर्तिरस्तु तवाक्षय्या जीव वर्षायुतं सुखी
यो मे वितरसि प्राणानधिष्ठानं च पार्थिव २६
स तथा सत्कृतो राज्ञा मासमुष्य तदा नृपः
प्रययौ पुष्करो हृष्टः स्वपुरं स्वजनावृतः २७
महत्या सेनया राजन्विनीतैः परिचारकैः
भ्राजमान इवादित्यो वपुषा पुरुषर्षभ २८
प्रस्थाप्य पुष्करं राजा वित्तवन्तमनामयम्
प्रविवेश पुरं श्रीमानत्यर्थमुपशोभितम्
प्रविश्य सान्त्वयामास पौरांश्च निषधाधिपः २९
इति श्रीमहाभारते आरण्यकपर्वणि सप्तसप्ततितमोऽध्यायः ७७

## अष्टसप्ततितमोऽध्यायः

बृहदश्व उवाच
प्रशान्ते तु पुरे हृष्टे संप्रवृत्ते महोत्सवे
महत्या सेनया राजा दमयन्तीमुपानयत् १
दमयन्तीमपि पिता सत्कृत्य परवीरहा
प्रस्थापयदमेयात्मा भीमो भीपराक्रमः २
आगतायां तु वैदर्भ्यां सपुत्रायां नलो नृपः
वर्तयामास मुदितो देवराडिव नन्दने ३
तथा प्रकाशतां यातो जम्बुद्वीपेऽथ राजसु
पुनः स्वे चावसद्राज्ये प्रत्याहृत्य महायशाः ४
ईजे च विविधैर्यज्ञैर्विधिवत्स्वाप्तदक्षिणैः
तथा त्वमपि राजेन्द्र ससुहृद्वक्ष्यसेऽचिरात् ५
दुःखमेतादृशं प्राप्तो नलः परपुरञ्जयः
देवनेन नरश्रेष्ठ सभार्यो भरतर्षभ ६
एकाकिनैव सुमहन्नलेन पृथिवीपते
दुःखमासादितं घोरं प्राप्तश्चाभ्युदयः पुनः ७
त्वं पुनर्भ्रातृसहितः कृष्णया चैव पाण्डव
रमसेऽस्मिन्महारण्ये धर्ममेवानुचिन्तयन् ८
ब्राह्मणैश्च महाभागैर्वेदवेदाङ्गपारगैः

नित्यमन्वास्यसे राजंस्तत्र का परिदेवना ९
इतिहासमिमं चापि कलिनाशनमुच्यते
शक्यमाश्वासितुं श्रुत्वा त्वद्विधेन विशां पते १०
अस्थिरत्वं च संचिन्त्य पुरुषार्थस्य नित्यदा
तस्याये च व्यये चैव समाश्वसिहि मा शुचः ११
ये चेदं कथयिष्यन्ति नलस्य चरितं महत्
श्रोष्यन्ति चाप्यभीक्ष्णं वै नालक्ष्मीस्तान्भजिष्यति
अर्थास्तस्योपपत्स्यन्ते धन्यतां च गमिष्यति १२
इतिहासमिमं श्रुत्वा पुराणं शश्वदुत्तमम्
पुत्रान्पौत्रान्पशूंश्चैव वेत्स्यते नृषु चाग्र्यताम्
अरोगः प्रीतिमांश्चैव भविष्यति न संशयः १३
भयं पश्यसि यच्च त्वमाह्वयिष्यति मां पुनः
अक्षज्ञ इति तत्तेऽह नाशयिष्यामि पार्थिव १४
वेदाक्षहृदयं कृत्स्नमहं सत्यपराक्रम
उपपद्यस्व कौन्तेय प्रसन्नोऽह ब्रवीमि ते १५
वैशम्पायन उवाच
ततो हृष्टमना राजा बृहदश्वमुवाच ह
भगवन्नक्षहृदयं ज्ञातुमिच्छामि तत्त्वतः १६
ततोऽक्षहृदयं प्रादात्पाण्डवाय महात्मने
दत्त्वा चाश्वशिरोऽगच्छदुपस्प्रष्टुं महातपाः १७
बृहदश्वे गते पार्थमश्रौषीत्सव्यसाचिनम्
वर्तमानं तपस्युग्रे वायुभक्षं मनीषिणम् १८
ब्राह्मणेभ्यस्तपस्विभ्यः संपतद्भ्यस्ततस्ततः
तीर्थशैलवनेभ्यश्च समेतेभ्यो दृढव्रतः १९
इति पार्थो महाबाहुर्दुरापं तप आस्थितः
न तथा दृष्टपूर्वोऽन्य कश्चिदुग्रतपा इति २०
यथा धनञ्जयः पार्थस्तपस्वी नियतव्रतः
मुनिरेकचरः श्रीमान्धर्मो विग्रहवानिव २१
तं श्रुत्वा पाण्डवो राजंस्तप्यमानं महावने
अन्वशोचत कौन्तेयः प्रियं वै भ्रातरं जयम् २२

दह्यमानेन तु तदा शरणार्थी महावने
ब्राह्मणान्विविधज्ञानान्पर्यपृच्छद्युधिष्ठिरः २३
इति श्रीमहाभारते आरण्यकपर्वणि अष्टसप्ततितमोऽध्यायः ७८

## एकोनाशीतितमोऽध्यायः

जनमेजय उवाच
भगवन्काम्यकात्पार्थे गते मे प्रपितामहे
पाण्डवाः किमकुर्वन्त तमृते सव्यसाचिनम् १
स हि तेषां महेष्वासो गतिरासीदनीकजित्
आदित्यानां यथा विष्णुस्तथैव प्रतिभाति मे २
तेनेन्द्रसमवीर्येण सङ्ग्रामेष्वनिवर्तिना
विनाभूता वने वीराः कथमासन्पितामहाः ३
वैशम्पायन उवाच
गते तु काम्यकात्तात पाण्डवे सव्यसाचिनि
बभूवुः कौरवेयास्ते दुःखशोकपरायणाः ४
आक्षिप्तसूत्रा मणयश्छिन्नपक्षा इव द्विजाः
अप्रीतमनसः सर्वे बभूवुरथ पाण्डवाः ५
वनं तु तदभूत्तेन हीनमक्लिष्टकर्मणा
कुबेरेण यथा हीनं वनं चैत्ररथं तथा ६
तमृते पुरुषव्याघ्रं पाण्डवा जनमेजय
मुदमप्राप्नुवन्तो वै काम्यके न्यवसंस्तदा ७
ब्राह्मणार्थे पराक्रान्ताः शुद्धैर्बाणैर्महारथाः
निघ्नन्तो भरतश्रेष्ठ मेध्यान्बहुविधान्मृगान् ८
नित्यं हि पुरुषव्याघ्रा वन्याहारमरिन्दमाः
विप्रसृत्य समाहृत्य ब्राह्मणेभ्यो न्यवेदयन् ९
एवं ते न्यवसंस्तत्र सोत्कण्ठाः पुरुषर्षभाः
अहृष्टमनसः सर्वे गते राजन्धनञ्जये १०
अथ विप्रोषितं वीरं पाञ्चाली मध्यमं पतिम्
स्मरन्ती पाण्डवश्रेष्ठमिदं वचनमब्रवीत् ११
योऽजुनेनाऽजुनस्तुल्यो द्विबाहुर्बहुबाहुना

तमृते पाण्डवश्रेष्ठं वनं न प्रतिभाति मे
शून्यामिव च पश्यामि तत्र तत्र महीमिमाम् १२
बह्वाश्चर्यमिदं चापि वनं कुसुमितद्रुमम्
न तथा रमणीयं मे तमृते सव्यसाचिनम् १३
नीलाम्बुदसमप्रख्यं मत्तमातङ्गविक्रमम्
तमृते पुण्डरीकाक्षं काम्यकं नातिभाति मे १४
यस्य स्म धनुषो घोषः श्रूयतेऽशनिनिस्वनः
न लभे शर्म तं राजन्स्मरन्ती सव्यसाचिनम् १५
तथा लालप्यमानां तां निशम्य परवीरहा
भीमसेनो महाराज द्रौपदीमिदमब्रवीत् १६
मनःप्रीतिकरं भद्रे यद्ब्रवीषि सुमध्यमे
तन्मे प्रीणाति हृदयममृतप्राशनोपमम् १७
यस्य दीर्घौ समौ पीनौ भुजौ परिघसंनिभौ
मौर्वीकृतकिणौ वृत्तौ खड्गायुधगदाधरौ १८
निष्काङ्गदकृतापीडौ पञ्चशीर्षाविवोरगौ
तमृते पुरुषव्याघ्रं नष्टसूर्यमिदं वनम् १९
यमाश्रित्य महाबाहुं पाञ्चालाः कुरवस्तथा
सुराणामपि यत्तानां पृतनासु न बिभ्यति २०
यस्य बाहू समाश्रित्य वयं सर्वे महात्मनः
मन्यामहे जितानाजौ परान्प्राप्तां च मेदिनीम् २१
तमृते फल्गुनं वीरं न लभे काम्यके धृतिम्
शून्यामिव च पश्यामि तत्र तत्र महीमिमाम् २२
नकुल उवाच
य उदीचीं दिशं गत्वा जित्वायुधि महाबलान्
गन्धर्वमुख्याञ्शतशो हयाँल्लेभे स वासविः २३
राजंस्तित्तिरिकल्माषाञ्श्रीमाननिलरंहसः
प्रादाद्भ्रात्रे प्रियः प्रेम्णा राजसूये महाक्रतौ २४
तमृते भीमधन्वानं भीमादवरजं वने
कामये काम्यके वासं नेदानीममरोपमम् २५
सहदेव उवाच

यो धनानि च कन्याश्च युधि जित्वा महारथान्
स्राजहार पुरा राज्ञे राजसूये महाक्रतौ २६
यः समेतान्मृधे जित्वा यादवानमितद्युतिः
सुभद्रामाजहारैको वासुदेवस्य संमते २७
तस्य जिष्णोर्बृसीं दृष्ट्वा शून्यामुपनिवेशने
हृदयं मे महाराज न शाम्यति कदाचन २८
वनादस्माद्विवासं तु रोचयेऽहमरिन्दम
न हि नस्तमृते वीरं रमणीयमिदं वनम् २९
इति श्रीमहाभारते स्रारगयकपर्वणि एकोनाशीतितमोऽध्यायः ७९

स्रशीतितमोऽध्यायः

वैशम्पायन उवाच
धनञ्जयोत्सुकास्ते तु वने तस्मिन्महारथाः
न्यवसन्त महाभागा द्रौपद्या सह पाराडवाः १
स्रथापश्यन्महात्मानं देवर्षिं तत्र नारदम्
दीप्यमानं श्रिया ब्राह्म्या दीप्ताग्निसमतेजसम् २
स तैः परिवृतः श्रीमान्भ्रातृभिः कुरुसत्तमः
विबभावतिदीप्तौजा देवैरिव शतक्रतुः ३
यथा च वेदान्सावित्री याज्ञसेनी तथा सती
न जहौ धर्मतः पार्थान्मेरुमर्कप्रभा यथा ४
प्रतिगृह्य तु तां पूजां नारदो भगवानृषिः
स्राश्वासयद्धर्मसुतं युक्तरूपमिवानघ ५
उवाच च महात्मानं धर्मराजं युधिष्ठिरम्
ब्रूहि धर्मभृतां श्रेष्ठ केनार्थः किं ददामि ते ६
स्रथ धर्मसुतो राजा प्रणम्य भ्रातृभिः सह
उवाच प्राञ्जलिर्वाक्यं नारदं देवसंमितम् ७
त्वयि तुष्टे महाभाग सर्वलोकाभिपूजिते
कृतमित्येव मन्येऽह प्रसादात्तव सुव्रत ८
यदि त्वहमनुग्राह्यो भ्रातृभिः सहितोऽनघ
संदेहं मे मुनिश्रेष्ठ हृदिस्थं छेत्तुमर्हसि ९

प्रदक्षिणं यः कुरुते पृथिवीं तीर्थतत्परः
किं फलं तस्य कार्त्स्न्येन तद्ब्रह्मन्वक्तुमर्हसि १०
नारद उवाच
शृणु राजन्नवहितो यथा भीष्मेण भारत
पुलस्त्यस्य सकाशाद्वै सर्वमेतदुपश्रुतम् ११
पुरा भागीरथीतीरे भीष्मो धर्मभृतां वरः
पित्र्यं व्रतं समास्थाय न्यवसन्मुनिवत्तदा १२
शुभे देशे महाराज पुण्ये देवर्षिसेविते
गङ्गाद्वारे महातेजा देवगन्धर्वसेविते १३
स पितॄंस्तर्पयामास देवांश्च परमद्युतिः
ऋषींश्च तोषयामास विधिदृष्टेन कर्मणा १४
कस्यचित्त्वथ कालस्य जपन्नेव महातपाः
ददर्शाद्भुतसंकाशं पुलस्त्यमृषिसत्तमम् १५
स तं दृष्ट्वोग्रतपसं दीप्यमानमिव श्रिया
प्रहर्षमतुलं लेभे विस्मयं परमं ययौ १६
उपस्थितं महाराज पूजयामास भारत
भीष्मो धर्मभृतां श्रेष्ठो विधिदृष्टेन कर्मणा १७
शिरसा चार्घ्यमादाय शुचिः प्रयतमानसः
नाम संकीर्तयामास तस्मिन्ब्रह्मर्षिसत्तमे १८
भीष्मोऽहमस्मि भद्रं ते दासोऽस्मि तव सुव्रत
तव संदर्शनादेव मुक्तोऽह सर्वकिल्बिषैः १९
एवमुक्त्वा महाराज भीष्मो धर्मभृतां वरः
वाग्यतः प्राञ्जलिर्भूत्वा तूष्णीमासीद्युधिष्ठिर २०
तं दृष्ट्वा नियमेनाथ स्वाध्यायाम्नायकर्शितम्
भीष्मं कुरुकुलश्रेष्ठं मुनिः प्रीतमनाभवत् २१
पुलस्त्य उवाच
अनेन तव धर्मज्ञ प्रश्रयेण दमेन च
सत्येन च महाभाग तुष्टोऽस्मि तव सर्वशः २२
यस्येदृशस्ते धर्मोऽय पितृभक्त्याश्रितोऽनघ
तेन पश्यसि मां पुत्र प्रीतिश्चापि मम त्वयि २३

अमोघदर्शी भीष्माहं ब्रूहि किं करवाणि ते
यद्वक्ष्यसि कुरुश्रेष्ठ तस्य दातास्मि तेऽनघ २४
भीष्म उवाच
प्रीते त्वयि महाभाग सर्वलोकाभिपूजिते
कृतमित्येव मन्येऽहं यदहं दृष्टवान्प्रभुम् २५
यदि त्वहमनुग्राह्यस्तव धर्मभृतां वर
वक्ष्यामि हृत्स्थं संदेहं तन्मे त्वं वक्तुमर्हसि २६
अस्ति मे भगवन्कश्चित्तीर्थेभ्यो धर्मसंशयः
तमहं श्रोतुमिच्छामि पृथक्संकीर्तितं त्वया २७
प्रदक्षिणं यः पृथिवीं करोत्यमितविक्रम
किं फलं तस्य विप्रर्षे तन्मे ब्रूहि तपोधन २८
पुलस्त्य उवाच
हन्त तेऽहं प्रवक्ष्यामि यदृषीणां परायणम्
तदेकाग्रमनास्तात शृणु तीर्थेषु यत्फलम् २९
यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम्
विद्या तपश्च कीर्तिश्च स तीर्थफलमश्नुते ३०
प्रतिग्रहादुपावृत्तः संतुष्टो नियतः शुचिः
अहंकारनिवृत्तश्च स तीर्थफलमश्नुते ३१
अकल्कको निरारम्भो लघ्वाहारो जितेंद्रियः
विमुक्तः सर्वदोषैर्यः स तीर्थफलमश्नुते ३२
अक्रोधनश्च राजेन्द्र सत्यशीलो दृढव्रतः
आत्मोपमश्च भूतेषु स तीर्थफलमश्नुते ३३
ऋषिभिः क्रतवः प्रोक्ता वेदेष्विह यथाक्रमम्
फलं चैव यथातत्त्वं प्रेत्य चेह च सर्वशः ३४
न ते शक्या दरिद्रेण यज्ञाः प्राप्तुं महीपते
बहूपकरणा यज्ञा नानासंभारविस्तराः ३५
प्राप्यन्ते पार्थिवैरेते समृद्धैर्वा नरैः क्वचित्
नार्थन्यूनोपकरणैरेकात्मभिरसंहितैः ३६
यो दरिद्रैरपि विधिः शक्यः प्राप्तुं नरेश्वर
तुल्यो यज्ञफलैः पुण्यैस्तं निबोध युधां वर ३७

ऋषीणां परमं गुह्यमिदं भरतसत्तम
तीर्थाभिगमनं पुण्यं यज्ञैरपि विशिष्यिते ३८
अनुपोष्य त्रिरात्राणि तीर्थान्यनभिगम्य च
अदत्त्वा काञ्चनं गाश्च दरिद्रो नाम जायते ३९
अग्निष्टोमादिभिर्यज्ञैरिष्ट्वा विपुलदक्षिणैः
न तत्फलमवाप्नोति तीर्थाभिगमनेन यत् ४०
नृलोके देवदेवस्य तीर्थं त्रैलोक्यविश्रुतम्
पुष्करं नाम विख्यातं महाभागः समाविशेत् ४१
दश कोटिसहस्राणि तीर्थानां वै महीपते
सांनिध्यं पुष्करे येषां त्रिसन्ध्यं कुरुनन्दन ४२
आदित्या वसवो रुद्राः साध्याश्च समरुद्गणाः
गन्धर्वाप्सरसश्चैव नित्यं संनिहिता विभो ४३
यत्र देवास्तपस्तप्त्वा दैत्या ब्रह्मर्षयस्तथा
दिव्ययोगा महाराज पुण्येन महतान्विताः ४४
मनसाप्यभिकामस्य पुष्कराणि मनस्विनः
पूयन्ते सर्वपापानि नाकपृष्ठे च पूज्यते ४५
तस्मिंस्तीर्थे महाभाग नित्यमेव पितामहः
उवास परमप्रीतो देवदानवसंमतः ४६
पुष्करेषु महाभाग देवाः सर्षिपुरोगमाः
सिद्धिं समभिसंप्राप्ताः पुण्येन महतान्विताः ४७
तत्राभिषेकं यः कुर्यात्पितृदेवार्चने रतः
अश्वमेधं दशगुणं प्रवदन्ति मनीषिणः ४८
अप्येकं भोजयेद्विप्रं पुष्करारण्यमाश्रितः
तेनासौ कर्मणा भीष्म प्रेत्य चेह च मोदते ४९
शाकमूलफलैर्वापि येन वर्तयते स्वयम्
तद्वै दद्याद्ब्राह्मणाय श्रद्धावाननसूयकः
तेनैव प्राप्नुयात्प्राज्ञो हयमेधफलं नरः ५०
ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा राजसत्तम
न वियोनिं व्रजन्त्येते स्नातास्तीर्थे महात्मनः ५१
कार्तिक्यां तु विशेषेण योऽभिगच्छेत पुष्करम्

फलं तत्राक्षयं तस्य वर्धते भरतर्षभ ५२
सायं प्रातः स्मरेद्यस्तु पुष्कराणि कृताञ्जलि
उपस्पृष्टं भवेत्तेन सर्वतीर्थेषु भारत
प्राप्नुयाच्च नरो लोकान्ब्रह्मणः सदनेऽक्षयान् ५३
जन्मप्रभृति यत्पापं स्त्रियो वा पुरुषस्य वा
पुष्करे स्नातमात्रस्य सर्वमेव प्रणश्यति ५४
यथा सुराणां सर्वेषामादिस्तु मधुसूदनः
तथैव पुष्करं राजंस्तीर्थानामादिरुच्यते ५५
उष्य द्वादश वर्षाणि पुष्करे नियतः शुचिः
क्रतून्सर्वानवाप्नोति ब्रह्मलोकं च गच्छति ५६
यस्तु वर्षशतं पूर्णमग्निहोत्रमुपासते
कार्तिकीं वा वसेदेकां पुष्करे सममेव तत् ५७
दुष्करं पुष्करं गन्तुं दुष्करं पुष्करे तपः
दुष्करं पुष्करे दानं वस्तुं चैव सुदुष्करम् ५८
उष्य द्वादशरात्रं तु नियतो नियताशनः
प्रदक्षिणमुपावृत्तो जम्बूमार्गं समाविशेत् ५९
जम्बूमार्गं समाविश्य देवर्षिपितृसेवितम्
अश्वमेधमवाप्नोति विष्णुलोकं च गच्छति ६०
तत्रोष्य रजनीः पञ्च षष्ठकालक्षमी नरः
न दुर्गतिमवाप्नोति सिद्धिं प्राप्नोति चोत्तमाम् ६१
जम्बूमार्गादुपावृत्तो गच्छेत्तण्डुलिकाश्रमम्
न दुर्गतिमवाप्नोति स्वर्गलोके च पूज्यते ६२
अगस्त्यसर आसाद्य पितृदेवार्चने रतः
त्रिरात्रोपोषितो राजन्नग्निष्टोमफलं लभेत् ६३
शाकवृत्तिः फलैर्वापि कौमारं विन्दते पदम्
कण्वाश्रमं समासाद्य श्रीजुष्टं लोकपूजितम् ६४
धर्मारण्यं हि तत्पुण्यमाद्यं च भरतर्षभ
यत्र प्रविष्टमात्रो वै पापेभ्यो विप्रमुच्यते ६५
अर्चयित्वा पितृन्देवान्नियतो नियताशनः
सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते ६६

प्रदक्षिणं ततः कृत्वा ययातिपतनं व्रजेत्
हयमेधस्य यज्ञस्य फलं प्राप्नोति तत्र वै ६७
महाकालं ततो गच्छेन्नियतो नियताशनः
कोटितीर्थमुपस्पृश्य हयमेधफलं लभेत् ६८
ततो गच्छेत धर्मज्ञ पुण्यस्थानमुमापतेः
नाम्ना भद्रवटं नाम त्रिषु लोकेषु विश्रुतम् ६९
तत्राभिगम्य चेशानं गोसहस्रफलं लभेत्
महादेवप्रसादाच्च गाणपत्यमवाप्नुयात् ७०
नर्मदामथ चासाद्य नदीं त्रैलोक्यविश्रुताम्
तर्पयित्वा पितॄन्देवानग्निष्टोमफलं लभेत् ७१
दक्षिणं सिन्धुमासाद्य ब्रह्मचारी जितेन्द्रियः
अग्निष्टोममवाप्नोति विमानं चाधिरोहति ७२
चर्मण्वतीं समासाद्य नियतो नियताशनः
रन्तिदेवाभ्यनुज्ञातो अग्निष्टोमफलं लभेत् ७३
ततो गच्छेत धर्मज्ञ हिमवत्सुतमर्बुदम्
पृथिव्यां यत्र वै छिद्रं पूर्वमासीद्युधिष्ठिर ७४
तत्राश्रमो वसिष्ठस्य त्रिषु लोकेषु विश्रुतः
तत्रोष्य रजनीमेकां गोसहस्रफलं लभेत् ७५
पिङ्गातीर्थमुपस्पृश्य ब्रह्मचारी जितेन्द्रियः
कपिलानां नरव्याघ्र शतस्य फलमश्नुते ७६
ततो गच्छेत धर्मज्ञ प्रभासं लोकविश्रुतम्
यत्र संनिहितो नित्यं स्वयमेव हुताशनः
देवतानां मुखं वीर अनलोऽनिलसारथिः ७७
तस्मिंस्तीर्थवरे स्नात्वा शुचिः प्रयतमानसः
अग्निष्टोमातिरात्राभ्यां फलं प्राप्नोति मानवः ७८
ततो गत्वा सरस्वत्याः सागरस्य च संगमे
गोसहस्रफलं प्राप्य स्वर्गलोके महीयते
दीप्यमानोऽग्निवन्नित्यं प्रभया भरतर्षभ ७९
त्रिरात्रमुषितस्तत्र तर्पयेत्पितृदेवताः
प्रभासते यथा सोमो अश्वमेधं च विन्दति ८०

वरदानं ततो गच्छेत्तीर्थं भरतसत्तम
विष्णोर्दुर्वाससा यत्र वरो दत्तो युधिष्ठिर
वरदाने नरः स्नात्वा गोसहस्रफलं लभेत् ८१
ततो द्वरावतीं गच्छेन्नियतो नियताशनः
पिराडारके नरः स्नात्वा लभेद्बहु सुवर्णकम् ८२
तस्मिंस्तीर्थे महाभाग पद्मलत्तरालत्तिताः
अद्यापि मुद्रा दृश्यन्ते तदद्भुतमरिन्दम ८३
त्रिशूलाङ्कानि पद्मानि दृश्यन्ते कुरुनन्दन
महादेवस्य सान्निध्यं तत्रैव भरतर्षभ ८४
सागरस्य च सिन्धोश्च संगमं प्राप्य भारत
तीर्थे सलिलराजस्य स्नात्वा प्रयतमानसः ८५
तर्पयित्वा पितृन्देवानृषींश्च भरतर्षभ
प्राप्नोति वारुणं लोकं दीप्यमानः स्वतेजसा ८६
शंकुकर्णेश्वरं देवमर्चयित्वा युधिष्ठिर
अश्वमेधं दशगुणं प्रवदन्ति मनीषिणः ८७
प्रदत्तिरामुपावृत्य गच्छेत भरतर्षभ
तीर्थं कुरुवरश्रेष्ठ त्रिषु लोकेषु विश्रुतम्
दृमीति नाम्ना विख्यातं सर्वपापप्रमोचनम् ८८
तत्र ब्रह्मादयो देवा उपासन्ते महेश्वरम्
तत्र स्नात्वार्चयित्वा च रुद्रं देवगणैर्वृतम्
जन्मप्रभृति पापानि कृतानि नुदते नरः ८९
दृमी चात्र नरश्रेष्ठ सर्वदेवैरभिष्टुता
तत्र स्नात्वा नरव्याघ्र हयमेधमवाप्नुयात् ९०
जित्वा यत्र महाप्राज्ञ विष्णुना प्रभविष्णुना
पुरा शौचं कृतं राजन्हत्वा दैवतकराटकान् ९१
ततो गच्छेत धर्मज्ञ वसोर्धारामभिष्टुताम्
गमनादेव तस्यां हि हयमेधमवाप्नुयात् ९२
स्नात्वा कुरुवरश्रेष्ठ प्रयतात्मा तु मानवः
तर्प्य देवान्पितृंश्चैव विष्णुलोके महीयते ९३
तीर्थं चात्र परं पुरायं वसूनां भरतर्षभ

तत्र स्नात्वा च पीत्वा च वसूनां संमतो भवेत् ९४
सिन्धूत्तममिति ख्यातं सर्वपापप्रणाशनम्
तत्र स्नात्वा नरश्रेष्ठ लभेद्बहु सुवर्णकम् ९५
ब्रह्मतुङ्गं समासाद्य शुचिः प्रयतमानसः
ब्रह्मलोकमवाप्नोति सुकृती विरजा नरः ९६
कुमारिकाणां शक्रस्य तीर्थं सिद्धनिषेवितम्
तत्र स्नात्वा नरः क्षिप्रं शक्रलोकमवाप्नुयात् ९७
रेणुकायाश्च तत्रैव तीर्थं देवनिषेवितम्
तत्र स्नात्वा भवेद्विप्रो विमलश्चन्द्रमा यथा ९८
अथ पञ्चनदं गत्वा नियतो नियताशनः
पञ्च यज्ञानवाप्नोति क्रमशो येऽनुकीर्तिताः ९९
ततो गच्छेत धर्मज्ञ भीमायाः स्थानमुत्तमम्
तत्र स्नात्वा तु योन्यां वै नरो भरतसत्तम १००
देव्याः पुत्रो भवेद्राजंस्तप्तकुण्डलविग्रहः
गवां शतसहस्रस्य फलं चैवाप्नुयान्महत् १०१
गिरिमुञ्जं समासाद्य त्रिषु लोकेषु विश्रुतम्
पितामहं नमस्कृत्य गोसहस्रफलं लभेत् १०२
ततो गच्छेत धर्मज्ञ विमलं तीर्थमुत्तमम्
अद्यापि यत्र दृश्यन्ते मत्स्याः सौवर्णराजताः १०३
तत्र स्नात्वा नरश्रेष्ठ वाजपेयमवाप्नुयात्
सर्वपापविशुद्धात्मा गच्छेच्च परमां गतिम् १०४
ततो गच्छेत मलदां त्रिषु लोकेषु विश्रुताम्
पश्चिमायां तु सन्ध्यायामुपस्पृश्य यथाविधि १०५
चरुं नरेन्द्र सप्तार्चेर्यथाशक्ति निवेदयेत्
पितृणामक्षयं दानं प्रवदन्ति मनीषिणः १०६
गवां शतसहस्रेण राजसूयशतेन च
अश्वमेधसहस्रेण श्रेयान्सप्तार्चिषश्चरुः १०७
ततो निवृत्तो राजेन्द्र वस्त्रापदमथाविशेत्
अभिगम्य महादेवमश्वमेधफलं लभेत् १०८
मणिमन्तं समासाद्य ब्रह्मचारी समाहितः

एकरात्रोषितो राजन्नग्निष्टोमफलं लभेत् १०९
अथ गच्छेत राजेन्द्र देविकां लोकविश्रुताम्
प्रसूतिर्यत्र विप्राणां श्रूयते भरतर्षभ ११०
त्रिशूलपाणेः स्थानं च त्रिषु लोकेषु विश्रुतम्
देविकायां नरः स्नात्वा समभ्यर्च्य महेश्वरम् १११
यथाशक्तिचरुं तत्र निवेद्य भरतर्षभ
सर्वकामसमृद्धस्य यज्ञस्य लभते फलम् ११२
कामाख्यं तत्र रुद्रस्य तीर्थं देवर्षिसेवितम्
तत्र स्नात्वा नरः क्षिप्रं सिद्धिमाप्नोति भारत ११३
यजनं याजनं गत्वा तथैव ब्रह्मवालुकाम्
पुष्पन्यास उपस्पृश्य न शोचेन्मरणं गतः ११४
अर्धयोजनविस्तारां पञ्चयोजनमायताम्
एतावद्देविकामाहुः पुण्यां देवर्षिसेविताम् ११५
ततो गच्छेत धर्मज्ञ दीर्घसत्रं यथाक्रमम्
तत्र ब्रह्मादयो देवाः सिद्धाश्च परमर्षयः
दीर्घसत्रमुपासन्ते दक्षिणाभिर्यतव्रताः ११६
गमनादेव राजेन्द्र दीर्घसत्रमरिन्दम
राजसूयाश्वमेधाभ्यां फलं प्राप्नोति मानवः ११७
ततो विनशनं गच्छेन्नियतो नियताशनः
गच्छत्यन्तर्हिता यत्र मरुपृष्ठे सरस्वती
चमसे च शिवोद्भेदे नागोद्भेदे च दृश्यते ११८
स्नात्वा च चमसोद्भेदे अग्निष्टोमफलं लभेत्
शिवोद्भेदे नरःस्नात्वा गोसहस्रफलं लभेत्
नागोद्भेदे नरः स्नात्वा नागलोकमवाप्नुयात् ११९
शशयानं च राजेन्द्र तीर्थमासाद्य दुर्लभम्
शशरूपप्रतिच्छन्नाः पुष्करा यत्र भारत १२०
सरस्वत्यां महाराज अनु संवत्सरं हि ते
स्नायन्ते भरतश्रेष्ठ वृत्तां वै कार्तिकीं सदा १२१
तत्र स्नात्वा नरव्याघ्र द्योतते शशिवत्सदा
गोसहस्रफलं चैव प्राप्नुयाद्भरतर्षभ १२२

कुमारकोटिमासाद्य नियतः कुरुनन्दन
तत्राभिषेकं कुर्वीत पितृदेवार्चने रतः
गवामयमवाप्नोति कुलं चैव समुद्धरेत् १२३
ततो गच्छेत धर्मज्ञ रुद्रकोटिं समाहितः
पुरा यत्र महाराज ऋषिकोटिः समाहिताः
प्रहर्षेण च संविष्टा देवदर्शनकाङ्क्षया १२४
अहं पूर्वमहं पूर्वं द्रक्ष्यामि वृषभध्वजम्
एवं संप्रस्थिता राजन्नृषयः किल भारत १२५
ततो योगेश्वरेणापि योगमास्थाय भूपते
तेषां मन्युप्रणाशार्थमृषीणां भावितात्मनाम् १२६
सृष्टा कोटिस्तु रुद्राणामृषीणामग्रतः स्थिता
मया पूर्वतरं दृष्ट इति ते मेनिरे पृथक् १२७
तेषां तुष्टो महादेव ऋषिणामुग्रतेजसाम्
भक्त्या परमया राजन्वरं तेषां प्रदिष्टवान्
अद्य प्रभृति युष्माकं धर्मवृद्धिर्भविष्यति १२८
तत्र स्नात्वा नरव्याघ्ररुद्रकोट्यां नरः शुचिः
अश्वमेधमवाप्नोति कुलं चैव समुद्धरेत् १२९
ततो गच्छेत राजेन्द्र संगमं लोकविश्रुतम्
सरस्वत्या महापुगयमुपासन्ते जनार्दनम् १३०
यत्र ब्रह्मादयो देवाः ऋषयः सिद्धचारणाः
अभिगच्छन्ति राजेन्द्र चैत्रशुक्लचतुर्दशीम् १३१
तत्र स्नात्वा नरव्याघ्र विन्देद्बहु सुवर्णकम्
सर्वपापविशुद्धात्मा ब्रह्मलोकं च गच्छति १३२
ऋषीणां यत्र सत्राणि समाप्तानि नराधिप
सत्रावसानमासाद्य गोसहस्रफलं लभेत् १३३
इति श्रीमहाभारते आरगयकपर्वणि अशीतितमोऽध्यायः ८०

## एकाशीतितमोऽध्यायः

पुलस्त्य उवाच
ततो गच्छेत राजेन्द्र कुरुक्षेत्रमभिष्टुतम्

पापेभ्यो विप्रमुच्यन्ते तद्गताः सर्वजन्तवः १
कुरुक्षेत्रं गमिष्यामि कुरुक्षेत्रे वसाम्यहम्
य एवं सततं ब्रूयात्सोऽपि पापैः प्रमुच्यते २
तत्र मासं वसेद्वीर सरस्वत्यां युधिष्ठिर
यत्र ब्रह्मादयो देवा ऋषयः सिद्धचारणाः ३
गन्धर्वाप्सरसो यक्षाः पन्नगाश्च महीपते
ब्रह्मक्षेत्रं महापुण्यमभिगच्छन्ति भारत ४
मनसाप्यभिकामस्य कुरुक्षेत्रं युधिष्ठिर
पापानि विप्रणश्यन्ति ब्रह्मलोकं च गच्छति ५
गत्वा हि श्रद्धया युक्तः कुरुक्षेत्रं कुरूद्वह
राजसूयाश्वमेधाभ्यां फलं प्राप्नोति मानवः ६
ततो मचक्रुकं राजन्द्वारपालं महाबलम्
यक्षं समभिवाद्यैव गोसहस्रफलं लभेत् ७
ततो गच्छेत धर्मज्ञ विष्णोः स्थानमनुत्तमम्
सततं नाम राजेन्द्र यत्र संनिहितो हरिः ८
तत्र स्नात्वार्चयित्वा च त्रिलोकप्रभवं हरिम्
अश्वमेधमवाप्नोति विष्णुलोकं च गच्छति ९
ततः पारिप्लवं गच्छेत्तीर्थं त्रैलोक्यविश्रुतम्
अग्निष्टोमातिरात्राभ्यां फलं प्राप्नोति मानवः १०
पृथिव्यास्तीर्थमासाद्य गोसहस्रफलं लभेत्
ततः शालूकिनीं गत्वा तीर्थसेवी नराधिप
दशाश्वमेधिके स्नात्वा तदेव लभते फलम् ११
सर्पदर्वीं समासाद्य नागानां तीर्थमुत्तमम्
अग्निष्टोममवाप्नोति नागलोकं च विन्दति १२
ततो गच्छेत धर्मज्ञ द्वारपालं तरन्तुकम्
तत्रोष्य रजनीमेकां गोसहस्रफलं लभेत् १३
ततः पञ्चनदं गत्वा नियतो नियताशनः
कोटितीर्थमुपस्पृश्य हयमेधफलं लभेत्
अश्विनोस्तीर्थमासाद्य रूपवानभिजायते १४
ततो गच्छेत धर्मज्ञ वाराहं तीर्थमुत्तमम्

विष्णुर्वाराहरूपेण पूर्वं यत्र स्थितोऽभवत्
तत्र स्नात्वा नरव्याघ्र अग्निष्टोमफलं लभेत् १५
ततो जयन्त्या राजेन्द्र सोमतीर्थं समाविशेत्
स्नात्वा फलमवाप्नोति राजसूयस्य मानवः
एकहंसे नरः स्नात्वा गोसहस्रफलं लभेत् १६
कृतशौचं समासाद्य तीर्थसेवी कुरूद्वह
पुण्डरीकमवाप्नोति कृतशौचो भवेन्नरः १७
ततो मुञ्जवटं नाम महादेवस्य धीमतः
तत्रोष्य रजनीमेकां गाणपत्यमवाप्नुयात् १८
तत्रैव च महाराज यक्षी लोकपरिश्रुता
तां चाभिगम्य राजेन्द्र पुण्यांल्लोकानवाप्नुयात् १९
कुरुक्षेत्रस्य तद्द्वारं विश्रुतं भरतर्षभ
प्रदक्षिणमुपावृत्य तीर्थसेवी समाहितः २०
संमिते पुष्कराणां च स्नात्वार्च्य पितृदेवताः
जामदग्न्येन रामेण आहृते वै महात्मना
कृतकृत्यो भवेद्राजन्नश्वमेधं च विन्दति २१
ततो रामह्रदान्गच्छेत्तीर्थसेवी नराधिप
यत्र रामेण राजेन्द्र तरसा दीप्ततेजसा
क्षत्रमुत्साद्य वीरेण ह्रदाः पञ्च निवेशिताः २२
पूरयित्वा नरव्याघ्र रुधिरेणेति नः श्रुतम्
पितरस्तर्पिताः सर्वे तथैव च पितामहाः
ततस्ते पितरः प्रीता राममूचुर्महीपते २३
राम राम महाभाग प्रीताः स्म तव भार्गव
अनया पितृभक्त्या च विक्रमेण च ते विभो
वरं वृणीष्व भद्रं ते किमिच्छसि महाद्युते २४
एवमुक्तः स राजेन्द्र रामः प्रहरतां वरः
अब्रवीत्प्राञ्जलिर्वाक्यं पितॄन्स गगने स्थितान् २५
भवन्तो यदि मे प्रीता यद्यनुग्राह्यता मयि
पितृप्रसादादिच्छेयं तपसाप्यायनं पुनः २६
यच्च रोषाभिभूतेन क्षत्रमुत्सादितं मया

ततश्च पापान्मुच्येयं युष्माकं तेजसा ह्यहम्
ह्रदाश्च तीर्थभूता मे भवेयुर्भुवि विश्रुताः २७
एतच्छ्रुत्वा शुभं वाक्यं रामस्य पितरस्तदा
प्रत्यूचुः परमप्रीता रामं हर्षसमन्विताः २८
तपस्ते वर्धतां भूयः पितृभक्त्या विशेषतः
यच्चरोषाभिभूतेन क्षत्रमुत्सादितं त्वया २९
ततश्च पापान्मुक्तस्त्वं कर्मभिस्ते च पातिताः
ह्रदाश्च तव तीर्थत्वं गमिष्यन्ति न संशयः ३०
ह्रदेष्वेतेषु यः स्नात्वा पितॄन्संतर्पयिष्यति
पितरस्तस्य वै प्रीता दास्यन्ति भुवि दुर्लभम्
ईप्सितं मनसः कामं स्वर्गलोकं च शाश्वतम् ३१
एवं दत्त्वा वरान्राजन्रामस्य पितरस्तदा
आमन्त्र्य भार्गवं प्रीत्यास्तत्रैवान्तर्दधुस्तदा ३२
एवं रामह्रदाः पुण्या भार्गवस्य महात्मनः
स्नात्वा ह्रदेषु रामस्य ब्रह्मचारी शुभव्रतः
राममभ्यर्च्य राजेन्द्र लभेद्बहु सुवर्णकम् ३३
वंशमूलकमासाद्य तीर्थसेवी कुरूद्वह
स्ववंशमुद्धरेद्राजन्स्नात्वा वै वंशमूलके ३४
कायशोधनमासाद्य तीर्थं भरतसत्तम
शरीरशुद्धिः स्नातस्य तस्मिंस्तीर्थे न संशयः
शुद्धदेहश्च संयाति शुभाँल्लोकाननुत्तमान् ३५
ततो गच्छेत राजेन्द्र तीर्थं त्रैलोक्यविश्रुतम्
लोका यत्रोद्धृताः पूर्वं विष्णुना प्रभविष्णुना ३६
लोकोद्धारं समासाद्य तीर्थं त्रैलोक्यविश्रुतम्
स्नात्वा तीर्थवरे राजँल्लोकानुद्धरते स्वकान्
श्रीतीर्थं च समासाद्य विन्दते श्रियमुत्तमाम् ३७
कपिलातीर्थमासाद्य ब्रह्मचारी समाहितः
तत्र स्नात्वार्चयित्वा च दैवतानि पितॄंस्तथा
कपिलानां सहस्रस्य फलं विन्दति मानवः ३८
सूर्यतीर्थं समासाद्य स्नात्वा नियतमानसः

अर्चयित्वा पितृन्देवानुपवासपरायणः
अग्निष्टोममवाप्नोति सूर्यलोकं च गच्छति ३९
गवांभवनमासाद्य तीर्थसेवी यथाक्रमम्
तत्राभिषेकं कुर्वाणो गोसहस्रफलं लभेत् ४०
शङ्खिनीं तत्र आसाद्य तीर्थसेवी कुरूद्वह
देव्यास्तीर्थे नरः स्नात्वा लभते रूपमुत्तमम् ४१
ततो गच्छेत राजेन्द्र द्वारपालमरन्तुकम्
तस्य तीर्थं सरस्वत्यां यक्षेन्द्रस्य महात्मनः
तत्र स्नात्वा नरो राजन्नग्निष्टोमफलं लभेत् ४२
ततो गच्छेत धर्मज्ञ ब्रह्मावर्तं नराधिप
ब्रह्मावर्ते नरः स्नात्वा ब्रह्मलोकमवाप्नुयात् ४३
ततो गच्छेत धर्मज्ञ सुतीर्थकमनुत्तमम्
तत्र संनिहिता नित्यं पितरो दैवतैः सह ४४
तत्राभिषेकं कुर्वीत पितृदेवार्चने रतः
अश्वमेधमवाप्नोति पितृलोकं च गच्छति ४५
ततोऽम्बुवश्यं धर्मज्ञ समासाद्य यथाक्रमम्
कोशेश्वरस्य तीर्थेषु स्नात्वा भरतसत्तम
सर्वव्याधिविनिर्मुक्तो ब्रह्मलोके महीयते ४६
मातृतीर्थं च तत्रैव यत्र स्नातस्य भारत
प्रजा विवर्धते राजन्ननन्तां चाश्नुते श्रियम् ४७
ततः शीतवनं गच्छेन्नियतो नियताशनः
तीर्थं तत्र महाराज महदन्यत्र दुर्लभम् ४८
पुनाति दर्शनादेव दण्डेनैकं नराधिप
केशानभ्युक्ष्य वै तस्मिन्पूतो भवति भारत ४९
तीर्थं तत्र महाराज श्वानलोमापहं स्मृतम्
यत्र विप्रा नरव्याघ्र विद्वांसस्तीर्थतत्पराः ५०
श्वानलोमापनयने तीर्थे भरतसत्तम
प्राणायामैर्निर्हरन्ति श्वलोमानि द्विजोत्तमाः
पूतात्मानश्च राजेन्द्र प्रयान्ति परमां गतिम् ५१
दशाश्वमेधिकं चैव तस्मिंस्तीर्थे महीपते

तत्र स्नात्वा नरव्याघ्र गच्छेत परमां गतिम् ५२
ततो गच्छेत राजेन्द्र मानुषं लोकविश्रुतम्
यत्र कृष्णमृगा राजन्व्याधेन परिपीडिताः
अवगाह्य तस्मिन्सरसि मानुषत्वमुपागताः ५३
तस्मिंस्तीर्थे नरः स्नात्वा ब्रह्मचारी जितेन्द्रियः
सर्वपापविशुद्धात्मा स्वर्गलोके महीयते ५४
मानुषस्य तु पूर्वेण क्रोशमात्रे महीपते
आपगा नाम विख्याता नदी सिद्धनिषेविता ५५
श्यामाकभोजनं तत्र यः प्रयच्छति मानवः
देवान्पितॄंश्च उद्दिश्य तस्य धर्मफलं महत्
एकस्मिन्भोजिते विप्रे कोटिर्भवति भोजिता ५६
तत्र स्नात्वार्चयित्वा च दैवतानि पितॄंस्तथा
उषित्वा रजनीमेकामग्निष्टोमफलं लभेत् ५७
ततो गच्छेत राजेन्द्र ब्रह्मणः स्थानमुत्तमम्
ब्रह्मोदुम्बरमित्येव प्रकाशं भुवि भारत ५८
तत्र सप्तर्षिकुण्डेषु स्नातस्य कुरुपुङ्गव
केदारे चैव राजेन्द्र कपिष्ठलमहात्मनः ५९
ब्रह्माणमभिगम्याथ शुचिः प्रयतमानसः
सर्वपापविशुद्धात्मा ब्रह्मलोकं प्रपद्यते ६०
कपिष्ठलस्य केदारं समासाद्य सुदुर्लभम्
अन्तर्धानमवाप्नोति तपसा दग्धकिल्बिषः ६१
गतो गच्छेत राजेन्द्र सरकं लोकविश्रुतम्
कृष्णपक्षे चतुर्दश्यामभिगम्य वृषध्वजम्
लभते सर्वकामान्हि स्वर्गलोकं च गच्छति ६२
तिस्रः कोटयस्तु तीर्थानां सरके कुरुनन्दन
रुद्रकोटिस्तथा कूपे ह्रदेषु च महीपते
इलास्पदं च तत्रैव तीर्थं भरतसत्तम ६३
तत्र स्नात्वार्चयित्वा च पितॄन्देवांश्च भारत
न दुर्गतिमवाप्नोति वाजपेयं च विन्दति ६४
किंदाने च नरः स्नात्वा किंजप्ये च महीपते

अप्रमेयमवाप्नोति दानं जप्यं च भारत ६५
कलश्यां चाप्युपस्पृश्य श्रद्दधानो जितेन्द्रियः
अग्निष्टोमस्य यज्ञस्य फलं प्राप्नोति मानवः ६६
सरकस्य तु पूर्वेण नारदस्य महात्मनः
तीर्थं कुरुवरश्रेष्ठ अनाजन्मेति विश्रुतम् ६७
तत्र तीर्थे नरः स्नात्वा प्राणांश्चोत्सृज्य भारत
नारदेनाभ्यनुज्ञातो लोकान्प्राप्नोति दुर्लभान् ६८
शुक्लपक्षे दशम्यां च पुगडरीकं समाविशेत्
तत्र स्नात्वा नरो राजन्पुगडरीकफलं लभेत् ६९
ततस्त्रिविष्टपं गच्छेत्त्रिषु लोकेषु विश्रुतम्
तत्र वैतरणी पुगया नदी पापप्रमोचनी ७०
तत्र स्नात्वार्चयित्वा च शूलपाणिं वृषध्वजम्
सर्वपापविशुद्धात्मा गच्छेत परमां गतिम् ७१
ततो गच्छेत राजेन्द्र फलकीवनमुत्तमम्
तत्र देवाः सदा राजन्फलकीवनमाश्रिताः
तपश्चरन्ति विपुलं बहुवर्षसहस्रकम् ७२
दृषद्वत्यां नरः स्नात्वा तर्पयित्वा च देवताः
अग्निष्टोमातिरात्राभ्यां फलं विन्दति भारत ७३
तीर्थे च सर्वदेवानां स्नात्वा भरतसत्तम
गोसहस्रस्य राजेन्द्र फलं प्राप्नोति मानवः ७४
पाणिखाते नरः स्नात्वा तर्पयित्वा च देवताः
राजसूयमवाप्नोति ऋृषिलोकं च गच्छति ७५
ततो गच्छेत राजेन्द्र मिश्रकं तीर्थमुत्तमम्
तत्र तीर्थानि राजेन्द्र मिश्रितानि महात्मना ७६
व्यासेन नृपशार्दूल द्विजार्थमिति नः श्रुतम्
सर्वतीर्थेषु स स्नाति मिश्रके स्नाति यो नरः ७७
ततो व्यासवनं गच्छेन्नियतो नियताशनः
मनोजवे नरः स्नात्वा गोसहस्रफलं लभेत् ७८
गत्वा मधुवटीं चापि देव्यास्तीर्थं नरः शुचिः
तत्र स्नात्वार्चयेद्देवान्पितृंश्च प्रयतः शुचिः

स देव्या समनुज्ञातो गोसहस्रफलं लभेत् ७९
कौशिक्याः संगमे यस्तु दृषद्वत्याश्च भारत
स्नाति वै नियताहारः सर्वपापैः प्रमुच्यते ८०
ततो व्यासस्थली नाम यत्र व्यासेन धीमता
पुत्रशोकाभितप्तेन देहत्यागार्थनिश्चयः ८१
कृतो देवैश्च राजेन्द्र पुनरुत्थापितस्तदा
अभिगम्य स्थलद्यं तस्य गोसहस्रफलं लभेत् ८२
किंदत्तं कूपमासाद्य तिलप्रस्थं प्रदाय च
गच्छेत परमां सिद्धिमृणैर्मुक्तः कुरूद्वह ८३
अहश्च सुदिनं चैव द्वे तीर्थे च सुदुर्लभे
तयोः स्नात्वा नरव्याघ्र सूर्यलोकमवाप्नुयात् ८४
मृगधूमं ततो गच्छेत्त्रिषु लोकेषु विश्रुतम्
तत्र गङ्गाह्रदे स्नात्वा समभ्यर्च्य च मानवः
शूलपाणिं महादेवमश्वमेधफलं लभेत् ८५
देवतीर्थे नरः स्नात्वा गोसहस्रफलं लभेत्
अथ वामनकं गच्छेत्त्रिषु लोकेषु विश्रुतम् ८६
तत्र विष्णुपदे स्नात्वा अर्चयित्वा च वामनम्
सर्वपापविशुद्धात्मा विष्णुलोकमवाप्नुयात् ८७
कुलंपुने नरः स्नात्वा पुनाति स्वकुलं नरः
पवनस्य ह्रदं स्नात्वा मरुतां तीर्थमुत्तमम्
तत्र स्नात्वा नरव्याघ्र वायुलोके महीयते ८८
अमराणां ह्रदे स्नात्वा अमरेषु नराधिप
अमराणां प्रभावेन स्वर्गलोके महीयते ८९
शालिहोत्रस्य राजेन्द्र शालिशूर्पे यथाविधि
स्नात्वा नरवरश्रेष्ठ गोसहस्रफलं लभेत् ९०
श्रीकुञ्जं च सरस्वत्यां तीर्थं भरतसत्तम
तत्र स्नात्वा नरो राजन्नग्निष्टोमफलं लभेत् ९१
ततो नैमिषकुञ्जं च समासाद्य कुरूद्वह
ऋषयः किल राजेन्द्र नैमिषेयास्तपोधनाः
तीर्थयात्रां पुरस्कृत्य कुरुक्षेत्रं गताः पुरा ९२

ततः कुञ्जः सरस्वत्यां कृतो भरतसत्तम
ऋषीणामवकाशः स्याद्यथा तुष्टिकरो महान् ९३
तस्मिन्कुञ्जे नरः स्नात्वा गोसहस्रफलं लभेत्
कन्यातीर्थे नरः स्नात्वा अग्निष्टोमफलं लभेत् ९४
ततो गच्छेन्नरव्याघ्र ब्रह्मणः स्थानमुत्तमम्
तत्र वर्णावरः स्नात्वा ब्राह्मण्यं लभते नरः
ब्राह्मणश्च विशुद्धात्मा गच्छेत परमां गतिम् ९५
ततो गच्छेन्नरश्रेष्ठ सोमतीर्थमनुत्तमम्
तत्र स्नात्वा नरो राजन्सोमलोकमवाप्नुयात् ९६
सप्तसारस्वतं तीर्थं ततो गच्छेन्नराधिप
यत्र मङ्कणकः सिद्धो महर्षिर्लोकविश्रुतः ९७
पुरा मङ्कणको राजन्कुशाग्रेणेति नः श्रुतम्
क्षतः किल करे राजंस्तस्य शाकरसोऽस्रवत् ९८
स वै शाकरसं दृष्ट्वा हर्षाविष्टो महातपाः
प्रनृत्तः किल विप्रर्षिर्विस्मयोत्फुल्ललोचनः ९९
ततस्तस्मिन्प्रनृत्ते वै स्थावरं जङ्गमं च यत्
प्रनृत्तमुभयं वीर तेजसा तस्य मोहितम् १००
ब्रह्मादिभिः सुरै राजन्नृषिभिश्च तपोधनैः
विज्ञप्तो वै महादेव ऋषेरर्थे नराधिप
नायं नृत्येद्यथा देव तथा त्वं कर्तुमर्हसि १०१
ततः प्रनृत्तमासाद्य हर्षाविष्टेन चेतसा
सुराणां हिकामार्थमृषिं देवोऽभ्यभाषत १०२
अहो महर्षे धर्मज्ञ किमर्थं नृत्यते भवान्
हर्षस्थानं किमर्थं वा तवाद्य मुनिपुङ्गव १०३
ऋषिरुवाच
किं न पश्यसि मे देव कराच्छाकरसं स्रुतम्
यं दृष्ट्वाहं प्रनृत्तो वै हर्षेण महतान्वितः १०४
पुलस्त्य उवाच
तं प्रहस्याब्रवीद्देवो मुनिं रागेण मोहितम्
अहं वै विस्मयं विप्र न गच्छामीति पश्य माम् १०५

एवमुक्त्वा नरश्रेष्ठ महादेवेन धीमता
अंगुल्यग्रेण राजेन्द्र स्वांगुष्ठस्ताडितोऽनघ १०६
ततो भस्म क्षताद्राजन्निर्गतं हिमसन्निभम्
तद्दृष्ट्वा व्रीडितो राजन्स मुनिः पादयोर्गतः १०७
नान्यं देवमहं मन्ये रुद्रात्परतरं महत्
सुरासुरस्य जगतो गतिस्त्वमसि शूलधृक् १०८
त्वया सृष्टमिदं विश्वं त्रैलोक्यं सचराचरम्
त्वामेव भगवन्सर्वे प्रविशन्ति युगक्षये १०९
देवैरपि न शक्यस्त्वं परिज्ञातुं कुतो मया
त्वयि सर्वे च दृश्यन्ते सुरा ब्रह्मादयोऽनघ ११०
सर्वस्त्वमसि लोकानां कर्ता कारयिता च ह
त्वत्प्रसादात्सुराः सर्वे मोदन्तीहाकुतोभयाः
एवं स्तुत्वा महादेवं स ऋषिः प्रणतोऽभवत् १११
ऋषिरुवाच
त्वत्प्रसादान्महादेव तपो मे न क्षरेत वै ११२
पुलस्त्य उवाच
ततो देवः प्रहृष्टात्मा ब्रह्मर्षिमिदमब्रवीत्
तपस्ते वर्धतां विप्र मत्प्रसादात्सहस्रधा ११३
आश्रमे चेह वत्स्यामि त्वया सार्धं महामुने
सप्तसारस्वते स्नात्वा अर्चयिष्यन्ति ये तु माम् ११४
न तेषां दुर्लभं किंचिदिह लोके परत्र च
सारस्वतं च ते लोकं गमिष्यन्ति न संशयः ११५
ततस्त्वौशनसं गच्छेत्त्रिषु लोकेषु विश्रुतम्
यत्र ब्रह्मादयो देवा ऋषयश्च तपोधनाः ११६
कार्तिकेयश्च भगवांस्त्रिसन्ध्यं किल भारत
सांनिध्यमकरोत्तत्र भार्गवप्रियकाम्यया ११७
कपालमोचनं तीर्थं सर्वपापप्रमोचनम्
तत्र स्नात्वा नरव्याघ्र सर्वपापैः प्रमुच्यते ११८
अग्नितीर्थं ततो गच्छेत्तत्र स्नात्वा नरर्षभ
अग्निलोकमवाप्नोति कुलं चैव समुद्धरेत् ११९

विश्वामित्रस्य तत्रैव तीर्थं भरतसत्तम
तत्र स्नात्वा महाराज ब्राह्मगयमभिजायते १२०
ब्रह्मयोनिं समासाद्य शुचिः प्रयतमानसः
तत्र स्नात्वा नरव्याघ्र ब्रह्मलोकं प्रपद्यते
पुनात्यासप्तमं चैव कुलं नास्त्यत्र संशयः १२१
ततो गच्छेत राजेन्द्र तीर्थं त्रैलोक्यविश्रुतम्
पृथूदकमिति ख्यातं कार्तिकेयस्य वै नृप
तत्राभिषेकं कुर्वीत पितृदेवार्चने रतः १२२
अज्ञानाज्ज्ञानतो वापि स्त्रिया वा पुरुषेण वा
यत्किंचिदशुभं कर्म कृतं मानुषबुद्धिना १२३
तत्सर्वं नश्यते तस्य स्नातमात्रस्य भारत
अश्वमेधफलं चापि स्वर्गलोकं च गच्छति १२४
पुगयमाहुः कुरुक्षेत्रं कुरुक्षेत्रात्सरस्वतीम्
सरस्वत्याश्च तीर्थानि तीर्थेभ्यश्च पृथूदकम् १२५
उत्तमे सर्वतीर्थानां यस्त्यजेदात्मनस्तनुम्
पृथूदके जप्यपरो नैनं श्वोमरणं तपेत् १२६
गीतं सनत्कुमारेण व्यासेन च महात्मना
वेदे च नियतं राजन्नभिगच्छेत्पृथूदकम् १२७
पृथूदकात्पुगयतमं नान्यत्तीर्थं नरोत्तम
एतन्मेध्यं पवित्रं च पावनं च न संशयः १२८
तत्र स्नात्वा दिवं यान्ति अपि पापकृतो जनाः
पृथूदके नरश्रेष्ठ प्राहुरेवं मनीषिणः १२९
मधुस्त्रवं च तत्रैव तीर्थं भरतसत्तम
तत्र स्नात्वा नरो राजन्गोसहस्रफलं लभेत् १३०
ततो गच्छेन्नरश्रेष्ठ तीर्थं देव्या यथाक्रमम्
सरस्वत्यारुणायाश्च संगमं लोकविश्रुतम् १३१
त्रिरात्रोपोषितः स्नात्वा मुच्यते ब्रह्महत्यया
अग्निष्टोमातिरात्राभ्यां फलं विन्दति मानवः
आसप्तमं कुलं चैव पुनाति भरतर्षभ १३२
अवतीर्णं च तत्रैव तीर्थं कुरुकुलोद्वह

विप्राणामनुकम्पार्थं दर्भिणा निर्मितं पुरा १३३
व्रतोपनयनाभ्यां वा उपवासेन वा द्विजः
क्रियामन्त्रैश्च संयुक्तो ब्राह्मणः स्यान्न संशयः १३४
क्रियामन्त्रविहीनोऽपि तत्र स्नात्वा नरर्षभ
चीर्णव्रतो भवेद्विप्रो दृष्टमेतत्पुरातने १३५
समुद्राश्चापि चत्वारः समानीताश्च दर्भिणा
येषु स्नातो नरव्याघ्र न दुर्गतिमवाप्नुयात्
फलानि गोसहस्राणां चतुर्णां विन्दते च सः १३६
ततो गच्छेत राजेन्द्र तीर्थं शतसहस्रकम्
साहस्रकं च तत्रैव द्वे तीर्थे लोकविश्रुते १३७
उभयोर्हि नरः स्नात्वा गोसहस्रफलं लभेत्
दानं वाप्युपवासो वा सहस्रगुणितं भवेत् १३८
ततो गच्छेत राजेन्द्र रेणुकातीर्थमुत्तमम्
तत्राभिषेकं कुर्वीत पितृदेवार्चने रतः
सर्वपापविशुद्धात्मा अग्निष्टोमफलं लभेत् १३९
विमोचनमुपस्पृश्य जितमन्युर्जितेन्द्रियः
प्रतिग्रहकृतैर्दोषैः सर्वैः स परिमुच्यते १४०
ततः पञ्चवटं गत्वा ब्रह्मचारी जितेन्द्रियः
पुण्येन महता युक्तः सतां लोके महीयते १४१
यत्र योगेश्वरः स्थाणुः स्वयमेव वृषध्वजः
तमर्चयित्वा देवेशं गमनादेव सिध्यति १४२
औजसं वारुणं तीर्थं दीप्यते स्वेन तेजसा
यत्र ब्रह्मादिभिर्देवैर्ऋषिभिश्च तपोधनैः
सेनापत्येन देवानामभिषिक्तो गुहस्तदा १४३
औजसस्य तु पूर्वेण कुरुतीर्थं कुरूद्वह
कुरुतीर्थे नरः स्नात्वा ब्रह्मचारी जितेन्द्रियः
सर्वपापविशुद्धात्मा कुरुलोकं प्रपद्यते १४४
स्वर्गद्वारं ततो गच्छेन्नियतो नियताशनः
स्वर्गलोकमवाप्नोति ब्रह्मलोकं च गच्छति १४५
ततो गच्छेदनरकं तीर्थसेवी नराधिप

तत्र स्नात्वा नरो राजन्न दुर्गतिमवाप्नुयात् १४६
तत्र ब्रह्मा स्वयं नित्यं देवैः सह महीपते
अन्वास्यते नरश्रेष्ठ नारायणपुरोगमैः १४७
सान्निध्यं चैव राजेन्द्र रुद्रपत्न्याः कुरूद्वह
अभिगम्य च तां देवीं न दुर्गतिमवाप्नुयात् १४८
तत्रैव च महाराज विश्वेश्वरमुमापतिम्
अभिगम्य महादेवं मुच्यते सर्वकिल्बिषैः १४९
नारायणं चाभिगम्य पद्मनाभमरिन्दमम्
शोभमानो महाराज विष्णुलोकं प्रपद्यते १५०
तीर्थे तु सर्वदेवानां स्नातः स पुरुषर्षभ
सर्वदुःखैः परित्यक्तो द्योतते शशिवत्सदा १५१
ततः स्वस्तिपुरं गच्छेत्तीर्थसेवी नराधिप
पावनं तीर्थमासाद्य तर्पयेत्पितृदेवताः
अग्निष्टोमस्य यज्ञस्य फलं प्राप्नोति मानवः १५२
गङ्गाह्रदश्च तत्रैव कूपश्च भरतर्षभ
तिस्रः कोटयस्तु तीर्थानां तस्मिन्कूपे महीपते
तत्र स्नात्वा नरो राजन्स्वर्गलोकं प्रपद्यते १५३
आपगायां नरः स्नात्वा अर्चयित्वा महेश्वरम्
गाणपत्यमवाप्नोति कुलं चोद्धरते स्वकम् १५४
ततः स्थाणुवटं गच्छेत्त्रिषु लोकेषु विश्रुतम्
तत्र स्नात्वा स्थितो रात्रिं रुद्रलोकमवाप्नुयात् १५५
बदरीपाचनं गच्छेद्वसिष्ठस्याश्रमं ततः
बदरं भक्षयेत्तत्र त्रिरात्रोपोषितो नरः १५६
सम्यग्द्वादश वर्षाणि बदरान्भक्षयेत्तु यः
त्रिरात्रोपोषितश्चैव भवेत्तुल्यो नराधिप १५७
इन्द्रमार्गं समासाद्य तीर्थसेवी नराधिप
अहोरात्रोपवासेन शक्रलोके महीयते १५८
एकरात्रं समासाद्य एकरात्रोषितो नरः
नियतः सत्यवादी च ब्रह्मलोके महीयते १५९
ततो गच्छेत धर्मज्ञ तीर्थं त्रैलोक्यविश्रुतम्

ग्रादित्यस्याश्रमो यत्र तेजोराशेर्महात्मनः १६०
तस्मिंस्तीर्थे नरः स्नात्वा पूजयित्वा विभावसुम्
ग्रादित्यलोकं व्रजति कुलं चैव समुद्धरेत् १६१
सोमतीर्थे नरः स्नात्वा तीर्थसेवी कुरूद्वह
सोमलोकमवाप्नोति नरो नास्त्यत्र संशयः १६२
ततो गच्छेत धर्मज्ञ दधीचस्य महात्मनः
तीर्थं पुरायतमं राजन्पावनं लोकविश्रुतम् १६३
यत्र सारस्वतो राजन्सोऽङ्गिरास्तपसो निधिः
तस्मिंस्तीर्थे नरः स्नात्वा वाजपेयफलं लभेत्
सारस्वतीं गतिं चैव लभते नात्र संशयः १६४
ततः कन्याश्रमं गच्छेन्नियतो ब्रह्मचर्यवान्
त्रिरात्रोपोषितो राजन्नुपवासपरायणः
लभेत्कन्याशतं दिव्यं ब्रह्मलोकं च गच्छति १६५
ततो गच्छेत धर्मज्ञ तीर्थं संनिहितीमपि
यत्र ब्रह्मादयो देवा ऋृषयश्च तपोधनाः
मासि मासि समायान्ति पुरायेन महतान्विताः १६६
संनिहित्यामुपस्पृश्य राहुग्रस्ते दिवाकरे
ग्रश्वमेधशतं तेन इष्टं भवति शाश्वतम् १६७
पृथिव्यां यानि तीर्थानि ग्रन्तरिक्षचराणि च
नद्यो नदास्तडागाश्च सर्वप्रस्रवणानि च १६८
उदपानाश्च वप्राश्च पुरायान्यायतनानि च
मासि मासि समायान्ति संनिहित्यां न संशयः १६९
यत्किंचिद्दुष्कृतं कर्म स्त्रिया वा पुरुषस्य वा
स्नातमात्रस्य तत्सर्वं नश्यते नात्र संशयः
पद्मवर्णेन यानेन ब्रह्मलोकं स गच्छति १७०
ग्रभिवाद्य ततो यक्षं द्वारपालमरन्तुकम्
कोटिरूपमुपस्पृश्य लभेद्बहु सुवर्णकम् १७१
गङ्गाह्रदश्च तत्रैव तीर्थं भरतसत्तम
तत्र स्नातस्तु धर्मज्ञ ब्रह्मचारी समाहितः
राजसूयाश्वमेधाभ्यां फलं विन्दति शाश्वतम् १७२

पृथिव्यां नैमिषं पुरायमन्तरिद्मे च पुष्करम्
त्रयाणामपि लोकानां कुरुद्मेत्रं विशिष्यते १७३
पांसवोऽपि कुरुद्मेत्रे वायुना समुदीरिताः
अपि दुष्कृतकर्माणं नयन्ति परमां गतिम् १७४
दद्मिणेन सरस्वत्या उत्तरेण दृषद्वतीम्
ये वसन्ति कुरुद्मेत्रे ते वसन्ति त्रिविष्टपे १७५
कुरुद्मेत्रं गमिष्यामि कुरुद्मेत्रे वसाम्यहम्
अप्येकां वाचमुत्सृज्य सर्वपापैः प्रमुच्यते १७६
ब्रह्मवेदी कुरुद्मेत्रं पुरायं ब्रह्मर्षिसेवितम्
तदावसन्ति ये राजन्न ते शोच्याः कथंचन १७७
तरन्तुकारन्तुकयोर्यदन्तरं रामह्रदानां च मचक्रुकस्य
एतत्कुरुद्मेत्रसमन्तपञ्चकं पितामहस्योत्तरवेदिरुच्यते १७८
इति श्रीमहाभारते आरगयकपर्वणि एकाशीतितमोऽध्यायः ८१

## द्व्यशीतितमोऽध्यायः

पुलस्त्य उवाच
ततो गच्छेत धर्मज्ञ धर्मतीर्थं पुरातनम्
तत्र स्नात्वा नरो राजन्धर्मशीलः समाहितः
आसप्तमं कुलं राजन्पुनीते नात्र संशयः १
ततो गच्छेत धर्मज्ञ कारापतनमुत्तमम्
अग्निष्टोममवाप्नोति मुनिलोकं च गच्छति २
सौगन्धिकं वनं राजंस्ततो गच्छेत मानवः
यत्र ब्रह्मादयो देवा ऋषयश्च तपोधनाः ३
सिद्धचारणगन्धर्वाः किन्नराः समहोरगाः
तद्वनं प्रविशन्नेव सर्वपापैः प्रमुच्यते ४
ततो हि सा सरिच्छ्रेष्ठा नदीनामुत्तमा नदी
प्लद्माद्देवी स्रुता राजन्महापुराया सरस्वती ५
तत्राभिषेकं कुर्वीत वल्मीकान्निःसृते जले
अर्चयित्वा पितृन्देवानश्वमेधफलं लभेत् ६
ईशानाध्युषितं नाम तत्र तीर्थं सुदुर्लभम्

षट्सु शम्यानिपातेषु वल्मीकादिति निश्चयः ७
कपिलानां सहस्रं च वाजिमेधं च विन्दति
तत्र स्नात्वा नरव्याघ्र दृष्टमेतत्पुरातने ८
सुगन्धां शतकुम्भां च पञ्चयज्ञां च भारत
अभिगम्य नरश्रेष्ठ स्वर्गलोके महीयते ९
त्रिशूलखातं तत्रैव तीर्थमासाद्य भारत
तत्राभिषेकं कुर्वीत पितृदेवार्चने रतः
गाणपत्यं स लभते देहं त्यक्त्वा न संशयः १०
ततो गच्छेत राजेन्द्र देव्याः स्थानं सुदुर्लभम्
शाकम्भरीति विख्याता त्रिषु लोकेषु विश्रुता ११
दिव्यं वर्षसहस्रं हि शाकेन किल सुव्रत
आहारं सा कृतवती मासि मासि नराधिप १२
ऋषयोऽभ्यागतास्तत्र देव्या भक्त्या तपोधनाः
आतिथ्यं च कृतं तेषां शाकेन किल भारत
ततः शाकम्भरीत्येव नाम तस्याः प्रतिष्ठितम् १३
शाकम्भरीं समासाद्य ब्रह्मचारी समाहितः
त्रिरात्रमुषितः शाकं भक्षयेन्नियतः शुचिः १४
शाकाहारस्य यत्सम्यग्वर्षैर्द्वादशभिः फलम्
तत्फलं तस्य भवति देव्याश्छन्देन भारत १५
ततो गच्छेत्सुवर्णाक्षं त्रिषु लोकेषु विश्रुतम्
यत्र विष्णुः प्रसादार्थं रुद्रमाराधयत्पुरा १६
वरांश्च सुबहूँल्लेभे दैवतेषु सुदुर्लभान्
उक्तश्च त्रिपुरघ्नेन परितुष्टेन भारत १७
अपि चास्मत्प्रियतरो लोके कृष्ण भविष्यसि
त्वन्मुखं च जगत्कृत्स्नं भविष्यति न संशयः १८
तत्राभिगम्य राजेन्द्र पूजयित्वा वृषध्वजम्
अश्वमेधमवाप्नोति गाणपत्यं च विन्दति १९
धूमावतीं ततो गच्छेत्त्रिरात्रोपोषितो नरः
मनसा प्रार्थितान्कामाँल्लभते नात्र संशयः २०
देव्यास्तु दक्षिणार्धेन रथावर्तो नराधिप

तत्रारोहेत धर्मज्ञ श्रद्दधानो जितेन्द्रियः
महादेवप्रसादाद्धि गच्छेत परमां गतिम् २१
प्रदक्षिणमुपावृत्य गच्छेत भरतर्षभ
धारां नाम महाप्राज्ञ सर्वपापप्रणाशिनीम्
तत्र स्नात्वा नरव्याघ्र न शोचति नराधिप २२
ततो गच्छेत धर्मज्ञ नमस्कृत्य महागिरिम्
स्वर्गद्वारेण यत्तुल्यं गङ्गाद्वारं न संशयः २३
तत्राभिषेकं कुर्वीत कोटितीर्थे समाहितः
पुण्डरीकमवाप्नोति कुलं चैव समुद्धरेत् २४
सप्तगंगे त्रिगंगे च शक्रावर्ते च तर्पयन्
देवान्पितॄंश्च विधिवत्पुण्यलोके महीयते २५
ततः कनखले स्नात्वा त्रिरात्रोपोषितो नरः
अश्वमेधमवाप्नोति स्वर्गलोकं च गच्छति २६
कपिलावटं च गच्छेत तीर्थसेवी नराधिप
उष्यैकां रजनीं तत्र गोसहस्रफलं लभेत् २७
नागराजस्य राजेन्द्र कपिलस्य महात्मनः
तीर्थं कुरुवरश्रेष्ठ सर्वलोकेषु विश्रुतम् २८
तत्राभिषेकं कुर्वीत नागतीर्थे नराधिप
कपिलानां सहस्रस्य फलं प्राप्नोति मानवः २९
ततो ललितिकां गच्छेच्छन्तनोस्तीर्थमुत्तमम्
तत्र स्नात्वा नरो राजन्न दुर्गतिमवाप्नुयात् ३०
गङ्गासंगमयोश्चैव स्नाति यः संगमे नरः
दशाश्वमेधानाप्नोति कुलं चैव समुद्धरेत् ३१
ततो गच्छेत राजेन्द्र सुगन्धां लोकविश्रुताम्
सर्वपापविशुद्धात्मा ब्रह्मलोके महीयते ३२
रुद्रावर्तं ततोगच्छेत्तीर्थसेवी नराधिप
तत्र स्नात्वानरो राजन्स्वर्गलोके महीयते ३३
गङ्गायाश्च नरश्रेष्ठ सरस्वत्याश्च संगमे
स्नातोऽश्वमेधमाप्नोति स्वर्गलोकं च गच्छति ३४
भद्रकर्णेश्वरं गत्वा देवमर्च्य यथाविधि

न दुर्गतिमवाप्नोति स्वर्गलोकं च गच्छति ३५
ततः कुब्जाम्रकं गच्छेत्तीर्थसेवी यथाक्रमम्
गोसहस्रमवाप्नोति स्वर्गलोकं च गच्छति ३६
अरुन्धतीवटं गच्छेत्तीर्थसेवी नराधिप
सामुद्रकमुपस्पृश्य त्रिरात्रोपोषितो नरः
गोसहस्रफलं विन्देत्कुलं चैव समुद्धरेत् ३७
ब्रह्मावर्तं ततो गच्छेद्ब्रह्मचारी समाहितः
अश्वमेधमवाप्नोति स्वर्गलोकं च गच्छति ३८
यमुनाप्रभवं गत्वा उपस्पृश्य च यामुने
अश्वमेधफलं लब्ध्वा स्वर्गलोके महीयते ३९
दर्वीसंक्रमणं प्राप्य तीर्थं त्रैलोक्यविश्रुतम्
अश्वमेधमवाप्नोति स्वर्गलोकं च गच्छति ४०
सिन्धोश्च प्रभवं गत्वा सिद्धगन्धर्वसेवितम्
तत्रोष्य रजनीः पञ्च विन्द्याद्बहु सुवर्णकम् ४१
अथ वेदीं समासाद्य नरः परमदुर्गमाम्
अश्वमेधमवाप्नोति गच्छेच्चौशनसीं गतिम् ४२
ऋषिकुल्यां समासाद्य वासिष्ठं चैव भारत
वासिष्ठं समतिक्रम्य सर्वे वर्णा द्विजातयः ४३
ऋषिकुल्यां नरः स्नात्वा ऋषिलोकं प्रपद्यते
यदि तत्र वसेन्मासं शाकाहारो नराधिप ४४
भृगुतुङ्गं समासाद्य वाजिमेधफलं लभेत्
गत्वा वीरप्रमोक्षं च सर्वपापैः प्रमुच्यते ४५
कृत्तिकामघयोश्चैव तीर्थमासाद्य भारत
अग्निष्टोमातिरात्राभ्यां फलं प्राप्नोति पुण्यकृत् ४६
ततः सन्ध्यां समासाद्य विद्या तीर्थमनुत्तमम्
उपस्पृश्य च विद्यानां सर्वासां पारगो भवेत् ४७
महाश्रमे वसेद्रात्रिं सर्वपापप्रमोचने
एकाकालं निराहारो लोकानावसते शुभान् ४८
षष्ठकालोपवासेन मासमुष्य महालये
सर्वपापविशुद्धात्मा विन्द्याद्बहु सुवर्णकम् ४९

अथ वेतसिकां गत्वा पितामहनिषेविताम्
अश्वमेधमवाप्नोति गच्छेच्चौशनसीं गतिम् ५०
अथ सुन्दरिकातीर्थं प्राप्य सिद्धनिषेवितम्
रूपस्य भागी भवति दृष्टमेतत्पुरातने ५१
ततो वै ब्राह्मणीं गत्वा ब्रह्मचारी जितेन्द्रियः
पद्मवर्णेन यानेन ब्रह्मलोकं प्रपद्यते ५२
ततश्च नैमिषं गच्छेत्पुण्यं सिद्धनिषेवितम्
तत्र नित्यं निवसति ब्रह्मा देवगणैर्वृतः ५३
नैमिषं प्रार्थयानस्य पापस्यार्धं प्रणश्यति
प्रविष्टमात्रस्तु नरः सर्वपापैः प्रमुच्यते ५४
तत्र मासं वसेद्धीरो नैमिषे तीर्थतत्परः
पृथिव्यां यानि तीर्थानि नैमिषे तानि भारत ५५
अभिषेककृतस्तत्र नियतो नियताशनः
गवामयस्य यज्ञस्य फलं प्राप्नोति भारत
पुनात्यासप्तमं चैव कुलं भरतसत्तम ५६
यस्त्यजेन्नैमिषे प्राणानुपवासपरायणः
स मोदेत्स्वर्गलोकस्थ एवमाहुर्मनीषिणः
नित्यं पुण्यं च मेध्यं च नैमिषं नृपसत्तम ५७
गङ्गोद्भेदं समासाद्य त्रिरात्रोपोषितो नरः
वाजपेयमवाप्नोति ब्रह्मभूतश्च जायते ५८
सरस्वतीं समासाद्य तर्पयेत्पितृदेवताः
सारस्वतेषु लोकेषु मोदते नात्र संशयः ५९
ततश्च बाहुदां गच्छेद्ब्रह्मचारी समाहितः
देवसत्रस्य यज्ञस्य फलं प्राप्नोति मानवः ६०
ततश्चीरवतीं गच्छेत्पुण्यां पुण्यतमैर्वृताम्
पितृदेवार्चनरतो वाजपेयमवाप्नुयात् ६१
विमलाशोकमासाद्य विराजति यथा शशी
तत्रोष्य रजनीमेकां स्वर्गलोके महीयते ६२
गोप्रतारं ततो गच्छेत्सरय्वास्तीर्थमुत्तमम्
यत्र रामो गतः स्वर्गं सभृत्यबलवाहनः ६३

देहं त्यक्त्वा दिवं यातस्तस्य तीर्थस्य तेजसा
रामस्य च प्रसादेन व्यवसायाच्च भारत ६४
तस्मिंस्तीर्थे नरःस्नात्वा गोप्रतारे नराधिप
सर्वपापविशुद्धात्मा स्वर्गलोके महीयते ६५
रामतीर्थे नरः स्नात्वा गोमत्यां कुरुनन्दन
अश्वममेधमवाप्नोति पुनाति च कुलं नरः ६६
शतसाहस्रिकं तत्र तीर्थं भरतसत्तम
तत्रोपस्पर्शनं कृत्वा नियतो नियताशनः
गोसहस्रफलं पुण्यं प्राप्नोति भरतर्षभ ६७
ततो गच्छेत राजेन्द्र भर्तृस्थानमनुत्तमम्
कोटितीर्थे नरः स्नात्वा अर्चयित्वा गुहं नृप
गोसहस्रफलं विन्देत्तेजस्वी च भवेन्नरः ६८
ततो वाराणसीं गत्वा अर्चयित्वा वृषध्वजम्
कपिलाह्रदे नरः स्नात्वा राजसूयफलं लभेत् ६९
मार्कण्डेयस्य राजेन्द्र तीर्थमासाद्य दुर्लभम्
गोमतीगङ्गयोश्चैव संगमे लोकविश्रुते
अग्निष्टोममवाप्नोति कुलं चैव समुद्धरेत् ७०
ततो गयां समासाद्य ब्रह्मचारी जितेन्द्रियः
अश्वमेधमवाप्नोति गमनादेव भारत ७१
तत्राक्षयवटो नाम त्रिषु लोकेषु विश्रुतः
पितॄणां तत्र वै दत्तमक्षयं भवति प्रभो ७२
महानद्यामुपस्पृश्य तर्पयेत्पितृदेवताः
अक्षयान्प्राप्नुयाल्लोकान्कुलं चैव समुद्धरेत् ७३
ततो ब्रह्मसरो गच्छेद्धर्मारण्योपशोभितम्
पौण्डरीकमवाप्नोति प्रभातामेव शर्वरीम् ७४
तस्मिन्सरसि राजेन्द्र ब्रह्मणो यूप उच्छ्रितः
यूपं प्रदक्षिणं कृत्वावाजपेय फलं लभेत् ७५
ततो गच्छेत राजेन्द्र धेनुकां लोकविश्रुताम्
एकरात्रोषितो राजन्प्रयच्छेत्तिलधेनुकाम्
सर्वपापविशुद्धात्मा सोमलोकं व्रजेद्ध्रुवम् ७६

तत्र चिह्नं महाराज अद्यापि हि न संशयः
कपिला सह वत्सेन पर्वते विचरत्युत
सवत्सायाः पदानि स्म दृश्यन्तेऽद्यापि भारत ७७
तेषूपस्पृश्य राजेन्द्र पदेषु नृपसत्तम
यत्किंचिदशुभं कर्म तत्प्रणश्यति भारत ७८
ततो गृध्रवटं गच्छेत्स्थानं देवस्य धीमतः
स्नायीत भस्मना तत्र अभिगम्य वृषध्वजम् ७९
ब्राह्मणेन भवेच्चीर्णं व्रतं द्वादशवार्षिकम्
इतरेषां तु वर्णानां सर्वपापं प्रणश्यति ८०
गच्छेत तत उद्यन्तं पर्वतं गीतनादितम्
सावित्रं तु पदं तत्र दृश्यते भरतर्षभ ८१
तत्र सन्ध्यामुपासीत ब्राह्मणः संशितव्रतः
उपास्ता च भवेत्सन्ध्या तेन द्वादशवार्षिकी ८२
योनिद्वारं च तत्रैव विश्रुतं भरतर्षभ
तत्राभिगम्य मुच्येत पुरुषो योनिसंकरात् ८३
कृष्णशुक्लावुभौ पक्षौ गयायां यो वसेन्नरः
पुनात्यासप्तमं राजन्कुलं नास्त्यत्र संशयः ८४
एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत्
यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत् ८५
ततः फल्गुं व्रजेद्राजंस्तीर्थसेवी नराधिप
अश्वमेधमवाप्नोति सिद्धिं च महतीं व्रजेत् ८६
ततो गच्छेत राजेन्द्र धर्मपृष्ठं समाहितः
यत्र धर्मो महाराज नित्यमास्ते युधिष्ठिर
अभिगम्य ततस्तत्र वाजिमेधफलं लभेत् ८७
ततो गच्छेत राजेन्द्र ब्रह्मणस्तीर्थमुत्तमम्
तत्रार्चयित्वा राजेन्द्र ब्रह्माणममितौजसम्
राजसूयाश्वमेधाभ्यां फलं प्राप्नोति मानवः ८८
ततो राजगृहं गच्छेत्तीर्थसेवी नराधिप
उपस्पृश्य तपोदेषु काक्षीवानिव मोदते ८९
यक्षिण्या नैत्यकं तत्र प्राश्नीत पुरुषः शुचिः

यन्निरण्यास्तु प्रसादेन मुच्यते भ्रूणहत्यया ९०
मणिनागं ततो गत्वा गोसहस्रफलं लभेत्
नैत्यकं भुञ्जते यस्तु मणिनागस्य मानवः ९१
दष्टस्याशीविषेणापि न तस्य क्रमते विषम्
तत्रोष्य रजनीमेकां सर्वपापैः प्रमुच्यते ९२
ततो गच्छेत ब्रह्मर्षेर्गौतमस्य वनं नृप
अहल्यायाः ह्रदे स्नात्वा व्रजेत परमां गतिम्
अभिगम्य श्रियं राजन्विन्दते श्रियमुत्तमाम् ९३
तत्रोदपानो धर्मज्ञ त्रिषु लोकेषु विश्रुतः
तत्राभिषेकं कृत्वा तु वाजिमेधमवाप्नुयात् ९४
जनकस्य तु राजर्षेः कूपस्त्रिदशपूजितः
तत्राभिषेकं कृत्वा तु विष्णुलोकमवाप्नुयात् ९५
ततो विनशनं गच्छेत्सर्वपापप्रमोचनम्
वाजपेयमवाप्नोति सोमलोकं च गच्छति ९६
गण्डकीं तु समासाद्य सर्वतीर्थजलोद्भवाम्
वाजपेयमवाप्नोति सूर्यलोकं च गच्छति ९७
ततोऽधिवंश्यं धर्मज्ञ समाविश्य तपोवनम्
गुह्यकेषु महाराज मोदते नात्र संशयः ९८
कम्पनां तु समासाद्य नदीं सिद्धनिषेविताम्
पुण्डरीकमवाप्नोति स्वर्गलोकं च गच्छति ९९
ततो विशालामासाद्य नदीं त्रैलोक्यविश्रुताम्
अग्निष्टोममवाप्नोति सूर्यलोकं च गच्छति १००
अथ माहेश्वरीं धारां समासाद्य नराधिप
अश्वमेधमवाप्नोति कुलं चैव समुद्धरेत् १०१
दिवौकसां पुष्करिणीं समासाद्य नरः शुचिः
न दुर्गतिमवाप्नोति वाजपेयं च विन्दति १०२
महेश्वरपदं गच्छेद्ब्रह्मचारी समाहितः
महेश्वरपदे स्नात्वा वाजिमेधफलं लभेत् १०३
तत्र कोटिस्तु तीर्थानां विश्रुता भरतर्षभ
कूर्मरूपेण राजेन्द्र असुरेण दुरात्मना

ह्रियमाणाहृता राजन्विष्णुना प्रभविष्णुना १०४
तत्राभिषेकं कुर्वाणस्तीर्थकोट्यां युधिष्ठिर
पुण्डरीकमवाप्नोति विष्णुलोकं च गच्छति १०५
ततो गच्छेत राजेन्द्र स्थानं नारायणस्य तु
सदा संनिहितो यत्र हरिर्वसति भारत
शालग्राम इति ख्यातो विष्णोरद्भुतकर्मणः १०६
अभिगम्य त्रिलोकेशं वरदं विष्णुमव्ययम्
अश्वमेधमवाप्नोति विष्णुलोकं च गच्छति १०७
तत्रोदपानो धर्मज्ञ सर्वपापप्रमोचनः
समुद्रास्तत्र चत्वारः कूपे संनिहिताः सदा
तत्रोपस्पृश्य राजेन्द्र न दुर्गतिमवाप्नुयात् १०८
अभिगम्य महादेवं वरदं विष्णुमव्ययम्
विराजति यथा सोम ऋणैर्मुक्तो युधिष्ठिर १०९
जातिस्मर उपस्पृश्य शुचिः प्रयतमानसः
जातिस्मरत्वं प्राप्नोति स्नात्वा तत्र न संशयः ११०
वटेश्वरपुरं गत्वा अर्चयित्वा तु केशवम्
ईप्सिताँल्लभते कामानुपवासान्न संशयः १११
ततस्तु वामनं गत्वा सर्वपापप्रमोचनम्
अभिवाद्य हरिं देवं न दुर्गतिमवाप्नुयात् ११२
भरतस्याश्रमं गत्वा सर्वपापप्रमोचनम्
कौशिकीं तत्र सेवेत महापातकनाशिनीम्
राजसूयस्य यज्ञस्य फलं प्राप्नोति मानवः ११३
ततो गच्छेत धर्मज्ञ चम्पकारण्यमुत्तमम्
तत्रोष्य रजनीमेकां गोसहस्रफलं लभेत् ११४
अथ ज्येष्ठिलमासाद्य तीर्थं परमसंमतम्
उपोष्य रजनीमेकामग्निष्टोमफलं लभेत् ११५
तत्र विश्वेश्वरं दृष्ट्वा देव्या सह महाद्युतिम्
मित्रावरुणयोर्लोकानाप्नोति पुरुषर्षभ ११६
कन्यासंवेद्यमासाद्य नियतो नियताशनः
मनोः प्रजायतेर्लोकानाप्नोति भरतर्षभ ११७

कन्यायां ये प्रयच्छन्ति पानमन्नं च भारत
तदक्षयमितिप्राहुर्ऋषयः संशितव्रताः ११८
निश्चीरां च समासाद्य त्रिषु लोकेषु विश्रुताम्
अश्वमेधमवाप्नोति विष्णुलोकं च गच्छति ११९
ये तु दानं प्रयच्छन्ति निश्चीरासंगमे नराः
ते यान्ति नरशार्दूल ब्रह्मलोकं न संशयः १२०
तत्राश्रमो वसिष्ठस्य त्रिषु लोकेषु विश्रुतः
तत्राभिषेकं कुर्वाणो वाजपेयमवाप्नुयात् १२१
देवकूटं समासाद्य ब्रह्मर्षिगणसेवितम्
अश्वमेधमवाप्नोति कुलं चैव समुद्धरेत् १२२
ततो गच्छेत राजेन्द्र कौशिकस्य मुनेर्ह्रदम्
यत्र सिद्धिं परां प्राप्तो विश्वामित्रोऽथ कौशिकः १२३
तत्र मासं वसेद्वीर कौशिक्यां भरतर्षभ
अश्वमेधस्य यत्पुण्यं तन्मासेनाधिगच्छति १२४
सर्वतीर्थवरे चैव यो वसेत महाह्रदे
न दुर्गतिमवाप्नोति विन्देद्बहु सुवर्णकम् १२५
कुमारमभिगत्वा च वीराश्रमनिवासिनम्
अश्वमेधमवाप्नोति नरो नास्त्यत्र संशयः १२६
अग्निधारां समासाद्य त्रिषु लोकेषु विश्रुताम्
अग्निष्टोममवाप्नोति न च स्वर्गान्निवर्तते १२७
पितामहसरो गत्वा शैलराजप्रतिष्ठितम्
तत्राभिषेकं कुर्वाणो अग्निष्टोमफलं लभेत् १२८
पितामहस्य सरसः प्रस्रुता लोकपावनी
कुमारधारा तत्रैव त्रिषु लोकेषु विश्रुता १२९
यत्र स्नात्वा कृतार्थोऽस्मीत्यात्मानमवगच्छति
षष्ठकालोपवासेन मुच्यते ब्रह्महत्यया १३०
शिखरं वै महादेव्या गौर्यास्त्रैलोक्यविश्रुतम्
समारुह्य नरः श्राद्धः स्तनकुण्डेषु संविशेत् १३१
तत्राभिषेकं कुर्वाणः पितृदेवार्चने रतः
हयमेधमवाप्नोति शक्रलोकं च गच्छति १३२

ताम्रारुणं समासाद्य ब्रह्मचारी समाहितः
अश्वमेधमवाप्नोति शक्रलोकं च गच्छति १३३
नन्दिन्यां च समासाद्य कूपं त्रिदशसेवितम्
नरमेधस्य यत्पुण्यं तत्प्राप्नोति कुरूद्वह १३४
कालिकासंगमे स्नात्वा कौशिक्यारुणयोर्यतः
त्रिरात्रोपोषितो विद्वान्सर्वपापैः प्रमुच्यते १३५
उर्वशीतीर्थमासाद्य ततः सोमाश्रमं बुधः
कुम्भकर्णाश्रमे स्नात्वा पूज्यते भुवि मानवः १३६
स्नात्वा कोकामुखे पुण्ये ब्रह्मचारी यतव्रतः
जातिस्मरत्वं प्राप्नोति दृष्टमेतत्पुरातने १३७
सकृन्नन्दां समासाद्य कृतात्मा भवति द्विजः
सर्वपापविशुद्धात्मा शक्रलोकं च गच्छति १३८
ऋषभद्वीपमासाद्य सेव्यं क्रौञ्चनिषूदनम्
सरस्वत्यामुपस्पृश्य विमानस्थो विराजते १३९
औद्दालकं महाराज तीर्थं मुनिनिषेवितम्
तत्राभिषेकं कुर्वीत सर्वपापैः प्रमुच्यते १४०
धर्मतीर्थं समासाद्य पुण्यं ब्रह्मर्षिसेवितम्
वाजपेयमवाप्नोति नरो नास्त्यत्र संशयः १४१
तथा चम्पां समासाद्य भागीरथ्यां कृतोदकः
दण्डार्कमभिगम्यैव गोसहस्रफलं लभेत् १४२
लवेडिकां ततो गच्छेत्पुण्यां पुण्योपसेविताम्
वाजपेयमवाप्नोति विमानस्थश्च पूज्यते १४३
इति श्रीमहाभारते आरण्यकपर्वणि द्व्यशीतितमोऽध्यायः ८२

## त्र्यशीतितमोऽध्यायः

पुलस्त्य उवाच
अथ सन्ध्यां समासाद्य संवेद्यं तीर्थमुत्तमम्
उपस्पृश्य नरो विद्वान्भवेन्नास्त्यत्र संशयः १
रामस्य च प्रसादेन तीर्थं राजन्कृतं पुरा
तल्लोहित्यं समासाद्य विन्द्याद्बहु सुवर्णकम् २

करतोयां समासाद्य त्रिरात्रोपोषितो नरः
अश्वमेधमवाप्नोति कृते पैतामहे विधौ ३
गङ्गायास्त्वथ राजेन्द्र सागरस्य च संगमे
अश्वमेधं दशगुणं प्रवदन्ति मनीषिणः ४
गङ्गायास्त्वपरं द्वीपं प्राप्य यः स्नाति भारत
त्रिरात्रोपोषितो राजन्सर्वकामानवाप्नुयात् ५
ततो वैतरणीं गत्वा नदीं पापप्रमोचनीम्
विरजं तीर्थमासाद्य विराजति यथा शशी ६
प्रभवेच्च कुले पुण्ये सर्वपापं व्यपोहति
गोसहस्रफलं लब्ध्वा पुनाति च कुलं नरः ७
शोणस्य ज्योतिरथ्याश्च संगमे निवसञ्शुचिः
तर्पयित्वा पितॄन्देवानग्निष्टोमफलं लभेत् ८
शोणस्य नर्मदायाश्च प्रभवे कुरुनन्दन
वंशगुल्म उपस्पृश्य वाजिमेधफलं लभेत् ९
ऋषभं तीर्थमासाद्य कोशलायां नराधिप
वाजपेयमवाप्नोति त्रिरात्रोपोषितो नरः १०
कोशलायां समासाद्य कालतीर्थ उपस्पृशेत्
वृषभैकादशफलं लभते नात्र संशयः ११
पुष्पवत्यामुपस्पृश्य त्रिरात्रोपोषितो नरः
गोसहस्रफलं विन्द्यात्कुलं चैव समुद्धरेत् १२
ततो बदरिकातीर्थे स्नात्वा प्रयतमानसः
दीर्घमायुरवाप्नोति स्वर्गलोकं च गच्छति १३
ततो महेन्द्रमासाद्य जामदग्न्यनिषेवितम्
रामतीर्थे नरः स्नात्वा वाजिमेधफलं लभेत् १४
मतङ्गस्य तु केदारस्तत्रैव कुरुनन्दन
तत्र स्नात्वा नरो राजन्गोसहस्रफलं लभेत् १५
श्रीपर्वतं समासाद्य नदीतीर उपस्पृशेत्
अश्वमेधमवाप्नोति स्वर्गलोकं च गच्छति १६
श्रीपर्वते महादेवो देव्या सह महाद्युतिः
न्यवसत्परमप्रीतो ब्रह्मा च त्रिदशैर्वृतः १७

तत्र देवह्रदे स्नात्वा शुचिः प्रयतमानसः
अश्वमेधमवाप्नोति परां सिद्धिं च गच्छति १८
ऋषभं पर्वतं गत्वा पाराड्येषु सुरपूजितम्
वाजपेयमवाप्नोति नाकपृष्ठे च मोदते १९
ततो गच्छेत कावेरीं वृतामप्सरसां गणैः
तत्र स्नात्वा नरो राजन्गोसहस्रफलं लभेत् २०
ततस्तीरे समुद्रस्य कन्यातीर्थ उपस्पृशेत्
तत्रोपस्पृश्य राजेन्द्र सर्वपापैः प्रमुच्यते २१
अथ गोकर्णमासाद्य त्रिषु लोकेषु विश्रुतम्
समुद्रमध्ये राजेन्द्र सर्वलोकनमस्कृतम् २२
यत्र ब्रह्मादयो देवा ऋषयश्च तपोधनाः
भूतयक्षपिशाचाश्च किंनराः समहोरगाः २३
सिद्धचारणगन्धर्वा मानुषाः पन्नगास्तथा
सरितः सागराः शैला उपासन्त उमापतिम् २४
तत्रेशानं समभ्यर्च्य त्रिरात्रोपोषितो नरः
दशाश्वमेधमाप्नोति गाणपत्यं च विन्दति
उष्य द्वादशरात्रं तु कृतात्मा भवते नरः २५
तत एव तु गायत्र्याः स्थानं त्रैलोक्यविश्रुतम्
त्रिरात्रमुषितस्तत्र गोसहस्रफलं लभेत् २६
निदर्शनं च प्रत्यक्षं ब्राह्मणानां नराधिप
गायत्रीं पठते यस्तु योनिसंकरजस्तथा
गाथा वा गीतिका वापि तस्य संपद्यते नृप २७
संवर्तस्य तु विप्रर्षेर्वापीमासाद्य दुर्लभाम्
रूपस्य भागी भवति सुभगश्चैव जायते २८
ततो वेणां समासाद्य तर्पयेत्पितृदेवताः
मयूरहंससंयुक्तं विमानं लभते नरः २९
ततो गोदावरीं प्राप्य नित्यं सिद्धनिषेविताम्
गवामयमवाप्नोति वासुकेर्लोकमाप्नुयात् ३०
वेणायाः संगमे स्नात्वा वाजपेयफलं लभेत्
वरदासंगमे स्नात्वा गोसहस्रफलं लभेत् ३१

ब्रह्मस्थानं समासाद्य त्रिरात्रमुषितो नरः
गोसहस्रफलं विन्देत्स्वर्गलोकं च गच्छति ३२
कुशप्लवनमासाद्य ब्रह्मचारी समाहितः
त्रिरात्रमुषितः स्नात्वा ग्रश्वमेधफलं लभेत् ३३
ततो देवह्रदे रम्ये कृष्णवेरग्णाजलोद्भवे
जातिमात्रह्रदे चैव तथा कन्याश्रमे नृप ३४
यत्र क्रतुशतैरिष्ट्वा देवराजो दिवं गतः
ग्रग्निष्टोमशतं विन्देद्गमनादेव भारत ३५
सर्वदेवह्रदे स्नात्वा गोसहस्रफलं लभेत्
जातिमात्रह्रदे स्नात्वा भवेज्जातिस्मरो नरः ३६
ततोऽवाप्य महापुरायां पयोष्णीं सरितां वराम्
पितृदेवार्चनरतो गोसहस्रफलं लभेत् ३७
दराडकाररायमासाद्य महाराज उपस्पृशेत्
गोसहस्रफलं तत्र स्नातमात्रस्य भारत ३८
शरभङ्गाश्रमं गत्वा शुकस्य च महात्मनः
न दुर्गतिमवाप्नोति पुनाति च कुलं नरः ३९
ततः शूर्पारकं गच्छेज्जामदग्न्यनिषेवितम्
रामतीर्थे नरः स्नात्वा विन्द्याद्बहु सुवर्णकम् ४०
सप्तगोदावरे स्नात्वा नियतो नियताशनः
महत्पुरायमवाप्नोति देवलोकं च गच्छति ४१
ततो देवपथं गच्छेन्नियतो नियताशनः
देवसत्रस्य यत्पुरायं तदवाप्नोति मानवः ४२
तुङ्गकाररायमासाद्य ब्रह्मचारी जितेन्द्रियः
वेदानध्यापयत्तत्र ऋषिः सारस्वतः पुरा ४३
तत्र वेदान्प्रनष्टांस्तु मुनेरङ्गिरसः सुतः
उपविष्टो महर्षीणामुत्तरीयेषु भारत ४४
ॐकारेण यथान्यायं सम्यगुच्चारितेन च
येन यत्पूर्वमभ्यस्तं तत्तस्य समुपस्थितम् ४५
ऋषयस्तत्र देवाश्च वरुणोऽग्नि प्रजापतिः
हरिर्नारायणो देवो महादेवस्तथैव च ४६

पितामहश्च भगवान्देवैः सह महाद्युतिः
भृगुं नियोजयामास याजनार्थे महाद्युतिम् ४७
ततः स चक्रे भगवानृषीणां विधिवत्तदा
सर्वेषां पुनराधानं विधिदृष्टेन कर्मणा ४८
आज्यभागेन वै तत्र तर्पितास्तु यथाविधि
देवास्त्रिभुवनं याता ऋषयश्च यथासुखम् ४९
तदरण्यं प्रविष्टस्य तुङ्गकं राजसत्तम
पापं प्रणश्यते सर्वं स्त्रियो वा पुरुषस्य वा ५०
तत्र मासं वसेद्धीरो नियतो नियताशनः
ब्रह्मलोकं व्रजेद्राजन्पुनीते च कुलं नरः ५१
मेधाविकं समासाद्य पितॄन्देवांश्च तर्पयेत्
अग्निष्टोममवाप्नोति स्मृतिं मेधां च विन्दति ५२
ततः कालञ्जरं गत्वा पर्वतं लोकविश्रुतम्
तत्र देवह्रदे स्नात्वा गोसहस्रफलं लभेत् ५३
आत्मानं साधयेत्तत्र गिरौ कालञ्जरे नृप
स्वर्गलोके महीयेत नरो नास्त्यत्र संशयः ५४
ततो गिरिवरश्रेष्ठे चित्रकूटे विशां पते
मन्दाकिनीं समासाद्य नदीं पापप्रमोचनीम् ५५
तत्राभिषेकं कुर्वाणः पितृदेवार्चने रतः
अश्वमेधमवाप्नोति गतिं च परमां व्रजेत् ५६
ततो गच्छेत राजेन्द्र भर्तृस्थानमनुत्तमम्
यत्र देवो महासेनो नित्यं संनिहितो नृप ५७
पुमांस्तत्र नरश्रेष्ठ गमनादेव सिध्यति
कोटितीर्थे नरः स्नात्वा गोसहस्रफलं लभेत् ५८
प्रदक्षिणमुपावृत्य ज्येष्ठस्थानं व्रजेन्नरः
अभिगम्य महादेवं विराजति यथा शशी ५९
तत्र कूपो महाराज विश्रुतो भरतर्षभ
समुद्रास्तत्र चत्वारो निवसन्ति युधिष्ठिर ६०
तत्रोपस्पृश्य राजेन्द्र कृत्वा चापि प्रदक्षिणम्
नियतात्मा नरः पूतो गच्छेत परमां गतिम् ६१

ततो गच्छेत्कुरुश्रेष्ठ शृङ्गवेरपुरं महत्
यत्र तीर्णो महाराज रामो दाशरथिः पुरा ६२
गङ्गायां तु नरः स्नात्वा ब्रह्मचारी समाहितः
विधूतपाप्मा भवति वाजपेयं च विन्दति ६३
अभिगम्य महादेवमभ्यर्च्य च नराधिप
प्रदक्षिणमुपावृत्य गाणपत्यमवाप्नुयात् ६४
ततो गच्छेत राजेन्द्र प्रयागमृषिसंस्तुतम्
यत्र ब्रह्मादयो देवा दिशश्च सदिगीश्वराः ६५
लोकपालाश्च साध्याश्च नैर्ऋताः पितरस्तथा
सनत्कुमारप्रमुखास्तथैव परमर्षयः ६६
अङ्गिरःप्रमुखाश्चैव तथा ब्रह्मर्षयोऽपरे
तथा नागाः सुपर्णाश्च सिद्धाश्चक्रचरास्तथा ६७
सरितः सागराश्चैव गन्धर्वाप्सरसस्तथा
हरिश्च भगवानास्ते प्रजापतिपुरस्कृतः ६८
तत्र त्रीण्यग्निकुण्डानि येषां मध्ये च जाह्नवी
प्रयागादभिनिष्क्रान्ता सर्वतीर्थपुरस्कृता ६९
तपनस्य सुता तत्र त्रिषु लोकेषु विश्रुता
यमुना गङ्गया सार्धं संगता लोकपावनी ७०
गङ्गायमुनयोर्मध्यं पृथिव्या जघनं स्मृतम्
प्रयागं जघनस्यान्तमुपस्थमृषयो विदुः ७१
प्रयागं सप्रतिष्ठानं कम्बलाश्वतरौ तथा
तीर्थं भोगवती चैव वेदी प्रोक्ता प्रजापतेः ७२
तत्र वेदाश्च यज्ञाश्च मूर्तिमन्तो युधिष्ठिर
प्रजापतिमुपासन्ते ऋषयश्च महाव्रताः
यजन्ते क्रतुभिर्देवास्तथा चक्रचरा नृप ७३
ततः पुण्यतमं नास्ति त्रिषु लोकेषु भारत
प्रयागः सर्वतीर्थेभ्यः प्रभवत्यधिकं विभो ७४
श्रवणात्तस्य तीर्थस्य नामसंकीर्तनादपि
मृत्तिकालम्भनाद्वापि नरः पापात्प्रमुच्यते ७५
तत्राभिषेकं यः कुर्यात्संगमे संशितव्रतः

पुण्यं स फलमाप्नोति राजसूयाश्वमेधयोः ७६
एषा यजनभूमिर्हि देवानामपि सत्कृता
तत्र दत्तं सूक्ष्ममपि महद्भवति भारत ७७
न वेदवचनात्तात न लोकवचनादपि
मतिरुत्क्रमणीया ते प्रयागमरणं प्रति ७८
दश तीर्थसहस्राणि षष्टिकोटयस्तथापराः
येषां सांनिध्यमत्रैव कीर्तितं कुरुनन्दन ७९
चातुर्वेदे च यत्पुण्यं सत्यवादिषु चैव यत्
स्नात एव तदाप्नोति गङ्गायमुनसङ्गमे ८०
तत्र भोगवती नाम वासुकेस्तीर्थमुत्तमम्
तत्राभिषेकं यः कुर्यात्सोऽश्वमेधमवाप्नुयात् ८१
तत्र हंसप्रपतनं तीर्थं त्रैलोक्यविश्रुतम्
दशाश्वमेधिकं चैव गङ्गायां कुरुनन्दन ८२
यत्र गङ्गा महाराज स देशस्तत्तपोवनम्
सिद्धक्षेत्रं तु तज्ज्ञेयं गङ्गातीरसमाश्रितम् ८३
इदं सत्यं द्विजातीनां साधूनामात्मजस्य च
सुहृदां च जपेत्कर्णे शिष्यस्यानुगतस्य च ८४
इदं धर्म्यमिदं पुण्यमिदं मेध्यमिदं सुखम्
इदं स्वर्ग्यमिदं रम्यमिदं पावनमुत्तमम् ८५
महर्षीणामिदं गुह्यं सर्वपापप्रमोचनम्
अधीत्य द्विजमध्ये च निर्मलत्वमवाप्नुयात् ८६
यश्चेदं शृणुयान्नित्यं तीर्थपुण्यं सदा शुचिः
जातीः स स्मरते वह्वीर्नाकपृष्ठे च मोदते ८७
गम्यान्यपि च तीर्थानि कीर्तितान्यगमानि च
मनसा तानि गच्छेत सर्वतीर्थसमीक्षया ८८
एतानि वसुभिः साध्यैरादित्यैर्मरुदश्विभिः
ऋषिभिर्देवकल्पैश्च श्रितानि सुकृतैषिभिः ८९
एवं त्वमपि कौरव्य विधिनानेन सुव्रत
व्रज तीर्थानि नियतः पुण्यं पुण्येन वर्धते ९०
भावितैः करणैः पूर्वमास्तिक्याच्छ्रुतिदर्शनात्

प्राप्यन्ते तानि तीर्थानि सद्भिः शिष्टानुदर्शिभिः ९१
नाव्रतो नाकृतात्मा च नाशुचिर्न च तस्करः
स्नाति तीर्थेषु कौरव्य न च वक्रमतिर्नरः ९२
त्वया तु सम्यग्वृत्तेन नित्यं धर्मार्थदर्शिना
पितरस्तारितास्तात सर्वे च प्रपितामहाः ९३
पितामहपुरोगाश्च देवाः सर्षिगणा नृप
तव धर्मेण धर्मज्ञ नित्यमेवाभितोषिताः ९४
अवाप्स्यसि च लोकान्वै वसूनां वासवोपम
कीर्तिं च महतीं भीष्म प्राप्स्यसे भुवि शाश्वतीम् ९५
नारद उवाच
एवमुक्त्वाभ्यनुज्ञाप्य पुलस्त्यो भगवानृषिः
प्रीतः प्रीतेन मनसा तत्रैवान्तरधीयत ९६
भीष्मश्च कुरुशार्दूल शास्त्रतत्त्वार्थदर्शिवान्
पुलस्त्यवचनाच्चैव पृथिवीमनुचक्रमे ९७
अनेन विधिना यस्तु पृथिवीं संचरिष्यति
अश्वमेधशतस्याग्र्यं फलं प्रेत्य स भोक्ष्यते ९८
अतश्चाष्टगुणं पार्थ प्राप्स्यसे धर्ममुत्तमम्
नेता च त्वमृषीन्यस्मात्तेन तेऽष्टगुणं फलम् ९९
रक्षोगणावकीर्णानि तीर्थान्येतानि भारत
न गतिर्विद्यतेऽन्यस्य त्वामृते कुरुनन्दन १००
इदं देवर्षिचरितं सर्वतीर्थार्थसंश्रितम्
यः पठेत्कल्यमुत्थाय सर्वपापैः प्रमुच्यते १०१
ऋषिमुख्याः सदा यत्र वाल्मीकिस्त्वथ काश्यपः
आत्रेयस्त्वथ कौण्डिन्यो विश्वामित्रोऽथ गौतमः १०२
असितो देवलश्चैव मार्कण्डेयोऽथ गालवः
भरद्वाजो वसिष्ठश्च मुनिरुद्दालकस्तथा १०३
शौनकः सह पुत्रेण व्यासश्च जपतां वरः
दुर्वासाश्च मुनिश्रेष्ठो गालवश्च महातपाः १०४
एते ऋषिवराः सर्वे त्वत्प्रतीक्षास्तपोधनाः
एभिः सह महाराज तीर्थान्येतान्यनुव्रज १०५

एष वै लोमशो नाम देवर्षिरमितद्युतिः
समेष्यति त्वया चैव तेन सार्धमनुव्रज १०६
मया च सह धर्मज्ञ तीर्थान्येतान्यनुव्रज
प्राप्स्यसे महतीं कीर्तिं यथा राजा महाभिषः १०७
यथा ययातिर्धर्मात्मा यथा राजा पुरूरवाः
तथा त्वं कुरुशार्दूल स्वेन धर्मेण शोभसे १०८
यथा भगीरथो राजा यथा रामश्च विश्रुतः
तथा त्वं सर्वराजभ्यो भ्राजसे रश्मिवानिव १०९
यथा मनुर्यथेक्ष्वाकुर्यथा पूरुर्महायशाः
यथा वैन्यो महातेजास्तथा त्वमपि विश्रुतः ११०
यथा च वृत्रहा सर्वान्सपत्नान्निर्दहत्पुरा
तथा शत्रुक्षयं कृत्वा प्रजास्त्वं पालयिष्यसि १११
स्वधर्मविजितामुर्वीं प्राप्य राजीवलोचन
ख्यातिं यास्यसि धर्मेण कार्तवीर्यार्जुनो यथा ११२
वैशम्पायन उवाच
एवमाश्वास्य राजानं नारदो भगवानृषिः
अनुज्ञाप्य महात्मानं तत्रैवान्तरधीयत ११३
युधिष्ठिरोऽपि धर्मात्मा तमेवार्थं विचिन्तयन्
तीर्थयात्राश्रयं पुण्यमृषीणां प्रत्यवेदयत् ११४
इति श्रीमहाभारते आरण्यकपर्वणि त्र्यशीतितमोऽध्यायः ८३

## चतुरशीतितमोऽध्यायः

वैशम्पायन उवाच
भ्रातॄणां मतमाज्ञाय नारदस्य च धीमतः
पितामहसमं धौम्यं प्राह राजा युधिष्ठिरः १
मया स पुरुषव्याघ्रो जिष्णुः सत्यपराक्रमः
अस्त्रहेतोर्महाबाहुरमितात्मा विवासितः २
स हि वीरोऽनुरक्तश्च समर्थश्च तपोधनः
कृती च भृशमप्यस्त्रे वासुदेव इव प्रभुः ३
अहं ह्येतावुभौ ब्रह्मन्कृष्णावरिनिघातिनौ

अभिजानामि विक्रान्तौ तथा व्यासः प्रतापवान्
त्रियुगौ पुण्डरीकाक्षौ वासुदेवधनञ्जयौ ४
नारदोऽपि तथा वेद सोऽप्यशंसत्सदा मम
तथाहमपि जानामि नरनारायणावृषी ५
शक्तोऽयमित्यतो मत्वा मया संप्रेषितोऽजुनः
इंद्रादनवरः शक्तः सुरसूनुः सुराधिपम्
द्रष्टुमस्त्राणि चादातुमिन्द्रादिति विवासितः ६
भीष्मद्रोणावतिरथौ कृपो द्रौणिश्च दुर्जयः
धृतराष्ट्रस्य पुत्रेण वृता युधि महाबलाः
सर्वे वेदविदः शूराः सर्वेऽस्त्रकुशलास्तथा ७
योद्धुकामश्च पार्थेन सततं यो महाबलः
स च दिव्यास्त्रवित्कर्णः सूतपुत्रो महारथः ८
सोऽश्ववेगानिलबलः शरार्चिस्तलनिस्वनः
रजोधूमोऽस्त्रसंतापो धार्तराष्ट्रानिलोद्धतः ९
निसृष्ट इव कालेन युगान्तज्वलनो यथा
मम सैन्यमयं कक्षं प्रधक्ष्यति न संशयः १०
तं स कृष्णानिलोद्धूतो दिव्यास्त्रजलदो महान्
श्वेतवाजिबलाकाभृद्गाण्डीवेन्द्रायुधोज्ज्वलः ११
सततं शरधाराभिः प्रदीप्तं कर्णपावकम्
उदीर्णोऽजुनमेघोऽय शमयिष्यति संयुगे १२
स साक्षादेव सर्वाणि शक्रात्परपुरञ्जयः
दिव्यान्यस्त्राणि बीभत्सुस्तत्त्वतः प्रतिपत्स्यते १३
अलं स तेषां सर्वेषामिति मे धीयते मतिः
नास्ति त्वतिक्रिया तस्य रणेऽरीणां प्रतिक्रिया १४
तं वयं पाण्डवं सर्वे गृहीतास्त्रं धनंजयम्
द्रष्टारो न हि बीभत्सुर्भारमुद्यम्य सीदति १५
वयं तु तमृते वीरं वनेऽस्मिन्द्विपदां वर
अवधानं न गच्छामः काम्यके सह कृष्णया १६
भवानन्यद्वनं साधु बह्वन्नं फलवच्छुचि
आख्यातु रमणीयं च सेवितं पुण्यकर्मभिः १७

यत्र कंचिद्वयं कालं वसन्तः सत्यविक्रमम्
प्रतीक्षामोऽजुनं वीरं वर्षकामा इवाम्बुदम् १८
विविधानाश्रमान्कांश्चिद्द्विजातिभ्यः परिश्रुतान्
सरांसि सरितश्चैव रमणीयांश्च पर्वतान् १९
आचक्ष्व न हि नो ब्रह्मन्रोचते तमृतेऽजुनम्
वनेऽस्मिन्काम्यके वासो गच्छामोऽन्या दिशं प्रति २०
इति श्रीमहाभारते आरगयकपर्वणि चतुरशीतितमोऽध्यायः ८४

## पञ्चाशीतितमोऽध्यायः

वैशम्पायन उवाच
तान्सर्वानुत्सुकान्दृष्ट्वा पागडवान्दीनचेतसः
आश्वासयंस्तदा धौम्यो बृहस्पतिसमोऽब्रवीत् १
ब्राह्मणानुमतान्पुगयानाश्रमान्भरतर्षभ
दिशस्तीर्थानि शैलांश्च शृणु मे गदतो नृप २
पूर्वं प्राचीं दिशं राजन्राजर्षिगणसेविताम्
रम्यां ते कीर्तयिष्यामि युधिष्ठिर यथास्मृति ३
तस्यां देवर्षिजुष्टायां नैमिषं नाम भारत
यत्र तीर्थानि देवानां सुपुगयानि पृथक्पृथक् ४
यत्र सा गोमती पुगया रम्या देवर्षिसेविता
यज्ञ भूमिश्च देवानां शामित्रं च विवस्वतः ५
तस्यां गिरिवरः पुगयो गयो राजर्षिसत्कृतः
शिवं ब्रह्मसरो यत्र सेवितं त्रिदशर्षिभिः ६
यदर्थं पुरुषव्याघ्र कीर्तयन्ति पुरातनाः
एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ७
महानदी च तत्रैव तथा गयशिरोऽनघ
यत्रासौ कीर्त्यते विप्रैरक्षय्यकरणो वटः
यत्र दत्तं पितृभ्योऽन्नमक्षय्यं भवति प्रभो ८
सा च पुगयजला यत्र फल्गुनामा महानदी
बहुमूलफला चापि कौशिकी भरतर्षभ
विश्वामित्रोऽभ्यगाद्यत्र ब्राह्मणत्वं तपोधनः ९

गङ्गा यत्र नदी पुराया यस्यास्तीरे भगीरथः
अयजत्तात बहुभिः क्रतुभिर्भूरिदक्षिणैः १०
पाञ्चालेषु च कौरव्य कथयन्त्युत्पलावतम्
विश्वामित्रोऽयजद्यत्र शक्रेण सह कौशिकः
यत्रानुवंशं भगवाञ्जामदग्न्यस्तथा जगौ ११
विश्वामित्रस्य तां दृष्ट्वा विभूतिमतिमानुषीम्
कान्यकुब्जेऽपिबत्सोममिन्द्रेण सह कौशिकः
ततः क्षत्रादपाक्रामद्ब्राह्मणोऽस्मीति चाब्रवीत् १२
पवित्रमृषिभिर्जुष्टं पुरायं पावनमुत्तमम्
गङ्गायमुनयोर्वीर संगमं लोकविश्रुतम् १३
यत्रायजत भूतात्मा पूर्वमेव पितामहः
प्रयागमिति विख्यातं तस्माद्भरतसत्तम १४
अगस्त्यस्य च राजेन्द्र तत्राश्रमवरो महान्
हिरगयबिन्दुः कथितो गिरौ कालञ्जरे नृप १५
अत्यन्यान्पर्वतान्राजन्पुरायो गिरिवरःशिवः
महेन्द्रो नाम कौरव्य भार्गवस्य महात्मनः १६
अयजद्यत्र कौन्तेय पूर्वमेव पितामहः
यत्र भागीरथी पुराया सरस्यासीद्युधिष्ठिर १७
यत्रासौ ब्रह्मशालेति पुराया ख्याता विशां पते
धूतपाप्मभिराकीर्णा पुरायं तस्याश्च दर्शनम् १८
पवित्रो मङ्गलीयश्च ख्यातो लोके सनातनः
केदारश्च मतङ्गस्य महानाश्रम उत्तमः १९
कुराडोदः पर्वतो रम्यो बहुमूलफलोदकः
नैषधस्तृषितो यत्र जलं शर्म च लब्धवान् २०
यत्र देववनं रम्यं तापसैरुपशोभितम्
बाहुदा च नदी यत्र नन्दा च गिरिमूर्धनि २१
तीर्थानि सरितः शैलाः पुरायान्यायतनानि च
प्राच्यां दिशि महाराज कीर्तितानि मया तव २२
तिसृष्वन्यासु पुरायानि दिक्षु तीर्थानि मे शृणु
सरितः पर्वतांश्चैव पुरायान्यायतनानि च २३

इति श्रीमहाभारते आरगयकपर्वणि पञ्चाशीतितमोऽध्यायः ८५

षडशीतितमोऽध्यायः

धौम्य उवाच
दक्षिणस्यां तु पुगयानि शृणु तीर्थानि भारत
विस्तरेण यथाबुद्धि कीर्त्यमानानि भारत १
यस्यामाख्यायते पुगया दिशि गोदावरी नदी
बह्वारामा बहुजला तापसाचरिता शुभा २
वेगणा भीमरथी चोभे नद्यौ पापभयापहे
मृगद्विजसमाकीर्णे तापसालयभूषिते ३
राजर्षेस्तत्र च सरिन्नृगस्य भरतर्षभ
रम्यातीर्था बहुजला पयोष्णी द्विजसेविता ४
अपि चात्र महायोगी मार्कगडेयो महातपाः
अनुवंश्यां जगौ गाथां नृगस्य धरणीपतेः ५
नृगस्य यजमानस्य प्रत्यक्षमिति नः श्रुतम्
अमाद्यदिन्द्रः सोमेन दक्षिणाभिर्द्विजातयः ६
माठरस्य वनं पुगयं बहुमूलफलं शिवम्
यूपश्च भरतश्रेष्ठ वरुणस्रोतसे गिरौ ७
प्रवेगयुत्तरपार्श्वे तु पुगये कगवाश्रमे तथा
तापसानामरगयानि कीर्तितानि यथाश्रुति ८
वेदी शूर्पारके तात जमदग्नेर्महात्मनः
रम्या पाषाणतीर्था च पुरश्चन्द्रा च भारत ९
अशोकतीर्थं मर्त्येषु कौन्तेय बहुलाश्रमम्
अगस्त्यतीर्थं पागड्येषु वारुणं च युधिष्ठिर १०
कुमार्यः कथिताः पुगयाः पागड्येष्वेव नरर्षभ
ताम्रपर्णीं तु कौन्तेय कीर्तयिष्यामि तां शृणु ११
यत्र देवैस्तपस्तप्तं महदिच्छद्भिराश्रमे
गोकर्णमिति विख्यातं त्रिषु लोकेषु भारत १२
शीततोयो बहुजलः पुगयस्तात शिवश्च सः
ह्रदः परमदुष्प्रापो मानुषैरकृतात्मभिः १३

तत्रैव तृणसोमाग्नेः संपन्नफलमूलवान्
आश्रमोऽगस्त्यशिष्यस्य पुण्यो देवसभे गिरौ १४
वैडूर्यपर्वतस्तत्र श्रीमान्मणिमयः शिवः
अगस्त्यस्याश्रमश्चैव बहुमूलफलोदकः १५
सुराष्ट्रेष्वपि वक्ष्यामि पुण्यान्यायतनानि च
आश्रमान्सरितः शैलान्सरांसि च नराधिप १६
चमसोन्मज्जनं विप्रास्तत्रापि कथयन्त्युत
प्रभासं चोदधौ तीर्थं त्रिदशानां युधिष्ठिर १७
तत्र पिण्डारकं नाम तापसाचरितं शुभम्
उज्जयन्तश्च शिखरी क्षिप्रं सिद्धिकरो महान् १८
तत्र देवर्षिवर्येण नारदेनानुकीर्तितः
पुराणः श्रूयते श्लोकस्तं निबोध युधिष्ठिर १९
पुण्ये गिरौ सुराष्ट्रेषु मृगपक्षिनिषेविते
उज्जयन्ते स्म तप्ताङ्गो नाकपृष्ठे महीयते २०
पुण्या द्वारवती तत्र यत्रास्ते मधुसूदनः
साक्षाद्देवः पुराणोऽसौ स हि धर्मः सनातनः २१
ये च वेदविदो विप्रा ये चाध्यात्मविदो जनाः
ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम् २२
पवित्राणां हि गोविन्दः पवित्रं परमुच्यते
पुण्यानामपि पुण्योऽसौ मङ्गलानां च मङ्गलम् २३
त्रैलोक्यं पुण्डरीकाक्षो देवदेवः सनातनः
आस्ते हरिरचिन्त्यात्मा तत्रैव मधुसूदनः २४
इति श्रीमहाभारते आरण्यकपर्वणि षडशीतितमोऽध्यायः ८६

## सप्ताशीतितमोऽध्यायः

धौम्य उवाच
अवन्तिषु प्रतीच्यां वै कीर्तयिष्यामि ते दिशि
यानि तत्र पवित्राणि पुण्यान्यायतनानि च १
प्रियङ्ग्वाम्रवनोपेता वानीरवनमालिनी
प्रत्यक्स्रोता नदी पुण्या नर्मदा तत्र भारत २

निकेतः ख्यायते पुगयो यत्र विश्रवसो मुनेः
जज्ञे धनपतिर्यत्र कुबेरो नरवाहनः ३
वैडूर्यशिखरो नाम पुगयो गिरिवरः शुभः
दिव्यपुष्पफलास्तत्र पादपा हरितच्छदाः ४
तस्य शैलस्य शिखरे सरस्तत्र च धीमतः
प्रफुल्लनलिनं राजन्देवगन्धर्वसेवितम् ५
बह्वाश्चर्यं महाराज दृश्यते तत्र पर्वते
पुगये स्वर्गोपमे दिव्ये नित्यं देवर्षिसेविते ६
ह्रदिनी पुगयतीर्था च राजर्षेस्तत्र वै सरित्
विश्वामित्रनदी पारा पुगया परपुरञ्जय ७
यस्यास्तीरे सतां मध्ये ययातिर्नहुषात्मजः
पपात स पुनर्लोकाँल्लेभे धर्मान्सनातनान् ८
तत्र पुगयह्रदस्तात मैनाकश्चैव पर्वतः
बहुमूलफलो वीर असितो नाम पर्वतः ९
आश्रमः कक्षसेनस्य पुगयस्तत्र युधिष्ठिर
च्यवनस्याश्रमश्चैव ख्यातः सर्वत्र पागडव
तत्राल्पेनैव सिध्यन्ति मानवास्तपसा विभो १०
जम्बूमार्गो महाराज ऋषीणां भावितात्मनाम्
आश्रमः शाम्यतां श्रेष्ठ मृगद्विजगणायुतः ११
ततः पुगयतमा राजन्सततं तापसायुता
केतुमाला च मेध्या च गङ्गारगयं च भूमिप
ख्यातं च सैन्धवारगयं पुगयं द्विजनिषेवितम् १२
पितामहसरः पुगयं पुष्करं नाम भारत
वैखानसानां सिद्धानामृषीणामाश्रमः प्रियः १३
अप्यत्र संस्तवार्थाय प्रजापतिरथो जगौ
पुष्करेषु कुरुश्रेष्ठ गाथां सुकृतिनां वर १४
मनसाप्यभिकामस्य पुष्कराणि मनस्विनः
पापानि विप्रणश्यन्ति नाकपृष्ठे च मोदते १५
इति श्रीमहाभारते आरगयकपर्वणि सप्ताशीतितमोऽध्यायः ८७

## अष्टाशीतितमोऽध्यायः

धौम्य उवाच
उदीच्यां राजशार्दूल दिशि पुण्यानि यानि वै
तानि ते कीर्तयिष्यामि पुण्यान्यायतनानि च १
सरस्वती पुण्यवहा ह्रदिनी वनमालिनी
समुद्रगा महावेगा यमुना यत्र पाण्डव २
तत्र पुण्यतमं तीर्थं प्लक्षावतरणं शिवम्
यत्र सारस्वतैरिष्ट्वा गच्छन्त्यवभृथं द्विजाः ३
पुण्यं चाख्यायते दिव्यं शिवमग्निशिरोऽनघ
सहदेवोऽयजद्यत्र शम्याक्षेपेण भारत ४
एतस्मिन्नेव चार्थेयमिन्द्रगीता युधिष्ठिर
गाथा चरति लोकेऽस्मिन्गीयमाना द्विजातिभिः ५
अग्नयः सहदेवेन ये चिता यमुनामनु
शतं शतसहस्राणि सहस्रशतदक्षिणाः ६
तत्रैव भरतो राजा चक्रवर्ती महायशाः
विंशतिं सप्त चाष्टौ च हयमेधानुपाहरत् ७
कामकृद्यो द्विजातीनां श्रुतस्तात मया पुरा
अत्यन्तमाश्रमः पुण्यः सरकस्तस्य विश्रुतः ८
सरस्वती नदी सद्भिः सततं पार्थ पूजिता
वालखिल्यैर्महाराज यत्रेष्टमृषिभिः पुरा ९
दृषद्वती पुण्यतमा तत्र ख्याता युधिष्ठिर
तत्र वैवर्ण्यवर्णौ च सुपुण्यौ मनुजाधिप १०
वेदज्ञौ वेदविदितौ विद्यावेदविदावुभौ
यजन्तौ क्रतुभिर्नित्यं पुण्यैर्भरतसत्तम ११
समेत्य बहुशो देवाः सेन्द्राः सवरुणाः पुरा
विशाखयूपेऽतप्यन्त तस्मात्पुण्यतमः स वै १२
ऋषिर्महान्महाभागो जमदग्निर्महायशाः
पलाशकेषु पुण्येषु रम्येष्वयजताभिभूः १३
यत्र सर्वाः सरिच्छ्रेष्ठाः साक्षात्तमृषिसत्तमम्
स्वं स्वं तोयमुपादाय परिवार्योपतस्थिरे १४

अपि चात्र महाराज स्वयं विश्वावसुर्जगौ
इमं श्लोकं तदा वीर प्रेक्ष्य वीर्यं महात्मनः १५
यजमानस्य वै देवाञ्जमदग्नेर्महात्मनः
आगम्य सरितः सर्वा मधुना समतर्पयन् १६
गन्धर्वयक्षरक्षोभिरप्सरोभिश्च शोभितम्
किरातकिन्नरावासं शैलं शिखरिणां वरम् १७
बिभेद तरसा गङ्गा गङ्गाद्वारे युधिष्ठिर
पुरायं तत्ख्यायते राजन्ब्रह्मर्षिगणसेवितम् १८
सनत्कुमारः कौरव्य पुरायं कनखलं तथा
पर्वतश्च पुरुर्नाम यत्र जातः पुरूरवाः १९
भृगुर्यत्र तपस्तेपे महर्षिगणसेवितः
स राजन्नाश्रमः ख्यातो भृगुतुङ्गो महागिरिः २०
यच्च भूतं भविष्यच्च भवच्च पुरुषर्षभ
नारायणः प्रभुर्विष्णुः शाश्वतः पुरुषोत्तमः २१
तस्यातियशसः पुरायां विशालां बदरीमनु
आश्रमः ख्यायते पुरायस्त्रिषु लोकेषु विश्रुतः २२
उष्णतोयवहा गङ्गा शीततोयवहापरा
सुवर्णसिकता राजन्विशालां बदरीमनु २३
ऋषयो यत्र देवाश्च महाभागा महौजसः
प्राप्य नित्यं नमस्यन्ति देवं नारायणं विभुम् २४
यत्र नारायणो देवः परमात्मा सनातनः
तत्र कृत्स्नं जगत्पार्थ तीर्थान्यायतनानि च २५
तत्पुरायं तत्परं ब्रह्म तत्तीर्थं तत्तपोवनम्
तत्र देवर्षयः सिद्धाः सर्वे चैव तपोधनाः २६
आदिदेवो महायोगी यत्रास्ते मधुसूदनः
पुरायानामपि तत्पुरायं तत्र ते संशयोऽस्तु मा २७
एतानि राजन्पुरायानि पृथिव्यां पृथिवीपते
कीर्तितानि नरश्रेष्ठ तीर्थान्यायतनानि च २८
एतानि वसुभिः साध्यैरादित्यैर्मरुदश्विभिः
ऋषिभिर्ब्रह्मकल्पैश्च सेवितानि महात्मभिः २९

चरन्नेतानि कौन्तेय सहितो ब्राह्मणर्षभैः
भ्रातृभिश्च महाभागैरुत्कराठां विजहिष्यसि ३०
इति श्रीमहाभारते ग्रारगयकपर्वणि ग्रष्टाशीतितमोऽध्यायः ८८

एकोननवतितमोऽध्यायः

वैशम्पायन उवाच
एवं संभाषमाणे तु धौम्ये कौरवनन्दन
लोमशः सुमहातेजा ऋृषिस्तत्राजगाम ह १
तं पाराडवाग्रजो राजा सगणो ब्राह्मणाश्च ते
उदतिष्ठन्महाभागं दिवि शक्रमिवामराः २
तमभ्यर्च्य यथान्यायं धर्मराजो युधिष्ठिरः
पप्रच्छागमने हेतुमटने च प्रयोजनम् ३
स पृष्टः पाराडुपुत्रेण प्रीयमाणो महामनाः
उवाच श्लक्ष्णया वाचा हर्षयन्निव पाराडवान् ४
संचरन्नस्मि कौन्तेय सर्वलोकान्यदृच्छया
गतः शक्रस्य सदनं तत्रापश्यं सुरेश्वरम् ५
तव च भ्रातरं वीरमपश्यं सव्यसाचिनम्
शक्रस्यार्धासनगतं तत्र मे विस्मयो महान्
ग्रासीत्पुरुषशार्दूल दृष्ट्वा पार्थं तथागतम् ६
ग्राह मां तत्र देवेशो गच्छ पाराडुसुतानिति
सोऽहमभ्यागतः क्षिप्रं दिदृक्षुस्त्वां सहानुजम् ७
वचनात्पुरुहूतस्य पार्थस्य च महात्मनः
ग्राख्यास्ये ते प्रियं तात महत्पाराडवनन्दन ८
भ्रातृभिः सहितो राजन्कृष्णया चैव तच्छृणु
यत्त्वयोक्तो महाबाहुरस्त्रार्थं पाराडवर्षभ ९
तदस्त्रमाप्तं पार्थेन रुद्रादप्रतिमं महत्
यत्तद्ब्रह्मशिरो नाम तपसा रुद्रमागतम् १०
ग्रमृतादुत्थितं रौद्रं तल्लब्धं सव्यसाचिना
तत्समन्त्रं ससंहारं सप्रायश्चित्तमङ्गलम् ११
वज्रं चान्यानि चास्त्राणि दराडादीनि युधिष्ठिर

यमात्कुबेराद्वरुणादिन्द्राच्च कुरुनन्दन
अस्त्राण्यधीतवान्पार्थो दिव्यान्यमितविक्रमः १२
विश्वावसोश्च तनयाद्गीतं नृत्तं च साम च
वादित्रं च यथान्यायं प्रत्यविन्दद्यथाविधि १३
एवं कृतास्त्रः कौन्तेयो गान्धर्वं वेदमाप्तवान्
सुखं वसति बीभत्सुरनुजस्यानुजस्तव १४
यदर्थं मां सुरश्रेष्ठ इदं वचनमब्रवीत्
तच्च ते कथयिष्यामि युधिष्ठिर निबोध मे १५
भवान्मनुष्यलोकाय गमिष्यति न संशयः
ब्रूयाद्युधिष्ठिरं तत्र वचनान्मे द्विजोत्तम १६
आगमिष्यति ते भ्राता कृतास्त्रः क्षिप्रमर्जुनः
सुरकार्यं महत्कृत्वा यदशक्यं दिवौकसैः १७
तपसा तु त्वमात्मानं भ्रातृभिः सह योजय
तपसो हि परं नास्ति तपसा विन्दते महत् १८
अहं च कर्णं जानामि यथावद्भरतर्षभ
न स पार्थस्य संग्रामे कलामर्हति षोडशीम् १९
यच्चापि ते भयं तस्मान्मनसिस्थमरिन्दम
तच्चाप्यपहरिष्यामि सव्यसाचाविहागते २०
यच्च ते मानसं वीर तीर्थयात्रामिमां प्रति
तच्च ते लोमशः सर्वं कथयिष्यत्यसंशयम् २१
यच्च किंचित्तपोयुक्तं फलं तीर्थेषु भारत
महर्षिरेष यद्ब्रूयात्तच्छ्रद्धेयमनन्यथा २२
इति श्रीमहाभारते आरगयकपर्वणि एकोननवतितमोऽध्यायः ८९

## नवतितमोऽध्यायः

लोमश उवाच
धनञ्जयेन चाप्युक्तं यत्तच्छृणु युधिष्ठिर
युधिष्ठिरं भ्रातरं मे योजयेर्धर्म्यया श्रिया १
त्वं हि धर्मान्परान्वेत्थ तपांसि च तपोधन
श्रीमतां चापि जानासि राज्ञां धर्मं सनातनम् २

स भवान्यत्परं वेद पावनं पुरुषान्प्रति
तेन संयोजयेथास्त्वं तीर्थपुरायेन पाराडवम् ३
यथा तीर्थानि गच्छेत गाश्च दद्यात्स पार्थिवः
तथा सर्वात्मना कार्यमिति मां विजयोऽब्रवीत् ४
भवता चानुगुप्तोऽसौ चरेत्तीर्थानि सर्वशः
रक्षोभ्यो रक्षितव्यश्च दुर्गेषु विषमेषु च ५
दधीच इव देवेन्द्रं यथा चाप्यंगिरा रविम्
तथा रक्षस्व कौन्तेयं राक्षसेभ्यो द्विजोत्तम ६
यातुधाना हि बहवो राक्षसाः पर्वतोपमाः
त्वयाभिगुप्तान्कौन्तेयान्नातिवर्तेयुरन्तिकात् ७
सोऽहमिन्द्रस्य वचनान्नियोगादर्जुनस्य च
रक्षमाणो भयेभ्यस्त्वां चरिष्यामि त्वया सह ८
द्विस्तीर्थानि मया पूर्वं दृष्टानि कुरुनन्दन
इदं तृतीयं द्रक्ष्यामि तान्येव भवता सह ९
इयं राजार्षिभिर्याता पुरायकृद्भिर्युधिष्ठिर
मन्वादिभिर्महाराज तीर्थयात्रा भयापहा १०
नानृजुर्नाकृतात्मा च नावैद्यो न च पापकृत्
स्नाति तीर्थेषु कौरव्य न च वक्रमतिर्नरः ११
त्वं तु धर्ममतिर्नित्यं धर्मज्ञः सत्यसङ्गरः
विमुक्तः सर्वपापेभ्यो भूय एव भविष्यसि १२
यथा भगीरथो राजा राजानश्च गयादयः
यथा ययातिः कौन्तेय तथा त्वमपि पाराडव १३
युधिष्ठिर उवाच
न हर्षात्संप्रपश्यामि वाक्यस्यास्योत्तरं क्वचित्
स्मरेद्धि देवराजो यं किं नामाभ्याधिकं ततः १४
भवता संगमो यस्य भ्राता यस्य धनञ्जयः
वासवः स्मरते यस्य को नामाभ्यधिकस्ततः १५
यच्च मां भगवानाह तीर्थानां दर्शनं प्रति
धौम्यस्य वचनादेषा बुद्धिः पूर्वं कृतैव मे १६
तद्यदा मन्यसे ब्रह्मन्गमनं तीर्थदर्शने

तदैव गन्तास्मि दृढमेष मे निश्चयः परः १७
वैशम्पायन उवाच
गमने कृतबुद्धिं तं पाणडवं लोमशोऽब्रवीत्
लघुर्भव महाराज लघुः स्वैरं गमिष्यसि १८
युधिष्ठिर उवाच
भिक्षाभुजो निवर्तन्तां ब्राह्मणा यतयश्च ये
ये चाप्यनुगताः पौरा राजभक्तिपुरस्कृताः १९
धृतराष्ट्रं महाराजमभिगच्छन्तु चैव ते
स दास्यति यथाकालमुचिता यस्य या भृतिः २०
स चेद्यथोचितां वृत्तिं न दद्यान्मनुजेश्वरः
अस्मत्प्रियहितार्थाय पांचाल्यो वः प्रदास्यति २१
वैशम्पायन उवाच
ततो भूयिष्ठशः पौरा गुरुभारसमाहिताः
विप्राश्च यतयो युक्ता जग्मुर्नागपुरं प्रति २२
तान्सर्वान्धर्मराजस्य प्रेम्णा राजाम्बिकासुतः
प्रतिजग्राह विधिवद्धनैश्च समतर्पयत् २३
ततः कुन्तीसुतो राजा लघुभिर्ब्राह्मणैः सह
लोमशेन च सुप्रीतस्त्रिरात्रं काम्यकेऽवसत् २४
इति श्रीमहाभारते आरणयकपर्वणि नवतितमोऽध्यायः ९०

एकनवतितमोऽध्यायः

वैशम्पायन उवाच
ततः प्रयान्तं कौन्तेयं ब्राह्मणा वनवासिनः
अभिगम्य तदा राजन्निदं वचनमब्रुवन् १
राजंस्तीर्थानि गन्तासि पुणयानि भ्रातृभिः सह
देवर्षिणा च सहितो लोमशेन महात्मना २
अस्मानपि महाराज नेतुमर्हसि पाणडव
अस्माभिर्हि न शक्यानि त्वदृते तानि कौरव ३
श्वापदैरुपसृष्टानि दुर्गाणि विषमाणि च
अगम्यानि नरैरल्पैस्तीर्थानि मनुजेश्वर ४

भवन्तो भ्रातरः शूरा धनुर्धरवराः सदा
भवद्भिः पालिताःशूरैर्गच्छेम वयमच्युत ५
भवत्प्रसादाद्धि वयं प्राप्नुयाम फलं शुभम्
तीर्थानां पृथिवीपाल व्रतानां च विशां पते ६
तव वीर्यपरित्राताः शुद्धास्तीर्थपरिप्लुताः
भवेम धूतपाप्मानस्तीर्थसंदर्शनान्नृप ७
भवानपि नरेन्द्रस्य कार्तवीर्यस्य भारत
अष्टकस्य च राजर्षेर्लोमपादस्य चैव ह ८
भरतस्य च वीरस्य सार्वभौमस्य पार्थिव
ध्रुवं प्राप्स्यसि दुष्प्रापाँल्लोकांस्तीर्थपरिप्लुतः ९
प्रभासादीनि तीर्थानि महेन्द्रादींश्च पर्वतान्
गङ्गाद्याः सरितश्चैव प्लक्षादींश्च वनस्पतीन्
त्वया सह महीपाल द्रष्टुमिच्छामहे वयम् १०
यदि ते ब्राह्मणेस्ति काचित्प्रीतिर्जनाधिप
कुरु क्षिप्रं वचोऽस्माकं ततः श्रेयोऽभिपत्स्यसे ११
तीर्थानि हि महाबाहो तपोविघ्नकरैः सदा
अनुकीर्णानि रक्षोभिस्तेभ्यो नस्त्रातुमर्हसि १२
तीर्थान्युक्तानि धौम्येन नारदेन च धीमता
यान्युवाच च देवर्षिर्लोमशः सुमहातपाः १३
विधिवत्तानि सर्वाणि पर्यटस्व नराधिप
धूतपाप्मा सहास्माभिर्लोमशेन च पालितः १४
स तथा पूज्यमानस्तैर्हर्षादश्रुपरिप्लुतः
भीमसेनादिभिर्वीरैर्भ्रातृभिः परिवारितः
बाढमित्यब्रवीत्सर्वांस्तानृषीन्पाण्डवर्षभः १५
लोमशं समनुज्ञाप्य धौम्यं चैव पुरोहितम्
ततः स पाण्डवश्रेष्ठो भ्रातृभिः सहितो वशी
द्रौपद्या चानवद्यांग्या गमनाय मनो दधे १६
अथ व्यासो महाभागस्तथा नारदपर्वतौ
काम्यके पाण्डवं द्रष्टुं समाजग्मुर्मनीषिणः १७
तेषां युधिष्ठिरो राजा पूजां चक्रे यथाविधि

सत्कृतास्ते महाभागा युधिष्ठिरमथाब्रुवन् १८
युधिष्ठिर यमौ भीम मनसा कुरुतार्जवम्
मनसा कृतशौचा वै शुद्धास्तीर्थानि गच्छत १९
शरीरनियमं ह्याहुर्ब्राह्मणा मानुषं व्रतम्
मनोविशुद्धां बुद्धिं च दैवमाहुर्व्रतं द्विजाः २०
मनो ह्यदुष्टं शूराणां पर्याप्तं वै नराधिप
मैत्रीं बुद्धिं समास्थाय शुद्धास्तीर्थानि गच्छत २१
ते यूयं मानसैः शुद्धाः शरीरनियमव्रतैः
दैवं व्रतं समास्थाय यथोक्तं फलमाप्स्यथ २२
ते तथेति प्रतिज्ञाय कृष्णया सह पाराडवाः
कृतस्वस्त्ययनाः सर्वे मुनिभिर्दिव्यमानुषैः २३
लोमशस्योपसंगृह्य पादौ द्वैपायनस्य च
नारदस्य च राजेन्द्र देवर्षेः पर्वतस्य च २४
धौम्येन सहिता वीरास्तथान्यैर्वनवासिभिः
मार्गशीर्ष्यामतीतायां पुष्येण प्रययुस्ततः २५
कठिनानि समादाय चीराजिनजटाधराः
अभेद्यैः कवचैर्युक्तास्तीर्थान्यन्वचरंस्तदा २६
इन्द्रसेनादिभिर्भृत्यै रथैः परिचतुर्दशैः
महानसव्यापृतैश्च तथान्यैः परिचारकैः २७
सायुधा बद्धनिस्त्रिंशास्तूणवन्तः समार्गणाः
प्राङ्मुखाः प्रययुर्वीराः पाराडवा जनमेजय २८
इति श्रीमहाभारते आरगयकपर्वणि एकनवतितमोऽध्यायः ९१

## द्विनवतितमोऽध्यायः

युधिष्ठिर उवाच
न वै निर्गुणमात्मानं मन्ये देवर्षिसत्तम
तथास्मि दुःखसंतप्तो यथा नान्यो महीपतिः १
परांश्च निर्गुणान्मन्ये न च धर्मरतानपि
ते च लोमश लोकेऽस्मिन्नृध्यन्ते केन हेतुना २
लोमश उवाच

नात्र दुःखं त्वया राजन्कार्यं पार्थ कथंचन
यदधर्मेण वर्धेरन्नधर्मरुचयो जनाः ३
वर्धत्यधर्मेण नरस्ततो भद्राणि पश्यति
ततः सपत्नाञ्जयति समूलस्तु विनश्यति ४
मया हि दृष्टा दैतेया दानवाश्च महीपते
वर्धमाना ह्यधर्मेण क्षयं चोपगताः पुनः ५
पुरा देवयुगे चैव दृष्टं सर्वं मया विभो
अरोचयन्सुरा धर्मं धर्मं तत्यजिरेऽसुराः ६
तीर्थानि देवा विविशुर्नाविशन्भारतासुराः
तानधर्मकृतो दर्पः पूर्वमेव समाविशत् ७
दर्पान्मानः समभवन्मानात्क्रोधो व्यजायत
क्रोधादह्रीस्ततोऽलज्जा वृत्तं तेषां ततोऽनशत् ८
तानलज्जान्गतह्रीकान्हीनवृत्तान्वृथाव्रतान्
क्षमा लक्ष्मीश्च धर्मश्च नचिरात्प्रजहुस्ततः
लक्ष्मीस्तु देवानगमदलक्ष्मीरसुरान्नृप ९
तानलक्ष्मीसमाविष्टान्दर्पोपहतचेतसः
दैतेयान्दानवांश्चैव कलिरप्याविशत्ततः १०
तानलक्ष्मीसमाविष्टान्दानवान्कलिना तथा
दर्पाभिभूतान्कौन्तेय क्रियाहीनानचेतसः ११
मानाभिभूतानचिराद्विनाशः प्रत्यपद्यत
निर्यशस्यास्ततो दैत्याः कृत्स्नशो विलयं गताः १२
देवास्तु सागरांश्चैव सरितश्च सरांसि च
अभ्यगच्छन्धर्मशीलाः पुण्यान्यायतनानि च १३
तपोभिः क्रतुभिर्दानैराशीर्वादैश्च पाण्डव
प्रजहुः सर्वपापानि श्रेयश्च प्रतिपेदिरे १४
एवं हि दानवन्तश्च क्रियावन्तश्च सर्वशः
तीर्थान्यगच्छन्विबुधास्तेनापुर्भूतिमुत्तमाम् १५
तथा त्वमपि राजेन्द्र स्नात्वा तीर्थेषु सानुजः
पुनर्वेत्स्यसि तां लक्ष्मीमेष पन्थाः सनातनः १६
यथैव हि नृगो राजा शिबिरौशीनरो यथा

भगीरथो वसुमना गयः पूरुः पुरूरवाः १७
चरमाणास्तपो नित्यं स्पर्शनादम्भसश्च ते
तीर्थाभिगमनात्पूता दर्शनाच्च महात्मनाम् १८
अलभन्त यशः पुगयं धनानि च विशां पते
तथा त्वमपि राजेन्द्र लब्धासि विपुलां श्रियम् १९
यथा चेक्ष्वाकुरचरत्सपुत्रजनबान्धवः
मुचुकुन्दोऽथ मान्धाता मरुत्तश्च महीपतिः २०
कीर्तिं पुगयामविन्दन्त यथा देवास्तपोबलात्
देवर्षयश्च कात्स्न्येंन तथा त्वमपि वेत्स्यसे २१
धार्तराष्ट्रास्तु दर्पेण मोहेन च वशीकृताः
नचिराद्विनशिष्यन्ति दैत्या इव न संशयः २२
इति श्रीमहाभारते आरगयकपर्वणि द्विनवतितमोऽध्यायः ९२

त्रिनवतितमोऽध्यायः

वैशम्पायन उवाच
ते तथा सहिता वीरा वसन्तस्तत्र तत्र ह
क्रमेण पृथिवीपाल नैमिषारगयमागताः १
ततस्तीर्थेषु पुगयेषु गोमत्याः पागडवा नृप
कृताभिषेकाः प्रददुर्गाश्च वित्तं च भारत २
तत्र देवान्पितॄन्विप्रांस्तर्पयित्वा पुनः पुनः
कन्यातीर्थेऽश्वतीर्थे च गवां तीर्थे च कौरवाः ३
वालकोटयां वृषप्रस्थे गिरावुष्य च पागडवाः
बाहुदायां महीपाल चक्रुः सर्वेऽभिषेचनम् ४
प्रयागे देवयजने देवानां पृथिवीपते
ऊषुराप्लुत्य गात्राणि तपश्चातस्थुरुत्तमम् ५
गङ्गायमुनयोश्चैव संगमे सत्यसंगराः
विपाप्मानो महात्मानो विप्रेभ्यः प्रददुर्वसु ६
तपस्विजनजुष्टां च ततो वेदीं प्रजापतेः
जग्मुः पागडुसुता राजन्ब्राह्मणैः सह भारत ७
तत्र ते न्यवसन्वीरास्तपश्चातस्थुरुत्तमम्

सन्तर्पयन्तः सततं वन्येन हविषा द्विजान् ८
ततो महीधरं जग्मुर्धर्मज्ञेनाभिसत्कृतम्
राजर्षिणा पुरायकृता गयेनानुपमद्युते ९
सरो गयशिरो यत्र पुराया चैव महानदी
ऋषिजुष्टं सुपुरायं तत्तीर्थं ब्रह्मसरोत्तमम् १०
अगस्त्यो भगवान्यत्र गतो वैवस्वतं प्रति
उवास च स्वयं यत्र धर्मो राजन्सनातनः ११
सर्वासां सरितां चैव समुद्भेदो विशां पते
यत्र संनिहितो नित्यं महादेवः पिनाकधृक् १२
तत्र ते पाराडवा वीराश्चातुर्मास्यैस्तदेजिरे
ऋषियज्ञेन महता यत्राक्षयवटो महान् १३
ब्राह्मणास्तत्र शतशः समाजग्मुस्तपोधनाः
चातुर्मास्येनायजन्त आर्षेण विधिना तदा १४
तत्र विद्यातपोनित्या ब्राह्मणा वेदपारगाः
कथाः प्रचक्रिरे पुरायाः सदसिस्था महात्मनाम् १५
तत्र विद्याव्रतस्नातः कौमारं व्रतमास्थितः
शमठोऽकथयद्राजन्नामूर्तरयसं गयम् १६
अमूर्तरयसः पुत्रो गयो राजर्षिसत्तमः
पुरायानि यस्य कर्माणि तानि मे शृणु भारत १७
यस्य यज्ञो बभूवेह बह्वन्नो बहुदक्षिणः
यत्रान्नपर्वता राजञ्शतशोऽथ सहस्रशः १८
घृतकुल्याश्च दध्नश्च नद्यो बहुशतास्तथा
व्यञ्जनानां प्रवाहाश्च महार्हाणां सहस्रशः १९
अहन्यहनि चाप्येतद्याचतां संप्रदीयते
अन्यत्तु ब्राह्मणा राजन्भुञ्जतेऽन्न सुसंस्कृतम् २०
तत्र वै दक्षिणाकाले ब्रह्मघोषो दिवं गतः
न स्म प्रज्ञायते किंचिद्ब्रह्मशब्देन भारत २१
पुरायेन चरता राजन् भूर्दिशः खं नभस्तथा
आपूर्णमासीच्छब्देन तदप्यासीन्महाद्भुतम् २२
तत्र स्म गाथा गायन्ति मनुष्या भरतर्षभ

अन्नपानैः शुभैस्तृप्ता देशे देशे सुवर्चसः २३
गयस्य यज्ञे के त्वद्य प्राणिनो भोक्तुमीप्सवः
यत्र भोजनशिष्टस्य पर्वताः पञ्चविंशतिः २४
न स्म पूर्वे जनाश्चक्रुर्न करिष्यन्ति चापरे
गयो यदकरोद्यज्ञे राजर्षिरमितद्युतिः २५
कथं नु देवा हविषा गयेन परितर्पिताः
पुनः शक्ष्यन्त्युपादातुमन्यैर्दत्तानि कानिचित् २६
एवंविधाः सुबहवस्तस्य यज्ञे महात्मनः
बभूवुरस्य सरसः समीपे कुरुनन्दन २७
इति श्रीमहाभारते आरगयकपर्वणि त्रिनवतितमोऽध्यायः ९३

## चतुर्नवतितमोऽध्यायः

वैशम्पायन उवाच
ततः संप्रस्थितो राजा कौन्तेयो भूरिदक्षिणः
अगस्त्याश्रममासाद्य दुर्जयायामुवास ह १
तत्र वै लोमशं राजा पप्रच्छ वदतां वरः
अगस्त्येनेह वातापिः किमर्थमुपशामितः २
आसीद्वा किंप्रभावश्च स दैत्यो मानवान्तकः
किमर्थं चोद्गतो मन्युरगस्त्यस्य महात्मनः ३
लोमश उवाच
इल्वलो नाम दैतेय आसीत्कौरवनन्दन
मणिमत्यां पुरि पुरा वातापिस्तस्य चानुजः ४
स ब्राह्मणं तपोयुक्तमुवाच दितिनन्दनः
पुत्रं मे भगवानेकमिन्द्रतुल्यं प्रयच्छतु ५
तस्मै स ब्राह्मणो नादात्पुत्रं वासवसंमितम्
चुक्रोध सोऽसुरस्तस्य ब्राह्मणस्य ततो भृशम् ६
समाह्वयति यं वाचा गतं वैवस्वतक्षयम्
स पुनर्देहमास्थाय जीवन्स्म प्रतिदृश्यते ७
ततो वातापिमसुरं छागं कृत्वा सुसंस्कृतम्
तं ब्राह्मणं भोजयित्वा पुनरेव समाह्वयत् ८

तस्य पार्श्वं विनिर्भिद्य ब्राह्मणस्य महासुरः
वातापि प्रहसन् राजन्निश्चक्राम विशां पते ९
एवं स ब्राह्मणान् राजन्भोजयित्वा पुनः पुनः
हिंसयामास दैतेय इल्वलो दुष्टचेतनः १०
अगस्त्यश्चापि भगवानेतस्मिन्काल एव तु
पितृन्ददर्श गर्ते वै लम्बमानानधोमुखान् ११
सोऽपृच्छल्लम्बमानांस्तान्भवन्त इह किंपराः
संतानहेतोरिति ते तमूचुर्ब्रह्मवादिनः १२
ते तस्मै कथयामासुर्वयं ते पितरः स्वकाः
गर्तमेतमनुप्राप्ता लम्बामः प्रसवार्थिनः १३
यदि नो जनयेथास्त्वमगस्त्यापत्यमुत्तमम्
स्यान्नोऽस्मान्निरयान्मोक्षस्त्वं च पुत्राप्नुया गतिम् १४
स तानुवाच तेजस्वी सत्यधर्मपरायणः
करिष्ये पितरः कामं व्येतु वो मानसो ज्वरः १५
ततः प्रसवसंतानं चिन्तयन्भगवानृषिः
आत्मनः प्रसवस्यार्थे नापश्यत्सदृशीं स्त्रियम् १६
स तस्य तस्य सत्त्वस्य तत्तदंगमनुत्तमम्
संभृत्य तत्समैरङ्गैर्निर्ममे स्त्रियमुत्तमाम् १७
स तां विदर्भराजाय पुत्रकामाय ताम्यते
निर्मितामात्मनोऽथाय मुनिः प्रादान्महातपाः १८
सा तत्र जज्ञे सुभगा विद्युत्सौदामिनी यथा
विभ्राजमाना वपुषा व्यवर्धत शुभानना १९
जातमात्रां च तां दृष्ट्वा वैदर्भः पृथिवीपतिः
प्रहर्षेण द्विजातिभ्यो न्यवेदयत भारत २०
अभ्यनन्दन्त तां सर्वे ब्राह्मणा वसुधाधिप
लोपामुद्रेति तस्याश्च चक्रिरे नाम ते द्विजाः २१
ववृधे सा महाराज बिभ्रती रूपमुत्तमम्
अप्स्विवोत्पलिनी शीघ्रमग्नेरिव शिखा शुभा २२
तां यौवनस्थां राजेन्द्र शतं कन्याः स्वलंकृताः
दासीशतं च कल्याणीमुपतस्थुर्वशानुगाः २३

सा स्म दासीशतवृता मध्ये कन्याशतस्य च
आस्ते तेजस्विनी कन्या रोहिणीव दिवि प्रभो २४
यौवनस्थामपि च तां शीलाचारसमन्विताम्
न वव्रे पुरुषः कश्चिद्भयात्तस्य महात्मनः २५
सा तु सत्यवती कन्या रूपेणाप्सरसोऽप्यति
तोषयामास पितरं शीलेन स्वजनं तथा २६
वैदर्भीं तु तथायुक्तां युवतीं प्रेक्ष्य वै पिता
मनसा चिन्तयामास कस्मै दद्यां सुतामिति २७
इति श्रीमहाभारते आरण्यकपर्वणि चतुर्नवतितमोऽध्यायः ९४

## पञ्चनवतितमोऽध्यायः

लोमश उवाच
यदा त्वमन्यतागस्त्यो गार्हस्थ्ये तां क्षमामिति
तदाभिगम्य प्रोवाच वैदर्भं पृथिवीपतिम् १
राजन्निवेशे बुद्धिर्मे वर्तते पुत्रकारणात्
वरये त्वां महीपाल लोपामुद्रां प्रयच्छ मे २
एवमुक्तः स मुनिना महीपालो विचेतनः
प्रत्याख्यानाय चाशक्तः प्रदातुमपि नैच्छत ३
ततः स भार्यामभ्येत्य प्रोवाच पृथिवीपतिः
महर्षिर्वीर्यवानेष क्रुद्धः शापाग्निना दहेत् ४
तं तथा दुःखितं दृष्ट्वा सभार्यं पृथिवीपतिम्
लोपामुद्राभिगम्येदं काले वचनमब्रवीत् ५
न मत्कृते महीपाल पीडामभ्येतुमर्हसि
प्रयच्छ मामगस्त्याय त्राह्यात्मानं मया पितः ६
दुहितुर्वचनाद्राजा सोऽगस्त्याय महात्मने
लोपामुद्रां ततः प्रादाद्विधिपूर्वं विशां पते ७
प्राप्य भार्यामगस्त्यस्तु लोपामुद्रामभाषत
महार्हाण्युत्सृजैतानि वासांस्याभरणानि च ८
ततः सा दर्शनीयानि महार्हाणि तनूनि च

समुत्ससर्ज रम्भोरूर्वसनान्यायतेक्षणा ९
ततश्चीराणि जग्राह वल्कलान्यजिनानि च
समानव्रतचर्या च बभूवायतलोचना १०
गङ्गाद्वारमथागम्य भगवानृषिसत्तमः
उग्रमातिष्ठत तपः सह पत्न्यानुकूलया ११
सा प्रीत्या बहुमानाच्च पतिं पर्यचरत्तदा
अगस्त्यश्च परां प्रीतिं भार्यायामकरोत्प्रभुः १२
ततो बहुतिथे काले लोपामुद्रां विशां पते
तपसा द्योतितां स्नातां ददर्श भगवानृषिः १३
स तस्याः परिचारेण शौचेन च दमेन च
श्रिया रूपेण च प्रीतो मैथुनायाजुहाव ताम् १४
ततः सा प्राञ्जलिर्भूत्वा लज्जमानेव भामिनी
तदा सप्रणयं वाक्यं भगवन्तमथाब्रवीत् १५
असंशयं प्रजाहेतोर्भार्यां पतिरविन्दत
या तु त्वयि मम प्रीतिस्तामृषे कर्तुमर्हसि १६
यथा पितुर्गृहे विप्र प्रासादे शयनं मम
तथाविधे त्वं शयने मामुपैतुमिहार्हसि १७
इच्छामि त्वां स्रग्विणं च भूषणैश्च विभूषितम्
उपसर्तुं यथाकामं दिव्याभरणभूषिता १८
अगस्त्य उवाच
न वै धनानि विद्यन्ते लोपामुद्रे तथा मम
यथाविधानि कल्याणि पितुस्तव सुमध्यमे १९
लोपामुद्रोवाच
ईशोऽसि तपसा सर्वं समाहर्तुमिहेश्वर
क्षणेन जीवलोके यद्वसु किंचन विद्यते २०
अगस्त्य उवाच
एवमेतद्यथात्थ त्वं तपोव्ययकरं तु मे
यथा तु मे न नश्येत तपस्तन्मां प्रचोदय २१
लोपामुद्रोवाच
अल्पावशिष्टः कालोऽयमृतौ मम तपोधन

न चान्यथाहमिच्छामि त्वामुपैतुं कथंचन २२
न चापि धर्ममिच्छामि विलोप्तुं ते तपोधन
एतत्तु मे यथाकामं संपादयितुमर्हसि २३
अगस्त्य उवाच
यद्येष कामः सुभगे तव बुद्ध्या विनिश्चितः
हन्त गच्छाम्यहं भद्रे चर काममिह स्थिता २४
इति श्रीमहाभारते आरण्यकपर्वणि पञ्चनवतितमोऽध्यायः ९५

## षण्णवतितमोऽध्यायः

लोमश उवाच
ततो जगाम कौरव्य सोऽगस्त्यो भिक्षितुं वसु
श्रुतर्वाणं महीपालं यं वेदाभ्यधिकं नृपैः १
स विदित्वा तु नृपतिः कुम्भयोनिमुपागमत्
विषयान्ते सहामात्यः प्रत्यगृह्णात्सुसत्कृतम् २
तस्मै चार्घ्यं यथान्यायमानीय पृथिवीपतिः
प्राञ्जलि प्रयतो भूत्वा पप्रच्छागमनेऽथिताम् ३
अगस्त्य उवाच
वित्तार्थिनमनुप्राप्तं विद्धि मां पृथिवीपते
यथाशक्त्यविहिंस्यान्यान्संविभागं प्रयच्छ मे ४
लोमश उवाच
तत आयव्ययौ पूर्णौ तस्मै राजा न्यवेदयत्
अतो विद्वन्नुपादत्स्व यदत्र वसु मन्यसे ५
तत आयव्ययौ दृष्ट्वा समौ सममतिर्द्विजः
सर्वथा प्राणिनां पीडामुपादानादमन्यत ६
स श्रुतर्वाणमादाय वध्र्यश्वमगमत्ततः
स च तौ विषयस्यान्ते प्रत्यगृह्णाद्यथाविधि ७
तयोरर्घ्यं च पाद्यं च वध्र्यश्वः प्रत्यवेदयत्
अनुज्ञाप्य च पप्रच्छ प्रयोजनमुपक्रमे ८
अगस्त्य उवाच
वित्तकामाविह प्राप्तौ विद्ध्यावां पृथिवीपते

यथाशक्त्यविहिंस्यान्यान्संविभागं प्रयच्छ नौ ९
लोमश उवाच
तत आयव्ययौ पूर्णौ ताभ्यां राजा न्यवेदयत्
ततो ज्ञात्वा समादत्तां यदत्र व्यतिरिच्यते १०
तत आयव्ययौ दृष्ट्वा समौ सममतिर्द्विजः
सर्वथा प्राणिनां पीडामुपादानादमन्यत ११
पौरुकुत्सं ततो जग्मुस्त्रसदस्युं महाधनम्
अगस्त्यश्च श्रुतर्वा च वध्र्यश्वश्च महीपतिः १२
त्रसदस्युश्च तान्सर्वान्प्रत्यगृह्णाद्यथाविधि
अभिगम्य महाराज विषयान्ते सवाहनः १३
अर्चयित्वा यथान्यायमिक्ष्वाकू राजसत्तमः
समाश्वस्तांस्ततोऽपृच्छत्प्रयोजनमुपक्रमे १४
अगस्त्य उवाच
वित्तकामानिह प्राप्तान्विद्धि नः पृथिवीपते
यथाशक्त्यविहिंस्यान्यान्संविभागं प्रयच्छ नः १५
लोमश उवाच
तत आयव्ययौ पूर्णौ तेषां राजा न्यवेदयत्
अतो ज्ञात्वा समादद्ध्वं यदत्र व्यतिरिच्यते १६
तत आयव्ययौ दृष्ट्वा समौ सममतिर्द्विजः
सर्वथा प्राणिनां पीडामुपादानादमन्यत १७
ततः सर्वे समेत्याथ ते नृपास्तं महामुनिम्
इदमूचुर्महाराज समवेक्ष्य परस्परम् १८
अयं वै दानवो ब्रह्मन्निल्वलो वसुमान्भुवि
तमभिक्रम्य सर्वेऽद्य वयं याचामहे वसु १९
तेषां तदासीद्रुचितमिल्वलस्योपभिक्षणम्
ततस्ते सहिता राजन्निल्वलं समुपाद्रवन् २०
इति श्रीमहाभारते आरण्यकपर्वणि षण्णवतितमोऽध्यायः ९६

## सप्तनवतितमोऽध्यायः

लोमश उवाच

इल्वलस्तान्विदित्वा तु महर्षिसहितान्नृपान्
उपस्थितान्सहामात्यो विषयान्तेऽभ्यपूजयत् १
तेषां ततोऽसुरश्रेष्ठ आतिथ्यमकरोत्तदा
स संस्कृतेन कौरव्य भ्रात्रा वातापिना किल २
ततो राजर्षयः सर्वे विषण्णा गतचेतसः
वातापिं संस्कृतं दृष्ट्वा मेषभूतं महासुरम् ३
अथाब्रवीदगस्त्यस्तान् राजर्षीनृषिसत्तमः
विषादो वो न कर्तव्यो अहं भोक्ष्ये महासुरम् ४
धुर्यासनमथासाद्य निषसाद महामुनिः
तं पर्यवेषद्दैत्येन्द्र इल्वलः प्रहसन्निव ५
अगस्त्य एव कृत्स्नं तु वातापिं बुभुजे ततः
भुक्तवत्यसुरोऽह्वानमकरोत्तस्य इल्वलः ६
ततो वायुः प्रादुरभूदगस्त्यस्य महात्मनः
इल्वलश्च विषण्णोऽभूद् दृष्ट्वा जीर्णं महासुरम् ७
प्राञ्जलिश्च सहामात्यैरिदं वचनमब्रवीत्
किमर्थमुपयाताः स्थ ब्रूत किं करवाणि वः ८
प्रत्युवाच ततोऽगस्त्यः प्रहसन्निल्वलं तदा
ईशं ह्यसुर विद्मस्त्वां वयं सर्वे धनेश्वरम् ९
इमे च नातिधनिनो धनार्थश्च महान्मम
यथाशक्त्यविहिंस्यान्यान्संविभागं प्रयच्छ नः १०
ततोऽभिवाद्य तमृषिमिल्वलो वाक्यमब्रवीत्
दित्सितं यदि वेत्सि त्वं ततो दास्यामि ते वसु ११
अगस्त्य उवाच
गवां दश सहस्राणि राज्ञामेकैकशोऽसुर
तावदेव सुवर्णस्य दित्सितं ते महासुर १२
मह्यं ततो वै द्विगुणं रथश्चैव हिरण्मयः
मनोजवौ वाजिनौ च दित्सितं ते महासुर
जिज्ञास्यतां रथः सद्यो व्यक्तमेष हिरण्मयः १३
लोमश उवाच
जिज्ञास्यमानः स रथः कौन्तेयासीद्धिरण्मयः

ततः प्रव्यथितो दैत्यो ददावभ्यधिकं वसु १४
विवाजश्च सुवाजश्च तस्मिन्युक्तौ रथे हयौ
ऊहतुस्तौ वसून्याशु तान्यगस्त्याश्रमं प्रति
सर्वान् राज्ञः सहागस्त्यान्निमेषादिव भारत १५
अगस्त्येनाभ्यनुज्ञाता जग्मू राजर्षयस्तदा
कृतवांश्च मुनिः सर्वं लोपामुद्राचिकीर्षितम् १६
लोपामुद्रोवाच
कृतवानसि तत्सर्वं भगवन्मम काङ्क्षितम्
उत्पादय सकृन्मह्यमपत्यं वीर्यवत्तरम् १७
अगस्त्य उवाच
तुष्टोऽहमस्मि कल्याणि तव वृत्तेन शोभने
विचारणामपत्ये तु तव वक्ष्यामि तां शृणु १८
सहस्रं तेऽस्तु पुत्राणां शतं वा दशसंमितम्
दश वा शततुल्याः स्युरेको वापि सहस्रवत् १९
लोपामुद्रोवाच
सहस्रसंमितः पुत्रः एको मेऽस्तु तपोधन
एको हि बहुभिः श्रेयान्विद्वान्साधुरसाधुभिः २०
लोमश उवाच
स तथेति प्रतिज्ञाय तया समभवन्मुनिः
समये समशीलिन्या श्रद्धावाञ्श्रद्दधानया २१
तत आधाय गर्भं तमगमद्वनमेव सः
तस्मिन्वनगते गर्भो ववृधे सप्त शारदान् २२
सप्तमेऽब्दे गते चापि प्राच्यवत्स महाकविः
ज्वलन्निव प्रभावेन दृढस्युर्नाम भारत
सांगोपनिषदान्वेदाञ्जपन्नेव महायशाः २३
तस्य पुत्रोऽभवदृषेः स तेजस्वी महानृषिः
स बाल एव तेजस्वी पितुस्तस्य निवेशने
इध्मानां भारमाजह्रे इध्मवाहस्ततोऽभवत् २४
तथायुक्तं च तं दृष्ट्वा मुमुदे स मुनिस्तदा
लेभिरे पितरश्चास्य लोकान् राजन्यथेप्सितान् २५

अगस्त्यस्याश्रमः ख्यातः सर्वर्तुकुसुमान्वितः
प्राह्लादिरेवं वातापिरगस्त्येन विनाशितः २६
तस्यायमाश्रमो राजन् रमणीयो गुणैर्युतः
एषा भागीरथी पुण्या यथेष्टमवगाह्यताम् २७
इति श्रीमहाभारते आरण्यकपर्वणि सप्तनवतितमोऽध्यायः ९७

अष्टनवतितमोऽध्यायः

युधिष्ठिर उवाच
भूय एवाहमिच्छामि महर्षेस्तस्य धीमतः
कर्मणां विस्तरं श्रोतुमगस्त्यस्य द्विजोत्तम १
लोमश उवाच
शृणु राजन्कथां दिव्यामद्भुतामतिमानुषीम्
अगस्त्यस्य महाराज प्रभावममितात्मनः २
आसन्कृतयुगे घोरा दानवा युद्धदुर्मदाः
कालेया इति विख्याता गणाः परमदारुणाः ३
ते तु वृत्रं समाश्रित्य नानाप्रहरणोद्यताः
समन्तात्पर्यधावन्त महेन्द्रप्रमुखान्सुरान् ४
ततो वृत्रवधे यत्नमकुर्वंस्त्रिदशाः पुरा
पुरन्दरं पुरस्कृत्य ब्रह्माणमुपतस्थिरे ५
कृताञ्जलींस्तु तान्सर्वान्परमेष्ठी उवाच ह
विदितं मे सुराः सर्वं यद्वः कार्यं चिकीर्षितम् ६
तमुपायं प्रवक्ष्यामि यथा वृत्रं वधिष्यथ
दधीच इति विख्यातो महानृषिरुदारधीः ७
तं गत्वा सहिताः सर्वे वरं वै संप्रयाचत
स वो दास्यति धर्मात्मा सुप्रीतेनान्तरात्मना ८
स वाच्यः सहितैः सर्वैर्भवद्भिर्जयकाङ्क्षिभिः
स्वान्यस्थीनि प्रयच्छेति त्रैलोक्यस्य हिताय वै
स शरीरं समुत्सृज्य स्वान्यस्थीनि प्रदास्यति ९
तस्यास्थिभिर्महाघोरं वज्रं संभ्रियतां दृढम्
महच्छत्रुहणं तीक्ष्णं षडश्रं भीमनिस्वनम् १०

तेन वज्रेण वै वृत्रं वधिष्यति शतक्रतुः
एतद्वः सर्वमाख्यातं तस्माच्छीघ्रं विधीयताम् ११
एवमुक्तास्ततो देवा अनुज्ञाप्य पितामहम्
नारायणं पुरस्कृत्य दधीचस्याश्रमं ययुः १२
सरस्वत्याः परे पारे नानाद्रुमलतावृतम्
षट्पदोद्गीतनिनदैर्विघुष्टं सामगैरिव
पुंस्कोकिलरवोन्मिश्रं जीवं जीवकनादितम् १३
महिषैश्च वराहैश्च सृमरैश्चमरैरपि
तत्र तत्रानुचरितं शार्दूलभयवर्जितैः १४
करेणुभिर्वारणैश्च प्रभिन्नकरटामुखैः
सरोवगाढैः क्रीडद्भिः समन्तादनुनादितम् १५
सिंहव्याघ्रैर्महानादान्नदद्भिरनुनादितम्
अपरैश्चापि संलीनैर्गुहाकन्दरवासिभिः १६
तेषु तेष्ववकाशेषु शोभितं सुमनोरमम्
त्रिविष्टपसमप्रख्यं दधीचाश्रममागमन् १७
तत्रापश्यन्दधीचं ते दिवाकरसमद्युतिम्
जाज्वल्यमानं वपुषा यथा लक्ष्म्या पितामहम् १८
तस्य पादौ सुरा राजन्नभिवाद्य प्रणम्य च
अयाचन्त वरं सर्वे यथोक्तं परमेष्ठिना १९
ततो दधीचः परमप्रतीतः सुरोत्तमांस्तानिदमभ्युवाच
करोमि यद्वो हितमद्य देवाः स्वं चापि देहं त्वहमुत्सृजामि २०
स एवमुक्त्वा द्विपदां वरिष्ठः प्राणान्वशी स्वान्सहसोत्ससर्ज
ततः सुरास्ते जगृहुः परासोरस्थीनि तस्याथ यथोपदेशम् २१
प्रहृष्टरूपाश्च जयाय देवास्त्वष्टारमागम्य तमर्थमूचुः
त्वष्टा तु तेषां वचनं निशम्य प्रहृष्टरूपः प्रयतः प्रयत्नात् २२
चकार वज्रं भृशमुग्ररूपं कृत्वा च शक्रं स उवाच हृष्टः
अनेन वज्रप्रवरेण देव भस्मीकुरुष्वाद्य सुरारिमुग्रम् २३
ततो हतारिः सगणः सुखं वै प्रशाधि कृत्स्नं त्रिदिवं दिविष्ठः
त्वष्ट्रा तथोक्तः स पुरन्दरस्तु वज्रं प्रहृष्टः प्रयतोऽभ्यगृह्णात् २४
इति श्रीमहाभारते आरण्यकपर्वणि अष्टनवतितमोऽध्यायः ९८

नवनवतितमोऽध्यायः

लोमश उवाच
ततः स वज्री बलिभिर्दैवतैरभिरक्षितः
आससाद ततो वृत्रं स्थितमावृत्य रोदसी १
कालकेयैर्महाकायैः समन्तादभिरक्षितम्
समुद्यतप्रहरणैः सशृङ्गैरिव पर्वतैः २
ततो युद्धं समभवद्देवानां सह दानवैः
मुहूर्तं भरतश्रेष्ठ लोकत्रासकरं महत् ३
उद्यतप्रतिपिष्टानां खड्गानां वीरबाहुभिः
आसीत्सुतुमुलः शब्दः शरीरेष्वभिपात्यताम् ४
शिरोभिः प्रपतद्भिश्च अन्तरिक्षान्महीतलम्
तालैरिव महीपाल वृन्ताद्भ्रष्टैरदृश्यत ५
ते हेमकवचा भूत्वा कालेयाः परिघायुधाः
त्रिदशानभ्यवर्तन्त दावदग्धा इवाद्रयः ६
तेषां वेगवतां वेगं सहितानां प्रधावताम्
न शेकुस्त्रिदशाः सोढुं ते भग्नाः प्राद्रवन्भयात् ७
तान्दृष्ट्वा द्रवतो भीतान्सहस्राक्षः पुरन्दरः
वृत्रे विवर्धमाने च कश्मलं महदाविशत् ८
तं शक्रं कश्मलाविष्टं दृष्ट्वा विष्णुः सनातनः
स्वतेजो व्यदधाच्छक्रे बलमस्य विवर्धयन् ९
विष्णुनाप्यायितं शक्रं दृष्ट्वा देवगणास्ततः
स्वं स्वं तेजः समादध्युस्तथा ब्रह्मर्षयोऽमलाः १०
स समाप्यायितः शक्रो विष्णुना दैवतैः सह
ऋषिभिश्च महाभागैर्बलवान्समपद्यत ११
ज्ञात्वा बलस्थं त्रिदशाधिपं तु ननाद वृत्रो महतो निनादान्
तस्य प्रणादेन धरा दिशश्च खं द्यौर्नगाश्चापि चचाल सर्वम् १२
ततो महेन्द्रः परमाभितप्तः श्रुत्वा रवं घोररूपं महान्तम्
भये निमग्नस्त्वरितं मुमोच वज्रं महत्तस्य वधाय राजन् १३
स शक्रवज्राभिहतः पपात महासुरः काञ्चनमाल्यधारी
यथा महाञ्शैलवरः पुरस्तात्स मन्दरो विष्णुकरात्प्रमुक्तः १४

तस्मिन्हते दैत्यवरे भयार्तः शक्रः प्रदुद्राव सरः प्रवेष्टुम्
वज्रं न मेने स्वकरात्प्रमुक्तं वृत्रं हतं चापि भयान्न मेने १५
सर्वे च देवा मुदिताः प्रहृष्टा महर्षयश्चेन्द्रमभिष्टुवन्तः
सर्वांश्च दैत्यांस्त्वरिताः समेत्य जघ्नुः सुरा वृत्रवधाभितप्तान् १६
ते वध्यमानास्त्रिदशैस्तदानीं समुद्रमेवाविविशुर्भयार्ताः
प्रविश्य चैवोदधिमप्रमेयं झषाकुलं रत्नसमाकुलं च १७
तदा स्म मन्त्रं सहिताः प्रचक्रुस्त्रैलोक्यनाशार्थमभिस्मयन्तः
तत्र स्म केचिन्मतिनिश्चयज्ञास्तांस्तानुपायाननुवर्णयन्ति १८
तेषां तु तत्र क्रमकालयोगाद्घोरा मतिश्चिन्तयतां बभूव
ये सन्ति विद्यातपसोपपन्नास्तेषां विनाशः प्रथमं तु कार्यः १९
लोका हि सर्वे तपसा ध्रियन्ते तस्मात्त्वरध्वं तपसः क्षयाय
ये सन्ति केचिद्धि वसुन्धरायां तपस्विनो धर्मविदश्च तज्ज्ञाः
तेषां वधः क्रियतां क्षिप्रमेव तेषु प्रनष्टेषु जगत्प्रनष्टम् २०
एवं हि सर्वे गतबुद्धिभावा जगद्विनाशे परमप्रहृष्टाः
दुर्गं समाश्रित्य महोर्मिमन्तं रत्नाकरं वरुणस्यालयं स्म २१
इति श्रीमहाभारते आरण्यकपर्वणि नवनवतितमोऽध्यायः ९९

## शततमोऽध्यायः

लोमश उवाच
समुद्रं ते समाश्रित्य वारुणं निधिमम्भसाम्
कालेयाः संप्रवर्तन्त त्रैलोक्यस्य विनाशने १
ते रात्रौ समभिक्रुद्धा भक्षयन्ति सदा मुनीन्
आश्रमेषु च ये सन्ति पुण्येष्वायतनेषु च २
वसिष्ठस्याश्रमे विप्रा भक्षितास्तैर्दुरात्मभिः
अशीतिशतमष्टौ च नव चान्ये तपस्विनः ३
च्यवनस्याश्रमं गत्वा पुण्यं द्विजनिषेवितम्
फलमूलाशनानां हि मुनीनां भक्षितं शतम् ४
एवं रात्रौ स्म कुर्वन्ति विविशुश्चार्णवं दिवा
भरद्वाजाश्रमे चैव नियता ब्रह्मचारिणः
वाय्वाहाराम्बुभक्षाश्च विंशतिः संनिपातिताः ५

एवं क्रमेण सर्वांस्तानाश्रमान्दानवास्तदा
निशायां परिधावन्ति मत्ता भुजबलाश्रयात्
कालोपसृष्टाः कालेया घ्नन्तो द्विजगणान्बहून् ६
न चैनानन्वबुध्यन्त मनुजा मनुजोत्तम
एवं प्रवृत्तान्दैत्यांस्तांस्तापसेषु तपस्विषु ७
प्रभाते समदृश्यन्त नियताहारकर्शिताः
महीतलस्था मुनयः शरीरैर्गतजीवितैः ८
क्षीणमांसैर्विरुधिरैर्विमज्जान्त्रैर्विसंधिभिः
आकीर्णैराचिता भूमिः शंखानामिव राशिभिः ९
कलशैर्विप्रविद्धैश्च स्रुवैर्भग्नैस्तथैव च
विकीर्णैरग्निहोत्रैश्च भूर्बभूव समावृता १०
निःस्वाध्यायवषट्कारं नष्टयज्ञोत्सवक्रियम्
जगदासीन्निरुत्साहं कालेयभयपीडितम् ११
एवं प्रक्षीयमाणाश्च मानवा मनुजेश्वर
आत्मत्राणपरा भीताः प्राद्रवन्त दिशो भयात् १२
केचिद्गुहाः प्रविविशुर्निर्झरांश्चापरे श्रिताः
अपरे मरणोद्विग्ना भयात्प्राणान्समुत्सृजन् १३
केचिदत्र महेष्वासाः शूराः परमदर्पिताः
मार्गमाणाः परं यत्नं दानवानां प्रचक्रिरे १४
न चैतानधिजग्मुस्ते समुद्रं समुपाश्रितान्
श्रमं जग्मुश्च परममाजग्मुः क्षयमेव च १५
जगत्युपशमं याते नष्टयज्ञोत्सवक्रिये
आजग्मुः परमामार्तिं त्रिदशा मनुजेश्वर १६
समेत्य समहेन्द्राश्च भयान्मन्त्रं प्रचक्रिरे
नारायणं पुरस्कृत्य वैकुण्ठमपराजितम् १७
ततो देवाः समेतास्ते तदोचुर्मधुसूदनम्
त्वं नः स्रष्टा च पाता च भर्ता च जगतः प्रभो
त्वया सृष्टमिदं सर्वं यच्चेङ्गं यच्च नेङ्गति १८
त्वया भूमिः पुरा नष्टा समुद्रात्पुष्करेक्षण
वाराहं रूपमास्थाय जगदर्थे समुद्धृता १९

आदिदैत्यो महावीर्यो हिरण्यकशिपुस्त्वया
नारसिंहं वपुः कृत्वा सूदितः पुरुषोत्तम २०
अवध्यः सर्वभूतानां बलिश्चापि महासुरः
वामनं वपुराश्रित्य त्रैलोक्याद्भ्रंशितस्त्वया २१
असुरश्च महेष्वासो जम्भ इत्यभिविश्रुतः
यज्ञक्षोभकरः क्रूरस्त्वयैव विनिपातितः २२
एवमादीनि कर्माणि येषां संख्या न विद्यते
अस्माकं भयभीतानां त्वं गतिर्मधुसूदन २३
तस्मात्त्वां देव देवेश लोकार्थं ज्ञापयामहे
रक्ष लोकांश्च देवांश्च शक्रं च महतो भयात् २४
इति श्रीमहाभारते आरण्यकपर्वणि शततमोऽध्यायः १००

एकाधिकशततमोऽध्यायः

देवा ऊचुः
इतः प्रदानाद्वर्तन्ते प्रजाः सर्वाश्चतुर्विधाः
ता भाविता भावयन्ति हव्यकव्यैर्दिवौकसः १
लोका ह्येवं वर्तयन्ति अन्योन्यं समुपाश्रिताः
त्वत्प्रसादान्निरुद्विग्नास्त्वयैव परिरक्षिताः २
इदं च समनुप्राप्तं लोकानां भयमुत्तमम्
न च जानीम केनेमे रात्रौ वध्यन्ति ब्राह्मणाः ३
क्षीणेषु च ब्राह्मणेषु पृथिवी क्षयमेष्यति
ततः पृथिव्यां क्षीणायां त्रिदिवं क्षयमेष्यति ४
त्वत्प्रसादान्महाबाहो लोकाः सर्वे जगत्पते
विनाशं नाधिगच्छेयुस्त्वया वै परिरक्षिताः ५
विष्णुरुवाच
विदितं मे सुराः सर्वं प्रजानां क्षयकारणम्
भवतां चापि वक्ष्यामि शृणुध्वं विगतज्वराः ६
कालेय इति विख्यातो गणः परमदारुणः
तैश्च वृत्रं समाश्रित्य जगत्सर्वं प्रबाधितम् ७
ते वृत्रं निहतं दृष्ट्वा सहस्राक्षेण धीमता

जीवितं परिरक्षन्तः प्रविष्टा वरुणालयम् ८
ते प्रविश्योदधिं घोरं नक्रग्राहसमाकुलम्
उत्सादनार्थं लोकानां रात्रौ घ्नन्ति मुनीनिह ९
न तु शक्याः क्षयं नेतुं समुद्राश्रयगा हि ते
समुद्रस्य क्षये बुद्धिर्भवद्भिः संप्रधार्यताम्
अगस्त्येन विना को हि शक्तोऽन्योऽर्णवशोषणे १०
एतच्छ्रुत्वा वचो देवा विष्णुना समुदाहृतम्
परमेष्ठिनमाज्ञाप्य अगस्त्यस्याश्रमं ययुः ११
तत्रापश्यन्महात्मानं वारुणिं दीप्ततेजसम्
उपास्यमानमृषिभिर्देवैरिव पितामहम् १२
तेऽभिगम्य महात्मानं मैत्रावरुणिमच्युतम्
आश्रमस्थं तपोराशिं कर्मभिः स्वैरभिष्टुवन् १३
देवा ऊचुः
नाहुषेणाभितप्तानां त्वं लोकानां गतिः पुरा
भ्रंशितश्च सुरैश्वर्याल्लोकार्थं लोककण्टकः १४
क्रोधात्प्रवृद्धः सहसा भास्करस्य नगोत्तमः
वचस्तवानतिक्रामन्विन्ध्यः शैलो न वर्धते १५
तपसा चावृते लोके मृत्युनाभ्यर्दिताः प्रजाः
त्वामेव नाथमासाद्य निर्वृतिं परमां गताः १६
अस्माकं भयभीतानां नित्यशो भगवान्गतिः
ततस्त्वार्ताः प्रयाचामस्त्वां वरं वरदो ह्यसि १७
इति श्रीमहाभारते आरगयक पर्वणि एकाधिकशततमोऽध्यायः १०१

## द्व्यधिकशततमोऽध्यायः

युधिष्ठिर उवाच
किमर्थं सहसा विन्ध्यः प्रवृद्धः क्रोधमूर्छितः
एतदिच्छाम्यहं श्रोतुं विस्तरेण महामुने १
लोमश उवाच
अद्रिराजं महाशैलं मेरुं कनकपर्वतम्
उदयास्तमये भानुः प्रदक्षिणमवर्तत २

तं तु दृष्ट्वा तथा विन्ध्यः शैलः सूर्यमथाब्रवीत्
यथा हि मेरुर्भवता नित्यशः परिगम्यते
प्रदक्षिणं च क्रियते मामेवं कुरु भास्कर ३
एवमुक्तस्ततः सूर्यः शैलेन्द्रं प्रत्यभाषत
नाहमात्मेच्छया शैल करोम्येनं प्रदक्षिणम्
एष मार्गः प्रदिष्टो मे येनेदं निर्मितं जगत् ४
एवमुक्तस्ततः क्रोधात्प्रवृद्धः सहसाचलः
सूर्याचन्द्रमसोर्मार्गं रोद्धुमिच्छन्परन्तप ५
ततो देवाः सहिताः सर्व एव सेन्द्रा समागम्य महाद्रिराजम्
निवारयामासुरुपायतस्तं न च स्म तेषां वचनं चकार ६
अथाभिजग्मुर्मुनिमाश्रमस्थं तपस्विनं धर्मभृतां वरिष्ठम्
अगस्त्यमत्यद्भुतवीर्यदीप्तं तं चार्थमूचुः सहिताः सुरास्ते ७
सूर्याचन्द्रमसोर्मार्गं नक्षत्राणां गतिं तथा
शैलराजो वृणोत्येष विंध्यः क्रोधवशानुगः ८
तं निवारयितुं शक्तो नान्यः कश्चिद्द्विजोत्तम
ऋते त्वां हि महाभाग तस्मादेनं निवारय ९
तच्छ्रुत्वा वचनं विप्रः सुराणां शैलमभ्यगात्
सोऽभिगम्याब्रवीद्विंध्यं सदारः समुपस्थितः १०
मार्गमिच्छाम्यहं दत्तं भवता पर्वतोत्तम
दक्षिणामभिगन्तास्मि दिशं कार्येण केनचित् ११
यावदागमनं मह्यं तावत्त्वं प्रतिपालय
निवृत्ते मयि शैलेन्द्र ततो वर्धस्व कामतः १२
एवं स समयं कृत्वा विन्ध्येनामित्रकर्शन
अद्यापि दक्षिणाद्देशाद्वारुणिर्न निवर्तते १३
एतत्ते सर्वमाख्यातं यथा विन्ध्यो न वर्धते
अगस्त्यस्य प्रभावेन यन्मां त्वं परिपृच्छसि १४
कालेयास्तु यथा राजन्सुरैः सर्वैर्निषूदिताः
अगस्त्याद्वरमासाद्य तन्मे निगदतः शृणु १५
त्रिदशानां वचः श्रुत्वा मैत्रावरुणिरब्रवीत्
किमर्थमभियाताः स्थ वरं मत्तः कमिच्छथ

एवमुक्तास्ततस्तेन देवता मुनिमब्रुवन् १६
एवं त्वयेच्छाम कृतं महर्षे महार्णवं पीयमानं महात्मन्
ततो वधिष्याम सहानुबन्धान्कालेयसंज्ञान्सुरविद्विषस्तान् १७
त्रिदशानां वचः श्रुत्वा तथेति मुनिरब्रवीत्
करिष्ये भवतां कामं लोकानां च महत्सुखम् १८
एवमुक्त्वा ततोऽगच्छत्समुद्रं सरितां पतिम्
ऋषिभिश्च तपः सिद्धैः सार्धं देवैश्च सुव्रतः १९
मनुष्योरगगन्धर्वयक्षकिंपुरुषास्तथा
अनुजग्मुर्महात्मानं द्रष्टुकामास्तदद्भुतम् २०
ततोऽभ्यगच्छन्सहिताः समुद्रं भीमनिस्वनम्
नृत्यन्तमिव चोर्मीभिर्वल्गन्तमिव वायुना २१
हसन्तमिव फेनौघैः स्खलन्तं कन्दरेषु च
नानाग्राहसमाकीर्णं नानाद्विजगणायुतम् २२
अगस्त्यसहिता देवाः सगन्धर्वमहोरगाः
ऋषयश्च महाभागाः समासेदुर्महोदधिम् २३
इति श्रीमहाभारते आरण्यकपर्वणि द्व्यधिकशततमोऽध्यायः १०२

## त्र्यधिकशततमोऽध्यायः

लोमश उवाच
समुद्रं स समासाद्य वारुणिर्भगवानृषिः
उवाच सहितान्देवानृषींश्चैव समागतान् १
एष लोकहितार्थं वै पिबामि वरुणालयम्
भवद्भिर्यदनुष्ठेयं तच्छीघ्रं संविधीयताम् २
एतावदुक्त्वा वचनं मैत्रावरुणिरच्युतः
समुद्रमपिबत्क्रुद्धः सर्वलोकस्य पश्यतः ३
पीयमानं समुद्रं तु दृष्ट्वा देवाः सवासवाः
विस्मयं परमं जग्मुः स्तुतिभिश्चाप्यपूजयन् ४
त्वं नस्त्राता विधाता च लोकानां लोकभावनः
त्वत्प्रसादात्समुच्छेदं न गच्छेत्सामरं जगत् ५
संपूज्यमानस्त्रिदशैर्महात्मा गन्धर्वतूर्येषु नदत्सु सर्वशः

दिव्यैश्च पुष्पैरवकीर्यमाणो महार्णवं निःसलिलं चकार ६
दृष्ट्वा कृतं निःसलिलं महार्णवं सुराः स्मस्ताः परमप्रहृष्टाः
प्रगृह्य दिव्यानि वरायुधानि तान्दानवाञ्जघ्नुरदीनसत्त्वाः ७
ते वध्यमानास्त्रिदशैर्महात्मभिर्महाबलैर्वेगिभिरुन्नदद्भिः
न सेहिरे वेगवतां महात्मनां वेगं तदा धारयितुं दिवौकसाम् ८
ते वध्यमानास्त्रिदशैर्दानवा भीमनिस्वनाः
चक्रुः सुतुमुलं युद्धं मुहूर्तमिव भारत ९
ते पूर्वं तपसा दग्धा मुनिभिर्भावितात्मभिः
यतमानाः परं शक्त्या त्रिदशैर्विनिषूदिताः १०
ते हेमनिष्काभरणाः कुण्डलाङ्गदधारिणः
निहत्य बह्वशोभन्त पुष्पिता इव किंशुकाः ११
हतशेषास्ततः केचित्कालेया मनुजोत्तम
विदार्य वसुधां देवीं पातालतलमाश्रिताः १२
निहतान्दानवान्दृष्ट्वा त्रिदशा मुनिपुङ्गवम्
तुष्टुवुर्विविधैर्वाक्यैरिदं चैवाब्रुवन्वचः १३
त्वत्प्रसादान्महाभाग लोकैः प्राप्तं महत्सुखम्
त्वत्तेजसा च निहताः कालेयाः क्रूरविक्रमाः १४
पूरयस्व महाबाहो समुद्रं लोकभावन
यत्त्वया सलिलं पीतं तदस्मिन्पुनरुत्सृज १५
एवमुक्तः प्रत्युवाच भगवान्मुनिपुङ्गवः
जीर्णं तद्धि मया तोयमुपायोऽन्य प्रचिन्त्यताम्
पूरणार्थं समुद्रस्य भवद्भिर्यत्नमास्थितैः १६
एतच्छ्रुत्वा तु वचनं महर्षेर्भावितात्मनः
विस्मिताश्च विषण्णाश्च बभूवुः सहिताः सुराः १७
परस्परमनुज्ञाप्य प्रणम्य मुनिपुंगवम्
प्रजाः सर्वा महाराज विप्रजग्मुर्यथागतम् १८
त्रिदशा विष्णुना सार्धमुपजग्मुः पितामहम्
पूरणार्थं समुद्रस्य मन्त्रयित्वा पुनः पुनः
ऊचुः प्राञ्जलयः सर्वे सागरस्याभिपूरणम् १९

इति श्रीमहाभारते आरण्यकपर्वणि त्र्यधिकशततमोऽध्यायः १०३

## चतुरधिकशततमोऽध्यायः

लोमश उवाच
तानुवाच समेतांस्तु ब्रह्मा लोकपितामहः
गच्छध्वं विबुधाः सर्वे यथाकामं यथेप्सितम् १
महता कालयोगेन प्रकृतिं यास्यतेऽर्णवः
ज्ञातीन्वै कारणं कृत्वा महाराज्ञो भगीरथात् २
युधिष्ठिर उवाच
कथं वै ज्ञातयो ब्रह्मन्कारणं चात्र किं मुने
कथं समुद्रः पूर्णश्च भगीरथपरिश्रमात् ३
एतदिच्छाम्यहं श्रोतुं विस्तरेण तपोधन
कथ्यमानं त्वया विप्र राज्ञां चरितमुत्तमम् ४
वैशम्पायन उवाच
एवमुक्तस्तु विप्रेन्द्रो धर्मराज्ञा महात्मना
कथयामास माहात्म्यं सगरस्य महात्मनः ५
लोमश उवाच
इक्ष्वाकूणां कुले जातः सगरो नाम पार्थिवः
रूपसत्त्वबलोपेतः स चापुत्रः प्रतापवान् ६
स हैहयान्समुत्साद्य तालजङ्घांश्च भारत
वशे च कृत्वा राज्ञोऽन्यान्स्वराज्यमन्वशासत ७
तस्य भार्ये त्वभवतां रूपयौवनदर्पिते
वैदर्भी भरतश्रेष्ठ शैब्या च भरतर्षभ ८
स पुत्रकामो नृपतिस्तताप सुमहत्तपः
पत्नीभ्यां सह राजेन्द्र कैलासं गिरिमाश्रितः ९
स तप्यमानः सुमहत्तपो योगसमन्वितः
आससाद महात्मानं त्र्यक्षं त्रिपुरमर्दनम् १०
शंकरं भवमीशानं शूलपाणिं पिनाकिनम्
त्र्यम्बकं शिवमुग्रेशं बहुरूपमुमापतिम् ११
स तं दृष्ट्वैव वरदं पत्नीभ्यां सहितो नृपः
प्रणिपत्य महाबाहुः पुत्रार्थं समयाचत १२
तं प्रीतिमान्हरः प्राह सभार्यं नृपसत्तमम्

यस्मिन्वृतो मुहूर्तेऽह त्वयेह नृपते वरम् १३
षष्टिः पुत्रसहस्राणि शूराः समरदर्पिताः
एकस्यां संभविष्यन्ति पत्न्यां तव नरोत्तम १४
ते चैव सर्वे सहिताः क्षयं यास्यन्ति पार्थिव
एको वंशधरः शूर एकस्यां संभविष्यति
एवमुक्त्वा तु तं रुद्रस्तत्रैवान्तरधीयत १५
स चापि सगरो राजा जगाम स्वं निवेशनम्
पत्नीभ्यां सहितस्तात सोऽतिहृष्टमनास्तदा १६
तस्याथ मनुजश्रेष्ठ ते भार्ये कमलेक्षणे
वेदर्भीचैव शैब्या च गर्भिण्यौ संबभूवतुः १७
ततः कालेन वैदर्भी गर्भालाबुं व्यजायत
शैब्या च सुषुवे पुत्रं कुमारं देवरूपिणम् १८
तदालाबुं समुत्स्रष्टुं मनश्चक्रे स पार्थिवः
अथान्तरिक्षाच्छुश्राव वाचं गम्भीरनिस्वनाम् १९
राजन्मा साहसं कार्षीः पुत्रान्न त्यक्तुमर्हसि
अलाबुमध्यान्निष्कृष्य बीजं यत्नेन गोप्यताम् २०
सोपस्वेदेषु पात्रेषु घृतपूर्णेषु भागशः
ततः पुत्रसहस्राणि षष्टिं प्राप्स्यसि पार्थिव २१
महादेवेन दिष्टं ते पुत्रजन्म नराधिप
अनेन क्रमयोगेन मा ते बुद्धिरतोऽन्यथा २२
इति श्रीमहाभारते आरण्यकपर्वणि चतुरधिकशततमोऽध्यायः १०४

## पञ्चाधिकशततमोऽध्यायः

लोमश उवाच
एतच्छ्रुत्वाऽन्तरिक्षाच्च स राजा राजसत्तम
यथोक्तं तच्चकाराथ श्रद्दधद्भरतर्षभ १
षष्टिः पुत्रसहस्राणि तस्याप्रतिमतेजसः
रुद्रप्रसादाद्राजर्षेः समजायन्त पार्थिव २
ते घोराः क्रूरकर्माण आकाशपरिसर्पिणः
बहुत्वाच्चावजानन्तः सर्वाँल्लोकान्सहामरान् ३

त्रिदशांश्चाप्यबाधन्त तथा गन्धर्वराक्षसान्
सर्वाणि चैव भूतानि शूराः समरशालिनः ४
वध्यमानास्ततो लोकाः सागरैर्मन्दबुद्धिभिः
ब्रह्माणं शरणं जग्मुः सहिताः सर्वदैवतैः ५
तानुवाच महाभागः सर्वलोकपितामहः
गच्छध्वं त्रिदशाः सर्वे लोकैः सार्धं यथागतम् ६
नातिदीर्घेण कालेन सागराणां क्षयो महान्
भविष्यति महाघोरः स्वकृतैः कर्मभिः सुराः ७
एवमुक्तास्ततो देवा लोकाश्च मनुजेश्वर
पितामहमनुज्ञाप्य विप्रजग्मुर्यथागतम् ८
ततः काले बहुतिथे व्यतीते भरतर्षभ
दीक्षितः सगरो राजा हयमेधेन वीर्यवान्
तस्याश्वो व्यचरद्भूमिं पुत्रैः सुपरिरक्षितः ९
समुद्रं स समासाद्य निस्तोयं भीमदर्शनम्
रक्ष्यमाणः प्रयत्नेन तत्रैवान्तरधीयत १०
ततस्ते सागरास्तात हृतं मत्वा हयोत्तमम्
आगम्य पितुराचख्युरदृश्यं तुरगं हृतम्
तेनोक्ता दिक्षु सर्वासु सर्वे मार्गत वाजिनम् ११
ततस्ते पितुराज्ञाय दिक्षु सर्वासु तं हयम्
अमार्गन्त महाराज सर्वं च पृथिवीतलम् १२
ततस्ते सागराः सर्वे समुपेत्य परस्परम्
नाध्यगच्छन्त तुरगमश्वहर्तारमेव च १३
आगम्य पितरं चोचुस्ततः प्राञ्जलयोऽग्रतः
ससमुद्रवनद्वीपा सनदीनदकन्दरा
सपर्वतवनोद्देशा निखिलेन मही नृप १४
अस्माभिर्विचिता राजञ्शासनात्तव पार्थिव
न चाश्वमधिगच्छामो नाश्वहर्तारमेव च १५
श्रुत्वा तु वचनं तेषां स राजा क्रोधमूर्छितः
उवाच वचनं सर्वांस्तदा दैववशान्नृप १६
अनागमाय गच्छध्वं भूयो मार्गत वाजिनम्

यज्ञियं तं विना ह्यश्वं नागन्तव्यं हि पुत्रक १७
प्रतिगृह्य तु संदेशं ततस्ते सगरात्मजाः
भूय एव महीं कृत्स्नां विचेतुमुपचक्रमुः १८
अथापश्यन्त ते वीराः पृथिवीमवदारिताम्
समासाद्य बिलं तच्च खनन्तः सगरात्मजाः
कुद्दालैर्ह्रेषुकैश्चैव समुद्रमखनंस्तदा १९
स खन्यमानः सहितैः सागरैर्वरुणालयः
अगच्छत्परमामार्तिं दार्यमाणः समन्ततः २०
असुरोरगरक्षांसि सत्त्वानि विविधानि च
आर्तनादमकुर्वन्त वध्यमानानि सागरैः २१
छिन्नशीर्षा विदेहाश्च भिन्नजान्वस्थिमस्तकाः
प्राणिनः समदृश्यन्त शतशोऽथ सहस्रशः २२
एवं हि खनतां तेषां समुद्रं मकरालयम्
व्यतीतः सुमहान्कालो न चाश्वः समदृश्यत २३
ततः पूर्वोत्तरे देशे समुद्रस्य महीपते
विदार्य पातालमथ संक्रुद्धाः सगरात्मजाः
अपश्यन्त हयं तत्र विचरन्तं महीतले २४
कपिलं च महात्मानं तेजोराशिमनुत्तमम्
तपसा दीप्यमानं तं ज्वालाभिरिव पावकम् २५
इति श्रीमहाभारते आरण्यकपर्वणि पञ्चाधिकशततमोऽध्यायः १०५

## षडधिकशततमोऽध्यायः

लोमश उवाच
ते तं दृष्ट्वा हयं राजन्संप्रहृष्टतनूरुहाः
अनादृत्य महात्मानं कपिलं कालचोदिताः
संक्रुद्धाः समधावन्त अश्वग्रहणकाङ्क्षिणः १
ततः क्रुद्धो महाराज कपिलो मुनिसत्तमः
वासुदेवेति यं प्राहुः कपिलं मुनिसत्तमम् २
स चक्षुर्विवृतं कृत्वा तेजस्तेषु समुत्सृजन्
ददाह सुमहातेजा मन्दबुद्धीन्स सागरान् ३

तान्दृष्ट्वा भस्मसाद्भूतान्नारदः सुमहातपाः
सागरान्तिकमागच्छत्तच्च तस्मै न्यवेदयत् ४
स तच्छ्रुत्वा वचो घोरं राजा मुनिमुखोद्गतम्
मुहूर्तं विमना भूत्वा स्थाणोर्वाक्यमचिन्तयत्
आत्मानमात्मनाश्वास्य हयमेवान्वचिन्तयत् ५
अंशुमन्तं समाहूय असमञ्जःसुतं तदा
पौत्रं भरतशार्दूल इदं वचनमब्रवीत् ६
षष्टिस्तानि सहस्राणि पुत्राणाममितौजसाम्
कापिलं तेज आसाद्य मत्कृते निधनं गताः ७
तव चापि पिता तात परित्यक्तो मयानघ
धर्मं संरक्षमाणेन पौराणां हितमिच्छता ८
युधिष्ठिर उवाच
किमर्थं राजशार्दूलः सगरः पुत्रमात्मजम्
त्यक्तवान्दुस्त्यजं वीरं तन्मे ब्रूहि तपोधन ९
लोमश उवाच
असमञ्जा इति ख्यातः सगरस्य सुतो ह्यभूत्
यं शैब्या जनयामास पौराणां स हि दारकान्
खुरेषु क्रोशतो गृह्य नद्यां चिक्षेप दुर्बलान् १०
ततः पौराः समाजग्मुर्भयशोकपरिप्लुताः
सगरं चाभ्ययाचन्त सर्वे प्राञ्जलयः स्थिताः ११
त्वं नस्त्राता महाराज परचक्रादिभिर्भयैः
असमञ्जोभयाद्घोरात्ततो नस्त्रातुमर्हसि १२
पौराणां वचनं श्रुत्वा घोरं नृपतिसत्तमः
मुहूर्तं विमना भूत्वा सचिवानिदमब्रवीत् १३
असमञ्जाः पुरादद्य सुतो मे विप्रवास्यताम्
यदि वो मत्प्रियं कार्यमेतच्छीघ्रं विधीयताम् १४
एवमुक्ता नरेन्द्रेण सचिवास्ते नराधिप
यथोक्तं त्वरिताश्चक्रुर्यथाज्ञापितवान्नृपः १५
एतत्ते सर्वमाख्यातं यथा पुत्रो महात्मना
पौराणां हितकामेन सगरेण विवासितः १६

अंशुमांस्तु महेष्वासो यदुक्तः सगरेण ह
तत्ते सर्वं प्रवक्ष्यामि कीर्त्यमानं निबोध मे १७
सगर उवाच
पितुश्च तेऽह त्यागेन पुत्राणां निधनेन च
अलाभेन तथाश्वस्य परितप्यामि पुत्रक १८
तस्माद्दुःखाभिसंतप्तं यज्ञविघ्नाच्च मोहितम्
हयस्यानयनात्पौत्र नरकान्मां समुद्धर १९
लोमश उवाच
अंशुमानेवमुक्तस्तु सगरेण महात्मना
जगाम दुःखात्तं देशं यत्र वै दारिता मही २०
स तु तेनैव मार्गेण समुद्रं प्रविवेश ह
अपश्यच्च महात्मानं कपिलं तुरगं च तम् २१
स दृष्ट्वा तेजसो राशिं पुराणमृषिसत्तमम्
प्रणम्य शिरसा भूमौ कार्यमस्मै न्यवेदयत् २२
ततः प्रीतो महातेजाः कपिलोंऽशुमतेऽभवत्
उवाच चैनं धर्मात्मा वरदोऽस्मीति भारत २३
स वव्रे तुरगं तत्र प्रथमं यज्ञकारणात्
द्वितीयमुदकं वव्रे पितॄणां पावनेप्सया २४
तमुवाच महातेजाः कपिलो मुनिपुङ्गवः
ददानि तव भद्रं ते यद्यत्प्रार्थयसेऽनघ २५
त्वयि क्षमा च धर्मश्च सत्यं चापि प्रतिष्ठितम्
त्वया कृतार्थः सगरः प्रुत्रवांश्च त्वया पिता २६
तव चैव प्रभावेण स्वर्गं यास्यन्ति सागराः
पौत्रश्च ते त्रिपथगां त्रिदिवादानयिष्यति
पावनार्थं सागराणां तोषयित्वा महेश्वरम् २७
हयं नयस्व भद्रं ते यज्ञियं नरपुंगव
यज्ञः समाप्यतां तात सगरस्य महात्मनः २८
अंशुमानेवमुक्तस्तु कपिलेन महात्मना
आजगाम हयं गृह्य यज्ञवाटं महात्मनः २९
सोऽभिवाद्य ततः पादौ सगरस्य महात्मनः

मूर्ध्नि तेनाप्युपाघ्रातस्तस्मै सर्वं न्यवेदयत् ३०
यथा दृष्टं श्रुतं चापि सागराणां क्षयं तथा
तं चास्मै हयमाचष्ट यज्ञवाटमुपागतम् ३१
तच्छ्रुत्वा सगरो राजा पुत्रजं दुःखमत्यजत्
अंशुमन्तं च सम्पूज्य समापयत तं क्रतुम् ३२
समाप्तयज्ञः सगरो देवैः सर्वैः सभाजितः
पुत्रत्वे कल्पयामास समुद्रं वरुणालयम् ३३
प्रशास्य सुचिरं कालं राज्यं राजीवलोचनः
पौत्रे भारं समावेश्य जगाम त्रिदिवं तदा ३४
अंशुमानपि धर्मात्मा महीं सागरमेखलाम्
प्रशशास महाराज यथैवास्य पितामहः ३५
तस्य पुत्रः समभवद्दिलीपो नाम धर्मवित्
तस्मै राज्यं समाधाय अंशुमानपि संस्थितः ३६
दिलीपस्तु ततः श्रुत्वा पितॄणां निधनं महत्
पर्यतप्यत दुःखेन तेषां गतिमचिन्तयत् ३७
गङ्गावतरणे यत्नं सुमहच्चाकरोन्नृपः
न चावतारयामास चेष्टमानो यथाबलम् ३८
तस्य पुत्रः समभवच्छ्रीमान्धर्मपरायणः
भगीरथ इति ख्यातः सत्यवागनसूयकः ३९
अभिषिच्य तु तं राज्ये दिलीपो वनमाश्रितः
तपः सिद्धिसमायोगात्स राजा भरतर्षभ
वनाज्जगाम त्रिदिवं कालयोगेन भारत ४०

इति श्रीमहाभारते आरण्यकपर्वणि षडधिकशततमोऽध्यायः १०६

## सप्ताधिकशततमोऽध्यायः

लोमश उवाच
स तु राजा महेष्वासश्चक्रवर्ती महारथः
बभूव सर्वलोकस्य मनोनयननन्दनः १
स शुश्राव महाबाहुः कपिलेन महात्मना
पितॄणां निधनं घोरमप्राप्तिं त्रिदिवस्य च २

स राज्यं सचिवे न्यस्य हृदयेन विदूयता
जगाम हिमवत्पार्श्वं तपस्तप्तुं नरेश्वरः ३
आरिराधयिषुर्गङ्गां तपसा दग्धकिल्बिषः
सोऽपश्यत नरश्रेष्ठ हिमवन्तं नगोत्तमम् ४
शृङ्गैर्बहुविधाकारैर्धातुमद्भिरलंकृतम्
पवनालम्बिभिर्मेघैः परिष्वक्तं समन्ततः ५
नदीकुञ्जनितम्बैश्च सोदकैरुपशोभितम्
गुहाकन्दरसंलीनैः सिंहव्याघ्रैर्निषेवितम् ६
शकुनैश्च विचित्राङ्गैः कूजद्भिर्विविधा गिरः
भृङ्गराजैस्तथा हंसैर्दात्यूहैर्जलकुक्कुटैः ७
मयूरैः शतपत्रैश्च कोकिलैर्जीवजीवकैः
चकोरैरसितापाङ्गैस्तथा पुत्रप्रियैरपि ८
जलस्थानेषु रम्येषु पद्मिनीभिश्च संकुलम्
सारसानां च मधुरैर्व्याहृतैः समलंकृतम् ९
किंनरैरप्सरोभिश्च निषेवितशिलातलम्
दिशागजविषाणाग्रैः समन्ताद्घृष्टपादपम् १०
विद्याधरानुचरितं नानारत्नसमाकुलम्
विषोल्बणै भुजङ्गैश्च दीप्तजिह्वैर्निषेवितम् ११
क्वचित्कनकसंकाशं क्वचिद्रजतसंनिभम्
क्वचिदञ्जनपुञ्जाभं हिमवन्तमुपागमत् १२
स तु तत्र नरश्रेष्ठस्तपो घोरं समाश्रितः
फलमूलाम्बुभक्षोऽभूत्सहस्रं परिवत्सरान् १३
संवत्सरसहस्रे तु गते दिव्ये महानदी
दर्शयामास तं गङ्गा तदा मूर्तिमती स्वयम् १४
गङ्गोवाच
किमिच्छसि महाराज मत्तः किं च ददानि ते
तद्ब्रवीहि नरश्रेष्ठ करिष्यामि वचस्तव १५
लोमश उवाच
एवमुक्तः प्रत्युवाच राजा हैमवतीं तदा
पितामहा मे वरदे कपिलेन महानदि

अन्वेषमाणास्तुरगं नीता वैवस्वतक्षयम् १६
षष्टिस्तानि सहस्राणि सागराणां महात्मनाम्
कापिलं तेज आसाद्य क्षणेन निधनं गताः १७
तेषामेवं विनष्टानां स्वर्गे वासो न विद्यते
यावत्तानि शरीराणि त्वं जलैर्नाभिषिञ्चसि १८
स्वर्गं नय महाभागे मत्पितॄन्सगरात्मजान्
तेषामर्थेऽभियाचामि त्वामहं वै महानदि १९
एतच्छ्रुत्वा वचो राज्ञो गङ्गा लोकनमस्कृता
भगीरथमिदं वाक्यं सुप्रीता समभाषत २०
करिष्यामि महाराज वचस्ते नात्र संशयः
वेगं तु मम दुर्धार्यं पतन्त्या गगनाच्च्युतम् २१
न शक्तस्त्रिषु लोकेषु कश्चिद्धारयितुं नृप
अन्यत्र विबुधश्रेष्ठान्नीलकगठान्महेश्वरात् २२
तं तोषय महाबाहो तपसा वरदं हरम्
स तु मां प्रच्युतां देवः शिरसा धारयिष्यति
करिष्यति च ते कामं पितॄणां हितकाम्यया २३
एतच्छ्रुत्वा वचो राजन्महाराजो भगीरथः
कैलासं पर्वतं गत्वा तोषयामास शंकरम् २४
ततस्तेन समागम्य कालयोगेन केनचित्
अगृह्णाच्च वरं तस्माद्गङ्गाया धारणं नृप
स्वर्गवासं समुद्दिश्य पितॄणां स नरोत्तमः २५
इति श्रीमहाभारते आरगयकपर्वणि सप्ताधिकशततमोऽध्यायः १०७

## अष्टाधिकशततमोऽध्यायः

लोमश उवाच
भगीरथवचः श्रुत्वा प्रियार्थं च दिवौकसाम्
एवमस्त्विति राजानं भगवान्प्रत्यभाषत १
धारयिष्ये महाबाहो गगनात्प्रच्युतां शिवाम्
दिव्यां देवनदीं पुगयां त्वत्कृते नृपसत्तम २
एवमुक्त्वा महाबाहो हिमवन्तमुपागमत्

संवृतः पार्षदैर्घोरैर्नानाप्रहरणोद्यतैः ३
ततः स्थित्वा नरश्रेष्ठं भगीरथमुवाच ह
प्रयाचस्व महाबाहो शैलराजसुतां नदीम्
पतमानां सरिच्छ्रेष्ठां धारयिष्ये त्रिविष्टपात् ४
एतच्छ्रुत्वा वचो राजा शर्वेण समुदाहृतम्
प्रयतः प्रणतो भूत्वा गङ्गां समनुचिन्तयत् ५
ततः पुण्यजला रम्या राज्ञा समनुचिन्तिता
ईशानं च स्थितं दृष्ट्वा गगनात्सहसा च्युता ६
तां प्रच्युतां ततो दृष्ट्वा देवाः सार्धं महर्षिभिः
गन्धर्वोरगरक्षांसि समाजग्मुर्दिदृक्षया ७
ततः पपात गगनाद्गङ्गा हिमवतः सुता
समुद्भ्रान्तमहावर्ता मीनग्राहसमाकुला ८
तां दधार हरो राजन्गङ्गां गगनमेखलाम्
ललाटदेशे पतितां मालां मुक्तामयीमिव ९
सा बभूव विसर्पन्ती त्रिधा राजन्समुद्रगा
फेनपुञ्जाकुलजला हंसानामिव पंक्तयः १०
क्वचिदाभोगकुटिला प्रस्खलन्ती क्वचित्क्वचित्
स्वफेनपटसंवीता मत्तेव प्रमदाव्रजत्
क्वचित्सा तोयनिनदैर्नदन्ती नादमुत्तमम् ११
एवं प्रकारान्सुबहून्कुर्वन्ती गगनाच्च्युता
पृथिवीतलमासाद्य भगीरथमथाब्रवीत् १२
दर्शयस्व महाराज मार्गं केन व्रजाम्यहम्
त्वदर्थमवतीर्णास्मि पृथिवीं पृथिवीपते १३
एतच्छ्रुत्वा वचो राजा प्रातिष्ठत भगीरथः
यत्र तानि शरीराणि सागराणां महात्मनाम्
पावनार्थं नरश्रेष्ठ पुण्येन सलिलेन ह १४
गङ्गाया धारणं कृत्वा हरो लोकनमस्कृतः
कैलासं पर्वतश्रेष्ठं जगाम त्रिदशैः सह १५
समुद्रं च समासाद्य गङ्गया सहितो नृपः
पूरयामास वेगेन समुद्रं वरुणालयम् १६

दुहितृत्वे च नृपतिर्गङ्गां समनुकल्पयत्
पितृणां चोदकं तत्र ददौ पूर्णमनोरथः १७
एतत्ते सर्वमाख्यातं गङ्गा त्रिपथगा यथा
पूरणार्थं समुद्रस्य पृथिवीमवतारिता १८
समुद्रश्च यथा पीतः कारणार्थे महात्मना
वातापिश्च यथा नीतः क्षयं स ब्रह्महा प्रभो
अगस्त्येन महाराज यन्मांत्वं परिपृच्छसि १९
इति श्रीमहाभारते आरण्यकपर्वणि अष्टाधिकशततमोऽध्यायः १०८

## नवाधिकशततमोऽध्यायः

वैशम्पायन उवाच
ततः प्रयातः कौन्तेयः क्रमेण भरतर्षभ
नन्दामपरनन्दां च नद्यौ पापभयापहे १
स पर्वतं समासाद्य हेमकूटमनामयम्
अचिन्त्यानद्भुतान्भावान्ददर्श सुबहून्नृपः २
वाचो यत्राभवन्मेघा उपलाश्च सहस्रशः
नाशक्नुवंस्तमारोढुं विषण्णमनसो जनाः ३
वायुर्नित्यं ववौ यत्र नित्यं देवश्च वर्षति
सायं प्रातश्च भगवान्दृश्यते हव्यवाहनः ४
एवं बहुविधान्भावानद्भुतान्वीक्ष्य पाण्डवः
लोमशं पुनरेव स्म पर्यपृच्छत्तदद्भुतम् ५
लोमश उवाच
यथाश्रुतमिदं पूर्वमस्माभिररिकर्शन
तदेकाग्रमना राजन्निबोध गदतो मम ६
अस्मिन्नृषभकूटेऽभूदृषभो नाम तापसः
अनेकशतवर्षायुस्तपस्वी कोपनो भृशम् ७
स वै संभाष्यमाणोऽन्यै कोपाद्गिरिमुवाच ह
य इह व्याहरेत्कश्चिदुपलानुत्सृजेस्तदा ८
वातं चाहूय मा शब्दमित्युवाच स तापसः
व्याहरंश्चैव पुरुषो मेघेन विनिवार्यते ९

एवमेतानि कर्माणि राजंस्तेन महर्षिणा
कृतानि कानिचित्कोपात्प्रतिषिद्धानि कानिचित् १०
नन्दामभिगतान्देवान्पुरा राजन्निति श्रुतिः
अन्वपद्यन्त सहसा पुरुषा देवदर्शिनः ११
ते दर्शनमनिच्छन्तो देवाः शक्रपुरोगमाः
दुर्गं चक्रुरिमं देशं गिरिप्रत्यूहरूपकम् १२
तदा प्रभृति कौन्तेय नरा गिरिमिमं सदा
नाशक्नुवन्नभिद्रष्टुं कुत एवाधिरोहितुम् १३
नातप्ततपसा शक्यो द्रष्टुमेष महागिरिः
आरोढुं वापि कौन्तेय तस्मान्नियतवाग्भव १४
इह देवाः सदा सर्वेयज्ञानाजह्रुरुत्तमान्
तेषामेतानि लिङ्गानि दृश्यन्तेऽद्यापि भारत १५
कुशाकारेव दूर्वेयं संस्तीर्णेव च भूरियम्
यूपप्रकारा बहवो वृक्षाश्चेमे विशां पते १६
देवाश्च ऋषयश्चैव वसन्त्यद्यापि भारत
तेषां सायं तथा प्रातर्दृश्यते हव्यवाहनः १७
इहाप्लुतानां कौन्तेय सद्यः पाप्मा विहन्यते
कुरुश्रेष्ठाभिषेकं वै तस्मात्कुरु सहानुजः १८
ततो नन्दाप्लुताङ्गस्त्वं कौशिकीमभियास्यसि
विश्वामित्रेण यत्रोग्रं तपस्तप्तमनुत्तमम् १९
वैशम्पायन उवाच
ततस्तत्र समाप्लुत्य गात्राणि सगणो नृपः
जगाम कौशिकीं पुण्यां रम्यां शिवजलां नदीम् २०

इति श्रीमहाभारते आरण्यकपर्वणि नवाधिकशततमोऽध्यायः १०९

## दशाधिकशततमोऽध्यायः

लोमश उवाच
एषा देवनदी पुण्या कौशिकी भरतर्षभ
विश्वामित्राश्रमो रम्यो एष चात्र प्रकाशते १
आश्रमश्चैव पुण्याख्यः काश्यपस्य महात्मनः

ऋृश्यशृङ्गः सुतो यस्य तपस्वी संयतेन्द्रियः २
तपसो यः प्रभावेन वर्षयामास वासवम्
अनावृष्ट्यां भयाद्यस्य ववर्ष बलवृत्रहा ३
मृग्यां जातः स तेजस्वी काश्यपस्य सुतः प्रभुः
विषये लोमपादस्य यश्चकाराद्भुतं महत् ४
निवर्तितेषु सस्येषु यस्मै शान्तां ददौ नृपः
लोमपादो दुहितरं सावित्रीं सविता यथा ५
युधिष्ठिर उवाच
ऋृश्यशृङ्गः कथं मृग्यामुत्पन्नः काश्यपात्मजः
विरुद्धे योनिसंसर्गे कथं च तपसा युतः ६
किमर्थं च भयाच्छक्रस्तस्य बालस्य धीमतः
अनावृष्ट्यां प्रवृत्तायां ववर्ष बलवृत्रहा ७
कथंरूपा च शान्ताभूद्राजपुत्री यतव्रता
लोभयामास या चेतो मृगभूतस्य तस्य वै ८
लोमपादश्च राजर्षिर्यदाश्रूयत धार्मिकः
कथं वै विषये तस्य नावर्षत्पाकशासनः ९
एतन्मे भगवन्सर्वं विस्तरेण यथातथम्
वक्तुमर्हसि शुश्रूषोर्ऋृश्यशृंगस्य चेष्टितम् १०
लोमश उवाच
विभाएडकस्य ब्रह्मर्षेस्तपसा भावितात्मनः
अमोघवीर्यस्य सतः प्रजापतिसमद्युतेः ११
शृणु पुत्रो यथा जात ऋृश्यशृङ्गः प्रतापवान्
महाह्रदे महातेजा बालः स्थविरसंमतः १२
महाह्रदं समासाद्य काश्यपस्तपसि स्थितः
दीर्घकालं परिश्रान्त ऋृषिर्देवर्षिसंमतः १३
तस्य रेतः प्रचस्कन्द दृष्ट्वाप्सरसमुर्वशीम्
अप्सूपस्पृशतो राजन्मृगी तच्चापिबत्तदा १४
सह तोयेन तृषिता सा गर्भिरयभवन्नृप
अमोघत्वाद्विधेश्चैव भावित्वाद्दैवनिर्मितात् १५
तस्यां मृग्यां समभवत्तस्य पुत्रो महानृषिः

ऋृश्यशृंगस्तपोनित्यो वन एव व्यवर्धत १६
तस्यर्श्यशृङ्गं शिरसि राजन्नासीन्महात्मनः
तेनर्श्यशृङ्ग इत्येवं तदा स प्रथितोऽभवत् १७
न तेन दृष्टपूर्वोऽन्य पितुरन्यत्र मानुषः
तस्मात्तस्य मनो नित्यं ब्रह्मचर्येऽभवन्नृप १८
एतस्मिन्नेव काले तु सखा दशरथस्य वै
लोमपाद इति ख्यातो अङ्गानामीश्वरोऽभवत् १९
तेन कामः कृतो मिथ्या ब्राह्मणेभ्य इति श्रुतिः
स ब्राह्मणैः परित्यक्तस्तदा वै जगतः पतिः २०
पुरोहितापचाराच्च तस्य राज्ञो यदृच्छया
न ववर्ष सहस्राक्षस्ततोऽपीडयन्त वै प्रजाः २१
स ब्राह्मणान्पर्यपृच्छत्तपोयुक्तान्मनीषिणः
प्रवर्षणे सुरेन्द्रस्य समर्थान्पृथिवीपतिः २२
कथं प्रवर्षेत्पर्जन्य उपायः परिदृश्यताम्
तमूचुश्चोदितास्तेन स्वमतानि मनीषिणः २३
तत्र त्वेको मुनिवरस्तं राजानमुवाच ह
कुपितास्तव राजेन्द्र ब्राह्मणा निष्कृतिं चर २४
ऋृश्यशृङ्गं मुनिसुतमानयस्व च पार्थिव
वानेयमनभिज्ञं च नारीणामार्जवे रतम् २५
स चेदवतरेद्राजन्विषयं ते महातपाः
सद्यः प्रवर्षेत्पर्जन्य इति मे नात्र संशयः २६
एतच्छ्रुत्वा वचो राजन्कृत्वा निष्कृतिमात्मनः
स गत्वा पुनरागच्छेत्प्रसन्नेषु द्विजातिषु
राजानमागतं दृष्ट्वा प्रतिसंजगृहुः प्रजाः २७
ततोऽङ्गपतिराहूय सचिवान्मन्त्रकोविदान्
ऋृश्यशृङ्गागमे यत्नमकरोन्मन्त्रनिश्चये २८
सोऽध्यगच्छदुपायं तु तैरमात्यैः सहाच्युतः
शास्त्रज्ञैरलमर्थज्ञैर्नीत्यां च परिनिष्ठितैः २९
तत आनाययामास वारमुख्या महीपतिः
वेश्याः सर्वत्र निष्णातास्ता उवाच स पार्थिवः ३०

ऋश्यशृंगमृषेः पुत्रमानयध्वमुपायतः
लोभयित्वाभिविश्वास्य विषयं मम शोभनाः ३१
ता राजभयभीताश्च शापभीताश्च योषितः
अशक्यमूचुस्तत्कार्यं विवर्णा गतचेतसः ३२
तत्र त्वेका जरद्योषा राजानमिदमब्रवीत्
प्रयतिष्ये महाराज तमानेतुं तपोधनम् ३३
अभिप्रेतांस्तु मे कामान्समनुज्ञातुमर्हसि
ततः शक्ष्ये लोभयितुमृश्यशृङ्गमृषेः सुतम् ३४
तस्याः सर्वमभिप्रायमन्वजानात्स पार्थिवः
धनं च प्रददौ भूरि रत्नानि विविधानि च ३५
ततो रूपेण संपन्ना वयसा च महीपते
स्त्रिय आदाय काश्चित्सा जगाम वनमञ्जसा ३६
इति श्रीमहाभारते आरण्यकपर्वणि दशाधिकशततमोऽध्यायः ११०

## एकादशाधिकशततमोऽध्यायः

लोमश उवाच
सा तु नाव्याश्रमं चक्रे राजकार्यार्थसिद्धये
संदेशाच्चैव नृपतेः स्वबुद्ध्या चैव भारत १
नानापुष्पफलैर्वृक्षैः कृत्रिमैरुपशोभितम्
नानागुल्मलतोपेतैः स्वादुकामफलप्रदैः २
अतीव रमणीयं तदतीव च मनोहरम्
चक्रे नाव्याश्रमं रम्यमद्भुतोपमदर्शनम् ३
ततो निबध्य तां नावमदूरे काश्यपाश्रमात्
चारयामास पुरुषैर्विहारं तस्य वै मुनेः ४
ततो दुहितरं वेश्या समाधायेतिकृत्यताम्
दृष्ट्वान्तरं काश्यपस्य प्राहिणोद्बुद्धिसंमताम् ५
सा तत्र गत्वा कुशला तपोनित्यस्य संनिधौ
आश्रमं तं समासाद्य ददर्श तमृषेः सुतम् ६
वेश्योवाच
कच्चिन्मुने कुशलं तापसानां कच्चिच्च वो मूलफलं प्रभूतम्

कच्चिद्भवान्रमते चाश्रमेऽस्मिस्त्वां वै द्रष्टुं सांप्रतमागतोऽस्मि ७
कच्चित्तपो वर्धते तापसानां पिता च ते कच्चिदहीनतेजाः
कच्चित्त्वया प्रीयते चैव विप्र कच्चित्स्वाध्यायः क्रियते ऋृश्यशृङ्ग ८
ऋृश्यशृंग उवाच
ऋृद्धो भवाञ्ज्योतिरिव प्रकाशते मन्ये चाहं त्वामभिवादनीयम्
पाद्यं वै ते संप्रदास्यामि कामाद्यथाधर्मं फलमूलानि चैव ९
कौश्यां बृस्यामास्स्व यथोपजोषं कृष्णाजिनेनावृतायां सुखायाम्
क्व चाश्रमस्तव किं नाम चेदं व्रतं ब्रह्मंश्चरसि हि देववत्त्वम् १०
वेश्योवाच
ममाश्रमः काश्यपपुत्र रम्यस्त्रियोजनं शैलमिमं परेण
तत्र स्वधर्मोऽनभिवादनं नो न चोदकं पाद्यमुपस्पृशामः ११
ऋृश्यशृंग उवाच
फलानि पक्वानि ददानि तेऽह भल्लातकान्यामलकानि चैव
परूषकानीङ्गुदधन्वनानि प्रियालानां कामकारं कुरुष्व १२
लोमश उवाच
सा तानि सर्वाणि विसर्जयित्वा भक्षान्महार्हान्प्रददौ ततोऽस्मै
तान्यृश्यशृङ्गस्य महारसानि भृशं सुरूपाणि रुचिं ददुर्हि १३
ददौ च माल्यानि सुगन्धवन्ति चित्राणि वासांसि च भानुमन्ति
पानानि चाग्र्याणि ततो मुमोद चिक्रीड चैव प्रजहास चैव १४
सा कन्दुकेनारमतास्य मूले विभज्यमाना फलिता लतेव
गात्रैश्च गात्राणि निषेवमाणा समाश्लिषच्चासकृदृश्यशृङ्गम् १५
सर्जानशोकांस्तिलकांश्च वृक्षान्प्रपुष्पितानवनाम्यावभज्य
विलज्जमानेव मदाभिभूता प्रलोभयामास सुतं महर्षेः १६
अथर्श्यशृङ्गं विकृतं समीक्ष्य पुनः पुनः पीड्य च कायमस्य
अवेक्षमाणा शनकैर्जगाम कृत्वाग्निहोत्रस्य तदापदेशम् १७
तस्यां गतायां मदनेन मत्तो विचेतनश्चाभवदृश्यशृङ्गः
तामेव भावेन गतेन शून्यो विनिःश्वसन्नार्तरूपो बभूव १८
ततो मुहूर्ताद्धरिपिङ्गलाक्षः प्रवेष्टितो रोमभिरानखाग्रात्
स्वाध्यायवान्वृत्तसमाधियुक्तो विभाण्डकः काश्यपः प्रादुरासीत् १९
सोऽपश्यदासीनमुपेत्य पुत्रं ध्यायन्तमेकं विपरीतचित्तम्

विनिःश्वसन्तं मुहुरूर्ध्वदृष्टिं विभाराडकः पुत्रमुवाच दीनम् २०
न कल्प्यन्ते समिधः किं नु तात कच्चिद्धुतं चाग्निहोत्रं त्वयाद्य
सुनिर्णिक्तं स्रुक्स्रुवं होमधेनुः कच्चित्सवत्सा च कृता त्वयाद्य २१
न वै यथापूर्वमिवासि पुत्र चिन्तापरश्चासि विचेतनश्च
दीनोऽतिमात्रं त्वमिहाद्य किं नु पृच्छामि त्वां क इहाद्यागतोऽभूत् २२
इति श्रीमहाभारते आरगयकपर्वणि एकादशाधिकशततमोऽध्यायः १११

द्वादशाधिकशततमोऽध्यायः

ऋृश्यशृंग उवाच
इहागतो जटिलो ब्रह्मचारी न वै ह्रस्वो नातिदीर्घो मनस्वी
सुवर्णवर्णः कमलायताक्षः सुतः सुराणामिव शोभमानः १
समृद्धरूपः सवितेव दीप्तः सुशुक्लकृष्णाक्षतरश्चकोरैः
नीलाः प्रसन्नाश्च जटाः सुगन्धा हिरगयरज्जुग्रथिताः सुदीर्घाः २
आधाररूपा पुनरस्य कगठे विभ्राजते विद्युदिवान्तरिक्षे
द्वौ चास्य पिगडावधरेण कगठमजातरोमौ सुमनोहरौ च ३
विलग्नमध्यश्च स नाभिदेशे कटिश्च तस्यातिकृतप्रमाणा
तथास्य चीरान्तरिता प्रभाति हिरगमयी मेखला मे यथेयम् ४
अन्यच्च तस्याद्भुतदर्शनीयं विकूजितं पादयोः स्त्रंपभाति
पागयोश्च तद्वत्स्वनवन्निबद्धौ कलापकावक्षमाला यथेयम् ५
विचेष्टमानस्य च तस्य तानि कूजन्ति हंसा सरसीव मत्ताः
चीराणि तस्याद्भुतदर्शनानि नेमानि तद्वन्मम रूपवन्ति ६
वक्त्रं च तस्याद्भुतदर्शनीयं प्रव्याहृतं ह्लादयतीव चेतः
पुंस्कोकिलस्येव च तस्य वाणी तां शृगवतो मे व्यथितोऽन्तरात्मा ७
यथा वनं माधवमासि मध्ये समीरितं श्वसनेनाभिवाति
तथा स वात्युत्तमपुगयगन्धी निषेव्यमाणः पवनेन तात ८
सुसंयताश्चापि जटा विभक्ता द्वैधीकृता भान्ति समा ललाटे
कर्णौ च चित्रैरिव चक्रवालैः समावृतौ तस्य सुरूपवद्भिः ९
तथा फलं वृत्तमथो विचित्रं समाहनत्पाणिना दक्षिणेन
तद्भूमिमासाद्य पुनः पुनश्च समुत्पतत्यद्भुतरूपमुच्चैः १०
तच्चापि हत्वा परिवर्ततेऽसौ वातेरितो वृक्ष इवावघूर्णः

तं प्रेक्ष्य मे पुत्रमिवामराणां प्रीतिः परा तात रतिश्च जाता ११
स मे समाश्लिष्य पुनः शरीरं जटासु गृह्याभ्यवनाम्य वक्त्रम्
वक्त्रेण वक्त्रं प्रणिधाय शब्दं चकार तन्मेऽजनयत्प्रहर्षम् १२
न चापि पाद्यं बहु मन्यतेऽसौ फलानि चेमानि मयाहृतानि
एवंव्रतोऽस्मीति च मामवोचत्फलानि चान्यानि नवान्यदान्मे १३
मयोपयुक्तानि फलानि तानि नेमानि तुल्यानि रसेन तेषाम्
न चापि तेषां त्वगियं यथैषां साराणि नैषामिव सन्ति तेषाम् १४
तोयानि चैवातिरसानि मह्यं प्रादात्स वै पातुमुदाररूपः
पीत्वैव यान्यभ्यधिकः प्रहर्षो ममाभवद्भूश्चलितेव चासीत् १५
इमानि चित्राणि च गन्धवन्ति माल्यानि तस्योद्ग्रथितानि पट्टैः
यानि प्रकीर्येह गतः स्वमेव स आश्रमं तपसा द्योतमानः १६
गतेन तेनास्मि कृतो विचेता गात्रं च मे संपरितप्यतीव
इच्छामि तस्यान्तिकमाशु गन्तुं तं चेह नित्यं परिवर्तमानम् १७
गच्छामि तस्यान्तिकमेव तात का नाम सा व्रतचर्या च तस्य
इच्छाम्यहं चरितुं तेन सार्धं यथा तपः स चरत्युग्रकर्मा १८
इति श्रीमहाभारते आरण्यकपर्वणि द्वादशाधिकशततमोऽध्यायः ११२

## त्रयोदशाधिकशततमोऽध्यायः

विभाण्डक उवाच
रक्षांसि चैतानि चरन्ति पुत्र रूपेण तेनाद्भुतदर्शनेन
अतुल्यरूपाण्यतिघोरवन्ति विघ्नं सदा तपसश्चिन्तयन्ति १
सुरूपरूपाणि च तानि तात प्रलोभयन्ते विविधैरुपायैः
सुखाच्च लोकाच्च निपातयन्ति तान्युग्रकर्माणि मुनीन्वनेषु २
न तानि सेवेत मुनिर्यतात्मा सतां लोकान्प्रार्थयानः कथंचित्
कृत्वा विघ्नं तापसानां रमन्ते पापाचारास्तपसस्तान्यपाप ३
असज्जनेनाचरितानि पुत्र पापान्यपेयानि मधूनि तानि
माल्यानि चैतानि न वै मुनीनां स्मृतानि चित्रोज्ज्वलगन्धवन्ति ४
लोमश उवाच
रक्षांसि तानीति निवार्य पुत्रं विभाण्डकस्तां मृगयाम्बभूव
नासादयामास यदा त्र्यहेण तदा स पर्याववृतेऽश्रमाय ५

यदा पुनः काश्यपो वै जगाम फलान्याहर्तुं विधिना श्रामगेन
तदा पुनर्लोभयितुं जगाम सा वेशयोषा मुनिमृश्यशृङ्गम् ६
दृष्ट्वैव तामृश्यशृङ्गः प्रहृष्टः संभ्रान्तरूपोऽभ्यपतत्तदानीम्
प्रोवाच चैनां भवतोऽश्रमाय गच्छाव यावन्न पिता ममैति ७
ततो राजन्काश्यपस्यैकपुत्रं प्रवेश्य योगेन विमुच्य नावम्
प्रलोभयन्त्यो विविधैरुपायैराजग्मुरङ्गाधिपतेः समीपम् ८
संस्थाप्य तामाश्रमदर्शने तु संतारितां नावमतीव शुभ्राम्
तीरादुपादाय तथैव चक्रे राजाश्रमं नाम वनं विचित्रम् ९
अन्तःपुरे तं तु निवेश्य राजा विभागडकस्यात्मजमेकपुत्रम्
ददर्श देवं सहसा प्रवृष्टमापूर्यमाणं च जगज्जलेन १०
स लोमपादः परिपूर्णकामः सुतां ददावृश्यशृङ्गाय शान्ताम्
क्रोधप्रतीकारकरं च चक्रे गोभिश्च मार्गेष्वभिकर्षणं च ११
विभागडकस्याव्रजतः स राजा पशून्प्रभूतान्पशुपांश्च वीरान्
समादिशत्पुत्रगृद्धी महर्षिर्विभागडकः परिपृच्छेद्यदा वः १२
स वक्तव्यः प्राञ्जलिभिर्भवद्भिः पुत्रस्य ते पशवः कर्षणं च
किं ते प्रियं वै क्रियतां महर्षे दासाः स्म सर्वे तव वाचि बद्धाः १३
अथोपायात्स मुनिश्चगडकोपः स्वमाश्रमं फलमूलानि गृह्य
अन्वेषमागश्च न तत्र पुत्रं ददर्श चुक्रोध ततो भृशं सः १४
ततः स कोपेन विदीर्यमाग आशङ्कमानो नृपतेर्विधानम्
जगाम चम्पां प्रदिधक्षमागास्तमङ्गराजं विषयं च तस्य १५
स वै श्रान्तः क्षुधितः काश्यपस्तान्घोषान्समासादितवान्समृद्धान्
गोपैश्च तैर्विधिवत्पूज्यमानो राजेव तां रात्रिमुवास तत्र १६
संप्राप्य सत्कारमतीव तेभ्यः प्रोवाच कस्य प्रथिताः स्थ सौम्याः
ऊचुस्ततस्तेऽभ्युपगम्य सर्वे धनं तवेदं विहितं सुतस्य १७
देशे तु देशे तु स पूज्यमानस्तांश्चैव शृगवन्मधुरान्प्रलापान्
प्रशान्तभूयिष्ठरजाः प्रहृष्टः समाससादाङ्गपतिं पुरस्थम् १८
संपूजितस्तेन नरर्षभेग ददर्श पुत्रं दिवि देवं यथेन्द्रम्
शान्तां स्नुषां चैव ददर्श तत्र सौदामिनीमुच्चरन्तीं यथैव १९
ग्रामांश्च घोषांश्च सुतं च दृष्ट्वा शान्तां च शान्तोऽस्य परः स कोपः
चकार तस्मै परमं प्रसादं विभागडको भूमिपतेर्नरेन्द्र २०

स तत्र निद्धिप्य सुतं महर्षिरुवाच सूर्याग्निसमप्रभावम्
जाते पुत्रे वनमेवाव्रजेथा राज्ञः प्रियाणयस्य सर्वाणि कृत्वा २१
स तद्वचः कृतवानृश्यशृङ्गो ययौ च यत्रास्य पिता बभूव
शान्ता चैनं पर्यचरद्यथावत्खे रोहिणी सोममिवानुकूला २२
अरुन्धती वा सुभगा वसिष्ठं लोपामुद्रा वापि यथा ह्यगस्त्यम्
नलस्य वा दमयन्ती यथाभूद्यथा शची वज्रधरस्य चैव २३
नाडायनी चेन्द्रसेना यथैव वश्या नित्यं मुद्गलस्याजमीढ
तथा शान्ता ऋृश्यशृङ्गं वनस्थं प्रीत्या युक्ता पर्यचरन्नरेन्द्र २४
तस्याश्रमः पुणय एषो विभाति महाह्रदं शोभयन्पुणयकीर्तेः
अत्र स्नातः कृतकृत्यो विशुद्धस्तीर्थान्यन्यान्यनुसंयाहि राजन् २५
इति श्रीमहाभारते आरणयकपर्वणि त्रयोदशाधिकशततमोऽध्यायः ११३

## चतुर्दशाधिकशततमोऽध्यायः

वैशम्पायन उवाच
ततः प्रयातः कौशिक्याः पाणडवो जनमेजय
आनुपूर्व्येण सर्वाणि जगामायतनान्युत १
स सागरं समासाद्य गङ्गायाः संगमे नृप
नदीशतानां पञ्चानां मध्ये चक्रे समाप्लवम् २
ततः समुद्रतीरेण जगाम वसुधाधिपः
भ्रातृभिः सहितो वीरः कलिङ्गान्प्रति भारत ३
लोमश उवाच
एते कलिङ्गाः कौन्तेय यत्र वैतरणी नदी
यत्रायजत धर्मोऽपि देवाञ्शरणमेत्य वै ४
ऋृषिभिः समुपायुक्तं यज्ञियं गिरिशोभितम्
उत्तरं तीरमेतद्धि सततं द्विजसेवितम् ५
समेन देवयानेन पथा स्वर्गमुपेयुषः
अत्र वै ऋृषयोऽन्येऽपि पुरा क्रतुभिरीजिरे ६
अत्रैव रुद्रो राजेन्द्र पशुमादत्तवान्मखे
रुद्रः पशुं मानवेन्द्र भागोऽयमिति चाब्रवीत् ७
हृते पशौ तदा देवास्तमूचुर्भरतर्षभ

मा परस्वमभिद्रोग्धा मा धर्मान्सकलान्नशीः ८
ततः कल्याणरूपाभिर्वाग्भिस्ते रुद्रमस्तुवन्
इष्ट्या चैनं तर्पयित्वा मानयाञ्चक्रिरे तदा ९
ततः स पशुमुत्सृज्य देवयानेन जग्मिवान्
अत्रानुवंशो रुद्रस्य तं निबोध युधिष्ठिर १०
अयातयामं सर्वेभ्यो भागेभ्यो भागमुत्तमम्
देवाः संकल्पयामासुर्भयाद्रुद्रस्य शाश्वतम् ११
इमां गाथामत्र गायन्नपः स्पृशति यो नरः
देवयानस्तस्य पन्थाश्चक्षुश्चैव प्रकाशते १२
वैशम्पायन उवाच
ततो वैतरणीं सर्वे पाण्डवा द्रौपदी तथा
अवतीर्य महाभाग तर्पयाञ्चक्रिरे पितॄन् १३
युधिष्ठिर उवाच
उपस्पृश्यैव भगवन्नस्यां नद्यां तपोधन
मानुषादस्मि विषयादपेतः पश्य लोमश १४
सर्वाल्लोँकान्प्रपश्यामि प्रसादात्तव सुव्रत
वैखानसानां जपतामेष शब्दो महात्मनाम् १५
लोमश उवाच
त्रिशतं वै सहस्राणि योजनानां युधिष्ठिर
यत्र ध्वनिं शृणोष्येनं तूष्णीमास्स्व विशां पते १६
एतत्स्वयंभुवो राजन्वनं रम्यं प्रकाशते
यत्रायजत कौन्तेय विश्वकर्मा प्रतापवान् १७
यस्मिन्यज्ञे हि भूर्दत्ता कश्यपाय महात्मने
सपर्वतवनोद्देशा दक्षिणा वै स्वयंभुवा १८
अवासीदच्च कौन्तेय दत्तमात्रा मही तदा
उवाच चापि कुपिता लोकेश्वरमिदं प्रभुम् १९
न मां मर्त्याय भगवन्कस्मैचिद्दातुमर्हसि
प्रदानं मोघमेतत्ते यास्याम्येषा रसातलम् २०
विषीदन्तीं तु तां दृष्ट्वा कश्यपो भगवानृषिः
प्रसादयाम्बभूवाथ ततो भूमिं विशां पते २१

ततः प्रसन्ना पृथिवी तपसा तस्य पाण्डव
पुनरुन्मज्ज्य सलिलाद्वेदीरूपा स्थिता बभौ २२
सैषा प्रकाशते राजन्वेदी संस्थानलक्षणा
आरुह्यात्र महाराज वीर्यवान्वै भविष्यसि २३
अहं च ते स्वस्त्ययनं प्रयोक्ष्ये यथा त्वमेनामधिरोक्ष्यसेऽद्य
स्पृष्टा हि मर्त्येन ततः समुद्रमेषा वेदी प्रविशत्याजमीढ २४
अग्निर्मित्रो योनिरापोऽथ देव्यो विष्णो रेतस्त्वममृतस्य नाभिः
एवं ब्रुवन्पाण्डव सत्यवाक्यं वेदीमिमां त्वं तरसाधिरोह २५
वैशम्पायन उवाच
ततः कृतस्वस्त्ययनो महात्मा युधिष्ठिरः सागरगामगच्छत्
कृत्वा च तच्छासनमस्य सर्वं महेन्द्रमासाद्य निशामुवास २६
इति श्रीमहाभारते आरण्यकपर्वणि चतुर्दशाधिकशततमोऽध्यायः ११४

## पञ्चदशाधिकशततमोऽध्यायः

वैशम्पायन उवाच
स तत्र तामुषित्वैकां रजनीं पृथिवीपतिः
तापसानां परं चक्रे सत्कारं भ्रातृभिः सह १
लोमशश्चास्य तान्सर्वानाचख्यौ तत्र तापसान्
भृगूनङ्गिरसश्चैव वासिष्ठानथ काश्यपान् २
तान्समेत्य स राजर्षिरभिवाद्य कृताञ्जलि
रामस्यानुचरं वीरमपृच्छदकृतव्रणम् ३
कदा नु रामो भगवांस्तापसान्दर्शयिष्यति
तेनैवाहं प्रसङ्गेन द्रष्टुमिच्छामि भार्गवम् ४
अकृतव्रण उवाच
आयानेवासि विदितो रामस्य विदितात्मनः
प्रीतिस्त्वयि च रामस्य क्षिप्रं त्वां दर्शयिष्यति ५
चतुर्दशीमष्टमीं च रामं पश्यन्ति तापसाः
अस्यां रात्र्यां व्यतीतायां भवित्री च चतुर्दशी ६
युधिष्ठिर उवाच
भवाननुगतो वीरं जामदग्न्यं महाबलम्

प्रत्यक्षदर्शी सर्वस्य पूर्ववृत्तस्य कर्मणः ७
स भवान्कथयत्वेतद्यथा रामेण निर्जिताः
आहवे क्षत्रियाः सर्वे कथं केन च हेतुना ८
अकृतव्रण उवाच
कन्यकुब्जे महानासीत्पार्थिवः सुमहाबलः
गाधीति विश्रुतो लोके वनवासं जगाम सः ९
वने तु तस्य वसतः कन्या जज्ञेऽप्सरः समा
ऋचीको भार्गवस्तां च वरयामास भारत १०
तमुवाच ततो राजा ब्राह्मणं संशितव्रतम्
उचितं नः कुले किंचित्पूर्वैर्यत्संप्रवर्तितम् ११
एकतः श्यामकर्णानां पाण्डुराणां तरस्विनाम्
सहस्रं वाजिनां शुल्कमिति विद्धि द्विजोत्तम १२
न चापि भगवान्वाच्यो दीयतामिति भार्गव
देया मे दुहिता चेयं त्वद्विधाय महात्मने १३
ऋचीक उवाच
एकतः श्यामकर्णानां पाण्डुराणां तरस्विनाम्
दास्याम्यश्वसहस्रं ते मम भार्या सुतास्तु ते १४
अकृतव्रण उवाच
स तथेति प्रतिज्ञाय राजन्वरुणमब्रवीत्
एकतः श्यामकर्णानां पाण्डुराणां तरस्विनाम्
सहस्रं वाजिनामेकंशुल्कार्थं मे प्रदीयताम् १५
तस्मै प्रादात्सहस्रं वै वाजिनां वरुणस्तदा
तदश्वतीर्थं विख्यातमुत्थिता यत्र ते हयाः १६
गङ्गायां कन्यकुब्जे वै ददौ सत्यवतीं तदा
ततो गाधिः सुतां तस्मै जन्याश्चासन्सुरास्तदा
लब्ध्वा हयसहस्रं तु तांश्च दृष्ट्वा दिवौकसः १७
धर्मेण लब्ध्वा तां भार्यामृचीको द्विजसत्तमः
यथाकामं यथाजोषं तया रेमे सुमध्यया १८
तं विवाहे कृते राजन्सभार्यमवलोककः
आजगाम भृगुश्रेष्ठः पुत्रं दृष्ट्वा ननन्द च १९

भार्यापती तमासीनं गुरुं सुरगणार्चितम्
अर्चित्वा पर्युपासीनौ प्राञ्जली तस्थतुस्तदा २०
ततः स्नुषां स भगवान्प्रहृष्टो भृगुरब्रवीत्
वरं वृणीष्व सुभगे दाता ह्यस्मि तवेप्सितम् २१
सा वै प्रसादयामास तं गुरुं पुत्रकारणात्
आत्मनश्चैव मातुश्च प्रसादं च चकार सः २२
भृगुरुवाच
ऋतौ त्वं चैव माता च स्नाते पुंसवनाय वै
आलिङ्गेतां पृथग्वृक्षौ साश्वत्थं त्वमुदुम्बरम् २३
आलिङ्गने तु ते राजंश्चक्रतुः स्म विपर्ययम्
कदाचिद्भृगुरागच्छत्तं च वेद विपर्ययम् २४
अथोवाच महातेजा भृगुः सत्यवतीं स्नुषाम्
ब्राह्मणः क्षत्रवृत्तिर्वै तव पुत्रो भविष्यति २५
क्षत्रियो ब्राह्मणाचारो मातुस्तव सुतो महान्
भविष्यति महावीर्यः साधूनां मार्गमास्थितः २६
ततः प्रसादयामास श्वशुरं सा पुनः पुनः
न मे पुत्रो भवेदीदृक् कामं पौत्रो भवेदिति २७
एवमस्त्विति सा तेन पाण्डव प्रतिनन्दिता
जमदग्निं ततः पुत्रं सा जज्ञे काल आगते
तेजसा वर्चसा चैव युक्तं भार्गवनन्दनम् २८
स वर्धमानस्तेजस्वी वेदस्याध्ययनेन वै
बहूनृषीन्महातेजाः पाण्डवेयात्यवर्तत २९
तं तु कृत्स्नो धनुर्वेदः प्रत्यभाद्भरतर्षभ
चतुर्विधानि चास्त्राणि भास्करोपमवर्चसम् ३०
इति श्रीमहाभारते आरण्यकपर्वणि पञ्चदशाधिकशततमोऽध्यायः ११५

षोडशाधिकशततमोऽध्यायः

अकृतव्रण उवाच
स वेदाध्ययने युक्तो जमदग्निर्महातपाः
तपस्तेपे ततो देवान्नियमाद्वशमानयत् १

स प्रसेनजितं राजन्नधिगम्य नराधिपम्
रेणुकां वरयामास स च तस्मै ददौ नृपः २
रेणुकां त्वथ संप्राप्य भार्यां भार्गवनन्दनः
आश्रमस्थस्तया सार्धं तपस्तेपेऽनुकूलया ३
तस्याः कुमाराश्चत्वारो जज्ञिरे रामपञ्चमाः
सर्वेषामजघन्यस्तु राम आसीज्जघन्यजः ४
फलाहारेषु सर्वेषु गतेष्वथ सुतेषु वै
रेणुका स्नातुमगमत्कदाचिन्नियतव्रता ५
सा तु चित्ररथं नाम मार्तिकावतकं नृपम्
ददर्श रेणुका राजन्नागच्छन्ती यदृच्छया ६
क्रीडन्तं सलिले दृष्ट्वा सभार्यं पद्ममालिनम्
ऋद्धिमन्तं ततस्तस्य स्पृहयामास रेणुका ७
व्यभिचारात्तु सा तस्मात्क्लिन्नाम्भसि विचेतना
प्रविवेशाश्रमं त्रस्ता तां वै भर्तान्वबुध्यत ८
स तां दृष्ट्वा च्युतां धैर्याद्ब्राह्म्या लक्ष्म्या विवर्जिताम्
धिक्शब्देन महातेजा गर्हयामास वीर्यवान् ९
ततो ज्येष्ठो जामदग्न्यो रुमगवान्नाम नामतः
आजगाम सुषेणश्च वसुर्विश्वावसुस्तथा १०
तानानुपूर्व्याद्भगवान्वधे मातुरचोदयत्
न च ते जातसंमोहाः किंचिदूचुर्विचेतसः ११
ततः शशाप तान्कोपात्ते शप्ताश्चेतनां जहुः
मृगपक्षिसधर्माणः क्षिप्रमासञ्जडोपमाः १२
ततो रामोऽभ्यगात्पश्चादाश्रमं परवीरहा
तमुवाच महामन्युर्जमदग्निर्महातपाः १३
जहीमां मातरं पापां मा च पुत्र व्यथां कृथाः
तत आदाय परशुं रामो मातुः शिरोऽहरत् १४
ततस्तस्य महाराज जमदग्नेर्महात्मनः
कोपो अगच्छत्सहसा प्रसन्नश्चाब्रवीदिदम् १५
ममेदं वचनात्तात कृतं ते कर्म दुष्करम्
वृणीष्व कामान्धर्मज्ञ यावतो वाञ्छसे हृदा १६

स वव्रे मातुरुत्थानमस्मृतिं च वधस्य वै
पापेन तेन चास्पर्शं भ्रातॄणां प्रकृतिं तथा १७
अप्रतिद्वन्द्वतां युद्धे दीर्घमायुश्च भारत
ददौ च सर्वान्कामांस्ताञ्जमदग्निर्महातपाः १८
कदाचित्तु तथैवास्य विनिष्क्रान्ताः सुताः प्रभो
अथानूपपतिर्वीरः कार्तवीर्योऽभ्यवर्तत १९
तमाश्रमपदं प्राप्तमृषेर्भार्या समर्चयत्
स युद्धमदसंमत्तो नाभ्यनन्दत्तथार्चनम् २०
प्रमथ्य चाश्रमात्तस्माद्धोमधेन्वास्तदा बलात्
जहार वत्सं क्रोशन्त्या बभञ्ज च महाद्रुमान् २१
आगताय च रामाय तदाचष्ट पिता स्वयम्
गां च रोरूयतीं दृष्ट्वा कोपो रामं समाविशत् २२
स मन्युवशमापन्नः कार्तवीर्यमुपाद्रवत्
तस्याथ युधि विक्रम्य भार्गवः परवीरहा २३
चिच्छेद निशितैर्भल्लैर्बाहून्परिघसंनिभान्
सहस्रसंमितान्राजन्प्रगृह्य रुचिरं धनुः २४
अर्जुनस्याथ दायादा रामेण कृतमन्यवः
आश्रमस्थं विना रामं जमदग्निमुपाद्रवन् २५
ते तं जघ्नुर्महावीर्यमयुध्यन्तं तपस्विनम्
असकृद्राम रामेति विक्रोशन्तमनाथवत् २६
कार्तवीर्यस्य पुत्रास्तु जमदग्निं युधिष्ठिर
घातयित्वा शरैर्जग्मुर्यथागतमरिन्दमाः २७
अपक्रान्तेषु चैतेषु जमदग्नौ तथागते
समित्पाणिरुपागच्छदाश्रमं भृगुनन्दनः २८
स दृष्ट्वा पितरं वीरस्तथा मृत्युवशं गतम्
अनर्हन्तं तथा भूतं विललाप सुदुःखितः २९
इति श्रीमहाभारते आरण्यकपर्वणि षोडशाधिकशततमोऽध्यायः ११६

सप्तदशाधिकशततमोऽध्यायः

राम उवाच

ममापराधात्तैः क्षुद्रैर्हतस्त्वं तात बालिशैः
कार्तवीर्यस्य दायादैर्वने मृग इवेषुभिः १
धर्मज्ञस्य कथं तात वर्तमानस्य सत्पथे
मृत्युरेवंविधो युक्तः सर्वभूतेष्वनागसः २
किं नु तैर्न कृतं पापं यैर्भवांस्तपसि स्थितः
अयुध्यमानो वृद्धः सन्हतः शरशतैः शितैः ३
किं नु ते तत्र वक्ष्यन्ति सचिवेषु सुहृत्सु च
अयुध्यमानं धर्मज्ञमेकं हत्वानपत्रपाः ४
अकृतव्रण उवाच
विलप्यैवं स करुणं बहु नानाविधं नृप
प्रेतकार्याणि सर्वाणि पितुश्चक्रे महातपाः ५
ददाह पितरं चाग्नौ रामः परपुरञ्जयः
प्रतिजज्ञे वधं चापि सर्वक्षत्रस्य भारत ६
संक्रुद्धोऽतिबलः शूरः शस्त्रमादाय वीर्यवान्
जघ्निवान्कार्तवीर्यस्य सुतानेकोऽन्तकोपमः ७
तेषां चानुगता ये च क्षत्रियाः क्षत्रियर्षभ
तांश्च सर्वानवामृद्नाद्रामः प्रहरतां वरः ८
त्रिः सप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां प्रभुः
समन्तपञ्चके पञ्च चकार रुधिरह्रदान् ९
स तेषु तर्पयामास पितॄन्भृगुकुलोद्वहः
साक्षाद्ददर्श चर्चीकं स च रामं न्यवारयत् १०
ततो यज्ञेन महता जामदग्न्यः प्रतापवान्
तर्पयामास देवेन्द्रमृत्विग्भ्यश्च महीं ददौ ११
वेदीं चाप्यददद्धैमीं कश्यपाय महात्मने
दशव्यामायतां कृत्वा नवोत्सेधां विशां पते १२
तां कश्यपस्यानुमते ब्राह्मणाः खण्डशस्तदा
व्यभजंस्तेन ते राजन्प्रख्याताः खाण्डवायनाः १३
स प्रदाय महीं तस्मै कश्यपाय महात्मने
अस्मिन्महेन्द्रे शैलेन्द्रे वसत्यमितविक्रमः १४
एवं वैरमभूत्तस्य क्षत्रियैर्लोकवासिभिः

पृथिवी चापि विजिता रामेणामिततेजसा १५
वैशम्पायन उवाच
ततश्चतुर्दशीं रामः समयेन महामनाः
दर्शयामास तान्विप्रान्धर्मराजं च सानुजम् १६
स तमानर्च राजेन्द्रो भ्रातृभिः सहितः प्रभुः
द्विजानां च परां पूजां चक्रे नृपतिसत्तमः १७
अर्चयित्वा जामदग्न्यं पूजितस्तेन चाभिभूः
महेन्द्र उष्य तां रात्रिं प्रययौ दक्षिणामुखः १८
इति श्रीमहाभारते आरण्यकपर्वणि सप्तदशाधिकशततमोऽध्यायः ११७

## अष्टादशाधिकशततमोऽध्यायः

वैशम्पायन उवाच
गच्छन्स तीर्थानि महानुभावः पुण्यानि रम्याणि ददर्श राजा
सर्वाणि विप्रैरुपशोभितानि क्वचित्क्वचिद्भारत सागरस्य १
स वृत्तवांस्तेषु कृताभिषेकः सहानुजः पार्थिवपुत्रपौत्रः
समुद्रगां पुण्यतमां प्रशस्तां जगाम पारिक्षित पाण्डुपुत्रः २
तत्रापि चाप्लुत्य महानुभावः संतर्पयामास पितॄन्सुरांश्च
द्विजातिमुख्येषु धनं विसृज्य गोदावरीं सागरगामगच्छत् ३
ततो विपाप्मा द्रविडेषु राजन्समुद्रमासाद्य च लोकपुण्यम्
अगस्त्यतीर्थं च पवित्रपुण्यं नारीतीर्थान्यथ वीरो ददर्श ४
तत्रार्जुनस्याग्र्यधनुर्धरस्य निशम्य तत्कर्म परैरसह्यम्
संपूज्यमानः परमर्षिसंघैः परां मुदं पाण्डुसुतः स लेभे ५
स तेषु तीर्थेष्वभिषिक्तगात्रः कृष्णासहायः सहितोऽनुजैश्च
संपूजयन्विक्रममर्जुनस्य रेमे महीपालपतिः पृथिव्याम् ६
ततः सहस्राणि गवां प्रदाय तीर्थेषु तेष्वम्बुधरोत्तमस्य
हृष्टः सह भ्रातृभिरर्जुनस्य संकीर्तयामास गवां प्रदानम् ७
स तानि तीर्थानि च सागरस्य पुण्यानि चान्यानि बहूनि राजन्
क्रमेण गच्छन्परिपूर्णकामः शूर्पारकं पुण्यतमं ददर्श ८
तत्रोदधेः कंचिदतीत्य देशं ख्यातं पृथिव्यां वनमाससाद
तप्तं सुरैर्यत्र तपः पुरस्तादिष्टं तथा पुण्यतमैर्नरेन्द्रैः ९

स तत्र तामग्र्यधनुर्धरस्य वेदीं ददर्शायतपीनबाहुः
ऋचीकपुत्रस्य तपस्विसंघैः समावृतां पुगयकृदर्चनीयाम् १०
ततो वसूनां वसुधाधिपः स मरुद्गणानां च तथाश्विनोश्च
वैवस्वतादित्यधनेश्वराणामिन्द्रस्य विष्णोः सवितुर्विभोश्च ११
भगस्य चन्द्रस्य दिवाकरस्य पतेरपां साध्यगणस्य चैव
धातुः पितॄणां च तथा महात्मा रुद्रस्य राजन्सगणस्य चैव १२
सरस्वत्याः सिद्धगणस्य चैव पूष्णश्च ये चाप्यमरास्तथान्ये
पुगयानि चाप्यायतनानि तेषां ददर्श राजा सुमनोहराणि १३
तेषूपवासान्विविधानुपोष्य दत्त्वा च रत्नानि महाधनानि
तीर्थेषु सर्वेषु परिप्लुताङ्गः पुनः स शूर्पारकमाजगाम १४
स तेन तीर्थेन तु सागरस्य पुनः प्रयातः सह सोदरीयैः
द्विजैः पृथिव्यां प्रथितं महद्भिस्तीर्थं प्रभासं समुपाजगाम १५
तत्राभिषिक्तः पृथुलोहिताक्षः सहानुजैर्देवगणान्पितॄंश्च
संतर्पयामास तथैव कृष्णा ते चापि विप्राः सह लोमशेन १६
स द्वादशाहं जलवायुभक्षः कुर्वन्क्षपाहःसु तदाभिषेकम्
समन्ततोऽग्नीनुपदीपयित्वा तेपे तपो धर्मभृतां वरिष्ठः १७
तमुग्रमास्थाय तपश्चरन्तं शुश्राव रामश्च जनार्दनश्च
तौ सर्ववृष्णिप्रवरौ ससैन्यौ युधिष्ठिरं जग्मतुराजमीढम् १८
ते वृष्णयः पाराडुसुतान्समीक्ष्य भूमौ शयानान्मलदिग्धगात्रान्
अनर्हतीं द्रौपदीं चापि दृष्ट्वा सुदुःखिताश्चुक्रुशुरार्तनादम् १९
ततः स रामं च जनार्दनं च कार्ष्णिं च साम्बं च शिनेश्च पौत्रम्
अन्यांश्च वृष्णीनुपगम्य पूजां चक्रे यथाधर्ममदीनसत्त्वः २०
ते चापि सर्वान्प्रतिपूज्य पार्थांस्तैः सत्कृताः पाराडुसुतैस्तथैव
युधिष्ठिरं संपरिवार्य राजन्नुपाविशन्देवगणा यथेन्द्रम् २१
तेषां स सर्वं चरितं परेषां वने च वासं परमप्रतीतः
अस्त्रार्थमिन्द्रस्य गतं च पार्थं कृष्णं शशंसामरराजपुत्रम् २२
श्रुत्वा तु ते तस्य वचः प्रतीतास्तांश्चापि दृष्ट्वा सुकृशानतीव
नेत्रोद्भवं संमुमुचुर्दशार्हा दुःखार्तिजं वारि महानुभावाः २३
इति श्रीमहाभारते आरगयकपर्वणि अष्टादशाधिकशततमोऽध्यायः ११८

## एकोनविंशत्यधिकशततमोऽध्यायः

जनमेजय उवाच
प्रभासतीर्थं संप्राप्य वृष्णयः पाण्डवास्तथा
किमकुर्वन्कथाश्चैषां कास्तत्रासंस्तपोधन १
ते हि सर्वे महात्मानः सर्वशास्त्रविशारदाः
वृष्णयः पाण्डवाश्चैव सुहृदश्च परस्परम् २
वैशम्पायन उवाच
प्रभासतीर्थं संप्राप्य पुण्यं तीर्थं महोदधेः
वृष्णयः पाण्डवान्वीरान्परिवार्योपतस्थिरे ३
ततो गोक्षीरकुन्देन्दुमृणालरजतप्रभः
वनमाली हली रामो बभाषे पुष्करेक्षणम् ४
न कृष्ण धर्मश्चरितो भवाय जन्तोरधर्मश्च पराभवाय
युधिष्ठिरो यत्र जटी महात्मा वनाश्रयः क्लिश्यति चीरवासाः ५
दुर्योधनश्चापि महीं प्रशास्ति न चास्य भूमिर्विवरं ददाति
धर्मादधर्मश्चरितो गरीयानितीव मन्येत नरोऽल्पबुद्धिः ६
दुर्योधने चापि विवर्धमाने युधिष्ठिरे चासुख आत्तराज्ये
किं न्वद्य कर्तव्यमिति प्रजाभिः शंका मिथः संजनिता नराणाम् ७
अयं हि धर्मप्रभवो नरेन्द्रो धर्मे रतः सत्यधृतिः प्रदाता
चलेद्धि राज्याच्च सुखाच्च पार्थो धर्मादपेतश्च कथं विवर्धेत् ८
कथं नु भीष्मश्च कृपश्च विप्रो द्रोणश्च राजा च कुलस्य वृद्धः
प्रव्राज्य पार्थान्सुखमाप्नुवन्ति धिक्पापबुद्धीन्भरतप्रधानान् ९
किं नाम वक्ष्यत्यवनिप्रधानः पितॄन्समागम्य परत्र पापः
पुत्रेषु सम्यक्चरितं मयेति पुत्रानपापानवरोप्य राज्यात् १०
नासौ धिया संप्रतिपश्यति स्म किं नाम कृत्वाहमचक्षुरेवम्
जातः पृथिव्यामिति पार्थिवेषु प्रव्राज्य कौन्तेयमथापि राज्यात् ११
नूनं समृद्धान्पितृलोकभूमौ चामीकराभान्क्षितिजान्प्रफुल्लान्
विचित्रवीर्यस्य सुतः सपुत्रः कृत्वा नृशंसं बत पश्यति स्म १२
व्यूढोत्तरांसान्पृथुलोहिताक्षान्नेमान्स्म पृच्छन्स शृणोति नूनम्
प्रस्थापयद्यत्स वनं ह्यशंको युधिष्ठिरं सानुजमात्तशस्त्रम् १३
योऽय परेषां पृतनां समृद्धां निरायुधो दीर्घभुजो निहन्यात्

श्रुत्वैव शब्दं हि वृकोदरस्य मुञ्चन्ति सैन्यानि शकृत्समूत्रम् १४
स क्षुत्पिपासाध्वकृशस्तरस्वी समेत्य नानायुधबाणपाणिः
वने स्मरन्वासमिमं सुघोरं शेषं न कुर्यादिति निश्चितं मे १५
न ह्यस्य वीर्येण बलेन कश्चित्समः पृथिव्यां भविता नरेषु
शीतोष्णवातातपकर्शिताङ्गो न शेषमाजावसुहृत्सु कुर्यात् १६
प्राच्यां नृपानेकरथेन जित्वा वृकोदरः सानुचरान्रणेषु
स्वस्त्यागमद्योऽतिरथस्तरस्वी सोऽय वने क्लिश्यति चीरवासाः १७
यो दन्तकूरे व्यजयन्नृदेवान्समागतान्दाक्षिणात्यान्महीपान्
तं पश्यतेमं सहदेवमद्य तपस्विनं तापसवेषरूपम् १८
यः पार्थिवानेकरथेन वीरो दिशं प्रतीचीं प्रति युद्धशौगडः
सोऽय वने मूलफलेन जीवञ्जटी चरत्यद्य मलाचिताङ्गः १९
सत्रे समृद्धेऽतिरथस्य राज्ञो वेदीतलादुत्पतिता सुता या
सेयं वने वासमिमं सुदुःखं कथं सहत्यद्य सती सुखार्हा २०
त्रिवर्गमुख्यस्य समीरणस्य देवेश्वरस्याप्यथ वाश्विनोश्च
एषां सुराणां तनयाः कथं नु वने चरन्त्यल्पसुखाः सुखार्हाः २१
जिते हि धर्मस्य सुते सभार्ये सभ्रातृके सानुचरे निरस्ते
दुर्योधने चापि विवर्धमाने कथं न सीदत्यवनिः सशैला २२
इति श्रीमहाभारते आरगयकपर्वणि एकोनविंशत्यधिकशततमोऽध्यायः ११९

## विंशत्यधिकशततमोऽध्यायः

सात्यकिरुवाच
न राम कालः परिदेवनाय यदुत्तरं तत्र तदेव सर्वे
समाचरामो ह्यनतीतकालं युधिष्ठिरो यद्यपि नाह किंचित् १
ये नाथवन्तो हि भवन्ति लोके ते नात्मना कर्म समारभन्ते
तेषां तु कार्येषु भवन्ति नाथाः शैब्यादयो राम यथा ययातेः २
येषां तथा राम समारभन्ते कार्याणि नाथाः स्वमतेन लोके
ते नाथवन्तः पुरुषप्रवीरा नानाथवत्कृच्छ्रमवाप्नुवन्ति ३
कस्मादयं रामजनार्दनौ च प्रद्युम्नसाम्बौ च मया समेतौ
वसत्यरगये सह सोदरीयैस्त्रैलोक्यनाथानधिगम्य नाथान् ४
निर्यातु साध्वद्य दशार्हसेना प्रभूतनानायुधचित्रवर्मा

यमक्षयं गच्छतु धार्तराष्ट्रः सबान्धवो वृष्णिबलाभिभूतः ५
त्वं ह्येव कोपात्पृथिवीमपीमां संवेष्टयेस्तिष्ठतु शार्ङ्गधन्वा
स धार्तराष्ट्रं जहि सानुबन्धं वृत्रं यथा देवपतिर्महेन्द्रः ६
भ्राता च मे यश्च सखा गुरुश्च जनार्दनस्यात्मसमश्च पार्थः
यदर्थमभ्युद्यतमुत्तमं तत्करोति कर्माग्र्यमपारणीयम् ७
तस्यास्त्रवर्षाण्यहमुत्तमास्त्रैर्विहत्य सर्वाणि रणेऽभिभूय
कायाच्छिरः सर्पविषाग्निकल्पैः शरोत्तमैरुन्मथितास्मि राम ८
खड्गेन चाहं निशितेन संख्ये कायाच्छिरस्तस्य बलात्प्रमथ्य
ततोऽस्य सर्वाननुगान्हनिष्ये दुर्योधनं चापि कुरूंश्च सर्वान् ९
आत्तायुधं मामिह रौहिणेय पश्यन्तु भौमा युधि जातहर्षाः
निघ्नन्तमेकं कुरुयोधमुख्यान्काले महाकक्षमिवान्तकाग्निः १०
प्रद्युम्नमुक्तान्निशितान्न शक्ताः सोढुं कृपद्रोणविकर्णकर्णाः
जानामि वीर्यं च तवात्मजस्य कार्ष्णिर्भवत्येष यथा रणस्थः ११
साम्बः ससूतं सरथं भुजाभ्यां दुःशासनं शास्तु बलात्प्रमथ्य
न विद्यते जाम्बवतीसुतस्य रणेऽविषह्यं हि रणोत्कटस्य १२
एतेन बालेन हि शम्बरस्य दैत्यस्य सैन्यं सहसा प्रणुन्नम्
वृत्तोरुरत्यायतपीनबाहुरेतेन संख्ये निहतोऽश्वचक्रः
को नाम साम्बस्य रणे मनुष्यो गत्वान्तरं वै भुजयोर्धरेत १३
यथा प्रविश्यान्तरमन्तकस्य काले मनुष्यो न विनिष्क्रमेत
तथा प्रविश्यान्तरमस्य संख्ये को नाम जीवन्पुनराव्रजेत १४
द्रोणं च भीष्मं च महारथौ तौ सुतैर्वृतं चाप्यथ सोमदत्तम्
सर्वाणि सैन्यानि च वासुदेवः प्रधक्ष्यते सायकवह्निजालैः १५
किं नाम लोकेष्वविषह्यमस्ति कृष्णस्य सर्वेषु सदैवतेषु
आत्तायुधस्योत्तमबाणपाणेश्चक्रायुधस्याप्रतिमस्य युद्धे १६
ततोऽनिरुद्धोऽप्यसिचर्मपाणिर्महीमिमां धार्तराष्ट्रैर्विसंज्ञैः
हृतोत्तमाङ्गैर्निहतैः करोतु कीर्णां कुशैर्वेदिमिवाध्वरेषु १७
गदोल्मुकौ बाहुकभानुनीथाः शूरश्च संख्ये निशठः कुमारः
रणोत्कटौ सारणचारुदेष्णौ कुलोचितं विप्रथयन्तु कर्म १८
सवृष्णिभोजान्धकयोधमुख्या समागता क्षत्रियशूरसेना
हत्वा रणे तान्धृतराष्ट्रपुत्राँल्लोके यशः स्फीतमुपाकरोतु १९

ततोऽभिमन्युः पृथिवीं प्रशास्तु यावद्व्रतं धर्मभृतां वरिष्ठः
युधिष्ठिरः पारयते महात्मा द्यूते यथोक्तं कुरुसत्तमेन २०
अस्मत्प्रमुक्तैर्विशिखैर्जितारिस्ततो महीं भोक्ष्यति धर्मराजः
निर्धार्तराष्ट्रां हतसूतपुत्रामेतद्धि नः कृत्यतमं यशस्यम् २१
वासुदेव उवाच
असंशयं माधव सत्यमेतद्गृह्णीम ते वाक्यमदीनसत्त्व
स्वाभ्यां भुजाभ्यामजितां तु भूमिं नेच्छेत्कुरूणामृषभः कथंचित् २२
न ह्येष कामान्न भयान्न लोभाद्युधिष्ठिरो जातु जह्यात्स्वधर्मम्
भीमार्जुनौ चातिरथौ यमौ वा तथैव कृष्णा द्रुपदात्मजेयम् २३
उभौ हि युद्धेऽप्रतिमौ पृथिव्यां वृकोदरश्चैव धनञ्जयश्च
कस्मान्न कृत्स्नां पृथिवीं प्रशासेन्माद्रीसुताभ्यां च पुरस्कृतोऽयम् २४
यदा तु पाञ्चालपतिर्महात्मा सकेकयश्चेदिपतिर्वयं च
योत्स्याम विक्रम्य परांस्तदा वै सुयोधनस्त्यक्ष्यति जीवलोकम् २५
युधिष्ठिर उवाच
नैतच्चित्रं माधव यद्ब्रवीषि सत्यं तु मे रक्ष्यतमं न राज्यम्
कृष्णस्तु मां वेद यथावदेकः कृष्णं च वेदाहमथो यथावत् २६
यदैव कालं पुरुषप्रवीरो वेत्स्यत्ययं माधव विक्रमस्य
तदा रणे त्वं च शिनिप्रवीर सुयोधनं जेष्यसि केशवश्च २७
प्रतिप्रयान्त्वद्य दशार्हवीरा दृढोऽस्मि नाथैर्नरलोकनाथैः
धर्मेऽप्रमादं कुरुताप्रमेया द्रष्टास्मि भूयः सुखिनः समेतान् २८
वैशम्पायन उवाच
तेऽन्योन्यमामन्त्र्य तथाभिवाद्य वृद्धान्परिष्वज्य शिशूंश्च सर्वान्
यदुप्रवीराः स्वगृहाणि जग्मू राजापि तीर्थान्यनुसंचचार २९
विसृज्य कृष्णं त्वथ धर्मराजो विदर्भराजोपचितां सुतीर्थाम्
सुतेन सोमेन विमिश्रितोयां ततः पयोष्णीं प्रति स ह्युवास ३०
इति श्रीमहाभारते आरगयकपर्वणि विंशत्यधिकशततमोऽध्यायः १२०

## एकविंशत्यधिकशततमोऽध्यायः

लोमश उवाच
नृगेण यजमानेन सोमेनेह पुरन्दरः

तर्पितः श्रूयते राजन्स तृप्तो मदमभ्यगात् १
इह देवैः सहेन्द्रैर्हि प्रजापतिभिरेव च
इष्टं बहुविधैर्यज्ञैर्महद्भिर्भूरिदक्षिणैः २
आमूर्तरयसश्चेह राजा वज्रधरं प्रभुम्
तर्पयामास सोमेन हयमेधेषु सप्तसु ३
तस्य सप्तसु यज्ञेषु सर्वमासीद्धिरण्मयम्
वानस्पत्यं च भौमं च यद्द्रव्यं नियतं मखे ४
तेष्वेव चास्य यज्ञेषु प्रयोगाः सप्त विश्रुताः
सप्तैकैकस्य यूपस्य चषालाश्चोपरि स्थिताः ५
तस्य स्म यूपान्यज्ञेषु भ्राजमानान्हिरण्मयान्
स्वयमुत्थापयामासुर्देवाः सेन्द्रा युधिष्ठिर ६
तेषु तस्य मखाग्र्येषु गयस्य पृथिवीपतेः
अमाद्यदिन्द्रः सोमेन दक्षिणाभिर्द्विजातयः ७
सिकता वा यथा लोके यथा वा दिवि तारकाः
यथा वा वर्षतो धारा असंख्येयाश्च केनचित् ८
तथैव तदसंख्येयं धनं यत्प्रददौ गयः
सदस्येभ्यो महाराज तेषु यज्ञेषु सप्तसु ९
भवेत्संख्येयमेतद्वै यदेतत्परिकीर्तिकम्
न सा शक्या तु संख्यातुं दक्षिणा दक्षिणावतः १०
हिरण्मयीभिर्गोभिश्च कृताभिर्विश्वकर्मणा
ब्राह्मणांस्तर्पयामास नानादिग्भ्यः समागतान् ११
अल्पावशेषा पृथिवी चैत्यैरासीन्महात्मनः
गयस्य यजमानस्य तत्र तत्र विशां पते १२
स लोकान्प्राप्तवानैन्द्रान्कर्मणा तेन भारत
सलोकतां तस्य गच्छेत्पयोष्ण्यां य उपस्पृशेत् १३
तस्मात्त्वमत्र राजेन्द्र भ्रातृभिः सहितोऽनघ
उपस्पृश्य महीपाल धूतपाप्मा भविष्यसि १४
वैशम्पायन उवाच
स पयोष्ण्यां नरश्रेष्ठः स्नात्वा वै भ्रातृभिः सह
वैडूर्यपर्वतं चैव नर्मदां च महानदीम्

समाजगाम तेजस्वी भ्रातृभिः सहितोऽनघः १५
ततोऽस्य सर्वाण्याचख्यौ लोमशो भगवानृषिः
तीर्थानि रमणीयानि तत्र तत्र विशां पते १६
यथायोगं यथाप्रीति प्रययौ भ्रातृभिः सह
ददमानोऽसकृद्वित्तं ब्राह्मणेभ्यः सहस्रशः १७
लोमश उवाच
देवानामेति कौन्तेय तथा राज्ञां सलोकताम्
वैडूर्यपर्वतं दृष्ट्वा नर्मदामवतीर्य च १८
संधिरेष नरश्रेष्ठ त्रेताया द्वापरस्य च
एतमासाद्य कौन्तेय सर्वपापैः प्रमुच्यते १९
एष शर्यातियज्ञस्य देशस्तात प्रकाशते
साक्षाद्यत्रापिबत्सोममश्विभ्यां सह कौशिकः २०
चुकोप भार्गवश्चापि महेन्द्रस्य महातपाः
संस्तम्भयामास च तं वासवं च्यवनः प्रभुः
सुकन्यां चापि भार्यां स राजपुत्रीमवाप्तवान् २१
युधिष्ठिर उवाच
कथं विष्टम्भितस्तेन भगवान्पाकशासनः
किमर्थं भार्गवश्चापि कोपं चक्रे महातपाः २२
नासत्यौ च कथं ब्रह्मन्कृतवान्सोमपीथिनौ
एतत्सर्वं यथावृत्तमाख्यातु भगवान्मम २३
इति श्रीमहाभारते आरण्यकपर्वणि एकविंशत्यधिकशततमोऽध्यायः १२१

## द्वाविंशत्यधिकशततमोऽध्यायः

लोमश उवाच
भृगोर्महर्षेः पुत्रोऽभूच्च्यवनो नाम भार्गवः
समीपे सरसः सोऽस्य तपस्तेपे महाद्युतिः १
स्थाणुभूतो महातेजा वीरस्थानेन पाण्डव
अतिष्ठत्सुबहून्कालानेकदेशे विशां पते २
स वल्मीकोऽभवदृषिर्लताभिरभिसंवृत
कालेन महता राजन्समाकीर्णः पिपीलिकैः ३

तथा स संवृतो धीमान्मृत्पिराड इव सर्वशः
तप्यति स्म तपो राजन्वल्मीकेन समावृतः ४
अथ दीर्घस्य कालस्य शर्यातिर्नाम पार्थिवः
आजगाम सरो रम्यं विहर्तुमिदमुत्तमम् ५
तस्य स्त्रीणां सहस्राणि चत्वार्यासन्परिग्रहः
एकैव च सुता शुभ्रा सुकन्या नाम भारत ६
सा सखीभिः परिवृता सर्वाभरणभूषिता
चङ्क्रम्यमाणा वल्मीकं भार्गवस्य समासदत् ७
सा चैव सुदती तत्र पश्यमाना मनोरमान्
वनस्पतीन्विचिन्वन्ती विजहार सखीवृता ८
रूपेण वयसा चैव मदनेन मदेन च
बभञ्ज वनवृक्षाणां शाखाः परमपुष्पिताः ९
तां सखीरहितामेकामेकवस्त्रामलंकृताम्
ददर्श भार्गवो धीमांश्चरन्तीमिव विद्युतम् १०
तां पश्यमानो विजने स रेमे परमद्युतिः
क्षामकराठश्च ब्रह्मर्षिस्तपोबलसमन्वितः
तामाबभाषे कल्याणीं सा चास्य न शृणोति वै ११
ततः सुकन्या वल्मीके दृष्ट्वा भार्गवचक्षुषी
कौतूहलात्कराटकेन बुद्धिमोहबलात्कृता १२
किं नु खल्विदमित्युक्त्वा निर्बिभेदास्य लोचने
अक्रुध्यत्स तया विद्धे नेत्रे परममन्युमान्
ततः शर्यातिसैन्यस्य शकृन्मूत्रं समावृणोत् १३
ततो रुद्धे शकृन्मूत्रे सैन्यमानाहदुःखितम्
तथागतमभिप्रेक्ष्य पर्यपृच्छत्स पार्थिवः १४
तपोनित्यस्य वृद्धस्य रोषणस्य विशेषतः
केनापकृतमद्येह भार्गवस्य महात्मनः
ज्ञातं वा यदि वाज्ञातं तदृतं ब्रूत माचिरम् १५
तमूचुः सैनिकाः सर्वे न विद्मोऽपकृतं वयम्
सर्वोपायैर्यथाकामं भवांस्तदधिगच्छतु १६
ततः स पृथिवीपालः साम्ना चोग्रेण च स्वयम्

पर्यपृच्छत्सुहृद्वर्गं प्रत्यजानन्न चैव ते १७
आनाहार्तं ततो दृष्ट्वा तत्सैन्यमसुखार्दितम्
पितरं दुःखितं चापि सुकन्येदमथाब्रवीत् १८
मयाटन्त्येह वल्मीके दृष्टं सत्त्वमभिज्वलत्
खद्योतवदभिज्ञातं तन्मया विद्धमन्तिकात् १९
एतच्छ्रुत्वा तु शर्यातिर्वल्मीकं तूर्णमाद्रवत्
तत्रापश्यत्तपोवृद्धं वयोवृद्धं च भार्गवम् २०
अयाचदथ सैन्यार्थं प्राञ्जलि पृथिवीपतिः
अज्ञानाद्बालया यत्ते कृतं तत्क्षन्तुमर्हसि २१
ततोऽब्रवीन्महीपालं च्यवनो भार्गवस्तदा
रूपौदार्यसमायुक्तां लोभमोहबलात्कृताम् २२
तामेव प्रतिगृह्याहं राजन्दुहितरं तव
क्षमिष्यामि महीपाल सत्यमेतद्ब्रवीमि ते २३
ऋषेर्वचनमाज्ञाय शर्यातिरविचारयन्
ददौ दुहितरं तस्मै च्यवनाय महात्मने २४
प्रतिगृह्य च तां कन्यां च्यवनः प्रससाद ह
प्राप्तप्रसादो राजा स ससैन्यः पुनराव्रजत् २५
सुकन्यापि पतिं लब्ध्वा तपस्विनमनिन्दिता
नित्यं पर्यचरत्प्रीत्या तपसा नियमेन च २६
अग्नीनामतिथीनां च शुश्रूषुरनसूयिका
समाराधयत क्षिप्रं च्यवनं सा शुभानना २७
इति श्रीमहाभारते आरगयकपर्वणि द्वाविंशत्यधिकशततमोऽध्यायः १२२

## त्रयोविंशत्यधिकशततमोऽध्यायः

लोमश उवाच
कस्यचित्त्वथ कालस्य सुराणामश्विनौ नृप
कृताभिषेकां विवृतां सुकन्यां तामपश्यताम् १
तां दृष्ट्वा दर्शनीयाङ्गीं देवराजसुतामिव
ऊचतुः समभिद्रुत्य नासत्यावश्विनाविदम् २
कस्य त्वमसि वामोरु किं वने वै करोषि च

इच्छाव भद्रे ज्ञातुं त्वां तत्त्वमाख्याहि शोभने ३
ततः सुकन्या संवीता तावुवाच सुरोत्तमौ
शर्यातितनयां वित्तं भार्यां च च्यवनस्य मां ४
अथाश्विनौ प्रहस्यैतामब्रूतां पुनरेव तु
कथं त्वमसि कल्याणि पित्रा दत्ता गताध्वने ५
भ्राजसे वनमध्ये त्वं विद्युत्सौदामिनी यथा
न देवेष्वपि तुल्यां हि त्वया पश्याव भामिनि ६
सर्वाभरणसंपन्ना परमाम्बरधारिणी
शोभेथास्त्वनवद्याङ्गि न त्वेवं मलपंकिनी ७
कस्मादेवंविधा भूत्वा जराजर्जरितं पतिम्
त्वमुपास्से ह कल्याणि कामभोगवहिष्कृतम् ८
असमर्थं परित्राणे पोषणे च शुचिस्मिते
साधु च्यवनमुत्सृज्य वरयस्वैकमावयोः
पत्यर्थं देवगर्भाभे मा वृथा यौवनं कृथाः ९
एवमुक्ता सुकन्या तु सुरौ ताविदमब्रवीत्
रताहं च्यवने पत्यौ मैवं मां पर्यशङ्किथाः १०
तावब्रूतां पुनस्त्वेनामावां देवभिषग्वरौ
युवानं रूपसंपन्नं करिष्यावः पतिं तव ११
ततस्तस्यावयोश्चैव पतिमेकतमं वृणु
एतेन समयेनैनमामन्त्रय वरानने १२
स तयोर्वचनाद्राजन्नुपसंगम्य भार्गवम्
उवाच वाक्यं यत्ताभ्यामुक्तं भृगुसुतं प्रति १३
तच्छ्रुत्वा च्यवनो भार्यामुवाच क्रियतामिति
भर्त्रा सा समनुज्ञाता क्रियतामित्यथाब्रवीत् १४
श्रुत्वा तदश्विनौ वाक्यं तत्तस्याः र्कियतामिति
ऊचतू राजपुत्रीं तां पतिस्तव विशत्वपः १५
ततोऽम्भश्च्यवनः शीघ्रं रूपार्थी प्रविवेश ह
अश्विनावपि तद्राजन्सरः प्रविशतां प्रभो १६
ततो मुहूर्तादुत्तीर्णाः सर्वे ते सरसस्ततः
दिव्यरूपधराः सर्वे युवानो मृष्टकुण्डलाः

तुल्यरूपधराश्चैव मनसः प्रीतिवर्धनाः १७
तेऽब्रुवन्सहिताः सर्वे वृणीष्वान्यतमं शुभे
अस्माकमीप्सितं भद्रे पतित्वे वरवर्णिनि
यत्र वाप्यभिकामासि तं वृणीष्व सुशोभने १८
सा समीक्ष्य तु तान्सर्वांस्तुल्यरूपधरान्स्थितान्
निश्चित्य मनसा बुद्ध्या देवी वव्रे स्वकं पतिम् १९
लब्ध्वा तु च्यवनो भार्यां वयोरूपं च वाञ्छितम्
हृष्टोऽब्रवीन्महातेजास्तौ नासत्याविदं वचः २०
यथाहं रूपसंपन्नो वयसा च समन्वितः
कृतो भवद्भ्यां वृद्धः सन्भार्यां च प्राप्तवानिमाम् २१
तस्माद्युवां करिष्यामि प्रीत्याहं सोमपीथिनौ
मिषतो देवराजस्य सत्यमेतद्ब्रवीमि वाम् २२
तच्छ्रुत्वा हृष्टमनसौ दिवं तौ प्रतिजग्मतुः
च्यवनोऽपि सुकन्या च सुराविव विजह्रतुः २३
इति श्रीमहाभारते आरण्यकपर्वणि त्रयोविंशत्यधिकशततमोऽध्यायः १२३

## चतुर्विंशत्यधिकशततमोऽध्यायः

लोमश उवाच
ततः श्रुत्वा तु शर्यातिर्वयः स्थं च्यवनं कृतम्
संहृष्टः सेनया सार्धमुपायाद्भार्गवाश्रमम् १
च्यवनं च सुकन्यां च दृष्ट्वा देवसुताविव
रेमे महीपः शर्यातिः कृत्स्नां प्राप्य महीमिव २
ऋषिणा सत्कृतस्तेन सभार्यः पृथिवीपतिः
उपोपविष्टः कल्याणीः कथाश्चक्रे महामनाः ३
अथैनं भार्गवो राजन्नुवाच परिसान्त्वयन्
याजयिष्यामि राजंस्त्वां संभारानुपकल्पय ४
ततःपरमसंहृष्टः शर्यातिः पृथिवीपतिः
च्यवनस्य महाराज तद्वाक्यं प्रत्यपूजयत् ५
प्रशस्तेऽहनि यज्ञीये सर्वकामसमृद्धिमत्
कारयामास शर्यातिर्यज्ञायतनमुत्तमम् ६

तत्रैनं च्यवनो राजन्याजयामास भार्गवः
अद्भुतानि च तत्रासन्यानि तानि निबोध मे ७
अगृह्णाच्च्यवनः सोममश्विनोर्देवयोस्तदा
तमिन्द्रो वारयामास गृह्यमाणं तयोर्ग्रहम् ८
इन्द्र उवाच
उभावेतौ न सोमार्हौ नासत्याविति मे मतिः
भिषजौ देवपुत्राणां कर्मणा नैवमर्हतः ९
च्यवन उवाच
मावमंस्था महात्मानौ रूपद्रविणवत्तरौ
यौ चक्रतुर्मां मघवन्वृन्दारकमिवाजरम् १०
ऋते त्वां विबुधांश्चान्यान्कथं वै नार्हतः सवम्
अश्विनावपि देवेन्द्र देवौ विद्धि पुरन्दर ११
इन्द्र उवाच
चिकित्सकौ कर्मकरौ कामरूपसमन्वितौ
लोके चरन्तौ मर्त्यानां कथं सोममिहार्हतः १२
लोमश उवाच
एतदेव यदा वाक्यमाम्रेडयति वासवः
अनादृत्य ततः शक्रं ग्रहं जग्राह भार्गवः १३
ग्रहीष्यन्तं तु तं सोममश्विनोरुत्तमं तदा
समीक्ष्य बलभिद्देव इदं वचनमब्रवीत् १४
आभ्यामर्थाय सोमं त्वं ग्रहीष्यसि यदि स्वयम्
वज्रं ते प्रहरिष्यामि घोररूपमनुत्तमम् १५
एवमुक्तः स्मयन्निन्द्रमभिवीक्ष्य स भार्गवः
जग्राह विधिवत्सोममश्विभ्यामुत्तमं ग्रहम् १६
ततोऽस्मै प्राहरद्वज्रं घोररूपं शचीपतिः
तस्य प्रहरतो बाहुं स्तम्भयामास भार्गवः १७
संस्तम्भयित्वा च्यवनो जुहुवे मन्त्रतोऽनलम्
कृत्यार्थी सुमहातेजा देवं हिंसितुमुद्यतः १८
ततः कृत्या समभवदृषेस्तस्य तपोबलात्
मदो नाम महावीर्यो बृहत्कायो महासुरः

शरीरं यस्य निर्देष्टुमशक्यं तु सुरासुरैः १९
तस्यास्यमभवद्घोरं तीक्ष्णाग्रदशनं महत्
हनुरेका स्थिता तस्य भूमावेका दिवं गता २०
चतस्र आयता दंष्ट्रा योजनानां शतं शतम्
इतरे त्वस्य दशना बभूवुर्दशयोजनाः
प्राकारसदृशाकाराः शूलाग्रसमदर्शनाः २१
बाहू पर्वतसंकाशावायतावयुतं समौ
नेत्रे रविशशिप्रख्ये वक्त्रमन्तकसन्निभम् २२
लेलिहञ्जिह्वया वक्त्रं विद्युच्चपललोलया
व्यात्ताननो घोरदृष्टिर्ग्रसन्निव जगद्बलात् २३
स भक्षयिष्यन्संक्रुद्धः शतक्रतुमुपाद्रवत्
महता घोररूपेण लोकाञ्शब्देन नादयन् २४
इति श्रीमहाभारते आरगयकपर्वणि चतुर्विंशत्यधिकशततमोऽध्यायः १२४

पञ्चविंशत्यधिकशततमोऽध्यायः

लोमश उवाच
तं दृष्ट्वा घोरवदनं मदं देवः शतक्रतुः
आयान्तं भक्षयिष्यन्तं व्यात्ताननमिवान्तकम् १
भयात्संस्तम्भितभुजः सृक्किणी लेलिहन्मुहुः
ततोऽब्रवीद्देवराजश्च्यवनं भयपीडितः २
सोमार्हावश्विनावेतावद्य प्रभृति भार्गव
भविष्यतः सत्यमेतद्वचो ब्रह्मन्ब्रवीमि ते ३
न ते मिथ्या समारम्भो भवत्वेष परो विधिः
जानामि चाहं विप्रर्षे न मिथ्या त्वं करिष्यसि ४
सोमार्हावश्विनावेतौ यथैवाद्य कृतौ त्वया
भूय एव तु ते वीर्यं प्रकाशेदिति भार्गव ५
सुकन्यायाः पितुश्चास्य लोके कीर्तिः प्रथेदिति
अतो मयैतद्विहितं तव वीर्यप्रकाशनम्
तस्मात्प्रसादं कुरु मे भवत्वेतद्यथेच्छसि ६
एवमुक्तस्य शक्रेण च्यवनस्य महात्मनः

स मन्युर्व्यगमच्छीघ्रं मुमोच च पुरन्दरम् ७
मदं च व्यभजद्राजन्पाने स्त्रीषु च वीर्यवान्
अक्षेषु मृगयायां च पूर्वसृष्टं पुनः पुनः ८
तदा मदं विनिक्षिप्य शक्रं संतर्प्य चेन्दुना
अश्विभ्यां सहितान्देवान्याजयित्वा च तं नृपम् ९
विख्याप्य वीर्यं सर्वेषु लोकेषु वदतां वरः
सुकन्यया सहारण्ये विजहारानुरक्तया १०
तस्यैतद्द्विजसंघुष्टं सरो राजन्प्रकाशते
अत्र त्वं सह सोदर्यैः पितृन्देवांश्च तर्पय ११
एतद्दृष्ट्वा महीपाल सिकताक्षं च भारत
सैन्धवारण्यमासाद्य कुल्यानां कुरु दर्शनम्
पुष्करेषु महाराज सर्वेषु च जलं स्पृश १२
आर्चीकपर्वतश्चैव निवासो वै मनीषिणाम्
सदाफलः सदास्रोतो मरुतां स्थानमुत्तमम्
चैत्याश्चैते बहुशतास्त्रिदशानां युधिष्ठिर १३
एतच्चन्द्रमसस्तीर्थमृषयः पर्युपासते
वैखानसाश्च ऋषयो वालखिल्यास्तथैव च १४
शृङ्गाणि त्रीणि पुण्यानि त्रीणि प्रस्रवणानि च
सर्वाण्यनुपरिक्रम्य यथाकाममुपस्पृश १५
शंतनुश्चात्र कौन्तेय शुनकश्च नराधिप
नरनारायणौ चोभौ स्थानं प्राप्ताः सनातनम् १६
इह नित्यशया देवाः पितरश्च महर्षिभिः
आर्चीकपर्वते तेपुस्तान्यजस्व युधिष्ठिर १७
इह ते वै चरून्प्राश्नन्नृषयश्च विशां पते
यमुना चाक्षयस्रोताः कृष्णश्चेह तपोरतः १८
यमौ च भीमसेनश्च कृष्णा चामित्रकर्शन
सर्वे चात्र गमिष्यामः सुकृशाः सुतपस्विनः १९
एतत्प्रस्रवणं पुण्यमिन्द्रस्य मनुजाधिप
यत्र धाता विधाता च वरुणश्चोर्ध्वमागताः २०
इह ते न्यवसन्राजन्क्षान्ताः परमधर्मिणः

मैत्राणामृजुबुद्धीनामयं गिरिवरः शुभः २१
एषा सा यमुना राजन्राजर्षिगणसेविता
नानायज्ञचिता राजन्पुगया पापभयापहा २२
अत्र राजा महेष्वासो मान्धातायजत स्वयम्
सहदेवश्च कौन्तेय सोमको वदतां वरः २३
इति श्रीमहाभारते आरगयक पर्वणि पञ्चविंशत्यधिकशततमोऽध्यायः १२५

षड्विंशत्यधिकशततमोऽध्यायः

युधिष्ठिर उवाच
मान्धाता राजशार्दूलस्त्रिषु लोकेषु विश्रुतः
कथं जातो महाब्रह्मन्यौवनाश्वो नृपोत्तमः
कथं चैतां परां काष्ठां प्राप्तवानमितद्युतिः १
यस्य लोकास्त्रयो वश्या विष्णोरिव महात्मनः
एतदिच्छाम्यहं श्रोतुं चरितं तस्य धीमतः २
यथा मान्धातृशब्दश्च तस्य शक्रसमद्युतेः
जन्म चाप्रतिवीर्यस्य कुशलो ह्यसि भाषितुम् ३
लोमश उवाच
शृणुष्वावहितो राजन्राज्ञस्तस्य महात्मनः
यथा मान्धातृशब्दो वै लोकेषु परिगीयते ४
इक्ष्वाकुवंशप्रभवो युवनाश्वो महीपतिः
सोऽयजत्पृथिवीपालः क्रतुभिर्भूरिदक्षिणैः ५
अश्वमेधसहस्रं च प्राप्य धर्मभृतां वरः
अन्यैश्च क्रतुभिर्मुख्यैर्विविधैराप्तदक्षिणैः ६
अनपत्यस्तु राजर्षिः स महात्मा दृढव्रतः
मन्त्रिष्वाधाय तद्राज्यं वननित्यो बभूव ह ७
शास्त्रदृष्टेन विधिना संयोज्यात्मानमात्मना
पिपासाशुष्कहृदयः प्रविवेशाश्रमं भृगोः ८
तामेव रात्रिं राजेन्द्र महात्मा भृगुनन्दनः
इष्टिं चकार सौद्युम्नेर्महर्षिः पुत्रकारणात् ९
संभृतो मन्त्रपूतेन वारिणा कलशो महान्

तत्रातिष्ठत राजेन्द्र पूर्वमेव समाहितः
यत्प्राश्य प्रसवेत्तस्य पत्नी शक्रसमं सुतम् १०
तं न्यस्य वेद्यां कलशं सुषुपुस्ते महर्षयः
रात्रिजागरणश्रान्ता सौद्युम्निः समतीत्य तान् ११
शुष्ककण्ठः पिपासार्तःपानीयार्थी भृशं नृपः
तं प्रविश्याश्रमं श्रान्तः पानीयं सोऽभ्ययाचत १२
तस्य श्रान्तस्य शुष्केण कण्ठेन क्रोशतस्तदा
नाश्रौषीत्कश्चन तदा शकुनेरिव वाशितम् १३
ततस्तं कलशं दृष्ट्वा जलपूर्णं स पार्थिवः
अभ्यद्रवत वेगेन पीत्वा चाम्भो व्यवासृजत् १४
स पीत्वा शीतलं तोयं पिपासार्तो महीपतिः
निर्वाणमगमद्धीमान्सुसुखी चाभवत्तदा १५
ततस्ते प्रत्यबुध्यन्त ऋषयः स नराधिपाः
निस्तोयं तं च कलशं ददृशुः सर्व एव ते १६
कस्य कर्मेदमिति च पर्यपृच्छन्समागताः
युवनाश्वो मयेत्येव सत्यं समभिपद्यत १७
न युक्तमिति तं प्राह भगवान्भार्गवस्तदा
सुतार्थं स्थापिता ह्यापस्तपसा चैव संभृताः १८
मया ह्यत्राहितं ब्रह्म तप आस्थाय दारुणम्
पुत्रार्थं तव राजर्षे महाबलपराक्रम १९
महाबलो महावीर्यस्तपोबलसमन्वितः
यः शक्रमपि वीर्येण गमयेद्यमसादनम् २०
अनेन विधिना राजन्मयैतदुपपादितम्
अब्भक्षणं त्वया राजन्नयुक्तं कृतमद्य वै २१
न त्वद्य शक्यमस्माभिरेतत्कर्तुमतोऽन्यथा
नूनं दैवकृतं ह्येतद्यदेवं कृतवानसि २२
पिपासितेन याः पीता विधिमन्त्रपुरस्कृताः
आपस्त्वया महाराज मत्तपोवीर्यसंभृताः
ताभ्यस्त्वमात्मना पुत्रमेवंवीर्यं जनिष्यसि २३
विधास्यामो वयं तत्र तवेष्टिं परमाद्भुताम्

यथा शक्रसमं पुत्रं जनयिष्यसि वीर्यवान् २४
ततो वर्षशते पूर्णे तस्य राज्ञो महात्मनः
वामं पार्श्वं विनिर्भिद्य सुतः सूर्य इवापरः २५
निश्चक्राम महातेजा न च तं मृत्युराविशत्
युवनाश्वं नरपतिं तदद्भुतमिवाभवत् २६
ततः शक्रो महातेजास्तं दिदृक्षुरुपागमत्
प्रदेशिनीं ततोऽस्यास्ये शक्रः समभिसंदधे २७
मामयं धास्यतीत्येवं परिभाष्टः स वज्रिणा
मांधातेति च नामास्य चक्रुः सेन्द्रा दिवौकसः २८
प्रदेशिनीं शक्रदत्तामास्वाद्य स शिशुस्तदा
अवर्धत महीपाल किष्कूणां च त्रयोदश २९
वेदास्तं सधनुर्वेदा दिव्यान्यस्त्राणि चेश्वरम्
उपतस्थुर्महाराज ध्यातमात्राणि सर्वशः ३०
धनुराजगवं नाम शराः शृङ्गोद्भवाश्च ये
अभेद्यं कवचं चैव सद्यस्तमुपसंश्रयन् ३१
सोऽभिषिक्तो मघवता स्वयं शक्रेण भारत
धर्मेण व्यजयल्लोकांस्त्रीन्विष्णुरिव विक्रमैः ३२
तस्याप्रतिहतं चक्रं प्रावर्तत महात्मनः
रत्नानि चैव राजर्षिं स्वयमेवोपतस्थिरे ३३
तस्येयं वसुसंपूर्णा वसुधा वसुधाधिप
तेनेष्टं विविधैर्यज्ञैर्बहुभिः स्वाप्तदक्षिणैः ३४
चितचैत्यो महातेजा धर्मं प्राप्य च पुष्कलम्
शक्रस्यार्धासनं राजँल्लब्धवानमितद्युतिः ३५
एकाह्ना पृथिवी तेन धर्मनित्येन धीमता
निर्जिता शासनादेव सरत्नाकरपत्तना ३६
तस्य चित्यैर्महाराज क्रतूनां दक्षिणावताम्
चतुरन्ता मही व्याप्ता नासीत्किञ्चिदनावृतम् ३७
तेन पद्मसहस्राणि गवां दश महात्मना
ब्राह्मणेभ्यो महाराज दत्तानीति प्रचक्षते ३८
तेन द्वादशवार्षिक्यामनावृष्ट्यां महात्मना

वृष्टं सस्यविवृद्ध्यर्थं मिषतो वज्रपाणिनः ३९
तेन सोमकुलोत्पन्नो गान्धाराधिपतिर्महान्
गर्जन्निव महामेघः प्रमथ्य निहतः शरैः ४०
प्रजाश्चतुर्विधास्तेन जिता राजन्महात्मना
तेनात्मतपसा लोकाः स्थापिताश्चापि तेजसा ४१
तस्यैतद्देवयजनं स्थानमादित्यवर्चसः
पश्य पुण्यतमे देशे कुरुक्षेत्रस्य मध्यतः ४२
एतत्ते सर्वमाख्यातं मांधातुश्चरितं महत्
जन्म चाग्र्यं महीपाल यन्मां त्वं परिपृच्छसि ४३
इति श्रीमहाभारते आरण्यकपर्वणि षड्विंशत्यधिकशततमोऽध्यायः १२६

## सप्तविंशत्यधिकशततमोऽध्यायः

युधिष्ठिर उवाच
कथंवीर्यः स राजाभूत्सोमको वदतां वर
कर्माण्यस्य प्रभावं च श्रोतुमिच्छामि तत्त्वतः १
लोमश उवाच
युधिष्ठिरासीन्नृपतिः सोमको नाम धार्मिकः
तस्य भार्याशतं राजन्सदृशीनामभूत्तदा २
स वै यत्नेन महता तासु पुत्रं महीपतिः
कंचिन्नासादयामास कालेन महता अपि ३
कदाचित्तस्य वृद्धस्य यतमानस्य यत्नतः
जन्तुर्नाम सुतस्तस्मिन्स्त्रीशते समजायत ४
तं जातं मातरः सर्वाः परिवार्य समासते
सततं पृष्ठतः कृत्वा कामभोगान्विशां पते ५
ततः पिपीलिका जन्तुं कदाचिददशत्स्फिजि
स दष्टो व्यनदद्राजंस्तेन दुःखेन बालकः ६
ततस्ता मातरः सर्वाः प्राक्रोशन्भृशदुःखिताः
परिवार्य जन्तुं सहिताः स शब्दस्तुमुलोऽभवत् ७
तमार्तनादं सहसा शुश्राव स महीपतिः
अमात्यपरिषन्मध्ये उपविष्टः सहर्त्विजैः ८

ततः प्रस्थापयामास किमेतदिति पार्थिवः
तस्मै क्षत्ता यथावृत्तमाचचक्षे सुतं प्रति ९
त्वरमाणः स चोत्थाय सोमकः सह मन्त्रिभिः
प्रविश्यान्तःपुरं पुत्रमाश्वासयदरिन्दमः १०
सान्त्वयित्वा तु तं पुत्रं निष्क्रम्यान्तः पुरान्नृपः
ऋत्विजैः सहितो राजन्सहामात्य उपाविशत् ११
सोमक उवाच
धिगस्त्विहैकपुत्रत्वमपुत्रत्वं वरं भवेत्
नित्यातुरत्वाद्भूतानां शोक एवैकपुत्रता १२
इदं भार्याशतं ब्रह्मन्परीक्ष्योपचितं प्रभो
पुत्रार्थिना मया वोढं न चासां विद्यते प्रजा १३
एकः कथञ्चिदुत्पन्नः पुत्रो जन्तुरयं मम
यतमानस्य सर्वासु किं नु दुःखमतः परम् १४
वयश्च समतीतं मे सभार्यस्य द्विजोत्तम
आसां प्राणाः समायत्ता मम चात्रैकपुत्रके १५
स्यान्नु कर्म तथा युक्तं येन पुत्रशतं भवेत्
महता लघुना वापि कर्मणा दुष्करेण वा १६
ऋत्विगुवाच
अस्ति वै तादृशं कर्म येन पुत्रशतं भवेत्
यदि शक्नोषि तत्कर्तुमथ वक्ष्यामि सोमक १७
सोमक उवाच
कार्यं वा यदि वाकार्यं येन पुत्रशतं भवेत्
कृतमेव हि तद्विद्धि भगवान्प्रब्रवीतु मे १८
ऋत्विगुवाच
यजस्व जन्तुना राजंस्त्वं मया वितते क्रतौ
ततः पुत्रशतं श्रीमद्भविष्यत्यचिरेण ते १९
वपायां हूयमानायां धूममाघ्राय मातरः
ततस्ताः सुमहावीर्याञ्जनयिष्यन्ति ते सुतान् २०
तस्यामेव तु ते जन्तुर्भविता पुनरात्मजः
उत्तरे चास्य सौवर्णं लक्ष्म पार्श्वे भविष्यति २१

इति श्रीमहाभारते आरण्यकपर्वणि सप्तविंशत्यधिक शततमोऽध्यायः १२७

अष्टाविंशत्यधिकशततमोऽध्यायः

सोमक उवाच
ब्रह्मन्यद्यद्यथा कार्यं तत्तत्कुरु तथा तथा
पुत्रकामतया सर्वं करिष्यामि वचस्तव १
लोमश उवाच
ततः स याजयामास सोमकं तेन जन्तुना
मातरस्तु बलात्पुत्रमपाकर्षुः कृपान्विताः
हा हताः स्मेति वाशन्त्यस्तीव्रशोकसमन्विताः २
तं मातरः प्रत्यकर्षन्गृहीत्वा दक्षिणे करे
सव्ये पाणौ गृहीत्वा तु याजकोऽपि स्म कर्षति ३
कुररीणामिवार्तानामपाकृष्य तु तं सुतम्
विशस्य चैनं विधिना वपामस्य जुहाव सः ४
वपायां हूयमानायां गन्धमाघ्राय मातरः
आर्ता निपेतुः सहसा पृथिव्यां कुरुनन्दन
सर्वाश्च गर्भानलभंस्ततस्ताः पार्थिवाङ्गनाः ५
ततो दशसु मासेषु सोमकस्य विशां पते
जज्ञे पुत्रशतं पूर्णं तासु सर्वासु भारत ६
जन्तुर्ज्येष्ठः समभवज्जनित्र्यामेव भारत
स तासामिष्ट एवासीन्न तथान्ये निजाः सुताः ७
तच्च लक्षणमस्यासीत्सौवर्णं पार्श्व उत्तरे
तस्मिन्पुत्रशते चाग्र्यः स बभूव गुणैर्युतः ८
ततः स लोकमगमत्सोमकस्य गुरुः परम्
अथ काले व्यतीते तु सोमकोऽप्यगमत्परम् ९
अथ तं नरके घोरे पच्यमानं ददर्श सः
तमपृच्छत्किमर्थं त्वं नरके पच्यसे द्विज १०
तमब्रवीद्गुरुः सोऽथ पच्यमानोऽग्निना भृशम्
त्वं मया याजितो राजंस्तस्येदं कर्मणः फलम् ११
एतच्छ्रुत्वा स राजर्षिर्धर्मराजानमब्रवीत्

अहमत्र प्रवेक्ष्यामि मुच्यतां मम याजकः
मत्कृते हि महाभागः पच्यते नरकाग्निना १२
धर्म उवाच
नान्यः कर्तुः फलं राजन्नुपभुंक्ते कदाचन
इमानि तव दृश्यन्ते फलानि वदतां वर १३
सोमक उवाच
पुण्यान्न कामये लोकानृतेऽह ब्रह्मवादिनम्
इच्छाम्यहमनेनैव सह वस्तुं सुरालये १४
नरके वा धर्मराज कर्मणास्य समो ह्यहम्
पुण्यापुण्यफलं देव सममस्त्वावयोरिदम् १५
धर्म उवाच
यद्येवमीप्सितं राजन्भुंक्ष्वास्य सहितः फलम्
तुल्यकालं सहानेन पश्चात्प्राप्स्यसि सद्गतिम् १६
लोमश उवाच
स चकार तथा सर्वं राजा राजीवलोचनः
पुनश्च लेभे लोकान्स्वान्कर्मणा निर्जिताञ्शुभान्
सह तेनैव विप्रेण गुरुणा स गुरुप्रियः १७

एष तस्याश्रमः पुण्यो य एषोऽग्रे विराजते
क्षान्त उष्यात्र षड्रात्रं प्राप्नोति सुगतिं नरः १८
एतस्मिन्नपि राजेन्द्र वत्स्यामो विगतज्वराः
षड्रात्रं नियतात्मानः सज्जीभव कुरूद्वह १९
इति श्रीमहाभारते आरण्यकपर्वणि अष्टाविंशत्यधिकशततमोऽध्यायः १२८

एकोनत्रिंशदधिकशततमोऽध्यायः

लोमश उवाच
अस्मिन्किल स्वयं राजन्निष्टवान्वै प्रजापतिः
सत्रमिष्टीकृतं नाम पुरा वर्षसहस्रिकम् १
अंबरीषश्च नाभाग इष्टवान्यमुनामनु
यज्ञैश्च तपसा चैव परां सिद्धिमवाप सः २

देशो नाहुषयज्ञानामयं पुरायतमो नृप
यत्रेष्ट्वा दश पद्मानि सदस्येभ्यो निसृष्टवान् ३
सार्वभौमस्य कौन्तेय ययातेरमितौजसः
स्पर्धमानस्य शक्रेण पश्येदं यज्ञवास्त्विह ४
पश्य नानाविधाकारैरग्निभिर्निचितां महीम्
मज्जन्तीमिव चाक्रान्तां ययातेर्यज्ञकर्मभिः ५
एषा शम्येकपत्रा सा शरकं चैतदुत्तमम्
पश्य रामह्रदानेतान्पश्य नारायणाश्रमम् ६
एतदार्चीकपुत्रस्य योगैर्विचरतो महीम्
अपसर्पणं महीपाल रौप्यायाममितौजसः ७
अत्रानुवंशं पठतः शृणु मे कुरुनन्दन
उलूखलैराभरणैः पिशाची यदभाषत ८
युगंधरे दधि प्राश्य उषित्वा चाच्युतस्थले
तद्वद्भूतिलये स्नात्वा सपुत्रा वस्तुमिच्छसि ९
एकारात्रमुषित्वेह द्वितीयं यदि वत्स्यसि
एतद्वै ते दिवा वृत्तं रात्रौ वृत्तमतोऽन्यथा १०
अत्राद्याहो निवत्स्यामः क्षपां भरतसत्तम
द्वारमेतद्धि कौन्तेय कुरुक्षेत्रस्य भारत ११
अत्रैव नाहुषो राजा राजन्क्रतुभिरिष्टवान्
ययातिर्बहुरत्नाढ्यैर्यत्रेन्द्रो मुदमभ्यगात् १२
एतत्प्लक्षावतरणं यमुनातीर्थमुच्यते
एतद्वै नाकपृष्ठस्य द्वारमाहुर्मनीषिणः १३
अत्र सारस्वतैर्यज्ञैरीजानाः परमर्षयः
यूपोलूखलिनस्तात गच्छन्त्यवभृथाप्लवम् १४
अत्रैव भरतो राजा मेध्यमश्वमवासृजत्
असकृत्कृष्णसारंगं धर्मेणावाप्य मेदिनीम् १५
अत्रैव पुरुषव्याघ्र मरुत्तः सत्रमुत्तमम्
आस्ते देवर्षिमुख्येन संवर्तेनाभिपालितः १६
अत्रोपस्पृश्य राजेन्द्र सर्वाल्लोँकान्प्रपश्यति
पूयते दुष्कृताच्चैव समुपस्पृश्य भारत १७

वैशम्पायन उवाच
तत्र सभ्रातृकः स्नात्वा स्तूयमानो महर्षिभिः
लोमशं पाराडवश्रेष्ठ इदं वचनमब्रवीत् १८
सर्वाल्लोँकान्प्रपश्यामि तपसा सत्यविक्रम
इहस्थः पाराडवश्रेष्ठं पश्यामि श्वेतवाहनम् १९
लोमश उवाच
एवमेतन्महाबाहो पश्यन्ति परमर्षयः
सरस्वतीमिमां पुरायां पश्यैकशरणावृताम्
यत्र स्नात्वा नरश्रेष्ठ धूतपाप्मा भविष्यसि २०
इह सारस्वतैर्यज्ञैरिष्टवन्तः सुरर्षयः
ऋषयश्चैव कौन्तेय तथा राजर्षयोऽपि च २१
वेदी प्रजापतेरेषा समन्तात्पञ्चयोजना
कुरोर्वै यज्ञशीलस्य क्षेत्रमेतन्महात्मनः २२
इति श्रीमहाभारतेआरगयकपर्वणि एकोनत्रिंशदधिकशततमोऽध्यायः १२९

त्रिंशदधिकशततमोऽध्यायः

लोमश उवाच
इह मर्त्यास्तपस्तप्त्वा स्वर्गं गच्छन्ति भारत
मर्तुकामा नरा राजन्निहायान्ति सहस्रशः १
एवमाशीः प्रयुक्ता हि दक्षेण यजता पुरा
इह ये वै मरिष्यन्ति ते वै स्वर्गजितो नराः २
एषा सरस्वती पुराया दिव्या चोघवती नदी
एतद्विनशनं नाम सरस्वत्या विशां पते ३
द्वारं निषादराष्ट्रस्य येषां द्वेषात्सरस्वती
प्रविष्टा पृथिवीं वीर मा निषादा हि मां विदुः ४
एष वै चमसोद्भेदो यत्र दृश्या सरस्वती
यत्रैनामभ्यवर्तन्त दिव्याः पुरायाः समुद्रगाः ५
एतत्सिन्धोर्महत्तीर्थं यत्रागस्त्यमरिन्दम
लोपामुद्रा समागम्य भर्तारमवृणीत वै ६
एतत्प्रभासते तीर्थं प्रभासं भास्करद्युते

इन्द्रस्य दयितं पुरायं पवित्रं पापनाशनम् ७
एतद्विष्णुपदं नाम दृश्यते तीर्थमुत्तमम्
एषा रम्या विपाशा च नदी परमपावनी ८
अत्रैव पुत्रशोकेन वशिष्ठो भगवानृषिः
बद्ध्वात्मानं निपतितो विपाशः पुनरुत्थितः ९
काश्मीरमंडलं चैतत्सर्वपुरायमरिन्दम
महर्षिभिश्चाध्युषितं पश्येदं भ्रातृभिः सह १०
अत्रोत्तराणां सर्वेषामृषीणां नाहुषस्य च
अग्नेश्चात्रैव संवादः काश्यपस्य च भारत ११
एतद्द्वारं महाराज मानसस्य प्रकाशते
वर्षमस्य गिरेर्मध्ये रामेण श्रीमता कृतम् १२
एष वातिकषराडो वै प्रख्यातः सत्यविक्रमः
नाभ्यवर्तत यद्द्वारं विदेहानुत्तरं च यः १३
एष उज्ञानको नाम यवक्रीर्यत्र शान्तवान्
अरुन्धतीसहायश्च वसिष्ठो भगवानृषिः १४
ह्रदश्च कुशवानेष यत्र पद्मं कुशेशयम्
आश्रमश्चैव रुक्मिराया यत्राशाम्यदकोपना १५
समाधीनां समासस्तु पाराडवेय श्रुतस्त्वया
तं द्रक्ष्यसि महाराज भृगुतुङ्गं महागिरिम् १६
जलां चोपजलां चैव यमुनामभितो नदीम्
उशीनरो वै यत्रेष्ट्वा वासवादत्यरिच्यत १७
तां देवसमितिं तस्य वासवश्च विशांपते
अभ्यागच्छत राजानं ज्ञातुमग्निश्च भारत १८
जिज्ञासमानौ वरदौ महात्मानमुशीनरम्
इन्द्रः श्येनः कपोतोऽग्निर्भूत्वा यज्ञेऽभिजग्मतुः १९
ऊरुं राज्ञः समासाद्य कपोतः श्येनजाद्भयात्
शरणार्थी तदा राजन्निलिल्ये भयपीडितः २०

इति श्रीमहाभारते आररायकपर्वणि त्रिंशदधिकशततमोऽध्यायः १३०

## एकत्रिंशदधिकशततमोऽध्यायः

श्येन उवाच
धर्मात्मानं त्वाहुरेकं सर्वे राजन्महीक्षितः
स वै धर्मविरुद्धं त्वं कस्मात्कर्म चिकीर्षसि १
विहितं भक्षणं राजन्पीड्यमानस्य मे क्षुधा
मा भाङ्क्षीर्धर्मलोभेन धर्ममुत्सृष्टवानसि २
राजोवाच
संत्रस्तरूपस्त्राणार्थी त्वत्तो भीतो महाद्विज
मत्सकाशमनुप्राप्तः प्राणगृध्नुरयं द्विजः ३
एवमभ्यागतस्येह कपोतस्याभयार्थिनः
अप्रदाने परोऽधर्मः किं त्वं श्येन प्रपश्यसि ४
प्रस्पन्दमानः सम्भ्रान्तः कपोतः श्येन लक्ष्यते
मत्सकाशं जीवितार्थी तस्य त्यागो विगर्हितः ५
श्येन उवाच
आहारात्सर्वभूतानि संभवन्ति महीपते
आहारेण विवर्धन्ते तेन जीवन्ति जन्तवः ६
शक्यते दुस्त्यजेऽप्यर्थे चिररात्राय जीवितुम्
न तु भोजनमुत्सृज्य शक्यं वर्तयितुं चिरम् ७
भक्ष्याद्वियोजितस्याद्य मम प्राणा विशां पते
विसृज्य कायमेष्यन्ति पन्थानमपुनर्भवम् ८
प्रमृते मयि धर्मात्मन्पुत्रदारं नशिष्यति
रक्षमाणः कपोतं त्वं बहून्प्राणान्नशिष्यसि ९
धर्मं यो बाधते धर्मो न धर्मः कुधर्म तत्
अविरोधी तु यो धर्मः स धर्मः सत्यविक्रम १०
विरोधिषु महीपाल निश्चित्य ग्रुलाघवम्
न बाधा विद्यते यत्र तं धर्मं समुदाचरेत् ११
गुरुलाघवमाज्ञाय धर्माधर्मविनिश्चिये
यतो भूयांस्ततो राजन्कुरु धर्मविनिश्चयम् १२
राजोवाच
बहुकल्याणसंयुक्तं भाषसे विहगोत्तम

सुपर्णः पक्षिराट् किं त्वं धर्मज्ञश्चास्यसंशयम्
तथा हि धर्मसंयुक्तं बहु चित्रं प्रभाषसे १३
न ते ऽस्त्यविदितं किंचिदिति त्वा लक्षयाम्यहम्
शरणैषिणः परित्यागं कथं साध्विति मन्यसे १४
आहारार्थं समारम्भस्तव चायं विहंगम
शक्यश्चाप्यन्यथा कर्तुमाहारोऽप्यधिकस्त्वया १५
गोवृषो वा वराहो वा मृगो वा महिषोऽपि वा
त्वदर्थमद्य क्रियतां यद्वान्यदभिकांक्षसे १६
श्येन उवाच
न वराहं न चोक्षाणं न मृगान्विविधांस्तथा
भक्षयामि महाराज किमन्नाद्येन तेन मे १७
यस्तु मे दैवविहितो भक्षः क्षत्रियपुंगव
तमुत्सृज महीपाल कपोतमिममेव मे १८
श्येनाः कपोतान्खादन्ति स्थितिरेषा सनातनी
मा राजन्मार्गमाज्ञाय कदलीस्कन्धमारुह १९
राजोवाच
राज्यं शिबीनामृद्धं वै शाधि पक्षिगणार्चित
यद्वा कामयसे किंचिच्छ्येन सर्वं ददानि ते
विनेमं पक्षिणं श्येन शरणार्थिनमागतम् २०
येनेमं वर्जयेथास्त्वं कर्मणा पक्षिसत्तम
तदाचक्ष्व करिष्यामि न हि दास्ये कपोतकम् २१
श्येन उवाच
उशीनर कपोते ते यदि स्नेहो नराधिप
आत्मनो मांसमुत्कृत्य कपोततुलया धृतम् २२
यदा समं कपोतेन तव मांसं भवेन्नृप
तदा प्रदेयं तन्मह्यं सा मे तुष्टिर्भविष्यति २३
राजोवाच
अनुग्रहमिमं मन्ये श्येन यन्माभियाचसे
तस्मात्तेऽद्य प्रदास्यामि स्वमांसं तुलया धृतम् २४
लोमश उवाच

अथोत्कृत्य स्वमांसं तु राजा परमधर्मवित्
तुलयामास कौन्तेय कपोतेन सहाभिभो २५
ध्रियमाणस्तु तुलया कपोतो व्यतिरिच्यते
पुनश्चोत्कृत्य मांसानि राजा प्रादादुशीनरः २६
न विद्यते यदा मांसं कपोतेन समं धृतम्
तत उत्कृत्तमांसोऽसावारुरोह स्वयं तुलाम् २७
श्येन उवाच
इन्द्रोऽहमस्मि धर्मज्ञ कपोतो हव्यवाडयम्
जिज्ञासमानौ धर्मे त्वां यज्ञवाटमुपागतौ २८
यत्ते मांसानि गात्रेभ्य उत्कृत्तानि विशां पते
एषा ते भास्वरी कीर्तिर्लोकानभिभविष्यति २९
यावल्लोके मनुष्यास्त्वां कथयिष्यन्ति पार्थिव
तावत्कीर्तिश्च लोकाश्च स्थास्यन्ति तव शाश्वताः ३०
लोमश उवाच
तत्पाराडवेय सदनं राज्ञस्तस्य महात्मनः
पश्यस्वैतन्मया सार्धं पुरायं पापप्रमोचनम् ३१
अत्र वै सततं देवा मुनयश्च सनातनाः
दृश्यन्ते ब्राह्मणै राजन्पुरायवद्भिर्महात्मभिः ३२
इति श्रीमहाभारते आररायकपर्वणि एकत्रिंशदधिकशततमोऽध्यायः १३१

## द्वात्रिंशदधिकशततमोऽध्यायः

लोमश उवाच
यः कथ्यते मन्त्रविदग्र्यबुद्धिरौद्दालकिः श्वेतकेतुः पृथिव्याम्
तस्याश्रमं पश्य नरेन्द्र पुरायं सदाफलैरुपपन्नं महीजैः १
साक्षादत्र श्वेतकेतुर्ददर्श सरस्वतीं मानुषदेहरूपाम्
वेत्स्यामि वाणीमिति संप्रवृत्तां सरस्वतीं श्वेतकेतुर्बभाषे २
तस्मिन्काले ब्रह्मविदां वरिष्ठावास्तां तदा मातुलभागिनेयौ
अष्टावक्रश्चैव कहोडसूनुरौद्दालकिः श्वेतकेतुश्च राजन् ३
विदेहराजस्य महीपतेस्तौ विप्रावुभौ मातुलभागिनेयौ
प्रविश्य यज्ञायतनं विवादे बन्दिं निजग्राहतुरप्रमेयम् ४

युधिष्ठिर उवाच
कथंप्रभावः स बभूव विप्रस्तथायुक्तं यो निजग्राह बन्दिम्
अष्टावक्रः केन चासौ बभूव तत्सर्वं मे लोमश शंस तत्त्वम् ५
लोमश उवाच
उद्दालकस्य नियतः शिष्य एको नाम्ना कहोडेति बभूव राजन्
शुश्रूषुराचार्यवशानुवर्ती दीर्घं कालं सोऽध्ययनं चकार ६
तं वै विप्राः पर्यभवंश्च शिष्यास्तं च ज्ञात्वा विप्रकारं गुरुः सः
तस्मै प्रादात्सद्य एव श्रुतं च भार्यां च वै दुहितरं स्वां सुजाताम् ७
तस्या गर्भः समभवदग्निकल्पः सोऽधीयानं पितरमथाभ्युवाच
सर्वां रात्रिमध्ययनं करोषि नेदं पितः सम्यगिवोपवर्तते ८
उपालब्धः शिष्यमध्ये महर्षिः स तं कोपादुदरस्थं शशाप
यस्मात्कुक्षौ वर्तमानो ब्रवीषि तस्माद्वक्रो भवितास्यष्टकृत्वः ९
स वै तथा वक्र एवाभ्यजायदष्टावक्रः प्रथितो वै महर्षिः
तस्यासीद्वै मातुलः श्वेतकेतुः स तेन तुल्यो वयसा बभूव १०
संपीड्यमाना तु तदा सुजाता विवर्धमानेन सुतेन कुक्षौ
उवाच भर्तारमिदं रहोगता प्रसाद्य हीनं वसुना धनार्थिनी ११
कथं करिष्याम्यधना महर्षे मासश्चायं दशमो वर्तते मे
न चास्ति ते वसु किंचित्प्रजाता येनाहमेतामापदं निस्तरेयम् १२
उक्तस्त्वेवं भार्यया वै कहोडो वित्तस्यार्थे जनकमथाभ्यगच्छत्
स वै तदा वादविदा निगृह्य निमज्जितो बंदिनेहाप्सु विप्रः १३
उद्दालकस्तं तु तदा निशम्य सूतेन वादेऽप्सु तथा निमज्जितम्
उवाच तां तत्र ततः सुजातामष्टावक्रे गूहितव्योऽयमर्थः १४
ररक्ष सा चाप्यति तं सुमन्त्रं जातोऽप्येवं न स शुश्राव विप्रः
उद्दालकं पितृवच्चापि मेने अष्टावक्रो भ्रातृवच्छ्वेतकेतुम् १५
ततो वर्षे द्वादशे श्वेतकेतुरष्टावक्रं पितुरङ्के निषण्णम्
अपाकर्षद्गृह्य पाणौ रुदन्तं नायं तवाङ्कः पितुरित्युक्तवांश्च १६
यत्तेनोक्तं दुरुक्तं तत्तदानीं हृदि स्थितं तस्य सुदुःखमासीत्
गृहं गत्वा मातरं रोदमानः पप्रच्छेदं क्व नु तातो ममेति १७
ततः सुजाता परमार्तरूपा शापाद्भीता सर्वमेवाचचक्षे
तद्वै तत्त्वं सर्वमाज्ञाय मातुरित्यब्रवीच्छ्वेतकेतुं स विप्रः १८

गच्छाव यज्ञं जनकस्य राज्ञो बह्वाश्चर्यः श्रूयते तस्य यज्ञः
श्रोष्यावोऽत्र ब्राह्मणानां विवादमन्नं चाग्र्यं तत्र भोक्ष्यावहे च
विचक्षणत्वं च भविष्यते नौ शिवश्च सौम्यश्च हि ब्रह्मघोषः १९
तौ जग्मतुर्मातुलभागिनेयौ यज्ञं समृद्धं जनकस्य राज्ञः
अष्टावक्रः पथि राज्ञा समेत्य उत्सार्यमाणो वाक्यमिदं जगाद २०
इति श्रीमहाभारते आरगयकपर्वणि द्वात्रिंशदधिकशततमोऽध्यायः १३२

## त्रयस्त्रिंशदधिकशततमोऽध्यायः

अष्टावक्र उवाच
अन्धस्य पंथा बधिरस्य पंथाः स्त्रियः पन्था वैवधिकस्य पंथाः
राज्ञः पंथा ब्राह्मणेनासमेत्य समेत्य तु ब्राह्मणस्यैव पंथाः १
राजोवाच
पंथा अयं तेऽद्य मया निसृष्टो येनेच्छसे तेन कामं व्रजस्व
न पावको विद्यते वै लघीयानिन्द्रोऽपि नित्यं नमते ब्राह्मणानाम् २
अष्टावक्र उवाच
यज्ञं दृष्टुं प्रस्वप्नवन्तौ स तात कौतूहलं नौ बलवद्वै विवृद्धम्
आवां प्राप्तावतिथी संप्रवेशं कांक्षावहे द्वारपते तवाज्ञाम् ३
एन्द्रद्युम्नेर्यज्ञदृशाविहावां विवक्षू वै जनकेन्द्रं दिदृक्षू
न वै क्रोधाद्व्याधिनैवोत्तमेन संयोजय द्वारपाल क्षणेन ४
द्वारपाल उवाच
बन्देः समादेशकरा वयं स्म निबोध वाक्यं च मयेर्यमाणम्
न वै बालाः प्रविशन्त्यत्र विप्रा वृद्धा विद्वांसः प्रविशन्ति द्विजाग्र्याः ५
अष्टावक्र उवाच
यद्यत्र वृद्धेषु कृतः प्रवेशो युक्तं मम द्वारपाल प्रवेष्टुम्
वयं हि वृद्धाश्चरितव्रताश्च वेदप्रभावेन प्रवेशनार्हाः ६
शुश्रूषवश्चापि जितेन्द्रियाश्च ज्ञानागमे चापि गताः स्म निष्ठाम्
न बाल इत्यवमन्तव्यमाहुर्बालोऽप्यग्निर्दहति स्पृश्यमानः ७
द्वारपाल उवाच
सरस्वतीमीरय वेदजुष्टामेकाक्षरां बहुरूपां विराजम्
अङ्गात्मानं समवेक्षस्व बालं किं श्लाघसे दुर्लभा वादसिद्धिः ८

अष्टावक्र उवाच
न ज्ञायते कायवृद्ध्या विवृद्धिर्यथाष्ठीला शाल्मलेः संप्रवृद्धा
ह्रस्वोऽल्पकायः फलितो विवृद्धो यश्चाफलस्तस्य न वृद्धभावः ९
द्वारपाल उवाच
वृद्धेभ्य एवेह मतिं स्म बाला गृह्णन्ति कालेन भवन्ति वृद्धाः
न हि ज्ञानमल्पकालेन शक्यं कस्माद्बालो वृद्ध इवा वभाषसे १०
अष्टावक्र उवाच
न तेन स्थविरो भवति येनास्य पलितं शिरः
बालोऽपि यः प्रजानाति तं देवाः स्थविरं विदुः ११
न हायनैर्न पलितैर्न वित्तेन न बन्धुभिः
ऋषयश्चक्रिरे धर्मं योऽनूचानः स नो महान् १२
दिदृक्षुरस्मि संप्राप्तो बन्दिनं राजसंसदि
निवेदयस्व मां द्वाःस्थ राज्ञे पुष्करमालिने १३
द्रष्टास्यद्य वदतो द्वारपाल मनीषिभिः सह वादे विवृद्धे
उताहो वाप्युच्चतां नीचतां वा तूष्णीं भूतेष्वथ सर्वेषु चाद्य १४
द्वारपाल उवाच
कथं यज्ञं दशवर्षो विशेस्त्वं विनीतानां विदुषां संप्रवेश्यम्
उपायतः प्रयतिष्ये तवाहं प्रवेशने कुरु यत्नं यथावत् १५
अष्टावक्र उवाच
भो भो राजञ्जनकानां वरिष्ठ सभाज्यस्त्वं त्वयि सर्वं समृद्धम्
त्वं वा कर्ता कर्मणां यज्ञियानां ययातिरेको नृपतिर्वा पुरस्तात् १६
विद्वान्बन्दी वेदविदो निगृह्य वादे भग्नानप्रतिशङ्कमानः
त्वया निसृष्टैः पुरुषैराप्तकृद्भिर्जले सर्वान्मज्जयतीति नः श्रुतम् १७
स तच्छ्रुत्वा ब्राह्मणानां सकाशाद्ब्रह्मोद्यं वै कथयितुमागतोऽस्मि
क्वासौ बन्दी यावदेनं समेत्य नक्षत्राणीव सविता नाशयामि १८
राजोवाच
आशंससे बन्दिनं त्वं विजेतुमविज्ञात्वा वाक्यबलं परस्य
विज्ञातवीर्यैः शक्यमेवं प्रवक्तुं दृष्टश्चासौ ब्राह्मणैर्वादशीलैः १९
अष्टावक्र उवाच
विवादितोऽसौ नहि मादृशैर्हि सिंहीकृतस्तेन वदत्यभीतः

समेत्य मां निहतः शेष्यतेऽद्य मार्गे भग्नं शकटमिवाबलाक्षम् २०
राजोवाच
षण्णाभेर्द्वादशाक्षस्य चतुर्विंशतिपर्वणः
यस्त्रिषष्टिशतारस्य वेदार्थं स परः कविः २१
अष्टावक्र उवाच
चतुर्विंशतिपर्व त्वां षण्णाभि द्वादशप्रधि
तत्त्रिषष्टिशतारं चै चक्रं पातु सदागति २२
राजोवाच
वडवे इव संयुक्ते श्येनपाते दिवौकसाम्
कस्तयोर्गर्भमाधत्ते गर्भं सुषुवतुश्च कम् २३
अष्टावक्र उवाच
मा स्म ते ते गृहे राजञ्शात्रवाणामपि ध्रुवम्
वातसारथिराधत्ते गर्भं सुषुवतुश्च तम् २४
राजोवाच
किं स्वित्सुप्तं न निमिषति किं स्विज्जातं न चोपति
कस्य स्विद्हृदयं नास्ति किं स्विद्वेगेन वर्धते २५
अष्टावक्र उवाच
मत्स्यः सुप्तो न निमिषत्यण्डं जातं न चोपति
अश्मनो हृदयं नास्ति नदी वेगेन वर्धते २६
राजोवाच
न त्वा मन्ये मानुषं देवसत्त्वं न त्वं बालः स्थविरस्त्वं मतो मे
न ते तुल्यो विद्यते वाक्प्रलापे तस्माद्द्वारं वितराम्येष बंदी २७
इति श्रीमहाभारते आरण्यकपर्वणि त्रयस्त्रिंशदधिकशततमोऽध्यायः १३३

## चतुस्त्रिंशदधिकशततमोऽध्यायः

अष्टावक्र उवाच
अत्रोग्रसेनसमितेषु राजन्समागतेष्वप्रतिमेषु राजसु
न वै विवित्सान्तरमस्ति वादिनां महाजले हंसनिनादिनामिव १
न मेऽद्य वक्ष्यस्यति वादिमानिन्ग्लहं प्रपन्नः सरितामिवागमः
हुताशनस्येव समिद्धतेजसः स्थिरो भवस्वेह मामद्य बंदिन् २

बन्द्युवाच
व्याघ्रं शयानं प्रति मा प्रबोधय आशीविषं सृक्किणी लेलिहानम्
पदाहतस्येव शिरोऽभिहत्य नादष्टो वै मोक्ष्यसे तन्निबोध ३
यो वै दर्पात्संहननोपपन्नः सुदुर्बलः पर्वतमाविहन्ति
तस्यैव पाणिः सनखो विशीर्यते न चैव शैलस्य हि दृश्यते व्रणः ४
सर्वे राज्ञो मैथिलस्य मैनाकस्येव पर्वताः
निकृष्टभूता राजानो वत्सा अनडुहो यथा ५
लोमश उवाच
अष्टावक्रः समितौ गर्जमानो जातक्रोधो बन्दिनमाह राजन्
उक्ते वाक्ये चोत्तरं मे ब्रवीहि वाक्यस्य चाप्युत्तरं ते ब्रवीमि ६
बन्द्युवाच
एक एवाग्निर्बहुधा समिध्यते एकः सूर्यः सर्वमिदं प्रभासते
एको वीरो देवराजो निहन्ता यमः पितृणामीश्वरश्चैक एव ७
अष्टावक्र उवाच
द्वाविन्द्राग्नी चरतो वै सखायौ द्वौ देवर्षी नारदः पर्वतश्च
द्वावश्विनौ द्वे च रथस्य चक्रे भार्यापती द्वौ विहितौ विधात्रा ८
बंद्युवाच
त्रिः सूयते कर्मणा वै प्रजेयं त्रयो युक्ता वाजपेयं वहन्ति
अध्वर्यवस्त्रिषवणानि तन्वते त्रयो लोकास्त्रीणि ज्योतींषि चाहुः ९
अष्टावक्र उवाच
चतुष्टयं ब्राह्मणानां निकेतं चत्वारो युक्ता यज्ञमिमं वहन्ति
दिशश्चतस्रश्चतुरश्च वर्णा चतुष्पदा गौरपि शश्वदुक्ता १०
बंद्युवाच
पञ्चाग्नयः पञ्चपदा च पङ्क्तिर्यज्ञाः पञ्चैवाप्यथ पञ्चेन्द्रियाणि
दृष्टा वेदे पञ्चचूडाश्च पञ्च लोके ख्यातं पञ्चनदं च पुण्यम् ११
अष्टावक्र उवाच
षडाधाने दक्षिणामाहुरेके षडवेमे ऋतवः कालचक्रम्
षडिन्द्रियाण्युत षट् कृत्तिकाश्च षट् साद्यस्काः सर्वदेवेषु दृष्टाः १२
बंद्युवाच
सप्त ग्राम्याः पशवः सप्त वन्याः सप्त छन्दांसि क्रतुमेकं वहन्ति

सप्तर्षयः सप्त चाप्यर्हणानि सप्ततन्त्री प्रथिता चैव वीणा १३
अष्टावक्र उवाच
अष्टौ शाणाः शतमानं वहन्ति तथाष्टपादः शरभः सिंहघाती
अष्टौ वसूञ्शुश्रुम देवतासु यूपश्चाष्टास्त्रिर्विहितः सर्वयज्ञः १४
बंद्युवाच
नवैवोक्ताः सामिधेन्यः पितृणां तथा प्राहुर्नवयोगं विसर्गम्
नवाक्षरा बृहती संप्रदिष्टा नवयोगो गणनामेति शश्वत् १५
अष्टावक्र उवाच
दशा दशोक्ताः पुरुषस्य लोके सहस्रमाहुर्दशपूर्णं शतानि
दशैव मासान्बिभ्रति गर्भवत्यो दशेरका दशदाशा दशार्णाः १६
बंद्युवाच
एकादशैकादशिनः पशूनामेकादशैवात्र भवन्ति यूपाः
एकादश प्राणभृतां विकारा एकादशोक्ता दिवि देवेषु रुद्राः १७
अष्टावक्र उवाच
संवत्सरं द्वादश मास माहुर्जगत्याः पादो द्वादशैवाक्षराणि
द्वादशाहः प्राकृतो यज्ञ उक्तो द्वादशादित्यान्कथयन्तीह विप्राः १८
बंद्युवाच
त्रयोदशी तिथिरुक्ता महोग्रा त्रयोदशद्वीपवती मही च १९
लोमश उवाच
एतावदुक्त्वा विरराम बन्दी श्लोकस्यार्धं व्याजहाराष्टवक्रः
त्रयोदशाहानि ससार केशी त्रयोदशादीन्यतिच्छन्दांसि चाहुः २०
ततो महानुदतिष्ठन्निनादस्तूष्णींभूतं सूतपुत्रं निशम्य
अधोमुखं ध्यानपरं तदानीमष्टावक्रं चाप्युदीर्यन्तमेव २१
तस्मिंस्तथा संकुले वर्तमाने स्फीते यज्ञे जनकस्याथ राज्ञः
अष्टावक्रं पूजयन्तोऽभ्युपेयुर्विप्राः सर्वे प्राञ्जलयः प्रतीताः २२
अष्टावक्र उवाच
अनेन वै ब्राह्मणाः शुश्रुवांसो वादे जित्वा सलिले मज्जिताः किल
तानेव धर्मानयमद्य बन्दी प्राप्नोतु गृह्याप्सु निमज्जयैनम् २३
बंद्युवाच
अहं पुत्रो वरुणस्योत राज्ञस्तत्रास सत्रं द्वादशवार्षिकं वै

सत्रेण ते जनक तुल्यकालं तदर्थं ते प्रहिता मे द्विजाग्र्याः २४
एते सर्वे वरुणस्योत यज्ञं द्रष्टुं गता इह आयान्ति भूयः
अष्टावक्रं पूजये पूजनीयं यस्य हेतोर्जनितारं समेष्ये २५
अष्टावक्र उवाच
विप्राः समुद्राम्भसि मज्जितास्ते वाचा जिता मेधया आविदानाः
तां मेधया वाचमथोज्जहार यथा वाचमवचिन्वन्ति सन्तः २६
अग्निर्दहञ्जातवेदाः सतां गृहान्विसर्जयंस्तेजसा न स्म धाक्षीत्
बालेषु पुत्रेषु कृपणं वदत्सु तथा वाचमवचिन्वन्ति सन्तः २७
श्लेष्मातकी क्षीणवर्चाः शृणोषि उताहो त्वां स्तुतयो मादयन्ति
हस्तीव त्वं जनक वितुद्यमानो न मामिकां वाचमिमां शृणोषि २८
जनक उवाच
शृणोमि वाचं तव दिव्यरूपाममानुषीं दिव्यरूपोऽसि साक्षात्
अजैषीर्यद्बन्दिनं त्वं विवादे निसृष्ट एष तव कामोऽद्य बन्दी २९
अष्टावक्र उवाच
नानेन जीवता कश्चिदर्थो मे बन्दिना नृप
पिता यद्यस्य वरुणो मज्जयैनं जलाशये ३०
बन्द्युवाच
अहं पुत्रो वरुणस्योत राज्ञो न मे भयं सलिले मज्जितस्य
इमं मुहूर्तं पितरं द्रक्ष्यतेऽयमष्टावक्रश्चिरनष्टं कहोडम् ३१
लोमश उवाच
ततस्ते पूजिता विप्रा वरुणेन महात्मना
उदतिष्ठन्त ते सर्वे जनकस्य समीपतः ३२
कहोड उवाच
इत्यर्थमिच्छन्ति सुताञ्जना जनक कर्मणा
यदहं नाशकं कर्तुं तत्पुत्रः कृतवान्मम ३३
उताबलस्य बलवानुत बालस्य पण्डितः
उत वाविदुषो विद्वान्पुत्रो जनक जायते ३४
बन्द्युवाच
शितेन ते परशुना स्वयमेवान्तको नृप
शिरांस्यपाहरत्वाजौ रिपूणां भद्रमस्तु ते ३५

महदुक्थ्यं गीयते साम चाग्र्यं सम्यक्सोमः पीयते चात्र सत्रे
शुचीन्भागान्प्रतिजगृहुश्च हृष्टाः साक्षाद्देवा जनकस्येह यज्ञे ३६
लोमश उवाच
समुत्थितेष्वथ सर्वेषु राजन्विप्रेषु तेष्वधिकं सुप्रभेषु
अनुज्ञातो जनकेनाथ राज्ञा विवेश तोयं सागरस्योत बन्दी ३७
अष्टावक्रः पितरं पूजयित्वि संपूजितो ब्राह्मणैस्तैर्यथावत्
प्रत्याजगामाश्रममेव चाग्र्यं जित्वा बन्दिं सहितो मातुलेन ३८
अत्र कौन्तेय सहितो भ्रातृभिस्त्वं सुखोषितः सह विप्रैः प्रतीतः
पुगयान्यन्यानि शुचिकर्मैकभक्तिर्मया सार्धं चरितास्याजमीढ ३९
इति श्रीमहाभारते आरगयकपर्वणि चतुस्त्रिंशदधिकशततमोऽध्यायः १३४

पञ्चत्रिंशदधिकशततमोऽध्यायः

लोमश उवाच
एषा मधुविला राजन्समंगा संप्रकाशते
एतत्कर्दमिलं नाम भरतस्याभिषेचनम् १
अलक्ष्म्या किल संयुक्तो वृत्रं हत्वा शचीपतिः
आप्लुतः सर्वपापेभ्यः समंगायां व्यमुच्यत २
एतद्विनशनं कुक्षौ मैनाकस्य नरर्षभ
अदितिर्यत्र पुत्रार्थं तदन्नमपचत्पुरा ३
एनं पर्वतराजानमारुह्य पुरुषर्षभ
अयशस्यामसंशब्द्यामलक्ष्मीं व्यपनोत्स्यथ ४
एते कनखला राजन्नृषीणां दयिता नगाः
एषा प्रकाशते गङ्गा युधिष्ठिर महानदी ५
सनत्कुमारो भगवानत्र सिद्धिमगात्पराम्
आजमीढावगाह्यैनां सर्वपापैः प्रमोक्ष्यसे ६
अपां ह्रदं च पुगयाख्यं भृगुतुङ्गं च पर्वतम्
तूष्णीं गङ्गां च कौन्तेय सामात्यः समुपस्पृश ७
आश्रमः स्थूलसिरसो रमणीयः प्रकाशते
अत्र मानं च कौन्तेय क्रोधं चैव विवर्जय ८
एष रैभ्याश्रमः श्रीमान्पागडवेय प्रकाशते

भारद्वाजो यत्र कविर्यवक्रीतो व्यनश्यत ९
युधिष्ठिर उवाच
कथंयुक्तोऽभवदृषिर्भरद्वाजः प्रतापवान्
किमर्थं च यवक्रीत ऋषिपुत्रो व्यनश्यत १०
एतत्सर्व यथावृत्तं श्रोतुमिच्छामि लोमश
कर्मभिर्देवकल्पानां कीर्त्यमानैर्भृशं रमे ११
लोमश उवाच
भरद्वाजश्च रैभ्यश्च सखायौ संबभूवतुः
तावूषतुरिहात्यन्तं प्रीयमाणौ वनान्तरे १२
रैभ्यस्य तु सुतावास्तामर्वावसुपरावसू
आसीद्यवक्रीः पुत्रस्तु भरद्वाजस्य भारत १३
रैभ्यो विद्वान्सहापत्यस्तपस्वी चेतरोऽभवत्
तयोश्चाप्यतुला प्रीतिर्बाल्यात्प्रभृति भारत १४
यवक्रीः पितरं दृष्ट्वा तपस्विनमसत्कृतम्
दृष्ट्वा च सत्कृतं विप्रै रैभ्यं पुत्रैः सहानघ १५
पर्यतप्यत तेजस्वी मन्युनाभिपरिप्लुतः
तपस्तेपे ततो घोरं वेदज्ञानाय पाण्डव १६
सुसमिद्धे महत्यग्नौ शरीरमुपतापयन्
जनयामास सन्तापमिन्द्रस्य सुमहातपाः १७
तत इन्द्रो यवक्रीतमुपगम्य युधिष्ठिर
अब्रवीत्कस्य हेतोस्त्वमास्थितस्तप उत्तमम् १८
यवक्रीरुवाच
द्विजानामनधीता वै वेदाः सुरगणार्चित
प्रतिभान्त्विति तप्येऽहमिदं परमकं तपः १९
स्वाध्यायार्थे समारम्भो ममायं पाकशासन
तपसा ज्ञातुमिच्छामि सर्वज्ञानानि कौशिक २०
कालेन महता वेदाः शक्या गुरुमुखाद्विभो
प्राप्तुं तस्मादयं यत्नः परमो मे समास्थितः २१
इन्द्र उवाच
अमार्ग एष विप्रर्षे येन त्वं यातुमिच्छसि

किं विघातेन ते विप्र गच्छाधीहि गुरोर्मुखात् २२
लोमश उवाच
एवमुक्त्वा गतः शक्रो यवक्रीरपि भारत
भूय एवाकरोद्यत्नं तपस्यमितविक्रम २३
घोरेण तपसा राजंस्तप्यमानो महातपाः
सन्तापयामास भृशं देवेन्द्रमिति नः श्रुतम् २४
तं तथा तप्यमानं तु तपस्तीव्रं महामुनिम्
उपेत्य बलभिद्देवो वारयामास वै पुनः २५
अशक्योऽथ समारब्धो नैतद्बुद्धिकृतं तव
प्रतिभास्यन्ति वै वेदास्तव चैव पितुश्च ते २६
यवक्रीरुवाच
न चैतदेवं क्रियते देवराज ममेप्सितम्
महता नियमेनाहं तप्स्ये घोरतरं तपः २७
समिद्धेऽग्नावुपकृत्याङ्गमङ्गं होष्यामि वा मघवंस्तन्निबोध
यद्येतदेवं न करोषि कामं ममेप्सितं देवराजेह सर्वम् २८
लोमश उवाच
निश्चयं तमभिज्ञाय मुनेस्तस्य महात्मनः
प्रतिवारणहेत्वर्थं बुद्ध्या संचिन्त्य बुद्धिमान् २९
तत इन्द्रोऽकरोद्रूपं ब्राह्मणस्य तपस्विनः
अनेकशतवर्षस्य दुर्बलस्य सयक्ष्मणः ३०
यवक्रीतस्य यत्तीर्थमुचितं शौचकर्मणि
भागीरथ्यां तत्र सेतुं वालुकाभिश्चकार सः ३१
यदास्य वदतो वाक्यं न स चक्रे द्विजोत्तमः
वालुकाभिस्ततः शक्रो गङ्गां समभिपूरयन् ३२
वालुकामुष्टिमनिशं भागीरथ्यां व्यसर्जयत्
सेतुमभ्यारभच्छक्रो यवक्रीतं निदर्शयन् ३३
तं ददर्श यवक्रीस्तु यत्नवन्तं निबन्धने
प्रहसंश्चाब्रवीद्वाक्यमिदं स मुनिपुङ्गवः ३४
किमिदं वर्तते ब्रह्मन्किं च ते ह चिकीर्षितम्
अतीव हि महान्यत्नः क्रियतेऽय निरर्थकः ३५

इन्द्र उवाच
बन्धिष्ये सेतुना गङ्गां सुखः पन्था भविष्यति
क्लिश्यते हि जनस्तात तरमाणः पुनः पुनः ३६
यवक्रीरुवाच
नायं शक्यस्त्वया बद्धुं महानोघः कथंचन
अशक्याद्विनिवर्तस्व शक्यमर्थं समारभ ३७
इन्द्र उवाच
यथैव भवता चेदं तपो वेदार्थमुद्यतम्
अशक्यं तद्वदस्माभिरयं भारः समुद्यतः ३८
यवक्रीरुवाच
यथा तव निरर्थोऽयमारम्भस्त्रिदशेश्वर
तथा यदि ममापीदं मन्यसे पाकशासन ३९
क्रियतां यद्भवेच्छक्यं मया सुरगणेश्वर
वरांश्च मे प्रयच्छान्यान्यैरन्यान्भवितास्म्यति ४०
लोमश उवाच
तस्मै प्रादाद्वरानिन्द्र उक्तवान्यान्महातपाः
प्रतिभास्यन्ति ते वेदाः पित्रा सह यथेप्सिताः ४१
यच्चान्यत्काङ्क्षसे कामं यवक्रीर्गम्यतामिति
स लब्धकामः पितरमुपेत्याथ ततोऽब्रवीत् ४२
इति श्रीमहाभारते आरण्यकपर्वणि पञ्चत्रिंशदधिकशततमोऽध्यायः १३५

## षट्त्रिंशदधिकशततमोऽध्यायः

यवक्रीरुवाच
प्रतिभास्यन्ति वै वेदा मम तातस्य चोभयोः
अति चान्यान्भविष्यावो वरा लब्धास्तथा मया १
भरद्वाज उवाच
दर्पस्ते भविता तात वराँल्लब्ध्वा यथेप्सितान्
स दर्पपूर्णः कृपणः क्षिप्रमेव विनश्यसि २
अत्राप्युदाहरन्तीमा गाथा देवैरुदाहृताः
ऋषिरासीत्पुरा पुत्र बालधिर्नाम वीर्यवान् ३

स पुत्रशोकादुद्विग्नस्तपस्तेपे सुदुश्चरम्
भवेन्मम सुतोऽमर्त्य इति तं लब्धवांश्च सः ४
तस्य प्रसादो देवैश्च कृतो न त्वमरैः समः
नामर्त्यो विद्यते मर्त्यो निमित्तायुर्भविष्यति ५
बालधिरुवाच
यथेमे पर्वताः शश्वत्तिष्ठन्ति सुरसत्तमाः
अक्षयास्तन्निमित्तं मे सुतस्यायुर्भवेदिति ६
भरद्वाज उवाच
तस्य पुत्रस्तदा जज्ञे मेधावी क्रोधनः सदा
स तच्छ्रुत्वाकरोद्दर्पमृषींश्चैवावमन्यत ७
विकुर्वाणो मुनीनां नु चरमाणो महीमिमाम्
आससाद महावीर्यं धनुषाक्षं मनीषिणम् ८
तस्यापचक्रे मेधावी तं शशाप स वीर्यवान्
भव भस्मेति चोक्तः स न भस्म समपद्यत ९
धनुषाक्षस्तु तं दृष्ट्वा मेधाविनमनामयम्
निमित्तमस्य महिषैर्भेदयामास वीर्यवान् १०
स निमित्ते विनष्टे तु ममार सहसा शिशुः
तं मृतं पुत्रमादाय विललाप ततः पिता ११
लालप्यमानं तं दृष्ट्वा मुनयः पुनरार्तवत्
ऊचुर्वेदोक्तया पूर्वं गाथया तन्निबोध मे १२
न दिष्टमर्थमत्येतुमीशो मर्त्यः कथंचन
महिषैर्भेदयामास धनुषाक्षो महीधरान् १३
एवं लब्ध्वा वरान्बाला दर्पपूर्णास्तरस्विनः
क्षिप्रमेव विनश्यन्ति यथा न स्यात्तथा भवान् १४
एष रैभ्यो महावीर्यः पुत्रौ चाऽस्य तथाविधौ
तं यथा पुत्र नाभ्येषि तथा कुर्यास्त्वतन्द्रितः १५
स हि क्रुद्धः समर्थस्त्वां पुत्र पीडयितुं रुषा
वैद्यश्चापि तपस्वी च कोपनश्च महानृषिः १६
यवक्रीरुवाच
एवं करिष्ये मा तापं तात कार्षीः कथञ्चन

यथा हि मे भवान्मान्यस्तथा रैभ्यः पिता मम १७
लोमश उवाच
उक्त्वा स पितरं श्लक्ष्णं यवक्रीरकुतोभयः
विप्रकुर्वन्नृषीनन्यानतुष्यत्परया मुदा १८
इति श्रीमहाभारते आरण्यकपर्वणि षट्त्रिंशदधिकशततमोऽध्यायः १३६

सप्तत्रिंशदधिकशततमोऽध्यायः

लोमश उवाच
चङ्क्रम्यमाणः स तदा यवक्रीरकुतोभयः
जगाम माधवे मासि रैभ्याश्रमपदं प्रति १
स ददर्शाश्रमे पुण्ये पुष्पितद्रुमभूषिते
विचरन्तीं स्नुषां तस्य किंनरीमिव भारत २
यवक्रीस्तामुवाचेदमुपतिष्ठस्व मामिति
निर्लज्जो लज्जया युक्तां कामेन हृतचेतनः ३
सा तस्य शीलमाज्ञाय तस्माच्छापाच्च बिभ्यती
तेजस्वितां च रैभ्यस्य तथेत्युक्त्वा जगाम सा ४
तत एकान्तमुन्नीय मज्जयामास भारत
आजगाम तदा रैभ्यः स्वमाश्रममरिन्दम ५
रुदन्तीं च स्नुषां दृष्ट्वा भार्यामार्तां परावसोः
सान्त्वयञ्श्लक्ष्णया वाचा पर्यपृच्छद्युधिष्ठिर ६
सा तस्मै सर्वमाचष्ट यवक्रीभाषितं शुभा
प्रत्युक्तं च यवक्रीतं प्रेक्षापूर्वं तदात्मना ७
शृण्वानस्यैव रैभ्यस्य यवक्रीतविचेष्टितम्
दहन्निव तदा चेतः क्रोधः समभवन्महान् ८
स तदा मन्युनाविष्टस्तपस्वी भृशकोपनः
अवलुप्य जटामेकां जुहावाग्नौ सुसंस्कृते ९
ततः समभवन्नारी तस्या रूपेण संमिता
अवलुप्यापरां चाथ जुहावाग्नौ जटां पुनः १०
ततः समभवद्रक्षो घोराक्षं भीमदर्शनम्
अब्रूतां तौ तदा रैभ्यं किं कार्यं करवामहे ११

तावब्रवीदृषिः क्रुद्धो यवक्रीर्वध्यतामिति
जग्मतुस्तौ तथेत्युक्त्वा यवक्रीतजिघांसया १२
ततस्तं समुपास्थाय कृत्या सृष्टा महात्मना
कमगडलुं जहारास्य मोहयित्वा तु भारत १३
उच्छिष्टं तु यवक्रीतमपकृष्टकमगडलुम्
तत उद्यतशूलः स राक्षसः समुपाद्रवत् १४
तमापतन्तं संप्रेक्ष्य शूलहस्तं जिघांसया
यवक्रीः सहसोत्थाय प्राद्रवद्येन वै सरः १५
जलहीनं सरो दृष्ट्वा यवक्रीस्त्वरितः पुनः
जगाम सरितः सर्वास्ताश्चाप्यासन्विशोषिताः १६
स काल्यमानो घोरेण शूलहस्तेन रक्षसा
अग्निहोत्रं पितुर्भीतः सहसा समुपाद्रवत् १७
स वै प्रविशमानस्तु शूद्रेणान्धेन रक्षिणा
निगृहीतो बलाद्द्वारि सोऽवातिष्ठत पार्थिव १८
निगृहीतं तु शूद्रेण यवक्रीतं स राक्षसः
ताडयामास शूलेन स भिन्नहृदयोऽपतत् १९
यवक्रीतं स हत्वा तु राक्षसो रैभ्यमागमत्
अनुज्ञातस्तु रैभ्येण तया नार्या सहाचरत् २०
इति श्रीमहाभारते आरगयकपर्वणि सप्तत्रिंशदधिकशततमोऽध्यायः १३७

## अष्टात्रिंशाधिकशततमोऽध्यायः

लोमश उवाच
भरद्वाजस्तु कौन्तेय कृत्वा स्वाध्यायमाह्निकम्
समित्कलापमादाय प्रविवेश स्वमाश्रमम् १
तं स्म दृष्ट्वा पुरा सर्वे प्रत्युत्तिष्ठन्ति पावकाः
न त्वेनमुपतिष्ठन्ति हतपुत्रं तदाग्नयः २
वैकृतं त्वग्निहोत्रे स लक्षयित्वा महातपाः
तमन्धं शूद्रमासीनं गृहपालमथाब्रवीत् ३
किं नु मे नाग्नयः शूद्र प्रतिनन्दन्ति दर्शनम्
त्वं चापि न यथा पूर्वं कच्चित्क्षेममिहाश्रमे ४

कच्चिन्न रैभ्यं पुत्रो मे गतवानल्पचेतनः
एतदाचक्ष्व मे शीघ्रं न हि मे शुध्यते मनः ५
शूद्र उवाच
रैभ्यं गतो नूनमसौ सुतस्ते मन्दचेतनः
तथा हि विहतः शेते राक्षसेन बलीयसा ६
प्रकाल्यमानस्तेनायं शूलहस्तेन रक्षसा
अग्न्यगारं प्रति द्वारि मया दोर्भ्यां निवारितः ७
ततः स निहतो ह्यत्र जलकामोऽशुचिर्ध्रुवम्
संभावितो हि तूर्णेन शूलहस्तेन रक्षसा ८
लोमश उवाच
भरद्वाजस्तु शूद्रस्य तच्छ्रुत्वा विप्रियं वचः
गतासुं पुत्रमादाय विललाप सुदुःखितः ९
ब्राह्मणानां किलार्थाय ननु त्वं तप्तवांस्तपः
द्विजानामनधीता वै वेदाः संप्रतिभान्त्विति १०
तथा कल्याणशीलस्त्वं ब्राह्मणेषु महात्मसु
अनागाः सर्वभूतेषु कर्कशत्वमुपेयिवान् ११
प्रतिषिद्धो मया तात रैभ्यावसथदर्शनात्
गतवानेव तं क्षुद्रं कालान्तकयमोपमम् १२
यः स जानन्महातेजा वृद्धस्यैकं ममात्मजम्
गतवानेव कोपस्य वशं परमदुर्मतिः १३
पुत्रशोकमनुप्राप्य एष रैभ्यस्य कर्मणा
त्यक्ष्यामि त्वामृते पुत्र प्राणानिष्टतमान्भुवि १४
यथाहं पुत्रशोकेन देहं त्यक्ष्यामि किल्बिषी
तथा ज्येष्ठः सुतो रैभ्यं हिंस्याच्छीघ्रमनागसम् १५
सुखिनो वै नरा येषां जात्या पुत्रो न विद्यते
ये पुत्रशोकमप्राप्य विचरन्ति यथासुखम् १६
ये तु पुत्रकृताच्छोकाद्भृशं व्याकुलचेतसः
शपन्तीष्टान्सखीनार्तास्तेभ्यः पापतरो नु कः १७
परासुश्च सुतोदृष्टः शप्तश्चेष्टः सखा मया
ईदृशीमापदं को नु द्वितीयोऽनुभविष्यति १८

विलप्यैवं बहुविधं भरद्वाजोऽदहत्सुतम्
सुसमिद्धं ततः पश्चात्प्रविवेश हुताशनम् १९
इति श्रीमहाभारते आरण्यकपर्वणि अष्टात्रिंशाधिकशततमोऽध्यायः १३८

एकोनचत्वारिंशदधिकशततमोऽध्यायः

लोमश उवाच
एतस्मिन्नेव काले तु बृहद्द्युम्नो महीपतिः
सत्रमास्ते महाभागो रैभ्ययाज्यः प्रतापवान् १
तेन रैभ्यस्य वै पुत्रावर्वावसुपरावसू
वृतौ सहायौ सत्रार्थे बृहद्द्युम्नेन धीमता २
तत्र तौ समनुज्ञातौ पित्रा कौन्तेय जग्मतुः
आश्रमे त्वभवद्रैभ्यो भार्या चैव परावसोः ३
अथावलोककोऽगच्छद्गृहानेकः परावसुः
कृष्णाजिनेन संवीतं ददर्श पितरं वने ४
जघन्यरात्रे निद्रान्धः सावशेषे तमस्यपि
चरन्तं गहनेऽरण्ये मेने स पितरं मृगम् ५
मृगं तु मन्यमानेन पिता वै तेन हिंसितः
अकामयानेन तदा शरीरत्राणमिच्छता ६
स तस्य प्रेतकार्याणि कृत्वा सर्वाणि भारत
पुनरागम्य तत्सत्रमब्रवीद्भ्रातरं वचः ७
इदं कर्म न शक्तस्त्वं वोढुमेकः कथञ्चन
मया तु हिंसितस्तातो मन्यमानेन तं मृगम् ८
सोऽस्मदर्थे व्रतं साधु चर त्वं ब्रह्महिंसनम्
समर्थो ह्यहमेकाकी कर्म कर्तुमिदं मुने ९
अर्वावसुरुवाच
करोतु वै भवान्सत्रं बृहद्द्युम्नस्य धीमतः
ब्रह्महत्यां चरिष्येऽह त्वदर्थं नियतेन्द्रियः १०
लोमश उवाच
स तस्य ब्रह्महत्यायाः पारं गत्वा युधिष्ठिर
अर्वावसुस्तदा सत्रमाजगाम पुनर्मुनिः ११

ततः परावसुर्दृष्ट्वा भ्रातरं समुपस्थितम्
बृहद्द्युम्नमुवाचेदं वचनं परिषद्गतम् १२
एष ते ब्रह्महा यज्ञं मा द्रष्टुं प्रविशेदिति
ब्रह्महा प्रेक्षितेनापि पीडयेत्त्वां न संशयः १३
प्रेष्यैरुत्सार्यमाणस्तु राजन्नर्वावसुस्तदा
न मया ब्रह्महत्येयं कृतेत्याह पुनः पुनः १४
उच्यमानोऽसकृत्प्रेष्यैर्ब्रह्महन्निति भारत
नैव स प्रतिजानाति ब्रह्महत्यां स्वयं कृताम्
मम भ्रात्रा कृतमिदं मया तु परिरक्षितम् १५
प्रीतास्तस्याभवन्देवाः कर्मणार्वावसोर्नृप
तं ते प्रवरयामासुर्निरासुश्च परावसुम् १६
ततो देवा वरं तस्मै ददुरग्निपुरोगमाः
स चापि वरयामास पितुरुत्थानमात्मनः १७
अनागस्त्वं तथा भ्रातुः पितुश्चास्मरणं वधे
भरद्वाजस्य चोत्थानं यवक्रीतस्य चोभयोः १८
ततः प्रादुर्बभूवुस्ते सर्व एव युधिष्ठिर
अथाब्रवीद्यवक्रीतो देवानग्निपुरोगमान् १९
समधीतं मया ब्रह्म व्रतानि चरितानि च
कथं नु रैभ्यः शक्तो मामधीयानं तपस्विनम्
तथायुक्तेन विधिना निहन्तुममरोत्तमाः २०
देवा ऊचुः
मैवं कृथा यवक्रीत यथा वदसि वै मुने
ऋते गुरुमधीता हि सुखं वेदास्त्वया पुरा २१
अनेन तु गुरून्दुःखात्तोषयित्वा स्वकर्मणा
कालेन महता क्लेशाद्ब्रह्माधिगतमुत्तमम् २२
लोमश उवाच
यवक्रीतमथोक्त्वैवं देवाः साग्निपुरोगमाः
सञ्जीवयित्वा तान्सर्वान्पुनर्जग्मुस्त्रिविष्टपम् २३
आश्रमस्तस्य पुण्योऽय सदापुष्पफलद्रुमः
अत्रोष्य राजशार्दूल सर्वपापैः प्रमोक्ष्यसे २४

इति श्रीमहाभारते आरगयकपर्वणि एकोनचत्वारिंशदधिकशततमोऽध्यायः
१३९

## चत्वारिंशदधिकशततमोऽध्यायः

लोमश उवाच
उशीरबीजं मैनाकं गिरिं श्वेतं च भारत
समतीतोऽसि कौन्तेय कालशैलं च पार्थिव १
एषा गङ्गा सप्तविधा राजते भरतर्षभ
स्थानं विरजसं पुगयं यत्राग्निर्नित्यमिध्यते २
एतद्वै मानुषेणाद्य न शक्यं द्रष्टुमप्युत
समाधिं कुरुताव्यग्रास्तीर्थान्येतानि द्रक्ष्यथ ३
श्वेतं गिरिं प्रवेक्ष्यामो मन्दरं चैव पर्वतम्
यत्र माणिवरो यक्षः कुबेरश्चापि यक्षराट् ४
अष्टाशीतिसहस्राणि गन्धर्वाः शीघ्रचारिणः
तथा किंपुरुषा राजन्यक्षाश्चैव चतुर्गुणाः ५
अनेकरूपसंस्थाना नानाप्रहरणाश्च ते
यक्षेन्द्रं मनुजश्रेष्ठ माणिभद्रमुपासते ६
तेषामृद्धिरतीवाग्र्या गतौ वायुसमाश्च ते
स्थानात्प्रच्यावयेयुर्ये देवराजमपि ध्रुवम् ७
तैस्तात बलिभिर्गुप्ता यातुधानैश्च रक्षिताः
दुर्गमाः पर्वताः पार्थ समाधिं परमं कुरु ८
कुबेरसचिवाश्चान्ये रौद्रा मैत्राश्च राक्षसाः
तैः समेष्याम कौन्तेय यत्तो विक्रमणे भव ९
कैलासः पर्वतो राजन्षड्योजनशतान्युत
यत्र देवाः समायान्ति विशाला यत्र भारत १०
असंख्येयास्तु कौन्तेय यक्षराक्षसकिन्नराः
नागाः सुपर्णा गन्धर्वाः कुबेरसदनं प्रति ११
तान्विगाहस्व पार्थाद्य तपसा च दमेन च
रक्ष्यमाणो मया राजन्भीमसेनबलेन च १२
स्वस्ति ते वरुणो राजा यमश्च समितिञ्जयः

गङ्गा च यमुना चैव पर्वतश्च दधातु ते १३
इन्द्रस्य जाम्बूनदपर्वताग्रे शृणोमि घोषं तव देवि गङ्गे
गोपाययेमं सुभगे गिरिभ्यः सर्वाजमीढापचितं नरेन्द्रम्
भवस्व शर्म प्रविविक्षतोऽस्य शैलानिमाञ्शैलसुते नृपस्य १४
युधिष्ठिर उवाच
अपूर्वोऽय सम्भ्रमो लोमशस्य कृष्णां सर्वे रक्षत मा प्रमादम्
देशो ह्ययं दुर्गतमो मतोऽस्य तस्मात्परं शौचमिहाचरध्वम् १५
वैशम्पायन उवाच
ततोऽब्रवीद्भीममुदारवीर्यं कृष्णां यत्तः पालय भीमसेन
शून्येऽर्जुनेऽसन्निहिते च तात त्वमेव कृष्णां भजसेऽसुखेषु १६
ततो महात्मा यमजौ समेत्य मुर्धन्युपाघ्राय विमृज्य गात्रे
उवाच तौ बाष्पकलं स राजा मा भैष्टमागच्छतमप्रमत्तौ १७
इति महाभारते आरण्यकपर्वणि चत्वारिंशदधिकशततमोऽध्यायः १४०

## एकचत्वारिंशदधिकशततमोऽध्यायः

युधिष्ठिर उवाच
अन्तर्हितानि भूतानि रक्षांसि बलवन्ति च
अग्निना तपसा चैव शक्यं गन्तुं वृकोदर १
सन्निवर्तय कौन्तेय क्षुत्पिपासे बलान्वयात्
ततो बलं च दाक्ष्यं च संश्रयस्व कुरूद्वह २
ऋषेस्त्वया श्रुतं वाक्यं कैलासं पर्वतं प्रति
बुद्ध्या प्रपश्य कौन्तेय कथं कृष्णा गमिष्यति ३
अथ वा सहदेवेन धौम्येन च सहाभिभो
सूदैः पौरोगवैश्चैव सर्वैश्च परिचारकैः ४
रथैरश्वैश्च ये चान्ये विप्राः क्लेशासहाः पथि
सर्वैस्त्वं सहितो भीम निवर्तस्वायतेक्षण ५
त्रयो वयं गमिष्यामो लघ्वाहारा यतव्रताः
अहं च नकुलश्चैव लोमशश्च महातपाः ६
ममागमनमाकाङ्क्षन्गङ्गाद्वारे समाहितः
वसेह दौपदीं रक्षन्यावदागमनं मम ७

भीम उवाच
राजपुत्री श्रमेणार्ता दुःखार्ता चैव भारत
व्रजत्येव हि कल्याणी श्वेतवाहदिदृक्षया ८
तव चाप्यरतिस्तीव्रा वर्धते तमपश्यतः
किं पुनः सहदेवं च मां च कृष्णां च भारत ९
रथाः कामं निवर्तन्तां सर्वे च परिचारकाः
सूदाः पौरोगवाश्चैव मन्यते यत्र नो भवान् १०
न ह्यहं हातुमिच्छामि भवन्तमिह कर्हिचित्
शैलेऽस्मिन्रक्षसाकीर्णे दुर्गेषु विषमेषु च ११
इयं चापि महभागा राजपुत्री यतव्रता
त्वामृते पुरुषव्याघ्र नोत्सहेद्विनिवर्तितुम् १२
तथैव सहदेवोऽय सततं त्वामनुव्रतः
न जातु विनिवर्तेत मतज्ञो ह्यहमस्य वै १३
अपि चात्र महाराज सव्यसाचिदिदृक्षया
सर्वे लालसभूताः स्म तस्माद्यास्यामहे सह १४
यद्यशक्यो रथैर्गन्तुं शैलोऽय बहुकन्दरः
पद्भिरेव गमिष्यामो मा राजन्विमना भव १५
अहं वहिष्ये पाञ्चालद्यं यत्र यत्र न शक्ष्यति
इति मे वर्तते बुद्धिर्मा राजन्विमना भव १६
सुकुमारौ तथा वीरौ माद्रीनन्दिकरावुभौ
दुर्गे सन्तारयिष्यामि यद्यशक्तौ भविष्यतः १७
युधिष्ठिर उवाच
एवं ते भाषमाणस्य बलं भीमाभिवर्धताम्
यस्त्वमुत्सहसे वोढुं द्रौपदीं विपुलेऽध्वनि १८
यमजौ चापि भद्रं ते नैतदन्यत्र विद्यते
बलं च ते यशश्चैव धर्मः कीर्तिश्च वर्धताम् १९
यस्त्वमुत्सहसे नेतुं भ्रातरौ सह कृष्णया
मा ते ग्लानिर्महाबाहो मा च तेऽस्तु पराभवः २०
वैशम्पायन उवाच
ततः कृष्णाब्रवीद्वाक्यं प्रहसन्ती मनोरमा

गमिष्यामि न संतापःकार्यो मां प्रति भारत २१
लोमश उवाच
तपसा शक्यते गन्तुं पर्वतो गन्धमादनः
तपसा चैव कौन्तेय सर्वे योद्ब्यामहे वयम् २२
नकुलः सहदेवश्च भीमसेनश्च पार्थिव
अहं च त्वं च कौन्तेय द्रद्ब्यामः श्वेतवाहनम् २३
वैशम्पायन उवाच
एवं संभाषमाणास्ते सुबाहोर्विषयं महत्
ददृशुर्मुदिता राजन्प्रभूतगजवाजिमत् २४
किराततङ्गणाकीर्णं कुणिन्दशतसंकुलम्
हिमवत्यमरैर्जुष्टं बह्वाश्चर्यसमाकुलम् २५
सुबाहुश्चापि तान्दृष्ट्वा पूजया प्रत्यगृह्णत
विषयान्ते कुणिन्दानामीश्वरः प्रीतिपूर्वकम् २६
तत्र ते पूजितास्तेन सर्व एव सुखोषिताः
प्रतस्थुर्विमले सूर्ये हिमवन्तं गिरिं प्रति २७
इन्द्रसेनमुखांश्चैव भृत्यान्पौरोगवांस्तथा
सूदांश्चपरिबर्हं च द्रौपद्याः सर्वशो नृप २८
राज्ञः कुणिन्दाधिपतेः परिदाय महारथाः
पद्भिरेव महावीर्या ययुः कौरवनन्दनाः २९
ते शनैः प्राद्रवन्सर्वे कृष्णया सह पाण्डवाः
तस्माद्देशात्सुसंहृष्टा द्रष्टुकामा धनञ्जयम् ३०
इति श्रीमहाभारते आरण्यक पर्वणि एकचत्वारिंशदधिकशततमोऽध्यायः
१४१

द्विचत्वारिंशदधिकशततमोऽध्यायः

युधिष्ठिर उवाच
भीमसेन यमौ चोभौ पाञ्चालि च निबोधत
नास्ति भूतस्य नाशो वै पश्यतास्मान्वनेचरान् १
दुर्बलाः क्लेशिता स्मेति यद्ब्रवीथेतरेतरम्
अशक्येऽपि व्रजामेति धनञ्जयदिदृक्षया २

तन्मे दहति गात्राणि तूलराशिमिवानलः
यच्च वीरं न पश्यामि धनञ्जयमुपान्तिके ३
तस्य दर्शनतृष्णं मां सानुजं वनमास्थितम्
याज्ञसेन्याः परामर्शः स च वीर दहत्युत ४
नकुलात्पूर्वजं पार्थं न पश्याम्यमितौजसम्
अजेयमुग्रधन्वानं तेन तप्ये वृकोदर ५
तीर्थानि चैव रम्याणि वनानि च सरांसि च
चरामि सह युष्माभिस्तस्य दर्शनकाङ्क्षया ६
पञ्च वर्षाणयहं वीरं सत्यसन्धं धनञ्जयम्
यन्न पश्यामि बीभत्सुं तेन तप्ये वृकोदर ७
तं वै श्यामं गुडाकेशं सिंहविक्रान्तगामिनम्
न पश्यामि महाबाहुं तेन तप्ये वृकोदर ८
कृतास्त्रं निपुणं युद्धे प्रतिमानं धनुष्मताम्
न पश्यामि नरश्रेष्ठं तेन तप्ये वृकोदर ९
चरन्तमरिसङ्घेषु काले क्रुद्धमिवान्तकम्
प्रभिन्नमिव मातङ्गं सिंहस्कन्धं धनञ्जयम् १०
यः स शक्रादनवरो वीर्येण द्रविणेन च
यमयोः पूर्वजः पार्थः श्वेताश्वोऽमितविक्रमः ११
दुःखेन महताविष्टः स्वकृतेनानिवर्तिना
अजेयमुग्रधन्वानं तं न पश्यामि फल्गुनम् १२
सततं यः क्षमाशीलः क्षिप्यमाणोऽप्यणीयसा
ऋजुमार्गप्रपन्नस्य शर्मदाताभयस्य च १३
स तु जिह्मप्रवृत्तस्य माययाभिजिघांसतः
अपि वज्रधरस्यापि भवेत्कालविषोपमः १४
शत्रोरपि प्रपन्नस्य सोऽनृशंसः प्रतापवान्
दाताभयस्य बीभत्सुरमितात्मा महाबलः १५
सर्वेषामाश्रयोऽस्माकं रणेऽरीणां प्रमर्दिता
आहर्ता सर्वरत्नानां सर्वेषां नः सुखावहः १६
रत्नानि यस्य वीर्येण दिव्यान्यासन्पुरा मम
बहूनि बहुजातानि यानि प्राप्तः सुयोधनः १७

यस्य बाहुबलाद्वीर सभा चासीत्पुरा मम
सर्वरत्नमयी ख्याता त्रिषु लोकेषु पाण्डव १८
वासुदेवसमं वीर्ये कार्तवीर्यसमं युधि
अजेयमजितं युद्धे तं न पश्यामि फाल्गुनम् १९
संकर्षणं महावीर्यं त्वां च भीमापराजितम्
अनुजातः स्ववीर्येण वासुदेवं च शत्रुहा २०
यस्य बाहुबले तुल्यः प्रभावे च पुरन्दरः
जवे वायुर्मुखे सोमः क्रोधे मृत्युः सनातनः २१
ते वयं तं नरव्याघ्रं सर्वे वीर दिदृक्षवः
प्रवेक्ष्यामो महाबाहो पर्वतं गन्धमादनम् २२
विशाला बदरी यत्र नरनारायणाश्रमः
तं सदाध्युषितं यक्षैर्द्रक्ष्यामो गिरिमुत्तमम् २३
कुबेरनलिनीं रम्यां राक्षसैरभिरक्षिताम्
पद्भिरेव गमिष्यामस्तप्यमाना महत्तपः २४
नातप्ततपसा शक्यो देशो गन्तुं वृकोदर
न नृशंसेन लुब्धेन नाप्रशान्तेन भारत २५
तत्र सर्वे गमिष्यामो भीमार्जुनपदैषिणः
सायुधा बद्धनिस्त्रिंशाः सह विप्रैर्महाव्रतैः २६
मक्षिकान्मशकान्दंशान्व्याघ्रान्सिंहान्सरीसृपान्
प्राप्नोत्यनियतः पार्थ नियतस्तान्न पश्यति २७
ते वयं नियतात्मानः पर्वतं गन्धमादनम्
प्रवेक्ष्यामो मिताहारा धनञ्जयदिदृक्षवः २८
इति श्रीमहाभारते आरण्यकपर्वणि द्विचत्वारिंशदधिकशततमोऽध्यायः
१४२

त्रिचत्वारिंशदधिकशततमोऽध्यायः

वैशम्पायन उवाच
ते शूरास्ततधन्वानस्तूणवन्तः समार्गणाः
बद्धगोधाङ्गुलित्राणाः खड्गवन्तोऽमितौजसः १
परिगृह्य द्विजश्रेष्ठाञ्श्रेष्ठाः सर्वधनुष्मताम्

पाञ्चालीसहिता राजन्प्रययुर्गन्धमादनम् २
सरांसि सरितश्चैव पर्वतांश्च वनानि च
वृक्षांश्च बहुलच्छायान्ददृशुर्गिरिमूर्धनि
नित्यपुष्पफलान्देशान्देवर्षिगणसेवितान् ३
आत्मन्यात्मानमाधाय वीरा मूलफलाशना
चेरुरुच्चावचाकारान्देशान्विषमसंकटान्
पश्यन्तो मृगजातानि बहूनि विविधानि च ४
ऋषिसिद्धामरयुतं गन्धर्वाप्सरसां प्रियम्
विविशुस्ते महात्मानः किन्नराचरितं गिरिम् ५
प्रविशत्स्वथ वीरेषु पर्वतं गन्धमादनम्
चगडवातं महद्वर्षं प्रादुरासीद्विशां पते ६
ततो रेणुः समुद्भूतः सपत्रबहुलो महान्
पृथिवीं चान्तरिक्षं च द्यां चैव तमसावृणोत् ७
न स्म प्रज्ञायते किञ्चिदावृते व्योम्नि रेणुना
न चापि शेकुस्ते कर्तुमन्योन्यस्याभिभाषणम् ८
न चापश्यन्त तेऽन्योन्यं तमसा हतचक्षुषः
आकृष्यमाणा वातेन साश्मचूर्णेन भारत ९
द्रुमाणां वातभग्नानां पततां भूतले भृशम्
अन्येषां च महीजानां शब्दः समभवन्महान् १०
द्यौः स्वित्पतति किं भूमौ दीर्यन्ते पर्वता नु किम्
इति ते मेनिरे सर्वे पवनेन विमोहिताः ११
ते यथानन्तान्वृक्षान्वल्मीकान्विषमाणि च
पाणिभिः परिमार्गन्तो भीता वायोर्निलिल्यिरे १२
ततः कार्मुकमुद्यम्य भीमसेनो महाबलः
कृष्णामादाय संगत्या तस्थावाश्रित्य पादपम् १३
धर्मराजश्च धौम्यश्च निलिल्याते महावने
अग्निहोत्राणयुपादाय सहदेवस्तु पर्वते १४
नकुलो ब्राह्मणाश्चान्ये लोमशश्च महातपाः
वृक्षानासाद्य संत्रस्तास्तत्र तत्र निलिल्यिरे १५
मन्दीभूते तु पवने तस्मिन् रजसि शाम्यति

महद्भिः पृषतैस्तूर्णं वर्षमभ्याजगाम ह १६
ततोऽश्मसहिता धाराः संवृरावन्त्यः समन्ततः
प्रपेतुरनिशं तत्र शीघ्रवातसमीरिताः १७
तत्र सागरगा ह्यापः कीर्यमाणाः समन्ततः
प्रादुरासन्सकलुषाः फेनवत्यो विशां पते १८
वहन्त्यो वारि बहुलं फेनोडुपपरिप्लुतम्
परिसस्रुर्महाशब्दाः प्रकर्षन्त्यो महीरुहान् १९
तस्मिन्नुपरते वर्षे वाते च समतां गते
गते ह्यम्भसि निम्नानि प्रादुर्भूते दिवाकरे २०
निर्जग्मुस्ते शनैः सर्वे समाजग्मुश्च भारत
प्रतस्थुश्च पुनर्वीराः पर्वतं गन्धमादनम् २१
इति श्रीमहाभारते आरण्यकपर्वणि त्रिचत्वारिंशदधिकशततमोऽध्यायः १४३

## चतुश्चत्वारिंशदधिकशततमोऽध्यायः

वैशम्पायन उवाच
ततः प्रयातमात्रेषु पाण्डवेषु महात्मसु
पद्भ्यामनुचिता गन्तुं द्रौपदी समुपाविशत् १
श्रान्ता दुःखपरीता च वातवर्षेण तेन च
सौकुमार्याच्च पाञ्चाली संमुमोह यशस्विनी २
सा पात्यमाना मोहेन बाहुभ्यामसितेक्षणा
वृत्ताभ्यामनुरूपाभ्यामूरू समवलम्बत ३
आलम्बमाना सहितावूरू गजकरोपमौ
पपात सहसा भूमौ वेपन्ती कदली यथा ४
तां पतन्तीं वरारोहां सज्जमानां लतामिव
नकुलः समभिद्रुत्य परिजग्राह वीर्यवान् ५
नकुल उवाच
राजन्पाञ्चालराजस्य सुतेयमसितेक्षणा
श्रान्ता निपतिता भूमौ तामवेक्षस्व भारत ६
अदुःखार्हा परं दुःखं प्राप्तेयं मृदुगामिनी
आश्वासय महाराज तामिमां श्रमकर्शिताम् ७

वैशम्पायन उवाच
राजा तु वचनात्तस्य भृशं दुःखसमन्वितः
भीमश्च सहदेवश्च सहसा समुपाद्रवन् ८
तामवेक्ष्य तु कौन्तेयो विवर्णवदनां कृशाम्
अङ्कमानीय धर्मात्मा पर्यदेवयदातुरः ९
कथं वेश्मसु गुप्तेषु स्वास्तीर्णशयनोचिता
शेते निपतिता भूमौ सुखार्हा वरवर्णिनी १०
सुकुमारौ कथं पादौ मुखं च कमलप्रभम्
मत्कृतेऽद्य वरार्हायाः श्यामतां समुपागतम् ११
किमिदं द्यूतकामेन मया कृतमबुद्धिना
आदाय कृष्णां चरता वने मृगगणायुते १२
सुखं प्राप्स्यति पाञ्चाली पाण्डवान्प्राप्य वै पतीन्
इति द्रुपदराजेन पित्रा दत्तायतेक्षणा १३
तत्सर्वमनवाप्यैव श्रमशोकाद्धि कर्शिता
शेते निपतिता भूमौ पापस्य मम कर्मभिः १४
तथा लालप्यमाने तु धर्मराजे युधिष्ठिरे
धौम्यप्रभृतयः सर्वे तत्राजग्मुर्द्विजोत्तमाः १५
ते समाश्वासयामासुराशीर्भिश्चाप्यपूजयन्
रक्षोघ्नांश्च तथा मन्त्राञ्जेपुश्चक्रुश्च ते क्रियाः १६
पठ्यमानेषु मन्त्रेषु शान्त्यर्थं परमर्षिभिः
स्पृश्यमाना करैः शीतैः पाण्डवैश्च मुहुर्मुहुः १७
सेव्यमाना च शीतेन जलमिश्रेण वायुना
पाञ्चाली सुखमासाद्य लेभे चेतः शनैः शनैः १८
परिगृह्य च तां दीनां कृष्णामजिनसंस्तरे
तदा विश्रामयामासुर्लब्धसंज्ञां तपस्विनीम् १९
तस्या यमौ रक्ततलौ पादौ पूजितलक्षणौ
कराभ्यां किणजाताभ्यां शनकैः संववाहतुः २०
पर्याश्वासयदप्येनां धर्मराजो युधिष्ठिरः
उवाच च कुरुश्रेष्ठो भीमसेनमिदं वचः २१
बहवः पर्वता भीम विषमा हिमदुर्गमाः

तेषु कृष्णा महाबाहो कथं नु विचरिष्यति २२
भीमसेन उवाच
त्वां राजन्राजपुत्रीं च यमौ च पुरुषर्षभौ
स्वयं नेष्यामि राजेन्द्र मा विषादे मनः कृथाः २३
अथ वासौ मया जातो विहगो मद्बलोपमः
वहेदनघ सर्वान्नो वचनात्ते घटोत्कचः २४
वैशम्पायन उवाच
अनुज्ञातो धर्मराज्ञा पुत्रं सस्मार राक्षसम्
घटोत्कचश्च धर्मात्मा स्मृतमात्रः पितुस्तदा
कृताञ्जलिरुपातिष्ठदभिवाद्याथ पाण्डवान् २५
ब्राह्मणांश्च महाबाहुः स च तैरभिनन्दितः
उवाच भीमसेनं स पितरं सत्यविक्रमः २६
स्मृतोऽस्मि भवता शीघ्रं शुश्रूषुरहमागतः
आज्ञापय महाबाहो सर्वं कर्तास्म्यसंशयम्
तच्छ्रुत्वा भीमसेनस्तु राक्षसं परिषस्वजे २७
इति श्रीमहाभारते आरण्यकपर्वणि चतुश्चत्वारिंशदधिकशततमोऽध्यायः
१४४

## पञ्चचत्वारिंशदधिकशततमोऽध्यायः

युधिष्ठिर उवाच
धर्मज्ञो बलवाञ्शूरः सद्यो राक्षसपुङ्गवः
भक्तोऽस्मानौरसः पुत्रो भीम गृह्णातु मातरम् १
तव भीम बलेनाहमतिभीमपराक्रम
अक्षतः सह पाञ्चाल्या गच्छेयं गन्धमादनम् २
वैशम्पायन उवाच
भ्रातुर्वचनमाज्ञाय भीमसेनो घटोत्कचम्
आदिदेश नरव्याघ्रस्तनयं शत्रुकर्शनम् ३
हैडिम्बेय परिश्रान्ता तव मातापराजिता
त्वं च कामगमस्तात बलवान्वह तां खग ४
स्कन्धमारोप्य भद्रं ते मध्येऽस्माकं विहायसा

गच्छ नीचिकया गत्या यथा चैनां न पीडयेः ५
घटोत्कच उवाच
धर्मराजं च धौम्यं च राजपुत्रीं यमौ तथा
एकोऽप्यहमलं वोढुं किमुताद्य सहायवान् ६
वैशम्पायन उवाच
एवमुक्त्वा ततः कृष्णामुवाह स घटोत्कचः
पाण्डूनां मध्यगो वीरः पाण्डवानपि चापरे ७
लोमशः सिद्धमार्गेण जगामानुपमद्युतिः
स्वेनैवात्मप्रभावेन द्वितीय इव भास्करः ८
ब्राह्मणांश्चापि तान्सर्वान्समुपादाय राक्षसाः
नियोगाद्राक्षसेन्द्रस्य जग्मुर्भीमपराक्रमाः ९
एवं सुरमणीयानि वनान्युपवनानि च
आलोकयन्तस्ते जग्मुर्विशालां बदरीं प्रति १०
ते त्वाशुगतिभिर्वीरा राक्षसैस्तैर्महाबलैः
उह्यमाना ययुः शीघ्रं महदध्वानमल्पवत् ११
देशान्म्लेच्छगणाकीर्णान्नानारत्नाकरायुतान्
ददृशुर्गिरिपादांश्च नानाधातुसमाचितान् १२
विद्याधरगणाकीर्णान्युतान्वानरकिन्नरैः
तथा किंपुरुषैश्चैव गन्धर्वैश्च समन्ततः १३
नदीजालसमाकीर्णान्नानापक्षिरुताकुलान्
नानाविधैर्मृगैर्जुष्टान्वानरैश्चोपशोभितान् १४
ते व्यतीत्य बहून्देशानुत्तरांश्च कुरूनपि
ददृशुर्विविधाश्चर्यं कैलासं पर्वतोत्तमम् १५
तस्याभ्याशे तु ददृशुर्नरनारायणाश्रमम्
उपेतं पादपैर्दिव्यैःसदापुष्पफलोपगैः १६
ददृशुस्तां च बदरीं वृत्तस्कन्धां मनोरमाम्
स्निग्धामविरलच्छायां श्रिया परमया युताम् १७
पत्रैः स्निग्धैरविरलैरुपेतां मृदुभिः शुभाम्
विशालशाखां विस्तीर्णामतिद्युतिसमन्विताम् १८
फलैरुपचितैर्दिव्यैराचितां स्वादुभिर्भृशम्

मधुस्रवैः सदा दिव्यां महर्षिगणसेविताम्
मदप्रमुदितैर्नित्यं नानाद्विजगणैर्युताम् १९
अदंशमशके देशे बहुमूलफलोदके
नीलशाद्वलसंछन्ने देवगन्धर्वसेविते २०
सुसमीकृतभूभागे स्वभावविहिते शुभे
जातां हिममृदुस्पर्शे देशेऽपहतकराटके २१
तामुपेत्य महात्मानः सह तैर्ब्राह्मणर्षभैः
अवतेरुस्ततः सर्वे राक्षसस्कन्धतः शनैः २२
ततस्तमाश्रमं पुरायं नरनारायणाश्रितम्
ददृशुः पाराडवा राजन्सहिता द्विजपुङ्गवैः २३
तमसा रहितं पुरायमनामृष्टं रवेः करैः
क्षुत्तृट्शीतोष्णदोषैश्च वर्जितं शोकनाशनम् २४
महर्षिगणसंबाधं ब्राह्म्या लक्ष्म्या समन्वितम्
दुष्प्रवेशं महाराज नरैर्धर्मबहिष्कृतैः २५
बलिहोमार्चितं दिव्यं सुसंमृष्टानुलेपनम्
दिव्यपुष्पोपहारैश्च सर्वतोऽभिविराजितम् २६
विशालैरग्निशरणैः स्रुग्भाराडैराचितं शुभैः
महद्भिस्तोयकलशैः कठिनैश्चोपशोभितम्
शरगयं सर्वभूतानां ब्रह्मघोषनिनादितम् २७
दिव्यमाश्रयणीयं तमाश्रमं श्रमनाशनम्
श्रिया युतमनिर्देश्यं देवचर्योपशोभितम् २८
फलमूलाशनैर्दान्तैश्चीरकृष्णाजिनाम्बरैः
सूर्यवैश्वानरसमैस्तपसा भावितात्मभिः २९
महर्षिभिर्मोक्षपरैर्यतिभिर्नियतेन्द्रियैः
ब्रह्मभूतैर्महाभागैरुपेतं ब्रह्मवादिभिः ३०
सोऽभ्यगच्छन्महातेजास्तानृषीन्नियतः शुचिः
भ्रातृभिः सहितो धीमान्धर्मपुत्रो युधिष्ठिरः ३१
दिव्यज्ञानोपपन्नास्ते दृष्ट्वा प्राप्तं युधिष्ठिरम्
अभ्यगच्छन्त सुप्रीताः सर्व एव महर्षयः
आशीर्वादान्प्रयुञ्जानाः स्वाध्यायनिरता भृशम् ३२

प्रीतास्ते तस्य सत्कारं विधिना पावकोपमाः
उपाजह्रुश्च सलिलं पुष्पमूलफलं शुचिः ३३
स तैः प्रीत्याथ सत्कारमुपनीतं महर्षिभिः
प्रयतः प्रतिगृह्याथ धर्मपुत्रो युधिष्ठिरः ३४
तं शक्रसदनप्रख्यं दिव्यगन्धं मनोरमम्
प्रीतः स्वर्गोपमं पुण्यं पाण्डवः सह कृष्णया ३५
विवेश शोभया युक्तं भ्रातृभिश्च सहानघ
ब्राह्मणैर्वेदवेदाङ्गपारगैश्च सहाच्युतः ३६
तत्रापश्यत्स धर्मात्मा देवदेवर्षिपूजितम्
नरनारायणस्थानं भागीरथ्योपशोभितम् ३७
मधुस्रवफलां दिव्यां महर्षिगणसेविताम्
तामुपेत्य महात्मानस्तेऽवसन्ब्राह्मणैः सह ३८
आलोकयन्तो मैनाकं नानाद्विजगणायुतम्
हिरण्यशिखरं चैव तच्च बिन्दुसरः शिवम् ३९
भागीरथीं सुतीर्थां च शीतामलजलां शिवाम्
मणिप्रवालप्रस्तारां पादपैरुपशोभिताम् ४०
दिव्यपुष्पसमाकीर्णां मनसः प्रीतिवर्धनीम्
वीक्षमाणा महात्मानो विजह्रुस्तत्र पाण्डवाः ४१
तत्र देवान्पितॄंश्चैव तर्पयन्तः पुनः पुनः
ब्राह्मणैः सहिता वीरा न्यवसन्पुरुषर्षभाः ४२
कृष्णायास्तत्र पश्यन्तः क्रीडितान्यमरप्रभाः
विचित्राणि नरव्याघ्रा रेमिरे तत्र पाण्डवाः ४३
इति श्रीमहाभारते आरण्यकपर्वणि पञ्चचत्वारिंशदधिकशततमोऽध्यायः
१४५

## षट्चत्वारिंशदधिकशततमोऽध्यायः

वैशम्पायन उवाच
तत्र ते पुरुषव्याघ्राः परमं शौचमास्थिताः
षड्रात्रमवसन्वीरा धनञ्जयदिदृक्षया
तस्मिन्विहरमाणाश्च रममाणाश्च पाण्डवाः १

मनोज्ञे काननवरे सर्वभूतमनोरमे
पादपैः पुष्पविकचैः फलभारावनामितैः २
शोभितं सर्वतो रम्यैः पुंस्कोकिलकुलाकुलैः
स्निग्धपत्रैरविरलैः शीतच्छायैर्मनोरमैः ३
सरांसि च विचित्राणि प्रसन्नसलिलानि च
कमलैः सौत्पलैस्तत्र भ्राजमानानि सर्वशः
पश्यन्तश्चारुरूपाणि रेमिरे तत्र पाण्डवाः ४
पुण्यगन्धः सुखस्पर्शो ववौ तत्र समीरणः
ह्लादयन्पाण्डवान्सर्वान्सकृष्णान्सद्विजर्षभान् ५
ततः पूर्वोत्तरो वायुः पवमानो यदृच्छया
सहस्रपत्रमर्काभं दिव्यं पद्ममुदावहत् ६
तदपश्यत पाञ्चाली दिव्यगन्धं मनोरमम्
अनिलेनाहृतं भूमौ पतितं जलजं शुचि ७
तच्छुभा शुभमासाद्य सौगन्धिकमनुत्तमम्
अतीव मुदिता राजन्भीमसेनमथाब्रवीत् ८
पश्य दिव्यं सुरुचिरं भीम पुष्पमनुत्तमम्
गन्धसंस्थानसम्पन्नं मनसो मम नन्दनम् ९
एतत्तु धर्मराजाय प्रदास्यामि परन्तप
हरेरिदं मे कामाय काम्यके पुनराश्रमे १०
यदि तेऽह प्रिया पार्थ बहूनीमान्युपाहर
तान्यहं नेतुमिच्छामि काम्यकं पुनराश्रमम् ११
एवमुक्त्वा तु पाञ्चाली भीमसेनमनिन्दिता
जगाम धर्मराजाय पुष्पमादाय तत्तदा १२
अभिप्रायं तु विज्ञाय महिष्याः पुरुषर्षभः
प्रियायाः प्रियकामः स भीमो भीमपराक्रमः १३
वातं तमेवाभिमुखो यतस्तत्पुष्पमागतम्
आजिहीर्षुर्जगामाशु स पुष्पाण्यपराण्यपि १४
रुक्मपृष्ठं धनुर्गृह्य शरांश्चाशीविषोपमान्
मृगराडिव संक्रुद्धः प्रभिन्न इव कुञ्जरः १५
द्रौपद्याः प्रियमन्विच्छन्स्वबाहुबलमाश्रितः

व्यपेतभयसम्मोहः शैलमभ्यपतद्बली १६
स तं द्रुमलतागुल्मच्छन्नं नीलशिलातलम्
गिरिं चचारारिहरः किन्नराचरितं शुभम् १७
नानावर्णधरैश्चित्रं धातुद्रुममृगाण्डजैः
सर्वभूषणसम्पूर्णं भूमेर्भुजमिवोच्छ्रितम् १८
सर्वर्तुरमणीयेषु गन्धमादनसानुषु
सक्तचक्षुरभिप्रायं हृदयेनानुचिन्तयन् १९
पुंस्कोकिलनिनादेषु षट्पदाभिरुतेषु च
बद्धश्रोत्रमनश्चक्षुर्जगामामितविक्रमः २०
जिघ्रमाणो महातेजाः सर्वर्तुकुसुमोद्भवम्
गन्धमुद्दाममुद्दामो वने मत्त इव द्विपः २१
ह्रियमाणश्रमः पित्रा सम्प्रहृष्टतनूरुहः
पितुः संस्पर्शशीतेन गन्धमादनवायुना २२
स यक्षगन्धर्वसुरब्रह्मर्षिगणसेवितम्
विलोडयामास तदा पुष्पहेतोररिन्दमः २३
विषमच्छेदरचितैरनुलिप्तमिवाङ्गुलैः
विमलैर्धातुविच्छेदैः काञ्चनाञ्जनराजतैः २४
सपक्षमिव नृत्यन्तं पार्श्वलग्नैः पयोधरैः
मुक्ताहारैरिव चितं च्युतैः प्रस्रवणोदकैः २५
अभिरामनदीकुञ्जनिर्झरोदरकन्दरम्
अप्सरोनूपुररवैः प्रनृत्तबहुबर्हिणम् २६
दिग्वारणविषाणाग्रैर्घृष्टोपलशिलातलम्
स्रस्तांशुकमिवाक्षोभ्यैर्निम्नगानिःसृतैर्जलैः २७
सशष्पकवलैः स्वस्थैरदूरपरिवर्तिभिः
भयस्याज्ञैश्च हरिणैः कौतूहलनिरीक्षितः २८
चालयन्नूरुवेगेन लताजालान्यनेकशः
आक्रीडमानः कौन्तेयः श्रीमान्वायुसुतो ययौ २९
प्रियामनोरथं कर्तुमुद्यतश्चारुलोचनः
प्रांशुः कनकतालाभः सिंहसंहननो युवा ३०
मत्तवारणविक्रान्तो मत्तवारणवेगवान्

मत्तवारणताम्राक्षो मत्तवारणवारणः ३१
प्रियपार्श्वोपविष्टाभिर्व्यावृत्ताभिर्विचेष्टितैः
यक्षगन्धर्वयोषाभिरदृश्याभिर्निरीक्षितः ३२
नवावतारं रूपस्य विक्रीणन्निव पाण्डवः
चचार रमणीयेषु गन्धमादनसानुषु ३३
संस्मरन्विविधान्क्लेशान्दुर्योधनकृतान्बहून्
द्रौपद्या वनवासिन्याः प्रियं कर्तुं समुद्यतः ३४
सोऽचिन्तयद्गते स्वर्गमर्जुने मयि चागते
पुष्पहेतोः कथं न्वार्यः करिष्यति युधिष्ठिरः ३५
स्नेहान्नरवरो नूनमविश्वासाद्वनस्य च
नकुलं सहदेवं च न मोक्ष्यति युधिष्ठिरः ३६
कथं नु कुसुमावाप्तिः स्याच्छीघ्रमिति चिन्तयन्
प्रतस्थे नरशार्दूलः पक्षिराडिव वेगितः ३७
कम्पयन्मेदिनीं पद्भ्यां निर्घात इव पर्वसु
त्रासयन्गजयूथानि वातरंहा वृकोदरः ३८
सिंहव्याघ्रगणांश्चैव मर्दमानो महाबलः
उन्मूलयन्महावृक्षान्पोथयंश्चोरसा बली ३९
लतावल्लीश्च वेगेन विकर्षन्पाण्डुनन्दनः
उपर्युपरि शैलाग्रमारुरुक्षुरिव द्विपः
विनर्दमानोऽतिभृशं सविद्युदिव तोयदः ४०
तस्य शब्देन घोरेण धनुर्घोषेण चाभिभो
त्रस्तानि मृगयूथानि समन्ताद्विप्रदुद्रुवुः ४१
अथापश्यन्महाबाहुर्गन्धमादनसानुषु
सुरम्यं कदलीषण्डं बहुयोजनविस्तृतम् ४२
तमभ्यगच्छद्वेगेन क्षोभयिष्यन्महाबलः
महागज इवास्रावी प्रभञ्जन्विविधान्द्रुमान् ४३
उत्पाट्य कदलीस्कन्धान्बहुतालसमुच्छ्रयान्
चिक्षेप तरसा भीमः समन्ताद्बलिनां वरः ४४
ततः सत्त्वान्युपाक्रामन्बहूनि च महान्ति च
रुरुवारणसंघाश्च महिषाश्च जलाश्रयाः ४५

सिंहव्याघ्राश्च संक्रुद्धा भीमसेनमभिद्रवन्
व्यादितास्या महारौद्रा विनदन्तोऽतिभीषणाः ४६
ततो वायुसुतः क्रोधात्स्वबाहुबलमाश्रितः
गजेनाघ्नन्गजं भीमः सिंहं सिंहेन चाभिभूः
तलप्रहारैरन्यांश्च व्यहनत्पाराडवो बली ४७
ते हन्यमाना भीमेन सिंहव्याघ्रतरज्ञवः
भयाद्विससृपुः सर्वे शकृन्मूत्रं च सुस्रुवुः ४८
प्रविवेश ततः ज्ञिप्रं तानपास्य महाबलः
वनं पाराडुसुतः श्रीमाञ्शब्देनापूरयन्दिशः ४९
तेन शब्देन चोग्रेण भीमसेनरवेण च
वनान्तरगताः सर्वे वित्रेसुर्मृगपज्ञिणः ५०
तं शब्दं सहसा श्रुत्वा मृगपज्ञिसमीरितम्
जलार्द्रपज्ञा विहगाः समुत्पेतुः सहस्रशः ५१
तानौदकान्पज्ञिगणान्निरीज्ञ्य भरतर्षभः
तानेवानुसरन् रम्यं ददर्श सुमहत्सरः ५२
काञ्चनैः कदलीषराडैर्मन्दमारुतकम्पितैः
वीज्यमानमिवाज्ञोभ्यं तीरान्तरविसर्पिभिः ५३
तत्सरोऽथावतीर्याशु प्रभूतकमलोत्पलम्
महागज इवोद्दामश्चिक्रीड बलवद्बली
विक्रीडय तस्मिन्सुचिरमुत्ततारामितद्युतिः ५४
ततोऽवगाह्य वेगेन तद्वनं बहुपादपम्
दध्मौ च शङ्खं स्वनवत्सर्वप्राणेन पाराडवः ५५
तस्य शङ्खस्य शब्देन भीमसेनरवेण च
बाहुशब्देन चोग्रेण नर्दन्तीव गिरेर्गुहाः ५६
तं वज्रनिष्पेषसममास्फोटितरवं भृशम्
श्रुत्वा शैलगुहासुप्तैः सिंहैर्मुक्तो महास्वनः ५७
सिंहनादभयत्रस्तैः कुंजरैरपि भारत
मुक्तो विरावः सुमहान्पर्वतो येन पूरितः ५८
तं तु नादं ततः श्रुत्वा सुप्तो वानरपुङ्गवः
प्राजृम्भत महाकायो हनुमान्नाम वानरः ५९

कदलीषण्डमध्यस्थो निद्रावशगतस्तदा
जृम्भमाणः सुविपुलं शक्रध्वजमिवोच्छ्रितम्
आस्फोटयत लाङ्गूलमिन्द्राशनिसमस्वनम् ६०
तस्य लाङ्गूलनिनदं पर्वतः स गुहामुखैः
उद्गारमिव गौर्नर्दमुत्ससर्ज समन्ततः ६१
स लाङ्गूलरवस्तस्य मत्त वारणनिस्वनम्
अन्तर्धाय विचित्रेषु चचार गिरिसानुषु ६२
स भीमसेनस्तं श्रुत्वा संप्रहृष्टतनूरुहः
शब्दप्रभवमन्विच्छंश्चचार कदलीवनम् ६३
कदलीवनमध्यस्थमथ पीने शिलातले
स ददर्श महाबाहुर्वानराधिपतिं स्थितम् ६४
विद्युत्संघातदुष्प्रेक्ष्यं विद्युत्संघातपिंगलम्
विद्युत्संघातसदृशं विद्युत्संघातचञ्चलम् ६५
बाहुस्वस्तिकविन्यस्तपीनह्रस्वशिरोधरम्
स्कन्धभूयिष्ठकायत्वात्तनुमध्यकटीतटम् ६६
किञ्चिच्चाभुग्नशीर्षेण दीर्घरोमाञ्चितेन च
लाङ्गूलेनोर्ध्वगतिना ध्वजेनेव विराजितम् ६७
रक्तोष्ठं ताम्रजिह्वास्यं रक्तकर्णं चलद्भ्रुवम्
वदनं वृत्तदंष्ट्राग्रं रश्मिवन्तमिवोडुपम् ६८
वदनाभ्यन्तरगतैः शुक्लभासैरलंकृतम्
केसरोत्करसंमिश्रमशोकानामिवोत्करम् ६९
हिरण्मयीनां मध्यस्थं कदलीनां महाद्युतिम्
दीप्यमानं स्ववपुषा अर्चिष्मन्तमिवानलम् ७०
निरीक्षन्तमवित्रस्तं लोचनैर्मधुपिङ्गलैः
तं वानरवरं वीरमतिकायं महाबलम् ७१
अथोपसृत्य तरसा भीमो भीमपराक्रमः
सिंहनादं समकरोद्बोधयिष्यन्कपिं तदा ७२
तेन शब्देन भीमस्य वित्रेसुर्मृगपक्षिणः
हनूमांश्च महासत्व ईषदुन्मील्य लोचने
अवैक्षदथ सावज्ञं लोचनैर्मधुपिङ्गलैः ७३

स्मितेनाभाष्य कौन्तेयं वानरो नरमब्रवीत्
किमर्थं सरुजस्तेऽह सुखसुप्तः प्रबोधितः ७४
ननु नाम त्वया कार्या दया भूतेषु जानता
वयं धर्मं न जानीमस्तिर्यग्योनिं समाश्रिताः ७५
मनुष्या बुद्धिसम्पन्ना दयां कुर्वन्ति जन्तुषु
क्रूरेषु कर्मसु कथं देहवाक्चित्तदूषिषु
धर्मघातिषु सज्जन्ते बुद्धिमन्तो भवद्विधाः ७६
न त्वं धर्मं विजानासि वृद्धा नोपासितास्त्वया
अल्पबुद्धितया वन्यानुत्सादयसि यन्मृगान् ७७
ब्रूहि कस्त्वं किमर्थं वा वनं त्वमिदमागतः
वर्जितं मानुषैर्भावैस्तथैव पुरुषैरपि ७८
अतः परमगम्योऽय पर्वतः सुदुरारुहः
विना सिद्धगतिं वीर गतिरत्र न विद्यते ७९
कारुगयात्सौहृदाच्चैव वारये त्वां महाबल
नातः परं त्वया शक्यं गन्तुमाश्वसिहि प्रभो ८०
इमान्यमृतकल्पानि मूलानि च फलानि च
भक्षयित्वा निवर्तस्व ग्राह्यं यदि वचो मम ८१
इति श्रीमहाभारते आरगयकपर्वणि षट्चत्वारिंशदधिकशततमोऽध्यायः
१४६

सप्तचत्वारिंशदधिकशततमोऽध्यायः

वैशम्पायन उवाच
एतच्छ्रुत्वा वचस्तस्य वानरेन्द्रस्य धीमतः
भीमसेनस्तदा वीरः प्रोवाचामित्रकर्शनः १
को भवान्किंनिमित्तं वा वानरं वपुराश्रितः
ब्राह्मणानन्तरो वर्णः क्षत्रियस्त्वानुपृच्छति २
कौरवः सोमवंशीयः कुन्त्या गर्भेण धारितः
पागडवो वायुतनयो भीमसेन इति श्रुतः ३
स वाक्यं भीमसेनस्य स्मितेन प्रतिगृह्य तत्
हनूमान्वायुतनयो वायुपुत्रमभाषत ४

वानरोऽह न ते मार्गं प्रदास्यामि यथेप्सितम्
साधु गच्छ निवर्तस्व मा त्वं प्राप्स्यसि वैशसम् ५
भीम उवाच
वैशसं वास्तु यद्वान्यन्न त्वा पृच्छामि वानर
प्रयच्छोत्तिष्ठ मार्गं मे मा त्वं प्राप्स्यसि वैशसम् ६
हनूमानुवाच
नास्ति शक्तिर्ममोत्थातुं व्याधिना क्लेशितो ह्यहम्
यद्यवश्यं प्रयातव्यं लङ्घयित्वा प्रयाहि माम् ७
भीम उवाच
निर्गुणः परमात्मेति देहं ते व्याप्त तिष्ठति
तमहं ज्ञानविज्ञेयं नावमन्ये न लङ्घये ८
यद्यागमैर्न विन्देयं तमहं भूतभावनम्
क्रमेयं त्वां गिरिं चेमं हनूमानिव सागरम् ९
हनूमानुवाच
क एष हनूमान्नाम सागरो येन लङ्घितः
पृच्छामि त्वां कुरुश्रेष्ठ कथ्यतां यदि शक्यते १०
भीमउवाच
भ्राता मम गुणश्लाघ्यो बुद्धिसत्त्वबलान्वितः
रामायणेऽतिविख्यातः शूरो वानरपुङ्गवः ११
रामपत्नीकृते येन शतयोजनमायतः
सागरः प्लवगेन्द्रेण क्रमेणैकेन लङ्घितः १२
स मे भ्राता महावीर्यस्तुल्योऽह तस्य तेजसा
बले पराक्रमे युद्धे शक्तोऽह तव निग्रहे १३
उत्तिष्ठ देहि मे मार्गं पश्य वा मेऽद्य पौरुषम्
मच्छासनमकुर्वाणं मा त्वा नेष्ये यमक्षयम् १४
वैशम्पायन उवाच
विज्ञाय तं बलोन्मत्तं बाहुवीर्येण गर्वितम्
हृदयेनावहस्यैनं हनूमान्वाक्यमब्रवीत् १५
प्रसीद नास्ति मे शक्तिरुत्थातुं जरयानघ
ममानुकम्पया त्वेतत्पुच्छमुत्सार्य गम्यताम् १६

सावज्ञमथ वामेन स्मयञ्जग्राह पाणिना
न चाशकच्चालयितुं भीमः पुच्छं महाकपेः १७
उच्चिक्षेप पुनर्दोर्भ्यामिन्द्रायुधमिवोच्छ्रितम्
नोद्धर्तुमशकद्भीमो दोर्भ्यामपि महाबलः १८
उत्क्षिप्तभ्रूर्विवृत्ताक्षः संहतभ्रुकुटीमुखः
स्विन्नगात्रोऽभवद्भीमो न चोद्धर्तुं शशाक ह १९
यत्नवानपि तु श्रीमाँल्लाङ्गूलोद्धरणोद्धुतः
कपेः पार्श्वगतो भीमस्तस्थौ व्रीडादधोमुखः २०
प्रणिपत्य च कौन्तेयः प्राञ्जलिर्वाक्यमब्रवीत्
प्रसीद कपिशार्दूल दुरुक्तं क्षम्यतां मम २१
सिद्धो वा यदि वा देवो गंधर्वो वाथ गुह्यकः
पृष्टः सन्कामया ब्रूहि कस्त्वं वानररूपधृक् २२
हनूमानुवाच
यत्ते मम परिज्ञाने कौतूहलमरिन्दम
तत्सर्वमखिलेन त्वं शृणु पाण्डवनन्दन २३
अहं केसरिणः क्षेत्रे वायुना जगदायुषा
जातः कमलपत्राक्ष हनूमान्नाम वानरः २४
सूर्यपुत्रं च सुग्रीवं शक्रपुत्रं च वालिनम्
सर्ववानरराजानौ सर्ववानरयूथपाः २५
उपतस्थुर्महावीर्या मम चामित्रकर्शन
सुग्रीवेणाभवत्प्रीतिरनिलस्याग्निना यथा २६
निकृतः स ततो भ्रात्रा कस्मिंश्चित्कारणान्तरे
ऋष्यमूके मया सार्धं सुग्रीवो न्यवसच्चिरम् २७
अथ दाशरथिर्वीरो रामो नाम महाबलः
विष्णुर्मानुषरूपेण चचार वसुधामिमाम् २८
स पितुः प्रियमन्विच्छन्सहभार्यः सहानुजः
सधनुर्धन्विनां श्रेष्ठो दण्डकारण्यमाश्रितः २९
तस्य भार्या जनस्थानाद्रावणेन हृता बलात्
वञ्चयित्वा महाबुद्धिं मृगरूपेण राघवम् ३०
हृतदारः सह भ्रात्रा पत्नीं मार्गन्स राघवः

दृष्टवाञ्शैलशिखरे सुग्रीवं वानरर्षभम् ३१
तेन तस्याभवत्सख्यं राघवस्य महात्मनः
स हत्वा बालिनं राज्ये सुग्रीवं प्रत्यपादयत्
स हरीन्प्रेषयामास सीतायाः परिमार्गणे ३२
ततो वानरकोटीभिर्यां वयं प्रस्थिता दिशम्
तत्र प्रवृत्तिः सीताया गृध्रेण प्रतिपादिता ३३
ततोऽहं कार्यसिद्ध्यर्थं रामस्याक्लिष्टकर्मणः
शतयोजनविस्तीर्णमर्णवं सहसाप्लुतः ३४
दृष्टा सा च मया देवी रावणस्य निवेशने
प्रत्यागतश्चापि पुनर्नाम तत्र प्रकाश्य वै ३५
ततो रामेण वीरेण हत्वा तान्सर्वराक्षसान्
पुनः प्रत्याहृता भार्या नष्टा वेद श्रुतिर्यथा ३६
ततः प्रतिष्ठितेरामे वरोऽय याचितो मया
यावद्रामकथा वीर भवेल्लोकेषु शत्रुहन्
तावज्जीवेयमित्येवं तथास्त्विति च सोऽब्रवीत् ३७
दश वर्षसहस्राणि दश वर्षशतानि च
राज्यं कारितवान्रामस्ततस्तु त्रिदिवं गतः ३८
तदिहाप्सरसस्तात गन्धर्वाश्च सदानघ
तस्य वीरस्य चरितं गायन्तो रमयन्ति माम् ३९
अयं च मार्गो मर्त्यानामगम्यः कुरुनन्दन
ततोऽहं रुद्धवान्मार्गं तवेमं देवसेवितम्
धर्षयेद्वा शपेद्वापि मा कश्चिदिति भारत ४०
दिव्यो देवपथो ह्येष नात्र गच्छन्ति मानुषाः
यदर्थमागतश्चासि तत्सरोऽभ्यर्ण एव हि ४१

इति श्रीमहाभारते आरण्यकपर्वणि सप्तचत्वारिंशदधिकशततमोऽध्यायः
१४७

अष्टचत्वारिंशदधिकशततमोऽध्यायः

वैशम्पायन उवाच
एवमुक्तो महाबाहुर्भीमसेनः प्रतापवान्

प्रणिपत्य ततः प्रीत्या भ्रातरं हृष्टमानसः
उवाच श्लक्ष्णया वाचा हनूमन्तं कपीश्वरम् १
मया धन्यतरो नास्ति यदार्यं दृष्टवानहम्
अनुग्रहो मे सुमहांस्तृप्तिश्च तव दर्शनात् २
एवं तु कृतमिच्छामि त्वयार्याद्य प्रियं मम
यत्ते तदासीत्प्लवतः सागरं मकरालयम्
रूपमप्रतिमं वीर तदिच्छामि निरीक्षितुम् ३
एवं तुष्टो भविष्यामि श्रद्धास्यामि च ते वचः
एवमुक्तः स तेजस्वी प्रहस्य हरिरब्रवीत् ४
न तच्छक्यं त्वया द्रष्टुं रूपं नान्येन केनचित्
कालावस्था तदा ह्यन्या वर्तते सा न सांप्रतम् ५
अन्यः कृतयुगे कालस्त्रेतायां द्वापरेऽपरः
अयं प्रध्वंसनः कालो नाद्य तद्रूपमस्ति मे ६
भूमिर्नद्यो नगाः शैलाः सिद्धा देवा महर्षयः
कालं समनुवर्तन्ते यथा भावा युगे युगे
बलवर्ष्मप्रभावा हि प्रहीयन्त्युद्भवन्ति च ७
तदलं तव तद्रूपं द्रष्टुं कुरुकुलोद्वह
युगं समनुवर्तामि कालो हि दुरतिक्रमः ८
भीम उवाच
युगसंख्यां समाचक्ष्व आचारं च युगे युगे
धर्मकामार्थभावांश्च वर्ष्म वीर्यं भवाभवौ ९
हनूमानुवाच
कृतं नाम युगं तात यत्र धर्मः सनातनः
कृतमेव न कर्तव्यं तस्मिन्काले युगोत्तमे १०
न तत्र धर्माः सीदन्ति न क्षीयन्ते च वै प्रजाः
ततः कृतयुगं नाम कालेन गुणतां गतम् ११
देवदानवगन्धर्वयक्षराक्षसपन्नगाः
नासन्कृतयुगे तात तदा न क्रयविक्रयाः १२
न सामयजुरृग्वर्णाः क्रिया नासीच्च मानवी
अभिध्याय फलं तत्र धर्मः संन्यास एव च १३

न तस्मिन्युगसंसर्गे व्याधयो नेन्द्रियक्षयः
नासूया नापि रुदितं न दर्पो नापि पैशुनम् १४
न विग्रहः कुतस्तन्द्री न द्वेषो नापि वैकृतम्
न भयं न च सन्तापो न चेर्ष्या न च मत्सरः १५
ततः परमकं ब्रह्म या गतिर्योगिनां परा
आत्मा च सर्वभूतानां शुक्लो नारायणस्तदा १६
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च कृतलक्षणाः
कृते युगे समभवन्स्वकर्मनिरताः प्रजाः १७
समाश्रमं समाचारं समज्ञानमतीबलम्
तदा हि समकर्माणो वर्णा धर्मानवाप्नुवन् १८
एकवेदसमायुक्ता एकमन्त्रविधिक्रियाः
पृथग्धर्मास्त्वेकवेदा धर्ममेकमनुव्रताः १९
चतुराश्रम्ययुक्तेन कर्मणा कालयोगिना
अकामफलसंयोगात्प्राप्नुवन्ति परां गतिम् २०
आत्मयोगसमायुक्तौ धर्मोऽय कृतलक्षणः
कृते युगे चतुष्पादश्चातुर्वर्ण्यस्य शाश्वतः २१
एतत्कृतयुगं नाम त्रैगुण्यपरिवर्जितम्
त्रेतामपि निबोध त्वं यस्मिन्सत्रं प्रवर्तते २२
पादेन ह्रसते धर्मो रक्ततां याति चाच्युतः
सत्यप्रवृत्ताश्च नराः क्रियाधर्मपरायणाः २३
ततो यज्ञाः प्रवर्तन्ते धर्माश्च विविधाः क्रियाः
त्रेतायां भावसङ्कल्पाः क्रियादानफलोदयाः २४
प्रचलन्ति न वै धर्मात्तपोदानपरायणाः
स्वधर्मस्थाः क्रियावन्तो जनास्त्रेतायुगेऽभवन् २५
द्वापरेऽपि युगे धर्मो द्विभागोनः प्रवर्तते
विष्णुर्वै पीततां याति चतुर्धा वेद एव च २६
ततोऽन्ये च चतुर्वेदास्त्रिवेदाश्च तथापरे
द्विवेदाश्चैकवेदाश्चाप्यनृचश्च तथापरे २७
एवं शास्त्रेषु भिन्नेषु बहुधा नीयते क्रिया
तपोदानप्रवृत्ता च राजसी भवति प्रजा २८

एकवेदस्य चाज्ञानाद्वेदास्ते बहवः कृताः
सत्यस्य चेह बिभ्रंशात्सत्ये कश्चिदवस्थितः २९
सत्यात्प्रच्यवमानानां व्याधयो बहवोऽभवन्
कामाश्चोपद्रवाश्चैव तदा दैवतकारिताः ३०
यैरर्द्यमानाः सुभृशं तपस्तप्यन्ति मानवाः
कामकामाः स्वर्गकामा यज्ञांस्तन्वन्ति चापरे ३१
एवं द्वापरमासाद्य प्रजाः क्षीयन्त्यधर्मतः
पादेनैकेन कौन्तेय धर्मः कलियुगे स्थितः ३२
तामसं युगमासाद्य कृष्णो भवति केशवः
वेदाचाराः प्रशाम्यन्ति धर्मयज्ञक्रियास्तथा ३३
ईतयो व्याधयस्तन्द्री दोषाः क्रोधादयस्तथा
उपद्रवाश्च वर्तन्ते आधयो व्याधयस्तथा ३४
युगेष्वावर्तमानेषु धर्मो व्यावर्तते पुनः
धर्मे व्यावर्तमाने तु लोको व्यावर्तते पुनः ३५
लोके क्षीणे क्षयं यान्ति भावा लोकप्रवर्तकाः
युगक्षयकृता धर्माः प्रार्थनानि विकुर्वते ३६
एतत्कलियुगं नाम अचिराद्यत्प्रवर्तते
युगानुवर्तनं त्वेतत्कुर्वन्ति चिरजीविनः ३७
यच्च ते मत्परिज्ञाने कौतूहलमरिन्दम
अनर्थकेषु को भावः पुरुषस्य विजानतः ३८
एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि
युगसंख्यां महाबाहो स्वस्ति प्राप्नुहि गम्यताम् ३९
इति श्रीमहाभारते आरण्यक पर्वणि अष्टचत्वारिंशदधिकशततमोऽध्यायः
१४८

एकोनपञ्चाशदधिकशततमोऽध्यायः

भीम उवाच
पूर्वरूपमदृष्ट्वा ते न यास्यामि कथञ्चन
यदि तेऽहमनुग्राह्यो दर्शयात्मानमात्मना १
वैशम्पायन उवाच

एवमुक्तस्तु भीमेन स्मितं कृत्वा प्लवङ्गमः
तद्रूपं दर्शयामास यद्वै सागरलङ्घने २
भ्रातुः प्रियमभीप्सन्वै चकार सुमहद्वपुः
देहस्तस्य ततोऽतीव वर्धत्यायामविस्तरैः ३
तद्रूपं कदलीषण्डं छादयन्नमितद्युतिः
गिरेश्चोच्छ्रयमागम्य तस्थौ तत्र स वानरः ४
समुच्छ्रितमहाकायो द्वितीय इव पर्वतः
ताम्रेक्षणस्तीक्ष्णदंष्ट्रो भृकुटीकृतलोचनः
दीर्घलाङ्गूलमाविध्य दिशो व्याप्य स्थितः कपिः ५
तद्रूपं महदालक्ष्य भ्रातुः कौरवनन्दनः
विसिस्मिये तदा भीमो जहृषे च पुनः पुनः ६
तमर्कमिव तेजोभिः सौवर्णमिव पर्वतम्
प्रदीप्तमिव चाकाशं दृष्ट्वा भीमो न्यमीलयत् ७
आबभाषे च हनुमान्भीमसेनं स्मयन्निव
एतावदिह शक्तस्त्वं द्रष्टुं रूपं ममानघ ८
वर्धेऽहं चाप्यतो भूयो यावन्मे मनसेप्सितम्
भीम शत्रुषु चात्यर्थं वर्धते मूर्तिरोजसा ९
तदद्भुतं महारौद्रं विन्ध्यमन्दरसन्निभम्
दृष्ट्वा हनूमतो वर्ष्म सम्भ्रान्तः पवनात्मजः १०
प्रत्युवाच ततो भीमः सम्प्रहृष्टतनूरुहः
कृताञ्जलिरदीनात्मा हनुमन्तमवस्थितम् ११
दृष्टं प्रमाणं विपुलं शरीरस्यास्य ते विभो
संहरस्व महावीर्य स्वयमात्मानमात्मना १२
न हि शक्नोमि त्वां द्रष्टुं दिवाकरमिवोदितम्
अप्रमेयमनाधृष्यं मैनाकमिव पर्वतम् १३
विस्मयश्चैव मे वीर सुमहान्मनसोऽद्य वै
यद्रामस्त्वयि पार्श्वस्थे स्वयं रावणमभ्यगात् १४
त्वमेव शक्तस्तां लङ्कां सयोधां सहवाहनाम्
स्वबाहुबलमाश्रित्य विनाशयितुमोजसा १५
न हि ते किञ्चिदप्राप्यं मारुतात्मज विद्यते

तव नैकस्य पर्याप्तो रावणः सगणो युधि १६
एवमुक्तस्तु भीमेन हनूमान्प्लवगर्षभः
प्रत्युवाच ततो वाक्यं स्निग्धगम्भीरया गिरा १७
एवमेतन्महाबाहो यथा वदसि भारत
भीमसेन न पर्याप्तो ममासौ राक्षसाधमः १८
मया तु तस्मिन्निहते रावणे लोककण्टके
कीर्तिर्नश्येद्राघवस्य तत एतदुपेक्षितम् १९
तेन वीरेण हत्वा तु सगणं राक्षसाधिपम्
आनीता स्वपुरं सीता लोके कीर्तिश्च स्थापिता २०
तद्गच्छ विपुलप्रज्ञ भ्रातुः प्रियहिते रतः
अरिष्टं क्षेममध्वानं वायुना परिरक्षितः २१
एष पन्थाः कुरुश्रेष्ठ सौगन्धिकवनाय ते
द्रक्ष्यसे धनदोद्यानं रक्षितं यक्षराक्षसैः २२
न च ते तरसा कार्यः कुसुमावचयः स्वयम्
दैवतानि हि मान्यानि पुरुषेण विशेषतः २३
बलिहोमनमस्कारैर्मन्त्रैश्च भरतर्षभ
दैवतानि प्रसादं हि भक्त्या कुर्वन्ति भारत २४
मा तात साहसं कार्षीः स्वधर्ममनुपालय
स्वधर्मस्थः परं धर्मं बुध्यस्वागमयस्व च २५
न हि धर्ममविज्ञाय वृद्धाननुपसेव्य च
धर्मो वै वेदितुं शक्यो बृहस्पतिसमैरपि २६
अधर्मो यत्र धर्माख्यो धर्मश्चाधर्मसंज्ञितः
विज्ञातव्यो विभागेन यत्र मुह्यन्त्यबुद्धयः २७
आचारसम्भवो धर्मो धर्माद्वेदाः समुत्थिताः
वेदैर्यज्ञाः समुत्पन्ना यज्ञैर्देवाः प्रतिष्ठिताः २८
वेदाचारविधानोक्तैर्यज्ञैर्धार्यन्ति देवताः
बृहस्पत्युशनोक्तैश्च नयैर्धार्यन्ति मानवाः २९
पगयाकरवणिज्याभिः कृष्याथो योनिपोषणैः
वार्तया धार्यते सर्वं धर्मैरेतैर्द्विजातिभिः ३०
त्रयी वार्ता दगडनीतिस्तिस्रो विद्या विजानताम्

ताभिः सम्यक्प्रयुक्ताभिर्लोकयात्रा विधीयते ३१
सा चेद्धर्मक्रिया न स्यात्त्रयीधर्ममृते भुवि
दराडनीतिमृते चापि निर्मर्यादमिदं भवेत् ३२
वार्ताधर्मे ह्यवर्तन्त्यो विनश्येयुरिमाः प्रजाः
सुप्रवृत्तैस्त्रिभिर्ह्येतैर्धर्मैः सूयन्ति वै प्रजाः ३३
द्विजानाममृतं धर्मो ह्येकश्चैवैकवर्णिकः
यज्ञाध्ययनदानानि त्रयः साधारणाः स्मृताः ३४
याजनाध्यापने चोभे ब्राह्मणानां प्रतिग्रहः
पालनं क्षत्रियाणां वै वैश्यधर्मश्च पोषणम् ३५
शुश्रूषा च द्विजातीनां शूद्राणां धर्म उच्यते
भैक्ष्यहोमव्रतैर्हीनास्तथैव गुरुवासिनाम् ३६
क्षत्रधर्मोऽत्र कौन्तेय तव धर्माभिरक्षणम्
स्वधर्मं प्रतिपद्यस्व विनीतो नियतेन्द्रियः ३७
वृद्धैः संमन्त्र्य सद्भिश्च बुद्धिमद्भिः श्रुतान्वितैः
सुस्थितः शास्ति दराडेन व्यसनी परिभूयते ३८
निग्रहानुग्रहैः सम्यग्यदा राजा प्रवर्तते
तदा भवति लोकस्य मर्यादा सुव्यवस्थिता ३९
तस्माद्देशे च दुर्गे च शत्रुमित्रबलेषु च
नित्यं चारेण बोद्धव्यं स्थानं वृद्धिः क्षयस्तथा ४०
राज्ञामुपायाश्चत्वारो बुद्धिमन्त्रः पराक्रमः
निग्रहानुग्रहौ चैव दाक्ष्यं तत्कार्यसाधनम् ४१
साम्ना दानेन भेदेन दराडेनोपेक्षणेन च
साधनीयानि कार्याणि समासव्यासयोगतः ४२
मन्त्रमूला नयाः सर्वे चाराश्च भरतर्षभ
सुमन्त्रितैर्नयैः सिद्धिस्तद्विदैः सह मन्त्रयेत् ४३
स्त्रिया मूढेन लुब्धेन बालेन लघुना तथा
न मन्त्रयेत गुह्यानि येषु चोन्मादलक्षणम् ४४
मन्त्रयेत्सह विद्वद्भिःशक्तैः कर्माणि कारयेत्
स्निग्धैश्च नीतिविन्यासान्मूर्खान्सर्वत्र वर्जयेत् ४५
धार्मिकान्धर्मकार्येषु अर्थकार्येषु परिडतान्

स्त्रीषु क्लीबान्नियुञ्जीत क्रूरान्क्रूरेषु कर्मसु ४६
स्वेभ्यश्चैव परेभ्यश्च कार्याकार्यसमुद्भवा
बुद्धिः कर्मसु विज्ञेया रिपूणां च बलाबलम् ४७
बुद्ध्या सुप्रतिपन्नेषु कुर्यात्साधुपरिग्रहम्
निग्रहं चाप्यशिष्टेषु निर्मर्यादेषु कारयेत् ४८
निग्रहे प्रग्रहे सम्यग्यदा राजा प्रवर्तते
तदा भवति लोकस्य मर्यादा सुव्यवस्थिता ४९
एष ते विहितः पार्थ घोरो धर्मो दुरन्वयः
तं स्वधर्मविभागेन विनयस्थोऽनुपालय ५०
तपोधर्मदमेज्याभिर्विप्रा यान्ति यथा दिवम्
दानातिथ्यक्रियाधर्मैर्यान्ति वैश्याश्च सद्गतिम् ५१
क्षत्रं याति तथा स्वर्गं भुवि निग्रहपालनैः
सम्यक्प्रणीय दण्डं हि कामद्वेषविवर्जिताः
अलुब्धा विगतक्रोधाः सतां यान्ति सलोकताम् ५२
इति श्रीमहाभारते आरण्यकपर्वणि एकोनपञ्चाशदधिकशततमोऽध्यायः १४९

## पञ्चाशदधिकशततमोऽध्यायः

वैशम्पायन उवाच
ततः संहृत्य विपुलं तद्वपुः कामवर्धितम्
भीमसेनं पुनर्दोर्भ्यां पर्यष्वजत वानरः १
परिष्वक्तस्य तस्याशु भ्रात्रा भीमस्य भारत
श्रमो नाशमुपागच्छत्सर्वं चासीत्प्रदक्षिणम् २
ततः पुनरथोवाच पर्यश्रुनयनो हरिः
भीममाभाष्य सौहार्दाद्बाष्पगद्गदया गिरा ३
गच्छ वीर स्वमावासं स्मर्तव्योऽस्मि कथान्तरे
इहस्थश्च कुरुश्रेष्ठ न निवेद्योऽस्मि कस्यचित् ४
धनदस्यालयाच्चापि विसृष्टानां महाबल
देशकाल इहायातुं देवगन्धर्वयोषिताम् ५
ममापि सफलं चक्षुः स्मारितश्चास्मि राघवम्
मानुषं गात्रसंस्पर्शं गत्वा भीम त्वया सह ६

तदस्मद्दर्शनं वीर कौन्तेयामोघमस्तु ते
भ्रातृत्वं त्वं पुरस्कृत्य वरं वरय भारत ७
यदि तावन्मया क्षुद्रा गत्वा वारणसाह्वयम्
धार्तराष्ट्रा निहन्तव्या यावदेतत्करोम्यहम् ८
शिलया नगरं वा तन्मर्दितव्यं मया यदि
यावदद्य करोम्येतत्कामं तव महाबल ९
भीमसेनस्तु तद्वाक्यं श्रुत्वा तस्य महात्मनः
प्रत्युवाच हनूमन्तं प्रहृष्टेनान्तरात्मना १०
कृतमेव त्वया सर्वं मम वानरपुङ्गव
स्वस्ति तेऽस्तु महाबाहो क्षामये त्वां प्रसीद मे ११
सनाथाः पाण्डवाः सर्वे त्वया नाथेन वीर्यवान्
तवैव तेजसा सर्वान्विजेष्यामो वयं रिपून् १२
एवमुक्तस्तु हनूमान्भीमसेनमभाषत
भ्रातृत्वात्सौहृदाच्चापि करिष्यामि तव प्रियम् १३
चमूं विगाह्य शत्रूणां शरशक्तिसमाकुलाम्
यदा सिंहरवं वीर करिष्यसि महाबल
तदाहं बृंहयिष्यामि स्वरवेण रवं तव १४
विजयस्य ध्वजस्थश्च नादान्मोक्ष्यामि दारुणान्
शत्रूणां ये प्राणहरानित्युक्त्वान्तरधीयत १५
गते तस्मिन्हरिवरे भीमोऽपि बलिनां वरः
तेन मार्गेण विपुलं व्यचरद्गन्धमादनम् १६
अनुस्मरन्वपुस्तस्य श्रियं चाप्रतिमां भुवि
माहात्म्यमनुभावं च स्मरन्दाशरथेर्ययौ १७
स तानि रमणीयानि वनान्युपवनानि च
विलोडयामास तदा सौगन्धिकवनेप्सया १८
फुल्लपद्मविचित्राणि पुष्पितानि वनानि च
मत्तवारणयूथानि पङ्कक्लिन्नानि भारत
वर्षतामिव मेघानां वृन्दानि ददृशे तदा १९
हरिणैश्चञ्चलापाङ्गैर्हरिणीसहितैर्वने
सशष्पकवलैः श्रीमान्पथि दृष्ट्वा द्रुतं ययौ २०

महिषैश्च वराहैश्च शार्दूलैश्च निषेवितम्
व्यपेतभीर्गिरिं शौर्याद्भीमसेनो व्यगाहत २१
कुसुमानतशाखैश्च ताम्रपल्लवकोमलैः
याच्यमान इवारगये द्रुमैर्मारुतकम्पितैः २२
कृतपद्मनाञ्जलिपुटा मत्तषट्पदसेविताः
प्रियतीर्थवना मार्गे पद्मिनीः समतिक्रमन् २३
सज्जमानमनोदृष्टिः फुल्लेषु गिरिसानुषु
द्रौपदीवाक्यपाथेयो भीमः शीघ्रतरं ययौ २४
परिवृत्तेऽहनि ततः प्रकीर्णहरिणे वने
काञ्चनैर्विमलैः पद्मैर्ददर्श विपुलां नदीम् २५
मत्तकारगडवयुतां चक्रवाकोपशोभिताम्
रचितामिव तस्याद्रेर्मालां विमलपङ्कजाम् २६
तस्यां नद्यां महासत्त्वः सौगन्धिकवनं महत्
अपश्यत्प्रीतिजननं बालार्कसदृशद्युति २७
तद्दृष्ट्वा लब्धकामः सः मनसा पाराडुनन्दनः
वनवासपरिक्लिष्टां जगाम मनसा प्रियाम् २८
इति श्रीमहाभारते आरगयकपर्वणि पञ्चाशदधिकशततमोऽध्यायः १५०

## एकपञ्चाशदधिकशततमोऽध्यायः

वैशम्पायन उवाच
स गत्वा नलिनीं रम्यां राक्षसैरभिरक्षिताम्
कैलासशिखरे रम्ये ददर्श शुभकानने १
कुबेरभवनाभ्याशे जातां पर्वतनिर्झरे
सुरम्यां विपुलच्छायां नानाद्रुमलतावृताम् २
हरिताम्बुज सञ्छन्नां दिव्यां कनकपुष्कराम्
पवित्रभूतां लोकस्य शुभामद्भुतदर्शनाम् ३
तत्रामृतरसं शीतं लघु कुन्तीसुतः शुभम्
ददर्श विमलं तोयं शिवं बहु च पाराडवः ४
तां तु पुष्करिणीं रम्यां पद्मसौगन्धिकायुताम्
जातरूपमयैः पद्मैश्छन्नां परमगन्धिभिः ५

वैडूर्यवरनालैश्च बहुचित्रैर्मनोहरैः
हंसकारण्डवोद्धूतैः सृजद्भिरमलं रजः ६
आक्रीडं यक्षराजस्य कुबेरस्य महात्मनः
गन्धर्वैरप्सरोभिश्च देवैश्च परमार्चिताम् ७
सेवितामृषिभिर्दिव्यां यक्षैः किम्पुरुषैस्तथा
राक्षसैः किन्नरैश्चैव गुप्तां वैश्रवणेन च ८
तां च दृष्ट्वैव कौन्तेयो भीमसेनो महाबलः
बभूव परमप्रीतो दिव्यं सम्प्रेक्ष्य तत्सरः ९
तच्च क्रोधवशा नाम राक्षसा राजशासनात्
रक्षन्ति शतसाहस्राश्चित्रायुधपरिच्छदाः १०
ते तु दृष्ट्वैव कौन्तेयमजिनैः परिवारितम्
रुक्माङ्गदधरं वीरं भीमं भीमपराक्रमम् ११
सायुधं बद्धनिस्त्रिंशमशङ्कितमरिन्दमम्
पुष्करेप्सुमुपायान्तमन्योन्यमभिचुक्रुशुः १२
अयं पुरुषशार्दूलः सायुधोऽजिनसंवृतः
यच्चिकीर्षुरिह प्राप्तस्तत्सम्प्रष्टुमिहार्हथ १३
ततः सर्वे महाबाहुं समासाद्य वृकोदरम्
तेजोयुक्तमपृच्छन्त कस्त्वमाख्यातुमर्हसि १४
मुनिवेषधरश्चासि चीरवासाश्च लक्ष्यसे
यदर्थमसि संप्राप्तस्तदाचक्ष्व महाद्युते १५
इति श्रीमहाभारते आरण्यकपर्वणि एकपञ्चाशदधिकशततमोऽध्यायः १५१

## द्विपञ्चाशदधिकशततमोऽध्यायः

भीम उवाच
पाण्डवो भीमसेनोऽह धर्मपुत्रादनन्तरः
विशालां बदरीं प्राप्तो भ्रातृभिः सह राक्षसाः १
अपश्यत्तत्र पाञ्चाली सौगन्धिकमनुत्तमम्
अनिलोढमितो नूनं सा बहूनि परीप्सति २
तस्या मामनवद्यांग्या धर्मपत्न्याः प्रिये स्थितम्
पुष्पाहारमिह प्राप्तं निबोधत निशाचराः ३

राक्षसा ऊचुः
आक्रीडोऽय कुबेरस्य दयितः पुरुषर्षभ
नेह शक्यं मनुष्येण विहर्तुं मर्त्यधर्मिणा ४
देवर्षयस्तथा यक्षा देवाश्चात्र वृकोदर
आमन्त्र्य यक्षप्रवरं पिबन्ति विहरन्ति च
गन्धर्वाप्सरसश्चैव विहरन्त्यत्र पाण्डव ५
अन्यायेनेह यः कश्चिदवमन्य धनेश्वरम्
विहर्तुमिच्छेद्दुर्वृत्तः स विनश्येदसंशयम् ६
तमनादृत्य पद्मानि जिहीर्षसि बलादितः
धर्मराजस्य चात्मानं ब्रवीषि भ्रातरं कथम् ७
भीम उवाच
राक्षसास्तं न पश्यामि धनेश्वरमिहान्तिके
दृष्ट्वापि च महाराजं नाहं याचितुमुत्सहे ८
न हि याचन्ति राजान एष धर्मः सनातनः
न चाहं हातुमिच्छामि क्षात्रधर्मं कथञ्चन ९
इयं च नलिनी रम्या जाता पर्वतनिर्झरे
नेयं भवनमासाद्य कुबेरस्य महात्मनः १०
तुल्या हि सर्वभूतानामियं वैश्रवणस्य च
एवंगतेषु द्रव्येषु कः कं याचितुमर्हति ११
वैशम्पायन उवाच
इत्युक्त्वा राक्षसान्सर्वान्भीमसेनो व्यगाहत
ततः स राक्षसैर्वाचा प्रतिषिद्धः प्रतापवान्
मा मैवमिति सक्रोधैर्भर्त्सयद्भिः समन्ततः १२
कदर्थीकृत्य तु स तान्राक्षसान्भीमविक्रमः
व्यगाहत महातेजास्ते तं सर्वे न्यवारयन् १३
गृह्णीत बध्नीत निकृन्ततेमं पचाम खादाम च भीमसेनम्
क्रुद्धा ब्रुवन्तोऽनुययुर्द्रुतं ते शस्त्राणि चोद्यम्य विवृत्तनेत्राः १४
ततः स गुर्वीं यमदण्डकल्पां महागदां काञ्चनपट्टनद्धाम्
प्रगृह्य तानभ्यपतत्तरस्वी ततोऽब्रवीत्तिष्ठत तिष्ठतेति १५
ते तं तदा तोमरपट्टिशाद्यैर्व्याविध्य शस्त्रैः सहसाभिपेतुः

जिघांसवः क्रोधवशाः सुभीमा भीमं समन्ततात्परिवव्रुरुग्राः १६
वातेन कुन्त्यां बलवान्स जातः शूरस्तरस्वी द्विषतां निहन्ता
सत्ये च धर्मे च रतः सदैव पराक्रमे शत्रुभिरप्रधृष्यः १७
तेषां स मार्गान्विविधान्महात्मा निहत्य शस्त्राणि च शात्रवाणाम्
यथाप्रवीरान्निजघान वीरः परःशतान्पुष्करिणीसमीपे १८
ते तस्य वीर्यं च बलं च दृष्ट्वा विद्याबलं बाहुबलं तथैव
अशक्नुवन्तः सहिताः समन्ताद्धतप्रवीराः सहसा निवृत्ताः १९
विदीर्यमाणास्तत एव तूर्णमाकाशमास्थाय विमूढसंज्ञाः
कैलासशृङ्गाण्यभिदुद्रुवुस्ते भीमार्दिताः क्रोधवशाः प्रभग्नाः २०
स शक्रवद्दानवदैत्यसङ्घान्विक्रम्य जित्वा च रणेऽरिसङ्घान्
विगाह्य तां पुष्करिणीं जितारिः कामाय जग्राह ततोऽम्बुजानि २१
ततः स पीत्वामृतकल्पमम्भो भूयो बभूवोत्तमवीर्यतेजाः
उत्पाटय जग्राह ततोऽम्बुजानि सौगन्धिकान्युत्तमगन्धवन्ति २२
ततस्तु ते क्रोधवशाः समेत्य धनेश्वरं भीमबलप्रणुन्नाः
भीमस्य वीर्यं च बलं च संख्ये यथावदाचख्युरतीव दीनाः २३
तेषांवचस्तत्तु निशम्य देवः प्रहस्य रक्षांसि ततोऽभ्युवाच
गृह्णातु भीमो जलजानि कामं कृष्णानिमित्तं विदितं ममैतत् २४
ततोऽभ्यनुज्ञाय धनेश्वरं ते जग्मुः कुरूणां प्रवरं विरोषाः
भीमं च तस्यां ददृशुर्नलिन्यां यथोपजोषं विहरन्तमेकम् २५
इति श्रीमहाभारते आरण्यकपर्वणि द्विपञ्चाशदधिकशततमोऽध्यायः १५२

त्रिपञ्चाशदधिकशततमोऽध्यायः

वैशम्पायन उवाच
ततस्तानि महार्हाणि दिव्यानि भरतर्षभ
बहूनि बहुरूपाणि विरजांसि समाददे १
ततो वायुर्महाञ्शीघ्रो नीचैः शर्करकर्षणः
प्रादुरासीत्खरस्पर्शः स्रंगाममभिचोदयन् २
पपात महती चोल्का सनिर्घाता महाप्रभा
निष्प्रभश्चाभवत्सूर्यश्छन्नरश्मिस्तमोवृतः ३
निर्घातश्चाभवद्भीमो भीमे विक्रममास्थिते

चचाल पृथिवी चापि पांसुवर्षं पपात च ४
सलोहिता दिशश्चासन्खरवाचो मृगद्विजाः
तमोवृतमभूत्सर्वं न प्राज्ञायत किंचन ५
तदद्भुतमभिप्रेक्ष्य धर्मपुत्रो युधिष्ठिरः
उवाच वदतां श्रेष्ठः कोऽस्मानभिभविष्यति ६
सज्जीभवत भद्रं वः पागडवा युद्धदुर्मदाः
यथारूपाणि पश्यामि स्वभ्यग्रो नः पराक्रमः ७
एवमुक्त्वा ततो राजा वीक्षाञ्चक्रे समन्ततः
अपश्यमानो भीमं च धर्मराजो युधिष्ठिरः ८
ततः कृष्णां यमौ चैव समीपस्थानरिन्दमः
पप्रच्छ भ्रातरं भीमं भीमकर्माणमाहवे ९
कच्चिन्न भीमः पञ्चालि किंचित्कृत्यं चिकीर्षति
कृतवानपि वा वीरः साहसं साहसप्रियः १०
इमे ह्यकस्मादुत्पाता महासमरदर्शिनः
दर्शयन्तो भयं तीव्रं प्रादुर्भूताः समन्ततः ११
तं तथा वादिनं कृष्णा प्रत्युवाच मनस्विनी
प्रिया प्रियं चिकीर्षन्ती महिषी चारुहासिनी १२
यत्तत्सौगन्धिकं राजन्नाहृतं मातरिश्वना
तन्मया भीमसेनस्य प्रीतयाद्योपपादितम् १३
अपि चोक्तो मया वीरो यदि पश्येद्बहून्यपि
तानि सर्वाग्युपादाय शीघ्रमागम्यतामिति १४
स तु नूनं महाबाहुः प्रियार्थं मम पागडवः
प्रागुदीचीं दिशं राजंस्तान्याहर्तुमितो गतः १५
उक्तस्त्वेवं तया राजा यमाविदमथाब्रवीत्
गच्छाम सहितास्तूर्णं येन यातो वृकोदरः १६
वहन्तु राक्षसा विप्रान्यथाश्रान्तान्यथाकृशान्
त्वमप्यमरसंकाश वह कृष्णां घटोत्कच १७
व्यक्तं दूरमितो भीमः प्रविष्ट इति मे मतिः
चिरं च तस्य कालोऽय स च वायुसमो जवे १८
तरस्वी वैनतेयस्य सदृशो भुवि लङ्घने

उत्पतेदपि चाकाशं निपतेच्च यथेच्छकम् १९
तमन्वियाम भवतां प्रभावाद्रजनीचराः
पुरा च नापराध्नोति सिद्धानां ब्रह्मवादिनाम् २०
तथेत्युक्त्वा तु ते सर्वे हैडिम्बप्रमुखास्तदा
उद्देशज्ञाः कुबेरस्य नलिन्या भरतर्षभ २१
आदाय पाण्डवांश्चैव तांश्च विप्राननेकशः
लोमशेनैव सहिताः प्रययुः प्रीतमानसाः २२
ते गत्वा सहिताः सर्वे ददृशुस्तत्र कानने
प्रफुल्लपङ्कजवतीं नलिनीं सुमनोहराम् २३
तं च भीमं महात्मानं तस्यास्तीरे व्यवस्थितम्
ददृशुर्निहतांश्चैव यक्षान्सुविपुलेक्षणान् २४
उद्यम्य च गदां दोर्भ्यां नदीतीरे व्यवस्थितम्
प्रजासंक्षेपसमये दण्डहस्तमिवान्तकम् २५
तं दृष्ट्वा धर्मराजस्तु परिष्वज्य पुनः पुनः
उवाचश्लक्ष्णया वाचा कौन्तेय किमिदं कृतम् २६
साहसं बत भद्रं ते देवानामपि चाप्रियम्
पुनरेवं न कर्तव्यं मम चेदिच्छसि प्रियम् २७
अनुशास्य च कौन्तेयं पद्मानि परिगृह्य च
तस्यामेव नलिन्यां तु विजह्रुरमरोपमाः २८
एतस्मिन्नेव काले तु प्रगृहीतशिलायुधाः
प्रादुरासन्महाकायास्तस्योद्यानस्य रक्षिणः २९
ते दृष्ट्वा धर्मराजानं देवर्षिं चापि लोमशम्
नकुलं सहदेवं च तथान्यान्ब्राह्मणर्षभान्
विनयेनानताः सर्वे प्रणिपेतुश्च भारत ३०
सान्त्विता धर्मराजेन प्रसेदुः क्षणदाचराः
विदिताश्च कुबेरस्य ततस्ते नरपुङ्गवाः
ऊषुर्नातिचिरं कालं रममाणाः कुरूद्वहाः ३१
इति श्रीमहाभारते आरण्यकपर्वणि त्रिपञ्चाशदधिकशततमोऽध्यायः १५३

समाप्तं तीर्थयात्रापर्व

## चतुः पञ्चाशदधिक शततमोऽध्यायः

वैशम्पायन उवाच
ततस्तान्परिविश्वस्तान्वसतस्तत्र पाराडवान्
गतेषु तेषु रत्तःसु भीमसेनात्मजेऽपि च १
रहितान्भीमसेनेन कदाचित्तान्यदृच्छया
जहार धर्मराजानं यमौ कृष्णां च रात्तसः २
ब्राह्मणो मन्त्रकुशलः सर्वास्त्रेष्वस्त्रवित्तमः
इति ब्रुवन्पाराडवेयान्पर्युपास्ते स्म नित्यदा ३
परीत्तमाणः पार्थानां कलापानि धनूंषि च
अन्तरं समभिप्रेप्सुर्नाम्ना ख्यातो जटासुरः ४
स भीमसेने निष्क्रान्ते मृगयार्थमरिंदमे
अन्यद्रूपं समास्थाय विकृतं भैरवं महत् ५
गृहीत्वा सर्वशस्त्राणि द्रौपदीं परिगृह्य च
प्रातिष्ठत स दुष्टात्मा त्रीन्गृहीत्वा च पाराडवान् ६
सहदेवस्तु यत्नेन ततोऽप्रक्रम्य पाराडवः
आक्रन्दद्भीमसेनं वै येन यातो महाबलः ७
तमब्रवीद्धर्मराजो ह्रियमाणो युधिष्ठिरः
धर्मस्ते हीयते मूढ न चैनं समवेत्तसे ८
येऽन्ये केचिन्मनुष्येषु तिर्यग्योनिगता अपि
गन्धर्वयत्तरत्तांसि वयांसि पशवस्तथा
मनुष्यानुपजीवन्ति ततस्त्वमुपजीवसि ९
समृद्ध्या ह्यस्य लोकस्य लोको युष्माकमृध्यते
इमं च लोकं शोचन्तमनुशोचन्ति देवताः
पूज्यमानाश्च वर्धन्ते हव्यकव्यैर्यथाविधि १०
वयं राष्ट्रस्य गोप्तारो रत्तितारश्च रात्तस
राष्ट्रस्यारत्त्यमाणस्य कुतो भूतिः कुतः सुखम् ११
न च राजावमन्तव्यो रत्तया जात्वनागसि
अणुरप्यपचारश्च नास्त्यस्माकं नराशन १२
द्रोग्धव्यं न च मित्रेषु न विश्वस्तेषु कर्हिचित्
येषां चान्नानि भुञ्जीत यत्र च स्यात्प्रतिश्रयः १३

स त्वं प्रतिश्रयेऽस्माकं पूज्यमानः सुखोषितः
भुक्त्वा चान्नानि दुष्प्रज्ञ कथमस्माञ्जिहीर्षसि १४
एवमेव वृथाचारो वृथावृद्धो वृथामतिः
वृथामरणमर्हस्त्वं वृथाद्य न भविष्यसि १५
अथ चेद्दुष्टबुद्धिस्त्वं सर्वैर्धर्मैर्विवर्जितः
प्रदाय शस्त्राण्यस्माकं युद्धेन द्रौपदीं हर १६
अथ चेत्त्वमविज्ञाय इदं कर्म करिष्यसि
अधर्मं चाप्यकीर्तिं च लोके प्राप्स्यसि केवलम् १७
एतामद्य परामृश्य स्त्रियं राक्षस मानुषीम्
विषमेतत्समालोड्य कुम्भेन प्राशितं त्वया १८
ततो युधिष्ठिरस्तस्य भारिकः समपद्यत
स तु भाराभिभूतात्मा न तथा शीघ्रगोऽभवत् १९
अथाब्रवीद् द्रौपदीं च नकुलं च युधिष्ठिरः
मा भैष्ट राक्षसान्मूढाद्गतिरस्य मया हृता २०
नातिदूरे महाबाहुर्भविता पवनात्मजः
अस्मिन्मुहूर्ते संप्राप्ते न भविष्यति राक्षसः २१
सहदेवस्तु तं दृष्ट्वा राक्षसं मूढचेतसम्
उवाच वचनं राजन्कुन्तीपुत्रं युधिष्ठिरम् २२
राजन्किं नाम तत्कृत्यं क्षत्रियस्यास्त्यतोऽधिकम्
यद्युद्धेऽभिमुखः प्राणांस्त्यजेच्छत्रूञ्जयेत वा २३
एष चास्मान्वयं चैनं युध्यमानाः परंतप
सूदयेम महाबाहो देशकालो ह्ययं नृप २४
क्षत्रधर्मस्य सम्प्राप्तः कालः सत्यपराक्रम
जयन्तः पात्यमाना वा प्राप्तुमर्हाम सद्गतिम् २५
राक्षसे जीवमानेऽद्य रविरस्तमियाद्यदि
नाहं ब्रूयां पुनर्जातु क्षत्रियोऽस्मीति भारत २६
भो भो राक्षस तिष्ठस्व सहदेवोऽस्मि पाण्डवः
हत्वा वा मां नयस्वैनान्हतो वाद्येह स्वप्स्यसि २७
तथैव तस्मिन्ब्रुवति भीमसेनो यदृच्छया
प्रादृश्यत महाबाहुः सवज्र इव वासवः २८

सोऽपश्यद्भ्रातरौ तत्र द्रौपदीं च यशस्विनीम्
क्षितिस्थं सहदेवं तु क्षिपन्तं राक्षसं तदा २९
मार्गाच्च राक्षसं मूढं कालोपहतचेतसम्
भ्रमन्तं तत्र तत्रैव दैवेन विनिवारितम् ३०
भ्रातॄंस्तान्ह्रियतो दृष्ट्वा द्रौपदीं च महाबलः
क्रोधमाहारयद्भीमो राक्षसं चेदमब्रवीत् ३१
विज्ञातोऽसि मया पूर्वं चेष्टञ्शस्त्रपरीक्षणे
आस्था तु त्वयि मे नास्ति यतोऽसि न हतस्तदा
ब्रह्मरूपप्रतिच्छन्नो न नो वदसि चाप्रियम् ३२
प्रियेषु चरमाणं त्वां न चैवाप्रियकारिणम्
अतिथिं ब्रह्मरूपं च कथं हन्यामनागसम्
राक्षसं मन्यमानोऽपि यो हन्यान्नरकं व्रजेत् ३३
अपक्वस्य च कालेन वधस्तव न विद्यते
नूनमद्यासि संपक्वो यथा ते मतिरीदृशी
दत्ता कृष्णापहरणे कालेनाद्भुतकर्मणा ३४
बडिशोऽय त्वया ग्रस्तः कालसूत्रेण लम्बितः
मत्स्योऽम्भसीव स्यूतास्यः कथं मेऽद्य गमिष्यसि ३५
यं चासि प्रस्थितो देशं मनः पूर्वं गतं च ते
न तं गन्तासि गन्तासि मार्गं बकहिडिम्बयोः ३६
एवमुक्तस्तु भीमेन राक्षसः कालचोदितः
भीत उत्सृज्य तान्सर्वान्युद्धाय समुपस्थितः ३७
अब्रवीच्च पुनर्भीमं रोषात्प्रस्फुरिताधरः
न मे मूढा दिशः पाप त्वदर्थं मे विलम्बनम् ३८
श्रुता मे राक्षसा ये ये त्वया विनिहता रणे
तेषामद्य करिष्यामि तवास्रेणोदकक्रियाम् ३९
एवमुक्तस्ततो भीमः सृक्किणी परिसंलिहन्
स्मयमान इव क्रोधात्साक्षात्कालान्तकोपमः
बाहुसंरम्भमेवेच्छन्नभिदुद्राव राक्षसम् ४०
राक्षसोऽपि तदा भीमं युद्धार्थिनमवस्थितम्
अभिदुद्राव संरब्धो बले वज्रधरं यथा ४१

वर्तमाने तदा ताभ्यां बाहुयुद्धे सुदारुणे
माद्रीपुत्रावतिक्रुद्धावुभावप्यभ्यधावताम् ४२
न्यवारयत्तौ प्रहसन्कुन्तीपुत्रो वृकोदरः
शक्तोऽह राक्षसस्येति प्रेक्षध्वमिति चाब्रवीत् ४३
आत्मना भ्रातृभिश्चाहं धर्मेण सुकृतेन च
इष्टेन च शपे राजन्सूदयिष्यामि राक्षसम् ४४
इत्येवमुक्त्वा तौ वीरौ स्पर्धमानौ परस्परम्
बाहुभिः समसज्जेतामुभौ रक्षोवृकोदरौ ४५
तयोरासीत्संप्रहारः क्रुद्धयोर्भीमरक्षसोः
अमृष्यमाणयोः संख्ये देवदानवयोरिव ४६
आरुज्यारुज्य तौ वृक्षानन्योन्यमभिजघ्नतुः
जीमूताविव घर्मान्ते विनदन्तौ महाबलौ ४७
बभञ्जतुर्महावृक्षानूरुभिर्बलिनां वरौ
अन्योन्येनाभिसंरब्धौ परस्परजयैषिणौ ४८
तद्वृक्षयुद्धमभवन्महीरुहविनाशनम्
वालिसुग्रीवयोर्भ्रात्रोः पुरेव कपिसिंहयोः ४९
आविध्याविध्य तौ वृक्षान्मुहूर्तमितरेतरम्
ताडयामासतुरुभौ विनदन्तौ मुहुर्मुहुः ५०
तस्मिन्देशे यदा वृक्षाः सर्व एव निपातिताः
पुञ्जीकृताश्च शतशः परस्परवधेप्सया ५१
तदा शिलाः समादाय मुहूर्तमिव भारत
महाभ्रैरिव शैलेन्द्रौ युयुधाते महाबलौ ५२
उग्राभिरुग्ररूपाभिर्बृहतीभिः परस्परम्
वज्रैरिव महावेगैराजघ्नतुरमर्षणौ ५३
अभिहत्य च भूयस्तावन्योन्यं बलदर्पितौ
भुजाभ्यां परिगृह्याथ चकर्षाते गजाविव ५४
मुष्टिभिश्च महाघोरैरन्योन्यमभिपेततुः
तयोश्चटचटाशब्दो बभूव सुमहात्मनोः ५५
ततः संहृत्य मुष्टिं तु पञ्चशीर्षमिवोरगम्
वेगेनाभ्यहनद्भीमो राक्षसस्य शिरोधराम् ५६

ततः श्रान्तं तु तद्रक्षो भीमसेनभुजाहतम्
सुपरिश्रान्तमालक्ष्य भीमसेनोऽभ्यवर्तत ५७
तत एनं महाबाहुर्बाहुभ्याममरोपमः
समुत्क्षिप्य बलाद्भीमो निष्पिपेष महीतले ५८
तस्य गात्राणि सर्वाणि चूर्णयामास पाराडवः
अरत्निना चाभिहत्य शिरः कायादपाहरत् ५९
संदष्टोष्ठं विवृत्ताक्षं फलं वृन्तादिव च्युतम्
जटासुरस्य तु शिरो भीमसेनबलाद्धृतम्
पपात रुधिरादिग्धं सन्दष्टदशनच्छदम् ६०
तं निहत्य महेष्वासो युधिष्ठिरमुपागमत्
स्तूयमानो द्विजाग्र्यैस्तैर्मरुद्भिरिव वासवः ६१
इति श्रीमहाभारते आरगयकपर्वणि चतुःपञ्चाशदधिकशततमोऽध्यायः १५४
समाप्तं जटासुरवधपर्व

पञ्चपञ्चाशदधिक शततमोऽध्यायः

वैशम्पायन उवाच
निहते राक्षसे तस्मिन्पुनर्नारायणाश्रमम्
अभ्येत्य राजा कौन्तेयो निवासमकरोत्प्रभुः १
स समानीय तान्सर्वान्भ्रातृनित्यब्रवीद्वचः
द्रौपद्या सहितान्काले संस्मरन्भ्रातरं जयम् २
समाश्चतस्रोऽभिगताः शिवेन चरतां वने
कृतोद्देशश्च बीभत्सुः पञ्चमीमभितः समाम् ३
प्राप्य पर्वतराजानं श्वेतं शिखरिणां वरम्
तत्रापि च कृतोद्देशः समागमदिदृक्षुभिः ४
कृतश्च समयस्तेन पार्थेनामिततेजसा
पञ्च वर्षाणि वत्स्यामि विद्यार्थीति पुरा मयि ५
तत्र गाराडीवधन्वानमवाप्तास्त्रमरिन्दमम्
देवलोकादिमं लोकं द्रक्ष्यामः पुनरागतम् ६
इत्युक्त्वा ब्राह्मणान्सर्वानामन्त्रयत पाराडवः
कारणं चैव तत्तेषामाचचक्षे तपस्विनाम् ७

तमुग्रतपसः प्रीताः कृत्वा पार्थं प्रदक्षिणम्
ब्राह्मणास्तेऽन्वमोदन्त शिवेन कुशलेन च ८
सुखोदर्कमिमं क्लेशमचिराद्भरतर्षभ
क्षत्रधर्मेण धर्मज्ञ तीर्त्वा गां पालयिष्यसि ९
तत्तु राजा वचस्तेषां प्रतिगृह्य तपस्विनाम्
प्रतस्थे सह विप्रैस्तैर्भ्रातृभिश्च परन्तपः १०
द्रौपद्या सहितः श्रीमान्हैडिम्बेयादिभिस्तथा
राक्षसैरनुयातश्च लोमशेनाभिरक्षितः ११
क्वचिज्जगाम पद्भ्यां तु राक्षसैरुह्यते क्वचित्
तत्र तत्र महातेजा भ्रातृभिः सह सुव्रतः १२
ततो युधिष्ठिरो राजा बहून्क्लेशान्विचिन्तयन्
सिंहव्याघ्रगजाकीर्णामुदीचीं प्रययौ दिशम् १३
अवेक्षमाणः कैलासं मैनाकं चैव पर्वतम्
गन्धमादनपादांश्च मेरुं चापि शिलोच्चयम् १४
उपर्युपरि शैलस्य बह्वीश्च सरितः शिवाः
प्रस्थं हिमवतः पुण्यं ययौ सप्तदशेऽहनि १५
ददृशुः पाण्डवा राजन्गन्धमादनमन्तिकात्
पृष्ठे हिमवतः पुण्ये नानाद्रुमलतायुते १६
सलिलावर्तसंजातैः पुष्पितैश्च महीरुहैः
समावृतं पुण्यतममाश्रमं वृषपर्वणः १७
तमुपक्रम्य राजर्षिं धर्मात्मानमरिन्दमाः
पाण्डवा वृषपर्वाणमवन्दन्त गतक्लमाः १८
अभ्यनन्दत्स राजर्षिः पुत्रवद्भरतर्षभान्
पूजिताश्चावसंस्तत्र सप्तरात्रमरिन्दमाः १९
अष्टमेऽहनि सम्प्राप्ते तमृषिं लोकविश्रुतम्
आमन्त्र्य वृषपर्वाणं प्रस्थानं समरोचयन् २०
एकैकशश्च तान्विप्रान्निवेद्य वृषपर्वणे
न्यासभूतान्यथाकालं बन्धूनिव सुसत्कृतान् २१
ततस्ते वरवस्त्राणि शुभान्याभरणानि च
न्यदधुः पाण्डवास्तस्मिन्नाश्रमे वृषपर्वणः २२

अतीतानागते विद्वान्कुशलः सर्वधर्मवित्
अन्वशासत्स धर्मज्ञः पुत्रवद्भरतर्षभान् २३
तेऽनुज्ञाता महात्मानः प्रययुर्दिशमुत्तराम्
कृष्णया सहिता वीरा ब्राह्मणैश्च महात्मभिः
तान्प्रस्थितानन्वगच्छद्वृषपर्वा महीपतिः २४
उपन्यस्य महातेजा विप्रेभ्यः पाण्डवांस्तदा
अनुसंसाध्य कौन्तेयानाशीर्भिरभिनन्द्य च
वृषपर्वा निववृते पन्थानमुपदिश्य च २५
नानामृगगणैर्जुष्टं कौन्तेयः सत्यविक्रमः
पदातिर्भ्रातृभिः सार्धं प्रातिष्ठत युधिष्ठिरः २६
नानाद्रुमनिरोधेषु वसन्तः शैलसानुषु
पर्वतं विविशुः श्वेतं चतुर्थेऽहनि पाण्डवाः २७
महाभ्रघनसंकाशं सलिलोपहितं शुभम्
मणिकाञ्चनरम्यं च शैलं नानासमुच्छ्रयम् २८
ते समासाद्य पन्थानं यथोक्तं वृषपर्वणा
अनुसस्रुर्यथोद्देशं पश्यन्तो विविधान्नगान् २९
उपर्युपरि शैलस्य गुहाः परमदुर्गमाः
सुदुर्गमांस्ते सुबहून्सुखेनैवाभिचक्रमुः ३०
धौम्यः कृष्णा च पार्थाश्च लोमशश्च महानृषिः
अगमन्सहितास्तत्र न कश्चिदवहीयते ३१
ते मृगद्विजसंघुष्टं नानाद्विजसमाकुलम्
शाखामृगगणैश्चैव सेवितं सुमनोहरम् ३२
पुण्यं पद्मसरोपेतं सपल्वलमहावनम्
उपतस्थुर्महावीर्या माल्यवन्तं महागिरिम् ३३
ततः किंपुरुषावासं सिद्धचारणसेवितम्
ददृशुर्हृष्टरोमाणः पर्वतं गन्धमादनम् ३४
विद्याधरानुचरितं किन्नरीभिस्तथैव च
गजसिंहसमाकीर्णमुदीर्णशरभायुतम् ३५
उपेतमन्यैश्च तदा मृगैर्मृदुनिनादिभिः
ते गन्धमादनवनं तन्नन्दनवनोपमम् ३६

मुदिताः पाण्डुतनया मनोहृदयनन्दनम्
विविशुः क्रमशो वीरा अरण्यं शुभकाननम् ३७
द्रौपदीसहिता वीरास्तैश्च विप्रैर्महात्मभिः
शृण्वन्तः प्रीतिजननान्वल्गून्मदकलाञ्शुभान्
श्रोत्ररम्यान्सुमधुराञ्शब्दान्खगमुखेरितान् ३८
सर्वर्तुफलभाराढ्यान्सर्वर्तुकुसुमोज्ज्वलान्
पश्यन्तः पादपांश्चापि फलभारावनामितान् ३९
आम्रानाम्रातकान्फुल्लान्नारिकेलान्सतिन्दुकान्
अजातकांस्तथा जीरान्दाडिमान्बीजपूरकान् ४०
पनसाल्लिकुचान्मोचान्खर्जूरानाम्रवेतसान्
पारावतांस्तथा क्षौद्रान्नीपांश्चापि मनोरमान् ४१
बिल्वान्कपित्थाञ्जम्बूंश्च काश्मरीर्बदरीस्तथा
प्लक्षानुदुम्बरवटानश्वत्थान्क्षीरिणस्तथा
भल्लातकानामलकान्हरीतकबिभीतकान् ४२
इङ्गुदान्करवीरांश्च तिन्दुकांश्च महाफलान्
एतानन्यांश्च विविधान्गन्धमादनसानुषु ४३
फलैरमृतकल्पैस्तानाचितान्स्वादुभिस्तरून्
तथैव चम्पकाशोकान्केतकान्बकुलांस्तथा ४४
पुन्नागान्सप्तपर्णांश्च कर्णिकारान्सकेतकान्
पाटलान्कुटजान्रम्यान्मन्दारेन्दीवरांस्तथा ४५
पारिजातान्कोविदारान्देवदारुतरूंस्तथा
शालांस्तालांस्तमालांश्च प्रियालान्बकुलांस्तथा
शाल्मलद्यः किंशुकाशोकाञ्शिंशपांस्तरलांस्तथा ४६
चकोरैः शतपत्रैश्च भृङ्गराजैस्तथा शुकैः
कोलिलैः कलविङ्कैश्च हारितैर्जीवजीवकैः ४७
प्रियव्रतैश्चातकैश्च तथान्यैर्विविधैः खगैः
श्रोत्ररम्यं सुमधुरं कूजद्भिश्चाप्यधिष्ठितान् ४८
सरांसि च विचित्राणि प्रसन्नसलिलानि च
कुमुदैः पुण्डरीकैश्च तथा कोकनदोत्पलैः
कल्हारैः कमलैश्चैव आचितानि समन्ततः ४९

कादम्बैश्चक्रवाकैश्च कुररैर्जलकुक्कुटैः
कारण्डवैः प्लवैर्हंसैर्बकैर्मद्गुभिरेव च
एतैश्चान्यैश्च कीर्णानि समन्ताज्जलचारिभिः ५०
हृष्टैस्तथा तामरसरसासवमदालसैः
पद्मोदरच्युतरजःकिञ्जल्कारुणरञ्जितैः ५१
मधुरस्वरैर्मधुकरैर्विरुतान्कमलाकरान्
पश्यन्तस्ते मनोरम्यान्गन्धमादनसानुषु ५२
तथैव पद्मषण्डैश्च मण्डितेषु समन्ततः
शिखण्डिनीभिः सहिताँल्लतामण्डपकेषु च
मेघतूर्यरवोद्दाममदनाकुलितान्भृशम् ५३
कृत्वैव केकामधुरं संगीतमधुरस्वरम्
चित्रान्कलापान्विस्तीर्य सविलासान्मदालसान्
मयूरान्ददृशुश्चित्रान्नृत्यतो वनलासकान् ५४
कान्ताभिः सहितानन्यानपश्यन्रमतः सुखम्
वल्लीलतासंकटेषु कुटकेषु स्थितांस्तथा ५५
कांश्चिच्छकुनजातांश्च विटपेषूत्कटानपि
कलापरचिताटोपान्विचित्रमुकुटानिव
विवरेषु तरूणां च मुदितान्ददृशुश्च ते ५६
सिन्धुवारानथोद्दामान्मन्मथस्येव तोमरान्
सुवर्णकुसुमाकीर्णान्गिरीणां शिखरेषु च ५७
कर्णिकारान्विरचितान्कर्णपूरानिवोत्तमान्
अथापश्यन्कुरबकान्वनराजिषु पुष्पितान्
कामवश्योत्सुककरान्कामस्येव शरोत्करान् ५८
तथैव वनराजीनामुदारान्रचितानिव
विराजमानांस्तेऽपश्यंस्तिलकांस्तिलकानिव ५९
तथानङ्गशराकारान्सहकारान्मनोरमान्
अपश्यन्भ्रमरारावान्मञ्जरीभिर्विराजितान् ६०
हिरण्यसदृशैः पुष्पैर्दावाग्निसदृशैरपि
लोहितैरञ्जनाभैश्च वैडूर्यसदृशैरपि ६१
तथा शालांस्तमालांश्च पाटल्यो बकुलानि च

माला इव समासक्ताः शैलानां शिखरेषु च ६२
एवं क्रमेण ते वीरा वीक्षमाणाः समन्ततः
गजसंघसमाबाधं सिंहव्याघ्रसमायुतम् ६३
शरभोन्नादसंघुष्टं नानारावनिनादितम्
सर्वर्तुफलपुष्पाढ्यं गन्धमादनसानुषु ६४
पीता भास्वरवर्णाभा बभूवुर्वनराजयः
नात्र कण्टकिनः केचिन्नात्र केचिदपुष्पिताः
स्निग्धपत्रफला वृक्षा गन्धमादनसानुषु ६५
विमलस्फाटिकाभानि पाण्डुरच्छदनैर्द्विजैः
राजहंसैरुपेतानि सारसाभिरुतानि च
सरांसि सरितः पार्थाः पश्यन्तः शैलसानुषु ६६
पद्मोत्पलविचित्राणि सुखस्पर्शजलानि च
गन्धवन्ति च माल्यानि रसवन्ति फलानि च
अतीव वृक्षा राजन्ते पुष्पिताः शैलसानुषु ६७
एते चान्ये च बहवस्तत्र काननजा द्रुमाः
लताश्च विविधाकाराः पत्रपुष्पफलोच्चयाः ६८
युधिष्ठिरस्तु तान्वृक्षान्पश्यमानो नगोत्तमे
भीमसेनमिदं वाक्यमब्रवीन्मधुराक्षरम् ६९
पश्य भीम शुभान्देशान्देवाक्रीडान्समन्ततः
अमानुषगतिं प्राप्ताः संसिद्धाः स्म वृकोदर ७०
लताभिश्चैव बह्वीभिः पुष्पिताः पादपोत्तमाः
संश्लिष्टाः पार्थ शोभन्ते गन्धमादनसानुषु ७१
शिखण्डिनीभिश्चरतां सहितानां शिखण्डिनाम्
नर्दतां शृणु निर्घोषं भीम पर्वतसानुषु ७२
चकोराः शतपत्राश्च मत्तकोकिलशारिकाः
पत्रिणः पुष्पितानेतान्संश्लिष्यन्ति महाद्रुमान् ७३
रक्तपीतारुणाः पार्थ पादपाग्रगता द्विजाः
परस्परमुदीक्षन्ते बहवो जीवजीवकाः ७४
हरितारुणवर्णानां शाद्वलानां समन्ततः
सारसाः प्रतिदृश्यन्ते शैलप्रस्त्रवणेष्वपि ७५

वदन्ति मधुरा वाचः सर्वभूतमनोनुगाः
भृङ्गराजोपचक्राश्च लोहपृष्ठाश्च पत्रिणः ७६
चतुर्विषाणाः पद्माभाः कुञ्जराः सकरेणवः
एते वैडूर्यवर्णाभं क्षोभयन्ति महत्सरः ७७
बहुतालसमुत्सेधाः शैलशृङ्गात्परिच्युताः
नानाप्रस्रवणेभ्यश्च वारिधाराः पतन्त्यमूः ७८
भास्कराभप्रभा भीम शारदाभ्रघनोपमाः
शोभयन्ति महशैलं नानारजतधातवः ७९
क्वचिदञ्जनवर्णाभाः क्वचित्काञ्चनसन्निभाः
धातवो हरितालस्य क्वचिद्धिङ्गुलकस्य च ८०
मनःशिलागुहाश्चैव सन्ध्याभ्रनिकरोपमाः
शशलोहितवर्णाभाः क्वचिद्गैरिकधातवः ८१
सितासिताभ्रप्रतिमा बालसूर्यसमप्रभाः
एते बहुविधाः शैलं शोभयन्ति महाप्रभाः ८२
गन्धर्वाः सह कान्ताभिर्यथोक्तं वृषपर्वणा
दृश्यन्ते शैलशृङ्गेषु पार्थ किंपुरुषैः सह ८३
गीतानां तलतालानां यथा साम्नां च निस्वनः
श्रूयते बहुधा भीम सर्वभूतमनोहरः ८४
महागङ्गामुदीक्षस्व पुगयां देवनदीं शुभाम्
कलहंसगणैर्जुष्टामृषिकिन्नरसेविताम् ८५
धातुभिश्च सरिद्भिश्च किन्नरैर्मृगपक्षिभिः
गंधर्वैरप्सरोभिश्च काननैश्च मनोरमैः ८६
व्यालैश्च विविधाकारैः शतशीर्षैः समन्ततः
उपेतं पश्य कौन्तेय शैलराजमरिंदम ८७
ते प्रीतमनसः शूराः प्राप्ता गतिमनुत्तमाम्
नातृप्यन्पर्वतेन्द्रस्य दर्शनेन परंतपाः ८८
उपेतमथ माल्यैश्च फलवद्भिश्च पादपैः
आर्ष्टिषेणस्य राजर्षेराश्रमं ददृशुस्तदा ८९
ततस्तं तीव्रतपसं कृशं धमनिसंततम्
पारगं सर्वधर्माणामार्ष्टिषेणमुपागमन् ९०

इति श्रीमहाभारते आरण्यकपर्वणि पञ्चपञ्चाशदधिकशततमोऽध्यायः १५५

## षट्पञ्चाशदधिक शततमोऽध्यायः

वैशम्पायन उवाच
युधिष्ठिरस्तमासाद्य तपसा दग्धकिल्बिषम्
अभ्यवादयत प्रीतः शिरसा नाम कीर्तयन् १
ततः कृष्णा च भीमश्च यमौ चापि यशस्विनौ
शिरोभिः प्राप्य राजर्षिं परिवार्योपतस्थिरे २
तथैव धौम्यो धर्मज्ञः पाण्डवानां पुरोहितः
यथान्यायमुपाक्रान्तस्तमृषिं संशितव्रतम् ३
अन्वजानात्स धर्मज्ञो मुनिर्दिव्येन चक्षुषा
पाण्डोः पुत्रान्कुरुश्रेष्ठानास्यतामिति चाब्रवीत् ४
कुरूणामृषभं प्राज्ञं पूजयित्वा महातपाः
सह भ्रातृभिरासीनं पर्यपृच्छदनामयम् ५
नानृते कुरुषे भावं कच्चिद्धर्मे च वर्तसे
मातापित्रोश्च ते वृत्तिः कच्चित्पार्थ न सीदति ६
कच्चित्ते गुरवः सर्वे वृद्धा वैद्याश्च पूजिताः
कच्चिन्न कुरुषे भावं पार्थ पापेषु कर्मसु ७
सुकृतं प्रतिकर्तुं च कच्चिद्धातुं च दुष्कृतम्
यथान्यायं कुरुश्रेष्ठ जानासि न च कत्थसे ८
यथार्हं मानिताः कच्चित्त्वया नन्दन्ति साधवः
वनेष्वपि वसन्कच्चिद्धर्ममेवानुवर्तसे ९
कच्चिद्धौम्यस्त्वदाचारैर्न पार्थ परितप्यते
दानधर्मतपःशौचैरार्जवेन तितिक्षया १०
पितृपैतामहं वृत्तं कच्चित्पार्थानुवर्तसे
कच्चिद्राजर्षियातेन यथा गच्छसि पाण्डव ११
स्वे स्वे किल कुले जाते पुत्रे नप्तरि वा पुनः
पितरः पितृलोकस्थाः शोचन्ति च हसन्ति च १२
किं न्वस्य दुष्कृतेऽस्माभिः संप्राप्तव्यं भविष्यति
किं चास्य सुकृतेऽस्माभिः प्राप्तव्यमिति शोभनम् १३

पिता माता तथैवाग्निर्गुरुरात्मा च पञ्चमः
यस्यैते पूजिताः पार्थ तस्य लोकावुभौ जितौ १४
अब्भक्षा वायुभक्षाश्च प्लवमाना विहायसा
जुषन्ते पर्वतश्रेष्ठमृषयः पर्वसंधिषु १५
कामिनः सह कान्ताभिः परस्परमनुव्रताः
दृश्यन्ते शैलशृङ्गस्थास्तथा किम्पुरुषा नृप १६
अरजांसि च वासांसि वसानाः कौशिकानि च
दृश्यन्ते बहवः पार्थ गन्धर्वाप्सरसां गणाः १७
विद्याधरगणाश्चैव स्रग्विणः प्रियदर्शनाः
महोरगगणाश्चैव सुपर्णाश्चोरगादयः १८
अस्य चोपरि शैलस्य श्रूयते पर्वसंधिषु
भेरीपणवशङ्खानां मृदङ्गानां च निस्वनः १९
इहस्थैरेव तत्सर्वं श्रोतव्यं भरतर्षभाः
न कार्या वः कथंचित्स्यात्तत्राभिसरणे मतिः २०
न चाप्यतः परं शक्यं गन्तुं भरतसत्तमाः
विहारो ह्यत्र देवानाममानुषगतिस्तु सा २१
ईषच्चपलकर्माणं मनुष्यमिह भारत
द्विषन्ति सर्वभूतानि ताडयन्ति च राक्षसाः २२
अभ्यतिक्रम्य शिखरं शैलस्यास्य युधिष्ठिर
गतिः परमसिद्धानां देवर्षीणां प्रकाशते २३
चापलादिह गच्छन्तं पार्थ यानमतः परम्
अयःशूलादिभिर्घ्नन्ति राक्षसाः शत्रुसूदन २४
अप्सरोभिः परिवृतः समृद्ध्या नरवाहनः
इह वैश्रवणस्तात पर्वसन्धिषु दृश्यते २५
शिखरे तं समासीनमधिपं सर्वरक्षसाम्
प्रेक्षन्ते सर्वभूतानि भानुमन्तमिवोदितम् २६
देवदानवसिद्धानां तथा वैश्रवणस्य च
गिरेः शिखरमुद्यानमिदं भरतसत्तम २७
उपासीनस्य धनदं तुम्बुरोः पर्वसंधिषु
गीतसामस्वनस्तात श्रूयते गन्धमादने २८

एतदेवंविधं चित्रमिह तात युधिष्ठिर
प्रेक्षन्ते सर्वभूतानि बहुशः पर्वसन्धिषु २९
भुञ्जानाः सर्वभोज्यानि रसवन्ति फलानि च
वसध्वं पाण्डवश्रेष्ठा यावदर्जुनदर्शनम् ३०
न तात चपलैर्भाव्यमिह प्राप्तैः कथञ्चन
उषित्वेह यथाकामं यथाश्रद्धं विहृत्य च
ततः शस्त्रभृतां श्रेष्ठ पृथिवीं पालयिष्यसि ३१
इति श्रीमहाभारते आरण्यकपर्वणि षट्पञ्चाशदधिकशततमोऽध्यायः १५६

## सप्तपञ्चाशदधिक शततमोऽध्यायः

जनमेजय उवाच
पाण्डोः पुत्रा महात्मानः सर्वे दिव्यपराक्रमाः
कियन्तं कालमवसन्पर्वते गन्धमादने १
कानि चाभ्यवहार्याणि तत्र तेषां महात्मनाम्
वसतां लोकवीराणामासंस्तद्ब्रूहि सत्तम २
विस्तरेण च मे शंस भीमसेनपराक्रमम्
यद्यच्चक्रे महाबाहुस्तस्मिन्हैमवते गिरौ
न खल्वासीत्पुनर्युद्धं तस्य यक्षैर्द्विजोत्तम ३
कच्चित्समागमस्तेषामासीद्वैश्रवणेन च
तत्र ह्यायाति धनद आर्ष्टिषेणो यथाब्रवीत् ४
एतदिच्छाम्यहं श्रोतुं विस्तरेण तपोधन
न हि मे शृण्वतस्तृप्तिरस्ति तेषां विचेष्टितम् ५
वैशम्पायन उवाच
एतदात्महितं श्रुत्वा तस्याप्रतिमतेजसः
शासनं सततं चक्रुस्तथैव भरतर्षभाः ६
भुञ्जाना मुनिभोज्यानि रसवन्ति फलानि च
शुद्धबाणहतानां च मृगाणां पिशितान्यपि ७
मेध्यानि हिमवत्पृष्ठे मधूनि विविधानि च
एवं ते न्यवसंस्तत्र पाण्डवा भरतर्षभाः ८
तथा निवसतां तेषां पञ्चमं वर्षमभ्यगात्

शृरावतां लोमशोक्तानि वाक्यानि विविधानि च ९
कृत्यकाल उपस्थास्य इति चोक्त्वा घटोत्कचः
राक्षसैः सहितः सर्वैः पूर्वमेव गतः प्रभो १०
आर्ष्टिषेणाश्रमे तेषां वसतां वै महात्मनाम्
अगच्छन्बहवो मासाः पश्यतां महदद्भुतम् ११
तैस्तत्र रममाणैश्च विहरद्भिश्च पाराडवैः
प्रीतिमन्तो महाभागा मुनयश्चारणास्तथा १२
आजग्मुः पाराडवान्द्रष्टुं सिद्धात्मानो यतव्रताः
तैस्तैः सह कथाश्चक्रुर्दिव्या भरतसत्तमाः १३
ततः कतिपयाहस्य महाह्रदनिवासिनम्
ऋद्धिमन्तं महानागं सुपर्णः सहसाहरत् १४
प्राकम्पत महाशैलः प्रामृद्यन्त महाद्रुमाः
ददृशुः सर्वभूतानि पाराडवाश्च तदद्भुतम् १५
ततः शैलोत्तमस्याग्रात्पाराडवान्प्रति मारुतः
अवहत्सर्वमाल्यानि गन्धवन्ति शुभानि च १६
तत्र पुष्पाणि दिब्यानि सुहृद्भिः सह पाराडवाः
ददृशुः पञ्चवर्णानि द्रौपदी च यशस्विनी १७
भीमसेनं ततः कृष्णा काले वचनमब्रवीत्
विविक्ते पर्वतोद्देशे सुखासीनं महाभुजम् १८
सुपर्णानिलवेगेन श्वसनेन महाबलात्
पञ्चवर्णानि पात्यन्ते पुष्पाणि भरतर्षभ
प्रत्यक्षं सर्वभूतानां नदीमश्वरथां प्रति १९
खाराडवे सत्यसंधेन भ्रात्रा तव नरेश्वर
गन्धर्वोरगरक्षांसि वासवश्च निवारितः
हता मायाविनश्चोग्रा धनुः प्राप्तं च गाराडवम् २०
तवापि सुमहत्तेजो महद्बाहुबलं च ते
अविषह्यमनाधृष्यं शतक्रतुबलोपमम् २१
त्वद्बाहुबलवेगेन त्रासिताः सर्वराक्षसाः
हित्वा शैलं प्रपद्यन्तां भीमसेन दिशो दश २२
ततः शैलोत्तमस्याग्रं चित्रमाल्यधरं शिवम्

व्यपेतभयसंमोहाः पश्यन्तु सुहृदस्तव २३
एवं प्रणिहितं भीम चिरात्प्रभृति मे मनः
द्रष्टुमिच्छामि शैलाग्रं त्वद्बाहुबलमाश्रिता २४
ततः क्षिप्तमिवात्मानं द्रौपद्या स परंतपः
नामृष्यत महाबाहुः प्रहारमिव सद्गवः २५
सिंहर्षभगतिः श्रीमानुदारः कनकप्रभः
मनस्वी बलवान्दृप्तो मानी शूरश्च पाण्डवः २६
लोहिताक्षः पृथुव्यंसो मत्तवारणविक्रमः
सिंहदंष्ट्रो बृहत्स्कन्धः शालपोत इवोद्गतः २७
महात्मा चारुसर्वाङ्गः कम्बुग्रीवो महाभुजः
रुक्मपृष्ठं धनुः खड्गं तूणांश्चापि परामृशत् २८
केसरीव यथोत्सिक्तः प्रभिन्न इव वारणः
व्यपेतभयसंमोहः शैलमभ्यपतद्बली २९
तं मृगेन्द्रमिवायान्तं प्रभिन्नमिव वारणम्
ददृशुः सर्वभूतानि बाणखड्गधनुर्धरम् ३०
द्रौपद्या वर्धयन्हर्षं गदामादाय पाण्डवः
व्यपेतभयसंमोहः शैलराजं समाविशत् ३१
न ग्लानिर्न च कातर्यं न वैक्लव्यं न च मत्सरः
कदाचिज्जुषते पार्थमात्मजं मातरिश्वनः ३२
तदेकायनमासाद्य विषमं भीमदर्शनम्
बहुतालोच्छ्रयं शृङ्गमारुरोह महाबलः ३३
स किन्नरमहानागमुनिगन्धर्वराक्षसान्
हर्षयन्पर्वतस्याग्रमाससाद महाबलः ३४
ततो वैश्रवणावासं ददर्श भरतर्षभः
काञ्चनैः स्फाटिकाकारैर्वेश्मभिः समलंकृतम् ३५
मोदयन्सर्वभूतानि गन्धमादनसंभवः
सर्वगन्धवहस्तत्र मारुतः सुसुखो ववौ ३६
चित्रा विविधवर्णाभाश्चित्रमञ्जरिधारिणः
अचिन्त्या विविधास्तत्र द्रुमाः परमशोभनाः ३७
रत्नजालपरिक्षिप्तं चित्रमाल्यधरं शिवम्

राक्षसाधिपतेः स्थानं ददर्श भरतर्षभः ३८
गदाखड्गधनुष्पाणिः समभित्यक्तजीवितः
भीमसेनो महाबाहुस्तस्थौ गिरिरिवाचलः ३९
ततः शङ्खमुपाध्मासीद्द्विषतां लोमहर्षणम्
ज्याघोषतलघोषं च कृत्वा भूतान्यमोहयत् ४०
ततः संहृष्टरोमाणः शब्दं तमभिदुद्रुवुः
यक्षराक्षसगन्धर्वाः पाण्डवस्य समीपतः ४१
गदापरिघनिस्त्रिंशशक्तिशूलपरश्वधाः
प्रगृहीता व्यरोचन्त यक्षराक्षसबाहुभिः ४२
ततः प्रववृते युद्धं तेषां तस्य च भारत
तैः प्रयुक्तान्महाकायैः शक्तिशूलपरश्वधान्
भल्लैर्भीमः प्रचिच्छेद भीमवेगतरैस्ततः ४३
अन्तरिक्षचराणां च भूमिष्ठानां च गर्जताम्
शरैर्विव्याध गात्राणि राक्षसानां महाबलः ४४
सा लोहितमहावृष्टिरभ्यवर्षन्महाबलम्
कायेभ्यः प्रच्युता धारा राक्षसानां समन्ततः ४५
भीमबाहुबलोत्सृष्टैर्बहुधा यक्षरक्षसाम्
विनिकृत्तान्यदृश्यन्त शरीराणि शिरांसि च ४६
प्रच्छाद्यमानं रक्षोभिः पाण्डवं प्रियदर्शनम्
ददृशुः सर्वभूतानि सूर्यमभ्रगणैरिव ४७
स रश्मिभिरिवादित्यः शरैररिनिघातिभिः
सर्वानार्छन्महाबाहुर्बलवान्सत्यविक्रमः ४८
अभितर्जयमानाश्च रुवन्तश्च महारवान्
न मोहं भीमसेनस्य ददृशुः सर्वराक्षसाः ४९
ते शरैः क्षतसर्वाङ्गा भीमसेनभयार्दिताः
भीममार्तस्वरं चक्रुर्विप्रकीर्णमहायुधाः ५०
उत्सृज्य ते गदाशूलानसिशक्तिपरश्वधान्
दक्षिणां दिशमाजग्मुस्त्रासिता दृढधन्वना ५१
तत्र शूलगदापाणिर्व्यूढोरस्को महाभुजः
सखा वैश्रवणस्यासीन्मणिमान्नाम राक्षसः ५२

अदर्शयदधीकारं पौरुषं च महाबलः
स तान्दृष्ट्वा परावृत्तान्स्मयमान इवाब्रवीत् ५३
एकेन बहवः संख्ये मानुषेण पराजिताः
प्राप्य वैश्रवणावासं किं वद्यथ धनेश्वरम् ५४
एवमाभाष्य तान्सर्वान्न्यवर्तत स रात्तसः
शक्तिशूलगदापाणिरभ्यधावञ्च पाण्डवम् ५५
तमापतन्तं वेगेन प्रभिन्नमिव वारणम्
वत्सदन्तैस्त्रिभिः पार्श्वे भीमसेनः समर्पयत् ५६
मणिमानपि संक्रुद्धः प्रगृह्य महतीं गदाम्
प्राहिणोद्भीमसेनाय परिक्षिप्य महाबलः ५७
विद्युद्रूपां महाघोरामाकाशे महतीं गदाम्
शरैर्बहुभिरभ्यर्छद्भीमसेनः शिलाशितैः ५८
प्रत्यहन्यन्त ते सर्वे गदामासाद्य सायकाः
न वेगं धरयामासुर्गदावेगस्य वेगिताः ५९
गदायुद्धसमाचारं बुध्यमानः स वीर्यवान्
व्यंसयामास तं तस्य प्रहारं भीमविक्रमः ६०
ततः शक्तिं महाघोरां रुक्मदण्डामयस्मयीम्
तस्मिन्नेवान्तरे धीमान्प्रजहाराथ रात्तसः ६१
सा भुजं भीमनिर्ह्रादा भित्त्वा भीमस्य दत्तिणम्
साग्निज्वाला महारौद्रा पपात सहसा भुवि ६२
सोऽतिविद्धो महेष्वासः शक्त्यामितपराक्रमः
गदां जग्राह कौरव्यो गदायुद्धविशारदः ६३
तां प्रगृह्योन्नदन्भीमः सर्वशैक्यायसीं गदाम्
तरसा सोऽभिदुद्राव मणिमन्तं महाबलम् ६४
दीप्यमानं महाशूलं प्रगृह्य मणिमानपि
प्राहिणोद्भीमसेनाय वेगेन महता नदन् ६५
भङ्क्त्वा शूलं गदाग्रेण गदायुद्धविशारदः
अभिदुद्राव तं तूर्णं गरुत्मानिव पन्नगम् ६६
सोऽन्तरित्तमभिप्लुत्य विधूय सहसा गदाम्
प्रचित्तेप महाबाहुर्विनद्य रणमूर्धनि ६७

सेन्द्राशनिरिवेन्द्रेण विसृष्टा वातरंहसा
हत्वा रक्षः क्षितिं प्राप्य कृत्येव निपपात ह ६८
तं राक्षसं भीमबलं भीमसेनेन पातितम्
ददृशुः सर्वभूतानि सिंहेनैव गवां पतिम् ६९
तं प्रेक्ष्य निहतं भूमौ हतशेषा निशाचराः
भीममार्तस्वरं कृत्वा जग्मुः प्राचीं दिशं प्रति ७०
इति श्रीमहाभारते आरण्यकपर्वणि सप्तपञ्चाशदधिकशततमोऽध्यायः १५७

अष्टपञ्चाशदधिक शततमोऽध्यायः

वैशम्पायन उवाच
श्रुत्वा बहुविधैः शब्दैर्नाद्यमाना गिरेर्गुहाः
अजातशत्रुः कौन्तेयो माद्रीपुत्रावुभावपि १
धौम्यः कृष्णा च विप्राश्च सर्वे च सुहृदस्तथा
भीमसेनमपश्यन्तः सर्वे विमनसोऽभवन् २
द्रौपदीमार्ष्टिषेणाय प्रदाय तु महारथाः
सहिताः सायुधाः शूराः शैलमारुरुहुस्तदा ३
ततः संप्राप्य शैलाग्रं वीक्षमाणा महारथाः
ददृशुस्ते महेष्वासा भीमसेनमरिंदमम् ४
स्फुरतश्च महाकायान्गतसत्त्वांश्च राक्षसान्
महाबलान्महाघोरान्भीमसेनेन पातितान् ५
शुशुभे स महाबाहुर्गदाखड्गधनुर्धरः
निहत्य समरे सर्वान्दानवान्मघवानिव ६
ततस्ते समतिक्रम्य परिष्वज्य वृकोदरम्
तत्रोपविविशुः पार्थाः प्राप्ता गतिमनुत्तमाम् ७
तैश्चतुर्भिर्महेष्वासैर्गिरिशृङ्गमशोभत
लोकपालैर्महाभागैर्दिवं देववरैरिव ८
कुबेरसदनं दृष्ट्वा राक्षसांश्च निपातितान्
भ्राता भ्रातरमासीनमभ्यभाषत पाण्डवम् ९
साहसाद्यदि वा मोहाद्भीम पापमिदं कृतम्
नैतत्ते सदृशं वीर मुनेरिव मृषावचः १०

राजद्विष्टं न कर्तव्यमिति धर्मविदो विदुः
त्रिदशानामिदं द्विष्टं भीमसेन त्वया कृतम् ११
अर्थधर्मावनादृत्य यः पापे कुरुते मनः
कर्मणां पार्थ पापानां स फलं विन्दते ध्रुवम्
पुनरेवं न कर्तब्यं मम चेदिच्छसि प्रियम् १२
एवमुक्त्वा स धर्मात्मा भ्राता भ्रातरमच्युतम्
अर्थतत्त्वविभागज्ञः कुन्तीपुत्रो युधिष्ठिरः
विरराम महातेजास्तमेवार्थं विचिन्तयन् १३
ततस्ते हतशिष्टा ये भीमसेनेन राक्षसाः
सहिताः प्रत्यपद्यन्त कुबेरसदनं प्रति १४
ते जवेन महावेगाः प्राप्य वैश्रवणालयम्
भीममार्तस्वरं चक्रुर्भीमसेनभयार्दिताः १५
न्यस्तशस्त्रायुधाः श्रान्ताः शोणिताक्तपरिच्छदाः
प्रकीर्णमूर्धजा राजन्यक्षाधिपतिमब्रुवन् १६
गदापरिघनिस्त्रिंशतोमरप्रासयोधिनः
राक्षसा निहताः सर्वे तव देव पुरःसराः १७
प्रमृद्य तरसा शैलं मानुषेण धनेश्वर
एकेन सहिताः संख्ये हताः क्रोधवशा गणाः १८
प्रवरा राक्षसेन्द्राणां यक्षाणां च धनाधिप
शेरते निहता देव गतसत्त्वाः परासवः १९
लब्धः शैलो वयं मुक्ता मणिमांस्ते सखा हतः
मानुषेण कृतं कर्म विधत्स्व यदनन्तरम् २०
स तच्छ्रुत्वा तु संक्रुद्धः सर्वयक्षगणाधिपः
कोपसंरक्तनयनः कथमित्यब्रवीद्वचः २१
द्वितीयमपराध्यन्तं भीमं श्रुत्वा धनेश्वरः
चुकोध यक्षाधिपतिर्युज्यतामिति चाब्रवीत् २२
अथाभ्रघनसंकाशं गिरिकूटमिवोच्छ्रितम्
हयैः संयोजयामासुर्गान्धर्वैरुत्तमं रथम् २३
तस्य सर्वगुणोपेता विमलाक्षा हयोत्तमाः
तेजोबलजवोपेता नानारत्नविभूषिताः २४

शोभमाना रथे युक्तास्तरिष्यन्त इवाशुगाः
हर्षयामासुरन्योन्यमिङ्गितैर्विजयावहैः २५
स तमास्थाय भगवान्राजराजो महारथम्
प्रययौ देवगन्धर्वैः स्तूयमानो महाद्युतिः २६
तं प्रयान्तं महात्मानं सर्वयक्षधनाधिपम्
रक्ताक्षा हेमसंकाशा महाकाया महाबलाः २७
सायुधा बद्धनिस्त्रिंशा यक्षा दशशतायुताः
जवेन महता वीराः परिवार्योपतस्थिरे २८
तं महान्तमुपायान्तं धनेश्वरमुपान्तिके
ददृशुर्हृष्टरोमाणः पाण्डवाः प्रियदर्शनम् २९
कुबेरस्तु महासत्त्वान्पाण्डोः पुत्रान्महारथान्
आत्तकार्मुकनिस्त्रिंशान्दृष्ट्वा प्रीतोऽभवत्तदा ३०
ते पक्षिण इवोत्पत्य गिरेः शृङ्गं महाजवाः
तस्थुस्तेषां समभ्याशे धनेश्वरपुरःसराः ३१
ततस्तं हृष्टमनसं पाण्डवान्प्रति भारत
समीक्ष्य यक्षगन्धर्वा निर्विकारा व्यवस्थिताः ३२
पाण्डवाश्च महात्मानः प्रणम्य धनदं प्रभुम्
नकुलः सहदेवश्च धर्मपुत्रश्च धर्मवित् ३३
अपराद्धमिवात्मानं मन्यमाना महारथाः
तस्थुः प्राञ्जलयः सर्वे परिवार्य धनेश्वरम् ३४
शय्यासनवरं श्रीमत्पुष्पकं विश्वकर्मणा
विहितं चित्रपर्यन्तमातिष्ठत धनाधिपः ३५
तमासीनं महाकायाः शङ्कुकर्णा महाजवाः
उपोपविविशुर्यक्षा राक्षसाश्च सहस्रशः ३६
शतशश्चापि गन्धर्वास्तथैवाप्सरसां गणाः
परिवार्योपतिष्ठन्त यथा देवाः शतक्रतुम् ३७
काञ्चनीं शिरसा बिभ्रद्भीमसेनः स्रजं शुभाम्
बाणखड्गधनुष्पाणिरुदैक्षत धनाधिपम् ३८
न भीर्भीमस्य न ग्लानिर्विक्षतस्यापि राक्षसैः
आसीत्तस्यामवस्थायां कुबेरमपि पश्यतः ३९

आददानं शितान्बाणान्योद्धुकाममवस्थितम्
दृष्ट्वा भीमं धर्मसुतमब्रवीन्नरवाहनः ४०
विदुस्त्वां सर्वभूतानि पार्थ भूतहिते रतम्
निर्भयश्चापि शैलाग्रे वस त्वं सह बन्धुभिः ४१
न च मन्युस्त्वया कार्यो भीमसेनस्य पाण्डव
कालेनैते हताः पूर्वं निमित्तमनुजस्तव ४२
व्रीडा चात्र न कर्तव्या साहसं यदिदं कृतम्
दृष्टश्चापि सुरैः पूर्वं विनाशो यक्षरक्षसाम् ४३
न भीमसेने कोपो मे प्रीतोऽस्मि भरतर्षभ
कर्मणानेन भीमस्य मम तुष्टिरभूत्पुरा ४४
एवमुक्त्वा तु राजानं भीमसेनमभाषत
नैतन्मनसि मे तात वर्तते कुरुसत्तम
यदिदं साहसं भीम कृष्णार्थे कृतवानसि ४५
मामनादृत्य देवांश्च विनाशं यक्षरक्षसाम्
स्वबाहुबलमाश्रित्य तेनाहं प्रीतिमांस्त्वयि
शापादस्मि विनिर्मुक्तो घोरादद्य वृकोदर ४६
अहं पूर्वमगस्त्येन क्रुद्धेन परमर्षिणा
शप्तोऽपराधे कस्मिंश्चित्तस्यैषा निष्कृतिः कृता ४७
दृष्टो हि मम संक्लेशः पुरा पाण्डवनन्दन
न तवात्रापराधोऽस्ति कथंचिदपि शत्रुहन् ४८
युधिष्ठिर उवाच
कथं शप्तोऽसि भगवन्नगस्त्येन महात्मना
श्रोतुमिच्छाम्यहं देव तवैतच्छापकारणम् ४९
इदं चाश्चर्यभूतं मे यत्क्रोधात्तस्य धीमतः
तदैव त्वं न निर्दग्धः सबलः सपदानुगः ५०
वैश्रवण उवाच
देवतानामभून्मन्त्रः कुशवत्यां नरेश्वर
वृतस्तत्राहमगमं महापद्मशतैस्त्रिभिः
यक्षाणां घोररूपाणां विविधायुधधारिणाम् ५१
अध्वन्यहमथापश्यमगस्त्यमृषिसत्तमम्

उग्रं तपस्तपस्यन्तं यमुनातीरमाश्रितम्
नानापक्षिगणाकीर्णं पुष्पितद्रुमशोभितम् ५२
तमूर्ध्वबाहुं दृष्ट्वा तु सूर्यस्याभिमुखं स्थितम्
तेजोराशिं दीप्यमानं हुताशनमिवैधितम् ५३
राक्षसाधिपतिः श्रीमान्मणिमान्नाम मे सखा
मौर्ख्यादज्ञानभावाच्च दर्पान्मोहाच्च भारत
न्यष्ठीवदाकाशगतो महर्षेस्तस्य मूर्धनि ५४
स कोपान्मामुवाचेदं दिशः सर्वा दहन्निव
मामवज्ञाय दुष्टात्मा यस्मादेष सखा तव ५५
धर्षणां कृतवानेतां पश्यतस्ते धनेश्वर
तस्मात्सहैभिः सैन्यैस्ते वधं प्राप्स्यति मानुषात् ५६
त्वं चाप्येभिर्हतैः सैन्यैः क्लेशं प्राप्येह दुर्मते
तमेव मानुषं दृष्ट्वा किल्बिषाद्विप्रमोक्ष्यसे ५७
सैन्यानां तु तवैतेषां पुत्रपौत्रबलान्वितम्
न शापं प्राप्स्यते घोरं गच्छ तेऽज्ञा करिष्यति ५८
एष शापो मया प्राप्तः प्राक्तस्मादृषिसत्तमात्
स भीमेन महाराज भ्रात्रा तव विमोक्षितः ५९
इति श्रीमहाभारते आरण्यकपर्वणि अष्टपञ्चाशदधिकशततमोऽध्यायः १५८

## एकोनषष्ट्यधिक शततमोऽध्यायः

वैश्रवण उवाच
युधिष्ठिर धृतिर्दाक्ष्यं देशकालौ पराक्रमः
लोकतन्त्रविधानानामेष पञ्चविधो विधिः १
धृतिमन्तश्च दक्षाश्च स्वे स्वे कर्मणि भारत
पराक्रमविधानज्ञा नराः कृतयुगेऽभवन् २
धृतिमान्देशकालज्ञः सर्वधर्मविधानवित्
क्षत्रियः क्षत्रियश्रेष्ठ पृथिवीमनुशास्ति वै ३
यं एवं वर्तते पार्थ पुरुषः सर्वकर्मसु
स लोके लभते वीर यशः प्रेत्य च सद्गतिम् ४
देशकालान्तरप्रेप्सुः कृत्वा शक्रः पराक्रमम्

संप्राप्तस्त्रिदिवे राज्यं वृत्रहा वसुभिः सह ५
पापात्मा पापबुद्धिर्यः पापमेवानुवर्तते
कर्मणामविभागज्ञः प्रेत्य चेह च नश्यति ६
अकालज्ञः सुदुर्मेधाः कार्याणामविशेषवित्
वृथाचारसमारम्भः प्रेत्य चेह च नश्यति ७
साहसे वर्तमानानां निकृतीनां दुरात्मनाम्
सर्वसामर्थ्यलिप्सूनां पापो भवति निश्चयः ८
अधर्मज्ञोऽवलिप्तश्च बालबुद्धिरमर्षणः
निर्भयो भीमसेनोऽय तं शाधि पुरुषर्षभ ९
आर्ष्टिषेणस्य राजर्षेः प्राप्य भूयस्त्वमाश्रमम्
तामिस्त्रं प्रथमं पक्षं वीतशोकभयो वस १०
अलकाः सह गन्धर्वैर्यक्षैश्च सह राक्षसैः
मन्नियुक्ता मनुष्येन्द्र सर्वे च गिरिवासिनः
रक्षन्तु त्वा महाबाहो सहितं द्विजसत्तमैः ११
साहसेषु च संतिष्ठन्निह शैले वृकोदरः
वार्यतां साध्वयं राजंस्त्वया धर्मभृतां वर १२
इतः परं च राजेन्द्र द्रक्ष्यन्ति वनगोचराः
उपस्थास्यन्ति च सदा रक्षिष्यन्ति च सर्वशः १३
तथैव चान्नपानानि स्वादूनि च बहूनि च
उपस्थास्यन्ति वो गृह्य मत्प्रेष्याः पुरुषर्षभ १४
यथा जिष्णुर्महेन्द्रस्य यथा वायोर्वृकोदरः
धर्मस्य त्वं यथा तात योगोत्पन्नो निजः सुतः १५
आत्मजावात्मसंपन्नौ यमौ चोभौ यथाश्विनोः
रक्ष्यास्तद्वन्ममापीह यूयं सर्वे युधिष्ठिर १६
अर्थतत्त्वविभागज्ञः सर्वधर्मविशेषवित्
भीमसेनादवरजः फल्गुनः कुशली दिवि १७
याः काश्चन मता लोकेष्वग्र्याः परमसंपदः
जन्मप्रभृति ताः सर्वाः स्थितास्तात धनंजये १८
दमो दानं बलं बुद्धिर्ह्रीर्धृतिस्तेज उत्तमम्
एतान्यपि महासत्त्वे स्थितान्यमिततेजसि १९

न मोहात्कुरुते जिष्णुः कर्म पाण्डव गर्हितम्
न पार्थस्य मृषोक्तानि कथयन्ति नरा नृषु २०
स देवपितृगन्धर्वैः कुरूणां कीर्तिवर्धनः
मानितः कुरुतेऽस्त्राणि शक्रसद्मनि भारत २१
योऽसौ सर्वान्महीपालान्धर्मेण वशमानयत्
स शंतनुर्महातेजाः पितुस्तव पितामहः
प्रीयते पार्थ पार्थेन दिवि गाण्डीवधन्वना २२
सम्यक्चासौ महावीर्यः कुलधुर्य इव स्थितः
पितॄन्देवांस्तथा विप्रान्पूजयित्वा महायशाः
सप्त मुख्यान्महामेधानाहरद्यमुनां प्रति २३
अधिराजः स राजंस्त्वां शंतनुः प्रपितामहः
स्वर्गजिच्छक्रलोकस्थः कुशलं परिपृच्छति २४
वैशम्पायन उवाच
ततः शक्तिं गदां खड्गं धनुश्च भरतर्षभ
प्राध्वं कृत्वा नमश्चक्रे कुबेराय वृकोदरः २५
ततोऽब्रवीद्धनाध्यक्षः शरण्यः शरणागतम्
मानहा भव शत्रूणां सुहृदां नन्दिवर्धनः २६
स्वेषु वेश्मसु रम्येषु वसतामित्रतापनाः
कामानुपहरिष्यन्ति यक्षा वो भरतर्षभाः २७
शीघ्रमेव गुडाकेशः कृतास्त्रः पुरुषर्षभः
साक्षान्मघवता सृष्टः संप्राप्स्यति धनंजयः २८
एवमुत्तमकर्माणमनुशिष्य युधिष्ठिरम्
अस्तं गिरिवरश्रेष्ठं प्रययौ गुह्यकाधिपः २९
तं परिस्तोमसंकीर्णैर्नानारत्नविभूषितैः
यानैरनुययुर्यक्षा राक्षसाश्च सहस्रशः ३०
पक्षिणामिव निर्घोषः कुबेरसदनं प्रति
बभूव परमाश्वानामैरावतपथे यताम् ३१
ते जग्मुस्तूर्णमाकाशं धनाधिपतिवाजिनः
प्रकर्षन्त इवाभ्राणि पिबन्त इव मारुतम् ३२
ततस्तानि शरीराणि गतसत्त्वानि रक्षसाम्

अपाकृष्यन्त शैलाग्राद्धनाधिपतिशासनात् ३३
तेषां हि शापकालोऽसौ कृतोऽगस्त्येन धीमता
समरे निहतास्तस्मात्सर्वे मणिमता सह ३४
पाण्डवास्तु महात्मानस्तेषु वेश्मसु तां क्षपाम्
सुखमूषुर्गतोद्वेगाः पूजिताः सर्वराक्षसैः ३५
इति श्रीमहाभारते आरण्यकपर्वणि एकोनषष्ट्यधिकशततमोऽध्यायः १५९

षष्ट्यधिकशततमोऽध्यायः

वैशम्पायन उवाच
ततः सूर्योदये धौम्यः कृत्वाह्निकमरिन्दम
आर्ष्टिषेणेन सहितः पाण्डवानभ्यवर्तत १
तेऽभिवाद्यार्ष्टिषेणस्य पादौ धौम्यस्य चैव ह
ततः प्राञ्जलयः सर्वे ब्राह्मणांस्तानपूजयन् २
ततो युधिष्ठिरं धौम्यो गृहीत्वा दक्षिणे करे
प्राचीं दिशमभिप्रेक्ष्य महर्षिरिदमब्रवीत् ३
असौ सागरपर्यन्तां भूमिमावृत्य तिष्ठति
शैलराजो महाराज मन्दरोऽभिविराजते ४
इन्द्रवैश्रवणावेतां दिशं पाण्डव रक्षतः
पर्वतैश्च वनान्तैश्च काननैश्चोपशोभिताम् ५
एतदाहुर्महेन्द्रस्य राज्ञो वैश्रवणस्य च
ऋषयः सर्वधर्मज्ञाः सद्म तात मनीषिणः ६
अतश्चोद्यन्तमादित्यमुपतिष्ठन्ति वै प्रजाः
ऋषयश्चापि धर्मज्ञाः सिद्धाः साध्याश्च देवताः ७
यमस्तु राजा धर्मात्मा सर्वप्राणभृतां प्रभुः
प्रेतसत्त्वगतीमेतां दक्षिणामाश्रितो दिशम् ८
एतत्संयमनं पुण्यमतीवाद्भुतदर्शनम्
प्रेतराजस्य भवनमृद्ध्या परमया युतम् ९
यं प्राप्य सविता राजन्सत्येन प्रतितिष्ठति
अस्तं पर्वतराजानमेतमाहुर्मनीषिणः १०
एतं पर्वतराजानं समुद्रं च महोदधिम्

आवसन्वरुणो राजा भूतानि परिरक्षति ११
उदीचीं दीपयन्नेष दिशं तिष्ठति कीर्तिमान्
महामेरुर्महाभाग शिवो ब्रह्मविदां गतिः १२
यस्मिन्ब्रह्मसदश्चैव तिष्ठते च प्रजापतिः
भूतात्मा विसृजन्सर्वं यत्किञ्चिज्जङ्गमागमम् १३
यानाहुर्ब्रह्मणः पुत्रान्मानसान्दक्षसप्तमान्
तेषामपि महामेरुः स्थानं शिवमनामयम् १४
अत्रैव प्रतितिष्ठन्ति पुनरत्रोदयन्ति च
सप्त देवर्षयस्तात वसिष्ठप्रमुखाः सदा १५
देशं विरजसं पश्य मेरोः शिखरमुत्तमम्
यत्रात्मतृप्तैरध्यास्ते देवैः सह पितामहः १६
यमाहुः सर्वभूतानां प्रकृतेः प्रकृतिं ध्रुवम्
अनादिनिधनं देवं प्रभुं नारायणं परम् १७
ब्रह्मणः सदनात्तस्य परं स्थानं प्रकाशते
देवाश्च यन्नात्पश्यन्ति दिव्यं तेजोमयं शिवम् १८
अत्यर्कानलदीप्तं तत्स्थानं विष्णोर्महात्मनः
स्वयैव प्रभया राजन्दुष्प्रेक्ष्यं देवदानवैः १९
तद्वै ज्योतींषि सर्वाणि प्राप्य भासन्ति नोऽपि च
स्वयं विभुरदीनात्मा तत्र ह्यभिविराजते २०
यतयस्तत्र गच्छन्ति भक्त्या नारायणं हरिम्
परेण तपसा युक्ता भाविताः कर्मभिः शुभैः २१
योगसिद्धा महात्मानस्तमोमोहविवर्जिताः
तत्र गत्वा पुनर्नेमं लोकमायान्ति भारत २२
स्थानमेतन्महाभाग ध्रुवमक्षयमव्ययम्
ईश्वरस्य सदा ह्येतत्प्रणमात्र युधिष्ठिर २३
एतं ज्योतींषि सर्वाणि प्रकर्षन्भगवानपि
कुरुते वितमस्कर्मा आदित्योऽभिप्रदक्षिणम् २४
अस्तं प्राप्य ततः सन्ध्यामतिक्रम्य दिवाकरः
उदीचीं भजते काष्ठां दिशमेष विभावसुः २५
स मेरुमनुवृत्तः सन्पुनर्गच्छति पाण्डव

प्राङ्मुखः सविता देवः सर्वभूतहिते रतः २६
स मासं विभजन्कालं बहुधा पर्वसन्धिषु
तथैव भगवान्सोमो नक्षत्रैः सह गच्छति २७
एवमेष परिक्रम्य महामेरुमतन्द्रितः
भावयन्सर्वभूतानि पुनर्गच्छति मन्दरम् २८
तथा तमिस्रहा देवो मयूखैर्भावयञ्जगत्
मार्गमेतदसंबाधमादित्यः परिवर्तते २९
सिसृक्षुः शिशिराण्येष दक्षिणां भजते दिशम्
ततः सर्वाणि भूतानि कालः शिशिरमृच्छति ३०
स्थावराणां च भूतानां जङ्गमानां च तेजसा
तेजांसि समुपादत्ते निवृत्तः सन्विभावसुः ३१
ततः स्वेदः क्लमस्तन्द्री ग्लानिश्च भजते नरान्
प्राणिभिः सततं स्वप्नो ह्यभीक्ष्णं च निषेव्यते ३२
एवमेतदनिर्देश्यं मार्गमावृत्य भानुमान्
पुनः सृजति वर्षाणि भगवान्भावयन्प्रजाः ३३
वृष्टिमारुतसन्तापैः सुखैः स्थावरजङ्गमान्
वर्धयन्सुमहातेजाः पुनः प्रतिनिवर्तते ३४
एवमेष चरन्पार्थ कालचक्रमतन्द्रितः
प्रकर्षन्सर्वभूतानि सविता परिवर्तते ३५
सन्तता गतिरेतस्य नैष तिष्ठति पाण्डव
आदायैव तु भूतानां तेजो विसृजते पुनः ३६
विभजन्सर्वभूतानामायुः कर्म च भारत
अहोरात्रान्कलाः काष्ठाः सृजत्येष सदा विभुः ३७
इति श्रीमहाभारते आरण्यकपर्वणि षष्ट्यधिकशततमोऽध्यायः १६०

## एकषष्ट्यधिकशततमोऽध्यायः

वैशम्पायन उवाच
तस्मिन्नगेन्द्रे वसतां तु तेषां महात्मनां सद्व्रतमास्थितानाम्
रतिः प्रमोदश्च बभूव तेषामाकाङ्क्षतां दर्शनमर्जुनस्य १
तान्वीर्ययुक्तान्सुविशुद्धसत्त्वांस्तेजस्विनः सत्यधृतिप्रधानान्

संप्रीयमाणा बहवोऽभिजग्मुर्गन्धर्वसंघाश्च महर्षयश्च २
तं पादपैः पुष्पधरैरुपेतं नगोत्तमं प्राप्य महारथानाम्
मनःप्रसादः परमो बभूव यथा दिवं प्राप्य मरुद्गणानाम् ३
मयूरहंसस्वननादितानि पुष्पोपकीर्णानि महाचलस्य
शृङ्गाणि सानूनि च पश्यमाना गिरेः परं हर्षमवाप्य तस्थुः ४
साक्षात्कुबेरेण कृताश्च तस्मिन्नगोत्तमे संवृतकूलरोधसः
कादम्बकारण्डवहंसजुष्टाः पद्माकुलाः पुष्करिणीरपश्यन् ५
क्रीडाप्रदेशांश्च समृद्धरूपान्सुचित्रमाल्यावृतजातशोभान्
मणिप्रवेकान्सुमनोहरांश्च यथा भवेयुर्धनदस्य राज्ञः ६
अनेकवर्णैश्च सुगन्धिभिश्च महाद्रुमैः सन्ततमभ्रमालिभिः
तपःप्रधानाः सततं चरन्तः शृङ्गं गिरेश्चिन्तयितुं न शेकुः ७
स्वतेजसा तस्य नगोत्तमस्य महौषधीनां च तथा प्रभावात्
विभक्तभावो न बभूव कश्चिदहर्निशानां पुरुषप्रवीर ८
यमास्थितः स्थावरजङ्गमानि विभावसुर्भावयतेऽमितौजाः
तस्योदयं चास्तमयं च वीरास्तत्र स्थितास्ते ददृशुर्नृसिंहाः ९
रवेस्तमिस्रागमनिर्गमांस्ते तथोदयं चास्तमयं च वीराः
समावृताः प्रेक्ष्य तमोनुदस्य गभस्तिजालैः प्रदिशो दिशश्च १०
स्वाध्यायवन्तः सततक्रियाश्च धर्मप्रधानाश्च शुचिव्रताश्च
सत्ये स्थितास्तस्य महारथस्य सत्यव्रतस्यागमनप्रतीक्षाः ११
इहैव हर्षोऽस्तु समागतानां क्षिप्रं कृतास्त्रेण धनञ्जयेन
इति ब्रुवन्तः परमाशिषस्ते पार्थास्तपोयोगपरा बभूवुः १२
दृष्ट्वा विचित्राणि गिरौ वनानि किरीटिनं चिन्तयतामभीक्ष्णम्
बभूव रात्रिर्दिवसश्च तेषां संवत्सरेणैव समानरूपः १३
यदैव धौम्यानुमते महात्मा कृत्वा जटां प्रव्रजितः स जिष्णुः
तदैव तेषां न बभूव हर्षः कुतो रतिस्तद्गतमानसानाम् १४
भ्रातुर्नियोगात्तु युधिष्ठिरस्य वनादसौ वारणमत्तगामी
यत्काम्यकात्प्रव्रजितः स जिष्णुस्तदैव ते शोकहता बभूवुः १५
तथा तु तं चिन्तयतां सिताश्वमस्त्रार्थिनं वासवमभ्युपेतम्
मासोऽथ कृच्छ्रेण तदा व्यतीतस्तस्मिन्नगे भारत भारतानाम् १६
ततः कदाचिद्धरिसंप्रयुक्तं महेन्द्रवाहं सहसोपयातम्

विद्युत्प्रभं प्रेक्ष्य महारथानां हर्षोऽर्जुनं चिन्तयतां बभूव १७
स दीप्यमानः सहसान्तरिक्षं प्रकाशयन्मातलिसंगृहीतः
बभौ महोल्केव घनान्तरस्था शिखेव चाग्नेर्ज्वलिता विधूमा १८
तमास्थितः सन्ददृशे किरीटी स्रग्वी वराण्याभरणानि बिभ्रत्
धनञ्जयो वज्रधरप्रभावः श्रिया ज्वलन्पर्वतमाजगाम १९
स शैलमासाद्य किरीटमाली महेन्द्रवाहादवरुह्य तस्मात्
धौम्यस्य पादावभिवाद्य पूर्वमजातशत्रोस्तदनन्तरं च २०
वृकोदरस्यापि ववन्द पादौ माद्रीसुताभ्यामभिवादितश्च
समेत्य कृष्णां परिसान्त्व्य चैनां प्रह्वोऽभवद्भ्रातुरुपह्वरे सः २१
बभूव तेषां परमः प्रहर्षस्तेनाप्रमेयेण समागतानाम्
स चापि तान्प्रेक्ष्य किरीटमाली ननन्द राजानमभिप्रशंसन् २२
यमास्थितः सप्त जघान पूगान्दितेः सुतानां नमुचेर्निहन्ता
तमिन्द्रवाहं समुपेत्य पार्थाः प्रदक्षिणं चक्रुरदीनसत्त्वाः २३
ते मातलेश्चक्रुरतीव हृष्टाः सत्कारमग्र्यं सुरराजतुल्यम्
सर्वं यथावच्च दिवौकसस्तान्पप्रच्छुरेनं कुरुराजपुत्राः २४
तानप्यसौ मातलिरभ्यनन्दत्पितेव पुत्राननुशिष्य चैनान्
ययौ रथेनाप्रतिमप्रभेण पुनः सकाशं त्रिदिवेश्वरस्य २५
गते तु तस्मिन्वरदेववाहे शक्रात्मजः सर्वरिपुप्रमाथी
शक्रेण दत्तानि ददौ महात्मा महाधनान्युत्तमरूपवन्ति
दिवाकराभाणि विभूषणानि प्रीतः प्रियायै सुतसोममात्रे २६
ततः स तेषां कुरुपुङ्गवानां तेषां च सूर्याग्निसमप्रभाणाम्
विप्रर्षभाणामुपविश्य मध्ये सर्वं यथावत्कथयांबभूव २७
एवं मयास्त्राण्युपशिक्षितानि शक्राच्च वाताच्च शिवाच्च साक्षात्
तथैव शीलेन समाधिना च प्रीताः सुरा मे सहिताः सहेन्द्राः २८
संक्षेपतो वै स विशुद्धकर्मा तेभ्यः समाख्याय दिवि प्रवेशम्
माद्रीसुताभ्यां सहितः किरीटी सुष्वाप तामावसतिं प्रतीतः २९

इति श्रीमहाभारते आरण्यकपर्वणि एकषष्ट्यधिकशततमोऽध्यायः १६१

## द्विषष्ट्यधिक शततमोऽध्यायः

वैशम्पायन उवाच

एतस्मिन्नेव काले तु सर्ववादित्रनिस्वनः
बभूव तुमुलः शब्दस्त्वन्तरिक्षे दिवौकसाम् १
रथनेमिस्वनश्चैव घराटाशब्दश्च भारत
पृथग्व्यालमृगाणां च पक्षिणां चैव सर्वशः २
तं समन्तादनुययुर्गन्धर्वाप्सरसस्तथा
विमानैः सूर्यसङ्काशैर्देवराजमरिन्दमम् ३
ततः स हरिभिर्युक्तं जाम्बूनदपरिष्कृतम्
मेघनादिनमारुह्य श्रिया परमया ज्वलन् ४
पार्थानभ्याजगामाशु देवराजः पुरन्दरः
आगत्य च सहस्राक्षो रथादवरुरोह वै ५
तं दृष्ट्वैव महात्मानं धर्मराजो युधिष्ठिरः
भ्रातृभिः सहितः श्रीमान्देवराजमुपागमत् ६
पूजयामास चैवाथ विधिवद्भूरिदक्षिणः
यथार्हममितात्मानं विधिदृष्टेन कर्मणा ७
धनञ्जयश्च तेजस्वी प्रणिपत्य पुरन्दरम्
भृत्यवत्प्रणतस्तस्थौ देवराजसमीपतः ८
आप्यायत महातेजाः कुन्तीपुत्रो युधिष्ठिरः
धनञ्जयमभिप्रेक्ष्य विनीतं स्थितमन्तिके ९
जटिलं देवराजस्य तपोयुक्तमकल्मषम्
हर्षेण महताविष्टः फल्गुनस्याथ दर्शनात् १०
तं तथादीनमनसं राजानं हर्षसंप्लुतम्
उवाच वचनं धीमान्देवराजः पुरन्दरः ११
त्वमिमां पृथिवीं राजन्प्रशासिष्यसि पाराडव
स्वस्ति प्राप्नुहि कौन्तेय काम्यकं पुनराश्रमम् १२
अस्त्राणि लब्धानि च पाराडवेन सर्वाणि मत्तः प्रयतेन राजन्
कृतप्रियश्चास्मि धनंजयेन जेतुं न शक्यस्त्रिभिरेष लोकैः १३
एवमुक्त्वा सहस्राक्षः कुन्तीपुत्रं युधिष्ठिरम्
जगाम त्रिदिवं हृष्टः स्तूयमानो महर्षिभिः १४
धनेश्वरगृहस्थानां पाराडवानां समागमम्
शक्रेण य इदं विद्वानधीयीत समाहितः १५

संवत्सरं ब्रह्मचारी नियतः संशितव्रतः
स जीवेत निराबाधः सुसुखी शरदां शतम् १६
इति श्रीमहाभारते आरण्यकपर्वणि द्विषष्ट्यधिकशततमोऽध्यायः १६२

त्रिषष्ट्यधिकशततमोऽध्यायः

वैशम्पायन उवाच
यथागतं गते शक्रे भ्रातृभिः सह सङ्गतः
कृष्णया चैव बीभत्सुर्धर्मपुत्रमपूजयत् १
अभिवादयमानं तु मूर्ध्न्युपाघ्राय पाण्डवम्
हर्षगद्गदया वाचा प्रहृष्टोऽजुनमब्रवीत् २
कथमर्जुन कालोऽय स्वर्गे व्यतिगतस्तव
कथं चास्त्राण्यवाप्तानि देवराजश्च तोषितः ३
सम्यग्वा ते गृहीतानि कच्चिदस्त्राणि भारत
कच्चित्सुराधिपः प्रीतो रुद्रश्चास्त्राण्यदात्तव ४
यथा दृष्टश्च ते शक्रो भगवान्वा पिनाकधृक्
यथा चास्त्राण्यवाप्तानि यथा चाराधितश्च ते ५
यथोक्तवांस्त्वां भगवाञ्शतक्रतुररिन्दम
कृतप्रियस्त्वयास्मीति तच्च ते किं प्रियं कृतम्
एतदिच्छाम्यहं श्रोतुं विस्तरेण महाद्युते ६
यथा तुष्टो महादेवो देवराजश्च तेऽनघ
यच्चापि वज्रपाणेस्ते प्रियं कृतमरिन्दम
एतदाख्याहि मे सर्वमखिलेन धनञ्जय ७
अर्जुन उवाच
शृणु हन्त महाराज विधिना येन दृष्टवान्
शतक्रतुमहं देवं भगवन्तं च शङ्करम् ८
विद्यामधीत्य तां राजंस्त्वयोक्तामरिमर्दन
भवता च समादिष्टस्तपसे प्रस्थितो वनम् ९
भृगुतुङ्गमथो गत्वा काम्यकादास्थितस्तपः
एकरात्रोषितः कञ्चिदपश्यं ब्राह्मणं पथि १०
स मामपृच्छत्कौन्तेय क्वासि गन्ता ब्रवीहि मे

तस्मा अवितथं सर्वमब्रुवं कुरुनन्दन ११
स तथ्यं मम तच्छ्रुत्वा ब्राह्मणो राजसत्तम
अपूजयत मां राजन्प्रीतिमांश्चाभवन्मयि १२
ततो मामब्रवीत्प्रीतस्तप आतिष्ठ भारत
तपस्वी नचिरेण त्वं द्रक्ष्यसे विबुधाधिपम् १३
ततोऽह वचनात्तस्य गिरिमारुह्य शैशिरम्
तपोऽतप्यं महाराज मासं मूलफलाशनः १४
द्वितीयश्चापि मे मासो जलं भक्षयतो गतः
निराहारस्तृतीयेऽथ मासे पाण्डवनन्दन १५
ऊर्ध्वबाहुश्चतुर्थं तु मासमस्मि स्थितस्तदा
न च मे हीयते प्राणस्तदद्भुतमिवाभवत् १६
चतुर्थे समभिक्रान्ते प्रथमे दिवसे गते
वराहसंस्थितं भूतं मत्समीपमुपागमत् १७
निघ्नन्प्रोथेन पृथिवीं विलिखंश्चरणैरपि
संमार्जञ्जठरेणोर्वीं विवर्तंश्च मुहुर्मुहुः १८
अनु तस्यापरं भूतं महत्कैरातसंस्थितम्
धनुर्बाणासिमत्प्राप्तं स्त्रीगणानुगतं तदा १९
ततोऽह धनुरादाय तथाक्षय्यौ महेषुधी
अताडयं शरेणाथ तद्भूतं लोमहर्षणम् २०
युगपत्तत्किरातश्च विकृष्य बलवद्धनुः
अभ्याजघ्ने दृढतरं कम्पयन्निव मे मनः २१
स तु मामब्रवीद्राजन्मम पूर्वपरिग्रहः
मृगयाधर्ममुत्सृज्य किमर्थं ताडितस्त्वया २२
एष ते निशितैर्बाणैर्दर्पं हन्मि स्थिरो भव
स वर्ष्मवान्महाकायस्ततो मामभ्यधावत २३
ततो गिरिमिवात्यर्थमावृणोन्मां महाशरैः
तं चाहं शरवर्षेण महता समवाकिरम् २४
ततः शरैर्दीप्तमुखैः पत्रितैरनुमन्त्रितैः
प्रत्यविध्यमहं तं तु वज्रैरिव शिलोच्चयम् २५
तस्य तच्छतधा रूपमभवच्च सहस्रधा

तानि चास्य शरीराणि शरैरहमताडयम् २६
पुनस्तानि शरीराणि एकीभूतानि भारत
अदृश्यन्त महाराज तान्यहं व्यधमं पुनः २७
अणुर्बृहच्छिरा भूत्वा बृहच्चाणुशिराः पुनः
एकीभूतस्तदा राजन्सोऽभ्यवर्तत मां युधि २८
यदाभिभवितुं बाणैर्नैव शक्नोमि तं रणे
ततोऽहमस्त्रमातिष्ठं वायव्यं भरतर्षभ २९
न चैनमशकं हन्तुं तदद्भुतमिवाभवत्
तस्मिन्प्रतिहते चास्त्रे विस्मयो मे महानभूत् ३०
भूयश्चैव महाराज सविशेषमहं ततः
अस्त्रपूगेन महता रणे भूतमवाकिरम् ३१
स्थूणाकर्णमयोजालं शरवर्षं शरोल्बणम्
शैलास्त्रमश्मवर्षं च समास्थायाहमभ्ययाम्
जग्रास प्रहसंस्तानि सर्वाण्यस्त्राणि मेऽनघ ३२
तेषु सर्वेषु शान्तेषु ब्रह्मास्त्रमहमादिशम्
ततः प्रज्वलितैर्बाणैः सर्वतः सोपचीयत
उपचीयमानश्च मया महास्त्रेण व्यवर्धत ३३
ततः संतापितो लोका मत्प्रसूतेन तेजसा
क्षणेन हि दिशः खं च सर्वतोऽभिविदीपितम् ३४
तदप्यस्त्रं महातेजाः क्षणेनैव व्यशातयत्
ब्रह्मास्त्रे तु हते राजन्भयं मां महदाविशत् ३५
ततोऽह धनुरादाय तथाक्षय्यौ महेषुधी
सहसाभ्यहनं भूतं तान्यप्यस्त्राण्यभक्षयत् ३६
हतेष्वस्त्रेषु सर्वेषु भक्षितेष्वायुधेषु च
मम तस्य च भूतस्य बाहुयुद्धमवर्तत ३७
व्यायामं मुष्टिभिः कृत्वा तलैरपि समाहतौ
अपातयच्च तद्भूतं निश्चेष्टौ ह्यगमं महीम् ३८
ततः प्रहस्य तद्भूतं तत्रैवान्तरधीयत
सह स्त्रीभिर्महाराज पश्यतो मेऽदभुतोपमम् ३९
एवं कृत्वा स भगवांस्ततोऽन्यद्रूपमात्मनः

दिव्यमेव महाराज वसानोऽदभुतमम्बरम् ४०
हित्वा किरातरूपं च भगवांस्त्रिदशेश्वरः
स्वरूपं दिव्यमास्थाय तस्थौ तत्र महेश्वरः ४१
अदृश्यत ततः साक्षाद्भगवान्गोवृषध्वजः
उमासहायो हरिदृग्बहुरूपः पिनाकधृक् ४२
स मामभ्येत्य समरे तथैवाभिमुखं स्थितम्
शूलपाणिरथोवाच तुष्टोऽस्मीति परन्तप ४३
ततस्तद्धनुरादाय तूणौ चाक्षय्यसायकौ
प्रादान्ममैव भगवान्वरयस्वेति चाब्रवीत् ४४
तुष्टोऽस्मि तव कौन्तेय ब्रूहि किं करवाणि ते
यत्ते मनोगतं वीर तद्ब्रूहि वितराम्यहम्
अमरत्वमपाहाय ब्रूहि यत्ते मनोगतम् ४५
ततः प्राञ्जलिरेवाहमस्त्रेषु गतमानसः
प्रणम्य शिरसा शर्वं ततो वचनमाददे ४६
भगवान्मे प्रसन्नश्चेदीप्सितोऽय वरो मम
अस्त्राणीच्छाम्यहं ज्ञातुं यानि देवेषु कानिचित्
ददानीत्येव भगवानब्रवीत्त्र्यम्बकश्च माम् ४७
रौद्रमस्त्रं मदीयं त्वामुपस्थास्यति पाण्डव
प्रददौ च मम प्रीतः सोऽस्त्र पाशुपतं प्रभुः ४८
उवाच च महादेवो दत्त्वा मेऽस्त्र सनातनम्
न प्रयोज्यं भवेदेतन्मानुषेषु कथञ्चन ४९
पीड्यमानेन बलवत्प्रयोज्यं ते धनञ्जय
अस्त्राणां प्रतिघाते च सर्वथैव प्रयोजयेः ५०
तदप्रतिहतं दिव्यं सर्वास्त्रप्रतिषेधनम्
मूर्तिमन्मे स्थितं पार्श्वे प्रसन्ने गोवृषध्वजे ५१
उत्सादनममित्राणां परसेनानिकर्तनम्
दुरासदं दुष्प्रसहं सुरदानवराक्षसैः ५२
अनुज्ञातस्त्वहं तेन तत्रैव समुपाविशम्
प्रेक्षतश्चैव मे देवस्तत्रैवान्तरधीयत ५३

इति श्रीमहाभारते आरण्यकपर्वणि त्रिषष्ट्यधिकशततमोऽध्यायः १६३

# चतुःषष्ठ्यधिकशततमोऽध्यायः

अर्जुन उवाच
ततस्तामवसं प्रीतो रजनीं तत्र भारत
प्रसादाद्देवदेवस्य त्र्यम्बकस्य महात्मनः १
व्युषितो रजनीं चाहं कृत्वा पूर्वाह्णिकक्रियाम्
अपश्यं तं द्विजश्रेष्ठं दृष्टवानस्मि यं पुरा २
तस्मै चाहं यथावृत्तं सर्वमेव न्यवेदयम्
भगवन्तं महादेवं समेतोऽस्मीति भारत ३
स मामुवाच राजेन्द्र प्रीयमाणो द्विजोत्तमः
दृष्टस्त्वया महादेवो यथा नान्येन केनचित् ४
समेत्य लोकपालैस्तु सर्वैर्वैवस्वतादिभिः
द्रष्टास्यनघ देवेन्द्रं स च तेऽस्त्राणि दास्यति ५
एवमुक्त्वा स मां राजन्नाश्लिष्य च पुनः पुनः
अगच्छत्स यथाकामं ब्राह्मणः सूर्यसन्निभः ६
अथापराह्णे तस्याह्नः प्रावात्पुण्यः समीरणः
पुनर्नवमिमं लोकं कुर्वन्निव सपत्नहन् ७
दिव्यानि चैव माल्यानि सुगन्धीनि नवानि च
शैशिरस्य गिरेः पादे प्रादुरासन्समीपतः ८
वादित्राणि च दिव्यानि सुघोषाणि समन्ततः
स्तुतयश्चेन्द्रसंयुक्ता अश्रूयन्त मनोहराः ९
गणाश्चाप्सरसां तत्र गन्धर्वाणां तथैव च
पुरस्ताद्देवदेवस्य जगुर्गीतानि सर्वशः १०
मरुतां च गणास्तत्र देवयानैरुपागमन्
महेन्द्रानुचरा ये च देवसद्मनिवासिनः ११
ततो मरुत्वान्हरिभिर्युक्तैर्वाहैः स्वलङ्कृतैः
शचीसहायस्तत्रायात्सह सर्वैस्तदामरैः १२
एतस्मिन्नेव काले तु कुबेरो नरवाहनः
दर्शयामास मां राजल्लँक्ष्म्या परमया युतः १३
दक्षिणस्यां दिशि यमं प्रत्यपश्यं व्यवस्थितम्
वरुणं देवराजं च यथास्थानमवस्थितम् १४

ते मामूचुर्महाराज सान्त्वयित्वा सुरर्षभाः
सब्यसाचिन्समीक्षस्व लोकपालानवस्थितान् १५
सुरकार्यार्थसिद्ध्यर्थं दृष्टवानसि शंकरम्
अस्मत्तोऽपि गृहाण त्वमस्त्राणीति समन्ततः १६
ततोऽह प्रयतो भूत्वा प्रणिपत्य सुरर्षभान्
प्रत्यगृह्णं तदास्त्राणि महान्ति विधिवत्प्रभो १७
गृहीतास्त्रस्ततो देवैरनुज्ञातोऽस्मि भारत
अथ देवा ययुः सर्वे यथागतमरिंदम १८
मघवानपि देवेशो रथमारुह्य सुप्रभम्
उवाच भगवान्वाक्यं स्मयन्निव सुरारिहा १९
पुरैवागमनादस्माद्वेदाहं त्वां धनञ्जय
अतः परं त्वहं वै त्वां दर्शये भरतर्षभ २०
त्वया हि तीर्थेषु पुरा समाप्लावः कृतोऽसकृत्
तपश्चेदं पुरा तप्तं स्वर्गं गन्तासि पाराडव २१
भूयश्चैव च तप्तव्यं तपः परमदारुणम्
उवाच भगवान्सर्वं तपसश्चोपपादनम् २२
मातलिर्मन्नियोगात्त्वां त्रिदिवं प्रापयिष्यति
विदितस्त्वं हि देवानामृषीणां च महात्मनाम् २३
ततोऽहमब्रुवं शक्रं प्रसीद भगवन्मम
आचार्यं वरये त्वाहमस्त्रार्थं त्रिदशेश्वर २४
इन्द्र उवाच
क्रूरं कर्मास्त्रवित्तात करिष्यसि परन्तप
यदर्थमस्त्राणीप्सुस्त्वं तं कामं पाराडवाप्नुहि २५
अर्जुन उवाच
ततोऽहमब्रुवं नाहं दिव्यान्यस्त्राणि शत्रुहन्
मानुषेषु प्रयोक्ष्यामि विनास्त्रप्रतिघातनम् २६
तानि दिव्यानि मेऽस्त्राणि प्रयच्छ विबुधाधिप
लोकांश्चास्त्रजितान्पश्चाल्लभेयं सुरपुङ्गव २७
इन्द्र उवाच
परीक्षार्थं मयैतत्ते वाक्यमुक्तं धनञ्जय

ममात्मजस्य वचनं सूपपन्नमिदं तव २८
शिक्ष मे भवनं गत्वा सर्वाण्यस्त्राणि भारत
वायोरग्नेर्वसुभ्योऽथ वरुणात्समरुद्गणात् २९
साध्यं पैतामहं चैव गन्धर्वोरगरक्षसाम्
वैष्णवानि च सर्वाणि नैर्ऋतानि तथैव च
मद्गतानि च यानीहि सर्वास्त्राणि कुरूद्वह ३०
अर्जुन उवाच
एवमुक्त्वा तु मां शक्रस्तत्रैवान्तरधीयत
अथापश्यं हरियुजं रथमैन्द्रमुपस्थितम्
दिव्यं मायामयं पुण्यं यत्तं मातलिना नृप ३१
लोकपालेषु यातेषु मामुवाचाथ मातलि
द्रष्टुमिच्छति शक्रस्त्वां देवराजो महाद्युते ३२
संसिद्धस्त्वं महाबाहो कुरु कार्यमनुत्तमम्
पश्य पुण्यकृतां लोकान्सशरीरो दिवं व्रज ३३
इत्युक्तोऽह मातलिना गिरिमामन्त्र्य शैशिरम्
प्रदक्षिणमुपावृत्य समारोहं रथोत्तमम् ३४
चोदयामास स हयान्मनोमारुतरंहसः
मातलिर्हयशास्त्रज्ञो यथावद्भूरिदक्षिणः ३५
अवैक्षत च मे वक्त्रं स्थितस्याथ स सारथिः
तथा भ्रान्ते रथे राजन्विस्मितश्चेदमब्रवीत् ३६
अत्यद्भुतमिदं मेऽद्य विचित्रं प्रतिभाति माम्
यदास्थितो रथं दिव्यं पदा न चलितो भवान् ३७
देवराजोऽपि हि मया नित्यमत्रोपलक्षितः
विचलन्प्रथमोत्पाते हयानां भरतर्षभ ३८
त्वं पुनः स्थित एवात्र रथे भ्रान्ते कुरूद्वह
अतिशक्रमिदं सत्त्वं तवेति प्रतिभाति मे ३९
इत्युक्त्वाकाशमाविश्य मातलिर्विबुधालयान्
दर्शयामास मे राजन्विमानानि च भारत ४०
नन्दनादीनि देवानां वनानि बहुलान्युत
दर्शयामास मे प्रीत्या मातलि शक्रसारथिः ४१

ततः शक्रस्य भवनमपश्यममरावतीम्
दिव्यैः कामफलैर्वृक्षै रत्नैश्च समलङ्कृताम् ४२
न तां भासयते सूर्यो न शीतोष्णे न च क्लमः
रजः पङ्को न च तमस्तत्रास्ति न जरा नृप ४३
न तत्र शोको दैन्यं वा वैवर्ण्यं चोपलक्ष्यते
दिवौकसां महाराज न च ग्लानिररिन्दम ४४
न क्रोधलोभौ तत्रास्तामशुभं च विशां पते
नित्यतुष्टाश्च हृष्टाश्च प्राणिनः सुरवेश्मनि ४५
नित्यपुष्पफलास्तत्र पादपा हरितच्छदाः
पुष्करिण्यश्च विविधाः पद्मसौगन्धिकायुताः ४६
शीतस्तत्र ववौ वायुः सुगन्धो जीवनः शुचिः
सर्वरत्नविचित्रा च भूमिः पुष्पविभूषिता ४७
मृगद्विजाश्च बहवो रुचिरा मधुरस्वराः
विमानयायिनश्चात्र दृश्यन्ते बहवोऽमराः ४८
ततोऽपश्यं वसून्रुद्रान्साध्यांश्च समरुद्गणान्
आदित्यानश्विनौ चैव तान्सर्वान्प्रत्यपूजयम् ४९
ते मां वीर्येण यशसा तेजसा च बलेन च
अस्त्रैश्चाप्यन्वजानन्त सङ्ग्रामविजयेन च ५०
प्रविश्य तां पुरीं रम्यां देवगन्धर्वसेविताम्
देवराजं सहस्राक्षमुपातिष्ठं कृताञ्जलि ५१
ददावर्धासनं प्रीतः शक्रो मे ददतां वरः
बहुमानाच्च गात्राणि पस्पर्श मम वासवः ५२
तत्राहं देवगन्धर्वैः सहितो भूरिदक्षिण
अस्त्रार्थमवसं स्वर्गे कुर्वाणोऽस्त्राणि भारत ५३
विश्वावसोश्च मे पुत्रश्चित्रसेनोऽभवत्सखा
स च गान्धर्वमखिलं ग्राहयामास मां नृप ५४
ततोऽहमवसं राजन्गृहीतास्त्रः सुपूजितः
सुखं शक्रस्य भवने सर्वकामसमन्वितः ५५
शृण्वन्वै गीतशब्दं च तूर्यशब्दं च पुष्कलम्
पश्यंश्चाप्सरसः श्रेष्ठा नृत्यमानाः परंतप ५६

तत्सर्वमनवज्ञाय तथ्यं विज्ञाय भारत
अत्यर्थं प्रतिगृह्याहमस्त्रेष्वेव व्यवस्थितः ५७
ततोऽतुष्यत्सहस्राक्षस्तेन कामेन मे विभुः
एवं मे वसतो राजन्नेष कालोऽत्यगाद्दिवि ५८
इति श्रीमहाभारते आरण्यकपर्वणि चतुःषष्ट्यधिक शततमोऽध्यायः १६४

पञ्चषष्ट्यधिक शततमोऽध्यायः

अर्जुन उवाच
कृतास्त्रमतिविश्वस्तमथ मां हरिवाहनः
संस्पृश्य मूर्ध्नि पाणिभ्यामिदं वचनमब्रवीत् १
न त्वमद्य युधा जेतुं शक्यः सुरगणैरपि
किं पुनर्मानुषे लोके मानुषैरकृतात्मभिः
अप्रमेयोऽप्रधृष्यश्च युद्धेष्वप्रतिमस्तथा २
अथाब्रवीत्पुनर्देवः संप्रहृष्टतनूरुहः
अस्त्रयुद्धे समो वीर न ते कश्चिद्भविष्यति ३
अप्रमत्तः सदा दक्षः सत्यवादी जितेन्द्रियः
ब्रह्मण्यश्चास्त्रविच्चासि शूरश्चासि कुरूद्वह ४
अस्त्राणि समवाप्तानि त्वया दश च पञ्च च
पञ्चभिर्विधिभिः पार्थ न त्वया विद्यते समः ५
प्रयोगमुपसंहारमावृत्तिं च धनञ्जय
प्रायश्चित्तं च वेत्थ त्वं प्रतिघातं च सर्वशः ६
तव गुर्वर्थकालोऽयमुपपन्नः परन्तप
प्रतिजानीष्व तं कर्तुमतो वेत्स्याम्यहं परम् ७
ततोऽहमब्रुवं राजन्देवराजमिदं वचः
विषह्यं चेन्मया कर्तुं कृतमेव निबोध तत् ८
ततो मामब्रवीद्राजन्प्रहस्य बलवृत्रहा
नाविषह्यं तवाद्यास्ति त्रिषु लोकेषु किञ्चन ९
निवातकवचा नाम दानवा मम शत्रवः
समुद्रकुक्षिमाश्रित्य दुर्गे प्रतिवसन्त्युत १०
तिस्रः कोटयः समाख्यातास्तुल्यरूपबलप्रभाः

तांस्तत्र जहि कौन्तेय गुर्वर्थस्ते भविष्यति ११
ततो मातलिसंयुक्तं मयूरसमरोमभिः
हयैरुपेतं प्रादान्मे रथं दिव्यं महाप्रभम् १२
बबन्ध चैव मे मूर्ध्नि किरीटमिदमुत्तमम्
स्वरूपसदृशं चैव प्रादादङ्गविभूषणम् १३
अभेद्यं कवचं चेदं स्पर्शरूपवदुत्तमम्
अजरां ज्यामिमां चापि गाराडीवे समयोजयत् १४
ततः प्रायामहं तेन स्यन्दनेन विराजता
येनाजयद्देवपतिर्बलिं वैरोचनिं पुरा १५
ततो देवाः सर्व एव तेन घोषेण बोधिताः
मन्वाना देवराजं मां समाजग्मुर्विशां पते
दृष्ट्वा च मामपृच्छन्त किं करिष्यसि फल्गुन १६
तानब्रुवं यथाभूतमिदं कर्तास्मि संयुगे
निवातकवचानां तु प्रस्थितं मां वधैषिणम्
निबोधत महाभागाः शिवं चाशास्त मेऽनघाः १७
तुष्टुबुर्मां प्रसन्नास्ते यथा देवं पुरन्दरम्
रथेनानेन मघवा जितवाञ्शम्बरं युधि
नमुचिं बलवृत्रौ च प्रह्लादनरकावपि १८
बहूनि च सहस्राणि प्रयुतान्यर्बुदानि च
रथेनानेन दैत्यानां जितवान्मघवान्युधि १९
त्वमप्येतेन कौन्तेय निवातकवचान्रणे
विजेता युधि विक्रम्य पुरेव मघवान्वशी २०
अयं च शङ्खप्रवरो येन जेतासि दानवान्
अनेन विजिता लोकाः शक्रेणापि महात्मना २१
प्रदीयमानं देवैस्तु देवदत्तं जलोद्भवम्
प्रत्यगृह्णं जयायैनं स्तूयमानस्तदामरैः २२
स शङ्खी कवची बाणी प्रगृहीतशरासनः
दानवालयमत्युग्रं प्रयातोऽस्मि युयुत्सया २३
इति श्रीमहाभारते आरगयकपर्वणि पञ्चषष्ट्यधिकशततमोऽध्यायः १६५

## षट्षष्ट्यधिकशततमोऽध्यायः

अर्जुन उवाच
ततोऽहं स्तूयमानस्तु तत्र तत्र महर्षिभिः
अपश्यमुदधिं भीममपांपतिमथाव्ययम् १
फेनवत्यः प्रकीर्णाश्च संहताश्च समुच्छ्रिताः
ऊर्मयश्चात्र दृश्यन्ते चलन्त इव पर्वताः
नावः सहस्रशस्तत्र रत्नपूर्णाः समन्ततः २
तिमिङ्गिलाः कच्छपाश्च तथा तिमितिमिङ्गिलाः
मकराश्चात्र दृश्यन्ते जले मग्ना इवाद्रयः ३
शङ्खानां च सहस्राणि मग्नान्यप्सु समन्ततः
दृश्यन्ते स्म यथा रात्रौ तारास्तन्वभ्रसंवृताः ४
तथा सहस्रशस्तत्र रत्नसङ्घाः प्लवन्त्युत
वायुश्च घूर्णते भीमस्तदद्भुतमिवाभवत् ५
तमतीत्य महावेगं सर्वाम्भोनिधिमुत्तमम्
अपश्यं दानवाकीर्णं तद्दैत्यपुरमन्तिकात् ६
तत्रैव मातलिस्तूर्णं निपत्य पृथिवीतले
नादयन्रथघोषेण तत्पुरं समुपाद्रवत् ७
रथघोषं तु तं श्रुत्वा स्तनयित्नोरिवाम्बरे
मन्वाना देवराजं मां संविग्ना दानवाभवन् ८
सर्वे संभ्रान्तमनसः शरचापधराः स्थिताः
तथा शूलासिपरशुगदामुसलपाणयः ९
ततो द्वाराणि पिदधुर्दानवास्त्रस्तचेतसः
संविधाय पुरे रक्षां न स्म कश्चन दृश्यते १०
ततः शङ्खमुपादाय देवदत्तं महास्वनम्
पुरमासुरमाश्लिष्य प्राधमं तं शनैरहम् ११
स तु शब्दो दिवं स्तब्ध्वा प्रतिशब्दमजीजनत्
वित्रेसुश्च निलिल्युश्च भूतानि सुमहान्त्यपि १२
ततो निवातकवचाः सर्व एव समन्ततः
दंशिता विविधैस्त्राणैर्विविधायुधपाणयः १३
आयसैश्च महाशूलैर्गदाभिर्मुसलैरपि

पट्टिशैः करवालैश्च रथचक्रैश्च भारत १४
शतघ्नीभिर्भुशुगडीभिः खड्गैश्चित्रैः स्वलङ्कृतैः
प्रगृहीतैर्दितेः पुत्राः प्रादुरासन्सहस्रशः १५
ततो विचार्य बहुधा रथमार्गेषु तान्हयान्
प्राचोदयत्समे देशे मातलिर्भरतर्षभ १६
तेन तेषां प्रगुन्नानामाशुत्वाच्छीघ्रगामिनाम्
नान्वपश्यं तदा किंचित्तन्मेऽद्भुतमिवाभवत् १७
ततस्ते दानवास्तत्र योधव्रातान्यनेकशः
विकृतस्वररूपाणि भृशं सर्वागयचोदयन् १८
तेन शब्देन महता समुद्रे पर्वतोपमाः
आप्लवन्त गतैः सत्त्वैर्मत्स्याः शतसहस्रशः १९
ततो वेगेन महता दानवा मामुपाद्रवन्
विमुञ्चन्तः शितान्बाणाञ्शतशोऽथ सहस्रशः २०
स संप्रहारस्तुमुलस्तेषां मम च भारत
अवर्तत महाघोरो निवातकवचान्तकः २१
ततो देवर्षयश्चैव दानवर्षिगणाश्च ये
ब्रह्मर्षयश्च सिद्धाश्च समाजग्मुर्महामृधे २२
ते वै मामनुरूपाभिर्मधुराभिर्जयैषिणः
अस्तुवन्मुनयो वाग्भिर्यथेन्द्रं तारकामये २३
इति श्रीमहाभारते आरगयकपर्वणि षट्षष्ट्यधिकशततमोऽध्यायः १६६

## सप्तषष्ट्यधिकशततमोऽध्यायः

अर्जुन उवाच
ततो निवातकवचाः सर्वे वेगेन भारत
अभ्यद्रवन्मां सहिताः प्रगृहीतायुधा रणे १
आच्छिद्य रथपन्थानमुत्क्रोशन्तो महारथाः
आवृत्य सर्वतस्ते मां शरवर्षैरवाकिरन् २
ततोऽपरे महावीर्याः शूलपट्टिशपाणयः
शूलानि च भुशुगडीश्च मुमुचुर्दानवा मयि ३
तच्छूलवर्षं सुमहद्गदाशक्तिसमाकुलम्

अनिशं सृज्यमानं तैरपतन्मद्रथोपरि ४
अन्ये मामभ्यधावन्त निवातकवचा युधि
शितशस्त्रायुधा रौद्राः कालरूपाः प्रहारिणः ५
तानहं विविधैर्बाणैर्वेगवद्भिरजिह्मगैः
गाण्डीवमुक्तैरभ्यघ्नमेकैकं दशभिर्मृधे
ते कृता विमुखाः सर्वे मत्प्रयुक्तैः शिलाशितैः ६
ततो मातलिना तूर्णं हयास्ते संप्रचोदिताः
रथमार्गान्बहूंस्तत्र विचेरुर्वातरंहसः
सुसंयता मातलिना प्रामथ्नन्त दितेः सुतान् ७
शतं शतास्ते हरयस्तस्मिन्युक्ता महारथे
तदा मातलिना यत्ता व्यचरन्नल्पका इव ८
तेषां चरणपातेन रथनेमिस्वनेन च
मम बाणनिपातैश्च हतास्ते शतशोऽसुराः ९
गतासवस्तथा चान्ये प्रगृहीतशरासनाः
हतसारथयस्तत्र व्यकृष्यन्त तुरंगमैः १०
ते दिशो विदिशः सर्वाः प्रतिरुध्य प्रहारिणः
निघ्नन्ति विविधैः शस्त्रैस्ततो मे व्यथितं मनः ११
ततोऽह मातलेर्वीर्यमपश्यं परमाद्भुतम्
अश्वांस्तथा वेगवतो यदयत्नादधारयत् १२
ततोऽह लघुभिश्चित्रैरस्त्रैस्तानसुरान्रणे
सायुधानच्छिनं राजञ्शतशोऽथ सहस्रशः १३
एवं मे चरतस्तत्र सर्वयत्नेन शत्रुहन्
प्रीतिमानभवद्वीरो मातलि शक्रसारथिः १४
वध्यमानास्ततस्ते तु हयैस्तेन रथेन च
अगमन्प्रक्षयं केचिन्न्यवर्तन्त तथापरे १५
स्पर्धमाना इवास्माभिर्निवातकवचा रणे
शरवर्षैर्महद्भिर्मां समन्तात्प्रत्यवारयन् १६
ततोऽह लघुभिश्चित्रैर्ब्रह्मास्त्रपरिमन्त्रितैः
व्यधमं सायकैराशु शतशोऽथ सहस्रशः १७
ततः संपीड्यमानास्ते क्रोधाविष्टा महासुराः

अपीडयन्मां सहिताः शरशूलासिवृष्टिभिः १८
ततोऽहमस्त्रमातिष्ठं परमं तिग्मतेजसम्
दयितं देवराजस्य माधवं नाम भारत १९
ततः खड्गांस्त्रिशूलांश्च तोमरांश्च सहस्रशः
अस्त्रवीर्येण शतधा तैर्मुक्तानहमच्छिनम् २०
छित्त्वा प्रहरणान्येषां ततस्तानपि सर्वशः
प्रत्यविध्यमहं रोषाद्दशभिर्दशभिः शरैः २१
गाण्डीवाद्धि तदा संख्ये यथा भ्रमरपंक्तयः
निष्पतन्ति तथा बाणास्तन्मातलिरपूजयत् २२
तेषामपि तु बाणास्ते बहुत्वाच्छलभा इव
अवाकिरन्मां बलवत्तानहं व्यधमं शरैः २३
वध्यमानास्ततस्ते तु निवातकवचाः पुनः
शरवर्षैर्महद्भिर्मां समन्तात्पर्यवारयन् २४
शरवेगान्निहत्याहमस्त्रैः शरविघातिभिः
ज्वलद्भिः परमैः शीघ्रैस्तानविध्यं सहस्रशः २५
तेषां छिन्नानि गात्राणि विसृजन्ति स्म शोणितम्
प्रावृषीवातिवृष्टानि शृङ्गाणीव धराभृताम् २६
इन्द्राशनिसमस्पर्शैर्वेगवद्भिरजिह्मगैः
मद्बाणैर्वध्यमानास्ते समुद्विग्नाः स्म दानवाः २७
शतधा भिन्नदेहान्त्राः क्षीणप्रहरणौजसः
ततो निवातकवचा मामयुध्यन्त मायया २८
इति श्रीमहाभारते आरण्यकपर्वणि सप्तषष्ट्यधिकशततमोऽध्यायः १६७

## अष्टषष्ट्यधिकशततमोऽध्यायः

अर्जुन उवाच
ततोऽश्मवर्षं सुमहत्प्रादुरासीत्समन्ततः
नगमात्रैर्महाघोरैस्तन्मां दृढमपीडयत् १
तदहं वज्रसंकाशैः शरैरिन्द्रास्त्रचोदितैः
अचूर्णयं वेगवद्भिः शतधैकैकमाहवे २
चूर्ण्यमानेऽश्मवर्षे तु पावकः समजायत

तत्राश्मचूर्णमपतत्पावकप्रकरा इव ३
ततोऽश्मवर्षे विहते जलवर्षं महत्तरम्
धाराभिरक्षमात्राभिः प्रादुरासीन्ममांतिके ४
नभसः प्रच्युता धारास्तिग्मवीर्याः सहस्रशः
आवृणवन्सर्वतो व्योम दिशश्चोपदिशस्तथा ५
धाराणां च निपातेन वायोर्विस्फूर्जितेन च
गर्जितेन च दैत्यानां न प्राज्ञायत किंचन ६
धारा दिवि च संबद्धा वसुधायां च सर्वशः
व्यामोहयन्त मां तत्र निपतन्त्योऽनिशं भुवि ७
तत्रोपदिष्टमिन्द्रेण दिव्यमस्त्रं विशोषणम्
दीप्तं प्राहिणवं घोरमशुष्यत्तेन तज्जलम् ८
हतेऽश्मवर्षे तु मया जलवर्षे च शोषिते
मुमुचुर्दानवा मायामग्निं वायुं च मानद ९
ततोऽहमग्निं व्यधमं सलिलास्त्रेण सर्वशः
शैलेन च महास्त्रेण वायोर्वेगमधारयम् १०
तस्यां प्रतिहतायां तु दानवा युद्धदुर्मदाः
प्राकुर्वन्विविधा माया यौगपद्येन भारत ११
ततो वर्षं प्रादुरभूत्सुमहल्लोमहर्षणम्
अस्त्राणां घोररूपाणामग्नेर्वायोस्तथाश्मनाम् १२
सा तु मायामयी वृष्टिः पीडयामास मां युधि
अथ घोरं तमस्तीव्रं प्रादुरासीत्समन्ततः १३
तमसा संवृते लोके घोरेण परुषेण च
तुरगा विमुखाश्चासन्प्रास्खलच्चापि मातलि १४
हस्ताद्धिरण्मयश्चास्य प्रतोदः प्रापतद्भुवि
असकृच्चाह मां भीतः क्वासीति भरतर्षभ १५
मां च भीराविशत्तीव्रा तस्मिन्विगतचेतसि
स च मां विगतज्ञानः संत्रस्त इदमब्रवीत् १६
सुराणामसुराणां च संग्रामः सुमहानभूत्
अमृतार्थे पुरा पार्थ स च दृष्टो मयानघ १७
शम्बरस्य वधे चापि संग्रामः सुमहानभूत्

सारथ्यं देवराजस्य तत्रापि कृतवानहम् १८
तथैव वृत्रस्य वधे संगृहीता हया मया
वैरोचनेर्मया युद्धं दृष्टं चापि सुदारुणम् १९
एते मया महाघोराः संग्रामाः पर्युपासिताः
न चापि विगतज्ञानो भूतपूर्वोऽस्मि पाण्डव २०
पितामहेन संहारः प्रजानां विहितो ध्रुवम्
न हि युद्धमिदं युक्तमन्यत्र जगतः क्षयात् २१
तस्य तद्वचनं श्रुत्वा संस्तभ्यात्मानमात्मना
मोहयिष्यन्दानवानामहं मायामयं बलम् २२
अब्रुवं मातलि भीतं पश्य मे भुजयोर्बलम्
अस्त्राणां च प्रभावं मे धनुषो गाण्डिवस्य च २३
अद्यास्त्रमाययैतेषां मायामेतां सुदारुणाम्
विनिहन्मि तमश्चोग्रं मा भैः सूत स्थिरो भव २४
एवमुक्त्वाहमसृजमस्त्रमायां नराधिप
मोहनीं सर्वशत्रूणां हिताय त्रिदिवौकसाम् २५
पीड्यमानासु मायासु तासु तास्वसुरेश्वराः
पुनर्बहुविधा मायाः प्राकुर्वन्नमितौजसः २६
पुनः प्रकाशमभवत्तमसा ग्रस्यते पुनः
व्रजत्यदर्शनं लोकः पुनरप्सु निमज्जति २७
सुसंगृहीतैर्हरिभिः प्रकाशे सति मातलि
व्यचरत्स्यन्दनाग्र्येण संग्रामे लोमहर्षणे २८
ततः पर्यपतन्नुग्रा निवातकवचा मयि
तानहं विवरं दृष्ट्वा प्राहिण्वं यमसादनम् २९
वर्तमाने तथा युद्धे निवातकवचान्तके
नापश्यं सहसा सर्वान्दानवान्माययावृतान् ३०
इति श्रीमहाभारते आरण्यकपर्वणि अष्टषष्ट्यधिकशततमोऽध्यायः १६८

## एकोनसप्तत्यधिक शततमोऽध्यायः

अर्जुन उवाच
अदृश्यमानास्ते दैत्या योधयन्ति स्म मायया

अदृश्यानस्त्रवीर्येण तानप्यहमयोधयम् १
गाण्डीवमुक्ता विशिखाः सम्यगस्त्रप्रचोदिताः
अच्छिन्दन्नुत्तमाङ्गानि यत्र यत्र स्म तेऽभवन् २
ततो निवातकवचा वध्यमाना मया युधि
संहृत्य मायां सहसा प्राविशन्पुरमात्मनः ३
व्यपयातेषु दैत्येषु प्रादुर्भूते च दर्शने
अपश्यं दानवांस्तत्र हताञ्शतसहस्रशः ४
विनिष्पिष्टानि तत्रैषां शस्त्राण्याभरणानि च
कूटशः स्म प्रदृश्यन्ते गात्राणि कवचानि च ५
हयानां नान्तरं ह्यासीत्पदाद्विचलितुं पदम्
उत्पत्य सहसा तस्थुरन्तरिक्षगमास्ततः ६
ततो निवातकवचा व्योम संछाद्य केवलम्
अदृश्या ह्यभ्यवर्तन्त विसृजन्तः शिलोच्चयान् ७
अन्तर्भूमिगताश्चान्ये हयानां चरणान्यथ
व्यगृह्णन्दानवा घोरा रथचक्रे च भारत ८
विनिगृह्य हरीनश्वान्रथं च मम युध्यतः
सर्वतो मामचिन्वन्त सरथं धरणीधरैः ९
पर्वतैरुपचीयद्भिः पतमानैस्तथापरैः
स देशो यत्र वर्ताम गुहेव समपद्यत १०
पर्वतैश्छाद्यमानोऽह निगृहीतैश्च वाजिभिः
अगच्छं परमामार्तिं मातलिस्तदलक्षयत् ११
लक्षयित्वा तु मां भीतमिदं वचनमब्रवीत्
अर्जुनार्जुन मा भैस्त्वं वज्रमस्त्रमुदीरय १२
ततोऽह तस्य तद्वाक्यं श्रुत्वा वज्रमुदीरयम्
देवराजस्य दयितं वज्रमस्त्रं नराधिप १३
अचलं स्थानमासाद्य गाण्डीवमनुमन्त्र्य च
अमुञ्चं वज्रसंस्पर्शानायसान्निशिताञ्शरान् १४
ततो मायाश्च ताः सर्वा निवातकवचांश्च तान्
ते वज्रचोदिता बाणा वज्रभूताः समाविशन् १५
ते वज्रवेगाभिहता दानवाः पर्वतोपमाः

इतरेतरमाश्लिष्य न्यपतन्पृथिवीतले १६
अन्तर्भूमौ च येऽगृह्णन्दानवा रथवाजिनः
अनुप्रविश्य तान्बाणाः प्राहिण्वन्यमसादनम् १७
हतैर्निवातकवचैर्निरस्तैः पर्वतोपमैः
समाच्छाद्यत देशः स विकीर्णैरिव पर्वतैः १८
न हयानां क्षतिः काचिन्न रथस्य न मातलेः
मम चादृश्यत तदा तदद्भुतमिवाभवत् १९
ततो मां प्रहसन्राजन्मातलि प्रत्यभाषत
नैतदर्जुन देवेषु त्वयि वीर्यं यदीक्ष्यते २०
हतेष्वसुरसंघेषु दारास्तेषां तु सर्वशः
प्राक्रोशन्नगरे तस्मिन्यथा शरदि लक्ष्मणाः २१
ततो मातलिना सार्धमहं तत्पुरमभ्ययाम्
त्रासयन्रथघोषेण निवातकवचस्त्रियः २२
तान्दृष्ट्वा दशसाहस्रान्मयूरसदृशान्हयान्
रथं च रविसंकाशं प्राद्रवन्गणशः स्त्रियः २३
ताभिराभरणैः शब्दस्त्रासिताभिः समीरितः
शिलानामिव शैलेषु पतन्तीनामभूत्तदा २४
वित्रस्ता दैत्यनार्यस्ताः स्वानि वेश्मान्यथाविशन्
बहुरत्नविचित्राणि शातकुम्भमयानि च २५
तदद्भुताकारमहं दृष्ट्वा नगरमुत्तमम्
विशिष्टं देवनगरादपृच्छं मातलि ततः २६
इदमेवंविधं कस्माद्देवता नाविशन्त्युत
पुरंदरपुराद्धीदं विशिष्टमिति लक्षये २७
मातलिरुवाच
आसीदिदं पुरा पार्थ देवराजस्य नः पुरम्
ततो निवातकवचैरितः प्रच्याविताः सुराः २८
तपस्तप्त्वा महत्तीव्रं प्रसाद्य च पितामहम्
इदं वृतं निवासाय देवेभ्यश्चाभयं युधि २९
ततः शक्रेण भगवान्स्वयंभूरभिचोदितः
विधत्तां भगवानत्रेत्यात्मनो हितकाम्यया ३०

तत उक्तो भगवता दिष्टमत्रेति वासवः
भवितान्तस्त्वमेवैषां देहेनान्येन वृत्रहन् ३१
तत एषां वधार्थाय शक्रोऽस्त्राणि ददौ तव
न हि शक्याः सुरैर्हन्तुं य एते निहतास्त्वया ३२
कालस्य परिणामेन ततस्त्वमिह भारत
एषामन्तकरः प्राप्तस्तत्त्वया च कृतं तथा ३३
दानवानां विनाशार्थं महास्त्राणां महद्बलम्
ग्रहितस्त्वं महेन्द्रेण पुरुषेन्द्र तदुत्तमम् ३४
अर्जुन उवाच
ततः प्रविश्य नगरं दानवांश्च निहत्य तान्
पुनर्मातलिना सार्धमगच्छं देवसद्म तत् ३५
इति श्रीमहाभारते आरण्यकपर्वणि एकोनसप्तत्यधिकशततमोऽध्यायः १६९

## सप्तत्यधिक शततमोऽध्यायः

अर्जुन उवाच
निवर्तमानेन मया महद्दृष्टं ततोऽपरम्
पुरं कामचरं दिव्यं पावकार्कसमप्रभम् १
द्रुमै रत्न मयेश्चित्रैर्भास्वरैश्च पतत्रिभिः
पौलोमैः कालकेयैश्च नित्यहृष्टैरधिष्ठितम् २
गोपुराट्टालकोपेतं चतुर्द्वारं दुरासदम्
सर्वरत्नमयं दिव्यमद्भुतोपमदर्शनम्
द्रुमैः पुष्पफलोपेतैर्दिव्यरत्नमयैर्वृतम् ३
तथा पतत्रिभिर्दिव्यैरुपेतं सुमनोहरैः
असुरैर्नित्यमुदितैः शूलर्ष्टिमुसलायुधैः
चापमुद्गरहस्तैश्च स्रग्विभिः सर्वतो वृतम् ४
तदहं प्रेक्ष्य दैत्यानां पुरमद्भुतदर्शनम्
अपृच्छं मातलि राजन्किमिदं दृश्यतेति वै ५
मातलिरुवाच
पुलोमा नाम दैतेयी कालका च महासुरी
दिव्यं वर्षसहस्त्रं ते चेरतुः परमं तपः

तपसोऽन्ते ततस्ताभ्यां स्वयंभूरददाद्वरम् ६
अगृह्णीतां वरं ते तु सुतानामल्पदुःखताम्
अवध्यतां च राजेन्द्र सुरराक्षसपन्नगैः ७
रमणीयं पुरं चेदं खचरं सुकृतप्रभम्
सर्वरत्नैः समुदितं दुर्धर्षममरैरपि
सयक्षगन्धर्वगणैः पन्नगासुरराक्षसैः ८
सर्वकामगुणोपेतं वीतशोकमनामयम्
ब्रह्मणा भरतश्रेष्ठ कालकेयकृते कृतम् ९
तदेतत्खचरं दिव्यं चरत्यमरवर्जितम्
पौलोमाध्युषितं वीर कालकेयैश्च दानवैः १०
हिरण्यपुरमित्येतत्ख्यायते नगरं महत्
रक्षितं कालकेयैश्च पौलोमैश्च महासुरैः ११
त एते मुदिता नित्यमवध्याः सर्वदैवतैः
निवसन्त्यत्र राजेन्द्र गतोद्वेगा निरुत्सुकाः
मानुषो मृत्युरेतेषां निर्दिष्टो ब्रह्मणा पुरा १२
अर्जुन उवाच
सुरासुरैरवध्यांस्तानहं ज्ञात्वा ततः प्रभो
अब्रुवं मातलिं हृष्टो याह्येतत्पुरमञ्जसा १३
त्रिदशेशद्विषो यावत्क्षयमस्त्रैर्नयाम्यहम्
न कथंचिद्धि मे पापा न वध्या ये सुरद्विषः १४
उवाह मां ततः शीघ्रं हिरण्यपुरमन्तिकात्
रथेन तेन दिव्येन हरियुक्तेन मातलिः १५
ते मामालक्ष्य दैतेया विचित्राभरणाम्बराः
समुत्पेतुर्महावेगा रथानास्थाय दंशिताः १६
ततो नालीकनाराचैर्भल्लशक्त्यृष्टितोमरैः
अभ्यघ्नन्दानवेन्द्रा मां क्रुद्धास्तीव्रपराक्रमाः १७
तदहं चास्त्रवर्षेण महता प्रत्यवारयम्
शस्त्रवर्षं महद्राजन्विद्याबलमुपाश्रितः १८
व्यामोहयं च तान्सर्वान्रथमार्गैश्चरन्रणे
तेऽन्योन्यमभिसंमूढाः पातयन्ति स्म दानवाः १९

तेषामहं विमूढानामन्योन्यमभिधावताम्
शिरांसि विशिखैर्दीप्तैर्व्यहरं शतसंघशः २०
ये वध्यमाना दैतेयाः पुरमास्थाय तत्पुनः
खमुत्पेतुः सनगरा मायामास्थाय दानवीम् २१
ततोऽहं शरवर्षेण महता प्रत्यवारयम्
मार्गमावृत्य दैत्यानां गतिं चैषामवारयम् २२
तत्पुरं खचरं दिव्यं कामगं दिव्यवर्चसम्
दैतेयैर्वरदानेन धार्यते स्म यथासुखम् २३
अन्तर्भूमौ निपतितं पुनरूर्ध्वं प्रतिष्ठते
पुनस्तिर्यक्प्रयात्याशु पुनरप्सु निमज्जति २४
अमरावतिसंकाशं पुरं कामगमं तु तत्
अहमस्त्रैर्बहुविधैः प्रत्यगृह्णं नराधिप २५
ततोऽहं शरजालेन दिव्यास्त्रमुदितेन च
न्यगृह्णं सह दैतेयैस्तत्पुरं भरतर्षभ २६
विक्षतं चायसैर्बाणैर्मत्प्रयुक्तैरजिह्मगैः
महीमभ्यपतद्राजन्प्रभग्नं पुरमासुरम् २७
ते वध्यमाना मद्बाणैर्वज्रवेगैरयस्मयैः
पर्यभ्रमन्त वै राजन्नसुराः कालचोदिताः २८
ततो मातलिरप्याशु पुरस्तान्निपतन्निव
महीमवातरत्क्षिप्रं रथेनादित्यवर्चसा २९
ततो रथसहस्राणि षष्टिस्तेषाममर्षिणाम्
युयुत्सूनां मया सार्धं पर्यवर्तन्त भारत ३०
तानहं निशितैर्बाणैर्व्यधमं गार्ध्रवाजितैः
ते युद्धे संन्यवर्तन्त समुद्रस्य यथोर्मयः ३१
नेमे शक्या मानुषेण युद्धेनेति प्रचिन्त्य वै
ततोऽहमानुपूर्व्येण सर्वाण्यस्त्राण्ययोजयम् ३२
ततस्तानि सहस्राणि रथानां चित्रयोधिनाम्
अस्त्राणि मम दिव्यानि प्रत्यघ्नञ्शनकैरिव ३३
रथमार्गान्विचित्रांस्ते विचरन्तो महारथाः
प्रत्यदृश्यन्त संग्रामे शतशोऽथ सहस्रशः ३४

विचित्रमुकुटापीडा विचित्रकवचध्वजाः
विचित्राभरणाश्चैव नन्दयन्तीव मे मनः ३५
अहं तु शरवर्षैस्तानस्त्रप्रमुदितै रणे
नाशक्नुवं पीडयितुं ते तु मां पर्यपीडयन् ३६
तैः पीड्यमानो बहुभिः कृतास्त्रैः कुशलैर्युधि
व्यथितोऽस्मि महायुद्धे भयं चागान्महन्मम ३७
ततोऽह देवदेवाय रुद्राय प्रणतो रणे
स्वस्ति भूतेभ्य इत्युक्त्वा महास्त्रं समयोजयम्
यत्तद्रौद्रमिति ख्यातं सर्वामित्रविनाशनम् ३८
ततोऽपश्यं त्रिशिरसं पुरुषं नवलोचनम्
त्रिमुखं षड्भुजं दीप्तमर्कज्वलनमूर्धजम्
लेलिहानैर्महानागैः कृतशीर्षममित्रहन् ३९
विभीस्ततस्तदस्त्रं तु घोरं रौद्रं सनातनम्
दृष्ट्वा गाण्डीवसंयोगमानीय भरतर्षभ ४०
नमस्कृत्वा त्रिनेत्राय शर्वायामिततेजसे
मुक्तवान्दानवेन्द्राणां पराभावाय भारत ४१
मुक्तमात्रे ततस्तस्मिन्रूपाण्यासन्सहस्रशः
मृगाणामथ सिंहानां व्याघ्राणां च विशां पते
ऋक्षाणां महिषाणां च पन्नगानां तथा गवाम् ४२
गजानां सृमराणां च शरभाणां च सर्वशः
ऋषभाणां वराहाणां मार्जाराणां तथैव च
शालावृकाणां प्रेतानां भुरुण्डानां च सर्वशः ४३
गृध्राणां गरुडानां च मकराणां तथैव च
पिशाचानां सयक्षाणां तथैव च सुरद्विषाम् ४४
गुह्यकानां च संग्रामे नैर्ऋतानां तथैव च
झषाणां गजवक्त्राणामुलूकानां तथैव च ४५
मीनकूर्मसमूहानां नानाशस्त्रासिपाणिनाम्
तथैव यातुधानानां गदामुद्गरधारिणाम् ४६
एतैश्चान्यैश्च बहुभिर्नानारूपधरैस्तथा
सर्वमासीज्जगद्व्याप्तं तस्मिन्नस्त्रे विसर्जिते ४७

त्रिशिरोभिश्चतुर्दंष्ट्रैश्चतुरास्यैश्चतुर्भुजैः
अनेकरूपसंयुक्तैर्मांसमेदोवसाशिभिः
अभीक्ष्णं वध्यमानास्ते दानवा ये समागताः ४८
अर्कज्वलनतेजोभिर्वज्राशनिसमप्रभैः
अद्रिसारमयैश्चान्यैर्बाणैररिविदारणैः
न्यहनं दानवान्सर्वान्मुहूर्तेनैव भारत ४९
गाण्डीवास्त्रप्रणुन्नांस्तान्गतासून्नभसश्च्युतान्
दृष्ट्वाहं प्राणमं भूयस्त्रिपुरघ्नाय वेधसे ५०
तथा रौद्रास्त्रनिष्पिष्टान्दिव्याभरणभूषितान्
निशाम्य परमं हर्षमगमद्देवसारथिः ५१
तदसह्यं कृतं कर्म देवैरपि दुरासदम्
दृष्ट्वा मां पूजयामास मातलि शक्रसारथिः ५२
उवाच चेदं वचनं प्रीयमाणः कृताञ्जलि
सुरासुरैरसह्यं हि कर्म यत्साधितं त्वया
न ह्येतत्संयुगे कर्तुमपि शक्तः सुरेश्वरः ५३
सुरासुरैरवध्यं हि पुरमेतत्खगं महत्
त्वया विमथितं वीर स्ववीर्यास्त्रतपोबलात् ५४
विध्वस्तेऽथ पुरे तस्मिन्दानवेषु हतेषु च
विनदन्त्यः स्त्रियः सर्वा निष्पेतुर्नगराद्बहिः ५५
प्रकीर्णकेश्यो व्यथिताः कुरर्य इव दुःखिताः
पेतुः पुत्रान्पितॄन्भ्रातॄञ्शोचमाना महीतले ५६
रुदन्त्यो दीनकण्ठ्यस्ता विनदन्त्यो हतेश्वराः
उरांसि परिभिघ्नन्त्यः प्रस्रस्तस्रग्विभूषणाः ५७
तच्छोकयुक्तमश्रीकं दुःखदैन्यसमाहतम्
न बभौ दानवपुरं हतत्विट्कं हतेश्वरम् ५८
गन्धर्वनगराकारं हतनागमिव ह्रदम्
शुष्कवृक्षमिवारण्यमदृश्यमभवत्पुरम् ५९
मां तु संहृष्टमनसं क्षिप्रं मातलिरानयत्
देवराजस्य भवनं कृतकर्माणमाहवात् ६०
हिरण्यपुरमारुज्य निहत्य च महासुरान्

निवातकवचांश्चैव ततोऽह शक्रमागमम् ६१
मम कर्म च देवेन्द्रं मातलिर्विस्तरेण तत्
सर्वं विश्रावयामास यथाभूतं महाद्युते ६२
हिरण्यपुरघातं च मायानां च निवारणम्
निवातकवचानां च वधं संख्ये महौजसाम् ६३
तच्छ्रुत्वा भगवान्प्रीतः सहस्राक्षः पुरंदरः
मरुद्भिः सहितः श्रीमान्साधु साध्वित्यथाब्रवीत् ६४
ततो मां देवराजो वै समाश्वास्य पुनः पुनः
अब्रवीद्विबुधैः सार्धमिदं सुमधुरं वचः ६५
अतिदेवासुरं कर्म कृतमेतत्त्वया रणे
गुर्वर्थश्च महान्पार्थ कृतः शत्रून्घता मम ६६
एवमेव सदा भाव्यं स्थिरेणाजौ धनंजय
असंमूढेन चास्त्राणां कर्तव्यं प्रतिपादनम् ६७
अविषह्यो रणे हि त्वं देवदानवराक्षसैः
सयक्षासुरगन्धर्वैः सपक्षिगणपन्नगैः ६८
वसुधां चापि कौन्तेय त्वद्बाहुबलनिर्जिताम्
पालयिष्यति धर्मात्मा कुन्तीपुत्रो युधिष्ठिरः ६९
इति श्रीमहाभारते आरण्यकपर्वणि सप्तत्यधिकशततमोऽध्यायः १७०

## एकसप्तत्यधिक शततमोऽध्यायः

अर्जुन उवाच
ततो मामभिविश्वस्तं संरूढशरविक्षतम्
देवराजोऽनुगृह्येदं काले वचनमब्रवीत् १
दिव्यान्यस्त्राणि सर्वाणि त्वयि तिष्ठन्ति भारत
न त्वाभिभवितुं शक्तो मानुषो भुवि कश्चन २
भीष्मो द्रोणः कृपः कर्णः शकुनिः सह राजभिः
संग्रामस्थस्य ते पुत्र कलां नार्हन्ति षोडशीम् ३
इदं च मे तनुत्राणं प्रायच्छन्मघवान्प्रभुः
अभेद्यं कवचं दिव्यं स्रजं चैव हिरण्मयीम् ४
देवदत्तं च मे शङ्खं देवः प्रादान्महारवम्

दिव्यं चेदं किरीटं मे स्वयमिन्द्रो युयोज ह ५
ततो दिव्यानि वस्त्राणि दिव्यान्याभरणानि च
प्रादाच्छक्रो ममैतानि रुचिराणि बृहन्ति च ६
एवं संपूजितस्तत्र सुखमस्म्युषितो नृप
इन्द्रस्य भवने पुण्ये गंधर्वशिशुभिः सह ७
ततो मामब्रवीच्छक्रः प्रीतिमानमरैः सह
समयोऽजुन गन्तुं ते भ्रातरो हि स्मरन्ति ते ८
एवमिन्द्रस्य भवने पञ्च वर्षाणि भारत
उषितानि मया राजन्स्मरता द्यूतजं कलिम् ९
ततो भवन्तमद्राक्षं भ्रातृभिः परिवारितम्ष्व
गन्धमादनमासाद्य पर्वतस्यास्य मूर्धनि १०
युधिष्ठिर उवाच
दिष्ट्या धनंजयास्त्राणि त्वया प्राप्तानि भारत
दिष्ट्या चाराधितो राजा देवानामीश्वरः प्रभुः ११
दिष्ट्या च भगवान्स्थाणुर्देव्या सह परंतप
साक्षाद्दृष्टः सुयुद्धेन तोषितश्च त्वयानघ १२
दिष्ट्या च लोकपालैस्त्वं समेतो भरतर्षभ
दिष्ट्या वर्धामहे सर्वे दिष्ट्यासि पुनरागतः १३
अद्य कृत्स्नामिमां देवीं विजितां पुरमालिनीम्
मन्ये च धृतराष्ट्रस्य पुत्रानपि वशीकृतान् १४
तानि त्विच्छामि ते द्रष्टुं दिव्यान्यस्त्राणि भारत
यैस्तथा वीर्यवन्तस्ते निवातकवचा हताः १५
अर्जुन उवाच
श्वः प्रभाते भवान्द्रष्टा दिव्यान्यस्त्राणि सर्वशः
निवातकवचा घोरा यैर्मया विनिपातिताः १६
वैशम्पायन उवाच
एवमागमनं तत्र कथयित्वा धनंजयः
भ्रातृभिः सहितः सर्वै रजनीं तामुवास ह १७
इति श्रीमहाभारते आरण्यकपर्वणि एकसप्तत्यधिकशततमोऽध्यायः १७१

द्विसप्तत्यधिक शततमोऽध्यायः

वैशम्पायन उवाच
तस्यां रजन्यां व्युष्टायां धर्मराजो युधिष्ठिरः
उत्थायावश्यकार्याणि कृतवान्भ्रातृभिः सह १
ततः संचोदयामास सोऽजुनं भ्रातृनन्दनम्
दर्शयास्त्राणि कौन्तेय यैर्जिता दानवास्त्वया २
ततो धनंजयो राजन्देवैर्दत्तानि पाराडवः
अस्त्राणि तानि दिब्यानि दर्शयामास भारत ३
यथान्यायं महातेजाः शोचं परममास्थितः
गिरिकूबरं पादपाङ्गं शुभवेणु त्रिवेणुकम्
पार्थिवं रथमास्थाय शोभमानो धनंजयः ४
ततः सुदंशितस्तेन कवचेन सुवर्चसा
धनुरादाय गाराडीवं देवदत्तं च वारिजम् ५
शोशुभ्यमानः कौन्तेय आनुपूर्व्यान्महाभुजः
अस्त्राणि तानि दिव्यानि दर्शनायोपचक्रमे ६
अथ प्रयोद्त्यमाणेन दिव्यान्यस्त्राणि तेन वै
समाक्रान्ता मही पद्मां समकम्पत सद्रुमा ७
क्षुभिताः सरितश्चैव तथैव च महोदधिः
शैलाश्चापि व्यशीर्यन्त न ववौ च समीरणः ८
न बभासे सहस्रांशुर्न जज्वाल च पावकः
न वेदाः प्रतिभान्ति स्म द्विजातीनां कथंचन ९
अन्तर्भूमिगता ये च प्राणिनो जनमेजय
पीड्यमानाः समुत्थाय पाराडवं पर्यवारयन् १०
वेपमानाः प्राञ्जलयस्ते सर्वे पिडिताननाः
दह्यमानास्तदास्त्रैस्तैर्याचन्ति स्म धनंजयम् ११
ततो ब्रह्मर्षयश्चैव सिद्धाश्चैव सुरर्षयः
जङ्गमानि च भूतानि सर्वाण्येवावतस्थिरे १२
राजर्षयश्च प्रवरास्तथैव च दिवौकसः
यक्षराक्षसगन्धर्वास्तथैव च पतत्रिणः १३
ततः पितामहश्चैव लोकपालाश्च सर्वशः

भगवांश्च महादेवः सगणोऽभ्याययौ तदा १४
ततो वायुर्महाराज दिव्यैर्माल्यैः सुगन्धिभिः
अभितः पाण्डवांश्चित्रैरवचक्रे समन्ततः १५
जगुश्च गाथा विविधा गन्धर्वाः सुरचोदिताः
ननृतुः संघशश्चैव राजन्नप्सरसां गणाः १६
तस्मिंस्तु तुमुले काले नारदः सुरचोदितः
आगम्याह वचः पार्थं श्रवणीयमिदं नृप १७
अर्जुनार्जुन मा युङ्क्ष्व दिव्यान्यस्त्राणि भारत
नैतानि निरधिष्ठाने प्रयुज्यन्ते कदाचन १८
अधिष्ठाने न वानार्तः प्रयुञ्जीत कदाचन
प्रयोगे सुमहान्दोषो ह्यस्त्राणां कुरुनन्दन १९
एतानि रक्ष्यमाणानि धनंजय यथागमम्
बलवन्ति सुखार्हाणि भविष्यन्ति न संशयः २०
अरक्ष्यमाणान्येतानि त्रैलोक्यस्यापि पाण्डव
भवन्ति स्म विनाशाय मैवं भूयः कृथाः क्वचित् २१
अजातशत्रो त्वं चैव द्रक्ष्यसे तानि संयुगे
योज्यमानानि पार्थेन द्विषतामवमर्दने २२
निवार्याथ ततः पार्थं सर्वे देवा यथागतम्
जग्मुरन्ये च ये तत्र समाजग्मुर्नरर्षभ २३
तेषु सर्वेषु कौरव्य प्रतियातेषु पाण्डवाः
तस्मिन्नेव वने हृष्टास्त ऊषुः सह कृष्णया २४
इति श्रीमहाभारते आरण्यकपर्वणि द्विसप्तत्यधिकशततमोऽध्यायः १७२
समाप्तं यक्षयुद्धपर्व

त्रिसप्तत्यधिक शततमोऽध्यायः
जनमेजय उवाच
तस्मिन्कृतास्त्रे रथिनां प्रधाने प्रत्यागते भवनाद्वृत्रहन्तुः
अतः परं किमकुर्वन्त पार्थाः समेत्य शूरेण धनंजयेन १
वैशम्पायन उवाच
वनेषु तेष्वेव तु ते नरेन्द्राः सहार्जुनेनेन्द्रसमेन वीराः

तस्मिंश्च शैलप्रवरे सुरम्ये धनेश्वराक्रीडगता विजह्रुः २
वेश्मानि तान्यप्रतिमानि पश्यन्क्रीडाश्च नानाद्रुमसंनिकर्षाः
चचार धन्वी बहुधा नरेन्द्रः सोऽस्त्रेषु यत्तः सततं किरीटी ३
अवाप्य वासं नरदेवपुत्राः प्रसादजं वैश्रवणस्य राज्ञः
न प्राणिनां ते स्पृहयन्ति राजञ्शिवश्च कालः स बभूव तेषाम् ४
समेत्य पार्थेन यथैकरात्रमूषुः समास्तत्र तदा चतस्रः
पूर्वाश्च षट् ता दश पाण्डवानां शिवा बभूवुर्वसतां वनेषु ५
ततोऽब्रवीद्वायुसुतस्तरस्वी जिष्णुश्च राजानमुपोपविश्य
यमौ च वीरौ सुरराजकल्पावेकान्तमास्थाय हितं प्रियं च ६
तव प्रतिज्ञां कुरुराज सत्यां चिकीर्षमाणास्त्वदनु प्रियं च
ततोऽनुगच्छाम वनान्यपास्य सुयोधनं सानुचरं निहन्तुम् ७
एकादशं वर्षमिदं वसामः सुयोधनेनात्तसुखाः सुखार्हाः
तं वञ्चयित्वाधमबुद्धिशीलमज्ञातवासं सुखमाप्नुयामः ८
तवाज्ञया पार्थिव निर्विशङ्का विहाय मानं विचरन्वनानि
समीपवासेन विलोभितास्ते ज्ञास्यन्ति नास्मानपकृष्टदेशान् ९
संवत्सरं तं तु विहृत्य गूढं नराधमं तं सुखमुद्धरेम
निर्यात्य वैरं सफलं सुपुष्पं तस्मै नरेन्द्राधमपूरुषाय १०
सुयोधनायानुचरैर्वृताय ततो महीमाहर धर्मराज
स्वर्गोपमं शैलमिमं चरद्भिः शक्यो विहन्तुं नरदेव शोकः ११
कीर्तिश्च ते भारत पुण्यगन्धा नश्येत लोकेषु चराचरेषु
तत्प्राप्य राज्यं कुरुपुंगवानां शक्यं महत्प्राप्तुमथ क्रियाश्च १२
इदं तु शक्यं सततं नरेन्द्र प्राप्तुं त्वया यल्लभसे कुबेरात्
कुरुष्व बुद्धिं द्विषतां वधाय कृतागसां भारत निग्रहे च १३
तेजस्तवोग्रं न सहेत राजन्समेत्य साक्षादपि वज्रपाणिः
न हि व्यथां जातु करिष्यतस्तौ समेत्य देवैरपि धर्मराज १४
त्वदर्थसिद्ध्यर्थमभिप्रवृत्तौ सुपर्णकेतुश्च शिनेश्च नप्ता
यथैव कृष्णोऽप्रतिमो बलेन तथैव राजन्स शिनिप्रवीरः १५
तवार्थसिद्ध्यर्थमभिप्रवृत्तौ यथैव कृष्णः सह यादवैस्तैः
तथैव चावां नरदेववर्य यमौ च वीरौ कृतिनौ प्रयोगे
त्वदर्थयोगप्रभवप्रधानाः समं करिष्याम परान्समेत्य १६

ततस्तदाज्ञाय मतं महात्मा तेषां स धर्मस्य सुतो वरिष्ठः
प्रदक्षिणं वैश्रवणाधिवासं चकार धर्मार्थविदुत्तमौजाः १७
आमन्त्र्य वेश्मानि नदीः सरांसि सर्वाणि रक्षांसि च धर्मराजः
यथागतं मार्गमवेक्षमाणः पुनर्गिरिं चैव निरीक्षमाणः १८
समाप्तकर्मा सहितः सुहृद्भिर्जित्वा सपत्नान्प्रतिलभ्य राज्यम्
शैलेन्द्र भूयस्तपसे धृतात्मा द्रष्टा तवास्मीति मतिं चकार १९
वृतः स सर्वैरनुजैर्द्विजैश्च तेनैव मार्गेण पतिः कुरूणाम्
उवाह चैनान्सगणांस्तथैव घटोत्कचः पर्वतनिर्झरेषु २०
तान्प्रस्थितान्प्रीतमना महर्षिः पितेव पुत्राननुशिष्य सर्वान्
स लोमशः प्रीतमना जगाम दिवौकसां पुण्यतमं निवासम् २१
तेनानुशिष्टार्ष्टिषेणेन चैव तीर्थानि रम्याणि तपोवनानि
महान्ति चान्यानि सरांसि पार्थाः संपश्यमानाः प्रययुर्नराग्र्याः २२
इति श्रीमहाभारते आरण्यकपर्वणि त्रिसप्तत्यधिकशततमोऽध्यायः १७३

चतुःसप्तत्यधिकशततमोऽध्यायः

वैशम्पायन उवाच
नगोत्तमं प्रस्रवणैरुपेतं दिशां गजैः किन्नरपक्षिभिश्च
सुखं निवासं जहतां हि तेषां न प्रीतिरासीद्भरतर्षभाणाम् १
ततस्तु तेषां पुनरेव हर्षः कैलासमालोक्य महान्बभूव
कुबेरकान्तं भरतर्षभाणां महीधरं वारिधरप्रकाशम् २
समुच्छ्रयान्पर्वतसंनिरोधान्गोष्ठान्गिरीणां गिरिसेतुमालाः
बहून्प्रपातांश्च समीक्ष्य वीराः स्थलानि निम्नानि च तत्र तत्र ३
तथैव चान्यानि महावनानि मृगद्विजानेकपसेवितानि
आलोकयन्तोऽभिययुः प्रतीतास्ते धन्विनः खड्गधरा नराग्र्याः ४
वनानि रम्याणि सरांसि नद्यो गुहा गिरीणां गिरिगह्वराणि
एते निवासाः सततं बभूवुर्निशानिशं प्राप्य नरर्षभाणाम् ५
ते दुर्गवासं बहुधा निरुष्य व्यतीत्य कैलासमचिन्त्यरूपम्
आसेदुरत्यर्थमनोरमं वै तमाश्रमाग्र्यं वृषपर्वणस्ते ६
समेत्य राज्ञा वृषपर्वणा ते प्रत्यर्चितास्तेन च वीतमोहाः
शशंसिरे विस्तरशः प्रवासं शिवं यथावद्वृषपर्वणस्ते ७

सुखोषितास्तत्र त एकरात्रं पुण्याश्रमे देवमहर्षिजुष्टे
अभ्याययुस्ते बदरीं विशालां सुखेन वीराः पुनरेव वासम् ८
ऊषुस्ततस्तत्र महानुभावा नारायणस्थानगता नराग्र्याः
कुबेरकान्तां नलिनीं विशोकाः संपश्यमानाः सुरसिद्धजुष्टाम् ९
तां चाथ दृष्ट्वा नलिनीं विशोकाः पाण्डोः सुताः सर्वनरप्रवीराः
ते रेमिरे नन्दनवासमेत्य द्विजर्षयो वीतभया यथैव १०
ततः क्रमेणोपययुर्नृवीरा यथागतेनैव पथा समग्राः
विहृत्य मासं सुखिनो बदर्यां किरातराज्ञो विषयं सुबाहोः ११
चीनांस्तुखारान्दरदान्सदार्वान्देशान्कुणिन्दस्य च भूरिरत्नान्
अतीत्य दुर्गं हिमवत्प्रदेशं पुरं सुबाहोर्ददृशुर्नृवीराः १२
श्रुत्वा च तान्पार्थिवपुत्रपौत्रान्प्राप्तान्सुबाहुर्विषये समग्रान्
प्रत्युद्ययौ प्रीतियुतः स राजा तं चाभ्यनन्दन्वृषभाः कुरूणाम् १३
समेत्य राज्ञा तु सुबाहुना ते सूतैर्विशोकप्रमुखैश्च सर्वैः
सहेन्द्रसेनैः परिचारकैश्च पौरोगवैर्ये च महानसस्थाः १४
सुखोषितास्तत्र त एकरात्रं सूतानुपादाय रथांश्च सर्वान्
घटोत्कचं सानुचरं विसृज्य ततोऽभ्ययुर्यामुनमद्रिराजम् १५
तस्मिन्गिरौ प्रस्रवणोपपन्ने हिमोत्तरीयारुणपाण्डुसानौ
विशाखयूपं समुपेत्य चक्रुस्तदा निवासं पुरुषप्रवीराः १६
वराहनानामृगपक्षिजुष्टं महद्वनं चैत्ररथप्रकाशम्
शिवेन यात्वा मृगयाप्रधानाः संवत्सरं तत्र वने विजह्रुः १७
तत्राससादातिबलं भुजंगं क्षुधार्दितं मृत्युमिवोग्ररूपम्
वृकोदरः पर्वतकन्दरायां विषादमोहव्यथितान्तरात्मा १८
द्वीपोऽभवद्यत्र वृकोदरस्य युधिष्ठिरो धर्मभृतां वरिष्ठः
अमोक्षयद्यस्तमनन्ततेजा ग्राहेण संवेष्टितसर्वगात्रम् १९
ते द्वादशं वर्षमथोपयन्तं वने विहर्तुं कुरवः प्रतीताः
तस्माद्वनाच्चैत्ररथप्रकाशाच्छ्रिया ज्वलन्तस्तपसा च युक्ताः २०
ततश्च यात्वा मरुधन्वपार्श्वं सदा धनुर्वेदरतिप्रधानाः
सरस्वतीमेत्य निवासकामाः सरस्ततो द्वैतवनं प्रतीयुः २१
समीक्ष्य तान्द्वैतवने निविष्टान्निवासिनस्तत्र ततोऽभिजग्मुः
तपोदमाचारसमाधियुक्तास्तृणोदपात्राहरणाश्मकुट्टाः २२

प्लक्षाक्षरौहीतकवेतसाश्च स्नुहा बदर्यः खदिराः शिरीषाः
बिल्वेङ्गुदाः पीलुशमीकरीराः सरस्वतीतीररुहा बभूवुः २३
तां यक्षगन्धर्वमहर्षिकान्तामायागभूतामिव देवतानाम्
सरस्वतीं प्रीतियुताश्चरन्तः सुखं विजह्रुर्नरदेवपुत्राः २४
इति श्रीमहाभारते आरण्यकपर्वणि चतुःसप्तत्यधिकशततमोऽध्यायः १७४

पञ्चशप्तत्यधिकशततमोऽध्यायः

जनमेजय उवाच
कथं नागायुतप्राणो भीमसेनो महाबलः
भयमाहारयत्तीव्रं तस्मादजगरान्मुने १
पौलस्त्यं योऽह्वयद्युद्धे धनदं बलदर्पितः
नलिन्यां कदनं कृत्वा वराणां यक्षरक्षसाम् २
तं शंससि भयाविष्टमापन्नमरिकर्षणम्
एतदिच्छाम्यहं श्रोतुं परं कौतूहलं हि मे ३
वैशम्पायन उवाच
बह्वाश्चर्ये वने तेषां वसतामुग्रधन्विनाम्
प्राप्तानामाश्रमाद्राजन्राजर्षेर्वृषपर्वणः ४
यदृच्छया धनुष्पाणिर्बद्धखड्गो वृकोदरः
ददर्श तद्वनं रम्यं देवगन्धर्वसेवितम् ५
स ददर्श शुभान्देशान्गिरेर्हिमवतस्तदा
देवर्षिसिद्धचरितानप्सरोगणसेवितान् ६
चकोरैश्चक्रवाकैश्च पक्षिभिर्जीवजीवकैः
कोकिलैर्भृङ्गराजैश्च तत्र तत्र विनादितान् ७
नित्यपुष्पफलैर्वृक्षैर्हिमसंस्पर्शकोमलैः
उपेतान्बहुलच्छायैर्मनोनयननन्दनैः ८
स संपश्यन्गिरिनदीर्वैडूर्यमणिसंनिभैः
सलिलैर्हिमसंस्पर्शैर्हंसकारण्डवायुतैः ९
वनानि देवदारूणां मेघानामिव वागुराः
हरिचन्दनमिश्राणि तुङ्गकालीयकान्यपि १०
मृगयां परिधावन्स समेषु मरुधन्वसु

विध्यन्मृगाञ्शरैः शुद्धैश्चचार सुमहाबलः ११
स ददर्श महाकायं भुजंगं लोमहर्षणम्
गिरिदुर्गे समापन्नं कायेनावृत्य कन्दरम् १२
पर्वताभोगवर्ष्माणं भोगैश्चन्द्रार्कमगडलैः
चित्राङ्गमजिनैश्चित्रैर्हरिद्रासदृशच्छविम् १३
गुहाकारेण वक्त्रेण चतुर्दंष्ट्रेण राजता
दीप्ताक्षेणातिताम्रेण लिहन्तं सृक्किणी मुहुः १४
त्रासनं सर्वभूतानां कालान्तकयमोपमम्
निःश्वासक्ष्वेडनादेन भर्त्सयन्तमिव स्थितम् १५
स भीमं सहसाभ्येत्य पृदाकुः क्षुधितो भृशम्
जग्राहाजगरो ग्राहो भुजयोरुभयोर्बलात् १६
तेन संस्पृष्टमात्रस्य भीमसेनस्य वै तदा
संज्ञा मुमोह सहसा वरदानेन तस्य ह १७
दश नागसहस्राणि धारयन्ति हि यद्बलम्
तद्बलं भीमसेनस्य भुजयोरसमं परैः १८
स तेजस्वी तथा तेन भुजगेन वशीकृतः
विस्फुरञ्शनकैर्भीमो न शशाक विचेष्टितुम् १९
नागायुतसमप्राणः सिंहस्कन्धो महाभुजः
गृहीतो व्यजहात्सत्त्वं वरदानेन मोहितः २०
स हि प्रयत्नमकरोत्तीव्रमात्मविमोक्षणे
न चैनमशकद्वीरः कथंचित्प्रतिबाधितुम् २१
इति श्रीमहाभारते आरगयकपर्वणि पञ्चसप्तत्यधिकशततमोऽध्यायः १७५

## षट्सप्तत्यधिक शततमोऽध्यायः

वैशम्पायन उवाच
स भीमसेनस्तेजस्वी तथा सर्पवशं गतः
चिन्तयामास सर्पस्य वीर्यमत्यद्भुतं महत् १
उवाच च महासर्पं कामया ब्रूहि पन्नग
कस्त्वं भो भुजगश्रेष्ठ किं मया च करिष्यसि २
पागडवो भीमसेनोऽह धर्मराजादनन्तरः

नागायुतसमप्राणस्त्वया नीतः कथं वशम् ३
सिंहाः केसरिणो व्याघ्रा महिषा वारणास्तथा
समागताश्च बहुशो निहताश्च मया मृधे ४
दानवाश्च पिशाचाश्च राक्षसाश्च महाबलाः
भुजवेगमशक्ता मे सोढुं पन्नगसत्तम ५
किं नु विद्याबलं किं वा वरदानमथो तव
उद्योगमपि कुर्वाणो वशगोऽस्मि कृतस्त्वया ६
असत्यो विक्रमो नृणामिति मे निश्चिता मतिः
यथेदं मे त्वया नाग बलं प्रतिहतं महत् ७
इत्येवंवादिनं वीरं भीममक्लिष्टकारिणम्
भोगेन महता सर्पः समन्तात्पर्यवेष्टयत् ८
निगृह्य तं महाबाहुं ततः स भुजगस्तदा
विमुच्यास्य भुजौ पीनाविदं वचनमब्रवीत् ९
दिष्ट्या त्वं क्षुधितस्याद्य देवैर्भक्षो महाभुज
दिष्ट्या कालस्य महतः प्रियाः प्राणा हि देहिनाम् १०
यथा त्विदं मया प्राप्तं भुजंगत्वमरिंदम
तदवश्यं मया ख्याप्यं तवाद्य शृणु सत्तम ११
इमामवस्थां संप्राप्तो ह्यहं कोपान्मनीषिणाम्
शापस्यान्तं परिप्रेप्सुः सर्पस्य कथयामि तत् १२
नहुषो नाम राजर्षिर्व्यक्तं ते श्रोत्रमागतः
तवैव पूर्वः पूर्वेषामायोर्वंशकरः सुतः १३
सोऽह शापादगस्त्यस्य ब्राह्मणानवमन्य च
इमामवस्थामापन्नः पश्य दैवमिदं मम १४
त्वां चेदवध्यमायान्तमतीव प्रियदर्शनम्
अहमद्योपयोक्ष्यामि विधानं पश्य यादृशम् १५
न हि मे मुच्यते कश्चित्कथंचिद्ग्रहणं गतः
गजो वा महिषो वापि षष्ठे काले नरोत्तम १६
नासि केवलसर्पेण तिर्यग्योनिषु वर्तता
गृहीतः कौरवश्रेष्ठ वरदानमिदं मम १७
पतता हि विमानाग्रान्मया शक्रासनाद् द्रुतम्

कुरु शापान्तमित्युक्तो भगवान्मुनिसत्तमः १८
स मामुवाच तेजस्वी कृपयाभिपरिप्लुतः
मोक्षस्ते भविता राजन्कस्माच्चित्कालपर्ययात् १९
ततोऽस्मि पतितो भूमौ न च मामजहात्स्मृतिः
स्मार्तमस्ति पुराणं मे यथैवाधिगतं तथा २०
यस्तु ते व्याहृतान्प्रश्नान्प्रतिब्रूयाद्विशेषवित्
स त्वां मोक्षयिता शापादिति मामब्रवीदृषिः २१
गृहीतस्य त्वया राजन्प्राणिनोऽपि बलीयसः
सत्त्वभ्रंशोऽधिकस्यापि सर्वस्याशु भविष्यति २२
इति चाप्यहमश्रौषं वचस्तेषां दयावताम्
मयि संजातहार्दानामथ तेऽन्तर्हिता द्विजाः २३
सोऽह परमदुष्कर्मा वसामि निरयेऽशुचौ
सर्पयोनिमिमां प्राप्य कालाकाङ्क्षी महाद्युते २४
तमुवाच महाबाहुर्भीमसेनो भुजंगमम्
न ते कुप्ये महासर्प न चात्मानं विगर्हये २५
यस्मादभावी भावी वा मनुष्यः सुखदुःखयोः
आगमे यदि वापाये न तत्र ग्लपयेन्मनः २६
दैवं पुरुषकारेण को निवर्तितुमर्हति
दैवमेव परं मन्ये पुरुषार्थो निरर्थकः २७
पश्य दैवोपघाताद्धि भुजवीर्यव्यपाश्रयम्
इमामवस्थां संप्राप्तमनिमित्तमिहाद्य माम् २८
किं तु नाद्यानुशोचामि तथात्मानं विनाशितम्
यथा तु विपिने न्यस्तान्भ्रातॄन्राज्यपरिच्युतान् २९
हिमवांश्च सुदुर्गोऽय यक्षराक्षससंकुलः
मां च ते समुदीक्षन्तः प्रपतिष्यन्ति विह्वलाः ३०
विनष्टमथ वा श्रुत्वा भविष्यन्ति निरुद्यमाः
धर्मशीला मया ते हि बाध्यन्ते राज्यगृद्धिना ३१
अथ वा नार्जुनो धीमान्विषादमुपयास्यति
सर्वास्त्रविदनाधृष्यो देवगन्धर्वराक्षसैः ३२
समर्थः स महाबाहुरेकाह्ना सुमहाबलः

देवराजमपि स्थानात्प्रच्यावयितुमोजसा ३३
किं पुनर्धृतराष्ट्रस्य पुत्रं दुर्द्यूतदेविनम्
विद्विष्टं सर्वलोकस्य दम्भलोभपरायणम् ३४
मातरं चैव शोचामि कृपणां पुत्रगृद्धिनीम्
यास्माकं नित्यमाशास्ते महत्त्वमधिकं परैः ३५
कथं नु तस्यानाथाया मद्विनाशाद्भुजंगम
अफलास्ते भविष्यन्ति मयि सर्वे मनोरथाः ३६
नकुलः सहदेवश्च यमजौ गुरुवर्तिनौ
मद्बाहुबलसंस्तब्धौ नित्यं पुरुषमानिनौ ३७
निरुत्साहौ भविष्येते भ्रष्टवीर्यपराक्रमौ
मद्विनाशात्परिद्यूनाविति मे वर्तते मतिः ३८
एवंविधं बहु तदा विललाप वृकोदरः
भुजंगभोगसंरुद्धो नाशकच्च विचेष्टितुम् ३९
युधिष्ठिरस्तु कौन्तेयो बभूवास्वस्थचेतनः
अनिष्टदर्शनान्घोरानुत्पातान्परिचिन्तयन् ४०
दारुणं ह्यशिवं नादं शिवा दक्षिणतः स्थिता
दीप्तायां दिशि वित्रस्ता रौति तस्याश्रमस्य ह ४१
एकपक्षाक्षिचरणा वर्तिका घोरदर्शना
रुधिरं वमन्ती ददृशे प्रत्यादित्यमपस्वरा ४२
प्रववावनिलो रूक्षश्चण्डः शर्करकर्षणः
अपसव्यावनि सर्वाणि मृगपक्षिरुतानि च ४३
पृष्ठतो वायसः कृष्णो याहि याहीति वाशति
मुहुर्मुहुः प्रस्फुरति दक्षिणोऽस्य भुजस्तथा ४४
हृदयं चरणश्चापि वामोऽस्य परिवर्तते
सव्यस्याक्ष्णो विकारश्चाप्यनिष्टः समपद्यत ४५
स धर्मराजो मेधावी शङ्कमानो महद्भयम्
द्रौपदीं परिपप्रच्छ क्व भीम इति भारत ४६
शशंस तस्मै पाञ्चाली चिरयातं वृकोदरम्
स प्रतस्थे महाबाहुर्धौम्येन सहितो नृपः ४७
द्रौपद्या रक्षणं कार्यमित्युवाच धनञ्जयम्

नकुलं सहदेवं च व्यादिदेश द्विजान्प्रति ४८
स तस्य पदमुन्नीय तस्मादेवाश्रमात्प्रभुः
ददर्श पृथिवीं चिह्नैर्भीमस्य परिचिह्निताम् ४९
धावतस्तस्य वीरस्य मृगार्थे वातरंहसः
ऊरुवातविनिर्भग्नान्द्रुमान्व्यावर्जितान्पथि ५०
स गत्वा तैस्तदा चिह्नैर्ददर्श गिरिगह्वरे
गृहीतं भुजगेन्द्रेण निश्चेष्टमनुजं तथा ५१
इति श्रीमहाभारते आरण्यकपर्वणि षट्सप्तत्यधिकशततमोऽध्यायः १७६

## सप्तसप्तत्यधिक शततमोऽध्यायः

वैशम्पायन उवाच
युधिष्ठिरस्तमासाद्य सर्पभोगाभिवेष्टितम्
दयितं भ्रातरं वीरमिदं वचनमब्रवीत् १
कुन्तीमातः कथमिमामापदं त्वमवाप्तवान्
कश्चायं पर्वताभोगप्रतिमः पन्नगोत्तमः २
स धर्मराजमालक्ष्य भ्राता भ्रातरमग्रजम्
कथयामास तत्सर्वं ग्रहणादि विचेष्टितम् ३
युधिष्ठिर उवाच
देवो वा यदि वा दैत्य उरगो वा भवान्यदि
सत्यं सर्प वचो ब्रूहि पृच्छति त्वां युधिष्ठिरः ४
किमाहृत्य विदित्वा वा प्रीतिस्ते स्याद्भुजंगम
किमाहारं प्रयच्छामि कथं मुञ्चेद्भवानिमम् ५
सर्प उवाच
नहुषो नाम राजाहमासं पूर्वस्तवानघ
प्रथितः पञ्चमः सोमादायोः पुत्रो नराधिप ६
क्रतुभिस्तपसा चैव स्वाध्यायेन दमेन च
त्रैलोक्यैश्वर्यमव्यग्रं प्राप्तो विक्रमणेन च ७
तदैश्वर्यं समासाद्य दर्पो मामगमत्तदा
सहस्रं हि द्विजातीनामुवाह शिबिकां मम ८
ऐश्वर्यमदमत्तोऽहमवमन्य ततो द्विजान्

इमामगस्त्येन दशामानीतः पृथिवीपते ९
न तु मामजहात्प्रज्ञा यावदद्येति पाण्डव
तस्यैवानुग्रहाद्राजन्नगस्त्यस्य महात्मनः १०
षष्ठे काले ममाहारः प्राप्तोऽयमनुजस्तव
नाहमेनं विमोक्ष्यामि न चान्यमभिकामये ११
प्रश्नानुच्चारितांस्तु त्वं व्याहरिष्यसि चेन्मम
अथ पश्चाद्विमोक्ष्यामि भ्रातरं ते वृकोदरम् १२
युधिष्ठिर उवाच
ब्रूहि सर्प यथाकामं प्रतिवक्ष्यामि ते वचः
अपि चेच्छक्नुयां प्रीतिमाहर्तुं ते भुजंगम १३
वेद्यं यद्ब्राह्मणेनेह तद्भवान्वेत्ति केवलम्
सर्पराज ततः श्रुत्वा प्रतिवक्ष्यामि ते वचः १४
सर्प उवाच
ब्राह्मणः को भवेद्राजन्वेद्यं किं च युधिष्ठिर
ब्रवीह्यतिमतिं त्वां हि वाक्यैरनुमिमीमहे १५
युधिष्ठिर उवाच
सत्यं दानं क्षमा शीलमानृशंस्यं दमो घृणा
दृश्यन्ते यत्र नागेन्द्र स ब्राह्मण इति स्मृतः १६
वेद्यं सर्प परं ब्रह्म निर्दुःखमसुखं च यत्
यत्र गत्वा न शोचन्ति भवतः किं विवक्षितम् १७
सर्प उवाच
चातुर्वर्ण्यं प्रमाणं च सत्यं च ब्रह्म चैव ह
शूद्रेष्वपि च सत्यं च दानमक्रोध एव च
आनृशंस्यमहिंसा च घृणा चैव युधिष्ठिर १८
वेद्यं यच्चात्थ निर्दुःखमसुखं च नराधिप
ताभ्यां हीनं पदं चान्यन्न तदस्तीति लक्षये १९
युधिष्ठिर उवाच
शूद्रे चैतद्भवेल्लक्ष्यं द्विजे तच्च न विद्यते
न वै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः २०
यत्रैतल्लक्ष्यते सर्प वृत्तं स ब्राह्मणः स्मृतः

यत्रैतन्नभवेत्सर्प तं शूद्रमिति निर्दिशेत् २१
यत्पुनर्भवता प्रोक्तं न वेद्यं विद्यतेति ह
ताभ्यां हीनमतीत्यात्र पदं नास्तीति चेदपि २२
एवमेतन्मतं सर्प ताभ्यां हीनं न विद्यते
यथा शीतोष्णयोर्मध्ये भवेन्नोष्णं न शीतता २३
एवं वै सुखदुःखाभ्यां हीनमस्ति पदं क्वचित्
एषा मम मतिः सर्प यथा वा मन्यते भवान् २४
सर्प उवाच
यदि ते वृत्ततो राजन्ब्राह्मणः प्रसमीक्षितः
व्यर्था जातिस्तदायुष्मन्कृतिर्यावन्न दृश्यते २५
युधिष्ठिर उवाच
जातिरत्र महासर्प मनुष्यत्वे महामते
संकरात्सर्ववर्णानां दुष्परीक्ष्येति मे मतिः २६
सर्वे सर्वास्वपत्यानि जनयन्ति यदा नराः
वाङ्मैथुनमथो जन्म मरणं च समं नृणाम् २७
इदमार्षं प्रमाणं च ये यजामह इत्यपि
तस्माच्छीलं प्रधानेष्टं विदुर्ये तत्त्वदर्शिनः २८
प्राङ्नाभिवर्धनात्पुंसो जातकर्म विधीयते
तत्रास्य माता सावित्री पिता त्वाचार्य उच्यते २९
वृत्त्या शूद्रसमो ह्येष यावद्वेदे न जायते
अस्मिन्नेवं मतिद्वैधे मनुः स्वायंभुवोऽब्रवीत् ३०
कृतकृत्याः पुनर्वर्णा यदि वृत्तं न विद्यते
संकरस्तत्र नागेन्द्र बलवान्प्रसमीक्षितः ३१
यत्रेदानीं महासर्प संस्कृतं वृत्तमिष्यते
तं ब्राह्मणमहं पूर्वमुक्तवान्भुजगोत्तम ३२
सर्प उवाच
श्रुतं विदितवेद्यस्य तव वाक्यं युधिष्ठिर
भक्षयेयमहं कस्माद्भ्रातरं ते बृकोदरम् ३३
इति श्रीमहाभारते आरण्यकपर्वणि सप्तसप्तत्यधिकशततमोऽध्यायः १७७

## अष्ट सप्तत्यधिक शततमोऽध्यायः

युधिष्ठिर उवाच
भवानेतादृशो लोके वेदवेदाङ्गपारगः
ब्रूहि किं कुर्वतः कर्म भवेद्गतिरनुत्तमा १
सर्प उवाच
पात्रे दत्त्वा प्रियाण्युक्त्वा सत्यमुक्त्वा च भारत
अहिंसानिरतः स्वर्गं गच्छेदिति मतिर्मम २
युधिष्ठिर उवाच
दानाद्वा सर्प सत्याद्वा किमतो गुरु दृश्यते
अहिंसा प्रिययोश्चैव गुरु लाघव मुच्यताम् ३
सर्प उवाच
दाने रतत्वं सत्यं च अहिंसा प्रियमेव च
एषां कार्यगरीयस्त्वाद्दृश्यते गुरुलाघवम् ४
कस्माच्चिद्दानयोगाद्धि सत्यमेव विशिष्यते
सत्यवाक्याच्च राजेन्द्र किंचिद्दानं विशिष्यते ५
एवमेव महेष्वास प्रियवाक्यान्महीपते
अहिंसा दृश्यते गुर्वी ततश्च प्रियमिष्यते ६
एवमेतद्भवेद्राजन्कार्यापेक्षमनन्तरम्
यदभिप्रेतमन्यत्ते ब्रूहि यावद्ब्रवीम्यहम् ७
युधिष्ठिर उवाच
कथं स्वर्गे गतिः सर्प कर्मणां च फलं ध्रुवम्
अशरीरस्य दृश्येत विषयांश्च ब्रवीहि मे ८
सर्प उवाच
तिस्रो वै गतयो राजन्परिदृष्टाः स्वकर्मभिः
मानुष्यं स्वर्गवासश्च तिर्यग्योनिश्च तत्त्रिधा ९
तत्र वै मानुषाल्लोकाद्दानादिभिरतन्द्रितः
अहिंसार्थसमायुक्तैः कारणैः स्वर्गमश्नुते १०
विपरीतैश्च राजेन्द्र कारणैर्मानुषो भवेत्
तिर्यग्योनिस्तथा तात विशेषश्चात्र वक्ष्यते ११
कामक्रोधसमायुक्तो हिंसालोभसमन्वितः

मनुष्यत्वात्परिभ्रष्टस्तिर्यग्योनौ प्रसूयते १२
तिर्यग्योन्यां पृथग्भावो मनुष्यत्वे विधीयते
गवादिभ्यस्तथाश्वेभ्यो देवत्वमपि दृश्यते १३
सोऽयमेता गतीः सर्वा जन्तुश्चरति कार्यवान्
नित्ये महति चात्मानमवस्थापयते नृप १४
जातो जातश्च बलवान्भुङ्क्ते चात्मा स देहवान्
फलार्थस्तात निष्पृक्तः प्रजालक्षणभावनः १५
युधिष्ठिर उवाच
शब्दे स्पर्शे च रूपे च तथैव रसगन्धयोः
तस्याधिष्ठानमव्यग्रं ब्रूहि सर्प यथातथम् १६
किं न गृह्णासि विषयान्युगपत्त्वं महामते
एतावदुच्यतां चोक्तं सर्वं पन्नगसत्तम १७
सर्प उवाच
यदात्मद्रव्यमायुष्मन्देहसंश्रयणान्वितम्
करणाधिष्ठितं भोगानुपभुङ्क्ते यथाविधि १८
ज्ञानं चैवात्र बुद्धिश्च मनश्च भरतर्षभ
तस्य भोगाधिकरणे करणानि निबोध मे १९
मनसा तात पर्यैति क्रमशो विषयानिमान्
विषयायतनस्थेन भूतात्मा क्षेत्रनिःसृतः २०
अत्र चापि नरव्याघ्र मनो जन्तोर्विधीयते
तस्माद्युगपदस्यात्र ग्रहणं नोपपद्यते २१
स आत्मा पुरुषव्याघ्र भ्रुवोरन्तरमाश्रितः
द्रव्येषु सृजते बुद्धिं विविधेषु परावराम् २२
बुद्धेरुत्तरकालं च वेदना दृश्यते बुधैः
एष वै राजशार्दूल विधिः क्षेत्रज्ञभावनः २३
युधिष्ठिर उवाच
मनसश्चापि बुद्धेश्च ब्रूहि मे लक्षणं परम्
एतदध्यात्मविदुषां परं कार्यं विधीयते २४
सर्प उवाच
बुद्धिरात्मानुगा तात उत्पातेन विधीयते

तदाश्रिता हि संज्ञैषा विधिस्तस्यैषणे भवेत् २५
बुद्धेर्गुणविधिर्नास्ति मनस्तु गुणवद्भवेत्
बुद्धिरुत्पद्यते कार्ये मनस्तूत्पन्नमेव हि २६
एतद्विशेषणं तात मनोबुद्ध्योर्मयेरितम्
त्वमप्यत्राभिसंबुद्धः कथं वा मन्यते भवान् २७
युधिष्ठिर उवाच
अहो बुद्धिमतां श्रेष्ठ शुभा बुद्धिरियं तव
विदितं वेदितव्यं ते कस्मान्मामनुपृच्छसि २८
सर्वज्ञं त्वां कथं मोह आविशत्स्वर्गवासिनम्
एवमद्भुतकर्माणमिति मे संशयो महान् २९
सर्प उवाच
सुप्रज्ञमपि चेच्छूरमृद्धिर्मोहयते नरम्
वर्तमानः सुखे सर्वो नावैतीति मतिर्मम ३०
सोऽहमैश्वर्यमोहेन मदाविष्टो युधिष्ठिर
पतितः प्रतिसंबुद्धस्त्वां तु संबोधयाम्यहम् ३१
कृतं कार्यं महाराज त्वया मम परंतप
क्षीणः शापः सुकृच्छ्रो मे त्वया संभाष्य साधुना ३२
अहं हि दिवि दिव्येन विमानेन चरन्पुरा
अभिमानेन मत्तः सन्कञ्चिन्नान्यमचिन्तयम् ३३
ब्रह्मर्षिदेवगन्धर्वयक्षराक्षसकिंनराः
करान्मम प्रयच्छन्ति सर्वे त्रैलोक्यवासिनः ३४
चक्षुषा यं प्रपश्यामि प्राणिनं पृथिवीपते
तस्य तेजो हराम्याशु तद्धि दृष्टिबलं मम ३५
ब्रह्मर्षीणां सहस्रं हि उवाह शिबिकां मम
स मामपनयो राजन्भ्रंशयामास वै श्रियः ३६
तत्र ह्यगस्त्यः पादेन वहन्स्पृष्टो मया मुनिः
अदृष्टेन ततोऽस्म्युक्तो ध्वंस सर्पेति वै रुषा ३७
ततस्तस्माद्विमानाग्रात्प्रच्युतश्च्युतभूषणः
प्रपतन्बुबुधेऽत्मानं व्यालीभूतमधोमुखम् ३८
अयाचं तमहं विप्रं शापस्यान्तो भवेदिति

अज्ञानात्संप्रवृत्तस्य भगवन्चन्तुमर्हसि ३९
ततः स मामुवाचेदं प्रपतन्तं कृपान्वितः
युधिष्ठिरो धर्मराजः शापात्त्वां मोक्षयिष्यति ४०
अभिमानस्य घोरस्य बलस्य च नराधिप
फले क्षीणे महाराज फलं पुगयमवाप्स्यसि ४१
ततो मे विस्मयो जातस्तद्दृष्ट्वा तपसो बलम्
ब्रह्म च ब्राह्मगात्वं च येन त्वाहमचूचुदम् ४२
सत्यं दमस्तपो योगमहिंसा दाननित्यता
साधकानि सदा पुंसां न जातिर्न कुलं नृप ४३
अरिष्ट एष ते भ्राता भीमो मुक्तो महाभुजः
स्वस्ति तेऽस्तु महाराज गमिष्यामि दिवं पुनः ४४
वैशम्पायन उवाच
इत्युक्त्वाजगरं देहं त्यक्त्वा स नहुषो नृपः
दिव्यं वपुः समास्थाय गतस्त्रिदिवमेव ह ४५
युधिष्ठिरोऽपि धर्मात्मा भ्रात्रा भीमेन संगतः
धौम्येन सहितः श्रीमानाश्रमं पुनरभ्यगात् ४६
ततो द्विजेभ्यः सर्वेभ्यः समेतेभ्यो यथातथम्
कथयामास तत्सर्वं धर्मराजो युधिष्ठिरः ४७
तच्छ्रुत्वा ते द्विजाः सर्वे भ्रातरश्चास्य ते त्रयः
आसन्सुव्रीडिता राजन्द्रौपदी च यशस्विनी ४८
ते तु सर्वे द्विजश्रेष्ठाः पागडवानां हितेप्सया
मैवमित्यब्रुवन्भीमं गर्हयन्तोऽस्य साहसम् ४९
पागडवास्तु भयान्मुक्तं प्रेक्ष्य भीमं महाबलम्
हर्षमाहारयांचक्रुर्विजहुश्च मुदा युताः ५०
इति श्रीमहाभारते आरगयकपर्वणि अष्टसप्तत्यधिकशततमोऽध्यायः १७८
समाप्तमाजगरपर्व

एकोनाशीत्यधिक शततमोऽध्यायः

वैशम्पायन उवाच
निदाघान्तकरः कालः सर्वभूतसुखावहः

तत्रैव वसतां तेषां प्रावृट् समभिपद्यत १
छादयन्तो महाघोषाः खं दिशश्च बलाहकाः
प्रववर्षुर्दिवारात्रमसिताः सततं तदा २
तपात्ययनिकेताश्च शतशोऽथ सहस्रशः
अपेतार्कप्रभाजालाः सविद्युद्विमलप्रभाः ३
विरूढशष्पा पृथिवी मत्तदंशसरीसृपा
बभूव पयसा सिक्ता शान्तधूमरजोरुणा ४
न स्म प्रज्ञायते किंचिदम्भसा समवस्तृते
समं वा विषमं वापि नद्यो वा स्थावराणि वा ५
क्षुब्धतोया महाघोषाः श्वसमाना इवाशुगाः
सिन्धवः शोभयांचक्रुः काननानि तपात्यये ६
नदतां काननान्तेषु श्रूयन्ते विविधाः स्वनाः
वृष्टिभिस्ताड्यमानानां वराहमृगपक्षिणाम् ७
स्तोककाः शिखिनश्चैव पुंस्कोकिलगणैः सह
मत्ताः परिपतन्ति स्म दर्दुराश्चैव दर्पिताः ८
तथा बहुविधाकारा प्रावृण्मेघानुनादिता
अभ्यतीता शिवा तेषां चरतां मरुधन्वसु ९
क्रौञ्चहंसगणाकीर्णा शरत्प्रणिहिताभवत्
रूढकक्षवनप्रस्था प्रसन्नजलनिम्नगा १०
विमलाकाशनक्षत्रा शरत्तेषां शिवाभवत्
मृगद्विजसमाकीर्णा पाण्डवानां महात्मनाम् ११
पश्यन्तः शान्तरजसः क्षपा जलदशीतलाः
ग्रहनक्षत्रसंघैश्च सोमेन च विराजिताः १२
कुमुदैः पुण्डरीकैश्च शीतवारिधराः शिवाः
नदीः पुष्करिणीश्चैव ददृशुः समलंकृताः १३
आकाशनीकाशतटां नीपनीवारसंकुलाम्
बभूव चरतां हर्षः पुण्यतीर्थां सरस्वतीम् १४
ते वै मुमुदिरे वीराः प्रसन्नसलिलां शिवाम्
पश्यन्तो दृढधन्वानः परिपूर्णां सरस्वतीम् १५
तेषां पुण्यतमा रात्रिः पर्वसंधौ स्म शारदी

तत्रैव वसतामासीत्कार्तिकी जनमेजय १६
पुगयकृद्भिर्महासत्त्वैस्तापसैः सह पागडवाः
तत्सर्वं भरतश्रेष्ठाः समूहुर्योगमुत्तमम् १७
तमिस्त्राभ्युदये तस्मिन्धौम्येन सह पागडवाः
सूतैः पौरोगवैश्चैव काम्यकं प्रययुर्वनम् १८
इति श्रीमहाभारते आरगयकपर्वणि एकोनाशीत्यधिकशततमोऽध्यायः १७९

## अशीत्यधिक शततमोऽध्यायः

वैशम्पायन उवाच
काम्यकं प्राप्य कौन्तेया युधिष्ठिरपुरोगमाः
कृतातिथ्या मुनिगणैर्निषेदुः सह कृष्णया १
ततस्तान्परिविश्वस्तान्वसतः पागडुनन्दनान्
ब्राह्मणा बहवस्तत्र समन्तात्पर्यवारयन् २
अथाब्रवीद्द्विजः कश्चिदर्जुनस्य प्रियः सखा
एष्यतीह महाबाहुर्वशी शौरिरुदारधीः ३
विदिता हि हरेर्यूयमिहायाताः कुरूद्वहाः
सदा हि दर्शनाकाङ्क्षी श्रेयोन्वेषी च वो हरिः ४
बहुवत्सरजीवी च मार्कगडेयो महातपाः
स्वाध्यायतपसा युक्तः क्षिप्रं युष्मान्समेष्यति ५
तथैव तस्य ब्रुवतः प्रत्यदृश्यत केशवः
सैन्यसुग्रीवयुक्तेन रथेन रथिनां वरः ६
मघवानिव पौलोम्या सहितः सत्यभामया
उपयाद्देवकीपुत्रो दिदृक्षुः कुरुसत्तमान् ७
अवतीर्य रथात्कृष्णो धर्मराजं यथाविधि
ववन्दे मुदितो धीमान्भीमं च बलिनां वरम् ८
पूजयामास धौम्यं च यमाभ्यामभिवादितः
परिष्वज्य गुडाकेशं द्रौपदीं पर्यसान्त्वयत् ९
स दृष्ट्वा फल्गुनं वीरं चिरस्य प्रियमागतम्
पर्यष्वजत दाशार्हः पुनः पुनररिन्दमम् १०
तथैव सत्यभामापि द्रौपदीं परिषस्वजे

पाण्डवानां प्रियां भार्यां कृष्णस्य महिषी प्रिया ११
ततस्ते पाण्डवाः सर्वे सभार्याः सपुरोहिताः
आनर्चुः पुण्डरीकाक्षं परिवव्रुश्च सर्वशः १२
कृष्णस्तु पार्थेन समेत्य विद्वान्धनंजयेनासुरतर्जनेन
बभौ यथा भूतपतिर्महात्मा समेत्य साक्षाद्भगवान्गुहेन १३
ततः समस्तानि किरीटमाली वनेषु वृत्तानि गदाग्रजाय
उक्त्वा यथावत्पुनरन्वपृच्छत्कथं सुभद्रा च तथाभिमन्युः १४
स पूजयित्वा मधुहा यथावत्पार्थांश्च कृष्णां च पुरोहितं च
उवाच राजानमभिप्रशंसन्युधिष्ठिरं तत्र सहोपविश्य १५
धर्मः परः पाण्डव राज्यलाभात्तस्यार्थमाहुस्तप एव राजन्
सत्यार्जवाभ्यां चरता स्वधर्मं जितस्तवायं च परश्च लोकः १६
अधीतमग्रे चरता व्रतानि सम्यग्धनुर्वेदमवाप्य कृत्स्नम्
क्षात्रेण धर्मेण वसूनि लब्ध्वा सर्वे ह्यवाप्ताः क्रतवः पुराणाः १७
न ग्राम्यधर्मेषु रतिस्तवास्ति कामान्न किंचित्कुरुषे नरेन्द्र
न चार्थलोभात्प्रजहासि धर्मं तस्मात्स्वभावादसि धर्मराजः १८
दानं च सत्यं च तपश्च राजञ्श्रद्धा च शान्तिश्च धृतिः क्षमा च
अवाप्य राष्ट्राणि वसूनि भोगानेषा परा पार्थ सदा रतिस्ते १९
यदा जनौघः कुरुजाङ्गलानां कृष्णां सभायामवशामपश्यत्
अपेतधर्मव्यवहारवृत्तं सहेत तत्पाण्डव कस्त्वदन्यः २०
असंशयं सर्वसमृद्धकामः क्षिप्रं प्रजाः पालयितासि सम्यक्
इमे वयं निग्रहणे कुरूणां यदि प्रतिज्ञा भवतः समाप्ता २१
धौम्यं च कृष्णां च युधिष्ठिरं च यमौ च भीमं च दशार्हसिंहः
उवाच दिष्ट्या भवतां शिवेन प्राप्तः किरीटी मुदितः कृतास्त्रः २२
प्रोवाच कृष्णामपि याज्ञसेनीं दशर्हभर्ता सहितः सुहृद्भिः
कृष्णे धनुर्वेदरतिप्रधानाः सत्यव्रतास्ते शिशवः सुशीलाः
सद्भिः सदैवाचरितं समाधिं चरन्ति पुत्रास्तव याज्ञसेनि २३
राज्येन राष्ट्रैश्च निमन्त्र्यमाणाः पित्रा च कृष्णे तव सोदरैश्च
न यज्ञसेनस्य न मातुलानां गृहेषु बाला रतिमाप्नुवन्ति २४
आनर्तमेवाभिमुखाः शिवेन गत्वा धनुर्वेदरतिप्रधानाः
तवात्मजा वृष्णिपुरं प्रविश्य न दैवतेभ्यः स्पृहयन्ति कृष्णे २५

यथा त्वमेवार्हसि तेषु वृत्तिं प्रयोक्तुमार्या च यथैव कुन्ती
तेष्वप्रमादेन सदा करोति तथा च भूयश्च तथा सुभद्रा २६
यथानिरुद्धस्य यथाभिमन्योर्यथा सुनीथस्य यथैव भानोः
तथा विनेता च गतिश्च कृष्णे तवात्मजानामपि रौक्मिणेयः २७
गदासिचर्मग्रहणेषु शूरानस्त्रेषु शिक्षासु रथाश्वयाने
सम्यग्विनेता विनयत्यतन्द्रीस्तांश्चाभिमन्युः सततं कुमारः २८
स चापि सम्यक्प्रणिधाय शिक्षामस्त्राणि चैषां गुरुवत्प्रदाय
तवात्मजानां च तथाभिमन्योः पराक्रमैस्तुष्यति रौक्मिणेयः २९
यदा विहारं प्रसमीक्षमाणाः प्रयान्ति पुत्रास्तव याज्ञसेनि
एकैकमेषामनुयान्ति तत्र रथाश्च यानानि च दन्तिनश्च ३०
अथाब्रवीद्धर्मराजं तु कृष्णो दशार्हयोधाः कुकुरान्धकाश्च
एते निदेशं तव पालयन्ति तिष्ठन्ति यत्रेच्छसि तत्र राजन् ३१
आवर्ततां कार्मुकवेगवाता हलायुधप्रग्रहणा मधूनाम्
सेना तवार्थेषु नरेन्द्र यत्ता ससादिपत्त्यश्वरथा सनागा ३२
प्रस्थाप्यतां पाण्डव धार्तराष्ट्रः सुयोधनः पापकृतां वरिष्ठः
स सानुबन्धः ससुहृद्गणश्च सौभस्य सौभाधिपतेश्च मार्गम् ३३
कामं तथा तिष्ठ नरेन्द्र तस्मिन्यथा कृतस्ते समयः सभायाम्
दाशार्हयोधैस्तु ससादियोधं प्रतीक्षतां नागपुरं भवन्तम् ३४
व्यपेतमन्युर्व्यपनीतपाप्मा विहृत्य यत्रेच्छसि तत्र कामम्
ततः समृद्धं प्रथमं विशोकः प्रपत्स्यसे नागपुरं सराष्ट्रम् ३५
ततस्तदाज्ञाय मतं महात्मा यथावदुक्तं पुरुषोत्तमेन
प्रशस्य विप्रेक्ष्य च धर्मराजः कृताञ्जलि केशवमित्युवाच ३६
असंशयं केशव पाण्डवानां भवान्गतिस्त्वच्छरणा हि पार्थाः
कालोदये तच्च ततश्च भूयः कर्ता भवान्कर्म न संशयोऽस्ति ३७
यथाप्रतिज्ञं विहृतश्च कालः सर्वाः समा द्वादश निर्जनेषु
अज्ञातचर्यां विधिवत्समाप्य भवद्गताः केशव पाण्डवेयाः ३८
वैशम्पायन उवाच
तथा वदति वार्ष्णेये धर्मराजे च भारत
अथ पश्चात्तपोवृद्धो बहुवर्षसहस्रधृक्
प्रत्यदृश्यत धर्मात्मा मार्कण्डेयो महातपाः ३९

तमागतमृषिं वृद्धं बहुवर्षसहस्रिणम्
आनर्चुर्ब्राह्मणाः सर्वे कृष्णश्च सह पाण्डवैः ४०
तमर्चितं सुविश्वस्तमासीनमृषिसत्तमम्
ब्राह्मणानां मतेनाह पाण्डवानां च केशवः ४१
शुश्रूषवः पाण्डवास्ते ब्राह्मणाश्च समागताः
द्रौपदी सत्यभामा च तथाहं परमं वचः ४२
पुरावृत्ताः कथाः पुण्याः सदाचाराः सनातनाः
राज्ञां स्त्रीणामृषीणां च मार्कण्डेय विचक्ष्व नः ४३
तेषु तत्रोपविष्टेषु देवर्षिरपि नारदः
आजगाम विशुद्धात्मा पाण्डवानवलोककः ४४
तमप्यथ महात्मानं सर्वे ते पुरुषर्षभाः
पाद्यार्घ्याभ्यां यथान्यायमुपतस्थुर्मनीषिणम् ४५
नारदस्त्वथ देवर्षिर्ज्ञात्वा तांस्तु कृतक्षणान्
मार्कण्डेयस्य वदतस्तां कथामन्वमोदत ४६
उवाच चैनं कालज्ञः स्मयन्निव स नारदः
ब्रह्मर्षे कथ्यतां यत्ते पाण्डवेषु विवक्षितम् ४७
एवमुक्तः प्रत्युवाच मार्कण्डेयो महातपाः
क्षणं कुरुध्वं विपुलमाख्यातव्यं भविष्यति ४८
एवमुक्ताः क्षणं चक्रुः पाण्डवाः सह तैर्द्विजैः
मध्यंदिने यथादित्यं प्रेक्षन्तस्तं महामुनिम् ४९
इति श्रीमहाभारते आरण्यकपर्वणि अशीत्यधिकशततमोऽध्यायः १८०

## एकाशीत्यधिक शततमोऽध्यायः

वैशम्पायन उवाच
तं विवक्षन्तमालक्ष्य कुरुराजो महामुनिम्
कथासंजननार्थाय चोदयामास पाण्डवः १
भवान्दैवतदैत्यानामृषीणां च महात्मनाम्
राजर्षीणां च सर्वेषां चरितज्ञः सनातनः २
सेव्यश्चोपासितव्यश्च मतो नः काङ्क्षितश्चिरम्
अयं च देवकीपुत्रः प्राप्तोऽस्मानवलोककः ३

भवत्येव हि मे बुद्धिर्दृष्ट्वात्मानं सुखाच्च्युतम्
धार्तराष्ट्रांश्च दुर्वृत्तानृध्यतः प्रेक्ष्य सर्वशः ४
कर्मणः पुरुषः कर्ता शुभस्याप्यशुभस्य च
स्वफलं तदुपाश्नाति कथं कर्ता स्विदीश्वरः ५
अथ वा सुखदुःखेषु नृणां ब्रह्मविदां वर
इह वा कृतमन्वेति परदेहेऽथ वा पुनः ६
देही च देहं सन्त्यज्य मृग्यमाणः शुभाशुभैः
कथं संयुज्यते प्रेत्य इह वा द्विजसत्तम ७
एहलौकिकमेवैतदुताहो पारलौकिकम्
क्व च कर्माणि तिष्ठन्ति जन्तोः प्रेतस्य भार्गव ८
मार्कण्डेय उवाच
त्वद्युक्तोऽयमनुप्रश्नो यथावद्वदतां वर
विदितं वेदितव्यं ते स्थित्यर्थमनुपृच्छसि ९
अत्र ते वर्तयिष्यामि तदिहैकमनाः शृणु
यथेहामुत्र च नरः सुखदुःखमुपाश्नुते १०
निर्मलानि शरीराणि विशुद्धानि शरीरिणाम्
ससर्ज धर्मतन्त्राणि पूर्वोत्पन्नः प्रजापतिः ११
अमोघबलसंकल्पाः सुव्रताः सत्यवादिनः
ब्रह्मभूता नराः पुण्याः पुराणाः कुरुनन्दन १२
सर्वे देवैः समायान्ति स्वच्छन्देन नभस्तलम्
ततश्च पुनरायान्ति सर्वे स्वच्छन्दचारिणः १३
स्वच्छन्दमरणाश्चासन्नराः स्वच्छन्दजीविनः
अल्पबाधा निरातङ्का सिद्धार्था निरुपद्रवाः १४
द्रष्टारो देवसंघानामृषीणां च महात्मनाम्
प्रत्यक्षाः सर्वधर्माणां दान्ता विगतमत्सराः १५
आसन्वर्षसहस्राणि तथा पुत्रसहस्रिणः
ततः कालान्तरेऽन्यस्मिन्पृथिवीतलचारिणः १६
कामक्रोधाभिभूतास्ते मायाव्याजोपजीविनः
लोभमोहाभिभूताश्च त्यक्ता देवैस्ततो नराः १७
अशुभैः कर्मभिः पापास्तिर्यङ्नरकगामिनः

संसारेषु विचित्रेषु पच्यमानाः पुनः पुनः १८
मोघेष्टा मोघसंकल्पा मोघज्ञाना विचेतसः
सर्वातिशङ्किनश्चैव संवृत्ताः क्लेशभागिनः
अशुभैः कर्मभिश्चापि प्रायशः परिचिह्निताः १९
दौष्कुल्या व्याधिबहुला दुरात्मानोऽप्रतापिनः
भवन्त्यल्पायुषः पापा रौद्रकर्मफलोदयाः
नाथन्तः सर्वकामानां नास्तिका भिन्नसेतवः २०
जन्तोः प्रेतस्य कौन्तेय गतिः स्वैरिह कर्मभिः
प्राज्ञस्य हीनबुद्धेश्च कर्मकोशः क्व तिष्ठति २१
क्वस्थस्तत्समुपाश्नाति सुकृतं यदि वेतरत्
इति ते दर्शनं यच्च तत्राप्यनुनयं शृणु २२
अयमादिशरीरेण देवसृष्टेन मानवः
शुभानामशुभानां च कुरुते संचयं महत् २३
आयुषोऽन्ते प्रहायेदं क्षीणप्रायं कलेवरम्
संभवत्येव युगपद्योनौ नास्त्यन्तराभवः २४
तत्रास्य स्वकृतं कर्म छायेवानुगतं सदा
फलत्यथ सुखार्हो वा दुःखार्हो वापि जायते २५
कृतान्तविधिसंयुक्तः स जन्तुर्लक्षणैः शुभैः
अशुभैर्वा निरादानो लक्ष्यते ज्ञानदृष्टिभिः २६
एषा तावदबुद्धीनां गतिरुक्ता युधिष्ठिर
अतः परं ज्ञानवतां निबोध गतिमुत्तमाम् २७
मनुष्यास्तप्ततपसः सर्वागमपरायणाः
स्थिरव्रताः सत्यपरा गुरुशुश्रूषणे रताः २८
सुशीलाः शुक्लजातीयाः क्षान्ता दान्ताः सुतेजसः
शुभयोन्यन्तरगताः प्रायशः शुभलक्षणाः २९
जितेन्द्रियत्वाद्वशिनः सुक्लत्वान्मन्दरोगिणः
अल्पबाधपरित्रासाद्भवन्ति निरुपद्रवाः ३०
च्यवन्तं जायमानं च गर्भस्थं चैव सर्वशः
स्वमात्मानं परं चैव बुध्यन्ते ज्ञानचक्षुषः
कर्मभूमिमिमां प्राप्य पुनर्यान्ति सुरालयम् ३१

किंचिद्दैवाद्धठात्किंचित्किंचिदेव स्वकर्मभिः
प्राप्नुवन्ति नरा राजन्मा तेऽस्त्वन्या विचारणा ३२
इमामत्रोपमां चापि निबोध वदतां वर
मनुष्यलोके यच्छ्रेयः परं मन्ये युधिष्ठिर ३३
इह वैकस्य नामुत्र अमुत्रैकस्य नो इह
इह चामुत्र चैकस्य नामुत्रैकस्य नो इह ३४
धनानि येषां विपुलानि सन्ति नित्यं रमन्ते सुविभूषिताङ्गाः
तेषामयं शत्रुवरघ्न लोको नासौ सदा देहसुखे रतानाम् ३५
ये योगयुक्तास्तपसि प्रसक्ताः स्वाध्यायशीला जरयन्ति देहान्
जितेन्द्रिया भूतहिते निविष्टास्तेषामसौ नायमरिघ्न लोकः ३६
ये धर्ममेव प्रथमं चरन्ति धर्मेण लब्ध्वा च धनानि काले
दारानवाप्य क्रतुभिर्यजन्ते तेषामयं चैव परश्च लोकः ३७
ये नैव विद्यां न तपो न दानं न चापि मूढाः प्रजने यतन्ते
न चाधिगच्छन्ति सुखान्यभाग्यास्तेषामयं चैव परश्च नास्ति ३८
सर्वे भवन्तस्त्वतिवीर्यसत्त्वा दिव्यौजसः संहननोपपन्नाः
लोकादमुष्मादवनिं प्रपन्नाः स्वधीतविद्याः सुरकार्यहेतोः ३९
कृत्वैव कर्माणि महान्ति शूरास्तपोदमाचारविहारशीलाः
देवानृषीन्प्रेतगणांश्च सर्वान्संतर्पयित्वा विधिना परेण ४०
स्वर्गं परं पुणयकृतां निवासं क्रमेण संप्राप्स्यथ कर्मभिः स्वैः
मा भूद्विशङ्का तव कौरवेन्द्रा दृष्ट्वात्मनः क्लेशमिमं सुखार्ह ४१
इति श्रीमहाभारते आरगयकपर्वणि एकाशीत्यधिकशततमोऽध्यायः १८१

## द्व्यशीत्यधिकशततमोऽध्यायः

वैशम्पायन उवाच
मार्कगडेयं महात्मानमूचुः पागडुसुतास्तदा
माहात्म्यं द्विजमुख्यानां श्रोतुमिच्छाम कथ्यताम् १
एवमुक्तः स भगवान्मार्कगडेयो महातपाः
उवाच सुमहातेजाः सर्वशास्त्रविशारदः २
हैहयानां कुलकरो राजा परपुरंजयः
कुमारो रूपसंपन्नो मृगयामचरद्बली ३

चरमाणस्तु सोऽरराये तृणवीरुत्समावृते
कृष्णाजिनोत्तरासङ्गं ददर्श मुनिमन्तिके
स तेन निहतोऽरराये मन्यमानेन वै मृगम् ४
व्यथितः कर्म तत्कृत्वा शोकोपहतचेतनः
जगाम हैहयानां वै सकाशं प्रथितात्मनाम् ५
राज्ञां राजीवनेत्रोऽसौ कुमारः पृथिवीपते
तेषां च तद्यथावृत्तं कथयामास वै तदा ६
तं चापि हिंसितं तात मुनिं मूलफलाशिनम्
श्रुत्वा दृष्ट्वा च ते तत्र बभूवुर्दीनमानसाः ७
कस्यायमिति ते सर्वे मार्गमाणास्ततस्ततः
जग्मुश्चारिष्टनेमेस्ते तार्क्ष्यस्याश्रममञ्जसा ८
तेऽभिवाद्य महात्मानं तं मुनिं संशितव्रतम्
तस्थुः सर्वे स तु मुनिस्तेषां पूजामथाहरत् ९
ते तमूचुर्महात्मानं न वयं सत्क्रियां मुने
त्वत्तोऽहा कर्मदोषेण ब्राह्मणो हिंसितो हि नः १०
तानब्रवीत्स विप्रर्षिः कथं वो ब्राह्मणो हतः
क्व चासौ ब्रूत सहिताः पश्यध्वं मे तपोबलम् ११
ते तु तत्सर्वमखिलमाख्यायास्मै यथातथम्
नापश्यंस्तमृषिं तत्र गतासुं ते समागताः
अन्वेषमाणाः सव्रीडाः स्वप्नवद्गतमानसाः १२
तानब्रवीत्तत्र मुनिस्तार्क्ष्यः परपुरंजयः
स्यादयं ब्राह्मणः सोऽथ यो युष्माभिर्विनाशितः
पुत्रो ह्ययं मम नृपास्तपोबलसमन्वितः १३
ते तु दृष्ट्वैव तमृषिं विस्मयं परमं गताः
महदाश्चर्यमिति वै विब्रुवाणा महीपते १४
मृतो ह्ययमतो दृष्टः कथं जीवितमाप्तवान्
किमेतत्तपसो वीर्यं येनायं जीवितः पुनः
श्रोतुमिच्छाम विप्रर्षे यदि श्रोतव्यमित्युत १५
स तानुवाच नास्माकं मृत्युः प्रभवते नृपाः
कारणं वः प्रवक्ष्यामि हेतुयोगं समासतः १६

सत्यमेवाभिजानीमो नानृते कुर्महे मनः
स्वधर्ममनुतिष्ठामस्तस्मान्मृत्युभयं न नः १७
यद्ब्राह्मणानां कुशलं तदेषां कथयामहे
नैषां दुश्चरितं ब्रूमस्तस्मान्मृत्युभयं न नः १८
अतिथीनन्नपानेन भृत्यानत्यशनेन च
तेजस्विदेशवासाच्च तस्मान्मृत्युभयं न नः १९
एतद्वै लेशमात्रं वः समाख्यातं विमत्सराः
गच्छध्वं सहिताः सर्वे न पापाद्भयमस्ति वः २०
एवमस्त्विति ते सर्वे प्रतिपूज्य महामुनिम्
स्वदेशमगमन्हृष्टा राजानो भरतर्षभ २१
इति श्रीमहाभारते आरगयकपर्वणि द्व्यशीत्यधिकशततमोऽध्यायः १८२

## त्र्यशीत्यधिक शततमोऽध्यायः

मार्कगडेय उवाच
भूय एव तु माहात्म्यं ब्राह्मणानां निबोध मे
वैन्यो नामेह राजर्षिरश्वमेधाय दीक्षितः
तमत्रिर्गन्तुमारेभे वित्तार्थमिति नः श्रुतम् १
भूयोऽथ नानुरुध्यत्स धर्मव्यक्तिनिदर्शनात्
संचिंत्य स महातेजा वनमेवान्वरोचयत्
धर्मपत्नीं समाहूय पुत्रांश्चेदमुवाच ह २
प्राप्स्यामः फलमत्यन्तं बहुलं निरुपद्रवम्
अरगयगमनं क्षिप्रं रोचतां वो गुणाधिकम् ३
तं भार्या प्रत्युवाचेदं धर्ममेवानुरुध्यती
वैन्यं गत्वा महात्मानमर्थयस्व धनं बहु
स ते दास्यति राजर्षिर्यजमानोऽथिने धनम् ४
तत आदाय विप्रर्षे प्रतिगृह्यनं बहु
भृत्यान्सुतान्संविभज्य ततो व्रज यथेप्सितम्
एष वै परमो धर्मो धर्मविद्भिरुदाहृतः ५
अत्रिरुवाच
कथितो मे महाभागे गौतमेन महात्मना

वैन्यो धर्मार्थसंयुक्तः सत्यव्रतसमन्वितः ६
किं त्वस्ति तत्र द्वेष्टारो निवसन्ति हि मे द्विजाः
यथा मे गौतमः प्राह ततो न व्यवसाम्यहम् ७
तत्र स्म वाचं कल्याणीं धर्मकामार्थसंहिताम्
मयोक्तामन्यथा ब्रूयुस्ततस्ते वै निरर्थकाम् ८
गमिष्यामि महाप्राज्ञे रोचते मे वचस्तव
गाश्च मे दास्यते वैन्यः प्रभूतं चार्थसंचयम् ९
मार्कण्डेय उवाच
एवमुक्त्वा जगामाशु वैन्ययज्ञं महातपाः
गत्वा च यज्ञायतनमत्रिस्तुष्टाव तं नृपम् १०
राजन्वैन्य त्वमीशश्च भुवि त्वं प्रथमो नृपः
स्तुवन्ति त्वां मुनिगणास्त्वदन्यो नास्ति धर्मवित् ११
तमब्रवीदृषिस्तत्र वचः क्रुद्धो महातपाः
मैवमत्रे पुनर्ब्रूया न ते प्रज्ञा समाहिता
अत्र नः प्रथमं स्थाता महेन्द्रो वै प्रजापतिः १२
अथात्रिरपि राजेन्द्र गौतमं प्रत्यभाषत
अयमेव विधाता च यथैवेन्द्रः प्रजापतिः
त्वमेव मुह्यसे मोहान्न प्रज्ञानं तवास्ति ह १३
गौतम उवाच
जानामि नाहं मुह्यामि त्वं विवक्षुर्विमुह्यसे
स्तोष्यसेऽभ्युदयप्रेप्सुस्तस्य दर्शनसंश्रयात् १४
न वेत्थ परमं धर्मं न चावैषि प्रयोजनम्
बालस्त्वमसि मूढश्च वृद्धः केनापि हेतुना १५
मार्कण्डेय उवाच
विवदन्तौ तथा तौ तु मुनीनां दर्शने स्थितौ
ये तस्य यज्ञे संवृत्तास्तेऽपृच्छन्त कथं त्विमौ १६
प्रवेशः केन दत्तोऽयमनयोर्वैन्यसंसदि
उच्चैः समभिभाषन्तौ केन कार्येण विष्ठितौ १७
ततः परमधर्मात्मा काश्यपः सर्वधर्मवित्
विवादिनावनुप्राप्तौ तावुभौ प्रत्यवेदयत् १८

अथाब्रवीत्सदस्यांस्तु गौतमो मुनिसत्तमान्
आवयोर्व्याहृतं प्रश्नं शृणुत द्विजपुंगवाः
वैन्यो विधातेत्याहात्रिरत्र नः संशयो महान् १९
श्रुत्वैव तु महात्मानो मुनयोऽभ्यद्रवन्द्रुतम्
सनत्कुमारं धर्मज्ञं संशयच्छेदनाय वै २०
स च तेषां वचः श्रुत्वा यथातत्त्वं महातपाः
प्रत्युवाचाथ तानेवं धर्मार्थसहितं वचः २१
सनत्कुमार उवाच
ब्रह्म क्षत्रेण सहितं क्षत्रं च ब्रह्मणा सह
राजा वै प्रथमो धर्मः प्रजानां पतिरेव च
स एव शक्रः शुक्रश्च स धाता स बृहस्पतिः २२
प्रजापतिर्विराट् सम्राट् क्षत्रियो भूपतिर्नृपः
य एभिः स्तूयते शब्दैः कस्तं नार्चितुमर्हति २३
पुरायोनिर्युधाजिच्च अभिया मुदितो भवः
स्वर्णेता सहजिद्बभ्रुरिति राजाभिधीयते २४
सत्य मन्युर्युधाजीवः सत्यधर्मप्रवर्तकः
अधर्मादृषयो भीता बलं क्षत्रे समादधन् २५
आदित्यो दिवि देवेषु तमो नुदति तेजसा
तथैव नृपतिर्भूमावधर्मं नुदते भृशम् २६
अतो राज्ञः प्रधानत्वं शास्त्रप्रामाणयदर्शनात्
उत्तरः सिध्यते पक्षो येन राजेति भाषितम् २७
मार्कणडेय उवाच
ततः स राजा संहृष्टः सिद्धे पक्षे महामनाः
तमत्रिमब्रवीत्प्रीतः पूर्वं येनाभिसंस्तुतः २८
यस्मात्सर्वमनुष्येषु ज्यायांसं मामिहाब्रवीः
सर्वदेवैश्च विप्रर्षे संमितं श्रेष्ठमेव च
तस्मात्तेऽह प्रदास्यामि विविधं वसु भूरि च २९
दासीसहस्रं श्यामानां सुवस्त्राणामलंकृतम्
दश कोटयो हिरगयस्य रुक्मभारांस्तथा दश
एतद्ददानि ते विप्र सर्वज्ञस्त्वं हि मे मतः ३०

तदत्रिर्न्यायतः सर्वं प्रतिगृह्य महामनाः
प्रत्याजगाम तेजस्वी गृहानेव महातपाः ३१
प्रदाय च धनं प्रीतः पुत्रेभ्यः प्रयतात्मवान्
तपः समभिसंधाय वनमेवान्वपद्यत ३२
इति श्रीमहाभारते आरण्यकपर्वणि त्र्यशीत्यधिकशततमोऽध्यायः १८३

## चतुरशीत्यधिक शततमोऽध्यायः

मार्कण्डेय उवाच
अत्रैव च सरस्वत्या गीतं परपुरंजय
पृष्टया मुनिना वीर शृणु तार्क्ष्येण धीमता १
तार्क्ष्य उवाच
किं नु श्रेयः पुरुषस्येह भद्रे कथं कुर्वन्न च्यवते स्वधर्मात्
आचक्ष्व मे चारुसर्वाङ्गि सर्वं त्वयानुशिष्टो न च्यवेयं स्वधर्मात् २
कथं चाग्निं जुहुयां पूजये वा कस्मिन्काले केन धर्मो न नश्येत्
एतत्सर्वं सुभगे प्रब्रवीहि यथा लोकान्विरजाः संचरेयम् ३
मार्कण्डेय उवाच
एवं पृष्टा प्रीतियुक्तेन तेन शुश्रूषुमीक्ष्योत्तमबुद्धियुक्तम्
तार्क्ष्यं विप्रं धर्मयुक्तं हितं च सरस्वती वाक्यमिदं बभाषे ४
सरस्वत्युवाच
यो ब्रह्म जानाति यथाप्रदेशं स्वाध्यायनित्यः शुचिरप्रमत्तः
स वै पुरो देवपुरस्य गन्ता सहामरैः प्राप्नुयात्प्रीतियोगम् ५
तत्र स्म रम्या विपुला विशोकाः सुपुष्पिताः पुष्करिण्यः सुपुण्याः
अकर्दमा मीनवत्यः सुतीर्था हिरण्मयैरावृताः पुण्डरीकैः ६
तासां तीरेष्वासते पुण्यकर्मा महीयमानाः पृथगप्सरोभिः
सुपुण्यगन्धाभिरलंकृताभिर्हिरण्यवर्णाभिरतीव हृष्टः ७
परं लोकं गोप्रदास्त्वाप्नुवन्ति दत्त्वानड्वाहं सूर्यलोकं व्रजन्ति
वासो दत्त्वा चन्द्रमसः स लोकं दत्त्वा हिरण्यममृतत्वमेति ८
धेनुं दत्त्वा सुव्रतां साधुदोहां कल्याणवत्सामपलायिनीं च
यावन्ति रोमाणि भवन्ति तस्यास्तावद्वर्षाण्यश्नुते स्वर्गलोकम् ९
अनड्वाहं सुव्रतं यो ददाति हलस्य वोढारमनन्तवीर्यम्

धुरंधरं बलवन्तं युवानं प्राप्नोति लोकान्दश धेनुदस्य १०
यः सप्त वर्षाणि जुहोति तार्क्ष्य हव्यं त्वग्नौ सुव्रतः साधुशीलः
सप्तावरान्सप्त पूर्वान्पुनाति पितामहानात्मनः कर्मभिः स्वैः ११
तार्क्ष्य उवाच
किमग्निहोत्रस्य व्रतं पुराणमाचक्ष्व मे पृच्छतश्चारुरूपे
त्वयानुशिष्टोऽहमिहाद्य विद्यां यदग्निहोत्रस्य व्रतं पुराणम् १२
सरस्वत्युवाच
न चाशुचिर्नाप्यनिर्णिक्तपाणिर्नाब्रह्मविज्जुहुयान्नाविपश्चित्
बुभुक्षवः शुचिकामा हि देवा नाश्रद्दधानाद्धि हविर्जुषन्ति १३
नाश्रोत्रियं देवहव्ये नियुञ्ज्यान्मोघं परा सिञ्चति तादृशो हि
अपूर्णमश्रोत्रियमाह तार्क्ष्य न वै तादृग्जुहुयादग्निहोत्रम् १४
कृशानुं ये जुह्वति श्रद्दधानाः सत्यव्रता हुतशिष्टाशिनश्च
गवां लोकं प्राप्य ते पुण्यगन्धं पश्यन्ति देवं परमं चापि सत्यम् १५
तार्क्ष्य उवाच
क्षेत्रज्ञभूतां परलोकभावे कर्मोदये बुद्धिमतिप्रविष्टाम्
प्रज्ञां च देवीं सुभगे विमृश्य पृच्छामि त्वां का ह्यसि चारुरूपे १६
सरस्वत्युवाच
अग्निहोत्रादहमभ्यागतास्मि विप्रर्षभाणां संशयच्छेदनाय
त्वत्संयोगादहमेतदब्रुवं भावे स्थिता तथ्यमर्थं यथावत् १७
तार्क्ष्य उवाच
न हि त्वया सदृशी काचिदस्ति विभ्राजसे ह्यतिमात्रं यथा श्रीः
रूपं च ते दिव्यमत्यन्तकान्तं प्रज्ञां च देवीं सुभगे बिभर्षि १८
सरस्वत्युवाच
श्रेष्ठानि यानि द्विपदां वरिष्ठ यज्ञेषु विद्वन्नुपपादयन्ति
तैरेवाहं संप्रवृद्धा भवामि आप्यायिता रूपवती च विप्र १९
यच्चापि द्रव्यमुपयुज्यते ह वानस्पत्यमायसं पार्थिवं वा
दिव्येन रूपेण च प्रज्ञया च तेनैव सिद्धिरिति विद्धि विद्वन् २०
तार्क्ष्य उवाच
इदं श्रेयः परमं मन्यमाना व्यायच्छन्ते मुनयः संप्रतीताः
आचक्ष्व मे तं परमं विशोकं मोक्षं परं यं प्रविशन्ति धीराः २१

सरस्वत्युवाच
तं वै परं वेदविदः प्रपन्नाः परं परेभ्यः प्रथितं पुराणम्
स्वाध्यायदानव्रतपुण्ययोगैस्तपोधना वीतशोका विमुक्ताः २२
तस्याथ मध्ये वेतसः पुण्यगन्धः सहस्रशाखो विमलो विभाति
तस्य मूलात्सरितः प्रस्रवन्ति मधूदकप्रस्रवणा रमण्यः २३
शाखां शाखां महानद्यः संयान्ति सिकतासमाः
धानापूपा मांसशाकाः सदा पायसकर्दमाः २४
यस्मिन्नग्निमुखा देवाः सेन्द्राः सह मरुद्गणैः
ईजिरे क्रतुभिः श्रेष्ठैस्तत्पदं परमं मुने २५
इति श्रीमहाभारते आरण्यकपर्वणि चतुरशीत्यधिकशततमोऽध्यायः १८४

पञ्चाशीत्यधिक शततमोऽध्यायः

वैशम्पायन उवाच
ततः स पाण्डवो भूयो मार्कण्डेयमुवाच ह
कथयस्वेह चरितं मनोर्वैवस्वतस्य मे १
मार्कण्डेय उवाच
विवस्वतः सुतो राजन्परमर्षिः प्रतापवान्
बभूव नरशार्दूल प्रजापतिसमद्युतिः २
ओजसा तेजसा लक्ष्म्या तपसा च विशेषतः
अतिचक्राम पितरं मनुः स्वं च पितामहम् ३
ऊर्ध्वबाहुर्विशालायां बदर्यां स नराधिपः
एकपादस्थितस्तीव्रं चचार सुमहत्तपः ४
अवाक्शिरास्तथा चापि नेत्रैरनिमिषैर्दृढम्
सोऽतप्यत तपो घोरं वर्षाणामयुतं तदा ५
तं कदाचित्तपस्यन्तमार्द्रचीरजटाधरम्
वीरिणीतीरमागम्य मत्स्यो वचनमब्रवीत् ६
भगवन्क्षुद्रमत्स्योऽस्मि बलवद्भ्यो भयं मम
मत्स्येभ्यो हि ततो मां त्वं त्रातुमर्हसि सुव्रत ७
दुर्बलं बलवन्तो हि मत्स्यं मत्स्या विशेषतः
भक्षयन्ति यथा वृत्तिर्विहिता नः सनातनी ८

तस्माद्भयौघान्महतो मज्जन्तं मां विशेषतः
त्रातुमर्हसि कर्तास्मि कृते प्रतिकृतं तव ९
स मत्स्यवचनं श्रुत्वा कृपयाभिपरिप्लुतः
मनुर्वैवस्वतोऽगृह्णात्तं मत्स्यं पाणिना स्वयम् १०
उदकान्तमुपानीय मत्स्यं वैवस्वतो मनुः
अलिञ्जरे प्राक्षिपत्स चन्द्रांशुसदृशप्रभम् ११
स तत्र ववृधे राजन्मत्स्यः परमसत्कृतः
पुत्रवच्चाकरोत्तस्मिन्मनुर्भावं विशेषतः १२
अथ कालेन महता स मत्स्यः सुमहानभूत्
अलिञ्जरे जले चैव नासौ समभवत्किल १३
अथ मत्स्यो मनुं दृष्ट्वा पुनरेवाभ्यभाषत
भगवन्साधु मेऽद्यान्यत्स्थानं संप्रतिपादय १४
उद्धृत्यालिञ्जरात्तस्मात्ततः स भगवान्मुनिः
तं मत्स्यमनयद्वापीं महतीं स मनुस्तदा १५
तत्र तं प्राक्षिपच्चापि मनुः परपुरंजय
अथावर्धत मत्स्यः स पुनर्वर्षगणान्बहून् १६
द्वियोजनायता वापी विस्तृता चापि योजनम्
तस्यां नासौ समभवन्मत्स्यो राजीवलोचन
विचेष्टितुं वा कौन्तेय मत्स्यो वाप्यां विशां पते १७
मनुं मत्स्यस्ततो दृष्ट्वा पुनरेवाभ्यभाषत
नय मां भगवन्साधो समुद्रमहिषीं प्रभो
गङ्गां तत्र निवत्स्यामि यथा वा तात मन्यसे १८
एवमुक्तो मनुर्मत्स्यमनयद्भगवान्वशी
नदीं गङ्गां तत्र चैनं स्वयं प्राक्षिपदच्युतः १९
स तत्र ववृधे मत्स्यः किंचित्कालमरिंदम
ततः पुनर्मनुं दृष्ट्वा मत्स्यो वचनमब्रवीत् २०
गङ्गायां हि न शक्नोमि बृहत्त्वाच्चेष्टितुं प्रभो
समुद्रं नय मामाशु प्रसीद भगवन्निति २१
उद्धृत्य गङ्गासलिलात्ततो मत्स्यं मनुः स्वयम्
समुद्रमनयत्पार्थ तत्र चैनमवासृजत् २२

सुमहानपि मत्स्यः सन्स मनोर्मनसस्तदा
आसीद्यथेष्टहार्यश्च स्पर्शगन्धसुखश्च वै २३
यदा समुद्रे प्रक्षिप्तः स मत्स्यो मनुना तदा
तत एनमिदं वाक्यं स्मयमान इवाब्रवीत् २४
भगवन्कृता हि मे रक्षा त्वया सर्वा विशेषतः
प्राप्तकालं तु यत्कार्यं त्वया तच्छ्रूयतां मम २५
अचिराद्भगवन्भौममिदं स्थावरजङ्गमम्
सर्वमेव महाभाग प्रलयं वै गमिष्यति २६
संप्रक्षालनकालोऽय लोकानां समुपस्थितः
तस्मात्त्वां बोधयाम्यद्य यत्ते हितमनुत्तमम् २७
त्रसानां स्थावराणां च यच्चेङ्गं यच्च नेङ्गति
तस्य सर्वस्य संप्राप्तः कालः परमदारुणः २८
नौश्च कारयितव्या ते दृढा युक्तवटाकरा
तत्र सप्तर्षिभिः सार्धमारुहेथा महामुने २९
बीजानि चैव सर्वाणि यथोक्तानि मया पुरा
तस्यामारोहयेर्नावि सुसंगुप्तानि भागशः ३०
नौस्थश्च मां प्रतीक्षेथास्तदा मुनिजनप्रिय
आगमिष्याम्यहं शृङ्गी विज्ञेयस्तेन तापस ३१
एवमेतत्त्वया कार्यमापृष्टोऽसि व्रजाम्यहम्
नातिशङ्क्यमिदं चापि वचनं ते ममाभिभो ३२
एवं करिष्य इति तं स मत्स्यं प्रत्यभाषत
जग्मतुश्च यथाकाममनुज्ञाप्य परस्परम् ३३
ततो मनुर्महाराज यथोक्तं मत्स्यकेन ह
बीजान्यादाय सर्वाणि सागरं पुप्लुवे तदा
नावा तु शुभया वीर महोर्मिणमरिंदम ३४
चिन्तयामास च मनुस्तं मत्स्यं पृथिवीपते
स च तच्चिन्तितं ज्ञात्वा मत्स्यः परपुरंजय
शृङ्गी तत्राजगामाशु तदा भरतसत्तम ३५
तं दृष्ट्वा मनुजेन्द्रेन्द्र मनुर्मत्स्यं जलार्णवे
शृङ्गिणं तं यथोक्तेन रूपेणाद्रिमिवोच्छ्रितम् ३६

वटाकरमयं पाशमथ मत्स्यस्य मूर्धनि
मनुर्मनुजशार्दूल तस्मिन्शृङ्गे न्यवेशयत् ३७
संयतस्तेन पाशेन मत्स्यः परपुरंजय
वेगेन महता नावं प्राकर्षल्लवणाम्भसि ३८
स ततार तया नावा समुद्रं मनुजेश्वर
नृत्यमानमिवोर्मीभिर्गर्जमानमिवाम्भसा ३९
क्षोभ्यमाणा महावातैः सा नौस्तस्मिन्महोदधौ
घूर्णते चपलेव स्त्री मत्ता पुरपुरंजय ४०
नैव भूमिर्न च दिशः प्रदिशो वा चकाशिरे
सर्वमाम्भसमेवासीत्खं द्यौश्च नरपुंगव ४१
एवंभूते तदा लोके संकुले भरतर्षभ
अदृश्यन्त सप्तर्षयो मनुर्मत्स्यः सहैव ह ४२
एवं बहून्वर्षगणांस्तां नावं सोऽथ मत्स्यकः
चकर्षातन्द्रितो राजंस्तस्मिन्सलिलसंचये ४३
ततो हिमवतः शृङ्गं यत्परं पुरुषर्षभ
तत्राकर्षत्ततो नावं स मत्स्यः कुरुनन्दन ४४
ततोऽब्रवीत्तदा मत्स्यस्तानृषीन्प्रहसञ्शनैः
अस्मिन्हिमवतः शृङ्गे नावं बध्नीत माचिरम् ४५
सा बद्धा तत्र तैस्तूर्णमृषिभिर्भरतर्षभ
नौर्मत्स्यस्य वचः श्रुत्वा शृङ्गे हिमवतस्तदा ४६
तच्च नौबन्धनं नाम शृङ्गं हिमवतः परम्
ख्यातमद्यापि कौन्तेय तद्विद्धि भरतर्षभ ४७
अथाब्रवीदनिमिषस्तानृषीन्सहितांस्तदा
अहं प्रजापतिर्ब्रह्मा मत्परं नाधिगम्यते
मत्स्यरूपेण यूयं च मयास्मान्मोक्षिता भयात् ४८
मनुना च प्रजाः सर्वाः सदेवासुरमानवाः
स्रष्टव्याः सर्वलोकाश्च यच्चेङ्गं यच्च नेङ्गति ४९
तपसा चातितीव्रेण प्रतिभास्य भविष्यति
मत्प्रसादात्प्रजासर्गे न च मोहं गमिष्यति ५०
इत्युक्त्वा वचनं मत्स्यः क्षणेनादर्शनं गतः

स्रष्टुकामः प्रजाश्चापि मनुर्वैवस्वतः स्वयम्
प्रमूढोऽभूत्प्रजासर्गे तपस्तेपे महत्ततः ५१
तपसा महता युक्तः सोऽथ स्रष्टुं प्रचक्रमे
सर्वाः प्रजा मनुः साक्षाद्यथावद्भरतर्षभ ५२
इत्येतन्मात्स्यकं नाम पुराणं परिकीर्तितम्
आख्यानमिदमाख्यातं सर्वपापहरं मया ५३
य इदं शृणुयान्नित्यं मनोश्चरितमादितः
स सुखी सर्वसिद्धार्थः स्वर्गलोकमियान्नरः ५४
इति श्रीमहाभारते आरण्यकपर्वणि पञ्चाशीत्यधिकशततमोऽध्यायः १५८

## षडशीत्यधिक शततमोऽध्यायः

वैशम्पायन उवाच
ततः स पुनरेवाथ मार्कण्डेयं यशस्विनम्
पप्रच्छ विनयोपेतो धर्मराजो युधिष्ठिरः १
नैके युगसहस्रान्तास्त्वया दृष्टा महामुने
न चापीह समः कश्चिदायुषा तव विद्यते
वर्जयित्वा महात्मानं ब्रह्माणं परमेष्ठिनम् २
अनन्तरिक्षे लोकेऽस्मिन्देवदानववर्जिते
त्वमेव प्रलये विप्र ब्रह्माणमुपतिष्ठसि ३
प्रलये चापि निर्वृत्ते प्रबुद्धे च पितामहे
त्वमेव सृज्यमानानि भूतानीह प्रपश्यसि ४
चतुर्विधानि विप्रर्षे यथावत्परमेष्ठिना
वायुभूता दिशः कृत्वा विक्षिप्यापस्ततस्ततः ५
त्वया लोकगुरुः साक्षात्सर्वलोकपितामहः
आराधितो द्विजश्रेष्ठ तत्परेण समाधिना ६
तस्मात्सर्वान्तको मृत्युर्जरा वा देहनाशिनी
न त्वा विशति विप्रर्षे प्रसादात्परमेष्ठिनः ७
यदा नैव रविर्नाग्निर्न वायुर्न च चन्द्रमाः
नैवान्तरिक्षं नैवोर्वी शेषं भवति किंचन ८
तस्मिन्नेकार्णवे लोके नष्टे स्थावरजङ्गमे

नष्टे देवासुरगणे समुत्सन्नमहोरगे ९
शयानममितात्मानं पद्मे पद्मनिकेतनम्
त्वमेकः सर्वभूतेशं ब्रह्माणमुपतिष्ठसि १०
एतत्प्रत्यक्षतः सर्वं पूर्ववृत्तं द्विजोत्तम
तस्मादिच्छामहे श्रोतुं सर्वहेत्वात्मिकां कथाम् ११
अनुभूतं हि बहुशस्त्वयैकेन द्विजोत्तम
न तेऽस्त्यविदितं किंचित्सर्वलोकेषु नित्यदा १२
मार्कण्डेय उवाच
हन्त ते कथयिष्यामि नमस्कृत्वा स्वयंभुवे
पुरुषाय पुराणाय शाश्वतायाव्ययाय च १३
य एष पृथुदीर्घाक्षः पीतवासा जनार्दनः
एष कर्ता विकर्ता च सर्वभावनभूतकृत् १४
अचिन्त्यं महदाश्चर्यं पवित्रमपि चोत्तमम्
अनादिनिधनं भूतं विश्वमक्षयमव्ययम् १५
एष कर्ता न क्रियते कारणं चापि पौरुषे
यो ह्येनं पुरुषं वेत्ति देवा अपि न तं विदुः १६
सर्वमाश्चर्यमेवैतन्निवृत्तं राजसत्तम
आदितो मनुजव्याघ्रकृत्स्नस्य जगतः क्षये १७
चत्वार्याहुः सहस्राणि वर्षाणां तत्कृतं युगम्
तस्य तावच्छती संध्या सन्ध्यांशश्च ततः परम् १८
त्रीणि वर्षसहस्राणि त्रेतायुगमिहोच्यते
तस्य तावच्छती सन्ध्या सन्ध्यांशश्च ततः परम् १९
तथा वर्षसहस्रे द्वे द्वापरं परिमाणतः
तस्यापि द्विशती सन्ध्या सन्ध्यांशश्च ततः परम् २०
सहस्रमेकं वर्षाणां ततः कलियुगं स्मृतम्
तस्य वर्षशतं संध्याः सन्ध्यांशश्च ततः परम्
संध्यासन्ध्यांशयोस्तुल्यं प्रमाणमुपधारय २१
क्षीणे कलियुगे चैव प्रवर्तति कृतं युगम्
एषा द्वादशसाहस्री युगाख्या परिकीर्तिता २२
एतत्सहस्रपर्यन्तमहो ब्राह्ममुदाहृतम्

विश्वं हि ब्रह्मभवने सर्वशः परिवर्तते
लोकानां मनुजव्याघ्र प्रलयं तं विदुर्बुधाः २३
अल्पावशिष्टे तु तदा युगान्ते भरतर्षभ
सहस्रान्ते नराः सर्वे प्रायशोऽनृतवादिनः २४
यज्ञप्रतिनिधिः पार्थ दानप्रतिनिधिस्तथा
व्रतप्रतिनिधिश्चैव तस्मिन्काले प्रवर्तते २५
ब्राह्मणाः शूद्रकर्माणस्तथा शूद्रा धनार्जकाः
क्षत्रधर्मेण वाप्यत्र वर्तयन्ति गते युगे २६
निवृत्तयज्ञस्वाध्यायाः पिण्डोदकविवर्जिताः
ब्राह्मणाः सर्वभक्षाश्च भविष्यन्ति कलौ युगे २७
अजपा ब्राह्मणास्तात शूद्रा जपपरायणाः
विपरीते तदा लोके पूर्वरूपं क्षयस्य तत् २८
बहवो म्लेच्छराजानः पृथिव्यां मनुजाधिप
मिथ्यानुशासिनः पापा मृषावादपरायणाः २९
आन्ध्राः शकाः पुलिन्दाश्च यवनाश्च नराधिपाः
काम्बोजा और्णिकाः शूद्रास्तथाभीरा नरोत्तम ३०
न तदा ब्राह्मणः कश्चित्स्वधर्ममुपजीवति
क्षत्रिया अपि वैश्याश्च विकर्मस्था नराधिप ३१
अल्पायुषः स्वल्पबला अल्पतेजःपराक्रमाः
अल्पदेहाल्पसाराश्च तथा सत्याल्पभाषिणः ३२
बहुशून्या जनपदा मृगव्यालावृता दिशः
युगान्ते समनुप्राप्ते वृथा च ब्रह्मचारिणः
भोवादिनस्तथा शूद्रा ब्राह्मणाश्चार्यवादिनः ३३
युगान्ते मनुजव्याघ्र भवन्ति बहुजन्तवः
न तथा घ्राणयुक्ताश्च सर्वगन्धा विशां पते
रसाश्च मनुजव्याघ्र न तथा स्वादुयोगिनः ३४
बहुप्रजा ह्रस्वदेहाः शीलाचारविवर्जिताः
मुखेभगाः स्त्रियो राजन्भविष्यन्ति युगक्षये ३५
अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः
केशशूलाः स्त्रियो राजन्भविष्यन्ति युगक्षये ३६

अल्पक्षीरास्तथा गावो भविष्यन्ति जनाधिप
अल्पपुष्पफलाश्चापि पादपा बहुवायसाः ३७
ब्रह्मवध्यावलिप्तानां तथा मिथ्याभिशंसिनाम्
नृपाणां पृथिवीपाल प्रतिगृह्णन्ति वै द्विजाः ३८
लोभमोहपरीताश्च मिथ्याधर्मध्वजावृताः
भिक्षार्थं पृथिवीपाल चञ्चूर्यन्ते द्विजैर्दिशः ३९
करभारभयात्पुंसो गृहस्थाः परिमोषकाः
मुनिच्छद्माकृतिच्छन्ना वाणिज्यमुपजीवते ४०
मिथ्या च नखरोमाणि धारयन्ति नरास्तदा
अर्थलोभान्नरव्याघ्र वृथा च ब्रह्मचारिणः ४१
आश्रमेषु वृथाचाराः पानपा गुरुतल्पगाः
एहलौकिकमीहन्ते मांसशोणितवर्धनम् ४२
बहुपाषण्डसंकीर्णाः परान्नगुणवादिनः
आश्रमा मनुजव्याघ्र न भवन्ति युगक्षये ४३
यथर्तुवर्षी भगवान्न तथा पाकशासनः
न तदा सर्वबीजानि सम्यग्रोहन्ति भारत
अधर्मफलमत्यर्थं तदा भवति चानघ ४४
तथा च पृथिवीपाल यो भवेद्धर्मसंयुतः
अल्पायुः स हि मन्तव्यो न हि धर्मोऽस्ति कश्चन ४५
भूयिष्ठं कूटमानैश्च पण्यं विक्रीणते जनाः
वणिजश्च नरव्याघ्र बहुमाया भवन्त्युत ४६
धर्मिष्ठाः परिहीयन्ते पापीयान्वर्धते जनः
धर्मस्य बलहानिः स्यादधर्मश्च बली तथा ४७
अल्पायुषो दरिद्राश्च धर्मिष्ठा मानवास्तदा
दीर्घायुषः समृद्धाश्च विधर्माणो युगक्षये ४८
अधर्मिष्ठैरुपायैश्च प्रजा व्यवहरन्त्युत
सञ्चयेनापि चाल्पेन भवन्त्याढ्या मदान्विताः ४९
धनं विश्वासतो न्यस्तं मिथो भूयिष्ठशो नराः
हर्तुं व्यवसिता राजन्मायाचारसमन्विताः ५०
पुरुषादानि सत्त्वानि पक्षिणोऽथ मृगास्तथा

नगराणां विहारेषु चैत्येष्वपि च शेरते ५१
सप्तवर्षाष्टवर्षाश्च स्त्रियो गर्भधरा नृप
दशद्वादशवर्षाणां पुसां पुत्रः प्रजायते ५२
भवन्ति षोडशे वर्षे नराः पलितिनस्तथा
आयुःक्षयो मनुष्याणां क्षिप्रमेव प्रपद्यते ५३
क्षीणे युगे महाराज तरुणा वृद्धशीलिनः
तरुणानां च यच्छीलं तद्वृद्धेषु प्रजायते ५४
विपरीतास्तदा नार्यो वञ्चयित्वा रहः पतीन्
व्युच्चरन्त्यपि दुःशीला दासैः पशुभिरेव च ५५
तस्मिन्युगसहस्रान्ते संप्राप्ते चायुषः क्षये
अनावृष्टिर्महाराज जायते बहुवार्षिकी ५६
ततस्तान्यल्पसाराणि सत्त्वानि क्षुधितानि च
प्रलयं यान्ति भूयिष्ठं पृथिव्यां पृथिवीपते ५७
ततो दिनकरैर्दीप्तैः सप्तभिर्मनुजाधिप
पीयते सलिलं सर्वं समुद्रेषु सरित्सु च ५८
यच्च काष्ठं तृणं चापि शुष्कं चार्द्रं च भारत
सर्वं तद्भस्मसाद्भूतं दृश्यते भरतर्षभ ५९
ततः संवर्तको वह्निर्वायुना सह भारत
लोकमाविशते पूर्वमादित्यैरुपशोषितम् ६०
ततः स पृथिवीं भित्त्वा समाविश्य रसातलम्
देवदानवयक्षाणां भयं जनयते महत् ६१
निर्दहन्नागलोकं च यच्च किंचित्क्षिताविह
अधस्तात्पृथिवीपाल सर्वं नाशयते क्षणात् ६२
ततो योजनविंशानां सहस्राणि शतानि च
निर्दहत्यशिवो वायुः स च संवर्तकोऽनलः ६३
सदेवासुरगन्धर्वं सयक्षोरगराक्षसम्
ततो दहति दीप्तः स सर्वमेव जगद्विभुः ६४
ततो गजकुलप्रख्यास्तडिन्मालाविभूषिताः
उत्तिष्ठन्ति महामेघा नभस्यद्भुतदर्शनाः ६५
केचिन्नीलोत्पलश्यामाः केचित्कुमुदसंनिभाः

केचित्किञ्जल्कसंकाशाः केचित्पीताः पयोधराः ६६
केचिद्धारिद्रसंकाशाः काकाण्डकनिभास्तथा
केचित्कमलपत्राभाः केचिद्धिङ्गुलकप्रभाः ६७
केचित्पुरवराकाराः केचिद्गजकुलोपमाः
केचिदञ्जनसंकाशाः केचिन्मकरसंस्थिताः
विद्युन्मालापिनद्धाङ्गाः समुत्तिष्ठन्ति वै घनाः ६८
घोररूपा महाराज घोरस्वननिनादिताः
ततो जलधराः सर्वे व्याप्नुवन्ति नभस्तलम् ६९
तैरियं पृथिवी सर्वा सपर्वतवनाकरा
आपूर्यते महाराज सलिलौघपरिप्लुता ७०
ततस्ते जलदा घोरा राविणः पुरुषर्षभ
सर्वतः प्लावयन्त्याशु चोदिताः परमेष्ठिना ७१
वर्षमाणा महत्तोयं पूरयन्तो वसुंधराम्
सुघोरमशिवं रौद्रं नाशयन्ति च पावकम् ७२
ततो द्वादश वर्षाणि पयोदास्त उपप्लवे
धाराभिः पूरयन्तो वै चोद्यमाना महात्मना ७३
ततः समुद्रः स्वां वेलामतिक्रामति भारत
पर्वताश्च विशीर्यन्ते मही चापि विशीर्यते ७४
सर्वतः सहसा भ्रान्तास्ते पयोदा नभस्तलम्
संवेष्टयित्वा नश्यन्ति वायुवेगपराहताः ७५
ततस्तं मारुतं घोरं स्वयंभूर्मनुजाधिप
आदिपद्मालयो देवः पीत्वा स्वपिति भारत ७६
तस्मिन्नेकार्णवे घोरे नष्टे स्थावरजङ्गमे
नष्टे देवासुरगणे यक्षराक्षसवर्जिते ७७
निर्मनुष्ये महीपाल निःश्वापदमहीरुहे
अनन्तरिक्षे लोकेऽस्मिन्भ्रमाम्येकोऽहमादृतः ७८
एकार्णवे जले घोरे विचरन्पार्थिवोत्तम
अपश्यन्सर्वभूतानि वैक्लव्यमगमं परम् ७९
ततः सुदीर्घं गत्वा तु प्लवमानो नराधिप
श्रान्तः क्वचिन्न शरणं लभाम्यहमतन्द्रितः ८०

ततः कदाचित्पश्यामि तस्मिन्सलिलसंप्लवे
न्यग्रोधं सुमहान्तं वै विशालं पृथिवीपते ८१
शाखायां तस्य वृक्षस्य विस्तीर्णायां नराधिप
पर्यङ्के पृथिवीपाल दिव्यास्तरणसंस्तृते ८२
उपविष्टं महाराज पूर्णेन्दुसदृशाननम्
फुल्लपद्मविशालाक्षं बालं पश्यामि भारत ८३
ततो मे पृथिवीपाल विस्मयः सुमहानभूत्
कथं त्वयं शिशुः शेते लोके नाशमुपागते ८४
तपसा चिन्तयंश्चापि तं शिशुं नोपलक्षये
भूतं भव्यं भविष्यच्च जानन्नपि नराधिप ८५
अतसीपुष्पवर्णाभः श्रीवत्सकृतलक्षणः
साक्षाल्लक्ष्म्या इवावासः स तदा प्रतिभाति मे ८६
ततो मामब्रवीद्बालः स पद्मनिभलोचनः
श्रीवत्सधारी द्युतिमान्वाक्यं श्रुतिसुखावहम् ८७
जानामि त्वा परिश्रान्तं तात विश्रामकाङ्क्षिणम्
मार्कण्डेय इहास्स्व त्वं यावदिच्छसि भार्गव ८८
अभ्यन्तरं शरीरं मे प्रविश्य मुनिसत्तम
आस्स्व भो विहितो वासः प्रसादस्ते कृतो मया ८९
ततो बालेन तेनैवमुक्तस्यासीत्तदा मम
निर्वेदो जीविते दीर्घे मनुष्यत्वे च भारत ९०
ततो बालेन तेनास्यं सहसा विवृतं कृतम्
तस्याहमवशो वक्त्रं दैवयोगात्प्रवेशितः ९१
ततः प्रविष्टस्तत्कुक्षिं सहसा मनुजाधिप
सराष्ट्रनगराकीर्णां कृत्स्नां पश्यामि मेदिनीम् ९२
गङ्गां शतद्रुं सीतां च यमुनामथ कौशिकीम्
चर्मण्वतीं वेत्रवतीं चन्द्रभागां सरस्वतीम् ९३
सिन्धुं चैव विपाशां च नदीं गोदावरीमपि
वस्वोकसारां नलिनीं नर्मदां चैव भारत ९४
नदीं ताम्रां च वेण्णां च पुण्यतोयां शुभावहाम्
सुवेणां कृष्णवेणां च इरामां च महानदीम्

शोणं च पुरुषव्याघ्र विशल्यां कंपुनामपि ९५
एताश्चान्याश्च नद्योऽह पृथिव्यां या नरोत्तम
परिक्रामन्प्रपश्यामि तस्य कुक्षौ महात्मनः ९६
ततः समुद्रं पश्यामि यादोगणनिषेवितम्
रत्नाकरममित्रघ्न निधानं पयसो महत् ९७
ततः पश्यामि गगनं चन्द्रसूर्यविराजितम्
जाज्वल्यमानं तेजोभिः पावकार्कसमप्रभैः
पश्यामि च महीं राजन्काननैरुपशोभिताम् ९८
यजन्ते हि तदा राजन्ब्राह्मणा बहुभिः सवैः
क्षत्रियाश्च प्रवर्तन्ते सर्ववर्णानुरञ्जने ९९
वैश्याः कृषिं यथान्यायं कारयन्ति नराधिप
शुश्रूषायां च निरता द्विजानां वृषलास्तथा १००
ततः परिपतन्राजंस्तस्य कुक्षौ महात्मनः
हिमवन्तं च पश्यामि हेमकूटं च पर्वतम् १०१
निषधं चापि पश्यामि श्वेतं च रजताचितम्
पश्यामि च महीपाल पर्वतं गन्धमादनम् १०२
मन्दरं मनुजव्याघ्र नीलं चापि महागिरिम्
पश्यामि च महाराज मेरुं कनकपर्वतम् १०३
महेन्द्रं चैव पश्यामि विन्ध्यं च गिरिमुत्तमम्
मलयं चापि पश्यामि पारियात्रं च पर्वतम् १०४
एते चान्ये च बहवो यावन्तः पृथिवीधराः
तस्योदरे मया दृष्टाः सर्वरत्नविभूषिताः १०५
सिंहान्व्याघ्रान्वराहांश्च नागांश्च मनुजाधिप
पृथिव्यां यानि चान्यानि सत्त्वानि जगतीपते
तानि सर्वाण्यहं तत्र पश्यन्पर्यचरं तदा १०६
कुक्षौ तस्य नरव्याघ्र प्रविष्टः संचरन्दिशः
शक्रादींश्चापि पश्यामि कृत्स्नान्देवगणांस्तथा १०७
गन्धर्वाप्सरसो यक्षानृषींश्चैव महीपते
दैत्यदानवसंघांश्च कालेयांश्च नराधिप
सिंहिकातनयांश्चापि ये चान्ये सुरशत्रवः १०८

यच्च किंचिन्मया लोके दृष्टं स्थावरजङ्गमम्
तदपश्यमहं सर्वं तस्य कुक्षौ महात्मनः
फलाहारः प्रविचरन्कृत्स्नं जगदिदं तदा १०९
अन्तः शरीरे तस्याहं वर्षाणामधिकं शतम्
न च पश्यामि तस्याहमन्तं देहस्य कुत्रचित् ११०
सततं धावमानश्च चिन्तयानो विशां पते
आसादयामि नैवान्तं तस्य राजन्महात्मनः १११
ततस्तमेव शरणं गतोऽस्मि विधिवत्तदा
वरेण्यं वरदं देवं मनसा कर्मणैव च ११२
ततोऽह सहसा राजन्वायुवेगेन निःसृतः
महात्मनो मुखात्तस्य विवृतात्पुरुषोत्तम ११३
ततस्तस्यैव शाखायां न्यग्रोधस्य विशां पते
आस्ते मनुजशार्दूल कृत्स्नमादाय वै जगत् ११४
तेनैव बालवेषेण श्रीवत्सकृतलक्षणम्
आसीनं तं नरव्याघ्र पश्याम्यमिततेजसम् ११५
ततो मामब्रवीद्वीर स बालः प्रहसन्निव
श्रीवत्सधारी द्युतिमान्पीतवासा महाद्युतिः ११६
अपीदानीं शरीरेऽस्मिन्मामके मुनिसत्तम
उषितस्त्वं सुविश्रान्तो मार्कण्डेय ब्रवीहि मे ११७
मुहूर्तादथ मे दृष्टिः प्रादुर्भूता पुनर्नवा
यया निर्मुक्तमात्मानमपश्यं लब्धचेतसम् ११८
तस्य ताम्रतलौ तात चरणौ सुप्रतिष्ठितौ
सुजातौ मृदुरक्ताभिरङ्गुलीभिरलंकृतौ ११९
प्रयतेन मया मूर्ध्ना गृहीत्वा ह्यभिवन्दितौ
दृष्ट्वापरिमितं तस्य प्रभावममितौजसः १२०
विनयेनाञ्जलिं कृत्वा प्रयत्नेनोपगम्य च
दृष्टो मया स भूतात्मा देवः कमललोचनः १२१
तमहं प्राञ्जलिर्भूत्वा नमस्कृत्येदमब्रुवम्
ज्ञातुमिच्छामि देव त्वां मायां चेमां तवोत्तमाम् १२२
आस्येनानुप्रविष्टोऽह शरीरं भगवंस्तव

दृष्टवानखिलाँल्लोकान्समस्ताञ्जठरे तव १२३
तव देव शरीरस्था देवदानवराक्षसाः
यक्षगन्धर्वनागाश्च जगत्स्थावरजङ्गमम् १२४
त्वत्प्रसादाच्च मे देव स्मृतिर्न परिहीयते
द्रुतमन्तः शरीरे ते सततं परिधावतः १२५
इच्छामि पुण्डरीकाक्ष ज्ञातुं त्वाहमनिन्दित
इह भूत्वा शिशुः साक्षात्किं भवानवतिष्ठते
पीत्वा जगदिदं विश्वमेतदाख्यातुमर्हसि १२६
किमर्थं च जगत्सर्वं शरीरस्थं तवानघ
कियन्तं च त्वया कालमिह स्थेयमरिन्दम १२७
एतदिच्छामि देवेश श्रोतुं ब्राह्मणकाम्यया
त्वत्तः कमलपत्राक्ष विस्तरेण यथातथम्
महद्ध्येतदचिन्त्यं च यदहं दृष्टवान्प्रभो १२८
इत्युक्तः स मया श्रीमान्देवदेवो महाद्युतिः
सान्त्वयन्मामिदं वाक्यमुवाच वदतां वरः १२९
इति श्रीमहाभारते आरण्यकपर्वणि षडशीत्यधिकशततमोऽध्यायः १८६

## सप्ताशीत्यधिक शततमोऽध्यायः

देव उवाच
कामं देवापि मां विप्र न विजानन्ति तत्त्वतः
त्वत्प्रीत्या तु प्रवक्ष्यामि यथेदं विसृजाम्यहम् १
पितृभक्तोऽसि विप्रर्षे मां चैव शरणं गतः
अतो दृष्टोऽस्मि ते साक्षाद्ब्रह्मचर्यं च ते महत् २
आपो नारा इति प्रोक्ताः संज्ञानामकृतं मया
तेन नारायणोऽस्म्युक्तो मम तद्ध्ययनं सदा ३
अहं नारायणो नाम प्रभवः शाश्वतोऽव्ययः
विधाता सर्वभूतानां संहर्ता च द्विजोत्तम ४
अहं विष्णुरहं ब्रह्मा शक्रश्चाहं सुराधिपः
अहं विश्रवणो राजा यमः प्रेताधिपस्तथा ५
अहं शिवश्च सोमश्च कश्यपश्च प्रजापतिः

अहं धाता विधाता च यज्ञश्चाहं द्विजोत्तम ६
अग्निरास्यं क्षितिः पादौ चन्द्रादित्यौ च लोचने
सदिशं च नभः कायो वायुर्मनसि मे स्थितः ७
मया क्रतुशतैरिष्टं बहुभिः स्वाप्तदक्षिणैः
यजन्ते वेदविदुषो मां देवयजने स्थितम् ८
पृथिव्यां क्षत्रियेन्द्राश्च पार्थिवाः स्वर्गकाङ्क्षिणः
यजन्ते मां तथा वैश्याः स्वर्गलोकजिगीषवः ९
चतुःसमुद्रपर्यन्तां मेरुमन्दरभूषणाम्
शेषो भूत्वाहमेवैतां धारयामि वसुंधराम् १०
वाराहं रूपमास्थाय मयेयं जगती पुरा
मज्जमाना जले विप्र वीर्येणासीत्समुद्धृता ११
अग्निश्च वडवावक्त्रो भूत्वाहं द्विजसत्तम
पिबाम्यपः समाविद्धास्ताश्चैव विसृजाम्यहम् १२
ब्रह्म वक्त्रं भुजौ क्षत्रमूरू मे संश्रिता विशः
पादौ शूद्रा भजन्ते मे विक्रमेण क्रमेण च १३
ऋग्वेदः सामवेदश्च यजुर्वेदोऽप्यथर्वणः
मत्तः प्रादुर्भवन्त्येन्ते मामेव प्रविशन्ति च १४
यतयः शान्तिपरमा यतात्मानो मुमुक्षवः
कामक्रोधद्वेषमुक्ता निःसङ्गा वीतकल्मषाः १५
सत्त्वस्था निरहंकारा नित्यमध्यात्मकोविदाः
मामेव सततं विप्राश्चिन्तयन्त उपासते १६
अहं संवर्तको ज्योतिरहं संवर्तको यमः
अहं संवर्तकः सूर्यो अहं संवर्तकोऽनिलः १७
तारारूपाणि दृश्यन्ते यान्येतानि नभस्तले
मम रूपाण्यथैतानि विद्धि त्वं द्विजसत्तम १८
रत्नाकराः समुद्राश्च सर्व एव चतुर्दिशम्
वसनं शयनं चैव निलयं चैव विद्धि मे १९
कामं क्रोधं च हर्षं च भयं मोहं तथैव च
ममैव विद्धि रूपाणि सर्वाण्येतानि सत्तम २०
प्राप्नुवन्ति नरा विप्र यत्कृत्वा कर्म शोभनम्

सत्यं दानं तपश्चोग्रमहिंसा चैव जन्तुषु २१
मद्विधानेन विहिता मम देहविहारिणः
मयाभिभूतविज्ञाना विचेष्टन्ते न कामतः २२
सम्यग्वेदमधीयाना यजन्तो विविधैर्मखैः
शान्तात्मानो जितक्रोधाः प्राप्नुवन्ति द्विजातयः २३
प्राप्तुं न शक्यो यो विद्वन्नरैर्दुष्कृतकर्मभिः
लोभाभिभूतैः कृपणैरनार्यैरकृतात्मभिः २४
तं मां महाफलं विद्धि पदं सुकृतकर्मणः
दुष्प्रापं विप्रमूढानां मार्गं योगैर्निषेवितम् २५
यदा यदा च धर्मस्य ग्लानिर्भवति सत्तम
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् २६
दैत्या हिंसानुरक्ताश्च अवध्याः सुरसत्तमैः
राक्षसाश्चापि लोकेऽस्मिन्यदोत्पत्स्यन्ति दारुणाः २७
तदाहं संप्रसूयामि गृहेषु शुभकर्मणाम्
प्रविष्टो मानुषं देहं सर्वं प्रशमयाम्यहम् २८
सृष्ट्वा देवमनुष्यांश्च गन्धर्वोरगराक्षसान्
स्थावराणि च भूतानि संहाराम्यात्ममायया २९
कर्मकाले पुनर्देहमनुचिन्त्य सृजाम्यहम्
प्रविश्य मानुषं देहं मर्यादाबन्धकारणात् ३०
श्वेतः कृतयुगे वर्णः पीतस्त्रेतायुगे मम
रक्तो द्वापरमासाद्य कृष्णः कलियुगे तथा ३१
त्रयो भागा ह्यधर्मस्य तस्मिन्काले भवन्त्युत
अन्तकाले च संप्राप्ते कालो भूत्वातिदारुणः
त्रैलोक्यं नाशयाम्येकः कृत्स्नं स्थावरजङ्गमम् ३२
अहं त्रिवर्त्मा सर्वात्मा सर्वलोकसुखावहः
अभिभूः सर्वगोऽनन्तो हृषीकेश उरुक्रमः ३३
कालचक्रं नयाम्येको ब्रह्मन्नहमरूपि वै
शमनं सर्वभूतानां सर्वलोककृतोद्यमम् ३४
एवं प्रणिहितः सम्यङ्मयात्मा मुनिसत्तम
सर्वभूतेषु विप्रेन्द्र न च मां वेत्ति कश्चन ३५

यच्च किंचित्त्वया प्राप्तं मयि क्लेशात्मकं द्विज
सुखोदयाय तत्सर्वं श्रेयसे च तवानघ ३६
यच्च किंचित्त्वया लोके दृष्टं स्थावर जङ्गमम्
विहितः सर्वथैवासौ ममात्मा मुनिसत्तम ३७
अर्धं मम शरीरस्य सर्वलोकपितामहः
अहं नारायणो नाम शङ्खचक्रगदाधरः ३८
यावद्युगानां विप्रर्षे सहस्रपरिवर्तनम्
तावत्स्वपिमि विश्वात्मा सर्वलोकपितामहः ३९
एवं सर्वमहं कालमिहासे मुनिसत्तम
अशिशुः शिशुरूपेण यावद्ब्रह्मा न बुध्यते ४०
मया च विप्र दत्तोऽय वरस्ते ब्रह्मरूपिणा
असकृत्परितुष्टेन विप्रर्षिगणपूजित ४१
सर्वमेकार्णवं दृष्ट्वा नष्टं स्थावरजङ्गमम्
विक्लवोऽसि मया ज्ञातस्ततस्ते दर्शितं जगत् ४२
अभ्यन्तरं शरीरस्य प्रविष्टोऽसि यदा मम
दृष्ट्वा लोकं समस्तं च विस्मितो नावबुध्यसे ४३
ततोऽसि वक्त्राद्विप्रर्षे द्रुतं निःसारितो मया
आख्यातस्ते मया चात्मा दुर्ज्ञेयोऽपि सुरासुरैः ४४
यावत्स भगवान्ब्रह्मा न बुध्यति महातपाः
तावत्त्वमिह विप्रर्षे विश्रब्धश्चर वै सुखम् ४५
ततो विबुद्धे तस्मिंस्तु सर्वलोकपितामहे
एकीभूतो हि स्रक्ष्यामि शरीराद्द्विजसत्तम ४६
आकाशं पृथिवीं ज्योतिर्वायुं सलिलमेव च
लोके यच्च भवेच्छेषमिह स्थावरजङ्गमम् ४७
मार्कण्डेय उवाच
इत्युक्त्वान्तर्हितस्तात स देवः परमाद्भुतः
प्रजाश्चेमाः प्रपश्यामि विचित्रा बहुधाकृताः ४८
एतद्दृष्टं मया राजंस्तस्मिन्प्राप्ते युगक्षये
आश्चर्यं भरतश्रेष्ठ सर्वधर्मभृतां वर ४९
यः स देवो मया दृष्टः पुरा पद्मनिभेक्षणः

स एष पुरुषव्याघ्र संबन्धी ते जनार्दनः ५०
अस्यैव वरदानाद्धि स्मृतिर्न प्रजहाति माम्
दीर्घमायुश्च कौन्तेय स्वच्छन्दमरणं तथा ५१
स एष कृष्णो वार्ष्णेयः पुराणपुरुषो विभुः
आस्ते हरिरचिन्त्यात्मा क्रीडन्निव महाभुजः ५२
एष धाता विधाता च संहर्ता चैव सात्वतः
श्रीवत्सवक्षा गोविन्दः प्रजापतिपतिः प्रभुः ५३
दृष्ट्वेमं वृष्णिशार्दूलं स्मृतिर्मामियमागता
आदिदेवमजं विष्णुं पुरुषं पीतवाससम् ५४
सर्वेषामेव भूतानां पिता माता च माधवः
गच्छध्वमेनं शरणं शरगयं कौरवर्षभाः ५५
इति श्रीमहाभारते आरगयकपर्वणि सप्ताशीत्यधिकशततमोऽध्यायः १८७

## अष्टाशीत्यधिक शततमोऽध्यायः

वैशम्पायन उवाच
एवमुक्तास्तु ते पार्था यमौ च पुरुषर्षभौ
द्रौपद्या कृष्णया सार्धं नमश्चक्रुर्जनार्दनम् १
स चैतान्पुरुषव्याघ्र साम्ना परमवल्गुना
सान्त्वयामास मानार्हान्मन्यमानो यथाविधि २
युधिष्ठिरस्तु कौन्तेयो मार्कगडेयं महामुनिम्
पुनः पप्रच्छ साम्राज्ये भविष्यां जगतो गतिम् ३
आश्चर्यभूतं भवतः श्रुतं नो वदतां वर
मुने भार्गव यद्वृत्तं युगादौ प्रभवाप्ययौ ४
अस्मिन्कलियुगेऽप्यस्ति पुनः कौतूहलं मम
समाकुलेषु धर्मेषु किं नु शेषं भविष्यति ५
किंवीर्या मानवास्तत्र किमाहारविहारिणः
किमायुषः किंवसना भविष्यन्ति युगक्षये ६
कां च काष्ठां समासाद्य पुनः संपत्स्यते कृतम्
विस्तरेण मुने ब्रूहि विचित्राणीह भाषसे ७
इत्युक्तः स मुनिश्रेष्ठः पुनरेवाभ्यभाषत

रमयन्वृष्णिशार्दूलं पाण्डवांश्च महामुनिः ८
मार्कण्डेय उवाच
भविष्यं सर्वलोकस्य वृत्तान्तं भरतर्षभ
कलुषं कालमासाद्य कथ्यमानं निबोध मे ९
कृते चतुष्पात्सकलो निर्व्याजोपाधिवर्जितः
वृषः प्रतिष्ठितो धर्मो मनुष्येष्वभवत्पुरा १०
अधर्मपादविद्धस्तु त्रिभिरंशैः प्रतिष्ठितः
त्रेतायां द्वापरेऽधेन व्यामिश्रो धर्म उच्यते ११
त्रिभिरंशैरधर्मस्तु लोकानाक्रम्य तिष्ठति
चतुर्थांशेन धर्मस्तु मनुष्यानुपतिष्ठति १२
आयुर्वीर्यमथो बुद्धिर्बलं तेजश्च पाण्डव
मनुष्याणामनुयुगं ह्रसतीति निबोध मे १३
राजानो ब्राह्मणा वैश्याः शूद्राश्चैव युधिष्ठिर
व्याजैर्धर्मं चरिष्यन्ति धर्मवैतंसिका नराः १४
सत्यं संक्षेप्स्यते लोके नरैः पण्डितमानिभिः
सत्यहान्या ततस्तेषामायुरल्पं भविष्यति १५
आयुषः प्रक्षयाद्विद्यां न शक्ष्यन्त्युपशिक्षितुम्
विद्याहीनानविज्ञानाल्लोभोऽप्यभिभविष्यति १६
लोभक्रोधपरा मूढाः कामासक्ताश्च मानवाः
वैरबद्धा भविष्यन्ति परस्परवधेप्सवः १७
ब्राह्मणाः क्षत्रिया वैश्याः संकीर्यन्तः परस्परम्
शूद्रतुल्या भविष्यन्ति तपःसत्यविवर्जिताः १८
अन्त्या मध्या भविष्यन्ति मध्याश्चान्तावसायिनः
ईदृशो भविता लोको युगान्ते पर्युपस्थिते १९
वस्त्राणां प्रवरा शाणी धान्यानां कोरदूषकाः
भार्यामित्राश्च पुरुषा भविष्यन्ति युगक्षये २०
मत्स्यामिषेण जीवन्तो दुहन्तश्चाप्यजैडकम्
गोषु नष्टासु पुरुषा भविष्यन्ति युगक्षये २१
अन्योन्यं परिमुष्णन्तो हिंसयन्तश्च मानवाः
अजपा नास्तिकाः स्तेना भविष्यन्ति युगक्षये २२

सरित्तीरेषु कुद्दालैर्वापयिष्यन्ति चौषधीः
ताश्चाप्यल्पफलास्तेषां भविष्यन्ति युगक्षये २३
श्राद्धे दैवे च पुरुषा ये च नित्यं धृतव्रताः
तेऽपि लोभसमायुक्ता भोक्ष्यन्तीह परस्परम् २४
पिता पुत्रस्य भोक्ता च पितुः पुत्रस्तथैव च
अतिक्रान्तानि भोज्यानि भविष्यन्ति युगक्षये २५
न व्रतानि चरिष्यन्ति ब्राह्मणा वेदनिन्दकाः
न यक्ष्यन्ति न होष्यन्ति हेतुवादविलोभिताः २६
निम्ने कृषिं करिष्यन्ति योक्ष्यन्ति धुरि धेनुकाः
एकहायनवत्सांश्च वाहयिष्यन्ति मानवाः २७
पुत्रः पितृवधं कृत्वा पिता पुत्रवधं तथा
निरुद्वेगो बृहद्वादी न निन्दामुपलप्स्यते २८
म्लेच्छभूतं जगत्सर्वं निष्क्रियं यज्ञवर्जितम्
भविष्यति निरानन्दमनुत्सवमथो तथा २९
प्रायशः कृपणानां हि तथा बन्धुमतामपि
विधवानां च वित्तानि हरिष्यन्तीह मानवाः ३०
अल्पवीर्यबलाः स्तब्धा लोभमोहपरायणाः
तत्कथादानसंतुष्टा दुष्टानामपि मानवाः
परिग्रहं करिष्यन्ति पापाचारपरिग्रहाः ३१
संघातयन्तः कौन्तेय राजानः पापबुद्धयः
परस्परवधोद्युक्ता मूर्खाः पण्डितमानिनः
भविष्यन्ति युगस्यान्ते क्षत्रिया लोककण्टकाः ३२
अरक्षितारो लुब्धाश्च मानाहंकारदर्पिताः
केवलं दण्डरुचयो भविष्यन्ति युगक्षये ३३
आक्रम्याक्रम्य साधूनां दारांश्चैव धनानि च
भोक्ष्यन्ते निरनुक्रोशा रुदतामपि भारत ३४
न कन्यां याचते कश्चिन्नापि कन्या प्रदीयते
स्वयंग्राहा भविष्यन्ति युगान्ते पर्युपस्थिते ३५
राजानश्चाप्यसंतुष्टाः परार्थान्मूढचेतसः
सर्वोपायैर्हरिष्यन्ति युगान्ते पर्युपस्थिते ३६

म्लेच्छीभूतं जगत्सर्वं भविष्यति च भारत
हस्तो हस्तं परिमुषेद्युगान्ते पर्युपस्थिते ३७
सत्यं संक्षिप्यते लोके नरैः पण्डितमानिभिः
स्थविरा बालमतयो बालाः स्थविरबुद्धयः ३८
भीरवः शूरमानीनः शूरा भीरुविषादिनः
न विश्वसन्ति चान्योन्यं युगान्ते पर्युपस्थिते ३९
एकाहार्यं जगत्सर्वं लोभमोहव्यवस्थितम्
अधर्मो वर्धति महान्न च धर्मः प्रवर्तते ४०
ब्राह्मणाः क्षत्रिया वैश्या न शिष्यन्ति जनाधिप
एकवर्णस्तदा लोको भविष्यति युगक्षये ४१
नक्षंस्यति पिता पुत्रं पुत्रश्च पितरं तथा
भार्या च पतिशुश्रूषां न करिष्यति काचन ४२
ये यवान्ना जनपदा गोधूमान्नास्तथैव च
तान्देशान्संश्रयिष्यन्ति युगान्ते पर्युपस्थिते ४३
स्वैराहाराश्च पुरुषा योषितश्च विशां पते
अन्योन्यं न सहिष्यन्ति युगान्ते पर्युपस्थिते ४४
म्लेच्छभूतं जगत्सर्वं भविष्यति युधिष्ठिर
न श्राद्धैर्हि पितृंश्चापि तर्पयिष्यन्ति मानवाः ४५
न कश्चित्कस्यचिच्छ्रोता न कश्चित्कस्यचिद्गुरुः
तमोग्रस्तस्तदा लोके भविष्यति नराधिप ४६
परमायुश्च भविता तदा वर्षाणि षोडश
ततः प्राणान्विमोक्ष्यन्ति युगान्ते पर्युपस्थिते ४७
पञ्चमे वाथ षष्ठे वा वर्षे कन्या प्रसूयते
सप्तवर्षाष्टवर्षाश्च प्रजास्यन्ति नरास्तदा ४८
पत्यौ स्त्री तु तदा राजन्पुरुषो वा स्त्रियं प्रति
युगान्ते राजशार्दूल न तोषमुपयास्यति ४९
अल्पद्रव्या वृथालिङ्गा हिंसा च प्रभविष्यति
न कश्चित्कस्यचिद्दाता भविष्यति युगक्षये ५०
अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः
केशशूलाः स्त्रियश्चापि भविष्यन्ति युगक्षये ५१

म्लेच्छाः क्रूराः सर्वभक्षा दारुणाः सर्वकर्मसु
भाविनः पश्चिमे काले मनुष्या नात्र संशयः ५२
क्रयविक्रयकाले च सर्वः सर्वस्य वञ्चनम्
युगान्ते भरतश्रेष्ठ वृत्तिलोभात्करिष्यति ५३
ज्ञानानि चाप्यविज्ञाय करिष्यन्ति क्रियास्तथा
आत्मच्छन्देन वर्तन्ते युगान्ते पर्युपस्थिते ५४
स्वभावात्क्रूरकर्माणश्चान्योन्यमभिशङ्किनः
भवितारो जनाः सर्वे संप्राप्ते युगसंक्षये ५५
आरामांश्चैव वृक्षांश्च नाशयिष्यन्ति निर्व्यथाः
भविता संक्षयो लोके जीवितस्य च देहिनाम् ५६
तथा लोभाभिभूताश्च चरिष्यन्ति महीमिमाम्
ब्राह्मणाश्च भविष्यन्ति ब्रह्मस्वानि च भुञ्जते ५७
हाहाकृता द्विजाश्चैव भयार्ता वृषलार्दिताः
त्रातारमलभन्तो वै भ्रमिष्यन्ति महीमिमाम् ५८
जीवितान्तकरा रौद्राः क्रूराः प्राणिविहिंसकाः
यदा भविष्यन्ति नरास्तदा संक्षेप्स्यते युगम् ५९
आश्रयिष्यन्ति च नदीः पर्वतान्विषमाणि च
प्रधावमाना वित्रस्ता द्विजाः कुरुकुलोद्वह ६०
दस्युप्रपीडिता राजन्काका इव द्विजोत्तमाः
कुराजभिश्च सततं करभारप्रपीडिताः ६१
धैर्यं त्यक्त्वा महीपाल दारुणे युगसंक्षये
विकर्माणि करिष्यन्ति शूद्राणां परिचारकाः ६२
शूद्रा धर्मं प्रवक्ष्यन्ति ब्राह्मणाः पर्युपासकाः
श्रोतारश्च भविष्यन्ति प्रामाण्येन व्यवस्थिताः ६३
विपरीतश्च लोकोऽय भविष्यत्यधरोत्तरः
एडूकान्पूजयिष्यन्ति वर्जयिष्यन्ति देवताः
शूद्राः परिचरिष्यन्ति न द्विजान्युगसंक्षये ६४
आश्रमेषु महर्षीणां ब्राह्मणावसथेषु च
देवस्थानेषु चैत्येषु नागानामालयेषु च ६५
एडूकचिह्ना पृथिवी न देवगृहभूषिता

भविष्यति युगे क्षीणे तद्युगान्तस्य लक्षणम् ६६
यदा रौद्रा धर्महीना मांसादाः पानपास्तथा
भविष्यन्ति नरा नित्यं तदा संक्षेप्स्यते युगम् ६७
पुष्पे पुष्पं यदा राजन्फले फलमुपाश्रितम्
प्रजास्यति महाराज तदा संक्षेप्स्यते युगम् ६८
अकालवर्षी पर्जन्यो भविष्यति गते युगे
अक्रमेण मनुष्याणां भविष्यन्ति तदा क्रिया
विरोधमथ यास्यन्ति वृषला ब्राह्मणैः सह ६९
मही म्लेच्छसमाकीर्णा भविष्यति ततोऽचिरात्
करभारभयाद्विप्रा भजिष्यन्ति दिशो दश ७०
निर्विशेषा जनपदा नरावृष्टिभिरर्दिताः
आश्रमानभिपत्स्यन्ति फलमूलोपजीविनः ७१
एवं पर्याकुले लोके मर्यादा न भविष्यति
न स्थास्यन्त्युपदेशे च शिष्या विप्रियकारिणः ७२
आचार्योपनिधिश्चैव वत्स्यते तदनन्तरम्
अर्थयुक्त्या प्रवत्स्यन्ति मित्रसंबन्धिबान्धवाः
अभावः सर्वभूतानां युगान्ते च भविष्यति ७३
दिशः प्रज्वलिताः सर्वा नक्षत्राणि चलानि च
ज्योतींषि प्रतिकूलानि वाताः पर्याकुलास्तथा
उल्कापाताश्च बहवो महाभयनिदर्शकाः ७४
षड्भिरन्यैश्च सहितो भास्करः प्रतपिष्यति
तुमुलाश्चापि निर्ह्रादा दिग्दाहाश्चापि सर्वशः
कबन्धान्तर्हितो भानुरुदयास्तमये तदा ७५
अकालवर्षी च तदा भविष्यति सहस्रदृक्
सस्यानि च न रोक्ष्यन्ति युगान्ते पर्युपस्थिते ७६
अभीक्ष्णं क्रूरवादिन्यः परुषा रुदितप्रियाः
भर्तॄणां वचने चैव न स्थास्यन्ति तदा स्त्रियः ७७
पुत्राश्च मातापितरौ हनिष्यन्ति युगक्षये
सूदयिष्यन्ति च पतीन्स्त्रियः पुत्रानपाश्रिताः ७८
अपर्वणि महाराज सूर्यं राहुरुपैष्यति

युगान्ते हुतभुक्चापि सर्वतः प्रज्वलिष्यति ७९
पानीयं भोजनं चैव याचमानास्तदाध्वगाः
न लप्स्यन्ते निवासं च निरस्ताः पथि शेरते ८०
निर्घातवायसा नागाः शकुनाः समृगद्विजाः
रूक्षा वाचो विमोक्ष्यन्ति युगान्ते पर्युपस्थिते ८१
मित्रसंबन्धिनश्चापि संत्यक्ष्यन्ति नरास्तदा
जनं परिजनं चापि युगान्ते पर्युपस्थिते ८२
अथ देशान्दिशश्चापि पत्तनानि पुराणि च
क्रमशः संश्रयिष्यन्ति युगान्ते पर्युपस्थिते ८३
हा तात हा सुतेत्येवं तदा वाचः सुदारुणाः
विक्रोशमानश्चान्योन्यं जनो गां पर्यटिष्यति ८४
ततस्तुमुलसंघाते वर्तमाने युगक्षये
द्विजातिपूर्वको लोकः क्रमेण प्रभविष्यति ८५
ततः कालान्तरेऽन्यस्मिन्पुनर्लोकविवृद्धये
भविष्यति पुनर्दैवमनुकूलं यदृच्छया ८६
यदा चन्द्रश्च सूर्यश्च तथा तिष्यबृहस्पती
एकराशौ समेष्यन्ति प्रपत्स्यति तदा कृतम् ८७
कालवर्षी च पर्जन्यो नक्षत्राणि शुभानि च
प्रदक्षिणा ग्रहाश्चापि भविष्यन्त्यनुलोमगाः
क्षेमं सुभिक्षमारोग्यं भविष्यति निरामयम् ८८
कल्किर्विष्णुयशा नाम द्विजः कालप्रचोदितः
उत्पत्स्यते महावीर्यो महाबुद्धिपराक्रमः ८९
संभूतः सम्भलग्रामे ब्राह्मणावसथे शुभे
मनसा तस्य सर्वाणि वाहनान्यायुधानि च
उपस्थास्यन्ति योधाश्च शस्त्राणि कवचानि च ९०
स धर्मविजयी राजा चक्रवर्ती भविष्यति
स चेमं संकुलं लोकं प्रसादमुपनेष्यति ९१
उत्थितो ब्राह्मणो दीप्तः क्षयान्तकृदुदारधीः
स संक्षेपो हि सर्वस्य युगस्य परिवर्तकः ९२
स सर्वत्र गतान्क्षुद्रान्ब्राह्मणैः परिवारितः

उत्सादयिष्यति तदा सर्वान्म्लेच्छगणान्द्विजः ९३
इति श्रीमहाभारते आरण्यकपर्वणि अष्टाशीत्यधिकशततमोऽध्यायः १८८

## एकोन नवत्यधिक शततमोऽध्यायः

मार्कण्डेय उवाच
ततश्चोरक्षयं कृत्वा द्विजेभ्यः पृथिवीमिमाम्
वाजिमेधे महायज्ञे विधिवत्कल्पयिष्यति १
स्थापयित्वा स मर्यादाः स्वयंभुविहिताः शुभाः
वनं पुण्ययशःकर्मा जरावान्संश्रयिष्यति २
तच्छीलमनुवर्त्स्यन्ते मनुष्या लोकवासिनः
विप्रैश्चोरक्षये चैव कृते क्षेमं भविष्यति ३
कृष्णाजिनानि शक्तीश्च त्रिशूलान्यायुधानि च
स्थापयन्विप्रशार्दूलो देशेषु विजितेषु च ४
संस्तूयमानो विप्रेन्द्रैर्मानयानो द्विजोत्तमान्
कल्किश्चरिष्यति महीं सदा दस्युवधे रतः ५
हा तात हा सुतेत्येवं तास्ता वाचः सुदारुणाः
विक्रोशमानान्सुभृशं दस्यून्नेष्यति संक्षयम् ६
ततोऽधर्मविनाशो वै धर्मवृद्धिश्च भारत
भविष्यति कृते प्राप्ते क्रियावांश्च जनस्तथा ७
आरामाश्चैव चैत्याश्च तटाकान्यवटास्तथा
यज्ञक्रियाश्च विविधा भविष्यन्ति कृते युगे ८
ब्राह्मणाः साधवश्चैव मुनयश्च तपस्विनः
आश्रमाः सहपाषण्डाः स्थिताः सत्ये जनाः प्रजाः ९
जास्यन्ति सर्वबीजानि उप्यमानानि चैव ह
सर्वेष्वृतुषु राजेन्द्र सर्वं सस्यं भविष्यति १०
नरा दानेषु निरता व्रतेषु नियमेषु च
जपयज्ञपरा विप्रा धर्मकामा मुदा युताः
पालयिष्यन्ति राजानो धर्मेणेमां वसुंधराम् ११
व्यवहाररता वैश्या भविष्यन्ति कृते युगे
षट्कर्मनिरता विप्राः क्षत्रिया रक्षणे रताः १२

शुश्रूषायां रताः शूद्रास्तथा वर्णत्रयस्य च
एष धर्मः कृतयुगे त्रेतायां द्वापरे तथा
पश्चिमे युगकाले च यः स ते संप्रकीर्तितः १३
सर्वलोकस्य विदिता युगसंख्या च पाण्डव
एतत्ते सर्वमाख्यातमतीतानागतं मया
वायुप्रोक्तमनुस्मृत्य पुराणमृषिसंस्तुतम् १४
एवं संसारमार्गा मे बहुशश्चिरजीविना
दृष्टाश्चैवानुभूताश्च तांस्ते कथितवानहम् १५
इदं चैवापरं भूयः सह भ्रातृभिरच्युत
धर्मसंशयमोक्षार्थं निबोध वचनं मम १६
धर्मे त्वयात्मा संयोज्यो नित्यं धर्मभृतां वर
धर्मात्मा हि सुखं राजा प्रेत्य चेह च नन्दति १७
निबोध च शुभां वाणीं यां प्रवक्ष्यामि तेऽनघ
न ब्राह्मणे परिभवः कर्तव्यस्ते कदाचन
ब्राह्मणो रुषितो हन्यादपि लोकान्प्रतिज्ञया १८
वैशम्पायन उवाच
मार्कण्डेयवचः श्रुत्वा कुरूणां प्रवरो नृपः
उवाच वचनं धीमान्परमं परमद्युतिः १९
कस्मिन्धर्मे मया स्थेयं प्रजाः संरक्षता मुने
कथं च वर्तमानो वै न च्यवेयं स्वधर्मतः २०

मार्कण्डेय उवाच
दयावान्सर्वभूतेषु हितो रक्तोऽनसूयकः
अपत्यानामिव स्वेषां प्रजानां रक्षणे रतः
चर धर्मं त्यजाधर्मं पितॄन्देवांश्च पूजय २१
प्रमादाद्यत्कृतं तेऽभूत्सम्यग्दानेन तज्जय
अलं ते मानमाश्रित्य सततं परवान्भव २२
विजित्य पृथिवीं सर्वां मोदमानः सुखी भव
एष भूतो भविष्यश्च धर्मस्ते समुदीरितः २३
न तेऽस्त्यविदितं किंचिदतीतानागतं भुवि

तस्मादिमं परिक्लेशं त्वं तात हृदि मा कृथाः २४
एष कालो महाबाहो अपि सर्वदिवौकसाम्
मुह्यन्ति हि प्रजास्तात कालेनाभिप्रचोदिताः २५
मा च तेऽत्र विचारो भूद्यन्मयोक्तं तवानघ
अतिशङ्क्य वचो ह्येतद्धर्मलोपो भवेत्तव २६
जातोऽसि प्रथिते वंशे कुरूणां भरतर्षभ
कर्मणा मनसा वाचा सर्वमेतत्समाचर २७
युधिष्ठिर उवाच
यत्त्वयोक्तं द्विजश्रेष्ठ वाक्यं श्रुतिमनोहरम्
तथा करिष्ये यत्नेन भवतः शासनं विभो २८
न मे लोभोऽस्ति विप्रेन्द्र न भयं न च मत्सरः
करिष्यामि हि तत्सर्वमुक्तं यत्ते मयि प्रभो २९
वैशम्पायन उवाच
श्रुत्वा तु वचनं तस्य पाण्डवस्य महात्मनः
प्रहृष्टाः पाण्डवा राजन्सहिताः शार्ङ्गधन्वना ३०
तथा कथां शुभां श्रुत्वा मार्कण्डेयस्य धीमतः
विस्मिताः समपद्यन्त पुराणस्य निवेदनात् ३१
इति श्रीमहाभारते आरण्यकपर्वणि एकोननवत्यधिकशततमोऽध्यायः १८९

## नवत्यधिक शततमोऽध्यायः

वैशम्पायन उवाच
भूय एव ब्राह्मणमहाभाग्यं वक्तुमर्हसीत्यब्रवीत्पाण्डवेयो मार्कण्डेयम् १
अथाचष्ट मार्कण्डेयः २
अयोध्यायामिक्ष्वाकुकुलोत्पन्नः पार्थिवः परीक्षिन्नाम मृगयामगमत् ३
तमेकाश्वेन मृगमनुसरन्तं मृगो दूरमपाहरत् ४
अथाध्वनि जातश्रमः क्षुत्तृष्णाभिभूतश्च कस्मिंश्चिदुद्देशे नीलं वनषंडमपश्यत् तच्च विवेश ५
ततस्तस्य वनषंडस्य मध्येऽतीव रमणीयं सरो दृष्ट्वा साश्व एव व्यगाहत ६
अथाश्वस्तः स बिसमृणालमश्वस्याग्रे च निक्षिप्य पुष्करिणीतीरे समाविशत् ७

ततः शयानो मधुरं गीतशब्दमशृणोत् ८
स श्रुत्वाचिन्तयत्  नेह मनुष्यगतिं पश्यामि  कस्य खल्वयं गीतशब्द इति
९
अथापश्यत्कन्यां परमरूपदर्शनीयां पुष्पाण्यवचिन्वतीं गायन्तीं च १०
अथ सा राज्ञः समीपे पर्यक्रामत् ११
तामब्रवीद्राजा  कस्यासि सुभगे त्वमिति १२
सा प्रत्युवाच  कन्यास्मीति १३
तां राजोवाच अर्थी त्वयाहमिति १४
अथोवाच कन्या  समयेनाहं शक्या त्वया लब्धुम्  नान्यथेति १५
तां राजा समयमपृच्छत् १६
ततः कन्येदमुवाच  उदकं मे न दर्शयितव्यमिति १७
स राजा तां बाढमित्युक्त्वा समागम्य तया सहास्ते १८
तत्रैवासीने राजनि सेनान्वगच्छत्
पदेनानुपदं दृष्ट्वा राजानं परिवार्यातिष्ठत् १९
पर्याश्वस्तश्च राजा तयैव सह शिबिकया प्रायादविघाटितया
स्वनगरमनुप्राप्य रहसि तया सह रमन्नास्ते  नान्यत्किंचनापश्यत् २०
अथ प्रधानामात्यस्तस्याभ्याशचराः च स्त्रियोऽपृच्छत्
किमत्र प्रयोजनं वर्तत इति २१
अथाब्रुवंस्ताः स्त्रियः  अपूर्वमिव पश्याम उदकं नात्र नीयत इति २२
अथामात्योऽनुदकं वनं कारयित्वोदारवृक्षं बहुमूलपुष्पफलं रहस्युपगम्य
राजान
मब्रवीत्  वनमिदमुदारमनुदकम्  साध्वत्र रम्यतामिति २३
स तस्य वचनात्तयैव सह देव्या तद्वनं प्राविशत्
स कदाचित्तस्मिन्वने रम्ये तयैवसह व्यवहरत्
अथ क्षुत्तृष्णार्दितः श्रान्तोऽतिमात्रमतिमुक्तागारमपश्यत् २४
तत्प्रविश्य राजा सह प्रियया सुधातलसुकृतां विमलसलिलपूर्णां
वापीमपश्यत् २५
दृष्ट्वैव च तां तस्या एव तीरे सहैव तया देव्या व्यतिष्ठत् २६
अथ तां देवीं स राजाब्रवीत्  साध्ववतर वापीसलिलमिति २७
सा तद्वचः श्रुत्वावतीर्य वापीं न्यमज्जत्  न पुनरुदमज्जत् २८

तां मृगयमाणो राजा नापश्यत् २९
वापीमपि निःस्राव्य मण्डूकं श्वभ्रमुखे दृष्ट्वा क्रुद्ध आज्ञापयामास
सर्वमण्डूकवधः क्रियतामिति  यो मयार्थी स
मृतकैमण्डूकैरुपायनैर्मामुपतिष्ठेदिति ३०
अथ मण्डूकवधे घोरे क्रियमाणे दिक्षु सर्वासु मण्डूकान्भयमाविशत् ते
भीता मण्डूकराज्ञे यथावृत्तं न्यवेदयन् ३१
ततो मण्डूकराट् तापसवेषधारी राजानमभ्यगच्छत् ३२
उपेत्य चैनमुवाच  मा राजन्क्रोधवशं गमः  प्रसादं कुरु
नार्हसि मण्डूकानामनपराधिनां वधं कर्तुमिति ३३
श्लोकौ चात्र भवतः
मा मण्डूकाञ्जिघांस त्वं कोपं संधारयाच्युत
प्रक्षीयते धनोद्रेको जनानामविजानताम् ३४
प्रतिजानीहि नैतांस्त्वं प्राप्य क्रोधं विमोक्ष्यसे
अलं कृत्वा तवाधर्मं मण्डूकैः किं हतैर्हि ते ३५
तमेवं वादिनमिष्टजनशोकपरीतात्मा राजा प्रोवाच
न हि क्षम्यते तन्मया  हनिष्याम्येतान्  एतैर्दुरात्मभिः प्रिया मे भक्षिता
सर्वथैव मे वध्या मण्डूकाः  नार्हसि विद्वन्मामुपरोद्धुमिति ३६
स तद्वाक्यमुपलभ्य व्यथितेन्द्रियमनाः प्रोवाच
प्रसीद राजन्  अहमायुर्नाम मण्डूकराजः  मम सा दुहिता सुशोभना नाम
तस्या दौःशील्यमेतत्  बहवो हि राजानस्तया विप्रलब्धपूर्वा इति ३७
तमब्रवीद्राजा  तयास्म्यर्थी  सा मे दीयतामिति ३८
अथैनां राज्ञे पितादात्  अब्रवीच्चैनाम्
एनं राजानं शुश्रूषस्वेति ३९
स उवाच दुहितरम्  यस्मात्त्वया राजानो विप्रलब्धास्तस्मादब्रह्मण्यानि
तवापत्यानि भविष्यन्त्यनृतकत्वात्तवेति ४०
स च राजा तामुपलभ्य तस्यां सुरतगुणनिबद्धहृदयो
लोकत्रयैश्वर्यमिवोपलभ्य हर्षबाष्पकलया वाचाप्रणिपत्याभि पूज्य
मण्डूकराजानमब्रवीत्  अनुगृहीतोऽस्मीति ४१
स च मण्डूकराजो जामातरमनुज्ञाप्य यथागतमगच्छत् ४२
अथ कस्यचित्कालस्य तस्यां कुमारास्त्रयस्तस्य राज्ञः संबभूवुः शलो दलो

बलश्चेति  ततस्तेषां ज्येष्ठं शलं समये पिता राज्येऽभिषिच्य तपसि धृतात्मा वनं जगाम ४३
अथ कदाचिच्छलो मृगयामचरत्  मृगं चासाद्य रथेनान्वधावत् ४४
सूतं चोवाच  शीघ्रं मां वहस्वेति ४५
स तथोक्तः सूतो राजानमब्रवीत्  मा क्रियतामनुबन्धः
नैष शक्यस्त्वया मृगो ग्रहीतुं यद्यपि ते रथे युक्तो वाम्यौ स्यातामिति ४६
ततोऽब्रवीद्राजा सूतम्  आचक्ष्व मे वाम्यौ  हन्मि वा त्वामिति ४७
स एवमुक्तो राजभयभीतो वामदेवशापभीतश्च सन्नाचख्यौ राज्ञे
वामदेवस्याश्वौ वाम्यौ मनोजवाविति ४८
अथैवमेवं ब्रुवाणमब्रवीद्राजा  वामदेवाश्रमं याहीति ४९
स गत्वा वामदेवाश्रमं तमृषिमब्रवीत्
भगवन्मृगो मे विद्धः पलायते
तं संभावयेयम्  अर्हसि मे वाम्यौ दातुमिति ५०
तमब्रवीदृषिः  ददानि ते वाम्यौ
कृतकार्येण भवता ममैव निर्यात्यौ क्षिप्रमिति ५१
स च तावश्वौ प्रतिगृह्यानुज्ञाप्य चर्षिं प्रायाद्वाम्यसंयुक्तेन रथेन मृगं प्रति गच्छंश्चाब्रवीत्सूतम्  अश्वरत्नाविमावयोग्यौ ब्राह्मणानाम्  नैतौ प्रतिदेयौ वामदेवायेति ५२
एवमुक्त्वा मृगमवाप्य स्वनगरमेत्याश्वावन्तःपुरेऽस्थापयत् ५३
अथर्षिश्चिन्तयामास  तरुणो राजपुत्रः कल्याणं पत्रमासाद्य रमते
न मे प्रतिनिर्यातयति  अहो कष्टमिति ५४
मनसा निश्चित्य मासि पूर्णे शिष्यमब्रवीत्  गच्छात्रेय
राजानं ब्रूहि  यदि पर्याप्तं निर्यातयोपाध्यायवाम्याविति ५५
स गत्वैवं तं राजानमब्रवीत् ५६
तं राजा प्रत्युवाच  राज्ञामेतद्वाहनम्
अनर्हा ब्राह्मणा रत्नानामेवंविधानाम्
किं च ब्राह्मणानामश्वैः कार्यम्
साधु प्रतिगम्यतामिति ५७
स गत्वैवमुपाध्यायायाचष्ट ५८
तच्छ्रुत्वा वचनमप्रियं वामदेवः क्रोधपरीतात्मा स्वयमेव

राजानमभिगम्याश्वार्थमभ्य चोदयत्  न चादाद्राजा ५९
वामदेव उवाच
प्रयच्छ वाम्यौ मम पार्थिव त्वं कृतं हि ते कार्यमन्यैरशक्यम्
मा त्वा वधीद्वरुणो घोरपाशैर्ब्रह्मक्षत्रस्यान्तरे वर्तमानः ६०
राजोवाच
अनड्वाहौ सुव्रतौ साधु दान्तावेतद्विप्राणां वाहनं वामदेव
ताभ्यां याहि त्वं यत्र कामो महर्षे छन्दांसि वै त्वादृशं संवहन्ति ६१
वामदेव उवाच
छन्दांसि वै मादृशं संवहन्ति लोकेऽमुष्मिन्पार्थिव यानि सन्ति
अस्मिंस्तु लोके मम यानमेतदस्मद्विधानामपरेषां च राजन् ६२
राजोवाच
चत्वारो वा गर्दभास्त्वां वहन्तु श्रेष्ठाश्वतर्यो हरयो वा तुरंगाः
तैस्त्वं याहि क्षत्रियस्यैष वाहो मम वाम्यौ न तवैतौ हि विद्धि ६३
वामदेव उवाच
घोरं व्रतं ब्राह्मणस्यैतदाहुरेतद्राजन्यदिहाजीवमानः
अयस्मया घोररूपा महान्तो वहन्तु त्वां शितशूलाश्चतुर्धा ६४
राजोवाच
ये त्वा विदुर्ब्राह्मणं वामदेव वाचा हन्तुं मनसा कर्मणा वा
ते त्वां सशिष्यमिह पातयन्तु मद्वाक्यनुन्नाः शितशूलासिहस्ताः ६५
वामदेव उवाच
नानुयोगा ब्राह्मणानां भवन्ति वाचा राजन्मनसा कर्मणा वा
यस्त्वेवं ब्रह्म तपसान्वेति विद्वांस्तेन श्रेष्ठो भवति हि जीवमानः ६६
मार्कण्डेय उवाच
एवमुक्ते वामदेवेन राजन्समुत्तस्थू राक्षसा घोररूपाः
तैः शूलहस्तैर्वध्यमानः स राजा प्रोवाचेदं वाक्यमुच्चैस्तदानीम् ६७
इक्ष्वाकवो यदि ब्रह्मन्दलो वा विधेया मे यदि वान्ये विशोऽपि
नोत्स्रक्ष्येऽह वामदेवस्य वाम्यौ नैवंविधा धर्मशीला भवन्ति ६८
एवं ब्रुवन्नेव स यातुधानैर्हतो जगामाशु महीं क्षितीशः
ततो विदित्वा नृपतिं निपातितमिक्ष्वाकवो वै दलमभ्यषिञ्चन् ६९
राज्ये तदा तत्र गत्वा स विप्रः प्रोवाचेदं वचनं वामदेवः

दलं राजानं ब्राह्मणानां हि देयमेवं राजन्सर्वधर्मेषु दृष्टम् ७०
बिभेषि चेत्त्वमधर्मान्नरेन्द्र प्रयच्छ मे शीघ्रमेवाद्य वाम्यौ
एतच्छ्रुत्वा वामदेवस्य वाक्यं स पार्थिवः सूतमुवाच रोषात् ७१
एकं हि मे सायकं चित्ररूपं दिग्धं विषेणाहर संगृहीतम्
येन विद्धो वामदेवः शयीत संदश्यमानः श्वभिरार्तरूपः ७२
वामदेव उवाच
जानामि पुत्रं दशवर्षं तवाहं जातं महिष्यां श्येनजितं नरेन्द्र
तं जहि त्वं मद्वचनात्प्रणुन्नस्तूर्णं प्रियं सायकैर्घोररूपैः ७३
मार्कण्डेय उवाच
एवमुक्तो वामदेवेन राजन्नन्तःपुरे राजपुत्रं जघान
स सायकस्तिग्मतेजा विसृष्टः श्रुत्वा दलस्तच्च वाक्यं बभाषे ७४
इक्ष्वाकवो हन्त चरामि वः प्रियं निहन्मीमं विप्रमद्य प्रमथ्य
आनीयतामपरस्तिग्मतेजाः पश्यध्वं मे वीर्यमद्य क्षितीशाः ७५
वामदेव उवाच
यं त्वमेनं सायकं घोररूपं विषेण दिग्धं मम संदधासि
न त्वमेनं शरवर्यं विमोक्तुं संधातुं वा शक्ष्यसि मानवेन्द्र ७६
राजोवाच
इक्ष्वाकवः पश्यत मां गृहीतं न वै शक्नोम्येष शरं विमोक्तुम्
न चास्य कर्तुं नाशमभ्युत्सहामि आयुष्मान्वै जीवतु वामदेवः ७७
वामदेव उवाच
संस्पृशैनां महिषीं सायकेन ततस्तस्मादेनसो मोक्ष्यसे त्वम् ७८
मार्कण्डेय उवाच
ततस्तथा कृतवान्पार्थिवस्तु ततो मुनिं राजपुत्री बभाषे
यथा युक्तं वामदेवाहमेनं दिने दिने संविशन्ती व्यशंसम्
ब्राह्मणेभ्यो मृगयन्ती सूनृतानि तथा ब्रह्मन्पुण्यलोकं लभेयम् ७९
वामदेव उवाच
त्वया त्रातं राजकुलं शुभेक्षणे वरं वृणीष्वाप्रतिमं ददानि ते
प्रशाधीमं स्वजनं राजपुत्रि इक्ष्वाकुराज्यं सुमहच्चाप्यनिन्द्ये ८०
राजपुत्र्युवाच
वरं वृणे भगवन्नेकमेव विमुच्यतां किल्बिषादद्य भर्ता

शिवेन चाध्याहि सपुत्रबान्धवं वरो वृतो ह्येष मया द्विजाग्र्य ८१
मार्कण्डेय उवाच
श्रुत्वा वचः स मुनी राजपुत्र्यास्तथास्त्विति प्राह कुरुप्रवीर
ततः स राजा मुदितो बभूव वाम्यौ चास्मै संप्रददौ प्रणम्य ८२
इति श्रीमहाभारते आरण्यकपर्वणि नवत्यधिकशततमोऽध्यायः १९०

## एकनवत्यधिक शततमोऽध्यायः

वैशम्पायन उवाच
मार्कण्डेयमृषयः पाण्डवाश्च पर्यपृच्छन्
अस्ति कश्चिद्भवतश्चिरजाततर इति १
स तानुवाच अस्ति खलु राजर्षिरिन्द्र द्युम्नो नाम क्षीणपुण्यस्त्रिदिवात्प्रच्युतः कीर्तिस्ते व्युच्छिन्नेति स मामुपातिष्ठत् अथ प्रत्यभिजानाति मां भवानिति २
तमहमब्रुवम् न वयं रासायनिकाः शरीरोपतापेनात्मनः समारभामहेऽथानामनुष्ठानम् ३
अस्ति खलु हिमवति प्राकारकर्णो नामोलूकः
स भवन्तं यदि जानीयात्
प्रकृष्टे चाध्वनि हिमवान् तत्रासौ प्रतिवसतीति ४
स मामश्वो भूत्वा तत्रावहद्यत्र बभूवोलूकः ५
अथैनं स राजर्षिः पर्यपृच्छत् प्रत्यभिजानाति मां भवानिति ६
स मुहूर्तं ध्यात्वाब्रवीदेनम् नाभिजाने भवन्तमिति ७
स एवमुक्तो राजर्षिरिन्द्रद्युम्नः पुनस्तमुलूकमब्रवीत्
अस्ति कश्चिद्भवतश्चिरजाततर इति ८
स एवमुक्तोऽब्रवीदेनम् अस्ति खल्विन्द्रद्युम्नसरो नाम
तस्मिन्नाडीजङ्घो नाम बकः प्रतिवसति
सोऽस्मत्तश्चिरजाततरः तं पृच्छेति ९
तत इन्द्रद्युम्नो मां चोलूकं चादाय तत्सरोऽगच्छद्यत्रासौ
नाडीजङ्घो नाम बको बभूव १०
सोऽस्माभिः पृष्टः भवानिन्द्रद्युम्नं राजानं प्रत्यभिजानातीति ११
स एवमुक्तोऽब्रवीन्मुहूर्तं ध्यात्वा नाभिजानाम्यहमिन्द्रद्युम्नं राजानमिति १२

ततः सोऽस्माभिः पृष्टः अस्ति कश्चिदन्यो भवतश्चिरजाततर इति १३
स नोऽब्रवीत् अस्ति खल्विहैव सरस्यकूपारो नाम कच्छपः प्रतिवसति स
मत्तश्चिरजाततर इति स यदि कथंचिदभिजानीयादिमं राजानं तमकूपारं
पृच्छाम इति १४
ततः स बकस्तमकूपारं कच्छपं विज्ञापयामास
अस्त्यस्माकमभिप्रेतं भवन्तं कंचिदर्थमभिप्रष्टुम् साध्वागम्यतां तावदिति १५
एतच्छ्रुत्वा स कच्छपस्तस्मात्सरस उत्थायाभ्यगच्छद्यत्र तिष्ठामो वयं तस्य
सरसस्तीरे १६
आगतं चैनं वयमपृच्छामभवानिन्द्रद्युम्नं राजानमभिजानातीति १७
स मुहूर्तं ध्यात्वा बाष्पपूर्णनयन उद्विग्नहृदयो वेपमानो विसंज्ञकल्पः
प्राञ्जलिरब्रवीत् किमहमेनं न प्रत्याभिजानामि अहं ह्यनेन सहस्रकृत्वः
पूर्वमग्निचितिषूपहित पूर्वः
सरश्चेदमस्य दक्षिणादत्ताभिर्गोभिरतिक्रममाणाभिः कृतम्
अत्र चाहं प्रतिवसामीति १८
अथैतत्कच्छपेनोदाहृतं श्रुत्वा समनन्तरं देवलोकाद्देवरथः प्रादुरासीत् १९
वाचश्चाश्रूयन्तेन्द्रद्युम्नं प्रति प्रस्तुतस्ते स्वर्गः
यथोचितं स्थानमभिपद्यस्व कीर्तिमानसि अव्यग्रो याहीति २०
दिवं स्पृशति भूमिं च शब्दः पुण्यस्य कर्मणः
यावत्स शब्दो भवति तावत्पुरुष उच्यते २१
अकीर्तिः कीर्त्यते यस्य लोक भूतस्य कस्यचित्
पतत्येवाधमाँल्लोकान्यावच्छब्दः स कीर्त्यते २२
तस्मात्कल्याणवृत्तः स्यादत्यन्ताय नरो भुवि
विहाय वृत्तं पापिष्ठं धर्ममेवाभिसंश्रयेत् २३
इत्येतच्छ्रुत्वा स राजाब्रवीत् तिष्ठ तावद्यावदिदानीमिमौ
वृद्धौ यथा स्थानं प्रतिपादयामीति २४
स मां प्राकारकर्णं चोलूकं यथोचिते स्थाने प्रतिपाद्य तेनैव यानेन
संसिद्धोयथोचितं स्थानं प्रतिपन्नः २५
एतन्मयानुभूतं चिरजीविना दृष्टमिति पाण्डवानुवाच मार्कण्डेयः २६
पाण्डवाश्चोचुः प्रीताः साधु शोभनं कृतं भवता राजानमिन्द्रद्युम्नं
स्वर्गलोकाच्च्युतं स्वे स्थाने स्वर्गे पुनः प्रतिपादयतेति २७

अथैनानब्रवीदसौ ननु देवकीपुत्रेणापि कृष्णेन नरके मज्जमानो
राजर्षिर्नृगस्तस्मात्कृच्छ्रात्समुद्धृत्य पुनः स्वर्गं प्रतिपादित इति २८
इति श्रीमहाभारते आरण्यकपर्वणि एकनवत्यधिक शततमोऽध्यायः १९१

## द्विनवत्यधिक शततमोऽध्यायः

वैशम्पायन उवाच
युधिष्ठिरो धर्मराजः पप्रच्छ भरतर्षभ
मार्कण्डेयं तपोवृद्धं दीर्घायुषमकल्मषम् १
विदितास्तव धर्मज्ञ देवदानवराक्षसाः
राजवंशाश्च विविधा ऋषिवंशाश्च शाश्वताः
न तेऽस्त्यविदितं किंचिदस्मिँल्लोके द्विजोत्तम २
कथां वेत्सि मुने दिव्यां मनुष्योरगरक्षसाम्
एतदिच्छाम्यहं श्रोतुं तत्त्वेन कथितं द्विज ३
कुवलाश्व इति ख्यात इक्ष्वाकुरपराजितः
कथं नाम विपर्यासाद्धुन्धुमारत्वमागतः ४
एतदिच्छामि तत्त्वेन ज्ञातुं भार्गवसत्तम
विपर्यस्तं यथा नाम कुवलाश्वस्य धीमतः ५
मार्कण्डेय उवाच
हन्त ते कथयिष्यामि शृणु राजन्युधिष्ठिर
धर्मिष्ठमिदमाख्यानं धुन्धुमारस्य तच्छृणु ६
यथा स राजा इक्ष्वाकुः कुवलाश्वो महीपतिः
धुंधुमारत्वमगमत्तच्छृणुष्व महीपते ७
महर्षिर्विश्रुतस्तात उत्तङ्क इति भारत
मरुधन्वसु रम्येषु आश्रमस्तस्य कौरव ८
उत्तङ्कस्तु महाराज तपोऽतप्यत्सुदुश्चरम्
आरिराधयिषुर्विष्णुं बहून्वर्षगणान्विभो ९
तस्य प्रीतः स भगवान्साक्षाद्दर्शनमेयिवान्
दृष्ट्वैव चर्षिः प्रह्वस्तं तुष्टाव विविधैः स्तवैः १०
त्वया देव प्रजाः सर्वाः सदेवासुरमानवाः
स्थावराणि च भूतानि जङ्गमानि तथैव च

ब्रह्म वेदाश्च वेद्यं च त्वया सृष्टं महाद्युते ११
शिरस्ते गगनं देव नेत्रे शशिदिवाकरौ
निःश्वासः पवनश्चापि तेजोऽग्निश्च तवाच्युत
बाहवस्ते दिशः सर्वाः कुक्षिश्चापि महार्णवः १२
ऊरू ते पर्वता देव खं नाभिर्मधुसूदन
पादौ ते पृथिवी देवी रोमाण्योषधयस्तथा १३
इन्द्रसोमाग्निवरुणा देवासुरमहोरगाः
प्रह्वास्त्वामुपतिष्ठन्ति स्तुवन्तो विविधैः स्तवैः १४
त्वया व्याप्तानि सर्वाणि भूतानि भुवनेश्वर
योगिनः सुमहावीर्याः स्तुवन्ति त्वां महर्षयः १५
त्वयि तुष्टे जगत्स्वस्थं त्वयि क्रुद्धे महद्भयम्
भयानामपनेतासि त्वमेकः पुरुषोत्तम १६
देवानां मानुषाणां च सर्वभूतसुखावहः
त्रिभिर्विक्रमणैर्देव त्रयो लोकास्त्वयाहृताः
असुराणां समृद्धानां विनाशश्च त्वया कृतः १७
तव विक्रमणैर्देवा निर्वाणमगमन्परम्
पराभवं च दैत्येन्द्रास्त्वयि क्रुद्धे महाद्युते १८
त्वं हि कर्ता विकर्ता च भूतानामिह सर्वशः
आराधयित्वा त्वां देवाः सुखमेधन्ति सर्वशः १९
एवं स्तुतो हृषीकेश उत्तङ्केन महात्मना
उत्तङ्कमब्रवीद्विष्णुः प्रीतस्तेऽह वरं वृणु २०
उत्तङ्क उवाच
पर्याप्तो मे वरो ह्येष यदहं दृष्टवान्हरिम्
पुरुषं शाश्वतं दिव्यं स्रष्टारं जगतः प्रभुम् २१
विष्णुरुवाच
प्रीतस्तेऽहमलौल्येन भक्त्या च द्विजसत्तम
अवश्यं हि त्वया ब्रह्मन्मत्तो ग्राह्यो वरो द्विज २२
एवं संछन्द्यमानस्तु वरेण हरिणा तदा
उत्तङ्कः प्राञ्जलिर्वव्रे वरं भरतसत्तम २३
यदि मे भगवान्प्रीतः पुण्डरीकनिभेक्षणः

धर्मे सत्ये दमे चैव बुद्धिर्भवतु मे सदा
अभ्यासश्च भवेद्भक्त्या त्वयि नित्यं महेश्वर २४
विष्णुरुवाच
सर्वमेतद्धि भविता मत्प्रसादात्तव द्विज
प्रतिभास्यति योगश्च येन युक्तो दिवौकसाम्
त्रयाणामपि लोकानां महत्कार्यं करिष्यसि २५
उत्सादनार्थं लोकानां धुन्धुर्नाम महासुरः
तपस्यति तपो घोरं शृणु यस्तं हनिष्यति २६
बृहदश्व इति ख्यातो भविष्यति महीपतिः
तस्य पुत्रः शुचिर्दान्तः कुवलाश्व इति श्रुतः २७
स योगबलमास्थाय मामकं पार्थिवोत्तमः
शासनात्तव विप्रर्षे धुन्धुमारो भविष्यति २८
मार्कण्डेय उवाच
उत्तङ्कमेवमुक्त्वा तु विष्णुरन्तरधीयत २९
इति श्रीमहाभारते आरण्यकपर्वणि द्विनवत्यधिक शततमोऽध्यायः १९२

## त्रिनवत्यधिक शततमोऽध्यायः

मार्कण्डेय उवाच
इक्ष्वाकौ संस्थिते राजञ्शशादः पृथिवीमिमाम्
प्राप्तः परमधर्मात्मा सोऽयोध्यायां नृपोऽभवत् १
शशादस्य तु दायादः ककुत्स्थो नाम वीर्यवान्
अनेनाश्चापि काकुत्स्थः पृथुश्चानेनसः सुतः २
विष्वगश्वः पृथोः पुत्रस्तस्मादार्द्रस्तु जज्ञिवान्
आर्द्रस्य युवनाश्वस्तु श्रावस्तस्तस्य चात्मजः ३
जज्ञे श्रावस्तको राजा श्रावस्ती येन निर्मिता
श्रावस्तस्य तु दायादो बृहदश्वो महाबलः
बृहदश्वसुतश्चापि कुवलाश्व इति स्मृतः ४
कुवलाश्वस्य पुत्राणां सहस्राण्येकविंशतिः
सर्वे विद्यासु निष्णाता बलवन्तो दुरासदाः ५
कुवलाश्वस्तु पितृतो गुणैरभ्यधिकोऽभवत्

समये तं ततो राज्ये बृहदश्वोऽभ्यषेचयत्
कुवलाश्वं महाराज शूरमुत्तमधार्मिकम् ६
पुत्रसंक्रामितश्रीस्तु बृहदश्वो महीपतिः
जगाम तपसे धीमांस्तपोवनममित्रहा ७
अथ शुश्राव राजर्षिं तमुत्तङ्को युधिष्ठिर
वनं संप्रस्थितं राजन्बृहदश्वं द्विजोत्तमः ८
तमुत्तङ्को महातेजाः सर्वास्त्रविदुषां वरम्
न्यवारयदमेयात्मा समासाद्य नरोत्तमम् ९
उत्तङ्क उवाच
भवता रक्षणं कार्यं तत्तावत्कर्तुमर्हसि
निरुद्विग्ना वयं राजंस्त्वत्प्रसादाद्वसेमहि १०
त्वया हि पृथिवी राजन्रक्ष्यमाणा महात्मना
भविष्यति निरुद्विग्ना नारगयं गन्तुमर्हसि ११
पालने हि महान्धर्मः प्रजानामिह दृश्यते
न तथा दृश्यतेऽरगये मा ते भूद्बुद्धिरीदृशी १२
ईदृशो न हि राजेन्द्र धर्मः क्वचन दृश्यते
प्रजानां पालने यो वै पुरा राजर्षिभिः कृतः
रक्षितव्याः प्रजा राज्ञा तास्त्वं रक्षितुमर्हसि १३
निरुद्विग्नस्तपश्चर्तुं न हि शक्नोमि पार्थिव
ममाश्रमसमीपे वै समेषु मरुधन्वसु १४
समुद्रो वालुकापूर्ण उज्ञानक इति स्मृतः
बहुयोजनविस्तीर्णो बहुयोजनमायतः १५
तत्र रौद्रो दानवेन्द्रो महावीर्यपराक्रमः
मधुकैटभयोः पुत्रो धुन्धुर्नाम सुदारुणः १६
अन्तर्भूमिगतो राजन्वसत्यमितविक्रमः
तं निहत्य महाराज वनं त्वं गन्तुमर्हसि १७
शेते लोकविनाशाय तप आस्थाय दारुणम्
त्रिदशानां विनाशाय लोकानां चापि पार्थिव १८
अवध्यो देवतानां स दैत्यानामथ रक्षसाम्
नागानामथ यक्षाणां गन्धर्वाणां च सर्वशः

अवाप्य स वरं राजन्सर्वलोकपितामहात् १९
तं विनाशय भद्रं ते मा ते बुद्धिरतोऽन्यथा
प्राप्स्यसे महतीं कीर्तिं शाश्वतीमव्ययां ध्रुवाम् २०
क्रूरस्य स्वपतस्तस्य वालुकान्तर्हितस्य वै
संवत्सरस्य पर्यन्ते निःश्वासः संप्रवर्तते
यदा तदा भूश्चलति सशैलवनकानना २१
तस्य निःश्वासवातेन रज उद्धूयते महत्
आदित्यपथमावृत्य सप्ताहं भूमिकम्पनम्
सविस्फुलिङ्गं सज्वालं सधूमं ह्यतिदारुणम् २२
तेन राजन्न शक्नोमि तस्मिन्स्थातुं स्व आश्रमे
तं विनाशय राजेन्द्र लोकानां हितकाम्यया
लोकाः स्वस्था भवन्त्वद्य तस्मिन्विनिहतेऽसुरे २३
त्वं हि तस्य विनाशाय पर्याप्त इति मे मतिः
तेजसा तव तेजश्च विष्णुराप्याययिष्यति २४
विष्णुना च वरो दत्तो मम पूर्वं ततो वधे
यस्तं महासुरं रौद्रं वधिष्यति महीपतिः
तेजस्तं वैष्णवमिति प्रवेक्ष्यति दुरासदम् २५
तत्तेजस्त्वं समाधाय राजेन्द्र भुवि दुःसहम्
तं निषूदय संदुष्टं दैत्यं रौद्रपराक्रमम् २६
न हि धुन्धुमहातेजास्तेजसाल्पेन शक्यते
निर्दग्धुं पृथिवीपाल स हि वर्षशतैरपि २७
इति श्रीमहाभारते आरण्यकपर्वणि त्रिनवत्यधिक शततमोऽध्यायः १९३

## चतुर्नवत्यधिक शततमोऽध्यायः

मार्कण्डेय उवाच
स एवमुक्तो राजर्षिरुत्तङ्केनापराजितः
उत्तङ्कं कौरवश्रेष्ठ कृताञ्जलिरथाब्रवीत् १
न तेऽभिगमनं ब्रह्मन्मोघमेतद्भविष्यति
पुत्रो ममायं भगवन्कुवलाश्व इति स्मृतः २
धृतिमान्क्षिप्रकारी च वीर्येणाप्रतिमो भुवि

प्रियं वै सर्वमेतत्ते करिष्यति न संशयः ३
पुत्रैः परिवृतः सर्वैः शूरैः परिघबाहुभिः
विसर्जयस्व मां ब्रह्मन्न्यस्तशस्त्रोऽस्मि सांप्रतम् ४
तथास्त्विति च तेनोक्तो मुनिनामिततेजसा
स तमादिश्य तनयमुत्तङ्काय महात्मने
क्रियतामिति राजर्षिर्जगाम वनमुत्तमम् ५
युधिष्ठिर उवाच
क एष भगवन्दैत्यो महावीर्यस्तपोधन
कस्य पुत्रोऽथ नप्ता वा एतदिच्छामि वेदितुम् ६
एवं महाबलो दैत्यो न श्रुतो मे तपोधन
एतदिच्छामि भगवन्याथातथ्येन वेदितुम्
सर्वमेव महाप्राज्ञ विस्तरेण तपोधन ७
मार्कण्डेय उवाच
श्रृणु राजन्निदं सर्वं यथावृत्तं नराधिप
एकार्णवे तदा घोरे नष्टे स्थावरजङ्गमे
प्रनष्टेषु च भूतेषु सर्वेषु भरतर्षभ ८
प्रभवः सर्वभूतानां शाश्वतः पुरुषोऽव्ययः
सुष्वाप भगवान्विष्णुरप्शय्यामेक एव ह
नागस्य भोगे महति शेषस्यामिततेजसः ९
लोककर्ता महाभाग भगवानच्युतो हरिः
नागभोगेन महता परिरभ्य महीमिमाम् १०
स्वपतस्तस्य देवस्य पद्मं सूर्यसमप्रभम्
नाभ्यां विनिःसृतं तत्र यत्रोत्पन्नः पितामहः
साक्षाल्लोकगुरुर्ब्रह्मा पद्मे सूर्येन्दुसप्रभे ११
चतुर्वेदश्चतुमूर्तिस्तथैव च चतुर्मुखः
स्वप्रभावाद्दुराधर्षो महाबलपराक्रमः १२
कस्यचित्त्वथ कालस्य दानवौ वीर्यवत्तरौ
मधुश्च कैटभश्चैव दृष्टवन्तौ हरिं प्रभुम् १३
शयानं शयने दिव्ये नागभोगे महाद्युतिम्
बहुयोजनविस्तीर्णे बहुयोजनमायते १४

किरीटकौस्तुभधरं पीतकौशेयवाससम्
दीप्यमानं श्रिया राजंस्तेजसा वपुषा तथा
सहस्रसूर्यप्रतिममद्भुतोपमदर्शनम् १५
विस्मयः सुमहानासीन्मधुकैटभयोस्तदा
दृष्ट्वा पितामहं चैव पद्मे पद्मनिभेक्षणम् १६
वित्रासयेतामथ तौ ब्रह्माणममितौजसम्
वित्रास्यमानो बहुशो ब्रह्मा ताभ्यां महायशाः
अकम्पयत्पद्मनालं ततोऽबुध्यत केशवः १७
अथापश्यत गोविन्दो दानवौ वीर्यवत्तरौ
दृष्ट्वा तावब्रवीद्देवः स्वागतं वां महाबलौ
ददानि वां वरं श्रेष्ठं प्रीतिर्हि मम जायते १८
तौ प्रहस्य हृषीकेशं महावीर्यौ महासुरौ
प्रत्यब्रूतां महाराज सहितौ मधुसूदनम् १९
आवां वरय देव त्वं वरदौ स्वः सुरोत्तम
दातारौ स्वो वरं तुभ्यं तद्ब्रवीह्यविचारयन् २०
भगवानुवाच
प्रतिगृह्णे वरं वीरावीप्सितश्च वरो मम
युवां हि वीर्यसंपन्नौ न वामस्ति समः पुमान् २१
वध्यत्वमुपगच्छेतां मम सत्यपराक्रमौ
एतदिच्छाम्यहं कामं प्राप्तुं लोकहिताय वै २२
मधुकैटभावूचतुः
अनृतं नोक्तपूर्वं नौ स्वैरेष्वपि कुतोऽन्यथा
सत्ये धर्मे च निरतौ विद्ध्यावां पुरुषोत्तम २३
बले रूपे च वीर्ये च शमे च न समोऽस्ति नौ
धर्मे तपसि दाने च शीलसत्त्वदमेषु च २४
उपप्लवो महानस्मानुपावर्तत केशव
उक्तं प्रतिकुरुष्व त्वं कालो हि दुरतिक्रमः २५
आवामिच्छावहे देव कृतमेकं त्वया विभो
अनावृतेऽस्मिन्नाकाशे वधं सुरवरोत्तम २६
पुत्रत्वमभिगच्छाव तव चैव सुलोचन

वर एष वृतो देव तद्विद्धि सुरसत्तम २७
भगवानुवाच
बाढमेवं करिष्यामि सर्वमेतद्भविष्यति २८
मार्कगडेय उवाच
विचिन्त्य त्वथ गोविन्दो नापश्यद्यदनावृतम्
अवकाशं पृथिव्यां वा दिवि वा मधुसूदनः २९
स्वकावनावृतावूरू दृष्ट्वा देववरस्तदा
मधुकैटभयो राजञ्शिरसी मधुसूदनः
चक्रेण शितधारेण न्यकृन्तत महायशाः ३०
इति श्रीमहाभारते आरगयकपर्वणि चतुर्नवत्यधिक शततमोऽध्यायः १९४

## पञ्चनवत्यधिक शततमोऽध्यायः

मार्कगडेय उवाच
धुन्धुर्नाम महातेजास्तयोः पुत्रो महाद्युतिः
स तपोऽतप्यत महन्महावीर्यपराक्रमः १
अतिष्ठदेकपादेन कृशो धमनिसंततः
तस्मै ब्रह्मा ददौ प्रीतो वरं वव्रे स च प्रभो २
देवदानवयक्षाणां सर्पगन्धर्वरक्षसाम्
अवध्योऽह भवेयं वै वर एष वृतो मया ३
एवं भवतु गच्छेति तमुवाच पितामहः
स एवमुक्तस्तत्पादौ मूर्ध्ना स्पृश्य जगाम ह ४
सतु धन्धुर्वरं लब्ध्वा महावीर्य पराक्रमः
अनुस्मरन्पितृवधं ततोविष्णुमुपाद्रवत् ५
स तु देवान्सगन्धर्वाञ्जित्वा धुन्धुरमर्षणः
बबाध सर्वानसकृद्देवान्विष्णुं च वै भृशम् ६
समुद्रो बालुकापूर्ण उज्ञानक इति स्मृतः
आगम्य च स दुष्टात्मा तं देशं भरतर्षभ
बाधते स्म परं शक्त्या तमुत्तङ्काश्रमं प्रभो ७
अन्तर्भूमिगतस्तत्र वालुकान्तर्हितस्तदा
मधुकैटभयोः पुत्रो धुन्धुर्भीमपराक्रमः ८

शेते लोकविनाशाय तपोबलसमाश्रितः
उत्तङ्कस्याश्रमाभ्याशे निःश्वसन्पावकार्चिषः ९
एतस्मिन्नेव काले तु सभृत्यबलवाहनः
कुवलाश्वो नरपतिरन्वितो बलशालिनाम् १०
सहस्रैरेकविंशत्या पुत्राणामरिमर्दनः
प्रायादुत्तङ्कसहितो धुन्धोस्तस्य निवेशनम् ११
तमाविशत्ततो विष्णुर्भगवांस्तेजसा प्रभुः
उत्तङ्कस्य नियोगेन लोकानां हितकाम्यया १२
तस्मिन्प्रयाते दुर्धर्षे दिवि शब्दो महानभूत्
एष श्रीमान्नृपसुतो धुन्धुमारो भविष्यति १३
दिव्यैश्च पुष्पैस्तं देवाः समन्तात्पर्यवाकिरन्
देवदुन्दुभयश्चैव नेदुः स्वयमुदीरिताः १४
शीतश्च वायुः प्रववौ प्रयाणे तस्य धीमतः
विपांसुलां महीं कुर्वन्ववर्ष च सुरेश्वरः १५
अन्तरिक्षे विमानानि देवतानां युधिष्ठिर
तत्रैव समदृश्यन्त धुन्धुर्यत्र महासुरः १६
कुवलाश्वस्य धुन्धोश्च युद्धकौतूहलान्विताः
देवगन्धर्वसहिताः समवैक्षन्महर्षयः १७
नारायणेन कौरव्य तेजसाप्यायितस्तदा
स गतो नृपतिः क्षिप्रं पुत्रैस्तैः सर्वतोदिशम् १८
अर्णवं खानयामास कुवलाश्वो महीपतिः
कुवलाश्वस्य पुत्रैस्तु तस्मिन्वै वालुकार्णवे १९
सप्तभिर्दिवसैः खात्वा दृष्टो धुन्धुर्महाबलः
आसीद्घोरं वपुस्तस्य वालुकान्तर्हितं महत्
दीप्यमानं यथा सूर्यस्तेजसा भरतर्षभ २०
ततो धुन्धुर्महाराज दिशमाश्रित्य पश्चिमाम्
सुप्तोऽभूद्राजशार्दूल कालानलसमद्युतिः २१
कुवलाश्वस्य पुत्रैस्तु सर्वतः परिवारितः
अभिद्रुतः शरैस्तीक्ष्णैर्गदाभिर्मुसलैरपि
पट्टिशैः परिघैः प्रासैः खड्गैश्च विमलैः शितैः २२

स वध्यमानः संक्रुद्धः समुत्तस्थौ महाबलः
क्रुद्धश्चाभक्षयत्तेषां शस्त्राणि विविधानि च २३
आस्याद्वमन्पावकं स संवर्तकसमं तदा
तान्सर्वान्नृपतेः पुत्रानदहत्स्वेन तेजसा २४
मुखजेनाग्निना क्रुद्धो लोकानुद्वर्तयन्निव
क्षणेन राजशार्दूल पुरेव कपिलः प्रभुः
सगरस्यात्मजान्क्रुद्धस्तदद्भुतमिवाभवत् २५
तेषु क्रोधाग्निदग्धेषु तदा भरतसत्तम
तं प्रबुद्धं महात्मानं कुम्भकर्णमिवापरम्
आससाद महातेजाः कुवलाश्वो महीपतिः २६
तस्य वारि महाराज सुस्राव बहु देहतः
तदापीयत तत्तेजो राजा वारिमयं नृप
योगी योगेन वह्निं च शमयामास वारिणा २७
ब्रह्मास्त्रेण तदा राजा दैत्यं क्रूरपराक्रमम्
ददाह भरतश्रेष्ठ सर्वलोकाभयाय वै २८
सोऽस्त्रेण दग्ध्वा राजर्षिःकुवलाश्वो महासुरम्
सुरशत्रुममित्रघ्नस्त्रिलोकेश इवापरः
धुन्धुमार इति ख्यातो नाम्ना समभवत्ततः २९
प्रीतैश्च त्रिदशैः सर्वैर्महर्षिसहितैस्तदा
वरं वृणीष्वेत्युक्तः स प्राञ्जलि प्रणतस्तदा
अतीव मुदितो राजन्निदं वचनमब्रवीत् ३०
दद्यां वित्तं द्विजाग्र्येभ्यः शत्रूणां चापि दुर्जयः
सख्यं च विष्णुना मे स्याद्भूतेष्वद्रोह एव च
धर्मे रतिश्च सततं स्वर्गे वासस्तथाक्षयः ३१
तथास्त्विति ततो देवैः प्रीतैरुक्तः स पार्थिवः
ऋषिभिश्च सगन्धर्वैरुत्तङ्केन च धीमता ३२
सभाज्य चैनं विविधैराशीर्वादैस्ततो नृपम्
देवा महर्षयश्चैव स्वानि स्थानानि भेजिरे ३३
तस्य पुत्रास्त्रयः शिष्टा युधिष्ठिर तदाभवन्
दृढाश्वः कपिलाश्वश्च चन्द्राश्वश्चैव भारत

तेभ्यः परंपरा राजन्निक्ष्वाकूणां महात्मनाम् ३४
एवं स निहतस्तेन कुवलाश्वेन सत्तम
धुन्धुर्दैत्यो महावीर्यो मधुकैटभयोः सुतः ३५
कुवलाश्वस्तु नृपतिर्धुन्धुमार इति स्मृतः
नाम्ना च गुणसंयुक्तस्तदा प्रभृति सोऽभवत् ३६
एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि
धौन्धुमारमुपाख्यानं प्रथितं यस्य कर्मणा ३७
इदं तु पुण्यमाख्यानं विष्णोः समनुकीर्तनम्
शृणुयाद्यः स धर्मात्मा पुत्रवांश्च भवेन्नरः ३८
आयुष्मान्धृतिमांश्चैव श्रुत्वा भवति पर्वसु
न च व्याधिभयं किंचित्प्राप्नोति विगतज्वरः ३९
इति श्रीमहाभारते आरण्यकपर्वणि पञ्चनवत्यधिक शततमोऽध्यायः १९५

## षण्णवत्यधिकशततमोऽध्यायः

वैशम्पायन उवाच
ततो युधिष्ठिरो राजा मार्कण्डेयं महाद्युतिम्
पप्रच्छ भरतश्रेष्ठ धर्मप्रश्नं सुदुर्वचम् १
श्रोतुमिच्छामि भगवन्स्त्रीणां माहात्म्यमुत्तमम्
कथ्यमानं त्वया विप्र सूक्ष्मं धर्मं च तत्त्वतः २
प्रत्यक्षेण हि विप्रर्षे देवा दृश्यन्ति सत्तम
सूर्याचन्द्रमसौ वायुः पृथिवी बह्निरेव च ३
पिता माता च भगवन्गाव एव च सत्तम
यच्चान्यदेव विहितं तच्चापि भृगुनन्दन ४
मन्येऽह गुरुवत्सर्वमेकपत्न्यस्तथा स्त्रियः
पतिव्रतानां शुश्रूषा दुष्करा प्रतिभाति मे ५
पतिव्रतानां माहात्म्यं वक्तुमर्हसि नः प्रभो
निरुध्य चेन्द्रियग्रामं मनः संरुध्य चानघ
पतिं दैवतवच्चापि चिन्तयन्त्यः स्थिता हि याः ६
भगवन्दुष्करं ह्येतत्प्रतिभाति मम प्रभो
मातापितृषु शुश्रुषा स्त्रीणां भर्तृषु च द्विज ७

स्त्रीणां धर्मात्सुघोराद्धि नान्यं पश्यामि दुष्करम्
साध्वाचाराः स्त्रियो ब्रह्मन्यत्कुर्वन्ति सदादृताः
दुष्करं बत कुर्वन्ति पितरो मातरश्च वै ८
एकपत्न्यश्च या नार्यो याश्च सत्यं वदन्त्युत
कुक्षिणा दश मासांश्च गर्भं संधारयन्ति याः
नार्यः कालेन संभूय किमद्भुततरं ततः ९
संशयं परमं प्राप्य वेदनामतुलामपि
प्रजायन्ते सुतान्नार्यो दुःखेन महता विभो
पुष्णन्ति चापि महता स्नेहेन द्विजसत्तम १०
ये च क्रूरेषु सर्वेषु वर्तमाना जुगुप्सिताः
स्वकर्म कुर्वन्ति सदा दुष्करं तच्च मे मतम् ११
क्षत्रधर्मसमाचारं तथ्यं चाख्याहि मे द्विज
धर्मः सुदुर्लभो विप्र नृशंसेन दुरात्मना १२
एतदिच्छामि भगवन्प्रश्नं प्रश्नविदां वर
श्रोतुं भृगुकुलश्रेष्ठ शुश्रूषे तव सुव्रत १३
मार्कगडेय उवाच
हन्त ते सर्वमाख्यास्ये प्रश्नमेतं सुदुर्वचम्
तत्त्वेन भरतश्रेष्ठ गदतस्तन्निबोध मे १४
मातरं सदृशीं तात पितॄनन्ये च मन्यते
दुष्करं कुरुते माता विवर्धयति या प्रजाः १५
तपसा देवतेज्याभिर्वन्दनेन तितिक्षया
अभिचारैरुपायैश्च ईहन्ते पितरः सुतान् १६
एवं कृच्छ्रेण महता पुत्रं प्राप्य सुदुर्लभम्
चिन्तयन्ति सदा वीर कीदृशोऽय भविष्यति १७
आशंसते च पुत्रेषु पिता माता च भारत
यशः कीर्तिमथैश्वर्यं प्रजा धर्मं तथैव च १८
तयोराशां तु सफलां यः करोति स धर्मवित्
पिता माता च राजेन्द्र तुष्यतो यस्य नित्यदा
इह प्रेत्य च तस्याथ कीर्तिर्धर्मश्च शाश्वतः १९
नैव यज्ञः स्त्रियः कश्चिन्न श्राद्धं नोपवासकम्

या तु भर्तरि शुश्रुषा तया स्वर्गमुपाश्नुते २०
एतत्प्रकरणं राजन्नधिकृत्य युधिष्ठिर
पतिव्रतानां नियतं धर्मं चावहितः शृणु २१
इति श्रीमहाभारते आरण्यकपर्वणि षण्णवत्यधिक शततमोऽध्यायः १९६

## सप्तनवत्यधिक शततमोऽध्यायः

मार्कण्डेय उवाच
कश्चिद्द्विजातिप्रवरो वेदाध्यायी तपोधनः
तपस्वी धर्मशीलश्च कौशिको नाम भारत १
साङ्गोपनिषदान्वेदानधीते द्विजसत्तमः
स वृक्षमूले कस्मिंश्चिद्वेदानुच्चारयन्स्थितः २
उपरिष्टाच्च वृक्षस्य बलाका संन्यलीयत
तया पुरीषमुत्सृष्टं ब्राह्मणस्य तदोपरि ३
तामवेक्ष्य ततः क्रुद्धः समपध्यायत द्विजः
भृशं क्रोधाभिभूतेन बलाका सा निरीक्षिता ४
अपध्याता च विप्रेण न्यपतद्वसुधातले
बलाकां पतितां दृष्ट्वा गतसत्त्वामचेतनाम्
कारुण्यादभिसंतप्तः पर्यशोचत तां द्विजः ५
अकार्यं कृतवानस्मि रागद्वेषबलात्कृतः
इत्युक्त्वा बहुशो विद्वान्ग्रामं भैक्षाय संश्रितः ६
ग्रामे शुचीनि प्रचरन्कुलानि भरतर्षभ
प्रविष्टस्तत्कुलं यत्र पूर्वं चरितवांस्तु सः ७
देहीति याचमानो वै तिष्ठेत्युक्तः स्त्रिया ततः
शौचं तु यावत्कुरुते भाजनस्य कुटुम्बिनी ८
एतस्मिन्नन्तरे राजन्क्षुधासंपीडितो भृशम्
भर्ता प्रविष्टः सहसा तस्या भरतसत्तम ९
सा तु दृष्ट्वा पतिं साध्वी ब्राह्मणं व्यपहाय तम्
पाद्यमाचमनीयं च ददौ भर्त्रे तथासनम् १०
प्रह्वा पर्यचरच्चापि भर्तारमसितेक्षणा
आहारेणाथ भक्ष्यैश्च वाक्यैः सुमधुरैस्तथा ११

उच्छिष्टं भुञ्जते भर्तुः सा तु नित्यं युधिष्ठिर
दैवतं च पतिं मेने भर्तुश्चित्तानुसारिणी १२
न कर्मणा न मनसा नात्यश्नान्नापि चापिबत्
तं सर्वभावोपगत पतिशुश्रूषणे रता १३
साध्वाचारा शुचिर्दक्षा कुटुम्बस्य हितैषिणी
भर्तुश्चापि हितं यत्तत्सततं सानुवर्तते १४
देवतातिथिभृत्यानां श्वश्रूश्वशुरयोस्तथा
शुश्रूषणपरा नित्यं सततं संयतेन्द्रिया १५
सा ब्राह्मणं तदा दृष्ट्वा संस्थितं भैक्षकाङ्क्षिणम्
कुर्वती पतिशुश्रूषां सस्माराथ शुभेक्षणा १६
व्रीडिता साभवत्साध्वी तदा भरतसत्तम
भिक्षामादाय विप्राय निर्जगाम यशस्विनी १७
ब्राह्मण उवाच
किमिदं भवति त्वं मां तिष्ठेत्युक्त्वा वराङ्गने
उपरोधं कृतवती न विसर्जितवत्यसि १८
मार्कण्डेय उवाच
ब्राह्मणं क्रोधसंतप्तं ज्वलन्तमिव तेजसा
दृष्ट्वा साध्वी मनुष्येन्द्र सान्त्वपूर्वं वचोऽब्रवीत् १९
क्षन्तुमर्हसि मे विप्र भर्ता मे दैवतं महत्
स चापि क्षुधितः श्रान्तः प्राप्तः शुश्रूषितो मया २०
ब्राह्मण उवाच
ब्राह्मणा न गरीयांसो गरीयांस्ते पतिः कृतः
गृहस्थधर्मे वर्तन्ती ब्राह्मणानवमन्यसे २१
इन्द्रोऽप्येषां प्रणमते किं पुनर्मानुषा भुवि
अवलिप्ते न जानीषे वृद्धानां न श्रुतं त्वया
ब्राह्मणा ह्यग्निसदृशा दहेयुः पृथिवीमपि २२
स्त्र्युवाच
नावजानाम्यहं विप्रान्देवैस्तुल्यान्मनस्विनः
अपराधमिमं विप्र क्षन्तुमर्हसि मेऽनघ २३
जानामि तेजो विप्राणां महाभाग्यं च धीमताम्

अपेयः सागरः क्रोधात्कृतो हि लवणोदकः २४
तथैव दीप्ततपसां मुनीनां भावितात्मनाम्
येषां क्रोधाग्निरद्यापि दण्डके नोपशाम्यति २५
ब्राह्मणानां परिभवाद्वातापिश्च दुरात्मवान्
अगस्त्यमृषिमासाद्य जीर्णः क्रूरो महासुरः २६
प्रभावा बहवश्चापि श्रूयन्ते ब्रह्मवादिनाम्
क्रोधः सुविपुलो ब्रह्मन्प्रसादश्च महात्मनाम् २७
अस्मिंस्त्वतिक्रमे ब्रह्मन्क्षन्तुमर्हसि मेऽनघ
पतिशुश्रूषया धर्मो यः स मे रोचते द्विज २८
दैवतेष्वपि सर्वेषु भर्ता मे दैवतं परम्
अविशेषेण तस्याहं कुर्यां धर्मं द्विजोत्तम २९
शुश्रूषायाः फलं पश्य पत्युर्ब्राह्मण यादृशम्
बलाका हि त्वया दग्धा रोषात्तद्विदितं मम ३०
क्रोधः शत्रुः शरीरस्थो मनुष्याणां द्विजोत्तम
यः क्रोधमोहौ त्यजति तं देवा ब्राह्मणं विदुः ३१
यो वदेदिह सत्यानि गुरुं संतोषयेत च
हिंसितश्च न हिंसेत तं देवा ब्राह्मणं विदुः ३२
जितेन्द्रियो धर्मपरः स्वाध्यायनिरतः शुचिः
कामक्रोधौ वशे यस्य तं देवा ब्राह्मणं विदुः ३३
यस्य चात्मसमो लोको धर्मज्ञस्य मनस्विनः
सर्वधर्मेषु च रतस्तं देवा ब्राह्मणं विदुः ३४
योऽध्यापयेदधीयीत यजेद्वा याजयीत वा
दद्याद्वापि यथाशक्ति तं देवा ब्राह्मणं विदुः ३५
ब्रह्मचारी च वेदान्यो अधीयीत द्विजोत्तमः
स्वाध्याये चाप्रमत्तो वै तं देवा ब्राह्मणं विदुः ३६
यद्ब्राह्मणानां कुशलं तदेषां परिकीर्तयेत्
सत्यं तथा व्याहरतां नानृते रमते मनः ३७
धनं तु ब्राह्मणस्याहुः स्वाध्यायं दममार्जवम्
इन्द्रियाणां निग्रहं च शाश्वतं द्विजसत्तम
सत्यार्जवे धर्ममाहुः परं धर्मविदो जनाः ३८

दुर्ज्ञेयः शाश्वतो धर्मः स तु सत्ये प्रतिष्ठितः
श्रुतिप्रमाणो धर्मः स्यादिति वृद्धानुशासनम् ३९
बहुधा दृश्यते धर्मः सूक्ष्म एव द्विजोत्तम
भवानपि च धर्मज्ञः स्वाध्यायनिरतः शुचिः
न तु तत्त्वेन भगवन्धर्मान्वेत्सीति मे मतिः ४०
मातापितृभ्यां शुश्रूषुः सत्यवादी जितेन्द्रियः
मिथिलायां वसन्व्याधः स ते धर्मान्प्रवक्ष्यति
तत्र गच्छस्व भद्रं ते यथाकामं द्विजोत्तम ४१
अत्युक्तमपि मे सर्वं क्षन्तुमर्हस्यनिन्दित
स्त्रियो ह्यवध्याः सर्वेषां ये धर्मविदुषो जनाः ४२
ब्राह्मण उवाच
प्रीतोऽस्मि तव भद्रं ते गतः क्रोधश्च शोभने
उपालम्भस्त्वया ह्युक्तो मम निःश्रेयसं परम्
स्वस्ति तेऽस्तु गमिष्यामि साधयिष्यामि शोभने ४३
मार्कण्डेय उवाच
तया विसृष्टो निर्गम्य स्वमेव भवनं ययौ
विनिन्दन्स द्विजोऽत्मानं कौशिको नरसत्तम ४४
इति श्रीमहाभारते आरण्यकपर्वणि सप्तनवत्यधिक शततमोऽध्यायः १९७

## अष्टनवत्यधिकशततमोऽध्यायः

मार्कण्डेय उवाच
चिन्तयित्वा तदाश्चर्यं स्त्रिया प्रोक्तमशेषतः
विनिन्दन्स द्विजोऽत्मानमागस्कृत इवाबभौ १
चिन्तयानः स धर्मस्य सूक्ष्मां गतिमथाब्रवीत्
श्रद्दधानेन भाव्यं वै गच्छामि मिथिलामहम् २
कृतात्मा धर्मवित्तस्यां व्याधो निवसते किल
तं गच्छाम्यहमद्यैव धर्मं प्रष्टुं तपोधनम् ३
इति संचिन्त्य मनसा श्रद्दधानः स्त्रिया वचः
बलाकाप्रत्ययेनासौ धर्म्यैश्च वचनैः शुभैः
संप्रतस्थे स मिथिलां कौतूहलसमन्वितः ४
अतिक्रामन्नरण्यानि ग्रामांश्च नगराणि च

ततो जगाम मिथिलां जनकेन सुरक्षिताम् ५
धर्मसेतुसमाकीर्णां यज्ञोत्सववतीं शुभाम्
गोपुराट्टालकवतीं गृहप्राकारशोभिताम् ६
प्रविश्य स पुरीं रम्यां विमानैर्बहुभिर्वृताम्
पण्यैश्च बहुभिर्युक्तां सुविभक्तमहापथाम् ७
अश्वै रथैस्तथा नागैर्यानैश्च बहुभिर्वृताम्
हृष्टपुष्टजनाकीर्णां नित्योत्सवसमाकुलाम् ८
सोऽपश्यद्बहुवृत्तान्तां ब्राह्मणः समतिक्रमन्
धर्मव्याधमपृच्छच्च स चास्य कथितो द्विजैः ९
अपश्यत्तत्र गत्वा तं सूनामध्ये व्यवस्थितम्
मार्गमाहिषमांसानि विक्रीणन्तं तपस्विनम्
आकुलत्वात्तु क्रेतृणामेकान्ते संस्थितो द्विजः १०
स तु ज्ञात्वा द्विजं प्राप्तं सहसा संभ्रमोत्थितः
आजगाम यतो विप्रः स्थित एकान्त आसने ११
व्याध उवाच
अभिवादये त्वा भगवन्स्वागतं ते द्विजोत्तम
अहं व्याधस्तु भद्रं ते किं करोमि प्रशाधि माम् १२
एकपत्न्या यदुक्तोऽसि गच्छ त्वं मिथिलामिति
जानाम्येतदहं सर्वं यदर्थं त्वमिहागतः १३
मार्कण्डेय उवाच
श्रुत्वा तु तस्य तद्वाक्यं स विप्रो भृशहर्षितः
द्वितीयमिदमाश्चर्यमित्यचिन्तयत द्विजः १४
अदेशस्थं हि ते स्थानमिति व्याधोऽब्रवीद्द्विजम्
गृहं गच्छाव भगवन्यदि रोचयसेऽनघ १५
बाढमित्येव संहृष्टो विप्रो वचनमब्रवीत्
अग्रतस्तु द्विजं कृत्वा स जगाम गृहान्प्रति १६
प्रविश्य च गृहं रम्यमासनेनाभिपूजितः
पाद्यमाचमनीयं च प्रतिगृह्य द्विजोत्तमः १७
ततः सुखोपविष्टस्तं व्याधं वचनमब्रवीत्
कर्मैतद्वै न सदृशं भवतः प्रतिभाति मे

अनुतप्ये भृशं तात तव घोरेण कर्मणा १८
व्याध उवाच
कुलोचितमिदं कर्म पितृपैतामहं मम
वर्तमानस्य मे धर्मे स्वे मन्युं मा कृथा द्विज १९
धात्रा तु विहितं पूर्वं कर्म स्वं पालयाम्यहम्
प्रयत्नाच्च गुरू वृद्धौ शुश्रूषेऽह द्विजोत्तम २०
सत्यं वदे नाभ्यसूये यथाशक्ति ददामि च
देवतातिथिभृत्यानामवशिष्टेन वर्तये २१
न कुत्सयाम्यहं किंचिन्न गर्हे बलवत्तरम्
कृतमन्वेति कर्तारं पुरा कर्म द्विजोत्तम २२
कृषिगोरक्ष्यवाणिज्यमिह लोकस्य जीवनम्
दण्डनीतिस्त्रयी विद्या तेन लोका भवन्त्युत २३
कर्म शूद्रे कृषिर्वैश्ये संग्रामः क्षत्रिये स्मृतः
ब्रह्मचर्यं तपो मन्त्राः सत्यं च ब्राह्मणे सदा २४
राजा प्रशास्ति धर्मेण स्वकर्मनिरताः प्रजाः
विकर्माणश्च ये केचित्तान्युनक्ति स्वकर्मसु २५
भेतव्यं हि सदा राज्ञां प्रजानामधिपा हि ते
मारयन्ति विकर्मस्थं लुब्धा मृगमिवेषुभिः २६
जनकस्येह विप्रर्षे विकर्मस्थो न विद्यते
स्वकर्मनिरता वर्णाश्चत्वारोऽपि द्विजोत्तम २७
स एष जनको राजा दुर्वृत्तमपि चेत्सुतम्
दण्ड्यं दण्डे निक्षिपति तथा न ग्लाति धार्मिकम् २८
सुयुक्तचारो नृपतिः सर्वं धर्मेण पश्यति
श्रीश्च राज्यं च दण्डश्च क्षत्रियाणां द्विजोत्तम २९
राजानो हि स्वधर्मेण श्रियमिच्छन्ति भूयसीम्
सर्वेषामेव वर्णानां त्राता राजा भवत्युत ३०
परेण हि हतान्ब्रह्मन्वराहमहिषानहम्
न स्वयं हन्मि विप्रर्षे विक्रीणामि सदा त्वहम् ३१
न भक्षयामि मांसानि ऋतुगामी तथा ह्यहम्
सदोपवासी च तथा नक्तभोजी तथा द्विज ३२

अशीलश्चापि पुरुषो भूत्वा भवति शीलवान्
प्राणिहिंसारतश्चापि भवते धार्मिकः पुनः ३३
व्यभिचारान्नरेन्द्राणां धर्मः संकीर्यते महान्
अधर्मो वर्धते चापि संकीर्यन्ते तथा प्रजाः ३४
उरुण्डा वामनाः कुब्जाः स्थूलशीर्षास्तथैव च
क्लीबाश्चान्धाश्च जायन्ते बधिरा लम्बचूचुकाः
पार्थिवानामधर्मत्वात्प्रजानामभवः सदा ३५
स एष राजा जनकः सर्वं धर्मेण पश्यति
अनुगृह्णन्प्रजाः सर्वाः स्वधर्मनिरताः सदा ३६
ये चैव मां प्रशंसन्ति ये च निन्दन्ति मानवाः
सर्वान्सुपरिणीतेन कर्मणा तोषयाम्यहम् ३७
ये जीवन्ति स्वधर्मेण संभुञ्जन्ते च पार्थिवाः
न किंचिदुपजीवन्ति दक्षा उत्थानशीलिनः ३८
शक्त्यान्नदानं सततं तितिक्षा धर्मनित्यता
यथार्हं प्रतिपूजा च सर्वभूतेषु वै दया
त्यागान्नान्यत्र मर्त्यानां गुणास्तिष्ठन्ति पूरुषे ३९
मृषावादं परिहरेत्कुर्यात्प्रियमयाचितः
न च कामान्न संरम्भान्न द्वेषाद्धर्ममुत्सृजेत् ४०
प्रिये नातिभृशं हृष्येदप्रिये न च संज्वरेत्
न मुह्येदर्थकृच्छ्रेषु न च धर्मं परित्यजेत् ४१
कर्म चेत्किंचिदन्यत्स्यादितरन्न समाचरेत्
यत्कल्याणमभिध्यायेत्तत्रात्मानं नियोजयेत् ४२
न पापं प्रति पापः स्यात्साधुरेव सदा भवेत्
आत्मनैव हतः पापो यः पापं कर्तुमिच्छति ४३
कर्म चैतदसाधूनां वृजिनानामसाधुवत्
न धर्मोऽस्तीति मन्वानाः शुचीनवहसन्ति ये
अश्रद्दधाना धर्मस्य ते नश्यन्ति न संशयः ४४
महादृतिरिवाध्मातः पापो भवति नित्यदा
मूढानामवलिप्तानामसारं भाषितं भवेत्
दर्शयत्यन्तरात्मानं दिवा रूपमिवांशुमान् ४५

न लोके राजते मूर्खः केवलात्मप्रशंसया
अपि चेह मृजा हीनः कृतविद्यः प्रकाशते ४६
अब्रुवन्कस्यचिन्निन्दामात्मपूजामवर्णयन्
न कश्चिद्गुणसंपन्नः प्रकाशो भुवि दृश्यते ४७
विकर्मणा तप्यमानः पापाद्विपरिमुच्यते
नैतत्कुर्यां पुनरिति द्वितीयात्परिमुच्यते ४८
कर्मणा येन तेनेह पापाद्द्विजवरोत्तम
एवं श्रुतिरियं ब्रह्मन्धर्मेषु परिदृश्यते ४९
पापान्यबुद्ध्वेह पुरा कृतानि प्राग्धर्मशीलो विनिहन्ति पश्चात्
धर्मो ब्रह्मन्नुदते पूरुषाणां यत्कुर्वते पापमिह प्रमादात् ५०
पापं कृत्वा हि मन्येत नाहमस्मीति पूरुषः
चिकीर्षेदेव कल्याणं श्रद्दधानोऽनसूयकः ५१
वसनस्येव छिद्राणि साधूनां विवृणोति यः
पापं चेत्पुरुषः कृत्वा कल्याणमभिपद्यते
मुच्यते सर्वपापेभ्यो महाभ्रैरिव चन्द्रमाः ५२
यथादित्यः समुद्यन्वै तमः सर्वं व्यपोहति
एवं कल्याणमातिष्ठन्सर्वपापैः प्रमुच्यते ५३
पापानां विद्ध्यधिष्ठानं लोभमेव द्विजोत्तम
लुब्धाः पापं व्यवस्यन्ति नरा नातिबहुश्रुताः
अधर्मा धर्मरूपेण तृणैः कूपा इवावृताः ५४
तेषां दमः पवित्राणि प्रलापा धर्मसंश्रिताः
सर्वं हि विद्यते तेषु शिष्टाचारः सुदुर्लभः ५५
मार्कण्डेय उवाच
स तु विप्रो महाप्राज्ञो धर्मव्याधमपृच्छत
शिष्टाचारं कथमहं विद्यामिति नरोत्तम
एतन्महामते व्याध प्रब्रवीहि यथातथम् ५६
व्याध उवाच
यज्ञो दानं तपो वेदाः सत्यं च द्विजसत्तम
पञ्चैतानि पवित्राणि शिष्टाचारेषु नित्यदा ५७
कामक्रोधौ वशे कृत्वा दम्भं लोभमनार्जवम्

धर्म इत्येव संतुष्टास्ते शिष्टाः शिष्टसंमताः ५८
न तेषां विद्यतेऽवृत्तं यज्ञस्वाध्यायशीलिनाम्
आचारपालनं चैव द्वितीयं शिष्टलक्षणम् ५९
गुरुशुश्रूषणं सत्यमक्रोधो दानमेव च
एतच्चतुष्टयं ब्रह्मञ्शिष्टाचारेषु नित्यदा ६०
शिष्टाचारे मनः कृत्वा प्रतिष्ठाप्य च सर्वशः
यामयं लभते तुष्टिं सा न शक्या ह्यतोऽन्यथा ६१
वेदस्योपनिषत्सत्यं सत्यस्योपनिषद्दमः
दमस्योपनिषत्त्यागः शिष्टाचारेषु नित्यदा ६२
ये तु धर्ममसूयन्ते बुद्धिमोहान्विता नराः
अपथा गच्छतां तेषामनुयातापि पीडयते ६३
ये तु शिष्टाः सुनियताः श्रुतित्यागपरायणाः
धर्म्यं पन्थानमारूढाः सत्यधर्मपरायणाः ६४
नियच्छन्ति परां बुद्धिं शिष्टाचारान्विता नराः
उपाध्यायमते युक्ताः स्थित्या धर्मार्थदर्शिनः ६५
नास्तिकान्भिन्नमर्यादान्क्रूरान्पापमतौ स्थितान्
त्यज ताञ्ज्ञानमाश्रित्य धार्मिकानुपसेव्य च ६६
कामलोभग्रहाकीर्णां पञ्चेन्द्रियजलां नदीम्
नावं धृतिमयीं कृत्वा जन्मदुर्गाणि संतर ६७
क्रमेण संचितो धर्मो बुद्धियोगमयो महान्
शिष्टाचारे भवेत्साधू रागः शुक्लेव वाससि ६८
अहिंसा सत्यवचनं सर्वभूतहितं परम्
अहिंसा परमो धर्मः स च सत्ये प्रतिष्ठितः
सत्ये कृत्वा प्रतिष्ठां तु प्रवर्तन्ते प्रवृत्तयः ६९
सत्यमेव गरीयस्तु शिष्टाचारनिषेवितम्
आचारश्च सतां धर्मः सन्तश्चाचारलक्षणाः ७०
यो यथाप्रकृतिर्जन्तुः स्वां स्वां प्रकृतिमश्नुते
पापात्मा क्रोधकामादीन्दोषानाप्नोत्यनात्मवान् ७१
आरम्भो न्याययुक्तो यः स हि धर्म इति स्मृतः
अनाचारस्त्वधर्मेति एतच्छिष्टानुशासनम् ७२

अक्रुध्यन्तोऽनसूयन्तो निरहंकारमत्सराः
ऋजवः शमसंपन्नाः शिष्टाचारा भवन्ति ते ७३
त्रैविद्यवृद्धाः शुचयो वृत्तवन्तो मनस्विनः
गुरुशुश्रूषवो दान्ताः शिष्टाचारा भवन्त्युत ७४
तेषामदीनसत्त्वानां दुष्कराचारकर्मणाम्
स्वैः कर्मभिः सत्कृतानां घोरत्वं संप्रणश्यति ७५
तं सदाचारमाश्चर्यं पुराणं शाश्वतं ध्रुवम्
धर्मं धर्मेण पश्यन्तः स्वर्गं यान्ति मनीषिणः ७६
आस्तिका मानहीनाश्च द्विजातिजनपूजकाः
श्रुतवृत्तोपसंपन्नाः ते सन्तः स्वर्गगामिनः ७७
वेदोक्तः परमो धर्मो धर्मशास्त्रेषु चापरः
शिष्टाचीर्णश्च शिष्टानां त्रिविधं धर्मलक्षणम् ७८
पारणं चापि विद्यानां तीर्थानामवगाहनम्
क्षमा सत्यार्जवं शौचं शिष्टाचारनिदर्शनम् ७९
सर्वभूतदयावन्तो अहिंसानिरताः सदा
परुषं न प्रभाषन्ते सदा सन्तो द्विजप्रियाः ८०
शुभानामशुभानां च कर्मणां फलसंचये
विपाकमभिजानन्ति ते शिष्टाः शिष्टसंमताः ८१
न्यायोपेता गुणोपेताः सर्वलोकहितैषिणः
सन्तः स्वर्गजितः शुक्लाः संनिविष्टाश्च सत्पथे ८२
दातारः संविभक्तारो दीनानुग्रहकारिणः
सर्वभूतदयावन्तस्ते शिष्टाः शिष्टसंमताः ८३
सर्वपूज्याः श्रुतधनास्तथैव च तपस्विनः
दाननित्याः सुखाँल्लोकानाप्नुवन्तीह च श्रियम् ८४
पीडया च कलत्रस्य भृत्यानां च समाहिताः
अतिशक्त्या प्रयच्छन्ति सन्तः सद्भिः समागताः ८५
लोकयात्रां च पश्यन्तो धर्ममात्महितानि च
एवं सन्तो वर्तमाना एधन्ते शाश्वतीः समाः ८६
अहिंसा सत्यवचनमानृशंस्यमथार्जवम्
अद्रोहो नातिमानश्च ह्रीस्तितिक्षा दमः शमः ८७

धीमन्तो धृतिमन्तश्च भूतानामनुकम्पकाः
अकामद्वेषसंयुक्तास्ते सन्तो लोकसत्कृताः ८८
त्रीण्येव तु पदान्याहुः सतां वृत्तमनुत्तमम्
न द्रुह्येच्चैव दद्याच्च सत्यं चैव सदा वदेत् ८९
सर्वत्र च दयावन्तः सन्तः करुणवेदिनः
गच्छन्तीह सुसंतुष्टा धर्म्यं पन्थानमुत्तमम्
शिष्टाचारा महात्मानो येषां धर्मः सुनिश्चितः ९०
अनसूया क्षमा शान्तिः संतोषः प्रियवादिता
कामक्रोधपरित्यागः शिष्टाचारनिषेवणम् ९१
कर्मणा श्रुतसंपन्नं सतां मार्गमनुत्तमम्
शिष्टाचारं निषेवन्ते नित्यं धर्मेष्वतन्द्रिताः ९२
प्रज्ञाप्रासादमारुह्य मुह्यतो महतो जनान्
प्रेक्षन्तो लोकवृत्तानि विविधानि द्विजोत्तम
अतिपुण्यानि पापानि तानि द्विजवरोत्तम ९३
एतत्ते सर्वमाख्यातं यथाप्रज्ञं यथाश्रुतम्
शिष्टाचारगुणान्ब्रह्मन्पुरस्कृत्य द्विजर्षभ ९४
इति श्रीमहाभारते आरण्यकपर्वणि अष्टनवत्यधिक शततमोऽध्यायः १९८

## एकोनद्विशततमोऽध्यायः

मार्कण्डेय उवाच
स तु विप्रमथोवाच धर्मव्याधो युधिष्ठिर
यदहं ह्याचरे कर्म घोरमेतदसंशयम् १
विधिस्तु बलवान्ब्रह्मन्दुस्तरं हि पुराकृतम्
पुराकृतस्य पापस्य कर्मदोषो भवत्ययम्
दोषस्यैतस्य वै ब्रह्मन्विघाते यत्नवानहम् २
विधिना विहिते पूर्वं निमित्तं घातको भवेत्
निमित्तभूता हि वयं कर्मणोऽस्य द्विजोत्तम ३
येषां हतानां मांसानि विक्रीणामो वयं द्विज
तेषामपि भवेद्धर्म उपभोगेन भक्षणात्
देवतातिथिभृत्यानां पितॄणां प्रतिपूजनात् ४

ओषध्यो वीरुधश्चापि पशवो मृगपक्षिणः
अन्नाद्यभूता लोकस्य इत्यपि श्रूयते श्रुतिः ५
आत्ममांसप्रदानेन शिबिरौशीनरो नृपः
स्वर्गं सुदुर्लभं प्राप्तः क्षमावान्द्विजसत्तम ६
राज्ञो महानसे पूर्वं रन्तिदेवस्य वै द्विज
द्वे सहस्रे तु वध्येते पशूनामन्वहं तदा ७
समांसं ददतो ह्यन्नं रन्तिदेवस्य नित्यशः
अतुला कीर्तिरभवन्नृपस्य द्विजसत्तम
चातुर्मास्येषु पशवो वध्यन्त इति नित्यशः ८
अग्नयो मांसकामाश्च इत्यपि श्रूयते श्रुतिः
यज्ञेषु पशवो ब्रह्मन्वध्यन्ते सततं द्विजैः
संस्कृताः किल मन्त्रैश्च तेऽपि स्वर्गमवाप्नुवन् ९
यदि नैवाग्नयो ब्रह्मन्मांसकामाभवन्पुरा
भक्ष्यं नैव भवेन्मांसं कस्यचिद्द्विजसत्तम १०
अत्रापि विधिरुक्तश्च मुनिभिर्मांसभक्षणे
देवतानां पितॄणां च भुङ्क्ते दत्त्वा तु यः सदा
यथाविधि यथाश्रद्धं न स दुष्यति भक्षणात् ११
अमांसाशी भवत्येवमित्यपि श्रूयते श्रुतिः
भार्यां गच्छन्ब्रह्मचारी ऋतौ भवति ब्राह्मणः १२
सत्यानृते विनिश्चित्य अत्रापि विधिरुच्यते
सौदासेन पुरा राज्ञा मानुषा भक्षिता द्विज
शापाभिभूतेन भृशमत्र किं प्रतिभाति ते १३
स्वधर्म इति कृत्वा तु न त्यजामि द्विजोत्तम
पुराकृतमिति ज्ञात्वा जीवाम्येतेन कर्मणा १४
स्वकर्म त्यजतो ब्रह्मन्नधर्म इह दृश्यते
स्वकर्मनिरतो यस्तु स धर्म इति निश्चयः १५
पूर्वं हि विहितं कर्म देहिनं न विमुञ्चति
धात्रा विधिरयं दृष्टो बहुधा कर्मनिर्णये १६
द्रष्टव्यं तु भवेत्प्राज्ञ क्रूरे कर्मणि वर्तता
कथं कर्म शुभं कुर्यां कथं मुच्ये पराभवात्

कर्मणस्तस्य घोरस्य बहुधा निर्णयो भवेत् १७
दाने च सत्यवाक्ये च गुरुशुश्रूषणे तथा
द्विजातिपूजने चाहं धर्मे च निरतः सदा
अतिवादातिमानाभ्यां निवृत्तोऽस्मि द्विजोत्तम १८
कृषिं साध्विति मन्यन्ते तत्र हिंसा परा स्मृता
कर्षन्तो लाङ्गलैः पुंसो घ्नन्ति भूमिशयान्बहून्
जीवानन्यांश्च बहुशस्तत्र किं प्रतिभाति ते १९
धान्यबीजानि यान्याहुर्व्रीह्यादीनि द्विजोत्तम
सर्वाण्येतानि जीवानि तत्र किं प्रतिभाति ते २०
अध्याक्रम्य पशूंश्चापि घ्नन्ति वै भक्षयन्ति च
वृक्षानथौषधीश्चैव छिन्दन्ति पुरुषा द्विज २१
जीवा हि बहवो ब्रह्मन्वृक्षेषु च फलेषु च
उदके बहवश्चापि तत्र किं प्रतिभाति ते २२
सर्वं व्याप्तमिदं ब्रह्मन्प्राणिभिः प्राणिजीवनैः
मत्स्या ग्रसन्ते मत्स्यांश्च तत्र किं प्रतिभाति ते २३
सत्त्वैः सत्त्वानि जीवन्ति बहुधा द्विजसत्तम
प्राणिनोऽन्योन्यभक्षाश्च तत्र किं प्रतिभाति ते २४
चङ्क्रम्यमाणा जीवांश्च धरणीसंश्रितान्बहून्
पद्भ्यां घ्नन्ति नरा विप्र तत्र किं प्रतिभाति ते २५
उपविष्टाः शयानाश्च घ्नन्ति जीवाननेकशः
ज्ञानविज्ञानवन्तश्च तत्र किं प्रतिभाति ते २६
जीवैर्ग्रस्तमिदं सर्वमाकाशं पृथिवी तथा
अविज्ञानाच्च हिंसन्ति तत्र किं प्रतिभाति ते २७
अहिंसेति यदुक्तं हि पुरुषैर्विस्मितैः पुरा
के न हिंसन्ति जीवान्वै लोकेऽस्मिन्द्विजसत्तम
बहु संचिन्त्य इह वै नास्ति कश्चिदहिंसकः २८
अहिंसायां तु निरता यतयो द्विजसत्तम
कुर्वन्त्येव हि हिंसां ते यत्नादल्पतरा भवेत् २९
आलक्ष्याश्चैव पुरुषाः कुले जाता महागुणाः
महाघोराणि कर्माणि कृत्वा लज्जन्ति वै न च ३०

सुहृदः सुहृदोऽन्याश्च दुर्हृदश्चापि दुर्हृदः
सम्यक्प्रवृत्तान्पुरुषान्न सम्यगनुपश्यतः ३१
समृद्धैश्च न नन्दन्ति बान्धवा बान्धवैरपि
गुरूंश्चैव विनिन्दन्ति मूढाः पण्डितमानिनः ३२
बहु लोके विपर्यस्तं दृश्यते द्विजसत्तम
धर्मयुक्तमधर्मं च तत्र किं प्रतिभाति ते ३३
वक्तुं बहुविधं शक्यं धर्माधर्मेषु कर्मसु
स्वकर्मनिरतो यो हि स यशः प्राप्नुयान्महत् ३४
इति श्रीमहाभारते आरगयकपर्वणि एकोनद्विशततमोऽध्यायः १९९

द्विशततमोऽध्यायः

मार्कण्डेय उवाच
धर्मव्याधस्तु निपुणं पुनरेव युधिष्ठिर
विप्रर्षभमुवाचेदं सर्वधर्मभृतां वरः १
श्रुतिप्रमाणो धर्मो हि वृद्धानामिति भाषितम्
सूक्ष्मा गतिर्हि धर्मस्य बहुशाखा ह्यनन्तिका २
प्राणात्यये विवाहे च वक्तव्यमनृतं भवेत्
अनृतं च भवेत्सत्यं सत्यं चैवानृतं भवेत् ३
यद्भूतहितमत्यन्तं तत्सत्यमिति धारणा
विपर्ययकृतोऽधर्मः पश्य धर्मस्य सूक्ष्मताम् ४
यत्करोत्यशुभं कर्म शुभं वा द्विजसत्तम
अवश्यं तत्समाप्नोति पुरुषो नात्र संशयः ५
विषमां च दशां प्राप्य देवान्गर्हति वै भृशम्
आत्मनः कर्मदोषाणि न विजानात्यपण्डितः ६
मूढो नैकृतिकश्चापि चपलश्च द्विजोत्तम
सुखदुःखविपर्यासो यदा समुपपद्यते
नैनं प्रज्ञा सुनीतं वा त्रायते नैव पौरुषम् ७
यो यमिच्छेद्यथा कामं तं तं कामं समश्नुयात्
यदि स्यादपराधीनं पुरुषस्य क्रियाफलम् ८
संयताश्चापि दक्षाश्च मतिमन्तश्च मानवाः

दृश्यन्ते निष्फलाः सन्तः प्रहीणाः सर्वकर्मभिः ९
भूतानामपरः कश्चिद्धिंसायां सततोत्थितः
वञ्चनायां च लोकस्य स सुखेनेह जीवति १०
अचेष्टमानमासीनं श्रीः कंचिदुपतिष्ठति
कश्चित्कर्माणि कुर्वन्हि न प्राप्यमधिगच्छति ११
देवानिष्ट्वा तपस्तप्त्वा कृपणैः पुत्रगृद्धिभिः
दशमासधृता गर्भे जायन्ते कुलपांसनाः १२
अपरे धनधान्यैश्च भोगैश्च पितृसंचितैः
विपुलैरभिजायन्ते लब्धास्तैरेव मङ्गलैः १३
कर्मजा हि मनुष्याणां रोगा नास्त्यत्र संशयः
आधिभिश्चैव बाध्यन्ते व्याधैः क्षुद्रमृगा इव १४
ते चापि कुशलैर्वैद्यैर्निपुणैः संभृतौषधैः
व्याधयो विनिवार्यन्ते मृगा व्याधैरिव द्विज १५
येषामस्ति च भोक्तव्यं ग्रहणीदोषपीडिताः
न शक्नुवन्ति ते भोक्तुं पश्य धर्मभृतां वर १६
अपरे बाहुबलिनः क्लिश्यन्ते बहवो जनाः
दुःखेन चाधिगच्छन्ति भोजनं द्विजसत्तम १७
इति लोकमनाक्रन्दं मोहशोकपरिप्लुतम्
स्रोतसासकृदाक्षिप्तं ह्रियमाणं बलीयसा १८
न म्रियेयुर्न जीर्येयुः सर्वे स्युः सार्वकामिकाः
नाप्रियं प्रतिपश्येयुर्वशित्वं यदि वै भवेत् १९
उपर्युपरि लोकस्य सर्वो गन्तुं समीहते
यतते च यथाशक्ति न च तद्वर्तते तथा २०
बहवः संप्रदृश्यन्ते तुल्यनक्षत्रमङ्गलाः
महच्च फलवैषम्यं दृश्यते कर्मसंधिषु २१
न कश्चिदीशते ब्रह्मन्स्वयंग्राहस्य सत्तम
कर्मणां प्राकृतानां वै इह सिद्धिः प्रदृश्यते २२
यथा श्रुतिरियं ब्रह्मञ्जीवः किल सनातनः
शरीरमध्रुवं लोके सर्वेषां प्राणिनामिह २३
वध्यमाने शरीरे तु देहनाशो भवत्युत

जीवः संक्रमतेऽन्यत्र कर्मबन्धनिबन्धनः २४
ब्राह्मण उवाच
कथं धर्मभृतां श्रेष्ठ जीवो भवति शाश्वतः
एतदिच्छाम्यहं ज्ञातुं तत्त्वेन वदतां वर २५
व्याध उवाच
न जीवनाशोऽस्ति हि देहभेदे मिथ्यैतदाहुर्म्रियतेति मूढाः
जीवस्तु देहान्तरितः प्रयाति दशार्धतैवास्य शरीरभेदः २६
अन्यो हि नाश्नाति कृतं हि कर्म स एव कर्ता सुखदुःखभागी
यत्तेन किंचिद्धि कृतं हि कर्म तदश्नुते नास्ति कृतस्य नाशः २७
अपुगयशीलाश्च भवन्ति पुगया नरोत्तमाः पापकृतो भवन्ति
नरोऽनुयातस्त्विह कर्मभिः स्वैस्ततः समुत्पद्यति भावितस्तैः २८
ब्राह्मण उवाच
कथं संभवते योनौ कथं वा पुगयपापयोः
जातीः पुगया ह्यपुगयाश्च कथं गच्छति सत्तम २९
व्याध उवाच
गर्भाधानसमायुक्तं कर्मेदं संप्रदृश्यते
समासेन तु ते क्षिप्रं प्रवक्ष्यामि द्विजोत्तम ३०
यथा संभृतसंभारः पुनरेव प्रजायते
शुभकृच्छुभयोनीषु पापकृत्पापयोनिषु ३१
शुभैः प्रयोगैर्देवत्वं व्यामिश्रैर्मानुषो भवेत्
मोहनीयैर्वियोनीषु त्वधोगामी च किल्बिषैः ३२
जातिमृत्युजरादुःखैः सततं समभिद्रुतः
संसारे पच्यमानश्च दोषैरात्मकृतैर्नरः ३३
तिर्यग्योनिसहस्राणि गत्वा नरकमेव च
जीवाः संपरिवर्तन्ते कर्मबन्धनिबन्धनाः ३४
जन्तुस्तु कर्मभिस्तैस्तैः स्वकृतैः प्रेत्य दुःखितः
तद्दुःखप्रतिघातार्थमपुगयां योनिमश्नुते ३५
ततः कर्म समादत्ते पुनरन्यन्नवं बहु
पच्यते तु पुनस्तेन भुक्त्वापथ्यमिवातुरः ३६
अजस्रमेव दुःखार्तोऽदुखितः सुखसंज्ञितः

ततोऽनिवृत्तबन्धत्वात्कर्मणामुदयादपि
परिक्रामति संसारे चक्रवद्बहुवेदनः ३७
स चेन्निवृत्तबन्धस्तु विशुद्धश्चापि कर्मभिः
प्राप्नोति सुकृताँल्लोकान्यत्र गत्वा न शोचति ३८
पापं कुर्वन्पापवृत्तः पापस्यान्तं न गच्छति
तस्मात्पुण्यं यतेत्कर्तुं वर्जयेत च पातकम् ३९
अनसूयुः कृतज्ञश्च कल्याणान्येव सेवते
सुखानि धर्ममर्थं च स्वर्गं च लभते नरः ४०
संस्कृतस्य हि दान्तस्य नियतस्य यतात्मनः
प्राज्ञस्यानन्तरा वृत्तिरिह लोके परत्र च ४१
सतां धर्मेण वर्तेत क्रियां शिष्टवदाचरेत्
असंक्लेशेन लोकस्य वृत्तिं लिप्सेत वै द्विज ४२
सन्ति ह्यागतविज्ञानाः शिष्टाः शास्त्रविचक्षणाः
स्वधर्मेण क्रिया लोके कर्मणः सोऽप्यसङ्करः ४३
प्राज्ञो धर्मेण रमते धर्मं चैवोपजीवति
तस्य धर्मादवाप्तेषु धनेषु द्विजसत्तम
तस्यैव सिञ्चते मूलं गुणान्पश्यति यत्र वै ४४
धर्मात्मा भवति ह्येवं चित्तं चास्य प्रसीदति
स मैत्रजनसंतुष्ट इह प्रेत्य च नन्दति ४५
शब्दं स्पर्शं तथा रूपं गन्धानिष्टांश्च सत्तम
प्रभुत्वं लभते चापि धर्मस्यैतत्फलं विदुः ४६
धर्मस्य च फलं लब्ध्वा न तृप्यति महाद्विज
अतृप्यमाणो निर्वेदमादत्ते ज्ञानचक्षुषा ४७
प्रज्ञाचक्षुर्नर इह दोषं नैवानुरुध्यते
विरज्यति यथाकामं न च धर्मं विमुञ्चति ४८
सर्वत्यागे च यतते दृष्ट्वा लोकं क्षयात्मकम्
ततो मोक्षे प्रयतते नानुपायादुपायतः ४९
एवं निर्वेदमादत्ते पापं कर्म जहाति च
धार्मिकश्चापि भवति मोक्षं च लभते परम् ५०
तपो निःश्रेयसं जन्तोस्तस्य मूलं शमो दमः

तेन सर्वानवाप्नोति कामान्यान्मनसेच्छति ५१
इन्द्रियाणां निरोधेन सत्येन च दमेन च
ब्रह्मणः पदमाप्नोति यत्परं द्विजसत्तम ५२
ब्राह्मण उवाच
इन्द्रियाणि तु यान्याहुः कानि तानि यतव्रत
निग्रहश्च कथं कार्यो निग्रहस्य च किं फलम् ५३
कथं च फलमाप्नोति तेषां धर्मभृतां वर
एतदिच्छामि तत्त्वेन धर्मं ज्ञातुं सुधार्मिक ५४
इति श्रीमहाभारते आरगयकपर्वणि द्विशततमोऽध्यायः २००

एकाधिक द्विशततमोऽध्यायः

मार्कगडेय उवाच
एवमुक्तस्तु विप्रेण धर्मव्याधो युधिष्ठिर
प्रत्युवाच यथा विप्रं तच्छृणुष्व नराधिप १
व्याध उवाच
विज्ञानार्थं मनुष्याणां मनः पूर्वं प्रवर्तते
तत्प्राप्य कामं भजते क्रोधं च द्विजसत्तम २
ततस्तदर्थं यतते कर्म चारभते महत्
इष्टानां रूपगन्धानामभ्यासं च निषेवते ३
ततो रागः प्रभवति द्वेषश्च तदनन्तरम्
ततो लोभः प्रभवति मोहश्च तदनन्तरम् ४
तस्य लोभाभिभूतस्य रागद्वेषहतस्य च
न धर्मे जायते बुद्धिर्व्याजाद्धर्मं करोति च ५
व्याजेन चरते धर्ममर्थं व्याजेन रोचते
व्याजेन सिध्यमानेषु धनेषु द्विजसत्तम
तत्रैव रमते बुद्धिस्ततः पापं चिकीर्षति ६
सुहृद्भिर्वार्यमाणश्च परिडतैश्च द्विजोत्तम
उत्तरं श्रुतिसंबद्धं ब्रवीति श्रुतियोजितम् ७
अधर्मस्त्रिविधस्तस्य वर्धते रागदोषतः
पापं चिन्तयते चापि ब्रवीति च करोति च ८

तस्याधर्मप्रवृत्तस्य गुणा नश्यन्ति साधवः
एकशीलाश्च मित्रत्वं भजन्ते पापकर्मिणः ९
स तेनासुखमाप्नोति परत्र च विहन्यते
पापात्मा भवति ह्येवं धर्मलाभं तु मे शृणु १०
यस्त्वेतान्प्रज्ञया दोषान्पूर्वमेवानुपश्यति
कुशलः सुखदुःखेषु साधूंश्चाप्युपसेवते
तस्य साधुसमारम्भाद्बुद्धिर्धर्मेषु जायते ११
ब्राह्मण उवाच
ब्रवीषि सूनृतं धर्मं यस्य वक्ता न विद्यते
दिव्यप्रभावः सुमहानृषिरेव मतोऽसि मे १२
व्याध उवाच
ब्राह्मणा वै महाभागाः पितरोऽग्रभुजः सदा
तेषां सर्वात्मना कार्यं प्रियं लोके मनीषिणा १३
तत्तेषां च प्रियं तत्ते वक्ष्यामि द्विजसत्तम
नमस्कृत्वा ब्राह्मणेभ्यो ब्राह्मीं विद्यां निबोध मे १४
इदं विश्वं जगत्सर्वमजय्यं चापि सर्वशः
महाभूतात्मकं ब्रह्मन्नातः परतरं भवेत् १५
महाभूतानि खं बायुरग्निरापस्तथा च भूः
शब्दः स्पर्शश्च रूपं च रसो गन्धश्च तद्गुणाः १६
तेषामपि गुणाः सर्वे गुणवृत्तिः परस्परम्
पूर्वपूर्वगुणाः सर्वे क्रमशो गुणिषु त्रिषु १७
षष्ठस्तु चेतना नाम मन इत्यभिधीयते
सप्तमी तु भवेद्बुद्धिरहङ्कारस्ततः परम् १८
इन्द्रियाणि च पञ्चैव रजः सत्त्वं तमस्तथा
इत्येष सप्तदशको राशिरव्यक्तसंज्ञकः १९
सर्वैरिहेन्द्रियार्थैस्तु व्यक्ताव्यक्तैः सुसंवृत्तः
चतुर्विंशक इत्येष व्यक्ताव्यक्तमयो गुणः
एतत्ते सर्वमाख्यातं किं भूयः श्रोतुमिच्छसि २०
इति श्रीमहाभारते आरण्यकपर्वणि एकाधिकद्विशततमोऽध्यायः २०१

## द्व्यधिक द्विशततमोऽध्यायः

मार्कगडेय उवाच
एवमुक्तः स विप्रस्तु धर्मव्याधेन भारत
कथामकथयद्भूयो मनसः प्रीतिवर्धनीम् १
ब्राह्मण उवाच
महाभूतानि यान्याहुः पञ्च धर्मविदां वर
एकैकस्य गुणान्सम्यक्पञ्चानामपि मे वद २
व्याध उवाच
भूमिरापस्तथा ज्योतिर्वायुराकाशमेव च
गुणोत्तराणि सर्वाणि तेषां वक्ष्यामि ते गुणान् ३
भूमिः पञ्चगुणा ब्रह्मन्नुदकं च चतुर्गुणम्
गुणास्त्रयस्तेजसि च त्रयश्चाकाशवातयोः ४
शब्दः स्पर्शश्च रूपं च रसो गन्धश्च पञ्चमः
एते गुणाः पञ्चभूमेः सर्वेभ्यो गुणवत्तराः ५
शब्दः स्पर्शश्च रूपं च रसश्चापि द्विजोत्तम
अपामेते गुणा ब्रह्मन्कीर्तितास्तव सुव्रत ६
शब्दः स्पर्शश्च रूपं च तेजसोऽथ गुणास्त्रयः
शब्दः स्पर्शश्च वायौ तु शब्द आकाश एव च ७
एते पञ्चदश ब्रह्मन्गुणा भूतेषु पञ्चसु
वर्तन्ते सर्वभूतेषु येषु लोकाः प्रतिष्ठिताः
अन्योन्यं नातिवर्तन्ते संपच्च भवति द्विज ८
यदा तु विषमीभावमाचरन्ति चराचराः
तदा देही देहमन्यं व्यतिरोहति कालतः ९
आनुपूर्व्या विनश्यन्ति जायन्ते चानुपूर्वशः
तत्र तत्र हि दृश्यन्ते धातवः पाञ्चभौतिकाः
यैरावृतमिदं सर्वं जगत्स्थावरजङ्गमम् १०
इन्द्रियैः सृज्यते यद्यत्तत्तद्व्यक्तमिति स्मृतम्
अव्यक्तमिति विज्ञेयं लिङ्गग्राह्यमतीन्द्रियम् ११
यथास्वं ग्राहकान्येषां शब्दादीनामिमानि तु
इन्द्रियाणि यदा देही धारयन्निह तप्यते १२

लोके विततमात्मानं लोकं चात्मनि पश्यति
परावरज्ञः सक्तः सन्सर्वभूतानि पश्यति १३
पश्यतः सर्वभूतानि सर्वावस्थासु सर्वदा
ब्रह्मभूतस्य संयोगो नाशुभेनोपपद्यते १४
ज्ञानमूलात्मकं क्लेशमतिवृत्तस्य मोहजम्
लोको बुद्धिप्रकाशेन ज्ञेयमार्गेण दृश्यते १५
अनादिनिधनं जन्तुमात्मयोनिं सदाव्ययम्
अनौपम्यममूर्तं च भगवानाह बुद्धिमान्
तपोमूलमिदं सर्वं यन्मां विप्रानुपृच्छसि १६
इन्द्रियाण्येव तत्सर्वं यत्स्वर्गनरकावुभौ
निगृहीतविसृष्टानि स्वर्गाय नरकाय च १७
एष योगविधिः कृत्स्नो यावदिन्द्रियधारणम्
एतन्मूलं हि तपसः कृत्स्नस्य नरकस्य च १८
इन्द्रियाणां प्रसङ्गेन दोषमृच्छत्यसंशयम्
संनियम्य तु तान्येव ततः सिद्धिमवाप्नुते १९
षण्णामात्मनि नित्यानामैश्वर्यं योऽधिगच्छति
न स पापैः कुतोऽनर्थैर्युज्यते विजितेन्द्रियः २०
रथः शरीरं पुरुषस्य दृष्टमात्मा नियन्तेन्द्रियाण्याहुरश्वान्
तैरप्रमत्तः कुशली सदश्वैर्दान्तैः सुखं याति रथीव धीरः २१
षण्णामात्मनि युक्तानामिन्द्रियाणां प्रमाथिनाम्
यो धीरो धारयेद्रश्मीन्स स्यात्परमसारथिः २२
इन्द्रियाणां प्रसृष्टानां हयानामिव वर्त्मसु
धृतिं कुर्वीत सारथ्ये धृत्या तानि जयेद् ध्रुवम् २३
इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते
तदस्य हरते बुद्धिं नावं वायुरिवाम्भसि २४
येषु विप्रतिपद्यन्ते षट्सु मोहात्फलागमे
तेष्वध्यवसिताध्यायी विन्दते ध्यानजं फलम् २५

इति श्रीमहाभारते आरण्यकपर्वणि द्व्यधिकद्विशततमोऽध्यायः २०२

त्र्यधिकद्विशततमोऽध्यायः

मार्कण्डेय उवाच
एवं तु सूक्ष्मे कथिते धर्मव्याधेन भारत
ब्राह्मणः स पुनः सूक्ष्मं पप्रच्छ सुसमाहितः १
ब्राह्मण उवाच
सत्त्वस्य रजसश्चैव तमसश्च यथातथम्
गुणांस्तत्त्वेन मे ब्रूहि यथावदिह पृच्छतः २
व्याध उवाच
हन्त ते कथयिष्यामि यन्मां त्वं परिपृच्छसि
एषां गुणान्पृथक्त्वेन निबोध गदतो मम ३
मोहात्मकं तमस्तेषां रज एषां प्रवर्तकम्
प्रकाशबहुलत्वाच्च सत्त्वं ज्याय इहोच्यते ४
अविद्याबहुलो मूढः स्वप्नशीलो विचेतनः
दुर्दृशीकस्तमोध्वस्तः सक्रोधस्तामसोऽलसः ५
प्रवृत्तवाक्यो मन्त्री च योऽनुराग्यभ्यसूयकः
विवित्समानो विप्रर्षे स्तब्धो मानी स राजसः ६
प्रकाशबहुलो धीरो निर्विवित्सोऽनसूयकः
अक्रोधनो नरो धीमान्दान्तश्चैव स सात्त्विकः ७
सात्त्विकस्त्वथ संबुद्धो लोकवृत्तेन क्लिश्यते
यदा बुध्यति बोद्धव्यं लोकवृत्तं जुगुप्सते ८
वैराग्यस्य हि रूपं तु पूर्वमेव प्रवर्तते
मृदुर्भवत्यहङ्कारः प्रसीदत्यार्जवं च यत् ९
ततोऽस्य सर्वद्वंद्वानि प्रशाम्यन्ति परस्परम्
न चास्य संयमो नाम क्वचिद्भवति कश्चन १०
शूद्रयोनौ हि जातस्य सद्गुणानुपतिष्ठतः
वैश्यत्वं भवति ब्रह्मन्क्षत्रियत्वं तथैव च ११
आर्जवे वर्तमानस्य ब्राह्मण्यमभिजायते
गुणास्ते कीर्तिताः सर्वे किं भूयः श्रोतुमिच्छसि १२
ब्राह्मण उवाच
पार्थिवं धातुमासाद्य शारीरोऽग्नि कथं भवेत्

अवकाशविशेषेण कथं वर्तयतेऽनिलः १३
मार्कण्डेय उवाच
प्रश्नमेतं समुद्दिष्टं ब्राह्मणेन युधिष्ठिर
व्याधः स कथयामास ब्राह्मणाय महात्मने १४
व्याध उवाच
मूर्धानमाश्रितो वह्निः शरीरं परिपालयन्
प्राणो मूर्धनि चाग्नौ च वर्तमानो विचेष्टते
भूतं भव्यं भविष्यच्च सर्वं प्राणे प्रतिष्ठितम् १५
श्रेष्ठं तदेव भूतानां ब्रह्मज्योतिरुपास्महे
स जन्तुः सर्वभूतात्मा पुरुषः स सनातनः
मनो बुद्धिरहङ्कारो भूतानां विषयश्च सः १६
एवं त्विह स सर्वत्र प्राणेन परिपाल्यते
पृष्ठतस्तु समानेन स्वां स्वां गतिमुपाश्रितः १७
बस्तिमूले गुदे चैव पावकः समुपाश्रितः
वहन्मूत्रं पुरीषं चाप्यपानः परिवर्तते १८
प्रयत्ने कर्मणि बले य एकस्त्रिषु वर्तते
उदान इति तं प्राहुरध्यात्मविदुषो जनाः १९
सन्धौ सन्धौ संनिविष्टः सर्वेष्वपि तथानिलः
शरीरेषु मनुष्याणां व्यान इत्युपदिश्यते २०
धातुष्वग्निस्तु विततः स तु वायुसमीरितः
रसान्धातूंश्च दोषांश्च वर्तयन्परिधावति २१
प्राणानां संनिपातात्तु संनिपातः प्रजायते
ऊष्मा चाग्निरिति ज्ञेयो योऽन्नं पचति देहिनाम् २२
अपानोदानयोर्मध्ये प्राणव्यानौ समाहितौ
समन्वितस्त्वधिष्ठानं सम्यक्पचति पावकः २३
तस्यापि पायुपर्यन्तस्तथा स्याद्गुदसंज्ञितः
स्रोतांसि तस्माज्जायन्ते सर्वप्राणेषु देहिनाम् २४
अग्निवेगवहः प्राणो गुदान्ते प्रतिहन्यते
स ऊर्ध्वमागम्य पुनः समुत्क्षिपति पावकम् २५
पक्वाशयस्त्वधो नाभ्या ऊर्ध्वमामाशयः स्थितः

नाभिमध्ये शरीरस्य प्राणाः सर्वे प्रतिष्ठिताः २६
प्रवृत्ता हृदयात्सर्वास्तिर्यगूर्ध्वमधस्तथा
वहन्त्यन्नरसान्नाड्यो दश प्राणप्रचोदिताः २७
योगिनामेष मार्गस्तु येन गच्छन्ति तत्परम्
जितक्लमासना धीरा मूर्धन्यात्मानमादधुः
एवं सर्वेषु विततौ प्राणापानौ हि देहिषु २८
एकादशविकारात्मा कलासंभारसंभृतः
मूर्तिमन्तं हि तं विद्धि नित्यं कर्मजितात्मकम् २९
तस्मिन्यः संस्थितो ह्यग्निर्नित्यं स्थाल्यामिवाहितः
आत्मानं तं विजानीहि नित्यं योगजितात्मकम् ३०
देवो यःसंस्थितस्तस्मिन्नब्बिन्दुरिव पुष्करे
क्षेत्रज्ञं तं विजानीहि नित्यं त्यागजितात्मकम् ३१
जीवात्मकानि जानीहि रजः सत्त्वं तमस्तथा
जीवमात्मगुणं विद्धि तथात्मानं परात्मकम् ३२
सचेतनं जीवगुणं वदन्ति स चेष्टते चेष्टयते च सर्वम्
ततः परं क्षेत्रविदो वदन्ति प्राकल्पयद्यो भुवनानि सप्त ३३
एवं सर्वेषु भूतेषु भूतात्मा न प्रकाशते
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया ज्ञानवेदिभिः ३४
चित्तस्य हि प्रसादेन हन्ति कर्म शुभाशुभम्
प्रसन्नात्मात्मनि स्थित्वा सुखमानन्त्यमश्नुते ३५
लक्षणं तु प्रसादस्य यथा तृप्तः सुखं स्वपेत्
निवाते वा यथा दीपो दीप्येत्कुशलदीपितः ३६
पूर्वरात्रे परे चैव युञ्जानः सततं मनः
लघ्वाहारो विशुद्धात्मा पश्यन्नात्मानमात्मनि ३७
प्रदीप्तेनेव दीपेन मनोदीपेन पश्यति
दृष्ट्वात्मानं निरात्मानं तदा स तु विमुच्यते ३८
सर्वोपायैस्तु लोभस्य क्रोधस्य च विनिग्रहः
एतत्पवित्रं यज्ञानां तपो वै संक्रमो मतः ३९
नित्यं क्रोधात्तपो रक्षेच्छ्रियं रक्षेत मत्सरात्
विद्यां मानापमानाभ्यामात्मानं तु प्रमादतः ४०

आनृशंस्यं परो धर्मः क्षमा च परमं बलम्
आत्मज्ञानं परं ज्ञानं परं सत्यव्रतं व्रतम् ४१
सत्यस्य वचनं श्रेयः सत्यं ज्ञानं हितं भवेत्
यद्भूतहितमत्यन्तं तद्वै सत्यं परं मतम् ४२
यस्य सर्वे समारम्भाः निराशीर्बन्धनाः सदा
त्यागे यस्य हुतं सर्वं स त्यागी स च बुद्धिमान् ४३
यतो न गुरुरप्येनं च्यावयेदुपपादयन्
तं विद्याद्ब्रह्मणो योगं वियोगं योगसंज्ञितम् ४४
न हिंस्यात्सर्वभूतानि मैत्रायणगतश्चरेत्
नेदं जीवितमासाद्य वैरं कुर्वीत केनचित् ४५
आकिंचन्यं सुसंतोषो निराशित्वमचापलम्
एतदेव परं ज्ञानं सदात्मज्ञानमुत्तमम् ४६
परिग्रहं परित्यज्य भव बुद्ध्या यतव्रतः
अशोकं स्थानमातिष्ठेन्निश्चलं प्रेत्य चेह च ४७
तपोनित्येन दान्तेन मुनिना संयतात्मना
अजितं जेतुकामेन भाव्यं सङ्गेष्वसङ्गिना ४८
गुणागुणमनासङ्गमेककार्यमनन्तरम्
एतद्ब्राह्मण ते वृत्तमाहुरेकपदं सुखम् ४९
परित्यजति यो दुःखं सुखं चाप्युभयं नरः
ब्रह्म प्राप्नोति सोऽत्यन्तमसङ्गेन च गच्छति ५०
यथाश्रुतमिदं सर्वं समासेन द्विजोत्तम
एतत्ते सर्वमाख्यातं किं भूयः श्रोतुमिच्छसि ५१
इति श्रीमहाभारते आरण्यकपर्वणि त्र्यधिकद्विशततमोऽध्यायः २०३

## चतुरधिकद्विशततमोऽध्यायः

मार्कण्डेय उवाच
एवं संकथिते कृत्स्ने मोक्षधर्मे युधिष्ठिर
दृढं प्रीतमना विप्रो धर्मव्याधमुवाच ह १
न्याययुक्तमिदं सर्वं भवता परिकीर्तितम्
न तेऽस्त्यविदितं किंचिद्धर्मेष्विह हि दृश्यते २

व्याध उवाच
प्रत्यक्षं मम यो धर्मस्तं पश्य द्विजसत्तम
येन सिद्धिरियं प्राप्ता मया ब्राह्मणपुङ्गव ३
उत्तिष्ठ भगवन्क्षिप्रं प्रविश्याभ्यन्तरं गृहम्
द्रष्टुमर्हसि धर्मज्ञ मातरं पितरं च मे ४
मार्कण्डेय उवाच
इत्युक्तः स प्रविश्याथ ददर्श परमार्चितम्
सौधं हृद्यं चतुःशालमतीव च मनोहरम् ५
देवतागृहसंकाशं दैवतैश्च सुपूजितम्
शयनासनसंबाधं गन्धैश्च परमैर्युतम् ६
तत्र शुक्लाम्बरधरौ पितरावस्य पूजितौ
कृताहारौ सुतुष्टौ तावुपविष्टौ वरासने
धर्मव्याधस्तु तौ दृष्ट्वा पादेषु शिरसापतत् ७
वृद्धावूचतुः
उत्तिष्ठोत्तिष्ठ धर्मज्ञ धर्मस्त्वामभिरक्षतु
प्रीतौ स्वस्तव शौचेन दीर्घमायुरवाप्नुहि
सत्पुत्रेण त्वया पुत्र नित्यकालं सुपूजितौ ८
न तेऽन्यद्दैवतं किंचिद्दैवतेष्वपि वर्तते
प्रयतत्वाद्द्विजातीनां दमेनासि समन्वितः ९
पितुः पितामहा ये च तथैव प्रपितामहाः
प्रीतास्ते सततं पुत्र दमेनावां च पूजया १०
मनसा कर्मणा वाचा शुश्रूषा नैव हीयते
न चान्या वितथा बुद्धिर्दृश्यते सांप्रतं तव ११
जामदग्न्येन रामेण यथा वृद्धौ सुपूजितौ
तथा त्वया कृतं सर्वं तद्विशिष्टं च पुत्रक १२
मार्कण्डेय उवाच
ततस्तं ब्राह्मणं ताभ्यां धर्मव्याधो न्यवेदयत्
तौ स्वागतेन तं विप्रमर्चयामासतुस्तदा १३
प्रतिगृह्य च तां पूजां द्विजः पप्रच्छ तावुभौ
सपुत्राभ्यां सभृत्याभ्यां कच्चिद्वां कुशलं गृहे

अनामयं च वां कच्चित्सदैवेह शरीरयोः १४
वृद्धावूचतुः
कुशलं नो गृहे विप्र भृत्यवर्गे च सर्वशः
कच्चित्त्वमप्यविघ्नेन संप्राप्तो भगवन्निह १५
मार्कंडेय उवाच
बाढमित्येव तौ विप्रः प्रत्युवाच मुदान्वितः
धर्मव्याधस्तु तं विप्रमर्थवद्वाक्यमब्रवीत् १६
पिता माता च भगवन्नेतौ मे दैवतं परम्
यद्दैवतेभ्यः कर्तव्यं तदेताभ्यां करोम्यहम् १७
त्रयस्त्रिंशद्यथा देवाः सर्वे शक्रपुरोगमाः
संपूज्याः सर्वलोकस्य तथा वृद्धाविमौ मम १८
उपहारानाहरन्तो देवतानां यथा द्विजाः
कुर्वते तद्वदेताभ्यां करोम्यहमतन्द्रितः १९
एतौ मे परमं ब्रह्मन्पिता माता च दैवतम्
एतौ पुष्पैः फलै रत्नैस्तोषयामि सदा द्विज २०
एतावेवाग्नयो मह्यं यान्वदन्ति मनीषिणः
यज्ञा वेदाश्च चत्वारः सर्वमेतौ मम द्विज २१
एतदर्थं मम प्राणा भार्या पुत्राः सुहृज्जनाः
सपुत्रदारः शुश्रूषां नित्यमेव करोम्यहम् २२
स्वयं च स्नापयाम्येतौ तथा पादौ प्रधावये
आहारं संप्रयच्छामि स्वयं च द्विजसत्तम २३
अनुकूलाः कथा वच्मि विप्रियं परिवर्जयन्
अधर्मेणापि संयुक्तं प्रियमाभ्यां करोम्यहम् २४
धर्ममेव गुरुं ज्ञात्वा करोमि द्विजसत्तम
अतन्द्रितः सदा विप्र शुश्रूषां वै करोम्यहम् २५
पञ्चैव गुरवो ब्रह्मन्पुरुषस्य बुभूषतः
पिता माताग्निरात्मा च गुरुश्च द्विजसत्तम २६
एतेषु यस्तु वर्तेत सम्यगेव द्विजोत्तम
भवेयुरग्नयस्तस्य परिचीर्णास्तु नित्यशः
गार्हस्थ्ये वर्तमानस्य धर्म एष सनातनः २७

इति श्रीमहाभारते आरगयकपर्वणि चतुरधिक द्विशततमोऽध्यायः २०४

पञ्चाधिकद्विशततमोऽध्यायः

मार्कगडेय उवाच
गुरू निवेद्य विप्राय तौ मातापितरावुभौ
पुनरेव स धर्मात्मा व्याधो ब्राह्मणमब्रवीत् १
प्रवृत्तचक्षुर्जातोऽस्मि संपश्य तपसो बलम्
यदर्थमुक्तोऽसि तया गच्छस्व मिथिलामिति २
पतिशुश्रूषपरया दान्तया सत्यशीलया
मिथिलायां वसन्व्याधः स ते धर्मान्प्रवक्ष्यति ३
ब्राह्मण उवाच
पतिव्रतायाः सत्यायाः शीलाढ्याया यतव्रत
संस्मृत्य वाक्यं धर्मज्ञ गुणवानसि मे मतः ४
व्याध उवाच
यत्तदा त्वं द्विजश्रेष्ठ तयोक्तो मां प्रति प्रभो
दृष्टमेतत्तया सम्यगेकपत्न्या न संशयः ५
त्वदनुग्रहबुद्ध्या तु विप्रैतद्दर्शितं मया
वाक्यं च शृणु मे तात यत्ते वक्ष्ये हितं द्विज ६
त्वया विनिकृता माता पिता च द्विजसत्तम
अनिसृष्टोऽसि निष्क्रान्तो गृहात्ताभ्यामनिन्दित
वेदोच्चारणकार्यार्थमयुक्तं तत्त्वया कृतम् ७
तव शोकेन वृद्धौ तावन्धौ जातौ तपस्विनौ
तौ प्रसादयितुं गच्छ मा त्वा धर्मोऽत्यगान्महान् ८
तपस्वी त्वं महात्मा च धर्मे च निरतः सदा
सर्वमेतदपार्थं ते क्षिप्रं तौ संप्रसादय ९
श्रद्दधस्व मम ब्रह्मन्नान्यथा कर्तुमर्हसि
गम्यतामद्य विप्रर्षे श्रेयस्ते कथयाम्यहम् १०
ब्राह्मण उवाच
यदेतदुक्तं भवता सर्वं सत्यमसंशयम्
प्रीतोऽस्मि तव धर्मज्ञ साध्वाचारगुणान्वित ११

व्याध उवाच
दैवतप्रतिमो हि त्वं यस्त्वं धर्ममनुव्रतः
पुराणं शाश्वतं दिव्यं दुष्प्रापमकृतात्मभिः १२
अतन्द्रितः कुरु क्षिप्रं मातापित्रोर्हि पूजनम्
अतः परमहं धर्मं नान्यं पश्यामि कंचन १३
ब्राह्मण उवाच
इहाहमागतो दिष्ट्या दिष्ट्या मे सङ्गतं त्वया
ईदृशा दुर्लभा लोके नरा धर्मप्रदर्शकाः १४
एको नरसहस्रेषु धर्मविद्विद्यते न वा
प्रीतोऽस्मि तव सत्येन भद्रं ते पुरुषोत्तम १५
पतमानो हि नरके भवतास्मि समुद्धृतः
भवितव्यमथैवं च यद्दृष्टोऽसि मयानघ १६
राजा ययातिर्दौहित्रैः पतितस्तारितो यथा
सद्भिः पुरुषशार्दूल तथाहं भवता त्विह १७
मातापितृभ्यां शुश्रूषां करिष्ये वचनात्तव
नाकृतात्मा वेदयति धर्माधर्मविनिश्चयम् १८
दुर्ज्ञेयः शाश्वतो धर्मः शूद्रयोनौ हि वर्तता
न त्वां शूद्रमहं मन्ये भवितव्यं हि कारणम्
येन कर्मविपाकेन प्राप्तेयं शूद्रता त्वया १९
एतदिच्छामि विज्ञातुं तत्त्वेन हि महामते
कामया ब्रूहि मे तथ्यं सर्वं त्वं प्रयतात्मवान् २०
व्याध उवाच
अनतिक्रमणीया हि ब्राह्मणा वै द्विजोत्तम
शृणु सर्वमिदं वृत्तं पूर्वदेहे ममानघ २१
अहं हि ब्राह्मणः पूर्वमासं द्विजवरात्मज
वेदाध्यायी सुकुशलो वेदाङ्गानां च पारगः
आत्मदोषकृतैर्ब्रह्मन्नवस्थां प्राप्तवानिमाम् २२
कश्चिद्राजा मम सखा धनुर्वेदपरायणः
संसर्गाद्धनुषि श्रेष्ठस्ततोऽहमभवं द्विज २३
एतस्मिन्नेव काले तु मृगयां निर्गतो नृपः

सहितो योधमुख्यैश्च मन्त्रिभिश्च सुसंवृतः
ततोऽभ्यहन्मृगांस्तत्र सुबहूनाश्रमं प्रति २४
अथ क्षिप्तः शरो घोरो मयापि द्विजसत्तम
ताडितश्च मुनिस्तेन शरेणानतपर्वणा २५
भूमौ निपतितो ब्रह्मन्नुवाच प्रतिनादयन्
नापराध्याम्यहं किंचित्केन पापमिदं कृतम् २६
मन्वानस्तं मृगं चाहं संप्राप्तः सहसा मुनिम्
अपश्यं तमृषिं विद्धं शरेणानतपर्वणा
तमुग्रतपसं विप्रं निष्टनन्तं महीतले २७
अकार्यकरणाच्चापि भृशं मे व्यथितं मनः
अजानता कृतमिदं मयेत्यथ तमब्रुवम्
क्षन्तुमर्हसि मे ब्रह्मन्निति चोक्तो मया मुनिः २८
ततः प्रत्यब्रवीद्वाक्यमृषिर्मां क्रोधमूर्छितः
व्याधस्त्वं भविता क्रूर शूद्रयोनाविति द्विज २९

इति श्रीमहाभारते आरगयकपर्वणि पञ्चाधिक द्विशततमोऽध्यायः २०५

## षडधिकद्विशततमोऽध्यायः

व्याध उवाच
एवं शप्तोऽहमृषिणा तदा द्विजवरोत्तम
अभिप्रसादयमृषिं गिरा वाक्यविशारदम् १
अजानता मयाकार्यमिदमद्य कृतं मुने
क्षन्तुमर्हसि तत्सर्वं प्रसीद भगवन्निति २
ऋषिरुवाच
नान्यथा भविता शाप एवमेतदसंशयम्
आनृशंस्यादहं किंचित्कर्तानुग्रहमद्य ते ३
शूद्रयोनौ वर्तमानो धर्मज्ञो भविता ह्यसि
मातापित्रोश्च शुश्रूषां करिष्यसि न संशयः ४
तया शुश्रूषया सिद्धिं महतीं समवाप्स्यसि
जातिस्मरश्च भविता स्वर्गं चैव गमिष्यसि
शापक्षयान्ते निर्वृत्ते भवितासि पुनर्द्विजः ५

व्याध उवाच
एवं शप्तः पुरा तेन ऋषिणास्म्युग्रतेजसा
प्रसादश्च कृतस्तेन ममैवं द्विपदां वर ६
शरं चोद्धृतवानस्मि तस्य वै द्विजसत्तम
आश्रमं च मया नीतो न च प्राणैर्व्ययुज्यत ७
एतत्ते सर्वमाख्यातं यथा मम पुराभवत्
अभितश्चापि गन्तव्यं मया स्वर्गं द्विजोत्तम ८
ब्राह्मण उवाच
एवमेतानि पुरुषा दुःखानि च सुखानि च
प्राप्नुवन्ति महाबुद्धे नोत्कण्ठां कर्तुमर्हसि
दुष्करं हि कृतं तात जानता जातिमात्मनः ९
कर्मदोषश्च वै विद्वान्नात्मजातिकृतेन वै
कंचित्कालं मृष्यतां वै ततोऽसि भविता द्विजः
सांप्रतं च मतो मेऽसि ब्राह्मणो नात्र संशयः १०
ब्राह्मणः पतनीयेषु वर्तमानो विकर्मसु
दाम्भिको दुष्कृतप्रायः शूद्रेण सदृशो भवेत् ११
यस्तु शूद्रो दमे सत्ये धर्मे च सततोत्थितः
तं ब्राह्मणमहं मन्ये वृत्तेन हि भवेद्द्विजः १२
कर्मदोषेण विषमां गतिमाप्नोति दारुणाम्
क्षीणदोषमहं मन्ये चाभितस्त्वां नरोत्तम १३
कर्तुमर्हसि नोत्कण्ठां त्वद्विधा ह्यविषादिनः
लोकवृत्तान्तवृत्तज्ञा नित्यं धर्मपरायणाः १४
व्याध उवाच
प्रज्ञया मानसं दुःखं हन्याच्छारीरमौषधैः
एतद्विज्ञानसामर्थ्यं न बालैः समतां व्रजेत् १५
अनिष्टसंप्रयोगाच्च विप्रयोगात्प्रियस्य च
मानुषा मानसैर्दुःखैर्युज्यन्ते अल्पबुद्धयः १६
गुणैर्भूतानि युज्यन्ते वियुज्यन्ते तथैव च
सर्वाणि नैतदेकस्य शोकस्थानं हि विद्यते १७
अनिष्टेनान्वितं पश्यंस्तथा क्षिप्रं विरज्यते

ततश्च प्रतिकुर्वन्ति यदि पश्यन्त्युपक्रमम्
शोचतो न भवेत्किंचित्केवलं परितप्यते १८
परित्यजन्ति ये दुःखं सुखं वाप्युभयं नराः
त एव सुखमेधन्ते ज्ञानतृप्ता मनीषिणः १९
असंतोषपरा मूढाः संतोषं यान्ति पण्डिताः
असंतोषस्य नास्त्यन्तस्तुष्टिस्तु परमं सुखम्
न शोचन्ति गताध्वानः पश्यन्तः परमां गतिम् २०
न विषादे मनः कार्यं विषादो विषमुत्तमम्
मारयत्यकृतप्रज्ञं बालं क्रुद्ध इवोरगः २१
यं विषादोऽभिभवति विषमे समुपस्थिते
तेजसा तस्य हीनस्य पुरुषार्थो न विद्यते २२
अवश्यं क्रियमाणस्य कर्मणो दृश्यते फलम्
न हि निर्वेदमागम्य किंचित्प्राप्नोति शोभनम् २३
अथाप्युपायं पश्येत दुःखस्य परिमोक्षणे
अशोचन्नारभेतैव युक्तश्चाव्यसनी भवेत् २४
भूतेष्वभावं संचिन्त्य ये तु बुद्धेः परं गताः
न शोचन्ति कृतप्रज्ञाः पश्यन्तः परमां गतिम् २५
न शोचामि च वै विद्वन्कालाकाङ्क्षी स्थितोऽस्म्यहम्
एतैर्निदर्शनैर्ब्रह्मन्नावसीदामि सत्तम २६
ब्राह्मण उवाच
कृतप्रज्ञोऽसि मेधावी बुद्धिश्च विपुला तव
नाहं भवन्तं शोचामि ज्ञानतृप्तोऽसि धर्मवित् २७
आपृच्छे त्वां स्वस्ति तेऽस्तु धर्मस्त्वा परिरक्षतु
अप्रमादस्तु कर्तव्यो धर्मे धर्मभृतां वर २८
मार्कण्डेय उवाच
बाढमित्येव तं व्याधः कृताञ्जलिरुवाच ह
प्रदक्षिणमथो कृत्वा प्रस्थितो द्विजसत्तमः २९
स तु गत्वा द्विजः सर्वां शुश्रूषां कृतवांस्तदा
मातापितृभ्यां वृद्धाभ्यां यथान्यायं सुसंशितः ३०
एतत्ते सर्वमाख्यातं निखिलेन युधिष्ठिर

पृष्टवानसि यं तात धर्मं धर्मभृतां वर ३१
पतिव्रताया माहात्म्यं ब्राह्मणस्य च सत्तम
मातापित्रोश्च शुश्रूषा व्याधेधर्मश्च कीर्तितः ३२
युधिष्ठिर उवाच
अत्यद्भुतमिदं ब्रह्मन्धर्माख्यानमनुत्तमम्
सर्वधर्मभृतां श्रेष्ठ कथितं द्विजसत्तम ३३
सुखश्रव्यतया विद्वन्मुहूर्तमिव मे गतम्
न हि तृप्तोऽस्मि भगवञ्शृणवानो धर्ममुत्तमम् ३४
इति श्रीमहाभारते आरण्यकपर्वणि षडधिकद्विशततमोऽध्यायः २०६

सप्ताधिक द्विशततमोऽध्यायः

वैशम्पायन उवाच
श्रुत्वेमां धर्मसंयुक्तां धर्मराजः कथां शुभाम्
पुनः पप्रच्छ तमृषिं मार्कण्डेयं तपस्विनम् १
युधिष्ठिर उवाच
कथमग्निर्वनं यातः कथं चाप्यङ्गिराः पुरा
नष्टेऽग्नौ हव्यमवहदग्निर्भूत्वा महानृषिः २
अग्निर्यदा त्वेक एव बहुत्वं चास्य कर्मसु
दृश्यते भगवन्सर्वमेतदिच्छामि वेदितुम् ३
कुमारश्च यथोत्पन्नो यथा चाग्नेः सुतोऽभवत्
यथा रुद्राच्च संभूतो गङ्गायां कृत्तिकासु च ४
एतदिच्छाम्यहं त्वत्तः श्रोतुं भार्गवनन्दन
कौतूहलसमाविष्टो यथातथ्यं महामुने ५
मार्कण्डेय उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
यथा क्रुद्धो हुतवहस्तपस्तप्तुं वनं गतः ६
यथा च भगवानग्निः स्वयमेवाङ्गिराभवत्
संतापयन्स्वप्रभया नाशयंस्तिमिराणि च ७
आश्रमस्थो महाभागो हव्यवाहं विशेषयन्
तथा स भूत्वा तु तदा जगत्सर्वं प्रकाशयन् ८

तपश्चरंश्च हुतभुक्संतप्तस्तस्य तेजसा
भृशं ग्लानश्च तेजस्वी न स किंचित्प्रजज्ञिवान् ९
अथ संचिन्तयामास भगवान्हव्यवाहनः
अन्योऽग्निरिह लोकानां ब्रह्मणा संप्रवर्तितः
अग्नित्वं विप्रनष्टं हि तप्यमानस्य मे तपः १०
कथमग्निः पुनरहं भवेयमिति चिन्त्य सः
अपश्यदग्निवल्लोकांस्तापयन्तं महामुनिम् ११
सोपासर्पच्छनैर्भीतस्तमुवाच तदाङ्गिराः
शीघ्रमेव भवस्वाग्निस्त्वं पुनर्लोकभावनः
विज्ञातश्चासि लोकेषु त्रिषु संस्थानचारिषु १२
त्वमग्ने प्रथमः सृष्टो ब्रह्मणा तिमिरापहः
स्वस्थानं प्रतिपद्यस्व शीघ्रमेव तमोनुद १३
अग्निरुवाच
नष्टकीर्तिरहं लोके भवाञ्जातो हुताशनः
भवन्तमेव ज्ञास्यन्ति पावकं न तु मां जनाः १४
निक्षिपाम्यहमग्नित्वं त्वमग्निः प्रथमो भव
भविष्यामि द्वितीयोऽह प्राजापत्यक एव च १५
अङ्गिरा उवाच
कुरु पुरायं प्रजास्वर्ग्यं भवाग्निस्तिमिरापहः
मां च देव कुरुष्वाग्ने प्रथमं पुत्रमञ्जसा १६
मार्कराडेय उवाच
तच्छ्रुत्वाङ्गिरसो वाक्यं जातवेदास्तथाकरोत्
राजन्बृहस्पतिर्नाम तस्याप्यङ्गिरसः सुतः १७
ज्ञात्वा प्रथमजं तं तु वह्नेराङ्गिरसं सुतम्
उपेत्य देवाः पप्रच्छुः कारणं तत्र भारत १८
स तु पृष्टस्तदा देवैस्ततः कारणमब्रवीत्
प्रत्यगृह्णंस्तु देवाश्च तद्वचोऽङ्गिरसस्तदा १९
अत्र नानाविधानग्नीन्प्रवक्ष्यामि महाप्रभान्
कर्मभिर्बहुभिः ख्यातान्नानात्वं ब्राह्मणेष्विह २०
इति श्रीमहाभारते आरगयकपर्वणि सप्ताधिक द्विशततमोऽध्यायः २०७

## अष्टाधिकद्विशततमोऽध्यायः

मार्कण्डेय उवाच
ब्रह्मणो यस्तृतीयस्तु पुत्रः कुरुकुलोद्वह
तस्यापवसुता भार्या प्रजास्तस्यापि मे शृणु १
बृहज्ज्योतिर्बृहत्कीर्तिर्बृहद्ब्रह्मा बृहन्मनाः
बृहन्मन्त्रो बृहद्भासस्तथा राजन्बृहस्पतिः २
प्रजासु तासु सर्वासु रूपेणाप्रतिमाभवत्
देवी भानुमती नाम प्रथमाङ्गिरसः सुता ३
भूतानामेव सर्वेषां यस्यां रागस्तदाभवत्
रागाद्रागेति यामाहुर्द्वितीयाङ्गिरसः सुता ४
यां कपर्दिसुतामाहुर्दृश्यार्दृश्येति देहिनः
तनुत्वात्सा सिनीवाली तृतीयाङ्गिरसः सुता ५
पश्यत्यर्चिष्मती भाभिर्हविर्भिश्च हविष्मती
षष्ठीमङ्गिरसः कन्यां पुण्यामाहुर्हविष्मतीम् ६
महामखेष्वाङ्गिरसी दीप्तिमत्सु महामती
महामतीति विख्याता सप्तमी कथ्यते सुता ७
यां तु दृष्ट्वा भगवतीं जनः कुहुकुहायते
एकानंशेति यामाहुः कुहूमङ्गिरसः सुताम् ८
इति श्रीमहाभारते आरण्यकपर्वणि अष्टाधिक द्विशततमोऽध्यायः २०८

## नवाधिक द्विशततमोऽध्यायः

मार्कण्डेय उवाच
बृहस्पतेश्चान्द्रमसी भार्याभूद्या यशस्विनी
अग्नीन्साजनयत्पुण्यान्षडेकां चापि पुत्रिकाम् १
आहुतिष्वेव यस्याग्नेर्हविषाज्यं विधीयते
सोऽग्निर्बृहस्पतेः पुत्रः शंयुर्नाम महाप्रभः २
चातुर्मास्येषु यस्येष्ट्यामश्वमेधेऽग्रजः पशुः
दीप्तो ज्वालैरनेकाभैरग्निरेकोऽथ वीर्यवान् ३
शंयोरप्रतिमा भार्या सत्या सत्या च धर्मजा
अग्निस्तस्य सुतो दीप्तस्तिस्रः कन्याश्च सुव्रताः ४

प्रथमेनाज्यभागेन पूज्यते योऽग्निरध्वरे
अग्निस्तस्य भरद्वाजः प्रथमः पुत्र उच्यते ५
पौर्णमास्येषु सर्वेषु हविषाज्यं स्त्रुवोद्यतम्
भरतो नामतः सोऽग्निर्द्वितीयः शंयुतः सुतः ६
तिस्रः कन्या भवन्त्यन्या यासां स भरतः पतिः
भरतस्तु सुतस्तस्य भरत्येका च पुत्रिका ७
भरतो भरतस्याग्नेः पावकस्तु प्रजापतेः
महानत्यर्थमहितस्तथा भरतसत्तम ८
भरद्वाजस्य भार्या तु वीरा वीरश्च पिगडदः
प्राहुराज्येन तस्येज्यां सोमस्येव द्विजाः शनैः ९
हविषा यो द्वितीयेन सोमेन सह युज्यते
रथप्रभू रथध्वानः कुम्भरेताः स उच्यते १०
सरय्वां जनयत्सिद्धिं भानुं भाभिः समावृणोत्
आग्नेयमानयन्नित्यमाह्वानेष्वेष कथ्यते ११
यस्तु न च्यवते नित्यं यशसा वर्चसा श्रिया
अग्निर्निश्च्यवनो नाम पृथिवीं स्तौति केवलम् १२
विपाप्मा कलुषैर्मुक्तो विशुद्धश्चार्चिषा ज्वलन्
विपापोऽग्नि सुतस्तस्य सत्यः समयकर्मसु १३
आक्रोशतां हि भूतानां यः करोति हि निष्कृतिम्
अग्निः स निष्कृतिर्नाम शोभयत्यभिसेवितः १४
अनुकूजन्ति येनेह वेदनार्ताः स्वयं जनाः
तस्य पुत्रः स्वनो नाम पावकः स रुजस्करः १५
यस्तु विश्वस्य जगतो बुद्धिमाक्रम्य तिष्ठति
तं प्राहुरध्यात्मविदो विश्वजिन्नाम पावकम् १६
अन्तराग्निः श्रितो यो हि भुक्तं पचति देहिनाम्
स यज्ञे विश्वभुङ् नाम सर्वलोकेषु भारत १७
ब्रह्मचारी यतात्मा च सततं विपुलव्रतः
ब्राह्मणाः पूजयन्त्येनं पाकयज्ञेषु पावकम् १८
प्रथितो गोपतिर्नाम नदी यस्याभवत्प्रिया
तस्मिन्सर्वाणि कर्माणि क्रियन्ते कर्मकर्तृभिः १९

वडवामुखः पिबत्यम्भो योऽसौ परमदारुणः
ऊर्ध्वभागूर्ध्वभाङ् नाम कविः प्राणाश्रितस्तु सः २०
उदग्द्वारं हविर्यस्य गृहे नित्यं प्रदीयते
ततः स्विष्टं भवेदाज्यं स्विष्टकृत्परमः स्मृतः २१
यः प्रशान्तेषु भूतेषु मन्युर्भवति पावकः
क्रोधस्य तु रसो जज्ञे मन्यती चाथ पुत्रिका
स्वाहेति दारुणा क्रूरा सर्वभूतेषु तिष्ठति २२
त्रिदिवे यस्य सदृशो नास्ति रूपेण कश्चन
अतुल्यत्वात्कृतो देवैर्नाम्ना कामस्तु पावकः २३
संहर्षाद्धारयन्क्रोधं धन्वी स्रग्वी रथे स्थितः
समरे नाशयेच्छत्रूनमोघो नाम पावकः २४
उक्थो नाम महाभाग त्रिभिरुक्थैरभिष्टुतः
महावाचं त्वजनयत्सकामाश्वं हि यं विदुः २५
इति श्रीमहाभारते आरण्यकपर्वणि नवाधिक द्विशततमोऽध्यायः २०९

## दशाधिकद्विशततमोऽध्यायः

मार्कण्डेय उवाच
काश्यपो ह्यथ वासिष्ठः प्राणश्च प्राणपुत्रकः
अग्निराङ्गिरसश्चैव च्यवनस्त्रिषुवर्चकः १
अचरन्त तपस्तीव्रं पुत्रार्थे बहुवार्षिकम्
पुत्रं लभेम धर्मिष्ठं यशसा ब्रह्मणा समम् २
महाव्याहृतिभिर्ध्यातः पञ्चभिस्तैस्तदा त्वथ
जज्ञे तेजोमयोऽर्चिष्मान्पञ्चवर्णः प्रभावनः ३
समिद्धोऽग्नि शिरस्तस्य बाहू सूर्यनिभौ तथा
त्वङ्नेत्रे च सुवर्णाभे कृष्णे जङ्घे च भारत ४
पञ्चवर्णः च तपसा कृतस्तैः पञ्चभिर्जनैः
पाञ्चजन्यः श्रुतो वेदे पञ्चवंशकरस्तु सः ५
दश वर्षसहस्राणि तपस्तप्त्वा महातपाः
जनयत्पावकं घोरं पितॄणां स प्रजाः सृजन् ६
बृहद्रथंतरं मूर्ध्नो वक्त्राच्च तरसाहरौ

शिवं नाभ्यां बलादिन्द्रं वाय्वग्नी प्राणतोऽसृजत् ७
बाहुभ्यामनुदात्तौ च विश्वे भूतानि चैव ह
एतान्सृष्ट्वा ततः पञ्च पितॄणामसृजत्सुतान् ८
बृहदूर्जस्य प्रणिधिः काश्यपस्य बृहत्तरः
भानुरङ्गिरसो वीरः पुत्रो वर्चस्य सौभरः ९
प्राणस्य चानुदात्तश्च व्याख्याताः पञ्च वंशजाः
देवान्यज्ञमुषश्चान्यान्सृजन्पञ्चदशोत्तरान् १०
अभीममतिभीमं च भीमं भीमबलाबलम्
एतान्यज्ञमुषः पञ्च देवानभ्यसृजत्तपः ११
सुमित्रं मित्रवन्तं च मित्रज्ञं मित्रवर्धनम्
मित्रधर्माणमित्येतान्देवानभ्यसृजत्तपः १२
सुरप्रवीरं वीरं च सुकेशं च सुवर्चसम्
सुराणामपि हन्तारं पञ्चैतानसृजत्तपः १३
त्रिविधं संस्थिता ह्येते पञ्च पञ्च पृथक्पृथक्
मुष्णन्त्यत्र स्थिता ह्येते स्वर्गतो यज्ञयाजिनः १४
तेषामिष्टं हरन्त्येते निघ्नन्ति च महद्भुवि
स्पर्धया हव्यवाहानां निघ्नन्त्येते हरन्ति च १५
हविर्वेद्यां तदादानं कुशलैः संप्रवर्तितम्
तदेते नोपसर्पन्ति यत्र चाग्निः स्थितो भवेत् १६
चितोऽग्निरुद्वहन्यज्ञं पक्षाभ्यां तान्प्रबाधते
मन्त्रैः प्रशमिता ह्येते नेष्टं मुष्णन्ति यज्ञियम् १७
बृहदुक्थतपस्यैव पुत्रो भूमिमुपाश्रितः
अग्निहोत्रे हूयमाने पृथिव्यां सद्भिरिज्यते १८
रथंतरश्च तपसः पुत्रोऽग्नि परिपठ्यते
मित्रविन्दाय वै तस्य हविरध्वर्यवो विदुः
मुमुदे परमप्रीतः सह पुत्रैर्महायशाः १९

इति श्रीमहाभारते आरगयकपर्वणि दशाधिक द्विशततमोऽध्यायः २१०

## एकादशाधिक द्विशततमोऽध्यायः

मार्कगडेय उवाच

गुरुभिर्नियमैर्युक्तो भरतो नाम पावकः
अग्निः पुष्टिमतिर्नाम तुष्टः पुष्टिं प्रयच्छति
भरत्येष प्रजाः सर्वास्ततो भरत उच्यते १
अग्निर्यस्तु शिवो नाम शक्तिपूजापरश्च सः
दुःखार्तानां स सर्वेषां शिवकृत्सततं शिवः २
तपसस्तु फलं दृष्ट्वा संप्रवृद्धं तपो महत्
उद्धर्तुकामो मतिमान्पुत्रो जज्ञे पुरंदरः ३
ऊष्मा चैवोष्मणो जज्ञे सोऽग्निर्भूतेषु लक्ष्यते
अग्निश्चापि मनुर्नाम प्राजापत्यमकारयत् ४
शंभुमग्निमथ प्राहुर्ब्राह्मणा वेदपारगाः
आवसथ्यं द्विजाः प्राहुर्दीप्तमग्निं महाप्रभम् ५
ऊर्जस्करान्हव्यवाहान्सुवर्णसदृशप्रभान्
अग्निस्तपो ह्यजनयत्पञ्च यज्ञसुतानिह ६
प्रशान्तेऽग्निर्महाभाग परिश्रान्तो गवांपतिः
असुराञ्जनयन्घोरान्मर्त्यांश्चैव पृथग्विधान् ७
तपसश्च मनुं पुत्रं भानुं चाप्यङ्गिरासृजत्
बृहद्भानुं तु तं प्राहुर्ब्राह्मणा वेदपारगाः ८
भानोर्भार्या सुप्रजा तु बृहद्भासा तु सोमजा
असृजेतां तु षट् पुत्राञ्शृणु तासां प्रजाविधिम् ९
दुर्बलानां तु भूतानां तनुं यः संप्रयच्छति
तमग्निं बलदं प्राहुः प्रथमं भानुतः सुतम् १०
यः प्रशान्तेषु भूतेषु मन्युर्भवति दारुणः
अग्निः स मन्युमान्नाम द्वितीयो भानुतः सुतः ११
दर्शे च पौर्णमासे च यस्येह हविरुच्यते
विष्णुर्नामेह योऽग्निस्तु धृतिमान्नाम सोऽङ्गिराः १२
इन्द्रेण सहितं यस्य हविराग्रयणं स्मृतम्
अग्निराग्रयणो नाम भानोरेवान्वयस्तु सः १३
चातुर्मास्येषु नित्यानां हविषां यो निरग्रहः
चतुर्भिः सहितः पुत्रैर्भानोरेवान्वयस्तु सः १४
निशां त्वजनयत्कन्यामग्नीषोमावुभौ तथा

मनोरेवाभवद्भार्या सुषुवे पञ्च पावकान् १५
पूज्यते हविषाग्र्येण चातुर्मास्येषु पावकः
पर्जन्यसहितः श्रीमानग्निर्वैश्वानरस्तु सः १६
अस्य लोकस्य सर्वस्य यः पतिः परिपठ्यते
सोऽग्निर्विश्वपतिर्नाम द्वितीयो वै मनोः सुतः
ततः स्विष्टं भवेदाज्यं स्विष्टकृत्परमः स्मृतः १७
कन्या सा रोहिणी नाम हिरगयकशिपोः सुता
कर्मणासौ बभौ भार्या स वह्निः स प्रजापतिः १८
प्राणमाश्रित्य यो देहं प्रवर्तयति देहिनाम्
तस्य संनिहितो नाम शब्दरूपस्य साधनः १९
शुक्लकृष्णगतिर्देवो यो बिभर्ति हुताशनम्
अकल्मषः कल्मषाणां कर्ता क्रोधाश्रितस्तु सः २०
कपिलं परमर्षिं च यं प्राहुर्यतयः सदा
अग्निः स कपिलो नाम सांख्ययोगप्रवर्तकः २१
अग्निर्यच्छति भूतानि येन भूतानि नित्यदा
कर्मस्विह विचित्रेषु सोऽग्रणीर्वह्निरुच्यते २२
इमानन्यान्समसृजत्पावकान्प्रथितान्भुवि
अग्निहोत्रस्य दुष्टस्य प्रायश्चित्तार्थमुल्बणान् २३
संस्पृशेयुर्यदान्योन्यं कथंचिद्वायुनाग्नयः
इष्टिरष्टाकपालेन कार्या वै शुचयेऽग्नये २४
दक्षिणाग्निर्यदा द्वाभ्यां संसृजेत तदा किल
इष्टिरष्टाकपालेन कार्या वै वीतयेऽग्नये २५
यद्यग्नयो हि स्पृश्येयुर्निवेशस्था दवाग्निना
इष्टिरष्टाकपालेन कार्या तु शुचयेऽग्नये २६
अग्निं रजस्वला चेत्स्त्री संस्पृशेदग्निहोत्रिकम्
इष्टिरष्टाकपालेन कार्या दस्युमतेऽग्नये २७
मृतः श्रूयेत यो जीवन्परेयुः पशवो यथा
इष्टिरष्टाकपालेन कर्तव्याभिमतेऽग्नये २८
आर्तो न जुहुयादग्निं त्रिरात्रं यस्तु ब्राह्मणः
इष्टिरष्टाकपालेन कार्या स्यादुत्तराग्नये २९

दर्शं च पौर्णमासं च यस्य तिष्ठेत्प्रतिष्ठितम्
इष्टिरष्टाकपालेन कार्या पथिकृतेऽग्नये ३०
सूतिकाग्निर्यदा चाग्निं संस्पृशेदग्निहोत्रिकम्
इष्टिरष्टाकपालेन कार्या चाग्निमतेऽग्नये ३१
इति श्रीमहाभारते आरण्यकपर्वणि एकादशाधिक द्विशततमोऽध्यायः २११

## द्वादशाधिक द्विशततमोऽध्यायः

मार्कण्डेय उवाच
आपस्य मुदिता भार्या सहस्य परमा प्रिया
भूपतिर्भुवभर्ता च जनयत्पावकं परम् १
भूतानां चापि सर्वेषां यं प्राहुः पावकं पतिम्
आत्मा भुवनभर्तेति सान्वयेषु द्विजातिषु २
महतां चैव भूतानां सर्वेषामिह यः पतिः
भगवान्स महातेजा नित्यं चरति पावकः ३
अग्निर्गृहपतिर्नाम नित्यं यज्ञेषु पूज्यते
हुतं वहति यो हव्यमस्य लोकस्य पावकः ४
अपां गर्भो महाभागः सहपुत्रो महाद्भुतः
भूपतिर्भुवभर्ता च महतः पतिरुच्यते ५
दहन्मृतानि भूतानि तस्याग्निर्भरतोऽभवत्
अग्निष्टोमे च नियतः क्रतुश्रेष्ठो भरस्य तु ६
आयान्तं नियतं दृष्ट्वा प्रविवेशार्णवं भयात्
देवास्तं नाधिगच्छन्ति मार्गमाणा यथादिशम् ७
दृष्ट्वा त्वग्निरथर्वाणं ततो वचनमब्रवीत्
देवानां वह हव्यं त्वमहं वीर सुदुर्बलः
अथर्वन्गच्छ मध्वक्षं प्रियमेतत्कुरुष्व मे ८
प्रेष्य चाग्निरथर्वाणमन्यं देशं ततोऽगमत्
मत्स्यास्तस्य समाचख्युः क्रुद्धस्तानग्निरब्रवीत् ९
भक्ष्या वै विविधैर्भावैर्भविष्यथ शरीरिणाम्
अथर्वाणं तथा चापि हव्यवाहोऽब्रवीद्वचः १०
अनुनीयमानोऽपि भृशं देववाक्याद्धि तेन सः

नैच्छद्वोढुं हविः सर्वं शरीरं च समत्यजत् ११
स तच्छरीरं संत्यज्य प्रविवेश धरां तदा
भूमिं स्पृष्ट्वासृजद्धातून्पृथक्पृथगतीव हि १२
आस्यात्सुगन्धि तेजश्च अस्थिभ्यो देवदारु च
श्लेष्मणः स्फटिकं तस्य पित्तान्मरकतं तथा १३
यकृत्कृष्णायसं तस्य त्रिभिरेव बभुः प्रजाः
नखास्तस्याभ्रपटलं शिराजालानि विद्रुमम्
शरीराद्विविधाश्चान्ये धातवोऽस्याभवन्नृप १४
एवं त्यक्त्वा शरीरं तु परमे तपसि स्थितः
भृग्वङ्गिरादिभिर्भूयस्तपसोत्थापितस्तदा १५
भृशं जज्वाल तेजस्वी तपसाप्यायितः शिखी
दृष्ट्वा ऋषीन्भयाच्चापि प्रविवेश महार्णवम् १६
तस्मिन्नष्टे जगद्भीतमथर्वाणमथाश्रितम्
अर्चयामासुरेवैनमथर्वाणं सुरर्षयः १७
अथर्वा त्वसृजल्लोकानात्मनालोक्य पावकम्
मिषतां सर्वभूतानामुन्ममाथ महार्णवम् १८
एवमग्निर्भगवता नष्टः पूर्वमथर्वणा
आहूतः सर्वभूतानां हव्यं वहति सर्वदा १९
एवं त्वजनयद्धिष्ण्यान्वेदोक्तान्विबुधान्बहून्
विचरन्विविधान्देशान्भ्रममाणस्तु तत्र वै २०
सिन्धुवर्जं पञ्च नद्यो देविकाथ सरस्वती
गङ्गा च शतकुम्भा च शरयूर्गण्डसाह्वया २१
चर्मण्वती मही चैव मेध्या मेधातिथिस्तथा
ताम्रावती वेत्रवती नद्यस्तिस्रोऽथ कौशिकी २२
तमसा नर्मदा चैव नदी गोदावरी तथा
वेण्णा प्रवेणी भीमा च मेद्रथा चैव भारत २३
भारती सुप्रयोगा च कावेरी मुर्मुरा तथा
कृष्णा च कृष्णवेण्णा च कपिला शोण एव च
एता नद्यस्तु धिष्ण्यानां मातरो याः प्रकीर्तिताः २४
अद्भुतस्य प्रिया भार्या तस्याः पुत्रो विडूरथः

यावन्तः पावकाः प्रोक्ताः सोमास्तावन्त एव च २५
अत्रेश्चाप्यन्वये जाता ब्रह्मणो मानसाः प्रजाः
अत्रिः पुत्रान्स्रष्टुकामस्तानेवात्मन्यधारयत्
तस्य तद्ब्रह्मणः कायान्निर्हरन्ति हुताशनाः २६
एवमेते महात्मानः कीर्तितास्तेऽग्नयो मया
अप्रमेया यथोत्पन्नाः श्रीमन्तस्तिमिरापहाः २७
अद्भुतस्य तु माहात्म्यं यथा वेदेषु कीर्तितम्
तादृशं विद्धि सर्वेषामेको ह्येष हुताशनः २८
एक एवैष भगवान्विज्ञेयः प्रथमोऽङ्गिराः
बहुधा निःसृतः कायाज्ज्योतिष्टोमः क्रतुर्यथा २९
इत्येष वंशः सुमहानग्नीनां कीर्तितो मया
पावितो विविधैर्मन्त्रैर्हव्यं वहति देहिनाम् ३०
इति श्रीमहाभारते आरण्यकपर्वणि द्वादशाधिक द्विशततमोऽध्यायः २१२

त्रयोदशाधिक द्विशततमोऽध्यायः

मार्कण्डेय उवाच
अग्नीनां विविधो वंशः कीर्तितस्ते मयानघ
शृणु जन्म तु कौरव्य कार्तिकेयस्य धीमतः १
अद्भुतस्याद्भुतं पुत्रं प्रवक्ष्याम्यमितौजसम्
जातं सप्तर्षिभार्याभिर्ब्रह्मण्यं कीर्तिवर्धनम् २
देवासुराः पुरा यत्ता विनिघ्नन्तः परस्परम्
तत्राजयन्सदा देवान्दानवा घोररूपिणः ३
वध्यमानं बलं दृष्ट्वा बहुशस्तैः पुरंदरः
स्वसैन्यनायकार्थाय चिन्तामाप भृशं तदा ४
देवसेनां दानवैर्यो भग्नां दृष्ट्वा महाबलः
पालयेद्वीर्यमाश्रित्य स ज्ञेयः पुरुषो मया ५
स शैलं मानसं गत्वा ध्यायन्नर्थमिमं भृशम्
शुश्रावार्तस्वरं घोरमथ मुक्तं स्त्रिया तदा ६
अभिधावतु मा कश्चित्पुरुषस्त्रातु चैव ह
पतिं च मे प्रदिशतु स्वयं वा पतिरस्तु मे ७

पुरंदरस्तु तामाह मा भैर्नास्ति भयं तव
एवमुक्त्वा ततोऽपश्यत्केशिनं स्थितमग्रतः ८
किरीटिनं गदापाणिं धातुमन्तमिवाचलम्
हस्ते गृहीत्वा तां कन्यामथैनं वासवोऽब्रवीत् ९
अनार्यकर्मन्कस्मात्त्वमिमां कन्यां जिहीर्षसि
वज्रिणं मां विजानीहि विरमास्याः प्रबाधनात् १०
केश्युवाच
विसृजस्व त्वमेवैनां शक्रैषा प्रार्थिता मया
क्षमं ते जीवतो गन्तुं स्वपुरं पाकशासन ११
मार्कण्डेय उवाच
एवमुक्त्वा गदां केशी चिक्षेपेन्द्रवधाय वै
तानापतन्तीं चिच्छेद मध्ये वज्रेण वासवः १२
अथास्य शैलशिखरं केशी क्रुद्धो व्यवासृजत्
तदापतन्तं संप्रेक्ष्य शैलशृङ्गं शतक्रतुः
बिभेद राजन्वज्रेण भुवि तन्निपपात ह १३
पतता तु तदा केशी तेन शृङ्गेण ताडितः
हित्वा कन्यां महाभागां प्राद्रवद्भृशपीडितः १४
अपयातेऽसुरे तस्मिंस्तां कन्यां वासवोऽब्रवीत्
कासि कस्यासि किं चेह कुरुषे त्वं शुभानने १५
कन्योवाच
अहं प्रजापतेः कन्या देवसेनेति विश्रुता
भगिनी दैत्यसेना मे सा पूर्वं केशिना हृता १६
सहैवावां भगिन्यौ तु सखीभिः सह मानसम्
आगच्छावेह रत्यर्थमनुज्ञाप्य प्रजापतिम् १७
नित्यं चावां प्रार्थयते हर्तुं केशी महासुरः
इच्छत्येनं दैत्यसेना न त्वहं पाकशासन १८
सा हृता तेन भगवन्मुक्ताहं त्वद्बलेन तु
त्वया देवेन्द्र निर्दिष्टं पतिमिच्छामि दुर्जयम् १९
इन्द्र उवाच
मम मातृष्वसेया त्वं माता दाक्षायणी मम

आख्यातं त्वहमिच्छामि स्वयमात्मबलं त्वया २०
कन्योवाच
अबलाहं महाबाहो पतिस्तु बलवान्मम
वरदानात्पितुर्भावी सुरासुरनमस्कृतः २१
इन्द्र उवाच
कीदृशं वै बलं देवि पत्युस्तव भविष्यति
एतदिच्छाम्यहं श्रोतुं तव वाक्यमनिन्दिते २२
कन्योवाच
देवदानवयक्षाणां किंनरोरगरक्षसाम्
जेता स दृष्टो दुष्टानां महावीर्यो महाबलः २३
यस्तु सर्वाणि भूतानि त्वया सह विजेष्यति
स हि मे भविता भर्ता ब्रह्मण्यः कीर्तिवर्धनः २४
मार्कण्डेय उवाच
इन्द्रस्तस्या वचः श्रुत्वा दुःखितोऽचिन्तयद्भृशम्
अस्या देव्याः पतिर्नास्ति यादृशं संप्रभाषते २५
अथापश्यत्स उदये भास्करं भास्करद्युतिः
सोमं चैव महाभागं विशमानं दिवाकरम् २६
अमावास्यां संप्रवृत्तं मुहूर्तं रौद्रमेव च
देवासुरं च संग्रामं सोऽपश्यदुदये गिरौ २७
लोहितैश्च घनैर्युक्तां पूर्वां संध्यां शतक्रतुः
अपश्यल्लोहितोदं च भगवान्वरुणालयम् २८
भृगुभिश्चाङ्गिरोभिश्च हुतं मन्त्रैः पृथग्विधैः
हव्यं गृहीत्वा वह्निं च प्रविशन्तं दिवाकरम् २९
पर्व चैव चतुर्विंशं तदा सूर्यमुपस्थितम्
तथा धर्मगतं रौद्रं सोमं सूर्यगतं च तम् ३०
समालोक्यैकतामेव शशिनो भास्करस्य च
समवायं तु तं रौद्रं दृष्ट्वा शक्रो व्यचिन्तयत् ३१
एष रौद्रश्च संघातो महान्युक्तश्च तेजसा
सोमस्य वह्निसूर्याभ्यामद्भुतोऽय समागमः
जनयेद्यं सुतं सोमः सोऽस्या देव्याः पतिर्भवेत् ३२

अग्निश्चैतैर्गुणैर्युक्तः सर्वैरग्निश्च देवता
एष चेज्जनयेद्गर्भं सोऽस्या देव्याः पतिर्भवेत् ३३
एवं संचिन्त्य भगवान्ब्रह्मलोकं तदा गतः
गृहीत्वा देवसेनां तामवन्दत्स पितामहम्
उवाच चास्या देव्यास्त्वं साधु शूरं पतिं दिश ३४
ब्रह्मोवाच
यथैतच्चिन्तितं कार्यं त्वया दानवसूदन
तथा स भविता गर्भो बलवानुरुविक्रमः ३५
स भविष्यति सेनानीस्त्वया सह शतक्रतो
अस्या देव्याः पतिश्चैव स भविष्यति वीर्यवान् ३६
मार्कण्डेय उवाच
एतच्छ्रुत्वा नमस्तस्मै कृत्वासौ सह कन्यया
तत्राभ्यगच्छद्देवेन्द्रो यत्र देवर्षयोऽभवन्
वसिष्ठप्रमुखा मुख्या विप्रेन्द्राः सुमहाव्रताः ३७
भागार्थं तपसोपात्तं तेषां सोमं तथाध्वरे
पिपासवो ययुर्देवाः शतक्रतुपुरोगमाः ३८
इष्टिं कृत्वा यथान्यायं सुसमिद्धे हुताशने
जुहुवुस्ते महात्मानो हव्यं सर्वदिवौकसाम् ३९
समाहूतो हुतवहः सोऽद्भुतः सूर्यमण्डलात्
विनिःसृत्याययौ वह्निर्वाग्यतो विधिवत्प्रभुः
आगम्याहवनीयं वै तैर्द्विजैर्मन्त्रतो हुतम् ४०
स तत्र विविधं हव्यं प्रतिगृह्य हुताशनः
ऋषिभ्यो भरतश्रेष्ठ प्रायच्छत दिवौकसाम् ४१
निष्क्रामंश्चाप्यपश्यत्स पत्नीस्तेषां महात्मनाम्
स्वेष्वाश्रमेषूपविष्टाः स्नायन्तीश्च यथासुखम् ४२
रुक्मवेदिनिभास्तास्तु चन्द्रलेखा इवामलाः
हुताशनार्चिप्रतिमाः सर्वास्तारा इवाद्भुताः ४३
स तद्गतेन मनसा बभूव क्षुभितेन्द्रियः
पत्नीर्दृष्ट्वा द्विजेन्द्राणां वह्निः कामवशं ययौ ४४
स भूयश्चिन्तयामास न न्याय्यं क्षुभितोऽस्मि यत्

साध्वीः पत्नीर्द्विजेन्द्राणामकामाः कामयाम्यहम् ४५
नैताः शक्या मया द्रष्टुं स्प्रष्टुं वाप्यनिमित्ततः
गार्हपत्यं समाविश्य तस्मात्पश्याम्यभीक्ष्णशः ४६
संस्पृशन्निव सर्वास्ताः शिखाभिः काञ्चनप्रभाः
पश्यमानश्च मुमुदे गार्हपत्यं समाश्रितः ४७
निरुष्य तत्र सुचिरमेवं वह्निर्वशं गतः
मनस्तासु विनिक्षिप्य कामयानो वराङ्गनाः ४८
कामसंतप्तहृदयो देहत्यागे सुनिश्चितः
अलाभे ब्राह्मणस्त्रीणामग्निर्वनमुपागतः ४९
स्वाहा तं दक्षदुहिता प्रथमं कामयत्तदा
सा तस्य छिद्रमन्वैच्छच्चिरात्प्रभृति भामिनी
अप्रमत्तस्य देवस्य न चापश्यदनिन्दिता ५०
सा तं ज्ञात्वा यथावत्तु वह्निं वनमुपागतम्
तत्त्वतः कामसंतप्तं चिन्तयामास भामिनी ५१
अहं सप्तर्षिपत्नीनां कृत्वारूपाणि पावकम्
कामयिष्यामि कामार्तं तासां रूपेण मोहितम्
एवं कृते प्रीतिरस्य कामावाप्तिश्च मे भवेत् ५२
इति श्रीमहाभारते आरण्यकपर्वणि त्रयोदशाधिक द्विशततमोऽध्यायः २१३

## चतुर्दशाधिक द्विशततमोऽध्यायः

मार्कण्डेय उवाच
शिवा भार्या त्वङ्गिरसः शीलरूपगुणान्विता
तस्याः सा प्रथमं रूपं कृत्वा देवी जनाधिप १
जगाम पावकाभ्याशं तं चोवाच वराङ्गना
मामग्ने कामसंतप्तां त्वं कामयितुमर्हसि २
करिष्यसि न चेदेवं मृतां मामुपधारय
अहमङ्गिरसो भार्या शिवा नाम हुताशन
सखीभिः सहिता प्राप्ता मन्त्रयित्वा विनिश्चयम् ३
अग्निरुवाच
कथं मां त्वं विजानीषे कामार्तमितराः कथम्

यास्त्वया कीर्तिताः सर्वाः सप्तर्षीणां प्रियाः स्त्रियः ४
शिवोवाच
अस्माकं त्वं प्रियो नित्यं बिभीमस्तु वयं तव
त्वच्चित्तमिङ्गितैर्ज्ञात्वा प्रेषितास्मि तवान्तिकम् ५
मैथुनायेह संप्राप्ता कामं प्राप्तं द्रुतं चर
मातरो मां प्रतीक्षन्ते गमिष्यामि हुताशन ६
मार्कण्डेय उवाच
ततोऽग्निरुपयेमे तां शिवां प्रीतिमुदायुतः
प्रीत्या देवी च संयुक्ता शुक्रं जग्राह पाणिना ७
अचिन्तयन्ममेदं ये रूपं द्रक्ष्यन्ति कानने
ते ब्राह्मणीनामनृतं दोषं वक्ष्यन्ति पावके ८
तस्मादेतद्रक्ष्यमाणा गरुडी संभवाम्यहम्
वनान्निर्गमनं चैव सुखं मम भविष्यति ९
सुपर्णी सा तदा भूत्वा निर्जगाम महावनात्
अपश्यत्पर्वतं श्वेतं शरस्तम्बैः सुसंवृतम् १०
दृष्टीविषैः सप्तशीर्षैर्गुप्तं भोगिभिरद्भुतैः
रक्षोभिश्च पिशाचैश्च रौद्रैर्भूतगणैस्तथा
राक्षसीभिश्च संपूर्णमनेकैश्च मृगद्विजैः ११
सा तत्र सहसा गत्वा शैलपृष्ठं सुदुर्गमम्
प्राक्षिपत्काञ्चने कुण्डे शुक्रं सा त्वरिता सती १२
शिष्टानामपि सा देवी सप्तर्षीणां महात्मनाम्
पत्नीसरूपतां कृत्वा कामयामास पावकम् १३
दिव्यरूपमरुन्धत्याः कर्तुं न शकितं तया
तस्यास्तपःप्रभावेण भर्तृशुश्रूषणेन च १४
षट्कृत्वस्तत्तु निक्षिप्तमग्ने रेतः कुरूत्तम
तस्मिन्कुण्डे प्रतिपदि कामिन्या स्वाहया तदा १५
तत्स्कन्नं तेजसा तत्र संभृतं जनयत्सुतम्
ऋषिभिः पूजितं स्कन्नमनयत्स्कन्दतां ततः १६
षट्शिरा द्विगुणश्रोत्रो द्वादशाक्षिभुजक्रमः
एकग्रीवस्त्वेककायः कुमारः समपद्यत १७

द्वितीयायामभिव्यक्तस्तृतीयायां शिशुर्बभौ
अङ्गप्रत्यङ्गसंभूतश्चतुर्थ्यामभवद्गुहः १८
लोहिताभ्रेण महता संवृतः सह विद्युता
लोहिताभ्रे सुमहति भाति सूर्य इवोदितः १९
गृहीतं तु धनुस्तेन विपुलं लोमहर्षणम्
न्यस्तं यत्त्रिपुरघ्नेन सुरारिविनिकृन्तनम् २०
तद्गृहीत्वा धनुःश्रेष्ठं ननाद बलवांस्तदा
संमोहयन्निवेमान्स त्रील्लोँकान्सचराचरान् २१
तस्य तं निनदं श्रुत्वा महामेघौघनिस्वनम्
उत्पेततुर्महानागौ चित्रश्चैरावतश्च ह २२
तावापतन्तौ संप्रेक्ष्य स बालार्कसमद्युतिः
द्वाभ्यां गृहीत्वा पाणिभ्यां शक्तिं चान्येन पाणिना
अपरेणाग्निदायादस्ताम्रचूडं भुजेन सः २३
महाकायमुपश्लिष्टं कुक्कुटं बलिनां वरम्
गृहीत्वा व्यनदद्भीमं चिक्रीड च महाबलः २४
द्वाभ्यां भुजाभ्यां बलवान्गृहीत्वा शङ्खमुत्तमम्
प्राध्मापयत भूतानां त्रासनं बलिनामपि २५
द्वाभ्यां भुजाभ्यामाकाशं बहुशो निजघान सः
क्रीडन्भाति महासेनस्त्रील्लोँकान्वदनैः पिबन्
पर्वताग्रेऽप्रमेयात्मा रश्मिमानुदये यथा २६
स तस्य पर्वतस्याग्रे निषण्णोऽद्भुतविक्रमः
व्यलोकयदमेयात्मा मुखैर्नानाविधैर्दिशः
स पश्यन्विविधान्भावांश्चकार निनदं पुनः २७
तस्य तं निनदं श्रुत्वा न्यपतन्बहुधा जनाः
भीताश्चोद्विग्नमनसस्तमेव शरणं ययुः २८
ये तु तं संश्रिता देवं नानावर्णास्तदा जनाः
तानप्याहुः पारिषदान्ब्राह्मणाः सुमहाबलान् २९
स तूत्थाय महाबाहुरुपसान्त्व्य च ताञ्जनान्
धनुर्विकृष्य व्यसृजद्बाणाञ्श्वेते महागिरौ ३०
बिभेद स शरैः शैलं क्रौञ्चं हिमवतः सुतम्

तेन हंसाश्च गृध्राश्च मेरुं गच्छन्ति पर्वतम् ३१
स विशीर्णोऽपतच्छैलो भृशमार्तस्वरान्रुवन्
तस्मिन्निपतिते त्वन्ये नेदुः शैला भृशं भयात् ३२
स तं नादं भृशार्तानां श्रुत्वापि बलिनां वरः
न प्राव्यथदमेयात्मा शक्तिमुद्यम्य चानदत् ३३
सा तदा विपुला शक्तिः क्षिप्ता तेन महात्मना
बिभेद शिखरं घोरं श्वेतस्य तरसा गिरेः ३४
स तेनाभिहतो दीनो गिरिः श्वेतोऽचलैः सह
उत्पपात महीं त्यक्त्वा भीतस्तस्मान्महात्मनः ३५
ततः प्रव्यथिता भूमिर्व्यशीर्यत समन्ततः
आर्ता स्कन्दं समासाद्य पुनर्बलवती बभौ ३६
पर्वताश्च नमस्कृत्य तमेव पृथिवीं गताः
अथायमभजल्लोकः स्कन्दं शुक्लस्य पञ्चमीम् ३७
इति श्रीमहाभारते आरण्यकपर्वणि चतुर्दशाधिक द्विशततमोऽध्यायः २१४

## पञ्चदशाधिक द्विशततमोऽध्यायः

मार्कण्डेय उवाच
ऋषयस्तु महाघोरान्दृष्ट्वोत्पातान्पृथग्विधान्
अकुर्वञ्शान्तिमुद्विग्ना लोकानां लोकभावनाः १
निवसन्ति वने ये तु तस्मिंश्चैत्ररथे जनाः
तेऽब्रुवन्नेष नोऽनर्थः पावकेनाहृतो महान्
संगम्य षड्भिः पत्नीभिः सप्तर्षीणामिति स्म ह २
अपरे गरुडीमाहुस्त्वयानर्थोऽयमाहृतः
यैर्दृष्टा सा तदा देवी तस्या रूपेण गच्छती
न तु तत्स्वाहया कर्म कृतं जानाति वै जनः ३
सुपर्णी तु वचः श्रुत्वा ममायं तनयस्त्विति
उपगम्य शनैः स्कन्दमाहाहं जननी तव ४
अथ सप्तर्षयः श्रुत्वा जातं पुत्रं महौजसम्
तत्यजुः षट् तदा पत्नीर्विना देवीमरुन्धतीम् ५
षड्भिरेव तदा जातमाहुस्तद्वनवासिनः

सप्तर्षीनाह च स्वाहा मम पुत्रोऽयमित्युत
अहं जाने नैतदेवमिति राजन्पुनः पुनः ६
विश्वामित्रस्तु कृत्वेष्टिं सप्तर्षीणां महामुनिः
पावकं कामसंतप्तमदृष्टः पृष्ठतोऽन्वगात्
तत्तेन निखिलं सर्वमवबुद्धं यथातथम् ७
विश्वामित्रस्तु प्रथमं कुमारं शरणं गतः
स्तवं दिव्यं संप्रचक्रे महासेनस्य चापि सः ८
मङ्गलानि च सर्वाणि कौमाराणि त्रयोदश
जातकर्मादिकास्तस्य क्रियाश्चक्रे महामुनिः ९
षड्वक्त्रस्य तु माहात्म्यं कुक्कुटस्य च साधनम्
शक्त्या देव्याः साधनं च तथा पारिषदामपि १०
विश्वामित्रश्चकारैतत्कर्म लोकहिताय वै
तस्मादृषिः कुमारस्य विश्वामित्रोऽभवत्प्रियः ११
अन्वजानाच्च स्वाहाया रूपान्यत्वं महामुनिः
अब्रवीच्च मुनीन्सर्वान्नापराध्यन्ति वै स्त्रियः
श्रुत्वा तु तत्त्वतस्तस्मात्ते पत्नीः सर्वतोऽत्यजन् १२
स्कन्दं श्रुत्वा ततो देवा वासवं सहिताब्रुवन्
अविषह्यबलं स्कन्दं जहि शक्राशु माचिरम् १३
यदि वा न निहंस्येनमद्येन्द्रोऽय भविष्यति
त्रैलोक्यं संनिगृह्यास्मांस्त्वां च शक्र महाबलः १४
स तानुवाच व्यथितो बालोऽय सुमहाबलः
स्रष्टारमपि लोकानां युधि विक्रम्य नाशयेत् १५
सर्वास्त्वद्याभिगच्छन्तु स्कन्दं लोकस्य मातरः
कामवीर्या घ्नन्तु चैनं तथेत्युक्त्वा च ता ययुः १६
तमप्रतिबलं दृष्ट्वा विषण्णवदनास्तु ताः
अशक्योऽय विचिन्त्यैवं तमेव शरणं ययुः १७
ऊचुश्चापि त्वमस्माकं पुत्रोऽस्माभिर्धृतं जगत्
अभिनन्दस्व नः सर्वाः प्रस्नुताः स्नेहविक्लवाः १८
ताः संपूज्य महासेनः कामांश्चासां प्रदाय सः
अपश्यदग्निमायान्तं पितरं बलिनां बली १९

स तु संपूजितस्तेन सह मातृगणेन ह
परिवार्य महासेनं रक्षमाणः स्थितः स्थिरम् २०
सर्वासां या तु मातॄणां नारी क्रोधसमुद्भवा
धात्री सा पुत्रवत्स्कन्दं शूलहस्ताभ्यरक्षत २१
लोहितस्योदधेः कन्या क्रूरा लोहित भोजना
परिष्वज्य महासेनं पुत्रवत्पर्यरक्षत २२
अग्निर्भूत्वा नैगमेयश्छागवक्त्रो बहुप्रजः
रमयामास शैलस्थं बालं क्रीडनकैरिव २३
इति श्रीमहाभारते आरगयकपर्वणि पञ्चदशाधिक द्विशततमोऽध्यायः २१५

## षोडशाधिक द्विशततमोऽध्यायः

मार्कगडेय उवाच
ग्रहाः सोपग्रहाश्चैव ऋषयो मातरस्तथा
हुताशनमुखाश्चापि दीप्ताः पारिषदां गणाः १
एते चान्ये च बहवो घोरास्त्रिदिववासिनः
परिवार्य महासेनं स्थिता मातृगणैः सह २
संदिग्धं विजयं दृष्ट्वा विजयेप्सुः सुरेश्वरः
आरुह्यैरावतस्कन्धं प्रययौ दैवतैः सह
विजिघांसुर्महासेनमिन्द्रस्तूर्णतरं ययौ ३
उग्रं तच्च महावेगं देवानीकं महाप्रभम्
विचित्रध्वजसं नाहं नानावाहनकार्मुकम्
प्रवराम्बरसंवीतं श्रिया जुष्टमलंकृतम् ४
विजिघांसुं तदायान्तं कुमारः शक्रमभ्ययात्
विनदन्पथि शक्रस्तु द्रुतं याति महाबलः
संहर्षयन्देवसेनां जिघांसुः पावकात्मजम् ५
संपूज्यमानस्त्रिदशैस्तथैव परमर्षिभिः
समीपमुपसंप्राप्तः कार्तिकेयस्य वासवः ६
सिंहनादं ततश्चक्रे देवेशः सहितः सुरैः
गुहोऽपि शब्दं तं श्रुत्वा व्यनदत्सागरो यथा ७
तस्य शब्देन महता समुद्धूतोदधिप्रभम्

बभ्राम तत्र तत्रैव देवसैन्यमचेतनम् ८
जिघांसूनुपसंप्राप्तान्देवान्दृष्ट्वा स पावकिः
विससर्ज मुखात्क्रुद्धः प्रवृद्धाः पावकार्चिषः
ता देवसैन्यान्यदहन्वेष्टमानानि भूतले ९
ते प्रदीप्तशिरोदेहाः प्रदीप्तायुधवाहनाः
प्रच्युताः सहसा भान्ति चित्रास्तारागणा इव १०
दह्यमानाः प्रपन्नास्ते शरणं पावकात्मजम्
देवा वज्रधरं त्यक्त्वा ततः शान्तिमुपागताः ११
त्यक्तो देवैस्ततः स्कन्दे वज्रं शक्रोऽभ्यवासृजत्
तद्विसृष्टं जघानाशु पार्श्वं स्कन्दस्य दक्षिणम्
बिभेद च महाराज पार्श्वं तस्य महात्मनः १२
वज्रप्रहारात्स्कन्दस्य संजातः पुरुषोऽपरः
युवा काञ्चनसंनाहः शक्तिधृग्दिव्यकुण्डलः
यद्वज्रविशनाज्जातो विशाखस्तेन सोऽभवत् १३
तं जातमपरं दृष्ट्वा कालानलसमद्युतिम्
भयादिन्द्रस्ततः स्कन्दं प्राञ्जलि शरणं गतः १४
तस्याभयं ददौ स्कन्दः सहसैन्यस्य सत्तम
ततः प्रहृष्टास्त्रिदशा वादित्राण्यभ्यवादयन् १५
इति श्रीमहाभारते आरण्यकपर्वणि षोडशाधिक द्विशततमोऽध्यायः २१६

## सप्तदशाधिक द्विशततमोऽध्यायः

मार्कण्डेय उवाच
स्कन्दस्य पार्षदान्घोराञ्शृणुष्वाद्भुतदर्शनान्
वज्रप्रहारात्स्कन्दस्य जज्ञुस्तत्र कुमारकाः
ये हरन्ति शिशूञ्जातान्गर्भस्थांश्चैव दारुणाः १
वज्रप्रहारात्कन्याश्च जज्ञिरेऽस्य महाबलाः
कुमाराश्च विशाखं तं पितृत्वे समकल्पयन् २
स भूत्वा भगवान्संख्ये रक्षंश्छागमुखस्तदा
वृतः कन्यागणैः सर्वैरात्मनीनैश्च पुत्रकैः ३
मातृणां प्रेक्षतीनां च भद्रशाखश्च कौशलः

ततः कुमारपितरं स्कन्दमाहुर्जना भुवि ४
रुद्रमग्निमुमां स्वाहां प्रदेशेषु महाबलाम्
यजन्ति पुत्रकामाश्च पुत्रिणश्च सदा जनाः ५
यास्तास्त्वजनयत्कन्यास्तपो नाम हुताशनः
किं करोमीति ताः स्कन्दं संप्राप्ताः समभाषत ६
मातर ऊचुः
भवेम सर्वलोकस्य वयं मातर उत्तमाः
प्रसादात्तव पूज्याश्च प्रियमेतत्कुरुष्व नः ७
मार्कगडेय उवाच
सोऽब्रवीद्बाढमित्येवं भविष्यध्वं पृथग्विधाः
अशिवाश्च शिवाश्चैव पुनः पुनरुदारधीः ८
ततः संकल्प्य पुत्रत्वे स्कन्दं मातृगणोऽगमत्
काकी च हलिमा चैव रुद्राथ बृहली तथा
आर्या पलाला वै मित्रा सप्तैताः शिशुमातरः ९
एतासां वीर्यसंपन्नः शिशुर्नामातिदारुणः
स्कन्दप्रसादजः पुत्रो लोहिताक्षो भयंकरः १०
एष वीराष्टकः प्रोक्तः स्कन्दमातृगणोद्भवः
छागवक्त्रेण सहितो नवकः परिकीर्त्यते ११
षष्ठं छागमयं वक्त्रं स्कन्दस्यैवेति विद्धि तत्
षट्शिरोभ्यन्तरं राजन्नित्यं मातृगणार्चितम् १२
षगणां तु प्रवरं तस्य शीर्षाणामिह शब्द्यते
शक्तिं येनासृजद्दिव्यां भद्रशाख इति स्म ह १३
इत्येतद्द्विविधाकारं वृत्तं शुक्लस्य पञ्चमीम्
तत्र युद्धं महाघोरं वृत्तं षष्ठ्यां जनाधिप १४
इति श्रीमहाभारते आरगयकपर्वणि सप्तदशाधिक द्विशततमोऽध्यायः २१७

## अष्टादशाधिक द्विशततमोऽध्यायः

मार्कगडेय उवाच
उपविष्टं ततः स्कन्दं हिरगयकवचस्रजम्
हिरगयचूडमुकुटं हिरगयाक्षं महाप्रभम् १

लोहिताम्बरसंवीतं तीक्ष्णदंष्ट्रं मनोरमम्
सर्वलक्षणसंपन्नं त्रैलोक्यस्यापि सुप्रियम् २
ततस्तं वरदं शूरं युवानं मृष्टकुण्डलम्
अभजत्पद्मरूपा श्रीः स्वयमेव शरीरिणी ३
श्रिया जुष्टः पृथुयशाः स कुमारवरस्तदा
निषण्णो दृश्यते भूतैः पौर्णमास्यां यथा शशी ४
अपूजयन्महात्मानो ब्राह्मणास्तं महाबलम्
इदमाहुस्तदा चैव स्कन्दं तत्र महर्षयः ५
हिरण्यवर्ण भद्रं ते लोकानां शंकरो भव
त्वया षड्रात्रजातेन सर्वे लोका वशीकृताः ६
अभयं च पुनर्दत्तं त्वयैवैषां सुरोत्तम
तस्मादिन्द्रो भवानस्तु त्रैलोक्यस्याभयंकरः ७
स्कन्द उवाच
किमिन्द्रः सर्वलोकानां करोतीह तपोधनाः
कथं देवगणांश्चैव पाति नित्यं सुरेश्वरः ८
ऋषय ऊचुः
इन्द्रो दिशति भूतानां बलं तेजः प्रजाः सुखम्
तुष्टः प्रयच्छति तथा सर्वान्दायान्सुरेश्वरः ९
दुर्वृत्तानां संहरति वृत्तस्थानां प्रयच्छति
अनुशास्ति च भूतानि कार्येषु बलसूदनः १०
असूर्ये च भवेत्सूर्यस्तथाचन्द्रे च चन्द्रमाः
भवत्यग्निश्च वायुश्च पृथिव्यापश्च कारणैः ११
एतदिन्द्रेण कर्तव्यमिन्द्रे हि विपुलं बलम्
त्वं च वीर बलश्रेष्ठस्तस्मादिन्द्रो भवस्व नः १२
शक्र उवाच
भवस्वेन्द्रो महाबाहो सर्वेषां नः सुखावहः
अभिषिच्यस्व चैवाद्य प्राप्तरूपोऽसि सत्तम १३
स्कन्द उवाच
शाधि त्वमेव त्रैलोक्यमव्यग्रो विजये रतः
अहं ते किंकरः शक्र न ममेन्द्रत्वमीप्सितम् १४

शक्र उवाच
बलं तवाद्भुतं वीर त्वं देवानामरीञ्जहि
अवज्ञास्यन्ति मां लोका वीर्येण तव विस्मिताः १५
इन्द्रत्वेऽपि स्थितं वीर बलहीनं पराजितम्
आवयोश्च मिथो भेदे प्रयतिष्यन्त्यतन्द्रिताः १६
भेदिते च त्वयि विभो लोका द्वैधमुपेष्यति
द्विधाभूतेषु लोकेषु निश्चितेष्वावयोस्तथा
विग्रहः संप्रवर्तेत भूतभेदान्महाबल १७
तत्र त्वं मां रणे तात यथाश्रद्धं विजेष्यसि
तस्मादिन्द्रो भवानद्य भविता मा विचारय १८
स्कन्द उवाच
त्वमेव राजा भद्रं ते त्रैलोक्यस्य ममैव च
करोमि किं च ते शक्र शासनं तद्ब्रवीहि मे १९
शक्र उवाच
यदि सत्यमिदं वाक्यं निश्चयाद्भाषितं त्वया
यदि वा शासनं स्कन्द कर्तुमिच्छसि मे शृणु २०
अभिषिच्यस्व देवानां सेनापत्ये महाबल
अहमिन्द्रो भविष्यामि तव वाक्यान्महाबल २१
स्कन्द उवाच
दानवानां विनाशाय देवानामर्थसिद्धये
गोब्राह्मणस्य त्राणार्थं सेनापत्येऽभिषिञ्च माम् २२
मार्कण्डेय उवाच
सोऽभिषिक्तो मघवता सर्वैर्देवगणैः सह
अतीव शुशुभे तत्र पूज्यमानो महर्षिभिः २३
तस्य तत्काञ्चनं छत्रं ध्रियमाणं व्यरोचत
यथैव सुसमिद्धस्य पावकस्यात्ममण्डलम् २४
विश्वकर्मकृता चास्य दिव्या माला हिरण्मयी
आबद्धा त्रिपुरघ्नेन स्वयमेव यशस्विना २५
आगम्य मनुजव्याघ्र सह देव्या परंतप
अर्चयामास सुप्रीतो भगवान्गोवृषध्वजः २६

रूद्रमग्निं द्विजाः प्राहू रुद्रसूनुस्ततस्तु सः
रुद्रेण शुक्रमुत्सृष्टं तच्छ्वेतः पर्वतोऽभवत्
पावकस्येन्द्रियं श्वेते कृत्तिकाभिः कृतं नगे २७
पूज्यमानं तु रुद्रेण दृष्ट्वा सर्वे दिवौकसः
रुद्रसूनुं ततः प्राहुर्गुहं गुणवतां वरम् २८
अनुप्रविश्य रुद्रेण वह्निं जातो ह्ययं शिशुः
तत्र जातस्ततः स्कन्दो रुद्रसूनुस्ततोऽभवत् २९
रुद्रस्य वह्नेः स्वाहायाः षण्णां स्त्रीणां च तेजसा
जातः स्कन्दः सुरश्रेष्ठो रुद्रसूनुस्ततोऽभवत् ३०
अरजे वाससी रक्ते वसानः पावकात्मजः
भाति दीप्तवपुः श्रीमान्रक्ताभ्राभ्यामिवांशुमान् ३१
कुक्कुटश्चाग्निना दत्तस्तस्य केतुरलंकृतः
रथे समुच्छ्रितो भाति कालाग्निरिव लोहितः ३२
विवेश कवचं चास्य शरीरं सहजं ततः
युध्यमानस्य देवस्य प्रादुर्भवति तत्सदा ३३
शक्तिर्वर्म बलं तेजः कान्तत्वं सत्यमक्षतिः
ब्रह्मण्यत्वमसंमोहो भक्तानां परिरक्षणम् ३४
निकृन्तनं च शत्रूणां लोकानां चाभिरक्षणम्
स्कन्देन सह जातानि सर्वाण्येव जनाधिप ३५
एवं देवगणैः सर्वैः सोऽभिषिक्तः स्वलंकृतः
बभौ प्रतीतः सुमनाः परिपूर्णेन्दुदर्शनः ३६
इष्टैः स्वाध्यायघोषैश्च देवतूर्यरवैरपि
देवगन्धर्वगीतैश्च सर्वैरप्सरसां गणैः ३७
एतैश्चान्यैश्च विविधैर्हृष्टतुष्टैरलंकृतैः
क्रीडन्निव तदा देवैरभिषिक्तः स पावकिः ३८
अभिषिक्तं महासेनमपश्यन्त दिवौकसः
विनिहत्य तमः सूर्यं यथेहाभ्युदितं तथा ३९
अथैनमभ्ययुः सर्वा देवसेनाः सहस्रशः
अस्माकं त्वं पतिरिति ब्रुवाणाः सर्वतोदिशम् ४०
ताः समासाद्य भगवान्सर्वभूतगणैर्वृतः

अर्चितश्च स्तुतश्चैव सान्त्वयामास ता अपि ४१
शतक्रतुश्चाभिषिच्य स्कन्दं सेनापतिं तदा
सस्मार तां देवसेनां या सा तेन विमोक्षिता ४२
अयं तस्याः पतिर्नूनं विहितो ब्रह्मणा स्वयम्
इति चिन्त्यानयामास देवसेनां स्वलंकृताम् ४३
स्कन्दं चोवाच बलभिदियं कन्या सुरोत्तम
अजाते त्वयि निर्दिष्टा तव पत्नी स्वयंभुवा ४४
तस्मात्त्वमस्या विधिवत्पाणिं मन्त्रपुरस्कृतम्
गृहाण दक्षिणं देव्याः पाणिना पद्मवर्चसम् ४५
एवमुक्तः स जग्राह तस्याः पाणिं यथाविधि
बृहस्पतिर्मन्त्रविधिं जजाप च जुहाव च ४६
एवं स्कन्दस्य महिषीं देवसेनां विदुर्बुधाः
षष्ठीं यां ब्राह्मणाः प्राहुर्लक्ष्मीमाशां सुखप्रदाम्
सिनीवालीं कुहूं चैव सद्वृत्तिमपराजिताम् ४७
यदा स्कन्दः पतिर्लब्धः शाश्वतो देवसेनया
तदा तमाश्रयल्लक्ष्मी स्वयं देवी शरीरिणी ४८
श्रीजुष्टः पञ्चमीं स्कन्दस्तस्माच्छ्रीपञ्चमी स्मृता
षष्ठ्यां कृतार्थोऽभूद्यस्मात्तस्मात्षष्ठी महातिथिः ४९
इति श्रीमहाभारते आरण्यकपर्वणि अष्टादशाधिक द्विशततमोऽध्यायः २१८

## एकोनविंशत्यधिक द्विशततमोऽध्यायः

मार्कण्डेय उवाच
श्रिया जुष्टं महासेनं देवसेनापतिं कृतम्
सप्तर्षिपत्न्यः षड् देव्यस्तत्सकाशमथागमन् १
ऋषिभिः संपरित्यक्ता धर्मयुक्ता महाव्रताः
द्रुतमागम्य चोचुस्ता देवसेनापतिं प्रभुम् २
वयं पुत्र परित्यक्ता भर्तृभिर्देवसंमितैः
अकारणाद्रुषा तात पुण्यस्थानात्परिच्युताः ३
अस्माभिः किल जातस्त्वमिति केनाप्युदाहृतम्
असत्यमेतत्संश्रुत्य तस्मान्नस्त्रातुमर्हसि ४

अक्षयश्च भवेत्स्वर्गस्त्वत्प्रसादाद्धि नः प्रभो
त्वां पुत्रं चाप्यभीप्सामः कृत्वैतदनृणो भव ५
स्कन्द उवाच
मातरो हि भवत्यो मे सुतो वोऽहमनिन्दिताः
यच्चाभीप्सथ तत्सर्वं संभविष्यति वस्तथा ६
मार्कण्डेय उवाच
एवमुक्ते ततः शक्रं किं कार्यमिति सोऽब्रवीत्
उक्तः स्कन्देन ब्रूहीति सोऽब्रवीद्वासवस्ततः ७
अभिजित्स्पर्धमाना तु रोहिण्या कन्यसी स्वसा
इच्छन्ती ज्येष्ठतां देवी तपस्तप्तुं वनं गता ८
तत्र मूढोऽस्मि भद्रं ते नक्षत्रं गगनाच्च्युतम्
कालं त्विमं परं स्कन्द ब्रह्मणा सह चिन्तय ९
धनिष्ठादिस्तदा कालो ब्रह्मणा परिनिर्मितः
रोहिण्याद्योऽभवत्पूर्वमेवं संख्या समाभवत् १०
एवमुक्ते तु शक्रेण त्रिदिवं कृत्तिका गताः
नक्षत्रं शकटाकारं भाति तद्वह्निदैवतम् ११
विनता चाब्रवीत्स्कन्दं मम त्वं पिण्डदः सुतः
इच्छामि नित्यमेवाहं त्वया पुत्र सहासितुम् १२
स्कन्द उवाच
एवमस्तु नमस्तेऽस्तु पुत्रस्नेहात्प्रशाधि माम्
स्नुषया पूज्यमाना वै देवि वत्स्यसि नित्यदा १३
मार्कण्डेय उवाच
अथ मातृगणः सर्वः स्कन्दं वचनमब्रवीत्
वयं सर्वस्य लोकस्य मातरः कविभिः स्तुताः
इच्छामो मातरस्तुभ्यं भवितुं पूजयस्व नः १४
स्कन्द उवाच
मातरस्तु भवत्यो मे भवतीनामहं सुतः
उच्यतां यन्मयाकार्यं भवतीनामथेप्सितम् १५
मातर ऊचुः
यास्तु ता मातरः पूर्वं लोकस्यास्य प्रकल्पिताः

अस्माकं तद्भवेत्स्थानं तासां चैव न तद्भवेत् १६
भवेम पूज्या लोकस्य न ताः पूज्याः सुरर्षभ
प्रजास्माकं हृतास्ताभिस्त्वत्कृते ताः प्रयच्छ नः १७
स्कन्द उवाच
दत्ताः प्रजा न ताः शक्या भवतीभिर्निषेवितुम्
अन्यां वः कां प्रयच्छामि प्रजां यां मनसेच्छथ १८
मातर ऊचुः
इच्छाम तासां मातॄणां प्रजा भोक्तुं प्रयच्छ नः
त्वया सह पृथग्भूता ये च तासामथेश्वराः १९
स्कन्द उवाच
प्रजा वो दद्मि कष्टं तु भवतीभिरुदाहृतम्
परिरक्षत भद्रं वः प्रजाः साधु नमस्कृताः २०
मातर ऊचुः
परिरक्षाम भद्रं ते प्रजाः स्कन्द यथेच्छसि
त्वया नो रोचते स्कन्द सहवासश्चिरं प्रभो २१
स्कन्द उवाच
यावत्षोडश वर्षाणि भवन्ति तरुणाः प्रजाः
प्रबाधत मनुष्याणां तावद्रूपैः पृथग्विधैः २२
अहं च वः प्रदास्यामि रौद्रमात्मानमव्ययम्
परमं तेन सहिता सुखं वत्स्यथ पूजिताः २३
मार्कण्डेय उवाच
ततः शरीरात्स्कन्दस्य पुरुषः काञ्चनप्रभः
भोक्तुं प्रजाः स मर्त्यानां निष्पपात महाबलः २४
अपतत्स तदा भूमौ विसंज्ञोऽथ क्षुधान्वितः
स्कन्देन सोऽभ्यनुज्ञातो रौद्ररूपोऽभवद्ग्रहः
स्कन्दापस्मारमित्याहुर्ग्रहं तं द्विजसत्तमाः २५
विनता तु महारौद्रा कथ्यते शकुनिग्रहः
पूतनां राक्षसीं प्राहुस्तं विद्यात्पूतनाग्रहम् २६
कष्टा दारुणरूपेण घोररूपा निशाचरी
पिशाची दारुणाकारा कथ्यते शीतपूतना

गर्भान्सा मानुषीणां तु हरते घोरदर्शना २७
अदितिं रेवतीं प्राहुर्ग्रहस्तस्यास्तु रैवतः
सोऽपि बालाञ्शिशून्घोरो बाधते वै महाग्रहः २८
दैत्यानां या दितिर्माता तामाहुर्मुखमण्डिकाम्
अत्यर्थं शिशुमांसेन संप्रहृष्टा दुरासदा २९
कुमाराश्च कुमार्यश्च ये प्रोक्ताः स्कन्दसंभवाः
तेऽपि गर्भभुजः सर्वे कौरव्य सुमहाग्रहाः ३०
तासामेव कुमारीणां पतयस्ते प्रकीर्तिताः
अज्ञायमाना गृह्णन्ति बालकान्रौद्रकर्मिणः ३१
गवां माता तु या प्राज्ञैः कथ्यते सुरभिर्नृप
शकुनिस्तामथारुह्य सह भुङ्क्ते शिशून्भुवि ३२
सरमा नाम या माता शुनां देवी जनाधिप
सापि गर्भान्समादत्ते मानुषीणां सदैव हि ३३
पादपानां च या माता करञ्जनिलया हि सा
करञ्जे तां नमस्यन्ति तस्मात्पुत्रार्थिनो नराः ३४
इमे त्वष्टादशान्ये वै ग्रहा मांसमधुप्रियाः
द्विपञ्चरात्रं तिष्ठन्ति सततं सूतिकागृहे ३५
कद्रूः सूक्ष्मवपुर्भूत्वा गर्भिणीं प्रविशेद्यदा
भुङ्क्ते सा तत्र तं गर्भं सा तु नागं प्रसूयते ३६
गन्धर्वाणां तु या माता सा गर्भं गृह्य गच्छति
ततो विलीनगर्भा सा मानुषी भुवि दृश्यते ३७
या जनित्री त्वप्सरसां गर्भमास्ते प्रगृह्य सा
उपविष्टं ततो गर्भं कथयन्ति मनीषिणः ३८
लोहितस्योदधेः कन्या धात्री स्कन्दस्य सा स्मृता
लोहितायनिरित्येवं कदम्बे सा हि पूज्यते ३९
पुरुषेषु यथा रुद्रस्तथार्या प्रमदास्वपि
आर्या माता कुमारस्य पृथक्कामार्थमिज्यते ४०
एवमेते कुमाराणां मया प्रोक्ता महाग्रहाः
यावत्षोडश वर्षाणि अशिवास्ते शिवास्ततः ४१
ये च मातृगणाः प्रोक्ताः पुरुषाश्चैव ये ग्रहाः

सर्वे स्कन्दग्रहा नाम ज्ञेया नित्यं शरीरिभिः ४२
तेषां प्रशमनं कार्यं स्नानं धूपमथाञ्जनम्
बलिकर्मोपहारश्च स्कन्दस्येज्या विशेषतः ४३
एवमेतेऽचिताः सर्वे प्रयच्छन्ति शुभं नृणाम्
आयुर्वीर्यं च राजेन्द्र सम्यक्पूजानमस्कृताः ४४
ऊर्ध्वं तु षोडशाद्वर्षाद्ये भवन्ति ग्रहा नृणाम्
तानहं संप्रवक्ष्यामि नमस्कृत्य महेश्वरम् ४५
यः पश्यति नरो देवाञ्जाग्रद्वा शयितोऽपि वा
उन्माद्यति स तु क्षिप्रं तं तु देवग्रहं विदुः ४६
आसीनश्च शयानश्च यः पश्यति नरः पितॄन्
उन्माद्यति स तु क्षिप्रं स ज्ञेयस्तु पितृग्रहः ४७
अवमन्यति यः सिद्धान्क्रुद्धाश्चापि शपन्ति यम्
उन्माद्यति स तु क्षिप्रं ज्ञेयः सिद्धग्रहस्तु सः ४८
उपाघ्राति च यो गन्धान्रसांश्चापि पृथग्विधान्
उन्माद्यति स तु क्षिप्रं स ज्ञेयो राक्षसो ग्रहः ४९
गन्धर्वाश्चापि यं दिव्याः संस्पृशन्ति नरं भुवि
उन्माद्यति स तु क्षिप्रं ग्रहो गान्धर्व एव सः ५०
आविशन्ति च यं यक्षाः पुरुषं कालपर्यये
उन्माद्यति स तु क्षिप्रं ज्ञेयो यक्षग्रहस्तु सः ५१
अधिरोहन्ति यं नित्यं पिशाचाः पुरुषं क्वचित्
उन्माद्यति स तु क्षिप्रं पैशाचं तं ग्रहं विदुः ५२
यस्य दोषैः प्रकुपितं चित्तं मुह्यति देहिनः
उन्माद्यति स तु क्षिप्रं साधनं तस्य शास्त्रतः ५३
वैक्लव्याच्च भयाच्चैव घोराणां चापि दर्शनात्
उन्माद्यति स तु क्षिप्रं सत्त्वं तस्य तु साधनम् ५४
कश्चित्क्रीडितुकामो वै भोक्तुकामस्तथापरः
अभिकामस्तथैवान्य इत्येष त्रिविधो ग्रहः ५५
यावत्सप्ततिवर्षाणि भवन्त्येते ग्रहा नृणाम्
अतः परं देहिनां तु ग्रहतुल्यो भवेज्ज्वरः ५६
अप्रकीर्णेन्द्रियं दान्तं शुचिं नित्यमतन्द्रितम्

आस्तिकं श्रद्दधानं च वर्जयन्ति सदा ग्रहाः ५७
इत्येष ते ग्रहोद्देशो मानुषाणां प्रकीर्तितः
न स्पृशन्ति ग्रहा भक्तान्नरान्देवं महेश्वरम् ५८
इति श्रीमहाभारते आरण्यकपर्वणि एकोनविंशत्यधिक द्विशततमोऽध्यायः
२१९

विंशत्यधिक द्विशततमोऽध्यायः
मार्कण्डेय उवाच
यदा स्कन्देन मातृणामेवमेतत्प्रियं कृतम्
अथैनमब्रवीत्स्वाहा मम पुत्रस्त्वमौरसः १
इच्छाम्यहं त्वया दत्तां प्रीतिं परमदुर्लभाम्
तामब्रवीत्ततः स्कन्दः प्रीतिमिच्छसि कीदृशीम् २
स्वाहोवाच
दक्षस्याहं प्रिया कन्या स्वाहा नाम महाभुज
बाल्यात्प्रभृति नित्यं च जातकामा हुताशने ३
न च मां कामिनीं पुत्र सम्यग्जानाति पावकः
इच्छामि शाश्वतं वासं वस्तुं पुत्र सहाग्निना ४
स्कन्द उवाच
हव्यं कव्यं च यत्किंचिद्द्विजा मन्त्रपुरस्कृतम्
होष्यन्त्यग्नौ सदा देवि स्वाहेत्युक्त्वा समुद्यतम् ५
अद्य प्रभृति दास्यन्ति सुवृत्ताः सत्पथे स्थिताः
एवमग्निस्त्वया सार्धं सदा वत्स्यति शोभने ६
मार्कण्डेय उवाच
एवमुक्ता ततः स्वाहा तुष्टा स्कन्देन पूजिता
पावकेन समायुक्ता भर्त्रा स्कन्दमपूजयत् ७
ततो ब्रह्मा महासेनं प्रजापतिरथाब्रवीत्
अभिगच्छ महादेवं पितरं त्रिपुरार्दनम् ८
रुद्रेणाग्निं समाविश्य स्वाहामाविश्य चोमया
हितार्थं सर्वलोकानां जातस्त्वमपराजितः ९
उमायोन्यां च रुद्रेण शुक्रं सिक्तं महात्मना

आस्ते गिरौ निपतितं मिञ्जिकामिञ्जिकं यतः १०
संभूतं लोहितोदे तु शुक्रशेषमवापतत्
सूर्यरश्मिषु चाप्यन्यदन्यच्चैवापतद्भुवि
आसक्तमन्यद्वृक्षेषु तदेवं पञ्चधापतत् ११
त एते विविधाकारा गणा ज्ञेया मनीषिभिः
तव पारिषदा घोरा य एते पिशिताशनाः १२
एवमस्त्विति चाप्युक्त्वा महासेनो महेश्वरम्
अपूजयदमेयात्मा पितरं पितृवत्सलः १३
अर्कपुष्पैस्तु ते पञ्च गणाः पूज्या धनार्थिभिः
व्याधिप्रशमनार्थं च तेषां पूजां समाचरेत् १४
मिञ्जिकामिञ्जिकं चैव मिथुनं रुद्रसंभवम्
नमस्कार्यं सदैवेह बालानां हितमिच्छता १५
स्त्रियो मानुषमांसादा वृद्धिका नाम नामतः
वृक्षेषु जातास्ता देव्यो नमस्कार्याः प्रजार्थिभिः १६
एवमेते पिशाचानामसङ्ख्येया गणाः स्मृताः
घराटायाः सपताकायाः शृणु मे संभवं नृप १७
एरावतस्य घराटे द्वे वैजयन्त्याविति श्रुते
गुहस्य ते स्वयं दत्ते शक्रेणानाय्य धीमता १८
एका तत्र विशाखस्य घराटा स्कन्दस्य चापरा
पताका कार्तिकेयस्य विशाखस्य च लोहिता १९
यानि क्रीडनकान्यस्य देवैर्दत्तानि वै तदा
तैरेव रमते देवो महासेनो महाबलः २०
स संवृतः पिशाचानां गणैर्देवगणैस्तथा
शुशुभे काञ्चने शैले दीप्यमानः श्रिया वृतः २१
तेन वीरेण शुशुभे स शैलः शुभकाननः
आदित्येनेवांशुमता मन्दरश्चारुकन्दरः २२
संतानकवनैः फुल्लैः करवीरवनैरपि
पारिजातवनैश्चैव जपाशोकवनैस्तथा २३
कदम्बतरुषराडैश्च दिव्यैर्मृगगणैरपि
दिव्यैः पक्षिगणैश्चैव शुशुभे श्वेतपर्वतः २४

तत्र देवगणाः सर्वे सर्वे चैव महर्षयः
मेघतूर्यरवाश्चैव क्षुब्धोदधिसमस्वनाः २५
तत्र दिव्याश्च गन्धर्वा नृत्यन्त्यसरसस्तथा
हृष्टानां तत्र भूतानां श्रूयते निनदो महान् २६
एवं सेन्द्रं जगत्सर्वं श्वेतपर्वतसंस्थितम्
प्रहृष्टं प्रेक्षते स्कन्दं न च ग्लायति दर्शनात् २७
इति श्रीमहाभारते आरण्यकपर्वणि विंशत्यधिक द्विशततमोऽध्यायः २२०

एकविंशत्यधिक द्विशततमोऽध्यायः

मार्कण्डेय उवाच
यदाभिषिक्तो भगवान्सेनापत्येन पावकिः
तदा संप्रस्थितः श्रीमान्हृष्टो भद्रवटं हरः
रथेनादित्यवर्णेन पार्वत्या सहितः प्रभुः १
सहस्रं तस्य सिंहानां तस्मिन्युक्तं रथोत्तमे
उत्पपात दिवं शुभ्रं कालेनाभिप्रचोदितः २
ते पिबन्त इवाकाशं त्रासयन्तश्चराचरान्
सिंहा नभस्यगच्छन्त नदन्तश्चारुकेसराः ३
तस्मिन्रथे पशुपतिः स्थितो भात्युमया सह
विद्युता सहितः सूर्यः सेन्द्रचापे घने यथा ४
अग्रतस्तस्य भगवान्धनेशो गुह्यकैः सह
आस्थाय रुचिरं याति पुष्पकं नरवाहनः ५
एरावतं समास्थाय शक्रश्चापि सुरैः सह
पृष्ठतोऽनुययौ यान्तं वरदं वृषभध्वजम् ६
जम्भकैर्यक्षरक्षोभिः स्रग्विभिः समलंकृतः
यात्यमोघो महायक्षो दक्षिणं पक्षमास्थितः ७
तस्य दक्षिणतो देवा मरुतश्चित्रयोधिनः
गच्छन्ति वसुभिः सार्धं रुद्रैश्च सह संगताः ८
यमश्च मृत्युना सार्धं सर्वतः परिवारितः
घोरैर्व्याधिशतैर्याति घोररूपवपुस्तथा ९
यमस्य पृष्ठतश्चैव घोरस्त्रिशिखरः शितः

विजयो नाम रुद्रस्य याति शूलः स्वलंकृतः १०
तमुग्रपाशो वरुणो भगवान्सलिलेश्वरः
परिवार्य शनैर्याति यादोभिर्विविधैर्वृतः ११
पृष्ठतो विजयस्यापि याति रुद्रस्य पट्टिशः
गदामुसलशक्त्याद्यैर्वृतः प्रहरणोत्तमैः १२
पट्टिशं त्वन्वगाद्राजंश्छत्रं रौद्रं महाप्रभम्
कमण्डलुश्चाप्यनु तं महर्षिगणसंवृतः १३
तस्य दक्षिणतो भाति दण्डो गच्छञ्श्रिया वृतः
भृग्वङ्गिरोभिः सहितो देवैश्चाप्यभिपूजितः १४
एषां तु पृष्ठतो रुद्रो विमले स्यन्दने स्थितः
याति संहर्षयन्सर्वांस्तेजसा त्रिदिवौकसः १५
ऋषयश्चैव देवाश्च गन्धर्वा भुजगास्तथा
नद्यो नदा द्रुमाश्चैव तथैवाप्सरसां गणाः १६
नक्षत्राणि ग्रहाश्चैव देवानां शिशवश्च ये
स्त्रियश्च विविधाकारा यान्ति रुद्रस्य पृष्ठतः
सृजन्त्यः पुष्पवर्षाणि चारुरूपा वराङ्गनाः १७
पर्जन्यश्चाप्यनुययौ नमस्कृत्य पिनाकिनम्
छत्रं तु पाण्डुरं सोमस्तस्य मूर्धन्यधारयत्
चामरे चापि वायुश्च गृहीत्वाग्निश्च विष्ठितौ १८
शक्रश्च पृष्ठतस्तस्य याति राजञ्श्रिया वृतः
सह राजर्षिभिः सर्वैः स्तुवानो वृषकेतनम् १९
गौरी विद्याथ गान्धारी केशिनी मित्रसाह्वया
सावित्र्या सह सर्वास्ताः पार्वत्या यान्ति पृष्ठतः २०
तत्र विद्यागणाः सर्वे ये केचित्कविभिः कृताः
यस्य कुर्वन्ति वचनं सेन्द्रा देवाश्चमूमुखे २१
स गृहीत्वा पताकां तु यात्यग्रे राक्षसो ग्रहः
व्यापृतस्तु श्मशाने यो नित्यं रुद्रस्य वै सखा
पिङ्गलो नाम यक्षेन्द्रो लोकस्यानन्ददायकः २२
एभिः स सहितस्तत्र ययौ देवा यथासुखम्
अग्रतः पृष्ठतश्चैव न हि तस्य गतिर्ध्रुवा २३

रुद्रं सत्कर्मभिर्मर्त्याः पूजयन्तीह दैवतम्
शिवमित्येव यं प्राहुरीशं रुद्रं पिनाकिनम्
भावैस्तु विविधाकारैः पूजयन्ति महेश्वरम् २४
देवसेनापतिस्त्वेवं देवसेनाभिरावृतः
अनुगच्छति देवेशं ब्रह्मण्यः कृत्तिकासुतः २५
अथाब्रवीन्महासेनं महादेवो बृहद्वचः
सप्तमं मारुतस्कन्धं रक्ष नित्यमतन्द्रितः २६
स्कन्द उवाच
सप्तमं मारुतस्कन्धं पालयिष्याम्यहं प्रभो
यदन्यदपि मे कार्यं देव तद्वद मा चिरम् २७
रुद्र उवाच
कार्येष्वहं त्वया पुत्र संद्रष्टव्यः सदैव हि
दर्शनान्मम भक्त्या च श्रेयः परमवाप्स्यसि २८
मार्कण्डेय उवाच
इत्युक्त्वा विससर्जैनं परिष्वज्य महेश्वरः
विसर्जिते ततः स्कन्दे बभूवौत्पातिकं महत्
सहसैव महाराज देवान्सर्वान्प्रमोहयत् २९
जज्वाल खं सनक्षत्रं प्रमूढं भुवनं भृशम्
चचाल व्यनदच्चोर्वी तमोभूतं जगत्प्रभो ३०
ततस्तद्दारुणं दृष्ट्वा क्षुभितः शंकरस्तदा
उमा चैव महाभागा देवाश्च समहर्षयः ३१
ततस्तेषु प्रमूढेषु पर्वताम्बुदसंनिभम्
नानाप्रहरणं घोरमदृश्यत महद्बलम् ३२
तद्धि घोरमसंख्येयं गर्जच्च विविधा गिरः
अभ्यद्रवद्रणे देवान्भगवन्तं च शंकरम् ३३
तैर्विसृष्टान्यनीकेषु बाणजालान्यनेकशः
पर्वताश्च शतघ्न्यश्च प्रासाश्च परिघा गदाः ३४
निपतद्भिश्च तैर्घोरैर्देवानीकं महायुधैः
क्षणेन व्यद्रवत्सर्वं विमुखं चाप्यदृश्यत ३५
निकृत्तयोधनागाश्वं कृत्तायुधमहारथम्

दानवैरर्दितं सैन्यं देवानां विमुखं बभौ ३६
असुरैर्वध्यमानं तत्पावकैरिव काननम्
अपतद्दग्धभूयिष्ठं महाद्रुमवनं यथा ३७
ते विभिन्नशिरोदेहाः प्रच्यवन्ते दिवौकसः
न नाथमध्यगच्छन्त वध्यमाना महारणे ३८
अथ तद्विद्रुतं सैन्यं दृष्ट्वा देवः पुरंदरः
आश्वासयन्नुवाचेदं बलवद्दानवार्दितम् ३९
भयं त्यजत भद्रं वः शूराः शस्त्राणि गृह्णत
कुरुध्वं विक्रमे बुद्धिं मा वः काचिद्व्यथा भवेत् ४०
जयतैनान्सुदुर्वृत्तान्दानवान्घोरदर्शनान्
अभिद्रवत भद्रं वो मया सह महासुरान् ४१
शक्रस्य वचनं श्रुत्वा समाश्वस्ता दिवौकसः
दानवान्प्रत्ययुध्यन्त शक्रं कृत्वा व्यपाश्रयम् ४२
ततस्ते त्रिदशाः सर्वे मरुतश्च महाबलाः
प्रत्युद्ययुर्महावेगाः साध्याश्च वसुभिः सह ४३
तैर्विसृष्टान्यनीकेषु क्रुद्धैः शस्त्राणि संयुगे
शराश्च दैत्यकायेषु पिबन्ति स्मासृगुल्बणम् ४४
तेषां देहान्विनिर्भिद्य शरास्ते निशितास्तदा
निष्पतन्तो अदृश्यन्त नगेभ्य इव पन्नगाः ४५
तानि दैत्यशरीराणि निर्भिन्नानि स्म सायकैः
अपतन्भूतले राजंश्छिन्नाभ्राणीव सर्वशः ४६
ततस्तद्दानवं सैन्यं सर्वैर्देवगणैर्युधि
त्रासितं विविधैर्बाणैः कृतं चैव पराङ्मुखम् ४७
अथोत्क्रुष्टं तदा हृष्टैः सर्वैर्देवैरुदायुधैः
संहतानि च तूर्याणि तदा सर्वाण्यनेकशः ४८
एवमन्योन्यसंयुक्तं युद्धमासीत्सुदारुणम्
देवानां दानवानां च मांसशोणितकर्दमम् ४९
अनयो देवलोकस्य सहसैव व्यदृश्यत
तथा हि दानवा घोरा विनिघ्नन्ति दिवौकसः ५०
ततस्तूर्यप्रणादाश्च भेरीणां च महास्वनाः

बभूवुर्दानवेन्द्राणां सिंहनादाश्च दारुणाः ५१
अथ दैत्यबलाद्घोरान्निष्पपात महाबलः
दानवो महिषो नाम प्रगृह्य विपुलं गिरिम् ५२
ते तं घनैरिवादित्यं दृष्ट्वा संपरिवारितम्
समुद्यतगिरिं राजन्व्यद्रवन्त दिवौकसः ५३
अथाभिद्रुत्य महिषो देवांश्चिक्षेप तं गिरिम्
पतता तेन गिरिणा देवसैन्यस्य पार्थिव
भीमरूपेण निहतमयुतं प्रापतद्भुवि ५४
अथ तैर्दानवैः सार्धं महिषस्त्रासयन्सुरान्
अभ्यद्रवद्रणे तूर्णं सिंहः क्षुद्रमृगानिव ५५
तमापतन्तं महिषं दृष्ट्वा सेन्द्रा दिवौकसः
व्यद्रवन्त रणे भीता विशीर्णायुधकेतनाः ५६
ततः स महिषः क्रुद्धस्तूर्णं रुद्ररथं ययौ
अभिद्रुत्य च जग्राह रुद्रस्य रथकूबरम् ५७
यदा रुद्ररथं क्रुद्धो महिषः सहसा गतः
रेसतू रोदसी गाढं मुमुहुश्च महर्षयः ५८
व्यनदंश्च महाकाया दैत्या जलधरोपमाः
आसीच्च निश्चितं तेषां जितमस्माभिरित्युत ५९
तथाभूते तु भगवान्नावधीन्महिषं रणे
सस्मार च तदा स्कन्दं मृत्युं तस्य दुरात्मनः ६०
महिषोऽपि रथं दृष्ट्वा रौद्रं रुद्रस्य नानदत्
देवान्संत्रासयंश्चापि दैत्यांश्चापि प्रहर्षयन् ६१
ततस्तस्मिन्भये घोरे देवानां समुपस्थिते
आजगाम महासेनः क्रोधात्सूर्य इव ज्वलन् ६२
लोहिताम्बरसंवीतो लोहितस्रग्विभूषणः
लोहितास्यो महाबाहुर्हिरण्यकवचः प्रभुः ६३
रथमादित्यसंकाशमास्थितः कनकप्रभम्
तं दृष्ट्वा दैत्यसेना सा व्यद्रवत्सहसा रणे ६४
स चापि तां प्रज्वलितां महिषस्य विदारिणीम्
मुमोच शक्तिं राजेन्द्र महासेनो महाबलः ६५

सा मुक्ताभ्यहनच्छक्तिर्महिषस्य शिरो महत्
पपात भिन्ने शिरसि महिषस्त्यक्तजीवितः ६६
क्षिप्ताक्षिप्ता तु सा शक्तिर्हत्वा शत्रून्सहस्रशः
स्कन्दहस्तमनुप्राप्ता दृश्यते देवदानवैः ६७
प्रायः शरैर्विनिहता महासेनेन धीमता
शेषा दैत्यगणा घोरा भीतास्त्रस्ता दुरासदैः
स्कन्दस्य पार्षदैर्हत्वा भक्षिताः शतसंघशः ६८
दानवान्भक्षयन्तस्ते प्रपिबन्तश्च शोणितम्
क्षणान्निर्दानवं सर्वमकार्षुर्भृशहर्षिताः ६९
तमांसीव यथा सूर्यो वृक्षानग्निर्घनान्खगः
तथा स्कन्दोऽजयच्छत्रून्स्वेन वीर्येण कीर्तिमान् ७०
संपूज्यमानस्त्रिदशैरभिवाद्य महेश्वरम्
शुशुभे कृत्तिकापुत्रः प्रकीर्णांशुरिवांशुमान् ७१
नष्टशत्रुर्यदा स्कन्दः प्रयातश्च महेश्वरम्
अथाब्रवीन्महासेनं परिष्वज्य पुरंदरः ७२
ब्रह्मदत्तवरः स्कन्द त्वयायं महिषो हतः
देवास्तृणमया यस्य बभूवुर्जयतां वर
सोऽय त्वया महाबाहो शमितो देवकणटकः ७३
शतं महिषतुल्यानां दानवानां त्वया रणे
निहतं देवशत्रूणां यैर्वयं पूर्वतापिताः ७४
तावकैर्भक्षिताश्चान्ये दानवाः शतसङ्घशः
अजेयस्त्वं रणेऽरीणामुमापतिरिव प्रभुः ७५
एतत्ते प्रथमं देव ख्यातं कर्म भविष्यति
त्रिषु लोकेषु कीर्तिश्च तवाक्षय्या भविष्यति
वशगाश्च भविष्यन्ति सुरास्तव सुरात्मज ७६
महासेनेत्येवमुक्त्वा निवृत्तः सह दैवतैः
अनुज्ञातो भगवता त्र्यम्बकेन शचीपतिः ७७
गतो भद्रवटं रुद्रो निवृत्ताश्च दिवौकसः
उक्ताश्च देवा रुद्रेण स्कन्दं पश्यत मामिव ७८
स हत्वा दानवगणान्पूज्यमानो महर्षिभिः

एकाह्नैवाजयत्सर्वं त्रैलोक्यं वह्निनन्दनः ७९
स्कन्दस्य य इदं जन्म पठते सुसमाहितः
स पुष्टिमिह संप्राप्य स्कन्दसालोक्यतामियात् ८०
इति श्रीमहाभारते आरण्यकपर्वणि एकविंशत्यधिकद्विशततमोऽध्यायः १२१
समाप्तं मार्कण्डेयसमास्यापर्व

द्वाविंशत्यधिक द्विशततमोऽध्यायः

वैशम्पायन उवाच
उपासीनेषु विप्रेषु पाण्डवेषु महात्मसु
द्रौपदी सत्यभामा च विविशाते तदा समम्
जाहस्यमाने सुप्रीते सुखं तत्र निषीदतुः १
चिरस्य दृष्ट्वा राजेन्द्र तेऽन्योन्यस्य प्रियंवदे
कथयामासतुश्चित्राः कथाः कुरुयदुक्षिताम् २
अथाब्रवीत्सत्यभामा कृष्णस्य महिषी प्रिया
सात्राजिती याज्ञसेनीं रहसीदं सुमध्यमा ३
केन द्रौपदि वृत्तेन पाण्डवानुपतिष्ठसि
लोकपालोपमान्वीरान्यूनः परमसंमतान्
कथं च वशगास्तुभ्यं न कुप्यन्ति च ते शुभे ४
तव वश्या हि सततं पाण्डवाः प्रियदर्शने
मुखप्रेक्षाश्च ते सर्वे तत्त्वमेतद्ब्रवीहि मे ५
व्रतचर्या तपो वापि स्नानमन्त्रौषधानि वा
विद्यावीर्यं मूलवीर्यं जपहोमस्तथागदाः ६
मम आचक्ष्व पाञ्चालि यशस्यं भगवेदनम्
येन कृष्णे भवेन्नित्यं मम कृष्णो वशानुगः ७
एवमुक्त्वा सत्यभामा विरराम यशस्विनी
पतिव्रता महाभागा द्रौपदी प्रत्युवाच ताम् ८
असत्स्त्रीणां समाचारं सत्ये मामनुपृच्छसि
असदाचरिते मार्गे कथं स्यादनुकीर्तनम् ९
अनुप्रश्नः संशयो वा नैतत्त्वय्युपपद्यते
तथा ह्युपेता बुद्ध्या त्वं कृष्णस्य महिषी प्रिया १०

यदैव भर्ता जानीयान्मन्त्रमूलपरां स्त्रियम्
उद्विजेत तदैवास्याः सर्पाद्वेश्मगतादिव ११
उद्विग्नस्य कुतः शान्तिरशान्तस्य कुतः सुखम्
न जातु वशगो भर्ता स्त्रियाः स्यान्मन्त्रकारणात् १२
अमित्रप्रहितांश्चापि गदान्परमदारुणान्
मूलप्रवादैर्हि विषं प्रयच्छन्ति जिघांसवः १३
जिह्वया यानि पुरुषस्त्वचा वाप्युपसेवते
तत्र चूर्णानि दत्तानि हन्युः क्षिप्रमसंशयम् १४
जलोदरसमायुक्ताः श्वित्रिणः पलितास्तथा
अपुमांसः कृताः स्त्रीभिर्जडान्धबधिरास्तथा १५
पापानुगास्तु पापास्ताः पतीनुपसृजन्त्युत
न जातु विप्रियं भर्तुः स्त्रिया कार्यं कथंचन १६
वर्ताम्यहं तु यां वृत्तिं पाण्डवेषु महात्मसु
तां सर्वां शृणु मे सत्यां सत्यभामे यशस्विनि १७
अहङ्कारं विहायाहं कामक्रोधौ च सर्वदा
सदारान्पाण्डवान्नित्यं प्रयतोपचराम्यहम् १८
प्रणयं प्रतिसंगृह्य निधायात्मानमात्मनि
शुश्रूषुर्निरभीमाना पतीनां चित्तरक्षिणी १९
दुर्व्याहृताच्छङ्कमाना दुःस्थिताद्दुरवेक्षितात्
दुरासिताद्दुर्व्रजितादिङ्गिताध्यासितादपि २०
सूर्यवैश्वानरनिभान्सोमकल्पान्महारथान्
सेवे चक्षुर्हणः पार्थानुग्रतेजःप्रतापिनः २१
देवो मनुष्यो गन्धर्वो युवा चापि स्वलङ्कृतः
द्रव्यवानभिरूपो वा न मेऽन्य पुरुषो मतः २२
नाभुक्तवति नास्नाते नासंविष्टे च भर्तरि
न संविशामि नाश्नामि सदा कर्मकरेष्वपि २३
क्षेत्राद्वनाद्वा ग्रामाद्वा भर्तारं गृहमागतम्
प्रत्युत्थायाभिनन्दामि आसनेनोदकेन च २४
प्रमृष्टभाण्डा मृष्टान्ना काले भोजनदायिनी
संयता गुप्तधान्या च सुसंमृष्टनिवेशना २५

अतिरस्कृतसंभाषा दुःस्त्रियो नानुसेवती
अनुकूलवती नित्यं भवाम्यनलसा सदा २६
अनर्मे चापि हसनं द्वारि स्थानमभीक्ष्णशः
अवस्करे चिरस्थानं निष्कुटेषु च वर्जये २७
अतिहासातिरोषौ च क्रोधस्थानं च वर्जये
निरताहं सदा सत्ये भर्तॄणामुपसेवने
सर्वथा भर्तृरहितं न ममेष्टं कथंचन २८
यदा प्रवसते भर्ता कुटुम्बार्थेन केनचित्
सुमनोवर्णकापेता भवामि व्रतचारिणी २९
यच्च भर्ता न पिबति यच्च भर्ता न खादति
यच्च नाश्नाति मे भर्ता सर्वं तद्वर्जयाम्यहम् ३०
यथोपदेशं नियता वर्तमाना वराङ्गने
स्वलङ्कृता सुप्रयता भर्तुः प्रियहिते रता ३१
ये च धर्माः कुटुम्बेषु श्वश्र्वा मे कथिताः पुरा
भिक्षाबलिश्राद्धमिति स्थालीपाकाश्च पर्वसु
मान्यानां मानसत्कारा ये चान्ये विदिता मया ३२
तान्सर्माननुवर्तामि दिवारात्रमतन्द्रिता
विनयान्नियमांश्चापि सदा सर्वात्मना श्रिता ३३
मृदून्सतः सत्यशीलान्सत्यधर्मानुपालिनः
आशीविषानिव क्रुद्धान्पतीन्परिचराम्यहम् ३४
पत्याश्रयो हि मे धर्मो मतः स्त्रीणां सनातनः
स देवः सा गतिर्नान्या तस्य का विप्रियं चरेत् ३५
अहं पतीन्नातिशये नात्यश्ने नातिभूषये
नापि परिवदे श्वश्रूं सर्वदा परियन्त्रिता ३६
अवधानेन सुभगे नित्योत्थानतयैव च
भर्तारो वशगा मह्यं गुरुशुश्रूषणेन च ३७
नित्यमार्यामहं कुन्तीं वीरसूं सत्यवादिनीम्
स्वयं परिचराम्येका स्नानाच्छादनभोजनैः ३८
नैतामतिशये जातु वस्त्रभूषणभोजनैः
नापि परिवदे चाहं तां पृथां पृथिवीसमाम् ३९

अष्टावग्रे ब्राह्मणानां सहस्राणि स्म नित्यदा
भुञ्जते रुक्मपात्रीषु युधिष्ठिरनिवेशने ४०
अष्टाशीतिसहस्राणि स्नातका गृहमेधिनः
त्रिंशद्दासीक एकैको यान्बिभर्ति युधिष्ठिरः ४१
दशान्यानि सहस्राणि येषामन्नं सुसंस्कृतम्
ह्रियते रुक्मपात्रीभिर्यतीनामूर्ध्वरेतसाम् ४२
तान्सर्वानग्रहारेण ब्राह्मणान्ब्रह्मवादिनः
यथार्हं पूजयामि स्म पानाच्छादनभोजनैः ४३
शतं दासीसहस्राणि कौन्तेयस्य महात्मनः
कम्बुकेयूरधारिण्यो निष्ककण्ठ्यः स्वलङ्कृताः ४४
महार्हमाल्याभरणाः सुवर्णाश्चन्दनोक्षिताः
मणीन्हेम च बिभ्रत्यो नृत्यगीतविशारदाः ४५
तासां नाम च रूपं च भोजनाच्छादनानि च
सर्वासामेव वेदाहं कर्म चैव कृताकृतम् ४६
शतं दासीसहस्राणि कुन्तीपुत्रस्य धीमतः
पात्रीहस्ता दिवारात्रमतिथीन्भोजयन्त्युत ४७
शतमश्वसहस्राणि दश नागायुतानि च
युधिष्ठिरस्यानुयात्रमिन्द्रप्रस्थनिवासिनः ४८
एतदासीत्तदा राज्ञो यन्महीं पर्यपालयत्
येषां संख्याविधिं चैव प्रदिशामि शृणोमि च ४९
अन्तःपुराणां सर्वेषां भृत्यानां चैव सर्वशः
आ गोपालाविपालेभ्यः सर्वं वेद कृताकृतम् ५०
सर्वं राज्ञः समुदयमायं च व्ययमेव च
एकाहं वेद्मि कल्याणि पाण्डवानां यशस्विनाम् ५१
मयि सर्वं समासज्य कुटुम्बं भरतर्षभाः
उपासनरताः सर्वे घटन्ते स्म शुभानने ५२
तमहं भारमासक्तमनाधृष्यं दुरात्मभिः
सुखं सर्वं परित्यज्य रात्र्यहानि घटामि वै ५३
अधृष्यं वरुणस्येव निधिपूर्णमिवोदधिम्
एकाहं वेद्मि कोशं वै पतीनां धर्मचारिणाम् ५४

अनिशायां निशायां च सहायाः क्षुत्पिपासयोः
आराधयन्त्याः कौरव्यांस्तुल्या रात्रिरहश्च मे ५५
प्रथमं प्रतिबुध्यामि चरमं संविशामि च
नित्यकालमहं सत्ये एतत्संवननं मम ५६
एतज्जानाम्यहं कर्तुं भर्तृसंवननं महत्
असत्स्त्रीणां समाचारं नाहं कुर्यां न कामये ५७
तच्छ्रुत्वा धर्मसहितं व्याहृतं कृष्णया तदा
उवाच सत्या सत्कृत्य पाञ्चालद्यं धर्मचारिणीम् ५८
अभिपन्नास्मि पाञ्चालि याज्ञसेनि क्षमस्व मे
कामकारः सखीनां हि सोपहासं प्रभाषितुम् ५९
इति श्रीमहाभारते आरण्यकपर्वणि द्वाविंशत्यधिक द्विशततमोऽध्यायः २२२

## त्रयोविंशत्यधिक द्विशततमोऽध्यायः

द्रौपद्युवाच
इमं तु ते मार्गमपेतदोषं वक्ष्यामि चित्तग्रहणाय भर्तुः
यस्मिन्यथावत्सखि वर्तमाना भर्तारमाच्छेत्स्यसि कामिनीभ्यः १
नैतादृशं दैवतमस्ति सत्ये सर्वेषु लोकेषु सदैवतेषु
यथा पतिस्तस्य हि सर्वकामा लभ्याः प्रसादे कुपितश्च हन्यात् २
तस्मादपत्यं विविधाश्च भोगाः शय्यासनान्यद्भुतदर्शनानि
वस्त्राणि माल्यानि तथैव गन्धाः स्वर्गश्च लोको विषमा च कीर्तिः ३
सुखं सुखेनेह न जातु लभ्यं दुःखेन साध्वी लभते सुखानि
सा कृष्णमाराधय सौहृदेन प्रेम्णा च नित्यं प्रतिकर्मणा च ४
तथाशनैश्चारुभिरग्र्यमाल्यैर्दाक्षिण्ययोगैर्विविधैश्च गन्धैः
अस्याः प्रियोऽस्मीति यथा विदित्वा त्वामेव संश्लिष्यति सर्वभावैः ५
श्रुत्वा स्वरं द्वारगतस्य भर्तुः प्रत्युत्थिता तिष्ठ गृहस्य मध्ये
दृष्ट्वा प्रविष्टं त्वरितासनेन पाद्येन चैव प्रतिपूजय त्वम् ६
संप्रेषितायामथ चैव दास्यामुत्थाय सर्वं स्वयमेव कुर्याः
जानातु कृष्णस्तव भावमेतं सर्वात्मना मां भजतीति सत्ये ७
त्वत्संनिधौ यत्कथयेत्पतिस्ते यद्यप्यगुह्यं परिरक्षितव्यम्
काचित्सपत्नी तव वासुदेवं प्रत्यादिशेत्तेन भवेद्विरागः ८

प्रियांश्च रक्तांश्च हितांश्च भर्तुस्तान्भोजयेथा विविधैरुपायैः
द्वेष्यैरपन्नैरहितैश्च तस्य भिद्यस्व नित्यं कुहकोद्धतैश्च ९
मदं प्रमादं पुरुषेषु हित्वा संयच्छ भावं प्रतिगृह्य मौनम्
प्रद्युम्नसाम्बावपि ते कुमारौ नोपासितव्यौ रहिते कदाचित् १०
महाकुलीनाभिरपापिकाभिः स्त्रीभिः सतीभिस्तव सख्यमस्तु
चगडाश्च शौगडाश्च महाशनाश्च चौराश्च दुष्टाश्चपलाश्च वर्ज्याः ११
एतद्यशस्यं भगवेदनं च स्वर्ग्यं तथा शत्रुनिबर्हणं च
महार्हमाल्याभरणाङ्गरागा भर्तारमाराधय पुगयगन्धा १२
इति श्रीमहाभारते आरगयकपर्वणित्रयोविंशत्यधिकद्विशततमोऽध्यायः २२३

## चतुर्विंशत्यधिक द्विशततमोऽध्यायः

वैशम्पायन उवाच
मार्कगडेयादिभिर्विप्रैः पागडवैश्च महात्मभिः
कथाभिरनुकूलाभिः सहासित्वा जनार्दनः १
ततस्तैः संविदं कृत्वा यथावन्मधुसूदनः
आरुरुन्नू रथं सत्यामाह्वयामास केशवः २
सत्यभामा ततस्तत्र स्वजित्वा द्रुपदात्मजाम्
उवाच वचनं हृद्यं यथाभावसमाहितम् ३
कृष्णे मा भूत्तवोत्कगठा मा व्यथा मा प्रजागरः
भर्तृभिर्देवसंकाशैर्जितां प्राप्स्यसि मेदिनीम् ४
न ह्येवं शीलसंपन्ना नैवं पूजितलन्नणाः
प्राप्नुवन्ति चिरं क्लेशं यथा त्वमसितेन्नणे ५
अवश्यं च त्वया भूमिरियं निहतकगटका
भर्तृभिः सह भोक्तव्या निर्द्वंद्वेति श्रुतं मया ६
धार्तराष्ट्रवधं कृत्वा वैराणि प्रतियात्य च
युधिष्ठिरस्थां पृथिवीं द्रष्टासि द्रुपदात्मजे ७
यास्ताः प्रव्राजमानां त्वां प्राहसन्दर्पमोहिताः
ताः न्निप्रं हतसङ्कल्पा द्रन्त्यसि त्वं कुरुस्त्रियः ८
तव दुःखोपपन्नाया यैराचरितमप्रियम्
बिद्धि संप्रस्थितान्सर्वांस्तान्कृष्णे यमसादनम् ९

पुत्रस्ते प्रतिविन्ध्यश्च सुतसोमस्तथा विभुः
श्रुतकर्मार्जुनिश्चैव शतानीकश्च नाकुलि
सहदेवाच्च यो जातः श्रुतसेनस्तवात्मजः १०
सर्वे कुशलिनो वीराः कृतास्त्राश्च सुतास्तव
अभिमन्युरिव प्रीता द्वारवत्यां रता भृशम् ११
त्वमिवैषां सुभद्रा च प्रीत्या सर्वात्मना स्थिता
प्रीयते भावनिर्द्वंद्वा तेभ्यश्च विगतज्वरा १२
भेजे सर्वात्मना चैव प्रद्युम्नजननी तथा
भानुप्रभृतिभिश्चैनान्विशिनष्टि च केशवः १३
भोजनाच्छादने चैषां नित्यं मे श्वशुरः स्थितः
रामप्रभृतयः सर्वे भजन्त्यन्धकवृष्णयः
तुल्यो हि प्रणयस्तेषां प्रद्युम्नस्य च भामिनि १४
एवमादि प्रियं प्रीत्या हृद्यमुक्त्वा मनोनुगम्
गमनाय मनश्चक्रे वासुदेवरथं प्रति १५
तां कृष्णां कृष्णमहिषी चकाराभिप्रदक्षिणम्
आरुरोह रथं शौरेः सत्यभामा च भामिनी १६
स्मयित्वा तु यदुश्रेष्ठे द्रौपदीं परिसान्त्व्य च
उपावर्त्य ततः शीघ्रैर्हयैः प्रायात्परंतपः १७

इति श्रीमहाभारते आरण्यकपर्वणि चतुर्विंशत्यधिकद्विशततमोऽध्यायः
२२४
समाप्तं द्रौपदीसत्यभामासंवादपर्व

पञ्चविंशत्यधिक द्विशततमोऽध्यायः

जनमेजय उवाच
एवं वने वर्तमाना नराग्र्याः शीतोष्णवातातपकर्शिताङ्गाः
सरस्तदासाद्य वनं च पुण्यं ततः परं किमकुर्वन्त पार्थाः १
वैशम्पायन उवाच
सरस्तदासाद्य तु पाण्डुपुत्रा जनं समुत्सृज्य विधाय चैषाम्
वनानि रम्याण्यथ पर्वतांश्च नदीप्रदेशांश्च तदा विचेरुः २
तथा वने तान्वसतः प्रवीरान्स्वाध्यायवन्तश्च तपोधनाश्च

अभ्याययुर्वेदविदः पुराणास्तान्पूजयामासुरथो नराग्र्याः ३
ततः कदाचित्कुशलः कथासु विप्रोऽभ्यगच्छद्भुवि कौरवेयान्
स तैः समेत्याथ यदृच्छयैव वैचित्रवीर्यं नृपमभ्यगच्छत् ४
अथोपविष्टः प्रतिसत्कृतश्च वृद्धेन राज्ञा कुरुसत्तमेन
प्रचोदितः सन्कथयांबभूव धर्मानिलेन्द्रप्रभवान्यमौ च ५
कृशांश्च वातातपकर्शिताङ्गान्दुःखस्य चोग्रस्य मुखे प्रपन्नान्
तां चाप्यनाथामिव वीरनाथां कृष्णां परिक्लेशगुणेन युक्ताम् ६
ततः कथां तस्य निशम्य राजा वैचित्रवीर्यः कृपयाभितप्तः
वने स्थितान्पार्थिवपुत्रपौत्राञ्श्रुत्वा तदा दुःखनदीं प्रपन्नान् ७
प्रोवाच दैन्याभिहतान्तरात्मा निःश्वासबाष्पोपहतः स पार्थान्
वाचं कथंचित्स्थिरतामुपेत्य तत्सर्वमात्मप्रभवं विचिन्त्य ८
कथं नु सत्यः शुचिरार्यवृत्तो ज्येष्ठः सुतानां मम धर्मराजः
अजातशत्रुः पृथिवीतलस्थः शेते पुरा राङ्कवकूटशायी ९
प्रबोध्यते मागधसूतपूगैर्नित्यं स्तुवद्भिः स्वयमिन्द्रकल्पः
पतत्रिसंघैः स जघन्यरात्रे प्रबोध्यते नूनमिडातलस्थः १०
कथं नु वातातपकर्शिताङ्गो वृकोदरः कोपपरिप्लुताङ्गः
शेते पृथिव्यामतथोचिताङ्गः कृष्णासमक्षं वसुधातलस्थः ११
तथार्जुनः सुकुमारो मनस्वी वशे स्थितो धर्मसुतस्य राज्ञः
विदूयमानैरिव सर्वगात्रैर्ध्रुवं न शेते वसतीरमर्षात् १२
यमौ च कृष्णां च युधिष्ठिरं च भीमं च दृष्ट्वा सुखविप्रयुक्तान्
विनिःश्वसन्सर्प इवोग्रतेजा ध्रुवं न शेते वसतीरमर्षात् १३
तथा यमौ चाप्यसुखौ सुखार्हौ समृद्धरूपावमरौ दिवीव
प्रजागरस्थौ ध्रुवमप्रशान्तौ धर्मेण सत्येन च वार्यमाणौ १४
समीरणेनापि समो बलेन समीरणस्यैव सुतौ बलीयान्
स धर्मपाशेन सितोग्रतेजा ध्रुवं विनिःश्वस्य सहत्यमर्षम् १५
स चापि भूमौ परिवर्तमानो वधं सुतानां मम काङ्क्षमाणः
सत्येन धर्मेण च वार्यमाणः कालं प्रतीक्षत्यधिको रणेऽन्यै १६
अजातशत्रौ तु जिते निकृत्या दुःशासनो यत्परुषाण्यवोचत्
तानि प्रविष्टानि वृकोदराङ्गं दहन्ति मर्माग्निरिवेन्धनानि १७
न पापकं ध्यास्यति धर्मपुत्रो धनञ्जयश्चाप्यनुवर्तते तम्

अरण्यवासेन विवर्धते तु भीमस्य कोपोऽग्निरिवानिलेन १८
स तेन कोपेन विदीर्यमाणः करं करेणाभिनिपीड्य वीरः
विनिःश्वसत्युष्णमतीव घोरं दहन्निवेमान्मम पुत्रपौत्रान् १९
गाण्डीवधन्वा च वृकोदरश्च संरम्भिणावन्तककालकल्पौ
न शेषयेतां युधि शत्रुसेनां शरान्किरन्तावशनिप्रकाशान् २०
दुर्योधनः शकुनिः सूतपुत्रो दुःशासनश्चापि सुमन्दचेताः
मधु प्रपश्यन्ति न तु प्रपातं वृकोदरं चैव धनंजयं च २१
शुभाशुभं पुरुषः कर्म कृत्वा प्रतीक्षते तस्य फलं स्म कर्ता
स तेन युज्यत्यवशः फलेन मोक्षः कथं स्यात्पुरुषस्य तस्मात् २२
क्षेत्रे सुकृष्टे ह्युपिते च बीजे देवे च वर्षत्यृतुकालयुक्तम्
न स्यात्फलं तस्य कुतः प्रसिद्धिरन्यत्र दैवादिति चिन्तयामि २३
कृतं मताक्षेण यथा न साधु साधुप्रवृत्तेन च पाण्डवेन
मया च दुष्पुत्रवशानुगेन यथा कुरूणामयमन्तकालः २४
ध्रुवं प्रवास्यत्यसमीरितोऽपि ध्रुवं प्रजास्यत्युत गर्भिणी या
ध्रुवं दिनादौ रजनीप्रणाशस्तथा क्षपादौ च दिनप्रणाशः २५
क्रियेत कस्मान्न परे च कुर्युर्वित्तं न दद्युः पुरुषाः कथंचित्
प्राप्यार्थकालं च भवेदनर्थः कथं नु तत्स्यादिति तत्कुतः स्यात् २६
कथं न भिद्येत न च स्रवेत न च प्रसिच्येदिति रक्षितव्यम्
अरक्ष्यमाणः शतधा विशीर्येद् ध्रुवं न नाशोऽस्ति कृतस्य लोके २७
गतो ह्यरण्यादपि शक्रलोकं धनंजयः पश्यत वीर्यमस्य
अस्त्राणि दिव्यानि चतुर्विधानि ज्ञात्वा पुनर्लोकमिमं प्रपन्नः २८
स्वर्गं हि गत्वा सशरीर एव को मानुषः पुनरागन्तुमिच्छेत्
अन्यत्र कालोपहताननेकान्समीक्षमाणस्तु कुरून्मुमूर्षून् २९
धनुर्ग्राहश्चार्जुनः सव्यसाची धनुश्च तद्गाण्डिवं लोकसारम्
अस्त्राणि दिव्यानि च तानि तस्य त्रयस्य तेजः प्रसहेत को नु ३०
निशम्य तद्वचनं पार्थिवस्य दुर्योधनो रहिते सौबलश्च
अबोधयत्कर्णमुपेत्य सर्वं स चाप्यहृष्टोऽभवदल्पचेताः ३१

इति श्रीमहाभारते आरण्यकपर्वणि पञ्चविंशत्यधिक द्विशततमोऽध्यायः
२२५

षड्विंशत्यधिक द्विशततमोऽध्यायः

वैशम्पायन उवाच
धृतराष्ट्रस्य तद्वाक्यं निशम्य सहसौबलः
दुर्योधनमिदं काले कर्णो वचनमब्रवीत् १
प्रव्राज्य पाराडवान्वीरान्स्वेन वीर्येण भारत
भुङ्द्वेमां पृथिवीमेको दिवं शम्बरहा यथा २
प्राच्याश्च दाक्षिणात्याश्च प्रतीच्योदीच्यवासिनः
कृताः करप्रदाः सर्वे राजानस्ते नराधिप ३
या हि सा दीप्यमानेव पाराडवान्भजतेपुरा
साद्यलक्ष्मीस्त्वया राजन्नवाप्ता भ्रातृभिः सह ४
इन्द्रप्रस्थगते यां तां दीप्यमानां युधिष्ठिरे
अपश्याम श्रियं राजन्नचिरं शोककर्शिताः ५
सा तु बुद्धिबलेनेयं राज्ञस्तस्माद्युधिष्ठिरात्
त्वयाक्षिप्ता महाबाहो दीप्यमानेव दृश्यते ६
तथैव तव राजेन्द्र राजानः परवीरहन्
शासनेऽधिष्ठिताः सर्वे किं कुर्म इति वादिनः ७
तवाद्य पृथिवी राजन्निखिला सागराम्बरा
सपर्वतवना देवी सग्रामनगराकरा
नानावनोद्देशवती पत्तनैरुपशोभिता ८
वन्द्यमानो द्विजै राजन्पूज्यमानश्च राजभिः
पौरुषाद्दिवि देवेषु भ्राजसे रश्मिवानिव ९
रुद्रैरिव यमो राजा मरुद्भिरिव वासवः
कुरुभिस्त्वं वृतो राजन्भासि नक्षत्रराडिव १०
ये स्म ते नाद्रियन्तेऽज्ञा नोद्विजन्ते कदा च न
पश्यामस्ताञ्श्रिया हीनान्पाराडवान्वनवासिनः ११
श्रूयन्ते हि महाराज सरो द्वैतवनं प्रति
वसन्तः पाराडवाः सार्धं ब्राह्मणैर्वनवासिभिः १२
स प्रयाहि महाराज श्रिया परमया युतः
प्रतपन्पाराडुपुत्रांस्त्वं रश्मिवानिव तेजसा १३
स्थितो राज्ये च्युतान्राज्याच्छ्रिया हीनाञ्श्रिया वृतः

असमृद्धान्समृद्धार्थः पश्य पाण्डुसुतान्नृप १४
महाभिजनसंपन्नं भद्रे महति संस्थितम्
पाण्डवास्त्वाभिवीक्षन्तां ययातिमिव नाहुषम् १५
यां श्रियं सुहृदश्चैव दुर्हृदश्च विशां पते
पश्यन्ति पुरुषे दीप्तां सा समर्था भवत्युत १६
समस्थो विषमस्थान्हि दुर्हृदो योऽभिवीक्षते
जगतीस्थानिवाद्रिस्थः किं ततः परमं सुखम् १७
न पुत्रधनलाभेन न राज्येनापि विन्दति
प्रीतिं नृपतिशार्दूल याममित्राघदर्शनात् १८
किं नु तस्य सुखं न स्यादाश्रमे यो धनंजयम्
अभिवीक्षेत सिद्धार्थो वल्कलाजिनवाससम् १९
सुवाससो हि ते भार्या वल्कलाजिनवाससम्
पश्यन्त्वसुखितां कृष्णां सा च निर्विद्यतां पुनः
विनिन्दतां तथात्मानं जीवितं च धनच्युता २०
न तथा हि सभामध्ये तस्या भवितुमर्हति
वैमनस्यं यथा दृष्ट्वा तव भार्याः स्वलङ्कृताः २१
एवमुक्त्वा तु राजानं कर्णः शकुनिना सह
तूष्णीं बभूवतुरुभौ वाक्यान्ते जनमेजय २२
इति श्रीमहाभारते आरण्यकपर्वणि षडविंशत्यधिक द्विशततमोऽध्यायः
२२६

सप्तविंशत्यधिक द्विशततमोऽध्यायः

वैशम्पायन उवाच
कर्णस्य वचनं श्रुत्वा राजा दुर्योधनस्तदा
हृष्टो भूत्वा पुनर्दीन इदं वचनमब्रवीत् १
ब्रवीषि यदिदं कर्ण सर्वं मे मनसि स्थितम्
न त्वभ्यनुज्ञां लप्स्यामि गमने यत्र पाण्डवाः २
परिदेवति तान्वीरान्धृतराष्ट्रो महीपतिः
मन्यतेऽभ्यधिकांश्चापि तपोयोगेन पाण्डवान् ३
अथ वाप्यनुबुध्येत नृपोऽस्माकं चिकीर्षितम्

एवमप्यायतिं रक्षन्नाभ्यनुज्ञातुमर्हति ४
न हि द्वैतवने किंचिद्विद्यतेऽन्यत्प्रयोजनम्
उत्सादनमृते तेषां वनस्थानां मम द्विषाम् ५
जानासि हि यथा क्षत्ता द्यूतकाल उपस्थिते
अब्रवीद्यच्च मां त्वां च सौबलं च वचस्तदा ६
तानि पूर्वाणि वाक्यानि यच्चान्यत्परिदेवितम्
विचिन्त्य नाधिगच्छामि गमनायेतराय वा ७
ममापि हि महान्हर्षो यदहं भीमफल्गुनौ
क्लिष्टावरण्ये पश्येयं कृष्णया सहिताविति ८
न तथा प्राप्नुयां प्रीतिमवाप्य वसुधामपि
दृष्ट्वा यथा पाण्डुसुतान्वल्कलाजिनवाससः ९
किं नु स्यादधिकं तस्माद्यदहं द्रुपदात्मजाम्
द्रोपदीं कर्ण पश्येयं काषायवसनां वने १०
यदि मां धर्मराजश्च भीमसेनश्च पाण्डवः
युक्तं परमया लक्ष्म्या पश्येतां जीवितं भवेत् ११
उपायं न तु पश्यामि येन गच्छेम तद्वनम्
यथा चाभ्यनुजानीयाद्गच्छन्तं मां महीपतिः १२
स सौबलेन सहितस्तथा दुःशासनेन च
उपायं पश्य निपुणं येन गच्छेम तद्वनम् १३
अहमप्यद्य निश्चित्य गमनायेतराय वा
काल्यमेव गमिष्यामि समीपं पार्थिवस्य ह १४
मयि तत्रोपविष्टे तु भीष्मे च कुरुसत्तमे
उपायो यो भवेद्दृष्टस्तं ब्रूयाः सहसौबलः १५
ततो भीष्मस्य राज्ञश्च निशम्य गमनं प्रति
व्यवसायं करिष्येऽहमनुनीय पितामहम् १६
तथेत्युक्त्वा तु ते सर्वे जग्मुरावसथान्प्रति
व्युषितायां रजन्यां तु कर्णो राजानमभ्ययात् १७
ततो दुर्योधनं कर्णः प्रहसन्निदमब्रवीत्
उपायः परिदृष्टोऽय तं निबोध जनेश्वर १८
घोषा द्वैतवने सर्वे त्वत्प्रतीक्षा नराधिप

घोषयात्रापदेशेन गमिष्यामो न संशयः १९
उचितं हि सदा गन्तुं घोषयात्रां विशां पते
एवं च त्वां पिता राजन्समनुज्ञातुमर्हति २०
तथा कथयमानौ तौ घोषयात्राविनिश्चयम्
गान्धारराजः शकुनिः प्रत्युवाच हसन्निव २१
उपायोऽय मया दृष्टो गमनाय निरामयः
अनुज्ञास्यति नो राजा चोदयिष्यति चाप्युत २२
घोषा द्वैतवने सर्वे त्वत्प्रतीक्षा नराधिप
घोषयात्रापदेशेन गमिष्यामो न संशयः २३
ततः प्रहसिताः सर्वे तेऽन्योन्यस्य तलान्ददुः
तदेव च विनिश्चित्य ददृशुः कुरुसत्तमम् २४
इति श्रीमहाभारते आरण्यकपर्वणि सप्तविंशत्यधिक द्विशततमोऽध्यायः
२२७

अष्टाविंशत्यधिक द्विशततमोऽध्यायः

वैशम्पायन उवाच
धृतराष्ट्रं ततः सर्वे ददृशुर्जनमेजय
पृष्ट्वा सुखमथो राज्ञः पृष्टा राज्ञा च भारत १
ततस्तैर्विहितः पूर्वं समङ्गो नाम बल्लवः
समीपस्थास्तदा गावो धृतराष्ट्रे न्यवेदयत् २
अनन्तरं च राधेयः शकुनिश्च विशां पते
आहतुः पार्थिवश्रेष्ठं धृतराष्ट्रं जनाधिपम् ३
रमणीयेषु देशेषु घोषाः संप्रति कौरव
स्मारणासमयः प्राप्तो वत्सानामपि चाङ्कनम् ४
मृगया चोचिता राजन्नस्मिन्काले सुतस्य ते
दुर्योधनस्य गमनं त्वमनुज्ञातुमर्हसि ५
धृतराष्ट्र उवाच
मृगया शोभना तात गवां च समवेक्षणम्
विश्रम्भस्तु न गन्तव्यो बल्लवानामिति स्मरे ६
ते तु तत्र नरव्याघ्राः समीप इति नः श्रुतम्

अतो नाभ्यनुजानामि गमनं तत्र वः स्वयम् ७
छद्मना निर्जितास्ते हि कर्शिताश्च महावने
तपोनित्याश्च राधेय समर्थाश्च महारथाः ८
धर्मराजो न संक्रुध्येद्भीमसेनस्त्वमर्षणः
यज्ञसेनस्य दुहिता तेज एव तु केवलम् ९
यूयं चाप्यपराध्येयुर्दर्पमोहसमन्विताः
ततो विनिर्दहेयुस्ते तपसा हि समन्विताः १०
अथ वा सायुधा वीरा मन्युनाभिपरिप्लुताः
सहिता बद्धनिस्त्रिंशा दहेयुः शस्त्रतेजसा ११
अथ यूयं बहुत्वात्तानारभध्वं कथंचन
अनार्यं परमं तत्स्यादशक्यं तच्च मे मतम् १२
उषितो हि महाबाहुरिन्द्रलोके धनंजयः
दिव्यान्यस्त्राण्यवाप्याथ ततः प्रत्यागतो वनम् १३
अकृतास्त्रेण पृथिवी जिता बीभत्सुना पुरा
किं पुनः स कृतास्त्रोऽद्य न हन्याद्वो महारथः १४
अथ वा मद्वचः श्रुत्वा तत्र यत्ता भविष्यथ
उद्विग्नवासो विश्रम्भाद्दुःखं तत्र भविष्यति १५
अथ वा सैनिकाः केचिदपकुर्युर्युधिष्ठिरे
तदबुद्धिकृतं कर्म दोषमुत्पादयेच्च वः १६
तस्माद्गच्छन्तु पुरुषाः स्मारणायाप्तकारिणः
न स्वयं तत्र गमनं रोचये तव भारत १७
शकुनिरुवाच
धर्मज्ञः पाण्डवो ज्येष्ठः प्रतिज्ञातं च संसदि
तेन द्वादश वर्षाणि वस्तव्यानीति भारत १८
अनुवृत्ताश्च ते सर्वे पाण्डवा धर्मचारिणः
युधिष्ठिरश्च कौन्तेयो न नः कोपं करिष्यति १९
मृगयां चैव नो गन्तुमिच्छा संवर्धते भृशम्
स्मारणं च चिकीर्षामो न तु पाण्डवदर्शनम् २०
न चानार्यसमाचारः कश्चित्तत्र भविष्यति
न च तत्र गमिष्यामो यत्र तेषां प्रतिश्रयः २१

वैशम्पायन उवाच
एवमुक्तः शकुनिना धृतराष्ट्रो जनेश्वरः
दुर्योधनं सहामात्यमनुजज्ञे न कामतः २२
अनुज्ञातस्तु गान्धारिः कर्णेन सहितस्तदा
निर्ययौ भरतश्रेष्ठो बलेन महता वृतः २३
दुःशासनेन च तथा सौबलेन च देविना
संवृतो भ्रातृभिश्चान्यैः स्त्रीभिश्चापि सहस्रशः २४
तं निर्यान्तं महाबाहुं द्रष्टुं द्वैतवनं सरः
पौराश्चानुययुः सर्वे सहदारा वनं च तत् २५
अष्टौ रथसहस्राणि त्रीणि नागायुतानि च
पत्तयो बहुसाहस्रा हयाश्च नवतिः शताः २६
शकटापणवेश्याश्च वणिजो बन्दिनस्तथा
नराश्च मृगयाशीलाः शतशोऽथ सहस्रशः २७
ततः प्रयाणे नृपतेः सुमहानभवत्स्वनः
प्रावृषीव महावायोरुद्धतस्य विशां पते २८
गव्यूतिमात्रे न्यवसद्राजा दुर्योधनस्तदा
प्रयातो वाहनैः सर्वैस्ततो द्वैतवनं सरः २९
इति श्रीमहाभारते आरण्यकपर्वणि अष्टविंशत्यधिक द्विशततमोऽध्यायः
२२८

## एकोनत्रिंशत्यधिक द्विशततमोऽध्यायः

वैशम्पायन उवाच
अथ दुर्योधनो राजा तत्र तत्र वने वसन्
जगाम घोषानभितस्तत्र चक्रे निवेशनम् १
रमणीये समाज्ञाते सोदके समहीरुहे
देशे सर्वगुणोपेते चक्रुरावसथं नराः २
तथैव तत्समीपस्थान्पृथगावसथान्बहून्
कर्णस्य शकुनेश्चैव भ्रातॄणां चैव सर्वशः ३
ददर्श स तदा गावः शतशोऽथ सहस्रशः
अङ्कैर्लक्षैश्च ताः सर्वा लक्षयामास पार्थिवः ४

अङ्कयामास वत्सांश्च जज्ञे चोपसृतास्त्वपि
बालवत्साश्च या गावः कालयामास ता अपि ५
अथ स स्मारणं कृत्वा लक्षयित्वा त्रिहायनान्
वृतो गोपालकैः प्रीतो व्यहरत्कुरुनन्दनः ६
स च पौरजनः सर्वः सैनिकाश्च सहस्रशः
यथोपजोषं चिक्रीडुर्वने तस्मिन्यथामराः ७
ततो गोपाः प्रगातारः कुशला नृत्तवादिते
धार्तराष्ट्रमुपातिष्ठन्कन्याश्चैव स्वलङ्कृताः ८
स स्त्रीगणवृतो राजा प्रहृष्टः प्रददौ वसु
तेभ्यो यथार्हमन्नानि पानानि विविधानि च ९
ततस्ते सहिताः सर्वे तरक्षून्महिषान्मृगान्
गवयर्क्षवराहांश्च समन्तात्पर्यकालयन् १०
स ताञ्शरैर्विनिर्भिन्दन्गजान्बध्नन्महावने
रमणीयेषु देशेषु ग्राहयामास वै मृगान् ११
गोरसानुपयुञ्जान उपभोगांश्च भारत
पश्यन्सुरमणीयानि पुष्पितानि वनानि च १२
मत्तभ्रमरजुष्टानि बर्हिणाभिरुतानि च
अगच्छदानुपूर्व्येण पुगयं द्वैतवनं सरः
ऋद्ध्या परमया युक्तो महेन्द्र इव वज्रभृत् १३
यदृच्छया च तदहो धर्मपुत्रो युधिष्ठिरः
ईजे राजर्षियज्ञेन सद्यस्केन विशां पते
दिव्येन विधिना राजा वन्येन कुरुसत्तमः १४
कृत्वा निवेशमभितः सरसस्तस्य कौरवः
द्रौपद्या सहितो धीमान्धर्मपत्न्या नराधिपः १५
ततो दुर्योधनः प्रेष्यानादिदेश सहानुजः
आक्रीडावसथाः क्षिप्रं क्रियन्तामिति भारत १६
ते तथेत्येव कौरव्यमुक्त्वा वचनकारिणः
चिकीर्षन्तस्तदाक्रीडाञ्जग्मुर्द्वैतवनं सरः १७
सेनाग्रं धार्तराष्ट्रस्य प्राप्तं द्वैतवनं सरः
प्रविशन्तं वनद्वारि गान्धर्वाः समवारयन् १८

तत्र गन्धर्वराजो वै पूर्वमेव विशां पते
कुबेरभवनाद्राजन्नाजगाम गणावृतः १९
गणैरप्सरसां चैव त्रिदशानां तथात्मजैः
विहारशीलः क्रीडार्थं तेन तत्संवृतं सरः २०
तेन तत्संवृतं दृष्ट्वा ते राजपरिचारकाः
प्रतिजग्मुस्ततो राजन्यत्र दुर्योधनो नृपः २१
स तु तेषां वचः श्रुत्वा सैनिकान्युद्धदुर्मदान्
प्रेषयामास कौरव्य उत्सारयत तानिति २२
तस्य तद्वचनं श्रुत्वा राज्ञः सेनाग्रयायिनः
सरो द्वैतवनं गत्वा गन्धर्वानिदमब्रुवन् २३
राजा दुर्योधनो नाम धृतराष्ट्रसुतो बली
विजिहीर्षुरिहायाति तदर्थमपसर्पत २४
एवमुक्तास्तु गन्धर्वाः प्रहसन्तो विशां पते
प्रत्यब्रुवंस्तान्पुरुषानिदं सुपरुषं वचः २५
न चेतयति वो राजा मन्दबुद्धिः सुयोधनः
योऽस्मानाज्ञापयत्येवं वश्यानिव दिवौकसः २६
यूयं मुमूर्षवश्चापि मन्दप्रज्ञा न संशयः
ये तस्य वचनादेवमस्मान्ब्रूत विचेतसः २७
गच्छत त्वरिताः सर्वे यत्र राजा स कौरवः
द्वेष्यं माद्यैव गच्छध्वं धर्मराजनिवेशनम् २८
एवमुक्तास्तु गन्धर्वै राज्ञः सेनाग्रयायिनः
संप्राद्रवन्यतो राजा धृतराष्ट्रसुतोऽभवत् २९

इति श्रीमहाभारते आरण्यकपर्वणि एकोनत्रिंशत्यधिक द्विशततमोऽध्यायः २२९

## त्रिंशदधिक द्विशततमोऽध्यायः

वैशम्पायन उवाच
ततस्ते सहिताः सर्वे दुर्योधनमुपागमन्
अब्रुवंश्च महाराज यदूचुः कौरवं प्रति १
गन्धर्वैर्वारिते सैन्ये धार्तराष्ट्रः प्रतापवान्

अमर्षपूर्णः सैन्यानि प्रत्यभाषत भारत २
शासतैनानधर्मज्ञान्मम विप्रियकारिणः
यदि प्रक्रीडितो देवैः सर्वैः सह शतक्रतुः ३
दुर्योधनवचः श्रुत्वा धार्तराष्ट्रा महाबलाः
सर्व एवाभिसंनद्धा योधाश्चापि सहस्रशः ४
ततः प्रमथ्य गन्धर्वांस्तद्वनं विविशुर्बलात्
सिंहनादेन महता पूरयन्तो दिशो दश ५
ततोऽपरैरवार्यन्त गन्धर्वैः कुरुसैनिकाः
ते वार्यमाणा गन्धर्वैः साम्नैव वसुधाधिप
ताननादृत्य गन्धर्वांस्तद्वनं विविशुर्महत् ६
यदा वाचा न तिष्ठन्ति धार्तराष्ट्राः सराजकाः
ततस्ते खेचराः सर्वे चित्रसेने न्यवेदयन् ७
गन्धर्वराजस्तान्सर्वानब्रवीत्कौरवान्प्रति
अनार्याञ्शासतेत्येवं चित्रसेनोऽत्यमर्षणः ८
अनुज्ञातास्तु गन्धर्वाश्चित्रसेनेन भारत
प्रगृहीतायुधाः सर्वे धार्तराष्ट्रानभिद्रवन् ९
तान्दृष्ट्वा पततः शीघ्रान्गन्धर्वानुद्यतायुधान्
सर्वे ते प्राद्रवन्संख्ये धार्तराष्ट्रस्य पश्यतः १०
तान्दृष्ट्वा द्रवतः सर्वान्धार्तराष्ट्रान्पराङ्मुखान्
वैकर्तनस्तदा वीरो नासीत्तत्र पराङ्मुखः ११
आपतन्तीं तु संप्रेक्ष्य गन्धर्वाणां महाचमूम्
महता शरवर्षेण राधेयः प्रत्यवारयत् १२
क्षुरप्रैर्विशिखैर्भल्लैर्वत्सदन्तैस्तथायसैः
गन्धर्वाञ्शतशोऽभ्यघ्नँल्लघुत्वात्सूतनन्दनः १३
पातयन्नुत्तमाङ्गानि गन्धर्वाणां महारथः
क्षणेन व्यधमत्सर्वां चित्रसेनस्य वाहिनीम् १४
ते वध्यमाना गन्धर्वाः सूतपुत्रेण धीमता
भूय एवाभ्यवर्तन्त शतशोऽथ सहस्रशः १५
गन्धर्वभूता पृथिवी क्षणेन समपद्यत
आपतद्भिर्महावेगैश्चित्रसेनस्य सैनिकैः १६

अथ दुर्योधनो राजा शकुनिश्चापि सौबलः
दुःशासनो विकर्णश्च ये चान्ये धृतराष्ट्रजाः
न्यहनंस्तत्तदा सैन्यं रथैर्गरुडनिस्वनैः १७
भूयश्च योधयामासुः कृत्वा कर्णमथाग्रतः
महता रथघोषेण हयचारेण चाप्युत
वैकर्तनं परीप्सन्तो गन्धर्वान्समवारयन् १८
ततः संन्यपतन्सर्वे गन्धर्वाः कौरवैः सह
तदा सुतुमुलं युद्धमभवल्लोमहर्षणम् १९
ततस्ते मृदवोऽभूवन्गन्धर्वाः शरपीडिताः
उच्चुक्रुशुश्च कौरव्या गन्धर्वान्प्रेक्ष्य पीडितान् २०
गन्धर्वांस्त्रासितान्दृष्ट्वा चित्रसेनोऽत्यमर्षणः
उत्पपातासनात्क्रुद्धो वधे तेषां समाहितः २१
ततो मायास्त्रमास्थाय युयुधे चित्रमार्गवित्
तयामुह्यन्त कौरव्याश्चित्रसेनस्य मायया २२
एकैको हि तदा योधो धार्तराष्ट्रस्य भारत
पर्यवर्तत गन्धर्वैर्दशभिर्दशभिः सह २३
ततः संपीड्यमानास्ते बलेन महता तदा
प्राद्रवन्त रणे भीता यत्र राजा युधिष्ठिरः २४
भज्यमानेष्वनीकेषु धार्तराष्ट्रेषु सर्वशः
कर्णो वैकर्तनो राजंस्तस्थौ गिरिरिवाचलः २५
दुर्योधनश्च कर्णश्च शकुनिश्चापि सौबलः
गन्धर्वान्योधयांचक्रुः समरे भृशविक्षताः २६
सर्व एव तु गन्धर्वाः शतशोऽथ सहस्रशः
जिघांसमानाः सहिताः कर्णमभ्यद्रवन्रणे २७
असिभिः पट्टिशैः शूलैर्गदाभिश्च महाबलाः
सूतपुत्रं जिघांसन्तः समन्तात्पर्यवारयन् २८
अन्येऽस्य युगमच्छिन्दन्ध्वजमन्ये न्यपातयन्
ईषामन्ये हयानन्ये सूतमन्ये न्यपातयन् २९
अन्ये छत्रं वरूथं च बन्धुरं च तथापरे
गन्धर्वा बहुसाहस्राः खण्डशोऽभ्यहनन्रथम् ३०

ततो रथादवप्लुत्य सूतपुत्रोऽसिचर्मभृत्
विकर्णरथमास्थाय मोक्षायाश्वानचोदयत् ३१
इति श्रीमहाभारते आरगयकपर्वणि त्रिंशदधिक द्विशततमोऽध्यायः २३०

## एकत्रिंशदधिकद्विशततमोऽध्यायः

वैशम्पायन उवाच
गन्धर्वैस्तु महाराज भग्ने कर्णे महारथे
संप्राद्रवच्चमूः सर्वा धार्तराष्ट्रस्य पश्यतः १
तान्दृष्ट्वा द्रवतः सर्वान्धार्तराष्ट्रान्पराङ्मुखान्
दुर्योधनो महाराज नासीत्तत्र पराङ्मुखः २
तामापतन्तीं संप्रेक्ष्य गन्धर्वाणां महाचमूम्
महता शरवर्षेण सोऽभ्यवर्षदरिंदमः ३
अचिन्त्य शरवर्षं तु गन्धर्वास्तस्य तं रथम्
दुर्योधनं जिघांसन्तः समन्तात्पर्यवारयन् ४
युगमीषां वरूथं च तथैव ध्वजसारथी
अश्वांस्त्रिवेणुं तल्पं च तिलशोऽभ्यहनन्रथम् ५
दुर्योधनं चित्रसेनो विरथं पतितं भुवि
अभिद्रुत्य महाबाहुर्जीवग्राहमथाग्रहीत् ६
तस्मिन्गृहीते राजेन्द्र स्थितं दुःशासनं रथे
पर्यगृह्णन्त गन्धर्वाः परिवार्य समन्ततः ७
विविंशतिं चित्रसेनमादायान्ये प्रदुद्रुवुः
विन्दानुविन्दावपरे राजदारांश्च सर्वशः ८
सैन्यास्तु धार्तराष्ट्रस्य गन्धर्वैः समभिद्रुताः
पूर्वं प्रभग्नैः सहिताः पाराडवानभ्ययुस्तदा ९
शकटापणवेश्याश्च यानयुग्यं च सर्वशः
शरणं पाराडवाञ्जग्मुर्ह्रियमाणे महीपतौ १०
प्रियदर्शनो महाबाहुर्धार्तराष्ट्रो महाबलः
गन्धर्वैर्ह्रियते राजा पार्थास्तमनुधावत ११
दुःशासनो दुर्विषहो दुर्मुखो दुर्जयस्तथा
बद्ध्वा ह्रियन्ते गन्धर्वै राजदाराश्च सर्वशः १२

इति दुर्योधनामात्याः क्रोशन्तो राजगृद्धिनः
आर्ता दीनस्वराः सर्वे युधिष्ठिरमुपागमन् १३
तांस्तथा व्यथितान्दीनान्भिक्षमाणान्युधिष्ठिरम्
वृद्धान्दुर्योधनामात्यान्भीमसेनोऽभ्यभाषत १४
अन्यथा वर्तमानानामर्थो जातोऽयमन्यथा
अस्माभिर्यदनुष्ठेयं गन्धर्वैस्तदनुष्ठितम् १५
दुर्मन्त्रितमिदं तात राज्ञो दुर्द्यूतदेविनः
द्वेष्टारमन्ये क्लीबस्य पातयन्तीति नः श्रुतम् १६
तदिदं कृतं नः प्रत्यक्षं गन्धर्वैरतिमानुषम्
दिष्ट्या लोके पुमानस्ति कश्चिदस्मत्प्रिये स्थितः
येनास्माकं हृतो भार आसीनानां सुखावहः १७
शीतवातातपसहांस्तपसा चैव कर्शितान्
समस्थो विषमस्थान्हि द्रष्टुमिच्छति दुर्मतिः १८
अधर्मचारिणस्तस्य कौरव्यस्य दुरात्मनः
ये शीलमनुवर्तन्ते ते पश्यन्ति पराभवम् १९
अधर्मो हि कृतस्तेन येनैतदुपशिक्षितम्
अनृशंसास्तु कौन्तेयास्तस्याध्यक्षान्ब्रवीमि वः २०
एवं ब्रुवाणं कौन्तेयं भीमसेनममर्षणम्
न कालः परुषस्यायमिति राजाभ्यभाषत २१
इति श्रीमहाभारते आरण्यकपर्वणि एकत्रिंशदधिक द्विशततमोऽध्यायः २३१

## द्वात्रिंशदधिक द्विशततमोऽध्यायः

युधिष्ठिर उवाच
अस्मानभिगतां स्तात भयार्ताञ्शरणैषिणः
कौरवान्विषमप्राप्तान्कथं ब्रूयास्त्वमीदृशम् १
भवन्ति भेदा ज्ञातीनां कलहाश्च वृकोदर
प्रसक्तानि च वैराणि ज्ञातिधर्मो न नश्यति २
यदा तु कश्चिज्ज्ञातीनां बाह्यः प्रार्थयते कुलम्
न मर्षयन्ति तत्सन्तो बाह्येनाभिप्रमर्षणम् ३
जानाति ह्येष दुर्बुद्धिरस्मानिह चिरोषितान्

स एष परिभूयास्मानकार्षीदिदमप्रियम् ४
दुर्योधनस्य ग्रहणाद्गन्धर्वेण बलाद्रणे
स्त्रीणां बाह्याभिमर्शाच्च हतं भवति नः कुलम् ५
शरणं च प्रपन्नानां त्राणार्थं च कुलस्य नः
उत्तिष्ठध्वं नरव्याघ्राः सज्जीभवत माचिरम् ६
अर्जुनश्च यमौ चैव त्वं च भीमापराजितः
मोक्षयध्वं धार्तराष्ट्रं ह्रियमाणं सुयोधनम् ७
एते रथा नरव्याघ्राः सर्वशस्त्रसमन्विताः
इन्द्रसेनादिभिः सूतैः संयताः कनकध्वजाः ८
एतानास्थाय वै तात गन्धर्वान्योद्धुमाहवे
सुयोधनस्य मोक्षाय प्रयतध्वमतन्द्रिताः ९
य एव कश्चिद्राजन्यः शरणार्थमिहागतम्
परं शक्त्याभिरक्षेत किं पुनस्त्वं वृकोदर १०
क इहान्यो भवेत्त्राणमभिधावेति चोदितः
प्राञ्जलिं शरणापन्नं दृष्ट्वा शत्रुमपि ध्रुवम् ११
वरप्रदानं राज्यं च पुत्रजन्म च पाण्डव
शत्रोश्च मोक्षणं क्लेशात्त्रीणि चैकं च तत्समम् १२
किं ह्यभ्यधिकमेतस्माद्यदापन्नः सुयोधनः
त्वद्बाहुबलमाश्रित्य जीवितं परिमार्गति १३
स्वयमेव प्रधावेयं यदि न स्याद्वृकोदर
विततोऽय क्रतुर्वीर न हि मेऽत्र विचारणा १४
साम्नैव तु यथा भीम मोक्षयेथाः सुयोधनम्
तथा सर्वैरुपायैस्त्वं यतेथाः कुरुनन्दन १५
न साम्ना प्रतिपद्येत यदि गन्धर्वराडसौ
पराक्रमेण मृदुना मोक्षयेथाः सुयोधनम् १६
अथासौ मृदुयुद्धेन न मुञ्चेद्भीम कौरवान्
सर्वोपायैर्विमोच्यास्ते निगृह्य परिपन्थिनः १७
एतावद्धि मया शक्यं संदेष्टुं वै वृकोदर
वैताने कर्मणि तते वर्तमाने च भारत १८
वैशम्पायन उवाच

अजातशत्रोर्वचनं तच्छ्रुत्वा तु धनञ्जयः
प्रतिजज्ञे गुरोर्वाक्यं कौरवाणां विमोक्षणम् १९
अर्जुन उवाच
यदि साम्ना न मोक्ष्यन्ति गन्धर्वा धृतराष्ट्रजान्
अद्य गन्धर्वराजस्य भूमिः पास्यति शोणितम् २०
वैशम्पायन उवाच
अर्जुनस्य तु तां श्रुत्वा प्रतिज्ञां सत्यवादिनः
कौरवाणां तदा राजन्पुनः प्रत्यागतं मनः २१
इति श्रीमहाभारते आरण्यकपर्वणि द्वात्रिंशदधिक द्विशततमोऽध्यायः २३२

त्रयस्त्रिंशदधिक द्विशततमोऽध्यायः

वैशम्पायन उवाच
युधिष्ठिरवचः श्रुत्वा भीमसेनपुरोगमाः
प्रहृष्टवदनाः सर्वे समुत्तस्थुर्नरर्षभाः १
अभेद्यानि ततः सर्वे समनह्यन्त भारत
जाम्बूनदविचित्राणि कवचानि महारथाः २
ते दंशिता रथैः सर्वे ध्वजिनः सशरासनाः
पाण्डवाः प्रत्यदृश्यन्त ज्वलिता इव पावकाः ३
तान्रथान्साधु संपन्नान्संयुक्ताञ्जवनैर्हयैः
आस्थाय रथशार्दूलाः शीघ्रमेव ययुस्ततः ४
ततः कौरवसैन्यानां प्रादुरासीन्महास्वनः
प्रयातान्सहितान्दृष्ट्वा पाण्डुपुत्रान्महारथान् ५
जितकाशिनश्च खचरास्त्वरिताश्च महारथाः
क्षणेनैव वने तस्मिन्समाजग्मुरभीतवत् ६
न्यवर्तन्त ततः सर्वे गन्धर्वा जितकाशिनः
दृष्ट्वा रथगतान्वीरान्पाण्डवांश्चतुरो रणे ७
तांस्तु विभ्राजतो दृष्ट्वा लोकपालानिवोद्यतान्
व्यूढानीका व्यतिष्ठन्त गन्धमादनवासिनः ८
राज्ञस्तु वचनं श्रुत्वा धर्मराजस्य धीमतः
क्रमेण मृदुना युद्धमुपक्रामन्त भारत ९

न तु गन्धर्वराजस्य सैनिका मन्दचेतसः
शक्यन्ते मृदुना श्रेयः प्रतिपादयितुं तदा १०
ततस्तान्युधि दुर्धर्षः सव्यसाची परंतपः
सान्त्वपूर्वमिदं वाक्यमुवाच खचरान्रणे ११
नैतद्गन्धर्वराजस्य युक्तं कर्म जुगुप्सितम्
परदाराभिमर्शश्च मानुषैश्च समागमः १२
उत्सृजध्वं महावीर्यान्धृतराष्ट्रसुतानिमान्
दारांश्चैषां विमुञ्चध्वं धर्मराजस्य शासनात् १३
एवमुक्तास्तु गन्धर्वाः पाराडवेन यशस्विना
उत्स्मयन्तस्तदा पार्थमिदं वचनमब्रुवन् १४
एकस्यैव वयं तात कुर्याम वचनं भुवि
यस्य शासनमाज्ञाय चराम विगतज्वराः १५
तेनैकेन यथादिष्टं तथा वर्ताम भारत
न शास्ता विद्यतेऽस्माकमन्यस्तस्मात्सुरेश्वरात् १६
एवमुक्तस्तु गन्धर्वैः कुन्तीपुत्रो धनंजयः
गन्धर्वान्पुनरेवेदं वचनं प्रत्यभाषत १७
यदि साम्ना न मोक्षध्वं गन्धर्वा धृतराष्ट्रजम्
मोक्षयिष्यामि विक्रम्य स्वयमेव सुयोधनम् १८
एवमुक्त्वा ततः पार्थः सव्यसाची धनंजयः
ससर्ज निशितान्बाणान्खचरान्खचरान्प्रति १९
तथैव शरवर्षेण गन्धर्वास्ते बलोत्कटाः
पाराडवानभ्यवर्तन्त पाराडवाश्च दिवौकसः २०
ततः सुतुमुलं युद्धं गन्धर्वाणां तरस्विनाम्
बभूव भीमवेगानां पाराडवानां च भारत २१
इति श्रीमहाभारते आरगयकपर्वणि त्रयस्त्रिंशदधिक द्विशततमोऽध्यायः
२३३

चतुस्त्रिंशदधिक द्विशततमोऽध्यायः

वैशम्पायन उवाच
ततो दिव्यास्त्रसंपन्ना गन्धर्वा हेममालिनः

विसृजन्तः शरान्दीप्तान्समन्तात्पर्यवारयन् १
चत्वारः पाण्डवा वीरा गन्धर्वाश्च सहस्रशः
रणे संन्यपतन्राजंस्तदद्भुतमिवाभवत् २
यथा कर्णस्य च रथो धार्तराष्ट्रस्य चोभयोः
गन्धर्वैः शतशश्छिन्नौ तथा तेषां प्रचक्रिरे ३
तान्समापततो राजन्गन्धर्वाञ्शतशो रणे
प्रत्यगृह्णन्नरव्याघ्राः शरवर्षैरनेकशः ४
अवकीर्यमाणाः खगमाः शरवर्षैः समन्ततः
न शेकुः पाण्डुपुत्राणां समीपे परिवर्तितुम् ५
अभिक्रुद्धानभिप्रेक्ष्य गन्धर्वानर्जुनस्तदा
लक्षयित्वाथ दिव्यानि महास्त्राण्युपचक्रमे ६
सहस्राणां सहस्रं स प्राहिणोद्यमसादनम्
आग्नेयेनार्जुनः संख्ये गन्धर्वाणां बलोत्कटः ७
तथा भीमो महेष्वासः संयुगे बलिनां वरः
गन्धर्वाञ्शतशो राजञ्जघान निशितैः शरैः ८
माद्रीपुत्रावपि तथा युध्यमानौ बलोत्कटौ
परिगृह्याग्रतो राजञ्जघ्नतुः शतशः परान् ९
ते वध्यमाना गन्धर्वा दिव्यैरस्त्रैर्महात्मभिः
उत्पेतुः खमुपादाय धृतराष्ट्रसुतांस्ततः १०
तानुत्पतिष्णून्बुद्ध्वा तु कुन्तीपुत्रो धनंजयः
महता शरजालेन समन्तात्पर्यवारयत् ११
ते बद्धाः शरजालेन शकुन्ता इव पञ्जरे
ववर्षुरर्जुनं क्रोधाद्गदाशक्त्यृष्टिवृष्टिभिः १२
गदाशक्त्यसिवृष्टीस्ता निहत्य स महास्त्रवित्
गात्राणि चाहनद्भल्लैर्गन्धर्वाणां धनंजयः १३
शिरोभिः प्रपतद्भिश्च चरणैर्बाहुभिस्तथा
अश्मवृष्टिरिवाभाति परेषामभवद्भयम् १४
ते वध्यमाना गन्धर्वाः पाण्डवेन महात्मना
भूमिष्ठमन्तरिक्षस्थाः शरवर्षैरवाकिरन् १५
तेषां तु शरवर्षाणि सव्यसाची परंतपः

अस्त्रैः संवार्य तेजस्वी गन्धर्वान्प्रत्यविध्यत १६
स्थूणाकर्णेन्द्रजालं च सौरं चापि तथार्जुनः
आग्नेयं चापि सौम्यं च ससर्ज कुरुनन्दनः १७
ते दह्यमाना गन्धर्वाः कुन्तीपुत्रस्य सायकैः
दैतेया इव शक्रेण विषादमगमन्परम् १८
ऊर्ध्वमाक्रममाणाश्च शरजालेन वारिताः
विसर्पमाणा भल्लैश्च वार्यन्ते सव्यसाचिना १९
गन्धर्वांस्त्रासितान्दृष्ट्वा कुन्तीपुत्रेण धीमता
चित्रसेनो गदां गृह्य सव्यसाचिनमाद्रवत् २०
तस्याभिपततस्तूर्णं गदाहस्तस्य संयुगे
गदां सर्वायसीं पार्थः शरैश्चिच्छेद सप्तधा २१
स गदां बहुधा दृष्ट्वा कृत्तां बाणैस्तरस्विना
संवृत्य विद्ययात्मानं योधयामास पाण्डवम्
अस्त्राणि तस्य दिव्यानि योधयामास खे स्थितः २२
गन्धर्वराजो बलवान्माययान्तर्हितस्तदा
अन्तर्हितं समालक्ष्य प्रहरन्तमथार्जुनः
ताडयामास खचरैर्दिव्यास्त्रप्रतिमन्त्रितैः २३
अन्तर्धानवधं चास्य चक्रे क्रुद्धोऽजुनस्तदा
शब्दवेध्यमुपाश्रित्य बहुरूपो धनंजयः २४
स वध्यमानस्तैरस्त्रैरर्जुनेन महात्मना
अथास्य दर्शयामास तदात्मानं प्रियः सखा २५
चित्रसेनमथालक्ष्य सखायं युधि दुर्बलम्
संजहारास्त्रमथ तत्प्रसृष्टं पाण्डवर्षभः २६
दृष्ट्वा तु पाण्डवाः सर्वे संहृतास्त्रं धनंजयम्
संजह्रुः प्रद्रुतानश्वाञ्शरवेगान्धनूंषि च २७
चित्रसेनश्च भीमश्च सव्यसाची यमावपि
पृष्ट्वा कौशलमन्योन्यं रथेष्वेवावतस्थिरे २८
इति श्रीमहाभारते आरण्यकपर्वणि चतुस्त्रिंशदधिक द्विशततमोऽध्यायः
२३४

पञ्चत्रिंशदधिक द्विशततमोऽध्यायः

वैशम्पायन उवाच
ततोऽर्जुनश्चित्रसेनं प्रहसन्निदमब्रवीत्
मध्ये गन्धर्वसैन्यानां महेष्वासो महाद्युतिः १
किं ते व्यवसितं वीर कौरवाणां विनिग्रहे
किमर्थं च सदारोऽय निगृहीतः सुयोधनः २
चित्रसेन उवाच
विदितोऽयमभिप्रायस्तत्रस्थेन महात्मना
दुर्योधनस्य पापस्य कर्णस्य च धनंजय ३
वनस्थान्भवतो ज्ञात्वा क्लिश्यमानाननर्हवत्
इमेऽवहसितुं प्राप्ता द्रौपदीं च यशस्विनीम् ४
ज्ञात्वा चिकीर्षितं चैषां मामुवाच सुरेश्वरः
गच्छ दुर्योधनं बद्ध्वा सामात्यं त्वमिहानय ५
धनंजयश्च ते रक्ष्यः सह भ्रातृभिराहवे
स हि प्रियः सखा तुभ्यं शिष्यश्च तव पाण्डवः ६
वचनाद्देवराजस्य ततोऽस्मीहागतो द्रुतम्
अयं दुरात्मा बद्धश्च गमिष्यामि सुरालयम् ७
अर्जुन उवाच
उत्सृज्यतां चित्रसेन भ्रातास्माकं सुयोधनः
धर्मराजस्य संदेशान्मम चेदिच्छसि प्रियम् ८
चित्रसेन उवाच
पापोऽय नित्यसंदुष्टो न विमोक्षणमर्हति
प्रलब्धा धर्मराजस्य कृष्णायाश्च धनंजय ९
नेदं चिकीर्षितं तस्य कुन्तीपुत्रो महाव्रतः
जानाति धर्मराजो हि श्रुत्वा कुरु यथेच्छसि १०
वैशम्पायन उवाच
ते सर्व एव राजानमभिजग्मुर्युधिष्ठिरम्
अभिगम्य च तत्सर्वं शशंसुस्तस्य दुष्कृतम् ११
अजातशत्रुस्तच्छ्रुत्वा गन्धर्वस्य वचस्तदा
मोक्षयामास तान्सर्वान्गन्धर्वान्प्रशशंस च १२

दिष्ट्या भवद्भिर्बलिभिः शक्तैः सर्वैर्न हिंसितः
दुर्वृत्तो धार्तराष्ट्रोऽय सामात्यज्ञातिबान्धवः १३
उपकारो महांस्तात कृतोऽय मम खेचराः
कुलं न परिभूतं मे मोक्षेणास्य दुरात्मनः १४
आज्ञापयध्वमिष्टानि प्रीयामो दर्शनेन वः
प्राप्य सर्वानभिप्रायांस्ततो व्रजत माचिरम् १५
अनुज्ञातास्तु गन्धर्वाः पागडुपुत्रेग धीमता
सहाप्सरोभिः संहृष्टाश्चित्रसेनमुखा ययुः १६
देवराडपि गन्धर्वान्मृतांस्तान्समजीवयत्
दिव्येनामृतवर्षेण ये हताः कौरवैर्युधि १७
ज्ञातींस्तानवमुच्याथ राजदारांश्च सर्वशः
कृत्वा च दुष्करं कर्म प्रीतियुक्ताश्च पागडवाः १८
सस्त्रीकुमारैः कुरुभिः पूज्यमाना महारथाः
बभ्राजिरे महात्मानः कुरुमध्ये यथाग्नयः १९
ततो दुर्योधनं मुच्य भ्रातृभिः सहितं तदा
युधिष्ठिरः सप्रणयमिदं वचनमब्रवीत् २०
मा स्म तात पुनः कार्षीरीदृशं साहसं क्वचित्
न हि साहसकर्तारः सुखमेधन्ति भारत २१
स्वस्तिमान्सहितः सर्वैर्भ्रातृभिः कुरुनन्दन
गृहान्व्रज यथाकामं वैमनस्यं च मा कृथाः २२
पागडवेनाभ्यनुज्ञातो राजा दुर्योधनस्तदा
विदीर्यमाणो व्रीडेन जगाम नगरं प्रति २३
तस्मिन्गते कौरवेये कुन्तीपुत्रो युधिष्ठिरः
भ्रातृभिः सहितो वीरः पूज्यमानो द्विजातिभिः २४
तपोधनैश्च तैः सर्वैर्वृतः शक्र इवामरैः
वने द्वैतवने तस्मिन्विजहार मुदा युतः २५
इति श्रीमहाभारते आरगयकपर्वणि पञ्चत्रिंशदधिक द्विशततमोऽध्यायः २३५

## षट्त्रिंशदधिक द्विशततमोऽध्यायः

जनमेजय उवाच

शत्रुभिर्जितबद्धस्य पाण्डवैश्च महात्मभिः
मोक्षितस्य युधा पश्चान्मानस्थस्य दुरात्मनः १
कत्थनस्यावलिप्तस्य गर्वितस्य च नित्यशः
सदा च पौरुषौदार्यैः पाण्डवानवमन्यतः २
दुर्योधनस्य पापस्य नित्याहङ्कारवादिनः
प्रवेशो हास्तिनपुरे दुष्करः प्रतिभाति मे ३
तस्य लज्जान्वितस्यैव शोकव्याकुलचेतसः
प्रवेशं विस्तरेण त्वं वैशम्पायन कीर्तय ४
वैशम्पायन उवाच
धर्मराजनिसृष्टस्तु धार्तराष्ट्रः सुयोधनः
लज्जयाधोमुखः सीदन्नुपासर्पत्सुदुःखितः ५
स्वपुरं प्रययौ राजा चतुरङ्गबलानुगः
शोकोपहतया बुद्ध्या चिन्तयानः पराभवम् ६
विमुच्य पथि यानानि देशे सुयवसोदके
संनिविष्टः शुभे रम्ये भूमिभागे यथेप्सितम्
हस्त्यश्वरथपादातं यथास्थानं न्यवेशयत् ७
अथोपविष्टं राजानं पर्यङ्के ज्वलनप्रभे
उपप्लुतं यथा सोमं राहुणा रात्रिसंक्षये
उपगम्याब्रवीत्कर्णो दुर्योधनमिदं तदा ८
दिष्ट्या जीवसि गान्धारे दिष्ट्या नः सङ्गमः पुनः
दिष्ट्या त्वया जिताश्चैव गन्धर्वाः कामरूपिणः ९
दिष्ट्या समग्रान्पश्यामि भ्रातृंस्ते कुरुनन्दन
विजिगीषून्रणान्मुक्तान्निर्जितारीन्महारथान् १०
अहं त्वभिद्रुतः सर्वैर्गन्धर्वैः पश्यतस्तव
नाशक्नुवं स्थापयितुं दीर्यमाणां स्ववाहिनीम् ११
शरक्षताङ्गश्च भृशं व्यपयातोऽभिपीडितः
इदं त्वत्यद्भुतं मन्ये यद्युष्मानिह भारत १२
अरिष्टानक्षतांश्चापि सदारधनवाहनान्
विमुक्तान्संप्रपश्यामि तस्माद्युद्धादमानुषात् १३
नैतस्य कर्ता लोकेऽस्मिन्पुमान्विद्येत भारत

यत्कृतं ते महाराज सह भ्रातृभिराहवे १४
एवमुक्तस्तु कर्णेन राजा दुर्योधनस्तदा
उवाचावाक्शिरा राजन्बाष्पगद्गदया गिरा १५
इति श्रीमहाभारते आरगयकपर्वणि षट्त्रिंशदधिक द्विशततमोऽध्यायः २३६

## सप्तत्रिंशदधिक द्विशततमोऽध्यायः

दुर्योधन उवाच
अजानतस्ते राधेय नाभ्यसूयाम्यहं वचः
जानासि त्वं जिताञ्शत्रून्गन्धर्वांस्तेजसा मया १
आयोधितास्तु गन्धर्वाः सुचिरं सोदरैर्मम
मया सह महाबाहो कृतश्चोभयतः क्षयः २
मायाधिकास्त्वयुध्यन्त यदा शूरा वियद्गताः
तदा नो नसमं युद्धमभवत्सह खेचरैः ३
पराजयं च प्राप्ताः स्म रणे बन्धनमेव च
सभृत्यामात्यपुत्राश्च सदारधनवाहनाः
उच्चैराकाशमार्गेण ह्रियामस्तैः सुदुःखिताः ४
अथ नः सैनिकाः केचिदमात्याश्च महारथान्
उपगम्याब्रुवन्दीनाः पाण्डवाञ्शरणप्रदान् ५
एष दुर्योधनो राजा धार्तराष्ट्रः सहानुजः
सामात्यदारो ह्रियते गन्धर्वैर्दिवमास्थितैः ६
तं मोक्षयत भद्रं वः सहदारं नराधिपम्
परामर्शो मा भविष्यत्कुरुदारेषु सर्वशः ७
एवमुक्ते तु धर्मात्मा ज्येष्ठः पाण्डुसुतस्तदा
प्रसाद्य सोदरान्सर्वानाज्ञापयत मोक्षणे ८
अथागम्य तमुद्देशं पाण्डवाः पुरुषर्षभाः
सान्त्वपूर्वमयाचन्त शक्ताः सन्तो महारथाः ९
यदा चास्मान्न मुमुचुर्गन्धर्वाः सान्त्विता अपि
ततोऽर्जुनश्च भीमश्च यमजौ च बलोत्कटौ
मुमुचुः शरवर्षाणि गन्धर्वान्प्रत्यनेकशः १०
अथ सर्वे रणं मुक्त्वा प्रयाताः खचरा दिवम्

अस्मानेवाभिकर्षन्तो दीनान्मुदितमानसाः ११
ततः समन्तात्पश्यामि शरजालेन वेष्टितम्
अमानुषाणि चास्त्राणि प्रयुञ्जानं धनंजयम् १२
समावृता दिशो दृष्ट्वा पाण्डवेन शितैः शरैः
धनञ्जयसखात्मानं दर्शयामास वै तदा १३
चित्रसेनः पाण्डवेन समाश्लिष्य परंतपः
कुशलं परिपप्रच्छ तैः पृष्टश्चाप्यनामयम् १४
ते समेत्य तथान्योन्यं संनाहान्विप्रमुच्य च
एकीभूतास्ततो वीरा गन्धर्वाः सह पाण्डवैः
अपूजयेतामन्योन्यं चित्रसेनधनंजयौ १५
इति श्रीमहाभारते आरण्यकपर्वणि सप्तत्रिंशदधिक द्विशततमोऽध्यायः २३७

## अष्टात्रिंशदधिक द्विशततमोऽध्यायः

दुर्योधन उवाच
चित्रसेनं समागम्य प्रहसन्नर्जुनस्तदा
इदं वचनमक्लीबमब्रवीत्परवीरहा १
भ्रातॄनर्हसि नो वीर मोक्तुं गन्धर्वसत्तम
अनर्हा धर्षणं हीमे जीवमानेषु पाण्डुषु २
एवमुक्तस्तु गन्धर्वः पाण्डवेन महात्मना
उवाच यत्कर्ण वयं मन्त्रयन्तो विनिर्गताः
द्रष्टारः स्म सुखाद्धीनान्सदारान्पाण्डवानिति ३
तस्मिन्नुच्चार्यमाणे तु गन्धर्वेण वचस्यथ
भूमेर्विवरमन्वैच्छं प्रवेष्टुं व्रीडयान्वितः ४
युधिष्ठिरमथागम्य गन्धर्वाः सह पाण्डवैः
अस्मद्दुर्मन्त्रितं तस्मै बद्धांश्चास्मान्न्यवेदयन् ५
स्त्रीसमक्षमहं दीनो बद्धः शत्रुवशं गतः
युधिष्ठिरस्योपहृतः किं नु दुःखमतः परम् ६
ये मे निराकृता नित्यं रिपुर्येषामहं सदा
तैर्मोक्षितोऽह दुर्बुद्धिर्दत्तं तैर्जीवितं च मे ७
प्राप्तः स्यां यद्यहं वीर वधं तस्मिन्महारणे

श्रेयस्तद्भविता मह्यमेवंभूतं न जीवितम् ८
भवेद्यशः पृथिव्यां मे ख्यातं गन्धर्वतो वधात्
प्राप्ताश्च लोकाः पुरायाः स्युर्महेन्द्रसदनेऽक्षयाः ९
यत्त्वद्य मे व्यवसितं तच्छृणुध्वं नरर्षभाः
इह प्रायमुपासिष्ये यूयं व्रजत वै गृहान्
भ्रातरश्चैव मे सर्वे प्रयान्त्वद्य पुरं प्रति १०
कर्णप्रभृतयश्चैव सुहृदो बान्धवाश्च ये
दुःशासनं पुरस्कृत्य प्रयान्त्वद्य पुरं प्रति ११
न ह्यहं प्रतियास्यामि पुरं शत्रुनिराकृतः
शत्रुमानापहो भूत्वा सुहृदां मानकृत्तथा १२
स सुहृच्छोकदो भूत्वा शत्रूणां हर्षवर्धनः
वारणाह्वयमासाद्य किं वक्ष्यामि जनाधिपम् १३
भीष्मो द्रोणः कृपो द्रौणिर्विदुरः सञ्जयस्तथा
बाह्लीकः सोमदत्तश्च ये चान्ये वृद्धसंमताः १४
ब्राह्मणाः श्रेणिमुख्याश्च तथोदासीनवृत्तयः
किं मां वक्ष्यन्ति किं चापि प्रतिवक्ष्यामि तानहम् १५
रिपूणां शिरसि स्थित्वा तथा विक्रम्य चोरसि
आत्मदोषात्परिभ्रष्टः कथं वक्ष्यामि तानहम् १६
दुर्विनीताः श्रियं प्राप्य विद्यामैश्वर्यमेव च
तिष्ठन्ति न चिरं भद्रे यथाहं मदगर्वितः १७
अहो बत यथेदं मे कष्टं दुश्चरितं कृतम्
स्वयं दुर्बुद्धिना मोहाद्येन प्राप्तोऽस्मि संशयम् १८
तस्मात्प्रायमुपासिष्ये न हि शक्ष्यामि जीवितुम्
चेतयानो हि को जीवेत्कृच्छ्राच्छत्रुभिरुद्धृतः १९
शत्रुभिश्चावहसितो मानी पौरुषवर्जितः
पाराडवैर्विक्रमाढ्यैश्च सावमानमवेक्षितः २०
वैशम्पायन उवाच
एवं चिन्तापरिगतो दुःशासनमथाब्रवीत्
दुःशासन निबोधेदं वचनं मम भारत २१
प्रतीच्छ त्वं मया दत्तमभिषेकं नृपो भव

प्रशाधि पृथिवीं स्फीतां कर्णसौबलपालिताम् २२
भ्रातॄन्पालय विस्रब्धं मरुतो वृत्रहा यथा
बान्धवास्त्वोपजीवन्तु देवा इव शतक्रतुम् २३
ब्राह्मणेषु सदा वृत्तिं कुर्वीथाश्चाप्रमादतः
बन्धूनां सुहृदां चैव भवेथास्त्वं गतिः सदा २४
ज्ञातींश्चाप्यनुपश्येथा विष्णुर्देवगणानिव
गुरवः पालनीयास्ते गच्छ पालय मेदिनीम् २५
नन्दयन्सुहृदः सर्वाञ्शात्रवांश्चावभर्त्सयन्
कण्ठे चैनं परिष्वज्य गम्यतामित्युवाच ह २६
तस्य तद्वचनं श्रुत्वा दीनो दुःशासनोऽब्रवीत्
अश्रुकण्ठः सुदुःखार्तः प्राञ्जलि प्रणिपत्य च
सगद्गदमिदं वाक्यं भ्रातरं ज्येष्ठमात्मनः २७
प्रसीदेत्यपतद्भूमौ दूयमानेन चेतसा
दुःखितः पादयोस्तस्य नेत्रजं जलमुत्सृजन् २८
उक्तवांश्च नरव्याघ्रो नैतदेवं भविष्यति
विदीर्येत्सनगा भूमिर्द्यौश्चापि शकलीभवेत्
रविरात्मप्रभां जह्यात्सोमः शीतांशुतां त्यजेत् २९
वायुः शैघ्र्यमथो जह्याद्धिमवांश्च परिव्रजेत्
शुष्येत्तोयं समुद्रेषु वह्निरप्युष्णतां त्यजेत् ३०
न चाहं त्वदृते राजन्प्रशासेयं वसुन्धराम्
पुनः पुनः प्रसीदेति वाक्यं चेदमुवाच ह
त्वमेव नः कुले राजा भविष्यसि शतं समाः ३१
एवमुक्त्वा स राजेन्द्र सस्वनं प्ररुरोद ह
पादौ संगृह्य मानार्हौ भ्रातुर्ज्येष्ठस्य भारत ३२
तथा तौ दुःखितौ दृष्ट्वा दुःशासनसुयोधनौ
अभिगम्य व्यथाविष्टः कर्णस्तौ प्रत्यभाषत ३३
विषीदथः किं कौरव्यौ बालिश्यात्प्राकृताविव
न शोकः शोचमानस्य विनिवर्तेत कस्यचित् ३४
यदा च शोचतः शोको व्यसनं नापकर्षति
सामर्थ्यं किं त्वतः शोके शोचमानौ प्रपश्यथः

धृतिं गृह्णीत मा शत्रूञ्शोचन्तौ नन्दयिष्यथः ३५
कर्तव्यं किं कृतं राजन्पाण्डवैस्तव मोक्षणम्
नित्यमेव प्रियं कार्यं राज्ञो विषयवासिभिः
पाल्यमानास्त्वया ते हि निवसन्ति गतज्वराः ३६
नार्हस्येवंगते मन्युं कर्तुं प्राकृतवद्यथा
विषण्णास्तव सोदर्यास्त्वयि प्रायं समास्थिते
उत्तिष्ठ व्रज भद्रं ते समाश्वासय सोदरान् ३७
राजन्नद्यावगच्छामि तवेह लघुसत्त्वताम्
किमत्र चित्रं यद्वीर मोक्षितः पाण्डवैरसि
सद्यो वशं समापन्नः शत्रूणां शत्रुकर्शन ३८
सेनाजीवैश्च कौरव्य तथा विषयवासिभिः
अज्ञातैर्यदि वा ज्ञातैः कर्तव्यं नृपतेः प्रियम् ३९
प्रायः प्रधानाः पुरुषाः क्षोभयन्त्यरिवाहिनीम्
निगृह्यन्ते च युद्धेषु मोक्ष्यन्ते वै स्वसैनिकैः ४०
सेनाजीवाश्च ये राज्ञां विषये सन्ति मानवाः
तैः सङ्गम्य नृपार्थाय यतितव्यं यथातथम् ४१
यद्येवं पाण्डवै राजन्भवद्विषयवासिभिः
यदृच्छया मोक्षितोऽद्य तत्र का परिदेवना ४२
न चैतत्साधु यद्राजन्पाण्डवास्त्वां नृपोत्तम
स्वसेनया संप्रयान्तं नानुयान्ति स्म पृष्ठतः ४३
शूराश्च बलवन्तश्च संयुगेष्वपलायिनः
भवतस्ते सभायां वै प्रेष्यतां पूर्वमागताः ४४
पाण्डवेयानि रत्नानि त्वमद्याप्युपभुञ्जसे
सत्त्वस्थान्पाण्डवान्पश्य न ते प्रायमुपाविशन्
उत्तिष्ठ राजन्भद्रं ते न चिन्तां कर्तुमर्हसि ४५
अवश्यमेव नृपते राज्ञो विषयवासिभिः
प्रियाण्याचरितव्यानि तत्र का परिदेवना ४६
मद्वाक्यमेतद्राजेन्द्र यद्येवं न करिष्यसि
स्थास्यामीह भवत्पादौ शुश्रूषन्नरिमर्दन ४७
नोत्सहे जीवितुमहं त्वद्विहीनो नरर्षभ

प्रायोपविष्टस्तु नृप राज्ञां हास्यो भविष्यसि ४८
वैशम्पायन उवाच
एवमुक्तस्तु कर्णेन राजा दुर्योधनस्तदा
नैवोत्थातुं मनश्चक्रे स्वर्गाय कृतनिश्चयः ४९
इति श्रीमहाभारते आरण्यकपर्वणि अष्टात्रिंशदधिक द्विशततमोऽध्यायः
२३८

एकोनचत्वारिंशदधिक द्विशततमोऽध्यायः
वैशम्पायन उवाच
प्रायोपविष्टं राजानं दुर्योधनममर्षणम्
उवाच सान्त्वयन्राजञ्शकुनिः सौबलस्तदा १
सम्यगुक्तं हि कर्णेन तच्छ्रुतं कौरव त्वया
मयाहृतां श्रियं स्फीतां मोहात्समपहाय किम्
त्वमबुद्ध्या नृपवर प्राणानुत्स्रष्टुमिच्छसि २
अद्य चाप्यवगच्छामि न वृद्धाः सेवितास्त्वया
यः समुत्पतितं हर्षं दैन्यं वा न नियच्छति
स नश्यति श्रियं प्राप्य पात्रमाममिवाम्भसि ३
अतिभीरुमतिक्लीबं दीर्घसूत्रं प्रमादिनम्
व्यसनाद्विषयाक्रान्तं न भजन्ति नृपं श्रियः ४
सत्कृतस्य हि ते शोको विपरीते कथं भवेत्
मा कृतं शोभनं पार्थैः शोकमालम्ब्य नाशय ५
यत्र हर्षस्त्वया कार्यः सत्कर्तव्याश्च पाण्डवाः
तत्र शोचसि राजेन्द्र विपरीतमिदं तव ६
प्रसीद मा त्यजात्मानं तुष्टश्च सुकृतं स्मर
प्रयच्छ राज्यं पार्थानां यशो धर्ममवाप्नुहि ७
क्रियामेतां समाज्ञाय कृतघ्नो न भविष्यसि
सौभ्रात्रं पाण्डवैः कृत्वा समवस्थाप्य चैव तान्
पित्र्यं राज्यं प्रयच्छैषां ततः सुखमवाप्नुहि ८
शकुनेस्तु वचः श्रुत्वा दुःशासनमवेक्ष्य च
पादयोः पतितं वीरं विक्लवं भ्रातृसौहृदात् ९

बाहुभ्यां साधुजाताभ्यां दुःशासनमरिंदमम्
उत्थाप्य संपरिष्वज्य प्रीत्याजिघ्रत मूर्धनि १०
कर्णसौबलयोश्चापि संस्मृत्य वचनान्यसौ
निर्वेदं परमं गत्वा राजा दुर्योधनस्तदा
व्रीडयाभिपरीतात्मा नैराश्यमगमत्परम् ११
सुहृदां चैव तच्छ्रुत्वा समन्युरिदमब्रवीत्
न धर्मधनसौख्येन नैश्वर्येण न चाज्ञया
नैव भोगैश्च मे कार्यं मा विहन्यत गच्छत १२
निश्चितेयं मम मतिः स्थिता प्रायोपवेशने
गच्छध्वं नगरं सर्वे पूज्याश्च गुरवो मम १३
त एवमुक्ताः प्रत्यूचू राजानमरिमर्दनम्
या गतिस्तव राजेन्द्र सास्माकमपि भारत
कथं वा संप्रवेक्ष्यामस्त्वद्विहीनाः पुरं वयम् १४
स सुहृद्भिरमात्यैश्च भ्रातृभिः स्वजनेन च
बहुप्रकारमप्युक्तो निश्चयान्न व्यचाल्यत १५
दर्भप्रस्तरमास्तीर्य निश्चयाद्धृतराष्ट्रजः
संस्पृश्यापः शुचिर्भूत्वा भूतलं समुपाश्रितः १६
कुशचीराम्बरधरः परं नियममास्थितः
वाग्यतो राजशार्दूलः स स्वर्गगतिकाङ्क्षया
मनसोपचितिं कृत्वा निरस्य च बहिष्क्रियाः १७
अथ तं निश्चयं तस्य बुद्ध्वा दैतेयदानवाः
पातालवासिनो रौद्राः पूर्वं देवैर्विनिर्जिताः १८
ते स्वपक्षक्षयं तं तु ज्ञात्वा दुर्योधनस्य वै
आह्वानाय तदा चक्रुः कर्म वैतानसंभवम् १९
बृहस्पत्युशनोक्तैश्च मन्त्रैर्मन्त्रविशारदाः
अथर्ववेदप्रोक्तैश्च याश्चोपनिषदि क्रियाः
मन्त्रजप्यसमायुक्तास्तास्तदा समवर्तयन् २०
जुह्वत्यग्नौ हविः क्षीरं मन्त्रवत्सुसमाहिताः
ब्राह्मणा वेदवेदाङ्गपारगाः सुदृढव्रताः २१
कर्मसिद्धौ तदा तत्र जृम्भमाणा महाद्भुता

कृत्या समुत्थिता राजन्किं करोमीति चाब्रवीत् २२
आहुर्दैत्याश्च तां तत्र सुप्रीतेनान्तरात्मना
प्रायोपविष्टं राजानं धार्तराष्ट्रमिहानय २३
तथेति च प्रतिश्रुत्य सा कृत्या प्रययौ तदा
निमेषादगमच्चापि यत्र राजा सुयोधनः २४
समादाय च राजानं प्रविवेश रसातलम्
दानवानां मुहूर्ताच्च तमानीतं न्यवेदयत् २५
तमानीतं नृपं दृष्ट्वा रात्रौ संहत्य दानवाः
प्रहृष्टमनसः सर्वे किंचिदुत्फुल्ललोचनाः
साभिमानमिदं वाक्यं दुर्योधनमथाब्रुवन् २६
इति श्रीमहाभारते आरण्यकपर्वणि एकोनचत्वारिंशदधिक
द्विशततमोऽध्यायः २३९

## चत्वारिंशदधिक द्विशततमोऽध्यायः

दानवा ऊचुः
भोः सुयोधन राजेन्द्र भरतानां कुलोद्वह
शूरैः परिवृतो नित्यं तथैव च महात्मभिः १
अकार्षीः साहसमिदं कस्मात्प्रायोपवेशनम्
आत्मत्यागी ह्यवाग्याति वाच्यतां चायशस्करीम् २
न हि कार्यविरुद्धेषु बाह्वपायेषु कर्मसु
मूलघातिषु सज्जन्ते बुद्धिमन्तो भवद्विधाः ३
नियच्छैतां मतिं राजन्धर्मार्थसुखनाशिनीम्
यशःप्रतापधैर्यघ्नीं शत्रूणां हर्षवर्धनीम् ४
श्रूयतां च प्रभो तत्त्वं दिव्यतां चात्मनो नृप
निर्माणं च शरीरस्य ततो धैर्यमवाप्नुहि ५
पुरा त्वं तपसास्माभिर्लब्धो देवान्महेश्वरात्
पूर्वकायश्च सर्वस्ते निर्मितो वज्रसंचयैः ६
अस्त्रैरभेद्यः शस्त्रैश्चाप्यधःकायश्च तेऽनघ
कृतः पुष्पमयो देव्या रूपतः स्त्रीमनोहरः ७
एवमीश्वरसंयुक्तस्तव देहो नृपोत्तम

देव्या च राजशार्दूल दिव्यस्त्वं हि न मानुषः ८
क्षत्रियाश्च महावीर्या भगदत्तपुरोगमाः
दिव्यास्त्रविदुषः शूराः क्षपयिष्यन्ति ते रिपून् ९
तदलं ते विषादेन भयं तव न विद्यते
साह्यार्थं च हि ते वीराः संभूता भुवि दानवाः १०
भीष्मद्रोणकृपादींश्च प्रवेक्ष्यन्त्यपरेऽसुराः
यैराविष्टा घृणां त्यक्त्वा योत्स्यन्ते तव वैरिभिः ११
नैव पुत्रान्न च भ्रातॄन्न पितॄन्न च बान्धवान्
नैव शिष्यान्न च ज्ञातीन्न बालान्स्थविरान्न च १२
युधि संप्रहरिष्यन्तो मोक्ष्यन्ति कुरुसत्तम
निःस्नेहा दानवाविष्टाः समाक्रान्तेऽन्तरात्मनि १३
प्रहरिष्यन्ति बन्धुभ्यः स्नेहमुत्सृज्य दूरतः
हृष्टाः पुरुषशार्दूलाः कलुषीकृतमानसाः
अविज्ञानविमूढाश्च दैवाच्च विधिनिर्मितात् १४
व्याभाषमाणाश्चान्योन्यं न मे जीवन्विमोक्ष्यसे
सर्वशस्त्रास्त्रमोक्षेण पौरुषे समवस्थिताः
श्लाघमानाः कुरुश्रेष्ठ करिष्यन्ति जनक्षयम् १५
तेऽपि शक्त्या महात्मानः प्रतियोत्स्यन्ति पाणडवाः
वधं चैषां करिष्यन्ति दैवयुक्ता महाबलाः १६
दैत्यरक्षोगणाश्चापि संभूताः क्षत्रयोनिषु
योत्स्यन्ति युधि विक्रम्य शत्रुभिस्तव पार्थिव
गदाभिर्मुसलैः खड्गैः शस्त्रैरुच्चावचैस्तथा १७
यच्च तेऽन्तर्गतं वीर भयमर्जुनसंभवम्
तत्रापि विहितोऽस्माभिर्वधोपायोऽर्जुनस्य वै १८
हतस्य नरकस्यात्मा कर्णमूर्तिमुपाश्रितः
तद्वैरं संस्मरन्वीर योत्स्यते केशवार्जुनौ १९
स ते विक्रमशौणडीरो रणे पार्थं विजेष्यति
कर्णः प्रहरतां श्रेष्ठः सर्वांश्चारीन्महारथः २०
ज्ञात्वैतच्छद्मना वज्री रक्षार्थं सव्यसाचिनः
कुणडले कवचं चैव कर्णस्यापहरिष्यति २१

तस्मादस्माभिरप्यत्र दैत्याः शतसहस्रशः
नियुक्ता राक्षसाश्चैव ये ते संशप्तका इति
प्रख्यातास्तेऽर्जुनं वीरं निहनिष्यन्ति मा शुचः २२
असपत्ना त्वया हीयं भोक्तव्या वसुधा नृप
मा विषादं नयस्वास्मान्नैतत्त्वय्युपपद्यते
विनष्टे त्वयि चास्माकं पक्षो हीयेत कौरव २३
गच्छ वीर न ते बुद्धिरन्या कार्या कथंचन
त्वमस्माकं गतिर्नित्यं देवतानां च पाण्डवाः २४
वैशम्पायन उवाच
एवमुक्त्वा परिष्वज्य दैत्यास्तं राजकुञ्जरम्
समाश्वास्य च दुर्धर्षं पुत्रवद्दानवर्षभाः २५
स्थिरां कृत्वा बुद्धिमस्य प्रियाण्युक्त्वा च भारत
गम्यतामित्यनुज्ञाय जयमाप्नुहि चेत्यथ २६
तैर्विसृष्टं महाबाहुं कृत्या सैवानयत्पुनः
तमेव देशं यत्रासौ तदा प्रायमुपाविशत् २७
प्रतिनिक्षिप्य तं वीरं कृत्या समभिपूज्य च
अनुज्ञाता च राज्ञा सा तत्रैवान्तरधीयत २८
गतायामथ तस्यां तु राजा दुर्योधनस्तदा
स्वप्नभूतमिदं सर्वमचिन्तयत भारत
विजेष्यामि रणे पाण्डूनिति तस्याभवन्मतिः २९
कर्णं संशप्तकांश्चैव पार्थस्यामित्रघातिनः
अमन्यत वधे युक्तान्समर्थांश्च सुयोधनः ३०
एवमाशा दृढा तस्य धार्तराष्ट्रस्य दुर्मतेः
विनिर्जये पाण्डवानामभवद्भरतर्षभ ३१
कर्णोऽप्याविष्टचित्तात्मा नरकस्यान्तरात्मना
अर्जुनस्य वधे क्रूरामकरोत्स मतिं तदा ३२
संशप्तकाश्च ते वीरा राक्षसाविष्टचेतसः
रजस्तमोभ्यामाक्रान्ताः फल्गुनस्य वधैषिणः ३३
भीष्मद्रोणकृपाद्याश्च दानवाक्रान्तचेतसः
न तथा पाण्डुपुत्राणां स्नेहवन्तो विशां पते

न चाचचक्षे कस्मैचिदेतद्राजा सुयोधनः ३४
दुर्योधनं निशान्ते च कर्णो वैकर्तनोऽब्रवीत्
स्मयन्निवाञ्जलिं कृत्वा पार्थिवं हेतुमद्वचः ३५
न मृतो जयते शत्रूञ्जीवन्भद्राणि पश्यति
मृतस्य भद्राणि कुतः कौरवेय कुतो जयः
न कालोऽद्य विषादस्य भयस्य मरणस्य वा ३६
परिष्वज्याब्रवीच्चैनं भुजाभ्यां स महाभुजः
उत्तिष्ठ राजन्किं शेषे कस्माच्छोचसि शत्रुहन्
शत्रून्प्रताप्य वीर्येण स कथं मर्तुमिच्छसि ३७
अथ वा ते भयं जातं दृष्ट्वार्जुनपराक्रमम्
सत्यं ते प्रतिजानामि वधिष्यामि रणेऽर्जुनम् ३८
गते त्रयोदशे वर्षे सत्येनायुधमालभे
आनयिष्याम्यहं पार्थान्वशं तव जनाधिप ३९
एवमुक्तस्तु कर्णेन दैत्यानां वचनात्तथा
प्रणिपातेन चान्येषामुदतिष्ठत्सुयोधनः
दैत्यानां तद्वचः श्रुत्वा हृदि कृत्वा स्थिरां मतिम् ४०
ततो मनुजशार्दूलो योजयामास वाहिनीम्
रथनागाश्वकलिलां पदातिजनसंकुलाम् ४१
गङ्गौघप्रतिमा राजन्प्रयाता सा महाचमूः
श्वेतच्छत्रैः पताकाभिश्चामरैश्च सुपाण्डुरैः ४२
रथैर्नागैः पदातैश्च शुशुभेऽतीव संकुला
व्यपेताभ्रघने काले द्यौरिवाव्यक्तशारदी ४३
जयाशीर्भिर्द्विजेन्द्रैस्तु स्तूयमानोऽधिराजवत्
गृह्णन्नञ्जलिमालाश्च धार्तराष्ट्रो जनाधिपः ४४
सुयोधनो ययावग्रे श्रिया परमया ज्वलन्
कर्णेन सार्धं राजेन्द्र सौबलेन च देविना ४५
दुःशासनादयश्चास्य भ्रातरः सर्व एव ते
भूरिश्रवाः सोमदत्तो महाराजश्च बाह्लिकः ४६
रथैर्नानाविधाकारैर्हयैर्गजवरैस्तथा
प्रयान्तं नृपसिंहं तमनुजग्मुः कुरूद्वहाः

कालेनाल्पेन राजंस्ते विविशुः स्वपुरं तदा ४७
इति श्रीमहाभारते आरण्यकपर्वणि चत्वारिंशदधिक द्विशततमोऽध्यायः
२४०

## एक चत्वारिंशदधिक द्विशततमोऽध्यायः

जनमेजय उवाच
वसमानेषु पार्थेषु वने तस्मिन्महात्मसु
धार्तराष्ट्रा महेष्वासाः किमकुर्वन्त सत्तम १
कर्णो वैकर्तनश्चापि शकुनिश्च महाबलः
भीष्मद्रोणकृपाश्चैव तन्मे शंसितुमर्हसि २
वैशम्पायन उवाच
एवं गतेषु पार्थेषु विसृष्टे च सुयोधने
आगते हास्तिनपुरं मोक्षिते पाण्डुनन्दनैः
भीष्मोऽब्रवीन्महाराज धार्तराष्ट्रमिदं वचः ३
उक्तं तात मया पूर्वं गच्छतस्ते तपोवनम्
गमनं मे न रुचितं तव तन्न कृतं च ते ४
ततः प्राप्तं त्वया वीर ग्रहणं शत्रुभिर्बलात्
मोक्षितश्चासि धर्मज्ञैः पाण्डवैर्न च लज्जसे ५
प्रत्यक्षं तव गान्धारे ससैन्यस्य विशां पते
सूतपुत्रोऽपयाद्भीतो गन्धर्वाणां तदा रणात्
क्रोशतस्तव राजेन्द्र ससैन्यस्य नृपात्मज ६
दृष्टस्ते विक्रमश्चैव पाण्डवानां महात्मनाम्
कर्णस्य च महाबाहो सूतपुत्रस्य दुर्मतेः ७
न चापि पादभाक्कर्णः पाण्डवानां नृपोत्तम
धनुर्वेदे च शौर्ये च धर्मे वा धर्मवत्सल ८
तस्य तेऽह क्षमं मन्ये पाण्डवैस्तैर्महात्मभिः
संधिं संधिविदां श्रेष्ठ कुलस्यास्य विवृद्धये ९
एवमुक्तस्तु भीष्मेण धार्तराष्ट्रो जनेश्वरः
प्रहस्य सहसा राजन्विप्रतस्थे ससौबलः १०
तं तु प्रस्थितमाज्ञाय कर्णदुःशासनादयः

अनुजग्मुर्महेष्वासा धार्तराष्ट्रं महाबलम् ११
तांस्तु संप्रस्थितान्दृष्ट्वा भीष्मः कुरुपितामहः
लज्जया व्रीडितो राजञ्जगाम स्वं निवेशनम् १२
गते भीष्मे महाराज धार्तराष्ट्रो जनाधिपः
पुनरागम्य तं देशममन्त्रयत मन्त्रिभिः १३
किमस्माकं भवेच्छ्रेयः किं कार्यमवशिष्यते
कथं नु सुकृतं च स्यान्मन्त्रयामास भारत १४
कर्ण उवाच
दुर्योधन निबोधेदं यत्त्वा वद्यामि कौरव
श्रुत्वा च तत्तथा सर्वं कर्तुमर्हस्यरिंदम १५
तवाद्य पृथिवी वीर निःसपत्ना नृपोत्तम
तां पालय यथा शक्रो हतशत्रुर्महामनाः १६
वैशम्पायन उवाच
एवमुक्तस्तु कर्णेन कर्णं राजाब्रवीत्पुनः
न किंचिद्दुर्लभं तस्य यस्य त्वं पुरुषर्षभ १७
सहायश्चानुरक्तश्च मदर्थं च समुद्यतः
अभिप्रायस्तु मे कश्चित्तं वै शृणु यथातथम् १८
राजसूयं पागडवस्य दृष्ट्वा क्रतुवरं तदा
मम स्पृहा समुत्पन्ना तां संपादय सूतज १९
एवमुक्तस्ततः कर्णो राजानमिदमब्रवीत्
तवाद्य पृथिवीपाला वश्याः सर्वे नृपोत्तम २०
आहूयन्तां द्विजवराः संभाराश्च यथाविधि
संभ्रियन्तां कुरुश्रेष्ठ यज्ञोपकरणानि च २१
ऋत्विजश्च समाहूता यथोक्तं वेदपारगाः
क्रियां कुर्वन्तु ते राजन्यथाशास्त्रमरिंदम २२
बह्वन्नपानसंयुक्तः सुसमृद्धगुणान्वितः
प्रवर्ततां महायज्ञस्तवापि भरतर्षभ २३
एवमुक्तस्तु कर्णेन धार्तराष्ट्रो विशां पते
पुरोहितं समानाय्य इदं वचनमब्रवीत् २४
राजसूयं क्रतुश्रेष्ठं समाप्तवरदक्षिणम्

आहर त्वं मम कृते यथान्यायं यथाक्रमम् २५
स एवमुक्तो नृपतिमुवाच द्विजपुङ्गवः
न स शक्यः क्रतुश्रेष्ठो जीवमाने युधिष्ठिरे
आहर्तुं कौरवश्रेष्ठ कुले तव नृपोत्तम २६
दीर्घायुर्जीवति च वै धृतराष्ट्रः पिता तव
अतश्चापि विरुद्धस्ते क्रतुरेष नृपोत्तम २७
अस्ति त्वन्यन्महत्सत्रं राजसूयसमं प्रभो
तेन त्वं यज राजेन्द्र शृणु चेदं वचो मम २८
य इमे पृथिवीपालाः करदास्तव पार्थिव
ते करान्संप्रयच्छन्तु सुवर्णं च कृताकृतम् २९
तेन ते क्रियतामद्य लाङ्गलं नृपसत्तम
यज्ञवाटस्य ते भूमिः कृष्यतां तेन भारत ३०
तत्र यज्ञो नृपश्रेष्ठ प्रभूतान्नः सुसंस्कृतः
प्रवर्ततां यथान्यायं सर्वतो ह्यनिवारितः ३१
एष ते वैष्णवो नाम यज्ञः सत्पुरुषोचितः
एतेन नेष्टवान्कश्चिदृते विष्णुं पुरातनम् ३२
राजसूयं क्रतुश्रेष्ठं स्पर्धत्येष महाक्रतुः
अस्माकं रोचते चैव श्रेयश्च तव भारत
अविघ्नश्च भवेदेष सफला स्यात्स्पृहा तव ३३
एवमुक्तस्तु तैर्विप्रैर्धार्तराष्ट्रो महीपतिः
कर्णं च सौबलं चैव भ्रातॄंश्चैवेदमब्रवीत् ३४
रोचते मे वचः कृत्स्नं ब्राह्मणानां न संशयः
रोचते यदि युष्माकं तन्मा प्रब्रूत माचिरम् ३५
एवमुक्तास्तु ते सर्वे तथेत्यूचुर्नराधिपम्
संदिदेश ततो राजा व्यापारस्थान्यथाक्रमम् ३६
हलस्य करणे चापि व्यादिष्टाः सर्वशिल्पिनः
यथोक्तं च नृपश्रेष्ठ कृतं सर्वं यथाक्रमम् ३७
इति श्रीमहाभारते आरण्यकपर्वणि एकचत्वारिंशदधिक द्विशततमोऽध्यायः
२४१

## द्विचत्वारिंशदधिक द्विशततमोऽध्यायः

वैशम्पायन उवाच
ततस्तु शिल्पिनः सर्वे अमात्यप्रवराश्च ह
विदुरश्च महाप्राज्ञो धार्तराष्ट्रे न्यवेदयत् १
सज्जं क्रतुवरं राजन्कालप्राप्तं च भारत
सौवर्णं च कृतं दिव्यं लाङ्गलं सुमहाधनम् २
एतच्छ्रुत्वा नृपश्रेष्ठो धार्तराष्ट्रो विशां पते
आज्ञापयामास नृपः क्रतुराजप्रवर्तनम् ३
ततः प्रववृते यज्ञः प्रभूतान्नः सुसंस्कृतः
दीक्षितश्चापि गान्धारिर्यथाशास्त्रं यथाक्रमम् ४
प्रहृष्टो धृतराष्ट्रोऽभूद्विदुरश्च महायशाः
भीष्मो द्रोणः कृपः कर्णो गान्धारी च यशस्विनी ५
निमन्त्रणार्थं दूतांश्च प्रेषयामास शीघ्रगान्
पार्थिवानां च राजेन्द्र ब्राह्मणानां तथैव च
ते प्रयाता यथोद्दिष्टं दूतास्त्वरितवाहनाः ६
तत्र कंचित्प्रयातं तु दूतं दुःशासनोऽब्रवीत्
गच्छ द्वैतवनं शीघ्रं पाणडवान्पापपूरुषान्
निमन्त्रय यथान्यायं विप्रांस्तस्मिन्महावने ७
स गत्वा पाणडवावासमुवाचाभिप्रणम्य तान्
दुर्योधनो महाराज यजते नृपसत्तमः ८
स्ववीर्यार्जितमर्थौघमवाप्य कुरुनन्दनः
तत्र गच्छन्ति राजानो ब्राह्मणाश्च ततस्ततः ९
अहं तु प्रेषितो राजन्कौरवेण महात्मना
आमन्त्रयति वो राजा धार्तराष्ट्रो जनेश्वरः
मनोभिलषितं राज्ञस्तं क्रतुं द्रष्टुमर्हथ १०
ततो युधिष्ठिरो राजा तच्छ्रुत्वा दूतभाषितम्
अब्रवीन्नृपशार्दूलो दिष्ट्या राजा सुयोधनः
यजते क्रतुमुख्येन पूर्वेषां कीर्तिवर्धनः ११
वयमप्युपयास्यामो न त्विदानीं कथंचन
समयः परिपाल्यो नो यावद्वर्षं त्रयोदशम् १२

श्रुत्वैतद्धर्मराजस्य भीमो वचनमब्रवीत्
तदा तु नृपतिर्गन्ता धर्मराजो युधिष्ठिरः १३
अस्त्रशस्त्रप्रदीप्तेऽग्नौ यदा तं पातयिष्यति
वर्षात् त्रयोदशादूर्ध्वं रणसत्रे नराधिपः १४
यदा क्रोधहविर्मोक्ता धार्तराष्ट्रेषु पाण्डवः
आगन्तारस्तदा स्मेति वाच्यस्ते स सुयोधनः १५
शेषास्तु पाण्डवा राजन्नैवोचुः किंचिदप्रियम्
दूतश्चापि यथावृत्तं धार्तराष्ट्रे न्यवेदयत् १६
अथाजग्मुर्नरश्रेष्ठा नानाजनपदेश्वराः
ब्राह्मणाश्च महाभागा धार्तराष्ट्रपुरं प्रति १७
ते त्वर्चिता यथाशास्त्रं यथावर्णं यथाक्रमम्
मुदा परमया युक्ताः प्रीत्या चापि नरेश्वर १८
धृतराष्ट्रोऽपि राजेन्द्र संवृतः सर्वकौरवैः
हर्षेण महता युक्तो विदुरं प्रत्यभाषत १९
यथा सुखी जनः सर्वः क्षत्तः स्यादन्नसंयुतः
तुष्येच्च यज्ञसदने तथा क्षिप्रं विधीयताम् २०
विदुरस्त्वेवमाज्ञप्तः सर्ववर्णानरिंदम
यथाप्रमाणतो विद्वान्पूजयामास धर्मवित् २१
भक्ष्यभोज्यान्नपानेन माल्यैश्चापि सुगन्धिभिः
वासोभिर्विविधैश्चैव योजयामास हृष्टवत् २२
कृत्वा ह्यवभृथं वीरो यथाशास्त्रं यथाक्रमम्
सान्त्वयित्वा च राजेन्द्रो दत्त्वा च विविधं वसु
विसर्जयामास नृपान्ब्राह्मणांश्च सहस्रशः २३
विसर्जयित्वा स नृपान्भ्रातृभिः परिवारितः
विवेश हास्तिनपुरं सहितः कर्णसौबलैः २४
इति श्रीमहाभारते आरण्यकपर्वणि द्विचत्वारिंशदधिक द्विशततमोऽध्यायः
२४२

त्रिचत्वारिंशदधिक द्विशततमोऽध्यायः

वैशम्पायन उवाच

प्रविशन्तं महाराज सूतास्तुष्टवुरच्युतम्
जनाश्चापि महेष्वासं तुष्टुवू राजसत्तमम् १
लाजैश्चन्दनचूर्णैश्चाप्यवकीर्य जनास्तदा
ऊचुर्दिष्ट्या नृपाविघ्नात्समाप्तोऽय क्रतुस्तव २
अपरे त्वब्रुवंस्तत्र वातिकास्तं महीपतिम्
युधिष्ठिरस्य यज्ञेन न समो ह्येष ते क्रतुः
नैव तस्य क्रतोरेष कलामर्हति षोडशीम् ३
एवं तत्राब्रुवन्केचिद्वातिकास्तं नरेश्वरम्
सुहृदस्त्वब्रुवंस्तत्र अति सर्वानयं क्रतुः ४
ययातिर्नहुषश्चापि मांधाता भरतस्तथा
क्रतुमेनं समाहृत्य पूताः सर्वे दिवं गताः ५
एता वाचः शुभाः शृगवन्सुहृदां भरतर्षभ
प्रविवेश पुरं हृष्टः स्ववेश्म च नराधिपः ६
अभिवाद्य ततः पादौ मातापित्रोर्विशां पते
भीष्मद्रोणकृपाणां च विदुरस्य च धीमतः ७
अभिवादितः कनीयोभिर्भ्रातृभिर्भ्रातृवत्सलः
निषसादासने मुख्ये भ्रातृभिः परिवारितः ८
तमुत्थाय महाराज सूतपुत्रोऽब्रवीद्वचः
दिष्ट्या ते भरतश्रेष्ठ समाप्तोऽय महाक्रतुः ९
हतेषु युधि पार्थेषु राजसूये तथा त्वया
आहृतेऽह नरश्रेष्ठ त्वां सभाजयिता पुनः १०
तमब्रवीन्महाराजो धार्तराष्ट्रो महायशाः
सत्यमेतत्त्वया वीर पागडवेषु दुरात्मसु ११
निहतेषु नरश्रेष्ठ प्राप्ते चापि महाक्रतौ
राजसूये पुनर्वीर त्वं मां संवर्धयिष्यसि १२
एवमुक्त्वा महाप्राज्ञः कर्णमाश्लिष्य भारत
राजसूयं क्रतुश्रेष्ठं चिन्तयामास कौरवः १३
सोऽब्रवीत्सुहृदश्चापि पार्श्वस्थान्नृपसत्तमः
कदा तु तं क्रतुवरं राजसूयं महाधनम्
निहत्य पागडवान्सर्वानाहरिष्यामि कौरवाः १४

तमब्रवीत्तदा कर्णः शृणु मे राजकुञ्जर
पादौ न धावये तावद्यावन्न निहतोऽर्जुनः १५
अथोत्क्रुष्टं महेष्वासैर्धार्तराष्ट्रैर्महारथैः
प्रतिज्ञाते फल्गुनस्य वधे कर्णेन संयुगे
विजितांश्चाप्यमन्यन्त पाण्डवान्धृतराष्ट्रजाः १६
दुर्योधनोऽपि राजेन्द्र विसृज्य नरपुङ्गवान्
प्रविवेश गृहं श्रीमान्यथा चैत्ररथं प्रभुः
तेऽपि सर्वे महेष्वासा जग्मुर्वेश्मानि भारत १७
पाण्डवाश्च महेष्वासा दूतवाक्यप्रचोदिता
चिन्तयन्तस्तमेवार्थं नालभन्त सुखं क्वचित् १८
भूयश्च चारै राजेन्द्र प्रवृत्तिरुपपादिता
प्रतिज्ञा सूतपुत्रस्य विजयस्य वधं प्रति १९
एतच्छ्रुत्वा धर्मसुतः समुद्विग्नो नराधिप
अभेद्यकवचं मत्वा कर्णमद्भुतविक्रमम्
अनुस्मरंश्च संक्लेशान्न शान्तिमुपयाति सः २०
तस्य चिन्तापरीतस्य बुद्धिर्जज्ञे महात्मनः
बहुव्यालमृगाकीर्णं त्यक्तुं द्वैतवनं वनम् २१
धार्तराष्ट्रोऽपि नृपतिः प्रशशास वसुंधराम्
भ्रातृभिः सहितो वीरैर्भीष्मद्रोणकृपैस्तथा २२
संगम्य सूतपुत्रेण कर्णेनाहवशोभिना
दुर्योधनः प्रिये नित्यं वर्तमानो महीपतिः
पूजयामास विप्रेन्द्रान्क्रतुभिर्भूरिदक्षिणैः २३
भ्रातृणां च प्रियं राजन्स चकार परंतपः
निश्चित्य मनसा वीरो दत्तभुक्तफलं धनम् २४
इति श्रीमहाभारते आरण्यकपर्वणि त्रिचत्वारिंशदधिक द्विशततमोऽध्यायः
२४३
समाप्तं घोषयात्रापर्व

चतुश्चत्वारिंशदधिक द्विशततमोऽध्यायः

जनमेजय उवाच

दुर्योधनं मोचयित्वा पाराडुपुत्रा महाबलाः
किमकार्षुर्वने तस्मिंस्तन्ममाख्यातुमर्हसि १
वैशम्पायन उवाच
ततः शयानं कौन्तेयं रात्रौ द्वैतवने मृगाः
स्वप्नान्ते दर्शयामासुर्बाष्पकराठा युधिष्ठिरम् २
तानब्रवीत्स राजेन्द्रो वेपमानान्कृताञ्जलीन्
ब्रूत यद्वक्तुकामाः स्थ के भवन्तः किमिष्यते ३
एवमुक्ताः पाराडवेन कौन्तेयेन यशस्विना
प्रत्यब्रुवन्मृगास्तत्र हतशेषा युधिष्ठिरम् ४
वयं मृगा द्वैतवने हतशिष्टाः स्म भारत
नोत्सीदेम महाराज क्रियतां वासपर्ययः ५
भवन्तो भ्रातरः शूराः सर्व एवास्त्रकोविदाः
कुलान्यल्पावशिष्टानि कृतवन्तो वनौकसाम् ६
बीजभूता वयं केचिदवशिष्टा महामते
विवर्धेमहि राजेन्द्र प्रसादात्ते युधिष्ठिर ७
तान्वेपमानान्वित्रस्तान्बीजमात्रावशेषितान्
मृगान्दृष्ट्वा सुदुःखार्तो धर्मराजो युधिष्ठिरः ८
तांस्तथेत्यब्रवीद्राजा सर्वभूतहिते रतः
तथ्यं भवन्तो ब्रुवते करिष्यामि च तत्तथा ९
इत्येवं प्रतिबुद्धः स रात्र्यन्ते राजसत्तमः
अब्रवीत्सहितान्भ्रातॄन्दयापन्नो मृगान्प्रति १०
उक्तो रात्रौ मृगैरस्मि स्वप्नान्ते हतशेषितैः
तनुभूताः स्म भद्रं ते दया नः क्रियतामिति ११
ते सत्यमाहुः कर्तव्या दयास्माभिर्वनौकसाम्
साष्टमासं हि नो वर्षं यदेनानुपयुञ्ज्महे १२
पुनर्बहुमृगं रम्यं काम्यकं काननोत्तमम्
मरुभूमेः शिरः ख्यातं तृणबिंदुसरः प्रति
तत्रेमा वसतीः शिष्टा विहरन्तो रमेमहि १३
ततस्ते पाराडवा शीघ्रं प्रययुर्धर्मकोविदाः
ब्राह्मणैः सहिता राजन्ये च तत्र सहोषिताः

इन्द्रसेनादिभिश्चैव प्रेष्यैरनुगतास्तदा १४
ते यात्वानुसृतैर्मार्गैः स्वन्नैः शुचिजलान्वितैः
ददृशुः काम्यकं पुरायमाश्रमं तपसायुतम् १५
विविशुस्ते स्म कौरव्या वृता विप्रर्षभैस्तदा
तद्वनं भरतश्रेष्ठाः स्वर्गं सुकृतिनो यथा १६
इति श्रीमहाभारते आरगयकपर्वणि चतुश्चत्वारिंशदधिक द्विशततमोऽध्यायः २४४
समाप्तं मृगस्वप्नभयपर्व

पञ्चचत्वारिंशदधिक द्विशततमोऽध्यायः
वैशम्पायन उवाच
वने निवसतां तेषां पाराडवानां महात्मनाम्
वर्षारयेकादशातीयुः कृच्छ्रेण भरतर्षभ १
फलमूलाशनास्ते हि सुखार्हा दुःखमुत्तमम्
प्राप्तकालमनुध्यान्तः सेहुरुत्तमपूरुषाः २
युधिष्ठिरस्तु राजर्षिरात्मकर्मापराधजम्
चिन्तयन्स महाबाहुर्भ्रातॄणां दुःखमुत्तमम् ३
न सुष्वाप सुखं राजा हृदि शल्यैरिवार्पितैः
दौरात्म्यमनुपश्यंस्तत्काले द्यूतोद्भवस्य हि ४
संस्मरन्परुषा वाचः सूतपुत्रस्य पाराडवः
निःश्वासपरमो दीनो बिभ्रत्कोपविषं महत् ५
अर्जुनो यमजौ चोभौ द्रौपदी च यशस्विनी
स च भीमो महातेजाः सर्वेषामुत्तमो बली
युधिष्ठिरमुदीक्षन्तः सेहुर्दुःखमनुत्तमम् ६
अवशिष्टमल्पकालं मन्वानाः पुरुषर्षभाः
वपुरन्यदिवाकार्षुरुत्साहामर्षचेष्टितैः ७
कस्यचित्त्वथ कालस्य व्यासः सत्यवतीसुतः
आजगाम महायोगी पाराडवानवलोककः ८
तमागतमभिप्रेक्ष्य कुन्तीपुत्रो युधिष्ठिरः
प्रत्युद्गम्य महात्मानं प्रत्यगृह्णाद्यथाविधि ९

तमासीनमुपासीनः शुश्रूषुर्नियतेन्द्रियः
तोषयन्प्रणिपातेन व्यासं पाण्डवनन्दनः १०
तानवेक्ष्य कृशान्पौत्रान्वने वन्येन जीवतः
महर्षिरनुकंपार्थमब्रवीद्बाष्पगद्गदम् ११
युधिष्ठिर महाबाहो शृणु धर्मभृतां वर
नातप्ततपसः पुत्र प्राप्नुवन्ति महत्सुखम् १२
सुखदुःखे हि पुरुषः पर्यायेणोपसेवते
नात्यन्तमसुखं कश्चित्प्राप्नोति पुरुषर्षभ १३
प्रज्ञावांस्त्वेव पुरुषः संयुक्तः परया धिया
उदयास्तमयज्ञो हि न शोचति न हृष्यति १४
सुखमापतितं सेवेद्दुःखमापतितं सहेत्
कालप्राप्तमुपासीत सस्यानामिव कर्षकः १५
तपसो हि परं नास्ति तपसा विन्दते महत्
नासाध्यं तपसः किंचिदिति बुध्यस्व भारत १६
सत्यमार्जवमक्रोधः संविभागो दमः शमः
अनसूयाविहिंसा च शौचमिन्द्रियसंयमः
साधनानि महाराज नराणां पुण्यकर्मणाम् १७
अधर्मरुचयो मूढास्तिर्यग्गतिपरायणाः
कृच्छ्रां योनिमनुप्राप्य न सुखं विन्दते जनाः १८
इह यत्क्रियते कर्म तत्परत्रोपभुज्यते
तस्माच्छरीरं युञ्जीत तपसा नियमेन च १९
यथाशक्ति प्रयच्छेच्च संपूज्याभिप्रणम्य च
काले प्राप्ते च हृष्टात्मा राजन्विगतमत्सरः २०
सत्यवादी लभेतायुरनायासमथार्जवी
अक्रोधनोऽनसूयश्च निर्वृतिं लभते पराम् २१
दांतः शमपरः शश्वत्परिक्लेशं न विन्दति
न च तप्यति दांतात्मा दृष्ट्वा परगतां श्रियम् २२
संविभक्ता च दाता च भोगवान्सुखवान्नरः
भवत्यहिंसकश्चैव परमारोग्यमश्नुते २३
मान्यान्मानयिता जन्म कुले महति विन्दति

व्यसनैर्न तु संयोगं प्राप्नोति विजितेन्द्रियः २४
शुभानुशयबुद्धिर्हि संयुक्तः कालधर्मणा
प्रादुर्भवति तद्योगात्कल्याणमतिरेव सः २५
युधिष्ठिर उवाच
भगवन्दानधर्माणां तपसो वा महामुने
किं स्विद्बहुगुणं प्रेत्य किं वा दुष्करमुच्यते २६
व्यास उवाच
दानान्न दुष्करतरं पृथिव्यामस्ति किंचन
अर्थे हि महती तृष्णा स च दुःखेन लभ्यते २७
परित्यज्य प्रियान्प्राणान्धनार्थं हि महाहवम्
प्रविशन्ति नरा वीराः समुद्रमटवीं तथा २८
कृषिगोरक्ष्यमित्येके प्रतिपद्यन्ति मानवाः
पुरुषाः प्रेष्यतामेके निर्गच्छन्ति धनार्थिनः २९
तस्य दुःखार्जितस्यैवं परित्यागः सुदुष्करः
न दुष्करतरं दानात्तस्माद्दानं मतं मम ३०
विशेषस्त्वत्र विज्ञेयो न्यायेनोपार्जितं धनम्
पात्रे देशे च काले च साधुभ्यः प्रतिपादयेत् ३१
अन्यायसमुपात्तेन दानधर्मो धनेन यः
क्रियते न स कर्तारं त्रायते महतो भयात् ३२
पात्रे दानं स्वल्पमपि काले दत्तं युधिष्ठिर
मनसा सुविशुद्धेन प्रेत्यानन्तफलं स्मृतम् ३३
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
व्रीहिद्रोणपरित्यागाद्यत्फलं प्राप मुद्गलः ३४
इति श्रीमहाभारते आरण्यकपर्वणि पञ्चचत्वारिंशदधिक द्विशततमोऽध्यायः २४५

## षट्चत्वारिंशदधिक द्विशततमोऽध्यायः

युधिष्ठिर उवाच
व्रीहिद्रोणः परित्यक्तः कथं तेन महात्मना
कस्मै दत्तश्च भगवन्विधिना केन चात्थ मे १

प्रत्यक्षधर्मा भगवान्यस्य तुष्टो हि कर्मभिः
सफलं तस्य जन्माहं मन्ये सद्धर्मचारिणः २
व्यास उवाच
शिलोञ्छवृत्तिर्धर्मात्मा मुद्गलः संशितव्रतः
आसीद्राजन्कुरुक्षेत्रे सत्यवागनसूयकः ३
अतिथिव्रती क्रियावांश्च कापोतीं वृत्तिमास्थितः
सत्रमिष्टीकृतं नाम समुपास्ते महातपाः ४
सपुत्रदारो हि मुनिः पक्षाहारो बभूव सः
कपोतवृत्त्या पक्षेण व्रीहिद्रोणमुपार्जयत् ५
दर्शं च पौर्णमासं च कुर्वन्विगतमत्सरः
देवतातिथिशेषेण कुरुते देहयापनम् ६
तस्येन्द्रः सहितो देवैः साक्षात्त्रिभुवनेश्वरः
प्रत्यगृह्णान्महाराज भागं पर्वणि पर्वणि ७
स पर्वकालं कृत्वा तु मुनिवृत्त्या समन्वितः
अतिथिभ्यो ददावन्नं प्रहृष्टेनान्तरात्मना ८
व्रीहिद्रोणस्य तदहो ददतोऽन्न महात्मनः
शिष्टं मात्सर्यहीनस्य वर्धत्यतिथिदर्शनात् ९
तच्छतान्यपि भुञ्जन्ति ब्राह्मणानां मनीषिणाम्
मुनेस्त्यागविशुद्ध्या तु तदन्नं वृद्धिमृच्छति १०
तं तु शुश्राव धर्मिष्ठं मुद्गलं संशितव्रतम्
दुर्वासा नृप दिग्वासास्तमथाभ्याजगाम ह ११
बिभ्रच्चानियतं वेषमुन्मत्त इव पाण्डव
विकचः परुषा वाचो व्याहरन्विविधा मुनिः १२
अभिगम्याथ तं विप्रमुवाच मुनिसत्तमः
अन्नार्थिनमनुप्राप्तं विद्धि मां मुनिसत्तम १३
स्वागतं तेऽस्त्विति मुनिं मुद्गलः प्रत्यभाषत
पाद्यमाचमनीयं च प्रतिवेद्यान्नमुत्तमम् १४
प्रादात्स तपसोपात्तं क्षुधितायातिथिव्रती
उन्मत्ताय परां श्रद्धामास्थाय स धृतव्रतः १५
ततस्तदन्नं रसवत्स एव क्षुधयान्वितः

बुभुजे कृत्स्नमुन्मत्तः प्रादात्तस्मै च मुद्गलः १६
भुक्त्वा चान्नं ततः सर्वमुच्छिष्टेनात्मनस्ततः
अथानुलिलिपेऽङ्गानि जगाम च यथागतम् १७
एवं द्वितीये संप्राप्ते पर्वकाले मनीषिणः
आगम्य बुभुजे सर्वमन्नमुञ्छोपजीविनः १८
निराहारस्तु स मुनिरुञ्छमार्जयते पुनः
न चैनं विक्रियां नेतुमशकन्मुद्गलं क्षुधा १९
न क्रोधो न च मात्सर्यं नावमानो न संभ्रमः
सपुत्रदारमुञ्छन्तमाविवेश द्विजोत्तमम् २०
तथा तमुञ्छधर्माणं दुर्वासा मुनिसत्तमम्
उपतस्थे यथाकालं षट्कृत्वः कृतनिश्चयः २१
न चास्य मानसं किंचिद्विकारं ददृशे मुनिः
शुद्धसत्त्वस्य शुद्धं स ददृशे निर्मलं मनः २२
तमुवाच ततः प्रीतः स मुनिर्मुद्गलं तदा
त्वत्समो नास्ति लोकेऽस्मिन्दाता मात्सर्यवर्जितः २३
क्षुद्धर्मसंज्ञां प्रणुदत्यादत्ते धैर्यमेव च
विषयानुसारिणी जिह्वा कर्षत्येव रसान्प्रति २४
आहारप्रभवाः प्राणा मनो दुर्निग्रहं चलम्
मनसश्चेन्द्रियाणां चाप्यैकाग्र्यं निश्चितं तपः २५
श्रमेणोपार्जितं त्यक्तुं दुःखं शुद्धेन चेतसा
तत्सर्वं भवता साधो यथावदुपपादितम् २६
प्रीताः स्मोऽनुगृहीताश्च समेत्य भवता सह
इन्द्रियाभिजयो धैर्यं संविभागो दमः शमः २७
दया सत्यं च धर्मश्च त्वयि सर्वं प्रतिष्ठितम्
जितास्ते कर्मभिर्लोकाः प्राप्तोऽसि परमां गतिम् २८
अहो दानं विघुष्टं ते सुमहत्स्वर्गवासिभिः
सशरीरो भवान्गन्ता स्वर्गं सुचरितव्रत २९
इत्येवं वदतस्तस्य तदा दुर्वाससो मुनेः
देवदूतो विमानेन मुद्गलं प्रत्युपस्थितः ३०
हंससारसयुक्तेन किङ्किणीजालमालिना

कामगेन विचित्रेण दिव्यगन्धवता तथा ३१
उवाच चैनं विप्रर्षिं विमानं कर्मभिर्जितम्
समुपारोह संसिद्धिं प्राप्तोऽसि परमां मुने ३२
तमेवंवादिनमृषिर्देवदूतमुवाच ह
इच्छामि भवता प्रोक्तान्गुणान्स्वर्गनिवासिनाम् ३३
के गुणास्तत्र वसतां किं तपः कश्च निश्चयः
स्वर्गे स्वर्गसुखं किं च दोषो वा देवदूतक ३४
सतां सप्तपदं मित्रमाहुः सन्तः कुलोचिताः
मित्रतां च पुरस्कृत्य पृच्छामि त्वामहं विभो ३५
यदत्र तथ्यं पथ्यं च तद्ब्रवीह्यविचारयन्
श्रुत्वा तथा करिष्यामि व्यवसायं गिरा तव ३६
इति श्रीमहाभारते आरण्यकपर्वणि षट्चत्वारिंशदधिक द्विशततमोऽध्यायः
२४६

## सप्तचत्वारिंशदधिक द्विशततमोऽध्यायः

देवदूत उवाच
महर्षेऽकार्यबुद्धिस्त्वं यः स्वर्गसुखमुत्तमम्
संप्राप्तं बहु मन्तव्यं विमृशस्यबुधो यथा १
उपरिष्टादसौ लोको योऽय स्वरिति संज्ञितः
ऊर्ध्वगः सत्पथः शश्वद्देवयानचरो मुने २
नातप्ततपसः पुंसो नामहायज्ञयाजिनः
नानृता नास्तिकाश्चैव तत्र गच्छन्ति मुद्गल ३
धर्मात्मानो जितात्मानः शान्ता दान्ता विमत्सराः
दानधर्मरताः पुंसः शूराश्चाहतलक्षणाः ४
तत्र गच्छन्ति कर्माग्र्यं कृत्वा शमदमात्मकम्
लोकान्पुण्यकृतां ब्रह्मन्सद्भिरासेवितान्नृभिः ५
देवाः साध्यास्तथा विश्वे मरुतश्च महर्षिभिः
यामा धामाश्च मौद्गल्य गन्धर्वाप्सरसस्तथा ६
एषां देवनिकायानां पृथक्पृथगनेकशः
भास्वन्तः कामसंपन्ना लोकास्तेजोमयाः शुभाः ७

त्रयस्त्रिंशत्सहस्राणि योजनानां हिरण्मयः
मेरुः पर्वतराडयत्र देवोद्यानानि मुद्गल ८
नन्दनादीनि पुण्यानि विहाराः पुण्यकर्मणाम्
न क्षुत्पिपासे न ग्लानिर्न शीतोष्णभयं तथा ९
बीभत्समशुभं वापि रोगा वा तत्र केचन
मनोज्ञाः सर्वतो गन्धाः सुखस्पर्शाश्च सर्वशः १०
शब्दाः श्रुतिमनोग्राह्याः सर्वतस्तत्र वै मुने
न शोको न जरा तत्र नायासपरिदेवने ११
ईदृशः स मुने लोकः स्वकर्मफलहेतुकः
सुकृतैस्तत्र पुरुषाः संभवन्त्यात्मकर्मभिः १२
तैजसानि शरीराणि भवन्त्यत्रोपपद्यताम्
कर्मजान्येव मौद्गल्य न मातृपितृजान्युत १३
न च स्वेदो न दौर्गन्ध्यं पुरीषं मूत्रमेव च
तेषां न च रजो वस्त्रं बाधते तत्र वै मुने १४
न म्लायन्ति स्रजस्तेषां दिव्यगन्धा मनोरमाः
पर्युह्यन्ते विमानैश्च ब्रह्मन्नेवंविधाश्च ते १५
ईर्ष्याशोकक्लमापेता मोहमात्सर्यवर्जिताः
सुखं स्वर्गजितस्तत्र वर्तयन्ति महामुने १६
तेषां तथाविधानां तु लोकानां मुनिपुङ्गव
उपर्युपरि शक्रस्य लोका दिव्यगुणान्विताः १७
पुरस्ताद्ब्रह्मणस्तत्र लोकास्तेजोमयाः शुभाः
यत्र यान्त्यृषयो ब्रह्मन्पूताः स्वैः कर्मभिः शुभैः १८
ऋभवो नाम तत्रान्ये देवानामपि देवताः
तेषां लोकाः परतरे तान्यजन्तीह देवताः १९
स्वयंप्रभास्ते भास्वन्तो लोकाः कामदुघाः परे
न तेषां स्त्रीकृतस्तापो न लोकैश्वर्यमत्सरः २०
न वर्तयन्त्याहुतिभिस्ते नाप्यमृतभोजनाः
तथा दिव्यशरीरास्ते न च विग्रहमूर्तयः २१
न सुखे सुखकामाश्च देवदेवाः सनातनाः
न कल्पपरिवर्तेषु परिवर्तन्ति ते तथा २२

जरा मृत्युः कुतस्तेषां हर्षः प्रीतिः सुखं न च
न दुःखं न सुखं चापि रागद्वेषौ कुतो मुने २३
देवानामपि मौद्गल्य काङ्क्षिता सा गतिः परा
दुष्प्रापा परमा सिद्धिरगम्या कामगोचरैः २४
त्रयस्त्रिंशदिमे लोकाः शेषा लोका मनीषिभिः
गम्यन्ते नियमैः श्रेष्ठैर्दानैर्वा विधिपूर्वकैः २५
सेयं दानकृता व्युष्टिरत्र प्राप्ता सुखावहा
तां भुङ्क्ष्व सुकृतैर्लब्धां तपसा द्योतितप्रभः २६
एतत्स्वर्गसुखं विप्र लोका नानाविधास्तथा
गुणाः स्वर्गस्य प्रोक्तास्ते दोषानपि निबोध मे २७
कृतस्य कर्मणस्तत्र भुज्यते यत्फलं दिवि
न चान्यत्क्रियते कर्म मूलच्छेदेन भुज्यते २८
सोऽत्र दोषो मम मतस्तस्यान्ते पतनं च यत्
सुखव्याप्तमनस्कानां पतनं यच्च मुद्गल २९
असंतोषः परीतापो दृष्ट्वा दीप्ततराः श्रियः
यद्भवत्यवरे स्थाने स्थितानां तच्च दुष्करम् ३०
संज्ञामोहश्च पततां रजसा च प्रधर्षणम्
प्रम्लानेषु च माल्येषु ततः पिपतिषोर्भयम् ३१
आ ब्रह्मभवनादेते दोषा मौद्गल्य दारुणाः
नाकलोके सुकृतिनां गुणास्त्वयुतशो नृणाम् ३२
अयं त्वन्यो गुणः श्रेष्ठश्च्युतानां स्वर्गतो मुने
शुभानुशययोगेन मनुष्येषूपजायते ३३
तत्रापि सुमहाभागः सुखभागभिजायते
न चेत्संबुध्यते तत्र गच्छत्यधमतां ततः ३४
इह यत्क्रियते कर्म तत्परत्रोपभुज्यते
कर्मभूमिरियं ब्रह्मन्फलभूमिरसौ मता ३५
एतत्ते सर्वमाख्यातं यन्मां पृच्छसि मुद्गल
तवानुकम्पया साधो साधु गच्छाम माचिरम् ३६
व्यास उवाच
एतच्छ्रुत्वा तु मौद्गल्यो वाक्यं विममृशे धिया

विमृश्य च मुनिश्रेष्ठो देवदूतमुवाच ह ३७
देवदूत नमस्तेऽस्तु गच्छ तात यथासुखम्
महादोषेण मे कार्यं न स्वर्गेण सुखेन वा ३८
पतनं तन्महद्दुःखं परितापः सुदारुणः
स्वर्गभाजश्च्यवन्तीह तस्मात्स्वर्गं न कामये ३९
यत्र गत्वा न शोचन्ति न व्यथन्ति चलन्ति वा
तदहं स्थानमत्यन्तं मार्गयिष्यामि केवलम् ४०
इत्युक्त्वा स मुनिर्वाक्यं देवदूतं विसृज्य तम्
शिलोञ्छवृत्तिमुत्सृज्य शममातिष्ठदुत्तमम् ४१
तुल्यनिन्दास्तुतिर्भूत्वा समलोष्टाश्मकाञ्चनः
ज्ञानयोगेन शुद्धेन ध्याननित्यो बभूव ह ४२
ध्यानयोगाद्बलं लब्ध्वा प्राप्य चर्द्धिमनुत्तमाम्
जगाम शाश्वतीं सिद्धिं परां निर्वाणलक्षणाम् ४३
तस्मात्त्वमपि कौन्तेय न शोकं कर्तुमर्हसि
राज्यात्स्फीतात्परिभ्रष्टस्तपसा तदवाप्स्यसि ४४
सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम्
पर्यायेणोपवर्तन्ते नरं नेमिमरा इव ४५
पितृपैतामहं राज्यं प्राप्स्यस्यमितविक्रम
वर्षात्त्रयोदशादूर्ध्वं व्येतु ते मानसो ज्वरः ४६
वैशम्पायन उवाच
एवमुक्त्वा स भगवान्व्यासः पाण्डवनन्दनम्
जगाम तपसे धीमान्पुनरेवाश्रमं प्रति ४७
इति श्रीमहाभारते आरण्यकपर्वणि सप्तचत्वारिंशदधिक द्विशततमोऽध्यायः
२४७
समाप्तं व्रीहिद्रौणिकपर्व

अष्ट चत्वारिंशदधिक द्विशततमोऽध्यायः
वैशम्पायन उवाच
तस्मिन्बहुमृगेऽरण्ये रममाणा महारथाः
काम्यके भरतश्रेष्ठा विजह्रुस्ते यथामराः १

प्रेक्षमाणा बहुविधान्वनोद्देशान्समन्ततः
यथर्तुकालरम्याश्च वनराजीः सुपुष्पिताः २
पाराडवा मृगयाशीलाश्चरन्तस्तन्महावनम्
विजह्रुरिन्द्रप्रतिमाः कंचित्कालमरिंदमाः ३
ततस्ते यौगपद्येन ययुः सर्वे चतुर्दिशम्
मृगयां पुरुषव्याघ्रा ब्राह्मणार्थे परंतपाः ४
द्रौपदीमाश्रमे न्यस्य तृणबिन्दोरनुज्ञया
महर्षेर्दीप्ततपसो धौम्यस्य च पुरोधसः ५
ततस्तु राजा सिन्धूनां वार्द्धक्षत्रिर्महायशाः
विवाहकामः शाल्वेयान्प्रयातः सोऽभवत्तदा ६
महता परिबर्हेण राजयोग्येन संवृतः
राजभिर्बहुभिः सार्धमुपायात्काम्यकं च सः ७
तत्रापश्यत्प्रियां भार्यां पाराडवानां यशस्विनीम्
तिष्ठन्तीमाश्रमद्वारि द्रौपदीं निर्जने वने ८
विभ्राजमानां वपुषा बिभ्रतीं रूपमुत्तमम्
भ्राजयन्तीं वनोद्देशं नीलाभ्रमिव विद्युतम् ९
अप्सरा देवकन्या वा माया वा देवनिर्मिता
इति कृत्वाञ्जलि सर्वे ददृशुस्तामनिन्दिताम् १०
ततः स राजा सिन्धूनां वार्द्धक्षत्रिर्जयद्रथः
विस्मितस्तामनिन्द्याङ्गीं दृष्ट्वासीद्धृष्टमानसः ११
स कोटिकाश्यं राजानमब्रवीत्काममोहितः
कस्य त्वेषानवद्याङ्गी यदि वापि न मानुषी १२
विवाहार्थो न मे कश्चिदिमां दृष्ट्वातिसुन्दरीम्
एतामेवाहमादाय गमिष्यामि स्वमालयम् १३
गच्छ जानीहि सौम्येनां कस्य का च कुतोऽपि वा
किमर्थमागता सुभ्रूरिदं कराटकितं वनम् १४
अपि नाम वरारोहा मामेषा लोकसुन्दरी
भजेदद्यायतापाङ्गी सुदती तनुमध्यमा १५
अप्यहं कृतकामः स्यामिमां प्राप्य वरस्त्रियम्
गच्छ जानीहि को न्वस्या नाथ इत्येव कोटिक १६

स कोटिकाश्यस्तच्छ्रुत्वा रथात्प्रस्कन्द्य कुराडली
उपेत्य पप्रच्छ तदा क्रोष्टा व्याघ्रवधूमिव १७
इति श्रीमहाभारते ग्रारगयकपर्वणि ग्रष्टचत्वारिंशदधिक द्विशततमोऽध्यायः
२४८

एकोनपञ्चाशदधिक द्विशततमोऽध्यायः
कोटिकाश्य उवाच
का त्वं कदम्बस्य विनम्य शाखामेकाश्रमे तिष्ठसि शोभमाना
देदीप्यमानाग्निशिखेव नक्तं दोधूयमाना पवनेन सुभ्रूः १
ग्रतीव रूपेण समन्विता त्वं न चाप्यरगयेषु बिभेषि किं नु
देवी नु यद्दी यदि दानवी वा वराप्सरा दैत्यवराङ्गना वा २
वपुष्मती वोरगराजकन्या वनेचरी वा द्वणदाचरस्त्री
यद्येव राज्ञो वरुणस्य पत्नी यमस्य सोमस्य धनेश्वरस्य ३
धातुर्विधातुः सवितुर्विभोर्वा शक्रस्य वा त्वं सदनात्प्रपन्ना
न ह्येव नः पृच्छसि ये वयं स्म न चापि जानीम तवेह नाथम् ४
वयं हि मानं तव वर्धयन्तः पृच्छाम भद्रे प्रभवं प्रभुं च
ग्राचद्दव बन्धूंश्च पतिं कुलं च तत्त्वेन यच्चेह करोषि कार्यम् ५
ग्रहं तु राज्ञः सुरथस्य पुत्रो यं कोटिकाश्येति विदुर्मनुष्याः
ग्रसौ तु यस्तिष्ठति काञ्चनाङ्गे रथे हुतोऽग्निश्चयने यथैव
त्रिगर्तराजः कमलायताद्दि द्वेमङ्करो नाम स एष वीरः ६
ग्रस्मात्परस्त्वेष महाधनुष्मान्पुत्रः कुणिन्दाधिपतेर्वरिष्ठः
निरीद्दते त्वां विपुलायतांसः सुविस्मितः पर्वतवासनित्यः ७
ग्रसौ तु यः पुष्करिणीसमीपे श्यामो युवा तिष्ठति दर्शनीयः
इद्दवाकुराज्ञः सुबलस्य पुत्रः स एष हन्ता द्विषतां सुगात्रि ८
यस्यानुयात्रं ध्वजिनः प्रयान्ति सौवीरका द्वादश राजपुत्राः
शोणाश्वयुक्तेषु रथेषु सर्वे मखेषु दीप्ता इव हव्यवाहाः ९
ग्रङ्गारकः कुञ्जरगुप्तकश्च शत्रुञ्जयः सञ्जयसुप्रवृद्धौ
प्रभङ्करोऽथ भ्रमरो रविश्च शूरः प्रतापः कुहरश्च नाम १०
यं षट्सहस्रा रथिनोऽनुयान्ति नागा हयाश्चैव पदातिनश्च
जयद्रथो नाम यदि श्रुतस्ते सौवीरराजः सुभगे स एषः ११

तस्यापरे भ्रातरोऽदीनसत्त्वा बलाहकानीकविदारणाद्याः
सौवीरवीराः प्रवरा युवानो राजानमेते बलिनोऽनुयान्ति १२
एतैः सहायैरुपयाति राजा मरुद्गणैरिन्द्र इवाभिगुप्तः
अजानतां ख्यापय नः सुकेशि कस्यासि भार्या दुहिता च कस्य १३
इति श्रीमहाभारते आरगयकपर्वणि एकोनपञ्चाशदधिक
द्विशततमोऽध्यायः २४९

## पञ्चाशदधिक द्विशततमोऽध्यायः

वैशम्पायन उवाच
अथाऽब्रवीद् द्रौपदी राजपुत्री पृष्टा शिबीनां प्रवरेण तेन
अवेक्ष्य मन्दं प्रविमुच्य शाखां संगृह्णती कौशिकमुत्तरीयम् १
बुद्ध्याभिजानामि नरेन्द्रपुत्र न मादृशी त्वामभिभाष्टुमर्हा
न त्वेह वक्तास्ति तवेह वाक्यमन्यो नरो वाप्यथ वापि नारी २
एका ह्यहं संप्रति तेन वाचं ददानि वै भद्र निबोध चेदम्
अहं ह्यरगये कथमेकमेका त्वामालपेयं निरता स्वधर्मे ३
जानामि च त्वां सुरथस्य पुत्रं यं कोटिकाश्येति विदुर्मनुष्याः
तस्मादहं शैब्य तथैव तुभ्यमाख्यामि बन्धून्प्रति तन्निबोध ४
अपत्यमस्मि द्रुपदस्य राज्ञः कृष्णेति मां शैब्य विदुर्मनुष्याः
साहं वृणे पञ्च जनान्पतित्वे ये खागडवप्रस्थगताः श्रुतास्ते ५
युधिष्ठिरो भीमसेनार्जुनौ च माद्र्याश्च पुत्रौ पुरुषप्रवीरौ
ते मां निवेश्येह दिशश्चतस्रो विभज्य पार्था मृगयां प्रयाताः ६
प्राचीं राजा दक्षिणां भीमसेनो जयः प्रतीचीं यमजावुदीचीम्
मन्ये तु तेषां रथसत्तमानां कालोऽभितः प्राप्त इहोपयातुम् ७
संमानिता यास्यथ तैर्यथेष्टं विमुच्य वाहानवगाहयध्वम्
प्रियातिथिर्धर्मसुतो महात्मा प्रीतो भविष्यत्यभिवीक्ष्य युष्मान् ८
एतावदुक्त्वा द्रुपदात्मजा सा शैब्यात्मजं चन्द्रमुखी प्रतीता
विवेश तां पर्णकुटीं प्रशस्तां संचिन्त्य तेषामतिथिस्वधर्मम् ९
इति श्रीमहाभारते आरगयकपर्वणि पञ्चाशदधिक द्विशततमोऽध्यायः २५०

## एकपञ्चाशदधिक द्विशततमोऽध्यायः

वैशम्पायन उवाच
अथासीनेषु सर्वेषु तेषु राजसु भारत
कोटिकाश्यवचः श्रुत्वा शैब्यं सौवीरकोऽब्रवीत् १
यदा वाचं व्याहरन्त्यामस्यां मे रमते मनः
सीमन्तिनीनां मुख्यायां विनिवृत्तः कथं भवान् २
एतां दृष्ट्वा स्त्रियो मेऽन्या यथा शाखामृगस्त्रियः
प्रतिभान्ति महाबाहो सत्यमेतद्ब्रवीमि ते ३
दर्शनादेव हि मनस्तया मेऽपहृतं भृशम्
तां समाचक्ष्व कल्याणीं यदि स्याच्छैब्य मानुषी ४
कोटिकाश्य उवाच
एषा वै द्रौपदी कृष्णा राजपुत्री यशस्विनी
पञ्चानां पाण्डुपुत्राणां महिषी संमता भृशम् ५
सर्वेषां चैव पार्थानां प्रिया बहुमता सती
तया समेत्य सौवीर सुवीरान्सुसुखी व्रज ६
वैशम्पायन उवाच
एवमुक्तः प्रत्युवाच पश्यामो द्रौपदीमिति
पतिः सौवीरसिन्धूनां दुष्टभावो जयद्रथः ७
स प्रविश्याश्रमं शून्यं सिंहगोष्ठं वृको यथा
आत्मना सप्तमः कृष्णामिदं वचनमब्रवीत् ८
कुशलं ते वरारोहे भर्तारस्तेऽप्यनामयाः
येषां कुशलकामासि तेऽपि कच्चिदनामयाः ९
द्रौपद्युवाच
कौरव्यः कुशली राजा कुन्तीपुत्रो युधिष्ठिरः
अहं च भ्रातरश्चास्य यांश्चान्यान्परिपृच्छसि १०
पाद्यं प्रतिगृहाणेदमासनं च नृपात्मज
मृगान्पञ्चाशतं चैव प्रातराशं ददानि ते ११
एणेयान्पृषतान्न्यङ्कून्हरिणाञ्शरभाञ्शशान्
ऋश्यान्रुरूञ्शम्बरांश्च गवयांश्च मृगान्बहून् १२
वराहान्महिषांश्चैव याश्चान्या मृगजातयः

प्रदास्यति स्वयं तुभ्यं कुन्तीपुत्रो युधिष्ठिरः १३
जयद्रथ उवाच
कुशलं प्रातराशस्य सर्वा मेऽपचितिः कृता
एहि मे रथमारोह सुखमाप्नुहि केवलम् १४
गतश्रीकांश्च्युतान्राज्यात्कृपणान्गतचेतसः
अरगयवासिनः पार्थन्नानुरोद्धुं त्वमर्हसि १५
न वै प्राज्ञा गतश्रीकं भर्तारमुपयुञ्जते
युञ्जानमनुयुञ्जीत न श्रियः संक्षये वसेत् १६
श्रिया विहीना राज्याच्च विनष्टाः शाश्वतीः समाः
अलं ते पागडुपुत्राणां भक्त्या क्लेशमुपासितुम् १७
भार्या मे भव सुश्रोणि त्यजैनान्सुखमाप्नुहि
अखिलान्सिन्धुसौवीरानवाप्नुहि मया सह १८
वैशम्पायन उवाच
इत्युक्ता सिन्धुराजेन वाक्यं हृदयकम्पनम्
कृष्णा तस्मादपाक्रामद्देशात्सभ्रुकुटीमुखी १९
अवमत्यास्य तद्वाक्यमाक्षिप्य च सुमध्यमा
मैवमित्यब्रवीत्कृष्णा लज्जस्वेति च सैन्धवम् २०
सा काङ्क्षमाणा भर्तॄणामुपयानमनिन्दिता
विलोभयामास परं वाक्यैर्वाक्यानि युञ्जती २१
इति श्रीमहाभारते आरगयकपर्वणि एकपञ्चाशदधिक द्विशततमोऽध्यायः
२५१

द्विपञ्चाशदधिक द्विशततमोऽध्यायः

वैशम्पायन उवाच
सरोषरागोपहतेन वल्गुना सरागनेत्रेण नतोन्नतभ्रुवा
मुखेन विस्फूर्य सुवीरराष्ट्रपं ततोऽब्रवीत्तं द्रुपदात्मजा पुनः १
यशस्विनस्तीक्ष्णविषान्महारथानधिक्षिपन्मूढ न लज्जसे कथम्
महेन्द्रकल्पान्निरतान्स्वकर्मसु स्थितान्समूहेष्वपि यक्षरक्षसाम् २
न किंचिदीड्यं प्रवदन्ति पापं वनेचरं वा गृहमेधिनं वा
तपस्विनं संपरिपूर्णविद्यं भषन्ति हैवं श्वनराः सुवीर ३

अहं तु मन्ये तव नास्ति कश्चिदेतादृशे क्षत्रियसंनिवेशे
यस्त्वाद्य पातालमुखे पतन्तं पाणौ गृहीत्वा प्रतिसंहरेत ४
नागं प्रभिन्नं गिरिकूटकल्पमुपत्यकां हैमवतीं चरन्तम्
दण्डीव यूथादपसेधसे त्वं यो जेतुमाशंससि धर्मराजम् ५
बाल्यात्प्रसुप्तस्य महाबलस्य सिंहस्य पक्ष्माणि मुखाल्लुनासि
पदा समाहत्य पलायमानः क्रुद्धं यदा द्रक्ष्यसि भीमसेनम् ६
महाबलं घोरतरं प्रवृद्धं जातं हरिं पर्वतकन्दरेषु
प्रसुप्तमुग्रं प्रपदेन हंसि यः क्रुद्धमासेत्स्यसि जिष्णुमुग्रम् ७
कृष्णोरगौ तीक्ष्णविषौ द्विजिह्वौ मत्तः पदाक्रामसि पुच्छदेशे
यः पाण्डवाभ्यां पुरुषोत्तमाभ्यां जघन्यजाभ्यां प्रयुयुत्ससे त्वम् ८
यथा च वेणुः कदली नलो वा फलन्त्यभावाय न भूतयेऽत्मनः
तथैव मां तैः परिरक्ष्यमाणामादास्यसे कर्कटकीव गर्भम् ९
जयद्रथ उवाच
जानामि कृष्णे विदितं ममैतद्यथाविधास्ते नरदेवपुत्राः
न त्वेवमेतेन बिभीषणेन शक्या वयं त्रासयितुं त्वयाद्य १०
वयं पुनः सप्तदशेषु कृष्णे कुलेषु सर्वेऽनवमेषु जाताः
षड्भ्यो गुणेभ्योऽभ्यधिका विहीनान्मन्यामहे द्रौपदि पाण्डुपुत्रान् ११
सा क्षिप्रमातिष्ठ गजं रथं वा न वाक्यमात्रेण वयं हि शक्याः
आशंस वा त्वं कृपणं वदन्ती सौवीरराजस्य पुनः प्रसादम् १२
द्रौपद्युवाच
महाबला किं त्विह दुर्बलेव सौवीरराजस्य मताहमस्मि
याहं प्रमाथादिह संप्रतीता सौवीरराजं कृपणं वदेयम् १३
यस्या हि कृष्णौ पदवीं चरेतां समास्थितावेकरथे सहायौ
इन्द्रोऽपि तां नापहरेत्कथंचिन्मनुष्यमात्रः कृपणः कुतोऽन्य १४
यदा किरीटी परवीरघाती निघ्नन्रथस्थो द्विषतां मनांसि
मदन्तरे त्वद्ध्वजिनीं प्रवेष्टा कक्षं दहन्नग्निरिवोष्णगेषु १५
जनार्दनस्यानुगा वृष्णिवीरा महेष्वासाः केकयाश्चापि सर्वे
एते हि सर्वे मम राजपुत्राः प्रहृष्टरूपाः पदवीं चरेयुः १६
मौर्वीविसृष्टाः स्तनयित्नुघोषा गाण्डीवमुक्तास्त्वतिवेगवन्तः
हस्तं समाहत्य धनञ्जयस्य भीमाः शब्दं घोरतरं नदन्ति १७

गाण्डीवमुक्तांश्च महाशरौघान्पतङ्गसङ्घानिव शीघ्रवेगान्
सशङ्खघोषः सतलत्रघोषो गाण्डीवधन्वा मुहुरुद्वमंश्च
यदा शरानर्पयिता तवोरसि तदा मनस्ते किमिवाभविष्यत् १८
गदाहस्तं भीममभिद्रवन्तं माद्रीपुत्रौ संपतन्तौ दिशश्च
अमर्षजं क्रोधविषं वमन्तौ दृष्ट्वा चिरं तापमुपैष्यसेऽधम १९
यथा चाहं नातिचरे कथंचित्पतीन्महार्हान्मनसापि जातु
तेनाद्य सत्येन वशीकृतं त्वां द्रष्टास्मि पार्थैः परिकृष्यमाणम् २०
न संभ्रमं गन्तुमहं हि शक्ष्ये त्वया नृशंसेन विकृष्यमाणा
समागताहं हि कुरुप्रवीरैः पुनर्वनं काम्यकमागता च २१
वैशम्पायन उवाच
साताननुप्रेक्ष्य विशालनेत्रा जिघृक्षमाणानवभर्त्सयन्ती
प्रोवाच मा मा स्पृशतेति भीता धौम्यं प्रचुक्रोश पुरोहितं सा २२
जग्राह तामुत्तर वस्त्रदेशे जयद्रथस्तं समवाक्षिपत्सा
तया समाक्षिप्ततनुः स पापः पपात शाखीव निकृत्तमूलः २३
प्रगृह्यमाणा तु महाजवेन मुहुर्विनिःश्वस्य च राजपुत्री
सा कृष्यमाणा रथमारुरोह धौम्यस्य पादावभिवाद्य कृष्णा २४
धौम्य उवाच
नेयं शक्या त्वया नेतुमविजित्य महारथान्
धर्मं क्षत्रस्य पौराणमवेक्षस्व जयद्रथ २५
क्षुद्रं कृत्वा फलं पापं प्राप्स्यसि त्वमसंशयम्
आसाद्य पाण्डवान्वीरान्धर्मराजपुरोगमान् २६
वैशम्पायन उवाच
इत्युक्त्वा ह्रियमाणां तां राजपुत्रीं यशस्विनीम्
अन्वगच्छत्तदा धौम्यः पदातिगणमध्यगः २७

इति श्रीमहाभारते आरण्यकपर्वणि द्विपञ्चाशदधिक द्विशततमोऽध्यायः
२५२

## त्रिपञ्चाशदधिक द्विशततमोऽध्यायः

वैशम्पायन उवाच
ततो दिशः संप्रविहृत्य पार्था मृगान्वराहान्महिषांश्चहत्वा

धनुर्धराः श्रेष्ठतमाः पृथिव्यां पृथक्चरन्तः सहिता बभूवुः १
ततो मृगव्यालगणानुकीर्णं महावनं तद्विहगोपघुष्टम्
भ्रातॄंश्च तानभ्यवदद्युधिष्ठिरः श्रुत्वा गिरो व्याहरतां मृगाणाम् २
आदित्यदीप्तां दिशमभ्युपेत्य मृगद्विजाः क्रूरमिमे वदन्ति
आयासमुग्रं प्रतिवेदयन्तो महाहवं शत्रुभिर्वावमानम् ३
क्षिप्रं निवर्तध्वमलं मृगैर्नो मनो हि मे दूयति दह्यते च
बुद्धिं समाच्छाद्य च मे समन्युरुद्धूयते प्राणपतिः शरीरे ४
सरः सुपर्णेन हृतोरगं यथा राष्ट्रं यथाराजकमात्तलक्ष्मि
एवंविधं मे प्रतिभाति काम्यकं शौण्डैर्यथा पीतरसश्च कुम्भः ५
ते सैन्धवैरत्यनिलौघवेगैर्महाजवैर्वाजिभिरुह्यमानाः
युक्तैर्बृहद्भिः सुरथैर्नृवीरास्तदाश्रमायाभिमुखा बभूवुः ६
तेषां तु गोमायुरनल्पघोषो निवर्ततां वाममुपेत्य पार्श्वम्
प्रव्याहरत्तं प्रविमृश्य राजा प्रोवाच भीमं च धनंजयं च ७
यथा वदत्येष विहीनयोनिः शालावृको वाममुपेत्य पार्श्वम्
सुव्यक्तमस्मानवमन्य पापैः कृतोऽभिमर्दः कुरुभिः प्रसह्य ८
इत्येव ते तद्वनमाविशन्तो महत्यरण्ये मृगयां चरित्वा
बालामपश्यन्त तदा रुदन्तीं धात्रेयिकां प्रेष्यवधूं प्रियायाः ९
तामिन्द्रसेनस्त्वरितोऽभिसृत्य रथादवप्लुत्य ततोऽभ्यधावत्
प्रोवाच चैनां वचनं नरेन्द्र धात्रेयिकामार्ततरस्तदानीम् १०
किं रोदिषि त्वं पतिता धरण्यां किं ते मुखं शुष्यति दीनवर्णम्
कच्चिन्न पापैः सुनृशंसकृद्भिः प्रमाथिता द्रौपदी राजपुत्री
अनिन्द्यरूपा सुविशालनेत्रा शरीरतुल्या कुरुपुङ्गवानाम् ११
यद्येव देवी पृथिवीं प्रविष्टा दिवं प्रपन्नाप्यथ वा समुद्रम्
तस्या गमिष्यन्ति पदं हि पार्थास्तथा हि संतप्यति धर्मराजः १२
को हीदृशानामरिमर्दनानां क्लेशक्षमाणामपराजितानाम्
प्राणैः समामिष्टतमां जिहीर्षेदनुत्तमं रत्नमिव प्रमूढः
न बुध्यते नाथवतीमिहाद्य बहिश्चरं हृदयं पाण्डवानाम् १३
कस्याद्य कायं प्रतिभिद्य घोरा महीं प्रवेक्ष्यन्ति शिताः शराग्र्याः
मा त्वं शुचस्तां प्रति भीरु विद्धि यथाद्य कृष्णा पुनरेष्यतीति
निहत्य सर्वान्द्विषतः समग्रान्पार्थाः समेष्यन्त्यथ याज्ञसेन्या १४

अथाब्रवीच्चारुमुखं प्रमृज्य धात्रेयिका सारथिमिन्द्रसेनम्
जयद्रथेनापहृता प्रमथ्य पञ्चेन्द्रकल्पान्परिभूय कृष्णा १५
तिष्ठन्ति वर्त्मानि नवान्यमूनि वृक्षाश्च न म्लान्ति तथैव भग्नाः
आवर्तयध्वं ह्यनुयात शीघ्रं नदूरयातैव हि राजपुत्री १६
संनह्यध्वं सर्व एवेन्द्रकल्पा महान्ति चारूणि च दंशनानि
गृह्णीत चापानि महाधनानि शरांश्च शीघ्रं पदवीं व्रजध्वम् १७
पुरा हि निर्भर्त्सनदगडमोहिता प्रमूढचित्ता वदनेन शुष्यता
ददाति कस्मैचिदनर्हते तनुं वराज्यपूर्णामिव भस्मनि स्त्रुचम् १८
पुरा तुषाग्नाविव हूयते हविः पुरा श्मशाने स्त्रगिवापविध्यते
पुरा च सोमोऽध्वरगोऽवलिह्यते शुना यथा विप्रजने प्रमोहिते
महत्यरगये मृगयां चरित्वा पुरा शृगालो नलिनीं विगाहते १९
मा वः प्रियायाः सुनसं सुलोचनं चन्द्रप्रभाच्छं वदनं प्रसन्नम्
स्पृश्याच्छुभं कश्चिदकृत्यकारी श्वा वै पुरोडाशमिवोपयुङ्गीत्
एतानि वर्त्मान्यनुयात शीघ्रं मा वः कालः चिप्रमिहात्यगाद्वै २०
युधिष्ठिर उवाच
भद्रेस्तूष्णीमास्व नियच्छ वाचं मास्मत्सकाशे परुषागयवोचः
राजानो वा यदि वा राजपुत्रा बलेन मत्ता वञ्चनां प्राप्नुवन्ति २१
वैशम्पायन उवाच
एतावदुक्त्वा प्रययुर्हि शीघ्रं तान्येव वर्त्मान्यनुवर्तमानाः
मुहुर्मुहुर्व्यालवदुच्छ्वसन्तो ज्यां विचिपन्तश्च महाधनुर्भ्यः २२
ततोऽपश्यंस्तस्य सैन्यस्य रेणुमुद्धूतं वै वाजिखुरप्रणुन्नम्
पदातीनां मध्यगतं च धौम्यं विक्रोशन्तं भीममभिद्रवेति २३
ते सान्त्व्य धौम्यं परिदीनसत्त्वाः सुखं भवानेत्विति राजपुत्राः
श्येना यथैवामिषसंप्रयुक्ता जवेन तत्सैन्यमथाभ्यधावन् २४
तेषां महेन्द्रोपमविक्रमाणां संरब्धानां धर्षणाद्याज्ञसेन्याः
क्रोधः प्रजज्वाल जयद्रथं च दृष्ट्वा प्रियां तस्य रथे स्थितां च २५
प्रचुक्रुशुश्चाप्यथ सिन्धुराजं वृकोदरश्चैव धनञ्जयश्च
यमौ च राजा च महाधनुर्धरास्ततो दिशः संमुमुहुः परेषाम् २६
इति श्रीमहाभारते आरगयकपर्वणि त्रिपञ्चाशदधिक द्विशततमोऽध्यायः
२५३

## चतुःपञ्चाशदधिक द्विशततमोध्यायः

वैशम्पायन उवाच
ततो घोरतरः शब्दो वने समभवत्तदा
भीमसेनार्जुनौ दृष्ट्वा क्षत्रियाणाममर्षिणाम् १
तेषां ध्वजाग्राण्यभिवीक्ष्य राजा स्वयं दुरात्मा कुरुपुङ्गवानाम्
जयद्रथो याज्ञसेनीमुवाच रथे स्थितां भानुमतीं हतौजाः २
आयान्तीमे पञ्च रथा महान्तो मन्ये च कृष्णे पतयस्तवैते
सा जानती ख्यापय नः सुकेशि परं परं पाण्डवानां रथस्थम् ३
द्रौपद्युवाच
किं ते ज्ञातैर्मूढ महाधनुर्धैरनायुष्यं कर्म कृत्वातिघोरम्
एते वीराः पतयो मे समेता न वः शेषः कश्चिदिहास्ति युद्धे ४
आख्यातव्यं त्वेव सर्वं मुमूर्षोर्मया तुभ्यं पृष्टया धर्म एषः
न मे व्यथा विद्यते त्वद्भयं वा संपश्यन्त्याः सानुजं धर्मराजम् ५
यस्य ध्वजाग्रे नदतो मृदङ्गौ नन्दोपनन्दौ मधुरौ युक्तरूपौ
एतं स्वधर्मार्थविनिश्चयज्ञं सदा जनाः कृत्यवन्तोऽनुयान्ति ६
य एष जाम्बूनदशुद्धगौरः प्रचण्डघोणस्तनुरायताक्षः
एतं कुरुश्रेष्ठतमं वदन्ति युधिष्ठिरं धर्मसुतं पतिं मे ७
अप्येष शत्रोः शरणागतस्य दद्यात्प्राणान्धर्मचारी नृवीरः
परैह्येनं मूढ जवेन भूतये त्वमात्मनः प्राञ्जलिर्न्यस्तशस्त्रः ८
अथाप्येनं पश्यसि यं रथस्थं महाभुजं शालमिव प्रवृद्धम्
संदष्टोष्ठं भ्रुकुटीसंहतभ्रुवं वृकोदरो नाम पतिर्ममैषः ९
आजानेया बलिनः साधु दान्ता महाबलाः शूरमुदावहन्ति
एतस्य कर्माण्यतिमानुषाणि भीमेति शब्दोऽस्य गतः पृथिव्याम् १०
नास्यापराद्धाः शेषमिहाप्नुवन्ति नाप्यस्य वैरं विस्मरते कदाचित्
वैरस्यान्तं संविधायोपयाति पश्चाच्छान्तिं न च गच्छत्यतीव ११
मृदुर्वदान्यो धृतिमान्यशस्वी जितेन्द्रियो वृद्धसेवी नृवीरः
भ्राता च शिष्यश्च युधिष्ठिरस्य धनंजयो नाम पतिर्ममैषः १२
यो वै न कामान्न भयान्न लोभात्त्यजेद्धर्मं न नृशंसं च कुर्यात्
स एष वैश्वानरतुल्यतेजाः कुन्तीसुतः शत्रुसहः प्रमाथी १३
यः सर्वधर्मार्थविनिश्चयज्ञो भयार्तानां भयहर्ता मनीषी

यस्योत्तमं रूपमाहुः पृथिव्यां यं पागडवाः परिरक्षन्ति सर्वे १४
प्राणैर्गरीयांसमनुव्रतं वै स एष वीरो नकुलः पतिर्मे
यः खड्गयोधी लघुचित्रहस्तो महांश्च धीमान्सहदेवोऽद्वितीयः १५
यस्याद्य कर्म द्रक्ष्यसे मूढसत्त्व सतक्रतोर्वा दैत्यसेनासु संख्ये
शूरः कृतास्त्रो मतिमान्मनीष प्रियङ्करो धर्मसुतस्य राज्ञः १६
य एष चन्द्रार्कसमानतेजा जघन्यजः पागडवानां प्रियश्च
बुद्ध्या समो यस्य नरो न विद्यते वक्ता तथा सत्सु विनिश्चयज्ञः १७
स एष शूरो नित्यममर्षणश्च धीमान्प्राज्ञः सहदेवः पतिर्मे
त्यजेत्प्राणान्प्रविशेद्धव्यवाहं न त्वेवैष व्याहरेद्धर्मबाह्यम्
सदा मनस्वी क्षत्रधर्मे निविष्टः कुन्त्याः प्राणैरिष्टतमो नृवीरः १८
विशीर्यन्तीं नावमिवार्णवान्ते रत्नाभिपूर्णां मकरस्य पृष्ठे
सेनां तवेमां हतसर्वयोधां विक्षोभितां द्रक्ष्यसि पागडुपुत्रैः १९
इत्येते वै कथिताः पागडुपुत्रा यांस्त्वं मोहादवमन्य प्रवृत्तः
यद्येतैस्त्वं मुच्यसेऽरिष्टदेहः पुनर्जन्म प्राप्स्यसे जीव एव २०
वैशम्पायन उवाच
ततः पार्थाः पञ्च पञ्चेन्द्रकल्पास्त्यक्त्वा त्रस्तान्प्राञ्जलद्यंस्तान्पदातीन्
रथानीकं शरवर्षान्धकारं चक्रुः क्रुद्धाः सर्वतः संनिगृह्य २१
इति श्रीमहाभारते आरगयकपर्वणि चतुःपञ्चाशदधिक द्विशततमोऽध्यायः
२५४

पञ्चपञ्चाशदधिक द्विशततमोऽध्यायः

वैशम्पायन उवाच
संतिष्ठत प्रहरत तूर्णं विपरिधावत
इति स्म सैन्धवो राजा चोदयामास तान्नृपान् १
ततो घोरतरः शब्दो रणे समभवत्तदा
भीमार्जुनयमान्दृष्ट्वा सैन्यानां सयुधिष्ठिरान् २
शिबिसिन्धुत्रिगर्तानां विषादश्चाप्यजायत
तान्दृष्ट्वा पुरुषव्याघ्रान्व्याघ्रानिव बलोत्कटान् ३
हेमचित्रसमुत्सेधां सर्वशैक्यायसीं गदाम्
प्रगृह्याभ्यद्रवद्भीमः सैन्धवं कालचोदितम् ४

तदन्तरमथावृत्य कोटिकाश्योऽभ्यहारयत्
महता रथवंशेन परिवार्य वृकोदरम् ५
शक्तितोमरनाराचैर्वीरबाहुप्रचोदितैः
कीर्यमाणोऽपि बहुभिर्न स्म भीमोऽभ्यकम्पत ६
गजं तु सगजारोहं पदातींश्च चतुर्दश
जघान गदया भीमः सैन्धवध्वजिनीमुखे ७
पार्थः पञ्चशताञ्शूरान्पार्वतीयान्महारथान्
परीप्समानः सौवीरं जघान ध्वजिनीमुखे ८
राजा स्वयं सुवीराणां प्रवराणां प्रहारिणाम्
निमेषमात्रेण शतं जघान समरे तदा ९
ददृशे नकुलस्तत्र रथात्प्रस्कन्द्य खड्गधृक्
शिरांसि पादरक्षाणां बीजवत्प्रवपन्मुहुः १०
सहदेवस्तु संयाय रथेन गजयोधिनः
पातयामास नाराचैर्द्रुमेभ्य इव बर्हिणः ११
ततस्त्रिगर्तः सधनुरवतीर्य महारथात्
गदया चतुरो वाहान्राज्ञस्तस्य तदावधीत् १२
तमभ्याशगतं राजा पदातिं कुन्तिनन्दनः
अर्धचन्द्रेण बाणेन विव्याधोरसि धर्मराट् १३
स भिन्नहृदयो वीरो वक्त्राच्छोणितमुद्वमन्
पपाताभिमुखः पार्थं छिन्नमूल इव द्रुमः १४
इन्द्रसेनद्वितीयस्तु रथात्प्रस्कन्द्य धर्मराट्
हताश्वः सहदेवस्य प्रतिपेदे महारथम् १५
नकुलं त्वभिसंधाय क्षेमङ्करमहामुखौ
उभावुभयतस्तीक्ष्णैः शरवर्षैरवर्षताम् १६
तौ शरैरभिवर्षन्तौ जीमूताविव वार्षिकौ
एकैकेन विपाठेन जघ्ने माद्रवतीसुतः १७
त्रिगर्तराजः सुरथस्तस्याथ रथधूर्गतः
रथमाक्षेपयामास गजेन गजयानवित् १८
नकुलस्त्वपभीस्तस्माद्रथाच्चर्मासिपाणिमान्
उद्भ्रान्तं स्थानमास्थाय तस्थौ गिरिरिवाचलः १९

सुरथस्तं गजवरं वधाय नकुलस्य तु
प्रेषयामास सक्रोधमभ्युच्छ्रितकरं ततः २०
नकुलस्तस्य नागस्य समीपपरिवर्तिनः
सविषाणं भुजं मूले खड्गेन निरकृन्तत २१
स विनद्य महानादं गजः कङ्कणभूषणः
पतन्नवाक्शिरा भूमौ हस्त्यारोहानपोथयत् २२
स तत्कर्म महत्कृत्वा शूरो माद्रवतीसुतः
भीमसेनरथं प्राप्य शर्म लेभे महारथः २३
भीमस्त्वापततो राज्ञः कोटिकाश्यस्य सङ्गरे
सूतस्य नुदतो वाहान्क्षुरेणापाहरच्छिरः २४
न बुबोध हतं सूतं स राजा बाहुशालिना
तस्याश्वा व्यद्रवन्सङ्ख्ये हतसूतास्ततस्ततः २५
विमुखं हतसूतं तं भीमः प्रहरतां वरः
जघान तलयुक्तेन प्रासेनाभ्येत्य पाणडवः २६
द्वादशानां तु सर्वेषां सौवीराणां धनंजयः
चकर्त निशितैर्भल्लैर्धनूंषि च शिरांसि च २७
शिबीनिक्ष्वाकुमुख्यांश्च त्रिगर्तान्सैन्धवानपि
जघानातिरथः संख्ये बाणगोचरमागतान् २८
सादिताः प्रत्यदृश्यन्त बहवः सव्यसाचिना
सपताकाश्च मातङ्गाः सध्वजाश्च महारथाः २९
प्रच्छाद्य पृथिवीं तस्थुः सर्वमायोधनं प्रति
शरीराणयशिरस्कानि विदेहानि शिरांसि च ३०
श्वगृध्रकङ्ककाकोलभासगोमायुवायसाः
अतृप्यंस्तत्र वीराणां हतानां मांसशोणितैः ३१
हतेषु तेषु वीरेषु सिन्धुराजो जयद्रथः
विमुच्य कृष्णां संत्रस्तः पलायनपरोऽभवत् ३२
स तस्मिन्संकुले सैन्ये द्रौपदीमवतार्य वै
प्राणप्रेप्सुरुपाधावद्वनं येन नराधमः ३३
द्रौपदीं धर्मराजस्तु दृष्ट्वा धौम्यपुरस्कृताम्
माद्रीपुत्रेण वीरेण रथमारोपयत्तदा ३४

ततस्तद्विद्रुतं सैन्यमपयाते जयद्रथे
आदिश्यादिश्य नाराचैराजघान वृकोदरः ३५
सव्यसाची तु तं दृष्ट्वा पलायन्तं जयद्रथम्
वारयामास निघ्नन्तं भीमं सैन्धवसैनिकान् ३६
अर्जुन उवाच
यस्यापचारात्प्राप्तोऽयमस्मान्क्लेशो दुरासदः
तमस्मिन्समरोद्देशे न पश्यामि जयद्रथम् ३७
तमेवान्विष भद्रं ते किं ते योधैर्निपातितैः
अनामिषमिदं कर्म कथं वा मन्यते भवान् ३८
वैशम्पायन उवाच
इत्युक्तो भीमसेनस्तु गुडाकेशेन धीमता
युधिष्ठिरमभिप्रेक्ष्य वाग्मी वचनमब्रवीत् ३९
हतप्रवीरा रिपवो भूयिष्ठं विद्रुता दिशः
गृहीत्वा द्रौपदीं राजन्निवर्ततु भवानितः ४०
यमाभ्यां सह राजेन्द्र धौम्येन च महात्मना
प्राप्याश्रमपदं राजन्द्रौपदीं परिसान्त्वय ४१
न हि मे मोक्ष्यते जीवन्मूढः सैन्धवको नृपः
पातालतलसंस्थोऽपि यदि शक्रोऽस्य सारथिः ४२
युधिष्ठिर उवाच
न हन्तव्यो महाबाहो दुरात्मापि स सैन्धवः
दुःशलामभिसंस्मृत्य गान्धारीं च यशस्विनीम् ४३
वैशम्पायन उवाच
तच्छ्रुत्वा द्रौपदी भीममुवाच व्याकुलेन्द्रिया
कुपिता ह्रीमती प्राज्ञा पती भीमार्जुनावुभौ ४४
कर्तव्यं चेत्प्रियं मह्यं वध्यः स पुरुषाधमः
सैन्धवापसदः पापो दुर्मतिः कुलपांसनः ४५
भार्याभिहर्ता निर्वैरो यश्च राज्यहरो रिपुः
याचमानोऽपि संग्रामे न स जीवितुमर्हति ४६
इत्युक्तौ तौ नरव्याघ्रौ ययतुर्यत्र सैन्धवः
राजा निववृते कृष्णामादाय सपुरोहितः ४७

स प्रविश्याश्रमपदं व्यपविद्धबृसीघटम्
मार्कण्डेयादिभिर्विप्रैरनुकीर्णं ददर्श ह ४८
द्रौपदीमनुशोचद्भिर्ब्राह्मणैस्तैः समागतैः
समियाय महाप्राज्ञः सभार्यो भ्रातृमध्यगः ४९
ते स्म तं मुदिता दृष्ट्वा पुनरभ्यागतं नृपम्
जित्वा तान्सिन्धुसौवीरान्द्रौपदीं चाहृतां पुनः ५०
स तैः परिवृतो राजा तत्रैवोपविवेश ह
प्रविवेशाश्रमं कृष्णा यमाभ्यां सह भामिनी ५१
भीमार्जुनावपि श्रुत्वा क्रोशमात्रगतं रिपुम्
स्वयमश्वांस्तुदन्तौ तौ जवेनैवाभ्यधावताम् ५२
इदमत्यद्भुतं चात्र चकार पुरुषोऽर्जुनः
क्रोशमात्रगतानश्वान्सैन्धवस्य जघान यत् ५३
स हि दिव्यास्त्रसंपन्नः कृच्छ्रकालेऽप्यसंभ्रमः
अकरोद्दुष्करं कर्म शरैरस्त्रानुमन्त्रितैः ५४
ततोऽभ्यधावतां वीरावुभौ भीमधनंजयौ
हताश्वं सैन्धवं भीतमेकं व्याकुलचेतसम् ५५
सैन्धवस्तु हतान्दृष्ट्वा तथाश्वान्स्वान्सुदुःखितः
दृष्ट्वा विक्रमकर्माणि कुर्वाणं च धनंजयम्
पलायनकृतोत्साहः प्राद्रवद्येन वै वनम् ५६
सैन्धवं त्वभिसंप्रेक्ष्य पराक्रान्तं पलायने
अनुयाय महाबाहुः फल्गुनो वाक्यमब्रवीत् ५७
अनेन वीर्येण कथं स्त्रियं प्रार्थयसे बलात्
राजपुत्र निवर्तस्व न ते युक्तं पलायनम्
कथं चानुचरान्हित्वा शत्रुमध्ये पलायसे ५८
इत्युच्यमानः पार्थेन सैन्धवो न न्यवर्तत
तिष्ठ तिष्ठेति तं भीमः सहसाभ्यद्रवद्बली
मा वधीरिति पार्थस्तं दयावानभ्यभाषत ५९

इति श्रीमहाभारते आरण्यकपर्वणि पञ्चपञ्चाशदधिक द्विशततमोऽध्यायः
२५५

## षट्पञ्चाशदधिक द्विशततमोऽध्यायः

वैशम्पायन उवाच
जयद्रथस्तु संप्रेक्ष्य भ्रातरावुद्यतायुधौ
प्राद्रवत्तूर्णमव्यग्रो जीवितेप्सुः सुदुःखितः १
तं भीमसेनो धावन्तमवतीर्य रथाद्बली
अभिद्रुत्य निजग्राह केशपक्षेऽत्यमर्षणः २
समुद्यम्य च तं रोषान्निष्पिपेष महीतले
गले गृहीत्वा राजानं ताडयामास चैव ह ३
पुनः संजीवमानस्य तस्योत्पतितुमिच्छतः
पदा मूर्ध्नि महाबाहुः प्राहरद्विलपिष्यतः ४
तस्य जानुं ददौ भीमो जघ्ने चैनमरत्निना
स मोहमगमद्राजा प्रहारवरपीडितः ५
विरोषं भीमसेनं तु वारयामास फल्गुनः
दुःशलायाः कृते राजा यत्तदाहेति कौरव ६
भीमसेन उवाच
नायं पापसमाचारो मत्तो जीवितुमर्हति
द्रौपद्यास्तदनर्हायाः परिक्लेष्टा नराधमः ७
किं नु शक्यं मया कर्तुं यद्राजा सततं घृणी
त्वं च बालिशया बुद्ध्या सदैवास्मान्प्रबाधसे ८
एवमुक्त्वा सटास्तस्य पञ्च चक्रे वृकोदरः
अर्धचन्द्रेण बाणेन किंचिदब्रुवतस्तदा ९
विकल्पयित्वा राजानं ततः प्राह वृकोदरः
जीवितुं चेच्छसे मूढ हेतुं मे गदतः शृणु १०
दासोऽस्मीति त्वया वाच्यं संसत्सु च सभासु च
एवं ते जीवितं दद्यामेष युद्धजितो विधिः ११
एवमस्त्विति तं राजा कृच्छ्रप्राणो जयद्रथः
प्रोवाच पुरुषव्याघ्रं भीममाहवशोभिनम् १२
तत एनं विचेष्टन्तं बद्ध्वा पार्थो वृकोदरः
रथमारोपयामास विसंज्ञं पांसुगुण्ठितम् १३
ततस्तं रथमास्थाय भीमः पार्थानुगस्तदा

अभ्येत्याश्रममध्यस्थमभ्यगच्छद्युधिष्ठिरम् १४
दर्शयामास भीमस्तु तदवस्थं जयद्रथम्
तं राजा प्राहसद्दृष्ट्वा मुच्यतामिति चाब्रवीत् १५
राजानं चाब्रवीद्भीमो द्रौपद्यै कथयेति वै
दासभावं गतो ह्येष पाण्डूनां पापचेतनः १६
तमुवाच ततो ज्येष्ठो भ्राता सप्रणयं वचः
मुञ्चैनमधमाचारं प्रमाणा यदि ते वयम् १७
द्रौपदी चाब्रवीद्भीममभिप्रेक्ष्य युधिष्ठिरम्
दासोऽय मुच्यतां राज्ञस्त्वया पञ्चसटः कृतः १८
स मुक्तोऽभ्येत्य राजानमभिवाद्य युधिष्ठिरम्
ववन्दे विह्वलो राजा तांश्च सर्वान्मुनींस्तदा १९
तमुवाच घृणी राजा धर्मपुत्रो युधिष्ठिरः
तथा जयद्रथं दृष्ट्वा गृहीतं सव्यसाचिना २०
अदासो गच्छ मुक्तोऽसि मैवं कार्षीः पुनः क्वचित्
स्त्रीकामुक धिगस्तु त्वां क्षुद्रः क्षुद्रसहायवान्
एवंविधं हि कः कुर्यात्त्वदन्यः पुरुषाधमः २१
गतसत्त्वमिव ज्ञात्वा कर्तारमशुभस्य तम्
संप्रेक्ष्य भरतश्रेष्ठः कृपां चक्रे नराधिपः २२
धर्मे ते वर्धतां बुद्धिर्मा चाधर्मे मनः कृथाः
साश्वः सरथपादातः स्वस्ति गच्छ जयद्रथ २३
एवमुक्तस्तु सव्रीडं तूष्णीं किंचिदवाङ्मुखः
जगाम राजा दुःखार्तो गङ्गाद्वाराय भारत २४
स देवं शरणं गत्वा विरूपाक्षमुमापतिम्
तपश्चचार विपुलं तस्य प्रीतो वृषध्वजः २५
बलि स्वयं प्रत्यगृह्णात्प्रीयमाणस्त्रिलोचनः
वरं चास्मै ददौ देवः स च जग्राह तच्छृणु २६
समस्तान्सरथान्पञ्च जयेयं युधि पाण्डवान्
इति राजाब्रवीद्देवं नेति देवस्तमब्रवीत् २७
अजय्यांश्चाप्यवध्यांश्च वारयिष्यसि तान्युधि
ऋतेऽर्जुनं महाबाहुं देवैरपि दुरासदम् २८

यमाहुरजितं देवं शङ्खचक्रगदाधरम्
प्रधानः सोऽस्त्रविदुषां तेन कृष्णेन रक्ष्यते २९
एवमुक्तस्तु नृपतिः स्वमेव भवनं ययौ
पाण्डवाश्च वने तस्मिन्न्यवसन्काम्यके तदा ३०
इति श्रीमहाभारते आरण्यकपर्वणि षट्पञ्चाशदधिक द्विशततमोऽध्यायः २५६

सप्त पञ्चाशदधिक द्विशततमोऽध्यायः

जनमेजय उवाच
एवं हृतायां कृष्णायां प्राप्य क्लेशमनुत्तमम्
अत ऊर्ध्वं नरव्याघ्राः किमकुर्वत पाण्डवाः १
वैशम्पायन उवाच
एवं कृष्णां मोक्षयित्वा विनिर्जित्य जयद्रथम्
आसांचक्रे मुनिगणैर्धर्मराजो युधिष्ठिरः २
तेषां मध्ये महर्षीणां शृण्वतामनुशोचताम्
मार्कण्डेयमिदं वाक्यमब्रवीत्पाण्डुनन्दनः ३
मन्ये कालश्च बलवान्दैवं च विधिनिर्मितम्
भवितव्यं च भूतानां यस्य नास्ति व्यतिक्रमः ४
कथं हि पत्नीमस्माकं धर्मज्ञां धर्मचारिणीम्
संस्पृशेदीदृशो भावः शुचिं स्तैन्यमिवानृतम् ५
न हि पापं कृतं किंचित्कर्म वा निन्दितं क्वचित्
द्रौपद्या ब्राह्मणेष्वेव धर्मः सुचरितो महान् ६
तां जहार बलाद्राजा मूढबुद्धिर्जयद्रथः
तस्याः संहरणात्प्राप्तः शिरसः केशवापनम्
पराजयं च संग्रामे ससहायः समाप्तवान् ७
प्रत्याहृता तथास्माभिर्हत्वा तत्सैन्धवं बलम्
तद्दारहरणं प्राप्तमस्माभिरवितर्कितम् ८
दुःखश्चायं वने वासो मृगयायां च जीविका
हिंसा च मृगजातीनां वनौकोभिर्वनौकसाम्
ज्ञातिभिर्विप्रवासश्च मिथ्या व्यवसितैरयम् ९

अस्ति नूनं मया कश्चिदल्पभाग्यतरो नरः
भवता दृष्टपूर्वो वा श्रुतपूर्वोऽपि वा भवेत् १०
इति श्रीमहाभारते आरण्यकपर्वणि सप्तपञ्चाशदधिक द्विशततमोऽध्यायः
२५७

अष्ट पञ्चाशदधिक द्विशततमोऽध्यायः

मार्कण्डेय उवाच
प्राप्तमप्रतिमं दुःखं रामेण भरतर्षभ
रक्षसा जानकी तस्य हृता भार्या बलीयसा १
आश्रमाद्राक्षसेन्द्रेण रावणेन विहायसा
मायामास्थाय तरसा हत्वा गृध्रं जटायुषम् २
प्रत्याजहार तां रामः सुग्रीवबलमाश्रितः
बद्ध्वा सेतुं समुद्रस्य दग्ध्वा लङ्कां शितैः शरैः ३
युधिष्ठिर उवाच
कस्मिन्रामः कुले जातः किंवीर्यः किंपराक्रमः
रावणः कस्य वा पुत्रः किं वैरं तस्य तेन ह ४
एतन्मे भगवन्सर्वं सम्यगाख्यातुमर्हसि
श्रोतुमिच्छामि चरितं रामस्याक्लिष्टकर्मणः ५
मार्कण्डेय उवाच
अजो नामाभवद्राजा महानिक्ष्वाकुवंशजः
तस्य पुत्रो दशरथः शश्वत्स्वाध्यायवाञ्शुचिः ६
अभवंस्तस्य चत्वारः पुत्रा धर्मार्थकोविदाः
रामलक्ष्मणशत्रुघ्ना भरतश्च महाबलः ७
रामस्यमाता कौसल्या कैकेयी भरतस्य तु
सुतौ लक्ष्मणशत्रुघ्नौ सुमित्रायाः परंतपौ ८
विदेहराजो जनकः सीता तस्यात्मजा विभो
यां चकार स्वयं त्वष्टा रामस्य महिषीं प्रियाम् ९
एतद्रामस्य ते जन्म सीतायाश्च प्रकीर्तितम्
रावणस्यापि ते जन्म व्याख्यास्यामि जनेश्वर १०
पितामहो रावणस्य साक्षाद्देवः प्रजापतिः

स्वयंभूः सर्वलोकानां प्रभुः स्रष्टा महातपाः ११
पुलस्त्यो नाम तस्यासीन्मानसो दयितः सुतः
तस्य वैश्रवणो नाम गवि पुत्रोऽभवत्प्रभुः १२
पितरं स समुत्सृज्य पितामहमुपस्थितः
तस्य कोपात्पिता राजन्ससर्जात्मानमात्मना १३
स जज्ञे विश्रवा नाम तस्यात्मार्धेन वै द्विजः
प्रतीकाराय सक्रोधस्ततो वैश्रवणस्य वै १४
पितामहस्तुप्रीतात्मा ददौ वैश्रवणस्य ह
अमरत्वं धनेशत्वं लोकपालत्वमेव च १५
ईशानेन तथा सख्यं पुत्रं च नलकूबरम्
राजधानीनिवेशं च लङ्कां रक्षोगणान्विताम् १६
इति श्रीमहाभारते आरण्यकपर्वणि अष्टपञ्चाशदधिक द्विशततमोऽध्यायः
२५८

एकोन षष्ठ्यधिक द्विशततमोऽध्यायः

मार्कण्डेय उवाच
पुलस्त्यस्य तु यः क्रोधादर्धदेहोऽभवन्मुनिः
विश्रवा नाम सक्रोधः स वैश्रवणमैक्षत १
बुबुधे तं तु सक्रोधं पितरं राक्षसेश्वरः
कुबेरस्तत्प्रसादार्थं यतते स्म सदा नृप २
स राजराजो लङ्कायां निवसन्नरवाहनः
राक्षसीः प्रददौ तिस्रः पितुर्वै परिचारिकाः ३
तास्तदा तं महात्मानं संतोषयितुमुद्यताः
ऋषिं भरतशार्दूल नृत्यगीतविशारदाः ४
पुष्पोत्कटा च राका च मालिनी च विशां पते
अन्योन्यस्पर्धया राजञ्श्रेयस्कामाः सुमध्यमाः ५
तासां स भगवांस्तुष्टो महात्मा प्रददौ वरान्
लोकपालोपमान्पुत्रानेकैकस्या यथेप्सितान् ६
पुष्पोत्कटायां जज्ञाते द्वौ पुत्रौ राक्षसेश्वरौ
कुम्भकर्णदशग्रीवौ बलेनाप्रतिमौ भुवि ७

मालिनी जनयामास पुत्रमेकं विभीषणम्
राकायां मिथुनं जज्ञे खरः शूर्पणखा तथा ८
विभीषणस्तु रूपेण सर्वेभ्योऽभ्यधिकोऽभवत्
स बभूव महाभागो धर्मगोप्ता क्रियारतिः ९
दशग्रीवस्तु सर्वेषां ज्येष्ठो राक्षसपुंगवः
महोत्साहो महावीर्यो महासत्त्वपराक्रमः १०
कुम्भकर्णो बलेनासीत्सर्वेभ्योऽभ्यधिकस्तदा
मायावी रणशौण्डश्च रौद्रश्च रजनीचरः ११
खरो धनुषि विक्रान्तो ब्रह्मद्विट् पिशिताशनः
सिद्धविघ्नकरी चापि रौद्रा शूर्पणखा तथा १२
सर्वे वेदविदः शूराः सर्वे सुचरितव्रताः
ऊषुः पित्रा सह रता गन्धमादनपर्वते १३
ततो वैश्रवणं तत्र ददृशुर्नरवाहनम्
पित्रा सार्धं समासीनमृद्ध्या परमया युतम् १४
जातस्पर्धास्ततस्ते तु तपसे धृतनिश्चयाः
ब्रह्माणं तोषयामासुर्घोरेण तपसा तदा १५
अतिष्ठदेकपादेन सहस्रं परिवत्सरान्
वायुभक्षो दशग्रीवः पञ्चाग्निः सुसमाहितः १६
अधःशायी कुम्भकर्णो यताहारो यतव्रतः
विभीषणः शीर्णपर्णमेकमभ्यवहारयत् १७
उपवासरतिर्धीमान्सदा जप्यपरायणः
तमेव कालमातिष्ठत्तीव्रं तप उदारधीः १८
खरः शूर्पणखा चैव तेषां वै तप्यतां तपः
परिचर्यां च रक्षां च चक्रतुर्हृष्टमानसौ १९
पूर्णे वर्षसहस्रे तु शिरश्छित्त्वा दशाननः
जुहोत्यग्नौ दुराधर्षस्तेनातुष्यज्जगत्प्रभुः २०
ततो ब्रह्मा स्वयं गत्वा तपसस्तान्न्यवारयत्
प्रलोभ्य वरदानेन सर्वानेव पृथक् पृथक् २१
ब्रह्मोवाच
प्रीतोऽस्मि वो निवर्तध्वं वरान्वृणुत पुत्रकाः

यद्यदिष्टमृते त्वेकममरत्वं तथास्तु तत् २२
यद्यदग्नौ हुतं सर्वं शिरस्ते महदीप्सया
तथैव तानि ते देहे भविष्यन्ति यथेप्सितम् २३
वैरूप्यं च न ते देहे कामरूपधरस्तथा
भविष्यसि रणेऽरीणां विजेतासि न संशयः २४
रावण उवाच
गन्धर्वदेवासुरतो यक्षराक्षसतस्तथा
सर्पकिंनरभूतेभ्यो न मे भूयात्पराभवः २५
ब्रह्मोवाच
य एते कीर्तिताः सर्वे न तेभ्योऽस्ति भयं तव
ऋते मनुष्याद्भद्रं ते तथा तद्विहितं मया २६
मार्कण्डेय उवाच
एवमुक्तो दशग्रीवस्तुष्टः समभवत्तदा
अवमेने हि दुर्बुद्धिर्मनुष्यान्पुरुषादकः २७
कुम्भकर्णमथोवाच तथैव प्रपितामहः
स वव्रे महतीं निद्रां तमसा ग्रस्तचेतनः २८
तथा भविष्यतीत्युक्त्वा विभीषणमुवाच ह
वरं वृणीष्व पुत्र त्वं प्रीतोऽस्मीति पुनः पुनः २९
विभीषण उवाच
परमापद्गतस्यापि नाधर्मे मे मतिर्भवेत्
अशिक्षितं च भगवन्ब्रह्मास्त्रं प्रतिभातु मे ३०
ब्रह्मोवाच
यस्माद्राक्षसयोनौ ते जातस्यामित्रकर्शन
नाधर्मे रमते बुद्धिरमरत्वं ददानि ते ३१
मार्कण्डेय उवाच
राक्षसस्तु वरं लब्ध्वा दशग्रीवो विशां पते
लङ्कायाश्च्यावयामास युधि जित्वा धनेश्वरम् ३२
हित्वा स भगवाँल्लङ्कामाविशद्गन्धमादनम्
गन्धर्वयक्षानुगतो रक्षःकिंपुरुषैः सह ३३
विमानं पुष्पकं तस्य जहाराक्रम्य रावणः

शशाप तं वैश्रवणो न त्वामेतद्वहिष्यति ३४
यस्तु त्वां समरे हन्ता तमेवैतद्वहिष्यति
अवमन्य गुरुं मां च क्षिप्रं त्वं न भविष्यसि ३५
विभीषणस्तु धर्मात्मा सतां धर्ममनुस्मरन्
अन्वगच्छन्महाराज श्रिया परमया युतः ३६
तस्मै स भगवांस्तुष्टो भ्राता भ्रात्रे धनेश्वरः
सैनापत्यं ददौ धीमान्यक्षराक्षससेनयोः ३७
राक्षसाः पुरुषादाश्च पिशाचाश्च महाबलाः
सर्वे समेत्य राजानमभ्यषिञ्चन्दशाननम् ३८
दशग्रीवस्तु दैत्यानां देवानां च बलोत्कटः
आक्रम्य रत्नान्यहरत्कामरूपी विहङ्गमः ३९
रावयामास लोकान्यत्तस्माद्रावण उच्यते
दशग्रीवः कामबलो देवानां भयमादधत् ४०
इति श्रीमहाभारते आरगयकपर्वणि एकोनषष्ट्यधिक द्विशततमोऽध्यायः
२५९

षष्ट्यधिक द्विशततमोऽध्यायः

मार्कगडेय उवाच
ततो ब्रह्मर्षयः सिद्धा देवराजर्षयस्तथा
हव्यवाहं पुरस्कृत्य ब्रह्माणं शरणं गताः १
अग्निरुवाच
यः स विश्रवसः पुत्रो दशग्रीवो महाबलः
अवध्यो वरदानेन कृतो भगवता पुरा २
स बाधते प्रजाः सर्वा विप्रकारैर्महाबलः
ततो नस्त्रातु भगवन्नान्यस्त्राता हि विद्यते ३
ब्रह्मोवाच
न स देवासुरैः शक्यो युद्धे जेतुं विभावसो
विहितं तत्र यत्कार्यमभितस्तस्य निग्रहे ४
तदर्थमवतीर्णोऽसौ मन्नियोगाच्चतुर्भुजः
विष्णुः प्रहरतां श्रेष्ठः स कर्मैतत्करिष्यति ५

मार्कण्डेय उवाच
पितामहस्ततस्तेषां संनिधौ वाक्यमब्रवीत्
सर्वैर्देवगणैः सार्धं संभवध्वं महीतले ६
विष्णोः सहायानृक्षीषु वानरीषु च सर्वशः
जनयध्वं सुतान्वीरान्कामरूपबलान्वितान् ७
ततो भागानुभागेन देवगन्धर्वदानवाः
अवतर्तुं महीं सर्वे रञ्जयामासुरञ्जसा ८
तेषां समक्षं गन्धर्वीं दुन्दुभीं नाम नामतः
शशास वरदो देवो देवकार्यार्थसिद्धये ९
पितामहवचः श्रुत्वा गन्धर्वी दुन्दुभी ततः
मन्थरा मानुषे लोके कुब्जा समभवत्तदा १०
शक्रप्रभृतयश्चैव सर्वे ते सुरसत्तमाः
वानरर्क्षवरस्त्रीषु जनयामासुरात्मजान्
तेऽन्ववर्तन्पितृन्सर्वे यशसा च बलेन च ११
भेत्तारो गिरिशृङ्गाणां शालतालशिलायुधाः
वज्रसंहननाः सर्वे सर्वे चौघबलास्तथा १२
कामवीर्यधराश्चैव सर्वे युद्धविशारदाः
नागायुतसमप्राणा वायुवेगसमा जवे
यत्रेच्छकनिवासाश्च केचिदत्र वनौकसः १३
एवं विधाय तत्सर्वं भगवाँल्लोकभावनः
मन्थरां बोधयामास यद्यत्कार्यं यथा यथा १४
सा तद्वचनमाज्ञाय तथा चक्रे मनोजवा
इतश्चेतश्च गच्छन्ती वैरसंधुक्षणे रता १५
इति श्रीमहाभारते आरण्यकपर्वणि षष्ट्यधिक द्विशततमोऽध्यायः २६०

## एकषष्ठ्यधिक द्विशततमोऽध्यायः

युधिष्ठिर उवाच
उक्तं भगवता जन्म रामादीनां पृथक् पृथक्
प्रस्थानकारणं ब्रह्मञ्श्रोतुमिच्छामि कथ्यताम् १
कथं दाशरथी वीरौ भ्रातरौ रामलक्ष्मणौ

प्रस्थापितौ वनं ब्रह्मन्मैथिली च यशस्विनी २
मार्कगडेय उवाच
जातपुत्रो दशरथः प्रीतिमानभवन्नृपः
क्रियारतिर्धर्मपरः सततं वृद्धसेविता ३
क्रमेण चास्य ते पुत्रा व्यवर्धन्त महौजसः
वेदेषु सरहस्येषु धनुर्वेदे च पारगाः ४
चरितब्रह्मचर्यास्ते कृतदाराश्च पार्थिव
यदा तदा दशरथः प्रीतिमानभवत्सुखी ५
ज्येष्ठो रामोऽभवत्तेषां रमयामास हि प्रजाः
मनोहरतया धीमान्पितुर्हृदयतोषणः ६
ततः स राजा मतिमान्मत्वात्मानं वयोधिकम्
मन्त्रयामास सचिवैर्धर्मज्ञैश्च पुरोहतैः ७
अभिषेकाय रामस्य यौवराज्येन भारत
प्राप्तकालं च ते सर्वे मेनिरे मन्त्रिसत्तमाः ८
लोहिताक्षं महाबाहुं मत्तमातङ्गगामिनम्
दीर्घबाहुं महोरस्कं नीलकुञ्चितमूर्धजम् ९
दीप्यमानं श्रिया वीरं शक्रादनवमं बले
पारगं सर्वधर्माणां बृहस्पतिसमं मतौ १०
सर्वानुरक्तप्रकृतिं सर्वविद्याविशारदम्
जितेन्द्रियममित्राणामपि दृष्टिमनोहरम् ११
नियन्तारमसाधूनां गोप्तारं धर्मचारिणाम्
धृतिमन्तमनाधृष्यं जेतारमपराजितम् १२
पुत्रं राजा दशरथः कौसल्यानन्दवर्धनम्
संदृश्य परमां प्रीतिमगच्छत्कुरुनन्दन १३
चिन्तयंश्च महातेजा गुणान्रामस्य वीर्यवान्
अभ्यभाषत भद्रं ते प्रीयमाणः पुरोहितम् १४
अद्य पुष्यो निशि ब्रह्मन्पुरायं योगमुपैष्यति
संभाराः संभ्रियन्तां मे रामश्चोपनिमन्त्र्यताम् १५
इति तद्राजवचनं प्रतिश्रुत्याथ मन्थरा
कैकेयीमभिगम्येदं काले वचनमब्रवीत् १६

अद्य कैकेयि दौर्भाग्यं राज्ञा ते ख्यापितं महत्
आशीविषस्त्वां संक्रुद्धश्चण्डो दशति दुर्भगे १७
सुभगा खलु कौसल्या यस्याः पुत्रोऽभिषेक्ष्यते
कुतो हि तव सौभाग्यं यस्याः पुत्रो न राज्यभाक् १८
सा तद्वचनमाज्ञाय सर्वाभरणभूषिता
वेदीविलग्नमध्येव बिभ्रती रूपमुत्तमम् १९
विविक्ते पतिमासाद्य हसन्तीव शुचिस्मिता
प्रणयं व्यञ्जयन्तीव मधुरं वाक्यमब्रवीत् २०
सत्यप्रतिज्ञ यन्मे त्वं काममेकं निसृष्टवान्
उपाकुरुष्व तद्राजंस्तस्मान्मुच्यस्व संकटात् २१
राजोवाच
वरं ददानि ते हन्त तद्गृहाण यदिच्छसि
अवध्यो वध्यतां कोऽद्य वध्यः कोऽद्य विमुच्यताम् २२
धनं ददानि कस्याद्य ह्रियतां कस्य वा पुनः
ब्राह्मणस्वादिहान्यत्र यत्किंचिद्वित्तमस्ति मे २३
मार्कण्डेय उवाच
सा तद्वचनमाज्ञाय परिगृह्य नराधिपम्
आत्मनो बलमाज्ञाय तत एनमुवाच ह २४
आभिषेचनिकं यत्ते रामार्थमुपकल्पितम्
भरतस्तदवाप्नोतु वनं गच्छतु राघवः २५
स तद्राजा वचः श्रुत्वा विप्रियं दारुणोदयम्
दुःखार्तो भरतश्रेष्ठ न किंचिद्व्याजहार ह २६
ततस्तथोक्तं पितरं रामो विज्ञाय वीर्यवान्
वनं प्रतस्थे धर्मात्मा राजा सत्यो भवत्विति २७
तमन्वगच्छल्लक्ष्मीवान्धनुष्माँल्लक्ष्मणस्तदा
सीता च भार्या भद्रं ते वैदेही जनकात्मजा २८
ततो वनं गते रामे राजा दशरथस्तदा
समयुज्यत देहस्य कालपर्यायधर्मणा २९
रामं तु गतमाज्ञाय राजानं च तथागतम्
आनाय्य भरतं देवी कैकेयी वाक्यमब्रवीत् ३०

गतो दशरथः स्वर्गं वनस्थौ रामलक्ष्मणौ
गृहाण राज्यं विपुलं क्षेमं निहतकण्टकम् ३१
तामुवाच स धर्मात्मा नृशंसं बत ते कृतम्
पतिं हत्वा कुलं चेदमुत्साद्य धनलुब्धया ३२
अयशः पातयित्वा मे मूर्ध्नि त्वं कुलपांसने
सकामा भव मे मातरित्युक्त्वा प्ररुरोद ह ३३
स चारित्रं विशोध्याथ सर्वप्रकृतिसंनिधौ
अन्वयाद्भ्रातरं रामं विनिवर्तनलालसः ३४
कौसल्यां च सुमित्रां च कैकेयीं च सुदुःखितः
अग्रे प्रस्थाप्य यानैः स शत्रुघ्नसहितो ययौ ३५
वसिष्ठवामदेवाभ्यां विप्रैश्चान्यैः सहस्रशः
पौरजानपदैः सार्धं रामानयनकाङ्क्षया ३६
ददर्श चित्रकूटस्थं स रामं सहलक्ष्मणम्
तापसानामलंकारं धारयन्तं धनुर्धरम् ३७
विसर्जितः स रामेण पितुर्वचनकारिणा
नन्दिग्रामेऽकरोद्राज्यं पुरस्कृत्यास्य पादुके ३८
रामस्तु पुनराशङ्क्य पौरजानपदागमम्
प्रविवेश महारण्यं शरभङ्गाश्रमं प्रति ३९
सत्कृत्य शरभङ्गं स दण्डकारण्यमाश्रितः
नदीं गोदावरीं रम्यामाश्रित्य न्यवसत्तदा ४०
वसतस्तस्य रामस्य ततः शूर्पणखाकृतम्
खरेणासीन्महद्वैरं जनस्थाननिवासिना ४१
रक्षार्थं तापसानां च राघवो धर्मवत्सलः
चतुर्दश सहस्राणि जघान भुवि रक्षसाम् ४२
दूषणं च खरं चैव निहत्य सुमहाबलौ
चक्रे क्षेमं पुनर्धीमान्धर्मारण्यं स राघवः ४३
हतेषु तेषु रक्षःसु ततः शूर्पणखा पुनः
ययौ निकृत्तनासोष्ठी लङ्कां भ्रातुर्निवेशनम् ४४
ततो रावणमभ्येत्य राक्षसी दुःखमूर्छिता
पपात पादयोर्भ्रातुः संशुष्करुधिरानना ४५

तां तथा विकृतां दृष्ट्वा रावणः क्रोधमूर्छितः
उत्पपातासनात्क्रुद्धो दन्तैर्दन्तानुपस्पृशन् ४६
स्वानमात्यान्विसृज्याथ विविक्ते तामुवाच सः
केनास्येवं कृता भद्रे मामचिन्त्यावमन्य च ४७
कः शूलं तीक्ष्णमासाद्य सर्वगात्रैर्निषेवते
कः शिरस्यग्निमाधाय विश्वस्तः स्वपते सुखम् ४८
आशीविषं घोरतरं पादेन स्पृशतीह कः
सिंहं केसरिणं कश्च दंष्ट्रासु स्पृश्य तिष्ठति ४९
इत्येवं ब्रुवतस्तस्य स्त्रोतोभ्यस्तेजसोऽचिषः
निश्चेरुर्दह्यतो रात्रौ वृक्षस्येव स्वरन्ध्रतः ५०
तस्य तत्सर्वमाचख्यौ भगिनी रामविक्रमम्
खरदूषणसंयुक्तं राक्षसानां पराभवम् ५१
स निश्चित्य ततः कृत्यं स्वसारमुपसान्त्व्य च
ऊर्ध्वमाचक्रमे राजा विधाय नगरे विधिम् ५२
त्रिकूटं समतिक्रम्य कालपर्वतमेव च
ददर्श मकरावासं गम्भीरोदं महोदधिम् ५३
तमतीत्याथ गोकर्णमभ्यगच्छद्दशाननः
दयितं स्थानमव्यग्रं शूलपाणेर्महात्मनः ५४
तत्राभ्यगच्छन्मारीचं पूर्वामात्यं दशाननः
पुरा रामभयादेव तापस्यं समुपाश्रितम् ५५

इति श्रीमहाभारते आरण्यकपर्वणि एकषष्ट्यधिक
द्विशततमोऽध्यायः २६१

द्विषष्ट्यधिक द्विशततमोऽध्यायः

मार्कण्डेय उवाच
मारीचस्त्वथ संभ्रान्तो दृष्ट्वा रावणमागतम्
पूजयामास सत्कारैः फलमूलादिभिस्तथा १
विश्रान्तं चैनमासीनमन्वासीनः स राक्षसः
उवाच प्रश्रितं वाक्यं वाक्यज्ञो वाक्यकोविदम् २
न ते प्रकृतिमान्वर्णः कच्चित्क्षेमं पुरे तव

कच्चित्प्रकृतयः सर्वा भजन्ते त्वां यथा पुरा ३
किमिहागमने चापि कार्यं ते राक्षसेश्वर
कृतमित्येव तद्विद्धि यद्यपि स्यात्सुदुष्करम् ४
शशंस रावणस्तस्मै तत्सर्वं रामचेष्टितम्
मारीचस्त्वब्रवीच्छ्रुत्वा समासेनैव रावणम् ५
अलं ते राममासाद्य वीर्यज्ञो ह्यस्मि तस्य वै
बाणवेगं हि कस्तस्य शक्तः सोढुं महात्मनः ६
प्रव्रज्यायां हि मे हेतुः स एव पुरुषर्षभः
विनाशमुखमेतत्ते केनाख्यातं दुरात्मना ७
तमुवाचाथ सक्रोधो रावणः परिभर्त्सयन्
अकुर्वतोऽस्मद्वचनं स्यान्मृत्युरपि ते ध्रुवम् ८
मारीचश्चिन्तयामास विशिष्टान्मरणं वरम्
अवश्यं मरणे प्राप्ते करिष्याम्यस्य यन्मतम् ९
ततस्तं प्रत्युवाचाथ मारीचो राक्षसेश्वरम्
किं ते साह्यं मया कार्यं करिष्याम्यवशोऽपि तत् १०
तमब्रवीद्दशग्रीवो गच्छ सीतां प्रलोभय
रत्नशृङ्गो मृगो भूत्वा रत्नचित्रतनूरुहः ११
ध्रुवं सीता समालक्ष्य त्वां रामं चोदयिष्यति
अपक्रान्ते च काकुत्स्थे सीता वश्या भविष्यति १२
तामादायापनेष्यामि ततः स न भविष्यति
भार्यावियोगाद्दुर्बुद्धिरेतत्साह्यं कुरुष्व मे १३
इत्येवमुक्तो मारीचः कृत्वोदकमथात्मनः
रावणं पुरतो यान्तमन्वगच्छत्सुदुःखितः १४
ततस्तस्याश्रमं गत्वा रामस्याक्लिष्टकर्मणः
चक्रतुस्तत्तथा सर्वमुभौ यत्पूर्वमन्त्रितम् १५
रावणस्तु यतिर्भूत्वा मुण्डः कुण्डी त्रिदण्डधृक्
मृगश्च भूत्वा मारीचस्तं देशमुपजग्मतुः १६
दर्शयामास वैदेहीं मारीचो मृगरूपधृक्
चोदयामास तस्यार्थे सा रामं विधिचोदिता १७
रामस्तस्याः प्रियं कुर्वन्धनुरादाय सत्वरः

रक्षार्थे लक्ष्मणं न्यस्य प्रययौ मृगलिप्सया १८
स धन्वी बद्धतूणीरः खड्गगोधाङ्गुलित्रवान्
अन्वधावन्मृगं रामो रुद्रस्तारामृगं यथा १९
सोऽन्तर्हितः पुनस्तस्य दर्शनं राक्षसो व्रजन्
चकर्ष महदध्वानं रामस्तं बुबुधे ततः २०
निशाचरं विदित्वा तं राघवः प्रतिभानवान्
अमोघं शरमादाय जघान मृगरूपिणम् २१
स रामबाणाभिहतः कृत्वा रामस्वरं तदा
हा सीते लक्ष्मणेत्येवं चुक्रोशार्तस्वरेण ह २२
शुश्राव तस्य वैदेही ततस्तां करुणां गिरम्
सा प्राद्रवद्यतः शब्दस्तामुवाचाथ लक्ष्मणः २३
अलं ते शङ्कया भीरु को रामं विषहिष्यति
मुहूर्ताद् द्रक्ष्यसे राममागतं तं शुचिस्मिते २४
इत्युक्ता सा प्ररुदती पर्यशङ्कत देवरम्
हता वै स्त्रीस्वभावेन शुद्धचारित्रभूषणम् २५
सा तं परुषमारब्धा वक्तुं साध्वी पतिव्रता
नैष कालो भवेन्मूढ यं त्वं प्रार्थयसे हृदा २६
अप्यहं शस्त्रमादाय हन्यामात्मानमात्मना
पतेयं गिरिशृङ्गाद्वा विशेयं वा हुताशनम् २७
रामं भर्तारमुत्सृज्य न त्वहं त्वां कथंचन
निहीनमुपतिष्ठेयं शार्दूली क्रोष्टुकं यथा २८
एतादृशं वचः श्रुत्वा लक्ष्मणः प्रियराघवः
पिधाय कर्णौ सद्वृत्तः प्रस्थितो येन राघवः
स रामस्य पदं गृह्य प्रससार धनुर्धरः २९
एतस्मिन्नन्तरे रक्षो रावणः प्रत्यदृश्यत
अभव्यो भव्यरूपेण भस्मच्छन्न इवानलः
यतिवेषप्रतिच्छन्नो जिहीर्षुस्तामनिन्दिताम् ३०
सा तमालक्ष्य संप्राप्तं धर्मज्ञा जनकात्मजा
निमन्त्रयामास तदा फलमूलाशनादिभिः ३१
अवमन्य स तत्सर्वं स्वरूपं प्रतिपद्य च

सान्त्वयामास वैदेहीमिति राक्षसपुङ्गवः ३२
सीते राक्षसराजोऽह रावणो नाम विश्रुतः
मम लङ्का पुरी नाम्ना रम्या पारे महोदधेः ३३
तत्र त्वं वरनारीषु शोभिष्यसि मया सह
भार्या मे भव सुश्रोणि तापसं त्यज राघवम् ३४
एवमादीनि वाक्यानि श्रुत्वा सीताथ जानकी
पिधाय कर्णौ सुश्रोणि मैवमित्यब्रवीद्वचः ३५
प्रपतेद् द्यौः सनक्षत्रा पृथिवी शकलीभवेत्
शैत्यमग्निरियान्नाहं त्यजेयं रघुनन्दनम् ३६
कथं हि भिन्नकरटं पद्मिनं वनगोचरम्
उपस्थाय महानागं करेणुः सूकरं स्पृशेत् ३७
कथं हि पीत्वा माध्वीकं पीत्वा च मधुमाधवीम्
लोभं सौवीरके कुर्यान्नारी काचिदिति स्मरे ३८
इति सा तं समाभाष्य प्रविवेशाश्रमं पुनः
तामनुद्रुत्य सुश्रोणीं रावणः प्रत्यषेधयत् ३९
भर्त्सयित्वा तु रूक्षेण स्वरेण गतचेतनाम्
मूर्धजेषु निजग्राह खमुपाचक्रमे ततः ४०
तां ददर्श तदा गृध्रो जटायुर्गिरिगोचरः
रुदतीं राम रामेति ह्रियमाणां तपस्विनीम् ४१
इति श्रीमहाभारते आरण्यकपर्वणि द्विषष्ट्यधिक द्विशततमोऽध्यायः २६२

## त्रिषष्ट्यधिक द्विशततमोऽध्यायः

मार्कण्डेय उवाच
सखा दशरथस्यासीज्जटायुररुणात्मजः
गृध्रराजो महावीर्यः संपातिर्यस्य सोदरः १
स ददर्श तदा सीतां रावणाङ्कगतां स्नुषाम्
क्रोधादभ्यद्रवत्पक्षी रावणं राक्षसेश्वरम् २
अथैनमब्रवीद्गृध्रो मुञ्च मुञ्चेति मैथिलीम्
ध्रियमाणे मयि कथं हरिष्यसि निशाचर
न हि मे मोक्ष्यसे जीवन्यदि नोत्सृजसे वधूम् ३

उक्त्वैवं राक्षसेन्द्रं तं चकर्त नखरैर्भृशम्
पक्षतुण्डप्रहारैश्च बहुशो जर्जरीकृतः
चक्षार रुधिरं भूरि गिरिः प्रस्रवणैरिव ४
स वध्यमानो गृध्रेण रामप्रियहितैषिणा
खड्गमादाय चिच्छेद भुजौ तस्य पतत्रिणः ५
निहत्य गृध्रराजं स छिन्नाभ्रशिखरोपमम्
ऊर्ध्वमाचक्रमे सीतां गृहीत्वाङ्केन राक्षसः ६
यत्र यत्र तु वैदेही पश्यत्याश्रममण्डलम्
सरो वा सरितं वापि तत्र मुञ्चति भूषणम् ७
सा ददर्श गिरिप्रस्थे पञ्च वानरपुङ्गवान्
तत्र वासो महद्दिव्यमुत्ससर्ज मनस्विनी ८
तत्तेषां वानरेन्द्राणां पपात पवनोद्धुतम्
मध्ये सुपीतं पञ्चानां विद्युन्मेघान्तरे यथा ९
एवं हृतायां वैदेह्यां रामो हत्वा महामृगम्
निवृत्तो ददृशे धीमान्भ्रातरं लक्ष्मणं तदा १०
कथमुत्सृज्य वैदेहीं वने राक्षससेविते
इत्येवं भ्रातरं दृष्ट्वा प्राप्तोऽसीति व्यगर्हयत् ११
मृगरूपधरेणाथ रक्षसा सोऽपकर्षणम्
भ्रातुरागमनं चैव चिन्तयन्पर्यतप्यत १२
गर्हयन्नेव रामस्तु त्वरितस्तं समासदत्
अपि जीवति वैदेही नेति पश्यामि लक्ष्मण १३
तस्य तत्सर्वमाचख्यौ सीताया लक्ष्मणो वचः
यदुक्तवत्यसदृशं वैदेही पश्चिमं वचः १४
दह्यमानेन तु हृदा रामोऽभ्यपतदाश्रमम्
स ददर्श तदा गृध्रं निहतं पर्वतोपमम् १५
राक्षसं शङ्कमानस्तु विकृष्य बलवद्धनुः
अभ्यधावत काकुत्स्थस्ततस्तं सहलक्ष्मणः १६
स तावुवाच तेजस्वी सहितौ रामलक्ष्मणौ
गृध्रराजोऽस्मि भद्रं वां सखा दशरथस्य ह १७
तस्य तद्वचनं श्रुत्वा संगृह्य धनुषी शुभे

कोऽय पितरमस्माकं नाम्नाहेत्यूचतुश्च तौ १८
ततो ददृशतुस्तौ तं छिन्नपक्षद्वयं तथा
तयोः शशंस गृध्रस्तु सीतार्थे रावणाद्वधम् १९
अपृच्छद्राघवो गृध्रं रावणः कां दिशं गतः
तस्य गृध्रः शिरःकम्पैराचचक्षे ममार च २०
दक्षिणामिति काकुत्स्थो विदित्वास्य तदिङ्गितम्
संस्कारं लम्भयामास सखायं पूजयन्पितुः २१
ततो दृष्ट्वाश्रमपदं व्यपविद्धबृसीघटम्
विध्वस्तकलशं शून्यं गोमायुबलसेवितम् २२
दुःखशोकसमाविष्टौ वैदेहीहरणार्दितौ
जग्मतुर्दगडकारगयं दक्षिणेन परंतपौ २३
वने महति तस्मिंस्तु रामः सौमित्रिणा सह
ददर्श मृगयूथानि द्रवमाणानि सर्वशः
शब्दं च घोरं सत्त्वानां दावाग्नेरिव वर्धतः २४
अपश्येतां मुहूर्ताच्च कबन्धं घोरदर्शनम्
मेघपर्वतसंकाशं शालस्कन्धं महाभुजम्
उरोगतविशालाक्षं महोदरमहामुखम् २५
यदृच्छयाथ तद्रक्षः करे जग्राह लक्ष्मणम्
विषादमगमत्सद्यः सौमित्रिरथ भारत २६
स राममभिसंप्रेक्ष्य कृष्यते येन तन्मुखम्
विषगणश्चाब्रवीद्रामं पश्यावस्थामिमां मम २७
हरणं चैव वैदेह्या मम चायमुपप्लवः
राज्यभ्रंशश्च भवतस्तातस्य मरणं तथा २८
नाहं त्वां सह वैदेह्या समेतं कोसलागतम्
द्रक्ष्यामि पृथिवीराज्ये पितृपैतामहे स्थितम् २९
द्रक्ष्यन्त्यार्यस्य धन्या ये कुशलाजशमीलवैः
अभिषिक्तस्य वदनं सोमं साभ्रलवं यथा ३०
एवं बहुविधं धीमान्विललाप स लक्ष्मणः
तमुवाचाथ काकुत्स्थः संभ्रमेष्वप्यसंभ्रमः ३१
मा विषीद नरव्याघ्र नैष कश्चिन्मयि स्थिते

छिन्ध्यस्य दक्षिणं बाहुं छिन्नः सव्यो मया भुजः ३२
इत्येवं वदता तस्य भुजो रामेण पातितः
खड्गेन भृशतीक्ष्णेन निकृत्तस्तिलकाण्डवत् ३३
ततोऽस्य दक्षिणं बाहुं खड्गेनाजघ्निवान्बली
सौमित्रिरपि संप्रेक्ष्य भ्रातरं राघवं स्थितम् ३४
पुनरभ्याहनत्पार्श्वे तद्रक्षो लक्ष्मणो भृशम्
गतासुरपतद्भूमौ कबन्धः सुमहांस्ततः ३५
तस्य देहाद्विनिःसृत्य पुरुषो दिव्यदर्शनः
ददृशे दिवमास्थाय दिवि सूर्य इव ज्वलन् ३६
पप्रच्छ रामस्तं वाग्मी कस्त्वं प्रब्रूहि पृच्छतः
कामया किमिदं चित्रमाश्चर्यं प्रतिभाति मे ३७
तस्याचचक्षे गन्धर्वो विश्वावसुरहं नृप
प्राप्तो ब्रह्मानुशापेन योनिं राक्षससेविताम् ३८
रावणेन हृता सीता राज्ञा लङ्कानिवासिना
सुग्रीवमभिगच्छस्व स ते साह्यं करिष्यति ३९
एषा पम्पा शिवजला हंसकारण्डवायुता
ऋश्यमूकस्य शैलस्य संनिकर्षे तटाकिनी ४०
संवसत्यत्र सुग्रीवश्चतुर्भिः सचिवैः सह
भ्राता वानरराजस्य वालिनो हेममालिनः ४१
एतावच्छक्यमस्माभिर्वक्तुं द्रष्टासि जानकीम्
ध्रुवं वानरराजस्य विदितो रावणालयः ४२
इत्युक्त्वान्तर्हितो दिव्यः पुरुषः स महाप्रभः
विस्मयं जग्मतुश्चोभौ तौ वीरौ रामलक्ष्मणौ ४३
इति श्रीमहाभारते आरण्यकपर्वणि त्रिषष्ट्यधिक द्विशततमोऽध्यायः २६३

## चतुःषष्ठ्यधिक द्विशततमोऽध्यायः

मार्कण्डेय उवाच
ततोऽविदूरे नलिनीं प्रभूतकमलोत्पलाम्
सीताहरणदुःखार्तः पम्पां रामः समासदत् १
मारुतेन सुशीतेन सुखेनामृतगन्धिना

सेव्यमानो वने तस्मिञ्जगाम मनसा प्रियाम् २
विललाप स राजेन्द्रस्तत्र कान्तामनुस्मरन्
कामबाणाभिसंतप्तः सौमित्रिस्तमथाब्रवीत् ३
न त्वामेवंविधो भावः स्प्रष्टुमर्हति मानद
आत्मवन्तमिव व्याधिः पुरुषं वृद्धशीलिनम् ४
प्रवृत्तिरुपलब्धा ते वैदेह्या रावणस्य च
तां त्वं पुरुषकारेण बुद्ध्या चैवोपपादय ५
अभिगच्छाव सुग्रीवं शैलस्थं हरिपुङ्गवम्
मयि शिष्ये च भृत्ये च सहाये च समाश्वस ६
एवं बहुविधैर्वाक्यैर्लक्ष्मणेन स राघवः
उक्तः प्रकृतिमापेदे कार्ये चानन्तरोऽभवत् ७
निषेव्य वारि पम्पायास्तर्पयित्वा पितॄनपि
प्रतस्थतुरुभौ वीरौ भ्रातरौ रामलक्ष्मणौ ८
तावृश्यमूकमभ्येत्य बहुमूलफलं गिरिम्
गिर्यग्रे वानरान्पञ्च वीरौ ददृशतुस्तदा ९
सुग्रीवः प्रेषयामास सचिवं वानरं तयोः
बुद्धिमन्तं हनूमन्तं हिमवन्तमिव स्थितम् १०
तेन संभाष्य पूर्वं तौ सुग्रीवमभिजग्मतुः
सख्यं वानरराजेन चक्रे रामस्ततो नृप ११
तद्वासो दर्शयामासुस्तस्य कार्ये निवेदिते
वानराणां तु यत्सीता ह्रियमाणाभ्यवासृजत् १२
तत्प्रत्ययकरं लब्ध्वा सुग्रीवं प्लवगाधिपम्
पृथिव्यां वानरैश्वर्ये स्वयं रामोऽभ्यषेचयत् १३
प्रतिजज्ञे च काकुत्स्थः समरे वालिनो वधम्
सुग्रीवश्चापि वैदेह्याः पुनरानयनं नृप १४
इत्युक्त्वा समयं कृत्वा विश्वास्य च परस्परम्
अभ्येत्य सर्वे किष्किन्धां तस्थुर्युद्धाभिकाङ्क्षिणः १५
सुग्रीवः प्राप्य किष्किन्धां ननादौघनिभस्वनः
नास्य तन्ममृषे वाली तं तारा प्रत्यषेधयत् १६
यथा नदति सुग्रीवो बलवानेष वानरः

मन्ये चाश्रयवान्प्राप्तो न त्वं निर्गन्तुमर्हसि १७
हेममाली ततो वाली तारां ताराधिपाननाम्
प्रोवाच वचनं वाग्मी तां वानरपतिः पतिः १८
सर्वभूतरुतज्ञा त्वं पश्य बुद्ध्या समन्विता
केनापाश्रयवान्प्राप्तो ममैष भ्रातृगन्धिकः १९
चिन्तयित्वा मुहूर्तं तु तारा ताराधिपप्रभा
पतिमित्यब्रवीत्प्राज्ञा शृणु सर्वं कपीश्वर २०
हृतदारो महासत्त्वो रामो दशरथात्मजः
तुल्यारिमित्रतां प्राप्तः सुग्रीवेण धनुर्धरः २१
भ्राता चास्य महाबाहुः सौमित्रिरपराजितः
लक्ष्मणो नाम मेधावी स्थितः कार्यार्थसिद्धये २२
मैन्दश्च द्विविदश्चैव हनूमांश्चानिलात्मजः
जाम्बवानृक्षराजश्च सुग्रीवसचिवाः स्थिताः २३
सर्व एते महात्मानो बुद्धिमन्तो महाबलाः
अलं तव विनाशाय रामवीर्यव्यपाश्रयात् २४
तस्यास्तदाक्षिप्य वचो हितमुक्तं कपीश्वरः
पर्यशङ्कत तामीर्षुः सुग्रीवगतमानसाम् २५
तारां परुषमुक्त्वा स निर्जगाम गुहामुखात्
स्थितं माल्यवतोऽभ्याशे सुग्रीवं सोऽभ्यभाषत २६
असकृत्त्वं मया मूढ निर्जितो जीवितप्रियः
मुक्तो ज्ञातिरिति ज्ञात्वा का त्वरा मरणे पुनः २७
इत्युक्तः प्राह सुग्रीवो भ्रातरं हेतुमद्वचः
प्राप्तकालममित्रघ्नो रामं संबोधयन्निव २८
हृतदारस्य मे राजन्हृतराज्यस्य च त्वया
किं नु जीवितसामर्थ्यमिति विद्धि समागतम् २९
एवमुक्त्वा बहुविधं ततस्तौ संनिपेततुः
समरे वालिसुग्रीवौ शालतालशिलायुधौ ३०
उभौ जघ्नतुरन्योन्यमुभौ भूमौ निपेततुः
उभौ ववल्गतुश्चित्रं मुष्टिभिश्च निजघ्नतुः ३१
उभौ रुधिरसंसिक्तौ नखदन्तपरिक्षतौ

शुशुभाते तदा वीरौ पुष्पिताविव किंशुकौ ३२
न विशेषस्तयोर्युद्धे तदा कश्चन दृश्यते
सुग्रीवस्य तदा मालां हनूमान्कण्ठ आसजत् ३३
स मालया तदा वीरः शुशुभे कण्ठसक्तया
श्रीमानिव महाशैलो मलयो मेघमालया ३४
कृतचिह्नं तु सुग्रीवं रामो दृष्ट्वा महाधनुः
विचकर्ष धनुःश्रेष्ठं वालिमुद्दिश्य लक्ष्यवत् ३५
विस्फारस्तस्य धनुषो यन्त्रस्येव तदा बभौ
वितत्रास तदा वाली शरेणाभिहतो हृदि ३६
स भिन्नमर्माभिहतो वक्त्राच्छोणितमुद्वमन्
ददर्शावस्थितं राममारात्सौमित्रिणा सह ३७
गर्हयित्वा स काकुत्स्थं पपात भुवि मूर्छितः
तारा ददर्श तं भूमौ तारापतिमिव च्युतम् ३८
हते वालिनि सुग्रीवः किष्किन्धां प्रत्यपद्यत
तां च तारापतिमुखीं तारां निपतितेश्वराम् ३९
रामस्तु चतुरो मासान्पृष्ठे माल्यवतः शुभे
निवासमकरोद्धीमान्सुग्रीवेणाभ्युपस्थितः ४०
रावणोऽपि पुरीं गत्वा लङ्कां कामबलात्कृतः
सीतां निवेशयामास भवने नन्दनोपमे
अशोकवनिकाभ्याशे तापसाश्रमसंनिभे ४१
भर्तृस्मरणतन्वङ्गी तापसीवेषधारिणी
उपवासतपःशीला तत्र सा पृथुलेक्षणा
उवास दुःखवसतीः फलमूलकृताशना ४२
दिदेश राक्षसीस्तत्र रक्षणे राक्षसाधिपः
प्रासासिशूलपरशुमुद्गरालातधारिणीः ४३
द्व्यक्षीं त्र्यक्षीं ललाटाक्षीं दीर्घजिह्वामजिह्विकाम्
त्रिस्तनीमेकपादां च त्रिजटामेकलोचनाम् ४४
एताश्चान्याश्च दीप्ताक्ष्यः करभोत्कटमूर्धजाः
परिवार्यासते सीतां दिवारात्रमतन्द्रिताः ४५
तास्तु तामायतापाङ्गीं पिशाच्यो दारुणस्वनाः

तर्जयन्ति सदा रौद्राः परुषव्यञ्जनाक्षराः ४६
खादाम पाटयामैनां तिलशः प्रविभज्य ताम्
येयं भर्तारमस्माकमवमन्येह जीवति ४७
इत्येवं परिभर्त्सन्तीस्त्रास्यमाना पुनः पुनः
भर्तृशोकसमाविष्टा निःश्वस्येदमुवाच ताः ४८
आर्याः खादत मां शीघ्रं न मे लोभोऽस्ति जीविते
विना तं पुण्डरीकाक्षं नीलकुञ्चितमूर्धजम् ४९
अप्येवाहं निराहारा जीवितप्रियवर्जिता
शोषयिष्यामि गात्राणि व्याली तालगता यथा ५०
न त्वन्यमभिगच्छेयं पुमांसं राघवादृते
इति जानीत सत्यं मे क्रियतां यदनन्तरम् ५१
तस्यास्तद्वचनं श्रुत्वा राक्षस्यस्ताः खरस्वनाः
आख्यातुं राक्षसेन्द्राय जग्मुस्तत्सर्वमादितः ५२
गतासु तासु सर्वासु त्रिजटा नाम राक्षसी
सान्त्वयामास वैदेहीं धर्मज्ञा प्रियवादिनी ५३
सीते वक्ष्यामि ते किंचिद्विश्वासं कुरु मे सखि
भयं ते व्येतु वामोरु शृणु चेदं वचो मम ५४
अविन्ध्यो नाम मेधावी वृद्धो राक्षसपुङ्गवः
स रामस्य हितान्वेषी त्वदर्थे हि स मावदत् ५५
सीता मद्वचनाद्वाच्या समाश्वास्य प्रसाद्य च
भर्ता ते कुशली रामो लक्ष्मणानुगतो बली ५६
सख्यं वानरराजेन शक्रप्रतिमतेजसा
कृतवान्राघवः श्रीमांस्त्वदर्थे च समुद्यतः ५७
मा च तेऽस्तु भयं भीरु रावणाल्लोकगर्हितात्
नलकूबरशापेन रक्षिता ह्यस्यनिन्दिते ५८
शप्तो ह्येष पुरा पापो वधूं रम्भां परामृशन्
न शक्तो विवशां नारीमुपैतुमजितेन्द्रियः ५९
क्षिप्रमेष्यति ते भर्ता सुग्रीवेणाभिरक्षितः
सौमित्रिसहितो धीमांस्त्वां चेतो मोक्षयिष्यति ६०
स्वप्ना हि सुमहाघोरा दृष्टा मेऽनिष्टदर्शनाः

विनाशायास्य दुर्बुद्धेः पौलस्त्यकुलघातिनः ६१
दारुणो ह्येष दुष्टात्मा क्षुद्रकर्मा निशाचरः
स्वभावाच्छीलदोषेण सर्वेषां भयवर्धनः ६२
स्पर्धते सर्वदेवैर्यः कालोपहतचेतनः
मया विनाशलिङ्गानि स्वप्ने दृष्टानि तस्य वै ६३
तैलाभिषिक्तो विकचो मज्जन्पङ्के दशाननः
असकृत्खरयुक्ते तु रथे नृत्यन्निव स्थितः ६४
कुम्भकर्णादयश्चेमे नग्नाः पतितमूर्धजाः
कृष्यन्ते दक्षिणामाशां रक्तमाल्यानुलेपनाः ६५
श्वेतातपत्रः सोष्णीषः शुक्लमाल्यविभूषणः
श्वेतपर्वतमारूढ एक एव विभीषणः ६६
सचिवाश्चास्य चत्वारः शुक्लमाल्यानुलेपनाः
श्वेतपर्वतमारूढा मोक्ष्यन्तेऽस्मान्महाभयात् ६७
रामस्यास्त्रेण पृथिवी परिक्षिप्ता ससागरा
यशसा पृथिवीं कृत्स्नां पूरयिष्यति ते पतिः ६८
अस्थिसंचयमारूढो भुञ्जानो मधुपायसम्
लक्ष्मणश्च मया दृष्टो निरीक्षन्सर्वतो दिशः ६९
रुदती रुधिरार्द्राङ्गी व्याघ्रेण परिरक्षिता
असकृत्त्वं मया दृष्टा गच्छन्ती दिशमुत्तराम् ७०
हर्षमेष्यसि वैदेहि क्षिप्रं भर्तृसमन्विता
राघवेण सह भ्रात्रा सीते त्वमचिरादिव ७१
इति सा मृगशावाक्षी तच्छ्रुत्वा त्रिजटावचः
बभूवाशावती बाला पुनर्भर्तृसमागमे ७२
यावदभ्यागता रौद्राः पिशाच्यस्ताः सुदारुणाः
ददृशुस्तां त्रिजटया सहासीनां यथा पुरा ७३
इति श्रीमहाभारते आरगयकपर्वणि चतुःषष्टयधिक द्विशततमोऽध्यायः २६४

## पञ्चषष्ठ्यधिक द्विशततमोऽध्यायः

मार्कगडेय उवाच
ततस्तां भर्तृशोकार्तां दीनां मलिनवाससम्

मणिशेषाभ्यलङ्कारां रुदतीं च पतिव्रताम् १
राक्षसीभिरुपास्यन्तीं समासीनां शिलातले
रावणः कामबाणार्तो ददर्शोपससर्प च २
देवदानवगन्धर्वयक्षकिंपुरुषैर्युधि
अजितोऽशोकवनिकां ययौ कन्दर्पमोहितः ३
दिव्याम्बरधरः श्रीमान्सुमृष्टमणिकुण्डलः
विचित्रमाल्यमुकुटो वसन्त इव मूर्तिमान् ४
स कल्पवृक्षसदृशो यत्नादपि विभूषितः
श्मशानचैत्यद्रुमवद्भूषितोऽपि भयङ्करः ५
स तस्यास्तनुमध्यायाः समीपे रजनीचरः
ददृशे रोहिणीमेत्य शनैश्चर इव ग्रहः ६
स तामामन्त्र्य सुश्रोणीं पुष्पकेतुशराहतः
इदमित्यब्रवीद्बालां त्रस्तां रौहीमिवाबलाम् ७
सीते पर्याप्तमेतावत्कृतो भर्तुरनुग्रहः
प्रसादं कुरु तन्वङ्गि क्रियतां परिकर्म ते ८
भजस्व मां वरारोहे महार्हाभरणाम्बरा
भव मे सर्वनारीणामुत्तमा वरवर्णिनि ९
सन्ति मे देवकन्याश्च राजर्षीणां तथाङ्गनाः
सन्ति दानवकन्याश्च दैत्यानां चापि योषितः १०
चतुर्दश पिशाचानां कोट्यो मे वचने स्थिताः
द्विस्तावत्पुरुषादानां रक्षसां भीमकर्मणाम् ११
ततो मे त्रिगुणा यक्षा ये मद्वचनकारिणः
केचिदेव धनाध्यक्षं भ्रातरं मे समाश्रिताः १२
गन्धर्वाप्सरसो भद्रे मामापानगतं सदा
उपतिष्ठन्ति वामोरु यथैव भ्रातरं मम १३
पुत्रोऽहमपि विप्रर्षेः साक्षाद्विश्रवसो मुनेः
पञ्चमो लोकपालानामिति मे प्रथितं यशः १४
दिव्यानि भक्ष्यभोज्यानि पानानि विविधानि च
यथैव त्रिदशेशस्य तथैव मम भामिनि १५
क्षीयतां दुष्कृतं कर्म वनवासकृतं तव

भार्या मे भव सुश्रोणि यथा मन्दोदरी तथा १६
इत्युक्ता तेन वैदेही परिवृत्य शुभानना
तृणमन्तरतः कृत्वा तमुवाच निशाचरम् १७
अशिवेनातिवामोरूरजस्रं नेत्रवारिणा
स्तनावपतितौ बाला सहितावभिवर्षती
उवाच वाक्यं तं क्षुद्रं वैदेही पतिदेवता १८
असकृद्वदतो वाक्यमीदृशं राक्षसेश्वर
विषादयुक्तमेतत्ते मया श्रुतमभाग्यया १९
तद्भद्रसुख भद्रं ते मानसं विनिवर्त्यताम्
परदारास्म्यलभ्या च सततं च पतिव्रता २०
न चैवोपयिकी भार्या मानुषी कृपणा तव
विवशां धर्षयित्वा च कां त्वं प्रीतिमवाप्स्यसि २१
प्रजापतिसमो विप्रो ब्रह्मयोनिः पिता तव
न च पालयसे धर्मं लोकपालसमः कथम् २२
भ्रातरं राजराजानं महेश्वरसखं प्रभुम्
धनेश्वरं व्यपदिशन्कथं त्विह न लज्जसे २३
इत्युक्त्वा प्रारुदत्सीता कम्पयन्ती पयोधरौ
शिरोधरां च तन्वङ्गी मुखं प्रच्छाद्य वाससा २४
तस्या रुदत्या भामिन्या दीर्घा वेणी सुसंयता
ददृशे स्वसिता स्निग्धा काली व्यालीव मूर्धनि २५
तच्छ्रुत्वा रावणो वाक्यं सीतयोक्तं सुनिष्ठुरम्
प्रत्याख्यातोऽपि दुर्मेधाः पुनरेवाब्रवीद्वचः २६
काममङ्गानि मे सीते दुनोतु मकरध्वजः
न त्वामकामां सुश्रोणीं समेष्ये चारुहासिनीम् २७
किं नु शक्यं मया कर्तुं यत्त्वमद्यापि मानुषम्
आहारभूतमस्माकं राममेवानुरुध्यसे २८
इत्युक्त्वा तामनिन्द्याङ्गीं स राक्षसगणेश्वरः
तत्रैवान्तर्हितो भूत्वा जगामाभिमतां दिशम् २९
राक्षसीभिः परिवृता वैदेही शोककर्शिता
सेव्यमाना त्रिजटया तत्रैव न्यवसत्तदा ३०

इति श्रीमहाभारते आरण्यकपर्वणि पञ्चषष्ट्यधिक द्विशततमोऽध्यायः २६५

षट्षष्ट्यधिक द्विशततमोऽध्यायः

मार्कण्डेय उवाच
राघवस्तु ससौमित्रिः सुग्रीवेणाभिपालितः
वसन्माल्यवतः पृष्ठे ददर्श विमलं नभः १
स दृष्ट्वा विमले व्योम्नि निर्मलं शशलक्षणम्
ग्रहनक्षत्रताराभिरनुयातममित्रहा २
कुमुदोत्पलपद्मानां गन्धमादाय वायुना
महीधरस्थः शीतेन सहसा प्रतिबोधितः ३
प्रभाते लक्ष्मणं वीरमभ्यभाषत दुर्मनाः
सीतां संस्मृत्य धर्मात्मा रुद्धां राक्षसवेश्मनि ४
गच्छ लक्ष्मण जानीहि किष्किन्धायां कपीश्वरम्
प्रमत्तं ग्राम्यधर्मेषु कृतघ्नं स्वार्थपण्डितम् ५
योऽसौ कुलाधमो मूढो मया राज्येऽभिषेचितः
सर्ववानरगोपुच्छा यमृक्षाश्च भजन्ति वै ६
यदर्थं निहतो वाली मया रघुकुलोद्वह
त्वया सह महाबाहो किष्किन्धोपवने तदा ७
कृतघ्नं तमहं मन्ये वानरापसदं भुवि
यो मामेवंगतो मूढो न जानीतेऽद्य लक्ष्मण ८
असौ मन्ये न जानीते समयप्रतिपादनम्
कृतोपकारं मां नूनमवमन्याल्पया धिया ९
यदि तावदनुद्युक्तः शेते कामसुखात्मकः
नेतव्यो वालिमार्गेण सर्वभूतगतिं त्वया १०
अथापि घटतेऽस्माकमर्थे वानरपुङ्गवः
तमादायैहि काकुत्स्थ त्वरावान्भव मा चिरम् ११
इत्युक्तो लक्ष्मणो भ्रात्रा गुरुवाक्यहिते रतः
प्रतस्थे रुचिरं गृह्य समार्गणगुणं धनुः
किष्किन्धाद्वारमासाद्य प्रविवेशानिवारितः १२
सक्रोध इति तं मत्वा राजा प्रत्युद्ययौ हरिः

तं सदारो विनीतात्मा सुग्रीवः प्लवगाधिपः
पूजया प्रतिजग्राह प्रीयमाणस्तदर्हया १३
तमब्रवीद्रामवचः सौमित्रिरकुतोभयः
स तत्सर्वमशेषेण श्रुत्वा प्रह्वः कृताञ्जलि १४
सभृत्यदारो राजेन्द्र सुग्रीवो वानराधिपः
इदमाह वचः प्रीतो लक्ष्मणं नरकुञ्जरम् १५
नास्मि लक्ष्मण दुर्मेधा न कृतघ्नो न निर्घृणः
श्रूयतां यः प्रयत्नो मे सीतापर्येषणे कृतः १६
दिशः प्रस्थापिताः सर्वे विनीता हरयो मया
सर्वेषां च कृतः कालो मासेनागमनं पुनः १७
यैरियं सवना साद्रिः सपुरा सागराम्बरा
विचेतव्या मही वीर सग्रामनगराकरा १८
स मासः पञ्चरात्रेण पूर्णो भवितुमर्हति
ततः श्रोष्यसि रामेण सहितः सुमहत्प्रियम् १९
इत्युक्तोलक्ष्मणस्तेन वानरेन्द्रेण धीमता
त्यक्त्वा रोषमदीनात्मा सुग्रीवं प्रत्यपूजयत् २०
स रामं सहसुग्रीवो माल्यवत्पृष्ठमास्थितम्
अभिगम्योदयं तस्य कार्यस्य प्रत्यवेदयत् २१
इत्येवं वानरेन्द्रास्ते समाजग्मुः सहस्रशः
दिशस्तिस्रो विचित्याथ न तु ये दक्षिणां गताः २२
आचख्युस्ते तु रामाय महीं सागरमेखलाम्
विचितां न तु वैदेह्या दर्शनं रावणस्य वा २३
गतास्तु दक्षिणामाशां ये वै वानरपुङ्गवाः
आशावांस्तेषु काकुत्स्थः प्राणानार्तोऽप्यधारयत् २४
द्विमासोपरमे काले व्यतीते प्लवगास्ततः
सुग्रीवमभिगम्येदं त्वरिता वाक्यमब्रुवन् २५
रक्षितं वालिना यत्तत्स्फीतं मधुवनं महत्
त्वया च प्लवगश्रेष्ठ तद्भुङ्क्ते पवनात्मजः २६
वालिपुत्रोऽङ्गदश्चैव ये चान्ये प्लवगर्षभाः
विचेतुं दक्षिणामाशां राजन्प्रस्थापितास्त्वया २७

तेषां तं प्रणयं श्रुत्वा मेने स कृतकृत्यताम्
कृतार्थानां हि भृत्यानामेतद्भवति चेष्टितम् २८
स तद्रामाय मेधावी शशंस प्लवगर्षभः
रामश्चाप्यनुमानेन मेने दृष्टां तु मैथिलीम् २९
हनूमत्प्रमुखाश्चापि विश्रान्तास्ते प्लवंगमाः
अभिजग्मुर्हरीन्द्रं तं रामलक्ष्मणसंनिधौ ३०
गतिं च मुखवर्णं च दृष्ट्वा रामो हनूमतः
अगमत्प्रत्ययं भूयो दृष्टा सीतेति भारत ३१
हनूमत्प्रमुखास्ते तु वानराः पूर्णमानसाः
प्रणेमुर्विधिवद्रामं सुग्रीवं लक्ष्मणं तथा ३२
तानुवाचागतान्रामः प्रगृह्य सशरं धनुः
अपि मां जीवयिष्यध्वमपि वः कृतकृत्यता ३३
अपि राज्यमयोध्यायां कारयिष्याम्यहं पुनः
निहत्य समरे शत्रूनाहृत्य जनकात्मजाम् ३४
अमोक्षयित्वा वैदेहीमहत्वा च रिपून्रणे
हृतदारोऽवधूतश्च नाहं जीवितुमुत्सहे ३५
इत्युक्तवचनं रामं प्रत्युवाचानिलात्मजः
प्रियमाख्यामि ते राम दृष्टा सा जानकी मया ३६
विचित्य दक्षिणामाशां सपर्वतवनाकराम्
श्रान्ताः काले व्यतीते स्म दृष्टवन्तो महागुहाम् ३७
प्रविशामो वयं तां तु बहुयोजनमायताम्
अन्धकारां सुविपिनां गहनां कीटसेविताम् ३८
गत्वा सुमहदध्वानमादित्यस्य प्रभां ततः
दृष्टवन्तः स्म तत्रैव भवनं दिव्यमन्तरा ३९
मयस्य किल दैत्यस्य तदासीद्वेश्म राघव
तत्र प्रभावती नाम तपोऽतप्यत तापसी ४०
तया दत्तानि भोज्यानि पानानि विविधानि च
भुक्त्वा लब्धबलाः सन्तस्तयोक्तेन पथा ततः ४१
निर्याय तस्मादुद्देशात्पश्यामो लवणाम्भसः
समीपे सह्यमलयौ दर्दुरं च महागिरिम् ४२

ततो मलयमारुह्य पश्यन्तो वरुणालयम्
विषण्णा व्यथिताः खिन्ना निराशा जीविते भृशम् ४३
अनेकशतविस्तीर्णं योजनानां महोदधिम्
तिमिनक्रझषावासं चिन्तयन्तः सुदुःखिताः ४४
तत्रानशनसङ्कल्पं कृत्वासीना वयं तदा
ततः कथान्ते गृध्रस्य जटायोरभवत्कथा ४५
ततः पर्वतशृङ्गाभं घोररूपं भयावहम्
पक्षिणं दृष्टवन्तः स्म वैनतेयमिवापरम् ४६
सोऽस्मानतर्कयद्भोक्तुमथाभ्येत्य वचोऽब्रवीत्
भोः क एष मम भ्रातुर्जटायोः कुरुते कथाम् ४७
सम्पातिर्नाम तस्याहं ज्येष्ठो भ्राता खगाधिपः
अन्योन्यस्पर्धयारूढावावामादित्यसंसदम् ४८
ततो दग्धाविमौ पक्षौ न दग्धौ तु जटायुषः
तदा मे चिरदृष्टः स भ्राता गृध्रपतिः प्रियः
निर्दग्धपक्षः पतितो ह्यहमस्मिन्महागिरौ ४९
तस्यैवं वदतोऽस्माभिर्हते भ्राता निवेदितः
व्यसनं भवतश्चेदं संक्षेपाद्वै निवेदितम् ५०
स सम्पातिस्तदा राजञ्श्रुत्वा सुमहदप्रियम्
विषण्णचेताः पप्रच्छ पुनरस्मानरिंदम ५१
कः स रामः कथं सीता जटायुश्च कथं हतः
इच्छामि सर्वमेवैतच्छ्रोतुं प्लवगसत्तमाः ५२
तस्याहं सर्वमेवैतं भवतो व्यसनागमम्
प्रायोपवेशने चैव हेतुं विस्तरतोऽब्रुवम् ५३
सोऽस्मानुत्थापयामास वाक्येनानेन पक्षिराट्
रावणो विदितो मह्यं लङ्का चास्य महापुरी ५४
दृष्टा पारे समुद्रस्य त्रिकूटगिरिकन्दरे
भवित्री तत्र वैदेही न मेऽस्त्यत्र विचारणा ५५
इति तस्य वचः श्रुत्वा वयमुत्थाय सत्वराः
सागरप्लवने मन्त्रं मन्त्रयामः परन्तप ५६
नाध्यवस्यद्यदा कश्चित्सागरस्य विलङ्घने

ततः पितरमाविश्य पुप्लुवेऽह महार्णवम्
शतयोजनविस्तीर्णं निहत्य जलराक्षसीम् ५७
तत्र सीता मया दृष्टा रावणान्तःपुरे सती
उपवासतपःशीला भर्तृदर्शनलालसा
जटिला मलदिग्धाङ्गी कृशा दीना तपस्विनी ५८
निमित्तैस्तामहं सीतामुपलभ्य पृथग्विधैः
उपसृत्याब्रुवं चार्यामभिगम्य रहोगताम् ५९
सीते रामस्य दूतोऽह वानरो मारुतात्मजः
त्वद्दर्शनमभिप्रेप्सुरिह प्राप्तो विहायसा ६०
राजपुत्रौ कुशलिनौ भ्रातरौ रामलक्ष्मणौ
सर्वशाखामृगेन्द्रेण सुग्रीवेणाभिपालितौ ६१
कुशलं त्वाब्रवीद्रामः सीते सौमित्रिणा सह
सखिभावाच्च सुग्रीवः कुशलं त्वानुपृच्छति ६२
क्षिप्रमेष्यति ते भर्ता सर्वशाखामृगैः सह
प्रत्ययं कुरु मे देवि वानरोऽस्मि न राक्षसः ६३
मुहूर्तमिव च ध्यात्वा सीता मां प्रत्युवाच ह
अवैमि त्वां हनूमन्तमविन्ध्यवचनादहम् ६४
अविन्ध्यो हि महाबाहो राक्षसो वृद्धसंमतः
कथितस्तेन सुग्रीवस्त्वद्विधैः सचिवैर्वृतः ६५
गम्यतामिति चोक्त्वा मां सीता प्रादादिमं मणिम्
धारिता येन वैदेही कालमेतमनिन्दिता ६६
प्रत्ययार्थं कथां चेमां कथयामास जानकी
क्षिप्तामिषीकां काकस्य चित्रकूटे महागिरौ
भवता पुरुषव्याघ्र प्रत्यभिज्ञानकारणात् ६७
श्रावयित्वा तदात्मानं ततो दग्ध्वा च तां पुरीम्
संप्राप्त इति तं रामः प्रियवादिनमर्चयत् ६८
इति श्रीमहाभारते आरण्यकपर्वणि षट्षष्ट्यधिक द्विशततमोऽध्यायः २६६

सप्तषष्ट्यधिक द्विशततमोध्यायः

मार्कण्डेय उवाच

ततस्तत्रैव रामस्य समासीनस्य तैः सह
समाजग्मुः कपिश्रेष्ठाः सुग्रीववचनात्तदा १
वृतः कोटिसहस्रेण वानराणां तरस्विनाम्
श्वशुरो वालिनः श्रीमान्सुषेणो राममभ्ययात् २
कोटीशतवृतौ चापि गजो गवय एव च
वानरेन्द्रौ महावीर्यौ पृथक्पृथगदृश्यताम् ३
षष्टिकोटिसहस्राणि प्रकर्षन्प्रत्यदृश्यत
गोलाङ्गूलो महाराज गवाक्षो भीमदर्शनः ४
गन्धमादनवासी तु प्रथितो गन्धमादनः
कोटीसहस्रमुग्राणां हरीणां समकर्षत ५
पनसो नाम मेधावी वानरः सुमहाबलः
कोटीर्दश द्वादश च त्रिंशत्पञ्च प्रकर्षति ६
श्रीमान्दधिमुखो नाम हरिवृद्धोऽपि वीर्यवान्
प्रचकर्ष महत्सैन्यं हरीणां भीमतेजसाम् ७
कृष्णानां मुखपुण्ड्राणामृक्षाणां भीमकर्मणाम्
कोटीशतसहस्रेण जाम्बवान्प्रत्यदृश्यत ८
एते चान्ये च बहवो हरियूथपयूथपाः
असंख्येया महाराज समीयू रामकारणात् ९
शिरीषकुसुमाभानां सिंहानामिव नर्दताम्
श्रूयते तुमुलः शब्दस्तत्र तत्र प्रधावताम् १०
गिरिकूटनिभाः केचित्केचिन्महिषसंनिभाः
शरदभ्रप्रतीकाशाः पिष्टहिङ्गुलकाननाः ११
उत्पतन्तः पतन्तश्च प्लवमानाश्च वानराः
उद्धुन्वन्तोऽपरे रेणून्समाजग्मुः समन्ततः १२
स वानरमहालोकः पूर्णसागरसंनिभः
निवेशमकरोत्तत्र सुग्रीवानुमते तदा १३
ततस्तेषु हरीन्द्रेषु समावृत्तेषु सर्वशः
तिथौ प्रशस्ते नक्षत्रे मुहूर्ते चाभिपूजिते १४
तेन व्यूढेन सैन्येन लोकानुद्वर्तयन्निव
प्रययौ राघवः श्रीमान्सुग्रीवसहितस्तदा १५

मुखमासीत्तु सैन्यस्य हनूमान्मारुतात्मजः
जघनं पालयामास सौमित्रिरकुतोभयः १६
बद्धगोधाङ्गुलित्राणौ राघवौ तत्र रेजतुः
वृतौ हरिमहामात्रैश्चन्द्रसूर्यौ ग्रहैरिव १७
प्रबभौ हरिसैन्यं तत्छालतालशिलायुधम्
सुमहच्छालिभवनं यथा सूर्योदयं प्रति १८
नलनीलाङ्गदक्राथमैन्दद्विविदपालिता
ययौ सुमहती सेना राघवस्यार्थसिद्धये १९
विधिवत्सुप्रशस्तेषु बहुमूलफलेषु च
प्रभूतमधुमांसेषु वारिमत्सु शिवेषु च २०
निवसन्ती निराबाधा तथैव गिरिसानुषु
उपायाद्धरिसेना सा क्षारोदमथ सागरम् २१
द्वितीयसागरनिभं तद्बलं बहुलध्वजम्
वेलावनं समासाद्य निवासमकरोत्तदा २२
ततो दाशरथिः श्रीमान्सुग्रीवं प्रत्यभाषत
मध्ये वानरमुख्यानां प्राप्तकालमिदं वचः २३
उपायः को नु भवतां मतः सागरलङ्घने
इयं च महती सेना सागरश्चापि दुस्तरः २४
तत्रान्ये व्याहरन्ति स्म वानराः पटुमानिनः
समर्था लङ्घने सिन्धोर्न तु कृत्स्नस्य वानराः २५
केचिन्नौभिर्व्यवस्यन्ति केचिच्च विविधैः प्लवैः
नेति रामश्च तान्सर्वान्सान्त्वयन्प्रत्यभाषत २६
शतयोजनविस्तारं न शक्ताः सर्ववानराः
क्रान्तुं तोयनिधिं वीरा नैषा वो नैष्ठिकी मतिः २७
नावो न सन्ति सेनाया बह्व्यस्तारयितुं तथा
वणिजामुपघातं च कथमस्मद्विधश्चरेत् २८
विस्तीर्णं चैव नः सैन्यं हन्याच्छिद्रेषु वै परः
प्लवोडुपप्रतारश्च नैवात्र मम रोचते २९
अहं त्विमं जलनिधिं समारप्स्याम्युपायतः
प्रतिशेष्याम्युपवसन्दर्शयिष्यति मां ततः ३०

न चेद्दर्शयिता मार्गं धक्ष्याम्येनमहं ततः
महास्त्रैरप्रतिहतैरत्यग्निपवनोज्ज्वलैः ३१
इत्युक्त्वा सहसौमित्रिरुपस्पृश्याथ राघवः
प्रतिशिश्ये जलनिधिं विधिवत्कुशसंस्तरे ३२
सागरस्तु ततः स्वप्ने दर्शयामास राघवम्
देवो नदनदीभर्ता श्रीमान्यादोगणैर्वृतः ३३
कौसल्यामातरित्येवमाभाष्य मधुरं वचः
इदमित्याह रत्नानामाकरैः शतशो वृतः ३४
ब्रूहि किं ते करोम्यत्र साहाय्यं पुरुषर्षभ
इक्ष्वाकुरस्मि ते ज्ञातिरिति रामस्तमब्रवीत् ३५
मार्गमिच्छामि सैन्यस्य दत्तं नदनदीपते
येन गत्वा दशग्रीवं हन्यां पौलस्त्यपांसनम् ३६
यद्येवं याचतो मार्गं न प्रदास्यति मे भवान्
शरैस्त्वां शोषयिष्यामि दिव्यास्त्रप्रतिमन्त्रितैः ३७
इत्येवं ब्रुवतः श्रुत्वा रामस्य वरुणालयः
उवाच व्यथितो वाक्यमिति बद्धाञ्जलि स्थितः ३८
नेच्छामि प्रतिघातं ते नास्मि विघ्नकरस्तव
शृणु चेदं वचो राम श्रुत्वा कर्तव्यमाचर ३९
यदि दास्यामि ते मार्गं सैन्यस्य व्रजतोऽज्ञया
अन्येऽप्याज्ञापयिष्यन्ति मामेवं धनुषो बलात् ४०
अस्ति त्वत्र नलो नाम वानरः शिल्पिसंमतः
त्वष्टुर्देवस्य तनयो बलवान्विश्वकर्मणः ४१
स यत्काष्ठं तृणं वापि शिलां वा क्षेप्स्यते मयि
सर्वं तद्धारयिष्यामि स ते सेतुर्भविष्यति ४२
इत्युक्त्वान्तर्हिते तस्मिन्रामो नलमुवाच ह
कुरु सेतुं समुद्रे त्वं शक्तो ह्यसि मतो मम ४३
तेनोपायेन काकुत्स्थः सेतुबन्धमकारयत्
दशयोजनविस्तारमायतं शतयोजनम् ४४
नलसेतुरिति ख्यातो योऽद्यापि प्रथितो भुवि
रामस्याज्ञां पुरस्कृत्य धार्यते गिरिसंनिभः ४५

तत्रस्थं स तु धर्मात्मा समागच्छद्विभीषणः
भ्राता वै राक्षसेन्द्रस्य चतुर्भिः सचिवैः सह ४६
प्रतिजग्राह रामस्तं स्वागतेन महामनाः
सुग्रीवस्य तु शङ्काभूत्प्रणिधिः स्यादिति स्म ह ४७
राघवस्तस्य चेष्टाभिः सम्यक्च चरितेङ्गितैः
यदा तत्त्वेन तुष्टोऽभूत्तत एनमपूजयत् ४८
सर्वराक्षसराज्ये चाप्यभ्यषिञ्चद्विभीषणम्
चक्रे च मन्त्रानुचरं सुहृदं लक्ष्मणस्य च ४९
विभीषणमते चैव सोऽत्यक्रामन्महार्णवम्
ससैन्यः सेतुना तेन मासेनैव नराधिप ५०
ततो गत्वा समासाद्य लङ्कोद्यानान्यनेकशः
भेदयामास कपिभिर्महान्ति च बहूनि च ५१
तत्रास्तां रावणामात्यौ राक्षसौ शुकसारणौ
चारौ वानररूपेण तौ जग्राह विभीषणः ५२
प्रतिपन्नौ यदा रूपं राक्षसं तौ निशाचरौ
दर्शयित्वा ततः सैन्यं रामः पश्चादवासृजत् ५३
निवेश्योपवने सैन्यं तच्छूरः प्राज्ञवानरम्
प्रेषयामास दौत्येन रावणस्य ततोऽङगदम् ५४
इति श्रीमहाभारते आरण्यकपर्वणि सप्तषष्ट्यधिक द्विशततमोऽध्यायः २६७

## अष्ट षष्ट्यधिक द्विशततमोऽध्यायः

मार्कण्डेय उवाच
प्रभूतान्नोदके तस्मिन्बहुमूलफले वने
सेनां निवेश्य काकुत्स्थो विधिवत्पर्यरक्षत १
रावणश्च विधिं चक्रे लङ्कायां शास्त्रनिर्मितम्
प्रकृत्यैव दुराधर्षा दृढप्राकारतोरणा २
अगाधतोयाः परिखा मीननक्रसमाकुलाः
बभूवुः सप्त दुर्धर्षाः खादिरैः शङ्कुभिश्चिताः ३
कर्णाट्टयन्त्रदुर्धर्षा बभूवुः सहुडोपलाः
साशीविषघटायोधाः ससर्जरसपांसवः ४

मुसलालातनाराचतोमरासिपरश्वधैः
अन्विताश्च शतघ्नीभिः समधूच्छिष्टमुद्गराः ५
पुरद्वारेषु सर्वेषु गुल्माः स्थावरजङ्गमाः
बभूवुः पत्तिबहुलाः प्रभूतगजवाजिनः ६
अङ्गदस्त्वथ लङ्काया द्वारदेशमुपागतः
विदितो राक्षसेन्द्रस्य प्रविवेश गतव्यथः ७
मध्ये राक्षसकोटीनां बह्वीनां सुमहाबलः
शुशुभे मेघमालाभिरादित्य इव संवृतः ८
स समासाद्य पौलस्त्यममात्यैरभिसंवृतम्
रामसंदेशमामन्त्र्य वाग्मी वक्तुं प्रचक्रमे ९
आह त्वां राघवो राजन्कोसलेन्द्रो महायशाः
प्राप्तकालमिदं वाक्यं तदादत्स्व कुरुष्व च १०
अकृतात्मानमासाद्य राजानमनये रतम्
विनश्यन्त्यनयाविष्टा देशाश्च नगराणि च ११
त्वयैकेनापराद्धं मे सीतामाहरता बलात्
वधायानपराद्धानामन्येषां तद्भविष्यति १२
ये त्वया बलदर्पाभ्यामाविष्टेन वनेचराः
ऋषयो हिंसिताः पूर्वं देवाश्चाप्यवमानिताः १३
राजर्षयश्च निहता रुदन्त्यश्चाहृताः स्त्रियः
तदिदं समनुप्राप्तं फलं तस्यानयस्य ते १४
हन्तास्मि त्वां सहामात्यं युध्यस्व पुरुषो भव
पश्य मे धनुषो वीर्यं मानुषस्य निशाचर १५
मुच्यतां जानकी सीता न मे मोक्ष्यसि कर्हिचित्
अराक्षसमिमं लोकं कर्तास्मि निशितैः शरैः १६
इति तस्य ब्रुवाणस्य दूतस्य परुषं वचः
श्रुत्वा न ममृषे राजा रावणः क्रोधमूर्छितः १७
इङ्गितज्ञास्ततो भर्तुश्चत्वारो रजनीचराः
चतुर्ष्वङ्गेषु जगृहुः शार्दूलमिव पक्षिणः १८
तांस्तथाङ्गेषु संसक्तानङ्गदो रजनीचरान्
आदायैव खमुत्पत्य प्रासादतलमाविशत् १९

वेगेनोत्पततस्तस्य पेतुस्ते रजनीचराः
भुवि संभिन्नहृदयाः प्रहारपरिपीडिताः २०
स मुक्तो हर्म्यशिखरात्तस्मात्पुनरवापतत्
लङ्घयित्वा पुरीं लङ्कां स्वबलस्य समीपतः २१
कोसलेन्द्रमथाभ्येत्य सर्वमावेद्य चाङ्गदः
विशश्राम स तेजस्वी राघवेणाभिनन्दितः २२
ततः सर्वाभिसारेण हरीणां वातरंहसाम्
भेदयामास लङ्कायाः प्राकारं रघुनन्दनः २३
विभीषणर्क्षाधिपती पुरस्कृत्याथ लक्ष्मणः
दक्षिणं नगरद्वारमवामृद्नाद्दुरासदम् २४
करभारुणगात्राणां हरीणां युद्धशालिनाम्
कोटीशतसहस्रेण लङ्कामभ्यपतत्तदा २५
उत्पतद्भिः पतद्भिश्च निपतद्भिश्च वानरैः
नादृश्यत तदा सूर्यो रजसा नाशितप्रभः २६
शालिप्रसूनसदृशैः शिरीषकुसुमप्रभैः
तरुणादित्यसदृशैः शरगौरैश्च वानरैः २७
प्राकारं ददृशुस्ते तु समन्तात्कपिलीकृतम्
राक्षसा विस्मिता राजन्सस्त्रीवृद्धाः समन्ततः २८
बिभिदुस्ते मणिस्तम्भान्कर्णाट्टशिखराणि च
भग्नोन्मथितवेगानि यन्त्राणि च विचिक्षिपुः २९
परिगृह्य शतघ्नीश्च सचक्राः सहुडोपलाः
चिक्षिपुर्भुजवेगेन लङ्कामध्ये महाबलाः ३०
प्राकारस्थाश्च ये केचिन्निशाचरगणास्तदा
प्रदुद्रुवुस्ते शतशः कपिभिः समभिद्रुताः ३१
ततस्तु राजवचनाद्राक्षसाः कामरूपिणः
निर्ययुर्विकृताकाराः सहस्रशतसङ्घशः ३२
शस्त्रवर्षाणि वर्षन्तो द्रावयन्तो वनौकसः
प्राकारं शोधयन्तस्ते परं विक्रममास्थिताः ३३
स माषराशिसदृशैर्बभूव क्षणदाचरैः
कृतो निर्वानरो भूयः प्राकारो भीमदर्शनैः ३४

पेतुः शूलविभिन्नाङ्गा बहवो वानरर्षभाः
स्तम्भतोरणभग्नाश्च पेतुस्तत्र निशाचराः ३५
केशाकेश्यभवद्युद्धं रक्षसां वानरैः सह
नखैर्दन्तैश्च वीराणां खादतां वै परस्परम् ३६
निष्टनन्तो ह्युभयतस्तत्र वानरराक्षसाः
हता निपतिता भूमौ न मुञ्चन्ति परस्परम् ३७
रामस्तु शरजालानि ववर्ष जलदो यथा
तानि लङ्कां समासाद्य जघ्नुस्तान्रजनीचरान् ३८
सौमित्रिरपि नाराचैर्दृढधन्वा जितक्लमः
आदिश्यादिश्य दुर्गस्थान्पातयामास राक्षसान् ३९
ततः प्रत्यवहारोऽभूत्सैन्यानां राघवाज्ञया
कृते विमर्दे लङ्कायां लब्धलक्षो जयोत्तरः ४०
इति श्रीमहाभारते आरण्यकपर्वणि अष्टषष्ट्यधिक द्विशततमोऽध्यायः २६८

## एकोनसप्तत्यधिक द्विशततमोऽध्यायः

मार्कण्डेय उवाच
ततो निविशमानांस्तान्सैनिकान्रावणानुगाः
अभिजग्मुर्गणानेके पिशाचक्षुद्ररक्षसाम् १
पर्वणः पूतनो जम्भः खरः क्रोधवशो हरिः
प्ररुजश्चारुजश्चैव प्रघसश्चैवमादयः २
ततोऽभिपततां तेषामदृश्यानां दुरात्मनाम्
अन्तर्धानवधं तज्ज्ञश्चकार स विभीषणः ३
ते दृश्यमाना हरिभिर्बलिभिर्दूरपातिभिः
निहताः सर्वशो राजन्महीं जग्मुर्गतासवः ४
अमृष्यमाणः सबलो रावणो निर्ययावथ
व्यूह्य चौशनसं व्यूहं हरीन्सर्वानहारयत् ५
राघवस्त्वभिनिर्याय व्यूढानीकं दशाननम्
बार्हस्पत्यं विधिं कृत्वा प्रत्यव्यूहन्निशाचरम् ६
समेत्य युयुधे तत्र ततो रामेण रावणः
युयुधे लक्ष्मणश्चैव तथैवेन्द्रजिता सह ७

विरूपाक्षेण सुग्रीवस्तारेण च निखर्वटः
तुण्डेन च नलस्तत्र पटुशः पनसेन च ८
विषह्यं यं हि यो मेने स स तेन समेयिवान्
युयुधे युद्धवेलायां स्वबाहुबलमाश्रितः ९
स संप्रहारो ववृधे भीरूणां भयवर्धनः
लोमसंहर्षणो घोरः पुरा देवासुरे यथा १०
रावणो राममानर्छच्छक्तिशूलासिवृष्टिभिः
निशितैरायसैस्तीक्ष्णै रावणं चापि राघवः ११
तथैवेन्द्रजितं यत्तं लक्ष्मणो मर्मभेदिभिः
इन्द्रजिच्चापि सौमित्रिं बिभेद बहुभिः शरैः १२
विभीषणः प्रहस्तं च प्रहस्तश्च विभीषणम्
खगपत्रैः शरैस्तीक्ष्णैरभ्यवर्षद्गतव्यथः १३
तेषां बलवतामासीन्महास्त्राणां समागमः
विव्यथुः सकला येन त्रयो लोकाश्चराचराः १४
इति श्रीमहाभारते आरण्यकपर्वणि एकोनसप्तत्यधिक द्विशततमोऽध्यायः
२६९

## सप्तत्यधिक द्विशततमोऽध्यायः

मार्कण्डेय उवाच
ततः प्रहस्तः सहसा समभ्येत्य विभीषणम्
गदया ताडयामास विनद्य रणकर्कशः १
स तयाभिहतो धीमान्गदया भीमवेगया
नाकम्पत महाबाहुर्हिमवानिव सुस्थिरः २
ततः प्रगृह्य विपुलां शतघण्टां विभीषणः
अभिमन्त्र्य महाशक्तिं चिक्षेपास्य शिरः प्रति ३
पतन्त्या स तया वेगाद्राक्षसोऽशनिनादया
हृतोत्तमाङ्गो ददृशे वातरुग्ण इव द्रुमः ४
तं दृष्ट्वा निहतं संख्ये प्रहस्तं क्षणदाचरम्
अभिदुद्राव धूम्राक्षो वेगेन महता कपीन् ५
तस्य मेघोपमं सैन्यमापतद्भीमदर्शनम्

दृष्ट्वैव सहसा दीर्णा रणे वानरपुङ्गवाः ६
ततस्तान्सहसा दीर्णान्दृष्ट्वा वानरपुङ्गवान्
निर्याय कपिशार्दूलो हनूमान्पर्यवस्थितः ७
तं दृष्ट्वावस्थितं संख्ये हरयः पवनात्मजम्
वेगेन महता राजन्संन्यवर्तन्त सर्वशः ८
ततः शब्दो महानासीत्तुमुलो लोमहर्षणः
रामरावणसैन्यानामन्योन्यमभिधावताम् ९
तस्मिन्प्रवृत्ते सङ्ग्रामे घोरे रुधिरकर्दमे
धूम्राक्षः कपिसैन्यं तद् द्रावयामास पत्रिभिः १०
तं राक्षसमहामात्रमापतन्तं सपत्नजित्
तरसा प्रतिजग्राह हनूमान्पवनात्मजः ११
तयोर्युद्धमभूद्घोरं हरिराक्षसवीरयोः
जिगीषतोर्युधान्योन्यमिन्द्रप्रह्लादयोरिव १२
गदाभिः परिघैश्चैव राक्षसो जघ्निवान्कपिम्
कपिश्च जघ्निवान्रक्षः सस्कन्धविटपैर्द्रुमैः १३
ततस्तमतिकायेन साश्वं सरथसारथिम्
धूम्राक्षमवधीद्धीमान्हनूमान्मारुतात्मजः १४
ततस्तं निहतं दृष्ट्वा धूम्राक्षं राक्षसोत्तमम्
हरयो जातविस्रम्भा जघ्नुरभ्येत्य सैनिकान् १५
ते वध्यमाना बलिभिर्हरिभिर्जितकाशिभिः
राक्षसा भग्नसंकल्पा लङ्कामभ्यपतन्भयात् १६
तेऽभिपत्य पुरं भग्ना हतशेषा निशाचराः
सर्वं राज्ञे यथावृत्तं रावणाय न्यवेदयन् १७
श्रुत्वा तु रावणस्तेभ्यः प्रहस्तं निहतं युधि
धूम्राक्षं च महेष्वासं ससैन्यं वानरर्षभैः १८
सुदीर्घमिव निःश्वस्य समुत्पत्य वरासनात्
उवाच कुम्भकर्णस्य कर्मकालोऽयमागतः १९
इत्येवमुक्त्वा विविधैर्वादित्रैः सुमहास्वनैः
शयानमतिनिद्रालुं कुम्भकर्णमबोधयत् २०
प्रबोध्य महता चैनं यत्नेनागतसाध्वसः

स्वस्थमासीनमव्यग्रं विनिद्रं राक्षसाधिपः
ततोऽब्रवीद्दशग्रीवः कुम्भकर्णं महाबलम् २१
धन्योऽसि यस्य ते निद्रा कुम्भकर्णेयमीदृशी
य इमं दारुणं कालं न जानीषे महाभयम् २२
एष तीर्त्वार्णवं रामः सेतुना हरिभिः सह
अवमन्येह नः सर्वान्करोति कदनं महत् २३
मया ह्यपहृता भार्या सीता नामास्य जानकी
तां मोक्षयिषुरायातो बद्ध्वा सेतुं महार्णवे २४
तेन चैव प्रहस्तादिर्महान्नः स्वजनो हतः
तस्य नान्यो निहन्तास्ति त्वदृते शत्रुकर्शन २५
स दंशितोऽभिनिर्याय त्वमद्य बलिनां वर
रामादीन्समरे सर्वाञ्जहि शत्रूनरिंदम २६
दूषणावरजौ चैव वज्रवेगप्रमाथिनौ
तौ त्वां बलेन महता सहितावनुयास्यतः २७
इत्युक्त्वा राक्षसपतिः कुम्भकर्णं तरस्विनम्
संदिदेशेतिकर्तव्ये वज्रवेगप्रमाथिनौ २८
तथेत्युक्त्वा तु तौ वीरौ रावणं दूषणानुजौ
कुम्भकर्णं पुरस्कृत्य तूर्णं निर्ययतुः पुरात् २९
इति श्रीमहाभारते आरण्यकपर्वणि सप्तत्यधिक द्विशततमोऽध्यायः २७०

## एकसप्तत्यधिक द्विशततमोऽध्यायः

मार्कण्डेय उवाच
ततो विनिर्याय पुरात्कुम्भकर्णः सहानुगः
अपश्यत्कपिसैन्यं तज्जितकाश्यग्रतः स्थितम् १
तमभ्येत्याशु हरयः परिवार्यः समन्ततः
अभ्यघ्नंश्च महाकायैर्बहुभिर्जगतीरुहैः
करजैरतुदंश्चान्ये विहाय भयमुत्तमम् २
बहुधा युध्यमानास्ते युद्धमार्गैः प्लवङ्गमाः
नानाप्रहरणैर्भीमं राक्षसेन्द्रमताडयन् ३
स ताड्यमानः प्रहसन्भक्षयामास वानरान्

पनसं च गवाक्षं च वज्रबाहुं च वानरम् ४
तद्दृष्ट्वा व्यथनं कर्म कुम्भकर्णस्य रक्षसः
उदक्रोशन्परित्रस्तास्तारप्रभृतयस्तदा ५
तं तारमुच्चैः क्रोशन्तमन्यांश्च हरियूथपान्
अभिदुद्राव सुग्रीवः कुम्भकर्णमपेतभीः ६
ततोऽभिपत्य वेगेन कुम्भकर्णं महामनाः
शालेन जघ्निवान्मूर्ध्नि बलेन कपिकुञ्जरः ७
स महात्मा महावेगः कुम्भकर्णस्य मूर्धनि
बिभेद शालं सुग्रीवो न चैवाव्यथयत्कपिः ८
ततो विनद्य प्रहसञ्शालस्पर्शविबोधितः
दोर्भ्यामादाय सुग्रीवं कुम्भकर्णोऽहरद्बलात् ९
ह्रियमाणं तु सुग्रीवं कुम्भकर्णेन रक्षसा
अवेक्ष्याभ्यद्रवद्वीरः सौमित्रिर्मित्रनन्दनः १०
सोऽभिपत्य महावेगं रुक्मपुङ्खं महाशरम्
प्राहिणोत्कुम्भकर्णाय लक्ष्मणः परवीरहा ११
स तस्य देहावरणं भित्त्वा देहं च सायकः
जगाम दारयन्भूमिं रुधिरेण समुक्षितः १२
तथा स भिन्नहृदयः समुत्सृज्य कपीश्वरम्
कुम्भकर्णो महेष्वासः प्रगृहीतशिलायुधः
अभिदुद्राव सौमित्रिमुद्यम्य महतीं शिलाम् १३
तस्याभिद्रवतस्तूर्णं क्षुराभ्यामुच्छ्रितौ करौ
चिच्छेद निशिताग्राभ्यां स बभूव चतुर्भुजः १४
तानप्यस्य भुजान्सर्वान्प्रगृहीतशिलायुधान्
क्षुरैश्चिच्छेद लघ्वस्त्रं सौमित्रिः प्रतिदर्शयन् १५
स बभूवातिकायश्च बहुपादशिरोभुजः
तं ब्रह्मास्त्रेण सौमित्रिर्ददाहाद्रिचयोपमम् १६
स पपात महावीर्यो दिव्यास्त्राभिहतो रणे
महाशनिविनिर्दग्धः पादपोऽङ्कुरवानिव १७
तं दृष्ट्वा वृत्रसंकाशं कुम्भकर्णं तरस्विनम्
गतासुं पतितं भूमौ राक्षसाः प्राद्रवन्भयात् १८

तथा तान्द्रवतो योधान्दृष्ट्वा तौ दूषणानुजौ
अवस्थाप्याथ सौमित्रिं संक्रुद्धावभ्यधावताम् १९
तावाद्रवन्तौ संक्रुद्धौ वज्रवेगप्रमाथिनौ
प्रतिजग्राह सौमित्रिर्विनद्योभौ पतत्रिभिः २०
ततः सुतुमुलं युद्धमभवल्लोमहर्षणम्
दूषणानुजयोः पार्थ लक्ष्मणस्य च धीमतः २१
महता शरवर्षेण राक्षसौ सोऽभ्यवर्षत
तौ चापि वीरौ संक्रुद्धावुभौ तौ समवर्षताम् २२
मुहूर्तमेवमभवद्वज्रवेगप्रमाथिनोः
सौमित्रेश्च महाबाहोः संप्रहारः सुदारुणः २३
अथाद्रिशृङ्गमादाय हनूमान्मारुतात्मजः
अभिद्रुत्याददे प्राणान्वज्रवेगस्य रक्षसः २४
नीलश्च महता ग्राव्णा दूषणावरजं हरिः
प्रमाथिनमभिद्रुत्य प्रममाथ महाबलः २५
ततः प्रावर्तत पुनः संग्रामः कटुकोदयः
रामरावणसैन्यानामन्योन्यमभिधावताम् २६
शतशो नैर्ऋतान्वन्या जघ्नुर्वन्यांश्च नैर्ऋताः
नैर्ऋतास्तत्र वध्यन्ते प्रायशो न तु वानराः २७
इति श्रीमहाभारते आरण्यकपर्वणि एकसप्तत्यधिक द्विशततमोऽध्यायः
२७१

द्विसप्तत्यधिक द्विशततमोऽध्यायः

मार्कण्डेय उवाच
ततः श्रुत्वा हतं संख्ये कुम्भकर्णं सहानुगम्
प्रहस्तं च महेष्वासं धूम्राक्षं चातितेजसम् १
पुत्रमिन्द्रजितं शूरं रावणः प्रत्यभाषत
जहि राममित्रघ्न सुग्रीवं च सलक्ष्मणम् २
त्वया हि मम सत्पुत्र यशो दीप्तमुपार्जितम्
जित्वा वज्रधरं संख्ये सहस्राक्षं शचीपतिम् ३
अन्तर्हितः प्रकाशो वा दिव्यैर्दत्तवरैः शरैः

जहि शत्रूनमित्रघ्न मम शस्त्रभृतां वर ४
रामलक्ष्मणसुग्रीवाः शरस्पर्शं न तेऽनघ
समर्थाः प्रतिसंसोढुं कुतस्तदनुयायिनः ५
अकृता या प्रहस्तेन कुम्भकर्णेन चानघ
खरस्यापचितिः संख्ये तां गच्छस्व महाभुज ६
त्वमद्य निशितैर्बाणैर्हत्वा शत्रून्ससैनिकान्
प्रतिनन्दय मां पुत्र पुरा बद्ध्वेव वासवम् ७
इत्युक्तः स तथेत्युक्त्वा रथमास्थाय दंशितः
प्रययाविन्द्रजिद्राजंस्तूर्णमायोधनं प्रति ८
तत्र विश्राव्य विस्पष्टं नाम राक्षसपुङ्गवः
आह्वयामास समरे लक्ष्मणं शुभलक्षणम् ९
तं लक्ष्मणोऽप्यभ्यधावत्प्रगृह्य सशरं धनुः
त्रासयंस्तलघोषेण सिंहः क्षुद्रमृगं यथा १०
तयोः समभवद्युद्धं सुमहज्जयगृद्धिनोः
दिव्यास्त्रविदुषोस्तीव्रमन्योन्यस्पर्धिनोस्तदा ११
रावणिस्तु यदा नैनं विशेषयति सायकैः
ततो गुरुतरं यत्नमातिष्ठद्बलिनां वरः १२
तत एनं महावेगैरर्दयामास तोमरैः
तानागतान्स चिच्छेद सौमित्रिर्निशितैः शरैः
ते निकृत्ताः शरैस्तीक्ष्णैर्न्यपतन्वसुधातले १३
तमङ्गदो वालिसुतः श्रीमानुद्यम्य पादपम्
अभिद्रुत्य महावेगस्ताडयामास मूर्धनि १४
तस्येन्द्रजिदसंभ्रान्तः प्रासेनोरसि वीर्यवान्
प्रहर्तुमैच्छत्तं चास्य प्रासं चिच्छेद लक्ष्मणः १५
तमभ्याशगतं वीरमङ्गदं रावणात्मजः
गदयाताडयत्सव्ये पार्श्वे वानरपुङ्गवम् १६
तमचिन्त्य प्रहारं स बलवान्वालिनः सुतः
ससर्जेन्द्रजितः क्रोधाच्छालस्कन्धममित्रजित् १७
सोऽङ्गदेन रुषोत्सृष्टो वधायेन्द्रजितस्तरुः
जघानेन्द्रजितः पार्थ रथं साश्वं ससारथिम् १८

ततो हताश्वात्प्रस्कन्द्य रथात्स हतसारथिः
तत्रैवान्तर्दधे राजन्मायया रावणात्मजः १९
अन्तर्हितं विदित्वा तं बहुमायं च राक्षसम्
रामस्तं देशमागम्य तत्सैन्यं पर्यरक्षत २०
स राममुद्दिश्य शरैस्ततो दत्तवरैस्तदा
विव्याध सर्वगात्रेषु लक्ष्मणं च महारथम् २१
तमदृश्यं शरैः शूरौ माययान्तर्हितं तदा
योधयामासतुरुभौ रावणिं रामलक्ष्मणौ २२
स रुषा सर्वगात्रेषु तयोः पुरुषसिंहयोः
व्यसृजत्सायकान्भूयः शतशोऽथ सहस्रशः २३
तमदृश्यं विचिन्वन्तः सृजन्तमनिशं शरान्
हरयो विविशुर्व्योम प्रगृह्य महतीः शिलाः २४
तांश्च तौ चाप्यदृश्यः स शरैर्विव्याध राक्षसः
स भृशं ताडयन्वीरो रावणिर्मायया वृतः २५
तौ शरैराचितौ वीरो भ्रातरौ रामलक्ष्मणौ
पेततुर्गगनाद्भूमिं सूर्याचन्द्रमसाविव २६
इति श्रीमहाभारते आरण्यकपर्वणि द्विसप्तत्यधिक द्विशततमोऽध्यायः २७२

त्रिसप्तत्यधिक द्विशततमोऽध्यायः

मार्कण्डेय उवाच
तावुभौ पतितौ दृष्ट्वा भ्रातरावमितौजसौ
बबन्ध रावणिर्भूयः शरैर्दत्तवरैस्तदा १
तौ वीरौ शरजालेन बद्धाविन्द्रजिता रणे
रेजतुः पुरुषव्याघ्रौ शकुन्ताविव पञ्जरे २
तौ दृष्ट्वा पतितौ भूमौ शतशः सायकैश्चितौ
सुग्रीवः कपिभिः सार्धं परिवार्य ततः स्थितः ३
सुषेणमैन्दद्विविदैः कुमुदेनाङ्गदेन च
हनूमन्नीलतारैश्च नलेन च कपीश्वरः ४
ततस्तं देशमागम्य कृतकर्मा विभीषणः
बोधयामास तौ वीरौ प्रज्ञास्त्रेण प्रबोधितौ ५

विशल्यौ चापि सुग्रीवः क्षणेनेभौ चकार तौ
विशल्यया महौषध्या दिव्यमन्त्रप्रयुक्तया ६
तौ लब्धसंज्ञौ नृवरौ विशल्यावुदतिष्ठताम्
गततन्द्रीक्लमौ चास्तां क्षणेनोभौ महारथौ ७
ततो विभीषणः पार्थ राममिक्ष्वाकुनन्दनम्
उवाच विज्वरं दृष्ट्वा कृताञ्जलिरिदं वचः ८
अयमम्भो गृहीत्वा तु राजराजस्य शासनात्
गुह्यकोऽभ्यागतः श्वेतात्त्वत्सकाशमरिन्दम ९
इदमम्भः कुबेरस्ते महाराजः प्रयच्छति
अन्तर्हितानां भूतानां दर्शनार्थं परंतप १०
अनेन स्पृष्टनयनो भूतान्यन्तर्हितान्युत
भवान्द्रक्ष्यति यस्मै च भवानेतत्प्रदास्यति ११
तथेति रामस्तद्वारि प्रतिगृह्याथ सत्कृतम्
चकार नेत्रयोः शौचं लक्ष्मणश्च महामनाः १२
सुग्रीवजाम्बवन्तौ च हनूमानङ्गदस्तथा
मैन्दद्विविदनीलाश्च प्रायः प्लवगसत्तमाः १३
तथा समभवच्चापि यदुवाच विभीषणः
क्षणेनातीन्द्रियाण्येषां चक्षूंष्यासन्युधिष्ठिर १४
इन्द्रजित्कृतकर्मा तु पित्रे कर्म तदात्मनः
निवेद्य पुनरागच्छत्त्वरयाजिशिरः प्रति १५
तमापतन्तं संक्रुद्धं पुनरेव युयुत्सया
अभिदुद्राव सौमित्रिर्विभीषणमते स्थितः १६
अकृताह्निकमेवैनं जिघांसुर्जितकाशिनम्
शरैर्जघान संक्रुद्धः कृतसंज्ञोऽथ लक्ष्मणः १७
तयोः समभवद्युद्धं तदान्योन्यं जिगीषतोः
अतीव चित्रमाश्चर्यं शक्रप्रह्लादयोरिव १८
अविध्यदिन्द्रजित्तीक्ष्णैः सौमित्रिं मर्मभेदिभिः
सौमित्रिश्चानलस्पर्शैरविध्यद्रावणिं शरैः १९
सौमित्रिशरसंस्पर्शाद्रावणिः क्रोधमूर्छितः
असृजल्लक्ष्मणायाष्टौ शरानाशीविषोपमान् २०

तस्यासून्पावकस्पर्शैः सौमित्रिः पत्रिभिस्त्रिभिः
यथा निरहरद्वीरस्तन्मे निगदतः शृणु २१
एकेनास्य धनुष्मन्तं बाहुं देहादपातयत्
द्वितीयेन सनाराचं भुजं भूमौ न्यपातयत् २२
तृतीयेन तु बाणेन पृथुधारेण भास्वता
जहार सुनसं चारु शिरो भ्राजिष्णुकुण्डलम् २३
विनिकृत्तभुजस्कन्धं कबन्धं भीमदर्शनम्
तं हत्वा सूतमप्यस्त्रैर्जघान बलिनां वरः २४
लङ्कां प्रवेशयामासुर्वाजिनस्तं रथं तदा
ददर्श रावणस्तं च रथं पुत्रविनाकृतम् २५
स पुत्रं निहतं दृष्ट्वा त्रासात्संभ्रान्तलोचनः
रावणः शोकमोहार्तो वैदेहीं हन्तुमुद्यतः २६
अशोकवनिकास्थां तां रामदर्शनलालसाम्
खड्गमादाय दुष्टात्मा जवेनाभिपपात ह २७
तं दृष्ट्वा तस्य दुर्बुद्धेरविन्ध्यः पापनिश्चयम्
शमयामास संक्रुद्धं श्रूयतां येन हेतुना २८
महाराज्ये स्थितो दीप्ते न स्त्रियं हन्तुमर्हसि
हतैवैषा यदा स्त्री च बन्धनस्था च ते गृहे २९
न चैषा देहभेदेन हता स्यादिति मे मतिः
जहि भर्तारमेवास्या हते तस्मिन्हता भवेत् ३०
न हि ते विक्रमे तुल्यः साक्षादपि शतक्रतुः
असकृद्धि त्वया सेन्द्रास्त्रासितास्त्रिदशा युधि ३१
एवं बहुविधैर्वाक्यैरविन्ध्यो रावणं तदा
क्रुद्धं संशमयामास जगृहे च स तद्वचः ३२
निर्याणे स मतिं कृत्वा निधायासिं क्षपाचरः
आज्ञापयामास तदा रथो मे कल्प्यतामिति ३३
इति श्रीमहाभारते आरण्यकपर्वणि त्रिसप्तत्यधिक द्विशततमोऽध्यायः २७३

चतुःसप्तत्यधिक द्विशततमोऽध्यायः

मार्कण्डेय उवाच

ततः क्रुद्धो दशग्रीवः प्रिये पुत्रे निपातिते
निर्ययौ रथमास्थाय हेमरत्नविभूषितम् १
संवृतो राक्षसैर्घोरैर्विविधायुधपाणिभिः
अभिदुद्राव रामं स पोथयन्हरियूथपान् २
तमाद्रवन्तं संक्रुद्धं मैन्दनीलनलाङ्गदाः
हनूमाञ्जाम्बवांश्चैव ससैन्याः पर्यवारयन् ३
ते दशग्रीवसैन्यं तदृक्षवानरयूथपाः
द्रुमैर्विध्वंसयाञ्चक्रुर्दशग्रीवस्य पश्यतः ४
ततः स्वसैन्यमालोक्य वध्यमानमरातिभिः
मायावी व्यदधान्मायां रावणो राक्षसेश्वरः ५
तस्य देहाद्विनिष्क्रान्ताः सतशोऽथ सहस्रशः
राक्षसाः प्रत्यदृश्यन्त शरशक्त्यृष्टिपाणयः ६
तान्रामो जघ्निवान्सर्वान्दिव्येनास्त्रेण राक्षसान्
अथ भूयोऽपि मायां स व्यदधाद्राक्षसाधिपः ७
कृत्वा रामस्य रूपाणि लक्ष्मणस्य च भारत
अभिदुद्राव रामं च लक्ष्मणं च दशाननः ८
ततस्ते राममर्छन्तो लक्ष्मणं च क्षपाचराः
अभिपेतुस्तदा राजन्प्रगृहीतोच्चकार्मुकाः ९
तां दृष्ट्वा राक्षसेन्द्रस्य मायामिक्ष्वाकुनन्दनः
उवाच रामं सौमित्रिरसंभ्रान्तो बृहद्वचः १०
जहीमान्राक्षसान्पापानात्मनः प्रतिरूपकान्
जघान रामस्तांश्चान्यानात्मनः प्रतिरूपकान् ११
ततो हर्यश्वयुक्तेन रथेनादित्यवर्चसा
उपतस्थे रणे रामं मातलि शक्रसारथिः १२
मातलिरुवाच
अयं हर्यश्वयुग्जैत्रो मघोनः स्यन्दनोत्तमः
अनेन शक्रः काकुत्स्थ समरे दैत्यदानवान्
शतशः पुरुषव्याघ्र रथोदारेण जघ्निवान् १३
तदनेन नरव्याघ्र मया यत्तेन संयुगे
स्यन्दनेन जहि क्षिप्रं रावणं मा चिरं कृथाः १४

इत्युक्तो राघवस्तथ्यं वचोऽशङ्कत मातलेः
मायेयं राक्षसस्येति तमुवाच विभीषणः १५
नेयं माया नरव्याघ्र रावणस्य दुरात्मनः
तदातिष्ठ रथं शीघ्रमिममैन्द्रं महाद्युते १६
ततः प्रहृष्टः काकुत्स्थस्तथेत्युक्त्वा विभीषणम्
रथेनाभिपपाताशु दशग्रीवं रुषान्वितः १७
हाहाकृतानि भूतानि रावणे समभिद्रुते
सिंहनादाः सपटहा दिवि दिव्याश्च नानदन् १८
स रामाय महाघोरं विससर्ज निशाचरः
शूलमिन्द्राशनिप्रख्यं ब्रह्मदण्डमिवोद्यतम् १९
तच्छूलमन्तरा रामश्चिच्छेद निशितैः शरैः
तद्दृष्ट्वा दुष्करं कर्म रावणं भयमाविशत् २०
ततः क्रुद्धः ससर्जाशु दशग्रीवः शिताञ्शरान्
सहस्रायुतशो रामे शस्त्राणि विविधानि च २१
ततो भुशुण्डीः शूलांश्च मुसलानि परश्वधान्
शक्तीश्च विविधाकाराः शतघ्नीश्च शितक्षुराः २२
तां मायां विकृतां दृष्ट्वा दशग्रीवस्य रक्षसः
भयात्प्रदुद्रुवुः सर्वे वानराः सर्वतोदिशम् २३
ततः सुपत्रं सुमुखं हेमपुङ्खं शरोत्तमम्
तूणादादाय काकुत्स्थो ब्रह्मास्त्रेण युयोज ह २४
तं बाणवर्यं रामेण ब्रह्मास्त्रेणाभिमन्त्रितम्
जहृषुर्देवगन्धर्वा दृष्ट्वा शक्रपुरोगमाः २५
अल्पावशेषमायुश्च ततोऽमन्यन्त रक्षसः
ब्रह्मास्त्रोदीरणाच्छत्रोर्देवगन्धर्वकिंनराः २६
ततः ससर्ज तं रामः शरमप्रतिमौजसम्
रावणान्तकरं घोरं ब्रह्मदण्डमिवोद्यतम् २७
स तेन राक्षसश्रेष्ठः सरथः साश्वसारथिः
प्रजज्वाल महाज्वालेनाग्निनाभिपरिष्कृतः २८
ततः प्रहृष्टास्त्रिदशाः सगन्धर्वाःसचारणाः
निहतं रावणं दृष्ट्वा रामेणाक्लिष्टकर्मणा २९

तत्यजुस्तं महाभागं पञ्च भूतानि रावणम्
भ्रंशितः सर्वलोकेषु स हि ब्रह्मास्त्रतेजसा ३०
शरीरधातवो ह्यस्य मांसं रुधिरमेव च
नेशुर्ब्रह्मास्त्रनिर्दग्धा न च भस्माप्यदृश्यत ३१
इति श्रीमहाभारते आरण्यकपर्वणि चतुःसप्तत्यधिक द्विशततमोऽध्यायः
२७४

पञ्चसप्तत्यधिक द्विशततमोऽध्यायः

मार्कण्डेय उवाच
स हत्वा रावणं क्षुद्रं राक्षसेन्द्रं सुरद्विषम्
बभूव हृष्टः ससुहृद्रामः सौमित्रिणा सह १
ततो हते दशग्रीवे देवाः सर्षिपुरोगमाः
आशीर्भिर्जययुक्ताभिरानर्चुस्तं महाभुजम् २
रामं कमलपत्राक्षं तुष्टुवुः सर्वदेवताः
गन्धर्वाः पुष्पवर्षैश्च वाग्भिश्च त्रिदशालयाः ३
पूजयित्वा यथा रामं प्रतिजग्मुर्यथागतम्
तन्महोत्सवसंकाशमासीदाकाशमच्युत ४
ततो हत्वा दशग्रीवं लङ्कां रामो महायशाः
विभीषणाय प्रददौ प्रभुः परपुरंजयः ५
ततः सीतां पुरस्कृत्य विभीषणपुरस्कृताम्
अविन्ध्यो नाम सुप्रज्ञो वृद्धामात्यो विनिर्ययौ ६
उवाच च महात्मानं काकुत्स्थं दैन्यमास्थितम्
प्रतीच्छ देवीं सद्वृत्तां महात्मञ्जानकीमिति ७
एतच्छ्रुत्वा वचस्तस्मादवतीर्य रथोत्तमात्
बाष्पेणापिहितां सीतां ददर्शेक्ष्वाकुनन्दनः ८
तां दृष्ट्वा चारुसर्वाङ्गीं यानस्थां शोककर्शिताम्
मलोपचितसर्वाङ्गीं जटिलां कृष्णवाससम् ९
उवाच रामो वैदेहीं परामर्शविशङ्कितः
गच्छ वैदेहि मुक्ता त्वं यत्कार्यं तन्मया कृतम् १०
मामासाद्य पतिं भद्रे न त्वं राक्षसवेश्मनि

जरां व्रजेथा इति मे निहतोऽसौ निशाचरः ११
कथं ह्यस्मद्विधो जातु जानन्धर्मविनिश्चयम्
परहस्तगतां नारीं मुहूर्तमपि धारयेत् १२
सुवृत्तामसुवृत्तां वाप्यहं त्वामद्य मैथिलि
नोत्सहे परिभोगाय श्वावलीढं हविर्यथा १३
ततः सा सहसा बाला तच्छ्रुत्वा दारुणं वचः
पपात देवी व्यथिता निकृत्ता कदली यथा १४
यो ह्यस्या हर्षसंभूतो मुखरागस्तदाभवत्
क्षणेन स पुनर्भ्रष्टो निःश्वासादिव दर्पणे १५
ततस्ते हरयः सर्वे तच्छ्रुत्वा रामभाषितम्
गतासुकल्पा निश्चेष्टा बभूवुः सहलक्ष्मणाः १६
ततो देवो विशुद्धात्मा विमानेन चतुर्मुखः
पितामहो जगत्स्रष्टा दर्शयामास राघवम् १७
शक्रश्चाग्निश्च वायुश्च यमो वरुण एव च
यक्षाधिपश्च भगवांस्तथा सप्तर्षयोऽमलाः १८
राजा दशरथश्चैव दिव्यभास्वरमूर्तिमान्
विमानेन महार्हेण हंसयुक्तेन भास्वता १९
ततोऽन्तरिक्षं तत्सर्वं देवगन्धर्वसंकुलम्
शुशुभे तारकाचित्रं शरदीव नभस्तलम् २०
तत उत्थाय वैदेही तेषां मध्ये यशस्विनी
उवाच वाक्यं कल्याणी रामं पृथुलवक्षसम् २१
राजपुत्र न ते कोपं करोमि विदिता हि मे
गतिः स्त्रीणां नराणां च शृणु चेदं वचो मम २२
अन्तश्चरति भूतानां मातरिश्वा सदागतिः
स मे विमुञ्चतु प्राणान्यदि पापं चराम्यहम् २३
अग्निरापस्तथाकाशं पृथिवी वायुरेव च
विमुञ्चन्तु मम प्राणान्यदि पापं चराम्यहम् २४
ततोऽन्तरिक्षे वागासीत्सर्वा विश्रावयन्दिशः
पुण्या संहर्षणी तेषां वानराणां महात्मनाम् २५
वायुरुवाच

भो भो राघव सत्यं वै वायुरस्मि सदागतिः
अपापा मैथिली राजन्संगच्छ सह भार्यया २६
अग्निरुवाच
अहमन्तःशरीरस्थो भूतानां रघुनन्दन
सुसूक्ष्ममपि काकुत्स्थ मैथिली नापराध्यति २७
वरुण उवाच
रसा वै मत्प्रसूता हि भूतदेहेषु राघव
अहं वै त्वां प्रब्रवीमि मैथिली प्रतिगृह्यताम् २८
ब्रह्मोवाच
पुत्र नैतदिहाश्चर्यं त्वयि राजर्षिधर्मिणि
साधो सद्वृत्तमार्गस्थे शृणु चेदं वचो मम २९
शत्रुरेष त्वया वीर देवगन्धर्वभोगिनाम्
यक्षाणां दानवानां च महर्षीणां च पातितः ३०
अवध्यः सर्वभूतानां मत्प्रसादात्पुराभवत्
कस्माच्चित्कारणात्पापः कंचित्कालमुपेक्षितः ३१
वधार्थमात्मनस्तेन हृता सीता दुरात्मना
नलकूबरशापेन रक्षा चास्याः कृता मया ३२
यदि ह्यकामामासेवेत्स्त्रियमन्यामपि ध्रुवम्
शतधास्य फलेद्देह इत्युक्तः सोऽभवत्पुरा ३३
नात्र शङ्का त्वया कार्या प्रतीच्छेमां महाद्युते
कृतं त्वया महत्कार्यं देवानाममरप्रभ ३४
दशरथ उवाच
प्रीतोऽस्मि वत्स भद्रं ते पिता दशरथोऽस्मि ते
अनुजानामि राज्यं च प्रशाधि पुरुषोत्तम ३५
राम उवाच
अभिवादये त्वां राजेन्द्र यदि त्वं जनको मम
गमिष्यामि पुरीं रम्यामयोध्यां शासनात्तव ३६
मार्कण्डेय उवाच
तमुवाच पिता भूयः प्रहृष्टो मनुजाधिप
गच्छायोध्यां प्रशाधि त्वं राम रक्तान्तलोचन ३७

ततो देवान्नमस्कृत्य सुहृद्भिरभिनन्दितः
महेन्द्र इव पौलोम्या भार्यया स समेयिवान् ३८
ततो वरं ददौ तस्मै अविन्ध्याय परंतपः
त्रिजटां चार्थमानाभ्यां योजयामास राक्षसीम् ३९
तमुवाच ततो ब्रह्मा देवैः शक्रमुखैर्वृतः
कौसल्यामातरिष्टांस्ते वरानद्य ददानि कान् ४०
वव्रे रामः स्थितिं धर्मे शत्रुभिश्चापराजयम्
राक्षसैर्निहतानां च वानराणां समुद्भवम् ४१
ततस्ते ब्रह्मणा प्रोक्ते तथेति वचने तदा
समुत्तस्थुर्महाराज वानरा लब्धचेतसः ४२
सीता चापि महाभागा वरं हनुमते ददौ
रामकीर्त्या समं पुत्र जीवितं ते भविष्यति ४३
दिव्यास्त्वामुपभोगाश्च मत्प्रसादकृताः सदा
उपस्थास्यन्ति हनुमन्निति स्म हरिलोचन ४४
ततस्ते प्रेक्षमाणानां तेषामक्लिष्टकर्मणाम्
अन्तर्धानं ययुर्देवाः सर्वे शक्रपुरोगमाः ४५
दृष्ट्वा तु रामं जानक्या समेतं शक्रसारथिः
उवाच परमप्रीतः सुहृन्मध्य इदं वचः ४६
देवगन्धर्वयक्षाणां मानुषासुरभोगिनाम्
अपनीतं त्वया दुःखमिदं सत्यपराक्रम ४७
सदेवासुरगन्धर्वा यक्षराक्षसपन्नगाः
कथयिष्यन्ति लोकास्त्वां यावद्भूमिर्धरिष्यति ४८
इत्येवमुक्त्वानुज्ञाप्य रामं शस्त्रभृतां वरम्
संपूज्यापाक्रमत्तेन रथेनादित्यवर्चसा ४९
ततः सीतां पुरस्कृत्य रामः सौमित्रिणा सह
सुग्रीवप्रमुखैश्चैव सहितः सर्ववानरैः ५०
विधाय रक्षां लङ्कायां विभीषणपुरस्कृतः
संततार पुनस्तेन सेतुना मकरालयम् ५१
पुष्पकेण विमानेन खेचरेण विराजता
कामगेन यथा मुख्यैरमात्यैः संवृतो वशी ५२

ततस्तीरे समुद्रस्य यत्र शिश्ये स पार्थिवः
तत्रैवोवास धर्मात्मा सहितः सर्ववानरैः ५३
अथैनान्राघवः काले समानीयाभिपूज्य च
विसर्जयामास तदा रत्नैः संतोष्य सर्वशः ५४
गतेषु वानरेन्द्रेषु गोपुच्छर्क्षेषु तेषु च
सुग्रीवसहितो रामः किष्किन्धां पुनरागमत् ५५
विभीषणेनानुगतः सुग्रीवसहितस्तदा
पुष्पकेण विमानेन वैदेह्या दर्शयन्वनम् ५६
किष्किन्धां तु समासाद्य रामः प्रहरतां वरः
अङ्गदं कृतकर्माणं यौवराज्येऽभ्यषेचयत् ५७
ततस्तैरेव सहितो रामः सौमित्रिणा सह
यथागतेन मार्गेण प्रययौ स्वपुरं प्रति ५८
अयोध्यां स समासाद्य पुरीं राष्ट्रपतिस्ततः
भरताय हनूमन्तं दूतं प्रस्थापयत्तदा ५९
लक्षयित्वेङ्गितं सर्वं प्रियं तस्मै निवेद्य च
वायुपुत्रे पुनः प्राप्ते नन्दिग्राममुपागमत् ६०
स तत्र मलदिग्धाङ्गं भरतं चीरवाससम्
अग्रतः पादुके कृत्वा ददर्शासीनमासने ६१
समेत्य भरतेनाथ शत्रुघ्नेन च वीर्यवान्
राघवः सहसौमित्रिर्मुमुदे भरतर्षभ ६२
तथा भरतशत्रुघ्नौ समेतौ गुरुणा तदा
वैदेह्या दर्शनेनोभौ प्रहर्षं समवापतुः ६३
तस्मै तद्भरतो राज्यमागतायाभिसत्कृतम्
न्यासं निर्यातयामास युक्तः परमया मुदा ६४
ततस्तं वैष्णवे शूरं नक्षत्रेऽभिमतेऽहनि
वसिष्ठो वामदेवश्च सहितावभ्यषिञ्चताम् ६५
सोऽभिषिक्तः कपिश्रेष्ठं सुग्रीवं ससुहृज्जनम्
विभीषणं च पौलस्त्यमन्वजानाद्गृहान्प्रति ६६
अभ्यर्च्य विविधै रत्नैः प्रीतियुक्तौ मुदा युतौ
समाधायेतिकर्तव्यं दुःखेन विससर्ज ह ६७

पुष्पकं च विमानं तत्पूजयित्वा स राघवः
प्रादाद्वैश्रवणायैव प्रीत्या स रघुनन्दनः ६८
ततो देवर्षिसहितः सरितं गोमतीमनु
दशाश्वमेधानाजह्रे जारूथ्यान्स निरर्गलान् ६९
इति श्रीमहाभारते आरण्यकपर्वणि पञ्चसप्तत्यधिक द्विशततमोऽध्यायः २७५

## षट्सप्तत्यधिक द्विशततमोऽध्यायः

मार्कण्डेय उवाच
एवमेतन्महाबाहो रामेणामिततेजसा
प्राप्तं व्यसनमत्युग्रं वनवासकृतं पुरा १
मा शुचः पुरुषव्याघ्र क्षत्रियोऽसि परंतप
बाहुवीर्याश्रये मार्गे वर्तसे दीप्तनिर्णये २
न हि ते वृजिनं किंचिद्दृश्यते परमण्वपि
अस्मिन्मार्गे विषीदेयुः सेन्द्रा अपि सुरासुराः ३
संहत्य निहतो वृत्रो मरुद्भिर्वज्रपाणिना
नमुचिश्चैव दुर्धर्षो दीर्घजिह्वा च राक्षसी ४
सहायवति सर्वार्थाः संतिष्ठन्तीह सर्वशः
किं नु तस्याजितं संख्ये भ्राता यस्य धनंजयः ५
अयं च बलिनां श्रेष्ठो भीमो भीमपराक्रमः
युवानौ च महेष्वासौ यमौ माद्रवतीसुतौ
एभिः सहायैः कस्मात्त्वं विषीदसि परंतप ६
य इमे वज्रिणः सेनां जयेयुः समरुद्गणाम्
त्वमप्येभिर्महेष्वासैः सहायैर्देवरूपिभिः
विजेष्यसि रणे सर्वानमित्रान्भरतर्षभ ७
इतश्च त्वमिमां पश्य सैन्धवेन दुरात्मना
बलिना वीर्यमत्तेन हृतामेभिर्महात्मभिः ८
आनीतां द्रौपदीं कृष्णां कृत्वा कर्म सुदुष्करम्
जयद्रथं च राजानं विजितं वशमागतम् ९
असहायेन रामेण वैदेही पुनराहृता
हत्वा संख्ये दशग्रीवं राक्षसं भीमविक्रमम् १०

यस्य शाखामृगा मित्रा ऋक्षाः कालमुखास्तथा
जात्यन्तरगता राजन्नेतद्बुद्ध्यानुचिन्तय ११
तस्मात्त्वं कुरुशार्दूल मा शुचो भरतर्षभ
त्वद्विधा हि महात्मानो न शोचन्ति परंतप १२
वैशम्पायन उवाच
एवमाश्वासितो राजा मार्कण्डेयेन धीमता
त्यक्त्वा दुःखमदीनात्मा पुनरेवेदमब्रवीत् १३
इति श्रीमहाभारते आरण्यकपर्वणि षट्सप्तत्यधिक द्विशततमोऽध्यायः २७६

## सप्त सप्तत्यधिक द्विशततमोऽध्यायः

मार्कण्डेय उवाच
नात्मानमनुशोचामि नेमान्भ्रातॄन्महामुने
हरणं चापि राज्यस्य यथेमां द्रुपदात्मजाम् १
द्यूते दुरात्मभिः क्लिष्टाः कृष्णया तारिता वयम्
जयद्रथेन च पुनर्वनादपहृता बलात् २
अस्ति सीमन्तिनी काचिद्दृष्टपूर्वाथ वा श्रुता
पतिव्रता महाभागा यथेयं द्रुपदात्मजा ३
युधिष्ठिर उवाच
शृणु राजन्कुलस्त्रीणां महाभाग्यं युधिष्ठिर
सर्वमेतद्यथा प्राप्तं सावित्र्या राजकन्यया ४
आसीन्मद्रेषु धर्मात्मा राजा परमधार्मिकः
ब्रह्मण्यश्च शरण्यश्च सत्यसंधो जितेन्द्रियः ५
यज्वा दानपतिर्दक्षः पौरजानपदप्रियः
पार्थिवोऽश्वपतिर्नाम सर्वभूतहिते रतः ६
क्षमावाननपत्यश्च सत्यवाग्विजितेन्द्रियः
अतिक्रान्तेन वयसा संतापमुपजग्मिवान् ७
अपत्योत्पादनार्थं स तीव्रं नियममास्थितः
काले परिमिताहारो ब्रह्मचारी जितेन्द्रियः ८
हुत्वा शतसहस्त्रं स सावित्र्या राजसत्तम
षष्ठे षष्ठे तदा काले बभूव मितभोजनः ९

एतेन नियमेनासीद्वर्षाण्यष्टादशैव तु
पूर्णे त्वष्टादशे वर्षे सावित्री तुष्टिमभ्यगात्
स्वरूपिणी तदा राजन्दर्शयामास तं नृपम् १०
अग्निहोत्रात्समुत्थाय हर्षेण महतान्विता
उवाच चैनं वरदा वचनं पार्थिवं तदा ११
ब्रह्मचर्येण शुद्धेन दमेन नियमेन च
सर्वात्मना च मद्भक्त्या तुष्टास्मि तव पार्थिव १२
वरं वृणीष्वाश्वपते मद्रराज यथेप्सितम्
न प्रमादश्च धर्मेषु कर्तव्यस्ते कथंचन १३
अश्वपतिरुवाच
अपत्यार्थः समारम्भः कृतो धर्मेप्सया मया
पुत्रा मे बहवो देवि भवेयुः कुलभावनाः १४
तुष्टासि यदि मे देवि काममेतं वृणोम्यहम्
सन्तानं हि परो धर्म इत्याहुर्मां द्विजातयः १५
सावित्र्युवाच
पूर्वमेव मया राजन्नभिप्रायमिमं तव
ज्ञात्वा पुत्रार्थमुक्तो वै तव हेतोः पितामहः १६
प्रसादाच्चैव तस्मात्ते स्वयंभुविहिताद्भुवि
कन्या तेजस्विनी सौम्य क्षिप्रमेव भविष्यति १७
उत्तरं च न ते किंचिद्व्याहर्तव्यं कथंचन
पितामहनिसर्गेण तुष्टा ह्येतद्ब्रवीमि ते १८
मार्कण्डेय उवाच
स तथेति प्रतिज्ञाय सावित्र्या वचनं नृपः
प्रसादयामास पुनः क्षिप्रमेव भवेदिति १९
अन्तर्हितायां सावित्र्यां जगाम स्वगृहं नृपः
स्वराज्ये चावसत्प्रीतः प्रजा धर्मेण पालयन् २०
कस्मिंश्चित्तु गते काले स राजा नियतव्रतः
ज्येष्ठायां धर्मचारिण्यां महिष्यां गर्भमादधे २१
राजपुत्र्यां तु गर्भः स मालव्यां भरतर्षभ
व्यवर्धत यथा शुक्ले तारापतिरिवाम्बरे २२

प्राप्ते काले तु सुषुवे कन्यां राजीवलोचनाम्
क्रियाश्च तस्या मुदितश्चक्रे स नृपतिस्तदा २३
सावित्र्या प्रीतया दत्ता सावित्र्या हुतया ह्यपि
सावित्रीत्येव नामास्याश्चक्रुर्विप्रास्तथा पिता २४
सा विग्रहवतीव श्रीर्व्यवर्धत नृपात्मजा
कालेन चापि सा कन्या यौवनस्था बभूव ह २५
तां सुमध्यां पृथुश्रोणीं प्रतिमां काञ्चनीमिव
प्राप्तेयं देवकन्येति दृष्ट्वा संमेनिरे जनाः २६
तां तु पद्मपलाशाक्षीं ज्वलन्तीमिव तेजसा
न कश्चिद्वरयामास तेजसा प्रतिवारितः २७
अथोपोष्य शिरःस्नाता दैवतान्यभिगम्य सा
हुत्वाग्निं विधिवद्विप्रान्वाचयामास पर्वणि २८
ततः सुमनसः शेषाः प्रतिगृह्य महात्मनः
पितुः सकाशमगमद्देवी श्रीरिव रूपिणी २९
साभिवाद्य पितुः पादौ शेषाः पूर्वं निवेद्य च
कृताञ्जलिर्वरारोहा नृपतेः पार्श्वतः स्थिता ३०
यौवनस्थां तु तां दृष्ट्वा स्वां सुतां देवरूपिणीम्
अयाच्यमानां च वरैर्नृपतिर्दुःखितोऽभवत् ३१
राजोवाच
पुत्रि प्रदानकालस्ते न च कश्चिद्वृणोति माम्
स्वयमन्विच्छ भर्तारं गुणैः सदृशमात्मनः ३२
प्रार्थितः पुरुषो यश्च स निवेद्यस्त्वया मम
विमृश्याहं प्रदास्यामि वरय त्वं यथेप्सितम् ३३
श्रुतं हि धर्मशास्त्रे मेपठ्यमानं द्विजातिभिः
तथा त्वमपि कल्याणि गदतो मे वचः शृणु ३४
अप्रदाता पिता वाच्यो वाच्यश्चानुपयन्पतिः
मृते भर्तरि पुत्रश्च वाच्यो मातुररक्षिता ३५
इदं मे वचनं श्रुत्वा भर्तुरन्वेषणे त्वर
देवतानां यथा वाच्यो न भवेयं तथा कुरु ३६
मार्कण्डेय उवाच

एवमुक्त्वा दुहितरं तथा वृद्धांश्च मन्त्रिणः
व्यादिदेशानुयात्रं च गम्यतामित्यचोदयत् ३७
साभिवाद्य पितुः पादौ व्रीडितेव मनस्विनी
पितुर्वचनमाज्ञाय निर्जगामाविचारितम् ३८
सा हैमं रथमास्थाय स्थविरैः सचिवैर्वृता
तपोवनानि रम्याणि राजर्षीणां जगाम ह ३९
मान्यानां तत्र वृद्धानां कृत्वा पादाभिवन्दनम्
वनानि क्रमशस्तात सर्वाण्येवाभ्यगच्छत ४०
एवं सर्वेषु तीर्थेषु धनोत्सर्गं नृपात्मजा
कुर्वती द्विजमुख्यानां तं तं देशं जगाम ह ४१
इति श्रीमहाभारते आरण्यकपर्वणि सप्तसप्तत्यधिक द्विशततमोऽध्यायः
२७७

अष्ट सप्तत्यधिक द्विशततमोऽध्यायः

मार्कण्डेय उवाच
अथ मद्राधिपो राजा नारदेन समागतः
उपविष्टः सभामध्ये कथायोगेन भारत १
ततोऽभिगम्य तीर्थानि सर्वाण्येवाश्रमांस्तथा
आजगाम पितुर्वेश्म सावित्री सह मन्त्रिभिः २
नारदेन सहासीनं दृष्ट्वा सा पितरं शुभा
उभयोरेव शिरसा चक्रे पादाभिवन्दनम् ३
नारद उवाच
क्व गताभूत्सुतेयं ते कुतश्चैवागता नृप
किमर्थं युवतीं भर्त्रे न चैनां संप्रयच्छसि ४
अश्वपतिरुवाच
कार्येण खल्वनेनैव प्रेषिताद्यैव चागता
तदस्याः शृणु देवर्षे भर्तारं योऽनया वृतः ५
मार्कण्डेय उवाच
सा ब्रूहि विस्तरेणेति पित्रा संचोदिता शुभा
दैवतस्येव वचनं प्रतिगृह्येदमब्रवीत् ६

आसीच्छाल्वेषु धर्मात्मा क्षत्रियः पृथिवीपतिः
द्युमत्सेन इति ख्यातः पश्चादन्धो बभूव ह ७
विनष्टचक्षुषस्तस्य बालपुत्रस्य धीमतः
सामीप्येन हृतं राज्यं छिद्रेऽस्मिन्पूर्ववैरिणा ८
स बालवत्सया सार्धं भार्यया प्रस्थितो वनम्
महारण्यगतश्चापि तपस्तेपे महाव्रतः ९
तस्य पुत्रः पुरे जातः संवृद्धश्च तपोवने
सत्यवाननुरूपो मे भर्तेति मनसा वृतः १०
नारद उवाच
अहो बत महत्पापं सावित्र्या नृपते कृतम्
अजानन्त्या यदनया गुणवान्सत्यवान्वृतः ११
सत्यं वदत्यस्य पिता सत्यं माता प्रभाषते
ततोऽस्य ब्राह्मणाश्चक्रुर्नामैतत्सत्यवानिति १२
बालस्याश्वाः प्रियाश्चास्य करोत्यश्वांश्च मृन्मयान्
चित्रेऽपि च लिखत्यश्वांश्चित्राश्व इति चोच्यते १३
राजोवाच
अपीदानीं स तेजस्वी बुद्धिमान्वा नृपात्मजः
क्षमावानपि वा शूरः सत्यवान्पितृनन्दनः १४
नारद उवाच
विवस्वानिव तेजस्वी बृहस्पतिसमो मतौ
महेन्द्र इव शूरश्च वसुधेव क्षमान्वितः १५
अश्वपतिरुवाच
अपि राजात्मजो दाता ब्रह्मण्यो वापि सत्यवान्
रूपवानप्युदारो वाप्यथ वा प्रियदर्शनः १६
नारद उवाच
साङ्कृते रन्तिदेवस्य स शक्त्या दानतः समः
ब्रह्मण्यः सत्यवादी च शिबिरौशीनरो यथा १७
ययातिरिव चोदारः सोमवत्प्रियदर्शनः
रूपेणान्यतमोऽश्विभ्यां द्युमत्सेनसुतो बली १८
स दान्तः स मृदुः शूरः स सत्यः स जितेन्द्रियः

स मैत्रः सोऽनसूयश्च स ह्रीमान्धृतिमांश्च सः १९
नित्यशश्चार्जवं तस्मिन्स्थितिस्तस्यैव च ध्रुवा
संक्षेपतस्तपोवृद्धैः शीलवृद्धैश्च कथ्यते २०
अश्वपतिरुवाच
गुणैरुपेतं सर्वैस्तं भगवन्प्रब्रवीषि मे
दोषानप्यस्य मे ब्रूहि यदि सन्तीह केचन २१
नारद उवाच
एको दोषोऽस्य नान्योऽस्ति सोऽद्य प्रभृति सत्यवान्
संवत्सरेण क्षीणायुर्देहन्यासं करिष्यति २२
राजोवाच
एहि सावित्रि गच्छ त्वमन्यं वरय शोभने
तस्य दोषो महानेको गुणानाक्रम्य तिष्ठति २३
यथा मे भगवानाह नारदो देवसत्कृतः
संवत्सरेण सोऽल्पायुर्देहन्यासं करिष्यति २४
सावित्र्युवाच
सकृदंशो निपतति सकृत्कन्या प्रदीयते
सकृदाह ददानीति त्रीण्येतानि सकृत्सकृत् २५
दीर्घायुरथ वाल्पायुः सगुणो निर्गुणोऽपि वा
सकृद्वृतो मया भर्ता न द्वितीयं वृणोम्यहम् २६
मनसा निश्चयं कृत्वा ततो वाचाभिधीयते
क्रियते कर्मणा पश्चात्प्रमाणं मे मनस्ततः २७
नारद उवाच
स्थिरा बुद्धिर्नरश्रेष्ठ सावित्र्या दुहितुस्तव
नैषा चालयितुं शक्या धर्मादस्मात्कथंचन २८
नान्यस्मिन्पुरुषे सन्ति ये सत्यवति वै गुणाः
प्रदानमेव तस्मान्मे रोचते दुहितुस्तव २९
राजोवाच
अविचार्यमेतदुक्तं हि तथ्यं भगवता वचः
करिष्याम्येतदेवं च गुरुर्हि भगवान्मम ३०
नारद उवाच

अविघ्नमस्तु सावित्र्याः प्रदाने दुहितुस्तव
साधयिष्यामहे तावत्सर्वेषां भद्रमस्तु वः ३१
मार्कगडेय उवाच
एवमुक्त्वा खमुत्पत्य नारदस्त्रिदिवं गतः
राजापि दुहितुः सर्वं वैवाहिकमकारयत् ३२
इति श्रीमहाभारते आरगयकपर्वणि अष्टसप्तत्यधिक द्विशततमोऽध्यायः
२७८

एकोनाशीत्यधिक द्विशततमोऽध्यायः
मार्कगडेय उवाच
अथ कन्याप्रदाने स तमेवार्थं विचिन्तयन्
समानिन्ये च तत्सर्वं भागडं वैवाहिकं नृपः १
ततो वृद्धान्द्विजान्सर्वानृत्विजः सपुरोहितान्
समाहूय तिथौ पुगये प्रययौ सह कन्यया २
मेध्यारगयं स गत्वा च द्युमत्सेनाश्रमं नृपः
पद्भ्यामेव द्विजैः सार्धं राजर्षिं तमुपागमत् ३
तत्रापश्यन्महाभागं शालवृक्षमुपाश्रितम्
कौश्यां बृस्यां समासीनं चक्षुर्हीनं नृपं तदा ४
स राजा तस्य राजर्षेः कृत्वा पूजां यथार्हतः
वाचा सुनियतो भूत्वा चकारात्मनिवेदनम् ५
तस्यार्घ्यमासनं चैव गां चावेद्य स धर्मवित्
किमागमनमित्येवं राजा राजानमब्रवीत् ६
तस्य सर्वमभिप्रायमितिकर्तव्यतां च ताम्
सत्यवन्तं समुद्दिश्य सर्वमेव न्यवेदयत् ७
अश्वपतिरुवाच
सावित्री नाम राजर्षे कन्येयं मम शोभना
तां स्वधर्मेण धर्मज्ञ स्नुषार्थे त्वं गृहाण मे ८
द्युमत्सेन उवाच
च्युताः स्म राज्याद्वनवासमाश्रिताश्चराम धर्मं नियतास्तपस्विनः
कथं त्वनर्हा वनवासमाश्रमे सहिष्यते क्लेशमिमं सुता तव ९

अश्वपतिरुवाच
सुखं च दुःखं च भवाभवात्मकं यदा विजानाति सुताहमेव च
न मद्विधे युज्यति वाक्यमीदृशं विनिश्चयेनाभिगतोऽस्मि ते नृप १०
आशां नार्हसि मे हन्तुं सौहृदात्प्रणयेन च
अभितश्चागतं प्रेम्णा प्रत्याख्यातुं न मार्हसि ११
अनुरूपो हि संयोगे त्वं ममाहं तवापि च
स्नुषां प्रतीच्छ मे कन्यां भार्यां सत्यवतः सुताम् १२
द्युमत्सेन उवाच
पूर्वमेवाभिलषितः संबन्धो मे त्वया सह
भ्रष्टराज्यस्त्वहमिति तत एतद्विचारितम् १३
अभिप्रायस्त्वयं यो मे पूर्वमेवाभिकाङ्क्षितः
स निर्वर्ततु मेऽद्यैव काङ्क्षितो ह्यसि मेऽतिथिः १४
मार्कण्डेय उवाच
ततः सर्वान्समानीय द्विजानाश्रमवासिनः
यथाविधि समुद्वाहं कारयामासतुर्नृपौ १५
दत्त्वा त्वश्वपतिः कन्यां यथार्हं च परिच्छदम्
ययौ स्वमेव भवनं युक्तः परमया मुदा १६
सत्यवानपि भार्यां तां लब्ध्वा सर्वगुणान्विताम्
मुमुदे सा च तं लब्ध्वा भर्तारं मनसेप्सितम् १७
गते पितरि सर्वाणि संन्यस्याभरणानि सा
जगृहे वल्कलान्येव वस्त्रं काषायमेव च १८
परिचारैर्गुणैश्चैव प्रश्रयेण दमेन च
सर्वकामक्रियाभिश्च सर्वेषां तुष्टिमावहत् १९
श्वश्रूं शरीरसत्कारैः सर्वैराच्छादनादिभिः
श्वशुरं देवकार्यैश्च वाचः संयमनेन च २०
तथैव प्रियवादेन नैपुणेन शमेन च
रहश्चैवोपचारेण भर्तारं पर्यतोषयत् २१
एवं तत्राश्रमे तेषां तदा निवसतां सताम्
कालस्तपस्यतां कश्चिदतिचक्राम भारत २२
सावित्र्यास्तु शयानायास्तिष्ठन्त्याश्च दिवानिशम्

नारदेन यदुक्तं तद्वाक्यं मनसि वर्तते २३
इति श्रीमहाभारते आरगयकपर्वणि एकोनाशीत्यधिक द्विशततमोऽध्यायः
२७९

## अशीत्यधिक द्विशततमोऽध्यायः

मार्कगडेय उवाच
ततः काले बहुतिथे व्यतिक्रान्ते कदाचन
प्राप्तः स कालो मर्तव्यं यत्र सत्यवता नृप १
गणयन्त्याश्च सावित्र्या दिवसे दिवसे गते
यद्वाक्यं नारदेनोक्तं वर्तते हृदि नित्यशः २
चतुर्थेऽहनि मर्तव्यमिति संचिन्त्य भामिनी
व्रतं त्रिरात्रमुद्दिश्य दिवारात्रं स्थिताभवत् ३
तं श्रुत्वा नियमं दुःखं वध्वा दुःखान्वितो नृपः
उत्थाय वाक्यं सावित्रीमब्रवीत्परिसान्त्वयन् ४
अतितीव्रोऽयमारम्भस्त्वयारब्धो नृपात्मजे
तिसृणां वसतीनां हि स्थानं परमदुष्करम् ५
सावित्र्युवाच
न कार्यस्तात संतापः पारयिष्याम्यहं व्रतम्
व्यवसायकृतं हीदं व्यवसायश्च कारणम् ६
द्युमत्सेन उवाच
व्रतं भिन्धीति वक्तुं त्वां नास्मि शक्तः कथंचन
पारयस्वेति वचनं युक्तमस्मद्विधो वदेत् ७
मार्कगडेय उवाच
एवमुक्त्वा द्युमत्सेनो विरराम महामनाः
तिष्ठन्ती चापि सावित्री काष्ठभूतेव लक्ष्यते ८
श्वोभूते भर्तृमरणे सावित्र्या भरतर्षभ
दुःखान्वितायास्तिष्ठन्त्याः सा रात्रिर्व्यत्यवर्तत ९
अद्य तद्दिवसं चेति हुत्वा दीप्तं हुताशनम्
युगमात्रोदिते सूर्ये कृत्वा पौर्वाह्णिकीः क्रियाः १०
ततः सर्वान्द्विजान्वृद्धाञ्श्वश्रूं श्वशुरमेव च

अभिवाद्यानुपूर्व्येण प्राञ्जलिर्नियता स्थिता ११
अवैधव्याशिषस्ते तु सावित्र्यर्थं हिताः शुभाः
ऊचुस्तपस्विनः सर्वे तपोवननिवासिनः १२
एवमस्त्विति सावित्री ध्यानयोगपरायणा
मनसा ता गिरः सर्वाः प्रत्यगृह्णात्तपस्विनाम् १३
तं कालं च मुहूर्तं च प्रतीक्षन्ती नृपात्मजा
यथोक्तं नारदवचश्चिन्तयन्ती सुदुःखिता १४
ततस्तु श्वश्रूश्वशुरावूचतुस्तां नृपात्मजाम्
एकान्तस्थामिदं वाक्यं प्रीत्या भरतसत्तम १५
श्वशुरावूचतुः
व्रतो यथोपदिष्टोऽय यथावत्पारितस्त्वया
आहारकालः संप्राप्तः क्रियतां यदनन्तरम् १६
सावित्र्युवाच
अस्तं गते मयादित्ये भोक्तव्यं कृतकामया
एष मे हृदि संकल्पः समयश्च कृतो मया १७
मार्कण्डेय उवाच
एवं संभाषमाणायाः सावित्र्या भोजनं प्रति
स्कन्धे परशुमादाय सत्यवान्प्रस्थितो वनम् १८
सावित्री त्वाह भर्तारं नैकस्त्वं गन्तुमर्हसि
सह त्वयागमिष्यामि न हि त्वां हातुमुत्सहे १९
सत्यवानुवाच
वनं न गतपूर्वं ते दुःखः पन्थाश्च भामिनि
व्रतोपवासक्षामा च कथं पद्भ्यां गमिष्यसि २०
सावित्र्युवाच
उपवासान्न मे ग्लानिर्नास्ति चापि परिश्रमः
गमने च कृतोत्साहां प्रतिषेद्धुं न मार्हसि २१
सत्यवानुवाच
यदि ते गमनोत्साहः करिष्यामि तव प्रियम्
मम त्वामन्त्रय गुरून्न मां दोषः स्पृशेदयम् २२
मार्कण्डेय उवाच

साभिगम्याब्रवीच्छ्वश्रूं श्वशुरं च महाव्रता
अयं गच्छति मे भर्ता फलाहारो महावनम् २३
इच्छेयमभ्यनुज्ञातुमार्यया श्वशुरेण च
अनेन सह निर्गन्तुं न हि मे विरहः क्षमः २४
गुर्वग्निहोत्रार्थकृते प्रस्थितश्च सुतस्तव
न निवार्यो निवार्यः स्यादन्यथा प्रस्थितो वनम् २५
संवत्सरः किंचिदूनो न निष्क्रान्ताहमाश्रमात्
वनं कुसुमितं द्रष्टुं परं कौतूहलं हि मे २६
द्युमत्सेन उवाच
यतः प्रभृति सावित्री पित्रा दत्ता स्नुषा मम
नानयाभ्यर्थनायुक्तमुक्तपूर्वं स्मराम्यहम् २७
तदेषा लभतां कामं यथाभिलषितं वधूः
अप्रमादश्च कर्तव्यः पुत्रि सत्यवतः पथि २८
मार्कगडेय उवाच
उभाभ्यामभ्यनुज्ञाता सा जगाम यशस्विनी
सह भर्त्रा हसन्तीव हृदयेन विदूयता २९
सा वनानि विचित्राणि रमणीयानि सर्वशः
मयूररवघुष्टानि ददर्श विपुलेक्षणा ३०
नदीः पुगयवहाश्चैव पुष्पितांश्च नगोत्तमान्
सत्यवानाह पश्येति सावित्रीं मधुराक्षरम् ३१
निरीक्षमाणा भर्तारं सर्वावस्थमनिन्दिता
मृतमेव हि तं मेने काले मुनिवचः स्मरन् ३२
अनुवर्तती तु भर्तारं जगाम मृदुगामिनी
द्विधेव हृदयं कृत्वा तं च कालमवेक्षती ३३
इति श्रीमहाभारते आरगयकपर्वणि अशीत्यधिक द्विशततमोऽध्यायः २८०

## एकाशीत्यधिक द्विशततमोऽध्यायः

मार्कगडेय उवाच
अथ भार्यासहायः स फलान्यादाय वीर्यवान्
कठिनं पूरयामास ततः काष्ठान्यपाटयत् १

तस्य पाटयतः काष्ठं स्वेदो वै समजायत
व्यायामेन च तेनास्य जज्ञे शिरसि वेदना २
सोऽभिगम्य प्रियां भार्यामुवाच श्रमपीडितः
व्यायामेन ममानेन जाता शिरसि वेदना ३
अङ्गानि चैव सावित्रि हृदयं दूयतीव च
अस्वस्थमिव चात्मानं लक्षये मितभाषिणि ४
शूलैरिव शिरो विद्धमिदं संलक्षयाम्यहम्
तत्स्वप्तुमिच्छे कल्याणि न स्थातुं शक्तिरस्ति मे ५
समासाद्याथ सावित्री भर्तारमुपगूह्य च
उत्सङ्गेऽस्य शिरः कृत्वा निषसाद महीतले ६
ततः सा नारदवचो विमृशन्ती तपस्विनी
तं मुहूर्तं क्षणं वेलां दिवसं च युयोज ह ७
मुहूर्तादिव चापश्यत्पुरुषं पीतवाससम्
बद्धमौलि वपुष्मन्तमादित्यसमतेजसम् ८
श्यामावदातं रक्ताक्षं पाशहस्तं भयावहम्
स्थितं सत्यवतः पार्श्वे निरीक्षन्तं तमेव च ९
तं दृष्ट्वा सहसोत्थाय भर्तुर्न्यस्य शनैः शिरः
कृताञ्जलिरुवाचार्ता हृदयेन प्रवेपता १०
दैवतं त्वाभिजानामि वपुरेतद्ध्यमानुषम्
कामया ब्रूहि मे देव कस्त्वं किं च चिकीर्षसि ११
यम उवाच
पतिव्रतासि सावित्रि तथैव च तपोन्विता
अतस्त्वामभिभाषामि विद्धि मां त्वं शुभे यमम् १२
अयं ते सत्यवान्भर्ता क्षीणायुः पार्थिवात्मजः
नेष्याम्येनमहं बद्ध्वा विद्ध्येतन्मे चिकीर्षितम् १३
मार्कण्डेय उवाच
इत्युक्त्वा पितृराजस्तां भगवान्स्वं चिकीर्षितम्
यथावत्सर्वमाख्यातुं तत्प्रियार्थं प्रचक्रमे १४
अयं हि धर्मसंयुक्तो रूपवान्गुणसागरः
नार्हो मत्पुरुषैर्नेतुमतोऽस्मि स्वयमागतः १५

ततः सत्यवतः कायात्पाशबद्धं वशं गतम्
अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात् १६
ततः समुद्धृतप्राणं गतश्वासं हतप्रभम्
निर्विचेष्टं शरीरं तद्बभूवाप्रियदर्शनम् १७
यमस्तु तं तथा बद्ध्वा प्रयातो दक्षिणामुखः
सावित्री चापि दुःखार्ता यममेवान्वगच्छत
नियमव्रतसंसिद्धा महाभागा पतिव्रता १८
यम उवाच
निवर्त गच्छ सावित्रि कुरुष्वास्यौर्ध्वदेहिकम्
कृतं भर्तुस्त्वयानृण्यं यावद्गम्यं गतं त्वया १९
सावित्र्युवाच
यत्र मे नीयते भर्ता स्वयं वा यत्र गच्छति
मयापि तत्र गन्तव्यमेष धर्मः सनातनः २०
तपसा गुरुवृत्त्या च भर्तुः स्नेहाद्व्रतेन च
तव चैव प्रसादेन न मे प्रतिहता गतिः २१
प्राहुः सप्तपदं मित्रं बुधास्तत्त्वार्थदर्शिनः
मित्रतां च पुरस्कृत्य किंचिद्वक्ष्यामि तच्छृणु २२
नानात्मवन्तस्तु वने चरन्ति धर्मं च वासं च परिश्रमं च
विज्ञानतो धर्ममुदाहरन्ति तस्मात्सन्तो धर्ममाहुः प्रधानम् २३
एकस्य धर्मेण सतां मतेन सर्वे स्म तं मार्गमनुप्रपन्नाः
मा वै द्वितीयं मा तृतीयं च वाञ्छे तस्मात्सन्तो धर्ममाहुः प्रधानम् २४
यम उवाच
निवर्त तुष्टोऽस्मि तवानया गिरा स्वराक्षरव्यञ्जनहेतुयुक्तया
वरं वृणीष्वेह विनास्य जीवितं ददानि ते सर्वमनिन्दिते वरम् २५
सावित्र्युवाच
च्युतः स्वराज्याद्वनवासमाश्रितो विनष्टचक्षुः श्वशुरो ममाश्रमे
स लब्धचक्षुर्बलवान्भवेन्नृपस्तव प्रसादाज्ज्वलनार्कसंनिभः २६
यम उवाच
ददानि ते सर्वमनिन्दिते वरं यथा त्वयोक्तं भविता च तत्तथा
तवाध्वना ग्लानिमिवोपलक्षये निवर्त गच्छस्व न ते श्रमो भवेत् २७

सावित्र्युवाच
कुतः श्रमो भर्तृसमीपतो हि मे यतो हि भर्ता मम सा गतिर्ध्रुवा
यतः पतिं नेष्यसि तत्र मे गतिः सुरेश भूयश्च वचो निबोध मे २८
सतां सकृत्संगतमीप्सितं परं ततः परं मित्रमिति प्रचक्षते
न चाफलं सत्पुरुषेण संगतं ततः सतां संनिवसेत्समागमे २९
यम उवाच
मनोनुकूलं बुधबुद्धिवर्धनं त्वयाहमुक्तो वचनं हिताश्रयम्
विना पुनः सत्यवतोऽस्य जीवितं वरं द्वितीयं वरयस्व भामिनि ३०
सावित्र्युवाच
हृतं पुरा मे श्वशुरस्य धीमतः स्वमेव राज्यं स लभेत पार्थिवः
जह्यात्स्वधर्मं न च मे गुरुर्यथा द्वितीयमेतं वरयामि ते वरम् ३१
यम उवाच
स्वमेव राज्यं प्रतिपत्स्यतेऽचिरान्न च स्वधर्मात्परिहास्यते नृपः
कृतेन कामेन मया नृपात्मजे निवर्त गच्छस्व न ते श्रमो भवेत् ३२
सावित्र्युवाच
प्रजास्त्वयेमा नियमेन संयता नियम्य चैता नयसे न कामया
अतो यमत्वं तव देव विश्रुतं निबोध चेमां गिरमीरितां मया ३३
अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा
अनुग्रहश्च दानं च सतां धर्मः सनातनः ३४
एवंप्रायश्च लोकोऽय मनुष्याः शक्तिपेशलाः
सन्तस्त्वेवाप्यमित्रेषु दयां प्राप्तेषु कुर्वते ३५
यम उवाच
पिपासितस्येव यथा भवेत्पयस्तथा त्वया वाक्यमिदं समीरितम्
विना पुनः सत्यवतोऽस्य जीवितं वरं वृष्णीष्वेह शुभे यदिच्छसि ३६
सावित्र्युवाच
ममानपत्यः पृथिवीपतिः पिता भवेत्पितुः पुत्रशतं ममौरसम्
कुलस्य संतानकरं च यद्भवेत्तृतीयमेतं वरयामि ते वरम् ३७
यम उवाच
कुलस्य संतानकरं सुवर्चसं शतं सुतानां पितुरस्तु ते शुभे
कृतेन कामेन नराधिपात्मजे निवर्त दूरं हि पथस्त्वमागता ३८

सावित्र्युवाच
न दूरमेतन्मम भर्तृसंनिधौ मनो हि मे दूरतरं प्रधावति
तथा व्रजन्नेव गिरं समुद्यतां मयोच्यमानां शृणु भूय एव च ३९
विवस्वतस्त्वं तनयः प्रतापवांस्ततो हि वैवस्वत उच्यसे बुधैः
शमेन धर्मेण च रञ्जिताः प्रजास्ततस्तवेहेश्वर धर्मराजता ४०
आत्मन्यपि न विश्वासस्तावान्भवति सत्सु यः
तस्मात्सत्सु विशेषेण सर्वः प्रणयमिच्छति ४१
सौहृदात्सर्वभूतानां विश्वासो नाम जायते
तस्मात्सत्सु विशेषेण विश्वासं कुरुते जनः ४२
यम उवाच
उदाहृतं ते वचनं यदङ्गने शुभे न तादृक्त्वदृते मया श्रुतम्
अनेन तुष्टोऽस्मि विनास्य जीवितं वरं चतुर्थं वरयस्व गच्छ च ४३
सावित्र्युवाच
ममात्मजं सत्यवतस्तथौरसं भवेदुभाभ्यामिह यत्कुलोद्वहम्
शतं सुतानां बलवीर्यशालिनामिदं चतुर्थं वरयामि ते वरम् ४४
यम उवाच
शतं सुतानां बलवीर्यशालिनां भविष्यति प्रीतिकरं तवाबले
परिश्रमस्ते न भवेन्नृपात्मजे निवर्त दूरं हि पथस्त्वमागता ४५
सावित्र्युवाच
सतां सदा शाश्वती धर्मवृत्तिः सन्तो न सीदन्ति न च व्यथन्ति
सतां सद्भिर्नाफलः सङ्गमोऽस्ति सद्भ्यो भयं नानुवर्तन्ति सन्तः ४६
सन्तो हि सत्येन नयन्ति सूर्यं सन्तो भूमिं तपसा धारयन्ति
सन्तो गतिर्भूतभव्यस्य राजन्सतां मध्ये नावसीदन्ति सन्तः ४७
आर्यजुष्टमिदं वृत्तमिति विज्ञाय शाश्वतम्
सन्तः परार्थं कुर्वाणा नावेक्षन्ते प्रतिक्रियाम् ४८
न च प्रसादः सत्पुरुषेषु मोघो न चाप्यर्थो नश्यति नापि मानः
यस्मादेतन्नियतं सत्सु नित्यं तस्मात्सन्तो रक्षितारो भवन्ति ४९
यम उवाच
यथा यथा भाषसि धर्मसंहितं मनोनुकूलं सुपदं महार्थवत्
तथा तथा मे त्वयि भक्तिरुत्तमा वरं वृणीष्वाप्रतिमं यतव्रते ५०

सावित्र्युवाच
न तेऽपवर्गः सुकृताद्विनाकृतस्तथा यथान्येषु वरेषु मानद
वरं वृणे जीवतु सत्यवानयं यथा मृता ह्येवमहं विना पतिम् ५१
न कामये भर्तृविनाकृता सुखं न कामये भर्तृविनाकृता दिवम्
न कामये भर्तृविनाकृता श्रियं न भर्तृहीना व्यवसामि जीवितुम् ५२
वरातिसर्गः शतपुत्रता मम त्वयैव दत्तो ह्रियते च मे पतिः
वरं वृणे जीवतु सत्यवानयं तवैव सत्यं वचनं भविष्यति ५३
मार्कण्डेय उवाच
तथेत्युक्त्वा तु तान्पाशान्मुक्त्वा वैवस्वतो यमः
धर्मराजः प्रहृष्टात्मा सावित्रीमिदमब्रवीत् ५४
एष भद्रे मया मुक्तो भर्ता ते कुलनन्दिनि
अरोगस्तव नेयश्च सिद्धार्थश्च भविष्यति ५५
चतुर्वर्षशतं चायुस्त्वया सार्धमवाप्स्यति
इष्ट्वा यज्ञैश्च धर्मेण ख्यातिं लोके गमिष्यति ५६
त्वयि पुत्रशतं चैव सत्यवाञ्जनयिष्यति
ते चापि सर्वे राजानः क्षत्रियाः पुत्रपौत्रिणः
ख्यातास्त्वन्नामधेयाश्च भविष्यन्तीह शाश्वताः ५७
पितुश्च ते पुत्रशतं भविता तव मातरि
मालव्यां मालवा नाम शाश्वताः पुत्रपौत्रिणः
भ्रातरस्ते भविष्यन्ति क्षत्रियास्त्रिदशोपमाः ५८
एवं तस्यै वरं दत्त्वा धर्मराजः प्रतापवान्
निवर्तयित्वा सावित्रीं स्वमेव भवनं ययौ ५९
सावित्र्यपि यमे याते भर्तारं प्रतिलभ्य च
जगाम तत्र तत्रास्या भर्तुः शावं कलेवरम् ६०
सा भूमौ प्रेक्ष्य भर्तारमुपसृत्योपगूह्य च
उत्सङ्गे शिर आरोप्य भूमावुपविवेश ह ६१
संज्ञां च सत्यवाँल्लब्ध्वा सावित्रीमभ्यभाषत
प्रोष्यागत इव प्रेम्णा पुनः पुनरुदीक्ष्य वै ६२
सत्यवानुवाच
सुचिरं बत सुप्तोऽस्मि किमर्थं नावबोधितः

क्व चासौ पुरुषः श्यामो योऽसौ मां संचकर्ष ह ६३
सावित्र्युवाच
सुचिरं बत सुप्तोऽसि ममाङ्के पुरुषर्षभ
गतः स भगवान्देवः प्रजासंयमनो यमः ६४
विश्रान्तोऽसि महाभाग विनिद्रश्च नृपात्मज
यदि शक्यं समुत्तिष्ठ विगाढां पश्य शर्वरीम् ६५
मार्कगडेय उवाच
उपलभ्य ततः संज्ञां सुखसुप्त इवोत्थितः
दिशः सर्वा वनान्तांश्च निरीन्द्योवाच सत्यवान् ६६
फलाहारोऽस्मि निष्क्रान्तस्त्वया सह सुमध्यमे
ततः पाटयतः काष्ठं शिरसो मे रुजाभवत् ६७
शिरोभितापसंतप्तः स्थातुं चिरमशक्नुवन्
तवोत्सङ्गे प्रसुप्तोऽहमिति सर्वं स्मरे शुभे ६८
त्वयोपगूढस्य च मे निद्रयापहृतं मनः
ततोऽपश्यं तमो घोरं पुरुषं च महौजसम् ६९
तद्यदि त्वं विजानासि किं तद्ब्रूहि सुमध्यमे
स्वप्नो मे यदि वा दृष्टो यदि वा सत्यमेव तत् ७०
तमुवाचाथ सावित्री रजनी व्यवगाहते
श्वस्ते सर्वं यथावृत्तमाख्यास्यामि नृपात्मज ७१
उत्तिष्ठोत्तिष्ठ भद्रं ते पितरौ पश्य सुव्रत
विगाढा रजनी चेयं निवृत्तश्च दिवाकरः ७२
नक्तंचराश्चरन्त्येते हृष्टाः क्रूराभिभाषिगः
श्रूयन्ते पर्गशब्दाश्च मृगागां चरतां वने ७३
एताः शिवा घोरनादा दिशं दन्निगपश्चिमाम्
आस्थाय विरुवन्त्युग्राः कम्पयन्त्यो मनो मम ७४
सत्यवानुवाच
वनं प्रतिभयाकारं घनेन तमसा वृतम्
न विज्ञास्यसि पन्थानं गन्तुं चैव न शन्द्यसि ७५
सावित्र्युवाच
अस्मिन्नद्य वने दग्धे शुष्कवृन्तः स्थितो ज्वलन्

वायुना धम्यमानोऽग्निर्दृश्यतेऽत्र क्वचित्क्वचित् ७६
ततोऽग्निमानयित्वेह ज्वालयिष्यामि सर्वतः
काष्ठानीमानि सन्तीह जहि सन्तापमात्मनः ७७
यदि नोत्सहसे गन्तुं सरुजं त्वाभिलक्षये
न च ज्ञास्यसि पन्थानं तमसा संवृते वने ७८
श्वः प्रभाते वने दृश्ये यास्यावोऽनुमते तव
वसावेह क्षपामेतां रुचितं यदि तेऽनघ ७९
सत्यवानुवाच
शिरोरुजा निवृत्ता मे स्वस्थान्यङ्गानि लक्षये
मातापितृभ्यामिच्छामि संगमं त्वत्प्रसादजम् ८०
न कदाचिद्विकाले हि गतपूर्वो मयाश्रमः
अनागतायां सन्ध्यायां माता मे प्ररुणद्धि माम् ८१
दिवापि मयि निष्क्रान्ते संतप्येते गुरू मम
विचिनोति च मां तातः सहैवाश्रमवासिभिः ८२
मात्रा पित्रा च सुभृशं दुःखिताभ्यामहं पुरा
उपालब्धः सुबहुशश्चिरेणागच्छसीति हि ८३
का त्ववस्था तयोरद्य मदर्थमिति चिन्तये
तयोरदृश्ये मयि च महद्दुःखं भविष्यति ८४
पुरा मामूचतुश्चैव रात्रावस्रायमाणकौ
भृशं सुदुःखितौ वृद्धौ बहुशः प्रीतिसंयुतौ ८५
त्वया हीनौ न जीवाव मुहूर्तमपि पुत्रक
यावद्धरिष्यसे पुत्र तावन्नौ जीवितं ध्रुवम् ८६
वृद्धयोरन्धयोर्दृष्टिस्त्वयि वंशः प्रतिष्ठितः
त्वयि पिण्डश्च कीर्तिश्च सन्तानं चावयोरिति ८७
माता वृद्धा पिता वृद्धस्तयोर्यष्टिरहं किल
तौ रात्रौ मामपश्यन्तौ कामवस्थां गमिष्यतः ८८
निद्रायाश्चाभ्यसूयामि यस्या हेतोः पिता मम
माता च संशयं प्राप्ताः मत्कृतेऽनपकारिणी ८९
अहं च संशयं प्राप्तः कृच्छ्रामापदमास्थितः
मातापितृभ्यां हि विना नाहं जीवितुमुत्सहे ९०

व्यक्तमाकुलया बुद्ध्या प्रज्ञाचक्षुः पिता मम
एकैकमस्यां वेलायां पृच्छत्याश्रमवासिनम् ९१
नात्मानमनुशोचामि यथाहं पितरं शुभे
भर्तारं चाप्यनुगतां मातरं परिदुर्बलाम् ९२
मत्कृतेन हि तावद्य संतापं परमेष्यतः
जीवन्तावनुजीवामि भर्तव्यौ तौ मयेति ह
तयोः प्रियं मे कर्तव्यमिति जीवामि चाप्यहम् ९३
मार्कण्डेय उवाच
एवमुक्त्वा स धर्मात्मा गुरुवर्ती गुरुप्रियः
उच्छ्रित्य बाहू दुःखार्तः सस्वरं प्ररुरोद ह ९४
ततोऽब्रवीत्तथा दृष्ट्वा भर्तारं शोककर्शितम्
प्रमृज्याश्रूणि नेत्राभ्यां सावित्री धर्मचारिणी ९५
यदि मेऽस्ति तपस्तप्तं यदि दत्तं हुतं यदि
श्वश्रूश्वशुरभर्तॄणां मम पुण्यास्तु शर्वरी ९६
न स्मराम्युक्तपूर्वां वै स्वैरेष्वप्यनृतां गिरम्
तेन सत्येन तावद्य ध्रियेतां श्वशुरो मम ९७
सत्यवानुवाच
कामये दर्शनं पित्रोर्याहि सावित्रि माचिरम्
पुरा मातुः पितुर्वापि यदि पश्यामि विप्रियम्
न जीविष्ये वरारोहे सत्येनात्मानमालभे ९८
यदि धर्मे च ते बुद्धिर्मां चेज्जीवन्तमिच्छसि
मम प्रियं वा कर्तव्यं गच्छस्वाश्रममन्तिकात् ९९
मार्कण्डेय उवाच
सावित्री तत उत्थाय केशान्संयम्य भामिनी
पतिमुत्थापयामास बाहुभ्यां परिगृह्य वै १००
उत्थाय सत्यवांश्चापि प्रमृज्याङ्गानि पाणिना
दिशः सर्वाः समालोक्य कठिने दृष्टिमादधे १०१
तमुवाचाथ सावित्री श्वः फलानीह नेष्यसि
योगक्षेमार्थमेतत्ते नेष्यामि परशुं त्वहम् १०२
कृत्वा कठिनभारं सा वृक्षशाखावलम्बिनम्

गृहीत्वा परशुं भर्तुः सकाशं पुनरागमत् १०३
वामे स्कन्धे तु वामोरूर्भर्तुर्बाहुं निवेश्य सा
दक्षिणेन परिष्वज्य जगाम मृदुगामिनी १०४
सत्यवानुवाच
अभ्यासगमनाद्भीरु पन्थानो विदिता मम
वृक्षान्तरालोकितया ज्योत्स्नया चापि लक्षये १०५
आगतौ स्वः पथा येन फलान्यवचितानि च
यथागतं शुभे गच्छ पन्थानं मा विचारय १०६
पलाशषण्डे चैतस्मिन्पन्था व्यावर्तते द्विधा
तस्योत्तरेण यः पन्थास्तेन गच्छ त्वरस्व च
स्वस्थोऽस्मि बलवानस्मि दिदृक्षुः पितरावुभौ १०७
मार्कण्डेय उवाच
ब्रुवन्नेवं त्वरायुक्तः स प्रायादाश्रमं प्रति १०८
इति श्रीमहाभारते आरण्यकपर्वणि एकाशीत्यधिक द्विशततमोऽध्यायः
२८१

द्व्यशीत्यधिक द्विशततमोऽध्यायः

मार्कण्डेय उवाच
एतस्मिन्नेव काले तु द्युमत्सेनो महावने
लब्धचक्षुः प्रसन्नात्मा दृष्ट्या सर्वं ददर्श ह १
स सर्वानाश्रमान्गत्वा शैब्यया सह भार्यया
पुत्रहेतोः परामार्तिं जगाम मनुजर्षभ २
तावाश्रमान्नदीश्चैव वनानि च सरांसि च
तांस्तान्देशान्विचिन्वन्तौ दम्पती परिजग्मतुः ३
श्रुत्वा शब्दं तु यत्किंचिदुन्मुखौ सुतशङ्कया
सावित्रीसहितोऽभ्येति सत्यवानित्यधावताम् ४
भिन्नैश्च परुषैः पादैः सव्रणैः शोणितोक्षितैः
कुशकण्टकविद्धाङ्गावुन्मत्ताविव धावतः ५
ततोऽभिसृत्य तैर्विप्रैः सर्वैराश्रमवासिभिः
परिवार्य समाश्वास्य समानीतौ स्वमाश्रमम् ६

तत्र भार्यासहायः स वृतो वृद्धैस्तपोधनैः
आश्वासितो विचित्रार्थैः पूर्वराज्ञां कथाश्रयैः ७
ततस्तौ पुनराश्वस्तौ वृद्धौ पुत्रदिदृक्षया
बाल्ये वृत्तानि पुत्रस्य स्मरन्तौ भृशदुःखितौ ८
पुनरुक्त्वा च करुणां वाचं तौ शोककर्शितौ
हा पुत्र हा साध्वि वधूः क्वासि क्वासीत्यरोदताम् ९
सुवर्चा उवाच
यथास्य भार्या सावित्री तपसा च दमेन च
आचारेण च संयुक्ता तथा जीवति सत्यवान् १०
गौतम उवाच
वेदाः साङ्गा मयाधीतास्तपो मे संचितं महत्
कौमारं ब्रह्मचर्यं मे गुरवोऽग्निश्च तोषिताः ११
समाहितेन चीर्णानि सर्वाण्येव व्रतानि मे
वायुभक्षोपवासश्च कुशलानि च यानि मे १२
अनेन तपसा वेद्मि सर्वं परिचिकीर्षितम्
सत्यमेतन्निबोध त्वं ध्रियते सत्यवानिति १३
शिष्य उवाच
उपाध्यायस्य मे वक्त्राद्यथा वाक्यं विनिःसृतम्
नैतज्जातु भवेन्मिथ्या तथा जीवति सत्यवान् १४
ऋषय ऊचुः
यथास्य भार्या सावित्री सर्वैरेव सुलक्षणैः
अवैधव्यकरैर्युक्ता तथा जीवति सत्यवान् १५
भारद्वाज उवाच
यथास्य भार्या सावित्री तपसा च दमेन च
आचारेण च संयुक्ता तथा जीवति सत्यवान् १६
दाल्भ्य उवाच
यथा दृष्टिः प्रवृत्ता ते सावित्र्याश्च यथा व्रतम्
गताहारमकृत्वा च तथा जीवति सत्यवान् १७
माण्डव्य उवाच
यथा वदन्ति शान्तायां दिशि वै मृगपक्षिणः

पार्थिवी च प्रवृत्तिस्ते तथा जीवति सत्यवान् १८
धौम्य उवाच
सर्वैर्गुणैरुपेतस्ते यथा पुत्रो जनप्रियः
दीर्घायुर्लक्षणोपेतस्तथा जीवति सत्यवान् १९
मार्कण्डेय उवाच
एवमाश्वासितस्तैस्तु सत्यवाग्भिस्तपस्विभिः
तांस्तान्विगणयन्नर्थानवस्थित इवाभवत् २०
ततो मुहूर्तात्सावित्री भर्त्रा सत्यवता सह
आजगामाश्रमं रात्रौ प्रहृष्टा प्रविवेश ह २१
ब्राह्मणा ऊचुः
पुत्रेण संगतं त्वाद्य चक्षुष्मन्तं निरीक्ष्य च
सर्वे वयं वै पृच्छामो वृद्धिं ते पृथिवीपते २२
समागमेन पुत्रस्य सावित्र्या दर्शनेन च
चक्षुषश्चात्मनो लाभात्त्रिभिर्दिष्ट्या विवर्धसे २३
सर्वैरस्माभिरुक्तं यत्तथा तन्नात्र संशयः
भूयो भूयश्च वृद्धिस्ते क्षिप्रमेव भविष्यति २४
मार्कण्डेय उवाच
ततोऽग्निं तत्र संज्वाल्य द्विजास्ते सर्व एव हि
उपासाञ्चक्रिरे पार्थ द्युमत्सेनं महीपतिम् २५
शैब्या च सत्यवांश्चैव सावित्री चैकतः स्थिताः
सर्वैस्तैरभ्यनुज्ञाता विशोकाः समुपाविशन् २६
ततो राज्ञा सहासीनाः सर्वे ते वनवासिनः
जातकौतूहलाः पार्थ पप्रच्छुर्नृपतेः सुतम् २७
प्रागेव नागतं कस्मात्सभार्येण त्वया विभो
विरात्रे चागतं कस्मात्कोऽनुबन्धश्च तेऽभवत् २८
संतापितः पिता माता वयं चैव नृपात्मज
नाकस्मादिति जानीमस्तत्सर्वं वक्तुमर्हसि २९
सत्यवानुवाच
पित्राहमभ्यनुज्ञातः सावित्रीसहितो गतः
अथ मेऽभूच्छिरोदुःखं वने काष्ठानि भिन्दतः ३०

सुप्तश्चाहं वेदनया चिरमित्युपलक्षये
तावत्कालं च न मया सुप्तपूर्वं कदाचन ३१
सर्वेषामेव भवतां संतापो मा भवेदिति
अतो विरात्रागमनं नान्यदस्तीह कारणम् ३२
गौतम उवाच
अकस्माच्चक्षुषः प्राप्तिर्द्युमत्सेनस्य ते पितुः
नास्य त्वं कारणं वेत्थ सावित्री वक्तुमर्हति ३३
श्रोतुमिच्छामि सावित्रि त्वं हि वेत्थ परावरम्
त्वां हि जानामि सावित्रि सावित्रीमिव तेजसा ३४
त्वमत्र हेतुं जानीषे तस्मात्सत्यं निरुच्यताम्
रहस्यं यदि ते नास्ति किंचिदत्र वदस्व नः ३५
सावित्र्युवाच
एवमेतद्यथा वेत्थ संकल्पो नान्यथा हि वः
न च किंचिद्रहस्यं मे श्रूयतां तथ्यमत्र यत् ३६
मृत्युर्मे भर्तुराख्यातो नारदेन महात्मना
स चाद्य दिवसः प्राप्तस्ततो नैनं जहाम्यहम् ३७
सुप्तं चैनं यमः साक्षादुपागच्छत्सकिङ्करः
स एनमनयद्बद्ध्वा दिशं पितृनिषेविताम् ३८
अस्तौषं तमहं देवं सत्येन वचसा विभुम्
पञ्च वै तेन मे दत्ता वराः शृणुत तान्मम ३९
चक्षुषी च स्वराज्यं च द्वौ वरौ श्वशुरस्य मे
लब्धं पितुः पुत्रशतं पुत्राणामात्मनः शतम् ४०
चतुर्वर्षशतायुर्मे भर्ता लब्धश्च सत्यवान्
भर्तुर्हि जीवितार्थं तु मया चीर्णं स्थिरं व्रतम् ४१
एतत्सत्यं मयाख्यातं कारणं विस्तरेण वः
यथा वृत्तं सुखोदर्कमिदं दुःखं महन्मम ४२
ऋषय ऊचुः
निमज्जमानं व्यसनैरभिद्रुतं कुलं नरेन्द्रस्य तमोमये ह्रदे
त्वया सुशीले धृतधर्मपुणयया समुद्धृतं साध्वि पुनः कुलीनया ४३
मार्कणडेय उवाच

तथा प्रशस्य ह्यभिपूज्य चैव ते वरस्त्रियं तामृषयः समागताः
नरेन्द्रमामन्त्र्य सपुत्रमञ्जसा शिवेन जग्मुर्मुदिताः स्वमालयम् ४४
इति श्रीमहाभारते आरण्यकपर्वणि द्व्यशीत्यधिक द्विशततमोऽध्यायः २८२

## त्र्यशीत्यधिक द्विशततमोऽध्यायः

मार्कण्डेय उवाच
तस्यां रात्र्यां व्यतीतायामुदिते सूर्यमण्डले
कृतपूर्वाह्णिकाः सर्वे समेयुस्ते तपोधना १
तदेव सर्वं सावित्र्या महाभाग्यं महर्षयः
द्युमत्सेनाय नातृप्यन्कथयन्तः पुनः पुनः २
ततः प्रकृतयः सर्वाः शाल्वेभ्योऽभ्यागता नृप
आचख्युर्निहतं चैव स्वेनामात्येन तं नृपम् ३
तं मन्त्रिणा हतं श्रुत्वा ससहायं सबान्धवम्
न्यवेदयन्यथातत्त्वं विद्रुतं च द्विषद्बलम् ४
एकमत्यं च सर्वस्य जनस्याथ नृपं प्रति
सचक्षुर्वाप्यचक्षुर्वा स नो राजा भवत्विति ५
अनेन निश्चयेनेह वयं प्रस्थापिता नृप
प्राप्तानीमानि यानानि चतुरङ्गं च ते बलम् ६
प्रयाहि राजन्भद्रं ते घुष्टस्ते नगरे जयः
अध्यास्स्व चिररात्राय पितृपैतामहं पदम् ७
चक्षुष्मन्तं च तं दृष्ट्वा राजानं वपुषान्वितम्
मूर्धाभिः पतिताः सर्वे विस्मयोत्फुल्ललोचनाः ८
ततोऽभिवाद्य तान्वृद्धान्द्विजानाश्रमवासिनः
तैश्चाभिपूजितः सर्वैः प्रययौ नगरं प्रति ९
शैब्या च सह सावित्र्या स्वास्तीर्णेन सुवर्चसा
नरयुक्तेन यानेन प्रययौ सेनया वृता १०
ततोऽभिषिषिचुः प्रीत्या द्युमत्सेनं पुरोहिताः
पुत्रं चास्य महात्मानं यौवराज्येऽभ्यषेचयन् ११
ततः कालेन महता सावित्र्याः कीर्तिवर्धनम्
तद्वै पुत्रशतं जज्ञे शूराणामनिवर्तिनाम् १२

भ्रातृणां सोदराणां च तथैवास्याभवच्छतम्
मद्राधिपस्याश्वपतेर्मालव्यां सुमहाबलम् १३
एवमात्मा पिता माता श्वश्रूः श्वशुर एव च
भर्तुः कुलं च सावित्र्या सर्वं कृच्छ्रात्समुद्धृतम् १४
तथैवैषापि कल्याणी द्रौपदी शीलसंमता
तारयिष्यति वः सर्वान्सावित्रीव कुलाङ्गना १५
वैशम्पायन उवाच
एवं स पाराडवस्तेन अनुनीतो महात्मना
विशोको विज्वरो राजन्काम्यके न्यवसत्तदा १६
इति श्रीमहाभारते आरगयकपर्वणि त्र्यशीत्यधिकद्विशततमोऽध्यायः २८३
समाप्तं द्रौपदीहरणपर्व

चतुरशीत्यधिक द्विशततमोऽध्यायः

जनमेजय उवाच
यत्तत्तदा महाब्रह्मँल्लोमशो वाक्यमब्रवीत्
इन्द्रस्य वचनादेत्य पाराडुपुत्रं युधिष्ठिरम् १
यच्चापि ते भयं तीव्रं न च कीर्तयसे क्वचित्
तच्चाप्यपहरिष्यामि सव्यसाचाविहागते २
किं नु तद्विदुषां श्रेष्ठ कर्णं प्रति महद्भयम्
आसीन्न च स धर्मात्मा कथयामास कस्यचित् ३
वैशम्पायन उवाच
अहं ते राजशार्दूल कथयामि कथामिमाम्
पृच्छते भरतश्रेष्ठ शुश्रूषस्व गिरं मम ४
द्वादशे समतिक्रान्ते वर्षे प्राप्ते त्रयोदशे
पाराडूनां हितकृच्छक्रः कर्णं भिक्षितुमुद्यतः ५
अभिप्रायमथो ज्ञात्वा महेन्द्रस्य विभावसुः
कुराडलार्थे महाराज सूर्यः कर्णमुपागमत् ६
महार्हे शयने वीरं स्पर्ध्यास्तरणसंवृते
शयानमभिविश्वस्तं ब्रह्मरायं सत्यवादिनम् ७
स्वप्नान्ते निशि राजेन्द्र दर्शयामास रश्मिवान्

कृपया परयाविष्टः पुत्रस्नेहाच्च भारत ८
ब्राह्मणो वेदविद्भूत्वा सूर्यो योगाद्धि रूपवान्
हितार्थमब्रवीत्कर्णं सान्त्वपूर्वमिदं वचः ९
कर्ण मद्वचनं तात शृणु सत्यभृतां वर
ब्रुवतोऽद्य महाबाहो सौहृदात्परमं हितम् १०
उपायास्यति शक्रस्त्वां पाण्डवानां हितेप्सया
ब्राह्मणच्छद्मना कर्ण कुण्डलापजिहीर्षया ११
विदितं तेन शीलं ते सर्वस्य जगतस्तथा
यथा त्वं भिक्षितः सद्भिर्ददास्येव न याचसे १२
त्वं हि तात ददास्येव ब्राह्मणेभ्यः प्रयाचितः
वित्तं यच्चान्यदप्याहुर्न प्रत्याख्यासि कर्हिचित् १३
तं त्वामेवंविधं ज्ञात्वा स्वयं वै पाकशासनः
आगन्ता कुण्डलार्थाय कवचं चैव भिक्षितुम् १४
तस्मै प्रयाचमानाय न देये कुण्डले त्वया
अनुनेयः परं शक्त्या श्रेय एतद्धि ते परम् १५
कुण्डलार्थे ब्रुवंस्तात कारणैर्बहुभिस्त्वया
अन्यैर्बहुविधैर्वित्तैः स निवार्यः पुनः पुनः १६
रत्नैः स्त्रीभिस्तथा भोगैर्धनैर्बहुविधैरपि
निदर्शनैश्च बहुभिः कुण्डलेप्सुः पुरन्दरः १७
यदि दास्यसि कर्ण त्वं सहजे कुण्डले शुभे
आयुषः प्रक्षयं गत्वा मृत्योर्वशमुपेष्यसि १८
कवचेन च संयुक्तः कुण्डलाभ्यां च मानद
अवध्यस्त्वं रणेऽरीणामिति विद्धि वचो मम १९
अमृतादुत्थितं ह्येतदुभयं रत्नसंभवम्
तस्माद्रक्ष्यं त्वया कर्ण जीवितं चेत्प्रियं तव २०
कर्ण उवाच
को मामेवं भवान्प्राह दर्शयन्सौहृदं परम्
कामया भगवन्ब्रूहि को भवान्द्विजवेषधृक् २१
ब्राह्मण उवाच
अहं तात सहस्रांसुः सौहृदात्त्वां निदर्शये

कुरुष्वैतद्वचो मे त्वमेतच्छ्रेयः परं हि ते २२
कर्ण उवाच
श्रेय एव ममात्यन्तं यस्य मे गोपतिः प्रभुः
प्रवक्ताद्य हितान्वेषी शृणु चेदं वचो मम २३
प्रसादये त्वां वरदं प्रणयाच्च ब्रवीम्यहम्
न निवार्यो व्रतादस्मादहं यद्यस्मि ते प्रियः २४
व्रतं वै मम लोकोऽय वेत्ति कृत्स्नो विभावसो
यथाहं द्विजमुख्येभ्यो दद्यां प्राणानपि ध्रुवम् २५
यद्यागच्छति शक्रो मां ब्राह्मणच्छद्मनावृतः
हितार्थं पाण्डुपुत्राणां खेचरोत्तम भिक्षितुम् २६
दास्यामि विबुधश्रेष्ठ कुण्डले वर्म चोत्तमम्
न मे कीर्तिः प्रणश्येत त्रिषु लोकेषु विश्रुता २७
मद्विधस्यायशस्यं हि न युक्तं प्राणरक्षणम्
युक्तं हि यशसा युक्तं मरणं लोकसंमतम् २८
सोऽहमिन्द्राय दास्यामि कुण्डले सह वर्मणा
यदि मां बलवृत्रघ्नो भिक्षार्थमुपयास्यति २९
हितार्थं पाण्डुपुत्राणां कुण्डले मे प्रयाचितुम्
तन्मे कीर्तिकरं लोके तस्याकीर्तिर्भविष्यति ३०
वृणोमि कीर्तिं लोके हि जीवितेनापि भानुमन्
कीर्तिमानश्नुते स्वर्गं हीनकीर्तिस्तु नश्यति ३१
कीर्तिर्हि पुरुषं लोके संजीवयति मातृवत्
अकीर्तिर्जीवितं हन्ति जीवतोऽपि शरीरिणः ३२
अयं पुराणः श्लोको हि स्वयं गीतो विभावसो
धात्रा लोकेश्वर यथा कीर्तिरायुर्नरस्य वै ३३
पुरुषस्य परे लोके कीर्तिरेव परायणम्
इह लोके विशुद्धा च कीर्तिरायुर्विवर्धनी ३४
सोऽह शरीरजे दत्त्वा कीर्तिं प्राप्स्यामि शाश्वतीम्
दत्त्वा च विधिवद्दानं ब्राह्मणेभ्यो यथाविधि ३५
हुत्वा शरीरं संग्रामे कृत्वा कर्म सुदुष्करम्
विजित्य वा परानाजौ यशः प्राप्स्यामि केवलम् ३६

भीतानामभयं दत्त्वा संग्रामे जीवितार्थिनाम्
वृद्धान्बालान्द्विजातींश्च मोत्तयित्वा महाभयात् ३७
प्राप्स्यामि परमं लोके यशः स्वर्भानुसूदन
जीवितेनापि मे रत्त्या कीर्तिस्तद्विद्धि मे व्रतम् ३८
सोऽह दत्त्वा मघवते भित्तामेतामनुत्तमाम्
ब्राह्मणच्छद्मिने देव लोके गन्ता परां गतिम् ३९
इति श्रीमहाभारते आरण्यकपर्वणि चतुरशीत्यधिक
द्विशततमोऽध्यायः २८४

पञ्चाशीत्यधिक द्विशततमोऽध्यायः

सूर्य उवाच
माहितं कर्ण कार्षीस्त्वमात्मनः सुहृदां तथा
पुत्राणामथ भार्याणामथो मातुरथो पितुः १
शरीरस्याविरोधेन प्राणिनां प्राणभृद्वर
इष्यते यशसः प्राप्तिः कीर्तिश्च त्रिदिवे स्थिरा २
यस्त्वं प्राणविरोधेन कीर्तिमिच्छसि शाश्वतीम्
सा ते प्राणान्समादाय गमिष्यति न संशयः ३
जीवतां कुरुते कार्यं पिता माता सुतास्तथा
ये चान्ये बान्धवाः केचिल्लोकेऽस्मिन्पुरुषर्षभ
राजानश्च नरव्याघ्र पौरुषेण निबोध तत् ४
कीर्तिश्च जीवतः साध्वी पुरुषस्य महाद्युते
मृतस्य कीर्त्या किं कार्यं भस्मीभूतस्य देहिनः
मृतः कीर्तिं न जानाति जीवन्कीर्तिं समश्नुते ५
मृतस्य कीर्तिर्मर्त्यस्य यथा माला गतायुषः
अहं तु त्वां ब्रवीम्येतद्भक्तोऽसीति हितेप्सया ६
भक्तिमन्तो हि मे रत्त्या इत्येतेनापि हेतुना
भक्तोऽय परया भक्त्या मामित्येव महाभुज
ममापि भक्तिरुत्पन्ना स त्वं कुरु वचो मम ७
अस्ति चात्र परं किंचिदध्यात्मं देवनिर्मितम्
अतश्च त्वां ब्रवीम्येतत्क्रियतामविशङ्कया ८

देवगुह्यं त्वया ज्ञातुं न शक्यं पुरुषर्षभ
तस्मान्नाख्यामि ते गुह्यं काले वेत्स्यति तद्भवान् ९
पुनरुक्तं च वक्ष्यामि त्वं राधेय निबोध तत्
मास्मै ते कुगडले दद्या भिक्षवे वज्रपाणये १०
शोभसे कुगडलाभ्यां हि रुचिराभ्यां महाद्युते
विशाखयोर्मध्यगतः शशीव विमलो दिवि ११
कीर्तिश्च जीवतः साध्वी पुरुषस्येति विद्धि तत्
प्रत्याख्येयस्त्वया तात कुगडलार्थे पुरंदरः १२
शक्या बहुविधैर्वाक्यैः कुगडलेप्सा त्वयानघ
विहन्तुं देवराजस्य हेतुयुक्तैः पुनः पुनः १३
उपपत्त्युपपन्नार्थैर्माधुर्यकृतभूषणैः
पुरन्दरस्य कर्ण त्वं बुद्धिमेतामपानुद १४
त्वं हि नित्यं नरव्याघ्र स्पर्धसे सव्यसाचिना
सव्यसाची त्वया चैव युधि शूरः समेष्यति १५
न तु त्वामर्जुनः शक्तः कुगडलाभ्यां समन्वितम्
विजेतुं युधि यद्यस्य स्वयमिन्द्रः शरो भवेत् १६
तस्मान्न देये शक्राय त्वयैते कुगडले शुभे
संग्रामे यदि निर्जेतुं कर्ण कामयसेऽजुनम् १७
इति श्रीमहाभारते आरगयकपर्वणि पञ्चाशीत्यधिक द्विशततमोऽध्यायः २८५

## षडशीत्यधिक द्विशततमोऽध्यायः

कर्ण उवाच
भगवन्तमहं भक्तो यथा मां वेत्थ गोपते
तथा परमतिग्मांशो नान्यं देवं कथंचन १
न मे दारा न मे पुत्रा न चात्मा सुहृदो न च
तथेष्टा वै सदा भक्त्या यथा त्वं गोपते मम २
इष्टानां च महात्मानो भक्तानां च न संशयः
कुर्वन्ति भक्तिमिष्टां च जानीषे त्वं च भास्कर ३
इष्टो भक्तश्च मे कर्णो न चान्यद्दैवतं दिवि
जानीत इति वै कृत्वा भगवानाह मद्धितम् ४

भूयश्च शिरसा याचे प्रसाद्य च पुनः पुनः
इति ब्रवीमि तिग्मांशो त्वं तु मे क्षन्तुमर्हसि ५
बिभेमि न तथा मृत्योर्यथा बिभ्येऽनृतादहम्
विशेषेण द्विजातीनां सर्वेषां सर्वदा सताम्
प्रदाने जीवितस्यापि न मेऽत्रास्ति विचारणा ६
यच्च मामात्थ देव त्वं पाण्डवं फल्गुनं प्रति
व्येतु संतापजं दुःखं तव भास्कर मानसम्
अर्जुनं प्रति मां चैव विजेष्यामि रणेऽजुनम् ७
तवापि विदितं देव ममाप्यस्त्रबलं महत्
जामदग्न्यादुपात्तं यत्तथा द्रोणान्महात्मनः ८
इदं त्वमनुजानीहि सुरश्रेष्ठ व्रतं मम
भिक्षते वज्रिणे दद्यामपि जीवितमात्मनः ९
सूर्य उवाच
यदि तात ददास्येते वज्रिणे कुण्डले शुभे
त्वमप्येनमथो ब्रूया विजयार्थं महाबल १०
नियमेन प्रदद्यास्त्वं कुण्डले वै शतक्रतोः
अवध्यो ह्यसि भूतानां कुण्डलाभ्यां समन्वितः ११
अर्जुनेन विनाशं हि तव दानवसूदनः
प्रार्थयानो रणे वत्स कुण्डले ते जिहीर्षति १२
स त्वमप्येनमाराध्य सूनृताभिः पुनः पुनः
अभ्यर्थयेथा देवेशममोघार्थं पुरन्दरम् १३
अमोघां देहि मे शक्तिममित्रविनिबर्हिणीम्
दास्यामि ते सहस्राक्ष कुण्डले वर्म चोत्तमम् १४
इत्येवं नियमेन त्वं दद्याः शक्राय कुण्डले
तया त्वं कर्ण संग्रामे हनिष्यसि रणे रिपून् १५
नाहत्वा हि महाबाहो शत्रूनेति करं पुनः
सा शक्तिर्देवराजस्य शतशोऽथ सहस्रशः १६
वैशम्पायन उवाच
एवमुक्त्वा सहस्रांशुः सहसान्तरधीयत
ततः सूर्याय जप्यान्ते कर्णः स्वप्नं न्यवेदयत् १७

यथादृष्टं यथातत्त्वं यथोक्तमुभयोर्निशि
तत्सर्वमानुपूर्व्येण शशंसास्मै वृषस्तदा १८
तच्छ्रुत्वा भगवान्देवो भानुः स्वर्भानुसूदनः
उवाच तं तथेत्येव कर्णं सूर्यः स्मयन्निव १९
ततस्तत्त्वमिति ज्ञात्वा राधेयः परवीरहा
शक्तिमेवाभिकाङ्क्षन्वै वासवं प्रत्यपालयत् २०
इति श्रीमहाभारते आरगयकपर्वणि षडशीत्यधिक द्विशततमोऽध्यायः २८६

सप्ताशीत्यधिक द्विशततमोऽध्यायः

जनमेजय उवाच
किं तद्गुह्यं न चाख्यातं कर्णायेहोष्णरश्मिना
कीदृशे कुगडले ते च कवचं चैव कीदृशम् १
कुतश्च कवचं तस्य कुगडले चैव सत्तम
एतदिच्छाम्यहं श्रोतुं तन्मे ब्रूहि तपोधन २
वैशम्पायन उवाच
अयं राजन्ब्रवीम्येतद्यत्तद्गुह्यं विभावसोः
यादृशे कुगडले चैव कवचं चैव यादृशम् ३
कुन्तिभोजं पुरा राजन्ब्राह्मणः समुपस्थितः
तिग्मतेजा महाप्रांशुः श्मश्रुदगडजटाधरः ४
दर्शनीयोऽनवद्याङ्गस्तेजसा प्रज्वलन्निव
मधुपिङ्गो मधुरवाक्तपःस्वाध्यायभूषणः ५
स राजानं कुन्तिभोजमब्रवीत्सुमहातपाः
भिक्षामिच्छाम्यहं भोक्तुं तव गेहे विमत्सर ६
न मे व्यलीकं कर्तव्यं त्वया वा तव चानुगैः
एवं वत्स्यामि ते गेहे यदि ते रोचतेऽनघ ७
यथाकामं च गच्छेयमागच्छेयं तथैव च
शय्यासने च मे राजन्नापराध्येत कश्चन ८
तमब्रवीत्कुन्तिभोजः प्रीतियुक्तमिदं वचः
एवमस्तु परं चेति पुनश्चैनमथाब्रवीत् ९
मम कन्या महाब्रह्मन्पृथा नाम यशस्विनी

शीलवृत्तान्विता साध्वी नियता न च मानिनी १०
उपस्थास्यति सा त्वां वै पूजयानवमन्य च
तस्याश्च शीलवृत्तेन तुष्टिं समुपयास्यसि ११
एवमुक्त्वा तु तं विप्रमभिपूज्य यथाविधि
उवाच कन्यामभ्येत्य पृथां पृथुललोचनाम् १२
अयं वत्से महाभागो ब्राह्मणो वस्तुमिच्छति
मम गेहे मया चास्य तथेत्येवं प्रतिश्रुतम् १३
त्वयि वत्से पराश्वस्य ब्राह्मणस्याभिराधनम्
तन्मे वाक्यं न मिथ्या त्वं कर्तुमर्हसि कर्हिचित् १४
अयं तपस्वी भगवान्स्वाध्यायनियतो द्विजः
यद्यद्ब्रूयान्महातेजास्तत्तद्देयममत्सरात् १५
ब्राह्मणा हि परं तेजो ब्राह्मणा हि परं तपः
ब्राह्मणानां नमस्कारैः सूर्यो दिवि विराजते १६
अमानयन्हि मानार्हान्वातापिश्च महासुरः
निहतो ब्रह्मदण्डेन तालजङ्घस्तथैव च १७
सोऽय वत्से महाभार आहितस्त्वयि सांप्रतम्
त्वं सदा नियता कुर्या ब्राह्मणस्याभिराधनम् १८
जानामि प्रणिधानं ते बाल्यात्प्रभृति नन्दिनी
ब्राह्मणेष्विह सर्वेषु गुरुबन्धुषु चैव ह १९
तथा प्रेष्येषु सर्वेषु मित्रसंबन्धिमातृषु
मयि चैव यथावत्त्वं सर्वमादृत्य वर्तसे २०
न ह्यतुष्टो जनोऽस्तीह पुरे चान्तःपुरे च ते
सम्यग्वृत्त्यानवद्याङ्गि तव भृत्यजनेष्वपि २१
संदेष्टव्यां तु मन्ये त्वां द्विजातिं कोपनं प्रति
पृथे बालेति कृत्वा वै सुता चासि ममेति च २२
वृष्णीनां त्वं कुले जाता शूरस्य दयिता सुता
दत्ता प्रीतिमता मह्यं पित्रा बाला पुरा स्वयम् २३
वसुदेवस्य भगिनी सुतानां प्रवरा मम
अग्र्यमग्रे प्रतिज्ञाय तेनासि दुहिता मम २४
तादृशे हि कुले जाता कुले चैव विवर्धिता

सुखात्सुखमनुप्राप्ता ह्रदाद्ध्रदमिवागता २५
दौष्कुलेया विशेषेण कथंचित्प्रग्रहं गताः
बालभावाद्विकुर्वन्ति प्रायशः प्रमदाः शुभे २६
पृथे राजकुले जन्म रूपं चाद्भुतदर्शनम्
तेन तेनासि संपन्ना समुपेता च भामिनी २७
सा त्वं दर्पं परित्यज्य दम्भं मानं च भामिनि
आराध्य वरदं विप्रं श्रेयसा योक्ष्यसे पृथे २८
एवं प्राप्स्यसि कल्याणि कल्याणमनघे ध्रुवम्
कोपिते तु द्विजश्रेष्ठे कृत्स्नं दह्येत मे कुलम् २९
इति श्रीमहाभारते आरण्यकपर्वणि सप्ताशीत्यधिक द्विशततमोऽध्यायः
२८७

अष्टाशीत्यधिक द्विशततमोऽध्यायः

कुन्त्युवाच
ब्राह्मणं यन्त्रिता राजन्नुपस्थास्यामि पूजया
यथाप्रतिज्ञं राजेन्द्र न च मिथ्या ब्रवीम्यहम् १
एष चैव स्वभावो मे पूजयेयं द्विजानिति
तव चैव प्रियं कार्यं श्रेयश्चैतत्परं मम २
यद्येवैष्यति सायाह्ने यदि प्रातरथो निशि
यद्यर्धरात्रे भगवान्न मे कोपं करिष्यति ३
लाभो ममैष राजेन्द्र यद्वै पूजयती द्विजान्
आदेशे तव तिष्ठन्ती हितं कुर्यां नरोत्तम ४
विस्रब्धो भव राजेन्द्र न व्यलीकं द्विजोत्तमः
वसन्प्राप्स्यति ते गेहे सत्यमेतद्ब्रवीमि ते ५
यत्प्रियं च द्विजस्यास्य हितं चैव तवानघ
यतिष्यामि तथा राजन्व्येतु ते मानसो ज्वरः ६
ब्राह्मणा हि महाभागाः पूजिताः पृथिवीपते
तारणाय समर्थाः स्युर्विपरीते वधाय च ७
साहमेतद्विजानन्ती तोषयिष्ये द्विजोत्तमम्
न मत्कृते व्यथां राजन्प्राप्स्यसि द्विजसत्तमात् ८

अपराधे हि राजेन्द्र राज्ञामश्रेयसे द्विजाः
भवन्ति च्यवनो यद्वत्सुकन्यायाः कृते पुरा ९
नियमेन परेणाहमुपस्थास्ये द्विजोत्तमम्
यथा त्वया नरेन्द्रेदं भाषितं ब्राह्मणं प्रति १०
राजोवाच
एवमेतत्त्वया भद्रे कर्तव्यमविशङ्कया
मद्धितार्थं कुलार्थं च तथात्मार्थं च नन्दिनि ११
वैशम्पायन उवाच
एवमुक्त्वा तु तां कन्यां कुन्तिभोजो महायशाः
पृथां परिददौ तस्मै द्विजाय सुतवत्सलः १२
इयं ब्रह्मन्मम सुता बाला सुखविवर्धिता
अपराध्येत यत्किंचिन्न तत्कार्यं हृदि त्वया १३
द्विजातयो महाभागा वृद्धबालतपस्विषु
भवन्त्यक्रोधनाः प्रायो विरुद्धेष्वपि नित्यदा १४
सुमहत्यपराधेऽपि क्षान्तिः कार्या द्विजातिभिः
यथाशक्ति यथोत्साहं पूजा ग्राह्या द्विजोत्तम १५
तथेति ब्राह्मणेनोक्ते स राजा प्रीतमानसः
हंसचन्द्रांशुसंकाशं गृहमस्य न्यवेदयत् १६
तत्राग्निशरणे क्लृप्तमासनं तस्य भानुमत्
आहारादि च सर्वं तत्तथैव प्रत्यवेदयत् १७
निक्षिप्य राजपुत्री तु तन्द्रीं मानं तथैव च
आतस्थे परमं यत्नं ब्राह्मणस्याभिराधने १८
तत्र सा ब्राह्मणं गत्वा पृथा शौचपरा सती
विधिवत्परिचाराहैं देववत्पर्यतोषयत् १९
इति श्रीमहाभारते आरण्यकपर्वणि अष्टाशीत्यधिक द्विशततमोऽध्यायः
२८८

## एकोननवत्यधिक द्विशततमोऽध्यायः

वैशम्पायन उवाच
सा तु कन्या महाराज ब्राह्मणं संशितव्रतम्

तोषयामास शुद्धेन मनसा संशितव्रता १
प्रातरायास्य इत्युक्त्वा कदाचिद्द्विजसत्तमः
तत आयाति राजेन्द्र साये रात्रावथो पुनः २
तं च सर्वासु वेलासु भक्ष्यभोज्यप्रतिश्रयैः
पूजयामास सा कन्या वर्धमानैस्तु सर्वदा ३
अन्नादिसमुदाचारः शय्यासनकृतस्तथा
दिवसे दिवसे तस्य वर्धते न तु हीयते ४
निर्भर्त्सनापवादैश्च तथैवाप्रियया गिरा
ब्राह्मणस्य पृथा राजन्न चकाराप्रियं तदा ५
व्यस्ते काले पुनश्चैति न चैति बहुशो द्विजः
दुर्लभ्यमपि चैवान्नं दीयतामिति सोऽब्रवीत् ६
कृतमेव च तत्सर्वं पृथा तस्मै न्यवेदयत्
शिष्यवत्पुत्रवच्चैव स्वसृवच्च सुसंयता ७
यथोपजोषं राजेन्द्र द्विजातिप्रवरस्य सा
प्रीतिमुत्पादयामास कन्या यत्नैरनिन्दिता ८
तस्यास्तु शीलवृत्तेन तुतोष द्विजसत्तमः
अवधानेन भूयोऽस्य परं यत्नमथाकरोत् ९
तां प्रभाते च साये च पिता पप्रच्छ भारत
अपि तुष्यति ते पुत्रि ब्राह्मणः परिचर्यया १०
तं सा परममित्येव प्रत्युवाच यशस्विनी
ततः प्रीतिमवापाग्र्यां कुन्तीभोजो महामनाः ११
ततः संवत्सरे पूर्णे यदासौ जपतां वरः
नापश्यद्दुष्कृतं किंचित्पृथायाः सौहृदे रतः १२
ततः प्रीतमना भूत्वा स एनां ब्राह्मणोऽब्रवीत्
प्रीतोऽस्मि परमं भद्रे परिचारेण ते शुभे १३
वरान्वृणीष्व कल्याणि दुरापान्मानुषैरिह
यैस्त्वं सीमन्तिनीः सर्वा यशसाभिभविष्यसि १४
कुन्त्युवाच
कृतानि मम सर्वाणि यस्या मे वेदवित्तम
त्वं प्रसन्नः पिता चैव कृतं विप्र वरैर्मम १५

ब्राह्मण उवाच
यदि नेच्छसि भद्रे त्वं वरं मत्तः शुचिस्मिते
इमं मन्त्रं गृहाण त्वमाह्वानाय दिवौकसाम् १६
यं यं देवं त्वमेतेन मन्त्रेणावाहयिष्यसि
तेन तेन वशे भद्रे स्थातव्यं ते भविष्यति १७
अकामो वा सकामो वा न स नैष्यति ते वशम्
विबुधो मन्त्रसंशान्तो वाक्ये भृत्य इवानतः १८
वैशम्पायन उवाच
न शशाक द्वितीयं सा प्रत्याख्यातुमनिन्दिता
तं वै द्विजातिप्रवरं तदा शापभयान्नृप १९
ततस्तामनवद्याङ्गीं ग्राहयामास वै द्विजः
मन्त्रग्रामं तदा राजन्नथर्वशिरसि श्रुतम् २०
तं प्रदाय तु राजेन्द्र कुन्तिभोजमुवाच ह
उषितोऽस्मि सुखं राजन्कन्यया परितोषितः २१
तव गेहे सुविहितः सदा सुप्रतिपूजितः
साधयिष्यामहे तावदित्युक्त्वान्तरधीयत २२
स तु राजा द्विजं दृष्ट्वा तत्रैवान्तर्हितं तदा
बभूव विस्मयाविष्टः पृथां च समपूजयत् २३
इति श्रीमहाभारते आरण्यकपर्वणि एकोननवत्यधिक द्विशततमोऽध्यायः
२८९

## नवत्यधिक द्विशततमोऽध्यायः

वैशम्पायन उवाच
गते तस्मिन्द्विजश्रेष्ठे कस्मिंश्चित्कालपर्यये
चिन्तयामास सा कन्या मन्त्रग्रामबलाबलम् १
अयं वै कीदृशस्तेन मम दत्तो महात्मना
मन्त्रग्रामो बलं तस्य ज्ञास्ये नातिचिरादिव २
एवं संचिन्तयन्ती सा ददर्शर्तुं यदृच्छया
व्रीडिता साभवद्बाला कन्याभावे रजस्वला ३
अथोद्यन्तं सहस्रांशुं पृथा दीप्तं ददर्श ह

न ततर्प च रूपेण भानोः संध्यागतस्य सा ४
तस्या दृष्टिरभूद्दिव्या सापश्यद्दिव्यदर्शनम्
आमुक्तकवचं देवं कुगडलाभ्यां विभूषितम् ५
तस्याः कौतूहलं त्वासीन्मन्त्रं प्रति नराधिप
आह्वानमकरोत्साथ तस्य देवस्य भामिनी ६
प्राणानुपस्पृश्य तदा आजुहाव दिवाकरम्
आजगाम ततो राजंस्त्वरमाणो दिवाकरः ७
मधुपिङ्गो महाबाहुः कम्बुग्रीवो हसन्निव
अङ्गदी बद्धमुकुटो दिशः प्रज्वालयन्निव ८
योगात्कृत्वा द्विधात्मानमाजगाम तताप च
आबभाषे ततः कुन्तीं साम्ना परमवल्गुना ९
आगतोऽस्मि वशं भद्रे तव मन्त्रबलात्कृतः
किं करोम्यवशो राज्ञि ब्रूहि कर्ता तदस्मि ते १०
कुन्त्युवाच
गम्यतां भगवंस्तत्र यतोऽसि समुपागतः
कौतूहलात्समाहूतः प्रसीद भगवन्निति ११
सूर्य उवाच
गमिष्येऽह यथा मां त्वं ब्रवीषि तनुमध्यमे
न तु देवं समाहूय न्याय्यं प्रेषयितुं वृथा १२
तवाभिसन्धिः सुभगे सूर्यात्पुत्रो भवेदिति
वीर्येणाप्रतिमो लोके कवची कुगडलीति च १३
सा त्वमात्मप्रदानं वै कुरुष्व गजगामिनि
उत्पत्स्यति हि पुत्रस्ते यथासंकल्पमङ्गने १४
अथ गच्छाम्यहं भद्रे त्वयासंगम्य सुस्मिते
शप्स्यामि त्वामहं क्रुद्धो ब्राह्मणं पितरं च ते १५
त्वत्कृते तान्प्रधक्ष्यामि सर्वानपि न संशयः
पितरं चैव ते मूढं यो न वेत्ति तवानयम् १६
तस्य च ब्राह्मणस्याद्य योऽसौ मन्त्रमदात्तव
शीलवृत्तमविज्ञाय धास्यामि विनयं परम् १७
एते हि विबुधाः सर्वे पुरन्दरमुखा दिवि

त्वया प्रलब्धं पश्यन्ति स्मयन्त इव भामिनि १८
पश्य चैनान्सुरगणान्दिव्यं चक्षुरिदं हि ते
पूर्वमेव मया दत्तं दृष्टवत्यसि येन माम् १९
वैशम्पायन उवाच
ततोऽपश्यत्त्रिदशान्राजपुत्री सर्वानेव स्वेषु धिष्ण्येषु खस्थान्
प्रभासन्तं भानुमन्तं महान्तं यथादित्यं रोचमानं तथैव २०
सा तान्दृष्ट्वा व्रीडमानेव बाला सूर्यं देवी वचनं प्राह भीता
गच्छ त्वं वै गोपते स्वं विमानं कन्याभावाद्दुःख एषोपचारः २१
पिता माता गुरवश्चैव येऽन्ये देहस्यास्य प्रभवन्ति प्रदाने
नाहं धर्मं लोपयिष्यामि लोके स्त्रीणां वृत्तं पूज्यते देहरक्षा २२
मया मन्त्रबलं ज्ञातुमाहूतस्त्वं विभावसो
बाल्याद्बालेति कृत्वा तत्क्षन्तुमर्हसि मे विभो २३
सूर्य उवाच
बालेति कृत्वानुनयं तवाहं ददानि नान्यानुनयं लभेत
आत्मप्रदानं कुरु कुन्तिकन्ये शान्तिस्तवैवं हि भवेच्च भीरु २४
न नचापि युक्तं गन्तुं हि मया मिथ्याकृतेन वै
गमिष्याम्यनवद्याङ्गि लोके समवहास्यताम्
सर्वेषां विबुधानां च वक्तव्यः स्यामहं शुभे २५
सा त्वं मया समागच्छ पुत्रं लप्स्यसि मादृशम्
विशिष्टा सर्वलोकेषु भविष्यसि च भामिनी २६
इति श्रीमहाभारते आरण्यकपर्वणि नवत्यधिक द्विशततमोऽध्यायः २९०

## एकनवत्यधिक द्विशततमोऽध्यायः

वैशम्पायन उवाच
सा तु कन्या बहुविधं ब्रुवन्ती मधुरं वचः
अनुनेतुं सहस्रांशुं न शशाक मनस्विनी १
न शशाक यदा बाला प्रत्याख्यातुं तमोनुदम्
भीता शापात्ततो राजन्दध्यौ दीर्घमथान्तरम् २
अनागसः पितुः शापो ब्राह्मणस्य तथैव च
मन्निमित्तः कथं न स्यात्क्रुद्धादस्माद्विभावसोः ३

बालेनापि सता मोहाद् भृशं सापह्नवान्यपि
नात्यासादयितव्यानि तेजांसि च तपांसि च ४
साहमद्य भृशं भीता गृहीता च करे भृशम्
कथं त्वकार्यं कुर्यां वै प्रदानं ह्यात्मनः स्वयम् ५
सैवं शापपरित्रस्ता बहु चिन्तयती तदा
मोहेनाभिपरीताङ्गी स्मयमाना पुनः पुनः ६
तं देवमब्रवीद्भीता बन्धूनां राजसत्तम
व्रीडाविह्वलया वाचा शापत्रस्ता विशां पते ७
कुन्त्युवाच
पिता मे ध्रियते देव माता चान्ये च बान्धवाः
न तेषु ध्रियमाणेषु विधिलोपो भवेदयम् ८
त्वया मे संगमो देव यदि स्याद्विधिवर्जितः
मन्निमित्तं कुलस्यास्य लोके कीर्तिर्नशेत्ततः ९
अथ वा धर्ममेतं त्वं मन्यसे तपतां वर
ऋते प्रदानाद्बन्धुभ्यस्तव कामं करोम्यहम् १०
आत्मप्रदानं दुर्धर्ष तव कृत्वा सती त्वहम्
त्वयि धर्मो यशश्चैव कीर्तिरायुश्च देहिनाम् ११
सूर्य उवाच
न ते पिता न ते माता गुरवो वा शुचिस्मिते
प्रभवन्ति वरारोहे भद्रं ते शृणु मे वचः १२
सर्वान्कामयते यस्मात्कनेर्धातोश्च भामिनि
तस्मात्कन्येह सुश्रोणि स्वतन्त्रा वरवर्णिनि १३
नाधर्मश्चरितः कश्चित्त्वया भवति भामिनि
अधर्मं कुत एवाहं चरेयं लोककाम्यया १४
अनावृताः स्त्रियः सर्वा नराश्च वरवर्णिनि
स्वभाव एष लोकानां विकारोऽन्य इति स्मृतः १५
सा मया सह संगम्य पुनः कन्या भविष्यसि
पुत्रश्च ते महाबाहुर्भविष्यति महायशाः १६
कुन्त्युवाच
यदि पुत्रो मम भवेत्त्वत्तः सर्वतमोपह

कुरडली कवची शूरो महाबाहुर्महाबालः १७
सूर्य उवाच
भविष्यति महाबाहुः कुरडली दिव्यवर्मभृत्
उभयं चामृतमयं तस्य भद्रे भविष्यति १८
कुन्त्युवाच
यद्येतदमृतादस्ति कुरडले वर्म चोत्तमम्
मम पुत्रस्य यं वै त्वं मत्त उत्पादयिष्यसि १९
अस्तु मे संगमो देव यथोक्तं भगवंस्त्वया
त्वद्वीर्यरूपसत्त्वौजा धर्मयुक्तो भवेत्स च २०
सूर्य उवाच
अदित्या कुरडले राज्ञि दत्ते मे मत्तकाशिनि
तेऽस्य दास्यामि वै भीरु वर्म चैवेदमुत्तमम् २१
पृथोवाच
परमं भगवन्देव संगमिष्ये त्वया सह
यदि पुत्रो भवेदेवं यथा वदसि गोपते २२
वैशम्पायन उवाच
तथेत्युक्त्वा तु तां कुन्तीमाविवेश विहङ्गमः
स्वर्भानुशत्रुर्योगात्मा नाभ्यां पस्पर्श चैव ताम् २३
ततः सा विह्वलेवासीत्कन्या सूर्यस्य तेजसा
पपाताथ च सा देवी शयने मूढचेतना २४
सूर्य उवाच
साधयिष्यामि सुश्रोणि पुत्रं वै जनयिष्यसि
सर्वशस्त्रभृतां श्रेष्ठं कन्या चैव भविष्यसि २५
वैशम्पायन उवाच
ततः सा व्रीडिता बाला तदा सूर्यमथाब्रवीत्
एवमस्त्विति राजेन्द्र प्रस्थितं भूरिवर्चसम् २६
इति स्मोक्तां कुन्तिराजात्मजा सा विवस्वन्तं याचमाना सलज्ज्ञा
तस्मिन्पुरये शयनीये पपात मोहाविष्टा भज्यमाना लतेव २७
तां तिग्मांशुस्तेजसा मोहयित्वा योगेनाविश्यात्मसंस्थां चकार
न चैवैनां दूषयामास भानुः संज्ञां लेभे भूय एवाथ बाला २८

इति श्रीमहाभारते आरगयकपर्वणि एकनवत्यधिक द्विशततमोऽध्यायः २९१

## द्विनवत्यधिक द्विशततमोऽध्यायः

वैशम्पायन उवाच
ततो गर्भः समभवत्पृथायाः पृथिवीपते
शुक्ले दशोत्तरे पद्मे तारापतिरिवाम्बरे १
सा बान्धवभयाद्बाला तं गर्भं विनिगूहती
धारयामास सुश्रोणी न चैनां बुबुधे जनः २
न हि तां वेद नार्यन्या काचिद्धात्रेयिकामृते
कन्यापुरगतां बालां निपुणां परिरक्षणे ३
ततः कालेन सा गर्भं सुषुवे वरवर्णिनी
कन्यैव तस्य देवस्य प्रसादादमरप्रभम् ४
तथैव बद्धकवचं कनकोज्ज्वलकुगडलम्
हर्यक्षं वृषभस्कन्धं यथास्य पितरं तथा ५
जातमात्रं च तं गर्भं धात्र्या संमन्त्र्य भामिनी
मंजूषायामवदधे स्वास्तीर्णायां समन्ततः ६
मधूच्छिष्टस्थितायां सा सुखायां रुदती तथा
श्लक्ष्णायां सुपिधानायामश्वनद्यामवासृजत् ७
जानती चाप्यकर्तव्यं कन्याया गर्भधारणम्
पुत्रस्नेहेन राजेन्द्र करुणं पर्यदेवयत् ८
समुत्सृजन्ती मंजूषामश्वनद्यास्तदा जले
उवाच रुदती कुन्ती यानि वाक्यानि तच्छृणु ९
स्वस्ति तेऽस्त्वान्तरिक्षेभ्यः पार्थिवेभ्यश्च पुत्रक
दिव्येभ्यश्चैव भूतेभ्यस्तथा तोयचराश्च ये १०
शिवास्ते सन्तु पन्थानो मा च ते परिपन्थिनः
आगमाश्च तथा पुत्र भवन्त्वद्रोहचेतसः ११
पातु त्वां वरुणो राजा सलिले सलिलेश्वरः
अन्तरिक्षेऽन्तरिक्षस्थः पवनः सर्वगस्तथा १२
पिता त्वां पातु सर्वत्र तपनस्तपतां वरः
येन दत्तोऽसि मे पुत्र दिव्येन विधिना किल १३

आदित्या वसवो रुद्राः साध्या विश्वे च देवताः
मरुतश्च सहेन्द्रेण दिशश्च सदिगीश्वराः १४
रक्षन्तु त्वां सुराः सर्वे समेषु विषमेषु च
वेत्स्यामि त्वां विदेशेऽपि कवचेनोपसूचितम् १५
धन्यस्ते पुत्र जनको देवो भानुर्विभावसुः
यस्त्वां द्रक्ष्यति दिव्येन चक्षुषा वाहिनीगतम् १६
धन्या सा प्रमदा या त्वां पुत्रत्वे कल्पयिष्यति
यस्यास्त्वं तृषितः पुत्र स्तनं पास्यसि देवज १७
को नु स्वप्नस्तया दृष्टो या त्वामादित्यवर्चसम्
दिव्यवर्मसमायुक्तं दिव्यकुण्डलभूषितम् १८
पद्मायतविशालाक्षं पद्मताम्रतलोज्ज्वलम्
सुललाटं सुकेशान्तं पुत्रत्वे कल्पयिष्यति १९
धन्या द्रक्ष्यन्ति पुत्र त्वां भूमौ संसर्पमाणकम्
अव्यक्तकलवाक्यानि वदन्तं रेणुगुण्ठितम् २०
धन्या द्रक्ष्यन्ति पुत्र त्वां पुनर्यौवनगे मुखे
हिमवद्वनसंभूतं सिंहं केसरिणं यथा २१
एवं बहुविधं राजन्विलप्य करुणं पृथा
अवासृजत मञ्जूषामश्वनद्यास्तदा जले २२
रुदती पुत्रशोकार्ता निशीथे कमलेक्षणा
धात्र्या सह पृथा राजन्पुत्रदर्शनलालसा २३
विसर्जयित्वा मञ्जूषां संबोधनभयात्पितुः
विवेश राजभवनं पुनः शोकातुरा ततः २४
मञ्जूषा त्वश्वनद्याः सा ययौ चर्मण्वतीं नदीम्
चर्मण्वत्याश्च यमुनां ततो गङ्गां जगाम ह २५
गङ्गायाः सूतविषयं चम्पामभ्याययौ पुरीम्
स मञ्जूषागतो गर्भस्तरङ्गैरुह्यमानकः २६
अमृतादुत्थितं दिव्यं तत्तु वर्म सकुण्डलम्
धारयामास तं गर्भं दैवं च विधिनिर्मितम् २७
इति श्रीमहाभारते आरण्यकपर्वणि द्विनवत्यधिक द्विशततमोऽध्यायः २९२

त्रिनवत्यधिक द्विशततमोऽध्यायः

वैशम्पायन उवाच
एतस्मिन्नेव काले तु धृतराष्ट्रस्य वै सखा
सूतोऽधिरथ इत्येव सदारो जाह्नवीं ययौ १
तस्य भार्याभवद्राजन्रूपेणासदृशी भुवि
राधा नाम महाभागा न सा पुत्रमविन्दत
अपत्यार्थे परं यत्नमकरोच्च विशेषतः २
सा ददर्शाथ मञ्जूषामुह्यमानां यदृच्छया
दत्तरक्षाप्रतिसरामन्वालभनशोभिताम्
ऊर्मीतरङ्गैर्जाह्नव्याः समानीतामुपह्वरम् ३
सा तां कौतूहलात्प्राप्तां ग्राहयामास भामिनी
ततो निवेदयामास सूतस्याधिरथस्य वै ४
स तामुद्धृत्य मञ्जूषामुत्सार्य जलमन्तिकात्
यन्त्रैरुद्घाटयामास सोऽपश्यत्तत्र बालकम् ५
तरुणादित्यसंकाशं हेमवर्मधरं तथा
मृष्टकुण्डलयुक्तेन वदनेन विराजता ६
स सूतो भार्यया सार्धं विस्मयोत्फुल्ललोचनः
अङ्कमारोप्य तं बालं भार्यां वचनमब्रवीत् ७
इदमत्यद्भुतं भीरु यतो जातोऽस्मि भामिनि
दृष्टवान्देवगर्भोऽय मन्येऽस्मान्समुपागतः ८
अनपत्यस्य पुत्रोऽय देवैर्दत्तो ध्रुवं मम
इत्युक्त्वा तं ददौ पुत्रं राधायै स महीपते ९
प्रतिजग्राह तं राधा विधिवद्दिव्यरूपिणम्
पुत्रं कमलगर्भाभं देवगर्भं श्रिया वृतम् १०
पुपोष चैनं विधिवद्ववृधे स च वीर्यवान्
ततः प्रभृति चाप्यन्ये प्राभवन्नौरसाः सुताः ११
वसुवर्मधरं दृष्ट्वा तं बालं हेमकुण्डलम्
नामास्य वसुषेणेति ततश्चक्रुर्द्विजातयः १२
एवं स सूतपुत्रत्वं जगामामितविक्रमः
वसुषेण इति ख्यातो वृष इत्येव च प्रभुः १३

स ज्येष्ठपुत्रः सूतस्य ववृधेऽङ्गेषु वीर्यवान्
चारेण विदितश्चासीत्पृथाया दिव्यवर्मभृत् १४
सूतस्त्वधिरथः पुत्रं विवृद्धं समये ततः
दृष्ट्वा प्रस्थापयामास पुरं वारणसाह्वयम् १५
तत्रोपसदनं चक्रे द्रोणस्येष्वस्त्रकर्मणि
सख्यं दुर्योधनेनैवमगच्छत्स च वीर्यवान् १६
द्रोणात्कृपाच्च रामाच्च सोऽस्त्रग्रामं चतुर्विधम्
लब्ध्वा लोकेऽभवत्ख्यातः परमेष्वासतां गतः १७
संधाय धार्तराष्ट्रेण पार्थानां विप्रिये स्थितः
योद्धुमाशंसते नित्यं फल्गुनेन महात्मना १८
सदा हि तस्य स्पर्धासीदर्जुनेन विशां पते
अर्जुनस्य च कर्णेन यतो दृष्टो बभूव सः १९
तं तु कुण्डलिनं दृष्ट्वा वर्मणा च समन्वितम्
अवध्यं समरे मत्वा पर्यतप्यद्युधिष्ठिरः २०
यदा तु कर्णो राजेन्द्र भानुमन्तं दिवाकरम्
स्तौति मध्यन्दिने प्राप्ते प्राञ्जलि सलिले स्थितः २१
तत्रैनमुपतिष्ठन्ति ब्राह्मणा धनहेतवः
नादेयं तस्य तत्काले किंचिदस्ति द्विजातिषु २२
तमिन्द्रो ब्राह्मणो भूत्वा भिक्षां देहीत्युपस्थितः
स्वागतं चेति राधेयस्तमथ प्रत्यभाषत २३
इति श्रीमहाभारते आरण्यकपर्वणि त्रिनवत्यधिक द्विशततमोऽध्यायः २९३

## चतुर्नवत्यधिक द्विशततमोऽध्यायः

वैशम्पायन उवाच
देवराजमनुप्राप्तं ब्राह्मणच्छद्मना वृषः
दृष्ट्वा स्वागतमित्याह न बुबोधास्य मानसम् १
हिरण्यकण्ठीः प्रमदा ग्रामान्वा बहुगोकुलान्
किं ददानीति तं विप्रमुवाचाधिरथिस्ततः २
ब्राह्मण उवाच
हिरण्यकण्ठ्यः प्रमदा यच्चान्यत्प्रीतिवर्धनम्

नाहं दत्तमिहेच्छामि तदर्थिभ्यः प्रदीयताम् ३
यदेतत्सहजं वर्म कुगडले च तवानघ
एतदुत्कृत्य मे देहि यदि सत्यव्रतो भवान् ४
एतदिच्छाम्यहं चिप्रं त्वया दत्तं परन्तप
एष मे सर्वलाभानां लाभः परमको मतः ५
कर्ण उवाच
अवनिं प्रमदा गाश्च निर्वापं बहुवार्षिकम्
तत्ते विप्र प्रदास्यामि न तु वर्म न कुगडले ६
वैशम्पायन उवाच
एवं बहुविधैर्वाक्यैर्याच्यमानः स तु द्विजः
कर्णेन भरतश्रेष्ठ नान्यं वरमयाचत ७
सान्त्वितश्च यथाशक्ति पूजितश्च यथाविधि
नैवान्यं स द्विजश्रेष्ठः कामयामास वै वरम् ८
यदा नान्यं प्रवृणुते वरं वै द्विजसत्तमः
तदैनमब्रवीद्भूयो राधेयः प्रहसन्निव ९
सहजं वर्म मे विप्र कुगडले चामृतोद्भवे
तेनावध्योऽस्मि लोकेषु ततो नैतद्ददाम्यहम् १०
विशालं पृथिवीराज्यं चेमं निहतकगटकम्
प्रतिगृह्णीष्व मत्तस्त्वं साधु ब्राह्मणपुङ्गव ११
कुगडलाभ्यां विमुक्तोऽह वर्मणा सहजेन च
गमनीयो भविष्यामि शत्रूणां द्विजसत्तम १२
वैशम्पायन उवाच
यदा नान्यं वरं वव्रे भगवान्पाकशासनः
ततः प्रहस्य कर्णस्तं पुनरित्यब्रवीद्वचः १३
विदितो देवदेवेश प्रागेवासि मम प्रभो
न तु न्याय्यं मया दातुं तव शक्र वृथा वरम् १४
त्वं हि देवेश्वरः साचात्त्वया देयो वरो मम
अन्येषां चैव भूतानामीश्वरो ह्यसि भूतकृत् १५
यदि दास्यामि ते देव कुगडले कवचं तथा
वध्यतामुपयास्यामि त्वं च शक्रावहास्यताम् १६

तस्माद्विनिमयं कृत्वा कुराडले वर्म चोत्तमम्
हरस्व शक्र कामं मे न दद्यामहमन्यथा १७
शक्र उवाच
विदितोऽह रवेः पूर्वमायन्नेव तवान्तिकम्
तेन ते सर्वमाख्यातमेवमेतन्न संशयः १८
काममस्तु तथा तात तव कर्ण यथेच्छसि
वर्जयित्वा तु मे वज्रं प्रवृणीष्व यदिच्छसि १९
वैशम्पायन उवाच
ततः कर्णः प्रहृष्टस्तु उपसंगम्य वासवम्
अमोघां शक्तिमभ्येत्य वव्रे संपूर्णमानसः २०
कर्ण उवाच
वर्मणा कुराडलाभ्यां च शक्तिं मे देहि वासव
अमोघां शत्रुसंघानां घातनीं पृतनामुखे २१
ततः संचिन्त्य मनसा महूर्तमिव वासवः
शक्त्यर्थं पृथिवीपाल कर्णं वाक्यमथाब्रवीत् २२
कुराडले मे प्रयच्छस्व वर्म चैव शरीरजम्
गृहाण कण शक्तिं त्वमनेन समयेन मे २३
अमोघा हन्ति शतशः शत्रून्मम करच्युता
पुनश्च पाणिमभ्येति मम दैत्यान्विनिघ्नतः २४
सेयं तव करं प्राप्य हत्वैकं रिपुमूर्जितम्
गर्जन्तं प्रतपन्तं च मामेवैष्यति सूतज २५
कर्ण उवाच
एकमेवाहमिच्छामि रिपुं हन्तुं महाहवे
गर्जन्तं प्रतपन्तं च यतो मम भयं भवेत् २६
इन्द्र उवाच
एकं हनिष्यसि रिपुं गर्जन्तं बलिनं रणे
त्वं तु यं प्रार्थयस्येकं रक्ष्यते स महात्मना २७
यमाहुर्वेदविद्वांसो वराहमजितं हरिम्
नारायणमचिन्त्यं च तेन कृष्णेन रक्ष्यते २८
कर्ण उवाच

एवमप्यस्तु भगवन्नेकवीरवधे मम
अमोघा प्रवरा शक्तिर्येन हन्यां प्रतापिनम् २९
उत्कृत्य तु प्रदास्यामि कुगडले कवचं च ते
निकृत्तेषु तु गात्रेषु न मे बीभत्सता भवेत् ३०
इन्द्र उवाच
न ते बीभत्सता कर्ण भविष्यति कथंचन
व्रणश्चापि न गात्रेषु यस्त्वं नानृतमिच्छसि ३१
यादृशस्ते पितुर्वर्णस्तेजश्च वदतां वर
तादृशेनैव वर्णेन त्वं कर्ण भविता पुनः ३२
विद्यमानेषु शस्त्रेषु यद्यमोघामसंशये
प्रमत्तो मोन्द्यसे चापि त्वय्येवैषा पतिष्यति ३३
कर्ण उवाच
संशयं परमं प्राप्य विमोन्द्ये वासवीमिमाम्
यथा मामात्थ शक्र त्वं सत्यमेतद्ब्रवीमि ते ३४
वैशम्पायन उवाच
ततः शक्तिं प्रज्वलितां प्रतिगृह्य विशां पते
शस्त्रं गृहीत्वा निशितं सर्वगात्राग्ययकृन्तत ३५
ततो देवा मानवा दानवाश्च निकृन्तन्तं कर्णमात्मानमेवम्
दृष्ट्वा सर्वे सिद्धसंघाश्च नेदुर्न ह्यस्यासीदुःखजो वै विकारः ३६
ततो दिव्या दुन्दुभयः प्रणेदुः पपातोच्चैः पुष्पवर्षं च दिव्यम्
दृष्ट्वा कर्णं शस्त्रसंकृत्तगात्रं मुहुश्चापि स्मयमानं नृवीरम् ३७
ततश्छित्वा कवचं दिव्यमङ्गात्तथैवार्द्रं प्रददौ वासवाय
तथोत्कृत्य प्रददौ कुगडले ते वैकर्तनः कर्मणा तेन कर्णः ३८
ततः शक्रः प्रहसन्वञ्चयित्वा कर्णं लोके यशसा योजयित्वा
कृतं कार्यं पागडवानां हि मेने ततः पश्चाद्दिवमेवोत्पपात ३९
श्रुत्वा कर्णं मुषितं धार्तराष्ट्रा दीनाः सर्वे भग्नदर्पा इवासन्
तां चावस्थां गमितं सूतपुत्रं श्रुत्वा पार्था जहृषुः काननस्थाः ४०
जनमेजय उवाच
क्वस्था वीराः पागडवास्ते बभूवुः कुतश्चैतच्छ्रुतवन्तः प्रियं ते
किं वाकार्षुर्द्वादशेऽब्दे व्यतीते तन्मे सर्वं भगवान्व्याकरोतु ४१

वैशम्पायन उवाच
लब्ध्वा कृष्णां सैन्धवं द्रावयित्वा विप्रैः सार्धं काम्यकादाश्रमात्ते
मार्कण्डेयाच्छ्रुतवन्तः पुराणं देवर्षीणां चरितं विस्तरेण ४२
प्रत्याजग्मुः सरथाः सानुयात्राः सर्वैः सार्धं सूदपौरोगवैश्च
ततः पुण्यं द्वैतवनं नृवीरा निस्तीर्योग्रं वनवासं समग्रम् ४३
इति श्रीमहाभारते आरण्यकपर्वणि चतुर्नवत्यधिक द्विशततमोऽध्यायः २९४
समाप्तं कुण्डलाहरणपर्व

पञ्चनवत्यधिक द्विशततमोऽध्यायः

जनमेजय उवाच
एवं हृतायां कृष्णायां प्राप्य क्लेशमनुत्तमम्
प्रतिलभ्य ततः कृष्णां किमकुर्वत पाण्डवाः १
वैशम्पायन उवाच
एवं हृतायां कृष्णायां प्राप्य क्लेशमनुत्तमम्
विहाय काम्यकं राजा सह भ्रातृभिरच्युतः २
पुनर्द्वैतवनं रम्यमाजगाम युधिष्ठिरः
स्वादुमूलफलं रम्यं मार्कण्डेयाश्रमं प्रति ३
अनुगुप्तफलाहाराः सर्व एव मिताशनाः
न्यवसन्पाण्डवास्तत्र कृष्णया सह भारत ४
वसन्द्वैतवने राजा कुन्तीपुत्रो युधिष्ठिरः
भीमसेनोऽजुनश्चैव माद्रीपुत्रौ च पाण्डवौ ५
ब्राह्मणार्थे पराक्रान्ता धर्मात्मानो यतव्रताः
क्लेशमार्छन्त विपुलं सुखोदर्कं परंतपाः ६
अजातशत्रुमासीनं भ्रातृभिः सहितं वने
आगम्य ब्राह्मणस्तूर्णं संतप्त इदमब्रवीत् ७
अरणीसहितं मह्यं समासक्तं वनस्पतौ
मृगस्य घर्षमाणस्य विषाणे समसज्जत ८
तदादाय गतो राजंस्त्वरमाणो महामृगः
आश्रमात्त्वरितः शीघ्रं प्लवमानो महाजवः ९
तस्य गत्वा पदं शीघ्रमासाद्य च महामृगम्

अग्निहोत्रं न लुप्येत तदानयत पाराडवाः १०
ब्राह्मणस्य वचः श्रुत्वा संतप्तोऽथ युधिष्ठिरः
धनुरादाय कौन्तेयः प्राद्रवद्भ्रातृभिः सह ११
सन्नद्धा धन्विनः सर्वे प्राद्रवन्नरपुङ्गवाः
ब्राह्मणार्थे यतन्तस्ते शीघ्रमन्वगमन्मृगम् १२
कर्णिनालीकनाराचानुत्सृजन्तो महारथाः
नाविध्यन्पाराडवास्तत्र पश्यन्तो मृगमन्तिकात् १३
तेषां प्रयतमानानां नादृश्यत महामृगः
अपश्यन्तो मृगं श्रान्ता दुःखं प्राप्ता मनस्विनः १४
शीतलच्छायमासाद्य न्यग्रोधं गहने वने
क्षुत्पिपासापरीताङ्गाः पाराडवाः समुपाविशन् १५
तेषां समुपविष्टानां नकुलो दुःखितस्तदा
अब्रवीद्भ्रातरं ज्येष्ठममर्षात्कुरुसत्तम १६
नास्मिन्कुले जातु ममज्ज धर्मो न चालस्यादर्थलोपो बभूव
अनुत्तराः सर्वभूतेषु भूयः संप्राप्ताः स्मः संसयं केन राजन् १७
इति श्रीमहाभारते आरगयकपर्वणि पञ्चनवत्यधिक द्विशततमोऽध्यायः २९५

## षराणवत्यधिक द्विशततमोऽध्यायः

युधिष्ठिर उवाच
नापदामस्ति मर्यादा न निमित्तं न कारणम्
धर्मस्तु विभजत्यत्र उभयोः पुगयपापयोः १
भीम उवाच
प्रातिकाम्यनयत्कृष्णां सभायां प्रेष्यवत्तदा
न मया निहतस्तत्र तेन प्राप्ताः स्म संशयम् २
अर्जुन उवाच
वाचस्तीक्ष्णास्थिभेदिन्यः सूतपुत्रेण भाषिताः
अतितीक्ष्णा मया क्षान्तास्तेन प्राप्ताः स्म संशयम् ३
सहदेव उवाच
शकुनिस्त्वां यदाजैषीदक्षद्यूतेन भारत
स मया न हतस्तत्र तेन प्राप्ताः स्म संशयम् ४

वैशम्पायन उवाच
ततो युधिष्ठिरो राजा नकुलं वाक्यमब्रवीत्
आरुह्य वृक्षं माद्रेय निरीक्षस्व दिशो दश ५
पानीयमन्तिके पश्य वृक्षान्वाप्युदकाश्रयान्
इमे हि भ्रातरः श्रान्तास्तव तात पिपासिताः ६
नकुलस्तु तथेत्युक्त्वा शीघ्रमारुह्य पादपम्
अब्रवीद्भ्रातरं ज्येष्ठमभिवीक्ष्य समन्ततः ७
पश्यामि बहुलान्राजन्वृक्षानुदकसंश्रयान्
सारसानां च निर्ह्रादमत्रोदकमसंशयम् ८
ततोऽब्रवीत्सत्यधृतिः कुन्तीपुत्रो युधिष्ठिरः
गच्छ सौम्य ततः शीघ्रं तूर्णं पानीयमानय ९
नकुलस्तु तथेत्युक्त्वा भ्रातुर्ज्येष्ठस्य शासनात्
प्राद्रवद्यत्र पानीयं शीघ्रं चैवान्वपद्यत १०
स दृष्ट्वा विमलं तोयं सारसैः परिवारितम्
पातुकामस्ततो वाचमन्तरिक्षात्स शुश्रुवे ११
मा तात साहसं कार्षीर्मम पूर्वपरिग्रहः
प्रश्नानुक्त्वा तु माद्रेय ततः पिब हरस्व च १२
अनादृत्य तु तद्वाक्यं नकुलः सुपिपासितः
अपिबच्छीतलं तोयं पीत्वा च निपपात ह १३
चिरायमाणे नकुले कुन्तीपुत्रो युधिष्ठिरः
अब्रवीद्भ्रातरं वीरं सहदेवमरिन्दमम् १४
भ्राता चिरायते तात सहदेव तवाग्रजः
तं चैवानय सोदर्यं पानीयं च त्वमानय १५
सहदेवस्तथेत्युक्त्वा तां दिशं प्रत्यपद्यत
ददर्श च हतं भूमौ भ्रातरं नकुलं तदा १६
भ्रातृशोकाभिसंतप्तस्तृषया च प्रपीडितः
अभिदुद्राव पानीयं ततो वागभ्यभाषत १७
मा तात साहसं कार्षीर्मम पूर्वपरिग्रहः
प्रश्नानुक्त्वा यथाकामं ततः पिब हरस्व च १८
अनादृत्य तु तद्वाक्यं सहदेवः पिपासितः

अपिबच्छीतलं तोयं पीत्वा च निपपात ह १९
अथाब्रवीत्स विजयं कुन्तीपुत्रो युधिष्ठिरः
भ्रातरौ ते परिगतौ बीभत्सो शत्रुकर्शन
तौ चैवानय भद्रं ते पानीयं च त्वमानय २०
एवमुक्तो गुडाकेशः प्रगृह्य सशरं धनुः
आमुक्तखड्गो मेधावी तत्सरः प्रत्यपद्यत २१
यतः पुरुषशार्दूलौ पानीयहरणे गतौ
तौ ददर्श हतौ तत्र भ्रातरौ श्वेतवाहनः २२
प्रसुप्ताविव तौ दृष्ट्वा नरसिंहः सुदुःखितः
धनुरुद्यम्य कौन्तेयो व्यलोकयत तद्वनम् २३
नापश्यत्तत्र किंचित्स भूतं तस्मिन्महावने
सव्यसाची ततः श्रान्तः पानीयं सोऽभ्यधावत २४
अभिधावंस्ततो वाचमन्तरिक्षात्स शुश्रुवे
किमासीदसि पानीयं नैतच्छक्यं बलात्त्वया २५
कौन्तेय यदि वै प्रश्नान्मयोक्तान्प्रतिपत्स्यसे
ततः पास्यसि पानीयं हरिष्यसि च भारत २६
वारितस्त्वब्रवीत्पार्थो दृश्यमानो निवारय
यावद्बाणैर्विनिर्भिन्नः पुनर्नैवं वदिष्यसि २७
एवमुक्त्वा ततः पार्थः शरैरस्त्रानुमन्त्रितैः
ववर्ष तां दिशं कृत्स्नां शब्दवेधं च दर्शयन् २८
कर्णिनालीकनाराचानुत्सृजन्भरतर्षभ
अनेकैरिषुसंघातैरन्तरिक्षे ववर्ष ह २९
यक्ष उवाच
किं विघातेन ते पार्थ प्रश्नानुक्त्वा ततः पिब
अनुक्त्वा तु ततः प्रश्नान्पीत्वैव न भविष्यसि ३०
वैशम्पायन उवाच
स त्वमोघानिषून्मुक्त्वा तृष्णयाभिप्रपीडितः
अविज्ञायैव तान्प्रश्नान्पीत्वैव निपपात ह ३१
अथाब्रवीद्भीमसेनं कुन्तीपुत्रो युधिष्ठिरः
नकुलः सहदेवश्च बीभत्सुश्चापराजितः ३२

चिरं गतास्तोयहेतोर्न चागच्छन्ति भारत
तांश्चैवानय भद्रं ते पानीयं च त्वमानय ३३
भीमसेनस्तथेत्युक्त्वा तां दिशं प्रत्यपद्यत
यत्र ते पुरुषव्याघ्रा भ्रातरोऽस्य निपातिताः ३४
तान्दृष्ट्वा दुःखितो भीमस्तृषया च प्रपीडितः
अमन्यत महाबाहुः कर्म तद्यक्षरक्षसाम्
स चिन्तयामास तदा योद्धव्यं ध्रुवमद्य मे ३५
पास्यामि तावत्पानीयमिति पार्थो वृकोदरः
ततोऽभ्यधावत्पानीयं पिपासुः पुरुषर्षभः ३६
यक्ष उवाच
मा तात साहसं कार्षीर्मम पूर्वपरिग्रहः
प्रश्नानुक्त्वा तु कौन्तेय ततः पिब हरस्व च ३७
वैशम्पायन उवाच
एवमुक्तस्ततो भीमो यक्षेणामिततेजसा
अविज्ञायैव तान्प्रश्नान्पीत्वैव निपपात ह ३८
ततः कुन्तीसुतो राजा विचिन्त्य पुरुषर्षभः
समुत्थाय महाबाहुर्दह्यमानेन चेतसा ३९
अपेतजननिर्घोषं प्रविवेश महावनम्
रुरुभिश्च वराहैश्च पक्षिभिश्च निषेवितम् ४०
नीलभास्वरवर्णैश्च पादपैरुपशोभितम्
भ्रमरैरुपगीतं च पक्षिभिश्च महायशाः ४१
स गच्छन्कानने तस्मिन्हेमजालपरिष्कृतम्
ददर्श तत्सरः श्रीमान्विश्वकर्मकृतं यथा ४२
उपेतं नलिनीजालैः सिन्धुवारैश्च वेतसैः
केतकैः करवीरैश्च पिप्पलैश्चैव संवृतम्
श्रमार्तस्तदुपागम्य सरो दृष्ट्वाथ विस्मितः ४३
इति श्रीमहाभारते आरण्यकपर्वणि षण्णवत्यधिक द्विशततमोऽध्यायः २९६

## सप्तनवत्यधिक द्विशततमोऽध्यायः

वैशम्पायन उवाच

स ददर्श हतान्भ्रातॄँल्लोकपालानिव च्युतान्
युगान्ते समनुप्राप्ते शक्रप्रतिमगौरवान् १
विप्रकीर्णधनुर्बाणं दृष्ट्वा निहतमर्जुनम्
भीमसेनं यमौ चोभौ निर्विचेष्टान्गतायुषः २
स दीर्घमुष्णं निःश्वस्य शोकबाष्पपरिप्लुतः
बुद्ध्या विचिन्तयामास वीराः केन निपातिताः ३
नैषां शस्त्रप्रहारोऽस्ति पदं नेहास्ति कस्यचित्
भूतं महदिदं मन्ये भ्रातरो येन मे हताः
एकाग्रं चिन्तयिष्यामि पीत्वा वेत्स्यामि वा जलम् ४
स्यात्तु दुर्योधनेनेदमुपांशुविहितं कृतम्
गांधारराजरचितं सततं जिह्मबुद्धिना ५
यस्य कार्यमकार्यं वा सममेव भवत्युत
कस्तस्य विश्वसेद्वीरो दुर्मतेरकृतात्मनः ६
अथ वा पुरुषैर्गूढैः प्रयोगोऽय दुरात्मनः
भवेदिति महाबाहुर्बहुधा समचिन्तयत् ७
तस्यासीन्न विषेणेदमुदकं दूषितं यथा
मुखवर्णाः प्रसन्ना मे भ्रातॄणामित्यचिन्तयत् ८
एकैकशश्चौघबलानिमान्पुरुषसत्तमान्
कोऽन्य प्रतिसमासेत कालान्तकयमादृते ९
एतेनाध्यवसायेन तत्तोयमवगाढवान्
गाहमानश्चतत्तोयमन्तरिक्षात्स शुश्रुवे १०
यक्ष उवाच
अहं बकः शैवलमत्स्यभक्षो मया नीताः प्रेतवशं तवानुजाः
त्वं पंचमो भविता राजपुत्र न चेत्प्रश्नान्पृच्छतो व्याकरोषि ११
मा तात साहसं कार्षीर्मम पूर्वपरिग्रहः
प्रश्नानुक्त्वा तु कौं तेय ततः पिब हरस्व च १२
युधिष्ठिर उवाच
रुद्राणां वा वसूनां वा मरुतां वा प्रधानभाक्
पृच्छामि को भवान्देवो नैतच्छकुनिना कृतम् १३
हिमवान्पारियात्रश्च विंध्यो मलय एव च

चत्वारः पर्वताः केन पातिता भुवि तेजसा १४
अतीव ते महत्कर्म कृतं बलवतां वर
यन्न देवा न गंधर्वा नासुरा न च राक्षसाः
विषहेरन्महायुद्धे कृतं ते तन्महाद्भुतम् १५
न ते जानामि यत्कार्यं नाभिजानामि काङ्क्षितम्
कौतूहलं महज्जातं साध्वसं चागतं मम १६
येनास्म्युद्विग्नहृदयः समुत्पन्नशिरोज्वरः
पृच्छामि भगवंस्तस्मात्को भवानिह तिष्ठति १७
यक्ष उवाच
यक्षोऽहमस्मि भद्रं ते नास्मि पक्षी जलेचरः
मयैते निहताः सर्वे भ्रातरस्ते महौजसः १८
वैशम्पायन उवाच
ततस्तामशिवां श्रुत्वा वाचं स परुषाक्षराम्
यक्षस्य ब्रुवतो राजन्नुपक्रम्य तदा स्थितः १९
विरूपाक्षं महाकायं यक्षं तालसमुच्छ्रयम्
ज्वलनार्कप्रतीकाशमधृष्यं पर्वतोपमम् २०
सेतुमाश्रित्य तिष्ठन्तं ददर्श भरतर्षभः
मेघगंभीरया वाचा तर्जयन्तं महाबलम् २१
यक्ष उवाच
इमे ते भ्रातरो राजन्वार्यमाणा मयासकृत्
बलात्तोयं जिहीर्षन्तस्ततो वै सूदिता मया २२
न पेयमुदकं राजन्प्राणानिह परीप्सता
पार्थ मा साहसं कार्षीर्मम पूर्वपरिग्रहः
प्रश्नानुक्त्वा तु कौन्तेय ततः पिब हरस्व च २३
युधिष्ठिर उवाच
नैवाहं कामये यक्ष तव पूर्वपरिग्रहम्
कामं नैतत्प्रशंसन्ति सन्तो हि पुरुषाः सदा २४
यदात्मना स्वमात्मानं प्रशंसेत्पुरुषः प्रभोः
यथाप्रज्ञं तु ते प्रश्नान्प्रतिवक्ष्यामि पृच्छ माम् २५
यक्ष उवाच

किं स्विदादित्यमुन्नयति के च तस्याभितश्चराः
कश्चैनमस्तं नयति कस्मिंश्च प्रतितिष्ठति २६
युधिष्ठिर उवाच
ब्रह्मादित्यमुन्नयति देवास्तस्याभितश्चराः
धर्मश्चास्तं नयति च सत्ये च प्रतितिष्ठति २७
यक्ष उवाच
केन स्विच्छ्रोत्रियो भवति केन स्विद्विन्दते महत्
केन द्वितीयवान्भवति राजन्केन च बुद्धिमान् २८
युधिष्ठिर उवाच
श्रुतेन श्रोत्रियो भवति तपसा विन्दते महत्
धृत्या द्वितीयवान्भवति बुद्धिमान्वृद्धसेवया २९
यक्ष उवाच
किं ब्राह्मणानां देवत्वं कश्च धर्मः सतामिव
कश्चैषां मानुषो भावः किमेषामसतामिव ३०
युधिष्ठिर उवाच
स्वाध्याय एषां देवत्वं तप एषां सतामिव
मरणं मानुषो भावः परिवादोऽसतामिव ३१
यक्ष उवाच
किं क्षत्रियाणां देवत्वं कश्च धर्मः सतामिव
कश्चैषां मानुषो भावः किमेषामसतामिव ३२
युधिष्ठिर उवाच
इष्वस्त्रमेषां देवत्वं यज्ञ एषां सतामिव
भयं वै मानुषो भावः परित्यागोऽसतामिव ३३
यक्ष उवाच
किमेकं यज्ञियं साम किमेकं यज्ञियं यजुः
का चैका वृश्चते यज्ञं कां यज्ञो नातिवर्तते ३४
युधिष्ठिर उवाच
प्राणो वै यज्ञियं साम मनो वै यज्ञियं यजुः
वागेका वृश्चते यज्ञं तां यज्ञो नातिवर्तते ३५
यक्ष उवाच

किं स्विदापततां श्रेष्ठं किं स्विन्निपततां वरम्
किं स्वित्प्रतिष्ठमानानां किं स्वित्प्रवदतां वरम् ३६
युधिष्ठिर उवाच
वर्षमापततां श्रेष्ठं बीजं निपततां वरम्
गावः प्रतिष्ठमानानां पुत्रः प्रवदतां वरः ३७
यक्ष उवाच
इन्द्रियार्थाननुभवन्बुद्धिमाँल्लोकपूजितः
संमतः सर्वभूतानामुछ्वसन्को न जीवति ३८
युधिष्ठिर उवाच
देवतातिथिभृत्यानां पितॄणामात्मनश्च यः
न निर्वपति पञ्चानामुछ्वसन्न स जीवति ३९
यक्ष उवाच
किं स्विद्गुरुतरं भूमेः किं स्विदुच्चतरं च खात्
किं स्विच्छीघ्रतरं वायोः किं स्विद्बहुतरं नृणाम् ४०
युधिष्ठिर उवाच
माता गुरुतरा भूमेः पिता उच्चतरश्च खात्
मनः शीघ्रतरं वायोश्चिंता बहुतरी नृणाम् ४१
यक्ष उवाच
किं स्वित्सुप्तं न निमिषति किं स्विज्जातं न चोपति
कस्य स्विद्धृदयं नास्ति किं स्विद्वेगेन वर्धते ४२
युधिष्ठिर उवाच
मत्स्यः सुप्तो न निमिषत्यण्डं जातं न चोपति
अश्मनो हृदयं नास्ति नदी वेगेन वर्धते ४३
यक्ष उवाच
किं स्वित्प्रवसतो मित्रं किं स्विन्मित्रं गृहे सतः
आतुरस्य च किं मित्रं किं स्विन्मित्रं मरिष्यतः ४४
युधिष्ठिर उवाच
सार्थः प्रवसतो मित्रं भार्या मित्रं गृहे सतः
आतुरस्य भिषङ्मित्रं दानं मित्रं मरिष्यतः ४५
यक्ष उवाच

किं स्विदेको विचरति जातः को जायते पुनः
किं स्विद्धिमस्य भैषज्यं किं स्विदावपनं महत् ४६
युधिष्ठिर उवाच
सूर्य एको विचरति चन्द्रमा जायते पुनः
अग्निर्हिमस्य भैषज्यं भूमिरावपनं महत् ४७
यद्म उवाच
किं स्विदेकपदं धर्म्यं किं स्विदेकपदं यशः
किं स्विदेकपदं स्वर्ग्यं किं स्विदेकपदं सुखम् ४८
युधिष्ठिर उवाच
दाद्त्यमेकपदं धर्म्यं दानमेकपदं यशः
सत्यमेकपदं स्वर्ग्यं शीलमेकपदं सुखम् ४९
यद्म उवाच
किं स्विदात्मा मनुष्यस्य किं स्विद्दैवकृतः सखा
उपजीवनं किं स्विदस्य किं स्विदस्य परायणम् ५०
युधिष्ठिर उवाच
पुत्र आत्मा मनुष्यस्य भार्या दैवकृतः सखा
उपजीवनं च पर्जन्यो दानमस्य परायणम् ५१
यद्म उवाच
धन्यानामुत्तमं किं स्विद्धनानां किं स्विदुत्तमम्
लाभानामुत्तमं किं स्वित्किं सुखानां तथोत्तमम् ५२
युधिष्ठिर उवाच
धन्यानामुत्तमं दाद्त्यं धनानामुत्तमं श्रुतम्
लाभानां श्रेयमारोग्यं सुखानां तुष्टिरुत्तमा ५३
यद्म उवाच
कश्च धर्मः परो लोके कश्च धर्मः सदाफलः
किं नियम्य न शोचन्ति कैश्च सन्धिर्न जीर्यते ५४
युधिष्ठिर उवाच
आनृशंस्यं परो धर्मस्त्रयीधर्मः सदाफलः
मनो यम्य न शोचन्ति सद्भिः सन्धिर्न जीर्यते ५५
यद्म उवाच

किं नु हित्वा प्रियो भवति किं नु हित्वा न शोचति
किं नु हित्वार्थवान्भवति किं नु हित्वा सुखी भवेत् ५६
युधिष्ठिर उवाच
मानं हित्वा प्रियो भवति क्रोधं हित्वा न शोचति
कामं हित्वाऽथवान्भवति लोभं हित्वा सुखी भवेत् ५७
यक्ष उवाच
मृतः कथं स्यात्पुरुषः कथं राष्ट्रं मृतं भवेत्
श्राद्धं मृतं कथं च स्यात्कथं यज्ञो मृतो भवेत् ५८
युधिष्ठिर उवाच
मृतो दरिद्रः पुरुषो मृतं राष्ट्रमराजकम्
मृतमश्रोत्रियं श्राद्धं मृतो यज्ञस्त्वदक्षिणः ५९
यक्ष उवाच
का दिक्किमुदकं प्रोक्तं किमन्नं पार्थ किं विषम्
श्राद्धस्य कालमाख्याहि ततः पिब हरस्व च ६०
युधिष्ठिर उवाच
सन्तो दिग्जलमाकाशं गौरन्नं प्रार्थना विषम्
श्राद्धस्य ब्राह्मणः कालः कथं वा यक्ष मन्यसे ६१
यक्ष उवाच
व्याख्याता मे त्वया प्रश्ना यथातथ्यं परंतप
पुरुषं त्विदानीमाख्याहि यश्च सर्वधनी नरः ६२
युधिष्ठिर उवाच
दिवं स्पृशति भूमिं च शब्दः पुण्यस्य कर्मणः
यावत्स शब्दो भवति तावत्पुरुष उच्यते ६३
तुल्ये प्रियाप्रिये यस्य सुखदुःखे तथैव च
अतीतानागते चोभे स वै सर्वधनी नरः ६४
यक्ष उवाच
व्याख्यातः पुरुषो राजन्यश्च सर्वधनी नरः
तस्मात्तवैको भ्रातॄणां यमिच्छसि स जीवतु ६५
युधिष्ठिर उवाच
श्यामो य एष रक्ताक्षो बृहच्छाल इवोद्गतः

व्यूढोरस्को महाबाहुर्नकुलो यद्म जीवतु ६६
यद्म उवाच
प्रियस्ते भीमसेनोऽयमर्जुनो वः परायणम्
स कस्मान्नकुलो राजन्सापत्नं जीवमिच्छसि ६७
यस्य नागसहस्रेण दशसंख्येन वै बलम्
तुल्यं तं भीममुत्सृज्य नकुलं जीवमिच्छसि ६८
तथैनं मनुजाः प्राहुर्भीमसेनं प्रियं तव
अथ केनानुभावेन सापत्नं जीवमिच्छसि ६९
यस्य बाहुबलं सर्वे पागडवाः समुपाश्रिताः
अर्जुनं तमपाहाय नकुलं जीवमिच्छसि ७०
युधिष्ठिर उवाच
आनृशंस्यं परो धर्मः परमार्थाच्च मे मतम्
आनृँशंस्यं चिकीर्षामि नकुलो यद्म जीवतु ७१
धर्मशीलः सदा राजा इति मां मानवा विदुः
स्वधर्मान्न चलिष्यामि नकुलो यद्म जीवतु ७२
यथा कुन्ती तथा माद्री विशेषो नास्ति मे तयोः
मातृभ्यां सममिच्छामि नकुलो यद्म जीवतु ७३
यद्म उवाच
यस्य तेऽथाच्च कामाच्च आनृशंस्यं परं मतम्
तस्मात्ते भ्रातरः सर्वे जीवन्तु भरतर्षभ ७४
इति श्रीमहाभारते आरगयकपर्वणि सप्तनवत्यधिक द्विशततमोऽध्यायः २९७

## अष्टनवत्यधिक द्विशततमोऽध्यायः

वैशम्पायन उवाच
ततस्ते यद्मवचनादुदतिष्ठन्त पागडवाः
द्युत्पिपासे च सर्वेषां द्मणे तस्मिन्व्यगच्छताम् १
युधिष्ठिर उवाच
सरस्येकेन पादेन तिष्ठन्तमपराजितम्
पृच्छामि को भवान्देवो न मे यद्मो मतो भवान् २
वसूनां वा भवानेको रुद्राणामथ वा भवान्

अथवा मरुतां श्रेष्ठो वज्री वा त्रिदशेश्वरः ३
मम हि भ्रातर इमे सहस्रशतयोधिनः
न तं योगं प्रपश्यामि येन स्युर्विनिपातिताः ४
सुखं प्रतिविबुद्धानामिन्द्रियाण्युपलक्षये
स भवान्सुहृदस्माकमथ वा नः पिता भवान् ५
यक्ष उवाच
अहं ते जनकस्तात धर्मो मृदुपराक्रम
त्वां दिदृक्षुरनुप्राप्तो विद्धि मां भरतर्षभ ६
यशः सत्यं दमः शौचमार्जवं ह्रीरचापलम्
दानं तपो ब्रह्मचर्यमित्येतास्तनवो मम ७
अहिंसा समता शान्तिस्तपः शौचममत्सरः
द्वाराण्येतानि मे विद्धि प्रियो ह्यसि सदा मम ८
दिष्ट्या पंचसु रक्तोऽसि दिष्ट्या ते षट्पदी जिता
द्वे पूर्वे मध्यमे द्वे च द्वेचान्ते सांपरायिके ९
धर्मोऽहमस्मि भद्रं ते जिज्ञासुस्त्वामिहागतः
आनृशंस्येन तुष्टोऽस्मि वरं दास्यामि तेऽनघ १०
वरं वृणीष्व राजेन्द्र दाता ह्यस्मि तवानघ
ये हि मे पुरुषा भक्ता न तेषामस्ति दुर्गतिः ११
युधिष्ठिर उवाच
अरणीसहितं यस्य मृगो ह्यादाय गच्छति
तस्याग्नयो न लुप्येरन्प्रथमोऽस्तु वरो मम १२
धर्म उवाच
अरणीसहितं तस्य ब्राह्मणस्य हृतं मया
मृगवेषेण कौन्तेय जिज्ञासार्थं तव प्रभो १३
वैशम्पायन उवाच
ददानीत्येव भगवानुत्तरं प्रत्यपद्यत
अन्यं वरय भद्रं ते वरं त्वममरोपम १४
युधिष्ठिर उवाच
वर्षाणि द्वादशारण्ये त्रयोदशमुपस्थितम्
तत्र नो नाभिजानीयुर्वसतो मनुजाः क्वचित् १५

वैशम्पायन उवाच
ददानीत्येव भगवानुत्तरं प्रत्यपद्यत
भूयश्चाश्वासयामास कौन्तेयं सत्यविक्रमम् १६
यद्यपि स्वेन रूपेण चरिष्यथ महीमिमाम्
न वो विज्ञास्यते कश्चित् त्रिषु लोकेषु भारत १७
वर्षं त्रयोदशं चेदं मत्प्रसादात्कुरूद्वहाः
विराटनगरे गूढा अविज्ञाताश्चरिष्यथ १८
यद्वः संकल्पितं रूपं मनसा यस्य यादृशम्
तादृशं तादृशं सर्वे छन्दतो धारयिष्यथ १९
अरणीसहितं चेदं ब्राह्मणाय प्रयच्छत
जिज्ञासार्थं मया ह्येतदाहृतं मृगरूपिणा २०
तृतीयं गृह्यतां पुत्र वरमप्रतिमं महत्
त्वं हि मत्प्रभवो राजन्विदुरश्च ममांशभाक् २१
युधिष्ठिर उवाच
देवदेवो मया दृष्टो भवान्साक्षात्सनातनः
यं ददासि वरं तुष्टस्तं ग्रहीष्याम्यहं पितः २२
जयेयं लोभमोहौ च क्रोधं चाहं सदा विभो
दाने तपसि सत्ये च मनो मे सततं भवेत् २३
धर्म उवाच
उपपन्नो गुणैः सर्वैः स्वभावेनासि पाण्डव
भवान्धर्मः पुनश्चैव यथोक्तं ते भविष्यति २४
वैशम्पायन उवाच
इत्युक्त्वान्तर्दधे धर्मो भगवाँल्लोकभावनः
समेताः पाण्डवाश्चैव सुखसुप्ता मनस्विनः २५
अभ्येत्य चाश्रमं वीराः सर्व एव गतक्लमाः
आरणेयं ददुस्तस्मै ब्राह्मणाय तपस्विने २६
इदं समुत्थानसमागमं महत्पितुश्च पुत्रस्य च कीर्तिवर्धनम्
पठन्नरः स्याद्विजितेन्द्रियो वशी सपुत्रपौत्रः शतवर्षभाग्भवेत् २७
न चाप्यधर्मे न सुहृद्विभेदने परस्वहारे परदारमर्शने
कदर्यभावे न रमेन्मनः सदा नृणां सदाख्यानमिदं विजानताम् २८

इति श्रीमहाभारते आरण्यकपर्वणि अष्टनवत्यधिक द्विशततमोऽध्यायः २९८

## एकोन त्रिशततमोऽध्यायः

वैशम्पायन उवाच
धर्मेण तेऽभ्यनुज्ञाताः पाण्डवाः सत्यविक्रमाः
अज्ञातवासं वत्स्यन्तश्छन्ना वर्षं त्रयोदशम्
उपोपविश्य विद्वांसः सहिताः संशितव्रताः १
ये तद्भक्ता वसन्ति स्म वनवासे तपस्विनः
तानब्रुवन्महात्मानः शिष्टाः प्राञ्जलयस्तदा
अभ्यनुज्ञापयिष्यन्तस्तं निवासं धृतव्रताः २
विदितं भवतां सर्वं धार्तराष्ट्रैर्यथा वयम्
छद्मना हृतराज्याश्च निःस्वाश्च बहुशः कृताः ३
उषिताश्च वने कृच्छ्रं यत्र द्वादश वत्सरान्
अज्ञातवाससमयं शेषं वर्षं त्रयोदशम्
तद्वत्स्यामो वयं छन्नास्तदनुज्ञातुमर्हथ ४
सुयोधनश्च दुष्टात्मा कर्णश्च सहसौबलः
जानन्तो विषमं कुर्युरस्मास्वत्यन्तवैरिणः
युक्ताचाराश्च युक्ताश्च पौरस्य स्वजनस्य च ५
अपि नस्तद्भवेद्भूयो यद्वयं ब्राह्मणैः सह
समस्ताः स्वेषु राष्ट्रेषु स्वराज्यस्था भवेमहि ६
इत्युक्त्वा दुःखशोकार्तः शुचिर्धर्मसुतस्तदा
संमूर्छितोऽभवद्राजा साश्रुकण्ठो युधिष्ठिरः ७
तमथाश्वासयन्सर्वे ब्राह्मणा भ्रातृभिः सह
अथ धौम्योऽब्रवीद्वाक्यं महार्थं नृपतिं तदा ८
राजन्विद्वान्भवान्दान्तः सत्यसन्धो जितेन्द्रियः
नैवंविधाः प्रमुह्यन्ति नराः कस्यांचिदापदि ९
देवैरप्यापदाः प्राप्ताश्छन्नैश्च बहुशस्तथा
तत्र तत्र सपत्नानां निग्रहार्थं महात्मभिः १०
इन्द्रेण निषधान्प्राप्य गिरिप्रस्थाश्रमे तदा
छन्नेनोष्य कृतं कर्म द्विषतां बलनिग्रहे ११

विष्णुनाश्वशिरः प्राप्य तथादित्यां निवत्स्यता
गर्भे वधार्थं दैत्यानामज्ञातेनोषितं चिरम् १२
प्राप्य वामनरूपेण प्रच्छन्नं ब्रह्मरूपिणा
बलेर्यथा हृतं राज्यं विक्रमैस्तच्च ते श्रुतम् १३
और्वेण वसता च्छन्नमूरौ ब्रह्मर्षिणा तदा
यत्कृतं तात लोकेषु तच्च सर्वं श्रुतं त्वया १४
प्रच्छन्नं चापि धर्मज्ञ हरिणा वृत्रनिग्रहे
वज्रं प्रविश्य शक्रस्य यत्कृतं तच्च ते श्रुतम् १५
हुताशनेन यच्चापः प्रविश्य च्छन्नमासता
विबुधानां कृतं कर्म तच्च सर्वं श्रुतं त्वया १६
एवं विवस्वता तात छन्नेनोत्तमतेजसा
निर्दग्धाः शत्रवः सर्वे वसता भुवि सर्वशः १७
विष्णुना वसता चापि गृहे दशरथस्य वै
दशग्रीवो हतश्छन्नं संयुगे भीमकर्मणा १८
एवमेते महात्मानः प्रच्छन्नास्तत्र तत्र ह
अजयञ्शात्रवान्युद्धे तथा त्वमपि जेष्यसि १९
तथा धौम्येन धर्मज्ञो वाक्यैः संपरितोषितः
शास्त्रबुद्ध्या स्वबुद्ध्या च न चचाल युधिष्ठिरः २०
अथाब्रवीन्महाबाहुर्भीमसेनो महाबलः
राजानं बलिनां श्रेष्ठो गिरा संपरिहर्षयन् २१
अवेक्षया महाराज तव गाणडीवधन्वना
धर्मानुगतया बुद्ध्या न किंचित्साहसं कृतम् २२
सहदेवो मया नित्यं नकुलश्च निवारितौ
शक्तौ विध्वंसने तेषां शत्रुघ्नौ भीमविक्रमौ २३
न वयं तत्प्रहास्यामो यस्मिन्योक्ष्यति नो भवान्
भवान्विधत्तां तत्सर्वं क्षिप्रं जेष्यामहे परान् २४
इत्युक्ते भीमसेनेन ब्राह्मणाः परमाशिषः
प्रयुज्यापृच्छ्य भरतान्यथान्स्वान्स्वान्ययुर्गृहान् २५
सर्वे वेदविदो मुख्या यतयो मुनयस्तथा
आशीरुक्त्वा यथान्यायं पुनर्दर्शनकाङ्क्षिणः २६

सह धौम्येन विद्वांसस्तथा ते पंच पाराडवाः
उत्थाय प्रययुर्वीराः कृष्णामादाय भारत २७
क्रोशमात्रमुपागम्य तस्माद्देशान्निमित्ततः
श्वोभूते मनुजव्याघ्राश्छन्नवासार्थमुद्यताः २८
पृथक्शास्त्रविदः सर्वे सर्वे मन्त्रविशारदाः
सन्धिविग्रहकालज्ञा मन्त्राय समुपाविशन् २९

इति श्रीमहाभारते ग्रारगयकपर्वणि एकोनत्रिशततमोऽध्यायः २९९

समाप्तमारगेयपर्व

ग्रारगयकपर्व समाप्त

# महाभारत

## विराटपर्व

श्रीगणेशाय नमः
ॐ नारायणं नमस्कृत्य नरं चैव नरोत्तमम्
देवीं सरस्वतीं चैव ततो जयमुदीरयेत्

### अथ प्रथमोऽध्यायः

जनमेजय उवाच
कथं विराटनगरे मम पूर्वपितामहाः
अज्ञातवासमुषिता दुर्योधनभयार्दिताः १
वैशम्पायन उवाच
तथा तु स वराँल्लब्ध्वा धर्माद्धर्मभृतां वरः
गत्वाश्रमं ब्राह्मणेभ्य आचख्यौ सर्वमेव तत् २
कथयित्वा तु तत्सर्वं ब्राह्मणेभ्यो युधिष्ठिरः
अरणीसहितं तस्मै ब्राह्मणाय न्यवेदयत् ३
ततो युधिष्ठिरो राजा धर्मपुत्रो महामनाः
संनिवर्त्यानुजान्सर्वानिति होवाच भारत ४
द्वादशेमानि वर्षाणि राष्ट्राद्विप्रोषिता वयम्
त्रयोदशोऽयं संप्राप्तः कृच्छ्रः परमदुर्वसः ५
स साधु कौंतेय इतो वासमर्जुन रोचय
यत्रेमा वसतीः सर्वा वसेमाविदिताः परैः ६
अर्जुन उवाच
तस्यैव वरदानेन धर्मस्य मनुजाधिप
अज्ञाता विचरिष्यामो नराणां भरतर्षभ ७
किं तु वासाय राष्ट्राणि कीर्तयिष्यामि कानिचित्
रमणीयानि गुप्तानि तेषां किंचित्स्म रोचय ८
सन्ति रम्या जनपदा बह्वन्नाः परितः कुरून्
पाञ्चालाश्चेदिमत्स्याश्च शूरसेनाः पटच्चराः

दशार्णा नवराष्ट्रं च मल्लाः शाल्वा युगंधराः ९
एतेषां कतमो राजन्निवासस्तव रोचते
वत्स्यामो यत्र राजेन्द्र संवत्सरमिमं वयम् १०
युधिष्ठिर उवाच
एवमेतन्महाबाहो यथा स भगवान्प्रभुः
अब्रवीत्सर्वभूतेशस्तत्तथा न तदन्यथा ११
अवश्यं त्वेव वासार्थं रमणीयं शिवं सुखम्
संमन्त्र्य सहितैः सर्वैर्द्रष्टव्यमकुतो भयम् १२
मत्स्यो विराटो बलवानभिरक्षेत्स पाण्डवान्
धर्मशीलो वदान्यश्च वृद्धश्च सुमहाधनः १३
विराटनगरे तात संवत्सरमिमं वयम्
कुर्वन्तस्तस्य कर्माणि विहरिष्याम भारत १४
यानि यानि च कर्माणि तस्य शक्ष्यामहे वयम्
कर्तुं यो यत्स तत्कर्म ब्रवीतु कुरुनन्दनाः १५
अर्जुन उवाच
नरदेव कथं कर्म राष्ट्रे तस्य करिष्यसि
विराटनृपतेः साधो रंस्यसे केन कर्मणा १६
मृदुर्वदान्यो ह्रीमांश्च धार्मिकः सत्यविक्रमः
राजंस्त्वमापदा क्लिष्टः किं करिष्यसि पाण्डव १७
न दुःखमुचितं किंचिद्राजन्वेद यथा जनः
स इमामापदं प्राप्य कथं घोरां तरिष्यसि १८
युधिष्ठिर उवाच
शृणुध्वं यत्करिष्यामि कर्म वै कुरुनन्दनाः
विराटमनुसंप्राप्य राजानं पुरुषर्षभम् १९
सभास्तारो भविष्यामि तस्य राज्ञो महात्मनः
कङ्को नाम द्विजो भूत्वा मताक्षः प्रियदेविता २०
वैडूर्यान्काञ्चनान्दान्तान्फलैर्ज्योतीरसैः सह
कृष्णाक्षाँल्लोहिताक्षांश्च निर्वर्त्स्यामि मनोरमान् २१
आसं युधिष्ठिरस्याहं पुरा प्राणसमः सखा
इति वक्ष्यामि राजानं यदि मामनुयोक्ष्यते २२

इत्येतद्वो मयाख्यातं विहरिष्याम्यहं यथा
वृकोदर विराटे त्वं रंस्यसे केन कर्मणा २३
इति श्रीमहाभारते विराटपर्वणि प्रथमोऽध्यायः १

द्वितीयोऽध्यायः

भीमसेन उवाच
पौरोगवो ब्रुवाणोऽह बल्लवो नाम नामतः
उपस्थास्यामि राजानं विराटमिति मे मतिः १
सूपानस्य करिष्यामि कुशलोऽस्मि महानसे
कृतपूर्वाणियैरस्य व्यञ्जनानिसुशिक्षितैः
तान्यप्यभिभविष्यामि प्रीतिं संजनयन्नहम् २
आहरिष्यामि दारूणां निचयान्महतोऽपि च
तत्प्रेक्ष्य विपुलं कर्म राजा प्रीतो भविष्यति ३
द्विपा वा बलिनो राजन्वृषभा वा महाबलाः
विनिग्राह्या यदि मया निग्रहीष्यामि तानपि ४
ये च केचिन्नियोत्स्यन्ति समाजेषु नियोधकाः
तानहं निहनिष्यामि प्रीतिं तस्य विवर्धयन् ५
न त्वेतान्युध्यमानान्वै हनिष्यामि कथंचन
तथैतान्पातयिष्यामि यथा यास्यन्ति न क्षयम् ६
आरालिको गोविकर्ता सूपकर्ता नियोधकः
आसं युधिष्ठिरस्याहमिति वक्ष्यामि पृच्छतः ७
आत्मानमात्मना रक्षंश्चरिष्यामि विशां पते
इत्येतत्प्रतिजानामि विहरिष्याम्यहं यथा ८
युधिष्ठिर उवाच
यमग्निर्ब्राह्मणो भूत्वा समागच्छन्नृणां वरम्
दिधक्षुः खाण्डवं दावं दाशार्हसहितं पुरा ९
महाबलं महाबाहुमजितं कुरुनन्दनम्
सोऽय किं कर्म कौन्तेयः करिष्यति धनंजयः १०
योऽयमासाद्य तं दावं तर्पयामास पावकम्
विजित्यैकरथेनेन्द्रं हत्वा पन्नगराक्षसान्

श्रेष्ठः प्रतियुधां नाम सोऽजुनः किं करिष्यति ११
सूर्यः प्रतपतां श्रेष्ठो द्विपदां ब्राह्मणो वरः
आशीविषश्च सर्पाणामग्निस्तेजस्विनां वरः १२
आयुधानां वरो वज्रः ककुद्मी च गवां वरः
ह्रदानामुदधिः श्रेष्ठः पर्जन्यो वर्षतां वरः १३
धृतराष्ट्रश्च नागानां हस्तिष्वैरावतो वरः
पुत्रः प्रियाणामधिको भार्या च सुहृदां वरा १४
यथैतानि विशिष्टानि जात्यां जात्यां वृकोदर
एवं युवा गुडाकेशः श्रेष्ठः सर्वधनुष्मताम् १५
सोऽयमिन्द्रादनवरो वासुदेवाच्च भारत
गाण्डीवधन्वा श्वेताश्वो बीभत्सुः किं करिष्यति १६
उषित्वा पञ्च वर्षाणि सहस्राक्षस्य वेश्मनि
दिव्यान्यस्त्राण्यवाप्तानि देवरूपेण भास्वता १७
यं मन्ये द्वादशं रुद्रमादित्यानां त्रयोदशम्
यस्य बाहू समौ दीर्घौ ज्याघातकठिनत्वचौ
दक्षिणे चैव सव्ये च गवामिव वहः कृतः १८
हिमवानिव शैलानां समुद्रः सरितामिव
त्रिदशानां यथा शक्रो वसूनामिव हव्यवाट् १९
मृगाणामिव शार्दूलो गरुडः पततामिव
वरः संनह्यमानानामर्जुनः किं करिष्यति २०
अर्जुन उवाच
प्रतिज्ञां षण्ढकोऽस्मीति करिष्यामि महीपते
ज्याघातौ हि महान्तौ मे संवर्तुं नृप दुष्करौ २१
कर्णयोः प्रतिमुच्याहं कुंडले ज्वलनोपमे
वेणीकृतशिरा राजन्नाम्ना चैव बृहन्नडा २२
पठन्नाख्यायिकां नाम स्त्रीभावेन पुनः पुनः
रमयिष्ये महीपालमन्यांश्चान्तः पुरे जनान् २३
गीतं नृत्तं विचित्रं च वादित्रं विविधं तथा
शिक्षयिष्याम्यहं राजन्विराटभवने स्त्रियः २४
प्रजानां समुदाचारं बहु कर्मकृतं वदन्

छादयिष्यामि कौन्तेय माययात्मानमात्मना २५
युधिष्ठिरस्य गेहेऽस्मि द्रौपद्याः परिचारिका
उषितास्मीति वक्ष्यामि पृष्टो राज्ञा च भारत २६
एतेन विधिना छन्नः कृतकेन यथा नलः
विहरिष्यामि राजेन्द्र विराटभवने सुखम् २७
इति श्रीमहाभारते विराटपर्वणि द्वितीयोऽध्यायः २

तृतीयोऽध्यायः

युधिष्ठिर उवाच
किं त्वं नकुल कुर्वाणस्तत्र तात चरिष्यसि
सुकुमारश्च शूरश्च दर्शनीयः सुखोचितः १
नकुल उवाच
अश्वबन्धो भविष्यामि विराटनृपतेरहम्
ग्रन्थिको नाम नाम्नाहं कर्मैतत्सुप्रियं मम २
कुशलोऽस्म्यश्वशिक्षायां तथैवाश्वचिकित्सिते
प्रियाश्च सततं मेऽश्वा कुरुराज यथा तव ३
ये मामामन्त्रयिष्यन्ति विराटनगरे जनाः
तेभ्य एवं प्रवक्ष्यामि विहरिष्याम्यहं यथा ४
युधिष्ठिर उवाच
सहदेव कथं तस्य समीपे विहरिष्यसि
किं वा त्वं तात कुर्वाणः प्रच्छन्नो विहरिष्यसि ५
सहदेव उवाच
गोसंख्याता भविष्यामि विराटस्य महीपतेः
प्रतिषेद्धा च दोग्धा च संख्याने कुशलो गवाम् ६
तन्तिपाल इति ख्यातो नाम्ना विदितमस्तु ते
निपुणं च चरिष्यामि व्येतु ते मानसो ज्वरः ७
अहं हि भवता गोषु सततं प्रकृतः पुरा
तत्र मे कौशलं कर्म अवबुद्धं विशां पते ८
लक्षणं चरितं चापि गवां यच्चापि मंगलम्
तत्सर्वं मे सुविदितमन्यच्चापि महीपते ९

वृषभानपि जानामि राजन्पूजितलक्षणान्
येषां मूत्रमुपाघ्राय अपि वन्ध्या प्रसूयते १०
सोऽहमेवं चरिष्यामि प्रीतिरत्र हि मे सदा
न च मां वेत्स्यति परस्तत्ते रोचतु पार्थिव ११
युधिष्ठिर उवाच
इयं तु नः प्रिया भार्या प्राणेभ्योऽपि गरीयसी
मातेव परिपाल्या च पूज्या ज्येष्ठेव च स्वसा १२
केन स्म कर्मणा कृष्णा द्रौपदी विचरिष्यति
न हि किंचिद्विजानाति कर्म कर्तुं यथा स्त्रियः १३
सुकुमारी च बाला च राजपुत्री यशस्विनी
पतिव्रता महाभागा कथं नु विचरिष्यति १४
माल्यगन्धानलंकारान्वस्त्राणि विविधानि च
एतान्येवाभिजानाति यतो जाता हि भामिनी १५
द्रौपद्युवाच
सैरन्ध्र्योऽरक्षिता लोके भुजिष्याः संति भारत
नैवमन्याः स्त्रियो यान्ति इति लोकस्य निश्चयः १६
साहं ब्रुवाणा सैरंध्री कुशला केशकर्मणि
आत्मगुप्ता चरिष्यामि यन्मां त्वमनुपृच्छसि १७
सुदेष्णां प्रत्युपस्थास्ये राजभार्यां यशस्विनीम्
सा रक्षिष्यति मां प्राप्तां मा ते भूद्दुःखमीदृशम् १८
युधिष्ठिर उवाच
कल्याणं भाषसे कृष्णे कुले जाता यथा वदेत्
न पापमभिजानासि साधु साध्वीव्रते स्थिता १९
इति श्रीमहाभारते विराटपर्वणि तृतीयोऽध्यायः ३

## चतुर्थोऽध्यायः

युधिष्ठिर उवाच
कर्माण्युक्तानि युष्माभिर्यानि तानि करिष्यथ
मम चापि यथाबुद्धि रुचितानि विनिश्चयात् १
पुरोहितोऽयमस्माकमग्निहोत्राणि रक्षतु

सूदपौरोगवैः सार्धं द्रुपदस्य निवेशने २
इन्द्रसेनमुखाश्चेमे रथानादाय केवलान्
यान्तु द्वारवतीं शीघ्रमिति मे वर्तते मतिः ३
इमाश्च नार्यो द्रौपद्याः सर्वशः परिचारिकाः
पाञ्चालानेव गच्छन्तु सूदपौरोगवैः सह ४
सर्वैरपि च वक्तव्यं न प्रज्ञायन्त पाण्डवाः
गता ह्यस्मानपाकीर्य सर्वे द्वैतवनादिति ५
धौम्य उवाच
विदिते चापि वक्तव्यं सुहृद्भिरनुरागतः
अतोऽहमपि वक्ष्यामि हेतुमात्रं निबोधत ६
हन्तेमां राजवसतिं राजपुत्रा ब्रवीमि वः
यथा राजकुलं प्राप्य चरन्प्रेष्यो न रिष्यति ७
दुर्वसं त्वेव कौरव्य जानता राजवेश्मनि
अमानितैः सुमानार्हा अज्ञातैः परिवत्सरम् ८
दिष्टद्वारो लभेद् द्वारं न च राजसु विश्वसेत्
तदेवासनमन्विच्छेद्यत्र नाभिषजेत्परः ९
नास्य यानं न पर्यङ्कं न पीठं न गजं रथम्
आरोहेत्संमतोऽस्मीति स राजवसतिं वसेत् १०
अथ यत्रैनमासीनं शङ्केरन्दुष्टचारिणः
न तत्रोपविशेज्जातु स राजवसतिं वसेत् ११
न चानुशिष्येद्राजानमपृच्छन्तं कदाचन
तूष्णीं त्वेनमुपासीत काले समभिपूजयन् १२
असूयन्ति हि राजानो जनाननृतवादिनः
तथैव चावमन्यन्ते मन्त्रिणं वादिनं मृषा १३
नैषां दारेषु कुर्वीत मैत्रीं प्राज्ञः कथंचन
अन्तःपुरचरा ये च द्वेष्टि यानहिताश्च ये १४
विदिते चास्य कुर्वीत कार्याणि सुलघून्यपि
एवं विचरतो राज्ञो न क्षतिर्जायते क्वचित् १५
यत्नाच्चोपचरेदेनमग्निवद्देववच्च ह
अनृतेनोपचीर्णो हि हिंस्यादेनमसंशयम् १६

यच्च भर्तानुयुञ्जीत तदेवाभ्यनुवर्तयेत्
प्रमादमवहेलां च कोपं च परिवर्जयेत् १७
समर्थनासु सर्वासु हितं च प्रियमेव च
संवर्णयेत्तदेवास्य प्रियादपि हितं वदेत् १८
अनुकूलो भवेच्चास्य सर्वार्थेषु कथासु च
अप्रियं चाऽहितं यत्स्यात्तदस्मै नानुवर्णयेत् १९
नाहमस्य प्रियोऽस्मीति मत्वा सेवेत पण्डितः
अप्रमत्तश्च यत्तश्च हितं कुर्यात्प्रियं च यत् २०
नास्यानिष्टानि सेवेत नाहितैः सह संवसेत्
स्वस्थानान्न विकम्पेत स राजवसतिं वसेत् २१
दक्षिणं वाऽथ वामं वा पार्श्वमासीत पण्डितः
रक्षिणां ह्यात्तशस्त्राणां स्थानं पश्चाद्विधीयते २२
नित्यं विप्रतिषिद्धं तु पुरस्तादासनं महत्
न च संदर्शने किंचित्प्रवृद्धमपि संजपेत् २३
अपि ह्येतद्दरिद्राणां व्यलीकस्थानमुत्तमम्
न मृषाभिहितं राज्ञो मनुष्येषु प्रकाशयेत्
यं चासूयन्ति राजानः पुरुषं न वदेच्च तम् २४
शूरोऽस्मीति न दृप्तः स्याद् बुद्धिमानिति वा पुनः
प्रियमेवाचरन्राज्ञः प्रियो भवति भोगवान् २५
एश्वर्यं प्राप्य दुष्प्रापं प्रियं प्राप्य च राजतः
अप्रमत्तो भवेद्राज्ञः प्रियेषु च हितेषु च २६
यस्य कोपो महाबाधः प्रसादश्च महाफलः
कस्तस्य मनसापीच्छेदनर्थं प्राज्ञसंमतः २७
न चोष्ठौ निर्भुजेज्जातु न च वाक्यं समाक्षिपेत्
सदा क्षुतं च वातं च ष्ठीवनं चाचरेच्छनैः २८
हास्यवस्तुषु चाप्यस्य वर्तमानेषु केषुचित्
नातिगाढं प्रहृष्येत न चाप्युन्मत्तवद्धसेत् २९
न चातिधैर्येण चरेद्गुरुतां हि व्रजेत्तथा
स्मितं तु मृदुपूर्वेण दर्शयेत प्रसादजम् ३०
लाभे न हर्षयेद्यस्तु न व्यथेद्योऽवमानितः

असंमूढश्च यो नित्यं स राजवसतिं वसेत् ३१
राजानं राजपुत्रं वा संवर्तयति यः सदा
अमात्यः पण्डितो भूत्वा स चिरं तिष्ठति श्रियम् ३२
प्रगृहीतश्च योऽमात्यो निगृहीतश्च कारणैः
न निर्बध्नाति राजानं लभते प्रग्रहं पुनः ३३
प्रत्यक्षं च परोक्षं च गुणवादी विचक्षणः
उपजीवी भवेद्राज्ञो विषये चापि यो वसेत् ३४
अमात्यो हि बलाद्भोक्तुं राजानं प्रार्थयेत्तु यः
न स तिष्ठेच्चिरं स्थानं गच्छेच्च प्राणसंशयम् ३५
श्रेयः सदात्मनो दृष्ट्वा परं राज्ञा न संवदेत्
विशेषयेन्न राजानं योग्याभूमिषु सर्वदा ३६
अम्लानो बलवाञ्शूरश्छायेवानपगः सदा
सत्यवादी मृदुर्दान्तः स राजवसतिं वसेत् ३७
अन्यस्मिन्प्रेष्यमाणे तु पुरस्ताद्यः समुत्पतेत्
अहं किं करवाणीति स राजवसतिं वसेत् ३८
उष्णे वा यदि वा शीते रात्रौ वा यदि वा दिवा
आदिष्टो न विकल्पेत स राजवसतिं वसेत् ३९
यो वै गृहेभ्यः प्रवसन्प्रियाणां नानुसंस्मरेत्
दुःखेन सुखमन्विच्छेत्स राजवसतिं वसेत् ४०
समवेषं न कुर्वीत नात्युच्चैः संनिधौ हसेत्
मंत्रं न बहुधा कुर्यादेवं राज्ञः प्रियो भवेत् ४१
न कर्मणि नियुक्तः सन्धनं किंचिदुपस्पृशेत्
प्राप्नोति हि हरन्द्रव्यं बन्धनं यदि वा वधम् ४२
यानं वस्त्रमलंकारं यच्चान्यत्संप्रयच्छति
तदेव धारयेन्नित्यमेवं प्रियतरो भवेत् ४३
संवत्सरमिमं तात तथाशीला बुभूषवः
अथ स्वविषयं प्राप्य यथाकामं चरिष्यथ ४४
युधिष्ठिर उवाच
अनुशिष्टाः स्म भद्रं ते नैतद्वक्तास्ति कश्चन
कुन्तीमृते मातरं नो विदुरं च महामतिम् ४५

यदेवानन्तरं कार्यं तद्भवान्कर्तुमर्हति
तारणायास्य दुःखस्य प्रस्थानाय जयाय च ४६
वैशम्पायन उवाच
एवमुक्तस्ततो राज्ञा धौम्योऽथ द्विजसत्तमः
अकरोद्विधिवत्सर्वं प्रस्थाने यद्विधीयते ४७
तेषां समिध्य तानग्नीन्मन्त्रवच्च जुहाव सः
समृद्धिवृद्धिलाभाय पृथिवीविजयाय च ४८
अग्निं प्रदक्षिणं कृत्वा ब्राह्मणांश्च तपोधनान्
याज्ञसेनीं पुरस्कृत्य षडेवाथ प्रवव्रजुः ४९
इति श्रीमहाभारते विराटपर्वणि चतुर्थोऽध्यायः ४

पञ्चमोऽध्यायः

वैशम्पायन उवाच
ते वीरा बद्धनिस्त्रिंशास्ततायुधकलापिनः
बद्धगोधांगुलित्राणाः कालिदीमभितो ययुः १
ततस्ते दक्षिणं तीरमन्वगच्छन्पदातयः
वसन्तो गिरिदुर्गेषु वनदुर्गेषु धन्विनः २
विध्यन्तो मृगजातानि महेष्वासा महाबलाः
उत्तरेण दशार्णांस्ते पाञ्चालान्दक्षिणेन तु ३
अंतरेण यकृल्लोमाञ्शूरसेनांश्च पाण्डवाः
लुब्धा ब्रुवाणा मत्स्यस्य विषयं प्राविशन्वनात् ४
ततो जनपदं प्राप्य कृष्णा राजानमब्रवीत्
पश्यैकपद्यो दृश्यन्ते क्षेत्राणि विविधानि च ५
व्यक्तं दूरे विराटस्य राजधानी भविष्यति
वसामेहपरां रात्रिं बलवान्मे परिश्रमः ६
युधिष्ठिर उवाच
धनंजय समुद्यम्य पांचालद्यं वह भारत
राजधान्यां निवत्स्यामो विमुक्ताश्च वनादितः ७
वैशम्पायन उवाच
तामादायार्जुनस्तूर्णं द्रौपदीं गजराडिव

संप्राप्य नगराभ्याशमवतारयदर्जुनः ८
स राजधानीं संप्राप्य कौन्तेयोऽजुनमब्रवीत्
क्वायुधानि समासज्य प्रवेक्ष्यामः पुरं वयम् ९
सायुधाश्च वयं तात प्रवेक्ष्यामः पुरं यदि
समुद्वेगं जनस्यास्य करिष्यामो न संशयः १०
ततो द्वादश वर्षाणि प्रवेष्टव्यं वनं पुनः
एकस्मिन्नपि विज्ञाते प्रतिज्ञातं हि नस्तथा ११
अर्जुन उवाच
इयं कूटे मनुष्येन्द्र गहना महती शमी
भीमशाखा दुरारोहा श्मशानस्य समीपतः १२
न चापि विद्यते कश्चिन्मनुष्य इह पार्थिव
उत्पथे हि वने जाता मृगव्यालनिषेविते १३
समासज्यायुधान्यस्यां गच्छामो नगरं प्रति
एवमत्र यथाजोषं विहरिष्याम भारत १४
वैशम्पायन उवाच
एवमुक्त्वा स राजानं धर्मात्मानं युधिष्ठिरम्
प्रचक्रमे निधानाय शस्त्राणां भरतर्षभ १५
येन देवान्मनुष्यांश्च सर्पांश्चैकरथोऽजयत्
स्फीताञ्जनपदांश्चान्यानजयत्कुरुनन्दनः १६
तदुदारं महाघोषं सपत्नगणसूदनम्
अपज्यमकरोत्पार्थो गांडीवमभयंकरम् १७
येन वीरः कुरुक्षेत्रमभ्यरक्षत्परंतपः
अमुञ्चद्धनुषस्तस्य ज्यामक्षय्यां युधिष्ठिरः १८
पाञ्चालान्येन संग्रामे भीमसेनोऽजयत्प्रभुः
प्रत्यषेधद्बहूनेकः सपत्नांश्चैव दिग्जये १९
निशम्य यस्य विस्फारं व्यद्रवन्त रणे परे
पर्वतस्येव दीर्णस्य विस्फोटमशनेरिव २०
सैन्धवं येन राजानं परामृषत चानघ
ज्यापाशं धनुषस्तस्य भीमसेनोऽवतारयत् २१
अजयत्पश्चिमामाशां धनुषा येन पाण्डवः

तस्य मौर्वीमपाकर्षच्छूरः संक्रन्दनो युधि २२
दक्षिणां दक्षिणाचारो दिशं येनाजयत्प्रभुः
अपज्यमकरोद्वीरः सहदेवस्तदायुधम् २३
खड्गांश्च पीतान्दीर्घांश्च कलापांश्च महाधनान्
विपाठान्क्षुरधारांश्च धनुर्भिर्निदधुः सह २४
तामुपारुह्य नकुलो धनूंषि निदधत्स्वयम्
यानि तस्यावकाशानि दृढरूपाण्यमन्यत २५
यत्र चापश्यत स वै तिरो वर्षाणि वर्षति
तत्र तानि दृढैः पाशैः सुगाढं पर्यबन्धत २६
शरीरं च मृतस्यैकं समबध्नन्त पाण्डवाः
विवर्जयिष्यन्ति नरा दूरादेव शमीमिमाम्
आबद्धं शवमत्रेति गंधमाघ्राय पूतिकम् २७
अशीतिशतवर्षेयं माता न इति वादिनः
कुलधर्मोऽयमस्माकं पूर्वैराचरितोऽपि च
समासजाना वृक्षेऽस्मिन्निति वै व्याहरन्ति ते २८
आ गोपालाविपालेभ्य आचक्षाणाः परंतपाः
आजग्मुर्नगराभ्याशं पार्थाः शत्रुनिबर्हणाः २९
जयो जयंतो विजयो जयत्सेनो जयद्बलः
इति गुह्यानि नामानि चक्रे तेषां युधिष्ठिरः ३०
ततो यथाप्रतिज्ञाभिः प्राविशन्नगरं महत्
अज्ञातचर्यां वत्स्यन्तो राष्ट्रे वर्षं त्रयोदशम् ३१
इति श्रीमहाभारते विराटपर्वणि पञ्चमोऽध्यायः ५

षष्ठोऽध्यायः

वैशम्पायन उवाच
ततो विराटं प्रथमं युधिष्ठिरो राजा सभायामुपविष्टमाव्रजत्
वैडूर्यरूपान्प्रतिमुच्य काञ्चनानक्षान्स कक्षे परिगृह्य वाससा १
नराधिपो राष्ट्रपतिं यशस्विनं महायशाः कौरववंशवर्धनः
महानुभावो नरराजसत्कृतो दुरासदस्तीक्ष्णविषो यथोरगः २
बलेन रूपेण नरर्षभो महानथार्चिरूपेण यथामरस्तथा

महाभ्रजालैरिव संवृतो रविर्यथानलो भस्मवृतश्च वीर्यवान् ३
तमापतन्तं प्रसमीक्ष्य पाण्डवं विराटराडिन्दुमिवाभ्रसंवृतम्
मन्त्रिद्विजान्सूतमुखान्विशस्तथा ये चापि केचित्परिषत्समासते
पप्रच्छ कोऽय प्रथमं समेयिवाननेन योऽय प्रसमीक्षते सभाम् ४
न तु द्विजोऽय भविता नरोत्तमः पतिः पृथिव्या इति मे मनोगतम्
न चाऽस्य दासो न रथो न कुंडले समीपतो भ्राजति चायमिन्द्रवत् ५
शरीरलिङ्गैरुपसूचितो ह्ययं मूर्धाभिषिक्तोऽयमितीव मानसम्
समीपमायाति च मे गतव्यथो यथा गजस्तामरसीं मदोत्कटः ६
वितर्कयन्तं तु नरर्षभस्तथा युधिष्ठिरोऽभ्येत्य विराटमब्रवीत्
सम्राड्विजानात्विह जीवितार्थिनं विनष्टसर्वस्वमुपागतं द्विजम् ७
इहाहमिच्छामि तवानघान्तिके वस्तुं यथा कामचरस्तथा विभो
तमब्रवीत्स्वागतमित्यनन्तरं राजा प्रहृष्टः प्रतिसंगृहाण च ८
कामेन ताताभिवदाम्यहं त्वां कस्यासि राज्ञो विषयादिहागतः
गोत्रं च नामापि च शंस तत्त्वतः किं चापि शिल्पं तव विद्यते कृतम् ९
युधिष्ठिर उवाच
युधिष्ठिरस्यासमहं पुरा सखा वैयाघ्रपद्यः पुनरस्मि ब्राह्मणः
अक्षान्प्रवप्तुं कुशलोऽस्मि देविता कङ्केति नाम्नास्मि विराट विश्रुतः १०
विराट उवाच
ददामि ते हंत वरं यमिच्छसि प्रशाधि मत्स्यान्वशगो ह्यहं तव
प्रिया हि धूर्ता मम देविनः सदा भवांश्च देवोपम राज्यमर्हति ११
युधिष्ठिर उवाच
आप्तो विवादः परमो विशां पते न विद्यते किंचन मत्स्य हीनतः
न मे जितः कश्चन धारयेद्धनं वरो ममैषोऽस्तु तव प्रसादतः १२
विराट उवाच
हन्यामवध्यं यदि तेऽप्रियं चरेत्प्रव्राजयेयं विषयाद्द्विजांस्तथा
शृणवन्तु मे जानपदाः समागताः कङ्को यथाहं विषये प्रभुस्तथा १३
समानयानो भवितासि मे सखा प्रभूतवस्त्रो बहुपानभोजनः
पश्येस्त्वमन्तश्च बहिश्च सर्वदा कृतं च ते द्वारमपावृतं मया १४
ये त्वानुवादेयुरवृत्तिकर्शिता ब्रूयाश्च तेषां वचनेन मे सदा
दास्यामि सर्वं तदहं न संशयो न ते भयं विद्यति संनिधौ मम १५

वैशम्पायन उवाच
एवं स लब्ध्वा तु वरं समागमं विराटराजेन नरर्षभस्तदा
उवास वीरः परमर्चितः सुखी न चापि कश्चिच्चरितं बुबोध तत् १६
इति श्रीमहाभारते विराटपर्वणि षष्ठोऽध्यायः ६

सप्तमोऽध्यायः

वैशम्पायन उवाच
अथापरो भीमबलः श्रिया ज्वलन्नुपाययौ सिंहविलासविक्रमः
खजं च दर्वीं च करेण धारयन्नसिं च कालाङ्गमकोशमव्रणम् १
स सूदरूपः परमेण वर्चसा रविर्यथा लोकमिमं प्रभासयन्
सुकृष्णवासा गिरिराजसारवान्स मत्स्यराजं समुपेत्य तस्थिवान् २
तं प्रेक्ष्य राजा वरयन्नुपागतं ततोऽब्रवीज्जानपदान्समागतान्
सिंहोन्नतांसोऽयमतीवरूपवान्प्रदृश्यते को नु नरर्षभो युवा ३
अदृष्टपूर्वः पुरुषो रविर्यथा वितर्कयन्नास्य लभामि संपदम्
तथास्य चित्तं ह्यपि संवितर्कयन्नरर्षभस्याद्य न यामि तत्त्वतः ४
ततो विराटं समुपेत्य पाण्डवः सुदीनरूपो वचनं महामनाः
उवाच सूदोऽस्मि नरेन्द्र बल्लवो भजस्व मां व्यञ्जनकारमुत्तमम् ५
विराट उवाच
न सूदतां मानद श्रद्दधामि ते सहस्रनेत्रप्रतिमो हि दृश्यसे
श्रिया च रूपेण च विक्रमेण च प्रभासि तातानवरो नरेष्विह ६
भीम उवाच
नरेन्द्र सूदः परिचारकोऽस्मि ते जानामि सूपान्प्रथमेन केवलान्
आस्वादिता ये नृपते पुराभवन्युधिष्ठिरेणापि नृपेण सर्वशः ७
बलेन तुल्यश्च न विद्यते मया नियुद्धशीलश्च सदैव पार्थिव
गजैश्च सिंहैश्च समेयिवानहं सदा करिष्यामि तवानघ प्रियम् ८
विराट उवाच
ददामि ते हन्त वरं महानसे तथा च कुर्याः कुशलं हि भाषसे
न चैव मन्ये तव कर्म तत्समं समुद्रनेमिं पृथिवीं त्वमर्हसि ९
यथा हि कामस्तव तत्तथा कृतं महानसे त्वं भव मे पुरस्कृतः
नराश्च ये तत्र ममोचिताः पुरा भवस्व तेषामधिपो मया कृतः १०

वैशम्पायन उवाच
तथा स भीमो विहितो महानसे विराटराज्ञो दयितोऽभवद्दृढम्
उवास राजन्न च तं पृथग्जनो बुबोध तत्रानुचरश्च कश्चन ११
इति श्रीमहाभारते विराटपर्वणि सप्तमोऽध्यायः ७

अष्टमोऽध्यायः

वैशम्पायन उवाच
ततः केशान्समुत्क्षिप्य वेल्लिताग्राननिन्दितान्
जुगूहे दक्षिणे पार्श्वे मृदूनसितलोचना १
वासश्च परिधायैकं कृष्णं सुमलिनं महत्
कृत्वा वेषं च सैरन्ध्र्याः कृष्णा व्यचरदार्तवत् २
तां नराः परिधावन्ती स्त्रियश्च समुपाद्रवन्
अपृच्छंश्चैव तां दृष्ट्वा का त्वं किं च चिकीर्षसि ३
सा तानुवाच राजेन्द्र सैरन्ध्र्यहमुपागता
कर्म चेच्छामि वै कर्तुं तस्य यो मां पुपुक्षति ४
तस्या रूपेण वेषेण श्लक्ष्णया च तथा गिरा
नाश्रद्दधत तां दासीमन्नहेतोरुपस्थिताम् ५
विराटस्य तु कैकेयी भार्या परमसंमता
अवलोकयन्ती ददृशे प्रासादाद्द्रुपदात्मजाम् ६
सा समीक्ष्य तथारूपामनाथामेकवाससम्
समाहूयाब्रवीद्भद्रे का त्वं किं च चिकीर्षसि ७
सा तामुवाच राजेन्द्र सैरन्ध्र्यहमुपागता
कर्म चेच्छाम्यहं कर्तुं तस्य यो मां पुपुक्षति ८
सुदेष्णोवाच
नैवंरूपा भवन्त्येव यथा वदसि भामिनि
प्रेषयन्ति च वै दासीर्दासांश्चैवंविधान्बहून् ९
गूढगुल्फा संहतोरुस्त्रिगम्भीरा षडुन्नता
रक्ता पञ्चसु रक्तेषु हंसगद्गदभाषिणी १०
सुकेशी सुस्तनी श्यामा पीनश्रोणिपयोधरा
तेन तेनैव संपन्ना काश्मीरीव तुरंगमा ११

स्वरालपद्मनयना बिम्बोष्ठी तनुमध्यमा
कम्बुग्रीवा गूढसिरा पूर्णचन्द्रनिभानना १२
का त्वं ब्रूहि यथा भद्रे नासि दासी कथंचन
यक्षी वा यदि वा देवी गन्धर्वी यदि वाप्सराः १३
अलंबुसा मिश्रकेशी पुंडरीकाथ मालिनी
इंद्राणी वारुणी वा त्वं त्वष्टुर्धातुः प्रजापतेः
देव्यो देवेषु विख्यातास्तासां त्वं कतमा शुभे १४
द्रौपद्युवाच
नास्मि देवी न गंधर्वी नासुरी न च राक्षसी
सैरन्ध्री तु भुजिष्यास्मि सत्यमेतद्ब्रवीमि ते १५
केशाञ्जानाम्यहं कर्तुं पिंषे साधु विलेपनम्
ग्रथयिष्ये विचित्राश्च स्रजः परमशोभनाः १६
आराधयं सत्यभामां कृष्णस्य महिषीं प्रियाम्
कृष्णां च भार्यां पाण्डूनां कुरूणामेकसुन्दरीम् १७
तत्र तत्र चराम्येवं लभमाना सुशोभनम्
वासांसि यावच्च लभे तावत्तावद्रमे तथा १८
मालिनीत्येव मे नाम स्वयं देवी चकार सा
साहमभ्यागता देवि सुदेष्णे त्वन्निवेशनम् १९
सुदेष्णोवाच
मूर्ध्नि त्वां वासयेयं वै संशयो मे न विद्यते
न चेदिहतु राजा त्वां गच्छेत्सर्वेण चेतसा २०
स्त्रियो राजकुले पश्य याश्चेमा मम वेश्मनि
प्रसक्तास्त्वां निरीक्षन्ते पुमांसं कं न मोहयेः २१
वृक्षांश्चावस्थितान्पश्य य इमे मम वेश्मनि
तेऽपि त्वां संनमन्तीव पुमांसं कं न मोहयेः २२
राजा विराटः सुश्रोणि दृष्ट्वा वपुरमानुषम्
विहाय मां वरारोहे त्वां गच्छेत्सर्वचेतसा २३
यं हि त्वमनवद्याङ्गि नरमायतलोचने
प्रसक्तमभिवीक्षेथाः स कामवशगो भवेत् २४
यश्च त्वां सततं पश्येत्पुरुषश्चारुहासिनि

एवं सर्वानवद्याङ्गि स चानङ्गवशो भवेत् २५
यथा कर्कटकी गर्भमाधत्ते मृत्युमात्मनः
तथाविधमहं मन्ये वासं तव शुचिस्मिते २६
द्रौपद्युवाच
नाऽस्मि लभ्या विराटेन न चान्येन कथंचन
गन्धर्वाः पतयो मह्यं युवानः पञ्च भामिनि २७
पुत्रा गंधर्वराजस्य महासत्त्वस्य कस्यचित्
रक्षन्ति ते च मां नित्यं दुःखाचारा तथा न्वहम् २८
यो मे न दद्यादुच्छिष्टं न च पादौ प्रधावयेत्
प्रीयेयुस्तेन वासेन गन्धर्वाः पतयो मम २९
यो हि मां पुरुषो गृद्ध्येद्यथान्याः प्राकृतस्त्रियः
तामेव स ततो रात्रिं प्रविशेदपरां तनुम् ३०
न चाप्यहं चालयितुं शक्या केनचिदङ्गने
दुःखशीला हि गन्धर्वास्ते च मे बलवत्तराः ३१
सुदेष्णोवाच
एवं त्वां वासयिष्यामि यथा त्वं नन्दिनीच्छसि
न च पादौ न चोच्छिष्टं स्प्रक्ष्यसि त्वं कथंचन ३२
वैशम्पायन उवाच
एवं कृष्णा विराटस्य भार्यया परिसान्त्विता
न चैनां वेद तत्रान्यस्तत्त्वेन जनमेजय ३३
इति श्रीमहाभारते विराटपर्वणि अष्टमोऽध्यायः ८

## नवमोऽध्यायः

वैशम्पायन उवाच
सहदेवोऽपि गोपानां कृत्वा वेषमनुत्तमम्
भाषां चैषां समास्थाय विराटमुपयादथ १
तमायान्तमभिप्रेक्ष्य भ्राजमानं नरर्षभम्
समुपस्थाय वै राजा पप्रच्छ कुरुनन्दनम् २
कस्य वा त्वं कुतो वा त्वं किं वा तात चिकीर्षसि
न हि मे दृष्टपूर्वस्त्वं तत्त्वं ब्रूहि नरर्षभ ३

स प्राप्य राजानममित्रतापनस्ततोऽब्रवीन्मेघमहौघनिःस्वनः
वैश्योऽस्मि नाम्नाहमरिष्टनेमिर्गोसंख्य आसं कुरुपुंगवानाम् ४
वस्तुं त्वयीच्छामि विशां वरिष्ठ तान्राजसिंहान्न हि वेद्मि पार्थान्
न शक्यते जीवितुमन्यकर्मणा न च त्वदन्यो मम रोचते नृपः ५
विराट उवाच
त्वं ब्राह्मणो यदि वा क्षत्रियोऽसि समुद्रनेमीश्वररूपवानसि
आचक्ष्व मे तत्त्वममित्रकर्शन न वैश्यकर्म त्वयि विद्यते समम् ६
कस्यासि राज्ञो विषयादिहागतः किं चापि शिल्पं तव विद्यते कृतम्
कथं त्वमस्मासु निवत्स्यसे सदा वदस्व किं चापि तवेह वेतनम् ७
सहदेव उवाच
पञ्चानां पाण्डुपुत्राणां ज्येष्ठो राजा युधिष्ठिरः
तस्याष्टशतसाहस्रा गवां वर्गाः शतं शताः ८
अपरे दशसाहस्रा द्विस्तावन्तस्तथापरे
तेषां गोसंख्य आसं वै तन्तिपालेति मां विदुः ९
भूतं भव्यं भविष्यच्च यच्च संख्यागतं क्वचित्
न मेऽस्त्यविदितं किंचित्समंताद्दशयोजनम् १०
गुणाः सुविदिता ह्यासन्मम तस्य महात्मनः
आसीच्च स मया तुष्टः कुरुराजो युधिष्ठिरः ११
क्षिप्रं हि गावो बहुला भवन्ति न तासु रोगो भवतीह कश्चित्
तैस्तैरुपायैर्विदितं ममैतदेतानि शिल्पानि मयि स्थितानि १२
वृषभांश्चापि जानामि राजन्पूजितलक्षणान्
येषां मूत्रमुपाघ्राय अपि वन्ध्या प्रसूयते १३
विराट उवाच
शतं सहस्राणि समाहितानि वर्णस्य वर्णस्य विनिश्चिता गुणैः
पशून्सपालान्भवते ददाम्यहं त्वदाश्रया मे पशवो भवन्त्विह १४
वैशम्पायन उवाच
तथा स राज्ञोऽविदितो विशां पते उवास तत्रैव सुखं नरेश्वरः
न चैनमन्येऽपि विदुः कथंचन प्रादाच्च तस्मै भरणं यथेप्सितम् १५
इति श्रीमहाभारते विराटपर्वणि नवमोऽध्यायः ९

दशमोऽध्यायः

वैशम्पायन उवाच
अथापरोऽदृश्यत रूपसंपदा स्त्रीणामलंकारधरो बृहत्पुमान्
प्राकारवप्रे प्रतिमुच्य कुण्डले दीर्घे च कम्बू परिहाटके शुभे १
बहूंश्च दीर्घांश्च विकीर्य मूर्धजान्महा भुजो वारणमत्तविक्रमः
गतेन भूमिमभिकंपयंस्तदा विराटमासाद्य सभासमीपतः २
तं प्रेक्ष्य राजोपगतं सभातले सत्रप्रतिच्छन्नमरिप्रमाथिनम्
विराजमानं परमेण वर्चसा सुतं महेन्द्रस्य गजेन्द्रविक्रमम् ३
सर्वानपृच्छच्च समीपचारिणः कुतोऽयमायाति न मे पुरा श्रुतः
न चैनमूचुर्विदितं तदा नराः सविस्मितं वाक्यमिदं नृपोऽब्रवीत् ४
सर्वोपपन्नः पुरुषो मनोरमः श्यामो युवा वारणयूथपोपमः
विमुच्य कम्वू परिहाटके शुभे विमुच्य वेणीमपिनह्य कुंडले ५
शिखी सुकेशः परिधाय चान्यथा भवस्व धन्वी कवची शरी तथा
आरुह्य यानं परिधावतां भवान्सुतैः समो मे भव वा मया समः ६
वृद्धो ह्यहं वै परिहारकामः सर्वान्मत्स्यांस्तरसा पालयस्व
नैवंबिधाः क्लीबरूपा भवंति कथंचनेति प्रतिभाति मे मनः ७
अर्जुन उवाच
गायामि नृत्याम्यथ वादयामि भद्रोऽस्मि नृत्ते कुशलोऽस्मि गीते
त्वमुत्तरायाः परिदत्स्व मां स्वयं भवामि देव्या नरदेव नर्तकः ८
इदं तु रूपं मम येन किं नु तत्प्रकीर्तयित्वा भृशशोकवर्धनम्
बृहन्नडां वै नरदेव विद्धि मां सुतं सुतां वा पितृमातृवर्जिताम् ९
विराट उवाच
ददामि ते हन्त वरं बृहन्नडे सुतां च मे नर्तय याश्च तादृशीः
इदं तु ते कर्म समं न मे मतं समुद्रनेमिं पृथिवीं त्वमर्हसि १०
वैशम्पायन उवाच
बृहन्नडां तामभिवीक्ष्य मत्स्यराट् कलासु नृत्ते च तथैव वादिते
अपुंस्त्वमप्यस्य निशम्य च स्थिरं ततः कुमारीपुरमुत्ससर्ज तम् ११
स शिक्षयामास च गीतवादितं सुतां विराटस्य धनंजयः प्रभुः
सखीश्च तस्याः परिचारिकास्तथा प्रियश्च तासां स बभूव पाण्डवः १२
तथा स सत्रेण धनंजयोऽवसत्प्रियाणि कुर्वन्सह ताभिरात्मवान्

तथागतं तत्र न जज्ञिरे जना बहिश्चरा वाप्यथवान्तरेचराः १३
इति श्रीमहाभारते विराटपर्वणि दशमोऽध्यायः १०

## एकादशोऽध्यायः

वैशम्पायन उवाच
अथापरोऽदृश्यत पाण्डवः प्रभुर्विराटराज्ञस्तुरगान्समीक्षतः
तमापतन्तं ददृशे पृथग्जनो विमुक्तमभ्रादिव सूर्यमण्डलम् १
स वै हयानैक्षत तांस्ततस्ततः समीक्षमाणं च ददर्श मत्स्यराट्
ततोऽब्रवीत्ताननुगानमित्रहा कुतोऽयमायाति नरोऽमरप्रभः २
अयं हयान्वीक्षति मामकान्दृढं ध्रुवं हयज्ञो भविता विचक्षणः
प्रवेश्यतामेष समीपमाशु मे विभाति वीरो हि यथामरस्तथा ३
अभ्येत्य राजानममित्रहाब्रवीज्जयोऽस्तु ते पार्थिव भद्रमस्तु च
हयेषु युक्तो नृप संमतः सदा तवाश्वसूतो निपुणो भवाम्यहम् ४
विराट उवाच
ददामि यानानि धनं निवेशनं ममाश्वसूतो भवितुं त्वमर्हसि
कुतोऽसि कस्यासि कथं त्वमागतः प्रब्रूहि शिल्पं तव विद्यते च यत् ५
नकुल उवाच
पञ्चानां पाण्डुपुत्राणां ज्येष्ठो राजा युधिष्ठिरः
तेनाहमश्वेषु पुरा प्रकृतः शत्रुकर्शन ६
अश्वानां प्रकृतिं वेद्मि विनयं चापि सर्वशः
दुष्टानां प्रतिपत्तिं च कृत्स्नं चैव चिकित्सितम् ७
न कातरं स्यान्मम जातु वाहनं न मेऽस्ति दुष्टा वडवा कुतो हयाः
जनस्तु मामाह स चापि पाण्डवो युधिष्ठिरो ग्रन्थिकमेव नामतः ८
विराट उवाच
यदस्ति किंचिन्मम वाजिवाहनं तदस्तु सर्वं त्वदधीनमद्य वै
ये चापि केचिन्मम वाजियोजकास्त्वदाश्रयाः सारथयश्च सन्तु मे ९
इदं तवेष्टं यदि वै सुरोपम ब्रवीहि यत्ते प्रसमीक्षितं वसु
न तेऽनुरूपं हयकर्म विद्यते प्रभासि राजेव हि संमतो मम १०
युधिष्ठिरस्येव हि दर्शनेन मे समं तवेदं प्रियदर्श दर्शनम्
कथं तु भृत्यैः स विनाकृतो वने वसत्यनिन्द्यो रमते च पांडवः ११

वैशम्पायन उवाच
तथा स गंधर्ववरोपमो युवा विराटराज्ञा मुदितेन पूजितः
न चैनमन्येऽपि विदुः कथंचन प्रियाभिरामं विचरन्तमन्तरा १२
एवं हि मत्स्ये न्यवसन्त पाराडवा यथाप्रतिज्ञाभिरमोघदर्शनाः
अज्ञातचर्यां व्यचरन्समाहिताः समुद्रनेमीपतयोऽतिदुःखिताः १३
इति श्रीमहाभारते विराटपर्वणि एकादशोऽध्यायः ११

## द्वादशोऽध्यायः

जनमेजय उवाच
एवं मत्स्यस्यनगरे वसन्तस्तत्र पाराडवाः
अत ऊर्ध्वं महावीर्याः किमकुर्वन्त वै द्विज १
वैशम्पायन उवाच
एवं ते न्यवसंस्तत्र प्रच्छन्नाः कुरुनन्दनाः
आराधयन्तो राजानं यदकुर्वन्त तच्छृणु २
युधिष्ठिरः सभास्तारः सभ्यानामभवत्प्रियः
तथैव च विराटस्य सपुत्रस्य विशां पते ३
स ह्यक्षहृदयज्ञस्तान्क्रीडयामास पाराडवः
अक्षवत्यां यथाकामं सूत्रबद्धानिव द्विजान् ४
अज्ञातं च विराटस्य विजित्य वसु धर्मराट्
भ्रातृभ्यः पुरुषव्याघ्रो यथार्हं स्म प्रयच्छति ५
भीमसेनोऽपि मांसानि भक्ष्याणि विविधानि च
अतिसृष्टानि मत्स्येन विक्रीणाति युधिष्ठिरे ६
वासांसि परिजीर्णानि लब्धान्यन्तःपुरेऽर्जुनः
विक्रीणानश्च सर्वेभ्यः पांडवेभ्यः प्रयच्छति ७
सहदेवोऽपि गोपानां वेषमास्थाय पाराडवः
दधि क्षीरं घृतं चैव पाराडवेभ्यः प्रयच्छति ८
नकुलोऽपि धनं लब्ध्वा कृते कर्मणि वाजिनाम्
तुष्टे तस्मिन्नरपतौ पाराडवेभ्यः प्रयच्छति ९
कृष्णापि सर्वान्भ्रातृंस्तान्निरीक्षन्ती तपस्विनी
यथा पुनरविज्ञाता तथा चरति भामिनी १०

एवं संपादयन्तस्ते तथान्योन्यं महारथाः
प्रेक्षमाणास्तदा कृष्णामूषुश्छन्ना नराधिप ११
अथ मासे चतुर्थे तु ब्रह्मणः सुमहोत्सवः
आसीत्समृद्धो मत्स्येषु पुरुषाणां सुसंमतः १२
तत्र मल्लाः समापेतुर्दिग्भ्यो राजन्सहस्रशः
महाकाया महावीर्याः कालखञ्जा इवासुराः १३
वीर्योन्नद्धा बलोदग्रा राज्ञा समभिपूजिताः
सिंहस्कन्धकटिग्रीवाः स्ववदाता मनस्विनः
असकृल्लब्धलक्षास्ते रङ्गे पार्थिवसंनिधौ १४
तेषामेको महानासीत्सर्वमल्लान्समाह्वयत्
आवल्गमानं तं रङ्गे नोपतिष्ठति कश्चन १५
यदा सर्वे विमनसस्ते मल्ला हतचेतसः
अथ सूदेन तं मल्लं योधयामास मत्स्यराट् १६
चोद्यमानस्ततो भीमो दुःखेनैवाकरोन्मतिम्
न हि शक्नोति विवृते प्रत्याख्यातुं नराधिपम् १७
ततः स पुरुषव्याघ्रः शार्दूलशिथिलं चरन्
प्रविवेश महारङ्गं विराटमभिहर्षयन् १८
बबन्ध कक्ष्यां कौन्तेयस्ततस्तं हर्षयञ्जनम्
ततस्तं वृत्रसंकाशं भीमो मल्लं समाह्वयत् १९
तावुभौ सुमहोत्साहावुभौ तीव्रपराक्रमौ
मत्ताविव महाकायौ वारणौ षष्टिहायनौ २०
चकर्ष दोर्भ्यामुत्पाट्य भीमो मल्लममित्रहा
विनदन्तमभिक्रोशञ्शार्दूल इव वारणम् २१
तमुद्यम्य महाबाहुर्भ्रामयामास वीर्यवान्
ततो मल्लाश्च मत्स्याश्च विस्मयं चक्रिरे परम् २२
भ्रामयित्वा शतगुणं गतसत्त्वमचेतनम्
प्रत्यपिंषन्महाबाहुर्मल्लं भुवि वृकोदरः २३
तस्मिन्विनिहते मल्ले जीमूते लोकविश्रुते
विराटः परमं हर्षमगच्छद्बान्धवैः सह २४
संहर्षात्प्रददौ वित्तं बहु राजा महामनाः

बल्लवाय महारङ्गे यथा वैश्रवणस्तथा २५
एवं स सुबहून्मल्लान्पुरुषांश्च महाबलान्
विनिघ्नन्मत्स्यराजस्य प्रीतिमावहदुत्तमाम् २६
यदास्य तुल्यः पुरुषो न कश्चित्तत्र विद्यते
ततो व्याघ्रैश्च सिंहैश्च द्विरदैश्चाप्ययोधयत् २७
पुनरन्तःपुरगतः स्त्रीणां मध्ये वृकोदरः
योध्यते स विराटेन सिंहैर्मत्तैर्महाबलैः २८
बीभत्सुरपि गीतेन स्वनृत्तेन च पाण्डवः
विराटं तोषयामास सर्वाश्चान्तःपुरस्त्रियः २९
अश्वैर्विनीतैर्जवनैस्तत्र तत्र समागतैः
तोषयामास नकुलो राजानं राजसत्तम ३०
तस्मै प्रदेयं प्रायच्छत्प्रीतो राजा धनं बहु
विनीतान्वृषभान्दृष्ट्वा सहदेवस्य चाभिभो ३१
एवं ते न्यवसंस्तत्र प्रच्छन्नाः पुरुषर्षभाः
कर्माणि तस्य कुर्वाणा विराटनृपतेस्तदा ३२
इति श्रीमहाभारते विराटपर्वणि द्वादशोऽध्यायः १२
समाप्तं वैराटपर्व

त्रयोदशोऽध्यायः

वैशम्पायन उवाच
वसमानेषु पार्थेषु मत्स्यस्य नगरे तदा
महारथेषु छन्नेषु मासा दश समत्ययुः १
याज्ञसेनी सुदेष्णां तु शुश्रूषंती विशां पते
अवसत्परिचारार्हा सुदुःखं जनमेजय २
तथा चरन्तीं पाञ्चालद्यं सुदेष्णाया निवेशने
सेनापतिर्विराटस्य ददर्श जलजाननाम् ३
तां दृष्ट्वा देवगर्भाभां चरन्तीं देवतामिव
कीचकः कामयामास कामबाणप्रपीडितः ४
स तु कामाग्निसंतप्तः सुदेष्णामभिगम्य वै
प्रहसन्निव सेनानीरिदं वचनमब्रवीत् ५

नेयं पुरा जातु मयेह दृष्टा राज्ञो विराटस्य निवेशने शुभा
रूपेण चोन्मादयतीव मां भृशं गन्धेन जाता मदिरेव भामिनी ६
का देवरूपा हृदयंगमा शुभे ग्राचच्व मे का च कुतश्च शोभना
चित्तं हि निर्मथ्य करोति मां वशे न चान्यदत्रौषधमद्य मे मतम् ७
ग्रहो तवेयं परिचारिका शुभा प्रत्यग्ररूपा प्रतिभाति मामियम्
ग्रयुक्तरूपं हि करोति कर्म ते प्रशास्तु मां यच्च ममास्ति किंचन ८
प्रभूतनागाश्वरथं महाधनं समृद्धियुक्तं बहुपानभोजनम्
मनोहरं काञ्चनचित्रभूषणं गृहं महच्छोभयतामियं मम ९
ततः सुदेष्णामनुमन्त्र्य कीचकस्ततः समभ्येत्य नराधिपात्मजाम्
उवाच कृष्णामभिसान्त्वयंस्तदा मृगेन्द्रकन्यामिव जंबुको वने १०
इदं च रूपं प्रथमं च ते वयो निरर्थकं केवलमद्य भामिनि
ग्रधार्यमाणा स्रगिवोत्तमा यथा न शोभसे सुंदरि शोभना सती ११
त्यजामि दारान्मम ये पुरातना भवन्तु दास्यस्तव चारुहासिनि
ग्रहं च ते सुंदरि दासवत्स्थितः सदा भविष्ये वशगो वरानने १२
द्रौपद्युवाच
ग्रप्रार्थनीयामिह मां सूतपुत्राभिमन्यसे
विहीनवर्णां सैरन्ध्रीं बीभत्सां केशकारिकाम् १३
परदारास्मि भद्रं ते न युक्तं त्वयि सांप्रतम्
दयिताः प्राणिनां दारा धर्मं समनुचिन्तय १४
परदारे न ते बुद्धिर्जातु कार्या कथंचन
विवर्जनं ह्यकार्याणामेतत्सुपुरुषव्रतम् १५
मिथ्याभिगृध्नो हि नरः पापात्मा मोहमास्थितः
ग्रयशः प्राप्नुयाद्घोरं सुमहत्प्राप्नुयाद्भयम् १६
मा सूतपुत्र हृष्यस्व माद्य त्यक्ष्यसि जीवितम्
दुर्लभामभिमन्वानो मां वीरैरभिरक्षिताम् १७
न चाप्यहं त्वया शक्या गंधर्वाः पतयो मम
ते त्वां निहन्युः कुपिताः साध्वलं मा व्यनीनशः १८
ग्रशक्यरूपैः पुरुषैरध्वानं गन्तुमिच्छसि
यथा निश्चेतनो बालः कूलस्थः कूलमुत्तरम्
तर्तुमिच्छति मंदात्मा तथा त्वं कर्तुमिच्छसि १९

अन्तर्महीं वा यदि वोर्ध्वमुत्पतेः समुद्रपारं यदि वा प्रधावसि
तथापि तेषां न विमोक्षमर्हसि प्रमाथिनो देवसुता हि मे वराः २०
त्वं कालरात्रीमिव कश्चिदातुरः किं मां दृढं प्रार्थयसेऽद्य कीचक
किं मातुरङ्के शयितो यथा शिशुश्चन्द्रं जिघृक्षुरिव मन्यसे हि माम् २१
इति श्रीमहाभारते विराटपर्वणि त्रयोदशोऽध्यायः १३

## चतुर्दशोऽध्यायः

वैशम्पायन उवाच
प्रत्याख्यातो राजपुत्र्या सुदेष्णां कीचकोऽब्रवीत्
अमर्यादेन कामेन घोरेणाऽभिपरिप्लुतः १
यथा कैकेयि सैरन्ध्र्या समेयां तद्विधीयताम्
तां सुदेष्णे परीप्सस्व माहं प्राणान्प्रहासिषम् २
तस्य तां बहुशः श्रुत्वा वाचं विलपतस्तदा
विराटमहिषी देवी कृपां चक्रे मनस्विनी ३
स्वमर्थमभिसंधाय तस्यार्थमनुचिन्त्य च
उद्वेगं चैव कृष्णायाः सुदेष्णा सूतमब्रवीत् ४
पर्विणीं त्वं समुद्दिश्य सुरामन्नं च कारय
तत्रैनां प्रेषयिष्यामि सुराहारीं तवान्तिकम् ५
तत्र संप्रेषितामेनां विजने निरवग्रहाम्
सान्त्वयेथा यथाकामं सान्त्व्यमाना रमेद्यदि ६
कीचकस्तु गृहं गत्वा भगिन्या वचनात्तदा
सुरामाहारयामास राजार्हां सुपरिस्रुताम् ७
आजौरभ्रं च सुभृशं बहूँश्चोच्चावचान्मृगान्
कारयामास कुशलैरन्नपानं सुशोभनम् ८
तस्मिन्कृते तदा देवी कीचकेनोपमन्त्रिता
सुदेष्णा प्रेषयामास सैरन्ध्रीं कीचकालयम् ९
सुदेष्णोवाच
उत्तिष्ठ गच्छ सैरन्ध्रि कीचकस्य निवेशनम्
पानमानय कल्याणि पिपासा मां प्रबाधते १०
द्रौपद्युवाच

न गच्छेयमहं तस्य राजपुत्रि निवेशनम्
त्वमेव राज्ञि जानासि यथा स निरपत्रपः ११
न चाहमनवद्यांगि तव वेश्मनि भामिनि
कामवृत्ता भविष्यामि पतीनां व्यभिचारिणी १२
त्वं चैव देवि जानासि यथा स समयः कृतः
प्रविशन्त्या मया पूर्वं तव वेश्मनि भामिनि १३
कीचकश्च सुकेशान्ते मूढो मदनदर्पितः
सोऽवमंस्यति मां दृष्ट्वा न यास्ये तत्र शोभने १४
सन्ति बह्व्यस्तव प्रेष्या राजपुत्रि वशानुगाः
अन्यां प्रेषय भद्रं ते स हि मामवमंस्यते १५
सुदेष्णोवाच
नैव त्वां जातु हिंस्यात्स इतः संप्रेषितां मया
वैशम्पायन उवाच
इत्यस्याः प्रददौ कांस्यं सपिधानं हिरण्मयम् १६
सा शङ्कमाना रुदती दैवं शरणमीयुषी
प्रातिष्ठत सुराहारी कीचकस्य निवेशनम् १७
द्रौपद्युवाच
यथाहमन्यं पाण्डुभ्यो नाभिजानामि कंचन
तेन सत्येन मां प्राप्तां कीचको मा वशे कृथाः १८
वैशम्पायन उवाच
उपतिष्ठत सा सूर्यं मुहूर्तमबला ततः
स तस्यास्तनुमध्यायाः सर्वं सूर्योऽवबुद्धवान् १९
अन्तर्हितं ततस्तस्या रक्षो रक्षार्थमादिशत्
तच्चैनां नाजहात्तत्र सर्वावस्थास्वनिन्दिताम् २०
तां मृगीमिव वित्रस्तां दृष्ट्वा कृष्णां समीपगाम्
उदतिष्ठन्मुदा सूतो नावं लब्ध्वेव पारगः २१
इति श्रीमहाभारते विराटपर्वणि चतुर्दशोऽध्यायः १४

पञ्चदशोऽध्यायः

कीचक उवाच

स्वागतं ते सुकेशान्ते सुव्युष्टा रजनी मम
स्वामिनी त्वमनुप्राप्ता प्रकुरुष्व मम प्रियम् १
सुवर्णमालाः कम्बूश्च कुण्डले परिहाटके
आहरन्तु च वस्त्राणि कौशिकान्यजिनानि च २
अस्ति मे शयनं शुभ्रं त्वदर्थमुपकल्पितम्
एहि तत्र मया सार्धं पिबस्व मधुमाधवीम् ३
द्रौपद्युवाच
अप्रैषीद्राजपुत्री मां सुराहारीं तवान्तिकम्
पानमानय मे क्षिप्रं पिपासा मेति चाब्रवीत् ४
कीचक उवाच
अन्या भद्रे नयिष्यन्ति राजपुत्र्याः परिस्रुतम् ५
वैशम्पायन उवाच
इत्येनां दक्षिणे पाणौ सूतपुत्रः परामृशत्
सा गृहीता विधुन्वाना भूमावाक्षिप्य कीचकम्
सभां शरणमाधावयत्र राजा युधिष्ठिरः ६
तां कीचकः प्रधावन्तीं केशपक्षे परामृशत्
अथैनां पश्यतो राज्ञः पातयित्वा पदावधीत् ७
ततो योऽसौ तदार्केण राक्षसः संनियोजितः
स कीचकमपोवाह वातवेगेन भारत ८
स पपात तदा भूमौ रक्षोबलसमाहतः
विघूर्णमानो निश्चेष्टश्छिन्नमूल इव द्रुमः ९
तां चासीनौ ददृशतुर्भीमसेनयुधिष्ठिरौ
अमृष्यमाणौ कृष्णायाः कीचकेन पदा वधम् १०
तस्य भीमो वधप्रेप्सुः कीचकस्य दुरात्मनः
दन्तैदन्तांस्तदा रोषान्निष्पिपेष महामनाः ११
अथाङ्गुष्ठेनावमृद्नादङ्गुष्ठं तस्य धर्मराट्
प्रबोधनभयाद्राजन्भीमस्य प्रत्यषेधयत् १२
सा सभाद्वारमासाद्य रुदती मत्स्यमब्रवीत्
अवेक्षमाणा सुश्रोणी पतींस्तान्दीनचेतसः १३
आकारमभिरक्षन्ती प्रतिज्ञां धर्मसंहिताम्

दह्यमानेव रौद्रेण चक्षुषा द्रुपदात्मजा १४
द्रौपद्युवाच
येषां वैरी न स्वपिति पदा भूमिमुपस्पृशन्
तेषां मां मानिनीं भार्यां सूतपुत्रः पदावधीत् १५
ये दद्युर्न च याचेयुर्ब्रह्मण्याः सत्यवादिनः
तेषां मां मानिनीं भार्यां सूतपुत्रः पदावधीत् १६
येषां दुन्दुभिनिर्घोषो ज्याघोषः श्रूयतेऽनिशम्
तेषां मां मानिनीं भार्यां सूतपुत्रः पदावधीत् १७
ये च तेजस्विनो दान्ता बलवन्तोऽभिमानिनः
तेषां मां मानिनीं भार्यां सूतपुत्रः पदावधीत् १८
सर्वलोकमिमं हन्युर्धर्मपाशसितास्तु ये
तेषां मां मानिनीं भार्यां सूतपुत्रः पदावधीत् १९
शरणं ये प्रपन्नानां भवन्ति शरणार्थिनाम्
चरन्ति लोके प्रच्छन्नाः क्व नु तेऽद्य महारथाः २०
कथं ते सूतपुत्रेण वध्यमानां प्रियां सतीम्
मर्षयन्ति यथा क्लीबा बलवन्तोऽमितौजसः २१
क्व नु तेषाममर्षश्च वीर्यं तेजश्च वर्तते
न परीप्सन्ति ये भार्यां वध्यमानां दुरात्मना २२
मयात्र शक्यं किं कर्तुं विराटे धर्मदूषणम्
यः पश्यन्मां मर्षयति वध्यमानामनागसम् २३
न राजन्राजवत्किंचित्समाचरसि कीचके
दस्यूनामिव धर्मस्ते न हि संसदि शोभते २४
नः कीचकः स्वधर्मस्थो न च मत्स्यः कथंचन
सभासदोऽप्यधर्मज्ञा य इमं पर्युपासते २५
नोपालभे त्वां नृपते विराटजनसंसदि
नाहमेतेन युक्ता वै हन्तुं मत्स्य तवान्तिके
सभासदस्तु पश्यन्तु कीचकस्य व्यतिक्रमम् २६
विराट उवाच
परोक्षं नाभिजानामि विग्रहं युवयोरहम्
अर्थतत्त्वमविज्ञाय किं नु स्यात्कुशलं मम २७

वैशम्पायन उवाच
ततस्तु सभ्या विज्ञाय कृष्णां भूयोऽभ्यपूजयन्
साधु साध्विति चाप्याहुः कीचकं च व्यगर्हयन् २८
सभ्या ऊचुः
यस्येयं चारुसर्वाङ्गी भार्या स्यादायतेक्षणा
परो लाभश्च तस्य स्यान्न स शोचेत्कदाचन २९
वैशम्पायन उवाच
एवं संपूजयंस्तत्र कृष्णां प्रेक्ष्य सभासदः
युधिष्ठिरस्य कोपात्तु ललाटे स्वेद आसजत् ३०
अथाब्रवीद्राजपुत्रीं कौरव्यो महिषीं प्रियाम्
गच्छ सैरन्ध्रि मात्र स्थाः सुदेष्णाया निवेशनम् ३१
भर्तारमनुरुध्यन्त्यः क्लिश्यन्ते वीरपत्नयः
शुश्रूषया क्लिश्यमानाः पतिलोकं जयन्त्युत ३२
मन्ये न कालं क्रोधस्य पश्यन्ति पतयस्तव
तेन त्वां नाभिधावन्ति गन्धर्वाः सूर्यवर्चसः ३३
अकालज्ञासि सैरन्ध्रि शैलूषीव विधावसि
विघ्नं करोषि मत्स्यानां दीव्यतां राजसंसदि
गच्छ सैरन्ध्रि गन्धर्वाः करिष्यन्ति तव प्रियम् ३४
द्रौपद्युवाच
अतीव तेषां घृणिनामर्थेऽहं धर्मचारिणी
तस्य तस्येह ते वध्या येषां ज्येष्ठोऽक्षदेविता ३५
वैशम्पायन उवाच
इत्युक्त्वा प्राद्रवत्कृष्णा सुदेष्णाया निवेशनम्
केशान्मुक्त्वा तु सुश्रोणी संरम्भाल्लोहितेक्षणा ३६
शुशुभे वदनं तस्या रुदन्त्याः विरतं तदा
मेघलेखाविनिर्मुक्तं दिवीव शशिमण्डलम् ३७
सुदेष्णोवाच
कस्त्वावधीद्वरारोहे कस्माद्रोदिषि शोभने
कस्याद्य न सुखं भद्रे केन ते विप्रियं कृतम् ३८
द्रौपद्युवाच

कीचको मावधीत्तत्र सुराहारीं गतां तव
सभायां पश्यतो राज्ञो यथैव विजने तथा ३९
सुदेष्णोवाच
घातयामि सुकेशान्ते कीचकं यदि मन्यसे
योऽसौ त्वां कामसंमत्तो दुर्लभामभिमन्यते ४०
द्रौपद्युवाच
अन्ये वै तं वधिष्यन्ति येषामागः करोति सः
मन्ये चाद्यैव सुव्यक्तं परलोकं गमिष्यति ४१
इति श्रीमहाभारते विराटपर्वणि पञ्चदशोऽध्यायः १५

षोडशोऽध्यायः

वैशम्पायन उवाच
सा हता सूतपुत्रेण राजपुत्री समज्वलत्
वधं कृष्णा परीप्सन्ती सेनावाहस्य भामिनी
जगामावासमेवाथ तदा सा द्रुपदात्मजा १
कृत्वा शौचं यथान्यायं कृष्णा वै तनुमध्यमा
गात्राणि वाससी चैव प्रक्षाल्य सलिलेन सा २
चिन्तयामास रुदती तस्य दुःखस्य निर्णयम्
किं करोमि क्व गच्छामि कथं कार्यं भवेन्मम ३
इत्येवं चिन्तयित्वासा भीमं वै मनसागमत्
नान्यः कर्ता ऋते भीमान्ममाद्य मनसः प्रियम् ४
तत उत्थाय रात्रौ सा विहाय शयनं स्वकम्
प्राद्रवन्नाथमिच्छन्ती कृष्णा नाथवती सती
दुःखेन महता युक्ता मानसेन मनस्विनी ५
सा वै महानसे प्राप्य भीमसेनं शुचिस्मिता
सर्वश्वेतेव माहेयी वने जाता त्रिहायनी
उपातिष्ठत पाञ्चाली वाशितेव महागजम् ६
सा लतेव महाशालं फुल्लं गोमतितीरजम्
बाहुभ्यां परिरभ्यैनं प्राबोधयदनिन्दिता
सिंहं सुप्तं वने दुर्गे मृगराजवधूरिव ७

वीणेव मधुराभाषा गान्धारं साधु मूर्च्छिता
अभ्यभाषत पाञ्चाली भीमसेनमनिन्दिता ८
उत्तिष्ठोत्तिष्ठ किं शेषे भीमसेन यथा मृतः
नामृतस्य हि पापीयान्भार्यामालभ्य जीवति ९
तस्मिञ्जीवति पापिष्ठे सेनावाहे मम द्विषि
तत्कर्म कृतवत्यद्य कथं निद्रां निषेवसे १०
स संप्रहाय शयनं राजपुत्र्या प्रबोधितः
उपातिष्ठत मेघाभः पर्यङ्के सोपसंग्रहे ११
अथाब्रवीद्राजपुत्रीं कौरव्यो महिषीं प्रियाम्
केनास्यर्थेन संप्राप्ता त्वरितेन ममान्तिकम् १२
न ते प्रकृतिमान्वर्णः कृशा पाण्डुश्च लक्ष्यसे
आचक्ष्व परिशेषेण सर्वं विद्यामहं यथा १३
सुखं वा यदि वा दुःखं द्वेष्यं वा यदि वा प्रियम्
यथावत्सर्वमाचक्ष्व श्रुत्वा ज्ञास्यामि यत्परम् १४
अहमेव हि ते कृष्णे विश्वास्यः सर्वकर्मसु
अहमापत्सु चापि त्वां मोक्षयामि पुनः पुनः १५
शीघ्रमुक्त्वा यथाकामं यत्ते कार्यं विवक्षितम्
गच्छ वै शयनायैव पुरा नान्योऽवबुध्यते १६
इति श्रीमहाभारते विराटपर्वणि षोडशोऽध्यायः १६

सप्तदशोऽध्यायः

द्रौपद्युवाच
अशोच्यं नु कुतस्तस्या यस्या भर्ता युधिष्ठिरः
जानन्सर्वाणि दुःखानि किं मां त्वं परिपृच्छसि १
यन्मां दासीप्रवादेन प्रतिकामी तदानयत्
सभायां पार्षदो मध्ये तन्मां दहति भारत २
पार्थिवस्य सुता नाम का नु जीवेत मादृशी
अनुभूय भृशं दुःखमन्यत्र द्रौपदीं प्रभो ३
वनवासगतायाश्च सैन्धवेन दुरात्मना
परामर्शं द्वितीयं च सोढुमुत्सहते नु का ४

मत्स्यराज्ञः समक्षं च तस्य धूर्तस्य पश्यतः
कीचकेन पदा स्पृष्टा का नु जीवेत मादृशी ५
एवं बहुविधैः क्लेशैः क्लिश्यमानां च भारत
न मां जानासि कौन्तेय किं फलं जीवितेन मे ६
योऽय राज्ञो विराटस्य कीचको नाम भारत
सेनानीः पुरुषव्याघ्र स्यालः परमदुर्मतिः ७
स मां सैरन्ध्रिवेषेण वसन्तीं राजवेश्मनि
नित्यमेवाह दुष्टात्मा भार्या मम भवेति वै ८
तेनोपमन्त्र्यमाणाया वधार्हेण सपत्नहन्
कालेनेव फलं पक्वं हृदयं मे विदीर्यते ९
भ्रातरं च विगर्हस्व ज्येष्ठं दुर्द्यूतदेविनम्
यस्यास्मि कर्मणा प्राप्ता दुःखमेतदनन्तकम् १०
को हि राज्यं परित्यज्य सर्वस्वं चात्मना सह
प्रव्रज्यायैव दीव्येत विना दुर्द्यूतदेविनम् ११
यदि निष्कसहस्रेण यच्चान्यत्सारवद्धनम्
सायंप्रातरदेविष्यदपि संवत्सरान्बहून् १२
रुक्मं हिरण्यं वासांसि यानं युग्यमजाविकम्
अश्वाश्वतरसंघाश्च न जातु क्षयमावहेत् १३
सोऽय द्यूतप्रवादेन श्रियः प्रत्यवरोपितः
तूष्णीमास्ते यथा मूढः स्वानि कर्माणि चिन्तयन् १४
दश नागसहस्राणि पद्मिनां हेममालिनाम्
यं यान्तमनुयान्तीह सोऽय द्यूतेन जीवति १५
तथा शतसहस्राणि नृणाममिततेजसाम्
उपासते महाराजमिन्द्रप्रस्थे युधिष्ठिरम् १६
शतं दासीसहस्राणि यस्य नित्यं महानसे
पात्रीहस्तं दिवारात्रमतिथीन्भोजयन्त्युत १७
एष निष्कसहस्राणि प्रदाय ददतां वरः
द्यूतजेन ह्यनर्थेन महता समुपावृतः १८
एनं हि स्वरसंपन्ना बहवः सूतमागधाः
सायंप्रातरुपातिष्ठन्सुमृष्टमणिकुण्डलाः १९

सहस्रमृषयो यस्य नित्यमासन्सभासदः
तपःश्रुतोपसंपन्नाः सर्वकामैरुपस्थिताः २०
अन्धान्वृद्धांस्तथानाथान्सर्वान्राष्ट्रेषु दुर्गतान्
बिभर्त्यविमना नित्यमानृशंस्याद्युधिष्ठिरः २१
स एष निरयं प्राप्तो मत्स्यस्य परिचारकः
सभायां देविता राज्ञः कङ्को ब्रूते युधिष्ठिरः २२
इन्द्रप्रस्थे निवसतः समये यस्य पार्थिवाः
आसन्बलिभृतः सर्वे सोऽद्यान्यैर्भृतिमिच्छति २३
पार्थिवाः पृथिवीपाला यस्यासन्वशवर्तिनः
स वशे विवशो राजा परेषामद्य वर्तते २४
प्रताप्य पृथिवीं सर्वां रश्मिवानिव तेजसा
सोऽय राज्ञो विराटस्य सभास्तारो युधिष्ठिरः २५
यमुपासन्त राजानः सभायामृषिभिः सह
तमुपासीनमद्यान्यं पश्य पाण्डव पाण्डवम् २६
अतदर्हं महाप्राज्ञं जीवितार्थेऽभिसंश्रितम्
दृष्ट्वा कस्य न दुःखं स्याद्धर्मात्मानं युधिष्ठिरम् २७
उपास्ते स्म सभायां यं कृत्स्ना वीर वसुंधरा
तमुपासीनमद्यान्यं पश्य भारत भारतम् २८
एवं बहुविधैर्दुःखैः पीड्यमानामनाथवत्
शोकसागरमध्यस्थां किं मां भीम न पश्यसि २९
इति श्रीमहाभारते विराटपर्वणि सप्तदशोऽध्यायः १७

## अष्टादशोऽध्यायः

द्रौपद्युवाच
इदं तु ते महद्दुःखं यत्प्रवक्ष्यामि भारत
न मेऽभ्यसूया कर्तव्या दुःखादेतद्ब्रवीम्यहम् १
शार्दूलैर्महिषैः सिंहैरागारे युध्यसे यदा
कैकेय्याः प्रेक्षमाणायास्तदा मे कश्मलो भवेत् २
प्रेक्षासमुत्थिता चापि कैकेयी ताः स्त्रियो वदेत्
प्रेक्ष्य मामनवद्यांगी कश्मलोपहतामिव ३

स्नेहात्संवासजान्मन्ये सूदमेषा शुचिस्मिता
योध्यमानं महावीर्यैरिमं समनुशोचति ४
कल्याणरूपा सैरंध्री बल्लवश्चातिसुन्दरः
स्त्रीणां च चित्तं दुर्ज्ञेयं युक्तरूपौ च मे मतौ ५
सैरंध्री प्रियसंवासान्नित्यं करुणवेदिनी
अस्मिन्राजकुले चेमौ तुल्यकालनिवासिनौ ६
इति ब्रुवाणा वाक्यानि सा मां नित्यमवेदयत्
क्रुध्यन्तीं मां च संप्रेक्ष्य समशङ्कत मां त्वयि ७
तस्यां तथा ब्रुवत्यां तु दुःखं मां महदाविशत्
शोके यौधिष्ठिरे मग्ना नाहं जीवितुमुत्सहे ८
यः सदेवान्मनुष्यांश्च सर्वांश्चैकरथोऽजयत्
सोऽय राज्ञो विराटस्य कन्यानां नर्तको युवा ९
योऽतर्पयदमेयात्मा खाण्डवे जातवेदसम्
सोऽन्तपुरगतः पार्थः कूपेऽग्निरिव संवृतः १०
यस्माद्भयममित्राणां सदैव पुरुषर्षभात्
स लोकपरिभूतेन वेषेणास्ते धनंजयः ११
यस्य ज्यातलनिर्घोषात्समकम्पत शत्रवः
स्त्रियो गीतस्वनं तस्य मुदिताः पर्युपासते १२
किरीटं सूर्यसंकाशं यस्य मूर्धनि शोभते
वेणीविकृतकेशान्तः सोऽयमद्य धनंजयः १३
यस्मिन्नस्त्राणि दिव्यानि समस्तानि महात्मनि
आधारः सर्वविद्यानां स धारयति कुण्डले १४
यं स्म राजसहस्राणि तेजसा प्रतिमानि वै
समरे नातिवर्तन्ते वेलामिव महार्णवः १५
सोऽय राज्ञो विराटस्य कन्यानां नर्तको युवा
आस्ते वेषप्रतिच्छन्नः कन्यानां परिचारकः १६
यस्य स्म रथघोषेण समकम्पत मेदिनी
सपर्वतवना भीम सहस्थावरजङ्गमा १७
यस्मिञ्जाते महाभागे कुन्त्याः शोको व्यनश्यत
स शोचयति मामद्य भीमसेन तवाऽनुजः १८

भूषितं तमलंकारैः कुण्डलैः परिहाटकैः
कम्बुपाणिनमायान्तं दृष्ट्वा सीदति मे मनः १९
तं वेणीकृतकेशान्तं भीमधन्वानमर्जुनम्
कन्यापरिवृतं भीम दृष्ट्वा सीदति मे मनः २०
यदा ह्येनं परिवृतं कन्याभिर्देवरूपिणम्
प्रभिन्नमिव मातङ्गं परिकीर्णं करेणुभिः २१
मत्स्यमर्थपतिं पार्थं विराटं समुपस्थितम्
पश्यामि तूर्यमध्यस्थं दिशो नश्यन्ति मे तदा २२
नूनमार्या न जानाति कृच्छ्रं प्राप्तं धनंजयम्
अजातशत्रुं कौरव्यं मग्नं दुर्द्यूतदेविनम् २३
तथा दृष्ट्वा यवीयांसं सहदेवं युधां पतिम्
गोषु गोवेषमायांतं पाण्डुभूतास्मि भारत २४
सहदेवस्य वृत्तानि चिंतयन्ती पुनः पुनः
न विन्दामि महाबाहो सहदेवस्य दुष्कृतम्
यस्मिन्नेवंविधं दुःखं प्राप्नुयात्सत्यविक्रमः २५
दूयामि भरतश्रेष्ठ दृष्ट्वा ते भ्रातरं प्रियम्
गोषु गोवृषसंकाशं मत्स्येनाभिनिवेशितम् २६
संरब्धं रक्तनेपथ्यं गोपालानां पुरोगमम्
विराटमभिनन्दन्तमथ मे भवति ज्वरः २७
सहदेवं हि मे वीरं नित्यमार्या प्रशंसति
महाभिजनसंपन्नो वृत्तवाञ्शीलवानिति २८
ह्रीनिषेधो मधुरवाग्धार्मिकश्च प्रियश्च मे
स तेऽरण्येषु बोद्धव्यो याज्ञसेनि क्षपास्वपि २९
तं दृष्ट्वा व्यापृतं गोषु वत्सचर्मक्षपाशयम्
सहदेवं युधां श्रेष्ठं किं नु जीवामि पाण्डव ३०
यस्त्रिभिर्नित्यसंपन्नो रूपेणास्त्रेण मेधया
सोऽश्वबन्धो विराटस्य पश्य कालस्य पर्ययम् ३१
अभ्यकीर्यन्त वृन्दानि दामग्रन्थिमुदीक्षताम्
विनयन्तं जवेनाश्वान्महाराजस्य पश्यतः ३२
अपश्यमेनं श्रीमन्तं मत्स्यं भ्राजिष्णुमुत्तमम्

विराटमुपतिष्ठन्तं दर्शयन्तं च वाजिनः ३३
किं नु मां मन्यसे पार्थ सुखितेति परंतप
एवं दुःखशताविष्टा युधिष्ठिरनिमित्ततः ३४
अतः प्रतिविशिष्टानि दुःखान्यन्यानि भारत
वर्तन्ते मयि कौन्तेय वक्ष्यामि शृणु तान्यपि ३५
युष्मासु ध्रियमाणेषु दुःखानि विविधान्युत
शोषयन्ति शरीरं मे किं नु दुःखमतः परम् ३६
इति श्रीमहाभारते विराटपर्वणि अष्टादशोऽध्यायः १८

## एकोनविंशोऽध्यायः

द्रौपद्युवाच
अहं सैरन्ध्रिवेषेण चरन्ती राजवेश्मनि
शौचदास्मि सुदेष्णाया अक्षधूर्तस्य कारणात् १
विक्रियां पश्य मे तीव्रां राजपुत्र्याः परंतप
आसे कालमुपासीना सर्वं दुःखं किलार्तवत् २
अनित्या किल मर्त्यानामर्थसिद्धिर्जयाजयौ
इति कृत्वा प्रतीक्षामि भर्तॄणामुदयं पुनः ३
य एव हेतुर्भवति पुरुषस्य जयावहः
पराजये च हेतुः स इति च प्रतिपालये ४
दत्त्वा याचन्ति पुरुषा हत्वा वध्यन्ति चाऽपरे
पातयित्वा च पात्यन्ते परैरिति च मे श्रुतम् ५
न दैवस्यातिभारोऽस्ति न दैवस्यातिवर्तनम्
इति चाप्यागमं भूयो दैवस्य प्रतिपालये ६
स्थितं पूर्वं जलं यत्र पुनस्तत्रैव तिष्ठति
इति पर्यायमिच्छन्ती प्रतीक्षाम्युदयं पुनः ७
दैवेन किल यस्याऽथ सुनीतोऽपि विपद्यते
दैवस्य चागमे यत्नस्तेन कार्यो विजानता ८
यत्तु मे वचनस्यास्य कथितस्य प्रयोजनम्
पृच्छ मां दुःखितां तत्त्वमपृष्टा वा ब्रवीमि ते ९
महिषी पाण्डुपुत्राणां दुहिता द्रुपदस्य च

इमामवस्थां संप्राप्ता का मदन्या जिजीविषेत् १०
कुरून्परिभवन्सर्वान्पञ्चालानपि भारत
पाण्डवेयांश्च संप्राप्तो मम क्लेशो ह्यरिंदम ११
भ्रातृभिः श्वशुरैः पुत्रैर्बहुभिः परवीरहन्
एवं समुदिता नारी का न्वन्या दुःखिता भवेत् १२
नूनं हि बालया धातुर्मया वै विप्रियं कृतम्
यस्य प्रसादाद्दुर्नीतं प्राप्तास्मि भरतर्षभ १३
वर्णावकाशमपि मे पश्य पाण्डव यादृशम्
यादृशो मे न तत्रासीद्दुःखे परमके तदा १४
त्वमेव भीम जानीषे यन्मे पार्थ सुखं पुरा
साहं दासत्वमापन्ना न शान्तिमवशा लभे १५
नादैविकमिदं मन्ये यत्र पार्थो धनंजयः
भीमधन्वा महाबाहुरास्ते शान्त इवानलः १६
अशक्या वेदितुं पार्थ प्राणिनां वै गतिर्नरैः
विनिपातमिमं मन्ये युष्माकमविचिन्तितम् १७
यस्या मम मुखप्रेक्षा यूयमिंद्रसमाः सदा
सा प्रेक्षे मुखमन्यासामवराणां वरा सती १८
पश्य पाण्डव मेऽवस्थां यथा नार्हामि वै तथा
युष्मासु ध्रियमाणेषु पश्य कालस्य पर्ययम् १९
यस्याः सागरपर्यन्ता पृथिवी वशवर्तिनी
आसीत्साद्य सुदेष्णाया भीताहं वशवर्तिनी २०
यस्याः पुरःसरा आसन्पृष्ठतश्चानुगामिनः
साहमद्य सुदेष्णायाः पुरः पश्चाच्च गामिनी
इदं तु दुःखं कौन्तेय ममासह्यं निबोध तत् २१
या न जातु स्वयं पिंषे गात्रोद्वर्तनमात्मनः
अन्यत्र कुन्त्या भद्रं ते साद्य पिंषामि चन्दनम्
पश्य कौन्तेय पाणी मे नैवं यौ भवतः पुरा २२
वैशम्पायन उवाच
इत्यस्य दर्शयामास किणबद्धौ करावुभौ २३
द्रौपद्युवाच

बिभेमि कुन्त्या या नाहं युष्माकं वा कदाचन
साद्याग्रतो विराटस्य भीता तिष्ठामि किंकरी २४
किं नु वक्ष्यति सम्राण्मां वर्णकः सुकृतो न वा
नान्यपिष्टं हि मत्स्यस्य चन्दनं किल रोचते २५
वैशम्पायन उवाच
सा कीर्तयन्ती दुःखानि भीमसेनस्य भामिनी
रुरोद शनकैः कृष्णा भीमसेनमुदीक्षती २६
सा बाष्पकलया वाचा निःश्वसन्ती पुनः पुनः
हृदयं भीमसेनस्य घट्टयन्तीदमब्रवीत् २७
नाल्पं कृतं मया भीम देवानां किल्बिषं पुरा
अभाग्या यत्तु जीवामि मर्तव्ये सति पाण्डव २८
ततस्तस्याः करौ शूनौ किणबद्धौ वृकोदरः
मुखमानीय वेपन्त्या रुरोद परवीरहा २९
तौ गृहीत्वा च कौन्तेयो बाष्पमुत्सृज्य वीर्यवान्
ततः परमदुःखार्त इदं वचनमब्रवीत् ३०
इति श्रीमहाभारते विराटपर्वणि एकोनविंशोऽध्यायः १९

विंशोऽध्यायः

भीमसेन उवाच
धिगस्तु मे बाहुबलं गाण्डीवं फल्गुनस्य च
यत्ते रक्तौ पुरा भूत्वा पाणी कृतकिणावुभौ १
सभायां स्म विराटस्य करोमि कदनं महत्
तत्र मां धर्मराजस्तु कटाक्षेण न्यवारयत्
तदहं तस्य विज्ञाय स्थित एवास्मि भामिनि २
यच्च राष्ट्रात्प्रच्यवनं कुरूणामवधश्च यः
सुयोधनस्य कर्णस्य शकुनेः सौबलस्य च ३
दुःशासनस्य पापस्य यन्मया न हृतं शिरः
तन्मे दहति कल्याणि हृदि शल्यमिवार्पितम्
मा धर्मं जहि सुश्रोणि क्रोधं जहि महामते ४
इमं च समुपालम्भं त्वत्तो राजा युधिष्ठिरः

शृणुयाद्यदि कल्याणि कृत्स्नं जह्यात्स जीवितम् ५
धनंजयो वा सुश्रोणि यमौ वा तनुमध्यमे
लोकान्तरगतेष्वेषु नाहं शक्ष्यामि जीवितुम् ६
सुकन्या नाम शार्याती भार्गवं च्यवनं वने
वल्मीकभूतं शाम्यन्तमन्वपद्यत भामिनी ७
नाडायनी चेन्द्रसेना रूपेण यदि ते श्रुता
पतिमन्वचरद्वृद्धं पुरा वर्षसहस्त्रिणम् ८
दुहिता जनकस्यापि वैदेही यदि ते श्रुता
पतिमन्वचरत्सीता महारण्यनिवासिनम् ९
रक्षसा निग्रहं प्राप्य रामस्य महिषी प्रिया
क्लिश्यमानापि सुश्रोणि राममेवान्वपद्यत १०
लोपामुद्रा तथा भीरु वयोरूपसमन्विता
अगस्त्यमन्वयाद्धित्वा कामान्सर्वानमानुषान् ११
यथैताः कीर्तिता नार्यो रूपवत्यः पतिव्रताः
तथा त्वमपि कल्याणि सर्वैः समुदिता गुणैः १२
मादीर्घं क्षम कालं त्वं मासमध्यर्ध्यसंमितम्
पूर्णे त्रयोदशे वर्षे राज्ञो राज्ञी भविष्यसि १३
द्रौपद्युवाच
आर्तयैतन्मया भीम कृतं बाष्पविमोक्षणम्
अपारयन्त्या दुःखानि न राजानमुपालभे १४
विमुक्तेन व्यतीतेन भीमसेन महाबल
प्रत्युपस्थितकालस्य कार्यस्यानन्तरो भव १५
ममेह भीम कैकेयी रूपाभिभवशङ्कया
नित्यमुद्विजते राजा कथं नेयादिमामिति १६
तस्या विदित्वा तं भावं स्वयं चानृतदर्शनः
कीचकोऽय सुदुष्टात्मा सदा प्रार्थयते हि माम् १७
तमहं कुपिता भीम पुनः कोपं नियम्य च
अब्रुवं कामसंमूढमात्मानं रक्ष कीचक १८
गंधर्वाणामहं भार्या पञ्चानां महिषी प्रिया
ते त्वां निहन्युर्दुर्धर्षाः शूराः साहसकारिणः १९

एवमुक्तः स दुष्टात्मा कीचकः प्रत्युवाच ह
नाहं बिभेमि सैरन्ध्री गन्धर्वाणां शुचिस्मिते २०
शतं सहस्रमपि वा गन्धर्वाणामहं रणे
समागतं हनिष्यामि त्वं भीरु कुरु मे क्षणम् २१
इत्युक्ते चाब्रुवं सूतं कामातुरमहं पुनः
न त्वं प्रतिबलस्तेषां गन्धर्वाणां यशस्विनाम् २२
धर्मे स्थितास्मि सततं कुलशीलसमन्विता
नेच्छामि कंचिद्वध्यन्तं तेन जीवसि कीचक २३
एवमुक्तः स दुष्टात्मा प्रहस्य स्वनवत्तदा
न तिष्ठति स्म सन्मार्गे न च धर्मं बुभूषति २४
पापात्मा पापभावश्च कामरागवशानुगः
अविनीतश्च दुष्टात्मा प्रत्याख्यातः पुनः पुनः
दर्शने दर्शने हन्यात्तथा जह्यां च जीवितम् २५
तद्धर्मे यतमानानां महान्धर्मो नशिष्यति
समयं रक्षमाणानां भार्या वो न भविष्यति २६
भार्यायां रक्ष्यमाणायां प्रजा भवति रक्षिता
प्रजायां रक्ष्यमाणायामात्मा भवति रक्षितः २७
वदतां वर्णधर्मांश्च ब्राह्मणानां हि मे श्रुतम्
क्षत्रियस्य सदा धर्मो नान्यः शत्रुनिबर्हणात् २८
पश्यतो धर्मराजस्य कीचको मां पदावधीत्
तव चैव समक्षं वै भीमसेन महाबल २९
त्वया ह्यहं परित्राता तस्माद्घोराज्जटासुरात्
जयद्रथं तथैव त्वमजैषीर्भ्रातृभिः सह ३०
जहीममपि पापं त्वं योऽय मामवमन्यते
कीचको राजवाल्लभ्याच्छोककृन्मम भारत ३१
तमेवं कामसंमत्तं भिन्धि कुम्भमिवाश्मनि
यो निमित्तमनर्थानां बहूनां मम भारत ३२
तं चेज्जीवन्तमादित्यः प्रातरभ्युदयिष्यति
विषमालोडच पास्यामि मा कीचकवशं गमम्
श्रेयो हि मरणं मह्यं भीमसेन तवाग्रतः ३३

वैशम्पायन उवाच
इत्युक्त्वा प्रारुदत्कृष्णा भीमस्योरः समाश्रिता
भीमश्च तां परिष्वज्य महत्सान्त्वं प्रयुज्य च
कीचकं मनसागच्छत्सृक्किणी परिसंलिहन् ३४
इति श्रीमहाभारते विराटपर्वणि विंशोऽध्यायः २०

एकविंशोऽध्यायः
भीमसेन उवाच
तथा भद्रे करिष्यामि यथा त्वं भीरु भाषसे
अद्य तं सूदयिष्यामि कीचकं सहबान्धवम् १
अस्याः प्रदोषे शर्वर्याः कुरुष्वानेन संगमम्
दुःखं शोकं च निर्धूय याज्ञसेनि शुचिस्मिते २
यैषा नर्तनशाला वै मत्स्यराजेन कारिता
दिवात्र कन्या नृत्यन्ति रात्रौ यान्ति यथागृहम् ३
तत्रास्ति शयनं भीरु दृढाङ्गं सुप्रतिष्ठितम्
तत्रास्य दर्शयिष्यामि पूर्वप्रेतान्पितामहान् ४
यथा च त्वां न पश्येयुः कुर्वाणां तेन संविदम्
कुर्यास्तथा त्वं कल्याणि यथा संनिहितो भवेत् ५
वैशम्पायन उवाच
तथा तौ कथयित्वा तु बाष्पमुत्सृज्य दुःखितौ
रात्रिशेषं तदत्युग्रं धारयामासतुर्हृदा ६
तस्यां रात्र्यां व्यतीतायां प्रातरुत्थाय कीचकः
गत्वा राजकुलायैव द्रौपदीमिदमब्रवीत् ७
सभायां पश्यतो राज्ञः पातयित्वा पदाहनम्
न चैवालभथास्त्राणमभिपन्ना बलीयसा ८
प्रवादेन हि मत्स्यानां राजा नाम्नायमुच्यते
अहमेव हि मत्स्यानां राजा वै वाहिनीपतिः ९
सा सुखं प्रतिपद्यस्व दासो भीरु भवामि ते
अह्नाय तव सुश्रोणि शतं निष्कान्ददाम्यहम् १०
दासीशतं च ते दद्यां दासानामपि चाऽपरम्

रथं चाश्वतरीयुक्तमस्तु नौ भीरु संगमः ११
द्रौपद्युवाच
एक मे समयं त्वद्य प्रतिपद्यस्व कीचक
न त्वां सखा वा भ्राता वा जानीयात्संगतं मया १२
अवबोधाद्धि भीतास्मि गन्धर्वाणां यशस्विनाम्
एवं मे प्रतिजानीहि ततोऽह वशगा तव १३
कीचक उवाच
एवमेतत्करिष्यामि यथा सुश्रोणि भाषसे
एको भद्रे गमिष्यामि शून्यमावसथं तव १४
समागमार्थं रंभोरु त्वया मदनमोहितः
यथा त्वां नावभोत्स्यन्ति गन्धर्वाः सूर्यवर्चसः १५
द्रौपद्युवाच
यदिदं नर्तनागारं मत्स्यराजेन कारितम्
दिवात्र कन्या नृत्यन्ति रात्रौ यान्ति यथागृहम् १६
तमिस्रे तत्र गच्छेथा गंधर्वास्तन्न जानते
तत्र दोषः परिहृतो भविष्यति न संशयः १७
वैशम्पायन उवाच
तमर्थं प्रति जल्पन्त्याः कृष्णायाः कीचकेन ह
दिवसार्धं समभवन्मासेनैव समं नृप १८
कीचकोऽथ गृहं गत्वा भृशं हर्षपरिप्लुतः
सैरंध्रीरूपिणं मूढो मृत्युं तं नावबुद्धवान् १९
गंधाभरणमाल्येषु व्यासक्तः स विशेषतः
अलंचकार सोऽत्मानं सत्वरः काममोहितः २०
तस्य तत्कुर्वतः कर्म कालो दीर्घ इवाभवत्
अनुचिन्तयतश्चापि तामेवायतलोचनाम् २१
आसीदभ्यधिका चास्य श्रीः श्रियं प्रमुमुक्षतः
निर्वाणकाले दीपस्य वर्तीमिव दिधक्षतः २२
कृतसंप्रत्ययस्तत्र कीचकः काममोहितः
नाजानाद्दिवसं यान्तं चिन्तयानः समागमम् २३
ततस्तु द्रौपदी गत्वा तदा भीमं महानसे

उपातिष्ठत कल्याणी कौरव्यं पतिमन्तिकात् २४
तमुवाच सुकेशान्ता कीचकस्य मया कृतः
संगमो नर्तनागारे यथावोचः परंतप २५
शून्यं स नर्तनागारमागमिष्यति कीचकः
एको निशि महाबाहो कीचकं तं निषूदय २६
तं सूतपुत्रं कौन्तेय कीचकं मददर्पितम्
गत्वा त्वं नर्तनागारं निर्जीवं कुरु पाण्डव २७
दर्पाच्च सूतपुत्रोऽसौ गन्धर्वानवमन्यते
तं त्वं प्रहरतां श्रेष्ठ नडं नाग इवोद्धर २८
अश्रु दुःखाभिभूताया मम मार्जस्व भारत
आत्मनश्चैव भद्रं ते कुरु मानं कुलस्य च २९
भीमसेन उवाच
स्वागतं ते वरारोहे यन्मां वेदयसे प्रियम्
न ह्यस्य कंचिदिच्छामि सहायं वरवर्णिनि ३०
या मे प्रीतिस्त्वयाख्याता कीचकस्य समागमे
हत्वा हिडिम्बं सा प्रीतिर्ममासीद्वरवर्णिनि ३१
सत्यं भ्रातॄंश्च धर्मं च पुरस्कृत्य ब्रवीमि ते
कीचकं निहनिष्यामि वृत्रं देवपतिर्यथा ३२
तं गह्वरे प्रकाशे वा पोथयिष्यामि कीचकम्
अथ चेदवभोत्स्यन्ति हंस्ये मत्स्यानपि ध्रुवम् ३३
ततो दुर्योधनं हत्वा प्रतिपत्स्ये वसुंधराम्
कामं मत्स्यमुपास्तां हि कुन्तीपुत्रो युधिष्ठिरः ३४
द्रौपद्युवाच
यथा न संत्यजेथास्त्वं सत्यं वै मत्कृते विभो
निगूढस्त्वं तथा वीर कीचकं विनिपातय ३५
भीमसेन उवाच
एवमेतत्करिष्यामि यथा त्वं भीरु भाषसे
अदृश्यमानस्तस्याद्य तमस्विन्यामनिन्दिते ३६
नागो बिल्वमिवाक्रम्य पोथयिष्याम्यहं शिरः
अलभ्यामिच्छतस्तस्य कीचकस्य दुरात्मनः ३७

वैशम्पायन उवाच
भीमोऽथ प्रथमं गत्वा रात्रौ छन्न उपाविशत्
मृगं हरिरिवादृश्यः प्रत्याकाङ्क्षत्स कीचकम् ३८
कीचकश्चाप्यलंकृत्य यथाकाममुपाव्रजत्
तां वेलां नर्तनागारे पाञ्चालीसंगमाशया ३९
मन्यमानः स संकेतमागारं प्राविशच्च तम्
प्रविश्य च स तद्वेश्म तमसा संवृतं महत् ४०
पूर्वागतं ततस्तत्र भीममप्रतिमौजसम्
एकान्तमास्थितं चैनमाससाद सुदुर्मतिः ४१
शयानं शयने तत्र मृत्युं सूतः परामृशत्
जाज्वल्यमानं कोपेन कृष्णाधर्षणजेन ह ४२
उपसंगम्य चैवैनं कीचकः काममोहितः
हर्षोन्मथितचित्तात्मा स्मयमानोऽभ्यभाषत ४३
प्रापितं ते मया वित्तं बहुरूपमनन्तकम्
सत्सर्वं त्वां समुद्दिश्य सहसा समुपागतः ४४
नाकस्मान्मां प्रशंसन्ति सदा गृहगताः स्त्रियः
सुवासा दर्शनीयश्च नान्योऽस्ति त्वादृशः पुमान् ४५
भीमसेन उवाच
दिष्ट्या त्वं दर्शनीयोऽसि दिष्ट्यात्मानं प्रशंससि
ईदृशस्तु त्वया स्पर्शः स्पृष्टपूर्वो न कर्हिचित् ४६
वैशम्पायन उवाच
इत्युक्त्वा तं महाबाहुर्भीमो भीमपराक्रमः
समुत्पत्य च कौन्तेयः प्रहस्य च नराधमम्
भीमो जग्राह केशेषु माल्यवत्सु महाबलः ४७
स केशेषु परामृष्टो बलेन बलिनां वरः
आक्षिप्य केशान्वेगेन बाह्वोर्जग्राह पाण्डवम् ४८
बाहुयुद्धं तयोरासीत्क्रुद्धयोर्नरसिंहयोः
वसंते वाशिताहेतोर्बलवद्गजयोरिव ४९
ईषदागलितं चापि क्रोधाच्चलपदं स्थितम्
कीचको बलवान्भीमं जानुभ्यामाक्षिपद्भुवि ५०

पातितो भुवि भीमस्तु कीचकेन बलीयसा
उत्पपाताथ वेगेन दंडाहत इवोरगः ५१
स्पर्धया च बलोन्मत्तौ तावुभौ सूतपाराडवौ
निशीथे पर्यकर्षेतां बलिनौ निशि निर्जने ५२
ततस्तद्भवनं श्रेष्ठं प्राकंपत मुहुर्मुहुः
बलवच्चापि संक्रुद्धावन्योन्यं प्रतिगर्जताम् ५३
तलाभ्यां तु स भीमेन वक्षस्यभिहतो बली
कीचको रोषसंतप्तः पदान्न चलितः पदम् ५४
मुहूर्तं तु स तं वेगं सहित्वा भुवि दुःसहम्
बलादहीयत तदा सूतो भीमबलार्दितः ५५
तं हीयमानं विज्ञाय भीमसेनो महाबलः
वक्षस्यानीय वेगेन ममन्थैनं विचेतसम् ५६
क्रोधाविष्टो विनिःश्वस्य पुनश्चैनं वृकोदरः
जग्राह जयतां श्रेष्ठः केशेष्वेव तदा भृशम् ५७
गृहीत्वा कीचकं भीमो विरुराव महाबलः
शार्दूलः पिशिताकांक्षी गृहीत्वेव महामृगम् ५८
तस्य पादौ च पाणी च सिरो ग्रीवां च सर्वशः
काये प्रवेशयामास पशोरिव पिनाकधृक् ५९
तं संमथितसर्वांगं मांसपिंडोपमं कृतम्
कृष्णायै दर्शयामास भीमसेनो महाबलः ६०
उवाच च महातेजा द्रौपदीं पाराडुनन्दन
पश्यैनमेहि पांचालि कामुकोऽय यथा कृतः ६१
तथा स कीचकं हत्वा गत्वा रोषस्य वै शमम्
आमंत्र्य द्रौपदीं कृष्णां क्षिप्रमायान्महानसम् ६२
कीचकं घातयित्वा तु द्रौपदी योषितां वरा
प्रहृष्टा गतसंतापा सभापालानुवाच ह ६३
कीचकोऽय हतः शेते गंधर्वैः पतिभिर्मम
परस्त्रीकामसंमत्तः समागच्छत पश्यत ६४
तच्छ्रुत्वा भाषितं तस्या नर्तनागाररक्षिणः
सहसैव समाजग्मुरादायोल्काः सहस्त्रशः ६५

ततो गत्वाथ तद्वेश्म कीचकं विनिपातितम्
गतासुं ददृशुर्भूमौ रुधिरेण समुक्षितम् ६६
क्वास्य ग्रीवा क्व चरणौ क्व पाणी क्व शिरस्तथा
इति स्म तं परीक्षन्ते गंधर्वेण हतं तदा ६७
इति श्रीमहाभारते विराटपर्वणि एकविंशोऽध्यायः २१

द्वाविंशोऽध्यायः

वैशम्पायन उवाच
तस्मिन्काले समागम्य सर्वे तत्रास्य बांधवाः
रुरुदुः कीचकं दृष्ट्वा परिवार्य समंततः १
सर्वे संहृष्टरोमाणः संत्रस्ताः प्रेक्ष्य कीचकम्
तथा सर्वाङ्गसंभुग्नं कूर्मं स्थल इवोद्धृतम् २
पोथितं भीमसेनेन तमिन्द्रेणेव दानवम्
संस्कारयितुमिच्छन्तो बहिर्नेतुं प्रचक्रमुः ३
ददृशुस्ते ततः कृष्णां सूतपुत्राः समागताः
अदूरादनवद्यांगीं स्तंभमालिग्य तिष्ठतीम् ४
समवेतेषु सूतेषु तानुवाचोपकीचकः
हन्यतां शीघ्रमसतीं यत्कृते कीचको हतः ५
अथवा नेह हंतव्या दह्यतां कामिना सह
मृतस्याऽपि प्रियं कार्यं सूतपुत्रस्य सर्वथा ६
ततो विराटमूचुस्ते कीचकोऽस्या कृते हतः
सहाद्यानेन दह्येत तदनुज्ञातुमर्हसि ७
पराक्रमं तु सूतानां मत्वा राजान्वमोदत
सैरंध्र्याः सूतपुत्रेण सह दाहं विशां पते ८
तां समासाद्य वित्रस्तां कृष्णां कमललोचनाम्
मोमुह्यमानां ते तत्र जगृहुः कीचका भृशम् ९
ततस्तु तां समारोप्य निबद्ध्य च सुमध्यमाम्
जग्मुरुद्यम्य ते सर्वे श्मशानमभितस्तदा १०
ह्रियमाणा तु सा राजन्सूतपुत्रैरनिंदिता
प्राक्रोशन्नाथमिच्छन्ती कृष्णा नाथवती सती ११

द्रौपद्युवाच
जयो जयंतो विजयो जयत्सेनो जयद्बलः
ते मे वाचं विजानन्तु सूतपुत्रा नयन्ति माम् १२
येषां ज्यातलनिर्घोषो विस्फूर्जितमिवाशनेः
व्यश्रूयत महायुद्धे भीमघोषस्तरस्विनाम् १३
रथघोषश्च बलवान्गंधर्वाणां यशस्विनाम्
ते मे वाचं विजानन्तु सूतपुत्रा नयन्ति माम् १४
वैशम्पायन उवाच
तस्यास्ताः कृपणा वाचः कृष्णायाः परिदेविताः
श्रुत्वैवाभ्यपतद्भीमः शयनादविचारयन् १५
भीमसेन उवाच
अहं शृणोमि ते वाचं त्वया सैरंध्रि भाषिताम्
तस्मात्ते सूतपुत्रेभ्यो न भयं भीरु विद्यते १६
वैशम्पायन उवाच
इत्युक्त्वा स महाबाहुर्विजजृम्भे जिघांसया
ततः स व्यायतं कृत्वा वेषं विपरिवर्त्य च
अद्वारेणाभ्यवस्कंद्य निर्जगाम बहिस्तदा १७
स भीमसेनः प्राकारादारुज्य तरसा द्रुमम्
श्मशानाभिमुखः प्रायाद्यत्र ते कीचका गताः १८
स तं वृक्षं दशव्यामं सस्कंधविटपं बली
प्रगृह्याभ्यद्रवत्सूतान्दण्डपाणिरिवांतकः १९
ऊरुवेगेन तस्याथ न्यग्रोधाश्वत्थकिंशुकाः
भूमौ निपतिता वृक्षाः संघशस्तत्र शेरते २०
तं सिंहमिव संक्रुद्धं दृष्ट्वा गंधर्वमागतम्
वित्रेसुः सर्वतः सूता विषादभयकंपिताः २१
तमन्तकमिवायान्तं गन्धर्वं प्रेक्ष्य ते तदा
दिधक्षन्तस्तदा ज्येष्ठं भ्रातरं ह्युपकीचकाः
परस्परमथोचुस्ते विषादभयकंपिताः २२
गंधर्वो बलवानेति क्रुद्ध उद्यम्य पादपम्
सैरंध्रीं मुच्यतां शीघ्रं महन्नो भयमागतम् २३

ते तु दृष्ट्वा तमाविद्धं भीमसेनेन पादपम्
विमुच्य द्रौपदीं तत्र प्राद्रवन्नगरं प्रति २४
द्रवतस्तांस्तु संप्रेक्ष्य स वज्री दानवानिव
शतं पंचाधिकं भीमः प्राहिणोद्यमसादनम् २५
तत आश्वासयत्कृष्णां प्रविमुच्य विशां पते
उवाच च महाबाहुः पांचालद्यं तत्र द्रौपदीम्
अश्रुपूर्णमुखीं दीनां दुर्धर्षः स वृकोदरः २६
एवं ते भीरु वध्यन्ते ये त्वां क्लिश्यन्त्यनागसम्
प्रैहि त्वं नगरं कृष्णे न भयं विद्यते तव
अन्येनाहं गमिष्यामि विराटस्य महानसम् २७
पंचाधिकं शतं तच्च निहतं तेन भारत
महावनमिव छिन्नं शिश्ये विगलितद्रुमम् २८
एवं ते निहता राजञ्शतं पंच च कीचकाः
स च सेनापतिः पूर्वमित्येतत्सूतषट्शतम् २९
तद्दृष्ट्वा महदाश्चर्यं नरा नार्यश्च संगताः
विस्मयं परमं गत्वा नोचुः किंचन भारत ३०

इति श्रीमहाभारते विराटपर्वणि द्वाविंशोऽध्यायः २२

## त्रयोविंशोऽध्यायः

वैशम्पायन उवाच
ते दृष्ट्वा निहतान्सूतान्राज्ञे गत्वा न्यवेदयन्
गंधर्वैर्निहता राजन्सूतपुत्राः परःशताः १
यथा वज्रेण वै दीर्णं पर्वतस्य महच्छिरः
विनिकीर्णं प्रदृश्येत तथा सूता महीतले २
सैरंध्री च विमुक्तासौ पुनरायाति ते गृहम्
सर्वं संशयितं राजन्नगरं ते भविष्यति ३
तथारूपा हि सैरंध्री गंधर्वाश्च महाबलाः
पुंसामिष्टश्च विषयो मैथुनाय न संशयः ४
यथा सैरंध्रिवेषेण न ते राजन्निदं पुरम्
विनाशमेति वै क्षिप्रं तथा नीतिर्विधीयताम् ५

तेषां तद्वचनं श्रुत्वा विराटो वाहिनीपतिः
अब्रवीत्क्रियतामेषां सूतानां परमक्रिया ६
एकस्मिन्नेव ते सर्वे सुसमिद्धे हुताशने
दह्यन्तां कीचकाः शीघ्रं रत्नैर्गन्धैश्च सर्वशः ७
सुदेष्णां चाब्रवीद्राजा महिषीं जातसाध्वसः
सैरंध्रीमागतां ब्रूया ममैव वचनादिदम् ८
गच्छ सैरंध्रि भद्रं ते यथाकामं चराबले
बिभेति राजा सुश्रोणि गंधर्वेभ्यः पराभवात् ९
न हि तामुत्सहे वक्तुं स्वयं गंधर्वरक्षिताम्
स्त्रियस्त्वदोषास्तां वक्तुमतस्त्वां प्रब्रवीम्यहम् १०
अथ मुक्ता भयात्कृष्णा सूतपुत्रान्निरस्य च
मोक्षिता भीमसेनेन जगाम नगरं प्रति ११
त्रासितेव मृगी बाला शार्दूलेन मनस्विनी
गात्राणि वाससी चैव प्रक्षाल्य सलिलेन सा १२
तां दृष्ट्वा पुरुषा राजन्प्राद्रवन्त दिशो दश
गंधर्वाणां भयत्रस्ताः केचिद्दृष्टीर्न्यमीलयन् १३
ततो महानसद्वारि भीमसेनमवस्थितम्
ददर्श राजन्पांचाली यथा मत्तं महाद्विपम् १४
तं विस्मयन्ती शनकैः संज्ञाभिरिदमब्रवीत्
गंधर्वराजाय नमो येनाऽस्मि परिमोचिता १५
भीमसेन उवाच
ये यस्या विचरन्तीह पुरुषा वशवर्तिनः
तस्यास्ते वचनं श्रुत्वा अनृणा विचरन्त्युत १६
वैशम्पायन उवाच
ततः सा नर्तनागारे धनंजयमपश्यत
राज्ञः कन्या विराटस्य नर्तयानं महाभुजम् १७
ततस्ता नर्तनागाराद्विनिष्क्रम्य सहार्जुनाः
कन्या ददृशुरायान्तीं कृष्णां क्लिष्टामनागसम् १८
कन्या ऊचुः
दिष्ट्या सैरंध्रि मुक्तासि दिष्ट्यासि पुनरागता

दिष्ट्या विनिहताः सूता ये त्वां क्लिश्यन्त्यनागसम् १९
बृहन्नडोवाच
कथं सैरंध्रि मुक्ताऽसि कथं पापाश्च ते हताः
इच्छामि वै तव श्रोतुं सर्वमेव यथातथम् २०
सैरंध्र्युवाच
बृहन्नडे किं नु तव सैरंध्र्या कार्यमद्य वै
या त्वं वससि कल्याणि सदा कन्यापुरे सुखम् २१
न हि दुःखं समाप्नोषि सैरंध्री यदुपाश्नुते
तेन मां दुखितामेवं पृच्छसे प्रहसन्निव २२
बृहन्नडोवाच
बृहन्नडापि कल्याणि दुःखमाप्नोत्यनुत्तमम्
तिर्यग्योनिगता बाले न चैनामवबुद्ध्यसे २३
वैशम्पायन उवाच
ततः सहैव कन्याभिर्द्रौपदी राजवेश्म तत्
प्रविवेश सुदेष्णायाः समीपमपलायिनी २४
तामब्रवीद्राजपुत्री विराटवचनादिदम्
सैरन्ध्रि गम्यतां शीघ्रं यत्र कामयसे गतिम् २५
राजा बिभेति भद्रं ते गंधर्वेभ्यः पराभवात्
त्वं चापि तरुणी सुभ्रु रूपेणाप्रतिमा भुवि २६
सैरंध्र्युवाच
त्रयोदशाहमात्रं मे राजा क्षमतु भामिनि
कृतकृत्या भविष्यन्ति गंधर्वास्ते न संशयः २७
ततो मां तेऽपनेष्यन्ति करिष्यन्ति च ते प्रियम्
ध्रुवं च श्रेयसा राजा योक्ष्यते सह बांधवैः २८

इति श्रीमहाभारते विराटपर्वणि त्रयोविंशोऽध्यायः २३

समाप्तं कीचकवधपर्व

## चतुर्विंशोऽध्यायः

वैशम्पायन उवाच
कीचकस्य तु घातेन सानुजस्य विशांपते

अत्याहितं चिन्तयित्वा व्यस्मयन्त पृथग्जनाः १
तस्मिन्पुरे जनपदे संजल्पोऽभूच्च सर्वशः
शौर्याद्धि वल्लभो राज्ञो महासत्त्वश्च कीचकः २
आसीत्प्रहर्ता च नृणां दारामर्शी च दुर्मतिः
स हतः खलु पापात्मा गन्धर्वैर्दुष्टपूरुषः ३
इत्यजल्पन्महाराज परानीकविशातनम्
देशे देशे मनुष्याश्च कीचकं दुष्प्रधर्षणम् ४
अथ वै धार्तराष्ट्रेण प्रयुक्ता ये बहिश्चराः
मृगयित्वा बहून्ग्रामान्राष्ट्राणि नगराणि च ५
संविधाय यथादिष्टं यथादेशप्रदर्शनम्
कृतचिंता न्यवर्तंत ते च नागपुरं प्रति ६
तत्र दृष्ट्वा तु राजानं कौरव्यं धृतराष्ट्रजम्
द्रोणकर्णकृपैः सार्धं भीष्मेण च महात्मना ७
संगतं भ्रातृभिश्चापि त्रिगर्तैश्च महारथैः
दुर्योधनं सभामध्ये आसीनमिदमब्रुवन् ८
कृतोऽस्माभिः परो यत्नस्तेषामन्वेषणे सदा
पांडवानां मनुष्येंद्र तस्मिन्महति कानने ९
निर्जने मृगसंकीर्णे नानाद्रुमलतावृते
लताप्रतानबहुले नानागुल्मसमावृते १०
न च विद्मो गता येन पार्थाः स्युर्दृढविक्रमाः
मार्गमाणाः पदन्यासं तेषु तेषु तथा तथा ११
गिरिकूटेषु तुंगेषु नानाजनपदेषु च
जनाकीर्णेषु देशेषु खर्वटेषु पुरेषु च १२
नरेंद्र बहुशोऽन्विष्टा नैव विद्मश्च पांडवान्
अत्यंतभावं नष्टास्ते भद्रं तुभ्यं नरर्षभ १३
वर्त्मान्यन्विष्यमाणास्तु रथानां रथसत्तम
कंचित्कालं मनुष्येंद्र सूतानामनुगा वयम् १४
मृगयित्वा यथान्यायं विदितार्थाः स्म तत्त्वतः
प्राप्ता द्वारवतीं सूता ऋते पार्थैः परंतप १५
न तत्र पांडवा राजन्नापिकृष्णा पतिव्रता

सर्वथा विप्रनष्टास्ते नमस्ते भरतर्षभ १६
न हि विद्मो गतिं तेषां वासं वापि महात्मनाम्
पांडवानां प्रवृत्तिं वा विद्मः कर्मापि वा कृतम्
स नः शाधि मनुष्येंद्र अत ऊर्ध्वं विशां पते १७
अन्वेषणे पांडवानां भूयः किं करवामहे
इमां च नः प्रियामीक्ष वाचं भद्रवतीं शुभाम् १८
येन त्रिगर्ता निकृता बलेन महता नृप
सूतेन राज्ञो मत्स्यस्य कीचकेन महात्मना १९
स हतः पतितः शेते गंधर्वैर्निशि भारत
अदृश्यमानैर्दुष्टात्मा सह भ्रातृभिरच्युत २०
प्रियमेतदुपश्रुत्य शत्रूणां तु पराभवम्
कृतकृत्यश्च कौरव्य विधत्स्व यदनंतरम् २१
इति श्रीमहाभारते विराटपर्वणि चतुर्विंशोऽध्यायः २४

पञ्चविंशोऽध्यायः

वैशम्पायन उवाच
ततो दुर्योधनो राजा श्रुत्वा तेषां वचस्तदा
चिरमंतर्मना भूत्वा प्रत्युवाच सभासदः १
सुदुःखा खलु कार्याणां गतिर्विज्ञातुमंततः
तस्मात्सर्वे उदीक्षध्वं क्व नु स्युः पांडवा गताः २
अल्पावशिष्टं कालस्य गतभूयिष्ठमंततः
तेषामज्ञातचर्यायामस्मिन्वर्षे त्रयोदशे ३
अस्य वर्षस्य शेषं चेद्व्यतीयुरिह पांडवाः
निवृत्तसमयास्ते हि सत्यव्रतपरायणाः ४
क्षरन्त इव नागेंद्राः सर्व आशीविषोपमाः
दुःखा भवेयुः संरब्धाः कौरवान्प्रति ते ध्रुवम् ५
अर्वाक्कालस्य विज्ञाताः कृच्छ्ररूपधराः पुनः
प्रविशेयुर्जितक्रोधास्तावदेव पुनर्वनम् ६
तस्मात्क्षिप्रं बुभुत्सध्वं यथा नोऽत्यतमव्ययम्
राज्यं निर्द्वंद्वमव्यग्रं निःसपत्नं चिरं भवेत् ७

अथाब्रवीत्ततः कर्णः क्षिप्रं गच्छन्तु भारत
अन्ये धूर्ततरा दक्षा निभृताः साधुकारिणः ८
चरन्तु देशान्संवीताः स्फीताञ्जनपदाकुलान्
तत्र गोष्ठीष्वथान्यासु सिद्धप्रव्रजितेषु च ९
परिचारेषु तीर्थेषु विविधेष्वाकरेषु च
विज्ञातव्या मनुष्यैस्तैस्तर्कया सुविनीतया १०
विविधैस्तत्परैः सम्यक्तज्ज्ञैर्निपुणसंवृतैः
अन्वेष्टव्याश्च निपुणं पांडवाश्छन्नवासिनः ११
नदीकुंजेषु तीर्थेषु ग्रामेषु नगरेषु च
आश्रमेषु च रम्येषु पर्वतेषु गुहासु च १२
अथाग्रजानंतरजः पापभावानुरागिणम्
ज्येष्ठं दुःशासनस्तत्र भ्राता भ्रातरमब्रवीत् १३
एतच्च कर्णो यत्प्राह सर्वमीक्षामहे तथा
यथोद्दिष्टं चराः सर्वे मृगयन्तु ततस्ततः
एते चान्ये च भूयांसो देशाद्देशं यथाविधि १४
न तु तेषां गतिर्वासः प्रवृत्तिश्चोपलभ्यते
अत्याहितं वा गूढास्ते पारं वोर्मिमतो गताः १५
व्यालैर्वापि महारण्ये भक्षिताः शूरमानिनः
अथ वा विषमं प्राप्य विनष्टाः शाश्वतीः समाः १६
तस्मान्मानसमव्यग्रं कृत्वा त्वं कुरुनंदन
कुरु कार्यं यथोत्साहं मन्यसे यन्नराधिप १७
इति श्रीमहाभारते विराटपर्वणि पञ्चविंशोऽध्यायः २५

षड्विंशोऽध्यायः

वैशम्पायन उवाच
अथाब्रवीन्महावीर्यो द्रोणस्तत्त्वार्थदर्शिवान्
न तादृशा विनश्यंन्ति नापि यान्ति पराभवम् १
शूराश्च कृतविद्याश्च बुद्धिमन्तो जितेंद्रियाः
धर्मज्ञाश्च कृतज्ञाश्च धर्मराजमनुव्रताः २
नीतिधर्मार्थतत्त्वज्ञं पितृवच्च समाहितम्

धर्मे स्थितं सत्यधृतिं ज्येष्ठं ज्येष्ठापचायिनम् ३
अनुव्रता महात्मानं भ्रातरं भ्रातरो नृप
अजातशत्रुं ह्रीमंतं तं च भ्रातॄननुव्रतम् ४
तेषां तथा विधेयानां निभृतानां महात्मनाम्
किमर्थं नीतिमान्पार्थः श्रेयो नैषां करिष्यति ५
तस्माद्यत्नात्प्रतीक्षन्ते कालस्योदयमागतम्
न हि ते नाशमृच्छेयुरिति पश्याम्यहं धिया ६
सांप्रतं चैव यत्कार्यं तच्च क्षिप्रमकालिकम्
क्रियतां साधु संचिन्त्य वासश्चैषां प्रचिन्त्यताम् ७
यथावत्पाण्डुपुत्राणां सर्वार्थेषु धृतात्मनाम्
दुर्ज्ञेयाः खलु शूरास्ते अपापास्तपसा वृताः ८
शुद्धात्मा गुणवान्पार्थः सत्यवान्नीतिमाञ्शुचिः
तेजोराशिरसंख्येयो गृह्णीयादपि चक्षुषी ९
विज्ञाय क्रियतां तस्माद्भूयश्च मृगयामहे
ब्राह्मणैश्चारकैः सिद्धैर्ये चान्ये तद्विदो जनाः १०
इति श्रीमहाभारते विराटपर्वणि षड्विंशोऽध्यायः २६

सप्तविंशोऽध्यायः

वैशम्पायन उवाच
ततः शांतनवो भीष्मो भरतानां पितामहः
श्रुतवान्देशकालज्ञस्तत्त्वज्ञः सर्वधर्मवित् १
आचार्यवाक्योपरमे तद्वाक्यमभिसंदधत्
हितार्थं स उवाचेमां भारतीं भारतान्प्रति २
युधिष्ठिरे समासक्तां धर्मज्ञे धर्मसंश्रिताम्
असत्सु दुर्लभां नित्यं सतां चाभिमतां सदा
भीष्मः समवदत्तत्र गिरं साधुभिरर्चिताम् ३
यथैष ब्राह्मणः प्राह द्रोणः सर्वार्थतत्त्ववित्
सर्वलक्षणसंपन्नाः नाशं नार्हन्ति पांडवाः ४
श्रुतवृत्तोपसंपन्नाः साधुव्रतसमन्विताः
वृद्धानुशासने मग्नाः सत्यव्रतपरायणाः ५

समयं समयज्ञास्ते पालयन्तः शुचिव्रताः
नावसीदितुमर्हंति उद्वहंतः सतां धुरम् ६
धर्मतश्चैव गुप्तास्ते स्ववीर्येण च पांडवाः
न नाशमधिगच्छेयुरिति मे धीयते मतिः ७
तत्र बुद्धिं प्रणेश्यामि पांडवान्प्रति भारत
न तु नीतिः सुनीतस्य शक्यतेऽन्वेषितुं परः ८
यत्तु शक्यमिहास्माभिस्तान्वै संचिंत्य पांडवान्
बुद्ध्या प्रवक्तुं न द्रोहात्प्रवक्ष्यामि निबोध तत् ९
सा त्वियं साधु वक्तव्या न त्वनीतिः कथंचन
वृद्धानुशासने तात तिष्ठतः सत्यशीलिनः १०
अवश्यं त्विह धीरेण सतां मध्ये विवक्षता
यथामति विवक्तव्यं सर्वशो धर्मलिप्सया ११
तत्र नाहं तथा मन्ये यथायमितरो जनः
पुरे जनपदे वापि यत्र राजा युधिष्ठिरः १२
नासूयको न चापीर्षुर्नातिवादी न मत्सरी
भविष्यति जनस्तत्र स्वं स्वं धर्ममनुव्रतः १३
ब्रह्मघोषाश्च भूयांसः पूर्णाहुत्यस्तथैव च
क्रतवश्च भविष्यन्ति भूयांसो भूरिदक्षिणाः १४
सदा च तत्र पर्जन्यः सम्यग्वर्षी न संशयः
संपन्नसस्या च मही निरीतीका भविष्यति १५
रसवन्ति च धान्यानि गुणवन्ति फलानि च
गन्धवन्ति च माल्यानि शुभशब्दा च भारती १६
वायुश्च सुखसंस्पर्शो निष्प्रतीपं च दर्शनम्
भयं नाभ्याविशेत्तत्र यत्र राजा युधिष्ठिरः १७
गावश्च बहुलास्तत्र न कृशा न च दुर्दुहाः
पयांसि दधिसर्पींषि रसवन्ति हितानि च १८
गुणवन्ति च पानानि भोज्यानि रसवन्ति च
तत्र देशे भविष्यंति यत्र राजा युधिष्ठिरः १९
रसाः स्पर्शाश्च गंधाश्च शब्दाश्चापि गुणान्विताः
दृश्यानि च प्रसन्नानि यत्र राजा युधिष्ठिरः २०

स्वैः स्वैर्गुणैः सुसंयुक्तास्तस्मिन्वर्षे त्रयोदशे
देशे तस्मिन्भविष्यन्ति तात पांडवसंयुते २१
संप्रीतिमाञ्जनस्तत्र संतुष्टः शुचिरव्ययः
देवतातिथिपूजासु सर्वभूतानुरागवान् २२
इष्टदानो महोत्साहः शश्वद्धर्मपरायणः
अशुभद्विट् शुभप्रेप्सुर्नित्ययज्ञः शुभव्रतः
भविष्यति जनस्तत्र यत्र राजा युधिष्ठिरः २३
त्यक्तवाक्यानृतस्तात शुभकल्याणमंगलः
शुभार्थेप्सुः शुभमतिर्यत्र राजा युधिष्ठिरः
भविष्यति जनस्तत्र नित्यं चेष्टप्रियव्रतः २४
धर्मात्मा स तदादृश्यः सोऽपि तात द्विजातिभिः
किं पुनः प्राकृतैः पार्थः शक्यो विज्ञातुमन्ततः २५
यस्मिन्सत्यं धृतिर्दानं परा शान्तिर्ध्रुवा क्षमा
ह्रीः श्रीः कीर्तिः परं तेज आनृशंस्यमथार्जवम् २६
तस्मात्तत्र निवासं तु छन्नं सत्रेण धीमतः
गतिं वा परमां तस्य नोत्सहे वक्तुमन्यथा २७
एवमेतत्तु संचिंत्य यत्कृतं मन्यसे हितम्
तत्क्षिप्रं कुरु कौरव्य यद्येवं श्रद्दधासि मे २८
इति श्रीमहाभारते विराटपर्वणि सप्तविंशोऽध्यायः २७

## अष्टाविंशोऽध्यायः

वैशम्पायन उवाच
ततः शारद्वतो वाक्यमित्युवाच कृपस्तदा
युक्तं प्राप्तं च वृद्धेन पांडवान्प्रति भाषितम् १
धर्मार्थसहितं श्लक्ष्णं तत्त्वतश्च सहेतुमत्
तत्रानुरूपं भीष्मेण ममाप्यत्र गिरं शृणु २
तेषां चैव गतिस्तीर्थैर्वासश्चैषां प्रचिंत्यताम्
नीतिर्विधीयतां चापि सांप्रतं या हिता भवेत् ३
नावज्ञेयो रिपुस्तात प्राकृतोऽपि बुभूषता
किं पुनः पांडवास्तात सर्वास्त्रकुशला रणे ४

तस्मात्सत्रं प्रविष्टेषु पांडवेषु महात्मसु
गूढभावेषु छन्नेषु काले चोदयमागते ५
स्वराष्ट्रपरराष्ट्रेषु ज्ञातव्यं बलमात्मनः
उदये पांडवानां च प्राप्ते काले न संशयः ६
निवृत्तसमयाः पार्था महात्मानो महाबलाः
महोत्साहा भविष्यन्ति पांडवा ह्यतितेजसः ७
तस्माद्बलं च कोशं च नीतिश्चापि विधीयताम्
यथा कालोदये प्राप्ते सम्यक्तैः संदधामहे ८
तात मन्यामि तत्सर्वं बुध्यस्व बलमात्मनः
नियतं सर्वमित्रेषु बलवत्स्वबलेषु च ९
उच्चावचं बलं ज्ञात्वा मध्यस्थं चापि भारत
प्रहृष्टमप्रहृष्टं च संदधाम तथा परैः १०
साम्ना भेदेन दानेन दंडेन बलिकर्मणा
न्यायेनानम्य च परान्बलाच्चानम्य दुर्बलान् ११
सांत्वयित्वा च मित्राणि बलं चाभाष्यतां सुखम्
सकोशबलसंवृद्धः सम्यक्सिद्धिमवाप्स्यसि १२
योत्स्यसे चापि बलिभिररिभिः प्रत्युपस्थितैः
अन्यैस्त्वं पांडवैर्वापि हीनस्वबलवाहनैः १३
एवं सर्वं विनिश्चित्य व्यवसायं स्वधर्मतः
यथाकालं मनुष्येन्द्र चिरं सुखमवाप्स्यसि १४
इति श्रीमहाभारते विराटपर्वणि अष्टाविंशोऽध्यायः २८

## एकोनत्रिंशोऽध्यायः

वैशम्पायन उवाच
अथ राजा त्रिगर्तानां सुशर्मा रथयूथपः
प्राप्तकालमिदं वाक्यमुवाच त्वरितो भृशम् १
असकृन्निकृतः पूर्वं मत्स्यैः साल्वेयकैः सह
सूतेन चैव मत्स्यस्य कीचकेन पुनः पुनः २
बाधितो बन्धुभिः सार्धं बलाद्बलवता विभो
स कर्णमभ्युदीक्ष्याथ दुर्योधनमभाषत ३

असकृन्मत्स्यराज्ञा मे राष्ट्रं बाधितमोजसा
प्रणेता कीचकश्चास्य बलवानभवत्पुरा ४
क्रूरोऽमर्षी स दुष्टात्मा भुवि प्रख्यातविक्रमः
निहतस्तत्र गंधर्वैः पापकर्मा नृशंसवान् ५
तस्मिंश्च निहते राजन्हीनदर्पो निराश्रयः
भविष्यति निरुत्साहो विराट इति मे मतिः ६
तत्र यात्रा मम मता यदि ते रोचतेऽनघ
कौरवाणां च सर्वेषां कर्णस्य च महात्मनः ७
एतत्प्राप्तमहं मन्ये कार्यमात्ययिकं हितम्
राष्ट्रं तस्याभियात्वाशु बहुधान्यसमाकुलम् ८
आददामोऽस्य रत्नानि विविधानि वसूनि च
ग्रामान्राष्ट्राणि वा तस्य हरिष्यामो विभागशः ९
अथ वा गोसहस्राणि बहूनि च शुभानि च
विविधानि हरिष्यामः प्रतिपीड्य पुरं बलात् १०
कौरवैः सह संगम्य त्रिगर्तैश्च विशां पते
गास्तस्यापहरामाशु सह सर्वैः सुसंहताः ११
संधिं वा तेन कृत्वा तु निबध्नीमोऽस्य पौरुषम्
हत्वा चास्य चमूं कृत्स्नां वशमन्वानयामहे १२
तं वशे न्यायतः कृत्वा सुखं वत्स्यामहे वयम्
भवतो बलवृद्धिश्च भविष्यति न संशयः १३
तच्छ्रुत्वा वचनं तस्य कर्णो राजानमब्रवीत्
सूक्तं सुशर्मणा वाक्यं प्राप्तकालं हितं च नः १४
तस्मात्क्षिप्रं विनिर्यामो योजयित्वा वरूथिनीम्
विभज्य चाप्यनीकानि यथा वा मन्यसेऽनघ १५
प्रज्ञावान्कुरुवृद्धोऽय सर्वेषां नः पितामहः
आचार्यश्च तथा द्रोणः कृपः शारद्वतस्तथा १६
मन्यन्ते ते यथा सर्वे तथा यात्रा विधीयताम्
संमन्त्र्य चाशु गच्छामः साधनार्थं महीपतेः १७
किं च नः पाण्डवैः कार्यं हीनार्थबलपौरुषैः
अत्यर्थं वा प्रनष्टास्ते प्राप्ता वापि यमक्षयम् १८

यामो राजन्ननुद्विग्ना विराटविषयं वयम्
आदास्यामो हि गास्तस्य विविधानि वसूनि च १९
ततो दुर्योधनो राजा वाक्यमादाय तस्य तत्
वैकर्तनस्य कर्णस्य क्षिप्रमाज्ञापयत्स्वयम् २०
शासने नित्यसंयुक्तं दुःशासनमनन्तरम्
सह वृद्धैस्तु संमन्त्र्य क्षिप्रं योजय वाहिनीम् २१
यथोद्देशं तु गच्छामः सहिताः सर्वकौरवैः
सुशर्मा तु यथोद्दिष्टं देशं यातु महारथः २२
त्रिगर्तैः सहितो राजा समग्रबलवाहनः
प्रागेव हि सुसंवीतो मत्स्यस्य विषयं प्रति २३
जघन्यतो वयं तत्र यास्यामो दिवसान्तरम्
विषयं मत्स्यराजस्य सुसमृद्धं सुसंहताः २४
ते यात्वा सहसा तत्र विराटनगरं प्रति
क्षिप्रं गोपान्समासाद्य गृह्णन्तु विपुलं धनम् २५
गवां शतसहस्राणि श्रीमन्ति गुणवन्ति च
वयमपि निगृह्णीमो द्विधा कृत्वा वरूथिनीम् २६
स स्म गत्वा यथोद्दिष्टां दिशं वह्नेर्महीपतिः
आदत्त गाः सुशर्माथ घर्मपक्षस्य सप्तमीम् २७
अपरं दिवसं सर्वे राजन्संभूय कौरवाः
अष्टम्यां तान्यगृह्णन्त गोकुलानि सहस्रशः २८
इति श्रीमहाभारते विराटपर्वणि एकोनत्रिंशोऽध्यायः २९

## त्रिंशोऽध्यायः

वैशम्पायन उवाच
ततस्तेषां महाराज तत्रैवामिततेजसाम्
छद्मलिगप्रविष्टानां पांडवानां महात्मनाम् १
व्यतीतः समयः सम्यग्वसतां वै पुरोत्तमे
कुर्वतां तस्य कर्माणि विराटस्य महीपतेः २
ततस्त्रयोदशस्यान्ते तस्य वर्षस्य भारत
सुशर्मणा गृहीतं तु गोधनं तरसा बहु ३

ततो जवेन महता गोपाः पुरमथाऽव्रजन्
अपश्यन्मत्स्यराजं च रथात्प्रस्कंद्य कुंडली ४
शूरैः परिवृतं योधैः कुंडलांगदधारिभिः
सद्भिश्च मंत्रिभिः सार्धं पांडवैश्च नरर्षभैः ५
तं सभायां महाराजमासीनं राष्ट्रवर्धनम्
सोऽब्रवीदुपसंगम्य विराटं प्रणतस्तदा ६
अस्मान्युधि विनिर्जित्य परिभूय सबांधवान्
गवां शतसहस्राणि त्रिगर्ताः कालयन्ति ते
तान्परीप्स मनुष्येन्द्र मा नेशुः पशवस्तव ७
तच्छ्रुत्वा नृपतिः सेनां मत्स्यानां समयोजयत्
रथनागाश्वकलिलां पत्तिध्वजसमाकुलाम् ८
राजानो राजपुत्राश्च तनुत्राण्यत्र भेजिरे
भानुमन्ति विचित्राणि सूपसेव्यानि भागशः ९
सवज्रायसगर्भं तु कवचं तप्तकांचनम्
विराटस्य प्रियो भ्राता शतानीकोऽभ्यहारयत् १०
सर्वपारसवं वर्म कल्याणपटलं दृढम्
शतानीकादवरजो मदिराश्वोऽभ्यहारयत् ११
शतसूर्यं शतावर्तं शतबिंदु शताक्षिमत्
अभेद्यकल्पं मत्स्यानां राजा कवचमाहरत् १२
उत्सेधे यस्य पद्मानि शतं सौगंधिकानि च
सुवर्णपृष्ठं सूर्याभं सूर्यदत्तोऽभ्यहारयत् १३
दृढमायसगर्भं तु श्वेतं वर्म शताक्षिमत्
विराटस्य सुतो ज्येष्ठो वीरः शंखोऽभ्यहारयत् १४
शतशश्च तनुत्राणि यथास्वानि महारथाः
योत्स्यमानाभ्यनह्यन्त देवरूपाः प्रहारिणः १५
सूपस्करेषु शुभ्रेषु महत्सु च महारथाः
पृथक्कांचनसन्नाहान्रथेष्वश्वानयोजयन् १६
सूर्यचंद्रप्रतीकाशो रथे दिव्ये हिरण्मयः
महानुभावो मत्स्यस्य ध्वज उच्छिश्रिये तदा १७
अथान्यान्विविधाकारान्ध्वजान्हेमविभूषितान्

यथास्वं क्षत्रियाः शूरा रथेषु समयोजयन् १८
अथ मत्स्योऽब्रवीद्राजा शतानीकं जघन्यजम्
कंकबल्लवगोपाला दामग्रंथिश्च वीर्यवान्
युध्येयुरिति मे बुद्धिर्वर्तते नाऽत्रसंशयः १९
एतेषामपि दीयन्तां रथा ध्वजपताकिनः
कवचानि विचित्राणि दृढानि च मृदूनि च
प्रतिमुञ्चन्तु गात्रेषु दीयन्तामायुधानि च २०
वीरांगरूपाः पुरुषा नागराजकरोपमाः
नेमे जातु न युध्येरन्निति मे धीयते मतिः २१
एतच्छ्रुत्वा तु नृपतेर्वाक्यं त्वरितमानसः
शतानीकस्तु पार्थेभ्यो रथान्राजन्समादिशत्
सहदेवाय राज्ञे च भीमाय नकुलाय च २२
तान्प्रहृष्टास्ततः सूता राजभक्तिपुरस्कृताः
निर्दिष्टान्नरदेवेन रथाञ्शीघ्रमयोजयन् २३
कवचानि विचित्राणि दृढानि च मृदूनि च
विराटः प्रादिशद्यानि तेषामक्लिष्टकर्मणाम्
तान्यामुच्य शरीरेषु दंशितास्ते परंतपाः २४
तरस्विनश्छन्नरूपाः सर्वे युद्धविशारदाः
विराटमन्वयुः पश्चात्सहिताः कुरुपुंगवाः
चत्वारो भ्रातरः शूराः पांडवाः सत्यविक्रमाः २५
भीमाश्च मत्तमातंगाः प्रभिन्नकरटामुखाः
क्षरन्त इव जीमूताः सुदंताः षष्टिहायनाः २६
स्वारूढा युद्धकुशलैः शिक्षितैर्हस्तिसादिभिः
राजानमन्वयुः पश्चाच्चलन्त इव पर्वताः २७
विशारदानां वश्यानां हृष्टानां चानुयायिनाम्
अष्टौ रथसहस्राणि दश नागशतानि च
षष्टिश्चाश्वसहस्राणि मत्स्यानामभिनिर्ययुः २८
तदनीकं विराटस्य शुशुभे भरतर्षभ
संप्रयातं महाराज निनीषन्तं गवां पदम् २९
तद्बलाग्र्यं विराटस्य संप्रस्थितमशोभत

दृढायुधजनाकीर्णं गजाश्वरथसंकुलम् ३०
इति श्रीमहाभारते विराटपर्वणि त्रिंशोऽध्यायः ३०

एक त्रिंशोऽध्यायः

वैशम्पायन उवाच
निर्याय नगराच्छूरा व्यूढानीकाः प्रहारिणः
त्रिगर्तानस्पृशन्मत्स्याः सूर्ये परिणते सति १
ते त्रिगर्ताश्च मत्स्याश्च संरब्धा युद्धदुर्मदाः
अन्योन्यमभिगर्जन्तो गोषु गृद्धा महाबलाः २
भीमाश्च मत्तमातंगास्तोमरांकुशचोदिताः
ग्रामणीयैः समारूढाः कुशलैर्हस्तिसादिभिः ३
तेषां समागमो घोरस्तुमुलो लोमहर्षणः
देवासुरसमो राजन्नासीत्सूर्ये विलम्बति ४
उदतिष्ठद्रजो भौमं न प्रज्ञायत किंचन
पक्षिणश्चापतन्भूमौ सैन्येन रजसावृताः ५
इषुभिर्व्यतिसंयद्भिरादित्योऽन्तरधीयत
खद्योतैरिव संयुक्तमन्तरिक्षं व्यराजत ६
रुक्मपृष्ठानि चापानि व्यतिषक्तानि धन्विनाम्
पततां लोकवीराणां सव्यदक्षिणमस्यताम् ७
रथा रथैः समाजग्मुः पादातैश्च पदातयः
सादिभिः सादिनश्चैव गजैश्चापि महागजाः ८
असिभिः पट्टिशैः प्रासैः शक्तिभिस्तोमरैरपि
संरब्धाः समरे राजन्निजघ्नुरितरेतरम् ९
निघ्नन्तः समरेऽन्योन्यं शूराः परिघबाहवः
न शेकुरभिसंरब्धाः शूरान्कर्तुं पराङ्मुखान् १०
क्लृप्तोत्तरोष्ठं सुनसं क्लृप्तकेशमलंकृतम्
अदृश्यत शिरश्छिन्नं रजोध्वस्तं सकुण्डलम् ११
अदृश्यंस्तत्र गात्राणि शरैश्छिन्नानि भागशः
शालस्कन्धनिकाशानि क्षत्रियाणां महामृधे १२
नागभोगनिकाशैश्च बाहुभिश्चन्दनोक्षितैः

आकीर्णा वसुधा तत्र शिरोभिश्च सकुण्डलैः १३
उपशाम्यद्रजो भौमं रुधिरेण प्रसर्पता
कश्मलं प्राविशद्घोरं निर्मर्यादमवर्तत १४
शतानीकः शतं हत्वा विशालाक्षश्चतुःशतम्
प्रविष्टौ महतीं सेनां त्रिगर्तानां महारथौ
आर्च्छेतां बहुसंरब्धा केशाकेशि नखानखि १५
लक्षयित्वा त्रिगर्तानां तौ प्रविष्टौ रथव्रजम्
जग्मतुः सूर्यदत्तश्च मदिराश्वश्च पृष्ठतः १६
विराटस्तत्र संग्रामे हत्वा पंचशतान्रथान्
हयानां च शतान्यत्र हत्वा पंच महारथान् १७
चरन्स विविधान्मार्गान्रथेषु रथयूथपः
त्रिगर्तानां सुशर्माणमार्च्छद्रुक्मरथं रणे १८
तौ व्यावहरतां तत्र महात्मानौ महाबलौ
अन्योन्यमभिगर्जन्तौ गोष्ठे गोवृषभाविव १९
ततो रथाभ्यां रथिनौ व्यतियाय समन्ततः
शरान्व्यसृजतां शीघ्रं तोयधारा घनाविव २०
अन्योन्यं चातिसंरब्धौ विचेरतुरमर्षणौ
कृतास्त्रौ निशितैर्बाणैरसिशक्तिगदाभृतौ २१
ततो राजा सुशर्माणं विव्याध दशभिः शरैः
पंचभिः पंचभिश्चास्य विव्याध चतुरो हयान् २२
तथैव मत्स्यराजानं सुशर्मा युद्धदुर्मदः
पञ्चाशता शितैर्बाणैर्विव्याध परमास्त्रवित् २३
ततः सैन्यं समावृत्य मत्स्यराजसुशर्मणोः
नाभ्यजानंस्तदान्योन्यं प्रदोषे रजसावृते २४
इति श्रीमहाभारते विराटपर्वणि एकत्रिंशोऽध्यायः ३१

## द्वात्रिंशोऽध्यायः

वैशम्पायन उवाच
तमसाभिप्लुते लोके रजसा चैव भारत
व्यतिष्ठन्वै मुहूर्तं तु व्यूढानीकाः प्रहारिणः १

ततोऽन्धकारं प्रणुदन्नुदतिष्ठत चन्द्रमाः
कुर्वाणो विमलां रात्रिं नन्दयन्क्षत्रियान्युधि २
ततः प्रकाशमासाद्य पुनर्युद्धमवर्तत
घोररूपं ततस्ते स्म नावेक्षन्त परस्परम् ३
ततः सुशर्मा त्रैगर्तः सह भ्रात्रा यवीयसा
अभ्यद्रवन्मत्स्यराजं रथव्रातेन सर्वशः ४
ततो रथाभ्यां प्रस्कंद्य भ्रातरौ क्षत्रियर्षभौ
गदापाणी सुसंरब्धौ समभ्यद्रवतां हयान् ५
तथैव तेषां तु बलानि तानि क्रुद्धान्यथान्योन्यमभिद्रवन्ति
गदासिखड्गैश्च परश्वधैश्च प्रासैश्च तीक्ष्णाग्रसुपीतधारैः ६
बलं तु मत्स्यस्य बलेन राजा सर्वं त्रिगर्ताधिपतिः सुशर्मा
प्रमथ्य जित्वा च प्रसह्य मत्स्यं विराटमोजस्विनमभ्यधावत् ७
तौ निहत्य पृथग्धुर्यावुभौ च पार्ष्णिसारथी
विरथं मत्स्यराजानं जीवग्राहमगृह्णताम् ८
तमुन्मथ्य सुशर्मा तु रुदतीं वधुकामिव
स्यंदनं स्वं समारोप्य प्रययौ शीघ्रवाहनः ९
तस्मिन्गृहीते विरथे विराटे बलवत्तरे
प्राद्रवन्त भयान्मत्स्यास्त्रिगर्तैरर्दिता भृशम् १०
तेषु संत्रास्यमानेषु कुन्तीपुत्रो युधिष्ठिरः
अभ्यभाषन्महाबाहुं भीमसेनमरिंदमम् ११
मत्स्यराजः परामृष्टस्त्रिगर्तेन सुशर्मणा
तं मोक्षय महाबाहो न गच्छेद्द्विषतां वशम् १२
उषिताः स्मः सुखं सर्वे सर्वकामैः सुपूजिताः
भीमसेन त्वया कार्या तस्य वासस्य निष्कृतिः १३
भीमसेन उवाच
अहमेनं परित्रास्ये शासनात्तव पार्थिव
पश्य मे सुमहत्कर्म युध्यतः सह शत्रुभिः १४
स्वबाहुबलमाश्रित्य तिष्ठ त्वं भ्रातृभिः सह
एकांतमाश्रितो राजन्पश्य मेऽद्य पराक्रमम् १५
सुस्कंधोऽय महावृक्षो गदारूप इव स्थितः

एनमेव समारुज्य द्रावयिष्यामि शात्रवान् १६
वैशम्पायन उवाच
तं मत्तमिव मातंगं वीक्षमाणं वनस्पतिम्
अब्रवीद्भ्रातरं वीरं धर्मराजो युधिष्ठिरः १७
मा भीम साहसं कार्षीस्तिष्ठत्वेष वनस्पतिः
मा त्वा वृक्षेण कर्माणि कुर्वाणमतिमानुषम्
जनाः समवबुध्येरन्भीमोऽयमिति भारत १८
अन्यदेवायुधं किंचित्प्रतिपद्यस्व मानुषम्
चापं वा यदि वा शक्तिं निस्त्रिंशं वा परश्वधम् १९
यदेव मानुषं भीम भवेदन्यैरलक्षितम्
तदेवायुधमादाय मोक्षयाशु महीपतिम् २०
यमौ च चक्ररक्षौ ते भवितारौ महाबलौ
व्यूहतः समरे तात मत्स्यराजं परीप्सतः २१
ततः समस्तास्ते सर्वे तुरगानभ्यचोदयन्
दिव्यमस्त्रं विकुर्वाणास्त्रिगर्तान्प्रत्यमर्षणाः २२
तान्निवृत्तरथान्दृष्ट्वा पांडवान्सा महाचमूः
वैराटी परमक्रुद्धा युयुधे परमाद्भुतम् २३
सहस्रं न्यवधीत्तत्र कुन्तीपुत्रो युधिष्ठिरः
भीमः सप्तशतान्योधान्परलोकमदर्शयत्
नकुलश्चापि सप्तैव शतानि प्राहिणोच्छरैः २४
शतानि त्रीणि शूराणां सहदेवः प्रतापवान्
युधिष्ठिरसमादिष्टो निजघ्ने पुरुषर्षभः
भित्त्वा तां महतीं सेनां त्रिगर्तानां नरर्षभ २५
ततो युधिष्ठिरो राजा त्वरमाणो महारथः
अभिद्रुत्य सुशर्माणं शरैरभ्यतुदद्भृशम् २६
सुशर्मापि सुसंक्रुद्धस्त्वरमाणो युधिष्ठिरम्
अविध्यन्नवभिर्बाणैश्चतुर्भिश्चतुरो हयान् २७
ततो राजन्नाशुकारी कुंतीपुत्रो वृकोदरः
समासाद्य सुशर्माणमश्वानस्य व्यपोथयत् २८
पृष्ठगोपौ च तस्याथ हत्वा परमसायकैः

अथास्य सारथिं क्रुद्धो रथोपस्थादपाहरत् २९
चक्ररक्षश्च शूरश्च शोणाश्वो युधि विश्रुतः
स भयाद्द्वैरथं दृष्ट्वा त्रैगर्तं प्राजहत्तदा ३०
ततो विराटः प्रस्कन्द्य रथादथ सुशर्मणः
गदामस्य परामृश्य तमेवाजघ्निवान्बली
स चचार गदापाणिर्वृद्धोऽपि तरुणो यथा ३१
भीमस्तु भीमसंकाशो रथात्प्रस्कन्द्य कुण्डली
त्रिगर्तराजमादत्त सिंहः क्षुद्रमृगं यथा ३२
तस्मिन्गृहीते विरथे त्रिगर्तानां महारथे
अभज्यत बलं सर्वं त्रैगर्तं तद्भयातुरम् ३३
निवर्त्य गास्ततः सर्वाः पाण्डुपुत्रा महाबलाः
अवजित्य सुशर्माणं धनं चादाय सर्वशः ३४
स्वबाहुबलसंपन्ना ह्रीनिषेधा यतव्रताः
संग्रामशिरसो मध्ये तां रात्रिं सुखिनोऽवसन् ३५
ततो विराटः कौन्तेयानतिमानुषविक्रमान्
अर्चयामास वित्तेन मानेन च महारथान् ३६
विराट उवाच
यथैव मम रत्नानि युष्माकं तानि वै तथा
कार्यं कुरुत तैः सर्वे यथाकामं यथासुखम् ३७
ददान्यलंकृताः कन्या वसूनि विविधानि च
मनसश्चाप्यभिप्रेतं यद्वः शत्रुनिबर्हणाः ३८
युष्माकं विक्रमादद्य मुक्तोऽहं स्वस्तिमानिह
तस्माद्भवन्तो मत्स्यानामीश्वराः सर्व एव हि ३९
वैशम्पायन उवाच
तथाभिवादिनं मत्स्यं कौरवेयाः पृथक् पृथक्
ऊचुः प्राञ्जलयः सर्वे युधिष्ठिरपुरोगमाः ४०
प्रतिनन्दाम ते वाक्यं सर्वं चैव विशां पते
एतेनैव प्रतीताः स्मो यत्त्वं मुक्तोऽद्य शत्रुभिः ४१
अथाब्रवीत्प्रीतमना मत्स्यराजो युधिष्ठिरम्
पुनरेव महाबाहुर्विराटो राजसत्तमः

एहि त्वामभिषेक्ष्यामि मत्स्यराजोऽस्तु नो भवान् ४२
मनसश्चाप्यभिप्रेतं यत्ते शत्रुनिबर्हण
तत्तेऽह संप्रदास्यामि सर्वमर्हति नो भवान् ४३
रत्नानि गाः सुवर्णं च मणिमुक्तमथापि वा
वैयाघ्रपद्य विप्रेन्द्र सर्वथैव नमोऽस्तु ते ४४
त्वत्कृते ह्यद्य पश्यामि राज्यमात्मानमेव च
यतश्च जातसंरम्भः स च शत्रुवशं गतः ४५
ततो युधिष्ठिरो मत्स्यं पुनरेवाभ्यऽभाषत
प्रतिनन्दामि ते वाक्यं मनोज्ञं मत्स्य भाषसे ४६
आनृशंस्यपरो नित्यं सुसुखः सततं भव
गच्छन्तु दूतास्त्वरितं नगरं तव पार्थिव
सुहृदां प्रियमाख्यातुं घोषयन्तु च ते जयम् ४७
ततस्तद्वचनान्मत्स्यो दूतान्राजा समादिशत्
आचक्षध्वं पुरं गत्वा संग्रामे विजयं मम ४८
कुमाराः समलंकृत्य पर्यागच्छन्तु मे पुरात्
वादित्राणि च सर्वाणि गणिकाश्च स्वलंकृताः ४९
ते गत्वा केवलां रात्रिमथ सूर्योदयं प्रति
विराटस्य पुराभ्याशे दूता जयमघोषयन् ५०
इति श्रीमहाभारते विराटपर्वणि द्वात्रिंशोऽध्यायः ३२

## त्रयस्त्रिंशोऽध्यायः

वैशम्पायन उवाच
याते त्रिगर्तं मत्स्ये तु पशूंस्तान्स्वान्परीप्सति
दुर्योधनः सहामात्यो विराटमुपयादथ १
भीष्मो द्रोणश्च कर्णश्च कृपश्च परमास्त्रवित्
द्रौणिश्च सौबलश्चैव तथा दुःशासनः प्रभुः २
विविंशतिर्विकर्णश्च चित्रसेनश्च वीर्यवान्
दुर्मुखो दुःसहश्चैव ये चैवाऽन्ये महारथाः ३
एते मत्स्यानुपागम्य विराटस्य महीपतेः
घोषान्विद्राव्य तरसा गोधनं जह्रुरोजसा ४

षष्टिं गवां सहस्राणि कुरवः कालयन्ति ते
महता रथवंशेन परिवार्य समन्ततः ५
गोपालानां तु घोषेषु हन्यतां तैर्महारथैः
आरावः सुमहानासीत्संप्रहारे भयंकरे ६
गवाध्यक्षस्तु संत्रस्तो रथमास्थाय सत्वरः
जगाम नगरायैव परिक्रोशंस्तदार्तवत् ७
स प्रविश्य पुरं राज्ञो नृपवेश्माभ्ययात्ततः
अवतीर्य रथात्तूर्णमाख्यातुं प्रविवेश ह ८
दृष्ट्वा भूमिंजयं नाम पुत्रं मत्स्यस्य मानिनम्
तस्मैतत्सर्वमाचष्ट राष्ट्रस्य पशुकर्षणम् ९
षष्टिं गवां सहस्राणि कुरवः कालयन्ति ते
तद्विजेतुं समुत्तिष्ठ गोधनं राष्ट्रवर्धनम् १०
राजपुत्र हितप्रेप्सुः क्षिप्रं निर्याहि वै स्वयम्
त्वां हि मत्स्यो महीपालः शून्यपालमिहाकरोत् ११
त्वया परिषदो मध्ये श्लाघते स नराधिपः
पुत्रो ममानुरूपश्च शूरश्चेति कुलोद्वहः १२
इष्वस्त्रे निपुणो योधः सदा वीरश्च मे सुतः
तस्य तत्सत्यमेवास्तु मनुष्येन्द्रस्य भाषितम् १३
आवर्तय कुरूञ्जित्वा पशून्पशुमतां वर
निर्दहैषामनीकानि भीमेन शरतेजसा १४
धनुश्च्युतै रुक्मपुंखैः शरैः सन्नतपर्वभिः
द्विषतां भिन्ध्यनीकानि गजानामिव यूथपः १५
पाशोपधानां ज्यातंत्रीं चापदण्डां महास्वनाम्
शरवर्णां धनुर्वीणां शत्रुमध्ये प्रवादय १६
श्वेता रजतसंकाशा रथे युज्यन्तु ते हयाः
ध्वजं च सिंहं सौवर्णमुच्छ्रयन्तु तवाभिभोः १७
रुक्मपुंखाः प्रसन्नाग्रा मुक्ता हस्तवता त्वया
छादयन्तु शराः सूर्य राज्ञामायुर्निरोधिनः १८
रणे जित्वा कुरून्सर्वान्वज्रपाणिरिवासुरान्
यशो महादवाप्य त्वं प्रविशेदं पुरं पुनः १९

त्वं हि राष्ट्रस्य परमा गतिर्मत्स्यपतेः सुतः
गतिमन्तो भवन्त्वद्य सर्वे विषयवासिनः २०
स्त्रीमध्य उक्तस्तेनासौ तद्वाक्यमभयंकरम्
अन्तःपुरे श्लाघमान इदं वचनमब्रवीत् २१
इति श्रीमहाभारते विराटपर्वणि त्रयस्त्रिंशोऽध्यायः ३३

## चतुस्त्रिंशोऽध्यायः

उत्तर उवाच
अद्याहमनुगच्छेयं दृढधन्वा गवां पदम्
यदि मे सारथिः कश्चिद्भवेदश्वेषु कोविदः १
तमेव नाधिगच्छामि यो मे यन्ता भवेन्नरः
पश्यध्वं सारथिं क्षिप्रं मम युक्तं प्रयास्यतः २
अष्टाविंशतिरात्रं वा मासं वा नूनमन्ततः
यत्तदासीन्महद्युद्धं तत्र मे सारथिर्हतः ३
स लभेयं यदि त्वन्यं हययानविदं नरम्
त्वरावानद्य यात्वाहं समुच्छ्रितमहाध्वजम् ४
विगाह्य तत्परानीकं गजवाजिरथाकुलम्
शस्त्रप्रतापनिर्वीर्यान्कुरूञ्जित्वाऽनये पशून् ५
दुर्योधनं शान्तनवं कर्णं वैकर्तनं कृपम्
द्रोणं च सह पुत्रेण महेष्वासान्समागतान् ६
वित्रासयित्वा संग्रामे दानवानिव वज्रभृत्
अनेनैव मुहूर्तेन पुनः प्रत्यानये पशून् ७
शून्यमासाद्य कुरवः प्रयान्त्यादाय गोधनम्
किं नु शक्यं मया कर्तुं यदहं तत्र नाभवम् ८
पश्येयुरद्य मे वीर्यं कुरवस्ते समागताः
किं नु पार्थोऽर्जुनः साक्षादयमस्मान्प्रबाधते ९
वैशम्पायन उवाच
तस्य तद्वचनं स्त्रीषु भाषतः स्म पुनः पुनः
नामर्षयत पाञ्चाली बीभत्सोः परिकीर्तनम् १०
अथैनमुपसंगम्य स्त्रीमध्यात्सा तपस्विनी

व्रीडमानेव शनकैरिदं वचनमब्रवीत् ११
योऽसौ बृहद्वारणाभो युवा सुप्रियदर्शनः
बृहन्नडेति विख्यातः पार्थस्यासीत्स सारथिः १२
धनुष्यनवरश्चासीत्तस्य शिष्यो महात्मनः
दृष्टपूर्वो मया वीर चरन्त्या पाण्डवान्प्रति १३
यदा तत्पावको दावमदहत्खाण्डवं महत्
अर्जुनस्य तदानेन संगृहीता हयोत्तमाः १४
तेन सारथिना पार्थः सर्वभूतानि सर्वशः
अजयत्खाण्डवप्रस्थे न हि यन्तास्ति तादृशः १५
येयं कुमारी सुश्रोणी भगिनी ते यवीयसी
अस्याः स वचनं वीर करिष्यति न संशयः १६
यदि वै सारथिः स स्यात्कुरून्सर्वानसंशयम्
जित्वा गाश्च समादाय ध्रुवमागमनं भवेत् १७
एवमुक्तः स सैरन्ध्र्या भगिनीं प्रत्यभाषत
गच्छ त्वमनवद्याङ्गि तामानय बृहन्नडाम् १८
सा भ्रात्रा प्रेषिता शीघ्रमगच्छन्नर्तनागृहम्
यत्रास्ते स महाबाहुश्छन्नः सत्रेण पाण्डवः १९
इति श्रीमहाभारते विराटपर्वणि चतुस्त्रिंशोऽध्यायः ३४

पञ्चत्रिंशोऽध्यायः

वैशम्पायन उवाच
स तां दृष्ट्वा विशालाक्षीं राजपुत्रीं सखीं सखा
प्रहसन्नब्रवीद्राजन्कुत्रागमनमित्युत १
तमब्रवीद्राजपुत्री समुपेत्य नरर्षभम्
प्रणयं भावयन्ती स्म सखीमध्य इदं वचः २
गावो राष्ट्रस्य कुरुभिः काल्यन्ते नो बृहन्नडे
तान्विजेतुं मम भ्राता प्रयास्यति धनुर्धरः ३
नचिरं च हतस्तस्य संग्रामे रथसारथिः
तेन नास्ति समः सूतो योऽस्य सारथ्यमाचरेत् ४
तस्मै प्रयतमानाय सारथ्यर्थं बृहन्नडे

आचचक्षे हयज्ञाने सैरन्ध्री कौशलं तव ५
सा सारथ्यं मम भ्रातुः कुरु साधु बृहन्नडे
पुरा दूरतरं गावो ह्रियन्ते कुरुभिर्हि नः ६
अथैतद्वचनं मेऽद्य नियुक्ता न करिष्यसि
प्रणयादुच्यमानां त्वं परित्यक्ष्यामि जीवितम् ७
एवमुक्तस्तु सुश्रोणया तया सख्या परंतपः
जगाम राजपुत्रस्य सकाशममितौजसः ८
तं सा व्रजन्त त्वरितं प्रभिन्नमिव कुञ्जरम्
अन्वगच्छद्विशालाक्षी शिशुर्गजवधूरिव ९
दूरादेव तु तं प्रेक्ष्य राजपुत्रोऽभ्यभाषत
त्वया सारथिना पार्थः खाण्डवेऽग्निमतर्पयत् १०
पृथिवीमजयत्कृत्स्नां कुन्तीपुत्रो धनंजयः
सैरन्ध्री त्वां समाचष्ट सा हि जानाति पाण्डवान् ११
संयच्छ मामकानश्वांस्तथैव त्वं बृहन्नडे
कुरुभिर्योत्स्यमानस्य गोधनानि परीप्सतः १२
अर्जुनस्य किलासीस्त्वं सारथिर्दयितः पुरा
त्वयाजयत्सहायेन पृथिवीं पाण्डवर्षभः १३
एवमुक्ता प्रत्युवाच राजपुत्रं बृहन्नडा
का शक्तिर्मम सारथ्यं कर्तुं संग्राममूर्धनि १४
गीतं वा यदि वा नृत्तं वादित्रं वा पृथग्विधम्
तत्करिष्यामि भद्रं ते सारथ्यं तु कुतो मयि १५
उत्तर उवाच
बृहन्नडे गायनो वा नर्तनो वा पुनर्भव
क्षिप्रं मे रथमास्थाय निगृह्णीष्व हयोत्तमान् १६
वैशम्पायनउवाच
स तत्र नर्मसंयुक्तमकरोत्पाण्डवो बहु
उत्तरायाः प्रमुखतः सर्वं जानन्नरिंदम १७
ऊर्ध्वमुत्क्षिप्य कवचं शरीरे प्रत्यमुञ्चत
कुमार्यस्तत्र तं दृष्ट्वा प्राहसन्पृथुलोचनाः १८
स तु दृष्ट्वा विमुह्यन्तं स्वयमेवोत्तरस्ततः

कवचेन महार्हेण समनह्यद्बृहन्नडाम् १९
स बिभ्रत्कवचं चाग्र्यं स्वयमप्यंशुमत्प्रभम्
ध्वजं च सिंहमुच्छ्रित्य सारथ्ये समकल्पयत् २०
धनूंषि च महार्हाणि बाणांश्च रुचिरान्बहून्
आदाय प्रययौ वीरः स बृहन्नडसारथिः २१
अथोत्तरा च कन्याश्च सख्यस्तामब्रुवंस्तदा
बृहन्नडे आनयेथा वासांसि रुचिराणि नः २२
पाञ्चालिकार्थं सूक्ष्माणि चित्राणि विविधानि च
विजित्य संग्रामगतान्भीष्मद्रोणमुखान्कुरून् २३
अथ ता ब्रुवतीः कन्याः सहिताः पांडुनन्दनः
प्रत्युवाच हसन्पार्थो मेघदुन्दुभिनिःस्वनः २४
यद्युत्तरोऽय संग्रामे विजेष्यति महारथान्
अथाहरिष्ये वासांसि दिव्यानि रुचिराणि च २५
एवमुक्त्वा तु बीभत्सुस्ततः प्राचोदयद्धयान्
कुरूनभिमुखाञ्शूरो नानाध्वजपताकिनः २६
इति श्रीमहाभारते विराटपर्वणि पञ्चत्रिंशोऽध्यायः ३५

## षट्त्रिंशोऽध्यायः

वैशम्पायन उवाच
स राजधान्या निर्याय वैराटिः पृथिवींजयः
प्रयाहीत्यब्रवीत्सूतं यत्र ते कुरवो गताः १
समवेतान्कुरून्यावज्जिगीषूनवजित्य वै
गाश्चैषां क्षिप्रमादाय पुनरायामि स्वं पुरम् २
ततस्तांश्चोदयामास सदश्वान्पाण्डुनन्दनः
ते हया नरसिंहेन चोदिता वातरंहसः
आलिखन्त इवाकाशमूहुः काञ्चनमालिनः ३
नातिदूरमथो यात्वा मत्स्यपुत्रधनंजयौ
अवेक्षेतामित्रघ्नौ कुरूणां बलिनां बलम्
श्मशानमभितो गत्वा आससाद कुरूनथ ४
तदनीकं महत्तेषां विबभौ सागरस्वनम्

सर्पमाणमिवाकाशे वनं बहुलपादपम् ५
ददृशे पार्थिवो रेणुर्जनितस्तेन सर्पता
दृष्टिप्रणाशो भूतानां दिवस्पृङ्नरसत्तम ६
तदनीकं महद्दृष्ट्वा गजाश्वरथसंकुलम्
कर्णदुर्योधनकृपैर्गुप्तं शान्तनवेन च ७
द्रोणेन च सपुत्रेण महेष्वासेन धीमता
हृष्टरोमा भयोद्विग्नः पार्थं वैराटिरब्रवीत् ८
नोत्सहे कुरुभिर्योद्धुं रोमहर्षं हि पश्य मे
बहुप्रवीरमत्युग्रं देवैरपि दुरासदम्
प्रतियोद्धुं न शक्ष्यामि कुरुसैन्यमनन्तकम् ९
नाशंसे भारतीं सेनां प्रवेष्टुं भीमकार्मुकाम्
रथनागाश्वकलिलां पत्तिध्वजसमाकुलाम्
दृष्ट्वैव हि परानाजावात्मा प्रव्यथतीव मे १०
यत्र द्रोणश्च भीष्मश्च कृपः कर्णो विविंशतिः
अश्वत्थामा विकर्णश्च सोमदत्तोऽथ बाह्लिकः ११
दुर्योधनस्तथा वीरो राजा च रथिनां वरः
द्युतिमन्तो महेष्वासाः सर्वे युद्धविशारदाः १२
दृष्ट्वैव हि कुरूनेतान्व्यूढानीकान्प्रहारिणः
हृषितानि च रोमाणि कश्मलं चागतं मम १३
वैशम्पायन उवाच
अवियातो वियातस्य मौर्ख्याद्धूर्तस्य पश्यतः
परिदेवयते मन्दः सकाशे सव्यसाचिनः १४
त्रिगर्तान्मे पिता यातः शून्ये संप्रणिधाय माम्
सर्वां सेनामुपादाय न मे सन्तीह सैनिकाः १५
सोऽहमेको बहून्बालः कृतास्त्रानकृतश्रमः
प्रतियोद्धुं न शक्ष्यामि निवर्तस्व बृहन्नडे १६
अर्जुन उवाच
भयेन दीनरूपोऽसि द्विषतां हर्षवर्धनः
न च तावत्कृतं किंचित्परैः कर्म रणाजिरे १७
स्वयमेव च मामात्थ वह मां कौरवान्प्रति

सोऽह त्वां तत्र नेष्यामि यत्रैते बहुला ध्वजाः १८
मध्यमामिषगृध्राणां कुरूणामाततायिनाम्
नेष्यामि त्वां महाबाहो पृथिव्यामपि युध्यताम् १९
तथा स्त्रीषु प्रतिश्रुत्य पौरुषं पुरुषेषु च
कत्थमानोऽभिनिर्याय किमर्थं न युयुत्ससे २०
न चेद्विजित्य गास्तास्त्वं गृहान्वै प्रतियास्यसि
प्रहसिष्यन्ति वीर त्वां नरा नार्यश्च संगताः २१
अहमप्यत्र सैरन्ध्र्या स्तुतः सारथ्यकर्मणि
न हि शक्ष्याम्यनिर्जित्य गाः प्रयातुं पुरं प्रति २२
स्तोत्रेण चैव सैरन्ध्र्यास्तव वाक्येन तेन च
कथं न युध्येयमहं कुरून्सर्वान्स्थिरो भव २३
उत्तर उवाच
कामं हरन्तु मत्स्यानां भूयांसं कुरवो धनम्
प्रहसन्तु च मां नार्यो नरा वापि बृहन्नडे २४
वैशम्पायन उवाच
इत्युक्त्वा प्राद्रवद्भीतो रथात्प्रस्कन्द्य कुण्डली
त्यक्त्वा मानं स मन्दात्मा विसृज्य सशरं धनुः २५
बृहन्नडोवाच
नैष पूर्वैः स्मृतो धर्म क्षत्रियस्य पलायनम्
श्रेयस्ते मरणं युद्धे न भीतस्य पलायनम् २६
वैशम्पायन उवाच
एवमुक्त्वा तु कौन्तेयः सोऽवप्लुत्य रथोत्तमात्
तमन्वधावद्धावन्तं राजपुत्रं धनंजयः
दीर्घां वेणीं विधुन्वानः साधु रक्ते च वाससी २७
विधूय वेणीं धावन्तमजानन्तोऽर्जुनं तदा
सैनिकाः प्राहसन्केचित्तथारूपमवेक्ष्य तम् २८
तं शीघ्रमभिधावन्तं संप्रेक्ष्य कुरवोऽब्रुवन्
क एष वेषप्रच्छन्नो भस्मनेव हुताशनः २९
किंचिदस्य यथा पुंसः किंचिदस्य यथा स्त्रियः
सारूप्यमर्जुनस्येव क्लीबरूपं बिभर्ति च ३०

तदेवैतच्छिरोग्रीवं तौ बाहू परिघोपमौ
तद्वदेवास्य विक्रान्तं नायमन्यो धनंजयात् ३१
अमरेष्विव देवेन्द्रो मानुषेषु धनंजयः
एकः कोऽस्मानुपायायादन्यो लोके धनञ्जयात् ३२
एकः पुत्रो विराटस्य शून्ये सन्निहितः पुरे
स एष किल निर्यातो बालभावान्न पौरुषात् ३३
सत्रेण नूनं छन्नं हि चरन्तं पार्थमर्जुनम्
उत्तरः सारथिं कृत्वा निर्यातो नगराद्बहिः ३४
स नो मन्ये ध्वजान्दृष्ट्वा भीत एष पलायति
तं नूनमेष धावन्तं जिघृक्षति धनंजयः ३५
इति स्म कुरवः सर्वे विमृशन्तः पृथक्पृथक्
न च व्यवसितुं किंचिदुत्तरं शक्नुवन्ति ते
छन्नं तथा तं सत्रेण पाण्डवं प्रेक्ष्य भारत ३६
उत्तरं तु प्रधावन्तमनुद्रुत्य धनंजयः
गत्वा पदशतं तूर्णं केशपक्षे परामृशत् ३७
सोऽर्जुनेन परामृष्टः पर्यदेवयदार्तवत्
बहुलं कृपणं चैव विराटस्य सुतस्तदा ३८
शातकुम्भस्य शुद्धस्य शतं निष्कान्ददामि ते
मणीनष्टौ च वैडूर्यान्हेमबद्धान्महाप्रभान् ३९
हेमदण्डप्रतिच्छन्नं रथं युक्तं च सुव्रजैः
मत्तांश्च दश मातङ्गान्मुञ्च मां त्वं बृहन्नडे ४०
वैशम्पायन उवाच
एवमादीनि वाक्यानि विलपन्तमचेतसम्
प्रहस्य पुरुषव्याघ्रो रथस्यान्तिकमानयत् ४१
अथैनमब्रवीत्पार्थो भयार्तं नष्टचेतसम्
यदि नोत्सहसे योद्धुं शुत्रुभिः शत्रुकर्शन
एहि मे त्वं हयान्यच्छ युध्यमानस्य शत्रुभिः ४२
प्रयाह्येतद्रथानीकं मद्बाहुबलरक्षितः
अप्रधृष्यतमं घोरं गुप्तं वीरैर्महारथैः ४३
मा भैस्त्वं राजपुत्राग्र्य क्षत्रियोऽसि परंतप

अहं वै कुरुभिर्योत्स्याम्यवजेष्यामि ते पशून् ४४
प्रविश्यैतद्रथानीकमप्रधृष्यं दुरासदम्
यन्ता भूस्त्वं नरश्रेष्ठ योत्स्येऽह कुरुभिः सह ४५
एवं ब्रुवाणो बीभत्सुर्वैराटिमपराजितः
समाश्वास्य मुहूर्तं तमुत्तरं भरतर्षभ ४६
तत एनं विचेष्टन्तमकामं भयपीडितम्
रथमारोपयामास पार्थः प्रहरतां वरः ४७
इति श्रीमहाभारते विराटपर्वणि षट्त्रिंशोऽध्यायः ३६

## सप्तत्रिंशोऽध्यायः

वैशम्पायन उवाच
तं दृष्ट्वा क्लीबवेषेण रथस्थं नरपुंगवम्
शमीमभिमुखं यान्तं रथमारोप्य चोत्तरम् १
भीष्मद्रोणमुखास्तत्र कुरूणां रथसत्तमाः
वित्रस्तमनसः सर्वे धनंजयकृताद्भयात् २
तानवेक्ष्य हतोत्साहानुत्पातानपि चाद्भुतान्
गुरुः शस्त्रभृतां श्रेष्ठो भारद्वाजोऽभ्यभाषत ३
चलाश्च वाताः संवान्ति रूक्षाः परुषनिःस्वनाः
भस्मवर्णप्रकाशेन तमसा संवृतं नभः ४
रूक्षवर्णाश्च जलदा दृश्यन्तेऽद्भुतदर्शनाः
निःसरन्ति च कोशेभ्यः शस्त्राणि विविधानि च ५
शिवाश्च विनदन्त्येता दीप्तायां दिशि दारुणाः
हयाश्चाश्रूणि मुञ्चन्ति ध्वजाः कम्पन्त्यकम्पिताः ६
यादृशान्यत्र रूपाणि संदृश्यन्ते बहून्यपि
यत्ता भवन्तस्तिष्ठन्तु स्याद्युद्धं समुपस्थितम् ७
रक्षध्वमपि चात्मानं व्यूहध्वं वाहिनीमपि
वैशसं च प्रतीक्षध्वं रक्षध्वं चापि गोधनम् ८
एष वीरो महेश्वासः सर्वशस्त्रभृतां वरः
आगतः क्लीबवेषेण पार्थो नास्त्यत्र संशयः ९
स एष पार्थो विक्रान्तः सव्यसाची परंतपः

नायुद्धेन निवर्तेत सर्वैरपि मरुद्गणैः १०
क्लेशितश्च वने शूरो वासवेन च शिक्षितः
अमर्षवशमापन्नो योत्स्यते नात्र संशयः ११
नेहास्य प्रतियोद्धारमहं पश्यामि कौरवाः
महादेवोऽपि पार्थेन श्रूयते युधि तोषितः १२
कर्ण उवाच
सदा भवान्फल्गुनस्य गुणैरस्मान्विकत्थसे
न चार्जुनः कला पूर्णा मम दुर्योधनस्य वा १३
दुर्योधन उवाच
यद्येष पार्थो राधेय कृतं कार्यं भवेन्मम
ज्ञाताः पुनश्चरिष्यन्ति द्वादशान्यान्हि वत्सरान् १४
अथैष कश्चिदेवान्यः क्लीबवेषेण मानवः
शरैरेनं सुनिशितैः पातयिष्यामि भूतले १५
वैशम्पायन उवाच
तस्मिन्ब्रुवति तद्वाक्यं धार्तराष्ट्रे परंतपे
भीष्मो द्रोणः कृपो द्रौणिः पौरुषं तदपूजयन् १६
इति श्रीमहाभारते विराटपर्वणि सप्तत्रिंशोऽध्यायः ३७

## अष्टत्रिंशोऽध्यायः

वैशम्पायन उवाच
तां शमीमुपसंगम्य पार्थो वैराटिमब्रवीत्
सुकुमारं समाज्ञातं संग्रामे नातिकोविदम् १
समादिष्टो मया क्षिप्रं धनूंष्यवहरोत्तर
नेमानि हि त्वदीयानि सोढुं शक्ष्यन्ति मे बलम् २
भारं वापि गुरुं हर्तुं कुञ्जरं वा प्रमर्दितुम्
मम वा बाहुविक्षेपं शत्रूनिह विजेष्यतः ३
तस्माद्भूमिंजयारोह शमीमेतां पलाशिनीम्
अस्या हि पाण्डुपुत्राणां धनूंषि निहितान्युत ४
युधिष्ठिरस्य भीमस्य बीभत्सोर्यमयोस्तथा
ध्वजाः शराश्च शूराणां दिव्यानि कवचानि च ५

अत्र चैतन्महावीर्यं धनुः पार्थस्य गाण्डिवम्
एकं शतसहस्रेण संमितं राष्ट्रवर्धनम् ६
व्यायामसहमत्यर्थं तृणराजसमं महत्
सर्वायुधमहामात्रं शत्रुसंबाधकारकम् ७
सुवर्णविकृतं दिव्यं श्लक्ष्णमायतमव्रणम्
अलं भारं गुरुं वोढुं दारुणं चारुदर्शनम्
तादृशान्येव सर्वाणि बलवन्ति दृढानि च ८
उत्तर उवाच
अस्मिन्वृक्षे किलोद्बद्धं शरीरमिति नः श्रुतम्
तदहं राजपुत्रः सन्स्पृशेयं पाणिना कथम् ९
नैवंविधं मया युक्तमालब्धुं क्षत्रयोनिना
महता राजपुत्रेण मन्त्रयज्ञविदा सता १०
स्पृष्टवन्तं शरीरं मां शववाहमिवाशुचिम्
कथं वा व्यवहार्यं वै कुर्वीथास्त्वं बृहन्नडे ११
बृहन्नडोवाच
व्यवहार्यश्च राजेन्द्र शुचिश्चैव भविष्यसि
धनूंष्येतानि मा भैस्त्वं शरीरं नात्र विद्यते १२
दायादं मत्स्यराजस्य कुले जातं मनस्विनम्
कथं त्वा निन्दितं कर्म कारयेयं नृपात्मज १३
वैशम्पायन उवाच
एवमुक्तः स पार्थेन रथात्प्रस्कन्द्यकुण्डली
आरुरोह शमीवृक्षं वैराटिरवशस्तदा १४
तमन्वशासच्छत्रुघ्नो रथे तिष्ठन्धनंजयः
परिवेष्टनमेतेषां क्षिप्रं चैव व्यपानुद १५
तथा संनहनान्येषां परिमुच्य समन्ततः
अपश्यद्गांडिवं तत्र चतुर्भिरपरैः सह १६
तेषां विमुच्यमानानां धनुषामर्कवर्चसाम्
विनिश्चेरुः प्रभा दिव्या ग्रहाणामुदयेष्विव १७
स तेषां रूपमालोक्य भोगिनामिव जृम्भताम्
हृष्टरोमा भयोद्विग्नः क्षणेन समपद्यत १८

संस्पृश्य तानि चापानि भानुमन्ति बृहन्ति च
वैराटिरर्जुनं राजन्निदं वचनमब्रवीत् १९
उत्तर उवाच
बिन्दवो जातरूपस्य शतं यस्मिन्निपातिताः
सहस्रकोटि सौवर्णाः कस्यैतद्धनुरुत्तमम् २०
वारणा यस्य सौवर्णाः पृष्ठे भासन्ति दंशिताः
सुपार्श्वं सुग्रहं चैव कस्यैतद्धनुरुत्तमम् २१
तपनीयस्य शुद्धस्य षष्टिर्यस्येन्द्रगोपकाः
पृष्ठे विभक्ताः शोभन्ते कस्यैतद्धनुरुत्तमम् २२
सूर्या यत्र च सौवर्णास्त्रयो भासन्ति दंशिताः
तेजसा प्रज्वलन्तो हि कस्यैतद्धनुरुत्तमम् २३
शालभा यत्र सौवर्णास्तपनीयविचित्रिताः
सुवर्णमणिचित्रं च कस्यैतद्धनुरुत्तमम् २४
इमे च कस्य नाराचाः सहस्रा लोमवाहिनः
समन्तात्कलधौताग्रा उपासङ्गे हिरण्मये २५
विपाठाः पृथवः कस्य गार्ध्रपत्राः शिलाशिताः
हारिद्रवर्णाः सुनसाः पीताः सर्वायसाः शराः २६
कस्यायमसितावापः पञ्चशार्दूललक्षणः
वराहकर्णव्यामिश्रः शरान्धारयते दश २७
कस्येमे पृथवो दीर्घाः सर्वपारशवाः शराः
शतानि सप्त तिष्ठन्ति नाराचा रुधिराशनाः २८
कस्येमे शुकपत्राभैः पूर्वैरर्धैः सुवाससः
उत्तरैरायसैः पीतैर्हेमपुङ्खैः शिलाशितैः २९
कस्यायं सायको दीर्घः शिलीपृष्ठः शिलीमुखः
वैयाघ्रकोशे निहितो हेमचित्रत्सरुर्महान् ३०
सुफलश्चित्रकोशश्च किङ्किणीसायको महान्
कस्य हेमत्सरुर्दिव्यः खड्गः परमनिर्व्रणः ३१
कस्यायं विमलः खड्गो गव्ये कोशे समर्पितः
हेमत्सरुरनाधृष्यो नैषध्यो भारसाधनः ३२
कस्य पाञ्चनखे कोशे सायको हेमविग्रहः

प्रमाणरूपसंपन्नः पीत आकाशसंनिभः ३३
कस्य हेममये कोशे सुतप्ते पावकप्रभे
निस्त्रिंशोऽय गुरुः पीतः सैक्यः परमनिर्व्रणः ३४
निर्दिशस्व यथातत्त्वं मया पृष्टा बृहन्नडे
विस्मयो मे परो जातो दृष्ट्वा सर्वमिदं महत् ३५
बृहन्नडोवाच
यन्मां पूर्वमिहापृच्छः शत्रुसेननिबर्हणम्
गाण्डीवमेतत्पार्थस्य लोकेषु विदितं धनुः ३६
सर्वायुधमहामात्रं शातकुम्भपरिष्कृतम्
एतत्तदर्जुनस्यासीद्गाण्डीवं परमायुधम् ३७
यत्तच्छतसहस्रेण संमितं राष्ट्रवर्धनम्
येन देवान्मनुष्यांश्च पार्थो विषहते मृधे ३८
देवदानवगन्धर्वैः पूजितं शाश्वतीः समाः
एतद्वर्षसहस्रं तु ब्रह्मा पूर्वमधारयत् ३९
ततोऽनन्तरमेवाथ प्रजापतिरधारयत्
त्रीणि पञ्चशतं चैव शक्रोऽशीति च पञ्च च ४०
सोमः पञ्चशतं राजा तथैव वरुणः शतम्
पार्थः पञ्च च षष्टिं च वर्षाणि श्वेतवाहनः ४१
महावीर्यं महद्दिव्यमेतत्तद्धनुरुत्तमम्
पूजितं सुरमर्त्येषु बिभर्ति परमं वपुः ४२
सुपार्श्वं भीमसेनस्य जातरूपग्रहं धनुः
येन पार्थोऽजयत्कृत्स्नां दिशं प्राचीं परंतपः ४३
इन्द्रगोपकचित्रं च यदेतच्चारुविग्रहम्
राज्ञो युधिष्ठिरस्यैतद्वैराटे धनुरुत्तमम् ४४
सूर्या यस्मिंस्तु सौवर्णाः प्रभासन्ते प्रभासिनः
तेजसा प्रज्वलन्तो वै नकुलस्यैतदायुधम् ४५
शलभा यत्र सौवर्णास्तपनीयविचित्रिताः
एतन्माद्रीसुतस्यापि सहदेवस्य कार्मुकम् ४६
ये त्विमे क्षुरसंकाशाः सहस्रा लोमवाहिनः
एतेऽजुनस्य वैराटे शराः सर्पविषोपमाः ४७

एते ज्वलन्तः संग्रामे तेजसा शीघ्रगामिनः
भवन्ति वीरस्याक्षय्या व्यूहतः समरे रिपून् ४८
ये चेमे पृथवो दीर्घाश्चन्द्रबिंबार्धदर्शनाः
एते भीमस्य निशिता रिपुक्षयकराः शराः ४९
हारिद्रवर्णा ये त्वेते हेमपुङ्खाः शिलाशिताः
नकुलस्य कलापोऽय पंचशार्दूललक्षणः ५०
येनासौ व्यजयत्कृत्स्नां प्रतीचीं दिशमाहवे
कलापो ह्येष तस्यासीन्माद्रीपुत्रस्य धीमतः ५१
ये त्विमे भास्कराकाराः सर्वपारशवाः शराः
एते चित्राः क्रियोपेताः सहदेवस्य धीमतः ५२
ये त्विमे निशिताः पीताः पृथवो दीर्घवाससः
हेमपुंखास्त्रिपर्वाणो राज्ञ एते महाशराः ५३
यस्त्वयं सायको दीर्घः शिलीपृष्ठः शिलीमुखः
अर्जुनस्यैष संग्रामे गुरुभारसहो दृढः ५४
वैयाघ्रकोशस्तु महान्भीमसेनस्य सायकः
गुरुभारसहो दिव्यः शात्रवाणां भयंकरः ५५
सुफलश्चित्रकोशश्च हेमत्सरुरनुत्तमः
निस्त्रिंशः कौरवस्यैष धर्मराजस्य धीमतः ५६
यस्तु पांचनखे कोशे निहितश्चित्रसेवने
नकुलस्यैष निस्त्रिंशो गुरुभारसहो दृढः ५७
यस्त्वयं विमलः खड्गो गव्ये कोशे समर्पितः
सहदेवस्य विद्ध्येनं सर्वभारसहं दृढम् ५८
इति श्रीमहाभारते विराटपर्वणि अष्टत्रिंशोऽध्यायः ३८

## एकोनचत्वारिंशोऽध्यायः

उत्तर उवाच
सुवर्णविकृतानीमान्यायुधानि महात्मनाम्
रुचिराणि प्रकाशन्ते पार्थानामाशुकारिणाम् १
क्व नु स्विदर्जुनः पार्थः कौरव्यो वा युधिष्ठिरः
नकुलः सहदेवश्च भीमसेनश्च पाण्डवः २

सर्व एव महात्मानः सर्वामित्रविनाशनाः
राज्यमक्षैः पराकीर्य न श्रूयन्ते कदाचन ३
द्रौपदी क्व च पांचाली स्त्रीरत्नमिति विश्रुता
जितानक्षैस्तदा कृष्णा तानेवान्वगमद्वनम् ४
अर्जुन उवाच
अहमस्म्यर्जुनः पार्थः सभास्तारो युधिष्ठिरः
बल्लवो भीमसेनस्तु पितुस्ते रसपाचकः ५
अश्वबन्धोऽथ नकुलः सहदेवस्तु गोकुले
सैरंध्रीं द्रौपदीं विद्धि यत्कृते कीचका हताः ६
उत्तर उवाच
दश पार्थस्य नामानि यानि पूर्वं श्रुतानि मे
प्रब्रूयास्तानि यदि मे श्रद्दध्यां सर्वमेव ते ७
अर्जुन उवाच
हंत तेऽह समाचक्षे दश नामानि यानि मे
अर्जुनः फल्गुनो जिष्णुः किरीटी श्वेतवाहनः
बीभत्सुर्विजयः कृष्णः सव्यसाची धनंजयः ८
उत्तर उवाच
केनासि विजयो नाम केनासि श्वेतवाहनः
किरीटी नाम केनासि सव्यसाची कथं भवान् ९
अर्जुनः फल्गुनो जिष्णुः कृष्णो बीभत्सुरेव च
धनंजयश्च केनासि प्रब्रूहि मम तत्त्वतः
श्रुता मे तस्य वीरस्य केवला नामहेतवः १०
अर्जुन उवाच
सर्वाञ्जनपदाञ्जित्वा वित्तमाच्छिद्य केवलम्
मध्ये धनस्य तिष्ठामि तेनाहुर्मां धनंजयम् ११
अभिप्रयामि संग्रामे यदहं युद्धदुर्मदान्
नाजित्वा विनिवर्तामि तेन मां विजयं विदुः १२
श्वेताः काञ्चनसन्नाहा रथे युज्यन्ति मे हयाः
संग्रामे युद्ध्यमानस्य तेनाहं श्वेतवाहनः १३
उत्तराभ्यां च पूर्वाभ्यां फल्गुनीभ्यामहं दिवा

जातो हिमवतः पृष्ठे तेन मां फल्गुनं विदुः १४
पुरा शक्रेण मे दत्तं युध्यतो दानवर्षभैः
किरीटं मूर्ध्नि सूर्याभं तेन माहुः किरीटिनम् १५
न कुर्यां कर्म बीभत्सं युध्यमानः कथंचन
तेन देवमनुष्येषु बीभत्सुरिति मां विदुः १६
उभौ मे दक्षिणौ पाणी गांडीवस्य विकर्षणे
तेन देवमनुष्येषु सव्यसाचीति मां विदुः १७
पृथिव्यां चतुरन्तायां वर्णो मे दुर्लभः समः
करोमि कर्म शुक्लं च तेन मामर्जुनं विदुः १८
अहं दुरापो दुर्धर्षो दमनः पाकशासनिः
तेन देवमनुष्येषु जिष्णुनामास्मि विश्रुतः १९
कृष्ण इत्येव दशमं नाम चक्रे पिता मम
कृष्णावदातस्य सतः प्रियत्वाद्बालकस्य वै २०
वैशम्पायन उवाच
ततः पार्थं स वैराटिरभ्यवादयदन्तिकात्
अहं भूमिंजयो नाम नाम्नाहमपि चोत्तरः २१
दिष्ट्या त्वां पार्थ पश्यामि स्वागतं ते धनंजय
लोहिताक्ष महाबाहो नागराजकरोपम
यदज्ञानादवोचं त्वां क्षन्तुमर्हसि तन्मम २२
यतस्त्वया कृतं पूर्वं विचित्रं कर्म दुष्करम्
अतो भयं व्यतीतं मे प्रीतिश्च परमा त्वयि २३
इति श्रीमहाभारते विराटपर्वणि एकोनचत्वारिंशोऽध्यायः ३९

## चत्वारिंशोऽध्यायः

उत्तर उवाच
आस्थाय विपुलं वीर रथं सारथिना मया
कतमं यास्यसेऽनीकमुक्तो यास्याम्यहं त्वया १
अर्जुन उवाच
प्रीतोऽस्मि पुरुषव्याघ्र न भयं विद्यते तव
सर्वान्नुदामि ते शत्रून्रणे रणविशारद २

स्वस्थो भव महाबुद्धे पश्य मां शत्रुभिः सह
युध्यमानं विमर्देऽस्मिन्कुर्वाणं भैरवं महत् ३
एतान्सर्वानुपासंगान्क्षिप्रं बध्नीहि मे रथे
एतं चाहर निस्त्रिंशं जातरूपपरिष्कृतम्
अहं वै कुरुभिर्योत्स्याम्यवजेष्यामि ते पशून् ४
संकल्पपक्षविक्षेपं बाहुप्राकारतोरणम्
त्रिदण्डतूणसंबाधमनेकध्वजसंकुलम् ५
ज्याक्षेपणं क्रोधकृतं नेमीनिनददुंदुभि
नगरं ते मया गुप्तं रथोपस्थं भविष्यति ६
अधिष्ठितो मया संख्ये रथो गांडीवधन्विना
अजेयः शत्रुसैन्यानां वैराटे व्येतु ते भयम् ७
उत्तर उवाच
बिभेमि नाहमेतेषां जानामि त्वां स्थिरं युधि
केशवेनापि संग्रामे साक्षादिंद्रेण वा समम् ८
इदं तु चिन्तयन्नेव परिमुह्यामि केवलम्
निश्चयं चापि दुर्मेधा न गच्छामि कथंचन ९
एवं वीरांगरूपस्य लक्षणैरुचितस्य च
केन कर्मविपाकेन क्लीबत्वमिदमागतम् १०
मन्ये त्वां क्लीबवेषेण चरन्तं शूलपाणिनम्
गन्धर्वराजप्रतिमं देवं वापि शतक्रतुम् ११
अर्जुन उवाच
भ्रातुर्नियोगाज्ज्येष्ठस्य संवत्सरमिदं व्रतम्
चरामि ब्रह्मचर्यं वै सत्यमेतद्ब्रवीमि ते १२
नास्मि क्लीबो महाबाहो परवान्धर्मसंयुतः
समाप्तव्रतमुत्तीर्णं विद्धि मां त्वं नृपात्मज १३
उत्तर उवाच
परमोऽनुग्रहो मेऽद्य यत्प्रतर्को न मे वृथा
न हीदृशाः क्लीबरूपा भवन्तीह नरोत्तमाः १४
सहायवानस्मि रणे युध्येयममरैरपि
साध्वसं तत्प्रनष्टं मे किं करोमि ब्रवीहि मे १५

अहं ते संग्रहीष्यामि हयाञ्शत्रुरथारुजः
शिक्षितो ह्यस्मि सारथ्ये तीर्थतः पुरुषर्षभ १६
दारुको वासुदेवस्य यथा शक्रस्य मातलि
तथा मां विद्धि सारथ्ये शिक्षितं नरपुंगव १७
यस्य याते न पश्यन्ति भूमौ प्राप्तं पदं पदम्
दक्षिणांयो धुरं युक्तः सुग्रीवसदृशो हयः १८
योऽय धुरं धुर्यवरो वामं वहति शोभनः
तं मन्ये मेघपुष्पस्य जवेन सदृशं हयम् १९
योऽय कांचनसंनाहः पार्ष्णिं वहति शोभनः
वामं सैन्यस्य मन्ये तं जवेन बलवत्तरम् २०
योऽय वहति ते पार्ष्णिं दक्षिणामञ्चितोद्यतः
बलाहकादपि मतः स जवे वीर्यवत्तरः २१
त्वामेवायं रथो वोढुं संग्रामेऽहति धन्विनम्
त्वं चेमं रथमास्थाय योद्धुमर्हो मतो मम २२
वैशम्पायन उवाच
ततो निर्मुच्य बाहुभ्यां वलयानि स वीर्यवान्
चित्रे दुंदुभिसंनादे प्रत्यमुंचत्तले शुभे २३
कृष्णान्भंगीमतः केशाञ्श्वेतेनोद्ग्रथ्य वाससा
अधिज्यं तरसा कृत्वा गाण्डीवं व्याक्षिपद्धनुः २४
तस्य विक्षिप्यमाणस्य धनुषोऽभून्महास्वनः
यथा शैलस्य महतः शैलेनैवाभिजघ्नुषः २५
सनिर्घाताभवद्भूमिर्दिक्षु वायुर्ववौ भृशम्
भ्रान्तद्विजं खं तदासीत्प्रकंपितमहाद्रुमम् २६
तं शब्दं कुरवोऽजानन्विस्फोटमशनेरिव
यदर्जुनो धनुःश्रेष्ठं बाहुभ्यामाक्षिपद्रथे २७
इति श्रीमहाभारते विराटपर्वणि चत्वारिंशोऽध्यायः ४०

## एक चत्वारिंशोऽध्यायः

वैशम्पायन उवाच
उत्तरं सारथिं कृत्वा शमीं कृत्वा प्रदक्षिणम्

आयुधं सर्वमादाय ततः प्रायाद्धनंजयः १
ध्वजं सिंहं रथात्तस्मादपनीय महारथः
प्रणिधाय शमीमूले प्रायादुत्तरसारथिः २
दैवीं मायां रथे युक्त्वा विहितां विश्वकर्मणा
काञ्चनं सिंहलांगूलं ध्वजं वानरलक्षणम् ३
मनसा चिन्तयामास प्रसादं पावकस्य च
स च तच्चिन्तितं ज्ञात्वा ध्वजे भूतान्यचोदयत् ४
सपताकं विचित्राङ्गं सोपासङ्गं महारथः
रथमास्थाय बीभत्सुः कौन्तेयः श्वेतवाहनः ५
बद्धासिः सतनुत्राणः प्रगृहीतशरासनः
ततः प्रायादुदीचीं स कपिप्रवरकेतनः ६
स्वनवन्तं महाशङ्खं बलवानरिमर्दनः
प्राधमद्बलमास्थाय द्विषतां लोमहर्षणम् ७
ततस्ते जवना धुर्या जानुभ्यामगमन्महीम्
उत्तरश्चापि संत्रस्तो रथोपस्थ उपाविशत् ८
संस्थाप्य चाश्वान्कौन्तेयः समुद्यम्य च रश्मिभिः
उत्तरं च परिष्वज्य समाश्वासयदर्जुनः ९
मा भैस्त्वं राजपुत्राग्र्य क्षत्रियोऽसि परंतप
कथं पुरुषशार्दूल शत्रुमध्ये विषीदसि १०
श्रुतास्ते शङ्खशब्दाश्च भेरीशब्दाश्च पुष्कलाः
कुञ्जराणां च नदतां व्यूढानीकेषु तिष्ठताम् ११
स त्वं कथमिहानेन शङ्खशब्देन भीषितः
विषण्णरूपो वित्रस्तः पुरुषः प्राकृतो यथा १२
उत्तर उवाच
श्रुता मे शङ्खशब्दाश्च भेरीशब्दाश्च पुष्कलाः
कुञ्जराणां च निनदा व्यूढानीकेषु तिष्ठताम् १३
नैवंविधः शङ्खशब्दः पुरा जातु मया श्रुतः
ध्वजस्य चापि रूपं मे दृष्टपूर्वं न हीदृशम्
धनुषश्चैव निर्घोषः श्रुतपूर्वो न मे क्वचित् १४
अस्य शङ्खस्य शब्देन धनुषो निस्वनेन च

रथस्य च निनादेन मनो मुह्यति मे भृशम् १५
व्याकुलाश्च दिशः सर्वा हृदयं व्यथतीव मे
ध्वजेन पिहिताः सर्वा दिशो न प्रतिभान्ति मे
गाराडीवस्य च शब्देन कर्णौ मे बधिरीकृतौ १६
अर्जुन उवाच
एकन्ते रथमास्थाय पद्भ्यां त्वमवपीडय
दृढं च रश्मीन्संयच्छ शङ्खं ध्मास्याम्यहं पुनः १७
वैशम्पायन उवाच
तस्य शंखस्य शब्देन रथनेमिस्वनेन च
गाराडीवस्य च घोषेण पृथिवी समकम्पत १८
द्रोण उवाच
यथा रथस्य निर्घोषो यथा सङ्ख उदीर्यते
कम्पते च यथा भूमिर्नैषोऽन्य सव्यसाचिनः १९
शस्त्राणि न प्रकाशन्ते न प्रहृष्यन्ति वाजिनः
अग्नयश्च न भासन्ते समिद्धास्तन्न शोभनम् २०
प्रत्यादित्यं च नः सर्वे मृगा घोरप्रवादिनः
ध्वजेषु च निलीयन्ते वायसास्तन्न शोभनम्
शकुनाश्चापसव्या नो वेदयन्ति महद्भयम् २१
गोमायुरेष सेनाया रुवन्मध्येऽनु धावति
अनाहतश्च निष्क्रान्तो महद्वेदयते भयम्
भवतां रोमकूपाणि प्रहृष्टान्युपलक्षये २२
पराभूता च वः सेना न कश्चिद्योद्धुमिच्छति
विवर्णमुखभूयिष्ठाः सर्वे योधा विचेतसः
गाः संप्रस्थाप्य तिष्ठामो व्यूढानीकाः प्रहारिणः २३
इति श्रीमहाभारते विराटपर्वणि एकचत्वारिंशोऽध्यायः ४१

## द्विचत्वारिंशोऽध्यायः

वैशम्पायन उवाच
अथ दुर्योधनो राजा समरे भीष्ममब्रवीत्
द्रोणं च रथशार्दूलं कृपं च सुमहारथम् १

उक्तोऽयमर्थ आचार्यो मया कर्णेन चासकृत्
पुनरेव च वक्ष्यामि न हि तृप्यामि तं ब्रुवन् २
पराजितैर्हि वस्तव्यं तैश्च द्वादश वत्सरान्
वने जनपदेऽज्ञातैरेष एव पणो हि नः ३
तेषां न तावन्निर्वृत्तं वर्तते तु त्रयोदशम्
अज्ञातवासं बीभत्सुरथास्माभिः समागतः ४
अनिवृत्ते तु निर्वासे यदि बीभत्सुरागतः
पुनर्द्वादश वर्षाणि वने वत्स्यन्ति पाण्डवाः ५
लोभाद्वा ते न जानीयुरस्मान्वा मोह आविशत्
हीनातिरिक्तमेतेषां भीष्मो वेदितुमर्हति ६
अर्थानां तु पुनर्द्वैधे नित्यं भवति संशयः
अन्यथा चिन्तितो ह्यर्थः पुनर्भवति चान्यथा ७
उत्तरं मार्गमाणानां मत्स्यसेनां युयुत्सताम्
यदि बीभत्सुरायातस्तेषां कः स्यात्पराङ्मुखः ८
त्रिगर्तानां वयं हेतोर्मत्स्यान्योद्धुमिहागताः
मत्स्यानां विप्रकारांस्ते बहूनस्मानकीर्तयन् ९
तेषां भयाभिपन्नानां तदस्माभिः प्रतिश्रुतम्
प्रथमं तैर्ग्रहीतव्यं मत्स्यानां गोधनं महत् १०
सप्तमीमपराह्णे वै तथा नस्तैः समाहितम्
अष्टम्यां पुनरस्माभिरादित्यस्योदयं प्रति ११
ते वा गावो न पश्यन्ति यदि वा स्युः पराजिताः
अस्मान्वाप्यतिसंधाय कुर्युर्मत्स्येन संगतम् १२
अथवा तानुपायातो मत्स्यो जानपदैः सह
सर्वया सेनया सार्धमस्मान्योद्धुमुपागतः १३
तेषामेव महावीर्यः कश्चिदेव पुरः सरः
अस्माञ्जेतुमिहायातो मत्स्यो वापि स्वयं भवेत् १४
यद्येष राजा मत्स्यानां यदि बीभत्सुरागतः
सर्वैर्योद्धव्यमस्माभिरिति नः समयः कृतः १५
अथ कस्मात्स्थिता ह्येते रथेषु रथसत्तमाः
भीष्मो द्रोणः कृपश्चैव विकर्णो द्रौणिरेव च १६

संभ्रान्तमनसः सर्वे काले ह्यस्मिन्महारथाः
नान्यत्र युद्धाच्छ्रेयोऽस्ति तथात्मा प्रणिधीयताम् १७
आच्छिन्ने गोधनेऽस्माकमपि देवेन वज्रिणा
यमेन वापि संग्रामे को हास्तिनपुरं व्रजेत् १८
शरैरभिप्रणुन्नानां भग्नानां गहने वने
को हि जीवेत्पदातीनां भवेदश्वेषु शंसयः
आचार्यं पृष्ठतः कृत्वा तथा नीतिर्विधीयताम् १९
जानाति हि मतं तेषामतस्त्रासयतीव नः
अर्जुनेनास्य संप्रीतिमधिकामुपलक्षये २०
तथा हि दृष्ट्वा बीभत्सुमुपायान्तं प्रशंसति
यथा सेना न भज्येत तथा नीतिर्विधीयताम् २१
अदेशिका महारण्ये ग्रीष्मे शत्रुवशं गता
यथा न विभ्रमेत्सेना तथा नीतिर्विधीयताम् २२
अश्वानां हेषितं श्रुत्वा का प्रशंसा भवेत्परे
स्थाने वापि व्रजन्तो वा सदा हेषन्ति वाजिनः २३
सदा च वायवो वान्ति नित्यं वर्षति वासवः
स्तनयित्नोश्च निर्घोषः श्रूयते बहुशस्तथा २४
किमत्र कार्यं पार्थस्य कथं वा स प्रशस्यते
अन्यत्र कामाद्द्वेषाद्वा रोषाद्वास्मासु केवलात् २५
आचार्या वै कारुणिकाः प्राज्ञाश्चापायदर्शिनः
नैते महाभये प्राप्ते संप्रष्टव्याः कथंचन २६
प्रासादेषु विचित्रेषु गोष्ठीष्वावसथेषु च
कथा विचित्राः कुर्वाणाः पण्डितास्तत्र शोभनाः २७
बहून्याश्चर्यरूपाणि कुर्वन्तो जनसंसदि
इष्वस्त्रे चारुसन्धाने पण्डितास्तत्र शोभनाः २८
परेषां विवरज्ञाने मनुष्याचरितेषु च
अन्नसंस्कारदोषेषु पण्डितास्तत्र शोभनाः २९
पण्डितान्पृष्ठतः कृत्वा परेषां गुणवादिनः
विधीयतां तथा नीतिर्यथा वध्येत वै परः ३०
गावश्चैव प्रतिष्ठन्तां सेनां व्यूहन्तु माचिरम्

आरक्षाश्च विधीयन्तां यत्र योत्स्यामहे परान् ३१
इति श्रीमहाभारते विराटपर्वणि द्विचत्वारिंशोऽध्यायः ४२

## त्रिचत्वारिंशोऽध्यायः

कर्ण उवाच
सर्वानायुष्मतो भीतान्संत्रस्तानिव लक्षये
अयुद्धमनसश्चैव सर्वांश्चैवानवस्थितान् १
यद्येष राजा मत्स्यानां यदि बीभत्सुरागतः
अहमावारयिष्यामि वेलेव मकरालयम् २
मम चापप्रमुक्तानां शराणां नतपर्वणाम्
नावृत्तिर्गच्छतामस्ति सर्पाणामिवसर्पताम् ३
रुक्मपुङ्खाः सुतीक्ष्णाग्रा मुक्ता हस्तवता मया
छादयन्तु शराः पार्थं शलभा इव पादपम् ४
शराणां पुङ्खसक्तानां मौर्व्याभिहतया दृढम्
श्रूयतां तलयोः शब्दो भेर्योराहतयोरिव ५
समाहितो हि बीभत्सुर्वर्षाण्यष्टौ च पञ्च च
जातस्नेहश्च युद्धस्य मयि संप्रहरिष्यति ६
पात्रीभूतश्च कौन्तेयो ब्राह्मणो गुणवानिव
शरौघान्प्रतिगृह्णातु मया मुक्तान्सहस्रशः ७
एष चैव महेष्वासस्त्रिषु लोकेषु विश्रुतः
अहं चापि कुरुश्रेष्ठा अर्जुनान्नावरः क्वचित् ८
इतश्चेतश्च निर्मुक्तैः काञ्चनैर्गार्ध्रवाजितैः
दृश्यतामद्य वै व्योम खद्योतैरिव संवृतम् ९
अद्याहमृणमक्षय्यं पुरा वाचा प्रतिश्रुतम्
धार्तराष्ट्रस्य दास्यामि निहत्य समरेऽजुनम् १०
अन्तरा छिद्यमानानां पुङ्खानां व्यतिशीर्यताम्
शलभानामिवाकाशे प्रचारः संप्रदृश्यताम् ११
इन्द्राशनिसमस्पर्शं महेन्द्रसमतेजसम्
अर्दयिष्याम्यहं पार्थमुल्काभिरिव कुञ्जरम् १२
तमग्निमिव दुर्धर्षमसिशक्तिशरेन्धनम्

पाण्डवाग्निमहं दीप्तं प्रदहन्तमिवाहितम् १३
अश्ववेगपुरोवातो रथौघस्तनयित्नुमान्
शरधारो महामेघः शमयिष्यामि पाण्डवम् १४
मत्कार्मुकविनिर्मुक्ताः पार्थमाशीविषोपमाः
शराः समभिसर्पन्तु वल्मीकमिव पन्नगाः १५
जामदग्न्यान्मया ह्यस्त्रं यत्प्राप्तमृषिसत्तमात्
तदुपाश्रित्य वीर्यं च युध्येयमपि वासवम् १६
ध्वजाग्रे वानरस्तिष्ठन्भल्लेन निहतो मया
अद्यैव पततां भूमौ विनदन्भैरवान्रवान् १७
शत्रोर्मयाभिपन्नानां भूतानां ध्वजवासिनाम्
दिशः प्रतिष्ठमानानामस्तु शब्दो दिवं गतः १८
अद्य दुर्योधनस्याहं शल्यं हृदि चिरस्थितम्
समूलमुद्धरिष्यामि बीभत्सुं पातयन्रथात् १९
हताश्वं विरथं पार्थं पौरुषे पर्यवस्थितम्
निःश्वसन्तं यथा नागमद्य पश्यन्तु कौरवाः २०
कामं गच्छन्तु कुरवो धनमादाय केवलम्
रथेषु वापि तिष्ठन्तो युद्धं पश्यन्तु मामकम् २१
इति श्रीमहाभारते विराटपर्वणि त्रिचत्वारिंशोऽध्यायः ४३

## चतुश्चत्वारिंशोऽध्यायः

कृप उवाच
सदैव तव राधेय युद्धे क्रूरतरा मतिः
नार्थानां प्रकृतिं वेत्थ नानुबन्धमवेक्षसे १
नया हि बहवः सन्ति शास्त्राण्याश्रित्य चिन्तिताः
तेषां युद्धं तु पापिष्ठं वेदयन्ति पुराविदः २
देशकालेन संयुक्तं युद्धं विजयदं भवेत्
हीनकालं तदेवेह फलवन्न भवत्युत
देशे काले च विक्रान्तं कल्याणाय विधीयते ३
आनुकूल्येन कार्याणामन्तरं संविधीयताम्
भारं हि रथकारस्य न व्यवस्यन्ति पण्डिताः ४

परिचिन्त्य तु पार्थेन संनिपातो न नः क्षमः
एकः कुरूनभ्यरक्षदेकश्चाग्निमतर्पयत् ५
एकश्च पञ्च वर्षाणि ब्रह्मचर्यमधारयत्
एकः सुभद्रामारोप्य द्वैरथे कृष्णमाह्वयत्
अस्मिन्नेव वने कृष्णो हृतां कृष्णामवाजयत् ६
एकश्च पञ्च वर्षाणि शक्रादस्त्राण्यशिक्षत
एकः सांयमिनीं जित्वा कुरूणामकरोद्यशः ७
एको गन्धर्वराजानं चित्रसेनमरिन्दमः
विजिग्ये तरसा संख्ये सेनां चास्य सुदुर्जयाम् ८
तथा निवातकवचाः कालखञ्जाश्च दानवाः
दैवतैरप्यवध्यास्ते एकेन युधि पातिताः ९
एकेन हि त्वया कर्ण किं नामेह कृतं पुरा
एकैकेन यथा तेषां भूमिपाला वशीकृताः १०
इन्द्रोऽपि हि न पार्थेन संयुगे योद्धुमर्हति
यस्तेनाशंसते योद्धुं कर्तव्यं तस्य भेषजम् ११
आशीविषस्य क्रुद्धस्य पाणिमुद्यम्य दक्षिणम्
अविमृश्य प्रदेशिन्या दंष्ट्रामादातुमिच्छसि १२
अथ वा कुञ्जरं मत्तमेक एव चरन्वने
अनङ्कुशं समारुह्य नगरं गन्तुमिच्छसि १३
समिद्धं पावकं वापि घृतमेदोवसाहुतम्
घृताक्तश्चीरवासास्त्वं मध्येनोत्तर्तुमिच्छसि १४
आत्मानं यः समुद्बध्य कण्ठे बद्ध्वा महाशिलाम्
समुद्रं प्रतरेद्दोर्भ्यां तत्र किं नाम पौरुषम् १५
अकृतास्त्रः कृतास्त्रं वै बलवन्तं सुदुर्बलः
तादृशं कर्ण यः पार्थं योद्धुमिच्छेत्स दुर्मतिः १६
अस्माभिरेष निकृतो वर्षाणीह त्रयोदश
सिंहः पाशविनिर्मुक्तो न नः शेषं करिष्यति १७
एकान्ते पार्थमासीनं कूपेऽग्निमिव संवृतम्
अज्ञानादभ्यवस्कन्द्य प्राप्ताः स्मो भयमुत्तमम् १८
सह युध्यामहे पार्थमागतं युद्धदुर्मदम्

सैन्यास्तिष्ठन्तु सन्नद्धा व्यूढानीकाः प्रहारिणः १९
द्रोणो दुर्योधनो भीष्मो भवान्द्रौणिस्तथा वयम्
सर्वे युध्यामहे पार्थं कर्ण मा साहसं कृथाः २०
वयं व्यवसितं पार्थं वज्रपाणिमिवोद्यतम्
षड्रथाः प्रतियुध्येम तिष्ठेम यदि संहताः २१
व्यूढानीकानि सैन्यानि यत्ताः परमधन्विनः
युध्यामहेऽर्जुनं संख्ये दानवा वासवं यथा २२
इति श्रीमहाभारते विराटपर्वणि चतुश्चत्वारिंशोऽध्यायः ४४

## पञ्चचत्वारिंशोऽध्यायः

अश्वत्थामोवाच
न च तावज्जिता गावो न च सीमान्तरं गताः
न हास्तिनपुरं प्राप्तास्त्वं च कर्ण विकत्थसे १
संग्रामान्सुबहूञ्जित्वा लब्ध्वा च विपुलं धनम्
विजित्य च परां भूमिं नाहुः किंचन पौरुषम् २
पचत्यग्निरवाक्यस्तु तूष्णीं भाति दिवाकरः
तूष्णीं धारयते लोकान्वसुधा सचराचरान् ३
चातुर्वर्ण्यस्य कर्माणि विहितानि मनीषिभिः
धनं यैरधिगन्तव्यं यच्च कुर्वन्न दुष्यति ४
अधीत्य ब्राह्मणो वेदान्याजयेत यजेत च
क्षत्रियो धनुराश्रित्य यजेतैव न याजयेत्
वैश्योऽधिगम्य द्रव्याणि ब्रह्मकर्माणि कारयेत् ५
वर्तमाना यथाशास्त्रं प्राप्य चापि महीमिमाम्
सत्कुर्वन्ति महाभागा गुरून्सुविगुणानपि ६
प्राप्य द्यूतेन को राज्यं क्षत्रियस्तोष्टुमर्हति
तथा नृशंसरूपेण यथान्यः प्राकृतो जनः ७
तथावाप्तेषु वित्तेषु को विकत्थेद्विचक्षणः
निकृत्या वञ्चनायोगैश्चरन्वैतंसिको यथा ८
कतमद्द्वैरथं युद्धं यत्राजैषीर्धनञ्जयम्
नकुलं सहदेवं च धनं येषां त्वया हृतम् ९

युधिष्ठिरो जितः कस्मिन्भीमश्च बलिनां वरः
इन्द्रप्रस्थं त्वया कस्मिन्संग्रामे निर्जितं पुरा १०
तथैव कतमं युद्धं यस्मिन्कृष्णा जिता त्वया
एकवस्त्रा सभां नीता दुष्टकर्मन्रजस्वला ११
मूलमेषां महत्कृत्तं सारार्थी चन्दनं यथा
कर्म कारयिथाः शूर तत्र किं विदुरोऽब्रवीत् १२
यथाशक्ति मनुष्याणां शममालक्षयामहे
अन्येषां चैव सत्त्वानामपि कीटपिपीलिके १३
द्रौपद्यास्तं परिक्लेशं न क्षन्तुं पाण्डवोऽहति
दुःखाय धार्तराष्ट्राणां प्रादुर्भूतो धनञ्जयः १४
त्वं पुनः पण्डितो भूत्वा वाचं वक्तुमिहेच्छसि
वैरान्तकरणो जिष्णुर्न नः शेषं करिष्यति १५
नैष देवान्न गन्धर्वान्नासुरान्न च राक्षसान्
भयादिह न युध्येत कुन्तीपुत्रो धनंजयः १६
यं यमेषोऽभिसंक्रुद्धः संग्रामेऽभिपतिष्यति
वृक्षं गरुडवेगेन विनिहत्य तमेष्यति १७
त्वत्तो विशिष्टं वीर्येण धनुष्यमरराट्समम्
वासुदेवसमं युद्धे तं पार्थं को न पूजयेत् १८
दैवं दैवेन युध्येत मानुषेण च मानुषम्
अस्त्रेणास्त्रं समाहन्यात्कोऽजुनेन समः पुमान् १९
पुत्रादनन्तरः शिष्य इति धर्मविदो विदुः
एतेनापि निमित्तेन प्रियो द्रोणस्य पाण्डवः २०
यथा त्वमकरोर्द्यूतमिन्द्रप्रस्थं यथाहरः
यथानैषीः सभां कृष्णां तथा युध्यस्व पाण्डवम् २१
अयं ते मातुलः प्राज्ञः क्षत्रधर्मस्य कोविदः
दुर्द्यूतदेवी गान्धारः शकुनिर्युध्यतामिह २२
नाक्षान्क्षिपति गाण्डीवं न कृतं द्वापरं न च
ज्वलतो निशितान्बाणांस्तीक्ष्णान्क्षिपति गाण्डिवम् २३
न हि गाण्डीवनिर्मुक्ता गार्ध्रपत्राः सुतेजनाः
अन्तरेष्ववतिष्ठन्ति गिरीणामपि दारणाः २४

अन्तकः शमनो मृत्युस्तथाग्निर्वडवामुखः
कुर्युरेते क्वचिच्छेषं न तु क्रुद्धो धनंजयः २५
युध्यतां काममाचार्यो नाहं योत्स्ये धनंजयम्
मत्स्यो ह्यस्माभिरायोध्यो यद्यागच्छेद्गवां पदम् २६
इति श्रीमहाभारते विराटपर्वणि पञ्चचत्वारिंशोऽध्यायः ४५

## षट्चत्वारिंशोऽध्यायः

भीष्म उवाच
साधु पश्यति वै द्रोणः कृपः साध्वनुपश्यति
कर्णस्तु क्षत्रधर्मेण यथावद्योद्धुमिच्छति १
आचार्यो नाभिषक्तव्यः पुरुषेण विजानता
देशकालौ तु संप्रेक्ष्य योद्धव्यमिति मे मतिः २
यस्य सूर्यसमाः पञ्च सपत्नाः स्युः प्रहारिणः
कथमभ्युदये तेषां न प्रमुह्येत पण्डितः ३
स्वार्थे सर्वे विमुह्यन्ति येऽपि धर्मविदो जनाः
तस्माद्राजन्ब्रवीम्येष वाक्यं ते यदि रोचते ४
कर्णो यदभ्यवोचन्नस्तेजःसंजननाय तत्
आचार्यपुत्रः क्षमतां महत्कार्यमुपस्थितम् ५
नायं कालो विरोधस्य कौन्तेये समुपस्थिते
क्षन्तव्यं भवता सर्वमाचार्येण कृपेण च ६
भवतां हि कृतास्त्रत्वं यथादित्ये प्रभा तथा
यथा चन्द्रमसो लक्ष्म सर्वथा नापकृष्यते
एवं भवत्सु ब्राह्मण्यं ब्रह्मास्त्रं च प्रतिष्ठितम् ७
चत्वार एकतो वेदाः क्षात्रमेकत्र दृश्यते
नैतत्समस्तमुभयं कस्मिंश्चिदनुशुश्रुमः ८
अन्यत्र भारताचार्यात्सपुत्रादिति मे मतिः
ब्रह्मास्त्रं चैव वेदाश्च नैतदन्यत्र दृश्यते ९
आचार्यपुत्रः क्षमतां नायं कालः स्वभेदने
सर्वे संहत्य युध्यामः पाकशासनिमागतम् १०
बलस्य व्यसनानीह यान्युक्तानि मनीषिभिः

मुख्यो भेदो हि तेषां वै पापिष्ठो विदुषां मतः ११
अश्वत्थामोवाच
आचार्य एव क्षमतां शान्तिरत्र विधीयताम्
अभिषज्यमाने हि गुरौ तद्वृत्तं रोषकारितम् १२
वैशम्पायन उवाच
ततो दुर्योधनो द्रोणं क्षमयामास भारत
सह कर्णेन भीष्मेण कृपेण च महात्मना १३
द्रोण उवाच
यदेव प्रथमं वाक्यं भीष्मः शान्तनवोऽब्रवीत्
तेनैवाहं प्रसन्नो वै परमत्र विधीयताम् १४
यथा दुर्योधनेऽयत्ते नागः स्पृशति सैनिकान्
साहसाद्यदि वा मोहात्तथा नीतिर्विधीयताम् १५
वनवासे ह्यनिर्वृत्ते दर्शयेन्न धनञ्जयः
धनं वा लभमानोऽत्र नाद्य नः क्षन्तुमर्हति १६
यथा नायं समायुज्याद्धार्त्तराष्ट्रान्कथंचन
यथा च न पराजय्यात्तथा नीतिर्विधीयताम् १७
उक्तं दुर्योधनेनापि पुरस्ताद्वाक्यमीदृशम्
तदनुस्मृत्य गाङ्गेय यथावद्वक्तुमर्हसि १८
इति श्रीमहाभारते विराटपर्वणि षट्चत्वारिंशोऽध्यायः ४६

## सप्तचत्वारिंशोऽध्यायः

भीष्म उवाच
कलांशास्तात युज्यन्ते मुहूर्त्ताश्च दिनानि च
अर्धमासाश्च मासाश्च नक्षत्राणि ग्रहास्तथा १
ऋतवश्चापि युज्यन्ते तथा संवत्सरा अपि
एवं कालविभागेन कालचक्रं प्रवर्तते २
तेषां कालातिरेकेण ज्योतिषां च व्यतिक्रमात्
पञ्चमे पञ्चमे वर्षे द्वौ मासावुपजायतः ३
तेषामभ्यधिका मासाः पञ्च द्वादश च क्षपाः
त्रयोदशानां वर्षाणामिति मे वर्तते मतिः ४

सर्वं यथावच्चरितं यद्यदेभिः परिश्रुतम्
एवमेतद्ध्रुवं ज्ञात्वा ततो बीभत्सुरागतः ५
सर्वे चैव महात्मानः सर्वे धर्मार्थकोविदाः
येषां युधिष्ठिरो राजा कस्माद्धर्मेऽपराध्नुयुः ६
अलुब्धाश्चैव कौन्तेयाः कृतवन्तश्च दुष्करम्
न चापि केवलं राज्यमिच्छेयुस्तेऽनुपायतः ७
तदैव ते हि विक्रान्तुमीषुः कौरवनन्दनाः
धर्मपाशनिबद्धास्तु न चेलुः क्षत्रियव्रतात् ८
यच्चानृत इति ख्यायेद्यच्च गच्छेत्पराभवम्
वृणुयुर्मरणं पार्था नानृतत्वं कथंचन ९
प्राप्ते तु काले प्राप्तव्यं नोत्सृजेयुर्नरर्षभाः
अपि वज्रभृता गुप्तं तथावीर्या हि पाण्डवाः १०
प्रतियुध्याम समरे सर्वशस्त्रभृतां वरम्
तस्माद्यदत्र कल्याणं लोके सद्भिरनुष्ठितम्
तत्संविधीयतां क्षिप्रं मा नो ह्यर्थोऽतिगात्परान् ११
न हि पश्यामि संग्रामे कदाचिदपि कौरव
एकान्तसिद्धिं राजेन्द्र संप्राप्तश्च धनञ्जयः १२
संप्रवृत्ते तु संग्रामे भावाभावौ जयाजयौ
अवश्यमेकं स्पृशतो दृष्टमेतदसंशयम् १३
तस्माद्युद्धावचरिकं कर्म वा धर्मसंहितम्
क्रियतामाशु राजेन्द्र संप्राप्तो हि धनञ्जयः १४
दुर्योधन उवाच
नाहं राज्यं प्रदास्यामि पाण्डवानां पितामह
युद्धावचारिकं यत्तु तच्छीघ्रं संविधीयताम् १५
भीष्म उवाच
अत्र या मामकी बुद्धिः श्रूयतां यदि रोचते
क्षिप्रं बलचतुर्भागं गृह्य गच्छ पुरं प्रति
ततोऽपरश्चतुर्भागो गाः समादाय गच्छतु १६
वयं त्वर्धेन सैन्येन प्रतियोत्स्याम पाण्डवम्
मत्स्यं वा पुनरायातमथ वापि शतक्रतुम् १७

आचार्यो मध्यतस्तिष्ठत्वश्वत्थामा तु सव्यतः
कृपः शारद्वतो धीमान्पार्श्वं रक्षतु दक्षिणम् १८
अग्रतः सूतपुत्रस्तु कर्णस्तिष्ठतु दंशितः
अहं सर्वस्य सैन्यस्य पश्चात्स्थास्यामि पालयन् १९
इति श्रीमहाभारते विराटपर्वणि सप्तचत्वारिंशोऽध्यायः ४७

अष्टचत्वारिंशोऽध्यायः

वैशम्पायन उवाच
तथा व्यूढेष्वनीकेषु कौरवेयैर्महारथैः
उपायादर्जुनस्तूर्णं रथघोषेण नादयन् १
ददृशुस्ते ध्वजाग्रं वै शुश्रुवुश्च रथस्वनम्
दोधूयमानस्य भृशं गाण्डीवस्य च निस्वनम् २
ततस्तत्सर्वमालोक्य द्रोणो वचनमब्रवीत्
महारथमनुप्राप्तं दृष्ट्वा गाण्डीवधन्विनम् ३
एतद्ध्वजाग्रं पार्थस्य दूरतः संप्रकाशते
एष घोषः सजलदो रोरवीति च वानरः ४
एष तिष्ठन्रथश्रेष्ठो रथे रथवरप्रणुत्
उत्कर्षति धनुःश्रेष्ठं गाण्डीवमशनिस्वनम् ५
इमौ हि बाणौ सहितौ पादयोर्मे व्यवस्थितौ
अपरौ चाप्यतिक्रान्तौ कर्णौ संस्पृश्य मे शरौ ६
निरुष्य हि वने वासं कृत्वा कर्मातिमानुषम्
अभिवादयते पार्थः श्रोत्रे च परिपृच्छति ७
अर्जुन उवाच
इषुपाते च सेनाया हयान्संयच्छ सारथे
यावत्समीक्षे सैन्येऽस्मिन्क्वासौ कुरुकुलाधमः ८
सर्वानन्याननादृत्य दृष्ट्वा तमतिमानिनम्
तस्य मूर्ध्नि पतिष्यामि तत एते पराजिताः ९
एष व्यवस्थितो द्रोणो द्रौणिश्च तदनन्तरम्
भीष्मः कृपश्च कर्णश्च महेष्वासा व्यवस्थिताः १०
राजानं नात्र पश्यामि गाः समादाय गच्छति

दक्षिणं मार्गमास्थाय शङ्के जीवपरायणः ११
उत्सृज्यैतद्रथानीकं गच्छ यत्र सुयोधनः
तत्रैव योत्स्ये वैराटे नास्ति युद्धं निरामिषम्
तं जित्वा विनिवर्तिष्ये गाः समादाय वै पुनः १२
वैशम्पायन उवाच
एवमुक्तः स वैराटिर्हयान्संयम्य यत्नतः
नियम्य च ततो रश्मीन्यत्र ते कुरुपुंगवाः
अचोदयत्ततो वाहान्यतो दुर्योधनस्ततः १३
उत्सृज्य रथवंशं तु प्रयाते श्वेतवाहने
अभिप्रायं विदित्वास्य द्रोणो वचनमब्रवीत् १४
नैषोऽन्तरेण राजानं बीभत्सुः स्थातुमिच्छति
तस्य पार्ष्णिं ग्रहीष्यामो जवेनाभिप्रयास्यतः १५
न ह्येनमभिसंक्रुद्धमेको युध्येत संयुगे
अन्यो देवात्सहस्राक्षात्कृष्णाद्वा देवकीसुतात् १६
किं नो गावः करिष्यन्ति धनं वा विपुलं तथा
दुर्योधनः पार्थजले पुरा नौरिव मज्जति १७
तथैव गत्वा बीभत्सुर्नाम विश्राव्य चात्मनः
शलभैरिव तां सेनां शरैः शीघ्रमवाकिरत् १८
कीर्यमाणाः शरौघैस्तु योधास्ते पार्थचोदितैः
नापश्यन्नावृतां भूमिमन्तरिक्षं च पत्रिभिः १९
तेषां नात्मनिनो युद्धे नापयानेऽभवन्मतिः
शीघ्रत्वमेव पार्थस्य पूजयन्ति स्म चेतसा २०
ततः शङ्खं प्रदध्मौ स द्विषतां लोमहर्षणम्
विस्फार्य च धनुःश्रेष्ठं ध्वजे भूतान्यचोदयत् २१
तस्य शङ्खस्य शब्देन रथनेमिस्वनेन च
अमानुषाणां तेषां च भूतानां ध्वजवासिनाम् २२
ऊर्ध्वं पुच्छान्विधुन्वाना रेभमाणाः समन्ततः
गावः प्रतिन्यवर्तन्त दिशमास्थाय दक्षिणाम् २३
इति श्रीमहाभारते विराटपर्वणि अष्टचत्वारिंशोऽध्यायः ४८

## एकोन पञ्चाशोऽध्यायः

वैशम्पायन उवाच
स शत्रुसेनां तरसा प्रणुद्य गास्ता विजित्याथ धनुर्धराग्र्यः
दुर्योधनायाभिमुखं प्रयातो भूयोऽर्जुनः प्रियमाजौ चिकीर्षन् १
गोषु प्रयातासु जवेन मत्स्यान्किरीटिनं कृतकार्यं च मत्वा
दुर्योधनायाभिमुखं प्रयान्तं कुरुप्रवीराः सहसाभिपेतुः २
तेषामनीकानि बहूनि गाढं व्यूढानि दृष्ट्वा बहुलध्वजानि
मत्स्यस्य पुत्रं द्विषतां निहन्ता वैराटिमामन्त्र्य ततोऽभ्युवाच ३
एतेन तूर्णं प्रतिपादयेमाञ्श्वेतान्हयान्काञ्चनरश्मियोक्त्रान्
जवेन सर्वेण कुरु प्रयत्नमासादयैतद्रथसिंहवृन्दम् ४
गजो गजेनेव मया दुरात्मा यो योद्धुमाकाङ्क्षति सूतपुत्रः
तमेव मां प्रापय राजपुत्र दुर्योधनापाश्रयजातदर्पम् ५
स तैर्हयैर्वातजवैर्बृहद्भिः पुत्रो विराटस्य सुवर्णकक्ष्यैः
विध्वंसयंस्तद्रथिनामनीकं ततोऽवहत्पाण्डवमाजिमध्ये ६
तं चित्रसेनो विशिखैर्विपाठैः संग्रामजिच्छत्रुसहो जयश्च
प्रत्युद्ययुर्भारतमापतन्तं महारथाः कर्णमभीप्समानाः ७
ततः स तेषां पुरुषप्रवीरः शरासनार्चिः शरवेगतापः
व्रातान्रथानामदहत्समन्युर्वनं यथाग्निः कुरुपुङ्गवानाम् ८
तस्मिंस्तु युद्धे तुमुले प्रवृत्ते पार्थं विकर्णोऽतिरथं रथेन
विपाठवर्षेण कुरुप्रवीरो भीमेन भीमानुजमाससाद ९
ततो विकर्णस्य धनुर्विकृष्य जाम्बूनदाग्र्योपचितं दृढज्यम्
अपातयद्ध्वजमस्य प्रमथ्य छिन्नध्वजः सोऽप्यपयाज्जवेन १०
तं शात्रवाणां गणबाधितारं कर्माणि कुर्वाणममानुषाणि
शत्रुन्तपः कोपममृष्यमाणः समर्पयत्कूर्मनखेन पार्थम् ११
स तेन राज्ञातिरथेन विद्धो विगाहमानो ध्वजिनीं कुरूणाम्
शत्रुन्तपं पञ्चभिराशु विद्ध्वा ततोऽस्य सूतं दशभिर्जघान १२
ततः स विद्धो भरतर्षभेण बाणेन गात्रावरणातिगेन
गतासुराजौ निपपात भूमौ नगो नगाग्रादिव वातरुग्णः १३
रथर्षभास्ते तु रथर्षभेण वीरा रणे वीरतरेण भग्नाः
चकम्पिरे वातवशेन काले प्रकम्पितानीव महावनानि १४

हतास्तु पार्थेन नरप्रवीरा भूमौ युवानः सुषुपुः सुवेषाः
वसुप्रदा वासवतुल्यवीर्याः पराजिता वासवजेन सङ्ख्ये
सुवर्णकार्ष्णायसवर्मनद्धा नागा यथा हैमवताः प्रवृद्धाः १५
तथा स शत्रून्समरे विनिघ्नन्गाण्डीवधन्वा पुरुषप्रवीरः
चचार सङ्ख्ये प्रदिशो दिशश्च दहन्निवाग्निर्वनमातपान्ते १६
प्रकीर्णपर्णानि यथा वसन्ते विशातयित्वात्यनिलो नुदन्खे
तथा सपत्नान्विकिरन्किरीटी चचार सङ्ख्येऽतिरथो रथेन १७
शोणाश्ववाहस्य हयान्निहत्य वैकर्तनभ्रातुरदीनसत्त्वः
एकेन संग्रामजितः शरेण शिरो जहाराथ किरीटमाली १८
तस्मिन्हते भ्रातरि सूतपुत्रो वैकर्तनो वीर्यमथाददानः
प्रगृह्य दन्ताविव नागराजो महर्षभं व्याघ्र इवाभ्यधावत् १९
स पाण्डवं द्वादशभिः पृषत्कैर्वैकर्तनः शीघ्रमुपाजघान
विव्याध गात्रेषु हयांश्च सर्वान्विराटपुत्रं च शरैर्निजघ्ने २०
स हस्तिनेवाभिहतो गजेन्द्रः प्रगृह्य भल्लान्निशितान्निषङ्गात्
आकर्णपूर्णं च धनुर्विकृष्य विव्याध बाणैरथ सूतपुत्रम् २१
अथास्य बाहूरुशिरोललाटं ग्रीवां रथाङ्गानि परावमर्दी
स्थितस्य बाणैर्युधि निर्बिभेद गाण्डीवमुक्तैरशनिप्रकाशैः २२
स पार्थमुक्तैर्विशिखैः प्रणुन्नो गजो गजेनेव जितस्तरस्वी
विहाय सङ्ग्रामशिरः प्रयातो वैकर्तनः पाण्डवबाणतप्तः २३
इति श्रीमहाभारते विराटपर्वणि एकोनपञ्चाशोऽध्यायः ४९

## पञ्चाशोऽध्यायः

वैशम्पायन उवाच
अपयाते तु राधेये दुर्योधनपुरोगमाः
अनीकेन यथास्वेन शनैरार्छन्त पाण्डवम् १
बहुधा तस्य सैन्यस्य व्यूढस्यापततः शरैः
अभियानीयमाज्ञाय वैराटिरिदमब्रवीत् २
आस्थाय रुचिरं जिष्णो रथं सारथिना मया
कतमद्यास्यसेऽनीकमुक्तो यास्याम्यहं त्वया ३
अर्जुन उवाच

लोहिताक्षमरिष्टं यं वैयाघ्रमनुपश्यसि
नीलां पताकामाश्रित्य रथे तिष्ठन्तमुत्तर ४
कृपस्यैतद्रथानीकं प्रापयस्वैतदेव माम्
एतस्य दर्शयिष्यामि शीघ्रास्त्रं दृढधन्विनः ५
कमण्डलुर्ध्वजे यस्य शातकुम्भमयः शुभः
आचार्य एष हि द्रोणः सर्वशस्त्रभृतां वरः ६
सुप्रसन्नमना वीर कुरुष्वैनं प्रदक्षिणम्
अत्रैव चाविरोधेन एष धर्मः सनातनः ७
यदि मे प्रथमं द्रोणः शरीरे प्रहरिष्यति
ततोऽस्य प्रहरिष्यामि नास्य कोपो भविष्यति ८
अस्याविदूरे तु धनुर्ध्वजाग्रे यस्य दृश्यते
आचार्यस्यैष पुत्रो वै अश्वत्थामा महारथः ९
सदा ममैष मान्यश्च सर्वशस्त्रभृतामपि
एतस्य त्वं रथं प्राप्य निवर्तेथाः पुनः पुनः १०
य एष तु रथानीके सुवर्णकवचावृतः
सेनाग्र्येण तृतीयेन व्यवहार्येण तिष्ठति ११
यस्य नागो ध्वजाग्रे वै हेमकेतनसंश्रितः
धृतराष्ट्रात्मजः श्रीमानेष राजा सुयोधनः १२
एतस्याभिमुखं वीर रथं पररथारुजः
प्रपायस्वैष तेजोभिः प्रमाथी युद्धदुर्मदः १३
एष द्रोणस्य शिष्याणां शीघ्रास्त्रः प्रथमो मतः
एतस्य दर्शयिष्यामि शीघ्रास्त्रं विपुलं शरैः १४
नागकक्ष्या तु रुचिरा ध्वजाग्रे यस्य तिष्ठति
एष वैकर्तनः कर्णो विदितः पूर्वमेव ते १५
एतस्य रथमास्थाय राधेयस्य दुरात्मनः
यत्तो भवेथाः संग्रामे स्पर्धत्येष मया सदा १६
यस्तु नीलानुसारेण पञ्चतारेण केतुना
हस्तावापी बृहद्धन्वा रथे तिष्ठति वीर्यवान् १७
यस्य तारार्कचित्रोऽसौ रथे ध्वजवरः स्थितः
यस्यैतत्पाण्डुरं छत्रं विमलं मूर्ध्नि तिष्ठति १८

महतो रथवंशस्य नानाध्वजपताकिनः
बलाहकाग्रे सूर्यो वा य एष प्रमुखे स्थितः १९
हैमं चन्द्रार्कसंकाशं कवचं यस्य दृश्यते
जातरूपशिरस्त्राणस्त्रासयन्निव मे मनः २०
एष शान्तनवो भीष्मः सर्वेषां नः पितामहः
राजश्रियावबद्धस्तु दुर्योधनवशानुगः २१
पश्चादेष प्रयातव्यो न मे विघ्नकरो भवेत्
एतेन युध्यमानस्य यत्तः संयच्छ मे हयान् २२
ततोऽभ्यवहदव्यग्रो वैराटिः सव्यसाचिनम्
यत्रातिष्ठत्कृपो राजन्योत्स्यमानो धनञ्जयम् २३
इति श्रीमहाभारते विराटपर्वणि पञ्चाशोऽध्यायः ५०

एक पञ्चाशोऽध्यायः

वैशम्पायन उवाच
तान्यनीकान्यदृश्यन्त कुरूणामुग्रधन्विनाम्
संसर्पन्तो यथा मेघा घर्मान्ते मन्दमारुताः १
अभ्याशे वाजिनस्तस्थुः समारूढाः प्रहारिभिः
भीमरूपाश्च मातङ्गास्तोमराङ्कुशचोदिताः २
ततः शक्रः सुरगणैः समारुह्य सुदर्शनम्
सहोपायात्तदा राजन्विश्वाश्विमरुतां गणैः ३
तद्देवयक्षगन्धर्वमहोरगसमाकुलम्
शुशुभेऽभ्रविनिर्मुक्तं ग्रहैरिव नभस्तलम् ४
अस्त्राणां च बलं तेषां मानुषेषु प्रयुज्यताम्
तच्च घोरं महद्युद्धं भीष्मार्जुनसमागमे ५
शतं शतसहस्राणां यत्र स्थूणा हिरण्मयाः
मणिरत्नमयाश्चान्याः प्रासादमुपधारयन् ६
तत्र कामगमं दिव्यं सर्वरत्नविभूषितम्
विमानं देवराजस्य शुशुभे खेचरं तदा ७
तत्र देवास्त्रयस्त्रिंशत्तिष्ठन्ति सहवासवाः
गन्धर्वा राक्षसाः सर्पाः पितरश्च महर्षिभिः ८

तथा राजा वसुमना बलाक्षः सुप्रतर्दनः
अष्टकश्च शिबिश्चैवययातिर्नहुषो गयः ९
मनुः क्षुपो रघुर्भानुः कृशाश्वः सगरः शलः
विमाने देवराजस्य समदृश्यन्त सुप्रभाः १०
अग्नेरीशस्य सोमस्य वरुणस्य प्रजापतेः
तथा धातुर्विधातुश्च कुबेरस्य यमस्य च ११
अलम्बुसोग्रसेनस्य गन्धर्वस्य च तुम्बुरोः
यथाभागं यथोद्देशं विमानानि चकाशिरे १२
सर्वदेवनिकायाश्च सिद्धाश्च परमर्षयः
अर्जुनस्य कुरूणां च द्रष्टुं युद्धमुपागताः १३
दिव्यानां तत्र माल्यानां गन्धः पुण्योऽथ सर्वशः
प्रससार वसन्ताग्रे वनानामिव पुष्पताम् १४
रक्तारक्तानि देवानां समदृश्यन्त तिष्ठताम्
आतपत्राणि वासांसि स्रजश्च व्यजनानि च १५
उपशाम्यद्रजो भौमं सर्वं व्याप्तं मरीचिभिः
दिव्यान्गन्धानुपादाय वायुर्योधानसेवत १६
प्रभासितमिवाकाशं चित्ररूपमलङ्कृतम्
संपतद्भिः स्थितैश्चैव नानारत्नावभासितैः
विमानैर्विविधैश्चित्रैरुपानीतैः सुरोत्तमैः १७

इति श्रीमहाभारते विराटपर्वणि एकपञ्चाशोऽध्यायः ५१

## द्विपञ्चाशोऽध्यायः

वैशम्पायन उवाच
एतस्मिन्नन्तरे तत्र महावीर्यपराक्रमः
आजगाम महासत्त्वः कृपः शस्त्रभृतां वरः
अर्जुनं प्रति संयोद्धुं युद्धार्थी स महारथः १
तौ रथौ सूर्यसंकाशौ योत्स्यमानौ महाबलौ
शारदाविव जीमूतौ व्यरोचेतां व्यवस्थितौ २
पार्थोऽपि विश्रुतं लोके गाण्डीवं परमायुधम्
विकृष्य चिक्षेप बहून्नाराचान्मर्मभेदिनः ३

तानप्राप्ताञ्शितैर्बाणैर्नाराचान्रक्तभोजनान्
कृपश्चिच्छेद पार्थस्य शतशोऽथ सहस्रशः ४
ततः पार्थश्च संक्रुद्धश्चित्रान्मार्गान्प्रदर्शयन्
दिशः संछादयन्बाणैः प्रदिशश्च महारथः ५
एकच्छायमिवाकाशं प्रकुर्वन्सर्वतः प्रभुः
प्रच्छादयदमेयात्मा पार्थः शरशतैः कृपम् ६
स शरैरर्पितः क्रुद्धः शितैरग्निशिखोपमैः
तूर्णं शरसहस्रेण पार्थमप्रतिमौजसम्
अर्पयित्वा महात्मानं ननाद समरे कृपः ७
ततः कनकपुङ्खाग्रैर्वीरः सन्नतपर्वभिः
त्वरन्गाण्डीवनिर्मुक्तैरर्जुनस्तस्य वाजिनः
चतुर्भिश्चतुरस्तीक्ष्णैरविध्यत्परमेषुभिः ८
ते हया निशितैर्विद्धा ज्वलद्भिरिव पन्नगैः
उत्पेतुः सहसा सर्वे कृपः स्थानादथाच्यवत् ९
च्युतं तु गौतमं स्थानात्समीक्ष्य कुरुनन्दनः
नाविध्यत्परवीरघ्नो रक्षमाणोऽस्य गौरवम् १०
स तु लब्ध्वा पुनः स्थानं गौतमः सव्यसाचिनम्
विव्याध दशभिर्बाणैस्त्वरितः कङ्कपत्रिभिः ११
ततः पार्थो धनुस्तस्य भल्लेन निशितेन च
चिच्छेदैकेन भूयश्च हस्ताच्चापमथाहरत् १२
अथास्य कवचं बाणैर्निशितैर्मर्मभेदिभिः
व्यधमन्न च पार्थोऽस्य शरीरमवपीडयत् १३
तस्य निर्मुच्यमानस्य कवचात्काय आबभौ
समये मुच्यमानस्य सर्पस्येव तनुर्यथा १४
छिन्ने धनुषि पार्थेन सोऽन्यदादाय कार्मुकम्
चकार गौतमः सज्यं तदद्भुतमिवाभवत् १५
स तदप्यस्य कौन्तेयश्चिच्छेद नतपर्वणा
एवमन्यानि चापानि बहूनि कृतहस्तवत्
शारद्वतस्य चिच्छेद पाण्डवः परवीरहा १६
स छिन्नधनुरादाय अथ शक्तिं प्रतापवान्

प्राहिणोत्पाण्डुपुत्राय प्रदीप्तामशनीमिव १७
तामर्जुनस्तदायान्तीं शक्तिं हेमविभूषिताम्
वियद्गतां महोल्काभां चिच्छेद दशभिः शरैः
सापतद्दशधा छिन्ना भूमौ पार्थेन धीमता १८
युगमध्ये तु भल्लैस्तु ततः स सधनुः कृपः
तमाशु निशितैः पार्थं बिभेद दशभिः शरैः १९
ततः पार्थो महातेजा विशिखानग्नितेजसः
चिक्षेप समरे क्रुद्धस्त्रयोदश शिलाशितान् २०
अथास्य युगमेकेन चतुर्भिश्चतुरो हयान्
षष्ठेन च शिरः कायाच्छरेण रथसारथेः २१
त्रिभिस्त्रिवेणुं समरे द्वाभ्यामक्षौ महाबलः
द्वादशेन तु भल्लेन चकर्तास्य ध्वजं तथा २२
ततो वज्रनिकाशेन फल्गुनः प्रहसन्निव
त्रयोदशेनेन्द्रसमः कृपं वक्षस्यताडयन् २३
स छिन्नधन्वा विरथो हताश्वो हतसारथिः
गदापाणिरवप्लुत्य तूर्णं चिक्षेप तां गदाम् २४
सा तु मुक्ता गदा गुर्वी कृपेण सुपरिष्कृता
अर्जुनेन शरैर्नुन्ना प्रतिमार्गमथागमत् २५
ततो योधाः परीप्सन्तः शारद्वतममर्षणम्
सर्वतः समरे पार्थं शरवर्षैरवाकिरन् २६
ततो विराटस्य सुतः सव्यमावृत्य वाजिनः
यमकं मण्डलं कृत्वा तान्योधान्प्रत्यवारयत् २७
ततः कृपमुपादाय विरथं ते नरर्षभाः
अपाजह्रुर्महावेगाः कुन्तीपुत्राद्धनंजयात् २८
इति श्रीमहाभारते विराटपर्वणि द्विपञ्चाशोऽध्यायः ५२

त्रिपञ्चाशोऽध्यायः

अर्जुन उवाच
यत्रैषा काञ्चनी वेदी प्रदीप्ताग्निशिखोपमा
उच्छ्रिता काञ्चने दण्डे पताकाभिरलङ्कृता

तत्र मां वह भद्रं ते द्रोणानीकाय मारिष १
अश्वा शोणाः प्रकाशन्ते बृहन्तश्चारुवाहिनः
स्निग्धविद्रुमसंकाशास्ताम्रास्याः प्रियदर्शनाः
युक्ता रथवरे यस्य सर्वशिक्षाविशारदाः २
दीर्घबाहुर्महातेजा बलरूपसमन्वितः
सर्वलोकेषु विख्यातो भारद्वाजः प्रतापवान् ३
बुद्ध्या तुल्यो ह्युशनसा बृहस्पतिसमो नये
वेदास्तथैव चत्वारो ब्रह्मचर्यं तथैव च ४
ससंहाराणि दिव्यानि सर्वाण्यस्त्राणि मारिष
धनुर्वेदश्च कार्त्स्न्येन यस्मिन्नित्यं प्रतिष्ठितः ५
क्षमा दमश्च सत्यं च आनृशंस्यमथार्जवम्
एते चान्ये च बहवो गुणा यस्मिन्द्विजोत्तमे ६
तेनाहं योद्धुमिच्छामि महाभागेन संयुगे
तस्मात्त्वं प्रापयाचार्यं क्षिप्रमुत्तर वाहय ७
वैशम्पायन उवाच
अर्जुनेनैवमुक्तस्तु वैराटिर्हेमभूषितान्
चोदयामास तानश्वान्भारद्वाजरथं प्रति ८
तमापतन्तं वेगेन पाण्डवं रथिनां वरम्
द्रोणः प्रत्युद्ययौ पार्थं मत्तो मत्तमिव द्विपम् ९
ततः प्राध्मापयच्छङ्खं भेरीशतनिनादितम्
प्रचुक्षुभे बलं सर्वमुद्धूत इव सागरः १०
अथ शोणान्सदश्वांस्तान्हंसवर्णैर्मनोजवैः
मिश्रितान्समरे दृष्ट्वा व्यस्मयन्त रणे जनाः ११
तौ रथौ वीर्य सम्पन्नौ दृष्ट्वा संग्राममूर्धनि
आचार्यशिष्यावजितौ कृतविद्यौ मनस्विनौ १२
समाश्लिष्टौ तदान्योन्यं द्रोणपार्थौ महाबलौ
दृष्ट्वा प्राकम्पत मुहुर्भरतानां महद्बलम् १३
हर्षयुक्तस्तथा पार्थः प्रहसन्निव वीर्यवान्
रथं रथेन द्रोणस्य समासाद्य महारथः १४
अभिवाद्य महाबाहुः सान्त्वपूर्वमिदं वचः

उवाच श्लक्ष्णया वाचा कौन्तेयः परवीरहा १५
उषिताः स्म वने वासं प्रतिकर्म चिकीर्षवः
कोपं नार्हसि नः कर्तुं सदा समरदुर्जय १६
अहं तु प्रहृते पूर्वं प्रहरिष्यामि तेऽनघ
इति मे वर्तते बुद्धिस्तद्भवान्कर्तुमर्हति १७
ततोऽस्मै प्राहिणोद्द्रोणः शरानधिकविंशतिम्
अप्राप्तांश्चैव तान्पार्थश्चिच्छेद कृतहस्तवत् १८
ततः शरसहस्रेण रथं पार्थस्य वीर्यवान्
अवाकिरत्ततो द्रोणः शीघ्रमस्त्रं विदर्शयन् १९
एवं प्रववृते युद्धं भारद्वाजकिरीटिनोः
समं विमुञ्चतोः संख्ये विशिखान्दीप्ततेजसः २०
तावुभौ ख्यातकर्माणावुभौ वायुसमौ जवे
उभौ दिव्यास्त्रविदुषावुभावुत्तमतेजसौ
क्षिपन्तौ शरजालानि मोहयामासतुर्नृपान् २१
व्यस्मयन्त ततो योधाः सर्वे तत्र समागताः
शरान्विसृजतोस्तूर्णं साधु साध्विति पूजयन् २२
द्रोणं हि समरे कोऽन्यो योद्धुमर्हति फल्गुनात्
रौद्रः क्षत्रियधर्मोऽय गुरुणा यदयुध्यत
इत्यब्रुवञ्जनास्तत्र संग्रामशिरसि स्थिताः २३
वीरौ तावपि संरब्धौ संनिकृष्टौ महारथौ
छादयेतां शरव्रातैरन्योन्यमपराजितौ २४
विस्फार्य सुमहच्चापं हेमपृष्ठं दुरासदम्
संरब्धोऽथ भरद्वाजः फल्गुनं प्रत्ययुध्यत २५
स सायकमयैर्जालैरर्जुनस्य रथं प्रति
भानुमद्भिः शिलाधौतैर्भानोः प्रच्छादयत्प्रभाम् २६
पार्थं च स महाबाहुर्महावेगैर्महारथः
विव्याध निशितैर्बाणैर्मेघो वृष्ट्येव पर्वतम् २७
तथैव दिव्यं गाण्डीवं धनुरादाय पाण्डवः
शत्रुघ्नं वेगवद्धृष्टो भारसाधनमुत्तमम् २८
विससर्ज शरांश्चित्रान्सुवर्णविकृतान्बहून्

नाशयञ्शरवर्षाणि भारद्वाजस्य वीर्यवान्
तूर्णं चापविनिर्मुक्तैस्तदद्भुतमिवाभवत् २९
स रथेन चरन्पार्थः प्रेक्षणीयो धनंजयः
युगपद्दिक्षु सर्वासु सर्वशस्त्राण्यदर्शयत् ३०
एकच्छायमिवाकाशं बाणैश्चक्रे समन्ततः
नादृश्यत तदा द्रोणो नीहारेणेव संवृतः ३१
तस्याभवत्तदा रूपं संवृतस्य शरोत्तमैः
जाज्वल्यमानस्य यथा पर्वतस्येव सर्वतः ३२
दृष्ट्वा तु पार्थस्य रणे शरैः स्वरथमावृतम्
स विस्फार्य धनुश्चित्रं मेघस्तनितनिस्वनम् ३३
अग्निचक्रोपमं घोरं विकर्षन्परमायुधम्
व्यशातयच्छरांस्तांस्तु द्रोणः समितिशोभनः
महानभूत्ततः शब्दो वंशानामिव दह्यताम् ३४
जाम्बूनदमयैः पुङ्खैश्चित्रचापवरातिगैः
प्राच्छादयदमेयात्मा दिशः सूर्यस्य च प्रभाम् ३५
ततः कनकपुङ्खानां शराणां नतपर्वणाम्
वियच्चराणां वियति दृश्यन्ते बहुशः प्रजाः ३६
द्रोणस्य पुङ्खसक्ताश्च प्रभवन्तः शरासनात्
एको दीर्घ इवादृश्यदाकाशे संहतः शरः ३७
एवं तौ स्वर्णविकृतान्विमुञ्चन्तौ महाशरान्
आकाशं संवृतं वीरावुल्काभिरिव चक्रतुः ३८
शरास्तयोश्च विबभुः कङ्कबर्हिणवाससः
पङ्क्त्यः शरदि खस्थानां हंसानां चरतामिव ३९
युद्धं समभवत्तत्र सुसंरब्धं महात्मनोः
द्रोणपाण्डवयोर्घोरं वृत्रवासवयोरिव ४०
तौ गजाविव चासाद्य विषाणाग्रैः परस्परम्
शरैः पूर्णायतोत्सृष्टैरन्योन्यमभिजघ्नतुः ४१
तौ व्यवाहरतां शूरौ संरब्धौ रणशोभिनौ
उदीरयन्तौ समरे दिव्यान्यस्त्राणि भागशः ४२
अथ त्वाचार्यमुख्येन शरान्सृष्टाञ्शिलाशितान्

न्यवारयच्छितैर्बाणैरर्जुनो जयतां वरः ४३
दर्शयन्नैन्द्रिरात्मानमुग्रमुग्रपराक्रमः
इषुभिस्तूर्णमाकाशं बहुभिश्च समावृणोत् ४४
जिघांसन्तं नरव्याघ्रमर्जुनं तिग्मतेजसम्
आचार्यमुख्यः समरे द्रोणः शस्त्रभृतां वरः
अर्जुनेन सहाक्रीडच्छरैः सन्नतपर्वभिः ४५
दिव्यान्यस्त्राणि मुञ्चन्तं भारद्वाजं महारणे
अस्त्रैरस्त्राणि संवार्य फल्गुनः समयोधयत् ४६
तयोरासीत्संप्रहारः क्रुद्धयोर्नरसिंहयोः
अमर्षिणोस्तदान्योन्यं देवदानवयोरिव ४७
एन्द्रं वायव्यमाग्नेयमस्त्रमस्त्रेण पाण्डवः
द्रोणेन मुक्तं मुक्तं तु ग्रसते स्म पुनः पुनः ४८
एवं शूरौ महेष्वासौ विसृजन्तौ शिताञ्शरान्
एकच्छायं चक्रतुस्तावाकाशं शरवृष्टिभिः ४९
ततोऽजुनेन मुक्तानां पततां च शरीरिषु
पर्वतेष्विव वज्राणां शराणां श्रूयते स्वनः ५०
ततो नागा रथाश्चैव सादिनश्च विशां पते
शोणिताक्ता व्यदृश्यन्त पुष्पिता इव किंशुकाः ५१
बाहुभिश्च सकेयूरैर्विचित्रैश्च महारथैः
सुवर्णचित्रैः कवचैर्ध्वजैश्च विनिपातितैः ५२
योधैश्च निहतैस्तत्र पार्थबाणप्रपीडितैः
बलमासीत्समुद्भ्रान्तं द्रोणार्जुनसमागमे ५३
विधुन्वानौ तु तौ वीरौ धनुषी भारसाधने
आच्छादयेतामन्योन्यं तितक्षन्तौ रणेषुभिः ५४
अथान्तरिक्षे नादोऽभूद्द्रोणं तत्र प्रशंसताम्
दुष्करं कृतवान्द्रोणो यदर्जुनमयोधयत् ५५
प्रमाथिनं महावीर्यं दृढमुष्टिं दुरासदम्
जेतारं देवदैत्यानां सर्पाणां च महारथम् ५६
अविश्रमं च शिक्षां च लाघवं दूरपातिताम्
पार्थस्य समरे दृष्ट्वा द्रोणस्याभूच्च विस्मयः ५७

अथ गाण्डीवमुद्यम्य दिव्यं धनुरमर्षणः
विचकर्ष रणे पार्थो बाहुभ्यां भरतर्षभ ५८
तस्य बाणमयं वर्षं शलभानामिवायतम्
न च बाणान्तरे वायुरस्य शक्नोति सर्पितुम् ५९
अनिशं संदधानस्य शरानुत्सृजतस्तदा
ददृशे नान्तरं किञ्चित्पार्थस्याददतोऽपि च ६०
तथा शीघ्रास्त्रयुद्धे तु वर्तमाने सुदारुणे
शीघ्राच्छीघ्रतरं पार्थः शरानन्यानुदीरयत् ६१
ततः शतसहस्राणि शराणां नतपर्वणाम्
युगपत्प्रापतंस्तत्र द्रोणस्य रथमन्तिकात् ६२
अवकीर्यमाणे द्रोणे तु शरैर्गाण्डीवधन्वना
हाहाकारो महानासीत्सैन्यानां भरतर्षभ ६३
पाण्डवस्य तु शीघ्रास्त्रं मघवान्समपूजयत्
गन्धर्वाप्सरसश्चैव ये च तत्र समागताः ६४
ततो वृन्देन महता रथानां रथयूथपः
आचार्यपुत्रः सहसा पाण्डवं प्रत्यवारयत् ६५
अश्वत्थामा तु तत्कर्म हृदयेन महात्मनः
पूजयामास पार्थस्य कोपं चास्याकरोद्भृशम् ६६
स मन्युवशमापन्नः पार्थमभ्यद्रवद्रणे
किरञ्शरसहस्राणि पर्जन्य इव वृष्टिमान् ६७
आवृत्य तु महाबाहुर्यतो द्रौणिस्ततो हयान्
अन्तरं प्रददौ पार्थो द्रोणस्य व्यपसर्पितुम् ६८
स तु लब्ध्वान्तरं तूर्णमपायाज्जवनैर्हयैः
छिन्नवर्मध्वजः शूरो निकृत्तः परमेषुभिः ६९
इति श्रीमहाभारते विराटपर्वणि त्रिपञ्चाशोऽध्यायः ५३

चतुः पञ्चाशोऽध्यायः

वैशम्पायन उवाच
तं पार्थः प्रतिजग्राह वायुवेगमिवोद्धतम्
शरजालेन महता वर्षमाणमिवाम्बुदम् १

तयोर्देवासुरसमः संनिपातो महानभूत्
किरतोः शरजालानि वृत्रवासवयोरिव २
न स्म सूर्यस्तदा भाति न च वाति समीरणः
शरगाढे कृते व्योम्नि छायाभूते समन्ततः ३
महांश्चटचटाशब्दो योधयोर्हन्यमानयोः
दह्यतामिव वेणूनामासीत्परपुरंजय ४
हयानस्यार्जुनः सर्वान्कृतवानल्पजीवितान्
स राजन्न प्रजानाति दिशं कांचन मोहितः ५
ततो द्रौणिर्महावीर्यः पार्थस्य विचरिष्यतः
विवरं सूक्ष्ममालोक्य ज्यां चिच्छेद क्षुरेण ह
तदस्यापूजयन्देवाः कर्म दृष्ट्वातिमानुषम् ६
ततो द्रौणिर्धनूंष्यष्टौ व्यपक्रम्य नरर्षभम्
पुनरभ्याहनत्पार्थं हृदये कङ्कपत्रिभिः ७
ततः पार्थो महाबाहुः प्रहस्य स्वनवत्तदा
योजयामास नवया मौर्व्या गाण्डीवमोजसा ८
ततोऽधचन्द्रमावृत्य तेन पार्थः समागमत्
वारणेनेव मत्तेन मत्तो वारणयूथपः ९
ततः प्रववृते युद्धं पृथिव्यामेकवीरयोः
रणमध्ये द्वयोरेव सुमहल्लोमहर्षणम् १०
तौ वीरौ कुरवः सर्वे ददृशुर्विस्मयान्विताः
युध्यमानौ महात्मानौ यूथपाविव सङ्गतौ ११
तौ समाजघ्नतुर्वीरावन्योन्यं पुरुषर्षभौ
शरैराशीविषाकारैर्ज्वलद्भिरिव पन्नगैः १२
अक्षय्याविषुधी दिव्यौ पाण्डवस्य महात्मनः
तेन पार्थो रणे शूरस्तस्थौ गिरिरिवाचलः १३
अश्वत्थाम्नः पुनर्बाणाः क्षिप्रमभ्यस्यतो रणे
जग्मुः परिक्षयं शीघ्रमभूत्तेनाधिकोऽजुनः १४
ततः कर्णो महच्चापं विकृष्याभ्यधिकं रुषा
अवाक्षिपत्ततः शब्दो हाहाकारो महानभूत् १५
तत्र चक्षुर्दधे पार्थो यत्र विस्फार्यते धनुः

ददर्श तत्र राधेयं तस्य कोपोऽत्यवीवृधत् १६
स रोषवशमापन्नः कर्णमेव जिघांसया
अवैक्षत विवृत्ताभ्यां नेत्राभ्यां कुरुपुङ्गवः १७
तथा तु विमुखे पार्थे द्रोणपुत्रस्य सायकान्
त्वरिताः पुरुषा राजन्नुपाजह्रुः सहस्रशः १८
उत्सृज्य च महाबाहुर्द्रोणपुत्रं धनंजयः
अभिदुद्राव सहसा कर्णमेव सपत्नजित् १९
तमभिद्रुत्य कौन्तेयः क्रोधसंरक्तलोचनः
कामयन्द्वैरथे युद्धमिदं वचनमब्रवीत् २०
इति श्रीमहाभारते विराटपर्वणि चतुःपञ्चाशोऽध्यायः ५४

## पञ्चपञ्चाशोऽध्यायः

अर्जुन उवाच
कर्ण यत्ते सभामध्ये बहु वाचा विकत्थितम्
न मे युधि समोऽस्तीति तदिदं प्रत्युपस्थितम् १
अवोचः परुषा वाचो धर्ममुत्सृज्य केवलम्
इदं तु दुष्करं मन्ये यदिदं ते चिकीर्षितम् २
यत्त्वया कथितं पूर्वं मामनासाद्य किंचन
तदद्य कुरु राधेय कुरुमध्ये मया सह ३
यत्सभायां स्म पाञ्चालद्यं क्लिश्यमानां दुरात्मभिः
दृष्टवानसि तस्याद्य फलमाप्नुहि केवलम् ४
धर्मपाशनिबद्धेन यन्मया मर्षितं पुरा
तस्य राधेय कोपस्य विजयं पश्य मे मृधे ५
एहि कर्ण मया सार्धं प्रतिपद्यस्व सङ्गरम्
प्रेक्षकाः कुरवः सर्वे भवन्तु सहसैनिकाः ६
कर्ण उवाच
ब्रवीषि वाचा यत्पार्थ कर्मणा तत्समाचर
अतिशेते हि वै वाचं कर्मेति प्रथितं भुवि ७
यत्त्वया मर्षितं पूर्वं तदशक्तेन मर्षितम्
इति गृह्णामि तत्पार्थ तव दृष्ट्वा पराक्रमम् ८

धर्मपाशनिबद्धेन यदि ते मर्षितं पुरा
तथैव बद्धमात्मानमबद्धमिव मन्यसे ९
यदि तावद्वने वासो यथोक्तश्चरितस्त्वया
तत्त्वं धर्मार्थवित्क्लिष्टः समयं भेत्तुमिच्छसि १०
यदि शक्रः स्वयं पार्थ युध्यते तव कारणात्
तथापि न व्यथा काचिन्मम स्याद्विक्रमिष्यतः ११
अयं कौन्तेय कामस्ते नचिरात्समुपस्थितः
योत्स्यसे त्वं मया सार्धमद्य द्रक्ष्यसि मे बलम् १२
अर्जुन उवाच
इदानीमेव तावत्त्वमपयातो रणान्मम
तेन जीवसि राधेय निहतस्त्वनुजस्तव १३
भ्रातरं घातयित्वा च त्यक्त्वा रणशिरश्च कः
त्वदन्यः पुरुषः सत्सु ब्रूयादेवं व्यवस्थितः १४
वैशम्पायन उवाच
इति कर्णं ब्रुवन्नेव बीभत्सुरपराजितः
अभ्ययाद्विसृजन्बाणान्कायावरणभेदिनः १५
प्रतिजग्राह तान्कर्णः शरानग्निशिखोपमान्
शरवर्षेण महता वर्षमाण इवाम्बुदः १६
उत्पेतुः शरजालानि घोररूपाणि सर्वशः
अविध्यदश्वान्बाह्वोश्च हस्तावापं पृथक्पृथक् १७
सोऽमृष्यमाणः कर्णस्य निषङ्गस्यावलम्बनम्
चिच्छेद निशिताग्रेण शरेण नतपर्वणा १८
उपासङ्गादुपादाय कर्णो बाणानथापरान्
विव्याध पाण्डवं हस्ते तस्य मुष्टिरशीर्यत १९
ततः पार्थो महाबाहुः कर्णस्य धनुरच्छिनत्
स शक्तिं प्राहिणोत्तस्मै तां पार्थो व्यधमच्छरैः २०
ततोऽभिपेतुर्बहवो राधेयस्य पदानुगाः
तांश्च गाण्डीवनिर्मुक्तैः प्राहिणोद्यमसादनम् २१
ततोऽस्याश्वाञ्शरैस्तीक्ष्णैर्बीभत्सुर्भारसाधनैः
आकर्णमुक्तैरभ्यघ्नंस्ते हताः प्रापतन्भुवि २२

अथापरेण बाणेन ज्वलितेन महाभुजः
विव्याध कर्णं कौन्तेयस्तीक्ष्णेनोरसि वीर्यवान् २३
तस्य भित्त्वा तनुत्राणं कायमभ्यपतच्छरः
ततः स तमसाविष्टो न स्म किंचित्प्रजज्ञिवान् २४
स गाढवेदनो हित्वा रणं प्रायादुदङ्मुखः
ततोऽर्जुन उपाक्रोशदुत्तरश्च महारथः २५
इति श्रीमहाभारते विराटपर्वणि पञ्चपञ्चाशोऽध्यायः ५५

## षट्पञ्चाशोऽध्यायः

वैशम्पायन उवाच
ततो वैकर्तनं जित्वा पार्थो वैराटिमब्रवीत्
एतन्मां प्रापयानीकं यत्र तालो हिरण्मयः १
अत्र शान्तनवो भीष्मो रथेऽस्माकं पितामहः
काङ्क्षमाणो मया युद्धं तिष्ठत्यमरदर्शनः
आदास्याम्यहमेतस्य धनुर्ज्यामपि चाहवे २
अस्यन्तं दिव्यमस्त्रं मां चित्रमद्य निशामय
शतह्रदामिवायान्तीं स्तनयित्नोरिवाम्बरे ३
सुवर्णपृष्ठं गाण्डीवं द्रक्ष्यन्ति कुरवो मम
दक्षिणेनाथ वामेन कतरेण स्विदस्यति
इति मां सङ्गताः सर्वे तर्कयिष्यन्ति शत्रवः ४
शोणितोदां रथावर्तां नागनक्रां दुरत्ययाम्
नदीं प्रस्यन्दयिष्यामि परलोकप्रवाहिनीम् ५
पाणिपादशिरःपृष्ठबाहुशाखानिरन्तरम्
वनं कुरूणां छेत्स्यामि भल्लैः सन्नतपर्वभिः ६
जयतः कौरवीं सेनामेकस्य मम धन्विनः
शतं मार्गा भविष्यन्ति पावकस्येव कानने
मया चक्रमिवाविद्धं सैन्यं द्रक्ष्यसि केवलम् ७
असंभ्रांतो रथे तिष्ठ समेषु विषमेषु च
दिवमावृत्य तिष्ठन्तं गिरिं भेत्स्यामि धारिभिः ८
अहमिन्द्रस्य वचनात्संग्रामेऽभ्यहनं पुरा

पौलोमान्कालखञ्जांश्च सहस्राणि शतानि च ९
अहमिन्द्राद्दृढां मुष्टिं ब्रह्मणः कृतहस्तताम्
प्रगाढं तुमुलं चित्रमतिविद्धं प्रजापतेः १०
अहं पारे समुद्रस्य हिरण्यपुरमारुजम्
जित्वा षष्टिं सहस्राणि रथिनामुग्रधन्विनाम् ११
ध्वजवृक्षं पत्तितृणं रथसिंहगणायुतम्
वनमादीपयिष्यामि कुरूणामस्त्रतेजसा १२
तानहं रथनीडेभ्यः शरैः सन्नतपर्वभिः
एकः संकालयिष्यामि वज्रपाणिरिवासुरान् १३
रौद्रं रुद्रादहं ह्यस्त्रं वारुणं वरुणादपि
अस्त्रमाग्नेयमग्नेश्च वायव्यं मातरिश्वनः
वज्रादीनि तथास्त्राणि शक्रादहमवाप्तवान् १४
धार्तराष्ट्रवनं घोरं नरसिंहाभिरक्षितम्
अहमुत्पाटयिष्यामि वैराटे व्येतु ते भयम् १५
एवमाश्वासितस्तेन वैराटिः सव्यसाचिना
व्यगाहत रथानीकं भीमं भीष्मस्य धीमतः १६
तमायान्तं महाबाहुं जिगीषन्तं रणे परान्
अभ्यवारयदव्यग्रः क्रूरकर्मा धनंजयम् १७
तं चित्रमाल्याभरणाः कृतविद्या मनस्विनः
आगच्छन्भीमधन्वानं मौर्वीं पर्यस्य बाहुभिः १८
दुःशासनो विकर्णश्च दुःसहोऽथ विविंशतिः
आगत्य भीमधन्वानं बीभत्सुं पर्यवारयन् १९
दुःशासनस्तु भल्लेन विध्वा वैराटिमुत्तरम्
द्वितीयेनार्जुनं वीरः प्रत्यविध्यत्स्तनान्तरे २०
तस्य जिष्णुरुपावृत्य पृथुधारेण कार्मुकम्
चकर्त गार्ध्रपत्रेण जातरूपपरिष्कृतम् २१
अथैनं पञ्चभिः पश्चात्प्रत्यविध्यत्स्तनान्तरे
सोऽपयातो रणं हित्वा पार्थबाणप्रपीडितः २२
तं विकर्णः शरैस्तीक्ष्णैर्गार्ध्रपत्रैरजिह्मगैः
विव्याध परवीरघ्नमर्जुनं धृतराष्ट्रजः २३

ततस्तमपि कौन्तेयः शरेणानतपर्वणा
ललाटेऽभ्यहनत्तूर्णं स विद्धः प्रापतद्रथात् २४
ततः पार्थमभिद्रुत्य दुःसहः सविविंशतिः
अवाकिरच्छरैस्तीक्ष्णैः परीप्सन् भ्रातरं रणे २५
तावुभौ गार्ध्रपत्राभ्यां निशिताभ्यां धनंजयः
विद्ध्वा युगपदव्यग्रस्तयोर्वाहानसूदयत् २६
तौ हताश्वौ विविद्धांगौ धृतराष्ट्रात्मजावुभौ
अभिपत्य रथैरन्यैरपनीतौ पदानुगैः २७
सर्वा दिशश्चाभ्यपतद्बीभत्सुरपराजितः
किरीटमाली कौन्तेयो लब्धलक्षो महाबलः २८
इति श्रीमहाभारते विराटपर्वणि षट्पंचाशोऽध्यायः ५६

## सप्तपञ्चाशोऽध्यायः

वैशम्पायन उवाच
अथ संगम्य सर्वे ते कौरवाणां महारथाः
अर्जुनं सहिता यत्ताः प्रत्ययुध्यन्त भारत १
स सायकमयैर्जालैः सर्वतस्तान्महारथान्
प्राच्छादयदमेयात्मा नीहार इव पर्वतान् २
नदद्भिश्च महानागैर्हेषमाणैश्च वाजिभिः
भेरीशङ्खनिनादैश्च स शब्दस्तुमुलोऽभवत् ३
नराश्वकायान्निर्भिद्य लौहानि कवचानि च
पार्थस्य शरजालानि विनिष्पेतुः सहस्रशः ४
त्वरमाणः शरानस्यन्पाण्डवः स बभौ रणे
मध्यन्दिनगतोऽर्चिष्माञ्शरदीव दिवाकरः ५
उपप्लवन्त वित्रस्ता रथेभ्यो रथिनस्तदा
सादिनश्चाश्वपृष्ठेभ्यो भूमौ चापि पदातयः ६
शरैः संताड्यमानानां कवचानां महात्मनाम्
ताम्रराजतलोहानां प्रादुरासीन्महास्वनः ७
छन्नमायोधनं सर्वं शरीरैर्गतचेतसाम्
गजाश्वसादिभिस्तत्र शितबाणात्तजीवितैः ८

रथोपस्थाभिपतितैरास्तृता मानवैर्मही
प्रनृत्यदिव सङ्ग्रामे चापहस्तो धनंजयः ९
श्रुत्वा गाण्डीवनिर्घोषं विस्फूर्जितमिवाशनेः
त्रस्तानि सर्वभूतानि व्यगच्छन्त महाहवात् १०
कुण्डलोष्णीषधारीणि जातरूपस्रजानि च
पतितानि स्म दृश्यन्ते शिरांसि रणमूर्धनि ११
विशिखोन्मथितैर्गात्रैर्बाहुभिश्च सकार्मुकैः
सहस्ताभरणैश्चान्यैः प्रच्छन्ना भाति मेदिनी १२
शिरसां पात्यमानानामन्तरा निशितैः शरैः
अश्मवृष्टिरिवाकाशादभवद्भरतर्षभ १३
दर्शयित्वा तथात्मानं रौद्रं रुद्रपराक्रमः
अवरुद्धश्चरन्पार्थो दश वर्षाणि त्रीणि च
क्रोधाग्निमुत्सृजद्घोरं धार्तराष्ट्रेषु पाण्डवः १४
तस्य तद्दहतः सैन्यं दृष्ट्वा चैव पराक्रमम्
सर्वे शान्तिपरा योधा धार्तराष्ट्रस्य पश्यतः १५
वित्रासयित्वा तत्सैन्यं द्रावयित्वा महारथान्
अर्जुनो जयतां श्रेष्ठः पर्यवर्तत भारत १६
प्रावर्तयन्नदीं घोरां शोणितौघतरङ्गिणीम्
अस्थिशैवलसंबाधां युगान्ते कालनिर्मिताम् १७
शरचापप्लवां घोरां मांसशोणितकर्दमाम्
महारथमहाद्वीपां शङ्खदुन्दुभिनिस्वनाम्
चकार महतीं पार्थो नदीमुत्तरशोणिताम् १८
आददानस्य हि शरान्संधाय च विमुञ्चतः
विकर्षतश्च गाण्डीवं न किंचिद्दृश्यतेऽन्तरम् १९
इति श्रीमहाभारते विराटपर्वणि सप्तपञ्चाशोऽध्यायः ५७

अष्ट पञ्चाशोऽध्यायः

वैशम्पायन उवाच
अथ दुर्योधनः कर्णो दुःशासनविविंशती
द्रोणश्च सह पुत्रेण कृपश्चातिरथो रणे १

पुनरीयुः सुसंरब्धा धनञ्जयजिघांसया
विस्फारयन्तश्चापानि बलवन्ति दृढानि च २
तान्प्रकीर्णपताकेन रथेनादित्यवर्चसा
प्रत्युद्ययौ महाराज समस्तान्वानरध्वजः ३
ततः कृपश्च कर्णश्च द्रोणश्च रथिनां वरः
तं महास्त्रैर्महावीर्यं परिवार्य धनंजयम् ४
शरौघान्सम्यगस्यन्तो जीमूता इव वार्षिकाः
ववर्षुः शरवर्षाणि प्रपतन्तं किरीटिनम् ५
इषुभिर्बहुभिस्तूर्णं समरे लोमवाहिभिः
अदूरात्पर्यवस्थाय पूरयामासुरादृताः ६
तथावकीर्णस्य हि तैर्दिव्यैरस्त्रैः समन्ततः
न तस्य द्व्यङ्गुलमपि विवृतं समदृश्यत ७
ततः प्रहस्य बीभत्सुर्दिव्यमैन्द्रं महारथः
अस्त्रमादित्यसंकाशं गाण्डीवे समयोजयत् ८
स रश्मिभिरिवादित्यः प्रतपन्समरे बली
किरीटमाली कौन्तेयः सर्वान्प्राच्छादयत्कुरून् ९
यथा बलाहके विद्युत्पावको वा शिलोच्चये
तथा गाण्डीवमभवदिन्द्रायुधमिवाततम् १०
यथा वर्षति पर्जन्ये विद्युद्विभ्राजते दिवि
तथा दश दिशः सर्वाः पतद्गाण्डीवमावृणोत् ११
सर्वे शान्तिपरा भूत्वा स्वचित्तानि न लेभिरे
संग्रामविमुखाः सर्वे योधास्ते हतचेतसः १२
एवं सर्वाणि सैन्यानि भग्नानि भरतर्षभ
प्राद्रवन्त दिशः सर्वा निराशानि स्वजीविते १३
इति श्रीमहाभारते विराटपर्वणि अष्टपञ्चाशोऽध्यायः ५८

## एकोनषष्ठितमोऽध्यायः

वैशम्पायन उवाच
ततः शांतनवो भीष्मो दुराधर्षः प्रतापवान्
वध्यमानेषु योधेषु धनंजयमुपाद्रवत् १

प्रगृह्य कार्मुकश्रेष्ठं जातरूपपरिष्कृतम्
शरानादाय तीक्ष्णाग्रान्मर्मभेदप्रमाथिनः २
पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्धनि
शुशुभे स नरव्याघ्रो गिरिः सूर्योदये यथा ३
प्रध्माय शङ्खं गांगेयो धार्तराष्ट्रान्प्रहर्षयन्
प्रदक्षिणमुपावृत्य बीभत्सुं समवारयत् ४
तमुद्वीक्ष्य तथायान्तं कौन्तेयः परवीरहा
प्रत्यगृह्णात्प्रहृष्टात्मा धाराधरमिवाचलः ५
ततो भीष्मः शरानष्टौ ध्वजे पार्थस्य वीर्यवान्
समर्पयन्महावेगाञ्श्वसमानानिवोरगान् ६
ते ध्वजं पाण्डुपुत्रस्य समासाद्य पतत्रिणः
ज्वलन्तः कपिमाजघ्नुर्ध्वजाग्रनिलयांश्च तान् ७
ततो भल्लेन महता पृथुधारेण पाण्डवः
छत्रं चिच्छेद भीष्मस्य तूर्णं तदपतद्भुवि ८
ध्वजं चैवास्य कौन्तेयः शरैरभ्यहनद्दृढम्
शीघ्रकृद्रथवाहांश्च तथोभौ पार्ष्णिसारथी ९
तयोस्तदभवद्युद्धं तुमुलं लोमहर्षणम्
भीष्मस्य सह पार्थेन बलिवासवयोरिव १०
भल्लैर्भल्लाः समागम्य भीष्मपाण्डवयोर्युधि
अन्तरिक्षे व्यराजन्त खद्योताः प्रावृषीव हि ११
अग्निचक्रमिवाविद्धं सव्यदक्षिणमस्यतः
गाण्डीवमभवद्राजन्पार्थस्य सृजतः शरान् १२
स तैः सञ्छादयामास भीष्मं शरशतैः शितैः
पर्वतं वारिधाराभिश्छादयन्निव तोयदः १३
तां स वेलामिवोद्धूतां शरवृष्टिं समुत्थिताम्
व्यधमत्सायकैर्भीष्मो अर्जुनं संनिवारयत् १४
ततस्तानि निकृत्तानि शरजालानि भागशः
समरेऽभिव्यशीर्यन्त फल्गुनस्य रथं प्रति १५
ततः कनकपुङ्खानां शरवृष्टिं समुत्थिताम्
पाण्डवस्य रथात्तूर्णं शलभानामिवायतिम्

व्यधमत्तां पुनस्तस्य भीष्मः शरशतैः शितैः १६
ततस्ते कुरवः सर्वे साधु साध्विति चाब्रुवन्
दुष्करं कृतवान्भीष्मो यदर्जुनमयोधयत् १७
बलवांस्तरुणो दक्षः क्षिप्रकारी च पाण्डवः
कोऽन्य समर्थः पार्थस्य वेगं धारयितुं रणे १८
ऋते शांतनवाद्भीष्मात्कृष्णाद्वा देवकीसुतात्
आचार्यप्रवराद्वापि भारद्वाजान्महाबलात् १९
अस्त्रैरस्त्राणि संवार्य क्रीडतः पुरुषर्षभौ
चक्षूंषि सर्वभूतानां मोहयन्तौ महाबलौ २०
प्राजापत्यं तथैवैन्द्रमाग्नेयं च सुदारुणम्
कौबेरं वारुणं चैव याम्यं वायव्यमेव च
प्रयुञ्जानौ महात्मानौ समरे तौ विचेरतुः २१
विस्मितान्यथ भूतानि तौ दृष्ट्वा संयुगे तदा
साधु पार्थ महाबाहो साधु भीष्मेति चाब्रुवन् २२
नेदं युक्तं मनुष्येषु योऽय संदृश्यते महान्
महास्त्राणां संप्रयोगः समरे भीष्मपार्थयोः २३
एवं सर्वास्त्रविदुषोरस्त्रयुद्धमवर्तत
अथ जिष्णुरुपावृत्य पृथुधारेण कार्मुकम्
चकर्त भीष्मस्य तदा जातरूपपरिष्कृतम् २४
निमेषान्तरमात्रेण भीष्मोऽन्यत्कार्मुकं रणे
समादाय महाबाहुः सज्यं चक्रे महाबलः
शरांश्च सुबहून्क्रुद्धो मुमोचाशु धनञ्जये २५
अर्जुनोऽपि शरांश्चित्रान्भीष्माय निशितान्बहून्
चिक्षेप सुमहातेजास्तथा भीष्मश्च पाण्डवे २६
तयोर्दिव्यास्त्रविदुषोरस्यतोरनिशं शरान्
न विशेषस्तदा राजँल्लक्ष्यते स्म महात्मनोः २७
अथावृणोद्दश दिशः शरैरतिरथस्तदा
किरीटमाली कौन्तेयः शूरः शांतनवस्तथा २८
अतीव पाण्डवो भीष्मं भीष्मश्चातीव पाण्डवम्
बभूव तस्मिन्संग्रामे राजँल्लोके तदद्भुतम् २९

पाराडवेन हताः शूरा भीष्मस्य रथरक्षिणः
शेरते स्म तदा राजन्कौन्तेयस्याभितो रथम् ३०
ततो गाराडीवनिर्मुक्ता निरमित्रं चिकीर्षवः
आगच्छन्पुङ्खसंश्लिष्टाः श्वेतवाहनपत्रिणः ३१
निष्पतन्तो रथात्तस्य धौता हैररायवाससः
आकाशे समदृश्यन्त हंसानामिव पङ्क्तयः ३२
तस्य तद्दिव्यमस्त्रं हि प्रगाढं चित्रमस्यतः
प्रेक्षन्ते स्मान्तरिक्षस्थाः सर्वे देवाः सवासवाः ३३
तद्दृष्ट्वा परमप्रीतो गन्धर्वश्चित्रमद्भुतम्
शशंस देवराजाय चित्रसेनः प्रतापवान् ३४
पश्येमानरिनिर्दारान्संसक्तानिव गच्छतः
चित्ररूपमिदं जिष्णोर्दिव्यमस्त्रमुदीर्यतः ३५
नेदं मनुष्याः श्रद्दध्युर्न हीदं तेषु विद्यते
पौराणानां महास्त्राणां विचित्रोऽय समागमः ३६
मध्यन्दिनगतं सूर्यं प्रतपन्तमिवाम्बरे
न शक्नुवन्ति सैन्यानि पाराडवं प्रतिवीक्षितुम् ३७
उभौ विश्रुतकर्माणावुभौ युद्धविशारदौ
उभौ सदृशकर्माणावुभौ युधि दुरासदौ ३८
इत्युक्तो देवराजस्तु पार्थभीष्मसमागमम्
पूजयामास दिव्येन पुष्पवर्षेण भारत ३९
ततो भीष्मः शान्तनवो वामे पार्श्वे समर्पयत्
अस्यतः प्रतिसंधाय विवृतं सव्यसाचिनः ४०
ततः प्रहस्य बीभत्सुः पृथुधारेण कार्मुकम्
न्यकृन्तद्गार्ध्रपत्रेण भीष्मस्यामिततेजसः ४१
अथैनं दशभिर्बाणैः प्रत्यविध्यत्स्तनान्तरे
यतमानं पराक्रान्तं कुन्तीपुत्रो धनंजयः ४२
स पीडितो महाबाहुर्गृहीत्वा रथकूबरम्
गाङ्गेयो युधि दुर्धर्षस्तस्थौ दीर्घमिवातुरः ४३
तं विसंज्ञमपोवाह संयन्ता रथवाजिनाम्
उपदेशमनुस्मृत्य रक्षमाणो महारथम् ४४

इति श्रीमहाभारते विराटपर्वणि एकोनषष्टितमोऽध्यायः ५९

षष्टितमोऽध्यायः

वैशम्पायन उवाच
भीष्मे तु संग्रामशिरो विहाय पलायमाने धृतराष्ट्रपुत्रः
उच्छ्रित्य केतुं विनदन्महात्मा स्वयं विगृह्यार्जुनमाससाद १
स भीमधन्वानमुदग्रवीर्यं धनंजयं शत्रुगणे चरन्तम्
आकर्णपूर्णायतचोदितेन भल्लेन विव्याध ललाटमध्ये २
स तेन बाणेन समर्पितेन जाम्बूनदाभेन सुसंशितेन
रराज राजन्महनीयकर्मा यथैकपर्वा रुचिरैकशृङ्गः ३
अथास्य बाणेन विदारितस्य प्रादुर्बभूवासृगजस्रमुष्णम्
सा तस्य जाम्बूनदपुष्पचित्रा मालेव चित्राभिविराजते स्म ४
स तेन बाणाभिहतस्तरस्वी दुर्योधनेनोद्धतमन्युवेगः
शरानुपादाय विषाग्निकल्पान्विव्याध राजानमदीनसत्त्वः ५
दुर्योधनश्चापि तमुग्रतेजाः पार्थश्च दुर्योधनमेकवीरः
अन्योन्यमाजौ पुरुषप्रवीरौ समं समाजघ्नतुराजमीढौ ६
ततः प्रभिन्नेन महागजेन महीधराभेन पुनर्विकर्णः
रथैश्चतुर्भिर्गजपादरक्षैः कुन्तीसुतं जिष्णुमथाभ्यधावत् ७
तमापतन्तं त्वरितं गजेन्द्रं धनंजयः कुम्भविभागमध्ये
आकर्णपूर्णेन दृढायसेन बाणेन विव्याध महाजवेन ८
पार्थेन सृष्टः स तु गार्ध्रपत्र आ पुङ्खदेशात्प्रविवेश नागम्
विदार्य शैलप्रवरप्रकाशं यथाशनिः पर्वतमिन्द्रसृष्टः ९
शरप्रतप्तः स तु नागराजः प्रवेपिताङ्गो व्यथितान्तरात्मा
संसीदमानो निपपात मह्यां वज्राहतं शृङ्गमिवाचलस्य १०
निपातिते दन्तिवरे पृथिव्यां त्रासाद्विकर्णः सहसावतीर्य
तूर्णं पदान्यष्टशतानि गत्वा विविंशतेः स्यन्दनमारुरोह ११
निहत्य नागं तु शरेण तेन वज्रोपमेनाद्रिवराम्बुदाभम्
तथाविधेनैव शरेण पार्थो दुर्योधनं वक्षसि निर्बिभेद १२
ततो गजे राजनि चैव भिन्ने भग्ने विकर्णे च सपादरक्षे
गाण्डीवमुक्तैर्विशिखैः प्रणुन्नास्ते योधमुख्याः सहसापजग्मुः १३

दृष्ट्वैव पार्थेन हतं तु नागं योधांश्च सर्वान्द्रवतो निशम्य
रथं समावृत्य कुरुप्रवीरो रणात्प्रदुद्राव यतो न पार्थः १४
तं भीमरूपं त्वरितं द्रवन्तं दुर्योधनं शत्रुसहो निषङ्गी
प्राक्ष्वेडयद्योद्धुमनाः किरीटी बाणेन विद्धं रुधिरं वमन्तम् १५
अर्जुन उवाच
विहाय कीर्तिं विपुलं यशश्च युद्धात्परावृत्य पलायसे किम्
न तेऽद्य तूर्याणि समाहतानि यथावदुद्यान्ति गतस्य युद्धे १६
युधिष्ठिरस्यास्मि निदेशकारी पार्थस्तृतीयो युधि च स्थिरोऽस्मि
तदर्थमावृत्य मुखं प्रयच्छ नरेन्द्रवृत्तं स्मर धार्तराष्ट्र १७
मोघं तवेदं भुवि नामधेयं दुर्योधनेतीह कृतं पुरस्तात्
नहीह दुर्योधनता तवास्ति पलायमानस्य रणं विहाय १८
न ते पुरस्तादथ पृष्ठतो वा पश्यामि दुर्योधन रक्षितारम्
परैहि युद्धेन कुरुप्रवीर प्राणान्प्रियान्पाण्डवतोऽद्य रक्ष १९
इति श्रीमहाभारते विराटपर्वणि षष्टितमोऽध्यायः ६०

## एकषष्ठितमोऽध्यायः

वैशम्पायन उवाच
आहूयमानस्तु स तेन संख्ये महामना धृतराष्ट्रस्यपुत्रः
निवर्तितस्तस्य गिराङ्कुशेन गजो यथा मत्त इवाङ्कुशेन १
सोऽमृष्यमाणो वचसाभिमृष्टो महारथेनातिरथस्तरस्वी
पर्याववर्ताथ रथेन वीरो भोगी यथा पादतलाभिमृष्टः २
तं प्रेक्ष्य कर्णः परिवर्तमानं निवर्त्य संस्तभ्य च विद्धगात्रः
दुर्योधनं दक्षिणतोऽभ्यगच्छत्पार्थं नृवीरो युधि हेममाली ३
भीष्मस्ततः शांतनवो निवृत्य हिरण्यकक्ष्यांस्त्वरयंस्तुरंगान्
दुर्योधनं पश्चिमतोऽभ्यरक्षत्पार्थान्महाबाहुरधिज्यधन्वा ४
द्रोणः कृपश्चैव विविंशतिश्च दुःशासनश्चैव निवृत्य शीघ्रम्
सर्वे पुरस्ताद्विततेषुचापा दुर्योधनार्थं त्वरिताभ्युपेयुः ५
स तान्यनीकानि निवर्तमानान्यालोक्य पूर्णौघनिभानि पार्थः
हंसो यथा मेघमिवापतन्तं धनंजयः प्रत्यपतत्तरस्वी ६
ते सर्वतः संपरिवार्य पार्थमस्त्राणि दिव्यानि समाददानाः

ववर्षुरभ्येत्य शरैः समन्तान्मेघा यथा भूधरमम्बुवेगैः ७
ततोऽस्त्रमस्त्रेण निवार्य तेषां गाण्डीवधन्वा कुरुपुङ्गवानाम्
संमोहनं शत्रुसहोऽन्यदस्त्रं प्रादुश्चकारैन्द्रिरपारणीयम् ८
ततो दिशश्चानुदिशो विवृत्य शरैः सुधारैर्निशितैः सुपुङ्खैः
गाण्डीवघोषेण मनांसि तेषां महाबलः प्रव्यथयांचकार ९
ततः पुनर्भीमरवं प्रगृह्य दोर्भ्यां महाशङ्खमुदारघोषम्
व्यनादयत्स प्रदिशो दिशः खं भुवं च पार्थो द्विषतां निहन्ता १०
ते शङ्खनादेन कुरुप्रवीराः संमोहिताः पार्थसमीरितेन
उत्सृज्य चापानि दुरासदानि सर्वे तदा शान्तिपरा बभूवुः ११
तथा विसंज्ञेषु परेषु पार्थः स्मृत्वा तु वाक्यानि तथोत्तरायाः
निर्याहि मध्यादिति मत्स्यपुत्रमुवाच यावत्कुरवो विसंज्ञाः १२
आचार्यशारद्वतयोः सुशुक्ले कर्णस्य पीतं रुचिरं च वस्त्रम्
द्रौणेश्च राज्ञश्च तथैव नीले वस्त्रे समादत्स्व नरप्रवीर १३
भीष्मस्य संज्ञां तु तथैव मन्ये जानाति मेऽस्त्रप्रतिघातमेषः
एतस्य वाहान्कुरु सव्यतस्त्वमेवं हि यातव्यममूढसंज्ञैः १४
रश्मीन्समुत्सृज्य ततो महात्मा रथादवप्लुत्य विराटपुत्रः
वस्त्राण्युपादाय महारथानां तूर्णं पुनः स्वं रथमारुरोह १५
ततोऽन्वशासच्चतुरः सदश्वान्पुत्रो विराटस्य हिरण्यकक्ष्यान्
ते तद्व्यतीयुर्ध्वजिनामनीकं श्वेता वहन्तोऽजुनमाजिमध्यात् १६
तथा तु यान्तं पुरुषप्रवीरं भीष्मः शरैरभ्यहनत्तरस्वी
स चापि भीष्मस्य हयान्निहत्य विव्याध पार्श्वो दशभिः पृषत्कैः १७
ततोऽजुनो भीष्ममपास्य युद्धे विद्ध्वस्य यन्तारमरिष्टधन्वा
तस्थौ विमुक्तो रथवृन्दमध्याद्राहुं विदार्येव सहस्त्ररश्मिः १८
लब्ध्वा तु संज्ञां च कुरुप्रवीरः पार्थं समीक्ष्याथ महेन्द्रकल्पम्
रणाद्विमुक्तं स्थितमेकमाजौ स धार्तराष्ट्रस्त्वरितो बभाषे १९
अयं कथंस्विद्भवतां विमुक्तस्तं वै प्रबध्नीत यथा न मुच्येत्
तमब्रवीच्छांतनवः प्रहस्य क्व ते गता बुद्धिरभूत्क्व वीर्यम् २०
शान्तिं पराश्वस्य यथा स्थितोऽभूरुत्सृज्य बाणांश्च धनुश्च चित्रम्
न त्वेव बीभत्सुरलं नृशंसं कर्तुं न पापेऽस्य मनो निविष्टम् २१
त्रैलोक्यहेतोर्न जहेत्स्वधर्मं तस्मान्न सर्वे निहता रणेऽस्मिन्

क्षिप्रं कुरून्याहि कुरुप्रवीर विजित्य गाश्च प्रतियातु पार्थः २२
दुर्योधनस्तस्य तु तन्निशम्य पितामहस्यात्महितं वचोऽथ
अतीतकामो युधि सोऽत्यमर्षी राजा विनिःश्वस्य बभूव तूष्णीम् २३
तद्भीष्मवाक्यं हितमीक्ष्य सर्वे धनञ्जयाग्निं च विवर्धमानम्
निवर्तनायैव मनो निदध्युर्दुर्योधनं ते परिरक्षमाणाः २४
तान्प्रस्थितान्प्रीतमनाः स पार्थो धनञ्जयः प्रेक्ष्य कुरुप्रवीरान्
आभाषमाणोऽनुययौ मुहूर्तं सम्पूजयंस्तत्र गुरून्महात्मा २५
पितामहं शान्तनवं स वृद्धं द्रोणं गुरुं च प्रतिपूज्य मूर्ध्ना
द्रौणिं कृपं चैव गुरूंश्च सर्वाञ्शरैर्विचित्रैरभिवाद्य चैव २६
दुर्योधनस्योत्तमरत्नचित्रं चिच्छेद पार्थो मुकुटं शरेण
आमन्त्र्य वीरांश्च तथैव मान्यान्गाण्डीवघोषेण विनाद्य लोकान् २७
स देवदत्तं सहसा विनाद्य विदार्य वीरो द्विषतां मनांसि
ध्वजेन सर्वानभिभूय शत्रून्स हेमजालेन विराजमानः २८
दृष्ट्वा प्रयातांस्तु कुरून्किरीटी हृष्टोऽब्रवीत्तत्र स मत्स्यपुत्रम्
आवर्तयाश्वान्पशवो जितास्ते याताः परे याहि पुरं प्रहृष्टः २९
इति श्रीमहाभारते विराटपर्वणि एकषष्टितमोऽध्यायः ६१

## द्विषष्टितमोऽध्यायः

वैशम्पायन उवाच
ततो विजित्य संग्रामे कुरून्गोवृषभेक्षणः
समानयामास तदा विराटस्य धनं महत् १
गतेषु च प्रभग्नेषु धार्तराष्ट्रेषु सर्वशः
वनान्निष्क्रम्य गहनाद्बहवः कुरुसैनिकाः २
भयात्संत्रस्तमनसः समाजग्मुस्ततस्ततः
मुक्तकेशा व्यदृश्यन्त स्थिताः प्राञ्जलयस्तदा ३
क्षुत्पिपासापरिश्रान्ता विदेशस्था विचेतसः
ऊचुः प्रणम्य संभ्रान्ताः पार्थ किं करवाम ते ४
अर्जुन उवाच
स्वस्ति व्रजत भद्रं वो न भेतव्यं कथंचन
नाहमार्ताञ्जिघांसामि भृशमाश्वासयामि वः ५

वैशम्पायन उवाच
तस्य तामभयां वाचं श्रुत्वा योधाः समागताः
आयुःकीर्तियशोदाभिस्तमाशीर्भिरनन्दयन् ६
ततो निवृत्ताः कुरवः प्रभग्ना वशमास्थिताः
पन्थानमुपसङ्गम्य फल्गुनो वाक्यमब्रवीत् ७
राजपुत्र प्रत्यवेक्ष समानीतानि सर्वशः
गोकुलानि महाबाहो वीर गोपालकैः सह ८
ततोऽपराह्णे यास्यामो विराटनगरं प्रति
आश्वास्य पाययित्वा च परिप्लाव्य च वाजिनः ९
गच्छन्तु त्वरिताश्चैव गोपालाः प्रेषितास्त्वया
नगरे प्रियमाख्यातुं घोषयन्तु च ते जयम् १०
वैशम्पायन उवाच
उत्तरस्त्वरमाणोऽथ दूतानाज्ञापयत्ततः
वचनादर्जुनस्यैव आचक्षध्वं जयं मम ११
इति श्रीमहाभारते विराटपर्वणि द्विषष्टितमोऽध्यायः ६२
समाप्तः गोग्रहणपर्व

त्रिषष्टितमोऽध्यायः

वैशम्पायन उवाच
अवजित्य धनं चापि विराटो वाहिनीपतिः
प्राविशन्नगरं हृष्टश्चतुर्भिः सह पाण्डवैः १
जित्वा त्रिगर्तान्संग्रामे गाश्चैवादाय केवलाः
अशोभत महाराजः सह पार्थैः श्रिया वृतः २
तमासनगतं वीरं सुहृदां प्रीतिवर्धनम्
उपतस्थुः प्रकृतयः समस्ता ब्राह्मणैः सह ३
सभाजितः ससैन्यस्तु प्रतिनन्द्याथ मत्स्यराट्
विसर्जयामास तदा द्विजांश्च प्रकृतीस्तथा ४
ततः स राजा मत्स्यानां विराटो वाहिनीपतिः
उत्तरं परिपप्रच्छ क्व यात इति चाब्रवीत् ५
आचख्युस्तस्य संहृष्टाः स्त्रियः कन्याश्च वेश्मनि

अन्तःपुरचराश्चैव कुरुभिर्गोधनं हृतम् ६
विजेतुमभिसंरब्ध एक एवातिसाहसात्
बृहन्नडासहायश्च निर्यातः पृथिवींजयः ७
उपयातानतिरथान्द्रोणं शांतनवं कृपम्
कर्णं दुर्योधनं चैव द्रोणपुत्रं च षड्रथान् ८
राजा विराटोऽथ भृशं प्रतप्तः श्रुत्वा सुतं ह्येकरथेन यातम्
बृहन्नडासारथिमाजिवर्धनं प्रोवाच सर्वानथ मन्त्रिमुख्यान् ९
सर्वथा कुरवस्ते हि ये चान्ये वसुधाधिपाः
त्रिगर्तान्निर्जिताञ्श्रुत्वा न स्थास्यन्ति कदाचन १०
तस्माद्गच्छन्तु मे योधा बलेन महतावृताः
उत्तरस्य परीप्सार्थं ये त्रिगर्तैरविक्षताः ११
हयांश्च नागांश्च रथांश्च शीघ्रं पदातिसंघांश्च ततः प्रवीरान्
प्रस्थापयामास सुतस्य हेतोर्विचित्रशस्त्राभरणोपपन्नान् १२
एवं स राजा मत्स्यानां विराटोऽक्षौहिणीपतिः
व्यादिदेशाथ तां क्षिप्रं वाहिनीं चतुरङ्गिणीम् १३
कुमारमाशु जानीत यदि जीवति वा न वा
यस्य यन्ता गतः षण्ढो मन्येऽहं न स जीवति १४
तमब्रवीद्धर्मराजः प्रहस्य विराटमार्तं कुरुभिः प्रतप्तम्
बृहन्नडा सारथिश्चेन्नरेन्द्र परे न नेष्यन्ति तवाद्य गास्ताः १५
सर्वान्महीपान्सहितान्कुरूंश्च तथैव देवासुरयक्षनागान्
अलं विजेतुं समरे सुतस्ते स्वनुष्ठितः सारथिना हि तेन १६
अथोत्तरेण प्रहिता दूतास्ते शीघ्रगामिनः
विराटनगरं प्राप्य जयमावेदयंस्तदा १७
राज्ञस्ततः समाचख्यौ मन्त्री विजयमुत्तमम्
पराजयं कुरूणां चाप्युपायान्तं तथोत्तरम् १८
सर्वा विनिर्जिता गावः कुरवश्च पराजिताः
उत्तरः सह सूतेन कुशली च परन्तपः १९
कङ्क उवाच
दिष्ट्या ते निर्जिता गावः कुरवश्च पराजिताः
दिष्ट्या ते जीवितः पुत्रः श्रूयते पार्थिवर्षभ २०

नाद्भुतं त्वेव मन्येऽहं यत्ते पुत्रोऽजयत्कुरून्
ध्रुव एव जयस्तस्य यस्य यन्ता बृहन्नडा २१
वैशम्पायन उवाच
ततो विराटो नृपतिः संप्रहृष्टतनूरुहः
श्रुत्वा तु विजयं तस्य कुमारस्यामितौजसः
आच्छादयित्वा दूतांस्तान्मन्त्रिणः सोऽभ्यचोदयत् २२
राजमार्गाः क्रियन्तां मे पताकाभिरलंकृताः
पुष्पोपहारैरर्च्यन्तां देवताश्चापि सर्वशः २३
कुमारा योधमुख्याश्च गणिकाश्च स्वलंकृताः
वादित्राणि च सर्वाणि प्रत्युद्यान्तु सुतं मम २४
घण्टापणवकः शीघ्रं मत्तमारुह्य वारणम्
शृङ्गाटकेषु सर्वेषु आख्यातु विजयं मम २५
उत्तरा च कुमारीभिर्बह्वीभिरभिसंवृता
शृंगारवेषाभरणा प्रत्युद्यातु बृहन्नडाम् २६
श्रुत्वा तु तद्वचनं पार्थिवस्य सर्वे पुनः स्वस्तिकपाणयश्च
भेर्यश्च तूर्याणि च वारिजाश्च वेषैः परार्ध्यैः प्रमदाः शुभाश्च २७
तथैव सूताः सह मागधैश्च नन्दीवाद्याः पणवास्तूर्यवाद्याः
पुराद्विराटस्य महाबलस्य प्रत्युद्ययुः पुत्रमनन्तवीर्यम् २८
प्रस्थाप्य सेनां कन्याश्च गणिकाश्च स्वलंकृताः
मत्स्यराजो महाप्राज्ञः प्रहृष्ट इदमब्रवीत्
अक्षानाहर सैरन्ध्रि कङ्क द्यूतं प्रवर्तताम् २९
तं तथा वादिनं दृष्ट्वा पाण्डवः प्रत्यभाषत
न देवितव्यं हृष्टेन कितवेनेति नः श्रुतम् ३०
न त्वामद्य मुदा युक्तमहं देवितुमुत्सहे
प्रियं तु ते चिकीर्षामि वर्ततां यदि मन्यसे ३१
विराट उवाच
स्त्रियो गावो हिरण्यं च यच्चान्यद्वसु किंचन
न मे किंचित्त्वया रक्ष्यमन्तरेणापि देवितुम् ३२
कंक उवाच
किं ते द्यूतेन राजेन्द्र बहुदोषेण मानद

देवने बहवो दोषास्तस्मात्तत्परिवर्जयेत् ३३
श्रुतस्ते यदि वा दृष्टः पाण्डवो वै युधिष्ठिरः
स राज्यं सुमहत्स्फीतं भ्रातॄंश्च त्रिदशोपमान् ३४
द्यूते हारितवान्सर्वं तस्माद्द्यूतं न रोचये
अथवा मन्यसे राजन्दीव्याव यदि रोचते ३५
वैशम्पायन उवाच
प्रवर्तमाने द्यूते तु मत्स्यः पाण्डवमब्रवीत्
पश्य पुत्रेण मे युद्धे तादृशाः कुरवो जिताः ३६
ततोऽब्रवीन्मत्स्यराजं धर्मपुत्रो युधिष्ठिरः
बृहन्नडा यस्य यन्ता कथं स न विजेष्यति ३७
इत्युक्तः कुपितो राजा मत्स्यः पाण्डवमब्रवीत्
समं पुत्रेण मे षण्ढं ब्रह्मबन्धो प्रशंससि ३८
वाच्यावाच्यं न जानीषे नूनं मामवमन्यसे
भीष्मद्रोणमुखान्सर्वान्कस्मान्न स विजेष्यति ३९
वयस्यत्वात्तु ते ब्रह्मन्नपराधमिमं क्षमे
नेदृशं ते पुनर्वाच्यं यदि जीवितुमिच्छसि ४०
युधिष्ठिर उवाच
यत्र द्रोणस्तथा भीष्मो द्रौणिर्वैकर्तनः कृपः
दुर्योधनश्च राजेन्द्र तथान्ये च महारथाः ४१
मरुद्गणैः परिवृतः साक्षादपि शतक्रतुः
कोऽन्यो बृहन्नडायास्तान्प्रतियुध्येत संगतान् ४२
विराट उवाच
बहुशः प्रतिषिद्धोऽसि न च वाचं नियच्छसि
नियन्ता चेन्न विद्येत न कश्चिद्धर्ममाचरेत् ४३
वैशम्पायन उवाच
ततः प्रकुपितो राजा तमक्षेणाहनद्भृशम्
मुखे युधिष्ठिरं कोपान्नैवमित्येव भर्त्सयन् ४४
बलवत्प्रतिविद्धस्य नस्तः शोणितमागमत्
तदप्राप्तं महीं पार्थः पाणिभ्यां प्रत्यगृह्णत ४५
अवैक्षत च धर्मात्मा द्रौपदीं पार्श्वतः स्थिताम्

सा वेद तमभिप्रायं भर्तुश्चित्तवशानुगा ४६
पूरयित्वा च सौवर्णं पात्रं कांस्यमनिन्दिता
तच्छोणितं प्रत्यगृह्णाद्यत्प्रसुस्राव पाण्डवात् ४७
अथोत्तरः शुभैर्गन्धैर्माल्यैश्च विविधैस्तथा
अवकीर्यमाणः संहृष्टो नगरं स्वैरमागमत् ४८
सभाज्यमानः पौरैश्च स्त्रीभिर्जानपदैस्तथा
आसाद्य भवनद्वारं पित्रे स प्रत्यहारयत् ४९
ततो द्वाःस्थः प्रविश्यैव विराटमिदमब्रवीत्
बृहन्नडासहायस्ते पुत्रो द्वार्युत्तरः स्थितः ५०
ततो हृष्टो मत्स्यराजः क्षत्तारमिदमब्रवीत्
प्रवेश्यतामुभौ तूर्णं दर्शनेप्सुरहं तयोः ५१
क्षत्तारं कुरुराजस्तु शनैः कर्ण उपाजपत्
उत्तरः प्रविशत्वेको न प्रवेश्या बृहन्नडा ५२
एतस्य हि महाबाहो व्रतमेतत्समाहितम्
यो ममाङ्गे व्रणं कुर्याच्छोणितं वापि दर्शयेत्
अन्यत्र संग्रामगतान्न स जीवेदसंशयम् ५३
न मृष्याद्भृशसंक्रुद्धो मां दृष्ट्वैव सशोणितम्
विराटमिह सामात्यं हन्यात्सबलवाहनम् ५४
इति श्रीमहाभारते विराटपर्वणि त्रिषष्टितमोऽध्यायः ६३

## चतुःषष्टितमोऽध्यायः

वैशम्पायन उवाच
ततो राज्ञः सुतो ज्येष्ठः प्राविशत्पृथिवींजयः
सोऽभिवाद्य पितुः पादौ धर्मराजमपश्यत १
स तं रुधिरसंसिक्तमनेकाग्रमनागसम्
भूमावासीनमेकान्ते सैरन्ध्र्या समुपस्थितम् २
ततः पप्रच्छ पितरं त्वरमाण इवोत्तरः
केनायं ताडितो राजन्केन पापमिदं कृतम् ३
विराट उवाच
मयायं ताडितो जिह्मो न चाप्येतावदर्हति

प्रशस्यमाने यः शूरे त्वयि षरढं प्रशंसति ४
उत्तर उवाच
अकार्यं ते कृतं राजन्विप्रमेव प्रसाद्यताम्
मा त्वा ब्रह्मविषं घोरं समूलमपि निर्दहेत् ५
वैशम्पायन उवाच
स पुत्रस्य वचः श्रुत्वा विराटो राष्ट्रवर्धनः
क्षमयामास कौन्तेयं भस्मच्छन्नमिवानलम् ६
क्षमयन्तं तु राजानं पाराडवः प्रत्यभाषत
चिरं क्षान्तमिदं राजन्न मन्युर्विद्यते मम ७
यदि ह्येतत्पतेद्भूमौ रुधिरं मम नस्ततः
सराष्ट्रस्त्वं महाराज विनश्येथा न संशयः ८
न दूषयामि ते राजन्यच्च हन्याददूषकम्
बलवन्तं महाराज क्षिप्रं दारुणमाप्नुयात् ९
शोणिते तु व्यतिक्रान्ते प्रविवेश बृहन्नडा
अभिवाद्य विराटं च कङ्कं चाप्युपतिष्ठत १०
क्षमयित्वा तु कौरव्यं रणादुत्तरमागतम्
प्रशशंस ततो मत्स्यः शृणवतः सव्यसाचिनः ११
त्वया दायादवानस्मि कैकेयीनन्दिवर्धन
त्वया मे सदृशः पुत्रो न भूतो न भविष्यति १२
पदं पदसहस्रेण यश्चरन्नापराध्नुयात्
तेन कर्णेन ते तात कथमासीत्समागमः १३
मनुष्यलोके सकले यस्य तुल्यो न विद्यते
यः समुद्र इवाक्षोभ्यः कालाग्निरिव दुःसहः
तेन भीष्मेण ते तात कथमासीत्समागमः १४
आचार्यो वृष्णिवीराणां पाराडवानां च यो द्विजः
सर्वक्षत्रस्य चाचार्यः सर्वशस्त्रभृतां वरः
तेन द्रोणेन ते तात कथमासीत्समागमः १५
आचार्यपुत्रो यः शूरः सर्वशस्त्रभृतामपि
अश्वत्थामेति विख्यातः कथं तेन समागमः १६
रणे यं प्रेक्ष्य सीदन्ति हृतस्वा वणिजो यथा

कृपेण तेन ते तात कथमासीत्समागमः १७
पर्वतं योऽभिविध्येत राजपुत्रो महेषुभिः
दुर्योधनेन ते तात कथमासीत्समागमः १८
उत्तर उवाच
न मया निर्जिता गावो न मया निर्जिताः परे
कृतं तु कर्म तत्सर्वं देवपुत्रेण केनचित् १९
स हि भीतं द्रवन्तं मां देवपुत्रो न्यवारयत्
स चातिष्ठद्रथोपस्थे वज्रहस्तनिभो युवा २०
तेन ता निर्जिता गावस्तेन ते कुरवो जिताः
तस्य तत्कर्म वीरस्य न मया तात तत्कृतम् २१
स हि शारद्वतं द्रोणं द्रोणपुत्रं च वीर्यवान्
सूतपुत्रं च भीष्मं च चकार विमुखाञ्शरैः २२
दुर्योधनं च समरे सनागमिव यूथपम्
प्रभग्नमब्रवीद्भीतं राजपुत्रं महाबलम् २३
न हास्तिनपुरे त्राणं तव पश्यामि किंचन
व्यायामेन परीप्सस्व जीवितं कौरवात्मज २४
न मोक्ष्यसे पलायंस्त्वं राजन्युद्धे मनः कुरु
पृथिवीं भोक्ष्यसे जित्वा हतो वा स्वर्गमाप्स्यसि २५
स निवृत्तो नरव्याघ्रो मुञ्चन्वज्रनिभाञ्शरान्
सचिवैः संवृतो राजा रथे नाग इव श्वसन् २६
तत्र मे रोमहर्षोऽभूदूरुस्तम्भश्च मारिष
यदभ्रघनसंकाशमनीकं व्यधमच्छरैः २७
तत्प्रणुद्य रथानीकं सिंहसंहननो युवा
कुरूंस्तान्प्रहसन्राजन्वासांस्यपहरद्बली २८
एकेन तेन वीरेण षड्रथाः परिवारिताः
शार्दूलेनेव मत्तेन मृगास्तृणचरा वने २९
विराट उवाच
क्व स वीरो महाबाहुर्देवपुत्रो महायशाः
यो मे धनमवाजैषीत्कुरुभिर्ग्रस्तमाहवे ३०
इच्छामि तमहं द्रष्टुमर्चितुं च महाबलम्

येन मे त्वं च गावश्च रक्षिता देवसूनुना ३१
उत्तर उवाच
अन्तर्धानं गतस्तात देवपुत्रः प्रतापवान्
स तु श्वो वा परश्वो वा मन्ये प्रादुर्भविष्यति ३२
वैशम्पायन उवाच
एवमाख्यायमानं तु छन्नं सत्रेण पाण्डवम्
वसन्तं तत्र नाज्ञासीद्विराटः पार्थमर्जुनम् ३३
ततः पार्थोऽभ्यनुज्ञातो विराटेन महात्मना
प्रददौ तानि वासांसि विराटदुहितुः स्वयम् ३४
उत्तरा तु महार्हाणि विविधानि तनूनि च
प्रतिगृह्याभवत्प्रीता तानि वासांसि भामिनी ३५
मन्त्रयित्वा तु कौन्तेय उत्तरेण रहस्तदा
इतिकर्तव्यतां सर्वां राजन्यथ युधिष्ठिरे ३६
ततस्तथा तद्व्यदधाद्यथावत्पुरुषर्षभ
सह पुत्रेण मत्स्यस्य प्रहृष्टो भरतर्षभः ३७
इति श्रीमहाभारते विराटपर्वणि चतुःषष्टितमोऽध्यायः ६४

पञ्चषष्ठि तमोऽध्यायः

वैशम्पायन उवाच
ततस्तृतीये दिवसे भ्रातरः पञ्च पाण्डवाः
स्नाताः शुक्लाम्बरधराः समये चरितव्रताः १
युधिष्ठिरं पुरस्कृत्य सर्वाभरणभूषिताः
अभिपद्मा यथा नागा भ्राजमाना महारथाः २
विराटस्य सभां गत्वा भूमिपालासनेष्वथ
निषेदुः पावकप्रख्याः सर्वे धिष्ण्येष्विवाग्नयः ३
तेषु तत्रोपविष्टेषु विराटः पृथिवीपतिः
आजगाम सभां कर्तुं राजकार्याणि सर्वशः ४
श्रीमतः पाण्डवान्दृष्ट्वा ज्वलतः पावकानिव
अथ मत्स्योऽब्रवीत्कङ्कं देवरूपमवस्थितम्
मरुद्गणैरुपासीनं त्रिदशानामिवेश्वरम् ५

स किलाद्यातिवापस्त्वं सभास्तारो मया कृतः
अथ राजासने कस्मादुपविष्टोऽस्यलंकृतः ६
परिहासेप्सया वाक्यं विराटस्य निशम्य तत्
स्मयमानोऽर्जुनो राजन्निदं वचनमब्रवीत् ७
इन्द्रस्याप्यासनं राजन्नयमारोढुमर्हति
ब्रह्मण्यः श्रुतवांस्त्यागी यज्ञशीलो दृढव्रतः ८
अयं कुरूणामृषभः कुन्तीपुत्रो युधिष्ठिरः
अस्य कीर्तिः स्थिता लोके सूर्यस्येवोद्यतः प्रभा ९
संसरन्ति दिशः सर्वा यशसोऽस्य गभस्तयः
उदितस्येव सूर्यस्य तेजसोऽनु गभस्तयः १०
एनं दश सहस्राणि कुञ्जराणां तरस्विनाम्
अन्वयुः पृष्ठतो राजन्यावदध्यावसत्कुरून् ११
त्रिंशदेनं सहस्राणि रथाः काञ्चनमालिनः
सदश्वैरुपसंपन्नाः पृष्ठतोऽनुययुः सदा १२
एनमष्टशताः सूताः सुमृष्टमणिकुण्डलाः
अस्तुवन्मागधैः सार्धं पुरा शक्रमिवर्षयः १३
एनं नित्यमुपासन्त कुरवः किंकरा यथा
सर्वे च राजन्राजानो धनेश्वरमिवामराः १४
एष सर्वान्महीपालान्करमाहारयत्तदा
वैश्यानिव महाराज विवशान्स्ववशानपि १५
अष्टाशीतिसहस्राणि स्नातकानां महात्मनाम्
उपजीवन्ति राजानमेनं सुचरितव्रतम् १६
एष वृद्धाननाथांश्च व्यङ्गान्पङ्गूंश्च मानवान्
पुत्रवत्पालयामास प्रजा धर्मेण चाभिभो १७
एष धर्मे दमे चैव क्रोधे चापि यतव्रतः
महाप्रसादो ब्रह्मण्यः सत्यवादी च पार्थिवः १८
श्रीप्रतापेन चैतस्य तप्यते स सुयोधनः
सगणः सह कर्णेन सौबलेनापि वा विभुः १९
न शक्यन्ते ह्यस्य गुणाः प्रसंख्यातुं नरेश्वर
एष धर्मपरो नित्यमानृशंस्यश्च पाण्डवः २०

एवंयुक्तो महाराजः पाराडवः पार्थिवर्षभः
कथं नार्हति राजार्हमासनं पृथिवीपतिः २१
इति श्रीमहाभारते विराटपर्वणि पञ्चषष्टितमोऽध्यायः ६५

## षट् षष्ठितमोऽध्यायः

विराट उवाच
यद्येष राजा कौरव्यः कुन्तीपुत्रो युधिष्ठिरः
कतमोऽस्यार्जुनो भ्राता भीमश्च कतमो बली १
नकुलः सहदेवो वा द्रौपदी वा यशस्विनी
यदा द्यूते जिताः पार्था न प्राज्ञायन्त ते क्वचित् २
अर्जुन उवाच
य एष बल्लवो ब्रूते सूदस्तव नराधिप
एष भीमो महाबाहुर्भीमवेगपराक्रमः ३
एष क्रोधवशान्हत्वा पर्वते गन्धमादने
सौगन्धिकानि दिव्यानि कृष्णार्थे समुपाहरत् ४
गन्धर्व एष वै हन्ता कीचकानां दुरात्मनाम्
व्याघ्रानृक्षान्वराहांश्च हतवान्स्त्रीपुरे तव ५
यश्चासीदश्वबन्धस्ते नकुलोऽय परन्तपः
गोसंख्यः सहदेवश्च माद्रीपुत्रौ महारथौ ६
शृङ्गारवेषाभरणौ रूपवन्तौ यशस्विनौ
नानारथसहस्राणां समर्थौ पुरुषर्षभौ ७
एषा पद्मपलाशाक्षी सुमध्या चारुहासिनी
सैरन्ध्री द्रौपदी राजन्यत्कृते कीचका हताः ८
अर्जुनोऽह महाराज व्यक्तं ते श्रोत्रमागतः
भीमादवरजः पार्थो यमाभ्यां चापि पूर्वजः ९
उषिताः स्म महाराज सुखं तव निवेशने
अज्ञातवासमुषिता गर्भवास इव प्रजाः १०
वैशम्पायन उवाच
यदार्जुनेन ते वीराः कथिताः पञ्च पाराडवाः
तदार्जुनस्य वैराटिः कथयामास विक्रमम् ११

अयं स द्विषतां मध्ये मृगाणामिव केसरी
अचरद्रथवृन्देषु निघ्नंस्तेषां वरान्वरान् १२
अनेन विद्धो मातङ्गो महानेकेषुणा हतः
हिरण्यकक्ष्यः संग्रामे दन्ताभ्यामगमन्महीम् १३
अनेन विजिता गावो जिताश्च कुरवो युधि
अस्य शङ्खप्रणादेन कर्णौ मे बधिरीकृतौ १४
तस्य तद्वचनं श्रुत्वा मत्स्यराजः प्रतापवान्
उत्तरं प्रत्युवाचेदमभिपन्नो युधिष्ठिरे १५
प्रसादनं पाण्डवस्य प्राप्तकालं हि रोचये
उत्तरां च प्रयच्छामि पार्थाय यदि ते मतम् १६
उत्तर उवाच
अर्च्याः पूज्याश्च मान्याश्च प्राप्तकालं च मे मतम्
पूज्यन्तां पूजनार्हाश्च महाभागाश्च पाण्डवाः १७
विराट उवाच
अहं खल्वपि संग्रामे शत्रूणां वशमागतः
मोक्षितो भीमसेनेन गावश्च विजितास्तथा १८
एतेषां बाहुवीर्येण यदस्माकं जयो मृधे
वयं सर्वे सहामात्याः कुन्तीपुत्रं युधिष्ठिरम्
प्रसादयामो भद्रं ते सानुजं पाण्डवर्षभम् १९
यदस्माभिरजानद्भिः किंचिदुक्तो नराधिपः
क्षन्तुमर्हति तत्सर्वं धर्मात्मा ह्येष पाण्डवः २०
वैशम्पायन उवाच
ततो विराटः परमाभितुष्टः समेत्य राज्ञा समयं चकार
राज्यं च सर्वं विससर्ज तस्मै सदण्डकोशं सपुरं महात्मा २१
पाण्डवांश्च ततः सर्वान्मत्स्यराजः प्रतापवान्
धनंजयं पुरस्कृत्य दिष्ट्या दिष्ट्येति चाब्रवीत् २२
समुपाघ्राय मूर्धानं संश्लिष्य च पुनः पुनः
युधिष्ठिरं च भीमं च माद्रीपुत्रौ च पाण्डवौ २३
नातृप्यद्दर्शने तेषां विराटो वाहिनीपतिः
संप्रीयमाणो राजानं युधिष्ठिरमथाब्रवीत् २४

दिष्ट्या भवन्तः संप्राप्ताः सर्वे कुशलिनो वनात्
दिष्ट्या च पारितं कृच्छ्रमज्ञातं वै दुरात्मभिः २५
इदं च राज्यं नः पार्था यच्चान्यद्वसु किंचन
प्रतिगृह्णन्तु तत्सर्वं कौन्तेया अविशङ्कया २६
उत्तरां प्रतिगृह्णातु सव्यसाची धनंजयः
अयं ह्यौपयिको भर्ता तस्याः पुरुषसत्तमः २७
एवमुक्तो धर्मराजः पार्थमैक्षद्धनंजयम्
ईक्षितश्चार्जुनो भ्रात्रा मत्स्यं वचनमब्रवीत् २८
प्रतिगृह्णाम्यहं राजन्स्नुषां दुहितरं तव
युक्तश्चावां हि संबन्धो मत्स्यभारतसत्तमौ २९
इति श्रीमहाभारते विराटपर्वणि षट्षष्टितमोऽध्यायः ६६

सप्तषष्ठितमोऽध्यायः

विराट उवाच
किमर्थं पाण्डवश्रेष्ठ भार्यां दुहितरं मम
प्रतिग्रहीतुं नेमां त्वं मया दत्तामिहेच्छसि १
अर्जुन उवाच
अन्तःपुरेऽहमुषितः सदा पश्यन्सुतां तव
रहस्यं च प्रकाशं च विश्वस्ता पितृवन्मयि २
प्रियो बहुमतश्चाहं नर्तको गीतकोविदः
आचार्यवच्च मां नित्यं मन्यते दुहिता तव ३
वयःस्थया तया राजन्सह संवत्सरोषितः
अतिशंका भवेत्स्थाने तव लोकस्य चाभिभो ४
तस्मान्निमन्त्रये त्वाहं दुहितुः पृथिवीपते
शुद्धो जितेन्द्रियो दान्तस्तस्याः शुद्धिः कृता मया ५
स्नुषाया दुहितुर्वापि पुत्रे चात्मनि वा पुनः
अत्र शङ्कां न पश्यामि तेन शुद्धिर्भविष्यति ६
अभिषङ्गादहं भीतो मिथ्याचारात्परंतप
स्नुषार्थमुत्तरां राजन्प्रतिगृह्णामि ते सुताम् ७
स्वस्त्रीयो वासुदेवस्य साक्षाद्देवशिशुर्यथा

दयितश्चक्रहस्तस्य बाल एवास्त्रवित्सदः ८
अभिमन्युर्महाबाहुः पुत्रो मम विशां पते
जामाता तव युक्तो वै भर्ता च दुहितुस्तव ९
विराट उवाच
उपपन्नं कुरुश्रेष्ठे कुन्तीपुत्रे धनञ्जये
य एवं धर्मनित्यश्च जातज्ञानश्च पाण्डवः १०
यत्कृत्यं मन्यसे पार्थ क्रियतां तदनन्तरम्
सर्वे कामाः समृद्धा मे सम्बन्धी यस्य मेऽर्जुनः ११
वैशम्पायन उवाच
एवं ब्रुवति राजेन्द्रे कुन्तीपुत्रो युधिष्ठिरः
अन्वजानात्स संयोगं समये मत्स्यपार्थयोः १२
ततो मित्रेषु सर्वेषु वासुदेवे च भारत
प्रेषयामास कौन्तेयो विराटश्च महीपतिः १३
ततस्त्रयोदशे वर्षे निवृत्ते पञ्च पाण्डवाः
उपप्लव्ये विराटस्य समपद्यन्त सर्वशः १४
तस्मिन्वसंश्च बीभत्सुरानिनाय जनार्दनम्
आनर्तेभ्योऽपि दाशार्हानभिमन्युं च पाण्डवः १५
काशिराजश्च शैब्यश्च प्रीयमाणौ युधिष्ठिरे
अक्षौहिणीभ्यां सहितावागतौ पृथिवीपते १६
अक्षौहिण्या च तेजस्वी यज्ञसेनो महाबलः
द्रौपद्याश्च सुता वीराः शिखण्डी चापराजितः १७
धृष्टद्युम्नश्च दुर्धर्षः सर्वशस्त्रभृतां वरः
समस्ताक्षौहिणीपाला यज्वानो भूरिदक्षिणाः
सर्वे शस्त्रास्त्रसम्पन्नाः सर्वे शूरास्तनुत्यजः १८
तानागतानभिप्रेक्ष्य मत्स्यो धर्मभृतां वरः
प्रीतोऽभवद्दुहितरं दत्त्वा तामभिमन्यवे १९
ततः प्रत्युपयातेषु पार्थिवेषु ततस्ततः
तत्रागमद्वासुदेवो वनमाली हलायुधः
कृतवर्मा च हार्दिक्यो युयुधानश्च सात्यकिः २०
अनाधृष्टिस्तथाक्रूरः साम्बो निशठ एव च

अभिमन्युमुपादाय सह मात्रा परन्तपाः २१
इन्द्रसेनादयश्चैव रथैस्तैः सुसमाहितैः
आययुः सहिताः सर्वे परिसंवत्सरोषिताः २२
दश नागसहस्राणि हयानां च दशायुतम्
रथानामर्बुदं पूर्णं निखर्वं च पदातिनाम् २३
वृष्ण्यन्धकाश्च बहवो भोजाश्च परमौजसः
अन्वयुर्वृष्णिशार्दूलं वासुदेवं महाद्युतिम् २४
पारिबर्हं ददौ कृष्णः पाण्डवानां महात्मनाम्
स्त्रियो रत्नानि वासांसि पृथक्पृथगनेकशः
ततो विवाहो विधिवद्ववृते मत्स्यपार्थयोः २५
ततः शङ्खाश्च भेर्यश्च गोमुखाडम्बरास्तथा
पार्थैः संयुज्यमानस्य नेदुर्मत्स्यस्य वेश्मनि २६
उच्चावचान्मृगाञ्जघ्नुर्मेध्यांश्च शतशः पशून्
सुरामैरेयपानानि प्रभूतान्यभ्यहारयन् २७
गायनाख्यानशीलाश्च नटा वैतालिकास्तथा
स्तुवन्तस्तानुपातिष्ठन्सूताश्च सह मागधैः २८
सुदेष्णां च पुरस्कृत्य मत्स्यानां च वरस्त्रियः
आजग्मुश्चारुसर्वाङ्ग्यः सुमृष्टमणिकुण्डलाः २९
वर्णोपपन्नास्ता नार्यो रूपवत्यः स्वलंकृताः
सर्वाश्चाभ्यभवत्कृष्णा रूपेण यशसा श्रिया ३०
परिवार्योत्तरां तास्तु राजपुत्रीमलंकृताम्
सुतामिव महेन्द्रस्य पुरस्कृत्योपतस्थिरे ३१
तां प्रत्यगृह्णात्कौन्तेयः सुतस्यार्थे धनंजयः
सौभद्रस्यानवद्याङ्गीं विराटतनयां तदा ३२
तत्रातिष्ठन्महाराजो रूपमिन्द्रस्य धारयन्
स्नुषां तां प्रतिजग्राह कुन्तीपुत्रो युधिष्ठिरः ३३
प्रतिगृह्य च तां पार्थः पुरस्कृत्य जनार्दनम्
विवाहं कारयामास सौभद्रस्य महात्मनः ३४
तस्मै सप्त सहस्राणि हयानां वातरंहसाम्
द्वे च नागशते मुख्ये प्राादाद्बहु धनं तदा ३५

कृते विवाहे तु तदा धर्मपुत्रो युधिष्ठिरः
ब्राह्मणेभ्यो ददौ वित्तं यदुपाहरदच्युतः ३६
गोसहस्राणि रत्नानि वस्त्राणि विविधानि च
भूषणानि च मुख्यानि यानानि शयनानि च ३७
तन्महोत्सवसंकाशं हृष्टपुष्टजनावृतम्
नगरं मत्स्यराजस्य शुशुभे भरतर्षभ ३८

इति श्रीमहाभारते विराटपर्वणि सप्तषष्टितमोऽध्यायः ६७

समाप्तं वैवाहिकपर्व

विराटपर्व समाप्त

कृते विवाहे तु तदा धर्मपुत्रो युधिष्ठिरः
ब्राह्मणेभ्यो ददौ वित्तं यदुपाहरदच्युतः ३६
गोसहस्राणि रत्नानि वस्त्राणि विविधानि च
भूषणानि च मुख्यानि यानानि शयनानि च ३७
तन्महोत्सवसंकाशं हृष्टपुष्टजनावृतम्
नगरं मत्स्यराजस्य शुशुभे भरतर्षभ ३८

इति श्रीमहाभारते विराटपर्वणि सप्तषष्टितमोऽध्यायः ६७

समाप्तं वैवाहिकपर्व

विराटपर्व समाप्त

# महाभारत
# उद्योग पर्व

श्रीगणेशाय नमः
ॐ नारायणं नमस्कृत्य नरं चैव नरोत्तमम्
देवीं सरस्वतीं चैव ततो जयमुदीरयेत्

## अथ प्रथमोऽध्यायः

वैशम्पायन उवाच
कृत्वा विवाहं तु कुरुप्रवीरास्तदाभिमन्योर्मुदितस्वपक्षाः
विश्रम्य चत्वार्युषसः प्रतीताः सभां विराटस्य ततोऽभिजग्मुः १
सभा तु सा मत्स्यपतेः समृद्धा मणिप्रवेकोत्तमरत्नचित्रा
न्यस्तासना माल्यवती सुगन्धा तामभ्ययुस्ते नरराजवर्याः २
अथासनान्याविशतां पुरस्तादुभौ विराटद्रुपदौ नरेन्द्रौ
वृद्धश्च मान्यः पृथिवीपतीनां पितामहो रामजनार्दनाभ्याम् ३
पाञ्चालराजस्य समीपतस्तु शिनिप्रवीरः सहरौहिणेयः
मत्स्यस्य राज्ञस्तु सुसंनिकृष्टौ जनार्दनश्चैव युधिष्ठिरश्च ४
सुताश्च सर्वे द्रुपदस्य राज्ञो भीमार्जुनौ माद्रवतीसुतौ च
प्रद्युम्नसाम्बौ च युधि प्रवीरौ विराटपुत्रश्च सहाभिमन्युः ५
सर्वे च शूराः पितृभिः समाना वीर्येण रूपेण बलेन चैव
उपाविशन् द्रौपदेयाः कुमाराः सुवर्णचित्रेषु वरासनेषु ६
तथोपविष्टेषु महारथेषु विभ्राजमानाम्बर भूषणेषु
रराज सा राजवती समृद्धा ग्रहैरिव द्यौर्विमलैरुपेता ७
ततः कथास्ते समवाययुक्ताः कृत्वा विचित्राः पुरुषप्रवीराः
तस्थुर्मुहूर्तं परिचिन्तयन्तः कृष्णं नृपास्ते समुदीक्षमाणाः ८
कथान्तमासाद्य च माधवेन संघट्टिताः पाण्डवकार्यहेतोः
ते राजसिंहाः सहिता ह्यश्रृण्वन् वाक्यं महार्थं च महोदयं च ९
कृष्ण उवाच
सर्वैर्भवद्भिर्विदितं यथायं युधिष्ठिरः सौबलेनाक्षवत्याम्

जितो निकृत्यापहृतं च राज्यं पुनः प्रवासे समयः कृतश्च १०
शक्तैर्विजेतुं तरसा महीं च सत्ये स्थितैस्तच्चरितं यथावत्
पाण्डोः सुतैस्तद् व्रतमुग्ररूपं वर्षाणि षट् सप्त च भारताग्र्यैः ११
त्रयोदशश्चैव सुदुस्तरोऽयमज्ञायमानैर्भवतां समीपे
क्लेशानसह्यांश्च तितिक्षमाणैर्यथोषितं तद्विदितं च सर्वम् १२
एवं गते धर्मसुतस्य राज्ञो दुर्योधनस्यापि च यद्धितं स्यात्
तच्चिन्तयध्वं कुरुपाण्डवानां धर्म्यं च युक्तं च यशस्करं च १३
अधर्मयुक्तं च न कामयेत राज्यं सुराणामपि धर्मराजः
धर्मार्थयुक्तं च महीपतित्वं ग्रामेऽपि कस्मिंश्चिदयं बुभूषेत् १४
पित्र्यं हि राज्यं विदितं नृपाणां यथापकृष्टं धृतराष्ट्रपुत्रैः
मिथ्योपचारेण तथाप्यनेन कृच्छ्रं महत् प्राप्तमसह्यरूपम् १५
न चापि पार्थो विजितो रणे तैः स्वतेजसा धृतराष्ट्रस्य पुत्रैः
तथापि राजा सहितः सुहृद्भिरभीप्सतेऽनामयमेव तेषाम् १६
यत् तत्स्वयं पाण्डुसुतैर्विजित्य समाहृतं भूमिपतीन् निपीड्य
तत् प्रार्थयन्ते पुरुषप्रवीराः कुन्तीसुता माद्रवतीसुतौ च १७
बालास्त्विमे तैर्विविधैरुपायैः सम्प्रार्थिता हन्तुममित्रसाहाः
राज्यं जिहीर्षद्भिरसद्भिरुग्रैः सर्वं च तद् वो विदितं यथावत् १८
तेषां च लोभं प्रसमीक्ष्य वृद्धं धर्मात्मतां चापि युधिष्ठिरस्य
सम्बन्धितां चापि समीक्ष्य तेषां मतिं कुरुध्वं सहिताः पृथक् च १९
इमे च सत्येऽभिरताः सदैव तं पारयित्वा समयं यथावत्
अतोऽन्यथा तैरुपचर्यमाणा हन्युः समेतान् धृतराष्ट्रपुत्रान् २०
तैर्विप्रकारं च निशम्य राज्ञः सुहृज्जनास्तान् परिवारयेयुः
युद्धेन बाधेयुरिमांस्तथैव तैर्वध्यमाना युधितांश्च हन्युः २१
तथापि नेमेऽल्पतया समर्थास्तेषां जयायेति भवेन्मतं वः
समेत्य सर्वे सहिताः सुहृद्भिस्तेषां विनाशाय यतेयुरेव २२
दुर्योधनस्यापि मतं यथावन्न ज्ञायते किं नु करिष्यतीति
अज्ञायमाने च मते परस्य किं स्यात् समारभ्यतमं मतं वः २३
तस्मादितो गच्छतु धर्मशीलः शुचिः कुलीनः पुरुषोऽप्रमत्तः
दूतः समर्थः प्रशमाय तेषां राज्यार्धदानाय युधिष्ठिरस्य २४
निशम्य वाक्यं तु जनार्दनस्य धर्मार्थयुक्तं मधुरं समं च

समाददे वाक्यमथाग्रजोऽस्य सम्पूज्य वाक्यं तददतीव राजन् २५
इति श्रीमहाभारते उद्योगपर्वणि प्रथमोऽध्यायः १

अथ द्वितीयोऽध्यायः

बलदेव उवाच
श्रुतं भवद्भिर्गदपूर्वजस्य वाक्यं यथा धर्मवदर्थवच्च
अजातशत्रोश्च हितं हितं च दुर्योधनस्यापि तथैव राज्ञः १
अर्धं हि राजस्य विसृज्य वीराः कुन्तीसुतास्तस्य कृते यतन्ते
प्रदाय चार्धं धृतराष्ट्रपुत्रः सुखी सहास्माभिरतीव मोदेत् २
लब्ध्वा हि राज्यं पुरुषप्रवीराः सम्यक्प्रवृत्तेषु परेषु चैव
ध्रुवं प्रशान्ताः सुखमाविशेयुस्तेषां प्रशान्तिश्च हितं प्रजानाम् ३
दुर्योधनस्यापि मतं च वेत्तुं वक्तुं च वाक्यानि युधिष्ठिरस्य
प्रियं मम स्याद् यदि तत्र कश्चिद् व्रजेच्छमार्थं कुरुपाण्डवानाम् ४
स भीष्ममामन्त्र्य कुरुप्रवीरं वैचित्रवीर्यं च महानुभावम्
द्रोणं सपुत्रं विदुरं कृपं च गान्धारराजं च ससूतपुत्रम् ५
सर्वे च येऽन्ये धृतराष्ट्रपुत्रा बलप्रधाना निगमप्रधानाः
स्थिताश्च धर्मेषु यथा स्वकेषु लोकप्रवीराः श्रुतकालवृद्धाः ६
एतेषु सर्वेषु समागतेषु पौरेषु वृद्धेषु च संगतेषु
ब्रवीतु वाक्यं प्रणिपातयुक्तं कुन्तीसुतस्यार्थकरं यथा स्यात् ७
सर्वास्ववस्थासु च ते न कौटयाद्ग्रस्तो हि सोऽथो बलमाश्रितैस्तैः
प्रियाभ्युपेतस्य युधिष्ठिरस्य द्यूते प्रमत्तस्य हृतं च राज्यम् ८
निवार्यमाणश्च कुरुप्रवीरैः सर्वैः सुहृद्भिर्ह्ययमप्यतज्ज्ञः
गान्धारराजस्य सुतं मताक्षं समाह्वयद् देवितुमाजमीढः ९
दुरोदरास्तत्र सहस्रशोऽन्ये युधिष्ठिरो यान् विषहेत जेतुम्
उत्सृज्य तान् सौबलमेव चायं समाह्वयत् तेन जितोऽक्षवत्याम् १०
स दीव्यमानः प्रतिदेवनेन अक्षेषु नित्यं सुपराङ्मुखेषु
संरम्भमाणो विजितः प्रसह्य तत्रापराधः शकुनेर्न कश्चित् ११
तस्मात् प्रणम्यैव वचो ब्रवीतु वैचित्रवीर्यं बहुसामयुक्तम्
तथा हि शक्यो धृतराष्ट्रपुत्रः स्वार्थे नियोक्तुं पुरुषेण तेन १२
वैशम्पायन उवाच

एवं ब्रुवत्येव मधुप्रवीरे शिनिप्रवीरः सहसोत्पपात
तच्चापि वाक्यं परिनिन्द्य तस्य समाददे वाक्यमिदं समन्युः १३
इति श्रीमहाभारते उद्योगपर्वणि द्वितीयोऽध्यायः २

## तृतीयोऽध्यायः

सात्यकिरुवाच
यादृशः पुरुषस्यात्मा तादृशं सम्प्रभाषते
यथारूपोऽन्तरात्मा ते तथारूपं प्रभाषसे १
सन्ति वै पुरुषाः शूराः सन्ति कापुरुषास्तथा
उभावेतौ दृढौ पक्षौ दृश्येते पुरुषान् प्रति २
एकस्मिन्नेव जायेते कुले क्लीबमहारथौ
फलाफलवती शाखे यथैकस्मिन् वनस्पतौ ३
नाभ्यसूयामि ते वाक्यं ब्रुवतो लाङ्गलध्वज
ये तु शृण्वन्ति ते वाक्यं तानसूयामि माधव ४
कथं हि धर्मराजस्य दोषमल्पमपि ब्रुवन्
लभते परिषन्मध्ये व्याहर्तुमकुतोभयः ५
समाहूय महात्मानं जितवन्तोऽक्षकोविदाः
अनक्षज्ञं यथाश्रद्धं तेषु धर्मजयः कुतः ६
यदि कुन्तीसुतं गेहे क्रीडन्तं भ्रातृभिः सह
अभिगम्य जयेयुस्ते तत् तेषां धर्मतो भवेत् ७
समाहूय तु राजानं क्षत्रधर्मरतं सदा
निकृत्या जितवन्तस्ते किं नु तेषां परं शुभम् ८
कथं प्रणिपतेच्चायमिह कृत्वा पणं परम्
वनवासाद् विमुक्तस्तु प्राप्तः पैतामहं पदम् ९
यद्ययं परवित्तानि कामयेत युधिष्ठिरः
एवमप्ययमत्यन्तं परान् नार्हति याचितुम् १०
कथं च धर्मयुक्तास्ते न च राज्यं जिहीर्षवः
निवृत्तवासान् कौन्तेयान् य आहुर्विदिता इति ११
अनुनीता हि भीष्मेण द्रोणेन च महात्मना
न व्यवस्यन्ति पाण्डूनां प्रदातुं पैतृकं वसु १२

अहं तु ताञ्शितैर्बाणैरनुनीय रणे बलात्
पादयोः पातयिष्यामि कौन्तेयस्य महात्मनः १३
अथ ते न व्यवस्यन्ति प्रणिपाताय धीमतः
गमिष्यन्ति सहामात्या यमस्य सदनं प्रति १४
न हि ते युयुधानस्य संरब्धस्य युयुत्सतः
वेगं समर्थाः संसोढुं वज्रस्येव महीधराः १५
को हि गाण्डीवधन्वानं कश्च चक्रायुधं युधि
मां चापि विषहेत् को नु कश्च भीमं दुरासदम् १६
यमौ च दृढधन्वानौ यमकल्पौ महाद्युती
को जिजीविषुरासीदेद् धृष्टद्युम्नं च पार्षतम् १७
पञ्चेमान् पाण्डवेयांश्च द्रौपद्याः कीर्तिवर्धनान्
समप्रमाणान् पाण्डूनां समवीर्यान् मदोत्कटान् १८
सौभद्रं च महेष्वासममरैरपि दुःसहम्
गद प्रद्युम्न साम्बांश्च काल वज्रानलोपमान् १९
ते वयं धृतराष्ट्रस्य पुत्रं शकुनिना सह
कर्णेन च निहत्याजावभिषेक्ष्याम पाण्डवम् २०
नाधर्मो विद्यते कश्चिच्छत्रून् हत्वाततायिनः
अधर्म्यमयशस्यं च शात्रवाणां प्रयाचनम् २१
हृद्गतस्तस्य यः कामस्तं कुरुध्वमतन्द्रिताः
निसृष्टं धृतराष्ट्रेण राज्यं प्राप्नोतु पाण्डवः २२
अद्य पाण्डुसुतो राज्यं लभतां वा युधिष्ठिरः
निहता वा रणे सर्वे स्वप्स्यन्ति वसुधातले २३
इति श्रीमहाभारते उद्योगपर्वणि तृतीयोऽध्यायः ३

## चतुर्थोऽध्यायः

द्रुपद उवाच
एवमेतन्महाबाहो भविष्यति न संशयः
न हि दुर्योधनो राज्यं मधुरेण प्रदास्यति १
अनुवर्त्स्यति तं चापि धृतराष्ट्रः सुतप्रियः
भीष्मद्रोणौ च कार्पण्यान्मौर्ख्याद् राधेयसौबलौ २

बलदेवस्य वाक्यं तु मम ज्ञाने न युज्यते
एतद्धि पुरुषेणाग्रे कार्यं सुनयमिच्छता ३
न तु वाच्यो मृदु वचो धार्तराष्ट्रः कथंचन
न हि मार्दवसाध्योऽसौ पापबुद्धिर्मतो मम ४
गर्दभे मार्दवं कुर्याद् गोषु तीक्ष्णं समाचरेत्
मृदु दुर्योधने वाक्यं यो ब्रूयात् पापचेतसि ५
मृदु वै मन्यते पापो भाषमाणमशक्तिजम्
जितमर्थं विजानीयादबुधो मार्दवे सति ६
एतच्चैव करिष्यामो यत्नश्च क्रियतामिह
प्रस्थापयाम मित्रेभ्यो बलान्युद्योजयन्तु नः ७
शल्यस्य धृष्टकेतोश्च जयत्सेनस्य चाभिभोः
केकयानां च सर्वेषां दूता गच्छन्तु शीघ्रगाः ८
स तु दुर्योधनो नूनं प्रेषयिष्यति सर्वशः
पूर्वाभिपन्नाः सन्तश्च भजन्ते पूर्वचोदकम् ९
तत् त्वरध्वं नरेन्द्राणां पूर्वमेव प्रचोदने
महद्धि कार्यं वोढव्यमिति मे वर्तते मतिः १०
शल्यस्य प्रेष्यतां शीघ्रं ये च तस्यानुगा नृपाः
भगदत्ताय राज्ञे च पूर्वसागरवासिने ११
अमितौजसे तथोग्राय हार्दिक्यायाहुकाय च
दीर्घप्रज्ञाय मल्लाय रोचमानाय चाभिभो १२
आनीयतां बृहन्तश्च सेनाबिन्दुश्च पार्थिवः
पापजित् प्रतिविन्ध्यश्च चित्रवर्मा सुवास्तुकः १३
बाह्लीको मुञ्जकेशश्च चैद्याधिपतिरेव च
सुपार्श्वश्च सुबाहुश्च पौरवश्च महारथः १४
शकानां पह्लवानां च दरदानां च ये नृपाः
काम्बोजा ऋषिका ये च पश्चिमानूपकाश्च ये १५
जयत्सेनश्च काश्यश्च तथा पञ्चनदा नृपाः
क्राथपुत्रश्च दुर्धर्षः पार्वतीयाश्च ये नृपाः १६
जानकिश्च सुशर्मा च मणिमान् पौतिमत्सकः
पांसुराष्ट्राधिपश्चैव धृष्टकेतुश्च वीर्यवान् १७

औड्रश्च दण्डधारश्च बृहत्सेनश्च वीर्यवान्
अपराजितो निषादश्च श्रेणिमान् वसुमानपि १८
बृहद्बलो महौजाश्च बाहुः परपुरञ्जयः
समुद्रसेनो राजा च सह पुत्रेण वीर्यवान् १९
अदारिश्च नदीजश्च कर्णवेष्टश्च पार्थिवः
समर्थश्च सुवीरश्च मार्जारः कन्यकस्तथा २०
महावीरश्च कद्रुश्च निकरस्तुमुलः क्रथः
नीलश्च वीरधर्मा च भूमिपालश्च वीर्यवान् २१
दुर्जयो दन्तवक्त्रश्च रुक्मी च जनमेजयः
आषाढो वायुवेगश्च पूर्वपाली च पार्थिवः २२
भूरितेजा देवकश्च एकलव्यस्य चात्मजः
कारूषकाश्च राजानः क्षेमधूर्तिश्च वीर्यवान् २३
उद्धवः क्षेमकश्चैव वाटधानश्च पार्थिवः
श्रुतायुश्च दृढायुश्च शाल्वपुत्रश्च वीर्यवान् २४
कुमारश्च कलिङ्गानामीश्वरो युद्धदुर्मदः
एतेषां प्रेष्यतां शीघ्रमेतद्धि मम रोचते २५
अयं च ब्राह्मण शीघ्रं मम राजन् पुरोहितः
प्रेष्यतां धृतराष्ट्राय वाक्यमस्मिन्समर्प्यताम् २६
यथा दुर्योधनो वाच्यो यथा शान्तनवो नृपः
धृतराष्ट्रो यथा वाच्यो द्रोणश्च रथिनां वरः २७
इति श्रीमहाभारते उद्योगपर्वणि चतुर्थोऽध्यायः ४

## पञ्चमोऽध्यायः

वासुदेव उवाच
उपपन्नमिदं वाक्यं सोमकानां धुरंधरे
अर्थसिद्धिकरं राज्ञः पाण्डवस्य महौजसः १
एतच्च पूर्वकार्यं नः सुनीतमभिकाङ्क्षताम्
अन्यथा ह्याचरन् कर्म पुरुषः स्यात् सुबालिशः २
किं तु सम्बन्धकं तुल्यमस्माकं कुरुपाण्डुषु
यथेष्टं वर्तमानेषु पाण्डवेषु च तेषु च ३

ते विवाहार्थमानीता वयं सर्वे तथा भवान्
कृते विवाहे मुदिता गमिष्यामो गृहान् प्रति ४
भवान् वृद्धतमो राज्ञां वयसा च श्रुतेन च
शिष्यवत् ते वयं सर्वे भवामेह न संशयः ५
भवन्तं धृतराष्ट्रश्च सततं बहु मन्यते
आचार्ययोः सखा चासि द्रोणस्य च कृपस्य च ६
स भवान् प्रेषयत्वद्य पाण्डवार्थकरं वचः
सर्वेषां निश्चितं तन्नः प्रेषयिष्यति यद् भवान् ७
यदि तावच्छमं कुर्यान्न्यायेन कुरुपुङ्गवः
न भवेत् कुरुपाण्डूनां सौभ्रात्रेण महान् क्षयः ८
अथ दर्पान्वितो मोहान्न कुर्याद् धृतराष्ट्रजः
अन्येषां प्रेषयित्वा च पश्चादस्मान् समाह्वये ९
ततो दुर्योधनो मन्दः सहामात्यः सबान्धवः
निष्ठामापत्स्यते मूढः क्रुद्धे गाण्डीवधन्वनि १०
वैशम्पायन उवाच
ततः सत्कृत्य वार्ष्णेयं विराटः पृथिवीपतिः
गृहान् प्रस्थापयामास सगणं सहबान्धवम् ११
द्वारकां तु गते कृष्णे युधिष्ठिरपुरोगमाः
चक्रुः सांग्रामिकं सर्वं विराटश्च महीपतिः १२
ततः सम्प्रेषयामास विराटः सह बान्धवैः
सर्वेषां भूमिपालानां द्रुपदश्च महीपतिः १३
वचनात् कुरुसिंहानां मत्स्यपाञ्चालयोश्च ते
समाजग्मुर्महीपालाः सम्प्रहृष्टा महाबलाः १४
तच्छ्रुत्वा पाण्डुपुत्राणां समागच्छन्महद्बलम्
धृतराष्ट्रसुतश्चापि समानिन्ये महीपतीन् १५
समाकुला मही राजन् कुरुपाण्डवकारणात्
तदा समभवत् कृत्स्ना सम्प्रयाणे महीक्षिताम् १६
बलानि तेषां वीराणामागच्छन्ति ततस्ततः
चालयन्तीव गां देवीं सपर्वतवनामिमाम् १७
ततः प्रज्ञावयोवृद्धं पाञ्चाल्यः स्वपुरोहितम्

कुरुभ्यः प्रेषयामास युधिष्ठिरमते तदा १८
इति श्रीमहाभारते उद्योगपर्वणि पञ्चमोऽध्यायः ५

षष्ठोऽध्यायः

द्रुपद उवाच
भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः
बुद्धिमत्सु नराःश्रेष्ठा नराणां तु द्विजातयः १
द्विजेषु वैद्याःश्रेयांसो वैद्येषु कृतबुद्धयः
स भवान् कृतबुद्धीनां प्रधान इति मे मतिः २
कुलेन च विशिष्टोऽसि वयसा च श्रुतेन च
प्रज्ञयानवमश्चासि शुक्रेणाङ्गिरसेन च ३
विदितं चापि ते सर्वं यथावृत्तः स कौरवः
पाण्डवश्च यथावृत्तः कुन्तीपुत्रो युधिष्ठिरः ४
धृतराष्ट्रस्य विदिते वञ्चिताः पाण्डवाः परैः
विदुरेणानुनीतोऽपि पुत्रमेवानुवर्तते ५
शकुनिर्बुद्धिपूर्वं हि कुन्तीपुत्रं समाह्वयत्
अनक्षज्ञं मताक्षः सन् क्षत्रवृत्ते स्थितं शुचिम् ६
ते तथा वञ्चयित्वा तु धर्मपुत्रं युधिष्ठिरम्
न कस्याञ्चिदवस्थायां राज्यंदास्यन्ति वै स्वयम् ७
भवांस्तु धर्मसंयुक्तं धृतराष्ट्रं ब्रुवन् वचः
मनांसि तस्य योधानां ध्रुवमावर्तयिष्यति ८
विदुरश्चापि तद् वाक्यं साधयिष्यति तावकम्
भीष्मद्रोणकृपाणां च भेदं संजनयिष्यति ९
अमात्येषु च भिन्नेषु योधेषु विमुखेषु च
पुनरेकाग्रकरणं तेषां कर्म भविष्यति १०
एतस्मिन्नन्तरे पार्थाः सुखमेकाग्रबुद्धयः
सेनाकर्म करिष्यन्ति द्रव्याणां चैव संचयम् ११
भिद्यमानेषु च स्वेषु लम्बमाने च वै त्वयि
न तथा ते करिष्यन्ति सेनाकर्म न संशयः १२
एतत् प्रयोजनं चात्र प्राधान्येनोपलभ्यते

संगत्या धृतराष्ट्रश्च कुर्याद् धर्म्यं वचस्तव १३
स भवान् धर्मयुक्तश्च धर्म्यं तेषु समाचरन्
कृपालुषु परिक्लेशान् पाण्डवानां प्रकीर्तयन् १४
वृद्धेषु कुलधर्मं च ब्रुवन् पूर्वैरनुष्ठितम्
विभेत्स्यति मनांस्येषामिति मे नात्र संशयः १५
न च तेभ्यो भयं तेऽस्ति ब्राह्मणो ह्यसि वेदवित्
दूतकर्मणि युक्तश्च स्थविरश्च विशेषतः १६
स भवान् पुष्ययोगेन मुहूर्तेन जयेन च
कौरवेयान् प्रयात्वाशु कौन्तेयस्यार्थसिद्धये १७
वैशम्पायन उवाच
तथानुशिष्टः प्रययौ द्रुपदेन महात्मना
पुरोधा वृत्तसम्पन्नो नगरं नागसाह्वयम् १८
इति श्रीमहाभारते उद्योगपर्वणि षष्ठोऽध्यायः ६

## सप्तमोऽध्यायः

वैशम्पायन उवाच
गते द्वारवतीं कृष्णे बलदेवे च माधवे
सह वृष्ण्यन्धकैः सर्वैर्भोजैश्च शतशस्तथा १
सर्वमागमयामास पाण्डवानां विचेष्टितम्
धृतराष्ट्रात्मजो राजा दूतैः प्रणिहितैश्चरैः २
स श्रुत्वा माधवं यातं सदश्वैरनिलोपमैः
बलेन नातिमहता द्वारकामभ्ययात् पुरीम् ३
तमेव दिवसं चापि कौन्तेयः पाण्डुनन्दनः
आनर्तनगरीं रम्यां जगामाशु धनंजयः ४
तौ यात्वा पुरुषव्याघ्रौ द्वारकां कुरुनन्दनौ
सुप्तं ददृशतुः कृष्णं शयानं चोपजग्मतुः ५
ततः शयाने गोविन्दे प्रविवेश सुयोधनः
उच्छीर्षतश्च कृष्णस्य निषसाद वरासने ६
ततः किरीटी तस्यानु प्रविवेश महामनाः
पश्चार्धे च स कृष्णस्य प्रह्वोऽतिष्ठत् कृताञ्जलि ७

प्रतिबुद्धः स वार्ष्णेयो ददर्शाग्रे किरीटिनम्
स तयोः स्वागतं कृत्वा यथार्हं प्रतिपूज्य च
तदागमनजं हेतुं पप्रच्छ मधुसूदनः ८
ततो दुर्योधनः कृष्णमुवाच प्रहसन्निव
विग्रहेऽस्मिन् भवान् साह्यं मम दातुमिहार्हति ९
समं हि भवतः सख्यं मम चैवार्जुनेऽपि च
तथा सम्बन्धकं तुल्यमस्माकं त्वयि माधव १०
अहं चाभिगतः पूर्वं त्वामद्य मधुसूदन
पूर्वं चाभिगतं सन्तो भजन्ते पूर्वसारिणः ११
त्वं च श्रेष्ठतमो लोके सतामद्य जनार्दन
सततं सम्मतश्चैव सद्वृत्तमनुपालय १२
कृष्ण उवाच
भवानभिगतः पूर्वमत्र मे नास्ति संशयः
दृष्टस्तु प्रथमं राजन् मया पार्थो धनंजयः १३
तव पूर्वाभिगमनात् पूर्वं चाप्यस्य दर्शनात्
साहाय्यमुभयोरेव करिष्यामि सुयोधन १४
प्रवारणं तु बालानां पूर्वं कार्यमिति श्रुतिः
तस्मात् प्रवारणं पूर्वमर्हः पार्थो धनंजयः १५
मत्संहननतुल्यानां गोपानामर्बुदं महत्
नारायणा इति ख्याताः सर्वे संग्रामयोधिनः १६
ते वा युधि दुराधर्षा भवन्त्वेकस्य सैनिकाः
अयुध्यमानः संग्रामे न्यस्तशस्त्रोऽहमेकतः १७
आभ्यामन्यतरं पार्थ यत् ते हृद्यतरं मतम्
तद् वृणीतां भवानग्रे प्रवार्यस्त्वं हि धर्मतः १८
वैशम्पायन उवाच
एवमुक्तस्तु कृष्णेन कुन्तीपुत्रो धनंजयः
अयुध्यमानं संग्रामे वरयामास केशवम् १९
सहस्राणां सहस्रं तु योधानां प्राप्य भारत
कृष्णं चापहृतं ज्ञात्वा सम्प्राप परमां मुदम् २०
दुर्योधनस्तु तत् सैन्यं सर्वमादाय पार्थिवः

ततोऽभ्ययाद् भीमबलो रौहिणेयं महाबलम् २१
सर्वं चागमने हेतुं स तस्मै संन्यवेदयत्
प्रत्युवाच ततः शौरिर्धार्तराष्ट्रमिदं वचः २२
विदितं ते नरव्याघ्र सर्वं भवितुमर्हति
यन्मयोक्तंविराटस्य पुरा वैवाहिके तदा २३
निगृह्योक्तो हृषीकेशस्त्वदर्थं कुरुनन्दन
मया सम्बन्धकं तुल्यमिति राजन् पुनः पुनः २४
न च तद् वाक्यमुक्तं वै केशवः प्रत्यपद्यत
न चाहमुत्सहे कृष्णं विना स्थातुमपि क्षणम् २५
नाहं सहायः पार्थस्य नापि दुर्योधनस्य वै
इति मे निश्चिता बुद्धिर्वासुदेवमवेक्ष्य ह २६
जातोऽसि भारते वंशे सर्वपार्थिवपूजिते
गच्छ युध्यस्व धर्मेण क्षात्रेण पुरुषर्षभ २७
इत्येवमुक्तः स तदा परिष्वज्य हलायुधम्
कृष्णं चापहृतं ज्ञात्वा युद्धान्मेने जितं जयम् २८
सोऽभ्ययात् कृतवर्माणं धृतराष्ट्रसुतो नृपः
कृतवर्मा ददौ तस्य सेनामक्षौहिणीं तदा २९
स तेन सर्वसैन्येन भीमेन कुरुनन्दनः
वृतः परिययौ हृष्टः सुहृदः सम्प्रहर्षयन् ३०
गते दुर्योधने कृष्णः किरीटिनमथाब्रवीत्
अयुध्यमानः कां बुद्धिमास्थायाहं त्वया वृतः ३१
अर्जुन उवाच
भवान् समर्थस्तान् सर्वान् निहन्तुं नात्र संशयः
निहन्तुमहमप्येकः समर्थः पुरुषोत्तम ३२
भवांस्तु कीर्तिमाँल्लोके तद् यशस्त्वां गमिष्यति
यशसां चाहमप्यर्थी तस्मादसि मया वृतः ३३
सारथ्यं तु त्वया कार्यमिति मे मानसं सदा
चिररात्रेप्सितं कामं तद् भवान् कर्तुमर्हति ३४
वासुदेव उवाच
उपपन्नमिदं पार्थ यत् स्पर्धेथा मया सह

सारथ्यं ते करिष्यामि कामः सम्पद्यतां तव ३५
वैशम्पायन उवाच
एवं प्रमुदितः पार्थः कृष्णेन सहितस्तदा
वृतो दशार्हप्रवरैः पुनरायाद् युधिष्ठिरम् ३६
इति श्रीमहाभारते उद्योगपर्वणि सप्तमोऽध्यायः ७

अष्टमोऽध्यायः

वैशम्पायन उवाच
शल्यः श्रुत्वा तु दूतानां सैन्येन महता वृतः
अभ्ययात् पाण्डवान् राजन् सह पुत्रैर्महारथैः १
तस्य सेनानिवेशोऽभूदध्यर्धमिव योजनम्
तथा हि बहुलां सेनां स बिभर्ति नरर्षभः २
विचित्रकवचाः शूरा विचित्रध्वजकार्मुकाः
विचित्राभरणाः सर्वे विचित्ररथवाहनाः ३
स्वदेशवेषाभरणा वीराः शतसहस्रशः
तस्य सेनाप्रणेतारो बभूवुः क्षत्रियर्षभाः ४
व्यथयन्निव भूतानि कम्पयन्निव मेदिनीम्
शनैर्विश्रामयन् सेनां स ययौ येन पाण्डवः ५
ततो दुर्योधनः श्रुत्वा महासेनं महारथम्
उपायान्तमभिद्रुत्य स्वयमानर्च भारत ६
कारयामास पूजार्थं तस्य दुर्योधनः सभाः
रमणीयेषु देशेषु रत्नचित्राः स्वलंकृताः ७
स ताः सभाः समासाद्य पूज्यमानो यथामरः
दुर्योधनस्य सचिवैर्देशे देशे यथार्हतः
आजगाम सभामन्यांदेवावसथवर्चसम् ८
स तत्र विषयैर्युक्तः कल्याणैरतिमानुषैः
मेनेऽभ्यधिकमात्मानमवमेने पुरंदरम् ९
पप्रच्छ स ततः प्रेष्यान् प्रहृष्टः क्षत्रियर्षभः
युधिष्ठिरस्य पुरुषाः के नु चक्रुः सभा इमाः
आनीयन्तां सभाकाराः प्रदेयार्हा हि मे मताः १०

गूढो दुर्योधनस्तत्र दर्शयामास मातुलम्
तं दृष्ट्वा मद्रराजस्तु ज्ञात्वा यत्नं च तस्य तम्
परिष्वज्याब्रवीत् प्रीत इष्टोऽथो गृह्यतामिति ११
दुर्योधन उवाच
सत्यवाग् भव कल्याण वरो वै मम दीयताम्
सर्वसेनाप्रणेता मे भवान् भवितुमर्हति १२
वैशम्पायन उवाच
कृतमित्यब्रवीच्छल्यः किमन्यत् क्रियतामिति
कृतमित्येव गान्धारिः प्रत्युवाच पुनः पुनः १३
स तथा शल्यमामन्त्र्य पुनरायात् स्वकं पुरम्
शल्यो जगाम कौन्तेयानाख्यातुं कर्म तस्य तत् १४
उपप्लव्यं स गत्वा तु स्कन्धावारं प्रविश्य च
पाण्डवानथ तान् सर्वान् शल्यस्तत्र ददर्श ह १५
समेत्य तु महाबाहुः शल्यः पाण्डुसुतैस्तदा
पाद्यमर्घ्यं च गां चैव प्रत्यगृह्णाद् यथाविधि १६
ततः कुशलपूर्वं स मद्रराजोऽरिसूदनः
प्रीत्या परमया युक्तः समाश्लिष्य युधिष्ठिरम् १७
तथा भीमार्जुनौ हृष्टौ स्वस्रीयौ च यमावुभौ
आसने चोपविष्टस्तु शल्यः पार्थमुवाच ह १८
कुशलं राजशार्दूल कच्चित् ते कुरुनन्दन
अरण्यवासाद् दिष्ट्यासि विमुक्तो जयतां वर १९
सुदुष्करं कृतं राजन् निर्जने वसता वने
भ्रातृभिः सह राजेन्द्र कृष्णया चानया सह २०
अज्ञातवासं घोरं च वसता दुष्करं कृतम्
दुःखमेव कुतः सौख्यं राज्यभ्रष्टस्य भारत २१
दुःखस्यैतस्य महतो धार्तराष्ट्रकृतस्य वै
अवाप्स्यसि सुखं राजन् हत्वा शत्रून् परंतप २२
विदितं ते महाराज लोकतत्त्वं नराधिप
तस्माल्लोभकृतं किंचित् तव तात न विद्यते २३
ततोऽस्याकथयद् राजा दुर्योधनसमागमम्

तच्च शुश्रूषितं सर्वं वरदानं च भारत २४
युधिष्ठिर उवाच
सुकृतं ते कृतं राजन् प्रहृष्टेनान्तरात्मना
दुर्योधनस्य यद् वीर त्वया वाचा प्रतिश्रुतम्
एकं त्विच्छामि भद्रं ते क्रियमाणं महीपते २५
भवानिह महाराज वासुदेवसमो युधि
कर्णार्जुनाभ्यां सम्प्राप्ते द्वैरथे राजसत्तम
कर्णस्य भवता कार्यं सारथ्यं नात्र संशयः २६
तत्र पाल्योऽजुनो राजन् यदि मत्प्रियमिच्छसि
तेजोवधश्च ते कार्यः सौतेरस्मज्जयावहः
अकर्तव्यमपि ह्येतत् कर्तुमर्हसि मातुल २७
शल्य उवाच
शृणु पाण्डव भद्रं ते यद् ब्रवीषि दुरात्मनः
तेजोवधनिमित्तं मां सूतपुत्रस्य संयुगे २८
अहं तस्य भविष्यामि संग्रामे सारथिर्ध्रुवम्
वासुदेवेन हि समं नित्यं मां स हि मन्यते २९
तस्याहं कुरुशार्दूल प्रतीपमहितं वचः
ध्रुवं संकथयिष्यामि योद्धुकामस्य संयुगे ३०
यथा स हृतदर्पश्च हृततेजाश्च पाण्डव
भविष्यति सुखं हन्तुं सत्यमेतद् ब्रवीमि ते ३१
एवमेतत् करिष्यामि यथा तात त्वमात्थ माम्
यच्चान्यदपि शक्ष्यामि तत् करिष्यामि ते प्रियम् ३२
यच्च दुःखं त्वया प्राप्तं द्यूते वै कृष्णया सह
परुषाणि च वाक्यानि सूतपुत्रकृतानि वै ३३
जटासुरात् परिक्लेशः कीचकाच्च महाद्युते
द्रौपद्याधिगतं सर्वं दमयन्त्या यथाशुभम् ३४
सर्वं दुःखमिदं वीर सुखोदर्कं भविष्यति
नात्र मन्युस्त्वया कार्यो विधिर्हि बलवत्तरः ३५
दुःखानि हि महात्मानः प्राप्नुवन्ति युधिष्ठिर
देवैरपि हि दुःखानि प्राप्तानि जगतीपते ३६

इन्द्रेण श्रूयते राजन्सभार्येण महात्मना
अनुभूतं महद्दुःखं देवराजेन भारत ३७
इति श्रीमहाभारते उद्योगपर्वणि अष्टमोऽध्यायः ८

नवमोऽध्यायः

युधिष्ठिर उवाच
कथमिन्द्रेण राजेन्द्र सभार्येण महात्मना
दुःखं प्राप्तं परं घोरमेतदिच्छामि वेदितुम् १
शल्य उवाच
शृणु राजन्पुरा वृत्तमितिहासं पुरातनम्
सभार्येण यथा प्राप्तं दुःखमिन्द्रेण भारत २
त्वष्टा प्रजापतिर्ह्यासीद्देवश्रेष्ठो महातपाः
स पुत्रं वै त्रिशिरसमिन्द्रद्रोहात्किलासृजत् ३
ऐन्द्रं स प्रार्थयत्स्थानं विश्वरूपो महाद्युतिः
तैस्त्रिभिर्वदनैर्घोरैः सूर्येन्दुज्वलनोपमैः ४
वेदानेकेन सोऽधीते सुरामेकेन चापिबत्
एकेन च दिशः सर्वाः पिबन्निव निरीक्षते ५
स तपस्वी मृदुर्दान्तो धर्मे तपसि चोद्यतः
तपोऽतप्यन्महत्तीव्रं सुदुश्चरमरिंदम ६
तस्य दृष्ट्वा तपोवीर्यं सत्त्वं चामिततेजसः
विषादमगमच्छक्र इन्द्रोऽय मा भवेदिति ७
कथं सज्जेत भोगेषु न च तप्येन्महत्तपः
विवर्धमानस्त्रिशिराः सर्वं त्रिभुवनं ग्रसेत् ८
इति संचिन्त्य बहुधा बुद्धिमान्भरतर्षभ
आज्ञापयत्सोऽप्सरसस्त्वष्टृपुत्रप्रलोभने ९
यथा स सज्जेत्त्रिशिराः कामभोगेषु वै भृशम्
क्षिप्रं कुरुत गच्छध्वं प्रलोभयत माचिरम् १०
शृङ्गारवेषाः सुश्रोण्यो भावैर्युक्ता मनोहरैः
प्रलोभयत भद्रं वः शमयध्वं भयं मम ११
अस्वस्थं ह्यात्मनात्मानं लक्षयामि वराङ्गनाः

भयमेतन्महाघोरं क्षिप्रं नाशयताबलाः १२
अप्सरस ऊचुः
तथा यत्नं करिष्यामः शक्र तस्य प्रलोभने
यथा नावाप्स्यसि भयं तस्माद्बलनिषूदन १३
निर्दहन्निव चक्षुर्भ्यां योऽसावास्ते तपोनिधिः
तं प्रलोभयितुं देव गच्छामः सहिता वयम्
यतिष्यामो वशे कर्तुं व्यपनेतुं च ते भयम् १४
शल्य उवाच
इन्द्रेण तास्त्वनुज्ञाता जग्मुस्त्रिशिरसोऽन्तिकम्
तत्र ता विविधैर्भावैर्लोभयन्त्यो वराङ्गनाः
नृत्यं संदर्शयन्त्यश्च तथैवाङ्गेषु सौष्ठवम् १५
विचेरुः संप्रहर्षं च नाभ्यगच्छन्महातपाः
इन्द्रियाणि वशे कृत्वा पूर्णसागरसंनिभः १६
तास्तु यत्नं परं कृत्वा पुनः शक्रमुपस्थिताः
कृताञ्जलिपुटाः सर्वा देवराजमथाब्रुवन् १७
न स शक्यःसुदुर्धर्षो धैर्याच्चलयितुं प्रभो
यत्ते कार्यं महाभाग क्रियतां तदनन्तरम् १८
सम्पूज्याप्सरसः शक्रो विसृज्य च महामतिः
चिन्तयामास तस्यैव वधोपायं महात्मनः १९
स तूष्णीं चिन्तयन्वीरो देवराजः प्रतापवान्
विनिश्चितमतिर्धीमान्वधे त्रिशिरसोऽभवत् २०
वज्रमस्य क्षिपाम्यद्य स क्षिप्रं न भविष्यति
शत्रुः प्रवृद्धो नोपेक्ष्यो दुर्बलोऽपि बलीयसा २१
शास्त्रबुद्ध्या विनिश्चित्य कृत्वा बुद्धिं वधे दृढाम्
अथ वैश्वानरनिभं घोररूपं भयावहम्
मुमोच वज्रं संक्रुद्धः शक्रस्त्रिशिरसं प्रति २२
स पपात हतस्तेन वज्रेण दृढमाहतः
पर्वतस्येव शिखरं प्रणुन्नं मेदिनी तले २३
तं तु वज्रहतं दृष्ट्वा शयानमचलोपमम्
न शर्म लेभे देवेन्द्रो दीपितस्तस्य तेजसा

हतोऽपि दीप्ततेजाः स जीवन्निव च दृश्यते २४
अभितस्तत्र तक्षाणं घटमानं शचीपतिः
अपश्यदब्रवीच्चैनं सत्वरं पाकशासनः
क्षिप्रं छिन्धि शिरांस्यस्य कुरुष्व वचनं मम २५
तक्षोवाच
महास्कन्धो भृशं ह्येष परशुर्न तरिष्यति
कर्तुं चाहं न शक्ष्यामि कर्म सद्भिर्विगर्हितम् २६
इन्द्र उवाच
मा भैस्त्वं क्षिप्रमेतद्वै कुरुष्व वचनं मम
मत्प्रसादाद्धि ते शस्त्रं वज्रकल्पं भविष्यति २७
तक्षोवाच
कं भवन्तमहं विद्यां घोरकर्माणमद्य वै
एतदिच्छाम्यहं श्रोतुं तत्त्वेन कथयस्व मे २८
इन्द्र उवाच
अहमिन्द्रो देवराजस्तक्षन्विदितमस्तु ते
कुरुष्वैतद्यथोक्तं मे तक्षन्मा त्वं विचारय २९
तक्षोवाच
क्रूरेण नापत्रपसे कथं शक्रेह कर्मणा
ऋषिपुत्रमिमं हत्वा ब्रह्महत्याभयं न ते ३०
शक्र उवाच
पश्चाद्धर्मं चरिष्यामि पावनार्थं सुदुश्चरम्
शत्रुरेष महावीर्यो वज्रेण निहतो मया ३१
अद्यापि चाहमुद्विग्नस्तक्षन्नस्माद्बिभेमि वै
क्षिप्रं छिन्धि शिरांसि त्वं करिष्येऽनुग्रहं तव ३२
शिरः पशोस्ते दास्यन्ति भागं यज्ञेषु मानवाः
एष तेऽनुग्रहस्तक्षन्क्षिप्रं कुरु मम प्रियम् ३३
शल्य उवाच
एतच्छ्रुत्वा तु तक्षा स महेन्द्रवचनं तदा
शिरांस्यथ त्रिशिरसः कुठारेणाच्छिनत्तदा ३४
निकृत्तेषु ततस्तेषु निष्क्रामंस्त्रिशिरास्त्वथ

कपिञ्जलास्तित्तिराश्च कलविङ्काश्च सर्वशः ३५
येन वेदानधीते स्म पिबते सोममेव च
तस्माद्वक्त्राद्विनिष्पेतुः क्षिप्रं तस्य कपिञ्जलाः ३६
येन सर्वा दिशो राजन्पिबन्निव निरीक्षते
तस्माद्वक्त्राद्विनिष्पेतुस्तित्तिरास्तस्य पाण्डव ३७
यत्सुरापं तु तस्यासीद्वक्त्रं त्रिशिरसस्तदा
कलविङ्का विनिष्पेतुस्तेनास्य भरतर्षभ ३८
ततस्तेषु निकृत्तेषु विज्वरो मघवानभूत्
जगाम त्रिदिवं हृष्टस्तक्षापि स्वगृहान्ययौ ३९
त्वष्टा प्रजापतिः श्रुत्वा शक्रेणाथ हतं सुतम्
क्रोधसंरक्तनयन इदं वचनमब्रवीत् ४०
तप्यमानं तपो नित्यं क्षान्तं दान्तं जितेन्द्रियम्
अनापराधिनं यस्मात्पुत्रं हिंसितवान्मम ४१
तस्माच्छक्रवधार्थाय वृत्रमुत्पादयाम्यहम्
लोकाः पश्यन्तु मे वीर्यं तपसश्च बलं महत्
स च पश्यतुदेवेन्द्रोदुरात्मा पाप चेतनः ४२
उपस्पृश्य ततः क्रुद्धस्तपस्वी सुमहायशाः
अग्निं हुत्वा समुत्पाद्य घोरं वृत्रमुवाच ह
इन्द्रशत्रो विवर्धस्व प्रभावात्तपसो मम ४३
सोऽवर्धत दिवं स्तब्ध्वा सूर्यवैश्वानरोपमः
किं करोमीति चोवाच कालसूर्य इवोदितः
शक्रं जहीति चाप्युक्तो जगाम त्रिदिवं ततः ४४
ततो युद्धं समभवद्वृत्रवासवयोस्तदा
संक्रुद्धयोर्महा घोरं प्रसक्तं कुरुसत्तम ४५
ततो जग्राह देवेन्द्रं वृत्रो वीरः शतक्रतुम्
अपावृत्य स जग्रास वृत्रः क्रोधसमन्वितः ४६
ग्रस्ते वृत्रेण शक्रे तु सम्भ्रान्तास्त्रिदशास्तदा
असृजंस्ते महासत्त्वा जृम्भिकां वृत्रनाशिनीम् ४७
विजृम्भमाणस्य ततो वृत्रस्यास्यादपावृतात्
स्वान्यङ्गान्यभिसंक्षिप्य निष्क्रान्तो बलसूदनः

ततः प्रभृति लोकेषु जृम्भिका प्राणिसंश्रिता ४८
जहृषुश्च सुराः सर्वे दृष्ट्वा शक्रं विनिः सृतम्
ततः प्रववृते युद्धं वृत्रवासवयोः पुनः
संरब्धयोस्तदा घोरं सुचिरं भरतर्षभ ४९
यदा व्यवर्धत रणे वृत्रो बलसमन्वितः
त्वष्टुस्तपोबलाद्विद्वांस्तदा शक्रो न्यवर्तत ५०
निवृत्ते तु तदा देवा विषादमगमन्परम्
समेत्य शक्रेण च ते त्वष्टुस्तेजोविमोहिताः
अमन्त्रयन्त ते सर्वे मुनिभिः सह भारत ५१
किं कार्यमिति ते राजन्विचिन्त्य भयमोहिताः
जग्मुः सर्वे महात्मानं मनोभिर्विष्णुमव्ययम्
उपविष्टा मन्दराग्रे सर्वे वृत्रवधेप्सवः ५२
इति श्रीमहाभारते उद्योगपर्वणि नवमोऽध्यायः ९

## दशमोऽध्यायः

इन्द्र उवाच
सर्वं व्याप्तमिदं देवा वृत्रेण जगदव्ययम्
न ह्यस्य सदृशं किंचित्प्रतिघाताय यद्भवेत् १
समर्थो ह्यभवं पूर्वमसमर्थोऽस्मि साम्प्रतम्
कथं कुर्यां नु भद्रं वो दुष्प्रधर्षः स मे मतः २
तेजस्वी च महात्मा च युद्धे चामितविक्रमः
ग्रसेत्त्रिभुवनं सर्वं सदेवासुरमानुषम् ३
तस्माद्विनिश्चयमिमं शृणुध्वं मे दिवौकसः
विष्णोः क्षयमुपागम्य समेत्य च महात्मना
तेन संमन्त्र्य वेत्स्यामो वधोपायं दुरात्मनः ४
शल्य उवाच
एवमुक्ते मघवता देवाः सर्षिगणास्तदा
शरण्यं शरणं देवं जग्मुर्विष्णुं महाबलम् ५
ऊचुश्च सर्वे देवेशं विष्णुं वृत्रभयार्दिताः
त्वया लोकास्त्रयः क्रान्तास्त्रिभिर्विक्रमणैः प्रभो ६

अमृतं चाहृतं विष्णो दैत्याश्च निहता रणे
बलि बद्ध्वा महादैत्यं शक्रो देवाधिपः कृतः ७
त्वं प्रभुः सर्वलोकानां त्वया सर्वमिदं ततम्
त्वं हि देव महादेवः सर्वलोकनमस्कृतः ८
गतिर्भव त्वं देवानां सेन्द्राणाममरोत्तम
जगद्व्याप्तमिदं सर्वं वृत्रेणासुरसूदन ९
विष्णुरुवाच
अवश्यं करणीयं मे भवतां हितमुत्तमम्
तस्मादुपायं वक्ष्यामि यथासौ न भविष्यति १०
गच्छध्वं सर्षिगन्धर्वा यत्रासौ विश्वरूपधृक्
साम तस्य प्रयुञ्जध्वं तत एनं विजेष्यथ ११
भविष्यति गतिर्देवाः शक्रस्य मम तेजसा
अदृश्यश्च प्रवेक्ष्यामि वज्रमस्यायुधोत्तमम् १२
गच्छध्वमृषिभिः सार्धं गन्धर्वैश्च सुरोत्तमाः
वृत्रस्य सह शक्रेण सन्धिं कुरुत माचिरम् १३
शल्य उवाच
एवमुक्तास्तु देवेन ऋषयस्त्रिदशास्तथा
ययुः समेत्य सहिताः शक्रं कृत्वा पुरःसरम् १४
समीपमेत्य च तदा सर्व एव महौजसः
तं तेजसा प्रज्वलितं प्रतपन्तं दिशो दश १५
ग्रसन्तमिव लोकांस्त्रीन्सूर्याचन्द्रमसौ यथा
ददृशुस्तत्र ते वृत्रं शक्रेण सह देवताः १६
ऋषयोऽथ ततोऽभ्येत्य वृत्रमूचुः प्रियं वचः
व्याप्तं जगदिदं सर्वं तेजसा तव दुर्जय १७
न च शक्नोषि निर्जेतुं वासवं भूरिविक्रमम्
युध्यतोश्चापि वां कालो व्यतीतः सुमहानिह १८
पीड्यन्ते च प्रजाः सर्वाः सदेवासुरमानवाः
सख्यं भवतु ते वृत्र शक्रेण सह नित्यदा
अवाप्स्यसि सुखं त्वं च शक्रलोकांश्च शाश्वतान् १९
ऋषिवाक्यं निशम्याथ स वृत्रः सुमहाबलः

उवाच तांस्तदा सर्वान्प्रणम्य शिरसासुरः २०
सर्वे यूयं महाभागा गन्धर्वाश्चैव सर्वशः
यद्ब्रूत तच्छ्रुतं सर्वं ममापि शृणुतानघाः २१
संधिः कथं वै भविता मम शक्रस्य चोभयोः
तेजसोर्हि द्वयोर्देवाः सख्यं वै भविता कथम् २२
ऋषय ऊचुः
सकृत्सतां संगतं लिप्सितव्यं ततः परं भविता भव्यमेव
नातिक्रामेत्सत्पुरुषेण संगतं तस्मात्सतां संगतं लिप्सितव्यम् २३
दृढं सतां संगतं चापि नित्यंब्रूयाच्चार्थं ह्यर्थकृच्छ्रेषु धीरः
महार्थवत्सत्पुरुषेण संगतं तस्मात्सन्तं न जिघांसेत धीरः २४
इन्द्रः सतां सम्मतश्च निवासश्च महात्मनाम्
सत्यवादी ह्यदीनश्च धर्मवित्सुविनिश्चितः २५
तेन ते सह शक्रेण संधिर्भवतु शाश्वतः
एवं विश्वासमागच्छ मा ते भूद्बुद्धिरन्यथा २६
शल्य उवाच
महर्षिवचनं श्रुत्वा तानुवाच महाद्युतिः
अवश्यं भगवन्तो मे माननीयास्तपस्विनः २७
ब्रवीमि यदहं देवास्तत्सर्वं क्रियतामिह
ततः सर्वं करिष्यामि यदूचुर्मां द्विजर्षभाः २८
न शुष्केण न चार्द्रेण नाश्मना न च दारुणा
न शस्त्रेण न वज्रेण न दिवा न तथा निशि २९
वध्यो भवेयं विप्रेन्द्राः शक्रस्य सह दैवतैः
एवं मे रोचते सन्धिः शक्रेण सह नित्यदा ३०
बाढमित्येव ऋषयस्तमूचुर्भरतर्षभ
एवं कृते तु संधाने वृत्रः प्रमुदितोऽभवत् ३१
यत्तः सदाभवच्चापि शक्रोऽमर्षसमन्वितः
वृत्रस्य वधसंयुक्तानुपायाननुचिन्तयन्
रन्ध्रान्वेषी समुद्विग्नः सदाभूद्बलवृत्रहा ३२
स कदाचित्समुद्रान्ते तमपश्यन्महासुरम्
संध्याकाल उपावृत्ते मुहूर्ते रम्यदारुणे ३३

ततः संचिन्त्य भगवान्वरदानं महात्मनः
संध्येयं वर्तते रौद्रा न रात्रिर्दिवसं न च
वृत्रश्चावश्यवध्योऽय मम सर्वहरो रिपुः ३४
यदि वृत्रं न हन्म्यद्य वञ्चयित्वा महासुरम्
महाबलं महाकायं न मे श्रेयो भविष्यति ३५
एवं संचिन्तयन्नेव शक्रो विष्णुमनुस्मरन्
अथ फेनं तदापश्यत्समुद्रे पर्वतोपमम् ३६
नायं शुष्को न चार्द्रोऽय न च शस्त्रमिदं तथा
एनं क्षेप्स्यामि वृत्रस्य क्षणादेव नशिष्यति ३७
सवज्रमथ फेनं तं क्षिप्रं वृत्रे निसृष्टवान्
प्रविश्य फेनं तं विष्णुरथ वृत्रं व्यनाशयत् ३८
निहते तु ततो वृत्रे दिशो वितिमिराभवन्
प्रववौ च शिवो वायुः प्रजाश्च जहृषुस्तदा ३९
ततो देवाः सगन्धर्वा यक्षराक्षसपन्नगाः
ऋषयश्च महेन्द्रं तमस्तुवन्विविधैः स्तवैः ४०
नमस्कृतः सर्वभूतैः सर्वभूतानि सान्त्वयन्
हत्वशत्रुः प्रहृष्टात्मा वासवः सह दैवतैः
विष्णुं त्रिभुवनश्रेष्ठं पूजयामास धर्मवित् ४१
ततो हते महावीर्ये वृत्रे देवभयंकरे
अनृतेनाभिभूतोऽभूच्छक्रः परमदुर्मनाः
त्रैशीर्षयाभिभूतश्च स पूर्वं ब्रह्महत्यया ४२
सोऽन्तमाश्रित्य लोकानां नष्टसंज्ञो विचेतनः
न प्राज्ञायत देवेन्द्रस्त्वभिभूतः स्वकल्मषैः
प्रतिच्छन्नो वसत्यप्सु चेष्टमान इवोरगः ४३
ततः प्रनष्टे देवेन्द्रे ब्रह्महत्याभयार्दिते
भूमिः प्रध्वस्तसंकाशा निर्वृक्षा शुष्ककानना
विच्छिन्नस्रोतसो नद्यः सरांस्यनुदकानि च ४४
संक्षोभश्चापि सत्त्वानामनावृष्टिकृतोऽभवत्
देवाश्चापि भृशं त्रस्तास्तथा सर्वे महर्षयः ४५
अराजकं जगत्सर्वमभिभूतमुपद्रवैः

ततो भीताभवन्देवाः को नो राजा भवेदिति ४६
दिवि देवर्षयश्चापि देवराजविनाकृताः
न च स्म कश्चिद्देवानां राज्याय कुरुते मनः ४७
इति श्रीमहाभारते उद्योगपर्वणि दशमोऽध्यायः १०

## एकादशोऽध्यायः

शल्य उवाच
ऋषयोऽथाब्रुवन्सर्वे देवाश्च त्रिदशेश्वराः
अयं वै नहुषः श्रीमान्देवराज्येऽभिषिच्यताम्
ते गत्वाथाब्रुवन्सर्वे राजा नो भव पार्थिव १
स तानुवाच नहुषो देवानृषिगणांस्तथा
पितृभिः सहितान्राजन्परीप्सन्हितमात्मनः २
दुर्बलोऽह न मे शक्तिर्भवतां परिपालने
बलवाञ्जायते राजा बलं शक्रे हि नित्यदा ३
तमब्रुवन्पुनः सर्वे देवाः सर्षिपुरोगमाः
अस्माकं तपसा युक्तः पाहि राज्यं त्रिविष्टपे ४
परस्परभयं घोरमस्माकं हि न संशयः
अभिषिच्यस्व राजेन्द्र भव राजा त्रिविष्टपे ५
देवदानवयक्षाणामृषीणां रक्षसां तथा
पितृगन्धर्वभूतानां चक्षुर्विषयवर्तिनाम्
तेज आदास्यसे पश्यन्बलवांश्च भविष्यसि ६
धर्मं पुरस्कृत्य सदा सर्वलोकाधिपो भव
ब्रह्मर्षींश्चापि देवांश्च गोपायस्व त्रिविष्टपे ७
सुदुर्लभं वरं लब्ध्वा प्राप्य राज्यं त्रिविष्टपे
धर्मात्मा सततं भूत्वा कामात्मा समपद्यत ८
देवोद्यानेषु सर्वेषु नन्दनोपवनेषु च
कैलासे हिमवत्पृष्ठे मन्दरे श्वेतपर्वते
सह्ये महेन्द्रे मलये समुद्रेषु सरित्सु च ९
अप्सरोभिः परिवृतो देवकन्यासमावृतः
नहुषो देवराजः सन्क्रीडन्बहुविधं तदा १०

शृणवन्दिव्या बहुविधाः कथाः श्रुतिमनोहराः
वादित्राणि च सर्वाणि गीतं च मधुरस्वरम् ११
विश्वावसुर्नारदश्च गन्धर्वाप्सरसां गणाः
ऋतवः षट्च देवेन्द्रं मूर्तिमन्त उपस्थिताः
मारुतः सुरभिर्वाति मनोज्ञः सुखशीतलः १२
एवं च क्रीडतस्तस्य नहुषस्य महात्मनः
सम्प्राप्ता दर्शनं देवी शक्रस्य महिषी प्रिया १३
स तां संदृश्य दुष्टात्मा प्राह सर्वान्सभासदः
इन्द्रस्य महिषी देवी कस्मान्मां नोपतिष्ठति १४
अहमिन्द्रोऽस्मि देवानां लोकानां च तथेश्वरः
आगच्छतु शची मह्यं क्षिप्रमद्य निवेशनम् १५
तच्छ्रुत्वा दुर्मना देवी बृहस्पतिमुवाच ह
रक्ष मां नहुषाद्ब्रह्मंस्त्वामस्मि शरणं गता १६
सर्वलक्षणसम्पन्नां ब्रह्मंस्त्वं मां प्रभाषसे
देवराजस्य दयितामत्यन्तसुखभागिनीम् १७
अवैधव्येन संयुक्तामेकपत्नीं पतिव्रताम्
उक्तवानसि मां पूर्वमृतां तां कुरु वै गिरम् १८
नोक्तपूर्वं च भगवन्मृषा ते किंचिदीश्वर
तस्मादेतद्भवेत्सत्यं त्वयोक्तं द्विजसत्तम १९
बृहस्पतिरथोवाच इन्द्राणीं भयमोहिताम्
यदुक्तासि मया देवि सत्यं तद्भविता ध्रुवम् २०
द्रक्ष्यसे देवराजानमिन्द्रं शीघ्रमिहागतम्
न भेतव्यं च नहुषात्सत्यमेतद्ब्रवीमि ते
समानयिष्ये शक्रेण नचिराद्भवतीमहम् २१
अथ शुश्राव नहुष इन्द्राणीं शरणं गताम्
बृहस्पतेरङ्गिरसश्चुक्रोध स नृपस्तदा २२

इति श्रीमहाभारते उद्योगपर्वणि एकादशोऽध्यायः ११

## द्वादशोऽध्यायः

शल्य उवाच

क्रुद्धं तु नहुषं ज्ञात्वा देवाः सर्षिपुरोगमाः
अब्रुवन्देवराजानं नहुषं घोरदर्शनम् १
देवराज जहि क्रोधं त्वयि क्रुद्धे जगद्विभो
त्रस्तं सासुरगन्धर्वं सकिन्नरमहोरगम् २
जहि क्रोधमिमं साधो न क्रुध्यन्ति भवद्विधाः
परस्य पत्नी सा देवी प्रसीदस्व सुरेश्वर ३
निवर्तय मनः पापात्परदाराभिमर्शनात्
देवराजोऽसि भद्रं ते प्रजा धर्मेण पालय ४
एवमुक्तो न जग्राह तद्वचः काममोहितः
अथ देवानुवाचेदमिन्द्रं प्रति सुराधिपः ५
अहल्या धर्षिता पूर्वमृषिपत्नी यशस्विनी
जीवतो भर्तुरिन्द्रेण स वः किं न निवारितः ६
बहूनि च नृशंसानि कृतानीन्द्रेण वै पुरा
वैधर्म्याण्युपधाश्चैव स वः किं न निवारितः ७
उपतिष्ठतु मां देवी एतदस्या हितं परम्
युष्माकं च सदा देवाः शिवमेवं भविष्यति ८
देवा ऊचुः
इन्द्राणीमानयिष्यामो यथेच्छसि दिवस्पते
जहि क्रोधमिमं वीर प्रीतो भव सुरेश्वर ९
शल्य उवाच
इत्युक्त्वा ते तदा देवा ऋषिभिः सह भारत
जग्मुर्बृहस्पतिं वक्तुमिन्द्राणीं चाशुभं वचः १०
जानीमः शरणं प्राप्तामिन्द्राणीं तव वेश्मनि
दत्ताभयां च विप्रेन्द्र त्वया देवर्षिसत्तम ११
ते त्वां देवाः सगन्धर्वा ऋषयश्च महाद्युते
प्रसादयन्ति चेन्द्राणी नाहुषाय प्रदीयताम् १२
इन्द्राद्विशिष्टो नहुषो देवराजो महाद्युतिः
वृणोत्वियं वरारोहा भर्तृत्वे वरवर्णिनी १३
एवमुक्ते तु सा देवी बाष्पमुत्सृज्य सस्वरम्
उवाच रुदती दीना बृहस्पतिमिदं वचः १४

नाहमिच्छामि नहुषं पतिमन्वास्य तं प्रभुम्
शरणागतास्मि ते ब्रह्मंस्त्राहि मां महतो भयात् १५
बृहस्पतिरुवाच
शरणागतं न त्यजेयमिन्द्राणि मम निश्चितम्
धर्मज्ञां सत्यशीलां च न त्यजे त्वामनिन्दिते १६
नाकार्यं कर्तुमिच्छामि ब्राह्मणः सन्विशेषतः
श्रुतधर्मा सत्यशीलो जानन्धर्मानुशासनम् १७
नाहमेतत्करिष्यामि गच्छध्वं वै सुरोत्तमाः
अस्मिंश्चार्थे पुरा गीतं ब्रह्मणा श्रूयतामिदम् १८
न तस्य बीजं रोहति बीजकाले न चास्य वर्षं वर्षति वर्षकाले
भीतं प्रपन्नं प्रददाति शत्रवे न सोऽन्तरं लभते त्राणमिच्छन् १९
मोघमन्नं विन्दति चाप्यचेताः स्वर्गाल्लोकाद्भ्रश्यति नष्टचेष्टः
भीतं प्रपन्नं प्रददाति यो वै न तस्य हव्यं प्रतिगृह्णन्ति देवाः २०
प्रमीयते चास्य प्रजा ह्यकाले सदा विवासं पितरोऽस्य कुर्वते
भीतं प्रपन्नं प्रददाति शत्रवे सेन्द्रा देवाः प्रहरन्त्यस्य वज्रम् २१
एतदेवं विजानन्वै न दास्यामि शचीमिमाम्
इन्द्राणीं विश्रुतां लोके शक्रस्य महिषीं प्रियाम् २२
अस्या हितं भवेद्यच्च मम चापि हितं भवेत्
क्रियतां तत्सुरश्रेष्ठा न हि दास्याम्यहं शचीम् २३
शल्य उवाच
अथ देवास्तमेवाहुर्गुरुमङ्गिरसां वरम्
कथं सुनीतं नु भवेन्मन्त्रयस्व बृहस्पते २४
बृहस्पतिरुवाच
नहुषं याचतां देवी किंचित्कालान्तरं शुभा
इन्द्राणीहितमेतद्धि तथास्माकं भविष्यति २५
बहुविघ्नकरः कालः कालः कालं नयिष्यति
दर्पितो बलवांश्चापि नहुषो वरसंश्रयात् २६
शल्य उवाच
ततस्तेन तथोक्ते तु प्रीता देवास्तमब्रुवन्
ब्रह्मन्साध्विदमुक्तं ते हितं सर्वदिवौकसाम्

एवमेतद्द्विजश्रेष्ठ देवी चेयं प्रसाद्यताम् २७
ततः समस्ता इन्द्राणीं देवाः साग्निपुरोगमाः
ऊचुर्वचनमव्यग्रा लोकानां हितकाम्यया २८
त्वया जगदिदं सर्वं धृतं स्थावरजङ्गमम्
एकपत्न्यसि सत्या च गच्छस्व नहुषं प्रति २९
क्षिप्रं त्वामभिकामश्च विनशिष्यति पार्थिवः
नहुषो देवि शक्रश्च सुरैश्वर्यमवाप्स्यति ३०
एवं विनिश्चयं कृत्वा इन्द्राणी कार्यसिद्धये
अभ्यगच्छत सव्रीडा नहुषं घोरदर्शनम् ३१
दृष्ट्वा तां नहुषश्चापि वयोरूपसमन्विताम्
समहृष्यत दुष्टात्मा कामोपहतचेतनः ३२
इति श्रीमहाभारते उद्योगपर्वणि द्वादशोऽध्यायः १२

## त्रयोदशोऽध्यायः

शल्य उवाच
अथ तामब्रवीद्दृष्ट्वा नहुषो देवराट् तदा
त्रयाणामपि लोकानामहमिन्द्रः शुचिस्मिते
भजस्व मां वरारोहे पतित्वे वरवर्णिनि १
एवमुक्ता तु सा देवी नहुषेण पतिव्रता
प्रावेपत भयोद्विग्ना प्रवाते कदली यथा २
नमस्य सा तु ब्रह्माणं कृत्वा शिरसि चाञ्जलिम्
देवराजमथोवाच नहुषं घोरदर्शनम् ३
कालमिच्छाम्यहं लब्धुं किंचित्त्वत्तः सुरेश्वर
न हि विज्ञायते शक्रः प्राप्तः किं वा क्व वा गतः ४
तत्त्वमेतत्तु विज्ञाय यदि न ज्ञायते प्रभो
ततोऽह त्वामुपस्थास्ये सत्यमेतद्ब्रवीमि ते
एवमुक्तः स इन्द्राण्या नहुषः प्रीतिमानभूत् ५
नहुष उवाच
एवं भवतु सुश्रोणि यथा मामभिभाषसे
ज्ञात्वा चागमनं कार्यं सत्यमेतदनुस्मरेः ६

नहुषेण विसृष्टा च निश्चक्राम ततः शुभा
बृहस्पतिनिकेतं सा जगाम च तपस्विनी ७
तस्याः संश्रुत्य च वचो देवाः साग्निपुरोगमाः
मन्त्रयामासुरेकाग्राः शक्रार्थं राजसत्तम ८
देवदेवेन सङ्गम्य विष्णुना प्रभविष्णुना
ऊचुश्चैनं समुद्विग्ना वाक्यं वाक्यविशारदाः ९
ब्रह्महत्याभिभूतो वै शक्रः सुरगणेश्वरः
गतिश्च नस्त्वं देवेश पूर्वजो जगतः प्रभुः
रक्षार्थं सर्वभूतानां विष्णुत्त्वमुपजग्मिवान् १०
त्वद्वीर्यान्निहते वृत्रे वासवो ब्रह्महत्यया
वृतः सुरगणश्रेष्ठ मोक्षं तस्य विनिर्दिश ११
तेषां तद्वचनं श्रुत्वा देवानां विष्णुरब्रवीत्
मामेव यजतां शक्रः पावयिष्यामि वज्रिणम् १२
पुण्येन हयमेधेन मामिष्ट्वा पाकशासनः
पुनरेष्यति देवानामिन्द्रत्वमकुतोभयः १३
स्वकर्मभिश्च नहुषो नाशं यास्यति दुर्मतिः
किंचित्कालमिदं देवा मर्षयध्वमतन्द्रिताः १४
श्रुत्वा विष्णोः शुभां सत्यां तां वाणीममृतोपमाम्
ततः सर्वे सुरगणाः सोपाध्यायाः महर्षिभिः
यत्र शक्रो भयोद्विग्नस्तं देशमुपचक्रमुः १५
तत्राश्वमेधः सुमहान्महेन्द्रस्य महात्मनः
ववृते पावनार्थं वै ब्रह्महत्यापहो नृप १६
विभज्य ब्रह्महत्यां तु वृक्षेषु च नदीषु च
पर्वतेषु पृथिव्यां च स्त्रीषु चैव युधिष्ठिर १७
संविभज्य च भूतेषु विसृज्य च सुरेश्वरः
विज्वरः पूतपाप्मा च वासवोऽभवदात्मवान् १८
अकम्प्यं नहुषं स्थानाद्दृष्ट्वा च बलसूदनः
तेजोघ्नं सर्वभूतानां वरदानाच्च दुःसहम् १९
ततः शचीपतिर्वीरः पुनरेव व्यनश्यत
अदृश्यः सर्वभूतानां कालाकाङ्क्षी चचार ह २०

प्रनष्टे तु ततः शक्रे शची शोकसमन्विता
हा शक्रेति तदा देवी विललाप सुदुःखिता २१
यदि दत्तं यदि हुतं गुरवस्तोषिता यदि
एक भर्तृत्वमेवास्तु सत्यं यद्यस्ति वा मयि २२
पुरायां चेमामहं दिव्यां प्रवृत्तामुत्तरायणे
देवीं रात्रिं नमस्यामि सिध्यतांमे मनोरथः २३
प्रयता च निशां देवीमुपातिष्ठत तत्र सा
पतिव्रतात्वात्सत्येन सोपश्रुतिमथाकरोत् २४
यत्रास्ते देवराजोऽसौ तं देशं दर्शयस्व मे
इत्याहोपश्रुतिं देवी सत्यं सत्येन दृश्यताम् २५
इति श्रीमहाभारते उद्योगपर्वणि त्रयोदशोऽध्यायः १३

## चतुर्दशोऽध्यायः

शल्य उवाच
अथैनां रूपिणीं साध्वीमुपातिष्ठदुपश्रुतिः
तां वयोरूपसम्पन्नां दृष्ट्वा देवीमुपस्थिताम् १
इन्द्राणी सम्प्रहृष्टा सा सम्पूज्यैनामपृच्छत
इच्छामि त्वामहं ज्ञातुं का त्वं ब्रूहि वरानने २
उपश्रुतिरुवाच
उपश्रुतिरहं देवि तवान्तिकमुपागता
दर्शनं चैव सम्प्राप्ता तव सत्येन तोषिता ३
पतिव्रतासि युक्ता च यमेन नियमेन च
दर्शयिष्यामि ते शक्रं देवं वृत्रनिषूदनम्
क्षिप्रमन्वेहि भद्रं ते द्रक्ष्यसे सुरसत्तमम् ४
शल्य उवाच
ततस्तां प्रस्थितां देवीमिन्द्राणी सा समन्वगात्
देवारण्यान्यतिक्रम्य पर्वतांश्च बहूंस्ततः
हिमवन्तमतिक्रम्य उत्तरं पार्श्वमागमत् ५
समुद्रं च समासाद्य बहुयोजनविस्तृतम्
आससाद महाद्वीपं नानाद्रुमलतावृतम् ६

तत्रापश्यत्सरो दिव्यं नानाशकुनिभिर्वृतम्
शतयोजनविस्तीर्णं तावदेवायतं शुभम् ७
तत्र दिव्यानि पद्मानि पञ्चवर्णानि भारत
षट्पदैरुपगीतानि प्रफुल्लानि सहस्रशः ८
पद्मस्य भित्वा नालं च विवेश सहिता तया
बिसतन्तुप्रविष्टं च तत्रापश्यच्छतक्रतुम् ९
तं दृष्ट्वा च सुसूक्ष्मेण रूपेणावस्थितं प्रभुम्
सूक्ष्मरूपधरा देवी बभूवोपश्रुतिश्च सा १०
इन्द्रं तुष्टाव चेन्द्राणी विश्रुतैः पूर्वकर्मभिः
स्तूयमानस्ततो देवः शचीमाह पुरन्दरः ११
किमर्थमसि सम्प्राप्ता विज्ञातश्च कथं त्वहम्
ततः सा कथयामास नहुषस्य विचेष्टितम् १२
इन्द्रत्वं त्रिषु लोकेषु प्राप्य वीर्यमदान्वितः
दर्पाविष्टश्च दुष्टात्मा मामुवाच शतक्रतो
उपतिष्ठ मामिति क्रूरः कालं च कृतवान्मम १३
यदि न त्रास्यसि विभो करिष्यति स मां वशे
एतेन चाहं संतप्ता प्राप्ता शक्र तवान्तिकम्
जहि रौद्रं महाबाहो नहुषं पापनिश्चयम् १४
प्रकाशयस्व चात्मानं दैत्यदानवसूदन
तेजः समाप्नुहि विभो देवराज्यं प्रशाधि च १५
इति श्रीमहाभारते उद्योगपर्वणि चतुर्दशोऽध्यायः १४

## पञ्चदशोऽध्यायः

शल्य उवाच
एवमुक्तः स भवाञ्शच्या पुनरथाब्रवीत्
विक्रमस्य न कालोऽय नहुषो बलवत्तरः १
विवर्धितश्च ऋषिभिर्हव्यैः कव्यैश्च भामिनि
नीतिमत्र विधास्यामि देवि तां कर्तुमर्हसि २
गुह्यं चैतत्त्वया कार्यं नाख्यातव्यं शुभे क्वचित्
गत्वा नहुषमेकान्ते ब्रवीहि तनुमध्यमे ३

ऋषियानेन दिव्येन मामुपैहि जगत्पते
एवं तव वशे प्रीता भविष्यामीति तं वद ४
इत्युक्ता देवराजेन पत्नी सा कमलेक्षणा
एवमस्त्वित्यथोक्त्वा तु जगाम नहुषं प्रति ५
नहुषस्तां ततो दृष्ट्वा विस्मितो वाक्यमब्रवीत्
स्वागतं ते वरारोहे किं करोमि शुचिस्मिते ६
भक्तं मां भज कल्याणि किमिच्छसि मनस्विनि
तव कल्याणि यत्कार्यं तत्करिष्ये सुमध्यमे ७
न च व्रीडा त्वया कार्या सुश्रोणि मयि विश्वस
सत्येन वै शपे देवि कर्तास्मि वचनं तव ८
इन्द्राण्युवाच
यो मे त्वया कृतः कालस्तमाकाङ्क्षे जगत्पते
ततस्त्वमेव भर्ता मे भविष्यसि सुराधिप ९
कार्यं च हृदि मे यत्तद्देवराजावधारय
वक्ष्यामि यदि मे राजन्प्रियमेतत्करिष्यसि
वाक्यं प्रणयसंयुक्तं ततः स्यां वशगा तव १०
इन्द्रस्य वाजिनो वाहा हस्तिनोऽथ रथास्तथा
इच्छाम्यहमथापूर्वं वाहनं ते सुराधिप
यन्न विष्णोर्न रुद्रस्य नासुराणां न रक्षसाम् ११
वहन्तु त्वां महाराज ऋषयः संगता विभो
सर्वे शिबिकया राजन्नेतद्धि मम रोचते १२
नासुरेषु न देवेषु तुल्यो भवितुमर्हसि
सर्वेषां तेज आदत्स्व स्वेन वीर्येण दर्शनात्
न ते प्रमुखतः स्थातुं कश्चिदिच्छति वीर्यवान् १३
शल्य उवाच
एवमुक्तस्तु नहुषः प्राहृष्यत तदा किल
उवाच वचनं चापि सुरेन्द्रस्तामनिन्दिताम् १४
अपूर्वं वाहनमिदं त्वयोक्तं वरवर्णिनि
दृढं मे रुचितं देवि त्वद्वशोऽस्मि वरानने १५
न ह्यल्पवीर्यो भवति यो वाहान्कुरुते मुनीन्

अहं तपस्वी बलवान्भूतभव्यभवत्प्रभुः १६
मयि क्रुद्धे जगन्नस्यान्मयि सर्वं प्रतिष्ठितम्
देवदानवगन्धर्वाः किन्नरोरगराक्षसाः १७
न मे क्रुद्धस्य पर्याप्ताः सर्वे लोकाः शुचिस्मिते
चक्षुषा यं प्रपश्यामि तस्य तेजो हराम्यहम् १८
तस्मात्ते वचनं देवि करिष्यामि न संशयः
सप्तर्षयो मां वक्ष्यन्ति सर्वे ब्रह्मर्षयस्तथा
पश्य माहात्म्यमस्माकमृद्धिं च वरवर्णिनि १९
एवमुक्त्वातु तांदेवीं विसृज्य च वराननाम्
विमानेयोजयित्वा च ऋृषीन्नियम मास्थितान् २०
अब्रह्मरायो बलोपेतो मत्तो वरमदेन च
कामवृत्तः स दुष्टात्मा वाहयामास तानृषीन् २१
नहुषेण विसृष्टा च बृहस्पतिमुवाच सा
समयोऽल्पावशेषो मे नहुषेणेह यः कृतः
शक्रं मृगय शीघ्रं त्वं भक्तायाः कुरु मे दयाम् २२
वाढमित्येव भगवान्बृहस्पतिरुवाच ताम्
न भेतव्यं त्वया देवि नहुषाद्दुष्टचेतसः २३
न ह्येष स्थास्यति चिरं गत एष नराधमः
अधर्मज्ञो महर्षीणां वाहनाच्च हतः शुभे २४
इष्टिं चाहं करिष्यामि विनाशायास्य दुर्मतेः
शक्रं चाधिगमिष्यामि मा भैस्त्वं भद्रमस्तु ते २५
ततः प्रज्वाल्य विधिवज्जुहाव परमं हविः
बृहस्पतिर्महातेजा देवराजोपलब्धये २६
तस्माच्च भगवान्देवः स्वयमेव हुताशनः
स्त्रीवेषमद्भुतं कृत्वा सहसान्तरधीयत २७
स दिशः प्रदिशश्चैव पर्वतांश्च वनानि च
पृथिवीं चान्तरिक्षं च विचीयातिमनोगतिः
निमेषान्तरमात्रेण बृहस्पतिमुपागमत् २८
अग्निरुवाच
बृहस्पते न पश्यामि देवराजमहं क्वचित्

आपः शेषाः सदा चापः प्रवेष्टुं नोत्सहाम्यहम्
न मे तत्र गतिर्ब्रह्मन्किमन्यत्करवाणि ते २९
शल्य उवाच
तमब्रवीद्देवगुरुरपो विश महाद्युते ३०
अग्निरुवाच
नापः प्रवेष्टुं शक्ष्यामि क्षयो मेऽत्र भविष्यति
शरणं त्वां प्रपन्नोऽस्मि स्वस्ति तेऽस्तु महाद्युते ३१
अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम्
तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति ३२
इति श्रीमहाभारते उद्योगपर्वणि पञ्चदशोऽध्यायः १५

## षोडशोऽध्यायः

बृहस्पतिरुवाच
त्वमग्ने सर्वदेवानां मुखं त्वमसि हव्यवाट्
त्वमन्तः सर्वभूतानां गूढश्चरसि साक्षिवत् १
त्वामाहुरेकं कवयस्त्वामाहुस्त्रिविधं पुनः
त्वया त्यक्तं जगच्चेदं सद्यो नश्येद्धुताशन २
कृत्वा तुभ्यं नमो विप्राः स्वकर्मविजितां गतिम्
गच्छन्ति सह पत्नीभिः सुतैरपि च शाश्वतीम् ३
त्वमेवाग्ने हव्यवाहस्त्वमेव परमं हविः
यजन्ति सत्रैस्त्वामेव यज्ञैश्च परमाध्वरे ४
सृष्ट्वा लोकांस्त्रीनिमान्हव्यवाह प्राप्ते काले पचसि पुनः समिद्धः
सर्वस्यास्य भुवनस्य प्रसूतिस्त्वमेवाग्ने भवसि पुनः प्रतिष्ठाः ५
त्वामग्ने जलदानाहुर्विद्युतश्च त्वमेव हि
दहन्ति सर्वभूतानि त्वत्तो निष्क्रम्य हायनाः ६
त्वय्यापो निहिताः सर्वास्त्वयि सर्वमिदं जगत्
न तेऽस्त्यविदितं किंचित्त्रिषु लोकेषु पावक ७
स्वयोनिं भजते सर्वो विशस्वापोऽविशङ्कितः
अहं त्वां वर्धयिष्यामि ब्राह्मैर्मन्त्रैः सनातनैः ८
शल्य उवाच

एवं स्तुतो हव्यवाहो भगवान्कविरुत्तमः
बृहस्पतिमथोवाच प्रीतिमान्वाक्यमुत्तमम्
दर्शयिष्यामि ते शक्रंसत्यमेतद् ब्रवीमि ते ९
प्रविश्यापस्ततो वह्निः ससमुद्राः सपल्वलाः
आजगाम सरस्तच्च गूढो यत्र शतक्रतुः १०
अथ तत्रापि पद्मानि विचिन्वन्भरतर्षभ
अन्वपश्यत्स देवेन्द्रं बिसमध्यगतं स्थितम् ११
आगत्य च ततस्तूर्णं तमाचष्ट बृहस्पतेः
अणुमात्रेण वपुषा पद्मतन्त्वाश्रितं प्रभुम् १२
गत्वा देवर्षिगन्धर्वैः सहितोऽथ बृहस्पतिः
पुराणैः कर्मभिर्देवं तुष्टाव बलसूदनम् १३
महासुरो हतः शक्र नमुचिर्दारुणस्त्वया
शम्बरश्च बलश्चैव तथोभौ घोरविक्रमौ १४
शतक्रतो विवर्धस्व सर्वाञ्शत्रून्निषूदय
उत्तिष्ठ वज्रिन्सम्पश्य देवर्षींश्च समागतान् १५
महेन्द्र दानवान्हत्वा लोकास्त्रातास्त्वया विभो
अपां फेनं समासाद्य विष्णुतेजोपबृंहितम्
त्वया वृत्रो हतः पूर्वं देवराज जगत्पते १६
त्वं सर्वभूतेषु वरेण्य ईड्यस्त्वया समं विद्यते नेह भूतम्
त्वया धार्यन्ते सर्वभूतानि शक्र त्वं देवानां महिमानं चकर्थ १७
पाहि देवान्सलोकांश्च महेन्द्र बलमाप्नुहि
एवं संस्तूयमानश्च सोऽवर्धत शनैः शनैः १८
स्वं चैव वपुरास्थाय बभूव स बलान्वितः
अब्रवीच्च गुरुं देवो बृहस्पतिमुपस्थितम् १९
किं कार्यमवशिष्टं वो हतस्त्वाष्ट्रो महासुरः
वृत्रश्च सुमहाकायो ग्रस्तुं लोकानियेष यः २०
बृहस्पतिरुवाच
मानुषो नहुषो राजा देवर्षिगणतेजसा
देवराज्यमनुप्राप्तः सर्वान्नो बाधते भृशम् २१
इन्द्र उवाच

कथं च नहुषो राज्यं देवानां प्राप दुर्लभम्
तपसा केन वा युक्तः किं वीर्यो वा बृहस्पते २२
बृहस्पतिरुवाच
देवा भीताः शक्रमकामयन्त त्वया त्यक्तं महदैन्द्रं पदं तत्
तदा देवाः पितरोऽथर्षयश्च गन्धर्वसंघाश्च समेत्य सर्वे २३
गत्वाब्रुवन्नहुषं शक्र तत्र त्वं नो राजा भव भुवनस्य गोप्ता
तानब्रवीन्नहुषो नास्मि शक्त आप्यायध्वं तपसा तेजसा च २४
एवमुक्तैर्वर्धितश्चापि देवै राजाभवन्नहुषो घोरवीर्यः
त्रैलोक्ये च प्राप्य राज्यं तपस्विनः कृत्वा वाहान्याति लोकान्दुरात्मा २५
तेजोहरं दृष्टिविषं सुघोरं मा त्वं पश्येर्नहुषं वै कदाचित्
देवाश्च सर्वे नहुषं भयार्ता न पश्यन्तो गूढरूपाश्चरन्ति २६
शल्य उवाच
एवं वदत्यङ्गिरसां वरिष्ठे बृहस्पतौ लोकपालः कुबेरः
वैवस्वतश्चैव यमः पुराणो देवश्च सोमो वरुणश्चाजगाम २७
ते वै समागम्य महेन्द्रमूचुर्दिष्ट्या त्वाष्ट्रो निहतश्चैव वृत्रः
दिष्ट्या च त्वां कुशलिनमक्षतं च पश्यामो वै निहतारिं च शक्र २८
स तान्यथावत्प्रतिभाष्य शक्रः संचोदयन्नहुषस्यान्तरेण
राजा देवानां नहुषो घोररूपस्तत्र साह्यं दीयतां मे भवद्भिः २९
ते चाब्रुवन्नहुषो घोररूपो दृष्टीविषस्तस्य बिभीम देव
त्वं चेद्राजान्नहुषं पराजयेस्तद्वै वयं भागमर्हाम शक्र ३०
इन्द्रोऽब्रवीद्भवतु भवानपां पतिर्यमः कुबेरश्च महाभिषेकम्
सम्प्राप्नुवन्त्वद्य सहैव तेन रिपुं जयामो नहुषं घोरदृष्टिम् ३१
ततः शक्रं ज्वलनोऽप्याह भागं प्रयच्छ मह्यं तव साह्यं करिष्ये
तमाह शक्रो भविताग्ने तवापि एन्द्राग्नो वै भाग एको महाक्रतौ ३२
एवं संचिन्त्य भगवान्महेन्द्रः पाकशासनः
कुबेरं सर्वयक्षाणां धनानां च प्रभुं तथा ३३
वैवस्वतं पितॄणां च वरुणं चाप्यपां तथा
आधिपत्यं ददौ शक्रः सत्कृत्य वरदस्तदा ३४
इति श्रीमहाभारते उद्योगपर्वणि षोडशोऽध्यायः १६

## सप्तदशोऽध्यायः

शल्य उवाच
अथ संचिन्तयानस्य देवराजस्य धीमतः
नहुषस्य वधोपायं लोकपालैः सहैव तैः
तपस्वी तत्र भगवानगस्त्यः प्रत्यदृश्यत १
सोऽब्रवीदर्च्य देवेन्द्रं दिष्ट्या वै वर्धते भवान्
विश्वरूपविनाशेन वृत्रासुरवधेन च २
दिष्ट्या च नहुषो भ्रष्टो देवराज्यात्पुरंदर
दिष्ट्या हतारिं पश्यामि भवन्तं बलसूदन ३
इन्द्र उवाच
स्वागतं ते महर्षेऽस्तु प्रीतोऽह दर्शनात्तव
पाद्यमाचमनीयं च गामर्घ्यं च प्रतीच्छ मे ४
शल्य उवाच
पूजितं चोपविष्टं तमासने मुनिसत्तमम्
पर्यपृच्छत देवेशः प्रहृष्टो ब्राह्मणर्षभम् ५
एतदिच्छामि भगवन्कथ्यमानं द्विजोत्तम
परिभ्रष्टः कथं स्वर्गान्नहुषः पापनिश्चयः ६
अगस्त्य उवाच
शृणु शक्र प्रियं वाक्यं यथा राजा दुरात्मवान्
स्वर्गाद्भ्रष्टो दुराचारो नहुषो बलदर्पितः ७
श्रमार्तास्तु वहन्तस्तं नहुषं पापकारिणम्
देवर्षयो महाभागास्तथा ब्रह्मर्षयोऽमलाः
पप्रच्छुः संशयं देव नहुषं जयतां वर ८
य इमे ब्रह्मणा प्रोक्ता मन्त्रा वै प्रोक्षणे गवाम्
एते प्रमाणं भवत उताहो नेति वासव
नहुषो नेति तानाह तमसा मूढचेतनः ९
ऋषय ऊचुः
अधर्मे सम्प्रवृत्तस्त्वं धर्मं न प्रतिपद्यसे
प्रमाणमेतदस्माकं पूर्वं प्रोक्तं महर्षिभिः १०
अगस्त्य उवाच

ततो विवदमानः स मुनिभिः सह वासव
अथ मामस्पृशन्मूर्ध्नि पादेनाधर्मपीडितः ११
तेनाभूद्धततेजाः स निःश्रीकश्च शचीपते
ततस्तमहमाविग्नमवोचं भयपीडितम् १२
यस्मात्पूर्वैः कृतं ब्रह्म ब्रह्मर्षिभिरनुष्ठितम्
अदुष्टं दूषयसि वै यच्च मूर्ध्न्यस्पृशः पदा १३
यच्चापि त्वमृषीन्मूढ ब्रह्मकल्पान्दुरासदान्
वाहान्कृत्वा वाहयसि तेन स्वर्गाद्धतप्रभः १४
ध्वंस पाप परिभ्रष्टः क्षीणपुण्यो महीतलम्
दश वर्षसहस्राणि सर्परूपधरो महान्
विचरिष्यसि पूर्णेषु पुनः स्वर्गमवाप्स्यसि १५
एवं भ्रष्टो दुरात्मा स देवराज्यादरिंदम
दिष्ट्या वर्धामहे शक्र हतो ब्राह्मणकण्टकः १६
त्रिविष्टपं प्रपद्यस्व पाहि लोकाञ्शचीपते
जितेन्द्रियो जितामित्रः स्तूयमानो महर्षिभिः १७
शल्य उवाच
ततो देवा भृशं तुष्टा महर्षिगणसंवृताः
पितरश्चैव यक्षाश्च भुजगा राक्षसास्तथा १८
गन्धर्वा देवकन्याश्च सर्वे चाप्सरसां गणाः
सरांसि सरितः शैलाः सागराश्च विशां पते १९
उपागम्याब्रुवन्सर्वे दिष्ट्या वर्धसि शत्रुहन्
हतश्च नहुषः पापो दिष्ट्यागस्त्येन धीमता
दिष्ट्या पापसमाचारः कृतः सर्पो महीतले २०
इति श्रीमहाभारते उद्योगपर्वणि सप्तदशोऽध्यायः १७

## अष्टादशोऽध्यायः

शल्य उवाच
ततः शक्रःस्तूयमानो गन्धर्वाप्सरसां गणैः
एरावतं समारुह्य द्विपेन्द्रं लक्षणैर्युतम् १
पावकश्च महातेजामहर्षिश्च बृहस्पतिः

यमश्च वरुणश्चैव कुबेरश्च धनेश्वरः २
सर्वैर्देवैः परिवृतः शक्रो वृत्रनिषूदनः
गन्धर्वैरप्सरोभिश्च यातस्त्रिभुवनं प्रभुः ३
स समेत्य महेन्द्राण्या देवराजः शतक्रतुः
मुदा परमया युक्तः पालयामास देवराट् ४
ततः स भगवांस्तत्र अङ्गिराः समदृश्यत
अथर्ववेदमन्त्रैश्च देवेन्द्रं समपूजयत् ५
ततस्तु भगवानिन्द्रः संहृष्टः समपद्यत
वरं च प्रददौ तस्मै अथर्वाङ्गिरसे तदा ६
अथर्वाङ्गिरसं नाम अस्मिन्वेदे भविष्यति
उदाहरणमेतद्धि यज्ञभागं च लप्स्यसे ७
एवं सम्पूज्य भगवानथर्वाङ्गिरसं तदा
व्यसर्जयन्महाराज देवराजः शतक्रतुः ८
सम्पूज्य सर्वांस्त्रिदशानृषींश्चापि तपोधनान्
इन्द्रः प्रमुदितो राजन्धर्मेणापालयत्प्रजाः ९
एवं दुःखमनुप्राप्तमिन्द्रेण सह भार्यया
अज्ञातवासश्च कृतः शत्रूणां वधकाङ्क्षया १०
नात्र मन्युस्त्वया कार्यो यत्क्लिष्टोऽसि महावने
द्रौपद्या सह राजेन्द्र भ्रातृभिश्च महात्मभिः ११
एवं त्वमपि राजेन्द्र राज्यं प्राप्स्यसि भारत
वृत्रं हत्वा यथा प्राप्तः शक्रः कौरवनन्दन १२
दुराचारश्च नहुषो ब्रह्मद्विट् पापचेतनः
अगस्त्यशापाभिहतो विनष्टः शाश्वतीः समाः १३
एवं तव दुरात्मानः शत्रवः शत्रुसूदन
क्षिप्रं नाशं गमिष्यन्ति कर्णदुर्योधनादयः १४
ततः सागरपर्यन्तां भोक्ष्यसे मेदिनीमिमाम्
भ्रातृभिः सहितो वीर द्रौपद्या च सहाभिभो १५
उपाख्यानमिदं शक्रविजयं वेदसम्मितम्
राज्ञा व्यूढेष्वनीकेषु श्रोतव्यं जयमिच्छता १६
तस्मात्संश्रावयामि त्वां विजयं जयतां वर

संस्तूयमाना वर्धन्ते महात्मानो युधिष्ठिर १७
क्षत्रियाणामभावोऽय युधिष्ठिर महात्मनाम्
दुर्योधनापराधेन भीमार्जुनबलेन च १८
आख्यानमिन्द्रविजयं य इदं नियतः पठेत्
धूतपाप्मा जितःस्वर्गः स प्रेत्येह च मोदते १९
न चारिजं भयं तस्य न चापुत्रो भवेन्नरः
नापदं प्राप्नुयात्कांचिद्दीर्घमायुश्च विन्दति
सर्वत्र जयमाप्नोति न कदाचित्पराजयम् २०
वैशम्पायन उवाच
एवमाश्वासितो राजा शल्येन भरतर्षभ
पूजयामास विधिवच्छल्यं धर्मभृतां वरः २१
श्रुत्वा शल्यस्य वचनं कुन्तीपुत्रो युधिष्ठिरः
प्रत्युवाच महाबाहुर्मद्रराजमिदं वचः २२
भवान् कर्णस्य सारथ्यं करिष्यति न संशयः
तत्र तेजोवधः कार्यः कर्णस्य मम संस्तवैः २३
शल्य उवाच
एवमेतत् करिष्यामि यथा मां सम्प्रभाषसे
यच्चान्यदपि शक्ष्यामि तत्करिष्याम्यहं तव २४
वैशम्पायन उवाच
तत आमन्त्र्य कौन्तेयाञ्शल्यो मद्राधिपस्तदा
जगाम सबलः श्रीमान्दुर्योधनमरिंदमः २५
इति श्रीमहाभारते उद्योगपर्वणि अष्टादशोऽध्यायः १८

## एकोन विंशोऽध्यायः

वैशम्पायन उवाच
युयुधानस्ततो वीरःसात्वतानां महारथः
महता चतुरङ्गेण बलेनागाद्युधिष्ठिरम् १
तस्य योधा महावीर्या नानादेशसमागताः
नानाप्रहरणा वीराः शोभयांचक्रिरे बलम् २
परश्वधैर्भिन्दिपालैः शक्तितोमरमुद्गरैः

शक्त्यृष्टिपरशुप्रासैः करवालैश्च निर्मलैः ३
खड्गकार्मुकनिर्यूहैः शरैश्च विविधैरपि
तैलधौतैः प्रकाशद्भिस्तदशोभत वै बलम् ४
तस्य मेघप्रकाशस्य शस्त्रैस्तैः शोभितस्य च
बभूव रूपं सैन्यस्य मेघस्येव सविद्युतः ५
अक्षौहिणी हि सेना सा तदा यौधिष्ठिरं बलम्
प्रविश्यान्तर्दधे राजन्सागरं कुनदी यथा ६
तथैवाक्षौहिणीं गृह्य चेदीनामृषभो बली
धृष्टकेतुरुपागच्छत्पाण्डवानमितौजसः ७
मागधश्च जयत्सेनो जारासन्धिर्महाबलः
अक्षौहिण्यैव सैन्यस्य धर्मराजमुपागमत् ८
तथैव पाण्ड्यो राजेन्द्र सागरानूपवासिभिः
वृतो बहुविधैर्योधैर्युधिष्ठिरमुपागमत् ९
तस्य सैन्यमतीवासीत्तस्मिन्बलसमागमे
प्रेक्षणीयतरं राजन्सुवेषं बलवत्तदा १०
द्रुपदस्याप्यभूत्सेना नानादेशसमागतैः
शोभिता पुरुषैः शूरैः पुत्रैश्चास्य महारथैः ११
तथैव राजा मत्स्यानां विराटो वाहिनीपतिः
पार्वतीयैर्महीपालैः सहितः पाण्डवानियात् १२
इतश्चेतश्च पाण्डूनां समाजग्मुर्महात्मनाम्
अक्षौहिण्यस्तु सप्तैव विविधध्वजसंकुलाः
युयुत्समानाः कुरुभिः पाण्डवान्समहर्षयन् १३
तथैव धार्तराष्ट्रस्य हर्षं समभिवर्धयन्
भगदत्तो महीपालः सेनामक्षौहिणीं ददौ १४
तस्य चीनैः किरातैश्च काञ्चनैरिव संवृतम्
बभौ बलमनाधृष्यं कर्णिकारवनं यथा १५
तथा भूरिश्रवाः शूरः शल्यश्च कुरुनन्दन
दुर्योधनमुपायातावक्षौहिण्या पृथक् पृथक् १६
कृतवर्मा च हार्दिक्यो भोजान्धकबलैः सह
अक्षौहिण्यैव सेनाया दुर्योधनमुपागमत् १७

तस्य तैः पुरुषव्याघ्रैर्वनमालाधरैर्बलम्
अशोभत यथा मत्तैर्वनं प्रक्रीडितैर्गजैः १८
जयद्रथमुखाश्चान्ये सिन्धुसौवीरवासिनः
आजग्मुः पृथिवीपालाः कम्पयन्त इवाचलान् १९
तेषामक्षौहिणी सेना बहुला विबभौ तदा
विधूयमाना वातेन बहुरूपा इवाम्बुदाः २०
सुदक्षिणश्च काम्बोजो यवनैश्च शकैस्तथा
उपाजगाम कौरव्यमक्षौहिण्या विशांपते २१
तस्य सेनासमावायः शलभानामिवाबभौ
स च सम्प्राप्य कौरव्यं तत्रैवान्तर्दधे तदा २२
तथा माहिष्मतीवासी नीलो नीलायुधैः सह
महीपालो महावीर्यैर्दक्षिणापथवासिभिः २३
आवन्त्यौ च महीपालौ महाबलसुसंवृतौ
पृथगक्षौहिणीभ्यां तावभियातौ सुयोधनम् २४
केकयाश्च नरव्याघ्राः सोदर्याः पञ्च पार्थिवाः
संहर्षयन्तः कौरव्यमक्षौहिण्या समाद्रवन् २५
इतश्चेतश्च सर्वेषां भूमिपानां महात्मनाम्
तिस्रोऽन्या समवर्तन्त वाहिन्यो भरतर्षभ २६
एवमेकादशावृत्ताः सेना दुर्योधनस्य ताः
युयुत्समानाः कौन्तेयान्नानाध्वजसमाकुलाः २७
न हास्तिनपुरे राजन्नवकाशोऽभवत्तदा
राज्ञां सबलमुख्यानां प्राधान्येनापि भारत २८
ततः पञ्चनदं चैव कृत्स्नं च कुरुजाङ्गलम्
तथा रोहितकारण्यं मरुभूमिश्च केवला २९
अहिच्छत्रं कालकूटं गङ्गाकूलं च भारत
वारणा वाटधानं च यामुनश्चैव पर्वतः ३०
एष देशः सुविस्तीर्णः प्रभूतधनधान्यवान्
बभूव कौरवेयाणां बलेन सुसमाकुलः ३१
तत्र सैन्यं तथा युक्तं ददर्श स पुरोहितः
यः स पाञ्चालराजेन प्रेषितः कौरवान्प्रति ३२

इति श्रीमहाभारते उद्योगपर्वणि एकोनविंशोऽध्यायः १९

विंशोऽध्यायः

वैशम्पायन उवाच
स तु कौरव्यमासाद्य द्रुपदस्य पुरोहितः
सत्कृतो धृतराष्ट्रेण भीष्मेण विदुरेण च १
सर्वं कौशल्यमुक्त्वादौ पृष्ट्वा चैवमनामयम्
सर्वसेनाप्रणेतृणां मध्ये वाक्यमुवाच ह २
सर्वैर्भवद्भिर्विदितो राजधर्मः सनातनः
वाक्योपादानहेतोस्तु वक्ष्यामि विदिते सति ३
धृतराष्ट्रश्च पाण्डुश्च सुतावेकस्य विश्रुतौ
तयोः समानं द्रविणं पैतृकं नात्र संशयः ४
धृतराष्ट्रस्य ये पुत्रास्ते प्राप्ताः पैतृकं वसु
पाण्डुपुत्राः कथं नाम न प्राप्ताः पैतृकं वसु ५
एवं गते पाण्डवेयैर्विदितं वः पुरा यथा
न प्राप्तं पैतृकं द्रव्यं धार्तराष्ट्रेण संवृतम् ६
प्राणान्तिकैरप्युपायैः प्रयतद्भिरनेकशः
शेषवन्तो न शकिता नयितुं यमसादनम् ७
पुनश्च वर्धितं राज्यं स्वबलेन महात्मभिः
छद्मनापहृतं क्षुद्रैर्धार्तराष्ट्रैः ससौबलैः ८
तदप्यनुमतं कर्म तथायुक्तमनेन वै
वासिताश्च महारण्ये वर्षाणीह त्रयोदश ९
सभायां क्लेशितैर्वीरैः सहभार्यैस्तथा भृशम्
अरण्ये विविधाः क्लेशाः सम्प्राप्तास्तैः सुदारुणाः १०
तथा विराटनगरे योन्यन्तरगतैरिव
प्राप्तः परमसंक्लेशो यथा पापैर्महात्मभिः ११
ते सर्वे पृष्ठतः कृत्वा तत्सर्वं पूर्वकिल्बिषम्
सामैव कुरुभिः सार्धमिच्छन्ति कुरुपुङ्गवाः १२
तेषां च वृत्तमाज्ञाय वृत्तं दुर्योधनस्य च
अनुनेतुमिहार्हन्ति धृतराष्ट्रं सुहृज्जनाः १३

न हि ते विग्रहं वीराः कुर्वन्ति कुरुभिः सह
अविनाशेन लोकस्य काङ्क्षन्ते पाण्डवाः स्वकम् १४
यश्चापि धार्तराष्ट्रस्य हेतुः स्याद् विग्रहं प्रति
स च हेतुर्न मन्तव्यो बलीयांसस्तथा हि ते १५
अक्षौहिण्यो हि सप्तैव धर्मपुत्रस्य संगताः
युयुत्समानाः कुरुभिः प्रतीक्षन्तेऽस्य शासनम् १६
अपरे पुरुषव्याघ्राः सहस्राक्षौहिणीसमाः
सात्यकिर्भीमसेनश्च यमौ च सुमहाबलौ १७
एकादशैताः पृतना एकतश्च समागताः
एकतश्च महाबाहुर्बहुरूपो धनंजयः १८
यथा किरीटी सेनाभ्यः सर्वाभ्यो व्यतिरिच्यते
एवमेव महाबाहुर्वासुदेवो महाद्युतिः १९
बहुलत्वं च सेनानां विक्रमं च किरीटिनः
बुद्धिमत्तां च कृष्णस्य बुद्ध्वा युध्येत को नरः २०
ते भवन्तो यथाधर्मं यथासमयमेव च
प्रयच्छन्तु प्रदातव्यं मा वः कालोऽत्यगादयम् २१
इति श्रीमहाभारते उद्योगपर्वणि विंशोऽध्यायः २०

## एकविंशोऽध्यायः

वैशम्पायन उवाच
तस्य तद्वचनं श्रुत्वा प्रज्ञावृद्धो महाद्युतिः
सम्पूज्यैनं यथाकालं भीष्मो वचनमब्रवीत् १
दिष्ट्या कुशलिनः सर्वे पाण्डवाः सह बान्धवैः
दिष्ट्या सहायवन्तश्च दिष्ट्या धर्मे च ते रताः २
दिष्ट्या च संधिकामास्ते भ्रातरः कुरुनन्दनाः
दिष्ट्या न युद्धमनसः सह दामोदरेण ते ३
भवता सत्यमुक्तं च सर्वमेतन्न संशयः
अतितीक्ष्णं तु ते वाक्यं ब्राह्मण्यादिति मे मतिः ४
असंशयं क्लेशितास्ते वने चेह च पाण्डवाः
प्राप्ताश्च धर्मतः सर्वं पितुर्धनमसंशयम् ५

किरीटी बलवान्पार्थः कृतास्त्रश्च महारथः
को हि पाराडुसुतं युद्धे विषहेत धनंजयम् ६
ग्रपि वज्रधरः साक्षात्किमुतान्ये धनुर्भृतः
त्रयाणामपि लोकानां समर्थ इति मे मतिः ७
भीष्मे ब्रुवति तद्वाक्यं धृष्टमाक्षिप्य मन्युमान्
दुर्योधनं समालोक्य कर्णो वचनमब्रवीत् ८
न तन्न विदितं ब्रह्मँल्लोके भूतेन केनचित्
पुनरुक्तेन किं तेन भाषितेन पुनः पुनः ९
दुर्योधनार्थे शकुनिर्द्यूते निर्जितवान्पुरा
समयेन गतोऽरगयं पाराडुपुत्रो युधिष्ठिरः १०
न तं समयमादृत्य राज्यमिच्छति पैतृकम्
बलमाश्रित्य मत्स्यानां पाञ्चालानां च पार्थिवः ११
दुर्योधनो भयाद्विद्वन्न दद्यात्पादमन्ततः
धर्मतस्तु महीं कृत्स्नां प्रदद्याच्छत्रवेऽपि च १२
यदि काङ्क्षन्ति ते राज्यं पितृपैतामहं पुनः
यथाप्रतिज्ञं कालं तं चरन्तु वनमाश्रिताः १३
ततो दुर्योधनस्याङ्के वर्तन्तामकुतोभयाः
ग्रधार्मिकामिमां बुद्धिं कुर्युर्मौर्ख्याद्धि केवलम् १४
ग्रथ ते धर्ममुत्सृज्य युद्धमिच्छन्ति पाराडवाः
ग्रासाद्येमान्कुरुश्रेष्ठान्स्मरिष्यन्ति वचो मम १५
भीष्म उवाच
किं नु राधेय वाचा ते कर्म तत्स्मर्तुमर्हसि
एक एव यदा पार्थः षड्रथाञ्जितवान्युधि १६
न चेदेवं करिष्यामो यदयं ब्राह्मणोऽब्रवीत्
ध्रुवं युधि हतास्तेन भक्षयिष्याम पांसुकान् १७
वैशम्पायन उवाच
धृतराष्ट्रस्ततो भीष्ममनुमान्य प्रसाद्य च
ग्रवभर्त्स्य च राधेयमिदं वचनमब्रवीत् १८
ग्रस्मद्धितमिदं वाक्यं भीष्मः शान्तनवोऽब्रवीत्
पाराडवानां हितं चैव सर्वस्य जगतस्तथा १९

चिन्तयित्वा तु पार्थेभ्यः प्रेषयिष्यामि संजयम्
स भवान्प्रतियात्वद्य पाण्डवानेव माचिरम् २०
स तं सत्कृत्य कौरव्यः प्रेषयामास पाण्डवान्
सभामध्ये समाहूय संजयं वाक्यमब्रवीत् २१
इति श्रीमहाभारते उद्योगपर्वणि एकविंशोऽध्यायः  समाप्तमुद्योगपर्व २१

## द्वाविंशोऽध्यायः

धृतराष्ट्र उवाच
प्राप्तानाहुः संजय पाण्डुपुत्रानुपप्लव्ये तान्विजानीहि गत्वा
अजातशत्रुं च सभाजयेथा दिष्ट्यानघ ग्राममुपस्थितस्त्वम् १
सर्वान्वदेः संजय स्वस्तिमन्तः कृच्छ्रं वासमतदर्हा निरुष्य
तेषां शान्तिर्विद्यतेऽस्मासु शीघ्रं मिथ्योपेतानामुपकारिणां सताम् २
नाहं क्वचित्संजय पाण्डवानां मिथ्यावृत्तिं काञ्चन जात्वपश्यम्
सर्वां श्रियं ह्यात्मवीर्येण लब्ध्वा पर्याकार्षुः पाण्डवा मह्यमेव ३
दोषं ह्येषां नाधिगच्छे परीक्षन्नित्यं कंचिद्येन गर्हेय पार्थान्
धर्मार्थाभ्यां कर्म कुर्वन्ति नित्यं सुखप्रिया नानुरुध्यन्ति कामान् ४
घर्मं शीतं क्षुत्पिपासे तथैव निद्रां तन्द्रीं क्रोधहर्षौ प्रमादम्
धृत्या चैव प्रज्ञया चाभिभूय धर्मार्थयोगान्प्रयतन्ति पार्थाः ५
त्यजन्ति मित्रेषु धनानि काले न संवासाज्जीर्यति मैत्रमेषाम्
यथार्हमानार्थकरा हि पार्थास्तेषां द्वेष्टा नास्त्याजमीढस्य पक्षे ६
अन्यत्र पापाद्विषमान्मन्दबुद्धेर्दुर्योधनात्क्षुद्रतराच्च कर्णात्
तेषां हीमे हीनसुखप्रियाणां महात्मनां संजनयन्ति तेजः ७
उत्थानवीर्यः सुखमेधमानो दुर्योधनः सुकृतं मन्यते तत्
तेषां भागं यच्च मन्येत बालः शक्यं हर्तुं जीवतां पाण्डवानाम् ८
यस्यार्जुनः पदवीं केशवश्च वृकोदरः सात्यकोऽजातशत्रोः
माद्रीपुत्रौ सृंजयाश्चापि सर्वे पुरा युद्धात्साधु तस्य प्रदानम् ९
स ह्येवैकः पृथिवीं सव्यसाची गाण्डीवधन्वा प्रणुदेद्रथस्थः
तथा विष्णुः केशवोऽप्यप्रधृष्यो लोकत्रयस्याधिपतिर्महात्मा १०
तिष्ठेत कस्तस्य मर्त्यः पुरस्ताद्यः सर्वदेवेषु वरेण्य ईड्यः
पर्जन्यघोषान्प्रवपञ्शरौघान्पतङ्गसङ्घानिव शीघ्रवेगान् ११

दिशं ह्युदीचीमपि चोत्तरान्कुरून्गाण्डीवधन्वैकरथो जिगाय
धनं चैषामाहरत्सव्यसाची सेनानुगान्बलिदांश्चैव चक्रे १२
यश्चैव देवान्खाण्डवे सव्यसाची गाण्डीवधन्वा प्रजिगाय सेन्द्रान्
उपाहरत्फल्गुनो जातवेदसे यशो मानं वर्धयन्पाण्डवानाम् १३
गदाभृतां नास्ति समोऽस्ति भीमाद्धस्त्यारोहो नास्ति समश्च तस्य
रथेऽजुनादाहुरहीनमेनं बाह्वोर्बले चायुतनागवीर्यम् १४
सुशिक्षितः कृतवैरस्तरस्वी दहेत्क्रुद्धस्तरसा धार्तराष्ट्रान्
सदात्यमर्षी बलवान्न शक्यो युद्धे जेतुं वासवेनापि साक्षात् १५
सुचेतसौ बलिनौ शीघ्रहस्तौ सुशिक्षितौ भ्रातरौ फल्गुनेन
श्येनौ यथा पक्षिपूगान्रुजन्तौ माद्रीपुत्रौ नेह कुरून्विशेताम् १६
तेषां मध्ये वर्तमानस्तरस्वी धृष्टद्युम्नः पाण्डवानामिहैकः
सहामात्यःसोमकानां प्रबर्हः संत्यक्तात्मा पाण्डवानां जयाय १७
सहोषितश्चरितार्थो वयः स्थः शाल्वेयानामधिपो वै विराटः
सह पुत्रैः पाण्डवार्थे च शश्वद्युधिष्ठिरं भक्त इति श्रुतं मे १८
अवरुद्धा बलिनः केकयेभ्यो महेष्वासा भ्रातरः पञ्च सन्ति
केकयेभ्यो राज्यमाकाङ्क्षमाणा युद्धार्थिनश्चानुवसन्ति पार्थान् १९
सर्वे च वीराः पृथिवीपतीनां समानीताःपाण्डवार्थे निविष्टाः
शूरानहं भक्तिमतः शृणोमि प्रीत्या युक्तान्संश्रितान्धर्मराजम् २०
गिर्याश्रया दुर्गनिवासिनश्च योधाः पृथिव्यां कुलजा विशुद्धाः
म्लेच्छाश्च नानायुधवीर्यवन्तः समागताः पाण्डवार्थे निविष्टाः २१
पाण्ड्यश्च राजामित इन्द्रकल्पो युधि प्रवीरैर्बहुभिः समेतः
समागतः पाण्डवार्थे महात्मा लोकप्रवीरोऽप्रतिवीर्यतेजाः २२
अस्त्रं द्रोणादर्जुनाद्वासुदेवात्कृपाद्भीष्माद्येन कृतं शृणोमि
यं तं कार्ष्णिप्रतिमं प्राहुरेकं स सात्यकिः पाण्डवार्थे निविष्टः २३
अपाश्रिताश्चेदिकरूषकाश्च सर्वोत्साहैर्भूमिपालैः समेताः
तेषां मध्ये सूर्यमिवातपन्तं श्रिया वृतं चेदिपतिं ज्वलन्तम् २४
अस्तम्भनीयं युधि मन्यमानं ज्याकर्षतां श्रेष्ठतमं पृथिव्याम्
सर्वोत्साहं क्षत्रियाणां निहत्य प्रसह्य कृष्णस्तरसा ममर्द २५
यशोमानौ वर्धयन्यादवानां पुराभिनच्छिशुपालं समीके
यस्य सर्वे वर्धयन्ति स्म मानं करूषराजप्रमुखा नरेन्द्राः २६

तमसह्यं केशवं तत्र मत्वा सुग्रीवयुक्तेन रथेन कृष्णम्
सम्प्राद्रवंश्चेदिपतिं विहाय सिंहं दृष्ट्वा क्षुद्रमृगा इवान्ये २७
यस्तं प्रतीपस्तरसा प्रत्युदीयादाशंसमानो द्वैरथे वासुदेवम्
सोऽशेत कृष्णेन हतः परासुर्वातेनेवोन्मथितः कर्णिकारः २८
पराक्रमं मे यदवेदयन्त तेषामर्थे संजय केशवस्य
अनुस्मरंस्तस्य कर्माणि विष्णोर्गावल्गणे नाधिगच्छामि शान्तिम् २९
न जातु ताञ्शत्रुरन्यः सहेत येषां स स्यादग्रणीर्वृष्णिसिंहः
प्रवेपते मे हृदयं भयेन श्रुत्वा कृष्णावेकरथे समेतौ ३०
नो चेद्गच्छेत्संगरं मन्दबुद्धिस्ताभ्यां सुतो मे विपरीतचेताः
नो चेत्कुरून्संजय निर्दहेतामिन्द्राविष्णू दैत्यसेनां यथैव
मतो हिमे शक्र समोधनंजयः सनातनो वृष्णि वीरश्च विष्णुः ३१
धर्मारामो ह्रीनिषेधस्तरस्वी कुन्तीपुत्रः पाण्डवोऽजातशत्रुः
दुर्योधनेन निकृतो मनस्वी नो चेत्क्रुद्धः प्रदहेद्धार्तराष्ट्रान् ३२
नाहं तथा ह्यर्जुनाद्वासुदेवाद्भीमाद्वापि यमयोर्वा बिभेमि
यथा राज्ञः क्रोधदीप्तस्य सूत मन्योरहं भीततरः सदैव ३३
अलं तपोब्रह्मचर्येण युक्तः संकल्पोऽय मानसस्तस्य सिध्येत्
तस्य क्रोधं संजयाहं सिमीके स्थाने जानन्भृशमस्म्यद्य भीतः ३४
स गच्छ शीघ्रं प्रहितो रथेन पाञ्चालराजस्य चमूं परेत्य
अजातशत्रुं कुशलं स्म पृच्छेः पुनः पुनः प्रीतियुक्तं वदेस्त्वम् ३५
जनार्दनं चापि समेत्य तात महामात्रं वीर्यवतामुदारम्
अनामयं मद्वचनेन पृच्छेर्धृतराष्ट्रः पाण्डवैः शान्तिमीप्सुः ३६
न तस्य किंचिद्वचनं न कुर्यात्कुन्तीपुत्रो वासुदेवस्य सूत
प्रियश्चैषामात्मसमश्च कृष्णो विद्वांश्चैषां कर्मणि नित्ययुक्तः ३७
समानीय पाण्डवान्सृञ्जयांश्च जनार्दनं युयुधानं विराटम्
अनामयं मद्वचनेन पृच्छेः सर्वांस्तथा द्रौपदेयांश्च पञ्च ३८
यद्यत्तत्र प्राप्तकालं परेभ्यस्त्वं मन्येथा भारतानां हितं च
तत्तद्भाषेथाः संजय राजमध्ये न मूर्च्छयेद्यन्न भवेच्चयुद्धम् ३९
इति श्रीमहाभारते उद्योगपर्वणि द्वाविंशोऽध्यायः २२

## त्रयोविंशोऽध्यायः

वैशम्पायन उवाच
राज्ञस्तु वचनं श्रुत्वा धृतराष्ट्रस्य संजयः
उपप्लव्यं ययौ द्रष्टुं पाराडवानमितौजसः १
स तु राजानमासाद्य धर्मात्मानं युधिष्ठिरम्
प्रणिपत्य ततः पूर्वं सूतपुत्रोऽभ्यभाषत २
गावल्गणिः संजयः सूतसूनुरजातशत्रुमवदत्प्रतीतः
दिष्ट्या राजंस्त्वामरोगं प्रपश्ये सहायवन्तं च महेन्द्रकल्पम् ३
अनामयं पृच्छति त्वाम्बिकेयो वृद्धो राजा धृतराष्ट्रो मनीषी
कच्चिद्भीमः कुशली पाराडवाग्र्यो धनंजयस्तौ च माद्रीतनूजौ ४
कच्चित्कृष्णा द्रौपदी राजपुत्री सत्यव्रता वीरपत्नी सपुत्रा
मनस्विनी यत्र च वाञ्छसि त्वमिष्टान्कामान्भारत स्वस्तिकामः ५
युधिष्ठिर उवाच
गावल्गणे संजय स्वागतं ते प्रीतात्माहं त्वाभिवदामि सूत
अनामयं प्रतिजाने तवाहं सहानुजैः कुशली चास्मि विद्वन् ६
चिरादिदं कुशलं भारतस्य श्रुत्वाराज्ञः कुरु वृद्धस्य सूत
मन्ये साक्षाद् दृष्टमहंनरेन्द्रं दृष्ट्वैव त्वां संजय प्रीति योगात् ७
पितामहो नः स्थविरो मनस्वी महाप्राज्ञः सर्वधर्मोपपन्नः
स कौरव्यः कुशली तात भीष्मो यथापूर्वं वृत्तिरप्यस्य कच्चित् ८
कच्चिद्राजा धृतराष्ट्रः सपुत्रो वैचित्रवीर्यः कुशली महात्मा
महाराजो बाह्लिकः प्रातिपेयः कच्चिद्विद्वान्कुशली सूतपुत्र ९
स सोमदत्तः कुशली तात कच्चिद्भूरिश्रवाः सत्यसंधः शलश्च
द्रोणः सपुत्रश्च कृपश्च विप्रो महेष्वासाः कच्चिदेतेऽप्यरोगाः १०
महाप्राज्ञाः सर्वशास्त्रावदाता धनुर्भृतो मुख्यतमाः पृथिव्याम्
कच्चिन्मानं तात लभन्त एते धनुर्भृतः कच्चिदेतेऽप्यरोगाः ११
सर्वे कुरुभ्यः स्पृहयन्ति संजय धनुर्धरा ये पृथिव्यां युवानः
येषांराष्ट्रे निवसति दर्शनीयो महेष्वासः शीलवान्द्रोणपुत्रः १२
वैश्यापुत्रः कुशली तात कच्चिन्महाप्राज्ञो राजपुत्रो युयुत्सुः
कर्णोऽमात्यः कुशली तात कच्चित्सुयोधनो यस्य मन्दो विधेयः १३
स्त्रियो वृद्धा भारतानां जनन्यो महानस्यो दासभार्याश्च सूत

वध्वः पुत्रा भागिनेया भगिन्यो दौहित्रा वा कच्चिदप्यव्यलीकाः १४
कच्चिद्राजा ब्राह्मणानां यथावत्प्रवर्तते पूर्ववत्तात वृत्तिम्
कच्चिद्दायान्मामकान्धार्तराष्ट्रो द्विजातीनां संजय नोपहन्ति १५
कच्चिद्राजा धृतराष्ट्रः सपुत्र उपेक्षते ब्राह्मणातिक्रमान्वै
कच्चिन्न हेतोरिव वर्त्मभूत उपेक्षते तेषु स न्यूनवृत्तिम् १६
एतज्ज्योतिरुत्तमं जीवलोके शुक्लं प्रजानां विहितं विधात्रा
ते चेल्लोभं न नियच्छन्ति मन्दाः कृत्स्नो नाशो भविता कौरवाणाम् १७
कच्चिद्राजा धृतराष्ट्रः सपुत्रो बुभूषते वृत्तिममात्यवर्गे
कच्चिन्न भेदेन जिजीविषन्ति सुहृद्रूपा दुर्हृदश्चैकमित्राः १८
कच्चिन्न पापं कथयन्ति तात ते पाण्डवानां कुरवः सर्व एव
कच्चिद्दृष्ट्वा दस्युसङ्घान्समेतान्स्मरन्ति पार्थस्य युधां प्रणेतुः १९
मौर्वीभुजाग्रप्रहितान्स्म तात दोधूयमानेन धनुर्धरेण
गाण्डीवमुक्तान्स्तनयित्नुघोषानजिह्मगान्कच्चिदनुस्मरन्ति २०
न ह्यपश्यं कंचिदहं पृथिव्यां श्रुतं समं वाधिकमर्जुनेन
यस्यैकषष्टिर्निशितास्तीक्ष्णधाराः सुवाससः सम्मतो हस्तवापः २१
गदापाणिर्भीमसेनस्तरस्वी प्रवेपयञ्शत्रुसङ्घाननीके
नागः प्रभिन्न इव नड्वलासु चंक्रम्यते कच्चिदेनं स्मरन्ति २२
माद्रीपुत्रः सहदेवः कलिङ्गान्समागतानजयद्दन्तकूरे
वामेनास्यन्दक्षिणेनैव यो वै महाबलं कच्चिदेनं स्मरन्ति २३
उद्यन्नयं नकुलः प्रेषितो वै गाबल्गणे संजय पश्यतस्ते
दिशं प्रतीचीं वशमानयन्मे माद्रीसुतं कच्चिदेनं स्मरन्ति २४
अभ्याभवो द्वैतवने य आसीद्दुर्मन्त्रिते घोषयात्रागतानाम्
यत्र मन्दाञ्शत्रुवशं प्रयातानमोचयद्भीमसेनो जयश्च २५
अहं पश्चादर्जुनमभ्यरक्षं माद्रीपुत्रो भीमसेनश्च चक्रे
गाण्डीवभृच्छत्रुसङ्घानुदस्य स्वस्त्यागमत्कच्चिदेनं स्मरन्ति २६
न कर्मणा साधुनैकेन नूनं कर्तुं शक्यं भवतीह संजय
सर्वात्मना परिजेतुं वयं चेन्न शक्नुमो धृतराष्ट्रस्य पुत्रम् २७
इति श्रीमहाभारते उद्योगपर्वणि त्रयोविंशोऽध्यायः २३

## चतुर्विंशोऽध्यायः

संजय उवाच
यथार्हसे पाराडव तत्तथैव कुरून्कुरुश्रेष्ठ जनं च पृच्छसि
अनामयास्तात मनस्विनस्ते कुरुश्रेष्ठान्पृच्छसि पार्थ यांस्त्वम् १
सन्त्येव वृद्धाः साधवो धार्तराष्ट्रे सन्त्येव पापाः पाराडव तस्य विद्धि
दद्याद्रिपोश्चापि हि धार्तराष्ट्रः कुतो दायाँल्लोपयेद्ब्राह्मणानाम् २
यद्युष्माकं वर्ततेऽसौ न धर्म्यमद्रुग्धेषु द्रुग्धवत्तन्न साधु
मित्रध्रुक्स्याद्धृतराष्ट्रः सपुत्रो युष्मान्द्विषन्साधुवृत्तानसाधुः ३
न चानुजानाति भृशं च तप्यते शोचत्यन्तः स्थविरोऽजातशत्रो
शृणोति हि ब्राह्मणानां समेत्य मित्रद्रोहः पातकेभ्यो गरीयान् ४
स्मरन्ति तुभ्यं नरदेव संगमे युद्धे च जिष्णोश्च युधां प्रणेतुः
समुत्कृष्टे दुन्दुभिशङ्खशब्दे गदापाणिं भीमसेनं स्मरन्ति ५
माद्रीसुतौ चापि रणाजिमध्ये सर्वा दिशः सम्पतन्तौ स्मरन्ति
सेनां वर्षन्तौ शरवर्षैरजस्रं महारथौ समरे दुष्प्रकम्प्यौ ६
न त्वेव मन्ये पुरुषस्य राजन्ननागतं ज्ञायते यद्भविष्यम्
त्वं चेदिमं सर्वधर्मोपपन्नः प्राप्तः क्लेशं पाराडव कृच्छ्ररूपम् ७
त्वमेवैतत्सर्वमतश्च भूयः समीकुर्याः प्रज्ञयाजातशत्रो
न कामार्थं संत्यजेयुर्हि धर्मं पाराडोः सुताः सर्व एवेन्द्रकल्पाः ८
त्वमेवैतत्प्रज्ञयाजातशत्रो शमं कुर्या येन शर्माप्नुयुस्ते
धार्तराष्ट्राः पाराडवाः सृंजयाश्च ये चाप्यन्ये पार्थिवाः संनिविष्टाः ९
यन्माब्रवीद्धृतराष्ट्रो निशायामजातशत्रो वचनं पिता ते
सहामात्यः सहपुत्रश्च राजन्समेत्य तां वाचमिमां निबोध १०
इति श्रीमहाभारते उद्योगपर्वणि चतुर्विंशोऽध्यायः २४

## पञ्चविंशोऽध्यायः

युधिष्ठिर उवाच
समागताः पाराडवाः सृंजयाश्च जनार्दनो युयुधानो विराटः
यत्ते वाक्यं धृतराष्ट्रानुशिष्टं गावल्गणे ब्रूहि तत्सूतपुत्र १
संजय उवाच
अजातशत्रुं च वृकोदरं च धनंजयं माद्रवतीसुतौ च

आमन्त्रये वासुदेवं च शौरिं युयुधानं चेकितानं विराटम् २
पाञ्चालानामधिपं चैव वृद्धं धृष्टद्युम्नं पार्षतं याज्ञसेनिम्
सर्वे वाचं शृणुतेमां मदीयां वक्ष्यामि यां भूतिमिच्छन्कुरूणाम् ३
शमं राजा धृतराष्ट्रोऽभिनन्दन्नयोजयत्त्वरमाणो रथं मे
सभ्रातृपुत्रस्वजनस्य राज्ञस्तद्रोचतां पाण्डवानां शमोऽस्तु ४
सर्वैर्धर्मैः समुपेताः स्थ पार्थाः प्रस्थानेन मार्दवेनार्जवेन
जाताः कुले अनृशंसा वदान्या ह्रीनिषेधाः कर्मणां निश्चयज्ञाः ५
न युज्यते कर्म युष्मासु हीनं सत्त्वं हि वस्तादृशं भीमसेनाः
उद्भासते ह्यञ्जनबिन्दुवत्तच्छुक्ले वस्त्रे यद्भवेत्किल्बिषं वः ६
सर्वक्षयो दृश्यते यत्र कृत्स्नः पापोदयो निरयोऽभावसंस्थः
कस्तत्कुर्याज्जातु कर्म प्रजानन्पराजयो यत्र समो जयश्च ७
ते वै धन्या यैः कृतं ज्ञातिकार्यं ये वः पुत्राः सुहृदो बान्धवाश्च
उपक्रुष्टं जीवितं संत्यजेयुस्ततः कुरूणां नियतो वै भवः स्यात् ८
ते चेत्कुरूननुशास्य स्थ पार्था निनीय सर्वान्द्विषतो निगृह्य
समं वस्तज्जीवितं मृत्युना स्याद्यज्जीवध्वं ज्ञातिवधे न साधु ९
को ह्येव युष्मान्सह केशवेन सचेकितानान्पार्षतबाहुगुप्तान्
ससात्यकीन्विषहेत प्रजेतुं लब्ध्वापि देवान्सचिवान्सहेन्द्रान् १०
को वा कुरून्द्रोणभीष्माभिगुप्तानश्वत्थाम्ना शल्यकृपादिभिश्च
रणे प्रसोढुं विषहेत राजन्राधेयगुप्तान्सह भूमिपालैः ११
महद्बलं धार्तराष्ट्रस्य राज्ञः को वै शक्तो हन्तुमक्षीयमाणः
सोऽह जये चैव पराजये च निःश्रेयसं नाधिगच्छामि किंचित् १२
कथं हि नीचा इव दौष्कुलेया निर्धर्मार्थं कर्म कुर्युश्च पार्थाः
सोऽह प्रसाद्य प्रणतो वासुदेवं पाञ्चालानामधिपं चैव वृद्धम् १३
कृताञ्जलि शरणं वः प्रपद्ये कथं स्वस्ति स्यात्कुरुसृञ्जयानाम्
न ह्येव ते वचनं वासुदेवो धनंजयो वा जातु किंचिन्न कुर्यात् १४
प्राणानादौ याच्यमानः कुतोऽन्यदेतद्विद्वन्साधनार्थं ब्रवीमि
एतद्राज्ञो भीष्मपुरोगमस्य मतं यद्वः शान्तिरिहोत्तमा स्यात् १५
इति श्रीमहाभारते उद्योगपर्वणि पञ्चविंशोऽध्यायः २५

## षड्विंशोऽध्यायः

युधिष्ठिर उवाच
कां नु वाचं संजय मे शृणोषि युद्धैषिणीं येन युद्धाद्बिभेषि
अयुद्धं वै तात युद्धाद्गरीयः कस्तल्लब्ध्वा जातु युद्ध्येत सूत १
अकुर्वतश्चेत्पुरुषस्य संजय सिद्ध्येत्संकल्पो मनसा यं यमिच्छेत्
न कर्म कुर्याद्विदितं ममैतदन्यत्र युद्धाद्बहु यल्लघीयः २
कुतो युद्धं जातु नरः प्रजानन्को दैवशप्तोऽभिवृणीत युद्धम्
सुखैषिणः कर्म कुर्वन्ति पार्था धर्मादहीनं यच्च लोकस्य पथ्यम् ३
कर्मोदयं सुखमाशंसमानः कृच्छ्रोपायं तत्त्वतः कर्म दुःखम्
सुखप्रेप्सुर्विजिघांसुश्च दुःखं य इन्द्रियाणां प्रीतिवशानुगामी
कामाभिध्या स्वशरीरं दुनोति यया प्रयुक्तोऽनुकरोति दुःखम् ४
यथेध्यमानस्य समिद्धतेजसो भूयो बलं वर्धते पावकस्य
कामार्थलाभेन तथैव भूयो न तृप्यते सर्पिषेवाग्निरिद्धः
सम्पश्येमं भोगचयं महान्तं सहास्माभिर्धृतराष्ट्रस्य राज्ञः ५
नाश्रेयसामीश्वरो विग्रहाणां नाश्रेयसां गीतशब्दं शृणोति
नाश्रेयसः सेवते माल्यगन्धान्न चाप्यश्रेयांस्यनुलेपनानि ६
नाश्रेयसः प्रावरानध्यवस्ते कथं त्वस्मान्सम्प्रणुदेत्कुरुभ्यः
अत्रैव च स्यादवधूय एष कामः शरीरे हृदयं दुनोति ७
स्वयं राजा विषमस्थः परेषु सामस्थ्यमन्विच्छति तन्न साधु
यथात्मनः पश्यति वृत्तमेव तथा परेषामपि सोऽभ्युपैति ८
आसन्नमग्निं तु निदाघकाले गम्भीरकक्षे गहने विसृज्य
यथा वृद्धं वायुवशेन शोचेत्क्षेमं मुमुक्षुः शिशिरव्यपाये ९
प्राप्तैश्वर्यो धृतराष्ट्रोऽद्य राजा लालप्यते संजय कस्य हेतोः
प्रगृह्य दुर्बुद्धिमनार्जवे रतं पुत्रं मन्दं मूढममन्त्रिणं तु १०
अनाप्तः सन्नाप्ततमस्य वाचं सुयोधनो विदुरस्यावमन्य
सुतस्य राजा धृतराष्ट्रः प्रियैषी सम्बुध्यमानो विशतेऽधर्ममेव ११
मेधाविनं ह्यर्थकामं कुरूणां बहुश्रुतं वाग्मिनं शीलवन्तम्
सूत राजा धृतराष्ट्रः कुरुभ्यो न सोऽस्मरद्विदुरं पुत्रकाम्यात् १२
मानघ्नस्य आत्मकामस्य चेर्ष्योः संरम्भिणश्चार्थधर्मातिगस्य
दुर्भाषिणो मन्युवशानुगस्य कामात्मनो दुर्हृदो भावनस्य १३

अनेयस्याश्रेयसो दीर्घमन्योर्मित्रद्रुहः संजय पापबुद्धेः
सुतस्य राजा धृतराष्ट्रः प्रियैषी प्रपश्यमानः प्रजहाद्धर्मकामौ १४
तदैव मे संजय दीव्यतोऽभून्नो चेत्कुरूनागतः स्यादभावः
काव्यां वाचं विदुरो भाषमाणो न विन्दते धृतराष्ट्रात्प्रशंसाम् १५
क्षत्तुर्यदा अन्ववर्तन्त बुद्धिं कृच्छ्रं कुरून्न तदाभ्याजगाम
यावत्प्रज्ञामन्ववर्तन्त तस्य तावत्तेषां राष्ट्रवृद्धिर्बभूव १६
तदर्थलुब्धस्य निबोध मेऽद्य ये मन्त्रिणो धार्तराष्ट्रस्य सूत
दुःशासनः शकुनिः सूतपुत्रो गावल्गणे पश्य सम्मोहमस्य १७
सोऽह न पश्यामि परीक्षमाणः कथं स्वस्ति स्यात्कुरुसृंजयानाम्
आत्तैश्वर्यो धृतराष्ट्रः परेभ्यः प्रव्राजिते विदुरे दीर्घदृष्टौ १८
आशंसते वै धृतराष्ट्रः सपुत्रो महाराज्यमसपत्नं पृथिव्याम्
तस्मिञ्शमः केवलं नोपलभ्यो अत्यासन्नं मद्गतं मन्यतेऽथम् १९
यत्तत्कर्णो मन्यते पारणीयं युद्धे गृहीतायुधमर्जुनेन
आसंश्च युद्धानि पुरा महान्ति कथं कर्णो नाभवद्द्वीप एषाम् २०
कर्णश्च जानाति सुयोधनश्च द्रोणश्च जानाति पितामहश्च
अन्ये च ये कुरवस्तत्र सन्ति यथार्जुनान्नास्त्यपरो धनुर्धरः २१
जानन्त्येते कुरवः सर्व एव ये चाप्यन्ये भूमिपालाः समेताः
दुर्योधनं चापराधे चरन्तमरिंदमे फल्गुनेऽविद्यमाने २२
तेनार्थबद्धं मन्यते धार्तराष्ट्रः शक्यं हर्तुं पाण्डवानां ममत्वम्
किरीटिना तालमात्रायुधेन तद्वेदिना संयुगं तत्र गत्वा २३
गाण्डीवविस्फारितशब्दमाजावशृण्वाना धार्तराष्ट्रा ध्रियन्ते
क्रुद्धस्य चेद्भीमसेनस्य वेगात्सुयोधनो मन्यते सिद्धमर्थम् २४
इन्द्रोऽप्येतन्नोत्सहेत्तात हर्तुमैश्वर्यं नो जीवति भीमसेने
धनंजये नकुले चैव सूत तथा वीरे सहदेवे मदीये २५
स चेदेतां प्रतिपद्येत बुद्धिं वृद्धो राजा सह पुत्रेण सूत
एवं रणे पाण्डवकोपदग्धा न नश्येयुः संजय धार्तराष्ट्राः २६
जानासि त्वं क्लेशमस्मासु वृत्तं त्वां पूजयन्संजयाहं क्षमेयम्
यच्चास्माकं कौरवैर्भूतपूर्वं या नो वृत्तिर्धार्तराष्ट्रे तदासीत् २७
अद्यापि तत्तत्र तथैव वर्ततां शान्तिं गमिष्यामि यथा त्वमात्थ
इन्द्रप्रस्थे भवतु ममैव राज्यं सुयोधनो यच्छतु भारताग्र्यः २८

इति श्रीमहाभारते उद्योगपर्वणि षड्विंशोऽध्यायः २६

सप्तविंशोऽध्यायः

संजय उवाच
धर्मे नित्या पाण्डव ते विचेष्टा लोके श्रुता दृश्यते चापि पार्थ
महास्रावं जीवितं चाप्यनित्यं सम्पश्य त्वं पाण्डव मा विनीनशः १
न चेद्भागं कुरवोऽन्यत्र युद्धात्प्रयच्छन्ते तुभ्यमजातशत्रो
भैक्षचर्यामन्धकवृष्णिराज्ये श्रेयो मन्ये न तु युद्धेन राज्यम् २
अल्पकालं जीवितं यन्मनुष्ये महास्रावं नित्यदुःखं चलं च
भूयश्च तद्वयसो नानुरूपं तस्मात्पापं पाण्डव मा प्रसार्षीः ३
कामा मनुष्यं प्रसजन्त एव धर्मस्य ये विघ्नमूलं नरेन्द्र
पूर्वं नरस्तान्मतिमान्विनिघ्नँल्लोके प्रशंसां लभतेऽनवद्याम् ४
निबन्धनी ह्यर्थतृष्णेह पार्थ तामेषतो बाध्यते धर्म एव
धर्मं तु यः प्रवृणीते स बुद्धः कामे गृद्धो हीयतेऽथानुरोधात् ५
धर्मं कृत्वा कर्मणां तात मुख्यं महाप्रतापः सवितेव भाति
हीनेन धर्मस्य महीमपीमां लब्ध्वा नरः सीदति पापबुद्धिः ६
वेदोऽधीतश्चरितं ब्रह्मचर्यं यज्ञैरिष्टं ब्राह्मणेभ्यश्च दत्तम्
परं स्थानं मन्यमानेन भूय आत्मा दत्तो वर्षपूगं सुखेभ्यः ७
सुखप्रिये सेवमानोऽतिवेलं योगाभ्यासे यो न करोति कर्म
वित्तक्षये हीनसुखोऽतिवेलं दुःखं शेते कामवेगप्रणुन्नः ८
एवं पुनरर्थचर्याप्रसक्तो हित्वा धर्मं यः प्रकरोत्यधर्मम्
अश्रद्दधत्परलोकाय मूढो हित्वा देहं तप्यते प्रेत्य मन्दः ९
न कर्मणां विप्रणाशोऽस्त्यमुत्र पुण्यानां वाप्यथ वा पापकानाम्
पूर्वं कर्तुर्गच्छति पुण्यपापं पश्चात्त्वेतदनुयात्येव कर्ता १०
न्यायोपेतं ब्राह्मणेभ्यो यदन्नं श्रद्धापूतं गन्धरसोपपन्नम्
अन्वाहार्येषूत्तमदक्षिणेषु तथारूपं कर्म विख्यायते ते ११
इह क्षेत्रे क्रियते पार्थ कार्यं न वै किंचित्विद्यते प्रेत्य कार्यम्
कृतं त्वया पारलोक्यं च कार्यं पुण्यं महत्सद्भिरनुप्रशस्तम् १२
जहाति मृत्युं च जरां भयं च न क्षुत्पिपासे मनसश्चाप्रियाणि
न कर्त्तव्यं विद्यते तत्र किंचिदन्यत्र वै इन्द्रियप्रीणनार्थात् १३

एवंरूपं कर्मफलं नरेन्द्र मात्रावता हृदयस्य प्रियेण
स क्रोधजं पाण्डव हर्षजं च लोकावुभौ मा प्रहसीश्चिराय १४
अन्तं गत्वा कर्मणां या प्रशंसा सत्यं दमश्चार्जवमानृशंस्यम्
अश्वमेधो राजसूयस्तथेष्टः पापस्यान्तं कर्मणो मा पुनर्गाः १५
तच्चेदेवं देशरूपेण पार्थाः करिष्यध्वं कर्म पापं चिराय
निवसध्वं वर्षपूगान्वनेषु दुःखं वासं पाण्डवा धर्महेतोः १६
अप्रव्रज्ये योजयित्वा पुरस्तादात्माधीनं यद्बलं ते तदासीत्
नित्यं पाञ्चालाः सचिवास्तवेमे जनार्दनो युयुधानश्च वीरः १७
मत्स्यो राजा रूक्मरथः सपुत्रः प्रहारिभिः सह पुत्रैर्विराटः
राजानश्च ये विजिताः पुरस्तात्त्वामेव ते संश्रयेयुः समस्ताः १८
महासहायः प्रतपन्बलस्थः पुरस्कृतो वासुदेवार्जुनाभ्याम्
वरान्हनिष्यन्द्विषतो रङ्गमध्ये व्यनेष्यथा धार्तराष्ट्रस्य दर्पम् १९
बलं कस्माद्वर्धयित्वा परस्य निजान्कस्मात्कर्षयित्वा सहायान्
निरूष्य कस्माद्वर्षपूगान्वनेषु युयुत्ससे पाण्डव हीनकालम् २०
अप्रज्ञो वा पाण्डव युध्यमानोऽधर्मज्ञो वा भूतिपथाद्व्यपैति
प्रज्ञावान्वा बुध्यमानोऽपि धर्मं संरम्भाद्वा सोऽपि भूतेरपैति २१
नाधर्मे ते धीयते पार्थ बुद्धिर्न संरम्भात्कर्म चकर्थ पापम्
अद्धा किं तत्कारणं यस्य हेतोः प्रज्ञाविरुद्धं कर्म चिकीर्षसीदम् २२
अव्याधिजं कटुकं शीर्षरोगं यशोमुषं पापफलोदयं च
सतां पेयं यन्न पिबन्त्यसन्तो मन्युं महाराज पिब प्रशाम्य २३
पापानुबन्धं को नु तं कामयेत क्षमैव ते ज्यायसी नोत भोगाः
यत्र भीष्मः शान्तनवो हतः स्याद्यत्र द्रोणः सहपुत्रो हतः स्यात् २४
कृपः शल्यःसौमदत्तिर्विकर्णो विविंशतिः कर्णदुर्योधनौ च
एतान्हत्वा कीदृशं तत्सुखं स्याद्यद्विन्देथास्तदनुब्रूहि पार्थ २५
लब्ध्वापीमां पृथिवीं सागरान्तां जरामृत्यू नैव हि त्वं प्रजह्याः
प्रियाप्रिये सुखदुःखे च राजन्नेवं विद्वान्नैव युद्धं कुरुष्व २६
अमात्यानां यदि कामस्य हेतोरेवंयुक्तं कर्म चिकीर्षसि त्वम्
अपाक्रमेः संप्रदाय स्वमेभ्यो मा गास्त्वं वै देवयानात्पथोऽद्य २७
इति श्रीमहाभारते उद्योगपर्वणि सप्तविंशोऽध्यायः २७

## अष्टाविंशोऽध्यायः

युधिष्ठिर उवाच
असंशयं संजय सत्यमेतद्धर्मो वरः कर्मणां यत्त्वमात्थ
ज्ञात्वा तु मां संजय गर्हयेस्त्वं यदि धर्मं यद्यधर्मं चरामि १
यत्राधर्मो धर्मरूपाणि बिभ्रद्धर्मः कृत्स्नो दृश्यतेऽधर्मरूपः
तथा धर्मो धारयन्धर्मरूपं विद्वांसस्तं सम्प्रपश्यन्ति बुद्ध्या २
एवमेतावापदि लिङ्गमेतद्धर्माधर्मौ वृत्तिनित्यौ भजेताम्
आद्यं लिङ्गं यस्य तस्य प्रमाणमापद्धर्मं संजय तं निबोध ३
लुप्तायां तु प्रकृतौ येन कर्म निष्पादयेत्तत्परीप्सेद्विहीनः
प्रकृतिस्थश्चापदि वर्तमान उभौ गर्ह्यौ भवतः संजयैतौ ४
अविलोपमिच्छतां ब्राह्मणानां प्रायश्चितं विहितं यद्विधात्रा
आपद्यथाकर्मसु वर्तमानन्विकर्मस्थान्संजय गर्हयेत ५
मनीषिणां तत्त्वविच्छेदनाय विधीयते सत्सु वृत्तिः सदैव
अब्राह्मणाः सन्ति तु ये न वैद्याः सर्वोच्छेदं साधु मन्येत तेभ्यः ६
तदर्था नः पितरो ये च पूर्वे पितामहा ये च तेभ्यः परेऽन्ये
प्रज्ञैषिणो ये च हि कर्म चक्रुर्नास्त्यन्ततो नास्ति नास्तीति मन्ये ७
यत्किंचिदेतद्वित्तमस्यां पृथिव्यां यद्देवानां त्रिदशानां परत्र
प्राजापत्यं त्रिदिवं ब्रह्मलोकं नाधर्मतः संजय कामये तत् ८
धर्मेश्वरः कुशलो नीतिमांश्चाप्युपासिता ब्राह्मणानां मनीषी
नानाविधांश्चैव महाबलांश्च राजन्यभोजाननुशास्ति कृष्णः ९
यदि ह्यहं विसृजन्स्यामगर्ह्यो युध्यमानो यदि जह्यां स्वधर्मम्
महायशाः केशवस्तद्ब्रवीतु वासुदेवस्तूभयोरर्थकामः १०
शैनेया हि चैत्रकाश्चान्धकाश्च वार्ष्णेयभोजाः कौकुराः सृञ्जयाश्च
उपासीना वासुदेवस्य बुद्धिं निगृह्य शत्रून्सुहृदो नन्दयन्ति ११
वृष्ण्यन्धका ह्युग्रसेनादयो वै कृष्णप्रणीताः सर्व एवेन्द्रकल्पाः
मनस्विनः सत्यपराक्रमाश्च महाबला यादवा भोगवन्तः १२
काश्यो बभ्रुः श्रियमुत्तमां गतो लब्ध्वा कृष्णं भ्रातरमीशितारम्
यस्मै कामान्वर्षति वासुदेवो ग्रीष्मात्यये मेघ इव प्रजाभ्यः १३
ईदृशोऽय केशवस्तात भूयो विद्मो ह्येनं कर्मणां निश्चयज्ञम्
प्रियश्च नः साधुतमश्च कृष्णो नातिक्रमे वचनं केशवस्य १४

इति श्रीमहाभारते उद्योगपर्वणि अष्टाविंशोऽध्यायः २८

एकोन त्रिंशोऽध्यायः

वासुदेव उवाच
अविनाशं संजय पाण्डवानामिच्छाम्यहं भूतिमेषां प्रियं च
तथा राज्ञो धृतराष्ट्रस्य सूत सदाशंसे बहुपुत्रस्य वृद्धिम् १
कामो हि मे संजय नित्यमेव नान्यद्ब्रूयां तान्प्रति शाम्यतेति
राज्ञश्च हि प्रियमेतच्छृणोमि मन्ये चैतत्पाण्डवानां समर्थम् २
सुदुष्करश्चात्र शमो हि नूनं प्रदर्शितः संजय पाण्डवेन
यस्मिन्गृद्धो धृतराष्ट्रः सपुत्रः कस्मादेषां कलहो नात्र मूर्च्छेत् ३
तत्त्वं धर्मं विचरन्संजयेह मत्तश्च जानासि युधिष्ठिराच्च
अथो कस्मात्संजय पाण्डवस्य उत्साहिनः पूरयतः स्वकर्म
यथाख्यातमावसतः कुटुम्बं पुराकल्पात्साधु विलोपमात्थ ४
अस्मिन्विधौ वर्तमाने यथावदुच्चावचा मतयो ब्राह्मणानाम्
कर्मणाहुः सिद्धिमेके परत्र हित्वा कर्म विद्यया सिद्धिमेके
नाभुञ्जानो भक्ष्यभोज्यस्य तृप्येद्विद्वानपीह विदितं ब्राह्मणानाम् ५
या वै विद्याः साधयन्तीह कर्म तासां फलं विद्यते नेतरासाम्
तत्रेह वै दृष्टफलं तु कर्म पीत्वोदकं शाम्यति तृष्णयार्तः ६
सोऽय विधिर्विहितः कर्मणैव तद्वर्तते संजय तत्र कर्म
तत्र योऽन्यत्कर्मणः साधु मन्येन्मोघं तस्य लपितं दुर्बलस्य ७
कर्मणामी भान्ति देवाः परत्र कर्मणैवेह प्लवते मातरिश्वा
अहोरात्रे विदधत्कर्मणैव अतन्द्रितो नित्यमुदेति सूर्यः ८
मासार्धमासानथ नक्षत्रयोगानतन्द्रितश्चन्द्रमा अभ्युपैति
अतन्द्रितो दहते जातवेदाः समिध्यमानः कर्म कुर्वन्प्रजाभ्यः ९
अतन्द्रिता भारमिमं महान्तं बिभर्ति देवी पृथिवी बलेन
अतन्द्रिताः शीघ्रमपो वहन्ति संतर्पयन्त्यः सर्वभूतानि नद्यः १०
अतन्द्रितो वर्षति भूरितेजाः संनादयन्नन्तरिक्षं दिवं च
अतन्द्रितो ब्रह्मचर्यं चचार श्रेष्ठत्वमिच्छन्बलभिद्देवतानाम् ११
हित्वा सुखं मनसश्च प्रियाणि तेन शक्रः कर्मणा श्रैष्ठ्यमाप
सत्यं धर्मं पालयन्नप्रमत्तो दमं तितिक्षां समतां प्रियं च

एतानि सर्वाण्युपसेवमानो देवराज्यं मघवान्प्राप मुख्यम् १२
बृहस्पतिर्ब्रह्मचर्यं चचार समाहितः संशितात्मा यथावत्
हित्वा सुखं प्रतिरुध्येन्द्रियाणि तेन देवानामगमद्गौरवं सः १३
नक्षत्राणि कर्मणामुत्र भान्ति रुद्रादित्या वसवोऽथापि विश्वे
यमो राजा वैश्रवणः कुबेरो गन्धर्वयक्षाप्सरसश्च शुभ्राः
ब्रह्मचर्यं वेदविद्यां क्रियाश्च निषेवमाणा मुनयोऽमुत्र भान्ति १४
जानन्निमं सर्वलोकस्य धर्मं ब्राह्मणानां क्षत्रियाणां विशां च
स कस्मात्त्वं जानतां ज्ञानवान्सन्व्यायच्छसे संजय कौरवार्थे १५
आम्नायेषु नित्यसंयोगमस्य तथाश्वमेधे राजसूये च विद्धि
संयुज्यते धनुषा वर्मणा च हस्तत्राणै रथशस्त्रैश्च भूयः १६
ते चेदिमे कौरवाणामुपायमधिगच्छेयुरवधेनैव पार्थाः
धर्मत्राणं पुण्यमेषां कृतं स्यादार्ये वृत्ते भीमसेनं निगृह्य १७
ते चेत्पित्र्ये कर्मणि वर्तमाना आपद्येरन्दिष्टवशेन मृत्युम्
यथाशक्त्या पूरयन्तः स्वकर्म तदप्येषां निधनं स्यात्प्रशस्तम् १८
उताहो त्वं मन्यसे सर्वमेव राज्ञां युद्धे वर्तते धर्मतन्त्रम्
अयुद्धे वा वर्तते धर्मतन्त्रं तथैव ते वाचमिमां शृणोमि १९
चातुर्वर्ण्यस्य प्रथमं विभागमवेक्ष्य त्वं संजय स्वं च कर्म
निशम्याथो पाण्डवानां स्वकर्म प्रशंस वा निन्द वा या मतिस्ते २०
अधीयीत ब्राह्मणोऽथो यजेत दद्यादियात्तीर्थमुख्यानि चैव
अध्यापयेद्याजयेच्चापि याज्यान्प्रतिग्रहान्वा विदितान्प्रतीच्छेत् २१
तथा राजन्यो रक्षणं वै प्रजानां कृत्वा धर्मेणाप्रमत्तोऽथ दत्त्वा
यज्ञैरिष्ट्वा सर्ववेदानधीत्य दारान्कृत्वा पुण्यकृदावसेद्गृहान् २२
वैश्योऽधीत्य कृषिगोरक्षपण्यैर्वित्तं चिन्वन्पालयन्नप्रमत्तः
प्रियं कुर्वन्ब्राह्मणक्षत्रियाणां धर्मशीलः पुण्यकृदावसेद्गृहान् २३
परिचर्या वन्दनं ब्राह्मणानां नाधीयीत प्रतिषिद्धोऽस्य यज्ञः
नित्योत्थितो भूतयेऽतन्द्रितः स्यादेष स्मृतः शूद्रधर्मः पुराणः २४
एतान्राजा पालयन्नप्रमत्तो नियोजयन्सर्ववर्णान्स्वधर्मे
अकामात्मा समवृत्तिः प्रजासु नाधार्मिकाननुरुध्येत कामान् २५
श्रेयांस्तस्माद्यदि विद्येत कश्चिदभिज्ञातः सर्वधर्मोपपन्नः
स तं दुष्टमनुशिष्यात्प्रजानन्न चेद्गृध्येदिति तस्मिन्न साधु २६

यदा गृध्येत्परभूमिं नृशंसो विधिप्रकोपाद्बलमाददानः
ततो राज्ञां भविता युद्धमेतत्तत्र जातं वर्म शस्त्रं धनुश्च
इन्द्रेणेदं दस्युवधाय कर्म उत्पादितं वर्म शस्त्रं धनुश्च २७
स्तेनो हरेद्यत्र धनं ह्यदृष्टः प्रसह्य वा यत्र हरेत दृष्टः
उभौ गर्ह्यौ भवतः संजयैतौ किं वै पृथक्त्वं धृतराष्ट्रस्य पुत्रे
योऽय लोभान्मन्यते धर्ममेतं यमिच्छते मन्युवशानुगामी २८
भागः पुनः पाण्डवानां निविष्टस्तं नोऽकस्मादाददीरन्परे वै
अस्मिन्पदे युध्यतां नो वधोऽपि श्लाघ्यः पित्र्यः परराज्याद्विशिष्टः
एतान्धर्मान्कौरवाणां पुराणानाचक्षीथाः संजय राज्यमध्ये २९
ये ते मन्दा मृत्युवशाभिपन्नाः समानीता धार्तराष्ट्रेण मूढाः
इदं पुनः कर्म पापीय एव सभामध्ये पश्य वृत्तं कुरूणाम् ३०
प्रियां भार्यां द्रौपदीं पाण्डवानां यशस्विनीं शीलवृत्तोपपन्नाम्
यदुपेक्षन्त कुरवो भीष्ममुख्याः कामानुगेनोपरुद्धां रुदन्तीम् ३१
तं चेत्तदा ते सकुमारवृद्धा अवारयिष्यन्कुरवः समेताः
मम प्रियं धृतराष्ट्रोऽकरिष्यत्पुत्राणां च कृतमस्याभविष्यत् ३२
दुःशासनः प्रातिलोम्यान्निनाय सभामध्ये श्वशुराणां च कृष्णाम्
सातत्र नीता करुणान्यवोचन्नान्यं क्षत्तुर्नाथमदृष्ट कंचित् ३३
कार्पण्यादेव सहितास्तत्र राज्ञो नाशक्नुवन्प्रतिवक्तुं सभायाम्
एकः क्षत्ता धर्म्यमर्थं ब्रुवाणो धर्मं बुद्ध्वा प्रत्युवाचाल्पबुद्धिम् ३४
अनुक्त्वा त्वं धर्ममेवं सभायामथेच्छसे पाण्डवस्योपदेष्टुम्
कृष्णा त्वेतत्कर्म चकार शुद्धं सुदुष्करं तद्धि सभां समेत्य
येन कृच्छ्रात्पाण्डवानुज्जहार तथात्मानं नौरिव सागरौघात् ३५
यत्राब्रवीत्सूतपुत्रः सभायां कृष्णां स्थितां श्वशुराणां समीपे
न ते गतिर्विद्यते याज्ञसेनि प्रपद्येदानीं धार्तराष्ट्रस्य वेश्म
पराजितास्ते पतयो न सन्ति पतिं चान्यं भामिनि त्वं वृणीष्व ३६
यो बीभत्सोर्हृदये प्रौढ आसीदस्थिप्रच्छिन्मर्मघाती सुघोरः
कर्णाच्छरो वाङ्मयस्तिग्मतेजाः प्रतिष्ठितो हृदये फल्गुनस्य ३७
कृष्णाजिनानि परिधित्समानान्दुः शासनः कटुकान्यभ्यभाषत्
एते सर्वे षण्ढतिला विनष्टाः क्षयं गता नरकं दीर्घकालम् ३८
गान्धारराजः शकुनिर्निकृत्या यदब्रवीद्द्यूतकाले स पार्थान्

पराजितो नकुलः किं तवास्ति कृष्णया त्वं दीव्य वै याज्ञसेन्या ३९
जानासि त्वं संजय सर्वमेतद्द्यूतेऽवाच्यं वाक्यमेवं यथोक्तम्
स्वयं त्वहं प्रार्थये तत्र गन्तुं समाधातुं कार्यमेतद्विपन्नम् ४०
अहापयित्वा यदि पाण्डवार्थं शमं कुरूणामथ चेच्चरेयम्
पुण्यं च मे स्याच्चरितं महोदयं मुच्येरंश्च कुरवो मृत्युपाशात् ४१
अपि वाचं भाषमाणस्य काव्यां धर्मारामामर्थवतीमहिंस्राम्
अवेक्षेरन्धार्तराष्ट्राः समक्षं मां च प्राप्तं कुरवः पूजयेयुः ४२
अतोऽन्यथा रथिनाफल्गुनेन भीमेन चैवाहवदंशितेन
परासिक्तान्धार्तराष्ट्रांस्तु विद्धि प्रदह्यमानान्कर्मणा स्वेन मन्दान् ४३
पराजितान्पाण्डवेयांस्तु वाचो रौद्ररूपा भाषते धार्तराष्ट्रः
गदाहस्तो भीमसेनोऽप्रमत्तो दुर्योधनं स्मारयिता हि काले ४४
सुयोधनो मन्युमयो महाद्रुमः स्कन्धः कर्णः शकुनिस्तस्य शाखाः
दुःशासनः पुष्पफले समृद्धे मूलं राजा धृतराष्ट्रोऽमनीषी ४५
युधिष्ठिरो धर्ममयो महाद्रुमः स्कन्धोऽर्जुनो भीमसेनोऽस्य शाखाः
माद्रीपुत्रौ पुष्पफले समृद्धे मूलं त्वहं ब्रह्म च ब्राह्मणाश्च ४६
वनं राजा धृतराष्ट्रः सपुत्रो व्याघ्रा वने संजय पाण्डवेयाः
मा वनं छिन्धि सव्याघ्रं मा व्याघ्रान्नीनशो वनात् ४७
निर्वनो वध्यते व्याघ्रो निर्व्याघ्रं छिद्यते वनम्
तस्माद्व्याघ्रो वतं रक्षेद्वनं व्याघ्रं च पालयेत् ४८
लताधर्मा धार्तराष्ट्राः शालाः संजय पाण्डवाः
न लता वर्धते जातु अनाश्रित्य महाद्रुमम् ४९
स्थिताः शुश्रूषितुं पार्थाः स्थिता योद्धुमरिंदमाः
यत्कृत्यं धृतराष्ट्रस्य तत्करोतु नराधिपः ५०
स्थिताः शमे महात्मानः पाण्डवा धर्मचारिणः
योधाः समृद्धास्तद्विद्वन्नाचक्षीथा यथातथम् ५१
इति श्रीमहाभारते उद्योगपर्वणि एकोनत्रिंशोऽध्यायः २९

## त्रिंशोऽध्यायः

संजय उवाच
आमन्त्रये त्वा नरदेवदेव गच्छाम्यहं पाण्डव स्वस्ति तेऽस्तु

कच्चिन्न वाचा वृजिनं हि किंचिदुच्चारितं मे मनसोऽभिषङ्गात् १
जनार्दनं भीमसेनार्जुनौ च माद्रीसुतौ सात्यकिं चेकितानम्
आमन्त्र्य गच्छामि शिवं सुखं वः सौम्येन मां पश्यत चक्षुषा नृपाः २
युधिष्ठिर उवाच
अनुज्ञातः संजय स्वस्ति गच्छ न नोऽकार्षीरप्रियं जातु किंचित्
विद्मश्च त्वा ते च वयं च सर्वे शुद्धात्मानं मध्यगतं सभास्थम् ३
आप्तो दूतः संजय सुप्रियोऽसि कल्याणवाक् शीलवान्दृष्टिमांश्च
न मुह्येस्त्वं संजय जातु मत्या न च क्रुध्येरुच्यमानोऽपि तथ्यम् ४
न मर्मगां जातु वक्तासि रूक्षां नोपस्तुतिं कटुकां नोत शुक्ताम्
धर्मारामामर्थवतीमहिंस्रामेतां वाचं तव जानामि सूत ५
त्वमेव नः प्रियतमोऽसि दूत इहागच्छेद्विदुरो वा द्वितीयः
अभीक्ष्णदृष्टोऽसि पुरा हि नस्त्वं धनंजयस्यात्मसमः सखासि ६
इतो गत्वा संजय क्षिप्रमेव उपातिष्ठेथा ब्राह्मणान्ये तदर्हाः
विशुद्धवीर्यांश्चरणोपपन्नान्कुले जातान्सर्वधर्मोपपन्नान् ७
स्वाध्यायिनो ब्राह्मणा भिक्षवश्च तपस्विनो ये च नित्या वनेषु
अभिवाद्या वे मद्वचनेन वृद्धास्तथेतरेषां कुशलं वदेथाः ८
पुरोहितं धृतराष्ट्रस्य राज्ञ आचार्यांश्च ऋत्विजो ये च तस्य
तैश्च त्वं तात सहितैयथार्हं संगच्छेथाः कुशलेनैव सूत ९
आचार्य इष्टोऽनपगो विधेयो वेदानीप्सन्ब्रह्मचर्यं चचार
योऽस्त्र चतुष्पात्पुनरेव चक्रे द्रोणः प्रसन्नोऽभिवाद्यो यथार्हम् १०
अधीतविद्यश्चरणोपपन्नो योऽस्त्र चतुष्पात्पुनरेव चक्रे
गन्धर्वपुत्रप्रतिमं तरस्विनं तमश्वत्थामानं कुशलं स्म पृच्छेः ११
शारद्वतस्यावसथं स्म गत्वा महारथस्यास्त्रविदां वरस्य
त्वं मामभीक्ष्णं परिकीर्तयन्वै कृपस्य पादौ संजय पाणिना स्पृशेः १२
यस्मिञ्शौर्यमानृशंस्यं तपश्च प्रज्ञा शीलं श्रुतिसत्त्वे धृतिश्च
पादौ गृहीत्वा कुरुसत्तमस्य भीष्मस्य मां तत्र निवेदयेथाः १३
प्रज्ञाचक्षुर्यः प्रणेताकुरूणां बहुश्रुतो वृद्धसेवी मनीषी
तस्मे राज्ञे स्थविरायाभिवाद्य आचक्षीथाः संजय मामरोगम् १४
ज्येष्ठः पुत्रो धृतराष्ट्रस्य मन्दो मूर्खः शठः संजय पापशीलः
प्रशास्ता वै पृथिवी येन सर्वा सुयोधनं कुशलं तात पृच्छेः १५

भ्राता कनीयानपि तस्य मन्दस्तथाशीलः संजय सोऽपि शश्वत्
महेष्वासः शूरतमः कुरूणां दुंशासने कुशलं तात पृच्छेः १६
वृन्दारकं कविमर्थेष्वमूढं महाप्रज्ञं सर्वधर्मोपपन्नम्
न तस्य युद्धं रोचते वै कदाचिद्वैश्यापुत्रं कुशलं तात पृच्छेः १७
निकर्तने देवने योऽद्वितीयश्छन्नोपधः साधुदेवी मताक्षः
यो दुर्जयो देवितव्येन संख्ये स चित्रसेनः कुशलं तात वाच्यः १८
यस्य कामो वर्तते नित्यमेव नान्यः शमाद्भारतानामिति स्म
स बाह्लिकानामृषभो मनस्वी पुरा यथा माभिवदेत्प्रसन्नः १९
गुणैरनेकैः प्रवरैश्च युक्तो विज्ञानवान्नैव च निष्ठुरो यः
स्नेहादमर्षं सहते सदैव स सोमदत्तः पूजनीयो मतो मे २०
अर्हत्तमः कुरुषु सौमदत्तिः स नो भ्राता संजय मत्सखा च
महेष्वासो रथिनामुत्तमो यः सहामात्यः कुशलं तस्य पृच्छेः २१
ये चैवान्ये कुरुमुख्या युवानः पुत्राः पौत्रा भ्रातरश्चैव ये नः
यं यमेषां येन येनाभिगच्छेरनामयं मद्वचनेन वाच्यः २२
ये राजानः पाण्डवायोधनाय समानीता धार्तराष्ट्रेण केचित्
वसातयः शाल्वकाः केकयाश्च तथाम्बष्ठा ये त्रिगर्ताश्च मुख्याः २३
प्राच्योदीच्या दक्षिणात्याश्च शूरास्तथा प्रतीच्याः पार्वतीयाश्च सर्वे
अनृशंसाः शीलवृत्तोपपन्नास्तेषां सर्वेषां कुशलं तात पृच्छेः २४
हस्त्यारोहा रथिनः सादिनश्च पदातयश्चार्यसङ्घा महान्तः
आख्याय मां कुशलिनं स्म तेषामनामयं परिपृच्छेः समग्रान् २५
तथा राज्ञो ह्यर्थयुक्तानमात्यान्दौवारिकान्ये च सेनां नयन्ति
आयव्ययं ये गणयन्ति युक्ता अर्थांश्च ये महतश्चिन्तयन्ति २६
गान्धारराजः शकुनिः पार्वतीयो निकर्तने योऽद्वितीयोऽक्षदेवी
मानं कुर्वन्धार्तराष्ट्रस्य सूत मिथ्याबुद्धेः कुशलं तात पृच्छेः २७
यः पाण्डवानेकरथेन वीरः समुत्सहत्यप्रधृष्यान्विजेतुम्
योमुह्यतां मोहयिताद्वितीयो वैकर्तनं कुशलं तस्य पृच्छेः २८
स एव भक्तः स गुरुः स भृत्यः स वै पिता स च माता सुहृच्च
अगाधबुद्धिर्विदुरो दीर्घदर्शी स नो मन्त्री कुशलं तात पृच्छेः २९
वृद्धाः स्त्रियो याश्च गुणोपपन्ना या ज्ञायन्ते संजय मातरस्ताः
ताभिः सर्वाभिः सहिताभिः समेत्य स्त्रीभिर्वृद्धाभिरभिवादं वदेथाः ३०

कच्चित्पुत्रा जीवपुत्राः सुसम्यग्वर्तन्ते वो वृत्तिमनृशंसरूपाम्
इति स्मोक्त्वा संजय ब्रूहि पश्चादजातशत्रुः कुशली सपुत्रः ३१
या नो भार्याः संजय वेत्थ तत्र तासां सर्वासां कुशलं तात पृच्छेः
सुसंगुप्ताः सुरभयोऽनवद्याः कच्चिद्गृहानावसथाप्रमत्ताः ३२
कच्चिद्वृत्तिं श्वशुरेषु भद्राः कल्याणीं वर्तध्वमनृशंसरूपाम्
यथा च वः स्युः पतयोऽनुकूलास्तथा वृत्तिमात्मनः स्थापयध्वम् ३३
या नः स्नुषाः संजय वेत्थ तत्र प्राप्ता कुलेभ्यश्च गुणोपपन्नाः
प्रजावत्यो ब्रूहि समेत्य ताश्च युधिष्ठिरो वोऽभ्यवदत्प्रसन्नः ३४
कन्याः स्वजेथाः सदनेषु संजय अनामयं मद्वचनेन पृष्ट्वा
कल्याणा वः सन्तु पतयोऽनुकूला यूयं पतीनां भवतानुकूलाः ३५
अलंकृता वस्त्रवत्यः सुगन्धा अबीभत्साः सुखिता भोगवत्यः
लघु यासां दर्शनं वाक्च लघ्वी वेशस्त्रियः कुशलं तात पृच्छेः ३६
दासीपुत्रा ये च दासाः कुरूणां तदाश्रया बहवः कुब्जखञ्जाः
आख्याय मां कुशलिनं स्म तेभ्यो अनामयं परिपृच्छेर्जघन्यम् ३७
कच्चिद्वृत्तिर्वर्तते वै पुराणी कच्चिद्भोगान्धार्तराष्ट्रो ददाति
अङ्गहीनाकृपणान्वामनांश्च आनृशंस्याद्धृतराष्ट्रो बिभर्ति ३८
अन्धाश्च सर्वेस्थविरास्तथैव हस्ताजीवा बहवो येऽत्र सन्ति
आख्याय मां कुशलिनं स्म तेषामनामयं परिपृच्छेर्जघन्यम् ३९
मा भैष्ट दुःखेन कुजीवितेन नूनं कृतं परलोकेषु पापम्
निगृह्य शत्रून्सुहृदोऽनुगृह्य वासोभिरन्नेन च वो भरिष्ये ४०
सन्त्येव मे ब्राह्मणेभ्यः कृतानि भावीन्यथो नो बत वर्तयन्ति
पश्याम्यहं युक्तरूपांस्तथैव तामेव सिद्धिं श्रावयेथा नृपं तम् ४१
ये चानाथा दुर्बलाः सर्वकालमात्मन्येव प्रयतन्तेऽथ मूढाः
तांश्चापि त्वं कृपणान्सर्वथैव अस्मद्वाक्यात्कुशलं तात पृच्छेः ४२
ये चाप्यन्ये संश्रिता धार्तराष्ट्रान्नानादिग्भ्योऽभ्यागताः सूतपुत्र
दृष्ट्वा तांश्चैवार्हतश्चापि सर्वान्सम्पृच्छेथाः कुशलं चाव्ययं च ४३
एवं सर्वानागताभ्यागतांश्च राज्ञो दूतान्सर्वदिग्भ्योऽभ्युपेतान्
पृष्ट्वा सर्वान्कुशलं तांश्च सूत पश्चादहं कुशली तेषु वाच्यः ४४
न हीदृशाः सन्त्यपरे पृथिव्यां ये योधका धार्तराष्ट्रेण लब्धाः
धर्मस्तु नित्यो मम धर्म एव महाबलः शत्रुनिबर्हणाय ४५

इदं पुनर्वचनं धार्तराष्ट्रं सुयोधनं संजय श्रावयेथाः
यस्ते शरीरे हृदयं दुनोति कामः कुरूनसपत्नोऽनुशिष्याम् ४६
न विद्यते युक्तिरेतस्य काचिन्नैवंविधाः स्याम यथा प्रियं ते
ददस्व वा शक्रपुरं ममैव युध्यस्व वा भारतमुख्य वीर ४७
इति श्रीमहाभारते उद्योगपर्वणि त्रिंशोऽध्यायः ३०

## एकत्रिंशोऽध्यायः

युधिष्ठिर उवाच
उत सन्तमसन्तं च बालं वृद्धं च संजय
उताबलं बलीयांसं धाता प्रकुरुते वशे १
उत बालाय पाण्डित्यं पण्डितायोत बालताम्
ददाति सर्वमीशानः पुरस्ताच्छुक्रमुच्चरन् २
अलं विज्ञापनाय स्यादाचक्षीथा यथातथम्
अथो मन्त्रं मन्त्रयित्वा अन्योन्येनातिहृष्टवत् ३
गावल्गणे कुरून्गत्वा धृतराष्ट्रं महाबलम्
अभिवाद्योपसंगृह्य ततः पृच्छेरनामयम् ४
ब्रूयाश्चैनं त्वमासीनं कुरुभिः परिवारितम्
तवैव राजन्वीर्येण सुखं जीवन्ति पाण्डवाः ५
तव प्रसादाद्बालास्ते प्राप्ता राज्यमरिंदम
राज्ये तान्स्थापयित्वाग्रे नोपेक्षीर्विनशिष्यतः ६
सर्वमप्येतदेकस्य नालं संजय कस्यचित्
तात संहत्य जीवामो मा द्विषद्भ्यो वशं गमः ७
तथा भीष्मं शान्तनवं भारतानां पितामहम्
शिरसाभिवदेथास्त्वं मम नाम प्रकीर्तयन् ८
अभिवाद्य च वक्तव्यस्ततोऽस्माकं पितामहः
भवता शन्तनोर्वंशो निमग्नः पुनरुद्धृतः ९
स त्वं कुरु तथा तात स्वमतेन पितामह
यथा जीवन्ति ते पौत्राः प्रीतिमन्तः परस्परम् १०
तथैव विदुरं ब्रूयाः कुरूणां मन्त्रधारिणम्
अयुद्धं सौम्य भाषस्व हितकामो युधिष्ठिरः ११

अथो सुयोधनं ब्रूया राजपुत्रममर्षणम्
मध्ये कुरूणामासीनमनुनीय पुनः पुनः १२
अपश्यन्मामुपेक्षन्तं कृष्णामेकां सभागताम्
तद्दुःखमतितिक्षाम मा वधीष्म कुरूनिति १३
एवं पूर्वापरान्क्लेशानतितिक्षन्त पाण्डवाः
यथा बलीयसः सन्तस्तत्सर्वं कुरवो विदुः १४
यन्नः प्राव्राजयः सौम्य अजिनैः प्रतिवासितान्
तद्दुःखमतितिक्षाम मा वधीष्म कुरूनिति १५
यत्तत्सभायामाक्रम्य कृष्णां केशेष्वधर्षयत्
दुःशासनस्तेऽनुमते तच्चास्माभिरुपेक्षितम् १६
यथोचितं स्वकं भागं लभेमहि परंतप
निवर्तय परद्रव्ये बुद्धिं गृद्धां नरर्षभ १७
शान्तिरेवं भवेद्राजन्प्रीतिश्चैव परस्परम्
राज्यैकदेशमपि नः प्रयच्छ शममिच्छताम् १८
कुशस्थलं वृकस्थलमासन्दी वारणावतम्
अवसानं भवेदत्र किंचिदेव तु पञ्चमम् १९
भ्रातॄणां देहि पञ्चानां ग्रामान्पञ्च सुयोधन
शान्तिर्नोऽस्तु महाप्राज्ञ ज्ञातिभिः सह संजय २०
भ्राता भ्रातरमन्वेतु पिता पुत्रेण युज्यताम्
स्मयमानाः समायान्तु पाञ्चालाः कुरुभिः सह २१
अक्षतान्कुरूपाञ्चालान्पश्येम इति कामये
सर्वे सुमनसस्तात शाम्याम भरतर्षभ २२
अलमेव शमायास्मि तथा युद्धाय संजय
धर्मार्थयोरलं चाहं मृदवे दारुणाय च २३
इति श्रीमहाभारते उद्योगपर्वणि एकत्रिंशोऽध्यायः ३१

द्वात्रिंशोऽध्यायः

वैशम्पायन उवाच
अनुज्ञातः पाण्डवेन प्रययौ संजयस्तदा
शासनं धृतराष्ट्रस्य सर्वं कृत्वा महात्मनः १

सम्प्राप्य हास्तिनपुरं शीघ्रं च प्रविवेश ह
अन्तःपुरमुपस्थाय द्वाःस्थं वचनमब्रवीत् २
आचक्ष्व मां धृतराष्ट्राय द्वाःस्थ उपागतं पाण्डवानां सकाशात्
जागर्ति चेदभिवदेस्त्वं हि क्षत्तः प्रविशेयं विदितो भूमिपस्य ३
द्वाःस्थ उवाच
संजयोऽय भूमिपते नमस्ते दिदृक्षया द्वारमुपागतस्ते
प्राप्तो दूतः पाण्डवानां सकाशात्प्रशाधि राजन्किमयं करोतु ४
धृतराष्ट्र उवाच
आचक्ष्व मां सुखिनं काल्यमस्मै प्रवेश्यतां स्वागतं संजयाय
न चाहमेतस्य भवाम्यकाल्यः स मे कस्माद्द्वारि तिष्ठेत क्षत्तः ५
वैशम्पायन उवाच
ततः प्रविश्यानुमते नृपस्य महद्वेश्म प्राज्ञशूरार्यगुप्तम्
सिंहासनस्थं पार्थिवमाससाद वैचित्रवीर्यं प्राञ्जलि सूतपुत्रः ६
संजय उवाच
संजयोऽह भूमिपते नमस्ते प्राप्तोऽस्मि गत्वा नरदेव पाण्डवान्
अभिवाद्य त्वां पाण्डुपुत्रो मनस्वी युधिष्ठिरः कुशलं चान्वपृच्छत् ७
स ते पुत्रान्पृच्छति प्रीयमाणः कच्चित्पुत्रैः प्रीयसे नप्तृभिश्च
तथा सुहृद्भिः सचिवैश्च राजन्ये चापि त्वामुपजीवन्ति तैश्च ८
धृतराष्ट्र उवाच
अभ्येत्य त्वां तात वदामि संजय अजातशत्रुं च सुखेन पार्थम्
कच्चित्स राजा कुशली सपुत्रः सहामात्यः सानुजः कौरवाणाम् ९
संजय उवाच
सहामात्यः कुशली पाण्डुपुत्रो भूयश्चातो यच्च तेऽग्रे मनोऽभूत्
निर्णिक्तधर्मार्थकरो मनस्वी बहुश्रुतो दृष्टिमाञ्शीलवांश्च १०
परं धर्मात्पाण्डवस्यानृशंस्यं धर्मः परो वित्तचयान्मतोऽस्य
सुखप्रिये धर्महीने न पार्थोऽनुरुध्यते भारत तस्य विद्धि ११
परप्रयुक्तः पुरुषो विचेष्टते सूत्रप्रोता दारुमयीव योषा
इमं दृष्ट्वा नियमं पाण्डवस्य मन्ये परं कर्म दैवं मनुष्यात् १२
इमं च दृष्ट्वा तव कर्मदोषं पापोदर्कं घोरमवर्णरूपम्
यावन्नरः कामयतेऽतिकाल्यं तावन्नरोऽय लभते प्रशंसाम् १३

अजातशत्रुस्तु विहाय पापं जीर्णां त्वचं सर्प इवासमर्थाम्
विरोचतेऽहार्यवृत्तेन वीरो युधिष्ठिरस्त्वयि पापं विसृज्य १४
अङ्गात्मनः कर्म निबोध राजन्धर्मार्थयुक्तादार्यवृत्तादपेतम्
उपक्रोशं चेह गतोऽसि राजन्नोहेश्च पापं प्रसजेदमुत्र १५
स त्वमर्थं संशयितं विना तैराशंससे पुत्रवशानुगोऽद्य
अधर्मशब्दश्च महान्पृथिव्यां नेदं कर्म त्वत्समं भारताग्र्य १६
हीनप्रज्ञो दौष्कुलेयो नृशंसो दीर्घवैरी क्षत्रविद्यास्वधीरः
एवंधर्मा नापदः संतितीर्षेद्धीनवीर्यो यश्च भवेदशिष्टः १७
कुले जातो धर्मवान्यो यशस्वी बहुश्रुतः सुखजीवी यतात्मा
धर्मार्थयोर्ग्रथितयोर्बिभर्ति नान्यत्र दिष्टस्य वशादुपैति १८
कथं हि मन्त्राग्र्यधरो मनीषी धर्मार्थयोरापदि सम्प्रणेता
एवंयुक्तः सर्वमन्त्रैरहीनो अनानृशंसं कर्म कुर्यादमूढः १९
तवापीमे मन्त्रविदः समेत्य समासते कर्मसु नित्ययुक्ताः
तेषामयं बलवान्निश्चयश्च कुरुक्षयार्थे निरयो व्यपादि २०
अकालिकं कुरवो नाभविष्यन्पापेन चेत्पापमजातशत्रुः
इच्छेज्जातु त्वयि पापं विसृज्य निन्दा चेयं तव लोकेऽभविष्यत् २१
किमन्यत्र विषयादीश्वराणां यत्र पार्थः परलोकं ददर्श
अत्यक्रामत्स तथा सम्मतः स्यान्न संशयो नास्ति मनुष्यकारः २२
एतान्गुणादन्कर्मकृतानवेक्ष्य भावाभावौ वर्तमानावनित्यौ
बलिर्हि राजा पारमविन्दमानो नान्यत्कालात्कारणं तत्र मेने २३
चक्षुः श्रोत्रे नासिका त्वक्च जिह्वा ज्ञानस्यैतान्यायतनानि जन्तोः
तानि प्रीतान्येव तृष्णाक्षयान्ते तान्यव्यथो दुःखहीनः प्रणुद्यात् २४
न त्वेवमन्ये पुरुषस्य कर्म संवर्तते सुप्रयुक्तं यथावत्
मातुः पितुः कर्मणाभिप्रसूतः संवर्धते विधिवद्भोजनेन २५
प्रियाप्रिये सुखदुःखे च राजन्निन्दाप्रशंसे च भजेत एनम्
परस्त्वेनं गर्हयतेऽपराधे प्रशंसते साधुवृत्तं तमेव २६
स त्वा गर्हे भारतानां विरोधादन्तो नूनं भवितायं प्रजानाम्
नो चेदिदं तव कर्मापराधात्कुरून्दहेत्कृष्णवर्त्मेव कक्षम् २७
त्वमेवैको जातपुत्रेषु राजन्वशं गत्वा सर्वलोके नरेन्द्र
कामात्मनां श्लाघसे द्यूतकाले नान्यच्छमात्पश्य विपाकमस्य २८

अनाप्तानां प्रग्रहात्त्वं नरेन्द्र तथाप्तानां निग्रहाच्चैव राजन्
भूमिं स्फीतां दुर्बलत्वादनन्तां न शक्तस्त्वं रक्षितुं कौरवेय २९
अनुज्ञातो रथवेगावधूतः श्रान्तो निपद्ये शयनं नृसिंह
प्रातः श्रोतारः कुरवः सभायामजातशत्रोर्वचनं समेताः ३०
इति श्रीमहाभारते उद्योगपर्वणि द्वात्रिंशोऽध्यायः ३२
समाप्तं संजययानपर्व

त्रयस्त्रिंशोऽध्यायः

वैशम्पायन उवाच
द्वाःस्थं प्राह महाप्राज्ञो धृतराष्ट्रो महीपतिः
विदुरं द्रष्टुमिच्छामि तमिहानय माचिरम् १
प्रहितो धृतराष्ट्रेण दूतः क्षत्तारमब्रवीत्
ईश्वरस्त्वां महाराजो महाप्राज्ञ दिदृक्षति २
एवमुक्तस्तु विदुरः प्राप्य राजनिवेशनम्
अब्रवीद्धृतराष्ट्राय द्वाःस्थ मां प्रतिवेदय ३
द्वाःस्थ उवाच
विदुरोऽयमनुप्राप्तो राजेन्द्र तव शासनात्
द्रष्टुमिच्छति ते पादौ किं करोतु प्रशाधि माम् ४
धृतराष्ट्र उवाच
प्रवेशय महाप्राज्ञं विदुरं दीर्घदर्शिनम्
अहं हि विदुरस्यास्य नाकाल्यो जातु दर्शने ५
द्वाःस्थ उवाच
प्रविशान्तःपुरं क्षत्तर्महाराजस्य धीमतः
न हि ते दर्शनेऽकाल्यो जातु राजा ब्रवीति माम् ६
वैशम्पायन उवाच
ततः प्रविश्य विदुरो धृतराष्ट्रनिवेशनम्
अब्रवीत्प्राञ्जलिर्वाक्यं चिन्तयानं नराधिपम् ७
विदुरोऽहं महाप्राज्ञ सम्प्राप्तस्तव शासनात्
यदि किंचन कर्तव्यमयमस्मि प्रशाधि माम् ८
धृतराष्ट्र उवाच

संजयो विदुर प्राप्तो गर्हयित्वा च मां गतः
अजातशत्रोः श्वो वाक्यं सभामध्ये स वक्ष्यति ९
तस्याद्य कुरुवीरस्य न विज्ञातं वचो मया
तन्मे दहति गात्राणि तदकार्षीत्प्रजागरम् १०
जाग्रतो दह्यमानस्य श्रेयो यदिह पश्यसि
तद्ब्रूहि त्वं हि नस्तात धर्मार्थकुशलो ह्यसि ११
यतः प्राप्तः संजयः पाण्डवेभ्यो न मे यथावन्मनसः प्रशान्तिः
सर्वेन्द्रियाण्यप्रकृतिं गतानि किं वक्ष्यतीत्येव हि मेऽद्य चिन्ता १२
विदुर उवाच
अभियुक्तं बलवता दुर्बलं हीनसाधनम्
हृतस्वं कामिनं चोरमाविशन्ति प्रजागराः १३
कच्चिदेतैर्महादोषैर्न स्पृष्टोऽसि नराधिप
कच्चिन्न परवित्तेषु गृध्यन्विपरितप्यसे १४
धृतराष्ट्र उवाच
श्रोतुमिच्छामि ते धर्म्यं परं नैःश्रेयसं वचः
अस्मिन्राजर्षिवंशे हि त्वमेकः प्राज्ञसम्मतः १५
विदुर उवाच
निषेवते प्रशस्तानि निन्दितानि न सेवते
अनास्तिकः श्रद्दधान एतत्पण्डितलक्षणम् १६
क्रोधो हर्षश्च दर्पश्च ह्रीस्तम्भो मान्यमानिता
यमर्थान्नापकर्षन्ति स वै पण्डित उच्यते १७
यस्य कृत्यं न जानन्ति मन्त्रं वा मन्त्रितं परे
कृतमेवास्य जानन्ति स वै पण्डित उच्यते १८
यस्य कृत्यं न विघ्नन्ति शीतमुष्णं भयं रतिः
समृद्धिरसमृद्धिर्वा स वै पण्डित उच्यते १९
यस्य संसारिणी प्रज्ञा धर्मार्थावनुवर्तते
कामादर्थं वृणीते यः स वै पण्डित उच्यते २०
यथाशक्ति चिकीर्षन्ति यथाशक्ति च कुर्वते
न किंचिदवमन्यन्ते पण्डित भरतर्षभ २१
क्षिप्रं विजानाति चिरं शृणोति विज्ञाय चार्थं भजते न कामात्

नासम्पृष्टो व्युपयुङ्क्ते परार्थे तत्प्रज्ञानं प्रथमं पण्डितस्य २२
नाप्राप्यमभिवाञ्छन्ति नष्टं नेच्छन्ति शोचितुम्
आपत्सु च न मुह्यन्ति नराः पण्डितबुद्धयः २३
निश्चित्य यः प्रक्रमते नान्तर्वसति कर्मणः
अवन्ध्यकालो वश्यात्मा स वै पण्डित उच्यते २४
आर्यकर्मणि रज्यन्ते भूतिकर्माणि कुर्वते
हितं च नाभ्यसूयन्ति पण्डिता भरतर्षभ २५
न हृष्यत्यात्मसम्माने नावमानेन तप्यते
गाङ्गो ह्रद इवाक्षोभ्यो यः स पण्डित उच्यते २६
तत्त्वज्ञः सर्वभूतानां योगज्ञः सर्वकर्मणाम्
उपायज्ञो मनुष्याणां नरः पण्डित उच्यते २७
प्रवृत्तवाक्चित्रकथ ऊहवान्प्रतिभानवान्
आशु ग्रन्थस्य वक्ता च स वै पण्डित उच्यते २८
श्रुतं प्रज्ञानुगं यस्य प्रज्ञा चैव श्रुतानुगा
असम्भिन्नार्यमर्यादः पण्डिताख्यां लभेत सः २९
अश्रुतश्च समुन्नद्धो दरिद्रश्च महामनाः
अर्थांश्चाकर्मणा प्रेप्सुर्मूढ इत्युच्यते बुधैः ३०
स्वमर्थं यः परित्यज्य परार्थमनुतिष्ठति
मिथ्या चरति मित्रार्थे यश्च मूढः स उच्चते ३१
अकामान्कामयति यः कामयानान्परिद्विषन्
बलवन्तं च यो द्वेष्टि तमाहुर्मूढचेतसम् ३२
अमित्रं कुरुते मित्रं मित्रं द्वेष्टिहिनस्ति च
कर्म चारभते दुष्टं तमाहुर्मूढ चेतसम् ३३
संसारयति कृत्यानि सर्वत्र विचिकित्सते
चिरं करोति क्षिप्रार्थे स मूढो भरतर्षभ ३४
अनाहूतः प्रविशति अपृष्टो बहु भाषते
विश्वसत्यप्रमत्तेषु मूढचेता नराधमः ३५
परं क्षिपति दोषेण वर्तमानः स्वयं तथा
यश्च क्रुध्यत्यनीशः सन्स च मूढतमो नरः ३६
आत्मानो वलमज्ञाय धर्मार्थपरिवर्जितम्

अलभ्यमिच्छन्नैष्कर्म्यान्मूढबुद्धिरिहोच्यते ३७
अशिष्यं शास्ति यो राजन्यश्च शून्यमुपासते
कदर्यं भजते यश्च तमाहुर्मूढचेतसम् ३८
अर्थं महान्तमासाद्य विद्यामैश्वर्यमेव वा
विचरत्यसमुन्नद्धो यः स पण्डित उच्यते ३९
एकः सम्पन्नमश्नाति वस्ते वासश्च शोभनम्
योऽसविभज्य भृत्येभ्यः को नृशंसतरस्ततः ४०
एकः पापानि कुरुते फलं भुङ्क्ते महाजनः
भोक्तारो विप्रमुच्यन्ते कर्ता दोषेण लिप्यते ४१
एकं हन्यान्न वा हन्यादिषुर्मुक्तो धनुष्मता
बुद्धिर्बुद्धिमतोत्सृष्टा हन्याद्राष्ट्रं सराजकम् ४२
एकया द्वे विनिश्चित्य त्रींश्चतुर्भिर्वशे कुरु
पञ्च जित्वा विदित्वा षट् सप्त हित्वा सुखी भव ४३
एकं विषरसो हन्ति शस्त्रेणैकश्च वध्यते
सराष्ट्रं सप्रजं हन्ति राजानं मन्त्रविस्रवः ४४
एकः स्वादु न भुञ्जीत एकश्चार्थान्न चिन्तयेत्
एको न गच्छेदध्वानं नैकः सुप्तेषु जागृयात् ४५
एकमेवाद्वितीयं तद्यद्राजन्नावबुध्यसे
सत्यं स्वर्गस्य सोपानं पारावारस्य नौरिव ४६
एकः क्षमावतां दोषो द्वितीयो नोपलभ्यते
यदेनं क्षमया युक्तमशक्तं मन्यते जनः ४७
एको धर्मः परं श्रेयः क्षमैका शान्तिरुत्तमा
विद्यैका परमा दृष्टिरहिंसैका सुखावहा ४८
द्वाविमौ ग्रसते भूमिः सर्पो बिलशयानिव
राजानं चाविरोद्धारं ब्राह्मणं चाप्रवासिनम् ४९
द्वे कर्मणी नरः कुर्वन्नस्मिँल्लोके विरोचते
अब्रुवन्परुषं किंचिदसतो नार्थयंस्तथा ५०
द्वाविमौ पुरुषव्याघ्र परप्रत्ययकारिणौ
स्त्रियः कामितकामिन्यो लोकः पूजितपूजकः ५१
द्वाविमौ कण्टकौ तीक्ष्णौ शरीरपरिशोषणौ

यश्चाधनः कामयते यश्च कुप्यत्यनीश्वरः ५२
द्वाविमौ पुरुषौ राजन्स्वर्गस्योपरि तिष्ठतः
प्रभुश्च क्षमया युक्तो दरिद्रश्च प्रदानवान् ५३
न्यायागतस्य द्रव्यस्य बोद्धव्यौ द्वावतिक्रमौ
अपात्रे प्रतिपत्तिश्च पात्रे चाप्रतिपादनम् ५४
त्रयो न्याया मनुष्याणां श्रूयन्ते भरतर्षभ
कनीयान्मध्यमः श्रेष्ठ इति वेदविदो विदुः ५५
त्रिविधाः पुरुषा राजन्नुत्तमाधममध्यमाः
नियोजयेद्यथावत्तांस्त्रिविधेष्वेव कर्मसु ५६
त्रय एवाधना राजन्भार्या दासस्तथा सुतः
यद्धत्ते समधिगच्छन्ति यस्य ते तस्य तद्धनम् ५७
चत्वारि राज्ञा तु महाबलेन वर्ज्यान्याहुः पण्डितस्तानि विद्यात्
अल्पप्रज्ञैः सह मन्त्रं न कुर्यान्न दीर्घसूत्रैरलसैश्चारणैश्च ५८
चत्वारि ते तात गृहे वसन्तु श्रियाभिजुष्टस्य गृहस्थधर्मे
वृद्धो ज्ञातिरवसन्नः कुलीनः सखा दरिद्रो भगिनी चानपत्या ५९
चत्वार्याह महाराज सद्यस्कानि बृहस्पतिः
पृच्छते त्रिदशेन्द्राय तानीमानि निबोध मे ६०
देवतानां च संकल्पमनुभावं च धीमताम्
विनयं कृतविद्यानां विनाशं पापकर्मणाम् ६१
पञ्चाग्नयो मनुष्येण परिचर्याः प्रयत्नतः
पितामाताग्निरात्मा च गुरुश्च भरतर्षभ ६२
पञ्चैव पूजयँल्लोके यशः प्राप्नोति केवलम्
देवान्पितॄन्मनुष्यांश्च भिक्षूनतिथिपञ्चमान् ६३
पञ्च त्वानुगमिष्यन्ति यत्र यत्र गमिष्यसि
मित्राण्यमित्रा मध्यस्था उपजीव्योपजीविनः ६४
पञ्चेन्द्रियस्य मर्त्यस्य छिद्रं चेदेकमिन्द्रियम्
ततोऽस्य स्रवति प्रज्ञा दृतेः पादादिवोदकम् ६५
षड् दोषाः पुरुषेणेह हातव्या भूतिमिच्छता
निद्रा तन्द्री भयं क्रोध आलस्यं दीर्घसूत्रता ६६
षडिमान्पुरुषो जह्याद्भिन्नां नावमिवार्णवे

अप्रवक्तारमाचार्यमनधीयानमृत्विजम् ६७
अरक्षितारं राजानं भार्यां चाप्रियवादिनीम्
ग्रामकामं च गोपालं वनकामं च नापितम् ६८
षडेव तु गुणाः पुंसा न हातव्याः कदाचन
सत्यं दानमनालस्यमनसूया क्षमा धृतिः ६९
षण्णामात्मनि नित्यानामैश्वर्यं योऽधिगच्छति
न स पापैः कुतोऽनर्थैर्युज्यते विजितेन्द्रियः ७०
षडिमे षट्सु जीवन्ति सप्तमो नोपलभ्यते
चोराः प्रमत्ते जीवन्ति व्याधितेषु चिकित्सकाः ७१
प्रमदाः कामयानेषु यजमानेषु याजकाः
राजा विवदमानेषु नित्यं मूर्खेषु पण्डिताः ७२
सप्त दोषाः सदा राज्ञा हातव्या व्यसनोदयाः
प्रायशो यैर्विनश्यन्ति कृतमूलाश्च पार्थिवाः ७३
स्त्रियोऽक्षा मृगया पानं वाक्पारुष्यं च पञ्चमम्
महच्च दण्डपारुष्यमर्थदूषणमेव च ७४
अष्टौ पूर्वनिमित्तानि नरस्य विनशिष्यतः
ब्राह्मणान्प्रथमं द्वेष्टि ब्राह्मणैश्च विरुध्यते ७५
ब्राह्मणस्वानि चादत्ते ब्राह्मणांश्च जिघांसति
रमते निन्दया चैषां प्रशंसां नाभिनन्दति ७६
नैतान्स्मरति कृत्येषु याचितश्चाभ्यसूयति
एतान्दोषान्नरः प्राज्ञो बुद्ध्या बुद्ध्वा विवर्जयेत् ७७
अष्टाविमानि हर्षस्य नवनीतानि भारत
वर्तमानानि दृश्यन्ते तान्येव सुसुखान्यपि ७८
समागमश्च सखिभिर्महांश्चैव धनागमः
पुत्रेण च परिष्वङ्गः संनिपातश्च मैथुने ७९
समये च प्रियालापः स्वयूथेषु च संनतिः
अभिप्रेतस्य लाभश्च पूजा च जनसंसदि ८०
नवद्वारमिदं वेश्म त्रिस्थूणं पञ्चसाक्षिकम्
क्षेत्रज्ञाधिष्ठितं विद्वान्यो वेद स परः कविः ८१
दश धर्मं न जानन्ति धृतराष्ट्र निबोध तान्

मत्तः प्रमत्त उन्मत्तः श्रान्तः क्रुद्धो बुभुक्षितः ८२
त्वरमाणश्च भीरुश्च लुब्धः कामी च ते दश
तस्मादेतेषु भावेषु न प्रसज्जेत पण्डितः ८३
अत्रैवोदाहरन्तीममितिहासं पुरातनम्
पुत्रार्थमसुरेन्द्रेण गीतं चैव सुधन्वना ८४
यः काममन्यू प्रजहाति राजा पात्रे प्रतिष्ठापयते धनं च
विशेषविच्छ्रुतवान्क्षिप्रकारी तं सर्वलोकः कुरुते प्रमाणम् ८५
जानाति विश्वासयितुं मनुष्यान्विज्ञातदोषेषु दधाति दण्डम्
जानाति मात्रां च तथा क्षमां च तं तादृशं श्रीर्जुषते समग्रा ८६
सुदुर्बलं नावजानाति कंचिद्युक्तो रिपुं सेवते बुद्धिपूर्वम्
न विग्रहं रोचयते बलस्थैः काले च यो विक्रमते स धीरः ८७
प्राप्यापदं न व्यथते कदाचिदुद्योगमन्विच्छति चाप्रमत्तः
दुःखं च काले सहते जितात्मा धुरन्धरस्तस्य जिताः सपत्नाः ८८
अनर्थकं विप्रवासं गृहेभ्यः पापैः सन्धिं परदाराभिमर्शम्
दम्भं स्तैन्यं पैशुनं मद्यपानं न सेवते यः स सुखी सदैव ८९
न संरम्भेणारभतेऽथवर्गमाकारितः शंसति तथ्यमेव
न मात्रार्थे रोचयते विवादं नापूजितः कुप्यति चाप्यमूढः ९०
न योऽभ्यसूयत्यनुकम्पते च न दुर्बलः प्रातिभाव्यं करोति
नात्याह किंचित्क्षमते विवादं सर्वत्र तादृग्लभते प्रशंसाम् ९१
यो नोद्धतं कुरुते जातु वेषं न पौरुषेणापि विकत्थतेऽन्यान्
न मूर्च्छितः कटुकान्याह किंचित्प्रियं सदा तं कुरुते जनोऽपि ९२
न वैरमुद्दीपयति प्रशान्तं न दर्पमारोहति नास्तमेति
न दुर्गतोऽस्मीति करोति मन्युं तमार्यशीलं परमाहुरग्र्यम् ९३
न स्वे सुखे वै कुरुते प्रहर्षं नान्यस्य दुःखे भवति प्रतीतः
दत्त्वा न पश्चात्कुरुतेऽनुतापं स कत्थते सत्पुरुषार्यशीलः ९४
देशाचारान्समयाञ्जातिधर्मान्बुभूषते यस्तु परावरज्ञः
स तत्र तत्राधिगतः सदैव महाजनस्याधिपत्यं करोति ९५
दम्भं मोहं मत्सरं पापकृत्यं राजद्विष्टं पैशुनं पूगवैरम्
मत्तोन्मत्तैर्दुर्जनैश्चापि वादं यः प्रज्ञावान्वर्जयेत्स प्रधानः ९६
दमं शौचं दैवतं मङ्गलानि प्रायश्चित्तं विविधाँल्लोकवादान्

एतानि यः कुरुते नैत्यकानि तस्योत्थानं देवता राधयन्ति ९७
समैर्विवाहं कुरुते न हीनैः समैः सख्यं व्यवहारं कथाश्च
गुणैर्विशिष्टांश्च पुरोदधाति विपश्चितस्तस्य नयाः सुनीताः ९८
मितं भुङ्क्ते संविभज्याश्रितेभ्यो मितं स्वपित्यमितं कर्म कृत्वा
ददात्यमित्रेष्वपि याचितः संस्तमात्मवन्तं प्रजहत्यनर्थाः ९९
चिकीर्षितं विप्रकृतं च यस्य नान्ये जनाः कर्म जानन्ति किंचित्
मन्त्रे गुप्ते सम्यगनुष्ठिते च स्वल्पो नास्य व्यथते कश्चिदर्थः १००
यः सर्वभूतप्रशमे निविष्टः सत्यो मृदुर्दानकृच्छुद्धभावः
अतीव संज्ञायते ज्ञातिमध्ये महामणिर्जात्य इव प्रसन्नः १०१
य आत्मनापत्रपते भृशं नरः स सर्वलोकस्य गुरुर्भवत्युत
अनन्ततेजाः सुमनाः समाहितः स्वतेजसा सूर्य इवावभासते १०२
वने जाताः शापदग्धस्य राज्ञः पाण्डोः पुत्राः पञ्च पञ्चेन्द्रकल्पाः
त्वयैव बाला वर्धिता शिक्षिताश्च तवादेशं पालयन्त्याम्बिकेय १०३
प्रदायैषामुचितं तात राज्यं सुखी पुत्रैः सहितो मोदमानः
न देवानां नापि च मानुषाणां भविष्यसि त्वं तर्कणीयो नरेन्द्र १०४
इति श्रीमहाभारते उद्योगपर्वणि त्रयस्त्रिंशोऽध्यायः ३३

## चतुस्त्रिंशोऽध्यायः

धृतराष्ट्र उवाच
जाग्रतो दह्यमानस्य यत्कार्यमनुपश्यसि
तद्ब्रूहि त्वं हि नस्तात धर्मार्थकुशलः शुचिः १
त्वं मां यथावद्विदुर प्रशाधि प्रज्ञापूर्वं सर्वमजातशत्रोः
यन्मन्यसे पथ्यमदीनसत्त्व श्रेयस्करं ब्रूहि तद्वै कुरूणाम् २
पापाशङ्की पापमेवानुपश्यन्पृच्छामि त्वां व्याकुलेनात्मनाहम्
कवे तन्मे ब्रूहि सर्वं यथावन्मनीषितं सर्वमजातशत्रोः ३
विदुर उवाच
शुभं वा यदि वा पापं द्वेष्यं वा यदि वा प्रियम्
अपृष्टस्तस्य तद्ब्रूयाद्यस्य नेच्छेत्पराभवम् ४
तस्माद्वक्ष्यामि ते राजन्भव मिच्छन्कुरून्प्रति
वचः श्रेयस्करं धर्म्यं ब्रुवतस्तन्निबोध मे ५

मिथ्योपेतानि कर्माणि सिध्येयुर्यानि भारत
अनुपायप्रयुक्तानि मा स्म तेषु मनः कृथाः ६
तथैव योगविहितं न सिध्येत्कर्म यन्नृप
उपाययुक्तं मेधावी न तत्र ग्लपयेन्मनः ७
अनुबन्धानवेक्षेत सानुबन्धेषु कर्मसु
सम्प्रधार्य च कुर्वीत न वेगेन समाचरेत् ८
अनुबन्धं च सम्प्रेक्ष्य विपाकांश्चैव कर्मणाम्
उत्थानमात्मनश्चैव धीरः कुर्वीत वा न वा ९
यः प्रमाणं न जानाति स्थाने वृद्धौ तथा क्षये
कोशे जनपदे दण्डे न स राज्येऽवतिष्ठते १०
यस्त्वेतानि प्रमाणानि यथोक्तान्यनुपश्यति
युक्तो धर्मार्थयोर्ज्ञाने स राज्यमधिगच्छति ११
न राज्यं प्राप्तमित्येव वर्तितव्यमसाम्प्रतम्
श्रियं ह्यविनयो हन्ति जरा रूपमिवोत्तमम् १२
भक्ष्योत्तमप्रतिच्छन्नं मत्स्यो बडिशमायसम्
रूपाभिपाती ग्रसते नानुबन्धमवेक्षते १३
यच्छक्यं ग्रसितुं ग्रस्यं ग्रस्तं परिणमेच्च यत्
हितं च परिणामे यत्तदद्यं भूतिमिच्छता १४
वनस्पतेरपक्वानि फलानि प्रचिनोतिः यः
स नाप्नोति रसं तेभ्यो बीजं चास्य विनश्यति १५
यस्तु पक्वमुपादत्ते काले परिणतं फलम्
फलाद्रसं स लभते बीजाच्चैव फलं पुनः १६
यथा मधु समादत्ते रक्षन्पुष्पाणि षट्पदः
तद्वदर्थान्मनुष्येभ्य आदद्यादविहिंसया १७
पुष्पं पुष्पं विचिन्वीत मूलच्छेदं न कारयेत्
मालाकार इवारामे न यथाङ्गारकारकः १८
किं नु मे स्यादिदं कृत्वा किं नु मे स्यादकुर्वतः
इति कर्माणि संचिन्त्य कुर्याद् वा पुरुषो न वा १९
अनारभ्या भवन्त्यर्थाः केचिन्नित्यं तथागताः
कृतः पुरुषकारोऽपि भवेद्येषु निरर्थकः २०

कांश्चिदर्थान्नरः प्राज्ञो लघुमूलान्महाफलान्
क्षिप्रमारभते कर्तुं न विघ्नयति तादृशान् २१
ऋजु पश्यति यः सर्वं चक्षुषानुपिबन्निव
आसीनमपि तूष्णीकमनुरज्यन्ति तं प्रजाः २२
चक्षुषा मनसा वाचा कर्मणा च चतुर्विधम्
प्रसादयति लोकं यः तं लोकोऽनुप्रसीदति २३
यस्मात्त्रस्यन्ति भूतानि मृगव्याधान्मृगा इव
सागरान्तामपि महीं लब्ध्वा स परिहीयते २४
पितृपैतामहं राज्यं प्राप्तवान्स्वेन तेजसा
वायुरभ्रमिवासाद्य भ्रंशयत्यनये स्थितः २५
धर्ममाचरतो राज्ञः सद्भिश्चरितमादितः
वसुधा वसुसम्पूर्णा वर्धते भूमिवर्धनी २६
अथ संत्यजतो धर्ममधर्मं चानुतिष्ठतः
प्रतिसंवेष्टते भूमिरग्नौ चर्माहितं यथा २७
य एव यत्नः क्रियते परराष्ट्रावमर्दने
स एव यत्नः कर्तव्यः स्वराष्ट्रपरिपालने २८
धर्मेण राज्यं विन्देत धर्मेण परिपालयेत्
धर्ममूलां श्रियं प्राप्य न जहाति न हीयते २९
अप्युन्मत्तात्प्रलपतो बालाच्च परिसर्पतः
सर्वतः सारमादद्यादश्मभ्य इव काञ्चनम् ३०
सुव्याहृतानि सुधियां सुकृतानि ततस्ततः
संचिन्वन्धीर आसीत शिलाहारी शिलं यथा ३१
गन्धेन गावः पश्यन्ति वेदैः पश्यन्ति ब्राह्मणाः
चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः ३२
भूयांसं लभते क्लेशं या गौर्भवति दुर्दुहा
अथ या सुदुहा राजन्नैव तां विनयन्त्यपि ३३
यदतप्तं प्रणमति न तत्संतापयन्त्यपि
यच्च स्वयं नतं दारु न तत्संनामयन्त्यपि ३४
एतयोपमया धीरः संनमेत बलीयसे
इन्द्राय स प्रणमते नमते यो बलीयसे ३५

पर्जन्यनाथाः पशवो राजानो मित्रबान्धवाः
पतयो बान्धवाः स्त्रीणां ब्राह्मणा वेदबान्धवाः ३६
सत्येन रक्ष्यते धर्मो विद्या योगेन रक्ष्यते
मृजया रक्ष्यते रूपं कुलं वृत्तेन रक्ष्यते ३७
मानेन रक्ष्यते धान्यमश्वान् रक्षत्यनुक्रमः
अभीक्ष्णदर्शनाद्गावः स्त्रियो रक्ष्याः कुचेलतः ३८
न कुलं वृत्तहीनस्य प्रमाणमिति मे मतिः
अन्त्येष्वपि हि जातानां वृत्तमेव विशिष्यते ३९
य ईर्षुः परवित्तेषु रूपे वीर्ये कुलान्वये
सुखे सौभाग्यसत्कारे तस्य व्याधिरनन्तकः ४०
अकार्यकरणाद्भीतः कार्याणां च विवर्जनात्
अकाले मन्त्रभेदाच्च येन माद्येन्न तत्पिबेत् ४१
विद्यामदो धनमदस्तृतीयोऽभिजनो मदः
एते मदावलिप्तानामेत एव सतां दमाः ४२
असन्तोऽभ्यर्थिताः सद्भिः किंचित्कार्यं कदाचन
मन्यन्ते सन्तमात्मानमसन्तमपि विश्रुतम् ४३
गतिरात्मवतां सन्तः सन्त एव सतां गतिः
असतां च गतिः सन्तो न त्वसन्तः सतां गतिः ४४
जिता सभा वस्त्रवता समाशा गोमता जिता
अध्वा जितो यानवता सर्वं शीलवता जितम् ४५
शीलं प्रधानं पुरुषे तद्यस्येह प्रणश्यति
न तस्य जीवितेनार्थो न धनेन न बन्धुभिः ४६
आढ्यानां मांसपरमं मध्यानां गोरसोत्तरम्
लवणोत्तरं दरिद्राणां भोजनं भरतर्षभ ४७
सम्पन्नतरमेवान्नं दरिद्रा भुञ्जते सदा
क्षुत्स्वादुतां जनयति सा चाढ्येषु सुदुर्लभा ४८
प्रायेण श्रीमतां लोके भोक्तुं शक्तिर्न विद्यते
दरिद्राणां तु राजेन्द्र अपि काष्ठं हि जीर्यते ४९
अवृत्तिर्भयमन्त्यानां मध्यानां मरणाद्भयम्
उत्तमानां तु मर्त्यानामवमानात्परं भयम् ५०

एश्वर्यमद पापिष्ठा मदाः पान मदादयः
एश्वर्यमदमत्तोहि नापतित्वा विबुध्यते ५१
इन्द्रियैरिन्द्रियार्थेषु वर्तमानैरनिग्रहैः
तैरयं ताप्यते लोको नक्षत्राणि ग्रहैरिव ५२
यो जितः पञ्चवर्गेण सहजेनात्मकर्शिना
आपदस्तस्य वर्धन्ते शुक्लपक्ष इवोडुराड् ५३
अविजित्य य आत्मानममात्यान्विजिगीषते
अमित्रान्वाजितामात्यः सोऽवशः परिहीयते ५४
आत्मानमेव प्रथमं देशरूपेण यो जयेत्
ततोऽमात्यानमित्रांश्च न मोघं विजिगीषते ५५
वश्येन्द्रियं जितामात्यं धृतदण्डं विकारिषु
परीक्ष्यकारिणं धीरमत्यन्तं श्रीर्निषेवते ५६
रथः शरीरं पुरुषस्य राजन्नात्मा नियन्तेन्द्रियाण्यस्य चाश्वाः
तैरप्रमत्तः कुशलः सदश्वैर्दान्तैः सुखं याति रथीव धीरः ५७
एतान्यनिगृहीतानि व्यापादयितुमप्यलम्
अविधेया इवादान्ता हयाः पथि कुसारथिम् ५८
अनर्थमर्थतः पश्यन्नर्थं चैवाप्यनर्थतः
इन्द्रियैः प्रसृतो बालः सुदुःखं मन्यते सुखम् ५९
धर्मार्थौ यः परित्यज्य स्यादिन्द्रियवशानुगः
श्रीप्राणधनदारेभ्यः क्षिप्रं स परिहीयते ६०
अर्थानामीश्वरो यः स्यादिन्द्रियाणामनीश्वरः
इन्द्रियाणामनैश्वर्यादैश्वर्याद् भ्रंश्यते हि सः ६१
आत्मनात्मानमन्विच्छेन्मनोबुद्धीन्द्रियैर्यतैः
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ६२
क्षुद्राक्षेणेव जालेन झषावपिहितावुभौ
कामश्च राजन्क्रोधश्च तौ प्रज्ञानं विलुम्पतः ६३
समवेक्ष्येह धर्मार्थौ सम्भारान्योऽधिगच्छति
स वै संभृतसंभारः सततं सुखमेधते ६४
यः पञ्चाभ्यन्तराञ्शत्रूनविजित्य मतिक्षयान्
जिगीषति रिपूनन्यान्रिपवोऽभिभवन्ति तम् ६५

दृश्यन्ते हि दुरात्मानो वध्यमानाः स्वकर्मभिः
इन्द्रियाणामनीशत्वाद्राजानो राज्यविभ्रमैः ६६
असंत्यागात्पापकृतामपापांस्तुल्यो दण्डः स्पृशते मिश्रभावात्
शुष्केणार्द्रं दह्यते मिश्रभावात्तस्मात्पापैः सह सन्धिं न कुर्यात् ६७
निजानुत्पततः शत्रून्पञ्च पञ्चप्रयोजनान्
यो मोहान्न निगृह्णाति तमापद्ग्रसते नरम् ६८
अनसूयार्जवं शौचं संतोषः प्रियवादिता
दमः सत्यमनायासो न भवन्ति दुरात्मनाम् ६९
आत्मज्ञानमनायासस्तितिक्षा धर्मनित्यता
वाक्चैव गुप्ता दानं च नैतान्यन्त्येषु भारत ७०
आक्रोशपरिवादाभ्यां विहिंसन्त्यबुधा बुधान्
वक्ता पापमुपादत्ते क्षममाणो विमुच्यते ७१
हिंसा बलमसाधूनां राज्ञां दण्डविधिर्बलम्
शुश्रूषा तु बलं स्त्रीणां क्षमा गुणवतां बलम् ७२
वाक्संयमो हि नृपते सुदुष्करतमो मतः
अर्थवच्च विचित्रं च न शक्यं बहु भाषितुम् ७३
अभ्यावहति कल्याणं विविधा वाक्सुभाषिता
सैव दुर्भाषिता राजन्ननर्थायोपपद्यते ७४
संरोहति शरैर्विद्धं वनं परशुना हतम्
वाचा दुरुक्तं बीभत्सं न संरोहति वाक्क्षतम् ७५
कर्णिनालीकनाराचा निर्हरन्ति शरीरतः
वाक्शल्यस्तु न निर्हर्तुं शक्यो हृदिशयो हि सः ७६
वाक्सायका वदनान्निष्पतन्ति यैराहतः शोचति रात्र्यहानि
परस्य नामर्मसु ते पतन्ति तान्पण्डितो नावसृजेत्परेषु ७७
यस्मै देवाः प्रयच्छन्ति पुरुषाय पराभवम्
बुद्धिं तस्यापकर्षन्ति सोऽपाचीनानि पश्यति ७८
बुद्धौ कलुषभूतायां विनाशे प्रत्युपस्थिते
अनयो नयसंकाशो हृदयान्नापसर्पति ७९
सेयं बुद्धिः परीता ते पुत्राणां तव भारत
पाण्डवानां विरोधेन न चैनामवबुध्यसे ८०

राजा लक्षणसम्पन्नस्त्रैलोक्यस्यापि यो भवेत्
शिष्यस्ते शासिता सोऽस्तु धृतराष्ट्र युधिष्ठिरः ८१
अतीव सर्वान्पुत्रांस्ते भागधेयपुरस्कृतः
तेजसा प्रज्ञया चैव युक्तो धर्मार्थतत्त्ववित् ८२
आनृशंस्यादनुक्रोशाद्योऽसौ धर्मभृतां वरः
गौरवात्तव राजेन्द्र बहून्क्लेशांस्तितिक्षति ८३
इति श्रीमहाभारते उद्योगपर्वणि चतुस्त्रिंशोऽध्यायः ३४

## पञ्चत्रिंशोऽध्यायः

धृतराष्ट्र उवाच
ब्रूहि भूयो महाबुद्धे धर्मार्थसहितं वचः
शृणवतो नास्ति मे तृप्तिर्विचित्राणीह भाषसे १
विदुर उवाच
सर्वतीर्थेषु वा स्नानं सर्वभूतेषु चार्जवम्
उभे एते समे स्यातामार्जवं वा विशिष्यते २
आर्जवं प्रतिपद्यस्व पुत्रेषु सततं विभो
इह कीर्तिं परां प्राप्य प्रेत्य स्वर्गमवाप्स्यसि ३
यावत्कीर्तिर्मनुष्यस्य पुण्या लोकेषु गीयते
तावत्स पुरुषव्याघ्र स्वर्गलोके महीयते ४
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
विरोचनस्य संवादं केशिन्यर्थे सुधन्वना ५
केशिन्युवाच
किं ब्राह्मणाः स्विच्छ्रेयांसो दितिजाः स्विद्विरोचन
अथ केन स्म पर्यङ्कं सुधन्वा नाधिरोहति ६
विरोचन उवाच
प्राजापत्या हि वै श्रेष्ठा वयं केशिनि सत्तमाः
अस्माकं खल्विमे लोकाः के देवाः के द्विजातयः ७
केशिन्युवाच
इहैवास्स्व प्रतीक्षाव उपस्थाने विरोचन
सुधन्वा प्रातरागन्ता पश्येयं वां समागतौ ८

विरोचन उवाच
तथा भद्रे करिष्यामि यथा त्वं भीरु भाषसे
सुधन्वानं च मां चैव प्रातर्द्रष्टासि संगतौ ९
सुधन्वोवाच
अन्वालभे हिरण्मयं प्राह्लादेऽह तवासनम्
एकत्वमुपसम्पन्नो न त्वासेयं त्वया सह १०
विरोचन उवाच
अन्वाहरन्तु फलकं कूर्चं वाप्यथ वा बृसीम्
सुधन्वन्न त्वमर्होऽसि मया सह समासनम् ११
सुधन्वोवाच
पितापि ते समासीनमुपासीतैव मामधः
बालः सुखैधितो गेहे न त्वं किंचन बुध्यसे १२
विरोचन उवाच
हिरण्यं च गवाश्वं च यद्वित्तमसुरेषु नः
सुधन्वन्विपणे तेन प्रश्नं पृच्छाव ये विदुः १३
सुधन्वोवाच
हिरण्यं च गवाश्वं च तवैवास्तु विरोचन
प्राणयोस्तु पणं कृत्वा प्रश्नं पृच्छाव ये विदुः १४
विरोचन उवाच
आवां कुत्र गमिष्यावः प्राणयोर्विपणे कृते
न हि देवेष्वहं स्थाता न मनुष्येषु कर्हिचित् १५
सुधन्वोवाच
पितरं ते गमिष्यावः प्राणयोर्विपणे कृते
पुत्रस्यापि स हेतोर्हि प्रह्रादो नानृतं वदेत् १६
प्रह्राद उवाच
इमौ तौ सम्प्रदृश्येते याभ्यां न चरितं सह
आशीविषाविव क्रुद्धावेकमार्गमिहागतौ १७
किं वै सहैव चरतो न पुरा चरतः सह
विरोचनैतत्पृच्छामि किं ते सख्यं सुधन्वना १८
विरोचन उवाच

न मे सुधन्वना सख्यं प्राणयोर्विपणावहे
प्रह्राद तत्त्वां पृच्छामि मा प्रश्नमनृतं वदीः १९
प्रह्राद उवाच
उदकं मधुपर्कं चाप्यानयन्तु सुधन्वने
ब्रह्मन्नभ्यर्चनीयोऽसि श्वेता गौः पीवरीकृता २०
सुधन्वोवाच
उदकं मधुपर्कं च पथ एवार्पितं मम
प्रह्राद त्वं तु नौ प्रश्नं तथ्यं प्रब्रूहि पृच्छतोः २१
प्रह्राद उवाच
पुत्रो वान्यो भवान्ब्रह्मन्साक्ष्ये चैव भवेत्स्थितः
तयोर्विवदतोः प्रश्नं कथमस्मद्विधो वदेत् २२
अथ यो नैव प्रब्रूयात्सत्यं वा यदि वानृतम्
एतत्सुधन्वन्पृच्छामि दुर्विवक्ता स्म किं वसेत् २३
सुधन्वोवाच
यां रात्रिमधिविन्ना स्त्री यां चैवाक्षपराजितः
यां च भाराभितप्ताङ्गो दुर्विवक्ता स्म तां वसेत् २४
नगरे प्रतिरुद्धः सन्बहिर्द्वारि बुभुक्षितः
अमित्रान्भूयसः पश्यन्दुर्विवक्ता स्म तां वसेत् २५
पञ्च पश्वनृते हन्ति दश हन्ति गवानृते
शतमश्वानृते हन्ति सहस्रं पुरुषानृते २६
हन्ति जातानजातांश्च हिरण्यार्थेऽनृतं वदन्
सर्वं भूम्यनृते हन्ति मा स्म भूम्यनृतं वदीः २७
प्रह्राद उवाच
मत्तः श्रेयानङ्गिरा वै सुधन्वा त्वद्विरोचन
मातास्य श्रेयसी मातुस्तस्मात्त्वं तेन वै जितः २८
विरोचन सुधन्वायं प्राणानामीश्वरस्तव
सुधन्वन्पुनरिच्छामि त्वया दत्तं विरोचनम् २९
सुधन्वोवाच
यद्धर्ममवृणीथास्त्वं न कामादनृतं वदीः
पुनर्ददामि ते तस्मात्पुत्रं प्रह्राद दुर्लभम् ३०

एष प्रह्राद पुत्रस्ते मया दत्तो विरोचनः
पादप्रक्षालनं कुर्यात्कुमार्याः संनिधौ मम ३१
विदुर उवाच
तस्माद्राजेन्द्र भूम्यर्थे नानृतं वक्तुमर्हसि
मा गमः ससुतामात्योऽत्ययं पुत्राननुभ्रमन् ३२
न देवा यष्टिमादाय रक्षन्ति पशुपालवत्
यं तु रक्षितुमिच्छन्ति बुद्ध्या संविभजन्ति तम् ३३
यथा यथा हि पुरुषः कल्याणे कुरुते मनः
तथा तथास्य सर्वार्थाः सिद्ध्यन्ते नात्र संशयः ३४
न छन्दांसि वृजिनात्तारयन्ति मायाविनं मायया वर्तमानम्
नीडं शकुन्ता इव जातपक्षाश्छन्दांस्येनं प्रजहत्यन्तकाले ३५
मत्तापानं कलहं पूगवैरं भार्यापत्योरन्तरं ज्ञातिभेदम्
राजद्विष्टं स्त्रीपुमांसोर्विवादं वर्ज्यान्याहुर्यश्च पन्थाः प्रदुष्टः ३६
सामुद्रिकं वणिजं चोरपूर्वं शलाकधूर्तं च चिकित्सकं च
अरिं च मित्रं च कुशीलवं च नैतान्साक्ष्येष्वधिकुर्वीत सप्त ३७
मानाग्निहोत्रमुत मानमौनं मानेनाधीतमुत मानयज्ञः
एतानि चत्वार्यभयंकराणि भयं प्रयच्छन्त्ययथाकृतानि ३८
अगारदाही गरदः कुण्डाशी सोमविक्रयी
पर्वकारश्च सूची च मित्रध्रुक्पारदारिकः ३९
भ्रूणहा गुरुतल्पी च यश्च स्यात्पानपो द्विजः
अतितीक्ष्णश्च काकश्च नास्तिको वेदनिन्दकः ४०
स्रुवप्रग्रहणो व्रात्यः कीनाशश्चार्थवानपि
रक्षेत्युक्तश्च यो हिंस्यात्सर्वे ब्रह्महणैः समाः ४१
तृणोल्कया ज्ञायते जातरूपं युगे भद्रो व्यवहारेण साधुः
शूरो भयेष्वर्थकृच्छ्रेषु धीरः कृच्छ्रास्वापत्सु सुहृदश्चारयश्च ४२
जरा रूपं हरति हि धैर्यमाशा मृत्युः प्राणान्धर्मचर्यामसूया
क्रोधः श्रियं शीलमनार्यसेवा ह्रियं कामः सर्वमेवाभिमानः ४३
श्रीर्मङ्गलात्प्रभवति प्रागल्भ्यात्सम्प्रवर्धते
दाक्ष्यात्तु कुरुते मूलं संयमात्प्रतितिष्ठति ४४
अष्टौ गुणाः पुरुषं दीपयन्ति प्रज्ञा च कौल्यं च दमः श्रुतं च

पराक्रमश्चाबहुभाषिता च दानं यथाशक्ति कृतज्ञता च ४५
एतान्गुणांस्तात महानुभावानेको गुणः संश्रयते प्रसह्य
राजा यदा सत्कुरुते मनुष्यं सर्वान्गुणानेष गुणोऽतिभाति ४६
अष्टौ नृपेमानि मनुष्यलोके स्वर्गस्य लोकस्य निदर्शनानि
चत्वार्येषामन्ववेतानि सद्भिश्चत्वार्येषामन्ववयन्ति सन्तः ४७
यज्ञो दानमध्ययनं तपश्च चत्वार्येतान्यन्ववेतानि सद्भिः
दमः सत्यमार्जवमानृशंस्यं चत्वार्येतान्यन्ववयन्ति सन्तः ४८
न सा सभा यत्र न सन्ति वृद्धा न ते वृद्धा ये न वदन्ति धर्मम्
नासौ धर्मो यत्र न सत्यमस्ति न तत्सत्यं यच्छलेनानुविद्धम् ४९
सत्यं रूपं श्रुतं विद्या कौल्यं शीलं बलं धनम्
शौर्यंच चित्रभाष्यं च दश संसर्गयोनयः ५०
पापं कुर्वन्पापकीर्तिः पापमेवाश्नुते फलम्
पुण्यं कुर्वन्पुण्यकीर्तिः पुण्यमेवाश्नुते फलम् ५१
पापं प्रज्ञां नाशयति क्रियमाणं पुनःपुनः
नष्टप्रज्ञः पापमेव नित्यमारभते नरः ५२
पुण्यं प्रज्ञां वर्धयति क्रियमाणं पुनः पुनः
वृद्धप्रज्ञः पुण्यमेव नित्यमारभते नरः ५३
असूयको दन्दशूको निष्ठुरो वैरकृन्नरः
स कृच्छ्रं महदाप्नोति नचिरात्पापमाचरन् ५४
अनसूयः कृतप्रज्ञः शोभनान्याचरन्सदा
अकृच्छ्रात्सुखमाप्नोति सर्वत्र च विराजते ५५
प्रज्ञामेवागमयति यः प्राज्ञेभ्यः स पण्डितः
प्राज्ञो ह्यवाप्य धर्मार्थौ शक्नोति सुखमेधितुम् ५६
दिवसेनैव तत्कुर्याद्येन रात्रौ सुखं वसेत्
अष्टमासेन तत्कुर्याद्येन वर्षाः सुखं वसेत् ५७
पूर्वे वयसि तत्कुर्याद्येन वृद्धः सुखं वसेत्
यावज्जीवेन तत्कुर्याद्येन प्रेत्य सुखं वसेत् ५८
जीर्णमन्नं प्रशंसन्ति भार्यां च गतयौवनाम्
शूरं विगतसंग्रामं गतपारं तपस्विनम् ५९
धनेनाधर्मलब्धेन यच्छिद्रमपिधीयते

असंवृतं तद्भवति ततोऽन्यदवदीर्यते ६०
गुरुरात्मवतां शास्ता शास्ता राजा दुरात्मनाम्
अथ प्रच्छन्नपापानां शास्ता वैवस्वतो यमः ६१
ऋषीणां च नदीनां च कुलानां च महात्मनाम्
प्रभवो नाधिगन्तव्यः स्त्रीणां दुश्चरितस्य च ६२
द्विजातिपूजाभिरतो दाता ज्ञातिषु चार्जवी
क्षत्रियः स्वर्गभाग्राजंश्चिरं पालयते महीम् ६३
सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः
शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् ६४
बुद्धिश्रेष्ठानि कर्माणि बाहुमध्यानि भारत
तानि जङ्घाजघन्यानि भारप्रत्यवराणि च ६५
दुर्योधने च शकुनौ मूढे दुःशासने तथा
कर्णे चैश्वर्यमाधाय कथं त्वं भूतिमिच्छसि ६६
सर्वैर्गुणैरुपेताश्च पाण्डवा भरतर्षभ
पितृवत्त्वयि वर्तन्ते तेषु वर्तस्व पुत्रवत् ६७
इति श्रीमहाभारते उद्योगपर्वणि पञ्चत्रिंशोऽध्यायः ३५

षट्त्रिंशोऽध्यायः

विदुर उवाच
अत्रैवोदाहरन्तीममितिहासं पुरातनम्
आत्रेयस्य च संवादं साध्यानां चेति नः श्रुतम् १
चरन्तं हंसरूपेण महर्षिं संशितव्रतम्
साध्या देवा महाप्राज्ञं पर्यपृच्छन्त वै पुरा २
साध्या देवा वयमस्मो महर्षे दृष्ट्वा भवन्तं न शक्नुमोऽनुमातुम्
श्रुतेन धीरो बुद्धिमांस्त्वं मतो नः काव्यां वाचं वक्तुमर्हस्युदाराम् ३
हंस उवाच
एतत्कार्यममराः संश्रुतं मे धृतिः शमः सत्यधर्मानुवृत्तिः
ग्रन्थिं विनीय हृदयस्य सर्वं प्रियाप्रिये चात्मवशं नयीत ४
आक्रुश्यमानो नाक्रोशेन्मन्युरेव तितिक्षतः
आक्रोष्टारं निर्दहति सुकृतं चास्य विन्दति ५

नाक्रोशी स्यान्नावमानी परस्य मित्रद्रोही नोत नीचोपसेवी
न चातिमानी न च हीनवृत्तो रूक्षां वाचं रुशतीं वर्जयीत ६
मर्माण्यस्थीनि हृदयं तथासून्घोरा वाचो निर्दहन्तीह पुंसाम्
तस्माद्वाचं रुशतीं रूक्षरूपां धर्मारामो नित्यशो वर्जयीत ७
अरुन्तुदं परुषं रूक्षवाचं वाक्कण्टकैर्वितुदन्तं मनुष्यान्
विद्यादलक्ष्मीकतमं जनानां मुखे निबद्धां निर्ऋतिं वहन्तम् ८
परश्चेदेनमधिविध्येत बाणैर्भृशं सुतीक्ष्णैरनलार्कदीप्तैः
विरिच्यमानोऽप्यतिरिच्यमानो विद्यात्कविः सुकृतं मे दधाति ९
यदि सन्तं सेवते यद्यसन्तं तपस्विनं यदि वा स्तेनमेव
वासो यथा रङ्गवशं प्रयाति तथा स तेषां वशमभ्युपैति १०
वादं तु यो न प्रवदेन्न वादयेद्यो नाहतः प्रतिहन्यान्न घातयेत्
यो हन्तुकामस्य न पापमिच्छेत्तस्मै देवाः स्पृहयन्त्यागताय ११
अव्याहृतं व्याहृताच्छ्रेय आहुः सत्यं वदेद्व्याहृतं तद्द्वितीयम्
प्रियं वदेद्व्याहृतं तत्तृतीयं धर्म्यं वदेद्व्याहृतं तच्चतुर्थम् १२
यादृशैः संविवदते यादृशांश्चोपसेवते
यादृगिच्छेच्च भवितुं तादृग्भवति पूरुषः १३
यतो यतो निवर्तते ततस्ततो विमुच्यते
निवर्तनाद्धि सर्वतो न वेत्ति दुःखमण्वपि १४
न जीयते नोत जिगीषतेऽन्यान्न वैरकृच्चाप्रतिघातकश्च
निन्दाप्रशंसासु समस्वभावो न शोचते हृष्यति नैव चायम् १५
भावमिच्छति सर्वस्य नाभावे कुरुते मतिम्
सत्यवादी मृदुर्दान्तो यः स उत्तमपूरुषः १६
नानर्थकं सान्त्वयति प्रतिज्ञाय ददाति च
राद्धापराद्धे जानाति यः स मध्यमपूरुषः १७
दुःशासनस्तूपहन्ता न शास्ता नावर्तते मन्युवशात्कृतघ्नः
न कस्यचिन्मित्रमथो दुरात्मा कलाश्चैता अधमस्येह पुंसः १८
न श्रद्दधाति कल्याणं परेभ्योऽप्यात्मशङ्कितः
निराकरोति मित्राणि यो वै सोऽधमपूरुषः १९
उत्तमानेव सेवेत प्राप्ते काले तु मध्यमान्
अधमांस्तु न सेवेत य इच्छेच्छ्रेय आत्मनः २०

प्राप्नोति वै वित्तमसद्बलेन नित्योत्थानात्प्रज्ञया पौरुषेण
न त्वेव सम्यग्लभते प्रशंसां न वृत्तमाप्नोति महाकुलानाम् २१
धृतराष्ट्र उवाच
महाकुलानां स्पृहयन्ति देवा धर्मार्थवृद्धाश्च बहुश्रुताश्च
पृच्छामि त्वां विदुर प्रश्नमेतं भवन्ति वै कानि महाकुलानि २२
विदुर उवाच
तपो दमो ब्रह्मवित्वं वितानाः पुण्या विवाहाः सततान्नदानम्
येष्वेवैते सप्त गुणा भवन्ति सम्यग्वृत्तास्तानि महाकुलानि २३
येषां न वृत्तं व्यथते न योनिर्वृत्तप्रसादेन चरन्ति धर्मम्
ये कीर्तिमिच्छन्ति कुले विशिष्टां त्यक्तानृतास्तानि महाकुलानि २४
अनिज्ययाविवाहैश्च वेदस्योत्सादनेन च
कुलान्यकुलतां यान्ति धर्मस्यातिक्रमेण च २५
देवद्रव्यविनाशेन ब्रह्मस्वहरणेन च
कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च २६
ब्राह्मणानां परिभवात्परिवादाच्च भारत
कुलान्यकुलतां यान्ति न्यासापहरणेन च २७
कुलानि समुपेतानि गोभिः पुरुषतोऽश्वतः
कुलसंख्यां न गच्छन्ति यानि हीनानि वृत्ततः २८
वृत्ततस्त्वविहीनानि कुलान्यल्पधनान्यपि
कुलसंख्यां तु गच्छन्ति कर्षन्ति च महद्यशः २९
मा नः कुले वैरकृत्कश्चिदस्तु राजामात्यो मा परस्वापहारी
मित्रद्रोही नैकृतिकोऽनृती वा पूर्वाशी वा पितृदेवातिथिभ्यः ३०
यश्च नो ब्राह्मणं हन्याद्यश्च नो ब्राह्मणान्द्विषेत्
न नः स समितिं गच्छेद्यश्च नो निर्वपेत्कृषिम् ३१
तृणानि भूमिरुदकं वाक्चतुर्थी च सूनृता
सतामेतानि गेहेषुनोच्छिद्यन्ते कदाचन ३२
श्रद्धया परया राजन्नुपनीतानि सत्कृतिम्
प्रवृत्तानि महाप्राज्ञ धर्मिणां पुण्यकर्मणाम् ३३
सूक्ष्मोऽपि भारं नृपते स्यन्दनो वै शक्तो वोढुं न तथान्ये महीजाः
एवं युक्ता भारसहा भवन्ति महाकुलीना न तथान्ये मनुष्याः ३४

न तन्मित्रं यस्य कोपाद्बिभेति यद्वा मित्रं शङ्कितेनोपचर्यम्
यस्मिन्मित्रे पितरीवाश्वसीत तद्वै मित्रं सङ्गतानीतराणि ३५
यदि चेदप्यसम्बन्धो मित्रभावेन वर्तते
स एव बन्धुस्तन्मित्रं सा गतिस्तत्परायणम् ३६
चलचित्तस्य वै पुंसो वृद्धाननुपसेवतः
पारिप्लवमतेर्नित्यमध्रुवो मित्रसंग्रहः ३७
चलचित्तमनात्मानमिन्द्रियाणां वशानुगम्
अर्थाः समतिवर्तन्ते हंसाः शुष्कं सरो यथा ३८
अकस्मादेव कुप्यन्ति प्रसीदन्त्यनिमित्ततः
शीलमेतदसाधूनामभ्रं पारिप्लवं यथा ३९
सत्कृताश्च कृतार्थाश्च मित्राणां न भवन्ति ये
तान्मृतानपि क्रव्यादाः कृतघ्नान्नोपभुञ्जते ४०
अर्थयेदेव मित्राणि सति वासति वा धने
नानर्थयन्विजानाति मित्राणां सारफल्गुताम् ४१
संतापाद्भ्रश्यते रूपं संतापाद्भ्रश्यते बलम्
संतापाद्भ्रश्यते ज्ञानं संतापाद्व्याधिमृच्छति ४२
अनवाप्यं च शोकेन शरीरं चोपतप्यते
अमित्राश्च प्रहृष्यन्ति मा स्म शोके मनः कृथाः ४३
पुनर्नरो म्रियते जायतेच पुनर्नरो हीयते वर्धते पुनः
पुनर्नरो याचति याच्यते च पुनर्नरः शोचति शोच्यते पुनः ४४
सुखं च दुःखं च भवाभवौ च लाभालाभौ मरणं जीवितं च
पर्यायशः सर्वमिह स्पृशन्ति तस्माद्धीरो नैव हृष्येन्न शोचेत् ४५
चलानि हीमानि षडिन्द्रियाणि तेषां यद्यद्वर्तते यत्र यत्र
ततस्ततः स्रवते बुद्धिरस्य छिद्रोदकुम्भादिव नित्यमम्भः ४६
धृतराष्ट्र उवाच
तनुरुच्चः शिखी राजा मिथ्योपचरितो मया
मन्दानां मम पुत्राणां युद्धेनान्तं करिष्यति ४७
नित्योद्विग्नमिदं सर्वं नित्योद्विग्नमिदं मनः
यत्तत्पदमनुद्विग्नं तन्मे वद महामते ४८
विदुर उवाच

नान्यत्र विद्यातपसोर्नान्यत्रेन्द्रियनिग्रहात्
नान्यत्र लोभसंत्यागाच्छान्तिं पश्यामि तेऽनघ ४९
बुद्ध्या भयं प्रणुदति तपसा विन्दते महत्
गुरुशुश्रूषया ज्ञानं शान्तिं त्यागेन विन्दति ५०
अनाश्रिता दानपुण्यं वेदपुण्यमनाश्रिताः
रागद्वेषविनिर्मुक्ता विचरन्तीह मोक्षिणः ५१
स्वधीतस्य सुयुद्धस्य सुकृतस्य च कर्मणः
तपसश्च सुतप्तस्य तस्यान्ते सुखमेधते ५२
स्वास्तीर्णानि शयनानि प्रपन्ना न वै भिन्ना जातु निद्रां लभन्ते
न स्त्रीषु राजन्रतिमाप्नुवन्ति न मागधैः स्तूयमाना न सूतैः ५३
न वै भिन्ना जातु चरन्ति धर्मं न वै सुखं प्राप्नुवन्तीह भिन्नाः
न वै भिन्ना गौरवं मानयन्ति न वै भिन्नाः प्रशमं रोचयन्ति ५४
न वै तेषां स्वदते पथ्यमुक्तं योगक्षेमं कल्पते नोत तेषाम्
भिन्नानां वै मनुजेन्द्र परायणं न विद्यते किंचिदन्यद्विनाशात् ५५
संभाव्यं गोषु संपन्नं सम्भाव्यं ब्राह्मणे तपः
सम्भाव्यंस्त्रीषु चापल्यं सम्भाव्यं ज्ञातितो भयम् ५६
तन्तवोऽप्यायता नित्यं तन्तवो बहुलाः समाः
बहून्बहुत्वादायासान्सहन्तीत्युपमा सताम् ५७
धूमायन्ते व्यपेतानि ज्वलन्ति सहितानि च
धृतराष्ट्रोल्मुकानीव ज्ञातयो भरतर्षभ ५८
ब्राह्मणेषु च ये शूराः स्त्रीषु ज्ञातिषु गोषु च
वृन्तादिव फलं पक्वं धृतराष्ट्र पतन्तिते ५९
महानप्येकजो वृक्षो बलवान्सुप्रतिष्ठितः
प्रसह्य एव वातेन शाखास्कन्धं विमर्दितुम् ६०
अथ ये सहिता वृक्षाः सङ्घशः सुप्रतिष्ठिताः
ते हि शीघ्रतमान्वातान्सहन्तेऽन्योन्यसंश्रयात् ६१
एवं मनुष्यमप्येकं गुणैरपि समन्वितम्
शक्यं द्विषन्तो मन्यन्ते वायुर्द्रुममिवैकजम् ६२
अन्योन्यसमुपष्टम्भादन्योन्यापाश्रयेण च
ज्ञातयः सम्प्रवर्धन्ते सरसीवोत्पलान्युत ६३

अवध्या ब्राह्मणा गावो स्त्रियो बालाश्च ज्ञातयः
येषां चान्नानि भुञ्जीत ये च स्युः शरणागताः ६४
न मनुष्ये गुणः कश्चिदन्यो धनवतामपि
अनातुरत्वाद्भद्रं ते मृतकल्पा हि रोगिणः ६५
अव्याधिजं कटुकं शीर्षरोगं पापानुबन्धं परुषं तीक्ष्णमुग्रम्
सतां पेयं यन्न पिबन्त्यसन्तो मन्युं महाराज पिब प्रशाम्य ६६
रोगार्दिता न फलान्याद्रियन्ते न वै लभन्ते विषयेषु तत्त्वम्
दुःखोपेता रोगिणो नित्यमेव न बुध्यन्ते धनभोगान्न सौख्यम् ६७
पुरा ह्युक्तो नाकरोस्त्वं वचो मे द्यूते जितां द्रौपदीं प्रेक्ष्य राजन्
दुर्योधनं वारयेत्यक्षवत्यां कितवत्वं पण्डिता वर्जयन्ति ६८
न तद्बलं यन्मृदुना विरुध्यते मिश्रो धर्मस्तरसा सेवितव्यः
प्रध्वंसिनी क्रूरसमाहिता श्रीर्मृदुप्रौढा गच्छति पुत्रपौत्रान् ६९
धार्तराष्ट्राः पाण्डवान्पालयन्तु पाण्डोः सुतास्तव पुत्रांश्च पान्तु
एकारिमित्राः कुरवो ह्येकमन्त्रा जीवन्तु राजन्सुखिनः समृद्धाः ७०
मेढीभूतः कौरवाणां त्वमद्य त्वय्याधीनं कुरुकुलमाजमीढ
पार्थान्बालान्वनवासप्रतप्तान्गोपायस्व स्वं यशस्तात रक्षन् ७१
संधत्स्व त्वं कौरवान्पाण्डुपुत्रैर्मा तेऽन्तरं रिपवःप्रार्थयन्तु
सत्ये स्थितास्ते नरदेव सर्वे दुर्योधनं स्थापय त्वं नरेन्द्र ७२
इति श्रीमहाभारते उद्योगपर्वणि षट्त्रिंशोऽध्यायः ३६

सप्तत्रिंशोऽध्यायः

विदुर उवाच
सप्तदशेमान्राजेन्द्र मनुः स्वायम्भुवोऽब्रवीत्
वैचित्रवीर्य पुरुषानाकाशं मुष्टिभिर्घ्नतः १
तानेवेन्द्रस्य च धनुरनाम्यं नमतोऽब्रवीत्
अथो मरीचिनः पादाननाम्यान्नमतस्तथा २
यश्चाशिष्यं शासति यश्च कुप्यते यश्चातिवेलं भजते द्विषन्तम्
स्त्रियश्च योऽरक्षति भद्रमस्तु ते यश्चायाच्यं याचति यश्च कत्थते ३
यश्चाभिजातः प्रकरोत्यकार्यं यश्चाबलो बलिना नित्यवैरी
अश्रद्दधानाय च यो ब्रवीति यश्चाकाम्यं कामयते नरेन्द्र ४

वध्वा हासं श्वशुरो यश्च मन्यते वध्वा वसन्नुत यो मानकामः
परक्षेत्रे निर्वपति यश्च बीजं स्त्रियं च यः परिवदतेऽतिवेलम् ५
यश्चैव लब्ध्वा न स्मरामीत्युवाच दत्त्वा च यः कत्थति याच्यमानः
यश्चासतः सान्त्वमुपासतीह एतेऽनुयान्त्यनिलं पाशहस्ताः ६
यस्मिन्यथा वर्तते यो मनुष्यस्तस्मिंस्तथा वर्तितव्यं स धर्मः
मायाचारो माययावर्तितव्यः साध्वाचारः साधुना प्रत्युदेयः ७
धृतराष्ट्र उवाच
शतायुरुक्तः पुरुषः सर्ववेदेषु वै यदा
नाप्नोत्यथ च तत्सर्वमायुः केनेह हेतुना ८
विदुर उवाच
अतिवादोऽतिमानश्च तथात्यागो नराधिपः
क्रोधश्चातिविवित्सा च मित्रद्रोहश्च तानि षट् ९
एत एवासयस्तीक्ष्णाः कृन्तन्त्यायूंषि देहिनाम्
एतानि मानवान्घ्नन्ति न मृत्युर्भद्रमस्तु ते १०
विश्वस्तस्यैति यो दारान्यश्चापि गुरुतल्पगः
वृषलीपतिर्द्विजो यश्च पानपश्चैव भारत ११
शरणागतहा चैव सर्वे ब्रह्महणैः समाः
एतैः समेत्य कर्तव्यं प्रायश्चित्तमिति श्रुतिः १२
गृही वदान्योऽनपविद्धवाक्यः शेषान्नभोक्ताप्यविहिंसकश्च
नानर्थकृत्त्यक्तकलिकृतज्ञः सत्यो मृदुः स्वर्गमुपैति विद्वान् १३
सुलभाः पुरुषा राजन्सततं प्रियवादिनः
अप्रियस्य तु पथ्यस्य वक्ता श्रोता च दुर्लभः १४
योहि धर्मं व्यपाश्रित्य हित्वा भर्तुः प्रियाप्रिये
अप्रियाण्याह पथ्यानि तेन राजा सहायवान् १५
त्यजेत्कुलार्थे पुरुषं ग्रामस्यार्थे कुलं त्यजेत्
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् १६
आपदर्थं धनं रक्षेद्दारान्रक्षेद्धनैरपि
आत्मानं सततं रक्षेद्दारैरपि धनैरपि १७
उक्तं मया द्यूतकालेऽपि राजन्नैवं युक्तं वचनं प्रातिपीय
तदौषधं पथ्यमिवातुरस्य न रोचते तव वैचित्रवीर्य १८

काकैरिमांश्चित्रबर्हान्मयूरान्पराजैष्ठाः पाण्डवान्धार्तराष्ट्रैः
हित्वा सिंहान्क्रोष्टुकान्गूहमानः प्राप्ते काले शोचिता त्वं नरेन्द्र १९
यस्तात न क्रुध्यति सर्वकालं भृत्यस्य भक्तस्य हिते रतस्य
तस्मिन्भृत्या भर्तरि विश्वसन्ति न चैनमापत्सु परित्यजन्ति २०
न भृत्यानां वृत्तिसंरोधनेन बाह्यं जनं संजिघृक्षेदपूर्वम्
त्यजन्ति ह्येनमुचितावरुद्धाः स्निग्धा ह्यमात्याः परिहीन भोगाः २१
कृत्यानि पूर्वं परिसंख्याय सर्वाण्यायव्ययावनुरूपां च वृत्तिम्
संगृह्णीयादनुरूपान्सहायान्सहायसाध्यानि हि दुष्कराणि २२
अभिप्रायं यो विदित्वा तु भर्तुः सर्वाणि कार्याणि करोत्यतन्द्रीः
वक्ता हितानामनुरक्त आर्यः शक्तिज्ञ आत्मेव हि सोऽनुकम्प्यः २३
वाक्यं तु यो नाद्रियतेऽनुशिष्टः प्रत्याह यश्चापि नियुज्यमानः
प्रज्ञाभिमानी प्रतिकूलवादी त्याज्यःस तादृक्त्वरयैव भृत्यः २४
अस्तब्धमक्लीबमदीर्घसूत्रं सानुक्रोशं श्लक्ष्णमहार्यमन्यैः
अरोगजातीयमुदारवाक्यं दूतं वदन्त्यष्टगुणोपपन्नम् २५
न विश्वासाज्जातु परस्य गेहं गच्छेन्नरश्चेतयानो विकाले
न चत्वरे निशि तिष्ठेन्निगूढो न राजन्यां योषितं प्रार्थयीत २६
न निह्नवं सत्रगतस्य गच्छेत्संसृष्टमन्त्रस्य कुसङ्गतस्य
न च ब्रूयान्नाश्वसामि त्वयीति सकारणं व्यपदेशं तु कुर्यात् २७
घृणी राजा पुंश्चली राजभृत्यः पुत्रो भ्राता विधवा बालपुत्रा
सेनाजीवी चोद्धृत भक्त एव व्यवहारे वै वर्जनीयाः स्युरेते २८
गुणा दश स्नानशीलंभजन्ते बलं रूपं स्वरवर्णप्रशुद्धिः
स्पर्शश्च गन्धश्च विशुद्धता च श्रीः सौकुमार्यं प्रवराश्च नार्यः २९
गुणाश्च षण्मितभुक्तं भजन्ते आरोग्यमायुश्च सुखं बलं च
अनाविलं चास्य भवेदपत्यं न चैनमाद्यून इति क्षिपन्ति ३०
अकर्मशीलं च महाशनं च लोकद्विष्टं बहुमायं नृशंसम्
अदेशकालज्ञमनिष्टवेषमेतान्गृहे न प्रतिवासयीत ३१
कदर्यमाक्रोशकमश्रुतं च वराकसंभूतममान्यमानिनम्
निष्ठूरिणं कृतवैरं कृतघ्नमेतान्भृशार्तोऽपि न जातु याचेत् ३२
संक्लिष्टकर्माणमतिप्रवादं नित्यानृतं चादृढभक्तिकं च
विकृष्टरागं बहुमानिनं चाप्येतान्न सेवेत नराधमान्षट् ३३

सहायवन्धना ह्यर्थाः सहायाश्चार्थबन्धनाः
अन्योन्यबन्धनावेतौ विनान्योन्यं न सिध्यतः ३४
उत्पाद्य पुत्राननृणांश्च कृत्वा वृत्तिं च तेभ्योऽनुविधाय कांचित्
स्थाने कुमारीः प्रतिपाद्य सर्वा अरण्यसंस्थो मुनिवद्बुभूषेत् ३५
हितं यत्सर्वभूतानामात्मनश्च सुखावहम्
तत्कुर्यादीश्वरो ह्येतन्मूलं धर्मार्थसिद्धये ३६
बुद्धिः प्रभावस्तेजश्च सत्त्वमुत्थानमेव च
व्यवसायश्च यस्य स्यात्तस्यावृत्तिभयं कुतः ३७
पश्य दोषान्पाण्डवैर्विग्रहे त्वं यत्र व्यथेरन्नपि देवाः सशक्राः
पुत्रैर्वैरं नित्यमुद्विग्नवासो यशःप्रणाशो द्विषतां च हर्षः ३८
भीष्मस्य कोपस्तव चेन्द्रकल्प द्रोणस्य राज्ञश्च युधिष्ठिरस्य
उत्सादयेल्लोकमिमं प्रवृद्धः श्वेतो ग्रहस्तिर्यगिवापतन्खे ३९
तव पुत्रशतं चैव कर्णः पञ्च च पाण्डवाः
पृथिवीमनुशासेयुरखिलां सागराम्बराम् ४०
धार्तराष्ट्रा वनं राजन्व्याघ्राः पाण्डुसुता मताः
मा वनं छिन्धि सव्याघ्रं मा व्याघ्रान्नीनशो वनात् ४१
न स्याद्वनमृते व्याघ्रान्व्याघ्रा न स्युर्ऋते वनम्
वनं हि रक्ष्यते व्याघ्रैर्व्याघ्रान्रक्षति काननम् ४२
न तथेच्छन्त्यकल्याणाः परेषां वेदितुं गुणान्
यथैषां ज्ञातुमिच्छन्ति नैर्गुण्यं पापचेतसः ४३
अर्थसिद्धिं परामिच्छन्धर्ममेवादितश्चरेत्
न हि धर्मादपैत्यर्थः स्वर्गलोकादिवामृतम् ४४
यस्यात्मा विरतः पापात्कल्याणे च निवेशितः
तेन सर्वमिदं बुद्धं प्रकृतिर्विकृतिश्च या ४५
यो धर्ममर्थं कामं च यथाकालं निषेवते
धर्मार्थकामसंयोगं सोऽमुत्रेह च विन्दति ४६
संनियच्छति योवेगमुत्थितं क्रोधहर्षयोः
स श्रियो भाजनं राजन्यश्चापत्सु न मुह्यति ४७
बलं पञ्चविधं नित्यं पुरुषाणां निबोध मे
यत्तु बाहुबलं नाम कनिष्ठं बलमुच्यते ४८

अमात्यलाभो भद्रं ते द्वितीयं बलमुच्यते
धनलाभस्तृतीयं तु बलमाहुर्जिगीषवः ४९
यत्त्वस्य सहजं राजन्पितृपैतामहं बलम्
अभिजातबलं नाम तच्चतुर्थं बलं स्मृतम् ५०
येन त्वेतानि सर्वाणि संगृहीतानि भारत
यद्बलानां बलं श्रेष्ठं तत्प्रज्ञाबलमुच्यते ५१
महते योऽपकाराय नरस्य प्रभवेन्नरः
तेन वैरं समासज्य दूरस्थोऽस्मीति नाश्वसेत् ५२
स्त्रीषु राजसु सर्पेषु स्वाध्याये शत्रुसेविषु
भोगे चायुषि विश्वासं कः प्राज्ञः कर्तुमर्हति ५३
प्रज्ञाशरेणाभिहतस्य जन्तोश्चिकित्सकाः सन्ति न चौषधानि
न होममन्त्रा न च मंगलानि नाथर्वणा नाप्यगदाः सुसिद्धाः ५४
सर्पश्चाग्निश्च सिंहश्च कुलपुत्रश्च भारत
नावज्ञेया मनुष्येण सर्वे ते ह्यतितेजसः ५५
अग्निस्तेजो महल्लोके गूढस्तिष्ठति दारुषु
न चोपयुङ्क्ते तद्दारु यावन्नो दीप्यते परैः ५६
स एव खलु दारुभ्यो यदा निर्मथ्य दीप्यते
तदा तच्च वनं चान्यन्निर्दहत्याशु तेजसा ५७
एवमेव कुले जाताः पावकोपमतेजसः
क्षमावन्तो निराकाराः काष्ठेऽग्निरिव शेरते ५८
लताधर्मा त्वं सपुत्रः शालाः पाण्डुसुता मताः
न लता वर्धते जातु महाद्रुममनाश्रिता ५९
वनं राजंस्त्वं सपुत्रोऽम्बिकेय सिंहान्वने पाण्डवांस्तात विद्धि
सिंहैर्विहीनं हि वनं विनश्येत्सिंहा विनश्येयुर्ऋते वनेन ६०
इति श्रीमहाभारते उद्योगपर्वणि सप्तत्रिंशोऽध्यायः ३७

## अष्टत्रिंशोऽध्यायः

विदुर उवाच
ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति
प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते १

पीठं दत्त्वा साधवेऽभ्यागताय आनीयापः परिनिर्णिज्य पादौ
सुखं पृष्ट्वा प्रतिवेद्यात्मसंस्थं ततो दद्यादन्नमवेक्ष्य धीरः २
यस्योदकं मधुपर्कं च गां च नमन्त्रवित्प्रतिगृह्णाति गेहे
लोभाद्भयादर्थकार्पण्यतो वा तस्यानर्थं जीवितमाहुरार्याः ३
चिकित्सकः शल्यकर्तावकीर्णी स्तेनः क्रूरो मद्यपो भ्रूणहा च
सेनाजीवी श्रुतिविक्रायकश्च भृशं प्रियोऽप्यतिथिर्नोदकार्हः ४
अविक्रेयं लवणं पक्वमन्नं दधि क्षीरं मधु तैलं घृतं च
तिला मांसं फलमूलानि शाकं रक्तं वासः सर्वगन्धा गुडश्च ५
अरोषणो यः समलोष्टकाञ्चनः प्रहीणशोको गतसंधिविग्रहः
निन्दाप्रशंसोपरतः प्रियाप्रिये चरन्नुदासीनवदेष भिक्षुकः ६
नीवारमूलेङ्गुदशाकवृत्तिः सुसंयतात्माग्निकार्येष्वचोद्यः
वने वसन्नतिथिष्वप्रमत्तोधुरंधरः पुण्यकृदेष तापसः ७
अपकृत्वा बुद्धिमतो दूरस्थोऽस्मीति नाश्वसेत्
दीर्घौ बुद्धिमतो बाहू याभ्यां हिंसति हिंसितः ८
न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत्
विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति ९
अनीर्ष्युर्गुप्तदारः स्यात्संविभागी प्रियंवदः
श्लक्ष्णो मधुरवाक्स्त्रीणां न चासां वशगो भवेत् १०
पूजनीया महाभागाः पुण्याश्च गृहदीप्तयः
स्त्रियः श्रियो गृहस्योक्तास्तस्माद्रक्ष्या विशेषतः ११
पितुरन्तः पुरं दद्यान्मातुर्दद्यान्महानसम्
गोषु चात्मसमं दद्यान्स्वयमेव कृषिं व्रजेत्
भृत्यैर्वणिज्याचारं च पुत्रैः सेवेत ब्राह्मणान् १२
अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम्
तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति १३
नित्यं सन्तः कुले जाताः पावकोपमतेजसः
क्षमावन्तो निराकाराः काष्ठेऽग्निरिव शेरते १४
यस्य मन्त्रं न जानन्ति बाह्याश्चाभ्यन्तराश्च ये
स राजा सर्वतश्चक्षुश्चिरमैश्वर्यमश्नुते १५
करिष्यन्न प्रभाषेत कृतान्येव च दर्शयेत्

धर्मकामार्थकार्याणि तथा मन्त्रो न भिद्यते १६
गिरिपृष्ठमुपारुह्य प्रासादं वा रहोगतः
अरण्ये निःशलाके वा तत्र मन्त्रो विधीयते १७
नासुहृत्परमं मन्त्रं भारतार्हति वेदितुम्
अपण्डितो वापि सुहृत्पण्डितो वाप्यनात्मवान्
अमात्ये ह्यर्थलिप्सा च मन्त्ररक्षणमेव च १८
कृतानि सर्वकार्याणि यस्य वा पार्षदा विदुः
गूढमन्त्रस्य नृपतेस्तस्य सिद्धिरसंशयम् १९
अप्रशस्तानि कार्याणि यो मोहादनुतिष्ठति
स तेषां विपरिभ्रंशे भ्रश्यते जीवितादपि २०
कर्मणां तु प्रशस्तानामनुष्ठानं सुखावहम्
तेषामेवाननुष्ठानं पश्चात्तापकरं महत् २१
स्थानवृद्धिक्षयज्ञस्य षाड्गुण्यविदितात्मनः
अनवज्ञातशीलस्य स्वाधीना पृथिवी नृप २२
अमोघक्रोधहर्षस्य स्वयं कृत्यान्ववेक्षिणः
आत्मप्रत्ययकोशस्य वसुधेयं वसुन्धरा २३
नाममात्रेण तुष्येत छत्रेण च महीपतिः
भृत्येभ्यो विसृजेदर्थान्नैकः सर्वहरो भवेत् २४
ब्राह्मणो ब्राह्मणं वेद भर्ता वेद स्त्रियं तथा
अमात्यं नृपतिर्वेद राजा राजानमेव च २५
न शत्रुरङ्कमापन्नो मोक्तव्यो वध्यतां गतः
अहताद्धि भयं तस्माज्जायते नचिरादिव २६
दैवतेषु च यत्नेन राजसु ब्राह्मणेषु च
नियन्तव्यः सदा क्रोधो वृद्धबालातुरेषु च २७
निरर्थं कलहं प्राज्ञो वर्जयेन्मूढसेवितम्
कीर्तिं च लभते लोके न चानर्थेन युज्यते २८
प्रसादो निष्फलो यस्य क्रोधश्चापि निरर्थकः
न तं भर्तारमिच्छन्ति षण्ढं पतिमिव स्त्रियः २९
न बुद्धिर्धनलाभाय न जाड्यमसमृद्धये
लोकपर्यायवृत्तान्तं प्राज्ञो जानाति नेतरः ३०

विद्याशीलवयोवृद्धान्बुद्धिवृद्धांश्च भारत
धनाभिजनवृद्धांश्च नित्यं मूढोऽवमन्यते ३१
अनार्य वृत्तमप्राज्ञमसूयकमधार्मिकम्
अनर्थाः क्षिप्रमायान्ति वाग्दुष्टं क्रोधनं तथा ३२
अविसंवादनं दानं समयस्याव्यतिक्रमः
आवर्तयन्ति भूतानि सम्यक्प्रणिहिता च वाक् ३३
अविसंवादको दक्षः कृतज्ञो मतिमानृजुः
अपि संक्षीणकोशोऽपि लभते परिवारणम् ३४
धृतिः शमो दमः शौचं कारुण्यं वागनिष्ठुरा
मित्राणां चानभिद्रोहः सप्तैताः समिधः श्रियः ३५
असंविभागी दुष्टात्मा कृतघ्नो निरपत्रपः
तादृङ्नराधमो लोके वर्जनीयो नराधिप ३६
न स रात्रौ सुखं शेते ससर्प इव वेश्मनि
यः कोपयति निर्दोषं सदोषोऽभ्यन्तरं जनम् ३७
येषु दुष्टेषु दोषः स्याद्योगक्षेमस्य भारत
सदा प्रसादनं तेषां देवतानामिवाचरेत् ३८
येऽथा स्त्रीषु समासक्ताः प्रथमोत्पतितेषु च
ये चानार्यसमासक्ताः सर्वे ते संशयं गताः ३९
यत्र स्त्री यत्र कितवो यत्र बालोऽनुशास्ति च
मज्जन्ति तेऽवशा देशा नद्यामश्मप्लवा इव ४०
प्रयोजनेषु ये सक्ता न विशेषेषु भारत
तानहं पण्डितान्मन्ये विशेषा हि प्रसङ्गिनः ४१
यं प्रशंसन्ति कितवा यं प्रशंसन्ति चारणाः
यं प्रशंसन्ति बन्धक्यो न स जीवति मानवः ४२
हित्वा तान्परमेष्वासान्पाण्डवानमितौजसः
आहितं भारतैश्वर्यं त्वया दुर्योधने महत् ४३
तं द्रक्ष्यसि परिभ्रष्टं तस्मात्त्वं नचिरादिव
एश्वर्यमदसम्मूढं बलि लोकत्रयादिव ४४
इति श्रीमहाभारते उद्योगपर्वणि अष्टत्रिंशोऽध्यायः ३८

## एकोन चत्वारिंशोऽध्यायः

धृतराष्ट्र उवाच
अनीश्वरोऽय पुरुषो भवाभवे सूत्रप्रोता दारुमयीव योषा
धात्रा तु दिष्टस्य वशे किलायं तस्माद्वद त्वं श्रवणे धृतोऽहम् १
विदुर उवाच
अप्राप्तकालं वचनं बृहस्पतिरपि ब्रुवन्
लभते बुद्ध्यवज्ञानमवमानं च भारत २
प्रियो भवति दानेन प्रियवादेन चापरः
मन्त्रं मूलबलेनान्यो यः प्रियः प्रिय एव सः ३
द्वेष्यो न साधुर्भवति न मेधावी न पण्डितः
प्रिये शुभानि कार्याणि द्वेष्ये पापानि भारत ४
न स क्षयो महाराज यः क्षयो वृद्धिमावहेत्
क्षयः स त्विह मन्तव्यो यं लब्ध्वा बहु नाशयेत् ५
समृद्धा गुणतः केचिद्भवन्ति धनतोऽपरे
धनवृद्धान्गुणैर्हीनान्धृतराष्ट्र विवर्जयेत् ६
धृतराष्ट्र उवाच
सर्वं त्वमायतीयुक्तं भाषसे प्राज्ञसम्मतम्
न चोत्सहे सुतं त्यक्तुं यतो धर्मस्ततो जयः ७
विदुर उवाच
स्वभावगुणसम्पन्नो न जातु विनयान्वितः
सुसूक्ष्ममपि भूतानामुपमर्दं प्रयोक्ष्यते ८
परापवादनिरताः परदुःखोदयेषु च
परस्परविरोधे च यतन्ते सततोत्थिताः ९
सदोषं दर्शनं येषां संवासे सुमहद्भयम्
अर्थादाने महान्दोषः प्रदाने च महद्भयम् १०
ये पापा इति विख्याताः संवासे परिगर्हिताः
युक्ताश्चान्यैर्महादोषैर्ये नरास्तान्विवर्जयेत् ११
निवर्तमाने सौहार्दे प्रीतिर्नीचे प्रणश्यति
या चैव फलनिर्वृत्तिः सौहृदे चैव यत्सुखम् १२
यतते चापवादाय यत्नमारभते क्षये

अल्पेऽप्यपकृते मोहान्न शान्तिमुपगच्छति १३
तादृशैः संगतं नीचैर्नृशंसैरकृतात्मभिः
निशम्य निपुणं बुद्ध्या विद्वान्दूराद्विवर्जयेत् १४
यो ज्ञातिमनुगृह्णाति दरिद्रं दीनमातुरम्
स पुत्रपशुभिर्वृद्धिं यशश्चाव्ययमश्नुते १५
ज्ञातयो वर्धनीयास्तैर्य इच्छन्त्यात्मनः शुभम्
कुलवृद्धिं च राजेन्द्र तस्मात्साधु समाचर १६
श्रेयसा योक्ष्यसे राजन्कुर्वाणो ज्ञातिसत्क्रियाम्
विगुणा ह्यपि संरक्ष्या ज्ञातयो भरतर्षभ १७
किं पुनर्गुणवन्तस्ते त्वत्प्रसादाभिकाङ्क्षिणः
प्रसादं कुरु दीनानां पाण्डवानां विशां पते १८
दीयन्तां ग्रामकाः केचित्तेषां वृत्त्यर्थमीश्वर
एवं लोके यशः प्राप्तो भविष्यसि नराधिप १९
वृद्धेन हि त्वया कार्यं पुत्राणां तात रक्षणम्
मया चापि हितं वाच्यं विद्धि मां त्वद्धितैषिणम् २०
ज्ञातिभिर्विग्रहस्तात न कर्तव्यः भवार्थिना
सुखानि सह भोज्यानिज्ञातिभिर्भरतर्षभ २१
सम्भोजनं संकथनं सम्प्रीतिश्च परस्परम्
ज्ञातिभिः सह कार्याणि न विरोधः कथंचन २२
ज्ञातयस्तारयन्तीह ज्ञातयो मज्जयन्ति च
सुवृत्तास्तारयन्तीह दुर्वृत्ता मज्जयन्ति च २३
सुवृत्तो भव राजेन्द्र पाण्डवान्प्रति मानद
अधर्षणीयः शत्रूणां तैर्वृतस्त्वं भविष्यसि २४
श्रीमन्तं ज्ञातिमासाद्य यो ज्ञातिरवसीदति
दिग्धहस्तं मृग इव स एनस्तस्य विन्दति २५
पश्चादपि नर श्रेष्ठ तव तापो भविष्यति
तान्वा हतान्सुतान्वापि श्रुत्वा तदनुचिन्तय २६
येन खट्वां समारूढः परितप्येत कर्मणा
आदावेव न तत्कुर्यादध्रुवे जीविते सति २७
न कश्चिन्नापनयते पुमानन्यत्र भार्गवात्

शेषसम्प्रतिपत्तिस्तु बुद्धमत्स्वेव तिष्ठति २८
दुर्योधनेन यद्येतत्पापं तेषु पुरा कृतम्
त्वया तत्कुलवृद्धेन प्रत्यानेयं नरेश्वर २९
तांस्त्वं पदे प्रतिष्ठाप्य लोके विगतकल्मषः
भविष्यसि नरश्रेष्ठ पूजनीयो मनीषिणाम् ३०
सुव्याहृतानि धीराणां फलतः प्रविचिन्त्य यः
अध्यवस्यति कार्येषु चिरं यशसि तिष्ठति ३१
अवृत्तिं विनयो हन्ति हन्त्यनर्थं पराक्रमः
हन्ति नित्यं क्षमा क्रोधमाचारो हन्त्यलक्षणम् ३२
परिच्छदेन क्षेत्रेण वेश्मना परिचर्यया
परीक्षेत कुलं राजन्भोजनाच्छादनेन च ३३
ययोश्चित्तेन वा चित्तं नैभृतं नैभृतेन वा
समेति प्रज्ञया प्रज्ञा तयोर्मैत्री न जीर्यते ३४
दुर्बुद्धिमकृतप्रज्ञं छन्नं कूपं तृणैरिव
विवर्जयीत मेधावी तस्मिन्मैत्री प्रणश्यति ३५
अवलिप्तेषु मूर्खेषु रौद्रसाहसिकेषु च
तथैवापेतधर्मेषु न मैत्रीमाचरेद्बुधः ३६
कृतज्ञं धार्मिकं सत्यमक्षुद्रं दृढभक्तिकम्
जितेन्द्रियं स्थितं स्थित्यां मित्रमत्यागि चेष्यते ३७
इन्द्रियाणामनुत्सर्गो मृत्युना न विशिष्यते
अत्यर्थं पुनरुत्सर्गः सादयेद्दैवतान्यपि ३८
मार्दवं सर्वभूतानामनसूया क्षमा धृतिः
आयुष्याणि बुधाः प्राहुर्मित्राणां चाविमानना ३९
अपनीतं सुनीतेन योऽथ प्रत्यानिनीषते
मतिमास्थाय सुदृढां तदकापुरुषव्रतम् ४०
आयत्यां प्रतिकारज्ञस्तदात्वे दृढनिश्चयः
अतीते कार्यशेषज्ञो नरोऽथैर्न प्रहीयते ४१
कर्मणा मनसा वाचा यदभीक्ष्णं निषेवते
तदेवापहरत्येनं तस्मात्कल्याणमाचरेत् ४२
मङ्गलालम्भनं योगः श्रुतमुत्थानमार्जवम्

भूतिमेतानि कुर्वन्ति सतां चाभीक्ष्णदर्शनम् ४३
अनिर्वेदः श्रियो मूलं दुःखनाशे सुखस्य च
महान्भवत्यनिर्विण्णः सुखं चात्यन्तमश्नुते ४४
नातः श्रीमत्तरं किंचिदन्यत्पथ्यतमं तथा
प्रभविष्णोर्यथा तात क्षमा सर्वत्र सर्वदा ४५
क्षमेदशक्तः सर्वस्य शक्तिमान्धर्मकारणात्
अर्थानर्थौ समौ यस्य तस्य नित्यं क्षमा हिता ४६
यत्सुखं सेवमानोऽपि धर्मार्थाभ्यां न हीयते
कामं तदुपसेवेत न मूढव्रतमाचरेत् ४७
दुःखार्तेषु प्रमत्तेषु नास्तिकेष्वलसेषु च
न श्रीर्वसत्यदान्तेषु ये चोत्साहविवर्जिताः ४८
आर्जवेन नरं युक्तमार्जवात्सव्यपत्रपम्
अशक्तिमन्तं मन्यन्तो धर्षयन्ति कुबुद्धयः ४९
अत्यार्यमतिदातारमतिशूरमतिव्रतम्
प्रज्ञाभिमानिनं चैव श्रीर्भयान्नोपसर्पति ५०
अग्निहोत्रफला वेदाः शीलवृत्तफलं श्रुतम्
रतिपुत्रफला दारा दत्तभुक्तफलं धनम् ५१
अधर्मोपार्जितैरर्थैर्यः करोत्यौर्ध्वदेहिकम्
न स तस्य फलं प्रेत्य भुङ्क्तेऽर्थस्य दुरागमात् ५२
कान्तारवनदुर्गेषु कृच्छ्रास्वापत्सु सम्भ्रमे
उद्यतेषु च शस्त्रेषु नास्ति शेषवतां भयम् ५३
उत्थानं संयमो दाक्ष्यमप्रमादो धृतिः स्मृतिः
समीक्ष्य च समारम्भो विद्धि मूलं भवस्य तत् ५४
तपो बलं तापसानां ब्रह्म ब्रह्मविदां बलम्
हिंसा बलमसाधूनां क्षमा गुणवतां बलम् ५५
अष्टौ तान्यव्रतघ्नानि आपो मूलं फलं पयः
हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम् ५६
न तत्परस्य संदध्यात्प्रतिकूलं यदात्मनः
संग्रहेणैष धर्मः स्यात्कामादन्यः प्रवर्तते ५७
अक्रोधेन जयेत्क्रोधमसाधुं साधुना जयेत्

जयेत्कदर्यं दानेन जयेत्सत्येन चानृतम् ५८
स्त्रीधूर्तकेऽलसे भीरौ चण्डे पुरुषमानिनि
चौरे कृतघ्ने विश्वासो न कार्यो न च नास्तिके ५९
अभिवादनशीलस्य नित्यं वृद्धोपसेविनः
चत्वारि सम्प्रवर्धन्ते कीर्तिरायुर्यशो बलम् ६०
अतिक्लेशेन येऽथा स्युर्धर्मस्यातिक्रमेण च
अरेर्वा प्रणिपातेन मा स्म तेषु मनः कृथाः ६१
अविद्यः पुरुषः शोच्यः शोच्यं मिथुनमप्रजम्
निराहाराः प्रजाः शोच्याः शोच्यं राष्ट्रमराजकम् ६२
अध्वा जरा देहवतां पर्वतानां जलं जरा
असम्भोगो जरा स्त्रीणां वाक्शल्यं मनसो जरा ६३
अनाम्नायमला वेदा ब्राह्मणस्याव्रतं मलम्
कौतूहलमला साध्वी विप्रवासमलाः स्त्रियः ६४
सुवर्णस्य मलं रूप्यं रूप्यस्यापि मलं त्रपु
ज्ञेयं त्रपुमलं सीसं सीसस्यापि मलं मलम् ६५
न स्वप्नेन जयेन्निद्रां न कामेन स्त्रियं जयेत्
नेन्धनेन जयेदग्निं न पानेन सुरां जयेत् ६६
यस्य दानजितं मित्रममित्रा युधि निर्जिताः
अन्नपानजिता दाराः सफलं तस्य जीवितम् ६७
सहस्त्रिणोऽपि जीवन्ति जीवन्ति शतिनस्तथा
धृतराष्ट्र विमुञ्चेच्छां न कथंचिन्न जीव्यते ६८
यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः
नालमेकस्य तत्सर्वमिति पश्यन्न मुह्यति ६९
राजन्भूयो ब्रवीमि त्वां पुत्रेषु सममाचर
समता यदि ते राजन्स्वेषु पाण्डुसुतेषु च ७०

इति श्रीमहाभारते उद्योगपर्वणि एकोनचत्वारिंशोध्यायः ३९

## चत्वारिंशोऽध्यायः

विदुर उवाच
योऽभ्यर्थितः सद्भिरसज्जमानः करोत्यर्थं शक्तिमहापयित्वा

क्षिप्रं यशस्तं समुपैति सन्तमलं प्रसन्ना हि सुखाय सन्तः १
महान्तमप्यर्थमधर्मयुक्तं यः संत्यजत्यनुपाकृष्ट एव
सुखं स दुःखान्यवमुच्य शेते जीर्णां त्वचं सर्प इवावमुच्य २
अनृतं च समुत्कर्षे राजगामि च पैशुनम्
गुरोश्चालीकनिर्बन्धः समानि ब्रह्महत्यया ३
असूयैकपदं मृत्युरतिवादः श्रियो वधः
अशुश्रूषा त्वरा श्लाघा विद्यायाः शत्रवस्त्रयः ४
सुखार्थिनः कुतो विद्या नास्ति विद्यार्थिनः सुखम्
सुखार्थी वा त्यजेद्विद्यां विद्यार्थी वा सुखम् त्यजेत् ५
नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः
नान्तकः सर्वभूतानां न पुंसां वामलोचना ६
आशा धृतिं हन्ति समृद्धिमन्तकः क्रोधः श्रियं हन्ति यशः कदर्यता
अपालनं हन्ति पशूंश्च राजन्नेकः क्रुद्धो ब्राह्मणो हन्ति राष्ट्रम् ७
अजश्च कांस्यं च रथश्च नित्यं मध्वाकर्षः शकुनिः श्रोत्रियश्च
वृद्धो ज्ञातिरवसन्नो वयस्य एतानि ते सन्तु गृहे सदैव ८
अजोक्षा चन्दनं वीणा आदर्शो मधुसर्पिषी
विषमौदुम्बरं शङ्खः स्वर्णं नाभिश्च रोचना ९
गृहे स्थापयितव्यानि धन्यानि मनुरब्रवीत्
देवब्राह्मणपूजार्थमतिथीनां च भारत १०
इदं च त्वां सर्वपरं ब्रवीमि पुण्यं पदं तात महाविशिष्टम्
न जातु कामान्न भयान्न लोभाद्धर्मं त्यजेज्जीवितस्यापि हेतोः ११
नित्यो धर्मः सुखदुःखे त्वनित्ये नित्यो जीवो धातुरस्य त्वनित्यः
त्यक्त्वानित्यं प्रतितिष्ठस्व नित्ये संतुष्य त्वं तोषपरो हि लाभः १२
महाबलान्पश्य महानुभावान्प्रशास्य भूमिं धनधान्यपूर्णाम्
राज्यानि हित्वा विपुलांश्च भोगान्गतान्नरेन्द्रान्वशमन्तकस्य १३
मृतं पुत्रं दुःखपुष्टं मनुष्या उत्क्षिप्य राजन्स्वगृहान्निर्हरन्ति
तं मुक्तकेशाः करुणं रुदन्तश्चितामध्ये काष्ठमिव क्षिपन्ति १४
अन्यो धनं प्रेतगतस्य भुङ्क्ते वयांसि चाग्निश्च शरीरधातून्
द्वाभ्यामयं सह गच्छत्यमुत्र पुण्येन पापेन च वेष्ट्यमानः १५
उत्सृज्य विनिवर्तन्ते ज्ञातयः सुहृदः सुताः

अग्नौ प्रास्तं तु पुरुषं कर्मान्वेति स्वयंकृतम् १६
अस्माल्लोकादूर्ध्वममुष्य चाधो महत्तमस्तिष्ठति ह्यन्धकारम्
तद्वै महामोहनमिन्द्रियाणां बुध्यस्व मा त्वां प्रलभेत राजन् १७
इदं वचः शक्ष्यसि चेद्यथावन्निशम्य सर्वं प्रतिपत्तुमेवम्
यशः परं प्राप्स्यसि जीवलोके भयं न चामुत्र न चेह तेऽस्ति १८
आत्मा नदी भारत पुण्यतीर्था सत्योदका धृतिकूला दमोर्मिः
तस्यां स्नातः पूयते पुण्यकर्मा पुण्यो ह्यात्मा नित्यमम्भोऽम्भ एव १९
कामक्रोधग्राहवतीं पञ्चेन्द्रियजलां नदीम्
कृत्वा धृतिमयीं नावं जन्मदुर्गाणि संतर २०
प्रज्ञावृद्धं धर्मवृद्धं स्वबन्धुं विद्यावृद्धं वयसा चापि वृद्धम्
कार्याकार्ये पूजयित्वा प्रसाद्य यः सम्पृच्छेन्न स मुह्येत्कदाचित् २१
धृत्या शिश्नोदरं रक्षेत्पाणिपादं च चक्षुषा
चक्षुःश्रोत्रे च मनसा मनो वाचं च कर्मणा २२
नित्योदकी नित्ययज्ञोपवीती नित्यस्वाध्यायी पतितान्नवर्जी
ऋतं ब्रुवन्गुरवे कर्म कुर्वन्न ब्राह्मणश्च्यवते ब्रह्मलोकात् २३
अधीत्य वेदान्परिसंस्तीर्य चाग्नीनिष्ट्वा यज्ञैः पालयित्वा प्रजाश्च
गोब्राह्मणार्थे शस्त्रपूतान्तरात्मा हतः संग्रामे क्षत्रियः स्वर्गमेति २४
वैश्योऽधीत्य ब्राह्मणान्क्षत्रियांश्च धनैः काले संविभज्याश्रितांश्च
त्रेतापूतं धूममाघ्राय पुण्यं प्रेत्य स्वर्गे देवसुखानि भुङ्क्ते २५
ब्रह्मक्षत्रं वैश्यवर्णं च शूद्रः क्रमेणैतान्न्यायतः पूजयानः
तुष्टेष्वेतेष्वव्यथो दग्धपापस्त्यक्त्वा देहं स्वर्गसुखानि भुङ्क्ते २६
चातुर्वर्ण्यस्यैष धर्मस्तवोक्तो हेतुं चात्र ब्रुवतो मे निबोध
क्षात्राद्धर्माद्धीयते पाण्डुपुत्रस्तं त्वं राजन्राजधर्मे नियुङ्क्ष्व २७
धृतराष्ट्र उवाच
एवमेतद्यथा मां त्वमनुशाससि नित्यदा
ममापि च मतिः सौम्य भवत्येवं यथात्थ माम् २८
सा तु बुद्धिः कृताप्येवं पाण्डवान्प्रति मे सदा
दुर्योधनं समासाद्य पुनर्विपरिवर्तते २९
न दिष्टमभ्यतिक्रान्तुं शक्यं मर्त्येन केनचित्
दिष्टमेव कृतं मन्ये पौरुषं तु निरर्थकम् ३०

इति श्रीमहाभारते उद्योगपर्वणि चत्वारिंशोऽध्यायः ४०

एक चत्वारिंशोऽध्यायः

धृतराष्ट्र उवाच
अनुक्तं यदि ते किंचिद्वाचा विदुर विद्यते
तन्मे शुश्रूषवे ब्रूहि विचित्राणि हि भाषसे १
विदुर उवाच
धृतराष्ट्र कुमारो वै यः पुराणः सनातनः
सनत्सुजातः प्रोवाच मृत्युर्नास्तीति भारत २
स ते गुह्यान्प्रकाशांश्च सर्वान्हृदयसंश्रयान्
प्रवक्ष्यति महाराज सर्वबुद्धिमतां वरः ३
धृतराष्ट्र उवाच
कि त्वं न वेद तद्भूयो यन्मे ब्रूयात्सनातनः
त्वमेव विदुर ब्रूहि प्रज्ञाशेषोऽस्ति चेत्तव ४
विदुर उवाच
शूद्रयोनावहं जातो नातोऽन्यद्वक्तुमुत्सहे
कुमारस्य तु या बुद्धिर्वेद तां शाश्वतीमहम् ५
ब्राह्मीं हि योनिमापन्नः सुगुह्यमपि यो वदेत्
न तेन गर्ह्यो देवानां तस्मादेतद्ब्रवीमि ते ६
धृतराष्ट्र उवाच
ब्रवीहि विदुर त्वं मे पुराणं तं सनातनम्
कथमेतेन देहेन स्यादिहैव समागमः ७
वैशम्पायन उवाच
चिन्तयामास विदुरस्तमृषिं शंसितव्रतम्
स च तच्चिन्तितं ज्ञात्वा दर्शयामास भारत ८
स चैनं प्रतिजग्राह विधिदृष्टेन कर्मणा
सुखोपविष्टं विश्रान्तमथैनं विदुरोऽब्रवीत् ९
भगवन्संशयः कश्चिद्धृतराष्ट्रस्य मानसे
यो न शक्यो मया वक्तुं तमस्मै वक्तुमर्हसि
यं श्रुत्वायं मनुष्येन्द्रः सुखदुःखातिगो भवेत् १०

लाभालाभौ प्रियद्वेष्यौ यथैनं न जरान्तकौ
विषहेरन्भयामर्षौ क्षुत्पिपासे मदोद्भवौ
अरतिश्चैव तन्द्री च कामक्रोधौ क्षयोदयौ ११
इति श्रीमहाभारते उद्योगपर्वणि एकचत्वारिंशोऽध्यायः ४१
समाप्तं प्रजागरपर्व

द्विचत्वारिंशोऽध्यायः
वैशम्पायन उवाच
ततो राजा धृतराष्ट्रो मनीषी सम्पूज्य वाक्यं विदुरेरितं तत्
सनत्सुजातं रहिते महात्मा पप्रच्छ बुद्धिं परमां बुभूषन् १
धृतराष्ट्र उवाच
सनत्सुजात यदिदं शृणोमि मृत्युर्हि नास्तीति तवोपदेशम्
देवासुरा ह्याचरन्ब्रह्मचर्यममृत्यवे तत्कतरन्नु सत्यम् २
सनत्सुजात उवाच
अमृत्युः कर्मणा केचिन्मृत्युर्नास्तीति चापरे
शृणु मे ब्रुवतो राजन्यथैतन्मा विशङ्किथाः ३
उभे सत्ये क्षत्रियाद्यप्रवृत्ते मोहो मृत्युः सम्मतो यः कवीनाम्
प्रमादं वै मृत्युमहं ब्रवीमि सदाप्रमादममृतत्वं ब्रवीमि ४
प्रमादाद्वै असुराः पराभवन्नप्रमादाद्ब्रह्मभूता भवन्ति
न वै मृत्युर्व्याघ्र इवात्ति जन्तून्न ह्यस्य रूपमुपलभ्यते ह ५
यमं त्वेके मृत्युमतोऽन्यमाहुरात्मावसन्नममृतं ब्रह्मचर्यम्
पितृलोके राज्यमनुशास्ति देवः शिवः शिवानामशिवोऽशिवानाम् ६
आस्यादेष निःसरते नराणां क्रोधः प्रमादो मोहरूपश्च मृत्युः
ते मोहितास्तद्वशे वर्तमाना इतः प्रेतास्तत्र पुनः पतन्ति ७
ततस्तं देवा अनु विप्लवन्ते अतो मृत्युर्मरणाख्यामुपैति
कर्मोदये कर्मफलानुरागास्तत्रानु यान्ति न तरन्ति मृत्युम् ८
योऽभिध्यायन्नुत्पतिष्णून्निहन्यादनादरेणाप्रतिबुध्यमानः
स वै मृत्युर्मृत्युरिवात्ति भूत्वा एवं विद्वान्यो विनिहन्ति कामान् ९
कामानुसारी पुरुषः कामाननु विनश्यति
कामान्व्युदस्य धुनुते यत्किंचित्पुरुषो रजः १०

तमोऽप्रकाशो भूतानां नरकोऽय प्रदृश्यते
गृह्यन्त इव धावन्ति गच्छन्तः श्वभ्रमुन्मुखाः ११
अभिध्या वै प्रथमं हन्ति चैनं कामक्रोधौ गृह्य चैनं तु पश्चात्
एते बालान्मृत्यवे प्रापयन्ति धीरास्तु धैर्येण तरन्ति मृत्युम् १२
अमन्यमानः क्षत्रिय किंचिदन्यन्नाधीयते तार्ण इवास्य व्याघ्रः
क्रोधाल्लोभान्मोहमयान्तरात्मा स वै मृत्युस्त्वच्छरीरे य एषः १३
एवं मृत्युं जायमानं विदित्वा ज्ञाने तिष्ठन्न बिभेतीह मृत्योः
विनश्यते विषये तस्य मृत्युर्मृत्योर्यथा विषयं प्राप्य मर्त्यः १४
धृतराष्ट्र उवाच
येऽस्मिन्धर्मान्नाचरन्तीह केचित्तथा धर्मान्केचिदिहाचरन्ति
धर्मः पापेन प्रतिहन्यते स्म उताहो धर्मः प्रतिहन्ति पापम् १५
सनत्सुजात उवाच
उभयमेव तत्रोपभुज्यते फलं धर्मस्यैवेतरस्य च
धर्मेणाधर्मं प्रणुदतीह विद्वान्धर्मो बलीयानिति तस्य विद्धि १६
धृतराष्ट्र उवाच
यानिमानाहुः स्वस्य धर्मस्य लोकान्द्विजातीनां पुण्यकृतां सनातनान्
तेषां परिक्रमान्कथयन्तस्ततोऽन्यान्नैतद्विद्वन्नैव कृतं च कर्म १७
सनत्सुजात उवाच
येषां बले न विस्पर्धा बले बलवतामिव
ते ब्राह्मणा इतः प्रेत्य स्वर्गलोके प्रकाशते १८
यत्र मन्येत भूयिष्ठं प्रावृषीव तृणोलपम्
अन्नं पानं च ब्राह्मणस्तज्जीवन्नानुसंज्वरेत् १९
यत्राकथयमानस्य प्रयच्छत्यशिवं भयम्
अतिरिक्तमिवाकुर्वन्स श्रेयान्नेतरो जनः २०
यो वाकथयमानस्य आत्मानं नानुसंज्वरेत्
ब्रह्मस्वं नोपभुञ्जेद्वा तदन्नं सम्मतं सताम् २१
यथा स्वं वान्तमश्नाति श्वा वै नित्यमभूतये
एवं ते वान्तमश्नन्ति स्ववीर्यस्योपजीवनात् २२
नित्यमज्ञातचर्या मे इति मन्येत ब्राह्मणः
ज्ञातीनां तु वसन्मध्ये नैव विद्येत किंचन २३

को ह्येवमन्तरात्मानं ब्राह्मणो हन्तुमर्हति
तस्माद्धि किंचित्क्षत्रिय ब्रह्मावसति पश्यति २४
अश्रान्तः स्यादनादानात्सम्मतो निरुपद्रवः
शिष्टो न शिष्टवत्स स्याद्ब्राह्मणो ब्रह्मवित्कविः २५
अनाढ्या मानुषे वित्ते आढ्या वेदेषु ये द्विजाः
ते दुर्धर्षा दुष्प्रकम्प्या विद्यात्तान्ब्रह्मणस्तनुम् २६
सर्वान्स्विष्टकृतो देवान्विद्याद्य इह कश्चन
न समानो ब्राह्मणस्य यस्मिन्प्रयतते स्वयम् २७
यमप्रयतमानं तु मानयन्ति स मानितः
न मान्यमानो मन्येत नामानादभिसंज्वरेत् २८
विद्वांसो मानयन्तीह इति मन्येत मानितः
अधर्मविदुषो मूढा लोकशास्त्रविशारदाः
न मान्यं मानयिष्यन्ति इति मन्येदमानितः २९
न वै मानं च मौनं च सहितौ चरतः सदा
अयं हि लोको मानस्य असौ मौनस्य तद्विदुः ३०
श्रीः सुखस्येह संवासः सा चापि परिपन्थिनी
ब्राह्मी सुदुर्लभा श्रीर्हि प्रज्ञाहीनेन क्षत्रिय ३१
द्वाराणि तस्या हि वदन्ति सन्तो बहुप्रकाराणि दुरावराणि
सत्यार्जवे ह्रीर्दमशौचविद्याः षण्मानमोहप्रतिबोधनानि ३२
इति श्रीमहाभारते उद्योगपर्वणि द्विचत्वारिंशोऽध्यायः ४२

## त्रिचत्वारिंशोऽध्यायः

धृतराष्ट्र उवाच
ऋचो यजूंष्यधीते यः सामवेदं च यो द्विजः
पापानि कुर्वन्पापेन लिप्यते न स लिप्यते १
सनत्सुजात उवाच
नैनं सामान्यृचो वापि न यजूंषि विचक्षण
त्रायन्ते कर्मणः पापान्न ते मिथ्या ब्रवीम्यहम् २
न छन्दांसि वृजिनात्तारयन्ति मायाविनं मायया वर्तमानम्
नीडं शकुन्ता इव जातपक्षाश्छन्दांस्येनं प्रजहत्यन्तकाले ३

न चेद्वेदा वेदविदं शक्तास्त्रातुं विचक्षण
अथ कस्मात्प्रलापोऽय ब्राह्मणानां सनातनः ४
सनत्सुजात उवाच
अस्मिँल्लोके तपस्तप्तं फलमन्यत्र दृश्यते
ब्राह्मणानामिमे लोका ऋद्धे तपसि संयताः ५
धृतराष्ट्र उवाच
कथं समृद्धमप्यृद्धं तपो भवति केवलम्
सनत्सुजात तद्ब्रूहि यथा विद्याम तद्वयम् ६
सनत्सुजात उवाच
क्रोधादयो द्वादश यस्य दोषास्तथा नृशंसादि षडत्र राजन्
धर्मादयो द्वादश चातताना: शास्त्रे गुणा ये विदिता द्विजानाम् ७
क्रोधः कामो लोभमोहौ विवित्साकृपासूया मानशोकौ स्पृहा च
ईर्ष्या जुगुप्सा च मनुष्यदोषा वर्ज्याः सदा द्वादशैते नरेण ८
एकैकमेते राजेन्द्र मनुष्यान्पर्युपासते
लिप्समानोऽन्तरं तेषां मृगाणामिव लुब्धकः ९
विकत्थनः स्पृहयालुर्मनस्वी बिभ्रत्कोपं चपलोऽरक्षणश्च
एतान्प्राप्ताः षण्नरान्पापधर्मान्प्रकुर्वते नोत सन्तः सुदुर्गे १०
सम्भोगसंविद्द्विषमेधमानो दत्तानुतापी कृपणोऽबलीयान्
वर्गप्रशंसी वनितासु द्वेष्टा एतेऽपरे सप्त नृशंसधर्माः ११
धर्मश्च सत्यं च दमस्तपश्च अमात्सर्यं ह्रीस्तितिक्षानसूया
यज्ञश्च दानं च धृतिः श्रुतं च महाव्रता द्वादश ब्राह्मणस्य १२
यस्त्वेतेभ्यः प्रवसेद्द्वाशेभ्यः सर्वामपीमां पृथिवीं प्रशिष्यात्
त्रिभिर्द्वाभ्यामेकतो वा विशिष्टो नास्य स्वमस्तीति स वेदितव्यः १३
दमस्त्यागोऽप्रमादश्च एतेष्वमृतमाहितम्
तानि सत्यमुखान्याहुर्ब्राह्मणा ये मनीषिणः १४
दमोऽष्टादशदोषः स्यात्प्रतिकूलं कृताकृते
अनृतं चाभ्यसूया च कामार्थौ च तथा स्पृहा १५
क्रोधः शोकस्तथा तृष्णा लोभः पैशुन्यमेव च
मत्सरश्च विवित्सा च परितापस्तथा रतिः १६
अपस्मारः सातिवादस्तथा सम्भावनात्मनि

एतैर्विमुक्तो दोषैर्यः स दमः सद्भिरुच्यते १७
श्रेयांस्तु षड्विधस्त्यागः प्रियं प्राप्य न हृष्यति
अप्रिये तु समुत्पन्ने व्यथां जातु न चार्च्छति १८
इष्टान्दारांश्च पुत्रांश्च न चान्यं यद्वचो भवेत्
अर्हते याचमानाय प्रदेयं तद्वचो भवेत्
अप्यवाच्यं वदत्येव स तृतीयो गुणः स्मृतः १९
न च कर्मसु तद्धीनः शिष्यबुद्धिर्नरो यथा
सर्वैरेव गुणैर्युक्तो द्रव्यवानपि यो भवेत् २०
अप्रमादोऽष्टदोषः स्यात्तान्दोषान्परिवर्जयेत्
इन्द्रियेभ्यश्च पञ्चभ्यो मनसश्चैव भारत
अतीतानागतेभ्यश्च मुक्तो ह्येतैः सुखी भवेत् २१
दोषैरेतैर्विमुक्तं तु गुणैरेतैः समन्वितम्
एतत्समृद्धमप्यृद्धं तपो भवति केवलम्
यन्मां पृच्छसि राजेन्द्र किं भूयः श्रोतुमिच्छसि २२
धृतराष्ट्र उवाच
आख्यानपञ्चमैर्वेदैर्भूयिष्ठं कथ्यते जनः
तथैवान्ये चतुर्वेदास्त्रिवेदाश्च तथापरे २३
द्विवेदाश्चैकवेदाश्च अनृचश्च तथापरे
तेषां तु कतमः स स्याद्यमहं वेद ब्राह्मणम् २४
सनत्सुजात उवाच
एकस्य वेदस्याज्ञानाद्वेदास्ते बहवोऽभवन्
सत्यस्यैकस्य राजेन्द्र सत्ये कश्चिदवस्थितः
एवं वेदमनुत्साद्य प्रज्ञां महति कुर्वते २५
दानमध्ययनं यज्ञो लोभादेतत्प्रवर्तते
सत्यात्प्रच्यवमानानां संकल्पे वितथो भवेत् २६
ततो यज्ञः प्रतायेत सत्यस्यैवावधारणात्
मनसान्यस्य भवति वाचान्यस्योत कर्मणा
संकल्पसिद्धः पुरुषः संकल्पानधितिष्ठति २७
अनैभृत्येन वै तस्य दीक्षितव्रतमाचरेत्
नामेतद्धातुनिर्वृत्तं सत्यमेव सतां परम्

ज्ञानं वै नाम प्रत्यक्षं परोक्षं जायते तपः २८
विद्याद्बहु पठन्तं तु बहुपाठीति ब्राह्मणम्
तस्मात्क्षत्रिय मा मंस्था जल्पितेनैव ब्राह्मणम्
य एव सत्यान्नापैति स ज्ञेयो ब्राह्मणस्त्वया २९
छन्दांसि नाम क्षत्रिय तान्यथर्वा जगौ पुरस्तादृषिसर्ग एषः
छन्दोविदस्ते य उ तानधीत्य न वेद्यवेदस्य विदुर्न वेद्यम् ३०
न वेदानां वेदिता कश्चिदस्ति कश्चिद्वेदान्बुध्यतेवापि राजन्
योवेद वेदान्न स वेद वेद्यं सत्ये स्थितो यस्तु स वेद वेद्यम् ३१
अभिजानामि ब्राह्मणमाख्यातारं विचक्षणम्
यश्छिन्नविचिकित्सः सन्नाचष्टे सर्वसंशयान् ३२
तस्य पर्येषणं गच्छेत्प्राचीनं नोत दक्षिणम्
नार्वाचीनं कुतस्तिर्यङ्नादिशं तु कथञ्चन ३३
तूष्णीम्भूत उपासीत न चेष्टेन्मनसा अपि
अभ्यावर्तेत ब्रह्मास्य अन्तरात्मनि वै श्रितम् ३४
मौनाद्धि स मुनिर्भवति नारण्यवसनान्मुनिः
अक्षरं तत्तु यो वेद स मुनिः श्रेष्ठ उच्यते ३५
सर्वार्थानां व्याकरणाद्वैयाकरण उच्यते
प्रत्यक्षदर्शी लोकानां सर्वदर्शी भवेन्नरः ३६
सत्ये वै ब्राह्मणस्तिष्ठन्ब्रह्म पश्यति क्षत्रिय
वेदानां चानुपूर्व्येण एतद्विद्वन्ब्रवीमि ते ३७
इति श्रीमहाभारते उद्योगपर्वणि त्रिचत्वारिंशोऽध्यायः ४३

## चतुश्चत्वारिंशोऽध्यायः

धृतराष्ट्र उवाच
सनत्सुजात यदिमां परार्थां ब्राह्मीं वाचं प्रवदसि विश्वरूपाम्
परां हि कामेषु सुदुर्लभां कथां तद्ब्रूहि मे वाक्यमेतत्कुमार १
सनत्सुजात उवाच
नैतद्ब्रह्म त्वरमाणेन लभ्यं यन्मां पृच्छस्यभिहृष्यस्यतीव
अव्यक्तविद्यामभिधास्ये पुराणीं बुद्ध्या च तेषां ब्रह्मचर्येण सिद्धाम् २
धृतराष्ट्र उवाच

अव्यक्तविद्यामिति यत्सनातनीं ब्रवीषि त्वं ब्रह्मचर्येण सिद्धाम्
अनारभ्या वसतीहार्य काले कथं ब्राह्मण्यममृतत्वं लभेत ३
सनत्सुजात उवाच
येऽस्मिल्लोके विजयन्तीह कामान्ब्राह्मीं स्थितिमनुतितिक्षमाणाः
त आत्मानं निर्हरन्तीह देहान्मुञ्जादिषीकामिव सत्त्वसंस्थाः ४
शरीरमेतौ कुरुतः पिता माता च भारत
आचार्यशास्ता या जातिः सा सत्या साजरामरा ५
सनत्सुजात उवाच
आचार्ययोनिमिह ये प्रविश्य भूत्वा गर्भं ब्रह्मचर्यं चरन्ति
इहैव ते शास्त्रकारा भवन्ति प्रहाय देहं परमं यान्ति योगम् ६
यः आवृणोत्यवितथेन कर्णावृतं कुर्वन्नमृतं सम्प्रयच्छन्
तं मन्येत पितरं मातरं च तस्मै न द्रुह्येत् कृतमस्य जानन् ७
गुरुं शिष्यो नित्यमभिमन्यमानः स्वाध्यायमिच्छेच्छुचिरप्रमत्तः
मानं न कुर्यान्न दधीत रोषमेष प्रथमो ब्रह्मचर्यस्य पादः ८
आचार्यस्य प्रियं कुर्यात्प्राणैरपि धनैरपि
कर्मणा मनसा वाचा द्वितीयः पाद उच्यते ९
समा गुरौ यथा वृत्तिर्गुरुपत्न्यां तथा भवेत्
यथोक्तकारी प्रियकृत्तृतीयः पाद उच्यते १०
नाचार्यायेहोपकृत्वा प्रवादं प्राज्ञः कुर्वीत नैतदहं करोमि
इतीव मन्येत न भाषयेत स वै चतुर्थो ब्रह्मचर्यस्य पादः ११
एवं वसन्तं यदुपप्लवेद्धनमाचार्याय तदनुप्रयच्छेत्
सतां वृद्धिं बहुगुणामेवमेति गुरोः पुत्रे भवति च वृत्तिरेषा १२
एवं वसन्सर्वतो वर्धतीह बहून्पुत्राँल्लभते च प्रतिष्ठाम्
वर्षन्ति चास्मै प्रदिशो दिशश्च वसन्त्यस्मिन्ब्रह्मचर्ये जनाश्च १३
एतेन ब्रह्मचर्येण देवा देवत्वमाप्नुवन्
ऋषयश्च महाभागा ब्रह्मलोकं मनीषिणः १४
गन्धर्वाणामनेनैव रूपमप्सरसामभूत्
एतेन ब्रह्मचर्येण सूर्यो अह्नाय जायते १५
य आशयेत्पाटयेच्चापि राजन्सर्वं शरीरं तपसा तप्यमानः
एतेनासौ बाल्यमत्येति विद्वान्मृत्युं तथा रोधयत्यन्तकाले १६

अन्तवन्तः क्षत्रिय ते जयन्ति लोकाञ्जनाः कर्मणा निर्मितेन
ब्रह्मैव विद्वांस्तेन अभ्येति सर्वं नान्यः पन्थाः अयनाय विद्यते १७
धृतराष्ट्र उवाच
आभाति शुक्लमिव लोहितमिव अथो कृष्णमथाञ्जनं काद्रवं वा
सद्ब्राह्मणः पश्यति योऽत्र विद्वान्कथंरूपं तदमृतमक्षरं पदम् १८
सनत्सुजात उवाच
नाभाति शुक्लमिव लोहितमिव अथो कृष्णमायसमर्कवर्णम्
न पृथिव्यां तिष्ठति नान्तरिक्षे नैतत्समुद्रे सलिलं बिभर्ति १९
न तारकासु न च विद्युदाश्रितं न चाभ्रेषु दृश्यते रूपमस्य
न चापि वायौ न च देवतासु न तच्चन्द्रे दृश्यते नोत सूर्ये २०
नैवर्क्षु तन्न यजुःषु नाप्यथर्वसु न चैव दृश्यत्यमलेषु सामसु
रथन्तरे बार्हतो चापि राजन्महाव्रते नैव दृश्येद्ध्रुवं तत् २१
अपारणीयं तमसः परस्तात्तदन्तकोऽप्येति विनाशकाले
अणीयरूपं क्षुरधारया तन्महच्च रूपं त्वपि पर्वतेभ्यः २२
सा प्रतिष्ठा तदमृतं लोकास्तद्ब्रह्म तद्यशः
भूतानि जज्ञिरे तस्मात्प्रलयं यान्ति तत्र च २३
अनामयं तन्महदुद्यतं यशो वाचो विकारान्कवयो वदन्ति
तस्मिञ्जगत्सर्वमिदं प्रतिष्ठितं ये तद्विदुरमृतास्ते भवन्ति २४
इति श्रीमहाभारते उद्योगपर्वणि चतुश्चत्वारिंशोऽध्यायः ४४

## पञ्चचत्वारिंशोऽध्यायः

सनत्सुजात उवाच
यत्तच्छुक्रं महज्ज्योतिर्दीप्यमानं महद्यशः
तद्वै देवा उपासन्ते यस्मादर्को विराजते
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् १
शुक्राद् ब्रह्म प्रभवति ब्रह्म शुक्रेण वर्धते
तच्छुक्रं ज्योतिषां मध्येऽतप्तं तपति तापनम्
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् २
आपोऽथ अद्भ्यः सलिलस्य मध्ये उभौ देवौ शिश्रियातेऽन्तरिक्षे
स सध्रीचीः स विषूचीर्वसाना उभे बिभर्ति पृथिवीं दिवं च

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ३
उभौ च देवौ पृथिवीं दिवं च दिशश्च शुक्रं भुवनं बिभर्ति
तस्माद्दिशः सरितश्च स्रवन्ति तस्मात्समुद्रा विहिता महान्तः
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ४
चक्रे रथस्य तिष्ठन्तं ध्रुवस्याव्ययकर्मणः
केतुमन्तं वहन्त्यश्वास्तं दिव्यमजरं दिवि
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ५
न सादृश्ये तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चिदेनम्
मनीषयाथो मनसा हृदा च य एवं विदुरमृतास्ते भवन्ति
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ६
द्वादशपूगां सरितं देवरक्षितम्
मधु इशन्तस्तदा संचरन्ति घोरम्
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ७
तदर्धमासं पिबति संचित्य भ्रमरो मधु
ईशानः सर्वभूतेषु हविर्भूतमकल्पयत्
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ८
हिरण्यपर्णमश्वत्थमभिपत्य अपक्षकाः
ते तत्र पक्षिणो भूत्वा प्रपतन्ति यथादिशम्
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ९
पूर्णात्पूर्णान्युद्धरन्ति पूर्णात्पूर्णानि चक्रिरे
हरन्ति पूर्णात्पूर्णानि पूर्णमेवावशिष्यते
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् १०
तस्माद्वै वायुरायातस्तस्मिंश्च प्रयतः सदा
तस्मादग्निश्च सोमश्च तस्मिंश्च प्राण आततः ११
सर्वमेव ततो विद्यात्तत्तद्वक्तुं न शक्नुमः
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् १२
अपानं गिरति प्राणः प्राणं गिरति चन्द्रमाः
आदित्यो गिरते चन्द्रमादित्यं गिरते परः
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् १३
एकं पादं नोत्क्षिपति सलिलाद्धंस उच्चरन्

तं चेत्सततमृत्विजं न मृत्युर्नामृतं भवेत्
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् १४
एवं देवो महात्मा स पावकं पुरुषो गिरन्
यो वै तं पुरुषं वेद तस्येहात्मा न रिष्यते
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् १५
यः सहस्रं सहस्राणां पक्षान्संतत्य सम्पतेत्
मध्यमे मध्य आगच्छेदपि चेत्स्यान्मनोजवः
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् १६
न दर्शने तिष्ठति रूपमस्य पश्यन्ति चैनं सुविशुद्धसत्त्वाः
हितो मनीषी मनसाभिपश्येद्ये तं श्रयेयुरमृतास्ते भवन्ति
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् १७
गूहन्ति सर्पा इव गह्वराणि स्वशिक्षया स्वेन वृत्तेन मर्त्याः
तेषु प्रमुह्यन्ति जना विमूढा यथाध्वानं मोहयन्ते भयाय
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् १८
सदा सदासत्कृतः स्यान्न मृत्युरमृतं कुतः
सत्यानृते सत्यसमानबन्धने सतश्च योनिरसतश्चैक एव
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् १९
न साधुना नोत असाधुना वा समानमेतद्दृश्यते मानुषेषु
समानमेतदमृतस्य विद्यादेवं युक्तो मधु तद्वै परीप्सेत्
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् २०
नास्यातिवादा हृदयं तापयन्ति नानधीतं नाहुतमग्निहोत्रम्
मनो ब्राह्मीं लघुतामादधीत प्रज्ञानमस्य नाम धीरा लभन्ते
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् २१
एवं यः सर्वभूतेषु आत्मानमनुपश्यति
अन्यात्रान्यत्र युक्तेषु किं स शोचेत्ततः परम् २२
यथोदपाने महति सर्वतः सम्प्लुतोदके
एवं सर्वेषु वेदेषु ब्राह्मणस्य विजानतः २३
अङ्गुष्ठमात्रः पुरुषो महात्मा न दृश्यतेऽसौ हृदये निविष्टः
अजश्चरो दिवारात्रमतन्द्रितश्च स तं मत्वा कविरास्ते प्रसन्नः २४
अहमेवास्मि वो माता पिता पुत्रोऽस्म्यहं पुनः

आत्माहमपि सर्वस्य यच्च नास्ति यदस्ति च २५
पितामहोऽस्मि स्थविरः पिता पुत्रश्च भारत
ममैव यूयमात्मस्था न मे यूयं न वोऽप्यहम् २६
आत्मैव स्थानं मम जन्म चात्मा
वेद प्रोक्तोऽहमजरप्रतिष्ठः २७
अणोरणीयान्सुमनाः सर्वभूतेषु जागृमि
पितरं सर्वभूतानां पुष्करे निहितं विदुः २८
इति श्रीमहाभारते उद्योगपर्वणि पञ्चचत्वारिंशोऽध्यायः ४५
समाप्तं सनत्सुजातपर्व

## षट्चत्वारिंशोऽध्यायः

वैशम्पायन उवाच
एवं सनत्सुजातेन विदुरेण च धीमता
सार्धं कथयतो राज्ञः सा व्यतीयाय शर्वरी १
तस्यां रजन्यां व्युष्टायां राजानः सर्व एव ते
सभामाविविशुर्हृष्टाः सूतस्योपदिदृक्षया २
शुश्रूषमाणाः पार्थानां वचो धर्मार्थसंहितम्
धृतराष्ट्रमुखाः सर्वे ययू राजसभां शुभाम् ३
सुधावदातां विस्तीर्णां कनकाजिरभूषिताम्
चन्द्रप्रभां सुरुचिरां सिक्तां परमवारिणा ४
रुचिरैरासनैः स्तीर्णां काञ्चनैर्दारवैरपि
अश्मसारमयैर्दान्तैः स्वास्तीर्णैः सोत्तरच्छदैः ५
भीष्मो द्रोणः कृपः शल्यः कृतवर्मा जयद्रथः
अश्वत्थामा विकर्णश्च सोमदत्तश्च बाह्लिकः ६
विदुरश्च महाप्राज्ञो युयुत्सुश्च महारथः
सर्वे च सहिताः शूराः पार्थिवा भरतर्षभ
धृतराष्ट्रं पुरस्कृत्य विविशुस्तां सभां शुभाम् ७
दुःशासनश्चित्रसेनः शकुनिश्चापि सौबलः
दुर्मुखो दुःसहः कर्ण उलूकोऽथ विविंशतिः ८
कुरुराजं पुरस्कृत्य दुर्योधनममर्षणम्

विविशुस्तां सभां राजन्सुराः शक्रसदो यथा ९
आविशद्भिस्तदा राजञ्शूरैः परिघबाहुभिः
शुशुभे सा सभा राजन्सिंहैरिव गिरेर्गुहा १०
ते प्रविश्य महेष्वासाः सभां समितिशोभनाः
आसनानि महार्हाणि भेजिरे सूर्यवर्चसः ११
आसनस्थेषु सर्वेषु तेषु राजसु भारत
द्वाःस्थो निवेदयामास सूतपुत्रमुपस्थितम् १२
अयं स रथ आयाति योऽयासीत्पाण्डवान्प्रति
दूतो नस्तूर्णमायातः सैन्धवैः साधुवाहिभिः १३
उपयाय स तु क्षिप्रं रथात्प्रस्कन्द्य कुण्डली
प्रविवेश सभां पूर्णां महीपालैर्महात्मभिः १४
संजय उवाच
प्राप्तोऽस्मि पाण्डवान्गत्वा तद्विजानीत कौरवाः
यथावयः कुरून्सर्वान्प्रतिनन्दन्ति पाण्डवाः १५
अभिवादयन्ति वृद्धांश्च वयस्यांश्च वयस्यवत्
यूनश्चाभ्यवदन्पार्थाः प्रतिपूज्य यथावयः १६
यथाहं धृतराष्ट्रेण शिष्टः पूर्वमितो गतः
अब्रुवं पाण्डवान्गत्वा तन्निबोधत पार्थिवाः १७
इति श्रीमहाभारते उद्योगपर्वणि षट्चत्वारिंशोऽध्यायः ४६

## सप्तचत्वारिंशोऽध्यायः

धृतराष्ट्र उवाच
पृच्छामि त्वां संजय राजमध्ये किमब्रवीद्वाक्यमदीनसत्त्वः
धनंजयस्तात युधां प्रणेता दुरात्मनां जीवितच्छिन्महात्मा १
संजय उवाच
दुर्योधनो वाचमिमां शृणोतु यदब्रवीदर्जुनो योत्स्यमानः
युधिष्ठिरस्यानुमते महात्मा धनंजयः शृण्वतः केशवस्य २
अन्वत्रस्तो बाहुवीर्यं विदान उपह्वरे वासुदेवस्य धीरः
अवोचन्मां योत्स्यमानः किरीटी मध्ये ब्रूया धार्तराष्ट्रं कुरूणाम् ३
ये वै राजानः पाण्डवायोधनाय समानीताः शृण्वतां चापि तेषाम्

यथा समग्रं वचनं मयोक्तंसहामात्यं श्रावयेथा नृपं तम् ४
यथा नूनं देवराजस्य देवाः शुश्रूषन्ते वज्रहस्तस्य सर्वे
तथाशृरावन्पाराडवाः सृंजयाश्च किरीटिना वाचमुक्तां समर्थाम् ५
इत्यब्रवीदर्जुनो योत्स्यमानो गाराडीवधन्वा लोहितपद्मनेत्रः
न चेद्राज्यं मुञ्चति धार्तराष्ट्रो युधिष्ठिरस्याजमीढस्य राज्ञः
अस्ति नूनं कर्म कृतं पुरस्तादनिर्विष्टं पापकं धार्तराष्ट्रैः ६
येषां युद्धं भीमसेनार्जुनाभ्यां तथाश्विभ्यां वासुदेवेन चैव
शैनेयेन ध्रुवमात्तायुधेन धृष्टद्युम्नेनाथ शिखरािडना च
युधिष्ठिरेरोन्द्रकल्पेन चैव योऽपध्यानान्निर्दहेद् गां दिवं च ७
तैश्चेद्युद्धं मन्यते धार्तराष्ट्रो निर्वृत्तोऽथ सकलः पाराडवानाम्
मा तत्कार्षीः पाराडवस्यार्थहेतोरुपैहि युद्धं यदि मन्यसे त्वम् ८
यां तां वने दुःखशय्यामुवास प्रव्राजितः पाराडवो धर्मचारी
आशिष्यते दुःखतरामनर्थामन्त्यां शय्यां धार्तराष्ट्रः परासुः ९
ह्रिया ज्ञानेन तपसा दमेन क्रोधेनाथो धर्मगुप्त्या धनेन
अन्यायवृत्तः कुरुपाराडवेयानध्यतिष्ठद्धार्तराष्ट्रो दुरात्मा १०
मायोपधः प्रणिधानार्जवाभ्यां तपोदमाभ्यां धर्मगुप्त्या बलेन
सत्यं ब्रुवन्प्रीतियुक्त्यानृतेन तितिक्षमाराः क्लिश्यमानोऽतिवेलम् ११
यदा ज्येष्ठः पाराडवः संशितात्मा क्रोधं यत्तं वर्षपूगान्सुघोरम्
अवस्रष्टा कुरुषूद्वृत्तचेतास्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् १२
कृष्णवर्त्मेव ज्वलितः समिद्धो यथा दहेत्कक्षमग्निर्निदाघे
एवं दग्धा धार्तराष्ट्रस्य सेनां युधिष्ठिरः क्रोधदीप्तोऽनुवीक्ष्य १३
यदा द्रष्टा भीमसेनं रणस्थं गदाहस्तं क्रोधविषं वमन्तम्
दुर्मर्षणं पाराडवं भीमवेगं तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् १४
महासिंहो गाव इव प्रविश्य गदापाणिर्धार्तराष्ट्रानुपेत्य
यदा भीमो भीमरूपो निहन्ता तदा युद्धं धार्तराष्ट्राऽन्वतप्स्यत् १५
महाभये वीतभयः कृतास्त्रः समागमे शत्रुबलावमर्दी
सकृद्रथेन प्रतियाद्रथौघान्पदातिसंघान्गदयाभिनिघ्नन् १६
सैन्याननेकांस्तरसा विमृद्नन्यदा क्षेप्ता धार्तराष्ट्रस्य सैन्यम्
छिन्दन् वनं परशुनेव शूरस्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् १७
तृणप्रायं ज्वलनेनेव दग्धं ग्रामं यथा धार्तराष्ट्रः समीक्ष्य

पक्वं सस्यं वैद्युतेनेव दग्धं परासिक्तं विपुलं स्वं बलौघम् १८
हतप्रवीरं विमुखं भयार्तं पराङ्मुखं प्रायशोऽधृष्टयोधम्
शस्त्रार्चिषा भीमसेनेन दग्धं तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् १९
उपासंगादुद्धरन्दक्षिणेन परःशतान्नकुलश्चित्रयोधी
यदा रथाग्र्यो रथिनः प्रचेता तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् २०
सुखोचितो दुःखशय्यां वनेषु दीर्घं कालं नकुलो यामशेत
आशीविषः क्रुद्ध इव श्वसन्भृशं तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् २१
त्यक्तात्मानःपार्थिवायोधनाय समादिष्टा धर्मराजेन वीराः
रथैः शुभ्रैः सैन्यमभिद्रवन्तो दृष्ट्वा पश्चात्तप्स्यते धार्तराष्ट्रः २२
शिशून्कृतास्त्रानशिशुप्रकाशान्यदा द्रष्टा कौरवः पञ्च शूरान्
त्यक्त्वा प्राणान्केकयानाद्रवन्तस्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् २३
यदा गतोद्वाहमकूजनाक्षं सुवर्णतारं रथमाततायी
दान्तैर्युक्तं सहदेवोऽधिरूढः शिरांसि राज्ञां क्षेप्स्यते मार्गणौघैः २४
महाभये सम्प्रवृत्ते रथस्थं विवर्तमानं समरे कृतास्त्रम्
सर्वां दिशं सम्पतन्तं समीक्ष्य तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् २५
ह्रीनिषेधो निपुणः सत्यवादी महाबलः सर्वधर्मोपपन्नः
गान्धारिमार्च्छंस्तुमुले क्षिप्रकारी क्षेप्ता जनान्सहदेवस्तरस्वी २६
यदा द्रष्टा द्रौपदेयान्महेषून्शूरान्कृतास्त्रान्रथयुद्धकोविदान्
आशीविषान्घोरविषानिवायतस्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् २७
यदाभिमन्युः परवीरघाती शरैः परान्मेघ इवाभिवर्षन्
विगाहिता कृष्णसमः कृतास्त्रस्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् २८
यदा द्रष्टा बालमबालवीर्यं द्विषच्चमूं मृत्युमिवापतन्तम्
सौभद्रमिन्द्रप्रतिमं कृतास्त्रं तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् २९
प्रभद्रकाः शीघ्रतरा युवानो विशारदाः सिंहसमानवीर्याः
यदा क्षेप्तारो धार्तराष्ट्रान्ससैन्यांस्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ३०
वृद्धौ विराटद्रुपदौ महारथौ पृथक्चमूभ्यामभिवर्तमानौ
यदा द्रष्टारौ धार्तराष्ट्रान्ससैन्यांस्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ३१
यदा कृतास्त्रो द्रुपदः प्रचिन्वन्शिरांसि यूनांसमरे रथस्थः
क्रुद्धः शरैश्छेत्स्यति चापमुक्तैस्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ३२
यदा विराटः परवीरघाती मर्मान्तरे शत्रुचमूं प्रवेष्टा

मत्स्यैः सार्धमनृशंसरूपैस्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ३३
ज्येष्ठं मात्स्यानामनृशंसरूपं विराटपुत्रं रथिनं पुरस्तात्
यदा द्रष्टा दंशितं पाण्डवार्थे तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ३४
रणे हते कौरवाणां प्रवीरे शिखण्डिना सत्तमे शन्तनूजे
न जातु नः शत्रवो धारयेयुरसंशयं सत्यमेतद्ब्रवीमि ३५
यदा शिखण्डी रथिनः प्रचिन्वन्भीष्मं रथेनाभियाता वरूथी
दिव्यैर्हयैरवमृद्नन्रथौघांस्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ३६
यदा द्रष्टा सृंजयानामनीके धृष्टद्युम्नं प्रमुखे रोचमानम्
अस्त्रं यस्मै गुह्यमुवाच धीमान्द्रोणस्तदा तप्स्यति धार्तराष्ट्रः ३७
यदा स सेनापतिरप्रमेयः पराभवन्निषुभिर्धार्तराष्ट्रान्
द्रोणं रणे शत्रुसहोऽभियाता तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ३८
ह्रीमान्मनीषी बलवान्मनस्वी स लक्ष्मीवान्सोमकानां प्रबर्हः
न जातु तं शत्रवोऽन्ये सहेरन्येषां स स्यादग्रणीर्वृष्णिसिंहः ३९
ब्रूयाच्च मा प्रवृणीष्वेति लोके युद्धेऽद्वितीयं सचिवं रथस्थम्
शिनेर्नप्तारं प्रवृणीम सात्यकिं महाबलं वीतभयं कृतास्त्रम् ४०
यदा शिनीनामधिपो मयोक्तः शरैः परान्मेघ इव प्रवर्षन्
प्रच्छादयिष्यञ्शरजालेन योधांस्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ४१
यदा धृतिं कुरुते योत्स्यमानः स दीर्घबाहुर्दृढधन्वा महात्मा
सिंहस्येव गन्धमाघ्राय गावः संवेष्टन्ते शत्रवोऽस्माद्यथाग्नेः ४२
स दीर्घबाहुर्दृढधन्वा महात्मा भिन्द्याद् गिरीन्संहरेत्सर्वलोकान्
अस्त्रे कृती निपुणः क्षिप्रहस्तो दिवि स्थितः सूर्य इवाभिभाति ४३
चित्रः सूक्ष्मः सुकृतो यादवस्य अस्त्रे योगो वृष्णिसिंहस्य भूयान्
यथाविधं योगमाहुः प्रशस्तं सर्वैर्गुणैः सात्यकिस्तैरुपेतः ४४
हिरण्मयंश्वेतहयैश्चतुर्भिर्यदा युक्तं स्यन्दनं माधवस्य
द्रष्टा युद्धे सात्यकेर्वै सुयोधनस्तदा तप्स्यत्यकृतात्मा स मन्दः ४५
यदा रथं हेममणिप्रकाशं श्वेताश्वयुक्तं वानरकेतुमुग्रम्
द्रष्टा रणे संयतं केशवेन तदा तप्स्यत्यकृतात्मा स मन्दः ४६
यदा मौर्व्यास्तलनिष्पेषमुग्रं महाशब्दं वज्रनिष्पेषतुल्यम्
विधूयमानस्य महारणे मया गाण्डीवस्य श्रोष्यति मन्दबुद्धिः ४७
तदा मूढो धृतराष्ट्रस्य पुत्रस्तप्ता युद्धे दुर्मतिर्दुःसहायः

दृष्ट्वा सैन्यं बाणवर्षान्धकारं प्रभज्यन्तं गोकुलवद् रणाग्रे ४८
बलाहकादुच्चरंतीव विद्युथसस्त्रघ्नी द्विषतां संगमेषु
अस्थिच्छिदो मर्मभिदेः वमेच्छरांस्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ४९
यदा द्रष्टा ज्यामुखाद्बाणसंघान्गाण्डीवमुक्तान्पततः शिताग्रान्
नागान्हयान्वर्मिणश्चाददानांस्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ५०
यदा मन्दः पराबाणान्विमुक्तान्ममेषुभिर्ह्रियमाणान्प्रतीपम्
तिर्यग्विद्धांश्छिद्यमानान्क्षुरप्रैस्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ५१
यदा विपाठा मद्भुजविप्रमुक्ता द्विजाः फलानीव महीरुहाग्रात्
प्रच्छेत्तार उत्तमाङ्गानि यूनां तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ५२
यदा द्रष्टा पततः स्यन्दनेभ्यो महागजेभ्योऽश्वगतांश्च योधान्
शरैर्हतान्पातितांश्चैव रङ्गे तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ५३
पदातिसंघान्रथसंघान्समन्ताद्व्यत्ताननः काल इवाततेषुः
प्रणोत्स्यामि ज्वलितैर्बाणवर्षैः शत्रूंस्तदा तप्स्यति मन्दबुद्धिः ५४
सर्वा दिशः सम्पतता रथेन रजोध्वस्तं गाण्डिवेनापकृत्तम्
यदा द्रष्टा स्वबलं सम्प्रमूढं तदा पश्चात्तप्स्यति मन्दबुद्धिः ५५
कान्दिग्भूतं छिन्नगात्रं विसंज्ञं दुर्योधनो द्रक्ष्यति सर्वसैन्यम्
हताश्ववीराग्र्यनरेन्द्रनागं पिपासितं श्रान्तपत्रं भयार्तम् ५६
आर्तस्वरं हन्यमानं हतं च विकीर्णकेशास्थिकपालसंघम्
प्रजापतेः कर्म यथार्धनिष्ठितं तदा दृष्ट्वा तप्स्यते मन्दबुद्धिः ५७
यदा रथे गाण्डिवं वासुदेवं दिव्यं शङ्खं पाञ्चजन्यं हयांश्च
तूणावक्षय्यौ देवदत्तं च मां च द्रष्टा युद्धे धार्तराष्ट्रः समेतान् ५८
उद्वर्तयन्दस्युसङ्घान्समेतान्प्रवर्तयन्युगमन्यद्युगान्ते
यदा धक्ष्याम्यग्निवत्कौरवेयांस्तदा तप्ता धृतराष्ट्रः सपुत्रः ५९
सहभ्राता सहपुत्रः ससैन्यो भ्रष्टैश्वर्यः क्रोधवशोऽल्पचेताः
दर्पस्यान्ते विहिते वेपमानः पश्चान्मन्दस्तप्स्यति धार्तराष्ट्रः ६०
पूर्वाह्णे मां कृतजप्यं कदाचिद्विप्रः प्रोवाचोदकान्ते मनोज्ञम्
कर्तव्यं ते दुष्करं कर्म पार्थ योद्धव्यं ते शत्रुभिः सव्यसाचिन् ६१
इन्द्रो वा ते हरिवान्वज्रहस्तः पुरुस्ताद्यातु समरेऽरीन्विनिघ्नन्
सुग्रीवयुक्तेन रथेन वा ते पश्चात्कृष्णो रक्षतु वासुदेवः ६२
वव्रे चाहं वज्रहस्तान्महेन्द्रादस्मिन्युद्धे वासुदेवं सहायम्

स मे लब्धो दस्युवधाय कृष्णो मन्ये चैतद्विहितं दैवतैर्मे ६३
अयुध्यमानो मनसापि यस्य जयं कृष्णः पुरुषस्याभिनन्देत्
ध्रुवं सर्वान्सोऽभ्यतीयादमित्रान्सेन्द्रान्देवान्मानुषे नास्ति चिन्ता ६४
स बाहुभ्यां सागरमुत्तितीर्षेन्महोदधिं सलिलस्याप्रमेयम्
तेजस्विनं कृष्णमत्यन्तशूरं युद्धेन यो वासुदेवं जिगीषेत् ६५
गिरिं य इच्छेत तलेन भेत्तुं शिलोच्चयं श्वेतमतिप्रमाणम्
तस्यैव पाणिः सनखो विशीर्येन्न चापि किंचित्स गिरेस्तु कुर्यात् ६६
अग्निं समिद्धं शमयेद्भुजाभ्यां चन्द्रं च सूर्यं च निवारयेत
हरेद्देवानाममृतं प्रसह्य युद्धेन यो वासुदेवं जिगीषेत् ६७
यो रूक्मिणीमेकरथेन भोज्यामुत्साद्य राज्ञां विषयं प्रसह्य
उवाह भार्यां यशसा ज्वलन्तीं यस्यां जज्ञे रौक्मिणेयो महात्मा ६८
अयं गान्धारांस्तरसा सम्प्रमथ्य जित्वा पुत्रान्नग्नजितः समग्रान्
बद्धं मुमोच विनदन्तं प्रसह्य सुदर्शनीयं देवतानां ललामम् ६९
अयं कवाटे निजघान पाण्ड्यं तथा कलिङ्गान्दन्तकूरे ममर्द
अनेन दग्धा वर्षपूगान्विनाथा वाराणसी नगरी सम्बभूव ७०
यं स्म युद्धे मन्यतेऽन्यैरजेयमेकलव्यं नाम निषादराजम्
वेगेनेव शैलमभिहत्य जम्भः शेते स कृष्णेन हतः परासुः ७१
तथोग्रसेनस्य सुतं प्रदुष्टं वृष्ण्यन्धकानां मध्यगतं तपन्तम्
अपातयद्बलदेवद्वितीयो हत्वा ददौ चोग्रसेनाय राज्यम् ७२
अयं सौभं योधयामास खस्थं विभीषणं मायया शाल्वराजम्
सौभद्वारि प्रत्यगृह्णाच्छतघ्नीं दोर्भ्यां क एनं विषहेत मर्त्यः ७३
प्राग्ज्योतिषं नाम बभूव दुर्गं पुरं घोरमसुराणामसह्यम्
महाबलो नरकस्तत्र भौमो जहारादित्या मणिकुण्डले शुभे ७४
न तं देवाः सह शक्रेण सेहिरे समागता आहरणाय भीताः
दृष्ट्वा च ते विक्रमं केशवस्य बलं तथैवास्त्रमवारणीयम् ७५
जानन्तोऽस्य प्रकृतिं केशवस्य न्ययोजयन्दस्युवधाय कृष्णम्
स तत्कर्म प्रतिशुश्राव दुष्करमैश्वर्यवान्सिद्धिषु वासुदेवः ७६
निर्मोचने षट्सहस्राणि हत्वा संछिद्य पाशान्सहसा क्षुरान्तान्
मुरं हत्वा विनिहत्यौघराक्षसं निर्मोचनं चापि जगाम वीरः ७७
तत्रैव तेनास्य बभूव युद्धं महाबलेनातिबलस्य विष्णोः

शेते स कृष्णेन हतः परासुर्वातेनेव मथितः कर्णिकारः ७८
आहृत्य कृष्णो मणिकुण्डले ते हत्वा च भौमं नरकं मुरं च
श्रिया वृतो यशसा चैव धीमान्प्रत्याजगामाप्रतिमप्रभावः ७९
तस्मै वरानददंस्तत्र देवा दृष्ट्वा भीमं कर्म रणे कृतं तत्
श्रमश्च ते युध्यमानस्य न स्यादाकाशे वा अप्सु चैव क्रमः स्यात् ८०
शस्त्राणि गात्रे च न ते क्रमेरन्नित्येव कृष्णश्च ततः कृतार्थः
एवंरूपे वासुदेवेऽप्रमेये महाबले गुणसम्पत् सदैव ८१
तमसह्यं विष्णुमनन्तवीर्यमाशंसते धार्तराष्ट्रो बलेन
यदा ह्येनं तर्कयते दुरात्मा तच्चाप्ययं सहतेऽस्मान्समीक्ष्य ८२
पर्यागतं मम कृष्णस्य चैव यो मन्यते कलहं सम्प्रयुज्य
शक्यं हर्तुं पाण्डवानां ममत्वं तद्वेदिता संयुगं तत्र गत्वा ८३
नमस्कृत्वा शान्तनवाय राज्ञे द्रोणायाथो सहपुत्राय चैव
शारद्वतायाप्रतिद्वन्द्विने च योत्स्याम्यहं राज्यमभीप्समानः ८४
धर्मेणास्त्रं नियतं तस्य मन्ये यो योत्स्यते पाण्डवैर्धर्मचारी
मिथ्याग्लहे निर्जिता वै नृशंसैः संवत्सरान्द्वादश पाण्डुपुत्राः ८५
अवाप्य कृच्छ्रं विहितं ह्यरण्ये दीर्घं कालं चैकमज्ञातचर्याम्
ते ह्यकस्माज्जीवितं पाण्डवानां न मृष्यन्ते धार्तराष्ट्राः पदस्थाः ८६
ते चेदस्मान्युध्यमानाञ्जयेयुर्देवैरपीन्द्रप्रमुखैः सहायैः
धर्मादधर्मश्चरितो गरीयानिति ध्रुवं नास्ति कृतं च साधु ८७
न चेदिमं पुरुषं कर्मबद्धं च चेदस्मान्मन्यतेऽसौ विशिष्टान्
आशंसेऽह वासुदेवद्वितीयो दुर्योधनं सानुबन्धं निहन्तुम् ८८
न चेदिदं कर्म नरेषु बद्धं न विद्यते पुरुषस्य स्वकर्म
इदं च तच्चापि समीक्ष्य नूनं पराजयो धार्तराष्ट्रस्य साधुः ८९
प्रत्यक्षं वः कुरवो यद्ब्रवीमि युध्यमाना धार्तराष्ट्रा न सन्ति
अन्यत्र युद्धात्कुरव परीप्सन्न युध्यतां शेष इहास्ति कश्चित् ९०
हत्वा त्वहं धार्तराष्ट्रान्सकर्णान्राज्यं कुरूणामवजेता समग्रम्
यद्वः कार्यं तत्कुरुध्वं यथास्वमिष्टान्दारान्दात्मजांश्चोपभुङ्क्त ९१
अप्येवं नो ब्राह्मणाः सन्ति वृद्धा बहुश्रुताः शीलवन्तः कुलीनाः
सांवत्सरा ज्योतिषि चापि युक्ता नक्षत्रयोगेषु च निश्चयज्ञाः ९२
उच्चावचं दैवयुक्तं रहस्यं दिव्याः प्रश्ना मृगचक्रा मुहूर्ताः

क्षयं महान्तं कुरुसृंजयानां निवेदयन्ते पाराडवानां जयं च ९३
तथा हि नो मन्यतेऽजातशत्रुः संसिद्धार्थो द्विषतां निग्रहाय
जनार्दनश्चाप्यपरोक्षविद्यो न संशयं पश्यति वृष्णिसिंहः ९४
अहं च जानामि भविष्यरूपं पश्यामि बुद्ध्या स्वयमप्रमत्तः
दृष्टिश्च मे न व्यथते पुराणी युध्यमाना धार्तराष्ट्रा न सन्ति ९५
अनालब्धं जृम्भति गारिडवं धनुरनालब्धा कम्पति मे धनुर्ज्या
बाणाश्च मे तूणमुखाद्विसृज्य मुहुर्मुहुर्गन्तुमुशन्ति चैव ९६
सैक्यः कोशान्निः सरति प्रसन्नो हित्वेव जीर्णामुरगस्त्वचं स्वाम्
ध्वजे वाचो रौद्ररूपा वदन्ति कदा रथो योक्ष्यते ते किरीटिन् ९७
गोमायुसंघाश्च वदन्ति रात्रौ रक्षांस्यथो निष्पतन्त्यन्तरिक्षात्
मृगाः शृगालाः शितिकराठाश्च काका गृध्रा बडाश्चैव तरक्षवश्च ९८
सुपर्णपाताश्च पतन्ति पश्चाद्दृष्ट्वा रथं श्वेतहयप्रयुक्तम्
अहं ह्येकः पार्थिवान्सर्वयोधाञ्शरान्वर्षन्मृत्युलोकं नयेयम् ९९
समाददानः पृथगस्त्रमार्गान्यथाग्निरिद्धो गहनं निदाघे
स्थूणाकर्णं पाशुपतं च घोरं तथा ब्रह्मास्त्रं यच्च शक्रो विवेद १००
वधे धृतो वेगवतः प्रमुञ्चन्नाहं प्रजाः किंचिदिवावशिष्ये
शान्तिं लप्स्ये परमो ह्येष भावः स्थिरो मम ब्रूहि गावल्गणे तान् १०१
नित्यं पुनः सचिवैर्यैरवोचद्देवानपीन्द्रप्रमुखान्सहायान्
तैर्मन्यते कलहं सम्प्रयुज्य स धार्तराष्ट्रः पश्यत मोहमस्य १०२
वृद्धो भीष्मः शान्तनवः कृपश्च द्रोणः सपुत्रो विदुरश्च धीमान्
एते सर्वे यद्वदन्ते तदस्तु आयुष्मन्तः कुरवः सन्तु सर्वे १०३
इति श्रीमहाभारते उद्योगपर्वणि सप्तचत्वारिंशोध्यायः ४७

## अष्ट चत्वारिंशोऽध्यायः

वैशम्पायन उवाच
समवेतेषु सर्वेषु तेषु राजसु भारत
दुर्योधनमिदं वाक्यं भीष्मः शान्तनवोऽब्रवीत् १
बृहस्पतिश्चोशना च ब्रह्माणं पर्युपस्थितौ
मरुतश्च सहेन्द्रेण वसवश्च सहाश्विनौ २
आदित्याश्चैव साध्याश्च ये च सप्तर्षयो दिवि

विश्वावसुश्च गन्धर्वः शुभाश्चाप्सरसां गणाः ३
नमस्कृत्वोपजग्मुस्ते लोकवृद्धं पितामहम्
परिवार्य च विश्वेशं पर्यासत दिवौकसः ४
तेषां मनश्च तेजश्चाप्याददानौ दिवौकसाम्
पूर्वदेवौ व्यतिक्रान्तौ नरनारायणावृषी ५
बृहस्पतिश्च पप्रच्छ ब्रह्माणं काविमाविति
भवन्तं नोपतिष्ठेते तौ नः शंस पितामह ६
ब्रह्मोवाच
यावेतौ पृथिवीं द्यां च भासयन्तौ तपस्विनौ
ज्वलन्तौ रोचमानौ च व्याप्यातीतौ महाबलौ ७
नरनारायणावेतौ लोकाल्लोकं समास्थितौ
ऊर्जितौ स्वेन तपसा महासत्त्वपराक्रमौ ८
एतौ हि कर्मणा लोकान्नन्दयामासतुर्ध्रुवौ
असुराणामभावाय देवगन्धर्वपूजितौ ९
वैशम्पायन उवाच
जगाम शक्रस्तच्छ्रुत्वा यत्र तौ तेपतुस्तपः
सार्धं देवगणैः सर्वैर्बृहस्पतिपुरोगमैः १०
तदा देवासुरे घोरे भये जाते दिवौकसाम्
अयाचत महात्मानौ नरनारायणौ वरम् ११
तावब्रूतां वृणीष्वेति तदा भरतसत्तम
अथैतावब्रवीच्छक्रः साह्यं नः क्रियतामिति १२
ततस्तौ शक्रमब्रूतां करिष्यावो यदिच्छसि
ताभ्यां च सहितः शक्रो विजिग्ये दैत्यदानवान् १३
नर इन्द्रस्य संग्रामे हत्वा शत्रून्परंतपः
पौलोमान्कालखञ्जांश्च सहस्राणि शतानि च १४
एष भ्रान्ते रथे तिष्ठन्भल्लेनापहरच्छिरः
जम्भस्य ग्रसमानस्य यज्ञमर्जुन आहवे १५
एष पारे समुद्रस्य हिरण्यपुरमारुजत्
हत्वा षष्टि सहस्राणि निवातकवचान्रणे १६
एष देवान्सहेन्द्रेण जित्वा परपुरञ्जयः

अतर्पयन्महाबाहुरर्जुनो जातवेदसम्
नारायणस्तथैवात्र भूयसोऽन्याञ्जघान ह १७
एवमेतौ महावीर्यौ तौ पश्यत समागतौ
वासुदेवार्जुनौ वीरौ समवेतौ महारथौ १८
नरनारायणौ देवौ पूर्वदेवाविति श्रुतिः
अजेयौ मानुषे लोके सेन्द्रैरपि सुरासुरैः १९
एष नारायणः कृष्णः फल्गुनस्तु नरः स्मृतः
नारायणो नरश्चैव सत्त्वमेकं द्विधाकृतम् २०
एतौ हि कर्मणा लोकानश्नुवातेऽक्षयान्ध्रुवान्
तत्र तत्रैव जायेते युद्धकाले पुनः पुनः २१
तस्मात्कर्मैव कर्तव्यमिति होवाच नारदः
एतद्धि सर्वमाचष्ट वृष्णिचक्रस्य वेदवित् २२
शङ्खचक्रगदाहस्तं यदा द्रक्ष्यसि केशवम्
पर्याददानं चास्त्राणि भीमधन्वानमर्जुनम् २३
सनातनौ महात्मानौ कृष्णावेकरथे स्थितौ
दुर्योधन तदा तात स्मर्तासि वचनं मम २४
नो चेदयमभावः स्यात्कुरूणां प्रत्युपस्थितः
अर्थाच्च तात धर्माच्च तव बुद्धिरुपप्लुता २५
न चेद्ग्रहीष्यसे वाक्यं श्रोतासि सुबहून्हतान्
तवैव हि मतं सर्वे कुरवः पर्युपासते २६
त्रयाणामेव च मतं तत्त्वमेकोऽनुमन्यसे
रामेण चैव शप्तस्य कर्णस्य भरतर्षभ २७
दुर्जातेः सूतपुत्रस्य शकुनेः सौबलस्य च
तथा क्षुद्रस्य पापस्य भ्रातुर्दुःशासनस्य च २८
कर्ण उवाच
नैवमायुष्मता वाच्यं यन्मामात्थ पितामह
क्षत्रधर्मे स्थितो ह्यस्मि स्वधर्मादनपेयिवान् २९
किं चान्यन्मयि दुर्वृत्तं येन मां परिगर्हसे
न हि मे वृजिनं किंचिद्धार्तराष्ट्रा विदुः क्वचित् ३०
राज्ञो हि धृतराष्ट्रस्य सर्वं कार्यं प्रियं मया

तथा दुर्योधनस्यापि स हि राज्ये समाहितः ३१
वैशम्पायन उवाच
कर्णस्य तु वचः श्रुत्वा भीष्मः शान्तनवः पुनः
धृतराष्ट्रं महाराजमाभाष्येदं वचोऽब्रवीत् ३२
यदयं कत्थते नित्यं हन्ताहं पाण्डवानिति
नायं कलापि सम्पूर्णा पाण्डवानां महात्मनाम् ३३
अनयो योऽयमागन्ता पुत्राणां ते दुरात्मनाम्
तदस्य कर्म जानीहि सूतपुत्रस्य दुर्मतेः ३४
एनमाश्रित्य पुत्रस्ते मन्दबुद्धिः सुयोधनः
अवमन्यत तान्वीरान्देवपुत्रानरिंदमान् ३५
किं चाप्यनेन तत्कर्म कृतं पूर्वं सुदुष्करम्
तैर्यथा पाण्डवैः सर्वैरेकैकेन कृतं पुरा ३६
दृष्ट्वा विराटनगरे भ्रातरं निहतं प्रियम्
धनंजयेन विक्रम्य किमनेन तदा कृतम् ३७
सहितान्हि कुरून्सर्वानभियातो धनंजयः
प्रमथ्य चाच्छिनद्वावः किमयं प्रोषितस्तदा ३८
गन्धर्वैर्घोषयात्रायां ह्रियते यत्सुतस्तव
क्व तदा सूतपुत्रोऽभूद्य इदानीं वृषायते ३९
ननु तत्रापि पार्थेन भीमेन च महात्मना
यमाभ्यामेव चागम्य गन्धर्वास्ते पराजिताः ४०
एतान्यस्य मृषोक्तानि बहूनि भरतर्षभ
विकत्थनस्य भद्रं ते सदा धर्मार्थलोपिनः ४१
भीष्मस्य तु वचः श्रुत्वा भारद्वाजो महामनाः
धृतराष्ट्रमुवाचेदं राजमध्येऽभिपूजयन् ४२
यदाह भरतश्रेष्ठो भीष्मस्तत्क्रियतां नृप
न काममर्थलिप्सूनां वचनं कर्तुमर्हसि ४३
पुरा युद्धात्साधु मन्ये पाण्डवैः सह संगमम्
यद्वाक्यमर्जुनेनोक्तं संजयेन निवेदितम् ४४
सर्वं तदभिजानामि करिष्यति च पाण्डवः
न ह्यस्य त्रिषु लोकेषु सदृशोऽस्ति धनुर्धरः ४५

अनादृत्य तु तद्वाक्यमर्थवद्द्रोणभीष्मयोः
ततः स संजयं राजा पर्यपृच्छत पाण्डवम् ४६
तदैव कुरवः सर्वे निराशा जीवितोऽभवन्
भीष्मद्रोणौ यदा राजा न सम्यगनुभाषते ४७
इति श्रीमहाभारते उद्योगपर्वणि अष्टचत्वारिंशोऽध्यायः ४८

## एकोन पञ्चाशोऽध्यायः

धृतराष्ट्र उवाच
किमसौ पाण्डवो राजा धर्मपुत्रोऽभ्यभाषत
श्रुत्वेमा बहुलाः सेनाः प्रत्यर्थेन समागताः १
किमिच्छत्यभिसंरम्भाद्योत्स्यमानो युधिष्ठिरः
कस्यस्विद्भ्रातृपुत्राणां चिन्तासु मुखमीक्षते २
के स्विदेनं वारयन्ति शाम्य युध्येति वा पुनः
निकृत्या कोपितं मन्दैर्धर्मज्ञं धर्मचारिणम् ३
संजय उवाच
राज्ञो मुखमुदीक्षन्ते पाञ्चालाः पाण्डवैः सह
युधिष्ठिरस्य भद्रं ते स सर्माननुशास्ति च ४
पृथग्भूताः पाण्डवानां पाञ्चालानां रथव्रजाः
आयान्तमभिनन्दन्ति कुन्तीपुत्रं युधिष्ठिरम् ५
तमः सूर्यमिवोद्यन्तं कौन्तेयं दीप्ततेजसम्
पाञ्चालाः प्रतिनन्दन्ति तेजोराशिमिवोद्यतम् ६
आ गोपालाविपालेभ्यो नन्दमानं युधिष्ठिरम्
पाञ्चालाः केकया मत्स्याः प्रतिनन्दन्ति पाण्डवम् ७
ब्राह्मण्यो राजपुत्र्यश्च विशां दुहितरश्च याः
क्रीडन्त्योऽभिसमायान्ति पार्थं संनद्धमीक्षितुम् ८
धृतराष्ट्र उवाच
संजयाचक्ष्व केनास्मान्पाण्डवा अभ्ययुञ्जत
धृष्टद्युम्नेन सेनान्या सोमकाः किंबला इव ९
वैशम्पायन उवाच
गावल्गणिस्तु तत्पृष्टः सभायां कुरुसंसदि

निःश्वस्य सुभृशं दीर्घं मुहुः संचिन्तयन्निव
तत्रानिमित्ततो दैवात्सूतं कश्मलमाविशत् १०
तदाचचक्षे पुरुषः सभायां राजसंसदि
संजयोऽय महाराज मूर्छितः पतितो भुवि
वाचं न सृजते कांचिद्धीनप्रज्ञोऽल्पचेतनः ११
धृतराष्ट्र उवाच
अपश्यत्संजयो नूनं कुन्तीपुत्रान्महारथान्
तैरस्य पुरुषव्याघ्रैर्भृशमुद्वेजितं मनः १२
वैशम्पायन उवाच
संजयश्चेतनां लब्ध्वा प्रत्याश्वस्येदमब्रवीत्
धृतराष्ट्रं महाराज सभायां कुरुसंसदि १३
दृष्टवानस्मि राजेन्द्र कुन्तीपुत्रान्महारथान्
मत्स्यराजगृहावासादवरोधेन कर्शितान्
शृणु यैर्हि महाराज पाण्डवा अभ्ययुञ्जत १४
यो नैव रोषान्न भयान्न कामान्नार्थकारणात्
न हेतुवादाद्धर्मात्मा सत्यं जह्यात्कथंचन १५
यः प्रमाणं महाराज धर्मे धर्मभृतां वरः
अजातशत्रुणा तेन पाण्डवा अभ्ययुञ्जत १६
यस्य बाहुबले तुल्यः पृथिव्यां नास्ति कश्चन
यो वै सर्वान्महीपालान्वशे चक्रे धनुर्धरः
तेन वो भीमसेनेन पाण्डवा अभ्ययुञ्जत १७
निःसृतानां जतुगृहाथिडिम्बात्पुरुषादकात्
य एषामभवद्द्वीपः कुन्तीपुत्रो वृकोदरः १८
याज्ञसेनीमथो यत्र सिन्धुराजोऽपकृष्टवान्
तत्रैषामभवद्द्वीपः कुन्तीपुत्रो वृकोदरः १९
यश्च तान्संगतान्सर्वान्पाण्डवान्वारणावते
दह्यतो मोचयामास तेन वस्तेऽभ्ययुञ्जत २०
कृष्णायाश्चरता प्रीतिं येन क्रोधवशा हताः
प्रविश्य विषमं घोरं पर्वतं गन्धमादनम् २१
यस्य नागायुतं वीर्यं भुजयोः सारमर्पितम्

तेन वो भीमसेनेन पाण्डवा अभ्ययुञ्जत २२
कृष्णद्वितीयो विक्रम्य तुष्ट्यर्थं जातवेदसः
अजयद्यः पुरा वीरो युध्यमानं पुरंदरम् २३
यः स साक्षान्महादेवं गिरिशं शूलपाणिनम्
तोषयामास युद्धेन देवदेवमुमापतिम् २४
यश्च सर्वान्वशे चक्रे लोकपालान्धनुर्धरः
तेन वो विजयेनाजौ पाण्डवा अभ्ययुञ्जत २५
यः प्रतीचीं दिशं चक्रे वशे म्लेच्छगणायुताम्
स तत्र नकुलो योद्धा चित्रयोधी व्यवस्थितः २६
तेन वो दर्शनीयेन वीरेणातिधनुर्भृता
माद्रीपुत्रेण कौरव्य पाण्डवा अभ्ययुञ्जत २७
यः काशीनङ्गमगधान्कलिङ्गांश्च युधाजयत्
तेन वः सहदेवेन पाण्डवा अभ्ययुञ्जत २८
यस्य वीर्येण सदृशाश्चत्वारो भुवि मानवाः
अश्वत्थामा धृष्टकेतुः प्रद्युम्नो रुक्मिरेव च २९
तेन वः सहदेवेन पाण्डवा अभ्ययुञ्जत
यवीयसा नृवीरेण माद्रीनन्दिकरेण च ३०
तपश्चचार या घोरं काशिकन्या पुरा सती
भीष्मस्य वधमिच्छन्ती प्रेत्यापि भरतर्षभ ३१
पाञ्चालस्य सुता जज्ञे दैवाच्च स पुनः पुमान्
स्त्रीपुंसोः पुरुषव्याघ्र यः स वेद गुणागुणान् ३२
यः कलिङ्गांन्समापेदे पाञ्चाल्यो युद्धदुर्मदः
शिखण्डिना वः कुरवः कृतास्त्रेणाभ्ययुञ्जत ३३
यां यक्षः पुरुषं चक्रे भीष्मस्य निधने किल
महेष्वासेन रौद्रेण पाण्डवा अभ्ययुञ्जत ३४
महेष्वासा राजपुत्रा भ्रातरः पञ्च केकयाः
सुमृष्टकवचाः शूरास्तैश्च वस्तेऽभ्ययुञ्जत ३५
यो दीर्घबाहुः क्षिप्रास्त्रो धृतिमान्सत्यविक्रमः
तेन वो वृष्णिवीरेण युयुधानेन संगरः ३६
य आसीच्छरणं काले पाण्डवानां महात्मनाम्

रणे तेन विराटेन पाण्डवा अभ्ययुञ्जत ३७
यः स काशिपती राजा वाराणस्यां महारथः
स तेषामभवद्योद्धा तेन वस्तेऽभ्ययुञ्जत ३८
शिशुभिर्दुर्जयैः संख्ये द्रौपदेयैर्महात्मभिः
आशीविषसमस्पर्शैः पाण्डवा अभ्ययुञ्जत ३९
यः कृष्णसदृशो वीर्ये युधिष्ठिरसमो दमे
तेनाभिमन्युना संख्ये पाण्डवा अभ्ययुञ्जत ४०
यश्चैवाप्रतिमो वीर्ये धृष्टकेतुर्महायशाः
दुःसहः समरे क्रुद्धः शैशुपालिर्महारथः
तेन वश्चेदिराजेन पाण्डवा अभ्ययुञ्जत ४१
यः संश्रयः पाण्डवानां देवानामिव वासवः
तेन वो वासुदेवेन पाण्डवा अभ्ययुञ्जत ४२
तथा चेदिपतेर्भ्राता शरभो भरतर्षभ
करकर्षेण सहितस्ताभ्यां वस्तेऽभ्ययुञ्जत ४३
जारासंधिः सहदेवो जयत्सेनश्च तावुभौ
द्रुपदश्च महातेजा बलेन महता वृतः
त्यक्तात्मा पाण्डवार्थाय योत्स्यमानो व्यवस्थितः ४४
एते चान्ये च बहवः प्राच्योदीच्या महीक्षितः
शतशो यानपाश्रित्य धर्मराजो व्यवस्थितः ४५

इति श्रीमहाभारते उद्योगपर्वणि एकोनपञ्चाशोऽध्यायः ४९

## पञ्चाशोऽध्यायः

धृतराष्ट्र उवाच
सर्व एते महोत्साहा ये त्वया परिकीर्तिताः
एकतस्त्वेव ते सर्वे समेता भीम एकतः १
भीमसेनाद्धि मे भूयो भयं संजायते महत्
क्रुद्धादमर्षणात्तात व्याघ्रादिव महारुरोः २
जागर्मि रात्रयः सर्वा दीर्घमुष्णं च निःश्वसन्
भीतो वृकोदरात्तात सिंहात्पशुरिवाबलः ३
न हि तस्य महाबाहोः शक्रप्रतिमतेजसः

सैन्येऽस्मिन्प्रतिपश्यामि य एनं विषहेद्युधि ४
अमर्षणश्च कौन्तेयो दृढवैरश्च पाण्डवः
अनर्महासी सोन्मादस्तिर्यक्प्रेक्षी महास्वनः ५
महावेगो महोत्साहो महाबाहुर्महाबलः
मन्दानां मम पुत्राणां युद्धेनान्तं करिष्यति ६
ऊरुग्राहगृहीतानां गदां बिभ्रद्वृकोदरः
कुरूणामृषभो युद्धे दण्डपाणिरिवान्तकः ७
सैक्यायसमयीं घोरां गदां काञ्चनभूषिताम्
मनसाहं प्रपश्यामि ब्रह्मदण्डमिवोद्यतम् ८
यथा रुरूणां यूथेषु सिंहो जातबलश्चरेत्
मामकेषु तथा भीमो बलेषु विचरिष्यति ९
सर्वेषां मम पुत्राणां स एकः क्रूरविक्रमः
बह्वाशी विप्रतीपश्च बाल्येऽपि रभसः सदा १०
उद्वेपते मे हृदयं यदा दुर्योधनादयः
बाल्येऽपि तेन युध्यन्तो वारणेनेव मर्दिताः ११
तस्य वीर्येण संक्लिष्टा नित्यमेव सुता मम
स एव हेतुर्भेदस्य भीमो भीमपराक्रमः १२
ग्रसमानमनीकानि नरवारणवाजिनाम्
पश्यामीवाग्रतो भीमं क्रोधमूर्च्छितमाहवे १३
अस्त्रे द्रोणार्जुनसमं वायुवेगसमं जवे
संजयाचक्ष्व मे शूरं भीमसेनममर्षणम् १४
अतिलाभं तु मन्येऽह यत्तेन रिपुघातिना
तदैव न हताः सर्वे मम पुत्रा मनस्विना १५
येन भीमबला यक्षा राक्षसाश्च समाहताः
कथं तस्य रणे वेगं मानुषः प्रसहिष्यति १६
न स जातु वशे तस्थौ मम बालोऽपि संजय
किं पुनर्मम दुष्पुत्रैः क्लिष्टः सम्प्रति पाण्डवः १७
निष्ठुरः स च नैष्ठुर्याद्भज्येदपि न संनमेत्
तिर्यक्प्रेक्षी संहतभ्रूः कथं शाम्येद्वृकोदरः १८
बृहदंसोऽप्रतिबलो गौरस्ताल इवोद्गतः

प्रमाणतो भीमसेनः प्रादेशेनाधिकोऽजुनात् १९
जवेन वाजिनोऽत्येति बलेनात्येति कुञ्जरान्
अव्यक्तजल्पी मध्वक्षो मध्यमः पाण्डवो बली २०
इति बाल्ये श्रुतः पूर्वं मया व्यासमुखात्पुरा
रूपतो वीर्यतश्चैव याथातथ्येन पाण्डवः २१
आयसेन स दण्डेन रथान्नागान्हयान्नरान्
हनिष्यति रणे क्रुद्धो भीमः प्रहरतां वरः २२
अमर्षी नित्यसंरब्धो रौद्रः क्रूरपराक्रमः
ममा तात प्रतीपानि कुर्वन्पूर्वं विमानितः २३
निष्कीर्णामायसीं स्थूलां सुपर्वां काञ्चनीं गदाम्
शतघ्नीं शतनिर्ह्रादां कथं शक्ष्यन्ति मे सुताः २४
अपारमप्लवागाधं समुद्रं शरवेगिनम्
भीमसेनमयं दुर्गं तात मन्दास्तितीर्षवः २५
क्रोशतो मे न शृण्वन्ति बालाः पण्डितमानिनः
विषमं नावबुध्यन्ते प्रपातं मधुदर्शिनः २६
संयुगं ये करिष्यन्ति नररूपेण वायुना
नियतं चोदिता धात्रा सिंहेनेव महामृगाः २७
शैक्यां तात चतुष्किष्कुं षडस्रिममितौजसम्
प्रहितां दुःखसंस्पर्शां कथं शक्ष्यन्ति मे सुताः २८
गदां भ्रामयतस्तस्य भिन्दतो हस्तिमस्तकान्
सृक्किणी लेलिहानस्य बाष्पमुत्सृजतो मुहुः २९
उद्दिश्य पातान्पततः कुर्वतो भैरवान्रवान्
प्रतीपान्पततो मत्तान्कुञ्जरान्प्रतिगर्जतः ३०
विगाह्य रथमार्गेषु वरानुद्दिश्य निघ्नतः
अग्नेः प्रज्वलितस्येव अपि मुच्येत मे प्रजाः ३१
वीथीं कुर्वन्महाबाहुर्द्रावयन्मम वाहिनीम्
नृत्यन्निव गदापाणिर्युगान्तं दर्शयिष्यति ३२
प्रभिन्न इव मातङ्गः प्रभञ्जन्पुष्पितान्द्रुमान्
प्रवेक्ष्यति रणे सेनां पुत्राणां मे वृकोदरः ३३
कुर्वन्रथान्विपुरुषान्विध्वजान्भग्नपुष्करान्

आरुजन्पुरुषव्याघ्रो रथिनः सादिनस्तथा ३४
गङ्गावेग इवानूपांस्तीरजान्विविधान्द्रुमान्
प्रवेक्ष्यति महासेनां पुत्राणां मम संजय ३५
वशं नूनं गमिष्यन्ति भीमसेनबलार्दिताः
मम पुत्राश्च भृत्याश्च राजानश्चैव संजय ३६
येन राजा महावीर्यः प्रविश्यान्तः पुरं पुरा
वासुदेवसहायेन जरासंधो निपातितः ३७
कृत्स्नेयं पृथिवी देवी जरासंधेन धीमता
मागधेन्द्रेण बलिना वशे कृत्वा प्रतापिता ३८
भीष्मप्रतापात्कुरवो नयेनान्धकवृष्णयः
ते न तस्य वशं जग्मुः केवलं दैवमेव वा ३९
स गत्वा पाण्डुपुत्रेण तरसा बाहुशालिना
अनायुधेन वीरेण निहतः किं ततोऽधिकम् ४०
दीर्घकालेन संसिक्तं विषमाशीविषो यथा
स मोक्ष्यति रणे तेजः पुत्रेषु मम संजय ४१
महेन्द्र इव वज्रेण दानवान्देवसत्तमः
भीमसेनो गदापाणिः सूदयिष्यति मे सुतान् ४२
अविषह्यमनावार्यं तीव्रवेगपराक्रमम्
पश्यामीवातिताम्राक्षमापतन्तं वृकोदरम् ४३
अगदस्याप्यधनुषो विरथस्य विवर्मणः
बाहुभ्यां युद्ध्यमानस्य कस्तिष्ठेदग्रतः पुमान् ४४
भीष्मो द्रोणश्च विप्रोऽय कृपः शारद्वतस्तथा
जानन्त्येते यथैवाहं वीर्यज्ञस्तस्य धीमतः ४५
आर्यव्रतं तु जानन्तः संगरान्न बिभित्सवः
सेनामुखेषु स्थास्यन्ति मामकानां नरर्षभाः ४६
बलीयः सर्वतो दिष्टं पुरुषस्य विशेषतः
पश्यन्नपि जयं तेषां न नियच्छामि यत्सुतान् ४७
ते पुराणं महेष्वासा मार्गमैन्द्रं समास्थिताः
त्यक्ष्यन्ति तुमुले प्राणान्रक्षन्तः पार्थिवं यशः ४८
यथैषां मामकास्तात तथैषां पाण्डवा अपि

पौत्रा भीष्मस्य शिष्याश्च द्रोणस्य च कृपस्य च ४९
यत्त्वस्मदाश्रयं किंचिद्वृत्तमिष्टं च संजय
तस्यापचितिमार्यत्वात्कर्तारः स्थविरास्त्रयः ५०
आददानस्य शस्त्रं हि क्षत्रधर्मं परीप्सतः
निधनं ब्राह्मणस्याजौ वरमेवाहुरुत्तमम् ५१
स वै शोचामि सर्वान्वै ये युयुत्सन्ति पाण्डवान्
विक्रुष्टं विदुरेणादौ तदेतद्भयमागतम् ५२
न तु मन्ये विघाताय ज्ञानं दुःखस्य संजय
भवत्यतिबले ह्येतज्ज्ञानमप्युपघातकम् ५३
ऋषयो ह्यपि निर्मुक्ताः पश्यन्तो लोकसंग्रहान्
सुखे भवन्ति सुखिनस्तथा दुःखेन दुःखिताः ५४
किं पुनर्योऽहमासक्तस्तत्र तत्र सहस्रधा
पुत्रेषु राज्यदारेषु पौत्रेष्वपि च बन्धुषु ५५
संशये तु महत्यस्मिन्किं नु मे क्षममुत्तमम्
विनाशं ह्येव पश्यामि कुरूणामनुचिन्तयन् ५६
द्यूतप्रमुखमाभाति कुरूणां व्यसनं महत्
मन्देनैश्वर्यकामेन लोभात्पापमिदं कृतम् ५७
मन्ये पार्यायधर्मोऽय कालस्यात्यन्तगामिनः
चक्रे प्रधिरिवासक्तो नास्य शक्यं पलायितुम् ५८
किं नु कार्यं कथं कुर्यां क्व नु गच्छामि संजय
एते नश्यन्ति कुरवो मन्दाः कालवशं गताः ५९
अवशोऽह पुरा तात पुत्राणां निहते शते
श्रोष्यामि निनदं स्त्रीणां कथं मां मरणं स्पृशेत् ६०
यथा निदाघे ज्वलनः समिद्धो दहेत्कक्षं वायुना चोद्यमानः
गदाहस्तः पाण्डवस्तद्वदेव हन्ता मदीयान्सहितोऽजुनेन ६१
इति श्रीमहाभारते उद्योगपर्वणि पञ्चाशोऽध्यायः ५०

एक पञ्चाशोऽध्यायः

धृतराष्ट्र उवाच
यस्य वै नानृता वाचः प्रवृत्ता अनुशुश्रुमः

त्रैलोक्यमपि तस्य याद्योद्धा यस्य धनंजयः १
तस्यैव च न पश्यामि युधि गाण्डीवधन्वनः
अनिशं चिन्तयानोऽपि यः प्रतीयाद्रथेन तम् २
अस्यतः कर्णिनालीकान्मार्गणान्हृदयच्छिदः
प्रत्येता न समः कश्चिद्युधि गाण्डीवधन्वनः ३
द्रोणकर्णौ प्रतीयातां यदि वीरौ नरर्षभौ
माहात्म्यात्संशयो लोके न त्वस्ति विजयो मम ४
घृणी कर्णः प्रमादी च आचार्यः स्थविरो गुरुः
समर्थो बलवान्पार्थो दृढधन्वा जितक्लमः
भवेत्सुतुमुलं युद्धं सर्वशोऽप्यपराजयः ५
सर्वे ह्यस्त्रविदः शूराः सर्वे प्राप्ता महद्यशः
अपि सर्वामरैश्वर्यं त्यजेयुर्न पुनर्जयम्
वधे नूनं भवेच्छान्तिस्तयोर्वा फल्गुनस्य वा ६
न तु जेतार्जुनस्यास्ति हन्ता चास्य न विद्यते
मन्युस्तस्य कथं शाम्येन्मन्दान्प्रति य उत्थितः ७
अन्येऽप्यस्त्राणि जानन्ति जीयन्ते च जयन्ति च
एकान्तविजयस्त्वेव श्रूयते फल्गुनस्य ह ८
त्रयस्त्रिंशत्समाहूय खाण्डवेऽग्निमतर्पयत्
जिगाय च सुरान्सर्वान्नास्य वेद्मि पराजयम् ९
यस्य यन्ता हृषीकेशः शीलवृत्तसमो युधि
ध्रुवस्तस्य जयस्तात यथेन्द्रस्य जयस्तथा १०
कृष्णावेकरथे यत्तावधिज्यं गाण्डिवं धनुः
युगपत्त्रीणि तेजांसि समेतान्यनुशुश्रुमः ११
नैव नोऽस्ति धनुस्तादृक्न योद्धा न च सारथिः
तच्च मन्दा न जानन्ति दुर्योधनवशानुगाः १२
शेषयेदशनिर्दीप्तो विपतन्मूर्ध्नि संजय
न तु शेषं शराकुर्युरस्तास्तात किरीटिना १३
अपि चास्यन्निवाभाति निघ्नन्निव च फल्गुनः
उद्धरन्निव कायेभ्यः शिरांसि शरवृष्टिभिः १४
अपि बाणमयं तेजः प्रदीप्तमिव सर्वतः

गाराडीवेद्धं दहेताजौ पुत्राणां मम वाहिनीम् १५
अपि सा रथघोषेण भयार्ता सव्यसाचिनः
वित्रस्ता बहुला सेना भारती प्रतिभाति मे १६
यथा कक्षं दहत्यग्निःप्रवृद्धः सर्वतश्चरन्
महार्चिरनिलोद्धूतस्तद्वद्धक्ष्यति मामकान् १७
यदोद्वमन्निशितान्बाणसंघान्स्थाताततायी समरे किरीटी
सृष्टोऽन्तकः सर्वहरो विधात्रा यथा भवेत्तद्वदवारणीयः १८
यदा ह्यभीक्ष्णं सुबहून्प्रकारान्श्रोतास्मि तानावसथे कुरूणाम्
तेषां समन्ताच्च तथा रणाग्रे क्षयः किलायं भरतानुपैति १९
इति श्रीमहाभारते उद्योगपर्वणि एकपञ्चाशोऽध्यायः ५१

## द्विपञ्चाशोऽध्यायः

धृतराष्ट्र उवाच
यथैव पाराडवाः सर्वे पराक्रान्ता जिगीषवः
तथैवाभिसरास्तेषां त्यक्तात्मानो जये धृताः १
त्वमेव हि पराक्रान्तानाचक्षीथाः परान्मम
पाञ्चालान्केकयान्मत्स्यान्मागधान्वत्सभूमिपान् २
यश्च सेन्द्रानिमाँल्लोकानिच्छन्कुर्याद्वशे बली
स श्रेष्ठो जगतः कृष्णः पाराडवानां जये धृतः ३
समस्तामर्जुनाद्विद्यां सात्यकिः क्षिप्रमाप्तवान्
शैनेयः समरे स्थाता बीजवत्प्रवपञ्शरान् ४
धृष्टद्युम्नश्च पाञ्चाल्यः क्रूरकर्मा महारथः
मामकेषु रणं कर्ता बलेषु परमास्त्रवित् ५
युधिष्ठिरस्य च क्रोधादर्जुनस्य च विक्रमात्
यमाभ्यां भीमसेनाच्च भयं मे तात जायते ६
अमानुषं मनुष्येन्द्रैर्जालं विततमन्तरा
मम सेनां हनिष्यन्ति ततः क्रोशामि संजय ७
दर्शनीयो मनस्वी च लक्ष्मीवान्ब्रह्मवर्चसी
मेधावी सुकृतप्रज्ञो धर्मात्मा पाराडुनन्दनः ८
मित्रामात्यैः सुसम्पन्नः सम्पन्नो योज्ययोजकैः

भ्रातृभिः श्वशुरै पुत्रैरुपपन्नो महारथैः ९
धृत्या च पुरुषव्याघ्रो नैभृत्येन च पाण्डवः
अनृशंसो वदान्यश्च ह्रीमान्सत्यपराक्रमः १०
बहुश्रुतः कृतात्मा च वृद्धसेवी जितेन्द्रियः
तं सर्वगुणसम्पन्नं समिद्धमिव पावकम् ११
तपन्तमिव को मन्दः पतिष्यति पतङ्गवत्
पाण्डवाग्निमनावार्यं मुमूर्षुर्मूढचेतनः १२
तनुरुच्चः शिखी राजा शुद्धजाम्बूनदप्रभः
मन्दानां मम पुत्राणां युद्धेनान्तं करिष्यति १३
तैरयुद्धं साधु मन्ये कुरवस्तन्निबोधत
युद्धे विनाशः कृत्स्नस्य कुलस्य भविता ध्रुवम् १४
एषा मे परमा शान्तिर्यया शाम्यति मे मनः
यदि त्वयुद्धमिष्टं वो वयं शान्त्यै यतामहे १५
न तु नः शिक्षमाणानामुपेक्षेत युधिष्ठिरः
जुगुप्सति ह्यधर्मेण मामेवोद्दिश्य कारणम् १६
इति श्रीमहाभारते उद्योगपर्वणि द्विपञ्चाशोऽध्यायः ५२

## त्रिपञ्चाशोऽध्यायः

संजय उवाच
एवमेतन्महाराज यथा वदसि भारत
युद्धे विनाशः क्षत्रस्य गाण्डीवेन प्रदृश्यते १
इदं तु नाभिजानामि तव धीरस्य नित्यशः
यत्पुत्रवशमागच्छेः सत्त्वज्ञः सव्यसाचिनः २
नैष कालो महाराज तव शश्वत्कृतागसः
त्वया ह्येवादितः पार्था निकृता भरतर्षभ ३
पिता श्रेष्ठः सुहृद्यश्च सम्यक्प्रणिहितात्मवान्
आस्थेयं हि हितं तेन न द्रोग्धा गुरुरुच्यते ४
इदं जितमिदं लब्धमिति श्रुत्वा पराजितान्
द्यूतकाले महाराज स्मयसे स्म कुमारवत् ५
परुषाण्युच्यमानान्स्म पुरा पार्थानुपेक्षसे

कृत्स्नं राज्यं जयन्तीति प्रपातं नानुपश्यसि ६
पित्र्यं राज्यं महाराज कुरवस्ते सजाङ्गलाः
अथ वीरैर्जितां भूमिमखिलां प्रत्यपद्यथाः ७
बाहुवीर्यार्जिता भूमिस्तव पार्थैर्निवेदिता
मयेदं कृतमित्येव मन्यसे राजसत्तम ८
ग्रस्तान्गन्धर्वराजेन मज्जतो ह्यप्लवेऽम्भसि
आनिनाय पुनः पार्थः पुत्रांस्ते राजसत्तम ९
कुमारवच्च स्मयसे द्यूते विनिकृतेषु यत्
पाण्डवेषु वनं राजन्प्रव्रजत्सु पुनः पुनः १०
प्रवर्षतः शरव्रातानर्जुनस्य शितान्बहून्
अप्यर्णवा विशुष्येयुः किं पुनर्मांसयोनयः ११
अस्यतां फल्गुनः श्रेष्ठो गाण्डीवं धनुषां वरम्
केशवः सर्वभूतानां चक्राणां च सुदर्शनम् १२
वानरो रोचमानश्च केतुः केतुमतां वरः
एवमेतानि सरथो वहञ्श्वेतहयो रणे
क्षपयिष्यति नो राजन्कालचक्रमिवोद्यतम् १३
तस्याद्य वसुधा राजन्निखिला भरतर्षभ
यस्य भीमार्जुनौ योधौ स राजा राजसत्तम १४
तथा भीमहतप्रायां मज्जन्तीं तव वाहिनीम्
दुर्योधनमुखा दृष्ट्वा क्षयं यास्यन्ति कौरवाः १५
न हि भीमभयाद्भीता लप्स्यन्ते विजयं विभो
तव पुत्रा महाराज राजानश्चानुसारिणः १६
मत्स्यास्त्वामद्य नार्चन्ति पाञ्चालाश्च सकेकयाः
शाल्वेयाः शूरसेनाश्च सर्वे त्वामवजानते
पार्थं ह्येते गताः सर्वे वीर्यज्ञास्तस्य धीमतः १७
अनर्हानेव तु वधे धर्मयुक्तान्विकर्मणा
सर्वोपायैर्नियन्तव्यः सानुगः पापपूरुषः
तव पुत्रो महाराज नात्र शोचितुमर्हसि १८
द्यूतकाले मया चोक्तं विदुरेण च धीमता
यदिदं ते विलपितं पाण्डवान्प्रति भारत

अनीशेनेव राजेन्द्र सर्वमेतन्निरर्थकम् १९
इति श्रीमहाभारते उद्योगपर्वणि त्रिपञ्चाशोऽध्यायः ५३

चतुः पञ्चाशोऽध्यायः

दुर्योधन उवाच
न भेतव्यं महाराज न शोच्या भवता वयम्
समर्थाः स्म परान्राजन्विजेतुं समरे विभो १
वनं प्रव्राजितान्पार्थान्यदायान्मधुसूदनः
महता बलचक्रेण परराष्ट्रावमर्दिना २
केकया धृष्टकेतुश्च धृष्टद्युम्नश्च पार्षतः
राजानश्चान्वयुः पार्थान्बहवोऽन्येऽनुयायिनः ३
इन्द्रप्रस्थस्य चादूरात्समाजग्मुर्महारथाः
व्यगर्हयंश्च संगम्य भवन्तं कुरुभिः सह ४
ते युधिष्ठिरमासीनमजिनैः प्रतिवासितम्
कृष्णप्रधानाः संहत्य पर्युपासन्त भारत ५
प्रत्यादानं च राज्यस्य कार्यमूचुर्नराधिपाः
भवतः सानुबन्धस्य समुच्छेदं चिकीर्षवः ६
श्रुत्वा चैतन्मयोक्तास्तु भीष्मद्रोणकृपास्तदा
ज्ञातिक्षयभयाद्राजन्भीतेन भरतर्षभ ७
न ते स्थास्यन्ति समये पाण्डवा इति मे मतिः
समुच्छेदं हि नः कृत्स्नं वासुदेवश्चिकीर्षति ८
ऋते च विदुरं सर्वे यूयं वध्या महात्मनः
धृतराष्ट्रश्च धर्मज्ञो न वध्यःकुरुसत्तमः ९
समुच्छेदं च कृत्स्नं नः कृत्वा तात जनार्दनः
एकराज्यं कुरूणां स्म चिकीर्षति युधिष्ठिरे १०
तत्र किं प्राप्तकालं नः प्रणिपातः पलायनम्
प्राणान्वा सम्परित्यज्य प्रतियुध्यामहे परान् ११
प्रतियुद्धे तु नियतः स्यादस्माकं पराजयः
युधिष्ठिरस्य सर्वे हि पार्थिवा वशवर्तिनः १२
विरक्तराष्ट्राश्च वयं मित्राणि कुपितानि नः

धिक्कृताः पार्थिवैः सर्वैः स्वजनेन च सर्वशः १३
प्रणिपाते न दोषोऽस्ति बन्धूनां शाश्वतीः समाः
पितरं त्वेव शोचामि प्रज्ञानेत्रं जनेश्वरम्
मत्कृते दुःखमापन्नं क्लेशं प्राप्तमनन्तकम् १४
कृतं हि तव पुत्रैश्च परेषामवरोधनम्
मत्प्रियार्थं पुरैवैतद्विदितं ते नरोत्तम १५
ते राज्ञो धृतराष्ट्रस्य सामात्यस्य महारथाः
वैरं प्रतिकरिष्यन्ति कुलोच्छेदेन पाण्डवाः १६
ततो द्रोणोऽब्रवीद्भीष्मः कृपो द्रौणिश्च भारत
मत्वा मां महतीं चिन्तामास्थितं व्यथितेन्द्रियम् १७
अभिद्रुग्धाः परे चेन्नो न भेतव्यं परंतप
असमर्थाः परे जेतुमस्मान्युधि जनेश्वर १८
एकैकशः समर्थाः स्मो विजेतुं सर्वपार्थिवान्
आगच्छन्तु विनेष्यामो दर्पमेषां शितैः शरैः १९
पुरैकेन हि भीष्मेण विजिताः सर्वपार्थिवाः
मृते पितर्यभिक्रुद्धो रथेनैकेन भारत २०
जघान सुबहूंस्तेषां संरब्धः कुरुसत्तमः
ततस्ते शरणं जग्मुर्देवव्रतमिमं भयात् २१
स भीष्मः सुसमर्थोऽयमस्माभिः सहितो रणे
परान्विजेतुं तस्मात्ते व्येतु भीर्भरतर्षभ
इत्येषां निश्चयो ह्यासीत्तत्कालममितौजसाम् २२
पुरा परेषां पृथिवी कृत्स्नासीद्वशवर्तिनी
अस्मान्पुनरमी नाद्य समर्था जेतुमाहवे
छिन्नपक्षाः परे ह्यद्य वीर्यहीनाश्च पाण्डवाः २३
अस्मत्संस्था च पृथिवी वर्तते भरतर्षभ
एकार्थाः सुखदुःखेषु मयानीताश्च पार्थिवाः २४
अप्यग्निं प्रविशेयुस्ते समुद्रं वा परंतप
मदर्थे पार्थिवाः सर्वे तद्विद्धि कुरुसत्तम २५
उन्मत्तमिव चापि त्वां प्रहसन्तीह दुःखितम्
विलपन्तं बहुविधं भीतं परविकत्थने २६

एषां ह्येकैकशो राज्ञां समर्थः पाण्डवान्प्रति
आत्मानं मन्यते सर्वो व्येतु ते भयमागतम् २७
सर्वां समग्रां सेनां मे वासवोऽपि न शक्नुयात्
हन्तुमक्षय्यरूपेयं ब्रह्मणाऽपि स्वयंभुवा २८
युधिष्ठिरः पुरं हित्वा पञ्च ग्रामान्स याचति
भीतो हि मामकात्सैन्यात्प्रभावाच्चैव मे प्रभो २९
समर्थं मन्यसे यच्च कुन्तीपुत्रं वृकोदरम्
तन्मिथ्या न हि मे कृत्स्नं प्रभावं वेत्थ भारत ३०
मत्समो हि गदायुद्धे पृथिव्यां नास्ति कश्चन
नासीत्कश्चिदतिक्रान्तो भविता न च कश्चन ३१
युक्तो दुःखोचितश्चाहं विद्यापारगतस्तथा
तस्मान्न भीमान्नान्येभ्यो भयं मे विद्यते क्वचित् ३२
दुर्योधनसमो नास्ति गदायामिति निश्चयः
संकर्षणस्य भद्रं ते यत्तदैनमुपावसम् ३३
युद्धे संकर्षणसमो बलेनाभ्यधिको भुवि
गदाप्रहारं भीमो मे न जातु विषहेद्युधि ३४
एकं प्रहारं यं दद्यां भीमाय रुषितो नृप
स एवैनं नयेद्घोरं क्षिप्रं वैवस्वतक्षयम् ३५
इच्छेयं च गदाहस्तं राजन्द्रष्टुं वृकोदरम्
सुचिरं प्रार्थितो ह्येष मम नित्यं मनोरथः ३६
गदया निहतो ह्याजौ मया पार्थो वृकोदरः
विशीर्णगात्रः पृथिवीं परासुः प्रपतिष्यति ३७
गदाप्रहाराभिहतो हिमवानपि पर्वतः
सकृन्मया विशीर्येत गिरिः शतसहस्रधा ३८
स चाप्येतद्विजानाति वासुदेवार्जुनौ तथा
दुर्योधनसमो नास्ति गदायामिति निश्चयः ३९
तत्ते वृकोदरमयं भयं व्येतु महाहवे
व्यपनेष्याम्यहं ह्येनं मा राजन्विमना भव ४०
तस्मिन्मया हते क्षिप्रमर्जुनं बहवो रथाः
तुल्यरूपा विशिष्टाश्च क्षेप्स्यन्ति भरतर्षभ ४१

भीष्मो द्रोणः कृपो द्रौणिः कर्णो भूरिश्रवास्तथा
प्राग्ज्योतिषाधिपः शल्यः सिन्धुराजो जयद्रथः ४२
एकैक एषां शक्तस्तु हन्तुं भारत पाण्डवान्
समस्तास्तु क्षणेनैतान्नेष्यन्ति यमसादनम् ४३
समग्रा पार्थिवी सेना पार्थमेकं धनंजयम्
कस्मादशक्ता निर्जेतुमिति हेतुर्न विद्यते ४४
शरव्रातैस्तु भीष्मेण शतशोऽथ सहस्रशः
द्रोणद्रौणिकृपैश्चैव गन्ता पार्थो यमक्षयम् ४५
पितामहो हि गाङ्गेयः शन्तनोरधि भारत
ब्रह्मर्षिसदृशो जज्ञे देवैरपि दुरुत्सहः
पित्रा ह्युक्तः प्रसन्नेन नाकामस्त्वं मरिष्यसि ४६
ब्रह्मर्षेश्च भरद्वाजाद्द्रोण्यां द्रोणो व्यजायत
द्रोणाज्जज्ञे महाराज द्रौणिश्च परमास्त्रवित् ४७
कृपश्चाचार्यमुख्योऽय महर्षेर्गौतमादपि
शरस्तम्बोद्भवः श्रीमानवध्य इति मे मतिः ४८
अयोनिजं त्रयं ह्येतत्पिता माता च मातुलः
अश्वत्थाम्नो महाराज स च शूरः स्थितो मम ४९
सर्व एते महाराज देवकल्पा महारथाः
शक्रस्यापि व्यथां कुर्युः संयुगे भरतर्षभ ५०
भीष्मद्रोणकृपाणां च तुल्यः कर्णो मतो मम
अनुज्ञातश्च रामेण मत्समोऽसीति भारत ५१
कुण्डले रुचिरे चास्तां कर्णस्य सहजे शुभे
ते शच्यर्थे महेन्द्रेण याचितः स परंतपः
अमोघया महाराज शक्त्या परमभीमया ५२
तस्य शक्त्योपगूढस्य कस्माज्जीवेद्धनंजयः
विजयो मे ध्रुवं राजन्फलं पाणाविवाहितम्
अभिव्यक्तः परेषां च कृत्स्नो भुवि पराजयः ५३
अह्ना ह्येकेन भीष्मोऽयमयुतं हन्ति भारत
तत्समाश्च महेष्वासा द्रोणद्रौणिकृता अपि ५४
संशप्तानि च वृन्दानि क्षत्रियाणां परंतप

अर्जुनं वयमस्मान्वा धनंजय इति स्म ह ५५
तांश्चालमिति मन्यन्ते सव्यसाचिवधे विभो
पार्थिवाः स भवान्राजन्नाकस्माद्व्यथते कथम् ५६
भीमसेने च निहते कोऽन्यो युध्येत भारत
परेषां तन्ममाचक्ष्व यदि वेत्थ परंतप ५७
पञ्च ते भ्रातरः सर्वे धृष्टद्युम्नोऽथ सात्यकिः
परेषां सप्त ये राजन्योधाः परमकं बलं ५८
अस्माकं तु विशिष्टा ये भीष्मद्रोणकृपादयः
द्रौणिर्वैकर्तनः कर्णः सोमदत्तोऽथ बाह्लिकः ५९
प्राग्ज्योतिषाधिपः शल्य आवन्त्योऽथ जयद्रथः
दुःशासनो दुर्मुखश्च दुःसहश्च विशांपते ६०
श्रुतायुश्चित्रसेनश्च पुरुमित्रो विविंशतिः
शलो भूरिश्रवाश्चोभौ विकर्णश्च तवात्मजः ६१
अक्षौहिण्यो हि मे राजन्दशैका च समाहृता
न्यूनाः परेषां सप्तैव कस्मान्मे स्यात्पराजयः ६२
बलं त्रिगुणतो हीनं योध्यं प्राह बृहस्पतिः
परेभ्यस्त्रिगुणा चेयं मम राजन्ननीकिनी ६३
गुणहीनं परेषां च बहु पश्यामि भारत
गुणोदयं बहुगुणमात्मनश्च विशां पते ६४
एतत्सर्वं समाज्ञाय बलाग्र्यं मम भारत
न्यूनतां पाण्डवानां च न मोहं गन्तुमर्हसि ६५
वैशम्पायन उवाच
इत्युक्त्वा संजयं भूयः पर्यपृच्छत भारत
विधित्सुः प्राप्तकालानि ज्ञात्वा परपुरंजयः ६६
इति श्रीमहाभारते उद्योगपर्वणि चतुःपञ्चाशोऽध्यायः ५४

पञ्चपञ्चाशोऽध्यायः

दुर्योधन उवाच
अक्षौहिणीः सप्त लब्ध्वा राजभिः सह संजय
किं स्विदिच्छति कौन्तेयो युद्धप्रेप्सुर्युधिष्ठिरः १

संजय उवाच
अतीव मुदितो राजन्युद्धप्रेप्सुर्युधिष्ठिरः
भीमसेनार्जुनौ चोभौ यमावपि न बिभ्यतः २
रथं तु दिव्यं कौन्तेयः सर्वा विभ्राजयन्दिशः
मन्त्रं जिज्ञासमानः सन्बीभत्सुः समयोजयत् ३
तमपश्याम संनद्धं मेघं विद्युत्प्रभं यथा
स मन्त्रान्समभिध्याय हृष्यमाणोऽभ्यभाषत ४
पूर्वरूपमिदं पश्य वयं जेष्याम संजय
बीभत्सुर्मां यथोवाच तथावैम्यहमप्युत ५
दुर्योधन उवाच
प्रशंसस्यभिनन्दंस्तान्पार्थानक्षपराजितान्
अर्जुनस्य रथे ब्रूहि कथमश्वाः कथं ध्वजाः ६
संजय उवाच
भौवनः सह शक्रेण बहुचित्रं विशां पते
रूपाणि कल्पयामास त्वष्टा धात्रा सहाभिभो ७
ध्वजे हि तस्मिन्रूपाणि चक्रुस्ते देवमायया
महाधनानि दिव्यानि महान्ति च लघूनि च ८
सर्वा दिशो योजनमात्रमन्तरं स तिर्यगूर्ध्वं च रुरोध वै ध्वजः
न संसज्जेत्तरुभिः संवृतोऽपि तथा हि माया विहिता भौवनेन ९
यथाकाशे शक्रधनुः प्रकाशते न चैकवर्णं न च विद्म किं नु तत्
तथा ध्वजो विहितो भौवनेन बह्वाकारं दृश्यते रूपमस्य १०
यथाग्निधूमो दिवमेति रुद्ध्वा वर्णान्बिभ्रत्तैजसं तच्छरीरम्
तथा ध्वजो विहितो भौवनेन न चेद्भारो भविता नोत रोधः ११
श्वेतास्तस्मिन्वातवेगाः सदश्वा दिव्या युक्ताश्चित्ररथेन दत्ताः
शतं यत्तत्पूर्यते नित्यकालं हतं हतं दत्तवरं पुरस्तात् १२
तथा राज्ञो दन्तवर्णा बृहन्तो रथे युक्ता भान्ति तद्वीर्यतुल्याः
ऋश्यप्रख्या भीमसेनस्य वाहा रणे वायोस्तुल्यवेगा बभूवुः १३
कल्माषाङ्गास्तित्तिरिचित्रपृष्ठा भ्रात्रा दत्ताः प्रीयता फल्गुनेन
भ्रातुर्वीरस्य स्वैस्तुरङ्गैर्विशिष्टा मुदा युक्ताः सहदेवं वहन्ति १४
माद्रीपुत्रं नकुलं त्वाजमीढं महेन्द्रदत्ता हरयो वाजिमुख्याः

समा वायोर्बलवन्तस्तरस्विनो वहन्ति वीरं वृत्रशत्रुं यथेन्द्रम् १५
तुल्याश्चैभिर्वयसा विक्रमेण जवेन चैवाप्रतिरूपाः सदश्वाः
सौभद्रादीन्द्रौपदेयान्कुमारान्वहन्त्यश्वा देवदत्ता बृहन्तः १६
इति श्रीमहाभारते उद्योगपर्वणि पञ्चपञ्चाशोऽध्यायः ५५

षट्पञ्चाशोऽध्यायः

धृतराष्ट्र उवाच
कांस्तत्र संजयापश्यः प्रत्यर्थेन समागतान्
ये योत्स्यन्ते पाण्डवार्थे पुत्रस्य मम वाहिनीम् १
संजय उवाच
मुख्यमन्धकवृष्णीनामपश्यं कृष्णमागतम्
चेकितानं च तत्रैव युयुधानंच सात्यकिम् २
पृथगक्षौहिणीभ्यां तौ पाण्डवानभिसंश्रितौ
महारथौ समाख्याताावुभौ पुरुषमानिनौ ३
अक्षौहिण्याथ पाञ्चाल्यो दशभिस्तनयैर्वृतः
सत्यजित्प्रमुखैर्वीरैर्धृष्टद्युम्नपुरोगमैः ४
द्रुपदो वर्धयन्मानं शिखण्डिपरिपालितः
उपायात्सर्वसैन्यानां प्रतिच्छाद्य तदा वपुः ५
विराटः सह पुत्राभ्यां शङ्खेनैवोत्तरेण च
सूर्यदत्तादिभिर्वीरैर्मदिराक्षपुरोगमैः ६
सहितः पृथिवीपालो भ्रातृभिस्तनयैस्तथा
अक्षौहिण्यैव सैन्यस्य वृतः पार्थं समाश्रितः ७
जारासंधिर्मागधश्च धृष्टकेतुश्च चेदिराट्
पृथक्पृथगनुप्राप्तौ पृथगक्षौहिणीवृतौ ८
केकया भ्रातरः पञ्च सर्वे लोहितकध्वजाः
अक्षौहिणीपरिवृताः पाण्डवानभिसंश्रिताः ९
एतानेतावतस्तत्र यानपश्यं समागतान्
ये पाण्डवार्थे योत्स्यन्ति धार्तराष्ट्रस्य वाहिनीम् १०
यो वेद मानुषं व्यूहं दैवं गान्धर्वमासुरम्
स तस्य सेनाप्रमुखे धृष्टद्युम्नो महामनाः ११

भीष्मः शान्तनवो राजन्भागः क्लृप्तः शिखण्डिनः
तं विराटोऽनु संयाता सह मत्स्यैः प्रहारिभिः १२
ज्येष्ठस्य पाण्डुपुत्रस्य भागो मद्राधिपो बली
तौ तु तत्राब्रुवन्केचिद्विषमौ नो मताविति १३
दुर्योधनः सहसुतः सार्धं भ्रातृशतेन च
प्राच्याश्च दाक्षिणात्याश्च भीमसेनस्य भागतः १४
अर्जुनस्य तु भागेन कर्णो वैकर्तनो मतः
अश्वत्थामा विकर्णश्च सैन्धवश्च जयद्रथः १५
अशक्याश्चैव ये केचित्पृथिव्यां शूरमानिनः
सर्वांस्तानर्जुनः पार्थः कल्पयामास भागतः १६
महेष्वासा राजपुत्रा भ्रातरः पञ्च केकयाः
केकयानेव भागेन कृत्वा योत्स्यन्ति संयुगे १७
तेषामेव कृतो भागो मालवाः शाल्वकेकयाः
त्रिगर्तानां च द्वौ मुख्यौ यौ तौ संशप्तकाविति १८
दुर्योधनसुताः सर्वे तथा दुःशासनस्य च
सौभद्रेण कृतो भागो राजा चैव बृहद्बलः १९
द्रौपदेया महेष्वासाः सुवर्णविकृतध्वजाः
धृष्टद्युम्नमुखा द्रोणमभियास्यन्ति भारत २०
चेकितानः सोमदत्तं द्वैरथे योद्धुमिच्छति
भोजं तु कृतवर्माणं युयुधानो युयुत्सति २१
सहदेवस्तु माद्रेयः शूरः संक्रन्दनो युधि
स्वमंशं कल्पयामास श्यालं ते सुबलात्मजम् २२
उलूकं चैव कैतव्यं ये च सारस्वता गणाः
नकुलः कल्पयामास भागं माद्रवतीसुतः २३
ये चान्ये पार्थिवा राजन्प्रत्युद्यास्यन्ति संयुगे
समाह्वानेन तांश्चापि पाण्डुपुत्रा अकल्पयन् २४
एवमेषामनीकानि प्रविभक्तानि भागशः
यत्ते कार्यं सपुत्रस्य क्रियतां तदकालिकम् २५
धृतराष्ट्र उवाच
न सन्ति सर्वे पुत्रा मे मूढा दुर्द्यूतदेविनः

येषां युद्धं बलवता भीमेन रणमूर्धनि २६
राजानः पार्थिवाः सर्वे प्रोक्षिताः कालधर्मणा
गाण्डीवाग्निं प्रवेक्ष्यन्ति पतंगा इव पावकम् २७
विद्रुतां वाहिनीं मन्ये कृतवैरैर्महात्मभिः
तां रणे केऽनुयास्यन्ति प्रभग्नां पाण्डवैर्युधि २८
सर्वे ह्यतिरथाः शूराः कीर्तिमन्तः प्रतापिनः
सूर्यपावकयोस्तुल्यास्तेजसा समितिंजयाः २९
येषां युधिष्ठिरो नेता गोप्ता च मधुसूदनः
योधौ च पाण्डवौ वीरौ सव्यसाचिवृकोदरौ ३०
नकुलः सहदेवश्च धृष्टद्युम्नश्च पार्षतः
सात्यकिर्द्रुपदश्चैव धृष्टद्युम्नस्य चात्मजः ३१
उत्तमौजाश्च पाञ्चाल्यो युधामन्युश्च दुर्जयः
शिखण्डी क्षत्रदेवश्च तथा वैराटिरुत्तरः ३२
काशयश्चेदयश्चैव मत्स्याः सर्वे च सृंजयाः
विराटपुत्र बभ्रुश्च पाञ्चालाश्च प्रभद्रकाः ३३
येषामिन्द्रोऽप्यकामानां न हरेत्पृथिवीमिमाम्
वीराणां रणधीराणां ये भिन्द्युः पर्वतानपि ३४
तान्सर्वान्गुणसम्पन्नानमनुष्यप्रतापिनः
क्रोशतो मम दुष्पुत्रो योद्धुमिच्छति संजय ३५
दुर्योधन उवाच
उभौ स्व एकजातीयौ तथोभौ भूमिगोचरौ
अथ कस्मात्पाण्डवानामेकतो मन्यसे जयम् ३६
पितामहं च द्रोणं च कृपं कर्णं च दुर्जयम्
जयद्रथं सोमदत्तमश्वत्थामानमेव च ३७
सुचेतसो महेष्वासानिन्द्रोऽपि सहितोऽमरैः
अशक्तः समरे जेतुं किं पुनस्तात पाण्डवाः ३८
सर्वा च पृथिवी सृष्टा मदर्थे तात पाण्डवान्
आर्यान्धृतिमतः शूरानग्निकल्पान्प्रबाधितुम् ३९
न मामकान्पाण्डवास्ते समर्थाः प्रतिवीक्षितुम्
पराक्रान्तो ह्यहं पाण्डून्सपुत्रान्योद्धुमाहवे ४०

मत्प्रियं पार्थिवाः सर्वे ये चिकीर्षन्ति भारत
ते तानावारयिष्यन्ति एणेयानिव तन्तुना ४१
महता रथवंशेन शरजालैश्च मामकैः
अभिद्रुता भविष्यन्ति पञ्चालाः पाण्डवैः सह ४२
धृतराष्ट्र उवाच
उन्मत्त इव मे पुत्रो विलपत्येष संजय
न हि शक्तो युधा जेतुं धर्मराजं युधिष्ठिरम् ४३
जानाति हि सदा भीष्मः पाण्डवानां यशस्विनाम्
बलवत्तां सपुत्राणां धर्मज्ञानां महात्मनाम् ४४
यतो नारोचयमहं विग्रहं तैर्महात्मभिः
किं तु संजय मे ब्रूहि पुनस्तेषां विचेष्टितम् ४५
कस्तांस्तरस्विनो भूयः संदीपयति पाण्डवान्
अर्चिष्मतो महेष्वासान्हविषा पावकानिव ४६
संजय उवाच
धृष्टद्युम्नः सदैवैतान् संदीपयति भारत
युध्यध्वमिति मा भैष्ट युद्धाद्भरतसत्तमाः ४७
ये केचित्पार्थिवास्तत्र धार्तराष्ट्रेण संवृताः
युद्धे समागमिष्यन्ति तुमुले कवचह्रदे ४८
तान्सर्वानाहवे क्रुद्धान्सानुबन्धान्समागतान्
अहमेकः समादास्ये तिमिर्मत्स्यानिवौदकान् ४९
भीष्मं द्रोणं कृपं कर्णं द्रौणिं शल्यं सुयोधनम्
एतांश्चापि निरोत्स्यामि वेलेव मकरालयम् ५०
तथा ब्रुवाणं धर्मात्मा प्राह राजा युधिष्ठिरः
तव धैर्यं च वीर्यं च पाञ्चालाः पाण्डवैः सह
सर्वे समधिरूढाः स्म संग्रामान्नः समुद्धर ५१
जानामि त्वां महाबाहो क्षत्रधर्मे व्यवस्थितम्
समर्थमेकं पर्याप्तं कौरवाणां युयुत्सताम्
भवता यद्विधातव्यं तन्नः श्रेयः परंतप ५२
संग्रामादपयातानां भग्नानां शरणैषिणाम्
पौरुषं दर्शयञ्शूरो यस्तिष्ठेदग्रतः पुमान्

क्रीणीयात्तं सहस्रेण नीतिमन्नाम तत्पदम् ५३
स त्वं शरश्चू वीरश्च विक्रान्तश्च नरर्षभ
भयार्तानां परित्राता संयुगेषु न संशयः ५४
एवं ब्रुवति कौन्तेये धर्मात्मनि युधिष्ठिरे
धृष्टद्युम्न उवाचेदं मां वचो गतसाध्वसः ५५
सर्वाञ्जनपदान्सूत योधा दुर्योधनस्य ये
सबाह्लीकान्कुरून्ब्रूयाः प्रातिपेयाञ्शरद्वतः ५६
सूतपुत्रं तथाद्रोणं सह पुत्रं जयद्रथम्
दुःशासनं विकर्णं च तथा दुर्योधनं नृपम् ५७
भीष्मं चैव ब्रूहि गत्वा त्वमाशु युधिष्ठिरं साधुनैवाभ्युपेत
मा वो वधीदर्जुनो देवगुप्तः
क्षिप्रं याचध्वं पाण्डवं लोकवीरम् ५८
नैतादृशो हि योधोऽस्ति पृथिव्यामिह कश्चन
यथाविधः सव्यसाची पाण्डवः शस्त्रवित्तमः ५९
देवैर्हि सम्भृतो दिव्यो रथो गाण्डीवधन्वनः
न स जेयो मनुष्येण मा स्म कृध्वं मनो युधि ६०
इति श्रीमहाभारते उद्योगपर्वणि षट्पञ्चाशोऽध्यायः ५६

## सप्तपञ्चाशोऽध्यायः

धृतराष्ट्र उवाच
क्षत्रतेजा ब्रह्मचारी कौमारादपि पाण्डवः
तेन संयुगमेष्यन्ति मन्दा विलपतो मम १
दुर्योधन निवर्तस्व युद्धाद्भरतसत्तम
न हि युद्धं प्रशंसन्ति सर्वावस्थमरिंदम २
अलमर्धं पृथिव्यास्ते सहामात्यस्य जीवितुम्
प्रयच्छ पाण्डुपुत्राणां यथोचितमरिंदम ३
एतद्धि कुरवः सर्वे मन्यन्ते धर्मसंहितम्
यत्त्वं प्रशान्तिमिच्छेथाः पाण्डुपुत्रैर्महात्मभिः ४
अङ्गेमां समवेक्षस्व पुत्र स्वामेव वाहिनीम्
जात एव तव स्रावस्त्वं तु मोहान्न बुध्यसे ५

न ह्यहं युद्धमिच्छामि नैतदिच्छति बाह्लिकः
न च भीष्मो न च द्रोणो नाश्वत्थामा न संजयः ६
न सोमदत्तो नो शल्यो न कृपो युद्धमिच्छति
सत्यव्रतः पुरुमित्रो जयो भूरिश्रवास्तथा ७
येषु सम्प्रतितिष्ठेयुः कुरवः पीडिताः परैः
ते युद्धं नाभिनन्दन्ति तत्तुभ्यं तात रोचताम् ८
न त्वं करोषि कामेन कर्णः कारयिता तव
दुःशासनश्च पापात्मा शकुनिश्चापि सौबलः ९
दुर्योधन उवाच
नाहं भवति न द्रोणे नाश्वत्थाम्नि न संजये
न विकर्णे न काम्बोजे न कृपे न च बाह्लिके १०
सत्यव्रते पुरुमित्रे भूरिश्रवसि वा पुनः
अन्येषु वा तावकेषु भारं कृत्वा समाह्वये ११
अहं च तात कर्णश्च रणयज्ञं वितत्य वै
युधिष्ठिरं पशुं कृत्वा दीक्षितौ भरतर्षभ १२
रथो वेदी स्रुवः खड्गो गदा स्रुक्कवचं सदः
चातुर्होत्रं च धुर्या मे शरा दर्भा हविर्यशः १३
आत्मयज्ञेन नृपते इष्ट्वा वैवस्वतं रणे
विजित्य स्वयमेष्यावो हतामित्रौ श्रिया वृतौ १४
अहं च तात कर्णश्च भ्राता दुःशासनश्च मे
एते वयं हनिष्यामः पाण्डवान्समरे त्रयः १५
अहं हि पाण्डवान्हत्वा प्रशास्ता पृथिवीमिमाम्
मां वा हत्वा पाण्डुपुत्रा भोक्तारः पृथिवीमिमाम् १६
त्यक्तं मे जीवितं राजन्धनं राज्यं च पार्थिव
न जातु पाण्डवैः सार्धं वसेयमहमच्युत १७
यावद्धि सूच्यास्तीक्ष्णाया विध्येदग्रेण मारिष
तावदप्यपरित्याज्यं भूमेर्नः पाण्डवान् प्रति १८
धृतराष्ट्र उवाच
सर्वान्वस्तात शोचामि त्यक्तो दुर्योधनो मया
ये मन्दमनुयास्यध्वं यान्तं वैवस्वतक्षयम् १९

रुरूणामिव यूथेषु व्याघ्राः प्रहरतां वराः
वरान्वरान्हनिष्यन्ति समेता युधि पाण्डवाः २०
प्रतीपमिव मे भाति युयुधानेन भारती
व्यस्ता सीमन्तिनी त्रस्ता प्रमृष्टा दीर्घबाहुना २१
सम्पूर्णं पूरयन्भूयो धनं पार्थस्य माधवः
शैनेयः समरे स्थाता बीजवत्प्रवपञ्शरान् २२
सेनामुखे प्रयुद्धानां भीमसेनो भविष्यति
तं सर्वे संश्रयिष्यन्ति प्राकारमकुतोभयम् २३
यदा द्रक्ष्यसि भीमेन कुञ्जरान्विनिपातितान्
विशीर्णदन्तान्गिर्याभान्भिन्नकुम्भान्सशोणितान् २४
तानभिप्रेक्ष्य संग्रामे विशीर्णानिव पर्वतान्
भीतो भीमस्य संस्पर्शात्स्मर्तासि वचनस्य मे २५
निर्दग्धं भीमसेनेन सैन्यं हतरथद्विषम्
गतिमग्नेरिव प्रेक्ष्य स्मर्तासि वचनस्य मे २६
महद्वो भयमागामि न चेच्छाम्यथ पाण्डवैः
गदया भीमसेनेन हताः शममुपैष्यथ २७
महावनमिव छिन्नं यदा द्रक्ष्यसि पातितम्
बलं कुरूणां संग्रामे तदा स्मर्तासि मे वचः २८
वैशम्पायन उवाच
एतावदुक्त्वा राजा तु स सर्वान्पृथिवीपतीन्
अनुभाष्य महाराज पुनः पप्रच्छ संजयम् २९
इति श्रीमहाभारते उद्योगपर्वणि सप्तपञ्चाशोऽध्यायः ५७

## अष्टपञ्चाशोऽध्यायः

धृतराष्ट्र उवाच
यदब्रूतां महात्मानो वासुदेवधनंजयौ
तन्मे ब्रूहि महाप्राज्ञ शुश्रूषे वचनं तव १
संजय उवाच
शृणु राजन्यथा दृष्टौ मया कृष्णधनंजयौ
ऊचतुश्चापि यद्वीरौ तत्ते वक्ष्यामि भारत २

पादाङ्गुलीरभिप्रेक्षन्प्रयतोऽह कृताञ्जलि
शुद्धान्तं प्राविशं राजन्नाख्यातुं नरदेवयोः ३
नैवाभिमन्युर्न यमौ तं देशमभियान्ति वै
यत्र कृष्णौ च कृष्णा च सत्यभामा च भामिनी ४
उभौ मध्वासवक्षीबावुभौ चन्दनरूषितौ
स्रग्विणौ वरवस्त्रौ तौ दिव्याभरणभूषितौ ५
नैकरत्नविचित्रं तु काञ्चनं महदासनम्
विविधास्तरणास्तीर्णं यत्रासातामरिंदमौ ६
अर्जुनोत्सङ्गगौ पादौ केशवस्योपलक्षये
अर्जुनस्य च कृष्णायां सत्यायां च महात्मनः ७
काञ्चनं पादपीठं तु पार्थो मे प्रादिशत्तदा
तदहं पाणिना स्पृष्ट्वा ततो भूमावुपाविशम् ८
ऊर्ध्वरेखतलौ पादौ पार्थस्य शुभलक्षणौ
पादपीठादपहृतौ तत्रापश्यमहं शुभौ ९
श्यामौ बृहन्तौ तरुणौ शालस्कन्धाविवोद्गतौ
एकासनगतौ दृष्ट्वा भयं मां महदाविशत् १०
इन्द्रविष्णुसमावेतौ मन्दात्मा नावबुध्यते
संश्रयाद्द्रोणभीष्माभ्यां कर्णस्य च विकत्थनात् ११
निदेशस्थाविमौ यस्य मानसस्तस्य सेत्स्यते
संकल्पो धर्मराजस्य निश्चयो मे तदाभवत् १२
सकृतश्चान्नपानाभ्यामाच्छन्नो लब्धसत्क्रियः
अञ्जलि मूर्ध्नि संधाय तौ संदेशमचोदयम् १३
धनुर्बाणोचितेनैकपाणिना शुभलक्षणम्
पादमानमयन्पार्थः केशवं समचोदयत् १४
इन्द्रकेतुरिवोत्थाय सर्वाभरणभूषितः
इन्द्रवीर्योपमः कृष्णः संविष्टो माभ्यभाषत १५
वाचं स वदतां श्रेष्ठो ह्लादिनीं वचनक्षमाम्
त्रासनीं धार्तराष्ट्राणां सुदुपूर्वां सुदारुणाम् १६
वाचं तां वचनार्हस्य शिक्षाक्षरसमन्विताम्
अश्रौषमहमिष्टार्थां पश्चाद्धृदयशोषिणीम् १७

वासुदेव उवाच
संजयेदं वचो ब्रूया धृतराष्ट्रं मनीषिणम्
शृणवतः कुरुमुख्यस्य द्रोणस्यापि च शृणवतः १८
यजध्वं विपुलैर्यज्ञैर्विप्रेभ्यो दत्त दक्षिणाः
पुत्रैर्दारैश्च मोदध्वं महद्वो भयमागतम् १९
अर्थांस्त्यजत पात्रेभ्यः सुतान्प्राप्नुत कामजान्
प्रियं प्रियेभ्यश्चरत राजा हि त्वरते जये २०
ऋणमेतत्प्रवृद्धं मे हृदयान्नापसर्पति
यद्गोविन्देति चुक्रोश कृष्णा मां दूरवासिनम् २१
तेजोमयं दुराधर्षं गाण्डीवं यस्य कार्मुकम्
मद्द्वितीयेन तेनेह वैरं वः सव्यसाचिना २२
मद्द्वितीयं पुनः पार्थं कः प्रार्थयितुमिच्छति
यो न कालपरीतो वाप्यपि साक्षात्पुरंदरः २३
बाहुभ्यामुद्वहेद्भूमिं दहेत्क्रुद्ध इमाः प्रजाः
पातयेत्त्रिदिवाद्देवान्योऽर्जुनं समरे जयेत् २४
देवासुरमनुष्येषु यक्षगन्धर्वभोगिषु
न तं पश्याम्यहं युद्धे पाण्डवं योऽभ्ययाद्रणे २५
यत्तद्विराटनगरे श्रूयते महदद्भुतम्
एकस्य च बहूनां च पर्याप्तं तन्निदर्शनम् २६
एकेन पाण्डुपुत्रेण विराटनगरे यदा
भग्नाः पलायन्त दिशः पर्याप्तं तन्निदर्शनम् २७
बलं वीर्यं च तेजश्च शीघ्रता लघुहस्तता
अविषादश्च धैर्यं च पार्थान्नान्यत्र विद्यते २८
संजय उवाच
इत्यब्रवीद्धृषीकेशः पार्थमुद्धर्षयन्गिरा
गर्जन्समयवर्षीव गगने पाकशासनः २९
केशवस्य वचः श्रुत्वा किरीटी श्वेतवाहनः
अर्जुनस्तन्महद्वाक्यमब्रवील्लोमहर्षणम् ३०
इति श्रीमहाभारते उद्योगपर्वणि अष्टपञ्चाशोऽध्यायः ५८

## एकोनषष्ठितमोऽध्यायः

वैशम्पायन उवाच
संजयस्य वचः श्रुत्वा प्रज्ञाचक्षुर्नरेश्वरः
ततः संख्यातुमारेभे तद्वचो गुणदोषतः १
प्रसंख्याय च सौक्ष्म्येण गुणदोषान्विचक्षणः
यथावन्मतितत्त्वेन जयकामः सुतान्प्रति २
बलाबले विनिश्चित्य याथातथ्येन बुद्धिमान्
शक्तिं संख्यातुमारेभे तदा वै मनुजाधिपः ३
देवमानुषयोः शक्त्या तेजसा चैव पाण्डवान्
कुरूञ्शक्त्याल्पतरया दुर्योधनमथाब्रवीत् ४
दुर्योधनेयं चिन्ता मे शश्वन्नाप्युपशाम्यति
सत्यं ह्येतदहं मन्ये प्रत्यक्षं नानुमानतः ५
आत्मजेषु परं स्नेहं सर्वभूतानि कुर्वते
प्रियाणि चैषां कुर्वन्ति यथाशक्ति हितानि च ६
एवमेवोपकर्तॄणां प्रायशो लक्षयामहे
इच्छन्ति बहुलं सन्तः प्रतिकर्तुं महत्प्रियम् ७
अग्निः साचिव्यकर्ता स्यात्खाण्डवे तत्कृतं स्मरन्
अर्जुनस्यातिभीमेऽस्मिन्कुरुपाण्डुसमागमे ८
जातगृध्याभिपन्नाश्च पाण्डवानामनेकशः
धर्मादयो भविष्यन्ति समाहूता दिवौकसः ९
भीष्मद्रोणकृपादीनां भयादशनिसंमितम्
रिरक्षिषन्तः संरम्भं गमिष्यन्तीति मे मतिः १०
ते देवसहिताः पार्था न शक्याः प्रतिवीक्षितुम्
मानुषेण नरव्याघ्रा वीर्यवन्तोऽस्त्रपारगाः ११
दुरासदं यस्य दिव्यं गाण्डीवं धनुरुत्तमम्
वारुणौ चाक्षयौ दिव्यौ शरपूर्णौ महेषुधी १२
वानरश्च ध्वजो दिव्यो निः सङ्गो धूमवद्गतिः
रथश्च चतुरन्तायां यस्य नास्ति समस्त्विषा १३
महामेघनिभश्चापि निर्घोषः श्रूयते जनैः
महाशनिसमः शब्दः शात्रवाणां भयंकरः १४

यं चातिमानुषं वीर्ये कृत्स्नो लोको व्यवस्यति
देवानामपि जेतारं यं विदुः पार्थिवा रणे १५
शतानि पञ्च चैवेषूनुद्वपन्निव दृश्यते
निमेषान्तरमात्रेण मुञ्चन्दूरं च पातयन् १६
यमाह भीष्मो द्रोणश्च कृपो द्रौणिस्तथैव च
मद्रराजस्तथा शल्यो मध्यस्था ये च मानवाः १७
युद्धायावस्थितं पार्थं पार्थिवैरतिमानुषैः
अशक्यं रथशार्दूलं पराजेतुमरिंदमम् १८
क्षिपत्येकेन वेगेन पञ्च बाणशतानि यः
सदृशं बाहुवीर्येण कार्तवीर्यस्य पाण्डवम् १९
तमर्जुनं महेष्वासं महेन्द्रोपेन्द्ररक्षितम्
निघ्नन्तमिव पश्यामि विमर्देऽस्मिन्महामृधे २०
इत्येवं चिन्तयन्कृत्स्नमहोरात्राणि भारत
अनिद्रो निःसुखश्चास्मि कुरूणां शमचिन्तया २१
क्षयोदयोऽय सुमहान्कुरूणां प्रत्युपस्थितः
अस्य चेत्कलहस्यान्तः शमादन्यो न विद्यते २२
शमो मे रोचते नित्यं पार्थैस्तात न विग्रहः
कुरुभ्यो हि सदा मन्ये पाण्डवाञ्शक्तिमत्तरान् २३
इति श्रीमहाभारते उद्योगपर्वणिएकोनषष्टितमोऽध्यायः ५९

## षष्टितमोऽध्यायः

वैशम्पायन उवाच
पितुरेतद्वचः श्रुत्वा धार्तराष्ट्रोऽत्यमर्षणः
आधाय विपुलं क्रोधं पुनरेवेदमब्रवीत् १
अशक्या देवसचिवाः पार्थाः स्युरिति यद्भवान्
मन्यते तद्भयं व्येतु भवतो राजसत्तम २
अकामद्वेषसंयोगाद्द्रोहाल्लोभाच्च भारत
उपेक्षया च भावानां देवा देवत्वमाप्नुवन् ३
इति द्वैपायनो व्यासो नारदश्च महातपाः
जामदग्न्यश्च रामो नः कथामकथयत्पुरा ४

नैव मानुषवद्देवाः प्रवर्तन्ते कदाचन
कामाल्लोभादनुक्रोशाद्द्वेषाच्च भरतर्षभ ५
यदि ह्यग्निश्च वायुश्च धर्म इन्द्रोऽश्विनावपि
कामयोगात्प्रवर्तेरन्न पार्था दुःखमाप्नुयुः ६
तस्मान्न भवता चिन्ता कार्यैषा स्यात्कदाचन
दैवेष्वपेक्षका ह्येते शश्वद्भावेषु भारत ७
अथ चेत्कामसंयोगाद्द्वेषाल्लोभाच्च लक्ष्यते
देवेषु देवप्रामाण्यं नैव तद्विक्रमिष्यति ८
मयाभिमन्त्रितः शश्वज्जातवेदाः प्रशंसति
दिधक्षुः सकलाँल्लोकान्परिक्षिप्य समन्ततः ९
यद्वा परमकं तेजो येन युक्ता दिवौकसः
ममाप्यनुपमं भूयो देवेभ्यो विद्धि भारत १०
प्रदीर्यमाणां वसुधां गिरीणां शिखराणि च
लोकस्य पश्यतो राजन्स्थापयाम्यभिमन्त्रणात् ११
चेतनाचेतनस्यास्य जङ्गमस्थावरस्य च
विनाशाय समुत्पन्नं महाघोरं महास्वनम् १२
अश्मवर्षं च वायुं च शमयामीह नित्यशः
जगतः पश्यतोऽभीक्ष्णं भूतानामनुकम्पया १३
स्तम्भितास्वप्सु गच्छन्ति मया रथपदातयः
देवासुराणां भावानामहमेकः प्रवर्तिता १४
अक्षौहिणीभिर्यान्देशान्यामि कार्येण केनचित्
तत्रापो मे प्रवर्तन्ते यत्र यत्राभिकामये १५
भयानि विषये राजन्व्यालादीनि न सन्ति मे
मत्तः सुप्तानि भूतानि न हिंसन्ति भयंकराः १६
निकामवर्षी पर्जन्यो राजन्विषयवासिनाम्
धर्मिष्ठाश्च प्रजाः सर्वा ईतयश्च न सन्ति मे १७
अश्विनावथ वाय्वग्नी मरुद्भिः सह वृत्रहा
धर्मश्चैव मया द्विष्टान्नोत्सहन्तेऽभिरक्षितुम् १८
यदि ह्येते समर्थाः स्युर्मद्द्विषस्त्रातुमोजसा
न स्म त्रयोदश समाः पार्था दुःखमवाप्नुयुः १९

नैव देवा न गन्धर्वा नासुरा न च राक्षसाः
शक्तास्त्रातुं मया द्विष्टं सत्यमेतद्ब्रवीमि ते २०
यदभिध्याम्यहं शश्वच्छुभं वा यदि वाशुभम्
नैतद्विपन्नपूर्वं मे मित्रेष्वरिषु चोभयोः २१
भविष्यतीदमिति वा यद्ब्रवीमि परंतप
नान्यथा भूतपूर्वं तत्सत्यवागिति मां विदुः २२
लोकसाक्षिकमेतन्मे माहात्म्यं दिक्षु विश्रुतम्
आश्वासनार्थं भवतः प्रोक्तं न श्लाघया नृपः २३
न ह्यहं श्लाघनो राजन्भूतपूर्वः कदाचन
असदाचरितं ह्येतद्यदात्मानं प्रशंसति २४
पाण्डवांश्चैव मत्स्यांश्च पाञ्चालान्केकयैः सह
सात्यकिं वासुदेवं च श्रोतासि विजितान्मया २५
सरितः सागरं प्राप्य यथा नश्यन्ति सर्वशः
तथैव ते विनङ्क्ष्यन्ति मामासाद्य सहान्वयाः २६
परा बुद्धिः परं तेजो वीर्यं च परमं मयि
परा विद्या परो योगो मम तेभ्यो विशिष्यते २७
पितामहश्च द्रोणश्च कृपः शल्यः शलस्तथा
अस्त्रेषु यत्प्रजानन्ति सर्वं तन्मयि विद्यते २८
इत्युक्त्वा संजयं भूयः पर्यपृच्छत भारत
ज्ञात्वा युयुत्सुः कार्याणि प्राप्तकालमरिंदम २९
इति श्रीमहाभारते उद्योगपर्वणि षष्टितमोऽध्यायः ६०

## एक षष्टितमोऽध्यायः

वैशम्पायन उवाच
तथा तु पृच्छन्तमतीव पार्थान्वैचित्रवीर्यं तमचिन्तयित्वा
उवाच कर्णो धृतराष्ट्रपुत्रं प्रहर्षयन्संसदि कौरवाणाम् १
मिथ्या प्रतिज्ञाय मया यदस्त्रं रामाद्धृतं ब्रह्मपरं पुरस्तात्
विज्ञाय तेनास्मि तदैवमुक्तस्तवान्तकालेऽप्रतिभास्यतीति २
महापराधे ह्यपि संनतेन महर्षिणाहं गुरुणा च शप्तः
शक्तः प्रदग्धुं ह्यपि तिग्मतेजाः ससागरामप्यवनिं महर्षिः ३

प्रसादितं ह्यस्य मया मनोऽभूच्छुश्रूषया स्वेन स पौरुषेण
ततस्तदस्त्रं मम सावशेषं तस्मात्समर्थोऽस्मि ममैष भारः ४
निमेषमात्रं तमृषिप्रसादमवाप्य पाञ्चालकरूषमत्स्यान्
निहत्य पार्थांश्च स पुत्रपौत्राँल्लोकानहं शस्त्रजितान्प्रपत्स्ये ५
पितामहस्तिष्ठतु ते समीपे द्रोणश्च सर्वे च नरेन्द्रमुख्याः
यथाप्रधानेन बलेन यात्वा पार्थान्हनिष्यामि ममैष भारः ६
एवं ब्रुवाणं तमुवाच भीष्मः किं कत्थसे कालपरीतबुद्धे
न कर्ण जानासि यथा प्रधाने हते हताः स्युर्धृतराष्ट्रपुत्राः ७
यत्खाण्डवं दाहयता कृतं हि कृष्णद्वितीयेन धनंजयेन
श्रुत्वैव तत्कर्म नियन्तुमात्मा शक्यस्त्वया वै सह बान्धवेन ८
यां चापि शक्तिं त्रिदशाधिपस्ते ददौ महात्मा भगवान्महेन्द्रः
भस्मीकृतां तां पतितां विशीर्णां चक्राहतां द्रक्ष्यसि केशवेन ९
यस्ते शरः सर्पमुखो विभाति सदाग्र्यमाल्यैर्महितः प्रयत्नात्
स पाण्डुपुत्राभिहतः शरौघैः सह त्वया यास्यति कर्ण नाशम् १०
बाणस्य भौमस्य च कर्ण हन्ता किरीटिनं रक्षति वासुदेवः
यस्त्वादृशानां च गरीयसां च हन्ता रिपूणां तुमुले प्रगाढे ११
कर्ण उवाच
असंशयं वृष्णिपतिर्यथोक्तस्तथा च भूयश्च ततो महात्मा
अहं यदुक्तः परुषं तु किञ्चित्पितामहस्तस्य फलं शृणोतु १२
न्यस्यामि शस्त्राणि न जातु संख्ये पितामहो द्रक्ष्यति मां सभायाम्
त्वयि प्रशान्ते तु मम प्रभावं द्रक्ष्यन्ति सर्वे भुवि भूमिपालाः १३
वैशम्पायन उवाच
इत्येवमुक्त्वा स महाधनुष्मान्हित्वा सभां स्वं भवनं जगाम
भीष्मस्तु दुर्योधनमेव राजन्मध्ये कुरूणां प्रहसन्नुवाच १४
सत्यप्रतिज्ञः किल सूतपुत्रस्तथा स भारं विषहेत कस्मात्
व्यूहं प्रतिव्यूह्य शिरांसि भित्त्वा लोकक्षयं पश्यत भीमसेनात् १५
आवन्त्यकालिङ्गजयद्रथेषु वेदिध्वजे तिष्ठति बाह्लिके च
अहं हनिष्यामि सदा परेषां सहस्रशश्चायुतशश्च योधान् १६
यदैव रामे भगवत्यनिन्द्ये ब्रह्म ब्रुवाणः कृतवांस्तदस्त्रम्
तदैव धर्मश्च तपश्च नष्टं वैकर्तनस्याधमपूरुषस्य १७

अथोक्तवाक्ये नृपतौ तु भीष्मे निक्षिप्य शस्त्राणि गते च कर्णे
वैचित्रवीर्यस्य सुतोऽल्पबुद्धिर्दुर्योधनः शान्तनवं बभाषे १८
इति श्रीमहाभारते उद्योगपर्वणि एकषष्टितमोऽध्यायः ६१

## द्विषष्टितमोऽध्यायः

दुर्योधन उवाच
सदृशानां मनुष्येषु सर्वेषां तुल्यजन्मनाम्
कथमेकान्ततस्तेषां पार्थानां मन्यसे जयम् १
सर्वे स्म समजातीयाः सर्वे मानुषयोनयः
पितामह विजानीषे पार्थेषु विजयं कथम् २
नाहं भवति न द्रोणे न कृपे न च बाह्लिके
अन्येषु च नरेन्द्रेषु पराक्रम्य समारभे ३
अहं वैकर्तनः कर्णो भ्राता दुःशासनश्च मे
पाण्डवान्समरे पञ्च हनिष्यामः शितैः शरैः ४
ततो राजन्महायज्ञैर्विविधैर्भूरिदक्षिणैः
ब्राह्मणांस्तर्पयिष्यामि गोभिरश्वैर्धनेन च ५
विदुर उवाच
शकुनीनामिहार्थाय पाशं भूमावयोजयत्
कश्चिच्छाकुनिकस्तात पूर्वेषामिति शुश्रुम ६
तस्मिन्द्वौ शकुनौ बद्धौ युगपत्समपौरुषौ
तावुपादाय तं पाशं जग्मतुः खचरावुभौ ७
तौ विहायसमाक्रान्तौ दृष्ट्वा शाकुनिकस्तदा
अन्वधावदनिर्विण्णो येन येन स्म गच्छतः ८
तथा तमनुधावन्तं मृगयुं शकुनार्थिनम्
आश्रमस्थो मुनिः कश्चिद्ददर्शाथ कृताह्निकः ९
तावन्तरिक्षगौ शीघ्रमनुयान्तं महीचरम्
श्लोकेनानेन कौरव्य पप्रच्छ स मुनिस्तदा १०
विचित्रमिदमाश्चर्यं मृगहन्प्रतिभाति मे
प्लवमानौ हि खचरौ पदातिरनुधावसि ११
शाकुनिक उवाच

पाशमेकमुभावेतौ सहितौ हरतो मम
यत्र वै विवदिष्येते तत्र मे वशमेष्यतः १२
विदुर उवाच
तौ विवादमनुप्राप्तौ शकुनौ मृत्युसंधितौ
विगृह्य च सुदुर्बुद्धी पृथिव्यां संनिपेततुः १३
तौ युध्यमानौ संरब्धौ मृत्युपाशवशानुगौ
उपसृत्यापरिज्ञातो जग्राह मृगयुस्तदा १४
एवं ये ज्ञातयोऽर्थेषु मिथो गच्छन्ति विग्रहम्
तेऽमित्रवशमायान्ति शकुनाविव विग्रहात् १५
सम्भोजनं संकथनं सम्प्रश्नोऽथ समागमः
एतानि ज्ञातिकार्याणि न विरोधः कदाचन १६
यस्मिन्काले सुमनसः सर्वे वृद्धानुपासते
सिंहगुप्तमिवारण्यमप्रधृष्या भवन्ति ते १७
येऽथ संततमासाद्य दीना इव समासते
श्रियं ते सम्प्रयच्छन्ति द्विषद्भ्यो भरतर्षभ १८
धूमायन्ते व्यपेतानि ज्वलन्ति सहितानि च
धृतराष्ट्रोल्मुकानीव ज्ञातयो भरतर्षभ १९
इदमन्यत्प्रवक्ष्यामि यथा दृष्टं गिरौ मया
श्रुत्वा तदपि कौरव्य यथा श्रेयस्तथा कुरु २०
वयं किरातैः सहिता गच्छामो गिरिमुत्तरम्
ब्राह्मणैर्देवकल्पैश्च विद्याजम्भकवातिकैः २१
कुञ्जभूतं गिरिं सर्वमभितो गन्धमादनम्
दीप्यमानौषधिगणं सिद्धगन्धर्वसेवितम् २२
तत्र पश्यामहे सर्वे मधु पीतममाक्षिकम्
मरुप्रपाते विषमे निविष्टं कुम्भसम्मितम् २३
आशीविषै रक्ष्यमाणं कुबेरदयितं भृशम्
यत्प्राश्य पुरुषो मर्त्यो अमरत्वं निगच्छति २४
अचक्षुर्लभते चक्षुर्वृद्धो भवति वै युवा
इति ते कथयन्ति स्म ब्राह्मणा जम्भसाधकाः २५
ततः किरातास्तद्दृष्ट्वा प्रार्थयन्तो महीपते

विनेशुर्विषमे तस्मिन्ससर्पे गिरिगह्वरे २६
तथैव तव पुत्रोऽय पृथिवीमेक इच्छति
मधु पश्यति सम्मोहात्प्रपातं नानुपश्यति २७
दुर्योधनो योद्धुमनाः समरे सव्यसाचिना
न च पश्यामि तेजोऽस्य विक्रमं वा तथाविधम् २८
एकेन रथमास्थाय पृथिवी येन निर्जिता
प्रतीक्षमाणो यो वीरः क्षमते वीक्षितं तव २९
द्रुपदो मत्स्यराजश्च संक्रुद्धश्च धनंजयः
न शेषयेयुः समरे वायुयुक्ता इवाग्नयः ३०
अङ्के कुरुष्व राजानं धृतराष्ट्र युधिष्ठिरम्
युध्यतोर्हि द्वयोर्युद्धे नैकान्तेन भवेज्जयः ३१
इति श्रीमहाभारते उद्योगपर्वणि द्विषष्टितमोऽध्यायः ६२

## त्रिषष्टितमोऽध्यायः

धृतराष्ट्र उवाच
दुर्योधन विजानीहि यत्त्वां वक्ष्यामि पुत्रक
उत्पथं मन्यसे मार्गमनभिज्ञ इवाध्वगः १
पञ्चानां पाण्डुपुत्राणां यत्तेजः प्रमिमीषसि
पञ्चानामिव भूतानां महतां सुमहात्मनाम् २
युधिष्ठिरं हि कौन्तेयं परं धर्ममिहास्थितम्
परां गतिमसम्प्रेक्ष्य न त्वं वेत्तुमिहार्हसि ३
भीमसेनं च कौन्तेयं यस्य नास्ति समो बले
रणान्तकं तर्कयसे महावातमिव द्रुमः ४
सर्वशस्त्रभृतां श्रेष्ठं मेरुं शिखरिणामिव
युधि गाण्डीवधन्वानं को नु युध्येत बुद्धिमान् ५
धृष्टद्युम्नश्च पाञ्चाल्यः कमिवाद्य न शातयेत्
शत्रुमध्ये शरान्मुञ्चन्देवराडशनीमिव ६
सात्यकिश्चापि दुर्धर्षः सम्मतोऽन्धकवृष्णिषु
ध्वंसयिष्यति ते सेनां पाण्डवेयहिते रतः ७
यः पुनः प्रतिमानेन त्रील्लोँकानतिरिच्यते

तं कृष्णं पुण्डरीकाक्षं को नु युध्येत बुद्धिमान् ८
एकतो ह्यस्य दाराश्च ज्ञातयश्च सबान्धवाः
आत्मा च पृथिवी चेयमेकतश्च धनंजयः ९
वासुदेवोऽपि दुर्धर्षो यतात्मा यत्र पाण्डवः
अविषह्यं पृथिव्यापि तद्बलं यत्र केशवः १०
तिष्ठ तात सतां वाक्ये सुहृदामर्थवादिनाम्
वृद्धं शान्तनवं भीष्मं तितिक्षस्व पितामहम् ११
मां च ब्रुवाणं शुश्रूष कुरूणामर्थवादिनम्
द्रोणं कृपं विकर्णं च महाराजं च वाह्लिकम् १२
एते ह्यपि यथैवाहं मन्तुमर्हसि तांस्तथा
सर्वे धर्मविदो ह्येते तुल्यस्नेहाश्च भारत १३
यत्तद्विराटनगरे सह भ्रातृभिरग्रतः
उत्सृज्य गाः सुसंत्रस्तं बलं ते समशीर्यत १४
यच्चैव तस्मिन्नगरे श्रूयते महदद्भुतम्
एकस्य च बहूनां च पर्याप्तं तन्निदर्शनम् १५
अर्जुनस्तत्तथाकार्षीत्किं पुनः सर्व एव ते
सभ्रातॄनभिजानीहि वृत्त्या च प्रतिपादय १६
इति श्रीमहाभारते उद्योगपर्वणि त्रिषष्टितमोऽध्यायः ६३

चतुः षष्ठितमोऽध्यायः

वैशम्पायन उवाच
एवमुक्त्वा महाप्राज्ञो धृतराष्ट्रः सुयोधनम्
पुनरेव महाभागः संजयं पर्यपृच्छत १
ब्रूहि संजय यच्छेषं वासुदेवादनन्तरम्
यदर्जुन उवाच त्वां परं कौतूहलं हि मे २
संजय उवाच
वासुदेववचः श्रुत्वा कुन्तीपुत्रो धनंजयः
उवाच काले दुर्धर्षो वासुदेवस्य शृण्वतः ३
पितामहं शान्तनवं धृतराष्ट्रं च संजय
द्रोणं कृपं च कर्णं च महाराजं च बाह्लिकम् ४

द्रौणिं च सोमदत्तं च शकुनिं चापि सौबलम्
दुःशासनं शलं चैव पुरुमित्रं विविंशतिम् ५
विकर्णं चित्रसेनं च जयत्सेनं च पार्थिवम्
विन्दानुविन्दावावन्त्यौ दुर्मुखं चापि कौरवम् ६
सैन्धवं दुःसहं चैव भूरिश्रवसमेव च
भगदत्तं च राजानं जलसन्धं च पार्थिवम् ७
ये चाप्यन्ये पार्थिवास्तत्र योद्धुं समागताः कौरवाणां प्रियार्थम्
मुमूर्षवः पाण्डवाग्नौ प्रदीप्ते समानीता धार्तराष्ट्रेण सूत ८
यथान्यायं कौशलं वन्दनं च समागता मद्वचनेन वाच्याः
इदं ब्रूयाः संजय राजमध्ये सुयोधनं पापकृतां प्रधानम् ९
अमर्षणं दुर्मतिं राजपुत्रं पापात्मानं धार्तराष्ट्रं सुलुब्धम्
सर्वं ममैतद्वचनं समग्रं सहामात्यं संजय श्रावयेथाः १०
एवं प्रतिष्ठाप्य धनंजयो मां ततोऽथवद्धर्मवच्चापि वाक्यम्
प्रोवाचेदं वासुदेवं समीक्ष्य पार्थो धीमाँल्लोहितान्तायताक्षः ११
यथा श्रुतं ते वदतो महात्मनो मधुप्रवीरस्य वचः समाहितम्
तथैव वाच्यं भवता हि मद्वचः समागतेषु क्षितिपेषु सर्वशः १२
शराग्निधूमे रथनेमिनादिते धनुःस्रुवेणास्त्रबलापहारिणा
यथा न होमः क्रियते महामृधे तथा समेत्य प्रयतध्वमादृताः १३
न चेत्प्रयच्छध्वममित्रघातिनो युधिष्ठिरस्यांशमभीप्सितं स्वकम्
नयामि वः साश्वपदातिकुञ्जरान्दिशं पितॄणामशिवां शितैः शरैः १४
ततोऽहमामन्त्र्य चतुर्भुजं हरिं धनंजयं चैव नमस्य सत्वरः
जवेन सम्प्राप्त इहामरद्युते तवान्तिकं प्रापयितुं वचो महत् १५
इति श्रीमहाभारते उद्योगपर्वणि चतुःषष्टितमोऽध्यायः ६४

पञ्चषष्टितमोऽध्यायः

वैशम्पायन उवाच
दुर्योधने धार्तराष्ट्रे तद्वचोऽप्रतिनन्दति
तूष्णीम्भूतेषु सर्वेषु समुत्तस्थुर्नरेश्वराः १
उत्थितेषु महाराज पृथिव्यां सर्वराजसु
रहिते संजयं राजा परिप्रष्टुं प्रचक्रमे २

आशंसमानो विजयं तेषां पुत्रवशानुगः
आत्मनश्च परेषां च पाण्डवानां च निश्चयम् ३
धृतराष्ट्र उवाच
गावल्गणे ब्रूहि नः सारफल्गु स्वसेनायां यावदिहास्ति किंचित्
त्वं पाण्डवानां निपुणं वेत्थ सर्वं किमेषां ज्यायः किमु तेषां कनीयः ४
त्वमेतयोः सारवित्सर्वदर्शी धर्मार्थयोर्निपुणो निश्चयज्ञः
स मे पृष्टः संजय ब्रूहि सर्वं युध्यमानाः कतरेऽस्मिन्न सन्ति ५
संजय उवाच
न त्वां ब्रूयां रहिते जातु किंचिदसूया हि त्वां प्रसहेत राजन्
आनयस्व पितरं संशितव्रतं गान्धारीं च महिषीमाजमीढ ६
तौ तेऽसूयां विनयेतां नरेन्द्र धर्मज्ञौ तौ निपुणौ निश्चयज्ञौ
तयोस्तु त्वां संनिधौ तद्वदेयं कृत्स्नं मतं वासुदेवार्जुनाभ्याम् ७
वैशम्पायन उवाच
ततस्तन्मतमाज्ञाय संजयस्यात्मजस्य च
अभ्युपेत्य महाप्राज्ञः कृष्णद्वैपायनोऽब्रवीत् ८
सम्पृच्छते धृतराष्ट्राय संजय आचक्ष्व सर्वं यावदेषोऽनुयुङ्क्ते
सर्वं यावद्वेत्थ तस्मिन्यथावद्याथातथ्यं वासुदेवेऽर्जुने च ९
इति श्रीमहाभारते उद्योगपर्वणि पञ्चषष्टितमोऽध्यायः ६५

## षट्षष्टितमोऽध्यायः

संजय उवाच
अर्जुनो वासुदेवश्च धन्विनौ परमार्चितौ
कामादन्यत्र सम्भूतौ सर्वाभावाय सम्मितौ १
द्यामन्तरं समास्थाय यथायुक्तं मनस्विनः
चक्रं तद्वासुदेवस्य मायया वर्तते विभो २
सापह्नवं पाण्डवेषु पाण्डवानां सुसम्मतम्
सारासारबलं ज्ञात्वा तत्समासेन मे शृणु ३
नरकं शम्बरं चैव कंसं चैद्यं च माधवः
जितवान्घोरसंकाशान्क्रीडन्निव जनार्दनः ४
पृथिवीं चान्तरिक्षं च द्यां चैव पुरुषोत्तमः

मनसैव विशिष्टात्मा नयत्यात्मवशं वशी ५
भूयो भूयो हि यद्राजन्पृच्छसे पाराडवान्प्रति
सारासारबलं ज्ञातुं तन्मे निगदतः शृणु ६
एकतो वा जगत्कृत्स्नमेकतो वा जनार्दनः
सारतो जगतः कृत्स्नादतिरिक्तो जनार्दनः ७
भस्म कुर्याज्जगदिदं मनसैव जनार्दनः
न तु कृत्स्नं जगच्छक्तं भस्म कर्तुं जनार्दनम् ८
यतः सत्यं यतो धर्मो यतो ह्रीरार्जवं यतः
ततो भवति गोविन्दो यतः कृष्णस्ततो जयः ९
पृथिवीं चान्तरिक्षं च दिवं च पुरुषोत्तमः
विचेष्टयति भूतात्मा क्रीडन्निव जनार्दनः १०
स कृत्वा पाराडवान्सत्रं लोकं सम्मोहयन्निव
अधर्मनिरतान्मूढान्दग्धुमिच्छति ते सुतान् ११
कालचक्रं जगच्चक्रं युगचक्रं च केशवः
आत्मयोगेन भगवान्परिवर्तयतेऽनिशम् १२
कालस्य च हि मृत्योश्च जङ्गमस्थावरस्य च
ईशते भगवानेकः सत्यमेतद्ब्रवीमि ते १३
ईशन्नपि महायोगी सर्वस्य जगतो हरिः
कर्माणयारभते कर्तुं कीनाश इव दुर्बलः १४
तेन वञ्चयते लोकान्मायायोगेन केशवः
ये तमेव प्रपद्यन्ते न ते मुह्यन्ति मानवाः १५
इति श्रीमहाभारते उद्योगपर्वणि षट्षष्टितमोऽध्यायः ६६

## सप्तषष्ठितमोऽध्यायः

धृतराष्ट्र उवाच
कथं त्वं माधवं वेत्थ सर्वलोकमहेश्वरम्
कथमेनं न वेदाहं तन्ममाचक्ष्व संजय १
संजय उवाच
विद्या राजन्न ते विद्या मम विद्या न हीयते
विद्याहीनस्तमोध्वस्तो नाभिजानाति केशवम् २

विद्यया तात जानामि त्रियुगं मधुसूदनम्
कर्तारमकृतं देवं भूतानां प्रभवाप्ययम् ३
धृतराष्ट्र उवाच
गावल्गणेऽत्र का भक्तिर्या ते नित्या जनार्दने
यया त्वमभिजानासि त्रियुगं मधुसूदनम् ४
संजय उवाच
मायां न सेवे भद्रं ते न वृथाधर्ममाचरे
शुद्धभावं गतो भक्त्या शास्त्राद्वेद्मि जनार्दनम् ५
धृतराष्ट्र उवाच
दुर्योधन हृषीकेशं प्रपद्यस्व जनार्दनम्
आप्तो नः संजयस्तात शरणं गच्छ केशवम् ६
दुर्योधन उवाच
भगवान्देवकीपुत्रो लोकं चेन्निहनिष्यति
प्रवदन्नर्जुने सख्यं नाहं गच्छेऽद्य केशवम् ७
धृतराष्ट्र उवाच
अवाग्गान्धारि पुत्रस्ते गच्छत्येष सुदुर्मतिः
ईर्ष्युर्दुरात्मा मानी च श्रेयसां वचनातिगः ८
गान्धार्युवाच
एश्वर्यकाम दुष्टात्मन्वृद्धानां शासनातिग
एश्वर्यजीविते हित्वा पितरं मां च वालिश ९
बर्धयन्दुर्हृदां प्रीतिं मां च शोकेन वर्धयन्
निहतो भीमसेनेन स्मर्तासि वचनं पितुः १०
व्यास उवाच
दयितोऽसि राजन्कृष्णस्य धृतराष्ट्र निबोध मे
यस्य ते संजयो दूतो यस्त्वां श्रेयसि योक्ष्यते ११
जानात्येष हृषीकेशं पुराणं यच्च वै नवम्
शुश्रूषमाणमेकाग्रं मोक्ष्यते महतो भयात् १२
वैचित्रवीर्य पुरुषाः क्रोधहर्षतमोवृताः
सिता बहुविधैः पाशैर्ये न तुष्टाः स्वकैर्धनैः १३
यमस्य वशमायान्ति काममूढाः पुनः पुनः

अन्धनेत्रा यथैवान्धा नीयमानाः स्वकर्मभिः १४
एष एकायनः पन्थाः येन यान्ति मनीषिणः
तं दृष्ट्वा मृत्युमत्येति महांस्तत्र न सज्जते १५
धृतराष्ट्र उवाच
अङ्ग संजय मे शंस पन्थानमकुतोभयम्
येन गत्वा हृषीकेशं प्राप्नुयां शान्तिमुत्तमाम् १६
संजय उवाच
नाकृतात्मा कृतात्मानं जातु विद्याज्जनार्दनम्
आत्मनस्तु क्रियोपायो नान्यत्रेन्द्रियनिग्रहात् १७
इन्द्रियाणामुदीर्णानां कामत्यागोऽप्रमादतः
अप्रमादोऽविहिंसा च ज्ञानयोनिरसंशयम् १८
इन्द्रियाणां यमे यत्तो भव राजन्नतन्द्रितः
बुद्धिश्च मा ते च्यवतु नियच्छैतां यतस्ततः १९
एतज्ज्ञानं विदुर्विप्रा ध्रुवमिन्द्रियधारणम्
एतज्ज्ञानं च पन्थाश्च येन यान्ति मनीषिणः २०
अप्राप्यः केशवो राजन्निन्द्रियैरजितैर्नृभिः
आगमाधिगतो योगाद्वशी तत्त्वे प्रसीदति २१
इति श्रीमहाभारते उद्योगपर्वणि सप्तषष्टितमोऽध्यायः ६७

## अष्टषष्टितमोऽध्यायः

धृतराष्ट्र उवाच
भूयो मे पुण्डरीकाक्षं संजयाचक्ष्व पृच्छते
नामकर्मार्थवित्तात प्राप्नुयां पुरुषोत्तमम् १
संजय उवाच
श्रुतं मे तस्य देवस्य नामनिर्वचनं शुभम्
यावत्तत्राभिजानेऽहमप्रमेयो हि केशवः २
वसनात्सर्वभूतानां वसुत्वाद्देवयोनितः
वासुदेवस्ततो वेद्यो वृषत्वाद्वृष्णिरुच्यते ३
मौनाद्ध्यानाच्च योगाच्च विद्धि भारत माधवम्
सर्वतत्त्वलयाच्चैव मधुहा मधुसूदनः ४

कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः
कृष्णस्तद्भावयोगाच्च कृष्णो भवति शाश्वतः ५
पुण्डरीकं परं धाम नित्यमक्षयमक्षरम्
तद्भावात्पुण्डरीकाक्षो दस्युत्रासाज्जनार्दनः ६
यतः सत्त्वं न च्यवते यच्च सत्त्वान्न हीयते
सत्त्वतः सात्वतस्तस्मादार्षभाद्वृषभेक्षणः ७
न जायते जनित्र्यां यदजस्तस्मादनीकजित्
देवानां स्वप्रकाशत्वाद्दमाद्दामोदरं विदुः ८
हर्षात्सौख्यात्सुखैश्वर्याद्धृषीकेशत्वमश्नुते
बाहुभ्यां रोदसी बिभ्रन्महाबाहुरिति स्मृतः ९
अधो न क्षीयते जातु यस्मात्तस्मादधोक्षजः
नराणामयनाच्चापि ततो नारायणः स्मृतः
पूरणात्सदनाच्चैव ततोऽसौ पुरुषोत्तमः १०
असतश्च सतश्चैव सर्वस्य प्रभवाप्ययात्
सर्वस्य च सदा ज्ञानात्सर्वमेनं प्रचक्षते ११
सत्ये प्रतिष्ठितः कृष्णः सत्यमत्र प्रतिष्ठितम्
सत्यात्सत्यं च गोविन्दस्तस्मात्सत्योऽपि नामतः १२
विष्णुर्विक्रमणादेव जयनाज्जिष्णुरुच्यते
शाश्वतत्वादनन्तश्च गोविन्दो वेदनाद्गवाम् १३
अतत्त्वं कुरुते तत्त्वं तेन मोहयते प्रजाः
एवंविधो धर्मनित्यो भगवान्मुनिभिः सह
आगन्ता हि महाबाहुरानृशंस्यार्थमच्युतः १४
इति श्रीमहाभारते उद्योगपर्वणि अष्टषष्टितमोऽध्यायः ६८

## एकोन सप्ततितमोऽध्यायः

धृतराष्ट्र उवाच
चक्षुष्मतां वै स्पृहयामि संजय द्रक्ष्यन्ति ये वासुदेवं समीपे
विभ्राजमानं वपुषा परेण प्रकाशयन्तं प्रदिशो दिशश्च १
ईरयन्तं भारतीं भारतानामभ्यर्चनीयां शङ्करीं सृंजयानाम्
बुभूषद्भिर्ग्रहणीयामनिन्द्यां परासूनामग्रहणीयरूपाम् २

समुद्यन्तं सात्वतमेकवीरं प्रणेतारमृषभं यादवानाम्
निहन्तारं क्षोभणं शात्रवाणां मुष्णन्तं च द्विषतां वै यशांसि ३
द्रष्टारो हि कुरवस्तं समेता महात्मानं शत्रुहणं वरेण्यम्
ब्रुवन्तं वाचमनृशंसरूपां वृष्णिश्रेष्ठं मोहयन्तं मदीयान् ४
ऋषिं सनातनतमं विपश्चितं वाचः समुद्रंकलशं यतीनाम्
अरिष्टनेमिं गरुडं सुपर्णं पतिं प्रजानां भुवनस्य धाम ५
सहस्रशीर्षं पुरुषं पुराणमनादिमध्यान्तमनन्तकीर्तिम्
शुक्रस्य धातारमजं जनित्रं परं परेभ्यः शरणं प्रपद्ये ६
त्रैलोक्यनिर्माणकरं जनित्रं देवासुराणामथ नागरक्षसाम्
नराधिपानां विदुषां प्रधानमिन्द्रानुजं तं शरणं प्रपद्ये ७

इति श्रीमहाभारते उद्योगपर्वणि एकोनसप्ततितमोऽध्यायः ६९

समाप्तं यानसंधिपर्व

सप्ततितमोऽध्यायः

वैशम्पायन उवाच
संजये प्रतियाते तु धर्मराजोयुधिष्ठिरः
अभ्यभाषत दाशार्हमृषभं सर्वसात्वताम् १
अयं स कालः सम्प्राप्तो मित्राणां मे जनार्दन
न च त्वदन्यं पश्यामि यो न आपत्सु तारयेत् २
त्वां हि माधव संश्रित्य निर्भया मोहदर्पितम्
धार्तराष्ट्रं सहामात्यं स्वयं समनुयुञ्ज्महे ३
यथा हि सर्वास्वापत्सु पासि वृष्णीनरिंदम
तथा ते पाण्डवा रक्ष्याः पाह्यस्मान्महतो भयात् ४
भगवानुवाच
अयमस्मि महाबाहो ब्रूहि यत्ते विवक्षितम्
करिष्यामि हि तत्सर्वं यत्त्वं वक्ष्यसि भारत ५
युधिष्ठिर उवाच
श्रुतं ते धृतराष्ट्रस्य सपुत्रस्य चिकीर्षितम्
एतद्धि सकलं कृष्ण संजयो मां यदब्रवीत् ६
तन्मतं धृतराष्ट्रस्य सोऽस्यात्मा विवृतान्तरः

यथोक्तं दूत आचष्टे वध्यः स्यादन्यथा ब्रुवन् ७
अप्रदानेन राज्यस्य शान्तिमस्मासु मार्गति
लुब्धः पापेन मनसा चरन्नसममात्मनः ८
यत्तद्द्वादश वर्षाणि वने निर्व्युषिता वयम्
छद्मना शरदं चैकां धृतराष्ट्रस्य शासनात् ९
स्थाता नः समये तस्मिन्धृतराष्ट्र इति प्रभो
नाहास्म समयं कृष्ण तद्धि नो ब्राह्मणा विदुः १०
वृद्धो राजा धृतराष्ट्रः स्वधर्मं नानुपश्यति
पश्यन्वा पुत्रगृद्धित्वान्मन्दस्यान्वेति शासनम् ११
सुयोधनमते तिष्ठन्राजास्मासु जनार्दन
मिथ्या चरति लुब्धः सन्चरन्प्रियमिवात्मनः १२
इतो दुःखतरं किं नु यत्राहं मातरं ततः
संविधातुं न शक्नोमि मित्राणां वा जनार्दन १३
काशिभिश्चेदिपाञ्चालैर्मत्स्यैश्च मधुसूदन
भवता चैव नाथेन पञ्च ग्रामा वृता मया १४
कुशस्थलं वृकस्थलमासन्दी वारणावतम्
अवसानं च गोविन्द किञ्चिदेवात्र पञ्चमम् १५
पञ्च नस्तात दीयन्तां ग्रामा वा नगराणि वा
वसेम सहिता येषु मा च नो भरता नशन् १६
न च तानपि दुष्टात्मा धार्तराष्ट्रोऽनुमन्यते
स्वाम्यमात्मनि मत्वासावतो दुःखतरं नु किम् १७
कुले जातस्य वृद्धस्य परवित्तेषु गृध्यतः
लोभः प्रज्ञानमाहन्ति प्रज्ञा हन्ति हता ह्रियम् १८
ह्रीर्हता बाधते धर्मं धर्मो हन्ति हतः श्रियम्
श्रीर्हता पुरुषं हन्ति पुरुषस्यास्वता वधः १९
अस्वतो हि निवर्तन्ते ज्ञातयः सुहृदर्त्विजः
अपुष्पादफलाद्वृक्षाद्यथा तात पतत्रिणः २०
एतच्च मरणं तात यदस्मात्पतितादिव
ज्ञातयो विनिवर्तन्ते प्रेतसत्त्वादिवासवः २१
नातः पापीयसीं काञ्चिदवस्थां शम्बरोऽब्रवीत्

यत्र नैवाद्य न प्रातर्भोजनं प्रतिदृश्यते २२
धनमाहुः परं धर्मं धने सर्वं प्रतिष्ठितम्
जीवन्ति धनिनो लोके मृता ये त्वधना नराः २३
ये धनादपकर्षन्ति नरं स्वबलमाश्रिताः
ते धर्ममर्थं कामं च प्रमथ्नन्ति नरं च तम् २४
एतामवस्थां प्राप्यैके मरणं वव्रिरे जनाः
ग्रामायैके वनायैके नाशायैके प्रवव्रजुः २५
उन्मादमेके पुष्यन्ति यान्त्यन्ये द्विषतां वशम्
दास्यमेके निगच्छन्ति परेषामर्थहेतुना २६
आपदेवास्य मरणात्पुरुषस्य गरीयसी
श्रियो विनाशस्तद्ध्यस्य निमित्तं धर्मकामयोः २७
यदस्य धर्म्यं मरणं शाश्वतं लोकवर्त्म तत्
समन्तात्सर्वभूतानां न तदत्येति कश्चन २८
न तथा बाध्यते कृष्ण प्रकृत्या निर्धनो जनः
यथा भद्रां श्रियं प्राप्य तया हीनः सुखैधितः २९
स तदात्मापराधेन सम्प्राप्तो व्यसनं महत्
सेन्द्रान्गर्हयते देवान्नात्मानं च कथञ्चन ३०
न चास्मिन्सर्वशास्त्राणि प्रतरन्ति निगर्हणाम्
सोऽभिक्रुध्यति भृत्यानां सुहृदश्चाभ्यसूयति ३१
तं तदा मन्युरेवैति स भूयः सम्प्रमुह्यति
स मोहवशमापन्नः क्रूरं कर्म निषेवते ३२
पापकर्मात्ययायैव संकरं तेन पुष्यति
संकरो नरकायैव साकाष्ठा पापकर्मणाम् ३३
न चेत्प्रबुध्यते कृष्ण नरकायैव गच्छति
तस्य प्रबोधः प्रज्ञैव प्रज्ञाचक्षुर्न रिष्यति ३४
प्रज्ञालाभे हि पुरुषः शास्त्राण्येवान्ववेक्षते
शास्त्रनित्यः पुनर्धर्मं तस्य ह्रीरङ्गमुत्तमम् ३५
ह्रीमान्हि पापं प्रद्वेष्टि तस्य श्रीरभिवर्धते
श्रीमान्स यावद्भवति तावद्भवति पूरुषः ३६
धर्मनित्यः प्रशान्तात्मा कार्ययोगवहः सदा

नाधर्मे कुरुते बुद्धिं न च पापेषु वर्तते ३७
अह्रीको वा विमूढो वा नैव स्त्री न पुनः पुमान्
नास्याधिकारो धर्मेऽस्ति यथा शूद्रस्तथैव सः ३८
ह्रीमानवति देवांश्च पितृनात्मानमेव च
तेनामृतत्वं व्रजति सा काष्ठा पुण्यकर्मणाम् ३९
तदिदं मयि ते दृष्टं प्रत्यक्षं मधुसूदन
यथा राज्यात्परिभ्रष्टो वसामि वसतीरिमाः ४०
ते वयं न श्रियं हातुमलं न्यायेन केनचित्
अत्र नो यतमानानां वधश्चेदपि साधु तत् ४१
तत्र नः प्रथमः कल्पो यद्वयं ते च माधव
प्रशान्ताः समभूताश्च श्रियं तामश्नुवीमहि ४२
तत्रैषा परमा काष्ठा रौद्रकर्मक्षयोदया
यद्वयं कौरवान्हत्वा तानि राष्ट्राण्यशीमहि ४३
ये पुनः स्युरसम्बद्धा अनार्याः कृष्ण शत्रवः
तेषामप्यवधः कार्यः किं पुनर्ये स्युरीदृशाः ४४
ज्ञातयश्च हि भूयिष्ठाः सहाया गुरवश्च नः
तेषां वधोऽतिपापीयान्किं नु युद्धेऽस्ति शोभनम् ४५
पापः क्षत्रियधर्मोऽय वयं च क्षत्रबान्धवाः
स नः स्वधर्मोऽधर्मो वा वृत्तिरन्या विगर्हिता ४६
शूद्रः करोति शुश्रूषां वैश्या विपणिजीविनः
वयं वधेन जीवामः कपालं ब्राह्मणैर्वृतम् ४७
क्षत्रियः क्षत्रियं हन्ति मत्स्यो मत्स्येन जीवति
श्वा श्वानं हन्ति दाशार्ह पश्य धर्मो यथागतः ४८
युद्धे कृष्ण कलिर्नित्यं प्राणाः सीदन्ति संयुगे
बलं तु नीतिमात्राय हठे जयपराजयौ ४९
नात्मच्छन्देन भूतानां जीवितं मरणं तथा
नाप्यकाले सुखं प्राप्यं दुःखं वापि यदूत्तम ५०
एको ह्यपि बहून्हन्ति घ्नन्त्येकं बहवोऽप्युत
शूरं कापुरुषो हन्ति अयशस्वी यशस्विनम् ५१
जयश्चैवोभयोर्दृष्ट उभयोश्च पराजयः

तथैवापचयो दृष्टो व्यपयाने क्षयव्ययौ ५२
सर्वथा वृजिनं युद्धं को घ्नन्न प्रतिहन्यते
हतस्य च हृषीकेश समौ जयपराजयौ ५३
पराजयश्च मरणान्मन्ये नैव विशिष्यते
यस्य स्याद्विजयः कृष्ण तस्याप्यपचयो ध्रुवम् ५४
अन्ततो दयितं घ्नन्ति केचिदप्यपरे जनाः
तस्याङ्ग बलहीनस्य पुत्रान्भ्रातृनपश्यतः
निर्वेदो जीविते कृष्ण सर्वतश्चोपजायते ५५
ये ह्येव वीरा ह्रीमन्त आर्याः करुणवेदिनः
त एव युद्धे हन्यन्ते यवीयान्मुच्यते जनः ५६
हत्वाप्यनुशयो नित्यं परानपि जनार्दन
अनुबन्धश्च पापोऽत्र शेषश्चाप्यवशिष्यते ५७
शेषो हि बलमासाद्य न शेषमवशेषयेत्
सर्वोच्छेदे च यतते वैरस्यान्तविधित्सया ५८
जयो वैरं प्रसृजति दुःखमास्ते पराजितः
सुखं प्रशान्तः स्वपिति हित्वा जयपराजयौ ५९
जातवैरश्च पुरुषो दुःखं स्वपिति नित्यदा
अनिर्वृतेन मनसा ससर्प इव वेश्मनि ६०
उत्सादयति यः सर्वं यशसा स वियुज्यते
अकीर्तिं सर्वभूतेषु शाश्वतीं स नियच्छति ६१
न हि वैराणि शाम्यन्ति दीर्घकालकृतान्यपि
आख्यातारश्च विद्यन्ते पुमांश्चोत्पद्यते कुले ६२
न चापि वैरं वैरेण केशव व्युपशाम्यति
हविषाग्निर्यथा कृष्ण भूय एवाभिवर्धते ६३
अतोऽन्यथा नास्ति शान्तिर्नित्यमन्तरमन्ततः
अन्तरं लिप्समानानामयं दोषो निरन्तरः ६४
पौरुषेयो हि बलवानाधिर्हृदयबाधनः
तस्य त्यागेन वा शान्तिर्निवृत्त्या मनसोऽपि ६५
अथ वा मूलघातेन द्विषतां मधुसूदन
फलनिर्वृत्तिरिद्धा स्यात्तन्नृशंसतरं भवेत् ६६

यातु त्यागेन शान्तिः स्यात्तदृते वध एव सः
संशयश्च समुच्छेदाद्द्विषतामात्मनस्तथा ६७
न च त्यक्तुं तदिच्छामो न चेच्छामः कुलक्षयम्
अत्र या प्रणिपातेन शान्तिः सैव गरीयसी ६८
सर्वथा यतमानानामयुद्धमभिकाङ्क्षताम्
सान्त्वे प्रतिहते युद्धं प्रसिद्धमपराक्रमम् ६९
प्रतिघातेन सान्त्वस्य दारुणं सम्प्रवर्तते
तच्छुनामिव गोपादे पण्डितैरुपलक्षितम् ७०
लाङ्गूलचालनं क्ष्वेडः प्रतिरावो विवर्तनम्
दन्तदर्शनमारावस्ततो युद्धं प्रवर्तते ७१
तत्र यो बलवान्कृष्ण जित्वा सोऽत्ति तदामिषम्
एवमेव मनुष्येषु विशेषो नास्ति कश्चन ७२
सर्वथा त्वेतदुचितं दुर्बलेषु बलीयसाम्
अनादरो विरोधश्च प्रणिपाती हि दुर्बलः ७३
पिता राजा च वृद्धश्च सर्वथा मानमर्हति
तस्मान्मान्यश्च पूज्यश्च धृतराष्ट्रो जनार्दन ७४
पुत्रस्नेहस्तु बलवान्धृतराष्ट्रस्य माधव
स पुत्रवशमापन्नः प्रणिपातं प्रहास्यति ७५
तत्र किं मन्यसे कृष्ण प्राप्तकालमनन्तरम्
कथमर्थाच्च धर्माच्च न हीयेमहि माधव ७६
ईदृशे ह्यर्थकृच्छ्रेऽस्मिन्कमन्यं मधुसूदन
उपसम्प्रष्टुमर्हामि त्वामृते पुरुषोत्तम ७७
प्रियश्च प्रियकामश्च गतिज्ञः सर्वकर्मणाम्
को हि कृष्णास्ति नस्त्वादृक्सर्वनिश्चयवित्सुहृत् ७८
वैशम्पायन उवाच
एवमुक्तः प्रत्युवाच धर्मराजं जनार्दनः
उभयोरेव वामर्थे यास्यामि कुरुसंसदम् ७९
शमं तत्र लभेयं चेद्युष्मदर्थमहापयन्
पुण्यं मे सुमहद्राजंश्चरितं स्यान्महाफलम् ८०
मोचयेयं मृत्युपाशात्संरब्धान्कुरुसृञ्जयान्

पाण्डवान्धार्तराष्ट्रांश्च सर्वां च पृथिवीमिमाम् ८१
युधिष्ठिर उवाच
न ममैतन्मतं कृष्ण यत्त्वं यायाः कुरून्प्रति
सुयोधनः सूक्तमपि न करिष्यति ते वचः ८२
समेतं पार्थिवं क्षत्रं दुर्योधनवशानुगम्
तेषां मध्यावतरणं तव कृष्ण न रोचये ८३
न हि नः प्रीणयेद्द्रव्यं न देवत्वं कुतः सुखम्
न च सर्वामरैश्वर्यं तव रोधेन माधव ८४
भगवानुवाच
जानाम्येतां महाराज धार्तराष्ट्रस्य पापताम्
अवाच्यास्तु भविष्यामः सर्वलोके महीक्षिताम् ८५
न चापि मम पर्याप्ताः सहिताः सर्वपार्थिवाः
क्रुद्धस्य प्रमुखे स्थातुं सिंहस्येवेतरे मृगाः ८६
अथ चेत्ते प्रवर्तेरन्मयि किञ्चिदसाम्प्रतम्
निर्दहेयं कुरून्सर्वानिति मे धीयते मतिः ८७
न जातु गमनं तत्र भवेत्पार्थ निरर्थकम्
अर्थप्राप्तिः कदाचित्स्यादन्ततो वाप्यवाच्यता ८८
युधिष्ठिर उवाच
यत्तुभ्यं रोचते कृष्ण स्वस्ति प्राप्नुहि कौरवान्
कृतार्थं स्वस्तिमन्तं त्वां द्रक्ष्यामि पुनरागतम् ८९
विष्वक्सेन कुरून्गत्वा भारताञ्शमयेः प्रभो
यथा सर्वे सुमनसः सह स्यामः सुचेतसः ९०
भ्राता चासि सखा चासि बीभत्सोर्मम च प्रियः
सौहृदेनाविशङ्क्योऽसि स्वस्ति प्राप्नुहि भूतये ९१
अस्मान्वेत्थ परान्वेत्थ वेत्थार्थं वेत्थ भाषितम्
यद्यदस्मद्धितं कृष्ण तत्तद्वाच्यः सुयोधनः ९२
यद्यद्धर्मेण संयुक्तमुपपद्येद्धितं वचः
तत्तत्केशव भाषेथाः सान्त्वं वा यदि वेतरत् ९३
इति श्रीमहाभारते उद्योगपर्वणि सप्ततितमोऽध्यायः ७०

## एक सप्ततितमोऽध्यायः

भगवानुवाच
संजयस्य श्रुतं वाक्यं भवतश्च श्रुतं मया
सर्वं जानाम्यभिप्रायं तेषां च भवतश्च यः १
तव धर्माश्रिता बुद्धिस्तेषां वैराश्रिता मतिः
यदयुद्धेन लभ्येत तत्ते बहुमतं भवेत् २
न च तन्नैष्ठिकं कर्म क्षत्रियस्य विशां पते
आहुराश्रमिणः सर्वे यद्भैक्षं क्षत्रियश्चरेत् ३
जयो वधो वा संग्रामे धात्रा दिष्टः सनातनः
स्वधर्मः क्षत्रियस्यैष कार्पण्यं न प्रशस्यते ४
न हि कार्पण्यमास्थाय शक्या वृत्तिर्युधिष्ठिर
विक्रमस्व महाबाहो जहि शत्रूनरिंदम ५
अतिगृद्धाः कृतस्नेहा दीर्घकालं सहोषिताः
कृतमित्राः कृतबला धार्तराष्ट्राः परंतप ६
न पर्यायोऽस्ति यत्साम्यं त्वयि कुर्युर्विशां पते
बलवत्तां हि मन्यन्ते भीष्मद्रोणकृपादिभिः ७
यावच्च मार्दवेनैतान्राजन्नुपचरिष्यसि
तावदेते हरिष्यन्ति तव राज्यमरिंदम ८
नानुक्रोशान्न कार्पण्यान्न च धर्मार्थकारणात्
अलं कर्तुं धार्तराष्ट्रस्तव काममरिंदम ९
एतदेव निमित्तं ते पाण्डवास्तु यथा त्वयि
नान्वतप्यन्त कौपीनं तावत्कृत्वापि दुष्करम् १०
पितामहस्य द्रोणस्य विदुरस्य च धीमतः
पश्यतां कुरुमुख्यानां सर्वेषामेव तत्त्वतः ११
दानशीलं मृदुं दान्तं धर्मकाममनुव्रतम्
यत्त्वामुपधिना राजन्द्यूतेनावञ्चयत्तदा
न चापत्रपते पापो नृशंसस्तेन कर्मणा १२
तथाशीलसमाचारे राजन्मा प्रणयं कृथाः
वध्यास्ते सर्वलोकस्य किं पुनस्तव भारत १३
वाग्भिस्त्वप्रतिरूपाभिरतुदत्सकनीयसम्

श्लाघमानः प्रहृष्टः सन्भाषते भ्रातृभिः सह १४
एतावत्पाण्डवानां हि नास्ति किंचिदिह स्वकम्
नामधेयं च गोत्रं च तदप्येषां न शिष्यते १५
कालेन महता चैषां भविष्यन्ति पराभवः
प्रकृतिं ते भजिष्यन्ति नष्टप्रकृतयो जनाः १६
एताश्चान्याश्च परुषा वाचः स समुदीरयन्
श्लाघते ज्ञातिमध्ये स्म त्वयि प्रव्रजिते वनम् १७
ये तत्रासन्समानीतास्ते दृष्ट्वा त्वामनागसम्
अश्रुकण्ठा रुदन्तश्च सभायामासते तदा १८
न चैनमभ्यनन्दंस्ते राजानो ब्राह्मणैः सह
सर्वे दुर्योधनं तत्र निन्दन्ति स्म सभासदः १९
कुलीनस्य च या निन्दा वधश्चामित्रकर्शन
महागुणो वधो राजन्न तु निन्दा कुजीविका २०
तदैव निहतो राजन्यदैव निरपत्रपः
निन्दितश्च महाराज पृथिव्यां सर्वराजसु २१
ईषत्कार्यो वधस्तस्य यस्य चारित्रमीदृशम्
प्रस्कम्भनप्रतिस्तब्धश्छिन्नमूल इव द्रुमः २२
वध्यः सर्प इवानार्यः सर्वलोकस्य दुर्मतिः
जह्येनं त्वममित्रघ्न मा राजन्विचिकित्सिथाः २३
सर्वथा त्वत्क्षमं चैतद्रोचते च ममानघ
यत्त्वं पितरि भीष्मे च प्रणिपातं समाचरेः २४
अहं तु सर्वलोकस्य गत्वा छेत्स्यामि संशयम्
येषामस्ति द्विधाभावो राजन्दुर्योधनं प्रति २५
मध्ये राज्ञामहं तत्र प्रातिपौरुषिकान्गुणान्
तव संकीर्तयिष्यामि ये च तस्य व्यतिक्रमाः २६
ब्रुवतस्तत्र मे वाक्यं धर्मार्थसहितं हितम्
निशम्य पार्थिवाः सर्वे नानाजनपदेश्वराः २७
त्वयि सम्प्रतिपत्स्यन्ते धर्मात्मा सत्यवागिति
तस्मिंश्चाधिगमिष्यन्ति यथा लोभादवर्तत २८
गर्हयिष्यामि चैवैनं पौरजानपदेष्वपि

वृद्धबालानुपादाय चातुर्वर्ण्यसमागमे २९
शमं चेद्याचमानस्त्वं न धर्मं तत्र लप्स्यसे
कुरून्विगर्हयिष्यन्ति धृतराष्ट्रं च पार्थिवाः ३०
तस्मिँल्लोकपरित्यक्ते किं कार्यमवशिष्यते
हते दुर्योधने राजन्यदन्यत्क्रियतामिति ३१
यात्वा चाहं कुरून्सर्वान्युष्मदर्थमहापयन्
यतिष्ये प्रशमं कर्तुं लक्षयिष्ये च चेष्टितम् ३२
कौरवाणां प्रवृत्तिं च गत्वा युद्धाधिकारिकाम्
निशाम्य विनिवर्तिष्ये जयाय तव भारत ३३
सर्वथा युद्धमेवाहमाशंसामि परैः सह
निमित्तानि हि सर्वाणि तथा प्रादुर्भवन्ति मे ३४
मृगाः शकुन्ताश्च वदन्ति घोरं हस्त्यश्वमुख्येषु निशामुखेषु
घोराणि रूपाणि तथैव चाग्निर्वर्णान्बहून्पुष्यति घोररूपान्
मनुष्यलोकक्षपणोऽथ घोरो नो चेदनुप्राप्त इहान्तकः स्यात् ३५
शस्त्राणि पत्रं कवचान्रथांश्च नागान्ध्वजांश्च प्रतिपादयित्वा
योधाश्च सर्वे कृतनिश्रमास्ते भवन्तु हस्त्यश्वरथेषु यत्ताः
सांग्रामिकं ते यदुपार्जनीयं सर्वं समग्रं कुरु तन्नरेन्द्र ३६
दुर्योधनो न ह्यलमद्य दातुं जीवंस्तवैतन्नृपते कथंचित्
यत्ते पुरस्तादभवत्समृद्धं द्यूते हृतं पाण्डवमुख्य राज्यम् ३७
इति श्रीमहाभारते उद्योगपर्वणि एकसप्ततितमोऽध्यायः ७१

## द्विसप्ततितमोऽध्यायः

भीमसेन उवाच
यथा यथैव शान्तिः स्यात्कुरूणां मधुसूदन
तथा तथैव भाषेथा मा स्म युद्धेन भीषयेः १
अमर्षी नित्यसंरब्धः श्रेयोद्वेषी महामनाः
नोग्रं दुर्योधनो वाच्यः साम्नैवैनं समाचरेः २
प्रकृत्या पापसत्त्वश्च तुल्यचेताश्च दस्युभिः
एश्वर्यमदमत्तश्च कृतवैरश्च पाण्डवैः ३
अदीर्घदर्शी निष्ठूरी क्षेप्ता क्रूरपराक्रमः

दीर्घमन्युरनेयश्च पापात्मा निकृतिप्रियः ४
म्रियेतापि न भज्येत नैव जह्यात्स्वकं मतम्
तादृशेन शमं कृष्ण मन्ये परमदुष्करम् ५
सुहृदामप्यवाचीनस्त्यक्तधर्मः प्रियानृतः
प्रतिहन्त्येव सुहृदां वाचश्चैव मनांसि च ६
स मन्युवशमापन्नः स्वभावं दुष्टमास्थितः
स्वभावात्पापमन्वेति तृणैस्तुन्न इवोरगः ७
दुर्योधनो हि यत्सेनः सर्वथा विदितस्तव
यच्छीलो यत्स्वभावश्च यद्बलो यत्पराक्रमः ८
पुरा प्रसन्नाः कुरवः सहपुत्रास्तथा वयम्
इन्द्रज्येष्ठा इवाभूम मोदमानाः सबान्धवाः ९
दुर्योधनस्य क्रोधेन भारता मधुसूदन
धक्ष्यन्ते शिशिरापाये वनानीव हुताशनैः १०
अष्टादशेमे राजानः प्रख्याता मधुसूदन
ये समुच्चिच्छिदुर्ज्ञातीन्सुहृदश्च सबान्धवान् ११
असुराणां समृद्धानां ज्वलतामिव तेजसा
पर्यायकाले धर्मस्य प्राप्ते बलिरजायत १२
हैहयानामुदावर्तो नीपानां जनमेजयः
बहुलस्तालजङ्घानां कृमीणामुद्धतो वसुः १३
अजबिन्दुः सुवीराणां सुराष्ट्राणां कुशर्द्धिकः
अर्कजश्च बलीहानां चीनानां धौतमूलकः १४
हयग्रीवो विदेहानां वरप्रश्च महौजसाम्
बाहुः सुन्दरवेगानां दीप्ताक्षाणां पुरूरवाः १५
सहजश्चेदिमत्स्यानां प्रचेतानां बृहद्बलः
धारणश्चेन्द्रवत्सानां मुकुटानां विगाहनः १६
शमश्च नन्दिवेगानामित्येते कुलपांसनाः
युगान्ते कृष्ण सम्भूताः कुले कुपुरुषाधमाः १७
अप्ययं नः कुरूणां स्याद्युगान्ते कालसम्भृतः
दुर्योधनः कुलाङ्गारो जघन्यः पापपूरुषः १८
तस्मान्मृदु शनैरेनं ब्रूया धर्मार्थसंहितम्

कामानुबन्धबहुलं नोग्रमुग्रपराक्रमम् १९
अपि दुर्योधनं कृष्ण सर्वे वयमधश्चराः
नीचैर्भूत्वानुयास्यामो मा स्म नो भरता नशन् २०
अप्युदासीनवृत्तिः स्याद्यथा नः कुरुभिः सह
वासुदेव तथा कार्यं न कुरूननयः स्पृशेत् २१
वाच्यः पितामहो वृद्धो ये च कृष्ण सभासदः
भ्रातृणामस्तु सौभ्रात्रं धार्तराष्ट्रैः प्रशाम्यताम् २२
अहमेतद्ब्रवीम्येवं राजा चैव प्रशंसति
अर्जुनो नैव युद्धार्थी भूयसी हि दयार्जुने २३
इति श्रीमहाभारते उद्योगपर्वणि द्विसप्ततितमोऽध्यायः ७२

त्रिसप्तति तमोऽध्यायः

वैशम्पायन उवाच
एतच्छ्रुत्वा महाबाहुः केशवः प्रहसन्निव
अभूतपूर्वं भीमस्य मार्दवोपगतं वचः १
गिरेरिव लघुत्वं तच्छीतत्वमिव पावके
मत्वा रामानुजः शौरिः शार्ङ्गधन्वा वृकोदरम् २
संतेजयंस्तदा वाग्भिर्मातरिश्वेव पावकम्
उवाच भीममासीनं कृपयाभिपरिप्लुतम् ३
त्वमन्यदा भीमसेन युद्धमेव प्रशंससि
वधाभिनन्दिनः क्रूरान्धार्तराष्ट्रान्मिमर्दिषुः ४
न च स्वपिषि जागर्षि न्युब्जः शेषे परंतप
घोरामशान्तां रुशतीं सदा वाचं प्रभाषसे ५
निःश्वसन्नग्निवर्णेन संतप्तः स्वेन मन्युना
अप्रशान्तमना भीम सधूम इव पावकः ६
एकान्ते निष्टनञ्शेषे भारार्त इव दुर्बलः
अपि त्वां केचिदुन्मत्तं मन्यन्तेऽतद्विदो जनाः ७
आरुज्य वृक्षान्निर्मूलान्गजः परिभुजन्निव
निघ्नन्पद्भिः क्षितिं भीम निष्टनन्परिधावसि ८
नास्मिञ्जनेऽभिरमसे रहः क्षियसि पाण्डव

नान्यं निशि दिवा चापि कदाचिदभिनन्दसि ९
अकस्मात्स्मयमानश्च रहस्यास्से रुदन्निव
जान्वोर्मूर्धानमाधाय चिरमास्से प्रमीलितः १०
भ्रुकुटिं च पुनः कुर्वन्नोष्ठौ च विलिहन्निव
अभीक्ष्णं दृश्यसे भीम सर्वं तन्मन्युकारितम् ११
यथा पुरस्तात्सविता दृश्यते शुक्रमुच्चरन्
यथा च पश्चान्निर्मुक्तो ध्रुवं पर्येति रश्मिवान् १२
तथा सत्यं ब्रवीम्येतन्नास्ति तस्य व्यतिक्रमः
हन्ताहं गदयाभ्येत्य दुर्योधनममर्षणम् १३
इति स्म मध्ये भ्रातॄणां सत्येनालभसे गदाम्
तस्य ते प्रशमे बुद्धिर्धीयतेऽद्य परंतप १४
अहो युद्धप्रतीपानि युद्धकाल उपस्थिते
पश्यसीवाप्रतीपानि किं त्वां भीर्भीम विन्दति १५
अहो पार्थ निमित्तानि विपरीतानि पश्यसि
स्वप्नान्ते जागरान्ते च तस्मात्प्रशममिच्छसि १६
अहो नाशंससे किञ्चित्पुंस्त्वं क्लीब इवात्मनि
कश्मलेनाभिपन्नोऽसि तेन ते विकृतं मनः १७
उद्वेपते ते हृदयं मनस्ते प्रविषीदति
ऊरुस्तम्भगृहीतोऽसि तस्मात्प्रशममिच्छसि १८
अनित्यं किल मर्त्यस्य चित्तं पार्थ चलाचलम्
वातवेगप्रचलिता अष्ठीला शाल्मलेरिव १९
तवैषा विकृता बुद्धिर्गवां वागिव मानुषी
मनांसि पाण्डुपुत्राणां मज्जयत्यप्लवानिव २०
इदं मे महदाश्चर्यं पर्वतस्येव सर्पणम्
यदीदृशं प्रभाषेथा भीमसेनासमं वचः २१
स दृष्ट्वा स्वानि कर्माणि कुले जन्म च भारत
उत्तिष्ठस्व विषादं मा कृथा वीर स्थिरो भव २२
न चैतदनुरूपं ते यत्ते ग्लानिररिंदम
यदोजसा न लभते क्षत्रियो न तदश्नुते २३
इति श्रीमहाभारते उद्योगपर्वणि त्रिसप्ततितमोऽध्यायः ७३

## चतुः सप्ततितमोऽध्यायः

वैशम्पायन उवाच
तथोक्तो वासुदेवेन नित्यमन्युरमर्षणः
सदश्ववत्समाधावद्बभाषे तदनन्तरम् १
अन्यथा मां चिकीर्षन्तमन्यथा मन्यसेऽच्युत
प्रणीतभावमत्यन्तं युधि सत्यपराक्रमम् २
वेत्थ दाशार्ह सत्त्वं मे दीर्घकालं सहोषितः
उत वा मां न जानासि प्लवन्ह्रद इवाप्लवः
तस्मादप्रतिरूपाभिर्वाग्भिर्मां त्वं समर्च्छसि ३
कथं हि भीमसेनं मां जानन्कश्चन माधव
ब्रूयादप्रतिरूपाणि यथा मां वक्तुमर्हसि ४
तस्मादिदं प्रवक्ष्यामि वचनं वृष्णिनन्दन
आत्मनः पौरुषं चैव बलं च न समं परैः ५
सर्वथा नार्यकर्मैतत्प्रशंसा स्वयमात्मनः
अतिवादापविद्धस्तु वक्ष्यामि बलमात्मनः ६
पश्येमे रोदसी कृष्ण ययोरासन्निमाः प्रजाः
अचले चाप्यनन्ते च प्रतिष्ठे सर्वमातरौ ७
यदीमे सहसा क्रुद्धे समेयातां शिले इव
अहमेते निगृह्णीयां बाहुभ्यां सचराचरे ८
पश्यैतदन्तरं बाह्वोर्महापरिघयोरिव
य एतत्प्राप्य मुच्येत न तं पश्यामि पूरुषम् ९
हिमवांश्च समुद्रश्च वज्री च बलभित्स्वयम्
मयाभिपन्नं त्रायेरन्बलमास्थाय न त्रयः १०
युध्येयं क्षत्रियान्सर्वान्पाण्डवेष्वाततायिनः
अधः पादतलेनैतानधिष्ठास्यामि भूतले ११
न हि त्वं नाभिजानासि मम विक्रममच्युत
यथा मया विनिर्जित्य राजानो वशगाः कृताः १२
अथ चेन्मां न जानासि सूर्यस्येवोद्यतः प्रभाम्
विगाढे युधि सम्बाधे वेत्स्यसे मां जनार्दन १३
किं मात्यवाक्षीः परुषैर्व्रणं सूच्या इवानघ

यथामति ब्रवीम्येतद्विद्धि मामधिकं ततः १४
द्रष्टासि युधि सम्बाधे प्रवृत्ते वैशसेऽहनि
मया प्रणुन्नान्मातङ्गान्रथिनः सादिनस्तथा १५
तथा नरानभिक्रुद्धं निघ्नन्तं क्षत्रियर्षभान्
द्रष्टा मां त्वं च लोकश्च विकर्षन्तं वरान्वरान् १६
न मे सीदन्ति मज्जानो न ममोद्वेपते मनः
सर्वलोकादभिक्रुद्धान्न भयं विद्यते मम १७
किं तु सौहृदमेवैतत्कृपया मधुसूदन
सर्वांस्तितिक्षे संक्लेशान्मा स्म नो भरता नशन् १८
इति श्रीमहाभारते उद्योगपर्वणि चतुंसप्ततितमोऽध्यायः ७४

## पञ्चसप्ततितमोऽध्यायः

भगवानुवाच
भावं जिज्ञासमानोऽह प्रणयादिदमब्रुवम्
न चाक्षेपान्न पाण्डित्यान्न क्रोधान्न विवक्षया १
वेदाहं तव माहात्म्यमुत ते वेद यद्बलम्
उत ते वेद कर्माणि न त्वां परिभवाम्यहम् २
यथा चात्मनि कल्याणं सम्भावयसि पाण्डव
सहस्रगुणमप्येतत्त्वयि सम्भावयाम्यहम् ३
यादृशे च कुले जन्म सर्वराजाभिपूजिते
बन्धुभिश्च सुहृद्भिश्च भीम त्वमसि तादृशः ४
जिज्ञासन्तो हि धर्मस्य संदिग्धस्य वृकोदर
पर्यायं न व्यवस्यन्ति दैवमानुषयोर्जनाः ५
स एव हेतुर्भूत्वा हि पुरुषस्यार्थसिद्धिषु
विनाशेऽपि स एवास्य संदिग्धं कर्म पौरुषम् ६
अन्यथा परिदृष्टानि कविभिर्दोषदर्शिभिः
अन्यथा परिवर्तन्ते वेगा इव नभस्वतः ७
समन्त्रितं सुनीतं च न्यायतश्चोपपादितम्
कृतं मानुष्यकं कर्म दैवेनापि विरुध्यते ८
दैवमप्यकृतं कर्म पौरुषेण विहन्यते

शीतमुष्णं तथा वर्षं क्षुत्पिपासे च भारत ९
यदन्यद्दिष्टभावस्य पुरुषस्य स्वयंकृतम्
तस्मादनवरोधश्च विद्यते तत्र लक्षणम् १०
लोकस्य नान्यतो वृत्तिः पाण्डवान्यत्र कर्मणः
एवंबुद्धिः प्रवर्तेत फलं स्यादुभयान्वयात् ११
य एवं कृतबुद्धिः सन्कर्मस्वेव प्रवर्तते
नासिद्धौ व्यथते तस्य न सिद्धौ हर्षमश्नुते १२
तत्रेयमर्थमात्रा मे भीमसेन विवक्षिता
नैकान्तसिद्धिर्मन्तव्या कुरुभिः सह संयुगे १३
नातिप्रणीतरश्मिः स्यात्तथा भवति पर्यये
विषादमर्च्छेद् ग्लानिं वा एतदर्थं ब्रवीमि ते १४
श्वोभूते धृतराष्ट्रस्य समीपं प्राप्य पाण्डव
यतिष्ये प्रशमं कर्तुं युष्मदर्थमहापयन् १५
शमं चेत्ते करिष्यन्ति ततोऽनन्तं यशो मम
भवतां च कृतः कामस्तेषां च श्रेय उत्तमम् १६
ते चेदभिनिवेक्ष्यन्ति नाभ्युपैष्यन्ति मे वचः
कुरवो युद्धमेवात्र रौद्रं कर्म भविष्यति १७
अस्मिन्युद्धे भीमसेन त्वयि भारः समाहितः
धूरर्जुनेन धार्या स्याद्वोढव्य इतरो जनः १८
अहं हि यन्ता बीभत्सोर्भविता संयुगे सति
धनंजयस्यैष कामो न हि युद्धं न कामये १९
तस्मादाशङ्कमानोऽह वृकोदर मतिं तव
तुदन्नक्लीबया वाचा तेजस्ते समदीपयम् २०

इति श्रीमहाभारते उद्योगपर्वणि पञ्चसप्ततितमोऽध्यायः ७५

षट्सप्तति तमोऽध्यायः

अर्जुन उवाच
उक्तं युधिष्ठिरेणैव यावद्वाच्यं जनार्दन
तव वाक्यं तु मे श्रुत्वा प्रतिभाति परंतप १
नैव प्रशममत्र त्वं मन्यसे सुकरं प्रभो

लोभाद्वा धृतराष्ट्रस्य दैन्याद्वा समुपस्थितात् २
अफलं मन्यसे चापि पुरुषस्य पराक्रमम्
न चान्तरेण कर्माणि पौरुषेण फलोदयः ३
तदिदं भाषितं वाक्यं तथा च न तथैव च
न चैतदेवं द्रष्टव्यमसाध्यमपि किंचन ४
किं चैतन्मन्यसे कृच्छ्रमस्माकं पापमादितः
कुर्वन्ति तेषां कर्माणि येषां नास्ति फलोदयः ५
सम्पाद्यमानं सम्यक्च स्यात्कर्म सफलं प्रभो
स तथा कृष्ण वर्तस्व यथा शर्म भवेत्परैः ६
पाण्डवानां कुरूणां च भवान्परमकः सुहृत्
सुराणामसुराणां च यथा वीर प्रजापतिः ७
कुरूणां पाण्डवानां च प्रतिपत्स्व निरामयम्
अस्मद्धितमनुष्ठातुं न मन्ये तव दुष्करम् ८
एवं चेत्कार्यतामेति कार्यं तव जनार्दन
गमनादेवमेव त्वं करिष्यसि न संशयः ९
चिकीर्षितमथान्यत्ते तस्मिन्वीर दुरात्मनि
भविष्यति तथा सर्वं यथा तव चिकीर्षितम् १०
शर्म तैः सह वा नोऽस्तु तव वा यच्चिकीर्षितम्
विचार्यमाणो यः कामस्तव कृष्ण स नो गुरुः ११
न स नार्हति दुष्टात्मा वधं ससुतबान्धवः
येन धर्मसुते दृष्टा न सा श्रीरूपमर्षिता १२
यच्चाप्यपश्यतोपायं धर्मिष्ठं मधुसूदन
उपायेन नृशंसेन हृता दुर्द्यूतदेविना १३
कथं हि पुरुषो जातः क्षत्रियेषु धनुर्धरः
समाहूतो निवर्तेत प्राणत्यागेऽप्युपस्थिते १४
अधर्मेण जितान्दृष्ट्वा वने प्रव्रजितांस्तथा
वध्यतां मम वार्ष्णेय निर्गतोऽसौ सुयोधनः १५
न चैतदद्भुतं कृष्ण मित्रार्थे यच्चिकीर्षसि
क्रिया कथं नु मुख्या स्यान्मृदुना वेतरेण वा १६
अथ वा मन्यसे ज्यायान्वधस्तेषामनन्तरम्

तदेव क्रियतामाशु न विचार्यमतस्त्वया १७
जानासि हि यथा तेन द्रौपदी पापबुद्धिना
परिक्लिष्टा सभामध्ये तच्च तस्यापि मर्षितम् १८
स नाम सम्यग्वर्तेत पाण्डवेष्विति माधव
न मे संजायते बुद्धिर्बीजमुप्तमिवोषरे १९
तस्माद्यन्मन्यसे युक्तं पाण्डवानां च यद्धितम्
तदाशु कुरु वार्ष्णेय यन्नः कार्यमनन्तरम् २०
इति श्रीमहाभारते उद्योगपर्वणि षट्सप्ततितमोऽध्यायः ७६

सप्त सप्ततितमोऽध्यायः

भगवानुवाच
एवमेतन्महाबाहो यथा वदसि पाण्डव
सर्वं त्विदं समायत्तं बीभत्सो कर्मणोर्द्वयोः १
क्षेत्रं हि रसवच्छुद्धं कर्षकेणोपपादितम्
ऋते वर्षं न कौन्तेय जातु निर्वर्तयेत्फलम् २
तत्र वै पौरुषं ब्रूयुरासेकं यत्नकारितम्
तत्र चापि ध्रुवं पश्येच्छोषणं दैवकारितम् ३
तदिदं निश्चितं बुद्ध्या पूर्वैरपि महात्मभिः
दैवे च मानुषे चैव संयुक्तं लोककारणम् ४
अहं हि तत्करिष्यामि परं पुरुषकारतः
दैवं तु न मया शक्यं कर्म कर्तुं कथंचन ५
स हि धर्मं च सत्यं च त्यक्त्वा चरति दुर्मतिः
न हि संतप्यते तेन तथारूपेण कर्मणा ६
तां चापि बुद्धिं पापिष्ठां वर्धयन्त्यस्य मन्त्रिणः
शकुनिः सूतपुत्रश्च भ्राता दुंशासनस्तथा ७
स हि त्यागेन राज्यस्य न शमं समुपेष्यति
अन्तरेण वधात्पार्थ सानुबन्धः सुयोधनः ८
न चापि प्रणिपातेन त्यक्तुमिच्छति धर्मराट्
याच्यमानस्तु राज्यं स न प्रदास्यति दुर्मतिः ९
न तु मन्ये स तद्वाच्यो यद्युधिष्ठिरशासनम्

उक्तं प्रयोजनं तत्र धर्मराजेन भारत १०
तथा पापस्तु तत्सर्वं न करिष्यति कौरवः
तस्मिंश्चाक्रियमाणेऽसौ लोकवध्यो भविष्यति ११
मम चापि स वध्यो वै जगतश्चापि भारत
येन कौमारके यूयं सर्वे विप्रकृतास्तथा १२
विप्रलुप्तं च वो राज्यं नृशंसेन दुरात्मना
नचोपशाम्यते पापः श्रियं दृष्ट्वा युधिष्ठिरे १३
असकृच्चाप्यहं तेन त्वत्कृते पार्थ भेदितः
न मया तद्गृहीतं च पापं तस्य चिकीर्षितम् १४
जानासि हि महाबाहो त्वमप्यस्य परं मतम्
प्रियं चिकीर्षमाणं च धर्मराजस्य मामपि १५
स जानंस्तस्य चात्मानं मम चैव परं मतम्
अजानन्निव चाकस्मादर्जुनाद्याभिशङ्कसे १६
यच्चापि परमं दिव्यं तच्चाप्यवगतं त्वया
विधानविहितं पार्थ कथं शर्म भवेत्परैः १७
यत्तु वाचा मया शक्यं कर्मणा चापि पाण्डव
करिष्ये तदहं पार्थ न त्वाशंसे शमं परैः १८
कथं गोहरणे ब्रूयादिच्छञ्शर्म तथाविधम्
याच्यमानोऽपि भीष्मेण संवत्सरगतेऽध्वनि १९
तदैव ते पराभूता यदा संकल्पितास्त्वया
लवशः क्षणशश्चापि न च तुष्टः सुयोधनः २०
सर्वथा तु मया कार्यं धर्मराजस्य शासनम्
विभाव्यं तस्य भूयश्च कर्म पापं दुरात्मनः २१
इति श्रीमहाभारते उद्योगपर्वणि सप्तसप्ततितमोऽध्यायः ७७

## अष्टसप्तति तमोऽध्यायः

नकुल उवाच
उक्तं बहुविधं वाक्यं धर्मराजेन माधव
धर्मज्ञेन वदान्येन धर्मयुक्तं च तत्त्वतः १
मतमाज्ञाय राज्ञश्च भीमसेनेन माधव

संशमो बाहुवीर्यं च ख्यापितं माधवात्मनः २
तथैव फल्गुनेनापि यदुक्तं तत्त्वया श्रुतम्
आत्मनश्च मतं वीर कथितं भवतासकृत् ३
सर्वमेतदतिक्रम्य श्रुत्वा परमतं भवान्
यत्प्राप्तकालं मन्येथास्तत्कुर्याः पुरुषोत्तम ४
तस्मिस्तस्मिंन्निमित्ते हि मतं भवति केशव
प्राप्तकालं मनुष्येण स्वयं कार्यमरिंदम ५
अन्यथा चिन्तितो ह्यर्थः पुनर्भवति सोऽन्यथा
अनित्यमतयो लोके नराः पुरुषसत्तम ६
अन्यथा बुद्धयो ह्यासन्नस्मासु वनवासिषु
अदृश्येष्वन्यथा कृष्ण दृश्येषु पुनरन्यथा ७
अस्माकमपि वार्ष्णेय वने विचरतां तदा
न तथा प्रणयो राज्ये यथा सम्प्रति वर्तते ८
निवृत्तवनवासान्नः श्रुत्वा वीर समागताः
अक्षौहिण्यो हि सप्तेमास्त्वत्प्रसादाज्जनार्दन ९
इमान्हि पुरुषव्याघ्रानचिन्त्यबलपौरुषान्
आत्तशस्त्रान्रणे दृष्ट्वा न व्यथेदिह कः पुमान् १०
स भवान्कुरुमध्ये तं सान्त्वपूर्वं भयान्वितम्
ब्रूयाद्वाक्यं यथा मन्दो न व्यथेत सुयोधनः ११
युधिष्ठिरं भीमसेनं बीभत्सुं चापराजितम्
सहदेवं च मां चैव त्वां च रामं च केशव १२
सात्यकिं च महावीर्यं विराटं च सहात्मजम्
द्रुपदं च सहामात्यं धृष्टद्युम्नं च पार्षतम् १३
काशिराजं च विक्रान्तं धृष्टकेतुं च चेदिपम्
मांसशोणितभृन्मर्त्यः प्रतियुध्येत को युधि १४
स भवान्गमनादेव साधयिष्यत्यसंशयम्
इष्टमर्थं महाबाहो धर्मराजस्य केवलम् १५
विदुरश्चैव भीष्मश्च द्रोणश्च सहबाह्लिकः
श्रेयः समर्था विज्ञातुमुच्यमानं त्वयानघ १६
ते चैनमनुनेष्यन्ति धृतराष्ट्रं जनाधिपम्

तं च पापसमाचारं सहामात्यं सुयोधनम् १७
श्रोता चार्थस्य विदुरस्त्वं च वक्ता जनार्दन
कमिवार्थं विवर्तन्तं स्थापयेतां न वर्त्मनि १८
इति श्रीमहाभारते उद्योगपर्वणि अष्टसप्ततितमोऽध्यायः ७८

एकोनाशीतितमोऽध्यायः

सहदेव उवाच
यदेतत्कथितं राज्ञा धर्म एष सनातनः
यथा तु युद्धमेव स्यात्तथा कार्यमरिंदम १
यदि प्रशममिच्छेयुः कुरवः पाण्डवैः सह
तथापि युद्धं दाशार्ह योजयेथाः सहैव तैः २
कथं नु दृष्ट्वा पाञ्चालद्यं तथा क्लिष्टां सभागताम्
अवधेन प्रशाम्येत मम मन्युः सुयोधने ३
यदि भीमार्जुनौ कृष्ण धर्मराजश्च धार्मिकः
धर्ममुत्सृज्य तेनाहं योद्धुमिच्छामि संयुगे ४
सात्यकिरुवाच
सत्यमाह महाबाहो सहदेवो महामतिः
दुर्योधनवधे शान्तिस्तस्य कोपस्य मे भवेत् ५
जानासि हि यथा दृष्ट्वा चीराजिनधरान्वने
तवापि मन्युरुद्भूतो दुःखितान्प्रेक्ष्य पाण्डवान् ६
तस्मान्माद्रीसुतः शूरो यदाह पुरुषर्षभः
वचनं सर्वयोधानां तन्मतं पुरुषोत्तम ७
वैशम्पायन उवाच
एवं वदति वाक्यं तु युयुधाने महामतौ
सुभीमः सिहंनादोऽभूद्योधानां तत्र सर्वशः ८
सर्वे हि सर्वशो वीरास्तद्वचः प्रत्यपूजयन्
साधु साध्विति शैनेयं हर्षयन्तो युयुत्सवः ९
इति श्रीमहाभारते उद्योगपर्वणि एकोनाशीतितमोऽध्यायः ७९

अशीतितमोऽध्यायः

वैशम्पायन उवाच
राज्ञस्तु वचनं श्रुत्वा धर्मार्थसहितं हितम्
कृष्णा दाशार्हमासीनमब्रवीच्छोककर्शिता १
सुता द्रुपदराजस्य स्वसितायतमूर्धजा
सम्पूज्य सहदेवं च सात्यकिं च महारथम् २
भीमसेनं च संशान्तं दृष्ट्वा परमदुर्मनाः
अश्रुपूर्णेक्षणा वाक्यमुवाचेदं मनस्विनी ३
विदितं ते महाबाहो धर्मज्ञ मधुसूदन
यथा निकृतिमास्थाय भ्रंशिताः पाण्डवाः सुखात् ४
धृतराष्ट्रस्य पुत्रेण सामात्येन जनार्दन
यथा च संजयो राज्ञा मन्त्रं रहसि श्रावितः ५
युधिष्ठिरेण दाशार्ह तच्चापि विदितं तव
यथोक्तः संजयश्चैव तच्च सर्वं श्रुतं त्वया ६
पञ्च नस्तात दीयन्तां ग्रामा इति महाद्युते
कुशस्थलं वृकस्थलमासन्दी वारणावतम् ७
अवसानं महाबाहो किञ्चिदेव तु पञ्चमम्
इति दुर्योधनो वाच्यः सुहृदश्चास्य केशव ८
तच्चापि नाकरोद्वाक्यं श्रुत्वा कृष्ण सुयोधनः
युधिष्ठिरस्य दाशार्ह ह्रीमतः संधिमिच्छतः ९
अप्रदानेन राज्यस्य यदि कृष्ण सुयोधनः
संधिमिच्छेन्न कर्तव्यस्तत्र गत्वा कथञ्चन १०
शक्ष्यन्ति हि महाबाहो पाण्डवाः सृञ्जयैः सह
धार्तराष्ट्रबलं घोरं क्रुद्धं प्रतिसमासितुम् ११
न हि साम्ना न दानेन शक्योऽथस्तेषु कश्चन
तस्मात्तेषु न कर्तव्या कृपा ते मधुसूदन १२
साम्ना दानेन वा कृष्ण ये न शाम्यन्ति शत्रवः
मोक्तव्यस्तेषु दण्डः स्याज्जीवितं परिरक्षता १३
तस्मात्तेषु महादण्डः क्षेप्तव्यः क्षिप्रमच्युत
त्वया चैव महाबाहो पाण्डवैः सह सृञ्जयैः १४

एतत्समर्थं पार्थानां तव चैव यशस्करम्
क्रियमाणं भवेत्कृष्ण क्षत्रस्य च सुखावहम् १५
क्षत्रियेण हि हन्तव्यः क्षत्रियो लोभमास्थितः
अक्षत्रियो वा दाशार्ह स्वधर्ममनुतिष्ठता १६
अन्यत्र ब्राह्मणात्तात सर्वपापेष्ववस्थितात्
गुरुर्हि सर्ववर्णानां ब्राह्मणः प्रसृताग्रभुक् १७
यथावध्ये भवेद्दोषो वध्यमाने जनार्दन
स वध्यस्यावधे दृष्ट इति धर्मविदो विदुः १८
यथा त्वां न स्पृशेदेष दोषः कृष्ण तथा कुरु
पाण्डवैः सह दाशार्ह सृञ्जयैश्च ससैनिकैः १९
पुनरुक्तं च वक्ष्यामि विश्रम्भेण जनार्दन
का नु सीमन्तिनी मादृक्पृथिव्यामस्ति केशव २०
सुता द्रुपदराजस्य वेदिमध्यात्समुत्थिता
धृष्टद्युम्नस्य भगिनी तव कृष्ण प्रिया सखी २१
आजमीढकुलं प्राप्ता स्नुषा पाण्डोर्महात्मनः
महिषी पाण्डुपुत्राणां पञ्चेन्द्रसमवर्चसाम् २२
सुता मे पञ्चभिर्वीरैः पञ्च जाता महारथाः
अभिमन्युर्यथा कृष्ण तथा ते तव धर्मतः २३
साहं केशग्रहं प्राप्ता परिक्लिष्टा सभां गता
पश्यतां पाण्डुपुत्राणां त्वयि जीवति केशव २४
जीवत्सु कौरवेयेषु पाञ्चालेष्वथ वृष्णिषु
दासीभूतास्मि पापानां सभामध्ये व्यवस्थिता २५
निरामर्षेष्वचेष्टेषु प्रेक्षमाणेषु पाण्डुषु
त्राहि मामिति गोविन्द मनसा काङ्क्षितोऽसि मे २६
यत्र मां भगवान्राजा श्वशुरो वाक्यमब्रवीत्
वरं वृणीष्व पाञ्चालि वरार्हासि मतासि मे २७
अदासाः पाण्डवाः सन्तु सरथाः सायुधा इति
मयोक्ते यत्र निर्मुक्ता वनवासाय केशव २८
एवंविधानां दुःखानामभिज्ञोऽसि जनार्दन
त्राहि मां पुण्डरीकाक्ष सभर्तृज्ञातिबान्धवान् २९

नन्वहं कृष्ण भीष्मस्य धृतराष्ट्रस्य चोभयोः
स्नुषा भवामि धर्मेण साहं दासीकृताभवम् ३०
धिग्बलं भीमसेनस्य धिक्पार्थस्य धनुष्मताम्
यत्र दुर्योधनः कृष्ण मुहूर्तमपि जीवति ३१
यदि तेऽहमनुग्राह्या यदि तेऽस्ति कृपा मयि
धार्तराष्ट्रेषु वै कोपः सर्वः कृष्ण विधीयताम् ३२
इत्युक्त्वा मृदुसंहारं वृजिनाग्रं सुदर्शनम्
सुनीलमसितापाङ्गी पुण्यगन्धाधिवासितम् ३३
सर्वलक्षणसम्पन्नं महाभुजगवर्चसम्
केशपक्षं वरारोहा गृह्य सव्येन पाणिना ३४
पद्माक्षी पुण्डरीकाक्षमुपेत्य गजगामिनी
अश्रुपूर्णेक्षणा कृष्णा कृष्णं वचनमब्रवीत् ३५
अयं ते पुण्डरीकाक्ष दुःशासनकरोद्धृतः
स्मर्तव्यः सर्वकालेषु परेषां संधिमिच्छता ३६
यदि भीमार्जुनौ कृष्ण कृपणौ संधिकामुकौ
पिता मे योत्स्यते वृद्धः सह पुत्रैर्महारथैः ३७
पञ्च चैव महावीर्याः पुत्रा मे मधुसूदन
अभिमन्युं पुरस्कृत्य योत्स्यन्ति कुरुभिः सह ३८
दुःशासनभुजं श्यामं संछिन्नं पांसुगुण्ठितम्
यद्यहं तं न पश्यामि का शान्तिर्हृदयस्य मे ३९
त्रयोदश हि वर्षाणि प्रतीक्षन्त्या गतानि मे
निधाय हृदये मन्युं प्रदीप्तमिव पावकम् ४०
विदीर्यते मे हृदयं भीमवाक्शल्यपीडितम्
योऽयमद्य महाबाहुर्धर्मं समनुपश्यति ४१
इत्युक्त्वा बाष्पसन्नेन कण्ठेनायतलोचना
रुरोद कृष्णा सोत्कम्पं सस्वरं बाष्पगद्गदम् ४२
स्तनौ पीनायतश्रोणी सहितावभिवर्षती
द्रवीभूतमिवात्युष्णमुत्सृजद्वारि नेत्रजम् ४३
तामुवाच महाबाहुः केशवः परिसान्त्वयन्
अचिराद्द्रक्ष्यसे कृष्णे रुदतीर्भरतस्त्रियः ४४

एवं ता भीरु रोत्स्यन्ति निहतज्ञातिबान्धवाः
हतमित्रा हतबला येषां क्रुद्धासि भामिनि ४५
अहं च तत्करिष्यामि भीमार्जुनयमैः सह
युधिष्ठिरनियोगेन दैवाच्च विधिनिर्मितात् ४६
धार्तराष्ट्राः कालपक्वा न चेच्छृरवन्ति मे वचः
शेष्यन्ते निहिता भूमौ श्वशृगालादनीकृताः ४७
चलेद्धि हिमवाञ्शैलो मेदिनी शतधा भवेत्
द्यौः पतेच्च सनक्षत्रा न मे मोघं वचो भवेत् ४८
सत्यं ते प्रतिजानामि कृष्णे बाष्पो निगृह्यताम्
हतामित्राञ्श्रिया युक्तानचिराद्द्रक्ष्यसे पतीन् ४९
इति श्रीमहाभारते उद्योगपर्वणि अशीतितमोऽध्यायः ८०

## एकाशीतितमोऽध्यायः

अर्जुन उवाच
कुरूणामद्य सर्वेषां भवान्सुहृदनुत्तमः
सम्बन्धी दयितो नित्यमुभयोः पक्षयोरपि १
पाण्डवैर्धार्तराष्ट्राणां प्रतिपाद्यमनामयम्
समर्थः प्रशमं चैषां कर्तुं त्वमसि केशव २
त्वमितः पुण्डरीकाक्ष सुयोधनममर्षणम्
शान्त्यर्थं भारतं ब्रूया यत्तद्वाच्यममित्रहन् ३
त्वया धर्मार्थयुक्तं चेदुक्तं शिवमनामयम्
हितं नादास्यते बालो दिष्टस्य वशमेष्यति ४
भगवानुवाच
धर्म्यमस्मद्धितं चैव कुरूणां यदनामयम्
एष यास्यामि राजानं धृतराष्ट्रमभीप्सया ५
वैशम्पायन उवाच
ततो व्यपेते तमसि सूर्ये विमल उद्गते
मैत्रे मुहूर्ते सम्प्राप्ते मृद्वर्चिषि दिवाकरे ६
कौमुदे मासि रेवत्यां शरदन्ते हिमागमे
स्फीतसस्यसुखे काले कल्यः सत्त्ववतां वरः ७

मङ्गल्याः पुरायनिर्घोषा वाचः शृरावंश्च सूनृताः
ब्राह्मणानां प्रतीतानामृषीणामिव वासवः ८
कृत्वा पौर्वाह्णिकं कृत्यं स्नातः शुचिरलंकृतः
उपतस्थे विवस्वन्तं पावकं च जनार्दनः ९
ऋषभं पृष्ठ आलभ्य ब्राह्मणानभिवाद्य च
अग्निं प्रदक्षिणं कृत्वा पश्यन्कल्याणमग्रतः १०
तत्प्रतिज्ञाय वचनं पाराडवस्य जनार्दनः
शिनेर्नप्तारमासीनमभ्यभाषत सात्यकिम् ११
रथ आरोप्यतां शङ्खश्चक्रं च गदया सह
उपासङ्गाश्च शक्त्यश्च सर्वप्रहरणानि च १२
दुर्योधनो हि दुष्टात्मा कर्णश्च सहसौबलः
न च शत्रुरवज्ञेयः प्राकृतोऽपि बलीयसा १३
ततस्तन्मतमाज्ञाय केशवस्य पुरःसराः
प्रसस्रुर्योजयिष्यन्तो रथं चक्रगदाभृतः १४
तं दीप्तमिव कालाग्निमाकाशगमिवाध्वगम्
चन्द्रसूर्यप्रकाशाभ्यां चक्राभ्यां समलंकृतम् १५
अर्धचन्द्रैश्च चन्द्रैश्च मत्स्यैः समृगपक्षिभिः
पुष्पैश्च विविधैश्चित्रं मणिरत्नैश्च सर्वशः १६
तरुणादित्यसंकाशं बृहन्तं चारुदर्शनम्
मणिहेमविचित्राङ्गं सुध्वजं सुपताकिनम् १७
सूपस्करमनाधृष्यं वैयाघ्रपरिवारणम्
यशोघ्नं प्रत्यमित्राणां यदूनां नन्दिवर्धनम् १८
वाजिभिः सैन्यसुग्रीवमेघपुष्पबलाहकैः
स्नातैः सम्पादयांचक्रुः सम्पन्नैः सर्वसम्पदा १९
महिमानं तु कृष्णस्य भूय एवाभिवर्धयन्
सुघोषः पतगेन्द्रेण ध्वजेन युयुजे रथः २०
तं मेरुशिखरप्रख्यं मेघदुन्दुभिनिस्वनम्
आरुरोह रथं शौरिर्विमानमिव पुरायकृत् २१
ततः सात्यकिमारोप्य प्रययौ पुरुषोत्तमः
पृथिवीं चान्तरिक्षं च रथघोषेण नादयन् २२

व्यपोढाभ्रघनः कालः क्षणेन समपद्यत
शिवश्चानुववौ वायुः प्रशान्तमभवद्रजः २३
प्रदक्षिणानुलोमाश्च मङ्गल्या मृगपक्षिणः
प्रयाणे वासुदेवस्य बभूवुरनुयायिनः २४
मङ्गल्यार्थपदैः शब्दैरन्ववर्तन्त सर्वशः
सारसाः शतपत्राश्च हंसाश्च मधुसूदनम् २५
मन्त्राहुतिमहाहोमैर्हूयमानश्च पावकः
प्रदक्षिणशिखो भूत्वा विधूमः समपद्यत २६
वसिष्ठो वामदेवश्च भूरिद्युम्नो गयः क्रथः
शुक्रनारदवाल्मीका मरुतः कुशिको भृगुः २७
ब्रह्मदेवर्षयश्चैव कृष्णं यदुसुखावहम्
प्रदक्षिणमवर्तन्त सहिता वासवानुजम् २८
एवमेतैर्महाभागैर्महर्षिगणसाधुभिः
पूजितः प्रययौ कृष्णः कुरूणां सदनं प्रति २९
तं प्रयान्तमनुप्रायात्कुन्तीपुत्रो युधिष्ठिरः
भीमसेनार्जुनौ चोभौ माद्रीपुत्रौ च पाण्डवौ ३०
चेकितानश्च विक्रान्तो धृष्टकेतुश्च चेदिपः
द्रुपदः काशिराजश्च शिखण्डी च महारथः ३१
धृष्टद्युम्नः सपुत्रश्च विराटः केकयैः सह
संसाधनार्थं प्रययुः क्षत्रियाः क्षत्रियर्षभम् ३२
ततोऽनुव्रज्य गोविन्दं धर्मराजो युधिष्ठिरः
राज्ञां सकाशे द्युतिमानुवाचेदं वचस्तदा ३३
यो नैव कामान्न भयान्न लोभान्नार्थकारणात्
अन्यायमनुवर्तेत स्थिरबुद्धिरलोलुपः ३४
धर्मज्ञो धृतिमान्प्राज्ञः सर्वभूतेषु केशवः
ईश्वरः सर्वभूतानां देवदेवः प्रतापवान् ३५
तं सर्वगुणसम्पन्नं श्रीवत्सकृतलक्षणम्
सम्परिष्वज्य कौन्तेयः संदेष्टुमुपचक्रमे ३६
या सा बाल्यात्प्रभृत्यस्मान्पर्यवर्धयताबला
उपवासतपःशीला सदा स्वस्त्ययने रता ३७

देवतातिथिपूजासु गुरुशुश्रूषणे रता
वत्सला प्रियपुत्रा च प्रियास्माकं जनार्दन ३८
सुयोधनभयाद्या नोऽत्रायतामित्रकर्शन
महतो मृत्युसम्बाधादुत्तरन्नौरिवार्णवात् ३९
अस्मत्कृते च सततं यया दुःखानि माधव
अनुभूतान्यदुःखार्हा तां स्म पृच्छेरनामयम् ४०
भृशमाश्वासयेश्चैनां पुत्रशोकपरिप्लुताम्
अभिवाद्य स्वजेथाश्च पाण्डवान्परिकीर्तयन् ४१
ऊढात्प्रभृति दुःखानि श्वशुराणामरिंदम
निकारानतदर्हा च पश्यन्ती दुःखमश्नुते ४२
अपि जातु स कालः स्यात्कृष्ण दुःखविपर्ययः
यदहं मातरं क्लिष्टां सुखं दध्यामरिंदम ४३
प्रव्रजन्तोऽन्वधावत्सा कृपणा पुत्रगृद्धिनी
रुदतीमपहायैनामुपगच्छाम यद्वनम् ४४
न नूनं म्रियते दुःखैः सा चेज्जीवति केशव
तथा पुत्राधिभिर्गाढमार्ता ह्यानर्तसत्कृता ४५
अभिवाद्या तु सा कृष्ण त्वया मद्वचनाद्विभो
धृतराष्ट्रश्च कौरव्यो राजानश्च वयोधिकाः ४६
भीष्मं द्रोणं कृपं चैव महाराजं च बाह्लिकम्
द्रौणिं च सोमदत्तं च सर्वांश्च भरतान्पृथक् ४७
विदुरं च महाप्राज्ञं कुरूणां मन्त्रधारिणम्
अगाधबुद्धिं मर्मज्ञं स्वजेथा मधुसूदन ४८
इत्युक्त्वा केशवं तत्र राजमध्ये युधिष्ठिरः
अनुज्ञातो निववृते कृष्णं कृत्वा प्रदक्षिणम् ४९
व्रजन्नेव तु बीभत्सुः सखायं पुरुषर्षभम्
अब्रवीत्परवीरघ्नं दाशार्हमपराजितम् ५०
यदस्माकं विभो वृत्तं पुरा वै मन्त्रनिश्चये
अर्धराज्यस्य गोविन्द विदितं सर्वराजसु ५१
तच्चेद्दद्यादसङ्गेन सत्कृत्यानवमन्य च
प्रियं मे स्यान्महाबाहो मुच्येरन्महतो भयात् ५२

अतश्चेदन्यथा कर्ता धार्तराष्ट्रोऽनुपायवित्
अन्तं नूनं करिष्यामि क्षत्रियाणां जनार्दन ५३
एवमुक्ते पाण्डवेन पर्यहृष्यद्वृकोदरः
मुहुर्मुहुः क्रोधवशात्प्रावेपत च पाण्डवः ५४
वेपमानश्च कौन्तेयः प्राक्रोशन्महतो रवान्
धनंजयवचः श्रुत्वा हर्षोत्सिक्तमना भृशम् ५५
तस्य तं निनदं श्रुत्वा सम्प्रावेपन्त धन्विनः
वाहनानि च सर्वाणि शकृन्मूत्रं प्रसुस्रुवुः ५६
इत्युक्त्वा केशवं तत्र तथा चोक्त्वा विनिश्चयम्
अनुज्ञातो निववृते परिष्वज्य जनार्दनम् ५७
तेषु राजसु सर्वेषु निवृत्तेषु जनार्दनः
तूर्णमभ्यपतद्धृष्टः सैन्यसुग्रीववाहनः ५८
ये हया वासुदेवस्य दारुकेण प्रचोदिताः
पन्थानमाचेमुरिव ग्रसमाना इवाम्बरम् ५९
अथापश्यन्महाबाहुर्ऋषीनध्वनि केशवः
ब्राह्म्या श्रिया दीप्यमानान्स्थितानुभयतः पथि ६०
सोऽवतीर्य रथात्तूर्णमभिवाद्य जनार्दनः
यथावत्तानृषीन्सर्वानभ्यभाषत पूजयन् ६१
कच्चिल्लोकेषु कुशलं कच्चिद्धर्मः स्वनुष्ठितः
ब्राह्मणानां त्रयो वर्णाः कच्चित्तिष्ठन्ति शासने ६२
तेभ्यः प्रयुज्य तां पूजां प्रोवाच मधुसूदनः
भगवन्तः क्व संसिद्धाः का वीथी भवतामिह ६३
किं वा भगवतां कार्यमहं किं करवाणि वः
केनार्थेनोपसम्प्राप्ता भगवन्तो महीतलम् ६४
तमब्रवीज्जामदग्न्य उपेत्य मधुसूदनम्
परिष्वज्य च गोविन्दं पुरा सुचरिते सखा ६५
देवर्षयः पुण्यकृतो ब्राह्मणाश्च बहुश्रुताः
राजर्षयश्च दाशार्ह मानयन्तस्तपस्विनः ६६
देवासुरस्य द्रष्टारः पुराणस्य महाद्युते
समेतं पार्थिवं क्षत्रं दिदृक्षन्तश्च सर्वतः ६७

सभासदश्च राजानस्त्वां च सत्यं जनार्दन
एतन्महत्प्रेक्षणीयं द्रष्टुं गच्छाम केशव ६८
धर्मार्थसहिता वाचः श्रोतुमिच्छाम माधव
त्वयोच्यमानाः कुरुषु राजमध्ये परंतप ६९
भीष्मद्रोणादयश्चैव विदुरश्च महामतिः
त्वं च यादवशार्दूल सभायां वै समेष्यथ ७०
तव वाक्यानि दिव्यानि तत्र तेषां च माधव
श्रोतुमिच्छाम गोविन्द सत्यानि च शुभानि च ७१
आपृष्टोऽसि महाबाहो पुनर्द्रक्ष्यामहे वयम्
याह्यविघ्नेन वै वीर द्रक्ष्यामस्त्वां सभागतम् ७२
इति श्रीमहाभारते उद्योगपर्वणि एकाशीतितमोऽध्यायः ८१

## द्व्यशीतितमोऽध्यायः

वैशम्पायन उवाच
प्रयान्तं देवकीपुत्रं परवीररुजो दश
महारथा महाबाहुमन्वयुः शस्त्रपाणयः १
पदातीनां सहस्रं च सादिनां च परंतप
भोज्यं च विपुलं राजन्प्रेष्याश्च शतशोऽपरे २
जनमेजय उवाच
कथं प्रयातो दाशार्हो महात्मा मधुसूदनः
कानि वा व्रजतस्तस्य निमित्तानि महौजसः ३
वैशम्पायन उवाच
तस्य प्रयाणे यान्यासन्नद्भुतानि महात्मनः
तानि मे शृणु दिव्यानि दैवान्यौत्पातिकानि च ४
अनभ्रेऽशनिनिर्घोषः सविद्युत्समजायत
अन्वगेव च पर्जन्यः प्रावर्षद्विघने भृशम् ५
प्रत्यगूहुर्महानद्यः प्राङ्मुखाः सिन्धुसत्तमाः
विपरीता दिशः सर्वा न प्राज्ञायत किंचन ६
प्राज्वलन्नग्नयो राजन्पृथिवी समकम्पत
उदपानाश्च कुम्भाश्च प्रासिञ्चञ्शतशो जलम् ७

तमःसंवृतमप्यासीत्सर्वं जगदिदं तदा
न दिशो नादिशो राजन्प्रज्ञायन्ते स्म रेणुना ८
प्रादुरासीन्महाञ्शब्दः खे शरीरं न दृश्यते
सर्वेषु राजन्देशेषु तदद्भुतमिवाभवत् ९
प्रामथ्नाद्धास्तिनपुरं वातो दक्षिणपश्चिमः
आरुजन्गणशो वृक्षान्परुषो भीमनिस्वनः १०
यत्र यत्र तु वार्ष्णेयो वर्तते पथि भारत
तत्र तत्र सुखो वायुः सर्वं चासीत्प्रदक्षिणम् ११
ववर्ष पुष्पवर्षं च कमलानि च भूरिशः
समश्च पन्था निर्दुःखो व्यपेतकुशकण्टकः १२
स गच्छन्ब्राह्मणै राजंस्तत्र तत्र महाभुजः
अर्च्यते मधुपर्कैश्च सुमनोभिर्वसुप्रदः १३
तं किरन्ति महात्मानं वन्यैः पुष्पैः सुगन्धिभिः
स्त्रियः पथि समागम्य सर्वभूतहिते रतम् १४
स शालिभवनं रम्यं सर्वसस्यसमाचितम्
सुखं परमधर्मिष्ठमत्यगाद्भरतर्षभ १५
नित्यहृष्टाः सुमनसो भारतैरभिरक्षिताः
पश्यन्बहुपशून्ग्रामान्रम्यान्हृदयतोषणान्
पुराणि च व्यतिक्रामन्राष्ट्राणि विविधानि च १६
नित्यहृष्टाः सुमनसो भारतैरभिरक्षिताः
नोद्विग्नाः परचक्राणामनयानामकोविदाः १७
उपप्लव्यादथायान्तं जनाः पुरनिवासिनः
पथ्यतिष्ठन्त सहिता विष्वक्सेनदिदृक्षया १८
ते तु सर्वे सुनामानमग्निमिद्धमिव प्रभुम्
अर्चयामासुरर्च्यं तं देशातिथिमुपस्थितम् १९
वृकस्थलं समासाद्य केशवः परवीरहा
प्रकीर्णरश्मावादित्ये विमले लोहितायति २०
अवतीर्य रथात्तूर्णं कृत्वा शौचं यथाविधि
रथमोचनमादिश्य संध्यामुपविवेश ह २१
दारुकोऽपि हयान्मुक्त्वा परिचर्य च शास्त्रतः

मुमोच सर्व वर्माणि मुक्त्वा चैनानवासृजत् २२
अभ्यतीत्य तु तत्सर्वमुवाच मधुसूदनः
युधिष्ठिरस्य कार्यार्थमिह वत्स्यामहे क्षपाम् २३
तस्य तन्मतमाज्ञाय चक्रुरावसथं नराः
क्षणेन चान्नपानानि गुणवन्ति समार्जयन् २४
तस्मिन्ग्रामे प्रधानास्तु य आसन्ब्राह्मणा नृप
आर्याः कुलीना ह्रीमन्तो ब्राह्मीं वृत्तिमनुष्ठिताः २५
तेऽभिगम्य महात्मानं हृषीकेशमरिंदमम्
पूजां चक्रुर्यथान्यायमाशीर्मङ्गलसंयुताम् २६
ते पूजयित्वा दाशार्हं सर्वलोकेषु पूजितम्
न्यवेदयन्त वेश्मानि रत्नवन्ति महात्मने २७
तान्प्रभुः कृतमित्युक्त्वा सत्कृत्य च यथार्हतः
अभ्येत्य तेषां वेश्मानि पुनरायात्सहैव तैः २८
सुमृष्टं भोजयित्वा च ब्राह्मणांस्तत्र केशवः
भुक्त्वा च सह तैः सर्वैरवसत्तां क्षपां सुखम् २९

इति श्रीमहाभारते उद्योगपर्वणि द्व्यशीतितमोऽध्यायः ८२

## त्र्यशीतितमोऽध्यायः

वैशम्पायन उवाच
तथा दूतैः समाज्ञाय आयान्तं मधुसूदनम्
धृतराष्ट्रोऽब्रवीद्भीष्ममर्चयित्वा महाभुजम् १
द्रोणं च संजयं चैव विदुरं च महामतिम्
दुर्योधनं च सामात्यं हृष्टरोमाब्रवीदिदम् २
अद्भुतं महदाश्चर्यं श्रूयते कुरुनन्दन
स्त्रियो बालाश्च वृद्धाश्च कथयन्ति गृहे गृहे ३
सत्कृत्याचक्षते चान्ये तथैवान्ये समागताः
पृथग्वादाश्च वर्तन्ते चत्वरेषु सभासु च ४
उपायास्यति दाशार्हः पाण्डवार्थे पराक्रमी
स नो मान्यश्च पूज्यश्च सर्वथा मधुसूदनः ५
तस्मिन्हि यात्रा लोकस्य भूतानामीश्वरो हि सः

तस्मिन्धृतिश्च वीर्यं च प्रज्ञा चौजश्च माधवे ६
स मान्यतां नरश्रेष्ठः स हि धर्मः सनातनः
पूजितो हि सुखाय स्यादसुखः स्यादपूजितः ७
स चेत्तुष्यति दाशार्ह उपचारैररिंदमः
कृत्स्नान्सर्वानभिप्रायान्प्राप्स्यामः सर्वराजसु ८
तस्य पूजार्थमद्यैव संविधत्स्व परंतप
सभाः पथि विधीयन्तां सर्वकामसमाहिताः ९
यथा प्रीतिर्महाबाहो त्वयि जायेत तस्य वै
तथा कुरुष्व गान्धारे कथं वा भीष्म मन्यसे १०
ततो भीष्मादयः सर्वे धृतराष्ट्रं जनाधिपम्
ऊचुः परममित्येवं पूजयन्तोऽस्य तद्वचः ११
तेषामनुमतं ज्ञात्वा राजा दुर्योधनस्तदा
सभावास्तूनि रम्याणि प्रदेष्टुमुपचक्रमे १२
ततो देशेषु देशेषु रमणीयेषु भागशः
सर्वरत्नसमाकीर्णाः सभाश्चक्रुरनेकशः १३
आसनानि विचित्राणि युक्तानि विविधैर्गुणैः
स्त्रियो गन्धानलंकारान्सूक्ष्माणि वसनानि च १४
गुणवन्त्यन्नपानानि भोज्यानि विविधानि च
माल्यानि च सुगन्धीनि तानि राजा ददौ ततः १५
विशेषतश्च वासार्थं सभां ग्रामे वृकस्थले
विदधे कौरवो राजा बहुरत्नां मनोरमाम् १६
एतद्विधाय वै सर्वं देवार्हमतिमानुषम्
आचख्यौ धृतराष्ट्राय राजा दुर्योधनस्तदा १७
ताः सभाः केशवः सर्वा रत्नानि विविधानि च
असमीक्ष्यैव दाशार्ह उपायात्कुरुसद्म तत् १८
इति श्रीमहाभारते उद्योगपर्वणि त्र्यशीतितमोऽध्यायः ८३

## चतुरशीतितमोऽध्यायः

धृतराष्ट्र उवाच
उपप्लव्यादिह क्षत्तरुपायातो जनार्दनः

वृकस्थले निवसति स च प्रातरिहेष्यति १
आहुकानामधिपतिः पुरोगः सर्वसात्वताम्
महामना महावीर्यो महामात्रो जनार्दनः २
स्फीतस्य वृष्णिवंशस्य भर्ता गोप्ता च माधवः
त्रयाणामपि लोकानां भगवान्प्रपितामहः ३
वृष्ण्यन्धकाः सुमनसो यस्य प्रज्ञामुपासते
आदित्या वसवो रुद्रा यथा बुद्धिं बृहस्पतेः ४
तस्मै पूजां प्रयोक्ष्यामि दाशार्हाय महात्मने
प्रत्यक्षं तव धर्मज्ञ तन्मे कथयतः शृणु ५
एकवर्णैः सुकृष्णाङ्गैर्बाह्लिजातैर्हयोत्तमैः
चतुर्युक्तान्रथांस्तस्मै रौक्मान्दास्यामि षोडश ६
नित्यप्रभिन्नान्मातङ्गानीषादन्तान्प्रहारिणः
अष्टानुचरमेकैकमष्टौ दास्यामि केशवे ७
दासीनामप्रजातानां शुभानां रुक्मवर्चसाम्
शतमस्मै प्रदास्यामि दासानामपि तावतः ८
आविकं बहु सुस्पर्शं पार्वतीयैरुपाहृतम्
तदप्यस्मै प्रदास्यामि सहस्राणि दशाष्ट च ९
अजिनानां सहस्राणि चीनदेशोद्भवानि च
तान्यप्यस्मै प्रदास्यामि यावदर्हति केशवः १०
दिवा रात्रौ च भात्येष सुतेजा विमलो मणिः
तमप्यस्मै प्रदास्यामि तमप्यर्हति केशवः ११
एकेनापि पतत्यह्ना योजनानि चतुर्दश
यानमश्वतरीयुक्तं दास्ये तस्मै तदप्यहम् १२
यावन्ति वाहनान्यस्य यावन्तः पुरुषाश्च ते
ततोऽष्टगुणमप्यस्मै भोज्यं दास्याम्यहं सदा १३
मम पुत्राश्च पौत्राश्च सर्वे दुर्योधनादृते
प्रत्युद्यास्यन्ति दाशार्हं रथैर्मृष्टैरलंकृताः १४
स्वलंकृताश्च कल्याण्यः पादैरेव सहस्रशः
वारमुख्या महाभागं प्रत्युद्यास्यन्ति केशवम् १५
नगरादपि याः काश्चिद्गमिष्यन्ति जनार्दनम्

द्रष्टुं कन्याश्च कल्याण्यस्ताश्च यास्यन्त्यनावृताः १६
सस्त्रीपुरुषबालं हि नगरं मधुसूदनम्
उदीक्षते महात्मानं भानुमन्तमिव प्रजाः १७
महाध्वजपताकाश्च क्रियन्तां सर्वतोदिशम्
जलावसिक्तो विरजाः पन्थास्तस्येति चान्वशात् १८
दुःशासनस्य च गृहं दुर्योधनगृहाद्वरम्
तदस्य क्रियतां क्षिप्रं सुसंमृष्टमलंकृतम् १९
एतद्धि रुचिराकारैः प्रासादैरुपशोभितम्
शिवं च रमणीयं च सर्वर्तु सुमहाधनम् २०
सर्वमस्मिन्गृहे रत्नं मम दुर्योधनस्य च
यद्यदर्हेत्स वार्ष्णेयस्तत्तद्देयमसंशयम् २१
इति श्रीमहाभारते उद्योगपर्वणि चतुरशीतितमोऽध्यायः ८४

## पञ्चाशीतितमोऽध्यायः

विदुर उवाच
राजन्बहुमतश्चासि त्रैलोक्यस्यापि सत्तमः
सम्भावितश्च लोकस्य सम्मतश्चासि भारत १
यत्त्वमेवंगते ब्रूयाः पश्चिमे वयसि स्थितः
शास्त्राद्वा सुप्रतर्काद्वा सुस्थिरः स्थविरो ह्यसि २
लेखाश्मनीव भाः सूर्ये महोर्मिरिव सागरे
धर्मस्त्वयि महान्राजन्निति व्यवसिताः प्रजाः ३
सदैव भावितो लोको गुणौघैस्तव पार्थिव
गुणानां रक्षणे नित्यं प्रयतस्व सबान्धवः ४
आर्जवं प्रतिपद्यस्व मा बाल्याद्बहुधा नशीः
राज्यं पुत्रांश्च पौत्रांश्च सुहृदश्चापि सुप्रियान् ५
यत्त्वं दित्ससि कृष्णाय राजन्नतिथये बहु
एतदन्यच्च दाशार्हः पृथिवीमपि चार्हति ६
न तु त्वं धर्ममुद्दिश्य तस्य वा प्रियकारणात्
एतदिच्छसि कृष्णाय सत्येनात्मानमालभे ७
मायैषातत्त्वमेवैतच्छद्मैतद्भूरिदक्षिण

जानामि ते मतं राजन्गूढं बाह्येन कर्मणा ८
पञ्च पञ्चैव लिप्सन्ति ग्रामकान्पाण्डवा नृप
न च दित्ससितेभ्यस्तांस्तच्छमं कः करिष्यसि ९
अर्थेन तु महाबाहुं वार्ष्णेयं त्वं जिहीर्षसि
अनेनैवाभ्युपायेन पाण्डवेभ्यो बिभित्ससि १०
न च वित्तेन शक्योऽसौ नोद्यमेन न गर्हया
अन्यो धनंजयात्कर्तुमेतत्तत्त्वं ब्रवीमि ते ११
वेद कृष्णस्य माहात्म्यं वेदास्य दृढभक्तिताम्
अत्याज्यमस्य जानामि प्राणैस्तुल्यं धनंजयम् १२
अन्यत्कुम्भादपां पूर्णादन्यत्पादावसेचनात्
अन्यत्कुशलसम्प्रश्नान्नैषिष्यति जनार्दनः १३
यत्त्वस्य प्रियमातिथ्यं मानार्हस्य महात्मनः
तदस्मै क्रियतां राजन्मानार्हो हि जनार्दनः १४
आशंसमानः कल्याणं कुरूनभ्येति केशवः
येनैव राजन्नर्थेन तदेवास्मा उपाकुरु १५
शममिच्छति दाशार्हस्तव दुर्योधनस्य च
पाण्डवानां च राजेन्द्र तदस्य वचनं कुरु १६
पितासि राजन्पुत्रास्ते वृद्धस्त्वं शिशवः परे
वर्तस्व पितृवत्तेषु वर्तन्ते ते हि पुत्रवत् १७
इति श्रीमहाभारते उद्योपर्वणि पञ्चाशीतितमोऽध्यायः ८५

## षडशीतितमोऽध्यायः

दुर्योधन उवाच
यदाह विदुरः कृष्णे सर्वं तत्सत्यमुच्यते
अनुरक्तो ह्यसंहार्यः पार्थान्प्रति जनार्दनः १
यत्तु सत्कारसंयुक्तं देयं वसु जनार्दने
अनेकरूपं राजेन्द्र न तद्देयं कदाचन २
देशः कालस्तथायुक्तो न हि नार्हति केशवः
मंस्यत्यधोक्षजो राजन्भयादर्चति मामिति ३
अवमानश्च यत्र स्यात्क्षत्रियस्य विशां पते

न तत्कुर्याद्बुधः कार्यमिति मे निश्चिता मतिः ४
स हि पूज्यतमो देवः कृष्णः कमललोचनः
त्रयाणामपि लोकानां विदितं मम सर्वथा ५
न तु तस्मिन्प्रदेयं स्यात्तथा कार्यगतिः प्रभो
विग्रहः समुपारब्धो न हि शाम्यत्यविग्रहात् ६
वैशम्पायन उवाच
तस्य तद्वचनं श्रुत्वा भीष्मः कुरुपितामहः
वैचित्रवीर्यं राजानमिदं वचनमब्रवीत् ७
सत्कृतोऽसत्कृतो वापि न क्रुद्ध्येत जनार्दनः
नालमन्यमवज्ञातुमवज्ञातोऽपि केशवः ८
यत्तु कार्यं महाबाहो मनसा कार्यतां गतम्
सर्वोपायैर्न तच्छक्यं केनचित्कर्तुमन्यथा ९
स यद्ब्रूयान्महाबाहुस्तत्कार्यमविशङ्कया
वासुदेवेन तीर्थेन क्षिप्रं संशाम्य पाण्डवैः १०
धर्म्यमर्थ्यं च धर्मात्मा ध्रुवं वक्ता जनार्दनः
तस्मिन्वाच्याः प्रिया वाचो भवता बान्धवैः सह ११
दुर्योधन उवाच
न पर्यायोऽस्ति यद्राजञ्श्रियं निष्केवलामहम्
तैः सहेमामुपाश्नीयां जीवञ्जीवैः पितामह १२
इदं तु सुमहत्कार्यं शृणु मे यत्समर्थितम्
परायणं पाण्डवानां नियंस्यामि जनार्दनम् १३
तस्मिन्बद्धे भविष्यन्ति वृष्णयः पृथिवी तथा
पाण्डवाश्च विधेया मे स च प्रातरिहेष्यति १४
अत्रोपायं यथा सम्यङ्न बुद्ध्येत जनार्दनः
न चापायो भवेत्कश्चित्तद्भवान्प्रब्रवीतु मे १५
वैशम्पायन उवाच
तस्य तद्वचनं श्रुत्वा घोरं कृष्णाभिसंहितम्
धृतराष्ट्रः सहामात्यो व्यथितो विमनाभवत् १६
ततो दुर्योधनमिदं धृतराष्ट्रोऽब्रवीद्वचः
मैवं वोचः प्रजापाल नैष धर्मः सनातनः १७

दूतश्च हि हृषीकेशः सम्बन्धी च प्रियश्च नः
अपापः कौरवेयेषु कथं बन्धनमर्हति १८
भीष्म उवाच
परीतो धृतराष्ट्रायं तव पुत्रः सुमन्दधीः
वृणोत्यनर्थं नत्वर्थं याच्यमानः सुहृद्गणैः १९
इममुत्पथि वर्तन्तं पापं पापानुबन्धिनम्
वाक्यानि सुहृदां हित्वा त्वमप्यस्यानुवर्तसे २०
कृष्णमक्लिष्टकर्माणमासाद्यायं सुदुर्मतिः
तव पुत्रः सहामात्यः क्षणेन न भविष्यति २१
पापस्यास्य नृशंसस्य त्यक्तधर्मस्य दुर्मतेः
नोत्सहेऽनर्थसंयुक्तां वाचं श्रोतुं कथंचन २२
वैशम्पायन उवाच
इत्युक्त्वा भरतश्रेष्ठो वृद्धः परममन्युमान्
उत्थाय तस्मात्प्रातिष्ठद्भीष्मः सत्यपराक्रमः २३
इति श्रीमहाभारते उद्योगपर्वणि षडशीतितमोऽध्यायः ८६

## सप्ताशीतितमोऽध्यायः

वैशम्पायन उवाच
प्रातरुत्थाय कृष्णस्तु कृतवान्सर्वमाह्निकम्
ब्राह्मणैरभ्यनुज्ञातः प्रययौ नगरं प्रति १
तं प्रयान्तं महाबाहुमनुज्ञाप्यततो नृप
पर्यवर्तन्त ते सर्वे वृकस्थलनिवासिनः २
धार्तराष्ट्रास्तमायान्तं प्रत्युज्जग्मुः स्वलंकृताः
दुर्योधनमृते सर्वे भीष्मद्रोणकृपादयः ३
पौराश्च बहुला राजन्हृषीकेशं दिदृक्षवः
यानैर्बहुविधैरन्ये पद्भिरेव तथापरे ४
स वै पथि समागम्य भीष्मेणाक्लिष्टकर्मणा
द्रोणेन धार्तराष्ट्रैश्च तैर्वृतो नगरं ययौ ५
कृष्णसम्माननार्थं च नगरं समलंकृतम्
बभूवू राजमार्गाश्च बहुरत्नसमाचिताः ६

न स्म कश्चिद्गृहे राजंस्तदासीद्भरतर्षभ
न स्त्री न वृद्धो न शिशुर्वासुदेवदिदृक्षया ७
राजमार्गे नरा न स्म संभवन्त्यवनिं गताः
तथा हि सुमहद्राजन्हृषीकेशप्रवेशने ८
आवृतानि वरस्त्रीभिर्गृहाणि सुमहान्त्यपि
प्रचलन्तीव भारेण दृश्यन्ते स्म महीतले ९
तथा च गतिमन्तस्ते वासुदेवस्य वाजिनः
प्रनष्टगतयोऽभूवन्राजमार्गे नरैर्वृते १०
स गृहं धृतराष्ट्रस्य प्राविशच्छत्रुकर्शनः
पाण्डुरं पुण्डरीकाक्षः प्रासादैरुपशोभितम् ११
तिस्रः कक्ष्या व्यतिक्रम्य केशवो राजवेश्मनः
वैचित्रवीर्यं राजानमभ्यगच्छदरिंदमः १२
अभ्यागच्छति दाशार्हे प्रज्ञाचक्षुर्नरेश्वरः
सहैव द्रोणभीष्माभ्यामुदतिष्ठन्महायशाः १३
कृपश्च सोमदत्तश्च महाराजश्च बाह्लिकः
आसनेभ्योऽचलन्सर्वे पूजयन्तो जनार्दनम् १४
ततो राजानमासाद्य धृतराष्ट्रं यशस्विनम्
स भीष्मं पूजयामास वार्ष्णेयो वाग्भिरञ्जसा १५
तेषु धर्मानुपूर्वीं तां प्रयुज्य मधुसूदनः
यथावयः समीयाय राजभिस्तत्र माधवः १६
अथ द्रोणं सपुत्रं स बाह्लीकं च यशस्विनम्
कृपं च सोमदत्तं च समीयाय जनार्दनः १७
तत्रासीदूर्जितं मृष्टं काञ्चनं महदासनम्
शासनाद्धृतराष्ट्रस्य तत्रोपाविशदच्युतः १८
अथ गां मधुपर्कं चाप्युदकं च जनार्दने
उपजह्रुर्यथान्यायं धृतराष्ट्रपुरोहिताः १९
कृतातिथ्यस्तु गोविन्दः सर्वान्परिहसन्कुरून्
आस्ते सम्बन्धकं कुर्वन्कुरुभिः परिवारितः २०
सोऽर्चितो धृतराष्ट्रेण पूजितश्च महायशाः
राजानं समनुज्ञाप्य निराक्रामदरिंदमः २१

तैः समेत्य यथान्यायं कुरुभिः कुरुसंसदि
विदुरावसथं रम्यमुपातिष्ठत माधवः २२
विदुरः सर्वकल्याणैरभिगम्य जनार्दनम्
अर्चयामास दाशार्हं सर्वकामैरुपस्थितम् २३
कृतातिथ्यं तु गोविन्दं विदुरः सर्वधर्मवित्
कुशलं पाण्डुपुत्राणामपृच्छन्मधुसूदनम् २४
प्रीयमाणस्य सुहृदो विदुषो बुद्धिसत्तमः
धर्मनित्यस्य च तदा गतदोषस्य धीमतः २५
तस्य सर्वं सविस्तारं पाण्डवानां विचेष्टितम्
क्षत्तुराचष्ट दाशार्हः सर्वप्रत्यक्षदर्शिवान् २६
इति श्रीमहाभारते उद्योगपर्वणि सप्ताशीतितमोऽध्यायः ८७

## अष्टाशीतितमोऽध्यायः

वैशम्पायन उवाच
अथोपगम्य विदुरमपराह्णे जनार्दनः
पितृष्वसारं गोविन्दः सोऽभ्यगच्छदरिंदमः १
सा दृष्ट्वा कृष्णमायान्तं प्रसन्नादित्यवर्चसम्
कण्ठे गृहीत्वा प्राक्रोशत्पृथा पार्थाननुस्मरन् २
तेषां सत्त्ववतां मध्ये गोविन्दं सहचारिणम्
चिरस्य दृष्ट्वा वार्ष्णेयं बाष्पमाहारयत्पृथा ३
साब्रवीत्कृष्णमासीनं कृतातिथ्यं युधां पतिम्
बाष्पगद्ग्रदपूर्णेन मुखेन परिशुष्यता ४
ये ते बाल्यात्प्रभृत्येव गुरुशुश्रूषणे रताः
परस्परस्य सुहृदः सम्मताः समचेतसः ५
निकृत्या भ्रंशिता राज्याज्जनार्हा निर्जनं गताः
विनीतक्रोधहर्षाश्च ब्रह्मण्याः सत्यवादिनः ६
त्यक्त्वा प्रियसुखे पार्था रुदन्तीमपहाय माम्
अहार्षुश्च वनं यान्तः समूलं हृदयं मम ७
अतदर्हा महात्मानः कथं केशव पाण्डवाः
ऊषुर्महावने तात सिंहव्याघ्रगजाकुले ८

बाला विहीनाः पित्रा ते मया सततलालिताः
अपश्यन्तः स्वपितरौ कथमूषुर्महावने ९
शङ्खदुन्दुभिनिर्घोषैर्मृदङ्गैर्वैणवैरपि
पाण्डवाः समबोध्यन्त बाल्यात्प्रभृति केशव १०
ये स्म वारणशब्देन हयानां हेषितेन च
रथनेमिनिनादैश्च व्यबोध्यन्त सदा गृहे ११
शङ्खभेरीनिनादेन वेणुवीणानुनादिना
पुण्याहघोषमिश्रेण पूज्यमाना द्विजातिभिः १२
वस्त्रै रत्नैरलंकारैः पूजयन्तो द्विजन्मनः
गीर्भिर्मङ्गलयुक्ताभिर्ब्राह्मणानां महात्मनाम् १३
अर्चितैरर्चनार्हैश्च स्तुवद्भिरभिनन्दिताः
प्रासादाग्रेष्वबोध्यन्त राङ्कवाजिनशायिनः १४
ते नूनं निनदं श्रुत्वा श्वापदानां महावने
न स्मोपयान्ति निद्रां वै अतदर्हा जनार्दन १५
भेरीमृदङ्गनिनदैः शङ्खवैणवनिस्वनैः
स्त्रीणां गीतनिनादैश्च मधुरैर्मधुसूदन १६
बन्दिमागधसूतैश्च स्तुवद्भिर्बोधिताः कथम्
महावने व्यबोध्यन्त श्वापदानां रुतेन ते १७
ह्रीमान्सत्यधृतिर्दान्तो भूतानामनुकम्पिता
कामद्वेषौ वशे कृत्वा सतां वर्त्मानुवर्तते १८
अम्बरीषस्य मान्धातुर्ययातेर्नहुषस्य च
भरतस्य दिलीपस्य शिबेरौशीनरस्य च १९
राजर्षीणां पुराणानां धुरं धत्ते दुरुद्वहाम्
शीलवृत्तोपसम्पन्नो धर्मज्ञः सत्यसंगरः २०
राजा सर्वगुणोपेतस्त्रैलोक्यस्यापि यो भवेत्
अजातशत्रुर्धर्मात्मा शुद्धजाम्बूनदप्रभः २१
श्रेष्ठः कुरुषु सर्वेषु धर्मतः श्रुतवृत्ततः
प्रियदर्शनो दीर्घभुजः कथं कृष्ण युधिष्ठिरः २२
यः स नागायुतप्राणो वातरंहा वृकोदरः
अमर्षी पाण्डवो नित्यं प्रियो भ्रातुः प्रियंकरः २३

कीचकस्य च सज्ञातेर्यो हन्ता मधुसूदन
शूरः क्रोधवशानां च हिडिम्बस्य बकस्य च २४
पराक्रमे शक्रसमो वायुवेगसमो जवे
महेश्वरसमः क्रोधे भीमः प्रहरतां वरः २५
क्रोधं बलममर्षं च यो निधाय परंतपः
जितात्मा पाराडवोऽमर्षी भ्रातुस्तिष्ठति शासने २६
तेजोराशिं महात्मानं बलौघममितौजसम्
भीमं प्रदर्शनेनापि भीमसेनं जनार्दन
तं ममाचक्ष्व वार्ष्णेय कथमद्य वृकोदरः २७
आस्ते परिघबाहुः स मध्यमः पाराडवोऽच्युत
अर्जुनेनार्जुनो यः स कृष्ण बाहुसहस्रिणा
द्विबाहुः स्पर्धते नित्यमतीतेनापि केशव २८
क्षिपत्येकेन वेगेन पञ्च बाणशतानि यः
इष्वस्त्रे सदृशो राज्ञः कार्तवीर्यस्य पाराडवः २९
तेजसादित्यसदृशो महर्षिप्रतिमो दमे
क्षमया पृथिवीतुल्यो महेन्द्रसमविक्रमः ३०
आधिराज्यं महद्दीप्तं प्रथितं मधुसूदन
आहृतं येन वीर्येण कुरूणां सर्वराजसु ३१
यस्य बाहुबलं घोरं कौरवाः पर्युपासते
स सर्वरथिनां श्रेष्ठः पाराडवः सत्यविक्रमः ३२
योऽपाश्रयः पाराडवानां देवानामिव वासवः
स ते भ्राता सखा चैव कथमद्य धनंजयः ३३
दयावान्सर्वभूतेषु ह्रीनिषेधो महास्त्रवित्
मृदुश्च सुकुमारश्च धार्मिकश्च प्रियश्च मे ३४
सहदेवो महेष्वासः शूरः समितिशोभनः
भ्रातॄणां कृष्ण शुश्रूषुर्धर्मार्थकुशलो युवा ३५
सदैव सहदेवस्य भ्रातरो मधुसूदन
वृत्तं कल्याणवृत्तस्य पूजयन्ति महात्मनः ३६
ज्येष्ठापचायिनं वीरं सहदेवं युधां पतिम्
शुश्रूषुं मम वार्ष्णेय माद्रीपुत्रं प्रचक्ष्व मे ३७

सुकुमारो युवा शूरो दर्शनीयश्च पाण्डवः
भ्रातॄणां कृष्ण सर्वेषां प्रियः प्राणो बहिश्चरः ३८
चित्रयोधी च नकुलो महेष्वासो महाबलः
कच्चित्स कुशली कृष्ण वत्सो मम सुखैधितः ३९
सुखोचितमदुःखार्हं सुकुमारं महारथम्
अपि जातु महाबाहो पश्येयं नकुलं पुनः ४०
पक्ष्मसम्पातजे काले नकुलेन विनाकृता
न लभामि सुखं वीर साद्य जीवामि पश्य माम् ४१
सर्वैः पुत्रैः प्रियतमा द्रौपदी मे जनार्दन
कुलीना शीलसम्पन्ना सर्वैः समुदिता गुणैः ४२
पुत्रलोकात्पतिलोकान्वृण्वाना सत्यवादिनी
प्रियान्पुत्रान्परित्यज्य पाण्डवानन्वपद्यत ४३
महाभिजनसम्पन्ना सर्वकामैः सुपूजिता
ईश्वरी सर्वकल्याणी द्रौपदी कथमच्युत ४४
पतिभिः पञ्चभिः शूरैरग्निकल्पैः प्रहारिभिः
उपपन्ना महेष्वासैर्द्रौपदी दुःखभागिनी ४५
चतुर्दशमिमं वर्षं यन्नापश्यमरिंदम
पुत्राधिभिः परिद्यूनां द्रौपदीं सत्यवादिनीम् ४६
न नूनं कर्मभिः पुण्यैरश्नुते पुरुषः सुखम्
द्रौपदी चेत्तथावृत्ता नाश्नुते सुखमव्ययम् ४७
न प्रियो मम कृष्णाया बीभत्सुर्न युधिष्ठिरः
भीमसेनो यमौ वापि यदपश्यं सभागताम् ४८
न मे दुःखतरं किंचिद्भूतपूर्वं ततोऽधिकम्
यद्द्रौपदीं निवातस्थां श्वशुराणां समीपगाम् ४९
आनायितामनार्येण क्रोधलोभानुवर्तिना
सर्वे प्रैक्षन्त कुरव एकवस्त्रां सभागताम् ५०
तत्रैव धृतराष्ट्रश्च महाराजश्च बाह्लिकः
कृपश्च सोमदत्तश्च निर्विण्णाः कुरवस्तथा ५१
तस्यां संसदि सर्वस्यां क्षत्तारं पूजयाम्यहम्
वृत्तेन हि भवत्यार्यो न धनेन न विद्यया ५२

तस्य कृष्ण महाबुद्धेर्गम्भीरस्य महात्मनः
क्षत्तुः शीलमलंकारो लोकान्विष्टभ्य तिष्ठति ५३
सा शोकार्ता च हृष्टा च दृष्ट्वा गोविन्दमागतम्
नानाविधानि दुःखानि सर्वाण्येवान्वकीर्तयत् ५४
पूर्वैराचरितं यत्तत्कुराजभिररिंदम
अक्षद्यूतं मृगवधः कच्चिदेषां सुखावहम् ५५
तन्मां दहति यत्कृष्णा सभायां कुरुसंनिधौ
धार्तराष्ट्रैः परिक्लिष्टा यथा नकुशलं तथा ५६
निर्वासनं च नगरात्प्रव्रज्या च परंतप
नानाविधानां दुःखानामावासोऽस्मि जनार्दन
अज्ञातचर्या बालानामवरोधश्च केशव ५७
न स्म क्लेशतमं मे स्यात्पुत्रैः सह परंतप
दुर्योधनेन निकृता वर्षमद्य चतुर्दशम् ५८
दुःखादपि सुखं न स्याद्यदि पुण्यफलक्षयः
न मे विशेषो जात्वासीद्धार्तराष्ट्रेषु पाण्डवैः ५९
तेन सत्येन कृष्ण त्वां हतामित्रं श्रिया वृतम्
अस्माद्विमुक्तं संग्रामात्पश्येयं पाण्डवैः सह
नैव शक्याः पराजेतुं सत्त्वं ह्येषां तथागतम् ६०
पितरं त्वेव गर्हेयं नात्मानं न सुयोधनम्
येनाहं कुन्तिभोजाय धनं धूर्तैरिवार्पिता ६१
बालां मामार्यकस्तुभ्यं क्रीडन्तीं कन्दुहस्तकाम्
अददात्कुन्तिभोजाय सखा सख्ये महात्मने ६२
साहं पित्रा च निकृता श्वशुरैश्च परंतप
अत्यन्तदुःखिता कृष्ण किं जीवितफलं मम ६३
यन्मा वागब्रवीन्नक्तं सूतके सव्यसाचिनः
पुत्रस्ते पृथिवीं जेता यशश्चास्य दिवं स्पृशेत् ६४
हत्वा कुरून्ग्रामजन्ये राज्यं प्राप्य धनंजयः
भ्रातृभिः सह कौन्तेयस्त्रीन्मेधानाहरिष्यति ६५
नाहं तामभ्यसूयामि नमो धर्माय वेधसे
कृष्णाय महते नित्यं धर्मो धारयति प्रजाः ६६

धर्मश्चेदस्ति वार्ष्णेय तथा सत्यं भविष्यति
त्वं चापि तत्तथा कृष्ण सर्वं सम्पादयिष्यसि ६७
न मां माधव वैधव्यं नार्थनाशो न वैरिता
तथा शोकाय भवति यथा पुत्रैर्विनाभवः ६८
याहं गाराडीवधन्वानं सर्वशस्त्रभृतां वरम्
धनंजयं न पश्यामि का शान्तिर्हृदयस्य मे ६९
इदं चतुर्दशं वर्षं यन्नापश्यं युधिष्ठिरम्
धनंजयं च गोविन्द यमौ तं च वृकोदरम् ७०
जीवनाशं प्रनष्टानां श्राद्धं कुर्वन्ति मानवाः
अर्थतस्ते मम मृतास्तेषां चाहं जनार्दन ७१
ब्रूया माधव राजानं धर्मात्मानं युधिष्ठिरम्
भूयांस्ते हीयते धर्मो मा पुत्रक वृथा कृथाः ७२
पराश्रया वासुदेव या जीवामि धिगस्तु माम्
वृत्तेः कृपणलब्धाया अप्रतिष्ठैव ज्यायसी ७३
अथो धनंजयं ब्रूया नित्योद्युक्तं वृकोदरम्
यदर्थं क्षत्रिया सूते तस्य कालोऽयमागतः ७४
अस्मिंश्चेदागते काले कालो वोऽतिक्रमिष्यति
लोकसम्भाविताः सन्तः सुनृशंसं करिष्यथ ७५
नृशंसेन च वो युक्तांस्त्यजेयं शाश्वतीः समाः
काले हि समनुप्राप्ते त्यक्तव्यमपि जीवितम् ७६
माद्रीपुत्रौ च वक्तव्यौ क्षत्रधर्मरतौ सदा
विक्रमेणार्जितान्भोगान्वृणीतं जीवितादपि ७७
विक्रमाधिगता ह्यर्थाः क्षत्रधर्मेण जीवतः
मनो मनुष्यस्य सदा प्रीणन्ति पुरुषोत्तम ७८
गत्वा ब्रूहि महाबाहो सर्वशस्त्रभृतां वरम्
अर्जुनं पाराडवं वीरं द्रौपद्याः पदवीं चर ७९
विदितौ हि तवात्यन्तं क्रुद्धाविव यथान्तकौ
भीमार्जुनौ नयेतां हि देवानपि परां गतिम् ८०
तयोश्चैतदवज्ञानं यत्सा कृष्णा सभां गता
दुःशासनश्च कर्णश्च परुषारायभ्यभाषताम् ८१

दुर्योधनो भीमसेनमभ्यगच्छन्मनस्विनम्
पश्यतां कुरुमुख्यानां तस्य द्रक्ष्यति यत्फलम् ८२
न हि वैरं समासाद्य प्रशाम्यति वृकोदरः
सुचिरादपि भीमस्य न हि वैरं प्रशाम्यति
यावदन्तं न नयति शात्रवाञ्शत्रुकर्शनः ८३
न दुःखं राज्यहरणं न च द्यूते पराजयः
प्रव्राजनं च पुत्राणां न मे तद्दुःखकारणम् ८४
यत्तु सा बृहती श्यामा एकवस्त्रा सभां गता
अशृणोत्परुषा वाचस्ततो दुःखतरं नु किम् ८५
स्त्रीधर्मिणी वरारोहा क्षत्रधर्मरता सदा
नाध्यगच्छत्तथा नाथं कृष्णा नाथवती सती ८६
यस्या मम सपुत्रायास्त्वं नाथो मधुसूदन
रामश्च बलिनां श्रेष्ठः प्रद्युम्नश्च महारथः ८७
साहमेवंविधं दुःखं सहेऽद्य पुरुषोत्तम
भीमे जीवति दुर्धर्षे विजये चापलायिनि ८८
तत आश्वासयामास पुत्राधिभिरभिप्लुताम्
पितृष्वसारं शोचन्तीं शौरिः पार्थसखः पृथाम् ८९
का नु सीमन्तिनी त्वादृग्लोकेष्वस्ति पितृष्वसः
शूरस्य राज्ञो दुहिता आजमीढकुलं गता ९०
महाकुलीना भवती ह्रदाद्ध्रदमिवागता
ईश्वरी सर्वकल्याणी भर्त्रा परमपूजिता ९१
वीरसूर्वीरपत्नी च सर्वैः समुदिता गुणैः
सुखदुःखे महाप्राज्ञे त्वादृशी सोढुमर्हति ९२
निद्रातन्द्री क्रोधहर्षौ क्षुत्पिपासे हिमातपौ
एतानि पार्था निर्जित्य नित्यं वीराः सुखे रताः ९३
त्यक्तग्राम्यसुखाः पार्था नित्यं वीरसुखप्रियाः
न ते स्वल्पेन तुष्येयुर्महोत्साहा महाबलाः ९४
अन्तं धीरा निषेवन्ते मध्यं ग्राम्यसुखप्रियाः
उत्तमांश्च परिक्लेशान्भोगांश्चातीव मानुषान् ९५
अन्तेषु रेमिरे धीरा न ते मध्येषु रेमिरे

अन्तप्राप्तिं सुखामाहुर्दुःखमन्तरमन्तयोः ९६
अभिवादयन्ति भवतीं पाण्डवाः सह कृष्णया
आत्मानं च कुशलिनं निवेद्याहुरनामयम् ९७
अरोगान्सर्वसिद्धार्थान्क्षिप्रं द्रक्ष्यसि पाण्डवान्
ईश्वरान्सर्वलोकस्य हतामित्राञ्श्रिया वृतान् ९८
एवमाश्वासिता कुन्ती प्रत्युवाच जनार्दनम्
पुत्राधिभिरभिध्वस्ता निगृह्याबुद्धिजं तमः ९९
यद्यत्तेषां महाबाहो पथ्यं स्यान्मधुसूदन
यथा यथा त्वं मन्येथाः कुर्याः कृष्ण तथा तथा १००
अविलोपेन धर्मस्य अनिकृत्या परंतप
प्रभावज्ञास्मि ते कृष्ण सत्यस्याभिजनस्य च १०१
व्यवस्थायां च मित्रेषु बुद्धिविक्रमयोस्तथा
त्वमेव नः कुले धर्मस्त्वं सत्यं त्वं तपो महत् १०२
त्वं त्राता त्वं महद्ब्रह्म त्वयि सर्वं प्रतिष्ठितम्
यथैवात्थ तथैवैतत्त्वयि सत्यं भवष्यिति १०३
तामामन्त्र्य च गोविन्दः कृत्वा चाभिप्रदक्षिणम्
प्रातिष्ठत महाबाहुर्दुर्योधनगृहान्प्रति १०४
इति श्रीमहाभारते उद्योगपर्वणि अष्टाशीतितमोऽध्यायः ८८

## एकोन नवतितमोऽध्यायः

वैशम्पायन उवाच
पृथामामन्त्र्य गोविन्दः कृत्वा चापि प्रदक्षिणम्
दुर्योधनगृहं शौरिरभ्यगच्छदरिंदमः १
लक्ष्म्या परमया युक्तं पुरन्दरगृहोपमम्
तस्य कक्ष्या व्यतिक्रम्य तिस्रो द्वाःस्थैरवारितः २
ततोऽभ्रघनसंकाशं गिरिकूटमिवोच्छ्रितम्
श्रिया ज्वलन्तं प्रासादमारुरोह महायशाः ३
तत्र राजसहस्रैश्च कुरुभिश्चाभिसंवृतम्
धार्तराष्ट्रं महाबाहुं ददर्शासीनमासने ४
दुःशासनं च कर्णं च शकुनिं चापि सौबलम्

दुर्योधनसमीपे तानासनस्थान्ददर्श सः ५
अभ्यागच्छति दाशार्हे धार्तराष्ट्रो महायशाः
उदतिष्ठत्सहामात्यः पूजयन्मधुसूदनम् ६
समेत्य धार्तराष्ट्रेण सहामात्येन केशवः
राजभिस्तत्र वार्ष्णेयः समागच्छद्यथावयः ७
तत्र जाम्बूनदमयं पर्यङ्कं सुपरिष्कृतम्
विविधास्तरणास्तीर्णमभ्युपाविशदच्युतः ८
तस्मिन्गां मधुपर्कं च उपहृत्य जनार्दने
निवेदयामास तदा गृहान्राज्यं च कौरवः ९
तत्र गोविन्दमासीनं प्रसन्नादित्यवर्चसम्
उपासांचक्रिरे सर्वे कुरवो राजभिः सह १०
ततो दुर्योधनो राजा वार्ष्णेयं जयतां वरम्
न्यमन्त्रयद्भोजनेन नाभ्यनन्दच्च केशवः ११
ततो दुर्योधनः कृष्णमब्रवीद्राजसंसदि
मृदुपूर्वं शठोदर्कं कर्णमाभाष्य कौरवः १२
कस्मादन्नानि पानानि वासांसि शयनानि च
त्वदर्थमुपनीतानि नाग्रहीस्त्वं जनार्दन १३
उभयोश्चाददः साह्यमुभयोश्च हिते रतः
सम्बन्धी दयितश्चासि धृतराष्ट्रस्य माधव १४
त्वं हि गोविन्द धर्मार्थौ वेत्थ तत्त्वेन सर्वशः
तत्र कारणमिच्छामि श्रोतुं चक्रगदाधर १५
स एवमुक्तो गोविन्दः प्रत्युवाच महामनाः
ओघमेघस्वनः काले प्रगृह्य विपुलं भुजम् १६
अनम्बूकृतमग्रस्तमनिरस्तमसंकुलम्
राजीवनेत्रो राजानं हेतुमद्वाक्यमुत्तमम् १७
कृतार्था भुञ्जते दूताः पूजां गृह्णन्ति चैव हि
कृतार्थं मां सहामात्यस्त्वमर्चिष्यसि भारत १८
एवमुक्तः प्रत्युवाच धार्तराष्ट्रो जनार्दनम्
न युक्तं भवतास्मासु प्रतिपत्तुमसाम्प्रतम् १९
कृतार्थं चाकृतार्थं च त्वां वयं मधुसूदन

यतामहे पूजयितुं गोविंद न च शक्नुमः २०
नच तत्कारणं विद्मो यस्मिन्नो मधुसूदन
पुजां कृतां प्रीयमाणैर्नामंस्थाः पुरुषोत्तम २१
वैरं नो नास्ति भवता गोविन्द न च विग्रहः
स भवान्प्रसमीक्ष्यैतन्नेदृशं वक्तुमर्हति २२
एवमुक्तः प्रत्युवाच धार्तराष्ट्रं जनार्दनः
अभिवीक्ष्य सहामात्यं दाशार्हः प्रहसन्निव २३
नाहं कामान्न संरम्भान्न द्वेषान्नार्थकारणात्
न हेतुवादाल्लोभाद्वा धर्मं जह्यां कथंचन २४
सम्प्रीतिभोज्यान्यन्नानि आपद्भोज्यानि वा पुनः
नच सम्प्रीयसे राजन्न चाप्यापद्गता वयम् २५
अकस्माद्द्विषसे राजञ्जन्मप्रभृति पाण्डवान्
प्रियानुवर्तिनो भ्रातृन्सर्वैः समुदितान्गुणैः २६
अकस्माच्चैव पार्थानां द्वेषणं नोपपद्यते
धर्मे स्थिताः पाण्डवेयाः कस्तान्किं वक्तुमर्हति २७
यस्तान्द्वेष्टि स मां द्वेष्टि यस्ताननु स मामनु
एकात्म्यं मां गतं विद्धि पाण्डवैर्धर्मचारिभिः २८
कामक्रोधानुवर्ती हि यो मोहाद्विरुरुत्सते
गुणवन्तं च यो द्वेष्टि तमाहुः पुरुषाधमम् २९
यः कल्याणगुणाञ्ज्ञातीन्मोहाल्लोभाद्दिदृक्षते
सोऽजितात्माजितक्रोधो न चिरं तिष्ठति श्रियम् ३०
अथ यो गुणसम्पन्नान्हृदयस्याप्रियानपि
प्रियेण कुरुते वश्यांश्चिरं यशसि तिष्ठति ३१
सर्वमेतदभोक्तव्यमन्नं दुष्टाभिसंहितम्
क्षत्तुरेकस्य भोक्तव्यमिति मे धीयते मतिः ३२
एवमुक्त्वा महाबाहुर्दुर्योधनममर्षणम्
निश्चक्राम ततः शुभ्राद्धार्तराष्ट्रनिवेशनात् ३३
निर्याय च महाबाहुर्वासुदेवो महामनाः
निवेशाय ययौ वेश्म विदुरस्य महात्मनः ३४
तमभ्यगच्छद्द्रोणश्च कृपो भीष्मोऽथ बाह्लिकः

कुरवश्च महाबाहुं विदुरस्य गृहे स्थितम् ३५
तेऽभिगम्याब्रुवंस्तत्र कुरवो मधुसूदनम्
निवेदयामो वार्ष्णेय सरत्नांस्ते गृहान्वयम् ३६
तानुवाच महातेजाः कौरवान्मधुसूदनः
सर्वे भवन्तो गच्छन्तु सर्वा मेऽपचितिः कृता ३७
यातेषु कुरुषु क्षत्ता दाशार्हमपराजितम्
अभ्यर्चयामास तदा सर्वकामैः प्रयत्नवान् ३८
ततः क्षत्तान्नपानानि शुचीनि गुणवन्ति च
उपाहरदनेकानि केशवाय महात्मने ३९
तैस्तर्पयित्वा प्रथमं ब्राह्मणान्मधुसूदनः
वेदविद्भ्यो ददौ कृष्णः परमद्रविणान्यपि ४०
ततोऽनुयायिभिः सार्धं मरुद्भिरिव वासवः
विदुरान्नानि बुभुजे शुचीनि गुणवन्ति च ४१
इति श्रीमहाभारते उद्योगपर्वणि एकोननवतितमोऽध्यायः ८९

नवतितमोऽध्यायः

वैशम्पायन उवाच
तं भुक्तवन्तमाश्वस्तं निशायां विदुरोऽब्रवीत्
नेदं सम्यग्व्यवसितं केशवागमनं तव १
अर्थधर्मातिगो मूढः संरम्भी च जनार्दन
मानघ्नो मानकामश्च वृद्धानां शासनातिगः २
धर्मशास्त्रातिगो मन्दो दुरात्मा प्रग्रहं गतः
अनेयः श्रेयसां पापो धार्तराष्ट्रो जनार्दन ३
कामात्मा प्राज्ञमानी च मित्रध्रुक्सर्वशङ्कितः
अकर्ता चाकृतज्ञश्च त्यक्तधर्मः प्रियानृतः ४
एतैश्चान्यैश्च बहुभिर्दोषैरेष समन्वितः
त्वयोच्यमानः श्रेयोऽपि संरम्भान्न ग्रहीष्यति ५
सेनासमुदयं दृष्ट्वा पार्थिवं मधुसूदन
कृतार्थं मन्यते बाल आत्मानमविचक्षणः ६
एकः कर्णः पराञ्जेतुं समर्थ इति निश्चितम्

धार्तराष्ट्रस्य दुर्बद्धेः स शमं नोपयास्यति ७
भीष्मे द्रोणे कृपे कर्णे द्रोणपुत्रे जयद्रथे
भूयसीं वर्तते वृत्तिं न शमे कुरुते मनः ८
निश्चितं धार्तराष्ट्राणां सकर्णानां जनार्दन
भीष्मद्रोणकृपान्पार्था न शक्ताः प्रतिवीक्षितुम् ९
संविच्च धार्तराष्ट्राणां सर्वेषामेव केशव
शमे प्रयतमानस्य तव सौभ्रात्रकाङ्क्षिणः १०
न पाण्डवानामस्माभिः प्रतिदेयं यथोचितम्
इति व्यवसितास्तेषु वचनं स्यान्निरर्थकम् ११
यत्र सूक्तं दुरुक्तं च समं स्यान्मधुसूदन
न तत्र प्रलपेत्प्राज्ञो बधिरेष्विव गायनः १२
अविजानत्सु मूढेषु निर्मर्यादेषु माधव
न त्वं वाक्यं ब्रुवन्युक्तश्चाण्डालेषु द्विजो यथा १३
सोऽय बलस्थो मूढश्च न करिष्यति ते वचः
तस्मिन्निरर्थकं वाक्यमुक्तं सम्पत्स्यते तव १४
तेषां समुपविष्टानां सर्वेषां पापचेतसाम्
तव मध्यावतरणं मम कृष्ण न रोचते १५
दुर्बुद्धीनामशिष्टानां बहूनां पापचेतसाम्
प्रतीपं वचनं मध्ये तव कृष्ण न रोचते १६
अनुपासितवृद्धत्वाच्छ्रिया मोहाच्च दर्पितः
वयोदर्पादमर्षाच्च नते श्रेयो ग्रहीष्यति १७
बलं बलवदप्यस्य यदि वक्ष्यसि माधव
त्वय्यस्य महती शङ्का न करिष्यति ते वचः १८
नेदमद्य युधा शक्यमिन्द्रेणापि सहामरैः
इति व्यवसिताः सर्वे धार्तराष्ट्रा जनार्दन १९
तेष्वेवमुपपन्नेषु कामक्रोधानुवर्तिषु
समर्थमपि ते वाक्यमसमर्थं भविष्यति २०
मध्ये तिष्ठन्हस्त्यनीकस्य मन्दो रथाश्वयुक्तस्य बलस्य मूढः
दुर्योधनो मन्यते वीतमन्युः कृत्स्ना मयेयं पृथिवी जितेति २१
आशंसते धृतराष्ट्रस्य पुत्रो महाराज्यमसपत्नं पृथिव्याम्

तस्मिञ्शमः केवलो नोपलभ्यो बद्धं सन्तमागतं मन्यतेऽथम् २२
पर्यस्तेयं पृथिवी कालपक्वा दुर्योधनार्थे पाण्डवान्योद्धुकामाः
समागताः सर्वयोधाः पृथिव्यां राजानश्च क्षितिपालैः समेताः २३
सर्वे चैते कृतवैराः पुरस्तात्त्वया राजानो हृतसाराश्च कृष्ण
तवोद्वेगात्संश्रिता धार्तराष्ट्रान्सुसंहताः सह कर्णेन वीराः २४
त्यक्तात्मानः सह दुर्योधनेन सृष्टा योद्धुं पाण्डवान्सर्वयोधाः
तेषां मध्ये प्रविशेथा यदि त्वं न तन्मतं मम दाशार्ह वीर २५
तेषां समुपविष्टानां बहूनां दुष्टचेतसाम्
कथं मध्यं प्रपद्येथाः शत्रूणां शत्रुकर्शन २६
सर्वथा त्वं महाबाहो देवैरपि दुरुत्सहः
प्रभावं पौरुषं बुद्धिं जानामि तव शत्रुहन् २७
या मे प्रीतिः पाण्डवेषु भूयः सा त्वयि माधव
प्रेम्णा च बहुमानाच्च सौहृदाच्च ब्रवीम्यहम् २८
इति श्रीमहाभारते उद्योगपर्वणि नवतितमोऽध्यायः ९०

## एक नवति तमोऽध्यायः

भगवानुवाच
यथा ब्रूयान्महाप्राज्ञो यथा ब्रूयाद्विचक्षणः
यथा वाच्यस्त्वद्विधेन सुहृदा मद्विधः सुहृत् १
धर्मार्थयुक्तं तथ्यं च यथा त्वय्युपपद्यते
तथा वचनमुक्तोऽस्मि त्वयैतत्पितृमातृवत् २
सत्यंप्राप्तं च युक्तं चाप्येवमेव यथात्थ माम्
शृणुष्वागमने हेतुं विदुरावहितो भव ३
दौरात्म्यं धार्तराष्ट्रस्य क्षत्रियाणां च वैरिताम्
सर्वमेतदहं जानन्क्षत्तः प्राप्तोऽद्य कौरवान् ४
पर्यस्तां पृथिवीं सर्वां साश्वां सरथकुञ्जराम्
यो मोचयेन्मृत्युपाशात्प्राप्नुयाद्धर्ममुत्तमम् ५
धर्मकार्यं यतञ्शक्त्या न चेच्छक्नोति मानवः
प्राप्तो भवति तत्पुण्यमत्र मे नास्ति संशयः ६
मनसा चिन्तयन्पापं कर्मणा नाभिरोचयन्

न प्राप्नोति फलं तस्य एवं धर्मविदो विदुः ७
सोऽह यतिष्ये प्रशमं क्षत्तः कर्तुममायया
कुरूणां सृञ्जयानां च संग्रामे विनशिष्यताम् ८
सेयमापन्महाघोरा कुरुष्वेव समुत्थिता
कर्णदुर्योधनकृता सर्वे ह्येते तदन्वयाः ९
व्यसनैः क्लिश्यमानं हि यो मित्रं नाभिपद्यते
अनुनीय यथाशक्ति तं नृशंसं विदुर्बुधाः १०
आ केशग्रहणान्मित्रमकार्यात्संनिवर्तयन्
अवाच्यः कस्यचिद्भवति कृतयत्नो यथाबलम् ११
तत्समर्थं शुभं वाक्यं धर्मार्थसहितं हितम्
धार्तराष्ट्रः सहामात्यो ग्रहीतुं विदुरार्हति १२
हितं हि धार्तराष्ट्राणां पाण्डवानां तथैव च
पृथिव्यां क्षत्रियाणां च यतिष्येऽहममायया १३
हिते प्रयतमानं मां शङ्केद्दुर्योधनो यदि
हृदयस्य च मे प्रीतिरानृण्यं च भविष्यति १४
ज्ञातीनां हि मिथो भेदे यन्मित्रं नाभिपद्यते
सर्वयत्नेन मध्यस्थ्यं न तन्मित्रं विदुर्बुधाः १५
न मां ब्रूयुरधर्मज्ञा मूढा असुहृदस्तथा
शक्तो नावारयत्कृष्णः संरब्धान्कुरुपाण्डवान् १६
उभयोः साधयन्नर्थमहमागत इत्युत
तत्र यत्नमहं कृत्वा गच्छेयं नृष्ववाच्यताम् १७
मम धर्मार्थयुक्तं हि श्रुत्वा वाक्यमनामयम्
न चेदादास्यते बालो दिष्टस्य वशमेष्यति १८
अहापयन्पाण्डवार्थं यथावच्छमं कुरूणां यदि चाचरेयम्
पुण्यं च मे स्याच्चरितं महार्थं मुच्येरंश्च कुरवो मृत्युपाशात् १९
अपि वाचं भाषमाणस्य काव्यां धर्मारामामर्थवतीमहिंस्राम्
अवेक्षेरन्धार्तराष्ट्राः समर्थां मां च प्राप्तं कुरवः पूजयेयुः २०
न चापि मम पर्याप्ताः सहिताः सर्वपार्थिवाः
क्रुद्धस्य प्रमुखे स्थातुं सिंहस्येवेतरे मृगाः २१
वैशम्पायन उवाच

इत्येवमुक्त्वा वचनं वृष्णीनामृषभस्तदा
शयने सुखसंस्पर्शे शिश्ये यदुसुखावहः २२
इति श्रीमहाभारते उद्योगपर्वणि एकनवतितमोऽध्यायः ९१

द्विनवति तमोऽध्यायः

वैशम्पायन उवाच
तथा कथयतोरेव तयोर्बुद्धिमतोस्तदा
शिवा नक्षत्रसम्पन्ना सा व्यतीयाय शर्वरी १
धर्मार्थकामयुक्ताश्च विचित्रार्थपदाक्षराः
शृणवतो विविधा वाचो विदुरस्य महात्मनः २
कथाभिरनुरूपाभिः कृष्णस्यामिततेजसः
अकामस्येव कृष्णस्य सा व्यतीयाय शर्वरी ३
ततस्तु स्वरसम्पन्ना बहवः सूतमागधाः
शङ्खदुन्दभिनिर्घोषैः केशवं प्रत्यबोधयन् ४
तत उत्थाय दाशार्ह ऋषभः सर्वसात्वताम्
सर्वमावश्यकं चक्रे प्रातःकार्यं जनार्दनः ५
कृतोदकार्यजप्यः स हुताग्निः समलंकृतः
तत आदित्यमुद्यन्तमुपातिष्ठत माधवः ६
अथ दुर्योधनः कृष्णं शकुनिश्चापि सौबलः
संध्यां तिष्ठन्तमभ्येत्य दाशार्हमपराजितम् ७
आचक्षेतां तु कृष्णस्य धृतराष्ट्रं सभागतम्
कुरूंश्च भीष्मप्रमुखान्राज्ञः सर्वांश्च पार्थिवान् ८
त्वामर्थयन्ते गोविन्द दिवि शक्रमिवामराः
तावभ्यनन्दद्ग्रोविन्दः साम्ना परमवल्गुना ९
ततो विमल आदित्ये ब्राह्मणेभ्यो जनार्दनः
ददौ हिरण्यं वासांसि गाश्चाश्वांश्च परंतपः १०
विसृष्टवन्तं रत्नानि दाशार्हमपराजितम्
तिष्ठन्तमुपसंगम्य ववन्दे सारथिस्तदा ११
तमुपस्थितमाज्ञाय रथं दिव्यं महामनाः
महाभ्रघननिर्घोषं सर्वरत्नविभूषितम् १२

अग्निं प्रदक्षिणं कृत्वा ब्राह्मणांश्च जनार्दनः
कौस्तुभं मणिमामुच्य श्रिया परमया ज्वलन् १३
कुरुभिः संवृतः कृष्णो वृष्णिभिश्चाभिरक्षितः
आतिष्ठत रथं शौरिः सर्वयादवनन्दनः १४
अन्वारुरोह दाशार्हं विदुरः सर्वधर्मवित्
सर्वप्राणभृतां श्रेष्ठं सर्वधर्मभृतां वरम् १५
ततो दुर्योधनः कृष्णं शकुनिश्चापि सौबलः
द्वितीयेन रथेनैनमन्वयातां परंतपम् १६
सात्यकिः कृतवर्मा च वृष्णीनां च महारथाः
पृष्ठतोऽनुययुः कृष्णं रथैरश्वैर्गजैरपि १७
तेषां हेमपरिष्कारा युक्ताः परमवाजिभिः
गच्छतां घोषिणश्चित्राश्चारु बभ्राजिरे रथाः १८
सम्मृष्टसंसिक्तरजः प्रतिपेदे महापथम्
राजर्षिचरितं काले कृष्णो धीमाञ्श्रिया ज्वलन् १९
ततः प्रयाते दाशार्हे प्रावाद्यन्तैकपुष्कराः
शङ्खाश्च दध्मिरे तत्र वाद्यान्यन्यानि यानि च २०
प्रवीराः सर्वलोकस्य युवानः सिंहविक्रमाः
परिवार्य रथं शौरेरगच्छन्त परंतपाः २१
ततोऽन्ये बहुसाहस्रा विचित्राद्भुतवाससः
असिप्रासायुधधराः कृष्णस्यासन्पुरःसराः २२
गजाः परः शतास्तत्र वराश्चाश्वाः सहस्रशः
प्रयान्तमन्वयुर्वीरं दाशार्हमपराजितम् २३
पुरं कुरूणां संवृत्तं द्रष्टुकामं जनार्दनम्
सवृद्धबालं सस्त्रीकं रथ्यागतमरिंदमम् २४
वेदिकापाश्रिताभिश्च समाक्रान्तान्यनेकशः
प्रचलन्तीव भारेण योषिद्भिर्भवनान्युत २५
संपूज्यमानः कुरुभिः संशृण्वन्विविधाः कथाः
यथार्हं प्रतिसत्कुर्वन्प्रेक्षमाणः शनैर्ययौ २६
ततः सभां समासाद्य केशवस्यानुयायिनः
सशङ्खैर्वेणुनिर्घोषैर्दिशः सर्वा व्यनादयन् २७

ततः सा समितिः सर्वा राज्ञाममिततेजसाम्
सम्प्राकम्पत हर्षेण कृष्णागमनकाङ्क्षया २८
ततोऽभ्याशगते कृष्णे समहृष्यन्नराधिपाः
श्रुत्वा तं रथनिर्घोषं पर्जन्यनिनदोपमम् २९
आसाद्य तु सभाद्वारमृषभः सर्वसात्वताम्
अवतीर्य रथाच्छौरिः कैलासशिखरोपमात् ३०
नगमेघप्रतीकाशां ज्वलन्तीमिव तेजसा
महेन्द्रसदनप्रख्यां प्रविवेश सभां ततः ३१
पाणौ गृहीत्वा विदुरं सात्यकिं च महायशाः
ज्योतींष्यादित्यवद्राजन्कुरून्प्रच्छादयञ्श्रिया ३२
अग्रतो वासुदेवस्य कर्णदुर्योधनावुभौ
वृष्णयः कृतवर्मा च आसन्कृष्णस्य पृष्ठतः ३३
धृतराष्ट्रं पुरस्कृत्य भीष्मद्रोणादयस्ततः
आसनेभ्योऽचलन्सर्वे पूजयन्तो जनार्दनम् ३४
अभ्यागच्छति दाशार्हे प्रज्ञाचक्षुर्महामनाः
सहैव भीष्मद्रोणाभ्यामुदतिष्ठन्महायशाः ३५
उत्तिष्ठति महाराजे धृतराष्ट्रे जनेश्वरे
तानि राजसहस्राणि समुत्तस्थुः समन्ततः ३६
आसनं सर्वतोभद्रं जाम्बूनदपरिष्कृतम्
कृष्णार्थे कल्पितं तत्र धृतराष्ट्रस्य शासनात् ३७
स्मयमानस्तु राजानं भीष्मद्रोणौ च माधवः
अभ्यभाषत धर्मात्मा राज्ञश्चान्यान्यथावयः ३८
तत्र केशवमानर्चुः सम्यगभ्यागतं सभाम्
राजानः पार्थिवाः सर्वे कुरवश्च जनार्दनम् ३९
तत्र तिष्ठन्स दाशार्हो राजमध्ये परंतपः
अपश्यदन्तरिक्षस्थानृषीन्परपुरंजयः ४०
ततस्तानभिसम्प्रेक्ष्य नारदप्रमुखानृषीन्
अभ्यभाषत दाशार्हो भीष्मं शान्तनवं शनैः ४१
पार्थिवीं समितिं द्रष्टुमृषयोऽभ्यागता नृप
निमन्त्र्यन्तामासनैश्च सत्कारेण च भूयसा ४२

नैतेष्वनुपविष्टेषु शक्यं केनचिदासितुम्
पूजा प्रयुज्यतामाशु मुनीनां भावितात्मनाम् ४३
ऋषीञ्शान्तनवो दृष्ट्वा सभाद्वारमुपस्थितान्
त्वरमाणस्ततो भृत्यानासनानीत्यचोदयत् ४४
आसनान्यथ मृष्टानि महान्ति विपुलानि च
मणिकाञ्चनचित्राणि समाजह्रुस्ततस्ततः ४५
तेषु तत्रोपविष्टेषु गृहीतार्घेषु भारत
निषसादासने कृष्णो राजानश्च यथासनम् ४६
दुःशासनः सात्यकये ददावासनमुत्तमम्
विविंशतिर्ददौ पीठं काञ्चनं कृतवर्मणे ४७
अविदूरेऽथ कृष्णस्य कर्णदुर्योधनावुभौ
एकासने महात्मानौ निषीदतुरमर्षणौ ४८
गान्धारराजः शकुनिर्गान्धारैरभिरक्षितः
निषसादासने राजा सहपुत्रो विशां पते ४९
विदुरो मणिपीठे तु शुक्लस्पर्ध्याजिनोत्तरे
संस्पृशन्नासनं शौरेर्महामतिरुपाविशत् ५०
चिरस्य दृष्ट्वा दाशार्हं राजानः सर्वपार्थिवाः
अमृतस्येव नातृप्यन्प्रेक्षमाणा जनार्दनम् ५१
अतसीपुष्पसंकाशः पीतवासा जनार्दनः
व्यभ्राजत सभामध्ये हेम्नीवोपहितो मणिः ५२
ततस्तूष्णीं सर्वमासीद्गोविन्दगतमानसम्
न तत्र कश्चित्किञ्चिद्धि व्याजहार पुमान्क्वचित् ५३
इति श्रीमहाभारते उद्योगपर्वणि द्विनवतितमोऽध्यायः ९२

## त्रिनवति तमोऽध्यायः

वैशम्पायन उवाच
तेष्वासीनेषु सर्वेषु तूष्णीम्भूतेषु राजसु
वाक्यमभ्याददे कृष्णः सुदंष्ट्रो दुन्दुभिस्वनः १
जीमूत इव घर्मान्ते सर्वां संश्रावयन्सभाम्
धृतराष्ट्रमभिप्रेक्ष्य समभाषत माधवः २

कुरूणां पाराडवानां च शमः स्यादिति भारत
अप्रयत्नेन वीराणामेतद्यतितुमागतः ३
राजन्नान्यत्प्रवक्तव्यं तव निःश्रेयसं वचः
विदितं ह्येव ते सर्वं वेदितव्यमरिंदम ४
इदमद्य कुलं श्रेष्ठं सर्वराजसु पार्थिव
श्रुतवृत्तोपसम्पन्नं सर्वैः समुदितं गुणैः ५
कृपानुकम्पा कारुण्यमानृशंस्यं च भारत
तथार्जवं क्षमा सत्यं कुरुष्वेतद्विशिष्यते ६
तस्मिन्नेवंविधे राजन्कुले महति तिष्ठति
त्वन्निमित्तं विशेषेण नेह युक्तमसाम्प्रतम् ७
त्वं हि वारयिता श्रेष्ठः कुरूणां कुरुसत्तम
मिथ्या प्रचरतां तात बाह्येष्वाभ्यन्तरेषु च ८
ते पुत्रास्तव कौरव्य दुर्योधनपुरोगमाः
धर्मार्थौ पृष्ठतः कृत्वा प्रचरन्ति नृशंसवत् ९
अशिष्टा गतमर्यादा लोभेन हृतचेतसः
स्वेषु बन्धुषु मुख्येषु तद्वेत्थ भरतर्षभ १०
सेयमापन्महाघोरा कुरुष्वेव समुत्थिता
उपेक्ष्यमाणा कौरव्य पृथिवीं घातयिष्यति ११
शक्या चेयं शमयितुं त्वं चेदिच्छसि भारत
न दुष्करो ह्यत्र शमो मतो मे भरतर्षभ १२
त्वय्यधीनः शमो राजन्मयि चैव विशां पते
पुत्रान्स्थापय कौरव्य स्थापयिष्याम्यहं परान् १३
आज्ञा तव हि राजेन्द्र कार्या पुत्रैः सहान्वयैः
हितं बलवदप्येषां तिष्ठतां तव शासने १४
तव चैव हितं राजन्पाण्डवानामथो हितम्
शमे प्रयतमानस्य तव शासनकाङ्क्षिणाम् १५
स्वयं निष्कलमालक्ष्य संविधत्स्व विशां पते
सहभूतास्तु भरतास्तवैव स्युर्जनेश्वर १६
धर्मार्थयोस्तिष्ठ राजन्पाण्डवैरभिरक्षितः
न हि शक्यास्तथाभूता यत्नादपि नराधिप १७

न हि त्वां पाण्डवैर्जेतुं रक्ष्यमाणं महात्मभिः
इन्द्रोऽपि देवैः सहितः प्रसहेत कुतो नृपाः १८
यत्र भीष्मश्च द्रोणश्च कृपः कर्णो विविंशतिः
अश्वत्थामा विकर्णश्च सोमदत्तोऽथ बाह्लिकः १९
सैन्धवश्च कलिङ्गश्च काम्बोजश्च सुदक्षिणः
युधिष्ठिरो भीमसेनः सव्यसाची यमौ तथा २०
सात्यकिश्च महातेजा युयुत्सुश्च महारथः
को नु तान्विपरीतात्मा युध्येत भरतर्षभ २१
लोकस्येश्वरतां भूयः शत्रुभिश्चाप्रधृष्यताम्
प्राप्स्यसि त्वममित्रघ्न सहितः कुरुपाण्डवैः २२
तस्य ते पृथिवीपालास्त्वत्समाः पृथिवीपते
श्रेयांसश्चैव राजानः संधास्यन्ते परंतप २३
स त्वं पुत्रैश्च पौत्रैश्च भ्रातृभिः पितृभिस्तथा
सुहृद्भिः सर्वतो गुप्तः सुखं शक्ष्यसि जीवितुम् २४
एतानेव पुरोधाय सत्कृत्य च यथा पुरा
अखिलां भोक्ष्यसे सर्वां पृथिवीं पृथिवीपते २५
एतैर्हि सहितः सर्वैः पाण्डवैः स्वैश्च भारत
अन्यान्विजेष्यसे शत्रूनेष स्वार्थस्तवाखिलः २६
तैरेवोपार्जितां भूमिं भोक्ष्यसे च परंतप
यदि सम्पत्स्यसे पुत्रैः सहामात्यैर्नराधिप २७
संयुगे वै महाराज दृश्यते सुमहान्क्षयः
क्षये चोभयतो राजन्कं धर्ममनुपश्यसि २८
पाण्डवैर्निहतैः संख्ये पुत्रैर्वापि महाबलैः
यद्विन्देथाः सुखं राजंस्तद्ब्रूहि भरतर्षभ २९
शूराश्च हि कृतास्त्राश्च सर्वे युद्धाभिकाङ्क्षिणः
पाण्डवास्तावकाश्चैव तान्रक्ष महतो भयात् ३०
न पश्येम कुरून्सर्वान्पाण्डवांश्चैव संयुगे
क्षीणानुभयतः शूरान्रथेभ्यो रथिभिर्हतान् ३१
समवेताः पृथिव्यां हि राजानो राजसत्तम
अमर्षवशमापन्ना नाशयेयुरिमाः प्रजाः ३२

त्राहि राजन्निमं लोकं न नश्येयुरिमाः प्रजाः
त्वयि प्रकृतिमापन्ने शेषं स्यात्कुरुनन्दन ३३
शुक्ला वदान्या ह्रीमन्त आर्याः पुण्याभिजातयः
अन्योन्यसचिवा राजंस्तान्पाहि महतो भयात् ३४
शिवेनेमे भूमिपालाः समागम्य परस्परम्
सह भुक्त्वा च पीत्वा च प्रतियान्तु यथागृहम् ३५
सुवाससः स्रग्विणश्च सत्कृत्य भरतर्षभ
अमर्षांश्च निराकृत्य वैराणि च परंतप ३६
हार्दं यत्पाण्डवेष्वासीत्प्राप्तेऽस्मिन्नायुषः क्षये
तदेव ते भवत्वद्य शश्वच्च भरतर्षभ ३७
बाला विहीनाः पित्रा ते त्वयैव परिवर्धिताः
तान्पालय यथान्यायं पुत्रांश्च भरतर्षभ ३८
भवतैव हि रक्ष्यास्ते व्यसनेषु विशेषतः
मा ते धर्मस्तथैवार्थो नश्येत भरतर्षभ ३९
आहुस्त्वां पाण्डवा राजन्नभिवाद्य प्रसाद्य च
भवतः शासनाद्दुःखमनुभूतं सहानुगैः ४०
द्वादशेमानि वर्षाणि वने निर्व्युषितानि नः
त्रयोदशं तथाज्ञातैः सजने परिवत्सरम् ४१
स्थाता नः समये तस्मिन्पितेति कृतनिश्चयाः
नाहास्म समयं तात तच्च नो ब्राह्मणा विदुः ४२
तस्मिन्नः समये तिष्ठ स्थितानां भरतर्षभ
नित्यं संक्लेशिता राजन्स्वराज्यांशं लभेमहि ४३
त्वं धर्ममर्थं युञ्जानः सम्यङ्नस्त्रातुमर्हसि
गुरुत्वं भवति प्रेक्ष्य बहून्क्लेशांस्तितिक्ष्महे ४४
स भवान्मातृपितृवदस्मासु प्रतिपद्यताम्
गुरोर्गरीयसी वृत्तिर्या च शिष्यस्य भारत ४५
पित्रा स्थापयितव्या हि वयमुत्पथमास्थिताः
संस्थापय पथिष्वस्मांस्तिष्ठ राजन्स्ववर्त्मनि ४६
आहुश्चेमां परिषदं पुत्रास्ते भरतर्षभ
धर्मज्ञेषु सभासत्सु नेह युक्तमसाम्प्रतम् ४७

यत्र धर्मो ह्यधर्मेण सत्यं यत्रानृतेन च
हन्यते प्रेक्षमाणानां हतास्तत्र सभासदः ४८
विद्धो धर्मो ह्यधर्मेण सभां यत्र प्रपद्यते
न चास्य शल्यं कृन्तन्ति विद्धास्तत्र सभासदः
धर्म एतानारुजति यथा नद्यनुकूलजान् ४९
ये धर्ममनुपश्यन्तस्तूष्णीं ध्यायन्त आसते
ते सत्यमाहुर्धर्मं च न्याय्यं च भरतर्षभ ५०
शक्यं किमन्यद्वक्तुं ते दानादन्यज्जनेश्वर
ब्रुवन्तु वा महीपालाः सभायां ये समासते
धर्मार्थौ सम्प्रधार्यैव यदि सत्यं ब्रवीम्यहम् ५१
प्रमुञ्चेमान्मृत्युपाशात्क्षत्रियान्क्षत्रियर्षभ
प्रशाम्य भरतश्रेष्ठ मा मन्युवशमन्वगाः ५२
पित्र्यं तेभ्यः प्रदायांशं पाण्डवेभ्यो यथोचितम्
ततः सपुत्रः सिद्धार्थो भुङ्क्ष्व भोगान्परंतप ५३
अजातशत्रुं जानीषे स्थितं धर्मे सतां सदा
सपुत्रे त्वयि वृत्तिं च वर्तते यां नराधिप ५४
दाहितश्च निरस्तश्च त्वामेवोपाश्रितः पुनः
इन्द्रप्रस्थं त्वयैवासौ सपुत्रेण विवासितः ५५
स तत्र निवसन्सर्वान्वशमानीय पार्थिवान्
त्वन्मुखानकरोद्राजन्न च त्वामत्यवर्तत ५६
तस्यैवं वर्तमानस्य सौबलेन जिहीर्षता
राष्ट्राणि धनधान्यं च प्रयुक्तः परमोपधिः ५७
स तामवस्थां सम्प्राप्य कृष्णां प्रेक्ष्य सभागताम्
क्षत्रधर्मादमेयात्मा नाकम्पत युधिष्ठिरः ५८
अहं तु तव तेषां च श्रेय इच्छामि भारत
धर्मादर्थात्सुखाच्चैव मा राजन्नीनशः प्रजाः ५९
अनर्थमर्थं मन्वाना अर्थं वानर्थमात्मनः
लोभेऽतिप्रसृतान्पुत्रान्निगृह्णीष्व विशां पते ६०
स्थिताः शुश्रूषितुं पार्थाः स्थिता योद्धुमरिंदमाः
यत्ते पथ्यतमं राजंस्तस्मिंस्तिष्ठ परंतप ६१

तद्वाक्यं पार्थिवाः सर्वे हृदयैः समपूजयन्
न तत्र कश्चिद्वक्तुं हि वाचं प्राक्रामदग्रतः ६२
इति श्रीमहाभारते उद्योगपर्वणि त्रिनवतितमोऽध्यायः ९३

## चतुर्नवतितमोऽध्यायः

वैशम्पायन उवाच
तस्मिन्नभिहिते वाक्ये केशवेन महात्मना
स्तिमिता हृष्टरोमाण आसन्सर्वे सभासदः १
कः स्विदुत्तरमेतस्माद्वक्तुमुत्सहते पुमान्
इति सर्वे मनोभिस्ते चिन्तयन्ति स्म पार्थिवाः २
तथा तेषु च सर्वेषु तूष्णीम्भूतेषु राजसु
जामदग्न्य इदं वाक्यमब्रवीत्कुरुसंसदि ३
इमामेकोपमां राजञ्शृणु सत्यामशङ्कितः
तां श्रुत्वा श्रेय आदत्स्व यदि साध्विति मन्यसे ४
राजा दम्भोद्भवो नाम सार्वभौमः पुराभवत्
अखिलां बुभुजे सर्वां पृथिवीमिति नः श्रुतम् ५
स स्म नित्यं निशापाये प्रातरुत्थाय वीर्यवान्
ब्राह्मणान्क्षत्रियांश्चैव पृच्छन्नास्ते महारथः ६
अस्ति कश्चिद्विशिष्टो वा मद्विधो वा भवेद्युधि
शूद्रो वैश्यः क्षत्रियो वा ब्राह्मणो वापि शस्त्रभृत् ७
इति ब्रुवन्नन्वचरत्स राजा पृथिवीमिमाम्
दर्पेण महता मत्तः कंचिदन्यमचिन्तयन् ८
तं स्म वैद्या अकृपणा ब्राह्मणाः सर्वतोऽभयाः
प्रत्यषेधन्त राजानं श्लाघमानं पुनः पुनः ९
प्रतिषिध्यमानोऽप्यसकृत्पृच्छत्येव स वै द्विजान्
अभिमानी श्रिया मत्तस्तमूचुर्ब्राह्मणास्तदा १०
तपस्विनो महात्मानो वेदव्रतसमन्विताः
उदीर्यमाणं राजानं क्रोधदीप्ता द्विजातयः ११
अनेकजननं सख्यं ययोः पुरुषसिंहयोः
तयोस्त्वं न समो राजन्भवितासि कदाचन १२

एवमुक्तः स राजा तु पुनः पप्रच्छ तान्द्विजान्
क्व तौ वीरौ क्वजन्मानौ किंकर्माणौ च कौ च तौ १३
ब्राह्मणा ऊचुः
नरो नारायणश्चैव तापसाविति नः श्रुतम्
आयातौ मानुषे लोके ताभ्यां युध्यस्व पार्थिव १४
श्रूयते तौ महात्मानौ नरनारायणावुभौ
तपो घोरमनिर्देश्यं तप्येते गन्धमादने १५
राम उवाच
स राजा महतीं सेनां योजयित्वा षडङ्गिनीम्
अमृष्यमाणः सम्प्रायाद्यत्र तावपराजितौ १६
स गत्वा विषमं घोरं पर्वतं गन्धमादनम्
मृगयाणोऽन्वगच्छत्तौ तापसावपराजितौ १७
तौ दृष्ट्वा क्षुत्पिपासाभ्यां कृशौ धमनिसंततौ
शीतवातातपैश्चैव कर्शितौ पुरुषोत्तमौ
अभिगम्योपसंगृह्य पर्यपृच्छदनामयम् १८
तमर्चित्वा मूलफलैरासनेनोदकेन च
न्यमन्त्रयेतां राजानं किं कार्यं क्रियतामिति १९
दम्भोद्भव उवाच
बाहुभ्यां मे जिता भूमिर्निहताः सर्वशत्रवः
भवद्भ्यां युद्धमाकाङ्क्षन्नुपयातोऽस्मि पर्वतम्
आतिथ्यं दीयतामेतत्काङ्क्षितं मे चिरं प्रति २०
नरनारायणावूचतुः
अपेतक्रोधलोभोऽयमाश्रमो राजसत्तम
न ह्यस्मिन्नाश्रमे युद्धं कुतः शस्त्रं कुतोऽनृजुः
अन्यत्र युद्धमाकाङ्क्ष बहवः क्षत्रियाः क्षितौ २१
राम उवाच
उच्यमानस्तथापि स्म भूय एवाभ्यभाषत
पुनः पुनः क्षम्यमाणः सान्त्व्यमानश्च भारत
दम्भोद्भवो युद्धमिच्छन्नाह्वयत्येव तापसौ २२
ततो नरस्त्विषीकाणां मुष्टिमादाय कौरव

अब्रवीदेहि युध्यस्व युद्धकामुक क्षत्रिय २३
सर्वशस्त्राणि चादत्स्व योजयस्व च वाहिनीम्
अहं हि ते विनेष्यामि युद्धश्रद्धामितः परम् २४
दम्भोद्भव उवाच
यद्येतदस्त्रमस्मासु युक्तं तापस मन्यसे
एतेनापि त्वया योत्स्ये युद्धार्थी ह्यहमागतः २५
राम उवाच
इत्युक्त्वा शरवर्षेण सर्वतः समवाकिरत्
दम्भोद्भवस्तापसं तं जिघांसुः सहसैनिकः २६
तस्य तानस्यतो घोरानिषून्परतनुच्छिदः
कदर्थीकृत्य स मुनिरिषीकाभिरपानुदत् २७
ततोऽस्मै प्रासृजद्घोरमैषीकमपराजितः
अस्त्रमप्रतिसंधेयं तदद्भुतमिवाभवत् २८
तेषामक्षीणि कर्णांश्च मस्तकांश्चैव मायया
निमित्तवेधी स मुनिरिषीकाभिः समर्पयत् २९
स दृष्ट्वा श्वेतमाकाशमिषीकाभिः समाचितम्
पादयोर्न्यपतद्राजा स्वस्ति मेऽस्त्विति चाब्रवीत् ३०
तमब्रवीन्नरो राजञ्शरण्यः शरणैषिणाम्
ब्रह्मण्यो भव धर्मात्मा मा च स्मैवं पुनः कृथाः ३१
मा च दर्पसमाविष्टः क्षेप्सीः कांश्चित्कदाचन
अल्पीयांसं विशिष्टं वा तत्ते राजन्परं हितम् ३२
कृतप्रज्ञो वीतलोभो निरहंकार आत्मवान्
दान्तः क्षान्तो मृदुः क्षेमः प्रजाः पालय पार्थिव ३३
अनुज्ञातः स्वस्ति गच्छ मैवं भूयः समाचरेः
कुशलं ब्राह्मणान्पृच्छेरावयोर्वचनाद्भृशम् ३४
ततो राजा तयोः पादावभिवाद्य महात्मनोः
प्रत्याजगाम स्वपुरं धर्मं चैवाचिनोद्भृशम् ३५
सुमहच्चापि तत्कर्म यन्नरेण कृतं पुरा
ततो गुणैः सुबहुभिः श्रेष्ठो नारायणोऽभवत् ३६
तस्माद्यावद्धनुःश्रेष्ठे गाण्डीवेऽस्त्र न युज्यते

तावत्त्वं मानमुत्सृज्य गच्छ राजन्धनंजयम् ३७
काकुदीकं शुकं नाकमक्षिसंतर्जनं तथा
संतानं नर्तनं घोरमास्यमोदकमष्टमम् ३८
एतैर्विद्धा सर्व एव मरणं यान्ति मानवाः
उन्मत्ताश्च विचेष्टन्ते नष्टसंज्ञा विचेतसः ३९
स्वपन्ते च प्लवन्ते च छर्दयन्ति च मानवाः
मूत्रयन्ते च सततं रुदन्ति च हसन्ति च ४०
असंख्येया गुणाः पार्थे तद्विशिष्टो जनार्दनः
त्वमेव भूयो जानासि कुन्तीपुत्रं धनंजयम् ४१
नरनारायणौ यौ तौ तावेवार्जुनकेशवौ
विजानीहि महाराज प्रवीरौ पुरुषर्षभौ ४२
यद्येतदेवं जानासि न च मामतिशङ्कसे
आर्यां मतिं समास्थाय शाम्य भारत पाण्डवैः ४३
अथ चेन्मन्यसे श्रेयो न मे भेदो भवेदिति
प्रशाम्य भरतश्रेष्ठ मा च युद्धे मनः कृथाः ४४
भवतां च कुरुश्रेष्ठ कुलं बहुमतं भुवि
तत्तथैवास्तु भद्रं ते स्वार्थमेवानुचिन्तय ४५
इति श्रीमहाभारते उद्योगपर्वणि चतुर्नवतितमोऽध्यायः ९४

पञ्चनवति तमोऽध्यायः

वैशम्पायन उवाच
जामदग्न्यवचः श्रुत्वा कण्वोऽपि भगवानृषिः
दुर्योधनमिदं वाक्यमब्रवीत्कुरुसंसदि १
अक्षयश्चाव्ययश्चैव ब्रह्मा लोकपितामहः
तथैव भगवन्तौ तौ नरनारायणावृषी २
आदित्यानां हि सर्वेषां विष्णुरेकः सनातनः
अजय्यश्चाव्ययश्चैव शाश्वतः प्रभुरीश्वरः ३
निमित्तमरणास्त्वन्ये चन्द्रसूर्यौ मही जलम्
वायुरग्निस्तथाकाशं ग्रहास्तारागणास्तथा ४
ते च क्षयान्ते जगतो हित्वा लोकत्रयं सदा

क्षयं गच्छन्ति वै सर्वे सृज्यन्ते च पुनः पुनः ५
मुहूर्तमरणास्त्वन्ये मानुषा मृगपक्षिणः
तिर्यग्योन्यश्च ये चान्ये जीवलोकचराः स्मृताः ६
भूयिष्ठेन तु राजानः श्रियं भुक्त्वायुषः क्षये
मरणं प्रतिगच्छन्ति भोक्तुं सुकृतदुष्कृतम् ७
स भवान्धर्मपुत्रेण शमं कर्तुमिहार्हति
पाण्डवाः कुरवश्चैव पालयन्तु वसुंधराम् ८
बलवानहमित्येव न मन्तव्यं सुयोधन
बलवन्तो हि बलिभिर्दृश्यन्ते पुरुषर्षभ ९
न बलं बलिनां मध्ये बलं भवति कौरव
बलवन्तो हि ते सर्वे पाण्डवा देवविक्रमाः १०
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
मातलेर्दातुकामस्य कन्यां मृगयतो वरम् ११
मतस्त्रैलोक्यराजस्य मातलिर्नाम सारथिः
तस्यैकैव कुले कन्या रूपतो लोकविश्रुता १२
गुणकेशीति विख्याता नाम्ना सा देवरूपिणी
श्रिया च वपुषा चैव स्त्रियोऽन्या सातिरिच्यते १३
तस्याः प्रदानसमयं मातलि सह भार्यया
ज्ञात्वा विममृशे राजंस्तत्परः परिचिन्तयन् १४
धिक्खल्वलघुशीलानामुच्छ्रितानां यशस्विनाम्
नराणामृद्धसत्वानां कुले कन्याप्ररोहणम् १५
मातुः कुलं पितृकुलं यत्र चैव प्रदीयते
कुलत्रयं संशयितं कुरुते कन्यका सताम् १६
देवमानुषलोकौ द्वौ मानसेनैव चक्षुषा
अवगाह्यैव विचितौ न च मे रोचते वरः १७
न देवान्नैव दितिजान्न गन्धर्वान्न मानुषान्
अरोचयं वरकृते तथैव बहुलानृषीन् १८
भार्यया तु स सम्मन्त्र्य सह रात्रौ सुधर्मया
मातलिर्नागलोकाय चकार गमने मतिम् १९
न मे देवमनुष्येषु गुणकेश्याः समो वरः

रूपतो दृश्यते कश्चिन्नागेषु भविता ध्रुवम् २०
इत्यामन्त्र्य सुधर्मां स कृत्वा चाभिप्रदक्षिणम्
कन्यां शिरस्युपाघ्राय प्रविवेश महीतलम् २१
इति श्रीमहाभारते उद्योगपर्वणि पञ्चनवतितमोऽध्यायः ९५

षण्णवतितमोऽध्यायः

कण्व उवाच
मातलिस्तु व्रजन्मार्गे नारदेन महर्षिणा
वरुणं गच्छता द्रष्टुं समागच्छद्यदृच्छया १
नारदोऽथाब्रवीदेनं क्व भवान्गन्तुमुद्यतः
स्वेन वा सूत कार्येण शासनाद्वा शतक्रतोः २
मातलिर्नारदेनैवं सम्पृष्टः पथि गच्छता
यथावत्सर्वमाचष्ट स्वकार्यं वरुणं प्रति ३
तमुवाचाथ स मुनिर्गच्छावः सहिताविति
सलिलेशदिदृक्षार्थमहमप्युद्यतो दिवः ४
अहं ते सर्वमाख्यास्ये दर्शयन्वसुधातलम्
दृष्ट्वा तत्र वरं कंचिद्रोचयिष्याव मातले ५
अवगाह्य ततो भूमिमुभौ मातलिनारदौ
ददृशाते महात्मानौ लोकपालमपां पतिम् ६
तत्र देवर्षिसदृशीं पूजां प्राप स नारदः
महेन्द्रसदृशीं चैव मातलि प्रत्यपद्यत ७
तावुभौ प्रीतमनसौ कार्यवत्तां निवेद्य ह
वरुणेनाभ्यनुज्ञातौ नागलोकं विचेरतुः ८
नारदः सर्वभूतानामन्तर्भूमिनिवासिनाम्
जानंश्चकार व्याख्यानं यन्तुः सर्वमशेषतः ९
नारद उवाच
दृष्टस्ते वरुणस्तात पुत्रपौत्रसमावृतः
पश्योदकपतेः स्थानं सर्वतोभद्रमृद्धिमत् १०
एष पुत्रो महाप्राज्ञो वरुणस्येह गोपतेः
एष तं शीलवृत्तेन शौचेन च विशिष्यते ११

एषोऽस्य पुत्रोऽभिमतः पुष्करः पुष्करेक्षणः
रूपवान्दर्शनीयश्च सोमपुत्र्या वृतः पतिः १२
ज्योत्स्नाकालीति यामाहुर्द्वितीयां रूपतः श्रियम्
आदित्यस्यैव गोः पुत्रो ज्येष्ठः पुत्रः कृतः स्मृतः १३
भवनं पश्य वारुण्या यदेतत्सर्वकाञ्चनम्
यां प्राप्य सुरतां प्राप्ताः सुराः सुरपतेः सखे १४
एतानि हृतराज्यानां दैतेयानां स्म मातले
दीप्यमानानि दृश्यन्ते सर्वप्रहरणान्युत १५
अक्षयाणि किलैतानि विवर्तन्ते स्म मातले
अनुभावप्रयुक्तानि सुरैरवजितानि ह १६
अत्र राक्षसजात्यश्च भूतजात्यश्च मातले
दिव्यप्रहरणाश्चासन्पूर्वदैवतनिर्मिताः १७
अग्निरेष महार्चिष्माञ्जागर्ति वरुणह्रदे
वैष्णवं चक्रमाविद्धं विधूमेन हविष्मता १८
एष गाण्डीमयश्चापो लोकसंहारसंभृतः
रक्ष्यते दैवतैर्नित्यं यतस्तद्गाण्डिवं धनुः १९
एष कृत्ये समुत्पन्ने तत्तद्धारयते बलम्
सहस्रशतसंख्येन प्राणेन सततं ध्रुवम् २०
अशास्यानपि शास्त्येष रक्षोबन्धुषु राजसु
सृष्टः प्रथमजो दण्डो ब्रह्मणा ब्रह्मवादिना २१
एतच्छस्त्रं नरेन्द्राणां महच्छक्रेण भाषितम्
पुत्राः सलिलराजस्य धारयन्ति महोदयम् २२
एतत्सलिलराजस्य छत्रं छत्रगृहे स्थितम्
सर्वतः सलिलं शीतं जीमूत इव वर्षति २३
एतच्छत्रात्परिभ्रष्टं सलिलं सोमनिर्मलम्
तमसा मूर्छितं याति येन नार्छति दर्शनम् २४
बहून्यद्भुतरूपाणि द्रष्टव्यानीह मातले
तव कार्योपरोधस्तु तस्माद्गच्छाव माचिरम् २५
इति श्रीमहाभारते उद्योगपर्वणि षण्णवतितमोऽध्यायः ९६

## सप्तनवतितमोऽध्यायः

नारद उवाच
एतत्तु नागलोकस्य नाभिस्थाने स्थितं पुरम्
पातालमिति विख्यातं दैत्यदानवसेवितम् १
इदमद्भिः समं प्राप्ता ये केचिद्ध्रुवजंगमाः
प्रविशन्तो महानादं नदन्ति भयपीडिताः २
अत्रासुरोऽग्नि सततं दीप्यते वारिभोजनः
व्यापारेण धृतात्मानं निबद्धं समबुध्यत ३
अत्रामृतं सुरैः पीत्वा निहितं निहतारिभिः
अतः सोमस्य हानिश्च वृद्धिश्चैव प्रदृश्यते ४
अत्र दिव्यं हयशिरः काले पर्वणि पर्वणि
उत्तिष्ठति सुवर्णाभं वार्भिरापूरयञ्जगत् ५
यस्मादत्र समाग्रास्ताः पतन्ति जलमूर्तयः
तस्मात्पातालमित्येतत्ख्यायते पुरमुत्तमम् ६
एरावतोऽस्मात्सलिलं गृहीत्वा जगतो हितः
मेघेष्वामुञ्चते शीतं यन्महेन्द्रः प्रवर्षति ७
अत्र नानाविधाकारास्तिमयो नैकरूपिणः
अप्सु सोमप्रभां पीत्वा वसन्ति जलचारिणः ८
अत्र सूर्यांशुभिर्भिन्नाः पातालतलमाश्रिताः
मृता दिवसतः सूत पुनर्जीवन्ति ते निशि ९
उदये नित्यशश्चात्र चन्द्रमा रश्मिभिर्वृतः
अमृतं स्पृश्य संस्पर्शात्संजीवयति देहिनः १०
अत्र तेऽधर्मनिरता बद्धाः कालेन पीडिताः
दैतेया निवसन्ति स्म वासवेन हृतश्रियः ११
अत्र भूतपतिर्नाम सर्वभूतमहेश्वरः
भूतये सर्वभूतानामचरत्तप उत्तमम् १२
अत्र गोव्रतिनो विप्राः स्वाध्यायाम्नायकर्शिताः
त्यक्तप्राणा जितस्वर्गा निवसन्ति महर्षयः १३
यत्रतत्रशयो नित्यं येनकेनचिदाशितः
येनकेनचिदाच्छन्नः स गोव्रत इहोच्यते १४

एरावतो नागराजो वामनः कुमुदोऽञ्जनः
प्रसूताः सुप्रतीकस्य वंशे वारणसत्तमाः १५
पश्य यद्यत्र ते कश्चिद्रोचते गुणतो वरः
वरयिष्याव तं गत्वा यत्नमास्थाय मातले १६
अण्डमेतज्जले न्यस्तं दीप्यमानमिव श्रिया
आ प्रजानां निसर्गाद्धि नोद्भिद्यति न सर्पति १७
नास्य जातिं निसर्गं वा कथ्यमानं शृणोमि वै
पितरं मातरं वापि नास्य जानाति कश्चन १८
अतः किल महानग्निरन्तकाले समुत्थितः
धक्ष्यते मातले सर्वं त्रैलोक्यं सचराचरम् १९
कण्व उवाच
मातलिस्त्वब्रवीच्छ्रुत्वा नारदस्याथ भाषितम्
न मेऽत्र रोचते कश्चिदन्यतो व्रज माचिरम् २०
इति श्रीमहाभारते उद्योगपर्वणि सप्तनवतितमोऽध्यायः ९७

## अष्टनवतितमोऽध्यायः

नारद उवाच
हिरण्यपुरमित्येतत्ख्यातं पुरवरं महत्
दैत्यानां दानवानां च मायाशतविचारिणाम् १
अनल्पेन प्रयत्नेन निर्मितं विश्वकर्मणा
मयेन मनसा सृष्टं पातालतलमाश्रितम् २
अत्र मायासहस्राणि विकुर्वाणा महौजसः
दानवा निवसन्ति स्म शूरा दत्तवराः पुरा ३
नैते शक्रेण नान्येन वरुणेन यमेन वा
शक्यन्ते वशमानेतुं तथैव धनदेन च ४
असुराः कालखञ्जाश्च तथा विष्णुपदोद्भवाः
नैरृता यातुधानाश्च ब्रह्मवेदोद्भवाश्च ये ५
दंष्ट्रिणो भीमरूपाश्च वातवेगपराक्रमाः
मायावीर्योपसंपन्ना निवसन्त्यात्मरक्षिणः ६
निवातकवचा नाम दानवायुद्धदुर्मदाः

जानासि च यथा शक्रो नैतञ्शक्नोति बाधितुम् ७
बहुशो मातले त्वं च तव पुत्रश्च गोमुखः
निर्भग्नो देवराजश्च सहपुत्रः शचीपतिः ८
पश्य वेश्मानि रौक्माणि मातले राजतानि च
कर्मणा विधियुक्तेन युक्तान्युपगतानि च ९
वैडूर्यहरितानीव प्रवालरुचिराणि च
अर्कस्फटिकशुभ्राणि वज्रसारोज्ज्वलानि च १०
पार्थिवानीव चाभान्ति पुनर्नगमयानि च
शैलानीव च दृश्यन्ते तारकाणीव चाप्युत ११
सूर्यरूपाणि चाभान्ति दीप्ताग्निसदृशानि च
मणिजालविचित्राणि प्रांशूनि निबिडानि च १२
नैतानि शक्यं निर्देष्टुं रूपतो द्रव्यतस्तथा
गुणतश्चैव सिद्धानि प्रमाणगुणवन्ति च १३
आक्रीडान्पश्य दैत्यानां तथैव शयनान्युत
रत्नवन्ति महार्हाणि भाजनान्यासनानि च १४
जलदाभांस्तथा शैलांस्तोयप्रस्रवणान्वितान्
कामपुष्पफलांश्चैव पादपान्कामचारिणः १५
मातले कश्चिदत्रापि रुचितस्ते वरो भवेत्
अथ वान्यां दिशं भूमेर्गच्छाव यदि मन्यसे १६
कण्व उवाच
मातलिस्त्वब्रवीदेनां भाषमाणं तथाविधम्
देवर्षे नैव मे कार्यं विप्रियं त्रिदिवौकसाम् १७
नित्यानुषक्तवैरा हि भ्रातरो देवदानवाः
अरिपक्षेण सम्बन्धं रोचयिष्याम्यहं कथम् १८
अन्यत्र साधु गच्छावो द्रष्टुं नार्हामि दानवान्
जानामि तु तथात्मानं दित्सात्मकमलं यथा १९
इति श्रीमहाभारते उद्योगपर्वणि अष्टनवतितमोऽध्यायः ९८

## एकोन शततमोऽध्यायः

नारद उवाच

अयं लोकः सुपर्णानां पक्षिणां पन्नगाशिनाम्
विक्रमे गमने भारे नैषामस्ति परिश्रमः १
वैनतेयसुतैः सूत षड्भिस्ततमिदं कुलम्
सुमुखेन सुनाम्ना च सुनेत्रेण सुवर्चसा २
सुरूपपक्षिराजेन सुबलेन च मातले
वर्धितानि प्रसूत्या वै विनताकुलकर्तृभिः ३
पक्षिराजाभिजात्यानां सहस्राणि शतानि च
कश्यपस्य ततो वंशे जातैर्भूतिविवर्धनैः ४
सर्वे ह्येते श्रिया युक्ताः सर्वे श्रीवत्सलक्षणाः
सर्वे श्रियमभीप्सन्तो धारयन्ति बलान्युत ५
कर्मणा क्षत्रियाश्चैते निर्घृणा भोगिभोजिनः
ज्ञातिसंक्षयकर्तृत्वाद्ब्राह्मण्यं न लभन्ति वै ६
नामानि चैषां वक्ष्यामि यथा प्राधान्यतः शृणु
मातले श्लाघ्यमेतद्धि कुलं विष्णुपरिग्रहम् ७
दैवतं विष्णुरेतेषां विष्णुरेव परायणम्
हृदि चैषां सदा विष्णुर्विष्णुरेव गतिः सदा ८
सुवर्णचूडो नागाशी दारुणश्चण्डतुण्डकः
अनलश्चानिलश्चैव विशालाक्षोऽथ कुण्डली ९
काश्यपिर्ध्वजविष्कम्भो वैनतेयोऽथ वामनः
वातवेगो दिशाचक्षुर्निमेषो निमिषस्तथा १०
त्रिवारः सप्तवारश्च वाल्मीकिर्द्वीपकस्तथा
दैत्यद्वीपः सरिद्द्वीपः सारसः पद्मकेसरः ११
सुमुखः सुखकेतुश्च चित्रबर्हस्तथानघः
मेघकृत्कुमुदो दक्षः सर्पान्तः सोमभोजनः १२
गुरुभारः कपोतश्च सूर्यनेत्रश्चिरान्तकः
विष्णुधन्वा कुमारश्च परिबर्हो हरिस्तथा १३
सुस्वरो मधुपर्कश्च हेमवर्णस्तथैव च
मलयो मातरिश्वा च निशाकरदिवाकरौ १४
एते प्रदेशमात्रेण मयोक्ता गरुडात्मजाः
प्रधान्यतोऽथ यशसा कीर्तिताः प्राणतश्च ते १५

यद्यत्र न रुचिः काचिदेहि गच्छाव मातले
तं नयिष्यामि देशं त्वां रुचिं यत्रोपलप्स्यसे १६
इति श्रीमहाभारते उद्योगपर्वणि एकोनशततमोऽध्यायः ९९

## शततमोऽध्यायः

नारद उवाच
इदं रसातलं नाम सप्तमं पृथिवीतलम्
यत्रास्ते सुरभिर्माता गवाममृतसम्भवा १
क्षरन्ती सततं क्षीरं पृथिवीसारसम्भवम्
षण्णां रसानां सारेण रसमेकमनुत्तमम् २
अमृतेनाभितृप्तस्य सारमुद्गिरतः पुरा
पितामहस्य वदनादुदतिष्ठदनिन्दिता ३
यस्याः क्षीरस्य धाराया निपतन्त्या महीतले
ह्रदः कृतः क्षीरनिधिः पवित्रं परमुत्तमम् ४
पुष्पितस्येव फेनस्य पर्यन्तमनुवेष्टितम्
पिबन्तो निवसन्त्यत्र फेनपा मुनिसत्तमाः ५
फेनपा नाम नाम्ना ते फेनाहाराश्च मातले
उग्रे तपसि वर्तन्ते येषां बिभ्यति देवताः ६
अस्याश्चतस्रो धेन्वोऽन्या दिक्षुसर्वासु मातले
निवसन्ति दिशापाल्यो धारयन्त्यो दिशः स्मृताः ७
पूर्वां दिशं धारयते सुरूपा नाम सौरभी
दक्षिणां हंसका नाम धारयत्यपरां दिशम् ८
पश्चिमा वारुणी दिक्च धार्यते वै सुभद्रया
महानुभावया नित्यं मातले विश्वरूपया ९
सर्वकामदुघा नाम धेनुर्धारयते दिशम्
उत्तरां मातले धर्म्यां तथैलविलसंज्ञिताम् १०
आसां तु पयसा मिश्रं पयो निर्मथ्य सागरे
मन्थानं मन्दरं कृत्वा देवैरसुरसंहितैः ११
उद्धृता वारुणी लक्ष्मीरमृतं चापि मातले
उच्चैः श्रवाश्चाश्वराजो मणिरत्नं च कौस्तुभम् १२

सुधाहारेषु च सुधां स्वधाभोजिषु च स्वधाम्
अमृतं चामृताशेषु सुरभिः क्षरते पयः १३
अत्र गाथा पुरा गीता रसातलनिवासिभिः
पौराणी श्रूयते लोके गीयते या मनीषिभिः १४
न नागलोके न स्वर्गे न विमाने त्रिविष्टपे
परिवासः सुखस्तादृग्रसातलतले यथा १५
इति श्रीमहाभारते उद्योगपर्वणि शततमोऽध्यायः १००

## एकाधिक शततमोऽध्यायः

नारद उवाच
इयं भोगवती नाम पुरी वासुकिपालिता
यादृशी देवराजस्य पुरीवर्यामरावती १
एष शेषः स्थितो नागो येनेयं धार्यते सदा
तपसा लोकमुख्येन प्रभावमहता मही २
श्वेतोच्चयनिभाकारो नानाविधविभूषणः
सहस्रं धारयन्मूर्ध्नां ज्वालाजिह्वो महाबलः ३
इह नानाविधाकारा नानाविधविभूषणाः
सुरसायाः सुता नागा निवसन्ति गतव्यथाः ४
मणिस्वस्तिकचक्राङ्काः कमण्डलुकलक्षणाः
सहस्रसंख्या बलिनः सर्वे रौद्राः स्वभावतः ५
सहस्रशिरसः केचित्केचित्पञ्चशताननाः
शतशीर्षास्तथा केचित्केचित्त्रिशिरसोऽपि च ६
द्विपञ्चशिरसः केचित्केचित्सप्तमुखास्तथा
महाभोगा महाकायाः पर्वताभोगभोगिनः ७
बहूनीह सहस्राणि प्रयुतान्यर्बुदानि च
नागानामेकवंशानां यथाश्रेष्ठांस्तु मे शृणु ८
वासुकिस्तक्षकश्चैव कर्कोटकधनंजयौ
कालीयो नहुषश्चैव कम्बलाश्वतरावुभौ ९
बाह्यकुण्डो मणिर्नागस्तथैवापूरणः खगः
वामनश्चैलपत्रश्च कुकुरः कुकुणस्तथा १०

आर्यको नन्दकश्चैव तथा कलशपोतकौ
कैलासकः पिञ्जरको नागश्चैरावतस्तथा ११
सुमनोमुखो दधिमुखः शङ्खो नन्दोपनन्दकौ
आप्तः कोटनकश्चैव शिखी निष्ठूरिकस्तथा १२
तित्तिरिर्हस्तिभद्रश्च कुमुदो माल्यपिण्डकः
द्वौ पद्मौ पुण्डरीकश्च पुष्पो मुद्गरपर्णकः १३
करवीरः पीठरकः संवृत्तो वृत्त एव च
पिण्डारो बिल्वपत्रश्च मूषिकादः शिरीषकः १४
दिलीपः शङ्खशीर्षश्च ज्योतिष्कोऽथापराजितः
कौरव्यो धृतराष्ट्रश्च कुमारः कुशकस्तथा १५
विरजा धारणश्चैव सुबाहुर्मुखरो जयः
बधिरान्धौ विकुण्डश्च विरसः सुरसस्तथा १६
एते चान्ये च बहवः कश्यपस्यात्मजाः स्मृताः
मातले पश्य यद्यत्र कश्चित्ते रोचते वरः १७
कण्व उवाच
मातलिस्त्वेकमव्यग्रः सततं संनिरीक्ष्य वै
पप्रच्छ नारदं तत्र प्रीतिमानिव चाभवत् १८
स्थितो य एष पुरतः कौरव्यस्यार्यकस्य च
द्युतिमान्दर्शनीयश्च कस्यैष कुलनन्दनः १९
कः पिता जननी चास्य कतमस्यैष भोगिनः
वंशस्य कस्यैष महान्केतुभूत इव स्थितः २०
प्रणिधानेन धैर्येण रूपेण वयसा च मे
मनः प्रविष्टो देवर्षे गुणकेश्याः पतिर्वरः २१
मातलि प्रीतमनसं दृष्ट्वा सुमुखदर्शनात्
निवेदयामास तदा माहात्म्यं जन्म कर्म च २२
एरावतकुले जातः सुमुखो नाम नागराट्
आर्यकस्य मतः पौत्रो दौहित्रो वामनस्य च २३
एतस्य हि पिता नागश्चिकुरो नाम मातले
नचिराद्वैनतेयेन पञ्चत्वमुपपादितः २४
ततोऽब्रवीत्प्रीतमना मातलिर्नारदं वचः

एष मे रुचितस्तात जामाता भुजगोत्तमः २५
क्रियतामत्र यत्नो हि प्रीतिमानस्म्यनेन वै
अस्मै नागपतेर्दातुं प्रियां दुहितरं मुने २६
इति श्रीमहाभारते उद्योगपर्वणिएकाधिकशततमोऽध्यायः १०१

द्व्यधिक शततमोऽध्यायः

नारद उवाच
सूतोऽय मातलिर्नाम शक्रस्य दयितः सुहृत्
शुचिः शीलगुणोपेतस्तेजस्वी वीर्यवान्बली १
शक्रस्यायं सखा चैव मन्त्री सारथिरेव च
अल्पान्तरप्रभावश्च वासवेन रणे रणे २
अयं हरिसहस्रेण युक्तं जैत्रं रथोत्तमम्
देवासुरेषु युद्धेषु मनसैव नियच्छति ३
अनेन विजितानश्वैर्दोर्भ्यां जयति वासवः
अनेन प्रहृते पूर्वं बलभित्प्रहरत्युत ४
अस्य कन्या वरारोहा रूपेणासदृशी भुवि
सत्वशीलगुणोपेता गुणकेशीति विश्रुता ५
तस्यास्य यत्नाच्चरतस्त्रैलोक्यममरद्युते
सुमुखो भवतः पौत्रो रोचते दुहितुः पतिः ६
यदि ते रोचते सौम्य भुजगोत्तम माचिरम्
क्रियतामार्यक क्षिप्रं बुद्धिः कन्याप्रतिग्रहे ७
यथा विष्णुकुले लक्ष्मीर्यथा स्वाहा विभावसोः
कुले तव तथैवास्तु गुणकेशी सुमध्यमा ८
पौत्रस्यार्थे भवांस्तस्माद्गुणकेशीं प्रतीच्छतु
सदृशीं प्रतिरूपस्य वासवस्य शचीमिव ९
पितृहीनमपि ह्येनं गुणतो वरयामहे
बहुमानाच्च भवतस्तथैवैरावतस्य च
सुमुखस्य गुणैश्चैव शीलशौचदमादिभिः १०
अभिगम्य स्वयं कन्यामयं दातुं समुद्यतः
मातलेस्तस्य सम्मानं कर्तुमर्हो भवानपि ११

कण्व उवाच
स तु दीनः प्रहृष्टश्च प्राह नारदमार्यकः
म्रियमाणे तथा पौत्रे पुत्रे च निधनं गते १२
न मे नैतद्बहुमतं देवर्षे वचनं तव
सखा शक्रस्य संयुक्तः कस्यायं नेप्सितो भवेत् १३
कारणस्य तु दौर्बल्याच्चिन्तयामि महामुने
अस्य देहकरस्तात मम पुत्रो महाद्युते
भक्षितो वैनतेयेन दुःखार्तास्तेन वै वयम् १४
पुनरेव च तेनोक्तं वैनतेयेन गच्छता
मासेनान्येन सुमुखं भक्षयिष्य इति प्रभो १५
ध्रुवं तथा तद्भविता जानीमस्तस्य निश्चयम्
तेन हर्षः प्रनष्टो मे सुपर्णवचनेन वै १६
मातलिस्त्वब्रवीदेनं बुद्धिरत्र कृता मया
जामातृभावेन वृतः सुमुखस्तव पुत्रजः १७
सोऽय मया च सहितो नारदेन च पन्नगः
त्रिलोकेशं सुरपतिं गत्वा पश्यतु वासवम् १८
शेषेणैवास्य कार्येण प्रज्ञास्याम्यहमायुषः
सुपर्णस्य विघाते च प्रयतिष्यामि सत्तम १९
सुमुखश्च मया सार्धं देवेशमभिगच्छतु
कार्यसंसाधनार्थाय स्वस्ति तेऽस्तु भुजंगम २०
ततस्ते सुमुखं गृह्य सर्व एव महौजसः
ददृशुः शक्रमासीनं देवराजं महाद्युतिम् २१
संगत्या तत्र भगवान्विष्णुरासीच्चतुर्भुजः
ततस्तत्सर्वमाचख्यौ नारदो मातलि प्रति २२
ततः पुरंदरं विष्णुरुवाच भुवनेश्वरम्
अमृतं दीयतामस्मै क्रियताममरैः समः २३
मातलिर्नारदश्चैव सुमुखश्चैव वासव
लभन्तां भवतः कामात्काममेतं यथेप्सितम् २४
पुरंदरोऽथ संचिन्त्य वैनतेयपराक्रमम्
विष्णुमेवाब्रवीदेनं भवानेव ददात्विति २५

विष्णुरुवाच
ईशस्त्वमसि लोकानां चराणामचराश्च ये
त्वया दत्तमदत्तं कः कर्तुमुत्सहते विभो २६
कण्व उवाच
प्रादाच्छक्रस्ततस्तस्मै पन्नगायायुरुत्तमम्
न त्वेनममृतप्राशं चकार बलवृत्रहा २७
लब्ध्वा वरं तु सुमुखः सुमुखः सम्बभूव ह
कृतदारो यथाकामं जगाम च गृहान्प्रति २८
नारदस्त्वार्यकश्चैव कृतकार्यौ मुदा युतौ
प्रतिजग्मतुरभ्यर्च्य देवराजं महाद्युतिम् २९
इति श्रीमहाभारते उद्योगपर्वणि द्व्यधिकशततमोऽध्यायः १०२

त्र्यधिकशततमोऽध्यायः

कण्व उवाच
गरुडस्तत्तु शुश्राव यथावृत्तं महाबलः
आयुःप्रदानं शक्रेण कृतं नागस्य भारत १
पक्षवातेन महता रुद्ध्वा त्रिभुवनं खगः
सुपर्णः परमक्रुद्धो वासवं समुपाद्रवत् २
गरुड उवाच
भगवन्किमवज्ञानात्क्षुधां प्रति भये मम
कामकारवरं दत्वा पुनश्चलितवानसि ३
निसर्गात्सर्वभूतानां सर्वभूतेश्वरेण मे
आहारो विहितो धात्रा किमर्थं वार्यते त्वया ४
वृतश्चैष महानागः स्थापितः समयश्च मे
अनेन च मया देव भर्तव्यः प्रसवो महान् ५
एतस्मिंस्त्वन्यथाभूते नान्यं हिंसितुमुत्सहे
क्रीडसे कामकारेण देवराज यथेच्छकम् ६
सोऽह प्राणान्विमोक्ष्यामि तथा परिजनो मम
ये च भृत्या मम गृहे प्रीतिमान्भव वासव ७
एतच्चैवाहमर्हामि भूयश्च बलवृत्रहन्

त्रैलोक्यस्येश्वरो योऽह परभृत्यत्वमागतः ८
त्वयि तिष्ठति देवेश न विष्णुः कारणं मम
त्रैलोक्यराज राज्यं हि त्वयि वासव शाश्वतम् ६
ममापि दक्षस्य सुता जननी कश्यपः पिता
अहमप्युत्सहे लोकान्समस्तान्वोढुमञ्जसा १०
असह्यं सर्वभूतानां ममापि विपुलं बलम्
मयापि सुमहत्कर्म कृतं दैतेयविग्रहे ११
श्रुतश्रीः श्रुतसेनश्च विवस्वान्रोचनामुखः
प्रसन्नः कालकाक्षश्च मयापि दितिजा हताः १२
यत्तु ध्वजस्थानगतो यत्नात्परिचराम्यहम्
वहानि चैवानुजं ते तेन मामवमन्यसे १३
कोऽन्यो भारसहो ह्यस्ति कोऽन्योऽस्ति बलवत्तरः
मया योऽह विशिष्टः सन्वहामीमं सबान्धवम् १४
अवज्ञाय तु यत्तेऽह भोजनाद्व्यपरोपितः
तेन मे गौरवं नष्टं त्वत्तश्चास्माच्च वासव १५
अदित्यां य इमे जाता बलविक्रमशालिनः
त्वमेषां किल सर्वेषां विशेषाद्बलवत्तरः १६
सोऽह पक्षैकदेशेन वहामि त्वां गतक्लमः
विमृश त्वं शनैस्तात को न्वत्र बलवानिति १७
कण्व उवाच
तस्य तद्वचनं श्रुत्वा खगस्योदर्कदारुणम्
अक्षोभ्यं क्षोभयंस्तार्क्ष्यमुवाच रथचक्रभृत् १८
गरुत्मन्मन्यसेऽत्मानं बलवन्तं सुदुर्बलम्
अलमस्मत्समक्षं ते स्तोतुमात्मानमण्डज १९
त्रैलोक्यमपि मे कृत्स्नमशक्तं देहधारणे
अहमेवात्मनात्मानं वहामि त्वां च धारये २०
इमं तावन्ममैकं त्वं बाहुं सव्येतरं वह
यद्येनं धारयस्येकं सफलं ते विकत्थितम् २१
ततः स भगवांस्तस्य स्कन्धे बाहुं समासजत्
निपपात स भारार्तो विह्वलो नष्टचेतनः २२

यावान्हि भारः कृत्स्नायाः पृथिव्याः पर्वतैः सह
एकस्या देहशाखायास्तावद्धारममन्यत २३
न त्वेनं पीडयामास बलेन बलवत्तरः
ततो हि जीवितं तस्य न व्यनीनशदच्युतः २४
विपक्षः स्रस्तकायश्च विचेता विह्वलः खगः
मुमोच पत्राणि तदा गुरुभारप्रपीडितः २५
स विष्णुं शिरसा पक्षी प्रणम्य विनतासुतः
विचेता विह्वलो दीनः किंचिद्वचनमब्रवीत् २६
भगवँल्लोकसारस्य सदृशेन वपुष्मता
भुजेन स्वैरमुक्तेन निष्पिष्टोऽस्मि महीतले २७
क्षन्तुमर्हसि मे देव विह्वलस्याल्पचेतसः
बलदाहविदग्धस्य पक्षिणो ध्वजवासिनः २८
न विज्ञातं बलं देव मया ते परमं विभो
तेन मन्याम्यहं वीर्यमात्मनोऽसदृशं परैः २९
ततश्चक्रे स भगवान्प्रसादं वै गरुत्मतः
मैवं भूय इति स्नेहात्तदा चैनमुवाच ह ३०
तथा त्वमपि गान्धारे यावत्पाण्डुसुतान्रणे
नासादयसि तान्वीरांस्तावज्जीवसि पुत्रक ३१
भीमः प्रहरतां श्रेष्ठो वायुपुत्रो महाबलः
धनंजयश्चेन्द्रसुतो न हन्यातां तु कं रणे ३२
विष्णुर्वायुश्च शक्रश्च धर्मस्तौ चाश्विनावुभौ
एते देवास्त्वया केन हेतुना शक्यमीक्षितुम् ३३
तदलं ते विरोधेन शमं गच्छ नृतात्मज
वासुदेवेन तीर्थेन कुलं रक्षितुमर्हसि ३४
प्रत्यक्षो ह्यस्य सर्वस्य नारदोऽय महातपाः
माहात्म्यं यत्तदा विष्णोर्योऽय चक्रगदाधरः ३५
वैशम्पायन उवाच
दुर्योधनस्तु तच्छ्रुत्वा निःश्वसन्भृकुटीमुखः
राधेयमभिसम्प्रेक्ष्य जहास स्वनवत्तदा ३६
कदर्थीकृत्य तद्वाक्यमृषेः कण्वस्य दुर्मतिः

ऊरुं गजकराकारं ताडयन्निदमब्रवीत् ३७
यथैवेश्वरसृष्टोऽस्मि यद्भावि या च मे गतिः
तथा महर्षे वर्तामि किं प्रलापः करिष्यति ३८
इति श्रीमहाभारते उद्योगपर्वणि त्र्यधिकशततमोऽध्यायः १०३

चतुरधिक शततमोऽध्यायः

जनमेजय उवाच
अनर्थे जातनिर्बन्धं परार्थे लोभमोहितम्
अनार्यकेष्वभिरतं मरणे कृतनिश्चयम् १
ज्ञातीनां दुःखकर्तारं बन्धूनां शोकवर्धनम्
सुहृदां क्लेशदातारं द्विषतां हर्षवर्धनम् २
कथं नैनं विमार्गस्थं वारयन्तीह बान्धवाः
सौहृदाद्वा सुहृत्स्निग्धो भगवान्वा पितामहः ३
वैशम्पायन उवाच
उक्तं भगवता वाक्यमुक्तं भीष्मेण यत्क्षमम्
उक्तं बहुविधं चैव नारदेनापि तच्छृणु ४
नारद उवाच
दुर्लभो वै सुहृच्छ्रोता दुर्लभश्च हितः सुहृत्
तिष्ठते हि सुहृद्यत्र न बन्धुस्तत्र तिष्ठति ५
श्रोतव्यमपि पश्यामि सुहृदां कुरुनन्दन
न कर्तव्यश्च निर्बन्धो निर्बन्धो हि सुदारुणः ६
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
यथा निर्बन्धतः प्राप्तो गालवेन पराजयः ७
विश्वामित्रं तपस्यन्तं धर्मो जिज्ञासया पुरा
अभ्यगच्छत्स्वयं भूत्वा वसिष्ठो भगवानृषिः ८
सप्तर्षीणामन्यतमं वेषमास्थाय भारत
बुभुक्षुः क्षुधितो राजन्नाश्रमं कौशिकस्य ह ९
विश्वामित्रोऽथ सम्भ्रान्तः श्रपयामास वै चरुम्
परमान्नस्य यत्नेन न च स प्रत्यपालयत् १०
अन्नं तेन तदा भुक्तमन्यैर्दत्तं तपस्विभिः

अथ गृह्यान्नमत्युष्णं विश्वामित्रोऽप्युपागमत् ११
भुक्तं मे तिष्ठ तावत्त्वमित्युक्त्वा भगवान्ययौ
विश्वामित्रस्ततो राजन्स्थित एव महाद्युतिः १२
भक्तं प्रगृह्य मूर्ध्ना तद्बाहुभ्यां पार्श्वतोऽगमत्
स्थितः स्थाणुरिवाभ्याशे निश्चेष्टो मारुताशनः १३
तस्य शुश्रूषणे यत्नमकरोद्गालवो मुनिः
गौरवाद्बहुमानाच्च हार्देन प्रियकाम्यया १४
अथ वर्षशते पूर्णे धर्मः पुनरुपागमत्
वासिष्ठं वेषमास्थाय कौशिकं भोजनेप्सया १५
स दृष्ट्वा शिरसा भक्तं ध्रियमाणं महर्षिणा
तिष्ठता वायुभक्षेण विश्वामित्रेण धीमता १६
प्रतिगृह्य ततो धर्मस्तथैवोष्णं तथा नवम्
भुक्त्वा प्रीतोऽस्मि विप्रर्षे तमुक्त्वा स मुनिर्गतः १७
क्षत्रभावादपगतो ब्राह्मणत्वमुपागतः
धर्मस्य वचनात्प्रीतो विश्वामित्रस्तदाभवत् १८
विश्वामित्रस्तु शिष्यस्य गालवस्य तपस्विनः
शुश्रूषया च भक्त्या च प्रीतिमानित्युवाच तम्
अनुज्ञातो मया वत्स यथेष्टं गच्छ गालव १९
इत्युक्तः प्रत्युवाचेदं गालवो मुनिसत्तमम्
प्रीतो मधुरया वाचा विश्वामित्रं महाद्युतिम् २०
दक्षिणां कां प्रयच्छामि भवते गुरुकर्मणि
दक्षिणाभिरुपेतं हि कर्म सिध्यति मानवम् २१
दक्षिणानां हि सृष्टानामपवर्गेण भुज्यते
स्वर्गे क्रतुफलं सद्भिर्दक्षिणा शान्तिरुच्यते
किमाहरामि गुर्वर्थं ब्रवीतु भगवानिति २२
जानमानस्तु भगवाञ्जितः शुश्रूषणेन च
विश्वामित्रस्तमसकृद्गच्छ गच्छेत्यचोदयत् २३
असकृद्गच्छ गच्छेति विश्वामित्रेण भाषितः
किं ददानीति बहुशो गालवः प्रत्यभाषत २४
निर्बन्धतस्तु बहुशो गालवस्य तपस्विनः

किंचिदागतसंरम्भो विश्वामित्रोऽब्रवीदिदम् २५
एकतःश्यामकर्णानां शतान्यष्टौ ददस्व मे
हयानां चन्द्रशुभ्राणां गच्छ गालव माचिरम् २६
इति श्रीमहाभारते उद्योगपर्वणि चतुरधिकशततमोऽध्यायः १०४

## पञ्चाधिक शततमोऽध्यायः

नारद उवाच
एवमुक्तस्तदा तेन विश्वामित्रेण धीमता
नास्ते न शेते नाहारं कुरुते गालवस्तदा १
त्वगस्थिभूतो हरिणश्चिन्ताशोकपरायणः
शोचमानोऽतिमात्रं स दह्यमानश्च मन्युना २
कुतः पुष्टानि मित्राणि कुतोऽथा संचयः कुतः
हयानां चन्द्रशुभ्राणां शतान्यष्टौ कुतो मम ३
कुतो मे भोजनश्रद्धा सुखश्रद्धा कुतश्च मे
श्रद्धा मे जीवितस्यापि छिन्ना किं जीवितेन मे ४
अहं पारं समुद्रस्य पृथिव्या वा परं परात्
गत्वात्मानं विमुञ्चामि किं फलं जीवितेन मे ५
अधनस्याकृतार्थस्य त्यक्तस्य विविधैः फलैः
ऋणं धारयमाणस्य कुतः सुखमनीहया ६
सुहृदां हि धनं भुक्त्वा कृत्वा प्रणयमीप्सितम्
प्रतिकर्तुमशक्तस्य जीवितान्मरणं वरम् ७
प्रतिश्रुत्य करिष्येति कर्तव्यं तदकुर्वतः
मिथ्यावचनदग्धस्य इष्टापूर्तं प्रणश्यति ८
न रूपमनृतस्यास्ति नानृतस्यास्ति संततिः
नानृतस्याधिपत्यं च कुत एव गतिः शुभा ९
कुतः कृतघ्नस्य यशः कुतः स्थानं कुतः सुखम्
अश्रद्धेयः कृतघ्नो हि कृतघ्ने नास्ति निष्कृतिः १०
न जीवत्यधनः पापः कुतः पापस्य तन्त्रणम्
पापो ध्रुवमवाप्नोति विनाशं नाशयन्कृतम् ११
सोऽह पापः कृतघ्नश्च कृपणश्चानृतोऽपि च

गुरोर्यः कृतकार्यः संस्तत्करोमि न भाषितम्
सोऽह प्राणान्विमोक्ष्यामि कृत्वा यत्नमनुत्तमम् १२
अर्थना न मया काचित्कृतपूर्वा दिवौकसाम्
मानयन्ति च मां सर्वे त्रिदशा यज्ञसंस्तरे १३
अहं तु विबुधश्रेष्ठं देवं त्रिभुवनेश्वरम्
विष्णुं गच्छाम्यहं कृष्णं गतिं गतिमतां वरम् १४
भोगा यस्मात्प्रतिष्ठन्ते व्याप्य सर्वान्सुरासुरान्
प्रयतो द्रष्टुमिच्छामि महायोगिनमव्ययम् १५
एवमुक्ते सखा तस्य गरुडो विनतात्मजः
दर्शयामास तं प्राह संहृष्टः प्रियकाम्यया १६
सुहृद्भवान्मम मतः सुहृदां च मतः सुहृत्
ईप्सितेनाभिलाषेण योक्तव्यो विभवे सति १७
विभवश्चास्ति मे विप्र वासवावरजो द्विज
पूर्वमुक्तस्त्वदर्थं च कृतः कामश्च तेन मे १८
स भवानेतु गच्छाव नयिष्ये त्वां यथासुखम्
देशं पारं पृथिव्या वा गच्छ गालव माचिरम् १९
इति श्रीमहाभारते उद्योगपर्वणि पञ्चाधिकशततमोऽध्यायः १०५

## षडधिक शततमोऽध्यायः

सुपर्ण उवाच
अनुशिष्टोऽस्मि देवेन गालवाज्ञातयोनिना
ब्रूहि कामनुसंयामि द्रष्टुं प्रथमतो दिशम् १
पूर्वां वा दक्षिणां वाहमथ वा पश्चिमां दिशम्
उत्तरां वा द्विजश्रेष्ठ कुतो गच्छामि गालव २
यस्यामुदयते पूर्वं सर्वलोकप्रभावनः
सविता यत्र संध्यायां साध्यानां वर्तते तपः ३
यस्यां पूर्वं मतिर्जाता यया व्याप्तमिदं जगत्
चक्षुषी यत्र धर्मस्य यत्र चैष प्रतिष्ठितः ४
हुतं यतो मुखैर्हव्यं सर्पते सर्वतोदिशम्
एतद्द्वारं द्विजश्रेष्ठ दिवसस्य तथाध्वनः ५

यत्र पूर्वं प्रसूता वै दाक्षायण्यः प्रजाः स्त्रियः
यस्यां दिशि प्रवृद्धाश्च कश्यपस्यात्मसम्भवाः ६
यतोमूला सुराणां श्रीर्यत्र शक्रोऽभ्यषिच्यत
सुरराज्येन विप्रर्षे देवैश्चात्र तपश्चितम् ७
एतस्मात्कारणाद्ब्रह्मन्पूर्वेत्येषा दिगुच्यते
यस्मात्पूर्वतरे काले पुर्वमेषावृता सुरैः ८
अत एव च पूर्वेषां पूर्वामाशामवेक्षताम्
पूर्वकार्याणि कार्याणि दैवानि सुखमीप्सता ९
अत्र वेदाञ्जगौ पूर्वं भगवाँल्लोकभावनः
अत्रैवोक्ता सवित्रासीत्सावित्री ब्रह्मवादिषु १०
अत्र दत्तानि सूर्येण यजूंषि द्विजसत्तम
अत्र लब्धवरैः सोमः सुरैः क्रतुषु पीयते ११
अत्र तृप्ता हुतवहाः स्वां योनिमुपभुञ्जते
अत्र पातालमाश्रित्य वरुणः श्रियमाप च १२
अत्र पूर्वं वसिष्ठस्य पौराणस्य द्विजर्षभ
सूतिश्चैव प्रतिष्ठा च निधनं च प्रकाशते १३
ॐकारस्यात्र जायन्ते सूतयो दशतीर्दश
पिबन्ति मुनयो यत्र हविर्धाने स्म सोमपाः १४
प्रोक्षिता यत्र बहवो वराहाद्या मृगा वने
शक्रेण यत्र भागार्थे दैवतेषु प्रकल्पिताः १५
अत्राहिताः कृतघ्नाश्च मानुषाश्चासुराश्च ये
उदयंस्तान्हि सर्वान्वै क्रोधाद्धन्ति विभावसुः १६
एतद्द्वारं त्रिलोकस्य स्वर्गस्य च सुखस्य च
एष पूर्वो दिशाभागो विशावैनं यदीच्छसि १७
प्रियं कार्यं हि मे तस्य यस्यास्मि वचने स्थितः
ब्रूहि गालव यास्यामि शृणु चाप्यपरां दिशम् १८
इति श्रीमहाभारते उद्योगपर्वणि षडधिकशततमोऽध्यायः १०६

## सप्ताधिक शततमोऽध्यायः

सुपर्ण उवाच

इयं विवस्वता पूर्वं श्रौतेन विधिना किल
गुरवे दक्षिणा दत्ता दक्षिणेत्युच्यतेऽथ दिक् १
अत्र लोकत्रयस्यास्य पितृपक्षः प्रतिष्ठितः
अत्रोष्मपानां देवानां निवासः श्रूयते द्विज २
अत्र विश्वे सदा देवाः पितृभिः सार्धमासते
इज्यमानाः स्म लोकेषु सम्प्राप्तास्तुल्यभागताम् ३
एतद्द्वितीयं धर्मस्य द्वारमाचक्षते द्विज
त्रुटिशो लवशश्चात्र गण्यते कालनिश्चयः ४
अत्र देवर्षयो नित्यं पितृलोकर्षयस्तथा
तथा राजर्षयः सर्वे निवसन्ति गतव्यथाः ५
अत्र धर्मश्च सत्यं च कर्म चात्र निशाम्यते
गतिरेषा द्विजश्रेष्ठ कर्मणात्मावसादिनः ६
एषा दिक्सा द्विजश्रेष्ठ यां सर्वः प्रतिपद्यते
वृता त्वनवबोधेन सुखं तेन न गम्यते ७
नैर्ऋतानां सहस्राणि बहून्यत्र द्विजर्षभ
सृष्टानि प्रतिकूलानि द्रष्टव्यान्यकृतात्मभिः ८
अत्र मन्दरकुञ्जेषु विप्रर्षिसदनेषु च
गन्धर्वा गान्ति गाथा वै चित्तबुद्धिहरा द्विज ९
अत्र सामानि गाथाभिः श्रुत्वा गीतानि रैवतः
गतदारो गतामात्यो गतराज्यो वनं गतः १०
अत्र सावर्णिना चैव यवक्रीतात्मजेन च
मर्यादा स्थापिता ब्रह्मन्यां सूर्यो नातिवर्तते ११
अत्र राक्षसराजेन पौलस्त्येन महात्मना
रावणेन तपश्चीर्त्वा सुरेभ्योऽमरता वृता १२
अत्र वृत्तेन वृत्रोऽपि शक्रशत्रुत्वमीयिवान्
अत्र सर्वासवः प्राप्ताः पुनर्गच्छन्ति पञ्चधा १३
अत्र दुष्कृतकर्माणो नराः पच्यन्ति गालव
अत्र वैतरणी नाम नदी वितरणैर्वृता
अत्र गत्वा सुखस्यान्तं दुःखस्यान्तं प्रपद्यते १४
अत्रावृत्तो दिनकरः क्षरते सुरसं पयः

काष्ठां चासाद्य धानिष्ठां हिममुत्सृजते पुनः १५
अत्राहं गालव पुरा क्षुधार्तः परिचिन्तयन्
लब्धवान्युध्यमानौ द्वौ बृहन्तौ गजकच्छपौ १६
अत्र शक्रधनुर्नाम सूर्याज्जातो महानृषिः
विदुर्यं कपिलं देवं येनात्ताः सगरात्मजाः १७
अत्र सिद्धाः शिवा नाम ब्राह्मणा वेदपारगाः
अधीत्य सखिलान्वेदानालभन्ते यमक्षयम् १८
अत्र भोगवती नाम पुरी वासुकिपालिता
तक्षकेण च नागेन तथैवैरावतेन च १९
अत्र निर्याणकालेषु तमः सम्प्राप्यते महत्
अभेद्यं भास्करेणापि स्वयं वा कृष्णवर्त्मना २०
एष तस्यापि ते मार्गः परितापस्य गालव
ब्रूहि मे यदि गन्तव्यं प्रतीचीं शृणु वा मम २१
इति श्रीमहाभारते उद्योगपर्वणि सप्ताधिकशततमोऽध्यायः १०७

## अष्टाधिक शततमोऽध्यायः

सुपर्ण उवाच
इयं दिग्दयिता राज्ञो वरुणस्य तु गोपतेः
सदा सलिलराजस्य प्रतिष्ठा चादिरेव च १
अत्र पश्चादहः सूर्यो विसर्जयति भाः स्वयम्
पश्चिमेत्यभिविख्याता दिगियं द्विजसत्तम २
यादसामत्र राज्येन सलिलस्य च गुप्तय
कश्यपो भगवान्देवो वरुणं स्माभ्यषेचयत् ३
अत्र पीत्वा समस्तान्वै वरुणस्य रसांस्तु षट्
जायते तरुणः सोमः शुक्लस्यादौ तमिस्त्रहा ४
अत्र पश्चात्कृता दैत्या वायुना संयतास्तदा
निःश्वसन्तो महानागैरर्दिताः सुषुपुर्द्विज ५
अत्र सूर्यं प्रणयिनं प्रतिगृह्णाति पर्वतः
अस्तो नाम यतः संध्या पश्चिमा प्रतिसर्पति ६
अतो रात्रिश्च निद्रा च निर्गता दिवसक्षये

जायते जीवलोकस्य हर्तुमर्धमिवायुषः ७
अत्र देवीं दितिं सुप्तामात्मप्रसवधारिणीम्
विगर्भामकरोच्छक्रो यत्र जातो मरुद्गणः ८
अत्र मूलं हिमवतो मन्दरं याति शाश्वतम्
अपि वर्षसहस्रेण न चास्यान्तोऽधिगम्यते ९
अत्र काञ्चनशैलस्य काञ्चनाम्बुवहस्य च
उदधेस्तीरमासाद्य सुरभिः क्षरते पयः १०
अत्र मध्ये समुद्रस्य कबन्धः प्रतिदृश्यते
स्वर्भानोः सूर्यकल्पस्य सोमसूर्यौ जिघांसतः ११
सुवर्णशिरसोऽप्यत्र हरिरोम्णः प्रगायतः
अदृश्यस्याप्रमेयस्य श्रूयते विपुलो ध्वनिः १२
अत्र ध्वजवती नाम कुमारी हरिमेधसः
आकाशे तिष्ठ तिष्ठेति तस्थौ सूर्यस्य शासनात् १३
अत्र वायुस्तथा वह्निरापः खं चैव गालव
आह्निकं चैव नैशं च दुःखस्पर्शं विमुञ्चति
अतः प्रभृति सूर्यस्य तिर्यगावर्तते गतिः १४
अत्र ज्योतींषि सर्वाणि विशन्त्यादित्यमण्डलम्
अष्टाविंशतिरात्रं च चङ्क्रम्य सह भानुना
निष्पतन्ति पुनः सूर्यात्सोमसंयोगयोगतः १५
अत्र नित्यं स्रवन्तीनां प्रभवः सागरोदयः
अत्र लोकत्रयस्यापस्तिष्ठन्ति वरुणाश्रयाः १६
अत्र पन्नगराजस्याप्यनन्तस्य निवेशनम्
अनादिनिधनस्यात्र विष्णोः स्थानमनुत्तमम् १७
अत्रानलसखस्यापि पवनस्य निवेशनम्
महर्षेः कश्यपस्यात्र मारीचस्य निवेशनम् १८
एष ते पश्चिमो मार्गो दिग्द्वारेण प्रकीर्तितः
ब्रूहि गालव गच्छावो बुद्धिः का द्विजसत्तम १९

इति श्रीमहाभारते उद्योगपर्वणि अष्टाधिकशततमोऽध्यायः १०८

## नवाधिक शततमोऽध्यायः

सुपर्ण उवाच
यस्मादुत्तार्यते पापाद्यस्मान्निः श्रेयसोऽश्नुते
तस्मादुत्तारणफलादुत्तरेत्युच्यते बुधैः १
उत्तरस्य हिरण्यस्य परिवापस्य गालव
मार्गः पश्चिमपूर्वाभ्यां दिग्भ्यां वै मध्यमः स्मृतः २
अस्यां दिशिवरिष्ठायामुत्तरायां द्विजर्षभ
नासौम्यो नाविधेयात्मा नाधर्म्यो वसते जनः ३
अत्र नारायणः कृष्णो जिष्णुश्चैव नरोत्तमः
बदर्यामाश्रमपदे तथा ब्रह्मा च शाश्वतः ४
अत्र वै हिमवत्पृष्ठे नित्यमास्ते महेश्वरः
अत्र राज्येन विप्राणां चन्द्रमाश्चाभ्यषिच्यत ५
अत्र गङ्गां महादेवः पतन्तीं गगनाच्च्युताम्
प्रतिगृह्य ददौ लोके मानुषे ब्रह्मवित्तम ६
अत्र देव्या तपस्तप्तं महेश्वरपरीप्सया
अत्र कामश्च रोषश्च शैलश्चोमा च सम्बभुः ७
अत्र राक्षसयक्षाणां गन्धर्वाणां च गालव
आधिपत्येन कैलासे धनदोऽप्यभिषेचितः ८
अत्र चैत्ररथं रम्यमत्र वैखानसाश्रमः
अत्र मन्दाकिनी चैव मन्दरश्च द्विजर्षभ ९
अत्र सौगन्धिकवनं नैर्ऋतैरभिरक्ष्यते
शाड्वलं कदलीस्कन्धमत्र संतानका नगाः १०
अत्र संयमनित्यानां सिद्धानां स्वैरचारिणाम्
विमानान्यनुरूपाणि काम भोग्यानि गालव ११
अत्र ते ऋषयः सप्त देवी चारुन्धती तथा
अत्र तिष्ठति वै स्वातिरत्रास्या उदयः स्मृतः १२
अत्र यज्ञं समारुह्य ध्रुवं स्थाता पितामहः
ज्योतींषि चन्द्रसूर्यौ च परिवर्तन्ति नित्यशः १३
अत्र गायन्तिकाद्वारं रक्षन्ति द्विजसत्तमाः
धामा नाम महात्मानो मुनयः सत्यवादिनः १४

न तेषां ज्ञायते सूर्तिर्नाकृतिर्न तपश्चितम्
परिवर्तसहस्राणि कामभोग्यानि गालव १५
यथा यथा प्रविशति तस्मात्परतरं नरः
तथा तथा द्विजश्रेष्ठ प्रविलीयति गालव १६
न तत्केनचिदन्येन गतपूर्वं द्विजर्षभ
ऋते नारायणं देवं नरं वा जिष्णुमव्ययम् १७
अत्र कैलासमित्युक्तं स्थानमैलविलस्य तत्
अत्र विद्युत्प्रभा नाम जज्ञिरेऽप्सरसो दश १८
अत्र विष्णुपदंनाम क्रमता विष्णुना कृतम्
त्रिलोकविक्रमे ब्रह्मन्नुत्तरां दिशमाश्रितम् १९
अत्र राज्ञा मरुत्तेन यज्ञेनेष्टं द्विजोत्तम
उशीरबीजे विप्रर्षे यत्र जाम्बूनदं सरः २०
जीमूतस्यात्र विप्रर्षेरुपतस्थे महात्मनः
साक्षाद्धैमवतः पुण्यो विमलः कमलाकरः २१
ब्राह्मणेषु च यत्कृत्स्नं स्वन्तं कृत्वा धनं महत्
वव्रे धनं महर्षिः स जैमूतं तद्वनं ततः २२
अत्र नित्यं दिशापालाः सायं प्रातर्द्विजर्षभ
कस्य कार्यं किमिति वै परिक्रोशन्ति गालव २३
एवमेषा द्विजश्रेष्ठ गुणैरन्यैर्दिगुत्तरा
उत्तरेति परिख्याता सर्वकर्मसु चोत्तरा २४
एता विस्तरशस्तात तव संकीर्तिता दिशः
चतस्रः क्रमयोगेन कामाशां गन्तुमिच्छसि २५
उद्यतोऽह द्विजश्रेष्ठ तव दर्शयितुं दिशः
पृथिवीं चाखिलां ब्रह्मंस्तस्मादारोह मां द्विज २६
इति श्रीमहाभारते उद्योगपर्वणि नवाधिकशततमोऽध्यायः १०९

## दशाधिक शततमोऽध्यायः

गालव उवाच
गरुत्मन्भुजगेन्द्रारे सुपर्ण विनतात्मज
नय मां तार्क्ष्य पूर्वेण यत्र धर्मस्य चक्षुषी १

पूर्वमेतां दिशं गच्छ या पूर्वं परिकीर्तिता
दैवतानां हि सांनिध्यमत्र कीर्तितवानसि २
अत्र सत्यं च धर्मश्च त्वया सम्यक्प्रकीर्तितः
इच्छेयं तु समागन्तुं समस्तैर्दैवतैरहम्
भूयश्च तान्सुरान्द्रष्टुमिच्छेयमरुणानुज ३
नारद उवाच
तमाह विनतासूनुरारोहस्वेति वै द्विजम्
आरुरोहाथ स मुनिर्गरुडं गालवस्तदा ४
गालव उवाच
क्रममाणस्य ते रूपं दृश्यते पन्नगाशन
भास्करस्येव पूर्वाह्णे सहस्रांशोर्विवस्वतः ५
पक्षवातप्रणुन्नानां वृक्षाणामनुगामिनाम्
प्रस्थितानामिव समं पश्यामीह गतिं खग ६
ससागरवनामुर्वीं सशैलवनकाननाम्
आकर्षन्निव चाभासि पक्षवातेन खेचर ७
समीननागनक्रं च खमिवारोप्यते जलम्
वायुना चैव महता पक्षवातेन चानिशम् ८
तुल्यरूपाननान्मत्स्यांस्तिमिमत्स्यांस्तिमिंगिलान्
नागांश्च नरवक्त्रांश्च पश्याम्युन्मथितानिव ९
महार्णवस्य च रवैः श्रोत्रे मे बधिरीकृते
न शृणोमि न पश्यामि नात्मनो वेद्मि कारणम् १०
शनैः साधु भवान्यातु ब्रह्महत्यामनुस्मरन्
न दृश्यते रविस्तात न दिशो न च खं खग ११
तम एव तु पश्यामि शरीरं ते न लक्षये
मणीव जात्यौ पश्यामि चक्षुषी तेऽहमण्डज १२
शरीरे तु न पश्यामि तव चैवात्मनश्च ह
पदे पदे तु पश्यामि सलिलादग्निमुत्थितम् १३
स मे निर्वाप्य सहसा चक्षुषी शाम्यते पुनः
तन्निवर्त महान्कालो गच्छतो विनतात्मज १४
न मे प्रयोजनं किंचिद्गमने पन्नगाशन

संनिवर्त महावेग न वेगं विषहामि ते १५
गुरवे संश्रुतानीह शतान्यष्टौ हि वाजिनाम्
एकतःश्यामकर्णानां शुभ्राणां चन्द्रवर्चसाम् १६
तेषां चैवापवर्गाय मार्गं पश्यामि नाण्डज
ततोऽय जीवितत्यागे दृष्टो मार्गो मयात्मनः १७
नैव मेऽस्ति धनं किंचिन्न धनेनान्वितः सुहृत्
न चार्थेनापि महता शक्यमेतद्व्यपोहितुम् १८
नारद उवाच
एवं बहु च दीनं च ब्रुवाणं गालवं तदा
प्रत्युवाच व्रजन्नेव प्रहसन्विनतात्मजः १९
नातिप्रज्ञोऽसि विप्रर्षे योऽत्मानं त्यक्तुमिच्छसि
न चापि कृत्रिमः कालः कालो हि परमेश्वरः २०
किमहं पूर्वमेवेह भवता नाभिचोदितः
उपायोऽत्र महानस्ति येनैतदुपपद्यते २१
तदेष ऋषभो नाम पर्वतः सागरोरसि
अत्र विश्रम्य भुक्त्वा च निवर्तिष्याव गालव २२
इति श्रीमहाभारते उद्योगपर्वणि दशाधिकशततमोऽध्यायः ११०

## एकादशाधिकशततमोऽध्यायः

नारद उवाच
ऋषभस्य ततः शृङ्गे निपत्य द्विजपक्षिणौ
शाण्डिलद्यं ब्राह्मणीं तत्र ददृशाते तपोन्विताम् १
अभिवाद्य सुपर्णस्तु गालवश्चाभिपूज्य ताम्
तया च स्वागतेनोक्तौ विष्टरे संनिषीदतुः २
सिद्धमन्नं तया क्षिप्रं बलिमन्त्रोपबृंहितम्
भुक्त्वा तृप्तावुभौ भूमौ सुप्तौ तावन्नमोहितौ ३
मुहूर्तात्प्रतिबुद्धस्तु सुपर्णो गमनेप्सया
अथ भ्रष्टतनूजाङ्गमात्मानं ददृशे खगः ४
मांसपिण्डोपमोऽभूत्स मुखपादान्वितः खगः
गालवस्तं तथा दृष्ट्वा विषण्णः पर्यपृच्छत ५

किमिदं भवता प्राप्तमिहागमनजं फलम्
वासोऽयमिह कालं तु कियन्तं नौ भविष्यति ६
किं नु ते मनसा ध्यातमशुभं धर्मदूषणम्
न ह्ययं भवतः स्वल्पो व्यभिचारो भविष्यति ७
सुपर्णोऽथाब्रवीद्विप्रं प्रध्यातं वै मया द्विज
इमां सिद्धामितो नेतुं तत्र यत्र प्रजापतिः ८
यत्र देवो महादेवो यत्र विष्णुः सनातनः
यत्र धर्मश्च यज्ञश्च तत्रेयं निवसेदिति ९
सोऽह भगवतीं याचे प्रणतः प्रियकाम्यया
मयैतन्नाम प्रध्यातं मनसा शोचता किल १०
तदेवं बहुमानात्ते मयेहानीप्सितं कृतम्
सुकृतं दुष्कृतं वा त्वं माहात्म्यात्क्षन्तुमर्हसि ११
सा तौ तदाब्रवीत्तुष्टा पतगेन्द्रद्विजर्षभौ
न भेतव्यं सुपर्णोऽसि सुपर्ण त्यज सम्भ्रमम् १२
निन्दितास्मि त्वया वत्स न च निन्दां क्षमाम्यहम्
लोकेभ्यः स परिभ्रश्येद्यो मां निन्देत पापकृत् १३
हीनयालक्षणैः सर्वैस्तथानिन्दितया मया
आचारं प्रतिगृह्णन्त्या सिद्धिः प्राप्तेयमुत्तमा १४
आचाराल्लभते धर्ममाचाराल्लभते धनम्
आचाराच्छ्रियमाप्नोति आचारो हन्त्यलक्षणम् १५
तदायुष्मन्खगपते यथेष्टं गम्यतामितः
न च ते गर्हणीयापि गर्हितव्याः स्त्रियः क्वचित् १६
भवितासि यथापूर्वं बलवीर्यसमन्वितः
बभूवतुस्ततस्तस्य पक्षौ द्रविणवत्तरौ १७
अनुज्ञातश्च शाण्डिल्या यथागतमुपागमत्
नैव चासादयामास तथारूपांस्तुरंगमान् १८
विश्वामित्रोऽथ तं दृष्ट्वा गालवं चाध्वनि स्थितम्
उवाच वदतां श्रेष्ठो वैनतेयस्य संनिधौ १९
यस्त्वया स्वयमेवार्थः प्रतिज्ञातो मम द्विज
तस्य कालोऽपवर्गस्य यथा वा मन्यते भवान् २०

प्रतीक्षिष्याम्यहं कालमेतावन्तं तथा परम्
यथा संसिध्यते विप्र स मार्गस्तु निशाम्यताम् २१
सुपर्णोऽथाब्रवीद्दीनं गालवं भृशदुःखितम्
प्रत्यक्षं खल्विदानीं मे विश्वामित्रो यदुक्तवान् २२
तदागच्छ द्विजश्रेष्ठ मन्त्रयिष्याव गालव
नादत्त्वा गुरवे शक्यं कृत्स्नमर्थं त्वयासितुम् २३
इति श्रीमहाभारते उद्योगपर्वणि एकादशाधिकशततमोऽध्यायः १११

द्वादशाधिक शततमोऽध्यायः

नारद उवाच
अथाह गालवं दीनं सुपर्णः पततां वरः
निर्मितं वह्निना भूमौ वायुना वैधितं तथा
यस्माद्धिरण्मयं सर्वं हिरण्यं तेन चोच्यते १
धत्ते धारयते चेदमेतस्मात्कारणाद्धनम्
तदेतत्त्रिषु लोकेषु धनं तिष्ठति शाश्वतम् २
नित्यं प्रोष्ठपदाभ्यां च शुक्रे धनपतौ तथा
मनुष्येभ्यः समादत्ते शुक्रश्चित्तार्जितं धनम् ३
अजैकपादहिर्बुध्न्यै रक्ष्यते धनदेन च
एवं न शक्यते लब्धुमलब्धव्यं द्विजर्षभ ४
ऋते च धनमश्वानां नावाप्तिर्विद्यते तव
अर्थं याचात्र राजानं कंचिद्राजर्षिवंशजम्
अपीड्य राजा पौरान्हि यो नौ कुर्यात्कृतार्थिनौ ५
अस्ति सोमान्ववाये मे जातः कश्चिन्नृपः सखा
अभिगच्छावहे तं वै तस्यास्ति विभवो भुवि ६
ययातिर्नाम राजर्षिर्नाहुषः सत्यविक्रमः
स दास्यति मया चोक्तो भवता चार्थितः स्वयम् ७
विभवश्चास्य सुमहानासीद्धनपतेरिव
एवं स तु धनं विद्वान्दानेनैव व्यशोधयत् ८
तथा तौ कथयन्तौ च चिन्तयन्तौ च यत्क्षमम्
प्रतिष्ठाने नरपतिं ययातिं प्रत्युपस्थितौ ९

प्रतिगृह्य च सत्कारमर्घादिं भोजनं वरम्
पृष्टश्चागमने हेतुमुवाच विनतासुतः १०
अयं मे नाहुष सखा गालवस्तपसो निधिः
विश्वामित्रस्य शिष्योऽभूद्वर्षाण्ययुतशो नृप ११
सोऽय तेनाभ्यनुज्ञात उपकारेप्सया द्विजः
तमाह भगवन्कां ते ददानि गुरुदक्षिणाम् १२
असकृत्तेन चोक्तेन किंचिदागतमन्युना
अयमुक्तः प्रयच्छेति जानता विभवं लघु १३
एकतःश्यामकर्णानां शुभ्राणां शुद्धजन्मनाम्
अष्टौ शतानि मे देहि हयानां चन्द्रवर्चसाम् १४
गुर्वर्थो दीयतामेष यदि गालव मन्यसे
इत्येवमाह सक्रोधो विश्वामित्रस्तपोधनः १५
सोऽय शोकेन महता तप्यमानो द्विजर्षभः
अशक्तः प्रतिकर्तुं तद्भवन्तं शरणं गतः १६
प्रतिगृह्य नरव्याघ्र त्वत्तो भिक्षां गतव्यथः
कृत्वापवर्गं गुरवे चरिष्यति महत्तपः १७
तपसः संविभागेन भवन्तमपि योक्ष्यते
स्वेन राजर्षितपसा पूर्णं त्वां पूरयिष्यति १८
यावन्ति रोमाणि हये भवन्ति हि नरेश्वर
तावतो वाजिदा लोकान्प्राप्नुवन्ति महीपते १९
पात्रं प्रतिग्रहस्यायं दातुं पात्रं तथा भवान्
शङ्खे क्षीरमिवासक्तं भवत्वेतत्तथोपमम् २०

इति श्रीमहाभारते उद्योगपर्वणि द्वादशाधिकशततमोऽध्यायः ११२

## त्रयोदशाधिक शततमोऽध्यायः

नारद उवाच
एवमुक्तः सुपर्णेन तथ्यं वचनमुत्तमम्
विमृश्यावहितो राजा निश्चित्य च पुनः पुनः १
यष्टा क्रतुसहस्राणां दाता दानपतिः प्रभुः
ययातिर्वत्सकाशीश इदं वचनमब्रवीत् २

दृष्ट्वा प्रियसखं तार्क्ष्यं गालवं च द्विजर्षभम्
निदर्शनं च तपसो भिक्षां श्लाघ्यां च कीर्तिताम् ३
अतीत्य च नृपानन्यानादित्यकुलसम्भवान्
मत्सकाशमनुप्राप्तावेतौ बुद्धिमवेक्ष्य च ४
अद्य मे सफलं जन्म तारितं चाद्य मे कुलम्
अद्यायं तारितो देशो मम तार्क्ष्य त्वयानघ ५
वक्तुमिच्छामि तु सखे यथा जानासि मां पुरा
न तथा वित्तवानस्मि क्षीणं वित्तं च मे सखे ६
न च शक्तोऽस्मि ते कर्तुं मोघमागमनं खग
न चाशामस्य विप्रर्षेर्वितथां कर्तुमुत्सहे ७
तत्तु दास्यामि यत्कार्यमिदं सम्पादयिष्यति
अभिगम्य हताशो हि निवृत्तो दहते कुलम् ८
नातः परं वैनतेय किंचित्पापिष्ठमुच्यते
यथाशानाशनं लोके देहि नास्तीति वा वचः ९
हताशो ह्यकृतार्थःसन्हतः सम्भावितो नरः
हिनस्ति तस्य पुत्रांश्च पौत्रांश्चाकुर्वतोऽथिनाम् १०
तस्माच्चतुर्णां वंशानां स्थापयित्री सुता मम
इयं सुरसुतप्रख्या सर्वधर्मोपचायिनी ११
सदा देवमनुष्याणामसुराणां च गालव
काङ्क्षिता रूपतो बाला सुता मे प्रतिगृह्यताम् १२
अस्याः शुल्कं प्रदास्यन्ति नृपा राज्यमपि ध्रुवम्
किं पुनः श्यामकर्णानां हयानां द्वे चतुःशते १३
स भवान्प्रतिगृह्णातु ममेमां माधवीं सुताम्
अहं दौहित्रवान्स्यां वै वर एष मम प्रभो १४
प्रतिगृह्य च तां कन्यां गालवः सह पक्षिणा
पुनर्द्रक्ष्याव इत्युक्त्वा प्रतस्थे सह कन्यया १५
उपलब्धमिदं द्वारमश्वानामिति चाण्डजः
उक्त्वा गालवमापृच्छ्य जगाम भवनं स्वकम् १६
गते पतगराजे तु गालवः सह कन्यया
चिन्तयानः क्षमं दाने राज्ञां वै शुल्कतोऽगमत् १७

सोऽगच्छन्मनसेक्ष्वाकुं हर्यश्वं राजसत्तमम्
अयोध्यायां महावीर्यं चतुरङ्गबलान्वितम् १८
कोशधान्यबलोपेतं प्रियपौरं द्विजप्रियम्
प्रजाभिकामं शाम्यन्तं कुर्वाणं तप उत्तमम् १९
तमुपागम्य विप्रः स हर्यश्वं गालवोऽब्रवीत्
कन्येयं मम राजेन्द्र प्रसवैः कुलवर्धिनी २०
इयं शुल्केन भार्यार्थे हर्यश्व प्रतिगृह्यताम्
शुल्कं ते कीर्तयिष्यामि तच्छ्रुत्वा सम्प्रधार्यताम् २१
इति श्रीमहाभारते उद्योगपर्वणि त्रयोदशाधिकशततमोऽध्यायः ११३

## चतुर्दशाधिकशततमोऽध्यायः

नारद उवाच
हर्यश्वस्त्वब्रवीद्राजा विचिन्त्य बहुधा ततः
दीर्घमुष्णं च निःश्वस्य प्रजाहेतोर्नृपोत्तमः १
उन्नतेषून्नता षट्सु सूक्ष्मा सूक्ष्मेषु सप्तसु
गम्भीरा त्रिषु गम्भीरेष्वियं रक्ता च पञ्चसु २
बहुदेवासुरालोका बहुगन्धर्वदर्शना
बहुलक्षणसम्पन्ना बहुप्रसवधारिणी ३
समर्थेयं जनयितुं चक्रवर्तिनमात्मजम्
ब्रूहि शुल्कं द्विजश्रेष्ठ समीक्ष्य विभवं मम ४
गालव उवाच
एकतःश्यामकर्णानां शतान्यष्टौ ददस्व मे
हयानां चन्द्रशुभ्राणां देशजानां वपुष्मताम् ५
ततस्तव भवित्रीयं पुत्राणां जननी शुभा
अरणीव हुताशानां योनिरायतलोचना ६
नारद उवाच
एतच्छ्रुत्वा वचो राजा हर्यश्वः काममोहितः
उवाच गालवं दीनो राजर्षिर्ऋषिसत्तमम् ७
द्वे मे शते संनिहिते हयानां यद्विधास्तव
एष्टव्याः शतशस्त्वन्ये चरन्ति मम वाजिनः ८

सोऽहमेकमपत्यं वै जनयिष्यामि गालव
अस्यामेतं भवान्कामं सम्पादयतु मे वरम् ९
एतच्छ्रुत्वा तु सा कन्या गालवं वाक्यमब्रवीत्
मम दत्तो वरः कश्चित्केनचिद्ब्रह्मवादिना १०
प्रसूत्यन्ते प्रसूत्यन्ते कन्यैव त्वं भविष्यसि
स त्वं ददस्व मां राज्ञे प्रतिगृह्य हयोत्तमान् ११
नृपेभ्यो हि चतुर्भ्यस्ते पूर्णान्यष्टौ शतानि वै
भविष्यन्ति तथा पुत्रा मम चत्वार एव च १२
क्रियतां मम संहारो गुर्वर्थं द्विजसत्तम
एषा तावन्मम प्रज्ञा यथा वा मन्यसे द्विज १३
एवमुक्तस्तु स मुनिः कन्यया गालवस्तदा
हर्यश्वं पृथिवीपालमिदं वचनमब्रवीत् १४
इयं कन्या नरश्रेष्ठ हर्यश्व प्रतिगृह्यताम्
चतुर्भागेन शुल्कस्य जनयस्वैकमात्मजम् १५
प्रतिगृह्य स तां कन्यां गालवं प्रतिनन्द्य च
समये देशकाले च लब्धवान्सुतमीप्सितम् १६
ततो वसुमना नाम वसुभ्यो वसुमत्तरः
वसुप्रख्यो नरपतिः स बभूव वसुप्रदः १७
अथ काले पुनर्धीमान्गालवः प्रत्युपस्थितः
उपसंगम्य चोवाच हर्यश्वं प्रीतमानसम् १८
जातो नृप सुतस्तेऽय बालभास्करसंनिभः
कालो गन्तुं नरश्रेष्ठ भिक्षार्थमपरं नृपम् १९
हर्यश्वः सत्यवचने स्थितः स्थित्वा च पौरुषे
दुर्लभत्वाद्धयानां च प्रददौ माधवीं पुनः २०
माधवी च पुनर्दीप्तां परित्यज्य नृपश्रियम्
कुमारी कामतो भूत्वा गालवं पृष्ठतोऽन्वगात् २१
त्वय्येव तावत्तिष्ठन्तु हया इत्युक्तवान्द्विजः
प्रययौ कन्यया सार्धं दिवोदासं प्रजेश्वरम् २२

इति श्रीमहाभारते उद्योगपर्वणि चतुर्दशाधिकशततमोऽध्यायः ११४

## पञ्चदशाधिक शततमोऽध्यायः

गालव उवाच
महावीर्यो महीपालः काशीनामीश्वरः प्रभुः
दिवोदास इति ख्यातो भैमसेनिर्नराधिपः १
तत्र गच्छावहे भद्रे शनैरागच्छ मा शुचः
धार्मिकः संयमे युक्तः सत्यश्चैव जनेश्वरः २
नारद उवाच
तमुपागम्य स मुनिर्न्यायतस्तेन सत्कृतः
गालवः प्रसवस्यार्थे तं नृपं प्रत्यचोदयत् ३
दिवोदास उवाच
श्रुतमेतन्मया पूर्वं किमुक्त्वा विस्तरं द्विज
काङ्क्षितो हि मयैषोऽथ श्रुत्वैतद्द्विजसत्तम ४
एतच्च मे बहुमतं यदुत्सृज्य नराधिपान्
मामेवमुपयातोऽसि भावि चैतदसंशयम् ५
स एव विभवोऽस्माकमश्वानामपि गालव
अहमप्येकमेवास्यां जनयिष्यामि पार्थिवम् ६
तथेत्युक्त्वा द्विजश्रेष्ठः प्रादात्कन्यां महीपतेः
विधिपूर्वं च तां राजा कन्यां प्रतिगृहीतवान् ७
रेमे स तस्यां राजर्षिः प्रभावत्यां यथा रविः
स्वाहायां च यथा वह्निर्यथा शच्यां च वासवः ८
यथा चन्द्रश्च रोहिण्यां यथा धूमोर्णया यमः
वरुणश्च यथा गौर्यां यथा चर्द्ध्यां धनेश्वरः ९
यथा नारायणो लक्ष्म्यां जाह्नव्यां च यथोदधिः
यथा रुद्रश्च रुद्राण्यां यथा वेद्यां पितामह १०
अदृश्यन्त्यां च वासिष्ठो वसिष्ठश्चाक्षमालया
च्यवनश्च सुकन्यायां पुलस्त्यः संध्यया यथा ११
अगस्त्यश्चापि वैदर्भ्यां सावित्र्यां सत्यवान्यथा
यथा भृगुः पुलोमायामदित्यां कश्यपो यथा १२
रेणुकायां यथार्चीको हैमवत्यां च कौशिकः
बृहस्पतिश्च तारायां शुक्रश्च शतपर्वया १३

यथा भूम्यां भूमिपतिरुर्वश्यां च पुरूरवाः
ऋचीकः सत्यवत्यां च सरस्वत्यां यथा मनुः १४
तथा तु रममाणस्य दिवोदासस्य भूपतेः
माधवी जनयामास पुत्रमेकं प्रतर्दनम् १५
अथाजगाम भगवान्दिवोदासं स गालवः
समये समनुप्राप्ते वचनं चेदमब्रवीत् १६
निर्यातयतु मे कन्यां भवांस्तिष्ठन्तु वाजिनः
यावदन्यत्र गच्छामि शुल्कार्थं पृथिवीपते १७
दिवोदासोऽथ धर्मात्मा समये गालवस्य ताम्
कन्यां निर्यातयामास स्थितः सत्ये महीपतिः १८
इति श्रीमहाभारते उद्योगपर्वणि पञ्चदशाधिकशततमोऽध्यायः ११५

## षोडशाधिकशततमोऽध्यायः

नारद उवाच
तथैव सा श्रियं त्यक्त्वा कन्या भूत्वा यशस्विनी
माधवी गालवं विप्रमन्वयात्सत्यसंगरा १
गालवो विमृशन्नेव स्वकार्यगतमानसः
जगाम भोजनगरं द्रष्टुमौशीनरं नृपम् २
तमुवाचाथ गत्वा स नृपतिं सत्यविक्रमम्
इयं कन्या सुतौ द्वौ ते जनयिष्यति पार्थिवौ ३
अस्यां भवानवाप्तार्थो भविता प्रेत्य चेह च
सोमार्कप्रतिसंकाशौ जनयित्वा सुतौ नृप ४
शुल्कं तु सर्वधर्मज्ञ हयानां चन्द्रवर्चसाम्
एकतःश्यामकर्णानां देयं मह्यं चतुःशतम् ५
गुर्वर्थोऽय समारम्भो न हयैः कृत्यमस्ति मे
यदि शक्यं महाराज क्रियतां मा विचार्यताम् ६
अनपत्योऽसि राजर्षे पुत्रौ जनय पार्थिव
पितॄन्पुत्रप्लवेन त्वमात्मानं चैव तारय ७
न पुत्रफलभोक्ता हि राजर्षे पात्यते दिवः
न याति नरकं घोरं यत्र गच्छन्त्यनात्मजाः ८

एतच्चान्यच्च विविधं श्रुत्वा गालवभाषितम्
उशीनरः प्रतिवचो ददौ तस्य नराधिपः ९
श्रुतवानस्मि ते वाक्यं यथा वदसि गालव
विधिस्तु बलवान्ब्रह्मन्प्रवणं हि मनो मम १०
शते द्वे तु ममाश्वानामीदृशानां द्विजोत्तम
इतरेषां सहस्राणि सुबहूनि चरन्ति मे ११
अहमप्येकमेवास्यां जनयिष्यामि गालव
पुत्रं द्विज गतं मार्गं गमिष्यामि परैरहम् १२
मूल्येनापि समं कुर्यां तवाहं द्विजसत्तम
पौरजानपदार्थं तु ममार्थो नात्मभोगतः १३
कामतो हि धनं राजा पारक्यं यः प्रयच्छति
न स धर्मेण धर्मात्मन्युज्यते यशसा न च १४
सोऽह प्रतिग्रहीष्यामि ददात्वेतां भवान्मम
कुमारीं देवगर्भाभामेकपुत्रभवाय मे १५
तथा तु बहुकल्याणमुक्तवन्तं नराधिपम्
उशीनरं द्विजश्रेष्ठो गालवः प्रत्यपूजयत् १६
उशीनरं प्रतिग्राह्य गालवः प्रययौ वनम्
रेमे स तां समासाद्य कृतपुण्य इव श्रियम् १७
कन्दरेषु च शैलानां नदीनां निर्झरेषु च
उद्यानेषु विचित्रेषु वनेषूपवनेषु च १८
हर्म्येषु रमणीयेषु प्रासादशिखरेषु च
वातायनविमानेषु तथा गर्भगृहेषु च १९
ततोऽस्य समये जज्ञे पुत्रो बालरविप्रभः
शिबिर्नाम्नाभिविख्यातो यः स पार्थिवसत्तमः २०
उपस्थाय स तं विप्रो गालवः प्रतिगृह्य च
कन्यां प्रयातस्तां राजन्दृष्टवान्विनतात्मजम् २१

इति श्रीमहाभारते उद्योगपर्वणि षोडशाधिकशततमोऽध्यायः ११६

## सप्तदशाधिक शततमोऽध्यायः

नारद उवाच

गालवं वैनतेयोऽथ प्रहसन्निदमब्रवीत्
दिष्ट्या कृतार्थं पश्यामि भवन्तमिह वै द्विज १
गालवस्तु वचः श्रुत्वा वैनतेयेन भाषितम्
चतुर्भागावशिष्टं तदाचख्यौ कार्यमस्य हि २
सुपर्णस्त्वब्रवीदेनं गालवं पततां वरः
प्रयत्नस्ते न कर्तव्यो नैष सम्पत्स्यते तव ३
पुरा हि कान्यकुब्जे वै गाधेः सत्यवतीं सुताम्
भार्यार्थेऽवरयत्कन्यामृचीकस्तेन भाषितः ४
एकतःश्यामकर्णानां हयानां चन्द्रवर्चसाम्
भगवन्दीयतां मह्यं सहस्रमिति गालव ५
ऋचीकस्तु तथेत्युक्त्वा वरुणस्यालयं गतः
अश्वतीर्थे हयाँल्लब्ध्वा दत्तवान्पार्थिवाय वै ६
इष्ट्वा ते पुण्डरीकेण दत्ता राज्ञा द्विजातिषु
तेभ्यो द्वे द्वे शते क्रीत्वा प्राप्तास्ते पार्थिवैस्तदा ७
अपराण्यपि चत्वारि शतानि द्विजसत्तम
नीयमानानि संतारे हृतान्यासन्वितस्तया
एवं न शक्यमप्राप्यं प्राप्तुं गालव कर्हिचित् ८
इमामश्वशताभ्यां वै द्वाभ्यां तस्मै निवेदय
विश्वामित्राय धर्मात्मन्षड्भिरश्वशतैः सह
ततोऽसि गतसम्मोहः कृतकृत्यो द्विजर्षभ ९
गालवस्तं तथेत्युक्त्वा सुपर्णसहितस्ततः
आदायाश्वांश्च कन्यां च विश्वामित्रमुपागमत् १०
गालव उवाच
अश्वानां काङ्क्षितार्थानां षडिमानि शतानि वै
शतद्वयेन कन्येयं भवता प्रतिगृह्यताम् ११
अस्यां राजर्षिभिः पुत्रा जाता वै धार्मिकास्त्रयः
चतुर्थं जनयत्वेकं भवानपि नरोत्तम १२
पूर्णान्येवं शतान्यष्टौ तुरगाणां भवन्तु ते
भवतो ह्यनृणो भूत्वा तपः कुर्यां यथासुखम् १३
नारद उवाच

विश्वामित्रस्तु तं दृष्ट्वा गालवं सह पक्षिणा
कन्यां च तां वरारोहामिदमित्यब्रवीद्वचः १४
किमियं पूर्वमेवेह न दत्ता मम गालव
पुत्रा ममैव चत्वारो भवेयुः कुलभावनाः १५
प्रतिगृह्णामि ते कन्यामेकपुत्रफलाय वै
अश्वाश्चाश्रममासाद्य तिष्ठन्तु मम सर्वशः १६
स तया रममाणोऽथ विश्वामित्रो महाद्युतिः
आत्मजं जनयामास माधवीपुत्रमष्टकम् १७
जातमात्रं सुतं तं च विश्वामित्रो महाद्युतिः
संयोज्यार्थैस्तथा धर्मैरश्वैस्तैः समयोजयत् १८
अथाष्टकः पुरं प्रायात्तदा सोमपुरप्रभम्
निर्यात्य कन्यां शिष्याय कौशिकोऽपि वनं ययौ १९
गालवोऽपि सुपर्णेन सह निर्यात्य दक्षिणाम्
मनसाभिप्रतीतेन कन्यामिदमुवाच ह २०
जातो दानपतिः पुत्रस्त्वया शूरस्तथापरः
सत्यधर्मरतश्चान्यो यज्वा चापि तथा परः २१
तदागच्छ वरारोहे तारितस्ते पिता सुतैः
चत्वारश्चैव राजानस्तथाहं च सुमध्यमे २२
गालवस्त्वभ्यनुज्ञाय सुपर्णं पन्नगाशनम्
पितुर्निर्यात्य तां कन्यां प्रययौ वनमेव ह २३

इति श्रीमहाभारते उद्योगपर्वणि सप्तदशाधिकशततमोऽध्यायः ११७

## अष्टादशाधिकशततमोऽध्यायः

नारद उवाच
स तु राजा पुनस्तस्याः कर्तुकामः स्वयंवरम्
उपगम्याश्रमपदं गङ्गायमुनसंगमे १
गृहीतमाल्यदामां तां रथमारोप्य माधवीम्
पूरुर्यदुश्च भगिनीमाश्रमे पर्यधावताम् २
नागयक्षमनुष्याणां पतत्रिमृगपक्षिणाम्
शैलद्रुमवनौकानामासीत्तत्र समागमः ३

नानापुरुषदेशानामीश्वरैश्च समाकुलम्
ऋषिभिर्ब्रह्मकल्पैश्च समन्तादावृतं वनम् ४
निर्दिश्यमानेषु तु सा वरेषु वरवर्णिनी
वरानुत्क्रम्य सर्वांस्तान्वरं वृतवती वनम् ५
अवतीर्य रथात्कन्या नमस्कृत्वा च बन्धुषु
उपगम्य वनं पुण्यं तपस्तेपे ययातिजा ६
उपवासैश्च विविधैर्दीक्षाभिर्नियमैस्तथा
आत्मनो लघुतां कृत्वा बभूव मृगचारिणी ७
वैडूर्याङ्कुरकल्पानि मृदूनि हरितानि च
चरन्ती शष्पमुख्यानि तिक्तानि मधुराणि च ८
स्रवन्तीनां च पुण्यानां सुरसानि शुचीनि च
पिबन्ती वारिमुख्यानि शीतानि विमलानि च ९
वनेषु मृगराजेषु सिंहविप्रोषितेषु च
दावाग्निविप्रमुक्तेषु शून्येषु गहनेषु च १०
चरन्ती हरिणैः सार्धं मृगीव वनचारिणी
चचार विपुलं धर्मं ब्रह्मचर्येण संवृता ११
ययातिरपि पूर्वेषां राज्ञां वृत्तमनुष्ठितः
बहुवर्षसहस्रायुरयुजत्कालधर्मणा १२
पूरुर्यदुश्च द्वौ वंशौ वर्धमानौ नरोत्तमौ
ताभ्यां प्रतिष्ठितो लोके परलोके च नाहुषः १३
महीयते नरपतिर्ययातिः स्वर्गमास्थितः
महर्षिकल्पो नृपतिः स्वर्गाग्र्यफलभुग्विभुः १४
बहुवर्षसहस्राख्ये काले बहुगुणे गते
राजर्षिषु निषण्णेषु महीयःसु महर्षिषु १५
अवमेने नरान्सर्वान्देवानृषिगणांस्तथा
ययातिर्मूढविज्ञानो विस्मयाविष्टचेतनः १६
ततस्तं बुबुधे देवः शक्रो बलनिषूदनः
ते च राजर्षयः सर्वे धिग्धिगित्येवमब्रुवन् १७
विचारश्च समुत्पन्नो निरीक्ष्य नहुषात्मजम्
को न्वयं कस्य वा राज्ञः कथं वा स्वर्गमागतः १८

कर्मणा केन सिद्धोऽय क्व वानेन तपश्चितम्
कथं वा ज्ञायते स्वर्गे केन वा ज्ञायतेऽप्युत १९
एवं विचारयन्तस्ते राजानं स्वर्गवासिनः
दृष्ट्वा पप्रच्छुरन्योन्यं ययातिं नृपतिं प्रति २०
विमानपालाः शतशः स्वर्गद्वाराभिरक्षिणः
पृष्टा आसनपालाश्च न जानीमेत्यथाब्रुवन् २१
सर्वे ते ह्यावृतज्ञाना नाभ्यजानन्त तं नृपम्
स मुहूर्तादथ नृपो हतौजा अभवत्तदा २२
इति श्रीमहाभारते उद्योगपर्वणि अष्टादशाधिकशततमोऽध्यायः ११८

## एकोनविंशत्यधिकशततमोऽध्यायः

नारद उवाच
अथ प्रचलितः स्थानादासनाच्च परिच्युतः
कम्पितेनैव मनसा धर्षितः शोकवह्निना १
म्लानस्रग्भ्रष्टविज्ञानः प्रभ्रष्टमुकुटाङ्गदः
विघूर्णन्स्रस्तसर्वाङ्गः प्रभ्रष्टाभरणाम्बरः २
अदृश्यमानस्तान्पश्यन्नपश्यंश्च पुनः पुनः
शून्यः शून्येन मनसा प्रपतिष्यन्महीतलम् ३
किं मया मनसा ध्यातमशुभं धर्मदूषणम्
येनाहं चलितः स्थानादिति राजा व्यचिन्तयत् ४
ते तु तत्रैव राजानः सिद्धाश्चाप्सरसस्तथा
अपश्यन्त निरालम्बं ययातिं तं परिच्युतम् ५
अथैत्य पुरुषः कश्चित्क्षीणपुण्यनिपातकः
ययातिमब्रवीद्राजन्देवराजस्य शासनात् ६
अतीव मदमत्तस्त्वं न कंचिन्नावमन्यसे
मानेन भ्रष्टः स्वर्गस्ते नार्हस्त्वं पार्थिवात्मज
न च प्रज्ञायसे गच्छ पतस्वेति तमब्रवीत् ७
पतेयं सत्स्विति वचस्त्रिरुक्त्वा नहुषात्मजः
पतिष्यंश्चिन्तयामास गतिं गतिमतां वरः ८
एतस्मिन्नेव काले तु नैमिषे पार्थिवर्षभान्

चतुरोऽपश्यत नृपस्तेषां मध्ये पपात सः ९
प्रतर्दनो वसुमनाः शिबिरौशीनरोऽष्टकः
वाजपेयेन यज्ञेन तर्पयन्ति सुरेश्वरम् १०
तेषामध्वरजं धूमं स्वर्गद्वारमुपस्थितम्
ययातिरुपजिघ्रन्वै निपपात महीं प्रति ११
भूमौ स्वर्गे च सम्बद्धां नदीं धूममयीं नृपः
सगङ्गामिव गच्छन्तीमालम्ब्य जगतीपतिः १२
श्रीमत्स्ववभृथाग्र्येषु चतुर्षु प्रतिबन्धुषु
मध्ये निपतितो राजा लोकपालोपमेषु च १३
चतुर्षु हुतकल्पेषु राजसिंहमहाग्निषु
पपात मध्ये राजर्षिर्ययातिः पुण्यसंक्षये १४
तमाहुः पार्थिवाः सर्वे प्रतिमानमिव श्रियः
कोभवान्कस्य वा बन्धुर्देशस्य नगरस्य वा १५
यक्षो वाप्यथ वा देवो गन्धर्वो राक्षसोऽपि वा
न हि मानुषरूपोऽसि को वार्थः काङ्क्षितस्त्वया १६
ययातिरुवाच
ययातिरस्मि राजर्षिः क्षीणपुण्यच्युतो दिवः
पतेयं सत्स्विति ध्यायन्भवत्सु पतितस्ततः १७
राजान ऊचुः
सत्यमेतद्भवतु ते काङ्क्षितं पुरुषर्षभ
सर्वेषां नः क्रतुफलं धर्मश्च प्रतिगृह्यताम् १८
ययातिरुवाच
नाहं प्रतिग्रहधनो ब्राह्मणः क्षत्रियो ह्यहम्
न च मे प्रवणा बुद्धिः परपुण्यविनाशने १९
नारद उवाच
एतस्मिन्नेव काले तु मृगचर्याक्रमागताम्
माधवीं प्रेक्ष्य राजानस्तेऽभिवाद्येदमब्रुवन् २०
किमागमनकृत्यं ते किं कुर्मः शासनं तव
आज्ञाप्या हि वयं सर्वे तव पुत्रास्तपोधने २१
तेषां तद्भाषितं श्रुत्वा माधवी परया मुदा

पितरं समुपागच्छद्ययातिं सा ववन्द च २२
दृष्ट्वा मूर्ध्ना नतान्पुत्रांस्तापसी वाक्यमब्रवीत्
दौहित्रास्तव राजेन्द्र मम पुत्रा न ते पराः
इमे त्वां तारयिष्यन्ति दिष्टमेतत्पुरातनम् २३
अहं ते दुहिता राजन्माधवी मृगचारिणी
मयाप्युपचितो धर्मस्ततोऽध प्रतिगृह्यताम् २४
यस्माद्राजन्नराः सर्वे अपत्यफलभागिनः
तस्मादिच्छन्ति दौहित्रान्यथा त्वं वसुधाधिप २५
ततस्ते पार्थिवाः सर्वे शिरसा जननीं तदा
अभिवाद्य नमस्कृत्य मातामहमथाब्रुवन् २६
उच्चैरनुपमैः स्निग्धैः स्वरैरापूर्य मेदिनीम्
मातामहं नृपतयस्तारयन्तो दिवश्च्युतम् २७
अथ तस्मादुपगतो गालवोऽप्याह पार्थिवम्
तपसो मेऽष्टभागेन स्वर्गमारोहतां भवान् २८
इति श्रीमहाभारते उद्योगपर्वणि एकोनविंशत्यधिकशततमोऽध्यायः ११९

## विंशत्यधिकशततमोऽध्यायः

नारद उवाच
प्रत्यभिज्ञातमात्रोऽथ सद्भिस्तैर्नरपुङ्गवः
ययातिर्दिव्यसंस्थानो बभूव विगतज्वरः १
दिव्यमाल्याम्बरधरो दिव्याभरणभूषितः
दिव्यगन्धगुणोपेतो न पृथ्वीमस्पृशत्पदा २
ततो वसुमनाः पूर्वमुच्चैरुच्चारयन्वचः
ख्यातो दानपतिर्लोके व्याजहार नृपं तदा ३
प्राप्तवानस्मि यल्लोके सर्ववर्णेष्वगर्हया
तदप्यथ च दास्यामि तेन संयुज्यतां भवान् ४
यत्फलं दानशीलस्य क्षमाशीलस्य यत्फलम्
यच्च मे फलमाधाने तेन संयुज्यतां भवान् ५
ततः प्रतर्दनोऽप्याह वाक्यं क्षत्रियपुङ्गवः
यथा धर्मरतिर्नित्यं नित्यं युद्धपरायणः ६

प्राप्तवानस्मि यल्लोके क्षत्रवंशोद्भवं यशः
वीरशब्दफलं चैव तेन संयुज्यतां भवान् ७
शिबिरौशीनरो धीमानुवाच मधुरां गिरम्
यथा बालेषु नारीषु वैहार्येषु तथैव च ८
संगरेषु निपातेषु तथापद्व्यसनेषु च
अनृतं नोक्तपूर्वं मे तेन सत्येन खं व्रज ९
यथा प्राणांश्च राज्यं च राजन्कर्म सुखानि च
त्यजेयं न पुनः सत्यं तेन सत्येन खं व्रज १०
यथा सत्येन मे धर्मो यथा सत्येन पावकः
प्रीतः शक्रश्च सत्येन तेन सत्येन खं व्रज ११
अष्टकस्त्वथ राजर्षिः कौशिको माधवीसुतः
अनेकशतयज्वानं वचनं प्राह धर्मवित् १२
शतशः पुण्डरीका मे गोसवाश्च चिताः प्रभो
क्रतवो वाजपेयाश्च तेषां फलमवाप्नुहि १३
न मे रत्नानि न धनं न तथान्ये परिच्छदाः
क्रतुष्वनुपयुक्तानि तेन सत्येन खं व्रज १४
यथा यथा हि जल्पन्ति दौहित्रास्तं नराधिपम्
तथा तथा वसुमतीं त्यक्त्वा राजा दिवं ययौ १५
एवं सर्वे समस्तास्ते राजानः सुकृतैस्तदा
ययातिं स्वर्गतो भ्रष्टं तारयामासुरञ्जसा १६
दौहित्राः स्वेन धर्मेण यज्ञदानकृतेन वै
चतुर्षु राजवंशेषु सम्भूताः कुलवर्धनाः
मातामहं महाप्राज्ञं दिवमारोपयन्त ते १७
राजान ऊचुः
राजधर्मगुणोपेताः सर्वधर्मगुणान्विताः
दौहित्रास्ते वयं राजन्दिवमारोह पार्थिव १८
इति श्रीमहाभारते उद्योगपर्वणि विंशत्यधिकशततमोऽध्यायः १२०

एक विंशत्यधिक शततमोऽध्यायः

नारद उवाच

सद्भिरारोपितः स्वर्गं पार्थिवैर्भूरिदक्षिणैः
अभ्यनुज्ञाय दौहित्रान्ययातिर्दिवमास्थितः १
अभिवृष्टश्च वर्षेण नानापुष्पसुगन्धिना
परिष्वक्तश्च पुण्येन वायुना पुण्यगन्धिना २
अचलं स्थानमारुह्य दौहित्रफलनिर्जितम्
कर्मभिः स्वैरुपचितो जज्वाल परया श्रिया ३
उपगीतोपनृत्तश्च गन्धर्वाप्सरसां गणैः
प्रीत्या प्रतिगृहीतश्च स्वर्गे दुन्दुभिनिस्वनैः ४
अभिष्टुतश्च विविधैर्देवराजर्षिचारणैः
अर्चितश्चोत्तमार्घेण दैवतैरभिनन्दितः ५
प्राप्तः स्वर्गफलं चैव तमुवाच पितामहः
निर्वृतंशान्तमनसं वचोभिस्तर्पयन्निव ६
चतुष्पादस्त्वया धर्मश्चितो लोक्येन कर्मणा
अक्षयस्तव लोकोऽय कीर्तिश्चैवाक्षया दिवि
पुनस्तवाद्य राजर्षे सुकृतेनेह कर्मणा ७
आवृतं तमसा चेतः सर्वेषां स्वर्गवासिनाम्
येन त्वां नाभिजानन्ति ततोऽज्ञात्वासि पातितः ८
प्रीत्यैव चासि दौहित्रैस्तारितस्त्वमिहागतः
स्थानं च प्रतिपन्नोऽसि कर्मणा स्वेन निर्जितम्
अचलं शाश्वतं पुण्यमुत्तमं ध्रुवमव्ययम् ९
ययातिरुवाच
भगवन्संशयो मेऽस्ति कश्चित्तं छेत्तुमर्हसि
न ह्यन्यमहमर्हामि प्रष्टुं लोकपितामह १०
बहुवर्षसहस्रान्तं प्रजापालनवर्धितम्
अनेकक्रतुदानौघैरर्जितं मे महत्फलम् ११
कथं तदल्पकालेन क्षीणं येनास्मि पातितः
भगवन्वेत्थ लोकांश्च शाश्वतान्मम निर्जितान् १२
पितामह उवाच
बहुवर्षसहस्रान्तं प्रजापालनवर्धितम्
अनेकक्रतुदानौघैर्यत्त्वयोपार्जितं फलम् १३

तदनेनैव दोषेण क्षीणं येनासि पातितः
अभिमानेन राजेन्द्र धिक्कृतः स्वर्गवासिभिः १४
नायं मानेन राजर्षे न बलेन न हिंसया
न शाठ्येन न मायाभिर्लोको भवति शाश्वतः १५
नावमान्यास्त्वया राजन्नवरोत्कृष्टमध्यमाः
न हि मानप्रदग्धानां कश्चिदस्ति समः क्वचित् १६
पतनारोहणमिदं कथयिष्यन्ति ये नराः
विषमाण्यपि ते प्राप्तास्तरिष्यन्ति न संशयः १७
नारद उवाच
एष दोषोऽभिमानेन पुरा प्राप्तो ययातिना
निर्बन्धतश्चातिमात्रं गालवेन महीपते १८
श्रोतव्यं हितकामानां सुहृदां भूतिमिच्छताम्
न कर्तव्यो हि निर्बन्धो निर्बन्धो हि क्षयोदयः १९
तस्मात्त्वमपि गान्धारे मानं क्रोधं च वर्जय
संधत्स्व पाण्डवैर्वीर संरम्भं त्यज पार्थिव २०
ददाति यत्पार्थिव यत्करोति यद्वा तपस्तप्यति यज्जुहोति
न तस्य नाशोऽस्ति न चापकर्षो नान्यस्तदश्नाति स एव कर्ता २१
इदं महाख्यानमनुत्तमं मतं बहुश्रुतानां गतरोषरागिणाम्
समीक्ष्य लोके बहुधा प्रधाविता त्रिवर्गदृष्टिः पृथिवीमुपाश्नुते २२
इति श्रीमहाभारते उद्योगपर्वणि एकविंशत्यधिकशततमोऽध्यायः १२१

## द्वाविंशत्यधिक शततमोऽध्यायः

धृतराष्ट्र उवाच
भगवन्नेवमेवैतद्यथा वदसि नारद
इच्छामि चाहमप्येवं न त्वीशो भगवन्नहम् १
वैशम्पायन उवाच
एवमुक्त्वा ततः कृष्णमभ्यभाषत भारत
स्वर्ग्यं लोक्यं च मामात्थ धर्म्यं न्याय्यं च केशव २
न त्वहं स्ववशस्तात क्रियमाणं न मे प्रियम्
अङ्ग दुर्योधनं कृष्ण मन्दं शास्त्रातिगं मम ३

अनुनेतुं महाबाहो यतस्व पुरुषोत्तम
सुहृत्कार्यं तु सुमहत्कृतं ते स्याज्जनार्दन ४
ततोऽभ्यावृत्य वार्ष्णेयो दुर्योधनममर्षणम्
अब्रवीन्मधुरां वाचं सर्वधर्मार्थतत्त्ववित् ५
दुर्योधन निबोधेदं मद्वाक्यं कुरुसत्तम
समर्थं ते विशेषेण सानुबन्धस्य भारत ६
महाप्राज्ञ कुले जातः साध्वेतत्कर्तुमर्हसि
श्रुतवृत्तोपसम्पन्नः सर्वैः समुदितो गुणैः ७
दौष्कुलेया दुरात्मानो नृशंसा निरपत्रपाः
त एतदीदृशं कुर्युर्यथा त्वं तात मन्यसे ८
धर्मार्थयुक्ता लोकेऽस्मिन्प्रवृत्तिर्लक्ष्यते सताम्
असतां विपरीता तु लक्ष्यते भरतर्षभ ९
विपरीता त्वियं वृत्तिरसकृल्लक्ष्यते त्वयि
अधर्मश्चानुबन्धोऽत्र घोरः प्राणहरो महान् १०
अनेकशस्त्वन्निमित्तमयशस्यं च भारत
तमनर्थं परिहरन्नात्मश्रेयः करिष्यसि ११
भ्रातॄणामथ भृत्यानां मित्राणां च परंतप
अधर्म्यादयशस्याच्च कर्मणस्त्वं प्रमोक्ष्यसे १२
प्राज्ञैः शूरैर्महोत्साहैरात्मवद्भिर्बहुश्रुतैः
संधत्स्व पुरुषव्याघ्र पाण्डवैर्भरतर्षभ १३
तद्धितं च प्रियं चैव धृतराष्ट्रस्य धीमतः
पितामहस्य द्रोणस्य विदुरस्य महामतेः १४
कृपस्य सोमदत्तस्य बाह्लीकस्य च धीमतः
अश्वत्थाम्नो विकर्णस्य संजयस्य विशां पते १५
ज्ञातीनां चैव भूयिष्ठं मित्राणां च परंतप
शमे शर्म भवेत्तात सर्वस्य जगतस्तथा १६
ह्रीमानसि कुले जातः श्रुतवानानृशंसवान्
तिष्ठ तात पितुः शास्त्रे मातुश्च भरतर्षभ १७
एतच्छ्रेयो हि मन्यन्ते पिता यच्छास्ति भारत
उत्तमापद्गतः सर्वः पितुः स्मरति शासनम् १८

रोचते ते पितुस्तात पाण्डवैः सह संगमः
सामात्यस्य कुरुश्रेष्ठ तत्तुभ्यं तात रोचताम् १९
श्रुत्वा यः सुहृदां शास्त्रं मर्त्यो न प्रतिपद्यते
विपाकान्ते दहत्येनं किम्पाकमिव भक्षितम् २०
यस्तु निःश्रेयसं वाक्यं मोहान्न प्रतिपद्यते
स दीर्घसूत्रो हीनार्थः पश्चात्तापेन युज्यते २१
यस्तु निःश्रेयसं श्रुत्वा प्राप्तमेवाभिपद्यते
आत्मनोमतमुत्सृज्य स लोके सुखमेधते २२
योऽथकामस्य वचनं प्रातिकूल्यान्न मृष्यते
शृणोति प्रतिकूलानि द्विषतां वशमेति सः २३
सतां मतमतिक्रम्य योऽसतां वर्तते मते
शोचन्ते व्यसने तस्य सुहृदो नचिरादिव २४
मुख्यानमात्यानुत्सृज्य यो निहीनान्निषेवते
स घोरामापदं प्राप्य नोत्तारमधिगच्छति २५
योऽसत्सेवी वृथाचारो न श्रोता सुहृदां सदा
परान्वृणीते स्वान्द्वेष्टि तं गौः शपति भारत २६
स त्वं विरुध्य तैर्वीरैरन्येभ्यस्त्राणमिच्छसि
अशिष्टेभ्योऽसमर्थेभ्यो मूढेभ्यो भरतर्षभ २७
को हि शक्रसमाञ्ज्ञातीनतिक्रम्य महारथान्
अन्येभ्यस्त्राणमाशंसेत्त्वदन्यो भुवि मानवः २८
जन्मप्रभृति कौन्तेया नित्यं विनिकृतास्त्वया
न च ते जातु कुप्यन्ति धर्मात्मानो हि पाण्डवः २९
मिथ्याप्रचरितास्तात जन्मप्रभृति पाण्डवाः
त्वयि सम्यङ्महाबाहो प्रतिपन्ना यशस्विनः ३०
त्वयापि प्रतिपत्तव्यं तथैव भरतर्षभ
स्वेषु बन्धुषु मुख्येषु मा मन्युवशमन्वगाः ३१
त्रिवर्गयुक्ता प्राज्ञानामारम्भा भरतर्षभ
धर्मार्थावनुरुध्यन्ते त्रिवर्गासम्भवे नराः ३२
पृथक्तु विनिविष्टानां धर्मं धीरोऽनुरुध्यते
मध्यमोऽथ कलि बालः काममेवानुरुध्यते ३३

इन्द्रियैः प्रसृतो लोभाद्धर्मं विप्रजहाति यः
कामार्थावनुपायेन लिप्समानो विनश्यति ३४
कामार्थौ लिप्समानस्तु धर्ममेवादितश्चरेत्
न हि धर्मादपैत्यर्थः कामो वापि कदाचन ३५
उपायं धर्ममेवाहुस्त्रिवर्गस्य विशां पते
लिप्समानो हि तेनाशुकक्षेऽग्निरिव वर्धते ३६
स त्वं तातानुपायेन लिप्ससे भरतर्षभ
आधिराज्यं महद्दीप्तं प्रथितं सर्वराजसु ३७
आत्मानं तक्षति ह्येष वनं परशुना यथा
यः सम्यग्वर्तमानेषु मिथ्या राजन्प्रवर्तते ३८
न तस्यहि मतिं छिन्द्याद्यस्य नेच्छेत्पराभवम्
अविच्छिन्नस्य धीरस्य कल्याणे धीयते मतिः ३९
त्यक्तात्मानं न बाधेत त्रिषु लोकेषु भारत
अप्यन्यं प्राकृतं किंचित्किमु तान्पाण्डवर्षभान् ४०
अमर्षवशमापन्नो न किंचिद्बुध्यते नरः
छिद्यते ह्याततं सर्वं प्रमाणं पश्य भारत ४१
श्रेयस्ते दुर्जनात्तात पाण्डवैः सह संगमः
तैर्हि सम्प्रीयमाणस्त्वं सर्वान्कामानवाप्स्यसि ४२
पाण्डवैर्निर्जितां भूमिं भुञ्जानो राजसत्तम
पाण्डवान्पृष्ठतः कृत्वा त्राणमाशंससेऽन्यतः ४३
दुःशासने दुर्विषहे कर्णे चापि ससौबले
एतेष्वैश्वर्यमाधाय भूतिमिच्छसि भारत ४४
न चैते तव पर्याप्ता ज्ञाने धर्मार्थयोस्तथा
विक्रमे चाप्यपर्याप्ताः पाण्डवान्प्रति भारत ४५
न हीमे सर्वराजानः पर्याप्ताः सहितास्त्वया
क्रुद्धस्य भीमसेनस्य प्रेक्षितुं मुखमाहवे ४६
इदं संनिहितं तात समग्रं पार्थिवं बलम्
अयं भीष्मस्तथा द्रोणः कर्णश्चायं तथा कृपः ४७
भूरिश्रवाः सौमदत्तिरश्वत्थामा जयद्रथः
अशक्ताः सर्व एवैते प्रतियोद्धुं धनंजयम् ४८

अजेयो ह्यर्जुनः क्रुद्धः सर्वैरपि सुरासुरैः
मानुषैरपि गन्धर्वैर्मा युद्धे चेत आधिथाः ४९
दृश्यतां वा पुमान्कश्चित्समग्रे पार्थिवे बले
योऽजुनं समरे प्राप्य स्वस्तिमानाव्रजेद्गृहान् ५०
किं ते जनक्षयेणेह कृतेन भरतर्षभ
यस्मिञ्जिते जितं ते स्यात्पुमानेकः स दृश्यताम् ५१
यः स देवान्सगन्धर्वान्सयक्षासुरपन्नगान्
अजयत्खाण्डवप्रस्थे कस्तं युध्येत मानवः ५२
तथा विराटनगरे श्रूयते महदद्भुतम्
एकस्य च बहूनां च पर्याप्तं तन्निदर्शनम् ५३
तमजेयमनाधृष्यं विजेतुं जिष्णुमच्युतम्
आशंससीह समरे वीरमर्जुनमूर्जितम् ५४
मद्द्वितीयं पुनः पार्थं कः प्रार्थयितुमर्हति
युद्धे प्रतीपमायान्तमपि साक्षात्पुरंदरः ५५
बाहुभ्यामुद्धरेद्भूमिं दहेत्क्रुद्ध इमाः प्रजाः
पातयेत्त्रिदिवाद्देवान्योऽजुनं समरे जयेत् ५६
पश्य पुत्रांस्तथा भ्रातॄञ्ज्ञातीन्सम्बन्धिनस्तथा
त्वत्कृते न विनश्येयुरेते भरतसत्तम ५७
अस्तु शेषं कौरवाणां मा पराभूदिदंकुलम्
कुलघ्न इति नोच्येथा नष्टकीर्तिर्नराधिप ५८
त्वामेव स्थापयिष्यन्ति यौवराज्ये महारथाः
महाराज्ये च पितरं धृतराष्ट्रं जनेश्वरम् ५९
मा तात श्रियमायान्तीमवमंस्थाः समुद्यताम्
अर्धं प्रदाय पार्थेभ्यो महतीं श्रियमाप्स्यसि ६०
पाण्डवैः संशमं कृत्वा कृत्वा च सुहृदां वचः
सम्प्रीयमाणो मित्रैश्च चिरं भद्राण्यवाप्स्यसि ६१

इति श्रीमहाभारते उद्योगपर्वणि द्वाविंशत्यधिकशततमोऽध्यायः १२२

## त्रयोविंशत्यधिकशततमोऽध्यायः

वैशम्पायन उवाच

ततः शान्तनवो भीष्मो दुर्योधनममर्षणम्
केशवस्य वचः श्रुत्वा प्रोवाच भरतर्षभ १
कृष्णेन वाक्यमुक्तोऽसि सुहृदां शममिच्छता
अनुपश्यस्व तत्तात मा मन्युवशमन्वगाः २
अकृत्वा वचनं तात केशवस्य महात्मनः
श्रेयो न जातु न सुखं न कल्याणमवाप्स्यसि ३
धर्म्यमर्थ्यं महाबाहुराह त्वां तात केशवः
तदर्थमभिपद्यस्व मा राजन्नीनशः प्रजाः ४
इमां श्रियं प्रज्वलितां भारतीं सर्वराजसु
जीवतो धृतराष्ट्रस्य दौरात्म्याद्भ्रंशयिष्यसि ५
आत्मानं च सहामात्यं सपुत्रपशुबान्धवम्
सहमित्रमसद्बुद्ध्या जीविताद्भ्रंशयिष्यसि ६
अतिक्रामन्केशवस्य तथ्यं वचनमर्थवत्
पितुश्च भरतश्रेष्ठ विदुरस्य च धीमतः ७
मा कुलघ्नोऽन्तपुरुषो दुर्मतिः कापथं गमः
मातरं पितरं चैव वृद्धौ शोकाय मा ददः ८
अथ द्रोणोऽब्रवीत्तत्र दुर्योधनमिदं वचः
अमर्षवशमापन्नं निःश्वसन्तं पुनः पुनः ९
धर्मार्थयुक्तं वचनमाह त्वां तात केशवः
तथा भीष्मः शान्तनवस्तज्जुषस्व नराधिप १०
प्राज्ञौ मेधाविनौ दान्तावर्थकामौ बहुश्रुतौ
आहतुस्त्वां हितं वाक्यं तदादत्स्व परंतप ११
अनुतिष्ठ महाप्राज्ञ कृष्ण भीष्मौ यदूचतुः
मा वचो लघुबुद्धीनां समास्थास्त्वं परंतप १२
ये त्वां प्रोत्साहयन्त्येते नैते कृत्याय कर्हिचित्
वैरं परेषां ग्रीवायां प्रतिमोक्ष्यन्ति संयुगे १३
मा कुरूञ्जीघनः सर्वान्पुत्रान्भ्रातॄंस्तथैव च
वासुदेवार्जुनौ यत्र विद्ध्यजेयं बलं हि तत् १४
एतच्चैव मतं सत्यं सुहृदोः कृष्णभीष्मयोः
यदि नादास्यसे तात पश्चात्तप्स्यसि भारत १५

यथोक्तं जामदग्न्येन भूयानेव ततोऽर्जुनः
कृष्णो हि देवकीपुत्रो देवैरपि दुरुत्सहः १६
किं ते सुखप्रियेणेह प्रोक्तेन भरतर्षभ
एतत्ते सर्वमाख्यातं यथेच्छसि तथा कुरु
न हि त्वामुत्सहे वक्तुं भूयो भरतसत्तम १७
तस्मिन्वाक्यान्तरे वाक्यं क्षत्तापि विदुरोऽब्रवीत्
दुर्योधनमभिप्रेक्ष्य धार्तराष्ट्रममर्षणम् १८
दुर्योधन न शोचामि त्वामहं भरतर्षभ
इमौ तु वृद्धौ शोचामि गान्धारीं पितरं च ते १९
यावनाथौ चरिष्येते त्वया नाथेन दुर्हृदा
हतमित्रौ हतामात्यौ लूनपक्षाविव द्विजौ २०
भिक्षुकौ विचरिष्येते शोचन्तौ पृथिवीमिमाम्
कुलघ्नमीदृशं पापं जनयित्वा कुपूरुषम् २१
अथ दुर्योधनं राजा धृतराष्ट्रोऽभ्यभाषत
आसीनं भ्रातृभिः सार्धं राजभिः परिवारितम् २२
दुर्योधन निबोधेदं शौरिणोक्तं महात्मना
आदत्स्व शिवमत्यन्तं योगक्षेमवदव्ययम् २३
अनेन हि सहायेन कृष्णेनाक्लिष्टकर्मणा
इष्टान्सर्वानभिप्रायान्प्राप्स्यामः सर्वराजसु २४
सुसंहितः केशवेन गच्छ तात युधिष्ठिरम्
चर स्वस्त्ययनं कृत्स्नं भारतानामनामयम् २५
वासुदेवेन तीर्थेन तात गच्छस्व संगमम्
कालप्राप्तमिदं मन्ये मा त्वं दुर्योधनातिगाः २६
शमं चेद्याचमानं त्वं प्रत्याख्यास्यसि केशवम्
त्वदर्थमभिजल्पन्तं न तवास्त्यपराभवः २७
इति श्रीमहाभारते उद्योगपर्वणि त्रयोविंशत्यधिकशततमोऽध्यायः १२३

चतुर्विंशत्यधिक शततमोऽध्यायः

वैशम्पायन उवाच
धृतराष्ट्रवचः श्रुत्वा भीष्मद्रोणौ समर्थ्य तौ

दुर्योधनमिदं वाक्यमुचतुः शासनातिगम् १
यावत्कृष्णावसंनद्धौ यावत्तिष्ठति गाण्डिवम्
यावद्धौम्यो न सेनाग्नौ जुहोतीह द्विषद्बलम् २
यावन्न प्रेक्षते क्रुद्धः सेनां तव युधिष्ठिरः
ह्रीनिषेधो महेष्वासस्तावच्छाम्यतु वैशसम् ३
यावन्न दृश्यते पार्थः स्वेष्वनीकेष्ववस्थितः
भीमसेनो महेष्वासस्तावच्छाम्यतु वैशसम् ४
यावन्न चरते मार्गान्पृतनामभिहर्षयन्
यावन्न शातयत्याजौ शिरांसि गजयोधिनाम् ५
गदया वीरघातिन्या फलानीव वनस्पतेः
कालेन परिपक्वानि तावच्छाम्यतु वैशसम् ६
नकुलः सहदेवश्च धृष्टद्युम्नश्च पार्षतः
विराटश्च शिखण्डी च शैशुपालिश्च दंशिताः ७
यावन्न प्रविशन्त्येते नक्रा इव महार्णवम्
कृतास्त्राः क्षिप्रमस्यन्तस्तावच्छाम्यतु वैशसम् ८
यावन्न सुकुमारेषु शरीरेषु महीक्षिताम्
गार्ध्रपत्राः पतन्त्युग्रास्तावच्छाम्यतु वैशसम् ९
चन्दनागुरुदिग्धेषु हारनिष्कधरेषु च
नोरःसु यावद्योधानां महेष्वासैर्महेषवः १०
कृतास्त्रैः क्षिप्रमस्यद्भिर्दूरपातिभिरायसाः
अभिलक्ष्यैर्निपात्यन्ते तावच्छाम्यतु वैशसम् ११
अभिवादयमानं त्वां शिरसा राजकुञ्जरः
पाणिभ्यां प्रतिगृह्णातु धर्मराजो युधिष्ठिरः १२
ध्वजाङ्कुशपताकाङ्कं दक्षिणं ते सुदक्षिणः
स्कन्धे निक्षिपतां बाहुं शान्तये भरतर्षभ १३
रत्नौषधिसमेतेन रत्नाङ्गुलितलेन च
उपविष्टस्य पृष्ठं ते पाणिना परिमार्जतु १४
शालस्कन्धो महाबाहुस्त्वां स्वजानो वृकोदरः
साम्नाभिवदतां चापि शान्तये भरतर्षभ १५
अर्जुनेन यमाभ्यां च त्रिभिस्तैरभिवादितः

मूर्ध्नि तान्समुपाघ्राय प्रेम्णाभिवद पार्थिव १६
दृष्ट्वा त्वां पाण्डवैर्वीरैर्भ्रातृभिः सह संगतम्
यावदानन्दजाश्रूणि प्रमुञ्चन्तु नराधिपाः १७
घुष्यतां राजधानीषु सर्वसम्पन्महीक्षिताम्
पृथिवी भ्रातृभावेन भुज्यतां विज्वरो भव १८
इति श्रीमहाभारते उद्योगपर्वणि चतुर्विंशत्यधिकशततमोऽध्यायः १२४

## पञ्चविंशत्यधिक शततमोऽध्यायः

वैशम्पायन उवाच
श्रुत्वा दुर्योधनो वाक्यमप्रियं कुरुसंसदि
प्रत्युवाच महाबाहुं वासुदेवं यशस्विनम् १
प्रसमीक्ष्य भवानेतद्वक्तुमर्हति केशव
मामेव हि विशेषेण विभाष्य परिगर्हसे २
भक्तिवादेन पार्थानामकस्मान्मधुसूदन
भवान्गर्हयते नित्यं किं समीक्ष्य बलाबलम् ३
भवान्क्षत्ता च राजा च आचार्यो वा पितामहः
मामेव परिगर्हन्ते नान्यं कंचन पार्थिवम् ४
न चाहं लक्षये कंचिद्व्यभिचारमिहात्मनः
अथ सर्वे भवन्तो मां विद्विषन्ति सराजकाः ५
न चाहं कंचिदत्यर्थमपराधमरिंदम
विचिन्तयन्प्रपश्यामि सुसूक्ष्ममपि केशव ६
प्रियाभ्युपगते द्यूते पाण्डवा मधुसूदन
जिताः शकुनिना राज्यं तत्र किं मम दुष्कृतम् ७
यत्पुनर्द्रविणं किंचित्तत्राजीयन्त पाण्डवाः
तेभ्य एवाभ्यनुज्ञातं तत्तदा मधुसूदन ८
अपराधो न चास्माकं यत्ते ह्यक्षपराजिताः
अजेया जयतां श्रेष्ठ पार्थाः प्रव्राजिता वनम् ९
केन चाप्यपवादेन विरुध्यन्तेऽरिभिः सह
अशक्ताः पाण्डवाः कृष्ण प्रहृष्टाः प्रत्यमित्रवत् १०
किमस्माभिः कृतं तेषां कस्मिन्वा पुनरागसि

धार्तराष्ट्राञ्जिघांसन्ति पाराडवाः सृञ्जयैः सह ११
न चापि वयमुग्रेण कर्मणा वचनेन वा
वित्रस्ताः प्रणमामेह भयादपि शतक्रतोः १२
न च तं कृष्ण पश्यामि क्षत्रधर्ममनुष्ठितम्
उत्सहेत युधा जेतुं यो नः शत्रुनिबर्हण १३
न हि भीष्मकृपद्रोणाः सगणा मधुसूदन
देवैरपि युधा जेतुं शक्याः किमुत पाराडवैः १४
स्वधर्ममनुतिष्ठन्तो यदि माधव संयुगे
शस्त्रेण निधनं काले प्राप्स्यामः स्वर्गमेव तत् १५
मुख्यश्चैवैष नो धर्मः क्षत्रियाणां जनार्दन
यच्छयीमहि संग्रामे शरतल्पगता वयम् १६
ते वयं वीरशयनं प्राप्स्यामो यदि संयुगे
अप्रणम्यैव शत्रूणां न नस्तप्स्यति माधव १७
कश्च जातु कुले जातः क्षत्रधर्मेण वर्तयन्
भयाद्वृत्तिं समीक्ष्यैवं प्रणमेदिह कस्यचित् १८
उद्यच्छेदेव न नमेदुद्यमो ह्येव पौरुषम्
अप्यपर्वणि भज्येत न नमेदिह कस्यचित् १९
इति मातङ्गवचनं परीप्सन्ति हितेप्सवः
धर्माय चैव प्रणमेद्ब्राह्मणेभ्यश्च मद्विधः २०
अचिन्तयन्कंचिदन्यं यावज्जीवं तथाचरेत्
एष धर्मः क्षत्रियाणां मतमेतच्च मे सदा २१
राज्यांशश्चाभ्यनुज्ञातो यो मे पित्रा पुराभवत्
न स लभ्यः पुनर्जातु मयि जीवति केशव २२
यावच्च राजा ध्रियते धृतराष्ट्रो जनार्दन
न्यस्तशस्त्रा वयं ते वाप्युपजीवाम माधव २३
यद्यदेयं पुरा दत्तं राज्यं परवतो मम
अज्ञानाद्वा भयाद्वापि मयि बाले जनार्दन २४
न तदद्य पुनर्लभ्यं पाराडवैर्वृष्णिनन्दन
ध्रियमाणे महाबाहो मयि सम्प्रति केशव २५
यावद्धि सूच्यास्तीक्ष्णाया विध्येदग्रेण माधव

तावदप्यपरित्याज्यं भूमेर्नः पाण्डवान्प्रति २६
इति श्रीमहाभारते उद्योगपर्वणि पञ्चविंशत्यधिकशततमोऽध्यायः १२५

## षड्विंशत्यधिक शततमोऽध्यायः

वैशम्पायन उवाच
ततः प्रहस्य दाशार्हः क्रोधपर्याकुलेक्षणः
दुर्योधनमिदं वाक्यमब्रवीत्कुरुसंसदि १
लप्स्यसे वीरशयनं काममेतदवाप्स्यसि
स्थिरो भव सहामात्यो विमर्दो भविता महान् २
यच्चैवं मन्यसे मूढ न मे कश्चिद्व्यतिक्रमः
पाण्डवेष्विति तत्सर्वं निबोधत नराधिपाः ३
श्रिया संतप्यमानेन पाण्डवानां महात्मनाम्
त्वया दुर्मन्त्रितं द्यूतं सौबलेन च भारत ४
कथं च ज्ञातयस्तात श्रेयांसः साधुसम्मताः
तथान्याय्यमुपस्थातुं जिह्मेनाजिह्मचारिणः ५
अक्षद्यूतं महाप्राज्ञ सतामरतिनाशनम्
असतां तत्र जायन्ते भेदाश्च व्यसनानि च ६
तदिदं व्यसनं घोरं त्वया द्यूतमुखं कृतम्
असमीक्ष्य सदाचारैः सार्धं पापानुबन्धनैः ७
कश्चान्यो ज्ञातिभार्यां वै विप्रकर्तुं तथार्हति
आनीय च सभां वक्तुं यथोक्ता द्रौपदी त्वया ८
कुलीना शीलसम्पन्ना प्राणेभ्योऽपि गरीयसी
महिषी पाण्डुपुत्राणां तथा विनिकृता त्वया ९
जानन्ति कुरवः सर्वे यथोक्ताः कुरुसंसदि
दुःशासनेन कौन्तेयाः प्रव्रजन्तः परंतपाः १०
सम्यग्वृत्तेष्वलुब्धेषु सततं धर्मचारिषु
स्वेषु बन्धुषु कः साधुश्चरेदेवमसाम्प्रतम् ११
नृशंसानामनार्याणां परुषाणां च भाषणम्
कर्णदुःशासनाभ्यां च त्वया च बहुशः कृतम् १२
सह मात्रा प्रदग्धुं तान्बालकान्वारणावते

आस्थितः परमं यत्नं न समृद्धं च तत्तव १३
ऊषुश्च सुचिरं कालं प्रच्छन्नाः पाण्डवास्तदा
मात्रा सहैकचक्रायां ब्राह्मणस्य निवेशने १४
विषेण सर्पबन्धैश्च यतिताः पाण्डवास्त्वया
सर्वोपायैर्विनाशाय न समृद्धं च तत्तव १५
एवंबुद्धिः पाण्डवेषु मिथ्यावृत्तिः सदा भवान्
कथं ते नापराधोऽस्ति पाण्डवेषु महात्मसु १६
कृत्वा बहून्यकार्याणि पाण्डवेषु नृशंसवत्
मिथ्यावृत्तिरनार्यः सन्नद्य विप्रतिपद्यसे १७
मातापितृभ्यां भीष्मेण द्रोणेन विदुरेण च
शाम्येति मुहुरुक्तोऽसि न च शाम्यसि पार्थिव १८
शमे हि सुमहानर्थस्तव पार्थस्य चोभयोः
न च रोचयसे राजन्किमन्यद्बुद्धिलाघवात् १९
न शर्म प्राप्स्यसे राजन्नुत्क्रम्य सुहृदां वचः
अधर्म्यमयशस्यं च क्रियते पार्थिव त्वया २०
एवं ब्रुवति दाशार्हे दुर्योधनममर्षणम्
दुःशासन इदं वाक्यमब्रवीत्कुरुसंसदि २१
न चेत्संधास्यसे राजन्स्वेन कामेन पाण्डवैः
बद्ध्वा किल त्वां दास्यन्ति कुन्तीपुत्राय कौरवाः २२
वैकर्तनं त्वां च मां च त्रीनेतान्मनुजर्षभ
पाण्डवेभ्यः प्रदास्यन्ति भीष्मो द्रोणः पिता च ते २३
भ्रातुरेतद्वचः श्रुत्वा धार्तराष्ट्रः सुयोधनः
क्रुद्धः प्रातिष्ठतोत्थाय महानाग इव श्वसन् २४
विदुरं धृतराष्ट्रं च महाराजं च बाह्लिकम्
कृपं च सोमदत्तं च भीष्मं द्रोणं जनार्दनम् २५
सर्वानेताननादृत्य दुर्मतिर्निरपत्रपः
अशिष्टवदमर्यादो मानी मान्यावमानिता २६
तं प्रस्थितमभिप्रेक्ष्य भ्रातरो मनुजर्षभम्
अनुजग्मुः सहामात्या राजानश्चापि सर्वशः २७
सभायामुत्थितं क्रुद्धं प्रस्थितं भ्रातृभिः सह

दुर्योधनमभिप्रेक्ष्य भीष्मः शान्तनवोऽब्रवीत् २८
धर्मार्थावभिसंत्यज्य संरम्भं योऽनुमन्यते
हसन्ति व्यसने तस्य दुर्हृदो नचिरादिव २९
दुरात्मा राजपुत्रोऽय धार्तराष्ट्रोऽनुपायवित्
मिथ्याभिमानी राज्यस्य क्रोधलोभवशानुगः ३०
कालपक्वमिदं मन्ये सर्वक्षत्रं जनार्दन
सर्वे ह्यनुसृता मोहात्पार्थिवाः सह मन्त्रिभिः ३१
भीष्मस्याथ वचः श्रुत्वा दाशार्हः पुष्करेक्षणः
भीष्मद्रोणमुखान्सर्वानभ्यभाषत वीर्यवान् ३२
सर्वेषां कुरुवृद्धानां महानयमतिक्रमः
प्रसह्य मन्दमैश्वर्ये न नियच्छत यन्नृपम् ३३
तत्र कार्यमहं मन्ये कालप्राप्तमरिंदमाः
क्रियमाणे भवेच्छ्रेयस्तत्सर्वं शृणुतानघाः ३४
प्रत्यक्षमेतद्भवतां यद्वक्ष्यामि हितं वचः
भवतामानुकूल्येन यदि रोचेत भारताः ३५
भोजराजस्य वृद्धस्य दुराचारो ह्यनात्मवान्
जीवतः पितुरैश्वर्यं हृत्वा मृत्युवशं गतः ३६
उग्रसेनसुतः कंसः परित्यक्तः स बान्धवैः
ज्ञातीनां हितकामेन मया शस्तो महामृधे ३७
आहुकः पुनरस्माभिर्ज्ञातिभिश्चापि सत्कृतः
उग्रसेनः कृतो राजा भोजराजन्यवर्धनः ३८
कंसमेकं परित्यज्य कुलार्थे सर्वयादवाः
सम्भूय सुखमेधन्ते भारतान्धकवृष्णयः ३९
अपि चाप्यवदद्राजन्परमेष्ठी प्रजापतिः
व्यूढे देवासुरे युद्धेऽभ्युद्यतेष्वायुधेषु च ४०
द्वैधीभूतेषु लोकेषु विनश्यत्सु च भारत
अब्रवीत्सृष्टिमान्देवो भगवाँल्लोकभावनः ४१
पराभविष्यन्त्यसुरा दैतेया दानवैः सह
आदित्या वसवो रुद्रा भविष्यन्ति दिवौकसः ४२
देवासुरमनुष्याश्च गन्धर्वोरगराक्षसाः

अस्मिन्युद्धे सुसंयत्ता हनिष्यन्ति परस्परम् ४३
इति मत्वाब्रवीद्धर्मं परमेष्ठी प्रजापतिः
वरुणाय प्रयच्छैतान्बद्ध्वा दैतेयदानवान् ४४
एवमुक्तस्ततो धर्मो नियोगात्परमेष्ठिनः
वरुणाय ददौ सर्वान्बद्ध्वा दैतेयदानवान् ४५
तान्बद्ध्वा धर्मपाशैश्च स्वैश्च पाशैर्जलेश्वरः
वरुणः सागरे यत्तो नित्यं रक्षति दानवान् ४६
तथा दुर्योधनं कर्णं शकुनिं चापि सौबलम्
बद्ध्वा दुःशासनं चापि पाण्डवेभ्यः प्रयच्छत ४७
त्यजेत्कुलार्थे पुरुषं ग्रामस्यार्थे कुलं त्यजेत्
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ४८
राजन्दुर्योधनं बद्ध्वा ततः संशाम्य पाण्डवैः
त्वत्कृते न विनश्येयुः क्षत्रियाः क्षत्रियर्षभ ४९
इति श्रीमहाभारते उद्योगपर्वणि षड्विंशत्यधिकशततमोऽध्यायः १२६

## सप्तविंशत्यधिक शततमोऽध्यायः

वैशम्पायन उवाच
कृष्णस्य वचनं श्रुत्वा धृतराष्ट्रो जनेश्वरः
विदुरं सर्वधर्मज्ञं त्वरमाणोऽभ्यभाषत १
गच्छ तात महाप्राज्ञां गान्धारीं दीर्घदर्शिनीम्
आनयेह तया सार्धमनुनेष्यामि दुर्मतिम् २
यदि सापि दुरात्मानं शमयेद्दुष्टचेतसम्
अपि कृष्णस्य सुहृदस्तिष्ठेम वचने वयम् ३
अपि लोभाभिभूतस्य पन्थानमनुदर्शयेत्
दुर्बुद्धेर्दु सहायस्य समर्थं ब्रुवती वचः ४
अपि नो व्यसनं घोरं दुर्योधनकृतं महत्
समयेच्चिररात्राय योगक्षेमवदव्ययम् ५
राज्ञस्तु वचनं श्रुत्वा विदुरो दीर्घदर्शिनीम्
आनयामास गान्धारीं धृतराष्ट्रस्य शासनात् ६
धृतराष्ट्र उवाच

एष गान्धारि पुत्रस्ते दुरात्मा शासनातिगः
एश्वर्यलोभादैश्वर्यं जीवितं च प्रहास्यति ७
अशिष्टवदमर्यादः पापैः सह दुरात्मभिः
सभाया निर्गतो मूढो व्यतिक्रम्य सुहृद्वचः ८
वैशम्पायन उवाच
सा भर्तुर्वचनं श्रुत्वा राजपुत्री यशस्विनी
अन्विच्छन्ती महच्छ्रेयो गान्धारी वाक्यमब्रवीत् ९
आनयेह सुतं क्षिप्रं राज्यकामुकमातुरम्
न हि राज्यमशिष्टेन शक्यं धर्मार्थलोपिना १०
त्वं ह्येवात्र भृशं गर्ह्यो धृतराष्ट्र सुतप्रियः
यो जानन्पापतामस्य तत्प्रज्ञामनुवर्तसे ११
स एष काममन्युभ्यां प्रलब्धो मोहमास्थितः
अशक्योऽद्य त्वया राजन्विनिवर्तयितुं बलात् १२
राज्यप्रदाने मूढस्य बालिशस्य दुरात्मनः
दुःसहायस्य लुब्धस्य धृतराष्ट्रोऽश्नुते फलम् १३
कथं हि स्वजने भेदमुपेक्षेत महामतिः
भिन्नं हि स्वजनेन त्वां प्रसहिष्यन्ति शत्रवः १४
या हि शक्या महाराज साम्ना दानेन वा पुनः
निस्तर्तुमापदः स्वेषु दण्डं कस्तत्र पातयेत् १५
शासनाद्धृतराष्ट्रस्य दुर्योधनममर्षणम्
मातुश्च वचनात्क्षत्ता सभां प्रावेशयत्पुनः १६
स मातुर्वचनाकाङ्क्षी प्रविवेश सभां पुनः
अभिताम्रेक्षणः क्रोधान्निःश्वसन्निव पन्नगः १७
तं प्रविष्टमभिप्रेक्ष्य पुत्रमुत्पथमास्थितम्
विगर्हमाणा गान्धारी समर्थं वाक्यमब्रवीत् १८
दुर्योधन निबोधेदं वचनं मम पुत्रक
हितं ते सानुबन्धस्य तथायत्यां सुखोदयम् १९
भीष्मस्य तु पितुश्चैव मम चापचितिः कृता
भवेद्द्रोणमुखानां च सुहृदां शाम्यता त्वया २०
न हि राज्यं महाप्राज्ञ स्वेन कामेन शक्यते

अवाप्तुं रक्षितुं वापि भोक्तुं वा भरतर्षभ २१
न ह्यवश्येन्द्रियो राज्यमश्नीयाद्दीर्घमन्तरम्
विजितात्मा तु मेधावी स राज्यमभिपालयेत् २२
कामक्रोधो हि पुरुषमर्थेभ्यो व्यपकर्षतः
तौ तु शत्रू विनिर्जित्य राजा विजयते महीम् २३
लोकेश्वरप्रभुत्वं हि महदेतद्दुरात्मभिः
राज्यं नामेप्सितं स्थानं न शक्यमभिरक्षितुम् २४
इन्द्रियाणि महत्प्रेप्सुर्नियच्छेदर्थधर्मयोः
इन्द्रियैर्नियतैर्बुद्धिर्वर्धतेऽग्निरिवेन्धनैः २५
अविधेयानि हीमानि व्यापादयितुमप्यलम्
अविधेया इवादान्ता हयाः पथि कुसारथिम् २६
अविजित्य य आत्मानममात्यान्विजिगीषते
अजितात्माजितामात्यः सोऽवशः परिहीयते २७
आत्मानमेव प्रथमं देशरूपेण यो जयेत्
ततोऽमात्यानमित्रांश्च न मोघं विजिगीषते २८
वश्येन्द्रियं जितामात्यं धृतदण्डं विकारिषु
परीक्ष्यकारिणं धीरमत्यन्तं श्रीर्निषेवते २९
क्षुद्राक्षेणेव जालेन झषावपिहितावुभौ
कामक्रोधौ शरीरस्थौ प्रज्ञानं तौ विलुम्पतः ३०
याभ्यां हि देवाः स्वर्यातुः स्वर्गस्यापिदधुर्मुखम्
बिभ्यतोऽनुपरागस्य कामक्रोधौ स्म वर्धितौ ३१
कामं क्रोधं च लोभं च दम्भं दर्पं च भूमिपः
सम्यग्विजेतुं यो वेद स महीमभिजायते ३२
सततं निग्रहे युक्त इन्द्रियाणां भवेन्नृपः
ईप्सन्नर्थं च धर्मं च द्विषतां च पराभवम् ३३
कामाभिभूतः क्रोधाद्वा यो मिथ्या प्रतिपद्यते
स्वेषु चान्येषु वा तस्य न सहाया भवन्त्युत ३४
एकीभूतैर्महाप्राज्ञैः शूरैररिनिबर्हणैः
पाण्डवैः पृथिवीं तात भोक्ष्यसे सहितः सुखी ३५
यथा भीष्मः शान्तनवो द्रोणश्चापि महारथः

आहतुस्तात तत्सत्यमजेयौ कृष्णपाण्डवौ ३६
प्रपद्यस्व महाबाहुं कृष्णमक्लिष्टकारिणम्
प्रसन्नो हि सुखाय स्यादुभयोरेव केशवः ३७
सुहृदामर्थकामानां यो न तिष्ठति शासने
प्राज्ञानां कृतविद्यानां स नरः शत्रुनन्दनः ३८
न युद्धे तात कल्याणं न धर्मार्थौ कुतः सुखम्
न चापि विजयो नित्यं मा युद्धे चेत आधिथाः ३९
भीष्मेण हि महाप्राज्ञ पित्रा ते बाह्लिकेन च
दत्तोंऽश पाण्डुपुत्राणां भेदाद्भीतैररिंदम ४०
तस्य चैतत्प्रदानस्य फलमद्यानुपश्यसि
यद्भुङ्क्षे पृथिवीं सर्वां शूरैर्निहतकण्टकाम् ४१
प्रयच्छ पाण्डुपुत्राणां यथोचितमरिंदम
यदीच्छसि सहामात्यो भोक्तुमर्धं महान्विताम् ४२
अलमर्धं पृथिव्यास्ते सहामात्यस्य जीवनम्
सुहृदां वचने तिष्ठन्यशः प्राप्स्यसि भारत ४३
श्रीमद्भिरात्मवद्भिर्हि बुद्धिमद्भिर्जितेन्द्रियैः
पाण्डवैर्विग्रहस्तात भ्रंशयेन्महतः सुखात् ४४
निगृह्य सुहृदां मन्युं शाधि राज्यं यथोचितम्
स्वमंशं पाण्डुपुत्रेभ्यः प्रदाय भरतर्षभ ४५
अलमह्ना निकारोऽय त्रयोदश समाः कृतः
शमयैनं महाप्राज्ञ कामक्रोधसमेधितम् ४६
न चैष शक्तः पार्थानां यस्त्वदर्थमभीप्सति
सूतपुत्रो दृढक्रोधो भ्राता दुःशासनश्च ते ४७
भीष्मे द्रोणे कृपे कर्णे भीमसेने धनंजये
धृष्टद्युम्ने च संक्रुद्धे न स्युः सर्वाः प्रजा ध्रुवम् ४८
अमर्षवशमापन्नो मा कुरूंस्तात जीघनः
सर्वा हि पृथिवी स्पृष्टा त्वत्पाण्डवकृते वधम् ४९
यच्च त्वं मन्यसे मूढ भीष्मद्रोणकृपादयः
योत्स्यन्ते सर्वशक्त्येति नैतदद्योपपद्यते ५०
समं हि राज्यं प्रीतिश्च स्थानं हि विजितात्मनाम्

पाण्डवेष्वथ युष्मासु धर्मस्त्वभ्यधिकस्ततः ५१
राजपिण्डभयादेते यदि हास्यन्ति जीवितम्
न हि शक्ष्यन्ति राजानं युधिष्ठिरमुदीक्षितुम् ५२
न लोभादर्थसम्पत्तिर्नराणामिह दृश्यते
तदलं तात लोभेन प्रशाम्य भरतर्षभ ५३
इति श्रीमहाभारते उद्योगपर्वणि सप्तविंशत्यधिकशततमोऽध्यायः १२७

## अष्टाविंशत्यधिक शततमोऽध्यायः

वैशम्पायन उवाच
तत्तु वाक्यमनादृत्य सोऽथवन्मातृभाषितम्
पुनः प्रतस्थे संरम्भात्सकाशमकृतात्मनाम् १
ततः सभाया निर्गम्य मन्त्रयामास कौरवः
सौबलेन मताक्षेण राज्ञा शकुनिना सह २
दुर्योधनस्य कर्णस्य शकुनेः सौबलस्य च
दुःशासनचतुर्थानामिदमासीद्विचेष्टितम् ३
पुरायमस्मान्गृह्णाति क्षिप्रकारी जनार्दनः
सहितो धृतराष्ट्रेण राज्ञा शान्तनवेन च ४
वयमेव हृषीकेशं निगृह्णीम बलादिव
प्रसह्य पुरुषव्याघ्रमिन्द्रो वैरोचनिं यथा ५
श्रुत्वा गृहीतं वार्ष्णेयं पाण्डवा हतचेतसः
निरुत्साहा भविष्यन्ति भग्नदंष्ट्रा इवोरगाः ६
अयं ह्येषां महाबाहुः सर्वेषां शर्म वर्म च
अस्मिन्गृहीते वरदे ऋषभे सर्वसात्वताम्
निरुद्यमा भविष्यन्ति पाण्डवाः सोमकैः सह ७
तस्माद्वयमिहैवैनं केशवं क्षिप्रकारिणम्
क्रोशतो धृतराष्ट्रस्य बद्ध्वा योत्स्यामहे रिपून् ८
तेषां पापमभिप्रायं पापानां दुष्टचेतसाम्
इङ्गितज्ञः कविः क्षिप्रमन्वबुध्यत सात्यकिः ९
तदर्थमभिनिष्क्रम्य हार्दिक्येन सहास्थितः
अब्रवीत्कृतवर्माणं क्षिप्रं योजय वाहिनीम् १०

व्यूढानीकः सभाद्वारमुपतिष्ठस्व दंशितः
यावदाख्याम्यहं चैतत्कृष्णायाक्लिष्टकर्मणे ११
स प्रविश्य सभां वीरः सिंहो गिरिगुहामिव
आचष्ट तमभिप्रायं केशवाय महात्मने १२
धृतराष्ट्रं ततश्चैव विदुरं चान्वभाषत
तेषामेतमभिप्रायमाचचक्षे स्मयन्निव १३
धर्मादपेतमर्थाच्च कर्म साधुविगर्हितम्
मन्दाः कर्तुमिहेच्छन्ति न चावाप्यं कथंचन १४
पुरा विकुर्वते मूढाः पापात्मानः समागताः
धर्षिताः काममन्युभ्यां क्रोधलोभवशानुगाः १५
इमं हि पुण्डरीकाक्षं जिघृक्षन्त्यल्पचेतसः
पटेनाग्निं प्रज्वलितं यथा बाला यथा जडाः १६
सात्यकेस्तद्वचः श्रुत्वा विदुरो दीर्घदर्शिवान्
धृतराष्ट्रं महाबाहुमब्रवीत्कुरुसंसदि १७
राजन्परीतकालास्ते पुत्राः सर्वे परंतप
अयशस्यमशक्यं च कर्म कर्तुं समुद्यताः १८
इमं हि पुण्डरीकाक्षमभिभूय प्रसह्य च
निग्रहीतुं किलेच्छन्ति सहिता वासवानुजम् १९
इमं पुरुषशार्दूलमप्रधृष्यं दुरासदम्
आसाद्य न भविष्यन्ति पतङ्गा इव पावकम् २०
अयमिच्छन्हि तान्सर्वान्यतमानाञ्जनार्दनः
सिंहो मृगानिव क्रुद्धो गमयेद्यमसादनम् २१
न त्वयं निन्दितं कर्म कुर्यात्कृष्णः कथंचन
न च धर्मादपक्रामेदच्युतः पुरुषोत्तमः २२
विदुरेणैवमुक्ते तु केशवो वाक्यमब्रवीत्
धृतराष्ट्रमभिप्रेक्ष्य सुहृदां शृण्वतां मिथः २३
राजन्नेते यदि क्रुद्धा मां निगृह्णीयुरोजसा
एते वा मामहं वैनाननुजानीहि पार्थिव २४
एतान्हि सर्वान्संरब्धान्नियन्तुमहमुत्सहे
न त्वहं निन्दितं कर्म कुर्यां पापं कथंचन २५

पाण्डवार्थे हि लुभ्यन्तः स्वार्थाद्धास्यन्ति ते सुताः
एते चेदेवमिच्छन्ति कृतकार्यो युधिष्ठिरः २६
अद्यैव ह्यहमेतांश्च ये चैताननु भारत
निगृह्य राजन्पार्थेभ्यो दद्यां कि दुष्कृतं भवेत् २७
इदं तु न प्रवर्तेयं निन्दितं कर्म भारत
संनिधौ ते महाराज क्रोधजं पापबुद्धिजम् २८
एष दुर्योधनो राजन्यथेच्छति तथास्तु तत्
अहं तु सर्वान्समयाननुजानामि भारत २९
एतच्छ्रुत्वा तु विदुरं धृतराष्ट्रोऽभ्यभाषत
क्षिप्रमानय तं पापं राज्यलुब्धं सुयोधनम् ३०
सहमित्रं सहामात्यं ससोदर्यं सहानुगम्
शक्नुयां यदि पन्थानमवतारयितुं पुनः ३१
ततो दुर्योधनं क्षत्ता पुनः प्रावेशयत्सभाम्
अकामं भ्रातृभिः सार्धं राजभिः परिवारितम् ३२
अथ दुर्योधनं राजा धृतराष्ट्रोऽभ्यभाषत
कर्णदुःशासनाभ्यां च राजभिश्चाभिसंवृतम् ३३
नृशंस पापभूयिष्ठ क्षुद्रकर्मसहायवान्
पापैः सहायैः संहत्य पाप कर्म चिकीर्षसि ३४
अशक्यमयशस्यं च सद्भिश्चापि विगर्हितम्
यथा त्वादृशको मूढो व्यवस्येत्कुलपांसनः ३५
त्वमिमं पुण्डरीकाक्षमप्रधृष्यं दुरासदम्
पापैः सहायैः संहत्य निग्रहीतुं किलेच्छसि ३६
यो न शक्यो बलात्कर्तुं देवैरपि सवासवैः
तं त्वं प्रार्थयसे मन्द बालश्चन्द्रमसं यथा ३७
देवैर्मनुष्यैर्गन्धर्वैरसुरैरुरगैश्च यः
न सोढुं समरे शक्यस्तं न बुध्यसि केशवम् ३८
दुर्ग्रहः पाणिना वायुर्दुःस्पर्शः पाणिना शशी
दुर्धरा पृथिवी मूर्ध्ना दुर्ग्रहः केशवो बलात् ३९
इत्युक्ते धृतराष्ट्रेण क्षत्तापि विदुरोऽब्रवीत्
दुर्योधनमभिप्रेक्ष्य धार्तराष्ट्रममर्षणम् ४०

सौभद्वारे वानरेन्द्रो द्विविदो नाम नामतः
शिलावर्षेण महता छादयामास केशवम् ४१
ग्रहीतुकामो विक्रम्य सर्वयत्नेन माधवम्
ग्रहीतुं नाशकत्तत्र तं त्वं प्रार्थयसे बलात् ४२
निर्मोचने षट्सहस्राः पाशैर्बद्ध्वा महासुराः
ग्रहीतुं नाशकंश्चैनं तं त्वं प्रार्थयसे बलात् ४३
प्राग्ज्योतिषगतं शौरिं नरकः सह दानवैः
ग्रहीतुं नाशकत्तत्र तं त्वं प्रार्थयसे बलात् ४४
अनेन हि हता बाल्ये पूतना शिशुना तथा
गोवर्धनो धारितश्च गवार्थे भरतर्षभ ४५
अरिष्टो धेनुकश्चैव चाणूरश्च महाबलः
अश्वराजश्च निहतः कंसश्चारिष्टमाचरन् ४६
जरासंधश्च वक्रश्च शिशुपालश्च वीर्यवान्
बाणश्च निहतः संख्ये राजानश्च निषूदिताः ४७
वरुणो निर्जितो राजा पावकश्चामितौजसा
पारिजातं च हरता जितः साक्षाच्छचीपतिः ४८
एकार्णवे शयानेन हतौ तौ मधुकैटभौ
जन्मान्तरमुपागम्य हयग्रीवस्तथा हतः ४९
अयं कर्ता न क्रियते कारणं चापि पौरुषे
यद्यदिच्छेदयं शौरिस्तत्तत्कुर्यादयत्नतः ५०
तं न बुध्यसि गोविन्दं घोरविक्रममच्युतम्
आशीविषमिव क्रुद्धं तेजोराशिमनिर्जितम् ५१
प्रधर्षयन्महाबाहुं कृष्णमक्लिष्टकारिणम्
पतङ्गोऽग्निमिवासाद्य सामात्यो न भविष्यसि ५२
इति श्रीमहाभारते उद्योगपर्वणि अष्टाविंशत्यधिकशततमोऽध्यायः १२८

एकोनत्रिंशदधिक शततमोऽध्यायः

वैशम्पायन उवाच
विदुरेणैवमुक्ते तु केशवः शत्रुपूगहा
दुर्योधनं धार्तराष्ट्रमभ्यभाषत वीर्यवान् १

एकोऽहमिति यन्मोहान्मन्यसे मां सुयोधन
परिभूय च दुर्बुद्धे ग्रहीतुं मां चिकीर्षसि २
इहैव पाण्डवाः सर्वे तथैवान्धकवृष्णयः
इहादित्याश्च रुद्राश्च वसवश्च महर्षिभिः ३
एवमुक्त्वा जहासोच्चैः केशवः परवीरहा
तस्य संस्मयतः शौरेर्विद्युद्रूपा महात्मनः
अङ्गुष्ठमात्रास्त्रिदशा मुमुचुः पावकार्चिषः ४
तस्य ब्रह्मा ललाटस्थो रुद्रो वक्षसि चाभवत्
लोकपाला भुजेष्वासन्नग्निरास्यादजायत ५
आदित्याश्चैव साध्याश्च वसवोऽथाश्विनावपि
मरुतश्च सहेन्द्रेण विश्वेदेवास्तथैव च
बभूवुश्चैव रूपाणि यक्षगन्धर्वरक्षसाम् ६
प्रादुरास्तां तथा दोर्भ्यां संकर्षणधनंजयौ
दक्षिणेऽथार्जुनो धन्वी हली रामश्च सव्यतः ७
भीमो युधिष्ठिरश्चैव माद्रीपुत्रौ च पृष्ठतः
अन्धका वृष्णयश्चैव प्रद्युम्नप्रमुखास्ततः ८
अग्रे बभूवुः कृष्णस्य समुद्यतमहायुधाः
शङ्खचक्रगदाशक्तिशार्ङ्गलाङ्गलनन्दकाः ९
अदृश्यन्तोद्यतान्येव सर्वप्रहरणानि च
नानाबाहुषु कृष्णस्य दीप्यमानानि सर्वशः १०
नेत्राभ्यां नस्ततश्चैव श्रोत्राभ्यां च समन्ततः
प्रादुरासन्महारौद्राः सधूमाः पावकार्चिषः
रोमकूपेषु च तथा सूर्यस्येव मरीचयः ११
तं दृष्ट्वा घोरमात्मानं केशवस्य महात्मनः
न्यमीलयन्त नेत्राणि राजानस्त्रस्तचेतसः १२
ऋते द्रोणं च भीष्मं च विदुरं च महामतिम्
संजयं च महाभागमृषींश्चैव तपोधनान्
प्रादात्तेषां स भगवान्दिव्यं चक्षुर्जनार्दनः १३
तद्दृष्ट्वा महदाश्चर्यं माधवस्य सभातले
देवदुन्दुभयो नेदुः पुष्पवर्षं पपात च १४

चचाल च मही कृत्स्ना सागरश्चापि चुक्षुभे
विस्मयं परमं जग्मुः पार्थिवा भरतर्षभ १५
ततः स पुरुषव्याघ्रः संजहार वपुः स्वकम्
तां दिव्यामद्भुतां चित्रामृद्धिमत्तामरिंदमः १६
ततः सात्यकिमादाय पाणौ हार्दिक्यमेव च
ऋषिभिस्तैरनुज्ञातो निर्ययौ मधुसूदनः १७
ऋषयोऽन्तर्हिता जग्मुस्ततस्ते नारदादयः
तस्मिन्कोलाहले वृत्ते तदद्भुतमभूत्तदा १८
तं प्रस्थितमभिप्रेक्ष्य कौरवाः सह राजभिः
अनुजग्मुर्नरव्याघ्रं देवा इव शतक्रतुम् १९
अचिन्तयन्नमेयात्मा सर्वं तद्राजमण्डलम्
निश्चक्राम ततः शौरिः सधूम इव पावकः २०
ततो रथेन शुभ्रेण महता किङ्किणीकिना
हेमजालविचित्रेण लघुना मेघनादिना २१
सूपस्करेण शुभ्रेण वैयाघ्रेण वरूथिना
सैन्यसुग्रीवयुक्तेन प्रत्यदृश्यत दारुकः २२
तथैव रथमास्थाय कृतवर्मा महारथः
वृष्णीनां सम्मतो वीरो हार्दिक्यः प्रत्यदृश्यत २३
उपस्थितरथं शौरिं प्रयास्यन्तमरिंदमम्
धृतराष्ट्रो महाराजः पुनरेवाभ्यभाषत २४
यावद्बलं मे पुत्रेषु पश्यस्येतज्जनार्दन
प्रत्यक्षं ते न ते किंचित्परोक्षं शत्रुकर्शन २५
कुरूणां शममिच्छन्तं यतमानं च केशव
विदित्वैतामवस्थां मे नातिशङ्कितुमर्हसि २६
न मे पापोऽस्त्यभिप्रायः पाण्डवान्प्रति केशव
ज्ञातमेव हि ते वाक्यं यन्मयोक्तः सुयोधनः २७
जानन्ति कुरवः सर्वे राजानश्चैव पार्थिवाः
शमे प्रयतमानं मां सर्वयत्नेन माधव २८
ततोऽब्रवीन्महाबाहुर्धृतराष्ट्रं जनेश्वरम्
द्रोणं पितामहं भीष्मं क्षत्तारं बाह्लिकं कृपम् २९

प्रत्यक्षमेतद्भवतां यद्वृत्तं कुरुसंसदि
यथा चाशिष्टवन्मन्दो रोषादसकृदुत्थितः ३०
वदत्यनीशमात्मानं धृतराष्ट्रो महीपतिः
आपृच्छे भवतः सर्वान्गमिष्यामि युधिष्ठिरम् ३१
आमन्त्र्य प्रस्थितं शौरिं रथस्थं पुरुषर्षभम्
अनुजग्मुर्महेष्वासाः प्रवीरा भरतर्षभाः ३२
भीष्मो द्रोणः कृपः क्षत्ता धृतराष्ट्रोऽथ बाह्लिकः
अश्वत्थामा विकर्णश्च युयुत्सुश्च महारथः ३३
ततो रथेन शुभ्रेण महता किङ्किणीकिना
कुरूणां पश्यतां प्रायात्पृथां द्रष्टुं पितृष्वसाम् ३४
इति श्रीमहाभारते उद्योगपर्वणि एकोनत्रिंशदधिकशततमोऽध्यायः १२९

## त्रिंशदधिक शततमोऽध्यायः

वैशम्पायन उवाच
प्रविश्याथ गृहं तस्याश्चरणावभिवाद्य च
आचख्यौ तत्समासेन यद्वृत्तं कुरुसंसदि १
वासुदेव उवाच
उक्तं बहुविधं वाक्यं ग्रहणीयं सहेतुकम्
ऋषिभिश्च मया चैव न चासौ तद्गृहीतवान् २
कालपक्वमिदं सर्वं दुर्योधनवशानुगम्
आपृच्छे भवतीं शीघ्रं प्रयास्ये पाण्डवान्प्रति ३
किं वाच्याःपाण्डवेयास्ते भवत्या वचनान्मया
तद्ब्रूहि त्वं महाप्राज्ञे शुश्रूषे वचनं तव ४
कुन्त्युवाच
ब्रूयाः केशव राजानं धर्मात्मानं युधिष्ठिरम्
भूयांस्ते हीयते धर्मो मा पुत्रक वृथा कृथाः ५
श्रोत्रियस्येव ते राजन्मन्दकस्याविपश्चितः
अनुवाकहता बुद्धिर्धर्ममेवैकमीक्षते ६
अङ्गावेक्षस्व धर्मं त्वं यथा सृष्टः स्वयम्भुवा
उरस्तः क्षत्रियः सृष्टो बाहुवीर्योपजीविता

क्रूराय कर्मणे नित्यं प्रजानां परिपालने ७
शृणु चात्रोपमामेकां या वृद्धेभ्यः श्रुता मया
मुचुकुन्दस्य राजर्षेरददात्पृथिवीमिमाम्
पुरा वैश्रवणः प्रीतो न चासौ तां गृहीतवान् ८
बाहुवीर्यार्जितं राज्यमश्नीयामिति कामये
ततो वैश्रवणः प्रीतो विस्मितः समपद्यत ९
मुचुकुन्दस्ततो राजा सोऽन्वशासद्वसुन्धराम्
बाहुवीर्यार्जितां सम्यक्क्षत्रधर्ममनुव्रतः १०
यं हि धर्मं चरन्तीह प्रजा राज्ञा सुरक्षिताः
चतुर्थं तस्य धर्मस्य राजा भारत विन्दति ११
राजा चरति चेद्धर्मं देवत्वायैव कल्पते
स चेदधर्मं चरति नरकायैव गच्छति १२
दण्डनीतिः स्वधर्मेण चातुर्वर्ण्यं नियच्छति
प्रयुक्ता स्वामिना सम्यगधर्मेभ्यश्च यच्छति १३
दण्डनीत्यां यदा राजा सम्यक्कार्त्स्न्येन वर्तते
तदा कृतयुगं नाम कालः श्रेष्ठः प्रवर्तते १४
कालो वा कारणं राज्ञो राजा वा कालकारणम्
इति ते संशयो मा भूद्राजा कालस्य कारणम् १५
राजा कृतयुगस्रष्टा त्रेताया द्वापरस्य च
युगस्य च चतुर्थस्य राजा भवति कारणम् १६
कृतस्य कारणाद्राजा स्वर्गमत्यन्तमश्नुते
त्रेतायाः कारणाद्राजा स्वर्गं नात्यन्तमश्नुते
प्रवर्तनाद्द्वापरस्य यथाभागमुपाश्नुते १७
ततो वसति दुष्कर्मा नरके शाश्वतीः समाः
राजदोषेण हि जगत्स्पृश्यते जगतः स च १८
राजधर्मानवेक्षस्व पितृपैतामहोचितान्
नैतद्राजर्षिवृत्तं हि यत्र त्वं स्थातुमिच्छसि १९
न हि वैक्लव्यसंसृष्ट आनुशंस्ये व्यवस्थितः
प्रजापालनसम्भूतं किंचित्प्रापफलं नृपः २०
न ह्येतामाशिषं पाण्डुर्न चाहं न पितामहः

प्रयुक्तवन्तः पूर्वं ते यया चरसि मेधया २१
यज्ञो दानं तपः शौर्यं प्रजासंतानमेव च
माहात्म्यं बलमोजश्च नित्यमाशंसितं मया २२
नित्यं स्वाहा स्वधा नित्यं ददुर्मानुषदेवताः
दीर्घमायुर्धनं पुत्रान्सम्यगाराधिताः शुभाः २३
पुत्रेष्वाशासते नित्यं पितरो दैवतानि च
दानमध्ययनं यज्ञं प्रजानां परिपालनम् २४
एतद्धर्ममधर्मं वा जन्मनैवाभ्यजायथाः
ते स्थ वैद्याः कुले जाता अवृत्त्या तात पीडिताः २५
यत्तु दानपतिं शूरं क्षुधिताः पृथिवीचराः
प्राप्य तृप्ताः प्रतिष्ठन्ते धर्मः कोऽभ्यधिकस्ततः २६
दानेनान्यं बलेनान्यं तथा सूनृतयापरम्
सर्वतः प्रतिगृह्णीयाद्राज्यं प्राप्येह धार्मिकः २७
ब्राह्मणः प्रचरेद्भैक्षं क्षत्रियः परिपालयेत्
वैश्यो धनार्जनं कुर्याच्छूद्रः परिचरेच्च तान् २८
भैक्षं विप्रतिषिद्धं ते कृषिर्नैवोपपद्यते
क्षत्रियोऽसि क्षतात्त्राता बाहुवीर्योपजीविता २९
पित्र्यमंशं महाबाहो निमग्नं पुनरुद्धर
साम्ना दानेन भेदेन दण्डेनाथ नयेन च ३०
इतो दुःखतरं किं नु यदहं हीनबान्धवा
परपिण्डमुदीक्षामि त्वां सूत्वामित्रनन्दन ३१
युध्यस्व राजधर्मेण मा निमज्जीः पितामहान्
मा गमः क्षीणपुण्यस्त्वं सानुजः पापिकां गतिम् ३२
इति श्रीमहाभारते उद्योगपर्वणि त्रिंशदधिकशततमोऽध्यायः १३०

## एकत्रिंशदधिक शततमोऽध्यायः

कुन्त्युवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
विदुरायाश्च संवादं पुत्रस्य च परंतप १
अत्र श्रेयश्च भूयश्च यथा सा वक्तुमर्हति

यशस्विनी मन्युमती कुले जाता विभावरी २
क्षत्रधर्मरता धन्या विदुरा दीर्घदर्शिनी
विश्रुता राजसंसत्सु श्रुतवाक्या बहुश्रुता ३
विदुरा नाम वै सत्या जगर्हे पुत्रमौरसम्
निर्जितं सिन्धुराजेन शयानं दीनचेतसम्
अनन्दनमधर्मज्ञं द्विषतां हर्षवर्धनम् ४
न मया त्वं न पित्रासि जातः क्वाभ्यागतो ह्यसि
निर्मन्युरुपशाखीयः पुरुषः क्लीबसाधनः ५
यावज्जीवं निराशोऽसि कल्याणाय धुरं वह
मात्मानमवमन्यस्व मैनमल्पेन बीभरः
मनः कृत्वा सुकल्याणं मा भैस्त्वं प्रतिसंस्तभ ६
उत्तिष्ठ हे कापुरुष मा शेष्वैवं पराजितः
अमित्रान्नन्दयन्सर्वान्निर्मानो बन्धुशोकदः ७
सुपूरा वै कुनदिकासुपूरो मूषिकाञ्जलि
सुसंतोषः कापुरुषः स्वल्पकेनापि तुष्यति ८
अप्यरेरारुजन्दंष्ट्रामाश्वेव निधनं व्रज
अपि वा संशयं प्राप्य जीवितेऽपि पराक्रम ९
अप्यरेः श्येनवच्छिद्रं पश्येस्त्वं विपरिक्रमन्
विनदन्वाथ वा तूष्णीं व्योम्नि वापरिशङ्कितः १०
त्वमेवं प्रेतवच्छेषे कस्माद्वज्रहतो यथा
उत्तिष्ठ हे कापुरुष मा शेष्वैवं पराजितः ११
मास्तं गमस्त्वं कृपणो विश्रूयस्व स्वकर्मणा
मा मध्ये मा जघन्ये त्वं माधो भूस्तिष्ठ चोर्जितः १२
अलातं तिन्दुकस्येव मुहूर्तमपि विज्वल
मा तुषाग्निरिवानर्चिः काकरङ्घा जिजीविषुः
मुहूर्तं ज्वलितं श्रेयो न च धूमायितं चिरम् १३
मा ह स्म कस्यचिद्ग्रेहे जनी राज्ञः खरीमृदुः
कृत्वा मानुष्यकं कर्म सृत्वाजिं यावदुत्तमम्
धर्मस्यानृण्यमाप्नोति न चात्मानं विगर्हते १४
अलब्ध्वा यदि वा लब्ध्वा नानुशोचन्ति पण्डिताः

आनन्तर्यं चारभते न प्राणानां धनायते १५
उद्भावयस्व वीर्यं वा तां वा गच्छ ध्रुवां गतिम्
धर्मं पुत्राग्रतः कृत्वा किंनिमित्तं हि जीवसि १६
इष्टापूर्तं हि ते क्लीब कीर्तिश्च सकला हता
विच्छिन्नं भोगमूलं ते किंनिमित्तं हि जीवसि १७
शत्रुर्निमज्जता ग्राह्यो जङ्घायां प्रपतिष्यता
विपरिच्छिन्नमूलोऽपि न विषीदेत्कथंचन
उद्यम्य धुरमुत्कर्षेदाजानेयकृतं स्मरन् १८
कुरु सत्त्वं च मानं च विद्धि पौरुषमात्मनः
उद्भावय कुलं मग्नं त्वत्कृते स्वयमेव हि १९
यस्य वृत्तं न जल्पन्ति मानवा महदद्भुतम्
राशिवर्धनमात्रं स नैव स्त्री न पुनः पुमान् २०
दाने तपसि शौर्ये च यस्य न प्रथितं यशः
विद्यायामर्थलाभे वा मातुरुच्चार एव सः २१
श्रुतेन तपसा वापि श्रिया वा विक्रमेण वा
जनान्योऽभिभवत्यन्यान्कर्मणा हि स वै पुमान् २२
न त्वेव जाल्मीं कापालद्यं वृत्तिमेषितुमर्हसि
नृशंस्यामयशस्यां च दुःखां कापुरुषोचिताम् २३
यमेनमभिनन्देयुरमित्राः पुरुषं कृशम्
लोकस्य समवज्ञातं निहीनाशनवाससम् २४
अहोलाभकरं दीनमल्पजीवनमल्पकम्
नेदृशं बन्धुमासाद्य बान्धवः सुखमेधते २५
अवृत्त्यैव विपत्स्यामो वयं राष्ट्रात्प्रवासिताः
सर्वकामरसैर्हीनाः स्थानभ्रष्टा अकिंचनाः २६
अवर्णकारिणं सत्सु कुलवंशस्य नाशनम्
कलिं पुत्रप्रवादेन संजय त्वामजीजनम् २७
निरमर्षं निरुत्साहं निर्वीर्यमरिनन्दनम्
मा स्म सीमन्तिनी काचिज्जनयेत्पुत्रमीदृशम् २८
मा धूमाय ज्वलात्यन्तमाक्रम्य जहि शात्रवान्
ज्वल मूर्धन्यमित्राणां मुहूर्तमपि वा क्षणम् २९

एतावानेव पुरुषो यदमर्षी यदक्षमी
क्षमावान्निरमर्षश्च नैव स्त्री न पुनः पुमान् ३०
सन्तोषो वै श्रियं हन्ति तथानुक्रोश एव च
अनुत्थानभये चोभे निरीहो नाश्नुते महत् ३१
एभ्यो निकृतिपापेभ्यः प्रमुञ्चात्मानमात्मना
आयसं हृदयं कृत्वा मृगयस्व पुनः स्वकम् ३२
परं विषहते यस्मात्तस्मात्पुरुष उच्यते
तमाहुर्व्यर्थनामानं स्त्रीवद्य इह जीवति ३३
शूरस्योर्जितसत्त्वस्य सिंहविक्रान्तगामिनः
दिष्टभावं गतस्यापि विघसे मोदते प्रजा ३४
य आत्मनः प्रियसुखे हित्वा मृगयते श्रियम्
अमात्यानामथो हर्षमादधात्यचिरेण सः ३५
पुत्र उवाच
किं नु ते मामपश्यन्त्याः पृथिव्या अपि सर्वया
किमाभरणकृत्यं ते किं भोगैर्जीवितेन वा ३६
मातोवाच
किमद्यकानां ये लोका द्विषन्तस्तानवाप्नुयुः
ये त्वादृतात्मनां लोकाः सुहृदस्तान्व्रजन्तु नः ३७
भृत्यैर्विहीयमानानां परपिण्डोपजीविनाम्
कृपणानामसत्त्वानां मा वृत्तिमनुवर्तिथाः ३८
अनु त्वां तात जीवन्तु ब्राह्मणाः सुहृदस्तथा
पर्जन्यमिव भूतानि देवा इव शतक्रतुम् ३९
यमाजीवन्ति पुरुषं सर्वभूतानि सञ्जय
पक्वं द्रुममिवासाद्य तस्य जीवितमर्थवत् ४०
यस्य शूरस्य विक्रान्तैरेधन्ते बान्धवाः सुखम्
त्रिदशा इव शक्रस्य साधु तस्येह जीवितम् ४१
स्वबाहुलमाश्रित्य योऽभ्युज्जीवति मानवः
स लोके लभते कीर्तिं परत्र च शुभां गतिम् ४२

इति श्रीमहाभारते उद्योगपर्वणि एकत्रिंशदधिकशततमोऽध्यायः १३१

## द्वात्रिंशदधिकशततमोऽध्यायः

विदुरोवाच
अथैतस्यामवस्थायां पौरुषं हातुमिच्छसि
निहीनसेवितं मार्गं गमिष्यस्यचिरादिव १
यो हि तेजो यथाशक्ति न दर्शयति विक्रमात्
क्षत्रियो जीविताकाङ्क्षी स्तेन इत्येव तं विदुः २
अर्थवन्त्युपपन्नानि वाक्यानि गुणवन्ति च
नैव सम्प्राप्नुवन्ति त्वां मुमूर्षुमिव भेषजम् ३
सन्ति वै सिन्धुराजस्य सन्तुष्टा बहवो जनाः
दौर्बल्यादासते मूढा व्यसनौघप्रतीक्षिणः ४
सहायोपचयं कृत्वा व्यवसाय्य ततस्ततः
अनुदुष्येयुरपरे पश्यन्तस्तव पौरुषम् ५
तैः कृत्वा सह सङ्घातं गिरिदुर्गालयांश्चर
काले व्यसनमाकाङ्क्षन्नैवायमजरामरः ६
सञ्जयो नामतश्च त्वं न च पश्यामि तत्त्वयि
अन्वर्थनामा भव मे पुत्र मा व्यर्थनामकः ७
सम्यग्दृष्टिर्महाप्राज्ञो बालं त्वां ब्राह्मणोऽब्रवीत्
अयं प्राप्य महत्कृच्छ्रं पुनर्वृद्धिं गमिष्यति ८
तस्य स्मरन्ती वचनमाशंसे विजयं तव
तस्मात्तात ब्रवीमि त्वां वक्ष्यामि च पुनः पुनः ९
यस्य ह्यर्थाभिनिर्वृत्तौ भवन्त्याप्यायिताः परे
तस्यार्थसिद्धिर्नियता नयेष्वर्थानुसारिणः १०
समृद्धिरसमृद्धिर्वा पूर्वेषां मम सञ्जय
एवं विद्वान्युद्धमना भव मा प्रत्युपाहर ११
नातः पापीयसीं काञ्चिदवस्थां शम्बरोऽब्रवीत्
यत्र नैवाद्य न प्रातर्भोजनं प्रतिदृश्यते १२
पतिपुत्रवधादेतत्परमं दुःखमब्रवीत्
दारिद्र्यमिति यत्प्रोक्तं पर्यायमरणं हि तत् १३
अहं महाकुले जाता ह्रदाद्ध्रदमिवागता
ईश्वरी सर्वकल्याणैर्भर्त्रा परमपूजिता १४

महार्हमाल्याभरणां सुमृष्टाम्बरवाससम्
पुरा दृष्ट्वा सुहृद्वर्गो मामपश्यत्सुदुर्गताम् १५
यदा मां चैव भार्यां च द्रष्टासि भृशदुर्बले
न तदा जीवितेनार्थो भविता तव सञ्जय १६
दासकर्मकरान्भृत्यानाचार्यर्त्विक्पुरोहितान्
अवृत्त्यास्मान्प्रजहतो दृष्ट्वा किं जीवितेन ते १७
यदि कृत्यं न पश्यामि तवाद्येह यथा पुरा
श्लाघनीयं यशस्यं च का शान्तिर्हृदयस्य मे १८
नेति चेद्ब्राह्मणान्ब्रूयां दीर्यते हृदयं मम
न ह्यहं न च मे भर्ता नेति ब्राह्मणमुक्तवान् १९
वयमाश्रयणीयाः स्म नाश्रितारः परस्य च
सान्यानाश्रित्य जीवन्ती परित्यक्ष्यामि जीवितम् २०
अपारे भव नः पारमप्लवे भव नः प्लवः
कुरुष्व स्थानमस्थाने मृतान्सञ्जीवयस्व नः २१
सर्वे ते शत्रवः सह्या न चेज्जीवितुमिच्छसि
अथ चेदीदृशीं वृत्तिं क्लीबामभ्युपपद्यसे २२
निर्विण्णात्मा हतमना मुञ्चैतां पापजीविकाम्
एकशत्रुवधेनैव शूरो गच्छति विश्रुतिम् २३
इन्द्रो वृत्रवधेनैव महेन्द्रः समपद्यत
माहेन्द्रं च ग्रहं लेभे लोकानां चेश्वरोऽभवत् २४
नाम विश्राव्य वा संख्ये शत्रूनाहूय दंशितान्
सेनाग्रं वापि विद्राव्य हत्वा वा पुरुषं वरम् २५
यदैव लभते वीरः सुयुद्धेन महद्यशः
तदैव प्रव्यथन्तेऽस्य शत्रवो विनमन्ति च २६
त्यक्त्वात्मानं रणे दक्षं शूरं कापुरुषा जनाः
अवशाः पूरयन्ति स्म सर्वकामसमृद्धिभिः २७
राज्यं वाप्युग्रविभ्रंशं संशयो जीवितस्य वा
प्रलब्धस्य हि शत्रोर्वै शेषं कुर्वन्ति साधवः २८
स्वर्गद्वारोपमं राज्यमथ वाप्यमृतोपमम्
रुद्धमेकायने मत्वा पतोल्मुक इवारिषु २९

जहि शत्रून्रणे राजन्स्वधर्ममनुपालय
मा त्वा पश्येत्सुकृपणं शत्रुः श्रीमान्कदाचन ३०
अस्मदीयैश्च शोचद्भिर्नदद्भिश्च परैर्वृतम्
अपि त्वां नानुपश्येयं दीना दीनमवस्थितम् ३१
उष्य सौवीरकन्याभिः श्लाघस्वार्थैर्यथा पुरा
मा च सैन्धवकन्यानामवसन्नो वशं गमः ३२
युवा रूपेण सम्पन्नो विद्ययाभिजनेन च
यस्त्वादृशो विकुर्वीत यशस्वी लोकविश्रुतः
वोढव्ये धुर्यनडुवन्मन्ये मरणमेव तत् ३३
यदि त्वामनुपश्यामि परस्य प्रियवादिनम्
पृष्ठतोऽनुव्रजन्तं वा का शान्तिर्हृदयस्य मे ३४
नास्मिञ्जातु कुले जातो गच्छेद्योऽन्यस्य पृष्ठतः
न त्वं परस्यानुधुरं तात जीवितुमर्हसि ३५
अहं हि क्षत्रहृदयं वेद यत्परिशाश्वतम्
पूर्वैः पूर्वतरैः प्रोक्तं परैः परतरैरपि ३६
यो वै कश्चिदिहाजातः क्षत्रियः क्षत्रधर्मवित्
भयाद्वृत्तिसमीक्षो वा न नमेदिह कस्यचित् ३७
उद्यच्छेदेव न नमेदुद्यमो ह्येव पौरुषम्
अप्यपर्वणि भज्येत न नमेदिह कस्यचित् ३८
मातङ्गो मत्त इव च परीयात्सुमहामनाः
ब्राह्मणेभ्यो नमेन्नित्यं धर्मायैव च सञ्जय ३९
नियच्छन्नितरान्वर्णान्विनिघ्नन्सर्वदुष्कृतः
ससहायोऽसहायो वा यावज्जीवं तथा भवेत् ४०

इति श्रीमहाभारते उद्योगपर्वणि द्वात्रिंशदधिकशततमोऽध्यायः १३२

## त्रयस्त्रिंशदधिक शततमोऽध्यायः

पुत्र उवाच
कृष्णायसस्येव च ते संहत्य हृदयं कृतम्
मम मातस्त्वकरुणे वैरप्रज्ञे ह्यमर्षणे १
अहो क्षत्रसमाचारो यत्र मामपरं यथा

ईदृशं वचनं ब्रूयाद्भवती पुत्रमेकजम् २
किं नु ते मामपश्यन्त्याः पृथिव्या अपि सर्वया
किमाभरणकृत्यं ते किं भोगैर्जीवितेन वा ३
मातोवाच
सर्वारम्भा हि विदुषां तात धर्मार्थकारणात्
तानेवाभिसमीक्ष्याहं सञ्जय त्वामचूचुदम् ४
स समीक्ष्यक्रमोपेतो मुख्यः कालोऽयमागतः
अस्मिंश्चेदागते काले कार्यं न प्रतिपद्यसे
असम्भावितरूपस्त्वं सुनृशंसं करिष्यसि ५
तं त्वामयशसा स्पृष्टं न ब्रूयां यदि सञ्जय
खरीवात्सल्यमाहुस्तन्निः सामर्थ्यमहेतुकम् ६
सद्भिर्विगर्हितं मार्गं त्यज मूर्खनिषेवितम्
अविद्या वै महत्यस्ति यामिमां संश्रिताः प्रजाः ७
तव स्याद्यदि सद्वृत्तं तेन मे त्वं प्रियो भवेः
धर्मार्थगुणयुक्तेन नेतरेण कथञ्चन
दैवमानुषयुक्तेन सद्भिराचरितेन च ८
यो ह्येवमविनीतेन रमते पुत्रनप्तृणा
अनुत्थानवता चापि मोघं तस्य प्रजाफलम् ९
अकुर्वन्तो हि कर्माणि कुर्वन्तो निन्दितानि च
सुखं नैवेह नामुत्र लभन्ते पुरुषाधमाः १०
युद्धायक्षत्रियः सृष्टः सञ्जयेह जयाय च
क्रूराय कर्मणे नित्यं प्रजानां परिपालने
जयन्वा वध्यमानो वा प्राप्नोतीन्द्रसलोकताम् ११
न शक्रभवने पुण्ये दिवि तद्विद्यते सुखम्
यदमित्रान्वशे कृत्वा क्षत्रियः सुखमश्नुते १२
मन्युना दह्यमानेन पुरुषेण मनस्विना
निकृतेनेह बहुशः शत्रून्प्रतिजिगीषया १३
आत्मानं वा परित्यज्य शत्रून्वा विनिपात्य वै
अतोऽन्येन प्रकारेण शान्तिरस्य कुतो भवेत् १४
इह प्राज्ञो हि पुरुषः स्वल्पमप्रियमिच्छति

यस्य स्वल्पं प्रियं लोके ध्रुवं तस्याल्पमप्रियम् १५
प्रियाभावाच्च पुरुषो नैव प्राप्नोति शोभनम्
ध्रुवं चाभावमभ्येति गत्वा गङ्गेव सागरम् १६
पुत्र उवाच
नेयं मतिस्त्वया वाच्या मातः पुत्रे विशेषतः
कारुण्यमेवात्र पश्य भूत्वेह जडमूकवत् १७
मातोवाच
अतो मे भूयसी नन्दिर्यद्देवमनुपश्यसि
चोद्यं मां चोदयस्येतद्भृशं वै चोदयामि ते १८
अथ त्वां पूजयिष्यामि हत्वा वै सर्वसैन्धवान्
अहं पश्यामि विजयं कृत्स्नं भाविनमेव ते १९
पुत्र उवाच
अकोशस्यासहायस्य कुतः स्विद्विजयो मम
इत्यवस्थां विदित्वेमामात्मनात्मनि दारुणाम्
राज्याद्भावो निवृत्तो मे त्रिदिवादिव दुष्कृतेः २०
ईदृशं भवती कञ्चिदुपायमनुपश्यति
तन्मे परिणतप्रज्ञे सम्यक्प्रब्रूहि पृच्छते
करिष्यामि हि तत्सर्वं यथावदनुशासनम् २१
मातोवाच
पुत्रात्मा नावमन्तव्यः पूर्वाभिरसमृद्धिभिः
अभूत्वा हि भवन्त्यर्था भूत्वा नश्यन्ति चापरे २२
अमर्षेणैव चाप्यर्था नारब्धव्याः सुबालिशैः
सर्वेषां कर्मणां तात फले नित्यमनित्यता २३
अनित्यमिति जानन्तो न भवन्ति भवन्ति च
अथ ये नैव कुर्वन्ति नैव जातु भवन्ति ते २४
एकगुण्यमनीहायामभावः कर्मणां फलम्
अथ द्वैगुण्यमीहायां फलं भवति वा न वा २५
यस्य प्रागेव विदिता सर्वार्थानामनित्यता
नुदेद्वृद्धिसमृद्धी स प्रतिकूले नृपात्मज २६
उत्थातव्यं जागृतव्यं योक्तव्यं भूतिकर्मसु

भविष्यतीत्येव मनः कृत्वा सततमव्यथैः
मङ्गलानि पुरस्कृत्य ब्राह्मणैश्चेश्वरैः सह २७
प्राज्ञस्य नृपतेराशु वृद्धिर्भवति पुत्रक
अभिवर्तति लक्ष्मीस्तं प्राचीमिव दिवाकरः २८
निदर्शनान्युपायांश्च बहून्युद्धर्षणानि च
अनुदर्शितरूपोऽसि पश्यामि कुरु पौरुषम्
पुरुषार्थमभिप्रेतं समाहर्तुमिहार्हसि २९
क्रुद्धाँल्लुब्धान्परिक्षीणानवक्षिप्तान्विमानितान्
स्पर्धिनश्चैव ये केचित्तान्युक्त उपधारय ३०
एतेन त्वं प्रकारेण महतो भेत्स्यसे गणान्
महावेग इवोद्धूतो मातरिश्वा बलाहकान् ३१
तेषामग्रप्रदायी स्याः कल्योत्थायी प्रियंवदः
ते त्वां प्रियं करिष्यन्ति पुरो धास्यन्ति च ध्रुवम् ३२
यदैव शत्रुर्जानीयात्सपत्नं त्यक्तजीवितम्
तदैवास्मादुद्विजते सर्पाद्वेश्मगतादिव ३३
तं विदित्वा पराक्रान्तं वशे न कुरुते यदि
निर्वादैर्निर्वदेदेनमन्ततस्तद्भविष्यति ३४
निर्वादादास्पदं लब्ध्वा धनवृद्धिर्भविष्यति
धनवन्तं हि मित्राणि भजन्ते चाश्रयन्ति च ३५
स्खलितार्थं पुनस्तात सन्त्यजन्त्यपि बान्धवाः
अप्यस्मिन्नाश्रयन्ते च जुगुप्सन्ति च तादृशम् ३६
शत्रुं कृत्वा यः सहायं विश्वासमुपगच्छति
अतः सम्भाव्यमेवैतद्यद्राज्यं प्राप्नुयादिति ३७
इति श्रीमहाभारते उद्योगपर्वणि त्रयस्त्रिंशदधिकशततमोऽध्यायः १३३

## चतुस्त्रिंशदधिकशततमोऽध्यायः

मातोवाच
नैव राज्ञा दरः कार्यो जातु कस्याञ्चिदापदि
अथ चेदपि दीर्णः स्यान्नैव वर्तेत दीर्णवत् १
दीर्णं हि दृष्ट्वा राजानं सर्वमेवानुदीर्यते

राष्ट्रं बलममात्याश्च पृथक्कुर्वन्ति ते मतिम् २
शत्रूनेके प्रपद्यन्ते प्रजहत्यपरे पुनः
अन्वेके प्रजिहीर्षन्ति ये पुरस्ताद्विमानिताः ३
य एवात्यन्तसुहृदस्त एनं पर्युपासते
अशक्तयः स्वस्तिकामा बद्धवत्सा इडा इव
शोचन्तमनुशोचन्ति प्रतीतानिव बान्धवान् ४
अपि ते पूजिताः पूर्वमपि ते सुहृदो मताः
ये राष्ट्रमभिमन्यन्ते राज्ञो व्यसनमीयुषः
मा दीदरस्त्वं सुहृदो मा त्वां दीर्णं प्रहासिषुः ५
प्रभावं पौरुषं बुद्धिं जिज्ञासन्त्या मया तव
उल्लपन्त्या समाश्वासं बलवानिव दुर्बलम् ६
यद्येतत्संविजानासि यदि सम्यग्ब्रवीम्यहम्
कृत्वासौम्यमिवात्मानं जयायोत्तिष्ठ सञ्जय ७
अस्ति नः कोशनिचयो महानविदितस्तव
तमहं वेद नान्यस्तमुपसम्पादयामि ते ८
सन्ति नैकशता भूयः सुहृदस्तव सञ्जय
सुखदुःखसहा वीर शतार्हा अनिवर्तिनः ९
तादृशा हि सहाया वै पुरुषस्य बुभूषतः
ईषदुज्जिहतः किञ्चित्सचिवाः शत्रुकर्शनाः १०
पुत्र उवाच
कस्य त्वीदृशकं वाक्यं श्रुत्वापि स्वल्पचेतसः
तमो न व्यपहन्येत सुचित्रार्थपदाक्षरम् ११
उदके धूरियं धार्या सर्तव्यं प्रवणे मया
यस्य मे भवती नेत्री भविष्यद्भूतदर्शिनी १२
अहं हि वचनं त्वत्तः शुश्रूषुरपरापरम्
किञ्चित्किञ्चित्प्रतिवदंस्तूष्णीमासं मुहुर्मुहुः १३
अतृप्यन्नमृतस्येव कृच्छ्राल्लब्धस्य बान्धवात्
उद्यच्छाम्येष शत्रूणां नियमाय जयाय च १४
कुन्त्युवाच
सदश्व इव स क्षिप्तः प्रणुन्नो वाक्यसायकैः

तच्चकार तथा सर्वं यथावदनुशासनम् १५
इदमुद्धर्षणं भीमं तेजोवर्धनमुत्तमम्
राजानं श्रावयेन्मन्त्री सीदन्तं शत्रुपीडितम् १६
जयो नामेतिहासोऽय श्रोतव्यो विजिगीषुणा
महीं विजयते क्षिप्रं श्रुत्वा शत्रूंश्च मर्दति १७
इदं पुंसवनं चैव वीराजननमेव च
अभीक्ष्णं गर्भिणी श्रुत्वा ध्रुवं वीरं प्रजायते १८
विद्याशूरं तपःशूरं दमशूरं तपस्विनम्
ब्राह्म्या श्रिया दीप्यमानं साधुवादेन सम्मतम् १९
अर्चिष्मन्तं बलोपेतं महाभागं महारथम्
धृष्टवन्तमनाधृष्यं जेतारमपराजितम् २०
नियन्तारमसाधूनां गोप्तारं धर्मचारिणाम्
तदर्थं क्षत्रिया सूते वीरं सत्यपराक्रमम् २१
इति श्रीमहाभारते उद्योगपर्वणि चतुस्त्रिंशदधिकशततमोऽध्यायः १३४

## पञ्चत्रिंशदधिक शततमोऽध्यायः

कुन्त्युवाच
अर्जुनं केशव ब्रूयास्त्वयि जाते स्म सूतके
उपोपविष्टा नारीभिराश्रमे परिवारिता १
अथान्तरिक्षे वागासीद्दिव्यरूपा मनोरमा
सहस्राक्षसमः कुन्ति भविष्यत्येष ते सुतः २
एष जेष्यति संग्रामे कुरून्सर्वान्समागतान्
भीमसेनद्वितीयश्च लोकमुद्वर्तयिष्यति ३
पुत्रस्ते पृथिवीं जेता यशश्चास्य दिवस्पृशम्
हत्वा कुरून्ग्रामजन्ये वासुदेवसहायवान् ४
पित्र्यमंशं प्रनष्टं च पुनरप्युद्धरिष्यति
भ्रातृभिः सहितं श्रीमांस्त्रीन्मेधानाहरिष्यति ५
तं सत्यसन्धं बीभत्सुं सव्यसाचिनमच्युत
यथाहमेवं जानामि बलवन्तं दुरासदम्
तथा तदस्तु दाशार्ह यथा वागभ्यभाषत ६

धर्मश्चेदस्ति वार्ष्णेय तथा सत्यं भविष्यति
त्वं चापि तत्तथा कृष्ण सर्वं सम्पादयिष्यसि ७
नाहं तदभ्यसूयामि यथा वागभ्यभाषत
नमो धर्माय महते धर्मो धारयति प्रजाः ८
एतद्धनञ्जयो वाच्यो नित्योद्युक्तो वृकोदरः
यदर्थं क्षत्रिया सूते तस्य कालोऽयमागतः
न हि वैरं समासाद्य सीदन्ति पुरुषर्षभाः ९
विदिता ते सदा बुद्धिर्भीमस्य न स शाम्यति
यावदन्तं न कुरुते शत्रूणां शत्रुकर्शनः १०
सर्वधर्मविशेषज्ञां स्नुषां पाण्डोर्महात्मनः
ब्रूया माधव कल्याणीं कृष्णां कृष्ण यशस्विनीम् ११
युक्तमेतन्महाभागे कुले जाते यशस्विनि
यन्मे पुत्रेषु सर्वेषु यथावत्त्वमवर्तिथाः १२
माद्रीपुत्रौ च वक्तव्यौ क्षत्रधर्मरतावुभौ
विक्रमेणार्जितान्भोगान्वृणीतं जीवितादपि १३
विक्रमाधिगता ह्यर्थाः क्षत्रधर्मेण जीवतः
मनो मनुष्यस्य सदा प्रीणन्ति पुरुषोत्तम १४
यच्च वः प्रेक्षमाणानां सर्वधर्मोपचायिनी
पाञ्चाली परुषाण्युक्ता को न तत्क्षन्तुमर्हति १५
न राज्यहरणं दुःखं द्यूते चापि पराजयः
प्रव्राजनं सुतानां वा न मे तद्दुःखकारणम् १६
यत्तु सा बृहती श्यामा सभायां रुदती तदा
अश्रौषीत्परुषा वाचस्तन्मे दुःखतरं मतम् १७
स्त्रीधर्मिणी वरारोहा क्षत्रधर्मरता सदा
नाध्यगच्छत्तदा नाथं कृष्णा नाथवती सती १८
तं वै ब्रूहि महाबाहो सर्वशस्त्रभृतां वरम्
अर्जुनं पुरुषव्याघ्रं द्रौपद्याः पदवीं चर १९
विदितौ हि तवात्यन्तं क्रुद्धाविव यमान्तकौ
भीमार्जुनौ नयेतां हि देवानपि परां गतिम् २०
तयोश्चैतदवज्ञानं यत्सा कृष्णा सभागता

दुःशासनश्च यद्वीमं कटुकान्यभ्यभाषत
पश्यतां कुरुवीराणां तच्च संस्मारयेः पुनः २१
पाण्डवान्कुशलं पृच्छेः सपुत्रान्कृष्णया सह
मां च कुशलिनीं ब्रूयास्तेषु भूयो जनार्दन
अरिष्टं गच्छ पन्थानं पुत्रान्मे परिपालय २२
वैशम्पायन उवाच
अभिवाद्याथ तां कृष्णः कृत्वा चाभिप्रदक्षिणम्
निश्चक्राम महाबाहुः सिंहखेलगतिस्ततः २३
ततो विसर्जयामास भीष्मादीन्कुरुपुङ्गवान्
आरोप्य च रथे कर्णं प्रायात्सात्यकिना सह २४
ततः प्रयाते दाशार्हे कुरवः सङ्गता मिथः
जजल्पुर्महदाश्चर्यं केशवे परमाद्भुतम् २५
प्रमूढा पृथिवी सर्वा मृत्युपाशसिता कृता
दुर्योधनस्य बालिश्यान्नैतदस्तीति चाब्रुवन् २६
ततो निर्याय नगरात्प्रययौ पुरुषोत्तमः
मन्त्रयामास च तदा कर्णेन सुचिरं सह २७
विसर्जयित्वा राधेयं सर्वयादवनन्दनः
ततो जवेन महता तूर्णमश्वानचोदयत् २८
ते पिबन्त इवाकाशं दारुकेण प्रचोदिताः
हया जग्मुर्महावेगा मनोमारुतरंहसः २९
ते व्यतीत्य तमध्वानं क्षिप्रं श्येना इवाशुगाः
उच्चैः सूर्यमुपप्लव्यं शार्ङ्गधन्वानमावहन् ३०
इति श्रीमहाभारते उद्योगपर्वणि पञ्चत्रिंशदधिकशततमोऽध्यायः १३५

## षट् त्रिंशदधिक शततमोऽध्यायः

वैशम्पायन उवाच
कुन्त्यास्तु वचनं श्रुत्वा भीष्मद्रोणौ महारथौ
दुर्योधनमिदं वाक्यमुचतुः शासनातिगम् १
श्रुतं ते पुरुषव्याघ्र कुन्त्याः कृष्णस्य सन्निधौ
वाक्यमर्थवदव्यग्रमुक्तं धर्म्यमनुत्तमम् २

तत्करिष्यन्ति कौन्तेया वासुदेवस्य सम्मतम्
न हि ते जातु शाम्येरन्नृते राज्येन कौरव ३
क्लेशिता हि त्वया पार्था धर्मपाशसितास्तदा
सभायां द्रौपदी चैव तैश्च तन्मर्षितं तव ४
कृतास्त्रं ह्यर्जुनं प्राप्य भीमं च कृतनिश्रमम्
गाण्डीवं चेषुधी चैव रथं च ध्वजमेव च
सहायं वासुदेवं च न क्षंस्यति युधिष्ठिरः ५
प्रत्यक्षं ते महाबाहो यथा पार्थेन धीमता
विराटनगरे पूर्वं सर्वे स्म युधि निर्जिताः ६
दानवान्घोरकर्माणो निवातकवचान्युधि
रौद्रमस्त्रं समादाय दग्धवानस्त्रवह्निना ७
कर्णप्रभृतयश्चेमे त्वं चापि कवची रथी
मोक्षिता घोषयात्रायां पर्याप्तं तन्निदर्शनम् ८
प्रशाम्य भरतश्रेष्ठ भ्रातृभिः सह पाण्डवैः
रक्षेमां पृथिवीं सर्वां मृत्योर्दंष्ट्रान्तरं गताम् ९
ज्येष्ठो भ्राता धर्मशीलो वत्सलः श्लक्ष्णवाक्शुचिः
तं गच्छ पुरुषव्याघ्रं व्यपनीयेह किल्बिषम् १०
दृष्टश्चेत्त्वं पाण्डवेन व्यपनीतशरासनः
प्रसन्नभ्रुकुटिः श्रीमान्कृता शान्तिः कुलस्य नः ११
तमभ्येत्य सहामात्यः परिष्वज्य नृपात्मजम्
अभिवादय राजानं यथापूर्वमरिन्दम १२
अभिवादयमानं त्वां पाणिभ्यां भीमपूर्वजः
प्रतिगृह्णातु सौहार्दात्कुन्तीपुत्रो युधिष्ठिरः १३
सिंहस्कन्धोरुबाहुस्त्वां वृत्तायतमहाभुजः
परिष्वजतु बाहुभ्यां भीमः प्रहरतां वरः १४
सिंहग्रीवो गुडाकेशस्ततस्त्वां पुष्करेक्षणः
अभिवादयतां पार्थः कुन्तीपुत्रो धनञ्जयः १५
आश्विनेयौ नरव्याघ्रौ रूपेणाप्रतिमौ भुवि
तौ च त्वां गुरुवत्प्रेम्णा पूजया प्रत्युदीयताम् १६
मुञ्चन्त्वानन्दजाश्रूणि दाशार्हप्रमुखा नृपाः

सङ्गच्छ भ्रातृभिः सार्धं मानं सन्त्यज्य पार्थिव १७
प्रशाधि पृथिवीं कृत्स्नां ततस्त्वं भ्रातृभिः सह
समालिङ्ग्य च हर्षेण नृपा यान्तु परस्परम् १८
अलं युद्धेन राजेन्द्र सुहृदां शृणु कारणम्
ध्रुवं विनाशो युद्धे हि क्षत्रियाणां प्रदृश्यते १९
ज्योतींषि प्रतिकूलानि दारुणा मृगपक्षिणः
उत्पाता विविधा वीर दृश्यन्ते क्षत्रनाशनाः २०
विशेषत इहास्माकं निमित्तानि विनाशने
उल्काभिर्हि प्रदीप्ताभिर्वध्यते पृतना तव २१
वाहनान्यप्रहृष्टानि रुदन्तीव विशां पते
गृध्रास्ते पर्युपासन्ते सैन्यानि च समन्ततः २२
नगरं न यथापूर्वं तथा राजनिवेशनम्
शिवाश्चाशिवनिर्घोषा दीप्तां सेवन्ति वै दिशम् २३
कुरु वाक्यं पितुर्मातुरस्माकं च हितैषिणाम्
त्वय्यायत्तो महाबाहो शमो व्यायाम एव च २४
न चेत्करिष्यसि वचः सुहृदामरिकर्शन
तप्स्यसे वाहिनीं दृष्ट्वा पार्थबाणप्रपीडिताम् २५
भीमस्य च महानादं नदतः शुष्मिणो रणे
श्रुत्वा स्मर्तासि मे वाक्यं गाण्डीवस्य च निस्वनम्
यद्येतदपसव्यं ते भविष्यति वचो मम २६
इति श्रीमहाभारते उद्योगपर्वणि षट्त्रिंशदधिकशततमोऽध्यायः १३६

## सप्तत्रिंशदधिक शततमोऽध्यायः

वैशम्पायन उवाच
एवमुक्तस्तु विमनास्तिर्यग्दृष्टिरधोमुखः
संहत्य च भ्रुवोर्मध्यं न किञ्चिद्व्याजहार ह १
तं वै विमनसं दृष्ट्वा सम्प्रेक्ष्यान्योन्यमन्तिकात्
पुनरेवोत्तरं वाक्यमुक्तवन्तौ नरर्षभौ २
भीष्म उवाच
शुश्रूषुमनसूयं च ब्रह्मण्यं सत्यसंगरम्

प्रतियोत्स्यामहे पार्थमतो दुःखतरं नु किम् ३
द्रोण उवाच
अश्वत्थाम्नि यथा पुत्रे भूयो मम धनञ्जये
बहुमानः परो राजन्संनतिश्च कपिध्वजे ४
तं चेत्पुत्रात्प्रियतरं प्रतियोत्स्ये धनञ्जयम्
क्षत्रधर्ममनुष्ठाय धिगस्तु क्षत्रजीविकाम् ५
यस्य लोके समो नास्ति कश्चिदन्यो धनुर्धरः
मत्प्रसादात्स बीभत्सुः श्रेयानन्यैर्धनुर्धरैः ६
मित्रध्रुग्दुष्टभावश्च नास्तिकोऽथानृजुः शठः
न सत्सु लभते पूजां यज्ञे मूर्ख इवागतः ७
वार्यमाणोऽपि पापेभ्यः पापात्मा पापमिच्छति
चोद्यमानोऽपि पापेन शुभात्मा शुभमिच्छति ८
मिथ्योपचरिता ह्येते वर्तमाना ह्यनु प्रिये
अहितत्वाय कल्पन्ते दोषा भरतसत्तम ९
त्वमुक्तः कुरुवृद्धेन मया च विदुरेण च
वासुदेवेन च तथा श्रेयो नैवाभिपद्यसे १०
अस्ति मे बलमित्येव सहसा त्वं तितीर्षसि
सग्राहनक्रमकरं गङ्गावेगमिवोष्णगे ११
वास एव यथा हि त्वं प्रावृणवानोऽद्य मन्यसे
स्रजं त्यक्तामिव प्राप्य लोभाद्यौधिष्ठिरीं श्रियम् १२
द्रौपदीसहितं पार्थं सायुधैर्भ्रातृभिर्वृतम्
वनस्थमपि राज्यस्थः पाण्डवं कोऽतिजीवति १३
निदेशे यस्य राजानः सर्वे तिष्ठन्ति किङ्कराः
तमैलविलमासाद्य धर्मराजो व्यराजत १४
कुबेरसदनं प्राप्य ततो रत्नान्यवाप्य च
स्फीतमाक्रम्य ते राष्ट्रं राज्यमिच्छन्ति पाण्डवाः १५
दत्तं हुतमधीतं च ब्राह्मणास्तर्पिता धनैः
आवयोर्गतमायुश्च कृतकृत्यौ च विद्धि नौ १६
त्वं तु हित्वा सुखं राज्यं मित्राणि च धनानि च
विग्रहं पाण्डवैः कृत्वा महद्व्यसनमाप्स्यसि १७

द्रौपदी यस्य चाशास्ते विजयं सत्यवादिनी
तपोघोरव्रता देवी न त्वं जेष्यसि पाण्डवम् १८
मन्त्री जनार्दनो यस्य भ्राता यस्य धनञ्जयः
सर्वशस्त्रभृतां श्रेष्ठं कथं जेष्यसि पाण्डवम् १९
सहाया ब्राह्मणा यस्य धृतिमन्तो जितेन्द्रियाः
तमुग्रतपसं वीरं कथं जेष्यसि पाण्डवम् २०
पुनरुक्तं च वक्ष्यामि यत्कार्यं भूतिमिच्छता
सुहृदा मज्जमानेषु सुहृत्सु व्यसनार्णवे २१
अलं युद्धेन तैर्वीरैः शाम्य त्वं कुरुवृद्धये
मा गमः ससुतामात्यः सबलश्च पराभवम् २२
इति श्रीमहाभारते उद्योगपर्वणि सप्तत्रिंशदधिकशततमोऽध्यायः १३७
समाप्तं भगवद्यानपर्व

अष्टत्रिंशदधिकशततमोऽध्यायः

धृतराष्ट्र उवाच
राजपुत्रैः परिवृतस्तथामात्यैश्च संजय
उपारोप्य रथे कर्णं निर्यातो मधुसूदनः १
किमब्रवीद्रथोपस्थे राधेयं परवीरहा
कानि सान्त्वानि गोविन्दः सूतपुत्रे प्रयुक्तवान् २
ओघमेघस्वनः काले यत्कृष्णः कर्णमब्रवीत्
मृदु वा यदि वा तीक्ष्णं तन्ममाचक्ष्व संजय ३
सञ्जय उवाच
आनुपूर्व्येण वाक्यानि श्लक्ष्णानिच मृदूनि च
प्रियाणि धर्मयुक्तानि सत्यानि च हितानि च ४
हृदयग्रहणीयानि राधेयं मधुसूदनः
यान्यब्रवीदमेयात्मा तानि मे शृणु भारत ५
वासुदेव उवाच
उपासितास्ते राधेय ब्राह्मणा वेदपारगाः
तत्त्वार्थं परिपृष्टाश्च नियतेनानसूयया ६
त्वमेव कर्ण जानासि वेदवादान्सनातनान्

त्वं ह्येव धर्मशास्त्रेषु सूक्ष्मेषु परिनिष्ठितः ७
कानीनश्च सहोढश्च कन्यायां यश्च जायते
वोढारं पितरं तस्य प्राहुः शास्त्रविदो जनाः ८
सोऽसि कर्ण तथा जातः पाण्डोः पुत्रोऽसि धर्मतः
निग्रहाद्धर्मशास्त्राणामेहि राजा भविष्यसि ९
पितृपक्षे हि ते पार्था मातृपक्षे च वृष्णयः
द्वौ पक्षावभिजानीहि त्वमेतौ पुरुषर्षभ १०
मया सार्धमितो यातमद्य त्वां तात पाण्डवाः
अभिजानन्तु कौन्तेयं पूर्वजातं युधिष्ठिरात् ११
पादौ तव ग्रहीष्यन्ति भ्रातरः पञ्च पाण्डवाः
द्रौपदेयास्तथा पञ्चसौभद्रश्चापराजितः १२
राजानो राजपुत्राश्च पाण्डवार्थे समागताः
पादौ तव ग्रहीष्यन्ति सर्वे चान्धकवृष्णयः १३
हिरण्मयांश्च ते कुम्भान्राजतान्पार्थिवांस्तथा
ओषध्यः सर्वबीजानि सर्वरत्नानि वीरुधः १४
राजन्या राजकन्याश्चाप्यानयन्त्वभिषेचनम्
षष्ठे च त्वां तथा काले द्रौपद्युपगमिष्यति १५
अद्य त्वामभिषिञ्चन्तु चातुर्वैद्या द्विजातयः
पुरोहितः पाण्डवानां व्याघ्रचर्मण्यवस्थितम् १६
तथैव भ्रातरः पञ्च पाण्डवाः पुरुषर्षभाः
द्रौपदेयास्तथा पञ्च पाञ्चालाश्चेदयस्तथा १७
अहं च त्वाभिषेक्ष्यामि राजानं पृथिवीपतिम्
युवराजोऽस्तु ते राजा कुन्तीपुत्रो युधिष्ठिरः १८
गृहीत्वा व्यजनं श्वेतं धर्मात्मा संशितव्रतः
उपान्वारोहतु रथं कुन्तीपुत्रो युधिष्ठिरः १९
छत्रं च ते महच्छ्वेतं भीमसेनो महाबलः
अभिषिक्तस्य कौन्तेय कौन्तेयो धारयिष्यति २०
किङ्किणीशतनिर्घोषं वैयाघ्रपरिवारणम्
रथं श्वेतहयैर्युक्तमर्जुनो वाहयिष्यति २१
अभिमन्युश्च ते नित्यं प्रत्यासन्नो भविष्यति

नकुलः सहदेवश्च द्रौपदेयाश्च पञ्च ये २२
पाञ्चालास्त्वानुयास्यन्ति शिखण्डी च महारथः
अहं च त्वानुयास्यामि सर्वे चान्धकवृष्णयः
दाशार्हाः परिवारास्ते दाशार्णाश्च विशां पते २३
भुंच्व राज्यं महाबाहो भ्रातृभिः सह पाण्डवैः
जपैर्होमैश्च संयुक्तो मङ्गलैश्च पृथग्विधैः २४
पुरोगमाश्च ते सन्तु द्रविडाः सह कुन्तलैः
आन्ध्रास्तालचराश्चैव चूचुपा वेणुपास्तथा २५
स्तुवन्तु त्वाद्य बहुशः स्तुतिभिः सूतमागधाः
विजयं वसुषेणस्य घोषयन्तु च पाण्डवाः २६
स त्वं परिवृतः पार्थैर्नक्षत्रैरिव चन्द्रमाः
प्रशाधि राज्यं कौन्तेय कुन्तीं च प्रतिनन्दय २७
मित्राणि ते प्रहृष्यन्तु व्यथन्तु रिपवस्तथा
सौभ्रात्रं चैव तेऽद्यास्तु भ्रातृभिः सह पाण्डवैः २८
इति श्रीमहाभारते उद्योगपर्वणि अष्टत्रिंशदधिकशततमोऽध्यायः १३८

## एकोन चत्वारिंशदधिक शततमोऽध्यायः

कर्ण उवाच
असंशयं सौहृदान्मे प्रणयाच्चात्थ केशव
सख्येन चैव वार्ष्णेय श्रेयस्कामतयैव च १
सर्वं चैवाभिजानामि पाण्डोः पुत्रोऽस्मि धर्मतः
निग्रहाद्धर्मशास्त्राणां यथा त्वं कृष्ण मन्यसे २
कन्या गर्भं समाधत्त भास्करान्मां जनार्दन
आदित्यवचनाच्चैव जातं मां सा व्यसर्जयत् ३
सोऽस्मि कृष्ण तथा जातः पाण्डोः पुत्रोऽस्मि धर्मतः
कुन्त्या त्वहमपाकीर्णो यथा न कुशलं तथा ४
सूतो हि मामधिरथो दृष्ट्वैव आनयद्गृहान्
राधायाश्चैव मां प्रादात्सौहार्दान्मधुसूदन ५
मत्स्नेहाच्चैव राधायाः सद्यः क्षीरमवातरत्
सा मे मूत्रं पुरीषं च प्रतिजग्राह माधव ६

तस्याः पिण्डव्यपनयं कुर्यादस्मद्विधः कथम्
धर्मविद्धर्मशास्त्राणां श्रवणे सततं रतः ७
तथा मामभिजानाति सूतश्चाधिरथः सुतम्
पितरं चाभिजानामि तमहं सौहृदात्सदा ८
स हि मे जातकर्मादि कारयामास माधव
शास्त्रदृष्टेन विधिना पुत्रप्रीत्या जनार्दन ९
नाम मे वसुषेणेति कारयामास वै द्विजैः
भार्याश्चोढा मम प्राप्ते यौवने तेन केशव १०
तासु पुत्रश्च पौत्राश्च मम जाता जनार्दन
तासु मे हृदयं कृष्ण सञ्जातं कामबन्धनम् ११
न पृथिव्या सकलया न सुवर्णस्य राशिभिः
हर्षाद्भयाद्वा गोविन्द अनृतं वक्तुमुत्सहे १२
धृतराष्ट्रकुले कृष्ण दुर्योधनसमाश्रयात्
मया त्रयोदश समा भुक्तं राज्यमकण्टकम् १३
इष्टं च बहुभिर्यज्ञैः सह सूतैर्मयासकृत्
आवाहाश्च विवाहाश्च सह सूतैः कृता मया १४
मां च कृष्ण समाश्रित्य कृतः शस्त्रसमुद्यमः
दुर्योधनेन वार्ष्णेय विग्रहश्चापि पाण्डवैः १५
तस्माद्रणे द्वैरथे मां प्रत्युद्यातारमच्युत
वृतवान्परमं हृष्टः प्रतीपं सव्यसाचिनः १६
वधाद्बन्धाद्भयाद्वापि लोभाद्वापि जनार्दन
अनृतं नोत्सहे कर्त्तुं धार्तराष्ट्रस्य धीमतः १७
यदि ह्यद्य न गच्छेयं द्वैरथं सव्यसाचिना
अकीर्तिः स्याद्धृषीकेश मम पार्थस्य चोभयोः १८
असंशयं हितार्थाय ब्रूयास्त्वं मधुसूदन
सर्वं च पाण्डवाः कुर्युस्त्वद्वशित्वान्न संशयः १९
मन्त्रस्य नियमं कुर्यास्त्वमत्र पुरुषोत्तम
एतदत्र हितं मन्ये सर्वयादवनन्दन २०
यदि जानाति मां राजा धर्मात्मा संशितव्रतः
कुन्त्याः प्रथमजं पुत्रं न स राज्यं ग्रहीष्यति २१

प्राप्य चापि महद्राज्यं तदहं मधुसूदन
स्फीतं दुर्योधनायैव सम्प्रदद्यामरिन्दम २२
स एव राजा धर्मात्मा शाश्वतोऽस्तु युधिष्ठिरः
नेता यस्य हृषीकेशो योद्धा यस्य धनञ्जयः २३
पृथिवी तस्य राष्ट्रं च यस्य भीमो महारथः
नकुलः सहदेवश्च द्रौपदेयाश्च माधव २४
उत्तमौजा युधामन्युः सत्यधर्मा च सोमकिः
चैद्यश्च चेकितानश्च शिखण्डी चापराजितः २५
इन्द्रगोपकवर्णाश्च केकया भ्रातरस्तथा
इन्द्रायुधसवर्णश्च कुन्तिभोजो महारथः २६
मातुलो भीमसेनस्य सेनजिच्च महारथः
शङ्खः पुत्रो विराटस्य निधिस्त्वं च जनार्दन २७
महानयं कृष्ण कृतः क्षत्रस्य समुदानयः
राज्यं प्राप्तमिदं दीप्तं प्रथितं सर्वराजसु २८
धार्तराष्ट्रस्य वार्ष्णेय शस्त्रयज्ञो भविष्यति
अस्य यज्ञस्य वेत्ता त्वं भविष्यसि जनार्दन
आध्वर्यवं च ते कृष्ण क्रतावस्मिन्भविष्यति २९
होता चैवात्र बीभत्सुः सन्नद्धः स कपिध्वजः
गाण्डीवं स्रुक्तथाज्यं च वीर्यं पुंसां भविष्यति ३०
ऐन्द्रं पाशुपतं ब्राह्मं स्थूणाकर्णं च माधव
मन्त्रास्तत्र भविष्यन्ति प्रयुक्ताः सव्यसाचिना ३१
अनुयातश्च पितरमधिको वा पराक्रमे
ग्रावस्तोत्रं स सौभद्रः सम्यक्तत्र करिष्यति ३२
उद्गातात्र पुनर्भीमः प्रस्तोता सुमहाबलः
विनदन्स नरव्याघ्रो नागानीकान्तकृद्रणे ३३
स चैव तत्र धर्मात्मा शश्वद्राजा युधिष्ठिरः
जपैर्होमैश्च संयुक्तो ब्रह्मत्वं कारयिष्यति ३४
शङ्खशब्दाः समुरजा भेर्यश्च मधुसूदन
उत्कृष्टसिंहनादाश्च सुब्रह्मण्यो भविष्यति ३५
नकुलः सहदेवश्च माद्रीपुत्रौ यशस्विनौ

शामित्रं तौ महावीर्यौ सम्यक्तत्र करिष्यतः ३६
कल्माषदण्डा गोविन्द विमला रथशक्तयः
यूपाः समुपकल्पन्तामस्मिन्यज्ञे जनार्दन ३७
कर्णिनालीकनाराचा वत्सदन्तोपबृंहणाः
तोमराः सोमकलशाः पवित्राणि धनूंषि च ३८
असयोऽत्र कपालानि पुरोडाशाः शिरांसि च
हविस्तु रुधिरं कृष्ण अस्मिन्यज्ञे भविष्यति ३९
इध्माः परिधयश्चैव शक्त्योऽथ विमला गदाः
सदस्या द्रोणशिष्याश्च कृपस्य च शरद्वतः ४०
इषवोऽत्र परिस्तोमा मुक्ता गाण्डीवधन्वना
महारथप्रयुक्ताश्च द्रोणद्रौणिप्रचोदिताः ४१
प्रातिप्रास्थानिकं कर्म सात्यकिः स करिष्यति
दीक्षितो धार्तराष्ट्रोऽत्र पत्नी चास्य महाचमूः ४२
घटोत्कचोऽत्र शामित्रं करिष्यति महाबलः
अतिरात्रे महाबाहो वितते यज्ञकर्मणि ४३
दक्षिणा त्वस्य यज्ञस्य धृष्टद्युम्नः प्रतापवान्
वैताने कर्मणि तते जातो यः कृष्ण पावकात् ४४
यदब्रुवमहं कृष्ण कटुकानि स्म पाण्डवान्
प्रियार्थं धार्तराष्ट्रस्य तेन तप्येऽद्य कर्मणा ४५
यदा द्रक्ष्यसि मां कृष्ण निहतं सव्यसाचिना
पुनश्चितिस्तदा चास्य यज्ञस्याथ भविष्यति ४६
दुःशासनस्य रुधिरं यदा पास्यति पाण्डवः
आनर्दं नर्दतः सम्यक्तदा सुत्यं भविष्यति ४७
यदा द्रोणं च भीष्मं च पाञ्चाल्यौ पातयिष्यतः
तदा यज्ञावसानं तद्भविष्यति जनार्दन ४८
दुर्योधनं यदा हन्ता भीमसेनो महाबलः
तदा समाप्स्यते यज्ञो धार्तराष्ट्रस्य माधव ४९
स्नुषाश्च प्रस्नुषाश्चैव धृतराष्ट्रस्य सङ्गताः
हतेश्वरा हतसुता हतनाथाश्च केशव ५०
गान्धार्या सह रोदन्त्यः श्वगृध्रकुरराकुले

स यज्ञेऽस्मिन्नवभृथो भविष्यति जनार्दन ५१
विद्यावृद्धा वयोवृद्धाः क्षत्रियाःक्षत्रियर्षभ
वृथामृत्युं न कुर्वीरंस्त्वत्कृते मधुसूदन ५२
शस्त्रेण निधनं गच्छेत्समृद्धं क्षत्रमण्डलम्
कुरुक्षेत्रे पुण्यतमे त्रैलोक्यस्यापि केशव ५३
तदत्र पुण्डरीकाक्ष विधत्स्व यदभीप्सितम्
यथा कार्त्स्न्येन वार्ष्णेय क्षत्रं स्वर्गमवाप्नुयात् ५४
यावत्स्थास्यन्ति गिरयः सरितश्च जनार्दन
तावत्कीर्तिभवः शब्दः शाश्वतोऽय भविष्यति ५५
ब्राह्मणाः कथयिष्यन्ति महाभारतमाहवम्
समागमेषु वार्ष्णेय क्षत्रियाणां यशोधरम् ५६
समुपानय कौन्तेयं युद्धाय मम केशव
मन्त्रसंवरणं कुर्वन्नित्यमेव परन्तप ५७
इति श्रीमहाभारते उद्योगपर्वणि एकोनचत्वारिंशदधिकशततमोऽध्यायः
१३९

## चत्वारिंशदधिक शततमोऽध्यायः

संजय उवाच
कर्णस्य वचनं श्रुत्वा केशवःपरवीरहा
उवाच प्रहसन्वाक्यं स्मितपूर्वमिदं तदा १
अपि त्वां न तपेत्कर्ण राज्यलाभोपपादना
मया दत्तां हि पृथिवीं न प्रशासितुमिच्छसि २
ध्रुवो जयः पाण्डवानामितीदं न संशयः कश्चन विद्यतेऽत्र
जयध्वजो दृश्यते पाण्डवस्य समुच्छ्रितो वानरराज उग्रः ३
दिव्या माया विहिता भौवनेन समुच्छ्रिता इन्द्रकेतुप्रकाशा
दिव्यानि भूतानि भयावहानि दृश्यन्ति चैवात्र भयानकानि ४
न सज्जते शैलवनस्पतिभ्य ऊर्ध्वं तिर्यग्योजनमात्ररूपः
श्रीमान्ध्वजः कर्ण धनञ्जयस्य समुच्छ्रितः पावकतुल्यरूपः ५
यदा द्रक्ष्यसि संग्रामे श्वेताश्वं कृष्णसारथिम्
एन्द्रमस्त्रं विकुर्वाणमुभे चैवाग्निमारुते ६

गाण्डीवस्य च निर्घोषं विस्फूर्जितमिवाशनेः
न तदा भविता त्रेता न कृतं द्वापरं न च ७
यदा द्रक्ष्यसि संग्रामे कुन्तीपुत्रं युधिष्ठिरम्
जपहोमसमायुक्तं स्वां रक्षन्तं महाचमूम् ८
आदित्यमिव दुर्धर्षं तपन्तं शत्रुवाहिनीम्
न तदा भविता त्रेता न कृतं द्वापरं न च ९
यदा द्रक्ष्यसि संग्रामे भीमसेनं महाबलम्
दुःशासनस्य रुधिरं पीत्वा नृत्यन्तमाहवे १०
प्रभिन्नमिव मातङ्गं प्रतिद्विरदघातिनम्
न तदा भविता त्रेता न कृतं द्वापरं न च ११
यदा द्रक्ष्यसि संग्रामे माद्रीपुत्रौ महारथौ
वाहिनीं धार्तराष्ट्राणां क्षोभयन्तौ गजाविव १२
विगाढे शस्त्रसम्पाते परवीररथारुजौ
न तदा भविता त्रेता न कृतं द्वापरं न च १३
यदा द्रक्ष्यसि स्त्रंगामे द्रोणं शान्तनवं कृपम्
सुयोधनं च राजानं सैन्धवं च जयद्रथम् १४
युद्धायापततस्तूर्णं वारितान्सव्यसाचिना
न तदा भविता त्रेता न कृतं द्वापरं न च १५
ब्रूयाः कर्ण इतो गत्वा द्रोणं शान्तनवं कृपम्
सौम्योऽय वर्तते मासः सुप्रापयवसेन्धनः १६
पक्वौषधिवनस्फीतः फलवानल्पमक्षिकः
निष्पङ्को रसवत्तोयो नात्युष्णशिशिरः सुखः १७
सप्तमाच्चापि दिवसादमावास्या भविष्यति
संग्रामं योजयेत्तत्र तां ह्याहुः शक्रदेवताम् १८
तथा राज्ञो वदेः सर्वान्ये युद्धायाभ्युपागताः
यद्वो मनीषितं तद्वै सर्वं सम्पादयामि वः १९
राजानो राजपुत्राश्च दुर्योधनवशानुगाः
प्राप्य शस्त्रेण निधनं प्राप्स्यन्ति गतिमुत्तमाम् २०
इति श्रीमहाभारते उद्योगपर्वणि चत्वारिंशदधिकशततमोऽध्यायः १४०

## एकचत्वारिंशदधिकशततमोऽध्यायः

सञ्जय उवाच
केशवस्य तु तद्वाक्यं कर्णः श्रुत्वा हितं शुभम्
अब्रवीदभिसम्पूज्य कृष्णं मधुनिषूदनम्
जानन्मां किं महाबाहो सम्मोहयितुमिच्छसि १
योऽय पृथिव्याः कात्स्न्र्येन विनाशः समुपस्थितः
निमित्तं तत्र शकुनिरहं दुःशासनस्तथा
दुर्योधनश्च नृपतिर्धृतराष्ट्रसुतोऽभवत् २
असंशयमिदं कृष्ण महद्युद्धमुपस्थितम्
पाण्डवानां कुरूणां च घोरं रुधिरकर्दमम् ३
राजानो राजपुत्राश्च दुर्योधनवशानुगाः
रणे शस्त्राग्निना दग्धाः प्राप्स्यन्ति यमसादनम् ४
स्वप्ना हि बहवो घोरा दृश्यन्ते मधुसूदन
निमित्तानि च घोराणि तथोत्पाताः सुदारुणाः ५
पराजयं धार्तराष्ट्रे विजयं च युधिष्ठिरे
शंसन्त इव वार्ष्णेय विविधा लोमहर्षणाः ६
प्राजापत्यं हि नक्षत्रं ग्रहस्तीक्ष्णो महाद्युतिः
शनैश्चरः पीडयति पीडयन्प्राणिनोऽधिकम् ७
कृत्वा चाङ्गारको वक्रं ज्येष्ठायां मधुसूदन
अनुराधां प्रार्थयते मैत्रं संशमयन्निव ८
नूनं महद्भयं कृष्ण कुरूणां समुपस्थितम्
विशेषेण हि वार्ष्णेय चित्रां पीडयते ग्रहः ९
सोमस्य लक्ष्म व्यावृत्तं राहुरर्कमुपेष्यति
दिवश्चोल्काः पतन्त्येताः सनिर्घाता सकम्पनाः १०
निष्टनन्ति च मातङ्गा मुञ्चन्त्यश्रूणि वाजिनः
पानीयं यवसं चापि नाभिनन्दन्ति माधव ११
प्रादुर्भूतेषु चैतेषु भयमाहुरुपस्थितम्
निमित्तेषु महाबाहो दारुणं प्राणिनाशनम् १२
अल्पे भुक्ते पुरीषं च प्रभूतमिह दृश्यते
वाजिनां वारणानां च मनुष्याणां च केशव १३

धार्तराष्ट्रस्य सैन्येषु सर्वेषु मधुसूदन
पराभवस्य तल्लिङ्गमिति प्राहुर्मनीषिणः १४
प्रहृष्टं वाहनं कृष्ण पाण्डवानां प्रचक्षते
प्रदक्षिणा मृगाश्चैव तत्तेषां जयलक्षणम् १५
अपसव्या मृगाः सर्वे धार्तराष्ट्रस्य केशव
वाचश्चाप्यशरीरिण्यस्तत्पराभवलक्षणम् १६
मयूराः पुष्पशकुना हंसाः सारसचातकाः
जीवञ्जीवकसङ्घाश्चाप्यनुगच्छन्ति पाण्डवान् १७
गृध्राः काका बडाः श्येना यातुधानाः शलावृकाः
मक्षिकाणां च सङ्घाता अनुगच्छन्ति कौरवान् १८
धार्तराष्ट्रस्य सैन्येषु भेरीणां नास्ति निस्वनः
अनाहताः पाण्डवानां नदन्ति पटहाः किल १९
उदपानाश्च नर्दन्ति यथा गोवृषभास्तथा
धार्तराष्ट्रस्य सैन्येषु तत्पराभवलक्षणम् २०
मांसशोणितवर्षं च वृष्टं देवेन माधव
तथा गन्धर्वनगरं भानुमन्तमुपस्थितम्
सप्राकारं सपरिखं सवप्रं चारुतोरणम् २१
कृष्णश्च परिघस्तत्र भानुमावृत्य तिष्ठति
उदयास्तमये सन्ध्ये वेदयानो महद्भयम्
एका सृग्वाशते घोरं तत्पराभवलक्षणम् २२
कृष्णग्रीवाश्च शकुना लम्बमाना भयानकाः
सन्ध्यामभिमुखा यान्ति तत्पराभवलक्षणम् २३
ब्राह्मणान्प्रथमं द्वेष्टि गुरूंश्च मधुसूदन
भृत्यान्भक्तिमतश्चापि तत्पराभवलक्षणम् २४
पूर्वा दिग्लोहिताकारा शस्त्रवर्णा च दक्षिणा
आमपात्रप्रतीकाशा पश्चिमा मधुसूदन २५
प्रदीप्ताश्च दिशः सर्वा धार्तराष्ट्रस्य माधव
महद्भयं वेदयन्ति तस्मिन्नुत्पातलक्षणे २६
सहस्रपादं प्रासादं स्वप्नान्ते स्म युधिष्ठिरः
अधिरोहन्मया दृष्टः सह भ्रातृभिरच्युत २७

श्वेतोष्णीषाश्च दृश्यन्ते सर्वे ते शुक्लवाससः
आसनानि च शुभ्राणि सर्वेषामुपलक्षये २८
तव चापि मया कृष्ण स्वप्नान्ते रुधिराविला
आन्त्रेण पृथिवी दृष्टा परिक्षिप्ता जनार्दन २९
अस्थिसञ्चयमारूढश्चामितौजा युधिष्ठिरः
सुवर्णपात्र्यां संहृष्टो भुक्तवान्घृतपायसम् ३०
युधिष्ठिरो मया दृष्टो ग्रसमानो वसुन्धराम्
त्वया दत्तामिमां व्यक्तं भोक्ष्यते स वसुन्धराम् ३१
उच्चं पर्वतमारूढो भीमकर्मा वृकोदरः
गदापाणिर्नरव्याघ्रो वीक्षन्निव महीमिमाम् ३२
क्षपयिष्यति नः सर्वान्स सुव्यक्तं महारणे
विदितं मे हृषीकेश यतो धर्मस्ततो जयः ३३
पाण्डुरं गजमारूढो गाण्डीवी स धनञ्जयः
त्वया सार्धं हृषीकेश श्रिया परमया ज्वलन् ३४
यूयं सर्वान्वधिष्यध्वं तत्र मे नास्ति संशयः
पार्थिवान्समरे कृष्ण दुर्योधनपुरोगमान् ३५
नकुलः सहदेवश्च सात्यकिश्च महारथः
शुद्धकेयूरकण्ठत्राः शुक्लमाल्याम्बरावृताः ३६
अधिरूढा नरव्याघ्रा नरवाहनमुत्तमम्
त्रय एते महामात्राः पाण्डुरच्छत्रवाससः ३७
श्वेतोष्णीषाश्च दृश्यन्ते त्रय एव जनार्दन
धार्तराष्ट्रस्य सैन्येषु तान्विजानीहि केशव ३८
अश्वत्थामा कृपश्चैव कृतवर्मा च सात्वतः
रक्तोष्णीषाश्च दृश्यन्ते सर्वे माधव पार्थिवाः ३९
उष्ट्रयुक्तं समारूढौ भीष्मद्रोणौ जनार्दन
मया सार्धं महाबाहो धार्तराष्ट्रेण चाभिभो ४०
अगस्त्यशास्तां च दिशं प्रयाताः स्म जनार्दन
अचिरेणैव कालेन प्राप्स्यामो यमसादनम् ४१
अहं चान्ये च राजानो यच्च तत्क्षत्रमण्डलम्
गाण्डीवाग्निं प्रवेक्ष्याम इति मे नास्ति संशयः ४२

कृष्ण उवाच
उपस्थितविनाशेयं नूनमद्य वसुन्धरा
तथा हि मे वचः कर्ण नोपैति हृदयं तव ४३
सर्वेषां तात भूतानां विनाशे समुपस्थिते
अनयो नयसङ्काशो हृदयान्नापसर्पति ४४
कर्ण उवाच
अपि त्वा कृष्ण पश्याम जीवन्तोऽस्मान्महारणात्
समुत्तीर्णा महाबाहो वीरक्षयविनाशनात् ४५
अथ वा सङ्गमः कृष्ण स्वर्गे नो भविता ध्रुवम्
तत्रेदानीं समेष्यामः पुनः सार्धं त्वयानघ ४६
सञ्जय उवाच
इत्युक्त्वा माधवं कर्णः परिष्वज्य च पीडितम्
विसर्जितः केशवेन रथोपस्थादवातरत् ४७
ततः स्वरथमास्थाय जाम्बूनदविभूषितम्
सहास्माभिर्निववृते राधेयो दीनमानसः ४८
ततः शीघ्रतरं प्रायात्केशवः सहसात्यकिः
पुनरुच्चारयन्वाणीं याहि याहीति सारथिम् ४९
इति श्रीमहाभारते उद्योगपर्वणि एकचत्वारिंशदधिकशततमोऽध्यायः १४१

## द्विचत्वारिंशदधिक शततमोऽध्यायः

वैशम्पायन उवाच
असिद्धानुनये कृष्णे कुरुभ्यः पाण्डवान्गते
अभिगम्य पृथां क्षत्ता शनैः शोचन्निवाब्रवीत् १
जानासि मे जीवपुत्रे भावं नित्यमनुग्रहे
क्रोशतो न च गृह्णीते वचनं मे सुयोधनः २
उपपन्नो ह्यसौ राजा चेदिपाञ्चालकेकयैः
भीमार्जुनाभ्यां कृष्णेन युयुधानयमैरपि ३
उपप्लव्ये निविष्टोऽपि धर्ममेव युधिष्ठिरः
काङ्क्षते ज्ञातिसौहार्दाद्बलवान्दुर्बलो यथा ४
राजा तु धृतराष्ट्रोऽय वयोवृद्धो न शाम्यति

मत्तः पुत्रमदेनैव विधर्मे पथि वर्तते ५
जयद्रथस्य कर्णस्य तथा दुःशासनस्य च
सौबलस्य च दुर्बुद्ध्या मिथोभेदः प्रवर्तते ६
अधर्मेण हि धर्मिष्ठं हृतं वै राज्यमीदृशम्
येषां तेषामयं धर्मः सानुबन्धो भविष्यति ७
ह्रियमाणे बलाद्धर्मे कुरुभिः को न संज्वरेत्
असाम्ना केशवे याते समुद्योक्ष्यन्ति पाण्डवाः ८
ततः कुरूणामनयो भविता वीरनाशनः
चिन्तयन्न लभे निद्रामहःसु च निशासु च ९
श्रुत्वा तु कुन्ती तद्वाक्यमर्थकामेन भाषितम्
अनिष्टनन्ती दुःखार्ता मनसा विममर्श ह १०
धिगस्त्वर्थं यत्कृतेऽय महाञ्ज्ञातिवधे क्षयः
वर्त्स्यते सुहृदां ह्येषां युद्धेऽस्मिन्वै पराभवः ११
पाण्डवाश्चेदिपाञ्चाला यादवाश्च समागताः
भारतैर्यदि योत्स्यन्ति किं नु दुःखमतः परम् १२
पश्ये दोषं ध्रुवं युद्धे तथा युद्धे पराभवम्
अधनस्य मृतं श्रेयो न हि ज्ञातिक्षये जयः १३
पितामहः शान्तनव आचार्यश्च युधां पतिः
कर्णश्च धार्तराष्ट्रार्थं वर्धयन्ति भयं मम १४
नाचार्यः कामवाञ्शिष्यैर्द्रोणो युध्येत जातुचित्
पाण्डवेषु कथं हार्दं कुर्यान्न च पितामहः १५
अयं त्वेको वृथादृष्टिर्धार्तराष्ट्रस्य दुर्मतेः
मोहानुवर्ती सततं पापो द्वेष्टि च पाण्डवान् १६
महत्यनर्थे निर्बन्धी बलवांश्च विशेषतः
कर्णः सदा पाण्डवानां तन्मे दहति साम्प्रतम् १७
आशंसे त्वद्य कर्णस्य मनोऽहं पाण्डवान्प्रति
प्रसादयितुमासाद्य दर्शयन्ती यथातथम् १८
तोषितो भगवान्यत्र दुर्वासा मे वरं ददौ
आह्वानं देवसंयुक्तं वसन्त्याः पितृवेश्मनि १९
साहमन्तःपुरे राज्ञः कुन्तिभोजपुरस्कृता

चिन्तयन्ती बहुविधं हृदयेन विदूयता २०
बलाबलं च मन्त्राणां ब्राह्मणस्य च वाग्बलम्
स्त्रीभावाद्बालभावाच्च चिन्तयन्ती पुनः पुनः २१
धात्र्या विश्रब्धया गुप्ता सखीजनवृता तदा
दोषं परिहरन्ती च पितुश्चारित्ररक्षिणी २२
कथं नु सुकृतं मे स्यान्नापराधवती कथम्
भवेयमिति संचिन्त्य ब्राह्मणं तं नमस्य च २३
कौतूहलात्तु तं लब्ध्वा बालिश्यादाचरं तदा
कन्या सती देवमर्कमासादयमहं ततः २४
योऽसौ कानीनगर्भो मे पुत्रवत्परिवर्तितः
कस्मान्न कुर्याद्वचनं पथ्यं भ्रातृहितं तथा २५
इति कुन्ती विनिश्चित्य कार्यं निश्चितमुत्तमम्
कार्यार्थमभिनिर्याय ययौ भागीरथीं प्रति २६
आत्मजस्य ततस्तस्य घृणिनः सत्यसङ्गिनः
गङ्गातीरे पृथाशृणवदुपाध्ययननिस्वनम् २७
प्राङ्मुखस्योर्ध्वबाहोः सा पर्यतिष्ठत पृष्ठतः
जप्यावसानं कार्यार्थं प्रतीक्षन्ती तपस्विनी २८
अतिष्ठत्सूर्यतापार्ता कर्णस्योत्तरवाससि
कौरव्यपत्नी वार्ष्णेयी पद्ममालेव शुष्यती २९
आ पृष्ठतापाज्जप्त्वा स परिवृत्त्य यतव्रतः
दृष्ट्वा कुन्तीमुपातिष्ठदभिवाद्य कृताञ्जलि
यथान्यायं महातेजा मानी धर्मभृतां वरः ३०
इति श्रीमहाभारते उद्योगपर्वणि द्विचत्वारिंशदधिकशततमोऽध्यायः १४२

## त्रिचत्वारिंशदधिक शततमोऽध्यायः

कर्ण उवाच
राधेयोऽहमाधिरथिः कर्णस्त्वामभिवादये
प्राप्ता किमर्थं भवती ब्रूहि किं करवाणि ते १
कुन्त्युवाच
कौन्तेयस्त्वं न राधेयो न तवाधिरथः पिता

नासि सूतकुले जातः कर्ण तद्विद्धि मे वचः २
कानीनस्त्वं मया जातः पूर्वजः कुक्षिणा धृतः
कुन्तिभोजस्य भवने पार्थस्त्वमसि पुत्रक ३
प्रकाशकर्मा तपनो योऽय देवो विरोचनः
अजीजनत्त्वां मय्येष कर्ण शस्त्रभृतां वरम् ४
कुण्डली बद्धकवचो देवगर्भः श्रिया वृतः
जातस्त्वमसि दुर्धर्ष मया पुत्र पितुर्गृहे ५
स त्वं भ्रातृनसम्बुद्ध्वा मोहाद्यदुपसेवसे
धार्तराष्ट्रान्न तद्युक्तं त्वयि पुत्र विशेषतः ६
एतद्धर्मफलं पुत्र नराणां धर्मनिश्चये
यत्तुष्यन्त्यस्य पितरो माता चाप्येकदर्शिनी ७
अर्जुनेनार्जितां पूर्वं हृतां लोभादसाधुभिः
आच्छिद्य धार्तराष्ट्रेभ्यो भुंन्दव यौधिष्ठिरीं श्रियम् ८
अद्य पश्यन्तु कुरवः कर्णार्जुनसमागमम्
सौभ्रात्रेण तदालक्ष्य सन्नमन्तामसाधवः ९
कर्णार्जुनौ वै भवतां यथा रामजनार्दनौ
असाध्यं किं नु लोके स्याद्युवयोः सहितात्मनोः १०
कर्ण शोभिष्यसे नूनं पञ्चभिर्भ्रातृभिर्वृतः
वेदैः परिवृतो ब्रह्मा यथा वेदाङ्गपञ्चमैः ११
उपपन्नो गुणैः श्रेष्ठो ज्येष्ठः श्रेष्ठेषु बन्धुषु
सूतपुत्रेति मा शब्दः पार्थस्त्वमसि वीर्यवान् १२
इति श्रीमहाभारते उद्योगपर्वणि त्रिचत्वारिंशदधिकशततमोऽध्यायः १४३

## चतुश्चत्वारिंशदधिक शततमोऽध्यायः

वैशम्पायन उवाच
ततः सूर्यान्निश्चरितां कर्णः शुश्राव भारतीम्
दुरत्ययां प्रणयिनीं पितृवद्भास्करेरिताम् १
सत्यमाह पृथा वाक्यं कर्ण मातृवचः कुरु
श्रेयस्ते स्यान्नरव्याघ्र सर्वमाचरतस्तथा २
एवमुक्तस्य मात्रा च स्वयं पित्रा च भानुना

चचाल नैव कर्णस्य मतिः सत्यधृतेस्तदा ३
कर्ण उवाच
न ते न श्रद्दधे वाक्यं क्षत्रिये भाषितं त्वया
धर्मद्वारं ममैतत्स्यान्नियोगकरणं तव ४
अकरोन्मयि यत्पापं भवती सुमहात्ययम्
अवकीर्णोऽस्मि ते तेन तद्यशःकीर्तिनाशनम् ५
अहं च क्षत्रियो जातो न प्राप्तः क्षत्रसत्क्रियाम्
त्वत्कृते किं नु पापीयः शत्रुः कुर्यान्ममाहितम् ६
क्रियाकाले त्वनुक्रोशमकृत्वा त्वमिमं मम
हीनसंस्कारसमयमद्य मां समचूचुदः ७
न वै मम हितं पूर्वं मातृवच्चेष्टितं त्वया
सा मां सम्बोधयस्यद्य केवलात्महितैषिणी ८
कृष्णेन सहितात्को वै न व्यथेत धनञ्जयात्
कोऽद्य भीतं न मां विद्यात्पार्थानां समितिं गतम् ९
अभ्राता विदितः पूर्वं युद्धकाले प्रकाशितः
पाण्डवान्यदि गच्छामि किं मां क्षत्रं वदिष्यति १०
सर्वकामैः संविभक्तः पूजितश्च सदा भृशम्
अहं वै धार्तराष्ट्राणां कुर्यां तदफलं कथम् ११
उपनह्य परैर्वैरं ये मां नित्यमुपासते
नमस्कुर्वन्ति च सदा वसवो वासवं यथा १२
मम प्राणेन ये शत्रूञ्शक्ताः प्रतिसमासितुम्
मन्यन्तेऽद्य कथं तेषामहं भिन्द्यां मनोरथम् १३
मया प्लवेन संग्रामं तितीर्षन्ति दुरत्ययम्
अपारे पारकामा ये त्यजेयं तानहं कथम् १४
अयं हि कालः सम्प्राप्तो धार्तराष्ट्रोपजीविनाम्
निर्वेष्टव्यं मया तत्र प्राणानपरिरक्षता १५
कृतार्थाः सुभृता ये हि कृत्यकाल उपस्थिते
अनवेक्ष्य कृतं पापा विकुर्वन्त्यनवस्थिताः १६
राजकिल्बिषिणां तेषां भर्तृपिण्डापहारिणाम्
नैवायं न परो लोको विद्यते पापकर्मणाम् १७

धृतराष्ट्रस्य पुत्राणामर्थे योत्स्यामि ते सुतैः
बलं च शक्तिं चास्थाय न वै त्वय्यनृतं वदे १८
आनृशंस्यमथो वृत्तं रक्षन्सत्पुरुषोचितम्
अतोऽथकरमप्येतन्न करोम्यद्य ते वचः १९
न तु तेऽय समारम्भो मयि मोघो भविष्यति
वध्यान्विषह्यान्संग्रामे न हनिष्यामि ते सुतान्
युधिष्ठिरं च भीमं च यमौ चैवार्जुनादृते २०
अर्जुनेन समं युद्धं मम यौधिष्ठिरे बले
अर्जुनं हि निहत्याजौ सम्प्राप्तं स्यात्फलं मया
यशसा चापि युज्येयं निहतः सव्यसाचिना २१
न ते जातु नशिष्यन्ति पुत्राः पञ्च यशस्विनि
निरर्जुनाः सकर्णा वा सार्जुना वा हते मयि २२
वैशम्पायन उवाच
इति कर्णवचः श्रुत्वा कुन्ती दुःखात्प्रवेपती
उवाच पुत्रमाश्लिष्य कर्णं धैर्यादकम्पितम् २३
एवं वै भाव्यमेतेन क्षयं यास्यन्ति कौरवाः
यथा त्वं भाषसे कर्ण दैवं तु बलवत्तरम् २४
त्वया चतुर्णां भ्रातॄणामभयं शत्रुकर्शन
दत्तं तत्प्रतिजानीहि सङ्गरप्रतिमोचनम् २५
अनामयं स्वस्ति चेति पृथाथो कर्णमब्रवीत्
तां कर्णोऽभ्यवदत्प्रीतस्ततस्तौ जग्मतुः पृथक् २६
इति श्रीमहाभारते उद्योगपर्वणि चतुश्चत्वारिंशदधिकशततमोऽध्यायः १४४

पञ्चचत्वारिंशदधिक शततमोऽध्यायः

वैशम्पायन उवाच
आगम्य हास्तिनपुरादुपप्लव्यमरिन्दमः
पाण्डवानां यथावृत्तं केशवः सर्वमुक्तवान् १
सम्भाष्य सुचिरं कालं मन्त्रयित्वा पुनः पुनः
स्वमेवावसथं शौरिर्विश्रामार्थं जगाम ह २
विसृज्य सर्वान्नृपतीन्विराटप्रमुखांस्तदा

पाण्डवा भ्रातरः पञ्च भानावस्तंगते सति ३
सन्ध्यामुपास्य ध्यायन्तस्तमेव गतमानसाः
आनाय्य कृष्णं दाशार्हं पुनर्मन्त्रममन्त्रयन् ४
युधिष्ठिर उवाच
त्वया नागपुरं गत्वा सभायां धृतराष्ट्रजः
किमुक्तः पुण्डरीकाक्ष तन्नः शंसितुमर्हसि ५
वासुदेव उवाच
मया नागपुरं गत्वा सभायां धृतराष्ट्रजः
तथ्यं पथ्यं हितं चोक्तो न च गृह्णाति दुर्मतिः ६
युधिष्ठिर उवाच
तस्मिन्नुत्पथमापन्ने कुरुवृद्धः पितामहः
किमुक्तवान्हृषीकेश दुर्योधनममर्षणम्
आचार्यो वा महाबाहो भारद्वाजः किमब्रवीत् ७
पिता यवीयानस्माकं क्षत्ता धर्मभृतां वरः
पुत्रशोकाभिसन्तप्तः किमाह धृतराष्ट्रजम् ८
किं च सर्वे नृपतयः सभायां ये समासते
उक्तवन्तो यथातत्त्वं तद्ब्रूहि त्वं जनार्दन ९
उक्तवान्हि भवान्सर्वं वचनं कुरुमुख्ययोः
कामलोभाभिभूतस्य मन्दस्य प्राज्ञमानिनः १०
अप्रियं हृदये मह्यं तन्न तिष्ठति केशव
तेषां वाक्यानि गोविन्द श्रोतुमिच्छाम्यहं विभो ११
यथा च नाभिपद्येत कालस्तात तथा कुरु
भवान्हि नो गतिः कृष्ण भवान्नाथो भवान्गुरुः १२
वासुदेव उवाच
शृणु राजन्यथा वाक्यमुक्तो राजा सुयोधनः
मध्ये कुरूणां राजेन्द्र सभायां तन्निबोध मे १३
मया वै श्राविते वाक्ये जहास धृतराष्ट्रजः
अथ भीष्मः सुसंक्रुद्ध इदं वचनमब्रवीत् १४
दुर्योधन निबोधेदं कुलार्थे यद्ब्रवीमि ते
तच्छ्रुत्वा राजशार्दूल स्वकुलस्य हितं कुरु १५

मम तात पिता राजञ्शन्तनुर्लोकविश्रुतः
तस्याहमेक एवासं पुत्रः पुत्रवतां वरः १६
तस्य बुद्धिः समुत्पन्ना द्वितीयः स्यात्कथं सुतः
एकपुत्रमपुत्रं वै प्रवदन्ति मनीषिणः १७
न चोच्छेदं कुलं यायाद्विस्तीर्येत कथं यशः
तस्याहमीप्सितं बुद्ध्वा कालद्यं मातरमावहम् १८
प्रतिज्ञां दुष्करां कृत्वा पितुरर्थे कुलस्य च
अराजा चोर्ध्वरेताश्च यथा सुविदितं तव
प्रतीतो निवसाम्येष प्रतिज्ञामनुपालयन् १९
तस्यां जज्ञे महाबाहुः श्रीमान्कुरुकुलोद्वहः
विचित्रवीर्यो धर्मात्मा कनीयान्मम पार्थिवः २०
स्वर्यातेऽह पितरि तं स्वराज्ये संन्यवेशयम्
विचित्रवीर्यं राजानं भृत्यो भूत्वा ह्यधश्चरः २१
तस्याहं सदृशान्दारान्राजेन्द्र समुदावहम्
जित्वा पार्थिवसङ्घातमपि ते बहुशः श्रुतम् २२
ततो रामेण समरे द्वन्द्वयुद्धमुपागमम्
स हि रामभयादेभिर्नागरैर्विप्रवासितः
दारेष्वतिप्रसक्तश्च यक्ष्माणं समपद्यत २३
यदा त्वराजके राष्ट्रे न ववर्ष सुरेश्वरः
तदाभ्यधावन्मामेव प्रजाः क्षुद्भयपीडिताः २४
प्रजा ऊचुः
उपक्षीणाः प्रजाः सर्वा राजाभव भवाय नः
ईतयो नुद भद्रं ते शन्तनोः कुलवर्धन २५
पीड्यन्ते ते प्रजाः सर्वा व्याधिभिर्भृशदारुणैः
अल्पावशिष्टा गाङ्गेय ताः परित्रातुमर्हसि २६
व्याधीन्प्रणुद्य वीर त्वं प्रजा धर्मेण पालय
त्वयि जीवति मा राष्ट्रं विनाशमुपगच्छतु २७
भीष्म उवाच
प्रजानां क्रोशतीनां वै नैवाक्षुभ्यत मे मनः
प्रतिज्ञां रक्षमाणस्य सद्वृत्तं स्मरतस्तथा २८

ततः पौरा महाराज माता काली च मे शुभा
भृत्याः पुरोहिताचार्या ब्राह्मणाश्च बहुश्रुताः
मामूचुर्भृशसन्तप्ता भव राजेति सन्ततम् २९
प्रतीपरक्षितं राष्ट्रं त्वां प्राप्य विनशिष्यति
स त्वमस्मद्धितार्थं वै राजा भव महामते ३०
इत्युक्तः प्राञ्जलिर्भूत्वा दुःखितो भृशमातुरः
तेभ्यो न्यवेदयं तत्र प्रतिज्ञां पितृगौरवात्
ऊर्ध्वरेता ह्यराजा च कुलस्याऽथे पुनः पुनः ३१
ततोऽह प्राञ्जलिर्भूत्वा मातरं सम्प्रसादयम्
नाम्ब शन्तनुना जातः कौरवं वंशमुद्वहन्
प्रतिज्ञां वितथां कुर्यामिति राजन्पुनः पुनः ३२
विशेषतस्त्वदर्थं च धुरि मा मां नियोजय
अहं प्रेष्यश्च दासश्च तवाम्ब सुतवत्सले ३३
एवं तामनुनीयाहं मातरं जनमेव च
अयाचं भ्रातृदारेषु तदा व्यासं महामुनिम् ३४
सह मात्रा महाराज प्रसाद्य तमृषिं तदा
अपत्यार्थमयाचं वै प्रसादं कृतवांश्च सः
त्रीन्स पुत्रानजनयत्तदा भरतसत्तम ३५
अन्धः करणहीनेति न वै राजा पिता तव
राजा तु पाण्डुरभवन्महात्मा लोकविश्रुतः ३६
स राजा तस्य ते पुत्राः पितुर्दायाद्यहारिणः
मा तात कलहं कार्षी राज्यस्यार्धं प्रदीयताम् ३७
मयि जीवति राज्यं कः सम्प्रशासेत्पुमानिह
मावमंस्था वचो मह्यं शममिच्छामि वः सदा ३८
न विशेषोऽस्ति मे पुत्र त्वयि तेषु च पार्थिव
मतमेतत्पितुस्तुभ्यं गान्धार्या विदुरस्य च ३९
श्रोतव्यं यदि वृद्धानां मातिशङ्कीर्वचो मम
नाशयिष्यसि मा सर्वमात्मानं पृथिवीं तथा ४०
इति श्रीमहाभारते उद्योगपर्वणि पञ्चचत्वारिंशदधिकशततमोऽध्यायः १४५

षट् चत्वारिंशदधिकशततमोऽध्यायः

वासुदेव उवाच
भीष्मेणोक्ते ततो द्रोणो दुर्योधनमभाषत
मध्ये नृपाणां भद्रं ते वचनं वचनक्षमः १
प्रातीपः शन्तनुस्तात कुलस्यार्थे यथोत्थितः
यथा देवव्रतो भीष्मः कुलस्यार्थे स्थितोऽभवत् २
तथा पाण्डुर्नरपतिः सत्यसन्धो जितेन्द्रियः
राजा कुरूणां धर्मात्मा सुव्रतः सुसमाहितः ३
ज्येष्ठाय राज्यमददाद्धृतराष्ट्राय धीमते
यवीयसस्तथा क्षत्तुः कुरुवंशविवर्धनः ४
ततः सिंहासने राजन्स्थापयित्वैनमच्युतम्
वनं जगाम कौरव्यो भार्याभ्यां सहितोऽनघ ५
नीचैः स्थित्वा तु विदुर उपास्ते स्म विनीतवत्
प्रेष्यवत्पुरुषव्याघ्रो वालव्यजनमुत्क्षिपन् ६
ततः सर्वाः प्रजास्तात धृतराष्ट्रंजनेश्वरम्
अन्वपद्यन्त विधिवद्यथा पाण्डुं नराधिपम् ७
विसृज्य धृतराष्ट्राय राज्यं स विदुराय च
चचार पृथिवीं पाण्डुः सर्वां परपुरञ्जयः ८
कोशसंजनने दाने भृत्यानां चान्ववेक्षणे
भरणे चैव सर्वस्य विदुरः सत्यसङ्गरः ९
सन्धिविग्रहसंयुक्तो राज्ञः संवाहनक्रियाः
अवैक्षत महातेजा भीष्मः परपुरञ्जयः १०
सिंहासनस्थो नृपतिर्धृतराष्ट्रो महाबलः
अन्वास्यमानः सततं विदुरेण महात्मना ११
कथं तस्य कुले जातः कुलभेदं व्यवस्यसि
सम्भूय भ्रातृभिः सार्धं भुङ्क्ष्व भोगाञ्जनाधिप १२
ब्रवीम्यहं न कार्पण्यान्नार्थहेतोः कथञ्चन
भीष्मेण दत्तमश्नामि न त्वया राजसत्तम १३
नाहं त्वत्तोऽभिकाङ्क्षिष्ये वृत्त्युपायं जनाधिप
यतो भीष्मस्ततो द्रोणो यद्भीष्मस्त्वाह तत्कुरु १४

दीयतां पाण्डुपुत्रेभ्यो राज्यार्धमरिकर्शन
सममाचार्यकं तात तव तेषां च मे सदा १५
अश्वत्थामा यथा मह्यं तथा श्वेतहयो मम
बहुना किं प्रलापेन यतो धर्मस्ततो जयः १६
एवमुक्ते महाराज द्रोणेनामिततेजसा
व्याजहार ततो वाक्यं विदुरः सत्यसङ्गरः
पितुर्वदनमन्वीक्ष्य परिवृत्य च धर्मवित् १७
देवव्रत निबोधेदं वचनं मम भाषतः
प्रनष्टः कौरवो वंशस्त्वयायं पुनरुद्धृतः १८
तन्मे विलपमानस्य वचनं समुपेक्षसे
कोऽय दुर्योधनो नाम कुलेऽस्मिन्कुलपांसनः १९
यस्य लोभाभिभूतस्य मतिं समनुवर्तसे
अनार्यस्याकृतज्ञस्य लोभोपहृतचेतसः
अतिक्रामति यः शास्त्रं पितुर्धर्मार्थदर्शिनः २०
एते नश्यन्ति कुरवो दुर्योधनकृतेन वै
यथा ते न प्रणश्येयुर्महाराज तथा कुरु २१
मां चैव धृतराष्ट्रं च पूर्वमेव महाद्युते
चित्रकार इवालेख्यं कृत्वा मा स्म विनाशय
प्रजापतिः प्रजाः सृष्ट्वा यथा संहरते तथा २२
नोपेक्षस्व महाबाहो पश्यमानः कुलक्षयम्
अथ तेऽद्य मतिर्नष्टा विनाशे प्रत्युपस्थिते
वनं गच्छ मया सार्धं धृतराष्ट्रेण चैव ह २३
बद्ध्वा वा निकृतिप्रज्ञं धार्तराष्ट्रं सुदुर्मतिम्
साध्विदं राज्यमद्यास्तु पाण्डवैरभिरक्षितम् २४
प्रसीद राजशार्दूल विनाशो दृश्यते महान्
पाण्डवानां कुरूणां च राज्ञां चामिततेजसाम् २५
विररामैवमुक्त्वा तु विदुरो दीनमानसः
प्रध्यायमानः स तदा निःश्वसंश्च पुनः पुनः २६
ततोऽथ राज्ञः सुबलस्य पुत्री धर्मार्थयुक्तं कुलनाशभीता
दुर्योधनं पापमतिं नृशंसं राज्ञां समक्षं सुतमाह कोपात् २७

ये पार्थिवा राजसभां प्रविष्टा ब्रह्मर्षयो ये च सभासदोऽन्ये
शृरावन्तु वद्त्यामि तवापराधं पापस्य सामात्यपरिच्छदस्य २८
राज्यं कुरूणामनुपूर्वभोग्यं क्रमागतो नः कुलधर्म एषः
त्वं पापबुद्धेऽतिनृशंसकर्मन्राज्यं कुरूणामनयाद्विहंसि २९
राज्ये स्थितो धृतराष्ट्रो मनीषी तस्यानुजो विदुरो दीर्घदर्शी
एतावतिक्रम्य कथं नृपत्वं दुर्योधन प्रार्थयसेऽद्य मोहात् ३०
राजा च ज्ञत्ता च महानुभावौ भीष्मे स्थिते परवन्तौ भवेताम्
अयं तु धर्मज्ञतया महात्मा न राज्यकामो नृवरो नदीजः ३१
राज्यं तु पाराडोरिदमप्रधृष्यं तस्याद्य पुत्राः प्रभवन्ति नान्ये
राज्यं तदेतन्निखिलं पाराडवानां पैतामहं पुत्रपौत्रानुगामि ३२
यद्वै ब्रूते कुरुमुख्यो महात्मा देवव्रतः सत्यसन्धो मनीषी
सर्वं तदस्माभिरहत्य धर्मं ग्राह्यं स्वधर्मं परिपालयद्भिः ३३
अनुज्ञया चाथ महाव्रतस्य ब्रूयान्नृपो यद्विदुरस्तथैव
कार्यं भवेत्तत्सुहृद्भिर्नियुज्य धर्मं पुरस्कृत्य सुदीर्घकालम् ३४
न्यायागतं राज्यमिदं कुरूणां युधिष्ठिरः शास्तु वै धर्मपुत्रः
प्रचोदितो धृतराष्ट्रेण राज्ञा पुरस्कृतः शान्तनवेन चैव ३५
इति श्रीमहाभारते उद्योगपर्वणि षट्चत्वारिंशदधिकशततमोऽध्यायः १४६

## सप्तचत्वारिंशदधिक शततमोऽध्यायः

वासुदेव उवाच
एवमुक्ते तु गान्धार्या धृतराष्ट्रो जनेश्वरः
दुर्योधनमुवाचेदं नृपमध्ये जनाधिप १
दुर्योधन निबोधेदं यत्त्वां वद्त्यामि पुत्रक
तथा तत्कुरु भद्रं ते यद्यस्ति पितृगौरवम् २
सोमः प्रजापतिः पूर्वं कुरूणां वंशवर्धनः
सोमाद्बभूव षष्ठो वै ययातिर्नहुषात्मजः ३
तस्य पुत्रा बभूवुश्च पञ्च राजर्षिसत्तमाः
तेषां यदुर्महातेजा ज्येष्ठः समभवत्प्रभुः ४
पूरुर्यवीयांश्च ततो योऽस्माकं वंशवर्धनः
शर्मिष्ठायाः सम्प्रसूतो दुहितुर्वृषपर्वणः ५

यदुश्च भरतश्रेष्ठ देवयान्याः सुतोऽभवत्
दौहित्रस्तात शुक्रस्य काव्यस्यामिततेजसः ६
यादवानां कुलकरो बलवान्वीर्यसम्मतः
अवमेने स तु क्षत्रं दर्पपूर्णः सुमन्दधीः ७
न चातिष्ठत्पितुः शास्त्रे बलदर्पविमोहितः
अवमेने च पितरं भ्रातॄंश्चाप्यपराजितः ८
पृथिव्यां चतुरन्तायां यदुरेवाभवद्बली
वशे कृत्वा स नृपतीनवसन्नागसाह्वये ९
तं पिता परमक्रुद्धो ययातिर्नहुषात्मजः
शशाप पुत्रं गान्धारे राज्याच्च व्यपरोपयत् १०
ये चैनमन्ववर्तन्त भ्रातरो बलदर्पितम्
शशाप तानपि क्रुद्धो ययातिस्तनयानथ ११
यवीयांसं ततः पूरुं पुत्रं स्ववशवर्तिनम्
राज्ये निवेशयामास विधेयं नृपसत्तमः १२
एवं ज्येष्ठोऽप्यथोत्सिक्तो न राज्यमभिजायते
यवीयांसोऽभिजायन्ते राज्यं वृद्धोपसेवया १३
तथैव सर्वधर्मज्ञः पितुर्मम पितामहः
प्रतीपः पृथिवीपालस्त्रिषु लोकेषु विश्रुतः १४
तस्य पार्थिवसिंहस्य राज्यं धर्मेण शासतः
त्रयः प्रजज्ञिरे पुत्रा देवकल्पा यशस्विनः १५
देवापिरभवज्ज्येष्ठो बाह्लीकस्तदनन्तरम्
तृतीयः शन्तनुस्तात धृतिमान्मे पितामहः १६
देवापिस्तु महातेजास्त्वग्दोषी राजसत्तमः
धार्मिकः सत्यवादी च पितुः शुश्रूषणे रतः १७
पौरजानपदानां च सम्मतः साधुसत्कृतः
सर्वेषां बालवृद्धानां देवापिर्हृदयङ्गमः १८
प्राज्ञश्च सत्यसन्धश्च सर्वभूतहिते रतः
वर्तमानः पितुः शास्त्रे ब्राह्मणानां तथैव च १९
बाह्लीकस्य प्रियो भ्राता शन्तनोश्च महात्मनः
सौभ्रात्रं च परं तेषां सहितानां महात्मनाम् २०

अथ कालस्य पर्याये वृद्धो नृपतिसत्तमः
सम्भारानभिषेकार्थं कारयामास शास्त्रतः
मङ्गलानि च सर्वाणि कारयामास चाभिभूः २१
तं ब्राह्मणाश्च वृद्धाश्च पौरजानपदैः सह
सर्वे निवारयामासुर्देवापेरभिषेचनम् २२
स तच्छ्रुत्वा तु नृपतिरभिषेकनिवारणम्
अश्रुकण्ठोऽभवद्राजा पर्यशोचत चात्मजम् २३
एवं वदान्यो धर्मज्ञः सत्यसन्धश्च सोऽभवत्
प्रियः प्रजानामपि संस्त्वग्दोषेण प्रदूषितः २४
हीनाङ्गं पृथिवीपालं नाभिनन्दन्ति देवताः
इति कृत्वा नृपश्रेष्ठं प्रत्यषेधन्द्विजर्षभाः २५
ततः प्रव्यथितात्मासौ पुत्रशोकसमन्वितः
ममार तं मृतं दृष्ट्वा देवापिः संश्रितो वनम् २६
बाह्लीको मातुलकुले त्यक्त्वा राज्यं व्यवस्थितः
पितृभ्रातॄन्परित्यज्य प्राप्तवान्पुरमृद्धिमत् २७
बाह्लीकेन त्वनुज्ञातः शन्तनुर्लोकविश्रुतः
पितर्युपरते राजन्राजा राज्यमकारयत् २८
तथैवाहं मतिमता परिचिन्त्येह पाण्डुना
ज्येष्ठः प्रभ्रंशितो राज्याद्धीनाङ्ग इति भारत २९
पाण्डुस्तु राज्यं संप्राप्तः कनीयानपि सन्नृपः
विनाशे तस्य पुत्राणामिदं राज्यमरिन्दम
मय्यभागिनि राज्याय कथं त्वं राज्यमिच्छसि ३०
युधिष्ठिरो राजपुत्रो महात्मा न्यायागतं राज्यमिदं च तस्य
स कौरवस्यास्य जनस्य भर्ता प्रशासिता चैव महानुभावः ३१
स सत्यसन्धः सततप्रमत्तः शास्त्रे स्थितो बन्धुजनस्य साधुः
प्रियः प्रजानां सुहृदानुकम्पी जितेन्द्रियः साधुजनस्य भर्ता ३२
क्षमा तितिक्षा दम आर्जवं च सत्यव्रतत्वं श्रुतमप्रमादः
भूतानुकम्पा ह्यनुशासनं च युधिष्ठिरे राजगुणाः समस्ताः ३३
अराजपुत्रस्त्वमनार्यवृत्तो लुब्धस्तथा बन्धुषु पापबुद्धिः
क्रमागतं राज्यमिदं परेषां हर्तुं कथं शक्ष्यसि दुर्विनीतः ३४

प्रयच्छ राज्यार्धमपेतमोहः सवाहनं त्वं सपरिच्छदं च
ततोऽवशेषं तव जीवितस्य सहानुजस्यैव भवेन्नरेन्द्र ३५
इति श्रीमहाभारते उद्योगपर्वणि सप्तचत्वारिंशदधिकशततमोऽध्यायः १४७

## अष्टचत्वारिंशदधिक शततमोऽध्यायः

वासुदेव उवाच
एवमुक्ते तु भीष्मेण द्रोणेन विदुरेण च
गान्धार्या धृतराष्ट्रेण न च मन्दोऽन्वबुद्ध्यत १
अवधूयोत्थितः क्रुद्धो रोषात्संरक्तलोचनः
अन्वद्रवन्त तं पश्चाद्राजानस्त्यक्तजीविताः २
आज्ञापयच्च राज्ञस्तान्पार्थिवान्दुष्टचेतसः
प्रयाध्वं वै कुरुक्षेत्रं पुष्योऽद्येति पुनः पुनः ३
ततस्ते पृथिवीपालाः प्रययुः सहसैनिकाः
भीष्मं सेनापतिं कृत्वा संहृष्टाः कालचोदिताः ४
अक्षौहिण्यो दशैका च पार्थिवानां समागताः
तासां प्रमुखतो भीष्मस्तालकेतुर्व्यरोचत
यदत्र युक्तं प्राप्तं च तद्विधत्स्व विशां पते ५
उक्तं भीष्मेण यद्वाक्यं द्रोणेन विदुरेण च
गान्धार्या धृतराष्ट्रेण समक्षं मम भारत
एतत्ते कथितं राजन्यद्वृत्तं कुरुसंसदि ६
साम आदौ प्रयुक्तं मे राजन्सौभ्रात्रमिच्छता
अभेदात्कुरुवंशस्य प्रजानां च विवृद्धये ७
पुनर्भेदश्च मे युक्तो यदा साम न गृह्यते
कर्मानुकीर्तनं चैव देवमानुषसंहितम् ८
यदा नाद्रियते वाक्यं सामपूर्वं सुयोधनः
तदा मया समानीय भेदिताः सर्वपार्थिवाः ९
अद्भुतानि च घोराणि दारुणानि च भारत
अमानुषाणि कर्माणि दर्शितानि च मे विभो १०
भर्त्सयित्वा तु राज्ञस्तांस्तृणीकृत्य सुयोधनम्
राधेयं भीषयित्वा च सौबलं च पुनः पुनः ११

न्यूनतां धार्तराष्ट्राणां निन्दां चैव पुनः पुनः
भेदयित्वा नृपान्सर्वान्वाग्भिर्मन्त्रेण चासकृत् १२
पुनः सामाभिसंयुक्तं सम्प्रदानमथाब्रुवम्
अभेदात्कुरुवंशस्य कार्ययोगात्तथैव च १३
ते बाला धृतराष्ट्रस्य भीष्मस्य विदुरस्य च
तिष्ठेयुः पाण्डवाः सर्वे हित्वा मानमधश्चराः १४
प्रयच्छन्तु च ते राज्यमनीशास्ते भवन्तु च
यथाह राजा गाङ्गेयो विदुरश्च तथास्तु तत् १५
सर्वं भवतु ते राज्यं पञ्च ग्रामान्विसर्जय
अवश्यं भरणीया हि पितुस्ते राजसत्तम १६
एवमुक्तस्तु दुष्टात्मा नैव भागं व्यमुञ्चत
दण्डं चतुर्थं पश्यामि तेषु पापेषु नान्यथा १७
निर्याताश्च विनाशाय कुरुक्षेत्रं नराधिपाः
एतत्ते कथितं सर्वं यद्वृत्तं कुरुसंसदि १८
न ते राज्यं प्रयच्छन्ति विना युद्धेन पाण्डव
विनाशहेतवः सर्वे प्रत्युपस्थितमृत्यवः १९

इति श्रीमहाभारते उद्योगपर्वणि अष्टचत्वारिंशदधिकशततमोऽध्यायः १४८

समाप्तं कर्णोपनिवादपर्व

## एकोन पञ्चाशदधिक शततमोऽध्यायः

वैशम्पायन उवाच
जनार्दनवचः श्रुत्वा धर्मराजो युधिष्ठिरः
भ्रातॄनुवाच धर्मात्मा समक्षं केशवस्य ह १
श्रुतं भवद्भिर्यद्वृत्तं सभायां कुरुसंसदि
केशवस्यापि यद्वाक्यं तत्सर्वमवधारितम् २
तस्मात्सेनाविभागं मे कुरुध्वं नरसत्तमाः
अक्षौहिण्यस्तु सप्तैताः समेता विजयाय वै ३
तासां मे पतयः सप्त विख्यातास्तान्निबोधत
द्रुपदश्च विराटश्च धृष्टद्युम्नशिखण्डिनौ ४
सात्यकिश्चेकितानश्च भीमसेनश्च वीर्यवान्

एते सेनाप्रणेतारो वीराः सर्वे तनुत्यजः ५
सर्वे वेदविदः शूराः सर्वे सुचरितव्रताः
ह्रीमन्तो नीतिमन्तश्च सर्वे युद्धविशारदाः
इष्वस्त्रकुशलाश्चैव तथा सर्वास्त्रयोधिनः ६
सप्तानामपि यो नेता सेनानां प्रविभागवित्
यः सहेत रणे भीष्मं शरार्चिःपावकोपमम् ७
त्वं तावत्सहदेवात्र प्रब्रूहि कुरुनन्दन
स्वमतं पुरुषव्याघ्र को नः सेनापतिः क्षमः ८
सहदेव उवाच
संयुक्त एकदुःखश्च वीर्यवांश्च महीपतिः
यं समाश्रित्य धर्मज्ञं स्वमंशमनुयुञ्ज्महे ९
मत्स्यो विराटो बलवान्कृतास्त्रो युद्धदुर्मदः
प्रसहिष्यति संग्रामे भीष्मं तांश्च महारथान् १०
वैशम्पायन उवाच
तथोक्ते सहदेवेन वाक्ये वाक्यविशारदः
नकुलोऽनन्तरं तस्मादिदं वचनमाददे ११
वयसा शास्त्रतो धैर्यात्कुलेनाभिजनेन च
ह्रीमान्कुलान्वितः श्रीमान्सर्वशास्त्रविशारदः १२
वेद चास्त्रं भरद्वाजाद्दुर्धर्षः सत्यसङ्गरः
यो नित्यं स्पर्धते द्रोणं भीष्मं चैव महाबलम् १३
श्लाघ्यः पार्थिवसंघस्य प्रमुखे वाहिनीपतिः
पुत्रपौत्रैः परिवृतः शतशाख इव द्रुमः १४
यस्तताप तपो घोरं सदारः पृथिवीपतिः
रोषाद्द्रोणविनाशाय वीरः समितिशोभनः १५
पितेवास्मान्समाधत्ते यः सदा पार्थिवर्षभः
श्वशुरो द्रुपदोऽस्माकं सेनामग्रे प्रकर्षतु १६
स द्रोणभीष्मावायान्तौ सहेदिति मतिर्मम
स हि दिव्यास्त्रविद्राजा सखा चाङ्गिरसो नृपः १७
माद्रीसुताभ्यामुक्ते तु स्वमते कुरुनन्दनः
वासविर्वासवसमः सव्यसाच्यब्रवीद्वचः १८

योऽय तपःप्रभावेन ऋषिसन्तोषणेन च
दिव्यः पुरुष उत्पन्नो ज्वालावर्णो महाबलः १९
धनुष्मान्कवची खड्गी रथमारुह्य दंशितः
दिव्यैर्हयवरैर्युक्तमग्निकुण्डात्समुत्थितः २०
गर्जन्निव महामेघो रथघोषेण वीर्यवान्
सिंहसंहननो वीरः सिंहविक्रान्तविक्रमः २१
सिंहोरस्को महाबाहुः सिंहवक्षा महाबलः
सिंहप्रगर्जनो वीरः सिंहस्कन्धो महाद्युतिः २२
सुभ्रूः सुदंष्ट्रः सुहनुः सुबाहुः सुमुखोऽकृशः
सुजत्रुः सुविशालाक्षः सुपादः सुप्रतिष्ठितः २३
अभेद्यः सर्वशस्त्राणां प्रभिन्न इव वारणः
जज्ञे द्रोणविनाशाय सत्यवादी जितेन्द्रियः २४
धृष्टद्युम्नमहं मन्ये सहेद्भीष्मस्य सायकान्
वज्राशनिसमस्पर्शान्दीप्तास्यानुरगानिव २५
यमदूतसमान्वेगे निपाते पावकोपमान्
रामेणाजौ विषहितान्वज्रनिष्पेषदारुणान् २६
पुरुषं तं न पश्यामि यः सहेत महाव्रतम्
धृष्टद्युम्नमृते राजन्निति मे धीयते मतिः २७
क्षिप्रहस्तश्चित्रयोधी मतः सेनापतिर्मम
अभेद्यकवचः श्रीमान्मातङ्ग इव यूथपः २८
भीमसेन उवाच
वधार्थं यः समुत्पन्नः शिखण्डी द्रुपदात्मजः
वदन्ति सिद्धा राजेन्द्र ऋषयश्च समागताः २९
यस्य संग्राममध्येषु दिव्यमस्त्रं विकुर्वतः
रूपं द्रक्ष्यन्ति पुरुषा रामस्येव महात्मनः ३०
न तं युद्धेषु पश्यामि यो विभिन्द्याच्छिखण्डिनम्
शस्त्रेण समरे राजन्सन्नद्धं स्यन्दने स्थितम् ३१
द्वैरथे विषहेन्नान्यो भीष्मं राजन्महाव्रतम्
शिखण्डिनमृते वीरं स मे सेनापतिर्मतः ३२
युधिष्ठिर उवाच

सर्वस्य जगतस्तात सारासारं बलाबलम्
सर्वं जानाति धर्मात्मा गतमेष्यच्च केशवः ३३
यमाह कृष्णो दाशार्हः सोऽस्तु नो वाहिनीपतिः
कृतास्त्रो ह्यकृतास्त्रो वा वृद्धो वा यदि वा युवा ३४
एष नो विजये मूलमेष तात विपर्यये
अत्र प्राणाश्च राज्यं च भावाभावौ सुखासुखे ३५
एष धाता विधाताच सिद्धिरत्र प्रतिष्ठिता
यमाह कृष्णो दाशार्हः स नः सेनापतिः क्षमः
ब्रवीतु वदतां श्रेष्ठो निशा समतिवर्तते ३६
ततः सेनापतिं कृत्वा कृष्णस्य वशवर्तिनम्
रात्रिशेषे व्यतिक्रान्ते प्रयास्यामो रणाजिरम्
अधिवासितशस्त्राश्च कृतकौतुकमङ्गलाः ३७
वैशम्पायन उवाच
तस्य तद्वचनं श्रुत्वा धर्मराजस्य धीमतः
अब्रवीत्पुण्डरीकाक्षो धनञ्जयमवेक्ष्य ह ३८
ममाप्येते महाराज भवद्भिर्य उदाहृताः
नेतारस्तव सेनायाः शूरा विक्रान्तयोधिनः
सर्व एते समर्था हि तव शत्रून्प्रमर्दितुम् ३९
इन्द्रस्यापि भयं ह्येते जनयेयुर्महाहवे
किं पुनर्धार्तराष्ट्राणां लुब्धानां पापचेतसाम् ४०
मयापि हि महाबाहो त्वत्प्रियार्थमरिंदम
कृतो यत्नो महांस्तत्र शमः स्यादिति भारत
धर्मस्य गतमानृण्यं न स्म वाच्या विवक्षताम् ४१
कृतार्थं मन्यते बालः सोऽत्मानमविचक्षणः
धार्तराष्ट्रो बलस्थं च मन्यतेऽत्मानमातुरः ४२
युज्यतां वाहिनी साधु वधसाध्या हि ते मताः
न धार्तराष्ट्राः शक्ष्यन्ति स्थातुं दृष्ट्वा धनञ्जयम् ४३
भीमसेनं च संक्रुद्धं यमौ चापि यमोपमौ
युयुधानद्वितीयं च धृष्टद्युम्नममर्षणम् ४४
अभिमन्युं द्रौपदेयान्विराटद्रुपदावपि

अक्षौहिणीपतींश्चान्यान्नरेन्द्रान्दृढविक्रमान् ४५
सारवद्बलमस्माकं दुष्प्रधर्षं दुरासदम्
धार्तराष्ट्रबलं संख्ये वधिष्यति न संशयः ४६
एवमुक्ते तु कृष्णेन सम्प्रहृष्यन्नरोत्तमाः
तेषां प्रहृष्टमनसां नादः समभवन्महान् ४७
योग इत्यथ सैन्यानां त्वरतां सम्प्रधावताम्
हयवारणशब्दश्च नेमिघोषश्च सर्वतः
शङ्खदुन्दुभिनिर्घोषस्तुमुलः सर्वतोऽभवत् ४८
प्रयास्यतां पाण्डवानां ससैन्यानां समन्ततः
गङ्गेव पूर्णा दुर्धर्षा समदृश्यत वाहिनी ४९
अग्रानीके भीमसेनो माद्रीपुत्रौ च दंशितौ
सौभद्रो द्रौपदेयाश्च धृष्टद्युम्नश्च पार्षतः
प्रभद्रकाश्च पाञ्चाला भीमसेनमुखा ययुः ५०
ततः शब्दः समभवत्समुद्रस्येव पर्वणि
हृष्टानां सम्प्रयातानां घोषो दिवमिवास्पृशत् ५१
प्रहृष्टा दंशिता योधाः परानीकविदारणाः
तेषां मध्ये ययौ राजा कुन्तीपुत्रो युधिष्ठिरः ५२
शकटापणवेशाश्च यानयुग्यं च सर्वशः
कोशयन्त्रायुधं चैव ये च वैद्याश्चिकित्सकाः ५३
फल्गु यच्च बलं किञ्चित्तथैव कृश दुर्बलम्
तत्संगृह्य ययौ राजा ये चापि परिचारकाः ५४
उपप्लव्ये तु पाञ्चाली द्रौपदी सत्यवादिनी
सह स्त्रीभिर्निववृते दासीदाससमावृता ५५
कृत्वा मूलप्रतीकारान्गुल्मैः स्थावरजङ्गमैः
स्कन्धावारेण महता प्रययुः पाण्डुनन्दनाः ५६
ददतो गां हिरण्यं च ब्राह्मणैरभिसंवृताः
स्तूयमाना ययू राजन्रथैर्मणिविभूषितैः ५७
केकया धृष्टकेतुश्च पुत्रः काश्यस्य चाभिभूः
श्रेणिमान्वसुदानश्च शिखण्डी चापराजितः ५८
हृष्टास्तुष्टाः कवचिनः सशस्त्राः समलंकृताः

राजानमन्वयुः सर्वे परिवार्य युधिष्ठिरम् ५९
जघनार्धे विराटश्च यज्ञसेनश्च सोमकिः
सुधर्मा कुन्तिभोजश्च धृष्टद्युम्नस्य चात्मजाः ६०
रथायुतानि चत्वारि हयाः पञ्चगुणास्ततः
पत्तिसैन्यं दशगुणं सादिनामयुतानि षट् ६१
अनाधृष्टिश्चेकितानश्चेदिराजोऽथ सात्यकिः
परिवार्य ययुः सर्वे वासुदेवधनञ्जयौ ६२
आसाद्य तु कुरुक्षेत्रं व्यूढानीकाः प्रहारिणः
पाण्डवाः समदृश्यन्त नर्दन्तो वृषभा इव ६३
तेऽवगाह्य कुरुक्षेत्रं शङ्खान्दध्मुररिंदमाः
तथैव दध्मतुः शङ्खौ वासुदेवधनञ्जयौ ६४
पाञ्चजन्यस्य निर्घोषं विस्फूर्जितमिवाशनेः
निशम्य सर्वसैन्यानि समहृष्यन्त सर्वशः ६५
शङ्खदुन्दुभिसंसृष्टः सिंहनादस्तरस्विनाम्
पृथिवीं चान्तरिक्षं च सागरांश्चान्वनादयत् ६६
ततो देशे समे स्निग्धे प्रभूतयवसेन्धने
निवेशयामास तदा सेनां राजा युधिष्ठिरः ६७
परिहृत्य श्मशानानि देवतायतनानि च
आश्रमांश्च महर्षीणां तीर्थान्यायतनानि च ६८
मधुरानूषरे देशे शिवे पुण्ये महीपतिः
निवेशं कारयामास कुन्तीपुत्रो युधिष्ठिरः ६९
ततश्च पुनरुत्थाय सुखी विश्रान्तवाहनः
प्रययौ पृथिवीपालैर्वृतः शतसहस्रशः ७०
विद्राव्य शतशो गुल्मान्धार्तराष्ट्रस्य सैनिकान्
पर्यक्रामत्समन्ताच्च पार्थेन सह केशवः ७१
शिबिरं मापयामास धृष्टद्युम्नश्च पार्षतः
सात्यकिश्च रथोदारो युयुधानः प्रतापवान् ७२
आसाद्य सरितं पुण्यां कुरुक्षेत्रे हिरण्वतीम्
सूपतीर्थां शुचिजलां शर्करापङ्कवर्जिताम् ७३
खानयामास परिखां केशवस्तत्र भारत

गुप्त्यर्थमपि चादिश्य बलं तत्र न्यवेशयत् ७४
विधिर्यः शिबिरस्यासीत्पाण्डवानां महात्मनाम्
तद्विधानि नरेन्द्राणां कारयामास केशवः ७५
प्रभूतजलकाष्ठानि दुराधर्षतराणि च
भक्ष्यभोज्योपपन्नानिशतशोऽथ सहस्रशः ७६
शिबिराणि महार्हाणि राज्ञां तत्र पृथक्पृथक्
विमानानीव राजेन्द्र निविष्टानि महीतले ७७
तत्रासञ्शिल्पिनः प्राज्ञाः शतशो दत्तवेतनाः
सर्वोपकरणैर्युक्ता वैद्याश्च सुविशारदाः ७८
ज्याधनुर्वर्मशस्त्राणां तथैव मधुसर्पिषोः
ससर्जरसपांसूनां राशयः पर्वतोपमाः ७९
बहूदकं सुयवसं तुषाङ्गारसमन्वितम्
शिबिरे शिबिरे राजा सञ्चकार युधिष्ठिरः ८०
महायन्त्राणि नाराचास्तोमरर्ष्टिपरश्वधाः
धनूंषि कवचादीनि हृद्यभूवन्नृणां तदा ८१
गजाः कण्टकसन्नाहा लोहवर्मोत्तरच्छदाः
अदृश्यंस्तत्र गिर्याभाः सहस्रशतयोधिनः ८२
निविष्टान्पाण्डवांस्तत्र ज्ञात्वा मित्राणि भारत
अभिसस्रुर्यथोद्देशं सबलाः सहवाहनाः ८३
चरितब्रह्मचर्यास्ते सोमपा भूरिदक्षिणाः
जयाय पाण्डुपुत्राणां समाजग्मुर्महीक्षितः ८४
इति श्रीमहाभारते उद्योगपर्वणि एकोनपञ्चाशदधिकशततमोऽध्यायः १४९

## पञ्चाशदधिक शततमोऽध्यायः

जनमेजय उवाच
युधिष्ठिरं सहानीकमुपयान्तं युयुत्सया
सन्निविष्टं कुरुक्षेत्रे वासुदेवेन पालितम् १
विराटद्रुपदाभ्यां च सपुत्राभ्यां समन्वितम्
केकयैर्वृष्णिभिश्चैव पार्थिवैः शतशो वृतम् २
महेन्द्रमिव चादित्यैरभिगुप्तं महारथैः

श्रुत्वा दुर्योधनो राजा किं कार्यं प्रत्यपद्यत ३
एतदिच्छाम्यहं श्रोतुं विस्तरेण तपोधन
सम्भ्रमे तुमुले तस्मिन्यदासीत्कुरुजाङ्गले ४
व्यथयेयुर्हि देवानां सेनामपि समागमे
पाण्डवा वासुदेवश्च विराटद्रुपदौ तथा ५
धृष्टद्युम्नश्च पाञ्चाल्वः शिखण्डी च महारथः
युयुधानश्च विक्रान्तो देवैरपि दुरासदः ६
एतदिच्छाम्यहं श्रोतुं विस्तरेण तपोधन
कुरूणां पाण्डवानां च यद्यदासीद्विचेष्टितम् ७
वैशम्पायन उवाच
प्रतियाते तु दाशार्हे राजा दुर्योधनस्तदा
कर्णं दुःशासनं चैव शकुनिं चाब्रवीदिदम् ८
अकृतेनैव कार्येण गतः पार्थानधोक्षजः
स एनान्मन्युनाविष्टो ध्रुवं वक्ष्यत्यसंशयम् ९
इष्टो हि वासुदेवस्य पाण्डवैर्मम विग्रहः
भीमसेनार्जुनौ चैव दाशार्हस्य मते स्थितौ १०
अजातशत्रुरप्यद्य भीमार्जुनवशानुगः
निकृतश्च मया पूर्वं सह सर्वैः सहोदरैः ११
विराटद्रुपदौ चैव कृतवैरौ मया सह
तौ च सेनाप्रणेतारौ वासुदेववशानुगौ १२
भविता विग्रहः सोऽय तुमुलो लोमहर्षणः
तस्मात्सांग्रामिकं सर्वं कारयध्वमतन्द्रिताः १३
शिबिराणि कुरुक्षेत्रे क्रियन्तां वसुधाधिपाः
सुपर्याप्तावकाशानि दुरादेयानि शत्रुभिः १४
आसन्नजलकाष्ठानि शतशोऽथ सहस्रशः
अच्छेद्याहारमार्गाणि रत्नोच्चयचितानि च
विविधायुधपूर्णानि पताकाध्वजवन्ति च १५
समाश्च तेषां पन्थानः क्रियन्तां नगराद्बहिः
प्रयाणं घुष्यतामद्य श्वोभूत इति माचिरम् १६
ते तथेति प्रतिज्ञाय श्वोभूते चक्रिरे तथा

हृष्टरूपा महात्मानो विनाशाय महीक्षिताम् १७
ततस्ते पार्थिवाः सर्वे तच्छ्रुत्वा राजशासनम्
आसनेभ्यो महार्हेभ्य उदतिष्ठन्नमर्षिताः १८
बाहून्परिघसङ्काशान्संस्पृशन्तः शनैः शनैः
काञ्चनाङ्गददीप्तांश्च चन्दनागरुभूषितान् १९
उष्णीषाणि नियच्छन्तः पुण्डरीकनिभैः करैः
अन्तरीयोत्तरीयाणि भूषणानि च सर्वशः २०
ते रथान्रथिनः श्रेष्ठा हयांश्च हयकोविदाः
सज्जयन्ति स्म नागांश्च नागशिक्षासु निष्ठिताः २१
अथ वर्माणि चित्राणि काञ्चनानि बहूनि च
विविधानि च शस्त्राणि चक्रुः सज्जानि सर्वशः २२
पदातयश्च पुरुषाः शस्त्राणि विविधानि च
उपाजह्रुः शरीरेषु हेमचित्राण्यनेकशः २३
तदुत्सव इवोदग्रं सम्प्रहृष्टनरावृतम्
नगरं धार्तराष्ट्रस्य भारतासीत्समाकुलम् २४
जनौघसलिलावर्तो रथनागाश्वमीनवान्
शङ्खदुन्दुभिनिर्घोषः कोशसञ्चयरत्नवान् २५
चित्राभरणवर्मोर्मिः शस्त्रनिर्मलफेनवान्
प्रासादमालाद्रिवृतो रथ्यापणमहाह्रदः २६
योधचन्द्रोदयोद्भूतः कुरुराजमहार्णवः
अदृश्यत तदा राजंश्चन्द्रोदय इवार्णवः २७
इति श्रीमहाभारते उद्योगपर्वणि पञ्चाशदधिकशततमोऽध्यायः १५०

## एक पञ्चाशदधिक शततमोऽध्यायः

वैशम्पायन उवाच
वासुदेवस्य तद्वाक्यमनुस्मृत्य युधिष्ठिरः
पुनः पप्रच्छ वार्ष्णेयं कथं मन्दोऽब्रवीदिदम् १
अस्मिन्नभ्यागते काले किं च नः क्षममच्युत
कथं च वर्तमाना वै स्वधर्मान्न च्यवेमहि २
दुर्योधनस्य कर्णस्य शकुनेः सौबलस्य च

वासुदेव मतज्ञोऽसि मम सभ्रातृकस्य च ३
विदुरस्यापि ते वाक्यं श्रुतं भीष्मस्य चोभयोः
कुन्त्याश्च विपुलप्रज्ञ प्रज्ञा कार्त्स्न्येन ते श्रुता ४
सर्वमेतदतिक्रम्य विचार्य च पुनः पुनः
यन्नः क्षमं महाबाहो तद्ब्रवीह्यविचारयन् ५
श्रुत्वैतद्धर्मराजस्य धर्मार्थसहितं वचः
मेघदुन्दुभिनिर्घोषः कृष्णो वचनमब्रवीत् ६
उक्तवानस्मि यद्वाक्यं धर्मार्थसहितं हितम्
न तु तन्निकृतिप्रज्ञे कौरव्ये प्रतितिष्ठति ७
न च भीष्मस्य दुर्मेधाः शृणोति विदुरस्य वा
मम वा भाषितं किञ्चित्सर्वमेवातिवर्तते ८
न स कामयते धर्मं न स कामयते यशः
जितं स मन्यते सर्वं दुरात्मा कर्णमाश्रितः ९
बन्धमाज्ञापयामास मम चापि सुयोधनः
न च तं लब्धवान्कामं दुरात्मा शासनातिगः १०
न च भीष्मो न च द्रोणो युक्तं तत्राहतुर्वचः
सर्वे तमनुवर्तन्ते ऋते विदुरमच्युत ११
शकुनिः सौबलश्चैव कर्णदुःशासनावपि
त्वय्ययुक्तान्यभाषन्त मूढा मूढममर्षणम् १२
किं च तेन मयोक्तेन यान्यभाषन्त कौरवाः
संक्षेपेण दुरात्मासौ न युक्तं त्वयि वर्तते १३
न पार्थिवेषु सर्वेषु य इमे तव सैनिकाः
यत्पापं यन्न कल्याणं सर्वं तस्मिन्प्रतिष्ठितम् १४
न चापि वयमत्यर्थं परित्यागेन कर्हिचित्
कौरवैः शममिच्छामस्तत्र युद्धमनन्तरम् १५
तच्छ्रुत्वा पार्थिवाः सर्वे वासुदेवस्य भाषितम्
अब्रुवन्तो मुखं राज्ञः समुदैक्षन्त भारत १६
युधिष्ठिरस्त्वभिप्रायमुपलभ्य महीक्षिताम्
योगमाज्ञापयामास भीमार्जुनयमैः सह १७
ततः किलकिलाभूतमनीकं पाण्डवस्य ह

आज्ञापिते तदा योगे समहृष्यन्त सैनिकाः १८
अवध्यानां वधं पश्यन्धर्मराजो युधिष्ठिरः
निष्टनन्भीमसेनं च विजयं चेदमब्रवीत् १९
यदर्थं वनवासश्च प्राप्तं दुःखं च यन्मया
सोऽयमस्मानुपैत्येव परोऽनर्थः प्रयत्नतः २०
तस्मिन्यत्नः कृतोऽस्माभिः स नो हीनः प्रयत्नतः
अकृते तु प्रयत्नेऽस्मानुपावृत्तः कलिर्महान् २१
कथं ह्यवध्यैः संग्रामः कार्यः सह भविष्यति
कथं हत्वा गुरून्वृद्धान्विजयो नो भविष्यति २२
तच्छ्रुत्वा धर्मराजस्य सव्यसाची परन्तपः
यदुक्तं वासुदेवेन श्रावयामास तद्वचः २३
उक्तवान्देवकीपुत्रः कुन्त्याश्च विदुरस्य च
वचनं तत्त्वया राजन्निखिलेनावधारितम् २४
न च तौ वक्ष्यतोऽधर्ममिति मे नैष्ठिकी मतिः
न चापि युक्तं कौन्तेय निवर्तितुमयुध्यतः २५
तच्छ्रुत्वा वासुदेवोऽपि सव्यसाचिवचस्तदा
स्मयमानोऽब्रवीत्पार्थमेवमेतदिति ब्रुवन् २६
ततस्ते धृतसङ्कल्पा युद्धाय सहसैनिकाः
पाण्डवेया महाराज तां रात्रिं सुखमावसन् २७
इति श्रीमहाभारते उद्योगपर्वणि एकपञ्चाशदधिकशततमोऽध्यायः १५१

द्विपञ्चाशदधिक शततमोऽध्यायः

वैशम्पायन उवाच
व्युषितायां रजन्यां तु राजा दुर्योधनस्ततः
व्यभजत्तान्यनीकानि दश चैकं च भारत १
नरहस्तिरथाश्वानां सारं मध्यं च फल्गु च
सर्वेष्वेतेष्वनीकेषु सन्दिदेश महीपतिः २
सानुकर्षाः सतूणीराः सवरूथाः सतोमराः
सोपासङ्गाः सशक्तीकाः सनिषङ्गाः सपोथिकाः ३
सध्वजाः सपताकाश्च सशरासनतोमराः

रज्जुभिश्च विचित्राभिः सपाशाः सपरिस्तराः ४
सकचग्रहविक्षेपाः सतैलगुडवालुकाः
साशीविषघटाः सर्वे ससर्जरसपांसवः ५
सघण्टाफलकाः सर्वे वासीवृक्षादनान्विताः
व्याघ्रचर्मपरीवारावृत्ताश्च द्वीपिचर्मभिः ६
सवस्तयः सशृङ्गाश्च सप्रासविविधायुधाः
सकुठाराः सकुद्दालाः सतैलक्षौमसर्पिषः ७
चित्रानीकाः सुवपुषो ज्वलिता इव पावकाः
तथा कवचिनः शूराः शस्त्रेषु कृतनिश्रमाः ८
कुलीना हययोनिज्ञाः सारथ्ये विनिवेशिताः
बद्धारिष्टा बद्धकक्षा बद्धध्वजपताकिनः ९
चतुर्युजो रथाः सर्वे सर्वे शस्त्रसमायुताः
संहृष्टवाहनाः सर्वे सर्वे शतशरासनाः १०
धुर्ययोर्हययोरेकस्तथान्यौ पार्ष्णिसारथी
तौ चापि रथिनां श्रेष्ठौ रथी च हयवित्तथा ११
नगराणीव गुप्तानि दुरादेयानि शत्रुभिः
आसन्रथसहस्राणि हेममालीनि सर्वशः १२
यथा रथास्तथा नागा बद्धकक्ष्याः स्वलंकृताः
बभूवुः सप्त पुरुषा रत्नवन्त इवाद्रयः १३
द्वावङ्कुशधरौ तेषु द्वावुत्तमधनुर्धरौ
द्वौ वरासिधरौ राजन्नेकः शक्तिपताकधृक् १४
गजैर्मत्तैः समाकीर्णं सर्वमायुधकोशकैः
तद्बभूव बलं राजन्कौरव्यस्य सहस्रशः १५
विचित्रकवचामुक्तैः सपताकैः स्वलंकृतैः
सादिभिश्चोपसंपन्ना आसन्नयुतशो हयाः १६
सुसंग्राहाः सुसंतोषा हेमभाण्डपरिच्छदाः
अनेकशतसाहस्रास्ते च सादिवशे स्थिताः १७
नानारूपविकाराश्च नानाकवचशस्त्रिणः
पदातिनो नरास्तत्र बभूवुर्हेममालिनः १८
रथस्यासन्दश गजा गजस्य दश वाजिनः

नरा दश हयस्यासन्पादरक्षाः समन्ततः १९
रथस्य नागाः पञ्चाशन्नागस्यासञ्शतं हयाः
हयस्य पुरुषाः सप्त भिन्नसन्धानकारिणः २०
सेना पञ्चशतं नागा रथास्तावन्त एव च
दश सेना च पृतना पृतना दश वाहिनी २१
वाहिनी पृतना सेना ध्वजिनी सादिनी चमूः
अक्षौहिणीति पर्यायैर्निरुक्ताथ वरूथिनी
एवं व्यूढान्यनीकानि कौरवेयेण धीमता २२
अक्षौहिण्यो दशैका च संख्याताः सप्त चैव ह
अक्षौहिण्यस्तु सप्तैव पाण्डवानामभूद्बलम्
अक्षौहिण्यो दशैका च कौरवाणामभूद्बलम् २३
नराणां पञ्चपञ्चाशदेषा पत्तिर्विधीयते
सेनामुखं च तिस्रस्ता गुल्म इत्यभिसंज्ञितः २४
दश गुल्मा गणस्त्वासीद्गणास्त्वयुतशोऽभवन्
दुर्योधनस्य सेनासु योत्स्यमानाः प्रहारिणः २५
तत्र दुर्योधनो राजा शूरान्बुद्धिमतो नरान्
प्रसमीक्ष्य महाबाहुश्चक्रे सेनापतींस्तदा २६
पृथगक्षौहिणीनां च प्रणेतॄन्नरसत्तमान्
विधिपूर्वं समानीय पार्थिवानभ्यषेचयत् २७
कृपं द्रोणं च शल्यं च सैन्धवं च महारथम्
सुदक्षिणं च काम्बोजं कृतवर्माणमेव च २८
द्रोणपुत्रं च कर्णं च भूरिश्रवसमेव च
शकुनिं सौबलं चैव बाह्लीकं च महारथम् २९
दिवसे दिवसे तेषां प्रतिवेलं च भारत
चक्रे स विविधाः संज्ञाः प्रत्यक्षं च पुनः पुनः ३०
तथा विनियताः सर्वे ये च तेषां पदानुगाः
बभूवुः सैनिका राजन्राज्ञः प्रियचिकीर्षवः ३१

इति श्रीमहाभारते उद्योगपर्वणि द्विपञ्चाशदधिकशततमोऽध्यायः १५२

समाप्तमभिनिर्याणपर्व

त्रिपञ्चाशदधिक शततमोऽध्यायः

वैशम्पायन उवाच
ततः शान्तनवं भीष्मं प्राञ्जलिर्धृतराष्ट्रजः
सह सर्वैर्महीपालैरिदं वचनमब्रवीत् १
ऋते सेनाप्रणेतारं पृतना सुमहत्यपि
दीर्यते युद्धमासाद्य पिपीलिकपुटं यथा २
न हि जातु द्वयोर्बुद्धिः समा भवति कर्हिचित्
शौर्यं च नाम नेतृणां स्पर्धते च परस्परम् ३
श्रूयते च महाप्राज्ञ हैहयानमितौजसः
अभ्ययुर्ब्राह्मणाः सर्वे समुच्छ्रितकुशध्वजाः ४
तानन्वयुस्तदा वैश्याः शूद्राश्चैव पितामह
एकतस्तु त्रयो वर्णा एकतः क्षत्रियर्षभाः ५
ते स्म युद्धेष्वभज्यन्त त्रयो वर्णाः पुनः पुनः
क्षत्रियास्तु जयन्त्येव बहुलं चैकतो बलम् ६
ततस्ते क्षत्रियानेव पप्रच्छुर्द्विजसत्तमाः
तेभ्यः शशंसुर्धर्मज्ञा याथातथ्यं पितामह ७
वयमेकस्य शृणुमो महाबुद्धिमतो रणे
भवन्तस्तु पृथक्सर्वे स्वबुद्धिवशवर्तिनः ८
ततस्ते ब्राह्मणाश्चक्रुरेकं सेनापतिं द्विजम्
नयेषु कुशलं शूरमजयन्क्षत्रियांस्ततः ९
एवं ये कुशलं शूरं हिते स्थितमकल्मषम्
सेनापतिं प्रकुर्वन्ति ते जयन्ति रणे रिपून् १०
भवानुशनसा तुल्यो हितैषी च सदा मम
असंहार्यः स्थितो धर्मे स नः सेनापतिर्भव ११
रश्मीवतामिवादित्यो वीरुधामिव चन्द्रमाः
कुबेर इव यक्षाणां मरुतामिव वासवः १२
पर्वतानां यथा मेरुः सुपर्णः पतताामिव
कुमार इव भूतानां वसूनामिव हव्यवाट् १३
भवता हि वयं गुप्ताः शक्रेणेव दिवौकसः
अनाधृष्या भविष्यामस्त्रिदशानामपि ध्रुवम् १४

प्रयातु नो भवानग्रे देवानामिव पावकिः
वयं त्वामनुयास्यामः सौरभेया इवर्षभम् १५
भीष्म उवाच
एवमेतन्महाबाहो यथा वदसि भारत
यथैव हि भवन्तो मे तथैव मम पाण्डवाः १६
अपि चैव मया श्रेयो वाच्यं तेषां नराधिप
योद्धव्यं तु तवार्थाय यथा स समयः कृतः १७
न तु पश्यामि योद्धारमात्मनः सदृशं भुवि
ऋते तस्मान्नरव्याघ्रात्कुन्तीपुत्राद्धनञ्जयात् १८
स हि वेद महाबाहुर्दिव्यान्यस्त्राणि सर्वशः
न तु मां विवृतो युद्धे जातु युद्ध्येत पाण्डवः १९
अहं स च क्षणेनैव निर्मनुष्यमिदं जगत्
कुर्यां शस्त्रबलेनैव ससुरासुरराक्षसम् २०
न त्वेवोत्सादनीया मे पाण्डोः पुत्रा नराधिप
तस्माद्योधान्हनिष्यामि प्रयोगेणायुतं सदा २१
एवमेषां करिष्यामि निधनं कुरुनन्दन
न चेत्ते मां हनिष्यन्ति पूर्वमेव समागमे २२
सेनापतिस्त्वहं राजन्समयेनापरेण ते
भविष्यामि यथाकामं तन्मे श्रोतुमिहार्हसि २३
कर्णो वा युद्ध्यतां पूर्वमहं वा पृथिवीपते
स्पर्धते हि सदात्यर्थं सूतपुत्रो मया रणे २४
कर्ण उवाच
नाहं जीवति गाङ्गेये योत्स्ये राजन्कथञ्चन
हते भीष्मे तु योत्स्यामि सह गाण्डीवधन्वना २५
वैशम्पायन उवाच
ततः सेनापतिं चक्रे विधिवद्भूरिदक्षिणम्
धृतराष्ट्रात्मजो भीष्मं सोऽभिषिक्तो व्यरोचत २६
ततो भेरीश्च शङ्खांश्च शतशश्चैव पुष्करान्
वादयामासुरव्यग्राः पुरुषा राजशासनात् २७
सिंहनादाश्च विविधा वाहनानां च निःस्वनाः

प्रादुरासन्ननभ्रे च वर्षं रुधिरकर्दमम् २८
निर्घाताः पृथिवीकम्पा गजबृंहितनिःस्वनाः
आसंश्च सर्वयोधानां पातयन्तो मनांस्युत २९
वाचश्चाप्यशरीरिण्यो दिवश्चोल्काः प्रपेदिरे
शिवाश्च भयवेदिन्यो नेदुर्दीप्तस्वरा भृशम् ३०
सेनापत्ये यदा राजा गाङ्गेयमभिषिक्तवान्
तदैतान्युग्ररूपाणि अभवन्शतशो नृप ३१
ततः सेनापतिं कृत्वा भीष्मं परबलार्दनम्
वाचयित्वा द्विजश्रेष्ठान्निष्कैर्गोभिश्च भूरिशः ३२
वर्धमानो जयाशीर्भिर्निर्ययौ सैनिकैर्वृतः
आपगेयं पुरस्कृत्य भ्रातृभिः सहितस्तदा
स्कन्धावारेण महता कुरुक्षेत्रं जगाम ह ३३
परिक्रम्य कुरुक्षेत्रं कर्णेन सह कौरवः
शिबिरं मापयामास समे देशे जनाधिपः ३४
मधुरानूषरे देशे प्रभूतयवसेन्धने
यथैव हास्तिनपुरं तद्वच्छिबिरमाबभौ ३५
इति श्रीमहाभारते उद्योगपर्वणि त्रिपञ्चाशदधिकशततमोऽध्यायः १५३

## चतुः पञ्चाशदधिकशततमोऽध्यायः

जनमेजय उवाच
आपगेयं महात्मानं भीष्मं शस्त्रभृतां वरम्
पितामहं भारतानां ध्वजं सर्वमहीक्षिताम् १
बृहस्पतिसमं बुद्ध्या क्षमया पृथिवीसमम्
समुद्रमिव गाम्भीर्ये हिमवन्तमिव स्थिरम् २
प्रजापतिमिवौदार्ये तेजसा भास्करोपमम्
महेन्द्रमिव शत्रूणां ध्वंसनं शरवृष्टिभिः ३
रणयज्ञे प्रतिभये स्वाभीले लोमहर्षणे
दीक्षितं चिररात्राय श्रुत्वा राजा युधिष्ठिरः ४
किमब्रवीन्महाबाहुः सर्वधर्मविशारदः
भीमसेनार्जुनौ वापि कृष्णो वा प्रत्यपद्यत ५

वैशम्पायन उवाच
आपद्धर्मार्थकुशलो महाबुद्धिर्युधिष्ठिरः
सर्वान्भ्रातॄन्समानीय वासुदेवं च सात्वतम्
उवाच वदतां श्रेष्ठः सान्त्वपूर्वमिदं वचः ६
पर्याक्रामत सैन्यानि यत्तास्तिष्ठत दंशिताः
पितामहेन वो युद्धं पूर्वमेव भविष्यति
तस्मात्सप्तसु सेनासु प्रणेतॄन्मम पश्यत ७
वासुदेव उवाच
यथार्हति भवान्वक्तुमस्मिन्काल उपस्थिते
तथेदमर्थवद्वाक्यमुक्तं ते भरतर्षभ ८
रोचते मे महाबाहो क्रियतां यदनन्तरम्
नायकास्तव सेनायामभिषिच्यन्तु सप्त वै ९
वैशम्पायन उवाच
ततो द्रुपदमानाय्य विराटं शिनिपुङ्गवम्
धृष्टद्युम्नं च पाञ्चाल्यं धृष्टकेतुं च पार्थिवम्
शिखण्डिनं च पाञ्चाल्यं सहदेवं च मागधम् १०
एतान्सप्त महाभागान्वीरान्युद्धाभिनन्दिनः
सेनाप्रणेतॄन्विधिवदभ्यषिञ्चद्युधिष्ठिरः ११
सर्वसेनापतिं चात्र धृष्टद्युम्नमुपादिशत्
द्रोणान्तहेतोरुत्पन्नो य इद्धाज्जातवेदसः १२
सर्वेषामेव तेषां तु समस्तानां महात्मनाम्
सेनापतिपतिं चक्रे गुडाकेशं धनञ्जयम् १३
अर्जुनस्यापि नेता च संयन्ता चैव वाजिनाम्
सङ्कर्षणानुजः श्रीमान्महाबुद्धिर्जनार्दनः १४
तद्दृष्ट्वोपस्थितं युद्धं समासन्नं महात्ययम्
प्राविशद्भवनं राज्ञः पाण्डवस्य हलायुधः १५
सहाक्रूरप्रभृतिभिर्गदसाम्बोल्मुकादिभिः
रौक्मिणेयाहुकसुतैश्चारुदेष्णपुरोगमैः १६
वृष्णिमुख्यैरधिगतैर्व्याघ्रैरिव बलोत्कटैः
अभिगुप्तो महाबाहुर्मरुद्भिरिव वासवः १७

नीलकौशेयवसनः कैलासशिखरोपमः
सिंहखेलगतिः श्रीमान्मदरक्तान्तलोचनः १८
तं दृष्ट्वा धर्मराजश्च केशवश्च महाद्युतिः
उदतिष्ठत्तदा पार्थो भीमकर्मा वृकोदरः १९
गाण्डीवधन्वा ये चान्ये राजानस्तत्र केचन
पूजयांचक्रुरभ्येत्य ते स्म सर्वे हलायुधम् २०
ततस्तं पाण्डवो राजा करे पस्पर्श पाणिना
वासुदेवपुरोगास्तु सर्व एवाभ्यवादयन् २१
विराटद्रुपदौ वृद्धावभिवाद्य हलायुधः
युधिष्ठिरेण सहित उपाविशदरिन्दमः २२
ततस्तेषूपविष्टेषु पार्थिवेषु समन्ततः
वासुदेवमभिप्रेक्ष्य रौहिणेयोऽभ्यभाषत २३
भवितायं महारौद्रो दारुणः पुरुषक्षयः
दिष्टमेतद्ध्रुवं मन्ये न शक्यमतिवर्तितुम् २४
अस्माद्युद्धात्समुत्तीर्णानपि वः ससुहृज्जनान्
अरोगानक्षतैर्देहैः पश्येयमिति मे मतिः २५
समेतं पार्थिवं क्षत्रं कालपक्वमसंशयम्
विमर्दः सुमहान्भावी मांसशोणितकर्दमः २६
उक्तो मया वासुदेवः पुनः पुनरुपह्वरे
सम्बन्धिषु समां वृत्तिं वर्तस्व मधुसूदन २७
पाण्डवा हि यथास्माकं तथा दुर्योधनो नृपः
तस्यापि क्रियतां युक्त्या सपर्येति पुनः पुनः २८
तच्च मे नाकरोद्वाक्यं त्वदर्थे मधुसूदनः
निविष्टः सर्वभावेन धनञ्जयमवेक्ष्य ह २९
ध्रुवो जयः पाण्डवानामिति मे निश्चिता मतिः
तथा ह्यभिनिवेशोऽय वासुदेवस्य भारत ३०
न चाहमुत्सहे कृष्णमृते लोकमुदीक्षितुम्
ततोऽहमनुवर्तामि केशवस्य चिकीर्षितम् ३१
उभौ शिष्यौ हि मे वीरौ गदायुद्धविशारदौ
तुल्यस्नेहोऽस्म्यतो भीमे तथा दुर्योधने नृपे ३२

तस्माद्यास्यामि तीर्थानि सरस्वत्या निषेवितुम्
न हि शक्ष्यामि कौरव्यान्नश्यमानानुपेक्षितुम् ३३
एवमुक्त्वा महाबाहुरनुज्ञातश्च पाण्डवैः
तीर्थयात्रां ययौ रामो निवर्त्य मधुसूदनम् ३४
इति श्रीमहाभारते उद्योगपर्वणि चतुःपञ्चाशदधिकशततमोऽध्यायः १५४

पञ्चपञ्चाशदधिक शततमोऽध्यायः

वैशम्पायन उवाच
एतस्मिन्नेव काले तु भीष्मकस्य महात्मनः
हिरण्यलोम्नो नृपतेः साक्षादिन्द्रसखस्य वै १
आहृतीनामधिपतेर्भोजस्यातियशस्विनः
दाक्षिणात्यपतेः पुत्रो दिक्षु रुक्मीति विश्रुतः २
यःकिंपुरुषसिंहस्य गन्धमादनवासिनः
शिष्यः कृत्स्नं धनुर्वेदं चतुष्पादमवाप्तवान् ३
यो माहेन्द्रं धनुर्लेभे तुल्यं गाण्डीवतेजसा
शार्ङ्गेण च महाबाहुःसंमितं दिव्यमक्षयम् ४
त्रीण्येवैतानि दिव्यानि धनूंषि दिविचारिणाम्
वारुणं गाण्डिवं तत्र माहेन्द्रं विजयं धनुः ५
शार्ङ्गं तु वैष्णवं प्राहुर्दिव्यं तेजोमयं धनुः
धारयामास यत्कृष्णः परसेनाभयावहम् ६
गाण्डीवं पावकाल्लेभे खाण्डवे पाकशासनिः
द्रुमाद्रुक्मी महातेजा विजयं प्रत्यपद्यत ७
सञ्छिद्य मौरवान्पाशान्निहत्य मुरमोजसा
निर्जित्य नरकं भौममाहृत्य मणिकुण्डले ८
षोडश स्त्रीसहस्राणि रत्नानि विविधानि च
प्रतिपेदे हृषीकेशः शार्ङ्गं च धनुरुत्तमम् ९
रुक्मी तु विजयं लब्ध्वा धनुर्मेघसमस्वनम्
विभीषयन्निव जगत्पाण्डवानभ्यवर्तत १०
नामृष्यत पुरा योऽसौ स्वबाहुबलदर्पितः
रुक्मिण्या हरणं वीरो वासुदेवेन धीमता ११

कृत्वा प्रतिज्ञां नाहत्वा निवर्तिष्यामि केशवम्
ततोऽन्वधावद्वार्ष्णेयं सर्वशस्त्रभृतां वरम् १२
सेनया चतुरङ्गिण्या महत्या दूरपातया
विचित्रायुधवर्मिण्या गङ्गयेव प्रवृद्धया १३
स समासाद्य वार्ष्णेयं योगानामीश्वरं प्रभुम्
व्यंसितो व्रीडितो राजन्नाजगाम स कुण्डिनम् १४
यत्रैव कृष्णेन रणे निर्जितः परवीरहा
तत्र भोजकटं नाम कृतं नगरमुत्तमम् १५
सैन्येन महता तेन प्रभूतगजवाजिना
पुरं तद्भुवि विख्यातं नाम्ना भोजकटं नृप १६
स भोजराजः सैन्येन महता परिवारितः
अक्षौहिण्या महावीर्यः पाण्डवान्समुपागमत् १७
ततः स कवची खड्गी शरी धन्वी तली रथी
ध्वजेनादित्यवर्णेन प्रविवेश महाचमूम् १८
विदितः पाण्डवेयानां वासुदेवप्रियेप्सया
युधिष्ठिरस्तु तं राजा प्रत्युद्गम्याभ्यपूजयत् १९
स पूजितः पाण्डुपुत्रैर्यथान्यायं सुसत्कृतः
प्रतिपूज्य च तान्सर्वान्विश्रान्तः सहसैनिकः
उवाच मध्ये वीराणां कुन्तीपुत्रं धनञ्जयम् २०
सहायोऽस्मि स्थितो युद्धे यदि भीतोऽसि पाण्डव
करिष्यामि रणे साह्यमसह्यं तव शत्रुभिः २१
न हि मे विक्रमे तुल्यः पुमानस्तीह कश्चन
निहत्य समरे शत्रूंस्तव दास्यामि फल्गुन २२
इत्युक्तो धर्मराजस्य केशवस्य च सन्निधौ
शृण्वतां पार्थिवेन्द्राणामन्येषां चैव सर्वशः २३
वासुदेवमभिप्रेक्ष्य धर्मराजं च पाण्डवम्
उवाच धीमान्कौन्तेयः प्रहस्य सखिपूर्वकम् २४
युध्यमानस्य मे वीर गन्धर्वैः सुमहाबलैः
सहायो घोषयात्रायां कस्तदासीत्सखा मम २५
तथा प्रतिभये तस्मिन्देवदानवसंकुले

खाण्डवे युध्यमानस्य कः सहायस्तदाभवत् २६
निवातकवचैर्युद्धे कालकेयैश्च दानवैः
तत्र मे युध्यमानस्य कः सहायस्तदाभवत् २७
तथा विराटनगरे कुरुभिः सह सङ्गरे
युध्यतो बहुभिस्तात कः सहायोऽभवन्मम २८
उपजीव्य रणे रुद्रं शक्रं वैश्रवणं यमम्
वरुणं पावकं चैव कृपं द्रोणं च माधवम् २९
धारयन्गाण्डिवं दिव्यं धनुस्तेजोमयं दृढम्
अक्षय्यशरसंयुक्तो दिव्यास्त्रपरिबृंहितः ३०
कौरवाणां कुले जातः पाण्डोःपुत्रो विशेषतः
द्रोणं व्यपदिशञ्शिष्यो वासुदेवसहायवान् ३१
कथमस्मद्विधो ब्रूयाद्भीतोऽस्मीत्ययशस्करम्
वचनं नरशार्दूल वज्रायुधमपि स्वयम् ३२
नास्मि भीतो महाबाहो सहायार्थश्च नास्ति मे
यथाकामं यथायोगं गच्छ वान्यत्र तिष्ठ वा ३३
विनिवर्त्य ततो रुक्मी सेनां सागरसन्निभाम्
दुर्योधनमुपागच्छत्तथैव भरतर्षभ ३४
तथैव चाभिगम्यैनमुवाच स नराधिपः
प्रत्याख्यातश्च तेनापि स तदा शूरमानिना ३५
द्वावेव तु महाराज तस्माद्युद्धाद्व्यपेयतुः
रौहिणेयश्च वार्ष्णेयो रुक्मी च वसुधाधिपः ३६
गते रामे तीर्थयात्रां भीष्मकस्य सुते तथा
उपाविशन्पाण्डवेया मन्त्राय पुनरेव हि ३७
समितिर्धर्मराजस्य सा पार्थिवसमाकुला
शुशुभे तारकाचित्रा द्यौश्चन्द्रेणेव भारत ३८
इति श्रीमहाभारते उद्योगपर्वणि पञ्चपञ्चाशदधिकशततमोऽध्यायः १५५

## षट् पञ्चाशदधिक शततमोऽध्यायः

जनमेजय उवाच
तथा व्यूढेष्वनीकेषु कुरुक्षेत्रे द्विजर्षभ

किमकुर्वन्त कुरवः कालेनाभिप्रचोदिताः १
वैशम्पायन उवाच
तथा व्यूढेष्वनीकेषु यत्तेषु भरतर्षभ
धृतराष्ट्रो महाराज सञ्जयं वाक्यमब्रवीत् २
एहि सञ्जय मे सर्वमाचक्ष्वानवशेषतः
सेनानिवेशे यद्वृत्तं कुरुपाण्डवसेनयोः ३
दिष्टमेव परं मन्ये पौरुषं चाप्यनर्थकम्
यदहं जानमानोऽपि युद्धदोषान्क्षयोदयान् ४
तथापि निकृतिप्रज्ञं पुत्रं दुर्द्यूतदेविनम्
न शक्नोमि नियन्तुं वा कर्तुं वा हितमात्मनः ५
भवत्येव हि मे सूत बुद्धिर्दोषानुदर्शिनी
दुर्योधनं समासाद्य पुनः सा परिवर्तते ६
एवं गते वै यद्भावि तद्भविष्यति सञ्जय
क्षत्रधर्मः किल रणे तनुत्यागोऽभिपूजितः ७
सञ्जय उवाच
त्वद्युक्तोऽयमनुप्रश्नो महाराज यथार्हसि
न तु दुर्योधने दोषमिममासक्तुमर्हसि
शृणुष्वानवशेषेण वदतो मम पार्थिव ८
य आत्मनो दुश्चरितादशुभं प्राप्नुयान्नरः
एनसा न स दैवं वा कालं वा गन्तुमर्हति ९
महाराज मनुष्येषु निन्द्यं यः सर्वमाचरेत्
स वध्यः सर्वलोकस्य निन्दितानि समाचरन् १०
निकारा मनुजश्रेष्ठ पाण्डवैस्त्वत्प्रतीक्षया
अनुभूताः सहामात्यैर्निकृतैरधिदेवने ११
हयानां च गजानां च राज्ञां चामिततेजसाम्
वैशसं समरे वृत्तं यत्तन्मे शृणु सर्वशः १२
स्थिरो भूत्वा महाराज सर्वलोकक्षयोदयम्
यथाभूतं महायुद्धे श्रुत्वा मा विमना भव १३
न ह्येव कर्ता पुरुषः कर्मणोः शुभपापयोः
अस्वतन्त्रो हि पुरुषः कार्यते दारुयन्त्रवत् १४

केचिदीश्वरनिर्दिष्टाः केचिदेव यदृच्छया
पूर्वकर्मभिरप्यन्ये त्रैधमेतद्विकृष्यते १५
इति श्रीमहाभारते उद्योगपर्वणि षट्पञ्चाशदधिकशततमोऽध्यायः १५६
समाप्तं भीष्माभिषेचनपर्व

सप्त पञ्चाशदधिक शततमोऽध्यायः

संजय उवाच
हिरणवत्यां निविष्टेषु पाणडवेषु महात्मसु
दुर्योधनो महाराज कर्णेन सह भारत १
सौबलेन च राजेन्द्र तथा दुःशासनेन च
आहूयोपह्वरे राजन्नुलूकमिदमब्रवीत् २
उलूक गच्छ कैतव्य पाणडवान्सहसोमकान्
गत्वा मम वचो ब्रूहि वासुदेवस्य शृणवतः ३
इदं तत्समनुप्राप्तं वर्षपूगाभिचिन्तितम्
पाणडवानां कुरूणां च युद्धं लोकभयङ्करम् ४
यदेतत्कत्थनावाक्यं सञ्जयो महदब्रवीत्
मध्ये कुरूणां कौन्तेय तस्य कालोऽयमागतः
यथा वः सम्प्रतिज्ञातं तत्सर्वं क्रियतामिति ५
अमर्षं राज्यहरणं वनवासं च पाणडव
द्रौपद्याश्च परिक्लेशं संस्मरन्पुरुषो भव ६
यदर्थं क्षत्रिया सूते गर्भं तदिदमागतम्
बलं वीर्यं च शौर्यं च परं चाप्यस्त्रलाघवम्
पौरुषं दर्शयन्युद्धे कोपस्य कुरु निष्कृतिम् ७
परिक्लिष्टस्य दीनस्य दीर्घकालोषितस्य च
न स्फुटेद्धृदयं कस्य एश्वर्याद्भ्रंशितस्य च ८
कुले जातस्त शूरस्य परवित्तेषु गृध्यतः
आच्छिन्नं राज्यमाक्रम्य कोपं कस्य न दीपयेत् ९
यत्तदुक्तं महद्वाक्यं कर्मणा तद्विभाव्यताम्
अकर्मणा कत्थितेन सन्तः कुपुरुषं विदुः १०
अमित्राणां वशे स्थानं राज्यस्य च पुनर्भवः

द्वावर्थौ युध्यमानस्य तस्मात्कुरुत पौरुषम् ११
अस्मान्वा त्वं पराजित्य प्रशाधि पृथिवीमिमाम्
अथ वा निहतोऽस्माभिर्वीरलोकं गमिष्यसि १२
राष्ट्रात्प्रव्राजनं क्लेशं वनवासं च पाण्डव
कृष्णायाश्च परिक्लेशं संस्मरन्पुरुषो भव १३
अप्रियाणां च वचने प्रव्रजत्सु पुनः पुनः
अमर्षं दर्शयाद्य त्वममर्षो ह्येव पौरुषम् १४
क्रोधो बलं तथा वीर्यं ज्ञानयोगोऽस्त्रलाघवम्
इह ते पार्थ दृश्यन्तां संग्रामे पुरुषो भव १५
तं च तूबरकं मूढं बह्वाशिनमविद्यकम्
उलूक मद्वचो ब्रूया असकृद्भीमसेनकम् १६
अशक्तेनैव यच्छप्तं सभामध्ये वृकोदर
दुःशासनस्य रुधिरं पीयतां यदि शक्यते १७
लोहाभिहारो निर्वृत्तः कुरुक्षेत्रमकर्दमम्
पुष्टास्तेऽश्वा भृता योधाः श्वो युध्यस्व सकेशवः १८
इति श्रीमहाभारते उद्योगपर्वणि सप्तपञ्चाशदधिकशततमोऽध्यायः १५७

अष्ट पञ्चाशदधिक शततमोऽध्यायः

सञ्जय उवाच
सेनानिवेशं संप्राप्य कैतव्यः पाण्डवस्य ह
समागतः पाण्डवेयैर्युधिष्ठिरमभाषत १
अभिज्ञो दूतवाक्यानां यथोक्तं ब्रुवतो मम
दुर्योधनसमादेशं श्रुत्वा न क्रोद्धुमर्हसि २
युधिष्ठिर उवाच
उलूक न भयं तेऽस्ति ब्रूहि त्वं विगतज्वरः
यन्मतं धार्तराष्ट्रस्य लुब्धस्यादीर्घदर्शिनः ३
सञ्जय उवाच
ततो द्युतिमतां मध्ये पाण्डवानां महात्मनाम्
सृञ्जयानां च सर्वेषां कृष्णस्य च यशस्विनः ४
द्रुपदस्य सपुत्रस्य विराटस्य च सन्निधौ

भूमिपानां च सर्वेषां मध्ये वाक्यं जगाद ह ५
इदं त्वामब्रवीद्राजा धार्तराष्ट्रो महामनाः
शृणवतां कुरुवीराणां तन्निबोध नराधिप ६
पराजितोऽसि द्यूतेन कृष्णा चानायिता सभाम्
शक्योऽमर्षो मनुष्येण कर्तुं पुरुषमानिना ७
द्वादशैव तु वर्षाणि वने धिष्ण्याद्विवासिताः
संवत्सरं विराटस्य दास्यमास्थाय चोषिताः ८
अमर्षं राज्यहरणं वनवासं च पाण्डव
द्रौपद्याश्च परिक्लेशं संस्मरन्पुरुषो भव ९
अशक्तेन च यच्छप्तं भीमसेनेन पाण्डव
दुःशासनस्य रुधिरं पीयतां यदि शक्यते १०
लोहाभिहारो निर्वृत्तः कुरुक्षेत्रमकर्दमम्
समः पन्था भृता योधाः श्वो युध्यस्व सकेशवः ११
असमागम्य भीष्मेण संयुगे किं विकत्थसे
आरुरुक्षुर्यथा मन्दः पर्वतं गन्धमादनम् १२
द्रोणं च युध्यतां श्रेष्ठं शचीपतिसमं युधि
अजित्वा संयुगे पार्थ राज्यं कथमिहेच्छसि १३
ब्राह्मे धनुषि चाचार्यं वेदयोरन्तरं द्वयोः
युधि धुर्यमविक्षोभ्यमनीकधरमच्युतम् १४
द्रोणं मोहाद्युधा पार्थ यज्जिगीषसि तन्मृषा
न हि शुश्रुम वातेन मेरुमुन्मथितं गिरिम् १५
अनिलो वा वहेन्मेरुं द्यौर्वापि निपतेन्महीम्
युगं वा परिवर्तेत यद्येवं स्याद्यथात्थ माम् १६
को ह्याभ्यां जीविताकाङ्क्षी प्राप्यास्त्रमरिमर्दनम्
गजो वाजी नरो वापि पुनः स्वस्ति गृहान्व्रजेत् १७
कथमाभ्यामभिध्यातः संसृष्टो दारुणेन वा
रणे जीवन्विमुच्येत पदा भूमिमुपस्पृशन् १८
किं दर्दुरः कूपशयो यथेमां न बुध्यसे राजचमूं समेताम्
दुराधर्षां देवचमूप्रकाशां गुप्तां नरेन्द्रैस्त्रिदशैरिव द्याम् १९
प्राच्यैः प्रतीच्यैरथ दाक्षिणात्यैरुदीच्यकाम्बोजशकैः खशैश्च

शाल्वैः समत्स्यैः कुरुमध्यदेशैर्म्लेच्छैः पुलिन्दैर्द्रविडान्ध्रकाञ्च्यैः २०
नानाजनौघं युधि सम्प्रवृद्धं गाङ्गं यथा वेगमपारणीयम्
मां च स्थितं नागबलस्य मध्ये युयुत्ससे मन्द किमल्पबुद्धे २१
इत्येवमुक्त्वा राजानं धर्मपुत्रं युधिष्ठिरम्
अभ्यावृत्य पुनर्जिष्णुमुलूकः प्रत्यभाषत २२
अकत्थमानो युध्यस्व कत्थसेऽर्जुन किं बहु
पर्यायात्सिद्धिरेतस्य नैतत्सिध्यति कत्थनात् २३
यदीदं कत्थनात्सिध्येत्कर्म लोके धनञ्जय
सर्वे भवेयुः सिद्धार्था बहु कत्थेत दुर्गतः २४
जानामि ते वासुदेवं सहायं जानामि ते गाण्डिवं तालमात्रम्
जानाम्येतत्त्वादृशो नास्ति योद्धा राज्यं च ते जानमानो हरामि २५
न तु पर्यायधर्मेण राज्यं प्राप्नोति भूयसीम्
मनसैव हि भूतानि धाता प्रकुरुते वशे २६
त्रयोदश समा भुक्तं राज्यं विलपतस्तव
भूयश्चैव प्रशासिष्ये निहत्य त्वां सबान्धवम् २७
क्व तदा गाण्डिवं तेऽभूद्यत्त्वं दासपणे जितः
क्व तदा भीमसेनस्य बलमासीच्च फल्गुन २८
सगदाद्भीमसेनाच्च पार्थाच्चैव सगाण्डिवात्
न वै मोक्षस्तदा वोऽभूद्विना कृष्णामनिन्दिताम् २९
सा वो दास्यं समापन्नान्मोक्षयामास भामिनी
अमानुष्यसमायुक्तान्दास्यकर्मण्यवस्थितान् ३०
अवोचं यत्षण्ढतिलानहं वस्तथ्यमेव तत्
धृता हि वेणी पार्थेन विराटनगरे तदा ३१
सूदकर्मणि च श्रान्तं विराटस्य महानसे
भीमसेनेन कौन्तेय यच्च तन्मम पौरुषम् ३२
एवमेव सदा दण्डं क्षत्रियाः क्षत्रिये दधुः
श्रेण्यां कक्ष्यां च वेण्यां च संयुगे यः पलायते ३३
न भयाद्वासुदेवस्य न चापि तव फल्गुन
राज्यं प्रतिप्रदास्यामि युध्यस्व सहकेशवः ३४
न माया हीन्द्रजालं वा कुहका वा विभीषणी

आत्तशस्त्रस्य मे युद्धे वहन्ति प्रतिगर्जनाः ३५
वासुदेवसहस्रं वा फल्गुनानां शतानि वा
आसाद्य माममोघेषुं द्रविष्यन्ति दिशो दश ३६
संयुगं गच्छ भीष्मेण भिन्धि वा शिरसा गिरिम्
प्रतरेमं महागाधं बाहुभ्यां पुरुषोदधिम् ३७
शारद्वतमहामीनं विविंशतिझषाकुलम्
बृहद्बलसमुच्चालं सौमदत्तितिमिङ्गिलम् ३८
दुःशासनौघं शलशल्यमत्स्यं सुषेणचित्रायुधनागनक्रम्
जयद्रथाद्रिं पुरुमित्रगाधं दुर्मर्षणोदं शकुनिप्रपातम् ३९
शस्त्रौघमक्षय्यमतिप्रवृद्धं यदावगाह्य श्रमनष्टचेताः
भविष्यसि त्वं हतसर्वबान्धवस्तदा मनस्ते परितापमेष्यति ४०
तदा मनस्ते त्रिदिवादिवाशुचेर्निवर्तितां पार्थ महीप्रशासनात्
राज्यं प्रशास्तुं हि सुदुर्लभं त्वया बुभूषता स्वर्ग इवातपस्विना ४१
इति श्रीमहाभारते उद्योगपर्वणि अष्टपञ्चाशदधिकशततमोऽध्यायः १५८

## एकोन षष्ट्यधिक शततमोऽध्यायः

सञ्जय उवाच
उलूकस्त्वर्जुनं भूयो यथोक्तं वाक्यमब्रवीत्
आशीविषमिव क्रुद्धं तुदन्वाक्यशलाकया १
तस्य तद्वचनं श्रुत्वा रुषिताः पाण्डवा भृशम्
प्रागेव भृशसंक्रुद्धाः कैतव्येन प्रधर्षिताः २
नासनेष्ववतिष्ठन्त बाहूंश्चैव विचिक्षिपुः
आशीविषा इव क्रुद्धा वीक्षाञ्चक्रुः परस्परम् ३
अवाक्शिरा भीमसेनः समुदैक्षत केशवम्
नेत्राभ्यां लोहितान्ताभ्यामाशीविष इव श्वसन् ४
आर्तं वातात्मजं दृष्ट्वा क्रोधेनाभिहतं भृशम्
उत्स्मयन्निव दाशार्हः कैतव्यं प्रत्यभाषत ५
प्रयाहि शीघ्रं कैतव्य ब्रूयाश्चैव सुयोधनम्
श्रुतं वाक्यं गृहीतोऽथो मतं यत्ते तथास्तु तत् ६
मद्वचश्चापि भूयस्ते वक्तव्यः स सुयोधनः

श्च इदानीं प्रदृश्येथाः पुरुषो भव दुर्मते ७
मन्यसे यच्च मूढ त्वं न योत्स्यति जनार्दनः
सारथ्येन वृतः पार्थैरिति त्वं न बिभेषि च ८
जघन्यकालमप्येतद्भवेद्यत्सर्वपार्थिवान्
निर्दहेयमहं क्रोधात्तृणानीव हुताशनः ९
युधिष्ठिरनियोगात्तु फल्गुनस्य महात्मनः
करिष्ये युध्यमानस्य सारथ्यं विदितात्मनः १०
यद्युत्पतसि लोकांस्त्रीन्यद्याविशसि भूतलम्
तत्र तत्रार्जुनरथं प्रभाते द्रक्ष्यसेऽग्रतः ११
यच्चापि भीमसेनस्य मन्यसे मोघगर्जितम्
दुःशासनस्य रुधिरं पीतमित्यवधार्यताम् १२
न त्वां समीक्षते पार्थो नापि राजा युधिष्ठिरः
न भीमसेनो न यमौ प्रतिकूलप्रभाषिणम् १३
इति श्रीमहाभारते उद्योगपर्वणि एकोनषष्ट्यधिकशततमोऽध्यायः १५९

षष्ठ्यधिक शततमोऽध्यायः

संजय उवाच
दुर्योधनस्य तद्वाक्यं निशम्य भरतर्षभः
नेत्राभ्यामतिताम्राभ्यां कैतव्यं समुदैक्षत १
स केशवमभिप्रेक्ष्य गुडाकेशो महायशाः
अभ्यभाषत कैतव्यं प्रगृह्य विपुलं भुजम् २
स्ववीर्यं यः समाश्रित्य समाह्वयति वै परान्
अभीतः पूरयञ्शक्तिं स वै पुरुष उच्यते ३
परवीर्यं समाश्रित्य यः समाह्वयते परान्
क्षत्रबन्धुरशक्तत्वाल्लोके स पुरुषाधमः ४
स त्वं परेषां वीर्येण मन्यसे वीर्यमात्मनः
स्वयं कापुरुषो मूढ परांश्च क्षेप्तुमिच्छसि ५
यस्त्वं वृद्धं सर्वराज्ञां हितबुद्धिं जितेन्द्रियम्
मरणाय महाबुद्धिं दीक्षयित्वा विकत्थसे ६
भावस्ते विदितोऽस्माभिर्दुर्बुद्धे कुलपांसन

न हनिष्यन्ति गाङ्गेयं पाराडवा घृणयेति च ७
यस्य वीर्यं समाश्रित्य धार्तराष्ट्र विकत्थसे
हन्तास्मि प्रथमं भीष्मं मिषतां सर्वधन्विनाम् ८
कैतव्य गत्वा भरतान्समेत्य सुयोधनं धार्तराष्ट्रं ब्रवीहि
तथेत्याह अर्जुनः सव्यसाची निशाव्यपाये भविता विमर्दः ९
यद्वोऽब्रवीद्वाक्यमदीनसत्त्वो मध्ये कुरूणां हर्षयन्सत्यसन्धः
अहं हन्ता पाराडवानामनीकं शाल्वेयकांश्चेति ममैष भारः १०
हन्यामहं द्रोणमृते हि लोकं न ते भयं विद्यते पाराडवेभ्यः
ततो हि ते लब्धतमं च राज्यं क्षयं गताः पांडवाश्चेति भावः ११
स दर्पपूर्णो न समीक्षसे त्वमनर्थमात्मन्यपि वर्तमानम्
तस्मादहं ते प्रथमं समूहे हन्ता समक्षं कुरुवृद्धमेव १२
सूर्योदये युक्तसेनः प्रतीक्ष्य ध्वजी रथी रक्षत सत्यसन्धम्
अहं हि वः पश्यतां द्वीपमेनं रथाद्भीष्मं पातयितास्मि बाणैः १३
श्वोभूते कत्थनावाक्यं विज्ञास्यति सुयोधनः
अर्दितं शरजालेन मया दृष्ट्वा पितामहम् १४
यदुक्तश्च सभामध्ये पुरुषो ह्रस्वदर्शनः
क्रुद्धेन भीमसेनेन भ्राता दुःशासनस्तव १५
अधर्मज्ञो नित्यवैरी पापबुद्धिर्नृशंसकृत्
सत्यां प्रतिज्ञां नचिराद्द्रक्ष्यसे तां सुयोधन १६
अभिमानस्य दर्पस्य क्रोधपारुष्ययोस्तथा
नैष्ठुर्यस्यावलेपस्य आत्मसम्भावनस्य च १७
नृशंसतायास्तैक्ष्ण्यस्य धर्मविद्वेषणस्य च
अधर्मस्यातिवादस्य वृद्धातिक्रमणस्य च १८
दर्शनस्य च वक्रस्य कृत्स्नस्यापनयस्य च
द्रक्ष्यसि त्वं फलं तीव्रमचिरेण सुयोधन १९
वासुदेवद्वितीये हि मयि क्रुद्धे नराधिप
आशा ते जीविते मूढ राज्ये वा केन हेतुना २०
शान्ते भीष्मे तथा द्रोणे सूतपुत्रे च पातिते
निराशो जीविते राज्ये पुत्रेषु च भविष्यति २१
भ्रातृणां निधनं दृष्ट्वा पुत्राणां च सुयोधन

भीमसेनेन निहतो दुष्कृतानि स्मरिष्यसि २२
न द्वितीयां प्रतिज्ञां हि प्रतिज्ञास्यति केशवः
सत्यं ब्रवीम्यहं ह्येतत्सर्वं सत्यं भविष्यसि २३
इत्युक्तः कैतवो राजंस्तद्वाक्यमुपधार्य च
अनुज्ञातो निववृते पुनरेव यथागतम् २४
उपावृत्य तु पाण्डुभ्यः कैतव्यो धृतराष्ट्रजम्
गत्वा यथोक्तं तत्सर्वमुवाच कुरुसंसदि २५
केशवार्जुनयोर्वाक्यं निशम्य भरतर्षभः
दुःशासनं च कर्णं च शकुनिं चाभ्यभाषत २६
आज्ञापयत राज्ञश्च बलं मित्रबलं तथा
यथा प्रागुदयात्सर्वा युक्तां तिष्ठत्यनीकिनी २७
ततः कर्णसमादिष्टा दूताः प्रत्वरिता रथैः
उष्ट्रवामीभिरप्यन्ये सदश्वैश्च महाजवैः २८
तूर्णं परिययुः सेनां कृत्स्नां कर्णस्य शासनात्
आज्ञापयन्ती राज्ञस्तान्योगः प्रागुदयादिति २९

इति श्रीमहाभारते उद्योगपर्वणि षष्ट्यधिकशततमोऽध्यायः १६०
समाप्तमुलूकयानपर्व

## एक षष्ठ्यधिक शततमोऽध्यायः

सञ्जय उवाच
उलूकस्य वचः श्रुत्वा कुन्तीपुत्रो युधिष्ठिरः
सेनां निर्यापयामास धृष्टद्युम्नपुरोगमाम् १
पदातिनीं नागवतीं रथिनीमश्ववृन्दिनीम्
चतुर्विधबलां भीमामकम्प्यां पृथिवीमिव २
भीमसेनादिभिर्गुप्तां सार्जुनैश्च महारथैः
धृष्टद्युम्नवशां दुर्गां सागरस्तिमितोपमाम् ३
तस्यास्त्वग्रे महेष्वासः पाञ्चाल्यो युद्धदुर्मदः
द्रोणप्रेप्सुरनीकानि धृष्टद्युम्नो प्रकर्षति ४
यथाबलं यथोत्साहं रथिनः समुपादिशत्
अर्जुनं सूतपुत्राय भीमं दुर्योधनाय च ५

अश्वत्थाम्ने च नकुलं शैब्यं च कृतवर्मणे
सैन्धवाय च वार्ष्णेयं युयुधानमुपादिशत् ६
शिखण्डिनं च भीष्माय प्रमुखे समकल्पयत्
सहदेवं शकुनये चेकितानं शलाय च ७
धृष्टकेतुं च शल्याय गौतमायोत्तमौजसम्
द्रौपदेयांश्च पञ्चभ्यस्त्रिगर्तेभ्यः समादिशत् ८
वृषसेनाय सौभद्रं शेषाणां च महीक्षिताम्
समर्थं तं हि मेने वै पार्थादभ्यधिकं रणे ९
एवं विभज्य योधांस्तान्पृथक्च सह चैव ह
ज्वालावर्णो महेष्वासो द्रोणमंशमकल्पयत् १०
धृष्टद्युम्नो महेष्वासः सेनापतिपतिस्ततः
विधिवद्व्यूह्य मेधावी युद्धाय धृतमानसः ११
यथादिष्टान्यनीकानि पाण्डवानामयोजयत्
जयाय पाण्डुपुत्राणां यत्तस्तस्थौ रणाजिरे १२
इति श्रीमहाभारते उद्योगपर्वणि एकषष्ट्यधिकशततमोऽध्यायः १६१

## द्विषष्ट्यधिकशततमोऽध्यायः

धृतराष्ट्र उवाच
प्रतिज्ञाते फल्गुनेन वधे भीष्मस्य संजय
किमकुर्वन्त मे मन्दाः पुत्रा दुर्योधनादयः १
हतमेव हि पश्यामि गाङ्गेयं पितरं रणे
वासुदेवसहायेन पार्थेन दृढधन्वना २
स चापरिमितप्रज्ञस्तच्छ्रुत्वा पार्थभाषितम्
किमुक्तवान्महेष्वासो भीष्मः प्रहरतां वरः ३
सेनापत्यं च सम्प्राप्य कौरवाणां धुरन्धरः
किमचेष्टत गाङ्गेयो महाबुद्धिपराक्रमः ४
वैशम्पायन उवाच
ततस्तत्सञ्जयस्तस्मै सर्वमेव न्यवेदयत्
यथोक्तं कुरुवृद्धेन भीष्मेणामिततेजसा ५
सञ्जय उवाच

सेनापत्यमनुप्राप्य भीष्मः शान्तनवो नृप
दुर्योधनमुवाचेदं वचनं हर्षयन्निव ६
नमस्कृत्वा कुमाराय सेनान्ये शक्तिपाणये
अहं सेनापतिस्तेऽद्य भविष्यामि न संशयः ७
सेनाकर्मण्यभिज्ञोऽस्मि व्यूहेषु विविधेषु च
कर्म कारयितुं चैव भृतानप्यभृतांस्तथा ८
यात्रायानेषु युद्धेषु लब्धप्रशमनेषु च
भृशं वेद महाराज यथा वेद बृहस्पतिः ९
व्यूहानपि महारम्भान्दैवगान्धर्वमानुषान्
तैरहं मोहयिष्यामि पाण्डवान्व्येतु ते ज्वरः १०
सोऽह योत्स्यामि तत्त्वेन पालयंस्तव वाहिनीम्
यथावच्छास्त्रतो राजन्व्येतु ते मानसो ज्वरः ११
दुर्योधन उवाच
न विद्यते मे गाङ्गेय भयं देवासुरेष्वपि
समस्तेषु महाबाहो सत्यमेतद्ब्रवीमि ते १२
किं पुनस्त्वयि दुर्धर्षे सेनापत्ये व्यवस्थिते
द्रोणे च पुरुषव्याघ्रे स्थिते युद्धाभिनन्दिनि १३
भवद्भ्यां पुरुषाग्र्याभ्यां स्थिताभ्यां विजयो मम
न दुर्लभं कुरुश्रेष्ठ देवराज्यमपि ध्रुवम् १४
रथसंख्यां तु कार्त्स्न्येन परेषामात्मनस्तथा
तथैवातिरथानां च वेत्तुमिच्छामि कौरव १५
पितामहो हि कुशलः परेषामात्मनस्तथा
श्रोतुमिच्छाम्यहं सर्वैः सहैभिर्वसुधाधिपैः १६
भीष्म उवाच
गान्धारे शृणु राजेन्द्र रथसंख्यां स्वके बले
ये रथाः पृथिवीपाल तथैवातिरथाश्च ये १७
बहूनीह सहस्राणि प्रयुतान्यर्बुदानि च
रथानां तव सेनायां यथामुख्यं तु मे शृणु १८
भवानग्रे रथोदारः सह सर्वैः सहोदरैः
दुःशासनप्रभृतिभिर्भ्रातृभिः शतसंमितैः १९

सर्वे कृतप्रहरणाश्छेद्यभेद्यविशारदाः
रथोपस्थे गजस्कन्धे गदायुद्धेऽसिचर्मणि २०
संयन्तारः प्रहर्तारः कृतास्त्रा भारसाधनाः
इष्वस्त्रे द्रोणशिष्याश्च कृपस्य च शरद्वतः २१
एते हनिष्यन्ति रणे पाञ्चालान्युद्धदुर्मदान्
कृतकिल्बिषाः पाण्डवेयैर्धार्तराष्ट्रा मनस्विनः २२
ततोऽह भरतश्रेष्ठ सर्वसेनापतिस्तव
शत्रून्विध्वंसयिष्यामि कदर्थीकृत्य पाण्डवान्
न त्वात्मनो गुणान्वक्तुमर्हामि विदितोऽस्मि ते २३
कृतवर्मा त्वतिरथो भोजः प्रहरतां वरः
अर्थसिद्धिं तव रणे करिष्यति न संशयः २४
शस्त्रविद्भिरनाधृष्यो दूरपाती दृढायुधः
हनिष्यति रिपूंस्तुभ्यं महेन्द्रो दानवानिव २५
मद्रराजो महेष्वासः शल्यो मेऽतिरथो मतः
स्पर्धते वासुदेवेन यो वै नित्यं रणे रणे २६
भागिनेयान्निजांस्त्यक्त्वा शल्यस्ते रथसत्तमः
एष योत्स्यति संग्रामे कृष्णं चक्रगदाधरम् २७
सागरोर्मिसमैर्वेगैः प्लावयन्निव शात्रवान्
भूरिश्रवाः कृतास्त्रश्च तव चापि हितः सुहृत् २८
सौमदत्तिर्महेष्वासो रथयूथपयूथपः
बलक्षयममित्राणां सुमहान्तं करिष्यति २९
सिन्धुराजो महाराज मतो मे द्विगुणो रथः
योत्स्यते समरे राजन्विक्रान्तो रथसत्तमः ३०
द्रौपदीहरणे पूर्वं परिक्लिष्टः स पाण्डवैः
संस्मरंस्तं परिक्लेशं योत्स्यते परवीरहा ३१
एतेन हि तदा राजंस्तप आस्थाय दारुणम्
सुदुर्लभो वरो लब्धः पाण्डवान्योद्धुमाहवे ३२
स एष रथशार्दूलस्तद्वैरं संस्मरन्रणे
योत्स्यते पाण्डवांस्तात प्राणांस्त्यक्त्वा सुदुस्त्यजान् ३३
इति श्रीमहाभारते उद्योगपर्वणि द्विषष्ट्यधिकशततमोऽध्यायः १६२

## त्रिषष्ठ्यधिक शततमोऽध्यायः

भीष्म उवाच
सुदक्षिणस्तु काम्बोजो रथ एकगुणो मतः
तवार्थसिद्धिमाकाङ्क्षन्योत्स्यते समरे परैः १
एतस्य रथसिंहस्य तवार्थे राजसत्तम
पराक्रमं यथेन्द्रस्य द्रक्ष्यन्ति कुरवो युधि२
एतस्य रथवंशो हि तिग्मवेगप्रहारिणाम्
काम्बोजानां महाराज शलभानामिवायतिः ३
नीलो माहिष्मतीवासी नीलवर्मधरस्तव
रथवंशेन शत्रूणां कदनं वै करिष्यति ४
कृतवैरः पुरा चैव सहदेवेन पार्थिवः
योत्स्यते सततं राजंस्तवार्थे कुरुसत्तम ५
विन्दानुविन्दावावन्त्यौ समेतौ रथसत्तमौ
कृतिनौ समरे तात दृढवीर्यपराक्रमौ ६
एतौ तौ पुरुषव्याघ्रौ रिपुसैन्यं प्रधक्ष्यतः
गदाप्रासासिनाराचैस्तोमरैश्च भुजच्युतैः ७
युद्धाभिकामौ समरे क्रीडन्ताविव यूथपौ
यूथमध्ये महाराज विचरन्तौ कृतान्तवत् ८
त्रिगर्ता भ्रातरः पञ्च रथोदारा मता मम
कृतवैराश्च पार्थेन विराटनगरे तदा ९
मकरा इव राजेन्द्र समुद्धततरङ्गिणीम्
गङ्गां विक्षोभयिष्यन्ति पार्थानां युधि वाहिनीम् १०
ते रथाः पञ्च राजेन्द्र येषां सत्यरथो मुखम्
एते योत्स्यन्ति समरे संस्मरन्तः पुरा कृतम् ११
व्यलीकं पाण्डवेयेन भीमसेनानुजेन ह
दिशो विजयता राजञ्श्वेतवाहेन भारत १२
ते हनिष्यन्ति पार्थानां समासाद्य महारथान्
वरान्वरान्महेष्वासान्क्षत्रियाणां धुरन्धराः १३
लक्ष्मणस्तव पुत्रस्तु तथा दुःशासनस्य च
उभौ तौ पुरुषव्याघ्रौ संग्रामेष्वनिवर्तिनौ १४

तरुणौ सुकुमारौ च राजपुत्रौ तरस्विनौ
युद्धानां च विशेषज्ञौ प्रणेतारौ च सर्वशः १५
रथौ तौ रथशार्दूल मतौ मे रथसत्तमौ
क्षत्रधर्मरतौ वीरौ महत्कर्म करिष्यतः १६
दण्डधारो महाराज रथ एको नरर्षभः
योत्स्यते समरं प्राप्य स्वेन सैन्येन पालितः १७
बृहद्बलस्तथा राजा कौसल्यो रथसत्तमः
रथो मम मतस्तात दृढवेगपराक्रमः १८
एष योत्स्यति संग्रामे स्वां चमूं सम्प्रहर्षयन्
उग्रायुधो महेष्वासो धार्तराष्ट्रहिते रतः १९
कृपः शारद्वतो राजन्रथयूथपयूथपः
प्रियान्प्राणान्परित्यज्य प्रधक्ष्यति रिपूंस्तव २०
गौतमस्य महर्षेर्य आचार्यस्य शरद्वतः
कार्तिकेय इवाजेयः शरस्तम्बात्सुतोऽभवत् २१
एष सेनां बहुविधां विविधायुधकार्मुकाम्
अग्निवत्समरे तात चरिष्यति विमर्दयन् २२

इति श्रीमहाभारते उद्योगपर्वणि त्रिषष्ट्यधिकशततमोऽध्यायः १६३

## चतुःषष्ठ्यधिक शततमोऽध्यायः

भीष्म उवाच
शकुनिर्मातुलस्तेऽसौ रथ एको नराधिप
प्रयुज्य पाण्डवैर्वैरं योत्स्यते नात्र संशयः १
एतस्य सैन्या दुर्धर्षाः समरेऽप्रतियायिनः
विकृतायुधभूयिष्ठा वायुवेगसमा जवे २
द्रोणपुत्रो महेष्वासः सर्वेषामति धन्विनाम्
समरे चित्रयोधी च दृढास्त्रश्च महारथः ३
एतस्य हि महाराज यथा गाण्डीवधन्वनः
शरासनाद्विनिर्मुक्ताः संसक्ता यान्ति सायकाः ४
नैष शक्यो मया वीरः संख्यातुं रथसत्तमः
निर्दहेदपि लोकांस्त्रीनिच्छन्नेष महायशाः ५

क्रोधस्तेजश्च तपसा सम्भृतोऽश्रमवासिना
द्रोणेनानुगृहीतश्च दिव्यैरस्त्रैरुदारधीः ६
दोषस्त्वस्य महानेको येनैष भरतर्षभ
न मे रथो नातिरथो मतः पार्थिवसत्तम ७
जीवितं प्रियमत्यर्थमायुष्कामः सदा द्विजः
न ह्यस्य सदृशः कश्चिदुभयोः सेनयोरपि ८
हन्यादेकरथेनैव देवानामपि वाहिनीम्
वपुष्मांस्तलघोषेण स्फोटयेदपि पर्वतान् ९
असंख्येयगुणो वीरः प्रहर्ता दारुणद्युतिः
दण्डपाणिरिवासह्यः कालवत्प्रचरिष्यति १०
युगान्ताग्निसमः क्रोधे सिंहग्रीवो महामतिः
एष भारत युद्धस्य पृष्ठं संशमयिष्यति ११
पिता त्वस्य महातेजा वृद्धोऽपि युवभिर्वरः
रणे कर्म महत्कर्ता तत्र मे नास्ति संशयः १२
अस्त्रवेगानिलोद्धूतः सेनाकक्षेन्धनोत्थितः
पाण्डुपुत्रस्य सैन्यानि प्रधक्ष्यति जये धृतः १३
रथयूथपयूथानां यूथपः स नरर्षभः
भारद्वाजात्मजः कर्ता कर्म तीव्रं हिताय वः १४
सर्वमूर्धाभिषिक्तानामाचार्यः स्थविरो गुरुः
गच्छेदन्तं सृञ्जयानां प्रियस्त्वस्य धनञ्जयः १५
नैष जातु महेष्वासः पार्थमक्लिष्टकारिणम्
हन्यादाचार्यकं दीप्तं संस्मृत्य गुणनिर्जितम् १६
श्लाघत्येष सदा वीरः पार्थस्य गुणविस्तरैः
पुत्रादभ्यधिकं चैव भारद्वाजोऽनुपश्यति १७
हन्यादेकरथेनैव देवगन्धर्वदानवान्
एकीभूतानपि रणे दिव्यैरस्त्रैः प्रतापवान् १८
पौरवो राजशार्दूलस्तव राजन्महारथः
मतो मम रथो वीर परवीररथारुजः १९
स्वेन सैन्येन सहितः प्रतपञ्शत्रुवाहिनीम्
प्रधक्ष्यति स पाञ्चालान्कक्षं कृष्णगतिर्यथा २०

सत्यव्रतो रथवरो राजपुत्रो महारथः
तव राजन्रिपुबले कालवत्प्रचरिष्यति २१
एतस्य योधा राजेन्द्र विचित्रकवचायुधाः
विचरिष्यन्ति संग्रामे निघ्नन्तः शात्रवांस्तव २२
वृषसेनो रथाग्र्यस्ते कर्णपुत्रो महारथः
प्रधक्ष्यति रिपूणां ते बलानि बलिनां वरः २३
जलसन्धो महातेजा राजन्रथवरस्तव
त्यक्ष्यते समरे प्राणान्मागधः परवीरहा २४
एष योत्स्यति संग्रामे गजस्कन्धविशारदः
रथेन वा महाबाहुः क्षपयञ्शत्रुवाहिनीम् २५
रथ एष महाराज मतो मम नरर्षभः
त्वदर्थे त्यक्ष्यति प्राणान्सहसैन्यो महारणे २६
एष विक्रान्तयोधी च चित्रयोधी च सङ्गरे
वीतभीश्चापि ते राजञ्शात्रवैः सह योत्स्यते २७
बाह्लीकोऽतिरथश्चैव समरे चानिवर्तिता
मम राजन्मतो युद्धे शूरो वैवस्वतोपमः २८
न ह्येष समरं प्राप्य निवर्तेत कथञ्चन
यथा सततगो राजन्नाभिहत्य परान्रणे २९
सेनापतिर्महाराज सत्यवांस्ते महारथः
रणेष्वद्भुतकर्मा च रथः पररथारुजः ३०
एतस्य समरं दृष्ट्वा न व्यथास्ति कथञ्चन
उत्स्मयन्नभ्युपैत्येष परान्रथपथे स्थितान् ३१
एष चारिषु विक्रान्तः कर्म सत्पुरुषोचितम्
कर्त्ता विमर्दे सुमहत्त्वदर्थे पुरुषोत्तमः ३२
अलायुधो राक्षसेन्द्रः क्रूरकर्मा महाबलः
हनिष्यति परान्राजन्पूर्ववैरमनुस्मरन् ३३
एष राक्षससैन्यानां सर्वेषां रथसत्तमः
मायावी दृढवैरश्च समरे विचरिष्यति ३४
प्राग्ज्योतिषाधिपो वीरो भगदत्तः प्रतापवान्
गजाङ्कुशधरश्रेष्ठो रथे चैव विशारदः ३५

एतेन युद्धमभवत्पुरा गाण्डीवधन्वनः
दिवसान्सुबहून्राजन्नुभयोर्जयगृद्धिनोः ३६
ततः सखायं गान्धारे मानयन्पाकशासनम्
अकरोत्संविदं तेन पाण्डवेन महात्मना ३७
एष योत्स्यति संग्रामे गजस्कन्धविशारदः
एरावतगतो राजा देवानामिव वासवः ३८
इति श्रीमहाभारते उद्योगपर्वणि चतुःषष्ट्यधिकशततमोऽध्यायः १६४

## पञ्चषष्ट्यधिक शततमोऽध्यायः

भीष्म उवाच
अचलो वृषकश्चैव भ्रातरौ सहितावुभौ
रथौ तव दुराधर्षौ शत्रून्विध्वंसयिष्यतः १
बलवन्तौ नरव्याघ्रौ दृढक्रोधौ प्रहारिणौ
गान्धारमुख्यौ तरुणौ दर्शनीयौ महाबलौ २
सखा ते दयितो नित्यं य एष रणकर्कशः
प्रोत्साहयति राजंस्त्वां विग्रहे पाण्डवैः सह ३
परुषः कत्थनो नीचः कर्णो वैकर्तनस्तव
मन्त्री नेता च बन्धुश्च मानी चात्यन्तमुच्छ्रितः ४
एष नैव रथः पूर्णो नाप्येवातिरथो नृप
वियुक्तः कवचेनैष सहजेन विचेतनः
कुण्डलाभ्यां च दिव्याभ्यां वियुक्तः सततं घृणी ५
अभिशापाच्च रामस्य ब्राह्मणस्य च भाषणात्
करणानां वियोगाच्च तेन मेऽधरथो मतः
नैष फल्गुनमासाद्य पुनर्जीवन्विमोक्ष्यते ६
सञ्जय उवाच
ततोऽब्रवीन्महाबाहुर्द्रोणः शस्त्रभृतां वरः
एवमेतद्यथात्थ त्वं न मिथ्यास्तीति किंचन ७
रणे रणेऽतिमानी च विमुखश्चैव दृश्यते
घृणी कर्णः प्रमादी च तेन मेऽधरथो मतः ८
एतच्छ्रुत्वा तु राधेयः क्रोधादुत्फुल्ललोचनः

उवाच भीष्मं राजेन्द्र तुदन्वाग्भिः प्रतोदवत् ९
पितामह यथेष्टं मां वाक्शरैरुपकृन्तसि
अनागसं सदा द्वेषादेवमेव पदे पदे
मर्षयामि च तत्सर्वं दुर्योधनकृतेन वै १०
त्वं तु मां मन्यसेऽशक्तं यथा कापुरुषं तथा
भवानर्धरथो मह्यं मतो नास्त्यत्र संशयः ११
सर्वस्य जगतश्चैव गाङ्गेय न मृषा वदे
कुरूणामहितो नित्यं न च राजावबुध्यते १२
को हि नाम समानेषु राजसूदात्तकर्मसु
तेजोवधमिमं कुर्याद्विभेदयिषुराहवे
यथा त्वं गुणनिर्देशादपराधं चिकीर्षसि १३
न हायनैर्न पलितैर्न वित्तैर्न च बन्धुभिः
महारथत्वं संख्यातुं शक्यं क्षत्रस्य कौरव १४
बलज्येष्ठं स्मृतं क्षत्रं मन्त्रज्येष्ठा द्विजातयः
धनज्येष्ठाः स्मृता वैश्याः शूद्रास्तु वयसाधिकाः १५
यथेच्छकं स्वयं ग्राहाद्रथानतिरथांस्तथा
कामद्वेषसमायुक्तो मोहात्प्रकुरुते भवान् १६
दुर्योधन महाबाहो साधु सम्यगवेक्ष्यताम्
त्यज्यतां दुष्टभावोऽय भीष्मः किल्बिषकृत्तव १७
भिन्ना हि सेना नृपते दुःसन्धेया भवत्युत
मौलापि पुरुषव्याघ्र किमु नाना समुत्थिता १८
एषां द्वैधं समुत्पन्नं योधानां युधि भारत
तेजोवधो नः क्रियते प्रत्यक्षेण विशेषतः १९
रथानां क्व च विज्ञानं क्व च भीष्मोऽल्पचेतनः
अहमावारयिष्यामि पाण्डवानामनीकिनीम् २०
आसाद्य माममोघेषुं गमिष्यन्ति दिशो दश
पाण्डवाः सहपञ्चालाः शार्दूलं वृषभा इव २१
क्व च युद्धविमर्दो वा मन्त्राः सुव्याहृतानि वा
क्व च भीष्मो गतवया मन्दात्मा कालमोहितः २२
स्पर्धते हि सदा नित्यं सर्वेण जगता सह

न चान्यं पुरुषं कञ्चिन्मन्यते मोघदर्शनः २३
श्रोतव्यं खलु वृद्धानामिति शास्त्रनिदर्शनम्
न त्वेवाप्यतिवृद्धानां पुनर्बाला हि ते मताः २४
अहमेको हनिष्यामि पाण्डवान्नात्र संशयः
सुयुद्धे राजशार्दूल यशो भीष्मं गमिष्यति २५
कृतः सेनापतिस्त्वेष त्वया भीष्मो नराधिप
सेनापतिं गुणो गन्ता न तु योधान्कथञ्चन २६
नाहं जीवति गाङ्गेये योत्स्ये राजन्कथञ्चन
हते तु भीष्मे योद्धास्मि सर्वैरेव महारथैः २७
इति श्रीमहाभारते उद्योगपर्वणि पञ्चषष्ट्यधिकशततमोऽध्यायः १६५

## षट्षष्ठ्यधिक शततमोऽध्यायः

भीष्म उवाच
समुद्यतोऽय भारो मे सुमहान्सागरोपमः
धार्तराष्ट्रस्य संग्रामे वर्षपूगाभिचिन्तितः १
तस्मिन्नभ्यागते काले प्रतप्ते लोमहर्षणे
मिथोभेदो न मे कार्यस्तेन जीवसि सूतज २
न ह्ययं नाद्य विक्रम्य स्थविरोऽपि शिशोस्तव
युद्धश्रद्धां रणे छिन्द्यां जीवितस्य च सूतज ३
जामदग्न्येन रामेण महास्त्राणि प्रमुञ्चता
न मे व्यथाभवत्काचित्त्वं तु मे किं करिष्यसि ४
कामं नैतत्प्रशंसन्ति सन्तोऽत्मबलसंस्तवम्
वक्ष्यामि तु त्वां सन्तप्तो निहीन कुलपांसन ५
समेतं पार्थिवं क्षत्रं काशिराज्ञः स्वयंवरे
निर्जित्यैकरथेनैव यत्कन्यास्तरसा हृताः ६
ईदृशानां सहस्राणि विशिष्टानामथो पुनः
मयैकेन निरस्तानि ससैन्यानि रणाजिरे ७
त्वां प्राप्य वैरपुरुषं कुरूणामनयो महान्
उपस्थितो विनाशाय यतस्व पुरुषो भव ८
युद्ध्यस्व पार्थं समरे येन विस्पर्धसे सह

द्रक्ष्यामि त्वां विनिर्मुक्तमस्माद्युद्धात्सुदुर्मते ९
संजय उवाच
तमुवाच ततो राजा धार्तराष्ट्रो महामनाः
मामवेक्षस्व गाङ्गेय कार्यं हि महदुद्यतम् १०
चिन्त्यतामिदमेवाग्रे मम निःश्रेयसं परम्
उभावपि भवन्तौ मे महत्कर्म करिष्यतः ११
भूयश्च श्रोतुमिच्छामि परेषां रथसत्तमान्
ये चैवातिरथास्तत्र ये चैव रथयूथपाः १२
बलाबलममित्राणां श्रोतुमिच्छामि कौरव
प्रभातायां रजन्यां वै इदं युद्धं भविष्यति १३
भीष्म उवाच
एते रथास्ते संख्यातास्तथैवातिरथा नृप
ये चाप्यर्धरथा राजन्पाण्डवानामतः शृणु १४
यदि कौतूहलं तेऽद्य पाण्डवानां बले नृप
रथसंख्यां महाबाहो सहैभिर्वसुधाधिपैः १५
स्वयं राजा रथोदारः पाण्डवः कुन्तिनन्दनः
अग्निवत्समरे तात चरिष्यति न संशयः १६
भीमसेनस्तु राजेन्द्र रथोऽष्टगुणसम्मितः
नागायुतबलो मानी तेजसा न स मानुषः १७
माद्रीपुत्रौ च रथिनौ द्वावेव पुरुषर्षभौ
अश्विनाविव रूपेण तेजसा च समन्वितौ १८
एते चमूमुखगताः स्मरन्तः क्लेशमात्मनः
रुद्रवत्प्रचरिष्यन्ति तत्र मे नास्ति संशयः १९
सर्व एव महात्मानः शालस्कंधा इवोद्गताः
प्रादेशेनाधिकाः पुम्भिरन्यैस्ते च प्रमाणतः २०
सिंहसंहननाः सर्वे पाण्डुपुत्रा महाबलाः
चरितब्रह्मचर्याश्च सर्वे चातितपस्विनः २१
ह्रीमन्तः पुरुषव्याघ्रा व्याघ्रा इव बलोत्कटाः
जवे प्रहारे सम्मर्दे सर्व एवातिमानुषाः
सर्वे जितमहीपाला दिग्जये भरतर्षभ २२

न चैषां पुरुषाः केचिदायुधानि गदाः शरान्
विषहन्ति सदा कर्तुमधिज्यान्यपि कौरव
उद्यन्तुं वा गदां गुर्वीं शरान्वापि प्रकर्षितुम् २३
जवे लक्ष्यस्य हरणे भोज्ये पांसुविकर्षणे
बालैरपि भवन्तस्तैः सर्व एव विशेषिताः २४
ते ते सैन्यं समासाद्य व्याघ्रा इव बलोत्कटाः
विध्वंसयिष्यन्ति रणे मा स्म तैः सह सङ्गमः २५
एकैकशस्ते संग्रामे हन्युः सर्वान्महीक्षितः
प्रत्यक्षं तव राजेन्द्र राजसूये यथाभवत् २६
द्रौपद्याश्च परिक्लेशं द्यूते च परुषा गिरः
ते संस्मरन्तः संग्रामे विचरिष्यन्ति कालवत् २७
लोहिताक्षो गुडाकेशो नारायणसहायवान्
उभयोः सेनयोर्वीर रथो नास्तीह तादृशः २८
न हि देवेषु वा पूर्वं दानवेषूरगेषु वा
राक्षसेष्वथ यक्षेषु नरेषु कुत एव तु २९
भूतोऽथ वा भविष्यो वा रथः कश्चिन्मया श्रुतः
समायुक्तो महाराज यथा पार्थस्य धीमतः ३०
वासुदेवश्च संयन्ता योद्धा चैव धनञ्जयः
गाण्डीवं च धनुर्दिव्यं ते चाश्वा वातरंहसः ३१
अभेद्यं कवचं दिव्यमक्षय्यौ च महेषुधी
अस्त्रग्रामश्च माहेन्द्रो रौद्रः कौबेर एव च ३२
याम्यश्च वारुणश्चैव गदाश्चोग्रप्रदर्शनाः
वज्रादीनि च मुख्यानि नानाप्रहरणानि वै ३३
दानवानां सहस्राणि हिरण्यपुरवासिनाम्
हतान्येकरथेनाजौ कस्तस्य सदृशो रथः ३४
एष हन्याद्धि संरम्भी बलवान्सत्यविक्रमः
तव सेनां महाबाहुः स्वां चैव परिपालयन् ३५
अहं चैनं प्रत्युदियामाचार्यो वा धनञ्जयम्
न तृतीयोऽस्ति राजेन्द्र सेनयोरुभयोरपि
य एनं शरवर्षाणि वर्षन्तमुदियाद्रथी ३६

जीमूत इव घर्मान्ते महावातसमीरितः
समायुक्तस्तु कौन्तेयो वासुदेवसहायवान्
तरुणश्च कृती चैव जीर्णावावामुभावपि ३७
संजय उवाच
एतच्छ्रुत्वा तु भीष्मस्य राज्ञां दध्वंसिरे तदा
काञ्चनाङ्गदिनः पीना भुजाश्चन्दनरूषिताः ३८
मनोभिः सह सावेगैः संस्मृत्य च पुरातनम्
सामर्थ्यं पाण्डवेयानां यथाप्रत्यक्षदर्शनात् ३९
इति श्रीमहाभारते उद्योगपर्वणि षट्षष्ट्यधिकशततमोऽध्यायः १६६

सप्त षष्ठ्यधिक शततमोऽध्यायः

भीष्म उवाच
द्रौपदेया महाराज सर्वे पञ्च महारथाः
वैराटिरुत्तरश्चैव रथो मम महान्मतः १
अभिमन्युर्महाराज रथयूथपयूथपः
समः पार्थेन समरे वासुदेवेन वा भवेत् २
लघ्वस्त्रश्चित्रयोधी च मनस्वी दृढविक्रमः
संस्मरन्वै परिक्लेशं स्वपितुर्विक्रमिष्यति ३
सात्यकिर्माधवः शूरो रथयूथपयूथपः
एष वृष्णिप्रवीराणाममर्षी जितसाध्वसः ४
उत्तमौजास्तथा राजन्रथो मम महान्मतः
युधामन्युश्च विक्रान्तो रथोदारो नरर्षभः ५
एतेषां बहुसाहस्रा रथा नागा हयास्तथा
योत्स्यन्ते ते तनुं त्यक्त्वा कुन्तीपुत्रप्रियेप्सया ६
पाण्डवैः सह राजेन्द्र तव सेनासु भारत
अग्निमारुतवद्राजन्नाह्वयन्तः परस्परम् ७
अजेयौ समरे वृद्धौ विराटद्रुपदावुभौ
महारथौ महावीर्यौ मतौ मे पुरुषर्षभौ ८
वयोवृद्धावपि तु तौ क्षत्रधर्मपरायणौ
यतिष्येते परं शक्त्या स्थितौ वीरगते पथि ९

सम्बन्धकेन राजेन्द्र तौ तु वीर्यबलान्वयात्
आर्यवृत्तौ महेष्वासौ स्नेहपाशसितावुभौ १०
कारणं प्राप्य तु नराः सर्व एव महाभुजाः
शूरा वा कातरा वापि भवन्ति नरपुङ्गव ११
एकायनगतावेतौ पार्थेन दृढभक्तिकौ
त्यक्त्वा प्राणान्परं शक्त्या घटितारौ नराधिप १२
पृथगक्षौहिणीभ्यां तावुभौ संयति दारुणौ
सम्बन्धिभावं रक्षन्तौ महत्कर्म करिष्यतः १३
लोकवीरौ महेष्वासौ त्यक्तात्मानौ च भारत
प्रत्ययं परिरक्षन्तौ महत्कर्म करिष्यतः १४
इति श्रीमहाभारते उद्योगपर्वणि सप्तषष्ट्यधिकशततमोऽध्यायः १६७

## अष्टषष्ठ्यधिक शततमोऽध्यायः

भीष्म उवाच
पाञ्चालराजस्य सुतो राजन्परपुरञ्जयः
शिखण्डी रथमुख्यो मे मतः पार्थस्य भारत १
एष योत्स्यति संग्रामे नाशयन्पूर्वसंस्थितिम्
परं यशो विप्रथयंस्तव सेनासु भारत २
एतस्य बहुलाः सेनाः पाञ्चालाश्च प्रभद्रकाः
तेनासौ रथवंशेन महत्कर्म करिष्यति ३
धृष्टद्युम्नश्च सेनानीः सर्वसेनासु भारत
मतो मेऽतिरथो राजन्द्रोणशिष्यो महारथः ४
एष योत्स्यति संग्रामे सूदयन्वै परान्रणे
भगवानिव संक्रुद्धः पिनाकी युगसंक्षये ५
एतस्य तद्रथानीकं कथयन्ति रणप्रियाः
बहुत्वात्सागरप्रख्यं देवानामिव संयुगे ६
क्षत्रधर्मा तु राजेन्द्र मतो मेऽधरथो नृप
धृष्टद्युम्नस्य तनयो बाल्यान्नातिकृतश्रमः ७
शिशुपालसुतो वीरश्चेदिराजो महारथः
धृष्टकेतुर्महेष्वासः सम्बन्धी पाण्डवस्य ह ८

एष चेदिपतिः शूरः सह पुत्रेण भारत
महारथेनासुकरं महत्कर्म करिष्यति ९
क्षत्रधर्मरतो मह्यं मतः परपुरञ्जयः
क्षत्रदेवस्तु राजेन्द्र पाण्डवेषु रथोत्तमः
जयन्तश्चामितौजाश्च सत्यजिच्च महारथः १०
महारथा महात्मानः सर्वे पाञ्चालसत्तमाः
योत्स्यन्ते समरे तात संरब्धा इव कुञ्जराः ११
अजो भोजश्च विक्रान्तौ पाण्डवेषु महारथौ
पाण्डवानां सहायार्थे परं शक्त्या यतिष्यतः
शीघ्रास्त्रौ चित्रयोद्धारौ कृतिनौ दृढविक्रमौ १२
केकयाः पञ्च राजेन्द्र भ्रातरो युद्धदुर्मदाः
सर्व एते रथोदाराः सर्वे लोहितकध्वजाः १३
काशिकः सुकुमारश्च नीलो यश्चापरो नृपः
सूर्यदत्तश्च शङ्खश्च मदिराश्वश्च नामतः १४
सर्व एते रथोदाराः सर्वे चाहवलक्षणाः
सर्वास्त्रविदुषः सर्वे महात्मानो मता मम १५
वार्धक्षेमिर्महाराज रथो मम महान्मतः
चित्रायुधश्च नृपतिर्मतो मे रथसत्तमः
स हि संग्रामशोभी च भक्तश्चापि किरीटिनः १६
चेकितानः सत्यधृतिः पाण्डवानां महारथौ
द्वाविमौ पुरुषव्याघ्रौ रथोदारौ मतौ मम १७
व्याघ्रदत्तश्च राजेन्द्र चन्द्रसेनश्च भारत
मतौ मम रथोदारौ पाण्डवानां न संशयः १८
सेनाबिन्दुश्च राजेन्द्र क्रोधहन्ता च नामतः
यः समो वासुदेवेन भीमसेनेन चाभिभूः
स योत्स्यतीह विक्रम्य समरे तव सैनिकैः १९
मां द्रोणं च कृपं चैव यथा सम्मन्यते भवान्
तथा स समरश्लाघी मन्तव्यो रथसत्तमः २०
काश्यः परमशीघ्रास्त्रः श्लाघनीयो रथोत्तमः
रथ एकगुणो मह्यं मतः परपुरञ्जयः २१

अयं च युधि विक्रान्तो मन्तव्योऽष्टगुणो रथः
सत्यजित्समरश्लाघी द्रुपदस्यात्मजो युवा २२
गतः सोऽतिरथत्वं हि धृष्टद्युम्नेन सम्मितः
पाण्डवानां यशस्कामः परं कर्म करिष्यति २३
अनुरक्तश्च शूरश्च रथोऽयमपरो महान्
पाण्ड्यराजो महावीर्यः पाण्डवानां धुरन्धरः २४
दृढधन्वा महेष्वासः पाण्डवानां रथोत्तमः
श्रेणिमान्कौरवश्रेष्ठ वसुदानश्च पार्थिवः
उभावेतावतिरथौ मतौ मम परंतप २५
इति श्रीमहाभारते उद्योगपर्वणि अष्टषष्ट्यधिकशततमोऽध्यायः १६८

## एकोन सप्तत्यधिक शततमोऽध्यायः

भीष्म उवाच
रोचमानो महाराज पाण्डवानां महारथः
योत्स्यतेऽमरवत्संख्ये परसैन्येषु भारत १
पुरुजित्कुन्तिभोजश्च महेष्वासो महाबलः
मातुलो भीमसेनस्य स च मेऽतिरथो मतः २
एष वीरो महेष्वासः कृती च निपुणश्च ह
चित्रयोधी च शक्तश्च मतो मे रथपुङ्गवः ३
स योत्स्यति हि विक्रम्य मघवानिव दानवैः
योधाश्चास्य परिख्याताः सर्वे युद्धविशारदाः ४
भागिनेयकृते वीरः स करिष्यति सङ्गरे
सुमहत्कर्म पाण्डूनां स्थितः प्रियहिते नृपः ५
भैमसेनिर्महाराज हैडिम्बो राक्षसेश्वरः
मतो मे बहुमायावी रथयूथपयूथपः ६
योत्स्यते समरे तात मायाभिः समरप्रियः
ये चास्य राक्षसाः शूराः सचिवा वशवर्तिनः ७
एते चान्ये च बहवो नानाजनपदेश्वराः
समेताः पाण्डवस्यार्थे वासुदेवपुरोगमाः ८
एते प्राधान्यतो राजन्पाण्डवस्य महात्मनः

रथाश्चातिरथाश्चैव ये चाप्यर्धरथा मताः ९
नेष्यन्ति समरे सेनां भीमां यौधिष्ठिरीं नृप
महेन्द्रेणेव वीरेण पाल्यमानां किरीटिना १०
तैरहं समरे वीर त्वामायद्भिर्जयैषिभिः
योत्स्यामि जयमाकांक्षन्नथ वा निधनं रणे ११
पार्थं च वासुदेवं च चक्रगाण्डीवधारिणौ
सन्ध्यागताविवार्केन्दू समेष्ये पुरुषोत्तमौ १२
ये चैव ते रथोदाराः पाण्डुपुत्रस्य सैनिकाः
सहसैन्यानहं तांश्च प्रतीयां रणमूर्धनि १३
एते रथाश्चातिरथाश्च तुभ्यं यथाप्रधानं नृप कीर्तिता मया
तथा राजन्नर्धरथाश्च केचित्तथैव तेषामपि कौरवेन्द्र १४
अर्जुनं वासुदेवं च ये चान्ये तत्र पार्थिवाः
सर्वानावारयिष्यामि यावद्द्रक्ष्यामि भारत १५
पाञ्चाल्यं तु महाबाहो नाहं हन्यां शिखण्डिनम्
उद्यतेषुमभिप्रेक्ष्य प्रतियुध्यन्तमाहवे १६
लोकस्तद्वेद यदहं पितुः प्रियचिकीर्षया
प्राप्तं राज्यं परित्यज्य ब्रह्मचर्ये धृतव्रतः १७
चित्राङ्गदं कौरवाणामहं राज्येऽभ्यषेचयम्
विचित्रवीर्यं च शिशुं यौवराज्येऽभ्यषेचयम् १८
देवव्रतत्वं विख्याप्य पृथिव्यां सर्वराजसु
नैव हन्यां स्त्रियं जातु न स्त्रीपूर्वं कथंचन १९
स हि स्त्रीपूर्वको राजञ्शिखण्डी यदि ते श्रुतः
कन्या भूत्वा पुमाञ्जातो न योत्स्ये तेन भारत २०
सर्वांस्त्वन्यान्हनिष्यामि पार्थिवान्भरतर्षभ
यान्समेष्यामि समरे न तु कुन्तीसुतान्नृप २१
इति श्रीमहाभारते उद्योगपर्वणि एकोनसप्तत्यधिकशततमोऽध्यायः १६९
समाप्तं रथातिरथसंख्यापर्व

## सप्तत्यधिक शततमोऽध्यायः

दुर्योधन उवाच
किमर्थं भरतश्रेष्ठ न हन्यास्त्वं शिखण्डिनम्
उद्यतेषुमथो दृष्ट्वा समरेष्वाततायिनम् १
पूर्वमुक्त्वा महाबाहो पाण्डवान्सह सोमकैः
वधिष्यामीति गाङ्गेय तन्मे ब्रूहि पितामह २
भीष्म उवाच
शृणु दुर्योधन कथां सहैभिर्वसुधाधिपैः
यदर्थं युधि सम्प्रेक्ष्य नाहं हन्यां शिखण्डिनम् ३
महाराजो मम पिता शन्तनुर्भरतर्षभः
दिष्टान्तं प्राप धर्मात्मा समये पुरुषर्षभ ४
ततोऽह भरतश्रेष्ठ प्रतिज्ञां परिपालयन्
चित्राङ्गदं भ्रातरं वै महाराज्येऽभ्यषेचयम् ५
तस्मिंश्च निधनं प्राप्ते सत्यवत्या मते स्थितः
विचित्रवीर्यं राजानमभ्यषिञ्चं यथाविधि ६
मयाभिषिक्तो राजेन्द्र यवीयानपि धर्मतः
विचित्रवीर्यो धर्मात्मा मामेव समुदैक्षत ७
तस्य दारक्रियां तात चिकीर्षुरहमप्युत
अनुरूपादिव कुलादिति चिन्त्य मनो दधे ८
तथाश्रौषं महाबाहो तिस्रः कन्याः स्वयंवरे
रूपेणाप्रतिमाः सर्वाः काशिराजसुतास्तदा
अम्बा चैवाम्बिका चैव तथैवाम्बालिकापरा ९
राजानश्च समाहूताः पृथिव्यां भरतर्षभ
अम्बा ज्येष्ठाभवत्तासामम्बिका त्वथ मध्यमा
अम्बालिका च राजेन्द्र राजकन्या यवीयसी १०
सोऽहमेकरथेनैव गतः काशिपतेः पुरीम्
अपश्यं ता महाबाहो तिस्रः कन्याः स्वलंकृताः
राज्ञश्चैव समावृत्तान्पार्थिवान्पृथिवीपते ११
ततोऽह तान्नृपान्सर्वानाहूय समरे स्थितान्
रथमारोपयाञ्चक्रे कन्यास्ता भरतर्षभ १२

वीर्यशुल्काश्च ता ज्ञात्वा समारोप्य रथं तदा
अवोचं पार्थिवान्सर्वानहं तत्र समागतान्
भीष्मः शान्तनवः कन्या हरतीति पुनः पुनः १३
ते यतध्वं परं शक्त्या सर्वे मोक्षाय पार्थिवाः
प्रसह्य हि नयाम्येष मिषतां वो नराधिपाः १४
ततस्ते पृथिवीपालाः समुत्पेतुरुदायुधाः
योगो योग इति क्रुद्धाः सारथींश्चाप्यचोदयन् १५
ते रथैर्मेघसङ्काशैर्गजैश्च गजयोधिनः
पृष्ठ्यैश्चाश्वैर्महीपालाः समुत्पेतुरुदायुधाः १६
ततस्ते मां महीपालाः सर्व एव विशां पते
रथव्रातेन महता सर्वतः पर्यवारयन् १७
तानहं शरवर्षेण महता पर्यवारयम्
सर्वान्नृपांश्चाप्यजयं देवराडिव दानवान् १८
तेषामापततां चित्रान्ध्वजान्हेमपरिष्कृतान्
एकैकेन हि बाणेन भूमौ पातितवानहम् १९
हयांश्चैषां गजांश्चैव सारथींश्चाप्यहं रणे
अपातयं शरैर्दीप्तैः प्रहसन्पुरुषर्षभ २०
ते निवृत्ताश्च भग्नाश्च दृष्ट्वा तल्लाघवं मम
अथाहं हास्तिनपुरमायां जित्वा महीक्षितः २१
ततोऽह ताश्च कन्या वै भ्रातुरर्थाय भारत
तच्च कर्म महाबाहो सत्यवत्यै न्यवेदयम् २२
इति श्रीमहाभारते उद्योगपर्वणि सप्तत्यधिकशततमोऽध्यायः १७०

## एक सप्तत्यधिक शततमोऽध्यायः

भीष्म उवाच
ततोऽह भरतश्रेष्ठ मातरं वीरमातरम्
अभिगम्योपसंगृह्य दाशेयीमिदमब्रुवम् १
इमाः काशिपतेः कन्या मया निर्जित्य पार्थिवान्
विचित्रवीर्यस्य कृते वीर्यशुल्का उपार्जिताः २
ततो मूर्धन्युपाघ्राय पर्यश्रुनयना नृप

आह सत्यवती हृष्टा दिष्ट्या पुत्र जितं त्वया ३
सत्यवत्यास्त्वनुमते विवाहे समुपस्थिते
उवाच वाक्यं सव्रीडा ज्येष्ठा काशिपतेः सुता ४
भीष्म त्वमसि धर्मज्ञः सर्वशास्त्रविशारदः
श्रुत्वा च धर्म्यं वचनं मह्यं कर्तुमिहार्हसि ५
मया शाल्वपतिः पूर्वं मनसाभिवृतो वरः
तेन चास्मि वृता पूर्वं रहस्यविदिते पितुः ६
कथं मामन्यकामां त्वं राजञ्शास्त्रमधीत्य वै
वासयेथा गृहे भीष्म कौरवः सन्विशेषतः ७
एतद्बुद्ध्या विनिश्चित्य मनसा भरतर्षभ
यत्क्षमं ते महाबाहो तदिहारब्धुमर्हसि ८
स मां प्रतीक्षते व्यक्तं शाल्वराजो विशां पते
कृपां कुरु महाबाहो मयि धर्मभृतां वर
त्वं हि सत्यव्रतो वीर पृथिव्यामिति नः श्रुतम् ९
इति श्रीमहाभारते उद्योगपर्वणि एकसप्तत्यधिकशततमोऽध्यायः १७१

## द्विसप्तत्यधिक शततमोऽध्यायः

भीष्म उवाच
ततोऽहं समनुज्ञाप्य कालद्यं सत्यवतीं तदा
मन्त्रिणश्च द्विजांश्चैव तथैव च पुरोहितान्
समनुज्ञासिषं कन्यां ज्येष्ठामम्बां नराधिप १
अनुज्ञाता ययौ सा तु कन्या शाल्वपतेः पुरम्
वृद्धैर्द्विजातिभिर्गुप्ता धात्र्या चानुगता तदा
अतीत्य च तमध्वानमाससाद नराधिपम् २
सा तमासाद्य राजानं शाल्वं वचनमब्रवीत्
आगताहं महाबाहो त्वामुद्दिश्य महाद्युते ३
तामब्रवीच्छाल्वपतिः स्मयन्निव विशां पते
त्वयान्यपूर्वया नाहं भार्यार्थी वरवर्णिनि ४
गच्छ भद्रे पुनस्तत्र सकाशं भारतस्य वै
नाहमिच्छामि भीष्मेण गृहीतां त्वां प्रसह्य वै ५

त्वं हि निर्जित्य भीष्मेण नीता प्रीतिमती तदा
परामृश्य महायुद्धे निर्जित्य पृथिवीपतीन्
नाहं त्वय्यन्यपूर्वायां भार्यार्थी वरवर्णिनि ६
कथमस्मद्विधो राजा परपूर्वां प्रवेशयेत्
नारीं विदितविज्ञानः परेषां धर्ममादिशन्
यथेष्टं गम्यतां भद्रे मा त्वां कालोऽत्यगादयम् ७
अम्बा तमब्रवीद्राजन्ननङ्गशरपीडिता
मैवं वद महीपाल नैतदेवं कथञ्चन ८
नास्मि प्रीतिमती नीता भीष्मेणामित्रकर्शन
बलान्नीतास्मि रुदती विद्राव्य पृथिवीपतीन् ९
भजस्व मां शाल्वपते भक्तां बालामनागसम्
भक्तानां हि परित्यागो न धर्मेषु प्रशस्यते १०
साहमामन्त्र्य गाङ्गेयं समरेष्वनिवर्तिनम्
अनुज्ञाता च तेनैव तवैव गृहमागता ११
न स भीष्मो महाबाहुर्मामिच्छति विशां पते
भ्रातृहेतोः समारम्भो भीष्मस्येति श्रुतं मया १२
भगिन्यौ मम ये नीते अम्बिकाम्बालिके नृप
प्रादाद्विचित्रवीर्याय गाङ्गेयो हि यवीयसे १३
यथा शाल्वपते नान्यं वरं ध्यामि कथञ्चन
त्वामृते पुरुषव्याघ्र तथा मूर्धानमालभे १४
न चान्यपूर्वा राजेन्द्र त्वामहं समुपस्थिता
सत्यं ब्रवीमि शाल्वैतत्सत्येनात्मानमालभे १५
भजस्व मां विशालाक्ष स्वयं कन्यामुपस्थिताम्
अनन्यपूर्वां राजेन्द्र त्वत्प्रसादाभिकांक्षिणीम् १६
तामेवं भाषमाणां तु शाल्वः काशिपतेः सुताम्
अत्यजद्भरतश्रेष्ठ त्वचं जीर्णामिवोरगः १७
एवं बहुविधैर्वाक्यैर्याच्यमानस्तयानघ
नाश्रद्दधच्छाल्वपतिः कन्याया भरतर्षभ १८
ततः सा मन्युनाविष्टा ज्येष्ठा काशिपतेः सुता
अब्रवीत्साश्रुनयना बाष्पविह्वलया गिरा १९

त्वया त्यक्ता गमिष्यामि यत्र यत्र विशां पते
तत्र मे सन्तु गतयः सन्तः सत्यं यथाब्रुवम् २०
एवं संभाषमाणां तु नृशंसः शाल्वराट् तदा
पर्यत्यजत कौरव्य करुणं परिदेवतीम् २१
गच्छ गच्छेति तां शाल्वः पुनः पुनरभाषत
बिभेमि भीष्मात्सुश्रोणि त्वं च भीष्मपरिग्रहः २२
एवमुक्ता तु सा तेन शाल्वेनादीर्घदर्शिना
निश्चक्राम पुराद्दीना रुदती कुररी यथा २३
इति श्रीमहाभारते उद्योगपर्वणि द्विसप्तत्यधिकशततमोऽध्यायः १७२

## त्रिसप्तत्यधिक शततमोऽध्यायः

भीष्म उवाच
सा निष्क्रमन्ती नगराच्चिन्तयामास भारत
पृथिव्यां नास्ति युवतिर्विषमस्थतरा मया
बांधवैर्विप्रहीनास्मि शाल्वेन च निराकृता १
न च शक्यं पुनर्गन्तुं मया वारणसाह्वयम्
अनुज्ञातास्मि भीष्मेण शाल्वमुद्दिश्य कारणम् २
किं नु गर्हाम्यथात्मानमथ भीष्मं दुरासदम्
आहोस्वित्पितरं मूढं यो मेऽकार्षीत्स्वयंवरम् ३
ममायं स्वकृतो दोषो याहं भीष्मरथात्तदा
प्रवृत्ते वैशसे युद्धे शाल्वार्थं नापतं पुरा
तस्येयं फलनिर्वृत्तिर्यदापन्नास्मि मूढवत् ४
धिग्भीष्मं धिक्च मे मन्दं पितरं मूढचेतसम्
येनाहं वीर्यशुल्केन पण्यस्त्रीवत्प्रवेरिता ५
धिङ्मां धिक्शाल्वराजानं धिग्धातारमथापि च
येषां दुर्नीतभावेन प्राप्तास्म्यापदमुत्तमाम् ६
सर्वथा भागधेयानि स्वानि प्राप्नोति मानवः
अनयस्यास्य तु मुखं भीष्मः शान्तनवो मम ७
सा भीष्मे प्रतिकर्तव्यमहं पश्यामि साम्प्रतम्
तपसा वा युधा वापि दुःखहेतुः स मे मतः

को नु भीष्मं युधा जेतुमुत्सहेत महीपतिः ८
एवं सा परिनिश्चित्य जगाम नगराद्बहिः
आश्रमं पुण्यशीलानां तापसानां महात्मनाम्
ततस्तामवसद्रात्रिं तापसैः परिवारिता ९
आचख्यौ च यथा वृत्तं सर्वमात्मनि भारत
विस्तरेण महाबाहो निखिलेन शुचिस्मिता
हरणं च विसर्गं च शाल्वेन च विसर्जनम् १०
ततस्तत्र महानासीद्ब्राह्मणः संशितव्रतः
शैखावत्यस्तपोवृद्धः शास्त्रे चारण्यके गुरुः ११
आर्तां तामाह स मुनिः शैखावत्यो महातपाः
निःश्वसन्तीं सतीं बालां दुःखशोकपरायणाम् १२
एवं गते किं नु भद्रे शक्यं कर्तुं तपस्विभिः
आश्रमस्थैर्महाभागैस्तपोनित्यैर्महात्मभिः १३
सा त्वेनमब्रवीद्राजन्क्रियतां मदनुग्रहः
प्रव्राजितुमिहेच्छामि तपस्तप्स्यामि दुश्चरम् १४
मयैवैतानि कर्माणि पूर्वदेहेषु मूढया
कृतानि नूनं पापानि तेषामेतत्फलं ध्रुवम् १५
नोत्सहेयं पुनर्गन्तुं स्वजनं प्रति तापसाः
प्रत्याख्याता निरानन्दा शाल्वेन च निराकृता १६
उपदिष्टमिहेच्छामि तापस्यं वीतकल्मषाः
युष्माभिर्देवसंकाशाः कृपा भवतु वो मयि १७
स तामाश्वासयत्कन्यां दृष्टान्तागमहेतुभिः
सान्त्वयामास कार्यं च प्रतिजज्ञे द्विजैः सह १८
इति श्रीमहाभारते उद्योगपर्वणि त्रिसप्तत्यधिकशततमोऽध्यायः १७३

## चतुःसप्तत्यधिक शततमोऽध्यायः

भीष्म उवाच
ततस्ते तापसाः सर्वे कार्यवन्तोऽभवंस्तदा
तां कन्यां चिन्तयन्तो वै किं कार्यमिति धर्मिणः १
केचिदाहुः पितुर्वेश्म नीयतामिति तापसाः

देचिदस्मदुपालम्भे मतिं चक्रुर्द्विजोत्तमाः २
केचिच्छाल्वपतिं गत्वा नियोज्यमिति मेनिरे
नेति केचिद्व्यवस्यन्ति प्रत्याख्याता हि तेन सा ३
एवं गते किं नु शक्यं भद्रे कर्तुं मनीषिभिः
पुनरूचुश्च ते सर्वे तापसाः संशितव्रताः ४
अलं प्रव्रजितेनेह भद्रे शृणु हितं वचः
इतो गच्छस्व भद्रं ते पितुरेव निवेशनम् ५
प्रतिपत्स्यति राजा स पिता ते यदनन्तरम्
तत्र वत्स्यसि कल्याणि सुखं सर्वगुणान्विता
न च तेऽन्या गतिर्न्याय्या भवेद्भद्रे यथा पिता ६
पतिर्वापि गतिर्नार्याः पिता वा वरवर्णिनि
गतिः पतिः समस्थाया विषमे तु पिता गतिः ७
प्रव्रज्या हि सुदुःखेयं सुकुमार्या विशेषतः
राजपुत्र्याः प्रकृत्या च कुमार्यास्तव भामिनि ८
भद्रे दोषा हि विद्यन्ते बहवो वरवर्णिनि
आश्रमे वै वसन्त्यास्ते न भवेयुः पितुर्गृहे ९
ततस्तु तेऽब्रुवन्वाक्यं ब्राह्मणास्तां तपस्विनीम्
त्वामिहैकाकिनीं दृष्ट्वा निर्जने गहने वने
प्रार्थयिष्यन्ति राजेन्द्रास्तस्मान्मैवं मनः कृथाः १०
अम्बोवाच
न शक्यं काशिनगरीं पुनर्गन्तुं पितुर्गृहान्
अवज्ञाता भविष्यामि बान्धवानां न संशयः ११
उषिता ह्यन्यथा बाल्ये पितुर्वेश्मनि तापसाः
नाहं गमिष्ये भद्रं वस्तत्र यत्र पिता मम
तपस्तप्तुमभीप्सामि तापसैः परिपालिता १२
यथा परेऽपि मे लोके न स्यादेवं महात्ययः
दौर्भाग्यं ब्राह्मणश्रेष्ठास्तस्मात्तप्स्याम्यहं तपः १३
भीष्म उवाच
इत्येवं तेषु विप्रेषु चिन्तयत्सु तथा तथा
राजर्षिस्तद्वनं प्राप्तस्तपस्वी होत्रवाहनः १४

ततस्ते तापसाः सर्वे पूजयन्ति स्म तं नृपम्
पूजाभिः स्वागताद्याभिरासनेनोदकेन च १५
तस्योपविष्टस्य सतो विश्रान्तस्योपशृणवतः
पुनरेव कथां चक्रुः कन्यां प्रति वनौकसः १६
अम्बायास्तां कथां श्रुत्वा काशिराज्ञश्च भारत
स वेपमान उत्थाय मातुरस्याः पिता तदा
तां कन्यामङ्कमारोप्य पर्याश्वासयत प्रभो १७
स तामपृच्छत्कात्स्न्र्येन व्यसनोत्पत्तिमादितः
सा च तस्मै यथावृत्तं विस्तरेण न्यवेदयत् १८
ततः स राजर्षिरभूद्दुःखशोकसमन्वितः
कार्यं च प्रतिपेदे तन्मनसा सुमहातपाः १९
अब्रवीद्वेपमानश्च कन्यामार्तां सुदुःखितः
मा गाः पितृगृहं भद्रे मातुस्ते जनको ह्यहम् २०
दुःखं छेत्स्यामि तेऽह वै मयि वर्तस्व पुत्रिके
पर्याप्तं ते मनः पुत्रि यदेवं परिशुष्यसि २१
गच्छ मद्वचनाद्रामं जामदग्न्यं तपस्विनम्
रामस्तव महद्दुःखं शोकं चापनयिष्यति
हनिष्यति रणे भीष्मं न करिष्यति चेद्वचः २२
तं गच्छ भार्गवश्रेष्ठं कालाग्निसमतेजसम्
प्रतिष्ठापयिता स त्वां समे पथि महातपाः २३
ततस्तु सुस्वरं बाष्पमुत्सृजन्ती पुनः पुनः
अब्रवीत्पितरं मातुः सा तदा होत्रवाहनम् २४
अभिवादयित्वा शिरसा गमिष्ये तव शासनात्
अपि नामाद्य पश्येयमार्यं तं लोकविश्रुतम् २५
कथं च तीव्रं दुःखं मे हनिष्यति स भार्गवः
एतदिच्छाम्यहं श्रोतुमथ यास्यामि तत्र वै २६
इति श्रीमहाभारते उद्योगपर्वणि चतुःसप्तत्यधिकशततमोऽध्यायः १७४

पञ्चसप्तत्यधिक शततमोऽध्यायः

होत्रवाहन उवाच

रामं द्रक्ष्यसि वत्से त्वं जामदग्न्यं महावने
उग्रे तपसि वर्तन्तं सत्यसन्धं महाबलम् १
महेन्द्रे वै गिरिश्रेष्ठे रामं नित्यमुपासते
ऋषयो वेदविदुषो गन्धर्वाप्सरसस्तथा २
तत्र गच्छस्व भद्रं ते ब्रूयाश्चैनं वचो मम
अभिवाद्य पूर्वं शिरसा तपोवृद्धं दृढव्रतम् ३
ब्रूयाश्चैनं पुनर्भद्रे यत्ते कार्यं मनीषितम्
मयि सङ्कीर्तिते रामः सर्वं तत्ते करिष्यति ४
मम रामः सखा वत्से प्रीतियुक्तः सुहृच्च मे
जमदग्निसुतो वीरः सर्वशस्त्रभृतां वरः ५
एवं ब्रुवति कन्यां तु पार्थिवे होत्रवाहने
अकृतव्रणः प्रादुरासीद्रामस्यानुचरः प्रियः ६
ततस्ते मुनयः सर्वे समुत्तस्थुः सहस्रशः
स च राजा वयोवृद्धः सृञ्जयो होत्रवाहनः ७
ततः पृष्ट्वा यथान्यायमन्योन्यं ते वनौकसः
सहिता भरतश्रेष्ठ निषेदुः परिवार्य तम् ८
ततस्ते कथयामासुः कथास्तास्ता मनोरमाः
कान्ता दिव्याश्च राजेन्द्र प्रीतिहर्षमुदा युताः ९
ततः कथान्ते राजर्षिर्महात्मा होत्रवाहनः
रामं श्रेष्ठं महर्षीणामपृच्छदकृतव्रणम् १०
क्व सम्प्रति महाबाहो जामदग्न्यः प्रतापवान्
अकृतव्रण शक्यो वै द्रष्टुं वेदविदां वर ११
अकृतव्रण उवाच
भवन्तमेव सततं रामः कीर्तयति प्रभो
सृञ्जयो मे प्रियसखो राजर्षिरिति पार्थिव १२
इह रामः प्रभाते श्वो भवितेति मतिर्मम
द्रष्टास्येनमिहायान्तं तव दर्शनकाङ्क्षया १३
इयं च कन्या राजर्षे किमर्थं वनमागता
कस्य चेयं तव च का भवतीच्छामि वेदितुम् १४
होत्रवाहन उवाच

द्रौहित्रीयं मम विभो काशिराजसुता शुभा
ज्येष्ठा स्वयंवरे तस्थौ भगिनीभ्यां सहानघ १५
इयमम्बेति विख्याता ज्येष्ठा काशिपतेः सुता
अम्बिकाम्बालिके त्वन्ये यवीयस्यौ तपोधन १६
समेतं पार्थिवं क्षत्रं काशिपुर्यां ततोऽभवत्
कन्यानिमित्तं ब्रह्मर्षे तत्रासीदुत्सवो महान् १७
ततः किल महावीर्यो भीष्मः शान्तनवो नृपान्
अवाक्षिप्य महातेजास्तिस्रः कन्या जहार ताः १८
निर्जित्य पृथिवीपालानथ भीष्मो गजाह्वयम्
आजगाम विशुद्धात्मा कन्याभिः सह भारत १९
सत्यवत्यै निवेद्याथ विवाहार्थमनन्तरम्
भ्रातुर्विचित्रवीर्यस्य समाज्ञापयत प्रभुः २०
ततो वैवाहिकं दृष्ट्वा कन्येयं समुपार्जितम्
अब्रवीत्तत्र गाङ्गेयं मन्त्रिमध्ये द्विजर्षभ २१
मया शाल्वपतिर्वीर मनसाभिवृतः पतिः
न मामर्हसि धर्मज्ञ परचित्तां प्रदापितुम् २२
तच्छ्रुत्वा वचनं भीष्मः सम्मन्त्र्य सह मन्त्रिभिः
निश्चित्य विससर्जेमां सत्यवत्या मते स्थितः २३
अनुज्ञाता तु भीष्मेण शाल्वं सौभपतिं ततः
कन्येयं मुदिता तत्र काले वचनमब्रवीत् २४
विसर्जितास्मि भीष्मेण धर्मं मां प्रतिपादय
मनसाभिवृतः पूर्वं मया त्वं पार्थिवर्षभ २५
प्रत्याचख्यौ च शाल्वोऽपि चारित्रस्याभिशङ्कितः
सेयं तपोवनं प्राप्ता तापस्येऽभिरता भृशम् २६
मया च प्रत्यभिज्ञाता वंशस्य परिकीर्तनात्
अस्य दुःखस्य चोत्पत्तिं भीष्ममेवेह मन्यते २७
अम्बोवाच
भगवन्नेवमेवैतद्यथाह पृथिवीपतिः
शरीरकर्ता मातुर्मे सृञ्जयो होत्रवाहनः २८
न ह्युत्सहे स्वनगरं प्रतियातुं तपोधन

अवमानभयाच्चैव व्रीडया च महामुने २९
यत्तु मां भगवान्रामो वक्ष्यति द्विजसत्तम
तन्मे कार्यतमं कार्यमिति मे भगवन्मतिः ३०
इति श्रीमहाभारते उद्योगपर्वणि पञ्चसप्तत्यधिकशततमोऽध्यायः १७५

षट्सप्तत्यधिक शततमोऽध्यायः

अकृतव्रण उवाच
दुःखद्वयमिदं भद्रे कतरस्य चिकीर्षसि
प्रतिकर्तव्यमबले तत्त्वं वत्से ब्रवीहि मे १
यदि सौभपतिर्भद्रे नियोक्तव्यो मते तव
नियोक्ष्यति महात्मा तं रामस्त्वद्धितकाम्यया २
अथापगेयं भीष्मं त्वं रामेणेच्छसि धीमता
रणे विनिर्जितं द्रष्टुं कुर्यात्तदपि भार्गवः ३
सृञ्जयस्य वचः श्रुत्वा तव चैव शुचिस्मिते
यदत्रानन्तरं कार्यं तदद्यैव विचिन्त्यताम् ४
अम्बोवाच
अपनीतास्मि भीष्मेण भगवन्नविजानता
न हि जानाति मे भीष्मो ब्रह्मञ्शाल्वगतं मनः ५
एतद्विचार्य मनसा भवानेव विनिश्चयम्
विचिनोतु यथान्यायं विधानं क्रियतां तथा ६
भीष्मे वा कुरुशार्दूले शाल्वराजेऽथ वा पुनः
उभयोरेव वा ब्रह्मन्यद्युक्तं तत्समाचर ७
निवेदितं मया ह्येतद्दुःखमूलं यथातथम्
विधानं तत्र भगवन्कर्तुमर्हसि युक्तितः ८
अकृतव्रण उवाच
उपपन्नमिदं भद्रे यदेवं वरवर्णिनि
धर्मं प्रति वचो ब्रूयाः शृणु चेदं वचो मम ९
यदि त्वामापगेयो वै न नयेद्गजसाह्वयम्
शाल्वस्त्वां शिरसा भीरु गृह्णीयाद्रामचोदितः १०
तेन त्वं निर्जिता भद्रे यस्मान्नीतासि भामिनि

संशयः शाल्वराजस्य तेन त्वयि सुमध्यमे ११
भीष्मः पुरुषमानी च जितकाशी तथैव च
तस्मात्प्रतिक्रिया युक्ता भीष्मे कारयितुं त्वया १२
अम्बोवाच
ममाप्येष महान्ब्रह्मन्हृदि कामोऽभिवर्तते
घातयेयं यदि रणे भीष्ममित्येव नित्यदा १३
भीष्मं वा शाल्वराजं वा यं वा दोषेण गच्छसि
प्रशाधि तं महाबाहो यत्कृतेऽहं सुदुःखिता १४
भीष्म उवाच
एवं कथयतामेव तेषां स दिवसो गतः
रात्रिश्च भरतश्रेष्ठ सुखशीतोष्णमारुता १५
ततो रामः प्रादुरासीत्प्रज्वलन्निव तेजसा
शिष्यैः परिवृतो राजञ्जटाचीरधरो मुनिः १६
धनुष्पाणिरदीनात्मा खड्गं बिभ्रत्परश्वधी
विरजा राजशार्दूल सोऽभ्ययात्सृञ्जयं नृपम् १७
ततस्तं तापसा दृष्ट्वा स च राजा महातपाः
तस्थुः प्राञ्जलयः सर्वे सा च कन्या तपस्विनी १८
पूजयामासुरव्यग्रा मधुपर्केण भार्गवम्
अर्चितश्च यथान्यायं निषसाद सहैव तैः १९
ततः पूर्वव्यतीतानि कथयेते स्म तावुभौ
सृञ्जयश्च स राजर्षिर्जामदग्न्यश्च भारत २०
ततः कथान्ते राजर्षिर्भृगुश्रेष्ठं महाबलम्
उवाच मधुरं काले रामं वचनमर्थवत् २१
रामेयं मम दौहित्री काशिराजसुता प्रभो
अस्याः शृणु यथातत्त्वं कार्यं कार्यविशारद २२
परमं कथ्यतां चेति तां रामः प्रत्यभाषत
ततः साभ्यगमद्रामं ज्वलन्तमिव पावकम् २३
सा चाभिवाद्य चरणौ रामस्य शिरसा शुभा
स्पृष्ट्वा पद्मदलाभाभ्यां पाणिभ्यामग्रतः स्थिता २४
रुरोद सा शोकवती बाष्पव्याकुललोचना

प्रपेदे शरणं चैव शरण्यं भृगुनन्दनम् २५
राम उवाच
यथासि सृञ्जयस्यास्य तथा मम नृपात्मजे
ब्रूहि यत्ते मनोदुःखं करिष्ये वचनं तव २६
अम्बोवाच
भगवञ्शरणं त्वाद्य प्रपन्नास्मि महाव्रत
शोकपङ्कार्णवाद्घोरादुद्धरस्व च मां विभो २७
भीष्म उवाच
तस्याश्च दृष्ट्वा रूपं च वयश्चाभिनवं पुनः
सौकुमार्यं परं चैव रामश्चिन्तापरोऽभवत् २८
किमियं वक्ष्यतीत्येवं विमृशन्भृगुसत्तमः
इति दध्यौ चिरं रामः कृपयाभिपरिप्लुतः २९
कथ्यतामिति सा भूयो रामेणोक्ता शुचिस्मिता
सर्वमेव यथातत्त्वं कथयामास भार्गवे ३०
तच्छ्रुत्वा जामदग्न्यस्तु राजपुत्र्या वचस्तदा
उवाच तां वरारोहां निश्चित्यार्थविनिश्चयम् ३१
प्रेषयिष्यामि भीष्माय कुरुश्रेष्ठाय भामिनि
करिष्यति वचो धर्म्यं श्रुत्वा मे स नराधिपः ३२
न चेत्करिष्यति वचो मयोक्तं जाह्नवीसुतः
धक्ष्याम्येनं रणे भद्रे सामात्यं शस्त्रतेजसा ३३
अथ वा ते मतिस्तत्र राजपुत्रि निवर्तते
तावच्छाल्वपतिं वीरं योजयाम्यत्र कर्मणि ३४
अम्बोवाच
विसर्जितास्मि भीष्मेण श्रुत्वैव भृगुनन्दन
शाल्वराजगतं चेतो मम पूर्वं मनीषितम् ३५
सौभराजमुपेत्याहमब्रुवं दुर्वचं वचः
न च मां प्रत्यगृह्णात्स चारित्र्यपरिशङ्कितः ३६
एतत्सर्वं विनिश्चित्य स्वबुद्ध्या भृगुनन्दन
यदत्रौपयिकं कार्यं तच्चिन्तयितुमर्हसि ३७
ममात्र व्यसनस्यास्य भीष्मो मूलं महाव्रतः

येनाहं वशमानीता समुत्क्षिप्य बलात्तदा ३८
भीष्मं जहि महाबाहो यत्कृते दुःखमीदृशम्
प्राप्ताहं भृगुशार्दूल चराम्यप्रियमुत्तमम् ३९
स हि लुब्धश्च मानी च जितकाशी च भार्गव
तस्मात्प्रतिक्रिया कर्तुं युक्ता तस्मै त्वयानघ ४०
एष मे ह्रियमाणाया भारतेन तदा विभो
अभवद्धृदि सङ्कल्पो घातयेयं महाव्रतम् ४१
तस्मात्कामं ममाद्येमं राम संवर्तयानघ
जहि भीष्मं महाबाहो यथा वृत्रं पुरन्दरः ४२
इति श्रीमहाभारते उद्योगपर्वणि षट्सप्तत्यधिकशततमोऽध्यायः १७६

## सप्तसप्तत्यधिक शततमोऽध्यायः

भीष्म उवाच
एवमुक्तस्तदा रामो जहि भीष्ममिति प्रभो
उवाच रुदतीं कन्यां चोदयन्तीं पुनः पुनः १
काश्ये कामं न गृह्णामि शस्त्रं वै वरवर्णिनि
ऋते ब्रह्मविदां हेतोः किमन्यत्करवाणि ते २
वाचा भीष्मश्च शाल्वश्च मम राज्ञि वशानुगौ
भविष्यतोऽनवद्याङ्गि तत्करिष्यामि मा शुचः ३
न तु शस्त्रं ग्रहीष्यामि कथञ्चिदपि भामिनि
ऋते नियोगाद्विप्राणामेष मे समयः कृतः ४
अम्बोवाच
मम दुःखं भगवता व्यपनेयं यतस्ततः
तत्तु भीष्मप्रसूतं मे तं जहीश्वर माचिरम् ५
राम उवाच
काशिकन्ये पुनर्ब्रूहि भीष्मस्ते चरणावुभौ
शिरसा वन्दनार्होऽपि ग्रहीष्यति गिरा मम ६
अम्बोवाच
जहि भीष्मं रणे राम मम चेदिच्छसि प्रियम्
प्रतिश्रुतं च यदि तत्सत्यं कर्तुमिहार्हसि ७

भीष्म उवाच
तयोः संवदतोरेवं राजन्रामाम्बयोस्तदा
अकृतव्रणो जामदग्न्यमिदं वचनमब्रवीत् ८
शरणागतां महाबाहो कन्यां न त्यक्तुमर्हसि
यदि भीष्मं रणे राम गर्जन्तमसुरं यथा ९
यदि भीष्मस्त्वयाहूतो रणे राम महामुने
निर्जितोऽस्मीति वा ब्रूयात्कुर्याद्वा वचनं तव १०
कृतमस्या भवेत्कार्यं कन्याया भृगुनन्दन
वाक्यं सत्यं च ते वीर भविष्यति कृतं विभो ११
इयं चापि प्रतिज्ञा ते तदा राम महामुने
जित्वा वै क्षत्रियान्सर्वान्ब्राह्मणेषु प्रतिश्रुतम् १२
ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चैव रणे यदि
ब्रह्मद्विड्भविता तं वै हनिष्यामीति भार्गव १३
शरणं हि प्रपन्नानां भीतानां जीवितार्थिनाम्
न शक्ष्यामि परित्यागं कर्तुं जीवन्कथञ्चन १४
यश्च क्षत्रं रणे कृत्स्नं विजेष्यति समागतम्
दृप्तात्मानमहं तं च हनिष्यामीति भार्गव १५
स एवं विजयी राम भीष्मः कुरुकुलोद्वहः
तेन युद्ध्यस्व संग्रामे समेत्य भृगुनन्दन १६
राम उवाच
स्मराम्यहं पूर्वकृतां प्रतिज्ञामृषिसत्तम
तथैव च करिष्यामि यथा साम्नैव लप्स्यते १७
कार्यमेतन्महद्ब्रह्मन्काशिकन्यामनोगतम्
गमिष्यामि स्वयं तत्र कन्यामादाय यत्र सः १८
यदि भीष्मो रणश्लाघी न करिष्यति मे वचः
हनिष्याम्येनमुद्रिक्तमिति मे निश्चिता मतिः १९
न हि बाणा मयोत्सृष्टाः सज्जन्तीह शरीरिणाम्
कायेषु विदितं तुभ्यं पुरा क्षत्रियसङ्गरे २०
भीष्म उवाच
एवमुक्त्वा ततो रामः सह तैर्ब्रह्मवादिभिः

प्रयाणाय मतिं कृत्वा समुत्तस्थौ महामनाः २१
ततस्ते तामुषित्वा तु रजनीं तत्र तापसाः
हुताग्नयो जप्तजप्याः प्रतस्थुर्मज्जिघांसया २२
अभ्यगच्छत्ततो रामः सह तैर्ब्राह्मणर्षभैः
कुरुक्षेत्रं महाराज कन्यया सह भारत २३
न्यविशन्त ततः सर्वे परिगृह्य सरस्वतीम्
तापसास्ते महात्मानो भृगुश्रेष्ठपुरस्कृताः २४
इति श्रीमहाभारते उद्योगपर्वणि सप्तसप्तत्यधिकशततमोऽध्यायः १७७

अष्ट सप्तत्यधिक शततमोऽध्यायः

भीष्म उवाच
ततस्तृतीये दिवसे समे देशे व्यवस्थितः
प्रेषयामास मे राजन्प्राप्तोऽस्मीति महाव्रतः १
तमागतमहं श्रुत्वा विषयान्तं महाबलम्
अभ्यगच्छं जवेनाशु प्रीत्या तेजोनिधिं प्रभुम् २
गां पुरस्कृत्य राजेन्द्र ब्राह्मणैः परिवारितः
ऋत्विग्भिर्देवकल्पैश्च तथैव च पुरोहितैः ३
स मामभिगतं दृष्ट्वा जामदग्न्यः प्रतापवान्
प्रतिजग्राह तां पूजां वचनं चेदमब्रवीत् ४
भीष्म कां बुद्धिमास्थाय काशिराजसुता त्वया
अकामेयमिहानीता पुनश्चैव विसर्जिता ५
विभ्रंशिता त्वया हीयं धर्मावाप्तेः परावरात्
परामृष्टां त्वया हीमां को हि गन्तुमिहार्हति ६
प्रत्याख्याता हि शाल्वेन त्वया नीतेति भारत
तस्मादिमां मन्नियोगात्प्रतिगृह्णीष्व भारत ७
स्वधर्मं पुरुषव्याघ्र राजपुत्री लभत्वियम्
न युक्तमवमानोऽय कर्तुं राज्ञां त्वयानघ ८
ततस्तं नातिमनसं समुद्वीक्ष्याहमब्रुवम्
नाहमेनां पुनर्दद्यां भ्रात्रे ब्रह्मन्कथञ्चन ९
शाल्वस्याहमिति प्राह पुरा मामिह भार्गव

मया चैवाभ्यनुज्ञाता गता सौभपुरं प्रति १०
न भयान्नाप्यनुक्रोशान्न लोभान्नार्थकाम्यया
क्षत्रधर्ममहं जह्यामिति मे व्रतमाहितम् ११
अथ मामब्रवीद्रामः क्रोधपर्याकुलेक्षणः
न करिष्यसि चेदेतद्वाक्यं मे कुरुपुङ्गव १२
हनिष्यामि सहामात्यं त्वामद्येति पुनः पुनः
संरम्भादब्रवीद्रामः क्रोधपर्याकुलेक्षणः १३
तमहं गीर्भिरिष्टाभिः पुनः पुनररिन्दमम्
अयाचं भृगुशार्दूलं न चैव प्रशशाम सः १४
तमहं प्रणम्य शिरसा भूयो ब्राह्मणसत्तमम्
अब्रुवं कारणं किं तद्यत्त्वं योद्धुमिहेच्छसि १५
इष्वस्त्रं मम बालस्य भवतैव चतुर्विधम्
उपदिष्टं महाबाहो शिष्योऽस्मि तव भार्गव १६
ततो मामब्रवीद्रामः क्रोधसंरक्तलोचनः
जानीषे मां गुरुं भीष्म न चेमां प्रतिगृह्णसे
सुतां काश्यस्य कौरव्य मत्प्रियार्थं महीपते १७
न हि ते विद्यते शान्तिरन्यथा कुरुनन्दन
गृहाणेमां महाबाहो रक्षस्व कुलमात्मनः
त्वया विभ्रंशिता हीयं भर्तारं नाधिगच्छति १८
तथा ब्रुवन्तं तमहं रामं परपुरञ्जयम्
नैतदेवं पुनर्भावि ब्रह्मर्षे किं श्रमेण ते १९
गुरुत्वं त्वयि सम्प्रेक्ष्य जामदग्न्य पुरातनम्
प्रसादये त्वां भगवंस्त्यक्तैषा हि पुरा मया २०
को जातु परभावां हि नारीं व्यालीमिव स्थिताम्
वासयेत गृहे जानन्स्त्रीणां दोषान्महात्ययान् २१
न भयाद्वासवस्यापि धर्मं जह्यां महाद्युते
प्रसीद मा वा यद्वा ते कार्यं तत्कुरु माचिरम् २२
अयं चापि विशुद्धात्मन्पुराणे श्रूयते विभो
मरुत्तेन महाबुद्धे गीतः श्लोको महात्मना २३
गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः

उत्पथप्रतिपन्नस्य कार्यं भवति शासनम् २४
स त्वं गुरुरिति प्रेम्णा मया सम्मानितो भृशम्
गुरुवृत्तं न जानीषे तस्माद्योत्स्याम्यहं त्वया २५
गुरुं न हन्यां समरे ब्राह्मणं च विशेषतः
विशेषतस्तपोवृद्धमेवं क्षान्तं मया तव २६
उद्यतेषुमथो दृष्ट्वा ब्राह्मणं क्षत्रबन्धुवत्
यो हन्यात्समरे क्रुद्धो युध्यन्तमपलायिनम्
ब्रह्महत्या न तस्य स्यादिति धर्मेषु निश्चयः २७
क्षत्रियाणां स्थितो धर्मे क्षत्रियोऽस्मि तपोधन
यो यथा वर्तते यस्मिंस्तथा तस्मिन्प्रवर्तयन्
नाधर्मं समवाप्नोति नरः श्रेयश्च विन्दति २८
अर्थे वा यदि वा धर्मे समर्थो देशकालवित्
अनर्थसंशयापन्नः श्रेयान्निःसंशयेन च २९
यस्मात्संशयितेऽर्थेऽस्मिन्यथान्यायं प्रवर्तसे
तस्माद्योत्स्यामि सहितस्त्वया राम महाहवे
पश्य मे बाहुवीर्यं च विक्रमं चातिमानुषम् ३०
एवं गतेऽपि तु मया यच्छक्यं भृगुनन्दन
तत्करिष्ये कुरुक्षेत्रे योत्स्ये विप्र त्वया सह
द्वन्द्वे राम यथेष्टं ते सज्जो भव महामुने ३१
तत्र त्वं निहतो राम मया शरशताचितः
लप्स्यसे निर्जिताँल्लोकाञ्शस्त्रपूतो महारणे ३२
स गच्छ विनिवर्तस्व कुरुक्षेत्रं रणप्रिय
तत्रैष्यामि महाबाहो युद्धाय त्वां तपोधन ३३
अपि यत्र त्वया राम कृतं शौचं पुरा पितुः
तत्राहमपि हत्वा त्वां शौचं कर्तास्मि भार्गव ३४
तत्र गच्छस्व राम त्वं त्वरितं युद्धदुर्मद
व्यपनेष्यामि ते दर्पं पौराणं ब्राह्मणब्रुव ३५
यच्चापि कत्थसे राम बहुशः परिषत्सु वै
निर्जिताः क्षत्रिया लोके मयैकेनेति तच्छृणु ३६
न तदा जायते भीष्मो मद्विधः क्षत्रियोऽपि वा

यस्ते युद्धमयं दर्पं कामं च व्यपनाशयेत् ३७
सोऽह जातो महाबाहो भीष्मः परपुरञ्जयः
व्यपनेष्यामि ते दर्पं युद्धे राम न संशयः ३८
इति श्रीमहाभारते उद्योगपर्वणि अष्टसप्तत्यधिकशततमोऽध्यायः १७८

## एकोनाशीत्यधिक शततमोऽध्यायः

भीष्म उवाच
ततो मामब्रवीद्रामः प्रहसन्निव भारत
दिष्ट्या भीष्म मया सार्धं योद्धुमिच्छसि सङ्गरे १
अयं गच्छामि कौरव्य कुरुक्षेत्रं त्वया सह
भाषितं तत्करिष्यामि तत्रागच्छेः परन्तप २
तत्र त्वां निहतं माता मया शरशताचितम्
जाह्नवी पश्यतां भीष्म गृध्रकङ्कबडाशनम् ३
कृपणं त्वामभिप्रेक्ष्य सिद्धचारणसेविता
मया विनिहतं देवी रोदतामद्य पार्थिव ४
अतदर्हा महाभागा भगीरथसुता नदी
या त्वामजीजनन्मन्दं युद्धकामुकमातुरम् ५
एहि गच्छ मया भीष्म युद्धमद्यैव वर्तताम्
गृहाण सर्वं कौरव्य रथादि भरतर्षभ ६
इति ब्रुवाणं तमहं रामं परपुरञ्जयम्
प्रणम्य शिरसा राजन्नेवमस्त्वित्यथाब्रुवम् ७
एवमुक्त्वा ययौ रामः कुरुक्षेत्रं युयुत्सया
प्रविश्य नगरं चाहं सत्यवत्यै न्यवेदयम् ८
ततः कृतस्वस्त्ययनो मात्रा प्रत्यभिनन्दितः
द्विजातीन्वाच्य पुण्याहं स्वस्ति चैव महाद्युते ९
रथमास्थाय रुचिरं राजतं पाण्डुरैर्हयैः
सूपस्करं स्वधिष्ठानं वैयाघ्रपरिवारणम् १०
उपपन्नं महाशस्त्रैः सर्वोपकरणान्वितम्
तत्कुलीनेन वीरेण हयशास्त्रविदा नृप ११
युक्तं सूतेन शिष्टेन बहुशो दृष्टकर्मणा

दंशितः पाण्डुरेणाहं कवचेन वपुष्मता १२
पाण्डुरं कार्मुकं गृह्य प्रायां भरतसत्तम
पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्धनि १३
पाण्डुरैश्चामरैश्चापि वीज्यमानो नराधिप
शुक्लवासाः सितोष्णीषः सर्वशुक्लविभूषणः १४
स्तूयमानो जयाशीर्भिर्निष्क्रम्य गजसाह्वयात्
कुरुक्षेत्रं रणक्षेत्रमुपायां भरतर्षभ १५
ते हयाश्चोदितास्तेन सूतेन परमाहवे
अवहन्मां भृशं राजन्मनोमारुतरंहसः १६
गत्वाहं तत्कुरुक्षेत्रं स च रामः प्रतापवान्
युद्धाय सहसा राजन्पराक्रान्तौ परस्परम् १७
ततः सन्दर्शनेऽतिष्ठं रामस्यातितपस्विनः
प्रगृह्य शङ्खप्रवरं ततः प्राधममुत्तमम् १८
ततस्तत्र द्विजा राजंस्तापसाश्च वनौकसः
अपश्यन्त रणं दिव्यं देवाः सर्षिगणास्तदा १९
ततो दिव्यानि माल्यानि प्रादुरासन्मुहुर्मुहुः
वादित्राणि च दिव्यानि मेघवृन्दानि चैव ह २०
ततस्ते तापसाः सर्वे भार्गवस्यानुयायिनः
प्रेक्षकाः समपद्यन्त परिवार्य रणाजिरम् २१
ततो मामब्रवीद्देवी सर्वभूतहितैषिणी
माता स्वरूपिणी राजन्किमिदं ते चिकीर्षितम् २२
गत्वाहं जामदग्न्यं तु प्रयाचिष्ये कुरूद्वह
भीष्मेण सह मा योत्सीः शिष्येणेति पुनः पुनः २३
मा मैवं पुत्र निर्बन्धं कुरु विप्रेण पार्थिव
जामदग्न्येन समरे योद्धुमित्यवभर्त्सयत् २४
किं न वै क्षत्रियहरो हरतुल्यपराक्रमः
विदितः पुत्र रामस्ते यतस्त्वं योद्धुमिच्छसि २५
ततोऽहमब्रुवं देवीमभिवाद्य कृताञ्जलि
सर्वं तद्भरतश्रेष्ठ यथावृत्तं स्वयंवरे २६
यथा च रामो राजेन्द्र मया पूर्वं प्रसादितः

काशिराजसुतायाश्च यथा कामः पुरातनः २७
ततः सा राममभ्येत्य जननी मे महानदी
मदर्थं तमृषिं देवी क्षमयामास भार्गवम्
भीष्मेण सह मा योत्सीः शिष्येणेति वचोऽब्रवीत् २८
स च तामाह याचन्तीं भीष्ममेव निवर्तय
न हि मे कुरुते काममित्यहं तमुपागमम् २९
संजय उवाच
ततो गङ्गा सुतस्नेहाद्भीष्मं पुनरुपागमत्
न चास्याः सोऽकरोद्वाक्यं क्रोधपर्याकुलेक्षणः ३०
अथादृश्यत धर्मात्मा भृगुश्रेष्ठो महातपाः
आह्वयामास च पुनर्युद्धाय द्विजसत्तमः ३१
इति श्रीमहाभारते उद्योगपर्वणि एकोनाशीत्यधिकशततमोऽध्यायः १७९

## अशीत्यधिक शततमोऽध्यायः

भीष्म उवाच
तमहं स्मयन्निव रणे प्रत्यभाषं व्यवस्थितम्
भूमिष्ठं नोत्सहे योद्धुं भवन्तं रथमास्थितः १
आरोह स्यन्दनं वीर कवचं च महाभुज
बधान समरे राम यदि योद्धुं मयेच्छसि २
ततो मामब्रवीद्रामः स्मयमानो रणाजिरे
रथो मे मेदिनी भीष्म वाहा वेदाः सदश्ववत् ३
सूतो मे मातरिश्वा वै कवचं वेदमातरः
सुसंवीतो रणे ताभिर्योत्स्येऽह कुरुनन्दन ४
एवं ब्रुवाणो गान्धारे रामो मां सत्यविक्रमः
शरव्रातेन महता सर्वतः पर्यवारयत् ५
ततोऽपश्यं जामदग्न्यं रथे दिव्ये व्यवस्थितम्
सर्वायुधधरे श्रीमत्यद्भुतोपमदर्शने ६
मनसा विहिते पुण्ये विस्तीर्णे नगरोपमे
दिव्याश्वयुजि संनद्धे काञ्चनेन विभूषिते ७
ध्वजेन च महाबाहो सोमालंकृतलक्ष्मणा

धनुर्धरो बद्धतूणो बद्धगोधांगुलित्रवान् ८
सारथ्यं कृतवांस्तत्र युयुत्सोरकृतव्रणः
सखा वेदविदत्यन्तं दयितो भार्गवस्य ह ९
आह्वयानः स मां युद्धे मनो हर्षयतीव मे
पुनः पुनरभिक्रोशन्नभियाहीति भार्गवः १०
तमादित्यमिवोद्यन्तमनाधृष्यं महाबलम्
क्षत्रियान्तकरं राममेकमेकः समासदम् ११
ततोऽह बाणपातेषु त्रिषु वाहान्निगृह्य वै
अवतीर्य धनुर्न्यस्य पदातिर्ऋषिसत्तमम् १२
अभ्यगच्छं तदा राममर्चिष्यन्द्विजसत्तमम्
अभिवाद्य चैनं विधिवदब्रुवं वाक्यमुत्तमम् १३
योत्स्ये त्वया रणे राम विशिष्टेनाऽधिकेन च
गुरुणा धर्मशीलेन जयमाशास्स्व मे विभो १४
राम उवाच
एवमेतत्कुरुश्रेष्ठ कर्तव्यं भूतिमिच्छता
धर्मो ह्येष महाबाहो विशिष्टैः सह युध्यताम् १५
शपेयं त्वां न चेदेवमागच्छेथा विशां पते
युध्यस्व त्वं रणे यत्तो धैर्यमालम्ब्य कौरव १६
न तु ते जयमाशासे त्वां हि जेतुमहं स्थितः
गच्छ युध्यस्व धर्मेण प्रीतोऽस्मि चरितेन ते १७
भीष्म उवाच
ततोऽह तं नमस्कृत्य रथमारुह्य सत्वरः
प्राध्मापयं रणे शङ्खं पुनर्हेमविभूषितम् १८
ततो युद्धं समभवन्मम तस्य च भारत
दिवसान्सुबहून्राजन्परस्परजिगीषया १९
स मे तस्मिन्रणे पूर्वं प्राहरत्कङ्कपत्रिभिः
षष्ट्या शतैश्च नवभिः शराणामग्निवर्चसाम् २०
चत्वारस्तेन मे वाहाः सूतश्चैव विशां पते
प्रतिरुद्धास्तथैवाहं समरे दंशितः स्थितः २१
नमस्कृत्य च देवेभ्यो ब्राह्मणेभ्यश्च भारत

तमहं स्मयन्निव रणे प्रत्यभाषं व्यवस्थितम् २२
आचार्यता मानिता मे निर्मर्यादे ह्यपि त्वयि
भूयस्तु शृणु मे ब्रह्मन्सम्पदं धर्मसंग्रहे २३
ये ते वेदाः शरीरस्था ब्राह्मण्यं यच्च ते महत्
तपश्च सुमहत्तप्तं न तेभ्यः प्रहराम्यहम् २४
प्रहरे क्षत्रधर्मस्य यं त्वं राम समास्थितः
ब्राह्मणः क्षत्रियत्वं हि याति शस्त्रसमुद्यमात् २५
पश्य मे धनुषो वीर्यं पश्य बाह्वोर्बलं च मे
एष ते कार्मुकं वीर द्विधा कुर्मि ससायकम् २६
तस्याहं निशितं भल्लं प्राहिण्वं भरतर्षभ
तेनास्य धनुषः कोटिश्छिन्ना भूमिमथागमत् २७
नव चापि पृषत्कानां शतानि नतपर्वणाम्
प्राहिण्वं कङ्कपत्राणां जामदग्न्यरथं प्रति २८
काये विषक्तास्तु तदा वायुनाभिसमीरिताः
चेलुः क्षरन्तो रुधिरं नागा इव च ते शराः २९
क्षतजोक्षितसर्वाङ्गः क्षरन्स रुधिरं व्रणैः
बभौ रामस्तदा राजन्मेरुर्धातूनिवोत्सृजन् ३०
हेमन्तान्तेऽशोक इव रक्तस्तवकमण्डितः
बभौ रामस्तदा राजन्क्वचित्किंशुकसंनिभः ३१
ततोऽन्यद्धनुरादाय रामः क्रोधसमन्वितः
हेमपुङ्खान्सुनिशिताञ्शरांस्तान्हि ववर्ष सः ३२
ते समासाद्य मां रौद्रा बहुधा मर्मभेदिनः
अकम्पयन्महावेगाः सर्पानलविषोपमाः ३३
ततोऽह समवष्टभ्य पुनरात्मानमाहवे
शतसंख्यैः शरैः क्रुद्धस्तदा राममवाकिरम् ३४
स तैरग्न्यर्कसङ्काशैः शरैराशीविषोपमैः
शितैरभ्यर्दितो रामो मन्दचेता इवाभवत् ३५
ततोऽह कृपयाविष्टो विनिन्द्यात्मानमात्मना
धिग्धिगित्यब्रुवं युद्धं क्षत्रं च भरतर्षभ ३६
असकृच्चाब्रुवं राजञ्शोकवेगपरिप्लुतः

अहो बत कृतं पापं मयेदं क्षत्रकर्मणा ३७
गुरुर्द्विजातिर्धर्मात्मा यदेवं पीडितः शरैः
ततो न प्राहरं भूयो जामदग्न्याय भारत ३८
अथावताप्य पृथिवीं पूषा दिवससंक्षये
जगामास्तं सहस्रांशुस्ततो युद्धमुपारमत् ३९
इति श्रीमहाभारते उद्योगपर्वणि अशीत्यधिकशततमोऽध्यायः १८०

## एकाशीत्यधिक शततमोऽध्यायः

भीष्म उवाच
आत्मनस्तु ततः सूतो हयानां च विशां पतेरु
मम चापनयामास शल्यान्कुशलसम्मतः १
स्नातोपवृत्तैस्तुरगैर्लब्धतोयैरविह्वलैः
प्रभात उदिते सूर्ये ततो युद्धमवर्तत २
दृष्ट्वा मां तूर्णमायान्तं दंशितं स्यन्दने स्थितम्
अकरोद्रथमत्यर्थं रामः सज्जं प्रतापवान् ३
ततोऽह राममायान्तं दृष्ट्वा समरकांक्षिणम्
धनुःश्रेष्ठं समुत्सृज्य सहसावतरं रथात् ४
अभिवाद्य तथैवाहं रथमारुह्य भारत
युयुत्सुर्जामदग्न्यस्य प्रमुखे वीतभीः स्थितः ५
ततो मां शरवर्षेण महता समवाकिरत्
अहं च शरवर्षेण वर्षन्तं समवाकिरम् ६
संक्रुद्धो जामदग्न्यस्तु पुनरेव पतत्रिणः
प्रेषयामास मे राजन्दीप्तास्यानुरगानिव ७
तानहं निशितैर्भल्लैः शतशोऽथ सहस्रशः
अच्छिदं सहसा राजन्नन्तरिक्षे पुनः पुनः ८
ततस्त्वस्त्राणि दिव्यानि जामदग्न्यः प्रतापवान्
मयि प्रचोदयामास तान्यहं प्रत्यषेधयम् ९
अस्त्रैरेव महाबाहो चिकीर्षन्नधिकां क्रियाम्
ततो दिवि महान्नादः प्रादुरासीत्समन्ततः १०
ततोऽहमस्त्रं वायव्यं जामदग्न्ये प्रयुक्तवान्

प्रत्याजघ्ने च तद्रामो गुह्यकास्त्रेण भारत ११
ततोऽस्त्रमहमाग्नेयमनुमन्त्र्य प्रयुक्तवान्
वारुणेनैव रामस्तद्वारयामास मे विभुः १२
एवमस्त्राणि दिव्यानि रामस्याहमवारयम्
रामश्च मम तेजस्वी दिव्यास्त्रविदरिन्दमः १३
ततो मां सव्यतो राजन्रामः कुर्वन्द्विजोत्तमः
उरस्यविध्यत्संक्रुद्धो जामदग्न्यो महाबलः १४
ततोऽहं भरतश्रेष्ठ संन्यषीदं रथोत्तमे
अथ मां कश्मलाविष्टं सूतस्तूर्णमपावहत्
गोरुतं भरतश्रेष्ठ रामबाणप्रपीडितम् १५
ततो मामपयातं वै भृशं विद्धमचेतसम्
रामस्यानुचरा हृष्टाः सर्वे दृष्ट्वा प्रचुक्रुशुः
अकृतव्रणप्रभृतयः काशिकन्या च भारत १६
ततस्तु लब्धसंज्ञोऽहं ज्ञात्वा सूतमथाब्रुवम्
याहि सूत यतो रामः सज्जोऽहं गतवेदनः १७
ततो मामवहत्सूतो हयैः परमशोभितैः
नृत्यद्भिरिव कौरव्य मारुतप्रतिमैर्गतौ १८
ततोऽहं राममासाद्य बाणजालेन कौरव
अवाकिरं सुसंरब्धः संरब्धं विजिगीषया १९
तानापतत एवासौ रामो बाणानजिह्मगान्
बाणैरेवाच्छिनत्तूर्णमेकैकं त्रिभिराहवे २०
ततस्ते मृदिताः सर्वे मम बाणाः सुसंशिताः
रामबाणैर्द्विधा छिन्नाः शतशोऽथ महाहवे २१
ततः पुनः शरं दीप्तं सुप्रभं कालसम्मितम्
असृजं जामदग्न्याय रामायाहं जिघांसया २२
तेन त्वभिहतो गाढं बाणच्छेदवशं गतः
मुमोह सहसा रामो भूमौ च निपपात ह २३
ततो हाहाकृतं सर्वं रामे भूतलमाश्रिते
जगद्भारत संविग्नं यथार्कपतनेऽभवत् २४
तत एनं सुसंविग्नाः सर्व एवाभिदुद्रुवुः

तपोधनास्ते सहसा काश्या च भृगुनन्दनम् २५
त एनं संपरिष्वज्य शनैराश्वासयंस्तदा
पाणिभिर्जल शीतैश्च जयाशीर्भिश्च कौरव २६
ततः स विह्वलो वाक्यं राम उत्थाय माब्रवीत्
तिष्ठ भीष्म हतोऽसीति बाणं सन्धाय कार्मुके २७
स मुक्तो न्यपतत्तूर्णं पार्श्वे सव्ये महाहवे
येनाहं भृशसंविग्नो व्याघूर्णित इव द्रुमः २८
हत्वा हयांस्ततो राजञ्शीघ्रास्त्रेण महाहवे
अवाकिरन्मां विस्रब्धो बाणैस्तैर्लोमवाहिभिः २९
ततोऽहमपि शीघ्रास्त्रं समरेऽप्रतिवारणम्
अवासृजं महाबाहो तेऽन्तराधिष्ठिताः शराः
रामस्य मम चैवाशु व्योमावृत्य समन्ततः ३०
न स्म सूर्यः प्रतपति शरजालसमावृतः
मातरिश्वान्तरे तस्मिन्मेघरुद्ध इवानदत् ३१
ततो वायोः प्रकम्पाच्च सूर्यस्य च मरीचिभिः
अभितापात्स्वभावाच्च पावकः समजायत ३२
ते शराः स्वसमुत्थेन प्रदीप्ताश्चित्रभानुना
भूमौ सर्वे तदा राजन्भस्मभूताः प्रपेदिरे ३३
तदा शतसहस्राणि प्रयुतान्यर्बुदानि च
अयुतान्यथ खर्वाणि निखर्वाणि च कौरव
रामः शराणां संक्रुद्धो मयि तूर्णमपातयत् ३४
ततोऽह तानपि रणे शरैराशीविषोपमैः
संछिद्य भूमौ नृपतेऽपातयं पन्नगानिव ३५
एवं तदभवद्युद्धं तदा भरतसत्तम
सन्ध्याकाले व्यतीते तु व्यपायात्स च मे गुरुः ३६

इति श्रीमहाभारते उद्योगपर्वणि एकाशीत्यधिकशततमोऽध्यायः १८१

## द्व्यशीत्यधिक शततमोऽध्यायः

भीष्म उवाच
समागतस्य रामेण पुनरेवातिदारुणम्

अन्येद्युस्तुमुलं युद्धं तदा भरतसत्तम १
ततो दिव्यास्त्रविच्छूरो दिव्यान्यस्त्राण्यनेकशः
अयोजयत धर्मात्मा दिवसे दिवसे विभुः २
तान्यहं तत्प्रतीघातैरस्त्रैरस्त्राणि भारत
व्यधमं तुमुले युद्धे पाणांस्त्यक्त्वा सुदुस्त्यजान् ३
अस्त्रैरस्त्रेषु बहुधा हतेष्वथ च भारत
अक्रुध्यत महातेजास्त्यक्तप्राणः स संयुगे ४
ततः शक्तिं प्राहिणोद्घोररूपामस्त्रै रुद्धो जामदग्न्यो महात्मा
कालोत्सृष्टां प्रज्वलितामिवोल्कां सन्दीप्ताग्रां तेजसावृत्य लोकान् ५
ततोऽह तामिषुभिर्दीप्यमानैः समायान्तीमन्तकालार्कदीप्ताम्
छित्त्वा त्रिधा पातयामास भूमौ ततो ववौ पवनः पुण्यगन्धिः ६
तस्यां छिन्नायां क्रोधदीप्तोऽथ रामः शक्तीर्घोराः प्राहिणोद्द्वादशान्याः
तासां रूपं भारत नोत शक्यं तेजस्वित्वाल्लाघवाच्चैव वक्तुम् ७
किं त्वेवाहं विह्वलः सम्प्रदृश्य दिग्भ्यः सर्वास्ता महोल्का इवाग्नेः
नानारूपास्तेजसोग्रेण दीप्ता यथादित्या द्वादश लोकसंक्षये ८
ततो जालं बाणमयं विवृत्य संदृश्य भित्त्वा शरजालेन राजन्
द्वादशेषून्प्राहिणवं रणेऽह ततः शक्तीर्व्यधमं घोररूपाः ९
ततोऽपरा जामदग्न्यो महात्मा शक्तीर्घोराः प्राक्षिपद्धेमदण्डाः
विचित्रिताः काञ्चनपट्टनद्धा यथा महोल्का ज्वलितास्तथा ताः १०
ताश्चाप्युग्राश्चर्मणा वारयित्वा खड्गेनाजौ पातिता मे नरेन्द्र
बाणैर्दिव्यैर्जामदग्न्यस्य संख्ये दिव्यांश्चाश्वानभ्यवर्षं ससूतान् ११
निर्मुक्तानां पन्नगानां सरूपा दृष्ट्वा शक्तीर्हेमचित्रा निकृत्ताः
प्रादुश्चक्रे दिव्यमस्त्रं महात्मा क्रोधाविष्टो हैहयेशप्रमाथी १२
ततः श्रेण्यः शलभानामिवोग्राः समापेतुर्विशिखानां प्रदीप्ताः
समाचिनोच्चापि भृशं शरीरं हयान्सूतं सरथं चैव मह्यम् १३
रथः शरैर्मे निचितः सर्वतोऽभूत्तथा हयाः सारथिश्चैव राजन्
युगं रथेषा च तथैव चक्रे तथैवाक्षः शरकृत्तोऽथ भग्नः १४
ततस्तस्मिन्बाणवर्षे व्यतीते शरौघेण प्रत्यवर्षं गुरुं तम्
स विक्षतो मार्गणैर्ब्रह्मराशिर्देहादजस्त्रं मुमुचे भूरि रक्तम् १५
यथा रामो बाणजालाभितप्तस्तथैवाहं सुभृशं गाढविद्धः

ततो युद्धं व्यरमच्चापराह्णे भानावस्तं प्रार्थयाने महीध्रम् १६
इति श्रीमहाभारते उद्योगपर्वणि द्व्यशीत्यधिकशततमोऽध्यायः १८२

त्र्यशीत्यधिक शततमोऽध्यायः

भीष्म उवाच
ततः प्रभाते राजेन्द्र सूर्ये विमल उद्गते
भार्गवस्य मया सार्धं पुनर्युद्धमवर्तत १
ततो भ्रान्ते रथे तिष्ठन्रामः प्रहरतां वरः
ववर्ष शरवर्षाणि मयि शक्र इवाचले २
तेन सूतो मम सुहृच्छरवर्षेण ताडितः
निपपात रथोपस्थे मनोमम विषादयन् ३
ततः सूतः स मेऽत्यर्थं कश्मलं प्राविशन्महत्
पृथिव्यां च शराघातान्निपपात मुमोह च ४
ततः सूतोऽजहात्प्राणान्रामबाणप्रपीडितः
मुहूर्तादिव राजेन्द्र मां च भीराविशत्तदा ५
ततः सूते हते राजन्क्षिपतस्तस्य मे शरान्
प्रमत्तमनसो रामः प्राहिणोन्मृत्युसम्मितान् ६
ततः सूतव्यसनिनं विप्लुतं मां स भार्गवः
शरेणाभ्यहनद्गाढं विकृष्य बलवद्धनुः ७
स मे जत्र्वन्तरे राजन्निपत्य रुधिराशनः
मयैव सह राजेन्द्र जगाम वसुधातलम् ८
मत्वा तु निहतं रामस्ततो मां भरतर्षभ
मेघवद्व्यनदच्चोच्चैर्जहृषे च पुनः पुनः ९
तथा तु पतिते राजन्मयि रामो मुदा युतः
उदक्रोशन्महानादं सह तैरनुयायिभिः १०
मम तत्राभवन्ये तु कौरवाः पार्श्वतः स्थिताः
आगता ये च युद्धं तज्जनास्तत्र दिदृक्षवः
आर्तिं परमिकां जग्मुस्ते तदा मयि पातिते ११
ततोऽपश्यं पतितो राजसिंह द्विजानष्टौ सूर्यहुताशनाभान्
ते मां समन्तात्परिवार्य तस्थुः स्वबाहुभिः परिगृह्याजिमध्ये १२

रक्ष्यमाणश्च तैर्विप्रैर्नाहं भूमिमुपास्पृशम्
अन्तरिक्षे स्थितो ह्यस्मि तैर्विप्रैर्बान्धवैरिव
स्वपन्निवान्तरिक्षे च जलबिन्दुभिरुक्षितः १३
ततस्ते ब्राह्मणा राजन्नब्रुवन्परिगृह्य माम्
मा भैरिति समं सर्वे स्वस्ति तेऽस्त्विति चासकृत् १४
ततस्तेषामहं वाग्भिस्तर्पितः सहसोत्थितः
मातरं सरितां श्रेष्ठामपश्यं रथमास्थिताम् १५
हयाश्च मे संगृहीतास्तया वै महानद्या संयति कौरवेन्द्र
पादौ जनन्याः प्रतिपूज्य चाहं तथार्ष्टिषेणं रथमभ्यरोहम् १६
ररक्ष सा मम रथं हयांश्चोपस्कराणि च
तामहं प्राञ्जलिर्भूत्वा पुनरेव व्यसर्जयम् १७
ततोऽह स्वयमुद्यम्य हयांस्तान्वातरंहसः
अयुध्यं जामदग्न्येन निवृत्तेऽहनि भारत १८
ततोऽह भरतश्रेष्ठ वेगवन्तं महाबलम्
अमुञ्चं समरे बाणं रामाय हृदयच्छिदम् १९
ततो जगाम वसुधां बाणवेगप्रपीडितः
जानुभ्यां धनुरुत्सृज्य रामो मोहवशं गतः २०
ततस्तस्मिन्निपतिते रामे भूरिसहस्रदे
आवव्रुर्जलदा व्योम क्षरन्तो रुधिरं बहु २१
उल्काश्च शतशः पेतुः सनिर्घाताः सकम्पनाः
अर्कं च सहसा दीप्तं स्वर्भानुरभिसंवृणोत् २२
ववुश्च वाताः परुषाश्चलिता च वसुन्धरा
गृध्रा बडाश्च कङ्काश्च परिपेतुर्मुदा युताः २३
दीप्तायां दिशि गोमायुर्दारुणं मुहुरुन्नदत्
अनाहता दुन्दुभयो विनेदुर्भृशनिस्वनाः २४
एतदौत्पातिकं घोरमासीद्भरतसत्तम
विसंज्ञकल्पे धरणीं गते रामे महात्मनि २५
ततो रविर्मन्दमरीचिमण्डलो जगामास्तं पांसुपुञ्जावगाढः
निशा व्यगाहत्सुखशीतमारुता ततो युद्धं प्रत्यवहारयावः २६
एवं राजन्नवहारो बभूव ततः पुनर्विमलेऽभूत्सुघोरम्

काल्यं काल्यं विंशतिं वै दिनानि तथैव चान्यानि दिनानि त्रीणि २७
इति श्रीमहाभारते उद्योगपर्वणि त्र्यशीत्यधिकशततमोऽध्यायः १८३

चतुरशीत्यधिक शततमोऽध्यायः

ततोऽह निशि राजेन्द्र प्रणम्य शिरसा तदा
ब्राह्मणानां पितॄणां च देवतानां च सर्वशः १
नक्तञ्चराणां भूतानां रजन्याश्च विशां पते
शयनं प्राप्य रहिते मनसा समचिन्तयम् २
जामदग्न्येन मे युद्धमिदं परमदारुणम्
अहानि सुबहून्यद्य वर्तते सुमहात्ययम् ३
न च रामं महावीर्यं शक्नोमि रणमूर्धनि
विजेतुं समरे विप्रं जामदग्न्यं महाबलम् ४
यदि शक्यो मया जेतुं जामदग्न्यः प्रतापवान्
दैवतानि प्रसन्नानि दर्शयन्तु निशां मम ५
ततोऽह निशि राजेन्द्र प्रसुप्तः शरविक्षतः
दक्षिणेनैव पार्श्वेन प्रभातसमये इव ६
ततोऽह विप्रमुख्यैस्तैर्यैरस्मि पतितो रथात्
उत्थापितो धृतश्चैव मा भैरिति च सान्त्वितः ७
त एव मां महाराज स्वप्नदर्शनमेत्य वै
परिवार्याब्रुवन्वाक्यं तन्निबोध कुरूद्वह ८
उत्तिष्ठ मा भैर्गाङ्गेय भयं ते नास्ति किञ्चन
रक्षामहे नरव्याघ्र स्वशरीरं हि नो भवान् ९
न त्वां रामो रणे जेता जामदग्न्यः कथञ्चन
त्वमेव समरे रामं विजेता भरतर्षभ १०
इदमस्त्रं सुदयितं प्रत्यभिज्ञास्यते भवान्
विदितं हि तवाप्येतत्पूर्वस्मिन्देहधारणे ११
प्राजापत्यं विश्वकृतं प्रस्वापं नाम भारत
न हीदं वेद रामोऽपि पृथिव्यां वा पुमान्क्वचित् १२
तत्स्मरस्व महाबाहो भृशं संयोजयस्व च
न च रामः क्षयं गन्ता तेनास्त्रेण नराधिप १३

एनसा च न योगं त्वं प्राप्स्यसे जातु मानद
स्वप्स्यते जामदग्न्योऽसौ त्वद्बाणबलपीडितः १४
ततो जित्वा त्वमेवैनं पुनरुत्थापयिष्यसि
अस्त्रेण दयितेनाजौ भीष्म सम्बोधनेन वै १५
एवं कुरुष्व कौरव्य प्रभाते रथमास्थितः
प्रसुप्तं वा मृतं वापि तुल्यं मन्यामहे वयम् १६
न च रामेण मर्तव्यं कदाचिदपि पार्थिव
ततः समुत्पन्नमिदं प्रस्वापं युज्यतामिति १७
इत्युक्त्वान्तर्हिता राजन्सर्व एव द्विजोत्तमाः
अष्टौ सदृशरूपास्ते सर्वे भास्वरमूर्तयः १८
इति श्रीमहाभारते उद्योगपर्वणि चतुरशीत्यधिकशततमोऽध्यायः १८४

## पञ्चाशीत्यधिक शततमोऽध्यायः

भीष्म उवाच
ततो रात्र्यां व्यतीतायां प्रतिबुद्धोऽस्मि भारत
तं च सञ्चिन्त्य वै स्वप्नमवापं हर्षमुत्तमम् १
ततः समभवद्युद्धं मम तस्य च भारत
तुमुलं सर्वभूतानां लोमहर्षणमद्भुतम् २
ततो बाणमयं वर्षं ववर्ष मयि भार्गवः
न्यवारयमहं तं च शरजालेन भारत ३
ततः परमसंक्रुद्धः पुनरेव महातपाः
ह्यस्तनेनैव कोपेन शक्तिं वै प्राहिणोन्मयि ४
इन्द्राशनिसमस्पर्शां यमदण्डोपमप्रभाम्
ज्वलन्तीमग्निवत्संख्ये लेलिहानां समन्ततः ५
ततो भरतशार्दूल धिष्ण्यमाकाशगं यथा
सा मामभ्यहनत्तूर्णमंसदेशे च भारत ६
अथासृङ्मेऽस्रवद्घोरं गिरेर्गैरिकधातुवत्
रामेण सुमहाबाहो क्षतस्य क्षतजेक्षण ७
ततोऽह जामदग्न्याय भृशं क्रोधसमन्वितः
प्रेषयं मृत्युसङ्काशं बाणं सर्पविषोपमम् ८

स तेनाभिहतो वीरो ललाटे द्विजसत्तमः
अशोभत महाराज सश‍ृङ्ग इव पर्वतः ९
स संरब्धः समावृत्य बाणं कालान्तकोपमम्
सन्दधे बलवत्कृष्य घोरं शत्रुनिबर्हणम् १०
स वक्षसि पपातोग्रः शरो व्याल इव श्वसन्
महीं राजंस्ततश्चाहमगच्छं रुधिराविलः ११
अवाप्य तु पुनः संज्ञां जामदग्न्याय धीमते
प्राहिण्वं विमलां शक्तिं ज्वलन्तीमशनीमिव १२
सा तस्य द्विजमुख्यस्य निपपात भुजान्तरे
विह्वलश्चाभवद्राजन्वेपथुश्चैनमाविशत् १३
ततः एनं परिष्वज्य सखा विप्रो महातपाः
अकृतव्रणः शुभैर्वाक्यैराश्वासयदनेकधा १४
समाश्वस्तस्तदा रामः क्रोधामर्षसमन्वितः
प्रादुश्चक्रे तदा ब्राह्मं परमास्त्रं महाव्रतः १५
ततस्तत्प्रतिघातार्थं ब्राह्ममेवास्त्रमुत्तमम्
मया प्रयुक्तं जज्वाल युगान्तमिव दर्शयत् १६
तयोर्ब्रह्मास्त्रयोरासीदन्तरा वै समागमः
असम्प्राप्यैव रामं च मां च भारतसत्तम १७
ततो व्योम्नि प्रादुरभूत्तेज एव हि केवलम्
भूतानि चैव सर्वाणि जग्मुरार्तिं विशां पते १८
ऋषयश्च सगन्धर्वा देवताश्चैव भारत
सन्तापं परमं जग्मुरस्त्रतेजोभिपीडिताः १९
ततश्चचाल पृथिवी सपर्वतवनद्रुमा
सन्तप्तानि च भूतानि विषादं जग्मुरुत्तमम् २०
प्रजज्वाल नभो राजन्धूमायन्ते दिशो दश
न स्थातुमन्तरिक्षे च शेकुराकाशगास्तदा २१
ततो हाहाकृते लोके सदेवासुरराक्षसे
इदमन्तरमित्येव योक्तुकामोऽस्मि भारत २२
प्रस्वापमस्त्रं दयितं वचनाद्ब्रह्मवादिनाम्
चिन्तितं च तदस्त्रं मे मनसि प्रत्यभात्तदा २३

इति श्रीमहाभारते उद्योगपर्वणि पञ्चाशीत्यधिकशततमोऽध्यायः १८५

## षडशीत्यधिक शततमोऽध्यायः

भीष्म उवाच
ततो हलहलाशब्दो दिवि राजन्महानभूत्
प्रस्वापं भीष्म मा स्राक्षीरिति कौरवनन्दन १
अयुञ्जमेव चैवाहं तदस्त्रं भृगुनन्दने
प्रस्वापं मां प्रयुञ्जानं नारदो वाक्यमब्रवीत् २
एते वियति कौरव्य दिवि देवगणाः स्थिताः
ते त्वां निवारयन्त्यद्य प्रस्वापं मा प्रयोजय ३
रामस्तपस्वी ब्रह्मण्यो ब्राह्मणश्च गुरुश्च ते
तस्यावमानं कौरव्य मा स्म कार्षीः कथञ्चन ४
ततोऽपश्यं दिविष्ठान्वै तानष्टौ ब्रह्मवादिनः
ते मां स्मयन्तो राजेन्द्र शनकैरिदमब्रुवन् ५
यथाह भरतश्रेष्ठ नारदस्तत्तथा कुरु
एतद्धि परमं श्रेयो लोकानां भरतर्षभ ६
ततश्च प्रतिसंहृत्य तदस्त्रं स्वापनं मृधे
ब्रह्मास्त्रं दीपयाञ्चक्रे तस्मिन्युधि यथाविधि ७
ततो रामो रुषितो राजपुत्र दृष्ट्वा तदस्त्रं विनिवर्तितं वै
जितोऽस्मि भीष्मेण सुमन्दबुद्धिरित्येव वाक्यं सहसा व्यमुञ्चत् ८
ततोऽपश्यत्पितरं जामदग्न्यः पितुस्तथा पितरं तस्य चान्यम्
त एवैनं परिवार्य तस्थुरूचुश्चैनं सान्त्वपूर्वं तदानीम् ९
मा स्मैवं साहसं वत्स पुनः कार्षीः कथञ्चन
भीष्मेण संयुगं गन्तुं क्षत्रियेण विशेषतः १०
क्षत्रियस्य तु धर्मोऽय यद्युद्धं भृगुनन्दन
स्वाध्यायो व्रतचर्या च ब्राह्मणानां परं धनम् ११
इदं निमित्ते कस्मिंश्चिदस्माभिरुपमन्त्रितम्
शस्त्रधारणमत्युग्रं तच्च कार्यं कृतं त्वया १२
वत्स पार्याप्तमेतावद्भीष्मेण सह संयुगे
विमर्दस्ते महाबाहो व्यपयाहि रणादितः १३

पर्याप्तमेतद्भद्रं ते तव कार्मुकधारणम्
विसर्जयैतद्दुर्धर्ष तपस्तप्यस्व भार्गव १४
एष भीष्मः शान्तनवो देवैः सर्वैर्निवारितः
निवर्तस्व रणादस्मादिति चैव प्रचोदितः १५
रामेण सह मा योत्सीर्गुरुणेति पुनः पुनः
न हि रामो रणे जेतुं त्वया न्याय्यः कुरूद्वह
मानं कुरुष्व गाङ्गेय ब्राह्मणस्य रणाजिरे १६
वयं तु गुरवस्तुभ्यं ततस्त्वां वारयामहे
भीष्मो वसूनामन्यतमो दिष्ट्या जीवसि पुत्रक १७
गाङ्गेयः शन्तनोः पुत्रो वसुरेष महायशाः
कथं त्वया रणे जेतुं राम शक्यो निवर्त वै १८
अर्जुनः पाण्डवश्रेष्ठः पुरन्दरसुतो बली
नरः प्रजापतिर्वीरः पूर्वदेवः सनातनः १९
सव्यसाचीति विख्यातस्त्रिषु लोकेषु वीर्यवान्
भीष्ममृत्युर्यथाकालं विहितो वै स्वयम्भुवा २०
एवमुक्तः स पितृभिः पितॄन्रामोऽब्रवीदिदम्
नाहं युधि निवर्तेयमिति मे व्रतमाहितम् २१
न निवर्तितपूर्वं च कदाचिद्रणमूर्धनि
निवर्त्यतामापगेयः कामं युद्धात्पितामहाः
न त्वहं विनिवर्तिष्ये युद्धादस्मात्कथञ्चन २२
ततस्ते मुनयो राजन्नृचीकप्रमुखास्तदा
नारदेनैव सहिताः समागम्येदमब्रुवन् २३
निवर्तस्व रणात्तात मानयस्व द्विजोत्तमान्
नेत्यवोचमहं तांश्च क्षत्रधर्मव्यपेक्षया २४
मम व्रतमिदं लोके नाहं युद्धात्कथंचन
विमुखो विनिवर्तेयं पृष्ठतोऽभ्याहतः शरैः २५
नाहं लोभान्न कार्पण्यान्न भयान्नार्थकारणात्
त्यजेयं शाश्वतं धर्ममिति मे निश्चिता मतिः २६
ततस्ते मुनयः सर्वे नारदप्रमुखा नृप
भागीरथी च मे माता रणमध्यं प्रपेदिरे २७

तथैवात्तशरो धन्वी तथैव दृढनिश्चयः
स्थिरोऽहमाहवे योद्धुं ततस्ते राममब्रुवन्
समेत्य सहिता भूयः समरे भृगुनन्दनम् २८
नावनीतं हि हृदयं विप्राणां शाम्य भार्गव
राम राम निवर्तस्व युद्धादस्माद्द्विजोत्तम
अवध्यो हि त्वया भीष्मस्त्वं च भीष्मस्य भार्गव २९
एवं ब्रुवन्तस्ते सर्वे प्रतिरुद्ध्य रणाजिरम्
न्यासयाञ्चक्रिरे शस्त्रं पितरो भृगुनन्दनम् ३०
ततोऽह पुनरेवाथ तानष्टौ ब्रह्मवादिनः
अद्राक्षं दीप्यमानान्वै ग्रहानष्टाविवोदितान् ३१
ते मां सप्रणयं वाक्यमब्रुवन्समरे स्थितम्
प्रैहि रामं महाबाहो गुरुं लोकहितं कुरु ३२
दृष्ट्वा निवर्तितं रामं सुहृद्वाक्येन तेन वै
लोकानां च हितं कुर्वन्नहमप्याददे वचः ३३
ततोऽह राममासाद्य ववन्दे भृशविक्षतः
रामश्चाभ्युत्स्मयन्प्रेम्णा मामुवाच महातपाः ३४
त्वत्समो नास्ति लोकेऽस्मिन्क्षत्रियः पृथिवीचरः
गम्यतां भीष्म युद्धेऽस्मिस्तोषितोऽह भृशं त्वया ३५
मम चैव समक्षं तां कन्यामाहूय भार्गवः
उवाच दीनया वाचा मध्ये तेषां तपस्विनाम् ३६

इति श्रीमहाभारते उद्योगपर्वणि षडशीत्यधिकशततमोऽध्यायः १८६

## सप्ताशीत्यधिक शततमोऽध्यायः

राम उवाच
प्रत्यक्षमेतल्लोकानां सर्वेषामेव भामिनि
यथा मया परं शक्त्या कृतं वै पौरुषं महत् १
न चैव युधि शक्नोमि भीष्मं शस्त्रभृतां वरम्
विशेषयितुमत्यर्थमुत्तमास्त्राणि दर्शयन् २
एषा मे परमा शक्तिरेतन्मे परमं बलम्
यथेष्टं गम्यतां भद्रे किमन्यद्वा करोमि ते ३

भीष्ममेव प्रपद्यस्व न तेऽन्या विद्यते गतिः
निर्जितो ह्यस्मि भीष्मेण महास्त्राणि प्रमुञ्चता ४
भीष्म उवाच
एवमुक्त्वा ततो रामो विनिःश्वस्य महामनाः
तूष्णीमासीत्तदा कन्या प्रोवाच भृगुनन्दनम् ५
भगवन्नेवमेवैतद्यथाह भगवांस्तथा
अजेयो युधि भीष्मोऽयमपि देवैरुदारधीः ६
यथाशक्ति यथोत्साहं मम कार्यं कृतं त्वया
अनिधाय रणे वीर्यमस्त्राणि विविधानि च ७
न चैष शक्यते युद्धे विशेषयितुमन्ततः
न चाहमेनं यास्यामि पुनर्भीष्मं कथञ्चन ८
गमिष्यामि तु तत्राहं यत्र भीष्मं तपोधन
समरे पातयिष्यामि स्वयमेव भृगूद्वह ९
एवमुक्त्वा ययौ कन्या रोषव्याकुललोचना
तपसे धृतसङ्कल्पा मम चिन्तयती वधम् १०
ततो महेन्द्रं सह तैर्मुनिभिर्भृगुसत्तमः
यथागतं ययौ रामो मामुपामन्त्र्य भारत ११
ततोऽह रथमारुह्य स्तूयमानो द्विजातिभिः
प्रविश्य नगरं मात्रे सत्यवत्यै न्यवेदयम्
यथावृत्तं महाराज सा च मां प्रत्यनन्दत १२
पुरुषांश्चादिशं प्राज्ञान्कन्यावृत्तान्तकर्मणि
दिवसे दिवसे ह्यस्या गतजल्पितचेष्टितम्
प्रत्याहरंश्च मे युक्ताः स्थिताः प्रियहिते मम १३
यदैव हि वनं प्रायात्कन्या सा तपसे धृता
तदैव व्यथितो दीनो गतचेता इवाभवम् १४
न हि मां क्षत्रियः कश्चिद्वीर्येण विजयेद्युधि
ऋते ब्रह्मविदस्तात तपसा संशितव्रतात् १५
अपि चैतन्मया राजन्नारदेऽपि निवेदितम्
व्यासे चैव भयात्कार्यं तौ चोभौ मामवोचताम् १६
न विषादस्त्वया कार्यो भीष्म काशिसुतां प्रति

दैवं पुरुषकारेण को निवर्तितुमुत्सहेत् १७
सा तु कन्या महाराज प्रविश्याश्रममण्डलम्
यमुनातीरमाश्रित्य तपस्तेपेऽतिमानुषम् १८
निराहारा कृशा रूक्षा जटिला मलपङ्किनी
षण्मासान्वायुभक्षा च स्थाणुभूता तपोधना १९
यमुनातीरमासाद्य संवत्सरमथापरम्
उदवासं निराहारा पारयामास भामिनी २०
शीर्णपर्णेन चैकेन पारयामास चापरम्
संवत्सरं तीव्रकोपा पादांगुष्ठाग्रधिष्ठिता २१
एवं द्वादश वर्षाणि तापयामास रोदसी
निवर्त्यमानापि तु सा ज्ञातिभिर्नैव शक्यते २२
ततोऽगमद्वत्सभूमिं शिद्धचारणसेविताम्
आश्रमं पुण्यशीलानां तापसानां महात्मनाम् २३
तत्र पुण्येषु तीर्थेषु साप्लुताङ्गी दिवानिशम्
व्यचरत्काशिकन्या सा यथाकामविचारिणी २४
नन्दाश्रमे महाराज ततोलूकाश्रमे शुभे
च्यवनस्याश्रमे चैव ब्रह्मणः स्थान एव च २५
प्रयागे देवयजने देवारण्येषु चैव ह
भोगवत्यां तथा राजन्कौशिकस्याश्रमे तथा २६
माण्डव्यस्याश्रमे राजन्दिलीपस्याश्रमे तथा
रामह्रदे च कौरव्य पैलगार्ग्यस्य चाश्रमे २७
एतेषु तीर्थेषु तदा काशिकन्या विशां पते
आप्लावयत गात्राणि तीव्रमास्थाय वै तपः २८
तामब्रवीत्कौरवेय मम माता जलोत्थिता
किमर्थं क्लिश्यसे भद्रे तथ्यमेतद्ब्रवीहि मे २९
सैनामथाब्रवीद्राजन्कृताञ्जलिरनिन्दिता
भीष्मो रामेण समरे न जितश्चारुलोचने ३०
कोऽन्यस्तमुत्सहेज्जेतुमुद्यतेषुं महीपतिम्
साहं भीष्मविनाशाय तपस्तप्स्ये सुदारुणम् ३१
चरामि पृथिवीं देवि यथा हन्यामहं नृपम्

एतद्व्रतफलं देहे परस्मिन्स्याद्यथा हि मे ३२
ततोऽब्रवीत्सागरगा जिह्मं चरसि भामिनि
नैष कामोऽनवद्याङ्गि शक्यः प्राप्तुं त्वयाबले ३३
यदि भीष्मविनाशाय काश्ये चरसि वै व्रतम्
व्रतस्था च शरीरं त्वं यदि नाम विमोक्ष्यसि
नदी भविष्यसि शुभे कुटिला वार्षिकोदका ३४
दुस्तीर्था चानभिज्ञेया वार्षिकी नाष्टमासिकी
भीमग्राहवती घोरा सर्वभूतभयङ्करी ३५
एवमुक्त्वा ततो राजन्काशिकन्यां न्यवर्तत
माता मम महाभागा स्मयमानेव भामिनी ३६
कदाचिदष्टमे मासि कदाचिद्दशमे तदा
न प्राश्नीतोदकमपि पुनः सा वरवर्णिनी ३७
सा वत्सभूमिं कौरव्य तीर्थलोभात्ततस्ततः
पतिता परिधावन्ती पुनः काशिपतेः सुता ३८
सा नदी वत्सभूम्यां तु प्रथिताम्बेति भारत
वार्षिकी ग्राहबहुला दुस्तीर्था कुटिला तथा ३९
सा कन्या तपसा तेन भागार्धेन व्यजायत
नदी च राजन्वत्सेषु कन्या चैवाभवत्तदा ४०
इति श्रीमहाभारते उद्योगपर्वणि सप्ताशीत्यधिकशततमोऽध्यायः १८७

## अष्टाशीत्यधिक शततमोऽध्यायः

भीष्म उवाच
ततस्ते तापसाः सर्वे तपसे धृतनिश्चयाम्
दृष्ट्वा न्यवर्तयंस्तात किं कार्यमिति चाब्रुवन् १
तानुवाच ततः कन्या तपोवृद्धानृषींस्तदा
निराकृतास्मि भीष्मेण भ्रंशिता पतिधर्मतः २
वधार्थं तस्य दीक्षा मे न लोकार्थं तपोधनाः
निहत्य भीष्मं गच्छेयं शान्तिमित्येव निश्चयः ३
यत्कृते दुःखवसतिमिमां प्राप्तास्मि शाश्वतीं
पातिलोकाद्विहीना च नैव स्त्री न पुमानिह ४

नाहत्वा युधि गाङ्गेयं निवर्तेयं तपोधनाः
एष मे हृदि सङ्कल्पो यदर्थमिदमुद्यतम् ५
स्त्रीभावे परिनिर्विण्णा पुंस्त्वार्थे कृतनिश्चया
भीष्मे प्रतिचिकीर्षामि नास्मि वार्येति वै पुनः ६
तां देवो दर्शयामास शूलपाणिरुमापतिः
मध्ये तेषां महर्षीणां स्वेन रूपेण भामिनीम् ७
छन्द्यमाना वरेणाथ सा वव्रे मत्पराजयम्
वधिष्यसीति तां देवः प्रत्युवाच मनस्विनीम् ८
ततः सा पुनरेवाथ कन्या रुद्रमुवाच ह
उपपद्येत्कथं देव स्त्रियो मम जयो युधि
स्त्रीभावेन च मे गाढं मनः शान्तमुमापते ९
प्रतिश्रुतश्च भूतेश त्वया भीष्मपराजयः
यथा स सत्यो भवति तथा कुरु वृषध्वज
यथा हन्यां समागम्य भीष्मं शान्तनवं युधि १०
तामुवाच महादेवः कन्यां किल वृषध्वजः
न मे वागनृतं भद्रे प्राह सत्यं भविष्यति ११
वधिष्यसि रणे भीष्मं पुरुषत्वं च लप्स्यसे
स्मरिष्यसि च तत्सर्वं देहमन्यं गता सती १२
द्रुपदस्य कुले जाता भविष्यसि महारथः
शीघ्रास्त्रश्चित्रयोधी च भविष्यसि सुसम्मतः १३
यथोक्तमेव कल्याणि सर्वमेतद्भविष्यति
भविष्यसि पुमान्पश्चात्कस्माच्चित्कालपर्ययात् १४
एवमुक्त्वा महादेवः कपर्दी वृषभध्वजः
पश्यतामेव विप्राणां तत्रैवान्तरधीयत १५
ततः सा पश्यतां तेषां महर्षीणामनिन्दिता
समाहृत्य वनात्तस्मात्काष्ठानि वरवर्णिनी १६
चितां कृत्वा सुमहतीं प्रदाय च हुताशनम्
प्रदीप्तेऽग्नौ महाराज रोषदीप्तेन चेतसा १७
उक्त्वा भीष्मवधायेति प्रविवेश हुताशनम्
ज्येष्ठा काशिसुता राजन्यमुनामभितो नदीम् १८

इति श्रीमहाभारते उद्योगपर्वणि अष्टाशीत्यधिकशततमोऽध्यायः १८८

एकोन नवत्यधिक शततमोऽध्यायः

दुर्योधन उवाच
कथं शिखण्डी गाङ्गेय कन्या भूत्वा सती तदा
पुरुषोऽभवद्युधि श्रेष्ठ तन्मे ब्रूहि पितामह १
भीष्म उवाच
भार्या तु तस्य राजेन्द्र द्रुपदस्य महीपतेः
महिषी दयिता ह्यासीदपुत्रा च विशां पते २
एतस्मिन्नेव काले तु द्रुपदो वै महीपतिः
अपत्यार्थं महाराज तोषयामास शङ्करम् ३
अस्मद्वधार्थं निश्चित्य तपो घोरं समास्थितः
लेभे कन्यां महादेवात्पुत्रो मे स्यादिति ब्रुवन् ४
भगवन्पुत्रमिच्छामि भीष्मं प्रतिचिकीर्षया
इत्युक्तो देवदेवेन स्त्रीपुमांस्ते भविष्यति ५
निवर्तस्व महीपाल नैतज्ञात्वन्यथा भवेत्
स तु गत्वा च नगरं भार्यामिदमुवाच ह ६
कृतो यत्नो मया देवि पुत्रार्थे तपसा महान्
कन्या भूत्वा पुमान्भावी इति चोक्तोऽस्मि शम्भुना ७
पुनः पुनर्याच्यमानो दिष्टमित्यब्रवीच्छिवः
न तदन्यद्धि भविता भवितव्यं हि तत्तथा ८
ततः सा नियता भूत्वा ऋतुकाले मनस्विनी
पत्नी द्रुपदराजस्य द्रुपदं संविवेश ह ९
लेभे गर्भं यथाकालं विधिदृष्टेन हेतुना
पार्षतासा महीपाल यथा मां नारदोऽब्रवीत् १०
ततो दाधार तं गर्भं देवी राजीवलोचना
तां स राजा प्रियां भार्यां द्रुपदः कुरुनन्दन
पुत्रस्नेहान्महाबाहुः सुखं पर्यचरत्तदा ११
अपुत्रस्य ततो राज्ञो द्रुपदस्य महीपतेः
कन्यां प्रवररूपां तां प्राजायत नराधिप १२

अपुत्रस्य तु राज्ञः सा द्रुपदस्य यशस्विनी
ख्यापयामास राजेन्द्र पुत्रो जातो ममेति वै १३
ततः स राजा द्रुपदः प्रच्छन्नाया नराधिप
पुत्रवत्पुत्रकार्याणि सर्वाणि समकारयत् १४
रक्षणं चैव मन्त्रस्य महिषी द्रुपदस्य सा
चकार सर्वयत्नेन ब्रुवाणा पुत्र इत्युत
न हि तां वेद नगरे कश्चिदन्यत्र पार्षतात् १५
श्रद्दधानो हि तद्वाक्यं देवस्याद्भुततेजसः
छादयामास तां कन्यां पुमानिति च सोऽब्रवीत् १६
जातकर्माणि सर्वाणि कारयामास पार्थिवः
पुंवद्विधानयुक्तानि शिखण्डीति च तां विदुः १७
अहमेकस्तु चारेण वचनान्नारदस्य च
ज्ञातवान्देववाक्येन अम्बायास्तपसा तथा १८
इति श्रीमहाभारते उद्योगपर्वणि एकोननवत्यधिकशततमोऽध्यायः १८९

## नवत्यधिक शततमोऽध्यायः

भीष्म उवाच
चकार यत्नं द्रुपदः सर्वस्मिन्स्वजने महत्
ततो लेख्यादिषु तथा शिल्पेषु च परं गता
इष्वस्त्रे चैव राजेन्द्र द्रोणशिष्यो बभूव ह १
तस्य माता महाराज राजानं वरवर्णिनी
चोदयामास भार्यार्थं कन्यायाः पुत्रवत्तदा २
ततस्तां पार्षतो दृष्ट्वा कन्यां सम्प्राप्तयौवनाम्
स्त्रियं मत्वा तदा चिन्तां प्रपेदे सह भार्यया ३
द्रुपद उवाच
कन्या ममेयं सम्प्राप्ता यौवनं शोकवर्धिनी
मया प्रच्छादिता चेयं वचनाच्छूलपाणिनः ४
न तन्मिथ्या महाराज्ञि भविष्यति कथञ्चन
त्रैलोक्यकर्ता कस्माद्धि तन्मृषा कर्तुमर्हति ५
भार्योवाच

यदि ते रोचते राजन्वक्ष्यामि शृणु मे वचः
श्रुत्वेदानीं प्रपद्येथाः स्वकार्यं पृषतात्मज ६
क्रियतामस्य यत्नेन विधिवद्दारसंग्रहः
सत्यं भवति तद्वाक्यमिति मे निश्चिता मतिः ७
भीष्म उवाच
ततस्तौ निश्चयं कृत्वा तस्मिन्कार्येऽथ दम्पती
वरयाञ्चक्रतुः कन्यां दशार्णाधिपतेः सुताम् ८
ततो राजा द्रुपदो राजसिंहः सर्वान्राज्ञः कुलतः सन्निशाम्य
दाशार्णकस्य नृपतेस्तनूजां शिखण्डिने वरयामास दारान् ९
हिरण्यवर्मेति नृपो योऽसौ दाशार्णकः स्मृतः
स च प्रादान्महीपालः कन्यां तस्मै शिखण्डिने १०
स च राजा दशार्णेषु महानासीन्महीपतिः
हिरण्यवर्मा दुर्धर्षो महासेनो महामनाः ११
कृते विवाहे तु तदा सा कन्या राजसत्तम
यौवनं समनुप्राप्ता सा च कन्या शिखण्डिनी १२
कृतदारः शिखण्डी तु काम्पिल्यं पुनरागमत्
न च सा वेद तां कन्यां कञ्चित्कालं स्त्रियं किल १३
हिरण्यवर्मणः कन्या ज्ञात्वा तां तु शिखण्डिनीम्
धात्रीणां च सखीनां च व्रीडमाना न्यवेदयत्
कन्यां पाञ्चालराजस्य सुतां तां वै शिखण्डिनीम् १४
ततस्ता राजशार्दूल धात्र्यो दाशार्णिकास्तदा
जग्मुरार्तिं परां दुःखात्प्रेषयामासुरेव च १५
ततो दशार्णाधिपतेः प्रेष्याः सर्वं न्यवेदयन्
विप्रलम्भं यथावृत्तं स च चुक्रोध पार्थिवः १६
शिखण्ड्यपि महाराज पुंवद्राजकुले तदा
विजहार मुदा युक्तः स्त्रीत्वं नैवातिरोचयन् १७
ततः कतिपयाहस्य तच्छ्रुत्वा भरतर्षभ
हिरण्यवर्मा राजेन्द्र रोषादार्तिं जगाम ह १८
ततो दाशार्णको राजा तीव्रकोपसमन्वितः
दूतं प्रस्थापयामास द्रुपदस्य निवेशने १९

ततो द्रुपदमासाद्य दूतः काञ्चनवर्मणः
एक एकान्तमुत्सार्य रहो वचनमब्रवीत् २०
दशार्णराजो राजंस्त्वामिदं वचनमब्रवीत्
अभिषङ्गात्प्रकुपितो विप्रलब्धस्त्वयानघ २१
अवमन्यसे मां नृपते नूनं दुर्मन्त्रितं तव
यन्मे कन्यां स्वकन्यार्थे मोहाद्याचितवानसि २२
तस्याद्य विप्रलम्भस्य फलं प्राप्नुहि दुर्मते
एष त्वां सजनामात्यमुद्धरामि स्थिरो भव २३
इति श्रीमहाभारते उद्योगपर्वणि नवत्यधिकशततमोऽध्यायः १९०

## एक नवत्यधिक शततमोऽध्यायः

भीष्म उवाच
एवमुक्तस्य दूतेन द्रुपदस्य तदा नृप
चोरस्येव गृहीतस्य न प्रावर्तत भारती १
स यत्नमकरोत्तीव्रं सम्बन्धैरनुसान्त्वनैः
दूतैर्मधुरसम्भाषैर्नैतदस्तीति सन्दिशन् २
स राजा भूय एवाथ कृत्वा तत्त्वत आगमम्
कन्येति पाञ्चालसुतां त्वरमाणोऽभिनिर्ययौ ३
ततः सम्प्रेषयामास मित्राणाममितौजसाम्
दुहितुर्विप्रलम्भं तं धात्रीणां वचनात्तदा ४
ततः समुदयं कृत्वा बलानां राजसत्तमः
अभियाने मतिं चक्रे द्रुपदं प्रति भारत ५
ततः सम्मन्त्रयामास मित्रैः सह महीपतिः
हिरण्यवर्मा राजेन्द्र पाञ्चाल्यं पार्थिवं प्रति ६
तत्र वै निश्चितं तेषामभूद्राज्ञां महात्मनाम्
तथ्यं चेद्भवति ह्येतत्कन्या राजञ्शिखण्डिनी
बद्ध्वा पाञ्चालराजानमानयिष्यामहे गृहान् ७
अन्यं राजानमाधाय पाञ्चालेषु नरेश्वरम्
घातयिष्याम नृपतिं द्रुपदं सशिखण्डिनम् ८
स तदा दूतमाज्ञाय पुनः क्षत्तारमीश्वरः

प्रास्थापयत्पार्षताय हन्मीति त्वां स्थिरो भव ९
स प्रकृत्या च वै भीरुः किल्बिषी च नराधिपः
भयं तीव्रमनुप्राप्तो द्रुपदः पृथिवीपतिः १०
विसृज्य दूतं दाशार्णं द्रुपदः शोककर्शितः
समेत्य भार्यां रहिते वाक्यमाह नराधिपः ११
भयेन महताविष्टो हृदि शोकेन चाहतः
पाञ्चालराजो दयितां मातरं वै शिखण्डिनः १२
अभियास्यति मां कोपात्सम्बन्धी सुमहाबलः
हिरण्यवर्मा नृपतिः कर्षमाणो वरूथिनीम् १३
किमिदानीं करिष्यामि मूढः कन्यामिमां प्रति
शिखण्डी किल पुत्रस्ते कन्येति परिशङ्कितः १४
इति निश्चित्य तत्त्वेन समित्रः सबलानुगः
वञ्चितोऽस्मीति मन्वानो मां किलोद्धर्तुमिच्छति १५
किमत्र तथ्यं सुश्रोणि किं मिथ्या ब्रूहि शोभने
श्रुत्वा त्वत्तः शुभं वाक्यं संविधास्याम्यहं तथा १६
अहं हि संशयं प्राप्तो बाला चेयं शिखण्डिनी
त्वं च राज्ञि महत्कृच्छ्रं सम्प्राप्ता वरवर्णिनि १७
सा त्वं सर्वविमोक्षाय तत्त्वमाख्याहि पृच्छतः
तथा विदध्यां सुश्रोणि कृत्यस्यास्य शुचिस्मिते
शिखण्डिनि च मा भैस्त्वं विधास्ये तत्र तत्त्वतः १८
क्रिययाहं वरारोहे वञ्चितः पुत्रधर्मतः
मया दाशार्णको राजा वञ्चितश्च महीपतिः
तदाचक्ष्व महाभागे विधास्ये तत्र यद्धितम् १९
जानतापि नरेन्द्रेण ख्यापनार्थं परस्य वै
प्रकाशं चोदिता देवी प्रत्युवाच महीपतिम् २०

इति श्रीमहाभारते उद्योगपर्वणि एकनवत्यधिकशततमोऽध्यायः १९१

## द्विनवत्यधिक शततमोऽध्यायः

भीष्म उवाच
ततः शिखण्डिनो माता यथातत्त्वं नराधिप

आचचक्षे महाबाहो भर्त्रे कन्यां शिखण्डिनीम् १
अपुत्रया मया राजन्सपत्नीनां भयादिदम्
कन्या शिखण्डिनी जाता पुरुषो वै निवेदितः २
त्वया चैव नरश्रेष्ठ तन्मे प्रीत्यानुमोदितम्
पुत्रकर्म कृतं चैव कन्यायाः पार्थिवर्षभ
भार्या चोढा त्वया राजन्दशार्णाधिपतेः सुता ३
त्वया च प्रागभिहितं देववाक्यार्थदर्शनात्
कन्या भूत्वा पुमान्भावीत्येवं चैतदुपेक्षितम् ४
एतच्छ्रुत्वा द्रुपदो यज्ञसेनः सर्वं तत्त्वं मन्त्रविद्भ्यो निवेद्य
मन्त्रं राजा मन्त्रयामास राजन्यद्यद्युक्तं रक्षणे वै प्रजानाम् ५
सम्बन्धकं चैव समर्थ्य तस्मिन्दाशार्णके वै नृपतौ नरेन्द्र
स्वयं कृत्वा विप्रलम्भं यथावन्मन्त्रैकाग्रो निश्चयं वै जगाम ६
स्वभावगुप्तं नगरमापत्काले तु भारत
गोपयामास राजेन्द्र सर्वतः समलंकृतम् ७
आर्तिं च परमां राजा जगाम सह भार्यया
दशार्णपतिना सार्धं विरोधे भरतर्षभ ८
कथं सम्बन्धिना सार्धं न मे स्याद्विग्रहो महान्
इति सञ्चिन्त्य मनसा दैवतान्यर्चयत्तदा ९
तं तु दृष्ट्वा तदा राजन्देवी देवपरं तथा
अर्चां प्रयुञ्जानमथो भार्या वचनमब्रवीत् १०
देवानां प्रतिपत्तिश्च सत्या साधुमता सदा
सा तु दुःखार्णवं प्राप्य नः स्यादर्चयतां भृशम् ११
दैवतानि च सर्वाणि पूज्यन्तां भूरिदक्षिणैः
अग्नयश्चापि हूयन्तां दाशार्णप्रतिषेधने १२
अयुद्धेन निवृत्तिं च मनसा चिन्तयाभिभो
देवतानां प्रसादेन सर्वमेतद्भविष्यति १३
मन्त्रिभिर्मन्त्रितं सार्धं त्वया यत्पृथुलोचन
पुरस्यास्याविनाशाय यच्च राजंस्तथा कुरु १४
दैवं हि मानुषोपेतं भृशं सिद्ध्यति पार्थिव
परस्परविरोधात्तु नानयोः सिद्धिरस्ति वै १५

तस्माद्विधाय नगरे विधानं सचिवैः सह
अर्चयस्व यथाकामं दैवतानि विशां पते १६
एवं सम्भाषमाणौ तौ दृष्ट्वा शोकपरायणौ
शिखण्डिनी तदा कन्या व्रीडितेव मनस्विनी १७
ततः सा चिन्तयामास मत्कृते दुःखितावुभौ
इमाविति ततश्चक्रे मतिं प्राणविनाशने १८
एवं सा निश्चयं कृत्वा भृशं शोकपरायणा
जगाम भवनं त्यक्त्वा गहनं निर्जनं वनम् १९
यक्षेणर्द्धिमता राजन्स्थूणाकर्णेन पालितम्
तद्भयादेव च जनो विसर्जयति तद्वनम् २०
तत्र स्थूणस्य भवनं सुधामृत्तिकलेपनम्
लाजोल्लापिकधूमाढ्यमुच्चप्राकारतोरणम् २१
तत्प्रविश्य शिखण्डी सा द्रुपदस्यात्मजा नृप
अनश्नती बहुतिथं शरीरमुपशोषयत् २२
दर्शयामास तां यक्षः स्थूणो मध्वक्षसंयुतः
किमर्थोऽय तवारम्भः करिष्ये ब्रूहि माचिरम् २३
अशक्यमिति सा यक्षं पुनः पुनरुवाच ह
करिष्यामीति चैनां स प्रत्युवाचाथ गुह्यकः २४
धनेश्वरस्यानुचरो वरदोऽस्मि नृपात्मजे
अदेयमपि दास्यामि ब्रूहि यत्ते विवक्षितम् २५
ततः शिखण्डी तत्सर्वमखिलेन न्यवेदयत्
तस्मै यक्षप्रधानाय स्थूणाकर्णाय भारत २६
आपन्नो मे पिता यक्ष नचिराद्विनशिष्यति
अभियास्यति संक्रुद्धो दशार्णाधिपतिर्हि तम् २७
महाबलो महोत्साहः स हेमकवचो नृपः
तस्माद्रक्षस्व मां यक्ष पितरं मातरं च मे २८
प्रतिज्ञातो हि भवता दुःखप्रतिनयो मम
भवेयं पुरुषो यक्ष त्वत्प्रसादादनिन्दितः २९
यावदेव स राजा वै नोपयाति पुरं मम
तावदेव महायक्ष प्रसादं कुरु गुह्यक ३०

इति श्रीमहाभारते उद्योगपर्वणि द्विनवत्यधिकशततमोऽध्यायः १९२

## त्रिनवत्यधिक शततमोऽध्यायः

भीष्म उवाच
शिखण्डिवाक्यं श्रुत्वाथ स यक्षो भरतर्षभ
प्रोवाच मनसा चिन्त्य दैवेनोपनिपीडितः
भवितव्यं तथा तद्धि मम दुःखाय कौरव १
भद्रे कामं करिष्यामि समयं तु निबोध मे
किञ्चित्कालान्तरं दास्ये पुंलिङ्गं स्वमिदं तव
आगन्तव्यं त्वया काले सत्यमेतद्ब्रवीमि ते २
प्रभुः सङ्कल्पसिद्धोऽस्मि कामरूपी विहङ्गमः
मत्प्रसादात्पुरं चैव त्राहि बन्धूंश्च केवलान् ३
स्त्रीलिङ्गं धारयिष्यामि त्वदीयं पार्थिवात्मजे
सत्यं मे प्रतिजानीहि करिष्यामि प्रियं तव ४
शिखण्ड्युवाच
प्रतिदास्यामि भगवँल्लिङ्गं पुनरिदं तव
किञ्चित्कालान्तरं स्त्रीत्वं धारयस्व निशाचर ५
प्रतिप्रयाते दाशार्णे पार्थिवे हेमवर्मणि
कन्यैवाहं भविष्यामि पुरुषस्त्वं भविष्यसि ६
भीष्म उवाच
इत्युक्त्वा समयं तत्र चक्राते तावुभौ नृप
अन्योन्यस्यानभिद्रोहे तौ संक्रामयतां ततः ७
स्त्रीलिङ्गं धारयामास स्थूणो यक्षो नराधिप
यक्षरूपं च तद्दीप्तं शिखण्डी प्रत्यपद्यत ८
ततः शिखण्डी पाञ्चाल्यः पुंस्त्वमासाद्य पार्थिव
विवेश नगरं हृष्टः पितरं च समासदत्
यथावृत्तं तु तत्सर्वमाचख्यौ द्रुपदस्य च ९
द्रुपदस्तस्य तच्छ्रुत्वा हर्षमाहारयत्परम्
सभार्यस्तच्च सस्मार महेश्वरवचस्तदा १०
ततः सम्प्रेषयामास दशार्णाधिपतेर्नृप

पुरुषोऽय मम सुतः श्रद्धत्तां मे भवानिति ११
अथ दाशार्णको राजा सहसाभ्यागमत्तदा
पाञ्चालराजं द्रुपदं दुःखामर्षसमन्वितः १२
ततः काम्पिल्यमासाद्य दशार्णाधिपतिस्तदा
प्रेषयामास सत्कृत्य दूतं ब्रह्मविदां वरम् १३
ब्रूहि मद्वचनाद्दूत पाञ्चाल्यं तं नृपाधमम्
यद्वै कन्यां स्वकन्यार्थे वृतवानसि दुर्मते
फलं तस्यावलेपस्य द्रक्ष्यस्यद्य न संशयः १४
एवमुक्तस्तु तेनासौ ब्राह्मणो राजसत्तम
दूतः प्रयातो नगरं दाशार्णनृपचोदितः १५
तत आसादयामास पुरोधा द्रुपदं पुरे
तस्मै पाञ्चालको राजा गामर्घ्यं च सुसत्कृतम्
प्रापयामास राजेन्द्र सह तेन शिखण्डिना १६
तां पूजां नाभ्यनन्दत्स वाक्यं चेदमुवाच ह
यदुक्तं तेन वीरेण राज्ञा काञ्चनवर्मणा १७
यत्तेऽहमधमाचार दुहित्रर्थेऽस्मि वञ्चितः
तस्य पापस्य करणात्फलं प्राप्नुहि दुर्मते १८
देहि युद्धं नरपते ममाद्य रणमूर्धनि
उद्धरिष्यामि ते सद्यः सामात्यसुतबान्धवम् १९
तदुपालम्भसंयुक्तं श्रावितः किल पार्थिवः
दशार्णपतिदूतेन मन्त्रिमध्ये पुरोधसा २०
अब्रवीद्भरतश्रेष्ठ द्रुपदः प्रणयानतः
यदाह मां भवान्ब्रह्मन्सम्बन्धिवचनाद्वचः
तस्योत्तरं प्रतिवचो दूत एव वदिष्यति २१
ततः सम्प्रेषयामास द्रुपदोऽपि महात्मने
हिरण्यवर्मणे दूतं ब्राह्मणं वेदपारगम् २२
समागम्य तु राज्ञा स दशार्णपतिना तदा
तद्वाक्यमाददे राजन्यदुक्तं द्रुपदेन ह २३
आगमः क्रियतां व्यक्तं कुमारो वै सुतो मम
मिथ्यैतदुक्तं केनापि तन्न श्रद्धेयमित्युत २४

ततः स राजा द्रुपदस्य श्रुत्वा विमर्शयुक्तो युवतीर्वरिष्ठाः
सम्प्रेषयामास सुचारुरूपाः शिखण्डिनं स्त्री पुमान्वेति वेत्तुम् २५
ताः प्रेषितास्तत्त्वभावं विदित्वा प्रीत्या राज्ञे तच्छशंसुर्हि सर्वम्
शिखण्डिनं पुरुषं कौरवेन्द्र दशार्णराजाय महानुभावम् २६
ततः कृत्वा तु राजा स आगमं प्रीतिमानथ
सम्बन्धिना समागम्य हृष्टो वासमुवास ह २७
शिखण्डिने च मुदितः प्रादाद्वित्तं जनेश्वरः
हस्तिनोऽश्वाश्च गाश्चैव दास्यो बहुशतास्तथा
पूजितश्च प्रतिययौ निवर्त्य तनयां किल २८
विनीतकिल्बिषे प्रीते हेमवर्मणि पार्थिवे
प्रतियाते तु दाशार्णे हृष्टरूपा शिखण्डिनी २९
कस्यचित्त्वथ कालस्य कुबेरो नरवाहनः
लोकानुयात्रां कुर्वाणः स्थूणस्यागान्निवेशनम् ३०
स तद्गृहस्योपरि वर्तमान आलोकयामास धनाधिगोप्ता
स्थूणस्य यक्षस्य निशाम्य वेश्म स्वलंकृतं माल्यगुणैर्विचित्रम् ३१
लाजैश्च गन्धैश्च तथा वितानैरभ्यर्चितं धूपनधूपितं च
ध्वजैः पताकाभिरलंकृतं च भक्ष्यान्नपेयामिषदत्तहोमम् ३२
तत्स्थानं तस्य दृष्ट्वा तु सर्वतः समलंकृतम्
अथाब्रवीद्यक्षपतिस्तान्यक्षाननुगांस्तदा ३३
स्वलंकृतमिदं वेश्म स्थूणस्यामितविक्रमाः
नोपसर्पति मां चापि कस्मादद्य सुमन्दधीः ३४
यस्माज्जानन्सुमन्दात्मा मामसौ नोपसर्पति
तस्मात्तस्मै महादण्डो धार्यः स्यादिति मे मतिः ३५
यक्षा ऊचुः
द्रुपदस्य सुता राजन्राज्ञो जाता शिखण्डिनी
तस्यै निमित्ते कस्मिंश्चित्प्रादात्पुरुषलक्षणम् ३६
अग्रहील्लक्षणं स्त्रीणां स्त्रीभूतस्तिष्ठते गृहे
नोपसर्पति तेनासौ सव्रीडः स्त्रीस्वरूपवान् ३७
एतस्मात्कारणाद्राजन्स्थूणो न त्वाद्य पश्यति
श्रुत्वा कुरु यथान्यायं विमानमिह तिष्ठताम् ३८

भीष्म उवाच
आनीयतां स्थूण इति ततो यक्षाधिपोऽब्रवीत्
कर्तास्मि निग्रहं तस्येत्युवाच स पुनः पुनः ३९
सोऽभ्यगच्छत यक्षेन्द्रमाहूतः पृथिवीपते
स्त्रीस्वरूपो महाराज तस्थौ व्रीडासमन्वितः ४०
तं शशाप सुसंक्रुद्धो धनदः कुरुनन्दन
एवमेव भवत्वस्य स्त्रीत्वं पापस्य गुह्यकाः ४१
ततोऽब्रवीद्यक्षपतिर्महात्मा यस्माददास्त्ववमन्येह यक्षान्
शिखण्डिने लक्षणं पापबुद्धे स्त्रीलक्षणं चाग्रहीः पापकर्मन् ४२
अप्रवृत्तं सुदुर्बुद्धे यस्मादेतत्कृतं त्वया
तस्मादद्य प्रभृत्येव त्वं स्त्री स पुरुषस्तथा ४३
ततः प्रसादयामासुर्यक्षा वैश्रवणं किल
स्थूणस्यार्थे कुरुष्वान्तं शापस्येति पुनः पुनः ४४
ततो महात्मा यक्षेन्द्रः प्रत्युवाचानुगामिनः
सर्वान्यक्षगणांस्तात शापस्यान्तचिकीर्षया ४५
हते शिखण्डिनि रणे स्वरूपं प्रतिपत्स्यते
स्थूणो यक्षो निरुद्वेगो भवत्विति महामनाः ४६
इत्युक्त्वा भगवान्देवो यक्षराक्षसपूजितः
प्रययौ सह तैः सर्वैर्निमेषान्तरचारिभिः ४७
स्थूणस्तु शापं सम्प्राप्य तत्रैव न्यवसत्तदा
समये चागमत्तं वै शिखण्डी स क्षपाचरम् ४८
सोऽभिगम्याब्रवीद्वाक्यं प्राप्तोऽस्मि भगवन्निति
तमब्रवीत्ततः स्थूणः प्रीतोऽस्मीति पुनः पुनः ४९
आर्जवेनागतं दृष्ट्वा राजपुत्रं शिखण्डिनम्
सर्वमेव यथावृत्तमाचचक्षे शिखण्डिने ५०
यक्ष उवाच
शप्तो वैश्रवणेनास्मि त्वत्कृते पार्थिवात्मज
गच्छेदानीं यथाकामं चर लोकान्यथासुखम् ५१
दिष्टमेतत्पुरा मन्ये न शक्यमतिवर्तितुम्
गमनं तव चेतो हि पौलस्त्यस्य च दर्शनम् ५२

भीष्म उवाच
एवमुक्तः शिखण्डी तु स्थूणयक्षेण भारत
प्रत्याजगाम नगरं हर्षेण महतान्वितः ५३
पूजयामास विविधैर्गन्धमाल्यैर्महाधनैः
द्विजातीन्देवताश्चापि चैत्यानथ चतुष्पथान् ५४
द्रुपदः सह पुत्रेण सिद्धार्थेन शिखण्डिना
मुदं च परमां लेभे पाञ्चाल्यः सह बान्धवैः ५५
शिष्यार्थं प्रददौ चापि द्रोणाय कुरुपुङ्गव
शिखण्डिनं महाराज पुत्रं स्त्रीपूर्विणं तथा ५६
प्रतिपेदे चतुष्पादं धनुर्वेदं नृपात्मजः
शिखण्डी सह युष्माभिर्धृष्टद्युम्नश्च पार्षतः ५७
मम त्वेतच्चरास्तात यथावत्प्रत्यवेदयन्
जडान्धबधिराकारा ये युक्ता द्रुपदे मया ५८
एवमेष महाराज स्त्रीपुमान्द्रुपदात्मजः
सम्भूतः कौरवश्रेष्ठ शिखण्डी रथसत्तमः ५९
ज्येष्ठा काशिपतेः कन्या अम्बा नामेति विश्रुता
द्रुपदस्य कुले जाता शिखण्डी भरतर्षभ ६०
नाहमेनं धनुष्पाणिं युयुत्सुं समुपस्थितम्
मुहूर्तमपि पश्येयं प्रहरेयं न चाप्युत ६१
व्रतमेतन्मम सदा पृथिव्यामपि विश्रुतम्
स्त्रियां स्त्रीपूर्वके चापि स्त्रीनाम्नि स्त्रीस्वरूपिणि ६२
न मुञ्चेयमहं बाणानिति कौरवनन्दन
न हन्यामहमेतेन कारणेन शिखण्डिनम् ६३
एतत्तत्त्वमहं वेद जन्म तात शिखण्डिनः
ततो नैनं हनिष्यामि समरेष्वाततायिनम् ६४
यदि भीष्मः स्त्रियं हन्याद्धन्यादात्मानमप्युत
नैनं तस्माद्धनिष्यामि दृष्ट्वापि समरे स्थितम् ६५
संजय उवाच
एतच्छ्रुत्वा तु कौरव्यो राजा दुर्योधनस्तदा
मुहूर्तमिव स ध्यात्वा भीष्मे युक्तममन्यत ६६

इति श्रीमहाभारते उद्योगपर्वणि त्रिनवत्यधिकशततमोऽध्यायः १९३

## चतुर्नवत्यधिक शततमोऽध्यायः

सञ्जय उवाच
प्रभातायां तु शर्वर्यां पुनरेव सुतस्तव
मध्ये सर्वस्य सैन्यस्य पितामहमपृच्छत १
पाण्डवेयस्य गाङ्गेय यदेतत्सैन्यमुत्तमम्
प्रभूतनरनागाश्वं महारथसमाकुलम् २
भीमार्जुनप्रभृतिभिर्महेष्वासैर्महाबलैः
लोकपालोपमैर्गुप्तं धृष्टद्युम्नपुरोगमैः ३
अप्रधृष्यमनावार्यमुद्वृत्तमिव सागरम्
सेनासागरमक्षोभ्यमपि देवैर्महाहवे ४
केन कालेन गाङ्गेय क्षपयेथा महाद्युते
आचार्यो वा महेष्वासः कृपो वा सुमहाबलः ५
कर्णो वा समरश्लाघी द्रौणिर्वा द्विजसत्तमः
दिव्यास्त्रविदुषः सर्वे भवन्तो हि बले मम ६
एतदिच्छाम्यहं ज्ञातुं परं कौतूहलं हि मे
हृदि नित्यं महाबाहो वक्तुमर्हसि तन्मम ७
भीष्म उवाच
अनुरूपं कुरुश्रेष्ठ त्वय्येतत्पृथिवीपते
बलाबलममित्राणां स्वेषां च यदि पृच्छसि ८
शृणु राजन्मम रणे या शक्तिः परमा भवेत्
अस्त्रवीर्यं रणे यच्च भुजयोश्च महाभुज ९
आर्जवेनैव युद्धेन योद्धव्य इतरो जनः
मायायुद्धेन मायावी इत्येतद्धर्मनिश्चयः १०
हन्यामहं महाबाहो पाण्डवानामनीकिनीम्
दिवसे दिवसे कृत्वा भागं प्रागाह्निकं मम ११
योधानां दशसाहस्रं कृत्वा भागं महाद्युते
सहस्रं रथिनामेकमेष भागो मतो मम १२
अनेनाहं विधानेन सन्नद्धः सततोत्थितः

क्षपयेयं महत्सैन्यं कालेनानेन भारत १३
यदि त्वस्त्राणि मुञ्चेयं महान्ति समरे स्थितः
शतसाहस्रघातीनि हन्यां मासेन भारत १४
सञ्जय उवाच
श्रुत्वा भीष्मस्य तद्वाक्यं राजा दुर्योधनस्तदा
पर्यपृच्छत राजेन्द्र द्रोणमङ्गिरसां वरम् १५
आचार्य केन कालेन पाण्डुपुत्रस्य सैनिकान्
निहन्या इति तं द्रोणः प्रत्युवाच हसन्निव १६
स्थविरोऽस्मि कुरुश्रेष्ठ मन्दप्राणविचेष्टितः
अस्त्राग्निना निर्दहेयं पाण्डवानामनीकिनीम् १७
यथा भीष्मः शान्तनवो मासेनेति मतिर्मम
एषा मे परमा शक्तिरेतन्मे परमं बलम् १८
द्वाभ्यामेव तु मासाभ्यां कृपः शारद्वतोऽब्रवीत्
द्रौणिस्तु दशरात्रेण प्रतिजज्ञे बलक्षयम्
कर्णस्तु पञ्चरात्रेण प्रतिजज्ञे महास्त्रवित् १९
तच्छ्रुत्वा सूतपुत्रस्य वाक्यं सागरगासुतः
जहास सस्वनं हासं वाक्यं चेदमुवाच ह २०
न हि तावद्रणे पार्थं बाणखड्गधनुर्धरम्
वासुदेवसमायुक्तं रथेनोद्यन्तमच्युतम् २१
समागच्छसि राधेय तेनैवमभिमन्यसे
शक्यमेवं च भूयश्च त्वया वक्तुं यथेष्टतः २२
इति श्रीमहाभारते उद्योगपर्वणि चतुर्नवत्यधिकशततमोऽध्यायः १९४

## पञ्च नवत्यधिक शततमोऽध्यायः

वैशम्पायन उवाच
एतच्छ्रुत्वा तु कौन्तेयः सर्वान्भ्रातॄनुपह्वरे
आहूय भरतश्रेष्ठ इदं वचनमब्रवीत् १
धार्तराष्ट्रस्य सैन्येषु ये चारपुरुषा मम
ते प्रवृत्तिं प्रयच्छन्ति ममेमां व्युषितां निशाम् २
दुर्योधनः किलापृच्छदापगेयं महाव्रतम्

केन कालेन पाण्डूनां हन्याः सैन्यमिति प्रभो ३
मासेनेति च तेनोक्तो धार्तराष्ट्रः सुदुर्मतिः
तावता चापि कालेन द्रोणोऽपि प्रत्यजानत ४
गौतमो द्विगुणं कालमुक्तवानिति नः श्रुतम्
द्रौणिस्तु दशरात्रेण प्रतिजज्ञे महास्त्रवित् ५
तथा दिव्यास्त्रवित्कर्णः सम्पृष्टः कुरुसंसदि
पञ्चभिर्दिवसैर्हन्तुं स सैन्यं प्रतिजज्ञिवान् ६
तस्मादहमपीच्छामि श्रोतुमर्जुन ते वचः
कालेन कियता शत्रून्क्षपयेरिति संयुगे ७
एवमुक्तो गुडाकेशः पार्थिवेन धनञ्जयः
वासुदेवमवेक्ष्येदं वचनं प्रत्यभाषत ८
सर्व एते महात्मानः कृतास्त्राश्चित्रयोधिनः
असंशयं महाराज हन्युरेव बलं तव ९
अपैतु ते मनस्तापो यथा सत्यं ब्रवीम्यहम्
हन्यामेकरथेनाहं वासुदेवसहायवान् १०
सामरानपि लोकांस्त्रीन्सहस्थावरजङ्गमान्
भूतं भव्यं भविष्यच्च निमेषादिति मे मतिः ११
यत्तद्घोरं पशुपतिः प्रादादस्त्रं महन्मम
कैराते द्वन्द्वयुद्धे वै तदिदं मयि वर्तते १२
यद्युगान्ते पशुपतिः सर्वभूतानि संहरन्
प्रयुङ्क्ते पुरुषव्याघ्र तदिदं मयि वर्तते १३
तन्न जानाति गाङ्गेयो न द्रोणो न च गौतमः
न च द्रोणसुतो राजन्कुत एव तु सूतजः १४
न तु युक्तं रणे हन्तुं दिव्यैरस्त्रैः पृथग्जनम्
आर्जवेनैव युद्धेन विजेष्यामो वयं परान् १५
तथेमे पुरुषव्याघ्राः सहायास्तव पार्थिव
सर्वे दिव्यास्त्रविदुषः सर्वे युद्धाभिनन्दिनः १६
वेदान्तावभृथस्नाताः सर्व एतेऽपराजिताः
निहन्युः समरे सेनां देवानामपि पाण्डव १७
शिखण्डी युयुधानश्च धृष्टद्युम्नश्च पार्षतः

भीमसेनो यमौ चोभौ युधामन्यूत्तमौजसौ १८
विराटद्रुपदौ चोभौ भीष्मद्रोणसमौ युधि
स्वयं चापि समर्थोऽसि त्रैलोक्योत्सादने अपि १९
क्रोधाद्यं पुरुषं पश्येस्त्वं वासवसमद्युते
क्षिप्रं न स भवेद्व्यक्तमिति त्वां वेद्मि कौरव २०
इति श्रीमहाभारते उद्योगपर्वणि पञ्चनवत्यधिकशततमोऽध्यायः १९५

षगणवत्यधिक शततमोऽध्यायः

वैशम्पायन उवाच
ततः प्रभाते विमले धार्तराष्ट्रेण चोदिताः
दुर्योधनेन राजानः प्रययुः पाण्डवान्प्रति १
आप्लाव्य शुचयः सर्वे स्रग्विणः शुक्लवाससः
गृहीतशस्त्रा ध्वजिनः स्वस्ति वाच्य हुताग्नयः २
सर्वे वेदविदः शूराः सर्वे सुचरितव्रताः
सर्वे कर्मकृतश्चैव सर्वे चाहवलक्षणाः ३
आहवेषु पराँल्लोकाञ्जिगीषन्तो महाबलाः
एकाग्रमनसः सर्वे श्रद्दधानाः परस्य च ४
विन्दानुविन्दावावन्त्यौ केकया बाह्लिकैः सह
प्रययुः सर्व एवैते भारद्वाजपुरोगमाः ५
अश्वत्थामा शान्तनवः सैन्धवोऽथ जयद्रथः
दाक्षिणात्याः प्रतीच्याश्च पार्वतीयाश्च ये रथाः ६
गान्धारराजः शकुनिः प्राच्योदीच्याश्च सर्वशः
शकाः किराता यवनाः शिबयोऽथ वसातयः ७
स्वैः स्वैरनीकैः सहिताः परिवार्य महारथम्
एते महारथाः सर्वे द्वितीये निर्ययुर्बले ८
कृतवर्मा सहानीकस्त्रिगर्ताश्च महाबलाः
दुर्योधनश्च नृपतिर्भ्रातृभिः परिवारितः ९
शलो भूरिश्रवाः शल्यः कौसल्योऽथ बृहद्बलः
एते पश्चादवर्तन्त धार्तराष्ट्रपुरोगमाः १०
ते समेन पथा यात्वा योत्स्यमाना महारथाः

कुरुक्षेत्रस्य पश्चार्धे व्यवतिष्ठन्त दंशिताः ११
दुर्योधनस्तु शिबिरं कारयामास भारत
यथैव हास्तिनपुरं द्वितीयं समलंकृतम् १२
न विशेषं विजानन्ति पुरस्य शिबिरस्य वा
कुशला अपि राजेन्द्र नरा नगरवासिनः १३
तादृशान्येव दुर्गाणि राज्ञामपि महीपतिः
कारयामास कौरव्यः शतशोऽथ सहस्रशः १४
पञ्चयोजनमुत्सृज्य मण्डलं तद्रणाजिरम्
सेनानिवेशास्ते राजन्नाविशञ्शतसङ्घशः १५
तत्र ते पृथिवीपाला यथोत्साहं यथाबलम्
विविशुः शिबिराण्याशु द्रव्यवन्ति सहस्रशः १६
तेषां दुर्योधनो राजा ससैन्यानां महात्मनाम्
व्यादिदेश सबाह्यानां भक्ष्यभोज्यमनुत्तमम् १७
सगजाश्वमनुष्याणां ये च शिल्पोपजीविनः
ये चान्येऽनुगतास्तत्र सूतमागधबन्दिनः १८
वणिजो गणिका वारा ये चैव प्रेक्षका जनाः
सर्वांस्तान्कौरवो राजा विधिवत्प्रत्यवैक्षत १९
इति श्रीमहाभारते उद्योगपर्वणि षण्णवत्यधिकशततमोऽध्यायः १९६

## सप्तनवत्यधिक शततमोऽध्यायः

वैशम्पायन उवाच
तथैव राजा कौन्तेयो धर्मपुत्रो युधिष्ठिरः
धृष्टद्युम्नमुखान्वीरांश्चोदयामास भारत १
चेदिकाशिकरूषाणां नेतारं दृढविक्रमम्
सेनापतिममित्रघ्नं धृष्टकेतुमथादिशत् २
विराटं द्रुपदं चैव युयुधानं शिखण्डिनम्
पाञ्चाल्यौ च महेष्वासौ युधामन्यूत्तमौजसौ ३
ते शूराश्चित्रवर्माणस्तप्तकुण्डलधारिणः
आज्यावसिक्ता ज्वलिता धिष्ण्येष्विव हुताशनाः

अशोभन्त महेष्वासा ग्रहाः प्रज्वलिता इव ४
सोऽथ सैन्यं यथायोगं पूजयित्वा नरर्षभः
दिदेश तान्यनीकानि प्रयाणाय महीपतिः ५
अभिमन्युं बृहन्तं च द्रौपदेयांश्च सर्वशः
धृष्टद्युम्नमुखानेतान्प्राहिणोत्पाण्डुनन्दनः ६
भीमं च युयुधानं च पाण्डवं च धनञ्जयम्
द्वितीयं प्रेषयामास बलस्कन्धं युधिष्ठिरः ७
भाण्डं समारोपयतां चरतां सम्प्रधावताम्
हृष्टानां तत्र योधानां शब्दो दिवमिवास्पृशत् ८
स्वयमेव ततः पश्चाद्विराटद्रुपदान्वितः
तथान्यैः पृथिवीपालैः सह प्रायान्महीपतिः ९
भीमधन्वायनी सेना धृष्टद्युम्नपुरस्कृता
गङ्गेव पूर्णा स्तिमिता स्यन्दमाना व्यदृश्यत १०
ततः पुनरनीकानि व्ययोजयत बुद्धिमान्
मोहयन्धृतराष्ट्रस्य पुत्राणां बुद्धिनिस्रवम् ११
द्रौपदेयान्महेष्वासानभिमन्युं च पाण्डवः
नकुलं सहदेवं च सर्वांश्चैव प्रभद्रकान् १२
दश चाश्वसहस्राणि द्विसाहस्रं च दन्तिनः
अयुतं च पदातीनां रथाः पञ्चशतास्तथा १३
भीमसेनं च दुर्धर्षं प्रथमं प्रादिशद्बलम्
मध्यमे च विराटं च जयत्सेनं च मागधम् १४
महारथौ च पाञ्चाल्यौ युधामन्यूत्तमौजसौ
वीर्यवन्तौ महात्मानौ गदाकार्मुकधारिणौ
अन्वयातां ततो मध्ये वासुदेवधनञ्जयौ १५
बभूवुरतिसंरब्धाः कृतप्रहरणा नराः
तेषां विंशतिसाहस्रा ध्वजाः शूरैरधिष्ठिताः १६
पञ्च नागसहस्राणि रथवंशाश्च सर्वशः
पदातयश्च ये शूराः कार्मुकासिगदाधराः
सहस्रशोऽन्वयुः पश्चादग्रतश्च सहस्रशः १७
युधिष्ठिरो यत्र सैन्ये स्वयमेव बलार्णवे

तत्र ते पृथिवीपाला भूयिष्ठं पर्यवस्थिताः १८
तत्र नागसहस्राणि हयानामयुतानि च
तथा रथसहस्राणि पदातीनां च भारत
यदाश्रित्याभियुयुधे धार्तराष्ट्रं सुयोधनम् १९
ततोऽन्ये शतशः पश्चात्सहस्रायुतशो नराः
नदन्तः प्रययुस्तेषामनीकानि सहस्रशः २०
तत्र भेरीसहस्राणि शङ्खानामयुतानि च
वादयन्ति स्म संहृष्टाः सहस्रायुतशो नराः २१

इति श्रीमहाभारते उद्योगपर्वणि सप्तनवत्यधिकशततमोऽध्यायः १९७

समाप्तमम्बोपाख्यानपर्व

उद्योगपर्व समाप्त

# भीष्मपर्व

श्रीगणेशाय नमः
ॐ नारायणं नमस्कृत्य नरं चैव नरोत्तमम्
देवीं सरस्वतीं चैव ततो जयमुदीरयेत्

## अथ प्रथमोऽध्यायः

जनमेजय उवाच
कथं युयुधिरे वीराः कुरुपाण्डवसोमकाः
पार्थिवाश्च महाभागा नानादेशसमागताः १
वैशम्पायन उवाच
यथा युयुधिरे वीराः कुरुपाण्डवसोमकाः
कुरुक्षेत्रे तपःक्षेत्रे शृणु तत्पृथिवीपते २
अवतीर्य कुरुक्षेत्रं पाण्डवाः सहसोमकाः
कौरवानभ्यवर्तन्त जिगीषन्तो महाबलाः ३
वेदाध्ययनसम्पन्नाः सर्वे युद्धाभिनन्दिनः
आशंसन्तो जयं युद्धे वधं वाभिमुखा रणे ४
अभियाय च दुर्धर्षां धार्तराष्ट्रस्य वाहिनीम्
प्राङ्मुखाः पश्चिमे भागे न्यविशन्त ससैनिकाः ५
समन्तपञ्चकाद्बाह्यं शिबिराणि सहस्रशः
कारयामास विधिवत्कुन्तीपुत्रो युधिष्ठिरः ६
शून्येव पृथिवी सर्वा बालवृद्धावशेषिता
निरश्वपुरुषा चासीद्रथकुञ्जरवर्जिता ७
यावत्तपति सूर्यो हि जम्बूद्वीपस्य मण्डलम्
तावदेव समावृत्तं बलं पार्थिवसत्तम ८
एकस्थाः सर्ववर्णास्ते मण्डलं बहुयोजनम्
पर्याक्रामन्त देशांश्च नदीः शैलान्वनानि च ९
तेषां युधिष्ठिरो राजा सर्वेषां पुरुषर्षभ
आदिदेश सवाहानां भक्ष्यभोज्यमनुत्तमम् १०

संज्ञाश्च विविधास्तास्तास्तेषां रात्रौ युधिष्ठिरः
एवंवादी वेदितव्यः पाण्डवेयोऽयमित्युत ११
अभिज्ञानानि सर्वेषां संज्ञाश्चाभरणानि च
योजयामास कौरव्यो युद्धकाल उपस्थिते १२
दृष्ट्वा ध्वजाग्रं पार्थानां धार्तराष्ट्रो महामनाः
सह सर्वैर्महीपालैः प्रत्यव्यूहत पाण्डवान् १३
पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्धनि
मध्ये नागसहस्रस्य भ्रातृभिः परिवारितम् १४
दृष्ट्वा दुर्योधनं हृष्टाः सर्वे पाण्डवसैनिकाः
दध्मुः सर्वे महाशङ्खान्भेरीर्जघ्नुः सहस्रशः १५
ततः प्रहृष्टां स्वां सेनामभिवीक्ष्याथ पाण्डवाः
बभूवुर्हृष्टमनसो वासुदेवश्च वीर्यवान् १६
ततो योधान्हर्षयन्तौ वासुदेवधनञ्जयौ
दध्मतुः पुरुषव्याघ्रौ दिव्यौ शङ्खौ रथे स्थितौ १७
पाञ्चजन्यस्य निर्घोषं देवदत्तस्य चोभयोः
श्रुत्वा सवाहना योधाः शकृन्मूत्रं प्रसुस्रुवुः १८
यथा सिंहस्य नदतः स्वनं श्रुत्वेतरे मृगाः
त्रसेयुस्तद्वदेवासीद्धार्तराष्ट्रबलं तदा १९
उदतिष्ठद्रजो भौमं न प्राज्ञायत किञ्चन
अन्तर्धीयत चादित्यः सैन्येन रजसावृतः २०
ववर्ष चात्र पर्जन्यो मांसशोणितवृष्टिमान्
युक्षन्सर्वाण्यनीकानि तदद्भुतमिवाभवत् २१
वायुस्ततः प्रादुरभून्नीचैः शर्करकर्षणः
विनिघ्नंस्तान्यनीकानि विधमंश्चैव तद्रजः २२
उभे सेने तदा राजन्युद्धाय मुदिते भृशम्
कुरुक्षेत्रे स्थिते यत्ते सागरक्षुभितोपमे २३
तयोस्तु सेनयोरासीदद्भुतः स समागमः
युगान्ते समनुप्राप्ते द्वयोः सागरयोरिव २४
शून्यासीत्पृथिवी सर्वा बालवृद्धावशेषिता
तेन सेनासमूहेन समानीतेन कौरवैः २५

ततस्ते समयं चक्रुः कुरुपाण्डवसोमकाः
धर्मांश्च स्थापयामासुर्युद्धानां भरतर्षभ २६
निवृत्ते चैव नो युद्धे प्रीतिश्च स्यात्परस्परम्
यथापुरं यथायोगं न च स्याच्छलनं पुनः २७
वाचा युद्धे प्रवृत्ते नो वाचैव प्रतियोधनम्
निष्क्रान्तः पृतनामध्यान्न हन्तव्यः कथंचन २८
रथी च रथिना योध्यो गजेन गजधूर्गतः
अश्वेनाश्वी पदातिश्च पदातेनैव भारत २९
यथायोगं यथावीर्यं यथोत्साहं यथावयः
समाभाष्य प्रहर्तव्यं न विश्वस्ते न विह्वले ३०
परेण सह संयुक्तः प्रमत्तो विमुखस्तथा
क्षीणशस्त्रो विवर्मा च न हन्तव्यः कथंचन ३१
न सूतेषु न धुर्येषु न च शस्त्रोपनायिषु
न भेरीशङ्खवादेषु प्रहर्तव्यं कथञ्चन ३२
एवं ते समयं कृत्वा कुरुपाण्डवसोमकाः
विस्मयं परमं जग्मुः प्रेक्षमाणाः परस्परम् ३३
निविश्य च महात्मानस्ततस्ते पुरुषर्षभाः
हृष्टरूपाः सुमनसो बभूवुः सहसैनिकाः ३४
इति श्रीमहाभारते भीष्मपर्वणि प्रथमोऽध्यायः १

## द्वितीयोऽध्यायः

वैशम्पायन उवाच
ततः पूर्वापरे संध्ये समीक्ष्य भगवानृषिः
सर्ववेदविदां श्रेष्ठो व्यासः सत्यवतीसुतः १
भविष्यति रणे घोरे भरतानां पितामहः
प्रत्यक्षदर्शी भगवान्भूतभव्यभविष्यवित् २
वैचित्रवीर्यं राजानं सरहस्यं ब्रवीदिदम्
शोचन्तमार्तं ध्यायन्तं पुत्राणामनयं तदा ३
व्यास उवाच
राजन्परीतकालास्ते पुत्राश्चाऽन्ये च भूमिपाः

ते हनिष्यन्ति संग्रामे समासाद्येतरेतरम् ४
तेषु कालपरीतेषु विनश्यत्सु च भारत
कालपर्यायमाज्ञाय मा स्म शोके मनः कृथाः ५
यदि त्विच्छसि संग्रामे द्रष्टुमेनं विशां पते
चक्षुर्ददानि ते हन्त युद्धमेतन्निशामय ६
धृतराष्ट्र उवाच
न रोचये ज्ञातिवधं द्रष्टुं ब्रह्मर्षिसत्तम
युद्धमेतत्त्वशेषेण शृणुयां तव तेजसा ७
वैशम्पायन उवाच
तस्मिन्ननिच्छति द्रष्टुं संग्रामं श्रोतुमिच्छति
वराणामीश्वरो दाता सञ्जयाय वरं ददौ ८
व्यास उवाच
एष ते सञ्जयो राजन्युद्धमेतद्वदिष्यति
एतस्य सर्वं स्संग्रामं न परोक्षं भविष्यति ९
चक्षुषा सञ्जयो राजन्दिव्येनैष समन्वितः
कथयिष्यति ते युद्धं सर्वज्ञश्च भविष्यति १०
प्रकाशं वा रहस्यं वा रात्रौ वा यदि वा दिवा
मनसा चिन्तितमपि सर्वं वेत्स्यति सञ्जयः ११
नैनं शस्त्राणि भेत्स्यन्ति नैनं बाधिष्यते श्रमः
गावल्गणिरयं जीवन्युद्धादस्माद्विमोक्ष्यते १२
अहं च कीर्तिमेतेषां कुरूणां भरतर्षभ
पाण्डवानां च सर्वेषां प्रथयिष्यामि मा शुचः १३
दिष्टमेतत्पुरा चैव नात्र शोचितुमर्हसि
न चैव शक्यं संयन्तुं यतो धर्मस्ततो जयः १४
वैशम्पायन उवाच
एवमुक्त्वा स भगवान्कुरूणां प्रपितामहः
पुनरेव महाबाहुं धृतराष्ट्रमुवाच ह १५
इह युद्धे महाराज भविष्यति महान्क्षयः
यथेमानि निमित्तानि भयायाद्योपलक्षये १६
श्येना गृध्राश्च काकाश्च कङ्काश्च सहिता बलैः

सम्पतन्ति वनान्तेषु समवायांश्च कुर्वते १७
अत्युग्रं च प्रपश्यन्ति युद्धमानन्दिनो द्विजाः
क्रव्यादा भक्षयिष्यन्ति मांसानि गजवाजिनाम् १८
खटाखटेति वाशन्तो भैरवं भयवेदिनः
कह्वाः प्रयान्ति मध्येन दक्षिणामभितो दिशम् १९
उभे पूर्वापरे सन्ध्ये नित्यं पश्यामि भारत
उदयास्तमने सूर्यं कबन्धैः परिवारितम् २०
श्वेतलोहितपर्यन्ताः कृष्णग्रीवाः सविद्युतः
त्रिवर्णाः परिघाः सन्धौ भानुमावारयन्त्युत २१
ज्वलितार्केन्दुनक्षत्रं निर्विशेषदिनक्षपम्
अहोरात्रं मया दृष्टं तत्क्षयाय भविष्यति २२
अलक्ष्यः प्रभया हीनः पौर्णमासीं च कार्त्तिकीम्
चन्द्रोऽभूदग्निवर्णश्च समवर्णे नभस्थले २३
स्वप्स्यन्ति निहता वीरा भूमिमावृत्य पार्थिवाः
राजानो राजपुत्राश्च शूराः परिघबाहवः २४
अन्तरिक्षे वराहस्य वृषदंशस्य चोभयोः
प्रणादं युध्यतो रात्रौ रौद्रं नित्यं प्रलक्षये २५
देवताप्रतिमाश्चापि कम्पन्ति च हसन्ति च
वमन्ति रुधिरं चास्यैः स्विद्यन्ति प्रपतन्ति च २६
अनाहता दुन्दुभयः प्रणदन्ति विशां पते
अयुक्ताश्च प्रवर्तन्ते क्षत्रियाणां महारथाः २७
कोकिलाः शतपत्राश्च चाषा भासाः शुकास्तथा
सारसाश्च मयूराश्च वाचो मुञ्चन्ति दारुणाः २८
गृहीतशस्त्राभरणा वर्मिणो वाजिपृष्ठगाः
अरुणोदयेषु दृश्यन्ते शतशः शलभव्रजाः २९
उभे सन्ध्ये प्रकाशेते दिशां दाहसमन्विते
आसीद्रुधिरवर्षं च अस्थिवर्षं च भारत ३०
या चैषा विश्रुता राजंस्त्रैलोक्ये साधुसंमता
अरुन्धती तथाप्येष वसिष्ठः पृष्ठतः कृतः ३१
रोहिणीं पीडयन्नेष स्थितो राजञ्शनैश्चरः

व्यावृत्तं लक्ष्म सोमस्य भविष्यति महद्भयम् ३२
अनभ्रे च महाघोरं स्तनितं श्रूयतेऽनिशम्
वाहनानां च रुदतां प्रपतन्त्यश्रुबिन्दवः ३३
इति श्रीमहाभारते भीष्मपर्वणि द्वितीयोऽध्यायः २

## तृतीयोऽध्यायः

व्यास उवाच
खरा गोषु प्रजायन्ते रमन्ते मातृभिः सुताः
अनार्तवं पुष्पफलं दर्शयन्ति वने द्रुमाः १
गर्भिण्यो राजपुत्र्यश्च जनयन्ति विभीषणान्
क्रव्यादान्पक्षिणश्चैव गोमायूनपरान्मृगान् २
त्रिविषाणाश्चतुर्नेत्राः पञ्चपादा द्विमेहनाः
द्विशीर्षाश्च द्विपुच्छाश्च दंष्ट्रिणः पशवोऽशिवाः ३
जायन्ते विवृतास्याश्च व्याहरन्तोऽशिवा गिरः
त्रिपदाः शिखिनस्तार्क्ष्याश्चतुर्दंष्ट्रा विषाणिनः ४
तथैवान्याश्च दृश्यन्ते स्त्रियश्च ब्रह्मवादिनाम्
वैनतेयान्मयूरांश्च जनयन्त्य पुरे तव ५
गोवत्सं वडवा सूते श्वा सृगालं महीपते
ककराञ्शारिकाश्चैव शुकांश्चाशुभवादिनः ६
स्त्रियः काश्चित्प्रजायन्ते चतस्रः पञ्च कन्यकाः
ता जातमात्रा नृत्यन्ति गायन्ति च हसन्ति च ७
पृथग्जनस्य कुडकाः स्तनपाः स्तेनवेश्मनि
नृत्यन्ति परिगायन्ति वेदयन्तो महद्भयम् ८
प्रतिमाश्चालिखन्त्यन्ये सशस्त्राः कालचोदिताः
अन्योन्यमभिधावन्ति शिशवो दण्डपाणयः
उपरुन्धन्ति कृत्वा च नगराणि युयुत्सवः ९
पद्मोत्पलानि वृक्षेषु जायन्ते कुमुदानि च
विष्वग्वाताश्च वान्त्युग्रा रजो न व्युपशाम्यति १०
अभीक्ष्णं कम्पते भूमिरर्कं राहुस्तथाग्रसत्
श्वेतो ग्रहस्तथा चित्रां समतिक्रम्य तिष्ठति ११

अभावं हि विशेषेण कुरूणां प्रतिपश्यति
धूमकेतुर्महाघोरः पुष्यमाक्रम्य तिष्ठति १२
सेनयोरशिवं घोरं करिष्यति महाग्रहः
मघास्वङ्गारको वक्रः श्रवणे च बृहस्पतिः १३
भाग्यं नक्षत्रमाक्रम्य सूर्यपुत्रेण पीडयते
शुक्रः प्रोष्ठपदे पूर्वे समारुह्य विशां पते
उत्तरे तु परिक्रम्य सहितः प्रत्युदीक्षते १४
श्यामो ग्रहः प्रज्वलितः सधूमः सहपावकः
एन्द्रं तेजस्वि नक्षत्रं ज्येष्ठामाक्रम्य तिष्ठति १५
ध्रुवः प्रज्वलितो घोरमपसव्यं प्रवर्तते
चित्रास्वात्यन्तरे चैव धिष्ठितः परुषो ग्रहः १६
वक्रानुवक्रं कृत्वा च श्रवणे पावकप्रभः
ब्रह्मराशिं समावृत्य लोहिताङ्गो व्यवस्थितः १७
सर्वसस्यप्रतिच्छन्ना पृथिवी फलमालिनी
पञ्चशीर्षा यवाश्चैव शतशीर्षाश्च शालयः १८
प्रधानाः सर्वलोकस्य यास्वायत्तमिदं जगत्
ता गावः प्रस्नुता वत्सैः शोणितं प्रक्षरन्त्युत १९
निश्चेरुरपिधानेभ्यः खड्गाः प्रज्वलिता भृशम्
व्यक्तं पश्यन्ति शस्त्राणि संग्रामं समुपस्थितम् २०
अग्निवर्णा यथा भासः शस्त्राणामुदकस्य च
कवचानां ध्वजानां च भविष्यति महान्क्षयः २१
दिक्षु प्रज्वलितास्याश्च व्याहरन्ति मृगद्विजाः
अत्याहितं दर्शयन्तो वेदयन्ति महद्भयम् २२
एकपक्षाक्षिचरणः शकुनिः खचरो निशि
रौद्रं वदति संरब्धः शोणितं छर्दयन्मुहुः २३
ग्रहौ ताम्रारुणशिखौ प्रज्वलन्ताविव स्थितौ
सप्तर्षीणामुदाराणां समवच्छाद्य वै प्रभाम् २४
संवत्सरस्थायिनौ च ग्रहौ प्रज्वलितावुभौ
विशाखयोः समीपस्थौ बृहस्पतिशनैश्चरौ २५
कृत्तिकासु ग्रहस्तीव्रो नक्षत्रे प्रथमे ज्वलन्

वपूंष्यपहरन्भासा धूमकेतुरिवस्थितः २६
त्रिषु पूर्वेषु सर्वेषु नक्षत्रेषु विशांपते
बुधः सम्पततेऽभीक्ष्णं जनयन्सुमहद्भयम् २७
चतुर्दशीं पञ्चदशीं भूतपूर्वां च षोडशीम्
इमां तु नाभिजानामि अमावास्यां त्रयोदशीम् २८
चन्द्रसूर्यावुभौ ग्रस्तावेकमासे त्रयोदशीम्
अपर्वणि ग्रहावेतौ प्रजाः संक्षपयिष्यतः २९
रजोवृता दिशः सर्वाः पांसुवर्षैः समन्ततः
उत्पातमेघा रौद्राश्च रात्रौ वर्षन्ति शोणितम् ३०
मांसवर्षं पुनस्तीव्रमासीत्कृष्णचतुर्दशीम्
अर्धरात्रे महाघोरमतृप्यंस्तत्र राक्षसाः ३१
प्रतिस्रोतोऽवहन्नद्यः सरितः शोणितोदकाः
फेनायमानाः कूपाश्च नर्दन्ति वृषभा इव
पतन्त्युल्काः सनिर्घाताः शुष्काशनिविमिश्रिताः ३२
अद्य चैव निशां व्युष्टामुदयं भानुराहतः
ज्वलन्तीभिर्महोल्काभिश्चतुर्भिः सर्वतोदिशम् ३३
आदित्यमुपतिष्ठद्भिस्तत्र चोक्तं महर्षिभिः
भूमिपालसहस्राणां भूमिः पास्यति शोणितम् ३४
कैलासमन्दराभ्यां तु तथा हिमवतो गिरेः
सहस्रशो महाशब्दं शिखराणि पतन्ति च ३५
महाभूता भूमिकम्पे चतुरः सागरान्पृथक्
वेलामुद्वर्तयन्ति स्म क्षोभयन्तः पुनः पुनः ३६
वृक्षानुन्मथ्य वान्त्युग्रा वाताः शर्करकर्षिणः
पतन्ति चैत्यवृक्षाश्च ग्रामेषु नगरेषु च ३७
पीतलोहितनीलश्च ज्वलत्यग्निर्हुतो द्विजैः
वामार्चिः शावगन्धी च धूमप्रायः खरस्वनः
स्पर्शा गन्धा रसाश्चैव विपरीता महीपते ३८
धूमायन्ते ध्वजा राज्ञां कम्पमाना मुहुर्मुहुः
मुञ्चन्त्यङ्गारवर्षाणि भेर्योऽथ पटहास्तथा ३९
प्रासादशिखराग्रेषु पुरद्वारेषु चैव हि

गृध्राः परिपतन्त्युग्रा वामं मराडलमाश्रिताः ४०
पक्वापक्वेति सुभृशं वावाश्यन्ते वयांसि च
निलीयन्ते ध्वजाग्रेषु क्षयाय पृथिवीक्षिताम् ४१
ध्यायन्तः प्रकिरन्तश्च वालान्वेपथुसंयुताः
रुदन्ति दीनास्तुरगा मातङ्गाश्च सहस्रशः ४२
एतच्छ्रुत्वा भवानत्र प्राप्तकालं व्यवस्यताम्
यथा लोकः समुच्छेदं नायं गच्छेत भारत ४३
वैशम्पायन उवाच
पितुर्वचो निशम्यैतद्धृतराष्ट्रोऽब्रवीदिदम्
दिष्टमेतत्पुरा मन्ये भविष्यति न संशयः ४४
क्षत्रियाः क्षत्रधर्मेण वध्यन्ते यदि संयुगे
वीरलोकं समासाद्य सुखं प्राप्स्यन्ति केवलम् ४५
इह कीर्तिं परे लोके दीर्घकालं महत्सुखम्
प्राप्स्यन्ति पुरुषव्याघ्राः प्राणांस्त्यक्त्वा महाहवे ४६
इति श्रीमहाभारते भीष्मपर्वणि तृतीयोऽध्यायः ३

## चतुर्थोऽध्यायः

वैशम्पायन उवाच
एवमुक्तो मुनिस्तत्त्वं कवीन्द्रो राजसत्तम
पुत्रेण धृतराष्ट्रेण ध्यानमन्वगमत्परम् १
पुनरेवाब्रवीद्वाक्यं कालवादी महातपाः
असंशयं पार्थिवेन्द्र कालः संक्षिपते जगत् २
सृजते च पुनर्लोकान्नेह विद्यति शाश्वतम्
ज्ञातीनां च कुरूणां च सम्बन्धिसुहृदां तथा ३
धर्म्यं देशय पन्थानं समर्थो ह्यसि वारणे
क्षुद्रं ज्ञातिवधं प्राहुर्मा कुरुष्व ममाप्रियम् ४
कालोऽय पुत्ररूपेण तव जातो विशां पते
न वधः पूज्यते वेदे हितं नैतत्कथञ्चन ५
हन्यात्स एव यो हन्यात्कुलधर्मं स्वकां तनुम्
कालेनोत्पथगन्तासि शक्ये सति यथापथि ६

कुलस्यास्य विनाशाय तथैव च महीक्षिताम्
अनर्थो राज्यरूपेण त्यज्यतामसुखावहः ७
लुप्तप्रज्ञः परेणासि धर्मं दर्शय वै सुतान्
किं ते राज्येन दुर्धर्ष येन प्राप्तोऽसि किल्बिषम् ८
यशो धर्मं च कीर्तिं च पालयन्स्वर्गमाप्स्यसि
लभन्तां पाण्डवा राज्यं शमं गच्छन्तु कौरवाः ९
एवं ब्रुवति विप्रेन्द्रे धृतराष्ट्रोऽम्बिकासुतः
आक्षिप्य वाक्यं वाक्यज्ञो वाक्पथेनाप्ययात्पुनः १०
धृतराष्ट्र उवाच
यथा भवान्वेद तथास्मि वेत्ता भावाभावौ विदितौ मे यथावत्
स्वार्थे हि संमुह्यति तात लोको मां चापि लोकात्मकमेव विद्धि ११
प्रसादये त्वामतुलप्रभावं त्वं नो गतिर्दर्शयिता च धीरः
न चापि ते वशगा मे महर्षे न कल्मषं कर्तुमिहार्हसे माम् १२
त्वं हि धर्मः पवित्रं च यशः कीर्तिर्धृतिः स्मृतिः
कुरूणां पाण्डवानां च मान्यश्चासि पितामहः १३
व्यास उवाच
वैचित्रवीर्य नृपते यत्ते मनसि वर्तते
अभिधत्स्व यथाकामं छेत्तास्मि तव संशयम् १४
धृतराष्ट्र उवाच
यानि लिङ्गानि संग्रामे भवन्ति विजयिष्यताम्
तानि सर्वाणि भगवञ्श्रोतुमिच्छामि तत्त्वतः १५
व्यास उवाच
प्रसन्नभाः पावक ऊर्ध्वरश्मिः प्रदक्षिणावर्तशिखो विधूमः
पुण्या गन्धाश्चाहुतीनां प्रवान्ति जयस्यैतद्भाविनो रूपमाहुः १६
गम्भीरघोषाश्च महास्वनाश्च शङ्खा मृदङ्गाश्च नदन्ति यत्र
विशुद्धरश्मिस्तपनः शशी च जयस्यैतद्भाविनो रूपमाहुः १७
इष्टा वाचः पृष्ठतो वायसानां सम्प्रस्थितानां च गमिष्यतां च
ये पृष्ठतस्ते त्वरयन्ति राजन्ये त्वग्रतस्ते प्रतिषेधयन्ति १८
कल्याणवाचः शकुना राजहंसाः शुकाः क्रौञ्चाः शतपत्राश्च यत्र
प्रदक्षिणाश्चैव भवन्ति संख्ये ध्रुवं जयं तत्र वदन्ति विप्राः १९

अलङ्कारैः कवचैः केतुभिश्च मुखप्रसादैर्हेमवर्णैश्च नृणाम्
भ्राजिष्मती दुष्प्रतिप्रेक्षणीया येषां चमूस्ते विजयन्ति शत्रून् २०
हृष्टा वाचस्तथा सत्त्वं योधानां यत्र भारत
न म्लायन्ते स्रजश्चैव ते तरन्ति रणे रिपून् २१
इष्टो वातः प्रविष्टस्य दक्षिणा प्रविविक्षतः
पश्चात्संसाधयत्यर्थं पुरस्तात्प्रतिषेधते २२
शब्दरूपरसस्पर्शगन्धाश्चाविष्कृताः शुभाः
सदा योधाश्च हृष्टाश्च येषां तेषां ध्रुवं जयः २३
अन्वेव वायवो वान्ति तथाभ्राणि वयांसि च
अनुप्लवन्ते मेघाश्च तथैवेन्द्र धनूंषि च २४
एतानि जयमानानां लक्षणानि विशां पते
भवन्ति विपरीतानि मुमूर्षूणां जनाधिप २५
अल्पायां वा महत्यां वा सेनायामिति निश्चितम्
हर्षो योधगणस्यैकं जयलक्षणमुच्यते २६
एको दीर्णो दारयति सेनां सुमहतीमपि
तं दीर्णमनुदीर्यन्ते योधाः शूरतमा अपि २७
दुर्निवारतमा चैव प्रभग्ना महती चमूः
अपामिव महावेगास्त्रस्ता मृगगणा इव २८
नैव शक्या समाधातुं सनिपाते महाचमूः
दीर्णा इत्येव दीर्यन्ते योधाः शूरतमा अपि
भीतान्भग्नांश्च सम्प्रेक्ष्य भयं भूयो विवर्धते २९
प्रभग्ना सहसा राजन्दिशो विभ्रामिता परैः
नैव स्थापयितुं शक्या शूरैरपि महाचमूः ३०
संभृत्य महतीं सेनां चतुरङ्गां महीपतिः
उपायपूर्वं मेधावी यतेत सततोत्थितः ३१
उपायविजयं श्रेष्ठमाहुर्भेदेन मध्यमम्
जघन्य एष विजयो यो युद्धेन विशांपते
महादोषः सन्निपातस्ततो व्यङ्गः स उच्यते ३२
परस्परज्ञाः संहृष्टा व्यवधूताः सुनिश्चिताः
पञ्चाशदपि ये शूरा मथ्नन्ति महतीं चमूम्

अथ वा पञ्च षट् सप्त विजयन्त्यनिवर्तिनः ३३
न वैनतेयो गरुडः प्रशंसति महाजनम्
दृष्ट्वा सुपर्णोपचितिं महतीमपि भारत ३४
न बाहुल्येन सेनाया जयो भवति भारत
अध्रुवो हि जयो नाम दैवं चात्र परायणम्
जयन्तो ह्यपि संग्रामे क्षयवन्तो भवन्त्युत ३५
इति श्रीमहाभारते भीष्मपर्वणि चतुर्थोऽध्यायः ४

पञ्चमोऽध्यायः

वैशम्पायन उवाच
एवमुक्त्वा ययौ व्यासो धृतराष्ट्राय धीमते
धृतराष्ट्रोऽपि तच्छ्रुत्वा ध्यानमेवान्वपद्यत १
स मुहूर्तमिव ध्यात्वा विनिःश्वस्य मुहुर्मुहुः
सञ्जयं संशितात्मानमपृच्छद्भरतर्षभ २
सञ्जयेमे महीपालाः शूरा युद्धाभिनन्दिनः
अन्योन्यमभिनिघ्नन्ति शस्त्रैरुच्चावचैरपि ३
पार्थिवाः पृथिवीहेतोः समभित्यक्तजीविताः
न च शाम्यन्ति निघ्नन्तो वर्धयन्तो यमक्षयम् ४
भौममैश्वर्यमिच्छन्तो न मृष्यन्ते परस्परम्
मन्ये बहुगुणा भूमिस्तन्ममाचक्ष्व सञ्जय ५
बहूनि च सहस्राणि प्रयुतान्यर्बुदानि च
कोटयश्च लोकवीराणां समेताः कुरुजाङ्गले ६
देशानां च परीमाणं नगराणां च सञ्जय
श्रोतुमिच्छामि तत्त्वेन यत एते समागताः ७
दिव्यबुद्धिप्रदीपेन युक्तस्त्वं ज्ञानचक्षुषा
प्रसादात्तस्य विप्रर्षेर्व्यासस्यामिततेजसः ८
सञ्जय उवाच
यथाप्रज्ञं महाप्राज्ञ भौमान्वक्ष्यामि ते गुणान्
शास्त्रचक्षुरवेक्षस्व नमस्ते भरतर्षभ ९
द्विविधानीह भूतानि त्रसानि स्थावराणि च

त्रसानां त्रिविधा योनिरण्डस्वेदजरायुजाः १०
त्रसानां खलु सर्वेषां श्रेष्ठा राजञ्जरायुजाः
जरायुजानां प्रवरा मानवाः पशवश्च ये ११
नानारूपाणि बिभ्राणास्तेषां भेदाश्चतुर्दश
अरण्यवासिनः सप्त सप्तैषां ग्रामवासिनः १२
सिंहव्याघ्रवराहाश्च महिषा वारणास्तथा
ऋक्षाश्च वानराश्चैव सप्तारण्याः स्मृता नृप १३
गौरजो मनुजो मेषो वाज्यश्वतरगर्दभाः
एते ग्राम्याः समाख्याताः पशवः सप्त साधुभिः १४
एते वै पशवो राजन्ग्राम्यारण्याश्चतुर्दश
वेदोक्ताः पृथिवीपाल येषु यज्ञाः प्रतिष्ठिताः १५
ग्राम्याणां पुरुषः श्रेष्ठः सिंहश्चारण्यवासिनाम्
सर्वेषामेव भूतानामन्योन्येनाभिजीवनम् १६
उद्भिज्जाः स्थावराः प्रोक्तास्तेषां पञ्चैव जातयः
वृक्षगुल्मलतावल्ल्यस्त्वक्सारास्तृणजातयः १७
एषां विंशतिरेकोना महाभूतेषु पञ्चसु
चतुर्विंशतिरुद्दिष्टा गायत्री लोकसंमता १८
य एतां वेद गायत्रीं पुण्यां सर्वगुणान्विताम्
तत्त्वेन भरतश्रेष्ठ स लोकान्न प्रणश्यति १९
भूमौ हि जायते सर्वं भूमौ सर्वं प्रणश्यति
भूमिः प्रतिष्ठा भूतानां भूमिरेव परायणम् २०
यस्य भूमिस्तस्य सर्वं जगत्स्थावरजङ्गमम्
तत्राभिगृद्धा राजानो विनिघ्नन्तीतरेतरम् २१

इति श्रीमहाभारते भीष्मपर्वणि पंचमोऽध्यायः ५

## षष्ठोऽध्यायः

धृतराष्ट्र उवाच
नदीनां पर्वतानां च नामधेयानि सञ्जय
तथा जनपदानां च ये चान्ये भूमिमाश्रिताः १
प्रमाणं च प्रमाणज्ञ पृथिव्या अपि सर्वशः

निखिलेन समाचद्व काननानि च सञ्जय २
सञ्जय उवाच
पञ्चेमानि महाराज महाभूतानि संग्रहात्
जगत्स्थितानि सर्वाणि समान्याहुर्मनीषिणः ३
भूमिरापस्तथा वायुरग्निराकाशमेव च
गुणोत्तराणि सर्वाणि तेषां भूमिः प्रधानतः ४
शब्दः स्पर्शश्च रूपं च रसो गन्धश्च पञ्चमः
भूमेरेते गुणाः प्रोक्ता ऋषिभिस्तत्त्ववेदिभिः ५
चत्वारोऽप्सु गुणा राजन्गन्धस्तत्र न विद्यते
शब्दः स्पर्शश्च रूपं च तेजसोऽथ गुणास्त्रयः
शब्दः स्पर्शश्च वायोस्तु आकाशे शब्द एव च ६
एते पञ्च गुणा राजन्महाभूतेषु पञ्चसु
वर्तन्ते सर्वलोकेषु येषु लोकाः प्रतिष्ठिताः ७
अन्योन्यं नाभिवर्तन्ते साम्यं भवति वै यदा
यदा तु विषमीभावमाविशन्ति परस्परम्
तदा देहैर्देहवन्तो व्यतिरोहन्ति नान्यथा ८
आनुपूर्व्याद्विनश्यन्ति जायन्ते चानुपूर्वशः
सर्वाण्यपरिमेयानि तदेषां रूपमैश्वरम् ९
तत्र तत्र हि दृश्यन्ते धातवः पाञ्चभौतिकाः
तेषां मनुष्यास्तर्केण प्रमाणानि प्रचक्षते १०
अचिन्त्याः खलु ये भावा न तांस्तर्केण साधयेत्
प्रकृतिभ्यः परं यत्तु तदचिन्त्यस्य लक्षणम् ११
सुदर्शनं प्रवक्ष्यामि द्वीपं ते कुरुनन्दन
परिमण्डलो महाराज द्वीपोऽसौ चक्रसंस्थितः १२
नदीजलप्रतिच्छन्नः पर्वतैश्चाभ्रसंनिभैः
पुरैश्च विविधाकारै रम्यैर्जनपदैस्तथा १३
वृक्षैः पुष्पफलोपेतैः सम्पन्नधनधान्यवान्
लावणेन समुद्रेण समन्तात्परिवारितः १४
यथा च पुरुषः पश्येदादर्शे मुखमात्मनः
एवं सुदर्शनद्वीपो दृश्यते चन्द्रमण्डले १५

द्विरंशे पिप्पलस्तत्र द्विरंशे च शशो महान्
सर्वौषधिसमावापैः सर्वतः परिबृंहितः
आपस्ततोऽन्या विज्ञेया एष संक्षेप उच्यते १६
इति श्रीमहाभारते भीष्मपर्वणि षष्ठोऽध्यायः ६

सप्तमोऽध्यायः

धृतराष्ट्र उवाच
उक्तो द्वीपस्य संक्षेपो विस्तरं ब्रूहि सञ्जय
यावद्भूम्यवकाशोऽय दृश्यते शशलक्षणे
तस्य प्रमाणं प्रब्रूहि ततो वक्ष्यसि पिप्पलम् १
वैशम्पायन उवाच
एवमुक्तः स राज्ञा तु सञ्जयो वाक्यमब्रवीत्
प्रागायता महाराज षडेते रत्नपर्वताः
अवगाढा ह्युभयतः समुद्रौ पूर्वपश्चिमौ २
हिमवान्हेमकूटश्च निषधश्च नगोत्तमः
नीलश्च वैडूर्यमयः श्वेतश्च रजतप्रभः
सर्वधातुविनद्धश्च शृङ्गवान्नाम पर्वतः ३
एते वै पर्वता राजन्सिद्धचारणसेविताः
तेषामन्तरविष्कम्भो योजनानि सहस्रशः ४
तत्र पुण्या जनपदास्तानि वर्षाणि भारत
वसन्ति तेषु सत्त्वानि नानाजातीनि सर्वशः ५
इदं तु भारतं वर्षं ततो हैमवतं परम्
हेमकूटात्परं चैव हरिवर्षं प्रचक्षते ६
दक्षिणेन तु नीलस्य निषधस्योत्तरेण च
प्रागायतो महाराज माल्यवान्नाम पर्वतः ७
ततः परं माल्यवतः पर्वतो गन्धमादनः
परिमण्डलस्तयोर्मध्ये मेरुः कनकपर्वतः ८
आदित्यतरुणाभासो विधूम इव पावकः
योजनानां सहस्राणि षोडशाधः किल स्मृतः ९
उच्चैश्च चतुरशीतिर्योजनानां महीपते

ऊर्ध्वमन्तश्च तिर्यक्च लोकानावृत्य तिष्ठति १०
तस्य पार्श्वे त्विमे द्वीपाश्चत्वारः संस्थिताः प्रभो
भद्राश्वः केतुमालश्च जम्बूद्वीपश्चभारत
उत्तराश्चैव कुरवः कृतपुण्यप्रतिश्रयाः ११
विहगः सुमुखो यत्र सुपर्णस्यात्मजः किल
स वै विचिन्तयामास सौवर्णान्प्रेक्ष्य वायसान् १२
मेरुरुत्तममध्यानामधमानां च पक्षिणाम्
अविशेषकरो यस्मात्तस्मादेनं त्यजाम्यहम् १३
तमादित्योऽनुपर्येति सततं ज्योतिषां पतिः
चन्द्रमाश्च सनक्षत्रो वायुश्चैव प्रदक्षिणम् १४
स पर्वतो महाराज दिव्यपुष्पफलान्वितः
भवनैरावृतः सर्वैर्जाम्बूनदमयैः शुभैः १५
तत्र देवगणा राजन्गन्धर्वासुरराक्षसाः
अप्सरोगणसंयुक्ताः शैले क्रीडन्ति नित्यशः १६
तत्र ब्रह्मा च रुद्रश्च शक्रश्चापि सुरेश्वरः
समेत्य विविधैर्यज्ञैर्यजन्तेऽनेकदक्षिणैः १७
तुम्बुरुर्नारदश्चैव विश्वावसुर्हहा हुहूः
अभिगम्यामरश्रेष्ठाः स्तवैः स्तुन्वन्ति चाभिभो १८
सप्तर्षयो महात्मानः कश्यपश्च प्रजापतिः
तत्र गच्छन्ति भद्रं ते सदा पर्वणि पर्वणि १९
तस्यैव मूर्धन्युशनाः काव्यो दैत्यैर्महीपते
तस्य हीमानि रत्नानि तस्येमे रत्नपर्वताः २०
तस्मात्कुबेरो भगवांश्चतुर्थं भागमश्नुते
ततः कलांशं वित्तस्य मनुष्येभ्यः प्रयच्छति २१
पार्श्वे तस्योत्तरे दिव्यं सर्वर्तुकुसुमं शिवम्
कर्णिकारवनं रम्यं शिलाजालसमुद्गतम् २२
तत्र साक्षात्पशुपतिर्दिव्यैर्भूतैः समावृतः
उमासहायो भगवान्रमते भूतभावनः २३
कर्णिकारमयीं मालां बिभ्रत्पादावलम्बिनीम्
त्रिभिर्नेत्रैः कृतोद्द्योतस्त्रिभिः सूर्यैरिवोदितैः २४

तमुग्रतपसः सिद्धाः सुव्रताः सत्यवादिनः
पश्यन्ति न हि दुर्वृत्तैः शक्यो द्रष्टुं महेश्वरः २५
तस्य शैलस्य शिखरात्क्षीरधारा नरेश्वर
त्रिंशद्बाहुपरिग्राह्या भीमनिर्घातनिस्वना २६
पुण्या पुण्यतमैर्जुष्टा गङ्गा भागीरथी शुभा
पतत्यजस्रवेगेन ह्रदे चान्द्रमसे शुभे
तया ह्युत्पादितः पुण्यः स ह्रदः सागरोपमः २७
तां धारयामास पुरा दुर्धरां पर्वतैरपि
शतं वर्षसहस्राणां शिरसा वै महेश्वरः २८
मेरोस्तु पश्चिमे पार्श्वे केतुमालो महीपते
जम्बूषण्डश्च तत्रैव सुमहान्नन्दनोपमः २९
आयुर्दश सहस्राणि वर्षाणां तत्र भारत
सुवर्णवर्णाश्च नराः स्त्रियश्चाप्सरसोपमाः ३०
अनामया वीतशोका नित्यं मुदितमानसाः
जायन्ते मानवास्तत्र निष्टप्तकनकप्रभाः ३१
गन्धमादनशृङ्गेषु कुबेरः सह राक्षसैः
संवृतोऽप्सरसां संघैर्मोदते गुह्यकाधिपः ३२
गन्धमादनपादेषु परेष्वपरगण्डिकाः
एकादश सहस्राणि वर्षाणां परमायुषः ३३
तत्र कृष्णा नरा राजंस्तेजोयुक्ता महाबलाः
स्त्रियश्चोत्पलपत्राभाः सर्वाः सुप्रियदर्शनाः ३४
नीलात्परतरं श्वेतं श्वेताद्धैरण्यकं परम्
वर्षमैरावतं नाम ततः शृङ्गवतः परम् ३५
धनुःसंस्थे महाराज द्वे वर्षे दक्षिणोत्तरे
इलावृतं मध्यमं तु पञ्च वर्षाणि चैव ह ३६
उत्तरोत्तरमेतेभ्यो वर्षमुद्रिच्यते गुणैः
आयुष्प्रमाणमारोग्यं धर्मतः कामतोऽथतः ३७
समन्वितानि भूतानि तेषु वर्षेषु भारत
एवमेषा महाराज पर्वतैः पृथिवी चिता ३८
हेमकूटस्तु सुमहान्कैलासो नाम पर्वतः

यत्र वैश्रवणो राजा गुह्यकैः सह मोदते ३९
अस्त्युत्तरेण कैलासं मैनाकं पर्वतं प्रति
हिरण्यशृङ्गः सुमहान्दिव्यो मणिमयो गिरिः ४०
तस्य पार्श्वे महद्दिव्यं शुभं काञ्चनवालुकम्
रम्यं बिन्दुसरो नाम यत्र राजा भगीरथः
दृष्ट्वा भागीरथीं गङ्गामुवास बहुलाः समाः ४१
यूपा मणिमयास्तत्र चित्याश्चापि हिरण्मयाः
तत्रेष्ट्वा तु गतः सिद्धिं सहस्राक्षो महायशाः ४२
सृष्ट्वा भूतपतिर्यत्र सर्वलोकान्सनातनः
उपास्यते तिग्मतेजा वृतो भूतैः समागतैः
नरनारायणौ ब्रह्मा मनुः स्थाणुश्च पञ्चमः ४३
तत्र त्रिपथगा देवी प्रथमं तु प्रतिष्ठिता
ब्रह्मलोकादपक्रान्ता सप्तधा प्रतिपद्यते ४४
वस्वोकसारा नलिनी पावना च सरस्वती
जम्बूनदी च सीता च गङ्गा सिन्धुश्च सप्तमी ४५
अचिन्त्या दिव्यसङ्कल्पा प्रभोरेषैव संविधिः
उपासते यत्र सत्रं सहस्रयुगपर्यये ४६
दृश्यादृश्या च भवति तत्र तत्र सरस्वती
एता दिव्याः सप्त गङ्गास्त्रिषु लोकेषु विश्रुताः ४७
रक्षांसि वै हिमवति हेमकूटे तु गुह्यकाः
सर्पा नागाश्च निषधे गोकर्णे च तपोधनाः ४८
देवासुराणां च गृहं श्वेतः पर्वत उच्यते
गन्धर्वा निषधे शैले नीले ब्रह्मर्षयो नृप
शृङ्गवांस्तु महाराज पितॄणां प्रतिसञ्चरः ४९
इत्येतानि महाराज सप्त वर्षाणि भागशः
भूतान्युपनिविष्टानि गतिमन्ति ध्रुवाणि च ५०
तेषामृद्धिर्बहुविधा दृश्यते दैवमानुषी
अशक्या परिसंख्यातुं श्रद्धेया तु बुभूषता ५१
यां तु पृच्छसि मां राजन्दिव्यामेतां शशाकृतिम्
पार्श्वे शशस्य द्वे वर्षे उभये दक्षिणोत्तरे

कर्णौ तु नागद्वीपं च कश्यपद्वीपमेव च ५२
ताम्रवर्णः शिरो राजञ्श्रीमान्मलयपर्वतः
एतद्द्वितीयं द्वीपस्य दृश्यते शशसंस्थितम् ५३
इति श्रीमहाभारते भीष्मपर्वणि सप्तमोऽध्यायः ७

## अष्टमोऽध्यायः

धृतराष्ट्र उवाच
मेरोरथोत्तरं पार्श्वं पूर्वं चाचद्व सञ्जय
निखिलेन महाबुद्धे माल्यवन्तं च पर्वतम् १
सञ्जय उवाच
दच्चिणेन तु नीलस्य मेरोः पार्श्वे तथोत्तरे
उत्तराः कुरवो राजन्पुण्याः सिद्धनिषेविताः २
तत्र वृद्मा मधुफला नित्यपुष्पफलोपगाः
पुष्पाणि च सुगन्धीति रसवन्ति फलानि च ३
सर्वकामफलास्तत्र केचिद्वृद्मा जनाधिप
अपरे द्मीरिणो नाम वृद्मास्तत्र नराधिप ४
ये द्मरन्ति सदा द्मीरं षड्रसं ह्यमृतोपमम्
वस्त्राणि च प्रसूयन्ते फलेष्वाभरणानि च ५
सर्वा मणिमयी भूमिः सूद्मकाञ्चनवालुका
सर्वत्र सुखसंस्पर्शा निष्पङ्का च जनाधिप ६
देवलोकच्च्युताः सर्वे जायन्ते तत्र मानवाः
तुल्यरूपगुणोपेताः समेषु विषमेषु च ७
मिथुनानि च जायन्ते स्त्रियश्चाप्सरसोपमाः
तेषां ते द्मीरिणां द्मीरं पिबन्त्यमृतसन्निभम् ८
मिथुनं जायमानं वै समं तच्च प्रवर्धते
तुल्यरूपगुणोपेतं समवेषं तथैव च
एकैकमनुरक्तं च चक्रवाकसमं विभो ९
निरामया वीतशोका नित्यं मुदितमानसाः
दश वर्षसहस्राणि दश वर्षशतानि च
जीवन्ति ते महाराज न चान्योन्यं जहत्युत १०

भारुण्डा नाम शकुनास्तीक्ष्णतुण्डा महाबलाः
ते निर्हरन्ति हि मृतान्दरीषु प्रक्षिपन्ति च ११
उत्तराः कुरवो राजन्व्याख्यातास्ते समासतः
मेरोः पार्श्वमहं पूर्वं वक्ष्याम्यथ यथातथम् १२
तस्य पूर्वाभिषेकस्तु भद्राश्वस्य विशां पते
भद्रसालवनं यत्र कालाम्रश्च महाद्रुमः १३
कालाम्रश्च महाराज नित्यपुष्पफलः शुभः
द्वीपश्च योजनोत्सेधः सिद्धचारणसेवितः १४
तत्र ते पुरुषाः श्वेतास्तेजोयुक्ता महाबलाः
स्त्रियः कुमुदवर्णाश्च सुन्दर्यः प्रियदर्शनाः १५
चन्द्रप्रभाश्चन्द्रवर्णाः पूर्णचन्द्रनिभाननाः
चन्द्रशीतलगात्र्यश्च नृत्तगीतविशारदाः १६
दश वर्षसहस्राणि तत्रायुर्भरतर्षभ
कालाम्ररसपीतास्ते नित्यं संस्थितयौवनाः १७
दक्षिणेन तु नीलस्य निषधस्योत्तरेण तु
सुदर्शनो नाम महाञ्जम्बूवृक्षः सनातनः १८
सर्वकामफलः पुण्यः सिद्धचारणसेवितः
तस्य नाम्ना समाख्यातो जम्बूद्वीपः सनातनः १९
योजनानां सहस्रं च शतं च भरतर्षभ
उत्सेधो वृक्षराजस्य दिवस्पृङ्मनुजेश्वर २०
अरत्नीनां सहस्रं च शतानि दश पञ्च च
परिणाहस्तु वृक्षस्य फलानां रसभेदिनाम् २१
पतमानानि तान्युर्व्यां कुर्वन्ति विपुलं स्वनम्
मुञ्चन्ति च रसं राजंस्तस्मिन्रजतसन्निभम् २२
तस्या जम्ब्वाः फलरसो नदी भूत्वा जनाधिप
मेरुं प्रदक्षिणं कृत्वा सम्प्रयात्युत्तरान्कुरून् २३
पिबन्ति तद्रसं हृष्टा जना नित्यं जनाधिप
तस्मिन्फलरसे पीते न जरा बाधते च तान् २४
तत्र जाम्बूनदं नाम कनकं देवभूषणम्
तरुणादित्यवर्णाश्च जायन्ते तत्र मानवाः २५

तथा माल्यवतः शृङ्गे दीप्यते तत्र हव्यवाट्
नाम्ना संवर्तको नाम कालाग्निर्भरतर्षभ २६
तथा माल्यवतः शृङ्गे पूर्वे पूर्वान्तगण्डिका
योजनानां सहस्राणि पञ्चाशन्माल्यवान्स्थितः २७
महारजतसङ्काशा जायन्ते तत्र मानवाः
ब्रह्मलोकाच्च्युताः सर्वे सर्वे च ब्रह्मवादिनः २८
तपस्तु तप्यमानास्ते भवन्ति ह्यूर्ध्वरेतसः
रक्षणार्थं तु भूतानां प्रविशन्ति दिवाकरम् २९
षष्टिस्तानि सहस्राणि षष्टिरेव शतानि च
अरुणस्याग्रतो यान्ति परिवार्य दिवाकरम् ३०
षष्टिं वर्षसहस्राणि षष्टिमेव शतानि च
आदित्यतापतप्तास्ते विशन्ति शशिमण्डलम् ३१
इति श्रीमहाभारते भीष्मपर्वणि अष्टमोऽध्यायः ८

## नवमोऽध्यायः

धृतराष्ट्र उवाच
वर्षाणां चैव नामानि पर्वतानां च सञ्जय
आचक्ष्व मे यथातत्त्वं ये च पर्वतवासिनः १
सञ्जय उवाच
दक्षिणेन तु श्वेतस्य नीलस्यैवोत्तरेण तु
वर्षं रमणकं नाम जायन्ते तत्र मानवाः २
शुक्लाभिजनसम्पन्नाः सर्वे सुप्रियदर्शनाः
रतिप्रधानाश्च तथा जायन्ते तत्र मानवाः ३
दश वर्षसहस्राणि शतानि दश पञ्च च
जीवन्ति ते महाराज नित्यं मुदितमानसाः ४
दक्षिणेन शृङ्गिणश्चैव श्वेतस्याथोत्तरेण च
वर्षं हैरण्वतं नाम यत्र हैरण्वती नदी ५
यक्षानुगा महाराज धनिनः प्रियदर्शनाः
महाबलास्तत्र सदा राजन्मुदितमानसाः ६
एकादश सहस्राणि वर्षाणां ते जनाधिप

आयुष्प्रमाणं जीवन्ति शतानि दश पञ्च च ७
शृङ्गाणि वै शृङ्गवतस्त्रीण्येव मनुजाधिप
एकं मणिमयं तत्र तथैकं रौक्ममद्भुतम् ८
सर्वरत्नमयं चैकं भवनैरुपशोभितम्
तत्र स्वयम्प्रभा देवी नित्यं वसति शाण्डिली ९
उत्तरेण तु शृङ्गस्य समुद्रान्ते जनाधिप
वर्षमैरावतं नाम तस्माच्छृङ्गवतः परम् १०
न तत्र सूर्यस्तपति न ते जीर्यन्ति मानवाः
चन्द्रमाश्च सनक्षत्रो ज्योतिर्भूत इवावृतः ११
पद्मप्रभाः पद्मवर्णाः पद्मपत्रनिभेक्षणाः
पद्मपत्रसुगन्धाश्च जायन्ते तत्र मानवाः १२
अनिष्पन्दाः सुगन्धाश्च निराहारा जितेन्द्रियाः
देवलोकच्युताः सर्वे तथा विरजसो नृप १३
त्रयोदश सहस्राणि वर्षाणां ते जनाधिप
आयुष्प्रमाणं जीवन्ति नरा भरतसत्तम १४
क्षीरोदस्य समुद्रस्य तथैवोत्तरतः प्रभुः
हरिर्वसति वैकुण्ठः शकटे कनकात्मके १५
अष्टचक्रं हि तद्यानं भूतयुक्तं मनोजवम्
अग्निवर्णं महावेगं जाम्बूनदपरिष्कृतम् १६
स प्रभुः सर्वभूतानां विभुश्च भरतर्षभ
संक्षेपो विस्तरश्चैव कर्ता कारयिता च सः १७
पृथिव्यापस्तथाकाशं वायुस्तेजश्च पार्थिव
स यज्ञः सर्वभूतानामास्यं तस्य हुताशनः १८
वैशम्पायन उवाच
एवमुक्तः सञ्जयेन धृतराष्ट्रो महामनाः
ध्यानमन्वगमद्राजा पुत्रान्प्रति जनाधिप १९
स विचिन्त्य महाराज पुनरेवाब्रवीद्वचः
असंशयं सूतपुत्र कालः संक्षिपते जगत्
सृजते च पुनः सर्वं नेह विद्यति शाश्वतम् २०
नरो नारायणश्चैव सर्वज्ञः सर्वभूतभृत्

देवा वैकुण्ठ इत्याहुर्वेदा विष्णुरिति प्रभुम् २१
इति श्रीमहाभारते भीष्मपर्वणि नवमोऽध्यायः ९

दशमोऽध्यायः

धृतराष्ट्र उवाच
यदिदं भारतं वर्षं यत्रेदं मूर्छितं बलम्
यत्रातिमात्रं लुब्धोऽय पुत्रो दुर्योधनो मम १
यत्र गृद्धाः पाण्डुसुता यत्र मे सज्जते मनः
एतन्मे तत्त्वमाचक्ष्व कुशलो ह्यसि संजय २
सञ्जय उवाच
न तत्र पाण्डवा गृद्धाः शृणु राजन्वचो मम
गृद्धो दुर्योधनस्तत्र शकुनिश्चापि सौबलः ३
अपरे क्षत्रियाश्चापि नानाजनपदेश्वराः
ये गृद्धा भारते वर्षे न मृष्यन्ति परस्परम् ४
अत्र ते वर्णयिष्यामि वर्षं भारत भारतम्
प्रियमिन्द्रस्य देवस्य मनोर्वैवस्वतस्य च ५
पृथोश्च राजन्वैन्यस्य तथेक्ष्वाकोर्महात्मनः
ययातेरम्बरीषस्य मान्धातुर्नहुषस्य च ६
तथैव मुचुकुन्दस्य शिबेरौशीनरस्य च
ऋषभस्य तथैलस्य नृगस्य नृपतेस्तथा ७
अन्येषां च महाराज क्षत्रियाणां बलीयसाम्
सर्वेषामेव राजेन्द्र प्रियं भारत भारतम् ८
तत्ते वर्षं प्रवक्ष्यामि यथाश्रुतमरिन्दम
शृणु मे गदतो राजन्यन्मां त्वं परिपृच्छसि ९
महेन्द्रो मलयः सह्यः शुक्तिमानृक्षवानपि
विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः १०
तेषां सहस्रशो राजन्पर्वतास्तु समीपतः
अभिज्ञाताः सारवन्तो विपुलाश्चित्रसानवः ११
अन्ये ततोऽपरिज्ञाता ह्रस्वा ह्रस्वोपजीविनः
आर्या म्लेच्छाश्च कौरव्य तैर्मिश्राः पुरुषा विभो १२

नदीः पिबन्ति बहुला गङ्गां सिन्धुं सरस्वतीम्
गोदावरीं नर्मदां च बाहुदां च महानदीम् १३
शतद्रुं चन्द्रभागां च यमुनां च महानदीम्
दृषद्वतीं विपाशां च विपापां स्थूलवालुकाम् १४
नदीं वेत्रवतीं चैव कृष्णवेणां च निम्नगाम्
इरावतीं वितस्तां च पयोष्णीं देविकामपि १५
वेदस्मृतिं वेतसिनीं त्रिदिवामिक्षुमालिनीम्
करीषिणीं चित्रवहां चित्रसेनां च निम्नगाम् १६
गोमतीं धूतपापां च वन्दनां च महानदीम्
कौशिकीं त्रिदिवां कृत्यां विचित्रां लोहतारिणीम् १७
रथस्थां शतकुम्भां च सरयूं च नरेश्वर
चर्मण्वतीं वेत्रवतीं हस्तिसोमां दिशं तथा १८
शतावरीं पयोष्णीं च परां भैमरथीं तथा
कावेरीं चुलुकां चापि वापीं शतबलामपि १९
निचीरां महितां चापि सुप्रयोगां नराधिप
पवित्रां कुण्डलां सिन्धुं वाजिनीं पुरमालिनीम् २०
पूर्वाभिरामां वीरां च भीमामोघवतीं तथा
पलाशिनीं पापहरां महेन्द्रां पिप्पलावतीम् २१
पारिषेणामसिक्नीं च सरलां भारमर्दिनीम्
पुरुहीं प्रवरां मेनां मोघां घृतवतीं तथा २२
धूमत्यामतिकृष्णां च सूचीं छावीं च कौरव
सदानीरामधृष्यां च कुशधारां महानदीम् २३
शशिकान्तां शिवां चैव तथा वीरवतीमपि
वास्तुं सुवास्तुं गौरीं च कम्पनां सहिरण्वतिम् २४
हिरण्वतीं चित्रवतीं चित्रसेनां च निम्नगाम्
रथचित्रां ज्योतिरथां विश्वामित्रां कपिञ्जलाम् २५
उपेन्द्रां बहुलां चैव कुचरामम्बुवाहिनीम्
वैनन्दीं पिञ्जलां वेण्णां तुङ्गवेणां महानदीम् २६
विदिशां कृष्णवेण्णां च ताम्रां च कपिलामपि
शलुं सुवामां वेदाश्वां हरिस्रावां महापगाम् २७

शीघ्रां च पिच्छिलां चैव भारद्वाजीं च निम्नगाम्
कौशिकीं निम्नगां शोणां बाहुदामथ चन्दनाम् २८
दुर्गामन्तःशिलां चैव ब्रह्ममेध्यां बृहद्वतीम्
चरक्षां महिरोहीं च तथा जम्बूनदीमपि २९
सुनसां तमसां दासीं त्रसामन्यां वराणसीम्
लोलोद्धृतकरां चैव पूर्णाशां च महानदीम् ३०
मानवीं वृषभां चैव महानद्यो जनाधिप
सदानिरामयां वृत्यां मन्दगां मन्दवाहिनीम् ३१
ब्रह्माणीं च महागौरीं दुर्गामपि च भारत
चित्रोपलां चित्रबर्हां मञ्जुं मकरवाहिनीम् ३२
मन्दाकिनीं वैतरणीं कोकां चैव महानदीम्
शुक्तिमतीमरण्यां च पुष्पवेण्युत्पलावतीम् ३३
लोहित्यां करतोयां च तथैव वृषभङ्गिनीम्
कुमारीमृषिकुल्यां च ब्रह्मकुल्यां च भारत ३४
सरस्वतीः सुपुण्याश्च सर्वा गङ्गाश्च मारिष
विश्वस्य मातरः सर्वाः सर्वाश्चैव महाबलाः ३५
तथा नद्यस्त्वप्रकाशाः शतशोऽथ सहस्रशः
इत्येताः सरितो राजन्समाख्याता यथास्मृति ३६
अत ऊर्ध्वं जनपदान्निबोध गदतो मम
तत्रेमे कुरुपाञ्चालाः शाल्वमाद्रेयजाङ्गलाः ३७
शूरसेनाः कलिङ्गाश्च बोधा मौकास्तथैव च
मत्स्याः सुकुटयः सौबल्याः कुन्तलाः काशिकोशलाः ३८
चेदिवत्साः करूषाश्च भोजाः सिन्धुपुलिन्दकाः
उत्तमौजा दशार्णाश्च मेकलाश्चोत्कलैः सह ३९
पाञ्चालाः कौशिजाश्चैव एकपृष्ठा युगन्धराः
सौधा मद्रा भुजिङ्गाश्च काशयोऽपरकाशयः ४०
जठराः कुक्कुशाश्चैव सुदाशार्णाश्च भारत
कुन्तयोऽवन्तयश्चैव तथैवापरकुन्तयः ४१
गोविन्दा मन्दकाः षण्डा विदर्भानूपवासिकाः
अश्मकाः पांसुराष्ट्राश्च गोपराष्ट्राः पनीतकाः ४२

आदिराष्ट्राः सुकुट्टाश्च बलिराष्ट्रं च केवलम्
वानरास्याः प्रवाहाश्च वक्रा वक्रभयाः शकाः ४३
विदेहका मागधाश्च सुह्माश्च विजयास्तथा
अङ्गा वङ्गाः कलिङ्गाश्च यकृल्लोमान एव च ४४
मल्लाः सुदेष्णाः प्राहूतास्तथा माहिषकार्षिकाः
वाहीका वाटधानाश्च आभीराः कालतोयकाः ४५
अपरन्ध्राश्च शूद्राश्च पह्लवाश्चर्मखण्डिकाः
अटवीशबराश्चैव मरुभौमाश्च मारिष ४६
उपावृश्चानुपावृश्चसुराष्ट्राः केकयास्तथा
कुट्टापरान्ता द्वैधेयाः काक्षाः सामुद्रनिष्कुटाः ४७
अन्ध्राश्च बहवो राजन्नन्तर्गिर्यास्तथैव च
बहिर्गिर्याङ्गमलदा मागधा मानवर्जकाः ४८
मह्युत्तराः प्रावृषेया भार्गवाश्च जनाधिप
पुण्ड्रा भार्गाः किराताश्च सुदोष्णाः प्रमुदास्तथा ४९
शका निषादा निषधास्तथैवानर्तनैरृताः
दुगूलाः प्रतिमत्स्याश्च कुशलाः कुनटास्तथा ५०
तीरग्राहास्तरतोया राजिका रस्यकागणाः
तिलकाः पारसीकाश्च मधुमन्तः प्रकुत्सकाः ५१
काश्मीराः सिन्धुसौवीरा गान्धारा दर्शकास्तथा
अभीसारा कुलूताश्च शैवला बाह्लिकास्तथा ५२
दर्वीकाः सकचा दर्वा वातजामरथोरगाः
बहुवाद्याश्च कौरव्य सुदामानः सुमल्लिकाः ५३
वध्राः करीषकाश्चापि कुलिन्दोपत्यकास्तथा
वानायवो दशापार्श्वा रोमाणः कुशबिन्दवः ५४
कच्छा गोपालकच्छाश्च लाङ्गलाः परवल्लकाः
किराता बर्बराः सिद्धा विदेहास्ताम्रलिङ्गकाः ५५
ओष्ट्राः पुण्ड्राः ससैरन्ध्राः पार्वतीयाश्च मारिष
अथापरे जनपदा दक्षिणा भरतर्षभ ५६
द्रविडाः केरलाः प्राच्या भूषिका वनवासिनः
उन्नत्यका महिषका विकल्पा मूषकास्तथा ५७

कर्णिकाः कुन्तिकाश्चैव सौद्भिदा नलकालकाः
कौकुट्टकास्तथा चोलाः कोङ्कणा मालवाणकाः ५८
समङ्गाः कोपनाश्चैव कुकुराङ्गदमारिषाः
ध्वजिन्युत्सवसङ्केतास्त्रिगर्ताः सर्वसेनयः ५९
त्र्यङ्गाः केकरकाः प्रोष्ठाः परसंचरकास्तथा
तथैव विन्ध्यपुलकाः पुलिन्दाः कल्कलैः सह ६०
मालका मल्लकाश्चैव तथैवापरवर्तकाः
कुलिन्दाः कलकाश्चैव करण्ठाः कुरकास्तथा ६१
मूषका स्तनबालाश्च सतियः पत्तिपञ्जकाः
आदिदायाः सिरालाश्च स्तूबका स्तनपास्तथा ६२
हृषीविदर्भाः कान्तीकास्तङ्गणाः परतङ्गणाः
उत्तराश्चापरे म्लेच्छा जना भरतसत्तम ६३
यवनाश्च सकाम्बोजा दारुणा म्लेच्छजातयः
सक्षद्द्रुहः कुन्तलाश्च हूणाः पारतकैः सह ६४
तथैव मरधाश्चीनास्तथैव दशमालिकाः
क्षत्रियोपनिवेशाश्च वैश्यशूद्रकुलानि च ६५
शूद्राभीराथ दरदाः काश्मीराः पशुभिः सह
खशिकाश्च तुखाराश्च पल्लवा गिरिगह्वराः ६६
आत्रेयाः सभरद्वाजास्तथैव स्तनयोषिकाः
औपकाश्च कलिङ्गाश्च किरातानां च जातयः ६७
तामरा हंसमार्गाश्च तथैव करभञ्जकाः
उद्देशमात्रेण मया देशाः सङ्कीर्तिताः प्रभो ६८
यथागुणबलं चापि त्रिवर्गस्य महाफलम्
दुह्येद्धेनुः कामधुक्च भूमिः सम्यगनुष्ठिता ६९
तस्यां गृध्यन्ति राजानः शूरा धर्मार्थकोविदाः
ते त्यजन्त्याहवे प्राणान्रसागृद्धास्तरस्विनः ७०
देवमानुषकायानां कामं भूमिः परायणम्
अन्योन्यस्यावलुम्पन्ति सारमेया इवामिषम् ७१
राजानो भरतश्रेष्ठ भोक्तुकामा वसुन्धराम्
न चापि तृप्तिः कामानां विद्यते चेह कस्यचित् ७२

तस्मात्परिग्रहे भूमेर्यतन्ते कुरुपाण्डवाः
साम्ना दानेन भेदेन दण्डेनैव च पार्थिव ७३
पिता माता च पुत्रश्च खं द्यौश्च नरपुङ्गव
भूमिर्भवति भूतानां सम्यगच्छिद्रदर्शिनी ७४
इति श्रीमहाभारते भीष्मपर्वणि दशमोऽध्यायः १०

## एकादशोऽध्यायः

धृतराष्ट्र उवाच
भारतस्यास्य वर्षस्य तथा हैमवतस्य च
प्रमाणमायुषः सूत फलं चापि शुभाशुभम् १
अनागतमतिक्रान्तं वर्तमानं च सञ्जय
आचक्ष्व मे विस्तरेण हरिवर्षं तथैव च २
सञ्जय उवाच
चत्वारि भारते वर्षे युगानि भरतर्षभ
कृतं त्रेता द्वापरं च पुष्यं च कुरुवर्धन ३
पूर्वं कृतयुगं नाम ततस्त्रेतायुगं विभो
संक्षेपाद्द्वापरस्याथ ततः पुष्यं प्रवर्तते ४
चत्वारि च सहस्राणि वर्षाणां कुरुसत्तम
आयुःसंख्या कृतयुगे संख्याता राजसत्तम ५
तथा त्रीणि सहस्राणि त्रेतायां मनुजाधिप
द्विसहस्रं द्वापरे तु शते तिष्ठति संप्रति ६
न प्रमाणस्थितिर्ह्यस्ति पुष्येऽस्मिन्भरतर्षभ
गर्भस्थाश्च म्रियन्तेऽत्र तथा जाता म्रियन्ति च ७
महाबला महासत्त्वाः प्रजागुणसमन्विताः
अजायन्त कृते राजन्मुनयः सुतपोधनाः ८
महोत्साहा महात्मानो धार्मिकाः सत्यवादिनः
जाताः कृतयुगे राजन्धनिनः प्रियदर्शनाः ९
आयुष्मन्तो महावीरा धनुर्धरवरा युधि
जायन्ते क्षत्रियाः शूरास्त्रेतायां चक्रवर्तिनः १०
सर्ववर्णा महाराज जायन्ते द्वापरे सति

महोत्साहा महावीर्याः परस्परवधैषिणः ११
तेजसाल्पेन संयुक्ताः क्रोधनाः पुरुषा नृप
लुब्धाश्चानृतकाश्चैव पुष्ये जायन्ति भारत १२
ईर्ष्या मानस्तथा क्रोधो मायासूया तथैव च
पुष्ये भवन्ति मर्त्यानां रागो लोभश्च भारत १३
संक्षेपो वर्तते राजन्द्वापरेऽस्मिन्नराधिप
गुणोत्तरं हैमवतं हरिवर्षं ततः परम् १४

इति श्रीमहाभारते भीष्मपर्वणि एकादशोऽध्यायः ११

समाप्तं जम्बूखण्डविनिर्माण पर्व

द्वादशोऽध्यायः

धृतराष्ट्र उवाच
जम्बूखण्डस्त्वया प्रोक्तो यथावदिह सञ्जय
विष्कम्भमस्य प्रब्रूहि परिमाणं च तत्त्वतः १
समुद्रस्य प्रमाणं च सम्यगच्छिद्रदर्शन
शाकद्वीपं च मे ब्रूहि कुशद्वीपं च सञ्जय २
शाल्मलं चैव तत्त्वेन क्रौञ्चद्वीपं तथैव च
ब्रूहि गावल्गणे सर्वं राहोः सोमार्कयोस्तथा ३
सञ्जय उवाच
राजन्सुबहवो द्वीपा यैरिदं सन्ततं जगत्
सप्त त्वहं प्रवक्ष्यामि चन्द्रादित्यौ ग्रहांस्तथा ४
अष्टादश सहस्राणि योजनानां विशां पते
षट्शतानि च पूर्णानि विष्कम्भो जम्बुपर्वतः ५
लावणस्य समुद्रस्य विष्कम्भो द्विगुणः स्मृतः
नानाजनपदाकीर्णो मणिविद्रुमचित्रितः ६
नैकधातुविचित्रैश्च पर्वतैरुपशोभितः
सिद्धचारणसङ्कीर्णः सागरः परिमण्डलः ७
शाकद्वीपं च वक्ष्यामि यथावदिह पार्थिव
शृणु मे त्वं यथान्यायं ब्रुवतः कुरुनन्दन ८
जम्बूद्वीपप्रमाणेन द्विगुणः स नराधिप

विष्कम्भेण महाराज सागरोऽपि विभागशः
क्षीरोदो भरतश्रेष्ठ येन सम्परिवारितः ९
तत्र पुण्या जनपदा न तत्र म्रियते जनः
कुत एव हि दुर्भिक्षं क्षमातेजोयुता हि ते १०
शाकद्वीपस्य संक्षेपो यथावद्भरतर्षभ
उक्त एष महाराज किमन्यच्छ्रोतुमिच्छसि ११
धृतराष्ट्र उवाच
शाकद्वीपस्य संक्षेपो यथावदिह सञ्जय
उक्तस्त्वया महाभाग विस्तरं ब्रूहि तत्त्वतः १२
सञ्जय उवाच
तथैव पर्वता राजन्सप्तात्र मणिभूषिताः
रत्नाकरास्तथा नद्यस्तेषां नामानि मे शृणु
अतीवगुणवत्सर्वं तत्र पुण्यं जनाधिप १३
देवर्षिगन्धर्वयुतः परमो मेरुरुच्यते
प्रागायतो महाराज मलयो नाम पर्वतः
यतो मेघाः प्रवर्तन्ते प्रभवन्ति च सर्वशः १४
ततः परेण कौरव्य जलधारो महागिरिः
यत्र नित्यमुपादत्ते वासवः परमं जलम्
यतो वर्षं प्रभवति वर्षकाले जनेश्वर १५
उच्चैर्गिरी रैवतको यत्र नित्यं प्रतिष्ठितः
रेवती दिवि नक्षत्रं पितामहकृतो विधिः १६
उत्तरेण तु राजेन्द्र श्यामो नाम महागिरिः
यतः श्यामत्वमापन्नाः प्रजा जनपदेश्वर १७
धृतराष्ट्र उवाच
सुमहान्संशयोमेऽद्य प्रोक्तं सञ्जय यत्त्वया
प्रजाः कथं सूतपुत्र सम्प्राप्ताः श्यामतामिह १८
सञ्जय उवाच
सर्वेष्वेव महाप्राज्ञ द्वीपेषु कुरुनन्दन
गौरः कृष्णश्च वर्णौ द्वौ तयोर्वर्णान्तरं नृप १९
श्यामो यस्मात्प्रवृत्तो वै तत्ते वक्ष्यामि भारत

आस्तेऽत्र भगवान्कृष्णस्तत्कान्त्या श्यामतां गतः २०
ततः परं कौरवेन्द्र दुर्गशैलो महोदयः
केसरी केसरयुतो यतो वातः प्रवायति २१
तेषां योजनविष्कम्भो द्विगुणः प्रविभागशः
वर्षाणि तेषु कौरव्य संप्रोक्तानि मनीषिभिः २२
महामेरुर्महाकाशो जलदः कुमुदोत्तरः
जलधारात्परो राजन्सुकुमार इति स्मृतः २३
रैवतस्य तु कौमारः श्यामस्य तु मणीचकः
केसरस्याथ मोदाकी परेण तु महापुमान् २४
परिवार्य तु कौरव्य दैर्घ्यं ह्रस्वत्वमेव च
जम्बूद्वीपेन विख्यातस्तस्य मध्ये महाद्रुमः २५
शाको नाम महाराज तस्य द्वीपस्य मध्यगः
तत्र पुण्या जनपदाः पूज्यते तत्र शङ्करः २६
तत्र गच्छन्ति सिद्धाश्च चारणा दैवतानि च
धार्मिकाश्च प्रजा राजंश्चत्वारोऽतीव भारत २७
वर्णाः स्वकर्मनिरता न च स्तेनोऽत्र दृश्यते
दीर्घायुषो महाराज जरामृत्युविवर्जिताः २८
प्रजास्तत्र विवर्धन्ते वर्षास्विव समुद्रगाः
नद्यः पुण्यजलास्तत्र गङ्गा च बहुधागतिः २९
सुकुमारी कुमारी च सीता कावेरका तथा
महानदी च कौरव्य तथा मणिजला नदी
इक्षुवर्धनिका चैव तथा भरतसत्तम ३०
ततः प्रवृत्ताः पुण्योदा नद्यः कुरुकुलोद्वह
सहस्राणां शतान्येव यतो वर्षति वासवः ३१
न तासां नामधेयानि परिमाणं तथैव च
शक्यते परिसंख्यातुं पुण्यास्ता हि सरिद्वराः ३२
तत्र पुण्या जनपदाश्चत्वारो लोकसम्मताः
मगाश्च मशकाश्चैव मानसा मन्दगास्तथा ३३
मगा ब्राह्मण भूयिष्ठाः स्वकर्मनिरता नृप
मशकेषु तु राजन्या धार्मिकाः सर्वकामदाः ३४

मानसेषु महाराज वैश्याः कर्मोपजीविनः
सर्वकामसमायुक्ताः शूरा धर्मार्थनिश्चिताः
शूद्रास्तु मन्दगे नित्यं पुरुषा धर्मशीलिनः ३५
न तत्र राजा राजेन्द्र न दण्डो न च दण्डिकाः
स्वधर्मेणैव धर्मं च ते रक्षन्ति परस्परम् ३६
एतावदेवशक्यं तु तस्मिन्द्वीपे प्रभाषितुम्
एतावदेव श्रोतव्यं शाकद्वीपे महौजसि ३७
इति श्रीमहाभारते भीष्मपर्वणि द्वादशोऽध्यायः १२

## त्रयोदशोऽध्यायः

सञ्जय उवाच
उत्तरेषु तु कौरव्य द्वीपेषु श्रूयते कथा
यथाश्रुतं महाराज ब्रुवतस्तन्निबोध मे १
घृततोयः समुद्रोऽत्र दधिमण्डोदकोऽपरः
सुरोदः सागरश्चैव यथान्यो घर्मसागरः २
परस्परेण द्विगुणाः सर्वे द्वीपा नराधिप
सर्वतश्च महाराज पर्वतैः परिवारिताः ३
गौरस्तु मध्यमे द्वीपे गिरिर्मानःशिलो महान्
पर्वतः पश्चिमः कृष्णो नारायणनिभो नृप ४
तत्र रत्नानि दिव्यानि स्वयं रक्षति केशवः
प्रजापतिमुपासीनः प्रजानां विदधे सुखम् ५
कुशद्वीपे कुशस्तम्बो मध्ये जनपदस्य ह
संपूज्यते शल्मलिश्च द्वीपे शाल्मलिके नृप ६
क्रौञ्चद्वीपे महाक्रौञ्चो गिरी रत्नचयाकरः
संपूज्यते महाराज चातुर्वर्ण्येन नित्यदा ७
गोमन्दः पर्वतो राजन्सुमहान्सर्वधातुमान्
तत्र नित्यं निवसति श्रीमान्कमललोचनः
मोक्षिभिः संस्तुतो नित्यं प्रभुर्नारायणो हरिः ८
कुशद्वीपे तु राजेन्द्र पर्वतो विद्रुमैश्चितः
सुधामा नाम दुर्धर्षो द्वितीयो हेमपर्वतः ९

द्युतिमान्नाम कौरव्य तृतीयः कुमुदो गिरिः
चतुर्थः पुष्पवान्नाम पञ्चमस्तु कुशेशयः १०
षष्ठो हरिगिरिर्नाम षडेते पर्वतोत्तमाः
तेषामन्तरविष्कम्भो द्विगुणः प्रविभागशः ११
औद्भिदं प्रथमं वर्षं द्वितीयं वेणुमण्डलम्
तृतीयं वै रथाकारं चतुर्थं पालनं स्मृतम् १२
धृतिमत्पञ्चमं वर्षं षष्ठं वर्षं प्रभाकरम्
सप्तमं कापिलं वर्षं सप्तैते वर्षपुञ्जकाः १३
एतेषु देवगन्धर्वाः प्रजाश्च जगतीश्वर
विहरन्ति रमन्ते च न तेषु म्रियते जनः १४
न तेषु दस्यवः सन्ति म्लेच्छजात्योऽपि वा नृप
गौरप्रायो जनः सर्वः सुकुमारश्च पार्थिव १५
अवशिष्टेषु वर्षेषु वक्ष्यामि मनुजेश्वर
यथाश्रुतं महाराज तदव्यग्रमनाः शृणु १६
क्रौञ्चद्वीपे महाराज क्रौञ्चो नाम महागिरिः
क्रौञ्चात्परो वामनको वामनादन्धकारकः १७
अन्धकारात्परो राजन्मैनाकः पर्वतोत्तमः
मैनाकात्परतो राजन्गोविन्दो गिरिरुत्तमः १८
गोविन्दात्तु परो राजन्निबिडो नाम पर्वतः
परस्तु द्विगुणस्तेषां विष्कम्भो वंशवर्धन १९
देशांस्तत्र प्रवक्ष्यामि तन्मे निगदतः शृणु
क्रौञ्चस्य कुशलो देशो वामनस्य मनोनुगः २०
मनोनुगात्परश्चोष्णो देशः कुरुकुलोद्वह
उष्णात्परः प्रावरकः प्रावरादन्धकारकः २१
अन्धकारकदेशात्तु मुनिदेशः परः स्मृतः
मुनिदेशात्परश्चैव प्रोच्यते दुन्दुभिस्वनः २२
सिद्धचारणसङ्कीर्णो गौरप्रायो जनाधिप
एते देशा महाराज देवगन्धर्वसेविताः २३
पुष्करे पुष्करो नाम पर्वतो मणिरत्नमान्
तत्र नित्यं निवसति स्वयं देवः प्रजापतिः २४

तं पर्युपासते नित्यं देवाः सर्वे महर्षिभिः
वाग्भिर्मनोऽनुकूलाभिः पूजयन्तो जनाधिप २५
जम्बूद्वीपात्प्रवर्तन्ते रत्नानि विविधान्युत
द्वीपेषु तेषु सर्वेषु प्रजानां कुरुनन्दन २६
विप्राणां ब्रह्मचर्येण सत्येन च दमेन च
आरोग्यायुःप्रमाणाभ्यां द्विगुणं द्विगुणं ततः २७
एको जनपदो राजन्द्वीपेष्वेतेषु भारत
उक्ता जनपदा येषु धर्मश्चैकः प्रदृश्यते २८
ईश्वरो दण्डमुद्यम्य स्वयमेव प्रजापतिः
द्वीपानेतान्महाराज रक्षंस्तिष्ठति नित्यदा २९
स राजा स शिवो राजन्स पिता स पितामहः
गोपायति नरश्रेष्ठ प्रजाः सजडपण्डिताः ३०
भोजनं चात्र कौरव्य प्रजाः स्वयमुपस्थितम्
सिद्धमेव महाराज भुञ्जते तत्र नित्यदा ३१
ततः परं समा नाम दृश्यते लोकसंस्थितिः
चतुरश्रा महाराज त्रयस्त्रिंशत्तु मण्डलम् ३२
तत्र तिष्ठन्ति कौरव्य चत्वारो लोकसंमताः
दिग्गजा भरतश्रेष्ठ वामनैरावतादयः
सुप्रतीकस्तथा राजन्प्रभिन्नकरटामुखः ३३
तस्याहं परिमाणं तु न संख्यातुमिहोत्सहे
असंख्यातः स नित्यं हि तिर्यगूर्ध्वमधस्तथा ३४
तत्र वै वायवो वान्ति दिग्भ्यः सर्वाभ्य एव च
असंबाधा महाराज तान्निगृह्णन्ति ते गजाः ३५
पुष्करैः पद्मसङ्काशैर्वर्ष्मवद्भिर्महाप्रभैः
ते शनैः पुनरेवाशु वायून्मुञ्चन्ति नित्यशः ३६
श्वसद्भिर्मुच्यमानास्तु दिग्गजैरिह मारुताः
आगच्छन्ति महाराज ततस्तिष्ठन्ति वै प्रजाः ३७
धृतराष्ट्र उवाच
परो वै विस्तरोऽत्यर्थं त्वया सञ्जय कीर्तितः
दर्शितं द्वीपसंस्थानमुत्तरं ब्रूहि सञ्जय ३८

संजय उवाच
उक्ता द्वीपा महाराज ग्रहान्मे शृणु तत्त्वतः
स्वर्भानुः कौरवश्रेष्ठ यावदेष प्रभावतः ३९
परिमण्डलो महाराज स्वर्भानुः श्रूयते ग्रहः
योजनानां सहस्राणि विष्कम्भो द्वादशास्य वै ४०
परिणाहेन षट्त्रिंशद्विपुलत्वेन चानघ
षष्टिमाहुः शतान्यस्य बुधाः पौराणिकास्तथा ४१
चन्द्रमास्तु सहस्राणि राजन्नेकादश स्मृतः
विष्कम्भेण कुरुश्रेष्ठ त्रयस्त्रिंशत्तु मण्डलम्
एकोनषष्टिवैपुल्याच्छीतरश्मेर्महात्मनः ४२
सूर्यस्त्वष्टौ सहस्राणि द्वे चान्ये कुरुनन्दन
विष्कम्भेण ततो राजन्मण्डलं त्रिंशतं समम् ४३
अष्टपञ्चाशतं राजन्विपुलत्वेन चानघ
श्रूयते परमोदारः पतंगोऽसौ विभावसुः
एतत्प्रमाणमर्कस्य निर्दिष्टमिह भारत ४४
स राहुश्छादयत्येतौ यथाकालं महत्तया
चन्द्रादित्यौ महाराज संक्षेपोऽयमुदाहृतः ४५
इत्येतत्ते महाराज पृच्छतः शास्त्रचक्षुषा
सर्वमुक्तं यथातत्त्वं तस्माच्छममवाप्नुहि ४६
यथादृष्टं मया प्रोक्तं सनिर्याणमिदं जगत्
तस्मादाश्वस कौरव्य पुत्रं दुर्योधनं प्रति ४७
श्रुत्वेदं भरतश्रेष्ठ भूमिपर्व मनोनुगम्
श्रीमान्भवति राजन्यः सिद्धार्थः साधुसम्मतः
आयुर्बलं च वीर्यं च तस्य तेजश्च वर्धते ४८
यः शृणोति महीपाल पर्वणीदं यतव्रतः
प्रीयन्ते पितरस्तस्य तथैव च पितामहाः ४९
इदं तु भारतं वर्षं यत्र वर्तामहे वयम्
पूर्वं प्रवर्तते पुण्यं तत्सर्वं श्रुतवानसि ५०

इति श्रीमहाभारते भीष्मपर्वणि त्रयोदशोऽध्यायः १३

समाप्तं भूमिपर्व

## चतुर्दशोऽध्यायः

वैशम्पायन उवाच
अथ गावल्गणिर्धीमान्समरादेत्य सञ्जयः
प्रत्यक्षदर्शी सर्वस्य भूतभव्यभविष्यवित् १
ध्यायते धृतराष्ट्राय सहसोपेत्य दुःखितः
आचष्ट निहतं भीष्मं भरतानाममध्यमम् २
सञ्जयोऽह महाराज नमस्ते भरतर्षभ
हतो भीष्मः शान्तनवो भारतानां पितामहः ३
ककुदं सर्वयोधानां धाम सर्वधनुष्मताम्
शरतल्पगतः सोऽद्य शेते कुरुपितामहः ४
यस्य वीर्यं समाश्रित्य द्यूतं पुत्रस्तवाकरोत्
स शेते निहतो राजन्संख्ये भीष्मः शिखण्डिना ५
यः सर्वान्पृथिवीपालान्समवेतान्महामृधे
जिगायैकरथेनैव काशिपुर्यां महारथः ६
जामदग्न्यं रणे राममायोध्य वसुसंभवः
न हतो जामदग्न्येन स हतोऽद्य शिखण्डिना ७
महेन्द्रसदृशः शौर्ये स्थैर्ये च हिमवानिव
समुद्र इव गाम्भीर्ये सहिष्णुत्वे धरासमः ८
शरदंष्ट्रो धनुर्वक्त्रः खड्गजिह्वो दुरासदः
नरसिंहः पिता तेऽद्य पाञ्चाल्येन निपातितः ९
पाण्डवानां महत्सैन्यं यं दृष्ट्वोद्यन्तमाहवे
प्रवेपत भयोद्विग्नं सिंहं दृष्ट्वेव गोगणः १०
परिरक्ष्य स सेनां ते दशरात्रमनीकहा
जगामास्तमिवादित्यः कृत्वा कर्म सुदुष्करम् ११
यः स शक्र इवाक्षोभ्यो वर्षन्बाणान्सहस्रशः
जघान युधि योधानामर्बुदं दशभिर्दिनैः १२
स शेते निष्टनन्भूमौ वातरुग्ण इव द्रुमः
तव दुर्मन्त्रिते राजन्यथा नार्हः स भारत १३
इति श्रीमहाभारते भीष्मपर्वणि चतुर्दशोऽध्यायः १४

पञ्चदशोऽध्यायः

धृतराष्ट्र उवाच
कथं कुरूणामृषभो हतो भीष्मः शिखण्डिना
कथं रथात्स न्यपतत्पिता मे वासवोपमः १
कथमासंश्च मे पुत्रा हीना भीष्मेण संजय
बलिना देवकल्पेन गुर्वर्थे ब्रह्मचारिणा २
तस्मिन्हते महासत्त्वे महेष्वासे महाबले
महारथे नरव्याघ्रे किमु आसीन्मनस्तदा ३
आर्तिः परा माविशति यतः शंससि मे हतम्
कुरूणामृषभं वीरमकम्प्यं पुरुषर्षभम् ४
के तं यान्तमनुप्रेयुः के चास्यासन्पुरोगमाः
केऽतिष्ठन्के न्यवर्तन्त केऽभ्यवर्तन्त संजय ५
के शूरा रथशार्दूलमच्युतं क्षत्रियर्षभम्
रथानीकं गाहमानं सहसा पृष्ठतोऽन्वयुः ६
यस्तमोऽर्क इवापोहन्परसैन्यममित्रहा
सहस्ररश्मिप्रतिमः परेषां भयमादधत्
अकरोद्दुष्करं कर्म रणे कौरवशासनात् ७
ग्रसमानमनीकानि य एनं पर्यवारयन्
कृतिनं तं दुराधर्षं सम्यग्यास्यन्तमन्तिके
कथं शान्तनवं युद्धे पाण्डवाः प्रत्यवारयन् ८
निकृन्तन्तमनीकानि शरदंष्ट्रं तरस्विनम्
चापव्यात्ताननं घोरमसिजिह्वं दुरासदम् ९
अत्यन्यान्पुरुषव्याघ्रान्ह्रीमन्तमपराजितम्
पातयामास कौन्तेयः कथं तमजितं युधि १०
उग्रधन्वानमुग्रेषुं वर्तमानं रथोत्तमे
परेषामुत्तमाङ्गानि प्रचिन्वन्तं शितेषुभिः ११
पाण्डवानां महत्सैन्यं यं दृष्ट्वोद्यन्तमाहवे
कालाग्निमिव दुर्धर्षं समवेष्टत नित्यशः १२
परिकृष्य स सेनां मे दशरात्रमनीकहा
जगामास्तमिवादित्यः कृत्वा कर्म सुदुष्करम् १३

यः स शक्र इवाक्षय्यं वर्षं शरमयं सृजन्
जघान युधि योधानामर्बुदं दशभिर्दिनैः १४
स शेते निष्टनन्भूमौ वातरुग्ण इव द्रुमः
मम दुर्मन्त्रितेनासौ यथा नार्हः स भारतः १५
कथं शान्तनवं दृष्ट्वा पाण्डवानामनीकिनी
प्रहर्तुमशकत्तत्र भीष्मं भीमपराक्रमम् १६
कथं भीष्मेण संग्राममकुर्वन्पाण्डुनन्दनाः
कथं च नाजयद्भीष्मो द्रोणे जीवति सञ्जय १७
कृपे सन्निहिते तत्र भरद्वाजात्मजे तथा
भीष्मः प्रहरतां श्रेष्ठः कथं स निधनं गतः १८
कथं चातिरथस्तेन पाञ्चाल्येन शिखण्डिना
भीष्मो विनिहतो युद्धे देवैरपि दुरुत्सहः १९
यः स्पर्धते रणे नित्यं जामदग्न्यं महाबलम्
अजितं जामदग्न्येन शक्रतुल्यपराक्रमम् २०
तं हतं समरे भीष्मं महारथबलोचितम्
सञ्जयाचक्ष्व मे वीरं येन शर्म न विद्महे २१
मामकाः के महेष्वासा नाजहुः सञ्जयाच्युतम्
दुर्योधनसमादिष्टाः के वीराः पर्यवारयन् २२
यच्छिखण्डिमुखाः सर्वे पाण्डवा भीष्ममभ्ययुः
कच्चिन्न कुरवो भीतास्तत्यजुः सञ्जयाच्युतम् २३
मौर्वीघोषस्तनयित्नुः पृषत्कपृषतो महान्
धनुर्ह्रादमहाशब्दो महामेघ इवोन्नतः २४
यदभ्यवर्षत्कौन्तेयान्सपाञ्चालान्ससृञ्जयान्
निघ्नन्पररथान्वीरो दानवानिव वज्रभृत् २५
इष्वस्त्रसागरं घोरं बाणग्राहं दुरासदम्
कार्मुकोर्मिणमक्षय्यमद्वीपं समरेऽप्लवम्
गदासिमकरावर्तं हयग्राहं गजाकुलम् २६
हयान्गजान्पदातांश्च रथांश्च तरसा बहून्
निमज्जयन्तं समरे परवीरापहारिणम् २७
विदह्यमानं कोपेन तेजसा च परन्तपम्

वेलेव मकरावासं के वीराः पर्यवारयन् २८
भीष्मो यदकरोत्कर्म समरे सञ्जयारिहा
दुर्योधनहितार्थाय के तदास्य पुरोऽभवन् २९
केऽरक्षन्दक्षिणं चक्रं भीष्मस्यामिततेजसः
पृष्ठतः के परान्वीरा उपासेधन्यतव्रताः ३०
के पुरस्तादवर्तन्त रक्षन्तो भीष्ममन्तिके
केऽरक्षन्नुत्तरं चक्रं वीरा वीरस्य युध्यतः ३१
वामे चक्रे वर्तमानाः केऽघ्नन्सञ्जय सृञ्जयान्
समेताग्रमनीकेषु केऽभ्यरक्षन्दुरासदम् ३२
पार्श्वतः केऽभ्यवर्तन्त गच्छन्तो दुर्गमां गतिम्
समूहे के परान्वीरान्प्रत्ययुध्यन्त सञ्जय ३३
रक्ष्यमाणः कथं वीरैर्गोप्यमानाश्च तेन ते
दुर्जयानामनीकानि नाजयंस्तरसा युधि ३४
सर्वलोकेश्वरस्येव परमेष्ठिप्रजापतेः
कथं प्रहर्तुमपि ते शेकुः सञ्जय पाण्डवाः ३५
यस्मिन्द्वीपे समाश्रित्य युध्यन्ति कुरवः परैः
तं निमग्नं नरव्याघ्रं भीष्मं शंससि सञ्जय ३६
यस्य वीर्ये समाश्वस्य मम पुत्रो बृहद्बलः
न पाण्डवानगणयत्कथं स निहतः परैः ३७
यः पुरा विबुधैः सेन्द्रैः साहाय्ये युद्धदुर्मदः
कांक्षितो दानवान्घद्भिः पिता मम महाव्रतः ३८
यस्मिञ्जाते महावीर्ये शन्तनुर्लोकशंकरे
शोकं दुःखं च दैन्यं च प्राजहात्पुत्रलक्ष्मणि ३९
प्रज्ञापरायणं तज्ज्ञं सद्धर्मनिरतं शुचिम्
वेदवेदाङ्गतत्त्वज्ञं कथं शंससि मे हतम् ४०
सर्वास्त्रविनयोपेतं दान्तं शान्तं मनस्विनम्
हतं शान्तनवं श्रुत्वा मन्ये शेषं बलं हतम् ४१
धर्मादधर्मो बलवान्सम्प्राप्त इति मे मतिः
यत्र वृद्धं गुरुं हत्वा राज्यमिच्छन्ति पाण्डवाः ४२
जामदग्न्यः पुरा रामः सर्वास्त्रविदनुत्तमः

अम्बार्थमुद्यतः संख्ये भीष्मेण युधि निर्जितः ४३
तमिन्द्रसमकर्माणं ककुदं सर्वधन्विनाम्
हतं शंससि भीष्मं मे किं नु दुःखमतः परम् ४४
असकृत्क्षत्रियव्राताः संख्ये येन विनिर्जिताः
जामदग्न्यस्तथा रामः परवीरनिघातिना ४५
तस्मान्नूनं महावीर्याद्भार्गवाद्युद्धदुर्मदात्
तेजोवीर्यबलैर्भूयाञ्शिखण्डी द्रुपदात्मजः ४६
यः शूरं कृतिनं युद्धे सर्वशास्त्रविशारदम्
परमास्त्रविदं वीरं जघान भरतर्षभम् ४७
के वीरास्तममित्रघ्नमन्वयुः शत्रुसंसदि
शंस मे तद्यथा वृत्तं युद्धं भीष्मस्य पाण्डवैः ४८
योषेव हतवीरा मे सेना पुत्रस्य संजय
अगोपमिव चोद्भ्रान्तं गोकुलं तद्बलं मम ४९
पौरुषं सर्वलोकस्य परं यस्य महाहवे
परासिक्ते च वस्तस्मिन्कथमासीन्मनस्तदा ५०
जीवितेऽप्यद्य सामर्थ्यं किमिवास्मासु संजय
घातयित्वा महावीर्यं पितरं लोकधार्मिकम् ५१
अगाधे सलिले मग्नां नावं दृष्ट्वेव पारगाः
भीष्मे हते भृशं दुःखान्मन्ये शोचन्ति पुत्रकाः ५२
अद्रिसारमयं नूनं सुदृढं हृदयं मम
यच्छ्रुत्वा पुरुषव्याघ्रं हतं भीष्मं न दीर्यते ५३
यस्मिन्नस्त्रं च मेधा च नीतिश्च भरतर्षभे
अप्रमेयाणि दुर्धर्षे कथं स निहतो युधि ५४
न चास्त्रेण न शौर्येण तपसा मेधया न च
न धृत्या न पुनस्त्यागान्मृत्योः कश्चिद्विमुच्यते ५५
कालो नूनं महावीर्यः सर्वलोकदुरत्ययः
यत्र शान्तनवं भीष्मं हतं शंससि सञ्जय ५६
पुत्रशोकाभिसन्तप्तो महद्दुःखमचिन्तयन्
आशंसेऽहं पुरा त्राणं भीष्माच्छंतनुनन्दनात् ५७
यदादित्यमिवापश्यत्पतितं भुवि संजय

दुर्योधनः शान्तनवं किं तदा प्रत्यपद्यत ५८
नाहं स्वेषां परेषां वा बुद्ध्या संजय चिन्तयन्
शेषं किंचित्प्रपश्यामि प्रत्यनीके महीक्षिताम् ५९
दारुणः क्षत्रधर्मोऽयमृषिभिः सम्प्रदर्शितः
यत्र शान्तनवं हत्वा राज्यमिच्छन्ति पाण्डवाः ६०
वयं वा राज्यमिच्छामो घातयित्वा पितामहम्
क्षत्रधर्मे स्थिताः पार्था नापराध्यन्ति पुत्रकाः ६१
एतदार्येण कर्तव्यं कृच्छ्रास्वापत्सु संजय
पराक्रमः परं शक्त्या तच्च तस्मिन्प्रतिष्ठितम् ६२
अनीकानि विनिघ्नन्तं ह्रीमन्तमपराजितम्
कथं शान्तनवं तात पाण्डुपुत्रा न्यपातयन् ६३
कथं युक्तान्यनीकानि कथं युद्धं महात्मभिः
कथं वा निहतो भीष्मः पिता संजय मे परैः ६४
दुर्योधनश्च कर्णश्च शकुनिश्चापि सौबलः
दुःशासनश्च कितवो हते भीष्मे किमब्रुवन् ६५
यच्छरीरैरुपस्तीर्णां नरवारणवाजिनाम्
शरशक्तिगदाखड्गतोमराक्षां भयावहाम् ६६
प्राविशन्कितवा मन्दाः सभां युधि दुरासदाम्
प्राणद्यूते प्रतिभये केऽदीव्यन्त नरर्षभाः ६७
केऽजयन्के जितास्तत्र हृतलक्षा निपातिताः
अन्ये भीष्माच्छान्तनवात्तन्ममाचक्ष्व संजय ६८
न हि मे शान्तिरस्तीह युधि देवव्रतं हतम्
पितरं भीमकर्माणं श्रुत्वा मे दुःखमाविशत् ६९
आर्तिं मे हृदये रूढां महतीं पुत्रकारिताम्
त्वं सिंचन्सर्पिषेवाग्निमुद्दीपयसि संजय ७०
महान्तं भारमुद्यम्य विश्रुतं सार्वलौकिकम्
दृष्ट्वा विनिहतं भीष्मं मन्ये शोचन्ति पुत्रकाः ७१
श्रोष्यामि तानि दुःखानि दुर्योधनकृतान्यहम्
तस्मान्मे सर्वमाचक्ष्व यद्वृत्तं तत्र संजय ७२
संग्रामे पृथिवीशानां मन्दस्याबुद्धिसम्भवम्

अपनीतं सुनीतं वा तन्ममाचक्ष्व संजय ७३
यत्कृतं तत्र भीष्मेण संग्रामे जयमिच्छता
तेजोयुक्तं कृतास्त्रेण शंस तच्चाप्यशेषतः ७४
यथा तदभवद्युद्धं कुरुपाण्डवसेनयोः
क्रमेण येन यस्मिंश्च काले यच्च यथा च तत् ७५
इति श्रीमहाभारते भीष्मपर्वणि पञ्चदशोऽध्यायः १५

## षोडशोऽध्यायः

संजय उवाच
त्वद्युक्तोऽयमनुप्रश्नो महाराज यथार्हसि
न तु दुर्योधने दोषमिममासक्तुमर्हसि १
य आत्मनो दुश्चरितादशुभं प्राप्नुयान्नरः
एनसा तेन नान्यं स उपाशङ्कितुमर्हति २
महाराज मनुष्येषु निन्द्यं यः सर्वमाचरेत्
स वध्यः सर्वलोकस्य निन्दितानि समाचरन् ३
निकारो निकृतिप्रज्ञैः पाण्डवैस्त्वत्प्रतीक्षया
अनुभूतः सहामात्यैः क्षान्तं च सुचिरं वने ४
हयानां च गजानां च शूराणां चामितौजसाम्
प्रत्यक्षं यन्मया दृष्टं दृष्टं योगबलेन च ५
शृणु तत्पृथिवीपाल मा च शोके मनः कृथाः
दिष्टमेतत्पुरा नूनमेवंभावि नराधिप ६
नमस्कृत्वा पितुस्तेऽह पाराशर्याय धीमते
यस्य प्रसादाद्दिव्यं मे प्राप्तं ज्ञानमनुत्तमम् ७
दृष्टिश्चातीन्द्रिया राजन्दूराच्छ्रवणमेव च
परचित्तस्य विज्ञानमतीतानागतस्य च ८
व्युत्थितोत्पत्तिविज्ञानमाकाशे च गतिः सदा
शस्त्रैरसङ्गो युद्धेषु वरदानान्महात्मनः ९
शृणु मे विस्तरेणेदं विचित्रं परमाद्भुतम्
भारतानां महद्युद्धं यथाभूल्लोमहर्षणम् १०
तेष्वनीकेषु यत्तेषु व्यूढेषु च विधानतः

दुर्योधनो महाराज दुःशासनमथाब्रवीत् ११
दुःशासन रथास्तूर्णं युज्यन्तां भीष्मरक्षिणः
अनीकानि च सर्वाणि शीघ्रं त्वमनुचोदय १२
अयं मा समनुप्राप्तो वर्षपूगाभिचिन्तितः
पाण्डवानां ससैन्यानां कुरूणां च समागमः १३
नातः कार्यतमं मन्ये रणे भीष्मस्य रक्षणात्
हन्याद्गुप्तो ह्यसौ पार्थान्सोमकांश्च ससृंजयान् १४
अब्रवीच्च विशुद्धात्मा नाहं हन्यां शिखण्डिनम्
श्रूयते स्त्री ह्यसौ पूर्वं तस्माद्वर्ज्यो रणे मम १५
तस्माद्भीष्मो रक्षितव्यो विशेषेणेति मे मतिः
शिखण्डिनो वधे यत्ताः सर्वे तिष्ठन्तु मामकाः १६
तथा प्राच्याः प्रतीच्याश्च दाक्षिणात्योत्तरापथाः
सर्वशस्त्रास्त्रकुशलास्ते रक्षन्तु पितामहम् १७
अरक्ष्यमाणं हि वृको हन्यात्सिंहं महाबलम्
मा सिंहं जम्बुकेनेव घातयामः शिखण्डिना १८
वामं चक्रं युधामन्युरुत्तमौजाश्च दक्षिणम्
गोप्तारौ फल्गुनस्यैतौ फल्गुनोऽपि शिखण्डिनः १९
संरक्ष्यमाणः पार्थेन भीष्मेण च विवर्जितः
यथा न हन्याद्गाङ्गेयं दुःशासन तथा कुरु २०
ततो रजन्यां व्युष्टायां शब्दः समभवन्महान्
क्रोशतां भूमिपालानां युज्यतां युज्यतामिति २१
शङ्खदुन्दुभिनिर्घोषैः सिंहनादैश्च भारत
हयहेषितशब्दैश्च रथनेमिस्वनैस्तथा २२
गजानां बृंहतां चैव योधानां चाभि गर्जताम्
क्ष्वेडितास्फोटितोत्क्रुष्टैस्तुमुलं सर्वतोऽभवत् २३
उदतिष्ठन्महाराज सर्वं युक्तमशेषतः
सूर्योदये महत्सैन्यं कुरुपाण्डवसेनयोः
तव राजेन्द्र पुत्राणां पाण्डवानां तथैव च २४
तत्र नागा रथाश्चैव जाम्बूनदपरिष्कृताः
विभ्राजमाना दृश्यन्ते मेघा इव सविद्युतः २५

रथानीकान्यदृश्यन्त नगराणीव भूरिशः
अतीव शुशुभे तत्र पिता ते पूर्णचन्द्रवत् २६
धनुर्भिरृष्टिभिः खड्गैर्गदाभिः शक्तितोमरैः
योधाः प्रहरणैः शुभ्रैः स्वेष्वनीकेष्ववस्थिताः २७
गजा रथाः पदाताश्च तुरगाश्च विशां पते
व्यतिष्ठन्वागुराकाराः शतशोऽथ सहस्रशः २८
ध्वजा बहुविधाकारा व्यदृश्यन्त समुच्छ्रिताः
स्वेषां चैव परेषां च द्युतिमन्तः सहस्रशः २९
काञ्चना मणिचित्राङ्गा ज्वलन्त इव पावकाः
अर्चिष्मन्तो व्यरोचन्त ध्वजा राज्ञां सहस्रशः ३०
महेन्द्रकेतवः शुभ्रा महेन्द्रसदनेष्विव
संनद्धास्तेषु ते वीरा ददृशुर्युद्धकांक्षिणः ३१
उद्यतैरायुधैश्चित्रास्तलबद्धाः कलापिनः
ऋषभाक्षा मनुष्येन्द्राश्चमूमुखगता बभुः ३२
शकुनिः सौबलः शल्यः सैन्धवोऽथ जयद्रथः
विन्दानुविन्दावावन्त्यौ काम्बोजश्च सुदक्षिणः ३३
श्रुतायुधश्च कालिङ्गो जयत्सेनश्च पार्थिवः
बृहद्बलश्च कौशल्यः कृतवर्मा च सात्वतः ३४
दशैते पुरुषव्याघ्राः शूराः परिघबाहवः
अक्षौहिणीनां पतयो यज्वानो भूरिदक्षिणाः ३५
एते चान्ये च बहवो दुर्योधनवशानुगाः
राजानो राजपुत्राश्च नीतिमन्तो महाबलाः ३६
संनद्धाः समदृश्यन्त स्वेष्वनीकेष्ववस्थिताः
बद्धकृष्णाजिनाः सर्वे ध्वजिनो मुंजमालिनः ३७
सृष्टा दुर्योधनस्यार्थे ब्रह्मलोकाय दीक्षिताः
समृद्धा दश वाहिन्यः परिगृह्य व्यवस्थिताः ३८
एकादशी धार्तराष्ट्री कौरवाणां महाचमूः
अग्रतः सर्वसैन्यानां यत्र शान्तनवोऽग्रणीः ३९
श्वेतोष्णीषं श्वेतहयं श्वेतवर्माणमच्युतम्
अपश्याम महाराज भीष्मं चन्द्रमिवोदितम् ४०

हेमतालध्वजं भीष्मं राजते स्यन्दने स्थितम्
श्वेताभ्र इव तीक्ष्णांशुं ददृशुः कुरुपाण्डवाः ४१
दृष्ट्वा चमूमुखे भीष्मं समकम्पन्त पाण्डवाः
सृञ्जयाश्च महेष्वासा धृष्टद्युम्नपुरोगमाः ४२
जृम्भमाणं महासिंहं दृष्ट्वा क्षुद्रमृगा यथा
धृष्टद्युम्नमुखाः सर्वे समुद्विविजिरे मुहुः ४३
एकादशैताः श्रीजुष्टा वाहिन्यस्तव भारत
पाण्डवानां तथा सप्त महापुरुषपालिताः ४४
उन्मत्तमकरावर्तौ महाग्राहसमाकुलौ
युगान्ते समुपेतौ द्वौ दृश्येते सागराविव ४५
नैव नस्तादृशो राजन्दृष्टपूर्वो न च श्रुतः
अनीकानां समेतानां समवायस्तथाविधः ४६
इति श्रीमहाभारते भीष्मपर्वणि षोडशोऽध्यायः १६

## सप्तदशोऽध्यायः

संजय उवाच
यथा स भगवान्व्यासः कृष्णद्वैपायनोऽब्रवीत्
तथैव सहिताः सर्वे समाजग्मुर्महीक्षितः १
मघाविषयगः सोमस्तद्दिनं प्रत्यपद्यत
दीप्यमानाश्च सम्पेतुर्दिवि सप्त महाग्रहाः २
द्विधाभूत इवाऽदित्य उदये प्रत्यदृश्यत
ज्वलन्त्या शिखया भूयो भानुमानुदितो दिवि ३
ववाशिरे च दीप्तायां दिशि गोमायुवायसाः
लिप्समानाः शरीराणि मांसशोणित भोजनाः ४
अहन्यहनि पार्थानां वृद्धः कुरुपितामहः
भरद्वाजात्मजश्चैव प्रातरुत्थाय संयतौ ५
जयोऽस्तु पाण्डुपुत्राणामित्यूचतुररिन्दमौ
युयुधाते तवार्थाय यथा स समयः कृतः ६
सर्वधर्मविशेषज्ञः पिता देवव्रतस्तव
समानीय महीपालानिदं वचनमब्रवीत् ७

इदं वः क्षत्रिया द्वारं स्वर्गायापावृतं महत्
गच्छध्वं तेन शक्रस्य ब्रह्मणश्च सलोकताम् ८
एष वः शाश्वतः पन्थाः पूर्वैः पूर्वतरैर्गतः
संभावयत चात्मानमव्यग्रमनसो युधि ९
नाभागो हि ययातिश्च मान्धाता नहुषो नृगः
संसिद्धाः परमं स्थानं गताः कर्मभिरीदृशैः १०
अधर्मः क्षत्रियस्यैष यद्व्याधिमरणं गृहे
यदाजौ निधनं याति सोऽस्य धर्मः सनातनः ११
एवमुक्ता महीपाला भीष्मेण भरतर्षभ
निर्ययुः स्वान्यनीकानि शोभयन्तो रथोत्तमैः १२
स तु वैकर्तनः कर्णः सामात्यः सह बन्धुभिः
न्यासितः समरे शस्त्रं भीष्मेण भरतर्षभ १३
अपेतकर्णाः पुत्रास्ते राजानश्चैव तावकाः
निर्ययुः सिंहनादेन नादयन्तो दिशो दश १४
श्वेतैश्छत्रैः पताकाभिर्ध्वजवारणवाजिभिः
तान्यनीकान्यशोभन्त रथं रथपदातिभिः १५
भेरीपणवशब्दैश्च पटहानां च निःस्वनैः
रथनेमिनिनादैश्च बभूवाकुलिता मही १६
काञ्चनाङ्गदकेयूरैः कार्मुकैश्च महारथाः
भ्राजमाना व्यदृश्यन्त जङ्गमाः पर्वता इव १७
तालेन महता भीष्मः पञ्चतारेण केतुना
विमलादित्यसङ्काशस्तस्थौ कुरुचमूपतिः १८
ये त्वदीया महेष्वासा राजानो भरतर्षभ
अवर्तन्त यथादेशं राजञ्शान्तनवस्य ते १९
स तु गोवासनः शैब्यः सहितः सर्वराजभिः
ययौ मातङ्गराजेन राजार्हेण पताकिना
पद्मवर्णस्त्वनीकानां सर्वेषामग्रतः स्थितः २०
अश्वत्थामा ययौ यत्तः सिंहलांगूलकेतनः
श्रुतायुश्चित्रसेनश्च पुरुमित्रो विविंशतिः २१
शल्यो भूरिश्रवाश्चैव विकर्णश्च महारथः

एते सप्त महेष्वासा द्रोणपुत्रपुरोगमाः
स्यन्दनैर्वरवर्णाभैर्भीष्मस्यासन्पुरःसराः २२
तेषामपि महोत्सेधाः शोभयन्तो रथोत्तमान्
भ्राजमाना व्यदृश्यन्त जाम्बूनदमया ध्वजाः २३
जाम्बूनदमयी वेदिः कमण्डलुविभूषिता
केतुराचार्यमुख्यस्य द्रोणस्य धनुषा सह २४
अनेकशतसाहस्रमनीकमनुकर्षतः
महान्दुर्योधनस्यासीन्नागो मणिमयो ध्वजः २५
तस्य पौरवकालिङ्गौ काम्बोजश्च सुदक्षिणः
क्षेमधन्वा सुमित्रश्च तस्थुः प्रमुखतो रथाः २६
स्यन्दनेन महार्हेण केतुना वृषभेण च
प्रकर्षन्निव सेनाग्रं मागधश्च नृपो ययौ २७
तदङ्गपतिना गुप्तं कृपेण च महात्मना
शारदाभ्रचयप्रख्यं प्राच्यानामभवद्बलम् २८
अनीकप्रमुखे तिष्ठन्वराहेण महायशाः
शुशुभे केतुमुख्येन राजतेन जयद्रथः २९
शतं रथसहस्राणां तस्यासन्वशवर्तिनः
अष्टौ नागसहस्राणि सादिनामयुतानि षट् ३०
तत्सिन्धुपतिना राजन्पालितं ध्वजिनीमुखम्
अनन्तरथनागाश्वमशोभत महद्बलम् ३१
षष्ट्या रथसहस्रैस्तु नागानामयुतेन च
पतिः सर्वकलिङ्गानां ययौ केतुमता सह ३२
तस्य पर्वतसङ्काशा व्यरोचन्त महागजाः
यन्त्रतोमरतूणीरैः पताकाभिश्च शोभिताः ३३
शुशुभे केतुमुख्येन पादपेन कलिङ्गपः
श्वेतच्छत्रेण निष्केण चामरव्यजनेन च ३४
केतुमानपि मातङ्गं विचित्रपरमांकुशम्
आस्थितः समरे राजन्मेघस्थ इव भानुमान् ३५
तेजसा दीप्यमानस्तु वारणोत्तममास्थितः
भगदत्तो ययौ राजा यथा वज्रधरस्तथा ३६

गजस्कन्धगतावास्तां भगदत्तेन सम्मितौ
विन्दानुविन्दावावन्त्यौ केतुमन्तमनुव्रतौ ३७
स रथानीकवान्व्यूहो हस्त्यङ्गोत्तमशीर्षवान्
वाजिपक्षः पतन्नुग्रः प्राहरत्सर्वतोमुखः ३८
द्रोणेन विहितो राजन्राज्ञा शान्तनवेन च
तथैवाचार्यपुत्रेण बाह्लीकेन कृपेण च ३९
इति श्रीमहाभारते भीष्मपर्वणि सप्तदशोऽध्यायः १७

## अष्टादशोऽध्यायः

संजय उवाच
ततो मुहूर्तात् तुमुलः शब्दो हृदयकम्पनः
अश्रूयत महाराज योधानां प्रयुयुत्सताम् १
शङ्खदुन्दुभिनिर्घोषैर्वारणानां च बृंहितैः
रथानां नेमिघोषैश्च दीर्यतीव वसुंधरा २
हयानां हेषमाणानां योधानां तत्र गर्जताम्
क्षणेन खं दिशश्चैव शब्देनापूरितं तदा ३
पुत्राणां तव दुर्धर्ष पाण्डवानां तथैव च
समकम्पन्त सैन्यानि परस्परसमागमे ४
तत्र नागा रथाश्चैव जाम्बूनदविभूषिताः
भ्राजमाना व्यदृश्यन्त मेघा इव सविद्युतः ५
ध्वजा बहुविधाकारास्तावकानां नराधिप
काञ्चनाङ्गदिनो रेजुर्ज्वलिता इव पावकाः ६
स्वेषां चैव परेषां च समदृश्यन्त भारत
महेन्द्रकेतवः शुभ्रा महेन्द्रसदनेष्विव ७
काञ्चनैः कवचैर्वीरा ज्वलनार्कसमप्रभैः
संनद्धाः प्रत्यदृश्यन्त ग्रहाः प्रज्वलिता इव ८
उद्यतैरायुधैश्चित्रैस्तलबद्धाः पताकिनः
ऋषभाक्षा महेष्वासाश्चमूमुखगता बभुः ९
पृष्ठगोपास्तु भीष्मस्य पुत्रास्तव नराधिप
दुःशासनो दुर्विषहो दुर्मुखो दुःसहस्तथा १०

विविंशतिश्चित्रसेनो विकर्णश्च महारथः
सत्यव्रतः पुरुमित्रो जयो भूरिश्रवाः शलः ११
रथा विंशतिसाहस्रास्तथैषामनुयायिनः
अभीषाहाः शूरसेनाः शिबयोऽथ वसातयः १२
शाल्वा मत्स्यास्तथाम्बष्ठास्त्रिगर्ताः केकयास्तथा
सौवीराः कितवाः प्राच्याः प्रतीच्योदीच्यमालवाः १३
द्वादशैते जनपदाः सर्वे शूरास्तनुत्यजः
महता रथवंशेन तेऽभ्यरक्षत् पितामहम् १४
अनीकं दशसाहस्रं कुञ्जराणां तरस्विनाम्
मागधो येन नृपतिस्तद् रथानीकमन्वयात् १५
रथानां चक्ररक्षाश्च पादरक्षाश्च दन्तिनाम्
अभवन् वाहिनीमध्ये शतानामयुतानि षट् १६
पादाताश्चाग्रतोऽगच्छन् धनुश्चर्मासिपाणयः
अनेकशतसाहस्रा नखरप्रासयोधिनः १७
अक्षौहिण्यो दशैका च तव पुत्रस्य भारत
अदृश्यन्त महाराज गङ्गेव यमुनान्तरे १८
इति श्रीमहाभारते भीष्मपर्वणि अष्टादशोऽध्यायः १८

## एकोन विंशोऽध्यायः

धृतराष्ट्र उवाच
अक्षौहिण्यो दशैकां च व्यूढां दृष्ट्वा युधिष्ठिरः
कथमल्पेन सैन्येन प्रत्यव्यूहत पाण्डवः १
यो वेद मानुषं व्यूहं दैवं गान्धर्वमासुरम्
कथं भीष्मं स कौन्तेयः प्रत्यव्यूहत पाण्डवः २
सञ्जय उवाच
धार्तराष्ट्राण्यनीकानि दृष्ट्वा व्यूढानि पाण्डवः
अभ्यभाषत धर्मात्मा धर्मराजो धनंजयम् ३
महर्षेर्वचनात् तात वेदयन्ति बृहस्पतेः
संहतान्योधयेदल्पान्कामं विस्तारयेद्बहून् ४
सूचीमुखमनीकं स्यादल्पानां बहुभिः सह

अस्माकं च तथा सैन्यमल्पीयः सुतरां परैः ५
एतद्वचनमाज्ञाय महर्षेर्व्यूह पाराडव
तच्छ्रुत्वा धर्मराजस्य प्रत्यभाषत फल्गुनः ६
एष व्यूहामि ते राजन्व्यूहं परमदुर्जयम्
अचलं नाम वज्राख्यं विहितं वज्रपाणिना ७
यः स वात इवोद्धूतः समरे दुःसहः परैः
सः नः पुरो योत्स्यति वै भीमः प्रहरतां वरः ८
तेजांसि रिपुसैन्यानां मृद्नन्पुरुषसत्तमः
अग्रेऽग्रणीर्यास्यति नो युद्धोपायविचक्षणः ९
यं दृष्ट्वा पार्थिवाः सर्वे दुर्योधनपुरोगमाः
निवर्तिष्यन्ति संभ्रान्ताः सिंहं क्षुद्रमृगा इव १०
तं सर्वे संश्रयिष्यामः प्राकारमकुतोभयम्
भीमं प्रहरतां श्रेष्ठं वज्रपाणिमिवामराः ११
नहि सोऽस्ति पुमाँल्लोके यः संक्रुद्धं वृकोदरम्
द्रष्टुमत्युग्रकर्माणं विषहेत नरर्षभम् १२
भीमसेनो गदां बिभ्रद् वज्रसारमयीं दृढाम्
चरन्वेगेन महता समुद्रमपि शोषयेत् १३
केकया धृष्टकेतुश्च चेकितानश्च वीर्यवान्
एते तिष्ठन्ति सामात्याः प्रेक्षकास्ते नरेश्वर १४
धृतराष्ट्रस्य दायादा इति बीभत्सुरब्रवीत्
ब्रुवाणं तु तथा पार्थं सर्वसैन्यानि मारिष
अपूजयंस्तदा वाग्भिरनुकूलाभिराहवे १५
एवमुक्त्वा महाबाहुस्तथा चक्रे धनंजयः
व्यूह्य तानि बलान्याशु प्रययौ फल्गुनस्तदा १६
सम्प्रयातान् कुरून्दृष्ट्वा पाराडवानां महाचमूः
गङ्गेव पूर्णा स्तिमिता स्यन्दमाना व्यदृश्यत १७
भीमसेनोऽग्रणीस्तेषां धृष्टद्युम्नश्च पार्षतः
नकुलः सहदेवश्च धृष्टकेतुश्च वीर्यवान् १८
समुद्योज्य ततः पश्चाद् राजाप्यक्षौहिणीवृतः
भ्रातृभिः सह पुत्रैश्च सोऽभ्यरक्षत पृष्ठतः १९

चक्ररक्षौ तु भीमस्य माद्रीपुत्रौ महाद्युती
द्रौपदेयाः ससौभद्राः पृष्ठगोपास्तरस्विनः २०
धृष्टद्युम्नश्च पाञ्चाल्यस्तेषां गोप्ता महारथः
सहितः पृतनाशूरै रथमुख्यैः प्रभद्रकैः २१
शिखण्डी तु ततः पश्चादर्जुनेनाभिरक्षितः
यत्तो भीष्मविनाशाय प्रययौ भरतर्षभ २२
पृष्ठगोपोऽर्जुनस्यापि युयुधानो महारथः
चक्ररक्षौ तु पाञ्चाल्यौ युधामन्यूत्तमौजसौ २३
राजा तु मध्यमानीके कुन्तीपुत्रो युधिष्ठिरः
बृहद्भिः कुञ्जरैर्मत्तैश्चलद्भिरचलैरिव २४
अक्षौहिण्या च पाञ्चाल्यो यज्ञसेनो महामनाः
विराटमन्वयात् पश्चात्पाण्डवार्थे पराक्रमी २५
तेषामादित्यचन्द्राभाः कनकोत्तमभूषणाः
नानाचिह्नधरा राजन्रथेष्वासन्महाध्वजाः २६
समुत्सर्प्य ततः पश्चाद्धृष्टद्युम्नो महारथः
भ्रातृभिः सह पुत्रैश्च सोऽभ्यरक्षद्युधिष्ठिरम् २७
त्वदीयानां परेषां च रथेषु विविधान्ध्वजान्
अभिभूयार्जुनस्यैको ध्वजस्तस्थौ महाकपिः २८
पादातास्त्वग्रतोऽगच्छन्नसिशक्त्यृष्टिपाणयः
अनेकशतसाहस्रा भीमसेनस्य रक्षिणः २९
वारणा दशसाहस्राः प्रभिन्नकरटामुखाः
शूरा हेममयैर्जालैर्दीप्यमाना इवाचलाः ३०
क्षरन्त इव जीमूता मदार्द्राः पद्मगन्धिनः
राजानमन्वयुः पश्चाच्चलन्त इव पर्वताः ३१
भीमसेनो गदां भीमां प्रकर्षन्परिघोपमाम्
प्रचकर्ष महत्सैन्यं दुराधर्षो महामनाः ३२
तमर्कमिव दुष्प्रेक्ष्यं तपन्तं रश्मिमालिनम्
न शेकुः सर्वतो योधाः प्रतिवीक्षितुमन्तिके ३३
वज्रो नामैष तु व्यूहो दुर्भिदः सर्वतोमुखः
चापविद्युद्ध्वजो घोरो गुप्तो गाण्डीवधन्वना ३४

यं प्रतिव्यूह्य तिष्ठन्ति पाण्डवास्तव वाहिनीम्
अजेयो मानुषे लोके पाण्डवैरभिरक्षितः ३५
संध्यां तिष्ठत्सु सैन्येषु सूर्यस्योदयनं प्रति
प्रावात्सपृषतो वायुरनभ्रे स्तनयित्नुमान् ३६
विष्वग्वाताश्च वान्त्युग्रा नीचैः शर्करकर्षिणः
रजश्चोद्धूयमानं तु तमसाच्छादयज्जगत् ३७
पपात महती चोल्का प्राङ्मुखी भरतर्षभ
उद्यन्तं सूर्यमाहत्य व्यशीर्यत महास्वना ३८
अथ सज्जीयमानेषु सैन्येषु भरतर्षभ
निष्प्रभोऽभ्युदियात्सूर्यः सघोषो भूश्चचाल ह
व्यशीर्यत सनादा च तदा भरतसत्तम ३९
निर्घाता बहवो राजन्दिक्षु सर्वासु चाभवन्
प्रादुरासीद्रजस्तीव्रं न प्राज्ञायत किंचन ४०
ध्वजानां धूयमानानां सहसा मातरिश्वना
किङ्किणीजालनद्धानां काञ्चनस्रग्वतां रवैः ४१
महतां सपताकानामादित्यसमतेजसाम्
सर्वं झणझणीभूतमासीत्तालवनेष्विव ४२
एवं ते पुरुषव्याघ्राः पाण्डवा युद्धनन्दिनः
व्यवस्थिताः प्रतिव्यूह्य तव पुत्रस्य वाहिनीम् ४३
स्रंसन्त इव मज्जानो योधानां भरतर्षभ
दृष्ट्वाग्रतो भीमसेनं गदापाणिमवस्थितम् ४४
इति श्रीमहाभारते भीष्मपर्वणि एकोनविंशोऽध्यायः १९

## विंशोऽध्यायः

धृतराष्ट्र उवाच
सूर्योदये संजय के नु पूर्वं युयुत्सवो हृष्यमाणा इवासन्
मामका वा भीष्मनेत्राः समीके पाण्डवा वा भीमनेत्रास्तदानीम् १
केषां जघन्यौ सोमसूर्यौ सवायू केषां सेनां श्वापदा व्याभषन्त
केषां यूनां मुखवर्णाः प्रसन्नाः सर्वं ह्येतद्ब्रूहि तत्त्वं यथावत् २
सञ्जय उवाच

उभे सेने तुल्यमिवोपयाते उभे व्यूहे हृष्टरूपे नरेन्द्र
उभे चित्रे वनराजिप्रकाशे तथैवोभे नागरथाश्वपूर्णे ३
उभे सेने बृहती भीमरूपे तथैवोभे भारत दुर्विषह्ये
तथैवोभे स्वर्गजयाय सृष्टे तथा ह्युभे सत्पुरुषार्यगुप्ते ४
पश्चान्मुखाः कुरवो धार्तराष्ट्राः स्थिताः पार्थाः प्राङ्मुखा योत्स्यमानाः
दैत्येन्द्रसेनेव च कौरवाणां देवेन्द्रसेनेव च पाण्डवानाम् ५
शुक्रो वायुः पृष्ठतः पाण्डवानां धार्तराष्ट्राञ्श्वापदा व्याभषन्त
गजेन्द्राणां मदगन्धांश्च तीव्रान्न सेहिरे तव पुत्रस्य नागाः ६
दुर्योधनो हस्तिनं पद्मवर्णं सुवर्णकक्ष्यं जातिबलं प्रभिन्नम्
समास्थितो मध्यगतः कुरूणां संस्तूयमानो बन्दिभिर्मागधैश्च ७
चन्द्रप्रभं श्वेतमस्यातपत्रं सौवर्णी स्रग्भ्राजते चोत्तमाङ्गे
तं सर्वतः शकुनिः पार्वतीयैः सार्धं गान्धारैः पाति गान्धारराजः ८
भीष्मोऽग्रतः सर्वसैन्यस्य वृद्धः श्वेतच्छत्रः श्वेतधनुः सशंखः
श्वेतोष्णीषः पाण्डुरेण ध्वजेन श्वेतैरश्वैः श्वेतशैलप्रकाशः ९
तस्य सैन्यं धार्तराष्ट्राश्च सर्वे बाह्लीकानामेकदेशः शलश्च
ये चाम्बष्ठाः क्षत्रिया ये च सिन्धौ तथा सौवीराः पञ्चनदाश्च शूराः १०
शोणैर्हयै रुक्मरथो महात्मा द्रोणो महाबाहुरदीनसत्त्वः
आस्ते गुरुः प्रयशा सर्वराज्ञां पश्चाच्चमूमिन्द्र इवाभिरक्षन् ११
वार्द्धक्षत्रिः सर्वसैन्यस्य मध्ये भूरिश्रवाः पुरुमित्रो जयश्च
शाल्वा मत्स्याः केकयाश्चापि सर्वे गजानीकैर्भ्रातरो योत्स्यमानाः १२
शारद्वतश्चोत्तरधूर्महात्मा महेष्वासो गौतमश्चित्रयोधी
शकैः किरातैर्यवनैः पह्लवैश्च सार्धं चमूमुत्तरतोऽभिपाति १३
महारथैरन्धकवृष्णिभोजैः सौराष्ट्रकैर्नैर्ऋतैरात्तशस्त्रैः
बृहद्बलः कृतवर्माभिगुप्तो बलं त्वदीयं दक्षिणतोऽभिपाति १४
संशप्तकानामयुतं रथानां मृत्युर्जयो वार्जुनस्येति सृष्टाः
येनार्जुनस्तेन राजन्कृतास्त्राः प्रयाता वै ते त्रिगर्ताश्च शूराः १५
साग्रं शतसहस्रं तु नागानां तव भारत
नागे नागे रथशतं शतं चाश्वा रथे रथे १६
अश्वेऽश्वे दश धानुष्का धानुष्के दश चर्मिणः
एवं व्यूढान्यनीकानि भीष्मेण तव भारत १७

अव्यूहन्मानुषं व्यूहं दैवं गान्धर्वमासुरम्
दिवसे दिवसे प्राप्ते भीष्मः शान्तनवोऽग्रणीः १८
महारथौघविपुलः समुद्र इव पर्वणि
भीष्मेण धार्तराष्ट्राणां व्यूहः प्रत्यङ्मुखो युधि १९
अनन्तरूपा ध्वजिनी त्वदीया नरेन्द्र भीमा न तु पाण्डवानाम्
तां त्वेव मन्ये बृहतीं दुष्प्रधृष्यां यस्या नेतारौ केशवश्चार्जुनश्च २०
इति श्रीमहाभारते भीष्मपर्वणि विंशोऽध्यायः २०

## एकविंशोऽध्यायः

संजय उवाच
बृहतीं धार्तराष्ट्राणां दृष्ट्वा सेनां समुद्यताम्
विषादमगमद्राजा कुन्तीपुत्रो युधिष्ठिरः १
व्यूहं भीष्मेण चाभेद्यं कल्पितं प्रेक्ष्य पाण्डवः
अभेद्यमिव सम्प्रेक्ष्य विषण्णोऽजुनमब्रवीत् २
धनंजय कथं शक्यमस्माभिर्योद्धुमाहवे
धार्तराष्ट्रैर्महाबाहो येषां योद्धा पितामहः ३
अक्षोभ्योऽयमभेद्यश्च भीष्मेणामित्रकर्शिना
कल्पितः शास्त्रदृष्टेन विधिना भूरितेजसा ४
ते वयं संशयं प्राप्ताः ससैन्याः शत्रुकर्शन
कथमस्मान्महाव्यूहादुद्यानं नो भविष्यति ५
अथार्जुनोऽब्रवीत्पार्थं युधिष्ठिरममित्रहा
विषण्णमभि सम्प्रेक्ष्य तव राजन्ननीकिनीम् ६
प्रज्ञयाभ्यधिकाञ्शूरान्गुणयुक्तान्बहूनपि
जयन्त्यल्पतरा येन तन्निबोध विशां पते ७
तत्तु ते कारणं राजन्प्रवक्ष्याम्यनसूयवे
नारदस्तमृषिर्वेद भीष्मद्रोणौ च पाण्डव ८
एतमेवार्थमाश्रित्य युद्धे देवासुरेऽब्रवीत्
पितामहः किल पुरा महेन्द्रादीन्दिवौकसः ९
न तथा बलवीर्याभ्यां विजयन्ते जिगीषवः
यथा सत्यानृशंस्याभ्यां धर्मेणैवोद्यमेन च १०

त्यक्त्वाधर्मं च लोभं च मोहं चोद्यममास्थिताः
युध्यध्वमनहंकारा यतो धर्मस्ततो जयः ११
एवं राजन्विजानीहि ध्रुवोऽस्माकं रणे जयः
यथा मे नारदः प्राह यतः कृष्णस्ततो जयः १२
गुणभूतो जयः कृष्णे पृष्ठतोऽन्वेति माधवम्
अन्यथा विजयश्चास्य संनतिश्चापरो गुणः १३
अनन्ततेजा गोविन्दः शत्रुपूगेषु निर्व्यथः
पुरुषः सनातनतमो यतः कृष्णस्ततो जयः १४
पुरा ह्येष हरिर्भूत्वा वैकुण्ठोऽकुण्ठसायकः
सुरासुरानवस्फूर्जन्नब्रवीत्के जयन्त्विति १५
अनु कृष्णं जयेमेति यैरुक्तं तत्र तैर्जितम्
तत्प्रसादाद्धि त्रैलोक्यं प्राप्तं शक्रादिभिः सुरैः १६
तस्य ते न व्यथां काचिदिह पश्यामि भारत
यस्य ते जयमाशास्ते विश्वभुक्त्रिदशेश्वरः १७
इति श्रीमहाभारते भीष्मपर्वणि एकविंशोऽध्यायः २१

## द्वाविंशोऽध्यायः

संजय उवाच
ततो युधिष्ठिरो राजा स्वां सेनां समचोदयत्
प्रतिव्यूहन्ननीकानि भीष्मस्य भरतर्षभ १
यथोद्दिष्टान्यनीकानि प्रत्यव्यूहन्त पाण्डवाः
स्वर्गं परमभीप्सन्तः सुयुद्धेन कुरूद्वहाः २
मध्ये शिखण्डिनोऽनीकं रक्षितं सव्यसाचिना
धृष्टद्युम्नस्य च स्वयं भीमेन परिपालितम् ३
अनीकं दक्षिणं राजन्युयुधानेन पालितम्
श्रीमता सात्वताग्र्येण शक्रेणेव धनुष्मता ४
महेन्द्रयानप्रतिमं रथं तु सोपस्करं हाटकरत्नचित्रम्
युधिष्ठिरः काञ्चनभाण्डयोक्त्रं समास्थितो नागकुलस्य मध्ये ५
समुच्छ्रितं दान्तशलाकमस्य सुपाण्डुरं छत्रमतीव भाति
प्रदक्षिणं चैनमुपाचरन्ति महर्षयः संस्तुतिभिर्नरेन्द्रम् ६

पुरोहिताः शत्रुवधं वदन्तो महर्षिवृद्धाः श्रुतवन्त एव
जप्यैश्च मन्त्रैश्च तथौषधीभिः समन्ततः स्वस्त्ययनं प्रचक्रुः ७
ततः स वस्त्राणि तथैव गाश्च फलानि पुष्पाणि तथैव निष्कान्
कुरूत्तमो ब्राह्मणसान्महात्मा कुर्वन्ययौ शक्र इवामरेभ्यः ८
सहस्रसूर्यः शतकिङ्किणीकः परार्ध्यजाम्बूनदहेमचित्रः
रथोऽजुनस्याग्निरिवार्चिमाली विभ्राजते श्वेतहयः सुचक्रः ९
तमास्थितः केशवसंगृहीतं कपिध्वजं गाण्डिवबाणहस्तः
धनुर्धरो यस्य समः पृथिव्यां न विद्यते नो भविता वा कदाचित् १०
उद्वर्तयिष्यंस्तव पुत्रसेनामतीव रौद्रं स बिभर्ति रूपम्
अनायुधो यः सुभुजो भुजाभ्यां नराश्वनागान्युधि भस्म कुर्यात् ११
स भीमसेनः सहितो यमाभ्यां वृकोदरो वीररथस्य गोप्ता
तं प्रेक्ष्य मत्तर्षभसिंहखेलं लोके महेन्द्रप्रतिमानकल्पम् १२
समीक्ष्य सेनाग्रगतं दुरासदं प्रविव्यथुः पङ्कगता इवोष्ट्राः
वृकोदरं वारणराजदर्पं योधास्त्वदीया भयविग्नसत्त्वाः १३
अनीकमध्ये तिष्ठन्तं राजपुत्रं दुरासदम्
अब्रवीद्भरतश्रेष्ठं गुडाकेशं जनार्दनः १४
वासुदेव उवाच
य एष गोप्ता प्रतपन्बलस्थो यो नः सेनां सिंह इवेक्षते च
स एष भीष्मः कुरुवंशकेतुर्येनाहृतास्त्रिंशतो वाजिमेधाः १५
एतान्यनीकानि महानुभावं गूहन्ति मेघा इव घर्मरश्मिम्
एतानि हत्वा पुरुषप्रवीर काङ्क्षस्व युद्धं भरतर्षभेण १६
धृतराष्ट्र उवाच
केषां प्रहृष्टास्तत्राग्रे योधा युध्यन्ति संजय
उदग्रमनसः केऽत्र के वा दीना विचेतसः १७
के पूर्वं प्राहरंस्तत्र युद्धे हृदयकम्पने
मामकाः पाण्डवानां वा तन्ममाचक्ष्व संजय १८
कस्य सेनासमुदये गन्धमाल्यसमुद्भवः
वाचः प्रदक्षिणाश्चैव योधानामभिगर्जताम् १९
संजय उवाच
उभयोः सेनयोस्तत्र योधा जहृषिरे मुदा

स्रग्धूपपानगन्धानामुभयत्र समुद्भवः २०
संहतानामनीकानां व्यूढानां भरतर्षभ
संसर्पतामुदीर्णानां विमर्दः सुमहानभूत् २१
वादित्रशब्दस्तुमुलः शङ्खभेरीविमिश्रितः
कुञ्जराणां च नदतां सैन्यानां च प्रहृष्यताम् २२
इति श्रीमहाभारते भीष्मपर्वणि द्वाविंशोऽध्यायः २२

त्रयोविंशोऽध्यायः

धृतराष्ट्र उवाच
धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः
मामकाः पाण्डवाश्चैव किमकुर्वत संजय १
सञ्जय उवाच
दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा
आचार्यमुपसङ्गम्य राजा वचनमब्रवीत् २
पश्यैतां पाण्डुपुत्राणामाचार्य महतीं चमूम्
व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ३
अत्र शूरा महेष्वासा भीमार्जुनसमा युधि
युयुधानो विराटश्च द्रुपदश्च महारथः ४
धृष्टकेतुश्चेकितानः काशिराजश्च वीर्यवान्
पुरुजित्कुन्तिभोजश्च शैब्यश्च नरपुङ्गवः ५
युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्यवान्
सौभद्रो द्रौपदेयाश्च सर्व एव महारथाः ६
अस्माकं तु विशिष्टा ये तान्निबोध द्विजोत्तम
नायका मम सैन्यस्य संज्ञार्थं तान्ब्रवीमि ते ७
भवान्भीष्मश्च कर्णश्च कृपश्च समितिञ्जयः
अश्वत्थामा विकर्णश्च सौमदत्तिस्तथैव च ८
अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः
नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः ९
अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम्
पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम् १०

अयनेषु च सर्वेषु यथाभागमवस्थिताः
भीष्ममेवाभिरक्षन्तु भवन्तः सर्व एव हि ११
तस्य सञ्जनयन्हर्षं कुरुवृद्धः पितामहः
सिंहनादं विनद्योच्चैः शङ्खं दध्मौ प्रतापवान् १२
ततः शङ्खाश्च भेर्यश्च पणवानकगोमुखाः
सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् १३
ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ
माधवः पाण्डवश्चैव दिव्यौ शङ्खौ प्रदध्मतुः १४
पाञ्चजन्यं हृषीकेशो देवदत्तं धनञ्जयः
पौण्ड्रं दध्मौ महाशङ्खं भीमकर्मा वृकोदरः १५
अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः
नकुलः सहदेवश्च सुघोषमणिपुष्पकौ १६
काश्यश्च परमेष्वासः शिखण्डी च महारथः
धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः १७
द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते
सौभद्रश्च महाबाहुः शङ्खान्दध्मुः पृथक् पृथक् १८
स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत्
नभश्च पृथिवीं चैव तुमुलो व्यनुनादयन् १९
अथ व्यवस्थितान्दृष्ट्वा धार्तराष्ट्रान्कपिध्वजः
प्रवृत्ते शस्त्रसम्पाते धनुरुद्यम्य पाण्डवः २०
हृषीकेशं तदा वाक्यमिदमाह महीपते
सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत २१
यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितान्
कैर्मया सह योद्धव्यमस्मिन्रणसमुद्यमे २२
योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः
धार्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः २३
एमवुक्तो हृषीकेशो गुडाकेशेन भारत
सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम् २४
भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम्
उवाच पार्थ पश्यैतान्समवेतान्कुरूनिति २५

तत्रापश्यत्स्थितान्पार्थः पितॄनथ पितामहान्
आचार्यान्मातुलान्भ्रातॄन्पुत्रान्पौत्रान्सखींस्तथा २६
श्वशुरान्सुहृदश्चैव सेनयोरुभयोरपि
तान्समीक्ष्य स कौन्तेयः सर्वान्बन्धूनवस्थितान् २७
कृपया परयाविष्टो विषीदन्निदमब्रवीत्
दृष्ट्वेमान्स्वजनान्कृष्ण युयुत्सून्समवस्थितान् २८
सीदन्ति मम गात्राणि मुखं च परिशुष्यति
वेपथुश्च शरीरे मे रोमहर्षश्च जायते २९
गाण्डीवं स्रंसते हस्तात्त्वक्चैव परिदह्यते
न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः ३०
निमित्तानि च पश्यामि विपरीतानि केशव
न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे ३१
न कांक्षे विजयं कृष्ण न च राज्यं सुखानि च
किं नो राज्येन गोविन्द किं भोगैर्जीवितेन वा ३२
येषामर्थे कांक्षितं नो राज्यं भोगाः सुखानि च
त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च ३३
आचार्याः पितरः पुत्रास्तथैव च पितामहाः
मातुलाः श्वशुराः पौत्राः स्यालाः सम्बन्धिनस्तथा ३४
एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन
अपि त्रैलोक्यराज्यस्य हेतोः किं नु महीकृते ३५
निहत्य धार्तराष्ट्रान्नः का प्रीतिः स्याज्जनार्दन
पापमेवाश्रयेदस्मान्हत्वैतानाततायिनः ३६
तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान्सबान्धवान्
स्वजनं हि कथं हत्वा सुखिनः स्याम माधव ३७
यद्यप्येते न पश्यन्ति लोभोपहतचेतसः
कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम् ३८
कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम्
कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन ३९
कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाः
धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत ४०

अधर्माभिभवात्कृष्ण प्रदुष्यन्ति कुलस्त्रियः
स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसङ्करः ४१
सङ्करो नरकायैव कुलघ्नानां कुलस्य च
पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः ४२
दोषैरेतैः दुलघ्नानां वर्णसङ्करकारकैः
उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः ४३
उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन
नरके नियतं वासो भवतीत्यनुशुश्रुम ४४
अहो बत महत्पापं कर्तुं व्यवसिता वयम्
यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः ४५
यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः
धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत् ४६
एवमुक्त्वाऽजुनः संख्ये रथोपस्थ उपाविशत्
विसृज्य सशरं चापं शोकसंविग्नमानसः ४७
इति श्रीमहाभारते भीष्मपर्वणि त्रयोविंशोऽध्यायः २३

## चतुर्विंशोऽध्यायः

संजय उवाच
तं तथा कृपयाविष्टमश्रुपूर्णाकुलेक्षणम्
विषीदन्तमिदं वाक्यमुवाच मधुसूदनः १
श्रीभगवानुवाच
कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम्
अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन २
क्लैब्यं मा स्म गमः पार्थ नैतत्त्वय्युपपद्यते
क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परन्तप ३
अर्जुन उवाच
कथं भीष्ममहं संख्ये द्रोणं च मधुसूदन
इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन ४
गुरूनहत्वा हि महानुभावाञ्श्रेयो भोक्तुं भैक्ष्यमपीह लोके
हत्वार्थकामांस्तु गुरूनिहैव भुञ्जीय भोगान्रुधिरप्रदिग्धान् ५

न चैतद्विद्मः कतरन्नो गरीयो यद्वा जयेम यदि वा नो जयेयुः
यानेव हत्वा न जिजीविषामस्तेऽवस्थिताः प्रमुखे धार्तराष्ट्राः ६
कार्पण्यदोषोपहतस्वभावः पृच्छामि त्वा धर्मसंमूढचेताः
यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ७
न हि प्रपश्यामि ममापनुद्याद्यच्छोकमुच्छोषणमिन्द्रियाणाम्
अवाप्य भूमावसपत्नमृद्धं राज्यं सुराणामपि चाधिपत्यम् ८
सञ्जय उवाच
एवमुक्त्वा हृषीकेशं गुडाकेशः परंतप
न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह ९
तमुवाच हृषीकेशः प्रहसन्निव भारत
सेनयोरुभयोर्मध्ये विषीदन्तमिदं वचः १०
श्रीभगवानुवाच
अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ११
न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः
न चैव न भविष्यामः सर्वे वयमतः परम् १२
देहिनोऽस्मिन्यथा देहे कौमारं यौवनं जरा
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति १३
मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः
आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत १४
यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ
समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते १५
नाऽसतो विद्यते भावो नाऽभावो विद्यते सतः
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः १६
अविनाशि तु तद्विद्धि येन सर्वमिदं ततम्
विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति १७
अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः
अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत १८
य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम्
उभौ तौ न विजानीतौ नायं हन्ति न हन्यते १९

न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः
अजो नित्यः शाश्वतोऽय पुराणो न हन्यते हन्यमाने शरीरे २०
वेदाविनाशिनं नित्यं य एनमजमव्ययम्
कथं स पुरुषः पार्थ कं घातयति हन्ति कम् २१
वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि
तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही २२
नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः २३
अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च
नित्यः सर्वगतः स्थाणुरचलोऽय सनातनः २४
अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते
तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि २५
अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम्
तथापि त्वं महाबाहो नैनं शोचितुमर्हसि २६
जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च
तस्मादपरिहार्येऽथे न त्वं शोचितुमर्हसि २७
अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत
अव्यक्तनिधनान्येव तत्र का परिदेवना २८
आश्चर्यवत्पश्यति कश्चिदेनमाश्चर्यवद्वदति तथैव चान्यः
आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाप्येनं वेद न चैव कश्चित् २९
देही नित्यमवध्योऽय देहे सर्वस्य भारत
तस्मात्सर्वाणि भूतानि न त्वं शोचितुमर्हसि ३०
स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि
धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते ३१
यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम्
सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ३२
अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि
ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ३३
अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम्
सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते ३४

भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित् १२
पञ्चैतानि महाबाहो कारणानि निबोध मे
सांख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम् १३
अधिष्ठानं तथा कर्ता करणं च पृथग्विधम्
विविधाश्च पृथक्चेष्टा दैवं चैवात्र पञ्चमम् १४
शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः
न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः १५
तत्रैवं सति कर्तारमात्मानं केवलं तु यः
पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः १६
यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते
हत्वापि स इमांल्लोकान्न हन्ति न निबध्यते १७
ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना
करणं कर्म कर्तेति त्रिविधः कर्मसंग्रहः १८
ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः
प्रोच्यते गुणसंख्याने यथावच्छृणु तान्यपि १९
सर्वभूतेषु येनैकं भावमव्ययमीक्षते
अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् २०
पृथक्त्वेन तु यज्ज्ञानं नानाभावान्पृथग्विधान्
वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् २१
यत्तु कृत्स्नवदेकस्मिन्कार्ये सक्तमहैतुकम्
अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतम् २२
नियतं सङ्गरहितमरागद्वेषतः कृतम्
अफलप्रेप्सुना कर्म यत्तत्सात्त्विकमुच्यते २३
यत्तु कामेप्सुना कर्म साहङ्कारेण वा पुनः
क्रियते बहुलायासं तद्राजसमुदाहृतम् २४
अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषम्
मोहादारभ्यते कर्म यत्तत्तामसमुच्यते २५
मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः
सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्त्विक उच्यते २६
रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः

हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः २७
अयुक्तः प्राकृतः स्तब्धः शठो नैकृतिकोऽलसः
विषादी दीर्घसूत्री च कर्ता तामस उच्यते २८
बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु
प्रोच्यमानमशेषेण पृथक्त्वेन धनञ्जय २९
प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये
बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी ३०
यया धर्ममधर्मं च कार्यं चाकार्यमेव च
अयथावत्प्रजानाति बुद्धिः सा पार्थ राजसी ३१
अधर्मं धर्ममिति या मन्यते तमसावृता
सर्वार्थान्विपरीतांश्च बुद्धिः सा पार्थ तामसी ३२
धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः
योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी ३३
यया तु धर्मकामार्थान्धृत्या धारयतेऽजुन
प्रसङ्गेन फलाकांक्षी धृतिः सा पार्थ राजसी ३४
यया स्वप्नं भयं शोकं विषादं मदमेव च
न विमुञ्चति दुर्मेधा धृतिः सा पार्थ तामसी ३५
सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ
अभ्यासाद्रमते यत्र दुःखान्तं च निगच्छति ३६
यत्तदग्रे विषमिव परिणामेऽमृतोपमम्
तत्सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ३७
विषयेन्द्रियसंयोगाद्यत्तदग्रेऽमृतोपमम्
परिणामे विषमिव तत्सुखं राजसं स्मृतम् ३८
यदग्रे चानुबन्धे च सुखं मोहनमात्मनः
निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ३९
न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः ४०
ब्राह्मणक्षत्रियविशां शूद्राणां च परन्तप
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ४१
शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च

ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभाजम् ४२
शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्
दानमीश्वरभावश्च क्षत्रकर्म स्वभावजम् ४३
कृषिगोरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम्
परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ४४
स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः
स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ४५
यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ४६
श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्
स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम् ४७
सहजं कर्म कौन्तेय सदोषमपि न त्यजेत्
सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः ४८
असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः
नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ४९
सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे
समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा ५०
बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च
शब्दादीन्विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ५१
विविक्तसेवी लघ्वाशी यतवाक्कायमानसः
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ५२
अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम्
विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ५३
ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ५४
भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ५५
सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ५६
चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः

बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव ५७
मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि
अथ चेत्त्वमहङ्कारान्न श्रोष्यसि विनंक्ष्यसि ५८
यदहङ्कारमाश्रित्य न योत्स्य इति मन्यसे
मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ५९
स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा
कर्तुं नेच्छसि यन्मोहात्करिष्यस्यवशोऽपि तत् ६०
ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ६१
तमेव शरणं गच्छ सर्वभावेन भारत
तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ६२
इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया
विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ६३
सर्वगुह्यतमं भूयः शृणु मे परमं वचः
इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ६४
मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ६५
सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ६६
इदं ते नातपस्काय नाभक्ताय कदाचन
न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ६७
य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ६८
न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः
भविता न च मे तस्मादन्यः प्रियतरो भुवि ६९
अध्येष्यते च य इमं धर्म्यं संवादमावयोः
ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ७०
श्रद्धावाननसूयश्च शृणुयादपि यो नरः
सोऽपि मुक्तः शुभाँल्लोकान्प्राप्नुयात्पुण्यकर्मणाम् ७१
कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा

कच्चिदज्ञानसम्मोहः प्रनष्टस्ते धनञ्जय ७२
अर्जुन उवाच
नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत
स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव ७३
सञ्जय उवाच
इत्यहं वासुदेवस्य पार्थस्य च महात्मनः
संवादमिममश्रौषमद्भुतं रोमहर्षणम् ७४
व्यासप्रसादाच्छ्रुतवानेतद्गुह्यमहं परम्
योगं योगेश्वरात्कृष्णात्साक्षात्कथयतः स्वयम् ७५
राजन्संस्मृत्य संस्मृत्य संवादमिममद्भुतम्
केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ७६
तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः
विस्मयो मे महान्राजन्हृष्यामि च पुनः पुनः ७७
यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ७८

इति श्रीमहाभारते भीष्मपर्वणि चत्वारिंशोऽध्यायः

समाप्तं भगवद्गीतापर्व ४०

## एक चत्वारिंशोऽध्यायः

सञ्जय उवाच
ततो धनञ्जयं दृष्ट्वा बाणगाण्डीवधारिणम्
पुनरेव महानादं व्यसृजन्त महारथाः १
पाण्डवाः सोमकाश्चैव ये चैषामनुयायिनः
दध्मुश्च मुदिताः शङ्खान्वीराः सागरसम्भवान् २
ततो भेर्यश्च पेश्यश्च क्रकचा गोविषाणिकाः
सहसैवाभ्यहन्यन्त ततः शब्दो महानभूत् ३
अथ देवाः सगन्धर्वाः पितरश्च जनेश्वर
सिद्धचारणसङ्घाश्च समीयुस्ते दिदृक्षया ४
ऋषयश्च महाभागाः पुरस्कृत्य शतक्रतुम्
समीयुस्तत्र सहिता द्रष्टुं तद्वैशसं महत् ५

ततो युधिष्ठिरो दृष्ट्वा युद्धाय सुसमुद्यते
ते सेने सागरप्रख्ये मुहुः प्रचलिते नृप ६
विमुच्य कवचं वीरो निक्षिप्य च वरायुधम्
अवरुह्य रथात्तूर्णं पद्भ्यामेव कृताञ्जलि ७
पितामहमभिप्रेक्ष्य धर्मराजो युधिष्ठिरः
वाग्यतः प्रययौ येन प्राङ्मुखो रिपुवाहिनीम् ८
तं प्रयान्तमभिप्रेक्ष्य कुन्तीपुत्रो धनञ्जयः
अवतीर्य रथात्तूर्णं भ्रातृभिः सहितोऽन्वयात् ९
वासुदेवश्च भगवान्पृष्ठतोऽनुजगाम ह
यथामुख्याश्च राजानस्तमन्वाजग्मुरुत्सुकाः १०
अर्जुन उवाच
किं ते व्यवसितं राजन्यदस्मानपहाय वै
पद्भ्यामेव प्रयातोऽसि प्राङ्मुखो रिपुवाहिनीम् ११
भीमसेन उवाच
क्व गमिष्यसि राजेन्द्र निक्षिप्तकवचायुधः
दंशितेष्वरिसैन्येषु भ्रातॄनुत्सृज्य पार्थिव १२
नकुल उवाच
एवंगते त्वयि ज्येष्ठे मम भ्रातरि भारत
भीर्मे दुनोति हृदयं ब्रूहि गन्ता भवान्क्व नु १३
सहदेव उवाच
अस्मिन्रणसमूहे वै वर्तमाने महाभये
योद्धव्ये क्व नु गन्तासि शत्रूनभिमुखो नृप १४
सञ्जय उवाच
एवमाभाष्यमाणोऽपि भ्रातृभिः कुरुनन्दन
नोवाच वाग्यतः किञ्चिद्गच्छत्येव युधिष्ठिरः १५
तानुवाच महाप्राज्ञो वासुदेवो महामनाः
अभिप्रायोऽस्य विज्ञातो मयेति प्रहसन्निव १६
एष भीष्मं तथा द्रोणं गौतमं शल्यमेव च
अनुमान्य गुरून्सर्वान्योत्स्यते पार्थिवोऽरिभिः १७
श्रूयते हि पुराकल्पे गुरूननुमान्य यः

युद्ध्यते स भवेद्व्यक्तमपध्यातो महत्तरैः १८
अनुमान्य यथाशास्त्रं यस्तु युद्ध्येन्महत्तरैः
ध्रुवस्तस्य जयो युद्धे भवेदिति मतिर्मम १९
एवं ब्रुवति कृष्णे तु धार्तराष्ट्रचमूं प्रति
हाहाकारो महानासीन्निःशब्दास्त्वपरेऽभवन् २०
दृष्ट्वा युधिष्ठिरं दूराद्धार्तराष्ट्रस्य सैनिकाः
मिथः सङ्कथयाञ्चक्रुर्नेशोऽस्ति कुलपांसनः २१
व्यक्तं भीत इवाभ्येति राजासौ भीष्ममन्तिकात्
युधिष्ठिरः ससोदर्यः शरणार्थं प्रयाचकः २२
धनञ्जये कथं नाथे पाण्डवे च वृकोदरे
नकुले सहदेवे च भीतोऽभ्येति च पाण्डवः २३
न नूनं क्षत्रियकुले जातः संप्रथिते भुवि
यथास्य हृदयं भीतमल्पसत्त्वस्य संयुगे २४
ततस्ते क्षत्रियाः सर्वे प्रशंसन्ति स्म कौरवान्
हृष्टाः सुमनसो भूत्वा चैलानि दुधुवुः पृथक् २५
व्यनिन्दन्त ततः सर्वे योधास्तत्र विशां पते
युधिष्ठिरं ससोदर्यं सहितं केशवेन ह २६
ततस्तत्कौरवं सैन्यं धिक्कृत्वा तु युधिष्ठिरम्
निःशब्दमभवत्तूर्णं पुनरेव विशां पते २७
किं नु वक्ष्यति राजासौ किं भीष्मः प्रतिवक्ष्यति
किं भीमः समरश्लाघी किं नु कृष्णार्जुनाविति २८
विवक्षितं किमस्येति संशयः सुमहानभूत्
उभयोः सेनयो राजन्युधिष्ठिरकृते तदा २९
स विगाह्य चमूं शत्रोः शरशक्तिसमाकुलाम्
भीष्ममेवाभ्ययात्तूर्णं भ्रातृभिः परिवारितः ३०
तमुवाच ततः पादौ कराभ्यां पीड्य पाण्डवः
भीष्मं शान्तनवं राजा युद्धाय समुपस्थितम् ३१
युधिष्ठिर उवाच
आमन्त्रये त्वां दुर्धर्ष योत्स्ये तात त्वया सह
अनुजानीहि मां तात आशिषश्च प्रयोजय ३२

भीष्म उवाच
यद्येवं नाभिगच्छेथा युधि मां पृथिवीपते
शपेयं त्वां महाराज पराभावाय भारत ३३
प्रीतोऽस्मि पुत्र युध्यस्व जयमाप्नुहि पाण्डव
यत्तेऽभिलषितं चान्यत्तदवाप्नुहि संयुगे ३४
व्रियतां च वरः पार्थ किमस्मत्तोऽभिकांक्षसि
एवं गते महाराज न तवास्ति पराजयः ३५
अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित्
इति सत्यं महाराज बद्धोऽस्म्यर्थेन कौरवैः ३६
अतस्त्वां क्लीबवद्वाक्यं ब्रवीमि कुरुनन्दन
हृतोऽस्म्यर्थेन कौरव्य युद्धादन्यत्किमिच्छसि ३७
युधिष्ठिर उवाच
मन्त्रयस्व महाप्राज्ञ हितैषी मम नित्यशः
युध्यस्व कौरवस्यार्थे ममैष सततं वरः ३८
भीष्म उवाच
राजन्किमत्र साह्यं ते करोमि कुरुनन्दन
कामं योत्स्ये परस्यार्थे ब्रूहि यत्ते विवक्षितम् ३९
युधिष्ठिर उवाच
कथं जयेयं संग्रामे भवन्तमपराजितम्
एतन्मे मन्त्रय हितं यदि श्रेयः प्रपश्यसि ४०
भीष्म उवाच
न तं पश्यामि कौन्तेय यो मां युध्यन्तमाहवे
विजयेत पुमान्कश्चिदपि साक्षाच्छतक्रतुः ४१
युधिष्ठिर उवाच
हन्त पृच्छामि तस्मात्त्वां पितामह नमोऽस्तु ते
जयोपायं ब्रवीहि त्वमात्मनः समरे परैः ४२
भीष्म उवाच
न शत्रुं तात पश्यामि समरे यो जयेत माम्
न तावन्मृत्युकालो मे पुनरागमनं कुरु ४३
सञ्जय उवाच

ततो युधिष्ठिरो वाक्यं भीष्मस्य कुरुनन्दन
शिरसा प्रतिजग्राह भूयस्तमभिवाद्य च ४४
प्रायात्पुनर्महाबाहुराचार्यस्य रथं प्रति
पश्यतां सर्वसैन्यानां मध्येन भ्रातृभिः सह ४५
स द्रोणमभिवाद्याथ कृत्वा चैव प्रदक्षिणम्
उवाच वाचा दुर्धर्षमात्मनिःश्रेयसं वचः ४६
आमन्त्रये त्वां भगवन्योत्स्ये विगतकल्मषः
जयेयं च रिपून्सर्वाननुज्ञातस्त्वया द्विज ४७
द्रोण उवाच
यदि मां नाभिगच्छेथा युद्धाय कृतनिश्चयः
शपेयं त्वां महाराज पराभावाय सर्वशः ४८
यद्युधिष्ठिर तुष्टोऽस्मि पूजितश्च त्वयानघ
अनुजानामि युध्यस्व विजयं समवाप्नुहि ४९
करवाणि च ते कामं ब्रूहि यत्तेऽभिकांक्षितम्
एवं गते महाराज युद्धादन्यत्किमिच्छसि ५०
अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित्
इति सत्यं महाराज बद्धोऽस्म्यर्थेन कौरवैः ५१
अतस्त्वां क्लीबवद्ब्रूमो युद्धादन्यत्किमिच्छसि
योत्स्यामि कौरवस्यार्थे तवाशास्यो जयो मया ५२
युधिष्ठिर उवाच
जयमाशास्स्व मे ब्रह्मन्मन्त्रयस्व च मद्धितम्
युध्यस्व कौरवस्यार्थे वर एष वृतो मया ५३
द्रोण उवाच
ध्रुवस्ते विजयो राजन्यस्य मन्त्री हरिस्तव
अहं च त्वाभिजानामि रणे शत्रून्विजेष्यसि ५४
यतो धर्मस्ततः कृष्णो यतः कृष्णस्ततो जयः
युध्यस्व गच्छ कौन्तेय पृच्छ मां किं ब्रवीमि ते ५५
युधिष्ठिर उवाच
पृच्छामि त्वां द्विजश्रेष्ठ शृणु मे यद्विवक्षितम्
कथं जयेयं संग्रामे भवन्तमपराजितम् ५६

द्रोण उवाच
न तेऽस्ति विजयस्तावद्यावद्युध्याम्यहं रणे
ममाशु निधने राजन्यतस्व सह सोदरैः ५७
युधिष्ठिर उवाच
हन्त तस्मान्महाबाहो वधोपायं वदात्मनः
आचार्य प्रणिपत्यैष पृच्छामि त्वां नमोऽस्तु ते ५८
द्रोण उवाच
न शत्रुं तात पश्यामि यो मां हन्याद्रणे स्थितम्
युध्यमानं सुसंरब्धं शरवर्षौघवर्षिणम् ५९
ऋते प्रायगतं राजन्यस्तशस्त्रमचेतनम्
हन्यान्मां युधि योधानां सत्यमेतद्ब्रवीमि ते ६०
शस्त्रं चाहं रणे जह्यां श्रुत्वा सुमहदप्रियम्
श्रद्धेयवाक्यात्पुरुषादेतत्सत्यं ब्रवीमि ते ६१
सञ्जय उवाच
एतच्छ्रुत्वा महाराज भारद्वाजस्य धीमतः
अनुमान्य तमाचार्यं प्रायाच्छारद्वतं प्रति ६२
सोऽभिवाद्य कृपं राजा कृत्वा चापि प्रदक्षिणम्
उवाच दुर्धर्षतमं वाक्यं वाक्यविशारदः ६३
अनुमानये त्वां योत्स्यामि गुरो विगतकल्मषः
जयेयं च रिपून्सर्वाननुज्ञातस्त्वयानघ ६४
कृप उवाच
यदि मां नाभिगच्छेथा युद्धाय कृतनिश्चयः
शपेयं त्वां महाराज पराभावाय सर्वशः ६५
अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित्
इति सत्यं महाराज बद्धोऽस्म्यर्थेन कौरवैः ६६
तेषामर्थे महाराज योद्धव्यमिति मे मतिः
अतस्त्वां क्लीबवद्ब्रूमि युद्धादन्यत्किमिच्छसि ६७
युधिष्ठिर उवाच
हन्त पृच्छामि ते तस्मादाचार्य शृणु मे वचः ६८
सञ्जय उवाच

इत्युक्त्वा व्यथितो राजा नोवाच गतचेतनः
तं गौतमः प्रत्युवाच विज्ञायास्य विवक्षितम्
अवध्योऽह महीपाल युध्यस्व जयमाप्नुहि ६९
प्रीतस्त्वभिगमेनाहं जयं तव नराधिप
आशासिष्ये सदोत्थाय सत्यमेतद्ब्रवीमि ते ७०
एतच्छ्रुत्वा महाराज गौतमस्य वचस्तदा
अनुमान्य कृपं राजा प्रययौ येन मद्रराट् ७१
स शल्यमभिवाद्याथ कृत्वा चाभिप्रदक्षिणम्
उवाच राजा दुर्धर्षमात्मनिःश्रेयसं वचः ७२
अनुमानये त्वां योत्स्यामि गुरो विगतकल्मषः
जयेयं च महाराज अनुज्ञातस्त्वया रिपून् ७३
शल्य उवाच
यदि मां नाभिगच्छेथा युद्धाय कृतनिश्चयः
शपेयं त्वां महाराज पराभावाय वै रणे ७४
तुष्टोऽस्मि पूजितश्चास्मि यत्कांक्षसि तदस्तु ते
अनुजानामि चैव त्वां युध्यस्व जयमाप्नुहि ७५
ब्रूहि चैव परं वीर केनार्थः किं ददामि ते
एवं गते महाराज युद्धादन्यत्किमिच्छसि ७६
अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित्
इति सत्यं महाराज बद्धोऽस्म्यर्थेन कौरवैः ७७
करिष्यामि हि ते कामं भागिनेय यथेप्सितम्
ब्रवीम्यतः क्लीबवत्त्वां युद्धादन्यत्किमिच्छसि ७८
युधिष्ठिर उवाच
मन्त्रयस्व महाराज नित्यं मद्धितमुत्तमम्
कामं युध्य परस्यार्थे वरमेतद्वृणोम्यहम् ७९
शल्य उवाच
ब्रूहि किमत्र साह्यं ते करोमि नृपसत्तम
कामं योत्स्ये परस्यार्थे वृत्तोऽस्म्यर्थेन कौरवैः ८०
युधिष्ठिर उवाच
स एव मे वरः सत्य उद्योगे यस्त्वया कृतः

सूतपुत्रस्य संग्रामे कार्यस्तेजोवधस्त्वया ८१
शल्य उवाच
सम्पत्स्यत्येष ते कामः कुन्तीपुत्र यथेप्सितः
गच्छ युध्यस्व विस्रब्धं प्रतिजाने जयं तव ८२
सञ्जय उवाच
अनुमान्याथ कौन्तेयो मातुलं मद्रकेश्वरम्
निर्जगाम महासैन्याद्भ्रातृभिः परिवारितः ८३
वासुदेवस्तु राधेयमाहवेऽभिजगाम वै
तत एनमुवाचेदं पाण्डवार्थे गदाग्रजः ८४
श्रुतं मे कर्ण भीष्मस्य द्वेषात्किल न योत्स्यसि
अस्मान्वरय राधेय यावद्भीष्मो न हन्यते ८५
हते तु भीष्मे राधेय पुनरेष्यसि संयुगे
धार्तराष्ट्रस्य साहाय्यं यदि पश्यसि चेत्समम् ८६
कर्ण उवाच
न विप्रियं करिष्यामि धार्तराष्ट्रस्य केशव
त्यक्तप्राणं हि मां विद्धि दुर्योधनहितैषिणम् ८७
सञ्जय उवाच
तच्छ्रुत्वा वचनं कृष्णः संन्यवर्तत भारत
युधिष्ठिरपुरोगैश्च पाण्डवैः सह सङ्गतः ८८
अथ सैन्यस्य मध्ये तु प्राक्रोशत्पाण्डवाग्रजः
योऽस्मान्वृणोति तमहं वरये साह्यकारणात् ८९
अथ तान्समभिप्रेक्ष्य युयुत्सुरिदमब्रवीत्
प्रीतात्मा धर्मराजानं कुन्तीपुत्रं युधिष्ठिरम् ९०
अहं योत्स्यामि मिषतः संयुगे धार्तराष्ट्रजान्
युष्मदर्थे महाराज यदि मां वृणुषेऽनघ ९१
युधिष्ठिर उवाच
एह्येहि सर्वे योत्स्यामस्तव भ्रातॄनपण्डितान्
युयुत्सो वासुदेवश्च वयं च ब्रूम सर्वशः ९२
वृणोमि त्वां महाबाहो युध्यस्व मम कारणात्
त्वयि पिण्डश्च तन्तुश्च धृतराष्ट्रस्य दृश्यते ९३

भजस्वास्मान्राजपुत्र भजमानान्महाद्युते
न भविष्यति दुर्बुद्धिर्धार्तराष्ट्रोऽत्यमर्षणः ९४
सञ्जय उवाच
ततो युयुत्सुः कौरव्यः परित्यज्य सुतांस्तव
जगाम पाण्डुपुत्राणां सेनां विश्राव्य दुन्दुभिम् ९५
ततो युधिष्ठिरो राजा सम्प्रहृष्टः सहानुजैः
जग्राह कवचं भूयो दीप्तिमत्कनकोज्ज्वलम् ९६
प्रत्यपद्यन्त ते सर्वे रथान्स्वान्पुरुषर्षभाः
ततो व्यूहं यथापूर्वं प्रत्यव्यूहन्त ते पुनः ९७
अवादयन्दुन्दुभींश्च शतशश्चैव पुष्करान्
सिंहनादांश्च विविधान्विनेदुः पुरुषर्षभाः ९८
रथस्थान्पुरुषव्याघ्रान्पाण्डवान्प्रेक्ष्य पार्थिवाः
धृष्टद्युम्नादयः सर्वे पुनर्जहृषिरे मुदा ९९
गौरवं पाण्डुपुत्राणां मान्यान्मानयतां च तान्
दृष्ट्वा महीक्षितस्तत्र पूजयांचक्रिरे भृशम् १००
सौहृदं च कृपां चैव प्राप्तकालं महात्मनाम्
दयां च ज्ञातिषु परां कथयांचक्रिरे नृपाः १०१
साधु साध्विति सर्वत्र निश्चेरुः स्तुतिसंहिताः
वाचः पुण्याः कीर्तिमतां मनोहृदयहर्षिणीः १०२
म्लेच्छाश्चार्याश्च ये तत्र ददृशुः शुश्रुवुस्तदा
वृत्तं तत्पाण्डुपुत्राणां रुरुदुस्ते सगद्गदाः १०३
ततो जघ्नुर्महाभेरीः शतशश्चैव पुष्करान्
शंखांश्च गोक्षीरनिभान्दध्मुर्हृष्टा मनस्विनः १०४
इति श्रीमहाभारते भीष्मपर्वणि एकचत्वारिंशोऽध्यायः ४१

## द्विचत्वारिंशोऽध्यायः

धृतराष्ट्र उवाच
एवं व्यूढेष्वनीकेषु मामकेष्वितरेषु च
के पूर्वं प्राहरंस्तत्र कुरवः पाण्डवास्तथा १
सञ्जय उवाच

भ्रातृभिः सहितो राजन्पुत्रो दुर्योधनस्तव
भीष्मं प्रमुखतः कृत्वा प्रययौ सह सेनया २
तथैव पाण्डवाः सर्वे भीमसेनपुरोगमाः
भीष्मेण युद्धमिच्छन्तः प्रययुर्हृष्टमानसाः ३
क्ष्वेडाः किलकिलाशब्दाः क्रकचा गोविषाणिकाः
भेरीमृदङ्गमुरजा हयकुञ्जरनिस्वनाः ४
उभयोः सेनयो राजंस्ततस्तेऽस्मान्समाद्रवन्
वयं प्रतिनदन्तश्च तदासीत्तुमुलं महत् ५
महान्त्यनीकानि महासमुच्छ्रये समागमे पाण्डवधार्तराष्ट्रयोः
चकम्पिरे शङ्खमृदङ्गनिस्वनैः प्रकम्पितानीव वनानि वायुना ६
नरेन्द्रनागाश्वरथाकुलानामभ्यायतीनामशिवे मुहूर्ते
बभूव घोषस्तुमुलश्चमूनां वातोद्धुतानामिव सागराणाम् ७
तस्मिन्समुत्थिते शब्दे तुमुले लोमहर्षणे
भीमसेनो महाबाहुः प्राणदद्गोवृषो यथा ८
शङ्खदुन्दुभिनिर्घोषं वारणानां च बृंहितम्
सिंहनादं च सैन्यानां भीमसेनरवोऽभ्यभूत् ९
हयानां हेषमाणानामनीकेषु सहस्रशः
सर्वानभ्यभवच्छब्दान्भीमसेनस्य निस्वनः १०
तं श्रुत्वा निनदं तस्य सैन्यास्तव वितत्रसुः
जीमूतस्येव नदतः शक्राशनिसमस्वनम् ११
वाहनानि च सर्वाणि शकृन्मूत्रं प्रसुस्रुवुः
शब्देन तस्य वीरस्य सिंहस्येवेतरे मृगाः १२
दर्शयन्घोरमात्मानं महाभ्रमिव नादयन्
विभीषयंस्तव सुतांस्तव सेनां समभ्ययात् १३
तमायान्तं महेष्वासं सोदर्याः पर्यवारयन्
छादयन्तः शरव्रातैर्मेघा इव दिवाकरम् १४
दुर्योधनश्च पुत्रस्ते दुर्मुखो दुःसहः शलः
दुःशासनश्चातिरथस्तथा दुर्मर्षणो नृप १५
विविंशतिश्चित्रसेनो विकर्णश्च महारथः
पुरुमित्रो जयो भोजः सौमदत्तिश्च वीर्यवान् १६

महाचापानि धुन्वन्तो जलदा इव विद्युतः
आददानाश्च नाराचान्निर्मुक्ताशीविषोपमान् १७
अथ तान्द्रौपदीपुत्राः सौभद्रश्च महारथः
नकुलः सहदेवश्च धृष्टद्युम्नश्च पार्षतः १८
धार्तराष्ट्रान्प्रतिययुरर्दयन्तः शितैः शरैः
वज्रैरिव महावेगैः शिखराणि धराभृताम् १९
तस्मिन्प्रथमसंमर्दे भीमज्यातलनिस्वने
तावकानां परेषां च नासीत्कश्चित्पराङ्मुखः २०
लाघवं द्रोणशिष्याणामपश्यं भरतर्षभ
निमित्तवेधिनां राजञ्शरानुत्सृजतां भृशम् २१
नोपशाम्यति निर्घोषो धनुषां कूजतां तथा
विनिश्चेरुः शरा दीप्ता ज्योतींषीव नभस्तलात् २२
सर्वे त्वन्ये महीपालाः प्रेक्षका इव भारत
ददृशुर्दर्शनीयं तं भीमं ज्ञातिसमागमम् २३
ततस्ते जातसंरम्भाः परस्परकृतागसः
अन्योन्यस्पर्धया राजन्व्यायच्छन्त महारथाः २४
कुरुपाण्डवसेने ते हस्त्यश्वरथसङ्कुले
शुशुभाते रणेऽतीव पटे चित्रगते इव २५
ततस्ते पार्थिवाः सर्वे प्रगृहीतशरासनाः
सहसैन्याः समापेतुः पुत्रस्य तव शासनात् २६
युधिष्ठिरेण चादिष्टाः पार्थिवास्ते सहस्रशः
विनदन्तः समापेतुः पुत्रस्य तव वाहिनीम् २७
उभयोः सेनयोस्तीव्रः सैन्यानां स समागमः
अन्तर्धीयत चादित्यः सैन्येन रजसावृतः २८
प्रयुद्धानां प्रभग्नानां पुनरावर्ततामपि
नात्र स्वेषां परेषां वा विशेषः समजायत २९
तस्मिंस्तु तुमुले युद्धे वर्तमाने महाभये
अति सर्वाण्यनीकानि पिता तेऽभिव्यरोचत ३०

इति श्रीमहाभारते भीष्मपर्वणि द्विचत्वारिंशोऽध्यायः ४२

## त्रिचत्वारिंशोऽध्यायः

सञ्जय उवाच
पूर्वाह्णे तस्य रौद्रस्य युद्धमह्नो विशां पते
प्रावर्तत महाघोरं राज्ञां देहावकर्तनम् १
कुरूणां पाण्डवानां च संग्रामे विजिगीषताम्
सिंहानामिव संह्लादो दिवमुर्वीं च नादयन् २
आसीत्किलकिलाशब्दस्तलशङ्खरवैः सह
जज्ञिरे सिंहनादाश्च शूराणां प्रतिगर्जताम् ३
तलत्राभिहताश्चैव ज्याशब्दा भरतर्षभ
पत्तीनां पादशब्दाश्च वाजिनां च महास्वनाः ४
तोत्रांकुशनिपाताश्च आयुधानां च निस्वनाः
घण्टाशब्दाश्च नागानामन्योन्यमभिधावताम् ५
तस्मिन्समुदिते शब्दे तुमुले लोमहर्षणे
बभूव रथनिर्घोषः पर्जन्यनिनदोपमः ६
ते मनः क्रूरमाधाय समभित्यक्तजीविताः
पाण्डवानभ्यवर्तन्त सर्व एवोच्छ्रितध्वजाः ७
स्वयं शान्तनवो राजन्नभ्यधावद्धनञ्जयम्
प्रगृह्य कार्मुकं घोरं कालदण्डोपमं रणे ८
अर्जुनोऽपि धनुर्गृह्य गाण्डीवं लोकविश्रुतम्
अभ्यधावत तेजस्वी गाङ्गेयं रणमूर्धनि ९
तावुभौ कुरुशार्दूलौ परस्परवधैषिणौ
गाङ्गेयस्तु रणे पार्थं विद्ध्वा नाकम्पयद्बली
तथैव पाण्डवो राजन्भीष्मं नाकम्पयद्युधि १०
सात्यकिश्च महेष्वासः कृतवर्माणमभ्ययात्
तयोः समभवद्युद्धं तुमुलं लोमहर्षणम् ११
सात्यकिः कृतवर्माणं कृतवर्मा च सात्यकिम्
आनर्छतुः शरैर्घोरैस्तक्षमाणौ परस्परम् १२
तौ शराचितसर्वाङ्गौ शुशुभाते महाबलौ
वसन्ते पुष्पशबलौ पुष्पिताविव किंशुकौ १३
अभिमन्युर्महेष्वासो बृहद्बलमयोधयत्

ततः कोसलको राजा सौभद्रस्य विशां पते
ध्वजं विच्छेद समरे सारथिं च न्यपातयत् १४
सौभद्रस्तु ततः क्रुद्धः पातिते रथसारथौ
बृहद्बलं महाराज विव्याध नवभिः शरैः १५
अथापराभ्यां भल्लाभ्यां पीताभ्यामरिमर्दनः
ध्वजमेकेन विच्छेद पार्ष्णिमेकेन सारथिम्
अन्योन्यं च शरैस्तीक्ष्णैः क्रुद्धौ राजंस्ततक्षतुः १६
मानिनं समरे दृप्तं कृतवैरं महारथम्
भीमसेनस्तव सुतं दुर्योधनमयोधयत् १७
तावुभौ नरशार्दूलौ कुरुमुख्यौ महाबलौ
अन्योन्यं शरवर्षाभ्यां ववृषाते रणाजिरे १८
तौ तु वीक्ष्य महात्मानौ कृतिनौ चित्रयोधिनौ
विस्मयः सर्वभूतानां समपद्यत भारत १९
दुःशासनस्तु नकुलं प्रत्युद्याय महारथम्
अविध्यन्निशितैर्बाणैर्बहुभिर्मर्मभेदिभिः २०
तस्य माद्रीसुतः केतुं सशरं च शरासनम्
चिच्छेद निशितैर्बाणैः प्रहसन्निव भारत
अथैनं पञ्चविंशत्या क्षुद्रकाणां समार्दयत् २१
पुत्रस्तु तव दुर्धर्षो नकुलस्य महाहवे
युगेषां चिच्छिदे बाणैर्ध्वजं चैव न्यपातयत् २२
दुर्मुखः सहदेवं च प्रत्युद्याय महाबलम्
विव्याध शरवर्षेण यतमानं महाहवे २३
सहदेवस्ततो वीरो दुर्मुखस्य महाहवे
शरेण भृशतीक्ष्णेन पातयामास सारथिम् २४
तावन्योन्यं समासाद्य समरे युद्धदुर्मदौ
त्रासयेतां शरैर्घोरैः कृतप्रतिकृतैषिणौ २५
युधिष्ठिरः स्वयं राजा मद्रराजानमभ्ययात्
तस्य मद्राधिपश्चापं द्विधा चिच्छेद मारिष २६
तदपास्य धनुश्छिन्नं कुन्तीपुत्रो युधिष्ठिरः
अन्यत्कार्मुकमादाय वेगवद्बलवत्तरम् २७

ततो मद्रेश्वरं राजा शरैः संनतपर्वभिः
छादयामास संक्रुद्धस्तिष्ठ तिष्ठेति चाब्रवीत् २८
धृष्टद्युम्नस्ततो द्रोणमभ्यद्रवत भारत
तस्य द्रोणः सुसंक्रुद्धः परासुकरणं दृढम्
त्रिधा चिच्छेद समरे यतमानस्य कार्मुकम् २९
शरं चैव महाघोरं कालदण्डमिवापरम्
प्रेषयामास समरे सोऽस्य काये न्यमज्जत ३०
अथान्यद्धनुरादाय सायकांश्च चतुर्दश
द्रोणं द्रुपदपुत्रस्तु प्रतिविव्याध संयुगे
तावन्योन्यं सुसंक्रुद्धौ चक्रतुः सुभृशं रणम् ३१
सौमदत्तिं रणे शङ्खो रभसं रभसो युधि
प्रत्युद्ययौ महाराज तिष्ठ तिष्ठेति चाब्रवीत् ३२
तस्य वै दक्षिणं वीरो निर्बिभेद रणे भुजम्
सौमदत्तिस्तथा शङ्खं जत्रुदेशे समाहनत् ३३
तयोः समभवद्युद्धं घोररूपं विशां पते
दृप्तयोः समरे तूर्णं वृत्रवासवयोरिव ३४
बाह्लीकं तु रणे क्रुद्धं क्रुद्धरूपो विशां पते
अभ्यद्रवदमेयात्मा धृष्टकेतुर्महारथः ३५
बाह्लीकस्तु ततो राजन्धृष्टकेतुममर्षणम्
शरैर्बहुभिरानर्छत्सिंहनादमथानदत् ३६
चेदिराजस्तु सङ्क्रुद्धो बाह्लीकं नवभिः शरैः
विव्याध समरे तूर्णं मत्तो मत्तमिव द्विपम् ३७
तौ तत्र समरे क्रुद्धौ नर्दन्तौ च मुहुर्मुहुः
समीयतुः सुसंक्रुद्धावङ्गारकबुधाविव ३८
राक्षसं क्रूरकर्माणं क्रूरकर्मा घटोत्कचः
अलम्बुसं प्रत्युदियाद्बलं शक्र इवाहवे ३९
घटोत्कचस्तु संक्रुद्धो राक्षसं तं महाबलम्
नवत्या सायकैस्तीक्ष्णैर्दारयामास भारत ४०
अलम्बुसस्तु समरे भैमसेनिं महाबलम्
बहुधा वारयामास शरैः सन्नतपर्वभिः ४१

व्यभ्राजेतां ततस्तौ तु संयुगे शरविक्षतौ
यथा देवासुरे युद्धे बलशक्रौ महाबलौ ४२
शिखण्डी समरे राजन्द्रौणिमभ्युद्ययौ बली
अश्वत्थामा ततः क्रुद्धः शिखण्डिनमवस्थितम् ४३
नाराचेन सुतीक्ष्णेन भृशं विद्ध्वा व्यकम्पयत्
शिखण्ड्यपि ततो राजन्द्रोणपुत्रमताडयत् ४४
सायकेन सुपीतेन तीक्ष्णेन निशितेन च
तौ जघ्नतुस्तदान्योन्यं शरैर्बहुविधैर्मृधे ४५
भगदत्तं रणे शूरं विराटो वाहिनीपतिः
अभ्ययात्त्वरितो राजंस्ततो युद्धमवर्तत ४६
विराटो भगदत्तेन शरवर्षेण ताडितः
अभ्यवर्षत्सुसंक्रुद्धो मेघो वृष्ट्या इवाचलम् ४७
भगदत्तस्ततस्तूर्णं विराटं पृथिवीपतिम्
छादयामास समरे मेघः सूर्यमिवोदितम् ४८
बृहत्क्षत्रं तु कैकेयं कृपः शारद्वतो ययौ
तं कृपः शरवर्षेण छादयामास भारत ४९
गौतमं केकयः क्रुद्धः शरवृष्ट्याभ्यपूरयत्
तावन्योन्यं हयान्हत्वा धनुषी विनिकृत्य वै ५०
विरथावसियुद्धाय समीयतुरमर्षणौ
तयोस्तदभवद्युद्धं घोररूपं सुदारुणम् ५१
द्रुपदस्तु ततो राजा सैन्धवं वै जयद्रथम्
अभ्युद्ययौ संप्रहृष्टो हृष्टरूपं परन्तप ५२
ततः सैन्धवको राजा द्रुपदं विशिखैस्त्रिभिः
ताडयामास समरे स च तं प्रत्यविध्यत ५३
तयोः समभवद्युद्धं घोररूपं सुदारुणम्
ईक्षितृप्रीतिजननं शुक्राङ्गारकयोरिव ५४
विकर्णस्तु सुतस्तुभ्यं सुतसोमं महाबलम्
अभ्ययाज्जवनैरश्वैस्ततो युद्धमवर्तत ५५
विकर्णः सुतसोमं तु विद्ध्वा नाकम्पयच्छरैः
सुतसोमो विकर्णं च तदद्भुतमिवाभवत् ५६

सुशर्माणं नरव्याघ्रं चेकितानो महारथः
अभ्यद्रवत्सुसंक्रुद्धः पाण्डवार्थे पराक्रमी ५७
सुशर्मा तु महाराज चेकितानं महारथम्
महता शर वर्षेण वारयामास संयुगे ५८
चेकितानोऽपि संरब्धः सुशर्माणं महाहवे
प्राच्छादयत्तमिषुभिर्महामेघ इवाचलम् ५९
शकुनिः प्रतिविन्ध्यं तु पराक्रान्तं पराक्रमी
अभ्यद्रवत राजेन्द्र मत्तो मत्तमिव द्विपम् ६०
यौधिष्ठिरस्तु संक्रुद्धः सौबलं निशितैः शरैः
व्यदारयत संग्रामे मघवानिव दानवम् ६१
शकुनिः प्रतिविन्ध्यं तु प्रतिविध्यन्तमाहवे
व्यदारयन्महाप्राज्ञः शरैः संनतपर्वभिः ६२
सुदक्षिणं तु राजेन्द्र काम्बोजानां महारथम्
श्रुतकर्मा पराक्रान्तमभ्यद्रवत संयुगे ६३
सुदक्षिणस्तु समरे साहदेविं महारथम्
विद्ध्वा नाकम्पयत वै मैनाकमिव पर्वतम् ६४
श्रुतकर्मा ततः क्रुद्धः काम्बोजानां महारथम्
शरैर्बहुभिरानर्च्छद्दारयन्निव सर्वशः ६५
इरावानथ संक्रुद्धः श्रुतायुषममर्षणम्
प्रत्युद्ययौ रणे यत्तो यत्तरूपतरं ततः ६६
आर्जुनिस्तस्य समरे हयान्हत्वा महारथः
ननाद सुमहन्नादं तत्सैन्यं प्रत्यपूरयत् ६७
श्रुतायुस्त्वथ संक्रुद्धः फाल्गुनेः समरे हयान्
निजघान गदाग्रेण ततो युद्धमवर्तत ६८
विन्दानुविन्दावावन्त्यौ कुन्तिभोजं महारथम्
ससेनं ससुतं वीरं संससज्जतुराहवे ६९
तत्राद्भुतमपश्याम आवन्त्यानां पराक्रमम्
यदयुध्यन्स्थिरा भूत्वा महत्या सेनया सह ७०
अनुविन्दस्तु गदया कुन्तिभोजमताडयत्
कुन्तिभोजस्ततस्तूर्णं शरव्रातैरवाकिरत् ७१

कुन्तिभोजसुतश्चापि विन्दं विव्याध सायकैः
स च तं प्रतिविव्याध तदद्भुतमिवाभवत् ७२
केकया भ्रातरः पञ्च गान्धारान्पञ्च मारिष
ससैन्यास्ते ससैन्यांश्च योधयामासुराहवे ७३
वीरबाहुश्च ते पुत्रो वैराटिं रथसत्तमम्
उत्तरं योधयामास विव्याध निशितैः शरैः
उत्तरश्चापि तं धीरं विव्याध निशितैः शरैः ७४
चेदिराट् समरे राजन्नुलूकं समभिद्रवत्
उलूकश्चापि तं बाणैर्निशितैर्लोमवाहिभिः ७५
तयोर्युद्धं समभवद्घोररूपं विशां पते
दारयेतां सुसंक्रुद्धावन्योन्यमपराजितौ ७६
एवं द्वन्द्वसहस्राणि रथवारणवाजिनाम्
पदातीनां च समरे तव तेषां च संकुलम् ७७
मुहूर्तमिव तद्युद्धमासीन्मधुरदर्शनम्
तत उन्मत्तवद्राजन्न प्राज्ञायत किञ्चन ७८
गजो गजेन समरे रथी च रथिनं ययौ
अश्वोऽश्व समभिप्रेत्य पदातिश्च पदातिनम् ७९
ततो युद्धं सुदुर्धर्षं व्याकुलं समपद्यत
शूराणां समरे तत्र समासाद्य परस्परम् ८०
तत्र देवर्षयः सिद्धाश्चारणाश्च समागताः
प्रैक्षन्त तद्रणं घोरं देवासुररणोपमम् ८१
ततो दन्तिसहस्राणि रथानां चापि मारिष
अश्वौघाः पुरुषौघाश्च विपरीतं समाययुः ८२
तत्र तत्रैव दृश्यन्ते रथवारणपत्तयः
सादिनश्च नरव्याघ्र युध्यमाना मुहुर्मुहुः ८३
इति श्रीमहाभारते भीष्मपर्वणि त्रिचत्वारिंशोऽध्यायः ४३

## चतुश्चत्वारिंशोऽध्यायः

सञ्जय उवाच
राजञ्शतसहस्राणि तत्र तत्र तदा तदा

निर्मर्यादं प्रयुद्धानि तत्ते वद्त्यामि भारत १
न पुत्रः पितरं जज्ञे न पिता पुत्रमौरसम्
न भ्राता भ्रातरं तत्र स्वस्त्रीयं न च मातुलः २
मातुलं न च स्वस्त्रीयो न सखायं सखा तथा
स्राविष्टा इव युध्यन्ते पाराडवाः कुरुभिः सह ३
रथानीकं नरव्याघ्राः केचिदभ्यपतन्रथैः
स्रभज्यन्त युगैरेव युगानि भरतर्षभ ४
रथेषाश्च रथेषाभिः कूबरा रथकूबरैः
संहताः संहतैः केचित्परस्परजिघांसवः ५
न शेकुश्चलितुं केचित्संनिपत्य रथा रथैः
प्रभिन्नास्तु महाकायाः संनिपत्य गजा गजैः ६
बहुधादारयन्क्रुद्धा विषाणैरितरेतरम्
सतोमरपताकैश्च वारणाः परवारणैः ७
स्रभिसृत्य महाराज वेगवद्भिर्महागजैः
दन्तैरभिहतास्तत्र चुक्रुशुः परमातुराः ८
स्रभिनीताश्च शिद्माभिस्तोत्रांकुशसमाहताः
सुप्रभिन्नाः प्रभिन्नानां सम्मुखाभिमुखा ययुः ९
प्रभिन्नैरपि संसक्ताः केचित्तत्र महागजाः
क्रौञ्चवन्निनदं मुक्त्वा प्राद्रवन्त ततस्ततः १०
सम्यक्प्रणीता नागाश्च प्रभिन्नकरटामुखाः
स्रृष्टितोमरनाराचैर्निर्विद्धा वरवारणाः ११
विनेदुर्भिन्नमर्माणो निपेतुश्च गतासवः
प्राद्रवन्त दिशः केचिन्नदन्तो भैरवान्रवान् १२
गजानां पादरद्मास्तु व्यूढोरस्काः प्रहारिणः
स्रृष्टिभिश्च धनुर्भिश्च विमलैश्च परश्वधैः १३
गदाभिर्मुसलैश्चैव भिरिडपालैः सतोमरैः
स्रायसैः परिघैश्चैव निस्त्रिंशैर्विमलैः शितैः १४
प्रगृहीतैः सुसंरब्धा धावमानास्ततस्ततः
व्यदृश्यन्त महाराज परस्परजिघांसवः १५
राजमानाश्च निस्त्रिंशाः संसिक्ता नरशोणितैः

प्रत्यदृश्यन्त शूराणामन्योन्यमभिधावताम् १६
अवक्षिप्तावधूतानामसीनां वीरबाहुभिः
संजज्ञे तुमुलः शब्दः पततां परमर्मसु १७
गदामुसलरुग्णानां भिन्नानां च वरासिभिः
दन्ति दन्तावभिन्नानां मृदितानां च दन्तिभिः १८
तत्र तत्र नरौघाणां क्रोशतामितरेतरम्
शुश्रुवुर्दारुणा वाचः प्रेतानामिव भारत १९
हयैरपि हयारोहाश्चामरापीडधारिभिः
हंसैरिव महावेगैरन्योन्यमभिदुद्रुवुः २०
तैर्विमुक्ता महाप्रासा जाम्बूनदविभूषणाः
आशुगा विमलास्तीक्ष्णाः सम्पेतुर्भुजगोपमाः २१
अश्वैरग्र्यजवैः केचिदाप्लुत्य महतो रथान्
शिरांस्याददिरे वीरा रथिनामश्वसादिनः २२
बहूनपि हयारोहान्भल्लैः सन्नतपर्वभिः
रथी जघान सम्प्राप्य बाणगोचरमागतान् २३
नवमेघप्रतीकाशाश्चाक्षिप्य तुरगान्गजाः
पादैरेवावमृद्नन्त मत्ताः कनकभूषणाः २४
पाट्यमानेषु कुम्भेषु पार्श्वेष्वपि च वारणाः
प्रासैर्विनिहताः केचिद्विनेदुः परमातुराः २५
साश्वारोहान्हयान्केचिदुन्मथ्य वरवारणाः
सहसा चिक्षिपुस्तत्र संकुले भैरवे सति २६
साश्वारोहान्विषाणाग्रैरुत्क्षिप्य तुरगान्द्विपाः
रथौघानविमृन्दन्तः सध्वजान्परिचक्रमुः २७
पुंस्त्वादभिमदत्वाच्च केचिदत्र महागजाः
साश्वारोहान्हयाञ्जघ्नुः करैः सचरणैस्तथा २८
केचिदाक्षिप्य करिणः साश्वानपि रथान्करैः
विकर्षन्तो दिशः सर्वाः समीयुः सर्वशब्दगाः २९
आशुगा विमलास्तीक्ष्णाः सम्पेतुर्भुजगोपमाः
नराश्वकायान्निर्भिद्य लौहानि कवचानि च ३०
निपेतुर्विमलाः शक्त्यो वीरबाहुभिरर्पिताः

महोल्काप्रतिमा घोरास्तत्र तत्र विशां पते ३१
द्वीपिचर्मावनद्धैश्च व्याघ्रचर्मशयैरपि
विकोशैर्विमलैः खड्गैरभिजघ्नुः परान्रणे ३२
अभिप्लुतमभिक्रुद्धमेकपार्श्वावदारितम्
विदर्शयन्तः सम्पेतुः खड्गचर्मपरश्वधैः ३३
शक्तिभिर्दारिताः केचित्संछिन्नाश्च परश्वधैः
हस्तिभिर्मृदिताः केचित्क्षुण्णाश्चान्ये तुरङ्गमैः ३४
रथनेमिनिकृत्ताश्च निकृत्ता निशितैः शरैः
विक्रोशन्ति नरा राजंस्तत्र तत्र स्म बान्धवान् ३५
पुत्रानन्ये पितॄनन्ये भ्रातॄंश्च सह बान्धवैः
मातुलान्भागिनेयांश्च परानपि च संयुगे ३६
विकीर्णान्त्राः सुबहवो भग्नसक्थाश्च भारत
बाहुभिः सुभुजाच्छिन्नैः पार्श्वेषु च विदारिताः
क्रन्दन्तः समदृश्यन्त तृषिता जीवितेप्सवः ३७
तृष्णापरिगताः केचिदल्पसत्त्वा विशां पते
भूमौ निपतिताः सङ्ख्ये जलमेव ययाचिरे ३८
रुधिरौघपरिक्लिन्नाः क्लिश्यमानाश्च भारत
व्यनिन्दन्भृशमात्मानं तव पुत्रांश्च सङ्गतान् ३९
अपरे क्षत्रियाः शूराः कृतवैराः परस्परम्
नैव शस्त्रं विमुञ्चन्ति नैव क्रन्दन्ति मारिष
तर्जयन्ति च संहृष्टास्तत्र तत्र परस्परम् ४०
निर्दश्य दशनैश्चापि क्रोधात्स्वदशनच्छदान्
भ्रुकुटीकुटिलैर्वक्त्रैः प्रेक्षन्ते च परस्परम् ४१
अपरे क्लिश्यमानास्तु ब्रणार्ताः शरपीडिताः
निष्कूजाः समपद्यन्त दृढसत्त्वा महाबलाः ४२
अन्ये तु विरथाः शूरा रथमन्यस्य संयुगे
प्रार्थयाना निपतिताः संक्षुण्णा वरवारणैः
अशोभन्त महाराज पुष्पिता इव किंशुकाः ४३
सम्बभूवुरनीकेषु बहवो भैरवस्वनाः
वर्तमाने महाभीमे तस्मिन्वीरवरक्षये ४४

अहनत्तु पिता पुत्रं पुत्रश्च पितरं रणे
स्वस्त्रीयो मातुलं चापि स्वस्त्रीयं चापि मातुलः ४५
सखायं च सखा राजन्सम्बन्धी बान्धवं तथा
एवं युयुधिरे तत्र कुरवः पाण्डवैः सह ४६
वर्तमाने भये तस्मिन्निर्मर्यादे महाहवे
भीष्ममासाद्य पार्थानां वाहिनी समकम्पत ४७
केतुना पञ्चतारेण तालेन भरतर्षभ
राजतेन महाबाहुरुच्छ्रितेन महारथे
बभौ भीष्मस्तदा राजंश्चन्द्रमा इव मेरुणा ४८
इति श्रीमहाभारते भीष्मपर्वणि चतुश्चत्वारिंशोऽध्यायः ४४

पञ्च चत्वारिंशोऽध्यायः

सञ्जय उवाच
गतपूर्वाह्णभूयिष्ठे तस्मिन्नहनि दारुणे
वर्तमाने महारौद्रे महावीरवरक्षये १
दुर्मुखः कृतवर्मा च कृपः शल्यो विविंशतिः
भीष्मं जुगुपुरासाद्य तव पुत्रेण चोदिताः २
एतैरतिरथैर्गुप्तः पञ्चभिर्भरतर्षभ
पाण्डवानामनीकानि विजगाहे महारथः ३
चेदिकाशिकरूषेषु पाञ्चालेषु च भारत
भीष्मस्य बहुधा तालश्चरन्केतुरदृश्यत ४
शिरांसि च तदा भीष्मो बाहूंश्चापि सहायुधान्
निचकर्त महावेगैर्भल्लैः सन्नतपर्वभिः ५
नृत्यतो रथमार्गेषु भीष्मस्य भरतर्षभ
केचिदार्तस्वरं चक्रुर्नागा मर्मणि ताडिताः ६
अभिमन्युः सुसंक्रुद्धः पिशङ्गैस्तुरगोत्तमैः
संयुक्तं रथमास्थाय प्रायाद्भीष्मरथं प्रति ७
जाम्बूनदविचित्रेण कर्णिकारेण केतुना
अभ्यवर्षत भीष्मं च तांश्चैव रथसत्तमान् ८
स तालकेतोस्तीक्ष्णेन केतुमाहत्य पत्रिणा

भीष्मेण युयुधे वीरस्तस्य चानुचरैः सह ९
कृतवर्माणमेकेन शल्यं पञ्चभिरायसैः
विद्ध्वा नवभिरानर्छच्छिताग्रैः प्रपितामहम् १०
पूर्णायतविसृष्टेन सम्यक्प्रणिहितेन च
ध्वजमेकेन विव्याध जाम्बूनदविभूषितम् ११
दुर्मुखस्य तु भल्लेन सर्वावरणभेदिना
जहार सारथेः कायाच्छिरः सन्नतपर्वणा १२
धनुश्चिच्छेद भल्लेन कार्तस्वरविभूषितम्
कृपस्य निशिताग्रेण तांश्च तीक्ष्णमुखैः शरैः १३
जघान परमक्रुद्धो नृत्यन्निव महारथः
तस्य लाघवमुद्वीक्ष्य तुतुषुर्देवता अपि १४
लब्धलक्ष्यतया कार्ष्णेः सर्वे भीष्ममुखा रथाः
सत्त्ववन्तममन्यन्त साक्षादिव धनञ्जयम् १५
तस्य लाघवमार्गस्थमलातसदृशप्रभम्
दिशः पर्यपतच्चापं गाण्डीवमिव घोषवत् १६
तमासाद्य महावेगैर्भीष्मो नवभिराशुगैः
विव्याध समरे तूर्णमार्जुनिं परवीरहा १७
ध्वजं चास्य त्रिभिर्भल्लैश्चिच्छेद परमौजसः
सारथिं च त्रिभिर्बाणैराजघान यतव्रतः १८
तथैव कृतवर्मा च कृपः शल्यश्च मारिष
विद्ध्वा नाकम्पयत्कार्ष्णिं मैनाकमिव पर्वतम् १९
स तैः परिवृतः शूरो धार्तराष्ट्रैर्महारथैः
ववर्ष शरवर्षाणि कार्ष्णिः पञ्चरथान्प्रति २०
ततस्तेषां महास्त्राणि संवार्य शरवृष्टिभिः
ननाद बलवान्कार्ष्णिर्भीष्माय विसृजञ्शरान् २१
तत्रास्य सुमहद्राजन्बाह्वोर्बलमदृश्यत
यतमानस्य समरे भीष्ममर्दयतः शरैः २२
पराक्रान्तस्य तस्यैव भीष्मोऽपि प्राहिणोच्छरान्
स तांश्चिच्छेद समरे भीष्मचापच्युताञ्शरान् २३
ततो ध्वजममोघेषुर्भीष्मस्य नवभिः शरैः

चिच्छेद समरे वीरस्तत उच्चुक्रुशुर्जनाः २४
स राजतो महास्कन्धस्तालो हेमविभूषितः
सौभद्रविशिखैश्छिन्नः पपात भुवि भारत २५
ध्वजं सौभद्रविशिखैः पतितं भरतर्षभ
दृष्ट्वा भीमोऽनदद्धृष्टः सौभद्रमभिहर्षयन् २६
अथ भीष्मो महास्त्राणि दिव्यानि च बहूनि च
प्रादुश्चक्रे महारौद्रः क्षणे तस्मिन्महाबलः २७
ततः शतसहस्रेण सौभद्रं प्रपितामहः
अवाकिरदमेयात्मा शराणां नतपर्वणाम् २८
ततो दश महेष्वासाः पाण्डवानां महारथाः
रक्षार्थमभ्यधावन्त सौभद्रं त्वरिता रथैः २९
विराटः सह पुत्रेण धृष्टद्युम्नश्च पार्षतः
भीमश्च केकयाश्चैव सात्यकिश्च विशां पते ३०
जवेनापततां तेषां भीष्मः शांतनवो रणे
पाञ्चाल्यं त्रिभिरानर्छत्सात्यकिं निशितैः शरैः ३१
पूर्णायतविसृष्टेन क्षुरेण निशितेन च
ध्वजमेकेन चिच्छेद भीमसेनस्य पत्रिणा ३२
जाम्बूनदमयः केतुःकेसरी नरसत्तम
पपात भीमसेनस्य भीष्मेण मथितो रथात् ३३
भीमसेनस्त्रिभिर्विद्ध्वा भीष्मं शान्तनवं रणे
कृपमेकेन विव्याध कृतवर्माणमष्टभिः ३४
प्रगृहीताग्रहस्तेन वैराटिरपि दन्तिना
अभ्यद्रवत राजानं मद्राधिपतिमुत्तरः ३५
तस्य वारणराजस्य जवेनापततो रथी
शल्यो निवारयामास वेगमप्रतिमं रणे ३६
तस्य क्रुद्धः स नागेन्द्रो बृहतः साधुवाहिनः
पदा युगमधिष्ठाय जघान चतुरो हयान् ३७
स हताश्वे रथे तिष्ठन्मद्राधिपतिरायसीम्
उत्तरान्तकरीं शक्तिं चिक्षेप भुजगोपमाम् ३८
तया भिन्नतनुत्राणः प्रविश्य विपुलं तमः

स पपात गजस्कन्धात्प्रमुक्तांकुशतोमरः ३९
समादाय च शल्योऽसिमवप्लुत्य रथोत्तमात्
वारणेन्द्रस्य विक्रम्य चिच्छेदाथ महाकरम् ४०
भिन्नमर्मा शरव्रातैश्छिन्नहस्तः स वारणः
भीममार्तस्वरं कृत्वा पपात च ममार च ४१
एतदीदृशकं कृत्वा मद्रराजो महारथः
आरुरोह रथं तूर्णं भास्वरं कृतवर्मणः ४२
उत्तरं निहतं दृष्ट्वा वैराटिर्भ्रातरं शुभम्
कृतवर्मणा च सहितं दृष्ट्वा शल्यमवस्थितम्
शङ्खः क्रोधात्प्रजज्वाल हविषा हव्यवाडिव ४३
स विस्फार्य महच्चापं कार्तस्वरविभूषितम्
अभ्यधावज्जिघांसन्वै शल्यं मद्राधिपं बली ४४
महता रथवंशेन समन्तात्परिवारितः
सृजन्बाणमयं वर्षं प्रायाच्छल्यरथं प्रति ४५
तमापतन्तं सम्प्रेक्ष्य मत्तवारणविक्रमम्
तावकानां रथाः सप्त समन्तात्पर्यवारयन्
मद्रराजं परीप्सन्तो मृत्योर्दंष्ट्रान्तरं गतम् ४६
ततो भीष्मो महाबाहुर्विनद्य जलदो यथा
तालमात्रं धनुर्गृह्य शङ्खमभ्यद्रवद्रणे ४७
तमुद्यतमुदीक्ष्याथ महेष्वासं महाबलम्
सन्त्रस्ता पाण्डवी सेना वातवेगहतेव नौः ४८
तत्रार्जुनः संत्वरितः शङ्खस्यासीत्पुरःसरः
भीष्माद्रक्ष्योऽयमद्येति ततो युद्धमवर्तत ४९
हाहाकारो महानासीद्योधानां युधि युध्यताम्
तेजस्तेजसि संपृक्तमित्येवं विस्मयं ययुः ५०
अथ शल्यो गदापाणिरवतीर्य महारथात्
शङ्खस्य चतुरो वाहानहनद्भरतर्षभ ५१
स हताश्वाद्रथात्तूर्णं खड्गमादाय विद्रुतः
बीभत्सोः स्यन्दनं प्राप्य ततः शान्तिमविन्दत ५२
ततो भीष्मरथात्तूर्णमुत्पतन्ति पतत्रिणः

यैरन्तरिक्षं भूमिश्च सर्वतः समवस्तृतम् ५३
पाञ्चालानथ मत्स्यांश्च केकयांश्च प्रभद्रकान्
भीष्मः प्रहरतां श्रेष्ठः पातयामास मार्गणैः ५४
उत्सृज्य समरे तूर्णं पाण्डवं सव्यसाचिनम्
अभ्यद्रवत पाञ्चाल्यं द्रुपदं सेनया वृतम्
प्रियं सम्बन्धिनं राजञ्शरानवकिरन्बहून् ५५
अग्निनेव प्रदग्धानि वनानि शिशिरात्यये
शरदग्धान्यदृश्यन्त सैन्यानि द्रुपदस्य ह
अतिष्ठत रणे भीष्मो विधूम इव पावकः ५६
मध्यंदिने यथादित्यं तपन्तमिव तेजसा
न शेकुः पाण्डवेयस्य योधा भीष्मं निरीक्षितुम् ५७
वीक्षाञ्चक्रुः समन्तात्ते पाण्डवा भयपीडिताः
त्रातारं नाध्यगच्छन्त गावः शीतार्दिता इव ५८
हतविप्रद्रुते सैन्ये निरुत्साहे विमर्दिते
हाहाकारो महानासीत्पाण्डुसैन्येषु भारत ५९
ततो भीष्मः शांतनवो नित्यं मण्डलकार्मुकः
मुमोच बाणान्दीप्ताग्रानहीनाशीविषानिव ६०
शरैरेकायनीकुर्वन्दिशः सर्वा यतव्रतः
जघान पाण्डवरथानादिश्यादिश्य भारत ६१
ततः सैन्येषु भग्नेषु मथितेषु च सर्वशः
प्राप्ते चास्तं दिनकरे न प्राज्ञायत किञ्चन ६२
भीष्मं च समुदीर्यन्तं दृष्ट्वा पार्था महाहवे
अवहारमकुर्वन्त सैन्यानां भरतर्षभ ६३
इति श्रीमहाभारते भीष्मपर्वणि पञ्चचत्वारिंशोऽध्यायः ४५

## षट् चत्वारिंशोऽध्यायः

सञ्जय उवाच
कृतेऽवहारे सैन्यानां प्रथमे भरतर्षभ
भीष्मे च युधि संरब्धे हृष्टे दुर्योधने तथा १
धर्मराजस्ततस्तूर्णमभिगम्य जनार्दनम्

भ्रातृभिः सहितः सर्वैः सर्वैश्चैव जनेश्वरैः २
शुचा परमया युक्तश्चिन्तयानः पराजयम्
वार्ष्णेयमब्रवीद्राजन्दृष्ट्वा भीष्मस्य विक्रमम् ३
कृष्ण पश्य महेष्वासं भीष्मं भीमपराक्रमम्
शरैर्दहन्तं सैन्यं मे ग्रीष्मे कक्षमिवानलम् ४
कथमेनं महात्मानं शक्ष्यामः प्रतिवीक्षितुम्
लेलिह्यमानं सैन्यं मे हविष्मन्तमिवानलम् ५
एतं हि पुरुषव्याघ्रं धनुष्मन्तं महाबलम्
दृष्ट्वा विप्रद्रुतं सैन्यं मदीयं मार्गणाहतम् ६
शक्यो जेतुं यमः क्रुद्धो वज्रपाणिश्च संयुगे
वरुणः पाशभृच्चापि कुबेरो वा गदाधरः ७
न तु भीष्मो महातेजाः शक्यो जेतुं महाबलः
सोऽहमेवं गते मग्नो भीष्मागाधजलेऽप्लवः ८
आत्मनो बुद्धिदौर्बल्याद्भीष्ममासाद्य केशव
वनं यास्यामि गोविन्द श्रेयो मे तत्र जीवितुम् ९
न त्विमान्पृथिवीपालान्दातुं भीष्माय मृत्यवे
क्षपयिष्यति सेनां मे कृष्ण भीष्मो महास्त्रवित् १०
यथानलं प्रज्वलितं पतङ्गाः समभिद्रुताः
विनाशायैव गच्छन्ति तथा मे सैनिको जनः ११
क्षयं नीतोऽस्मि वार्ष्णेय राज्यहेतोः पराक्रमी
भ्रातरश्चैव मे वीराः कर्शिताः शरपीडिताः १२
मत्कृते भ्रातृसौहार्दाद्राज्याद्भ्रष्टास्तथा सुखात्
जीवितं बहु मन्येऽह जीवितं ह्यद्य दुर्लभम् १३
जीवितस्य हि शेषेण तपस्तप्स्यामि दुश्चरम्
न घातयिष्यामि रणे मित्राणीमानि केशव १४
रथान्मे बहुसाहस्रान्दिव्यैरस्त्रैर्महाबलः
घातयत्यनिशं भीष्मः प्रवराणां प्रहारिणाम् १५
किं नु कृत्वा कृतं मे स्याद्ब्रूहि माधव माचिरम्
मध्यस्थमिव पश्यामि समरे सव्यसाचिनम् १६
एको भीमः परं शक्त्या युध्यत्येष महाभुजः

केवलं बाहुवीर्येण क्षत्रधर्ममनुस्मरन् १७
गदया वीरघातिन्या यथोत्साहं महामनाः
करोत्यसुकरं कर्म गजाश्वरथपत्तिषु १८
नालमेष क्षयं कर्तुं परसैन्यस्य मारिष
आर्जवेनैव युद्धेन वीर वर्षशतैरपि १९
एकोऽस्त्रवित्सखा तेऽय सोऽप्यस्मान्समुपेक्षते
निर्दह्यमानान्भीष्मेण द्रोणेन च महात्मना २०
दिव्यान्यस्त्राणि भीष्मस्य द्रोणस्य च महात्मनः
धक्ष्यन्ति क्षत्रियान्सर्वान्प्रयुक्तानि पुनः पुनः २१
कृष्ण भीष्मः सुसंरब्धः सहितः सर्वपार्थिवैः
क्षपयिष्यति नो नूनं यादृशोऽस्य पराक्रमः २२
स त्वं पश्य महेष्वासं योगीश्वर महारथम्
ये भीष्मं शमयेत्संख्ये दावाग्निं जलदो यथा २३
तव प्रसादाद्गोविन्द पाण्डवा निहतद्विषः
स्वराज्यमनुसम्प्राप्ता मोदिष्यन्ति सबान्धवाः २४
एवमुक्त्वा ततः पार्थो ध्यायन्नास्ते महामनाः
चिरमन्तर्मना भूत्वा शोकोपहतचेतनः २५
शोकार्तं पाण्डवं ज्ञात्वा दुःखेन हतचेतसम्
अब्रवीत्तत्र गोविन्दो हर्षयन्सर्वपाण्डवान् २६
मा शुचो भरतश्रेष्ठ न त्वं शोचितुमर्हसि
यस्य ते भ्रातरः शूराः सर्वलोकस्य धन्विनः २७
अहं च प्रियकृद्राजन्सात्यकिश्च महारथः
विराटद्रुपदौ वृद्धौ धृष्टद्युम्नश्च पार्षतः २८
तथैव सबलाः सर्वे राजानो राजसत्तम
त्वत्प्रसादं प्रतीक्षन्ते त्वद्भक्ताश्च विशां पते २९
एष ते पार्षतो नित्यं हितकामः प्रिये रतः
सेनापत्यमनुप्राप्तो धृष्टद्युम्नो महाबलः
शिखण्डी च महाबाहो भीष्मस्य निधनं किल ३०
एतच्छ्रुत्वा ततो राजा धृष्टद्युम्नं महारथम्
अब्रवीत्समितौ तस्यां वासुदेवस्य शृण्वतः ३१

धृष्टद्युम्न निबोधेदं यत्त्वा वक्ष्यामि मारिष
नातिक्रम्यं भवेत्तच्च वचनं मम भाषितम् ३२
भवान्सेनापतिर्मह्यं वासुदेवेन सम्मतः
कार्त्तिकेयो यथा नित्यं देवानामभवत्पुरा
तथा त्वमपि पाण्डूनां सेनानीः पुरुषर्षभ ३३
स त्वं पुरुषशार्दूल विक्रम्य जहि कौरवान्
अहं च त्वानुयास्यामि भीमः कृष्णश्च मारिष ३४
माद्रीपुत्रौ च सहितौ द्रौपदेयाश्च दंशिताः
ये चान्ये पृथिवीपालाः प्रधानाः पुरुषर्षभ ३५
तत उद्धर्षयन्सर्वान्धृष्टद्युम्नोऽभ्यभाषत
अहं द्रोणान्तकः पार्थ विहितः शम्भुना पुरा ३६
रणे भीष्मं तथा द्रोणं कृपं शल्यं जयद्रथम्
सर्वानद्य रणे दृप्तान्प्रतियोत्स्यामि पार्थिव ३७
अथोत्क्रुष्टं महेष्वासैः पाण्डवैर्युद्धदुर्मदैः
समुद्यते पार्थिवेन्द्रे पार्षते शत्रुसूदने ३८
तमब्रवीत्ततः पार्थः पार्षतं पृतनापतिम्
व्यूहः क्रौञ्चारुणो नाम सर्वशत्रुनिबर्हणः ३९
यं बृहस्पतिरिन्द्राय तदा देवासुरेऽब्रवीत्
तं यथावत्प्रतिव्यूह परानीकविनाशनम्
अदृष्टपूर्वं राजानः पश्यन्तु कुरुभिः सह ४०
तथोक्तः स नृदेवेन विष्णुर्वज्रभृता इव
प्रभाते सर्वसैन्यानामग्रे चक्रे धनञ्जयम् ४१
आदित्यपथगः केतुस्तस्याद्भुतमनोरमः
शासनात्पुरुहूतस्य निर्मितो विश्वकर्मणा ४२
इन्द्रायुधसवर्णाभिः पताकाभिरलंकृतः
आकाशग इवाकाशे गन्धर्वनगरोपमः
नृत्यमान इवाभाति रथचर्यासु मारिष ४३
तेन रत्नवता पार्थः स च गाण्डीवधन्वना
बभूव परमोपेतः स्वयंभूरिव भानुना ४४
शिरोऽभूद्द्रुपदो राजा महत्या सेनया वृतः

कुन्तिभोजश्च चैद्यश्च चक्षुष्यास्तां जनेश्वर ४५
दाशार्णकाः प्रयागाश्च दाशेरकगणैः सह
अनूपगाः किराताश्च ग्रीवायां भरतर्षभ ४६
पटच्चरैश्च हुण्डैश्च राजन्पौरवकैस्तथा
निषादैः सहितश्चापि पृष्ठमासीद्युधिष्ठिरः ४७
पक्षौ तु भीमसेनश्च धृष्टद्युम्नश्च पार्षतः
द्रौपदेयाभिमन्युश्च सात्यकिश्च महारथः ४८
पिशाचा दरदाश्चैव पुण्ड्राः कुण्डीविषैः सह
मडका लडकाश्चैव तङ्गणाः परतङ्गणाः ४९
बाल्हिकास्तित्तिराश्चैव चोलाः पाण्ड्याश्च भारत
एते जनपदा राजन्दक्षिणं पक्षमाश्रिताः ५०
अग्निवेश्या जगत्तुण्डा पलदाशाश्च भारत
शबरास्तुम्बुपाश्चैव वत्साश्च सह नाकुलैः
नकुलः सहदेवश्च वामं पार्श्वं समाश्रिताः ५१
रथानामयुतं पक्षौ शिरश्च नियुतं तथा
पृष्ठमर्बुदमेवासीत्सहस्राणि च विंशतिः
ग्रीवायां नियुतं चापि सहस्राणि च सप्ततिः ५२
पक्षकोटिप्रपक्षेषु पक्षान्तेषु च वारणाः
जग्मुः परिवृता राजंश्चलन्त इव पर्वताः ५३
जघनं पालयामास विराटः सह केकयैः
काशिराजश्च शैब्यश्च रथानामयुतैस्त्रिभिः ५४
एवमेतं महाव्यूहं व्यूह्य भारत पाण्डवाः
सूर्योदयनमिच्छन्तः स्थिता युद्धाय दंशिताः ५५
तेषामादित्यवर्णानि विमलानि महान्ति च
श्वेतच्छत्राण्यशोभन्त वारणेषु रथेषु च ५६
इति श्रीमहाभारते भीष्मपर्वणि षट्चत्वारिंशोऽध्यायः ४६

## सप्त चत्वारिंशोऽध्यायः

सञ्जय उवाच
क्रौञ्चं ततो महाव्यूहमभेद्यं तनयस्तव

व्यूढं दृष्ट्वा महाघोरं पार्थेनामिततेजसा १
आचार्यमुपसङ्गम्य कृपं शल्यं च मारिष
सौमदत्तिं विकर्णं च अश्वत्थामानमेव च २
दुःशासनादीन्भ्रातृंश्च स सर्वानेव भारत
अन्यांश्च सुबहूञ्शूरान्युद्धाय समुपागतान् ३
प्राहेदं वचनं काले हर्षयंस्तनयस्तव
नानाशस्त्रप्रहरणाः सर्वे शस्त्रास्त्रवेदिनः ४
एकैकशः समर्था हि यूयं सर्वे महारथाः
पाण्डुपुत्रान्रणे हन्तुं ससैन्यान्किमु संहताः ५
अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम्
पर्याप्तं त्विदमेतेषां बलं पार्थिवसत्तमाः ६
संस्थानाः शूरसेनाश्च वेणिकाः कुकुरास्तथा
आरेवकास्त्रिगर्ताश्च मद्रका यवनास्तथा ७
शत्रुञ्जयेन सहितास्तथा दुःशासनेन च
विकर्णेन च वीरेण तथा नन्दोपनन्दकैः ८
चित्रसेनेन सहिताः सहिताः पाणिभद्रकैः
भीष्ममेवाभिरक्षन्तु सह सैन्यपुरस्कृताः ९
ततो द्रोणश्च भीष्मश्च तव पुत्रश्च मारिष
अव्यूहन्त महाव्यूहं पाण्डूनां प्रतिबाधने १०
भीष्मः सैन्येन महता समन्तात्परिवारितः
ययौ प्रकर्षन्महतीं वाहिनीं सुरराडिव ११
तमन्वयान्महेष्वासो भारद्वाजः प्रतापवान्
कुन्तलैश्च दशार्णैश्च मागधैश्च विशां पते १२
विदर्भैर्मेकलैश्चैव कर्णप्रावरणैरपि
सहिताः सर्वसैन्येन भीष्ममाहवशोभिनम् १३
गान्धाराः सिन्धुसौवीराः शिबयोऽथ वसातयः
शकुनिश्च स्वसैन्येन भारद्वाजमपालयत् १४
ततो दुर्योधनो राजा सहितः सर्वसोदरैः
अश्वातकैर्विकर्णैश्च तथा शर्मिलकोसलैः १५
दरदैश्चूचुपैश्चैव तथा क्षुद्रकमालवैः

अभ्यरक्षत संहृष्टः सौबलेयस्य वाहिनीम् १६
भूरिश्रवाः शलः शल्यो भगदत्तश्च मारिष
विन्दानुविन्दावावन्त्यौ वामं पार्श्वमपालयन् १७
सौमदत्तिः सुशर्मा च काम्बोजश्च सुदक्षिणः
शतायुश्च श्रुतायुश्च दक्षिणं पार्श्वमास्थिताः १८
अश्वत्थामा कृपश्चैव कृतवर्मा च सात्वतः
महत्या सेनया सार्धं सेनापृष्ठे व्यवस्थिताः १९
पृष्ठगोपास्तु तस्यासन्नानादेश्या जनेश्वराः
केतुमान्वसुदानश्च पुत्रः काश्यस्य चाभिभूः २०
ततस्ते तावकाः सर्वे हृष्टा युद्धाय भारत
दध्मुः शङ्खान्मुदा युक्ताः सिंहनादांश्च नादयन् २१
तेषां श्रुत्वा तु हृष्टानां कुरुवृद्धः पितामहः
सिंहनादं विनद्योच्चैः शङ्खं दध्मौ प्रतापवान् २२
ततः शङ्खाश्च भेर्यश्च पेश्यश्च विविधाः परैः
आनकाश्चाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् २३
ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ
प्रदध्मतुः शङ्खवरौ हेमरत्नपरिष्कृतौ २४
पाञ्चजन्यं हृषीकेशो देवदत्तं धनञ्जयः
पौण्ड्रं दध्मौ महाशङ्खं भीमकर्मा वृकोदरः २५
अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः
नकुलः सहदेवश्च सुघोषमणिपुष्पकौ २६
काशिराजश्च शैब्यश्च शिखण्डी च महारथः
धृष्टद्युम्नो विराटश्च सात्यकिश्च महायशाः २७
पांचाल्यश्च महेष्वासो द्रौपद्याः पंच चात्मजाः
सर्वे दध्मुर्महाशंखान्सिंहनादांश्च नेदिरे २८
स घोषः सुमहांस्तत्र वीरैस्तैः समुदीरितः
नभश्च पृथिवीं चैव तुमुलो व्यनुनादयत् २९
एवमेते महाराज प्रहृष्टाः कुरुपाण्डवाः
पुनर्युद्धाय संजग्मुस्तापयानाः परस्परम् ३०
इति श्रीमहाभारते भीष्मपर्वणि सप्तचत्वारिंशोऽध्यायः ४७

## अष्ट चत्वारिंशोऽध्यायः

धृतराष्ट्र उवाच
एवं वयूढेष्वनीकेषु मामकेष्वितरेषु च
कथं प्रहरतां श्रेष्ठाः संप्रहारं प्रचक्रिरे १
सञ्जय उवाच
समं व्यूढेष्वनीकेषु सन्नद्धा रुचिरध्वजाः
अपारमिव संदृश्य सागरप्रतिमं बलम् २
तेषां मध्ये स्थितो राजा पुत्रो दुर्योधनस्तव
अब्रवीत्तावकान्सर्वान्युध्यध्वमिति दंशिताः ३
ते मनः क्रूरमास्थाय समभित्यक्तजीविताः
पाण्डवानभ्यवर्तन्त सर्व एवोच्छ्रितध्वजाः ४
ततो युद्धं समभवत्तुमुलं लोमहर्षणम्
तावकानां परेषां च व्यतिषक्तरथद्विपम् ५
मुक्तास्तु रथिभिर्बाणा रुक्मपुंखाः सुतेजनाः
सन्निपेतुरकुण्ठाग्रा नागेषु च हयेषु च ६
तथा प्रवृत्ते संग्रामे धनुरुद्यम्य दंशितः
अभिपत्य महाबाहुर्भीष्मो भीमपराक्रमः ७
सौभद्रे भीमसेने च शैनेये च महारथे
केकये च विराटे च धृष्टद्युम्ने च पार्षते ८
एतेषु नरवीरेषु चेदिमत्स्येषु चाभितः
ववर्ष शरवर्षाणि वृद्धः कुरुपितामहः ९
प्राकम्पत महाव्यूहस्तस्मिन्वीरसमागमे
सर्वेषामेव सैन्यानामासीद्व्यतिकरो महान् १०
सादितध्वजनागाश्च हतप्रवरवाजिनः
विप्रयातरथानीकाः समपद्यन्त पाण्डवाः ११
अर्जुनस्तु नरव्याघ्रो दृष्ट्वा भीष्मं महारथम्
वार्ष्णेयमब्रवीत्क्रुद्धो याहि यत्र पितामहः १२
एष भीष्मः सुसंक्रुद्धो वार्ष्णेय मम वाहिनीम्
नाशयिष्यति सुव्यक्तं दुर्योधनहिते रतः १३
एष द्रोणः कृपः शल्यो विकर्णश्च जनार्दन

धार्तराष्ट्राश्च सहिता दुर्योधनपुरोगमाः १४
पाञ्चालान्निहनिष्यन्ति रक्षिता दृढधन्वना
सोऽह भीष्मं गमिष्यामि सैन्यहेतोर्जनार्दन १५
तमब्रवीद्वासुदेवो यत्तो भव धनंजय
एष त्वा प्रापये वीर पितामहरथं प्रति १६
एवमुक्त्वा ततः शौरी रथं तं लोकविश्रुतम्
प्रापयामास भीष्माय रथं प्रति जनेश्वर १७
चञ्चद्बहुपताकेन बलाकावर्णवाजिना
समुच्छ्रितमहाभीमनदद्वानरकेतुना
महता मेघनादेन रथेनादित्यवर्चसा १८
विनिघ्नन्कौरवानीकं शूरसेनांश्च पाण्डवः
आयाच्छरान्नुदञ्शीघ्रं सुहृच्छोकविनाशनः १९
तमापतन्तं वेगेन प्रभिन्नमिव वारणम्
त्रासयानं रणे शूरान्पातयन्तं च सायकैः २०
सैन्धवप्रमुखैर्गुप्तः प्राच्यसौवीरकेकयैः
सहसा प्रत्युदीयाय भीष्मः शान्तनवोऽजुनम् २१
को हि गाण्डीवधन्वानमन्यः कुरुपितामहात्
द्रोणवैकर्तनाभ्यां वा रथः संयातुमर्हति २२
ततो भीष्मो महाराज कौरवाणां पितामहः
अर्जुनं सप्तसप्तत्या नाराचानां समावृणोत् २३
द्रोणश्च पंचविंशत्या कृपः पंचाशता शरैः
दुर्योधनश्चतुःषष्ट्या शल्यश्च नवभिः शरैः २४
सैन्धवो नवभिश्चापि शकुनिश्चापि पंचभिः
विकर्णो दशभिर्भल्लै राजन्विव्याध पांडवम् २५
स तैर्विद्धो महेष्वासः समन्तान्निशितैः शरैः
न विव्यथे महाबाहुर्भिद्यमान इवाचलः २६
स भीष्मं पञ्चविंशत्या कृपं च नवभिः शरैः
द्रोणं षष्ट्या नरव्याघ्रो विकर्णं च त्रिभिः शरैः २७
आर्तायनिं त्रिभिर्बाणै राजानं चापि पञ्चभिः
प्रत्यविध्यदमेयात्मा किरीटी भरतर्षभ २८

तं सात्यकिर्विराटश्च धृष्टद्युम्नश्च पार्षतः
द्रौपदेयाभिमन्युश्च परिवव्रुर्धनञ्जयम् २९
ततो द्रोणं महेष्वासं गाङ्गेयस्य प्रिये रतम्
अभ्यवर्षत पाञ्चाल्यः संयुक्तः सह सोमकैः ३०
भीष्मस्तु रथिनां श्रेष्ठस्तूर्णं विव्याध पाण्डवम्
अशीत्या निशितैर्बाणैस्ततोऽक्रोशन्त तावकाः ३१
तेषां तु निनदं श्रुत्वा प्रहृष्टानां प्रहृष्टवत्
प्रविवेश ततो मध्यं रथसिंहः प्रतापवान् ३२
तेषां तु रथसिंहानां मध्यं प्राप्य धनञ्जयः
चिक्रीड धनुषा राजँल्लक्ष्यं कृत्वा महारथान् ३३
ततो दुर्योधनो राजा भीष्ममाह जनेश्वरः
पीड्यमानं स्वकं सैन्यं दृष्ट्वा पार्थेन संयुगे ३४
एष पाण्डुसुतस्तात कृष्णेन सहितो बली
यततां सर्वसैन्यानां मूलं नः परिकृन्तति
त्वयि जीवति गाङ्गेय द्रोणे च रथिनां वरे ३५
त्वत्कृते ह्येष कर्णोऽपि न्यस्तशस्त्रो महारथः
न युध्यति रणे पार्थं हितकामः सदा मम ३६
स तथा कुरु गाङ्गेय यथा हन्येत फल्गुनः
एवमुक्तस्ततो राजन्पिता देवव्रतस्तव
धिक्क्षत्रधर्ममित्युक्त्वा ययौ पार्थरथं प्रति ३७
उभौ श्वेतहयौ राजन्संसक्तौ दृश्य पार्थिवाः
सिंहनादान्भृशं चक्रुः शङ्खशब्दांश्च भारत ३८
द्रौणिर्दुर्योधनश्चैव विकर्णश्च तवात्मजः
परिवार्य रणे भीष्मं स्थिता युद्धाय मारिष ३९
तथैव पाण्डवाः सर्वे परिवार्य धनञ्जयम्
स्थिता युद्धाय महते ततो युद्धमवर्तत ४०
गाङ्गेयस्तु रणे पार्थमानर्छन्नवभिः शरैः
तमर्जुनः प्रत्यविध्यद्दशभिर्मर्मवेधिभिः ४१
ततः शरसहस्रेण सुप्रयुक्तेन पाण्डवः
अर्जुनः समरश्लाघी भीष्मस्यावारयद्दिशः ४२

शरजालं ततस्तत्तु शरजालेन कौरव
वारयामास पार्थस्य भीष्मः शान्तनवस्तथा ४३
उभौ परमसंहृष्टावुभौ युद्धाभिनन्दिनौ
निर्विशेषमयुध्येतां कृतप्रतिकृतैषिणौ ४४
भीष्मचापविमुक्तानि शरजालानि सङ्घशः
शीर्यमाणान्यदृश्यन्त भिन्नान्यर्जुनसायकैः ४५
तथैवार्जुनमुक्तानि शरजालानि भागशः
गाङ्गेयशरनुन्नानि न्यपतन्त महीतले ४६
अर्जुनः पञ्चविंशत्या भीष्ममार्छच्छितैः शरैः
भीष्मोऽपि समरे पार्थं विव्याध त्रिंशता शरैः ४७
अन्योन्यस्य हयान्विद्ध्वा ध्वजौ च सुमहाबलौ
रथेषां रथचक्रे च चिक्रीडतुररिन्दमौ ४८
ततः क्रुद्धो महाराज भीष्मः प्रहरतां वरः
वासुदेवं त्रिभिर्बाणैराजघान स्तनान्तरे ४९
भीष्मचापच्युतैर्बाणैर्निर्विद्धो मधुसूदनः
विरराज रणे राजन्सपुष्प इव किंशुकः ५०
ततोऽजुनो भृशं क्रुद्धो निर्विद्धं प्रेक्ष्य माधवम्
गाङ्गेयसारथिं संख्ये निर्बिभेद त्रिभिः शरैः ५१
यतमानौ तु तौ वीरावन्योन्यस्य वधं प्रति
नाशक्नुतां तदान्योन्यमभिसन्धातुमाहवे ५२
मण्डलानि विचित्राणि गतप्रत्यागतानि च
अदर्शयेतां बहुधा सूतसामर्थ्यलाघवात् ५३
अन्तरं च प्रहारेषु तर्कयन्तौ महारथौ
राजन्नन्तरमार्गस्थौ स्थितावास्तां मुहुर्मुहुः ५४
उभौ सिंहरवोन्मिश्रं शङ्खशब्दं प्रचक्रतुः
तथैव चापनिर्घोषं चक्रतुस्तौ महारथौ ५५
तयोः शङ्खप्रणादेन रथनेमिस्वनेन च
दारिता सहसा भूमिश्चकम्प च ननाद च ५६
न तयोरन्तरं कश्चिद्ददृशे भरतर्षभ
बलिनौ समरे शूरावन्योन्यसदृशावुभौ ५७

चिह्नमात्रेण भीष्मं तु प्रजज्ञुस्तत्र कौरवाः
तथा पाण्डुसुताः पार्थं चिह्नमात्रेण जज्ञिरे ५८
तयोर्नृवरयो राजन्दृश्य तादृक्पराक्रमम्
विस्मयं सर्वभूतानि जग्मुर्भारत संयुगे ५९
न तयोर्विवरं कश्चिद्रणे पश्यति भारत
धर्मे स्थितस्य हि यथा न कश्चिद्वृजिनं क्वचित् ६०
उभौ हि शरजालेन तावदृश्यौ बभूवतुः
प्रकाशौ च पुनस्तूर्णं बभूवतुरुभौ रणे ६१
तत्र देवाः सगन्धर्वाश्चारणाश्च सहर्षिभिः
अन्योन्यं प्रत्यभाषन्त तयोर्दृष्ट्वा पराक्रमम् ६२
न शक्यौ युधि संरब्धौ जेतुमेतौ महारथौ
सदेवासुरगन्धर्वैर्लोकैरपि कथञ्चन ६३
आश्चर्यभूतं लोकेषु युद्धमेतन्महाद्भुतम्
नैतादृशानि युद्धानि भविष्यन्ति कथञ्चन ६४
नापि शक्यो रणे जेतुं भीष्मः पार्थेन धीमता
सधनुश्च रथस्थश्च प्रवपन्सायकान्रणे ६५
तथैव पाण्डवं युद्धे देवैरपि दुरासदम्
न विजेतुं रणे भीष्म उत्सहेत धनुर्धरम् ६६
इति स्म वाचः श्रूयन्ते प्रोच्चरन्त्यस्ततस्ततः
गाङ्गेयार्जुनयोः संख्ये स्तवयुक्ता विशां पते ६७
त्वदीयास्तु ततो योधाः पाण्डवेयाश्च भारत
अन्योन्यं समरे जघ्नुस्तयोस्तत्र पराक्रमे ६८
शितधारैस्तथा खड्गैर्विमलैश्च परश्वधैः
शरैरन्यैश्च बहुभिः शस्त्रैर्नानाविधैर्युधि
उभयोः सेनयोर्वीरा न्यकृन्तन्त परस्परम् ६९
वर्तमाने तथा घोरे तस्मिन्युद्धे सुदारुणे
द्रोणपाञ्चाल्ययो राजन्महानासीत्समागमः ७०

इति श्रीमहाभारते भीष्मपर्वणि अष्टचत्वारिंशोऽध्यायः ४८

## एकोन पञ्चाशोऽध्यायः

धृतराष्ट्र उवाच
कथं द्रोणो महेष्वासः पाञ्चाल्यश्चापि पार्षतः
रणे समीयतुर्यत्तौ तन्ममाचक्ष्व सञ्जय १
दिष्टमेव परं मन्ये पौरुषादपि संजय
यत्र शांतनवो भीष्मो नातरद्युधि पाण्डवम् २
भीष्मो हि समरे क्रुद्धो हन्याल्लोकांश्चराचरान्
स कथं पाण्डवं युद्धे नातरत्सञ्जयौजसा ३
सञ्जय उवाच
शृणु राजन्स्थिरो भूत्वा युद्धमेतत्सुदारुणम्
न शक्यः पाण्डवो जेतुं देवैरपि सवासवैः ४
द्रोणस्तु निशितैर्बाणैर्धृष्टद्युम्नमयोधयत्
सारथिं चास्य भल्लेन रथनीडादपातयत् ५
तस्याथ चतुरो वाहांश्चतुर्भिः सायकोत्तमैः
पीडयामास संक्रुद्धो धृष्टद्युम्नस्य मारिष ६
धृष्टद्युम्नस्ततो द्रोणं नवत्या निशितैः शरैः
विव्याध प्रहसन्वीरस्तिष्ठ तिष्ठेति चाब्रवीत् ७
ततः पुनरमेयात्मा भारद्वाजः प्रतापवान्
शरैः प्रच्छादयामास धृष्टद्युम्नममर्षणम् ८
आददे च शरं घोरं पार्षतस्य वधं प्रति
शक्राशनिसमस्पर्शं मृत्युदण्डमिवापरम् ९
हाहाकारो महानासीत्सर्वसैन्यस्य भारत
तमिषुं संधितं दृष्ट्वा भारद्वाजेन संयुगे १०
तत्राद्भुतमपश्याम धृष्टद्युम्नस्य पौरुषम्
यदेकः समरे वीरस्तस्थौ गिरिरिवाचलः ११
तं च दीप्तं शरं घोरमायान्तं मृत्युमात्मनः
चिच्छेद शरवृष्टिं च भारद्वाजे मुमोच ह १२
तत उच्चुक्रुशुः सर्वे पाञ्चालाः पाण्डवैः सह
धृष्टद्युम्नेन तत्कर्म कृतं दृष्ट्वा सुदुष्करम् १३
ततः शक्तिं महावेगां स्वर्णवैडूर्यभूषिताम्

द्रोणस्य निधनाकांक्षी चिक्षेप स पराक्रमी १४
तामापतन्तीं सहसा शक्तिं कनकभूषणाम्
त्रिधा चिक्षेप समरे भारद्वाजो हसन्निव १५
शक्तिं विनिहतां दृष्ट्वा धृष्टद्युम्नः प्रतापवान्
ववर्ष शरवर्षाणि द्रोणं प्रति जनेश्वर १६
शरवर्षं ततस्तं तु संनिवार्य महायशाः
द्रोणो द्रुपदपुत्रस्य मध्ये चिच्छेद कार्मुकम् १७
स च्छिन्नधन्वा समरे गदां गुर्वीं महायशाः
द्रोणाय प्रेषयामास गिरिसारमयीं बली १८
सा गदा वेगवन्मुक्ता प्रायाद्द्रोणजिघांसया
तत्राद्भुतमपश्याम भारद्वाजस्य विक्रमम् १९
लाघवाद्व्यंसयामास गदां हेमविभूषिताम्
व्यंसयित्वा गदां तां च प्रेषयामास पार्षते २०
भल्लान्सुनिशितान्पीतान्स्वर्णपुङ्खाञ्शिलाशितान्
ते तस्य कवचं भित्त्वा पपुः शोणितमाहवे २१
अथान्यद्धनुरादाय धृष्टद्युम्नो महामनाः
द्रोणं युधि पराक्रम्य शरैर्विव्याध पञ्चभिः २२
रुधिराक्तौ ततस्तौ तु शुशुभाते नरर्षभौ
वसन्तसमये राजन्पुष्पिताविव किंशुकौ २३
अमर्षितस्ततो राजन्पराक्रम्य चमूमुखे
द्रोणो द्रुपदपुत्रस्य पुनश्चिच्छेद कार्मुकम् २४
अथैनं छिन्नधन्वानं शरैः संनतपर्वभिः
अवाकिरदमेयात्मा वृष्ट्या मेघ इवाचलम् २५
सारथिं चास्य भल्लेन रथनीडादपातयत्
अथास्य चतुरो वाहांश्चतुर्भिर्निशितैः शरैः २६
पातयामास समरे सिंहनादं ननाद च
ततोऽपरेण भल्लेन हस्ताच्चापमथाच्छिनत् २७
स च्छिन्नधन्वा विरथो हताश्वो हतसारथिः
गदापाणिरवारोहत्ख्यापयन्पौरुषं महत् २८
तामस्य विशिखैस्तूर्णं पातयामास भारत

रथादनवरूढस्य तदद्भुतमिवाभवत् २९
ततः स विपुलं चर्म शतचन्द्रं च भानुमत्
खड्गं च विपुलं दिव्यं प्रगृह्य सुभुजो बली ३०
अभिदुद्राव वेगेन द्रोणस्य वधकांक्षया
आमिषार्थी यथा सिंहो वने मत्तमिव द्विपम् ३१
तत्राद्भुतमपश्याम भारद्वाजस्य पौरुषम्
लाघवं चास्त्रयोगं च बलं बाह्वोश्च भारत ३२
यदेनं शरवर्षेण वारयामास पार्षतम्
न शशाक ततो गन्तुं बलवानपि संयुगे ३३
तत्र स्थितमपश्याम धृष्टद्युम्नं महारथम्
वारयाणं शरौघांश्च चर्मणा कृतहस्तवत् ३४
ततो भीमो महाबाहुः सहसाभ्यपतद्बली
साहाय्यकारी समरे पार्षतस्य महात्मनः ३५
स द्रोणं निशितैर्बाणै राजन्विव्याध सप्तभिः
पार्षतं च तदा तूर्णमन्यमारोपयद्रथम् ३६
ततो दुर्योधनो राजा कलिङ्गं समचोदयत्
सैन्येन महता युक्तं भारद्वाजस्य रक्षणे ३७
ततः सा महती सेना कलिङ्गानां जनेश्वर
भीमममभ्युद्ययौ तूर्णं तव पुत्रस्य शासनात् ३८
पाञ्चाल्यमभिसन्त्यज्य द्रोणोऽपि रथिनां वरः
विराटद्रुपदौ वृद्धौ योधयामास संगतौ
धृष्टद्युम्नोऽपि समरे धर्मराजं समभ्ययात् ३९
ततः प्रववृते युद्धं तुमुलं लोमहर्षणम्
कलिङ्गानां च समरे भीमस्य च महात्मनः
जगतः प्रक्षयकरं घोररूपं भयानकम् ४०
इति श्रीमहाभारते भीष्मपर्वणि एकोनपञ्चाशोऽध्यायः ४९

पञ्चाशोऽध्यायः

धृतराष्ट्र उवाच
तथा प्रतिसमादिष्टः कलिङ्गो वाहिनीपतिः

कथमद्भुतकर्माणं भीमसेनं महाबलम् १
चरन्तं गदया वीरं दण्डपाणिमिवान्तकम्
योधयामास समरे कलिङ्गः सह सेनया २
सञ्जय उवाच
पुत्रेण तव राजेन्द्र स तथोक्तो महाबलः
महत्या सेनया गुप्तः प्रायाद्भीमरथं प्रति ३
तामापतन्तीं सहसा कलिङ्गानां महाचमूम्
रथनागाश्वकलिलां प्रगृहीतमहायुधाम् ४
भीमसेनः कलिङ्गानामार्छद्भारत वाहिनीम्
केतुमन्तं च नैषादिमायान्तं सह चेदिभिः ५
ततः श्रुतायुः संक्रुद्धो राज्ञा केतुमता सह
आससाद रणे भीमं व्यूढानीकेषु चेदिषु ६
रथैरनेकसाहस्रैः कलिङ्गानां जनाधिपः
अयुतेन गजानां च निषादैः सह केतुमान्
भीमसेनं रणे राजन्समन्तात्पर्यवारयत् ७
चेदिमत्स्यकरूषाश्च भीमसेनपुरोगमाः
अभ्यवर्तन्त सहसा निषादान्सह राजभिः ८
ततः प्रववृते युद्धं घोररूपं भयानकम्
प्रजानन्न च योधान्स्वान्परस्परजिघांसया ९
घोरमासीत्ततो युद्धं भीमस्य सहसा परैः
यथेन्द्रस्य महाराज महत्या दैत्यसेनया १०
तस्य सैन्यस्य संग्रामे युद्धमानस्य भारत
बभूव सुमहाञ्शब्दः सागरस्येव गर्जतः ११
अन्योन्यस्य तदा योधा निकृन्तन्तो विशां पते
महीं चक्रुश्चितां सर्वां शशशोणितसंनिभाम् १२
योधांश्च स्वान्परान्वापि नाभ्यजानञ्जिघांसया
स्वानप्याददते स्वाश्च शूराः समरदुर्जयाः १३
विमर्दः सुमहानासीदल्पानां बहुभिः सह
कलिङ्गैः सह चेदीनां निषादैश्च विशां पते १४
कृत्वा पुरुषकारं तु यथाशक्ति महाबलाः

भीमसेनं परित्यज्य संन्यवर्तन्त चेदयः १५
सर्वैः कलिङ्गैरासन्नः संनिवृत्तेषु चेदिषु
स्वबाहुबलमास्थाय न न्यवर्तत पाण्डवः १६
न चचाल रथोपस्थाद्भीमसेनो महाबलः
शितैरवाकिरन्बाणैः कलिङ्गानां वरूथिनीम् १७
कलिङ्गस्तु महेष्वासः पुत्रश्चास्य महारथः
शक्रदेव इति ख्यातो जघ्नतुः पाण्डवं शरैः १८
ततो भीमो महाबाहुर्विधुन्वन्रुचिरं धनुः
योधयामास कलिङ्गान्स्वबाहुबलमाश्रितः १९
शक्रदेवस्तु समरे विसृजन्सायकान्बहून्
अश्वाञ्जघान समरे भीमसेनस्य सायकैः
ववर्ष शरवर्षाणि तपान्ते जलदो यथा २०
हताश्वे तु रथे तिष्ठन्भीमसेनो महाबलः
शक्रदेवाय चिक्षेप सर्वशैक्यायसीं गदाम् २१
स तया निहतो राजन्कलिङ्गस्य सुतो रथात्
सध्वजः सह सूतेन जगाम धरणीतलम् २२
हतमात्मसुतं दृष्ट्वा कलिङ्गानां जनाधिपः
रथैरनेकसाहस्रैर्भीमस्यावारयद्दिशः २३
ततो भीमो महाबाहुर्गुर्वीं त्यक्त्वा महागदाम्
उद्बबर्हाथ निस्त्रिंशं चिकीर्षुः कर्म दारुणम् २४
चर्म चाप्रतिमं राजन्नार्षभं पुरुषर्षभ
नक्षत्रैरर्धचन्द्रैश्च शातकुम्भमयैश्चितम् २५
कलिङ्गस्तु ततः क्रुद्धो धनुर्ज्यामवमृज्य ह
प्रगृह्य च शरं घोरमेकं सर्पविषोपमम्
प्राहिणोद्भीमसेनाय वधाकांक्षी जनेश्वरः २६
तमापतन्तं वेगेन प्रेरितं निशितं शरम्
भीमसेनो द्विधा राजंश्चिच्छेद विपुलासिना
उदक्रोशच्च संहृष्टस्त्रासयानो वरूथिनीम् २७
कलिङ्गस्तु ततः क्रुद्धो भीमसेनाय संयुगे
तोमरान्प्राहिणोच्छीघ्रं चतुर्दश शिलाशितान् २८

तानप्राप्तान्महाबाहुः खगतानेव पाण्डवः
चिच्छेद सहसा राजन्नसंभ्रान्तो वरासिना २९
निकृत्य तु रणे भीमस्तोमरान्वै चतुर्दश
भानुमन्तमभिप्रेक्ष्य प्राद्रवत्पुरुषर्षभः ३०
भानुमांस्तु ततो भीमं शरवर्षेण छादयन्
ननाद बलवन्नादं नादयानो नभस्तलम् ३१
न तं स ममृषे भीमः सिंहनादं महारणे
ततः स्वरेण महता विननाद महास्वनम् ३२
तेन शब्देन वित्रस्ता कलिङ्गानां वरूथिनी
न भीमं समरे मेने मानुषं भरतर्षभ ३३
ततो भीमो महाराज नदित्वा विपुलं स्वनम्
सासिर्वेगादवप्लुत्य दन्ताभ्यां वारणोत्तमम् ३४
आरुरोह ततो मध्यं नागराजस्य मारिष
खड्गेन पृथुना मध्ये भानुमन्तमथाच्छिनत् ३५
सोऽन्तरायुधिनं हत्वा राजपुत्रमरिंदमः
गुरुभारसहस्कन्धे नागस्यासिमपातयत् ३६
छिन्नस्कन्धः स विनदन्पपात गजयूथपः
आरुग्णः सिन्धुवेगेन सानुमानिव पर्वतः ३७
ततस्तस्मादवप्लुत्य गजाद्भारत भारतः
खड्गपाणिरदीनात्मा अतिष्ठद्भुवि दंशितः ३८
स चचार बहून्मार्गानभीतः पातयन्गजान्
अग्निचक्रमिवाविद्धं सर्वतः प्रत्यदृश्यत ३९
अश्ववृन्देषु नागेषु रथानीकेषु चाभिभूः
पदातीनां च सङ्घेषु विनिघ्नञ्शोणितोक्षितः
श्येनवद्व्यचरद्भीमो रणे रिपुबलोत्कटः ४०
छिन्दंस्तेषां शरीराणि शिरांसि च महाजवः
खड्गेन शितधारेण संयुगे गजयोधिनाम् ४१
पदातिरेकः संक्रुद्धः शत्रूणां भयवर्धनः
मोहयामास च तदा कालान्तकयमोपमः ४२
मूढाश्च ते तमेवाजौ विनदन्तः समाद्रवन्

सासिमुत्तमवेगेन विचरन्तं महारणे ४३
निकृत्य रथिनामाजौ रथेषाश्च युगानि च
जघान रथिनश्चापि बलवानरिमर्दनः ४४
भीमसेनश्चरन्मार्गान्सुबहून्प्रत्यदृश्यत
भ्रान्तमुद्भ्रान्तमाविद्धमाप्लुतं प्रसृतं सृतम्
संपातं समुदीर्यं च दर्शयामास पाण्डवः ४५
केचिदग्रासिना छिन्नाः पाण्डवेन महात्मना
विनेदुर्भिन्नमर्माणो निपेतुश्च गतासवः ४६
छिन्नदन्ताग्रहस्ताश्च भिन्नकुम्भास्तथापरे
वियोधाः स्वान्यनीकानि जघ्नुर्भारत वारणाः
निपेतुरुर्व्यां च तथा विनदन्तो महारवान् ४७
छिन्नांश्च तोमरांश्चापान्महामात्रशिरांसि च
परिस्तोमानि चित्राणि कक्ष्याश्च कनकोज्ज्वलाः ४८
ग्रैवेयाण्यथ शक्तीश्च पताकाः कणपांस्तथा
तूणीराण्यथ यन्त्राणि विचित्राणि धनूंषि च ४९
अग्निकुण्डानि शुभ्राणि तोत्रांश्चैवांकुशैः सह
घण्टाश्च विविधा राजन्हेमगर्भांस्त्सरूनपि
पततः पतितांश्चैव पश्यामः सह सादिभिः ५०
छिन्नगात्रावरकरैर्निहतैश्चापि वारणैः
आसीत्तस्मिन्समास्तीर्णा पतितैर्भूर्नगैरिव ५१
विमृद्यैवं महानागान्ममर्दाश्वान्नरर्षभः
अश्वारोहवरांश्चापि पातयामास भारत
तद्घोरमभवद्युद्धं तस्य तेषां च भारत ५२
खलीनान्यथ योक्त्राणि कशाश्च कनकोज्ज्वलाः
परिस्तोमाश्च प्रासाश्च ऋष्टयश्च महाधनाः ५३
कवचान्यथ चर्माणि चित्राण्यास्तरणानि च
तत्र तत्रापविद्धानि व्यदृश्यन्त महाहवे ५४
प्रोथयन्त्रैर्विचित्रैश्च शस्त्रैश्च विमलैस्तथा
स चक्रे वसुधां कीर्णां शबलैः कुसुमैरिव ५५
आप्लुत्य रथिनः कांश्चित्परामृश्य महाबलः

पातयामास खड्गेन सध्वजानपि पाण्डवः ५६
मुहुरुत्पततो दिक्षु धावतश्च यशस्विनः
मार्गांश्च चरताश्चित्रान्व्यस्मयन्त रणे जनाः ५७
निजघान पदा कांश्चिदाक्षिप्यान्यानपोथयत्
खड्गेनान्यांश्च चिच्छेद नादेनान्यांश्च भीषयन् ५८
ऊरुवेगेन चाप्यन्यान्पातयामास भूतले
अपरे चैनमालोक्य भयात्पञ्चत्वमागताः ५९
एवं सा बहुला सेना कलिङ्गानां तरस्विनाम्
परिवार्य रणे भीष्मं भीमसेनमुपाद्रवत् ६०
ततः कलिङ्गसैन्यानां प्रमुखे भरतर्षभ
श्रुतायुषमभिप्रेक्ष्य भीमसेनः समभ्ययात् ६१
तमायान्त मभिप्रेक्ष्य कलिङ्गो नवभिः शरैः
भीमसेनममेयात्मा प्रत्यविध्यत्स्तनान्तरे ६२
कलिङ्गबाणाभिहतस्तोत्रार्दित इव द्विपः
भीमसेनः प्रजज्वाल क्रोधेनाग्निरिवेन्धनैः ६३
अथाशोकः समादाय रथं हेमपरिष्कृतम्
भीमं संपादयामास रथेन रथसारथिः ६४
तमारुह्य रथं तूर्णं कौन्तेयः शत्रुसूदनः
कलिङ्गमभिदुद्राव तिष्ठ तिष्ठेति चाब्रवीत् ६५
ततः श्रुतायुर्बलवान्भीमाय निशिताञ्शरान्
प्रेषयामास संक्रुद्धो दर्शयन्पाणिलाघवम् ६६
स कार्मुकवरोत्सृष्टैर्नवभिर्निशितैः शरैः
समाहतो भृशं राजन्कलिङ्गेन महायशाः
संचुक्रुधे भृशं भीमो दण्डाहत इवोरगः ६७
क्रुद्धश्च चापमायम्य बलवद्बलिनां वरः
कलिङ्गमवधीत्पार्थो भीमः सप्तभिरायसैः ६८
क्षुराभ्यां चक्ररक्षौ च कलिङ्गस्य महाबलौ
सत्यदेवं च सत्यं च प्राहिणोद्यमसादनम् ६९
ततः पुनरमेयात्मा नाराचैर्निशितैस्त्रिभिः
केतुमन्तं रणे भीमोऽगमयद्यमसादनम् ७०

ततः कलिङ्गाः संक्रुद्धा भीमसेनममर्षणम्
अनीकैर्बहुसाहस्रैः क्षत्रियाः समवारयन् ७१
ततः शक्तिगदाखड्गतोमरर्ष्टिपरश्वधैः
कलिङ्गाश्च ततो राजन्भीमसेनमवाकिरन् ७२
संनिवार्य स तां घोरां शरवृष्टिं समुत्थिताम्
गदामादाय तरसा परिप्लुत्य महाबलः
भीमः सप्तशतान्वीराननयद्यमसादनम् ७३
पुनश्चैव द्विसाहस्रान्कलिङ्गानरिमर्दनः
प्राहिणोन्मृत्युलोकाय तदद्भुतमिवाभवत् ७४
एवं स तान्यनीकानि कलिङ्गानां पुनः पुनः
बिभेद समरे वीरः प्रेक्ष्य भीष्मं महाव्रतम् ७५
हतारोहाश्च मातङ्गाः पाण्डवेन महात्मना
विप्रजग्मुरनीकेषु मेघा वातहता इव
मृद्नन्तः स्वान्यनीकानि विनदन्तः शरातुराः ७६
ततो भीमो महाबाहुः शङ्खं प्राध्मापयद्बली
सर्वकालिङ्गसैन्यानां मनांसि समकम्पयत् ७७
मोहश्चापि कलिङ्गानामाविवेश परंतप
प्राकम्पन्त च सैन्यानि वाहनानि च सर्वशः ७८
भीमेन समरे राजन्गजेन्द्रेणेव सर्वतः
मार्गान्बहून्विचरता धावता च ततस्ततः
मुहुरुत्पतता चैव संमोहः समजायत ७९
भीमसेनभयत्रस्तं सैन्यं च समकम्पत
क्षोभ्यमाणमसंबाधं ग्राहेणेव महत्सरः ८०
त्रासितेषु च वीरेषु भीमेनाद्भुतकर्मणा
पुनरावर्तमानेषु विद्रवत्सु च संघशः ८१
सर्व कालिङ्ग योधेषु पाण्डूनां ध्वजिनीपतिः
अब्रवीत्स्वान्यनीकानि युध्यध्वमिति पार्षतः ८२
सेनापतिवचः श्रुत्वा शिखंडिप्रमुखा गणाः
भीममेवाभ्यवर्तन्त रथानीकैः प्रहारिभिः ८३
धर्मराजश्च तान्सर्वानुपजग्राह पाण्डवः

महता मेघवर्णेन नागानीकेन पृष्ठतः ८४
एवं संचोद्य सर्वाणि स्वान्यनीकानि पार्षतः
भीमसेनस्य जग्राह पार्ष्णिं सत्पुरुषोचिताम् ८५
न हि पाञ्चालराज्यस्य लोके कश्चन विद्यते
भीमसात्यकयोरन्यः प्राणेभ्यः प्रियकृत्तमः ८६
सोऽपश्यत्तं कलिङ्गेषु चरन्तमरिसूदनम्
भीमसेनं महाबाहुं पार्षतः परवीरहा ८७
ननर्द बहुधा राजन्हृष्टश्चासीत्परंतपः
शङ्खं दध्मौ च समरे सिंहनादं ननाद च ८८
स च पारावताश्वस्य रथे हेमपरिष्कृते
कोविदारध्वजं दृष्ट्वा भीमसेनः समाश्वसत् ८९
धृष्टद्युम्नस्तु तं दृष्ट्वा कलिङ्गैः समभिद्रुतम्
भीमसेनममेयात्मा त्राणायाजौ समभ्ययात् ९०
तौ दूरात्सात्यकिर्दृष्ट्वा धृष्टद्युम्नवृकोदरौ
कलिङ्गान्समरे वीरौ योधयन्तौ मनस्विनौ ९१
स तत्र गत्वा शैनेयो जवेन जयतां वरः
पार्थपार्षतयोः पार्ष्णिं जग्राह पुरुषर्षभः ९२
स कृत्वा कदनं तत्र प्रगृहीतशरासनः
आस्थितो रौद्रमात्मानं जघान समरे परान् ९३
कलिङ्गप्रभवां चैव मांसशोणितकर्दमाम्
रुधिरस्यन्दिनीं तत्र भीमः प्रावर्तयन्नदीम् ९४
अन्तरेण कलिङ्गानां पाण्डवानां च वाहिनीम्
संततार सुदुस्तारां भीमसेनो महाबलः ९५
भीमसेनं तथा दृष्ट्वा प्राक्रोशंस्तावका नृप
कालोऽय भीमरूपेण कलिङ्गैः सह युध्यते ९६
ततः शांतनवो भीष्मः श्रुत्वा तं निनदं रणे
अभ्ययात्त्वरितो भीमं व्यूढानीकः समन्ततः ९७
तं सात्यकिर्भीमसेनो धृष्टद्युम्नश्च पार्षतः
अभ्यद्रवन्त भीष्मस्य रथं हेमपरिष्कृतम् ९८
परिवार्य च ते सर्वे गाङ्गेयं रभसं रणे

त्रिभिस्त्रिभिः शरैर्घोरैर्भीष्ममानर्छुरञ्जसा ९९
प्रत्यविध्यत तान्सर्वान्पिता देवव्रतस्तव
यतमानान्महेष्वासांस्त्रिभिस्त्रिभिरजिह्मगैः १००
ततः शरसहस्रेण संनिवार्य महारथान्
हयान्काञ्चनसंनाहान्भीमस्य न्यहनच्छरैः १०१
हताश्वे तु रथे तिष्ठन्भीमसेनः प्रतापवान्
शक्तिं चिक्षेप तरसा गाङ्गेयस्य रथं प्रति १०२
अप्राप्तामेव तां शक्तिं पिता देवव्रतस्तव
त्रिधा चिच्छेद समरे सा पृथिव्यामशीर्यत १०३
ततः शैक्यायसीं गुर्वीं प्रगृह्य बलवद्गदाम्
भीमसेनो रथात्तूर्णं पुप्लुवे मनुजर्षभ १०४
सात्यकोऽपि ततस्तूर्णं भीमस्य प्रियकाम्यया
सारथिं कुरुवृद्धस्य पातयामास सायकैः १०५
भीष्मस्तु निहते तस्मिन्सारथौ रथिनां वरः
वातायमानैस्तैरश्वैरपनीतो रणाजिरात् १०६
भीमसेनस्ततो राजन्नपनीते महाव्रते
प्रजज्वाल यथा वह्निर्दहन्कक्षमिवैधितः १०७
स हत्वा सर्वकलिङ्गान्सेनामध्ये व्यतिष्ठत
नैनमभ्युत्सहन्केचित्तावका भरतर्षभ १०८
धृष्टद्युम्नस्तमारोप्य स्वरथे रथिनां वरः
पश्यतां सर्वसैन्यानामपोवाह यशस्विनम् १०९
सम्पूज्यमानः पाञ्चाल्यैर्मत्स्यैश्च भरतर्षभ
धृष्टद्युम्नं परिष्वज्य समेयादथ सात्यकिम् ११०
अथाब्रवीद्भीमसेनं सात्यकिः सत्यविक्रमः
प्रहर्षयन्यदुव्याघ्रो धृष्टद्युम्नस्य पश्यतः १११
दिष्ट्या कलिङ्गराजश्च राजपुत्रश्च केतुमान्
शक्रदेवश्च कालिङ्गः कलिङ्गाश्च मृधे हताः ११२
स्वबाहुबलवीर्येण नागाश्वरथसंकुलः
महाव्यूहः कलिङ्गानामेकेन मृदितस्त्वया ११३
एवमुक्त्वा शिनेर्नप्ता दीर्घबाहुररिंदमः

रथाद्रथमभिद्रुत्य पर्यष्वजत पाण्डवम् ११४
ततः स्वरथमारुह्य पुनरेव महारथः
तावकानवधीत्क्रुद्धो भीमस्य बलमादधत् ११५
इति श्रीमहाभारते भीष्मपर्वणि पञ्चाशोऽध्यायः ५०

## एक पञ्चाशोऽध्यायः

सञ्जय उवाच
गतापराह्णभूयिष्ठे यस्मिन्नहनि भारत
रथनागाश्वपत्तीनां सादिनां च महाक्षये १
द्रोणपुत्रेण शल्येन कृपेण च महात्मना
समसज्जत पाञ्चाल्यस्त्रिभिरेतैर्महारथैः २
स लोकविदितानश्वान्निजघान महाबलः
द्रौणेः पाञ्चालदायादः शितैर्दशभिराशुगैः ३
ततः शल्यरथं तूर्णमास्थाय हतवाहनः
द्रौणिः पाञ्चालदायादमभ्यवर्षदथेषुभिः ४
धृष्टद्युम्नं तु संसक्तं द्रौणिना दृश्य भारत
सौभद्रोऽभ्यपतत्तूर्णं विकिरन्निशिताञ्शरान् ५
स शल्यं पञ्चविंशत्या कृपं च नवभिः शरैः
अश्वत्थामानमष्टाभिर्विव्याध पुरुषर्षभ ६
आर्जुनिं तु ततस्तूर्णं द्रौणिर्विव्याध पत्रिणा
शल्यो द्वादशभिश्चैव कृपश्च निशितैस्त्रिभिः ७
लक्ष्मणस्तव पौत्रस्तु तव पौत्रमवस्थितम्
अभ्यवर्तत संहृष्टस्ततो युद्धमवर्तत ८
दौर्योधनिस्तु संक्रुद्धः सौभद्रं नवभिः शरैः
विव्याध समरे राजंस्तदद्भुतमिवाभवत् ९
अभिमन्युस्तु संक्रुद्धो भ्रातरं भरतर्षभ
शरैः पञ्चाशता राजन्क्षिप्रहस्तोऽभ्यविध्यत १०
लक्ष्मणोऽपि ततस्तस्य धनुश्चिच्छेद पत्रिणा
मुष्टिदेशे महाराज तत उच्चुक्रुशुर्जनाः ११
तद्विहाय धनुश्छिन्नं सौभद्रः परवीरहा

अन्यदादत्तवांश्चित्रं कार्मुकं वेगवत्तरम् १२
तौ तत्र समरे हृष्टौ कृतप्रतिकृतैषिणौ
अन्योन्यं विशिखैस्तीक्ष्णैर्जघ्नतुः पुरुषर्षभौ १३
ततो दुर्योधनो राजा दृष्ट्वा पुत्रं महारथम्
पीडितं तव पौत्रेण प्रायात्तत्र जनेश्वरः १४
संनिवृत्ते तव सुते सर्व एव जनाधिपाः
आर्जुनिं रथवंशेन समन्तात्पर्यवारयन् १५
स तैः परिवृतः शूरैः शूरो युधि सुदुर्जयैः
न स्म विव्यथते राजन्कृष्णतुल्यपराक्रमः १६
सौभद्रमथ संसक्तं तत्र दृष्ट्वा धनञ्जयः
अभिदुद्राव संक्रुद्धस्त्रातुकामः स्वमात्मजम् १७
ततः सरथनागाश्वा भीष्मद्रोणपुरोगमाः
अभ्यवर्तन्त राजानः सहिताः सव्यसाचिनम् १८
अद्धूतं सहसा भौमं नागाश्वरथसादिभिः
दिवाकरपथं प्राप्य रजस्तीव्रमदृश्यत १९
तानि नागसहस्राणि भूमिपालशतानि च
तस्य बाणपथं प्राप्य नाभ्यवर्तन्त सर्वशः २०
प्रणेदुः सर्वभूतानि बभूवुस्तिमिरा दिशः
कुरूणामनयस्तीव्रः समदृश्यत दारुणः २१
नाप्यन्तरिक्षं न दिशो न भूमिर्न च भास्करः
प्रजज्ञे भरत श्रेष्ठ शरसङ्घैःकिरीटिनः २२
सादितध्वजनागास्तु हताश्वा रथिनो भृशम्
विप्रद्रुतरथाः केचिद्दृश्यन्ते रथयूथपाः २३
विरथा रथिनश्चान्ये धावमानाः समन्ततः
तत्र तत्रैव दृश्यन्ते सायुधाः साङ्गदैर्भुजैः २४
हयारोहा हयांस्त्यक्त्वा गजारोहाश्च दन्तिनः
अर्जुनस्य भयाद्राजन्समन्ताद्विप्रदुद्रुवुः २५
रथेभ्यश्च गजेभ्यश्च हयेभ्यश्च नराधिपाः
पतिताः पात्यमानाश्च दृश्यन्तेऽजुनताडिताः २६
सगदानुद्यतान्बाहून्सखड्गांश्च विशां पते

सप्रासांश्च सतूणीरान्सशरान्सशरासनान् २७
साङ्कुशान्सपताकांश्च तत्र तत्रार्जुनो नृणाम्
निचकर्त शरैरुग्रै रौद्रं विभ्रद्वपुस्तदा २८
परिघाणां प्रवृद्धानां मुद्गराणां च मारिष
प्रासानां भिण्डिपालानां निस्त्रिंशानां च संयुगे २९
परश्वधानां तीक्ष्णानां तोमराणां च भारत
वर्मणां चापविद्धानां कवचानां च भूतले ३०
ध्वजानां चर्मणां चैव व्यजनानां च सर्वशः
छत्राणां हेमदण्डानां चामराणां च भारत ३१
प्रतोदानां कशानां च योक्त्राणां चैव मारिष
राशयश्चात्र दृश्यन्ते विनिकीर्णा रणक्षितौ ३२
नासीत्तत्र पुमान्कश्चित्तव सैन्यस्य भारत
योऽर्जुनं समरे शूरं प्रत्युद्यायात्कथंचन ३३
यो यो हि समरे पार्थं प्रत्युद्याति विशां पते
स स वै विशिखैस्तीक्ष्णैः परलोकाय नीयते ३४
तेषु विद्रवमाणेषु तव योधेषु सर्वशः
अर्जुनो वासुदेवश्च दध्मतुर्वारिजोत्तमौ ३५
तत्प्रभग्नं बलं दृष्ट्वा पिता देवव्रतस्तव
अब्रवीत्समरे शूरं भारद्वाजं स्मयन्निव ३६
एष पाण्डुसुतो वीरः कृष्णेन सहितो बली
तथा करोति सैन्यानि यथा कुर्याद्धनञ्जयः ३७
न ह्येष समरे शक्यो जेतुमद्य कथञ्चन
यथास्य दृश्यते रूपं कालान्तकयमोपमम् ३८
न निवर्तयितुं चापि शक्येयं महती चमूः
अन्योन्यप्रेक्षया पश्य द्रवतीयं वरूथिनी ३९
एष चास्तं गिरिश्रेष्ठं भानुमान्प्रतिपद्यते
वपूंषि सर्वलोकस्य संहरन्निव सर्वथा ४०
तत्रावहारं संप्राप्तं मन्येऽहं पुरुषर्षभ
श्रान्ता भीताश्च नो योधा न योत्स्यन्ति कथञ्चन ४१
एवमुक्त्वा ततो भीष्मो द्रोणमाचार्यसत्तमम्

अवहारमथो चक्रे तावकानां महारथः ४२
ततोऽवहारः सैन्यानां तव तेषां च भारत
अस्तं गच्छति सूर्येऽभूत्संध्याकाले च वर्तति ४३
इति श्रीमहाभारते भीष्मपर्वणि एकपञ्चाशोऽध्यायः ५१

द्वि पञ्चाशोऽध्यायः

सञ्जय उवाच
प्रभातायां तु शर्वर्यां भीष्मः शांतनवस्ततः
अनीकान्यनुसंयाने व्यादिदेशाथ भारत १
गारुडं च महाव्यूहं चक्रे शान्तनवस्तदा
पुत्राणां ते जयाकांक्षी भीष्मः कुरुपितामहः २
गरुडस्य स्वयं तुण्डे पिता देवव्रतस्तव
चक्षुषी च भरद्वाजः कृतवर्मा च सात्वतः ३
अश्वत्थामा कृपश्चैव शीर्षमास्तां यशस्विनौ
त्रिगर्तैर्मत्स्यकैकेयैर्वाटधानैश्च संयुतौ ४
भूरिश्रवाः शलः शल्यो भगदत्तश्च मारिष
मद्रकाः सिन्धुसौवीरास्तथा पञ्चनदाश्च ये ५
जयद्रथेन सहिता ग्रीवायां संनिवेशिताः
पृष्ठे दुर्योधनो राजा सोदरैः सानुगैर्वृतः ६
विन्दानुविन्दावावन्त्यौ काम्बोजश्च शकैः सह
पुच्छमासन्महाराज शूरसेनाश्च सर्वशः ७
मागधाश्च कलिङ्गाश्च दाशेरकगणैः सह
दक्षिणं पक्षमासाद्य स्थिता व्यूहस्य दंशिताः ८
काननाश्च विकुञ्जाश्च मुक्ताः पुण्ड्राविषस्तथा
बृहद्बलेन सहिता वामं पक्षमुपाश्रिताः ९
व्यूढं दृष्ट्वा तु तत्सैन्यं सव्यसाची परन्तपः
धृष्टद्युम्नेन सहितः प्रत्यव्यूहत संयुगे
अर्धचन्द्रेण व्यूहेन व्यूहं तमतिदारुणम् १०
दक्षिणं शृङ्गमास्थाय भीमसेनो व्यरोचत
नानाशस्त्रौघसंपन्नैर्नानादेश्यैर्नृपैर्वृतः ११

तदन्वेव विराटश्च द्रुपदश्च महारथः
तदनन्तरमेवासीन्नीलो नीलायुधैः सह १२
नीलादनन्तरं चैव धृष्टकेतुर्महारथः
चेदिकाशिकरूषैश्च पौरवैश्चाभिसंवृतः १३
धृष्टद्युम्नः शिखण्डी च पाञ्चालाश्च प्रभद्रकाः
मध्ये सैन्यस्य महतः स्थिता युद्धाय भारत १४
तथैव धर्मराजोऽपि गजानीकेन संवृतः
ततस्तु सात्यकी राजन्द्रौपद्याः पञ्च चात्मजाः १५
अभिमन्युस्ततस्तूर्णमिरावांश्च ततः परम्
भैमसेनिस्ततो राजन्केकयाश्च महारथाः १६
ततोऽभूद्द्विपदां श्रेष्ठो वामं पार्श्वमुपाश्रितः
सर्वस्य जगतो गोप्ता गोप्ता यस्य जनार्दनः १७
एवमेतन्महाव्यूहं प्रत्यव्यूहन्त पाण्डवाः
वधार्थं तव पुत्राणां तत्पक्षं ये च सङ्गताः १८
ततः प्रववृते युद्धं व्यतिषक्तरथद्विपम्
तावकानां परेषां च निघ्नतामितरेतरम् १९
हयौघाश्च रथौघाश्च तत्र तत्र विशां पते
सम्पतन्तः स्म दृश्यन्ते निघ्नमानाः परस्परम् २०
धावतां च रथौघानां निघ्नतां च पृथक्पृथक्
बभूव तुमुलः शब्दो विमिश्रो दुन्दुभिस्वनैः २१
दिवस्पृङ् नरवीराणां निघ्नतामितरेतरम्
सम्प्रहारे सुतुमुले तव तेषां च भारत २२
इति श्रीमहाभारते भीष्मपर्वणि द्विपञ्चाशोऽध्यायः ५२

## त्रिपञ्चाशोऽध्यायः

सञ्जय उवाच
ततो व्यूढेष्वनीकेषु तावकेष्वितरेषु च
धनञ्जयो रथानीकमवधीत्तव भारत
शरैरतिरथो युद्धे पातयन्रथयूथपान् १
ते वध्यमानाः पार्थेन कालेनेव युगक्षये

धार्तराष्ट्रा रणे यत्ता पाराडवान्प्रत्ययोधयन्
प्रार्थयाना यशो दीप्तं मृत्युं कृत्वा निवर्तनम् २
एकाग्रमनसो भूत्वा पाराडवानां वरूथिनीम्
बभञ्जुर्बहुशो राजंस्ते चाभज्यन्त संयुगे ३
द्रवद्भिरथ भग्नैश्च परिवर्तद्भिरेव च
पाराडवैः कौरवैश्चैव न प्राज्ञायत किञ्चन ४
उदतिष्ठद्रजो भौमं छादयानं दिवाकरम्
दिशः प्रतिदिशो वापि तत्र जज्ञुः कथंचन ५
अनुमानेन संज्ञाभिर्नामगोत्रैश्च संयुगे
वर्तते स्म तदा युद्धं तत्र तत्र विशां पते ६
न व्यूहो भिद्यते तत्र कौरवाणां कथञ्चन
रक्षितः सत्यसन्धेन भारद्वाजेन धीमता ७
तथैव पाराडवेयानां रक्षितः सव्यसाचिना
नाभिद्यत महाव्यूहो भीमेन च सुरक्षितः ८
सेनाग्रादभिनिष्पत्य प्रायुध्यंस्तत्र मानवाः
उभयोः सेनयो राजन्व्यतिषक्तरथद्विपाः ९
हयारोहैर्हयारोहाः पात्यन्ते स्म महाहवे
ऋष्टिभिर्विमलाग्राभिः प्रासैरपि च संयुगे १०
रथी रथिनमासाद्य शरैः कनकभूषणैः
पातयामास समरे तस्मिन्नतिभयङ्करे ११
गजारोहा गजारोहान्नाराचशरतोमरैः
संसक्ताः पातयामासुस्तव तेषां च संघशः १२
पत्तिसङ्घा रणे पत्तीन्भिरिण्डपालपरश्वधैः
न्यपातयन्त संहृष्टाः परस्परकृतागसः १३
पदाती रथिनं संख्ये रथी चापि पदातिनम्
न्यपातयच्छितैः शस्त्रैः सेनयोरुभयोरपि १४
गजारोहा हयारोहान्पातयांचक्रिरे तदा
हयारोहा गजस्थांश्च तदद्भुतमिवाभवत् १५
गजारोहवरैश्चापि तत्र तत्र पदातयः
पातिताः समदृश्यन्त तैश्चापि गजयोधिनः १६

पत्तिसङ्घा हयारोहैः सादिसङ्घाश्च पत्तिभिः
पात्यमान व्यदृश्यन्त शतशोऽथ सहस्रशः १७
ध्वजैस्तत्रापविद्धैश्च कार्मुकैस्तोमरैस्तथा
प्रासैस्तथा गदाभिश्च परिघैः कम्पनैस्तथा १८
शक्तिभिः कवचैश्चित्रैः कणपैरंकुशैरपि
निस्त्रिंशैर्विमलैश्चापि स्वर्णपुङ्खैः शरैस्तथा १९
परिस्तोमैः कुथाभिश्च कम्बलैश्च महाधनैः
भूर्भाति भरतश्रेष्ठ स्रग्दामैरिव चित्रिता २०
नराश्वकायैः पतितैर्दन्तिभिश्च महाहवे
अगम्यरूपा पृथिवी मांसशोणितकर्दमा २१
प्रशशाम रजो भौमं व्युक्षितं रणशोणितैः
दिशश्च विमलाः सर्वाः संबभूवुर्जनेश्वर २२
उत्थितान्यगणेयानि कबन्धानि समन्ततः
चिह्नभूतानि जगतो विनाशार्थाय भारत २३
तस्मिन्युद्धे महारौद्रे वर्तमाने सुदारुणे
प्रत्यदृश्यन्त रथिनो धावमानाः समन्ततः २४
ततो द्रोणश्च भीष्मश्च सैन्धवश्च जयद्रथः
पुरुमित्रो विकर्णश्च शकुनिश्चापि सौबलः २५
एते समरदुर्धर्षाः सिंहतुल्यपराक्रमाः
पाण्डवानामनीकानि बभञ्जुः स्म पुनः पुनः २६
तथैव भीमसेनोऽपि राक्षसश्च घटोत्कचः
सात्यकिश्चेकितानश्च द्रौपदेयाश्च भारत २७
तावकांस्तव पुत्रांश्च सहितान्सर्वराजभिः
द्रावयामासुराजौ ते त्रिदशा दानवानिव २८
तथा ते समरेऽन्योन्यं निघ्नन्तः क्षत्रियर्षभाः
रक्तोक्षिता घोररूपा विरेजुर्दानवा इव २९
विनिर्जित्य रिपून्वीराः सेनयोरुभयोरपि
व्यदृश्यन्त महामात्रा ग्रहा इव नभस्तले ३०
ततो रथसहस्रेण पुत्रो दुर्योधनस्तव
अभ्ययात्पाण्डवान्युद्धे राक्षसं च घटोत्कचम् ३१

तथैव पाराडवाः सर्वे महत्या सेनया सह
द्रोणभीष्मौ रणे शूरौ प्रत्युद्ययुररिन्दमौ ३२
किरीटी तु ययौ क्रुद्धः समर्थान्पार्थिवोत्तमान्
आर्जुनिः सात्यकिश्चैव ययतुः सौबलं बलम् ३३
ततः प्रववृते भूयः संग्रामो लोमहर्षणः
तावकानां परेषां च समरे विजिगीषताम् ३४
इति श्रीमहाभारते भीष्मपर्वणि त्रिपञ्चाशोऽध्यायः ५३

## चतुः पञ्चाशोऽध्यायः

सञ्जय उवाच
ततस्ते पार्थिवाः क्रुद्धाः फल्गुनं वीक्ष्य संयुगे
रथैरनेकसाहस्रैः समन्तात्पर्यवारयन् १
अथैनं रथवृन्देन कोष्टकीकृत्य भारत
शरैः सुबहुसाहस्रैः समन्तादभ्यवारयन् २
शक्तीश्च विमलास्तीक्ष्णा गदाश्च परिघैः सह
प्रासान्परश्वधांश्चैव मुद्गरान्मुसलानपि
चिक्षिपुः समरे क्रुद्धाः फाल्गुनस्य रथं प्रति ३
शस्त्राणामथ तां वृष्टिं शलभानामिवायतिम्
रुरोध सर्वतः पार्थः शरैः कनकभूषणैः ४
तत्र तल्लाघवं दृष्ट्वा बीभत्सोरतिमानुषम्
देवदानवगन्धर्वाः पिशाचोरगराक्षसाः
साधु साध्विति राजेन्द्र फल्गुनं प्रत्यपूजयन् ५
सात्यकिं चाभिमन्युं च महत्या सेनया सह
गान्धाराः समरे शूरा रुरुधुः सहसौबलाः ६
तत्र सौबलकाः क्रुद्धा वार्ष्णेयस्य रथोत्तमम्
तिलशश्चिच्छिदुः क्रोधाच्छस्त्रैर्नानाविधैर्युधि ७
सात्यकिस्तु रथं त्यक्त्वा वर्तमाने महाभये
अभिमन्यो रथं तूर्णमारुरोह परंतपः ८
तावेकरथसंयुक्तौ सौबलेयस्य वाहिनीम्
व्यधमेतां शितैस्तूर्णं शरैः सन्नतपर्वभिः ९

द्रोणभीष्मौ रणे यत्तौ धर्मराजस्य वाहिनीम्
नाशयेतां शरैस्तीक्ष्णैः कङ्कपत्रपरिच्छदैः १०
ततो धर्मसुतो राजा माद्रीपुत्रौ च पाण्डवौ
मिषतां सर्वसैन्यानां द्रोणानीकमुपाद्रवन् ११
तत्रासीत्सुमहद्युद्धं तुमुलं लोमहर्षणम्
यथा देवासुरं युद्धं पूर्वमासीत्सुदारुणम् १२
कुर्वाणौ तु महत्कर्म भीमसेनघटोत्कचौ
दुर्योधनस्ततोऽभ्येत्य तावुभावभ्यवारयत् १३
तत्राद्भुतमपश्याम हैडिम्बस्य पराक्रमम्
अतीत्य पितरं युद्धे यदयुध्यत भारत १४
भीमसेनस्तु संक्रुद्धो दुर्योधनममर्षणम्
हृद्यविध्यत्पृषत्केन प्रहसन्निव पाण्डवः १५
ततो दुर्योधनो राजा प्रहारवरमोहितः
निषसाद रथोपस्थे कश्मलं च जगाम ह १६
तं विसंज्ञमथो ज्ञात्वा त्वरमाणोऽस्य सारथिः
अपोवाह रणाद्राजंस्ततः सैन्यमभिद्यत १७
ततस्तां कौरवीं सेनां द्रवमाणां समन्ततः
निघ्नन्भीमः शरैस्तीक्ष्णैरनुवव्राज पृष्ठतः १८
पार्षतश्च रथश्रेष्ठो धर्मपुत्रश्च पाण्डवः
द्रोणस्य पश्यतः सैन्यं गाङ्गेयस्य च पश्यतः
जघ्नतुर्विशिखैस्तीक्ष्णैः परानीकविशातनैः १९
द्रवमाणं तु तत्सैन्यं तव पुत्रस्य संयुगे
नाशक्नुतां वारयितुं भीष्मद्रोणौ महारथौ २०
वार्यमाणं हि भीष्मेण द्रोणेन च विशां पते
विद्रवत्येव तत्सैन्यं पश्यतोर्द्रोणभीष्मयोः २१
ततो रथसहस्रेषु विद्रवत्सु ततस्ततः
तावास्थितावेकरथं सौभद्रशिनिपुङ्गवौ
सौबलद्यां समरे सेनां शातयेतां समन्ततः २२
शुशुभाते तदा तौ तु शैनेयकुरुपुङ्गवौ
अमावास्यां गतौ यद्वत्सोमसूर्यौ नभस्तले २३

अर्जुनस्तु ततः क्रुद्धस्तव सैन्यं विशां पते
ववर्ष शरवर्षेण धाराभिरिव तोयदः २४
वध्यमानं ततस्तत्तु शरैः पार्थस्य संयुगे
दुद्राव कौरवं सैन्यं विषादभयकम्पितम् २५
द्रवतस्तान्समालोक्य भीष्मद्रोणौ महारथौ
न्यवारयेतां संरब्धौ दुर्योधनहितैषिणौ २६
ततो दुर्योधनो राजा समाश्वस्य विशां पते
न्यवर्तयत तत्सैन्यं द्रवमाणं समन्ततः २७
यत्र यत्र सुतं तुभ्यं यो यः पश्यति भारत
तत्र तत्र न्यवर्तन्त क्षत्रियाणां महारथाः २८
तान्निवृत्तान्समीक्ष्यैव ततोऽन्येऽपीतरे जनाः
अन्योन्यस्पर्धया राजँल्लज्जयान्येऽवतस्थिरे २९
पुनरावर्ततां तेषां वेग आसीद्विशां पते
पूर्यतः सागरस्येव चन्द्रस्योदयनं प्रति ३०
संनिवृत्तांस्ततस्तांस्तु दृष्ट्वा राजा सुयोधनः
अब्रवीत्त्वरितो गत्वा भीष्मं शांतनवं वचः ३१
पितामह निबोधेदं यत्त्वा वक्ष्यामि भारत
नानुरूपमहं मन्ये त्वयि जीवति कौरव ३२
द्रोणे चास्त्रविदां श्रेष्ठे सपुत्रे ससुहृज्जने
कृपे चैव महेष्वासे द्रवतीयं वरूथिनी ३३
न पाण्डवाः प्रतिबलास्तव राजन्कथञ्चन
तथा द्रोणस्य संग्रामे द्रौणेश्चैव कृपस्य च ३४
अनुग्राह्याः पाण्डुसुता नूनं तव पितामह
यथेमां क्षमसे वीर वध्यमानां वरूथिनीम् ३५
सोऽस्मि वाच्यस्त्वया राजन्पूर्वमेव समागमे
न योत्स्ये पाण्डवान्संख्ये नापि पार्षतसात्यकी ३६
श्रुत्वा तु वचनं तुभ्यमाचार्यस्य कृपस्य च
कर्णेन सहितः कृत्यं चिन्तयानस्तदैव हि ३७
यदि नाहं परित्याज्यो युवाभ्यामिह संयुगे
विक्रमेणानुरूपेण युध्येतां पुरुषर्षभौ ३८

एतच्छ्रुत्वा वचो भीष्मः प्रहसन्वै मुहुर्मुहुः
अब्रवीत्तनयं तुभ्यं क्रोधादुद्वृत्य चक्षुषी ३९
बहुशो हि मया राजंस्तथ्यमुक्तं हितं वचः
अजेयाः पाण्डवा युद्धे देवैरपि सवासवैः ४०
यत्तु शक्यं मया कर्तुं वृद्धेनाद्य नृपोत्तम
करिष्यामि यथाशक्ति प्रेक्षेदानीं सबान्धवः ४१
अद्य पाण्डुसुतान्सर्वान्ससैन्यान्सह बन्धुभिः
मिषतो वारयिष्यामि सर्वलोकस्य पश्यतः ४२
एवमुक्ते तु भीष्मेण पुत्रास्तव जनेश्वर
दध्मुः शङ्खान्मुदा युक्ता भेरीश्च जघ्निरे भृशम् ४३
पाण्डवापि ततो राजञ्श्रुत्वा तं निनदं महत्
दध्मुः शङ्खांश्च भेरीश्च मुरजांश्च व्यनादयन् ४४
इति श्रीमहाभारते भीष्मपर्वणि चतुःपञ्चाशोऽध्यायः ५४

पञ्चपञ्चाशोऽध्यायः

धृतराष्ट्र उवाच
प्रतिज्ञाते तु भीष्मेण तस्मिन्युद्धे सुदारुणे
क्रोधितो मम पुत्रेण दुःखितेन विशेषतः १
भीष्मः किमकरोत्तत्र पाण्डवेयेषु सञ्जय
पितामहे वा पाञ्चालास्तन्ममाचक्ष्व सञ्जय २
सञ्जय उवाच
गतपूर्वाह्णभूयिष्ठे तस्मिन्नहनि भारत
जयं प्राप्तेषु हृष्टेषु पाण्डवेषु महात्मसु ३
सर्वधर्मविशेषज्ञः पिता देवव्रतस्तव
अभ्ययाञ्जवनैरश्वैः पाण्डवानामनीकिनीम्
महत्या सेनया गुप्तस्तव पुत्रैश्च सर्वशः ४
प्रावर्तत ततो युद्धं तुमुलं लोमहर्षणम्
अस्माकं पाण्डवैः सार्धमनयात्तव भारत ५
धनुषां कूजतां तत्र तलानां चाभिहन्यताम्
महान्समभवच्छब्दो गिरीणामिव दीर्यताम् ६

तिष्ठ स्थितोऽस्मि विद्ध्येनं निवर्तस्व स्थिरो भव
स्थितोऽस्मि प्रहरस्वेति शब्दाः श्रूयन्त सर्वशः ७
काञ्चनेषु तनुत्रेषु किरीटेषु ध्वजेषु च
शिलानामिव शैलेषु पतितानामभूत्स्वनः ८
पतितान्युत्तमाङ्गानि बाहवश्च विभूषिताः
व्यचेष्टन्त महीं प्राप्य शतशोऽथ सहस्रशः ९
हृतोत्तमाङ्गाः केचित्तु तथैवोद्यतकार्मुकाः
प्रगृहीतायुधाश्चापि तस्थुः पुरुषसत्तमाः १०
प्रावर्तत महावेगा नदी रुधिरवाहिनी
मातङ्गाङ्गशिलारौद्रा मांसशोणितकर्दमा ११
वराश्वनरनागानां शरीरप्रभवा तदा
परलोकार्णवमुखी गृध्रगोमायुमोदिनी १२
न दृष्टं न श्रुतं चापि युद्धमेतादृशं नृप
यथा तव सुतानां च पाण्डवानां च भारत १३
नासीद्रथपथस्तत्र योधैर्युधि निपातितैः
गजैश्च पतितैर्नीलैर्गिरिशृङ्गैरिवावृतम् १४
विकीर्णैः कवचैश्चित्रैर्ध्वजैश्छत्रैश्च मारिष
शुशुभे तद्रणस्थानं शरदीव नभस्तलम् १५
विनिर्भिन्नाः शरैः केचिद् अन्तपीडाविकर्षिणः
अभीताः समरे शत्रूनभ्यधावन्त दंशिताः १६
तात भ्रातः सखे बन्धो वयस्य मम मातुल
मा मां परित्यजेत्यन्ये चक्रुशुः पतिता रणे १७
आधावाभ्येहि मा गच्छ किं भीतोऽसि क्व यास्यसि
स्थितोऽह समरे मा भैरिति चान्ये विचुक्रुशुः १८
तत्र भीष्मः शांतनवो नित्यं मण्डलकार्मुकः
मुमोच बाणान्दीप्ताग्रानहीनाशीविषानिव १९
शरैरेकायनीकुर्वन्दिशः सर्वा यतव्रतः
जघान पाण्डवरथानादिश्यादिश्य भारत २०
स नृत्यन्वै रथोपस्थे दर्शयन्पाणिलाघवम्
अलातचक्रवद्राजंस्तत्र तत्र स्म दृश्यते २१

तमेकं समरे शूरं पाण्डवाः सृञ्जयास्तथा
अनेकशतसाहस्रं समपश्यन्त लाघवात् २२
मायाकृतात्मानमिव भीष्मं तत्र स्म मेनिरे
पूर्वस्यां दिशि तं दृष्ट्वा प्रतीच्यां ददृशुर्जनाः २३
उदीच्यां चैनमालोक्य दक्षिणस्यां पुनः प्रभो
एवं स समरे वीरो गाङ्गेयः प्रत्यदृश्यत २४
न चैनं पाण्डवेयानां कश्चिच्छक्नोति वीक्षितुम्
विशिखानेव पश्यन्ति भीष्मचापच्युतान्बहून् २५
कुर्वाणं समरे कर्म सूदयानं च वाहिनीम्
व्याक्रोशन्त रणे तत्र वीरा बहुविधं बहु
अमानुषेण रूपेण चरन्तं पितरं तव २६
शलभा इव राजानः पतन्ति विधिचोदिताः
भीष्माग्निमभि संक्रुद्धं विनाशाय सहस्रशः २७
न हि मोघः शरः कश्चिदासीद्भीष्मस्य संयुगे
नरनागाश्वकायेषु बहुत्वाल्लघुवेधिनः २८
भिनत्त्येकेन बाणेन सुमुक्तेन पतत्रिणा
गजकङ्कटसंनाहं वज्रेणेवाचलोत्तमम् २९
द्वौ त्रीनपि गजारोहान्पिण्डितान्वर्मितानपि
नाराचेन सुतीक्ष्णेन निजघान पिता तव ३०
यो यो भीष्मं नरव्याघ्रमभ्येति युधि कश्चन
मुहूर्तदृष्टः स मया पातितो भुवि दृश्यते ३१
एवं सा धर्मराजस्य वध्यमाना महाचमूः
भीष्मेणातुलवीर्येण व्यशीर्यत सहस्रधा ३२
प्रकीर्यत महासेना शरवर्षाभितापिता
पश्यतो वासुदेवस्य पार्थस्य च महात्मनः ३३
यतमानापि ते वीरा द्रवमाणान्महारथान्
नाशक्नुवन्वारयितुं भीष्मबाणप्रपीडिताः ३४
महेन्द्रसमवीर्येण वध्यमाना महाचमूः
अभज्यत महाराज न च द्वौ सह धावतः ३५
आविद्धनरनागाश्वं पतितध्वजकूबरम्

अनीकं पाण्डुपुत्राणां हाहाभूतमचेतनम् ३६
जघानात्र पिता पुत्रं पुत्रश्च पितरं तथा
प्रियं सखायं चाक्रन्दे सखा दैवबलात्कृतः ३७
विमुच्य कवचानन्ये पाण्डुपुत्रस्य सैनिकाः
प्रकीर्य केशान्धावन्तः प्रत्यदृश्यन्त भारत ३८
तद्गोकुलमिवोद्भ्रान्तमुद्भ्रान्तरथयूथपम्
ददृशे पाण्डुपुत्रस्य सैन्यमार्तस्वरं तदा ३९
प्रभज्यमानं तत्सैन्यं दृष्ट्वा देवकिनन्दनः
उवाच पार्थं बीभत्सुं निगृह्य रथमुत्तमम् ४०
अयं स कालः सम्प्राप्तः पार्थ यः काङ्क्षितस्त्वया
प्रहरास्मै नरव्याघ्र न चेन्मोहाद्विमुह्यसे ४१
यत्त्वया कथितं वीर पुरा राज्ञां समागमे
भीष्मद्रोणमुखान्सर्वान्धार्तराष्ट्रस्य सैनिकान् ४२
सानुबन्धान्हनिष्यामि ये मां योत्स्यन्ति संयुगे
इति तत्कुरु कौन्तेय सत्यं वाक्यमरिन्दम ४३
बीभत्सो पश्य सैन्यं स्वं भज्यमानं समन्ततः
द्रवतश्च महीपालान्सर्वान्यौधिष्ठिरे बले ४४
दृष्ट्वा हि समरे भीष्मं व्यात्ताननमिवान्तकम्
भयार्ताः संप्रणश्यन्ति सिंहं क्षुद्रमृगा इव ४५
एवमुक्तः प्रत्युवाच वासुदेवं धनञ्जयः
चोदयाश्वान्यतो भीष्मो विगाह्यैतद्बलार्णवम् ४६
ततोऽश्वान्रजतप्रख्यांश्चोदयामास माधवः
यतो भीष्मरथो राजन्दुष्प्रेक्ष्यो रश्मिमानिव ४७
ततस्तत्पुनरावृत्तं युधिष्ठिरबलं महत्
दृष्ट्वा पार्थं महाबाहुं भीष्मायोद्यन्तमाहवे ४८
ततो भीष्मः कुरुश्रेष्ठः सिंहवद्विनदन्मुहुः
धनञ्जयरथं तूर्णं शरवर्षैरवाकिरत् ४९
क्षणेन स रथस्तस्य सहयः सहसारथिः
शरवर्षेण महता संछन्नो न प्रकाशते ५०
वासुदेवस्त्वसंभ्रान्तो धैर्यमास्थाय सत्त्ववान्

चोदयामास तानश्वान्वितुन्नान्भीष्मसायकैः ५१
ततः पार्थो धनुर्गृह्य दिव्यं जलदनिस्वनम्
पातयामास भीष्मस्य धनुश्छित्त्वा त्रिभिः शरैः ५२
स च्छिन्नधन्वा कौरव्यः पुनरन्यन्महद्धनुः
निमेषान्तरमात्रेण सज्यं चक्रे पिता तव ५३
विचकर्ष ततो दोर्भ्यां धनुर्जलदनिस्वनम्
अथास्य तदपि क्रुद्धश्चिच्छेद धनुरर्जुनः ५४
तस्य तत्पूजयामास लाघवं शंतनोः सुतः
साधु पार्थ महाबाहो साधु भो पाण्डुनन्दन ५५
त्वय्येवैतद्युक्तरूपं महत्कर्म धनञ्जय
प्रीतोऽस्मि सुदृढं पुत्र कुरु युद्धं मया सह ५६
इति पार्थं प्रशंस्याथ प्रगृह्यान्यन्महद्धनुः
मुमोच समरे वीरः शरान्पार्थरथं प्रति ५७
अदर्शयद्वासुदेवो हययाने परं बलम्
मोघान्कुर्वञ्शरांस्तस्य मण्डलान्यचरल्लघु ५८
तथापि भीष्मः सुदृढं वासुदेवधनञ्जयौ
विव्याध निशितैर्बाणैः सर्वगात्रेषु मारिष ५९
शुशुभाते नरव्याघ्रौ तौ भीष्मशरविक्षतौ
गोवृषाविव नर्दन्तौ विषाणोल्लिखिताङ्कितौ ६०
पुनश्चापि सुसंक्रुद्धः शरैः संनतपर्वभिः
कृष्णयोर्युधि संरब्धो भीष्मो व्यावारयद्दिशः ६१
वार्ष्णेयं च शरैस्तीक्ष्णैः कम्पयामास रोषितः
मुहुरभ्युत्स्मयन्भीष्मः प्रहस्य स्वनवत्तदा ६२
ततः कृष्णस्तु समरे दृष्ट्वा भीष्मपराक्रमम्
सम्प्रेक्ष्य च महाबाहुः पार्थस्य मृदुयुद्धताम् ६३
भीष्मं च शरवर्षाणि सृजन्तमनिशं युधि
प्रतपन्तमिवादित्यं मध्यमासाद्य सेनयोः ६४
वरान्वरान्विनिघ्नन्तं पाण्डुपुत्रस्य सैनिकान्
युगान्तमिव कुर्वाणं भीष्मं यौधिष्ठिरे बले ६५
अमृष्यमाणो भगवान्केशवः परवीरहा

अचिन्तयदमेयात्मा नास्ति यौधिष्ठिरं बलम् ६६
एकाह्ना हि रणे भीष्मो नाशयेद्देवदानवान्
किमु पाण्डुसुतान्युद्धे सबलान्सपदानुगान् ६७
द्रवते च महत्सैन्यं पाण्डवस्य महात्मनः
एते च कौरवास्तूर्णं प्रभग्नान्दृश्य सोमकान्
आद्रवन्ति रणे हृष्टा हर्षयन्तः पितामहम् ६८
सोऽह भीष्मं निहन्म्यद्य पाण्डवार्थाय दंशितः
भारमेतं विनेष्यामि पाण्डवानां महात्मनाम् ६९
अर्जुनोऽपि शरैस्तीक्ष्णैर्वध्यमानो हि संयुगे
कर्तव्यं नाभिजानाति रणे भीष्मस्य गौरवात् ७०
तथा चिन्तयतस्तस्य भूय एव पितामहः
प्रेषयामास संक्रुद्धः शरान्पार्थरथं प्रति ७१
तेषां बहुत्वाद्धि भृशं शराणां दिशोऽथ सर्वाः पिहिता बभूवुः
न चान्तरिक्षं न दिशो न भूमिर्न भास्करोऽदृश्यत रश्मिमाली
ववुश्च वातास्तुमुलाः सधूमा दिशश्च सर्वाः क्षुभिता बभूवुः ७२
द्रोणो विकर्णोऽथ जयद्रथश्च भूरिश्रवाः कृतवर्मा कृपश्च
श्रुतायुरम्बष्ठपतिश्च राजा विन्दानुविन्दौ च सुदक्षिणश्च ७३
प्राच्याश्च सौवीरगणाश्च सर्वे वसातयः क्षुद्रकमालवाश्च
किरीटिनं त्वरमाणाभिसस्रुर्निदेशगाः शान्तनवस्य राज्ञः ७४
तं वाजिपादातरथौघजालैरनेकसाहस्रशतैर्ददर्श
किरीटिनं संपरिवार्यमाणं शिनेर्नप्ता वारणयूथपैश्च ७५
ततस्तु दृष्ट्वार्जुनवासुदेवौ पदातिनागाश्वरथैः समन्तात्
अभिद्रुतौ शस्त्रभृतां वरिष्ठौ शिनिप्रवीरोऽभिससार तूर्णम् ७६
स तान्यनीकानि महाधनुष्माञ्शिनिप्रवीरः सहसाभिपत्य
चकार साहाय्यमथार्जुनस्य विष्णुर्यथा वृत्रनिषूदनस्य ७७
विशीर्णनागाश्वरथध्वजौघं भीष्मेण वित्रासितसर्वयोधम्
युधिष्ठिरानीकमभिद्रवन्तं प्रोवाच संदृश्य शिनिप्रवीरः ७८
क्व क्षत्रिया यास्यथ नैष धर्मः सतां पुरस्तात्कथितः पुराणैः
मा स्वां प्रतिज्ञां जहत प्रवीराः स्वं वीरधर्मं परिपालयध्वम् ७९
तान्वासवानन्तरजो निशम्य नरेन्द्रमुख्यान्द्रवतः समन्तात्

पार्थस्य दृष्ट्वा मृदुयुद्धतां च भीष्मं च संख्ये समुदीर्यमाणम् ८०
अमृष्यमाणः स ततो महात्मा यशस्विनं सर्वदशार्हभर्ता
उवाच शैनेयमभिप्रशंसन्दृष्ट्वा कुरूनापततः समन्तात् ८१
ये यान्ति यान्त्वेव शिनिप्रवीर येऽपि स्थिताः सात्वत तेऽपि यान्तु
भीष्मं रथात्पश्य निपात्यमानं द्रोणं च संख्ये सगणं मयाद्य ८२
नासौ रथः सात्वत कौरवाणां क्रुद्धस्य मुच्येत रणेऽद्य कश्चित्
तस्मादहं गृह्य रथाङ्गमुग्रं प्राणं हरिष्यामि महाव्रतस्य ८३
निहत्य भीष्मं सगणं तथाजौ द्रोणं च शैनेय रथप्रवीरम्
प्रीतिं करिष्यामि धनंजयस्य राज्ञश्च भीमस्य तथाश्विनोश्च ८४
निहत्य सर्वान्धृतराष्ट्रपुत्रांस्तत्पक्षिणो ये च नरेन्द्रमुख्याः
राज्येन राजानमजातशत्रुं संपादयिष्याम्यहमद्य हृष्टः ८५
ततः सुनाभं वसुदेवपुत्रः सूर्यप्रभं वज्रसमप्रभावम्
क्षुरान्तमुद्यम्य भुजेन चक्रं रथादवप्लुत्य विसृज्य वाहान् ८६
संकम्पयन्गां चरणैर्महात्मा वेगेन कृष्णः प्रससार भीष्मम्
मदान्धमाजौ समुदीर्णदर्पः सिंहो जिघांसन्निव वारणेन्द्रम् ८७
सोऽभ्यद्रवद्भीष्ममनीकमध्ये क्रुद्धो महेन्द्रावरजः प्रमाथी
व्यालम्बिपीतान्तपटश्चकाशे घनो यथा खेऽचिरभापिनद्धः ८८
सुदर्शनं चास्य रराज शौरेस्तच्चक्रपद्मं सुभुजोरुनालम्
यथादिपद्मं तरुणार्कवर्णं रराज नारायणनाभिजातम् ८९
तत्कृष्णकोपोदयसूर्यबुद्धं क्षुरान्ततीक्ष्णाग्रसुजातपत्रम्
तस्यैव देहोरुसरःप्ररूढं रराज नारायणबाहुनालम् ९०
तमात्तचक्रं प्रणदन्तमुच्चैः क्रुद्धं महेन्द्रावरजं समीक्ष्य
सर्वाणि भूतानि भृशं विनेदुः क्षयं कुरूणामिति चिन्तयित्वा ९१
स वासुदेवः प्रगृहीतचक्रः संवर्तयिष्यन्निव जीवलोकम्
अभ्युत्पतँल्लोकगुरुर्बभासे भूतानि धक्ष्यन्निव कालवह्निः ९२
तमापतन्तं प्रगृहीतचक्रं समीक्ष्य देवं द्विपदां वरिष्ठम्
असम्भ्रमात्कार्मुकबाणपाणी रथे स्थितः शांतनवोऽभ्युवाच ९३
एह्येहि देवेश जगन्निवास नमोऽस्तु ते शार्ङ्गरथाङ्गपाणे
प्रसह्य मां पातय लोकनाथ रथोत्तमाद्भूतशरण्य संख्ये ९४
त्वया हतस्येह ममाद्य कृष्ण श्रेयः परस्मिन्निह चैव लोके

संभावितोऽस्म्यन्धकवृष्णिनाथ लोकैस्त्रिभिर्वीर तवाभियानात् ९५
रथादवप्लुत्य ततस्त्वरावान्पार्थोऽप्यनुद्रुत्य यदुप्रवीरम्
जग्राह पीनोत्तमलम्बबाहुं बाह्वोर्हरिं व्यायतपीनबाहुः ९६
निगृह्यमाणश्च तदादिदेवो भृशं सरोषः किल नाम योगी
आदाय वेगेन जगाम विष्णुर्जिष्णुं महावात इवैकवृक्षम् ९७
पार्थस्तु विष्टभ्य बलेन पादौ भीष्मान्तिकं तूर्णमभिद्रवन्तम्
बलान्निजग्राह किरीटमाली पदेऽथ राजन्दशमे कथञ्चित् ९८
अवस्थितं च प्रणिपत्य कृष्णं प्रीतोऽजुनः काञ्चनचित्रमाली
उवाच कोपं प्रतिसंहरेति गतिर्भवान्केशव पाण्डवानाम् ९९
न हास्यते कर्म यथाप्रतिज्ञं पुत्रैः शपे केशव सोदरैश्च
अन्तं करिष्यामि यथा कुरूणां त्वयाहमिन्द्रानुज संप्रयुक्तः १००
ततः प्रतिज्ञां समयं च तस्मै जनार्दनः प्रीतमना निशम्य
स्थितः प्रिये कौरवसत्तमस्य रथं सचक्रः पुनरारुरोह १०१
स तानभीषून्पुनराददानः प्रगृह्य शङ्खं द्विषतां निहन्ता
विनादयामास ततो दिशश्च स पाञ्चजन्यस्य रवेण शौरिः १०२
व्याविद्धनिष्काङ्गदकुण्डलं तं रजोविकीर्णाञ्चितपद्मनेत्रम्
विशुद्धदंष्ट्रं प्रगृहीतशङ्खं विचुक्रुशुः प्रेक्ष्य कुरुप्रवीराः १०३
मृदङ्गभेरीपटहप्रणादा नेमिस्वना दुन्दुभिनिस्वनाश्च
ससिंहनादाश्च बभूवुरुग्राः सर्वेष्वनीकेषु ततः कुरूणाम् १०४
गाण्डीवघोषः स्तनयित्नुकल्पो जगाम पार्थस्य नभो दिशश्च
जग्मुश्च बाणा विमलाः प्रसन्नाः सर्वा दिशः पाण्डवचापमुक्ताः १०५
तं कौरवाणामधिपो बलेन भीष्मेण भूरिश्रवसा च सार्धम्
अभ्युद्ययावुद्यतबाणपाणिः कक्षं दिधक्षन्निव धूमकेतुः १०६
अथार्जुनाय प्रजहार भल्लान्भूरिश्रवाः सप्त सुवर्णपुङ्खान्
दुर्योधनस्तोमरमुग्रवेगं शल्यो गदां शांतनवश्च शक्तिम् १०७
स सप्तभिः सप्त शरप्रवेकान्संवार्य भूरिश्रवसा विसृष्टान्
शितेन दुर्योधनबाहुमुक्तं क्षुरेण तत्तोमरमुन्ममाथ १०८
ततः शुभामापततीं स शक्तिं विद्युत्प्रभां शांतनवेन मुक्ताम्
गदां च मद्राधिपबाहुमुक्तां द्वाभ्यां शराभ्यां निचकर्त वीरः १०९
ततो भुजाभ्यां बलवद्विकृष्य चित्रं धनुर्गाण्डिवमप्रमेयम्

माहेन्द्रमस्त्रं विधिवत्सुघोरं प्रादुश्चकाराद्भुतमन्तरिक्षे ११०
तेनोत्तमास्त्रेण ततो महात्मा सर्वाण्यनीकानि महाधनुष्मान्
शरौघजालैर्विमलाग्निवर्णैर्निवारयामास किरीटमाली १११
शिलीमुखाः पार्थधनुःप्रमुक्ता रथान्ध्वजाग्राणि धनूंषि बाहून्
निकृत्य देहान्विविशुः परेषां नरेन्द्रनागेन्द्रतुरङ्गमाणाम् ११२
ततो दिशश्चानुदिशश्च पार्थः शरैः सुधारैर्निशितैर्वितत्य
गाण्डीवशब्देन मनांसि तेषां किरीटमाली व्यथयांचकार ११३
तस्मिंस्तथा घोरतमे प्रवृत्ते शङ्खस्वना दुन्दुभिनिस्वनाश्च
अन्तर्हिता गाण्डिवनिस्वनेन बभूवुरुग्राश्च रणप्रणादाः ११४
गाण्डीवशब्दं तमथो विदित्वा विराटराजप्रमुखा नृवीराः
पाञ्चालराजो द्रुपदश्च वीरस्तं देशमाजग्मुरदीनसत्त्वाः ११५
सर्वाणि सैन्यानि तु तावकानि यतो यतो गाण्डिवजः प्रणादः
ततस्ततः संनतिमेव जग्मुर्न तं प्रतीपोऽभिससार कश्चित् ११६
तस्मिन्सुघोरे नृपसंप्रहारे हताः प्रवीराः सरथाः ससूताः
गजाश्च नाराचनिपाततप्ता महापताकाः शुभरुक्मकक्ष्याः ११७
परीतसत्त्वाः सहसा निपेतुः किरीटिना भिन्नतनुत्रकायाः
दृढाहताः पत्रिभिरुग्रवेगैः पार्थेन भल्लैर्निशितैः शिताग्रैः ११८
निकृत्तयन्त्रा निहतेन्द्रकीला ध्वजा महान्तो ध्वजिनीमुखेषु
पदातिसंघाश्च रथाश्च संख्ये हयाश्च नागाश्च धनंजयेन ११९
बाणाहतास्तूर्णमपेतसत्त्वा विष्टभ्य गात्राणि निपेतुरुर्व्याम्
एन्द्रेण तेनास्त्रवरेण राजन्महाहवे भिन्नतनुत्रदेहाः १२०
ततः शरौघैर्निशितैः किरीटिना नृदेहशस्त्रक्षतलोहितोदा
नदी सुघोरा नरदेहफेना प्रवर्तिता तत्र रणाजिरे वै १२१
वेगेन सातीव पृथुप्रवाहा प्रसुस्रुता भैरवारावरूपा
परेतनागाश्वशरीररोधा नरान्त्रमज्जाभृतमांसपङ्का १२२
प्रभूतरक्षोगणभूतसेविता शिरःकपालाकुलकेशशाद्वला
शरीरसंघातसहस्रवाहिनी विशीर्णनानाकवचोर्मिसंकुला १२३
नराश्वनागास्थिनिकृत्तशर्करा विनाशपातालवती भयावहा
तां कङ्कमालावृतगृध्रकक्षैः क्रव्यादसंघैश्च तरक्षुभिश्च १२४
उपेतकूलां ददृशुः समन्तात्क्रूरां महावैतरणीप्रकाशाम्

प्रवर्तितामर्जुनबाणसंघैर्मेदोवसासृक्प्रवहां सुभीमाम् १२५
ते चेदिपाञ्चालकरूषमत्स्याः पार्थाश्च सर्वे सहिताः प्रणेदुः
वित्रास्य सेनां ध्वजिनीपतीनां सिंहो मृगाणामिव यूथसंघान्
विनेदतुस्तावतिहर्षयुक्तौ गाण्डीवधन्वा च जनार्दनश्च १२६
ततो रविं संहृतरश्मिजालं दृष्ट्वा भृशं शस्त्रपरिक्षताङ्गाः
तदैन्द्रमस्त्रं विततं सुघोरमसह्यमुद्वीक्ष्य युगान्तकल्पम् १२७
अथापयानं कुरवः सभीष्माः सद्रोणदुर्योधनबाह्लिकाश्च
चक्रुर्निशां सन्धिगतां समीक्ष्य विभावसोर्लोहितराजियुक्ताम् १२८
अवाप्य कीर्तिं च यशश्च लोके विजित्य शत्रूंश्च धनञ्जयोऽपि
ययौ नरेन्द्रैः सह सोदरैश्च समाप्तकर्मा शिबिरं निशायाम्
ततः प्रजज्ञे तुमुलः कुरूणां निशामुखे घोरतरः प्रणादः १२९
रणे रथानामयुतं निहत्य हता गजाः सप्तशतार्जुनेन
प्राच्याश्च सौवीरगणाश्च सर्वे निपातिताः क्षुद्रकमालवाश्च
महत्कृतं कर्म धनञ्जयेन कर्तुं यथा नार्हति कश्चिदन्यः १३०
श्रुतायुरम्बष्ठपतिश्च राजा तथैव दुर्मर्षणचित्रसेनौ
द्रोणः कृपः सैन्धवबाह्लिकौ च भूरिश्रवाः शल्यशलौ च राजन्
स्वबाहुवीर्येण जिताः सभीष्माः किरीटिना लोकमहारथेन १३१
इति ब्रुवन्तः शिबिराणि जग्मुः सर्वे गणा भारत ये त्वदीयाः
उल्कासहस्रैश्च सुसम्प्रदीप्तैर्विभ्राजमानैश्च तथा प्रदीपैः
किरीटिवित्रासितसर्वयोधा चक्रे निवेशं ध्वजिनी कुरूणाम् १३२
इति श्रीमहाभारते भीष्मपर्वणि पञ्चपञ्चाशोऽध्यायः ५५

## षट् पञ्चाशोऽध्यायः

सञ्जय उवाच
व्युष्टां निशां भारत भारतानामनीकिनीनां प्रमुखे महात्मा
ययौ सपत्नान्प्रति जातकोपो वृत्तः समग्रेण बलेन भीष्मः १
तं द्रोणदुर्योधनबाह्लिकाश्च तथैव दुर्मर्षणचित्रसेनौ
जयद्रथश्चातिबलो बलौघैर्नृपास्तथान्येऽनुययुः समन्तात् २
स तैर्महद्भिश्च महारथैश्च तेजस्विभिर्वीर्यवद्भिश्च राजन्
रराज राजोत्तम राजमुख्यैर्वृतः स देवैरिव वज्रपाणिः ३

तस्मिन्ननीकप्रमुखे विषक्ता दोधूयमानाश्च महापताकाः
सुरक्तपीतासितपाण्डुराभा महागजस्कन्धगता विरेजुः ४
सा वाहिनी शान्तनवेन राज्ञा महारथैर्वारणवाजिभिश्च
बभौ सविद्युत्स्तनयित्नुकल्पा जलागमे द्यौरिव जातमेघा ५
ततो रणायाभिमुखी प्रयाता प्रत्यर्जुनं शान्तनवाभिगुप्ता
सेना महोग्रा सहसा कुरूणां वेगो यथा भीम इवापगायाः ६
तं व्यालनानाविधगूढसारं गजाश्वपादातरथौघपक्षम्
व्यूहं महामेघसमं महात्मा ददर्श दूरात्कपिराजकेतुः ७
स निर्ययौ केतुमता रथेन नरर्षभः श्वेतहयेन वीरः
वरूथिना सैन्यमुखे महात्मा वधे धृतः सर्वसपत्नयूनाम् ८
सूपस्करं सोत्तरबन्धुरेषं यत्तं यदूनामृषभेण संख्ये
कपिध्वजं प्रेक्ष्य विषेदुराजौ सहैव पुत्रैस्तव कौरवेयाः ९
प्रकर्षता गुप्तमुदायुधेन किरीटिना लोकमहारथेन
तं व्यूहराजं ददृशुस्त्वदीयाश्चतुश्चतुर्व्यालसहस्रकीर्णम् १०
यथा हि पूर्वेऽहनि धर्मराज्ञा व्यूहः कृतः कौरवनन्दनेन
तथा तथोद्देशमुपेत्य तस्थुः पाञ्चालमुख्यैः सह चेदिमुख्याः ११
ततो महावेगसमाहतानि भेरीसहस्राणि विनेदुराजौ
शङ्खस्वना दुन्दुभिनिस्वनाश्च सर्वेष्वनीकेषु ससिंहनादाः १२
ततः सबाणानि महास्वनानि विस्फार्यमाणानि धनूंषि वीरैः
क्षणेन भेरीपणवप्रणादानन्तर्दधुः शङ्खमहास्वनाश्च १३
तच्छङ्खशब्दावृतमन्तरिक्षमुद्धूतभौमद्रुतरेणुजालम्
महावितानावततप्रकाशमालोक्य वीराः सहसाभिपेतुः १४
रथी रथेनाभिहतः ससूतः पपात साश्वः सरथः सकेतुः
गजो गजेनाभिहतः पपात पदातिना चाभिहतः पदातिः १५
आवर्तमानान्यभिवर्तमानैर्बाणैः क्षतान्यद्भुतदर्शनानि
प्रासैश्च खड्गैश्च समाहतानि सदश्ववृन्दानि सदश्ववृन्दैः १६
सुवर्णतारागणभूषितानि शरावराणि प्रहितानि वीरैः
विदार्यमाणानि परश्वधैश्च प्रासैश्च खड्गैश्च निपेतुरुर्व्याम् १७
गजैर्विषाणैर्वरहस्तरुग्णाः केचित्ससूता रथिनः प्रपेतुः
गजर्षभाश्चापि रथर्षभेण निपेतिरे बाणहताः पृथिव्याम् १८

गजौघवेगोद्धतसादितानां श्रुत्वा निषेदुर्वसुधा मनुष्याः
आर्तस्वरं सादिपदातियूनां विषाणगात्रावरताडितानाम् १९
संभ्रान्तनागाश्वरथे प्रसूते महाभये सादिपदातियूनाम्
महारथैः संपरिवार्यमाणं ददर्श भीष्मः कपिराजकेतुम् २०
तं पञ्चतालोच्छ्रितताल केतुः सदश्ववेगोद्धतवीर्ययातः
महास्त्रबाणाशनिदीप्तमार्गं किरीटिनं शांतनवोऽभ्यधावत् २१
तथैव शक्रप्रतिमानकल्पमिन्द्रात्मजं द्रोणमुखाभिसस्रुः
कृपश्च शल्यश्च विविंशतिश्च दुर्योधनः सौमदत्तिश्च राजन् २२
ततो रथानीकमुखादुपेत्य सर्वास्त्रवित्काञ्चनचित्रवर्मा
जवेन शूरोऽभिससार सर्वांस्तथार्जुनस्यात्र सुतोऽभिमन्युः २३
तेषां महास्त्राणि महारथानामसक्तकर्मा विनिहत्य कार्ष्णिः
बभौ महामन्त्रहुतार्चिमाली सदोगतः सन्भगवानिवाग्निः २४
ततः स तूर्णं रुधिरोदफेनां कृत्वा नदीं वैशसने रिपूणाम्
जगाम सौभद्रमतीत्य भीष्मो महारथं पार्थमदीनसत्त्वः २५
ततः प्रहस्याद्भुतदर्शनेन गाण्डीवनिर्हादमहास्वनेन
विपाठजालेन महास्त्रजालं विनाशयामास किरीटमाली २६
तमुत्तमं सर्वधनुर्धराणामसक्तकर्मा कपिराजकेतुः
भीष्मं महात्माभिववर्ष तूर्णं शरौघजालैर्विमलैश्च भल्लैः २७
एवंविधं कार्मुकभीमनादमदीनवत्सत्पुरुषोत्तमाभ्याम्
ददर्श लोकः कुरुसृञ्जयाश्च तद्द्वैरथं भीष्मधनञ्जयाभ्याम् २८
इति श्रीमहाभारते भीष्मपर्वणि षट्पञ्चाशोऽध्यायः ५६

## सप्त पञ्चाशोऽध्यायः

सञ्जय उवाच
द्रौणिर्भूरिश्रवाः शल्यश्चित्रसेनश्च मारिष
पुत्रः सांयमनेश्चैव सौभद्रं समयोधयन् १
संसक्तमतितेजोभिस्तमेकं ददृशुर्जनाः
पञ्चभिर्मनुजव्याघ्रैर्गजैः सिंहशिशुं यथा २
नाभिलक्ष्यतया कश्चिन्न शौर्ये न पराक्रमे
बभूव सदृशः कार्ष्णेर्नास्त्रे नापि च लाघवे ३

तथा तमात्मजं युद्धे विक्रमन्तमरिंदमम्
दृष्ट्वा पार्थो रणे यत्तः सिंहनादमथोऽनदत् ४
पीडयानं च तत्सैन्यं पौत्रं तव विशां पते
दृष्ट्वा त्वदीया राजेन्द्र समन्तात्पर्यवारयन् ५
ध्वजिनीं धार्तराष्ट्राणां दीनशत्रुरदीनवत्
प्रत्युद्ययौ स सौभद्रस्तेजसा च बलेन च ६
तस्य लाघवमार्गस्थमादित्यसदृशप्रभम्
व्यदृश्यत महच्चापं समरे युध्यतः परैः ७
स द्रौणिमिषुणैकेन विद्ध्वा शल्यं च पञ्चभिः
ध्वजं सांयमनेश्चापि सोऽष्टाभिरपवर्जयत् ८
रुक्मदण्डां महाशक्तिं प्रेषितां सौमदत्तिना
शितेनोरगसंकाशां पत्रिणा विजहार ताम् ९
शल्यस्य च महाघोरानस्यतः शतशः शरान्
निवार्यार्जुनदायादो जघान समरे हयान् १०
भूरिश्रवाश्च शल्यश्च द्रौणिः सांयमनिः शलः
नाभ्यवर्तन्त संरब्धाः कार्ष्णेर्बाहुबलाश्रयात् ११
ततस्त्रिगर्ता राजेन्द्र मद्राश्च सह केकयैः
पञ्चत्रिंशतिसाहस्रास्तव पुत्रेण चोदिताः १२
धनुर्वेदविदो मुख्या अजेयाः शत्रुभिर्युधि
सहपुत्रं जिघांसन्तं परिवव्रुः किरीटिनम् १३
तौ तु तत्र पितापुत्रौ परिक्षिप्तौ रथर्षभौ
ददर्श राजन्पाञ्चाल्यः सेनापतिरमित्रजित् १४
स वारणरथौघानां सहस्रैर्बहुभिर्वृतः
वाजिभिः पत्तिभिश्चैव वृतः शतसहस्रशः १५
धनुर्विस्फार्य संक्रुद्धश्चोदयित्वा वरूथिनीम्
ययौ तन्मद्रकानीकं केकयांश्च परंतपः १६
तेन कीर्तिमता गुप्तमनीकं दृढधन्वना
प्रयुक्तरथनागाश्वं योत्स्यमानमशोभत १७
सोऽजुनं प्रमुखे यान्तं पाञ्चाल्यः कुरुनन्दन
त्रिभिः शारद्वतं बाणैर्जत्रुदेशे समर्पयत् १८

ततः स मद्रकान्हत्वा दशभिर्दशभिः शरैः
हृष्ट एको जघानाश्वं भल्लेन कृतवर्मणः १९
दमनं चापि दायादं पौरवस्य महात्मनः
जघान विपुलाग्रेण नाराचेन परंतपः २०
ततः सांयमनेः पुत्रः पाञ्चाल्यं युद्धदुर्मदम्
अविध्यत्त्रिंशता बाणैर्दशभिश्चास्य सारथिम् २१
सोऽतिविद्धो महेष्वासः सृक्किणी परिसंलिहन्
भल्लेन भृशतीक्ष्णेन निचकर्तास्य कार्मुकम् २२
अथैनं पञ्चविंशत्या क्षिप्रमेव समर्पयत्
अश्वांश्चास्यावधीद्राजन्नुभौ तौ पार्ष्णिसारथी २३
स हताश्वे रथे तिष्ठन्ददर्श भरतर्षभ
पुत्रः सांयमनेः पुत्रं पाञ्चाल्यस्य महात्मनः २४
स संगृह्य महाघोरं निस्त्रिंशवरमायसम्
पदातिस्तूर्णमभ्यर्छद्रथस्थं द्रुपदात्मजम् २५
तं महौघमिवायान्तं खात्पतन्तमिवोरगम्
भ्रान्तावरणनिस्त्रिंशं कालोत्सृष्टमिवान्तकम् २६
दीप्यन्तमिव शस्त्राच्र्या मत्तवारणविक्रमम्
अपश्यन्पाण्डवास्तत्र धृष्टद्युम्नश्च पार्षतः २७
तस्य पाञ्चालपुत्रस्तु प्रतीपमभिधावतः
शितनिस्त्रिंशहस्तस्य शरावरणधारिणः २८
बाणवेगमतीतस्य रथाभ्याशमुपेयुषः
त्वरन्सेनापतिः क्रुद्धो बिभेद गदया शिरः २९
तस्य राजन्सनिस्त्रिंशं सुप्रभं च शरावरम्
हतस्य पततो हस्ताद्वेगेन न्यपतद्भुवि ३०
तं निहत्य गदाग्रेण लेभे स परमं यशः
पुत्रः पाञ्चालराजस्य महात्मा भीमविक्रमः ३१
तस्मिन्हते महेष्वासे राजपुत्रे महारथे
हाहाकारो महानासीत्तव सैन्यस्य मारिष ३२
ततः सांयमनिः क्रुद्धो दृष्ट्वा निहतमात्मजम्
अभिदुद्राव वेगेन पाञ्चाल्यं युद्धदुर्मदम् ३३

तौ तत्र समरे वीरौ समेतौ रथिनां वरौ
ददृशुः सर्वराजानः कुरवः पाराडवास्तथा ३४
ततः सांयमनिः क्रुद्धः पार्षतं परवीरहा
स्राजघान त्रिभिर्बाणैस्तोत्रैरिव महाद्विपम् ३५
तथैव पार्षतं शूरं शल्यः समितिशोभनः
स्राजघानोरसि क्रुद्धस्ततो युद्धमवर्तत ३६
इति श्रीमहाभारते भीष्मपर्वणि सप्तपञ्चाशोऽध्यायः ५७

## स्रष्टपञ्चाशोऽध्यायः

धृतराष्ट्र उवाच
दैवमेव परं मन्ये पौरुषादपि सञ्जय
यत्सैन्यं मम पुत्रस्य पाराडुसैन्येन वध्यते १
नित्यं हि मामकांस्तात हतानेव हि शंससि
स्रव्यग्रांश्च प्रहृष्टांश्च नित्यं शंससि पाराडवान् २
हीनान्पुरुषकारेण मामकानद्य सञ्जय
पतितान्पात्यमानांश्च हतानेव च शंससि ३
युध्यमानान्यथाशक्ति घटमानाञ्जयं प्रति
पाराडवा विजयन्त्येव जीयन्ते चैव मामकाः ४
सोऽह तीव्राणि दुःखानि दुर्योधनकृतानि च
स्रश्रौषं सततं तात दुःसहानि बहूनि च ५
तमुपायं न पश्यामि जीयेरन्येन पाराडवाः
मामका वा जयं युद्धे प्राप्नुयुर्येन सञ्जय ६
सञ्जय उवाच
क्षयं मनुष्यदेहानां गजवाजिरथक्षयम्
शृणु राजन्स्थिरो भूत्वा तवैवापनयो महान् ७
धृष्टद्युम्नस्तु शल्येन पीडितो नवभिः शरैः
पीडयामास संक्रुद्धो मद्राधिपतिमायसैः ८
तत्राद्भुतमपश्याम पार्षतस्य पराक्रमम्
न्यवारयत यत्तूर्णं शल्यं समितिशोभनम् ९
नान्तरं ददृशे कश्चित्तयोः संरब्धयो रणे

मुहूर्तमिव तद्युद्धं तयोः सममिवाभवत् १०
ततः शल्यो महाराज धृष्टद्युम्नस्य संयुगे
धनुश्चिच्छेद भल्लेन पीतेन निशितेन च ११
अथैनं शरवर्षेण छादयामास भारत
गिरिं जलागमे यद्वज्जलदा जलधारिणः १२
अभिमन्युस्तु संक्रुद्धो धृष्टद्युम्ने निपीडिते
अभिदुद्राव वेगेन मद्रराजरथं प्रति १३
ततो मद्राधिपरथं कार्ष्णिः प्राप्यातिकोपनः
आर्तायनिममेयात्मा विव्याध विशिखैस्त्रिभिः १४
ततस्तु तावका राजन्परीप्सन्तोऽर्जुनिं रणे
मद्रराजरथं तूर्णं परिवार्यावतस्थिरे १५
दुर्योधनो विकर्णश्च दुःशासनविविंशती
दुर्मर्षणो दुःसहश्च चित्रसेनश्च दुर्मुखः १६
सत्यव्रतश्च भद्रं ते पुरुमित्रश्च भारत
एते मद्राधिपरथं पालयन्तः स्थिता रणे १७
तान्भीमसेनः संक्रुद्धो धृष्टद्युम्नश्च पार्षतः
द्रौपदेयाभिमन्युश्च माद्रीपुत्रौ च पाण्डवौ १८
नानारूपाणि शस्त्राणि विसृजन्तो विशां पते
अभ्यवर्तन्त संहृष्टाः परस्परवधैषिणः
ते वै समीयुः संग्रामे राजन्दुर्मन्त्रिते तव १९
तस्मिन्दाशरथे युद्धे वर्तमाने भयावहे
तावकानां परेषां च प्रेक्षका रथिनोऽभवन् २०
शस्त्राण्यनेकरूपाणि विसृजन्तो महारथाः
अन्योन्यमभिनर्दन्तः संप्रहारं प्रचक्रिरे २१
ते यत्ता जातसंरम्भाः सर्वेन्योन्यं जिघांसवः
महास्त्राणि विमुञ्चन्तः समापेतुरमर्षणाः २२
दुर्योधनस्तु संक्रुद्धो धृष्टद्युम्नं महारणे
विव्याध निशितैर्बाणैश्चतुर्भिस्त्वरितो भृशम् २३
दुर्मर्षणश्च विंशत्या चित्रसेनश्च पञ्चभिः
दुर्मुखो नवभिर्बाणैर्दुःसहश्चापि सप्तभिः

विविंशतिः पञ्चभिश्च त्रिभिर्दुःशासनस्तथा २४
तान्प्रत्यविध्यद्राजेन्द्र पार्षतः शत्रुतापनः
एकैकं पञ्चविंशत्या दर्शयन्पाणिलाघवम् २५
सत्यव्रतं तु समरे पुरुमित्रं च भारत
अभिमन्युरविध्यत्तौ दशभिर्दशभिः शरैः २६
माद्रीपुत्रौ तु समरे मातुलं मातृनन्दनौ
छादयेतां शरव्रातैस्तदद्भुतमिवाभवत् २७
ततः शल्यो महाराज स्वस्त्रीयौ रथिनां वरौ
शरैर्बहुभिरानर्छत्कृतप्रतिकृतैषिणौ
छाद्यमानौ ततस्तौ तु माद्रीपुत्रौ न चेलतुः २८
अथ दुर्योधनं दृष्ट्वा भीमसेनो महाबलः
विधित्सुः कलहस्यान्तं गदां जग्राह पाण्डवः २९
तमुद्यतगदं दृष्ट्वा कैलासमिव शृङ्गिणम्
भीमसेनं महाबाहुं पुत्रास्ते प्राद्रवन्भयात् ३०
दुर्योधनस्तु संक्रुद्धो मागधं समचोदयत्
अनीकं दशसाहस्रं कुञ्जराणां तरस्विनाम्
मागधं पुरतः कृत्वा भीमसेनं समभ्ययात् ३१
आपतन्तं च तं दृष्ट्वा गजानीकं वृकोदरः
गदापाणिरवारोहद्रथात्सिंह इवोन्नदन् ३२
अद्रिसारमयीं गुर्वीं प्रगृह्य महतीं गदाम्
अभ्यधावद्गजानीकं व्यादितास्य इवान्तकः ३३
स गजान्गदया निघ्नन्व्यचरत्समरे बली
भीमसेनो महाबाहुः सवज्र इव वासवः ३४
तस्य नादेन महता मनोहृदयकम्पिना
व्यत्यचेष्टन्त संहत्य गजा भीमस्य नर्दतः ३५
ततस्तु द्रौपदीपुत्राः सौभद्रश्च महारथः
नकुलः सहदेवश्च धृष्टद्युम्नश्च पार्षतः ३६
पृष्ठं भीमस्य रक्षन्तः शरवर्षेण वारणान्
अभ्यधावन्त वर्षन्तो मेघा इव गिरीन्यथा ३७
क्षुरैः क्षुरप्रैर्भल्लैश्च पीतैरञ्जलिकैरपि

पातयन्तोत्तमाङ्गानि पाराडवा गजयोधिनाम् ३८
शिरोभिः प्रपतद्भिश्च बाहुभिश्च विभूषितैः
अश्मवृष्टिरिवाभाति पाणिभिश्च सहाङ्कुशैः ३९
हृतोत्तमाङ्गाः स्कन्धेषु गजानां गजयोधिनः
अदृश्यन्ताचलाग्रेषु द्रुमा भग्नशिखा इव ४०
धृष्टद्युम्नहतानन्यानपश्याम महागजान्
पतितान्पात्यमानांश्च पार्षतेन महात्मना ४१
मागधोऽथ महीपालो गजमैरावतोपमम्
प्रेषयामास समरे सौभद्रस्य रथं प्रति ४२
तमापतन्तं संप्रेक्ष्य मागधस्य गजोत्तमम्
जघानैकेषुणा वीरः सौभद्रः परवीरहा ४३
तस्यावर्जितनागस्य कार्ष्णिः परपुरंजयः
राज्ञो रजतपुङ्खेन भल्लेनापहरच्छिरः ४४
विगाह्य तद्गजानीकं भीमसेनोऽपि पाराडवः
व्यचरत्समरे मृद्नन्गजानिन्द्रो गिरीनिव ४५
एकप्रहाराभिहतान्भीमसेनेन कुञ्जरान्
अपश्याम रणे तस्मिन्गिरीन्वज्रहतानिव ४६
भग्नदन्तान्भग्नकटान्भग्नसक्थांश्च वारणान्
भग्नपृष्ठान्भग्नकुम्भान्निहतान्पर्वतोपमान् ४७
नदतः सीदतश्चान्यान्विमुखान्समरे गजान्
विमूत्रान्भग्नसंविग्नांस्तथा विशकृतोऽपरान् ४८
भीमसेनस्य मार्गेषु गतासून्पर्वतोपमान्
अपश्याम हतान्नागान्निष्टनन्तस्तथापरे ४९
वमन्तो रुधिरं चान्ये भिन्नकुम्भा महागजाः
विह्वलन्तो गता भूमिं शैला इव धरातले ५०
मेदोरुधिरदिग्धाङ्गो वसामज्जासमुक्षितः
व्यचरत्समरे भीमो दराडपाणिरिवान्तकः ५१
गजानां रुधिराक्तां तां गदां बिभ्रद्वृकोदरः
घोरः प्रतिभयश्चासीत्पिनाकीव पिनाकधृक् ५२
निर्मथ्यमानाः क्रुद्धेन भीसेनेन दन्तिनः

सहसा प्राद्रवञ्शिष्टा मृन्दन्तस्तव वाहिनीम् ५३
तं हि वीरं महेष्वासाः सौभद्रप्रमुखा रथाः
पर्यरक्षन्त युध्यन्तं वज्रायुधमिवामराः ५४
शोणिताक्तां गदां बिभ्रदुक्षितो गजशोणितैः
कृतान्त इव रौद्रात्मा भीमसेनो व्यदृश्यत ५५
व्यायच्छमानं गदया दिक्षु सर्वासु भारत
नृत्यमानमपश्याम नृत्यन्तमिव शंकरम् ५६
यमदण्डोपमां गुर्वीमिन्द्राशनिसमस्वनाम्
अपश्याम महाराज रौद्रां विशसनीं गदाम् ५७
विमिश्रां केशमज्जाभिः प्रदिग्धां रुधिरेण च
पिनाकमिव रुद्रस्य क्रुद्धस्याभिघ्नतः पशून् ५८
यथा पशूनां संघातं यष्ट्या पालः प्रकालयेत्
तथा भीमो गजानीकं गदया पर्यकालयत् ५९
गदया वध्यमानास्ते मार्गणैश्च समन्ततः
स्वान्यनीकानि मृद्नन्तः प्राद्रवन्कुञ्जरास्तव ६०
महावात इवाभ्राणि विधमित्वा स वारणान्
अतिष्ठत्तुमुले भीमः श्मशान इव शूलभृत् ६१
इति श्रीमहाभारते भीष्मपर्वणि अष्टपञ्चाशोऽध्यायः ५८

## एकोनषष्ठितमोऽध्यायः

सञ्जय उवाच
तस्मिन्हते गजानीके पुत्रो दुर्योधनस्तव
भीमसेनं घ्नतेत्येवं सर्वसैन्यान्यचोदयत् १
ततः सर्वाण्यनीकानि तव पुत्रस्य शासनात्
अभ्यद्रवन्भीमसेनं नदन्तं भैरवान्रवान् २
तं बलौघमपर्यन्तं देवैरपि दुरुत्सहम्
आपतन्तं सुदुष्पारं समुद्रमिव पर्वणि ३
रथनागाश्वकलिलं शङ्खदुन्दुभिनादितम्
अथानन्तमपारं च नरेन्द्रस्तिमितह्रदम् ४
तं भीमसेनः समरे महोदधिमिवापरम्

सेनासागरमक्षोभ्यं वेलेव समवारयत् ५
तदाश्चर्यमपश्याम श्रद्धेयमपि चाद्भुतम्
भीमसेनस्य समरे राजन्कर्मातिमानुषम् ६
उदीर्णां पृथिवीं सर्वां साश्वां सरथकुञ्जराम्
असम्भ्रमं भीमसेनो गदया समताडयत् ७
स संवार्य बलौघांस्तान्गदया रथिनां वरः
अतिष्ठत्तुमुले भीमो गिरिर्मेरुरिवाचलः ८
तस्मिन्सुतुमुले घोरे काले परमदारुणे
भ्रातरश्चैव पुत्राश्च धृष्टद्युम्नश्च पार्षतः ९
द्रौपदेयाभिमन्युश्च शिखण्डी च महारथः
न प्राजहन्भीमसेनं भये जाते महाबलम् १०
ततः शैक्यायसीं गुर्वीं प्रगृह्य महतीं गदाम्
अवधीत्तावकान्योधान्दण्डपाणिरिवान्तकः
पोथयन्रथवृन्दानि वाजिवृन्दानि चाभिभूः ११
व्यचरत्समरे भीमो युगान्ते पावको यथा
विनिघ्नन्समरे सर्वान्युगान्ते कालवद्विभुः १२
ऊरुवेगेन सङ्कर्षन्रथजालानि पाण्डवः
प्रमर्दयन्गजान्सर्वान्नड्वलानीव कुञ्जरः १३
मृद्नन्रथेभ्यो रथिनो गजेभ्यो गजयोधिनः
सादिनश्चाश्वपृष्ठेभ्यो भूमौ चैव पदातिनः १४
तत्र तत्र हतैश्चापि मनुष्यगजवाजिभिः
रणाङ्गणं तदभवन्मृत्योराघातसंनिभम् १५
पिनाकमिव रुद्रस्य क्रुद्धस्याभिघ्नतः पशून्
यमदण्डोपमामुग्रामिन्द्राशनिसमस्वनाम्
ददृशुर्भीमसेनस्य रौद्रां विशसनीं गदाम् १६
आविध्यतो गदां तस्य कौन्तेयस्य महात्मनः
बभौ रूपं महाघोरं कालस्येव युगक्षये १७
तं तथा महतीं सेनां द्रावयन्तं पुनः पुनः
दृष्ट्वा मृत्युमिवायान्तं सर्वे विमनसोऽभवन् १८
यतो यतः प्रेक्षते स्म गदामुद्यम्य पाण्डवः

तेन तेन स्म दीर्यन्ते सर्वसैन्यानि भारत १९
प्रदारयन्तं सैन्यानि बलौघेनापराजितम्
ग्रसमानमनीकानि व्यादितास्यमिवान्तकम् २०
तं तथा भीमकर्माणं प्रगृहीतमहागदम्
दृष्ट्वा वृकोदरं भीष्मः सहसैव समभ्ययात् २१
महता मेघघोषेण रथेनादित्यवर्चसा
छादयञ्शरवर्षेण पर्जन्य इव वृष्टिमान् २२
तमायान्तं तथा दृष्ट्वा व्यात्ताननमिवान्तकम्
भीष्मं भीमो महाबाहुः प्रत्युदीयादमर्षणः २३
तस्मिन्क्षणे सात्यकिः सत्यसंधः शिनिप्रवीरोऽभ्यपतत्पितामहम्
निघ्नन्नमित्रान्धनुषा दृढेन स कम्पयंस्तव पुत्रस्य सेनाम् २४
तं यान्तमश्वै रजतप्रकाशैः शरान्धमन्तं धनुषा दृढेन
नाशक्नुवन्वारयितुं तदानीं सर्वे गणा भारत ये त्वदीयाः २५
अविध्यदेनं निशितैः शराग्रैरलम्बुसो राजवराश्यर्यशृङ्गिः
तं वै चतुर्भिः प्रतिविध्य वीरो नप्ता शिनेरभ्यपतद्रथेन २६
अन्वागतं वृष्णिवरं निशम्य मध्ये रिपूणां परिवर्तमानम्
प्रावर्तयन्तं कुरुपुङ्गवांश्च पुनः पुनश्च प्रणदन्तमाजौ २७
नाशक्नुवन्वारयितुं वरिष्ठं मध्यंदिने सूर्यमिवातपन्तम्
न तत्र कश्चिन्नविषण्ण आसीदृते राजन्सोमदत्तस्य पुत्रात् २८
स ह्याददानो धनुरुग्रवेगं भूरिश्रवा भारत सौमदत्तिः
दृष्ट्वा रथान्स्वान्व्यपनीयमानान्प्रत्युद्ययौ सात्यकिं योद्धुमिच्छन् २९
इति श्रीमहाभारते भीष्मपर्वणि एकोनषष्टितमोऽध्यायः ५९

## षष्टितमोऽध्यायः

सञ्जय उवाच
ततो भूरिश्रवा राजन्सात्यकिं नवभिः शरैः
अविध्यद्भृशसंक्रुद्धस्तोत्त्रैरिव महाद्विपम् १
कौरवं सात्यकिश्चैव शरैः संनतपर्वभिः
अवाकिरदमेयात्मा सर्वलोकस्य पश्यतः २
ततो दुर्योधनोराजा सोदर्यैः परिवारितः

सौमदत्तिं रणे यत्तः समन्तात्पर्यवारयत् ३
तथैव पाण्डवाः सर्वे सात्यकिं रभसं रणे
परिवार्य स्थिताः संख्ये समन्तात्सुमहौजसः ४
भीमसेनस्तु संक्रुद्धो गदामुद्यम्य भारत
दुर्योधनमुखान्सर्वान्पुत्रांस्ते पर्यवारयत् ५
रथैरनेकसाहस्रैः क्रोधामर्षसमन्वितः
नन्दकस्तव पुत्रस्तु भीमसेनं महाबलम्
विव्याध निशितैः षड्भिः कङ्कपत्रैः शिलाशितैः ६
दुर्योधनस्तु समरे भीमसेनं महाबलम्
आजघानोरसि क्रुद्धो मार्गणैर्निशितैस्त्रिभिः ७
ततो भीमो महाबाहुः स्वरथं सुमहाबलः
आरुरोह रथश्रेष्ठं विशोकं चेदमब्रवीत् ८
एते महारथाः शूरा धार्तराष्ट्रा महाबलाः
मामेव भृशसंक्रुद्धा हन्तुमभ्युद्यता युधि ९
एतानद्य हनिष्यामि पश्यतस्ते न संशयः
तस्मान्ममाश्वान्संग्रामे यत्तः संयच्छ सारथे १०
एवमुक्त्वा ततः पार्थः पुत्रं दुर्योधनं तव
विव्याध दशभिस्तीक्ष्णैः शरैः कनकभूषणैः
नन्दकं च त्रिभिर्बाणैः प्रत्यविध्यत्स्तनान्तरे ११
तं तु दुर्योधनः षष्ट्या विद्ध्वा भीमं महाबलम्
त्रिभिरन्यैः सुनिशितैर्विशोकं प्रत्यविध्यत १२
भीमस्य च रणे राजन्धनुश्चिच्छेद भास्वरम्
मुष्टिदेशे शरैस्तीक्ष्णैस्त्रिभी राजा हसन्निव १३
भीमस्तु प्रेक्ष्य यन्तारं विशोकं संयुगे तदा
पीडितं विशिखैस्तीक्ष्णैस्तव पुत्रेण धन्विना १४
अमृष्यमाणः संक्रुद्धो धनुर्दिव्यं परामृशत्
पुत्रस्य ते महाराज वधार्थं भरतर्षभ १५
समादत्त च संरब्धः क्षुरप्रं लोमवाहिनम्
तेन चिच्छेद नृपतेर्भीमः कार्मुकमुत्तमम् १६
सोऽपविध्य धनुश्छिन्नं क्रोधेन प्रज्वलन्निव

अन्यत्कार्मुकमादत्त सत्वरं वेगवत्तरम् १७
संधत्त विशिखं घोरं कालमृत्युसमप्रभम्
तेनाजघान संक्रुद्धो भीमसेनं स्तनान्तरे १८
स गाढविद्धो व्यथितः स्यन्दनोपस्थ आविशत्
स निषण्णो रथोपस्थे मूर्छामभिजगाम ह १९
तं दृष्ट्वा व्यथितं भीममभिमन्युपुरोगमाः
नामृष्यन्त महेष्वासाः पाण्डवानां महारथाः २०
ततस्तु तुमुलां वृष्टिं शस्त्राणां तिग्मतेजसाम्
पातयामासुरव्यग्राः पुत्रस्य तव मूर्धनि २१
प्रतिलभ्य ततः संज्ञां भीमसेनो महाबलः
दुर्योधनं त्रिभिर्विद्ध्वा पुनर्विव्याध पञ्चभिः २२
शल्यं च पञ्चविंशत्या शरैर्विव्याध पाण्डवः
रुक्मपुङ्खैर्महेष्वासः स विद्धो व्यपयाद्रणात् २३
प्रत्युद्ययुस्ततो भीमं तव पुत्राश्चतुर्दश
सेनापतिः सुषेणश्च जलसंधः सुलोचनः २४
उग्रो भीमरथो भीमो भीमबाहुरलोलुपः
दुर्मुखो दुष्प्रधर्षश्च विवित्सुर्विकटः समः २५
विसृजन्तो बहून्बाणान्क्रोधसंरक्तलोचनाः
भीमसेनमभिद्रुत्य विव्यधुः सहिता भृशम् २६
पुत्रांस्तु तव संप्रेक्ष्य भीमसेनो महाबलः
सृक्किणी विलिहन्वीरः पशुमध्ये वृको यथा
सेनापतेः क्षुरप्रेण शिरश्चिच्छेद पाण्डवः २७
जलसंधं विनिर्भिद्य सोऽनयद्यमसादनम्
सुषेणं च ततो हत्वा प्रेषयामास मृत्यवे २८
उग्रस्य सशिरस्त्राणं शिरश्चन्द्रोपमं भुवि
पातयामास भल्लेन कुण्डलाभ्यां विभूषितम् २९
भीमबाहुं च सप्तत्या साश्वकेतुं ससारथिम्
निनाय समरे भीमः परलोकाय मारिष ३०
भीमं भीमरथं चोभौ भीमसेनो हसन्निव
भ्रातरौ रभसौ राजन्ननयद्यमसादनम् ३१

ततः सुलोचनं भीमः क्षुरप्रेण महामृधे
मिषतां सर्वसैन्यानामनयद्यमसादनम् ३२
पुत्रास्तु तव तं दृष्ट्वा भीमसेनपराक्रमम्
शेषा येऽन्येऽभवंस्तत्र ते भीमस्य भयार्दिताः
विप्रद्रुता दिशो राजन्वध्यमाना महात्मना ३३
ततोऽब्रवीच्छांतनवः सर्वानेव महारथान्
एष भीमो रणे क्रुद्धो धार्तराष्ट्रान्महारथान् ३४
यथाप्राग्र्यान्यथाज्येष्ठान्यथाशूरांश्च सङ्गतान्
निपातयत्युग्रधन्वा तं प्रमथ्नीत पार्थिवाः ३५
एवमुक्तास्ततः सर्वे धार्तराष्ट्रस्य सैनिकाः
अभ्यद्रवन्त संक्रुद्धा भीमसेनं महाबलम् ३६
भगदत्तः प्रभिन्नेन कुञ्जरेण विशां पते
अपतत्सहसा तत्र यत्र भीमो व्यवस्थितः ३७
आपतन्नेव च रणे भीमसेनं शिलाशितैः
अदृश्यं समरे चक्रे जीमूत इव भास्करम् ३८
अभिमन्युमुखास्तत्र नामृष्यन्त महारथाः
भीमस्याच्छादनं संख्ये स्वबाहुबलमाश्रिताः ३९
त एनं शरवर्षेण समन्तात्पर्यवारयन्
गजं च शरवृष्ट्या तं बिभिदुस्ते समन्ततः ४०
स शस्त्रवृष्ट्याभिहतः प्राद्रवद्द्विगुणं पदम्
प्राग्ज्योतिषगजो राजन्नानालिङ्गैः सुतेजनैः ४१
संजातरुधिरोत्पीडः प्रेक्षणीयोऽभवद्रणे
गभस्तिभिरिवार्कस्य संस्यूतो जलदो महान् ४२
स चोदितो मदस्रावी भगदत्तेन वारणः
अभ्यधावत तान्सर्वान्कालोत्सृष्ट इवान्तकः
द्विगुणं जवमास्थाय कम्पयंश्चरणैर्महीम् ४३
तस्य तत्सुमहद्रूपं दृष्ट्वा सर्वे महारथाः
असह्यं मन्यमानास्ते नातिप्रमनसोऽभवन् ४४
ततस्तु नृपतिः क्रुद्धो भीमसेनं स्तनान्तरे
आजघान नरव्याघ्र शरेण नतपर्वणा ४५

सोऽतिविद्धो महेष्वासस्तेन राज्ञा महारथः
मूर्छयाभिपरीताङ्गो ध्वजयष्टिमुपाश्रितः ४६
तांस्तु भीतान्समालक्ष्य भीमसेनं च मूर्छितम्
ननाद बलवन्नादं भगदत्तः प्रतापवान् ४७
ततो घटोत्कचो राजन्प्रेक्ष्य भीमं तथागतम्
संक्रुद्धो राक्षसो घोरस्तत्रैवान्तरधीयत ४८
स कृत्वा दारुणां मायां भीरूणां भयवर्धिनीम्
अदृश्यत निमेषार्धाद्घोररूपं समाश्रितः ४९
ऐरावतं समारुह्य स्वयं मायामयं कृतम्
तस्य चान्येऽपि दिङ्नागा बभूवुरनुयायिनः ५०
अञ्जनो वामनश्चैव महापद्मश्च सुप्रभः
त्रय एते महानागा राक्षसैः समधिष्ठिताः ५१
महाकायास्त्रिधा राजन्प्रस्रवन्तो मदं बहु
तेजोवीर्यबलोपेता महाबलपराक्रमाः ५२
घटोत्कचस्तु स्वं नागं चोदयामास तं ततः
सगजं भगदत्तं तु हन्तुकामः परंतपः ५३
ते चान्ये चोदिता नागा राक्षसैस्तैर्महाबलैः
परिपेतुः सुसंरब्धाश्चतुर्दंष्टाश्चतुर्दिशम्
भगदत्तस्य तं नागं विषाणैस्तेऽभ्यपीडयन् ५४
संपीड्यमानस्तैर्नागैर्वेदनार्तः शरातुरः
सोऽनदत्सुमहानादमिन्द्राशनिसमस्वनम् ५५
तस्य तं नदतो नादं सुघोरं भीमनिस्वनम्
श्रुत्वा भीष्मोऽब्रवीद्द्रोणं राजानं च सुयोधनम् ५६
एष युध्यति संग्रामे हैडिम्बेन दुरात्मना
भगदत्तो महेष्वासः कृच्छ्रेण परिवर्तते ५७
राक्षसश्च महामायः स च राजातिकोपनः
तौ समेतौ महावीर्यौ कालमृत्युसमावुभौ ५८
श्रूयते ह्येष हृष्टानां पाण्डवानां महास्वनः
हस्तिनश्चैव सुमहान्भीतस्य रुवतो ध्वनिः ५९
तत्र गच्छाम भद्रं वो राजानं परिरक्षितुम्

अरक्ष्यमाणः समरे क्षिप्रं प्राणान्विमोक्ष्यते ६०
ते त्वरध्वं महावीर्याः किं चिरेण प्रयामहे
महान्हि वर्तते रौद्रः संग्रामो लोमहर्षणः ६१
भक्तश्च कुलपुत्रश्च शूरश्च पृतनापतिः
युक्तं तस्य परित्राणं कर्तुमस्माभिरच्युताः ६२
भीष्मस्य तद्वचः श्रुत्वा भारद्वाजपुरोगमाः
सहिताः सर्वराजानो भगदत्तपरीप्सया
उत्तमं जवमास्थाय प्रययुर्यत्र सोऽभवत् ६३
तान्प्रयातान्समालोक्य युधिष्ठिरपुरोगमाः
पाञ्चालाः पाण्डवैः सार्धं पृष्ठतोऽनुययुः परान् ६४
तान्यनीकान्यथालोक्य राक्षसेन्द्रः प्रतापवान्
ननाद सुमहानादं विस्फोटमशनेरिव ६५
तस्य तं निनदं श्रुत्वा दृष्ट्वा नागांश्च युध्यतः
भीष्मः शान्तनवो भूयो भारद्वाजमभाषत ६६
न रोचते मे संग्रामो हैडिम्बेन दुरात्मना
बलवीर्यसमाविष्टः ससहायश्च सांप्रतम् ६७
नैष शक्यो युधा जेतुमपि वज्रभृता स्वयम्
लब्धलक्ष्यः प्रहारी च वयं च श्रान्तवाहनाः
पाञ्चालैः पाण्डवेयैश्च दिवसं क्षतविक्षताः ६८
तन्न मे रोचते युद्धं पाण्डवैर्जितकाशिभिः
घुष्यतामवहारोऽद्य श्वो योत्स्यामः परैः सह ६९
पितामहवचः श्रुत्वा तथा चक्रुः स्म कौरवाः
उपायेनापयानं ते घटोत्कचभयार्दिताः ७०
कौरवेषु निवृत्तेषु पाण्डवा जितकाशिनः
सिंहनादमकुर्वन्त शङ्खवेणुस्वनैः सह ७१
एवं तदभवद्युद्धं दिवसं भरतर्षभ
पाण्डवानां कुरूणां च पुरस्कृत्य घटोत्कचम् ७२
कौरवास्तु ततो राजन्प्रययुः शिबिरं स्वकम्
व्रीडमाना निशाकाले पाण्डवेयैः पराजिताः ७३
शरविक्षतगात्राश्च पाण्डुपुत्रा महारथाः

युद्धे सुमनसो भूत्वा शिबिरायैव जग्मिरे ७४
पुरस्कृत्य महाराज भीमसेनघटोत्कचौ
पूजयन्तस्तदान्योन्यं मुदा परमया युताः ७५
नदन्तो विविधान्नादांस्तूर्यस्वनविमिश्रितान्
सिंहनादांश्च कुर्वाणा विमिश्राञ्शङ्खनिस्वनैः ७६
विनदन्तो महात्मानः कम्पयन्तश्च मेदिनीम्
घट्टयन्तश्च मर्माणि तव पुत्रस्य मारिष
प्रयाताः शिबिरायैव निशाकाले परन्तपाः ७७
दुर्योधनस्तु नृपतिर्दीनो भ्रातृवधेन च
मुहूर्तं चिन्तयामास बाष्पशोकसमाकुलः ७८
ततः कृत्वा विधिं सर्वं शिबिरस्य यथाविधि
प्रदध्यौ शोकसंतप्तो भ्रातृव्यसनकर्शितः ७९
इति श्रीमहाभारते भीष्मपर्वणि षष्टितमोऽध्यायः ६०

## एक षष्ठितमोऽध्यायः

धृतराष्ट्र उवाच
भयं मे सुमहज्जातं विस्मयश्चैव सञ्जय
श्रुत्वा पाण्डुकुमाराणां कर्म देवैः सुदुष्करम् १
पुत्राणां च पराभवं श्रुत्वा सञ्जय सर्वशः
चिन्ता मे महती सूत भविष्यति कथं त्विति २
ध्रुवं विदुरवाक्यानि धक्ष्यन्ति हृदयं मम
यथा हि दृश्यते सर्वं दैवयोगेन सञ्जय ३
यत्र भीष्ममुखाञ्शूरानस्त्रज्ञान्योधसत्तमान्
पाण्डवानामनीकानि योधयन्ति प्रहारिणः ४
केनावध्या महात्मानः पाण्डुपुत्रा महाबलाः
केन दत्तवरास्तात किं वा ज्ञानं विदन्ति ते
येन क्षयं न गच्छन्ति दिवि तारागणा इव ५
पुनः पुनर्न मृष्यामि हतं सैन्यं स्म पाण्डवैः
मय्येव दण्डः पतति दैवात्परमदारुणः ६
यथावध्याः पाण्डुसुता यथा वध्याश्च मे सुताः

एतन्मे सर्वमाचक्ष्व यथातत्त्वेन सञ्जय ७
न हि पारं प्रपश्यामि दुःखस्यास्य कथञ्चन
समुद्रस्येव महतो भुजाभ्यां प्रतरन्नरः ८
पुत्राणां व्यसनं मन्ये ध्रुवं प्राप्तं सुदारुणम्
घातयिष्यति मे पुत्रान्सर्वान्भीमो न संशयः ९
न हि पश्यामि तं वीरं यो मे रक्षेत्सुतान्रणे
ध्रुवं विनाशः समरे पुत्राणां मम सञ्जय १०
तस्मान्मे कारणं सूत युक्तिं चैव विशेषतः
पृच्छतोऽद्य यथातत्त्वं सर्वमाख्यातुमर्हसि ११
दुर्योधनोऽपि यच्चक्रे दृष्ट्वा स्वान्विमुखान्रणे
भीष्मद्रोणौ कृपश्चैव सौबलेयो जयद्रथः
द्रौणिर्वापि महेष्वासो विकर्णो वा महाबलः १२
निश्चयो वापि कस्तेषां तदा ह्यासीन्महात्मनाम्
विमुखेषु महाप्राज्ञ मम पुत्रेषु सञ्जय १३
सञ्जय उवाच
शृणु राजन्नवहितः श्रुत्वा चैवावधारय
नैव मन्त्रकृतं किञ्चिन्नैव मायां तथाविधाम्
न वै विभीषिकां काञ्चिद्राजन्कुर्वन्ति पाण्डवाः १४
युध्यन्ति ते यथान्यायं शक्तिमन्तश्च संयुगे
धर्मेण सर्वकार्याणि कीर्तितानीति भारत
आरभन्ते सदा पार्थाः प्रार्थयाना महद्यशः १५
न ते युद्धान्निवर्तन्ते धर्मोपेता महाबलाः
श्रिया परमया युक्ता यतो धर्मस्ततो जयः
तेनावध्या रणे पार्था जययुक्ताश्च पार्थिव १६
तव पुत्रा दुरात्मानः पापेष्वभिरताः सदा
निष्ठुरा हीनकर्माणस्तेन हीयन्ति संयुगे १७
सुबहूनि नृशंसानि पुत्रैस्तव जनेश्वर
निकृतानीह पाण्डूनां नीचैरिव यथा नरैः १८
सर्वं च तदनादृत्य पुत्राणां तव किल्बिषम्
सापह्नवाः सदैवासन्पाण्डवाः पाण्डुपूर्वज

न चैतान्बहु मन्यन्ते पुत्रास्तव विशां पते १९
तस्य पापस्य सततं क्रियमाणस्य कर्मणः
सम्प्राप्तं सुमहद्घोरं फलं किंपाकसंनिभम्
स तद्भुंक्ष्व महाराज सपुत्रः ससुहृज्जनः २०
नावबुध्यसि यद्राजन्वार्यमाणः सुहृज्जनैः
विदुरेणाथ भीष्मेण द्रोणेन च महात्मना २१
तथा मया चाप्यसकृद्वार्यमाणो न गृह्णसि
वाक्यं हितं च पथ्यं च मर्त्यः पथ्यमिवौषधम्
पुत्राणां मतमास्थाय जितान्मन्यसि पाण्डवान् २२
शृणु भूयो यथातत्त्वं यन्मां त्वं परिपृच्छसि
कारणं भरतश्रेष्ठ पाण्डवानां जयं प्रति
तत्तेऽहं कथयिष्यामि यथाश्रुतमरिन्दम २३
दुर्योधनेन सम्पृष्ट एतमर्थं पितामहः
दृष्ट्वा भ्रातॄन्रणे सर्वान्निर्जितान्सुमहारथान् २४
शोकसम्मूढहृदयो निशाकाले स्म कौरवः
पितामहं महाप्राज्ञं विनयेनोपगम्य ह
यदब्रवीत्सुतस्तेऽसौ तन्मे शृणु जनेश्वर २५
दुर्योधन उवाच
त्वं च द्रोणश्च शल्यश्च कृपो द्रौणिस्तथैव च
कृतवर्मा च हार्दिक्यः काम्बोजश्च सुदक्षिणः २६
भूरिश्रवा विकर्णश्च भगदत्तश्च वीर्यवान्
महारथाः समाख्याताः कुलपुत्रास्तनुत्यजः २७
त्रयाणामपि लोकानां पर्याप्ता इति मे मतिः
पाण्डवानां समस्ताश्च न तिष्ठन्ति पराक्रमे २८
तत्र मे संशयो जातस्तन्ममाचक्ष्व पृच्छतः
यं समाश्रित्य कौन्तेया जयन्त्यस्मान्पदे पदे २९
भीष्म उवाच
शृणु राजन्वचो मह्यं यत्त्वां वक्ष्यामि कौरव
बहुशश्च ममोक्तोऽसि न च मे तत्त्वया कृतम् ३०
क्रियतां पाण्डवैः सार्धं शमो भरतसत्तम

एतत्क्षममहं मन्ये पृथिव्यास्तव चाभिभो ३१
भुञ्जेमां पृथिवीं राजन्भ्रातृभिः सहितः सुखी
दुर्हृदस्तापयन्सर्वान्नन्दयंश्चापि बान्धवान् ३२
न च मे क्रोशतस्तात श्रुतवानसि वै पुरा
तदिदं समनुप्राप्तं यत्पाण्डूनवमन्यसे ३३
यश्च हेतुरवध्यत्वे तेषामक्लिष्टकर्मणाम्
तं शृणुष्व महाराज मम कीर्तयतः प्रभो ३४
नास्ति लोकेषु तद्भूतं भविता नो भविष्यति
यो जयेत्पाण्डवान्संख्ये पालिताञ्शार्ङ्गधन्वना ३५
यत्तु मे कथितं तात मुनिभिर्भावितात्मभिः
पुराणगीतं धर्मज्ञ तच्छृणुष्व यथातथम् ३६
पुरा किल सुराः सर्वे ऋषयश्च समागताः
पितामहमुपासेदुः पर्वते गन्धमादने ३७
मध्ये तेषां समासीनः प्रजापतिरपश्यत
विमानं जाज्वलद्भासा स्थितं प्रवरमम्बरे ३८
ध्यानेनावेद्य तं ब्रह्मा कृत्वा च नियतोऽञ्जलिम्
नमश्चकार हृष्टात्मा परमं परमेश्वरम् ३९
ऋषयस्त्वथ देवाश्च दृष्ट्वा ब्रह्माणमुत्थितम्
स्थिताः प्राञ्जलयः सर्वे पश्यन्तो महदद्भुतम् ४०
यथावच्च तमभ्यर्च्य ब्रह्मा ब्रह्मविदां वरः
जगाद जगतः स्रष्टा परं परमधर्मवित् ४१
विश्वावसुर्विश्वमूर्तिर्विश्वेशो विष्वक्सेनो विश्वकर्मा वशी च
विश्वेश्वरो वासुदेवोऽसि तस्माद्योगात्मानं दैवतं त्वामुपैमि ४२
जय विश्व महादेव जय लोकहिते रत
जय योगीश्वर विभो जय योगपरावर ४३
पद्मगर्भ विशालाक्ष जय लोकेश्वरेश्वर
भूतभव्यभवन्नाथ जय सौम्यात्मजात्मज ४४
असंख्येयगुणाजेय जय सर्वपरायण
नारायण सुदुष्पार जय शार्ङ्गधनुर्धर ४५
सर्वगुह्यगुणोपेत विश्वमूर्ते निरामय

विश्वेश्वर महाबाहो जय लोकार्थतत्पर ४६
महोरग वराहाद्य हरिकेश विभो जय
हरिवास विशामीश विश्वावासामिताव्यय ४७
व्यक्ताव्यक्तामितस्थान नियतेन्द्रिय सेन्द्रिय
असंख्येयात्मभावज्ञ जय गम्भीर कामद ४८
अनन्त विदितप्रज्ञ नित्यं भूतविभावन
कृतकार्य कृतप्रज्ञ धर्मज्ञ विजयाजय ४९
गुह्यात्मन्सर्वभूतात्मन्स्फुटसंभूतसंभव
भूतार्थतत्त्व लोकेश जय भूतविभावन ५०
आत्मयोने महाभाग कल्पसंक्षेपतत्पर
उद्भावन मनोद्भाव जय ब्रह्मजनप्रिय ५१
निसर्गसर्गाभिरत कामेश परमेश्वर
अमृतोद्भव सद्भाव युगाग्ने विजयप्रद ५२
प्रजापतिपते देव पद्मनाभ महाबल
आत्मभूत महाभूत कर्मात्मञ्जय कर्मद ५३
पादौ तव धरा देवी दिशो बाहुर्दिवं शिरः
मूर्तिस्तेऽह सुराः कायश्चन्द्रादित्यौ च चक्षुषी ५४
बलं तपश्च सत्यं च धर्मः कामात्मजः प्रभो
तेजोऽग्नि पवनः श्वास आपस्ते स्वेदसंभवाः ५५
अश्विनौ श्रवणौ नित्यं देवी जिह्वा सरस्वती
वेदाः संस्कारनिष्ठा हि त्वयीदं जगदाश्रितम् ५६
न संख्यां न परीमाणं न तेजो न पराक्रमम्
न बलं योगयोगीश जानीमस्ते न संभवम् ५७
त्वद्भक्तिनिरता देव नियमैस्त्वा समाहिताः
अर्चयामः सदा विष्णो परमेशं महेश्वरम् ५८
ऋषयो देवगन्धर्वा यक्षराक्षसपन्नगाः
पिशाचा मानुषाश्चैव मृगपक्षिसरीसृपाः ५९
एवमादि मया सृष्टं पृथिव्यां त्वत्प्रसादजम्
पद्मनाभ विशालाक्ष कृष्ण दुःस्वप्ननाशन ६०
त्वं गतिः सर्वभूतानां त्वं नेता त्वं जगन्मुखम्

त्वत्प्रसादेन देवेश सुखिनो विबुधाः सदा ६१
पृथिवी निर्भया देव त्वत्प्रसादात्सदाभवत्
तस्माद्भव विशालाक्ष यदुवंशविवर्धनः ६२
धर्मसंस्थापनार्थाय दैतेयानां वधाय च
जगतो धारणार्थाय विज्ञाप्यं कुरु मे प्रभो ६३
यदेतत्परमं गुह्यं त्वत्प्रसादमयं विभो
वासुदेव तदेतत्ते मयोद्गीतं यथातथम् ६४
सृष्ट्वा सङ्कर्षणं देवं स्वयमात्मानमात्मना
कृष्ण त्वमात्मनास्राक्षीः प्रद्युम्नं चात्मसंभवम् ६५
प्रद्युम्नाच्चानिरुद्धं त्वं यं विदुर्विष्णुमव्ययम्
अनिरुद्धोऽसृजन्मां वै ब्रह्माणं लोकधारिणम् ६६
वासुदेवमयः सोऽह त्वयैवास्मि विनिर्मितः
विभज्य भागशोऽत्मानं व्रज मानुषतां विभो ६७
तत्रासुरवधं कृत्वा सर्वलोकसुखाय वै
धर्मं स्थाप्य यशः प्राप्य योगं प्राप्स्यसि तत्त्वतः ६८
त्वां हि ब्रह्मर्षयो लोके देवाश्चामितविक्रम
तैस्तैश्च नामभिर्भक्ता गायन्ति परमात्मकम् ६९
स्थिताश्च सर्वे त्वयि भूतसंघाः कृत्वाश्रयं त्वां वरदं सुबाहो
अनादिमध्यान्तमपारयोगं लोकस्य सेतुं प्रवदन्ति विप्राः ७०
इति श्रीमहाभारते भीष्मपर्वणि एकषष्टितमोऽध्यायः ६१

## द्विषष्टितमोऽध्यायः

भीष्म उवाच
ततः स भगवान्देवो लोकानां परमेश्वरः
ब्रह्माणं प्रत्युवाचेदं स्निग्धगम्भीरया गिरा १
विदितं तात योगान्मे सर्वमेतत्तवेप्सितम्
तथा तद्भवितेत्युक्त्वा तत्रैवान्तरधीयत २
ततो देवर्षिगन्धर्वा विस्मयं परमं गताः
कौतूहलपराः सर्वे पितामहमथाब्रुवन् ३
को न्वयं यो भगवता प्रणम्य विनयाद्विभो

वाग्भिः स्तुतो वरिष्ठाभिः श्रोतुमिच्छाम तं वयम् ४
एवमुक्तस्तु भगवान्प्रत्युवाच पितामहः
देवब्रह्मर्षिगन्धर्वान्सर्वान्मधुरया गिरा ५
यत्तत्परं भविष्यं च भवितव्यं च यत्परम्
भूतात्मा यः प्रभुश्चैव ब्रह्म यच्च परं पदम् ६
तेनास्मि कृतसंवादः प्रसन्नेन सुरर्षभाः
जगतोऽनुग्रहार्थाय याचितो मे जगत्पतिः ७
मानुषं लोकमातिष्ठ वासुदेव इति श्रुतः
असुराणां वधार्थाय सम्भवस्व महीतले ८
संग्रामे निहता ये ते दैत्यदानवराक्षसाः
त इमे नृषु संभूता घोररूपा महाबलाः ९
तेषां वधार्थं भगवान्नरेण सहितो वशी
मानुषीं योनिमास्थाय चरिष्यति महीतले १०
नरनारायणौ यौ तौ पुराणावृषिसत्तमौ
सहितौ मानुषे लोके संभूतावमितद्युती ११
अजेयौ समरे यत्तौ सहितावमरैरपि
मूढास्त्वेतौ न जानन्ति नरनारायणावृषी १२
तस्याहमात्मजो ब्रह्मा सर्वस्य जगतः पतिः
वासुदेवोऽर्चनीयो वः सर्वलोकमहेश्वरः १३
तथा मनुष्योऽयमिति कदाचित्सुरसत्तमाः
नावज्ञेयो महावीर्यः शङ्खचक्रगदाधरः १४
एतत्परमकं गुह्यमेतत्परमकं पदम्
एतत्परमकं ब्रह्म एतत्परमकं यशः १५
एतदक्षरमव्यक्तमेतत्तच्छाश्वतं महत्
एतत्पुरुषसंज्ञं वै गीयते ज्ञायते न च १६
एतत्परमकं तेज एतत्परमकं सुखम्
एतत्परमकं सत्यं कीर्तितं विश्वकर्मणा १७
तस्मात्सर्वैः सुरैः सेन्द्रैर्लोकैश्चामितविक्रमः
नावज्ञेयो वासुदेवो मानुषोऽयमिति प्रभुः १८
यश्च मानुषमात्रोऽयमिति ब्रूयात्सुमन्दधीः

हृषीकेशमवज्ञानात्तमाहुः पुरुषाधमम् १९
योगिनं तं महात्मानं प्रविष्टं मानुषीं तनुम्
अवमन्येद्वासुदेवं तमाहुस्तामसं जनाः २०
देवं चराचरात्मानं श्रीवत्साङ्कं सुवर्चसम्
पद्मनाभं न जानाति तमाहुस्तामसं जनाः २१
किरीटकौस्तुभधरं मित्राणामभयंकरम्
अवजानन्महात्मानं घोरे तमसि मज्जति २२
एवं विदित्वा तत्त्वार्थं लोकानामीश्वरेश्वरः
वासुदेवो नमस्कार्यः सर्वलोकैः सुरोत्तमाः २३
एवमुक्त्वा स भगवान्सर्वान्देवगणान्पुरा
विसृज्य सर्वलोकात्मा जगाम भवनं स्वकम् २४
ततो देवाः सगन्धर्वा मुनयोऽप्सरसोऽपि च
कथां तां ब्रह्मणा गीतां श्रुत्वा प्रीता दिवं ययुः २५
एतच्छ्रुतं मया तात ऋषीणां भावितात्मनाम्
वासुदेवं कथयतां समवाये पुरातनम् २६
जामदग्न्यस्य रामस्य मार्कण्डेयस्य धीमतः
व्यासनारदयोश्चापि श्रुतं श्रुतविशारद २७
एतमर्थं च विज्ञाय श्रुत्वा च प्रभुमव्ययम्
वासुदेवं महात्मानं लोकानामीश्वरेश्वरम् २८
यस्यासावात्मजो ब्रह्मा सर्वस्य जगतः पिता
कथं न वासुदेवोऽयमर्च्यश्चेज्यश्च मानवैः २९
वारितोऽसि पुरा तात मुनिभिर्वेदपारगैः
मा गच्छ संयुगं तेन वासुदेवेन धीमता
मा पाण्डवैः सार्धमिति तच्च मोहान्न बुध्यसे ३०
मन्ये त्वां राक्षसं क्रूरं तथा चासि तमोवृतः
यस्माद्द्विषसि गोविन्दं पाण्डवं च धनञ्जयम्
नरनारायणौ देवौ नान्यो द्विष्याद्धि मानवः ३१
तस्माद्ब्रवीमि ते राजन्नेष वै शाश्वतोऽव्ययः
सर्वलोकमयो नित्यः शास्ता धाता धरो ध्रुवः ३२
लोकान्धारयते यस्त्रींश्चराचरगुरुः प्रभुः

योद्धा जयश्च जेता च सर्वप्रकृतिरीश्वरः ३३
राजन्सत्त्वमयो ह्येष तमोरागविवर्जितः
यतः कृष्णस्ततो धर्मो यतो धर्मस्ततो जयः ३४
तस्य महात्म्ययोगेन योगेनात्मन एव च
धृताः पाण्डुसुता राजञ्जयश्चैषां भविष्यति ३५
श्रेयोयुक्तां सदा बुद्धिं पाण्डवानां दधाति यः
बलं चैव रणे नित्यं भयेभ्यश्चैव रक्षति ३६
स एष शाश्वतो देवः सर्वगुह्यमयः शिवः
वासुदेव इति ज्ञेयो यन्मां पृच्छसि भारत ३७
ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च कृतलक्षणैः
सेव्यतेऽभ्यर्च्यते चैव नित्ययुक्तैः स्वकर्मभिः ३८
द्वापरस्य युगस्यान्ते आदौ कलियुगस्य च
सात्वतं विधिमास्थाय गीतः सङ्कर्षणेन यः ३९
स एष सर्वासुरमर्त्यलोकं समुद्रकक्ष्यान्तरिताः पुरीश्च
युगे युगे मानुषं चैव वासं पुनः पुनः सृजते वासुदेवः ४०
इति श्रीमहाभारते भीष्मपर्वणि द्विषष्टितमोऽध्यायः ६२

त्रिषष्टितमोऽध्यायः

दुर्योधन उवाच
वासुदेवो महद्भूतं सर्वलोकेषु कथ्यते
तस्यागमं प्रतिष्ठां च ज्ञातुमिच्छे पितामह १
भीष्म उवाच
वासुदेवो महद्भूतं संभूतं सह दैवतैः
न परं पुण्डरीकाक्षाद्दृश्यते भरतर्षभ
मार्कण्डेयश्च गोविन्दं कथयत्यद्भुतं महत् २
सर्वभूतानि भूतात्मा महात्मा पुरुषोत्तमः
आपो वायुश्च तेजश्च त्रयमेतदकल्पयत् ३
स सृष्ट्वा पृथिवीं देवः सर्वलोकेश्वरः प्रभुः
अप्सु वै शयनं चक्रे महात्मा पुरुषोत्तमः
सर्वतोयोमयो देवो योगात्सुष्वाप तत्र ह ४

मुखतः सोऽग्निमसृजत्प्राणाद्वायुमथापि च
सरस्वतीं च वेदांश्च मनसः ससृजेऽच्युतः ५
एष लोकान्ससर्जादौ देवांश्चर्षिगणैः सह
निधनं चैव मृत्युं च प्रजानां प्रभवोऽव्ययः ६
एष धर्मश्च धर्मज्ञो वरदः सर्वकामदः
एष कर्ता च कार्यं च पूर्वदेवः स्वयंप्रभुः ७
भूतं भव्यं भविष्यच्च पूर्वमेतदकल्पयत्
उभे संध्ये दिशः खं च नियमं च जनार्दनः ८
ऋषींश्चैव हि गोविन्दस्तपश्चैवानु कल्पयत्
स्रष्टारं जगतश्चापि महात्मा प्रभुरव्ययः ९
अग्रजं सर्वभूतानां संकर्षणमकल्पयत्
शेषं चाकल्पयद्देवमनन्तमिति यं विदुः १०
यो धारयति भूतानि धरां चेमां सपर्वताम्
ध्यानयोगेन विप्राश्च तं वदन्ति महौजसम् ११
कर्णस्रोतोद्भवं चापि मधुं नाम महासुरम्
तमुग्रमुग्रकर्माणमुग्रां बुद्धिं समास्थितम्
ब्रह्मणोऽपचितिं कुर्वञ्जघान पुरुषोत्तमः १२
तस्य तात वधादेव देवदानवमानवाः
मधुसूदनमित्याहुर्ऋषयश्च जनार्दनम्
वराहश्चैव सिंहश्च त्रिविक्रमगतिः प्रभुः १३
एष माता पिता चैव सर्वेषां प्राणिनां हरिः
परं हि पुण्डरीकाक्षान्न भूतं न भविष्यति १४
मुखतोऽसृजद्ब्राह्मणान्बाहुभ्यां क्षत्रियांस्तथा
वैश्यांश्चाप्यूरुतो राजञ्शूद्रान्पद्भ्यां तथैव च
तपसा नियतो देवो निधानं सर्वदेहिनाम् १५
ब्रह्मभूतममावास्यां पौर्णमास्यां तथैव च
योगभूतं परिचरन्केशवं महदाप्नुयात् १६
केशवः परमं तेजः सर्वलोकपितामहः
एवमाहुर्हृषीकेशं मुनयो वै नराधिप १७
एवमेनं विजानीहि आचार्यं पितरं गुरुम्

कृष्णो यस्य प्रसीदेत लोकास्तेनाक्षया जिताः १८
यश्चैवैनं भयस्थाने केशवं शरणं व्रजेत्
सदा नरः पठंश्चेदं स्वस्तिमान्स सुखी भवेत् १९
ये च कृष्णं प्रपद्यन्ते ते न मुह्यन्ति मानवाः
भये महति ये मग्नाः पाति नित्यं जनार्दनः २०
एतद्युधिष्ठिरो ज्ञात्वा याथातथ्येन भारत
सर्वात्मना महात्मानं केशवं जगदीश्वरम्
प्रपन्नः शरणं राजन्योगानामीश्वरं प्रभुम् २१
इति श्रीमहाभारते भीष्मपर्वणि त्रिषष्टितमोऽध्यायः ६३

## चतुः षष्टितमोऽध्यायः

भीष्म उवाच
शृणु चेदं महाराज ब्रह्मभूतस्तवं मम
ब्रह्मर्षिभिश्च देवैश्च यः पुरा कथितो भुवि १
साध्यानामपि देवानां देवदेवेश्वरः प्रभुः
लोकभावनभावज्ञ इति त्वां नारदोऽब्रवीत्
भूतं भव्यं भविष्यं च मार्कण्डेयोऽभ्युवाच ह २
यज्ञानां चैव यज्ञं त्वां तपश्च तपसामपि
देवानामपि देवं च त्वामाह भगवान्भृगुः
पुराणे भैरवं रूपं विष्णो भूतपतेति वै ३
वासुदेवो वसूनां त्वं शक्रं स्थापयिता तथा
देवदेवोऽसि देवानामिति द्वैपायनोऽब्रवीत् ४
पूर्वे प्रजानिसर्गेषु दक्षमाहुः प्रजापतिम्
स्रष्टारं सर्वभूतानामङ्गिरास्त्वां ततोऽब्रवीत् ५
अव्यक्तं ते शरीरोत्थं व्यक्तं ते मनसि स्थितम्
देवा वाक्संभवाश्चेति देवलस्त्वसितोऽब्रवीत् ६
शिरसा ते दिवं व्याप्तं बाहुभ्यां पृथिवी धृता
जठरं ते त्रयो लोकाः पुरुषोऽसि सनातनः ७
एवं त्वामभिजानन्ति तपसा भाविता नराः
आत्मदर्शनतृप्तानामृषीणां चापि सत्तमः ८

राजर्षीणामुदाराणामाहवेष्वनिवर्तिनाम्
सर्वधर्मप्रधानानां त्वं गतिर्मधुसूदन ९
एष ते विस्तरस्तात संक्षेपश्च प्रकीर्तितः
केशवस्य यथातत्त्वं सुप्रीतो भव केशवे १०
सञ्जय उवाच
पुण्यं श्रुत्वैतदाख्यानं महाराज सुतस्तव
केशवं बहु मेने स पाण्डवांश्च महारथान् ११
तमब्रवीन्महाराज भीष्मः शांतनवः पुनः
माहात्म्यं ते श्रुतं राजन्केशवस्य महात्मनः १२
नरस्य च यथातत्त्वं यन्मां त्वं परिपृच्छसि
यदर्थं नृषु संभूतौ नरनारायणावुभौ १३
अवध्यौ च यथा वीरौ संयुगेष्वपराजितौ
यथा च पाण्डवा राजन्नगम्या युधि कस्यचित् १४
प्रीतिमान्हि दृढं कृष्णः पाण्डवेषु यशस्विषु
तस्माद्ब्रवीमि राजेन्द्र शमो भवतु पाण्डवैः १५
पृथिवीं भुङ्क्ष्व सहितो भ्रातृभिर्बलिभिर्वशी
नरनारायणौ देवाववज्ञाय नशिष्यसि १६
एवमुक्त्वा तव पिता तूष्णीमासीद्विशां पते
व्यसर्जयच्च राजानं शयनं च विवेश ह १७
राजापि शिबिरं प्रायात्प्रणिपत्य महात्मने
शिश्ये च शयने शुभ्रे तां रात्रिं भरतर्षभ १८
इति श्रीमहाभारते भीष्मपर्वणि चतुःषष्टितमोऽध्यायः ६४

पञ्चषष्टितमोऽध्यायः

सञ्जय उवाच
व्युषितायां च शर्वर्यामुदिते च दिवाकरे
उभे सेने महाराज युद्धायैव समीयतुः १
अभ्यधावंश्च संक्रुद्धाः परस्परजिगीषवः
ते सर्वे सहिता युद्धे समालोक्य परस्परम् २
पाण्डवा धार्तराष्ट्राश्च राजन्दुर्मन्त्रिते तव

व्यूहौ च व्यूह्य संरब्धाः सम्प्रयुद्धाः प्रहारिणः ३
अरचन्मकरव्यूहं भीष्मो राजन्समन्ततः
तथैव पाण्डवा राजन्नरचन्व्यूहमात्मनः ४
स निर्ययौ रथानीकं पिता देवव्रतस्तव
महता रथवंशेन संवृतो रथिनां वरः ५
इतरेतरमन्वीयुर्यथाभागमवस्थिताः
रथिनः पत्तयश्चैव दन्तिनः सादिनस्तथा ६
तान्दृष्ट्वा प्रोद्यतान्संख्ये पाण्डवाश्च यशस्विनः
श्येनेन व्यूहराजेन तेनाजय्येन संयुगे ७
अशोभत मुखे तस्य भीमसेनो महाबलः
नेत्रे शिखण्डी दुर्धर्षो धृष्टद्युम्नश्च पार्षतः ८
शीर्षं तस्याभवद्वीरः सात्यकिः सत्यविक्रमः
विधुन्वन्गाण्डिवं पार्थो ग्रीवायामभवत्तदा ९
अक्षौहिण्या समग्रा या वामपक्षोऽभवत्तदा
महात्मा द्रुपदः श्रीमान्सह पुत्रेण संयुगे १०
दक्षिणाश्चाभवत्पक्षः कैकेयोऽक्षौहिणीपतिः
पृष्ठतो द्रौपदेयाश्च सौभद्रश्चापि वीर्यवान् ११
पृष्ठे समभवच्छ्रीमान्स्वयं राजा युधिष्ठिरः
भ्रातृभ्यां सहितो धीमान्यमाभ्यां चारुविक्रमः १२
प्रविश्य तु रणे भीमो मकरं मुखतस्तदा
भीष्ममासाद्य संग्रामे छादयामास सायकैः १३
ततो भीष्मो महास्त्राणि पातयामास भारत
मोहयन्पाण्डुपुत्राणां व्यूढं सैन्यं महाहवे १४
संमुह्यति तदा सैन्ये त्वरमाणो धनञ्जयः
भीष्मं शरसहस्रेण विव्याध रणमूर्धनि १५
परिसंवार्य चास्त्राणि भीष्ममुक्तानि संयुगे
स्वेनानीकेन हृष्टेन युद्धाय समवस्थितः १६
ततो दुर्योधनो राजा भारद्वाजमभाषत
पूर्वं दृष्ट्वा वधं घोरं बलस्य बलिनां वरः
भ्रातृणां च वधं युद्धे स्मरमाणो महारथः १७

आचार्य सततं त्वं हि हितकामो ममानघ
वयं हि त्वां समाश्रित्य भीष्मं चैव पितामहम् १८
देवानपि रणे जेतुं प्रार्थयामो न संशयः
किमु पाण्डुसुतान्युद्धे हीनवीर्यपराक्रमान् १९
एवमुक्तस्ततो द्रोणस्तव पुत्रेण मारिष
अभिनत्पाण्डवानीकं प्रेक्षमाणस्य सात्यकेः २०
सात्यकिस्तु तदा द्रोणं वारयामास भारत
ततः प्रववृते युद्धं तुमुलं लोमहर्षणम् २१
शैनेयं तु रणे क्रुद्धो भारद्वाजः प्रतापवान्
अविध्यन्निशितैर्बाणैर्जत्रुदेशे हसन्निव २२
भीमसेनस्ततः क्रुद्धो भारद्वाजमविध्यत
संरक्षन्सात्यकिं राजन्द्रोणाच्छस्त्रभृतां वरात् २३
ततो द्रोणश्च भीष्मश्च तथा शल्यश्च मारिष
भीमसेनं रणे क्रुद्धाश्छादयांचक्रिरे शरैः २४
तत्राभिमन्युः संक्रुद्धो द्रौपदेयाश्च मारिष
विव्यधुर्निशितैर्बाणैः सर्वांस्तानुद्यतायुधान् २५
भीष्मद्रोणौ च संक्रुद्धावापतन्तौ महाबलौ
प्रत्युद्ययौ शिखण्डी च महेष्वासो महाहवे २६
प्रगृह्य बलवद्वीरो धनुर्जलदनिस्वनम्
अभ्यवर्षच्छरैस्तूर्णं छादयानो दिवाकरम् २७
शिखण्डिनं समासाद्य भरतानां पितामहः
अवर्जयत संग्रामे स्त्रीत्वं तस्यानुसंस्मरन् २८
ततो द्रोणो महाराज अभ्यद्रवत तं रणे
रक्षमाणस्ततो भीष्मं तव पुत्रेण चोदितः २९
शिखण्डी तु समासाद्य द्रोणं शस्त्रभृतां वरम्
अवर्जयत संग्रामे युगान्ताग्निमिवोल्बणम् ३०
ततो बलेन महता पुत्रस्तव विशां पते
जुगोप भीष्ममासाद्य प्रार्थयानो महद्यशः ३१
तथैव पाण्डवा राजन्पुरस्कृत्य धनञ्जयम्
भीष्ममेवाभ्यवर्तन्त जये कृत्वा दृढां मतिम् ३२

तद्युद्धमभवद्घोरं देवानां दानवैरिव
जयं च काङ्क्षतां नित्यं यशश्च परमाद्भुतम् ३३
इति श्रीमहाभारते भीष्मपर्वणि पञ्चषष्टितमोऽध्यायः ६५

## षट् षष्ठितमोऽध्यायः

सञ्जय उवाच
अकरोत्तुमुलं युद्धं भीष्मः शान्तनवस्तदा
भीमसेनभयादिच्छन्पुत्रांस्तारयितुं तव १
पूर्वाह्णे तन्महारौद्रं राज्ञां युद्धमवर्तत
कुरूणां पाण्डवानां च मुख्यशूरविनाशनम् २
तस्मिन्नाकुलसंग्रामे वर्तमाने महाभये
अभवत्तुमुलः शब्दः संस्पृशन्गगनं महत् ३
नदद्भिश्च महानागैर्हेषमाणैश्च वाजिभिः
भेरीशङ्खनिनादैश्च तुमुलः समपद्यत ४
युयुत्सवस्ते विक्रान्ता विजयाय महाबलाः
अन्योन्यमभिगर्जन्तो गोष्ठेष्विव महर्षभाः ५
शिरसां पात्यमानानां समरे निशितैः शरैः
अश्मवृष्टिरिवाकाशे बभूव भरतर्षभ ६
कुण्डलोष्णीषधारीणि जातरूपोज्ज्वलानि च
पतितानि स्म दृश्यन्ते शिरांसि भरतर्षभ ७
विशिखोन्मथितैर्गात्रैर्बाहुभिश्च सकार्मुकैः
सहस्ताभरणैश्चान्यैरभवच्छादिता मही ८
कवचोपहितैर्गात्रैर्हस्तैश्च समलंकृतैः
मुखैश्च चन्द्रसङ्काशै रक्तान्तनयनैः शुभैः ९
गजवाजिमनुष्याणां सर्वगात्रैश्च भूपते
आसीत्सर्वा समाकीर्णा मुहूर्तेन वसुंधरा १०
रजोमेघैश्च तुमुलैः शस्त्रविद्युत्प्रकाशितैः
आयुधानां च निर्घोषः स्तनयित्नुसमोऽभवत् ११
स संप्रहारस्तुमुलः कटुकः शोणितोदकः
प्रावर्तत कुरूणां च पाण्डवानां च भारत १२

तस्मिन्महाभये घोरे तुमुले लोमहर्षणे
ववर्षुः शरवर्षाणि क्षत्रिया युद्धदुर्मदाः १३
क्रोशन्ति कुञ्जरास्तत्र शरवर्षप्रतापिताः
तावकानां परेषां च संयुगे भरतोत्तम
अश्वाश्च पर्यधावन्त हतारोहा दिशो दश १४
उत्पत्य निपतन्त्यन्ये शरघातप्रपीडिताः
तावकानां परेषां च योधानां भरतर्षभ १५
अश्वानां कुञ्जराणां च रथानां चातिवर्तताम्
संघाताः स्म प्रदृश्यन्ते तत्र तत्र विशां पते १६
गदाभिरसिभिः प्रासैर्बाणैश्च नतपर्वभिः
जघ्नुः परस्परं तत्र क्षत्रियाः कालचोदिताः १७
अपरे बाहुभिर्वीरा नियुद्धकुशला युधि
बहुधा समसज्जन्त आयसैः परिघैरिव १८
मुष्टिभिर्जानुभिश्चैव तलैश्चैव विशां पते
अन्योन्यं जघ्निरे वीरास्तावकाः पाण्डवैः सह १९
विरथा रथिनश्चात्र निस्त्रिंशवरधारिणः
अन्योन्यमभिधावन्त परस्परवधैषिणः २०
ततो दुर्योधनो राजा कलिङ्गैर्बहुभिर्वृतः
पुरस्कृत्य रणे भीष्मं पाण्डवानभ्यवर्तत २१
तथैव पाण्डवाः सर्वे परिवार्य वृकोदरम्
भीष्ममभ्यद्रवन्क्रुद्धा रणे रभसवाहनाः २२
इति श्रीमहाभारते भीष्मपर्वणि षट्षष्टितमोऽध्यायः ६६

## सप्तषष्टितमोऽध्यायः

सञ्जय उवाच
दृष्ट्वा भीष्मेण संसक्तान्भ्रातॄनन्यांश्च पार्थिवान्
तमभ्यधावद्गाङ्गेयमुद्यतास्त्रो धनञ्जयः १
पाञ्चजन्यस्य निर्घोषं धनुषो गाण्डिवस्य च
ध्वजं च दृष्ट्वा पार्थस्य सर्वान्नो भयमाविशत् २
असज्जमानं वृक्षेषु धूमकेतुमिवोत्थितम्

बहुवर्णं च चित्रं च दिव्यं वानरलक्षणम्
अपश्याम महाराज ध्वजं गाण्डिवधन्वनः ३
विद्युतं मेघमध्यस्थां भ्राजमानामिवाम्बरे
ददृशुर्गाण्डिवं योधा रुक्मपृष्ठं महारथे ४
अशुश्रुम भृशं चास्य शक्रस्येवाभिगर्जतः
सुघोरं तलयोः शब्दं निघ्नतस्तव वाहिनीम् ५
चण्डवातो यथा मेघः सविद्युत्स्तनयित्नुमान्
दिशः संप्लावयन्सर्वाः शरवर्षैः समन्ततः ६
अभ्यधावत गाङ्गेयं भैरवास्त्रो धनञ्जयः
दिशं प्राचीं प्रतीचीं च न जानीमोऽस्त्रमोहिताः ७
कांदिग्भूताः श्रान्तपत्रा हतास्त्रा हतचेतसः
अन्योन्यमभिसंश्लिष्य योधास्ते भरतर्षभ ८
भीष्ममेवाभिलीयन्त सह सर्वैस्तवात्मजैः
तेषामार्तायनमभूद्भीष्मः शांतनवो रणे ९
समुत्पतन्त वित्रस्ता रथेभ्यो रथिनस्तदा
सादिनश्चाश्वपृष्ठेभ्यो भूमौ चापि पदातयः १०
श्रुत्वा गाण्डीवनिर्घोषं विस्फूर्जितमिवाशनेः
सर्वसैन्यानि भीतानि व्यवलीयन्त भारत ११
अथ काम्बोजमुख्यैस्तु बृहद्भिः शीघ्रगामिभिः
गोपानां बहुसाहस्रैर्बलैर्गोवासनो वृतः १२
मद्रसौवीरगान्धारैस्त्रिगर्तैश्च विशां पते
सर्वकालिङ्गमुख्यैश्च कलिङ्गाधिपतिर्वृतः १३
नागा नरगणौघाश्च दुःशासनपुरःसराः
जयद्रथश्च नृपतिः सहितः सर्वराजभिः १४
हयारोहवराश्चैव तव पुत्रेण चोदिताः
चतुर्दश सहस्राणि सौबलं पर्यवारयन् १५
ततस्ते सहिताः सर्वे विभक्तरथवाहनाः
पाण्डवान्समरे जग्मुस्तावका भरतर्षभ १६
रथिभिर्वारणैरश्वैः पदातैश्च समीरितम्
घोरमायोधनं जज्ञे महाभ्रसदृशं रजः १७

तोमरप्रासनाराचगजाश्वरथयोधिनाम्
बलेन महता भीष्मः समसज्जत्किरीटिना १८
आवन्त्यः काशिराजेन भीमसेनेन सैन्धवः
अजातशत्रुर्मद्राणामृषभेण यशस्विना
सहपुत्रः सहामात्यः शल्येन समसज्जत १९
विकर्णः सहदेवेन चित्रसेनः शिखण्डिना
मत्स्या दुर्योधनं जग्मुः शकुनिं च विशां पते २०
द्रुपदश्चेकितानश्च सात्यकिश्च महारथः
द्रोणेन समसज्जन्त सपुत्रेण महात्मना
कृपश्च कृतवर्मा च धृष्टकेतुमभिद्रुतौ २१
एवं प्रजविताश्वानि भ्रान्तनागरथानि च
सैन्यानि समसज्जन्त प्रयुद्धानि समन्ततः २२
निरभ्रे विद्युतस्तीव्रा दिशश्च रजसावृताः
प्रादुरासन्महोल्काश्च सनिर्घाता विशां पते २३
प्रववौ च महावातः पांसुवर्षं पपात च
नभस्यन्तर्दधे सूर्यः सैन्येन रजसावृतः २४
प्रमोहः सर्वसत्त्वानामतीव समपद्यत
रजसा चाभिभूतानामस्त्रजालैश्च तुद्यताम् २५
वीरबाहुविसृष्टानां सर्वावरणभेदिनाम्
संघातः शरजालानां तुमुलः समपद्यत २६
प्रकाशं चक्रुराकाशमुद्यतानि भुजोत्तमैः
नक्षत्रविमलाभानि शस्त्राणि भरतर्षभ २७
आर्षभाणि विचित्राणि रुक्मजालावृतानि च
संपेतुर्दिक्षु सर्वासु चर्माणि भरतर्षभ २८
सूर्यवर्णैश्च निस्त्रिंशैः पात्यमानानि सर्वशः
दिक्षु सर्वास्वदृश्यन्त शरीराणि शिरांसि च २९
भग्नचक्राक्षनीडाश्च निपातितमहाध्वजाः
हताश्वाः पृथिवीं जग्मुस्तत्र तत्र महारथाः ३०
परिपेतुर्हयाश्चात्र केचिच्छस्त्रकृतव्रणाः
रथान्विपरिकर्षन्तो हतेषु रथयोधिषु ३१

शराहता भिन्नदेहा बद्धयोक्त्रा हयोत्तमाः
युगानि पर्यकर्षन्त तत्र तत्र स्म भारत ३२
अदृश्यन्त ससूताश्च साश्वाः सरथयोधिनः
एकेन बलिना राजन्वारणेन हता रथाः ३३
गन्धहस्तिमदस्रावमाघ्राय बहवो रणे
संनिपाते बलौघानां वीतमाददिरे गजाः ३४
सतोमरमहामात्रैर्निपतद्भिर्गतासुभिः
बभूवायोधनं छन्नं नाराचाभिहतैर्गजैः ३५
संनिपाते बलौघानां प्रेषितैर्वरवारणैः
निपेतुर्युधि संभग्नाः सयोधाः सध्वजा रथाः ३६
नागराजोपमैर्हस्तैर्नागैराक्षिप्य संयुगे
व्यदृश्यन्त महाराज संभग्ना रथकूबराः ३७
विशीर्णरथजालाश्च केशेष्वाक्षिप्य दन्तिभिः
द्रुमशाखा इवाविध्य निष्पिष्टा रथिनो रणे ३८
रथेषु च रथान्युद्धे संसक्तान्वरवारणाः
विकर्षन्तो दिशः सर्वाः संपेतुः सर्वशब्दगाः ३९
तेषां तथा कर्षतां च गजानां रूपमाबभौ
सरःसु नलिनीजालं विषक्तमिव कर्षताम् ४०
एवं संछादितं तत्र बभूवायोधनं महत्
सादिभिश्च पदातैश्च सध्वजैश्च महारथैः ४१
इति श्रीमहाभारते भीष्मपर्वणि सप्तषष्टितमोऽध्यायः ६७

अष्ट षष्ठितमोऽध्यायः

सञ्जय उवाच
शिखण्डी सह मत्स्येन विराटेन विशां पते
भीष्ममाशु महेष्वासमाससाद सुदुर्जयम् १
द्रोणं कृपं विकर्णं च महेष्वासान्महाबलान्
राज्ञश्चान्यान्रणे शूरान्बहूनार्छद्धनञ्जयः २
सैन्धवं च महेष्वासं सामात्यं सह बन्धुभिः
प्राच्यांश्च दाक्षिणात्यांश्च भूमिपान्भूमिपर्षभ ३

पुत्रं च ते महेष्वासं दुर्योधनममर्षणम्
दुःसहं चैव समरे भीमसेनोऽभ्यवर्तत ४
सहदेवस्तु शकुनिमुलूकं च महारथम्
पितापुत्रौ महेष्वासावभ्यवर्तत दुर्जयौ ५
युधिष्ठिरो महाराज गजानीकं महारथः
समवर्तत संग्रामे पुत्रेण निकृतस्तव ६
माद्रीपुत्रस्तु नकुलः शूरः संक्रन्दनो युधि
त्रिगर्तानां रथोदारैः समसज्जत पाण्डवः ७
अभ्यवर्तन्त दुर्धर्षाः समरे शाल्वकेकयान्
सात्यकिश्चेकितानश्च सौभद्रश्च महारथः ८
धृष्टकेतुश्च समरे राक्षसश्च घटोत्कचः
पुत्राणां ते रथानीकं प्रत्युद्याताः सुदुर्जयाः ९
सेनापतिरमेयात्मा धृष्टद्युम्नो महाबलः
द्रोणेन समरे राजन्समियायेन्द्रकर्मणा १०
एवमेते महेष्वासास्तावकाः पाण्डवैः सह
समेत्य समरे शूराः संप्रहारं प्रचक्रिरे ११
मध्यंदिनगते सूर्ये नभस्याकुलतां गते
कुरवः पाण्डवेयाश्च निजघ्नुरितरेतरम् १२
ध्वजिनो हेमचित्राङ्गा विचरन्तो रणाजिरे
सपताका रथा रेजुर्वैयाघ्रपरिवारणाः १३
समेतानां च समरे जिगीषूणां परस्परम्
बभूव तुमुलः शब्दः सिंहानामिव नर्दताम् १४
तत्राद्भुतमपश्याम संप्रहारं सुदारुणम्
यमकुर्वन्रणे वीराः सृञ्जयाः कुरुभिः सह १५
नैव खं न दिशो राजन्न सूर्यं शत्रुतापन
विदिशो वाप्यपश्याम शरैर्मुक्तैः समन्ततः १६
शक्तीनां विमलाग्राणां तोमराणां तथास्यताम्
निस्त्रिंशानां च पीतानां नीलोत्पलनिभाः प्रभाः १७
कवचानां विचित्राणां भूषणानां प्रभास्तथा
खं दिशः प्रदिशश्चैव भासयामासुरोजसा

विरराज तदा राजंस्तत्र तत्र रणाङ्गणम् १८
रथसिंहासनव्याघ्राः समायान्तश्च संयुगे
विरेजुः समरे राजन्ग्रहा इव नभस्तले १९
भीष्मस्तु रथिनां श्रेष्ठो भीमसेनं महाबलम्
अवारयत संक्रुद्धः सर्वसैन्यस्य पश्यतः २०
ततो भीष्मविनिर्मुक्ता रुक्मपुङ्खाः शिलाशिताः
अभ्यघ्नन्समरे भीमं तैलधौताः सुतेजनाः २१
तस्य शक्तिं महावेगां भीमसेनो महाबलः
क्रुद्धाशीविषसङ्काशां प्रेषयामास भारत २२
तामापतन्तीं सहसा रुक्मदण्डां दुरासदाम्
चिच्छेद समरे भीष्मः शरैः सन्नतपर्वभिः २३
ततोऽपरेण भल्लेन पीतेन निशितेन च
कार्मुकं भीमसेनस्य द्विधा चिच्छेद भारत २४
सात्यकिस्तु ततस्तूर्णं भीममासाद्य संयुगे
शरैर्बहुभिरानर्छत्पितरं ते जनेश्वर २५
ततः संधाय वै तीक्ष्णं शरं परमदारुणम्
वार्ष्णेयस्य रथाद्भीष्मः पातयामास सारथिम् २६
तस्याश्वाः प्रद्रुता राजन्निहते रथसारथौ
तेन तेनैव धावन्ति मनोमारुतरंहसः २७
ततः सर्वस्य सैन्यस्य निस्वनस्तुमुलोऽभवत्
हाहाकारश्च सञ्जज्ञे पाण्डवानां महात्मनाम् २८
अभिद्रवत गृह्णीत हयान्यच्छत धावत
इत्यासीत्तुमुलः शब्दो युयुधानरथं प्रति २९
एतस्मिन्नेव काले तु भीष्मः शान्तनवः पुनः
व्यहनत्पाण्डवीं सेनामासुरीमिव वृत्रहा ३०
ते वध्यमाना भीष्मेण पाञ्चालाः सोमकैः सह
आर्यां युद्धे मतिं कृत्वा भीष्ममेवाभिदुद्रुवुः ३१
धृष्टद्युम्नमुखाश्चापि पार्थाः शांतनवं रणे
अभ्यधावञ्जिगीषन्तस्तव पुत्रस्य वाहिनीम् ३२
तथैव तावका राजन्भीष्मद्रोणमुखाः परान्

अभ्यधावन्त वेगेन ततो युद्धमवर्तत ३३
इति श्रीमहाभारते भीष्मपर्वणि अष्टषष्टितमोऽध्यायः ६८

एकोन सप्ततितमोऽध्यायः

सञ्जय उवाच
विराटोऽथ त्रिभिर्बाणैर्भीष्ममार्छन्महारथम्
विव्याध तुरगांश्चास्य त्रिभिर्बाणैर्महारथः १
तं प्रत्यविध्यद्दशभिर्भीष्मः शांतनवः शरैः
रुक्मपुङ्खैर्महेष्वासः कृतहस्तो महाबलः २
द्रौणिर्गाण्डीवधन्वानं भीमधन्वा महारथः
अविध्यदिषुभिः षड्भिर्दृढहस्तः स्तनान्तरे ३
कार्मुकं तस्य चिच्छेद फल्गुनः परवीरहा
अविध्यच्च भृशं तीक्ष्णैः पत्रिभिः शत्रुकर्शनः ४
सोऽन्यत्कार्मुकमादाय वेगवत्क्रोधमूर्छितः
अमृष्यमाणः पार्थेन कार्मुकच्छेदमाहवे ५
अविध्यत्फल्गुनं राजन्नवत्या निशितैः शरैः
वासुदेवं च सप्तत्या विव्याध परमेषुभिः ६
ततः क्रोधाभिताम्राक्षः सह कृष्णेन फल्गुनः
दीर्घमुष्णं च निःश्वस्य चिन्तयित्वा मुहुर्मुहुः ७
धनुः प्रपीड्य वामेन करेणामित्रकर्शनः
गाण्डीवधन्वा संक्रुद्धः शितान्संनतपर्वणः
जीवितान्तकरान्घोरान्समादत्त शिलीमुखान् ८
तैस्तूर्णं समरेऽविध्यद्द्रौणिं बलवतां वरम्
तस्य ते कवचं भित्त्वा पपुः शोणितमाहवे ९
न विव्यथे च निर्भिन्नो द्रौणिर्गाण्डीवधन्वना
तथैव शरवर्षाणि प्रतिमुञ्चन्नविह्वलः
तस्थौ स समरे राजंस्त्रातुमिच्छन्महाव्रतम् १०
तस्य तत्सुमहत्कर्म शशंसुः पुरुषर्षभाः
यत्कृष्णाभ्यां समेताभ्यां नापत्रपत संयुगे ११
स हि नित्यमनीकेषु युध्यतेऽभयमास्थितः

अस्त्रग्रामं ससंहारं द्रोणात्प्राप्य सुदुर्लभम् १२
ममायमाचार्यसुतो द्रोणस्यातिप्रियः सुतः
ब्राह्मणश्च विशेषेण माननीयो ममेति च १३
समास्थाय मतिं वीरो बीभत्सुः शत्रुतापनः
कृपां चक्रे रथश्रेष्ठो भारद्वाजसुतं प्रति १४
द्रौणिं त्यक्त्वा ततो युद्धे कौन्तेयः शत्रुतापनः
युयुधे तावकान्निघ्नंस्त्वरमाणः पराक्रमी १५
दुर्योधनस्तु दशभिर्गार्ध्रपत्रैः शिलाशितैः
भीमसेनं महेष्वासं रुक्मपुङ्खैः समर्पयत् १६
भीमसेनस्तु संक्रुद्धः परासुकरणं दृढम्
चित्रं कार्मुकमादत्त शरांश्च निशितान्दश १७
आकर्णप्रहितैस्तीक्ष्णैर्वेगितैस्तिग्मतेजनैः
अविध्यत्तूर्णमव्यग्रः कुरुराजं महोरसि १८
तस्य काञ्चनसूत्रस्तु शरैः परिवृतो मणिः
रराजोरसि वै सूर्यो ग्रहैरिव समावृतः १९
पुत्रस्तु तव तेजस्वी भीमसेनेन ताडितः
नामृष्यत यथा नागस्तलशब्दं समीरितम् २०
ततः शरैर्महाराज रुक्मपुङ्खैः शिलाशितैः
भीमं विव्याध संक्रुद्धस्त्रासयानो वरूथिनीम् २१
तौ युध्यमानौ समरे भृशमन्योन्यविक्षतौ
पुत्रौ ते देवसंकाशौ व्यरोचेतां महाबलौ २२
चित्रसेनं नरव्याघ्रं सौभद्रः परवीरहा
अविध्यद्दशभिर्बाणैः पुरुमित्रं च सप्तभिः २३
सत्यव्रतं च सप्तत्या विद्ध्वा शक्रसमो युधि
नृत्यन्निव रणे वीर आर्तिं नः समजीजनत् २४
तं प्रत्यविध्यद्दशभिश्चित्रसेनः शिलीमुखैः
सत्यव्रतश्च नवभिः पुरुमित्रश्च सप्तभिः २५
स विद्धो विक्षरन्रक्तं शत्रुसंवारणं महत्
चिच्छेद चित्रसेनस्य चित्रं कार्मुकमार्जुनिः
भित्त्वा चास्य तनुत्राणं शरेणोरस्यताडयत् २६

ततस्ते तावका वीरा राजपुत्रा महारथाः
समेत्य युधि संरब्धा विव्यधुर्निशितैः शरैः
तांश्च सर्वाञ्शरैस्तीक्ष्णैर्जघान परमास्त्रवित् २७
तस्य दृष्ट्वा तु तत्कर्म परिवव्रुः सुतास्तव
दहन्तं समरे सैन्यं तव कक्षं यथोल्बणम् २८
अपेतशिशिरे काले समिद्धमिव पावकः
अत्यरोचत सौभद्रस्तव सैन्यानि शातयन् २९
तत्तस्य चरितं दृष्ट्वा पौत्रस्तव विशां पते
लक्ष्मणोऽभ्यपतत्तूर्णं सात्वतीपुत्रमाहवे ३०
अभिमन्युस्तु संक्रुद्धो लक्ष्मणं शुभलक्षणम्
विव्याध विशिखैः षड्भिः सारथिं च त्रिभिः शरैः ३१
तथैव लक्ष्मणो राजन्सौभद्रं निशितैः शरैः
अविध्यत महाराज तदद्भुतमिवाभवत् ३२
तस्याश्वांश्चतुरो हत्वा सारथिं च महाबलः
अभ्यद्रवत सौभद्रो लक्ष्मणं निशितैः शरैः ३३
हताश्वे तु रथे तिष्ठँल्लक्ष्मणः परवीरहा
शक्तिं चिक्षेप संक्रुद्धः सौभद्रस्य रथं प्रति ३४
तामापतन्तीं सहसा घोररूपां दुरासदाम्
अभिमन्युः शरैस्तीक्ष्णैश्चिच्छेद भुजगोपमाम् ३५
ततः स्वरथमारोप्य लक्ष्मणं गौतमस्तदा
अपोवाह रथेनाजौ सर्वसैन्यस्य पश्यतः ३६
ततः समाकुले तस्मिन्वर्तमाने महाभये
अभ्यद्रवञ्जिघांसन्तः परस्परवधैषिणः ३७
तावकाश्च महेष्वासाः पाण्डवाश्च महारथाः
जुह्वन्तः समरे प्राणान्निजघ्नुरितरेतरम् ३८
मुक्तकेशा विकवचा विरथाश्छिन्नकार्मुकाः
बाहुभिः समयुध्यन्त सृञ्जयाः कुरुभिः सह ३९
ततो भीष्मो महाबाहुः पाण्डवानां महात्मनाम्
सेनां जघान संक्रुद्धो दिव्यैरस्त्रैर्महाबलः ४०
हतैश्वरैर्गजैस्तत्र नरैरश्वैश्च पातितैः

रथिभिः सादिभिश्चैव समास्तीर्यत मेदिनी ४१
इति श्रीमहाभारते भीष्मपर्वणि एकोनसप्ततितमोऽध्यायः ६९

## सप्ततितमोऽध्यायः

सञ्जय उवाच
अथ राजन्महाबाहुः सात्यकिर्युद्धदुर्मदः
विकृष्य चापं समरे भारसाधनमुत्तमम् १
प्रामुञ्चत्पुङ्खसंयुक्ताञ्शरानाशीविषोपमान्
प्रकाशं लघु चित्रं च दर्शयन्नस्त्रलाघवम् २
तस्य विक्षिपतश्चापं शरानन्यांश्च मुञ्चतः
आददानस्य भूयश्च संदधानस्य चापरान् ३
क्षिपतश्च शरानस्य रणे शत्रून्विनिघ्नतः
ददृशे रूपमत्यर्थं मेघस्येव प्रवर्षतः ४
तमुदीर्यन्तमालोक्य राजा दुर्योधनस्ततः
रथानामयुतं तस्य प्रेषयामास भारत ५
तांस्तु सर्वान्महेष्वासान्सात्यकिः सत्यविक्रमः
जघान परमेष्वासो दिव्येनास्त्रेण वीर्यवान् ६
स कृत्वा दारुणं कर्म प्रगृहीतशरासनः
आससाद ततो वीरो भूरिश्रवसमाहवे ७
स हि संदृश्य सेनां तां युयुधानेन पातिताम्
अभ्यधावत संक्रुद्धः कुरूणां कीर्तिवर्धनः ८
इन्द्रायुधसवर्णं तत्स विस्फार्य महद्धनुः
व्यसृजद्वज्रसंकाशाञ्शरानाशीविषोपमान्
सहस्रशो महाराज दर्शयन्पाणिलाघवम् ९
शरांस्तान्मृत्युसंस्पर्शान्सात्यकेस्तु पदानुगाः
न विषेहुस्तदा राजन्दुद्रुवुस्ते समन्ततः
विहाय समरे राजन्सात्यकिं युद्धदुर्मदम् १०
तं दृष्ट्वा युयुधानस्य सुता दश महाबलाः
महारथाः समाख्याताश्चित्रवर्मायुधध्वजाः ११
समासाद्य महेष्वासं भूरिश्रवसमाहवे

ऊचुः सर्वे सुसंरब्धा यूपकेतुं महारणे १२
भो भो कौरवदायाद सहास्माभिर्महाबल
एहि युध्यस्व संग्रामे समस्तैः पृथगेव वा १३
अस्मान्वा त्वं पराजित्य यशः प्राप्नुहि संयुगे
वयं वा त्वां पराजित्य प्रीतिं दास्यामहे पितुः १४
एवमुक्तस्तदा शूरैस्तानुवाच महाबलः
वीर्यश्लाघी नरश्रेष्ठस्तान्दृष्ट्वा समुपस्थितान् १५
साध्विदं कथ्यते वीरा यदेवं मतिरद्य वः
युध्यध्वं सहिता यत्ता निहनिष्यामि वो रणे १६
एवमुक्ता महेष्वासास्ते वीराः क्षिप्रकारिणः
महता शरवर्षेण अभ्यवर्षन्नरिंदमम् १७
अपराह्णे महाराज संग्रामस्तुमुलोऽभवत्
एकस्य च बहूनां च समेतानां रणाजिरे १८
तमेकं रथिनां श्रेष्ठं शरवर्षैरवाकिरन्
प्रावृषीव महाशैलं सिषिचुर्जलदा नृप १९
तैस्तु मुक्ताञ्शरौघांस्तान्यमदण्डाशनिप्रभान्
असंप्राप्तानसंप्राप्तांश्चिच्छेदाशु महारथः २०
तत्राद्भुतमपश्याम सौमदत्तेः पराक्रमम्
यदेको बहुभिर्युद्धे समसज्जदभीतवत् २१
विसृज्य शरवृष्टिं तां दश राजन्महारथाः
परिवार्य महाबाहुं निहन्तुमुपचक्रमुः २२
सौमदत्तिस्ततः क्रुद्धस्तेषां चापानि भारत
चिच्छेद दशभिर्बाणैर्निमेषेण महारथः २३
अथैषां छिन्नधनुषां भल्लैः संनतपर्वभिः
चिच्छेद समरे राजञ्शिरांसि निशितैः शरैः
ते हता न्यपतन्भूमौ वज्रभग्ना इव द्रुमाः २४
तान्दृष्ट्वा निहतान्वीरान्रणे पुत्रान्महाबलान्
वार्ष्णेयो विनदन्राजन्भूरिश्रवसमभ्ययात् २५
रथं रथेन समरे पीडयित्वा महाबलौ
तावन्योन्यस्य समरे निहत्य रथवाजिनः

विरथावभिवल्गन्तौ समेयातां महारथौ २६
प्रगृहीतमहाखड्गौ तौ चर्मवरधारिणौ
शुशुभाते नरव्याघ्रौ युद्धाय समवस्थितौ २७
ततः सात्यकिमभ्येत्य निस्त्रिंशवरधारिणम्
भीमसेनस्त्वरन्राजन्रथमारोपयत्तदा २८
तवापि तनयो राजन्भूरिश्रवसमाहवे
आरोपयद्रथं तूर्णं पश्यतां सर्वधन्विनाम् २९
तस्मिंस्तथा वर्तमाने रणे भीष्मं महारथम्
अयोधयन्त संरब्धाः पाण्डवा भरतर्षभ ३०
लोहितायति चादित्ये त्वरमाणो धनञ्जयः
पञ्चविंशतिसाहस्रान्निजघान महारथान् ३१
ते हि दुर्योधनादिष्टास्तदा पार्थनिबर्हणे
संप्राप्यैव गता नाशं शलभा इव पावकम् ३२
ततो मत्स्याः केकयाश्च धनुर्वेदविशारदाः
परिवव्रुस्तदा पार्थं सहपुत्रं महारथम् ३३
एतस्मिन्नेव काले तु सूर्येऽस्तमुपगच्छति
सर्वेषामेव सैन्यानां प्रमोहः समजायत ३४
अवहारं ततश्चक्रे पिता देवव्रतस्तव
सन्ध्याकाले महाराज सैन्यानां श्रान्तवाहनः ३५
पाण्डवानां कुरूणां च परस्परसमागमे
ते सेने भृशसंविग्ने ययतुः स्वं निवेशनम् ३६
ततः स्वशिबिरं गत्वा न्यविशंस्तत्र भारत
पाण्डवाः सृञ्जयैः सार्धं कुरवश्च यथाविधि ३७
इति श्रीमहाभारते भीष्मपर्वणि सप्ततितमोऽध्यायः ७०

## एक सप्ततितमोऽध्यायः

सञ्जय उवाच
विहृत्य च ततो राजन्सहिताः कुरुपाण्डवाः
व्यतीतायां तु शर्वर्यां पुनर्युद्धाय निर्ययुः १
तत्र शब्दो महानासीत्तव तेषां च भारत

युज्यतां रथमुख्यानां कल्प्यतां चैव दन्तिनाम् २
संनह्यतां पदातीनां हयानां चैव भारत
शङ्खदुन्दुभिनादश्च तुमुलः सर्वतोऽभवत् ३
ततो युधिष्ठिरो राजा धृष्टद्युम्नमभाषत
व्यूहं व्यूह महाबाहो मकरं शत्रुतापनम् ४
एवमुक्तस्तु पार्थेन धृष्टद्युम्नो महारथः
व्यादिदेश महाराज रथिनो रथिनां वरः ५
शिरोऽभूद्द्रुपदस्तस्य पाण्डवश्च धनञ्जयः
चक्षुषी सहदेवश्च नकुलश्च महारथः
तुण्डमासीन्महाराज भीमसेनो महाबलः ६
सौभद्रो द्रौपदेयाश्च राक्षसश्च घटोत्कचः
सात्यकिर्धर्मराजश्च व्यूहग्रीवां समास्थिताः ७
पृष्ठमासीन्महाराज विराटो वाहिनीपतिः
धृष्टद्युम्नेन सहितो महत्या सेनया वृतः ८
केकया भ्रातरः पञ्च वामं पार्श्वं समाश्रिताः
धृष्टकेतुर्नरव्याघ्रः करकर्षश्च वीर्यवान्
दक्षिणं पक्षमाश्रित्य स्थिता व्यूहस्य रक्षणे ९
पादयोस्तु महाराज स्थितः श्रीमान्महारथः
कुन्तिभोजः शतानीको महत्या सेनया वृतः १०
शिखण्डी तु महेष्वासः सोमकैः संवृतो बली
इरावांश्च ततः पुच्छे मकरस्य व्यवस्थितौ ११
एवमेतन्महाव्यूहं व्यूह्य भारत पाण्डवाः
सूर्योदये महाराज पुनर्युद्धाय दंशिताः १२
कौरवानभ्ययुस्तूर्णं हस्त्यश्वरथपत्तिभिः
समुच्छ्रितैर्ध्वजैश्चित्रैः शस्त्रैश्च विमलैः शितैः १३
व्यूहं दृष्ट्वा तु तत्सैन्यं पिता देवव्रतस्तव
क्रौञ्चेन महता राजन्प्रत्यव्यूहत वाहिनीम् १४
तस्य तुण्डे महेष्वासो भारद्वाजो व्यरोचत
अश्वत्थामा कृपश्चैव चक्षुरास्तां नरेश्वर १५
कृतवर्मा तु सहितः काम्बोजारट्टबाह्लिकैः

शिरस्यासीन्नरश्रेष्ठः श्रेष्ठः सर्वधनुष्मताम् १६
ग्रीवायां शूरसेनस्तु तव पुत्रश्च मारिष
दुर्योधनो महाराज राजभिर्बहुभिर्वृतः १७
प्राग्ज्योतिषस्तु सहितो मद्रसौवीरकेकयैः
उरस्यभून्नरश्रेष्ठ महत्या सेनया वृतः १८
स्वसेनया च सहितः सुशर्मा प्रस्थलाधिपः
वामं पक्षं समाश्रित्य दंशितः समवस्थितः १९
तुषारा यवनाश्चैव शकाश्च सह चूचुपैः
दक्षिणं पक्षमाश्रित्य स्थिता व्यूहस्य भारत २०
श्रुतायुश्च शतायुश्च सौमदत्तिश्च मारिष
व्यूहस्य जघने तस्थू रक्षमाणाः परस्परम् २१
ततो युद्धाय संजग्मुः पाण्डवाः कौरवैः सह
सूर्योदये महाराज ततो युद्धमभून्महत् २२
प्रतीयू रथिनो नागान्नागाश्च रथिनो ययुः
हयारोहा हयारोहान्रथिनश्चापि सादिनः २३
सारथिं च रथी राजन्कुञ्जरांश्च महारणे
हस्त्यारोहा रथारोहान्रथिनश्चापि सादिनः २४
रथिनः पत्तिभिः सार्धं सादिनश्चापि पत्तिभिः
अन्योन्यं समरे राजन्प्रत्यधावन्नमर्षिताः २५
भीमसेनार्जुनयमैर्गुप्ता चान्यैर्महारथैः
शुशुभे पाण्डवी सेना नक्षत्रैरिव शर्वरी २६
तथा भीष्मकृपद्रोणशल्यदुर्योधनादिभिः
तवापि विबभौ सेना ग्रहैर्द्यौरिव संवृता २७
भीमसेनस्तु कौन्तेयो द्रोणं दृष्ट्वा पराक्रमी
अभ्ययाज्जवनैरश्वैर्भारद्वाजस्य वाहिनीम् २८
द्रोणस्तु समरे क्रुद्धो भीमं नवभिरायसैः
विव्याध समरे राजन्मर्माण्युद्दिश्य वीर्यवान् २९
दृढाहतस्ततो भीमो भारद्वाजस्य संयुगे
सारथिं प्रेषयामास यमस्य सदनं प्रति ३०
स संगृह्य स्वयं वाहान्भारद्वाजः प्रतापवान्

व्यधमत्पाराडवीं सेनां तूलराशिमिवानलः ३१
ते वध्यमाना द्रोरोन भीष्मेरा च नरोत्तम
सृञ्जयाः केकयैः सार्धं पलायनपराभवन् ३२
तथैव तावकं सैन्यं भीमार्जुनपरिद्मतम्
मुह्यते तत्र तत्रैव समदेव वराङ्गना ३३
अभिद्येतां ततो व्यूहौ तस्मिन्वीरवरद्मये
आसीद्व्यतिकरो घोरस्तव तेषां च भारत ३४
तदद्भुतमपश्याम तावकानां परैः सह
एकायनगताः सर्वे यदयुध्यन्त भारत ३५
प्रतिसंवार्य चास्त्राणि तेऽन्योन्यस्य विशां पते
युयुधुः पाराडवाश्चैव कौरवाश्च महारथाः ३६
इति श्रीमहाभारते भीष्मपर्वणि एकसप्ततितमोऽध्यायः ७१

## द्विसप्ततितमोऽध्यायः

धृतराष्ट्र उवाच
एवं बहुगुणं सैन्यमेवं बहुविधं परम्
व्यूढमेवं यथाशास्त्रममोघं चैव सञ्जय १
पुष्टमस्माकमत्यन्तमभिकामं च नः सदा
प्रह्वमव्यसनोपेतं पुरस्ताद्दृष्टविक्रमम् २
नातिवृद्धमबालं च न कृशं न च पीवरम्
लघुवृत्तायतप्रायं सारगात्रमनामयम् ३
आत्तसंनाहशस्त्रं च बहुशस्त्रपरिग्रहम्
असियुद्धे नियुद्धे च गदायुद्धे च कोविदम् ४
प्रासर्ष्टितोमरेष्वाजौ परिघेष्वायसेषु च
भिरिडपालेषु शक्तीषु मुसलेषु च सर्वशः ५
कम्पनेषु च चापेषु करापेषु च सर्वशः
द्मेपणीषु च चित्रासु मुष्टियुद्धेषु कोविदम् ६
अपरोद्मं च विद्यासु व्यायामेषु कृतश्रमम्
शस्त्रग्रहणविद्यासु सर्वासु परिनिष्ठितम् ७
आरोहे पर्यवस्कन्दे सरणे सान्तरप्लुते

सम्यक्प्रहरणे याने व्यपयाने च कोविदम् ८
नागाश्वरथयानेषु बहुशः सुपरीक्षितम्
परीक्ष्य च यथान्यायं वेतनेनोपपादितम् ९
न गोष्ठ्या नोपचारेण न च बन्धुनिमित्ततः
न सौहृदबलैश्चापि नाकुलीनपरिग्रहैः १०
समृद्धजनमार्यं च तुष्टसत्कृतबान्धवम्
कृतोपकारभूयिष्ठं यशस्वि च मनस्वि च ११
सजयैश्च नरैर्मुख्यैर्बहुशो मुख्यकर्मभिः
लोकपालोपमैस्तात पालितं लोकविश्रुतैः १२
बहुभिः क्षत्रियैर्गुप्तं पृथिव्यां लोकसम्मतैः
अस्मानभिगतैः कामात्सबलैः सपदानुगैः १३
महोदधिमिवापूर्णमापगाभिः समन्ततः
अपक्षैः पक्षसङ्काशै रथैर्नागैश्च संवृतम् १४
नानायोधजलं भीमं वाहनोर्मितरङ्गिणम्
क्षेपण्यसिगदाशक्तिशरप्राससमाकुलम् १५
ध्वजभूषणसम्बाधं रत्नपट्टेन सञ्चितम्
वाहनैः परिसर्पद्भिर्वायुवेगविकम्पितम् १६
अपारमिव गर्जन्तं सागरप्रतिमं महत्
द्रोणभीष्माभिसंगुप्तं गुप्तं च कृतवर्मणा १७
कृपदुःशासनाभ्यां च जयद्रथमुखैस्तथा
भगदत्तविकर्णाभ्यां द्रौणिसौबलबाह्लिकैः १८
गुप्तं प्रवीरैर्लोकस्य सारवद्भिर्महात्मभिः
यदहन्यत संग्रामे दिष्टमेतत्पुरातनम् १९
नैतादृशं समुद्योगं दृष्टवन्तोऽथ मानुषाः
ऋषयो वा महाभागाः पुराणा भुवि सञ्जय २०
ईदृशो हि बलौघस्तु युक्तः शस्त्रास्त्रसम्पदा
वध्यते यत्र संग्रामे किमन्यद्भागधेयतः २१
विपरीतमिदं सर्वं प्रतिभाति स्म सञ्जय
यत्रेदृशं बलं घोरं नातरद्युधि पाण्डवान् २२
अथ वा पाण्डवार्थाय देवास्तत्र समागताः

युध्यन्ते मामकं सैन्यं यदवध्यन्त सञ्जय २३
उक्तो हि विदुरेणेह हितं पथ्यं च संजय
न च गृह्णाति तन्मन्दः पुत्रो दुर्योधनो मम २४
तस्य मन्ये मतिः पूर्वं सर्वज्ञस्य महात्मनः
आसीद्यथागतं तात येन दृष्टमिदं पुरा २५
अथ वा भाव्यमेवं हि सञ्जयैतेन सर्वथा
पुरा धात्रा यथा सृष्टं तत्तथा न तदन्यथा २६
इति श्रीमहाभारते भीष्मपर्वणि द्विसप्ततितमोऽध्यायः ७२

## त्रिसप्ततितमोऽध्यायः

सञ्जय उवाच
आत्मदोषात्त्वया राजन्प्राप्तं व्यसनमीदृशम्
न हि दुर्योधनस्तानि पश्यते भरतर्षभ
यानि त्वं दृष्टवान्राजन्धर्मसङ्करकारिते १
तव दोषात्पुरा वृत्तं द्यूतमेतद्विशां पते
तव दोषेण युद्धं च प्रवृत्तं सह पाण्डवैः
त्वमेवाद्य फलं भुङ्क्ष्व कृत्वा किल्बिषमात्मना २
आत्मना हि कृतं कर्म आत्मनैवोपभुज्यते
इह वा प्रेत्य वा राजंस्त्वया प्राप्तं यथातथम् ३
तस्माद्राजन्स्थिरो भूत्वा प्राप्येदं व्यसनं महत्
शृणु युद्धं यथावृत्तं शंसतो मम मारिष ४
भीमसेनस्तु निशितैर्बाणैर्भित्त्वा महाचमूम्
आससाद ततो वीरः सर्वान्दुर्योधनानुजान् ५
दुःशासनं दुर्विषहं दुःसहं दुर्मदं जयम्
जयत्सेनं विकर्णं च चित्रसेनं सुदर्शनम् ६
चारुचित्रं सुवर्माणं दुष्कर्णं कर्णमेव च
एतानन्यांश्च सुबहून्समीपस्थान्महारथान् ७
धार्तराष्ट्रान्सुसंक्रुद्धान्दृष्ट्वा भीमो महाबलः
भीष्मेण समरे गुप्तां प्रविवेश महाचमूम् ८
अथाह्वयन्त तेऽन्योन्यमयं प्राप्तो वृकोदरः

जीवग्राहं निगृह्णीमो वयमेनं नराधिपाः ९
स तैः परिवृतः पार्थो भ्रातृभिः कृतनिश्चयैः
प्रजासंहरणे सूर्यः क्रूरैरिव महाग्रहैः १०
सम्प्राप्य मध्यं व्यूहस्य न भीः पाण्डवमाविशत्
यथा देवासुरे युद्धे महेन्द्रः प्राप्य दानवान् ११
ततः शतसहस्राणि रथिनां सर्वशः प्रभो
छादयानं शरैर्घोरैस्तमेकमनुवव्रिरे १२
स तेषां प्रवरान्योधान्हस्त्यश्वरथसादिनः
जघान समरे शूरो धार्तराष्ट्रानचिन्तयन् १३
तेषां व्यवसितं ज्ञात्वा भीमसेनो जिघृक्षताम्
समस्तानां वधे राजन्मतिं चक्रे महामनाः १४
ततो रथं समुत्सृज्य गदामादाय पाण्डवः
जघान धार्तराष्ट्राणां तं बलौघमहार्णवम् १५
भीमसेने प्रविष्टे तु धृष्टद्युम्नोऽपि पार्षतः
द्रोणमुत्सृज्य तरसा प्रययौ यत्र सौबलः १६
विदार्य महतीं सेनां तावकानां नरर्षभः
आससाद रथं शून्यं भीमसेनस्य संयुगे १७
दृष्ट्वा विशोकं समरे भीमसेनस्य सारथिम्
धृष्टद्युम्नो महाराज दुर्मना गतचेतनः १८
अपृच्छद्बाष्पसंरुद्धो निस्वनां वाचमीरयन्
मम प्राणैः प्रियतमः क्व भीम इति दुःखितः १९
विशोकस्तमुवाचेदं धृष्टद्युम्नं कृताञ्जलि
संस्थाप्य मामिह बली पाण्डवेयः प्रतापवान् २०
प्रविष्टो धार्तराष्ट्राणामेतद्बलमहार्णवम्
मामुक्त्वा पुरुषव्याघ्र प्रीतियुक्तमिदं वचः २१
प्रतिपालय मां सूत नियम्याश्वान्मुहूर्तकम्
यावदेतान्निहन्म्याशु य इमे मद्वधोद्यताः २२
ततो दृष्ट्वा गदाहस्तं प्रधावन्तं महाबलम्
सर्वेषामेव सैन्यानां संघर्षः समजायत २३
तस्मिंस्तु तुमुले युद्धे वर्तमाने भयानके

भित्त्वा राजन्महाव्यूहं प्रविवेश सखा तव २४
विशोकस्य वचः श्रुत्वा धृष्टद्युम्नोऽपि पार्षतः
प्रत्युवाच ततः सूतं रणमध्ये महाबलः २५
न हि मे विद्यते सूत जीवितेऽद्य प्रयोजनम्
भीमसेनं रणे हित्वा स्नेहमुत्सृज्य पाण्डवैः २६
यदि यामि विना भीमं किं मां क्षत्रं वदिष्यति
एकायनगते भीमे मयि चावस्थिते युधि २७
अस्वस्ति तस्य कुर्वन्ति देवाः साग्निपुरोगमाः
यः सहायान्परित्यज्य स्वस्तिमानाव्रजेद्गृहान् २८
मम भीमः सखा चैव सम्बन्धी च महाबलः
भक्तोऽस्मान्भक्तिमांश्चाहं तमप्यरिनिषूदनम् २९
सोऽह तत्र गमिष्यामि यत्र यातो वृकोदरः
निघ्नन्तं मामरीन्पश्य दानवानिव वासवम् ३०
एवमुक्त्वा ततो वीरो ययौ मध्येन भारतीम्
भीमसेनस्य मार्गेषु गदाप्रमथितैर्गजैः ३१
स ददर्श ततो भीमं दहन्तं रिपुवाहिनीम्
वातं वृक्षानिव बलात्प्रभञ्जन्तं रणे नृपान् ३२
ते हन्यमानाः समरे रथिनः सादिनस्तथा
पादाता दन्तिनश्चैव चक्रुरार्तस्वरं महत् ३३
हाहाकारश्च सञ्जज्ञे तव सैन्यस्य मारिष
वध्यतो भीमसेनेन कृतिना चित्रयोधिना ३४
ततः कृतास्त्रास्ते सर्वे परिवार्य वृकोदरम्
अभीताः समवर्तन्त शस्त्रवृष्ट्या समन्ततः ३५
अभिद्रुतं शस्त्रभृतां वरिष्ठं समन्ततः पाण्डवं लोकवीरैः
सैन्येन घोरेण सुसंगतेन दृष्ट्वा बली पार्षतो भीमसेनम् ३६
अथोपगच्छच्छरविक्षताङ्गं पदातिनं क्रोधविषं वमन्तम्
आश्वासयन्पार्षतो भीमसेनं गदाहस्तं कालमिवान्तकाले ३७
निःशल्यमेनं च चकार तूर्णमारोपयच्चात्मरथे महात्मा
भृशं परिष्वज्य च भीमसेनमाश्वासयामास च शत्रुमध्ये ३८
भ्रातॄनथोपेत्य तवापि पुत्रस्तस्मिन्विमर्दे महति प्रवृत्ते

अयं दुरात्मा द्रुपदस्य पुत्रः समागतो भीमसेनेन सार्धम्
तं यात सर्वे सहिता निहन्तुं मा वो रिपुः प्रार्थयतामनीकम् ३९
श्रुत्वा तु वाक्यं तममृष्यमाणा ज्येष्ठाज्ञया चोदिता धार्तराष्ट्राः
वधाय निष्पेतुरुदायुधास्ते युगक्षये केतवो यद्वदुग्राः ४०
प्रगृह्य चित्राणि धनूंषि वीरा ज्यानेमिघोषैः प्रविकम्पयन्तः
शरैरवर्षन्द्रुपदस्य पुत्रं यथाम्बुदा भूधरं वारिजालैः
निहत्य तांश्चापि शरैः सुतीक्ष्णैर्न विव्यथे समरे चित्रयोधी ४१
समभ्युदीर्णांश्च तवात्मजांस्तथा निशाम्य वीरानभितः स्थितान्रणे
जिघांसुरुग्रं द्रुपदात्मजो युवा प्रमोहनास्त्रं युयुजे महारथः
क्रुद्धो भृशं तव पुत्रेषु राजन्दैत्येषु यद्वत्समरे महेन्द्रः ४२
ततो व्यमुह्यन्त रणे नृवीराः प्रमोहनास्त्राहतबुद्धिसत्त्वाः
प्रदुद्रुवुः कुरवश्चैव सर्वे सवाजिनागाः सरथाः समन्तात्
परीतकालानिव नष्टसंज्ञान्मोहोपेतांस्तव पुत्रान्निशम्य ४३
एतस्मिन्नेव काले तु द्रोणः शस्त्रभृतां वरः
द्रुपदं त्रिभिरासाद्य शरैर्विव्याध दारुणैः ४४
सोऽतिविद्धस्तदा राजन्रणे द्रोणेन पार्थिवः
अपायाद्द्रुपदो राजन्पूर्ववैरमनुस्मरन् ४५
जित्वा तु द्रुपदं द्रोणः शङ्खं दध्मौ प्रतापवान्
तस्य शङ्खस्वनं श्रुत्वा वित्रेसुः सर्वसोमकाः ४६
अथ शुश्राव तेजस्वी द्रोणः शस्त्रभृतां वरः
प्रमोहनास्त्रेण रणे मोहितानात्मजांस्तव ४७
ततो द्रोणो राजगृद्धी त्वरितोऽभिययौ रणात्
तत्रापश्यन्महेष्वासो भारद्वाजः प्रतापवान्
धृष्टद्युम्नं च भीमं च विचरन्तौ महारणे ४८
मोहाविष्टांश्च ते पुत्रानपश्यत्स महारथः
ततः प्रज्ञास्त्रमादाय मोहनास्त्रं व्यशातयत् ४९
अथ प्रत्यागतप्राणास्तव पुत्रा महारथाः
पुनर्युद्धाय समरे प्रययुर्भीमपार्षतौ ५०
ततो युधिष्ठिरः प्राह समाहूय स्वसैनिकान्
गच्छन्तु पदवीं शक्त्या भीमपार्षतयोर्युधि ५१

सौभद्रप्रमुखा वीरा रथा द्वादश दंशिताः
प्रवृत्तिमधिगच्छन्तु न हि शुध्यति मे मनः ५२
त एवं समनुज्ञाताः शूरा विक्रान्तयोधिनः
बाढमित्येवमुक्त्वा तु सर्वे पुरुषमानिनः
मध्यंदिनगते सूर्ये प्रययुः सर्व एव हि ५३
केकया द्रौपदेयाश्च धृष्टकेतुश्च वीर्यवान्
अभिमन्युं पुरस्कृत्य महत्या सेनया वृताः ५४
ते कृत्वा समरे व्यूहं सूचीमुखमरिंदमाः
बिभिदुर्धार्तराष्ट्राणां तद्रथानीकमाहवे ५५
तान्प्रयातान्महेष्वासानभिमन्युपुरोगमान्
भीमसेनभयाविष्टा धृष्टद्युम्नविमोहिता ५६
न संधारयितुं शक्ता तव सेना जनाधिप
मदमूर्छान्वितात्मानं प्रमदेवाध्वनि स्थिता ५७
तेऽभियाता महेष्वासाः सुवर्णविकृतध्वजाः
परीप्सन्तोऽभ्यधावन्त धृष्टद्युम्नवृकोदरौ ५८
तौ च दृष्ट्वा महेष्वासानभिमन्युपुरोगमान्
बभूवतुर्मदा युक्तौ निघ्नन्तौ तव वाहिनीम् ५९
दृष्ट्वा च सहसायान्तं पाञ्चाल्यो गुरुमात्मनः
नाशंसत वधं वीरः पुत्राणां तव पार्षतः ६०
ततो रथं समारोप्य केकयस्य वृकोदरम्
अभ्यधावत्सुसंक्रुद्धो द्रोणमिष्वस्त्रपारगम् ६१
तस्याभिपततस्तूर्णं भारद्वाजः प्रतापवान्
क्रुद्धश्चिच्छेद भल्लेन धनुः शत्रुनिषूदनः ६२
अन्यांश्च शतशो बाणान्प्रेषयामास पार्षते
दुर्योधनहितार्थाय भर्तृपिण्डमनुस्मरन् ६३
अथान्यद्धनुरादाय पार्षतः परवीरहा
द्रोणं विव्याध सप्तत्या रुक्मपुङ्खैः शिलाशितैः ६४
तस्य द्रोणः पुनश्चापं चिच्छेदामित्रकर्शनः
हयांश्च चतुरस्तूर्णं चतुर्भिः सायकोत्तमैः ६५
वैवस्वतक्षयं घोरं प्रेषयामास वीर्यवान्

सारथिं चास्य भल्लेन प्रेषयामास मृत्यवे ६६
हताश्वात्स रथात्तूर्णमवप्लुत्य महारथः
आरुरोह महाबाहुरभिमन्योर्महारथम् ६७
ततः सरथनागाश्वा समकम्पत वाहिनी
पश्यतो भीमसेनस्य पार्षतस्य च पश्यतः ६८
तत्प्रभग्नं बलं दृष्ट्वा द्रोणेनामिततेजसा
नाशक्नुवन्वारयितुं समस्तास्ते महारथाः ६९
वध्यमानं तु तत्सैन्यं द्रोणेन निशितैः शरैः
व्यभ्रमत्तत्र तत्रैव क्षोभ्यमाण इवार्णवः ७०
तथा दृष्ट्वा च तत्सैन्यं जहृषे च बलं तव
दृष्ट्वाचार्यं च संक्रुद्धं दहन्तं रिपुवाहिनीम्
चुक्रुशुः सर्वतो योधाः साधु साध्विति भारत ७१
इति श्रीमहाभारते भीष्मपर्वणि त्रिसप्ततितमोऽध्यायः ७३

## चतुः सप्ततितमोऽध्यायः

सञ्जय उवाच
ततो दुर्योधनो राजा मोहात्प्रत्यागतस्तदा
शरवर्षैः पुनर्भीमं प्रत्यवारयदच्युतम् १
एकीभूताः पुनश्चैव तव पुत्रा महारथाः
समेत्य समरे भीमं योधयामासुरुद्यताः २
भीमसेनोऽपि समरे संप्राप्य स्वरथं पुनः
समारुह्य महाबाहुर्ययौ येन तवात्मजः ३
प्रगृह्य च महावेगं परासुकरणं दृढम्
चित्रं शरासनं संख्ये शरैर्विव्याध ते सुतान् ४
ततो दुर्योधनो राजा भीमसेनं महाबलम्
नाराचेन सुतीक्ष्णेन भृशं मर्मण्यताडयत् ५
सोऽतिविद्धो महेष्वासस्तव पुत्रेण धन्विना
क्रोधसंरक्तनयनो वेगेनोत्क्षिप्य कार्मुकम् ६
दुर्योधनं त्रिभिर्बाणैर्बाह्वोरुरसि चार्पयत्
स तथाभिहतो राजा नाचलद्गिरिराडिव ७

तौ दृष्ट्वा समरे क्रुद्धौ विनिघ्नन्तौ परस्परम्
दुर्योधनानुजाः सर्वे शूराः संत्यक्तजीविताः ८
संस्मृत्य मन्त्रितं पूर्वं निग्रहे भीमकर्मणः
निश्चयं मनसा कृत्वा निग्रहीतुं प्रचक्रमुः ९
तानापतत एवाजौ भीमसेनो महाबलः
प्रत्युद्ययौ महाराज गजः प्रतिगजानिव १०
भृशं क्रुद्धश्च तेजस्वी नाराचेन समर्पयत्
चित्रसेनं महाराज तव पुत्रं महायशाः ११
तथेतरांस्तव सुतांस्ताडयामास भारत
शरैर्बहुविधैः संख्ये रुक्मपुङ्खैः सुवेगितैः १२
ततः संस्थाप्य समरे स्वान्यनीकानि सर्वशः
अभिमन्युप्रभृतयस्ते द्वादश महारथाः १३
प्रेषिता धर्मराजेन भीमसेनपदानुगाः
प्रत्युद्ययुर्महाराज तव पुत्रान्महाबलान् १४
दृष्ट्वा रथस्थांस्ताञ्शूरान्सूर्याग्निसमतेजसः
सर्वानेव महेष्वासान्भ्राजमानाञ्श्रिया वृतान् १५
महाहवे दीप्यमानान्सुवर्णकवचोज्ज्वलान्
तत्यजुः समरे भीमं तव पुत्रा महाबलाः १६
तान्नामृष्यत कौन्तेयो जीवमाना गता इति
अन्वीय च पुनः सर्वांस्तव पुत्रानपीडयत् १७
अथाभिमन्युं समरे भीमसेनेन सङ्गतम्
पार्षतेन च संप्रेक्ष्य तव सैन्ये महारथाः १८
दुर्योधनप्रभृतयः प्रगृहीतशरासनाः
भृशमश्वैः प्रजवितैः प्रययुर्यत्र ते रथाः १९
अपराह्णे ततो राजन्प्रावर्तत महान्रणः
तावकानां च बलिनां पेरषां चैव भारत २०
अभिमन्युर्विकर्णस्य हयान्हत्वा महाजवान्
अथैनं पञ्चविंशत्या क्षुद्रकाणां समाचिनोत् २१
हताश्वं रथमुत्सृज्य विकर्णस्तु महारथः
आरुरोह रथं राजंश्चित्रसेनस्य भास्वरम् २२

स्थितावेकरथे तौ तु भ्रातरौ कुरुवर्धनौ
आर्जुनिः शरजालेन छादयामास भारत २३
दुर्जयोऽथ विकर्णश्च कार्ष्णिं पञ्चभिरायसैः
विव्यधाते न चाकम्पत्कार्ष्णिर्मेरुरिवाचलः २४
दुःशासनस्तु समरे केकयान्पञ्च मारिष
योधयामास राजेन्द्र तदद्भुतमिवाभवत् २५
द्रौपदेया रणे क्रुद्धा दुर्योधनमवारयन्
एकैकस्त्रिभिरानर्छत्पुत्रं तव विशां पते २६
पुत्रोऽपि तव दुर्धर्षो द्रौपद्यास्तनयान्रणे
सायकैर्निशित् राजन्नाजघान पृथक्पृथक् २७
तैश्चापि विद्धः शुशुभे रुधिरेण समुक्षितः
गिरिप्रस्त्रवणैर्यद्वद्गिरिर्धातुविमिश्रितैः २८
भीष्मोऽपि समरे राजन्पाण्डवानामनीकिनीम्
कालयामास बलवान्पालः पशुगणानिव २९
ततो गाण्डीवनिर्घोषः प्रादुरासीद्विशां पते
दक्षिणेन वरूथिन्याः पार्थस्यारीन्विनिघ्नतः ३०
उत्तस्थुः समरे तत्र कबन्धानि समन्ततः
कुरूणां चापि सैन्येषु पाण्डवानां च भारत ३१
शोणितोदं रथावर्तं गजद्वीपं हयोर्मिणम्
रथनौभिर्नरव्याघ्राः प्रतेरुः सैन्यसागरम् ३२
छिन्नहस्ता विकवचा विदेहाश्च नरोत्तमाः
पतितास्तत्र दृश्यन्ते शतशोऽथ सहस्रशः ३३
निहतैर्मत्तमातङ्गैः शोणितौघपरिप्लुतैः
भूर्भाति भरतश्रेष्ठ पर्वतैराचिता यथा ३४
तत्राद्भुतमपश्याम तव तेषां च भारत
न तत्रासीत्पुमान्कश्चिद्यो युद्धं नाभिकाङ्क्षति ३५
एवं युयुधिरे वीराः प्रार्थयाना महद्यशः
तावकाः पाण्डवैः सार्धं काङ्क्षमाणा जयं युधि ३६
इति श्रीमहाभारते भीष्मपर्वणि चतुःसप्ततितमोऽध्यायः ७४

## पञ्चसप्ततितमोऽध्यायः

सञ्जय उवाच
ततो दुर्योधनो राजा लोहितायति भास्करे
संग्रामरभसो भीमं हन्तुकामोऽभ्यधावत १
तमायान्तमभिप्रेक्ष्य नृवीरं दृढवैरिणम्
भीमसेनः सुसंक्रुद्ध इदं वचनमब्रवीत् २
अयं स कालः संप्राप्तो वर्षपूगाभिकाङ्क्षितः
अद्य त्वां निहनिष्यामि यदि नोत्सृजसे रणम् ३
अद्य कुन्त्याः परिक्लेशं वनवासं च कृत्स्नशः
द्रौपद्याश्च परिक्लेशं प्रणोत्स्यामि हते त्वयि ४
यत्त्वं दुरोदरो भूत्वा पाण्डवानवमन्यसे
तस्य पापस्य गान्धारे पश्य व्यसनमागतम् ५
कर्णस्य मतमाज्ञाय सौबलस्य च यत्पुरा
अचिन्त्य पाण्डवान्कामाद्यथेष्टं कृतवानसि ६
याचमानं च यन्मोहाद्दाशार्हमवमन्यसे
उलूकस्य समादेशं यद्ददासि च हृष्टवत् ७
अद्य त्वा निहनिष्यामि सानुबन्धं सबान्धवम्
समीकरिष्ये तत्पापं यत्पुरा कृतवानसि ८
एवमुक्त्वा धनुर्घोरं विकृष्योद्भ्राम्य चासकृत्
समादाय शरान्घोरान्महाशनिसमप्रभान् ९
षड्विंशत्तरसा क्रुद्धो मुमोचाशु सुयोधने
ज्वलिताग्निशिखाकारान्वज्रकल्पानजिह्मगान् १०
ततोऽस्य कार्मुकं द्वाभ्यां सूतं द्वाभ्यां च विव्यधे
चतुर्भिरश्वाञ्जवनाननयद्यमसादनम् ११
द्वाभ्यां च सुविकृष्टाभ्यां शराभ्यामरिमर्दनः
छत्रं चिच्छेद समरे राज्ञस्तस्य रथोत्तमात् १२
त्रिभिश्च तस्य चिच्छेद ज्वलन्तं ध्वजमुत्तमम्
छित्त्वा तं च ननादोच्चैस्तव पुत्रस्य पश्यतः १३
रथाच्च स ध्वजः श्रीमान्नानारत्नविभूषितः
पपात सहसा भूमिं विद्युज्जलधरादिव १४

ज्वलन्तं सूर्यसङ्काशं नागं मणिमयं शुभम्
ध्वजं कुरुपतेश्छिन्नं ददृशुः सर्वपार्थिवाः १५
अथैनं दशभिर्बाणैस्तोत्त्रैरिव महागजम्
आजघान रणे भीमः स्मयन्निव महारथः १६
ततस्तु राजा सिन्धूनां रथश्रेष्ठो जयद्रथः
दुर्योधनस्य जग्राह पार्ष्णिं सत्पुरुषोचिताम् १७
कृपश्च रथिनां श्रेष्ठः कौरव्यममितौजसम्
आरोपयद्रथं राजन्दुर्योधनममर्षणम् १८
स गाढविद्धो व्यथितो भीमसेनेन संयुगे
निषसाद रथोपस्थे राजा दुर्योधनस्तदा १९
परिवार्य ततो भीमं हन्तुकामो जयद्रथः
रथैरनेकसाहस्रैर्भीमस्यावारयद्दिशः २०
धृष्टकेतुस्ततो राजन्नभिमन्युश्च वीर्यवान्
केकया द्रौपदेयाश्च तव पुत्रानयोधयन् २१
चित्रसेनः सुचित्रश्च चित्राश्वश्चित्रदर्शनः
चारुचित्रः सुचारुश्च तथा नन्दोपनन्दकौ २२
अष्टावेते महेष्वासाः सुकुमारा यशस्विनः
अभिमन्युरथं राजन्समन्तात्पर्यवारयन् २३
आजघान ततस्तूर्णमभिमन्युर्महामनाः
एकैकं पञ्चभिर्विद्ध्वा शरैः सन्नतपर्वभिः
वज्रमृत्युप्रतीकाशैर्विचित्रायुधनिःसृतैः २४
अमृष्यमाणास्ते सर्वे सौभद्रं रथसत्तमम्
ववर्षुर्मार्गणैस्तीक्ष्णैर्गिरिं मेरुमिवाम्बुदाः २५
स पीड्यमानः समरे कृतास्त्रो युद्धदुर्मदः
अभिमन्युर्महाराज तावकान्समकम्पयत्
यथा देवासुरे युद्धे वज्रपाणिर्महासुरान् २६
विकर्णस्य ततो भल्लान्प्रेषयामास भारत
चतुर्दश रथश्रेष्ठो घोरानाशीविषोपमान्
ध्वजं सूतं हयांश्चास्य छित्त्वा नृत्यन्निवाहवे २७
पुनश्चान्याञ्शरान्पीतानकुण्ठाग्राञ्शिलाशितान्

प्रेषयामास सौभद्रो विकर्णाय महाबलः २८
ते विकर्णं समासाद्य कङ्कबर्हिणवाससः
भित्त्वा देहं गता भूमिं ज्वलन्त इव पन्नगाः २९
ते शरा हेमपुङ्खाग्रा व्यदृश्यन्त महीतले
विकर्णरुधिरक्लिन्ना वमन्त इव शोणितम् ३०
विकर्णं वीक्ष्य निर्भिन्नं तस्यैवान्ये सहोदराः
अभ्यद्रवन्त समरे सौभद्रप्रमुखान्रथान् ३१
अभियात्वा तथैवाशु रथस्थान्सूर्यवर्चसः
अविध्यन्समरेऽन्योन्यं संरब्धा युद्धदुर्मदाः ३२
दुर्मुखः श्रुतकर्माणं विद्ध्वा सप्तभिराशुगैः
ध्वजमेकेन चिच्छेद सारथिं चास्य सप्तभिः ३३
अश्वाञ्जाम्बूनदैर्जालैः प्रच्छन्नान्वातरंहसः
जघान षड्भिरासाद्य सारथिं चाभ्यपातयत् ३४
स हताश्वे रथे तिष्ठञ्श्रुतकर्मा महारथः
शक्तिं चिक्षेप संक्रुद्धो महोल्कां ज्वलितामिव ३५
सा दुर्मुखस्य विपुलं वर्म भित्त्वा यशस्विनः
विदार्य प्राविशद्भूमिं दीप्यमाना सुतेजना ३६
तं दृष्ट्वा विरथं तत्र सुतसोमो महाबलः
पश्यतां सर्वसैन्यानां रथमारोपयत्स्वकम् ३७
श्रुतकीर्तिस्तथा वीरो जयत्सेनं सुतं तव
अभ्ययात्समरे राजन्हन्तुकामो यशस्विनम् ३८
तस्य विक्षिपतश्चापं श्रुतकीर्तेर्महात्मनः
चिच्छेद समरे राजञ्जयत्सेनः सुतस्तव
क्षुरप्रेण सुतीक्ष्णेन प्रहसन्निव भारत ३९
तं दृष्ट्वा छिन्नधन्वानं शतानीकः सहोदरम्
अभ्यपद्यत तेजस्वी सिंहवद्विनदन्मुहुः ४०
शतानीकस्तु समरे दृढं विस्फार्य कार्मुकम्
विव्याध दशभिस्तूर्णं जयत्सेनं शिलीमुखैः ४१
अथान्येन सुतीक्ष्णेन सर्वावरणभेदिना
शतानीको जयत्सेनं विव्याध हृदये भृशम् ४२

तथा तस्मिन्वर्तमाने दुष्कर्णो भ्रातुरन्तिके
चिच्छेद समरे चापं नाकुलेः क्रोधमूर्छितः ४३
अथान्यद्धनुरादाय भारसाधनमुत्तमम्
समादत्त शितान्बाणाञ्शतानीको महाबलः ४४
तिष्ठ तिष्ठेति चामन्त्र्य दुष्कर्णं भ्रातुरग्रतः
मुमोच निशितान्बाणाञ्ज्वलितान्पन्नगानिव ४५
ततोऽस्य धनुरेकेन द्वाभ्यां सूतं च मारिष
चिच्छेद समरे तूर्णं तं च विव्याध सप्तभिः ४६
अश्वान्मनोजवांश्चास्य कल्माषान्वीतकल्मषः
जघान निशितैस्तूर्णं सर्वान्द्वादशभिः शरैः ४७
अथापरेण भल्लेन सुमुक्तेन निपातिना
दुष्कर्णं समरे क्रुद्धो विव्याध हृदये भृशम् ४८
दुष्कर्णं निहतं दृष्ट्वा पञ्च राजन्महारथाः
जिघांसन्तः शतानीकं सर्वतः पर्यवारयन् ४९
छाद्यमानं शरव्रातैः शतानीकं यशस्विनम्
अभ्यधावन्त संरब्धाः केकयाः पञ्च सोदराः ५०
तानभ्यापततः प्रेक्ष्य तव पुत्रा महारथाः
प्रत्युद्ययुर्महाराज गजा इव महागजान् ५१
दुर्मुखो दुर्जयश्चैव तथा दुर्मर्षणो युवा
शत्रुंजयः शत्रुसहः सर्वे क्रुद्धा यशस्विनः
प्रत्युद्याता महाराज केकयान्भ्रातरः समम् ५२
रथैर्नगरसंकाशैर्हयैर्युक्तैर्मनोजवैः
नानावर्णविचित्राभिः पताकाभिरलंकृतैः ५३
वरचापधरा वीरा विचित्रकवचध्वजाः
विविशुस्ते परं सैन्यं सिंहा इव वनाद्वनम् ५४
तेषां सुतुमुलं युद्धं व्यतिषक्तरथद्विपम्
अवर्तत महारौद्रं निघ्नतामितरेतरम्
अन्योन्यागस्कृतां राजन्यमराष्ट्रविवर्धनम् ५५
मुहूर्तास्तमिते सूर्ये चक्रुर्युद्धं सुदारुणम्
रथिनः सादिनश्चैव व्यकीर्यन्त सहस्रशः ५६

ततः शान्तनवः क्रुद्धः शरैः संनतपर्वभिः
नाशयामास सेनां वै भीष्मस्तेषां महात्मनाम्
पाञ्चालानां च सैन्यानि शरैर्निन्ये यमक्षयम् ५७
एवं भित्त्वा महेष्वासः पाण्डवानामनीकिनीम्
कृत्वावहारं सैन्यानां ययौ स्वशिविरं नृप ५८
धर्मराजोऽपि संप्रेक्ष्य धृष्टद्युम्नवृकोदरौ
मूर्ध्नि चैतावुपाघ्राय संहृष्टः शिविरं ययौ ५९
इति श्रीमहाभारते भीष्मपर्वणि पञ्चसप्ततितमोऽध्यायः ७५

## षट्सप्ततितमोऽध्यायः

सञ्जय उवाच
अथ शूरा महाराज परस्परकृतागसः
जग्मुः स्वशिविराण्येव रुधिरेण समुक्षिताः १
विश्रम्य च यथान्यायं पूजयित्वा परस्परम्
संनद्धाः समदृश्यन्त भूयो युद्धचिकीर्षया २
ततस्तव सुतो राजंश्चिन्तयाभिपरिप्लुतः
विस्रवच्छोणिताक्ताङ्गः पप्रच्छेदं पितामहम् ३
सैन्यानि रौद्राणि भयानकानि व्यूढानि सम्यग्बहुलध्वजानि
विदार्य हत्वा च निपीड्य शूरास्ते पाण्डवानां त्वरिता रथौघाः ४
संमोह्य सर्वान्युधि कीर्तिमन्तो व्यूहं च तं मकरं वज्रकल्पम्
प्रविश्य भीमेन निबर्हितोऽस्मि घोरैः शरैर्मृत्युदण्डप्रकाशैः ५
क्रुद्धं तमुद्वीक्ष्य भयेन राजन्संमूर्छितो नालभं शान्तिमद्य
इच्छे प्रसादात्तव सत्यसंध प्राप्तुं जयं पाण्डवेयांश्च हन्तुम् ६
तेनैवमुक्तः प्रहसन्महात्मा दुर्योधनं जातमन्युं विदित्वा
तं प्रत्युवाचाविमना मनस्वी गङ्गासुतः शस्त्रभृतां वरिष्ठः ७
परेण यत्नेन विगाह्य सेनां सर्वात्मनाहं तव राजपुत्र
इच्छामि दातुं विजयं सुखं च न चात्मानं छादयेऽह त्वदर्थे ८
एते तु रौद्रा बहवो महारथा यशस्विनः शूरतमाः कृतास्त्राः
ये पाण्डवानां समरे सहाया जितक्लमाः क्रोधविषं वमन्ति ९
ते नेह शक्याः सहसा विजेतुं वीर्योन्नद्धाः कृतवैरास्त्वया च

अहं ह्येतान्प्रतियोत्स्यामि राजन्सर्वात्मना जीवितं त्यज्य वीर १०
रणे तवार्थाय महानुभाव न जीवितं रक्ष्यतमं ममाद्य
सर्वांस्तवार्थाय सदेवदैत्याँल्लोकान्दहेयं किमु शत्रूंस्तवेह ११
तत्पाण्डवान्योधयिष्यामि राजन्प्रियं च ते सर्वमहं करिष्ये
श्रुत्वैव चैतत्परमप्रतीतो दुर्योधनः प्रीतमना बभूव १२
सर्वाणि सैन्यानि ततः प्रहृष्टो निर्गच्छतेत्याह नृपांश्च सर्वान्
तदाज्ञया तानि विनिर्ययुर्द्रुतं रथाश्वपादातगजायुतानि १३
प्रहर्षयुक्तानि तु तानि राजन्महान्ति नानाविधशस्त्रवन्ति
स्थितानि नागाश्वपदातिमन्ति विरेजुराजौ तव राजन्बलानि १४
वृन्दैः स्थिताश्चापि सुसंप्रयुक्ताश्चकाशिरे दन्तिगणाः समन्तात्
शस्त्रास्त्रविद्भिर्नरदेव योधैरधिष्ठिताः सैन्यगणास्त्वदीयाः १५
रथैश्च पादातगजाश्वसङ्घैः प्रयाद्भिराजौ विधिवत्प्रणुन्नैः
समुद्धतं वै तरुणार्कवर्णं रजो बभौ छादयत्सूर्यरश्मीन् १६
रेजुः पताका रथदन्तिसंस्था वातेरिता भ्राम्यमाणाः समन्तात्
नानारङ्गाः समरे तत्र राजन्मेघैर्युक्ता विद्युतः खे यथैव १७
धनूंषि विस्फारयतां नृपाणां बभूव शब्दस्तुमुलोऽतिघोरः
विमथ्यतो देवमहासुरौघैर्यथार्णवस्यादियुगे तदानीम् १८
तदुग्रनादं बहुरूपवर्णं तवात्मजानां समुदीर्णमेवम्
बभूव सैन्यं रिपुसैन्यहन्तृ युगान्तमेघौघनिभं तदानीम् १९
इति श्रीमहाभारते भीष्मपर्वणि षट्सप्ततितमोऽध्यायः ७६

## सप्तसप्ततितमोऽध्यायः

सञ्जय उवाच
अथात्मजं तव पुनर्गाङ्गेयो ध्यानमास्थितम्
अब्रवीद्भरतश्रेष्ठः संप्रहर्षकरं वचः १
अहं द्रोणश्च शल्यश्च कृतवर्मा च सात्वतः
अश्वत्थामा विकर्णश्च सोमदत्तोऽथ सैन्धवः २
विन्दानुविन्दावावन्त्यौ बाह्लिकः सह बाह्लिकैः
त्रिगर्तराजश्च बली मागधश्च सुदुर्जयः ३
बृहद्बलश्च कौसल्यश्चित्रसेनो विविंशतिः

रथाश्च बहुसाहस्राः शोभमाना महाध्वजाः ४
देशजाश्च हया राजन्स्वारूढा हयसादिभिः
गजेन्द्राश्च मदोद्वृत्ताः प्रभिन्नकरटामुखाः ५
पादाताश्च तथा शूरा नानाप्रहरणायुधाः
नानादेशसमुत्पन्नास्त्वदर्थे योद्धुमुद्यताः ६
एते चान्ये च बहवस्त्वदर्थे त्यक्तजीविताः
देवानपि रणे जेतुं समर्था इति मे मतिः ७
अवश्यं तु मया राजंस्तव वाच्यं हितं सदा
अशक्याः पाण्डवा जेतुं देवैरपि सवासवैः
वासुदेवसहायाश्च महेन्द्रसमविक्रमाः ८
सर्वथाहं तु राजेन्द्र करिष्ये वचनं तव
पाण्डवानां रणे जेष्ये मां वा जेष्यन्ति पाण्डवाः ९
एवमुक्त्वा ददौ चास्मै विशल्यकरणीं शुभाम्
ओषधीं वीर्यसंपन्नां विशल्यश्चाभवत्तदा १०
ततः प्रभाते विमले स्वेनानीकेन वीर्यवान्
अव्यूहत स्वयं व्यूहं भीष्मो व्यूहविशारदः ११
मण्डलं मनुजश्रेष्ठं नानाशस्त्रसमाकुलम्
संपूर्णं योधमुख्यैश्च तथा दन्तिपदातिभिः १२
रथैरनेकसाहस्रैः समन्तात्परिवारितम्
अश्ववृन्दैर्महद्भिश्च ऋष्टितोमरधारिभिः १३
नागे नागे रथाः सप्त सप्त चाश्वा रथे रथे
अन्वश्वं दश धानुष्का धानुष्के सप्त चर्मिणः १४
एवंव्यूहं महाराज तव सैन्यं महारथैः
स्थितं रणाय महते भीष्मेण युधि पालितम् १५
दशाश्वानां सहस्राणि दन्तिनां च तथैव च
रथानामयुतं चापि पुत्राश्च तव दंशिताः
चित्रसेनादयः शूरा अभ्यरक्षन्पितामहम् १६
रक्ष्यमाणश्च तैः शूरैर्गोप्यमानाश्च तेन ते
संनद्धाः समदृश्यन्त राजानश्च महाबलाः १७
दुर्योधनस्तु समरे दंशितो रथमास्थितः

व्यभ्राजत श्रिया जुष्टो यथा शक्रस्त्रिविष्टपे १८
ततः शब्दो महानासीत्पुत्राणां तव भारत
रथघोषश्च तुमुलो वादित्राणां च निस्वनः १९
भीष्मेण धार्तराष्ट्राणां व्यूढः प्रत्यङ्मुखो युधि
मण्डलः सुमहाव्यूहो दुर्भेद्योऽमित्रघातिनाम्
सर्वतः शुशुभे राजन्रणेऽरीणां दुरासदः २०
मण्डलं तु समालोक्य व्यूहं परमदारुणम्
स्वयं युधिष्ठिरो राजा व्यूहं वज्रमथाकरोत् २१
तथा व्यूढेष्वनीकेषु यथास्थानमवस्थिताः
रथिनः सादिनश्चैव सिंहनादमथानदन् २२
बिभित्सवस्ततो व्यूहं निर्ययुर्युद्धकाङ्क्षिणः
इतरेतरतः शूराः सहसैन्याः प्रहारिणः २३
भारद्वाजो ययौ मत्स्यं द्रौणिश्चापि शिखण्डिनम्
स्वयं दुर्योधनो राजा पार्षतं समुपाद्रवत् २४
नकुलः सहदेवश्च राजन्मद्रेशमीयतुः
विन्दानुविन्दावावन्त्याविरावन्तमभिद्रुतौ २५
सर्वे नृपास्तु समरे धनंजयमयोधयन्
भीमसेनो रणे यत्तो हार्दिक्यं समवारयत् २६
चित्रसेनं विकर्णं च तथा दुर्मर्षणं विभो
आर्जुनिः समरे राजंस्तव पुत्रानयोधयत् २७
प्राग्ज्योतिषं महेष्वासं हैडिम्बो राक्षसोत्तमः
अभिदुद्राव वेगेन मत्तो मत्तमिव द्विपम् २८
अलम्बुसस्ततो राजन्सात्यकिं युद्धदुर्मदम्
ससैन्यं समरे क्रुद्धो राक्षसः समभिद्रवत् २९
भूरिश्रवा रणे यत्तो धृष्टकेतुमयोधयत्
श्रुतायुषं तु राजानं धर्मपुत्रो युधिष्ठिरः ३०
चेकितानस्तु समरे कृपमेवान्वयोधयत्
शेषाः प्रतिययुर्यत्ता भीममेव महारथम् ३१
ततो राजसहस्राणि परिवव्रुर्धनञ्जयम्
शक्तितोमरनाराचगदापरिघपाणयः ३२

अर्जुनोऽथ भृशं क्रुद्धो वार्ष्णेयमिदमब्रवीत्
पश्य माधव सैन्यानि धार्तराष्ट्रस्य संयुगे
व्यूढानि व्यूहविदुषा गाङ्गेयेन महात्मना ३३
युद्धाभिकामाञ्शूरांश्च पश्य माधव दंशितान्
त्रिगर्तराजं सहितं भ्रातृभिः पश्य केशव ३४
अद्यैतान्पातयिष्यामि पश्यतस्ते जनार्दन
य इमे मां यदुश्रेष्ठ योद्धुकामा रणाजिरे ३५
एवमुक्त्वा तु कौन्तेयो धनुर्ज्यामवमृज्य च
ववर्ष शरवर्षाणि नराधिपगणान्प्रति ३६
तेऽपि तं परमेष्वासाः शरवर्षैरपूरयन्
तडागमिव धाराभिर्यथा प्रावृषि तोयदाः ३७
हाहाकारो महानासीत्तव सैन्ये विशां पते
छाद्यमानौ भृशं कृष्णौ शरैर्दृष्ट्वा महारणे ३८
देवा देवर्षयश्चैव गन्धर्वाश्च महोरगाः
विस्मयं परमं जग्मुर्दृष्ट्वा कृष्णौ तथागतौ ३९
ततः क्रुद्धोऽजुनो राजन्नैन्द्रमस्त्रमुदीरयत्
तत्राद्भुतमपश्याम विजयस्य पराक्रमम् ४०
शस्त्रवृष्टिं परैर्मुक्तां शरौघैर्यदवारयत्
न च तत्राप्यनिर्भिन्नः कश्चिदासीद्विशां पते ४१
तेषां राजसहस्राणां हयानां दन्तिनां तथा
द्वाभ्यां त्रिभिः शरैश्चान्यान्पार्थो विव्याध मारिष ४२
ते हन्यमानाः पार्थेन भीष्मं शान्तनवं ययुः
अगाधे मज्जमानानां भीष्मस्त्राताभवत्तदा ४३
आपतद्भिस्तु तैस्तत्र प्रभग्नं तावकं बलम्
संचुक्षुभे महाराज वातैरिव महार्णवः ४४
इति श्रीमहाभारते भीष्मपर्वणि सप्तसप्ततितमोऽध्यायः ७७

## अष्ट सप्ततितमोऽध्यायः

सञ्जय उवाच
तथा प्रवृत्ते संग्रामे निवृत्ते च सुशर्मणि

प्रभग्नेषु च वीरेषु पाराडवेन महात्मना १
क्षुभ्यमाणे बले तूर्णं सागरप्रतिमे तव
प्रत्युद्याते च गाङ्गेये त्वरितं विजयं प्रति २
दृष्ट्वा दुर्योधनो राजन्रणे पार्थस्य विक्रमम्
त्वरमाणः समभ्येत्य सर्वांस्तानब्रवीन्नृपान् ३
तेषां च प्रमुखे शूरं सुशर्माणं महाबलम्
मध्ये सर्वस्य सैन्यस्य भृशं संहर्षयन्वचः ४
एष भीष्मः शांतनवो योद्धुकामो धनञ्जयम्
सर्वात्मना कुरुश्रेष्ठस्त्यक्त्वा जीवितमात्मनः ५
तं प्रयान्तं परानीकं सर्वसैन्येन भारतम्
संयत्ताः समरे सर्वे पालयध्वं पितामहम् ६
बाढमित्येवमुक्त्वा तु तान्यनीकानि सर्वशः
नरेन्द्राणां महाराज समाजग्मुः पितामहम् ७
ततः प्रयातः सहसा भीष्मः शांतनवोऽजुनम्
रणे भारतमायान्तमाससाद महाबलम् ८
महाश्वेताश्वयुक्तेन भीमवानरकेतुना
महता मेघनादेन रथेनाति विराजत ९
समरे सर्वसैन्यानामुपयातं धनञ्जयम्
अभवत्तुमुलो नादो भयाद्दृष्ट्वा किरीटिनम् १०
अभीशुहस्तं कृष्णं च दृष्ट्वादित्यमिवापरम्
मध्यंदिनगतं संख्ये न शेकुः प्रतिवीक्षितुम् ११
तथा शांतनवं भीष्मं श्वेताश्वं श्वेतकार्मुकम्
न शेकुः पाराडवा द्रष्टुं श्वेतग्रहमिवोदितम् १२
स सर्वतः परिवृतस्त्रिगर्तैः सुमहात्मभिः
भ्रातृभिस्तव पुत्रैश्च तथान्यैश्च महारथैः १३
भारद्वाजस्तु समरे मत्स्यं विव्याध पत्रिणा
ध्वजं चास्य शरेणाजौ धनुश्चैकेन चिच्छिदे १४
तदपास्य धनुश्छिन्नं विराटो वाहिनीपतिः
अन्यदादत्त वेगेन धनुर्भारसहं दृढम्
शरांश्चाशीविषाकाराञ्ज्वलितान्पन्नगानिव १५

द्रोणं त्रिभिः प्रविव्याध चतुर्भिश्चास्य वाजिनः
ध्वजमेकेन विव्याध सारथिं चास्य पञ्चभिः
धनुरेकेषुणाविध्यत्तत्राक्रुध्यद्द्विजर्षभः १६
तस्य द्रोणोऽवधीदश्वाञ्शरैः संनतपर्वभिः
अष्टाभिर्भरतश्रेष्ठ सूतमेकेन पत्रिणा १७
स हताश्वादवप्लुत्य स्यन्दनाद्धतसारथिः
आरुरोह रथं तूर्णं शङ्खस्य रथिनां वरः १८
ततस्तु तौ पितापुत्रौ भारद्वाजं रथे स्थितौ
महता शरवर्षेण वारयामासतुर्बलात् १९
भारद्वाजस्ततः क्रुद्धः शरमाशीविषोपमम्
चिक्षेप समरे तूर्णं शङ्खं प्रति जनेश्वर २०
स तस्य हृदयं भित्त्वा पीत्वा शोणितमाहवे
जगाम धरणिं बाणो लोहितार्द्रीकृतच्छविः २१
स पपात रथात्तूर्णं भारद्वाजशराहतः
धनुस्त्यक्त्वा शरांश्चैव पितुरेव समीपतः २२
हतं स्वमात्मजं दृष्ट्वा विराटः प्राद्रवद्भयात्
उत्सृज्य समरे द्रोणं व्यात्ताननमिवान्तकम् २३
भारद्वाजस्ततस्तूर्णं पाण्डवानां महाचमूम्
दारयामास समरे शतशोऽथ सहस्रशः २४
शिखण्ड्यपि महाराज द्रौणिमासाद्य संयुगे
आजघान भ्रुवोर्मध्ये नाराचैस्त्रिभिराशुगैः २५
स बभौ नरशार्दूलो ललाटे संस्थितैस्त्रिभिः
शिखरैः काञ्चनमयैर्मेरुस्त्रिभिरिवोच्छ्रितैः २६
अश्वत्थामा ततः क्रुद्धो निमेषार्धाच्छिखण्डिनः
सूतं ध्वजमथो राजंस्तुरगानायुधं तथा
शरैर्बहुभिरुद्दिश्य पातयामास संयुगे २७
स हताश्वादवप्लुत्य रथाद्वै रथिनां वरः
खड्गमादाय निशितं विमलं च शरावरम्
श्येनवद्व्यचरत्क्रुद्धः शिखण्डी शत्रुतापनः २८
सखड्गस्य महाराज चरतस्तस्य संयुगे

नान्तरं ददृशे द्रौणिस्तदद्भुतमिवाभवत् २९
ततः शरसहस्राणि बहूनि भरतर्षभ
प्रेषयामास समरे द्रौणिः परमकोपनः ३०
तामापतन्तीं समरे शरवृष्टिं सुदारुणाम्
असिना तीक्ष्णधारेण चिच्छेद बलिनां वरः ३१
ततोऽस्य विमलं द्रौणिः शतचन्द्रं मनोरमम्
चर्माच्छिनदसिं चास्य खण्डयामास संयुगे
शितैः सुबहुशो राजंस्तं च विव्याध पत्रिभिः ३२
शिखण्डी तु ततः खड्गं खण्डितं तेन सायकैः
आविध्य व्यसृजत्तूर्णं ज्वलन्तमिव पन्नगम् ३३
तमापतन्तं सहसा कालानलसमप्रभम्
चिच्छेद समरे द्रौणिर्दर्शयन्पाणिलाघवम्
शिखण्डिनं च विव्याध शरैर्बहुभिरायसैः ३४
शिखण्डी तु भृशं राजंस्ताड्यमानः शितैः शरैः
आरुरोह रथं तूर्णं माधवस्य महात्मनः ३५
सात्यकिस्तु ततः क्रुद्धो राक्षसं क्रूरमाहवे
अलम्बुसं शरैर्घोरैर्विव्याध बलिनं बली ३६
राक्षसेन्द्रस्ततस्तस्य धनुश्चिच्छेद भारत
अर्धचन्द्रेण समरे तं च विव्याध सायकैः
मायां च राक्षसीं कृत्वा शरवर्षैरवाकिरत् ३७
तत्राद्भुतमपश्याम शैनेयस्य पराक्रमम्
नासंभ्रमद्यत्समरे वध्यमानः शितैः शरैः ३८
ऐन्द्रमस्त्रं च वार्ष्णेयो योजयामास भारत
विजयाद्यदनुप्राप्तं माधवेन यशस्विना ३९
तदस्त्रं भस्मसात्कृत्वा मायां तां राक्षसीं तदा
अलम्बुसं शरैर्घोरैरभ्याकिरत सर्वशः
पर्वतं वारिधाराभिः प्रावृषीव बलाहकः ४०
तत्तथा पीडितं तेन माधवेन महात्मना
प्रदुद्राव भयाद्रक्षो हित्वा सात्यकिमाहवे ४१
तमजेयं राक्षसेन्द्रं संख्ये मघवता अपि

शैनेयः प्राणदज्जित्वा योधानां तव पश्यताम् ४२
न्यहनत्तावकांश्चापि सात्यकिः सत्यविक्रमः
निशितैर्बहुभिर्बाणैस्तेऽद्रवन्त भयार्दिताः ४३
एतस्मिन्नेव काले तु द्रुपदस्यात्मजो बली
धृष्टद्युम्नो महाराज तव पुत्रं जनेश्वरम्
छादयामास समरे शरैः सन्नतपर्वभिः ४४
संछाद्यमानो विशिखैर्धृष्टद्युम्नेन भारत
विव्यथे न च राजेन्द्र तव पुत्रो जनेश्वरः ४५
धृष्टद्युम्नं च समरे तूर्णं विव्याध सायकैः
षष्ट्या च त्रिंशता चैव तदद्भुतमिवाभवत् ४६
तस्य सेनापतिः क्रुद्धो धनुश्चिच्छेद मारिष
हयांश्च चतुरः शीघ्रं निजघान महारथः
शरैश्चैनं सुनिशितैः क्षिप्रं विव्याध सप्तभिः ४७
स हताश्वान्महाबाहुरवप्लुत्य रथाद्बली
पदातिरसिमुद्यम्य प्राद्रवत्पार्षतं प्रति ४८
शकुनिस्तं समभ्येत्य राजगृद्धी महाबलः
राजानं सर्वलोकस्य रथमारोपयत्स्वकम् ४९
ततो नृपं पराजित्य पार्षतः परवीरहा
न्यहनत्तावकं सैन्यं वज्रपाणिरिवासुरम् ५०
कृतवर्मा रणे भीमं शरैरार्छन्महारथम्
प्रच्छादयामास च तं महामेघो रविं यथा ५१
ततः प्रहस्य समरे भीमसेनः परंतपः
प्रेषयामास संक्रुद्धः सायकान्कृतवर्मणे ५२
तैरर्द्यमानोऽतिरथः सात्वतः शस्त्रकोविदः
नाकम्पत महाराज भीमं चार्छच्छितैः शरैः ५३
तस्याश्वांश्चतुरो हत्वा भीमसेनो महाबलः
सारथिं पातयामास ध्वजं च सुपरिष्कृतम् ५४
शरैर्बहुविधैश्चैनमाचिनोत्परवीरहा
शकलीकृतसर्वाङ्गः श्वाविद्वत्समदृश्यत ५५
हताश्वात्तु रथात्तूर्णं वृषकस्य रथं ययौ

स्यालस्य ते महाराज तव पुत्रस्य पश्यतः ५६
भीमसेनोऽपि संक्रुद्धस्तव सैन्यमुपाद्रवत्
निजघान च संक्रुद्धो दण्डपाणिरिवान्तकः ५७
इति श्रीमहाभारते भीष्मपर्वणि अष्टसप्ततितमोऽध्यायः ७८

## एकोनाशीतितमोऽध्यायः

धृतराष्ट्र उवाच
बहूनीह विचित्राणि द्वैरथानि स्म सञ्जय
पाण्डूनां मामकैः सार्धमश्रौषं तव जल्पतः १
न चैव मामकं कंचिद्धृष्टं शंससि सञ्जय
नित्यं पाण्डुसुतान्हृष्टानभग्नांश्चैव शंससि २
जीयमानान्विमनसो मामकान्विगतौजसः
वदसे संयुगे सूत दिष्टमेतदसंशयम् ३
सञ्जय उवाच
यथाशक्ति यथोत्साहं युद्धे चेष्टन्ति तावकाः
दर्शयानाः परं शक्त्या पौरुषं पुरुषर्षभ ४
गङ्गायाः सुरनद्या वै स्वादुभूतं यथोदकम्
महोदधिगुणाभ्यासाल्लवणत्वं निगच्छति ५
तथा तत्पौरुषं राजंस्तावकानां महात्मनाम्
प्राप्य पाण्डुसुतान्वीरान्व्यर्थं भवति संयुगे ६
घटमानान्यथाशक्ति कुर्वाणान्कर्म दुष्करम्
न दोषेण कुरुश्रेष्ठ कौरवान्गन्तुमर्हसि ७
तवापराधात्सुमहान्सपुत्रस्य विशां पते
पृथिव्याः प्रक्षयो घोरो यमराष्ट्रविवर्धनः ८
आत्मदोषात्समुत्पन्नं शोचितुं नार्हसे नृप
न हि रक्षन्ति राजानः सर्वार्थान्नापि जीवितम् ९
युद्धे सुकृतिनां लोकानिच्छन्तो वसुधाधिपाः
चमूं विगाह्य युध्यन्ते नित्यं स्वर्गपरायणाः १०
पूर्वाह्णे तु महाराज प्रावर्तत जनक्षयः
तन्ममैकमना भूत्वा शृणु देवासुरोपमम् ११

आवन्त्यौ तु महेष्वासौ महात्मानौ महाबलौ
इरावन्तमभिप्रेक्ष्य समेयातां रणोत्कटौ
तेषां प्रववृते युद्धं तुमुलं लोमहर्षणम् १२
इरावांस्तु सुसंक्रुद्धो भ्रातरौ देवरूपिणौ
विव्याध निशितैस्तूर्णं शरैः संनतपर्वभिः
तावेनं प्रत्यविध्येतां समरे चित्रयोधिनौ १३
युध्यतां हि तथा राजन्विशेषो न व्यदृश्यत
यततां शत्रुनाशाय कृतप्रतिकृतैषिणाम् १४
इरावांस्तु ततो राजन्ननुविन्दस्य सायकैः
चतुर्भिश्चतुरो वाहाननयद्यमसादनम् १५
भल्लाभ्यां च सुतीक्ष्णाभ्यां धनुः केतुं च मारिष
चिच्छेद समरे राजंस्तदद्भुतमिवाभवत् १६
त्यक्त्वानुविन्दोऽथ रथं विन्दस्य रथमास्थितः
धनुर्गृहीत्वा नवमं भारसाधनमुत्तमम् १७
तावेकस्थौ रणे वीरावावन्त्यौ रथिनां वरौ
शरान्मुमुचतुस्तूर्णमिरावति महात्मनि १८
ताभ्यां मुक्ता महावेगाः शराः काञ्चनभूषणाः
दिवाकरपथं प्राप्य छादयामासुरम्बरम् १९
इरावांस्तु ततः क्रुद्धो भ्रातरौ तौ महारथौ
ववर्ष शरवर्षेण सारथिं चाप्यपातयत् २०
तस्मिन्निपतिते भूमौ गतसत्त्वेऽथ सारथौ
रथः प्रदुद्राव दिशः समुद्भ्रान्तहयस्ततः २१
तौ स जित्वा महाराज नागराजसुतासुतः
पौरुषं ख्यापयंस्तूर्णं व्यधमत्तव वाहिनीम् २२
सा वध्यमाना समरे धार्तराष्ट्री महाचमूः
वेगान्बहुविधांश्चक्रे विषं पीत्वेव मानवः २३
हैडिम्बो राक्षसेन्द्रस्तु भगदत्तं समाद्रवत्
रथेनादित्यवर्णेन सध्वजेन महाबलः २४
ततः प्राग्ज्योतिषो राजा नागराजं समास्थितः
यथा वज्रधरः पूर्वं संग्रामे तारकामये २५

तत्र देवाः सगन्धर्वा ऋषयश्च समागताः
विशेषं न स्म विविदुर्हैडिम्बभगदत्तयोः २६
यथा सुरपतिः शक्रस्त्रासयामास दानवान्
तथैव समरे राजंस्त्रासयामास पाण्डवान् २७
तेन विद्राव्यमाणास्ते पाण्डवाः सर्वतोदिशम्
त्रातारं नाभ्यविन्दन्त स्वेष्वनीकेषु भारत २८
भैमसेनिं रथस्थं तु तत्रापश्याम भारत
शेषा विमनसो भूत्वा प्राद्रवन्त महारथाः २९
निवृत्तेषु तु पाण्डूनां पुनः सैन्येषु भारत
आसीन्निष्टानको घोरस्तव सैन्येषु संयुगे ३०
घटोत्कचस्ततो राजन्भगदत्तं महारणे
शरैः प्रच्छादयामास मेरुं गिरिमिवाम्बुदः ३१
निहत्य ताञ्शरान्राजा राक्षसस्य धनुश्च्युतान्
भैमसेनिं रणे तूर्णं सर्वमर्मस्वताडयत् ३२
स ताड्यमानो बहुभिः शरैः संनतपर्वभिः
न विव्यथे राक्षसेन्द्रो भिद्यमान इवाचलः ३३
तस्य प्राग्ज्योतिषः क्रुद्धस्तोमरान्स चतुर्दश
प्रेषयामास समरे तांश्च चिच्छेद राक्षसः ३४
स तांश्छित्त्वा महाबाहुस्तोमरान्निशितैः शरैः
भगदत्तं च विव्याध सप्तत्या कङ्कपत्रिभिः ३५
ततः प्राग्ज्योतिषो राजन्प्रहसन्निव भारत
तस्याश्वांश्चतुरः संख्ये पातयामास सायकैः ३६
स हताश्वे रथे तिष्ठन्राक्षसेन्द्रः प्रतापवान्
शक्तिं चिक्षेप वेगेन प्राग्ज्योतिषगजं प्रति ३७
तामापतन्तीं सहसा हेमदण्डां सुवेगिताम्
त्रिधा चिच्छेद नृपतिः सा व्यकीर्यत मेदिनीम् ३८
शक्तिं विनिहतां दृष्ट्वा हैडिम्बः प्राद्रवद्भयात्
यथेन्द्रस्य रणात्पूर्वं नमुचिर्दैत्यसत्तमः ३९
तं विजित्य रणे शूरं विक्रान्तं ख्यातपौरुषम्
अजेयं समरे राजन्यमेन वरुणेन च ४०

पाण्डवीं समरे सेनां संममर्द सकुञ्जरः
यथा वनगजो राजन्मृद्नंश्चरति पद्मिनीम् ४१
मद्रेश्वरस्तु समरे यमाभ्यां सह संगतः
स्वस्त्रीयौ छादयांचक्रे शरौघैः पाण्डुनन्दनौ ४२
सहदेवस्तु समरे मातुलं वीक्ष्य सङ्गतम्
अवारयच्छरौघेण मेघो यद्वद्दिवाकरम् ४३
छाद्यमानः शरौघेण हृष्टरूपतरोऽभवत्
तयोश्चाप्यभवत्प्रीतिरतुला मातृकारणात् ४४
ततः प्रहस्य समरे नकुलस्य महारथ
अश्वान्वै चतुरो राजंश्चतुर्भिः सायकोत्तमैः
प्रेषयामास समरे यमस्य सदनं प्रति ४५
हताश्वात्तु रथात्तूर्णमवप्लुत्य महारथः
आरुरोह ततो यानं भ्रातुरेव यशस्विनः ४६
एकस्थौ तु रणे शूरौ दृढे विक्षिप्य कार्मुके
मद्रराजरथं क्रुद्धौ छादयामासतुः क्षणात् ४७
स च्छाद्यमानो बहुभिः शरैः सन्नतपर्वभिः
स्वस्त्रीयाभ्यां नरव्याघ्रो नाकम्पत यथाचलः
प्रहसन्निव तां चापि शरवृष्टिं जघान ह ४८
सहदेवस्ततः क्रुद्धः शरमुद्यम्य वीर्यवान्
मद्रराजमभिप्रेक्ष्य प्रेषयामास भारत ४९
स शरः प्रेषितस्तेन गरुत्मानिव वेगवान्
मद्रराजं विनिर्भिद्य निपपात महीतले ५०
स गाढविद्धो व्यथितो रथोपस्थे महारथः
निषसाद महाराज कश्मलं च जगाम ह ५१
तं विसंज्ञं निपतितं सूतः सम्प्रेक्ष्य संयुगे
अपोवाह रथेनाजौ यमाभ्यामभिपीडितम् ५२
दृष्ट्वा मद्रेश्वररथं धार्तराष्ट्राः पराङ्मुखम्
सर्वे विमनसो भूत्वा नेदमस्तीत्यचिन्तयन् ५३
निर्जित्य मातुलं संख्ये माद्रीपुत्रौ महारथौ
दध्मतुर्मुदितौ शङ्खौ सिंहनादं विनेदतुः ५४

अभिदुद्रुवतुर्हृष्टौ तव सैन्यं विशां पते
यथा दैत्यचमूं राजन्निन्द्रोपेन्द्राविवामरौ ५५
इति श्रीमहाभारते भीष्मपर्वणि एकोनाशीतितमोऽध्यायः ७९

अशीतितमोऽध्यायः

सञ्जय उवाच
ततो युधिष्ठिरो राजा मध्यं प्राप्ते दिवाकरे
श्रुतायुषमभिप्रेक्ष्य चोदयामास वाजिनः १
अभ्यधावत्ततो राजा श्रुतायुषमरिन्दमम्
विनिघ्नन्सायकैस्तीक्ष्णैर्नवभिर्नतपर्वभिः २
स संवार्य रणे राजा प्रेषितान्धर्मसूनुना
शरान्सप्त महेष्वासः कौन्तेयाय समर्पयत् ३
ते तस्य कवचं भित्त्वा पपुः शोणितमाहवे
असूनिव विचिन्वन्तो देहे तस्य महात्मनः ४
पाण्डवस्तु भृशं विद्धस्तेन राज्ञा महात्मना
रणे वराहकर्णेन राजानं हृदि विव्यधे ५
अथापरेण भल्लेन केतुं तस्य महात्मनः
रथश्रेष्ठो रथात्तूर्णं भूमौ पार्थो न्यपातयत् ६
केतुं निपतितं दृष्ट्वा श्रुतायुः स तु पार्थिवः
पाण्डवं विशिखैस्तीक्ष्णै राजन्विव्याध सप्तभिः ७
ततः क्रोधात्प्रजज्वाल धर्मपुत्रो युधिष्ठिरः
यथा युगान्ते भूतानि धक्ष्यन्निव हुताशनः ८
क्रुद्धं तु पाण्डवं दृष्ट्वा देवगन्धर्वराक्षसाः
प्रविव्यथुर्महाराज व्याकुलं चाप्यभूज्जगत् ९
सर्वेषां चैव भूतानामिदमासीन्मनोगतम्
त्रीँल्लोकानद्य संक्रुद्धो नृपोऽय धक्ष्यतीति वै १०
ऋषयश्चैव देवाश्च चक्रुः स्वस्त्ययनं महत्
लोकानां नृप शान्त्यर्थं क्रोधिते पाण्डवे तदा ११
स च क्रोधसमाविष्टः सृक्किणी परिलेलिहन्
दधारात्मवपुर्घोरं युगान्तादित्यसन्निभम् १२

ततः सर्वाणि सैन्यानि तावकानि विशां पते
निराशान्यभवंस्तत्र जीवितं प्रति भारत १३
स तु धैर्येण तं कोपं संनिवार्य महायशाः
श्रुतायुषः प्रचिच्छेद मुष्टिदेशे महद्धनुः १४
अथैनं छिन्नधन्वानं नाराचेन स्तनान्तरे
निर्बिभेद रणे राजा सर्वसैन्यस्य पश्यतः १५
सत्वरं चरणे राजंस्तस्य वाहान्महात्मनः
निजघान शरैः क्षिप्रं सूतं च सुमहाबलः १६
हताश्वं तु रथं त्यक्त्वा दृष्ट्वा राज्ञस्तु पौरुषम्
विप्रदुद्राव वेगेन श्रुतायुः समरे तदा १७
तस्मिञ्जिते महेष्वासे धर्मपुत्रेण संयुगे
दुर्योधनबलं राजन्सर्वमासीत्पराङ्मुखम् १८
एतत्कृत्वा महाराज धर्मपुत्रो युधिष्ठिरः
व्यात्ताननो यथा कालस्तव सैन्यं जघान ह १९
चेकितानस्तु वार्ष्णेयो गौतमं रथिनां वरम्
प्रेक्षतां सर्वसैन्यानां छादयामास सायकैः २०
संनिवार्य शरांस्तांस्तु कृपः शारद्वतो युधि
चेकितानं रणे यत्तं राजन्विव्याध पत्रिभिः २१
अथापरेण भल्लेन धनुश्चिच्छेद मारिष
सारथिं चास्य समरे क्षिप्रहस्तो न्यपातयत्
हयांश्चास्यावधीद्राजन्नुभौ च पार्ष्णिसारथी २२
सोऽवप्लुत्य रथात्तूर्णं गदां जग्राह सात्वतः
स तया वीरघातिन्या गदया गदिनां वरः
गौतमस्य हयान्हत्वा सारथिं च न्यपातयत् २३
भूमिष्ठो गौतमस्तस्य शरांश्चिक्षेप षोडश
ते शराः सात्वतं भित्त्वा प्राविशन्त धरातलम् २४
चेकितानस्ततः क्रुद्धः पुनश्चिक्षेप तां गदाम्
गौतमस्य वधाकाङ्क्षी वृत्रस्येव पुरन्दरः २५
तामापतन्तीं विमलामश्मगर्भां महागदाम्
शरैरनेकसाहस्रैर्वारयामास गौतमः २६

चेकितानस्ततः खड्गं कोशादुद्धृत्य भारत
लाघवं परमास्थाय गौतमं समुपाद्रवत् २७
गौतमोऽपि धनुस्त्यक्त्वा प्रगृह्यासिं सुसंशितम्
वेगेन महता राजंश्चेकितानमुपाद्रवत् २८
तावुभौ बलसम्पन्नौ निस्त्रिंशवरधारिणौ
निस्त्रिंशाभ्यां सुतीक्ष्णाभ्यामन्योन्यं सन्ततक्षतुः २९
निस्त्रिंशवेगाभिहतौ ततस्तौ पुरुषर्षभौ
धरणीं समनुप्राप्तौ सर्वभूतनिषेविताम्
मूर्छयाभिपरीताङ्गौ व्यायामेन च मोहितौ ३०
ततोऽभ्यधावद्वेगेन करकर्षः सुहृत्तया
चेकितानं तथाभूतं दृष्ट्वा समरदुर्मदम्
रथमारोपयच्चैनं सर्वसैन्यस्य पश्यतः ३१
तथैव शकुनिः शूरः स्यालस्तव विशां पते
आरोपयद्रथं तूर्णं गौतमं रथिनां वरम् ३२
सौमदत्तिं तथा क्रुद्धो धृष्टकेतुर्महाबलः
नवत्या सायकैः क्षिप्रं राजन्विव्याध वक्षसि ३३
सौमदत्तिरुरःस्थैस्तैर्भृशं बाणैरशोभत
मध्यन्दिने महाराज रश्मिभिस्तपनो यथा ३४
भूरिश्रवास्तु समरे धृष्टकेतुं महारथम्
हतसूतहयं चक्रे विरथं सायकोत्तमैः ३५
विरथं चैनमालोक्य हताश्वं हतसारथिम्
महता शरवर्षेण छादयामास संयुगे ३६
स च तं रथमुत्सृज्य धृष्टकेतुर्महामनाः
आरुरोह ततो यानं शतानीकस्य मारिष ३७
चित्रसेनो विकर्णश्च राजन्दुर्मर्षणस्तथा
रथिनो हेमसंनाहाः सौभद्रमभिदुद्रुवुः ३८
अभिमन्योस्ततस्तैस्तु घोरं युद्धमवर्तत
शरीरस्य यथा राजन्वातपित्तकफैस्त्रिभिः ३९
विरथांस्तव पुत्रांस्तु कृत्वा राजन्महाहवे
न जघान नरव्याघ्रः स्मरन्भीमवचस्तदा ४०

ततो राज्ञां बहुशतैर्गजाश्वरथयायिभिः
संवृतं समरे भीष्मं देवैरपि दुरासदम् ४१
प्रयान्तं शीघ्रमुद्वीक्ष्य परित्रातुं सुतांस्तव
अभिमन्युं समुद्दिश्य बालमेकं महारथम्
वासुदेवमुवाचेदं कौन्तेयः श्वेतवाहनः ४२
चोदयाश्वान्हृषीकेश यत्रैते बहुला रथाः
एते हि बहवः शूराः कृतास्त्रा युद्धदुर्मदाः
यथा न हन्युर्नः सेनां तथा माधव चोदय ४३
एवमुक्तः स वार्ष्णेयः कौन्तेयेनामितौजसा
रथं श्वेतहयैर्युक्तं प्रेषयामास संयुगे ४४
निष्टानको महानासीत्तव सैन्यस्य मारिष
यदर्जुनो रणे क्रुद्धः संयातस्तावकान्प्रति ४५
समासाद्य तु कौन्तेयो राज्ञस्तान्भीष्मरक्षिणः
सुशर्माणमथो राजन्निदं वचनमब्रवीत् ४६
जानामि त्वां युधि श्रेष्ठमत्यन्तं पूर्ववैरिणम्
पर्यायस्याद्य सम्प्राप्तं फलं पश्य सुदारुणम्
अद्य ते दर्शयिष्यामि पूर्वप्रेतान्पितामहान् ४७
एवं संजल्पतस्तस्य बीभत्सोः शत्रुघातिनः
श्रुत्वापि परुषं वाक्यं सुशर्मा रथयूथपः
न चैनमब्रवीत्किंचिच्छुभं वा यदि वाशुभम् ४८
अभि गत्वार्जुनं वीरं राजभिर्बहुभिर्वृतः
पुरस्तात्पृष्ठतश्चैव पार्श्वतश्चैव सर्वतः ४९
परिवार्यार्जुनं संख्ये तव पुत्रैः सहानघ
शरैः संछादयामास मेघैरिव दिवाकरम् ५०
ततः प्रवृत्तः सुमहान्संग्रामः शोणितोदकः
तावकानां च समरे पाण्डवानां च भारत ५१

इति श्रीमहाभारते भीष्मपर्वणि अशीतितमोऽध्यायः ८०

## एकाशीतितमोऽध्यायः

सञ्जय उवाच

स तुद्यमानस्तु शरैर्धनञ्जयः पदा हतो नाग इव श्वसन्बली
बाणेन बाणेन महारथानां चिच्छेद चापानि रणे प्रसह्य १
संछिद्य चापानि च तानि राज्ञां तेषां रणे वीर्यवतां क्षणेन
विव्याध बाणैर्युगपन्महात्मा निःशेषतां तेष्वथ मन्यमानः २
निपेतुराजौ रुधिरप्रदिग्धास्ते ताडिताः शक्रसुतेन राजन्
विभिन्नगात्राः पतितोत्तमाङ्गा गतासवश्छिन्नतनुत्रकायाः ३
महीं गताः पार्थबलाभिभूता विचित्ररूपा युगपद्विनेशुः
दृष्ट्वा हतांस्तान्युधि राजपुत्रांस्त्रिगर्तराजः प्रययौ क्षणेन ४
तेषां रथानामथ पृष्ठगोपा द्वात्रिंशदन्येऽभ्यपतन्त पार्थम्
तथैव ते संपरिवार्य पार्थं विकृष्य चापानि महारवाणि
अवीवृषन्बाणमहौघवृष्ट्या यथा गिरिं तोयधरा जलौघैः ५
संपीडयमानस्तु शरौघवृष्ट्या धनञ्जयस्तान्युधि जातरोषः
षष्ट्या शरैः संयति तैलधौतैर्जघान तानप्यथ पृष्ठगोपान् ६
षष्टिं रथांस्तानवजित्य संख्ये धनञ्जयः प्रीतमना यशस्वी
अथात्वरद्भीष्मवधाय जिष्णुर्बलानि राज्ञां समरे निहत्य ७
त्रिगर्तराजो निहतान्समीक्ष्य महारथांस्तानथ बन्धुवर्गान्
रणे पुरस्कृत्य नराधिपांस्ताञ्जगाम पार्थं त्वरितो वधाय ८
अभिद्रुतं चास्त्रभृतां वरिष्ठं धनञ्जयं वीक्ष्य शिखण्डिमुख्याः
अभ्युद्ययुस्ते शितशस्त्रहस्ता रिरक्षिषन्तो रथमर्जुनस्य ९
पार्थोऽपि तानापततः समीक्ष्य त्रिगर्तराज्ञा सहितान्नृवीरान्
विध्वंसयित्वा समरे धनुष्मान्गाण्डीवमुक्तैर्निशितैः पृषत्कैः
भीष्मं यियासुर्युधि संददर्श दुर्योधनं सैन्धवादींश्च राज्ञः १०
आवारयिष्णूनभिसंप्रयाय मुहूर्तमायोध्य बलेन वीरः
उत्सृज्य राजानमनन्तवीर्यो जयद्रथादींश्च नृपान्महौजाः
ययौ ततो भीमबलो मनस्वी गाङ्गेयमाजौ शरचापपाणिः ११
युधिष्ठिरश्चोग्रबलो महात्मा समाययौ त्वरितो जातकोपः
मद्राधिपं समभित्यज्य संख्ये स्वभागमाप्तं तमनन्तकीर्तिः
सार्धं स माद्रीसुतभीमसेनैर्भीष्मं ययौ शान्तनवं रणाय १२
तैः सम्प्रयुक्तः स महारथाग्र्यैर्गङ्गासुतः समरे चित्रयोधी
न विव्यथे शान्तनवो महात्मा समागतैः पाण्डुसुतैः समस्तैः १३

अथैत्य राजा युधि सत्यसन्धो जयद्रथोऽत्युग्रबलो मनस्वी
चिच्छेद चापानि महारथानां प्रसह्य तेषां धनुषा वरेण १४
युधिष्ठिरं भीमसेनं यमौ च पार्थं तथा युधि सञ्जातकोपः
दुर्योधनः क्रोधविषो महात्मा जघान बाणैरनलप्रकाशैः १५
कृपेण शल्येन शलेन चैव तथा विभो चित्रसेनेन चाजौ
विद्धाः शरैस्तेऽतिविवृद्धकोपैर्देवा यथा दैत्यगणैः समेतैः १६
छिन्नायुधं शान्तनवेन राजा शिखण्डिनं प्रेक्ष्य च जातकोपः
अजातशत्रुः समरे महात्मा शिखण्डिनं क्रुद्ध उवाच वाक्यम् १७
उक्त्वा तथा त्वं पितुरग्रतो मामहं हनिष्यामि महाव्रतं तम्
भीष्मं शरौघैर्विमलार्कवर्णैः सत्यं वदामीति कृता प्रतिज्ञा १८
त्वया न चैनां सफलां करोषि देवव्रतं यन्न निहंसि युद्धे
मिथ्याप्रतिज्ञो भव मा नृवीर रक्षस्व धर्मं च कुलं यशश्च १९
प्रेक्षस्व भीष्मं युधि भीमवेगं सर्वांस्तपन्तं मम सैन्यसंघान्
शरौघजालैरतितिग्मतेजैः कालं यथा मृत्युकृतं क्षणेन २०
निकृत्तचापः समरानपेक्षः पराजितः शान्तनवेन राज्ञा
विहाय बन्धूनथ सोदरांश्च क्व यास्यसे नानुरूपं तवेदम् २१
दृष्ट्वा हि भीष्मं तमनन्तवीर्यं भग्नं च सैन्यं द्रवमाणमेवम्
भीतोऽसि नूनं द्रुपदस्य पुत्र तथा हि ते मुखवर्णोऽप्रहृष्टः २२
आज्ञायमानेऽपि धनञ्जयेन महाहवे संप्रसक्ते नृवीर
कथं हि भीष्मात्प्रथितः पृथिव्यां भयं त्वमद्य प्रकरोषि वीर २३
स धर्मराजस्य वचो निशम्य रूक्षाक्षरं विप्रलापानुबद्धम्
प्रत्यादेशं मन्यमानो महात्मा प्रतत्वरे भीष्मवधाय राजन् २४
तमापतन्तं महता जवेन शिखण्डिनं भीष्ममभिद्रवन्तम्
आवारयामास हि शल्य एनं शस्त्रेण घोरेण सुदुर्जयेन २५
स चापि दृष्ट्वा समुदीर्यमाणमस्त्रं युगान्ताग्निसमप्रभावम्
नासौ व्यमुह्यद्द्रुपदस्य पुत्रो राजन्महेन्द्रप्रतिमप्रभावः २६
तस्थौ च तत्रैव महाधनुष्माञ्शरैस्तदस्त्रं प्रतिबाधमानः
अथाददे वारुणमन्यदस्त्रं शिखण्ड्यथोग्रं प्रतिघाताय तस्य
तदस्त्रमस्त्रेण विदार्यमाणं खस्थाः सुरा ददृशुः पार्थिवाश्च २७
भीष्मस्तु राजन्समरे महात्मा धनुः सचित्रं ध्वजमेव चापि

छित्त्वानदत्पाण्डुसुतस्य वीरो युधिष्ठिरस्याजमीढस्य राज्ञः २८
ततः समुत्सृज्य धनुः सबाणं युधिष्ठिरं वीक्ष्य भयाभिभूतम्
गदां प्रगृह्याभिपपात संख्ये जयद्रथं भीमसेनः पदातिः २९
तमापतन्तं महता जवेन जयद्रथः सगदं भीमसेनम्
विव्याध घोरैर्यमदण्डकल्पैः शितैः शरैः पञ्चशतैः समन्तात् ३०
अचिन्तयित्वा स शरांस्तरस्वी वृकोदरः क्रोधपरीतचेताः
जघान वाहान्समरे समस्तानारट्टजान्सिन्धुराजस्य संख्ये ३१
ततोऽभिवीक्ष्याप्रतिमप्रभावस्तवात्मजस्त्वरमाणो रथेन
अभ्याययौ भीमसेनं निहन्तुं समुद्यतास्त्रः सुरराजकल्पः ३२
भीमोऽप्यथैनं सहसा विनद्य प्रत्युद्ययौ गदया तर्जमानः
समुद्यतां तां यमदण्डकल्पां दृष्ट्वा गदां ते कुरवः समन्तात् ३३
विहाय सर्वे तव पुत्रमुग्रं पातं गदायाः परिहर्तुकामाः
अपक्रान्तास्तुमुले संविमर्दे सुदारुणे भारत मोहनीये ३४
अमूढचेतास्त्वथ चित्रसेनो महागदामापतन्तीं निरीक्ष्य
रथं समुत्सृज्य पदातिराजौ प्रगृह्य खड्गं विमलं च चर्म
अवप्लुतः सिंह इवाचलाग्राज्जगाम चान्यं भुवि भूमिदेशम् ३५
गदापि सा प्राप्य रथं सुचित्रं साश्वं ससूतं विनिहत्य संख्ये
जगाम भूमिं ज्वलिता महोल्का भ्रष्टाम्बराद्गामिव सम्पतन्ती ३६
आश्चर्यभूतं सुमहत्त्वदीया दृष्ट्वैव तद्भारत सम्प्रहृष्टाः
सर्वे विनेदुः सहिताः समन्तात्पुपूजिरे तव पुत्रं ससैन्याः ३७
इति श्रीमहाभारते भीष्मपर्वणि एकाशीतितमोऽध्यायः ८१

## द्व्यशीतितमोऽध्यायः

सञ्जय उवाच
विरथं तं समासाद्य चित्रसेनं मनस्विनम्
रथमारोपयामास विकर्णस्तनयस्तव १
तस्मिंस्तथा वर्तमाने तुमुले संकुले भृशम्
भीष्मः शांतनवस्तूर्णं युधिष्ठिरमुपाद्रवत् २
ततः सरथनागाश्वाः समकम्पन्त सृञ्जयाः
मृत्योरास्यमनुप्राप्तं मेनिरे च युधिष्ठिरम् ३

युधिष्ठिरोऽपि कौरव्यो यमाभ्यां सहितः प्रभुः
महेष्वासं नरव्याघ्रं भीष्मं शान्तनवं ययौ ४
ततः शरसहस्राणि प्रमुञ्चन्पाण्डवो युधि
भीष्मं संछादयामास यथा मेघो दिवाकरम् ५
तेन सम्यक्प्रणीतानि शरजालानि भारत
प्रतिजग्राह गाङ्गेयः शतशोऽथ सहस्रशः ६
तथैव शरजालानि भीष्मेणास्तानि मारिष
आकाशे समदृश्यन्त खगमानां व्रजा इव ७
निमेषार्धाच्च कौन्तेयं भीष्मः शान्तनवो युधि
अदृश्यं समरे चक्रे शरजालेन भागशः ८
ततो युधिष्ठिरो राजा कौरव्यस्य महात्मनः
नाराचं प्रेषयामास क्रुद्ध आशीविषोपमम् ९
असम्प्राप्तं ततस्तं तु क्षुरप्रेण महारथः
चिच्छेद समरे राजन्भीष्मस्तस्य धनुश्च्युतम् १०
तं तु छित्त्वा रणे भीष्मो नाराचं कालसंमितम्
निजघ्ने कौरवेन्द्रस्य हयान्काञ्चनभूषणान् ११
हताश्वं तु रथं त्यक्त्वा धर्मपुत्रो युधिष्ठिरः
आरुरोह रथं तूर्णं नकुलस्य महात्मनः १२
यमावपि सुसंक्रुद्धः समासाद्य रणे तदा
शरैः संछादयामास भीष्मः परपुरंजयः १३
तौ तु दृष्ट्वा महाराज भीष्मबाणप्रपीडितौ
जगामाथ परां चिन्तां भीष्मस्य वधकाङ्क्षया १४
ततो युधिष्ठिरो वश्यान्राज्ञस्तान्समचोदयत्
भीष्मं शान्तनवं सर्वे निहतेति सुहृद्गणान् १५
ततस्ते पार्थिवाः सर्वे श्रुत्वा पार्थस्य भाषितम्
महता रथवंशेन परिवव्रुः पितामहम् १६
स समन्तात्परिवृतः पिता देवव्रतस्तव
चिक्रीड धनुषा राजन्पातयानो महारथान् १७
तं चरन्तं रणे पार्था ददृशुः कौरवं युधि
मृगमध्यं प्रविश्येव यथा सिंहशिशुं वने १८

तर्जयानं रणे शूरांस्त्रासयानं च सायकैः
दृष्ट्वा त्रेसुर्महाराज सिंहं मृगगणा इव १९
रणे भरतसिंहस्य ददृशुः क्षत्रिया गतिम्
अग्नेर्वायुसहायस्य यथा कक्षं दिधक्षतः २०
शिरांसि रथिनां भीष्मः पातयामास संयुगे
तालेभ्य इव पक्वानि फलानि कुशलो नरः २१
पतद्भिश्च महाराज शिरोभिर्धरणीतले
बभूव तुमुलः शब्दः पततामश्मनामिव २२
तस्मिंस्तु तुमुले युद्धे वर्तमाने सुदारुणे
सर्वेषामेव सैन्यानामासीद्व्यतिकरो महान् २३
भिन्नेषु तेषु व्यूहेषु क्षत्रिया इतरेतरम्
एकमेकं समाहूय युद्धायैवोपतस्थिरे २४
शिखण्डी तु समासाद्य भरतानां पितामहम्
अभिदुद्राव वेगेन तिष्ठ तिष्ठेति चाब्रवीत् २५
अनादृत्य ततो भीष्मस्तं शिखण्डिनमाहवे
प्रययौ सृञ्जयान्क्रुद्धः स्त्रीत्वं चिन्त्य शिखण्डिनः २६
सृञ्जयास्तु ततो हृष्टा दृष्ट्वा भीष्मं महारथम्
सिंहनादान्बहुविधांश्चक्रुः शङ्खविमिश्रितान् २७
ततः प्रववृते युद्धं व्यतिषक्तरथद्विपम्
अपरां दिशमास्थाय स्थिते सवितरि प्रभो २८
धृष्टद्युम्नोऽथ पाञ्चाल्यः सात्यकिश्च महारथः
पीडयन्तौ भृशं सैन्यं शक्तितोमरवृष्टिभिः
शस्त्रैश्च बहुभी राजञ्जघ्नतुस्तावकान्रणे २९
ते हन्यमानाः समरे तावकाः पुरुषर्षभ
आर्यां युद्धे मतिं कृत्वा न त्यजन्ति स्म संयुगम्
यथोत्साहं च समरे जघ्नुर्लोकं महारथाः ३०
तत्राक्रन्दो महानासीत्तावकानां महात्मनाम्
वध्यतां समरे राजन्पार्षतेन महात्मना ३१
तं श्रुत्वा निनदं घोरं तावकानां महारथौ
विन्दानुविन्दावावन्त्यौ पार्षतं प्रत्युपस्थितौ ३२

तौ तस्य तुरगान्हत्वा त्वरमाणौ महारथौ
छादयामासतुरुभौ शरवर्षेण पार्षतम् ३३
अवप्लुत्याथ पाञ्चाल्यो रथात्तूर्णं महाबलः
आरुरोह रथं तूर्णं सात्यकेः सुमहात्मनः ३४
ततो युधिष्ठिरो राजा महत्या सेनया वृतः
आवन्त्यौ समरे क्रुद्धावभ्ययात्स परन्तपौ ३५
तथैव तव पुत्रोऽपि सर्वोद्योगेन मारिष
विन्दानुविन्दावावन्त्यौ परिवार्योपतस्थिवान् ३६
अर्जुनश्चापि संक्रुद्धः क्षत्रियान्क्षत्रियर्षभ
अयोधयत संग्रामे वज्रपाणिरिवासुरान् ३७
द्रोणश्च समरे क्रुद्धः पुत्रस्य प्रियकृत्तव
व्यधमत्सर्वपाञ्चालांस्तूलराशिमिवानलः ३८
दुर्योधनपुरोगास्तु पुत्रास्तव विशां पते
परिवार्य रणे भीष्मं युयुधुः पाण्डवैः सह ३९
ततो दुर्योधनो राजा लोहितायति भास्करे
अब्रवीत्तावकान्सर्वांस्त्वरध्वमिति भारत ४०
युध्यतां तु तथा तेषां कुर्वतां कर्म दुष्करम्
अस्तं गिरिमथारूढे नप्रकाशति भास्करे ४१
प्रावर्तत नदी घोरा शोणितौघतरङ्गिणी
गोमायुगणसंकीर्णा क्षणेन रजनीमुखे ४२
शिवाभिरशिवाभिश्च रुवद्भिर्भैरवं रवम्
घोरमायोधनं जज्ञे भूतसङ्घसमाकुलम् ४३
राक्षसाश्च पिशाचाश्च तथान्ये पिशिताशनाः
समन्ततो व्यदृश्यन्त शतशोऽथ सहस्रशः ४४
अर्जुनोऽथ सुशर्मादीन्राज्ञस्तान्सपदानुगान्
विजित्य पृतनामध्ये ययौ स्वशिविरं प्रति ४५
युधिष्ठिरोऽपि कौरव्यो भ्रातृभ्यां सहितस्तदा
ययौ स्वशिबिरं राजा निशायां सेनया वृतः ४६
भीमसेनोऽपि राजेन्द्र दुर्योधनमुखान्रथान्
अवजित्य ततः संख्ये ययौ स्वशिविरं प्रति ४७

दुर्योधनोऽपि नृपतिः परिवार्य महारणे
भीष्मं शान्तनवं तूर्णं प्रयातः शिविरं प्रति ४८
द्रोणो द्रौणिः कृपः शल्यः कृतवर्मा च सात्वतः
परिवार्य चमूं सर्वां प्रययुः शिविरं प्रति ४९
तथैव सात्यकी राजन्धृष्टद्युम्नश्च पार्षतः
परिवार्य रणे योधान्ययतुः शिबिरं प्रति ५०
एवमेते महाराज तावकाः पाण्डवैः सह
पर्यवर्तन्त सहिता निशाकाले परंतपाः ५१
ततः स्वशिविरं गत्वा पाण्डवाः कुरवस्तथा
न्यविशन्त महाराज पूजयन्तः परस्परम् ५२
रक्षां कृत्वात्मनः शूरा न्यस्य गुल्मान्यथाविधि
अपनीय च शल्यांस्ते स्नात्वा च विविधैर्जलैः ५३
कृतस्वस्त्ययनाः सर्वे संस्तूयन्तश्च बन्दिभिः
गीतवादित्रशब्देन व्यक्रीडन्त यशस्विनः ५४
मुहूर्तमिव तत्सर्वमभवत्स्वर्गसंनिभम्
न हि युद्धकथां काञ्चित्तत्र चक्रुर्महारथाः ५५
ते प्रसुप्ते बले तत्र परिश्रान्तजने नृप
हस्त्यश्वबहुले राजन्प्रेक्षणीये बभूवतुः ५६

इति श्रीमहाभारते भीष्मपर्वणि द्व्यशीतितमोऽध्यायः ८२

## त्र्यशीतितमोऽध्यायः

सञ्जय उवाच
परिणाम्य निशां तां तु सुखसुप्ता जनेश्वराः
कुरवः पाण्डवाश्चैव पुनर्युद्धाय निर्ययुः १
ततः शब्दो महानासीत्सेनयोरुभयोरपि
निर्गच्छमानयोः संख्ये सागरप्रतिमो महान् २
ततो दुर्योधनो राजा चित्रसेनो विविंशतिः
भीष्मश्च रथिनां श्रेष्ठो भारद्वाजश्च वै द्विजः ३
एकीभूताः सुसंयत्ताः कौरवाणां महाचमूः
व्यूहाय विदधू राजन्पाण्डवान्प्रति दंशिताः ४

भीष्मः कृत्वा महाव्यूहं पिता तव विशां पते
सागरप्रतिमं घोरं वाहनोर्मितरङ्गिणम् ५
अग्रतः सर्वसैन्यानां भीष्मः शान्तनवो ययौ
मालवैर्दाक्षिणात्यैश्च आवन्त्यैश्च समन्वितः ६
ततोऽनन्तरमेवासीद्भारद्वाजः प्रतापवान्
पुलिन्दैः पारदैश्चैव तथा क्षुद्रकमालवैः ७
द्रोणादनन्तरं यत्तो भगदत्तः प्रतापवान्
मागधैश्च कलिङ्गैश्च पिशाचैश्च विशां पते ८
प्राग्ज्योतिषादनु नृपः कौसल्योऽथ बृहद्बलः
मेकलैस्त्रैपुरैश्चैव चिच्छिलैश्च समन्वितः ९
बृहद्बलात्ततः शूरस्त्रिगर्तः प्रस्थलाधिपः
काम्बोजैर्बहुभिः सार्धं यवनैश्च सहस्रशः १०
द्रौणिस्तु रभसः शूरस्त्रिगर्तादनु भारत
प्रययौ सिंहनादेन नादयानो धरातलम् ११
तथा सर्वेण सैन्येन राजा दुर्योधनस्तदा
द्रौणेरनन्तरं प्रायात्सोदर्यैः परिवारितः १२
दुर्योधनादनु कृपस्ततः शारद्वतो ययौ
एवमेष महाव्यूहः प्रययौ सागरोपमः १३
रेजुस्तत्र पताकाश्च श्वेतच्छत्राणि चाभिभो
अङ्गदान्यथ चित्राणि महार्हाणि धनूंषि च १४
तं तु दृष्ट्वा महाव्यूहं तावकानां महारथः
युधिष्ठिरोऽब्रवीत्तूर्णं पार्षतं पृतनापतिम् १५
पश्य व्यूहं महेष्वास निर्मितं सागरोपमम्
प्रतिव्यूहं त्वमपि हि कुरु पार्षत माचिरम् १६
ततः स पार्षतः शूरो व्यूहं चक्रे सुदारुणम्
शृङ्गाटकं महाराज परव्यूहविनाशनम् १७
शृङ्गेभ्यो भीमसेनश्च सात्यकिश्च महारथः
रथैरनेकसाहस्रैस्तथा हयपदातिभिः १८
नाभ्यामभून्नरश्रेष्ठः श्वेताश्वो वानरध्वजः
मध्ये युधिष्ठिरो राजा माद्रीपुत्रौ च पाण्डवौ १९

अथेतरे महेष्वासाः सहसैन्या नराधिपाः
व्यूहं तं पूरयामासुर्व्यूहशास्त्रविशारदाः २०
अभिमन्युस्ततः पश्चाद्विराटश्च महारथः
द्रौपदेयाश्च संहृष्टा राक्षसश्च घटोत्कचः २१
एवमेतं महाव्यूहं व्यूह्य भारत पाण्डवाः
अतिष्ठन्समरे शूरा योद्धुकामा जयैषिणः २२
भेरीशब्दाश्च तुमुला विमिश्राः शङ्खनिस्वनैः
क्ष्वेडितास्फोटितोत्क्रुष्टैः सुभीमाः सर्वतोदिशम् २३
ततः शूराः समासाद्य समरे ते परस्परम्
नेत्रैरनिमिषै राजन्नवैक्षन्त प्रकोपिताः २४
मनोभिस्ते मनुष्येन्द्र पूर्वं योधाः परस्परम्
युद्धाय समवर्तन्त समाहूयेतरेतरम् २५
ततः प्रववृते युद्धं घोररूपं भयावहम्
तावकानां परेषां च निघ्नतामितरेतरम् २६
नाराचा निशिताः संख्ये संपतन्ति स्म भारत
व्यात्ताननना भयकरा उरगा इव सङ्घशः २७
निष्पेतुर्विमलाः शक्त्यस्तैलधौताः सुतेजनाः
अम्बुदेभ्यो यथा राजन्भ्राजमानाः शतह्रदाः २८
गदाश्च विमलैः पट्टैः पिनद्धाः स्वर्णभूषिताः
पतन्त्यस्तत्र दृश्यन्ते गिरिशृङ्गोपमाः शुभाः
निस्त्रिंशाश्च व्यराजन्त विमलाम्बरसंनिभाः २९
आर्षभाणि च चर्माणि शतचन्द्राणि भारत
अशोभन्त रणे राजन्पतमानानि सर्वशः ३०
तेऽन्योन्यं समरे सेने युध्यमाने नराधिप
अशोभेतां यथा दैत्यदेवसेने समुद्यते
अभ्यद्रवन्त समरे तेऽन्योन्यं वै समन्ततः ३१
रथास्तु रथिभिस्तूर्णं प्रेषिताः परमाहवे
युगैर्युगानि संश्लिष्य युयुधुः पार्थिवर्षभाः ३२
दन्तिनां युध्यमानानां सङ्घर्षात्पावकोऽभवत्
दन्तेषु भरतश्रेष्ठ सधूमः सर्वतोदिशम् ३३

प्रासैरभिहताः केचिद्गजयोधाः समन्ततः
पतमानाः स्म दृश्यन्ते गिरिशृङ्गान्नगा इव ३४
पादाताश्चाप्यदृश्यन्त निघ्नन्तो हि परस्परम्
चित्ररूपधराः शूरा नखरप्रासयोधिनः ३५
अन्योन्यं ते समासाद्य कुरुपाण्डवसैनिकाः
शस्त्रैर्नानाविधैर्घोरै रणे निन्युर्यमक्षयम् ३६
ततः शान्तनवो भीष्मो रथघोषेण नादयन्
अभ्यागमद्रणे पाण्डून्धनुःशब्देन मोहयन् ३७
पाण्डवानां रथाश्चापि नदन्तो भैरवस्वनम्
अभ्यद्रवन्त संयत्ता धृष्टद्युम्नपुरोगमाः ३८
ततः प्रववृते युद्धं तव तेषां च भारत
नराश्वरथनागानां व्यतिषक्तं परस्परम् ३९
इति श्रीमहाभारते भीष्मपर्वणि त्र्यशीतितमोऽध्यायः ८३

## चतुरशीतितमोऽध्यायः

सञ्जय उवाच
भीष्मं तु समरे क्रुद्धं प्रतपन्तं समन्ततः
न शेकुः पाण्डवा द्रष्टुं तपन्तमिव भास्करम् १
ततः सर्वाणि सैन्यानि धर्मपुत्रस्य शासनात्
अभ्यद्रवन्त गाङ्गेयं मर्दयन्तं शितैः शरैः २
स तु भीष्मो रणश्लाघी सोमकान्सहसृञ्जयान्
पाञ्चालांश्च महेष्वासान्पातयामास सायकैः ३
ते वध्यमाना भीष्मेण पाञ्चालाः सोमकैः सह
भीष्ममेवाभ्ययुस्तूर्णं त्यक्त्वा मृत्युकृतं भयम् ४
स तेषां रथिनां वीरो भीष्मः शान्तनवो युधि
चिच्छेद सहसा राजन्बाहूनथ शिरांसि च ५
विरथान्रथिनश्चक्रे पिता देवव्रतस्तव
पतितान्युत्तमाङ्गानि हयेभ्यो हयसादिनाम् ६
निर्मनुष्यांश्च मातङ्गाञ्शयानान्पर्वतोपमान्
अपश्याम महाराज भीष्मास्त्रेण प्रमोहितान् ७

न तत्रासीत्पुमान्कश्चित्पाण्डवानां विशां पते
अन्यत्र रथिनां श्रेष्ठाद्भीमसेनान्महाबलात् ८
स हि भीष्मं समासाद्य ताडयामास संयुगे
ततो निष्टानको घोरो भीष्मभीमसमागमे ९
बभूव सर्वसैन्यानां घोररूपो भयानकः
तथैव पाण्डवा हृष्टाः सिंहनादमथानदन् १०
ततो दुर्योधनो राजा सोदर्यैः परिवारितः
भीष्मं जुगोप समरे वर्तमाने जनक्षये ११
भीमस्तु सारथिं हत्वा भीष्मस्य रथिनां वरः
विद्रुताश्वे रथे तस्मिन्द्रवमाणे समन्ततः
सुनाभस्य शरेणाशु शिरश्चिच्छेद चारिहा १२
क्षुरप्रेण सुतीक्ष्णेन स हतो न्यपतद्भुवि
हते तस्मिन्महाराज तव पुत्रे महारथे
नामृष्यन्त रणे शूराः सोदर्याः सप्त संयुगे १३
आदित्यकेतुर्बह्वाशी कुण्डधारो महोदरः
अपराजितः पण्डितको विशालाक्षः सुदुर्जयः १४
पाण्डवं चित्रसंनाहा विचित्रकवचध्वजाः
अभ्यद्रवन्त संग्रामे योद्धुकामारिमर्दनाः १५
महोदरस्तु समरे भीमं विव्याध पत्रिभिः
नवभिर्वज्रसङ्काशैर्नमुचिं वृत्रहा यथा १६
आदित्यकेतुः सप्तत्या बह्वाशी चापि पञ्चभिः
नवत्या कुण्डधारस्तु विशालाक्षश्च सप्तभिः १७
अपराजितो महाराज पराजिष्णुर्महारथः
शरैर्बहुभिरानर्छद्भीमसेनं महाबलम् १८
रणे पण्डितकश्चैनं त्रिभिर्बाणैः समर्दयत्
स तन्न ममृषे भीमः शत्रुभिर्वधमाहवे १९
धनुः प्रपीड्य वामेन करेणामित्रकर्शनः
शिरश्चिच्छेद समरे शरेण नतपर्वणा २०
अपराजितस्य सुनसं तव पुत्रस्य संयुगे
पराजितस्य भीमेन निपपात शिरो महीम् २१

अथापरेण भल्लेन कुण्डधारं महारथम्
प्राहिणोन्मृत्युलोकाय सर्वलोकस्य पश्यतः २२
ततः पुनरमेयात्मा प्रसंधाय शिलीमुखम्
प्रेषयामास समरे पण्डितं प्रति भारत २३
स शरः पण्डितं हत्वा विवेश धरणीतलम्
यथा नरं निहत्याशु भुजगः कालचोदितः २४
विशालाक्षशिरश्छित्त्वा पातयामास भूतले
त्रिभिः शरैरदीनात्मा स्मरन्क्लेशं पुरातनम् २५
महोदरं महेष्वासं नाराचेन स्तनान्तरे
विव्याध समरे राजन्स हतो न्यपतद्भुवि २६
आदित्यकेतोः केतुं च छित्त्वा बाणेन संयुगे
भल्लेन भृशतीक्ष्णेन शिरश्चिच्छेद चारिहा २७
बह्वाशिनं ततो भीमः शरेण नतपर्वणा
प्रेषयामास संक्रुद्धो यमस्य सदनं प्रति २८
प्रदुद्रुवुस्ततस्तेऽन्ये पुत्रास्तव विशां पते
मन्यमाना हि तत्सत्यं सभायां तस्य भाषितम् २९
ततो दुर्योधनो राजा भ्रातृव्यसनकर्शितः
अब्रवीत्तावकान्योधान्भीमोऽय युधि वध्यताम् ३०
एवमेते महेष्वासाः पुत्रास्तव विशां पते
भ्रातॄन्संदृश्य निहतान्प्रास्मरंस्ते हि तद्वचः ३१
यदुक्तवान्महाप्राज्ञः क्षत्ता हितमनामयम्
तदिदं समनुप्राप्तं वचनं दिव्यदर्शिनः ३२
लोभमोहसमाविष्टः पुत्रप्रीत्या जनाधिप
न बुध्यसे पुरा यत्तत्तथ्यमुक्तं वचो महत् ३३
तथैव हि वधार्थाय पुत्राणां पाण्डवो बली
नूनं जातो महाबाहुर्यथा हन्ति स्म कौरवान् ३४
ततो दुर्योधनो राजा भीष्ममासाद्य मारिष
दुःखेन महताविष्टो विललापातिकर्शितः ३५
निहता भ्रातरः शूरा भीमसेनेन मे युधि
यतमानास्तथान्येऽपि हन्यन्ते सर्वसैनिकाः ३६

भवांश्च मध्यस्थतया नित्यमस्मानुपेक्षते
सोऽह कापथमारूढः पश्य दैवमिदं मम ३७
एतच्छ्रुत्वा वचः क्रूरं पिता देवव्रतस्तव
दुर्योधनमिदं वाक्यमब्रवीत्साश्रुलोचनम् ३८
उक्तमेतन्मया पूर्वं द्रोणेन विदुरेण च
गान्धार्या च यशस्विन्या तत्त्वं तात न बुद्धवान् ३९
समयश्च मया पूर्वं कृतो वः शत्रुकर्शन
नाहं युधि विमोक्तव्यो नाप्याचार्यः कथञ्चन ४०
यं यं हि धार्तराष्ट्राणां भीमो द्रक्ष्यति संयुगे
हनिष्यति रणे तं तं सत्यमेतद्ब्रवीमि ते ४१
स त्वं राजन्स्थिरो भूत्वा दृढां कृत्वा रणे मतिम्
योधयस्व रणे पार्थान्स्वर्गं कृत्वा परायणम् ४२
न शक्याः पाण्डवा जेतुं सेन्द्रैरपि सुरासुरैः
तस्माद्युद्धे मतिं कृत्वा स्थिरां युध्यस्व भारत ४३
इति श्रीमहाभारते भीष्मपर्वणि चतुरशीतितमोऽध्यायः ८४

## पञ्चाशीतितमोऽध्यायः

धृतराष्ट्र उवाच
दृष्ट्वा मम हतान्पुत्रान्बहूनेकेन सञ्जय
भीष्मो द्रोणः कृपश्चैव किमकुर्वत संयुगे १
अहन्यहनि मे पुत्राः क्षयं गच्छन्ति सञ्जय
मन्येऽह सर्वथा सूत दैवेनोपहता भृशम् २
यत्र मे तनयाः सर्वे जीयन्ते न जयन्त्युत
यत्र भीष्मस्य द्रोणस्य कृपस्य च महात्मनः ३
सौमदत्तेश्च वीरस्य भगदत्तस्य चोभयोः
अश्वत्थाम्नस्तथा तात शूराणां सुमहात्मनाम् ४
अन्येषां चैव वीराणां मध्यगास्तनया मम
यदहन्यन्त संग्रामे किमन्यद्भागधेयतः ५
न हि दुर्योधनो मन्दः पुरा प्रोक्तमबुध्यत
वार्यमाणो मया तात भीष्मेण विदुरेण च ६

गान्धार्या चैव दुर्मेधाः सततं हितकाम्यया
नावबुध्यत्पुरा मोहात्तस्य प्राप्तमिदं फलम् ७
यद्भीमसेनः समरे पुत्रान्मम विचेतसः
अहन्यहनि संक्रुद्धो नयते यमसादनम् ८
सञ्जय उवाच
इदं तत्समनुप्राप्तं क्षत्तुर्वचनमुत्तमम्
न बुद्धवानसि विभो प्रोच्यमानं हितं तदा ९
निवारय सुतान्द्यूतात्पाण्डवान्मा द्रुहेति च
सुहृदां हितकामानां ब्रुवतां तत्तदेव च १०
न शुश्रूषसि यद्वाक्यं मर्त्यः पथ्यमिवौषधम्
तदेव त्वामनुप्राप्तं वचनं साधु भाषितम् ११
विदुरद्रोणभीष्माणां तथान्येषां हितैषिणाम्
अकृत्वा वचनं पथ्यं क्षयं गच्छन्ति कौरवाः १२
तदेतत्समतिक्रान्तं पूर्वमेव विशां पते
तस्मान्मे शृणु तत्त्वेन यथा युद्धमवर्तत १३
मध्याह्ने सुमहारौद्रः संग्रामः समपद्यत
लोकक्षयकरो राजंस्तन्मे निगदतः शृणु १४
ततः सर्वाणि सैन्यानि धर्मपुत्रस्य शासनात्
संरब्धान्यभ्यधावन्त भीष्ममेव जिघांसया १५
धृष्टद्युम्नः शिखण्डी च सात्यकिश्च महारथः
युक्तानीका महाराज भीष्ममेव समभ्ययुः १६
अर्जुनो द्रौपदेयाश्च चेकितानश्च संयुगे
दुर्योधनसमादिष्टान्राज्ञः सर्वान्समभ्ययुः १७
अभिमन्युस्तथा वीरो हैडिम्बश्च महारथः
भीमसेनश्च संक्रुद्धस्तेऽभ्यधावन्त कौरवान् १८
त्रिधाभूतैरवध्यन्त पाण्डवैः कौरवा युधि
तथैव कौरवै राजन्नवध्यन्त परे रणे १९
द्रोणस्तु रथिनां श्रेष्ठः सोमकान्सृञ्जयैः सह
अभ्यद्रवत संक्रुद्धः प्रेषयिष्यन्यमक्षयम् २०
तत्राक्रन्दो महानासीत्सृञ्जयानां महात्मनाम्

वध्यतां समरे राजन्भारद्वाजेन धन्विना २१
द्रोणेन निहतास्तत्र क्षत्रिया बहवो रणे
विवेष्टन्तः स्म दृश्यन्ते व्याधिक्लिष्टा नरा इव २२
कूजतां क्रन्दतां चैव स्तनतां चैव संयुगे
अनिशं श्रूयते शब्दः क्षुत्कृशानां नृणामिव २३
तथैव कौरवेयाणां भीमसेनो महाबलः
चकार कदनं घोरं क्रुद्धः काल इवापरः २४
वध्यतां तत्र सैन्यानामन्योन्येन महारणे
प्रावर्तत नदी घोरा रुधिरौघप्रवाहिनी २५
स संग्रामो महाराज घोररूपोऽभवन्महान्
कुरूणां पाण्डवानां च यमराष्ट्रविवर्धनः २६
ततो भीमो रणे क्रुद्धो रभसश्च विशेषतः
गजानीकं समासाद्य प्रेषयामास मृत्यवे २७
तत्र भारत भीमेन नाराचाभिहता गजाः
पेतुः सेदुश्च नेदुश्च दिशश्च परिबभ्रमुः २८
छिन्नहस्ता महानागाश्छिन्नपादाश्च मारिष
क्रौञ्चवद्व्यनदन्भीताः पृथिवीमधिशिश्यिरे २९
नकुलः सहदेवश्च हयानीकमभिद्रुतौ
ते हयाः काञ्चनापीडा रुक्मभाण्डपरिच्छदाः
वध्यमाना व्यदृश्यन्त शतशोऽथ सहस्रशः ३०
पतद्भिश्च हयै राजन्समास्तीर्यत मेदिनी
निर्जिह्वैश्च श्वसद्भिश्च कूजद्भिश्च गतासुभिः
हयैर्बभौ नरश्रेष्ठ नानारूपधरैर्धरा ३१
अर्जुनेन हतैः संख्ये तथा भारत वाजिभिः
प्रबभौ वसुधा घोरा तत्र तत्र विशां पते ३२
रथैर्भग्नैर्ध्वजैश्छिन्नैश्छत्रैश्च सुमहाप्रभैः
हारैर्निष्कैः सकेयूरैः शिरोभिश्च सकुण्डलैः ३३
उष्णीषैरपविद्धैश्च पताकाभिश्च सर्वशः
अनुकर्षैः शुभै राजन्योक्त्रैश्चव्यसुरश्मिभिः
संछन्ना वसुधा भाति वसन्ते कुसुमैरिव ३४

एवमेष क्षयो वृत्तः पाण्डूनामपि भारत
क्रुद्धे शान्तनवे भीष्मे द्रोणे च रथसत्तमे ३५
अश्वत्थाम्नि कृपे चैव तथैव कृतवर्मणि
तथेतरेषु क्रुद्धेषु तावकानामपि क्षयः ३६
इति श्रीमहाभारते भीष्मपर्वणि पंचाशीतितमोऽध्यायः ८५

## षडशीतितमोऽध्यायः

सञ्जय उवाच
वर्तमाने तथा रौद्रे राजन्वीरवरक्षये
शकुनिः शौबलः श्रीमान्पाण्डवान्समुपाद्रवत् १
तथैव सात्वतो राजन्हार्दिक्यः परवीरहा
अभ्यद्रवत संग्रामे पाण्डवानामनीकिनीम् २
ततः काम्बोजमुख्यानां नदीजानां च वाजिनाम्
आरट्टानां महीजानां सिन्धुजानां च सर्वशः ३
वनायुजानां शुभ्राणां तथा पर्वतवासिनाम्
ये चापरे तित्तिरजा जवना वातरंहसः ४
सुवर्णालंकृतैरेतैर्वर्मवद्भिः सुकल्पितैः
हयैर्वातजवैर्मुख्यैः पाण्डवस्य सुतो बली
अभ्यवर्तत तत्सैन्यं हृष्टरूपः परन्तपः ५
अर्जुनस्याथ दायाद इरावान्नाम वीर्यवान्
सुतायां नागराजस्य जातः पार्थेन धीमता ६
एरावतेन सा दत्ता अनपत्या महात्मना
पत्यौ हते सुपर्णेन कृपणा दीनचेतना ७
भार्यार्थं तां च जग्राह पार्थः कामवशानुगाम्
एवमेष समुत्पन्नः परक्षेत्रेऽजुनात्मजः ८
स नागलोके संवृद्धो मात्रा च परिरक्षितः
पितृव्येण परित्यक्तः पार्थद्वेषाद्दुरात्मना ९
रूपवान्वीर्यसंपन्नो गुणवान्सत्यविक्रमः
इन्द्रलोकं जगामाशु श्रुत्वा तत्रार्जुनं गतम् १०
सोऽभिगम्य महात्मानं पितरं सत्यविक्रमम्

अभ्यवादयदव्यग्रो विनयेन कृताञ्जलि
इरावानस्मि भद्रं ते पुत्रश्चाहं तवाभिभो ११
मातुः समागमो यश्च तत्सर्वं प्रत्यवेदयत्
तच्च सर्वं यथावृत्तमनुसस्मार पाण्डवः १२
परिष्वज्य सुतं चापि सोऽत्मनः सदृशं गुणैः
प्रीतिमानभवत्पार्थो देवराजनिवेशने १३
सोऽर्जुनेन समाज्ञप्तो देवलोके तदा नृप
प्रीतिपूर्वं महाबाहुः स्वकार्ये प्रति भारत
युद्धकाले त्वयास्माकं साह्यं देयमिति प्रभो १४
बाढमित्येवमुक्त्वा तु युद्धकाल उपागतः
कामवर्णजवैरश्वैः संवृतो बहुभिर्नृप १५
ते हयाः काञ्चनापीडा नानावर्णा मनोजवाः
उत्पेतुः सहसा राजन्हंसा इव महोदधौ १६
ते त्वदीयान्समासाद्य हयसङ्घान्महाजवान्
क्रोडैः क्रोडानभिघ्नन्तो घोणाभिश्च परस्परम्
निपेतुः सहसा राजन्सुवेगाभिहता भुवि १७
निपतद्भिस्तथा तैश्च हयसङ्घैः परस्परम्
शुश्रुवे दारुणः शब्दः सुपर्णपतने यथा १८
तथैव च महाराज समेत्यान्योन्यमाहवे
परस्परवधं घोरं चक्रुस्ते हयसादिनः १९
तस्मिंस्तथा वर्तमाने संकुले तुमुले भृशम्
उभयोरपि संशान्ता हयसङ्घाः समन्ततः २०
प्रक्षीणसायकाः शूरा निहताश्वाः श्रमातुराः
विलयं समनुप्राप्तास्तक्षमाणाः परस्परम् २१
ततः क्षीणे हयानीके किंचिच्छेषे च भारत
सौबलस्यात्मजाः शूरा निर्गता रणमूर्धनि २२
वायुवेगसमस्पर्शा जवे वायुसमांस्तथा
आरुह्य शीलसंपन्नान्वयःस्थांस्तुरगोत्तमान् २३
गजो गवाक्षो वृषकश्चर्मवानार्जवः शुकः
षडेते बलसंपन्ना निर्ययुर्महतो बलात् २४

वार्यमाणाः शकुनिना स्वैश्च योधैर्महाबलैः
संनद्धा युद्धकुशला रौद्ररूपा महाबलाः २५
तदनीकं महाबाहो भित्त्वा परमदुर्जयम्
बलेन महता युक्ताः स्वर्गाय विजयैषिणः
विविशुस्ते तदा हृष्टा गान्धारा युद्धदुर्मदाः २६
तान्प्रविष्टांस्तदा दृष्ट्वा इरावानपि वीर्यवान्
अब्रवीत्समरे योधान्विचित्राभरणायुधान् २७
यथैते धार्तराष्ट्रस्य योधाः सानुगवाहनाः
हन्यन्ते समरे सर्वे तथा नीतिर्विधीयताम् २८
बाढमित्येवमुक्त्वा ते सर्वे योधा इरावतः
जघ्नुस्ते वै परानीकं दुर्जयं समरे परैः २९
तदनीकमनीकेन समरे वीक्ष्य पातितम्
अमृष्यमाणास्ते सर्वे सुबलस्यात्मजा रणे
इरावन्तमभिद्रुत्य सर्वतः पर्यवारयन् ३०
ताडयन्तः शितैः प्रासैश्चोदयन्तः परस्परम्
ते शूराः पर्यधावन्त कुर्वन्तो महदाकुलम् ३१
इरावानथ निर्भिन्नः प्रासैस्तीक्ष्णैर्महात्मभिः
स्रवता रुधिरेणाक्तस्तोत्त्रैर्विद्ध इव द्विपः ३२
उरस्यपि च पृष्ठे च पार्श्वयोश्च भृशाहतः
एको बहुभिरत्यर्थं धैर्याद्राजन्न विव्यथे ३३
इरावानथ संक्रुद्धः सर्वांस्तान्निशितैः शरैः
मोहयामास समरे विद्ध्वा परपुरंजयः ३४
प्रासानुद्धृत्य सर्वांश्च स्वशरीरादरिन्दमः
तैरेव ताडयामास सुबलस्यात्मजान्रणे ३५
निकृष्य निशितं खड्गं गृहीत्वा च शरावरम्
पदातिस्तूर्णमागच्छज्जिघांसुः सौबलान्युधि ३६
ततः प्रत्यागतप्राणाः सर्वे ते सुबलात्मजाः
भूयः क्रोधसमाविष्टा इरावन्तमथाद्रवन् ३७
इरावानपि खड्गेन दर्शयन्पाणिलाघवम्
अभ्यवर्तत तान्सर्वान्सौबलान्बलदर्पितः ३८

लाघवेनाथ चरतः सर्वे ते सुबलात्मजाः
अन्तरं नाध्यगच्छन्त चरन्तः शीघ्रगामिनः ३९
भूमिष्ठमथ तं संख्ये सम्प्रदृश्य ततः पुनः
परिवार्य भृशं सर्वे ग्रहीतुमुपचक्रमुः ४०
अथाभ्याशगतानां स खड्गेनामित्रकर्शनः
उपहस्तावहस्ताभ्यां तेषां गात्राण्यकृन्तत ४१
आयुधानि च सर्वेषां बाहूनपि च भूषितान्
अपतन्त निकृत्ताङ्गा गता भूमिं गतासवः ४२
वृषकस्तु महाराज बहुधा परिविक्षतः
अमुच्यत महारौद्रात्तस्माद्वीरावकर्तनात् ४३
तान्सर्वान्पतितान्दृष्ट्वा भीतो दुर्योधनस्ततः
अभ्यभाषत संक्रुद्धो राक्षसं घोरदर्शनम् ४४
आर्श्यशृङ्गिं महेष्वासं मायाविनमरिन्दमम्
वैरिणं भीमसेनस्य पूर्वं बकवधेन वै ४५
पश्य वीर यथा ह्येष फाल्गुनस्य सुतो बली
मायावी विप्रियं घोरमकार्षीन्मे बलक्षयम् ४६
त्वं च कामगमस्तात मायास्त्रे च विशारदः
कृतवैरश्च पार्थेन तस्मादेनं रणे जहि ४७
बाढमित्येवमुक्त्वा तु राक्षसो घोरदर्शनः
प्रययौ सिंहनादेन यत्रार्जुनसुतो युवा ४८
स्वारूढैर्युद्धकुशलैर्विमलप्रासयोधिभिः
वीरैः प्रहारिभिर्युक्तः स्वैरनीकैः समावृतः
निहन्तुकामः समरे इरावन्तं महाबलम् ४९
इरावानपि संक्रुद्धस्त्वरमाणः पराक्रमी
हन्तुकाममित्रघ्नो राक्षसं प्रत्यवारयत् ५०
तमापतन्तं सम्प्रेक्ष्य राक्षसः सुमहाबलः
त्वरमाणस्ततो मायां प्रयोक्तुमुपचक्रमे ५१
तेन मायामयाः क्लृप्ता हयास्तावन्त एव हि
स्वारूढा राक्षसैर्घोरैः शूलपट्टिशपाणिभिः ५२
ते संरब्धाः समागम्य द्विसाहस्राः प्रहारिणः

अचिराद्गमयामासुः प्रेतलोकं परस्परम् ५३
तस्मिंस्तु निहते सैन्ये तावुभौ युद्धदुर्मदौ
संग्रामे व्यवतिष्ठेतां यथा वै वृत्रवासवौ ५४
आद्रवन्तमभिप्रेक्ष्य राक्षसं युद्धदुर्मदम्
इरावान्क्रोधसंरब्धः प्रत्यधावन्महाबलः ५५
समभ्याशगतस्याजौ तस्य खड्गेन दुर्मतेः
चिच्छेद कार्मुकं दीप्तं शरावापं च पञ्चकम् ५६
स निकृत्तं धनुर्दृष्ट्वा खं जवेन समाविशत्
इरावन्तमभिक्रुद्धं मोहयन्निव मायया ५७
ततोऽन्तरिक्षमुत्पत्य इरावानपि राक्षसम्
विमोहयित्वा मायाभिस्तस्य गात्राणि सायकैः
चिच्छेद सर्वमर्मज्ञः कामरूपो दुरासदः ५८
तथा स राक्षसश्रेष्ठः शरैः कृत्तः पुनः पुनः
संबभूव महाराज समवाप च यौवनम् ५९
माया हि सहजा तेषां वयो रूपं च कामजम्
एवं तद्राक्षसस्याङ्गं छिन्नं छिन्नं व्यरोहत ६०
इरावानपि संक्रुद्धो राक्षसं तं महाबलम्
परश्वधेन तीक्ष्णेन चिच्छेद च पुनः पुनः ६१
स तेन बलिना वीरश्छिद्यमान इव द्रुमः
राक्षसो व्यनदद्घोरं स शब्दस्तुमुलोऽभवत् ६२
परश्वधक्षतं रक्षः सुस्राव रुधिरं बहु
ततश्चुक्रोध बलवांश्चक्रे वेगं च संयुगे ६३
आर्श्यशृङ्गिस्ततो दृष्ट्वा समरे शत्रुमूर्जितम्
कृत्वा घोरं महद्रूपं ग्रहीतुमुपचक्रमे
संग्रामशिरसो मध्ये सर्वेषां तत्र पश्यताम् ६४
तां दृष्ट्वा तादृशीं मायां राक्षसस्य महात्मनः
इरावानपि संक्रुद्धो मायां स्रष्टुं प्रचक्रमे ६५
तस्य क्रोधाभिभूतस्य संयुगेष्वनिवर्तिनः
योऽन्वयो मातृकस्तस्य स एनमभिपेदिवान् ६६
स नागैर्बहुशो राजन्सर्वतः संवृतो रणे

दधार सुमहद्रूपमनन्त इव भोगवान्
ततो बहुविधैर्नागैश्छादयामास राक्षसम् ६७
छाद्यमानस्तु नागैः स ध्यात्वा राक्षसपुङ्गवः
सौपर्णं रूपमास्थाय भक्षयामास पन्नगान् ६८
मायया भक्षिते तस्मिन्नन्वये तस्य मातृके
विमोहितमिरावन्तमसिना राक्षसोऽवधीत् ६९
सकुण्डलं समुकुटं पद्मेन्दुसदृशप्रभम्
इरावतः शिरो रक्षः पातयामास भूतले ७०
तस्मिंस्तु निहते वीरे राक्षसेनार्जुनात्मजे
विशोकाः समपद्यन्त धार्तराष्ट्राः सराजकाः ७१
तस्मिन्महति संग्रामे तादृशे भैरवे पुनः
महान्व्यतिकरो घोरः सेनयोः समपद्यत ७२
हया गजाः पदाताश्च विमिश्रा दन्तिभिर्हताः
रथाश्च दन्तिनश्चैव पत्तिभिस्तत्र सूदिताः ७३
तथा पत्तिरथौघाश्च हयाश्च बहवो रणे
रथिभिर्निहता राजंस्तव तेषां च संकुले ७४
अजानन्नर्जुनश्चापि निहतं पुत्रमौरसम्
जघान समरे शूरान्राज्ञस्तान्भीष्मरक्षिणः ७५
तथैव तावका राजन्सृञ्जयाश्च महाबलाः
जुह्वतः समरे प्राणान्निजघ्नुरितरेतरम् ७६
मुक्तकेशा विकवचा विरथाश्छिन्नकार्मुकाः
बाहुभिः समयुध्यन्त समवेताः परस्परम् ७७
तथा मर्मातिगैर्भीष्मो निजघान महारथान्
कम्पयन्समरे सेनां पाण्डवानां महाबलः ७८
तेन यौधिष्ठिरे सैन्ये बहवो मानवा हताः
दन्तिनः सादिनश्चैव रथिनोऽथ हयास्तथा ७९
तत्र भारत भीष्मस्य रणे दृष्ट्वा पराक्रमम्
अत्यद्भुतमपश्याम शक्रस्येव पराक्रमम् ८०
तथैव भीमसेनस्य पार्षतस्य च भारत
रौद्रमासीत्तदा युद्धं सात्वतस्य च धन्विनः ८१

दृष्ट्वा द्रोणस्य विक्रान्तं पाण्डवान्भयमाविशत्
एक एव रणे शक्तो हन्तुमस्मान्ससैनिकान् ८२
किं पुनः पृथिवीशूरैर्योधव्रातैः समावृतः
इत्यब्रुवन्महाराज रणे द्रोणेन पीडिताः ८३
वर्तमाने तथा रौद्रे संग्रामे भरतर्षभ
उभयोः सेनयोः शूरा नामृष्यन्त परस्परम् ८४
आविष्टा इव युध्यन्ते रक्षोभूता महाबलाः
तावकाः पाण्डवेयाश्च संरब्धास्तात धन्विनः ८५
न स्म पश्यामहे कंचिद्यः प्राणान्परिरक्षति
संग्रामे दैत्यसङ्काशे तस्मिन्योद्धा नराधिप ८६
इति श्रीमहाभारते भीष्मपर्वणि षडशीतितमोऽध्यायः ८६

## सप्ताशीतितमोऽध्यायः

धृतराष्ट्र उवाच
इरावन्तं तु निहतं दृष्ट्वा पार्था महारथाः
संग्रामे किमकुर्वन्त तन्ममाचक्ष्व सञ्जय १
सञ्जय उवाच
इरावन्तं तु निहतं संग्रामे वीक्ष्य राक्षसः
व्यनदत्सुमहानादं भैमसेनिर्घटोत्कचः २
नदतस्तस्य शब्देन पृथिवी सागराम्बरा
सपर्वतवना राजंश्चचाल सुभृशं तदा
अन्तरिक्षं दिशश्चैव सर्वाश्च प्रदिशस्तथा ३
तं श्रुत्वा सुमहानादं तव सैन्यस्य भारत
ऊरुस्तम्भः समभवद्वेपथुः स्वेद एव च ४
सर्व एव च राजेन्द्र तावका दीनचेतसः
सर्पवत्समवेष्टन्त सिंहभीता गजा इव ५
निनदत्सुमहानादं निर्घातमिव राक्षसः
ज्वलितं शूलमुद्यम्य रूपं कृत्वा विभीषणम् ६
नानाप्रहरणैर्घोरैर्वृतो राक्षसपुङ्गवैः
आजगाम सुसंक्रुद्धः कालान्तकयमोपमः ७

तमापतन्तं सम्प्रेक्ष्य संक्रुद्धं भीमदर्शनम्
स्वबलं च भयात्तस्य प्रायशो विमुखीकृतम् ८
ततो दुर्योधनो राजा घटोत्कचमुपाद्रवत्
प्रगृह्य विपुलं चापं सिंहवद्विनदन्मुहुः ९
पृष्ठतोऽनुययौ चैनं स्रवद्भिः पर्वतोपमैः
कुञ्जरैर्दशसाहस्रैर्वङ्गानामधिपः स्वयम् १०
तमापतन्तं सम्प्रेक्ष्य गजानीकेन संवृतम्
पुत्रं तव महाराज चुकोप स निशाचरः ११
ततः प्रववृते युद्धं तुमुलं लोमहर्षणम्
राक्षसानां च राजेन्द्र दुर्योधनबलस्य च १२
गजानीकं च सम्प्रेक्ष्य मेघवृन्दमिवोद्यतम्
अभ्यधावन्त संक्रुद्धा राक्षसाः शस्त्रपाणयः १३
नदन्तो विविधान्नादान्मेघा इव सविद्युतः
शरशक्त्यृष्टिनाराचैर्निघ्नन्तो गजयोधिनः १४
भिण्डिपालैस्तथा शूलैर्मुद्गरैः सपरश्वधैः
पर्वताग्रैश्च वृक्षैश्च निजघ्नुस्ते महागजान् १५
भिन्नकुम्भान्विरुधिरान्भिन्नगात्रांश्च वारणान्
अपश्याम महाराज वध्यमानान्निशाचरैः १६
तेषु प्रक्षीयमाणेषु भग्नेषु गजयोधिषु
दुर्योधनो महाराज राक्षसान्समुपाद्रवत् १७
अमर्षवशमापन्नस्त्यक्त्वा जीवितमात्मनः
मुमोच निशितान्बाणान्राक्षसेषु महाबलः १८
जघान च महेष्वासः प्रधानांस्तत्र राक्षसान्
संक्रुद्धो भरतश्रेष्ठ पुत्रो दुर्योधनस्तव १९
वेगवन्तं महारौद्रं विद्युज्जिह्वं प्रमाथिनम्
शरैश्चतुर्भिश्चतुरो निजघान महारथः २०
ततः पुनरमेयात्मा शरवर्षं दुरासदम्
मुमोच भरतश्रेष्ठ निशाचरबलं प्रति २१
तत्तु दृष्ट्वा महत्कर्म पुत्रस्य तव मारिष
क्रोधेनाभिप्रजज्वाल भैमसेनिर्महाबलः २२

विस्फार्य च महच्चापमिन्द्राशनिसमस्वनम्
अभिदुद्राव वेगेन दुर्योधनमरिंदमम् २३
तमापतन्तमुद्वीक्ष्य कालसृष्टमिवान्तकम्
न विव्यथे महाराज पुत्रो दुर्योधनस्तव २४
अथैनमब्रवीत्क्रुद्धः क्रूरः संरक्तलोचनः
ये त्वया सुनृशंसेन दीर्घकालं प्रवासिताः
यच्च ते पाण्डवा राजंश्छलद्यूते पराजिताः २५
यच्चैव द्रौपदी कृष्णा एकवस्त्रा रजस्वला
सभामानीय दुर्बुद्धे बहुधा क्लेशिता त्वया २६
तव च प्रियकामेन आश्रमस्था दुरात्मना
सैन्धवेन परिक्लिष्टा परिभूय पितॄन्मम २७
एतेषामवमानानामन्येषां च कुलाधम
अन्तमद्य गमिष्यामि यदि नोत्सृजसे रणम् २८
एवमुक्त्वा तु हैडिम्बो महद्विस्फार्य कार्मुकम्
संदश्य दशनैरोष्ठं सृक्किणी परिसंलिहन् २९
शरवर्षेण महता दुर्योधनमवाकिरत्
पर्वतं वारिधाराभिः प्रावृषीव बलाहकः ३०
इति श्रीमहाभारते भीष्मपर्वणि सप्ताशीतितमोऽध्यायः ८७

## अष्टाशीतितमोऽध्यायः

सञ्जय उवाच
ततस्तद्बाणवर्षं तु दुःसहं दानवैरपि
दधार युधि राजेन्द्रो यथा वर्षं महाद्विपः १
ततः क्रोधसमाविष्टो निःश्वसन्निव पन्नगः
संशयं परमं प्राप्तः पुत्रस्ते भरतर्षभ २
मुमोच निशितांस्तीक्ष्णान्नाराचान्पञ्चविंशतिम्
तेऽपतन्सहसा राजंस्तस्मिन्राक्षसपुङ्गवे
आशीविषा इव क्रुद्धाः पर्वते गन्धमादने ३
स तैर्विद्धः स्रवन्रक्तं प्रभिन्न इव कुञ्जरः
दध्रे मतिं विनाशाय राज्ञः स पिशिताशनः

जग्राह च महाशक्तिं गिरीणामपि दारणीम् ४
सम्प्रदीप्तां महोल्काभामशनीं मघवानिव
समुद्यच्छन्महाबाहुर्जिघांसुस्तनयं तव ५
तामुद्यतामभिप्रेक्ष्य वङ्गानामधिपस्त्वरन्
कुञ्जरं गिरिसङ्काशं राक्षसं प्रत्यचोदयत् ६
स नागप्रवरेणाजौ बलिना शीघ्रगामिना
यतो दुर्योधनरथस्तं मार्गं प्रत्यपद्यत
रथं च वारयामास कुञ्जरेण सुतस्य ते ७
मार्गमावारितं दृष्ट्वा राज्ञा वङ्गेन धीमता
घटोत्कचो महाराज क्रोधसंरक्तलोचनः
उद्यतां तां महाशक्तिं तस्मिंश्चिक्षेप वारणे ८
स तयाभिहतो राजंस्तेन बाहुविमुक्तया
संजातरुधिरोत्पीडः पपात च ममार च ९
पतत्यथ गजे चापि वङ्गानामीश्वरो बली
जवेन समभिद्रुत्य जगाम धरणीतलम् १०
दुर्योधनोऽपि सम्प्रेक्ष्य पातितं वरवारणम्
प्रभग्नं च बलं दृष्ट्वा जगाम परमां व्यथाम् ११
क्षत्रधर्मं पुरस्कृत्य आत्मनश्चाभिमानिताम्
प्राप्तेऽपक्रमणे राजा तस्थौ गिरिरिवाचलः १२
संधाय च शितं बाणं कालाग्निसमतेजसम्
मुमोच परमक्रुद्धस्तस्मिन्घोरे निशाचरे १३
तमापतन्तं संप्रेक्ष्य बाणमिन्द्राशनिप्रभम्
लाघवाद्वञ्चयामास महाकायो घटोत्कचः १४
भूय एव ननादोग्रः क्रोधसंरक्तलोचनः
त्रासयन्सर्वभूतानि युगान्ते जलदो यथा १५
तं श्रुत्वा निनदं घोरं तस्य भीमस्य रक्षसः
आचार्यमुपसङ्गम्य भीष्मः शांतनवोऽब्रवीत् १६
यथैष निनदो घोरः श्रूयते राक्षसेरितः
हैडिम्बो युध्यते नूनं राज्ञा दुर्योधनेन ह १७
नैष शक्यो हि संग्रामे जेतुं भूतेन केनचित्

तत्र गच्छत भद्रं वो राजानं परिरक्षत १८
अभिद्रुतं महाभागं राक्षसेन दुरात्मना
एतद्धि परमं कृत्यं सर्वेषां नः परन्तपाः १९
पितामहवचः श्रुत्वा त्वरमाणा महारथाः
उत्तमं जवमास्थाय प्रययुर्यत्र कौरवः २०
द्रोणश्च सोमदत्तश्च बाह्लीकश्च जयद्रथः
कृपो भूरिश्रवाः शल्यश्चित्रसेनो विविंशतिः २१
अश्वत्थामा विकर्णश्च आवन्त्यश्च बृहद्बलः
रथाश्चानेकसाहस्रा ये तेषामनुयायिनः
अभिद्रुतं परीप्सन्तः पुत्रं दुर्योधनं तव २२
तदनीकमनाधृष्यं पालितं लोकसत्तमैः
आततायिनमायान्तं प्रेक्ष्य राक्षससत्तमः
नाकम्पत महाबाहुर्मैनाक इव पर्वतः २३
प्रगृह्य विपुलं चापं ज्ञातिभिः परिवारितः
शूलमुद्गरहस्तैश्च नानाप्रहरणैरपि २४
ततः समभवद्युद्धं तुमुलं लोमहर्षणम्
राक्षसानां च मुख्यस्य दुर्योधनबलस्य च २५
धनुषां कूजतां शब्दः सर्वतस्तुमुलोऽभवत्
अश्रूयत महाराज वंशानां दह्यतामिव २६
शस्त्राणां पात्यमानानां कवचेषु शरीरिणाम्
शब्दः समभवद्राजन्नद्रीणामिव दीर्यताम् २७
वीरबाहुविसृष्टानां तोमराणां विशां पते
रूपमासीद्वियत्स्थानां सर्पाणां सर्पतामिव २८
ततः परमसंक्रुद्धो विस्फार्य सुमहद्धनुः
राक्षसेन्द्रो महाबाहुर्विनदन्भैरवं रवम् २९
आचार्यस्यार्धचन्द्रेण क्रुद्धश्चिच्छेद कार्मुकम्
सोमदत्तस्य भल्लेन ध्वजमुन्मथ्य चानदत् ३०
बाह्लिकं च त्रिभिर्बाणैरभ्यविध्यत्स्तनान्तरे
कृपमेकेन विव्याध चित्रसेनं त्रिभिः शरैः ३१
पूर्णायतविसृष्टेन सम्यक्प्रणिहितेन च

जत्रुदेशे समासाद्य विकर्णं समताडयत्
न्यषीदत्स रथोपस्थे शोणितेन परिप्लुतः ३२
ततः पुनरमेयात्मा नाराचान्दश पञ्च च
भूरिश्रवसि संक्रुद्धः प्राहिणोद्भरतर्षभ
ते वर्म भित्वा तस्याशु प्राविशन्मेदिनीतलम् ३३
विविंशतेश्च द्रौणेश्च यन्तारौ समताडयत्
तौ पेततू रथोपस्थे रश्मीनुत्सृज्य वाजिनाम् ३४
सिन्धुराज्ञोऽधचन्द्रेण वाराहं स्वर्णभूषितम्
उन्ममाथ महाराज द्वितीयेनाच्छिनद्धनुः ३५
चतुर्भिरथ नाराचैरावन्त्यस्य महात्मनः
जघान चतुरो वाहान्क्रोधसंरक्तलोचनः ३६
पूर्णायतविसृष्टेन पीतेन निशितेन च
निर्बिभेद महाराज राजपुत्रं बृहद्बलम्
स गाढविद्धो व्यथितो रथोपस्थ उपाविशत् ३७
भृशं क्रोधेन चाविष्टो रथस्थो राक्षसाधिपः
चिक्षेप निशितांस्तीक्ष्णाञ्शरानाशीविषोपमान्
बिभिदुस्ते महाराज शल्यं युद्धविशारदम् ३८
इति श्रीमहाभारते भीष्मपर्वणि अष्टाशीतितमोऽध्यायः ८८

## एकोन नवति तमोऽध्यायः

सञ्जय उवाच
विमुखीकृत्य तान्सर्वांस्तावकान्युधि राक्षसः
जिघांसुर्भरतश्रेष्ठ दुर्योधनमुपाद्रवत् १
तमापतन्तं सम्प्रेक्ष्य राजानं प्रति वेगितम्
अभ्यधावञ्जिघांसन्तस्तावका युद्धदुर्मदाः २
तालमात्राणि चापानि विकर्षन्तो महाबलाः
तमेकमभ्यधावन्त नदन्तः सिंहसङ्घवत् ३
अथैनं शरवर्षेण समन्तात्पर्यवारयन्
पर्वतं वारिधाराभिः शरदीव बलाहकाः ४
स गाढविद्धो व्यथितस्तोत्त्रार्दित इव द्विपः

उत्पपात तदाकाशं समन्ताद्वैनतेयवत् ५
व्यनदत्सुमहानादं जीमूत इव शारदः
दिशः खं प्रदिशश्चैव नादयन्भैरवस्वनः ६
राक्षसस्य तु तं शब्दं श्रुत्वा राजा युधिष्ठिरः
उवाच भरतश्रेष्ठो भीमसेनमिदं वचः ७
युध्यते राक्षसो नूनं धार्तराष्ट्रैर्महारथैः
यथास्य श्रूयते शब्दो नदतो भैरवं स्वनम्
अतिभारं च पश्यामि तत्र तात समाहितम् ८
पितामहश्च संक्रुद्धः पाञ्चालान्हन्तुमुद्यतः
तेषां च रक्षणार्थाय युध्यते फल्गुनः परैः ९
एतच्छ्रुत्वा महाबाहो कार्यद्वयमुपस्थितम्
गच्छ रक्षस्व हैडिम्बं संशयं परमं गतम् १०
भ्रातुर्वचनमाज्ञाय त्वरमाणो वृकोदरः
प्रययौ सिंहनादेन त्रासयन्सर्वपार्थिवान्
वेगेन महता राजन्पर्वकाले यथोदधिः ११
तमन्वयात्सत्यधृतिः सौचित्तिर्युद्धदुर्मदः
श्रेणिमान्वसुदानश्च पुत्रः काश्यस्य चाभिभूः १२
अभिमन्युमुखाश्चैव द्रौपदेया महारथाः
क्षत्रदेवश्च विक्रान्तः क्षत्रधर्मा तथैव च १३
अनूपाधिपतिश्चैव नीलः स्वबलमास्थितः
महता रथवंशेन हैडिम्बं पर्यवारयन् १४
कुञ्जरैश्च सदा मत्तैः षट्सहस्रैः प्रहारिभिः
अभ्यरक्षन्त सहिता राक्षसेन्द्रं घटोत्कचम् १५
सिंहनादेन महता नेमिघोषेण चैव हि
खुरशब्दनिनादैश्च कम्पयन्तो वसुन्धराम् १६
तेषामापततां श्रुत्वा शब्दं तं तावकं बलम्
भीमसेनभयोद्विग्नं विवर्णवदनं तथा
परिवृत्तं महाराज परित्यज्य घटोत्कचम् १७
ततः प्रववृते युद्धं तत्र तत्र महात्मनाम्
तावकानां परेषां च संग्रामेष्वनिवर्तिनाम् १८

नानारूपाणि शस्त्राणि विसृजन्तो महारथाः
अन्योन्यमभिधावन्तः सम्प्रहारं प्रचक्रिरे
व्यतिषक्तं महारौद्रं युद्धं भीरुभयावहम् १९
हया गजैः समाजग्मुः पादाता रथिभिः सह
अन्योन्यं समरे राजन्प्रार्थयाना महद्यशः २०
सहसा चाभवत्तीव्रं सन्निपातान्महद्रजः
रथाश्वगजपत्तीनां पदनेमिसमुद्धतम् २१
धूम्रारुणं रजस्तीव्रं रणभूमिं समावृणोत्
नैव स्वे न परे राजन्समजानन्परस्परम् २२
पिता पुत्रं न जानीते पुत्रो वा पितरं तथा
निर्मर्यादे तथा भूते वैशसे लोमहर्षणे २३
शस्त्राणां भरतश्रेष्ठ मनुष्याणां च गर्जताम्
सुमहानभवच्छब्दो वंशानामिव दह्यताम् २४
गजवाजिमनुष्याणां शोणितान्त्रतरङ्गिणी
प्रावर्तत नदी तत्र केशशैवलशाद्वला २५
नराणां चैव कायेभ्यः शिरसां पततां रणे
शुश्रुवे सुमहाञ्शब्दः पततामश्मनामिव २६
विशिरस्कैर्मनुष्यैश्च छिन्नगात्रैश्च वारणैः
अश्वैः संभिन्नदेहैश्च सङ्कीर्णाभूद्वसुन्धरा २७
नानाविधानि शस्त्राणि विसृजन्तो महारथाः
अन्योन्यमभिधावन्तः सम्प्रहारं प्रचक्रिरे २८
हया हयान्समासाद्य प्रेषिता हयसादिभिः
समाहत्य रणेऽन्योन्यं निपेतुर्गतजीविताः २९
नरा नरान्समासाद्य क्रोधरक्तेक्षणा भृशम्
उरांस्युरोभिरन्योन्यं समाश्लिष्य निजघ्निरे ३०
प्रेषिताश्च महामात्रैर्वारणाः परवारणाः
अभिघ्नन्ति विषाणाग्रैर्वारणानेव संयुगे ३१
ते जातरुधिरापीडाः पताकाभिरलंकृताः
संसक्ताः प्रत्यदृश्यन्त मेघा इव सविद्युतः ३२
केचिद्भिन्ना विषाणाग्रैर्भिन्नकुम्भाश्च तोमरैः

विनदन्तोऽभ्यधावन्त गर्जन्तो जलदा इव ३३
केचिद्धस्तैर्द्विधा छिन्नैश्छिन्नगात्रास्तथापरे
निपेतुस्तुमुले तस्मिंश्छिन्नपक्षा इवाद्रयः ३४
पार्श्वैस्तु दारितैरन्ये वारणैर्वरवारणाः
मुमुचुः शोणितं भूरि धातूनिव महीधराः ३५
नाराचाभिहतास्त्वन्ये तथा विद्धाश्च तोमरैः
हतारोहा व्यदृश्यन्त विशृङ्गा इव पर्वताः ३६
केचित्क्रोधसमाविष्टा मदान्धा निरवग्रहाः
रथान्हयान्पदातांश्च ममृदुः शतशो रणे ३७
तथा हया हयारोहैस्ताडिताः प्रासतोमरैः
तेन तेनाभ्यवर्तन्त कुर्वन्तो व्याकुला दिशः ३८
रथिनो रथिभिः सार्धं कुलपुत्रास्तनुत्यजः
परां शक्तिं समास्थाय चक्रुः कर्माण्यभीतवत् ३९
स्वयंवर इवामर्दे प्रजह्रुरितरेतरम्
प्रार्थयाना यशो राजन्स्वर्गं वा युद्धशालिनः ४०
तस्मिंस्तथा वर्तमाने संग्रामे लोमहर्षणे
धार्तराष्ट्रं महत्सैन्यं प्रायशो विमुखीकृतम् ४१
इति श्रीमहाभारते भीष्मपर्वणि एकोननवतितमोऽध्यायः ८९

## नवतितमोऽध्यायः

सञ्जय उवाच
स्वसैन्यं निहतं दृष्ट्वा राजा दुर्योधनः स्वयम्
अभ्यधावत संक्रुद्धो भीमसेनमरिन्दमम् १
प्रगृह्य सुमहच्चापमिन्द्राशनिसमस्वनम्
महता शरवर्षेण पाण्डवं समवाकिरत् २
अर्धचन्द्रं च सन्धाय सुतीक्ष्णं लोमवाहिनम्
भीमसेनस्य चिच्छेद चापं क्रोधसमन्वितः ३
तदन्तरं च सम्प्रेक्ष्य त्वरमाणो महारथः
संदधे निशितं बाणं गिरीणामपि दारणम्
तेनोरसि महाबाहुर्भीमसेनमताडयत् ४

स गाढविद्धो व्यथितः सृक्किणी परिसंलिहन्
समाललम्बे तेजस्वी ध्वजं हेमपरिष्कृतम् ५
तथा विमनसं दृष्ट्वा भीमसेनं घटोत्कचः
क्रोधेनाभिप्रजज्वाल दिधक्षन्निव पावकः ६
अभिमन्युमुखाश्चैव पाण्डवानां महारथाः
समभ्यधावन्क्रोशन्तो राजानं जातसम्भ्रमाः ७
सम्प्रेक्ष्य तानापततः संक्रुद्धाञ्जातसम्भ्रमान्
भारद्वाजोऽब्रवीद्वाक्यं तावकानां महारथान् ८
क्षिप्रं गच्छत भद्रं वो राजानं परिरक्षत
संशयं परमं प्राप्तं मज्जन्तं व्यसनार्णवे ९
एते क्रुद्धा महेष्वासाः पाण्डवानां महारथाः
भीमसेनं पुरस्कृत्य दुर्योधनमुपद्रुताः १०
नानाविधानि शस्त्राणि विसृजन्तो जये रताः
नदन्तो भैरवान्नादांस्त्रासयन्तश्च भूमिमाम् ११
तदाचार्यवचः श्रुत्वा सोमदत्तपुरोगमाः
तावकाः समवर्तन्त पाण्डवानामनीकिनीम् १२
कृपो भूरिश्रवाः शल्यो द्रोणपुत्रो विविंशतिः
चित्रसेनो विकर्णश्च सैन्धवोऽथ बृहद्बलः
आवन्त्यौ च महेष्वासौ कौरवं पर्यवारयन् १३
ते विंशतिपदं गत्वा सम्प्रहारं प्रचक्रिरे
पाण्डवा धार्तराष्ट्राश्च परस्परजिघांसवः १४
एवमुक्त्वा महाबाहुर्महद्विस्फार्य कार्मुकम्
भारद्वाजस्ततो भीमं षडिंवशत्या समार्पयत् १५
भूयश्चैनं महाबाहुः शरैः शीघ्रमवाकिरत्
पर्वतं वारिधाराभिः शरदीव बलाहकः १६
तं प्रत्यविध्यद्दशभिर्भीमसेनः शिलीमुखैः
त्वरमाणो महेष्वासः सव्ये पार्श्वे महाबलः १७
स गाढविद्धो व्यथितो वयोवृद्धश्च भारत
प्रनष्टसंज्ञः सहसा रथोपस्थ उपाविशत् १८
गुरुं प्रव्यथितं दृष्ट्वा राजा दुर्योधनः स्वयम्

द्रौणायनिश्च संक्रुद्धौ भीमसेनमभिद्रुतौ १९
तावापतन्तौ सम्प्रेक्ष्य कालान्तकयमोपमौ
भीमसेनो महाबाहुर्गदामादाय सत्वरः २०
अवप्लुत्य रथात्तूर्णं तस्थौ गिरिरिवाचलः
समुद्यम्य गदां गुर्वीं यमदण्डोपमां रणे २१
तमुद्यतगदं दृष्ट्वा कैलासमिव शृङ्गिणम्
कौरवो द्रोणपुत्रश्च सहितावभ्यधावताम् २२
तावापतन्तौ सहितौ त्वरितौ बलिनां वरौ
अभ्यधावत वेगेन त्वरमाणो वृकोदरः २३
तमापतन्तं सम्प्रेक्ष्य संक्रुद्धं भीमदर्शनम्
समभ्यधावंस्त्वरिताः कौरवाणां महारथाः २४
भारद्वाजमुखाः सर्वे भीमसेनजिघांसया
नानाविधानि शस्त्राणि भीमस्योरस्यपातयन्
सहिताः पाण्डवं सर्वे पीडयन्तः समन्ततः २५
तं दृष्ट्वा संशयं प्राप्तं पीड्यमानं महारथम्
अभिमन्युप्रभृतयः पाण्डवानां महारथाः
अभ्यधावन्परीप्सन्तः प्राणांस्त्यक्त्वा सुदुस्त्यजान् २६
अनूपाधिपतिः शूरो भीमस्य दयितः सखा
नीलो नीलाम्बुदप्रख्यः संक्रुद्धो द्रौणिमभ्ययात्
स्पर्धते हि महेष्वासो नित्यं द्रोणसुतेन यः २७
स विस्फार्य महच्चापं द्रौणिं विव्याध पत्रिणा
यथा शक्रो महाराज पुरा विव्याध दानवम् २८
विप्रचित्तिं दुराधर्षं देवतानां भयङ्करम्
येन लोकत्रयं क्रोधात्त्रासितं स्वेन तेजसा २९
तथा नीलेन निर्भिन्नः सुमुखेन पतत्रिणा
सञ्जातरुधिरोत्पीडो द्रौणिः क्रोधसमन्वितः ३०
स विस्फार्य धनुश्चित्रमिन्द्राशनिसमस्वनम्
दध्रे नीलविनाशाय मतिं मतिमतां वरः ३१
ततः संधाय विमलान्भल्लान्कर्मारपायितान्
जघान चतुरो वाहान्पातयामास च ध्वजम् ३२

सप्तमेन च भल्लेन नीलं विव्याध वक्षसि
स गाढविद्धो व्यथितो रथोपस्थ उपाविशत् ३३
मोहितं वीक्ष्य राजानं नीलमभ्रचयोपमम्
घटोत्कचोऽपि संक्रुद्धो भ्रातृभिः परिवारितः ३४
अभिदुद्राव वेगेन द्रौणिमाहवशोभिनम्
तथेतरे अभ्यधावन्राक्षसा युद्धदुर्मदाः ३५
तमापतन्तं संप्रेक्ष्य राक्षसं घोरदर्शनम्
अभ्यधावत तेजस्वी भारद्वाजात्मजस्त्वरन् ३६
निजघान च संक्रुद्धो राक्षसान्भीमदर्शनान्
येऽभवन्नग्रतः क्रुद्धा राक्षसस्य पुरःसराः ३७
विमुखांश्चैव तान्दृष्ट्वा द्रौणिचापच्युतैः शरैः
अक्रुध्यत महाकायो भैमसेनिर्घटोत्कचः ३८
प्रादुश्चक्रे महामायां घोररूपां सुदारुणाम्
मोहयन्समरे द्रौणिं मायावी राक्षसाधिपः ३९
ततस्ते तावकाः सर्वे मायया विमुखीकृताः
अन्योन्यं समपश्यन्त निकृत्तान्मेदिनीतले
विचेष्टमानान्कृपणाञ्शोणितेन समुक्षितान् ४०
द्रोणं दुर्योधनं शल्यमश्वत्थामानमेव च
प्रायशश्च महेष्वासा ये प्रधानाश्च कौरवाः ४१
विध्वस्ता रथिनः सर्वे गजाश्च विनिपातिताः
हयाश्च सहयारोहा विनिकृत्ताः सहस्रशः ४२
तद्दृष्ट्वा तावकं सैन्यं विद्रुतं शिबिरं प्रति
मम प्राक्रोशतो राजंस्तथा देवव्रतस्य च ४३
युध्यध्वं मा पलायध्वं मायैषा राक्षसी रणे
घटोत्कचप्रयुक्तेति नातिष्ठन्त विमोहिताः
नैव ते श्रद्दधुर्भीता वदतोरावयोर्वचः ४४
तांश्च प्रद्रवतो दृष्ट्वा जयं प्राप्ताश्च पाण्डवाः
घटोत्कचेन सहिताः सिंहनादान्प्रचक्रिरे
शङ्खदुन्दुभिघोषाश्च समन्तात्सस्वनुर्भृशम् ४५
एवं तव बलं सर्वं हैडिम्बेन दुरात्मना

सूर्यास्तमनवेलायां प्रभग्नं विद्रुतं दिशः ४६
इति श्रीमहाभारते भीष्मपर्वणि नवतितमोऽध्यायः ९०

## एक नवतितमोऽध्यायः

सञ्जय उवाच
तस्मिन्महति संक्रन्दे राजा दुर्योधनस्तदा
गाङ्गेयमुपसंगम्य विनयेनाभिवाद्य च १
तस्य सर्वं यथावृत्तमाख्यातुमुपचक्रमे
घटोत्कचस्य विजयमात्मनश्च पराजयम् २
कथयामास दुर्धर्षो विनिःश्वस्य पुनः पुनः
अब्रवीच्च तदा राजन्भीष्मं कुरुपितामहम् ३
भवन्तं समुपाश्रित्य वासुदेवं यथा परैः
पाण्डवैर्विग्रहो घोरः समारब्धो मया प्रभो ४
एकादश समाख्याता अक्षौहिण्यश्च या मम
निदेशे तव तिष्ठन्ति मया सार्धं परन्तप ५
सोऽह भरतशार्दूल भीमसेनपुरोगमैः
घटोत्कचं समाश्रित्य पाण्डवैर्युधि निर्जितः ६
तन्मे दहति गात्राणि शुष्कवृक्षमिवानलः
तदिच्छामि महाभाग त्वत्प्रसादात्परन्तप ७
राक्षसापसदं हन्तुं स्वयमेव पितामह
त्वां समाश्रित्य दुर्धर्षं तन्मे कर्तुं त्वमर्हसि ८
एतच्छ्रुत्वा तु वचनं राज्ञो भरतसत्तम
दुर्योधनमिदं वाक्यं भीष्मः शान्तनवोऽब्रवीत् ९
शृणु राजन्मम वचो यत्त्वा वक्ष्यामि कौरव
यथा त्वया महाराज वर्तितव्यं परन्तप १०
आत्मा रक्ष्यो रणे तात सर्वावस्थास्वरिन्दम
धर्मराजेन संग्रामस्त्वया कार्यः सदानघ ११
अर्जुनेन यमाभ्यां वा भीमसेनेन वा पुनः
राजधर्मं पुरस्कृत्य राजा राजानमृच्छति १२
अहं द्रोणः कृपो द्रौणिः कृतवर्मा च सात्वतः

शल्यश्च सौमदत्तिश्च विकर्णश्च महारथः १३
तव च भ्रातरः शूरा दुःशासनपुरोगमाः
त्वदर्थं प्रतियोत्स्यामो राक्षसं तं महाबलम् १४
तस्मिन्रौद्रे राक्षसेन्द्रे यदि ते हृच्छयो महान्
अयं वा गच्छतु रणे तस्य युद्धाय दुर्मतेः
भगदत्तो महीपालः पुरन्दरसमो युधि १५
एतावदुक्त्वा राजानं भगदत्तमथाब्रवीत्
समक्षं पार्थिवेन्द्रस्य वाक्यं वाक्यविशारदः १६
गच्छ शीघ्रं महाराज हैडिम्बं युद्धदुर्मदम्
वारयस्व रणे यत्तो मिषतां सर्वधन्विनाम्
राक्षसं क्रूरकर्माणं यथेन्द्रस्तारकं पुरा १७
तव दिव्यानि चास्त्राणि विक्रमश्च परन्तप
समागमश्च बहुभिः पुराभूदसुरैः सह १८
त्वं तस्य राजशार्दूल प्रतियोद्धा महाहवे
स्वबलेन वृतो राजञ्जहि राक्षसपुङ्गवम् १९
एतच्छ्रुत्वा तु वचनं भीष्मस्य पृतनापतेः
प्रययौ सिंहनादेन परानभिमुखो द्रुतम् २०
तमाद्रवन्तं सम्प्रेक्ष्य गर्जन्तमिव तोयदम्
अभ्यवर्तन्त संक्रुद्धाः पाण्डवानां महारथाः २१
भीमसेनोऽभिमन्युश्च राक्षसश्च घटोत्कचः
द्रौपदेयाः सत्यधृतिः क्षत्रदेवश्च मारिष २२
चेदियो वसुदानश्च दशार्णाधिपतिस्तथा
सुप्रतीकेन तांश्चापि भगदत्तोऽप्युपाद्रवत् २३
ततः समभवद्युद्धं घोररूपं भयानकम्
पाण्डूनां भगदत्तेन यमराष्ट्रविवर्धनम् २४
प्रमुक्ता रथिभिर्बाणा भीमवेगाः सुतेजनाः
ते निपेतुर्महाराज नागेषु च रथेषु च २५
प्रभिन्नाश्च महानागा विनीता हस्तिसादिभिः
परस्परं समासाद्य संनिपेतुरभीतवत् २६
मदान्धा रोषसंरब्धा विषाणाग्रैर्महाहवे

बिभिदुर्दन्तमुसलैः समासाद्य परस्परम् २७
हयाश्च चामरापीडाः प्रासपाणिभिरास्थिताः
चोदिताः सादिभिः क्षिप्रं निपेतुरितरेतरम् २८
पादाताश्च पदात्योघैस्ताडिताः शक्तितोमरैः
न्यपतन्त तदा भूमौ शतशोऽथ सहस्रशः २९
रथिनश्च तथा राजन्कर्णिनालीकसायकैः
निहत्य समरे वीरान्सिंहनादान्विनेदिरे ३०
तस्मिंस्तथा वर्तमाने संग्रामे लोमहर्षणे
भगदत्तो महेष्वासो भीमसेनमथाद्रवत् ३१
कुञ्जरेण प्रभिन्नेन सप्तधा स्रवता मदम्
पर्वतेन यथा तोयं स्रवमाणेन सर्वतः ३२
किरञ्शरसहस्राणि सुप्रतीकशिरोगतः
एरावतस्थो मघवान्वारिधारा इवानघ ३३
स भीमं शरधाराभिस्ताडयामास पार्थिवः
पर्वतं वारिधाराभिः प्रावृषीव बलाहकः ३४
भीमसेनस्तु संक्रुद्धः पादरक्षान्परःशतान्
निजघान महेष्वासः संक्रुद्धः शरवृष्टिभिः ३५
तान्दृष्ट्वा निहतान्क्रुद्धो भगदत्तः प्रतापवान्
चोदयामास नागेन्द्रं भीमसेनरथं प्रति ३६
स नागः प्रेषितस्तेन बाणो ज्याचोदितो यथा
अभ्यधावत वेगेन भीमसेनमरिन्दमम् ३७
तमापतन्तं सम्प्रेक्ष्य पाण्डवानां महारथाः
अभ्यवर्तन्त वेगेन भीमसेनपुरोगमाः ३८
केकयाश्चाभिमन्युश्च द्रौपदेयाश्च सर्वशः
दशार्णाधिपतिः शूरः क्षत्रदेवश्च मारिष
चेदिपश्चित्रकेतुश्च संक्रुद्धाः सर्व एव ते ३९
उत्तमास्त्राणि दिव्यानि दर्शयन्तो महाबलाः
तमेकं कुञ्जरं क्रुद्धाः समन्तात्पर्यवारयन् ४०
स विद्धो बहुभिर्बाणैर्व्यरोचत महाद्विपः
सञ्जातरुधिरोत्पीडो धातुचित्र इवाद्रिराट् ४१

दशार्णाधिपतिश्चापि गजं भूमिधरोपमम्
समास्थितोऽभिदुद्राव भगदत्तस्य वारणम् ४२
तमापतन्तं समरे गजं गजपतिः स च
दधार सुप्रतीकोऽपि वेलेव मकरालयम् ४३
वारितं प्रेक्ष्य नागेन्द्रं दशार्णस्य महात्मनः
साधु साध्विति सैन्यानि पाण्डवेयान्यपूजयन् ४४
ततः प्राग्ज्योतिषः क्रुद्धस्तोमरान्वै चतुर्दश
प्राहिणोत्तस्य नागस्य प्रमुखे नृपसत्तम ४५
तस्य वर्म मुखत्राणं शातकुम्भपरिष्कृतम्
विदार्य प्राविशन्क्षिप्रं वल्मीकमिव पन्नगाः ४६
स गाढविद्धो व्यथितो नागो भरतसत्तम
उपावृत्तमदः क्षिप्रं स न्यवर्तत वेगतः ४७
प्रदुद्राव च वेगेन प्रणदन्भैरवं स्वनम्
स मर्दमानः स्वबलं वायुर्वृक्षानिवौजसा ४८
तस्मिन्पराजिते नागे पाण्डवानां महारथाः
सिंहनादं विनद्योच्चैर्युद्धायैवोपतस्थिरे ४९
ततो भीमं पुरस्कृत्य भगदत्तमुपाद्रवन्
किरन्तो विविधान्बाणाञ्शस्त्राणि विविधानि च ५०
तेषामापततां राजन्संक्रुद्धानाममर्षिणाम्
श्रुत्वा स निनदं घोरममर्षाद्गतसाध्वसः
भगदत्तो महेष्वासः स्वनागं प्रत्यचोदयत् ५१
अङ्कुशाङ्गुष्ठनुदितः स गजप्रवरो युधि
तस्मिन्क्षणे समभवत्संवर्तक इवानलः ५२
रथसंघांस्तथा नागान्हयांश्च सह सादिभिः
पादातांश्च सुसंक्रुद्धः शतशोऽथ सहस्रशः
अमृद्नात्समरे राजन्सम्प्रधावंस्ततस्ततः ५३
तेन संलोड्यमानं तु पाण्डूनां तद्बलं महत्
संचुकोच महाराज चर्मेवाग्नौ समाहितम् ५४
भग्नं तु स्वबलं दृष्ट्वा भगदत्तेन धीमता
घटोत्कचोऽथ संक्रुद्धो भगदत्तमुपाद्रवत् ५५

विकटः पुरुषो राजन्दीप्तास्यो दीप्तलोचनः
रूपं विभीषणं कृत्वा रोषेण प्रज्वलन्निव ५६
जग्राह विपुलं शूलं गिरीणामपि दारणम्
नागं जिघांसुः सहसा चिक्षेप च महाबलः
सविष्फुलिङ्गज्वालाभिः समन्तात्परिवेष्टितम् ५७
तमापतन्तं सहसा दृष्ट्वा ज्वालाकुलं रणे
चिक्षेप रुचिरं तीक्ष्णमर्धचन्द्रं स पार्थिवः
चिच्छेद सुमहच्छूलं तेन बाणेन वेगवत् ५८
निपपात द्विधा छिन्नं शूलं हेमपरिष्कृतम्
महाशनिर्यथा भ्रष्टा शक्रमुक्ता नभोगता ५९
शूलं निपतितं दृष्ट्वा द्विधा कृतं स पार्थिवः
रुक्मदण्डां महाशक्तिं जग्राहाग्निशिखोपमाम्
चिक्षेप तां राक्षसस्य तिष्ठ तिष्ठेति चाब्रवीत् ६०
तामापतन्तीं सम्प्रेक्ष्य वियत्स्थामशनीमिव
उत्पत्य राक्षसस्तूर्णं जग्राह च ननाद च ६१
बभञ्ज चैनां त्वरितो जानुन्यारोप्य भारत
पश्यतः पार्थिवेन्द्रस्य तदद्भुतमिवाभवत् ६२
तदवेक्ष्य कृतं कर्म राक्षसेन बलीयसा
दिवि देवाः सगन्धर्वा मुनयश्चापि विस्मिताः ६३
पाण्डवाश्च महेष्वासा भीमसेनपुरोगमाः
साधु साध्विति नादेन पृथिवीमनुनादयन् ६४
तं तु श्रुत्वा महानादं प्रहृष्टानां महात्मनाम्
नामृष्यत महेष्वासो भगदत्तः प्रतापवान् ६५
स विस्फार्य महच्चापमिन्द्राशनिसमस्वनम्
अभिदुद्राव वेगेन पाण्डवानां महारथान्
विसृजन्विमलांस्तीक्ष्णान्नाराचाञ्ज्वलनप्रभान् ६६
भीममेकेन विव्याध राक्षसं नवभिः शरैः
अभिमन्युं त्रिभिश्चैव केकयान्पञ्चभिस्तथा ६७
पूर्णायतविसृष्टेन स्वर्णपुङ्खेन पत्रिणा
बिभेद दक्षिणं बाहुं क्षत्रदेवस्य चाहवे

पपात सहसा तस्य सशरं धनुरुत्तमम् ६८
द्रौपदेयांस्ततः पञ्च पञ्चभिः समताडयत्
भीमसेनस्य च क्रोधान्निजघान तुरङ्गमान् ६९
ध्वजं केसरिणं चास्य चिच्छेद विशिखैस्त्रिभिः
निर्बिभेद त्रिभिश्चान्यैः सारथिं चास्य पत्रिभिः ७०
स गाढविद्धो व्यथितो रथोपस्थ उपाविशत्
विशोको भरतश्रेष्ठ भगदत्तेन संयुगे ७१
ततो भीमो महाराज विरथो रथिनां वरः
गदां प्रगृह्य वेगेन प्रचस्कन्द महारथात् ७२
तमुद्यतगदं दृष्ट्वा सशृङ्गमिव पर्वतम्
तावकानां भयं घोरं समपद्यत भारत ७३
एतस्मिन्नेव काले तु पाण्डवः कृष्णसारथिः
आजगाम महाराज निघ्नञ्शत्रून्सहस्रशः ७४
यत्र तौ पुरुषव्याघ्रौ पितापुत्रौ परंतपौ
प्राग्ज्योतिषेण संसक्तौ भीमसेनघटोत्कचौ ७५
दृष्ट्वा तु पाण्डवो राजन्युध्यमानान्महारथान्
त्वरितो भरतश्रेष्ठ तत्रायाद्विकिरञ्शरान् ७६
ततो दुर्योधनो राजा त्वरमाणो महारथः
सेनामचोदयत्क्षिप्रं रथनागाश्वसंकुलाम् ७७
तामापतन्तीं सहसा कौरवाणां महाचमूम्
अभिदुद्राव वेगेन पाण्डवः श्वेतवाहनः ७८
भगदत्तोऽपि समरे तेन नागेन भारत
विमृद्नन्पाण्डवबलं युधिष्ठिरमुपाद्रवत् ७९
तदासीत्तुमुलं युद्धं भगदत्तस्य मारिष
पाञ्चालैः सृञ्जयैश्चैव केकयैश्चोद्यतायुधैः ८०
भीमसेनोऽपि समरे तावुभौ केशवार्जुनौ
आश्रावयद्यथावृत्तमिरावद्वधमुत्तमम् ८१
इति श्रीमहाभारते भीष्मपर्वणि एकनवतितमोऽध्यायः ९१

द्विनवतितमोऽध्यायः
सञ्जय उवाच
पुत्रं तु निहतं श्रुत्वा इरावन्तं धनञ्जयः
दुःखेन महताविष्टो निःश्वसन्पन्नगो यथा १
अब्रवीत्समरे राजन्वासुदेवमिदं वचः
इदं नूनं महाप्राज्ञो विदुरो दृष्टवान्पुरा २
कुरूणां पाण्डवानां च क्षयं घोरं महामतिः
ततो निवारयितवान्धृतराष्ट्रं जनेश्वरम् ३
अवध्या बहवो वीराः संग्रामे मधुसूदन
निहताः कौरवैः संख्ये तथास्माभिश्च ते हताः ४
अर्थहेतोर्नरश्रेष्ठ क्रियते कर्म कुत्सितम्
धिगर्थान्यत्कृते ह्येवं क्रियते ज्ञातिसंक्षयः ५
अधनस्य मृतं श्रेयो न च ज्ञातिवधाद्धनम्
किं नु प्राप्स्यामहे कृष्ण हत्वा ज्ञातीन्समागतान् ६
दुर्योधनापराधेन शकुनेः सौबलस्य च
क्षत्रिया निधनं यान्ति कर्णदुर्मन्त्रितेन च ७
इदानीं च विजानामि सुकृतं मधुसूदन
कृतं राज्ञा महाबाहो याचता स्म सुयोधनम्
राज्यार्धं पञ्च वा ग्रामान्नाकार्षीत्स च दुर्मतिः ८
दृष्ट्वा हि क्षत्रियाञ्शूराञ्शयानान्धरणीतले
निन्दामि भृशमात्मानं धिगस्तु क्षत्रजीविकाम् ९
अशक्तमिति मामेते ज्ञास्यन्ति क्षत्रिया रणे
युद्धं ममैभिरुचितं ज्ञातिभिर्मधुसूदन १०
संचोदय हयान्क्षिप्रं धार्तराष्ट्रचमूं प्रति
प्रतरिष्ये महापारं भुजाभ्यां समरोदधिम्
नायं क्लीबयितुं कालो विद्यते माधव क्वचित् ११
एवमुक्तस्तु पार्थेन केशवः परवीरहा
चोदयामास तानश्वान्पाण्डुरान्वातरंहसः १२
अथ शब्दो महानासीत्तव सैन्यस्य भारत
मारुतोद्धूतवेगस्य सागरस्येव पर्वणि १३

अपराह्णे महाराज संग्रामः समपद्यत
पर्जन्यसमनिर्घोषो भीष्मस्य सह पाण्डवैः १४
ततो राजंस्तव सुता भीमसेनमुपाद्रवन्
परिवार्य रणे द्रोणं वसवो वासवं यथा १५
ततः शान्तनवो भीष्मः कृपश्च रथिनां वरः
भगदत्तः सुशर्मा च धनञ्जयमुपाद्रवन् १६
हार्दिक्यो बाह्लिकश्चैव सात्यकिं समभिद्रुतौ
अम्बष्ठकस्तु नृपतिरभिमन्युमवारयत् १७
शेषास्त्वन्ये महाराज शेषानेव महारथान्
ततः प्रववृते युद्धं घोररूपं भयावहम् १८
भीमसेनस्तु सम्प्रेक्ष्य पुत्रांस्तव जनेश्वर
प्रजज्वाल रणे क्रुद्धो हविषा हव्यवाडिव १९
पुत्रास्तु तव कौन्तेयं छादयाञ्चक्रिरे शरैः
प्रावृषीव महाराज जलदाः पर्वतं यथा २०
स च्छाद्यमानो बहुधा पुत्रैस्तव विशां पते
सृक्किणी विलिहन्वीरः शार्दूल इव दर्पितः २१
व्यूढोरस्कं ततो भीमः पातयामास पार्थिव
क्षुरप्रेण सुतीक्ष्णेन सोऽभवद्गतजीवितः २२
अपरेण तु भल्लेन पीतेन निशितेन च
अपातयत्कुण्डलिनं सिंहः क्षुद्रमृगं यथा २३
ततः सुनिशितान्पीतान्समादत्त शिलीमुखान्
स सप्त त्वरया युक्तः पुत्रांस्ते प्राप्य मारिष २४
प्रेषिता भीमसेनेन शरास्ते दृढधन्वना
अपातयन्त पुत्रांस्ते रथेभ्यः सुमहारथान् २५
अनाधृष्टिं कुण्डभेदं वैराटं दीर्घलोचनम्
दीर्घबाहुं सुबाहुं च तथैव कनकध्वजम् २६
प्रपतन्ता स्म ते वीर विरेजुर्भरतर्षभ
वसन्ते पुष्पशबलाश्चूताः प्रपतिता इव २७
ततः प्रदुद्रुवुः शेषाः पुत्रास्तव विशां पते
तं कालमिव मन्यन्तो भीमसेनं महाबलम् २८

द्रोणस्तु समरे वीरं निर्दहन्तं सुतांस्तव
यथाद्रिं वारिधाराभिः समन्ताद्व्यकिरच्छरैः २९
तत्राद्भुतमपश्याम कुन्तीपुत्रस्य पौरुषम्
द्रोणेन वार्यमाणोऽपि निजघ्ने यत्सुतांस्तव ३०
यथा हि गोवृषो वर्षं संधारयति खात्पतत्
भीमस्तथा द्रोणमुक्तं शरवर्षमदीधरत् ३१
अद्भुतं च महाराज तत्र चक्रे वृकोदरः
यत्पुत्रांस्तेऽवधीत्संख्ये द्रोणं चैव न्ययोधयत् ३२
पुत्रेषु तव वीरेषु चिक्रीडार्जुनपूर्वजः
मृगेष्विव महाराज चरन्व्याघ्रो महाबलः ३३
यथा वा पशुमध्यस्थो द्रावयेत पशून्वृकः
वृकोदरस्तव सुतांस्तथा व्यद्रावयद्रणे ३४
गाङ्गेयो भगदत्तश्च गौतमश्च महारथः
पाण्डवं रभसं युद्धे वारयामासुरर्जुनम् ३५
अस्त्रैरस्त्राणि संवार्य तेषां सोऽतिरथो रणे
प्रवीरांस्तव सैन्येषु प्रेषयामास मृत्यवे ३६
अभिमन्युश्च राजानमम्बष्ठं लोकविश्रुतम्
विरथं रथिनां श्रेष्ठं कारयामास सायकैः ३७
विरथो वध्यमानः स सौभद्रेण यशस्विना
अवप्लुत्य रथात्तूर्णं सव्रीडो मनुजाधिपः ३८
असिं चिक्षेप समरे सौभद्रस्य महात्मनः
आरुरोह रथं चैव हार्दिक्यस्य महात्मनः ३९
आपतन्तं तु निस्त्रिंशं युद्धमार्गविशारदः
लाघवाद्व्यंसयामास सौभद्रः परवीरहा ४०
व्यंसितं वीक्ष्य निस्त्रिंशं शौभद्रेण रणे तदा
साधु साध्विति सैन्यानां प्रणादोऽभूद्विशां पते ४१
धृष्टद्युम्नमुखास्त्वन्ये तव सैन्यमयोधयन्
तथैव तावकाः सर्वे पाण्डुसैन्यमयोधयन् ४२
तत्राक्रन्दो महानासीत्तव तेषां च भारत
निघ्नतां भृशमन्योन्यं कुर्वतां कर्म दुष्करम् ४३

अन्योन्यं हि रणे शूराः केशेष्वाक्षिप्य मारिष
नखैर्दन्तैरयुध्यन्त मुष्टिभिर्जानुभिस्तथा ४४
बाहुभिश्च तलैश्चैव निस्त्रिंशैश्च सुसंशितैः
विवरं प्राप्य चान्योन्यमनयन्यमसादनम् ४५
न्यहनच्च पिता पुत्रं पुत्रश्च पितरं रणे
व्याकुलीकृतसंकल्पा युयुधुस्तत्र मानवाः ४६
रणे चारूणि चापानि हेमपृष्ठानि भारत
हतानामपविद्धानि कलापाश्च महाधनाः ४७
जातरूपमयैः पुङ्खै राजतैश्च शिताः शराः
तैलधौता व्यराजन्त निर्मुक्तभुजगोपमाः ४८
हस्तिदन्तत्सरून्खड्गाञ्जातरूपपरिष्कृतान्
चर्माणि चापविद्धानि रुक्मपृष्ठानि धन्विनाम् ४९
सुवर्णविकृतप्रासान्पट्टिशान्हेमभूषितान्
जातरूपमयाश्चर्ष्टीः शक्त्यश्च कनकोज्ज्वलाः ५०
अपकृत्ताश्च पतिता मुसलानि गुरूणि च
परिघान्पट्टिशांश्चैव भिण्डिपालांश्च मारिष ५१
पतितांस्तोमरांश्चापि चित्रा हेमपरिष्कृताः
कुथाश्च बहुधाकाराश्चामरव्यजनानि च ५२
नानाविधानि शस्त्राणि विसृज्य पतिता नराः
जीवन्त इव दृश्यन्ते गतसत्त्वा महारथाः ५३
गदाविमथितैर्गात्रैर्मुसलैर्भिन्नमस्तकाः
गजवाजिरथक्षुण्णाः शेरते स्म नराः क्षितौ ५४
तथैवाश्वनृनागानां शरीरैराबभौ तदा
संछन्ना वसुधा राजन्पर्वतैरिव सर्वतः ५५
समरे पतितैश्चैव शक्त्यृष्टिशरतोमरैः
निस्त्रिंशैः पट्टिशैः प्रासैरयस्कुन्तैः परश्वधैः ५६
परिघैर्भिण्डिपालैश्च शतघ्नीभिस्तथैव च
शरीरैः शस्त्रभिन्नैश्च समास्तीर्यत मेदिनी ५७
निःशब्दैरल्पशब्दैश्च शोणितौघपरिप्लुतैः
गतासुभिरमित्रघ्न विबभौ संवृता मही ५८

सतलत्रैः सकेयूरैर्बाहुभिश्चन्दनोक्षितैः
हस्तिहस्तोपमैश्छिन्नैरूरुभिश्च तरस्विनाम् ५९
बद्धचूडामणिधरैः शिरोभिश्च सकुण्डलैः
पतितैर्वृषभाक्षाणां बभौ भारत मेदिनी ६०
कवचैः शोणितादिग्धैर्विप्रकीर्णैश्च काञ्चनैः
रराज सुभृशं भूमिः शान्तार्चिभिरिवानलैः ६१
विप्रविद्धैः कलापैश्च पतितैश्च शरासनैः
विप्रकीर्णैः शरैश्चापि रुक्मपुङ्खैः समन्ततः ६२
रथैश्च बहुभिर्भग्नैः किङ्किणीजालमालिभिः
वाजिभिश्च हतैः कीर्णैः स्रस्तजिह्वैः सशोणितैः ६३
अनुकर्षैः पताकाभिरुपासङ्गैर्ध्वजैरपि
प्रवीराणां महाशङ्खैर्विप्रकीर्णैश्च पाण्डुरैः ६४
स्रस्तहस्तैश्च मातङ्गैः शयानैर्विबभौ मही
नानारूपैरलंकारैः प्रमदेवाभ्यलंकृता ६५
दन्तिभिश्चापरैस्तत्र सप्रासैर्गाढवेदनैः
करैः शब्दं विमुञ्चद्भिः शीकरं च मुहुर्मुहुः
विबभौ तद्रणस्थानं धम्यमानैरिवाचलैः ६६
नानारागैः कम्बलैश्च परिस्तोमैश्च दन्तिनाम्
वैडूर्यमणिदण्डैश्च पतितैरङ्कुशैः शुभैः ६७
घण्टाभिश्च गजेन्द्राणां पतिताभिः समन्ततः
विघाटितविचित्राभिः कुथाभी राङ्कवैस्तथा ६८
ग्रैवेयैश्चित्ररूपैश्च रुक्मकक्ष्याभिरेव च
यन्त्रैश्च बहुधा छिन्नैस्तोमरैश्च सकम्पनैः ६९
अश्वानां रेणुकपिलै रुक्मच्छन्नैरुरश्छदैः
सादिनां च भुजैश्छिन्नैः पतितैः साङ्गदैस्तथा ७०
प्रासैश्च विमलैस्तीक्ष्णैर्विमलाभिस्तथर्ष्टिभिः
उष्णीषैश्च तथा छिन्नैः प्रविद्धैश्च ततस्ततः ७१
विचित्रैरर्धचन्द्रैश्च जातरूपपरिष्कृतैः
अश्वास्तरपरिस्तोमै राङ्कवैर्मृदितैस्तथा ७२
नरेन्द्रचूडामणिभिर्विचित्रैश्च महाधनैः

छत्रैस्तथापविद्धैश्च चामरव्यजनैरपि ७३
पद्मेन्दुद्युतिभिश्चैव वदनैश्चारुकुण्डलैः
क्लृप्तश्मश्रुभिरत्यर्थं वीराणां समलंकृतैः ७४
अपविद्धैर्महाराज सुवर्णोज्ज्वलकुण्डलैः
ग्रहनक्षत्रशबला द्यौरिवासीद्वसुन्धरा ७५
एवमेते महासेने मृदिते तत्र भारत
परस्परं समासाद्य तव तेषां च संयुगे ७६
तेषु श्रान्तेषु भग्नेषु मृदितेषु च भारत
रात्रिः समभवद्घोरा नापश्याम ततो रणम् ७७
ततोऽवहारं सैन्यानां प्रचक्रुः कुरुपाण्डवाः
घोरे निशामुखे रौद्रे वर्तमाने सुदारुणे ७८
अवहारं ततः कृत्वा सहिताः कुरुपाण्डवाः
न्यविशन्त यथाकालं गत्वा स्वशिबिरं तदा ७९
इति श्रीमहाभारते भीष्मपर्वणि द्विनवतितमोऽध्यायः ९२

त्रिनवतितमोऽध्यायः

सञ्जय उवाच
ततो दुर्योधनो राजा शकुनिश्चापि सौबलः
दुःशासनश्च पुत्रस्ते सूतपुत्रश्च दुर्जयः १
समागम्य महाराज मन्त्रं चक्रुर्विवक्षितम्
कथं पाण्डुसुताः युद्धे जेतव्याः सगणा इति २
ततो दुर्योधनो राजा सर्वांस्तानाह मन्त्रिणः
सूतपुत्रं समाभाष्य सौबलं च महाबलम् ३
द्रोणो भीष्मः कृपः शल्यः सौमदत्तिश्च संयुगे
न पार्थान्प्रतिबाधन्ते न जाने तत्र कारणम् ४
अवध्यमानास्ते चापि क्षपयन्ति बलं मम
सोऽस्मि क्षीणबलः कर्ण क्षीणशस्त्रश्च संयुगे ५
निकृतः पाण्डवैः शूरैरवध्यैर्दैवतैरपि
सोऽह संशयमापन्नः प्रकरिष्ये कथं रणम् ६
तमब्रवीन्महाराज सूतपुत्रो नराधिपम्

मा शुचो भरतश्रेष्ठ प्रकरिष्ये प्रियं तव ७
भीष्मः शान्तनवस्तूर्णमपयातु महारणात्
निवृत्ते युधि गाङ्गेये न्यस्तशस्त्रे च भारत ८
अहं पार्थान्हनिष्यामि सहितान्सर्वसोमकैः
पश्यतो युधि भीष्मस्य शपे सत्येन ते नृप ९
पाण्डवेषु दयां राजन्सदा भीष्मः करोति वै
अशक्तश्च रणे भीष्मो जेतुमेतान्महारथान् १०
अभिमानी रणे भीष्मो नित्यं चापि रणप्रियः
स कथं पाण्डवान्युद्धे जेष्यते तात संगतान् ११
स त्वं शीघ्रमितो गत्वा भीष्मस्य शिबिरं प्रति
अनुमान्य रणे भीष्मं शस्त्रं न्यासय भारत १२
न्यस्तशस्त्रे ततो भीष्मे निहतान्पश्य पाण्डवान्
मयैकेन रणे राजन्ससुहृद्गणबान्धवान् १३
एवमुक्तस्तु कर्णेन पुत्रो दुर्योधनस्तव
अब्रवीद्भ्रातरं तत्र दुःशासनमिदं वचः १४
अनुयात्रं यथा सज्जं सर्वं भवति सर्वतः
दुःशासन तथा क्षिप्रं सर्वमेवोपपादय १५
एवमुक्त्वा ततो राजन्कर्णमाह जनेश्वरः
अनुमान्य रणे भीष्ममितोऽह द्विपदां वरम् १६
आगमिष्ये ततः क्षिप्रं त्वत्सकाशमरिन्दम
ततस्त्वं पुरुषव्याघ्र प्रकरिष्यसि संयुगम् १७
निष्पपात ततस्तूर्णं पुत्रस्तव विशां पते
सहितो भ्रातृभिः सर्वैर्देवैरिव शतक्रतुः १८
ततस्तं नृपशार्दूलं शार्दूलसमविक्रमम्
आरोहयद्धयं तूर्णं भ्राता दुःशासनस्तदा १९
अङ्गदी बद्धमुकुटो हस्ताभरणवान्नृपः
धार्तराष्ट्रो महाराज विबभौ स महेन्द्रवत् २०
भाण्डीपुष्पनिकाशेन तपनीयनिभेन च
अनुलिप्तः परार्ध्येन चन्दनेन सुगन्धिना २१
अरजोम्बरसंवीतः सिंहखेलगतिर्नृपः

शुशुभे विमलार्चिष्माञ्शरदीव दिवाकरः २२
तं प्रयान्तं नरव्याघ्रं भीष्मस्य शिबिरं प्रति
अनुजग्मुर्महेष्वासाः सर्वलोकस्य धन्विनः
भ्रातरश्च महेष्वासास्त्रिदशा इव वासवम् २३
हयानन्ये समारुह्य गजानन्ये च भारत
रथैरन्ये नरश्रेष्ठाः परिवव्रुः समन्ततः २४
आत्तशस्त्राश्च सुहृदो रक्षणार्थं महीपतेः
प्रादुर्बभूवुः सहिताः शक्रस्येवामरा दिवि २५
संपूज्यमानः कुरुभिः कौरवाणां महारथः
प्रययौ सदनं राजन्गाङ्गेयस्य यशस्विनः
अन्वीयमानः सहितैः सोदरैः सर्वतो नृपः २६
दक्षिणं दक्षिणः काले संभृत्य स्वभुजं तदा
हस्तिहस्तोपमं शैक्षं सर्वशत्रुनिबर्हणम् २७
प्रगृह्णन्नञ्जलीनृणामुद्यतान्सर्वतोदिशम्
शुश्राव मधुरा वाचो नानादेशनिवासिनाम् २८
संस्तूयमानः सूतैश्च मागधैश्च महायशाः
पूजयानश्च तान्सर्वान्सर्वलोकेश्वरेश्वरः २९
प्रदीपैः काञ्चनैस्तत्र गन्धतैलावसेचनैः
परिवव्रुर्महात्मानं प्रज्वलद्भिः समन्ततः ३०
स तैः परिवृतो राजा प्रदीपैः काञ्चनैः शुभैः
शुशुभे चन्द्रमा युक्तो दीप्तैरिव महाग्रहैः ३१
कञ्चुकोष्णीषिणस्तत्र वेत्रझर्झरपाणयः
प्रोत्सारयन्तः शनकैस्तं जनं सर्वतोदिशम् ३२
संप्राप्य तु ततो राजा भीष्मस्य सदनं शुभम्
अवतीर्य हयाच्चापि भीष्मं प्राप्य जनेश्वरः ३३
अभिवाद्य ततो भीष्मं निषण्णः परमासने
काञ्चने सर्वतोभद्रे स्पर्ध्यास्तरणसंवृते
उवाच प्राञ्जलिर्भीष्मं बाष्पकण्ठोऽश्रुलोचनः ३४
त्वां वयं समुपाश्रित्य संयुगे शत्रुसूदन
उत्सहेम रणे जेतुं सेन्द्रानपि सुरासुरान् ३५

किमु पाण्डुसुतान्वीरान्ससुहृद्गणबान्धवान्
तस्मादर्हसि गाङ्गेय कृपां कर्तुं मयि प्रभो
जहि पाण्डुसुतान्वीरान्महेन्द्र इव दानवान् ३६
पूर्वमुक्तं महाबाहो निहनिष्यामि सोमकान्
पाञ्चालान्पाण्डवैः सार्धं करूषांश्चेति भारत ३७
तद्वचः सत्यमेवास्तु जहि पार्थान्समागतान्
सोमकांश्च महेष्वासान्सत्यवाग्भव भारत ३८
दयया यदि वा राजन्द्वेष्यभावान्मम प्रभो
मन्दभाग्यतया वापि मम रक्षसि पाण्डवान् ३९
अनुजानीहि समरे कर्णमाहवशोभिनम्
स जेष्यति रणे पार्थान्ससुहृद्गणबान्धवान् ४०
एतावदुक्त्वा नृपतिः पुत्रो दुर्योधनस्तव
नोवाच वचनं किञ्चिद्भीष्मं भीमपराक्रमम् ४१
इति श्रीमहाभारते भीष्मपर्वणि त्रिनवतितमोऽध्यायः ९३

## चतुर्नवतितमोऽध्यायः

सञ्जय उवाच
वाक्शल्यैस्तव पुत्रेण सोऽतिविद्धः पितामहः
दुःखेन महताविष्टो नोवाचाप्रियमण्वपि १
स ध्यात्वा सुचिरं कालं दुःखरोषसमन्वितः
श्वसमानो यथा नागः प्रणुन्नो वै शलाकया २
उद्वृत्य चक्षुषी कोपान्निर्दहन्निव भारत
सदेवासुरगन्धर्वं लोकं लोकविदां वरः
अब्रवीत्तव पुत्रं तु सामपूर्वमिदं वचः ३
किं नु दुर्योधनैवं मां वाक्शल्यैरुपविध्यसि
घटमानं यथाशक्ति कुर्वाणं च तव प्रियम्
जुह्वानं समरे प्राणांस्तवैव हितकाम्यया ४
यदा तु पाण्डवः शूरः खाण्डवेऽग्निमतर्पयत्
पराजित्य रणे शक्रं पर्याप्तं तन्निदर्शनम् ५
यदा च त्वां महाबाहो गन्धर्वैर्हृतमोजसा

अमोचयत्पाण्डुसुतः पर्याप्तं तन्निदर्शनम् ६
द्रवमाणेषु शूरेषु सोदरेषु तथाभिभो
सूतपुत्रे च राधेये पर्याप्तं तन्निदर्शनम् ७
यच्च नः सहितान्सर्वान्विराटनगरे तदा
एक एव समुद्यातः पर्याप्तं तन्निदर्शनम् ८
द्रोणं च युधि संरब्धं मां च निर्जित्य संयुगे
कर्णं च त्वां च द्रौणिं च कृपं च सुमहारथम्
वासांसि स समादत्त पर्याप्तं तन्निदर्शनम् ९
निवातकवचान्युद्धे वासवेनापि दुर्जयान्
जितवान्समरे पार्थः पर्याप्तं तन्निदर्शनम् १०
को हि शक्तो रणे जेतुं पाण्डवं रभसं रणे
त्वं तु मोहान्न जानीषे वाच्यावाच्यं सुयोधन ११
मुमूर्षुर्हि नरः सर्वान्वृक्षान्पश्यति काञ्चनान्
तथा त्वमपि गान्धारे विपरीतानि पश्यसि १२
स्वयं वैरं महत्कृत्वा पाण्डवैः सहसृञ्जयैः
युध्यस्व तानद्य रणे पश्यामः पुरुषो भव १३
अहं तु सोमकान्सर्वान्सपाञ्चालान्समागतान्
निहनिष्ये नरव्याघ्र वर्जयित्वा शिखण्डिनम् १४
तैर्वाहं निहतः संख्ये गमिष्ये यमसादनम्
तान्वा निहत्य संग्रामे प्रीतिं दास्यामि वै तव १५
पूर्वं हि स्त्री समुत्पन्ना शिखण्डी राजवेश्मनि
वरदानात्पुमाञ्जातः सैषा वै स्त्री शिखण्डिनी १६
तामहं न हनिष्यामि प्राणत्यागेऽपि भारत
यासौ प्राङ्निर्मिता धात्रा सैषा वै स्त्री शिखण्डिनी १७
सुखं स्वपिहि गान्धारे श्वोऽस्मि कर्ता महारणम्
यज्जनाः कथयिष्यन्ति यावत्स्थास्यति मेदिनी १८
एवमुक्तस्तव सुतो निर्जगाम जनेश्वर
अभिवाद्य गुरुं मूर्ध्ना प्रययौ स्वं निवेशनम् १९
आगम्य तु ततो राजा विसृज्य च महाजनम्
प्रविवेश ततस्तूर्णं क्षयं शत्रुक्षयङ्करः

प्रविष्टः स निशां तां च गमयामास पार्थिवः २०
इति श्रीमहाभारते भीष्मपर्वणि चतुर्नवतितमोऽध्यायः ९४

पञ्चनवतितमोऽध्यायः

सञ्जय उवाच
प्रभातायां तु शवर्यां प्रातरुत्थाय वै नृपः
राज्ञः समाज्ञापयत सेनां योजयतेति ह
अद्य भीष्मो रणे क्रुद्धो निहनिष्यति सोमकान् १
दुर्योधनस्य तच्छ्रुत्वा रात्रौ विलपितं बहु
मन्यमानः स तं राजन्प्रत्यादेशमिवात्मनः २
निर्वेदं परमं गत्वा विनिन्द्य परवाच्यताम्
दीर्घं दध्यौ शान्तनवो योद्धुकामोऽजुनं रणे ३
इङ्गितेन तु तज्ज्ञात्वा गाङ्गेयेन विचिन्तितम्
दुर्योधनो महाराज दुःशासनमचोदयत् ४
दुःशासन रथास्तूर्णं युज्यन्तां भीष्मरक्षिणः
द्वात्रिंशत्त्वमनीकानि सर्वाण्येवाभिचोदय ५
इदं हि समनुप्राप्तं वर्षपूगाभिचिन्तितम्
पाण्डवानां ससैन्यानां वधो राज्यस्य चागमः ६
तत्र कार्यमहं मन्ये भीष्मस्यैवाभिरक्षणम्
स नो गुप्तः सुखाय स्याद्धन्यात्पार्थांश्च संयुगे ७
अब्रवीच्च विशुद्धात्मा नाहं हन्यां शिखण्डिनम्
स्त्रीपूर्वको ह्यसौ जातस्तस्माद्वर्ज्यो रणे मया ८
लोकस्तद्वेद यदहं पितुः प्रियचिकीर्षया
राज्यं स्फीतं महाबाहो स्त्रियश्च त्यक्तवान्पुरा ९
नैव चाहं स्त्रियं जातु न स्त्रीपूर्वं कथञ्चन
हन्यां युधि नरश्रेष्ठ सत्यमेतद्ब्रवीमि ते १०
अयं स्त्रीपूर्वको राजञ्शिखण्डी यदि ते श्रुतः
उद्योगे कथितं यत्तत्तथा जाता शिखण्डिनी ११
कन्या भूत्वा पुमाञ्जातः स च योत्स्यति भारत
तस्याहं प्रमुखे बाणान्न मुञ्चेयं कथञ्चन १२

युद्धे तु क्षत्रियांस्तात पाण्डवानां जयैषिणः
सर्वानन्यान्हनिष्यामि सम्प्राप्तान्बाणगोचरान् १३
एवं मां भरतश्रेष्ठो गाङ्गेयः प्राह शास्त्रवित्
तत्र सर्वात्मना मन्ये भीष्मस्यैवाभिपालनम् १४
अरक्ष्यमाणं हि वृको हन्यात्सिंहं महावने
मा वृकेणेव शार्दूलं घातयेम शिखण्डिना १५
मातुलः शकुनिः शल्यः कृपो द्रोणो विविंशतिः
यत्ता रक्षन्तु गाङ्गेयं तस्मिन्गुप्ते ध्रुवो जयः १६
एतच्छ्रुत्वा तु राजानो दुर्योधनवचस्तदा
सर्वतो रथवंशेन गाङ्गेयं पर्यवारयन् १७
पुत्राश्च तव गाङ्गेयं परिवार्य ययुर्मुदा
कम्पयन्तो भुवं द्यां च क्षोभयन्तश्च पाण्डवान् १८
तै रथैश्च सुसंयुक्तैर्दन्तिभिश्च महारथाः
परिवार्य रणे भीष्मं दंशिताः समवस्थिताः १९
यथा देवासुरे युद्धे त्रिदशा वज्रधारिणम्
सर्वे ते स्म व्यतिष्ठन्त रक्षन्तस्तं महारथम् २०
ततो दुर्योधनो राजा पुनर्भ्रातरमब्रवीत्
सव्यं चक्रं युधामन्युरुत्तमौजाश्च दक्षिणम्
गोप्तारावर्जुनस्यैतावर्जुनोऽपि शिखण्डिनः २१
स रक्ष्यमाणः पार्थेन तथास्माभिर्विवर्जितः
यथा भीष्मं न नो हन्याद्दुःशासन तथा कुरु २२
भ्रातुस्तद्वचनं श्रुत्वा पुत्रो दुःशासनस्तव
भीष्मं प्रमुखतः कृत्वा प्रययौ सेनया सह २३
भीष्मं तु रथवंशेन दृष्ट्वा तमभिसंवृतम्
अर्जुनो रथिनां श्रेष्ठो धृष्टद्युम्नमुवाच ह २४
शिखण्डिनं नरव्याघ्र भीष्मस्य प्रमुखेऽनघ
स्थापयस्वाद्य पाञ्चाल्य तस्य गोप्ताहमप्युत २५
ततः शान्तनवो भीष्मो निर्ययौ सेनया सह
व्यूहं चाव्यूहत महत्सर्वतोभद्रमाहवे २६
कृपश्च कृतवर्मा च शैब्यश्चैव महारथः

शकुनिः सैन्धवश्चैव काम्बोजश्च सुदक्षिणः २७
भीष्मेण सहिताः सर्वे पुत्रैश्च तव भारत
अग्रतः सर्वसैन्यानां व्यूहस्य प्रमुखे स्थिताः २८
द्रोणो भूरिश्रवाः शल्यो भगदत्तश्च मारिष
दक्षिणं पक्षमाश्रित्य स्थिता व्यूहस्य दंशिताः २९
अश्वत्थामा सोमदत्त आवन्त्यौ च महारथौ
महत्या सेनया युक्ता वामं पक्षमपालयन् ३०
दुर्योधनो महाराज त्रिगर्तैः सर्वतो वृतः
व्यूहमध्ये स्थितो राजन्पाण्डवान्प्रति भारत ३१
अलम्बुसो रथश्रेष्ठः श्रुतायुश्च महारथः
पृष्ठतः सर्वसैन्यानां स्थितौ व्यूहस्य दंशितौ ३२
एवमेते तदा व्यूहं कृत्वा भारत तावकाः
संनद्धाः समदृश्यन्त प्रतपन्त इवाग्नयः ३३
तथा युधिष्ठिरो राजा भीमसेनश्च पाण्डवः
नकुलः सहदेवश्च माद्रीपुत्रावुभावपि
अग्रतः सर्वसैन्यानां स्थिता व्यूहस्य दंशिताः ३४
धृष्टद्युम्नो विराटश्च सात्यकिश्च महारथः
स्थिताः सैन्येन महता परानीकविनाशनाः ३५
शिखण्डी विजयश्चैव राक्षसश्च घटोत्कचः
चेकितानो महाबाहुः कुन्तिभोजश्च वीर्यवान्
स्थिता रणे महाराज महत्या सेनया वृताः ३६
अभिमन्युर्महेष्वासो द्रुपदश्च महारथः
केकया भ्रातरः पञ्च स्थिता युद्धाय दंशिताः ३७
एवं तेऽपि महाव्यूहं प्रतिव्यूह्य सुदुर्जयम्
पाण्डवाः समरे शूराः स्थिता युद्धाय मारिष ३८
तावकास्तु रणे यत्ताः सहसेना नराधिपाः
अभ्युद्ययू रणे पार्थान्भीष्मं कृत्वाग्रतो नृप ३९
तथैव पाण्डवा राजन्भीमसेनपुरोगमाः
भीष्मं युद्धपरिप्रेप्सुं संग्रामे विजिगीषवः ४०
क्ष्वेडाः किलिकिलाशब्दान्क्रकचान्गोविषाणिकाः

भेरीमृदङ्गपणवान्नादयन्तश्च पुष्करान्
पाण्डवा अभ्यधावन्त नदन्तो भैरवान्रवान् ४१
भेरीमृदङ्गशङ्खानां दुन्दुभीनां च निस्वनैः
उत्क्रुष्टसिंहनादैश्च वल्गितैश्च पृथग्विधैः ४२
वयं प्रतिनदन्तस्तानभ्यगच्छाम सत्वराः
सहसैवाभिसंक्रुद्धास्तदासीत्तुमुलं महत् ४३
ततोऽन्योन्यं प्रधावन्तः सम्प्रहारं प्रचक्रिरे
ततः शब्देन महता प्रचकम्पे वसुन्धरा ४४
पक्षिणश्च महाघोरं व्याहरन्तो विबभ्रमुः
सप्रभश्चोदितः सूर्यो निष्प्रभः समपद्यत ४५
ववुश्च तुमुला वाताः शंसन्तः सुमहद्भयम्
घोराश्च घोरनिर्ह्रादाः शिवास्तत्र ववाशिरे
वेदयन्त्यो महाराज महद्वैशसमागतम् ४६
दिशः प्रज्वलिता राजन्पांसुवर्षं पपात च
रुधिरेण समुन्मिश्रमस्थिवर्षं तथैव च ४७
रुदतां वाहनानां च नेत्रेभ्यः प्रापतज्जलम्
सुस्रुवुश्च शकृन्मूत्रं प्रध्यायन्तो विशां पते ४८
अन्तर्हिता महानादाः श्रूयन्ते भरतर्षभ
रक्षसां पुरुषादानां नदतां भैरवान्रवान् ४९
सम्पतन्तः स्म दृश्यन्ते गोमायुबकवायसाः
श्वानश्च विविधैर्नादैर्भषन्तस्तत्र तस्थिरे ५०
ज्वलिताश्च महोल्का वै समाहत्य दिवाकरम्
निपेतुः सहसा भूमौ वेदयाना महद्भयम् ५१
महान्त्यनीकानि महासमुच्छ्रये समागमे पाण्डवधार्तराष्ट्रयोः
प्रकाशिरे शङ्खमृदङ्गनिस्वनैः प्रकम्पितानीव वनानि वायुना ५२
नरेन्द्रनागाश्वसमाकुलानामभ्यायतीनामशिवे मुहूर्ते
बभूव घोषस्तुमुलश्चमूनां वातोद्धुतानामिव सागराणाम् ५३
इति श्रीमहाभारते भीष्मपर्वणि पञ्चनवतितमोऽध्यायः ९५

षराणवति तमोऽध्यायः

सञ्जय उवाच
अभिमन्यू रथोदारः पिशङ्गैस्तुरगोत्तमैः
अभिदुद्राव तेजस्वी दुर्योधनबलं महत्
विकिरञ्शरवर्षाणि वारिधारा इवाम्बुदः १
न शेकुः समरे क्रुद्धं सौभद्रमरिसूदनम्
शस्त्रौघिणं गाहमानं सेनासागरमक्षयम्
निवारयितुमप्याजौ त्वदीयाः कुरुपुंगवाः २
तेन मुक्ता रणे राजञ्शराः शत्रुनिबर्हणाः
क्षत्रियाननयञ्शूरान्प्रेतराजनिवेशनम् ३
यमदराडोपमान्घोराञ्ज्वलनाशीविषोपमान्
सौभद्रः समरे क्रुद्धः प्रेषयामास सायकान् ४
रथिनं च रथात्तूर्णं हयपृष्ठाच्च सादिनम्
गजारोहांश्च सगजान्पातयामास फाल्गुनिः ५
तस्य तत्कुर्वतः कर्म महत्संख्येऽद्भुतं नृपाः
पूजयांचक्रिरे हृष्टाः प्रशशंसुश्च फाल्गुनिम् ६
तान्यनीकानि सौभद्रो द्रावयन्बह्वशोभत
तूलराशिमिवाधूय मारुतः सर्वतोदिशम् ७
तेन विद्राव्यमाणानि तव सैन्यानि भारत
त्रातारं नाध्यगच्छन्त पङ्के मग्ना इव द्विपाः ८
विद्राव्य सर्वसैन्यानि तावकानि नरोत्तमः
अभिमन्युः स्थितो राजन्विधूमोऽग्निरिव ज्वलन् ९
न चैनं तावकाः सर्वे विषेहुररिघातिनम्
प्रदीप्तं पावकं यद्वत्पतंगाः कालचोदिताः १०
प्रहरन्सर्वशत्रुभ्यः पाराडवानां महारथः
अदृश्यत महेष्वासः सवज्र इव वज्रभृत् ११
हेमपृष्ठं धनुश्चास्य ददृशे चरतो दिशः
तोयदेषु यथा राजन्भ्राजमानाः शतह्रदाः १२
शराश्च निशिताः पीता निश्चरन्ति स्म संयुगे
वनात्फुल्लद्रुमाद्राजन्भ्रमराणामिव व्रजाः १३

तथैव चरतस्तस्य सौभद्रस्य महात्मनः
रथेन मेघघोषेण ददृशुर्नान्तरं जनाः १४
मोहयित्वा कृपं द्रोणं द्रौणिं च स बृहद्बलम्
सैन्धवं च महेष्वासं व्यचरल्लघु सुष्ठु च १५
मण्डलीकृतमेवास्य धनुः पश्याम मारिष
सूर्यमण्डलसंकाशं तपतस्तव वाहिनीम् १६
तं दृष्ट्वा क्षत्रियाः शूराः प्रतपन्तं शरार्चिभिः
द्विफल्गुनमिमं लोकं मेनिरे तस्य कर्मभिः १७
तेनार्दिता महाराज भारती सा महाचमूः
बभ्राम तत्र तत्रैव योषिन्मदवशादिव १८
द्रावयित्वा च तत्सैन्यं कम्पयित्वा महारथान्
नन्दयामास सुहृदो मयं जित्वेव वासवः १९
तेन विद्राव्यमाणानि तव सैन्यानि संयुगे
चक्रुरार्तस्वरं घोरं पर्जन्यनिनदोपमम् २०
तं श्रुत्वा निनदं घोरं तव सैन्यस्य मारिष
मारुतोद्धूतवेगस्य समुद्रस्येव पर्वणि
दुर्योधनस्तदा राजा आर्श्यशृङ्गिमभाषत २१
एष कार्ष्णिर्महेष्वासो द्वितीय इव फल्गुनः
चमूं द्रावयते क्रोधाद्वृत्रो देवचमूमिव २२
तस्य नान्यं प्रपश्यामि संयुगे भेषजं महत्
ऋते त्वां राक्षसश्रेष्ठ सर्वविद्यासु पारगम् २३
स गत्वा त्वरितं वीरं जहि सौभद्रमाहवे
वयं पार्थान्हनिष्यामो भीष्मद्रोणपुरःसराः २४
स एवमुक्तो बलवान्राक्षसेन्द्रः प्रतापवान्
प्रययौ समरे तूर्णं तव पुत्रस्य शासनात्
नर्दमानो महानादं प्रावृषीव बलाहकः २५
तस्य शब्देन महता पाण्डवानां महद्बलम्
प्राचलत्सर्वतो राजन्पूर्यमाण इवार्णवः २६
बहवश्च नरा राजंस्तस्य नादेन भीषिताः
प्रियान्प्राणान्परित्यज्य निपेतुर्धरणीतले २७

कार्ष्णिश्चापि मुदा युक्तः प्रगृहीतशरासनः
नृत्यन्निव रथोपस्थे तद्रक्षः समुपाद्रवत् २८
ततः स राक्षसः क्रुद्धः संप्राप्यैवार्जुनिं रणे
नातिदूरे स्थितस्तस्य द्रावयामास वै चमूम् २९
सा वध्यमाना समरे पाण्डवानां महाचमूः
प्रत्युद्ययौ रणे रक्षो देवसेना यथा बलिम् ३०
विमर्दः सुमहानासीत्तस्य सैन्यस्य मारिष
राक्षसा घोररूपेण वध्यमानस्य संयुगे ३१
ततः शरसहस्रैस्तां पाण्डवानां महाचमूम्
व्यद्रावयद्रणे रक्षो दर्शयद्वै पराक्रमम् ३२
सा वध्यमाना च तथा पाण्डवानामनीकिनी
राक्षसा घोररूपेण प्रदुद्राव रणे भयात् ३३
तां प्रमृद्य ततः सेनां पद्मिनीं वारणो यथा
ततोऽभिदुद्राव रणे द्रौपदेयान्महाबलान् ३४
ते तु क्रुद्धा महेष्वासा द्रौपदेयाः प्रहारिणः
राक्षसं दुद्रुवुः सर्वे ग्रहाः पञ्च यथा रविम् ३५
वीर्यवद्भिस्ततस्तैस्तु पीडितो राक्षसोत्तमः
यथा युगक्षये घोरे चन्द्रमाः पञ्चभिर्ग्रहैः ३६
प्रतिविन्ध्यस्ततो रक्षो बिभेद निशितैः शरैः
सर्वपारशवैस्तूर्णमकुण्ठाग्रैर्महाबलः ३७
स तैर्भिन्नतनुत्राणः शुशुभे राक्षसोत्तमः
मरीचिभिरिवार्कस्य संस्यूतो जलदो महान् ३८
विषक्तैः स शरैश्चापि तपनीयपरिच्छदैः
आर्श्यशृङ्गिर्बभौ राजन्दीप्तशृङ्ग इवाचलः ३९
ततस्ते भ्रातरः पञ्च राक्षसेन्द्रं महाहवे
विव्यधुर्निशितैर्बाणैस्तपनीयविभूषितैः ४०
स निर्भिन्नः शरैर्घोरैर्भुजगैः कोपितैरिव
अलम्बुसो भृशं राजन्नागेन्द्र इव चुक्रुधे ४१
सोऽतिविद्धो महाराज मुहूर्तमथ मारिष
प्रविवेश तमो दीर्घं पीडितस्तैर्महारथैः ४२

प्रतिलभ्य ततः संज्ञां क्रोधेन द्विगुणीकृतः
चिच्छेद सायकैस्तेषां ध्वजांश्चैव धनूंषि च ४३
एकैकं च त्रिभिर्बाणैराजघान स्मयन्निव
अलम्बुसो रथोपस्थे नृत्यन्निव महारथः ४४
त्वरमाणश्च संक्रुद्धो हयांस्तेषां महात्मनाम्
जघान राक्षसः क्रुद्धः सारथींश्च महाबलः ४५
बिभेद च सुसंहृष्टः पुनश्चैनान्सुसंशितैः
शरैर्बहुविधाकारैः शतशोऽथ सहस्रशः ४६
विरथांश्च महेष्वासान्कृत्वा तत्र स राक्षसः
अभिदुद्राव वेगेन हन्तुकामो निशाचरः ४७
तानर्दितान्रणे तेन राक्षसेन दुरात्मना
दृष्ट्वार्जुनसुतः संख्ये राक्षसं समुपाद्रवत् ४८
तयोः समभवद्युद्धं वृत्रवासवयोरिव
ददृशुस्तावकाः सर्वे पाण्डवाश्च महारथाः ४९
तौ समेतौ महायुद्धे क्रोधदीप्तौ परस्परम्
महाबलौ महाराज क्रोधसंरक्तलोचनौ
परस्परमवेक्षेतां कालानलसमौ युधि ५०
तयोः समागमो घोरो बभूव कटुकोदयः
यथा देवासुरे युद्धे शक्रशम्बरयोरिव ५१
इति श्रीमहाभारते भीष्मपर्वणि षण्णवतितमोऽध्यायः ९६

## सप्तनवतितमोऽध्यायः

धृतराष्ट्र उवाच
आर्जुनिं समरे शूरं विनिघ्नन्तं महारथम्
अलम्बुसः कथं युद्धे प्रत्ययुध्यत सञ्जय १
आर्श्यशृङ्गिं कथं चापि सौभद्रः परवीरहा
तन्ममाचक्ष्व तत्त्वेन यथा वृत्तं स्म संयुगे २
धनंजयश्च किं चक्रे मम सैन्येषु संजय
भीमो वा बलिनां श्रेष्ठो राक्षसो वा घटोत्कचः ३
नकुलः सहदेवो वा सात्यकिर्वा महारथः

एतदाचद्व मे सर्वं कुशलो ह्यसि संजय ४
सञ्जय उवाच
हन्त तेऽह प्रवद्यामि संग्रामं लोमहर्षणम्
यथाभूद्राद्मसेन्द्रस्य सौभद्रस्य च मारिष ५
अर्जुनश्च यथा संख्ये भीमसेनश्च पाण्डवः
नकुलः सहदेवश्च रणे चक्रुः पराक्रमम् ६
तथैव तावकाः सर्वे भीष्मद्रोणपुरोगमाः
अद्भुतानि विचित्राणि चक्रुः कर्माण्यभीतवत् ७
अलम्बुसस्तु समरे अभिमन्युं महारथम्
विनद्य सुमहानादं तर्जयित्वा मुहुर्मुहुः
अभिदुद्राव वेगेन तिष्ठ तिष्ठेति चाब्रवीत् ८
सौभद्रोऽपि रणे राजन्सिंहवद्विनदन्मुहुः
आर्श्यशृङ्गिं महेष्वासं पितुरत्यन्तवैरिणम् ९
ततः समेयतुः संख्ये त्वरितौ नरराद्मसौ
रथाभ्यां रथिनां श्रेष्ठौ यथा वै देवदानवौ
मायावी राद्मसश्रेष्ठो दिव्यास्त्रज्ञश्च फाल्गुनिः १०
ततः कार्ष्णिर्महाराज निशितैः सायकैस्त्रिभिः
आर्श्यशृङ्गिं रणे विद्ध्वा पुनर्विव्याध पञ्चभिः ११
अलम्बुसोऽपि संक्रुद्धः कार्ष्णिं नवभिराशुगैः
हृदि विव्याध वेगेन तोत्त्रैरिव महाद्विपम् १२
ततः शरसहस्त्रेण द्मिप्रकारी निशाचरः
अर्जुनस्य सुतं संख्ये पीडयामास भारत १३
अभिमन्युस्ततः क्रुद्धो नवतिं नतपर्वणाम्
चिद्मेप निशितान्बाणान्राद्मसस्य महोरसि १४
ते तस्य विविशुस्तूर्णं कायं निर्भिद्य मर्मणि
स तैर्विभिन्नसर्वाङ्गः शुशुभे राद्मसोत्तमः
पुष्पितैः किंशुकै राजन्संस्तीर्ण इव पर्वतः १५
स धारयञ्शरान्हेमपुङ्खानपि महाबलः
विबभौ राद्मसश्रेष्ठः सज्वाल इव पर्वतः १६
ततः क्रुद्धो महाराज आर्श्यशृङ्गिर्महाबलः

महेन्द्रप्रतिमं कार्ष्णिं छादयामास पत्रिभिः १७
तेन ते विशिखा मुक्ता यमदण्डोपमाः शिताः
अभिमन्युं विनिर्भिद्य प्राविशन्धरणीतलम् १८
तथैवार्जुनिनिर्मुक्ताः शराः काञ्चनभूषणाः
अलम्बुसं विनिर्भिद्य प्राविशन्त धरातलम् १९
सौभद्रस्तु रणे रक्षः शरैः संनतपर्वभिः
चक्रे विमुखमासाद्य मयं शक्र इवाहवे २०
विमुखं च ततो रक्षो वध्यमानं रणेऽरिणा
प्रादुश्चक्रे महामायां तामसीं परतापनः २१
ततस्ते तमसा सर्वे हृता ह्यासन्महीतले
नाभिमन्युमपश्यन्त नैव स्वान्न परान्रणे २२
अभिमन्युश्च तद्दृष्ट्वा घोररूपं महत्तमः
प्रादुश्चक्रेऽस्त्रमत्युग्रं भास्करं कुरुनन्दनः २३
ततः प्रकाशमभवज्जगत्सर्वं महीपते
तां चापि जघ्निवान्मायां राक्षसस्य दुरात्मनः २४
संक्रुद्धश्च महावीर्यो राक्षसेन्द्रं नरोत्तमः
छादयामास समरे शरैः संनतपर्वभिः २५
बह्वीस्तथान्या मायाश्च प्रयुक्तास्तेन रक्षसा
सर्वास्त्रविदमेयात्मा वारयामास फाल्गुनिः २६
हतमायं ततो रक्षो वध्यमानं च सायकैः
रथं तत्रैव संत्यज्य प्राद्रवन्महतो भयात् २७
तस्मिन्विनिर्जिते तूर्णं कूटयोधिनि राक्षसे
आर्जुनिः समरे सैन्यं तावकं संममर्द ह
मदान्धो वन्यनागेन्द्रः सपद्मां पद्मिनीमिव २८
ततः शांतनवो भीष्मः सैन्यं दृष्ट्वाभिविद्रुतम्
महता रथवंशेन सौभद्रं पर्यवारयत् २९
कोष्ठकीकृत्य तं वीरं धार्तराष्ट्रा महारथाः
एकं सुबहवो युद्धे ततक्षुः सायकैर्दृढम् ३०
स तेषां रथिनां वीरः पितुस्तुल्यपराक्रमः
सदृशो वासुदेवस्य विक्रमेण बलेन च ३१

उभयोः सदृशं कर्म स पितुर्मातुलस्य च
रणे बहुविधं चक्रे सर्वशस्त्रभृतां वरः ३२
ततो धनंजयो राजन्विनिघ्नंस्तव सैनिकान्
आससाद रणे भीष्मं पुत्रप्रेप्सुरमर्षणः ३३
तथैव समरे राजन्पिता देवव्रतस्तव
आससाद रणे पार्थं स्वर्भानुरिव भास्करम् ३४
ततः सरथनागाश्वाः पुत्रास्तव विशां पते
परिवव्रू रणे भीष्मं जुगुपुश्च समन्ततः ३५
तथैव पाण्डवा राजन्परिवार्य धनंजयम्
रणाय महते युक्ता दंशिता भरतर्षभ ३६
शारद्वतस्ततो राजन्भीष्मस्य प्रमुखे स्थितम्
अर्जुनं पञ्चविंशत्या सायकानां समाचिनोत् ३७
प्रत्युद्गम्याथ विव्याध सात्यकिस्तं शितैः शरैः
पाण्डवप्रियकामार्थं शार्दूल इव कुञ्जरम् ३८
गौतमोऽपि त्वरायुक्तो माधवं नवभिः शरैः
हृदि विव्याध संक्रुद्धः कङ्कपत्रपरिच्छदैः ३९
शैनेयोऽपि ततः क्रुद्धो भृशं विद्धो महारथः
गौतमान्तकरं घोरं समादत्त शिलीमुखम् ४०
तमापतन्तं वेगेन शक्राशनिसमद्युतिम्
द्विधा चिच्छेद संक्रुद्धो द्रौणिः परमकोपनः ४१
समुत्सृज्याथ शैनेयो गौतमं रथिनां वरम्
अभ्यद्रवद्रणे द्रौणिं राहुः खे शशिनं यथा ४२
तस्य द्रोणसुतश्चापं द्विधा चिच्छेद भारत
अथैनं छिन्नधन्वानं ताडयामास सायकैः ४३
सोऽन्यत्कार्मुकमादाय शत्रुघ्नं भारसाधनम्
द्रौणिं षष्ट्या महाराज बाह्वोरुरसि चार्पयत् ४४
स विद्धो व्यथितश्चैव मुहूर्तं कश्मलायुतः
निषसाद रथोपस्थे ध्वजयष्टिमुपाश्रितः ४५
प्रतिलभ्य ततः संज्ञां द्रोणपुत्रः प्रतापवान्
वार्ष्णेयं समरे क्रुद्धो नाराचेन समर्दयत् ४६

शैनेयं स तु निर्भिद्य प्राविशद्धरणीतलम्
वसन्तकाले बलवान्बिलं सर्पशिशुर्यथा ४७
ततोऽपरेण भल्लेन माधवस्य ध्वजोत्तमम्
चिच्छेद समरे द्रौणिः सिंहनादं ननाद च ४८
पुनश्चैनं शरैर्घोरैश्छादयामास भारत
निदाघान्ते महाराज यथा मेघो दिवाकरम् ४९
सात्यकिश्च महाराज शरजालं निहत्य तत्
द्रौणिमभ्यपतत्तूर्णं शरजालैरनेकधा ५०
तापयामास च द्रौणिं शैनेयः परवीरहा
विमुक्तो मेघजालेन यथैव तपनस्तथा ५१
शराणां च सहस्रेण पुनरेनं समुद्यतम्
सात्यकिश्छादयामास ननाद च महाबलः ५२
दृष्ट्वा पुत्रं तथा ग्रस्तं राहुणेव निशाकरम्
अभ्यद्रवत शैनेयं भारद्वाजः प्रतापवान् ५३
विव्याध च पृषत्केन सुतीक्ष्णेन महामृधे
परीप्सन्स्वसुतं राजन्वार्ष्णेयेनाभितापितम् ५४
सात्यकिस्तु रणे जित्वा गुरुपुत्रं महारथम्
द्रोणं विव्याध विंशत्या सर्वपारशवैः शरैः ५५
तदन्तरममेयात्मा कौन्तेयः श्वेतवाहनः
अभ्यद्रवद्रणे क्रुद्धो द्रोणं प्रति महारथः ५६
ततो द्रोणश्च पार्थश्च समेयातां महामृधे
यथा बुधश्च शुक्रश्च महाराज नभस्तले ५७
इति श्रीमहाभारते भीष्मपर्वणि सप्तनवतितमोऽध्यायः ९७

## अष्टनवतितमोऽध्यायः

धृतराष्ट्र उवाच
कथं द्रोणो महेष्वासः पाण्डवश्च धनंजयः
समीयतू रणे शूरौ तन्ममाचक्ष्व संजय १
प्रियो हि पाण्डवो नित्यं भारद्वाजस्य धीमतः
आचार्यश्च रणे नित्यं प्रियः पार्थस्य संजय २

तावुभौ रथिनौ संख्ये दृप्तौ सिंहाविवोत्कटौ
कथं समीयतुर्युद्धे भारद्वाजधनञ्जयौ ३
सञ्जय उवाच
न द्रोणः समरे पार्थं जानीते प्रियमात्मनः
क्षत्रधर्मं पुरस्कृत्य पार्थो वा गुरुमाहवे ४
न क्षत्रिया रणे राजन्वर्जयन्ति परस्परम्
निर्मर्यादं हि युध्यन्ते पितृभिर्भ्रातृभिः सह ५
रणे भारत पार्थेन द्रोणो विद्धस्त्रिभिः शरैः
नाचिन्तयत तान्बाणान्पार्थचापच्युतान्युधि ६
शरवृष्ट्या पुनः पार्थश्छादयामास तं रणे
प्रजज्वाल च रोषेण गहनेऽग्निरिवोत्थितः ७
ततोऽर्जुनं रणे द्रोणः शरैः संनतपर्वभिः
वारयामास राजेन्द्र नचिरादेव भारत ८
ततो दुर्योधनो राजा सुशर्माणमचोदयत्
द्रोणस्य समरे राजन्पार्ष्णिग्रहणकारणात् ९
त्रिगर्तराडपि क्रुद्धो भृशमायम्य कार्मुकम्
छादयामास समरे पार्थं बाणैरयोमुखैः १०
ताभ्या मुक्ताः शरा राजन्नन्तरिक्षे विरेजिरे
हंसा इव महाराज शरत्काले नभस्तले ११
ते शराः प्राप्य कौन्तेयं समस्ता विविशुः प्रभो
फलभारनतं यद्वत्स्वादुवृक्षं विहंगमाः १२
अर्जुनस्तु रणे नादं विनद्य रथिनां वरः
त्रिगर्तराजं समरे सपुत्रं विव्यधे शरैः १३
ते वध्यमानाः पार्थेन कालेनेव युगक्षये
पार्थमेवाभ्यवर्तन्त मरणे कृतनिश्चयाः
मुमुचुः शरवृष्टिं च पाण्डवस्य रथं प्रति १४
शरवृष्टिं ततस्तां तु शरवर्षेण पाण्डवः
प्रतिजग्राह राजेन्द्र तोयवृष्टिमिवाचलः १५
तत्राद्भुतमपश्याम बीभत्सोर्हस्तलाघवम्
विमुक्तां बहुभिः शूरैः शस्त्रवृष्टिं दुरासदाम् १६

यदेको वारयामास मारुतोऽभ्रगणानिव
कर्मणा तेन पार्थस्य तुतुषुर्देवदानवाः १७
अथ क्रुद्धो रणे पार्थस्त्रिगर्तान्प्रति भारत
मुमोचास्त्रं महाराज वायव्यं पृतनामुखे १८
प्रादुरासीत्ततो वायुः क्षोभयाणो नभस्तलम्
पातयन्वै तरुगणान्विनिघ्नंश्चैव सैनिकान् १९
ततो द्रोणोऽभिवीक्ष्यैव वायव्यास्त्रं सुदारुणम्
शैलमन्यन्महाराज घोरमस्त्रं मुमोच ह २०
द्रोणेन युधि निर्मुक्ते तस्मिन्नस्त्रे महामृधे
प्रशशाम ततो वायुः प्रसन्नाश्चाभवन्दिशः २१
ततः पाण्डुसुतो वीरस्त्रिगर्तस्य रथव्रजान्
निरुत्साहान्रणे चक्रे विमुखान्विपराक्रमान् २२
ततो दुर्योधनो राजा कृपश्च रथिनां वरः
अश्वत्थामा ततः शल्यः काम्बोजश्च सुदक्षिणः २३
विन्दानुविन्दावावन्त्यौ बाह्लिकश्च सबाह्लिकः
महता रथवंशेन पार्थस्यावारयन्दिशः २४
तथैव भगदत्तश्च श्रुतायुश्च महाबलः
गजानीकेन भीमस्य ताववारयतां दिशः २५
भूरिश्रवाः शलश्चैव सौबलश्च विशां पते
शरौघैर्विविधैस्तूर्णं माद्रीपुत्राववारयन् २६
भीष्मस्तु सहितः सर्वैर्धार्तराष्ट्रस्य सैनिकैः
युधिष्ठिरं समासाद्य सर्वतः पर्यवारयत् २७
आपतन्तं गजानीकं दृष्ट्वा पार्थो वृकोदरः
लेलिहन्सृक्किणी वीरो मृगराडिव कानने २८
ततस्तु रथिनां श्रेष्ठो गदां गृह्य महाहवे
अवप्लुत्य रथात्तूर्णं तव सैन्यमभीषयत् २९
तमुद्वीक्ष्य गदाहस्तं ततस्ते गजसादिनः
परिवव्रू रणे यत्ता भीमसेनं समन्ततः ३०
गजमध्यमनुप्राप्तः पाण्डवश्च व्यराजत
मेघजालस्य महतो यथा मध्यगतो रविः ३१

व्यधमत्स गजानीकं गदया पाण्डवर्षभः
महाभ्रजालमतुलं मातरिश्वेव संततम् ३२
ते वध्यमाना बलिना भीमसेनेन दन्तिनः
आर्तनादं रणे चक्रुर्गर्जन्तो जलदा इव ३३
बहुधा दारितश्चैव विषाणैस्तत्र दन्तिभिः
फुल्लाशोकनिभः पार्थः शुशुभे रणमूर्धनि ३४
विषाणे दन्तिनं गृह्य निर्विषाणमथाकरोत्
विषाणेन च तेनैव कुम्भेऽभ्याहत्य दन्तिनम्
पातयामास समरे दण्डहस्त इवान्तकः ३५
शोणिताक्तां गदां बिभ्रन्मेदोमज्जाकृतच्छविः
कृताङ्गदः शोणितेन रुद्रवत्प्रत्यदृश्यत ३६
एवं ते वध्यमानास्तु हतशेषा महागजाः
प्राद्रवन्त दिशो राजन्विमृद्नन्तः स्वकं बलम् ३७
द्रवद्भिस्तैर्महानागैः समन्ताद्भरतर्षभ
दुर्योधनबलं सर्वं पुनरासीत्पराङ्मुखम् ३८
इति श्रीमहाभारते भीष्मपर्वणि अष्टनवतितमोऽध्यायः ९८

## एकोनशततमोऽध्यायः

सञ्जय उवाच
मध्याह्ने तु महाराज संग्रामः समपद्यत
लोकक्षयकरो रौद्रो भीष्मस्य सह सोमकैः १
गाङ्गेयो रथिनां श्रेष्ठः पाण्डवानामनीकिनीम्
व्यधमन्निशितैर्बाणैः शतशोऽथ सहस्रशः २
संममर्द च तत्सैन्यं पिता देवव्रतस्तव
धान्यानामिव लूनानां प्रकरं गोगणा इव ३
धृष्टद्युम्नः शिखण्डी च विराटो द्रुपदस्तथा
भीष्ममासाद्य समरे शरैर्जघ्नुर्महारथम् ४
धृष्टद्युम्नं ततो विद्ध्वा विराटं च त्रिभिः शरैः
द्रुपदस्य च नाराचं प्रेषयामास भारत ५
तेन विद्धा महेष्वासा भीष्मेणामित्रकर्शिना

चुक्रुधुः समरे राजन्पादस्पृष्टा इवोरगाः ६
शिखण्डी तं च विव्याध भरतानां पितामहम्
स्त्रीमयं मनसा ध्यात्वा नास्मै प्राहरदच्युतः ७
धृष्टद्युम्नस्तु समरे क्रोधादग्निरिव ज्वलन्
पितामहं त्रिभिर्बाणैर्बाह्वोरुरसि चार्पयत् ८
द्रुपदः पञ्चविंशत्या विराटो दशभिः शरैः
शिखण्डी पञ्चविंशत्या भीष्मं विव्याध सायकैः ९
सोऽतिविद्धो महाराज भीष्मः संख्ये महात्मभिः
वसन्ते पुष्पशबलो रक्ताशोक इवाबभौ १०
तान्प्रत्यविध्यद्गाङ्गेयस्त्रिभिस्त्रिभिरजिह्मगैः
द्रुपदस्य च भल्लेन धनुश्चिच्छेद मारिष ११
सोऽन्यत्कार्मुकमादाय भीष्मं विव्याध पञ्चभिः
सारथिं च त्रिभिर्बाणैः सुशितै रणमूर्धनि १२
ततो भीमो महाराज द्रौपद्याः पञ्च चात्मजाः
केकया भ्रातरः पञ्च सात्यकिश्चैव सात्वतः १३
अभ्यद्रवन्त गाङ्गेयं युधिष्ठिरहितेप्सया
रिरक्षिषन्तः पाञ्चाल्यं धृष्टद्युम्नमुखान्रणे १४
तथैव तावकाः सर्वे भीष्मरक्षार्थमुद्यताः
प्रत्युद्ययुः पाण्डुसेनां सहसैन्या नराधिप १५
तत्रासीत्सुमहद्युद्धं तव तेषां च संकुलम्
नराश्वरथनागानां यमराष्ट्रविवर्धनम् १६
रथी रथिनमासाद्य प्राहिणोद्यमसादनम्
तथेतरान्समासाद्य नरनागाश्वसादिनः १७
अनयन्परलोकाय शरैः संनतपर्वभिः
अस्त्रैश्च विविधैर्घोरैस्तत्र तत्र विशां पते १८
रथाश्च रथिभिर्हीना हतसारथयस्तथा
विप्रद्रुताश्वाः समरे दिशो जग्मुः समन्ततः १९
मर्दमाना नरान्राजन्हयांश्च सुबहून्रणे
वातायमाना दृश्यन्ते गन्धर्वनगरोपमाः २०
रथिनश्च रथैर्हीना वर्मिणस्तेजसा युताः

कुराडलोष्णीषिणः सर्वे निष्काङ्गदविभूषिताः २१
देवपुत्रसमा रूपे शौर्ये शक्रसमा युधि
ऋद्ध्या वैश्रवणं चाति नयेन च बृहस्पतिम् २२
सर्वलोकेश्वराः शूरास्तत्र तत्र विशां पते
विप्रद्रुता व्यदृश्यन्त प्राकृता इव मानवाः २३
दन्तिनश्च नरश्रेष्ठ विहीना वरसादिभिः
मृद्नन्तः स्वान्यनीकानि संपेतुः सर्वशब्दगाः २४
वर्मभिश्चामरैश्छत्रैः पताकाभिश्च मारिष
कद्याभिरथ तोत्त्रैश्च घराटाभिस्तोमरैस्तथा २५
विशीर्णैर्विप्रधावन्तो दृश्यन्ते स्म दिशो दश
नगमेघप्रतीकाशैर्जलदोदयनिस्वनैः २६
तथैव दन्तिभिर्हीनान्गजारोहान्विशां पते
प्रधावन्तोऽन्वपश्याम तव तेषां च संकुले २७
नानादेशसमुत्थांश्च तुरगान्हेमभूषितान्
वातायमानानद्राद्मं शतशोऽथ सहस्रशः २८
अश्वारोहान्हतैरश्वैर्गृहीतासीन्समन्ततः
द्रवमाणानपश्याम द्राव्यमाणांश्च संयुगे २९
गजो गजं समासाद्य द्रवमाणं महारणे
ययौ विमृद्नंस्तरसा पदातीन्वाजिनस्तथा ३०
तथैव च रथान्राजन्संममर्द रणे गजः
रथश्चैव समासाद्य पदातिं तुरगं तथा ३१
व्यमृद्नात्समरे राजंस्तुरगांश्च नरान्रणे
एवं ते बहुधा राजन्प्रमृद्नन्तः परस्परम् ३२
तस्मिन्रौद्रे तथा युद्धे वर्तमाने महाभये
प्रावर्तत नदी घोरा शोणितान्त्रतरङ्गिणी ३३
अस्थिसञ्चयसंघाटा केशशैवलशाद्वला
रथह्रदा शरावर्ता हयमीना दुरासदा ३४
शीर्षोपलसमाकीर्णा हस्तिग्राहसमाकुला
कवचोष्णीषफेनाढ्या धनुर्द्वीपासिकच्छपा ३५
पताकाध्वजवृद्माढ्या मर्त्यकूलापहारिणी

क्रव्यादसंघसंकीर्णा यमराष्ट्रविवर्धिनी ३६
तां नदीं क्षत्रियाः शूरा हयनागरथप्लवैः
प्रतेरुर्बहवो राजन्भयं त्यक्त्वा महाहवे ३७
अपोवाह रणे भीरून्कश्मलेनाभिसंवृतान्
यथा वैतरणी प्रेतान्प्रेतराजपुरं प्रति ३८
प्राक्रोशन्क्षत्रियास्तत्र दृष्ट्वा तद्वैशसं महत्
दुर्योधनापराधेन क्षयं गच्छन्ति कौरवाः ३९
गुणवत्सु कथं द्वेषं धार्तराष्ट्रो जनेश्वरः
कृतवान्पाण्डुपुत्रेषु पापात्मा लोभमोहितः ४०
एवं बहुविधा वाचः श्रूयन्ते स्मात्र भारत
पाण्डवस्तवसंयुक्ताः पुत्राणां ते सुदारुणाः ४१
ता निशम्य तदा वाचः सर्वयोधैरुदाहृताः
आगस्कृत्सर्वलोकस्य पुत्रो दुर्योधनस्तव ४२
भीष्मं द्रोणं कृपं चैव शल्यं चोवाच भारत
युध्यध्वमनहंकाराः किं चिरं कुरुथेति च ४३
ततः प्रववृते युद्धं कुरूणां पाण्डवैः सह
अक्षद्यूतकृतं राजन्सुघोरं वैशसं तदा ४४
यत्पुरा न निगृह्णीषे वार्यमाणो महात्मभिः
वैचित्रवीर्य तस्येदं फलं पश्य तथाविधम् ४५
न हि पाण्डुसुता राजन्ससैन्याः सपदानुगाः
रक्षन्ति समरे प्राणान्कौरवा वा विशां पते ४६
एतस्मात्कारणाद्घोरो वर्तते स्म जनक्षयः
दैवाद्वा पुरुषव्याघ्र तव चापनयान्नृप ४७
इति श्रीमहाभारते भीष्मपर्वणि एकोनशततमोऽध्यायः ९९

## शततमोऽध्यायः

सञ्जय उवाच
अर्जुनस्तु नरव्याघ्र सुशर्मप्रमुखान्नृपान्
अनयत्प्रेतराजस्य भवनं सायकैः शितैः १
सुशर्माऽपि ततो बाणैः पार्थं विव्याध संयुगे

वासुदेवं च सप्तत्या पार्थं च नवभिः पुनः २
तान्निवार्य शरौघेण शक्रसूनुर्महारथः
सुशर्मणो रणे योधान्प्राहिणोद्यमसादनम् ३
ते वध्यमानाः पार्थेन कालेनेव युगक्षये
व्यद्रवन्त रणे राजन्भये जाते महारथाः ४
उत्सृज्य तुरगान्केचिद्रथान्केचिच्च मारिष
गजानन्ये समुत्सृज्य प्राद्रवन्त दिशो दश ५
अपरे तुद्यमानास्तु वाजिनागरथा रणात्
त्वरया परया युक्ताः प्राद्रवन्त विशां पते ६
पादाताश्चापि शस्त्राणि समुत्सृज्य महारणे
निरपेक्षा व्यधावन्त तेन तेन स्म भारत ७
वार्यमाणाः स्म बहुशस्त्रैगर्तेन सुशर्मणा
तथान्यैः पार्थिवश्रेष्ठैर्न व्यतिष्ठन्त संयुगे ८
तद्बलं प्रद्रुतं दृष्ट्वा पुत्रो दुर्योधनस्तव
पुरस्कृत्य रणे भीष्मं सर्वसैन्यपुरस्कृतम् ९
सर्वोद्योगेन महता धनंजयमुपाद्रवत्
त्रिगर्ताधिपतेरर्थे जीवितस्य विशां पते १०
स एकः समरे तस्थौ किरन्बहुविधाञ्शरान्
भ्रातृभिः सहितः सर्वैः शेषा विप्रद्रुता नराः ११
तथैव पाण्डवा राजन्सर्वोद्योगेन दंशिताः
प्रययुः फल्गुनार्थाय यत्र भीष्मो व्यवस्थितः १२
जानन्तोऽपि रणे शौर्यं घोरं गाण्डीवधन्वनः
हाहाकारकृतोत्साहा भीष्मं जग्मुः समन्ततः १३
ततस्तालध्वजः शूरः पाण्डवानामनीकिनीम्
छादयामास समरे शरैः संनतपर्वभिः १४
एकीभूतास्ततः सर्वे कुरवः पाण्डवैः सह
अयुध्यन्त महाराज मध्यं प्राप्ते दिवाकरे १५
सात्यकिः कृतवर्माणं विद्ध्वा पञ्चभिरायसैः
अतिष्ठदाहवे शूरः किरन्बाणान्सहस्रशः १६
तथैव द्रुपदो राजा द्रोणं विद्ध्वा शितैः शरैः

पुनर्विव्याध सप्तत्या सारथिं चास्य सप्तभिः १७
भीमसेनस्तु राजानं बाह्लिकं प्रपितामहम्
विद्ध्वानदन्महानादं शार्दूल इव कानने १८
आर्जुनिश्चित्रसेनेन विद्धो बहुभिराशुगैः
चित्रसेनं त्रिभिर्बाणैर्विव्याध हृदये भृशम् १९
समागतौ तौ तु रणे महामात्रौ व्यरोचताम्
यथा दिवि महाघोरौ राजन्बुधशनैश्चरौ २०
तस्याश्वांश्चतुरो हत्वा सूतं च नवभिः शरैः
ननाद बलवन्नादं सौभद्रः परवीरहा २१
हताश्वात्तु रथात्तूर्णमवप्लुत्य महारथः
आरुरोह रथं तूर्णं दुर्मुखस्य विशां पते २२
द्रोणश्च द्रुपदं विद्ध्वा शरैः संनतपर्वभिः
सारथिं चास्य विव्याध त्वरमाणः पराक्रमी २३
पीड्यमानस्ततो राजा द्रुपदो वाहिनीमुखे
अपायाज्जवनैरश्वैः पूर्ववैरमनुस्मरन् २४
भीमसेनस्तु राजानं मुहूर्तादिव बाह्लिकम्
व्यश्वसूतरथं चक्रे सर्वसैन्यस्य पश्यतः २५
ससंभ्रमो महाराज संशयं परमं गतः
अवप्लुत्य ततो वाहाद्बाह्लीकः पुरुषोत्तमः
आरुरोह रथं तूर्णं लक्ष्मणस्य महारथः २६
सात्यकिः कृतवर्माणं वारयित्वा महारथः
शरैर्बहुविधै राजन्नाससाद पितामहम् २७
स विद्ध्वा भारतं षष्ट्या निशितैर्लोमवाहिभिः
ननर्तेव रथोपस्थे विधुन्वानो महद्धनुः २८
तस्यायसीं महाशक्तिं चिक्षेपाथ पितामहः
हेमचित्रां महावेगां नागकन्योपमां शुभाम् २९
तामापतन्तीं सहसा मृत्युकल्पां सुतेजनाम्
ध्वंसयामास वार्ष्णेयो लाघवेन महायशाः ३०
अनासाद्य तु वार्ष्णेयं शक्तिः परमदारुणा
न्यपतद्धरणीपृष्ठे महोल्केव गतप्रभा ३१

वार्ष्णेयस्तु ततो राजन्स्वां शक्तिं घोरदर्शनाम्
वेगवद्गृह्य चिक्षेप पितामहरथं प्रति ३२
वार्ष्णेयभुजवेगेन प्रणुन्ना सा महाहवे
अभिदुद्राव वेगेन कालरात्रिर्यथा नरम् ३३
तमापतन्तीं सहसा द्विधा चिच्छेद भारत
क्षुरप्राभ्यां सुतीक्ष्णाभ्यां सान्वकीर्यत भूतले ३४
छित्वा तु शक्तिं गाङ्गेयः सात्यकिं नवभिः शरैः
आजघानोरसि क्रुद्धः प्रहसञ्शत्रुकर्शनः ३५
ततः सरथनागाश्वाः पाण्डवाः पाण्डुपूर्वज
परिवव्रू रणे भीष्मं माधवत्राणकारणात् ३६
ततः प्रववृते युद्धं तुमुलं लोमहर्षणम्
पाण्डवानां कुरूणां च समरे विजयैषिणाम् ३७
इति श्रीमहाभारते भीष्मपर्वणि शततमोऽध्यायः १००

## एकाधिकशततमोऽध्यायः

सञ्जय उवाच
दृष्ट्वा भीष्मं रणे क्रुद्धं पाण्डवैरभिसंवृतम्
यथा मेघैर्महाराज तपान्ते दिवि भास्करम् १
दुर्योधनो महाराज दुःशासनमभाषत
एष शूरो महेष्वासो भीष्मः शत्रुनिषूदनः २
छादितः पाण्डवैः शूरैः समन्ताद्भरतर्षभ
तस्य कार्यं त्वया वीर रक्षणं सुमहात्मनः ३
रक्ष्यमाणो हि समरे भीष्मोऽस्माकं पितामहः
निहन्यात्समरे यत्तान्पाञ्चालान्पाण्डवैः सह ४
तत्र कार्यमहं मन्ये भीष्मस्यैवाभिरक्षणम्
गोप्ता ह्येष महेष्वासो भीष्मोऽस्माकं पितामहः ५
स भवान्सर्वसैन्येन परिवार्य पितामहम्
समरे दुष्करं कर्म कुर्वाणं परिरक्षतु ६
स एवमुक्तस्तु समरे पुत्रो दुःशासनस्तव
परिवार्य स्थितो भीष्मं सैन्येन महता वृतः ७

ततः शतसहस्रेण हयानां सुबलात्मजः
विमलप्रासहस्तानामृष्टितोमरधारिणाम् ८
दर्पितानां सुवेगानां बलस्थानां पताकिनाम्
शिक्षितैर्युद्धकुशलैरुपेतानां नरोत्तमैः ९
नकुलं सहदेवं च धर्मराजं च पाण्डवम्
न्यवारयन्नरश्रेष्ठं परिवार्य समन्ततः १०
ततो दुर्योधनो राजा शूराणां हयसादिनाम्
अयुतं प्रेषयामास पाण्डवानां निवारणे ११
तैः प्रविष्टैर्महावेगैर्गरुत्मद्भिरिवाहवे
खुराहता धरा राजंश्चकम्पे च ननाद च १२
खुरशब्दश्च सुमहान्वाजिनां शुश्रुवे तदा
महावंशवनस्येव दह्यमानस्य पर्वते १३
उत्पतद्भिश्च तैस्तत्र समुद्धूतं महद्रजः
दिवाकरपथं प्राप्य छादयामास भास्करम् १४
वेगवद्भिर्हयैस्तैस्तु क्षोभितं पाण्डवं बलम्
निपतद्भिर्महावेगैर्हंसैरिव महत्सरः
हेषतां चैव शब्देन न प्राज्ञायत किञ्चन १५
ततो युधिष्ठिरो राजा माद्रीपुत्रौ च पाण्डवौ
प्रत्यघ्नंस्तरसा वेगं समरे हयसादिनाम् १६
उद्वृत्तस्य महाराज प्रावृट्कालेन पूर्यतः
पौर्णमास्यामम्बुवेगं यथा वेला महोदधेः १७
ततस्ते रथिनो राजञ्शरैः संनतपर्वभिः
न्यकृन्तन्नुत्तमाङ्गानि कायेभ्यो हयसादिनाम् १८
ते निपेतुर्महाराज निहता दृढधन्विभिः
नागैरिव महानागा यथा स्युर्गिरिगह्वरे १९
तेऽपि प्रासैः सुनिशितैः शरैः संनतपर्वभिः
न्यकृन्तन्नुत्तमाङ्गानि विचरन्तो दिशो दश २०
अत्यासन्ना हयारोहा ऋष्टिभिर्भरतर्षभ
अच्छिनन्नुत्तमाङ्गानि फलानीव महाद्रुमात् २१
ससादिनो हया राजंस्तत्र तत्र निषूदिताः

पतिताः पात्यमानाश्च शतशोऽथ सहस्रशः २२
वध्यमाना हयास्ते तु प्राद्रवन्त भयार्दिताः
यथा सिंहान्समासाद्य मृगाः प्राणपरायणाः २३
पाण्डवाश्च महाराज जित्वा शत्रून्महाहवे
दध्मुः शङ्खांश्च भेरीश्च ताडयामासुराहवे २४
ततो दुर्योधनो दृष्ट्वा दीनं सैन्यमवस्थितम्
अब्रवीद्भरतश्रेष्ठ मद्रराजमिदं वचः २५
एष पाण्डुसुतो ज्येष्ठो जित्वा मातुल मामकान्
पश्यतां नो महाबाहो सेनां द्रावयते बली २६
तं वारय महाबाहो वेलेव मकरालयम्
त्वं हि संश्रूयसेऽत्यर्थमसह्यबलविक्रमः २७
पुत्रस्य तव तद्वाक्यं श्रुत्वा शल्यः प्रतापवान्
प्रययौ रथवंशेन यत्र राजा युधिष्ठिरः २८
तदापतद्वै सहसा शल्यस्य सुमहद्बलम्
महौघवेगं समरे वारयामास पाण्डवः २९
मद्रराजं च समरे धर्मराजो महारथः
दशभिः सायकैस्तूर्णमाजघान स्तनान्तरे
नकुलः सहदेवश्च त्रिभिस्त्रिभिरजिह्मगैः ३०
मद्रराजोऽपि तान्सर्वानाजघान त्रिभिस्त्रिभिः
युधिष्ठिरं पुनः षष्ट्या विव्याध निशितैः शरैः
माद्रीपुत्रौ च संरब्धौ द्वाभ्यां द्वाभ्यामताडयत् ३१
ततो भीमो महाबाहुर्दृष्ट्वा राजानमाहवे
मद्रराजवशं प्राप्तं मृत्योरास्यगतं यथा
अभ्यद्रवत संग्रामे युधिष्ठिरममित्रजित् ३२
ततो युद्धं महाघोरं प्रावर्तत सुदारुणम्
अपरां दिशमास्थाय द्योतमाने दिवाकरे ३३
इति श्रीमहाभारते भीष्मपर्वणि एकाधिकशततमोऽध्यायः १०१

द्व्यधिकशततमोऽध्यायः

सञ्जय उवाच

ततः पिता तव क्रुद्धो निशितैः सायकोत्तमैः
आजघान रणे पार्थान्सहसेनान्समन्ततः १
भीमं द्वादशभिर्विद्ध्वा सात्यकिं नवभिः शरैः
नकुलं च त्रिभिर्बाणैः सहदेवं च सप्तभिः २
युधिष्ठिरं द्वादशभिर्बाह्वोरुरसि चार्पयत्
धृष्टद्युम्नं ततो विद्ध्वा विननाद महाबलः ३
तं द्वादशार्धैर्नकुलो माधवश्च त्रिभिः शरैः
धृष्टद्युम्नश्च सप्तत्या भीमसेनश्च पञ्चभिः
युधिष्ठिरो द्वादशभिः प्रत्यविध्यत्पितामहम् ४
द्रोणस्तु सात्यकिं विद्ध्वा भीमसेनमविध्यत
एकैकं पञ्चभिर्बाणैर्यमदण्डोपमैः शितैः ५
तौ च तं प्रत्यविध्येतां त्रिभिस्त्रिभिरजिह्मगैः
तोत्त्रैरिव महानागं द्रोणं ब्राह्मणपुङ्गवम् ६
सौवीराः कितवाः प्राच्याः प्रतीच्योदीच्यमालवाः
अभीषाहाः शूरसेनाः शिबयोऽथ वसातयः
संग्रामे नाजहुर्भीष्मं वध्यमानाः शितैः शरैः ७
तथैवान्ये वध्यमानाः पाण्डवेयैर्महात्मभिः
पाण्डवानभ्यवर्तन्त विविधायुधपाणयः
तथैव पाण्डवा राजन्परिवव्रुः पितामहम् ८
स समन्तात्परिवृतो रथौघैरपराजितः
गहनेऽग्निरिवोत्सृष्टः प्रजज्वाल दहन्परान् ९
रथाग्न्यगारश्चापार्चिरसिशक्तिगदेन्धनः
शरस्फुलिङ्गो भीष्माग्निर्ददाह क्षत्रियर्षभान् १०
सुवर्णपुङ्खैरिषुभिर्गार्ध्रपक्षैः सुतेजनैः
कर्णिनालीकनाराचैश्छादयामास तद्बलम् ११
अपातयद्ध्वजांश्चैव रथिनश्च शितैः शरैः
मुण्डतालवनानीव चकार स रथव्रजान् १२
निर्मनुष्यान्रथान्राजन्गजानश्वांश्च संयुगे
अकरोत्स महाबाहुः सर्वशस्त्रभृतां वरः १३
तस्य ज्यातलनिर्घोषं विस्फूर्जितमिवाशनेः

निशम्य सर्वभूतानि समकम्पन्त भारत १४
अमोघा ह्यपतन्बाणाः पितुस्ते भरतर्षभ
नासज्जन्त तनुत्रेषु भीष्मचापच्युताः शराः १५
हतवीरान्रथान्राजन्संयुक्ताञ्जवनैर्हयैः
अपश्याम महाराज ह्रियमाणान्रणाजिरे १६
चेदिकाशिकरूषाणां सहस्राणि चतुर्दश
महारथाः समाख्याताः कुलपुत्रास्तनुत्यजः
अपरावर्तिनः सर्वे सुवर्णविकृतध्वजाः १७
संग्रामे भीष्ममासाद्य व्यादितास्यमिवान्तकम्
निमग्नाः परलोकाय सवाजिरथकुञ्जराः १८
भग्नाक्षोपस्करान्कांश्चिद्भग्नचक्रांश्च सर्वशः
अपश्याम रथान्राजन्शतशोऽथ सहस्रशः १९
सवरूथै रथैर्भग्नै रथिभिश्च निपातितैः
शरैः सुकवचैश्छिन्नैः पट्टिशैश्च विशां पते २०
गदाभिर्मुसलैश्चैव निस्त्रिंशैश्च शिलीमुखैः
अनुकर्षैरुपासङ्गैश्चक्रैर्भग्नैश्च मारिष २१
बाहुभिः कार्मुकैः खड्गैः शिरोभिश्च सकुण्डलैः
तलत्रैरङ्गुलित्रैश्च ध्वजैश्च विनिपातितैः
चापैश्च बहुधा छिन्नैः समास्तीर्यत मेदिनी २२
हतारोहा गजा राजन्हयाश्च हतसादिनः
परिपेतुर्द्रुतं तत्र शतशोऽथ सहस्रशः २३
यतमानाश्च ते वीरा द्रवमाणान्महारथान्
नाशक्नुवन्वारयितुं भीष्मबाणप्रपीडितान् २४
महेन्द्रसमवीर्येण वध्यमाना महाचमूः
अभज्यत महाराज न च द्वौ सह धावतः २५
आविद्धरथनागाश्वं पतितध्वजकूबरम्
अनीकं पाण्डुपुत्राणां हाहाभूतमचेतनम् २६
जघानात्र पितापुत्रं पुत्रश्च पितरं तथा
प्रियं सखायं चाक्रन्दे सखा दैवबलात्कृतः २७
विमुच्य कवचानन्ये पाण्डुपुत्रस्य सैनिकाः

प्रकीर्य केशान्धावन्तः प्रत्यदृश्यन्त भारत २८
तद्गोकुलमिवोद्भ्रान्तमुद्भ्रान्तरथकुञ्जरम्
ददृशे पाण्डुपुत्रस्य सैन्यमार्तस्वरं तदा २९
प्रभज्यमानं सैन्यं तु दृष्ट्वा यादवनन्दनः
उवाच पार्थं बीभत्सुं निगृह्य रथमुत्तमम् ३०
अयं स कालः संप्राप्तः पार्थ यः काङ्क्षितस्तव
प्रहरास्मै नरव्याघ्र न चेन्मोहात्प्रमुह्यसे ३१
यत्पुरा कथितं वीर त्वया राज्ञां समागमे
विराटनगरे पार्थ संजयस्य समीपतः ३२
भीष्मद्रोणमुखान्सर्वान्धार्तराष्ट्रस्य सैनिकान्
सानुबन्धान्हनिष्यामि ये मां योत्स्यन्ति संयुगे ३३
इति तत्कुरु कौन्तेय सत्यं वाक्यमरिंदम
क्षत्रधर्ममनुस्मृत्य युध्यस्व भरतर्षभ ३४
इत्युक्तो वासुदेवेन तिर्यग्दृष्टिरधोमुखः
अकाम इव बीभत्सुरिदं वचनमब्रवीत् ३५
अवध्यानां वधं कृत्वा राज्यं वा नरकोत्तरम्
दुःखानि वनवासे वा किं नु मे सुकृतं भवेत् ३६
चोदयाश्वान्यतो भीष्मः करिष्ये वचनं तव
पातयिष्यामि दुधर्षं वृद्धं कुरुपितामहम् ३७
ततोऽश्वान्रजतप्रख्यांश्चोदयामास माधवः
यतो भीष्मस्ततो राजन्दुष्प्रेक्ष्यो रश्मिवानिव ३८
ततस्तत्पुनरावृत्तं युधिष्ठिरबलं महत्
दृष्ट्वा पार्थं महाबाहुं भीष्मायोद्यन्तमाहवे ३९
ततो भीष्मः कुरुश्रेष्ठः सिंहवद्विनदन्मुहुः
धनञ्जयरथं शीघ्रं शरवर्षैरवाकिरत् ४०
क्षणेन स रथस्तस्य सहयः सहसारथिः
शरवर्षेण महता न प्राज्ञायत किंचन ४१
वासुदेवस्त्वसंभ्रान्तो धैर्यमास्थाय सात्वतः
चोदयामास तानश्वान्वितुन्नान्भीष्मसायकैः ४२
ततः पार्थो धनुर्गृह्य दिव्यं जलदनिस्वनम्

पातयामास भीष्मस्य धनुश्छित्त्वा शितैः शरैः ४३
स च्छिन्नधन्वा कौरव्यः पुनरन्यन्महद्धनुः
निमेषान्तरमात्रेण सज्यं चक्रे पिता तव ४४
विचकर्ष ततो दोर्भ्यां धनुर्जलदनिस्वनम्
अथास्य तदपि क्रुद्धश्चिच्छेद धनुरर्जुनः ४५
तस्य तत्पूजयामास लाघवं शंतनोः सुतः
साधु पार्थ महाबाहो साधु कुन्तीसुतेति च ४६
समाभाष्यैनमपरं प्रगृह्य रुचिरं धनुः
मुमोच समरे भीष्मः शरान्पार्थरथं प्रति ४७
अदर्शयद्वासुदेवो हययाने परं बलम्
मोघान्कुर्वञ्शरांस्तस्य मण्डलानि विदर्शयन् ४८
शुशुभाते नरव्याघ्रौ भीष्मपार्थौ शरक्षतौ
गोवृषाविव संरब्धौ विषाणोल्लिखिताङ्कितौ ४९
वासुदेवस्तु संप्रेक्ष्य पार्थस्य मृदुयुद्धताम्
भीष्मं च शरवर्षाणि सृजन्तमनिशं युधि ५०
प्रतपन्तमिवादित्यं मध्यमासाद्य सेनयोः
वरान्वरान्विनिघ्नन्तं पाण्डुपुत्रस्य सैनिकान् ५१
युगान्तमिव कुर्वाणं भीष्मं यौधिष्ठिरे बले
नामृष्यत महाबाहुर्माधवः परवीरहा ५२
उत्सृज्य रजतप्रख्यान्हयान्पार्थस्य मारिष
क्रुद्धो नाम महायोगी प्रचस्कन्द महारथात्
अभिदुद्राव भीष्मं स भुजप्रहरणो बली ५३
प्रतोदपाणिस्तेजस्वी सिंहवद्विनदन्मुहुः
दारयन्निव पद्भ्यां स जगतीं जगतीश्वरः ५४
क्रोधताम्रेक्षणः कृष्णो जिघांसुरमितद्युतिः
ग्रसन्निव च चेतांसि तावकानां महाहवे ५५
दृष्ट्वा माधवमाक्रन्दे भीष्मायोद्यन्तमाहवे
हतो भीष्मो हतो भीष्म इति तत्र स्म सैनिकाः
क्रोशन्तः प्राद्रवन्सर्वे वासुदेवभयान्नराः ५६
पीतकौशेयसंवीतो मणिश्यामो जनार्दनः

शुशुभे विद्रवन्भीष्मं विद्युन्माली यथाम्बुदः ५७
स सिंह इव मातङ्गं यूथर्षभ इवर्षभम्
अभिदुद्राव तेजस्वी विनदन्यादवर्षभः ५८
तमापतन्तं संप्रेक्ष्य पुण्डरीकाक्षमाहवे
असम्भ्रमं रणे भीष्मो विचकर्ष महद्धनुः
उवाच चैनं गोविन्दमसंभ्रान्तेन चेतसा ५९
एह्येहि पुण्डरीकाक्ष देवदेव नमोऽस्तु ते
मामद्य सात्वतश्रेष्ठ पातयस्व महाहवे ६०
त्वया हि देव संग्रामे हतस्यापि ममानघ
श्रेय एव परं कृष्ण लोकेऽमुष्मिन्निहैव च
संभावितोऽस्मि गोविन्द त्रैलोक्येनाद्य संयुगे ६१
अन्वगेव ततः पार्थस्तमनुद्रुत्य केशवम्
निजग्राह महाबाहुर्बाहुभ्यां परिगृह्य वै ६२
निगृह्यमाणः पार्थेन कृष्णो राजीवलोचनः
जगाम चैनमादाय वेगेन पुरुषोत्तमः ६३
पार्थस्तु विष्टभ्य बलाच्चरणौ परवीरहा
निजग्राह हृषीकेशं कथंचिद्दशमे पदे ६४
तत एनमुवाचार्तः क्रोधपर्याकुलेक्षणम्
निःश्वसन्तं यथा नागमर्जुनः परवीरहा ६५
निवर्तस्व महाबाहो नानृतं कर्तुमर्हसि
यत्त्वया कथितं पूर्वं न योत्स्यामीति केशव ६६
मिथ्यावादीति लोकास्त्वां कथयिष्यति माधव
ममैष भारः सर्वो हि हनिष्यामि यतव्रतम् ६७
शपे माधव सख्येन सत्येन सुकृतेन च
अन्तं यथा गमिष्यामि शत्रूणां शत्रुकर्शन ६८
अद्यैव पश्य दुर्धर्षं पात्यमानं महाव्रतम्
तारापतिमिवापूर्णमन्तकाले यदृच्छया ६९
माधवस्तु वचः श्रुत्वा फल्गुनस्य महात्मनः
नकिञ्चिदुक्त्वा सक्रोध आरुरोह रथं पुनः ७०
तौ रथस्थौ नरव्याघ्रौ भीष्मः शांतनवः पुनः

ववर्ष शरवर्षेण मेघो वृष्ट्या यथाचलौ ७१
प्राणांश्चादत्त योधानां पिता देवव्रतस्तव
गभस्तिभिरिवादित्यस्तेजांसि शिशिरात्यये ७२
यथा कुरूणां सैन्यानि बभञ्ज युधि पाण्डवः
तथा पाण्डवसैन्यानि बभञ्ज युधि ते पिता ७३
हतविद्रुतसैन्यास्तु निरुत्साहा विचेतसः
निरीक्षितुं न शेकुस्ते भीष्ममप्रतिमं रणे
मध्यं गतमिवादित्यं प्रतपन्तं स्वतेजसा ७४
ते वध्यमाना भीष्मेण कालेनेव युगक्षये
वीक्षांचक्रुर्महाराज पाण्डवा भयपीडिताः ७५
त्रातारं नाध्यगच्छन्त गावः पङ्कगता इव
पिपीलिका इव क्षुण्णा दुर्बला बलिना रणे ७६
महारथं भारत दुष्प्रधर्षं शरौघिणं प्रतपन्तं नरेन्द्रान्
भीष्मं न शेकुः प्रतिवीक्षितुं ते शरार्चिषं सूर्यमिवातपन्तम् ७७
विमृद्नतस्तस्य तु पाण्डुसेनामस्तं जगामाथ सहस्त्ररश्मिः
ततो बलानां श्रमकर्शितानां मनोऽवहारं प्रति संबभूव ७८
इति श्रीमहाभारते भीष्मपर्वणि द्व्यधिकशततमोऽध्यायः १०२

## त्र्यधिक शततमोऽध्यायः

सञ्जय उवाच
युध्यतामेव तेषां तु भास्करेऽस्तमुपागते
संध्या समभवद्घोरा नापश्याम ततो रणम् १
ततो युधिष्ठिरो राजा संध्यां संदृश्य भारत
वध्यमानं बलं चापि भीष्मेणामित्रघातिना २
मुक्तशस्त्रं परावृत्तं पलायनपरायणम्
भीष्मं च युधि संरब्धमनुयान्तं महारथान् ३
सोमकांश्च जितान्दृष्ट्वा निरुत्साहान्महारथान्
चिन्तयित्वा चिरं ध्यात्वा अवहारमरोचयत् ४
ततोऽवहारं सैन्यानां चक्रे राजा युधिष्ठिरः
तथैव तव सैन्यानामवहारो ह्यभूत्तदा ५

ततोऽवहारं सैन्यानां कृत्वा तत्र महारथाः
न्यविशन्त कुरुश्रेष्ठ संग्रामे क्षतविक्षताः ६
भीष्मस्य समरे कर्म चिन्तयानास्तु पाण्डवाः
नालभन्त तदा शान्तिं भृशं भीष्मेण पीडिताः ७
भीष्मोऽपि समरे जित्वा पाण्डवान्सह सृञ्जयैः
पूज्यमानस्तव सुतैर्वन्द्यमानश्च भारत ८
न्यविशत्कुरुभिः सार्धं हृष्टरूपैः समन्ततः
ततो रात्रिः समभवत्सर्वभूतप्रमोहिनी ९
तस्मिन्रात्रिमुखे घोरे पाण्डवा वृष्णिभिः सह
सृञ्जयाश्च दुराधर्षा मन्त्राय समुपाविशन् १०
आत्मनिःश्रेयसं सर्वे प्राप्तकालं महाबलाः
मन्त्रयामासुरव्यग्रा मन्त्रनिश्चयकोविदाः ११
ततो युधिष्ठिरो राजा मन्त्रयित्वा चिरं नृप
वासुदेवं समुद्वीक्ष्य वाक्यमेतदुवाच ह १२
पश्य कृष्ण महात्मानं भीष्मं भीमपराक्रमम्
गजं नलवनानीव विमृद्नन्तं बलं मम १३
न चैवैनं महात्मानमुत्सहामो निरीक्षितुम्
लेलिह्यमानं सैन्येषु प्रवृद्धमिव पावकम् १४
यथा घोरो महानागस्तक्षको वै विषोल्बणः
तथा भीष्मो रणे कृष्ण तीक्ष्णशस्त्रः प्रतापवान् १५
गृहीतचापः समरे विमुञ्चंश्च शिताञ्शरान्
शक्यो जेतुं यमः क्रुद्धो वज्रपाणिश्च देवराट् १६
वरुणः पाशभृच्चापि सगदो वा धनेश्वरः
न तु भीष्मः सुसंक्रुद्धः शक्यो जेतुं महाहवे १७
सोऽहमेवं गते कृष्ण निमग्नः शोकसागरे
आत्मनो बुद्धिदौर्बल्याद्भीष्ममासाद्य संयुगे १८
वनं यास्यामि दुर्धर्ष श्रेयो मे तत्र वै गतम्
न युद्धं रोचये कृष्ण हन्ति भीष्मो हि नः सदा १९
यथा प्रज्वलितं वह्निं पतंगः समभिद्रवन्
एकतो मृत्युमभ्येति तथाहं भीष्ममीयिवान् २०

क्षयं नीतोऽस्मि वार्ष्णेय राज्यहेतोः पराक्रमी
भ्रातरश्चैव मे शूराः सायकैर्भृशपीडिताः २१
मत्कृते भ्रातृसौहार्दाद्राज्यात्प्रभ्रंशनं गताः
परिक्लिष्टा तथा कृष्णा मत्कृते मधुसूदन २२
जीवितं बहु मन्येऽह जीवितं ह्यद्य दुर्लभम्
जीवितस्याद्य शेषेण चरिष्ये धर्ममुत्तमम् २३
यदि तेऽहमनुग्राह्यो भ्रातृभिः सह केशव
स्वधर्मस्याविरोधेन तदुदाहर केशव २४
एतच्छ्रुत्वा वचस्तस्य कारुण्याद्बहुविस्तरम्
प्रत्युवाच ततः कृष्णः सान्त्वयानो युधिष्ठिरम् २५
धर्मपुत्र विषादं त्वं मा कृथाः सत्यसंगर
यस्य ते भ्रातरः शूरा दुर्जयाः शत्रुसूदनाः २६
अर्जुनो भीमसेनश्च वाय्वग्निसमतेजसौ
माद्रीपुत्रौ च विक्रान्तौ त्रिदशानामिवेश्वरौ २७
मां वा नियुङ्क्ष्व सौहार्दाद्योत्स्ये भीष्मेण पाण्डव
त्वत्प्रयुक्तो ह्यहं राजन्किं न कुर्यां महाहवे २८
हनिष्यामि रणे भीष्ममाहूय पुरुषर्षभम्
पश्यतां धार्तराष्ट्राणां यदि नेच्छति फल्गुनः २९
यदि भीष्मे हते राजञ्जयं पश्यसि पाण्डव
हन्तास्म्येकरथेनाद्य कुरुवृद्धं पितामहम् ३०
पश्य मे विक्रमं राजन्महेन्द्रस्येव संयुगे
विमुञ्चन्तं महास्त्राणि पातयिष्यामि तं रथात् ३१
यः शत्रुः पाण्डुपुत्राणां मच्छत्रुः स न संशयः
मदर्था भवदर्था ये ये मदीयास्तवैव ते ३२
तव भ्राता मम सखा संबन्धी शिष्य एव च
मांसान्युत्कृत्य वै दद्यामर्जुनार्थे महीपते ३३
एष चापि नरव्याघ्रो मत्कृते जीवितं त्यजेत्
एष नः समयस्तात तारयेम परस्परम्
स मां नियुङ्क्ष्व राजेन्द्र यावद्द्वीपो भवाम्यहम् ३४
प्रतिज्ञातमुपप्लव्ये यत्तत्पार्थेन पूर्वतः

घातयिष्यामि गाङ्गेयमित्युलूकस्य संनिधौ ३५
परिरक्ष्यं च मम तद्वचः पार्थस्य धीमतः
अनुज्ञातं तु पार्थेन मया कार्यं न संशयः ३६
अथ वा फल्गुनस्यैष भारः परिमितो रणे
निहनिष्यति संग्रामे भीष्मं परपुरञ्जयम् ३७
अशक्यमपि कुर्याद्धि रणे पार्थः समुद्यतः
त्रिदशान्वा समुद्युक्तान्सहितान्दैत्यदानवैः
निहन्यादर्जुनः संख्ये किमु भीष्मं नराधिप ३८
विपरीतो महावीर्यो गतसत्त्वोऽल्पजीवितः
भीष्मः शांतनवो नूनं कर्तव्यं नावबुध्यते ३९
युधिष्ठिर उवाच
एवमेतन्महाबाहो यथा वदसि माधव
सर्वे ह्येते न पर्याप्तास्तव वेगनिवारणे ४०
नियतं समवाप्स्यामि सर्वमेव यथेप्सितम्
यस्य मे पुरुषव्याघ्र भवान्नाथो महाबलः ४१
सेन्द्रानपि रणे देवाञ्जयेयं जयतां वर
त्वया नाथेन गोविन्द किमु भीष्मं महाहवे ४२
न तु त्वामनृतं कर्तुमुत्सहे स्वार्थगौरवात्
अयुध्यमानः साहाय्यं यथोक्तं कुरु माधव ४३
समयस्तु कृतः कश्चिद्भीष्मेण मम माधव
मन्त्रयिष्ये तवार्थाय न तु योत्स्ये कथंचन
दुर्योधनार्थे योत्स्यामि सत्यमेतदिति प्रभो ४४
स हि राज्यस्य मे दाता मन्त्रस्यैव च माधव
तस्माद्देवव्रतं भूयो वधोपायार्थमात्मनः
भवता सहिताः सर्वे पृच्छामो मधुसूदन ४५
तद्वयं सहिता गत्वा भीष्ममाशु नरोत्तमम्
रुचिते तव वार्ष्णेय मन्त्रं पृच्छाम कौरवम् ४६
स वक्ष्यति हितं वाक्यं तथ्यं चैव जनार्दन
यथा स वक्ष्यते कृष्ण तथा कर्तास्मि संयुगे ४७
स नो जयस्य दाता च मन्त्रस्य च धृतव्रतः

बालाः पित्रा विहीनाश्च तेन संवर्धिता वयम् ४८
तं चेत्पितामहं वृद्धं हन्तुमिच्छामि माधव
पितुः पितरमिष्टं वै धिगस्तु क्षत्रजीविकाम् ४९
सञ्जय उवाच
ततोऽब्रवीन्महाराज वार्ष्णेयः कुरुनन्दनम्
रोचते मे महाबाहो सततं तव भाषितम् ५०
देवव्रतः कृती भीष्मः प्रेक्षितेनापि निर्दहेत्
गम्यतां स वधोपायं प्रष्टुं सागरगासुतः
वक्तुमर्हति सत्यं स त्वया पृष्टो विशेषतः ५१
ते वयं तत्र गच्छामः प्रष्टुं कुरुपितामहम्
प्रणम्य शिरसा चैनं मन्त्रं पृच्छाम माधव
स नो दास्यति यं मन्त्रं तेन योत्स्यामहे परान् ५२
एवं संमन्त्र्य ते वीराः पाण्डवाः पाण्डुपूर्वज
जग्मुस्ते सहिताः सर्वे वासुदेवश्च वीर्यवान्
विमुक्तशस्त्रकवचा भीष्मस्य सदनं प्रति ५३
प्रविश्य च तदा भीष्मं शिरोभिः प्रतिपेदिरे
पूजयन्तो महाराज पाण्डवा भरतर्षभ
प्रणम्य शिरसा चैनं भीष्मं शरणमन्वयुः ५४
तानुवाच महाबाहुर्भीष्मः कुरुपितामहः
स्वागतं तव वार्ष्णेय स्वागतं ते धनंजय
स्वागतं धर्मपुत्राय भीमाय यमयोस्तथा ५५
किं कार्यं वः करोम्यद्य युष्मत्प्रीतिविवर्धनम्
सर्वात्मना च कर्तास्मि यद्यपि स्यात्सुदुष्करम् ५६
तथा ब्रुवाणं गाङ्गेयं प्रीतियुक्तं पुनः पुनः
उवाच वाक्यं दीनात्मा धर्मपुत्रो युधिष्ठिरः ५७
कथं जयेम धर्मज्ञ कथं राज्यं लभेमहि
प्रजानां संक्षयो न स्यात्कथं तन्मे वदाभिभो ५८
भवान्हि नो वधोपायं ब्रवीतु स्वयमात्मनः
भवन्तं समरे राजन्विषहेम कथं वयम् ५९
न हि ते सूक्ष्ममप्यस्ति रन्ध्रं कुरुपितामह

मण्डलेनैव धनुषा सदा दृश्योऽसि संयुगे ६०
नाददानं संदधानं विकर्षन्तं धनुर्न च
पश्यामस्त्वा महाबाहो रथे सूर्यमिव स्थितम् ६१
नराश्वरथनागानां हन्तारं परवीरहन्
क इवोत्सहते हन्तुं त्वां पुमान्भरतर्षभ ६२
वर्षता शरवर्षाणि महान्ति पुरुषोत्तम
क्षयं नीता हि पृतना भवता महती मम ६३
यथा युधि जयेयं त्वा यथा राज्यं भवेन्मम
भवेत्सैन्यस्य वा शान्तिस्तन्मे ब्रूहि पितामह ६४
ततोऽब्रवीच्छांतनवः पाण्डवान्पाण्डुपूर्वज
न कथंचन कौन्तेय मयि जीवति संयुगे
युष्मासु दृश्यते वृद्धिः सत्यमेतद्ब्रवीमि वः ६५
निर्जिते मयि युद्धे तु ध्रुवं जेष्यथ कौरवान्
क्षिप्रं मयि प्रहरत यदीच्छथ रणे जयम्
अनुजानामि वः पार्थाः प्रहरध्वं यथासुखम् ६६
एवं हि सुकृतं मन्ये भवतां विदितो ह्यहम्
हते मयि हतं सर्वं तस्मादेवं विधीयताम् ६७
युधिष्ठिर उवाच
ब्रूहि तस्मादुपायं नो यथा युद्धे जयेमहि
भवन्तं समरे क्रुद्धं दण्डपाणिमिवान्तकम् ६८
शक्यो वज्रधरो जेतुं वरुणोऽथ यमस्तथा
न भवान्समरे शक्यः सेन्द्रैरपि सुरासुरैः ६९
भीष्म उवाच
सत्यमेतन्महाबाहो यथा वदसि पाण्डव
नाहं शक्यो रणे जेतुं सेन्द्रैरपि सुरासुरैः ७०
आत्तशस्त्रो रणे यत्तो गृहीतवरकार्मुकः
न्यस्तशस्त्रं तु मां राजन्हन्युर्युधि महारथाः ७१
निक्षिप्तशस्त्रे पतिते विमुक्तकवचध्वजे
द्रवमाणे च भीते च तवास्मीति च वादिनि ७२
स्त्रियां स्त्रीनामधेये च विकले चैकपुत्रके

अप्रसूते च दुष्प्रेक्ष्ये न युद्धं रोचते मम ७३
इमं च शृणु मे पार्थ संकल्पं पूर्वचिन्तितम्
अमङ्गल्यध्वजं दृष्ट्वा न युध्येयं कथंचन ७४
य एष द्रौपदो राजंस्तव सैन्ये महारथः
शिखण्डी समराकाङ्क्षी शूरश्च समितिंजयः ७५
यथाभवच्च स्त्री पूर्वं पश्चात्पुंस्त्वमुपागतः
जानन्ति च भवन्तोऽपि सर्वमेतद्यथातथम् ७६
अर्जुनः समरे शूरः पुरस्कृत्य शिखण्डिनम्
मामेव विशिखैस्तूर्णमभिद्रवतु दंशितः ७७
अमङ्गल्यध्वजे तस्मिन्स्त्रीपूर्वे च विशेषतः
न प्रहर्तुमभीप्सामि गृहीतेषुं कथंचन ७८
तदन्तरं समासाद्य पाण्डवो मां धनंजयः
शरैर्घातयतु क्षिप्रं समन्ताद्भरतर्षभ ७९
न तं पश्यामि लोकेषु यो मां हन्यात्समुद्यतम्
ऋते कृष्णान्महाभागात्पाण्डवाद्वा धनंजयात् ८०
एष तस्मात्पुरोधाय कंचिदन्यं ममाग्रतः
मां पातयतु बीभत्सुरेवं ते विजयो भवेत् ८१
एतत्कुरुष्व कौन्तेय यथोक्तं वचनं मम
ततो जेष्यसि संग्रामे धार्तराष्ट्रान्समागतान् ८२
सञ्जय उवाच
तेऽनुज्ञातास्ततः पार्था जग्मुः स्वशिविरं प्रति
अभिवाद्य महात्मानं भीष्मं कुरुपितामहम् ८३
तथोक्तवति गाङ्गेये परलोकाय दीक्षिते
अर्जुनो दुःखसंतप्तः सव्रीडमिदमब्रवीत् ८४
गुरुणा कुलवृद्धेन कृतप्रज्ञेन धीमता
पितामहेन संग्रामे कथं योत्स्यामि माधव ८५
क्रीडता हि मया बाल्ये वासुदेव महामनाः
पांसुरूषितगात्रेण महात्मा परुषीकृतः ८६
यस्याहमधिरुह्याङ्कं बालः किल गदाग्रज
तातेत्यवोचं पितरं पितुः पाण्डोर्महात्मनः ८७

नाहं तातस्तव पितुस्तातोऽस्मि तव भारत
इति मामब्रवीद्बाल्ये यः स वध्यः कथं मया ८८
कामं वध्यतु मे सैन्यं नाहं योत्स्ये महात्मना
जयो वास्तु वधो वा मे कथं वा कृष्ण मन्यसे ८९
श्रीकृष्ण उवाच
प्रतिज्ञाय वधं जिष्णो पुरा भीष्मस्य संयुगे
क्षत्रधर्मे स्थितः पार्थ कथं नैनं हनिष्यसि ९०
पातयैनं रथात्पार्थ वज्राहतमिव द्रुमम्
नाहत्वा युधि गाङ्गेयं विजयस्ते भविष्यति ९१
दिष्टमेतत्पुरा देवैर्भविष्यत्यवशस्य ते
हन्ता भीष्मस्य पूर्वेन्द्र इति तन्न तदन्यथा ९२
न हि भीष्मं दुराधर्षं व्यात्ताननमिवान्तकम्
त्वदन्यः शक्नुयाद्धन्तुमपि वज्रधरः स्वयम् ९३
जहि भीष्मं महाबाहो शृणु चेदं वचो मम
यथोवाच पुरा शक्रं महाबुद्धिर्बृहस्पतिः ९४
ज्यायांसमपि चेच्छक्र गुणैरपि समन्वितम्
आततायिनमामन्त्र्य हन्याद्घातकमागतम् ९५
शाश्वतोऽय स्थितो धर्मः क्षत्रियाणां धनञ्जय
योद्धव्यं रक्षितव्यं च यष्टव्यं चानसूयुभिः ९६
अर्जुन उवाच
शिखण्डी निधनं कृष्ण भीष्मस्य भविता ध्रुवम्
दृष्ट्वैव हि सदा भीष्मः पाञ्चाल्यं विनिवर्तते ९७
ते वयं प्रमुखे तस्य स्थापयित्वा शिखण्डिनम्
गाङ्गेयं पातयिष्याम उपायेनेति मे मतिः ९८
अहमन्यान्महेष्वासान्वारयिष्यामि सायकैः
शिखण्ड्यपि युधां श्रेष्ठो भीष्ममेवाभियास्यतु ९९
श्रुतं ते कुरुमुख्यस्य नाहं हन्यां शिखण्डिनम्
कन्या ह्येषा पुरा जाता पुरुषः समपद्यत १००
सञ्जय उवाच
इत्येवं निश्चयं कृत्वा पाण्डवाः सहमाधवाः

शयनानि यथास्वानि भेजिरे पुरुषर्षभाः १०१
इति श्रीमहाभारते भीष्मपर्वणि त्र्यधिकशततमोऽध्यायः १०३

## चतुरधिकशततमोऽध्यायः

धृतराष्ट्र उवाच
कथं शिखण्डी गाङ्गेयमभ्यवर्तत संयुगे
पाण्डवाश्च तथा भीष्मं तन्ममाचक्ष्व संजय १
सञ्जय उवाच
ततः प्रभाते विमले सूर्यस्योदयनं प्रति
वाद्यमानासु भेरीषु मृदङ्गेष्वानकेषु च २
ध्मायत्सु दधिवर्णेषु जलजेषु समन्ततः
शिखण्डिनं पुरस्कृत्य निर्याताः पाण्डवा युधि ३
कृत्वा व्यूहं महाराज सर्वशत्रुनिबर्हणम्
शिखण्डी सर्वसैन्यानामग्र आसीद्विशां पते ४
चक्ररक्षौ ततस्तस्य भीमसेनधनञ्जयौ
पृष्ठतो द्रौपदेयाश्च सौभद्रश्चैव वीर्यवान् ५
सात्यकिश्चेकितानश्च तेषां गोप्ता महारथः
धृष्टद्युम्नस्ततः पश्चात्पाञ्चालैरभिरक्षितः ६
ततो युधिष्ठिरो राजा यमाभ्यां सहितः प्रभुः
प्रययौ सिंहनादेन नादयन्भरतर्षभ ७
विराटस्तु ततः पश्चात्स्वेन सैन्येन संवृतः
द्रुपदश्च महाराज ततः पश्चादुपाद्रवत् ८
केकया भ्रातरः पञ्च धृष्टकेतुश्च वीर्यवान्
जघनं पालयामास पाण्डुसैन्यस्य भारत ९
एवं व्यूह्य महासैन्यं पाण्डवास्तव वाहिनीम्
अभ्यद्रवन्त संग्रामे त्यक्त्वा जीवितमात्मनः १०
तथैव कुरवो राजन्भीष्मं कृत्वा महाबलम्
अग्रतः सर्वसैन्यानां प्रययुः पाण्डवान्प्रति ११
पुत्रैस्तव दुराधर्षै रक्षितः सुमहाबलैः
ततो द्रोणो महेष्वासः पुत्रश्चास्य महारथः १२

भगदत्तस्ततः पाश्चाद्गजानीकेन संवृतः
कृपश्च कृतवर्मा च भगदत्तमनुव्रतौ १३
काम्बोजराजो बलवांस्ततः पश्चात्सुदक्षिणः
मागधश्च जयत्सेनः सौबलश्च बृहद्बलः १४
तथेतरे महेष्वासाः सुशर्मप्रमुखा नृपाः
जघनं पालयामासुस्तव सैन्यस्य भारत १५
दिवसे दिवसे प्राप्ते भीष्मः शांतनवो युधि
आसुरानकरोद्व्यूहान्पैशाचानथ राक्षसान् १६
ततः प्रववृते युद्धं तव तेषां च भारत
अन्योन्यं निघ्नतां राजन्यमराष्ट्रविवर्धनम् १७
अर्जुनप्रमुखाः पार्थाः पुरस्कृत्य शिखण्डिनम्
भीष्मं युद्धेऽभ्यवर्तन्त किरन्तो विविधाञ्शरान् १८
तत्र भारत भीमेन पीडितास्तावकाः शरैः
रुधिरौघपरिक्लिन्नाः परलोकं ययुस्तदा १९
नकुलः सहदेवश्च सात्यकिश्च महारथः
तव सैन्यं समासाद्य पीडयामासुरोजसा २०
ते वध्यमानाः समरे तावका भरतर्षभ
नाशक्नुवन्वारयितुं पाण्डवानां महद्बलम् २१
ततस्तु तावकं सैन्यं वध्यमानं समन्ततः
संप्राद्रवद्दिशो राजन्काल्यमानं महारथैः २२
त्रातारं नाध्यगच्छन्त तावका भरतर्षभ
वध्यमानाः शितैर्बाणैः पाण्डवैः सहसृञ्जयैः २३
धृतराष्ट्र उवाच
पीड्यमानं बलं पार्थैर्दृष्ट्वा भीष्मः पराक्रमी
यदकार्षीद्रणे क्रुद्धस्तन्ममाचक्ष्व सञ्जय २४
कथं वा पाण्डवान्युद्धे प्रत्युद्यातः परंतपः
विनिघ्नन्सोमकान्वीरांस्तन्ममाचक्ष्व संजय २५
सञ्जय उवाच
आचक्षे ते महाराज यदकार्षीत्पितामहः
पीडिते तव पुत्रस्य सैन्ये पाण्डवसृञ्जयैः २६

प्रहृष्टमनसः शूराः पाण्डवाः पाण्डुपूर्वज
अभ्यवर्तन्त निघ्नन्तस्तव पुत्रस्य वाहिनीम् २७
तं विनाशं मनुष्येन्द्र नरवारणवाजिनाम्
नामृष्यत तदा भीष्मः सैन्यघातं रणे परैः २८
स पाण्डवान्महेष्वासः पाञ्चालांश्च स सृञ्जयान्
अभ्यद्रवत दुर्धर्षस्त्यक्त्वा जीवितमात्मनः २९
स पाण्डवानां प्रवरान्पञ्च राजन्महारथान्
आत्तशस्त्रान्रणे यत्तान्वारयामास सायकैः
नाराचैर्वत्सदन्तैश्च शितैरञ्जलिकैस्तथा ३०
निजघ्ने समरे क्रुद्धो हस्त्यश्वममितं बहु
रथिनोऽपातयद्राजन्रथेभ्यः पुरुषर्षभः ३१
सादिनश्चाश्वपृष्ठेभ्यः पदातींश्च समागतान्
गजारोहान्गजेभ्यश्च परेषां विदधद्भयम् ३२
तमेकं समरे भीष्मं त्वरमाणं महारथम्
पाण्डवाः समवर्तन्त वज्रपाणिमिवासुराः ३३
शक्राशनिसमस्पर्शान्विमुञ्चन्निशिताञ्शरान्
दिक्ष्वदृश्यत सर्वासु घोरं संधारयन्वपुः ३४
मण्डलीकृतमेवास्य नित्यं धनुरदृश्यत
संग्रामे युध्यमानस्य शक्रचापनिभं महत् ३५
तद्दृष्ट्वा समरे कर्म पुत्रा तव विशां पते
विस्मयं परमं प्राप्ताः पितामहमपूजयन् ३६
पार्था विमनसो भूत्वा प्रैक्षन्त पितरं तव
युध्यमानं रणे शूरं विप्रचित्तिमिवामराः
न चैनं वारयामासुर्व्यात्ताननमिवान्तकम् ३७
दशमेऽहनि संप्राप्ते रथानीकं शिखण्डिनः
अदहन्निशितैर्बाणैः कृष्णवर्त्मेव काननम् ३८
तं शिखण्डी त्रिभिर्बाणैरभ्यविध्यत्स्तनान्तरे
आशीविषमिव क्रुद्धं कालसृष्टमिवान्तकम् ३९
स तेनातिभृशं विद्धः प्रेक्ष्य भीष्मः शिखण्डिनम्
अनिच्छन्नपि संक्रुद्धः प्रहसन्निदमब्रवीत् ४०

काममभ्यस वा मा वा न त्वां योत्स्ये कथंचन
यैव हि त्वं कृता धात्रा सैव हि त्वं शिखण्डिनी ४१
तस्य तद्वचनं श्रुत्वा शिखण्डी क्रोधमूर्छितः
उवाच भीष्मं समरे सृक्किणी परिलेलिहन् ४२
जानामि त्वां महाबाहो क्षत्रियाणां क्षयङ्करम्
मया श्रुतं च ते युद्धं जामदग्न्येन वै सह ४३
दिव्यश्च ते प्रभावोऽय स मया बहुशः श्रुतः
जानन्नपि प्रभावं ते योत्स्येऽद्याहं त्वया सह ४४
पाण्डवानां प्रियं कुर्वन्नात्मनश्च नरोत्तम
अद्य त्वा योधयिष्यामि रणे पुरुषसत्तम ४५
ध्रुवं च त्वा हनिष्यामि शपे सत्येन तेऽग्रतः
एतच्छ्रुत्वा वचो मह्यं यत्क्षमं तत्समाचर ४६
काममभ्यस वा मा वा न मे जीवन्विमोक्ष्यसे
सुदृष्टः क्रियतां भीष्म लोकोऽय समितिंजय ४७
एवमुक्त्वा ततो भीष्मं पञ्चभिर्नतपर्वभिः
अविध्यत रणे राजन्प्रणुन्नं वाक्यसायकैः ४८
तस्य तद्वचनं श्रुत्वा सव्यसाची परंतपः
कालोऽयमिति संचिन्त्य शिखण्डिनमचोदयत् ४९
अहं त्वामनुयास्यास्मि परान्विद्रावयञ्शरैः
अभिद्रव सुसंरब्धो भीष्मं भीमपराक्रमम् ५०
न हि ते संयुगे पीडां शक्तः कर्तुं महाबलः
तस्मादद्य महाबाहो वीर भीष्ममभिद्रव ५१
अहत्वा समरे भीष्मं यदि यास्यसि मारिष
अवहास्योऽस्य लोकस्य भविष्यसि मया सह ५२
नावहास्या यथा वीर भवेम परमाहवे
तथा कुरु रणे यत्नं साधयस्व पितामहम् ५३
अहं ते रक्षणं युद्धे करिष्यामि परंतप
वारयन्रथिनः सर्वान्साधयस्व पितामहम् ५४
द्रोणं च द्रोणपुत्रं च कृपं चाथ सुयोधनम्
चित्रसेनं विकर्णं च सैन्धवं च जयद्रथम् ५५

विन्दानुविन्दावावन्त्यौ काम्बोजं च सुदक्षिणम्
भगदत्तं यथा शूरं मागधं च महारथम् ५६
सौमदत्तिं रणे शूरमार्श्यशृङ्गिं च राक्षसम्
त्रिगर्तराजं च रणे सह सर्वैर्महारथैः
अहमावारयिष्यामि वेलेव मकरालयम् ५७
कुरूंश्च सहितान्सर्वान्ये चैषां सैनिकाः स्थिताः
निवारयिष्यामि रणे साधयस्व पितामहम् ५८
इति श्रीमहाभारते भीष्मपर्वणि चतुरधिकशततमोऽध्यायः १०४

## पञ्चाधिक शततमोऽध्यायः

धृतराष्ट्र उवाच
कथं शिखण्डी गाङ्गेयमभ्यधावत्पितामहम्
पाञ्चाल्यः समरे क्रुद्धो धर्मात्मानं यतव्रतम् १
केऽरक्षन्पाण्डवानीके शिखण्डिनमुदायुधम्
त्वरमाणास्त्वराकाले जिगीषन्तो महरथाः २
कथं शांतनवो भीष्मः स तस्मिन्दशमेऽहनि
अयुध्यत महावीर्यः पाण्डवैः सहसृञ्जयैः ३
न मृष्यामि रणे भीष्मं प्रत्युद्यातं शिखण्डिनम्
कच्चिन्न रथभङ्गोऽस्य धनुर्वाशीर्यतास्यतः ४
सञ्जय उवाच
नाशीर्यत धनुस्तस्य रथभङ्गो न चाप्यभूत्
युध्यमानस्य संग्रामे भीष्मस्य भरतर्षभ
निघ्नतः समरे शत्रूञ्शरैः संनतपर्वभिः ५
अनेकशतसाहस्रास्तावकानां महारथाः
रथदन्तिगणा राजन्हयाश्चैव सुसज्जिताः
अभ्यवर्तन्त युद्धाय पुरस्कृत्य पितामहम् ६
यथाप्रतिज्ञं कौरव्य स चापि समितिञ्जयः
पार्थानामकरोद्भीष्मः सततं समितिक्षयम् ७
युध्यमानं महेष्वासं विनिघ्नन्तं पराञ्शरैः
पाञ्चालाः पाण्डवैः सार्धं सर्व एवाभ्यवारयन् ८

दशमेऽहनि संप्राप्ते ततap रिपुवाहिनीम्
कीर्यमाणां शितैर्बाणैः शतशोऽथ सहस्रशः ९
न हि भीष्मं महेष्वासं पाराडवाः पाराडुपूर्वज
अशक्नुवन्रणे जेतुं पाशहस्तमिवान्तकम् १०
अथोपायान्महाराज सव्यसाची परंतपः
त्रासयन्रथिनः सर्वान्बीभत्सुरपराजितः ११
सिंहवद्विनदन्नुच्चैर्धनुर्ज्यां विक्षिपन्मुहुः
शरौघान्विसृजन्पार्थो व्यचरत्कालवद्रणे १२
तस्य शब्देन वित्रस्तास्तावका भरतर्षभ
सिंहस्येव मृगा राजन्व्यद्रवन्त महाभयात् १३
जयन्तं पाराडवं दृष्ट्वा त्वत्सैन्यं चाभिपीडितम्
दुर्योधनस्ततो भीष्ममब्रवीद्भृशपीडितः १४
एष पाराडुसुतस्तात श्वेताश्वः कृष्णसारथिः
दहते मामकान्सर्वान्कृष्णवर्त्मेव काननम् १५
पश्य सैन्यानि गाङ्गेय द्रवमाणानि सर्वशः
पाराडवेन युधां श्रेष्ठ काल्यमानानि संयुगे १६
यथा पशुगणान्पालः संकालयति कानने
तथेदं मामकं सैन्यं काल्यते शत्रुतापन १७
धनंजयशरैर्भग्नं द्रवमाणमितस्ततः
भीमो ह्येष दुराधर्षो विद्रावयति मे बलम् १८
सात्यकिश्चेकितानश्च माद्रीपुत्रौ च पाराडवौ
अभिमन्युश्च विक्रान्तो वाहिनीं दहते मम १९
धृष्टद्युम्नस्तथा शूरो राक्षसश्च घटोत्कचः
व्यद्रावयेतां सहसा सैन्यं मम महाबलौ २०
वध्यमानस्य सैन्यस्य सर्वैरेतैर्महाबलैः
नान्यां गतिं प्रपश्यामि स्थाने युद्धे च भारत २१
ऋते त्वां पुरुषव्याघ्र देवतुल्यपराक्रम
पर्याप्तश्च भवान्क्षिप्रं पीडितानां गतिर्भव २२
एवमुक्तो महाराज पिता देवव्रतस्तव
चिन्तयित्वा मुहूर्तं तु कृत्वा निश्चयमात्मनः

तव संधारयन्पुत्रमब्रवीच्छंतनोः सुतः २३
दुर्योधन विजानीहि स्थिरो भव विशां पते
पूर्वकालं तव मया प्रतिज्ञातं महाबल २४
हत्वा दश सहस्राणि क्षत्रियाणां महात्मनाम्
संग्रामाद्व्यपयातव्यमेतत्कर्म ममाह्निकम्
इति तत्कृतवांश्चाहं यथोक्तं भरतर्षभ २५
अद्य चापि महत्कर्म प्रकरिष्ये महाहवे
अहं वा निहतः शेष्ये हनिष्ये वाद्य पाण्डवान् २६
अद्य ते पुरुषव्याघ्र प्रतिमोक्ष्ये ऋणं महत्
भर्तृपिण्डकृतं राजन्निहतः पृतनामुखे २७
इत्युक्त्वा भरतश्रेष्ठः क्षत्रियान्प्रतपञ्शरैः
आससाद दुराधर्षः पाण्डवानामनीकिनीम् २८
अनीकमध्ये तिष्ठन्तं गाङ्गेयं भरतर्षभ
आशीविषमिव क्रुद्धं पाण्डवाः पर्यवारयन् २९
दशमेऽहनि तस्मिंस्तु दर्शयञ्शक्तिमात्मनः
राजञ्शतसहस्राणि सोऽवधीत्कुरुनन्दन ३०
पञ्चालानां च ये श्रेष्ठा राजपुत्रा महाबलाः
तेषामादत्त तेजांसि जलं सूर्य इवांशुभिः ३१
हत्वा दश सहस्राणि कुञ्जराणां तरस्विनाम्
सारोहाणां महाराज हयानां चायुतं पुनः ३२
पूर्णे शतसहस्रे द्वे पदातीनां नरोत्तमः
प्रजज्वाल रणे भीष्मो विधूम इव पावकः ३३
न चैनं पाण्डवेयानां केचिच्छेकुर्निरीक्षितुम्
उत्तरं मार्गमास्थाय तपन्तमिव भास्करम् ३४
ते पाण्डवेयाः संरब्धा महेष्वासेन पीडिताः
वधायाभ्यद्रवन्भीष्मं सृञ्जयाश्च महारथाः ३५
स युध्यमानो बहुभिर्भीष्मः शांतनवस्तदा
अवकीर्णो महाबाहुः शैलो मेघैरिवासितैः ३६
पुत्रास्तु तव गाङ्गेयं समन्तात्पर्यवारयन्
महत्या सेनया सार्धं ततो युद्धमवर्तत ३७

इति श्रीमहाभारते भीष्मपर्वणि पञ्चाधिकशततमोऽध्यायः १०५

षडधिक शततमोऽध्यायः

सञ्जय उवाच
अर्जुनस्तु रणे राजन्दृष्ट्वा भीष्मस्य विक्रमम्
शिखण्डिनमथोवाच समभ्येहि पितामहम् १
न चापि भीस्त्वया कार्या भीष्मादद्य कथञ्चन
अहमेनं शरैस्तीक्ष्णैः पातयिष्ये रथोत्तमात् २
एवमुक्तस्तु पार्थेन शिखण्डी भरतर्षभ
अभ्यद्रवत गाङ्गेयं श्रुत्वा पार्थस्य भाषितम् ३
धृष्टद्युम्नस्तथा राजन्सौभद्रश्च महारथः
हृष्टावाद्रवतां भीष्मं श्रुत्वा पार्थस्य भाषितम् ४
विराटद्रुपदौ वृद्धौ कुन्तिभोजश्च दंशितः
अभ्यद्रवत गाङ्गेयं पुत्रस्य तव पश्यतः ५
नकुलः सहदेवश्च धर्मराजश्च वीर्यवान्
तथेतराणि सैन्यानि सर्वाण्येव विशां पते
समाद्रवन्त गाङ्गेयं श्रुत्वा पार्थस्य भाषितम् ६
प्रत्युद्ययुस्तावकाश्च समेतास्तान्महारथान्
यथाशक्ति यथोत्साहं तन्मे निगदतः शृणु ७
चित्रसेनो महाराज चेकितानं समभ्ययात्
भीष्मप्रेप्सुं रणे यान्तं वृषं व्याघ्रशिशुर्यथा ८
धृष्टद्युम्नं महाराज भीष्मान्तिकमुपागतम्
त्वरमाणो रणे यत्तं कृतवर्मा न्यवारयत् ९
भीमसेनं सुसंक्रुद्धं गाङ्गेयस्य वधैषिणम्
त्वरमाणो महाराज सौमदत्तिर्न्यवारयत् १०
तथैव नकुलं वीरं किरन्तं सायकान्बहून्
विकर्णो वारयामास इच्छन्भीष्मस्य जीवितम् ११
सहदेवं तथा यान्तं यत्तं भीष्मरथं प्रति
वारयामास संक्रुद्धः कृपः शारद्वतो युधि १२
राक्षसं क्रूरकर्माणं भैमसेनिं महाबलम्

भीष्मस्य निधनं प्रेप्सुं दुर्मुखोऽभ्यद्रवद्बली १३
सात्यकिं समरे क्रुद्धमार्श्यशृङ्गिरवारयत्
अभिमन्युं महाराज यान्तं भीष्मरथं प्रति
सुदक्षिणो महाराज काम्बोजः प्रत्यवारयत् १४
विराटद्रुपदौ वृद्धौ समेतावरिमर्दनौ
अश्वत्थामा ततः क्रुद्धो वारयामास भारत १५
तथा पाण्डुसुतं ज्येष्ठं भीष्मस्य वधकाङ्क्षिणम्
भारद्वाजो रणे यत्तो धर्मपुत्रमवारयत् १६
अर्जुनं रभसं युद्धे पुरस्कृत्य शिखण्डिनम्
भीष्मप्रेप्सुं महाराज तापयन्तं दिशो दश
दुःशासनो महेष्वासो वारयामास संयुगे १७
अन्ये च तावका योधाः पाण्डवानां महारथान्
भीष्मायाभिमुखं यातान्वारयामासुराहवे १८
धृष्टद्युम्नस्तु सैन्यानि प्राक्रोशत पुनः पुनः
अभिद्रवत संरब्धा भीष्ममेकं महाबलम् १९
एषोऽर्जुनो रणे भीष्मं प्रयाति कुरुनन्दनः
अभिद्रवत मा भैष्ट भीष्मो न प्राप्स्यते हि वः २०
अर्जुनं समरे योद्धुं नोत्सहेतापि वासवः
किमु भीष्मो रणे वीरा गतसत्त्वोऽल्पजीवितः २१
इति सेनापतेः श्रुत्वा पाण्डवानां महारथाः
अभ्यद्रवन्त संहृष्टा गाङ्गेयस्य रथं प्रति २२
आगच्छतस्तान्समरे वार्योघान्प्रबलानिव
न्यवारयन्त संहृष्टास्तावकाः पुरुषर्षभाः २३
दुःशासनो महाराज भयं त्यक्त्वा महारथः
भीष्मस्य जीविताकाङ्क्षी धनञ्जयमुपाद्रवत् २४
तथैव पाण्डवाः शूरा गाङ्गेयस्य रथं प्रति
अभ्यद्रवन्त संग्रामे तव पुत्रान्महारथान् २५
अत्राद्भुतमपश्याम चित्ररूपं विशां पते
दुःशासनरथं प्राप्तो यत्पार्थो नात्यवर्तत २६
यथा वारयते वेला क्षुभितं वै महार्णवम्

तथैव पाराडवं क्रुद्धं तव पुत्रो न्यवारयत् २७
उभौ हि रथिनां श्रेष्ठावुभौ भारत दुर्जयौ
उभौ चन्द्रार्कसदृशौ कान्त्या दीप्त्या च भारत २८
तौ तथा जातसंरम्भावन्योन्यवधकाङ्क्षिणौ
समीयतुर्महासंख्ये मयशक्रौ यथा पुरा २९
दुःशासनो महाराज पाराडवं विशिखैस्त्रिभिः
वासुदेवं च विंशत्या ताडयामास संयुगे ३०
ततोऽर्जुनो जातमन्युर्वार्ष्णेयं वीक्ष्य पीडितम्
दुःशासनं शतेनाजौ नाराचानां समार्पयत्
ते तस्य कवचं भित्त्वा पपुः शोणितमाहवे ३१
दुःशासनस्ततः क्रुद्धः पार्थं विव्याध पञ्चभिः
ललाटे भरतश्रेष्ठ शरैः संनतपर्वभिः ३२
लालटस्थैस्तु तैर्बाणैः शुशुभे पाराडवोत्तमः
यथामेरुर्महाराज शृङ्गैरत्यर्थमुच्छ्रितैः ३३
सोऽतिविद्धो महेष्वासः पुत्रेण तव धन्विना
व्यराजत रणे पार्थः किंशुकः पुष्पवानिव ३४
दुःशासनं ततः क्रुद्धः पीडयामास पाराडवः
पर्वणीव सुसंक्रुद्धो राहुरुग्रो निशाकरम् ३५
पीड्यमानो बलवता पुत्रस्तव विशां पते
विव्याध समरे पार्थं पङ्कपत्रैः शिलाशितैः ३६
तस्य पार्थो धनुश्छित्त्वा त्वरमाणः पराक्रमी
आजघान ततः पश्चात्पुत्रं ते नवभिः शरैः ३७
सोऽन्यत्कार्मुकमादाय भीष्मस्य प्रमुखे स्थितः
अर्जुनं पञ्चविंशत्या बाह्वोरुरसि चार्पयत् ३८
तस्य क्रुद्धो महाराज पाराडवः शत्रुकर्शनः
अप्रैषीद्विशिखान्घोरान्यमदराडोपमान्बहून् ३९
अप्राप्तानेव तान्बाणांश्चिच्छेद तनयस्तव
यतमानस्य पार्थस्य तदद्भुतमिवाभवत्
पार्थं च निशितैर्बाणैरविध्यत्तनयस्तव४०
ततः क्रुद्धो रणे पार्थः शरान्संधाय कार्मुके

प्रेषयामास समरे स्वर्णपुङ्खाञ्शिलाशितान् ४१
न्यमज्जंस्ते महाराज तस्य काये महात्मनः
यथा हंसा महाराज तडागं प्राप्य भारत ४२
पीडितश्चैव पुत्रस्ते पाण्डवेन महात्मना
हित्वा पार्थं रणे तूर्णं भीष्मस्य रथमाश्रयत्
अगाधे मज्जतस्तस्य द्वीपो भीष्मोऽभवत्तदा ४३
प्रतिलभ्य ततः संज्ञां पुत्रस्तव विशां पते
अवारयत्ततः शूरो भूय एव पराक्रमी ४४
शरैः सुनिशितैः पार्थं यथा वृत्रः पुरन्दरम्
निर्बिभेद महावीर्यो विव्यथे नैव चार्जुनात् ४५
इति श्रीमहाभारते भीष्मपर्वणि षडधिकशततमोऽध्यायः १०६

## सप्ताधिकशततमोऽध्यायः

सञ्जय उवाच
सात्यकिं दंशितं युद्धे भीष्मायाभ्युद्यतं तदा
आर्श्यशृङ्गिर्महेष्वासो वारयामास संयुगे १
माधवस्तु सुसंक्रुद्धो राक्षसं नवभिः शरैः
आजघान रणे राजन्प्रहसन्निव भारत २
तथैव राक्षसो राजन्माधवं निशितैः शरैः
अर्दयामास राजेन्द्र संक्रुद्धः शिनिपुङ्गवम् ३
शैनेयः सरसङ्घं तु प्रेषयामास संयुगे
राक्षसाय सुसंक्रुद्धो माधवः परवीरहा ४
ततो रक्षो महाबाहुं सात्यकिं सत्यविक्रमम्
विव्याध विशिखैस्तीक्ष्णैः सिंहनादं ननाद च ५
माधवस्तु भृशं विद्धो राक्षसेन रणे तदा
धैर्यमालम्ब्य तेजस्वी जहास च ननाद च ६
भगदत्तस्ततः क्रुद्धो माधवं निशितैः शरैः
ताडयामास समरे तोत्त्रैरिव महागजम् ७
विहाय राक्षसं युद्धे शैनेयो रथिनां वरः
प्राग्ज्योतिषाय चिक्षेप शरान्संनतपर्वणः ८

तस्य प्राग्ज्योतिषो राजा माधवस्य महद्धनुः
चिच्छेद शितधारेण भल्लेन कृतहस्तवत् ९
अथान्यद्धनुरादाय वेगवत्परवीरहा
भगदत्तं रणे क्रुद्धो विव्याध निशितैः शरैः १०
सोऽतिविद्धो महेष्वासः सृक्किणी संलिहन्मुहुः
शक्तिं कनकवैडूर्यभूषितामायसीं दृढाम्
यमदण्डोपमां घोरां प्राहिणोत्सात्यकाय वै ११
तामापतन्तीं सहसा तस्य बाहोर्बलेरिताम्
सात्यकिः समरे राजंस्त्रिधा चिच्छेद सायकैः
सा पपात तदा भूमौ महोल्केव हतप्रभा १२
शक्तिं विनिहतां दृष्ट्वा पुत्रस्तव विशां पते
महता रथवंशेन वारयामास माधवम् १३
तथा परिवृतं दृष्ट्वा वार्ष्णेयानां महारथम्
दुर्योधनो भृशं हृष्टो भ्रातॄन्सर्वानुवाच ह १४
तथा कुरुत कौरव्या यथा वः सात्यको युधि
न जीवन्प्रतिनिर्याति महतोऽस्माद्रथव्रजात्
अस्मिन्हते हतं मन्ये पाण्डवानां महद्बलम् १५
तत्तथेति वचस्तस्य परिगृह्य महारथाः
शैनेयं योधयामासुर्भीष्मस्य प्रमुखे तदा १६
अभिमन्युं तदायान्तं भीष्मायाभ्युद्यतं मृधे
काम्बोजराजो बलवान्वारयामास संयुगे १७
आर्जुनिर्नृपतिं विद्ध्वा शरैः संनतपर्वभिः
पुनरेव चतुःषष्ट्या राजन्विव्याध तं नृपम् १८
सुदक्षिणस्तु समरे कार्ष्णिं विव्याध पञ्चभिः
सारथिं चास्य नवभिरिच्छन्भीष्मस्य जीवितम् १९
तद्युद्धमासीत्सुमहत्तयोस्तत्र पराक्रमे
यदभ्यधावद्गाङ्गेयं शिखण्डी शत्रुतापनः २०
विराटद्रुपदौ वृद्धौ वारयन्तौ महाचमूम्
भीष्मं च युधि संरब्धावाद्रवन्तौ महारथौ २१
अश्वत्थामा ततः क्रुद्धः समायाद्रथसत्तमः

ततः प्रववृते युद्धं तव तेषां च भारत २२
विराटो दशभिर्भल्लैराजघान परंतप
यतमानं महेष्वासं द्रौणिमाहवशोभिनम् २३
द्रुपदश्च त्रिभिर्बाणैर्विव्याध निशितैस्तथा
गुरुपुत्रं समासाद्य भीष्मस्य पुरतः स्थितम् २४
अश्वत्थामा ततस्तौ तु विव्याध दशभिः शरैः
विराटद्रुपदौ वृद्धौ भीष्मं प्रति समुद्यतौ २५
तत्राद्भुतमपश्याम वृद्धयोश्चरितं महत्
यद्द्रौणेः सायकान्घोरान्प्रत्यवारयतां युधि २६
सहदेवं तथा यान्तं कृपः शारद्वतोऽभ्ययात्
यथा नागो वने नागं मत्तो मत्तमुपाद्रवत् २७
कृपश्च समरे राजन्माद्रीपुत्रं महारथम्
आजघान शरैस्तूर्णं सप्तत्या रुक्मभूषणैः २८
तस्य माद्रीसुतश्चापं द्विधा चिच्छेद सायकैः
अथैनं छिन्नधन्वानं विव्याध नवभिः शरैः २९
सोऽन्यत्कार्मुकमादाय समरे भारसाधनम्
माद्रीपुत्रं सुसंहृष्टो दशभिर्निशितैः शरैः
आजघानोरसि क्रुद्ध इच्छन्भीष्मस्य जीवितम् ३०
तथैव पाण्डवो राजञ्शारद्वतममर्षणम्
आजघानोरसि क्रुद्धो भीष्मस्य वधकाङ्क्षया
तयोर्युद्धं समभवद्घोररूपं भयावहम् ३१
नकुलं तु रणे क्रुद्धं विकर्णः शत्रुतापनः
विव्याध सायकैः षष्ट्या रक्षन्भीष्मस्य जीवितम् ३२
नकुलोऽपि भृशं विद्धस्तव पुत्रेण धन्विना
विकर्णं सप्तसप्तत्या निर्बिभेद शिलीमुखैः ३३
तत्र तौ नरशार्दूलौ भीष्महेतोः परंतपौ
अन्योन्यं जघ्नतुर्वीरौ गोष्ठे गोवृषभाविव ३४
घटोत्कचं रणे यत्तं निघ्नन्तं तव वाहिनीम्
दुर्मुखः समरे प्रायाद्भीष्महेतोः पराक्रमी ३५
हैडिम्बस्तु ततो राजन्दुर्मुखं शत्रुतापनम्

आजघानोरसि क्रुद्धो नवत्या निशितैः शरैः ३६
भीमसेनसुतं चापि दुर्मुखः सुमुखैः शरैः
षष्ट्या वीरो नदन्हृष्टो विव्याध रणमूर्धनि ३७
धृष्टद्युम्नं रणे यान्तं भीष्मस्य वधकाङ्क्षिणम्
हार्दिक्यो वारयामास रक्षन्भीष्मस्य जीवितम् ३८
वार्ष्णेयः पार्षतं शूरं विद्ध्वा पञ्चभिरायसैः
पुनः पञ्चाशता तूर्णमाजघान स्तनान्तरे ३९
तथैव पार्षतो राजन्हार्दिक्यं नवभिः शरैः
विव्याध निशितैस्तीक्ष्णैःकङ्कपत्रपरिच्छदैः ४०
तयोः समभवद्युद्धं भीष्महेतोर्महारणे
अन्योन्यातिशयैर्युक्तं यथा वृत्रमहेन्द्रयोः ४१
भीमसेनमथायान्तं भीष्मं प्रति महाबलम्
भूरिश्रवाभ्ययात्तूर्णं तिष्ठ तिष्ठेति चाब्रवीत् ४२
सौमदत्तिरथो भीममाजघान स्तनान्तरे
नाराचेन सुतीक्ष्णेन रुक्मपुङ्खेन संयुगे ४३
उरःस्थेन बभौ तेन भीमसेनः प्रतापवान्
स्कन्दशक्त्या यथा क्रौञ्चः पुरा नृपतिसत्तम ४४
तौ शरान्सूर्यसङ्काशान्कर्मारपरिमार्जितान्
अन्योन्यस्य रणे क्रुद्धौ चिक्षिपाते मुहुर्मुहुः ४५
भीमो भीष्मवधाकाङ्क्षी सौमदत्तिं महारथम्
तथा भीष्मजये गृध्नुः सौमदत्तिश्च पाण्डवम्
कृतप्रतिकृते यत्तौ योधयामासतू रणे ४६
युधिष्ठिरं महाराज महत्या सेनया वृतम्
भीष्मायाभिमुखं यान्तं भारद्वाजो न्यवारयत् ४७
द्रोणस्य रथनिर्घोषं पर्जन्यनिनदोपमम्
श्रुत्वा प्रभद्रका राजन्समकम्पन्त मारिष ४८
सा सेना महती राजन्पाण्डुपुत्रस्य संयुगे
द्रोणेन वारिता यत्ता न चचाल पदात्पदम् ४९
चेकितानं रणे क्रुद्धं भीष्मं प्रति जनेश्वर
चित्रसेनस्तव सुतः क्रुद्धरूपमवारयत् ५०

भीष्महेतोः पराक्रान्तश्चित्रसेनो महारथः
चेकितानं परं शक्त्या योधयामास भारत ५१
तथैव चेकितानोऽपि चित्रसेनमयोधयत्
तद्युद्धमासीत्सुमहत्तयोस्तत्र पराक्रमे ५२
अर्जुनो वार्यमाणस्तु बहुशस्तनयेन ते
विमुखीकृत्य पुत्रं ते तव सेनां ममर्द ह ५३
दुःशासनोऽपि परया शक्त्या पार्थमवारयत्
कथं भीष्मं परो हन्यादिति निश्चित्य भारत ५४
सा वध्यमाना समरे पुत्रस्य तव वाहिनी
लोड्यते रथिभिः श्रेष्ठैस्तत्र तत्रैव भारत ५५
इति श्रीमहाभारते भीष्मपर्वणि सप्ताधिकशततमोऽध्यायः १०७

## अष्टाधिकशततमोऽध्यायः

सञ्जय उवाच
अथ वीरो महेष्वासो मत्तवारणविक्रमः
समादाय महच्चापं मत्तवारणवारणम् १
विधुन्वानो धनुः श्रेष्ठं द्रावयाणो महारथान्
पृतनां पाण्डवेयानां पातयानो महारथः २
निमित्तानि निमित्तज्ञः सर्वतो वीक्ष्य वीर्यवान्
प्रतपन्तमनीकानि द्रोणः पुत्रमभाषत ३
अयं स दिवसस्तात यत्र पार्थो महारथः
जिघांसुः समरे भीष्मं परं यत्नं करिष्यति ४
उत्पतन्ति हि मे बाणा धनुः प्रस्फुरतीव मे
योगमस्त्राणि गच्छन्ति क्रूरे मे वर्तते मतिः ५
दिक्षु शान्तासु घोराणि व्याहरन्ति मृगद्विजाः
नीचैर्गृध्रा निलीयन्ते भारतानां चमूं प्रति ६
नष्टप्रभ इवादित्यः सर्वतो लोहिता दिशः
रसते व्यथते भूमिरनुष्टनति वाहनम् ७
कङ्का गृध्रा बलाकाश्च व्याहरन्ति मुहुर्मुहुः
शिवाश्चाशिवनिर्घोषा वेदयन्त्यो महद्भयम् ८

पपात महती चोल्का मध्येनादित्यमण्डलात्
सकबन्धश्च परिघो भानुमावृत्य तिष्ठति ९
परिवेषस्तथा घोरश्चन्द्रभास्करयोरभूत्
वेदयानो भयं घोरं राज्ञां देहावकर्तनम् १०
देवतायतनस्थाश्च कौरवेन्द्रस्य देवताः
कम्पन्ते च हसन्ते च नृत्यन्ति च रुदन्ति च ११
अपसव्यं ग्रहाश्चक्रुरलक्ष्माणं निशाकरम्
अवाक्शिराश्च भगवानुदतिष्ठत चन्द्रमाः १२
वपूंषि च नरेन्द्राणां विगतानीव लक्षये
धार्तराष्ट्रस्य सैन्येषु न च भ्राजन्ति दंशिताः १३
सेनयोरुभयोश्चैव समन्ताच्छ्रूयते महान्
पाञ्चजन्यस्य निर्घोषो गाण्डीवस्य च निस्वनः १४
ध्रुवमास्थाय बीभत्सुरुत्तमास्त्राणि संयुगे
अपास्यान्यान्रणे योधानभ्यस्यति पितामहम् १५
हृष्यन्ति रोमकूपानि सीदतीव च मे मनः
चिन्तयित्वा महाबाहो भीष्मार्जुनसमागमम् १६
तं चैव निकृतिप्रज्ञं पाञ्चाल्यं पापचेतसम्
पुरस्कृत्य रणे पार्थो भीष्मस्यायोधनं गतः १७
अब्रवीच्च पुरा भीष्मो नाहं हन्यां शिखण्डिनम्
स्त्री ह्येषा विहिता धात्रा दैवाच्च स पुनः पुमान् १८
अमङ्गल्यध्वजश्चैव याज्ञसेनिर्महारथः
न चामङ्गलकेतोः स प्रहरेदापगासुतः १९
एतद्विचिन्तयानस्य प्रज्ञा सीदति मे भृशम्
अद्य्व तु रणे पार्थः कुरुवृद्धमुपाद्रवत् २०
युधिष्ठिरस्य च क्रोधो भीष्मार्जुनसमागमः
मम चास्त्राभिसंरम्भः प्रजानामशुभं ध्रुवम् २१
मनस्वी बलवाञ्शूरः कृतास्त्रो दृढविक्रमः
दूरपाती दृढेषुश्च निमित्तज्ञश्च पाण्डवः २२
अजेयः समरे चैव देवैरपि सवासवैः
बलवान्बुद्धिमांश्चैव जितक्लेशो युधां वरः २३

विजयी च रणे नित्यं भैरवास्त्रश्च पाण्डवः
तस्य मार्गं परिहरन्द्रुतं गच्छ यतव्रतम् २४
पश्य चैतन्महाबाहो वैशसं समुपस्थितम्
हेमचित्राणि शूराणां महान्ति च शुभानि च २५
कवचान्यवदीर्यन्ते शरैः संनतपर्वभिः
छिद्यन्ते च ध्वजाग्राणि तोमराणि धनूंषि च २६
प्रासाश्च विमलास्तीक्ष्णाः शक्त्यश्च कनकोज्ज्वलाः
वैजयन्त्यश्च नागानां संक्रुद्धेन किरीटिना २७
नायं संरक्षितुं कालः प्राणान्पुत्रोपजीविभिः
याहि स्वर्गं पुरस्कृत्य यशसे विजयाय च २८
हयनागरथावर्तां महाघोरां सुदुस्तराम्
रथेन संग्रामनदीं तरत्येष कपिध्वजः २९
ब्रह्मण्यता दमो दानं तपश्च चरितं महत्
इहैव दृश्यते राज्ञो भ्राता यस्य धनञ्जयः ३०
भीमसेनश्च बलवान्माद्रीपुत्रौ च पाण्डवौ
वासुदेवश्च वार्ष्णेयो यस्य नाथो व्यवस्थितः ३१
तस्यैष मन्युप्रभवो धार्तराष्ट्रस्य दुर्मतेः
तपोदग्धशरीरस्य कोपो दहति भारतान् ३२
एष संदृश्यते पार्थो वासुदेवव्यपाश्रयः
दारयन्सर्वसैन्यानि धार्तराष्ट्राणि सर्वशः ३३
एतदालोक्यते सैन्यं क्षोभ्यमाणं किरीटिना
महोर्मिनद्धं सुमहत्तिमिनेव नदीमुखम् ३४
हाहाकिलकिलाशब्दाः श्रूयन्ते च चमूमुखे
याहि पाञ्चालदायादमहं यास्ये युधिष्ठिरम् ३५
दुर्लभं ह्यन्तरं राज्ञो व्यूहस्यामिततेजसः
समुद्रकुक्षिप्रतिमं सर्वतोऽतिरथैः स्थितैः ३६
सात्यकिश्चाभिमन्युश्च धृष्टद्युम्नवृकोदरौ
परिरक्षन्ति राजानं यमौ च मनुजेश्वरम् ३७
उपेन्द्रसदृशः श्यामो महाशाल इवोद्गतः
एष गच्छत्यनीकानि द्वितीय इव फल्गुनः ३८

उत्तमास्त्राणि चादत्स्व गृहीत्वान्यन्महद्धनुः
पार्श्वतो याहि राजानं युध्यस्व च वृकोदरम् ३९
को हि नेच्छेत्प्रियं पुत्रं जीवन्तं शाश्वतीः समाः
क्षत्रधर्मं पुरस्कृत्य ततस्त्वा विनियुज्महे ४०
एष चापि रणे भीष्मो दहते वै महाचमूम्
युद्धे सुसदृशस्तात यमस्य वरुणस्य च ४१
इति श्रीमहाभारते भीष्मपर्वणि अष्टाधिकशततमोऽध्यायः १०८

## नवाधिकशततमोऽध्यायः

सञ्जय उवाच
भगदत्तः कृपः शल्यः कृतवर्मा च सात्वतः
विन्दानुविन्दावावन्त्यौ सैन्धवश्च जयद्रथः १
चित्रसेनो विकर्णश्च तथा दुर्मर्षणो युवा
दशैते तावका योधा भीमसेनमयोधयन् २
महत्या सेनया युक्ता नानादेशसमुत्थया
भीष्मस्य समरे राजन्प्रार्थयाना महद्यशः ३
शल्यस्तु नवभिर्बाणैर्भीमसेनमताडयत्
कृतवर्मा त्रिभिर्बाणैः कृपश्च नवभिः शरैः ४
चित्रसेनो विकर्णश्च भगदत्तश्च मारिष
दशभिर्दशभिर्भल्लैर्भीमसेनमताडयन् ५
सैन्धवश्च त्रिभिर्बाणैर्जत्रुदेशेऽभ्यताडयत्
विन्दानुविन्दावावन्त्यौ पञ्चभिः पञ्चभिः शरैः
दुर्मर्षणश्च विंशत्या पाण्डवं निशितैः शरैः ६
स तान्सर्वान्महाराज भ्राजमानान्पृथक्पृथक्
प्रवीरान्सर्वलोकस्य धार्तराष्ट्रान्महारथान्
विव्याध बहुभिर्बाणैर्भीमसेनो महाबलः ७
शल्यं पञ्चाशता विद्ध्वा कृतवर्माणमष्टभिः
कृपस्य सशरं चापं मध्ये चिच्छेद भारत
अथैनं छिन्नधन्वानं पुनर्विव्याध पञ्चभिः ८
विन्दानुविन्दौ च तथा त्रिभिस्त्रिभिरताडयत्

दुर्मर्षणं च विंशत्या चित्रसेनं च पञ्चभिः ९
विकर्णं दशभिर्बाणैः पञ्चभिश्च जयद्रथम्
विद्ध्वा भीमोऽनदद्धृष्टः सैन्धवं च पुनस्त्रिभिः १०
अथान्यद्धनुरादाय गौतमो रथिनां वरः
भीमं विव्याध संरब्धो दशभिर्निशितैः शरैः ११
स विद्धो बहुभिर्बाणैस्तोत्त्रैरिव महाद्विपः
ततः क्रुद्धो महाबाहुर्भीमसेनः प्रतापवान्
गौतमं ताडयामास शरैर्बहुभिराहवे १२
सैन्धवस्य तथाश्वांश्च सारथिं च त्रिभिः शरैः
प्राहिणोन्मृत्युलोकाय कालान्तकसमद्युतिः १३
हताश्वात्तु रथात्तूर्णमवप्लुत्य महारथः
शरांश्चिक्षेप निशितान्भीमसेनस्य संयुगे १४
तस्य भीमो धनुर्मध्ये द्वाभ्यां चिच्छेद भारत
भल्लाभ्यां भरतश्रेष्ठ सैन्धवस्य महात्मनः १५
स च्छिन्नधन्वा विरथो हताश्वो हतसारथिः
चित्रसेनरथं राजन्नारुरोह त्वरान्वितः १६
अत्यद्भुतं रणे कर्म कृतवांस्तत्र पाण्डवः
महारथाञ्शरैर्विद्ध्वा वारयित्वा महारथः
विरथं सैन्धवं चक्रे सर्वलोकस्य पश्यतः १७
नातीव ममृषे शल्यो भीमसेनस्य विक्रमम्
स संधाय शरांस्तीक्ष्णान्कर्मारपरिमार्जितान्
भीमं विव्याध सप्तत्या तिष्ठ तिष्ठेति चाब्रवीत् १८
कृपश्च कृतवर्मा च भगदत्तश्च मारिष
विन्दानुविन्दावावन्त्यौ चित्रसेनश्च संयुगे १९
दुर्मर्षणो विकर्णश्च सिन्धुराजश्च वीर्यवान्
भीमं ते विव्यधुस्तूर्णं शल्यहेतोररिंदमाः २०
स तु तान्प्रतिविव्याध पञ्चभिः पञ्चभिः शरैः
शल्यं विव्याध सप्तत्या पुनश्च दशभिः शरैः २१
तं शल्यो नवभिर्विद्ध्वा पुनर्विव्याध पञ्चभिः
सारथिं चास्य भल्लेन गाढं विव्याध मर्मणि २२

विशोकं वीक्ष्य निर्भिन्नं भीमसेनः प्रतापवान्
मद्रराजं त्रिभिर्बाणैर्बाह्वोरुरसि चार्पयत् २३
तथेतरान्महेष्वासांस्त्रिभिस्त्रिभिरजिह्मगैः
ताडयामास समरे सिंहवच्च ननाद च २४
ते हि यत्ता महेष्वासाः पाण्डवं युद्धदुर्मदम्
त्रिभिस्त्रिभिरकुण्ठाग्रैर्भृशं मर्मस्वताडयन् २५
सोऽतिविद्धो महेष्वासो भीमसेनो न विव्यथे
पर्वतो वारिधाराभिर्वर्षमाणैरिवाम्बुदैः २६
शल्यं च नवभिर्बाणैर्भृशं विद्ध्वा महायशाः
प्राग्ज्योतिषं शतेनाजौ राजन्विव्याध वै दृढम् २७
ततस्तु सशरं चापं सात्वतस्य महात्मनः
क्षुरप्रेण सुतीक्ष्णेन चिच्छेद कृतहस्तवत् २८
अथान्यद्धनुरादाय कृतवर्मा वृकोदरम्
आजघान भ्रुवोर्मध्ये नाराचेन परंतपः २९
भीमस्तु समरे विद्ध्वा शल्यं नवभिरायसैः
भगदत्तं त्रिभिश्चैव कृतवर्माणमष्टभिः ३०
द्वाभ्यां द्वाभ्यां तु विव्याध गौतमप्रभृतीन्रथान्
ते तु तं समरे राजन्विव्यधुर्निशितैः शरैः ३१
स तथा पीड्यमानोऽपि सर्वतस्तैर्महारथैः
मत्वा तृणेन तांस्तुल्यान्विचचार गतव्यथः ३२
ते चापि रथिनां श्रेष्ठा भीमाय निशिताञ्शरान्
प्रेषयामासुरव्यग्राः शतशोऽथ सहस्रशः ३३
तस्य शक्तिं महावेगां भगदत्तो महारथः
चिक्षेप समरे वीरः स्वर्णदण्डां महाधनाम् ३४
तोमरं सैन्धवो राजा पट्टिशं च महाभुजः
शतघ्नीं च कृपो राजञ्शरं शल्यश्च संयुगे ३५
अथेतरे महेष्वासाः पञ्च पञ्च शिलीमुखान्
भीमसेनं समुद्दिश्य प्रेषयामासुरोजसा ३६
तोमरं स द्विधा चक्रे क्षुरप्रेणानिलात्मजः
पट्टिशं च त्रिभिर्बाणैश्चिच्छेद तिलकाण्डवत् ३७

स बिभेद शतघ्नीं च नवभिः कङ्कपत्रिभिः
मद्रराजप्रयुक्तं च शरं छित्त्वा महाबलः ३८
शक्तिं चिच्छेद सहसा भगदत्तेरितां रणे
तथेतराञ्शरान्घोराञ्शरैः संनतपर्वभिः ३९
भीमसेनो रणश्लाघी त्रिधैकैकं समाच्छिनत्
तांश्च सर्वान्महेष्वासांस्त्रिभिस्त्रिभिरताडयत् ४०
ततो धनञ्जयस्तत्र वर्तमाने महारणे
जगाम स रथेनाजौ भीमं दृष्ट्वा महारथम्
निघ्नन्तं समरे शत्रून्योधयानं च सायकैः ४१
तौ तु तत्र महात्मानौ समेतौ वीक्ष्य पाण्डवौ
नाशशंसुर्जयं तत्र तावकाः पुरुषर्षभ ४२
अथार्जुनो रणे भीष्मं योधयन्वै महारथम्
भीष्मस्य निधनाकाङ्क्षी पुरस्कृत्य शिखण्डिनम् ४३
आससाद रणे योधांस्तावकान्दश भारत
ये स्म भीमं रणे राजन्योधयन्तो व्यवस्थिताः
बीभत्सुस्तानथाविध्यद्भीमस्य प्रियकाम्यया ४४
ततो दुर्योधनो राजा सुशर्माणमचोदयत्
अर्जुनस्य वधार्थाय भीमसेनस्य चोभयोः ४५
सुशर्मन्गच्छ शीघ्रं त्वं बलौघैः परिवारितः
जहि पाण्डुसुतावेतौ धनञ्जयवृकोदरौ ४६
तच्छ्रुत्वा शासनं तस्य त्रिगर्तः प्रस्थलाधिपः
अभिद्रुत्य रणे भीममर्जुनं चैव धन्विनौ ४७
रथैरनेकसाहस्रैः परिवव्रे समन्ततः
ततः प्रववृते युद्धमर्जुनस्य परैः सह ४८
इति श्रीमहाभारते भीष्मपर्वणि नवाधिकशततमोऽध्यायः १०९

## दशाधिक शततमोऽध्यायः

सञ्जय उवाच
अर्जुनस्तु रणे शल्यं यतमानं महारथम्
छादयामास समरे शरैः संनतपर्वभिः १

सुशर्माणं कृपं चैव त्रिभिस्त्रिभिरविध्यत
प्राग्ज्योतिषं च समरे सैन्धवं च जयद्रथम् २
चित्रसेनं विकर्णं च कृतवर्माणमेव च
दुर्मर्षणं च राजेन्द्र आवन्त्यौ च महारथौ ३
एकैकं त्रिभिरानर्छत्कङ्कबर्हिणवाजितैः
शरैरतिरथो युद्धे पीडयन्वाहिनीं तव ४
जयद्रथो रणे पार्थं भित्त्वा भारत सायकैः
भीमं विव्याध तरसा चित्रसेनरथे स्थितः ५
शल्यश्च समरे जिष्णुं कृपश्च रथिनां वरः
विव्यधाते महाबाहुं बहुधा मर्मभेदिभिः ६
चित्रसेनादयश्चैव पुत्रास्तव विशां पते
पञ्चभिः पञ्चभिस्तूर्णं संयुगे निशितैः शरैः
आजघ्नुरर्जुनं संख्ये भीमसेनं च मारिष ७
तौ तत्र रथिनां श्रेष्ठौ कौन्तेयौ भरतर्षभौ
अपीडयेतां समरे त्रिगर्तानां महद्बलम् ८
सुशर्मापि रणे पार्थं विद्ध्वा बहुभिरायसैः
ननाद बलवन्नादं नादयन्वै नभस्तलम् ९
अन्ये च रथिनः शूरा भीमसेनधनञ्जयौ
विव्यधुर्निशितैर्बाणै रुक्मपुङ्खैरजिह्मगैः १०
तेषां तु रथिनां मध्ये कौन्तेयौ रथिनां वरौ
क्रीडमानौ रथोदारौ चित्ररूपौ व्यरोचताम्
आमिषेप्सू गवां मध्ये सिंहाविव बलोत्कटौ ११
छित्त्वा धनूंषि वीराणां शरांश्च बहुधा रणे
पातयामासतुर्वीरौ शिरांसि शतशो नृणाम् १२
रथाश्च बहवो भग्ना हयाश्च शतशो हताः
गजाश्च सगजारोहाः पेतुरुर्व्यां महामृधे १३
रथिनः सादिनश्चैव तत्र तत्र निसूदिताः
दृश्यन्ते बहुधा राजन्वेष्टमानाः समन्ततः १४
हतैर्गजपदात्योघैर्वाजिभिश्च निसूदितैः
रथैश्च बहुधा भग्नैः समास्तीर्यत मेदिनी १५

छत्रैश्च बहुधा छिन्नैर्ध्वजैश्च विनिपातितैः
अङ्कुशैरपविद्धैश्च परिस्तोमैश्च भारत १६
केयूरैरङ्गदैर्हारै राङ्कवैर्मृदितैस्तथा
उष्णीषैरपविद्धैश्च चामरव्यजनैरपि १७
तत्र तत्रापविद्धैश्च बाहुभिश्चन्दनोक्षितैः
उरुभिश्च नरेन्द्राणां समास्तीर्यत मेदिनी १८
तत्राद्भुतमपश्याम रणे पार्थस्य विक्रमम्
शरैः संवार्य तान्वीरान्निजघान बलं तव १९
पुत्रस्तु तव तं दृष्ट्वा भीमार्जुनसमागमम्
गाङ्गेयस्य रथाभ्याशमुपजग्मे महाभये २०
कृपश्च कृतवर्मा च सैन्धवश्च जयद्रथः
विन्दानुविन्दावावन्त्यावाजग्मुः संयुगं तदा २१
ततो भीमो महेष्वासः फल्गुनश्च महारथः
कौरवाणां चमूं घोरां भृशं दुद्रुवतू रणे २२
ततो बर्हिणवाजानामयुतान्यर्बुदानि च
धनञ्जयरथे तूर्णं पातयन्ति स्म संयुगे २३
ततस्ताञ्शरजालेन संनिवार्य महारथान्
पार्थः समन्तात्समरे प्रेषयामास मृत्यवे २४
शल्यस्तु समरे जिष्णुं क्रीडन्निव महारथः
आजघानोरसि क्रुद्धो भल्लैः संनतपर्वभिः २५
तस्य पार्थो धनुश्छित्त्वा हस्तावापं च पञ्चभिः
अथैनं सायकैस्तीक्ष्णैर्भृशं विव्याध मर्मणि २६
अथान्यद्धनुरादाय समरे भारसाधनम्
मद्रेश्वरो रणे जिष्णुं ताडयामास रोषितः २७
त्रिभिः शरैर्महाराज वासुदेवं च पञ्चभिः
भीमसेनं च नवभिर्बाह्वोरुरसि चार्पयत् २८
ततो द्रोणो महाराज मागधश्च महारथः
दुर्योधनसमादिष्टौ तं देशमुपजग्मतुः २९
यत्र पार्थो महाराज भीमसेनश्च पाण्डवः
कौरव्यस्य महासेनां जघ्नतुस्तौ महारथौ ३०

जयत्सेनस्तु समरे भीमं भीमायुधं युवा
विव्याध निशितैर्बाणैरष्टभिर्भरतर्षभ ३१
तं भीमो दशभिर्विद्ध्वा पुनर्विव्याध सप्तभिः
सारथिं चास्य भल्लेन रथनीडादपाहरत् ३२
उद्भ्रान्तैस्तुरगैः सोऽथ द्रवमाणैः समन्ततः
मागधोऽपहृतो राजा सर्वसैन्यस्य पश्यतः ३३
द्रोणस्तु विवरं लब्ध्वा भीमसेनं शिलीमुखैः
विव्याध बाणैः सुशितैः पञ्चषष्ट्या तमायसैः ३४
तं भीमः समरश्लाघी गुरुं पितृसमं रणे
विव्याध नवभिर्भल्लैस्तथा षष्ट्या च भारत ३५
अर्जुनस्तु सुशर्माणं विद्ध्वा बहुभिरायसैः
व्यधमत्तस्य तत्सैन्यं महाभ्राणि यथानिलः ३६
ततो भीष्मश्च राजा च सौबलश्च बृहद्बलः
अभ्यद्रवन्त संक्रुद्धा भीमसेनधनञ्जयौ ३७
तथैव पाण्डवाः शूरा धृष्टद्युम्नश्च पार्षतः
अभ्यद्रवन्रणे भीष्मं व्यादितास्यमिवान्तकम् ३८
शिखण्डी तु समासाद्य भारतानां पितामहम्
अभ्यद्रवत संहृष्टो भयं त्यक्त्वा यतव्रतम् ३९
युधिष्ठिरमुखाः पार्थाः पुरस्कृत्य शिखण्डिनम्
अयोधयन्रणे भीष्मं संहताः सह सृञ्जयैः ४०
तथैव तावकाः सर्वे पुरस्कृत्य यतव्रतम्
शिखण्डिप्रमुखान्पार्थान्योधयन्ति स्म संयुगे ४१
ततः प्रववृते युद्धं कौरवाणां भयावहम्
तत्र पाण्डुसुतैः सार्धं भीष्मस्य विजयं प्रति ४२
तावकानां रणे भीष्मो ग्लह आसीद्विशां पते
तत्र हि द्यूतमायातं विजयायेतराय वा ४३
धृष्टद्युम्नो महाराज सर्वसैन्यान्यचोदयत्
अभिद्रवत गाङ्गेयं मा भैष्ट नरसत्तमाः ४४
सेनापतिवचः श्रुत्वा पाण्डवानां वरूथिनी
भीष्ममेवाभ्ययात्तूर्णं प्राणांस्त्यक्त्वा महाहवे ४५

भीष्मोऽपि रथिनां श्रेष्ठः प्रतिजग्राह तां चमूम्
आपतन्तीं महाराज वेलामिव महोदधिः ४६
इति श्रीमहाभारते भीष्मपर्वणि दशाधिकशततमोऽध्यायः ११०

## एकादशाधिक शततमोऽध्यायः

धृतराष्ट्र उवाच
कथं शांतनवो भीष्मो दशमेऽहनि सञ्जय
अयुध्यत महावीर्यैः पाण्डवैः सहसृञ्जयैः १
कुरवश्च कथं युद्धे पाण्डवान्प्रत्यवारयन्
आचद्व मे महायुद्धं भीष्मस्याहवशोभिनः २
सञ्जय उवाच
कुरवः पाण्डवैः सार्धं यथायुध्यन्त भारत
यथा च तदभूद्युद्धं तत्ते वद्ध्यामि शृण्वतः ३
प्रेषिताः परलोकाय परमास्त्रैः किरीटिना
अहन्यहनि संप्राप्तास्तावकानां रथव्रजाः ४
यथाप्रतिज्ञं कौरव्यः स चापि समितिंजयः
पार्थानामकरोद्भीष्मः सततं समितिक्षयम् ५
कुरुभिः सहितं भीष्मं युध्यमानं महारथम्
अर्जुनं च सपाञ्चाल्यं दृष्ट्वा संशयिता जनाः ६
दशमेऽहनि तस्मिंस्तु भीष्मार्जुनसमागमे
अवर्तत महारौद्रः सततं समितिक्षयः ७
तस्मिन्नयुतशो राजन्भूयश्च स परंतपः
भीष्मः शांतनवो योधाञ्जघान परमास्त्रवित् ८
येषामज्ञातकल्पानि नामगोत्राणि पार्थिव
ते हतास्तत्र भीष्मेण शूराः सर्वेऽनिवर्तिनः ९
दशाहानि ततस्तप्त्वा भीष्मः पाण्डववाहिनीम्
निरविद्यत धर्मात्मा जीवितेन परंतपः १०
स क्षिप्रं वधमन्विच्छन्नात्मनोऽभिमुखं रणे
न हन्यां मानवश्रेष्ठान्संग्रामेऽभिमुखानिति ११
चिन्तयित्वा महाबाहुः पिता देवव्रतस्तव

अभ्याशस्थं महाराज पाण्डवं वाक्यमब्रवीत् १२
युधिष्ठिर महाप्राज्ञ सर्वशास्त्रविशारद
शृणु मे वचनं तात धर्म्यं स्वर्ग्यं च जल्पतः १३
निर्विण्णोऽस्मि भृशं तात देहेनानेन भारत
घ्नतश्च मे गतः कालः सुबहून्प्राणिनो रणे १४
तस्मात्पार्थं पुरोधाय पाञ्चालान्सृञ्जयांस्तथा
मद्वधे क्रियतां यत्नो मम चेदिच्छसि प्रियम् १५
तस्य तन्मतमाज्ञाय पाण्डवः सत्यदर्शनः
भीष्मं प्रतिययौ यत्तः संग्रामे सह सृञ्जयैः १६
धृष्टद्युम्नस्ततो राजन्पाण्डवश्च युधिष्ठिरः
श्रुत्वा भीष्मस्य तां वाचं चोदयामासतुर्बलम् १७
अभिद्रवत युध्यध्वं भीष्मं जयत संयुगे
रक्षिताः सत्यसंधेन जिष्णुना रिपुजिष्णुना १८
अयं चापि महेष्वासः पार्षतो वाहिनीपतिः
भीमसेनश्च समरे पालयिष्यति वो ध्रुवम् १९
न वै भीष्माद्भयं किंचित्कर्तव्यं युधि सृञ्जयाः
ध्रुवं भीष्मं विजेष्यामः पुरस्कृत्य शिखण्डिनम् २०
तथा तु समयं कृत्वा दशमेऽहनि पाण्डवाः
ब्रह्मलोकपरा भूत्वा संजग्मुः क्रोधमूर्छिताः २१
शिखण्डिनं पुरस्कृत्य पाण्डवं च धनंजयम्
भीष्मस्य पातने यत्नं परमं ते समास्थिताः २२
ततस्तव सुतादिष्टा नानाजनपदेश्वराः
द्रोणेन सहपुत्रेण सहसेना महाबलाः २३
दुःशासनश्च बलवान्सह सर्वैः सहोदरैः
भीष्मं समरमध्यस्थं पालयांचक्रिरे तदा २४
ततस्तु तावकाः शूराः पुरस्कृत्य यतव्रतम्
शिखण्डिप्रमुखान्पार्थान्योधयन्ति स्म संयुगे २५
चेदिभिश्च सपाञ्चालैः सहितो वानरध्वजः
ययौ शांतनवं भीष्मं पुरस्कृत्य शिखण्डिनम् २६
द्रोणपुत्रं शिनेर्नप्ता धृष्टकेतुस्तु पौरवम्

युधामन्युः सहामात्यं दुर्योधनमयोधयत् २७
विराटस्तु सहानीकः सहसेनं जयद्रथम्
वृद्धक्षत्रस्य दायादमाससाद परंतपः २८
मद्रराजं महेष्वासं सहसैन्यं युधिष्ठिरः
भीमसेनाभिगुप्तश्च नागानीकमुपाद्रवत् २९
अप्रधृष्यमनावार्यं सर्वशस्त्रभृतां वरम्
द्रोणं प्रति ययौ यत्तः पाञ्चाल्यः सह सोमकैः ३०
कर्णिकारध्वजं चापि सिंहकेतुररिंदमः
प्रत्युज्जगाम सौभद्रं राजपुत्रो बृहद्बलः ३१
शिखण्डिनं च पुत्रास्ते पाण्डवं च धनञ्जयम्
राजभिः समरे सार्धमभिपेतुर्जिघांसवः ३२
तस्मिन्नतिमहाभीमे सेनयोर्वै पराक्रमे
संप्रधावत्स्वनीकेषु मेदिनी समकम्पत ३३
तान्यनीकान्यनीकेषु समसज्जन्त भारत
तावकानां परेषां च दृष्ट्वा शांतनवं रणे ३४
ततस्तेषां प्रयततामन्योन्यमभिधावताम्
प्रादुरासीन्महाञ्शब्दो दिक्षु सर्वासु भारत ३५
शङ्खदुन्दुभिघोषैश्च वारणानां च बृंहितैः
सिंहनादैश्च सैन्यानां दारुणः समपद्यत ३६
सा च सर्वनरेन्द्राणां चन्द्रार्कसदृशी प्रभा
वीराङ्गदकिरीटेषु निष्प्रभा समपद्यत ३७
रजोमेघाश्च संजज्ञुः शस्त्रविद्युद्भिरावृताः
धनुषां चैव निर्घोषो दारुणः समपद्यत ३८
बाणशङ्खप्रणादाश्च भेरीणां च महास्वनाः
रथघोषश्च संजग्मुः सेनयोरुभयोरपि ३९
प्रासशक्त्यृष्टिसंघैश्च बाणौघैश्च समाकुलम्
निष्प्रकाशमिवाकाशं सेनयोः समपद्यत ४०
अन्योन्यं रथिनः पेतुर्वाजिनश्च महाहवे
कुञ्जराः कुञ्जराञ्जघ्नुः पदातींश्च पदातयः ४१
तदासीत्सुमहद्युद्धं कुरूणां पाण्डवैः सह

भीष्महेतोर्नरव्याघ्र श्येनयोरामिषे यथा ४२
तयोः समागमो घोरो बभूव युधि भारत
अन्योन्यस्य वधार्थाय जिगीषूणां रणाजिरे ४३
इति श्रीमहाभारते भीष्मपर्वणि एकादशाधिकशततमोऽध्यायः १११

## द्वादशाधिकशततमोऽध्यायः

सञ्जय उवाच
अभिमन्युर्महाराज तव पुत्रमयोधयत्
महत्या सेनया युक्तो भीष्महेतोः पराक्रमी १
दुर्योधनो रणे कार्ष्णिं नवभिर्नतपर्वभिः
आजघान रणे क्रुद्धः पुनश्चैनं त्रिभिः शरैः २
तस्य शक्तिं रणे कार्ष्णिर्मृत्योर्घोरामिव स्वसाम्
प्रेषयामास संक्रुद्धो दुर्योधनरथं प्रति ३
तामापतन्तीं सहसा घोररूपां विशां पते
द्विधा चिच्छेद ते पुत्रः क्षुरप्रेण महारथः ४
तां शक्तिं पतितां दृष्ट्वा कार्ष्णिः परमकोपनः
दुर्योधनं त्रिभिर्बाणैर्बाह्वोरुरसि चार्पयत् ५
पुनश्चैनं शरैर्घोरैराजघान स्तनान्तरे
दशभिर्भरतश्रेष्ठ दुर्योधनममर्षणम् ६
तद्युद्धमभवद्घोरं चित्ररूपं च भारत
ईक्षितृप्रीतिजननं सर्वपार्थिवपूजितम् ७
भीष्मस्य निधनार्थाय पार्थस्य विजयाय च
युयुधाते रणे वीरौ सौभद्रकुरुपुंगवौ ८
सात्यकिं रभसं युद्धे द्रौणिर्ब्राह्मणपुंगवः
आजघानोरसि क्रुद्धो नाराचेन परंतपः ९
शैनेयोऽपि गुरोः पुत्रं सर्वमर्मसु भारत
अताडयदमेयात्मा नवभिः कङ्कपत्रिभिः १०
अश्वत्थामा तु समरे सात्यकिं नवभिः शरैः
त्रिंशता च पुनस्तूर्णं बाह्वोरुरसि चार्पयत् ११
सोऽतिविद्धो महेष्वासो द्रोणपुत्रेण सात्वतः

द्रोणपुत्रं त्रिभिर्बाणैराजघान महायशाः १२
पौरवो धृष्टकेतुं च शरैरासाद्य संयुगे
बहुधा दारयांचक्रे महेष्वासं महारथम् १३
तथैव पौरवं युद्धे धृष्टकेतुर्महारथः
त्रिंशता निशितैर्बाणैर्विव्याध सुमहाबलः १४
पौरवस्तु धनुश्छित्त्वा धृष्टकेतोर्महारथः
ननाद बलवन्नादं विव्याध दशभिः शरैः १५
सोऽन्यत्कार्मुकमादाय पौरवं निशितैः शरैः
आजघान महाराज त्रिसप्तत्या शिलीमुखैः १६
तौ तु तत्र महेष्वासौ महामात्रौ महारथौ
महता शरवर्षेण परस्परमवर्षताम् १७
अन्योन्यस्य धनुश्छित्त्वा हयान्हत्वा च भारत
विरथावसियुद्धाय संगतौ तौ महारथौ १८
आर्षभे चर्मणी चित्रे शतचन्द्रपरिष्कृते
तारकाशतचित्रौ च निस्त्रिंशौ सुमहाप्रभौ १९
प्रगृह्य विमलौ राजंस्तावन्योन्यमभिद्रुतौ
वाशितासंगमे यत्तौ सिंहाविव महावने २०
मण्डलानि विचित्राणि गतप्रत्यागतानि च
चेरतुर्दर्शयन्तौ च प्रार्थयन्तौ परस्परम् २१
पौरवो धृष्टकेतुं तु शङ्खदेशे महासिना
ताडयामास संक्रुद्धस्तिष्ठ तिष्ठेति चाब्रवीत् २२
चेदिराजोऽपि समरे पौरवं पुरुषर्षभम्
आजघान शिताग्रेण जत्रुदेशे महासिना २३
तावन्योन्यं महाराज समासाद्य महाहवे
अन्योन्यवेगाभिहतौ निपेततुररिंदमौ २४
ततः स्वरथमारोप्य पौरवं तनयस्तव
जयत्सेनो रथे राजन्नपोवाह रणाजिरात् २५
धृष्टकेतुं च समरे माद्रीपुत्रः परंतपः
अपोवाह रणे राजन्सहदेवः प्रतापवान् २६
चित्रसेनः सुशर्माणं विद्ध्वा नवभिराशुगैः

पुनर्विव्याध तं षष्ट्या पुनश्च नवभिः शरैः २७
सुशर्मा तु रणे क्रुद्धस्तव पुत्रं विशां पते
दशभिर्दशभिश्चैव विव्याध निशितैः शरैः २८
चित्रसेनश्च तं राजंस्त्रिंशता नतपर्वणाम्
आजघान रणे क्रुद्धः स च तं प्रत्यविध्यत
भीष्मस्य समरे राजन्यशो मानं च वर्धयन् २९
सौभद्रो राजपुत्रं तु बृहद्बलमयोधयत्
आर्जुनिं कोसलेन्द्रस्तु विद्ध्वा पञ्चभिरायसैः
पुनर्विव्याध विंशत्या शरैः संनतपर्वभिः ३०
बृहद्बलं च सौभद्रो विद्ध्वा नवभिरायसैः
नाकम्पयत संग्रामे विव्याध च पुनः पुनः ३१
कौसल्यस्य पुनश्चापि धनुश्चिच्छेद फाल्गुनिः
आजघान शरैश्चैव त्रिंशता कङ्कपत्रिभिः ३२
सोऽन्यत्कार्मुकमादाय राजपुत्रो बृहद्बलः
फाल्गुनिं समरे क्रुद्धो विव्याध बहुभिः शरैः ३३
तयोर्युद्धं समभवद्भीष्महेतोः परंतप
संरब्धयोर्महाराज समरे चित्रयोधिनोः
यथा देवासुरे युद्धे मयवासवयोरभूत् ३४
भीमसेनो गजानीकं योधयन्बह्वशोभत
यथा शक्रो वज्रपाणिर्दारयन्पर्वतोत्तमान् ३५
ते वध्यमाना भीमेन मातङ्गा गिरिसंनिभाः
निपेतुरुर्व्यां सहिता नादयन्तो वसुन्धराम् ३६
गिरिमात्रा हि ते नागा भिन्नाञ्जनचयोपमाः
विरेजुर्वसुधां प्राप्य विकीर्णा इव पर्वताः ३७
युधिष्ठिरो महेष्वासो मद्रराजानमाहवे
महत्या सेनया गुप्तं पीडयामास संगतः ३८
मद्रेश्वरश्च समरे धर्मपुत्रं महारथम्
पीडयामास संरब्धो भीष्महेतोः पराक्रमी ३९
विराटं सैन्धवो राजा विद्ध्वा संनतपर्वभिः
नवभिः सायकैस्तीक्ष्णैस्त्रिंशता पुनरर्दयत् ४०

विराटश्च महाराज सैन्धवं वाहिनीमुखे
त्रिंशता निशितैर्बाणैराजघान स्तनान्तरे ४१
चित्रकार्मुकनिस्त्रिंशौ चित्रवर्मायुधध्वजौ
रेजतुश्चित्ररूपौ तौ संग्रामे मत्स्यसैन्धवौ ४२
द्रोणः पाञ्चालपुत्रेण समागम्य महारणे
महासमुदयं चक्रे शरैः सन्नतपर्वभिः ४३
ततो द्रोणो महाराज पार्षतस्य महद्धनुः
छित्त्वा पञ्चाशतेषूणां पार्षतं समविध्यत ४४
सोऽन्यत्कार्मुकमादाय पार्षतः परवीरहा
द्रोणस्य मिषतो युद्धे प्रेषयामास सायकान् ४५
ताञ्शराञ्शरसंघैस्तु संनिवार्य महारथः
द्रोणो द्रुपदपुत्राय प्राहिणोत्पञ्च सायकान् ४६
तस्य क्रुद्धो महाराज पार्षतः परवीरहा
द्रोणाय चिक्षेप गदां यमदण्डोपमां रणे ४७
तामापतन्तीं सहसा हेमपट्टविभूषिताम्
शरैः पञ्चाशता द्रोणो वारयामास संयुगे ४८
सा छिन्ना बहुधा राजन्द्रोणचापच्युतैः शरैः
चूर्णीकृता विशीर्यन्ती पपात वसुधातले ४९
गदां विनिहतां दृष्ट्वा पार्षतः शत्रुसूदनः
द्रोणाय शक्तिं चिक्षेप सर्वपारशवीं शुभाम् ५०
तां द्रोणो नवभिर्बाणैश्चिच्छेद युधि भारत
पार्षतं च महेष्वासं पीडयामास संयुगे ५१
एवमेतन्महायुद्धं द्रोणपार्षतयोरभूत्
भीष्मं प्रति महाराज घोररूपं भयानकम् ५२
अर्जुनः प्राप्य गाङ्गेयं पीडयन्निशितैः शरैः
अभ्यद्रवत संयत्तं वने मत्तमिव द्विपम् ५३
प्रत्युद्ययौ च तं पार्थं भगदत्तः प्रतापवान्
त्रिधा भिन्नेन नागेन मदान्धेन महाबलः ५४
तमापतन्तं सहसा महेन्द्रगजसंनिभम्
परं यत्नं समास्थाय बीभत्सुः प्रत्युपद्यत ५५

ततो गजगतो राजा भगदत्तः प्रतापवान्
अर्जुनं शरवर्षेण वारयामास संयुगे ५६
अर्जुनस्तु रणे नागमायान्तं रजतोपमम्
विमलैरायसैस्तीक्ष्णैरविध्यत महारणे ५७
शिखण्डिनं च कौन्तेयो याहि याहीत्यचोदयत्
भीष्मं प्रति महाराज जह्येनमिति चाब्रवीत् ५८
प्राग्ज्योतिषस्ततो हित्वा पाण्डवं पाण्डुपूर्वज
प्रययौ त्वरितो राजन्द्रुपदस्य रथं प्रति ५९
ततोऽजुनो महाराज भीष्ममभ्यद्रवद्द्रुतम्
शिखण्डिनं पुरस्कृत्य ततो युद्धमवर्तत ६०
ततस्ते तावकाः शूराः पाण्डवं रभसं रणे
सर्वेऽभ्यधावन्क्रोशन्तस्तदद्भुतमिवाभवत् ६१
नानाविधान्यनीकानि पुत्राणां ते जनाधिप
अर्जुनो व्यधमत्काले दिवीवाभ्राणि मारुतः ६२
शिखण्डी तु समासाद्य भरतानां पितामहम्
इषुभिस्तूर्णमव्यग्रो बहुभिः तं समाचिनोत् ६३
सोमकांश्च रणे भीष्मो जघ्ने पार्थपदानुगान्
न्यवारयत सैन्यं च पाण्डवानां महारथः ६४
रथाग्न्यगारश्चापार्चिरसिशक्तिगदेन्धनः
शरसंघमहाज्वालः क्षत्रियान्समरेऽदहत् ६५
यथा हि सुमहानग्निः कक्षे चरति सानिलः
तथा जज्वाल भीष्मोऽपि दिव्यान्यस्त्राण्युदीरयन् ६६
सुवर्णपुङ्खैरिषुभिः शितैः संनतपर्वभिः
नादयन्स दिशो भीष्मः प्रदिशश्च महायशाः ६७
पातयन्रथिनो राजन्गजां च सह सादिभिः
मुण्डतालवनानीव चकार स रथव्रजान् ६८
निर्मनुष्यान्रथान्राजन्गजानश्वांश्च संयुगे
चकार स तदा भीष्मः सर्वशस्त्रभृतां वरः ६९
तस्य ज्यातलनिर्घोषं विस्फूर्जितमिवाशनेः
निशम्य सर्वतो राजन्समकम्पन्त सैनिकाः ७०

अमोघा ह्यपतन्बाणाः पितुस्ते मनुजेश्वर
नासज्जन्त शरीरेषु भीष्मचापच्युताः शराः ७१
निर्मनुष्यान्रथान्राजन्सुयुक्ताञ्जवनैर्हयैः
वातायमानान्पश्याम ह्रियमाणान्विशां पते ७२
चेदिकाशिकरूषाणां सहस्राणि चतुर्दश
महारथाः समाख्याताः कुलपुत्रास्तनुत्यजः ७३
अपरावर्तिनः शूराः सुवर्णविकृतध्वजाः
संग्रामे भीष्ममासाद्य सवाजिरथकुञ्जराः
जग्मुस्ते परलोकाय व्यादितास्यमिवान्तकम् ७४
न तत्रासीन्महाराज सोमकानां महारथः
यः संप्राप्य रणे भीष्मं जीविते स्म मनो दधे ७५
तांश्च सर्वान्रणे योधान्प्रेतराजपुरं प्रति
नीतानमन्यन्त जना दृष्ट्वा भीष्मस्य विक्रमम् ७६
न कश्चिदेनं समरे प्रत्युद्याति महारथः
ऋते पाण्डुसुतं वीरं श्वेताश्वं कृष्णसारथिम्
शिखण्डिनं च समरे पाञ्चाल्यममितौजसम् ७७
शिखण्डी तु रणे भीष्ममासाद्य भरतर्षभ
दशभिर्दशभिर्बाणैराजघान महाहवे ७८
शिखण्डिनं तु गाङ्गेयः क्रोधदीप्तेन चक्षुषा
अवैक्षत कटाक्षेण निर्दहन्निव भारत ७९
स्त्रीत्वं तत्संस्मरन्राजन्सर्वलोकस्य पश्यतः
न जघान रणे भीष्मः स च तं नावबुद्धवान् ८०
अर्जुनस्तु महाराज शिखण्डिनमभाषत
अभित्वरस्व त्वरितो जहि चैनं पितामहम् ८१
किं ते विवक्षया वीर जहि भीष्मं महारथम्
न ह्यन्यमनुपश्यामि कंचिद्यौधिष्ठिरे बले ८२
यः शक्तः समरे भीष्मं योधयेत पितामहम्
ऋते त्वां पुरुषव्याघ्र सत्यमेतद्ब्रवीमि ते ८३
एवमुक्तस्तु पार्थेन शिखण्डी भरतर्षभ
शरैर्नानाविधैस्तूर्णं पितामहमुपाद्रवत् ८४

अचिन्तयित्वा तान्बाणान्पिता देवव्रतस्तव
अर्जुनं समरे क्रुद्धं वारयामास सायकैः ८५
तथैव च चमूं सर्वां पाण्डवानां महारथः
अप्रैषीत्समरे तीक्ष्णैः परलोकाय मारिष ८६
तथैव पाण्डवा राजन्सैन्येन महता वृताः
भीष्मं प्रच्छादयामासुर्मेघा इव दिवाकरम् ८७
स समन्तात्परिवृतो भारतो भरतर्षभ
निर्ददाह रणे शूरान्वनं वह्निरिव ज्वलन् ८८
तत्राद्भुतमपश्याम तव पुत्रस्य पौरुषम्
अयोधयत यत्पार्थं जुगोप च यतव्रतम् ८९
कर्मणा तेन समरे तव पुत्रस्य धन्विनः
दुःशासनस्य तुतुषुः सर्वे लोका महात्मनः ९०
यदेकः समरे पार्थान्सानुगान्समयोधयत्
न चैनं पाण्डवा युद्धे वारयामासुरुल्बणम् ९१
दुःशासनेन समरे रथिनो विरथीकृताः
सादिनश्च महाराज दन्तिनश्च महाबलाः ९२
विनिर्भिन्नाः शरैस्तीक्ष्णैर्निपेतुर्धरणीतले
शरातुरास्तथैवान्ये दन्तिनो विद्रुता दिशः ९३
यथाग्निरिन्धनं प्राप्य ज्वलेद्दीप्तार्चिरुल्बणः
तथा जज्वाल पुत्रस्ते पाण्डवान्वै विनिर्दहन् ९४
तं भारतमहामात्रं पाण्डवानां महारथः
जेतुं नोत्सहते कश्चिन्नाप्युद्यातुं कथंचन
ऋते महेन्द्रतनयं श्वेताश्वं कृष्णसारथिम् ९५
स हि तं समरे राजन्विजित्य विजयोऽर्जुनः
भीष्ममेवाभिदुद्राव सर्वसैन्यस्य पश्यतः ९६
विजितस्तव पुत्रोऽपि भीष्मबाहुव्यपाश्रयः
पुनः पुनः समाश्वस्य प्रायुध्यत रणोत्कटः
अर्जुनं च रणे राजन्योधयन्स व्यराजत ९७
शिखण्डी तु रणे राजन्विव्याधैव पितामहम्
शरैरशनिसंस्पर्शैस्तथा सर्पविषोपमैः ९८

न च तेऽस्य रुजं चक्रुः पितुस्तव जनेश्वर
स्मयमानश्च गाङ्गेयस्तान्बाणाञ्जगृहे तदा ९९
उष्णार्तो हि नरो यद्वज्जलधाराः प्रतीच्छति
तथा जग्राह गाङ्गेयः शरधाराः शिखण्डिनः १००
तं क्षत्रिया महाराज ददृशुर्घोरमाहवे
भीष्मं दहन्तं सैन्यानि पाण्डवानां महात्मनाम् १०१
ततोऽब्रवीत्तव सुतः सर्वसैन्यानि मारिष
अभिद्रवत संग्रामे फल्गुनं सर्वतो रथैः १०२
भीष्मो वः समरे सर्वान्पालयिष्यति धर्मवित्
ते भयं सुमहत्त्यक्त्वा पाण्डवान्प्रतियुध्यत १०३
एष तालेन दीप्तेन भीष्मस्तिष्ठति पालयन्
सर्वेषां धार्तराष्ट्राणां रणे शर्म च वर्म च १०४
त्रिदशापि समुद्युक्ता नालं भीष्मं समासितुम्
किमु पार्था महात्मानं मर्त्यभूतास्तथाबलाः
तस्माद्द्रवत हे योधाः फल्गुनं प्राप्य संयुगे १०५
अहमद्य रणे यत्तो योधयिष्यामि फल्गुनम्
सहितः सर्वतो यत्तैर्भवद्भिर्वसुधाधिपाः १०६
तच्छ्रुत्वा तु वचो राजंस्तव पुत्रस्य धन्विनः
अर्जुनं प्रति संयत्ता बलवन्तो महारथः १०७
ते विदेहाः कलिङ्गाश्च दाशेरकगणैः सह
अभिपेतुर्निषादाश्च सौवीराश्च महारणे १०८
बाह्लीका दरदाश्चैव प्राच्योदीच्याश्च मालवाः
अभीषाहाः शूरसेनाः शिबयोऽथ वसातयः १०९
शाल्वाश्रयास्त्रिगर्ताश्च अम्बष्ठाः केकयैः सह
अभिपेतू रणे पार्थं पतङ्गा इव पावकम् ११०
स तान्सर्वान्सहानीकान्महाराज महारथान्
दिव्यान्यस्त्राणि संचिन्त्य प्रसंधाय धनञ्जयः १११
स तैरस्त्रैर्महावेगैर्ददाहाशु महाबलः
शरप्रतापैर्बीभत्सुः पतङ्गानिव पावकः ११२
तस्य बाणसहस्राणि सृजतो दृढधन्विनः

दीप्यमानमिवाकाशे गाण्डीवं समदृश्यत ११३
ते शरार्ता महाराज विप्रकीर्णरथध्वजाः
नाभ्यवर्तन्त राजानः सहिता वानरध्वजम् ११४
सध्वजा रथिनः पेतुर्हयारोहा हयैः सह
गजाः सह गजारोहैः किरीटिशरताडिताः ११५
ततोऽजुनभुजोत्सृष्टैरावृतासीद्वसुंधरा
विद्रवद्भिश्च बहुधा बलै राज्ञां समन्ततः ११६
अथ पार्थो महाबाहुर्द्रावयित्वा वरूथिनीम्
दुःशासनाय समरे प्रेषयामास सायकान् ११७
ते तु भित्त्वा तव सुतं दुःशासनमयोमुखाः
धरणीं विविशुः सर्वे वल्मीकमिव पन्नगाः
हयांश्चास्य ततो जघ्ने सारथिं च न्यपातयत् ११८
विविंशतिं च विंशत्या विरथं कृतवान्प्रभो
आजघान भृशं चैव पञ्चभिर्नतपर्वभिः ११९
कृपं शल्यं विकर्णं च विद्ध्वा बहुभिरायसैः
चकार विरथांश्चैव कौन्तेयः श्वेतवाहनः १२०
एवं ते विरथाः पञ्च कृपः शल्यश्च मारिष
दुःशासनो विकर्णश्च तथैव च विविंशतिः
सम्प्राद्रवन्त समरे निर्जिताः सव्यसाचिना १२१
पूर्वाह्णे तु तथा राजन्पराजित्य महारथान्
प्रजज्वाल रणे पार्थो विधूम इव पावकः १२२
तथैव शरवर्षेण भास्करो रश्मिवानिव
अन्यानपि महाराज पातयामास पार्थिवान् १२३
पराङ्मुखीकृत्य तदा शरवर्षैर्महारथान्
प्रावर्तयत संग्रामे शोणितोदां महानदीम्
मध्येन कुरुसैन्यानां पाण्डवानां च भारत १२४
गजाश्च रथसंघाश्च बहुधा रथिभिर्हताः
रथाश्च निहता नागैर्नागा हयपदातिभिः १२५
अन्तरा छिद्यमानानि शरीराणि शिरांसि च
निपेतुर्दिक्षु सर्वासु गजाश्वरथयोधिनाम् १२६

छन्नमायोधनं रेजे कुराडलाङ्गदधारिभिः
पतितैः पात्यमानैश्च राजपुत्रैर्महारथैः १२७
रथनेमिनिकृत्ताश्च गजैश्चैवावपोथिताः
पादाताश्चाप्यदृश्यन्त साश्वाः सहयसादिनः १२८
गजाश्वरथसंघाश्च परिपेतुः समन्ततः
विशीर्णाश्च रथा भूमौ भग्नचक्रयुगध्वजाः १२९
तद्गजाश्वरथौघानां रुधिरेण समुक्षितम्
छन्नमायोधनं रेजे रक्ताभ्रमिव शारदम् १३०
श्वानः काकाश्च गृध्राश्च वृका गोमायुभिः सह
प्रणेदुर्भक्ष्यमासाद्य विकृताश्च मृगद्विजाः १३१
ववुर्बहुविधाश्चैव दिक्षु सर्वासु मारुताः
दृश्यमानेषु रक्षःसु भूतेषु विनदत्सु च १३२
काञ्चनानि च दामानि पताकाश्च महाधनाः
धूमायमाना दृश्यन्ते सहसा मारुतेरिताः १३३
श्वेतच्छत्रसहस्राणि सध्वजाश्च महारथाः
विनिकीर्णाः स्म दृश्यन्ते शतशोऽथ सहस्रशः
सपताकाश्च मातङ्गा दिशो जग्मुः शरातुराः १३४
क्षत्रियाश्च मनुष्येन्द्र गदाशक्तिधनुर्धराः
समन्ततो व्यदृश्यन्त पतिता धरणीतले १३५
ततो भीष्मो महाराज दिव्यमस्त्रमुदीरयन्
अभ्यधावत कौन्तेयं मिषतां सर्वधन्विनाम् १३६
तं शिखराडी रणे यत्तमभ्यधावत दंशितः
संजहार ततो भीष्मस्तदस्त्रं पावकोपमम् १३७
एतस्मिन्नेव काले तु कौन्तेयः श्वेतवाहनः
निजघ्ने तावकं सैन्यं मोहयित्वा पितामहम् १३८

इति श्रीमहाभारते भीष्मपर्वणि द्वादशाधिकशततमोऽध्यायः ११२

## त्रयोदशाधिक शततमोऽध्यायः

सञ्जय उवाच
एवं व्यूढेष्वनीकेषु भूयिष्ठमनुवर्तिषु

ब्रह्मलोकपराः सर्वे समपद्यन्त भारत १
न ह्यनीकमनीकेन समसज्जत संकुले
न रथा रथिभिः सार्धं न पदाताः पदातिभिः २
अश्वा नाश्वैरयुध्यन्त न गजा गजयोधिभिः
महान्व्यतिकरो रौद्रः सेनयोः समपद्यत ३
नरनागरथेष्वेवं व्यवकीर्णेषु सर्वशः
क्षये तस्मिन्महारौद्रे निर्विशेषमजायत ४
ततः शल्यः कृपश्चैव चित्रसेनश्च भारत
दुःशासनो विकर्णश्च रथानास्थाय सत्वराः
पाण्डवानां रणे शूरा ध्वजिनीं समकम्पयन् ५
सा वध्यमाना समरे पाण्डुसेना महात्मभिः
त्रातारं नाध्यगच्छद्वै मज्जमानेव नौर्जले ६
यथा हि शैशिरः कालो गवां मर्माणि कृन्तति
तथा पाण्डुसुतानां वै भीष्मो मर्माण्यकृन्तत ७
अतीव तव सैन्यस्य पार्थेन च महात्मना
नगमेघप्रतीकाशाः पतिता बहुधा गजाः ८
मृद्यमानाश्च दृश्यन्ते पार्थेन नरयूथपाः
इषुभिस्ताड्यमानाश्च नाराचैश्च सहस्रशः ९
पेतुरार्तस्वरं कृत्वा तत्र तत्र महागजाः
आबद्धाभरणैः कायैर्निहतानां महात्मनाम् १०
छन्नमायोधनं रेजे शिरोभिश्च सकुण्डलैः
तस्मिन्नतिमहाभीमे राजन्वीरवरक्षये
भीष्मे च युधि विक्रान्ते पाण्डवे च धनञ्जये ११
ते पराक्रान्तमालोक्य राजन्युधि पितामहम्
न न्यवर्तन्त कौरव्या ब्रह्मलोकपुरस्कृताः १२
इच्छन्तो निधनं युद्धे स्वर्गं कृत्वा परायणम्
पाण्डवानभ्यवर्तन्त तस्मिन्वीरवरक्षये १३
पाण्डवापि महाराज स्मरन्तो विविधान्बहून्
क्लेशान्कृतान्सपुत्रेण त्वया पूर्वं नराधिप १४
भयं त्यक्त्वा रणे शूरा ब्रह्मलोकपुरस्कृताः

तावकांस्तव पुत्रांश्च योधयन्ति स्म हृष्टवत् १५
सेनापतिस्तु समरे प्राह सेनां महारथः
अभिद्रवत गाङ्गेयं सोमकाः सृञ्जयैः सह १६
सेनापतिवचः श्रुत्वा सोमकाः सह सृञ्जयैः
अभ्यद्रवन्त गाङ्गेयं शस्त्रवृष्ट्या समन्ततः १७
वध्यमानस्ततो राजन्पिता शान्तनवस्तव
अमर्षवशमापन्नो योधयामास सृञ्जयान् १८
तस्य कीर्तिमतस्तात पुरा रामेण धीमता
सम्प्रदत्तास्त्रशिक्षा वै परानीकविनाशिनी १९
स तां शिक्षामधिष्ठाय कृत्वा परबलक्षयम्
अहन्यहनि पार्थानां वृद्धः कुरुपितामहः
भीष्मो दश सहस्राणि जघान परवीरहा २०
तस्मिंस्तु दिवसे प्राप्ते दशमे भरतर्षभ
भीष्मेणैकेन मत्स्येषु पाञ्चालेषु च संयुगे
गजाश्वममितं हत्वा हताः सप्त महारथाः २१
हत्वा पञ्च सहस्राणि रथिनां प्रपितामहः
नराणां च महायुद्धे सहस्राणि चतुर्दश २२
तथा दन्तिसहस्रं च हयानामयुतं पुनः
शिक्षाबलेन निहतं पित्रा तव विशां पते २३
ततः सर्वमहीपानां क्षोभयित्वा वरूथिनीम्
विराटस्य प्रियो भ्राता शतानीको निपातितः २४
शतानीकं च समरे हत्वा भीष्मः प्रतापवान्
सहस्राणि महाराज राज्ञां भल्लैर्न्यपातयत् २५
ये च केचन पार्थानामभियाता धनञ्जयम्
राजानो भीष्ममासाद्य गतास्ते यमसादनम् २६
एवं दश दिशो भीष्मः शरजालैः समन्ततः
अतीत्य सेनां पार्थानामवतस्थे चमूमुखे २७
स कृत्वा सुमहत्कर्म तस्मिन्वै दशमेऽहनि
सेनयोरन्तरे तिष्ठन्प्रगृहीतशरासनः २८
न चैनं पार्थिवा राजञ्शेकुः केचिन्निरीक्षितुम्

मध्यं प्राप्तं यथा ग्रीष्मे तपन्तं भास्करं दिवि २९
यथा दैत्यचमूं शक्रस्तापयामास संयुगे
तथा भीष्मः पाण्डवेयांस्तापयामास भारत ३०
तथा च तं पराक्रान्तमालोक्य मधुसूदनः
उवाच देवकीपुत्रः प्रीयमाणो धनञ्जयम् ३१
एष शान्तनवो भीष्मः सेनयोरन्तरे स्थितः
नानिहत्य बलादेनं विजयस्ते भविष्यति ३२
यत्तः संस्तम्भयस्वैनं यत्रैषा भिद्यते चमूः
न हि भीष्मशरानन्यः सोढुमुत्सहते विभो ३३
ततस्तस्मिन्क्षणे राजंश्चोदितो वानरध्वजः
सध्वजं सरथं साश्वं भीष्ममन्तर्दधे शरैः ३४
स चापि कुरुमुख्यानामृषभः पाण्डवेरितान्
शरव्रातैः शरव्रातान्बहुधा विदुधाव तान् ३५
तेन पाञ्चालराजश्च धृष्टकेतुश्च वीर्यवान्
पाण्डवो भीमसेनश्च धृष्टद्युम्नश्च पार्षतः ३६
यमौ च चेकितानश्च केकयाःपञ्च चैव ह
सात्यकिश्च महाराज सौभद्रोऽथ घटोत्कचः ३७
द्रौपदेयाः शिखण्डी च कुन्तिभोजश्च वीर्यवान्
सुशर्मा च विराटश्च पाण्डवेया महाबलाः ३८
एते चान्ये च बहवः पीडिता भीष्मसायकैः
समुद्धृताः फल्गुनेन निमग्नाः शोकसागरे ३९
ततः शिखण्डी वेगेन प्रगृह्य परमायुधम्
भीष्ममेवाभिदुद्राव रक्ष्यमाणः किरीटिना ४०
ततोऽस्यानुचरान्हत्वा सर्वान्रणविभागवित्
भीष्ममेवाभिदुद्राव बीभत्सुरपराजितः ४१
सात्यकिश्चेकितानश्च धृष्टद्युम्नश्च पार्षतः
विराटो द्रुपदश्चैव माद्रीपुत्रौ च पाण्डवौ
दुद्रुवुर्भीष्ममेवाजौ रक्षिता दृढधन्वना ४२
अभिमन्युश्च समरे द्रौपद्याः पञ्च चात्मजाः
दुद्रुवुः समरे भीष्मं समुद्यतमहायुधाः ४३

ते सर्वे दृढधन्वानः संयुगेष्वपलायिनः
बहुधा भीष्ममानर्छन्मार्गणैः कृतमार्गणाः ४४
विधूय तान्बाणगणान्ये मुक्ताः पार्थिवोत्तमैः
पाण्डवानामदीनात्मा व्यगाहत वरूथिनीम्
कृत्वा शरविघातं च क्रीडन्निव पितामहः ४५
नाभिसंधत्त पाञ्चाल्यं स्मयमानो मुहुर्मुहुः
स्त्रीत्वं तस्यानुसंस्मृत्य भीष्मो बाणाञ्शिखण्डिनः
जघान द्रुपदानीके रथान्सप्त महारथः ४६
ततः किलकिलाशब्दः क्षणेन समपद्यत
मत्स्यपाञ्चालचेदीनां तमेकमभिधावताम् ४७
ते वराश्वरथव्रातैर्वारणैः सपदातिभिः
तमेकं छादयामासुर्मेघा इव दिवाकरम्
भीष्मं भागीरथीपुत्रं प्रतपन्तं रणे रिपून् ४८
ततस्तस्य च तेषां च युद्धे देवासुरोपमे
किरीटी भीष्ममानर्छत्पुरस्कृत्य शिखण्डिनम् ४९
इति श्रीमहाभारते भीष्मपर्वणि त्रयोदशाधिकशततमोऽध्यायः ११३

## चतुर्दशाधिक शततमोऽध्यायः

सञ्जय उवाच
एवं ते पाण्डवाः सर्वे पुरस्कृत्य शिखण्डिनम्
विव्यधुः समरे भीष्मं परिवार्य समन्ततः १
शतघ्नीभिः सुघोराभिः पट्टिशैः सपरश्वधैः
मुद्गरैर्मुसलैः प्रासैः क्षेपणीभिश्च सर्वशः २
शरैः कनकपुङ्खैश्च शक्तितोमरकम्पनैः
नाराचैर्वत्सदन्तैश्च भुशुण्डीभिश्च भारत
अताडयन्रणे भीष्मं सहिताः सर्वसृञ्जयाः ३
स विशीर्णतनुत्राणः पीडितो बहुभिस्तदा
विव्यथे नैव गाङ्गेयो भिद्यमानेषु मर्मसु ४
स दीप्तशरचापार्चिरस्त्रप्रसृतमारुतः
नेमिनिर्ह्लादसंनादो महास्त्रोदयपावकः ५

चित्रचापमहाज्वालो वीरक्षयमहेन्धनः
युगान्ताग्निसमो भीष्मः परेषां समपद्यत ६
निपत्य रथसंघानामन्तरेण विनिःसृतः
दृश्यते स्म नरेन्द्राणां पुनर्मध्यगतश्चरन् ७
ततः पाञ्चालराजं च धृष्टकेतुमतीत्य च
पाण्डवानीकिनीमध्यमाससाद स वेगितः ८
ततः सात्यकिभीमौ च पाण्डवं च धनञ्जयम्
द्रुपदं च विराटं च धृष्टद्युम्नं च पार्षतम् ९
भीमघोषैर्महावेगैर्वैरिवारणभेदिभिः
षडेतान्षड्भिरानर्छद्भास्करप्रतिमैः शरैः १०
तस्य ते निशितान्बाणान्संनिवार्य महारथाः
दशभिर्दशभिर्भीष्ममर्दयामासुरोजसा ११
शिखण्डी तु रणे बाणान्यान्मुमोच महाव्रते
ते भीष्मं विविशुस्तूर्णं स्वर्णपुङ्खाः शिलाशिताः १२
ततः किरीटी संरब्धो भीष्ममेवाभ्यवर्तत
शिखण्डिनं पुरस्कृत्य धनुश्चास्य समाच्छिनत् १३
भीष्मस्य धनुषश्छेदं नामृष्यन्त महारथाः
द्रोणश्च कृतवर्मा च सैन्धवश्च जयद्रथः १४
भूरिश्रवाः शलः शल्यो भगदत्तस्तथैव च
सप्तैते परमक्रुद्धाः किरीटिनमभिद्रुताः १५
उत्तमास्त्राणि दिव्यानि दर्शयन्तो महारथाः
अभिपेतुर्भृशं क्रुद्धाश्छादयन्त स्म पाण्डवान् १६
तेषामापततां शब्दः शुश्रुवे फल्गुनं प्रति
उद्वृत्तानां यथा शब्दः समुद्राणां युगक्षये १७
हतानयत गृह्णीत युध्यतापि च कृन्तत
इत्यासीत्तुमुलः शब्दः फल्गुनस्य रथं प्रति १८
तं शब्दं तुमुलं श्रुत्वा पाण्डवानां महारथाः
अभ्यधावन्परीप्सन्तः फल्गुनं भरतर्षभ १९
सात्यकिर्भीमसेनश्च धृष्टद्युम्नश्च पार्षतः
विराटद्रुपदौ चोभौ राक्षसश्च घटोत्कचः २०

अभिमन्युश्च संक्रुद्धः सप्तैते क्रोधमूर्छिताः
समभ्यधावंस्त्वरिताश्चित्रकार्मुकधारिणः २१
तेषां समभवद्युद्धं तुमुलं लोमहर्षणम्
संग्रामे भरतश्रेष्ठ देवानां दानवैरिव २२
शिखण्डी तु रथश्रेष्ठो रक्ष्यमाणः किरीटिना
अविध्यद्दशभिर्भीष्मं छिन्नधन्वानमाहवे
सारथिं दशभिश्चास्य ध्वजं चैकेन चिच्छिदे २३
सोऽन्यत्कार्मुकमादाय गाङ्गेयो वेगवत्तरम्
तदप्यस्य शितैर्भल्लैस्त्रिभिश्चिच्छेद फल्गुनः २४
एवं स पाण्डवः क्रुद्ध आत्तमात्तं पुनः पुनः
धनुर्भीष्मस्य चिच्छेद सव्यसाची परन्तपः २५
स च्छिन्नधन्वा संक्रुद्धः सृक्किणी परिसंलिहन्
शक्तिं जग्राह संक्रुद्धो गिरीणामपि दारणीम्
तां च चिक्षेप संक्रुद्धः फल्गुनस्य रथं प्रति २६
तामापतन्तीं सम्प्रेक्ष्य ज्वलन्तीमशनीमिव
समादत्त शितान्भल्लान्पञ्च पाण्डवनन्दनः २७
तस्य चिच्छेद तां शक्तिं पञ्चधा पञ्चभिः शरैः
संक्रुद्धो भरतश्रेष्ठ भीष्मबाहुबलेरिताम् २८
सा पपात परिच्छिन्ना संक्रुद्धेन किरीटिना
मेघवृन्दपरिभ्रष्टा विच्छिन्नेव शतह्रदा २९
छिन्नां तां शक्तिमालोक्य भीष्मः क्रोधसमन्वितः
अचिन्तयद्रणे वीरो बुद्ध्या परपुरञ्जयः ३०
शक्तोऽह धनुषैकेन निहन्तुं सर्वपाण्डवान्
यद्येषां न भवेद्गोप्ता विष्वक्सेनो महाबलः ३१
कारणद्वयमास्थाय नाहं योत्स्यामि पाण्डवैः
अवध्यत्वाच्च पाण्डूनां स्त्रीभावाच्च शिखण्डिनः ३२
पित्रा तुष्टेन मे पूर्वं यदा कालीमुदावहत्
स्वच्छन्दमरणं दत्तमवध्यत्वं रणे तथा
तस्मान्मृत्युमहं मन्ये प्राप्तकालमिवात्मनः ३३
एवं ज्ञात्वा व्यवसितं भीष्मस्यामिततेजसः

ऋषयो वसवश्चैव वियत्स्था भीष्ममब्रुवन् ३४
यत्ते व्यवसितं वीर अस्माकं सुमहत्प्रियम्
तत्कुरुष्व महेष्वास युद्धाद्बुद्धिं निवर्तय ३५
तस्य वाक्यस्य निधने प्रादुरासीच्छिवोऽनिलः
अनुलोमः सुगन्धी च पृषतैश्च समन्वितः ३६
देवदुन्दुभयश्चैव संप्रणेदुर्महास्वनाः
पपात पुष्पवृष्टिश्च भीष्मस्योपरि पार्थिव ३७
न च तच्छुश्रुवे कश्चित्तेषां संवदतां नृप
ऋते भीष्मं महाबाहुं मां चापि मुनितेजसा ३८
संभ्रमश्च महानासीत्त्रिदशानां विशां पते
पतिष्यति रथाद्भीष्मे सर्वलोकप्रिये तदा ३९
इति देवगणानां च श्रुत्वा वाक्यं महामनाः
ततः शांतनवो भीष्मो बीभत्सुं नाभ्यवर्तत
भिद्यमानः शितैर्बाणैः सर्वावरणभेदिभिः ४०
शिखण्डी तु महाराज भरतानां पितामहम्
आजघानोरसि क्रुद्धो नवभिर्निशितैः शरैः ४१
स तेनाभिहतः संख्ये भीष्मः कुरुपितामहः
नाकम्पत महाराज क्षितिकम्पे यथाचलः ४२
ततः प्रहस्य बीभत्सुर्व्याक्षिपन्गाण्डिवं धनुः
गाङ्गेयं पञ्चविंशत्या क्षुद्रकाणां समर्पयत् ४३
पुनः शरशतेनैनं त्वरमाणो धनंजयः
सर्वगात्रेषु संक्रुद्धः सर्वमर्मस्वताडयत् ४४
एवमन्यैरपि भृशं वध्यमानो महारणे
न चक्रुस्ते रुजं तस्य रुक्मपुङ्खाः शिलाशिताः ४५
ततः किरीटी संरब्धो भीष्ममेवाभ्यवर्तत
शिखण्डिनं पुरस्कृत्य धनुश्चास्य समाच्छिनत् ४६
अथैनं दशभिर्विद्ध्वा ध्वजमेकेन चिच्छिदे
सारथिं विशिखैश्चास्य दशभिः समकम्पयत् ४७
सोऽन्यत्कार्मुकमादत्त गाङ्गेयो बलवत्तरम्
तदप्यस्य शितैर्भल्लैस्त्रिधा त्रिभिरुपानुदत्

निमेषान्तरमात्रेण आत्तमात्तं महारणे ४८
एवमस्य धनूंष्याजौ चिच्छेद सुबहून्यपि
ततः शान्तनवो भीष्मो बीभत्सुं नाभ्यवर्तत ४९
अथैनं पञ्चविंशत्या क्षुद्रकाणां समर्दयत्
सोऽतिविद्धो महेष्वासो दुःशासनमभाषत ५०
एष पार्थो रणे क्रुद्धः पाण्डवानां महारथः
शरैरनेकसाहस्रैर्मामेवाभ्यसते रणे ५१
न चैष शक्यः समरे जेतुं वज्रभृता अपि
न चापि सहिता वीरा देवदानवराक्षसाः
मां चैव शक्ता निर्जेतुं किमु मर्त्याः सुदुर्बलाः ५२
एवं तयोः संवदतोः फल्गुनो निशितैः शरैः
शिखण्डिनं पुरस्कृत्य भीष्मं विव्याध संयुगे ५३
ततो दुःशासनं भूयः स्मयमानोऽभ्यभाषत
अतिविद्धः शितैर्बाणैर्भृशं गाण्डीवधन्वना ५४
वज्राशनिसमस्पर्शाः शिताग्राः संप्रवेशिताः
विमुक्ता अव्यवच्छिन्ना नेमे बाणाः शिखण्डिनः ५५
निकृन्तमाना मर्माणि दृढावरणभेदिनः
मुसलानीव मे घ्नन्ति नेमे बाणाः शिखण्डिनः ५६
ब्रह्मदण्डसमस्पर्शा वज्रवेगा दुरासदाः
मम प्राणानारुजन्ति नेमे बाणाः शिखण्डिनः ५७
भुजगा इव संक्रुद्धा लेलिहाना विषोल्बणाः
ममाविशन्ति मर्माणि नेमे बाणाः शिखण्डिनः ५८
नाशयन्तीव मे प्राणान्यमदूता इवाहिताः
गदापरिघसंस्पर्शा नेमे बाणाः शिखण्डिनः ५९
कृन्तन्ति मम गात्राणि माघमासे गवामिव
अर्जुनस्य इमे बाणा नेमे बाणाः शिखण्डिनः ६०
सर्वे ह्यपि न मे दुःखं कुर्युरन्ये नराधिपाः
वीरं गाण्डीवधन्वानमृते जिष्णुं कपिध्वजम् ६१
इति ब्रुवञ्शान्तनवो दिधक्षुरिव पाण्डवम्
सविष्फुलिङ्गां दीप्ताग्रां शक्तिं चिक्षेप भारत ६२

तामस्य विशिखैश्छित्वा त्रिधा त्रिभिरपातयत्
पश्यतां कुरुवीराणां सर्वेषां तत्र भारत ६३
चर्माथादत्त गाङ्गेयो जातरूपपरिष्कृतम्
खड्गं चान्यतरं प्रेप्सुर्मृत्योरग्रे जयाय वा ६४
तस्य तच्छतधा चर्म व्यधमद्दंशितात्मनः
रथादनवरूढस्य तदद्भुतमिवाभवत् ६५
विनद्योच्चैः सिंह इव स्वान्यनीकान्यचोदयत्
अभिद्रवत गाङ्गेयं मा वोऽस्तु भयमण्वपि ६६
अथ ते तोमरैः प्रासैर्बाणौघैश्च समन्ततः
पट्टिशैश्च सुनिस्त्रिंशैर्नानाप्रहरणैस्तथा ६७
वत्सदन्तैश्च भल्लैश्च तमेकमभिदुद्रुवुः
सिंहनादस्ततो घोरः पाण्डवानामजायत ६८
तथैव तव पुत्राश्च राजन्भीष्मजयैषिणः
तमेकमभ्यवर्तन्त सिंहनादांश्च नेदिरे ६९
तत्रासीत्तुमुलं युद्धं तावकानां परैः सह
दशमेऽहनि राजेन्द्र भीष्मार्जुनसमागमे ७०
आसीद्गाङ्ग इवावर्तो मुहूर्तमुदधेरिव
सैन्यानां युध्यमानानां निघ्नतामितरेतरम् ७१
अगम्यरूपा पृथिवी शोणिताक्ता तदाभवत्
समं च विषमं चैव न प्राज्ञायत किंचन ७२
योधानामयुतं हत्वा तस्मिन्स दशमेऽहनि
अतिष्ठदाहवे भीष्मो भिद्यमानेषु मर्मसु ७३
ततः सेनामुखे तस्मिन्स्थितः पार्थो धनंजयः
मध्येन कुरुसैन्यानां द्रावयामास वाहिनीम् ७४
वयं श्वेतहयाद्भीताः कुन्तीपुत्राद्धनंजयात्
पीड्यमानाः शितैः शस्त्रैः प्रद्रवाम महारणात् ७५
सौवीराः कितवाः प्राच्याः प्रतीच्योदीच्यमालवाः
अभीषाहाः शूरसेनाः शिबयोऽथ वसातयः ७६
शाल्वाश्रयास्त्रिगर्ताश्च अम्बष्ठाः केकयैः सह
द्वादशैते जनपदाः शरार्ता व्रणपीडिताः

संग्रामे न जहुर्भीष्मं युध्यमानं किरीटिना ७७
ततस्तमेकं बहवः परिवार्य समन्ततः
परिकाल्य कुरून्सर्वाञ्शरवर्षैरवाकिरन् ७८
निपातयत गृह्णीत विध्यताथ च कर्षत
इत्यासीत्तुमुलः शब्दो राजन्भीष्मरथं प्रति ७९
अभिहत्य शरौघैस्तं शतशोऽथ सहस्रशः
न तस्यासीदनिर्भिन्नं गात्रेष्वङ्गुलमात्रकम् ८०
एवं विभो तव पिता शरैर्विशकलीकृतः
शिताग्रैः फल्गुनेनाजौ प्राक्शिराः प्रापतद्रथात्
किञ्चिच्छेषे दिनकरे पुत्राणां तव पश्यताम् ८१
हा हेति दिवि देवानां पार्थिवानां च सर्वशः
पतमाने रथाद्भीष्मे बभूव सुमहान्स्वनः ८२
तं पतन्तमभिप्रेक्ष्य महात्मानं पितामहम्
सह भीष्मेण सर्वेषां प्रापतन्हृदयानि नः ८३
स पपात महाबाहुर्वसुधामनुनादयन्
इन्द्रध्वज इवोत्सृष्टः केतुः सर्वधनुष्मताम्
धरणीं नास्पृशच्चापि शरसंघैः समाचितः ८४
शरतल्पे महेष्वासं शयानं पुरुषर्षभम्
रथात्प्रपतितं चैनं दिव्यो भावः समाविशत् ८५
अभ्यवर्षत पर्जन्यः प्राकम्पत च मेदिनी
पतन्स ददृशे चापि खर्वितं च दिवाकरम् ८६
संज्ञां चैवालभद्वीरः कालं संचिन्त्य भारत
अन्तरिक्षे च शुश्राव दिव्यां वाचं समन्ततः ८७
कथं महात्मा गाङ्गेयः सर्वशस्त्रभृतां वरः
कालं कर्ता नरव्याघ्रः संप्राप्ते दक्षिणायने ८८
स्थितोऽस्मीति च गाङ्गेयस्तच्छ्रुत्वा वाक्यमब्रवीत्
धारयामास च प्राणान्पतितोऽपि हि भूतले
उत्तरायणमन्विच्छन्भीष्मः कुरुपितामहः ८९
तस्य तन्मतमाज्ञाय गङ्गा हिमवतः सुता
महर्षीन्हंसरूपेण प्रेषयामास तत्र वै ९०

ततः संपातिनो हंसास्त्वरिता मानसौकसः
आजग्मुः सहिता द्रष्टुं भीष्मं कुरुपितामहम्
यत्र शेते नरश्रेष्ठः शरतल्पे पितामहः ९१
ते तु भीष्मं समासाद्य मुनयो हंसरूपिणः
अपश्यञ्शरतल्पस्थं भीष्मं कुरुपितामहम् ९२
ते तं दृष्ट्वा महात्मानं कृत्वा चापि प्रदक्षिणम्
गाङ्गेयं भरतश्रेष्ठं दक्षिणेन च भास्करम् ९३
इतरेतरमामन्त्र्य प्राहुस्तत्र मनीषिणः
भीष्म एव महात्मा सन्संस्थिता दक्षिणायने ९४
इत्युक्त्वा प्रस्थितान्हंसान्दक्षिणामभितो दिशम्
संप्रेक्ष्य वै महाबुद्धिश्चिन्तयित्वा च भारत ९५
तानब्रवीच्छांतनवो नाहं गन्ता कथञ्चन
दक्षिणावृत्त आदित्ये एतन्मे मनसि स्थितम् ९६
गमिष्यामि स्वकं स्थानमासीद्यन्मे पुरातनम्
उदगावृत्त आदित्ये हंसाः सत्यं ब्रवीमि वः ९७
धारयिष्याम्यहं प्राणानुत्तरायणकाङ्क्षया
एश्वर्यभूतः प्राणानामुत्सर्गे नियतो ह्यहम्
तस्मात्प्राणान्धारयिष्ये मुमूर्षुरुदगायने ९८
यश्च दत्तो वरो मह्यं पित्रा तेन महात्मना
छन्दतो मृत्युरित्येवं तस्य चास्तु वरस्तथा ९९
धारयिष्ये ततः प्राणानुत्सर्गे नियते सति
इत्युक्त्वा तांस्तदा हंसानशेत शरतल्पगः १००
एवं कुरूणां पतिते शृङ्गे भीष्मे महौजसि
पाण्डवाः सृञ्जयाश्चैव सिंहनादं प्रचक्रिरे १०१
तस्मिन्हते महासत्त्वे भरतानाममध्यमे
न किञ्चित्प्रत्यपद्यन्त पुत्रास्ते भरतर्षभ
संमोहश्चैव तुमुलः कुरूणामभवत्तदा १०२
नृपा दुर्योधनमुखा निःश्वस्य रुरुदुस्ततः
विषादाच्च चिरं कालमतिष्ठन्विगतेन्द्रियाः १०३
दध्युश्चैव महाराज न युद्धे दधिरे मनः

ऊरुग्राहगृहीताश्च नाभ्यधावन्त पाराडवान् १०४
अवध्ये शंतनोः पुत्रे हते भीष्मे महौजसि
अभावः सुमहान्राजकुरूनागादतन्द्रितः १०५
हतप्रवीराश्च वयं निकृत्ताश्च शितैः शरैः
कर्तव्यं नाभिजानीमो निर्जिताः सव्यसाचिना १०६
पाराडवास्तु जयं लब्ध्वा परत्र च परां गतिम्
सर्वे दध्मुर्महाशङ्खाञ्शूराः परिघबाहवः
सोमकाश्च सपाञ्चालाः प्राहृष्यन्त जनेश्वर १०७
ततस्तूर्यसहस्रेषु नदत्सु सुमहाबलः
आस्फोटयामास भृशं भीमसेनो ननर्त च १०८
सेनयोरुभयोश्चापि गाङ्गेये विनिपातिते
संन्यस्य वीराः शस्त्राणि प्राध्यायन्त समन्ततः १०९
प्राक्रोशन्प्रापतंश्चान्ये जग्मुर्मोहं तथापरे
क्षत्रं चान्येऽभ्यनिन्दन्त भीष्मं चैकेऽभ्यपूजयन् ११०
ऋषयः पितरश्चैव प्रशशंसुर्महाव्रतम्
भरतानां च ये पूर्वे ते चैनं प्रशशंसिरे १११
महोपनिषदं चैव योगमास्थाय वीर्यवान्
जपञ्शान्तनवो धीमान्कालाकाङ्क्षी स्थितोऽभवत् ११२
इति श्रीमहाभारते भीष्मपर्वणि चतुर्दशाधिकशततमोऽध्यायः ११४

## पञ्चदशाधिकशततमोऽध्यायः

धृतराष्ट्र उवाच
कथमासंस्तदा योद्धा हीना भीष्मेण सञ्जय
बलिना देवकल्पेन गुर्वर्थे ब्रह्मचारिणा १
तदैव निहतान्मन्ये कुरूनन्यांश्च पार्थिवान्
न प्राहरद्यदा भीष्मो घृणित्वाद्द्रुपदात्मजे २
ततो दुःखतरं मन्ये किमन्यत्प्रभविष्यति
यदद्य पितरं श्रुत्वा निहतं मम दुर्मतेः ३
अश्मसारमयं नूनं हृदयं मम सञ्जय
श्रुत्वा विनिहतं भीष्मं शतधा यन्न दीर्यते ४

पुनः पुनर्न मृष्यामि हतं देवव्रतं रणे
न हतो जामदग्न्येन दिव्यैरस्त्रैः स्म यः पुरा ५
यदद्य निहतेनाजौ भीष्मेण जयमिच्छता
चेष्टितं नरसिंहेन तन्मे कथय संजय ६
सञ्जय उवाच
सायाह्ने न्यपतद्भूमौ धार्तराष्ट्रान्विषादयन्
पाञ्चालानां ददद्धर्षं कुरुवृद्धः पितामहः ७
स शेते शरतल्पस्थो मेदिनीमस्पृशंस्तदा
भीष्मे रथात्प्रपतितः प्रच्युतो धरणीतले ८
हा हेति तुमुलः शब्दो भूतानां समपद्यत
सीमावृक्षे निपतिते कुरूणां समितिक्षये ९
उभयोः सेनयो राजन्क्षत्रियान्भयमाविशत्
भीष्मं शान्तनवं दृष्ट्वा विशीर्णकवचध्वजम्
कुरवः पर्यवर्तन्त पाण्डवाश्च विशां पते १०
खं तमोवृतमासीच्च नासीद्भानुमतः प्रभा
ररास पृथिवी चैव भीष्मे शान्तनवे हते ११
अयं ब्रह्मविदां श्रेष्ठो अयं ब्रह्मविदां गतिः
इत्यभाषन्त भूतानि शयानं भरतर्षभम् १२
अयं पितरमाज्ञाय कामार्तं शन्तनुं पुरा
ऊर्ध्वरेतसमात्मानं चकार पुरुषर्षभः १३
इति स्म शरतल्पस्थं भरतानाममध्यमम्
ऋषयः पर्यधावन्त सहिताः सिद्धचारणैः १४
हते शान्तनवे भीष्मे भरतानां पितामहे
न किञ्चित्प्रत्यपद्यन्त पुत्रास्तव च भारत १५
विवर्णवदनाश्चासन्नतश्रीकाश्च भारत
अतिष्ठन्व्रीडिताश्चैव ह्रिया युक्ता ह्यधोमुखाः १६
पाण्डवाश्च जयं लब्ध्वा संग्रामशिरसि स्थिताः
सर्वे दध्मुर्महाशङ्खान्हेमजालपरिष्कृतान् १७
भृशं तूर्यनिनादेषु वाद्यमानेषु चानघ
अपश्याम रणे राजन्भीमसेनं महाबलम्

आक्रीडमानं कौन्तेयं हर्षेण महता युतम् १८
निहत्य समरे शत्रून्महाबलसमन्वितान्
संमोहश्चापि तुमुलः कुरूणामभवत्तदा १९
कर्णदुर्योधनौ चापि निःश्वसेतां मुहुर्मुहुः
तथा निपतिते भीष्मे कौरवाणां धुरंधरे
हाहाकारमभूत्सर्वं निर्मर्यादमवर्तत २०
दृष्ट्वा च पतितं भीष्मं पुत्रो दुःशासनस्तव
उत्तमं जवमास्थाय द्रोणानीकं समाद्रवत् २१
भ्रात्रा प्रस्थापितो वीरः स्वेनानीकेन दंशितः
प्रययौ पुरुषव्याघ्रः स्वसैन्यमभिचोदयन् २२
तमायान्तमभिप्रेक्ष्य कुरवः पर्यवारयन्
दुःशासनं महाराज किमयं वक्ष्यतीति वै २३
ततो द्रोणाय निहतं भीष्ममाचष्ट कौरवः
द्रोणस्तदप्रियं श्रुत्वा सहसा न्यपतद्रथात् २४
स संज्ञामुपलभ्याथ भारद्वाजः प्रतापवान्
निवारयामास तदा स्वान्यनीकानि मारिष २५
विनिवृत्तान्कुरून्दृष्ट्वा पाण्डवापि स्वसैनिकान्
दूतैः शीघ्राश्वसंयुक्तैरवहारमकारयन् २६
विनिवृत्तेषु सैन्येषु पारंपर्येण सर्वशः
विमुक्तकवचाः सर्वे भीष्ममीयुर्नराधिपाः २७
व्युपारम्य ततो युद्धाद्योधाः शतसहस्रशः
उपतस्थुर्महात्मानं प्रजापतिमिवामराः २८
ते तु भीष्मं समासाद्य शयानं भरतर्षभम्
अभिवाद्य व्यतिष्ठन्त पाण्डवाः कुरुभिः सह २९
अथ पाण्डून्कुरूंश्चैव प्रणिपत्याग्रतः स्थितान्
अभ्यभाषत धर्मात्मा भीष्मः शान्तनवस्तदा ३०
स्वागतं वो महाभागाः स्वागतं वो महारथाः
तुष्यामि दर्शनाच्चाहं युष्माकममरोपमाः ३१
अभिनन्द्य स तानेवं शिरसा लम्बताब्रवीत्
शिरो मे लम्बतेऽत्यर्थमुपधानं प्रदीयताम् ३२

ततो नृपाः समाजह्रुस्तनूनि च मृदूनि च
उपधानानि मुख्यानि नैच्छत्तानि पितामहः ३३
अब्रवीच्च नरव्याघ्रः प्रहसन्निव तान्नृपान्
नैतानि वीरशय्यासु युक्तरूपाणि पार्थिवाः ३४
ततो वीक्ष्य नरश्रेष्ठमभ्यभाषत पाण्डवम्
धनञ्जयं दीर्घबाहुं सर्वलोकमहारथम् ३५
धनञ्जय महाबाहो शिरसो मेऽस्य लम्बतः
दीयतामुपधानं वै यद्युक्तमिह मन्यसे ३६
स संन्यस्य महच्चापमभिवाद्य पितामहम्
नेत्राभ्यामश्रुपूर्णाभ्यामिदं वचनमब्रवीत् ३७
आज्ञापय कुरुश्रेष्ठ सर्वशस्त्रभृतां वर
प्रेष्योऽहं तव दुर्धर्ष क्रियतां किं पितामह ३८
तमब्रवीच्छान्तनवः शिरो मे तात लम्बते
उपधानं कुरुश्रेष्ठ फल्गुनोपनयस्व मे
शयनस्यानुरूपं हि शीघ्रं वीर प्रयच्छ मे ३९
त्वं हि पार्थ महाबाहो श्रेष्ठः सर्वधनुष्मताम्
क्षत्रधर्मस्य वेत्ता च बुद्धिसत्त्वगुणान्वितः ४०
फल्गुनस्तु तथेत्युक्त्वा व्यवसायपुरोजवः
प्रगृह्यामन्त्र्य गाण्डीवं शरांश्च नतपर्वणः ४१
अनुमान्य महात्मानं भरतानाममध्यमम्
त्रिभिस्तीक्ष्णैर्महावेगैरुदगृह्णाच्छिरः शरैः ४२
अभिप्राये तु विदिते धर्मात्मा सव्यसाचिना
अतुष्यद्भरतश्रेष्ठो भीष्मो धर्मार्थतत्त्ववित् ४३
उपधानेन दत्तेन प्रत्यनन्दद्धनञ्जयम्
कुन्तीपुत्रं युधां श्रेष्ठं सुहृदां प्रीतिवर्धनम् ४४
अनुरूपं शयानस्य पाण्डवोपहितं त्वया
यद्यन्यथा प्रवर्तेथाः शपेयं त्वामहं रुषा ४५
एवमेतन्महाबाहो धर्मेषु परिनिष्ठितम्
स्वप्तव्यं क्षत्रियेणाजौ शरतल्पगतेन वै ४६
एवमुक्त्वा तु बीभत्सुं सर्वांस्तानब्रवीद्वचः

राज्ञश्च राजपुत्रांश्च पाराडवेनाभि संस्थितान् ४७
शयेयमस्यां शय्यायां यावदावर्तनं रवेः
ये तदा पारयिष्यन्ति ते मां द्रद्त्यन्ति वै नृपाः ४८
दिशं वैश्रवणाक्रान्तां यदा गन्ता दिवाकरः
अर्चिष्मान्प्रतपँल्लोकान्रथेनोत्तमतेजसा
विमोद्त्येऽहं तदा प्राणान्सुहृदः सुप्रियानपि ४९
परिखा खन्यतामत्र ममावसदने नृपाः
उपासिष्ये विवस्वन्तमेवं शरशताचितः
उपारमध्वं संग्रामाद्वैराग्युत्सृज्य पार्थिवाः ५०
उपातिष्ठन्नथो वैद्याः शल्योद्धरणकोविदाः
सर्वोपकरणैर्युक्ताः कुशलस्ते सुशिद्धिताः ५१
तान्दृष्ट्वा जाह्नवीपुत्रः प्रोवाच वचनं तदा
दत्तदेया विसृज्यन्तां पूजयित्वा चिकित्सकाः ५२
एवंगते न हीदानीं वैद्यैः कार्यमिहास्ति मे
द्धत्रधर्मप्रशस्तां हि प्राप्तोऽस्मि परमां गतिम् ५३
नैष धर्मो महीपालाः शरतल्पगतस्य मे
एतैरेव शरैश्चाहं दग्धव्योऽन्ते नराधिपाः ५४
तच्छ्रुत्वा वचनं तस्य पुत्रो दुर्योधनस्तव
वैद्यान्विसर्जयामास पूजयित्वा यथार्हतः ५५
ततस्ते विस्मयं जग्मुर्नानाजनपदेश्वराः
स्थितिं धर्मे परां दृष्ट्वा भीष्मस्यामिततेजसः ५६
उपधानं ततो दत्त्वा पितुस्तव जनेश्वर
सहिताः पाराडवाः सर्वे कुरवश्च महारथाः ५७
उपगम्य महात्मानं शयानं शयने शुभे
तेऽभिवाद्य ततो भीष्मं कृत्वा चाभिप्रदद्धिणम् ५८
विधाय रद्धां भीष्मस्य सर्व एव समन्ततः
वीराः स्वशिबिराण्येव ध्यायन्तः परमातुराः
निवेशायाभ्युपागच्छन्सायाह्ने रुधिरोद्धिताः ५९
निविष्टान्पाराडवांश्चापि प्रीयमाणान्महारथान्
भीष्मस्य पतनाद्धृष्टानुपगम्य महारथान्

उवाच यादवः काले धर्मपुत्रं युधिष्ठिरम् ६०
दिष्ट्या जयसि कौरव्य दिष्ट्या भीष्मो निपातितः
अवध्यो मानुषैरेष सत्यसन्धो महारथः ६१
अथ वा दैवतैः पार्थ सर्वशस्त्रास्त्रपारगः
त्वां तु चक्षुर्हणं प्राप्य दग्धो घोरेण चक्षुषा ६२
एवमुक्तो धर्मराजः प्रत्युवाच जनार्दनम्
तव प्रसादाद्विजयः क्रोधात्तव पराजयः
त्वं हि नः शरणं कृष्ण भक्तानामभयङ्करः ६३
अनाश्चर्यो जयस्तेषां येषां त्वमसि केशव
रक्षिता समरे नित्यं नित्यं चापि हिते रतः
सर्वथा त्वां समासाद्य नाश्चर्यमिति मे मतिः ६४
एवमुक्तः प्रत्युवाच स्मयमानो जनार्दनः
त्वय्येवैतद्युक्तरूपं वचनं पार्थिवोत्तम ६५
इति श्रीमहाभारते भीष्मपर्वणि पञ्चदशाधिकशततमोऽध्यायः ११५

## षोडशाधिक शततमोऽध्यायः

सञ्जय उवाच
व्युष्टायां तु महाराज रजन्यां सर्वपार्थिवाः
पाण्डवा धार्तराष्ट्राश्च अभिजग्मुः पितामहम् १
तं वीरशयने वीरं शयानं कुरुसत्तमम्
अभिवाद्योपतस्थुर्वै क्षत्रियाः क्षत्रियर्षभम् २
कन्याश्चन्दनचूर्णैश्च लाजैर्माल्यैश्च सर्वशः
स्त्रियो बालास्तथा वृद्धाः प्रेक्षकाश्च पृथग्जनाः
समभ्ययुः शान्तनवं भूतानीव तमोनुदम् ३
तूर्याणि गणिका वारास्तथैव नटनर्तकाः
उपानृत्यञ्जगुश्चैव वृद्धं कुरुपितामहम् ४
उपारम्य च युद्धेभ्यः संनाहान्विप्रमुच्य च
आयुधानि च निक्षिप्य सहिताः कुरुपाण्डवाः ५
अन्वासत दुराधर्षं देवव्रतमरिन्दमम्
अन्योन्यं प्रीतिमन्तस्ते यथापूर्वं यथावयः ६

सा पार्थिवशताकीर्णा समितिर्भीष्मशोभिता
शुशुभे भारती दीप्ता दिवीवादित्यमण्डलम् ७
विबभौ च नृपाणां सा पितामहमुपासताम्
देवानामिव देवेशं पितामहमुपासताम् ८
भीष्मस्तु वेदनां धैर्यान्निगृह्य भरतर्षभ
अभितप्तः शरैश्चैव नातिहृष्टमनाब्रवीत् ९
शराभितप्तकायोऽहं शरसंतापमूर्छितः
पानीयमभिकाङ्क्षेऽहं राज्ञस्तान्प्रत्यभाषत १०
ततस्ते क्षत्रिया राजन्समाजह्रुः समन्ततः
भक्ष्यानुच्चावचांस्तत्र वारिकुम्भांश्च शीतलान् ११
उपानीतं च तद्दृष्ट्वा भीष्मः शान्तनवोऽब्रवीत्
नाद्य तात मया शक्यं भोगान्कांश्चन मानुषान् १२
उपभोक्तुं मनुष्येभ्यः शरशय्यगतो ह्यहम्
प्रतीक्षमाणस्तिष्ठामि निवृत्तिं शशिसूर्ययोः १३
एवमुक्त्वा शान्तनवो दीनवाक्सर्वपार्थिवान्
धनंजयं महाबाहुमभ्यभाषत भारत १४
अथोपेत्य महाबाहुरभिवाद्य पितामहम्
अतिष्ठत्प्राञ्जलि प्रह्वः किं करोमीति चाब्रवीत् १५
तं दृष्ट्वा पाण्डवं राजन्नभिवाद्याग्रतः स्थितम्
अभ्यभाषत धर्मात्मा भीष्मः प्रीतो धनञ्जयम् १६
दह्यतेऽद शरीरं मे संस्यूतोऽस्मि महेषुभिः
मर्माणि परिदूयन्ते वदनं मम शुष्यति १७
ह्लादनार्थं शरीरस्य प्रयच्छापो ममार्जुन
त्वं हि शक्तो महेष्वास दातुमम्भो यथाविधि १८
अर्जुनस्तु तथेत्युक्त्वा रथमारुह्य वीर्यवान्
अधिज्यं बलवत्कृत्वा गाण्डीवं व्याक्षिपद्धनुः १९
तस्य ज्यातलनिर्घोषं विस्फूर्जितमिवाशनेः
वित्रेसुः सर्वभूतानि श्रुत्वा सर्वे च पार्थिवाः २०
ततः प्रदक्षिणं कृत्वा रथेन रथिनां वरः
शयानं भरतश्रेष्ठं सर्वशस्त्रभृतां वरम् २१

संधाय च शरं दीप्तमभिमन्त्र्य महायशाः
पर्जन्यास्त्रेन संयोज्य सर्वलोकस्य पश्यतः
अविध्यत्पृथिवीं पार्थः पार्श्वे भीष्मस्य दक्षिणे २२
उत्पपात ततो धारा विमला वारिणः शिवा
शीतस्यामृतकल्पस्य दिव्यगन्धरसस्य च २३
अतर्पयत्ततः पार्थः शीतया वारिधारया
भीष्मं कुरूणामृषभं दिव्यकर्मपराक्रमः २४
कर्मणा तेन पार्थस्य शक्रस्येव विकुर्वतः
विस्मयं परमं जग्मुस्ततस्ते वसुधाधिपाः २५
तत्कर्म प्रेक्ष्य बीभत्सोरतिमानुषमद्भुतम्
सम्प्रावेपन्त कुरवो गावः शीतार्दिता इव २६
विस्मयाच्चोत्तरीयाणि व्याविध्यन्सर्वतो नृपाः
शङ्खदुन्दुभिनिर्घोषैस्तुमुलं सर्वतोऽभवत् २७
तृप्तः शान्तनवश्चापि राजन्बीभत्सुमब्रवीत्
सर्वपार्थिववीराणां संनिधौ पूजयन्निव २८
नैतच्चित्रं महाबाहो त्वयि कौरवनन्दन
कथितो नारदेनासि पूर्वर्षिरमितद्युतिः २९
वासुदेवसहायस्त्वं महत्कर्म करिष्यसि
यन्नोत्सहति देवेन्द्रः सह देवैरपि ध्रुवम् ३०
विदुस्त्वां निधनं पार्थ सर्वक्षत्रस्य तद्विदः
धनुर्धराणामेकस्त्वं पृथिव्यां प्रवरो नृषु ३१
मनुष्या जगति श्रेष्ठाः पक्षिणां गरुडो वरः
सरसां सागरः श्रेष्ठो गौर्वरिष्ठा चतुष्पदाम् ३२
आदित्यस्तेजसां श्रेष्ठो गिरीणां हिमवान्वरः
जातीनां ब्राह्मणः श्रेष्ठः श्रेष्ठस्त्वमसि धन्विनाम् ३३
न वै श्रुतं धार्तराष्ट्रेण वाक्यं संबोध्यमानं विदुरेण चैव
द्रोणेन रामेण जनार्दनेन मुहुर्मुहुः सञ्जयेनापि चोक्तम् ३४
परीतबुद्धिर्हि विसंज्ञकल्पो दुर्योधनो नाभ्यनन्दद्वचो मे
स शेष्यते वै निहतश्चिराय शास्त्रातिगो भीमबलाभिभूतः ३५
ततः श्रुत्वा तद्वचः कौरवेन्द्रो दुर्योधनो दीनमना बभूव

तमब्रवीच्छांतनवोऽभिवीक्ष्य निबोध राजन्भव वीतमन्युः ३६
दृष्टं दुर्योधनेदं ते यथा पार्थेन धीमता
जलस्य धारा जनिता शीतस्यामृतगन्धिनः
एतस्य कर्ता लोकेऽस्मिन्नान्यः कश्चन विद्यते ३७
आग्नेयं वारुणं सौम्यं वायव्यमथ वैष्णवम्
एन्द्रं पाशुपतं ब्राह्मं पारमेष्ठ्यं प्रजापतेः
धातुस्त्वष्टुश्च सवितुर्दिव्यान्यस्त्राणि सर्वशः ३८
सर्वस्मिन्मानुषे लोके वेत्त्येको हि धनञ्जयः
कृष्णो वा देवकीपुत्रो नान्यो वै वेद कश्चन
न शक्याः पाण्डवास्तात युद्धे जेतुं कथञ्चन ३९
अमानुषाणि कर्माणि यस्यैतानि महात्मनः
तेन सत्त्ववता संख्ये शूरेणाहवशोभिना
कृतिना समरे राजन्सन्धिस्ते तात युज्यताम् ४०
यावत्कृष्णो महाबाहुः स्वाधीनः कुरुसंसदि
तावत्पार्थेन शूरेण सन्धिस्ते तात युज्यताम् ४१
यावच्चमूं न ते शेषां शरैः संनतपर्वभिः
नाशयत्यर्जुनस्तावत्सन्धिस्ते तात युज्यताम् ४२
यावत्तिष्ठन्ति समरे हतशेषाः सहोदराः
नृपाश्च बहवो राजंस्तावत्सन्धिः प्रयुज्यताम् ४३
न निर्दहति ते यावत्क्रोधदीप्तेक्षणश्चमूम्
युधिष्ठिरो हि तावद्वै संधिस्ते तात युज्यताम् ४४
नकुलः सहदेवश्च भीमसेनश्च पाण्डवः
यावच्चमूं महाराज नाशयन्ति न सर्वशः
तावत्ते पाण्डवैः सार्धं सौभ्रात्रं तात रोचताम् ४५
युद्धं मदन्तमेवास्तु तात संशाम्य पाण्डवैः
एतत्ते रोचतां वाक्यं यदुक्तोऽसि मयानघ
एतत्क्षेममहं मन्ये तव चैव कुलस्य च ४६
त्यक्त्वा मन्युमुपशाम्यस्व पार्थैः पर्याप्तमेतद्यत्कृतं फल्गुनेन
भीष्मस्यान्तादस्तु वः सौहृदं वा संप्रश्लेषः साधु राजन्प्रसीद ४७
राज्यस्यार्धं दीयतां पाण्डवानामिन्द्रप्रस्थं धर्मराजोऽनुशास्तु

मा मित्रध्रुक्पार्थिवानां जघन्यः पापां कीर्तिं प्राप्स्यसे कौरवेन्द्र ४८
ममावसानाच्छान्तिरस्तु प्रजानां सङ्गच्छन्तां पार्थिवाः प्रीतिमन्तः
पिता पुत्रं मातुलं भागिनेयो भ्राता चैव भ्रातरं प्रैतु राजन् ४९
न चेदेवं प्राप्तकालं वचो मे मोहाविष्टः प्रतिपत्स्यस्यबुद्ध्या
भीष्मस्यान्तादेतदन्ताः स्थ सर्वे सत्यामेतां भारतीमीरयामि ५०
एतद्वाक्यं सौहृदादापगेयो मध्ये राज्ञां भारतं श्रावयित्वा
तूष्णीमासीच्छल्यसंतप्तमर्मा यत्वात्मानं वेदनां संनिगृह्य ५१
इति श्रीमहाभारते भीष्मपर्वणि षोडशाधिकशततमोऽध्यायः ११६

## सप्तदशाधिक शततमोऽध्यायः

सञ्जय उवाच
ततस्ते पार्थिवाः सर्वे जग्मुः स्वानालयान्पुनः
तूष्णींभूते महाराज भीष्मे शन्तनुनन्दने १
श्रुत्वा तु निहतं भीष्मं राधेयः पुरुषर्षभः
ईषदागतसंत्रासः त्वरयोपजगाम ह २
स ददर्श महात्मानं शरतल्पगतं तदा
जन्मशय्यागतं देवं कार्त्तिकेयमिव प्रभुम् ३
निमीलिताक्षं तं वीरं साश्रुकण्ठस्तदा वृषः
अभ्येत्य पादयोस्तस्य निपपात महाद्युतिः ४
राधेयोऽह कुरुश्रेष्ठ नित्यं चाक्षिगतस्तव
द्वेष्योऽत्यन्तमनागाः सन्निति चैनमुवाच ह ५
तच्छ्रुत्वा कुरुवृद्धः स बलात्संवृत्तलोचनः
शनैरुद्वीक्ष्य सस्नेहमिदं वचनमब्रवीत् ६
रहितं धिष्ण्यमालोक्य समुत्सार्य च रक्षिणः
पितेव पुत्रं गाङ्गेयः परिष्वज्यैकबाहुना ७
एह्येहि मे विप्रतीप स्पर्धसे त्वं मया सह
यदि मां नाभिगच्छेथा न ते श्रेयो भवेद्ध्रुवं ८
कौन्तेयस्त्वं न राधेयो विदितो नारदान्मम
कृष्णद्वैपायनाच्चैव केशवाच्च न संशयः ९
न च द्वेषोऽस्ति मे तात त्वयि सत्यं ब्रवीमि ते

तेजोवधनिमित्तं तु परुषारायहमुक्तवान् १०
अकस्मात्पाराडवान्हि त्वं द्विषसीति मतिर्मम
येनासि बहुशो रूक्षं चोदितः सूर्यनन्दन ११
जानामि समरे वीर्यं शत्रुभिर्दुःशहं तव
ब्रह्मरायतां च शौर्यं च दाने च परमां गतिम् १२
न त्वया सदृशः कश्चित्पुरुषेष्वमरोपम
कुलभेदं च मत्वाहं सदा परुषमुक्तवान् १३
इष्वस्त्रे भारसन्धाने लाघवेऽस्त्रबले तथा
सदृशः फल्गुनेनासि कृष्णेन च महात्मना १४
कर्ण राजपुरं गत्वा त्वयैकेन धनुष्मता
तस्यार्थे कुरुराजस्य राजानो मृदिता युधि १५
तथा च बलवान्राजा जरासंधो दुरासदः
समरे समरश्लाघी त्वया न सदृशोऽभवत् १६
ब्रह्मरायः सत्यवादी च तेजसार्क इवापरः
देवगर्भोऽजितः संख्ये मनुष्यैरधिको भुवि १७
व्यपनीतोऽद्य मन्युर्मे यस्त्वां प्रति पुरा कृतः
दैवं पुरुषकारेण न शक्यमतिवर्तितुम् १८
सोदर्याः पाराडवा वीरा भ्रातरस्तेऽरिसूदन
सङ्गच्छ तैर्महाबाहो मम चेदिच्छसि प्रियम् १९
मया भवतु निर्वृत्तं वैरमादित्यनन्दन
पृथिव्यां सर्वराजानो भवन्त्वद्य निरामयाः २०
कर्ण उवाच
जानाम्यहं महाप्राज्ञ सर्वमेतन्न संशयः
यथा वदसि दुर्धर्ष कौन्तेयोऽह न सूतजः २१
अवकीर्णस्त्वहं कुन्त्या सूतेन च विवर्धितः
भुक्त्वा दुर्योधनैश्वर्यं न मिथ्या कर्तुमुत्सहे २२
वसु चैव शरीरं च यदुदारं तथा यशः
सर्वं दुर्योधनस्यार्थे त्यक्तं मे भूरिदक्षिण
कोपिताः पाराडवा नित्यं मयाश्रित्य सुयोधनम् २३
अवश्यभावी वै योऽथो न स शक्यो निवर्तितुम्

दैवं पुरुषकारेण को निवर्तितुमुत्सहेत् २४
पृथिवीक्षयशंसीनि निमित्तानि पितामह
भवद्भिरुपलब्धानि कथितानि च संसदि २५
पाण्डवा वासुदेवश्च विदिता मम सर्वशः
अजेयाः पुरुषैरन्यैरिति तांश्चोत्सहामहे २६
अनुजानीष्व मां तात युद्धे प्रीतमनाः सदा
अनुज्ञातस्त्वया वीर युध्येयमिति मे मतिः २७
दुरुक्तं विप्रतीपं वा संरम्भाच्चापलात्तथा
यन्मयापकृतं किञ्चित्तदनुक्षन्तुमर्हसि २८
भीष्म उवाच
न चेच्छक्यमथोत्स्रष्टुं वैरमेतत्सुदारुणम्
अनुजानामि कर्ण त्वां युध्यस्व स्वर्गकाम्यया २९
विमन्युर्गतसंरम्भः कुरु कर्म नृपस्य हि
यथाशक्ति यथोत्साहं सतां वृत्तेषु वृत्तवान् ३०
अहं त्वामनुजानामि यदिच्छसि तदाप्नुहि
क्षत्रधर्मजिताँल्लोकान्संप्राप्स्यसि न संशयः ३१
युध्यस्व निरहङ्कारो बलवीर्यव्यपाश्रयः
धर्मो हि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते ३२
प्रशमे हि कृतो यत्नः सुचिरात्सुचिरं मया
न चैव शकितः कर्तुं यतो धर्मस्ततो जयः ३३
सञ्जय उवाच
एवं ब्रुवन्तं गाङ्गेयमभिवाद्य प्रसाद्य च
राधेयो रथमारुह्य प्रायात्तव सुतं प्रति ३४

इति श्रीमहाभारते भीष्मपर्वणि सप्तदशाधिकशततमोऽध्यायः ११७

समाप्तं भीष्मवधपर्व

भीष्मपर्व समाप्त

# महाभारत
## द्रोणपर्व

श्रीगणेशाय नमः
ॐ नारायणं नमस्कृत्य नरं चैव नरोत्तमम्
देवीं सरस्वतीं चैव ततो जयमुदीरयेत्

अथ प्रथमोऽध्यायः

जनमेजय उवाच
तमप्रतिमसत्त्वौजोबलवीर्यपराक्रमम्
हतं देवव्रतं श्रुत्वा पाञ्चाल्येन शिखण्डिना १
धृतराष्ट्रस्तदा राजा शोकव्याकुलचेतनः
किमचेष्टत विप्रर्षे हते पितरि वीर्यवान् २
तस्य पुत्रो हि भगवन्भीष्मद्रोणमुखै रथैः
पराजित्य महेष्वासान्पाण्डवान्राज्यमिच्छति ३
तस्मिन्हते तु भगवन्केतौ सर्वधनुष्मताम्
यदचेष्टत कौरव्यस्तन्मे ब्रूहि द्विजोत्तम ४
वैशम्पायन उवाच
निहतं पितरं श्रुत्वा धृतराष्ट्रो जनाधिपः
लेभे न शान्तिं कौरव्यश्चिन्ताशोकपरायणः ५
तस्य चिन्तयतो दुःखमनिशं पार्थिवस्य तत्
आजगाम विशुद्धात्मा पुनर्गावल्गणिस्तदा ६
शिबिरात्सञ्जयं प्राप्तं निशि नागाह्वयं पुरम्
आम्बिकेयो महाराज धृतराष्ट्रोऽन्वपृच्छत ७
श्रुत्वा भीष्मस्य निधनमप्रहृष्टमना भृशम्
पुत्राणां जयमाकाङ्क्षन्विललापातुरो यथा ८
धृतराष्ट्र उवाच
संसाध्य तु महात्मानं भीष्मं भीमपराक्रमम्
किमकार्षुः परं तात कुरवः कालचोदिताः ९

तस्मिन्विनिहते शूरे दुराधर्षे महौजसि
किं नु स्वित्कुरवोऽकार्षुर्निमग्नाः शोकसागरे १०
तदुदीर्णं महत्सैन्यं त्रैलोक्यस्यापि सञ्जय
भयमुत्पादयेत्तीव्रं पाण्डवानां महात्मनाम् ११
देवव्रते तु निहते कुरूणामृषभे तदा
यदकार्षुर्नृपतयस्तन्ममाचक्ष्व सञ्जय १२
सञ्जय उवाच
शृणु राजन्नेकमना वचनं ब्रुवतो मम
यत्ते पुत्रास्तदाकार्षुर्हते देवव्रते मृधे १३
निहते तु तदा भीष्मे राजन्सत्यपराक्रमे
तावकाः पाण्डवेयाश्च प्राध्यायन्त पृथक्पृथक् १४
विस्मिताश्च प्रहृष्टाश्च क्षत्रधर्मं निशाम्य ते
स्वधर्मं निन्दमानाश्च प्रणिपत्य महात्मने १५
शयनं कल्पयामासुर्भीष्मायामिततेजसे
सोपधानं नरव्याघ्र शरैः संनतपर्वभिः १६
विधाय रक्षां भीष्माय समाभाष्य परस्परम्
अनुमान्य च गाङ्गेयं कृत्वा चापि प्रदक्षिणम् १७
क्रोधसंरक्तनयनाः समवेक्ष्य परस्परम्
पुनर्युद्धाय निर्जग्मुः क्षत्रियाः कालचोदिताः १८
ततस्तूर्यनिनादैश्च भेरीणां च महास्वनैः
तावकानामनीकानि परेषां चापि निर्ययुः १९
व्यावृत्तेऽहनि राजेन्द्र पतिते जाह्नवीसुते
अमर्षवशमापन्नाः कालोपहतचेतसः २०
अनादृत्य वचः पथ्यं गाङ्गेयस्य महात्मनः
निर्ययुर्भरतश्रेष्ठाः शस्त्राण्यादाय सर्वशः २१
मोहात्तव सपुत्रस्य वधाच्छांतनवस्य च
कौरव्या मृत्युसाद्भूताः सहिताः सर्वराजभिः २२
अजावय इवागोपा वने श्वापदसंकुले
भृशमुद्विग्नमनसो हीना देवव्रतेन ते २३
पतिते भरतश्रेष्ठे बभूव कुरुवाहिनी

द्यौरिवापेतनक्षत्रा हीनं खमिव वायुना २४
विपन्नसस्येव मही वाक्चैवासंस्कृता यथा
आसुरीव यथा सेना निगृहीते पुरा बलौ २५
विधवेव वरारोहा शुष्कतोयेव निम्नगा
वृकैरिव वने रुद्धा पृषती हतयूथपा २६
स्वाधर्षा हतसिंहेव महती गिरिकन्दरा
भारती भरतश्रेष्ठ पतिते जाह्नवीसुते २७
विष्वग्वातहता रुग्णा नौरिवासीन्महार्णवे
बलिभिः पाण्डवैर्वीरैर्लब्धलक्षैर्भृशार्दिता २८
सा तदासीद्भृशं सेना व्याकुलाश्वरथद्विपा
विषण्णभूयिष्ठनरा कृपणा द्रष्टुमाबभौ २९
तस्यां त्रस्ता नृपतयः सैनिकाश्च पृथग्विधाः
पाताल इव मज्जन्तो हीना देवव्रतेन ते
कर्णं हि कुरवोऽस्मार्षुः स हि देवव्रतोपमः ३०
सर्वशस्त्रभृतां श्रेष्ठं रोचमानमिवातिथिम्
बन्धुमापद्गतस्येव तमेवोपागमन्मनः ३१
चुक्रुशुः कर्ण कर्णेति तत्र भारत पार्थिवाः
राधेयं हितमस्माकं सूतपुत्रं तनुत्यजम् ३२
स हि नायुध्यत तदा दशाहानि महायशाः
सामात्यबन्धुः कर्णो वै तमाह्वयत माचिरम् ३३
भीष्मेण हि महाबाहुः सर्वक्षत्रस्य पश्यतः
रथेषु गण्यमानेषु बलविक्रमशालिषु
संख्यातोऽधरथः कर्णो द्विगुणः सन्नरर्षभः ३४
रथातिरथसंख्यायां योऽग्रणीः शूरसंमतः
पितृवित्ताम्बुदेवेशानपि यो योद्धुमुत्सहेत् ३५
स तु तेनैव कोपेन राजन्गाङ्गेयमुक्तवान्
त्वयि जीवति कौरव्य नाहं योत्स्ये कथंचन ३६
त्वया तु पाण्डवेयेषु निहतेषु महामृधे
दुर्योधनमनुज्ञाप्य वनं यास्यामि कौरव ३७
पाण्डवैर्वा हते भीष्मे त्वयि स्वर्गमुपेयुषि

हन्तास्म्येकरथेनैव कृत्स्नान्यान्मन्यसे रथान् ३८
एवमुक्त्वा महाराज दशाहानि महायशाः
नायुध्यत ततः कर्णः पुत्रस्य तव संमते ३९
भीष्मः समरविक्रान्तः पाण्डवेयस्य पार्थिव
जघान समरे योधानसंख्येयपराक्रमः ४०
तस्मिंस्तु निहते शूरे सत्यसन्धे महौजसि
त्वत्सुताः कर्णमस्मार्षुस्तर्तुकामा इव प्लवम् ४१
तावकास्तव पुत्राश्च सहिताः सर्वराजभिः
हा कर्ण इति चाक्रन्दन्कालोऽयमिति चाब्रुवन् ४२
जामदग्न्याभ्यनुज्ञातमस्त्रे दुर्वारपौरुषम्
अगमन्नो मनः कर्णं बन्धुमात्ययिकेष्विव ४३
स हि शक्तो रणे राजंस्त्रातुमस्मान्महाभयात्
त्रिदशानिव गोविन्दः सततं सुमहाभयात् ४४
वैशम्पायन उवाच
तथा कर्णं युधि वरं कीर्तयन्तं पुनः पुनः
आशीविषवदुच्छ्वस्य धृतराष्ट्रोऽब्रवीदिदम् ४५
यत्तद्वैकर्तनं कर्णमगमद्वो मनस्तदा
अप्यपश्यत राधेयं सूतपुत्रं तनुत्यजम् ४६
अपि तन्न मृषाकार्षीद्युधि सत्यपराक्रमः
संभ्रान्तानां तदार्तानां त्रस्तानां त्राणमिच्छताम् ४७
अपि तत्पूरयांचक्रे धनुर्धरवरो युधि
यत्तद्विनिहते भीष्मे कौरवाणामपावृतम् ४८
तत्खण्डं पूरयामास परेषामादधद्भयम्
कृतवान्मम पुत्राणां जयाशां सफलामपि ४९
इति श्रीमहाभारते द्रोणपर्वणि प्रथमोऽध्यायः १

द्वितीयोऽध्यायः

सञ्जय उवाच
हतं भीष्ममाधिरथिर्विदित्वा भिन्नां नावमिवात्यगाधे कुरूणाम्
सोदर्यवद्व्यसनात्सूतपुत्रः सन्तारयिष्यंस्तव पुत्रस्य सेनाम् १

श्रुत्वा तु कर्णः पुरुषेन्द्रमच्युतं निपातितं शांतनवं महारथम्
अथोपायात्तूर्णममित्रकर्शनो धनुर्धराणां प्रवरस्तदा वृषः २
हते तु भीष्मे रथसत्तमे परैर्निमज्जतीं नावमिवार्णवे कुरून्
पितेव पुत्रांस्त्वरितोऽभ्ययात्ततः संतारयिष्यंस्तव पुत्रस्य सेनाम् ३
कर्ण उवाच
यस्मिन्धृतिर्बुद्धिपराक्रमौजो दमः सत्यं वीरगुणाश्च सर्वे
अस्त्राणि दिव्यान्यथ सन्नतिर्ह्रीः प्रिया च वागनपायीनि भीष्मे ४
ब्रह्मद्विषघ्ने सततं कृतज्ञे सनातनं चन्द्रमसीव लक्ष्म
स चेत्प्रशान्तः परवीरहन्ता मन्ये हतानेव हि सर्वयोधान् ५
नेह ध्रुवं किञ्चन जातु विद्यते अस्मिँल्लोके कर्मणोऽनित्ययोगात्
सूर्योदये को हि विमुक्तसंशयो भावं कुर्वीताद्य महाव्रते हते ६
वसुप्रभावे वसुवीर्यसंभवे गते वसूनेव वसुंधराधिपे
वसूनि पुत्रांश्च वसुन्धरां तथा कुरूंश्च शोचध्वमिमां च वाहिनीम् ७
सञ्जय उवाच
महाप्रभावे वरदे निपातिते लोकश्रेष्ठे शांतनवे महौजसि
पराजितेषु भरतेषु दुर्मनाः कर्णो भृशं न्यश्वसदश्रु वर्तयन् ८
इदं च राधेयवचो निशम्य ते सुताश्च राजंस्तव सैनिकाश्च ह
परस्परं चुक्रुशुरार्तिजं भृशं तदाश्रु नेत्रैर्मुमुचुर्हि शब्दवत् ९
प्रवर्तमाने तु पुनर्महाहवे विगाह्यमानासु चमूषु पार्थिवैः
अथाब्रवीद्धर्षकरं वचस्तदा रथर्षभान्सर्वमहारथर्षभः १०
कर्ण उवाच
जगत्यनित्ये सततं प्रधावति प्रचिन्तयन्नस्थिरमद्य लक्षये
भवत्सु तिष्ठत्स्विह पातितो रणे गिरिप्रकाशः कुरुपुङ्गवः कथम् ११
निपातिते शान्तनवे महारथे दिवाकरे भूतलमास्थिते यथा
न पार्थिवाः सोढुमलं धनञ्जयं गिरिप्रवोढारमिवानिलं द्रुमाः १२
हतप्रधानं त्विदमार्तरूपं परैर्हतोत्साहमनाथमद्य वै
मया कुरूणां परिपाल्यमाहवे बलं यथा तेन महात्मना तथा १३
समाहितं चात्मनि भारमीदृशं जगत्तथानित्यमिदं च लक्षये
निपातितं चाहवशौण्डमाहवे कथं नु कुर्यामहमाहवे भयम् १४
अहं तु तान्कुरुवृषभानजिह्मगैः प्रवेरयन्यमसदनं रणे चरन्

यशः परं जगति विभाव्य वर्तिता परैर्हतो युधि शयिताथ वा पुनः १५
युधिष्ठिरो धृतिमतिधर्मतत्त्ववान्वृकोदरो गजशततुल्यविक्रमः
तथार्जुनस्त्रिदशवरात्मजो यतो न तद्बलं सुजयमथामरैरपि १६
यमौ रणे यत्र यमोपमौ बले ससात्यकिर्यत्र च देवकीसुतः
न तद्बलं कापुरुषोऽभ्युपेयिवान्निवर्तते मृत्युमुखादिवासकृत् १७
तपोऽभ्युदीर्णं तपसैव गम्यते बलं बलेनापि तथा मनस्विभिः
मनश्च मे शत्रुनिवारणे ध्रुवं स्वरक्षणे चाचलवद्व्यवस्थितम् १८
एवं चैषां बुध्यमानः प्रभावं गत्वैवाहं ताञ्जयाम्यद्य सूत
मित्रद्रोहो मर्षणीयो न मेऽय भग्ने सैन्ये यः सहायः स मित्रम् १९
कर्तास्म्येतत्सत्पुरुषार्यकर्म त्यक्त्वा प्राणाननुयास्यामि भीष्मम्
सर्वान्संख्ये शत्रुसंघान्हनिष्ये हतस्तैर्वा वीरलोकं गमिष्ये २०
सम्प्राक्रुष्टे रुदितस्त्रीकुमारे पराभूते पौरुषे धार्तराष्ट्रे
मया कृत्यमिति जानामि सूत तस्माच्छत्रून्धार्तराष्ट्रस्य जेष्ये २१
कुरून्रक्षन्पाण्डुपुत्राञ्जिघांसंस्त्यक्त्वा प्राणान्घोररूपे रणेऽस्मिन्
सर्वान्संख्ये शत्रुसंघान्निहत्य दास्याम्यहं धार्तराष्ट्राय राज्यम् २२
निबध्यतां मे कवचं विचित्रं हैमं शुभ्रं मणिरत्नावभासि
शिरस्त्राणं चार्कसमानभासं धनुः शरांश्चापि विषाहिकल्पान् २३
उपासङ्गान्षोडश योजयन्तु धनूंषि दिव्यानि तथाहरन्तु
असींश्च शक्तीश्च गदाश्च गुर्वीः शङ्खं च जाम्बूनदचित्रभासम् २४
एतां रौक्मीं नागकक्ष्यां च जैत्रीं जैत्रं च मे ध्वजमिन्दीवराभम्
श्लक्ष्णैर्वस्त्रैर्विप्रमृज्यानयस्व चित्रां मालां चात्र वद्ध्वा सजालाम् २५
अश्वानग्र्यान्पाण्डुराभ्रप्रकाशान्पुष्टान्स्नातान्मन्त्रपूताभिरद्भिः
तप्तैर्भाण्डैः काञ्चनैरभ्युपेताञ्शीघ्राञ्शीघ्रं सूतपुत्रानयस्व २६
रथं चाग्र्यं हेमजालावनद्धं रत्नैश्चित्रं चन्द्रसूर्यप्रकाशैः
द्रव्यैर्युक्तं संप्रहारोपपन्नैर्वाहैर्युक्तं तूर्णमावर्तयस्व २७
चित्राणि चापानि च वेगवन्ति ज्याश्चोत्तमाः संहननोपपन्नाः
तूणांश्च पूर्णान्महतः शराणामासज्य गात्रावरणानि चैव २८
प्रायात्रिकं चानयताशु सर्वं कन्याः पूर्णं वीरकांस्यं च हैमम्
आनीय मालामवबध्य चाङ्गे प्रवादयन्त्वाशु जयाय भेरीः २९
प्रयाहि सूताशु यतः किरीटी वृकोदरो धर्मसुतो यमौ च

तान्वा हनिष्यामि समेत्य संख्ये भीष्माय वैष्यामि हतो द्विषद्भिः ३०
यस्मिन्राजा सत्यधृतिर्युधिष्ठिरः समास्थितो भीमसेनार्जुनौ च
वासुदेवः सात्यकिः सृञ्जयाश्च मन्ये बलं तदजय्यं महीपैः ३१
तं चेन्मृत्युः सर्वहरोऽभिरक्षेत्सदाप्रमत्तः समरे किरीटिनम्
तथापि हन्तास्मि समेत्य संख्ये यास्यामि वा भीष्मपथा यमाय ३२
न त्वेवाहं न गमिष्यामि तेषां मध्ये शूराणां तत्तथाहं ब्रवीमि
मित्रद्रुहो दुर्बलभक्तयो ये पापात्मानो न ममैते सहायाः ३३
सञ्जय उवाच
स सिद्धिमन्तं रथमुत्तमं दृढं सकूबरं हेमपरिष्कृतं शुभम्
पताकिनं वातजवैर्हयोत्तमैर्युक्तं समास्थाय ययौ जयाय ३४
संपूज्यमानः कुरुभिर्महात्मा रथर्षभः पाण्डुरवाजियाता
ययौ तदायोधनमुग्रधन्वा यत्रावसानं भरतर्षभस्य ३५
वरूथिना महता सध्वजेन सुवर्णमुक्तामणिवज्रशालिना
सदश्वयुक्तेन रथेन कर्णो मेघस्वनेनार्क इवामितौजाः ३६
हुताशनाभः स हुताशनप्रभे शुभः शुभे वै स्वरथे धनुर्धरः
स्थितो रराजाधिरथिर्महारथः स्वयं विमाने सुरराडिव स्थितः ३७
इति श्रीमहाभारते द्रोणपर्वणि द्वितीयोऽध्यायः २

## तृतीयोऽध्यायः

सञ्जय उवाच
शरतल्पे महात्मानं शयानममितौजसम्
महावातसमूहेन समुद्रमिव शोषितम् १
दिव्यैरस्त्रैर्महेष्वासं पातितं सव्यसाचिना
जयाशां तव पुत्राणां संभग्नां शर्म वर्म च २
अपराणामिव द्वीपमगाधे गाधमिच्छताम्
स्रोतसा यामुनेनेव शरौघेण परिप्लुतम् ३
महान्तमिव मैनाकमसह्यं भुवि पातितम्
नभश्च्युतमिवादित्यं पतितं धरणीतले ४
शतक्रतोरिवाचिन्त्यं पुरा वृत्रेण निर्जयम्
मोहनं सर्वसैन्यस्य युधि भीष्मस्य पातनम् ५

ककुदं सर्वसैन्यानां लक्ष्म सर्वधनुष्मताम्
धनञ्जयशरव्याप्तं पितरं ते महाव्रतम् ६
तं वीरशयने वीरं शयानं पुरुषर्षभम्
भीष्ममाधिरथिर्दृष्ट्वा भरतानाममध्यमम् ७
अवतीर्य रथादार्त्तो बाष्पव्याकुलिताक्षरम्
अभिवाद्याञ्जलिं बद्ध्वा वन्दमानोऽभ्यभाषत ८
कर्णोऽहमस्मि भद्रं ते अद्य मा वद भारत
पुण्यया क्षेमया वाचा चक्षुषा चावलोकय ९
न नूनं सुकृतस्येह फलं कश्चित्समश्नुते
यत्र धर्मपरो वृद्धः शेते भुवि भवानिह १०
कोशसंजनने मन्त्रे व्यूहप्रहरणेषु च
नाथमन्यं न पश्यामि कुरूणां कुरुसत्तम ११
बुद्ध्या विशुद्धया युक्तो यः कुरूंस्तारयेद्भयात्
योधांस्त्वमप्लवे हित्वा पितृलोकं गमिष्यसि १२
अद्य प्रभृति संक्रुद्धा व्याघ्रा इव मृगक्षयम्
पाण्डवा भरतश्रेष्ठ करिष्यन्ति कुरुक्षयम् १३
अद्य गाण्डीवघोषस्य वीर्यज्ञाः सव्यसाचिनः
कुरवः सन्त्रसिष्यन्ति वज्रपाणेरिवासुराः १४
अद्य गाण्डीवमुक्तानामशनीनामिव स्वनः
त्रासयिष्यति संग्रामे कुरूनन्यांश्च पार्थिवान् १५
समिद्धोऽग्निर्यथा वीर महाज्वालो द्रुमान्दहेत्
धार्तराष्ट्रान्प्रधक्ष्यन्ति तथा बाणाः किरीटिनः १६
येन येन प्रसरतो वाय्वग्नी सहितौ वने
तेन तेन प्रदहतो भगवन्तौ यदिच्छतः १७
यादृशोऽग्नि समिद्धो हि तादृक्पार्थो न संशयः
यथा वायुर्नरव्याघ्र तथा कृष्णो न संशयः १८
नदतः पाञ्चजन्यस्य रसतो गाण्डिवस्य च
श्रुत्वा सर्वाणि सैन्यानि त्रासं यास्यन्ति भारत १९
कपिध्वजस्य चोत्पाते रथस्यामित्रकर्शिनः
शब्दं सोढुं न शक्ष्यन्ति त्वामृते वीर पार्थिवाः २०

को ह्यर्जुनं रणे योद्धुं त्वदन्यः पार्थिवोऽहति
यस्य दिव्यानि कर्माणि प्रवदन्ति मनीषिणः २१
अमानुषश्च संग्रामस्त्र्यम्बकेन च धीमतः
तस्माच्चैव वरः प्राप्तो दुष्प्रापश्चाकृतात्मभिः २२
तमद्याहं पाण्डवं युद्धशौण्डममृष्यमाणो भवतानुशिष्टः
आशीविषं दृष्टिहरं सुघोरमियां पुरस्कृत्य वधं जयं वा २३
इति श्रीमहाभारते द्रोणपर्वणि तृतीयोऽध्यायः ३

## चतुर्थोऽध्यायः

सञ्जय उवाच
तस्य लालप्यतः श्रुत्वा वृद्धः कुरुपितामहः
देशकालोचितं वाक्यमब्रवीत्प्रीतमानसः १
समुद्र इव सिन्धूनां ज्योतिषामिव भास्करः
सत्यस्य च यथा सन्तो बीजानामिव चोर्वरा २
पर्जन्य इव भूतानां प्रतिष्ठा सुहृदां भव
बान्धवास्त्वानुजीवन्तु सहस्राक्षमिवामराः ३
स्वबाहुबलवीर्येण धार्तराष्ट्रप्रियैषिणा
कर्ण राजपुरं गत्वा काम्बोजा निर्हितास्त्वया ४
गिरिव्रजगताश्चापि नग्नजित्प्रमुखा नृपाः
अम्बष्ठाश्च विदेहाश्च गान्धाराश्च जितास्त्वया ५
हिमवद्दुर्गनिलयाः किराता रणकर्कशाः
दुर्योधनस्य वशगाः कृताः कर्ण त्वया पुरा ६
तत्र तत्र च संग्रामे दुर्योधनहितैषिणा
बहवश्च जिता वीरास्त्वया कर्ण महौजसा ७
यथा दुर्योधनस्तात सज्ञातिकुलबान्धवः
तथा त्वमपि सर्वेषां कौरवाणां गतिर्भव ८
शिवेनाभिवदामि त्वां गच्छ युध्यस्व शत्रुभिः
अनुशाधि कुरून्संख्ये धत्स्व दुर्योधने जयम् ९
भवान्पौत्रसमोऽस्माकं यथा दुर्योधनस्तथा
तवापि धर्मतः सर्वे यथा तस्य वयं तथा १०

यौनात्सम्बन्धकाल्लोके विशिष्टं संगतं सताम्
सद्भिः सह नरश्रेष्ठ प्रवदन्ति मनीषिणः ११
स सत्यसङ्गरो भूत्वा ममेदमिति निश्चितम्
कुरूणां पालय बलं यथा दुर्योधनस्तथा १२
इति श्रुत्वा वचः सोऽथ चरणावभिवाद्य च
ययौ वैकर्तनः कर्णस्तूर्णमायोधनं प्रति १३
सोऽभिवीक्ष्य नरौघाणां स्थानमप्रतिमं महत्
व्यूढप्रहरणोरस्कं सैन्यं तत्समबृंहयत् १४
कर्णं दृष्ट्वा महेष्वासं युद्धाय समुपस्थितम्
क्ष्वेडितास्फोटितरवैः सिंहनादरवैरपि
धनुःशब्दैश्च विविधैः कुरवः समपूजयन् १५
इति श्रीमहाभारते द्रोणपर्वणि चतुर्थोऽध्यायः ४

## पञ्चमोऽध्यायः

सञ्जय उवाच
रथस्थं पुरुषव्याघ्रं दृष्ट्वा कर्णमवस्थितम्
हृष्टो दुर्योधनो राजन्निदं वचनमब्रवीत् १
सनाथमिदमत्यर्थं भवता पालितं बलम्
मन्ये किं तु समर्थं यद्धितं तत्संप्रधार्यताम् २
कर्ण उवाच
ब्रूहि तत्पुरुषव्याघ्र त्वं हि प्राज्ञतमो नृप
यथा चार्थपतिः कृत्यं पश्यते न तथेतरः ३
ते स्म सर्वे तव वचः श्रोतुकामा नरेश्वर
नान्याय्यं हि भवान्वाक्यं ब्रूयादिति मतिर्मम ४
दुर्योधन उवाच
भीष्मः सेनाप्रणेतासीद्वयसा विक्रमेण च
श्रुतेन च सुसंपन्नः सर्वैर्योधगुणैस्तथा ५
तेनातियशसा कर्ण घ्नता शत्रुगणान्मम
सुयुद्धेन दशाहानि पालिताः स्मो महात्मना ६
तस्मिन्नसुकरं कर्म कृतवत्यास्थिते दिवम्

कं नु सेनाप्रणेतारं मन्यसे तदनन्तरम् ७
न ऋते नायकं सेना मुहूर्तमपि तिष्ठति
आहवेष्वाहवश्रेष्ठ नेतृहीनेव नौर्जले ८
यथा ह्यकर्णधारा नौ रथश्चासारथिर्यथा
द्रवेद्यथेष्टं तद्वत्स्यादृते सेनापतिं बलम् ९
स भवान्वीक्ष्य सर्वेषु मामकेषु महात्मसु
पश्य सेनापतिं युक्तमनु शान्तनवादिह १०
यं हि सेनाप्रणेतारं भवान्वक्ष्यति संयुगे
तं वयं सहिताः सर्वे प्रकरिष्याम मारिष ११
कर्ण उवाच
सर्व एव महात्मान इमे पुरुषसत्तमाः
सेनापतित्वमर्हन्ति नात्र कार्या विचारणा १२
कुलसंहननज्ञानैर्बलविक्रमबुद्धिभिः
युक्ताः कृतज्ञा ह्रीमन्त आहवेष्वनिवर्तिनः १३
युगपन्न तु ते शक्याः कर्तुं सर्वे पुरःसराः
एक एवात्र कर्तव्यो यस्मिन्वैशेषिका गुणाः १४
अन्योन्यस्पर्धिनां तेषां यद्येकं सत्करिष्यसि
शेषा विमनसो व्यक्तं न योत्स्यन्ते हि भारत १५
अयं तु सर्वयोधानामाचार्यः स्थविरो गुरुः
युक्तः सेनापतिः कर्तुं द्रोणः शस्त्रभृतां वरः १६
को हि तिष्ठति दुर्धर्षे द्रोणे ब्रह्मविदुत्तमे
सेनापतिः स्यादन्योऽस्माच्छुक्राङ्गिरसदर्शनात् १७
न च स ह्यस्ति ते योधः सर्वराजसु भारत
यो द्रोणं समरे यान्तं नानुयास्यति संयुगे १८
एष सेनाप्रणेतॄणामेष शस्त्रभृतामपि
एष बुद्धिमतां चैव श्रेष्ठो राजन्गुरुश्च ते १९
एवं दुर्योधनाचार्यमाशु सेनापतिं कुरु
जिगीषन्तोऽसुरान्संख्ये कार्त्तिकेयमिवामराः २०
सञ्जय उवाच
कर्णस्य वचनं श्रुत्वा राजा दुर्योधनस्तदा

सेनामध्यगतं द्रोणमिदं वचनमब्रवीत् २१
वर्णश्रैष्ठ्यात्कुलोत्पत्त्या श्रुतेन वयसा धिया
वीर्याद्दाक्ष्याददधृष्यत्वादर्थज्ञानान्नयाज्जयात् २२
तपसा च कृतज्ञत्वाद्वृद्धः सर्वगुणैरपि
युक्तो भवत्समो गोप्ता राज्ञामन्यो न विद्यते २३
स भवान्पातु नः सर्वान्विबुधानिव वासवः
भवन्नेत्राः पराञ्जेतुमिच्छामो द्विजसत्तम २४
रुद्राणामिव कापाली वसूनामिव पावकः
कुबेर इव यक्षाणां मरुतामिव वासवः २५
वसिष्ठ इव विप्राणां तेजसामिव भास्करः
पितॄणामिव धर्मोऽथ आदित्यानामिवाम्बुराट् २६
नक्षत्राणामिव शशी दितिजानामिवोशनाः
श्रेष्ठः सेनाप्रणेतॄणां स नः सेनापतिर्भव २७
अक्षौहिण्यो दशैका च वशगाः सन्तु तेऽनघ
ताभिः शत्रून्प्रतिव्यूह्य जहीन्द्रो दानवानिव २८
प्रयातु नो भवानग्रे देवानामिव पावकिः
अनुयास्यामहे त्वाजौ सौरभेया इवर्षभम् २९
उग्रधन्वा महेष्वासो दिव्यं विस्फारयन्धनुः
अग्रे भवन्तं दृष्ट्वा नो नार्जुनः प्रसहिष्यते ३०
ध्रुवं युधिष्ठिरं संख्ये सानुबन्धं सबान्धवम्
जेष्यामि पुरुषव्याघ्र भवान्सेनापतिर्यदि ३१
एवमुक्ते ततो द्रोणे जयेत्यूचुर्नराधिपाः
सिंहनादेन महता हर्षयन्तस्तवात्मजम् ३२
सैनिकाश्च मुदा युक्ता वर्धयन्ति द्विजोत्तमम्
दुर्योधनं पुरस्कृत्य प्रार्थयन्तो महद्यशः ३३
द्रोण उवाच
वेदं षडङ्गं वेदाहमर्थविद्यां च मानवीम्
त्रैय्यम्बकमथेष्वस्त्रमस्त्राणि विविधानि च ३४
ये चाप्युक्ता मयि गुणा भवद्भिर्जयकाङ्क्षिभिः
चिकीर्षुस्तानहं सत्यान्योधयिष्यामि पाण्डवान् ३५

सञ्जय उवाच
स एवमभ्यनुज्ञातश्चक्रे सेनापतिं ततः
द्रोणं तव सुतो राजन्विधिदृष्टेन कर्मणा ३६
अथाभिषिषिचुर्द्रोणं दुर्योधनमुखा नृपाः
सेनापत्ये यथा स्कन्दं पुरा शक्रमुखाः सुराः ३७
ततो वादित्रघोषेण सह पुंसां महास्वनैः
प्रादुरासीत्कृते द्रोणे हर्षः सेनापतौ तदा ३८
ततः पुण्याहघोषेण स्वस्तिवादस्वनेन च
संस्तवैर्गीतशब्दैश्च सूतमागधबन्दिनाम् ३९
जयशब्दैर्द्विजाग्र्याणां सुभगानर्तितैस्तथा
सत्कृत्य विधिवद्द्रोणं जितान्मन्यन्त पाण्डवान् ४०
इति श्रीमहाभारते द्रोणपर्वणि पञ्चमोऽध्यायः ५

## षष्ठोऽध्यायः

सञ्जय उवाच
सैनापत्यं तु सम्प्राप्य भारद्वाजो महारथः
युयुत्सुर्व्यूह्य सैन्यानि प्रायात्तव सुतैः सह १
सैन्धवश्च कलिङ्गश्च विकर्णश्च तवात्मजः
दक्षिणं पार्श्वमास्थाय समतिष्ठन्त दंशिताः २
प्रपक्षः शकुनिस्तेषां प्रवरैर्हयसादिभिः
ययौ गान्धारकैः सार्धं विमलप्रासयोधिभिः ३
कृपश्च कृतवर्मा च चित्रसेनो विविंशतिः
दुःशासनमुखा यत्ताः सव्यं पार्श्वमपालयन् ४
तेषां प्रपक्षाः काम्बोजाः सुदक्षिणपुरःसराः
ययुरश्वैर्महावेगैः शकाश्च यवनैः सह ५
मद्रास्त्रिगर्ताः साम्बष्ठाः प्रतीच्योदीच्यवासिनः
शिबयः शूरसेनाश्च शूद्राश्च मलदैः सह ६
सौवीराः कितवाः प्राच्या दाक्षिणात्याश्च सर्वशः
तवात्मजं पुरस्कृत्य सूतपुत्रस्य पृष्ठतः ७
हर्षयन्सर्वसैन्यानि बलेषु बलमादधत्

ययौवैकर्तनः कर्णः प्रमुखे सर्वधन्विनाम् ८
तस्य दीप्तो महाकायः स्वान्यनीकानि हर्षयन्
हस्तिकक्ष्यामहाकेतुर्बभौ सूर्यसमद्युतिः ९
न भीष्मव्यसनं कश्चिद्दृष्ट्वा कर्णममन्यत
विशोकाश्चाभवन्सर्वे राजानः कुरुभिः सह १०
हृष्टाश्च बहवो योधास्तत्राजल्पन्त संगताः
न हि कर्णं रणे दृष्ट्वा युधि स्थास्यन्ति पाण्डवाः ११
कर्णो हि समरे शक्तो जेतुं देवान्सवासवान्
किमु पाण्डुसुतान्युद्धे हीनवीर्यपराक्रमान् १२
भीष्मेण तु रणे पार्थाः पालिता बाहुशालिना
तांस्तु कर्णः शरैस्तीक्ष्णैर्नाशयिष्यत्यसंशयम् १३
एवं ब्रुवन्तस्तेऽन्योन्यं हृष्टरूपा विशां पते
राधेयं पूजयन्तश्च प्रशंसन्तश्च निर्ययुः १४
अस्माकं शकटव्यूहो द्रोणेन विहितोऽभवत्
परेषां क्रौञ्च एवासीद्व्यूहो राजन्महात्मनाम्
प्रीयमाणेन विहितो धर्मराजेन भारत १५
व्यूहप्रमुखतस्तेषां तस्थतुः पुरुषर्षभौ
वानरध्वजमुच्छ्रित्य विष्वक्सेनधनञ्जयौ १६
ककुदं सर्वसैन्यानां लक्ष्म सर्वधनुष्मताम्
आदित्यपथगः केतुः पार्थस्यामिततेजसः १७
दीपयामास तत्सैन्यं पाण्डवस्य महात्मनः
यथा प्रज्वलितः सूर्यो युगान्ते वै वसुन्धराम् १८
अस्यतामर्जुनः श्रेष्ठो गाण्डीवं धनुषां वरम्
वासुदेवश्च भूतानां चक्राणां च सुदर्शनम् १९
चत्वार्येतानि तेजांसि वहञ्श्वेतहयो रथः
परेषामग्रतस्तस्थौ कालचक्रमिवोद्यतम् २०
एवमेतौ महात्मानौ बलसेनाग्रगावुभौ
तावकानां मुखं कर्णः परेषां च धनञ्जयः २१
ततो जाताभिसंरम्भौ परस्परवधैषिणौ
अवेक्षेतां तदान्योन्यं समरे कर्णपाण्डवौ २२

ततः प्रयाते सहसा भारद्वाजे महारथे
अन्तर्नादेन घोरेण वसुधा समकम्पत २३
ततस्तुमुलमाकाशमावृणोत्सदिवाकरम्
वातोद्धूतं रजस्तीव्रं कौशेयनिकरोपमम् २४
अनभ्रे प्रववर्ष द्यौर्मांसास्थिरुधिराण्युत
गृध्राः श्येना बडाः कङ्का वायसाश्च सहस्रशः
उपर्युपरि सेनां ते तदा पर्यपतन्नृप २५
गोमायवश्च प्राक्रोशन्भयदान्दारुणान्रवान्
अकार्षुरपसव्यं च बहुशः पृतनां तव
चिखादिषन्तो मांसानि पिपासन्तश्च शोणितम् २६
अपतद्दीप्यमाना च सनिर्घाता सकम्पना
उल्का ज्वलन्ती संग्रामे पुच्छेनावृत्य सर्वशः २७
परिवेषो महांश्चापि सविद्युत्स्तनयित्नुमान्
भास्करस्याभवद्राजन्प्रयाते वहिनीपतौ २८
एते चान्ये च बहवः प्रादुरासन्सुदारुणाः
उत्पाता युधि वीराणां जीवितक्षयकारकाः २९
ततः प्रववृते युद्धं परस्परवधैषिणाम्
कुरुपाण्डवसैन्यानां शब्देनानादयज्जगत् ३०
ते त्वन्योन्यं सुसंरब्धाः पाण्डवाः कौरवैः सह
प्रत्यघ्नन्निशितैर्बाणैर्जयगृद्धाः प्रहारिणः ३१
स पाण्डवानां महतीं महेष्वासो महाद्युतिः
वेगेनाभ्यद्रवत्सेनां किरञ्शरशतैः शितैः ३२
द्रोणमभ्युद्यतं दृष्ट्वा पाण्डवाः सह सृञ्जयैः
प्रत्यगृह्णंस्तदा राजञ्शरवर्षैः पृथक्पृथक् ३३
संक्षोभ्यमाणा द्रोणेन भिद्यमाना महाचमूः
व्यशीर्यत सपाञ्चाला वातेनेव बलाहकाः ३४
बहूनीय विकुर्वाणो दिव्यान्यस्त्राणि संयुगे
अपीडयत्क्षणेनैव द्रोणः पाण्डवसृञ्जयान् ३५
ते वध्यमाना द्रोणेन वासवेनेव दानवाः
पाञ्चालाः समकम्पन्त धृष्टद्युम्नपुरोगमाः ३६

ततो दिव्यास्त्रविच्छूरो याज्ञसेनिर्महारथः
अभिनच्छरवर्षेण द्रोणानीकमनेकधा ३७
द्रोणस्य शरवर्षैस्तु शरवर्षाणि भागशः
सन्निवार्य ततः सेनां कुरूनप्यवधीद्बली ३८
संहृत्य तु ततो द्रोणः समवस्थाप्य चाहवे
स्वमनीकं महाबाहुः पार्षतं समुपाद्रवत् ३९
स बाणवर्षं सुमहदसृजत्पार्षतं प्रति
मघवान्समभिक्रुद्धः सहसा दानवेष्विव ४०
ते कम्प्यमाना द्रोणेन बाणैः पाण्डवसृञ्जयाः
पुनः पुनरभज्यन्त सिंहेनेवेतरे मृगाः ४१
अथ पर्यपतद्द्रोणः पाण्डवानां बलं बली
अलातचक्रवद्राजंस्तदद्भुतमिवाभवत् ४२
खचरनगरकल्पं कल्पितं शास्त्रदृष्ट्या चलदनिलपताकं ह्लादिनं वल्गिताश्वम्
स्फटिकविमलकेतुं तापनं शात्रवाणां रथवरमधिरूढः सञ्जहारारिसेनाम् ४३
इति श्रीमहाभारते द्रोणपर्वणि षष्ठोऽध्यायः ६

सप्तमोऽध्यायः

सञ्जय उवाच
तथा द्रोणमभिघ्नन्तं साश्वसूतरथद्विपान्
व्यथिताः पाण्डवा दृष्ट्वा न चैनं पर्यवारयन् १
ततो युधिष्ठिरो राजा धृष्टद्युम्नधनंजयौ
अब्रवीत्सर्वतो यत्तैः कुम्भयोनिर्निवार्यताम् २
तत्रैनमर्जुनश्चैव पार्षतश्च सहानुगः
पर्यगृह्णंस्ततः सर्वे समायान्तं महारथाः ३
केकया भीमसेनश्च सौभद्रोऽथ घटोत्कचः
युधिष्ठिरो यमौ मत्स्या द्रुपदस्यात्मजास्तथा ४
द्रौपदेयाश्च संहृष्टा धृष्टकेतुः ससात्यकिः
चेकितानश्च संक्रुद्धो युयुत्सुश्च महारथः ५
ये चान्ये पार्थिवा राजन्पाण्डवस्यानुयायिनः
कुलवीर्यानुरूपाणि चक्रुः कर्माण्यनेकशः ६

संगृह्यमाणां तां दृष्ट्वा पाण्डवैर्वाहिनीं रणे
व्यावृत्य चक्षुषी कोपाद्भारद्वाजोऽन्ववैक्षत ७
स तीव्रं कोपमास्थाय रथे समरदुर्मदः
व्यधमत्पाण्डवानीकमभ्राणीव सदागतिः ८
रथानश्वान्नरान्नागानभिधावंस्ततस्ततः
चचारोन्मत्तवद्द्रोणो वृद्धोऽपि तरुणो यथा ९
तस्य शोणितदिग्धाङ्गाः शोणास्ते वातरंहसः
आजानेया हया राजन्नविभ्रान्ताः श्रियं दधुः १०
तमन्तकमिव क्रुद्धमापतन्तं यतव्रतम्
दृष्ट्वा संप्राद्रवन्योधाः पाण्डवस्य ततस्ततः ११
तेषां प्रद्रवतां भीमः पुनरावर्ततामपि
वीक्षतां तिष्ठतां चासीच्छब्दः परमदारुणः १२
शूराणां हर्ष जननो भीरूणां भयवर्धनः
द्यावापृथिव्योर्विवरं पूरयामास सर्वतः १३
ततःपुनरपि द्रोणो नाम विश्रावयन्युधि
अकरोद्रौद्रमात्मानं किरञ्शरशतैः परान् १४
स तथा तान्यनीकानि पाण्डवेयस्य धीमतः
कालवन्न्यवधीद्द्रोणो युवेव स्थविरो बली १५
उत्कृत्य च शिरांस्युग्रो बाहूनपि सभूषणान्
कृत्वा शून्यान्रथोपस्थानुदक्रोशन्महारथाः १६
तस्य हर्षप्रणादेन बाणवेगेन चाभिभो
प्राकम्पन्त रणे योधा गावः शीतार्दिता इव १७
द्रोणस्य रथघोषेण मौर्वीनिष्पेषणेन च
धनुःशब्देन चाकाशे शब्दः समभवन्महान् १८
अथास्य बहुशो बाणा निश्चरन्तः सहस्रशः
व्याप्य सर्वा दिशः पेतुर्गजाश्वरथपत्तिषु १९
तं कार्मुकमहावेगमस्त्रज्वलितपावकम्
द्रोणमासादयांचक्रुः पाञ्चालाः पाण्डवैः सह २०
तान्वै सरथहस्त्यश्वान्प्राहिणोद्यमसादनम्
द्रोणोऽचिरेणाकरोच्च महीं शोणितकर्दमाम् २१

तन्वता परमास्त्राणि शरान्सततमस्यता
द्रोणेन विहितं दिक्षु बाणजालमदृश्यत २२
पदातिषु रथाश्वेषु वारणेषु च सर्वशः
तस्य विद्युदिवाभ्रेषु चरन्केतुरदृश्यत २३
स केकयानां प्रवरांश्च पञ्च पाञ्चालराजं च शरैः प्रमृद्य
युधिष्ठिरानीकमदीनयोधी द्रोणोऽभ्ययात्कार्मुकबाणपाणिः २४
तं भीमसेनश्च धनञ्जयश्च शिनेश्च नप्ता द्रुपदात्मजश्च
शैब्यात्मजः काशिपतिः शिबिश्च हृष्टा नदन्तो व्यकिरञ्शरोघैः २५
तेषामथो द्रोणधनुर्विमुक्ताः पतत्रिणः काञ्चनचित्रपुङ्खाः
भित्त्वा शरीराणि गजाश्वयूनां जग्मुर्महीं शोणितदिग्धवाजाः २६
सा योधसंघैश्च रथैश्च भूमिः शरैर्विभिन्नैर्गजवाजिभिश्च
प्रच्छाद्यमाना पतितैर्बभूव समन्ततो द्यौरिव कालमेघैः २७
शैनेयभीमार्जुनवाहिनीपाञ्शैब्याभिमन्यू सह काशिराज्ञा
अन्यांश्च वीरान्समरे प्रमृद्नाद्द्रोणः सुतानां तव भूतिकामः २८
एतानि चान्यानि च कौरवेन्द्र कर्माणि कृत्वा समरे महात्मा
प्रताप्य लोकानिव कालसूर्यो द्रोणो गतः स्वर्गमितो हि राजन् २९
एवं रुक्मरथः शूरो हत्वा शतसहस्रशः
पाण्डवानां रणे योधान्पार्षतेन निपातितः ३०
अक्षौहिणीमभ्यधिकां शूराणामनिवर्तिनाम्
निहत्य पश्चाद्धृतिमानगच्छत्परमां गतिम् ३१
पाण्डवैः सह पाञ्चालैरशिवैः क्रूरकर्मभिः
हतो रुक्मरथो राजन्कृत्वा कर्म सुदुष्करम् ३२
ततो निनादो भूतानामाकाशे समजायत
सैन्यानां च ततो राजन्नाचार्ये निहते युधि ३३
द्यां धरां खं दिशो वारि प्रदिशश्चानुनादयन्
अहो धिगिति भूतानां शब्दः समभवन्महान् ३४
देवताः पितरश्चैव पूर्वे ये चास्य बान्धवाः
ददृशुर्निहतं तत्र भारद्वाजं महारथम् ३५
पाण्डवास्तु जयं लब्ध्वा सिंहनादान्प्रचक्रिरे
तेन नादेन महता समकम्पत मेदिनी ३६

इति श्रीमहाभारते द्रोणपर्वणि सप्तमोऽध्यायः ७

अष्टमोऽध्यायः

धृतराष्ट्र उवाच
किं कुर्वाणं रणे द्रोणं जघ्नुः पाण्डवसृञ्जयाः
तथा निपुणमस्त्रेषु सर्वशस्त्रभृतामपि १
रथभङ्गो बभूवास्य धनुर्वाशीर्यतास्यतः
प्रमत्तो वाभवद्द्रोणस्ततो मृत्युमुपेयिवान् २
कथं नु पार्षतस्तात शत्रुभिर्दुष्प्रधर्षणम्
किरन्तमिषुसङ्घातान्रुक्मपुङ्खाननेकशः ३
क्षिप्रहस्तं द्विजश्रेष्ठं कृतिनं चित्रयोधिनम्
दूरेषुपातिनं दान्तमस्त्रयुद्धे च पारगम् ४
पाञ्चालपुत्रो न्यवधीद्दिष्ट्या स वरमच्युतम्
कुर्वाणं दारुणं कर्म रणे यत्तं महारथम् ५
व्यक्तं दिष्टं हि बलवत्पौरुषादिति मे मतिः
यद्द्रोणो निहतः शूरः पार्षतेन महात्मना ६
अस्त्रं चतुर्विधं वीरे यस्मिन्नासीत्प्रतिष्ठितम्
तमिष्वस्त्रवराचार्यं द्रोणं शंशसि मे हतम् ७
श्रुत्वा हतं रुक्मरथं वैयाघ्रपरिवारणम्
जातरूपपरिष्कारं नाद्य शोकमपानुदे ८
न नूनं परदुःखेन कश्चिन्म्रियति सञ्जय
यत्र द्रोणमहं श्रुत्वा हतं जीवामि न म्रिये ९
अश्मसारमयं नूनं हृदयं सुदृढं मम
यच्छ्रुत्वा निहतं द्रोणं शतधा न विदीर्यते १०
ब्राह्मे वेदे तथेष्वस्त्रे यमुपासन्गुणार्थिनः
ब्राह्मणा राजपुत्राश्च स कथं मृत्युना हतः ११
शोषणं सागरस्येव मेरोरिव विसर्पणम्
पतनं भास्करस्येव न मृष्ये द्रोणपातनम् १२
दृप्तानां प्रतिषेद्धासीद्धार्मिकानां च रक्षिता
योऽत्याक्षीत्कृपणस्यार्थे प्राणानपि परंतपः १३

मन्दानां मम पुत्राणां जयाशा यस्य विक्रमे
बृहस्पत्युशनस्तुल्यो बुद्ध्या स निहतः कथम् १४
ते च शोणा बृहन्तोऽश्वा सैन्धवा हेममालिनः
रथे वातजवा युक्ताः सर्वशब्दातिगा रणे १५
बलिनो घोषिणो दान्ताः सैन्धवाः साधुवाहिनः
दृढाः संग्राममध्येषु कच्चिदासन्न विह्वलाः १६
करिणां बृंहतां युद्धे शङ्खदुन्दुभिनिस्वनम्
ज्याक्षेपशरवर्षाणां शस्त्राणां च सहिष्णवः १७
आशंसन्तः पराञ्जेतुं जितश्वासा जितव्यथाः
हयाः प्रजविताः शीघ्रा भारद्वाजरथोद्वहाः १८
ते स्म रुक्मरथे युक्ता नरवीरसमाहिताः
कथं नाभ्यतरंस्तात पाण्डवानामनीकिनीम् १९
जातरूपपरिष्कारमास्थाय रथमुत्तमम्
भारद्वाजः किमकरोच्छूरः संक्रन्दनो युधि २०
विद्यां यस्योपजीवन्ति सर्वलोकधनुर्भृतः
स सत्यसन्धो बलवान्द्रोणः किमकरोद्युधि २१
दिवि शक्रमिव श्रेष्ठं महामात्रं धनुर्भृताम्
के नु तं रौद्रकर्माणं युद्धे प्रत्युद्ययू रथाः २२
ननु रुक्मरथं दृष्ट्वा प्रद्रवन्ति स्म पाण्डवाः
दिव्यमस्त्रं विकुर्वाणं सेनां क्षिण्वन्तमव्ययम् २३
उताहो सर्वसैन्येन धर्मराजः सहानुजः
पाञ्चाल्यप्रग्रहो द्रोणं सर्वतः समवारयत् २४
नूनमावारयत्पार्थो रथिनोऽन्यानजिह्मगैः
ततो द्रोणं समारोहत्पार्षतः पापकर्मकृत् २५
न ह्यन्यं परिपश्यामि वधे कञ्चन शुष्मिणः
धृष्टद्युम्नादृते रौद्रात्पाल्यमानात्किरीटिना २६
तैर्वृतः सर्वतः शूरैः पाञ्चाल्यापसदस्ततः
केकयैश्चेदिकारूषैर्मत्स्यैरन्यैश्च भूमिपैः २७
व्याकुलीकृतमाचार्यं पिपीलैरुरगं यथा
कर्मण्यसुकरे सक्तं जघानेति मतिर्मम २८

योऽधीत्य चतुरो वेदान्सर्वानाख्यानपञ्चमान्
ब्राह्मणानां प्रतिष्ठासीत्स्रोतसामिव सागरः
स कथं ब्राह्मणो वृद्धः शस्त्रेण वधमाप्तवान् २९
अमर्षणो मर्षितवान्क्लिश्यमानः सदा मया
अनर्हमाणः कौन्तेयः कर्मणस्तस्य तत्फलम् ३०
यस्य कर्मानुजीवन्ति लोके सर्वधनुर्भृतः
स सत्यसन्धः सुकृती श्रीकामैर्निहतः कथम् ३१
दिवि शक्र इव श्रेष्ठो महासत्त्वो महाबलः
स कथं निहतः पार्थैः क्षुद्रमत्स्यैर्यथा तिमिः ३२
क्षिप्रहस्तश्च बलवान्दृढधन्वारिमर्दनः
न यस्य जिविताकाङ्क्षी विषयं प्राप्य जीवति ३३
यं द्वौ न जहतः शब्दौ जीवमानं कदाचन
ब्राह्मश्च वेदकामानां ज्याघोषश्च धनुर्भृताम् ३४
नाहं मृष्ये हतं द्रोणं सिंहद्विरदविक्रमम्
कथं सञ्जय दुर्धर्षमनाधृष्ययशोबलम् ३५
केऽरक्षन्दक्षिणं चक्रं सव्यं के च महात्मनः
पुरस्तात्के च वीरस्य युध्यमानस्य संयुगे ३६
के च तत्र तनुं त्यक्त्वा प्रतीपं मृत्युमाव्रजन्
द्रोणस्य समरे वीराः केऽकुर्वन्त परां धृतिम् ३७
एतदार्येण कर्तव्यं कृच्छ्रास्वापत्सु सञ्जय
पराक्रमेद्यथाशक्त्या तच्च तस्मिन्प्रतिष्ठितम् ३८
मुह्यते मे मनस्तात कथा तावन्निवर्त्यताम्
भूयस्तु लब्धसंज्ञस्त्वा परिप्रक्ष्यामि सञ्जय ३९
इति श्रीमहाभारते द्रोणपर्वणि अष्टमोऽध्यायः ८

नवमोऽध्यायः

वैशम्पायन उवाच
एवं पृष्ट्वा सूतपुत्रं हृच्छोकेनार्दितो भृशम्
जये निराशः पुत्राणां धृतराष्ट्रोऽपतत्क्षितौ १
तं विसंज्ञं निपतितं सिषिचुः परिचारकाः

जलेनात्यर्थशीतेन वीजन्तः पुरायगन्धिना २
पतितं चैनमाज्ञाय समन्ताद्धरतस्त्रियः
परिवव्रुर्महाराजमस्पृशंश्चैव पाणिभिः ३
उत्थाप्य चैनं शनकै राजानं पृथिवीतलात्
आसनं प्रापयामासुर्बाष्पकराठ्यो वराङ्गनाः ४
आसनं प्राप्य राजा तु मूर्छयाभिपरिप्लुतः
निश्चेष्टोऽतिष्ठत तदा वीज्यमानः समन्ततः ५
स लब्ध्वा शनकैः संज्ञां वेपमानो महीपतिः
पुनर्गावल्गणिं सूतं पर्यपृच्छद्यथातथम् ६
यत्तदुद्यन्निवादित्यो ज्योतिषा प्रणुदंस्तमः
आयादजातशत्रुर्वै कस्तं द्रोणादवारयत् ७
प्रभिन्नमिव मातङ्गं यथा क्रुद्धं तरस्विनम्
आसक्तमनसं दीप्तं प्रतिद्विरदघातिनम्
वाशितासंगमे यद्वदजय्यं प्रतियूथपैः ८
अति चान्यान्रणे योधान्वीरः पुरुषसत्तमः
यो ह्येको हि महाबाहुर्निर्दहेद्घोरचक्षुषा
कृत्स्नं दुर्योधनबलं धृतिमान्सत्यसङ्गरः ९
चक्षुर्हणं जये सक्तमिष्वासवररक्षितम्
दान्तं बहुमतं लोके के शूराः पर्यवारयन् १०
के दुष्प्रधर्षं राजानमिष्वासवरमच्युतम्
समासेदुर्नरव्याघ्रं कौन्तेयं तत्र मामकाः ११
तरसैवाभिपत्याथ यो वै द्रोणमुपाद्रवत्
तं भीमसेनमायान्तं के शूराः पर्यवारयन् १२
यदायाज्जलदप्रख्यो रथः परमवीर्यवान्
पर्जन्य इव बीभत्सुस्तुमुलामशनिं सृजन् १३
ववर्ष शरवर्षाणि वर्षाणि मघवानिव
इषुसंबाधमाकाशं कुर्वन्कपिवरध्वजः
अवस्फूर्जन्दिशः सर्वास्तलनेमिस्वनेन च १४
चापविद्युत्प्रभो घोरो रथगुल्मबलाहकः
रथनेमिघोषस्तनितः शरशब्दातिबन्धुरः १५

रोषनिर्जितजीमूतो मनोऽभिप्रायशीघ्रगः
मर्मातिगो बाणधारस्तुमुलः शोणितोदकः १६
संप्लावयन्महीं सर्वां मानवैरास्तरंस्तदा
गदानिष्टनितो रौद्रो दुर्योधनकृतोद्यमः १७
युद्धेऽभ्यषिञ्चद्विजयो गार्ध्रपत्रैः शिलाशितैः
गाण्डीवं धारयन्धीमान्कीदृशं वो मनस्तदा १८
कच्चिद्गाण्डीवशब्देन न प्रणश्यत वै बलम्
यद्वः स भैरवं कुर्वन्नर्जुनो भृशमभ्यगात् १९
कच्चिन्नापानुदद्द्रोणादिषुभिर्वो धनञ्जयः
वातो मेघानिवाविध्यन्प्रवाञ्शरवनानिलः
को हि गाण्डीवधन्वानं नरः सोढुं रणेऽहति २०
यत्सेनाः समकम्पन्त यद्वीरानस्पृशद्भयम्
के तत्र नाजहुर्द्रोणं के क्षुद्राः प्राद्रवन्भयात् २१
के वा तत्र तनूस्त्यक्त्वा प्रतीपं मृत्युमाव्रजन्
अमानुषाणां जेतारं युद्धेष्वपि धनंजयम् २२
न च वेगं सिताश्वस्य विशक्ष्यन्तीह मामकाः
गाण्डीवस्य च निर्घोषं प्रावृड्जलदनिस्वनम् २३
विष्वक्सेनो यस्य यन्ता योद्धा चैव धनंजयः
अशक्यः स रथो जेतुं मन्ये देवासुरैरपि २४
सुकुमारो युवा शूरो दर्शनीयश्च पाण्डवः
मेधावी निपुणो धीमान्युधि सत्यपराक्रमः २५
आरावं विपुलं कुर्वन्व्यथयन्सर्वकौरवान्
यदायान्नकुलो धीमान्के शूराः पर्यवारयन् २६
आशीविष इव क्रुद्धः सहदेवो यदाभ्ययात्
शत्रूणां कदनं कुर्वञ्जेतासौ दुर्जयो युधि २७
आर्यव्रतममोघेषुं ह्रीमन्तमपराजितम्
द्रोणायाभिमुखं यान्तं के शूराः पर्यवारयन् २८
यः स सौवीरराजस्य प्रमथ्य महतीं चमूम्
आदत्त महिषीं भोज्यां काम्यां सर्वाङ्गशोभनाम् २९
सत्यं धृतिश्च शौर्यं च ब्रह्मचर्यं च केवलम्

सर्वाणि युयुधानेऽस्मिन्नित्यानि पुरुषर्षभे ३०
बलिनं सत्यकर्माणमदीनमपराजितम्
वासुदेवसमं युद्धे वासुदेवादनन्तरम् ३१
युक्तं धनंजयप्रेष्ये शूरमाचार्यकर्मणि
पार्थेन सममस्त्रेषु कस्तं द्रोणादवारयत् ३२
वृष्णीनां प्रवरं वीरं शूरं सर्वधनुष्मताम्
रामेण सममस्त्रेषु यशसा विक्रमेण च ३३
सत्यं धृतिर्दमः शौर्यं ब्रह्मचर्यमनुत्तमम्
सात्वते तानि सर्वाणि त्रैलोक्यमिव केशवे ३४
तमेवंगुणसम्पन्नं दुर्वारमपि दैवतैः
समासाद्य महेष्वासं के वीराः पर्यवारयन् ३५
पाञ्चालेषूत्तमं शूरमुत्तमाभिजनप्रियम्
नित्यमुत्तमकर्माणमुत्तमौजसमाहवे ३६
युक्तं धनंजयहिते ममानर्थाय चोत्तमम्
यमवैश्रवणादित्यमहेन्द्रवरुणोपमम् ३७
महारथसमाख्यातं द्रोणायोद्यन्तमाहवे
त्यजन्तं तुमुले प्राणान्के शूराः पर्यवारयन् ३८
एकोऽपसृत्य चेदिभ्यः पाण्डवान्यः समाश्रितः
धृष्टकेतुं तमायान्तं द्रोणात्कः समवारयत् ३९
योऽवधीत्केतुमाञ्शूरो राजपुत्रं सुदर्शनम्
अपरान्तगिरिद्वारे कस्तं द्रोणादवारयत् ४०
स्त्रीपूर्वो यो नरव्याघ्रो यः स वेद गुणागुणान्
शिखण्डिनं याज्ञसेनिमम्लानमनसं युधि ४१
देवव्रतस्य समरे हेतुं मृत्योर्महात्मनः
द्रोणायाभिमुखं यान्तं के वीराः पर्यवारयन् ४२
यस्मिन्नभ्यधिका वीरे गुणाः सर्वे धनञ्जयात्
यस्मिन्नस्त्राणि सत्यं च ब्रह्मचर्यं च नित्यदा ४३
वासुदेवसमं वीर्ये धनञ्जयसमं बले
तेजसादित्यसदृशं बृहस्पतिसमं मतौ ४४
अभिमन्युं महात्मानं व्यात्ताननमिवान्तकम्

द्रोणायाभिमुखं यान्तं के वीराः पर्यवारयन् ४५
तरुणस्त्वरुणप्रख्यः सौभद्रः परवीरहा
यदाभ्याद्रवत द्रोणं तदासीद्वो मनः कथम् ४६
द्रौपदेया नरव्याघ्राः समुद्रमिव सिन्धवः
यद्द्रोणमाद्रवन्संख्ये के वीरास्तानवारयन् ४७
ये ते द्वादशवर्षाणि क्रीडामुत्सृज्य बालकाः
अस्त्रार्थमवसन्भीष्मे बिभ्रतो व्रतमुत्तमम् ४८
क्षत्रंजयः क्षत्रदेवः क्षत्रधर्मा च मानिनः
धृष्टद्युम्नात्मजा वीराः के तान्द्रोणादवारयन् ४९
शताद्विशिष्टं यं युद्धे समपश्यन्त वृष्णयः
चेकितानं महेष्वासं कस्तं द्रोणादवारयत् ५०
वार्धक्षेमिः कलिङ्गानां यः कन्यामाहरद्युधि
अनाधृष्टिरदीनात्मा कस्तं द्रोणादवारयत् ५१
भ्रातरः पञ्च कैकेया धार्मिकाः सत्यविक्रमाः
इन्द्रगोपकवर्णाश्च रक्तवर्मायुधध्वजाः ५२
मातृष्वसुः सुता वीराः पाण्डवानां जयार्थिनः
तान्द्रोणं हन्तुमायातान्के वीराः पर्यवारयन् ५३
यं योधयन्तो राजानो नाजयन्वारणावते
षण्मासानभिसंरब्धा जिघांसन्तो युधां पतिम् ५४
धनुष्मतां वरं शूरं सत्यसंधं महाबलम्
द्रोणात्कस्तं नरव्याघ्रं युयुत्सुं प्रत्यवारयत् ५५
यः पुत्रं काशिराजस्य वाराणस्यां महारथम्
समरे स्त्रीषु गृध्यन्तं भल्लेनापहरद्रथात् ५६
धृष्टद्युम्नं महेष्वासं पार्थानां मन्त्रधारिणम्
युक्तं दुर्योधनानर्थे सृष्टं द्रोणवधाय च ५७
निर्दहन्तं रणे योधान्दारयन्तं च सर्वशः
द्रोणायाभिमुखं यान्तं के वीराः पर्यवारयन् ५८
उत्सङ्ग इव संवृद्धं द्रुपदस्यास्त्रवित्तमम्
शैखण्डिनं क्षत्रदेवं के तं द्रोणादवारयन् ५९
य इमां पृथिवीं कृत्स्नां चर्मवत्समवेष्टयत्

महता रथवंशेन मुख्यारिघ्नो महारथः ६०
दशाश्वमेधानाजह्रे स्वन्नपानाप्तदक्षिणान्
निरर्गलान्सर्वमेधान्पुत्रवत्पालयन्प्रजाः ६१
पिबन्त्यो दक्षिणां यस्य गङ्गास्रोतः समापिबन्
तावतीर्गा ददौ वीर उशीनरसुतोऽध्वरे ६२
न पूर्वे नापरे चक्रुरिदं केचन मानवाः
इति संचुक्रुशुर्देवाः कृते कर्मणि दुष्करे ६३
पश्यामस्त्रिषु लोकेषु न तं संस्थास्नुचारिषु
जातं चापि जनिष्यं वा द्वितीयं वापि संप्रति ६४
अन्यमौशीनराच्छैव्याद्धुरो वोढारमित्युत
गतिं यस्य न यास्यन्ति मानुषा लोकवासिनः ६५
तस्य नप्तारमायान्तं शैब्यं कः समवारयत्
द्रोणायाभिमुखं यान्तं व्यात्ताननमिवान्तकम् ६६
विराटस्य रथानीकं मत्स्यस्यामित्रघातिनः
प्रेप्सन्तं समरे द्रोणं के वीराः पर्यवारयन् ६७
सद्यो वृकोदराज्जातो महाबलपराक्रमः
मायावी राक्षसो घोरो यस्मान्मम महद्भयम् ६८
पार्थानां जयकामं तं पुत्राणां मम कण्टकम्
घटोत्कचं महाबाहुं कस्तं द्रोणादवारयत् ६९
एते चान्ये च बहवो येषामर्थाय सञ्जय
त्यक्तारः संयुगे प्राणान्किं तेषामजितं युधि ७०
येषां च पुरुषव्याघ्रः शार्ङ्गधन्वा व्यपाश्रयः
हितार्थी चापि पार्थानां कथं तेषां पराजयः ७१
लोकानां गुरुरत्यन्तं लोकनाथः सनातनः
नारायणो रणे नाथो दिव्यो दिव्यात्मवान्प्रभुः ७२
यस्य दिव्यानि कर्माणि प्रवदन्ति मनीषिणः
तान्यहं कीर्तयिष्यामि भक्त्या स्थैर्यार्थमात्मनः ७३
इति श्रीमहाभारते द्रोणपर्वणि नवमोऽध्यायः ९

दशमोऽध्यायः

धृतराष्ट्र उवाच
शृणु दिव्यानि कर्माणि वासुदेवस्य सञ्जय
कृतवान्यानि गोविन्दो यथा नान्यः पुमान्क्वचित् १
संवर्धता गोपकुले बालेनैव महात्मना
विख्यापितं बलं बाह्वोस्त्रिषु लोकेषु सञ्जय २
उच्चैःश्रवस्तुल्यबलं वायुवेगसमं जवे
जघान हयराजं यो यमुनावनवासिनम् ३
दानवं घोरकर्माणं गवां मृत्युमिवोत्थितम्
वृषरूपधरं बाल्ये भुजाभ्यां निजघान ह ४
प्रलम्बं नरकं जम्भं पीठं चापि महासुरम्
मुरुं चाचलसङ्काशमवधीत्पुष्करेक्षणः ५
तथा कंसो महातेजा जरासंधेन पालितः
विक्रमेणैव कृष्णेन सगणः शातितो रणे ६
सुनामा नाम विक्रान्तः समग्राक्षौहिणीपतिः
भोजराजस्य मध्यस्थो भ्राता कंसस्य वीर्यवान् ७
बलदेवद्वितीयेन कृष्णेनामित्रघातिना
तरस्वी समरे दग्धः ससैन्यः शूरसेनराट् ८
दुर्वासा नाम विप्रर्षिस्तथा परमकोपनः
आराधितः सदारेण स चास्मै प्रददौ वरान् ९
तथा गान्धारराजस्य सुतां वीरः स्वयंवरे
निर्जित्य पृथिवीपालानवहत्पुष्करेक्षणः १०
अमृष्यमाणा राजानो यस्य जात्या हया इव
रथे वैवाहिके युक्ताः प्रतोदेन कृतव्रणाः ११
जरासंधं महाबाहुमुपायेन जनार्दनः
परेण घातयामास पृथगक्षौहिणीपतिम् १२
चेदिराजं च विक्रान्तं राजसेनापतिं बली
अर्घे विवदमानं च जघान पशुवत्तदा १३
सौभं दैत्यपुरं स्वस्थं शाल्वगुप्तं दुरासदम्
समुद्रकुक्षौ विक्रम्य पातयामास माधवः १४

अङ्गान्वङ्गान्कलिङ्गांश्च मागधान्काशिकोसलान्
वत्सगर्गकरूषांश्च पुण्ड्रांश्चाप्यजयद्रणे १५
आवन्त्यान्दाक्षिणात्यांश्च पार्वतीयान्दशेरकान्
काश्मीरकानौरसकान्पिशाचांश्च समन्दरान् १६
काम्बोजान्वाटधानांश्च चोलान्पाण्ड्यांश्च सञ्जय
त्रिगर्तान्मालवांश्चैव दरदांश्च सुदुर्जयान् १७
नानादिग्भ्यश्च संप्राप्तान्व्रातानश्वशकान्प्रति
जितवान्पुण्डरीकाक्षो यवनांश्च सहानुगान् १८
प्रविश्य मकरावासं यादोभिरभिसंवृतम्
जिगाय वरुणं युद्धे सलिलान्तर्गतं पुरा १९
युधि पञ्चजनं हत्वा पातालतलवासिनम्
पाञ्चजन्यं हृषीकेशो दिव्यं शङ्खमवाप्तवान् २०
खाण्डवे पार्थसहितस्तोषयित्वा हुताशनम्
आग्नेयमस्त्रं दुर्धर्षं चक्रं लेभे महाबलः २१
वैनतेयं समारुह्य त्रासयित्वामरावतीम्
महेन्द्रभवनाद्वीरः पारिजातमुपानयत् २२
तच्च मर्षितवाञ्शक्रो जानंस्तस्य पराक्रमम्
राज्ञां चाप्यजितं कंचित्कृष्णेनेह न शुश्रुम २३
यच्च तन्महदाश्चर्यं सभायां मम सञ्जय
कृतवान्पुण्डरीकाक्षः कस्तदन्य इहार्हति २४
यच्च भक्त्या प्रपन्नोऽहमद्राक्षं कृष्णमीश्वरम्
तन्मे सुविदितं सर्वं प्रत्यक्षमिव चागमत् २५
नान्तो विक्रमयुक्तस्य बुद्ध्या युक्तस्य वा पुनः
कर्मणः शक्यते गन्तुं हृषीकेशस्य सञ्जय २६
तथा गदश्च साम्बश्च प्रद्युम्नोऽथ विदूरथः
आगावहोऽनिरुद्धश्च चारुदेष्णश्च सारणः २७
उल्मुको निशठश्चैव झल्ली बभ्रुश्च वीर्यवान्
पृथुश्च विपृथुश्चैव समीकोऽथारिमेजयः २८
एते वै बलवन्तश्च वृष्णिवीराः प्रहारिणः
कथञ्चित्पाण्डवानीकं श्रयेयुः समरे स्थिताः २९

आहूता वृष्णिवीरेण केशवेन महात्मना
ततः संशयितं सर्वं भवेदिति मतिर्मम ३०
नागायुतबलो वीरः कैलासशिखरोपमः
वनमाली हली रामस्तत्र यत्र जनार्दनः ३१
यमाहुः सर्वपितरं वासुदेवं द्विजातयः
अपि वा ह्येष पाण्डूनां योत्स्यतेऽथाय सञ्जय ३२
स यदा तात संनह्येत्पाण्डवार्थाय केशवः
न तदा प्रत्यनीकेषु भविता तस्य कश्चन ३३
यदि स्म कुरवः सर्वे जयेयुः सर्वपाण्डवान्
वार्ष्णेयोऽथाय तेषां वै गृह्णीयाच्छस्त्रमुत्तमम् ३४
ततः सर्वान्नरव्याघ्रो हत्वा नरपतीन्रणे
कौरवांश्च महाबाहुः कुन्त्यै दद्यात्स मेदिनीम् ३५
यस्य यन्ता हृषीकेशो योद्धा यस्य धनंजयः
रथस्य तस्य कः संख्ये प्रत्यनीको भवेद्रथः ३६
न केनचिदुपायेन कुरूणां दृश्यते जयः
तस्मान्मे सर्वमाचक्ष्व यथा युद्धमवर्तत ३७
अर्जुनः केशवस्यात्मा कृष्णोऽप्यात्मा किरीटिनः
अर्जुने विजयो नित्यं कृष्णे कीर्तिश्च शाश्वती ३८
प्राधान्येन हि भूयिष्ठममेयाः केशवे गुणाः
मोहाद्दुर्योधनः कृष्णं यन्न वेत्तीह माधवम् ३९
मोहितो दैवयोगेन मृत्यपाशपुरस्कृतः
न वेद कृष्णं दाशार्हमर्जुनं चैव पाण्डवम् ४०
पूर्वदेवौ महात्मानौ नरनारायणावुभौ
एकात्मानौ द्विधाभूतौ दृश्यते मानवैर्भुवि ४१
मनसापि हि दुर्धर्षौ सेनामेतां यशस्विनौ
नाशयेतामिहेच्छन्तौ मानुषत्वात्तु नेच्छतः ४२
युगस्येव विपर्यासो लोकानामिव मोहनम्
भीष्मस्य च वधस्तात द्रोणस्य च महात्मनः ४३
न ह्येव ब्रह्मचर्येण न वेदाध्ययनेन च
न क्रियाभिर्न शस्त्रेण मृत्योः कश्चिद्विमुच्यते ४४

लोकसंभावितौ वीरौ कृतास्त्रौ युद्धदुर्मदौ
भीष्मद्रोणौ हतौ श्रुत्वा किं नु जीवामि सञ्जय ४५
यां तां श्रियमसूयामः पुरा यातां युधिष्ठिरे
अद्य तामनुजानीमो भीष्मद्रोणवधेन च ४६
तथा च मत्कृते प्राप्तः कुरूणामेष संक्षयः
पक्वानां हि वधे सूत वज्रायन्ते तृणान्यपि ४७
अनन्यमिदमैश्वर्यं लोके प्राप्तो युधिष्ठिरः
यस्य कोपान्महेष्वासौ भीष्मद्रौणौ निपातितौ ४८
प्राप्तः प्रकृतितो धर्मो नाधर्मो मानवान्प्रति
क्रूरः सर्वविनाशाय कालः समतिवर्तते ४९
अन्यथा चिन्तिता ह्यर्था नरैस्तात मनस्विभिः
अन्यथैव हि गच्छन्ति दैवादिति मतिर्मम ५०
तस्मादपरिहार्येऽथे संप्राप्ते कृच्छ्र उत्तमे
अपारणीये दुश्चिन्त्ये यथाभूतं प्रचक्ष्व मे ५१
इति श्रीमहाभारते द्रोणपर्वणि दशमोऽध्यायः १०

## एकादशोऽध्यायः

सञ्जय उवाच
हन्त ते वर्णयिष्यामि सर्वं प्रत्यक्षदर्शिवान्
यथा स न्यपतद्द्रोणः सादितः पाण्डुसृञ्जयैः १
सेनापतित्वं संप्राप्य भारद्वाजो महारथः
मध्ये सर्वस्य सैन्यस्य पुत्रं ते वाक्यमब्रवीत् २
यत्कौरवाणामृषभादापगेयादनन्तरम्
सेनापत्येन मां राजन्नद्य सत्कृतवानसि ३
सदृशं कर्मणस्तस्य फलं प्राप्नुहि पार्थिव
करोमि कामं कं तेऽद्य प्रवृणीष्व यमिच्छसि ४
ततो दुर्योधनश्चिन्त्य कर्णदुःशासनादिभिः
तमथोवाच दुर्धर्षमाचार्यं जयतां वरम् ५
ददासि चेद्वरं मह्यं जीवग्राहं युधिष्ठिरम्
गृहीत्वा रथिनां श्रेष्ठं मत्समीपमिहानय ६

ततः कुरूणामाचार्यः श्रुत्वा पुत्रस्य ते वचः
सेनां प्रहर्षयन्सर्वामिदं वचनमब्रवीत् ७
धन्यः कुन्तीसुतो राजा यस्य ग्रहणमिच्छसि
न वधार्थं सुदुर्धर्ष वरमद्य प्रयाचसि ८
किमर्थं च नरव्याघ्र न वधं तस्य काङ्क्षसि
नाशंससि क्रियामेतां मत्तो दुर्योधन ध्रुवम् ९
आहो स्विद्धर्मपुत्रस्य द्वेष्टा तस्य न विद्यते
यदिच्छसि त्वं जीवन्तं कुलं रक्षसि चात्मनि १०
अथ वा भरतश्रेष्ठ निर्जित्य युधि पाण्डवान्
राज्यांशं प्रतिदत्त्वा च सौभ्रात्रं कर्तुमिच्छसि ११
धन्यः कुन्तीसुतो राजा सुजाता चास्य धीमतः
अजातशत्रुता सत्या तस्य यत्स्निह्यते भवान् १२
द्रोणेन त्वेवमुक्तस्य तव पुत्रस्य भारत
सहसा निःसृतो भावो योऽस्य नित्यं प्रवर्तते १३
नाकारो गूहितुं शक्यो बृहस्पतिसमैरपि
तस्मात्तव सुतो राजन्प्रहृष्टो वाक्यमब्रवीत् १४
वधे कुन्तीसुतस्याजौ नाचार्य विजयो मम
हते युधिष्ठिरे पार्थो हन्यात्सर्वान्हि नो ध्रुवम् १५
न च शक्यो रणे सर्वैर्निहन्तुममरैरपि
य एव चैषां शेषः स्यात्स एवास्मान्न शेषयेत् १६
सत्यप्रतिज्ञे त्वानीते पुनर्द्यूतेन निर्जिते
पुनर्यास्यन्त्यरण्याय कौन्तेयास्तमनुव्रताः १७
सोऽय मम जयो व्यक्तं दीर्घकालं भविष्यति
अतो न वधमिच्छामि धर्मराजस्य कर्हिचित् १८
तस्य जिह्ममभिप्रायं ज्ञात्वा द्रोणोऽथ तत्त्ववित्
तं वरं सान्तरं तस्मै ददौ संचिन्त्य बुद्धिमान् १९
द्रोण उवाच
न चेद्युधिष्ठिरं वीर पालयेदर्जुनो युधि
मन्यस्व पाण्डवं ज्येष्ठमानीतं वशमात्मनः २०
न हि पार्थो रणे शक्यः सेन्द्रैर्देवासुरैरपि

प्रत्युद्यातुमतस्तात नैतदामर्षयाम्यहम् २१
असंशयं स शिष्यो मे मत्पूर्वश्चास्त्रकर्मणि
तरुणः कीर्तियुक्तश्च एकायनगतश्च सः २२
अस्त्राणीन्द्राच्च रुद्राच्च भूयांसि समवाप्तवान्
अमर्षितश्च ते राजंस्तेन नामर्षयाम्यहम् २३
स चापक्रम्यतां युद्धाद्येनोपायेन शक्यते
अपनीते ततः पार्थे धर्मराजो जितस्त्वया २४
ग्रहणं चेज्जयं तस्य मन्यसे पुरुषर्षभ
एतेन चाभ्युपायेन ध्रुवं ग्रहणमेष्यति २५
अहं गृहीत्वा राजानं सत्यधर्मपरायणम्
आनयिष्यामि ते राजन्वशमद्य न संशयः २६
यदि स्थास्यति संग्रामे मुहूर्तमपि मेऽग्रतः
अपनीते नरव्याघ्रे कुन्तीपुत्रे धनंजये २७
फल्गुनस्य समक्षं तु न हि पार्थो युधिष्ठिरः
ग्रहीतुं समरे शक्यः सेन्द्रैरपि सुरासुरैः २८
सञ्जय उवाच
सान्तरं तु प्रतिज्ञाते राज्ञो द्रोणेन निग्रहे
गृहीतं तममन्यन्त तव पुत्राः सुबालिशाः २९
पाण्डवेषु हि सापेक्षं द्रोणं जानाति ते सुतः
ततः प्रतिज्ञास्थैर्यार्थं स मन्त्रो बहुलीकृतः ३०
ततो दुर्योधनेनापि ग्रहणं पाण्डवस्य तत्
सैन्यस्थानेषु सर्वेषु व्याघोषितमरिन्दम ३१
इति श्रीमहाभारते द्रोणपर्वणि एकादशोऽध्यायः ११

द्वादशोऽध्यायः

सञ्जय उवाच
ततस्ते सैनिकाः श्रुत्वा तं युधिष्ठिरनिग्रहम्
सिंहनादरवांश्चक्रुर्बाणशङ्खरवैः सह १
तत्तु सर्वं यथा वृत्तं धर्मराजेन भारत
आप्तैराशु परिज्ञातं भारद्वाजचिकीर्षितम् २

ततः सर्वान्समानाय्य भ्रातॄन्सैन्यांश्च सर्वशः
अब्रवीद्धर्मराजस्तु धनंजयमिदं वचः ३
श्रुतं ते पुरुषव्याघ्र द्रोणस्याद्य चिकीर्षितम्
यथा तन्न भवेत्सत्यं तथा नीतिर्विधीयताम् ४
सान्तरं हि प्रतिज्ञातं द्रोणेनामित्रकर्शन
तच्चान्तरममोघेषौ त्वयि तेन समाहितम् ५
स त्वमद्य महाबाहो युध्यस्व मदनन्तरम्
यथा दुर्योधनः कामं नेमं द्रोणादवाप्नुयात् ६
अर्जुन उवाच
यथा मे न वधः कार्य आचार्यस्य कथंचन
तथा तव परित्यागो न मे राजंश्चिकीर्षितः ७
अप्येवं पाण्डव प्राणानुत्सृजेयमहं युधि
प्रतीयां नाहमाचार्यं त्वां न जह्यां कथञ्चन ८
त्वां निगृह्याहवे राजन्धार्तराष्ट्रो यमिच्छति
न स तं जीवलोकेऽस्मिन्कामं प्राप्तः कथञ्चन ९
प्रपतेद्द्यौः सनक्षत्रा पृथिवी शकलीभवेत्
न त्वां द्रोणो निगृह्णीयाज्जीवमाने मयि ध्रुवम् १०
यदि तस्य रणे साह्यं कुरुते वज्रभृत्स्वयम्
देवैर्वा सहितो दैत्यैर्न त्वां प्राप्स्यत्यसौ मृधे ११
मयि जीवति राजेन्द्र न भयं कर्तुमर्हसि
द्रोणादस्त्रभृतां श्रेष्ठात्सर्वशस्त्रभृतामपि १२
न स्मराम्यनृतां वाचं न स्मरामि पराजयम्
नस्मरामि प्रतिश्रुत्य किंचिदप्यनपाकृतम् १३
सञ्जय उवाच
ततः शङ्खाश्च भेर्यश्च मृदङ्गाश्चानकैः सह
प्रावाद्यन्त महाराज पाण्डवानां निवेशने १४
सिंहनादश्च संजज्ञे पाण्डवानां महात्मनाम्
धनुर्ज्यातलशब्दश्च गगनस्पृक्सुभैरवः १५
तं श्रुत्वा शङ्खनिर्घोषं पाण्डवस्य महात्मनः
त्वदीयेष्वप्यनीकेषु वादित्राण्यभिजघ्निरे १६

ततो व्यूढान्यनीकानि तव तेषां च भारत
शनैरुपेयुरन्योन्यं योत्स्यमानानि संयुगे १७
ततः प्रववृते युद्धं तुमुलं लोमहर्षणम्
पाण्डवानां कुरूणां च द्रोणपाञ्चाल्ययोरपि १८
यतमानाः प्रयत्नेन द्रोणानीकविशातने
न शेकुः सृञ्जया राजंस्तद्धि द्रोणेन पालितम् १९
तथैव तव पुत्रस्य रथोदाराः प्रहारिणः
न शेकुः पाण्डवीं सेनां पाल्यमानां किरीटिना २०
आस्तां ते स्तिमिते सेने रक्ष्यमाणे परस्परम्
संप्रसुप्ते यथा नक्तं वनराज्यौ सुपुष्पिते २१
ततो रुक्मरथो राजन्नर्केणेव विराजता
वरूथिना विनिष्पत्य व्यचरत्पृतनान्तरे २२
तमुद्यतं रथेनैकमाशुकारिणमाहवे
अनेकमिव संत्रासान्मेनिरे पाण्डुसृञ्जयाः २३
तेन मुक्ताः शरा घोरा विचेरुः सर्वतोदिशम्
त्रासयन्तो महाराज पाण्डवेयस्य वाहिनीम् २४
मध्यंदिनमनुप्राप्तो गभस्तिशतसंवृतः
यथादृश्यत घर्मांशुस्तथा द्रोणोऽप्यदृश्यत २५
न चैनं पाण्डवेयानां कश्चिच्छक्नोति मारिष
वीक्षितुं समरे क्रुद्धं महेन्द्रमिव दानवाः २६
मोहयित्वा ततः सैन्यं भारद्वाजः प्रतापवान्
धृष्टद्युम्नबलं तूर्णं व्यधमन्निशितैः शरैः २७
स दिशः सर्वतो रुद्ध्वा संवृत्य खमजिह्मगैः
पार्षतो यत्र तत्रैव ममृदे पाण्डुवाहिनीम् २८
इति श्रीमहाभारते द्रोणपर्वणि द्वादशोऽध्यायः १२

## त्रयोदशोऽध्यायः

सञ्जय उवाच
ततः स पाण्डवानीके जनयंस्तुमुलं महत्
व्यचरत्पाण्डवान्द्रोणो दहन्कक्षमिवानलः १

निर्दहन्तमनीकानि साक्षादग्निमिवोत्थितम्
दृष्ट्वा रुक्मरथं क्रुद्धे समकम्पन्त सृञ्जयाः २
प्रततं चास्यमानस्य धनुषोऽस्याशुकारिणः
ज्याघोषः श्रूयतेऽत्यर्थं विस्फूर्जितमिवाशनेः ३
रथिनः सादिनश्चैव नागानश्वान्पदातिनः
रौद्रा हस्तवता मुक्ताः प्रमथ्नन्ति स्म सायकाः ४
नानद्यमानः पर्जन्यः सानिलः शुचिसंक्षये
अश्मवर्षमिवावर्षत्परेषामावहद्भयम् ५
व्यचरत्स तदा राजन्सेनां विक्षोभयन्प्रभुः
वर्धयामास संत्रासं शात्रवाणाममानुषम् ६
तस्य विद्युदिवाभ्रेषु चापं हेमपरिष्कृतम्
भ्रमद्रथाम्बुदे तस्मिन्दृश्यते स्म पुनः पुनः ७
स वीरः सत्यवान्प्राज्ञो धर्मनित्यः सुदारुणः
युगान्तकाले यन्तेव रौद्रां प्रास्कन्दयन्नदीम् ८
अमर्षवेगप्रभवां क्रव्यादगणसंकुलाम्
बलौघैः सर्वतः पूर्णां वीरवृक्षापहारिणीम् ९
शोणितोदां रथावर्तां हस्त्यश्वकृतरोधसम्
कवचोडुपसंयुक्तां मांसपङ्कसमाकुलाम् १०
मेदोमज्जास्थिसिकतामुष्णीषवरफेनिलाम्
संग्रामजलदापूर्णां प्रासमत्स्यसमाकुलाम् ११
नरनागाश्वसंभूतां शरवेगौघवाहिनीम्
शरीरदारुशृङ्गाटां भुजनागसमाकुलाम् १२
उत्तमाङ्गोपलतलां निस्त्रिंशझषसेविताम्
रथनागह्रदोपेतां नानाभरणनीरजाम् १३
महारथशतावर्तां भूमिरेणूर्मिमालिनीम्
महावीर्यवतां संख्ये सुतरां भीरुदुस्तराम् १४
शूरव्यालसमाकीर्णां प्राणिवाणिजसेविताम्
छिन्नच्छत्रमहाहंसां मुकुटाण्डजसंकुलाम् १५
चक्रकूर्मां गदानक्रां शरक्षुद्रझषाकुलाम्
बडगृध्रसृगालानां घोरसंघैर्निषेविताम् १६

निहतान्प्राणिनः संख्ये द्रोणेन बलिना शरैः
वहन्तीं पितृलोकाय शतशो राजसत्तम १७
शरीरशतसंबाधां केशशैवलशाद्वलाम्
नदीं प्रावर्तयद्राजन्भीरूणां भयवर्धिनीम् १८
तं जयन्तमनीकानि तानि तान्येव भारत
सर्वतोऽभ्यद्रवन्द्रोणं युधिष्ठिरपुरोगमाः १९
तानभिद्रवतः शूरांस्तावका दृढकार्मुकाः
सर्वतः प्रत्यगृह्णन्त तदभूल्लोमहर्षणम् २०
शतमायस्तु शकुनिः सहदेवं समाद्रवत्
सनियन्तृध्वजरथं विव्याध निशितैः शरैः २१
तस्य माद्रीसुतः केतुं धनुः सूतं हयानपि
नातिक्रुद्धः शरैश्छित्त्वा षष्ट्या विव्याध मातुलम् २२
सौबलस्तु गदां गृह्य प्रचस्कन्द रथोत्तमात्
स तस्य गदया राजन्रथात्सूतमपातयत् २३
ततस्तौ विरथौ राजन्गदाहस्तौ महाबलौ
चिक्रीडतू रणे शूरौ सशृङ्गाविव पर्वतौ २४
द्रोणः पाञ्चालराजानं विद्ध्वा दशभिराशुगैः
बहुभिस्तेन चाभ्यस्तस्तं विव्याध शताधिकैः २५
विविंशतिं भीमसेनो विंशत्या निशितैः शरैः
विद्ध्वा नाकम्पयद्वीरस्तदद्भुतमिवाभवत् २६
विविंशतिस्तु सहसा व्यश्वकेतुशरासनम्
भीमं चक्रे महाराज ततः सैन्यान्यपूजयन् २७
स तन्न ममृषे वीरः शत्रोर्विजयमाहवे
ततोऽस्य गदया दान्तान्हयान्सर्वानपातयत् २८
शल्यस्तु नकुलं वीरः स्वस्त्रीयं प्रियमात्मनः
विव्याध प्रहसन्बाणैर्लाडयन्कोपयन्निव २९
तस्याश्वानातपत्रं च ध्वजं सूतमथो धनुः
निपात्य नकुलः संख्ये शङ्खं दध्मौ प्रतापवान् ३०
धृष्टकेतुः कृपेनास्तांश्छित्त्वा बहुविधाञ्शरान्
कृपं विव्याध सप्तत्या लक्ष्म चास्याहरत्त्रिभिः ३१

तं कृपः शरवर्षेण महता समवाकिरत्
निवार्य च रणे विप्रो धृष्टकेतुमयोधयत् ३२
सात्यकिः कृतवर्माणं नाराचेन स्तनान्तरे
विद्ध्वा विव्याध सप्तत्या पुनरन्यैः स्मयन्निव ३३
सप्तसप्ततिभिर्भोजस्तं विद्ध्वा निशितैः शरैः
नाकम्पयत शैनेयं शीघ्रो वायुरिवाचलम् ३४
सेनापतिः सुशर्माणं शीघ्रं मर्मस्वताडयत्
स चापि तं तोमरेण जत्रुदेशे ऽताडयत् ३५
वैकर्तनं तु समरे विराटः प्रत्यवारयत्
सह मत्स्यैर्महावीर्यैस्तदद्भुतमिवाभवत् ३६
तत्पौरुषमभूत्तत्र सूतपुत्रस्य दारुणम्
यत्सैन्यं वारयामास शरैः संनतपर्वभिः ३७
द्रुपदस्तु स्वयं राजा भगदत्तेन संगतः
तयोर्युद्धं महाराज चित्ररूपमिवाभवत्
भूतानां त्रासजननं चक्रातेऽस्त्रविशारदौ ३८
भूरिश्रवा रणे राजन्याज्ञसेनिं महारथम्
महता सायकौघेन छादयामास वीर्यवान् ३९
शिखण्डी तु ततः क्रुद्धः सौमदत्तिं विशां पते
नवत्या सायकानां तु कम्पयामास भारत ४०
राक्षसौ भीमकर्माणौ हैडिम्बालम्बुसावुभौ
चक्रातेऽत्यद्भुतं युद्धं परस्परवधैषिणौ ४१
मायाशतसृजौ दृप्तौ मायाभिरितरेतरम्
अन्तर्हितौ चेरतुस्तौ भृशं विस्मयकारिणौ ४२
चेकितानोऽनुविन्देन युयुधे त्वतिभैरवम्
यथा देवासुरे युद्धे बलशक्रौ महाबलौ ४३
लक्ष्मणः क्षत्रदेवेन विमर्दमकरोद्भृशम्
यथा विष्णुः पुरा राजन्हिरण्याक्षेण संयुगे ४४
ततः प्रजविताश्वेन विधिवत्कल्पितेन च
रथेनाभ्यपतद्राजन्सौभद्रं पौरवो नदन् ४५
ततोऽभियाय त्वरितो युद्धाकाङ्क्षी महाबलः

तेन चक्रे महद्युद्धमभिमन्युररिंदमः ४६
पौरवस्त्वथ सौभद्रं शरव्रातैरवाकिरत्
तस्यार्जुनिर्ध्वजं छत्रं धनुश्चोर्व्यामपातयत् ४७
सौभद्रः पौरवं त्वन्यैर्विद्ध्वा सप्तभिराशुगैः
पञ्चभिस्तस्य विव्याध हयान्सूतं च सायकैः ४८
ततः संहर्षयन्सेनां सिंहवद्विनदन्मुहुः
समादत्तार्जुनिस्तूर्णं पौरवान्तकरं शरम् ४९
द्वाभ्यां शराभ्यां हार्दिक्यश्चकर्त सशरं धनुः
तदुत्सृज्य धनुश्छिन्नं सौभद्रः परवीरहा
उद्ववर्ह सितं खड्गमाददानः शरावरम् ५०
स तेनानेकतारेण चर्मणा कृतहस्तवत्
भ्रान्तासिरचरन्मार्गान्दर्शयन्वीर्यमात्मनः ५१
भ्रामितं पुनरुद्भ्रान्तमाधूतं पुनरुच्छ्रितम्
चर्मनिस्त्रिंशयो राजन्निर्विशेषमदृश्यत ५२
स पौरवरथस्येषामाप्लुत्य सहसा नदन्
पौरवं रथमास्थाय केशपक्षे परामृशत् ५३
जघानास्य पदा सूतमसिनापातयद्ध्वजम्
विक्षोभ्याम्भोनिधिं तार्क्ष्यस्तं नागमिव चाक्षिपत् ५४
तमाकलितकेशान्तं ददृशुः सर्वपार्थिवाः
उक्षाणमिव सिंहेन पात्यमानमचेतनम् ५५
तमार्जुनिवशं प्राप्तं कृष्यमाणमनाथवत्
पौरवं पतितं दृष्ट्वा नामृष्यत जयद्रथः ५६
स बर्हिणमहावाजं किङ्किणीशतजालवत्
चर्म चादाय खड्गं च नदन्पर्यपतद्रथात् ५७
ततः सैन्धवमालोक्य कार्ष्णिरुत्सृज्य पौरवम्
उत्पपात रथात्तूर्णं श्येनवन्निपपात च ५८
प्रासपट्टिशनिस्त्रिंशाञ्शत्रुभिः संप्रवेरितान्
विच्छेदाथासिना कार्ष्णिश्चर्मणा संरुरोध च ५९
स दर्शयित्वि सैन्यानां स्वबाहुबलमात्मनः
तमुद्यम्य महाखड्गं चर्म चाथ पुनर्बली ६०

वृद्धक्षत्रस्य दायादं पितुरत्यन्तवैरिणम्
ससाराभिमुखः शूरः शार्दूल इव कुञ्जरम् ६१
तौ परस्परमासाद्य खड्गदन्तनखायुधौ
हृष्टवत्सम्प्रजह्राते व्याघ्रकेसरिणाविव ६२
संपातेष्वभिपातेषु निपातेष्वसिचर्मणोः
न तयोरन्तरं कश्चिद्ददर्श नरसिंहयोः ६३
अवक्षेपोऽसिनिर्ह्रादः शस्त्रान्तरनिदर्शनम्
बाह्यान्तरनिपातश्च निर्विशेषमदृश्यत ६४
बाह्यमाभ्यन्तरं चैव चरन्तौ मार्गमुत्तमम्
ददृशाते महात्मानौ सपक्षाविव पर्वतौ ६५
ततो विक्षिपतः खड्गं सौभद्रस्य यशस्विनः
शरावरणपक्षान्ते प्रजहार जयद्रथः ६६
रुक्मपक्षान्तरे सक्तस्तस्मिंश्चर्मणि भास्वरे
सिन्धुराजबलोद्धूतः सोऽभज्यत महानसिः ६७
भग्नमाज्ञाय निस्त्रिंशमवप्लुत्य पदानि षट्
सोऽदृश्यत निमेषेण स्वरथं पुनरास्थितः ६८
तं कार्ष्णिं समरान्मुक्तमास्थितं रथमुत्तमम्
सहिताः सर्वराजानः परिवव्रुः समन्ततः ६९
ततश्चर्म च खड्गं च समुत्क्षिप्य महाबलः
ननादार्जुनदायादः प्रेक्षमाणो जयद्रथम् ७०
सिन्धुराजं परित्यज्य सौभद्रः परवीरहा
तापयामास तत्सैन्यं भुवनं भास्करो यथा ७१
तस्य सर्वायसीं शक्तिं शल्यः कनकभूषणाम्
चिक्षेप समरे घोरां दीप्तामग्निशिखामिव ७२
तामवप्लुत्य जग्राह सकोशं चाकरोदसिम्
वैनतेयो यथा कार्ष्णिः पतन्तमुरगोत्तमम् ७३
तस्य लाघवमाज्ञाय सत्त्वं चामिततेजसः
सहिताः सर्वराजानः सिंहनादमथानदन् ७४
ततस्तामेव शल्यस्य सौभद्रः परवीरहा
मुमोच भुजवीर्येण वैडूर्यविकृताजिराम् ७५

स तस्य रथमासाद्य निर्मुक्तभुजगोपमा
जघान सूतं शल्यस्य रथाच्चैनमपातयत् ७६
ततो विराटद्रुपदौ धृष्टकेतुर्युधिष्ठिरः
सात्यकिः केकयाभीमो धृष्टद्युम्नशिखण्डिनौ
यमौ च द्रौपदेयाश्च साधु साध्विति चुक्रुशुः ७७
बाणशब्दाश्च विविधाः सिंहनादाश्च पुष्कलाः
प्रादुरासन्हर्षयन्तः सौभद्रमपलायिनम्
तन्नामृष्यन्त पुत्रास्ते शत्रोर्विजयलक्षणम् ७८
अथैनं सहसा सर्वे समन्तान्निशितैः शरैः
अभ्याकिरन्महाराज जलदा इव पर्वतम् ७९
तेषां च प्रियमन्विच्छन्सूतस्य च पराभवात्
आर्तायनिरमित्रघ्नः क्रुद्धः सौभद्रमभ्ययात् ८०
इति श्रीमहाभारते द्रोणपर्वणि त्रयोदशोऽध्यायः १३

## चतुर्दशोऽध्यायः

धृतराष्ट्र उवाच
बहूनि सुविचित्राणि द्वंद्वयुद्धानि सञ्जय
त्वयोक्तानि निशम्याहं स्पृहयामि सचक्षुषाम् १
आश्चर्यभूतं लोकेषु कथयिष्यन्ति मानवाः
कुरूणां पाण्डवानां च युद्धं देवासुरोपमम् २
न हि मे तृप्तिरस्तीह शृण्वतो युद्धमुत्तमम्
तस्मादार्तायनेर्युद्धं सौभद्रस्य च शंस मे ३
सञ्जय उवाच
सादितं प्रेक्ष्य यन्तारं शल्यः सर्वायसीं गदाम्
समुत्क्षिप्य नदन्क्रुद्धः प्रचस्कन्द रथोत्तमात् ४
तं दीप्तमिव कालाग्निं दण्डहस्तमिवान्तकम्
जवेनाभ्यपतद्भीमः प्रगृह्य महतीं गदाम् ५
सौभद्रोऽप्यशनिप्रख्यां प्रगृह्य महतीं गदाम्
एह्येहीत्यब्रवीच्छल्यं यत्नाद्भीमेन वारितः ६
वारयित्वा तु सौभद्रं भीमसेनः प्रतापवान्

शल्यमासाद्य समरे तस्थौ गिरिरिवाचलः ७
तथैव मद्रराजोऽपि भीमं दृष्ट्वा महाबलम्
ससाराभिमुखस्तूर्णं शार्दूल इव कुञ्जरम् ८
ततस्तूर्यनिनादाश्च शङ्खानां च सहस्रशः
सिंहनादाश्च संजज्ञुर्भेरीणां च महास्वनाः ९
पश्यतां शतशो ह्यासीदन्योन्यसमचेतसाम्
पाण्डवानां कुरूणां च साधु साध्विति निस्वनः १०
न हि मद्राधिपादन्यः सर्वराजसु भारत
सोढुमुत्सहते वेगं भीमसेनस्य संयुगे ११
तथा मद्राधिपस्यापि गदावेगं महात्मनः
सोढुमुत्सहते लोके कोऽन्यो युधि वृकोदरात् १२
पट्टैर्जाम्बूनदैर्बद्धा बभूव जनहर्षिणी
प्रजज्वाल तथाविद्धा भीमेन महती गदा १३
तथैव चरतो मार्गान्मण्डलानि च भागशः
महाविद्युत्प्रतीकाशा शल्यस्य शुशुभे गदा १४
तौ वृषाविव नर्दन्तौ मण्डलानि विचेरतुः
आवर्जितगदाशृङ्गावुभौ शल्यवृकोदरौ १५
मण्डलावर्तमार्गेषु गदाविहरणेषु च
निर्विशेषमभूद्युद्धं तयोः पुरुषसिंहयोः १६
ताडिता भीमसेनेन शल्यस्य महती गदा
साग्निज्वाला महारौद्रा गदाचूर्णमशीर्यत १७
तथैव भीमसेनस्य द्विषताभिहता गदा
वर्षाप्रदोषे खद्योतैर्वृतो वृक्ष इवाबभौ १८
गदा क्षिप्ता तु समरे मद्रराजेन भारत
व्योम संदीपयाना सा ससृजे पावकं बहु १९
तथैव भीमसेनेन द्विषते प्रेषिता गदा
तापयामास तत्सैन्यं महोल्का पतती यथा २०
ते चैवोभे गदे श्रेष्ठे समासाद्य परस्परम्
श्वसन्त्यौ नागकन्येव ससृजाते विभावसुम् २१
नखैरिव महाव्याघ्रौ दन्तैरिव महागजौ

तौ विचेरतुरासाद्य गदाभ्यां च परस्परम् २२
ततो गदाग्राभिहतौ क्षणेन रुधिरोक्षितौ
ददृशाते महात्मानौ पुष्पिताविव किंशुकौ २३
शुश्रुवे दिक्षु सर्वासु तयोः पुरुषसिंहयोः
गदाभिघातसंह्लादः शक्राशनिरवोपमः २४
गदया मद्रराजेन सव्यदक्षिणमाहतः
नाकम्पत तदा भीमो भिद्यमान इवाचलः २५
तथा भीमगदावेगैस्ताड्यमानो महाबलः
धैर्यान्मद्राधिपस्तस्थौ वज्रैर्गिरिरिवाहतः २६
आपेततुर्महावेगौ समुच्छ्रितमहागदौ
पुनरन्तरमार्गस्थौ मण्डलानि विचेरतुः २७
अथाप्लुत्य पदान्यष्टौ संनिपत्य गजाविव
सहसा लोहदण्डाभ्यामन्योन्यमभिजघ्नतुः २८
तौ परस्परवेगाच्च गदाभ्यां च भृशाहतौ
युगपत्पेततुर्वीरौ क्षिताविन्द्रध्वजाविव २९
ततो विह्वलमानं तं निःश्वसन्तं पुनः पुनः
शल्यमभ्यपतत्तूर्णं कृतवर्मा महारथः ३०
दृष्ट्वा चैनं महाराज गदयाभिनिपीडितम्
विचेष्टन्तं यथा नागं मूर्छयाभिपरिप्लुतम् ३१
ततः सगदमारोप्य मद्राणामधिपं रथम्
अपोवाह रणात्तूर्णं कृतवर्मा महारथः ३२
क्षीबवद्विह्वलो वीरो निमेषात्पुनरुत्थितः
भीमोऽपि सुमहाबाहुर्गदापाणिरदृश्यत ३३
ततो मद्राधिपं दृष्ट्वा तव पुत्राः पराङ्मुखम्
सनागरथपत्त्यश्वाः समकम्पन्त मारिष ३४
ते पाण्डवैरर्द्यमानास्तावका जितकाशिभिः
भीता दिशोऽन्वपद्यन्त वातनुन्ना घना इव ३५
निर्जित्य धार्तराष्ट्रांस्तु पाण्डवेया महारथाः
व्यरोचन्त रणे राजन्दीप्यमाना यशस्विनः ३६
सिंहनादान्भृशं चक्रुः शङ्खान्दध्मुश्च हर्षिताः

भेरीश्च वादयामासुर्मृदङ्गांश्चानकैः सह ३७
इति श्रीमहाभारते द्रोणपर्वणि चतुर्दशोऽध्यायः १४

पञ्चदशोऽध्यायः

सञ्जय उवाच
तद्बलं सुमहद्दीर्णं त्वदीयं प्रेक्ष्य वीर्यवान्
दधारैको रणे पाण्डून्वृषसेनोऽस्त्रमायया १
शरा दश दिशो मुक्ता वृषसेनेन मारिष
विचेरुस्ते विनिर्भिद्य नरवाजिरथद्विपान् २
तस्य दीप्ता महाबाणा विनिश्चेरुः सहस्रशः
भानोरिव महाबाहो ग्रीष्मकाले मरीचयः ३
तेनार्दिता महाराज रथिनः सादिनस्तथा
निपेतुरुर्व्यां सहसा वातनुन्ना इव द्रुमाः ४
हयौघांश्च रथौघांश्च गजौघांश्च समन्ततः
अपातयद्रणे राजञ्शतशोऽथ सहस्रशः ५
दृष्ट्वा तमेवं समरे विचरन्तमभीतवत्
सहिताः सर्वराजानः परिवव्रुः समन्ततः ६
नाकुलिस्तु शतानीको वृषसेनं समभ्ययात्
विव्याध चैनं दशभिर्नाराचैर्मर्मभेदिभिः ७
तस्य कर्णात्मजश्चापं छित्त्वा केतुमपातयत्
तं भ्रातरं परीप्सन्तो द्रौपदेयाः समभ्ययुः ८
कर्णात्मजं शरव्रातैश्चक्रुश्चादृश्यमञ्जसा
तान्नदन्तोऽभ्यधावन्त द्रोणपुत्रमुखा रथाः ९
छादयन्तो महाराज द्रौपदेयान्महारथान्
शरैर्नानाविधैस्तूर्णं पर्वताञ्जलदा इव १०
तान्पाण्डवाः प्रत्यगृह्णंस्त्वरिताः पुत्रगृद्धिनः
पाञ्चालाः केकया मत्स्याः सृञ्जयाश्चोद्यतायुधाः ११
तद्युद्धमभवद्घोरं तुमुलं लोमहर्षणम्
त्वदीयैः पाण्डुपुत्राणां देवानामिव दानवैः १२
एवमुत्तमसंरम्भा युयुधुः कुरुपाण्डवाः

परस्परमुदीक्षन्तः परस्परकृतागसः १३
तेषां ददृशिरे कोपाद्वपूंष्यमिततेजसाम्
युयुत्सूनामिवाकाशे पतत्रिवरभोगिनाम् १४
भीमकर्णकृपद्रोणद्रौणिपार्षतसात्यकैः
बभासे स रणोद्देशः कालसूर्यैरिवोदितैः १५
तदासीत्तुमुलं युद्धं निघ्नतामितरेतरम्
महाबलानां बलिभिर्दानवानां यथा सुरैः १६
ततो युधिष्ठिरानीकमुद्धूतार्णवनिस्वनम्
त्वदीयमवधीत्सैन्यं संप्रद्रुतमहारथम् १७
तत्प्रभग्नं बलं दृष्ट्वा शत्रुभिर्भृशमर्दितम्
अलं द्रुतेन वः शूरा इति द्रोणोऽभ्यभाषत १८
ततः शोणहयः क्रुद्धश्चतुर्दन्त इव द्विपः
प्रविश्य पाण्डवानीकं युधिष्ठिरमुपाद्रवत् १९
तमविध्यच्छितैर्बाणैः कङ्कपत्रैर्युधिष्ठिरः
तस्य द्रोणो धनुश्छित्त्वा तं द्रुतं समुपाद्रवत् २०
चक्ररक्षः कुमारस्तु पाञ्चालानां यशस्करः
दधार द्रोणमायान्तं वेलेव सरितां पतिम् २१
द्रोणं निवारितं दृष्ट्वा कुमारेण द्विजर्षभम्
सिंहनादरवो ह्यासीत्साधु साध्विति भाषताम् २२
कुमारस्तु ततो द्रोणं सायकेन महाहवे
विव्याधोरसि संक्रुद्धः सिंहवच्चानदन्मुहुः २३
संवार्य तु रणे द्रोणः कुमारं वै महाबलः
शरैरनेकसाहस्रैः कृतहस्तो जितक्लमः २४
तं शूरमार्यव्रतिनमस्त्रार्थकृतनिश्रमम्
चक्ररक्षमपामृद्नात्कुमारं द्विजसत्तमः २५
स मध्यं प्राप्य सेनायाः सर्वाः परिचरन्दिशः
तव सैन्यस्य गोप्तासीद्भारद्वाजो रथर्षभः २६
शिखण्डिनं द्वादशभिर्विंशत्या चोत्तमौजसम्
नकुलं पञ्चभिर्विद्ध्वा सहदेवं च सप्तभिः २७
युधिष्ठिरं द्वादशभिर्द्रौपदेयांस्त्रिभिस्त्रिभिः

सात्यकिं पञ्चभिर्विद्ध्वा मत्स्यं च दशभिः शरैः २८
व्यद्धोभयद्रणे योधान्यथामुख्यानभिद्रवन्
अभ्यवर्तत संप्रेप्सुः कुन्तीपुत्रं युधिष्ठिरम् २९
युगंधरस्ततो राजन्भारद्वाजं महारथम्
वारयामास संक्रुद्धं वातोद्धूतमिवार्णवम् ३०
युधिष्ठिरं स विद्ध्वा तु शरैः संनतपर्वभिः
युगंधरं च भल्लेन रथनीडादपाहरत् ३१
ततो विराटद्रुपदौ केकयाः सात्यकिः शिबिः
व्याघ्रदत्तश्च पाञ्चाल्यः सिंहसेनश्च वीर्यवान् ३२
एते चान्ये च बहवः परीप्सन्तो युधिष्ठिरम्
आवव्रुस्तस्य पन्थानं किरन्तः सायकान्बहून् ३३
व्याघ्रदत्तश्च पाञ्चाल्यो द्रोणं विव्याध मार्गणैः
पञ्चाशद्भिः शितै राजंस्तत उच्चुक्रुशुर्जनाः ३४
त्वरितं सिंहसेनस्तु द्रोणं विद्ध्वा महारथम्
प्राहसत्सहसा हृष्टस्त्रासयन्वै यतव्रतम् ३५
ततो विस्फार्य नयने धनुर्ज्यामवमृज्य च
तलशब्दं महत्कृत्वा द्रोणस्तं समुपाद्रवत् ३६
ततस्तु सिंहसेनस्य शिरः कायात्सकुण्डलम्
व्याघ्रदत्तस्य चाक्रम्य भल्लाभ्यामहरद्बली ३७
तान्प्रमृद्य शरव्रातैः पाण्डवानां महारथान्
युधिष्ठिरसमभ्याशे तस्थौ मृत्युरिवान्तकः ३८
ततोऽभवन्महाशब्दो राजन्यौधिष्ठिरे बले
हृतो राजेति योधानां समीपस्थे यतव्रते ३९
अब्रुवन्सैनिकास्तत्र दृष्ट्वा द्रोणस्य विक्रमम्
अद्य राजा धार्तराष्ट्रः कृतार्थो वै भविष्यति
आगमिष्यति नो नूनं धार्तराष्ट्रस्य संयुगे ४०
एवं संजल्पतां तेषां तावकानां महारथः
आयाज्जवेन कौन्तेयो रथघोषेण नादयन् ४१
शोणितोदां रथावर्तां कृत्वा विशसने नदीम्
शूरास्थिचयसंकीर्णां प्रेतकूलापहारिणीम् ४२

तां शरौघमहाफेनां प्रासमत्स्यसमाकुलाम्
नदीमुत्तीर्य वेगेन कुरून्विद्राव्य पाण्डवः ४३
ततः किरीटी सहसा द्रोणानीकमुपाद्रवत्
छादयन्निषुजालेन महता मोहयन्निव ४४
शीघ्रमभ्यस्यतो बाणान्संदधानस्य चानिशम्
नान्तरं ददृशे कश्चित्कौन्तेयस्य यशस्विनः ४५
न दिशो नान्तरिक्षं च न द्यौर्नैव च मेदिनी
अदृश्यत महाराज बाणभूतमिवाभवत् ४६
नादृश्यत तदा राजंस्तत्र किंचन संयुगे
बाणान्धकारे महति कृते गाण्डीवधन्वना ४७
सूर्ये चास्तमनुप्राप्ते रजसा चाभिसंवृते
नाज्ञायत तदा शत्रुर्न सुहृन्न च किंचन ४८
ततोऽवहारं चक्रुस्ते द्रोणदुर्योधनादयः
तान्विदित्वा भृशं त्रस्तानयुद्धमनसः परान् ४९
स्वान्यनीकानि बीभत्सुः शनकैरवहारयत्
ततोऽभितुष्टुवुः पार्थं प्रहृष्टाः पाण्डुसृञ्जयाः
पाञ्चालाश्च मनोज्ञाभिर्वाग्भिः सूर्यमिवर्षयः ५०
एवं स्वशिबिरं प्रायाज्जित्वा शत्रून्धनंजयः
पृष्ठतः सर्वसैन्यानां मुदितो वै सकेशवः ५१
मसारगल्वर्कसुवर्णरूप्यैर्वज्रप्रवालस्फटिकैश्च मुख्यैः
चित्रे रथे पाण्डुसुतो बभासे नक्षत्रचित्रे वियतीव चन्द्रः ५२
इति श्रीमहाभारते द्रोणपर्वणि पञ्चदशोऽध्यायः १५
समाप्तं द्रोणाभिषेकपर्व

षोडशोऽध्यायः

सञ्जय उवाच
ते सेने शिबिरं गत्वा न्यविशेतां विशां पते
यथाभागं यथान्यायं यथागुल्मं च सर्वशः १
कृत्वावहारं सैन्यानां द्रोणः परमदुर्मनाः
दुर्योधनमभिप्रेक्ष्य सव्रीडमिदमब्रवीत् २

उक्तमेतन्मया पूर्वं न तिष्ठति धनंजये
शक्यो ग्रहीतुं संग्रामे देवैरपि युधिष्ठिरः ३
इति तद्वः प्रयततां कृतं पार्थेन संयुगे
मातिशङ्कीर्वचो मह्यमजेयौ कृष्णपाण्डवौ ४
अपनीते तु योगेन केनचिच्छ्वेतवाहने
तत एष्यति ते राजन्वशमद्य युधिष्ठिरः ५
कश्चिदाह्वयतां संख्ये देशमन्यं प्रकर्षतु
तमजित्वा तु कौन्तेयो न निवर्तेत्कथञ्चन ६
एतस्मिन्नन्तरे शून्ये धर्मराजमहं नृप
ग्रहीष्यामि चमूं भित्त्वा धृष्टद्युम्नस्य पश्यतः ७
अर्जुनेन विहीनस्तु यदि नोत्सृजते रणम्
मामुपायान्तमालोक्य गृहीतमिति विद्धि तम् ८
एवं ते सहसा राजन्धर्मपुत्रं युधिष्ठिरम्
समानेष्यामि सगणं वशमद्य न संशयः ९
यदि तिष्ठति संग्रामे मुहूर्तमपि पाण्डवः
अथापयाति संग्रामाद्विजयात्तद्विशिष्यते १०
द्रोणस्य तु वचः श्रुत्वा त्रिगर्ताधिपतिस्ततः
भ्रातृभिः सहितो राजन्निदं वचनमब्रवीत् ११
वयं विनिकृता राजन्सदा गाण्डीवधन्वना
अनागःस्वपि चागस्कृदस्मासु भरतर्षभ १२
ते वयं स्मरमाणास्तान्विनिकारान्पृथग्विधान्
क्रोधाग्निना दह्यमाना न शेमहि सदा निशाः १३
स नो दिव्यास्त्रसंपन्नश्चक्षुर्विषयमागतः
कर्तारः स्म वयं सर्वं यच्चिकीर्षाम हृद्गतम् १४
भवतश्च प्रियं यत्स्यादस्माकं च यशस्करम्
वयमेनं हनिष्यामो निकृष्यायोधनाद्बहिः १५
अद्यास्त्वनर्जुना भूमिरत्रिगर्ताथ वा पुनः
सत्यं ते प्रतिजानीमो नैतन्मिथ्या भविष्यति १६
एवं सत्यरथश्चोक्त्वा सत्यधर्मा च भारत
सत्यवर्मा च सत्येषुः सत्यकर्मा तथैव च १७

सहिता भ्रातरः पञ्च रथानामयुतेन च
न्यवर्तन्त महाराज कृत्वा शपथमाहवे १८
मालवास्तुण्डिकेराश्च रथानामयुतैस्त्रिभिः
सुशर्मा च नरव्याघ्रस्त्रिगर्तः प्रस्थलाधिपः १९
माचेल्लकैर्ललित्थैश्च सहितो मद्रकैरपि
रथानामयुतेनैव सोऽशपद्भ्रातृभिः सह २०
नानाजनपदेभ्यश्च रथानामयुतं पुनः
समुत्थितं विशिष्टानां संशपार्थमुपागतम् २१
ततो ज्वलनमादाय हुत्वा सर्वे पृथक्पृथक्
जगृहुः कुशचीराणि चित्राणि कवचानि च २२
ते च बद्धतनुत्राणा घृताक्ताः कुशचीरिणः
मौर्वीमेखलिनो वीराः सहस्रशतदक्षिणाः २३
यज्वानः पुत्रिणो लोक्याः कृतकृत्यास्तनुत्यजः
योक्ष्यमाणास्तदात्मानं यशसा विजयेन च २४
ब्रह्मचर्यश्रुतिमुखैः क्रतुभिश्चाप्तदक्षिणैः
प्राप्य लोकान्सुयुद्धेन क्षिप्रमेव यियासवः २५
ब्राह्मणांस्तर्पयित्वा च निष्कान्दत्त्वा पृथक्पृथक्
गाश्च वासांसि च पुनः समाभाष्य परस्परम् २६
प्रज्वाल्य कृष्णवर्त्मानमुपागम्य रणे व्रतम्
तस्मिन्नग्नौ तदा चक्रुः प्रतिज्ञां दृढनिश्चयाः २७
शृण्वतां सर्वभूतानामुच्चैर्वाचः स्म मेनिरे
धृत्वा धनंजयवधे प्रतिज्ञां चापि चक्रिरे २८
ये वै लोकाश्चानृतानां ये चैव ब्रह्मघातिनाम्
पानपस्य च ये लोका गुरुदाररतस्य च २९
ब्रह्मस्वहारिणश्चैव राजपिण्डापहारिणः
शरणागतं च त्यजतो याचमानं तथा घ्नतः ३०
अगारदाहिनां ये च ये च गां निघ्नतामपि
अपचारिणां च ये लोका ये च ब्रह्मद्विषामपि ३१
जायां च ऋतुकाले वै ये मोहादभिगच्छताम्
श्राद्धसंगतिकानां च ये चाप्यात्मापहारिणाम् ३२

न्यासापहारिणां ये च श्रुतं नाशयतां च ये
कोपेन युध्यमानानां ये च नीचानुसारिणाम् ३३
नास्तिकानां च ये लोका येऽग्निहोरापितृत्यजाम्
तानाप्नुयामहे लोकान्ये च पापकृतामपि ३४
यद्यहत्वा वयं युद्धे निवर्तेम धनंजयम्
तेन चाभ्यर्दितास्त्रासाद्भवेम हि पराङ्मुखाः ३५
यदि त्वसुकरं लोके कर्म कुर्याम संयुगे
इष्टान्पुण्यकृतां लोकान्प्राप्नुयाम न संशयः ३६
एवमुक्त्वा ततो राजंस्तेऽभ्यवर्तन्त संयुगे
आह्वयन्तोऽजुनं वीराः पितृजुष्टां दिशं प्रति ३७
आहूतस्तैर्नरव्याघ्रैः पार्थः परपुरंजयः
धर्मराजमिदं वाक्यमपदान्तरमब्रवीत् ३८
आहूतो न निवर्तेयमिति मे व्रतमाहितम्
संशप्तकाश्च मां राजन्नाह्वयन्ति पुनः पुनः ३९
एष च भ्रातृभिः सार्धं सुशर्माह्वयते रणे
वधाय सगणस्यास्य मामनुज्ञातुमर्हसि ४०
नैतच्छक्नोमि संसोढुमाह्वानं पुरुषर्षभ
सत्यं ते प्रतिजानामि हतान्विद्धि परान्युधि ४१
युधिष्ठिर उवाच
श्रुतमेतत्त्वया तात यद्द्रोणस्य चिकीर्षितम्
यथा तदनृतं तस्य भवेत्तद्वत्समाचर ४२
द्रोणो हि बलवाञ्शूरः कृतास्त्रश्च जितश्रमः
प्रतिज्ञातं च तेनैतद्ग्रहणं मे महारथ ४३
अर्जुन उवाच
अयं वै सत्यजिद्राजन्नद्य ते रक्षिता युधि
ध्रियमाणे हि पाञ्चाल्ये नाचार्यः काममाप्स्यति ४४
हते तु पुरुषव्याघ्रे रणे सत्यजिति प्रभो
सर्वैरपि समेतैर्वा न स्थातव्यं कथंचन ४५
सञ्जय उवाच
अनुज्ञातस्ततो राज्ञा परिष्वक्तश्च फल्गुनः

प्रेम्णा दृष्टश्च बहुधा आशिषा च प्रयोजितः ४६
विहायैनं ततः पार्थस्त्रिगर्तान्प्रत्ययाद्बली
क्षुधितः क्षुद्विघातार्थं सिंहो मृगगणानिव ४७
ततो दौर्योधनं सैन्यं मुदा परमया युतम्
गतेऽजुने भृशं क्रुद्धं धर्मराजस्य निग्रहे ४८
ततोऽन्योन्येन ते सेने समाजग्मतुरोजसा
गङ्गासरय्वोर्वेगेन प्रावृषीवोल्बणोदके ४९
इति श्रीमहाभारते द्रोणपर्वणि षोडशोऽध्यायः १६

सप्तदशोऽध्यायः

सञ्जय उवाच
ततः संशप्तका राजन्समे देशे व्यवस्थिताः
व्यूह्यानीकं रथैरेव चन्द्राधोख्यं मुदान्विताः १
ते किरीटिनमायान्तं दृष्ट्वा हर्षेण मारिष
उदक्रोशन्नरव्याघ्राः शब्देन महता तदा २
स शब्दः प्रदिशः सर्वा दिशः खं च समावृणोत्
आवृतत्वाच्च लोकस्य नासीत्तत्र प्रतिस्वनः ३
अतीव संप्रहृष्टांस्तानुपलभ्य धनंजयः
किंचिदभ्युत्स्मयन्कृष्णमिदं वचनमब्रवीत् ४
पश्यैतान्देवकीमातर्मुमूर्षूनद्य संयुगे
भ्रातृंस्त्रैगर्तकानेवं रोदितव्ये प्रहर्षितान् ५
अथ वा हर्षकालोऽय त्रैगर्तानामसंशयम्
कुनरैर्दुरवापान्हि लोकान्प्राप्स्यन्त्यनुत्तमान् ६
एवमुक्त्वा महाबाहुर्हृषीकेशं ततोऽजुनः
आससाद रणे व्यूढां त्रैगर्तानामनीकिनीम् ७
स देवदत्तमादाय शङ्खं हेमपरिष्कृतम्
दध्मौ वेगेन महता फल्गुनः पूरयन्दिशः ८
तेन शब्देन वित्रस्ता संशप्तकवरूथिनी
निश्चेष्टावस्थिता संख्ये अश्मसारमयी यथा ९
वाहास्तेषां विवृत्ताक्षाः स्तब्धकर्णशिरोधराः

विष्टब्धचरणा मूत्रं रुधिरं च प्रसुस्रुवुः १०
उपलभ्य च ते संज्ञामवस्थाप्य च वाहिनीम्
युगपत्पाण्डुपुत्राय चिक्षिपुः कङ्कपत्रिणः ११
तान्यर्जुनः सहस्राणि दश पञ्चैव चाशुगैः
अनागतान्येव शरैश्चिच्छेदाशुपराक्रमः १२
ततोऽर्जुनं शितैर्बाणैर्दशभिर्दशभिः पुनः
प्रत्यविध्यंस्ततः पार्थस्तानविध्यत्त्रिभिस्त्रिभिः १३
एकैकस्तु ततः पार्थं राजन्विव्याध पञ्चभिः
स च तान्प्रतिविव्याध द्वाभ्यां द्वाभ्यां पराक्रमी १४
भूय एव तु संरब्धास्तेऽर्जुनं सहकेशवम्
आपूरयञ्शरैस्तीक्ष्णैस्तटाकमिव वृष्टिभिः १५
ततः शरसहस्राणि प्रापतन्नर्जुनं प्रति
भ्रमराणामिव व्राताः फुल्लद्रुमगणे वने १६
ततः सुबाहुस्त्रिंशद्भिरद्रिसारमयैर्दृढैः
अविध्यदिषुभिर्गाढं किरीटे सव्यसाचिनम् १७
तैः किरीटी किरीटस्थैर्हेमपुङ्खैरजिह्मगैः
शातकुम्भमयापीडो बभौ यूप इवोच्छ्रितः १८
हस्तावापं सुबाहोस्तु भल्लेन युधि पाण्डवः
चिच्छेद तं चैव पुनः शरवर्षैरवाकिरत् १९
ततः सुशर्मा दशभिः सुरथश्च किरीटिनम्
सुधर्मा सुधनुश्चैव सुबाहुश्च समर्पयन् २०
तांस्तु सर्वान्पृथग्बाणैर्वानरप्रवरध्वजः
प्रत्यविध्यद्ध्वजांश्चैषां भल्लैश्चिच्छेद काञ्चनान् २१
सुधन्वनो धनुश्छित्त्वा हयान्वै न्यवधीच्छरैः
अथास्य सशिरस्त्राणं शिरः कायादपाहरत् २२
तस्मिंस्तु पतिते वीरे त्रस्तास्तस्य पदानुगाः
व्यद्रवन्त भयाद्भीता येन दौर्योधनं बलम् २३
ततो जघान संक्रुद्धो वासविस्तां महाचमूम्
शरजालैरविच्छिन्नैस्तमः सूर्य इवांशुभिः २४
ततो भग्ने बले तस्मिन्विप्रयाते समन्ततः

सव्यसाचिनि संक्रुद्धे त्रैगर्तान्भियमाविशत् २५
ते वध्यमानाः पार्थेन शरैः संनतपर्वभिः
अमुह्यंस्तत्र तत्रैव त्रस्ता मृगगणा इव २६
ततस्त्रिगर्तराट् क्रुद्धस्तानुवाच महारथान्
अलं द्रुतेन वः शूरा न भयं कर्तुमर्हथ २७
शप्त्वा तु शपथान्घोरान्सर्वसैन्यस्य पश्यतः
गत्वा दौर्योधनं सैन्यं किं वै वक्ष्यथ मुख्यगाः २८
नावहास्याः कथं लोके कर्मणानेन संयुगे
भवेम सहिताः सर्वे निवर्तध्वं यथाबलम् २९
एवमुक्तास्तु ते राजन्नुदक्रोशन्मुहुर्मुहुः
शङ्खांश्च दध्मिरे वीरा हर्षयन्तः परस्परम् ३०
ततस्ते संन्यवर्तन्त संशप्तकगणाः पुनः
नारायणाश्च गोपालाः कृत्वा मृत्युं निवर्तनम् ३१
इति श्रीमहाभारते द्रोणपर्वणिसप्तदशोऽध्यायः १७

अष्टादशोऽध्यायः

सञ्जय उवाच
दृष्ट्वा तु संनिवृत्तांस्तान्संशप्तकगणान्पुनः
वासुदेवं महात्मानमर्जुनः समभाषत १
चोदयाश्वान्हृषीकेश संशप्तकगणान्प्रति
नैते हास्यन्ति संग्रामं जीवन्त इति मे मतिः २
पश्य मेऽस्त्रबलं घोरं बाह्वोरिष्वसनस्य च
अद्यैतान्पातयिष्यामि क्रुद्धो रुद्रः पशूनिव ३
ततः कृष्णः स्मितं कृत्वा परिणन्द्य शिवेन तम्
प्रावेशयत दुर्धर्षो यत्र यत्रैच्छदर्जुनः ४
बभ्राजे स रथोऽत्यर्थमुह्यमानो रणे तदा
उह्यमानमिवाकाशे विमानं पाण्डुरैर्हयैः ५
मण्डलानि ततश्चक्रे गतप्रत्यागतानि च
यथा शक्ररथो राजन्युद्धे देवासुरे पुरा ६
अथ नारायणाः क्रुद्धा विविधायुधपाणयः

छादयन्तः शरव्रातैः परिवव्रुर्धनञ्जयम् ७
अदृश्यं च मुहूर्तेन चक्रुस्ते भरतर्षभ
कृष्णेन सहितं युद्धे कुन्तीपुत्रं धनञ्जयम् ८
क्रुद्धस्तु फल्गुनः संख्ये द्विगुणीकृतविक्रमः
गाण्डीवमुपसंमृज्य तूर्णं जग्राह संयुगे ९
बद्ध्वा च भृकुटीं वक्त्रे क्रोधस्य प्रतिलक्षणम्
देवदत्तं महाशङ्खं पूरयामास पाण्डवः १०
अथास्त्रमरिसङ्घघ्नं त्वाष्ट्रमभ्यस्यदर्जुनः
ततो रूपसहस्राणि प्रादुरासन्पृथक्पृथक् ११
आत्मनः प्रतिरूपैस्तैर्नानारूपैर्विमोहिताः
अन्योन्यमर्जुनं मत्वा स्वमात्मानं च जघ्निरे १२
अयमर्जुनोऽय गोविन्द इमौ यादवपाण्डवौ
इति ब्रुवाणाः संमूढा जघ्नुरन्योन्यमाहवे १३
मोहिताः परमास्त्रेण क्षयं जग्मुः परस्परम्
अशोभन्त रणे योधाः पुष्पिता इव किंशुकाः १४
ततः शरसहस्राणि तैर्विमुक्तानि भस्मसात्
कृत्वा तदस्त्रं तान्वीराननयद्यमसादनम् १५
अथ प्रहस्य बीभत्सुर्ललित्थान्मालवानपि
माचेल्लकांस्त्रिगर्तांश्च योधेयांश्चार्दयच्छरैः १६
ते वध्यमाना वीरेण क्षत्रियाः कालचोदिताः
व्यसृजञ्शरवर्षाणि पार्थे नानाविधानि च १७
ततो नैवार्जुनस्तत्र न रथो न च केशवः
प्रत्यदृश्यत घोरेण शरवर्षेण संवृतः १८
ततस्ते लब्धलक्ष्यत्वादन्योन्यमभिचुक्रुशुः
हतौ कृष्णाविति प्रीता वासांस्यादुधुवुस्तदा १९
भेरीमृदङ्गशङ्खांश्च दध्मुर्वीराः सहस्रशः
सिंहनादरवांश्चोग्रांश्चक्रिरे तत्र मारिष २०
ततः प्रसिष्विदे कृष्णः खिन्नश्चार्जुनमब्रवीत्
क्वासि पार्थ न पश्ये त्वां कच्चिज्जीवसि शत्रुहन् २१
तस्य तं मानुषं भावं भावज्ञोऽज्ञाय पाण्डवः

वायव्यास्त्रेण तैरस्तां शरवृष्टिमपाहरत् २२
ततः संशप्तकव्रातान्साश्वद्विपरथायुधान्
उवाह भगवान्वायुः शुष्कपर्णचयानिव २३
उह्यमानास्तु ते राजन्बह्वशोभन्त वायुना
प्रडीनाः पक्षिणः काले वृक्षेभ्य इव मारिष २४
तांस्तथा व्याकुलीकृत्य त्वरमाणो धनञ्जयः
जघान निशितैर्बाणैः सहस्राणि शतानि च २५
शिरांसि भल्लैरहरद्बाहूनपि च सायुधान्
हस्तिहस्तोपमांश्चोरूञ्शरैरुर्व्यामपातयत् २६
पृष्ठच्छिन्नान्विचरणान्विमस्तिष्केक्षणाङ्गुलीन्
नानाङ्गावयवैर्हीनांश्चकारारीन्धनञ्जयः २७
गन्धर्वनगराकारान्विधिवत्कल्पितान्रथान्
शरैर्विशकलीकुर्वंश्चक्रे व्यश्वरथद्विपान् २८
मुण्डतालवनानीव तत्र तत्र चकाशिरे
छिन्नध्वजरथव्राताः केचित्केचित्क्वचित्क्वचित् २९
सोत्तरायुधिनो नागाः सपताकाङ्कुशायुधाः
पेतुः शक्राशनिहता द्रुमवन्त इवाचलाः ३०
चामरापीडकवचाः स्रस्तान्त्रनयनासवः
सारोहास्तुरगाः पेतुः पार्थबाणहताः क्षितौ ३१
विप्रविद्धासिनखराश्छिन्नवर्मर्ष्टिशक्तयः
पत्तयश्छिन्नवर्माणः कृपणं शेरते हताः ३२
तैर्हतैर्हन्यमानैश्च पतद्भिः पतितैरपि
भ्रमद्भिर्निष्टनद्भिश्च घोरमायोधनं बभौ ३३
रजश्च महदुद्भूतं शान्तं रुधिरवृष्टिभिः
मही चाप्यभवद्दुर्गा कबन्धशतसंकुला ३४
तद्बभौ रौद्रबीभत्सं बीभत्सोर्यानमाहवे
आक्रीड इव रुद्रस्य घ्नतः कालात्यये पशून् ३५
ते वध्यमानाः पार्थेन व्याकुलाश्वरथद्विपाः
तमेवाभिमुखाः क्षीणाः शक्रस्यातिथितां गताः ३६
सा भूमिर्भरतश्रेष्ठ निहतैस्तैर्महारथैः

आस्तीर्णा संबभौ सर्वा प्रेतीभूतैः समन्ततः ३७
एतस्मिन्नन्तरे चैव प्रमत्ते सव्यसाचिनि
व्यूढानीकस्ततो द्रोणो युधिष्ठिरमुपाद्रवत् ३८
तं प्रत्यगृह्णंस्त्वरिता व्यूढानीकाः प्रहारिणः
युधिष्ठिरं परीप्सन्तस्तदासीत्तुमुलं महत् ३९
इति श्रीमहाभारते द्रोणपर्वणि अष्टादशोऽध्यायः १८

## एकोनविंशोऽध्यायः

सञ्जय उवाच
परिणाम्य निशां तां तु भारद्वाजो महारथः
बहूक्त्वा च ततो राजन्राजानं च सुयोधनम् १
विधाय योगं पार्थेन संशप्तकगणैः सह
निष्क्रान्ते च रणात्पार्थे संशप्तकवधं प्रति २
व्यूढानीकस्ततो द्रोणः पाण्डवानां महाचमूम्
अभ्ययाद्भरतश्रेष्ठ धर्मराजजिघृक्षया ३
व्यूहं दृष्ट्वा सुपर्णं तु भारद्वाजकृतं तदा
व्यूहेन मण्डलार्धेन प्रत्यव्यूहद्युधिष्ठिरः ४
मुखमासीत्सुपर्णस्य भारद्वाजो महारथः
शिरो दुर्योधनो राजा सोदर्यैः सानुगैः सह ५
चक्षुषी कृतवर्मा च गौतमश्चास्यतां वरः
भूतवर्मा क्षेमशर्मा करकर्षश्च वीर्यवान् ६
कलिङ्गाः सिंहलाः प्राच्याः शूराभीरा दशेरकाः
शका यवनकाम्बोजास्तथा हंसपदाश्च ये ७
ग्रीवायां शूरसेनाश्च दरदा मद्रकेकयाः
गजाश्वरथपत्त्यौघास्तस्थुः शतसहस्रशः ८
भूरिश्रवाः शलः शल्यः सोमदत्तश्च बाह्लिकः
अक्षौहिण्या वृता वीरा दक्षिणं पक्षमाश्रिताः ९
विन्दानुविन्दावावन्त्यौ काम्बोजश्च सुदक्षिणः
वामं पक्षं समाश्रित्य द्रोणपुत्राग्रगाः स्थिताः १०
पृष्ठे कलिङ्गाः साम्बष्ठा मागधाः पौण्ड्रमद्रकाः

गान्धाराः शकुनिप्राग्याः पार्वतीया वसातयः ११
पुच्छे वैकर्तनः कर्णः सपुत्रज्ञातिबान्धवः
महत्या सेनया तस्थौ नानाध्वजसमुत्थया १२
जयद्रथो भीमरथः सांयात्रिकसभो जयः
भूमिञ्जयो वृषक्राथो नैषधश्च महाबलः १३
वृता बलेन महता ब्रह्मलोकपुरस्कृताः
व्यूहस्योपरि ते राजन्स्थिता युद्धविशारदाः १४
द्रोणेन विहितो व्यूहः पदात्यश्वरथद्विपैः
वातोद्धूतार्णवाकारः प्रवृत्त इव लक्ष्यते १५
तस्य पक्षप्रपक्षेभ्यो निष्पतन्ति युयुत्सवः
सविद्युत्स्तनिता मेघाः सर्वदिग्भ्य इवोष्णगे १६
तस्य प्राग्ज्योतिषो मध्ये विधिवत्कल्पितं गजम्
आस्थितः शुशुभे राजन्नंशुमानुदये यथा १७
माल्यदामवता राजा श्वेतच्छत्रेण धार्यता
कृत्तिकायोगयुक्तेन पौर्णमास्यामिवेन्दुना १८
नीलाञ्जनचयप्रख्यो मदान्धो द्विरदो बभौ
अभिवृष्टो महामेघैर्यथा स्यात्पर्वतो महान् १९
नानानृपतिभिर्वीरैर्विविधायुधभूषणैः
समन्वितः पार्वतीयैः शक्रो देवगणैरिव २०
ततो युधिष्ठिरः प्रेक्ष्य व्यूहं तमतिमानुषम्
अजय्यमरिभिः संख्ये पार्षतं वाक्यमब्रवीत् २१
ब्राह्मणस्य वशं नाहमियामद्य यथा प्रभो
पारावतसवर्णाश्व तथा नीतिर्विधीयताम् २२
धृष्टद्युम्न उवाच
द्रोणस्य यतमानस्य वशं नैष्यसि सुव्रत
अहमावारयिष्यामि द्रोणमद्य सहानुगम् २३
मयि जीवति कौरव्य नोद्वेगं कर्तुमर्हसि
न हि शक्तो रणे द्रोणो विजेतुं मां कथञ्चन २४
सञ्जय उवाच
एवमुक्त्वा किरन्बाणान्द्रुपदस्य सुतो बली

पारावतसवर्णाश्वः स्वयं द्रोणमुपाद्रवत् २५
अनिष्टदर्शनं दृष्ट्वा धृष्टद्युम्नमवस्थितम्
क्षणेनैवाभवद्द्रोणो नातिहृष्टमना इव २६
तं तु संप्रेक्ष्य पुत्रस्ते दुर्मुखः शत्रुकर्शनः
प्रियं चिकीर्षन्द्रोणस्य धृष्टद्युम्नमवारयत् २७
स संप्रहारस्तुमुलः समरूप इवाभवत्
पार्षतस्य च शूरस्य दुर्मुखस्य च भारत २८
पार्षतः शरजालेन क्षिप्रं प्रच्छाद्य दुर्मुखम्
भारद्वाजं शरौघेण महता समवारयत् २९
द्रोणमावारितं दृष्ट्वा भृशायस्तस्तवात्मजः
नानालिङ्गैः शरव्रातैः पार्षतं सममोहयत् ३०
तयोर्विषक्तयोः संख्ये पाञ्चाल्यकुरुमुख्ययोः
द्रोणो यौधिष्ठिरं सैन्यं बहुधा व्यधमच्छरैः ३१
अनिलेन यथाभ्राणि विच्छिन्नानि समन्ततः
तथा पार्थस्य सैन्यानि विच्छिन्नानि क्वचित्क्वचित् ३२
मुहूर्तमिव तद्युद्धमासीन्मधुरदर्शनम्
तत उन्मत्तवद्राजन्निर्मर्यादमवर्तत ३३
नैव स्वे न परे राजन्नज्ञायन्त परस्परम्
अनुमानेन संज्ञाभिर्युद्धं तत्समवर्तत ३४
चूडामणिषु निष्केषु भूषणेष्वसिचर्मसु
तेषामादित्यवर्णाभा मरीच्यः प्रचकाशिरे ३५
तत्प्रकीर्णपताकानां रथवारणवाजिनाम्
बलाकाशबलाभ्राभं ददृशे रूपमाहवे ३६
नरानेव नरा जघ्नुरुदग्राश्च हया हयान्
रथांश्च रथिनो जघ्नुर्वारणा वरवारणान् ३७
समुच्छ्रितपताकानां गजानां परमद्विपैः
क्षणेन तुमुलो घोरः संग्रामः समवर्तत ३८
तेषां संसक्तगात्राणां कर्षतामितरेतरम्
दन्तसङ्घातसङ्घर्षात्सधूमोऽग्निरजायत ३९
विप्रकीर्णपताकास्ते विषाणजनिताग्नयः

बभूवुः खं समासाद्य सविद्युत इवाम्बुदाः ४०
विक्षिरद्भिर्नदद्भिश्च निपतद्भिश्च वारणैः
सम्बभूव मही कीर्णा मेघैर्द्यौरिव शारदी ४१
तेषामाहन्यमानानां बाणतोमरवृष्टिभिः
वारणानां रवो जज्ञे मेघानामिव संप्लवे ४२
तोमराभिहताः केचिद्बाणैश्च परमद्विपाः
वित्रेसुः सर्वभूतानां शब्दमेवापरेऽव्रजन् ४३
विषाणाभिहताश्चापि केचित्तत्र गजा गजैः
चक्रुरार्तस्वरं घोरमुत्पातजलदा इव ४४
प्रतीपं ह्रियमाणाश्च वारणा वरवारणैः
उन्मथ्य पुनराजह्रुः प्रेरिताः परमाङ्कुशैः ४५
महामात्रा महामात्रैस्ताडिताः शरतोमरैः
गजेभ्यः पृथिवीं जग्मुर्मुक्तप्रहरणाङ्कुशाः ४६
निर्मनुष्याश्च मातङ्गा विनदन्तस्ततस्ततः
छिन्नाभ्राणीव संपेतुः संप्रविश्य परस्परम् ४७
हतान्परिवहन्तश्च यन्त्रिताः परमायुधैः
दिशो जग्मुर्महानागाः केचिदेकचरा इव ४८
ताडितास्ताड्यमानाश्च तोमरर्ष्टिपरश्वधैः
पेतुरार्तस्वरं कृत्वा तदा विशसने गजाः ४९
तेषां शैलोपमैः कायैर्निपतद्भिः समन्ततः
आहता सहसा भूमिश्चकम्पे च ननाद च ५०
सादितैः सगजारोहैः सपताकैः समन्ततः
मातङ्गैः शुशुभे भूमिर्विकीर्णैरिव पर्वतैः ५१
गजस्थाश्च महामात्रा निर्भिन्नहृदया रणे
रथिभिः पातिता भल्लैर्विकीर्णाङ्कुशतोमराः ५२
क्रौञ्चवद्विनदन्तोऽन्ये नाराचाभिहता गजाः
परान्स्वांश्चापि मृद्नन्तः परिपेतुर्दिशो दश ५३
गजाश्वरथसंघानां शरीरौघसमावृता
बभूव पृथिवी राजन्मांसशोणितकर्दमा ५४
प्रमथ्य च विषाणाग्रैः समुत्क्षिप्य च वारणैः

सचक्राश्च विचक्राश्च रथैरेव महारथाः ५५
रथाश्च रथिभिर्हीना निर्मनुष्याश्च वाजिनः
हतारोहाश्च मातङ्गा दिशो जग्मुः शरातुराः ५६
जघानात्र पिता पुत्रं पुत्रश्च पितरं तथा
इत्यासीत्तुमुलं युद्धं न प्रज्ञायत किञ्चन ५७
आ गुल्फेभ्योऽवसीदन्त नराः शोणितकर्दमे
दीप्यमानैः परिक्षिप्ता दावैरिव महाद्रुमाः ५८
शोणितैः सिच्यमानानि वस्त्राणि कवचानि च
छत्राणि च पताकाश्च सर्वं रक्तमदृश्यत ५९
हयौघाश्च रथौघाश्च नरौघाश्च निपातिताः
संवृत्ताः पुनरावृत्ता बहुधा रथनेमिभिः ६०
स गजौघमहावेगः परासुनरशैबलः
रथौघतुमुलावर्तः प्रबभौ सैन्यसागरः ६१
तं वाहनमहानौभिर्योधा जयधनैषिणः
अवगाह्यावमज्जन्तो नैव मोहं प्रचक्रिरे ६२
शरवर्षाभिवृष्टेषु योधेष्वजितलक्ष्मसु
न हि स्वचित्ततां लेभे कश्चिदाहतलक्षणः ६३
वर्तमाने तथा युद्धे घोररूपे भयङ्करे
मोहयित्वा परान्द्रोणो युधिष्ठिरमुपाद्रवत् ६४
इति श्रीमहाभारते द्रोणपर्वणि एकोनविंशोऽध्यायः १९

## विंशोऽध्यायः

सञ्जय उवाच
ततो युधिष्ठिरो द्रोणं दृष्ट्वान्तिकमुपागतम्
महता शरवर्षेण प्रत्यगृह्णादभीतवत् १
ततो हलहलाशब्द आसीद्यौधिष्ठिरे बले
जिघृक्षति महासिंहे गजानामिव यूथपम् २
दृष्ट्वा द्रोणं ततः शूरः सत्यजित्सत्यविक्रमः
युधिष्ठिरं परिप्रेप्सुमाचार्यं समुपाद्रवत् ३
तत आचार्यपाञ्चाल्यौ युयुधाते परस्परम्

विक्षोभयन्तौ तत्सैन्यमिन्द्रवैरोचनाविव ४
ततः सत्यजितं तीक्ष्णैर्दशभिर्मर्मभेदिभिः
अविध्यच्छीघ्रमाचार्यश्छित्त्वास्य सशरं धनुः ५
स शीघ्रतरमादाय धनुरन्यत्प्रतापवान्
द्रोणं सोऽभिजघानाशु विंशद्भिः कङ्कपत्रिभिः ६
ज्ञात्वा सत्यजिता द्रोणं ग्रस्यमानमिवाहवे
वृकः शरशतैस्तीक्ष्णैः पाञ्चाल्यो द्रोणमर्दयत् ७
संछाद्यमानं समरे द्रोणं दृष्ट्वा महारथम्
चुक्रुशुः पाण्डवा राजन्वस्त्राणि दुधुवुश्च ह ८
वृकस्तु परमक्रुद्धो द्रोणं षष्ट्या स्तनान्तरे
विव्याध बलवान्राजंस्तदद्भुतमिवाभवत् ९
द्रोणस्तु शरवर्षेण छाद्यमानो महारथः
वेगं चक्रे महावेगः क्रोधादुद्वृत्य चक्षुषी १०
ततः सत्यजितश्चापं छित्त्वा द्रोणो वृकस्य च
षड्भिः ससूतं सहयं शरैर्द्रोणोऽवधीद्वृकम् ११
अथान्यद्धनुरादाय सत्यजिद्वेगवत्तरम्
साश्वं ससूतं विशिखैर्द्रोणं विव्याध सध्वजम् १२
स तन्न ममृषे द्रोणः पाञ्चाल्येनार्दनं मृधे
ततस्तस्य विनाशाय सत्वरं व्यसृजच्छरान् १३
हयान्ध्वजं धनुर्मुष्टिमुभौ च पार्ष्णिसारथी
अवाकिरत्ततो द्रोणःशरवर्षैः सहस्रशः १४
तथा संछिद्यमानेषु कार्मुकेषु पुनः पुनः
पाञ्चाल्यः परमास्त्रज्ञः शोणाश्वं समयोधयत् १५
स सत्यजितमालक्ष्य तथोदीर्णं महाहवे
अर्धचन्द्रेण चिच्छेद शिरस्तस्य महात्मनः १६
तस्मिन्हते महामात्रे पाञ्चालानां रथर्षभे
अपायाज्जवनैरश्वैर्द्रोणात्त्रस्तो युधिष्ठिरः १७
पाञ्चालाः केकया मत्स्याश्चेदिकारूषकोसलाः
युधिष्ठिरमुदीक्षन्तो हृष्टा द्रोणमुपाद्रवन् १८
ततो युधिष्ठिरप्रेप्सुराचार्यः शत्रुपूगहा

व्यधमत्तान्यनीकानि तूलराशिमिवानिलः १९
निर्दहन्तमनीकानि तानि तानि पुनः पुनः
द्रोणं मत्स्यादवरजः शतानीकोऽभ्यवर्तत २०
सूर्यरश्मिप्रतीकाशैः कर्मारपरिमार्जितैः
षड्भिः ससूतं सहयं द्रोणं विद्ध्वानदद्भृशम् २१
तस्य नानदतो द्रोणः शिरः कायात्सकुण्डलम्
क्षुरेणापाहरत्तूर्णं ततो मत्स्याः प्रदुद्रुवुः २२
मत्स्याञ्जित्वाजयच्चेदीन्कारुषान्केकयानपि
पाञ्चालान्सृञ्जयान्पाण्डून्भारद्वाजः पुनः पुनः २३
तं दहन्तमनीकानि क्रुद्धमग्निं यथा वनम्
दृष्ट्वा रुक्मरथं क्रुद्धं समकम्पन्त सृञ्जयाः २४
उत्तमं ह्याददानस्य धनुरस्याशुकारिणः
ज्याघोषो निघ्नतोऽमित्रान्दिक्षु सर्वासु शुश्रुवे २५
नागानश्वान्पदातींश्च रथिनो गजसादिनः
रौद्रा हस्तवता मुक्ताः प्रमथ्नन्ति स्म सायकाः २६
नानद्यमानः पर्जन्यो मिश्रवातो हिमात्यये
अश्मवर्षमिवावर्षत्परेषां भयमादधत् २७
सर्वा दिशः समचरत्सैन्यं विक्षोभयन्निव
बली शूरो महेष्वासो मित्राणामभयङ्करः २८
तस्य विद्युदिवाभ्रेषु चापं हेमपरिष्कृतम्
दिक्षु सर्वास्वपश्याम द्रोणस्यामिततेजसः २९
द्रोणस्तु पाण्डवानीके चकार कदनं महत्
यथा दैत्यगणे विष्णुः सुरासुरनमस्कृतः ३०
स शूरः सत्यवाक्प्राज्ञो बलवान्सत्यविक्रमः
महानुभावः कालान्ते रौद्रीं भीरुविभीषणाम् ३१
कवचोर्मिध्वजावर्तां मर्त्यकूलापहारिणीम्
गजवाजिमहाग्राहामसिमीनां दुरासदाम् ३२
वीरास्थिशर्करां रौद्रां भेरीमुरजकच्छपाम्
चर्मवर्मप्लवां घोरां केशशैवलशड्वलाम् ३३
शरौघिणीं धनुःस्रोतां बाहुपन्नगसंकुलाम्

रणभूमिवहां घोरां कुरुसृञ्जयवाहिनीम्
मनुष्यशीर्षपाषाणां शक्तिमीनां गदोडुपाम् ३४
उष्णीषफेनवसनां निष्कीर्णान्त्रसरीसृपाम्
वीरापहारिणीमुग्रां मांसशोणितकर्दमाम् ३५
हस्तिग्राहां केतुवृक्षां क्षत्रियाणां निमज्जनीम्
क्रूरां शरीरसंघाटां सादिनक्रां दुरत्ययाम्
द्रोणः प्रावर्तयत्तत्र नदीमन्तकगामिनीम् ३६
क्रव्यादगणसंघुष्टां श्वशृगालगणायुताम्
निषेवितां महारौद्रैः पिशिताशैः समन्ततः ३७
तं दहन्तमनीकानि रथोदारं कृतान्तवत्
सर्वतोऽभ्यद्रवन्द्रोणं कुन्तीपुत्रपुरोगमाः ३८
तांस्तु शूरान्महेष्वासांस्तावकाभ्युद्यतायुधाः
राजानो राजपुत्राश्च समन्तात्पर्यवारयन् ३९
ततो द्रोणः सत्यसंधः प्रभिन्न इव कुञ्जरः
अभ्यतीत्य रथानीकं दृढसेनमपातयत् ४०
ततो राजानमासाद्य प्रहरन्तमभीतवत्
अविध्यन्नवभिः क्षेमं स हतः प्रापतद्रथात् ४१
स मध्यं प्राप्य सैन्यानां सर्वाः प्रविचरन्दिशः
त्राता ह्यभवदन्येषां न त्रातव्यः कथञ्चन ४२
शिखण्डिनं द्वादशभिर्विंशत्या चोत्तमौजसम्
वसुदानं च भल्लेन प्रेषयद्यमसादनम् ४३
अशीत्या क्षत्रवर्माणं षड्विंशत्या सुदक्षिणम्
क्षत्रदेवं तु भल्लेन रथनीडादपाहरत् ४४
युधामन्युं चतुःषष्ट्या त्रिंशता चैव सात्यकिम्
विद्ध्वा रुक्मरथस्तूर्णं युधिष्ठिरमुपाद्रवत् ४५
ततो युधिष्ठिरः क्षिप्रं कितवो राजसत्तमः
अपायाज्जवनैरश्वैः पाञ्चाल्यो द्रोणमभ्ययात् ४६
तं द्रोणः सधनुष्कं तु साश्वयन्तारमक्षिणोत्
स हतः प्रापतद्भूमौ रथाज्ज्योतिरिवाम्बरात् ४७
तस्मिन्हते राजपुत्रे पाञ्चालानां यशस्करे

हत द्रोणं हत द्रोणमित्यासीत्तुमुलं महत् ४८
तांस्तथा भृशसंक्रुद्धान्पाञ्चालान्मत्स्यकेकयान्
सृञ्जयान्पाण्डवांश्चैव द्रोणो व्यक्षोभयद्बली ४९
सात्यकिं चेकितानं च धृष्टद्युम्नशिखण्डिनौ
वार्धक्षेमिं चित्रसेनं सेनाबिन्दुं सुवर्चसम् ५०
एतांश्चान्यांश्च सुबहून्नानाजनपदेश्वरान्
सर्वान्द्रोणोऽजयद्युद्धे कुरुभिः परिवारितः ५१
तावकास्तु महाराज जयं लब्ध्वा महाहवे
पाण्डवेयान्रणे जघ्नुर्द्रवमाणान्समन्ततः ५२
ते दानवा इवेन्द्रेण वध्यमाना महात्मना
पाञ्चालाः केकया मत्स्याः समकम्पन्त भारत ५३
इति श्रीमहाभारते द्रोणपर्वणि विंशोऽध्यायः २०

## एकविंशोऽध्यायः

धृतराष्ट्र उवाच
भारद्वाजेन भग्नेषु पाण्डवेषु महामृधे
पाञ्चालेषु च सर्वेषु कश्चिदन्योऽभ्यवर्तत १
आर्यां युद्धे मतिं कृत्वा क्षत्रियाणां यशस्करीम्
असेवितां कापुरुषैः सेवितां पुरुषर्षभैः २
स हि वीरो नरः सूत यो भग्नेषु निवर्तते
अहो नासीत्पुमान्कश्चिद्दृष्ट्वा द्रोणं व्यवस्थितम् ३
जृम्भमाणमिव व्याघ्रं प्रभिन्नमिव कुञ्जरम्
त्यजन्तमाहवे प्राणान्संनद्धं चित्रयोधिनम् ४
महेष्वासं नरव्याघ्रं द्विषतामघवर्धनम्
कृतज्ञं सत्यनिरतं दुर्योधनहितैषिणम् ५
भारद्वाजं तथानीके दृष्ट्वा शूरमवस्थितम्
के वीराः संन्यवर्तन्त तन्ममाचक्ष्व सञ्जय ६
सञ्जय उवाच
तान्दृष्ट्वा चलितान्संख्ये प्रणुन्नान्द्रोणसायकैः
पाञ्चालान्पाण्डवान्मत्स्यान्सृञ्जयांश्चेदिकेकयान् ७

द्रोणचापविमुक्तेन शरौघेणासुहारिणा
सिन्धोरिव महौघेन ह्रियमाणान्यथा प्लवान् ८
कौरवाः सिंहनादेन नानावाद्यस्वनेन च
रथद्विपनराश्वैश्च सर्वतः पर्यवारयन् ९
तान्पश्यन्सैन्यमध्यस्थो राजा स्वजनसंवृतः
दुर्योधनोऽब्रवीत्कर्णं प्रहृष्टः प्रहसन्निव १०
पश्य राधेय पाञ्चालान्प्रणुन्नान्द्रोणसायकैः
सिंहेनेव मृगान्वन्यांस्त्रासितान्दृढधन्वना ११
नैते जातु पुनर्युद्धमीहेयुरिति मे मतिः
यथा तु भग्ना द्रोणेन वातेनेव महाद्रुमाः १२
अर्द्यमानाः शरैरेते रुक्मपुङ्खैर्महात्मना
पथा नैकेन गच्छन्ति घूर्णमानास्ततस्ततः १३
संनिरुद्धाश्च कौरव्यैर्द्रोणेन च महात्मना
एतेऽन्ये मण्डलीभूताः पावकेनेव कुञ्जराः १४
भ्रमरैरिव चाविष्टा द्रोणस्य निशितैः शरैः
अन्योन्यं समलीयन्त पलायनपरायणाः १५
एष भीमो दृढक्रोधो हीनः पाण्डवसृञ्जयैः
मदीयैरावृतो योधैः कर्ण तर्जयतीव माम् १६
व्यक्तं द्रोणमयं लोकमद्य पश्यति दुर्मतिः
निराशो जीवितान्नूनमद्य राज्याच्च पाण्डवः १७
कर्ण उवाच
नैष जातु महाबाहुर्जीवन्नाहवमुत्सृजेत्
न चेमान्पुरुषव्याघ्र सिंहनादान्विशद्यते १८
न चापि पाण्डवा युद्धे भज्येरन्निति मे मतिः
शूराश्च बलवन्तश्च कृतास्त्रा युद्धदुर्मदाः १९
विषाग्निद्यूतसंक्लेशान्वनवासं च पाण्डवाः
स्मरमाणा न हास्यन्ति संग्राममिति मे मतिः २०
निकृतो हि महाबाहुरमितौजा वृकोदरः
वरान्वरान्हि कौन्तेयो रथोदारान्हनिष्यति २१
असिना धनुषा शक्त्या हयैर्नागैर्नरै रथैः

आयसेन च दण्डेन व्रातान्व्रातान्हनिष्यति २२
तमेते चानुवर्तन्ते सात्यकिप्रमुखा रथाः
पाञ्चालाः केकया मत्स्याः पाण्डवाश्च विशेषतः २३
शूराश्च बलवन्तश्च विक्रान्ताश्च महारथाः
विशेषतश्च भीमेन संरब्धेनाभिचोदिताः २४
ते द्रोणमभिवर्तन्ते सर्वतः कुरुपुङ्गवाः
वृकोदरं परीप्सन्तः सूर्यमभ्रगणा इव २५
एकायनगता ह्येते पीडयेयुर्यतव्रतम्
अरक्ष्यमाणं शलभा यथा दीपं मुमूर्षवः
असंशयं कृतास्त्राश्च पर्याप्ताश्चापि वारणे २६
अतिभारं त्वहं मन्ये भारद्वाजे समाहितम्
ते शीघ्रमनुगच्छामो यत्र द्रोणो व्यवस्थितः
काका इव महानागं मा वै हन्युर्यत व्रतम् २७
सञ्जय उवाच
राधेयस्य वचः श्रुत्वा राजा दुर्योधनस्तदा
भ्रातृभिः सहितो राजन्प्रायाद्द्रोणरथं प्रति २८
तत्रारावो महानासीदेकं द्रोणं जिघांसताम्
पाण्डवानां निवृत्तानां नानावर्णैर्हयोत्तमैः २९
इति श्रीमहाभारते द्रोणपर्वणि एकविंशोऽध्यायः २१

## द्वाविंशोऽध्यायः

धृतराष्ट्र उवाच
सर्वेषामेव मे ब्रूहि रथचिह्नानि सञ्जय
ये द्रोणमभ्यवर्तन्त क्रुद्धा भीमपुरोगमाः १
सञ्जय उवाच
ऋश्यवर्णैर्हयैर्दृष्ट्वा व्यायच्छन्तं वृकोदरम्
रजताश्वस्ततः शूरः शैनेयः संन्यवर्तत २
दर्शनीयास्तु काम्बोजाः शुकपत्रपरिच्छदाः
वहन्तो नकुलं शीघ्रं तावकानभिदुद्रुवुः ३
कृष्णास्तु मेघसङ्काशाः सहदेवमुदायुधम्

भीमवेगा नरव्याघ्रमवहन्वातरंहसः ४
हेमोत्तमप्रतिच्छन्नैर्हयैर्वातसमैर्जवे
अभ्यवर्तन्त सैन्यानि सर्वाण्येव युधिष्ठिरम् ५
राज्ञस्त्वनन्तरं राजा पाञ्चाल्यो द्रुपदोऽभवत्
जातरूपमयच्छत्रः सर्वैः स्वैरभिरक्षितः ६
ललामैर्हरिभिर्युक्तैः सर्वशब्दक्षमैर्युधि
राज्ञां मध्ये महेष्वासः शान्तभीरभ्यवर्तत ७
तं विराटोऽन्वयात्पश्चात्सह शूरैर्महारथैः
केकयाश्च शिखण्डी च धृष्टकेतुस्तथैव च
स्वैः स्वैः सैन्यैः परिवृता मत्स्यराजानमन्वयुः ८
ते तु पाटलपुष्पाणां समवर्णा हयोत्तमाः
वहमाना व्यराजन्त मत्स्यस्यामित्रघातिनः ९
हारिद्रसमवर्णास्तु जवना हेममालिनः
पुत्रं विराटराजस्य सत्वराः समुदावहन् १०
इन्द्रगोपकवर्णैस्तु भ्रातरः पञ्च केकयाः
जातरूपसमाभासः सर्वे लोहितकध्वजाः ११
ते हेममालिनः शूराः सर्वे युद्धविशारदाः
वर्षन्त इव जीमूताः प्रत्यदृश्यन्त दंशिताः १२
आमपात्रनिभाकाराः पाञ्चाल्यममितौजसम्
दान्तास्ताम्रारुणा युक्ताः शिखण्डिनमुदावहन् १३
तथा द्वादशसाहस्राः पाञ्चालानां महारथाः
तेषां तु षट् सहस्राणि ये शिखण्डिनमन्वयुः १४
पुत्रं तु शिशुपालस्य नरसिंहस्य मारिष
आक्रीडन्तो वहन्ति स्म सारङ्गशबला हयाः १५
धृष्टकेतुश्च चेदीनामृषभोऽतिबलोदितः
काम्बोजैः शबलैरश्वैरभ्यवर्तत दुर्जयः १६
बृहत्क्षत्रं तु कैकेयं सुकुमारं हयोत्तमाः
पलालधूम्रवर्णाभाः सैन्धवाः शीघ्रमावहन् १७
मल्लिकाक्षाः पद्मवर्णा बाह्लिजाताः स्वलंकृताः
शूरं शिखण्डिनः पुत्रं क्षत्रदेवमुदावहन् १८

युवानमवहन्युद्धे क्रौञ्चवर्णा हयोत्तमाः
काश्यस्याभिभुवः पुत्रं सुकुमारं महारथम् १९
श्वेतास्तु प्रतिविन्ध्यं तं कृष्णग्रीवा मनोजवाः
यन्तुः प्रेष्यकरा राजन्राजपुत्रमुदावहन् २०
सुतसोमं तु यं धौम्यात्पार्थः पुत्रमयाचत
माषपुष्पसवर्णास्तमवहन्वाजिनो रणे २१
सहस्रसोमप्रतिमा बभूवुः पुरे कुरूणामुदयेन्दुनाम्नि
तस्मिञ्जातः सोमसंक्रन्दमध्ये यस्मात्तस्मात्सुतसोमोऽभवत्सः २२
नाकुलि तु शतानीकं शालपुष्पनिभा हयाः
आदित्यतरुणप्रख्याः श्लाघनीयमुदावहन् २३
काञ्चनप्रतिमैर्योक्त्रैर्मयूरग्रीवसंनिभाः
द्रौपदेयं नरव्याघ्रं श्रुतकर्माणमावहन् २४
श्रुतकीर्तिं श्रुतनिधिं द्रौपदेयं हयोत्तमाः
ऊहुः पार्थसमं युद्धे चाषपत्रनिभा हयाः २५
यमाहुरध्यर्धगुणं कृष्णात्पार्थाच्च संयुगे
अभिमन्युं पिशङ्गास्तं कुमारमवहन्रणे २६
एकस्तु धार्तराष्ट्रेभ्यः पाण्डवान्यः समाश्रितः
तं बृहन्तो महाकाया युयुत्सुमवहन्रणे २७
पलालकाण्डवर्णास्तु वार्धक्षेमिं तरस्विनम्
ऊहुः सुतुमले युद्धे हया हृष्टाः स्वलंकृताः २८
कुमारं शितिपादास्तु रुक्मपत्रैरुरश्छदैः
सौचित्तिमवहन्युद्धे यन्तुः प्रेष्यकरा हयाः २९
रुक्मपृष्टावकीर्णास्तु कौशेयसदृशा हयाः
सुवर्णमालिनः क्षान्ताः श्रेणिमन्तमुदावहन् ३०
रुक्ममालाधराः शूरा हेमवर्णाः स्वलंकृताः
काशिराजं हयश्रेष्ठाः श्लाघनीयमुदावहन् ३१
अस्त्राणां च धनुर्वेदे ब्राह्मे वेदे च पारगम्
तं सत्यधृतिमायान्तमरुणाः समुदावहन् ३२
यः स पाञ्चालसेनानीर्द्रोणमंशमकल्पयत्
पारावतसवर्णाश्वा धृष्टद्युम्नमुदावहन् ३३

तमन्वयात्सत्यधृतिः सौचित्तिर्युद्धदुर्मदः
श्रेणिमान्वसुदानश्च पुत्रः काश्यस्य चाभिभो ३४
युक्तैः परमकाम्बोजैर्जवनैर्हेममालिभिः
भीषयन्तो द्विषत्सैन्यं यमवैश्रवणोपमाः ३५
प्रभद्रकास्तु पाञ्चालाः षट् सहस्राण्युदायुधाः
नानावर्णैर्हयश्रेष्ठैर्हेमचित्ररथध्वजाः ३६
शरव्रातैर्विधुन्वन्तः शत्रून्विततकार्मुकाः
समानमृत्यवो भूत्वा धृष्टद्युम्नं समन्वयुः ३७
बभ्रुकौशेयवर्णास्तु सुवर्णवरमालिनः
ऊहुरग्लानमनसश्चेकितानं हयोत्तमाः ३८
इन्द्रायुधसवर्णैस्तु कुन्तिभोजो हयोत्तमैः
आयात्सुवश्यैः पुरुजिन्मातुलः सव्यसाचिनः ३९
अन्तरिक्षसवर्णास्तु तारकाचित्रिता इव
राजानं रोचमानं ते हयाः संख्ये समावहन् ४०
कर्बुराः शितिपादास्तु स्वर्णजालपरिच्छदाः
जारासंधिं हयश्रेष्ठाः सहदेवमुदावहन् ४१
ये तु पुष्करनालस्य समवर्णा हयोत्तमाः
जवे श्येनसमाश्चित्राः सुदामानमुदावहन् ४२
शशलोहितवर्णास्तु पाण्डुरोद्गतराजयः
पाञ्चाल्यं गोपतेः पुत्रं सिंहसेनमुदावहन् ४३
पाञ्चालानां नरव्याघ्रो यः ख्यातो जनमेजयः
तस्य सर्षपपुष्पाणां तुल्यवर्णा हयोत्तमाः ४४
माषवर्णास्तु जवना बृहन्तो हेममालिनः
दधिपृष्ठाश्चन्द्रमुखाः पाञ्चाल्यमवहन्द्रुतम् ४५
शूराश्च भद्रकाश्चैव शरकाण्डनिभा हयाः
पद्मकिञ्जल्कवर्णाभा दण्डधारमुदावहन् ४६
बिभ्रतो हेममालाश्च चक्रवाकोदरा हयाः
कोसलाधिपतेः पुत्रं सुक्षत्रं वाजिनोऽवहन् ४७
शबलास्तुबृहन्तोऽश्वा दान्ता जाम्बूनदस्रजः
युद्धे सत्यधृतिं क्षैमिमवहन्प्रांशवः शुभाः ४८

एकवर्णेन सर्वेण ध्वजेन कवचेन च
अश्वैश्च धनुषा चैव शुक्लैः शुक्लो न्यवर्तत ४९
समुद्रसेनपुत्रं तु सामुद्रा रुद्रतेजसम्
अश्वाः शशाङ्कसदृशाश्चन्द्रदेवमुदावहन् ५०
नीलोत्पलसवर्णास्तु तपनीयविभूषिताः
शैब्यं चित्ररथं युद्धे चित्रमाल्यावहन्हयाः ५१
कलायपुष्पवर्णास्तु श्वेतलोहितराजयः
रथसेनं हयश्रेष्ठाः समूहुर्युद्धदुर्मदम् ५२
यं तु सर्वमनुष्येभ्यः प्राहुः शूरतरं नृपम्
तं पटच्चरहन्तारं शुकवर्णावहन्हयाः ५३
चित्रायुधं चित्रमाल्यं चित्रवर्मायुधध्वजम्
ऊहुः किंशुकपुष्पाणां तुल्यवर्णा हयोत्तमाः ५४
एकवर्णेन सर्वेण ध्वजेन कवचेन च
धनुषा रथवाहैश्च नीलैर्नीलोऽभ्यवर्तत ५५
नानारूपै रत्नचित्रैर्वरूथध्वजप्रकार्मुकैः
वाजिध्वजपताकाभिश्चित्रैश्चित्रोऽभ्यवर्तत ५६
ये तु पुष्करपत्रस्य तुल्यवर्णा हयोत्तमाः
ते रोचमानस्य सुतं हेमवर्णमुदावहन् ५७
योधाश्च भद्रकाराश्च शरदण्डानुदण्डजाः
श्वेताण्डाः कुक्कुटाण्डाभा दण्डकेतुमुदावहन् ५८
आटरूषकपुष्पाभा हयाः पाण्ड्यानुयायिनाम्
अवहन्रथमुख्यानामयुतानि चतुर्दश ५९
नानारूपेण वर्णेन नानाकृतिमुखा हयाः
रथचक्रध्वजं वीरं घटोत्कचमुदावहन् ६०
सुवर्णवर्णा धर्मज्ञमनीकस्थं युधिष्ठिरम्
राजश्रेष्ठं हयश्रेष्ठाः सर्वतः पृष्ठतोऽन्वयुः
वर्णैश्चोच्चावचैर्दिव्यैः सदश्वानां प्रभद्रकाः ६१
ते यत्ता भीमसेनेन सहिताः काञ्चनध्वजाः
प्रत्यदृश्यन्त राजेन्द्र सेन्द्रा इव दिवौकसः ६२
अत्यरोचत तान्सर्वान्धृष्टद्युम्नः समागतान्

सर्वाण्यपि च सैन्यानि भारद्वाजोऽत्यरोचत ६३
इति श्रीमहाभारते द्रोणपर्वणि द्वाविंशोऽध्यायः २२

त्रयोविंशोऽध्यायः

धृतराष्ट्र उवाच
व्यथयेयुरिमे सेनां देवानामपि संयुगे
आहवे ये न्यवर्तन्त वृकोदरमुखा रथाः १
संप्रयुक्तः किलैवायं दिष्टैर्भवति पूरुषः
तस्मिन्नेव तु सर्वार्था दृश्यन्ते वै पृथग्विधाः २
दीर्घं विप्रोषितः कालमरण्ये जटिलोऽजिनी
अज्ञातश्चैव लोकस्य विजहार युधिष्ठिरः ३
स एव महतीं सेनां समावर्तयदाहवे
किमन्यद्दैवसंयोगान्मम पुत्रस्य चाभवत् ४
युक्त एव हि भाग्येन ध्रुवमुत्पद्यते नरः
स तथाकृष्यते तेन न यथा स्वयमिच्छति ५
द्यूतव्यसनमासाद्य क्लेशितो हि युधिष्ठिरः
स पुनर्भागधेयेन सहायानुपलब्धवान् ६
अर्ध मे केकया लब्धाः काशिकाः कोसलाश्च ये
चेदयश्चापरे वङ्गा मामेव समुपाश्रिताः ७
पृथिवी भूयसी तात मम पार्थस्य नो तथा
इति मामब्रवीत्सूत मन्दो दुर्योधनस्तदा ८
तस्य सेनासमूहस्य मध्ये द्रोणः सुरक्षितः
निहतः पार्षतेनाजौ किमन्यद्भागधेयतः ९
मध्ये राज्ञां महाबाहुं सदा युद्धाभिनन्दिनम्
सर्वास्त्रपारगं द्रोणं कथं मृत्युरुपेयिवान् १०
समनुप्राप्तकृच्छ्रोऽह संमोहं परमं गतः
भीष्मद्रोणौ हतौ श्रुत्वा नाहं जीवितुमुत्सहे ११
यन्मा क्षत्ताब्रवीत्तात प्रपश्यन्पुत्रगृद्धिनम्
दुर्योधनेन तत्सर्वं प्राप्तं सूत मया सह १२
नृशंसं तु परं तत्स्यात्त्यक्त्वा दुर्योधनं यदि

पुत्रशेषं चिकीर्षेयं कृच्छ्रं न मरणं भवेत् १३
यो हि धर्मं परित्यज्य भवत्यर्थपरो नरः
सोऽस्माच्च हीयते लोकात्क्षुद्रभावं च गच्छति १४
अद्य चाप्यस्य राष्ट्रस्य हतोत्साहस्य सञ्जय
अवशेषं न पश्यामि ककुदे मृदिते सति १५
कथं स्यादवशेषं हि धुर्ययोरभ्यतीतयोः
यौ नित्यमनुजीवामः क्षमिणौ पुरुषर्षभौ १६
व्यक्तमेव च मे शंस यथा युद्धमवर्तत
केऽयुध्यन्के व्यपाकर्षन्के क्षुद्राः प्राद्रवन्भयात् १७
धनञ्जयं च मे शंस यद्यच्चक्रे रथर्षभः
तस्माद्भयं नो भूयिष्ठं भ्रातृव्याच्च विशेषतः १८
यथासीच्च निवृत्तेषु पाण्डवेषु च सञ्जय
मम सैन्यावशेषस्य संनिपातः सुदारुणः
मामकानां च ये शूराः कांस्तत्र समवारयन् १९
इति श्रीमहाभारते द्रोणपर्वणि त्रयोविंशोऽध्यायः २३

## चतुर्विंशोऽध्यायः

सञ्जय उवाच
महद्भैरवमासीन्नः संनिवृत्तेषु पाण्डुषु
दृष्ट्वा द्रोणं छाद्यमानं तैर्भास्करमिवाम्बुदैः १
तैश्चोद्धूतं रजस्तीव्रमवचक्रे चमूं तव
ततो हतममन्याम द्रोणं दृष्टिपथे हते २
तांस्तु शूरान्महेष्वासान्क्रूरं कर्म चिकीर्षतः
दृष्ट्वा दुर्योधनस्तूर्णं स्वसैन्यं समचूचुदत् ३
यथाशक्ति यथोत्साहं यथासत्त्वं नराधिपाः
वारयध्वं यथायोगं पाण्डवानामनीकिनीम् ४
ततो दुर्मर्षणो भीममभ्यगच्छत्सुतस्तव
आराद्दृष्ट्वा किरन्बाणैरिच्छन्द्रोणस्य जीवितम् ५
तं बाणैरवतस्तार क्रुद्धो मृत्युमिवाहवे
तं च भीमोऽतुदद्बाणैस्तदासीत्तुमुलं महत् ६

त ईश्वरसमादिष्टाः प्राज्ञाः शूराः प्रहारिणः
बाह्यं मृत्युभयं कृत्वा प्रत्यतिष्ठन्परान्युधि ७
कृतवर्मा शिनेः पुत्रं द्रोणप्रेप्सुं विशां पते
पर्यवारयदायान्तं शूरं समितिशोभनम् ८
तं शैनेयः शरव्रातैः क्रुद्धः क्रुद्धमवारयत्
कृतवर्मा च शैनेयं मत्तो मत्तमिव द्विपम् ९
सैन्धवः क्षत्रधर्माणमापतन्तं शरौघिणम्
उग्रधन्वा महेष्वासं यत्तो द्रोणादवारयत् १०
क्षत्रधर्मा सिन्धुपतेश्छित्त्वा केतनकार्मुके
नाराचैर्बहुभिः क्रुद्धः सर्वमर्मस्वताडयत् ११
अथान्यद्धनुरादाय सैन्धवः कृतहस्तवत्
विव्याध क्षत्रधर्माणं रणे सर्वायसैः शरैः १२
युयुत्सुं पाण्डवार्थाय यतमानं महारथम्
सुबाहुर्भ्रातरं शूरं यत्तो द्रोणादवारयत् १३
सुबाहोः सधनुर्बाणावस्यतः परिघोपमौ
युयुत्सुः शितपीताभ्यां क्षुराभ्यामच्छिनद्भुजौ १४
राजानं पाण्डवश्रेष्ठं धर्मात्मानं युधिष्ठिरम्
वेलेव सागरं क्षुब्धं मद्रराट् समवारयत् १५
तं धर्मराजो बहुभिर्मर्मभिद्भिरवाकिरत्
मद्रेशस्तं चतुःषष्ट्या शरैर्विद्ध्वानदद्भृशम् १६
तस्य नानदतः केतुमुच्चकर्त सकार्मुकम्
क्षुराभ्यां पाण्डवश्रेष्ठस्तत उच्चुक्रुशुर्जनाः १७
तथैव राजा बाह्लीको राजानं द्रुपदं शरैः
आद्रवन्तं सहानीकं सहानीको न्यवारयत् १८
तद्युद्धमभवद्घोरं वृद्धयोःसहसेनयोः
यथा महायूथपयोर्द्विपयोः संप्रभिन्नयोः १९
विन्दानुविन्दावावन्त्यौ विराटं मत्स्यमार्छताम्
सहसैन्यौ सहानीकं यथेन्द्राग्नी पुरा बलिम् २०
तदुत्पिञ्जलकं युद्धमासीद्देवासुरोपमम्
मत्स्यानां केकयैः सार्धमभीताश्वरथद्विपम् २१

नाकुलि तु शतानीकं भूतकर्मा सभापतिः
अस्यन्तमिषुजालानि यान्तं द्रोणादवारयत् २२
ततो नकुलदायादस्त्रिभिर्भल्लैः सुसंशितैः
चक्रे विबाहुशिरसं भूतकर्माणमाहवे २३
सुतसोमं तु विक्रान्तमापतन्तं शरौघिणम्
द्रोणायाभिमुखं वीरं विविंशतिरवारयत् २४
सुतसोमस्तु संक्रुद्धः स्वपितृव्यमजिह्मगैः
विविंशतिं शरैर्विद्ध्वा नाभ्यवर्तत दंशितः २५
अथ भीमरथः शाल्वमाशुगैरायसैः सितैः
षड्भिः साश्वनियन्तारमनयद्यमसादनम् २६
श्रुतकर्माणमायान्तं मयूरसदृशैर्हयैः
चैत्रसेनिर्महाराज तव पौत्रो न्यवारयत् २७
तौ पौत्रौ तव दुर्धर्षौ परस्परवधैषिणौ
पितृणामर्थसिद्ध्यर्थं चक्रतुर्युद्धमुत्तमम् २८
तिष्ठन्तमग्रतो दृष्ट्वा प्रतिविन्ध्यं तमाहवे
द्रौणिर्मानं पितुः कुर्वन्मार्गणैः समवारयत् २९
तं क्रुद्धः प्रतिविव्याध प्रतिविन्ध्यः शितैः शरैः
सिंहलाङ्गूललक्ष्माणं पितुरर्थे व्यवस्थितम् ३०
प्रवपन्निव बीजानि बीजकाले नरर्षभ
द्रौणायनिर्द्रौपदेयं शरवर्षैरवाकिरत् ३१
यस्तु शूरतमो राजन्सेनयोरुभयोर्मतः
तं पटच्चरहन्तारं लक्ष्मणः समवारयत् ३२
स लक्ष्मणस्येष्वसनं छित्त्वा लक्ष्म च भारत
लक्ष्मणे शरजालानि विसृजन्बह्वशोभत ३३
विकर्णस्तु महाप्राज्ञो याज्ञसेनिं शिखण्डिनम्
पर्यवारयदायान्तं युवानं समरे युवा ३४
ततस्तमिषुजालेन याज्ञसेनिः समावृणोत्
विधूय तद्बाणजालं बभौ तव सुतो बली ३५
अङ्गदोऽभिमुखः शूरमुत्तमौजसमाहवे
द्रोणायाभिमुखं यान्तं वत्सदन्तैरवारयत् ३६

स संप्रहारस्तुमुलस्तयोः पुरुषसिंहयोः
सैनिकानां च सर्वेषां तयोश्च प्रीतिवर्धनः ३७
दुर्मुखस्तु महेष्वासो वीरं पुरुजितं बली
द्रोणायाभिमुखं यान्तं कुन्तिभोजमवारयत् ३८
स दुर्मुखं भ्रुवोर्मध्ये नाराचेन व्यताडयत्
तस्य तद्विबभौ वक्त्रं सनालमिव पङ्कजम् ३९
कर्णस्तु केकयान्भ्रातॄन्पञ्च लोहितकध्वजान्
द्रोणायाभिमुखं याताञ्शरवर्षैरवारयत् ४०
ते चैनं भृशसंक्रुद्धाः शरव्रातैरवाकिरन्
स च तांश्छादयामास शरजालैः पुनः पुनः ४१
नैव कर्णो न ते पञ्च ददृशुर्बाणसंवृताः
साश्वसूतध्वजरथाः परस्परशराचिताः ४२
पुत्रस्ते दुर्जयश्चैव जयश्च विजयश्च ह
नीलं काश्यं जयं शूरास्त्रयस्त्रीन्प्रत्यवारयन् ४३
तद्युद्धमभवद्घोरमीक्षितृप्रीतिवर्धनम्
सिंहव्याघ्रतरक्षूणां यथेभमहिषर्षभैः ४४
क्षेमधूर्तिबृहन्तौ तौ भ्रातरौ सात्वतं युधि
द्रोणायाभिमुखं यान्तं शरैस्तीक्ष्णैस्ततक्षतुः ४५
तयोस्तस्य च तद्युद्धमत्यद्भुतमिवाभवत्
सिंहस्य द्विपमुख्याभ्यां प्रभिन्नाभ्यां यथा वने ४६
राजानं तु तथाम्बष्ठमेकं युद्धाभिनन्दिनम्
चेदिराजः शरानस्यन्क्रुद्धो द्रोणादवारयत् ४७
तमम्बष्ठोऽस्थिभेदिन्या निरविध्यच्छलाकया
स त्यक्त्वा सशरं चापं रथाद्भूमिमथापतत् ४८
वार्धक्षेमिं तु वार्ष्णेयं कृपः शारद्वतः शरैः
अक्षुद्रः क्षुद्रकैर्द्रोणात्क्रुद्धरूपमवारयत् ४९
युध्यन्तौ कृपवार्ष्णेयौ येऽपश्यंश्चित्रयोधिनौ
ते युद्धसक्तमनसो नान्या बुबुधिरे क्रियाः ५०
सौमदत्तिस्तु राजानं मणिमन्तमतन्द्रितम्
पर्यवारयदायान्तं यशो द्रोणस्य वर्धयन् ५१

स सौमदत्तेस्त्वरितश्छित्त्वेष्वसनकेतने
पुनः पताकां सूतं च छत्त्रं चापातयद्रथात् ५२
अथाप्लुत्य रथात्तूर्णं यूपकेतुरमित्रहा
साश्वसूतध्वजरथं तं चकर्त वरासिना ५३
रथं च स्वं समास्थाय धनुरादाय चापरम्
स्वयं यच्छन्हयान्राजन्व्यधमत्पाण्डवीं चमूम् ५४
समुसलैर्मुद्गरैश्चक्रैर्भिण्डिपालैः परश्वधैः
पांसुवाताग्निसलिलैर्भस्मलोष्ठतृणद्रुमैः ५५
आरुजन्प्ररुजन्भञ्जन्निघ्नन्विद्रावयन्क्षिपन्
सेनां विभीषयन्नायाद्द्रोणप्रेप्सुर्घटोत्कचः ५६
तं तु नानाप्रहरणैर्नानायुद्धविशेषणैः
राक्षसं राक्षसः क्रुद्धः समाजघ्ने ह्यलम्बुसः ५७
तयोस्तदभवद्युद्धं रक्षोग्रामणिमुख्ययोः
तादृग्यादृक्पुरा वृत्तं शम्बरामरराजयोः ५८
एवं द्वंद्वशतान्यासन्रथवारणवाजिनाम्
पदातीनां च भद्रं ते तव तेषां च सङ्कुलम् ५९
नैतादृशो दृष्टपूर्वः संग्रामो नैव च श्रुतः
द्रोणस्याभावभावेषु प्रसक्तानां यथाभवत् ६०
इदं घोरमिदं चित्रमिदं रौद्रमिति प्रभो
तत्र युद्धान्यदृश्यन्त प्रततानि बहूनि च ६१
इति श्रीमहाभारते द्रोणपर्वणि चतुर्विंशोऽध्यायः २४

## पञ्चविंशोऽध्यायः

धृतराष्ट्र उवाच
तेष्वेवं संनिवृत्तेषु प्रत्युद्यातेषु भागशः
कथं युयुधिरे पार्था मामकाश्च तरस्विनः १
किमर्जुनश्चाप्यकरोत्संशप्तकबलं प्रति
संशप्तका वा पार्थस्य किमकुर्वत सञ्जय २
सञ्जय उवाच
तथा तेषु निवृत्तेषु प्रत्युद्यातेषु भागशः

स्वयमभ्यद्रवद्भीमं नागानीकेन ते सुतः ३
स नाग इव नागेन गोवृषेणेव गोवृषः
समाहूतः स्वयं राज्ञा नागानीकमुपाद्रवत् ४
स युद्धकुशलः पार्थो बाहुवीर्येण चान्वितः
अभिनत्कुञ्जरानीकमचिरेणैव मारिष ५
ते गजा गिरिसङ्काशाः क्षरन्तः सर्वतो मदम्
भीमसेनस्य नाराचैर्विमुखा विमदीकृताः ६
विधमेदभ्रजालानि यथा वायुः समन्ततः
व्यधमत्तान्यनीकानि तथैव पवनात्मजः ७
स तेषु विसृजन्बाणान्भीमो नागेष्वशोभत
भुवनेष्विव सर्वेषु गभस्तीनुदितो रविः ८
ते भीमबाणैः शतशः संस्यूता विबभुर्गजाः
गभस्तिभिरिवार्कस्य व्योम्नि नानाबलाहकाः ९
तथा गजानां कदनं कुर्वाणमनिलात्मजम्
क्रुद्धो दुर्योधनोऽभ्येत्य प्रत्यविध्यच्छितैः शरैः १०
ततः क्षणेन क्षितिपं क्षतजप्रतिमेक्षणः
क्षयं निनीषुर्निशितैर्भीमो विव्याध पत्रिभिः ११
स शरार्पितसर्वाङ्गः क्रुद्धो विव्याध पाण्डवम्
नाराचैरर्करश्म्याभैर्भीमसेनं स्मयन्निव १२
तस्य नागं मणिमयं रत्नचित्रं ध्वजे स्थितम्
भल्लाभ्यां कार्मुकं चैव क्षिप्रं चिच्छेद पाण्डवः १३
दुर्योधनं पीड्यमानं दृष्ट्वा भीमेन मारिष
चुक्षोभयिषुरभ्यागादङ्गो मातङ्गमास्थितः १४
तमापतन्तं मातङ्गमम्बुदप्रतिमस्वनम्
कुम्भान्तरे भीमसेनो नाराचेनार्दयद्भृशम् १५
तस्य कायं विनिर्भिद्य ममज्ज धरणीतले
ततः पपात द्विरदो वज्राहत इवाचलः १६
तस्यावर्जितनागस्य म्लेच्छस्यावपतिष्यतः
शिरश्चिच्छेद भल्लेन क्षिप्रकारी वृकोदरः १७
तस्मिन्निपतिते वीरे संप्राद्रवत सा चमूः

संभ्रान्ताश्वद्विपरथा पदातीनवमृद्नती १८
तेष्वनीकेषु सर्वेषु विद्रवत्सु समन्ततः
प्राग्ज्योतिषस्ततो भीमं कुञ्जरेण समाद्रवत् १९
येन नागेन मघवानजयद्दैत्यदानवान्
स नागप्रवरो भीमं सहसा समुपाद्रवत् २०
श्रवणाभ्यामथो पद्भ्यां संहतेन करेण च
व्यावृत्तनयनः क्रुद्धः प्रदहन्निव पाण्डवम् २१
ततः सर्वस्य सैन्यस्य नादः समभवन्महान्
हा हा विनिहतो भीमः कुञ्जरेणेति मारिष २२
तेन नादेन वित्रस्ता पाण्डवानामनीकिनी
सहसाभ्यद्रवद्राजन्यत्र तस्थौ वृकोदरः २३
ततो युधिष्ठिरो राजा हतं मत्वा वृकोदरम्
भगदत्तं सपाञ्चालः सर्वतः समवारयत् २४
तं रथै रथिनां श्रेष्ठाः परिवार्य समन्ततः
अवाकिरञ्शरैस्तीक्ष्णैः शतशोऽथ सहस्रशः २५
स विघातं पृषत्कानामङ्कुशेन समाचरन्
गजेन पाण्डुपाञ्चालान्व्यधमत्पर्वतेश्वरः २६
तदद्भुतमपश्याम भगदत्तस्य संयुगे
तथा वृद्धस्य चरितं कुञ्जरेण विशां पते २७
ततो राजा दशार्णानां प्राग्ज्योतिषमुपाद्रवत्
तिर्यग्यातेन नागेन समदेनाशुगामिना २८
तयोर्युद्धं समभवन्नागयोर्भीमरूपयोः
सपक्षयोः पर्वतयोर्यथा सद्रुमयोः पुरा २९
प्राग्ज्योतिषपतेर्नागः संनिपत्यापवृत्य च
पार्श्वे दशार्णाधिपतेर्भित्त्वा नागमपातयत् ३०
तोमरैः सूर्यरश्म्याभैर्भगदत्तोऽथ सप्तभिः
जघान द्विरदस्थं तं शत्रुं प्रचलितासनम् ३१
उपसृत्य तु राजानं भगदत्तं युधिष्ठिरः
रथानीकेन महता सर्वतः पर्यवारयत् ३२
स कुञ्जरस्थो रथिभिः शुशुभे सर्वतो वृतः

पर्वते वनमध्यस्थो ज्वलन्निव हुताशनः ३३
मण्डलं सर्वतः श्लिष्टं रथिनामुग्रधन्विनाम्
किरतां शरवर्षाणि स नागः पर्यवर्तत ३४
ततः प्राग्ज्योतिषो राजा परिगृह्य द्विपर्षभम्
प्रेषयामास सहसा युयुधानरथं प्रति ३५
शिनेः पौत्रस्य तु रथं परिगृह्य महाद्विपः
अभिचिक्षेप वेगेन युयुधानस्त्वपाक्रमत् ३६
बृहतः सैन्धवानश्वान्समुत्थाप्य तु सारथिः
तस्थौ सात्यकिमासाद्य संप्लुतस्तं रथं पुनः ३७
स तु लब्ध्वान्तरं नागस्त्वरितो रथमण्डलात्
निश्चक्राम ततः सर्वान्परिचिक्षेप पार्थिवान् ३८
ते त्वाशुगतिना तेन त्रास्यमाना नरर्षभाः
तमेकं द्विरदं संख्ये मेनिरे शतशो नृपाः ३९
ते गजस्थेन काल्यन्ते भगदत्तेन पाण्डवाः
एरावतस्थेन यथा देवराजेन दानवाः ४०
तेषां प्रद्रवतां भीमः पाञ्चालानामितस्ततः
गजवातिकृतः शब्दः सुमहान्समजायत ४१
भगदत्तेन समरे काल्यमानेषु पाण्डुषु
प्राग्ज्योतिषमभिक्रुद्धः पुनर्भीमः समभ्ययात् ४२
तस्याभिद्रवतो वाहान्हस्तमुक्तेन वारिणा
सिक्त्वा व्यत्रासयन्नागस्ते पार्थमहरंस्ततः ४३
ततस्तमभ्ययात्तूर्णं रुचिपर्वाकृतीसुतः
समुक्षञ्शरवर्षेण रथस्थोऽन्तकसंनिभः ४४
ततो रुचिरपर्वाणं शरेण नतपर्वणा
सुपर्वा पर्वतपतिर्निन्ये वैवस्वतक्षयम् ४५
तस्मिन्निपतिते वीरे सौभद्रो द्रोपदीसुताः
चेकितानो धृष्टकेतुर्युयुत्सुश्चार्दयन्द्विपम् ४६
त एनं शरधाराभिर्धाराभिरिव तोयदाः
सिषिचुर्भैरवान्नादान्विनदन्तो जिघांसवः ४७
ततः पार्ष्ण्यङ्कुशाङ्गुष्ठैः कृतिना चोदितो द्विपः

प्रसारितकरः प्रायात्स्तब्धकर्णेक्षणो द्रुतम् ४८
सोऽधिष्ठाय पदा वाहान्युयुत्सोः सुतमारुजत्
पुत्रस्तु तव संभ्रान्तः सौभद्रस्याप्लुतो रथम् ४९
स कुञ्जरस्थो विसृजन्निषूनरिषु पार्थिवः
बभौ रश्मीनिवादित्यो भुवनेषु समुत्सृजन् ५०
तमार्जुनिर्द्वादशभिर्युयुत्सुर्दशभिः शरैः
त्रिभिस्त्रिभिर्द्रौपदेया धृष्टकेतुश्च विव्यधुः ५१
सोऽरियत्नार्पितैर्बाणैराचितो द्विरदो बभौ
संस्यूत इव सूर्यस्य रश्मिभिर्जलदो महान् ५२
नियन्तुः शिल्पयत्नाभ्यां प्रेषितोऽरिशरार्दितः
परिचिक्षेप तान्नागः स रिपून्सव्यदक्षिणम् ५३
गोपाल इव दण्डेन यथा पशुगणान्वने
आवेष्टयत तां सेनां भगदत्तस्तथा मुहुः ५४
क्षिप्रं श्येनाभिपन्नानां वायसानामिव स्वनः
बभूव पाण्डवेयानां भृशं विद्रवतां स्वनः ५५
स नागराजः प्रवराङ्कुशाहतः पुरा सपक्षोऽद्रिवरो यथा नृप
भयं तथा रिपुषु समादधद्भृशं वणिग्गणानां क्षुभितो यथार्णवः ५६
ततो ध्वनिर्द्विरदरथाश्वपार्थिवैर्भयाद्द्रवद्भिर्जनितोऽतिभैरवः
क्षितिं वियद्द्यां विदिशो दिशस्तथा समावृणोत्पार्थिव संयुगे तदा ५७
स तेन नागप्रवरेण पार्थिवो भृशं जगाहे द्विषतामनीकिनीम्
पुरा सुगुप्तां विबुधैरिवाहवे विरोचनो देववरूथिनीमिव ५८
भृशं ववौ ज्वलनसखो वियद्रजः समावृणोन्मुहुरपि चैव सैनिकान्
तमेकनागं गणशो यथा गजाः समन्ततो द्रुतमिव मेनिरे जनाः ५९
इति श्रीमहाभारते द्रोणपर्वणि पञ्चविंशोऽध्यायः २५

## षड्विंशोऽध्यायः

सञ्जय उवाच
यन्मां पार्थस्य संग्रामे कर्माणि परिपृच्छसि
तच्छृणुष्व महाराज पार्थो यदकरोन्मृधे १
रजो दृष्ट्वा समुद्भूतं श्रुत्वा च गजनिस्वनम्

भज्यतां भगदत्तेन कौन्तेयः कृष्णमब्रवीत् २
यथा प्राग्ज्योतिषो राजा गजेन मधुसूदन
त्वरमाणोऽभ्यतिक्रान्तो ध्रुवं तस्यैष निस्वनः ३
इन्द्रादनवरः संख्ये गजयानविशारदः
प्रथमो वा द्वितीयो वा पृथिव्यामिति मे मतिः ४
स चापि द्विरदश्रेष्ठः सदाप्रतिगजो युधि
सर्वशब्दातिगः संख्ये कृतकर्मा जितक्लमः ५
सहः शस्त्रनिपातानामग्निस्पर्शस्य चानघ
स पाण्डवबलं व्यक्तमद्यैको नाशयिष्यति ६
न चावाभ्यामृतेऽन्योऽस्ति शक्तस्तं प्रतिबाधितुम्
त्वरमाणस्ततो याहि यतः प्राग्ज्योतिषाधिपः ७
शक्रसख्याद्द्विपबलैर्वयसा चापि विस्मितम्
अद्यैनं प्रेषयिष्यामि बलहन्तुः प्रियातिथिम् ८
वचनादथ कृष्णस्तु प्रययौ सव्यसाचिनः
दार्यते भगदत्तेन यत्र पाण्डववाहिनी ९
तं प्रयान्तं ततः पश्चादाह्वयन्तो महारथाः
संशप्तकाः समारोहन्सहस्राणि चतुर्दश १०
दशैव तु सहस्राणि त्रिगर्तानां नराधिप
चत्वारि च सहस्राणि वासुदेवस्य येऽनुगाः ११
दार्यमाणां चमूं दृष्ट्वा भगदत्तेन मारिष
आहूयमानस्य च तैरभवद्धृदयं द्विधा १२
किं नु श्रेयस्करं कर्म भवेदिति विचिन्तयन्
इतो वा विनिवर्तेयं गच्छेयं वा युधिष्ठिरम् १३
तस्य बुद्ध्या विचार्यैतदर्जुनस्य कुरूद्वह
अभवद्भूयसी बुद्धिः संशप्तकवधे स्थिरा १४
स संनिवृत्तः सहसा कपिप्रवरकेतनः
एको रथसहस्राणि निहन्तुं वासवी रणे १५
सा हि दुर्योधनस्यासीन्मतिः कर्णस्य चोभयोः
अर्जुनस्य वधोपाये तेन द्वैधमकल्पयत् १६
स तु संवर्तयामास द्वैधीभावेन पाण्डवः

रथेन तु रथाग्र्याणामकरोत्तां मृषा तदा १७
ततः शतसहस्राणि शराणां नतपर्वणाम्
व्यसृजन्नर्जुने राजन्संशप्तकमहारथाः १८
नैव कुन्तीसुतः पार्थो नैव कृष्णो जनार्दनः
न हया न रथो राजन्दृश्यन्ते स्म शरैश्चिताः १९
यदा मोहमनुप्राप्तः सस्वेदश्च जनार्दनः
ततस्तान्प्रायशः पार्थो वज्रास्त्रेण निजघ्निवान् २०
शतशः पाणयश्छिन्नाः सेषुज्यातलकार्मुकाः
केतवो वाजिनः सूता रथिनश्चापतन्क्षितौ २१
द्रुमाचलाग्राम्बुधरैः समरूपाः सुकल्पिताः
हतारोहाः क्षितौ पेतुर्द्विपाः पार्थशराहताः २२
विप्रविद्धकुथावल्गाश्छिन्नभाण्डाः परासवः
सारोहास्तुरगाः पेतुर्मथिताः पार्थमार्गणैः २३
सर्ष्टिचर्मासिनखराः समुद्गरपरश्वधाः
संछिन्ना बाहवः पेतुर्नृणां भल्लैः किरीटिना २४
बालादित्याम्बुजेन्दूनां तुल्यरूपाणि मारिष
संछिन्नान्यर्जुनशरैः शिरांस्युर्वी प्रपेदिरे २५
जज्वालालंकृतैः सेना पत्रिभिः प्राणभोजनैः
नानालिङ्गैस्तदामित्रान्क्रुद्धे निघ्नति फल्गुने २६
क्षोभयन्तं तदा सेनां द्विरदं नलिनीमिव
धनञ्जयं भूतगणाः साधु साध्वित्यपूजयन् २७
दृष्ट्वा तत्कर्म पार्थस्य वासवस्येव माधवः
विस्मयं परमं गत्वा तलमाहत्य पूजयत् २८
ततः संशप्तकान्हत्वा भूयिष्ठं ये व्यवस्थिताः
भगदत्ताय याहीति पार्थः कृष्णमचोदयत् २९
इति श्रीमहाभारते द्रोणपर्वणि षड्विंशोऽध्यायः २६

सप्तविंशोऽध्यायः

सञ्जय उवाच
यियासतस्ततः कृष्णः पार्थस्याश्वान्मनोजवान्

अप्रैषीद्धेमसंछन्नान्द्रोणानीकाय पाण्डुरान् १
तं प्रयान्तं कुरुश्रेष्ठं स्वांस्त्रातुं द्रोणतापितान्
सुशर्मा भ्रातृभिः सार्धं युद्धार्थी पृष्ठतोऽन्वयात् २
ततः श्वेतहयः कृष्णमब्रवीदजितं जयः
एष मां भ्रातृभिः सार्धं सुशर्माह्वयतेऽच्युत ३
दीर्यते चोत्तरेणैतत्सैन्यं नः शत्रुसूदन
द्वैधीभूतं मनो मेऽद्य कृतं संशप्तकैरिदम् ४
किं नु संशप्तकान्हन्मि स्वान्रक्षाम्यहितार्दितान्
इति मे त्वं मतं वेत्थ तत्र किं सुकृतं भवेत् ५
एवमुक्तस्तु दाशार्हः स्यन्दनं प्रत्यवर्तयत्
येन त्रिगर्ताधिपतिः पाण्डवं समुपाह्वयत् ६
ततोऽर्जुनः सुशर्माणं विद्ध्वा सप्तभिराशुगैः
ध्वजं धनुश्चास्य तथा क्षुराभ्यां समकृन्तत ७
त्रिगर्ताधिपतेश्चापि भ्रातरं षड्भिरायसैः
साश्वं ससूतं त्वरितः पार्थः प्रैषीद्यमक्षयम् ८
ततो भुजगसङ्काशां सुशर्मा शक्तिमायसीम्
चिक्षेपार्जुनमादिश्य वासुदेवाय तोमरम् ९
शक्तिं त्रिभिः शरैश्छित्त्वा तोमरं त्रिभिरर्जुनः
सुशर्माणं शरव्रातैर्मोहयित्वा न्यवर्तत १०
तं वासवमिवायान्तं भूरिवर्षशरौघिणम्
राजंस्तावकसैन्यानां नोग्रं कश्चिदवारयत् ११
ततो धनञ्जयो बाणैस्तत एव महारथान्
आयाद्विनिघ्नन्कौरव्यान्दहन्कक्षमिवानलः १२
तस्य वेगमसह्यं तु कुन्तीपुत्रस्य धीमतः
नाशक्नुवंस्ते संसोढुं स्पर्शमग्नेरिव प्रजाः १३
संवेष्टयन्ननीकानि शरवर्षेण पाण्डवः
सुपर्णपातवद्राजन्नायात्प्राग्ज्योतिषं प्रति १४
यत्तदानामयज्जिष्णुर्भरतानामपायिनाम्
धनुः क्षेमकरं संख्ये द्विषतामश्रुवर्धनम् १५
तदेव तव पुत्रस्य राजन्दुर्द्यूतदेविनः

कृते क्षत्रविनाशाय धनुरायच्छदर्जुनः १६
तथा विक्षोभ्यमाणा सा पार्थेन तव वाहिनी
व्यदीर्यत महाराज नौरिवासाद्य पर्वतम् १७
ततो दश सहस्राणि न्यवर्तन्त धनुष्मताम्
मतिं कृत्वा रणे क्रुद्धा वीरा जयपराजये १८
व्यपेतहृदयत्रास आपद्धर्मातिगो रथः
आर्छत्पार्थो गुरुं भारं सर्वभारसहो युधि १९
यथा नडवनं क्रुद्धः प्रभिन्नः षष्टिहायनः
मृद्नीयात्तद्वदायस्तः पार्थोऽमृद्नाच्चमूं तव २०
तस्मिन्प्रमथिते सैन्ये भगदत्तो नराधिपः
तेन नागेन सहसा धनञ्जयमुपाद्रवत् २१
तं रथेन नरव्याघ्रः प्रत्यगृह्णादभीतवत्
स सन्निपातस्तुमुलो बभूव रथनागयोः २२
कल्पिताभ्यां यथाशास्त्रं रथेन च गजेन च
संग्रामे चेरतुर्वीरौ भगदत्तधनञ्जयौ २३
ततो जीमूतसङ्काशान्नागादिन्द्र इवाभिभूः
अभ्यवर्षच्छरौघेण भगदत्तो धनञ्जयम् २४
स चापि शरवर्षं तच्छरवर्षेण वासविः
अप्राप्तमेव चिच्छेद भगदत्तस्य वीर्यवान् २५
ततः प्राग्ज्योतिषो राजा शरवर्षं निवार्य तत्
शरैर्जघ्ने महाबाहुं पार्थं कृष्णं च भारत २६
ततः स शरजालेन महताभ्यवकीर्य तौ
चोदयामास तं नागं वधायाच्युतपार्थयोः २७
तमापतन्तं द्विरदं दृष्ट्वा क्रुद्धमिवान्तकम्
चक्रेऽपसव्यं त्वरितः स्यन्दनेन जनार्दनः २८
संप्राप्तमपि नेयेष परावृत्तं महाद्विपम्
सारोहं मृत्युसात्कर्तुं स्मरन्धर्मं धनञ्जयः २९
स तु नागो द्विपरथान्हयांश्चारुज्य मारिष
प्राहिणोन्मृत्युलोकाय ततोऽक्रुध्यद्धनञ्जयः ३०
इति श्रीमहाभारते द्रोणपर्वणि सप्तविंशोऽध्यायः २७

अष्टाविंशोऽध्यायः

धृतराष्ट्र उवाच
तथा क्रुद्धः किमकरोद्भगदत्तस्य पाण्डवः
प्राग्ज्योतिषो वा पार्थस्य तन्मे शंस यथातथम् १
सञ्जय उवाच
प्राग्ज्योतिषेण संसक्तावुभौ दाशार्हपाण्डवौ
मृत्योरिवान्तिकं प्राप्तौ सर्वभूतानि मेनिरे २
तथा हि शरवर्षाणि पातयत्यनिशं प्रभो
भगदत्तो गजस्कन्धात्कृष्णयोः स्यन्दनस्थयोः ३
अथ कार्ष्णायसैर्बाणैः पूर्णकार्मुकनिःसृतैः
अविध्यद्देवकीपुत्रं हेमपुङ्खैः शिलाशितैः ४
अग्निस्पर्शसमास्तीक्ष्णा भगदत्तेन चोदिताः
निर्भिद्य देवकीपुत्रं क्षितिं जग्मुः शरास्ततः ५
तस्य पार्थो धनुश्छित्त्वा शरावापं निहत्य च
लाडयन्निव राजानं भगदत्तमयोधयत् ६
सोऽकरश्मिनिभांस्तीक्ष्णांस्तोमरान्वै चतुर्दश
प्रेरयत्सव्यसाची तांस्त्रिधैकैकमथाच्छिनत् ७
ततो नागस्य तद्वर्म व्यधमत्पाकशासनिः
शरजालेन स बभौ व्यभ्रः पर्वतराडिव ८
ततः प्राग्ज्योतिषः शक्तिं हेमदण्डामयस्मयीम्
व्यसृजद्वासुदेवाय द्विधा तामर्जुनोऽच्छिनत् ९
ततश्छत्रं ध्वजं चैव छित्त्वा राज्ञोऽजुनः शरैः
विव्याध दशभिस्तूर्णमुत्स्मयन्पर्वतोधिपम् १०
सोऽतिविद्धोऽजुनशरैः सुपुङ्खैः कङ्कपत्रिभिः
भगदत्तस्ततः क्रुद्धः पाण्डवस्य महात्मनः ११
व्यसृजत्तोमरान्मूर्ध्नि श्वेताश्वस्योन्ननाद च
तैरर्जुनस्य समरे किरीटं परिवर्तितम् १२
परिवृत्तं किरीटं तं यमयन्नेव फल्गुनः
सुदृष्टः क्रियतां लोक इति राजानमब्रवीत् १३
एवमुक्तस्तु संक्रुद्धः शरवर्षेण पाण्डवम्

अभ्यवर्षत्सगोविन्दं धनुरादाय भास्वरम् १४
तस्य पार्थो धनुश्छित्त्वा तूणीरान्संनिकृत्य च
त्वरमाणो द्विसप्तत्या सर्वमर्मस्वताडयत् १५
विद्धस्तथाप्यव्यथितो वैष्णवास्त्रमुदीरयन्
अभिमन्त्र्याङ्कुशं क्रुद्धो व्यसृजत्पाण्डवोरसि १६
विसृष्टं भगदत्तेन तदस्त्रं सर्वघातकम्
उरसा प्रतिजग्राह पार्थं संछाद्य केशवः १७
वैजयन्त्यभवन्माला तदस्त्रं केशवोरसि
ततोऽजुनः क्लान्तमनाः केशवं प्रत्यभाषत १८
अयुध्यमानस्तुरगान्संयन्तास्मि जनार्दन
इत्युक्त्वा पुण्डरीकाक्ष प्रतिज्ञां स्वां न रक्षसि १९
यद्यहं व्यसनी वा स्यामशक्तो वा निवारणे
ततस्त्वयैवं कार्यं स्यान्न तु कार्यं मयि स्थिते २०
सबाणः सधनुश्चाहं ससुरासुरमानवान्
शक्तो लोकानिमाञ्जेतुं तच्चापि विदितं तव २१
ततोऽजुनं वासुदेवः प्रत्युवाचार्थवद्वचः
शृणु गुह्यमिदं पार्थ यथा वृत्तं पुरानघ २२
चतुर्मूर्तिरहं शश्वल्लोकत्राणार्थमुद्यतः
आत्मानं प्रविभज्येह लोकानां हितमादधे २३
एका मूर्तिस्तपश्चर्यां कुरुते मे भुवि स्थिता
अपरा पश्यति जगत्कुर्वाणं साध्वसाधुनी २४
अपरा कुरुते कर्म मानुषं लोकमाश्रिता
शेते चतुर्थी त्वपरा निद्रां वर्षसहस्रिकाम् २५
यासौ वर्षसहस्रान्ते मूर्तिरुत्तिष्ठते मम
वरार्हेभ्यो वराञ्श्रेष्ठांस्तस्मिन्काले ददाति सा २६
तं तु कालमनुप्राप्तं विदित्वा पृथिवी तदा
प्रायाचत वरं यं मां नरकार्थाय तं शृणु २७
देवानामसुराणां च अवध्यस्तनयोऽस्तु मे
उपेतो वैष्णवास्त्रेण तन्मे त्वं दातुमर्हसि २८
एवं वरमहं श्रुत्वा जगत्यास्तनये तदा

अमोघमस्त्रमददं वैष्णवं तदहं पुरा २९
अवोचं चैतदस्त्रं वै ह्यमोघं भवतु क्षमे
नरकस्याभिरक्षार्थं नैनं कश्चिद्वधिष्यति ३०
अनेनास्त्रेण ते गुप्तः सुतः परबलार्दनः
भविष्यति दुराधर्षः सर्वलोकेषु सर्वदा ३१
तथेत्युक्त्वा गता देवी कृतकामा मनस्विनी
स चाप्यासीद्दुराधर्षो नरकः शत्रुतापनः ३२
तस्मात्प्राग्ज्योतिषं प्राप्तं तदस्त्रं पार्थ मामकम्
नास्यावध्योऽस्ति लोकेषु सेन्द्ररुद्रेषु मारिष ३३
तन्मया त्वत्कृतेनैतदन्यथा व्यपनाशितम्
वियुक्तं परमास्त्रेण जहि पार्थ महासुरम् ३४
वैरिणं युधि दुर्धर्षं भगदत्तं सुरद्विषम्
यथाहं जघ्निवान्पूर्वं हितार्थं नरकं तथा ३५
एवमुक्तस्ततः पार्थः केशवेन महात्मना
भगदत्तं शितैर्बाणैः सहसा समवाकिरत् ३६
ततः पार्थो महाबाहुरसंभ्रान्तो महामनाः
कुम्भयोरन्तरे नागं नाराचेन समार्पयत् ३७
समासाद्य तु तं नागं बाणो वज्र इवाचलम्
अभ्यगात्सह पुङ्खेन वल्मीकमिव पन्नगः ३८
स तु विष्टभ्य गात्राणि दन्ताभ्यामवनिं ययौ
नदन्नार्तस्वरं प्राणानुत्ससर्ज महाद्विपः ३९
ततश्चन्द्रार्धबिम्बेन शरेण नतपर्वणा
बिभेद हृदयं राज्ञो भगदत्तस्य पाण्डवः ४०
स भिन्नहृदयो राजा भगदत्तः किरीटिना
शरासनं शरांश्चैव गतासुः प्रमुमोच ह ४१
शिरसस्तस्य विभ्रष्टः पपात च वराङ्कुशः
नालताडनविभ्रष्टं पलाशं नलिनादिव ४२
स हेममाली तपनीयभाण्डात्पपात नागाद्गिरिसंनिकाशात्
सुपुष्पितो मारुतवेगरुग्णो महीधराग्रादिव कर्णिकारः ४३
निहत्य तं नरपतिमिन्द्रविक्रमं सखायमिन्द्रस्य तथैन्द्रिराहवे

ततोऽपरांस्तव जयकाङ्क्षिणो नरान्बभञ्ज वायुर्बलवान्द्रुमानिव ४४
इति श्रीमहाभारते द्रोणपर्वणि अष्टाविंशोऽध्यायः २८

## एकोनत्रिंशोऽध्यायः

सञ्जय उवाच
प्रियमिन्द्रस्य सततं सखायममितौजसम्
हत्वा प्राग्ज्योतिषं पार्थः प्रदक्षिणमवर्तत १
ततो गान्धारराजस्य सुतौ परपुरञ्जयौ
आर्छेतामर्जुनं संख्ये भ्रातरौ वृषकाचलौ २
तौ समेत्यार्जुनं वीरौ पुरः पश्चाच्च धन्विनौ
अविध्येतां महावेगैर्निशितैराशुगैर्भृशम् ३
वृषकस्य हयान्सूतं धनुश्छत्रं रथं ध्वजम्
तिलशो व्यधमत्पार्थः सौबलस्य शितैः शरैः ४
ततोऽर्जुनः शरव्रातैर्नानाप्रहरणैरपि
गान्धारान्व्याकुलांश्चक्रे सौबलप्रमुखान्पुनः ५
ततः पञ्चशतान्वीरान्गान्धारानुद्यतायुधान्
प्राहिणोन्मृत्युलोकाय क्रुद्धो बाणैर्धनञ्जयः ६
हताश्वात्तु रथात्तूर्णमवतीर्य महाभुजः
आरुरोह रथं भ्रातुरन्यच्च धनुराददे ७
तावेकरथमारूढौ भ्रातरौ वृषकाचलौ
शरवर्षेण बीभत्सुमविध्येतां पुनः पुनः ८
श्यालौ तव महात्मानौ राजानौ वृषकाचलौ
भृशं निजघ्नतुः पार्थमिन्द्रं वृत्रबलाविव ९
लब्धलक्ष्यौ तु गान्धारावहतां पाण्डवं पुनः
निदाघवार्षिकौ मासौ लोकं घर्माम्बुभिर्यथा १०
तौ रथस्थौ नरव्याघ्रौ राजानौ वृषकाचलौ
संश्लिष्टाङ्गौ स्थितौ राजञ्जघानैकेषुणार्जुनः ११
तौ रथात्सिंहसङ्काशौ लोहिताक्षौ महाभुजौ
गतासू पेततुर्वीरौ सोदर्यावेकलक्षणौ १२
तयोर्देहौ रथाद्भूमिं गतौ बन्धुजनप्रियौ

यशो दश दिशः पुण्यं गमयित्वा व्यवस्थितौ १३
दृष्ट्वा विनिहतौ संख्ये मातुलावपलायिनौ
भृशं मुमुचुरश्रूणि पुत्रास्तव विशां पते १४
निहतौ भ्रातरौ दृष्ट्वा मायाशतविशारदः
कृष्णौ संमोहयन्मायां विदधे शकुनिस्ततः १५
लगुडायोगुडाश्मानः शतघ्न्यश्च सशक्तयः
गदापरिघनिस्त्रिंशशूलमुद्गरपट्टिशाः १६
सकम्पनर्ष्टिनखरा मुसलानि परश्वधाः
क्षुराः क्षुरप्रनालीका वत्सदन्तास्त्रिसंधिनः १७
चक्राणि विशिखाः प्रासा विविधान्यायुधानि च
प्रपेतुः सर्वतो दिग्भ्यः प्रदिग्भ्यश्चार्जुनं प्रति १८
खरोष्ट्रमहिषाः सिंहा व्याघ्राः सृमरचिल्लिकाः
ऋक्षाः सालावृका गृध्राः कपयोऽथ सरीसृपाः १९
विविधानि च रक्षांसि क्षुधितान्यर्जुनं प्रति
संक्रुद्धान्यभ्यधावन्त विविधानि वयांसि च २०
ततो दिव्यास्त्रविच्छूरः कुन्तीपुत्रो धनञ्जयः
विसृजन्निषुजालानि सहसा तान्यताडयत् २१
ते हन्यमानाः शूरेण प्रवरैः सायकैर्दृढैः
विरुवन्तो महारावान्विनेशुः सर्वतो हताः २२
ततस्तमः प्रादुरभूदर्जुनस्य रथं प्रति
तस्माच्च तमसो वाचः क्रूराः पार्थमभर्त्सयन् २३
तत्तमोऽस्त्रेण महता ज्योतिषेणार्जुनोऽवधीत्
हते तस्मिञ्जलौघास्तु प्रादुरासन्भयानकाः २४
अम्भसस्तस्य नाशार्थमादित्यास्त्रमथार्जुनः
प्रायुङ्क्ताम्भस्ततस्तेन प्रायशोऽस्त्रेण शोषितम् २५
एवं बहुविधा मायाः सौबलस्य कृताः कृताः
जघानास्त्रबलेनाशु प्रहसन्नर्जुनस्तदा २६
तथा हतासु मायासु त्रस्तोऽर्जुनशराहतः
अपायाज्जवनैरश्वैः शकुनिः प्राकृतो यथा २७
ततोऽर्जुनोऽस्त्रविच्छ्रैष्ठ्यं दर्शयन्नात्मनोऽरिषु

अभ्यवर्षच्छरौघेण कौरवाणामनीकिनीम् २८
सा हन्यमाना पार्थेन पुत्रस्य तव वाहिनी
द्वैधीभूता महाराज गङ्गेवासाद्य पर्वतम् २९
द्रोणमेवान्वपद्यन्त केचित्तत्र महारथाः
केचिद्दुर्योधनं राजन्नर्द्यमानाः किरीटिना ३०
नापश्याम ततस्त्वेतत्सैन्यं वै तमसावृतम्
गाण्डीवस्य च निर्घोषः श्रुतो दक्षिणतो मया ३१
शङ्खदुन्दुभिनिर्घोषं वादित्राणां च निस्वनम्
गाण्डीवस्य च निर्घोषो व्यतिक्रम्यास्पृशद्दिवम् ३२
ततः पुनर्दक्षिणतः संग्रामश्चित्रयोधिनाम्
सुयुद्धमर्जुनस्यासीदहं तु द्रोणमन्वगाम् ३३
नानाविधान्यनीकानि पुत्राणां तव भारत
अर्जुनो व्यधमत्काले दिवीवाभ्राणि मारुतः ३४
तं वासवमिवायान्तं भूरिवर्षशरौघिणम्
महेष्वासं नरव्याघ्रं नोग्रं कश्चिदवारयत् ३५
ते हन्यमानाः पार्थेन त्वदीया व्यथिता भृशम्
स्वानेव बहवो जघ्नुर्विद्रवन्तस्ततस्ततः ३६
तेऽजुनेन शरा मुक्ताः कङ्कपत्रास्तनुच्छिदः
शलभा इव सम्पेतुः संवृण्वाना दिशो दश ३७
तुरगं रथिनं नागं पदातिमपि मारिष
विनिर्भिद्य क्षितिं जग्मुर्वल्मीकमिव पन्नगाः ३८
न च द्वितीयं व्यसृजत्कुञ्जराश्वनरेषु सः
पृथगेकशरारुग्णा निपेतुस्ते गतासवः ३९
हतैर्मनुष्यैस्तुरगैश्च सर्वतः शराभिवृष्टैर्द्विरदैश्च पातितैः
तदा श्वगोमायुबडाभिनादितं विचित्रमायोधशिरो बभूव ह ४०
पिता सुतं त्यजति सुहृद्वरं सुहृत्तथैव पुत्रः पितरं शरातुरः
स्वरक्षणे कृतमतयस्तदा जनास्त्यजन्ति वाहानपि पार्थपीडिताः ४१
इति श्रीमहाभारते द्रोणपर्वणि एकोनत्रिंशोऽध्यायः २९

त्रिंशोऽध्यायः

धृतराष्ट्र उवाच
तेष्वनीकेषु भग्नेषु पाण्डुपुत्रेण सञ्जय
चलितानां द्रुतानां च कथमासीन्मनो हि वः १
अनीकानां प्रभग्नानां व्यवस्थानमपश्यताम्
दुष्करं प्रतिसंधानं तन्ममाचक्ष्व सञ्जय २
सञ्जय उवाच
तथापि तव पुत्रस्य प्रियकामा विशां पते
यशः प्रवीरा लोकेषु रक्षन्तो द्रोणमन्वयुः ३
समुद्यतेषु शस्त्रेषु संप्राप्ते च युधिष्ठिरे
अकुर्वन्नार्यकर्माणि भैरवे सत्यभीतवत् ४
अन्तरं भीमसेनस्य प्रापतन्नमितौजसः
सात्यकेश्चैव शूरस्य धृष्टद्युम्नस्य चाभिभो ५
द्रोणं द्रोणमिति क्रूराः पाञ्चालाः समचोदयन्
मा द्रोणमिति पुत्रास्ते कुरून्सर्वानचोदयन् ६
द्रोणं द्रोणमिति ह्येके मा द्रोणमिति चापरे
कुरूणां पाण्डवानां च द्रोणद्यूतमवर्तत ७
यं यं स्म भजते द्रोणः पाञ्चालानां रथव्रजम्
तत्र तत्र स्म पाञ्चाल्यो धृष्टद्युम्नोऽथ धीयते ८
यथाभागविपर्यासे संग्रामे भैरवे सति
वीराः समासदन्वीरानगच्छन्भीरवः परान् ९
अकम्पनीयाः शत्रूणां बभूवुस्तत्र पाण्डवाः
अकम्पयंस्त्वनीकानि स्मरन्तः क्लेशमात्मनः १०
ते त्वमर्षवशं प्राप्ता ह्रीमन्तः सत्त्वचोदिताः
त्यक्त्वा प्राणान्यवर्तन्त घ्नन्तो द्रोणं महाहवे ११
अयसामिव संपातः शिलानामिव चाभवत्
दीव्यतां तुमुले युद्धे प्राणैरमिततेजसाम् १२
न तु स्मरन्ति संग्राममपि वृद्धास्तथाविधम्
दृष्टपूर्वं महाराज श्रुतपूर्वमथापि वा १३
प्राकम्पतेव पृथिवी तस्मिन्वीरावसादने

प्रवर्तता बलौघेन महता भारपीडिता १४
घूर्णतो हि बलौघस्य दिवं स्तब्ध्वेव निस्वनः
अजातशत्रोः क्रुद्धस्य पुत्रस्य तव चाभवत् १५
समासाद्य तु पाण्डूनामनीकानि सहस्रशः
द्रोणेन चरता संख्ये प्रभग्नानि शितैः शरैः १६
तेषु प्रमथ्यमानेषु द्रोणेनाद्भुतकर्मणा
पर्यवारयदासाद्य द्रोणं सेनापतिः स्वयम् १७
तदद्भुतमभूद्युद्धं द्रोणपाञ्चाल्ययोस्तदा
नैव तस्योपमा काचित्संभवेदिति मे मतिः १८
ततो नीलोऽनलप्रख्यो ददाह कुरुवाहिनीम्
शरस्फुलिङ्गश्चापार्चिर्दहन्कक्षमिवानलः १९
तं दहन्तमनीकानि द्रोणपुत्रः प्रतापवान्
पूर्वाभिभाषी सुश्लक्ष्णं स्मयमानोऽभ्यभाषत २०
नील किं बहुभिर्दग्धैस्तव योधैः शरार्चिषा
मयैकेन हि युध्यस्व क्रुद्धः प्रहर चाशुगैः २१
तं पद्मनिकराकारं पद्मपत्रनिभेक्षणम्
व्याकोशपद्माभमुखं नीलो विव्याध सायकैः २२
तेनातिविद्धः सहसा द्रौणिर्भल्लैः शितैस्त्रिभिः
धनुर्ध्वजं च छत्रं च द्विषतः स न्यकृन्तत २३
सोत्प्लुत्य स्यन्दनात्तस्मान्नीलश्चर्मवरासिधृक्
द्रोणायनेः शिरः कायाद्धर्तुमैच्छत्पतत्रिवत् २४
तस्योद्यतासेः सुनसं शिरः कायात्सकुण्डलम्
भल्लेनापाहरद्द्रौणिः स्मयमान इवानघ २५
सम्पूर्णचन्द्राभमुखः पद्मपत्रनिभेक्षणः
प्रांशुरुत्पलगर्भाभो निहतो न्यपतत्क्षितौ २६
ततः प्रविव्यथे सेना पाण्डवी भृशमाकुला
आचार्यपुत्रेण हते नीले ज्वलिततेजसि २७
अचिन्तयंश्च ते सर्वे पाण्डवानां महारथाः
कथं नो वासविस्त्रायाच्छत्रुभ्य इति मारिष २८
दक्षिणेन तु सेनायाः कुरुते कदनं बली

संशप्तकावशेषस्य नारायणबलस्य च २९
इति श्रीमहाभारते द्रोणपर्वणि त्रिंशोऽध्यायः ३०

## एकत्रिंशोऽध्यायः

सञ्जय उवाच
प्रतिघातं तु सैन्यस्य नामृष्यत वृकोदरः
सोऽभिनद्बाह्लिकं षष्ट्या कर्णं च दशभिः शरैः १
तस्य द्रोणः शितैर्बाणैस्तीक्ष्णधारैरयस्मयैः
जीवितान्तमभिप्रेप्सुर्मर्मण्याशु जघान ह २
कर्णो द्वादभिर्बाणैरश्वत्थामा च सप्तभिः
षड्भिर्दुर्योधनो राजा तत एनमवाकिरत् ३
भीमसेनोऽपि तान्सर्वान्प्रत्यविध्यन्महाबलः
द्रोणं पञ्चाशतेषूणां कर्णं च दशभिः शरैः ४
दुर्योधनं द्वादशभिर्द्रौणिं चाष्टाभिराशुगैः
आरावं तुमुलं कुर्वन्नभ्यवर्तत तान्रणे ५
तस्मिन्संत्यजति प्राणान्मृत्युसाधारणीकृते
अजातशत्रुस्तान्योधान्भीमं त्रातेत्यचोदयत् ६
ते ययुर्भीमसेनस्य समीपममितौजसः
युयुधानप्रभृतयो माद्रीपुत्रौ च पाण्डवौ ७
ते समेत्य सुसंरब्धाः सहिताः पुरुषर्षभाः
महेष्वासवरैर्गुप्तं द्रोणानीकं बिभित्सवः ८
समापेतुर्महावीर्या भीमप्रभृतयो रथाः
तान्प्रत्यगृह्णादव्यग्रो द्रोणोऽपि रथिनां वरः ९
महाबलानतिरथान्वीरान्समरशोभिनः
बाह्यं मृत्युभयं कृत्वा तावकाः पाण्डवान्ययुः १०
सादिनः सादिनोऽभ्यघ्नंस्तथैव रथिनो रथान्
आसीच्छक्त्यसिसंपातो युद्धमासीत्परश्वधैः ११
निकृष्टमसियुद्धं च बभूव कटुकोदयम्
कुञ्जराणां च संघातैर्युद्धमासीत्सुदारुणम् १२
अपतत्कुञ्जरादन्यो हयादन्यस्त्ववाक्शिराः

नरो बाणेन निर्भिन्नो रथादन्यश्च मारिष १३
तत्रान्यस्य च संमर्दे पतितस्य विवर्मणः
शिरः प्रध्वंसयामास वक्षस्याक्रम्य कुञ्जरः १४
अपरेऽप्यपराञ्जघ्नुर्वारणाः पतितान्नरान्
विषाणैश्चावनिं गत्वा व्यभिन्दन्रथिनो बहून् १५
नरान्त्रैः केचिदपरे विषाणालग्नसंस्रवैः
बभ्रमुः शतशो नागा मृद्नन्तः शतशो नरान् १६
कांस्यायसतनुत्राणान्नराश्वरथकुञ्जरान्
पतितान्पोथयाञ्चक्रुर्द्विपाः स्थूलनडानिव १७
गृध्रपत्राधिवासांसि शयनानि नराधिपाः
ह्रीमन्तः कालसंपक्वाः सुदुःखान्यधिशेरते १८
हन्ति स्मात्र पिता पुत्रं रथेनाभ्यतिवर्तते
पुत्रश्च पितरं मोहान्निर्मर्यादमवर्तत १९
अक्षो भग्नो ध्वजश्छिन्नश्छत्रमुर्व्यां निपातितम्
युगार्धं छिन्नमादाय प्रदुद्राव तथा हयः २०
सासिर्बाहुर्निपतितः शिरश्छिन्नं सकुण्डलम्
गजेनाक्षिप्य बलिना रथः संचूर्णितः क्षितौ २१
रथिना ताडितो नागो नाराचेनापतद्व्यसुः
सारोहश्चापतद्वाजी गजेनाताडितो भृशम् २२
निर्मर्यादं महद्युद्धमवर्तत सुदारुणम्
हा तात हा पुत्र सखे क्वासि तिष्ठ क्व धावसि २३
प्रहराहर जह्येनं स्मितक्ष्वेडितगर्जितैः
इत्येवमुच्चरन्त्यः स्म श्रूयन्ते विविधा गिरः २४
नरस्याश्वस्य नागस्य समसज्जत शोणितम्
उपाशाम्यद्रजो भौमं भीरून्कश्मलमाविशत् २५
आसीत्केशपरामर्शो मुष्टियुद्धं च दारुणम्
नखैर्दन्तैश्च शूराणामद्वीपे द्वीपमिच्छताम् २६
तत्राच्छिद्यत वीरस्य सखड्गो बाहुरुद्यतः
सधनुश्चापरस्यापि सशरः साङ्कुशस्तथा २७
प्राक्रोशदन्यमन्योऽत्र तथान्यो विमुखोऽद्रवत्

अन्यः प्राप्तस्य चान्यस्य शिरः कायादपाहरत् २८
शब्दमभ्यद्रवच्चान्यः शब्दादन्योऽद्रवद्भृशम्
स्वानन्योऽथ परानन्यो जघान निशितैः शरैः २९
गिरिशृङ्गोपमश्चात्र नाराचेन निपातितः
मातङ्गो न्यपतद्भूमौ नदीरोध इवोष्णगे ३०
तथैव रथिनं नागः क्षरन्गिरिरिवारुजत्
अध्यतिष्ठत्पदा भूमौ सहाश्वं सहसारथिम् ३१
शूरान्प्रहरतो दृष्ट्वा कृतास्त्रान्रुधिरोक्षितान्
बहूनप्याविशन्मोहो भीरून्हृदयदुर्बलान् ३२
सर्वमाविग्नमभवन्न प्राज्ञायत किञ्चन
सैन्ये च रजसा ध्वस्ते निर्मर्यादमवर्तत ३३
ततः सेनापतिः शीघ्रमयं काल इति ब्रुवन्
नित्याभित्वरितानेव त्वरयामास पाण्डवान् ३४
कुर्वन्तः शासनं तस्य पाण्डवेया यशस्विनः
सरो हंसा इवापेतुर्घ्नन्तो द्रोणरथं प्रति ३५
गृह्णीताद्रवतान्योन्यं विभीता विनिकृन्तत
इत्यासीत्तुमुलः शब्दो दुर्धर्षस्य रथं प्रति ३६
ततो द्रोणः कृपः कर्णो द्रौणी राजा जयद्रथः
विन्दानुविन्दावावन्त्यौ शल्यश्चैनानवारयन् ३७
ते त्वार्यधर्मसंरब्धा दुर्निवार्या दुरासदाः
शरार्ता न जहुर्द्रोणं पाञ्चालाः पाण्डवैः सह ३८
ततो द्रोणोऽभिसंक्रुद्धो विसृजञ्शतशः शरान्
चेदिपाञ्चालपाण्डूनामकरोत्कदनं महत् ३९
तस्य ज्यातलनिर्घोषः शुश्रुवे दिक्षु मारिष
वज्रसंघातसङ्काशस्त्रासयन्पाण्डवान्बहून् ४०
एतस्मिन्नन्तरे जिष्णुर्हत्वा संशप्तकान्बली
अभ्ययात्तत्र यत्र स्म द्रोणः पाण्डून्प्रमर्दति ४१
तं शरौघमहावर्तं शोणितोदं महाह्रदम्
तीर्णः संशप्तकान्हत्वा प्रत्यदृश्यत फल्गुनः ४२
तस्य कीर्तिमतो लक्ष्म सूर्यप्रतिमतेजसः

दीप्यमानमपश्याम तेजसा वानरध्वजम् ४३
संशप्तकसमुद्रं तमुच्छोष्यास्त्रगभस्तिभिः
स पाण्डवयुगान्तार्कः कुरूनप्यभ्यतीतपत् ४४
प्रददाह कुरून्सर्वानर्जुनः शस्त्रतेजसा
युगान्ते सर्वभूतानि धूमकेतुरिवोत्थितः ४५
तेन बाणसहस्रौघैर्गजाश्वरथयोधिनः
ताड्यमानाः क्षितिं जग्मुर्मुक्तशस्त्राः शरार्दिताः ४६
केचिदार्तस्वरं चक्रुर्विनेदुरपरे पुनः
पार्थबाणहताः केचिन्निपेतुर्विगतासवः ४७
तेषामुत्पततां कांश्चित्पतितांश्च पराङ्मुखान्
न जघानार्जुनो योधान्योधव्रतमनुस्मरन् ४८
ते विशीर्णरथाश्वेभाः प्रायशश्च पराङ्मुखाः
कुरवः कर्ण कर्णेति हा हेति च विचुक्रुशुः ४९
तमाधिरथिराक्रन्दं विज्ञाय शरणैषिणाम्
मा भैष्टेति प्रतिश्रुत्य ययावभिमुखोऽर्जुनम् ५०
स भारतरथश्रेष्ठः सर्वभारतहर्षणः
प्रादुश्चक्रे तदाग्नेयमस्त्रमस्त्रविदां वरः ५१
तस्य दीप्तशरौघस्य दीप्तचापधरस्य च
शरौघाञ्शरजालेन विदुधाव धनञ्जयः
अस्त्रमस्त्रेण संवार्य प्राणदद्विसृजञ्शरान् ५२
धृष्टद्युम्नश्च भीमश्च सात्यकिश्च महारथः
विव्यधुः कर्णमासाद्य त्रिभिस्त्रिभिरजिह्मगैः ५३
अर्जुनास्त्रं तु राधेयः संवार्य शरवृष्टिभिः
तेषां त्रयाणां चापानि चिच्छेद विशिखैस्त्रिभिः ५४
ते निकृत्तायुधाः शूरा निर्विषा भुजगा इव
रथशक्तीः समुत्क्षिप्य भृशं सिंहा इवानदन् ५५
ता भुजाग्रैर्महावेगा विसृष्टा भुजगोपमाः
दीप्यमाना महाशक्त्यो जग्मुराधिरथिं प्रति ५६
ता निकृत्य शितैर्बाणैस्त्रिभिस्त्रिभिरजिह्मगैः
ननाद बलवान्कर्णः पार्थाय विसृजञ्शरान् ५७

अर्जुनश्चापि राधेयं विद्ध्वा सप्तभिराशुगैः
कर्णादवरजं बाणैर्जघान निशितैस्त्रिभिः ५८
ततः शत्रुञ्जयं हत्वा पार्थः षड्भिरजिह्मगैः
जहार सद्यो भल्लेन विपाटस्य शिरो रथात् ५९
पश्यतां धार्तराष्ट्राणामेकेनैव किरीटिना
प्रमुखे सूतपुत्रस्य सोदर्या निहतास्त्रयः ६०
ततो भीमः समुत्पत्य स्वरथाद्वैनतेयवत्
वरासिना कर्णपक्षाञ्जघान दश पञ्च च ६१
पुनः स्वरथमास्थाय धनुरादाय चापरम्
विव्याध दशभिः कर्णं सूतमश्वांश्च पञ्चभिः ६२
धृष्टद्युम्नोऽप्यसिवरं चर्म चादाय भास्वरम्
जघान चन्द्रवर्माणं बृहत्क्षत्रं च पौरवम् ६३
ततः स्वरथमास्थाय पाञ्चाल्योऽन्यच्च कार्मुकम्
आदाय कर्णं विव्याध त्रिसप्तत्या नदन्रणे ६४
शैनेयोऽप्यन्यदादाय धनुरिन्द्रायुधद्युति
सूतपुत्रं चतुःषष्ट्या विद्ध्वा सिंह इवानदत् ६५
भल्लाभ्यां साधुमुक्ताभ्यां छित्त्वा कर्णस्य कार्मुकम्
पुनः कर्णं त्रिभिर्बाणैर्बाह्वोरुरसि चार्पयत् ६६
ततो दुर्योधनो द्रोणो राजा चैव जयद्रथः
निमज्जमानं राधेयमुज्जह्रुः सात्यकार्णवात् ६७
धृष्टद्युम्नश्च भीमश्च सौभद्रोऽजुन एव च
नकुलः सहदेवश्च सात्यकिं जुगुपू रणे ६८
एवमेष महारौद्रः क्षयार्थं सर्वधन्विनाम्
तावकानां परेषां च त्यक्त्वा प्राणानभूद्रणः ६९
पदातिरथनागाश्वैर्गजाश्वरथपत्तयः
रथिनो नागपत्त्यश्वै रथपत्ती रथद्विपैः ७०
अश्वैरश्वा गजैर्नागा रथिनो रथिभिः सह
संसक्ताः समदृश्यन्त पत्तयश्चापि पत्तिभिः ७१
एवं सुकलिलं युद्धमासीत्क्रव्यादहर्षणम्
महद्भिस्तैरभीतानां यमराष्ट्रविवर्धनम् ७२

ततो हता नररथवाजिकुञ्जरैरनेकशो द्विपरथवाजिपत्तयः
गजैर्गजा रथिभिरुदायुधा रथा हयैर्हयाः पत्तिगणैश्च पत्तयः ७३
रथैर्द्विपा द्विरदवरैर्महाहया हयैर्नरा वररथिभिश्च वाजिनः
निरस्तजिह्वादशनेक्षणाः क्षितौ क्षयं गताः प्रमथितवर्मभूषणाः ७४
तथा परैर्बहुकरणैर्वरायुधैर्हता गताः प्रतिभयदर्शनाः क्षितिम्
विपोथिता हयगजपादताडिता भृशाकुला रथखुरनेमिभिर्हताः ७५
प्रमोदने श्वापदपक्षिरक्षसां जनक्षये वर्तति तत्र दारुणे
महाबलास्ते कुपिताः परस्परं निषूदयन्तः प्रविचेरुरोजसा ७६
ततो बले भृशलुलिते परस्परं निरीक्षमाणे रुधिरौघसंप्लुते
दिवाकरेऽस्तगिरिमास्थिते शनैरुभे प्रयाते शिबिराय भारत ७७
इति श्रीमहाभारते द्रोणपर्वणि एकत्रिंशोऽध्यायः ३१
समाप्तं संशप्तकवधपर्व

## द्वात्रिंशोऽध्यायः

सञ्जय उवाच
पूर्वमस्मासु भग्नेषु फल्गुनेनामितौजसा
द्रोणे च मोघसङ्कल्पे रक्षिते च युधिष्ठिरे १
सर्वे विध्वस्तकवचास्तावका युधि निर्जिताः
रजस्वला भृशोद्विग्ना वीक्षमाणा दिशो दश २
अवहारं ततः कृत्वा भारद्वाजस्य संमते
लब्धलक्ष्यैः परैर्दीना भृशावहसिता रणे ३
श्लाघमानेषु भूतेषु फल्गुनस्यामितान्गुणान्
केशवस्य च सौहार्दे कीर्त्यमानेऽजुनं प्रति
अभिशस्ता इवाभूवन्ध्यानमूकत्वमास्थिताः ४
ततः प्रभातसमये द्रोणं दुर्योधनोऽब्रवीत्
प्रणयादभिमानाच्च द्विषद्वृद्ध्या च दुर्मनाः
शृण्वतां सर्वभूतानां संरब्धो वाक्यकोविदः ५
नूनं वयं वध्यपक्षे भवतो ब्रह्मवित्तम
तथा हि नाग्रहीः प्राप्तं समीपेऽद्य युधिष्ठिरम् ६
इच्छतस्ते न मुच्येत चक्षुःप्राप्तो रणे रिपुः

जिघृक्षतो रक्ष्यमाणः सामरैरपि पाण्डवैः ७
वरं दत्त्वा मम प्रीतः पश्चाद्विकृतवानसि
आशाभङ्गं न कुर्वन्ति भक्तस्यार्याः कथञ्चन ८
ततोऽप्रीतस्तथोक्तः स भारद्वाजोऽब्रवीन्नृपम्
नार्हसे मान्यथा ज्ञातुं घटमानं तव प्रिये ९
ससुरासुरगन्धर्वाः सयक्षोरगराक्षसाः
नालं लोका रणे जेतुं पाल्यमानं किरीटिना १०
विश्वसृग्यत्र गोविन्दः पृतनारिस्तथार्जुनः
तत्र कस्य बलं क्रामेदन्यत्र त्र्यम्बकात्प्रभोः ११
सत्यं तु ते ब्रवीम्यद्य नैतज्जात्वन्यथा भवेत्
अद्यैषां प्रवरं वीरं पातयिष्ये महारथम् १२
तं च व्यूहं विधास्यामि योऽभेद्यस्त्रिदशैरपि
योगेन केनचिद्राजन्नर्जुनस्त्वपनीयताम् १३
न ह्यज्ञातमसाध्यं वा तस्य संख्येऽस्ति किंचन
तेन ह्युपात्तं बलवत्सर्वज्ञानमितस्ततः १४
द्रोणेन व्याहृते त्वेवं संशप्तकगणाः पुनः
आह्वयन्नर्जुनं संख्येदक्षिणामभितो दिशम् १५
तत्रार्जुनस्याथ परैः सार्धं समभवद्रणः
तादृशो यादृशो नान्यः श्रुतो दृष्टोऽपि वा क्वचित् १६
ततो द्रोणेन विहितो राजन्व्यूहा व्यरोचत
चरन्मध्यंदिने सूर्यः प्रतपन्निव दुर्दृशः १७
तं चाभिमन्युर्वचनात्पितुर्ज्येष्ठस्य भारत
बिभेद दुर्भिदं संख्ये चक्रव्यूहमनेकधा १८
स कृत्वा दुष्करं कर्म हत्वा वीरान्सहस्रशः
षट्सु वीरेषु संसक्तो दौःशासनिवशं गतः १९
वयं परमसंहृष्टाः पाण्डवाः शोककर्शिताः
सौभद्रे निहते राजन्नवहारमकुर्वत २०
धृतराष्ट्र उवाच
पुत्रं पुरुषसिंहस्य सञ्जयाप्राप्तयौवनम्
रणे विनिहतं श्रुत्वा भृशं मे दीर्यते मनः २१

दारुणः क्षत्रधर्मोऽय विहितो धर्मकर्तृभिः
यत्र राज्येप्सवः शूरा बाले शस्त्रमपातयन् २२
बालमत्यन्तसुखिनं विचरन्तमभीतवत्
कृतास्त्रा बहवो जघ्नुर्ब्रूहि गावल्गणे कथम् २३
बिभित्सता रथानीकं सौभद्रेणामितौजसा
विक्रीडितं यथा संख्ये तन्ममाचक्ष्व सञ्जय २४
सञ्जय उवाच
यन्मां पृच्छसि राजेन्द्र सौभद्रस्य निपातनम्
तत्ते कार्त्स्न्येन वक्ष्यामि शृणु राजन्समाहितः
विक्रीडितं कुमारेण यथानीकं बिभित्सता २५
दावाग्न्यभिपरीतानां भूरिगुल्मतृणद्रुमे
वनौकसामिवारण्ये त्वदीयानामभूद्भयम् २६
इति श्रीमहाभारते द्रोणपर्वणि द्वात्रिंशोऽध्यायः ३२

## त्रयस्त्रिंशोऽध्यायः

सञ्जय उवाच
समरेऽत्युग्रकर्माणः कर्मभिर्व्यञ्जितश्रमाः
सकृष्णाः पाण्डवाः पञ्च देवैरपि दुरासदाः १
सत्त्वकर्मान्वयैर्बुद्ध्या प्रकृत्या यशसा श्रिया
नैव भूतो न भविता कृष्णतुल्यगुणः पुमान् २
सत्यधर्मपरो दाता विप्रपूजादिभिर्गुणैः
सदैव त्रिदिवं प्राप्तो राजा किल युधिष्ठिरः ३
युगान्ते चान्तको राजञ्जामदग्न्यश्च वीर्यवान्
रणस्थो भीमसेनश्च कथ्यन्ते सदृशास्त्रयः ४
प्रतिज्ञाकर्मदक्षस्य रणे गाण्डीवधन्वनः
उपमां नाधिगच्छामि पार्थस्य सदृशीं क्षितौ ५
गुरुवात्सल्यमत्यन्तं नैभृत्यं विनयो दमः
नकुलेऽप्रातिरूप्यं च शौर्यं च नियतानि षट् ६
श्रुतगाम्भीर्यमाधुर्यसत्त्ववीर्यपराक्रमैः
सदृशो देवयोर्वीरः सहदेवः किलाश्विनोः ७

ये च कृष्णे गुणाः स्फीताः पाण्डवेषु च ये गुणाः
अभिमन्यौ किलैकस्था दृश्यन्ते गुणसंचयाः ८
युधिष्ठिरस्य धैर्येण कृष्णस्य चरितेन च
कर्मभिर्भीमसेनस्य सदृशो भीमकर्मणः ९
धनञ्जयस्य रूपेण विक्रमेण श्रुतेन च
विनयात्सहदेवस्य सदृशो नकुलस्य च १०
धृतराष्ट्र उवाच
अभिमन्युमहं सूत सौभद्रमपराजितम्
श्रोतुमिच्छामि कार्त्स्न्येन कथमायोधने हतः ११
सञ्जय उवाच
चक्रव्यूहो महाराज आचार्येणाभिकल्पितः
तत्र शक्रोपमाः सर्वे राजानो विनिवेशिताः १२
सङ्घातो राजपुत्राणां सर्वेषामभवत्तदा
कृताभिसमयाः सर्वे सुवर्णविकृतध्वजाः १३
रक्ताम्बरधराः सर्वे सर्वे रक्तविभूषणाः
सर्वे रक्तपताकाश्च सर्वे वै हेममालिनः १४
तेषां दशसहस्राणि बभूवुर्दृढधन्विनाम्
पौत्रं तव पुरस्कृत्य लक्ष्मणं प्रियदर्शनम् १५
अन्योन्यसमदुःखास्ते अन्योन्यसमसाहसाः
अन्योन्यं स्पर्धमानाश्च अन्योन्यस्य हिते रताः १६
कर्णदुःशासनकृपैर्वृतो राजा महारथैः
देवराजोपमः श्रीमाञ्श्वेतच्छत्राभिसंवृतः
चामरव्यजनाक्षेपैरुदयन्निव भास्करः १७
प्रमुखे तस्य सैन्यस्य द्रोणोऽवस्थितनायके
सिन्धुराजस्तथातिष्ठच्छ्रीमान्मेरुरिवाचलः १८
सिंधुराजस्य पार्श्वस्था अश्वत्थामपुरोगमाः
सुतास्तव महाराज त्रिंशत्त्रिदशसंनिभाः १९
गान्धारराजः कितवः शल्यो भूरिश्रवास्तथा
पार्श्वतः सिन्धुराजस्य व्यराजन्त महारथाः २०
इति श्रीमहाभारते द्रोणपर्वणि त्रयस्त्रिंशोऽध्यायः ३३

## चतुस्त्रिंशोऽध्यायः

सञ्जय उवाच
तदनीकमनाधृष्यं भारद्वाजेन रक्षितम्
पार्थाः समभ्यवर्तन्त भीमसेनपुरोगमाः १
सात्यकिश्चेकितानश्च धृष्टद्युम्नश्च पार्षतः
कुन्तिभोजश्च विक्रान्तो द्रुपदश्च महारथः २
आर्जुनिः क्षत्रधर्मा च बृहत्क्षत्रश्च वीर्यवान्
चेदिपो धृष्टकेतुश्च माद्रीपुत्रौ घटोत्कचः ३
युधामन्युश्च विक्रान्तः शिखण्डी चापराजितः
उत्तमौजाश्च दुर्धर्षो विराटश्च महारथः ४
द्रौपदेयाश्च संरब्धाः शैशुपालिश्च वीर्यवान्
केकयाश्च महावीर्याः सृञ्जयाश्च सहस्रशः ५
एते चान्ये च सगणाः कृतास्त्रा युद्धदुर्मदाः
समभ्यधावन्सहसा भारद्वाजं युयुत्सवः ६
समवेतांस्तु तान्सर्वान्भारद्वाजोऽपि वीर्यवान्
असंभ्रान्तः शरौघेण महता समवारयत् ७
महौघाः सलिलस्येव गिरिमासाद्य दुर्भिदम्
द्रोणं ते नाभ्यवर्तन्त वेलामिव जलाशयाः ८
पीड्यमानाः शरै राजन्द्रोणचापविनिःसृतैः
न शेकुः प्रमुखे स्थातुं भारद्वाजस्य पाण्डवाः ९
तदद्भुतमपश्याम द्रोणस्य भुजयोर्बलम्
यदेनं नाभ्यवर्तन्त पाञ्चालाः सृञ्जयैः सह १०
तमायान्तमभिक्रुद्धं द्रोणं दृष्ट्वा युधिष्ठिरः
बहुधा चिन्तयामास द्रोणस्य प्रतिवारणम् ११
अशक्यं तु तमन्येन द्रोणं मत्वा युधिष्ठिरः
अविषह्यं गुरुं भारं सौभद्रे समवासृजत् १२
वासुदेवादनवरं फल्गुनाच्चामितौजसम्
अब्रवीत्परवीरघ्नमभिमन्युमिदं वचः १३
एत्य नो नार्जुनो गर्हेद्यथा तात तथा कुरु
चक्रव्यूहस्य न वयं विद्म भेदं कथञ्चन १४

त्वं वार्जुनो वा कृष्णो वा भिन्द्यात्प्रद्युम्न एव वा
चक्रव्यूहं महाबाहो पञ्चमोऽन्यो न विद्यते १५
अभिमन्यो वरं तात याचतां दातुमर्हसि
पितृणां मातुलानां च सैन्यानां चैव सर्वशः १६
धनञ्जयो हि नस्तात गर्हयेदेत्य संयुगात्
क्षिप्रमस्त्रं समादाय द्रोणानीकं विशातय १७
अभिमन्युरुवाच
द्रोणस्य दृढमव्यग्रमनीकप्रवरं युधि
पितृणां जयमाकाङ्क्षन्नवगाहे भिनद्मि च १८
उपदिष्टो हि मे पित्रा योगोऽनीकस्य भेदने
नोत्सहे तु विनिर्गन्तुमहं कस्यांचिदापदि १९
युधिष्ठिर उवाच
भिन्ध्यनीकं युधा श्रेष्ठ द्वारं सञ्जनयस्व नः
वयं त्वानुगमिष्यामो येन त्वं तात यास्यसि २०
धनञ्जयसमं युद्धे त्वां वयं तात संयुगे
प्रणिधायानुयास्यामो रक्षन्तः सर्वतोमुखाः २१
भीम उवाच
अहं त्वानुगष्यिमि धृष्टद्युम्नोऽथ सात्यकिः
पाञ्चालाः केकया मत्स्यास्तथा सर्वे प्रभद्रकाः २२
सकृद्भिन्नं त्वया व्यूहं तत्र तत्र पुनः पुनः
वयं प्रध्वंसयिष्यामो निघ्नमाना वरान्वरान् २३
अभिमन्युरुवाच
अहमेतत्प्रवेक्ष्यामि द्रोणानीकं दुरासदम्
पतङ्ग इव संक्रुद्धो ज्वलितं जातवेदसम् २४
तत्कर्माद्य करिष्यामि हितं यद्वंशयोर्द्वयोः
मातुलस्य च या प्रीतिर्भविष्यति पितुश्च मे २५
शिशुनैकेन संग्रामे काल्यमानानि सङ्घशः
अद्य द्रक्ष्यन्ति भूतानि द्विषत्सैन्यानि वै मया २६
युधिष्ठिर उवाच
एवं ते भाषमाणस्य बलं सौभद्र वर्धताम्

यस्त्वमुत्सहसे भेत्तुं द्रोणानीकं सुदुर्भिदम् २७
रक्षितं पुरुषव्याघ्रैर्महेष्वासैः प्रहारिभिः
साध्यरुद्रमरुत्कल्पैर्वस्वग्न्यादित्यविक्रमैः २८
सञ्जय उवाच
तस्य तद्वचनं श्रुत्वा स यन्तारमचोदयत्
सुमित्राश्वान्रणे क्षिप्रं द्रोणानीकाय चोदय २९
इति श्रीमहाभारते द्रोणपर्वणि चतुस्त्रिंशोऽध्यायः ३४

## पञ्चत्रिंशोऽध्यायः

सञ्जय उवाच
सौभद्रस्तु वचः श्रुत्वा धर्मराजस्य धीमतः
अचोदयत यन्तारं द्रोणानीकाय भारत १
तेन संचोद्यमानस्तु याहि याहीति सारथिः
प्रत्युवाच ततो राजन्नभिमन्युमिदं वचः २
अतिभारोऽयमायुष्मन्नाहितस्त्वयि पाण्डवैः
संप्रधार्य क्षमं बुद्ध्या ततस्त्वं योद्धुमर्हसि ३
आचार्यो हि कृती द्रोणः परमास्त्रे कृतश्रमः
अत्यन्तसुखसंवृद्धस्त्वं च युद्धविशारदः ४
ततोऽभिमन्युः प्रहसन्सारथिं वाक्यमब्रवीत्
सारथे को न्वयं द्रोणः समग्रं क्षत्रमेव वा ५
एरावतगतं शक्रं सहामरगणैरहम्
योधयेयं रणमुखे न मे क्षत्रेऽद्य विस्मयः
न ममैतद्द्विषत्सैन्यं कलामर्हति षोडशीम् ६
अपि विश्वजितं विष्णुं मातुलं प्राप्य सूतज
पितरं चार्जुनं संख्ये न भीर्मामुपयास्यति ७
ततोऽभिमन्युस्तां वाचं कदर्थीकृत्य सारथेः
याहीत्येवाब्रवीदेनं द्रोणानीकाय माचिरम् ८
ततः संचोदयामास हयानस्य त्रिहायनान्
नातिहृष्टमनाः सूतो हेमभाण्डपरिच्छदान् ९
ते प्रेषिताः सुमित्रेण द्रोणानीकाय वाजिनः

द्रोणमभ्यद्रवन्राजन्महावेगपराक्रमाः १०
तमुदीक्ष्य तथा यान्तं सर्वे द्रोणपुरोगमाः
अभ्यवर्तन्त कौरव्याः पाण्डवाश्च तमन्वयुः ११
स कर्णिकारप्रवरोच्छ्रितध्वजः सुवर्णवर्मार्जुनिरर्जुनाद्वरः
युयुत्सया द्रोणमुखान्महारथान्समासदत्सिंहशिशुर्यथा गजान् १२
ते विंशतिपदे यत्ताः संप्रहारं प्रचक्रिरे
आसीद्गाङ्ग इवावर्तो मुहूर्तमुदधेरिव १३
शूराणां युध्यमानानां निघ्नतामितरेतरम्
संग्रामस्तुमुलो राजन्प्रावर्तत सुदारुणः १४
प्रवर्तमाने संग्रामे तस्मिन्नतिभयङ्करे
द्रोणस्य मिषतो व्यूहं भित्त्वा प्राविशदार्जुनिः १५
तं प्रविष्टं परान्घ्नन्तं शत्रुमध्ये महाबलम्
हस्त्यश्वरथपत्त्यौघाः परिवव्रुरुदायुधाः १६
नानावादित्रनिनदैः क्ष्वेडितोत्क्रुष्टगर्जितैः
हुङ्कारैः सिंहनादैश्च तिष्ठ तिष्ठेति निस्वनैः १७
घोरैर्हलहलाशब्दैर्मा गास्तिष्ठैहि मामिति
असावहममुत्रेति प्रवदन्तो मुहुर्मुहुः १८
बृंहितैः शिञ्जितैर्हासैः खुरनेमिस्वनैरपि
संनादयन्तो वसुधामभिदुद्रुवुरार्जुनिम् १९
तेषामापततां वीरः पूर्वं शीघ्रमथो दृढम्
क्षिप्रास्त्रो न्यवधीद्व्रातान्मर्मज्ञो मर्मभेदिभिः २०
ते हन्यमानाश्च तथा नानालिङ्गैः शितैः शरैः
अभिपेतुस्तमेवाजौ शलभा इव पावकम् २१
ततस्तेषां शरीरैश्च शरीरावयवैश्च सः
संतस्तार क्षितिं क्षिप्रं कुशैर्वेदिमिवाध्वरे २२
बद्धगोधाङ्गुलित्राणान्सशरावरकार्मुकान्
सासिचर्माङ्कुशाभीशून्सतोमरपरश्वधान् २३
सगुडायोमुखप्रासान्सर्ष्टितोमरपट्टिशान्
सभिण्डिपालपरिघान्सशक्तिवरकम्पनान् २४
सप्रतोदमहाशङ्खान्सकुन्तान्सकचग्रहान्

समुद्गरान्सपणीयान्सपाशपरिघोपलान् २५
सकेयूराङ्गदान्बाहून्हृद्यगन्धानुलेपनान्
सञ्चिच्छेदार्जुनिर्वृत्तांस्त्वदीयानां सहस्रशः २६
तैः स्फुरद्भिर्महाराज शुशुभे लोहितोक्षितैः
पञ्चास्यैः पन्नगैश्छिन्नैर्गरुडेनेव मारिष २७
सुनासाननकेशान्तैरव्रणैश्चारुकुण्डलैः
संदष्टौष्ठपुटैः क्रोधात्क्षरद्भिः शोणितं बहु २८
चारुस्रङ्मुकुटोष्णीषैर्मणिरत्नविराजितैः
विनालनलिनाकारैर्दिवाकरशशिप्रभैः २९
हितप्रियंवदैः काले बहुभिः पुण्यगन्धिभिः
द्विषच्छिरोभिः पृथिवीमवतस्तार फाल्गुनिः ३०
गन्धर्वनगराकारान्विधिवत्कल्पितान्रथान्
वीषामुखान्वित्रिवेणून्व्यस्तदण्डकबन्धुरान् ३१
विजङ्घकूबराक्षांश्च विनेमीननरानपि
विचक्रोपस्करोपस्थान्भग्नोपकरणानपि ३२
प्रशातितोपकरणान्हतयोधान्सहस्रशः
शरैर्विशकलीकुर्वन्दिक्षु सर्वास्वदृश्यत ३३
पुनर्द्विपान्द्विपारोहान्वैजयन्त्यङ्कुशध्वजान्
तूणान्वर्माण्यथो कक्ष्या ग्रैवेयानथ कम्बलान् ३४
घण्टाः शुण्डान्विषाणाग्रान्क्षुरपालान्पदानुगान्
शरैर्निशितधाराग्रैः शात्रवाणामशातयत् ३५
वनायुजान्पार्वतीयान्काम्बोजारट्टबाह्लिकान्
स्थिरवालाधिकर्णाक्षाञ्जवनान्साधुवाहिनः ३६
स्वारूढाञ्शिक्षितैर्योधैः शक्त्यृष्टिप्रासयोधिभिः
विध्वस्तचामरकुथान्विप्रकिर्णप्रकीर्णकान् ३७
निरस्तजिह्वानयनान्निष्कीर्णान्त्रयकृद्घनान्
हतारोहान्भिन्नभाण्डान्क्रव्यादगणमोदनान् ३८
निकृत्तवर्मकवचाञ्शकृन्मूत्रासृगाप्लुतान्
निपातयन्नश्ववरांस्तावकान्सोऽभ्यरोचत ३९
एको विष्णुरिवाचिन्त्यः कृत्वा प्राक्कर्म दुष्करम्

तथा विमथितं तेन त्र्यङ्गं तव बलं महत्
व्यहनत्स पदात्योघांस्त्वदीयानेव भारत ४०
एवमेकेन तां सेनां सौभद्रेण सितैः शरैः
भृशं विप्रहतां दृष्ट्वा स्कन्देनेवासुरीं चमूम् ४१
त्वदीयास्तव पुत्राश्च वीक्षमाणा दिशो दश
संशुष्कास्याश्चलन्नेत्राः प्रस्विन्ना लोमहर्षणाः ४२
पलायनकृतोत्साहा निरुत्साहा द्विषज्जये
गोत्रनामभिरन्योन्यं क्रन्दन्तो जीवितैषिणः ४३
हतान्पुत्रांस्तथा पितॄन्सुहृत्संबन्धिबान्धवान्
प्रातिष्ठन्त समुत्सृज्य त्वरयन्तो हयद्विपान् ४४
इति श्रीमहाभारते द्रोणपर्वणि पञ्चत्रिंशोऽध्यायः ३५

षट्त्रिंशोऽध्यायः

सञ्जय उवाच
तां प्रभग्नां चमूं दृष्ट्वा सौभद्रेणामितौजसा
दुर्योधनो भृशं क्रुद्धः स्वयं सौभद्रमभ्ययात् १
ततो राजानमावृत्तं सौभद्रं प्रति संयुगे
दृष्ट्वा द्रोणोऽब्रवीद्योधान्पर्याप्नुत नराधिपम् २
पुराभिमन्युर्लक्ष्यं नः पश्यतां हन्ति वीर्यवान्
तमाद्रवत मा भैष्ट क्षिप्रं रक्षत कौरवम् ३
ततः कृतज्ञा बलिनः सुहृदो जितकाशिनः
त्रास्यमाना भयाद्वीरं परिवव्रुस्तवात्मजम् ४
द्रोणो द्रौणिः कृपः कर्णः कृतवर्मा च सौबलः
बृहद्बलो मद्रराजो भूरिर्भूरिश्रवाः शलः ५
पौरवो वृषसेनश्च विसृजन्तः शिताञ्शरान्
सौभद्रं शरवर्षेण महता समवाकिरन् ६
संमोहयित्वा तमथ दुर्योधनममोचयन्
आस्याद्ग्रासमिवाक्षिप्तं ममृषे नार्जुनात्मजः ७
ताञ्शरौघेण महता साश्वसूतान्महारथान्
विमुखीकृत्य सौभद्रः सिंहनादमथानदत् ८

तस्य नादं ततः श्रुत्वा सिंहस्येवामिषैषिणः
नामृष्यन्त सुसंरब्धाः पुनर्द्रोणमुखा रथाः ९
त एनं कोष्ठकीकृत्य रथवंशेन मारिष
व्यसृजन्निषुजालानि नानालिङ्गानि संघशः १०
तान्यन्तरिक्षे चिच्छेद पौत्रस्तव शितैः शरैः
तांश्चैव प्रतिविव्याध तदद्भुतमिवाभवत् ११
ततस्ते कोपितास्तेन शरैराशीविषोपमैः
परिवव्रुर्जिघांसन्तः सौभद्रमपलायिनम् १२
समुद्रमिव पर्यस्तं त्वदीयं तद्बलार्णवम्
अभिमन्युर्दधारैको वेलेव मकरालयम् १३
शूराणां युध्यमानानां निघ्नतामितरेतरम्
अभिमन्योः परेषां च नासीत्कश्चित्पराङ्मुखः १४
तस्मिंस्तु घोरे संग्रामे वर्तमाने भयङ्करे
दुःसहो नवभिर्बाणैरभिमन्युमविध्यत १५
दुःशासनो द्वादशभिः कृपः शारद्वतस्त्रिभिः
द्रोणस्तु सप्तदशभिः शरैराशीविषोपमैः १६
विविंशतिस्तु विंशत्या कृतवर्मा च सप्तभिः
बृहद्बलस्तथाष्टाभिरश्वत्थामा च सप्तभिः १७
भूरिश्रवास्त्रिभिर्बाणैर्मद्रेशः षड्भिराशुगैः
द्वाभ्यां शराभ्यां शकुनिस्त्रिभिर्दुर्योधनो नृपः १८
स तु तान्प्रतिविव्याध त्रिभिस्त्रिभिरजिह्मगैः
नृत्यन्निव महाराज चापहस्तः प्रतापवान् १९
ततोऽभिमन्युः संक्रुद्धस्ताप्यमानस्तवात्मजैः
विदर्शयन्वै सुमहच्छिक्षौरसकृतं बलम् २०
गरुडानिलरंहोभिर्यन्तुर्वाक्यकरैर्हयैः
दान्तैरश्मकदायादं त्वरमाणोऽभ्यहारयत्
विव्याध चैनं दशभिर्बाणैस्तिष्ठेति चाब्रवीत् २१
तस्याभिमन्युर्दशभिर्बाणैः सूतं हयान्ध्वजम्
बाहू धनुः शिरश्चोर्व्यां स्मयमानोऽभ्यपातयत् २२
ततस्तस्मिन्हते वीरे सौभद्रेणाश्मकेश्वरे

संचचाल बलं सर्वं पलायनपरायणम् २३
ततः कर्णः कृपो द्रोणो द्रौणिर्गान्धारराट्शलः
शल्यो भूरिश्रवाः क्राथः सोमदत्तो विविंशतिः २४
वृषसेनः सुषेणश्च कुण्डभेदी प्रतर्दनः
वृन्दारको ललित्थश्चप्रबाहुर्दीर्घलोचनः
दुर्योधनश्च संक्रुद्धः शरवर्षैरवाकिरन् २५
सोऽतिक्रुद्धो महेष्वासैरभिमन्युरजिह्मगैः
शरमादत्त कर्णाय परकायावभेदनम् २६
तस्य भित्त्वा तनुत्राणं देहं निर्भिद्य चाशुगः
प्राविशद्धरणीं राजन्वल्मीकमिव पन्नगः २७
स तेनातिप्रहारेण व्यथितो विह्वलन्निव
संचचाल रणे कर्णः क्षितिकम्पे यथाचलः २८
अथान्यैर्निशितैर्बाणैः सुषेणं दीर्घलोचनम्
कुण्डभेदिं च संक्रुद्धस्त्रिभिस्त्रीनवधीद्बली २९
कर्णस्तं पञ्चविंशत्या नाराचानां समर्पयत्
अश्वत्थामा च विंशत्या कृतवर्मा च सप्तभिः ३०
स शरार्दितसर्वाङ्गः क्रुद्धः शक्रात्मजात्मजः
विचरन्दृश्यते सैन्ये पाशहस्त इवान्तकः ३१
शल्यं च बाणवर्षेण समीपस्थमवाकिरत्
उदक्रोशन्महाबाहुस्तव सैन्यानि भीषयन् ३२
ततः स विद्धोऽस्त्रविदा मर्मभिद्भिरजिह्मगैः
शल्यो रादन्रथोपस्थे निषसाद मुमोह च ३३
तं हि विद्धं तथा दृष्ट्वा सौभद्रेण यशस्विना
संप्राद्रवच्चमूः सर्वा भारद्वाजस्य पश्यतः ३४
प्रेक्षन्तस्तं महाबाहुं रुक्मपुङ्खैः समावृतम्
त्वदीयाश्च पलायन्ते मृगाः सिंहार्दिता इव ३५
स तु रणयशसाभिपूज्यमानः पितृसुरचारणसिद्धयक्षसंघैः
अवनितलगतैश्च भूतसङ्घैरतिविबभौ हुतभुग्यथाज्यसिक्तः ३६
इति श्रीमहाभारते द्रोणपर्वणि षट्त्रिंशोऽध्यायः ३६

सप्तत्रिंशोऽध्यायः

धृतराष्ट्र उवाच
तथा प्रमथमानं तं महेष्वासमजिह्मगैः
आर्जुनिं मामकाः सर्वे के त्वेनं समवाकिरन् १
सञ्जय उवाच
शृणु राजन्कुमारस्य रणे विक्रीडितं महत्
बिभित्सतो रथानीकं भारद्वाजेन रक्षितम् २
मद्रेशं सादितं दृष्ट्वा सौभद्रेणाशुगै रणे
शल्यादवरजः क्रुद्धः किरन्बाणान्समभ्ययात् ३
स विद्ध्वा दशभिर्बाणैः साश्वयन्तारमार्जुनिम्
उदक्रोशन्महाशब्दं तिष्ठ तिष्ठेति चाब्रवीत् ४
तस्यार्जुनिः शिरोग्रीवं पाणिपादं धनुर्हयान्
छत्रं ध्वजं नियन्तारं त्रिवेणुं शम्युपस्करम् ५
चक्रे युगेषां तूणीराननुकर्षं च सायकैः
पताकां चक्रगोप्तारौ सर्वोपकरणानि च
व्यधमल्लाघवात्तच्च ददृशे नास्य कश्चन ६
स पपात क्षितौ क्षीणः प्रविद्धाभरणाम्बरः
वायुनेव महाचैत्यः संभग्नोऽमिततेजसा
अनुगाश्चास्य वित्रस्ताः प्राद्रवन्सर्वतोदिशम् ७
आर्जुनेः कर्म तद्दृष्ट्वा प्रणेदुश्च समन्ततः
नादेन सर्वभूतानि साधु साध्विति भारत ८
शल्यभ्रातर्यथारुग्णे बहुशस्तस्य सैनिकाः
कुलाधिवासनामानि श्रावयन्तोऽजुनात्मजम् ९
अभ्यवर्तन्त संक्रुद्धा विविधायुधपाणयः
रथैरश्वैर्गजैश्चान्ये पादातैश्च बलोत्कटाः १०
बाणशब्देन महता खुरनेमिस्वनेन च
हुंकारैः क्ष्वेडितोत्क्रुष्टैः सिंहनादैः सगर्जितैः ११
ज्यातलत्रस्वनैरन्ये गर्जन्तोऽजुननन्दनम्
ब्रुवन्तश्च न नो जीवन्मोक्ष्यसे जीवतामिति १२
तांस्तथा ब्रुवतो दृष्ट्वा सौभद्रः प्रहसन्निव

यो यः स्म प्राहरत्पूर्वं तं तं विव्याध पत्रिभिः १३
संदर्शयिष्यन्नस्त्राणि चित्राणि च लघूनि च
आर्जुनिः समरे शूरो मृदुपूर्वमयुध्यत १४
वासुदेवादुपात्तं यद्यदस्त्रं च धनंजयात्
अदर्शयत तत्कार्ष्णिः कृष्णाभ्यामविशेषयन् १५
दूरमस्यन्गुरुं भारं साधयंश्च पुनः पुनः
संदधद्विसृजंश्चेषून्निर्विशेषमदृश्यत १६
चापमण्डलमेवास्य विस्फुरद्दिक्ष्वदृश्यत
तमो घ्नतः सुदीप्तस्य सवितुर्मण्डलं यथा १७
ज्याशब्दः शुश्रुवे तस्य तलशब्दश्च दारुणः
महाशनिमुचः काले पयोदस्येव निस्वनः १८
ह्रीमानमर्षी सौभद्रो मानकृत्प्रियदर्शनः
संमिमानयिषुर्वीरानिष्वासांश्चाप्ययुध्यत १९
मृदुर्भूत्वा महाराज दारुणः समपद्यत
वर्षाभ्यतीतो भगवाञ्शरदीव दिवाकरः २०
शरान्विचित्रान्महतो रुक्मपुङ्खाञ्शिलाशितान्
मुमोच शतशः क्रुद्धो गभस्तीनिव भास्करः २१
क्षुरप्रैर्वत्सदन्तैश्च विपाठैश्च महायशाः
नाराचैरर्धनाराचैर्भल्लैरञ्जलिकैरपि २२
अवाकिरद्रथानीकं भारद्वाजस्य पश्यतः
ततस्तत्सैन्यमभवद्विमुखं शरपीडितम् २३
इति श्रीमहाभारते द्रोणपर्वणि सप्तत्रिंशोऽध्यायः ३७

## अष्टत्रिंशोऽध्यायः

धृतराष्ट्र उवाच
द्वैधीभवति मे चित्तं ह्रिया तुष्ट्या च सञ्जय
मम पुत्रस्य यत्सैन्यं सौभद्रः समवारयत् १
विस्तरेणैव मे शंस सर्वं गावल्गणे पुनः
विक्रीडितं कुमारस्य स्कन्दस्येवासुरैः सह २
सञ्जय उवाच

हन्त ते संप्रवक्ष्यामि विमर्दमतिदारुणम्
एकस्य च बहूनां च यथासीत्तुमुलो रणः ३
अभिमन्युः कृतोत्साहः कृतोत्साहानरिंदमान्
रथस्थो रथिनः सर्वांस्तावकानप्यहर्षयत् ४
द्रोणं कर्णं कृपं शल्यं द्रौणिं भोजं बृहद्बलम्
दुर्योधनं सौमदत्तिं शकुनिं च महाबलम् ५
नानानृपान्नृपसुतान्सैन्यानि विविधानि च
अलातचक्रवत्सर्वांश्चरन्बाणैः समभ्ययात् ६
निघ्नन्नमित्रान्सौभद्रः परमास्त्रः प्रतापवान्
अदर्शयत तेजस्वी दिक्षु सर्वासु भारत ७
तद्दृष्ट्वा चरितं तस्य सौभद्रस्यामितौजसः
समकम्पन्त सैन्यानि त्वदीयानि पुनः पुनः ८
अथाब्रवीन्महाप्राज्ञो भारद्वाजः प्रतापवान्
हर्षेणोत्फुल्लनयनः कृपमाभाष्य सत्वरम् ९
घट्टयन्निव मर्माणि तव पुत्रस्य मारिष
अभिमन्युं रणे दृष्ट्वा तदा रणविशारदम् १०
एष गच्छति सौभद्रः पार्थानामग्रतो युवा
नन्दयन्सुहृदः सर्वान्राजानं च युधिष्ठिरम् ११
नकुलं सहदेवं च भीमसेनं च पाण्डवम्
बन्धून्संबन्धिनश्चान्यान्मध्यस्थान्सुहृदस्तथा १२
नास्य युद्धे समं मन्ये कंचिदन्यं धनुर्धरम्
इच्छन्हन्यादिमां सेनां किमर्थमपि नेच्छति १३
द्रोणस्य प्रीतिसंयुक्तं श्रुत्वा वाक्यं तवात्मजः
आर्जुनिं प्रति संक्रुद्धो द्रोणं दृष्ट्वा स्मयन्निव १४
अथ दुर्योधनः कर्णमब्रवीद्बाह्लिकं कृपम्
दुःशासनं मद्रराजं तांस्तांश्चान्यान्महारथान् १५
सर्वमूर्धावसिक्तानामाचार्यो ब्रह्मवित्तमः
अर्जुनस्य सुतं मूढं नाभिहन्तुमिहेच्छति १६
न ह्यस्य समरे मुच्येदन्तकोऽप्याततायिनः
किमङ्ग पुनरेवान्यो मर्त्यः सत्यं ब्रवीमि वः १७

अर्जुनस्य सुतं त्वेष शिष्यत्वादभिरक्षति
पुत्राः शिष्याश्च दयितास्तदपत्यं च धर्मिणाम् १८
संरक्ष्यमाणो द्रोणेन मन्यते वीर्यमात्मनः
आत्मसंभावितो मूढस्तं प्रमथ्नीत माचिरम् १९
एवमुक्तास्तु ते राज्ञा सात्वतीपुत्रमभ्ययुः
संरब्धास्तं जिघांसन्तो भारद्वाजस्य पश्यतः २०
दुःशासनस्तु तच्छ्रुत्वा दुर्योधन वचस्तदा
अब्रवीत्कुरुशार्दूलो दुर्योधनमिदं वचः २१
अहमेनं हनिष्यामि महाराज ब्रवीमि ते
मिषतां पाण्डुपुत्राणां पाञ्चालानां च पश्यताम्
ग्रसिष्याम्यद्य सौभद्रं यथा राहुर्दिवाकरम् २२
उत्क्रुश्य चाब्रवीद्वाक्यं कुरुराजमिदं पुनः
श्रुत्वा कृष्णौ मया ग्रस्तं सौभद्रमतिमानिनौ
गमिष्यतः प्रेतलोकं जीवलोकान्न संशयः २३
तौ च श्रुत्वा मृतौ व्यक्तं पाण्डोः क्षेत्रोद्भवाः सुताः
एकाह्ना ससुहृद्वर्गाः क्लैब्याद्धास्यन्ति जीवितम् २४
तस्मादस्मिन्हते शत्रौ हताः सर्वेऽहितास्तव
शिवेन ध्याहि मा राजन्नेष हन्मि रिपुं तव २५
एवमुक्त्वा नदन्राजन्पुत्रो दुःशासनस्तव
सौभद्रमभ्ययात्क्रुद्धः शरवर्षैरवाकिरन् २६
तमभिक्रुद्धमायान्तं तव पुत्रमरिन्दमः
अभिमन्युः शरैस्तीक्ष्णैः षड्विंशत्या समर्पयत् २७
दुःशासनस्तु संक्रुद्धः प्रभिन्न इव कुञ्जरः
अयोधयत सौभद्रमभिमन्युश्च तं रणे २८
तौ मण्डलानि चित्राणि रथाभ्यां सव्यदक्षिणम्
चरमाणावयुध्येतां रथशिक्षाविशारदौ २९
अथ पणवमृदङ्गदुन्दुभीनां कृकरमहानकभेरिझर्झराणाम्
निनदमतिभृशं नराः प्रचक्रुर्लवणजलोद्भवसिंहनादमिश्रम् ३०
इति श्रीमहाभारते द्रोणपर्वणि अष्टत्रिंशोऽध्यायः ३८

## एकोन चत्वारिंशोऽध्यायः

सञ्जय उवाच
शरविक्षतगात्रस्तु प्रत्यमित्रमवस्थितम्
अभिमन्युः स्मयन्धीमान्दुःशासनमथाब्रवीत् १
दिष्ट्या पश्यामि संग्रामे मानिनं शत्रुमागतम्
निष्ठुरं त्यक्तधर्माणमाक्रोशनपरायणम् २
यत्सभायां त्वया राज्ञो धृतराष्ट्रस्य शृणवतः
कोपितः परुषैर्वाक्यैर्धर्मराजो युधिष्ठिरः
जयोन्मत्तेन भीमश्च बह्वबद्धं प्रभाषता ३
परवित्तापहारस्य क्रोधस्याप्रशमस्य च
लोभस्य ज्ञाननाशस्य द्रोहस्यात्याहितस्य च ४
पितॄणां मम राज्यस्य हरणस्योग्रधन्विनाम्
तत्त्वामिदमनुप्राप्तं तत्कोपाद्वै महात्मनाम् ५
सद्यश्चोग्रमधर्मस्य फलं प्राप्नुहि दुर्मते
शासितास्म्यद्य ते बाणैः सर्वसैन्यस्य पश्यतः ६
अद्याहमनृणस्तस्य कोपस्य भविता रणे
अमर्षितायाः कृष्णायाः काङ्क्षितस्य च मे पितुः ७
अद्य कौरव्य भीमस्य भवितास्म्यनृणो युधि
न हि मे मोक्ष्यसे जीवन्यदि नोत्सृजसे रणम् ८
एवमुक्त्वा महाबाहुर्बाणं दुःशासनान्तकम्
संदधे परवीरघ्नः कालाग्न्यनिलवर्चसम् ९
तस्योरस्तूर्णमासाद्य जत्रुदेशे विभिद्य तम्
अथैनं पञ्चविंशत्या पुनश्चैव समर्पयत् १०
स गाढविद्धो व्यथितो रथोपस्थ उपाविशत्
दुःशासनो महाराज कश्मलं चाविशन्महत् ११
सारथिस्त्वरमाणस्तु दुःशासनमचेतसम्
रणमध्यादपोवाह सौभद्रशरपीडितम् १२
पाण्डवा द्रौपदेयाश्च विराटश्च समीक्ष्य तम्
पाञ्चालाः केकयाश्चैव सिंहनादमथानदन् १३
वादित्राणि च सर्वाणि नानालिङ्गानि सर्वशः

प्रावादयन्त संहृष्टाः पाराडूनां तत्र सैनिकाः १४
पश्यन्तः स्मयमानाश्च सौभद्रस्य विचेष्टितम्
अत्यन्तवैरिणं दृप्तं दृष्ट्वा शत्रुं पराजितम् १५
धर्ममारुतशक्राणामश्विनोः प्रतिमास्तथा
धारयन्तो ध्वजाग्रेषु द्रौपदेया महारथाः १६
सात्यकिश्चेकितानश्च धृष्टद्युम्नशिखरिडनौ
केकया धृष्टकेतुश्च मत्स्यपाञ्चालसृञ्जयाः १७
पाराडवाश्च मुदा युक्ता युधिष्ठिरपुरोगमाः
अभ्यवर्तन्त सहिता द्रोणानीकं बिभित्सवः १८
ततोऽभवन्महद्युद्धं त्वदीयानां परैः सह
जयमाकाङ्क्षमाणानां शूराणामनिवर्तिनाम् १९
दुर्योधनो महाराज राधेयमिदमब्रवीत्
पश्य दुःशासनं वीरमभिमन्युवशं गतम् २०
प्रतपन्तमिवादित्यं निघ्नन्तं शात्रवान्रणे
सौभद्रमुद्यतास्त्रातुमभिधावन्ति पाराडवाः २१
ततः कर्णः शरैस्तीक्ष्णैरभिमन्युं दुरासदम्
अभ्यवर्षत संक्रुद्धः पुत्रस्य हितकृत्तव २२
तस्य चानुचरांस्तीक्ष्णैर्विव्याध परमेषुभिः
अवज्ञापूर्वकं वीरः सौभद्रस्य रणाजिरे २३
अभिमन्युस्तु राधेयं त्रिसप्तत्या शिलीमुखैः
अविध्यत्त्वरितो राजन्द्रोणं प्रेप्सुर्महामनाः २४
तं तदा नाशकत्कश्चिद्द्रोणाद्वारयितुं रणे
आरुजन्तं रथश्रेष्ठान्वज्रहस्तमिवासुरान् २५
ततः कर्णो जयप्रेप्सुर्मानी सर्वधनुर्भृताम्
सौभद्रं शतशोऽविध्यदुत्तमास्त्राणि दर्शयन् २६
सोऽस्त्रैरस्त्रविदां श्रेष्ठो रामशिष्यः प्रतापवान्
समरे शत्रुदुर्धर्षमभिमन्युमपीडयत् २७
स तथा पीड्यमानस्तु राधेयेनास्त्रवृष्टिभिः
समरेऽमरसङ्काशः सौभद्रो न व्यषीदत २८
ततः शिलाशितैस्तीक्ष्णैर्भल्लैः संनतपर्वभिः

छित्त्वा धनूंषि शूराणामार्जुनिः कर्णमार्दयत्
स ध्वजं कार्मुकं चास्य छित्त्वा भूमौ न्यपातयत् २९
ततः कृच्छ्रगतं कर्णं दृष्ट्वा कर्णादनन्तरः
सौभद्रमभ्ययात्तूर्णं दृढमुद्यम्य कार्मुकम् ३०
तत उच्चुक्रुशुः पार्थास्तेषां चानुचरा जनाः
वादित्राणि च संजघ्नुः सौभद्रं चापि तुष्टुवुः ३१
इति श्रीमहाभारते द्रोणपर्वणि एकोनचत्वारिंशोऽध्यायः ३९

## चत्वारिंशोऽध्यायः

सञ्जय उवाच
सोऽभिगर्जन्धनुष्पाणिर्ज्यां विकर्षन्पुनः पुनः
तयोर्महात्मनोस्तूर्णं रथान्तरमवापतत् १
सोऽविध्यद्दशभिर्बाणैरभिमन्युं दुरासदम्
सच्छत्रध्वजयन्तारं साश्वमाशु स्मयन्निव २
पितृपैतामहं कर्म कुर्वाणमतिमानुषम्
दृष्ट्वार्दितं शरैः कार्ष्णिं त्वदीया हृषिताभवन् ३
तस्याभिमन्युरायम्य स्मयन्नेकेन पत्रिणा
शिरः प्रच्यावयामास स रथात्प्रापतद्भुवि ४
कर्णिकारमिवोद्धूतं वातेन मथितं नगात्
भ्रातरं निहतं दृष्ट्वा राजन्कर्णो व्यथां ययौ ५
विमुखीकृत्य कर्णं तु सौभद्रः कङ्कपत्रिभिः
अन्यानपि महेष्वासांस्तूर्णमेवाभिदुद्रुवे ६
ततस्तद्विततं जालं हस्त्यश्वरथपत्तिमत्
झषः क्रुद्ध इवाभिन्ददभिमन्युर्महायशाः ७
कर्णस्तु बहुभिर्बाणैरर्द्यमानोऽभिमन्युना
अपायाज्जवनैरश्वैस्ततोऽनीकमभिद्यत ८
शलभैरिव चाकाशे धाराभिरिव चावृते
अभिमन्योः शरैः राजन्न प्राज्ञायत किञ्चन ९
तावकानां तु योधानां वध्यतां निशितैः शरैः
अन्यत्र सैन्धवाद्राजन्न स्म कश्चिदतिष्ठत १०

सौभद्रस्तु ततः शङ्खं प्रध्माप्य पुरुषर्षभः
शीघ्रमभ्यपतत्सेनां भारतीं भरतर्षभ ११
स कक्षेऽग्निरिवोत्सृष्टो निर्दहंस्तरसा रिपून्
मध्ये भारतसैन्यानामार्जुनिः पर्यवर्तत १२
रथनागाश्वमनुजानर्दयन्निशितैः शरैः
स प्रविश्याकरोद्भूमिं कबन्धगणसंकुलाम् १३
सौभद्रचापप्रभवैर्निकृत्ताः परमेषुभिः
स्वानेवाभिमुखान्घ्नन्तः प्राद्रवञ्जीवितार्थिनः १४
ते घोरा रौद्रकर्माणो विपाठाः पृथवः शिताः
निघ्नन्तो रथनागाश्वाञ्जग्मुराशु वसुंधराम् १५
सायुधाः सांगुलित्राणाः सखड्गाः साङ्गदा रणे
दृश्यन्ते बाहवश्छिन्ना हेमाभरणभूषिताः १६
शराश्चापानि खड्गाश्च शरीराणि शिरांसि च
सकुण्डलानि स्रग्वीणि भूमावासन्सहस्रशः १७
अपस्करैरधिष्ठानैरीषादण्डकबन्धुरैः
अक्षैर्विमथितैश्चक्रैर्भग्नैश्च बहुधा रथैः
शक्तिचापायुधैश्चापि पतितैश्च महाध्वजैः १८
निहतैः क्षत्रियैरश्वैर्वारणैश्च विशां पते
अगम्यकल्पा पृथिवी क्षणेनासीत्सुदारुणा १९
वध्यतां राजपुत्राणां क्रन्दतामितरेतरम्
प्रादुरासीन्महाशब्दो भीरूणां भयवर्धनः
स शब्दो भरतश्रेष्ठ दिशः सर्वा व्यनादयत् २०
सौभद्रश्चाद्रवत्सेनां निघ्नन्नश्वरथद्विपान्
व्यचरत्स दिशः सर्वाः प्रदिशश्चाहितान्रुजन् २१
तं तदा नानुपश्याम सैन्येन रजसावृतम्
आददानं गजाश्वानां नृणां चायूंषि भारत २२
क्षणेन भूयोऽपश्याम सूर्यं मध्यंदिने यथा
अभिमन्युं महाराज प्रतपन्तं द्विषद्गणान् २३
स वासवसमः संख्ये वासवस्यात्मजात्मजः
अभिमन्युर्महाराज सैन्यमध्ये व्यरोचत २४

इति श्रीमहाभारते द्रोणपर्वणि चत्वारिंशोऽध्यायः ४०

## एकचत्वारिंशोऽध्यायः

धृतराष्ट्र उवाच
बालमत्यन्तसुखिनमवार्यबलदर्पितम्
युद्धेषु कुशलं वीरं कुलपुत्रं तनुत्यजम् १
गाहमानमनीकानि सदश्वैस्तं त्रिहायनैः
अपि यौधिष्ठिरात्सैन्यात्कश्चिदन्वपतद्रथी २
सञ्जय उवाच
युधिष्ठिरो भीमसेनः शिखण्डी सात्यकिर्यमौ
धृष्टद्युम्नो विराटश्च द्रुपदश्च सकेकयः
धृष्टकेतुश्च संरब्धो मत्स्याश्चान्वपतन्रणे ३
अभ्यद्रवन्परीप्सन्तो व्यूढानीकाः प्रहारिणः
तान्दृष्ट्वा द्रवतः शूरांस्त्वदीया विमुखाभवन् ४
ततस्तद्विमुखं दृष्ट्वा तव सूनोर्महद्बलम्
जामाता तव तेजस्वी विष्टम्भयिषुराद्रवत् ५
सैन्धवस्य महाराज पुत्रो राजा जयद्रथः
स पुत्रगृद्धिनः पार्थान्सहसैन्यानवारयत् ६
उग्रधन्वा महेष्वासो दिव्यमस्त्रमुदीरयन्
वार्धक्षत्रिरुपासेधत्प्रवणादिव कुञ्जरान् ७
धृतराष्ट्र उवाच
अतिभारमहं मन्ये सैन्धवे सञ्जयाहितम्
यदेकः पाण्डवान्क्रुद्धान्पुत्रगृद्धीनवारयत् ८
अत्यद्भुतमिदं मन्ये बलं शौर्यं च सैन्धवे
तदस्य ब्रूहि मे वीर्यं कर्म चाग्र्यं महात्मनः ९
किं दत्तं हुतमिष्टं वा सुतप्तमथ वा तपः
सिन्धुराजेन येनैकः क्रुद्धान्पार्थानवारयत् १०
सञ्जय उवाच
द्रौपदीहरणे यत्तद्भीमसेनेन निर्जितः
मानात्स तप्तवान्राजा वरार्थी सुमहत्तपः ११

इन्द्रियाणीन्द्रियार्थेभ्यः प्रियेभ्यः संनिवर्त्य सः
क्षुत्पिपासातपसहः कृशो धमनिसंततः
देवमाराधयच्छर्वं गृणन्ब्रह्म सनातनम् १२
भक्तानुकम्पी भगवांस्तस्य चक्रे ततो दयाम्
स्वप्नान्तेऽप्यथ चैवाह हरः सिन्धुपतेः सुतम्
वरं वृणीष्व प्रीतोऽस्मि जयद्रथ किमिच्छसि १३
एवमुक्तस्तु शर्वेण सिन्धुराजो जयद्रथः
उवाच प्रणतो रुद्रं प्राञ्जलिर्नियतात्मवान् १४
पाण्डवेयानहं संख्ये भीमवीर्यपराक्रमान्
एको रणे धारयेयं समस्तानिति भारत १५
एवमुक्तस्तु देवेशो जयद्रथमथाब्रवीत्
ददामि ते वरं सौम्य विना पार्थं धनञ्जयम् १६
धारयिष्यसि संग्रामे चतुरः पाण्डुनन्दनान्
एवमस्त्विति देवेशमुक्त्वाबुध्यत पार्थिवः १७
स तेन वरदानेन दिव्येनास्त्रबलेन च
एकः संधारयामास पाण्डवानामनीकिनीम् १८
तस्य ज्यातलघोषेण क्षत्रियान्भयमाविशत्
परांस्तु तव सैन्यस्य हर्षः परमकोऽभवत् १९
दृष्ट्वा तु क्षत्रिया भारं सैन्धवे सर्वमर्पितम्
उत्क्रुश्याभ्यद्रवन्राजन्येन यौधिष्ठिरं बलम् २०
इति श्रीमहाभारते द्रोणपर्वणि एकचत्वारिंशोऽध्यायः ४१

## द्विचत्वारिंशोऽध्यायः

सञ्जय उवाच
यन्मा पृच्छसि राजेन्द्र सिन्धुराजस्य विक्रमम्
शृणु तत्सर्वमाख्यास्ये यथा पाण्डूनयोधयत् १
तमूहुः सारथेर्वश्याः सैन्धवाः साधुवाहिनः
विकुर्वाणा बृहन्तोऽश्वा श्वसनोपमरंहसः २
गन्धर्वनगराकारं विधिवत्कल्पितं रथम्
तस्याभ्यशोभयत्केतुर्वाराहो राजतो महान् ३

श्वेतच्छत्रपताकाभिश्चामरव्यजनेन च
स बभौ राजलिङ्गैस्तैस्तारापतिरिवाम्बरे ४
मुक्तावज्रमणिस्वर्णैर्भूषितं तदयस्मयम्
वरूथं विबभौ तस्य ज्योतिर्भिः खमिवावृतम् ५
स विस्फार्य महच्चापं किरन्निषुगणान्बहून्
तत्खण्डं पूरयामास यद्व्यदारयदार्जुनिः ६
स सात्यकिं त्रिभिर्बाणैरष्टभिश्च वृकोदरम्
धृष्टद्युम्नं तथा षष्ट्या विराटं दशभिः शरैः ७
द्रुपदं पञ्चभिस्तीक्ष्णैर्दशभिश्च शिखण्डिनम्
केकयान्पञ्चविंशत्या द्रौपदेयांस्त्रिभिस्त्रिभिः ८
युधिष्ठिरं च सप्तत्या ततः शेषानपानुदत्
इषुजालेन महता तदद्भुतमिवाभवत् ९
अथास्य शितपीतेन भल्लेनादिश्य कार्मुकम्
चिच्छेद प्रहसन्राजा धर्मपुत्रः प्रतापवान् १०
अक्ष्णोर्निमेषमात्रेण सोऽन्यदादाय कार्मुकम्
विव्याध दशभिः पार्थं तांश्चैवान्यांस्त्रिभिस्त्रिभिः ११
तस्य तल्लाघवं ज्ञात्वा भीमो भल्लैस्त्रिभिः पुनः
धनुर्ध्वजं च छत्रं च क्षितौ क्षिप्रमपातयत् १२
सोऽन्यदादाय बलवान्सज्यं कृत्वा च कार्मुकम्
भीमस्यापोथयत्केतुं धनुरश्वांश्च मारिष १३
स हताश्वादवप्लुत्य छिन्नधन्वा रथोत्तमात्
सात्यकेराप्लुतो यानं गिर्यग्रमिव केसरी १४
ततस्त्वदीयाः संहृष्टाः साधु साध्विति चुक्रुशुः
सिन्धुराजस्य तत्कर्म प्रेक्ष्याश्रद्धेयमुत्तमम् १५
संक्रुद्धान्पाण्डवानेको यद्धारास्त्रतेजसा
तत्तस्य कर्म भूतानि सर्वाण्येवाभ्यपूजयन् १६
सौभद्रेण हतैः पूर्वं सोत्तरायुधिभिर्द्विपैः
पाण्डूनां दर्शितः पन्थाः सैन्धवेन निवारितः १७
यतमानास्तु ते वीरा मत्स्यपाञ्चालकेकयाः
पाण्डवाश्चान्वपद्यन्त प्रत्यैकश्येन सैन्धवम् १८

यो यो हि यतते भेत्तुं द्रोणानीकं तवाहितः
तं तं देववरप्राप्त्या सैन्धवः प्रत्यवारयत् १६
इति श्रीमहाभारते द्रोणपर्वणि द्विचत्वारिंशोऽध्यायः ४२

## त्रिचत्वारिंशोऽध्यायः

सञ्जय उवाच
सैन्धवेन निरुद्धेषु जयगृद्धिषु पाण्डुषु
सुघोरमभवद्युद्धं त्वदीयानां परैः सह १
प्रविश्य त्वार्जुनिः सेनां सत्यसंधो दुरासदाम्
व्यक्षोभयत तेजस्वी मकरः सागरं यथा २
तं तथा शरवर्षेण क्षोभयन्तमरिंदमम्
यथाप्रधानाः सौभद्रमभ्ययुः कुरुसत्तमाः ३
तेषां तस्य च संमर्दो दारुणः समपद्यत
सृजतां शरवर्षाणि प्रसक्तममितौजसाम् ४
रथव्रजेन संरुद्धस्तैरमित्रैरथार्जुनिः
वृषसेनस्य यन्तारं हत्वा चिच्छेद कार्मुकम् ५
तस्य विव्याध बलवाञ्शरैरश्वानजिह्मगैः
वातायमानैरथ तैरश्वैरपहृतो रणात् ६
तेनान्तरेणाभिमन्योर्यन्तापासारयद्रथम्
रथव्रजास्ततो हृष्टाः साधु साध्विति चुक्रुशुः ७
तं सिंहमिव संक्रुद्धं प्रमथ्नन्तं शरैररीन्
आरादायान्तमभ्येत्य वसातीयोऽभ्ययाद्द्रुतम् ८
सोऽभिमन्युं शरैः षष्ट्या रुक्मपुङ्खैरवाकिरत्
अब्रवीच्च न मे जीवञ्जीवतो युधि मोक्ष्यसे ९
तमयस्मयवर्माणमिषुणा आशुपातिना
विव्याध हृदि सौभद्रः स पपात व्यसुः क्षितौ १०
वसात्यं निहतं दृष्ट्वा क्रुद्धाः क्षत्रियपुङ्गवाः
परिवव्रुस्तदा राजंस्तव पौत्रं जिघांसवः ११
विस्फारयन्तश्चापानि नानारूपाण्यनेकशः
तद्युद्धमभवद्रौद्रं सौभद्रस्यारिभिः सह १२

तेषां शरान्सेष्वसनाञ्शरीराणि शिरांसि च
सकुण्डलानि स्रग्वीणि क्रुद्धश्चिच्छेद फाल्गुनिः १३
सखड्गाः साङ्गुलित्राणाः सपट्टिशपरश्वधाः
अदृश्यन्त भुजाश्छिन्ना हेमाभरणभूषिताः १४
स्रग्भिराभरणैर्वस्त्रैः पतितैश्च महाध्वजैः
वर्मभिश्चर्मभिर्हारैर्मुकुटैश्छत्रचामरैः १५
अपस्करैरधिष्ठानैरीषादण्डकबन्धुरैः
अक्षैर्विमथितैश्चक्रैर्भग्नैश्च बहुधा युगैः १६
अनुकर्षैः पताकाभिस्तथा सारथिवाजिभिः
रथैश्च भग्नैर्नागैश्च हतैः कीर्णाभवन्मही १७
निहतैः क्षत्रियैः शूरैर्नानाजनपदेश्वरैः
जयगृद्धैर्वृता भूमिर्दारुणा समपद्यत १८
दिशो विचरतस्तस्य सर्वाश्च प्रदिशस्तथा
रणेऽभिमन्योः क्रुद्धस्य रूपमन्तरधीयत १९
काञ्चनं यद्यदस्यासीद्वर्म चाभरणानि च
धनुषश्च शराणां च तदपश्याम केवलम् २०
तं तदा नाशकत्कश्चिच्चक्षुर्भ्यामभिवीक्षितुम्
आददानं शरैर्योधान्मध्ये सूर्यमिव स्थितम् २१

इति श्रीमहाभारते द्रोणपर्वणि त्रिचत्वारिंशोऽध्यायः ४३

## चतुश्चत्वारिंशोऽध्यायः

सञ्जय उवाच
आददानस्तु शूराणामायूंष्यभवदार्जुनिः
अन्तकः सर्वभूतानां प्राणान्काल इवागते १
स शक्र इव विक्रान्तः शक्रसूनोः सुतो बली
अभिमन्युस्तदानीकं लोडयन्बह्वशोभत २
प्रविश्यैव तु राजेन्द्र क्षत्रियेन्द्रान्तकोपमः
सत्यश्रवसमादत्त व्याघ्रो मृगमिवोल्बणम् ३
सत्यश्रवसि चाक्षिप्ते त्वरमाणा महारथाः
प्रगृह्य विपुलं शस्त्रमभिमन्युमुपाद्रवन् ४

अहं पूर्वमहं पूर्वमिति क्षत्रियपुंगवाः
स्पर्धमानाः समाजग्मुर्जिघांसन्तोऽजुनात्मजम् ५
क्षत्रियाणामनीकानि प्रद्रुतान्यभिधावताम्
जग्रास तिमिरासाद्य क्षुद्रमत्स्यानिवार्णवे ६
ये केचन गतास्तस्य समीपमपलायिनः
न ते प्रतिन्यवर्तन्त समुद्रादिव सिन्धवः ७
महाग्राहगृहीतेव वातवेगभयार्दिता
समकम्पत सा सेना विभ्रष्टा नौरिवार्णवे ८
अथ रुक्मरथो नाम मद्रेश्वरसुतो बली
त्रस्तामाश्वासयन्सेनामत्रस्तो वाक्यमब्रवीत् ९
अलं त्रासेन वः शूरा नैष कश्चिन्मयि स्थिते
अहमेनं ग्रहीष्यामि जीवग्राहं न संशयः १०
एवमुक्त्वा तु सौभद्रमभिदुद्राव वीर्यवान्
सुकल्पितेनोह्यमानः स्यन्दनेन विराजता ११
सोऽभिमन्युं त्रिभिर्बाणैर्विद्ध्वा वक्षस्यथानदत्
त्रिभिश्च दक्षिणे बाहौ सव्ये च निशितैस्त्रिभिः १२
स तस्येष्वसनं छित्त्वा फाल्गुनिः सव्यदक्षिणौ
भुजौ शिरश्च स्वक्षिभ्रु क्षितौ क्षिप्रमपातयत् १३
दृष्ट्वा रुक्मरथं रुग्णं पुत्रं शल्यस्य मानिनम्
जीवग्राहं जिघृक्षन्तं सौभद्रेण यशस्विना १४
संग्रामदुर्मदा राजन्राजपुत्राः प्रहारिणः
वयस्याः शल्यपुत्रस्य सुवर्णविकृतध्वजाः १५
तालमात्राणि चापानि विकर्षन्तो महारथाः
आर्जुनिं शरवर्षेण समन्तात्पर्यवारयन् १६
शूरैः शिक्षाबलोपेतैस्तरुणैरत्यमर्षणैः
दृष्ट्वैकं समरे शूरं सौभद्रमपराजितम् १७
छाद्यमानं शरव्रातैर्हृष्टो दुर्योधनोऽभवत्
वैवस्वतस्य भवनं गतमेनममन्यत १८
सुवर्णपुङ्खैरिषुभिर्नानालिङ्गैस्त्रिभिस्त्रिभिः
अदृश्यमार्जुनिं चक्रुर्निमेषात्ते नृपात्मजाः १९

ससूताश्वध्वजं तस्य स्यन्दनं तं च मारिष
आचितं समपश्याम श्वाविधं शललैरिव २०
स गाढविद्धः क्रुद्धश्च तोत्त्रैर्गज इवार्दितः
गान्धर्वमस्त्रमायच्छद्रथमायां च योजयत् २१
अर्जुनेन तपस्तप्त्वा गन्धर्वेभ्यो यदाहृतम्
तुम्बुरुप्रमुखेभ्यो वै तेनामोहयताहितान् २२
एकः स शतधा राजन्दृश्यते स्म सहस्रधा
अलातचक्रवत्संख्ये क्षिप्रमस्त्राणि दर्शयन् २३
रथचर्यास्त्रमायाभिर्मोहयित्वा परंतपः
बिभेद शतधा राजञ्शरीराणि महीक्षिताम् २४
प्राणाः प्राणभृतां संख्ये प्रेषिता निशितैः शरैः
राजन्प्रापुरमुं लोकं शरीराण्यवनिं ययुः २५
धनूंष्यश्वान्नियन्तॄंश्च ध्वजान्बाहूंश्च साङ्गदान्
शिरांसि च शितैर्भल्लैस्तेषां चिच्छेद फाल्गुनिः २६
चूतारामो यथा भग्नः पञ्चवर्षफलोपगः
राजपुत्रशतं तद्वत्सौभद्रेणापतद्धतम् २७
क्रुद्धाशीविषसंकाशान्सुकुमारान्सुखोचितान्
एकेन निहतान्दृष्ट्वा भीतो दुर्योधनोऽभवत् २८
रथिनः कुञ्जरानश्वान्पदातींश्चावमर्दितान्
दृष्ट्वा दुर्योधनः क्षिप्रमुपायात्तममर्षितः २९
तयोः क्षणमिवापूर्णः संग्रामः समपद्यत
अथाभवत्ते विमुखः पुत्रः शरशतार्दितः ३०
इति श्रीमहाभारते द्रोणपर्वणि चतुश्चत्वारिंशोऽध्यायः ४४

## पञ्चचत्वारिंशोऽध्यायः

धृतराष्ट्र उवाच
यथा वदसि मे सूत एकस्य बहुभिः सह
संग्रामं तुमुलं घोरं जयं चैव महात्मनः १
अश्रद्धेयमिवाश्चर्यं सौभद्रस्याथ विक्रमम्
किं तु नात्यद्भुतं तेषां येषां धर्मो व्यपाश्रयः २

दुर्योधनेऽथ विमुखे राजपुत्रशते हते
सौभद्रे प्रतिपत्तिं कां प्रत्यपद्यन्त मामकाः ३
सञ्जय उवाच
संशुष्कास्याश्चलन्नेत्राः प्रस्विन्ना लोमहर्षिणः
पलायनकृतोत्साहा निरुत्साहा द्विषज्जये ४
हतान्भ्रातॄन्पितॄन्पुत्रान्सुहृत्संबन्धिबान्धवान्
उत्सृज्योत्सृज्य समियुस्त्वरयन्तो हयद्विपान् ५
तान्प्रभग्नांस्तथा दृष्ट्वा द्रोणो द्रौणिर्बृहद्बलः
कृपो दुर्योधनः कर्णः कृतवर्माथ सौबलः ६
अभिद्रुताः सुसंक्रुद्धाः सौभद्रमपराजितम्
तेऽपि पौत्रेण ते राजन्प्रायशो विमुखीकृताः ७
एकस्तु सुखसंवृद्धो बाल्याद्दर्पाच्च निर्भयः
इष्वस्त्रविन्महातेजा लक्ष्मणोऽर्जुनिमभ्ययात् ८
तमन्वगेवास्य पिता पुत्रगृद्धी न्यवर्तत
अनु दुर्योधनं चान्ये न्यवर्तन्त महारथाः ९
तं तेऽभिषिषिचुर्बाणैर्मेघा गिरिमिवाम्बुभिः
स च तान्प्रममाथैको विष्वग्वातो यथाम्बुदान् १०
पौत्रं तु तव दुर्धर्षं लक्ष्मणं प्रियदर्शनम्
पितुः समीपे तिष्ठन्तं शूरमुद्यतकार्मुकम् ११
अत्यन्तसुखसंवृद्धं धनेश्वरसुतोपमम्
आससाद रणे कार्ष्णिर्मत्तो मत्तमिव द्विपम् १२
लक्ष्मणेन तु संगम्य सौभद्रः परवीरहा
शरैः सुनिशितैस्तीक्ष्णैर्बाह्वोरुरसि चार्पितः १३
संक्रुद्धो वै महाबाहुर्दण्डाहत इवोरगः
पौत्रस्तव महाराज तव पौत्रमभाषत १४
सुदृष्टः क्रियतां लोको अमुं लोकं गमिष्यसि
पश्यतां बान्धवानां त्वां नयामि यमसादनम् १५
एवमुक्त्वा ततो भल्लं सौभद्रः परवीरहा
उद्बबर्ह महाबाहुर्निर्मुक्तोरगसंनिभम् १६
स तस्य भुजनिर्मुक्तो लक्ष्मणस्य सुदर्शनम्

सुनसं सुभ्रु केशान्तं शिरोऽहार्षीत्सकुण्डलम्
लक्ष्मणं निहतं दृष्ट्वा हा हेत्युच्चुक्रुशुर्जनाः १७
ततो दुर्योधनः क्रुद्धः प्रिये पुत्रे निपातिते
हतैनमिति चुक्रोश क्षत्रियान्क्षत्रियर्षभः १८
ततो द्रोणः कृपः कर्णो द्रोणपुत्रो बृहद्बलः
कृतवर्मा च हार्दिक्यः षड्रथाः पर्यवारयन् १९
स तान्विद्ध्वा शितैर्बाणैर्विमुखीकृत्य चार्जुनिः
वेगेनाभ्यपतत्क्रुद्धः सैन्धवस्य महद्बलम् २०
आवव्रुस्तस्य पन्थानं गजानीकेन दंशिताः
कलिङ्गाश्च निषादाश्च क्राथपुत्रश्च वीर्यवान्
तत्प्रसक्तमिवात्यर्थं युद्धमासीद्विशां पते २१
ततस्तत्कुञ्जरानीकं व्यधमद्धृष्टमार्जुनिः
यथा विवान्नित्यगतिर्जलदाञ्शतशोऽम्बरे २२
ततः क्राथः शरव्रातैरार्जुनिं समवाकिरत्
अथेतरे संनिवृत्ताः पुनर्द्रोणमुखा रथाः
परमास्त्राणि धुन्वानाः सौभद्रमभिदुद्रुवुः २३
तान्निवार्यार्जुनिर्बाणैः क्राथपुत्रमथार्दयत्
शरौघेणाप्रमेयेण त्वरमाणो जिघांसया २४
सधनुर्बाणकेयूरौ बाहू समुकुटं शिरः
छत्रं ध्वजं नियन्तारमश्वांश्चास्य न्यपातयत् २५
कुलशीलश्रुतबलैः कीर्त्या चास्त्रबलेन च
युक्ते तस्मिन्हते वीराः प्रायशो विमुखाभवन् २६
इति श्रीमहाभारते द्रोणपर्वणि पञ्चचत्वारिंशोऽध्यायः ४५

## षट्चत्वारिंशोऽध्यायः

धृतराष्ट्र उवाच
तथा प्रविष्टं तरुणं सौभद्रमपराजितम्
कुलानुरूपं कुर्वाणं संग्रामेष्वपलायिनाम् १
आजानेयैः सुबलिभिर्युक्तमश्वैस्त्रिहायनैः
प्लवमानमिवाकाशे के शूराः समवारयन् २

सञ्जय उवाच
अभिमन्युः प्रविश्यैव तावकान्निशितैः शरैः
अकरोद्विमुखान्सर्वान्पार्थिवान्पाण्डुनन्दनः ३
तं तु द्रोणः कृपः कर्णो द्रौणिश्च सबृहद्बलः
कृतवर्मा च हार्दिक्यः षड्रथाः पर्यवारयन् ४
दृष्ट्वा तु सैन्धवे भारमतिमात्रं समाहितम्
सैन्यं तव महाराज युधिष्ठिरमुपाद्रवत् ५
सौभद्रमितरे वीरमभ्यवर्षञ्शराम्बुभिः
तालमात्राणि चापानि विमर्षन्तो महारथाः ६
तांस्तु सर्वान्महेष्वासान्सर्वविद्यासु निष्ठितान्
व्यष्टम्भयद्रणे बाणैः सौभद्रः परवीरहा ७
द्रोणं पञ्चाशता विद्ध्वा विंशत्या च बृहद्बलम्
अशीत्या कृतवर्माणं कृपं षष्ट्या शिलीमुखैः ८
रुक्मपुङ्खैर्महावेगैराकर्णसमचोदितैः
अविध्यद्दशभिर्बाणैरश्वत्थामानमार्जुनिः ९
स कर्णं कर्णिना कर्णे पीतेन निशितेन च
फाल्गुनिर्द्विषतां मध्ये विव्याध परमेषुणा १०
पातयित्वा कृपस्याश्वांस्तथोभौ पार्ष्णिसारथी
अथैनं दशभिर्बाणैः प्रत्यविध्यत्स्तनान्तरे ११
ततो वृन्दारकं वीरं कुरूणां कीर्तिवर्धनम्
पुत्राणां तव वीराणां पश्यतामवधीद्बली १२
तं द्रौणिः पञ्चविंशत्या क्षुद्रकाणां समर्पयत्
वरं वरममित्राणामारुजन्तमभीतवत् १३
स तु बाणैः शितैस्तूर्णं प्रत्यविध्यत मारिष
पश्यतां धार्तराष्ट्राणामश्वत्थामानमार्जुनिः १४
षष्ट्या शराणां तं द्रौणिस्तिग्मधारैः सुतेजनैः
उग्रैर्नाकम्पयद्विद्ध्वा मैनाकमिव पर्वतम् १५
स तु द्रौणिं त्रिसप्तत्या हेमपुङ्खैरजिह्मगैः
प्रत्यविध्यन्महातेजा बलवानपकारिणम् १६
तस्मिन्द्रोणो बाणशतं पुत्रगृद्धी न्यपातयत्

अश्वत्थामा तथाष्टौ च परीप्सन्पितरं रणे १७
कर्णो द्वाविंशतिं भल्लान्कृतवर्मा चतुर्दश
बृहद्बलस्तु पञ्चाशत्कृपः शारद्वतो दश १८
तांस्तु प्रत्यवधीत्सर्वान्दशभिर्दशभिः शरैः
तैरर्द्यमानः सौभद्रः सर्वतो निशितैः शरैः १९
तं कोसलानामधिपः कर्णिनाताडयद्धृदि
स तस्याश्वान्ध्वजं चापं सूतं चापातयत्क्षितौ २०
अथ कोसलराजस्तु विरथः खड्गचर्मधृत्
इयेष फाल्गुनेः कायाच्छिरो हर्तुं सकुण्डलम् २१
स कोसलानां भर्तारं राजपुत्रं बृहद्बलम्
हृदि विव्याध बाणेन स भिन्नहृदयोऽपतत् २२
बभञ्ज च सहस्राणि दश राजन्महात्मनाम्
सृजतामशिवा वाचः खड्गकार्मुकधारिणाम् २३
तथा बृहद्बलं हत्वा सौभद्रो व्यचरद्रणे
विष्टम्भयन्महेष्वासन्योधांस्तव शराम्बुभिः २४
इति श्रीमहाभारते द्रोणपर्वणि षट्चत्वारिंशोऽध्यायः ४६

## सप्तचत्वारिंशोऽध्यायः

सञ्जय उवाच
स कर्णं कर्णिना कर्णे पुनर्विव्याध फाल्गुनिः
शरैः पञ्चाशता चैनमविध्यत्कोपयन्भृशम् १
प्रतिविव्याध राधेयस्तावद्भिरथ तं पुनः
स तैराचितसर्वाङ्गो बह्वशोभत भारत २
कर्णं चाप्यकरोत्क्रुद्धो रुधिरोत्पीडवाहिनम्
कर्णोऽपि विबभौ शूरः शरैश्चित्रोऽसृगाप्लुतः ३
तावुभौ शरचित्राङ्गौ रुधिरेण समुक्षितौ
बभूवतुर्महात्मानौ पुष्पिताविव किंशुकौ ४
अथ कर्णस्य सचिवान्षट् शूरांश्चित्रयोधिनः
साश्वसूतध्वजरथान्सौभद्रो निजघान ह ५
अथेतरान्महेष्वासान्दशभिर्दशभिः शरैः

प्रत्यविध्यदसंभ्रान्तस्तदद्भुतमिवाभवत् ६
मागधस्य पुनः पुत्रं हत्वा षड्भिरजिह्मगैः
साश्वं ससूतं तरुणमश्वकेतुमपातयत् ७
मार्तिकावतकं भोजं ततः कुञ्जरकेतनम्
क्षुरप्रेण समुन्मथ्य ननाद विसृजञ्शरान् ८
तस्य दौःशासनिर्विद्ध्वा चतुर्भिश्चतुरो हयान्
सूतमेकेन विव्याध दशभिश्चार्जुनात्मजम् ९
ततो दौःशासनिं कार्ष्णिर्विद्ध्वा सप्तभिराशुगैः
संरम्भाद्रक्तनयनो वाक्यमुच्चैरथाब्रवीत् १०
पिता तवाहवं त्यक्त्वा गतः कापुरुषो यथा
दिष्ट्या त्वमपि जानीषे योद्धुं न त्वद्य मोक्ष्यसे ११
एतावदुक्त्वा वचनं कर्मारपरिमार्जितम्
नाराचं विससर्जास्मै तं द्रौणिस्त्रिभिराच्छिनत् १२
तस्यार्जुनिर्ध्वजं छित्त्वा शल्यं त्रिभिरताडयत्
तं शल्यो नवभिर्बाणैर्गार्ध्रपत्रैरताडयत् १३
तस्यार्जुनिर्ध्वजं छित्त्वा उभौ च पार्ष्णिसारथी
तं विव्याधायसैः षड्भिः सोऽपक्रामद्रथान्तरम् १४
शत्रुंजयं चन्द्रकेतुं मेघवेगं सुवर्चसम्
सूर्यभासं च पञ्चैतान्हत्वा विव्याध सौबलम् १५
तं सौबलस्त्रिभिर्विद्ध्वा दुर्योधनमथाब्रवीत्
सर्व एनं प्रमथ्नीमः पुरैकैकं हिनस्ति नः १६
अथाब्रवीत्तदा द्रोणं कर्णो वैकर्तनो वृषा
पुरा सर्वान्प्रमथ्नाति ब्रूह्यस्य वधमाशु नः १७
ततो द्रोणो महेष्वासः सर्वांस्तान्प्रत्यभाषत
अस्ति वोऽस्यान्तरं किञ्चित्कुमारस्य प्रपश्यति १८
अन्वस्य पितरं ह्यद्य चरतः सर्वतोदिशम्
शीघ्रतां नरसिंहस्य पाण्डवेयस्य पश्यत १९
धनुर्मण्डलमेवास्य रथमार्गेषु दृश्यते
संन्दधानस्य विशिखाञ्शीघ्रं चैव विमुञ्चतः २०
आरुजन्निव मे प्राणान्मोहयन्नपि सायकैः

प्रहर्षयति मा भूयः सौभद्रः परवीरहा २१
अति मा नन्दयत्येष सौभद्रो विचरन्रणे
अन्तरं यस्य संरब्धा न पश्यन्ति महारथाः २२
अस्यतो लघुहस्तस्य दिशः सर्वा महेषुभिः
न विशेषं प्रपश्यामि रणे गाण्डीवधन्वनः २३
अथ कर्णः पुनर्द्रोणमाहार्जुनिशरार्दितः
स्थातव्यमिति तिष्ठामि पीड्यमानोऽभिमन्युना २४
तेजस्विनः कुमारस्य शराः परमदारुणाः
क्षिण्वन्ति हृदयं मेऽद्य घोराः पावकतेजसः २५
तमाचार्योऽब्रवीत्कर्णं शनकैः प्रहसन्निव
अभेद्यमस्य कवचं युवा चाशुपराक्रमः २६
उपदिष्टा मया अस्य पितुः कवचधारणा
तामेष निखिलां वेत्ति ध्रुवं परपुरञ्जयः २७
शक्यं त्वस्य धनुश्छेत्तुं ज्यां च बाणैः समाहितैः
अभीशवो हयाश्चैव तथोभौ पार्ष्णिसारथी २८
एतत्कुरु महेष्वास राधेय यदि शक्यते
अथैनं विमुखीकृत्य पश्चात्प्रहरणं कुरु २९
सधनुष्को न शक्योऽयमपि जेतुं सुरासुरैः
विरथं विधनुष्कं च कुरुष्वैनं यदीच्छसि ३०
तदाचार्यवचः श्रुत्वा कर्णो वैकर्तनस्त्वरन्
अस्यतो लघुहस्तस्य पृषत्कैर्धनुराच्छिनत् ३१
अश्वानस्यावधीद्भोजो गौतमः पार्ष्णिसारथी
शेषास्तु छिन्नधन्वानं शरवर्षैरवाकिरन् ३२
त्वरमाणास्त्वराकाले विरथं षण्महारथाः
शरवर्षैरकरुणा बालमेकमवाकिरन् ३३
स छिन्नधन्वा विरथः स्वधर्ममनुपालयन्
खड्गचर्मधरः श्रीमानुत्पपात विहायसम् ३४
मार्गैः स कैशिकाद्यैश्च लाघवेन बलेन च
आर्जुनिर्व्यचरद्व्योम्नि भृशं वै पक्षिराडिव ३५
मय्येव निपतत्येष सासिरित्यूर्ध्वदृष्टयः

विव्यधुस्तं महेष्वासाः समरे छिद्रदर्शिनः ३६
तस्य द्रोणोऽच्छिनन्मुष्टौ खड्गं मणिमयत्सरुम्
राधेयो निशितैर्बाणैर्व्यधमच्चर्म चोत्तमम् ३७
व्यसिचर्मेषुपूर्णाङ्गः सोऽन्तरिक्षात्पुनः क्षितिम्
आस्थितश्चक्रमुद्यम्य द्रोणं क्रुद्धोऽभ्यधावत ३८
स चक्ररेणूज्ज्वलशोभिताङ्गो बभावतीवोन्नतचक्रपाणिः
रणेऽभिमन्युः क्षणदासुभद्रः स वासुभद्रानुकृतिं प्रकुर्वन् ३९
स्रुतरुधिरकृतैकरागवक्त्रो भ्रुकुटिपुटाकुटिलोऽतिसिंहनादः
प्रभुरमितबलो रणेऽभिमन्युर्नृपवरमध्यगतो भृशं व्यराजत् ४०
इति श्रीमहाभारते द्रोणपर्वणि सप्तचत्वारिंशोऽध्यायः ४७

## अष्टचत्वारिंशोऽध्यायः

सञ्जय उवाच
विष्णोः स्वसानन्दिकरः स विष्णवायुधभूषितः
रराजातिरथः संख्ये जनार्दन इवापरः १
मारुतोद्धूतकेशान्तमुद्यतारिवरायुधम्
वपुः समीक्ष्य पृथ्वीशा दुःसमीक्ष्यं सुरैरपि २
तच्चक्रं भृशमुद्विग्नाः संचिच्छिदुरनेकधा
महारथस्ततः कार्ष्णिः संजग्राह महागदाम् ३
विधनुःस्यन्दनासिस्तैर्विचक्रश्चारिभिः कृतः
अभिमन्युर्गदापाणिरश्वत्थामानमाद्रवत् ४
स गदामुद्यतां दृष्ट्वा ज्वलन्तीमशनीमिव
अपाक्रामद्रथोपस्थाद्विक्रमांस्त्रीन्नरर्षभः ५
तस्याश्वान्गदया हत्वा तथोभौ पार्ष्णिसारथी
शराचिताङ्गः सौभद्रः श्वाविद्वत्प्रत्यदृश्यत ६
ततः सुबलदायादं कालकेयमपोथयत्
जघान चास्यानुचरान्गान्धारान्सप्तसप्ततिम् ७
पुनर्ब्रह्मवसातीयाञ्जघान रथिनो दश
केकयानां रथान्सप्त हत्वा च दश कुञ्जरान्
दौःशासनिरथं साश्वं गदया समपोथयत् ८

ततो दौःशासनिः क्रुद्धो गदामुद्यम्य मारिष
अभिदुद्राव सौभद्रं तिष्ठ तिष्ठेति चाब्रवीत् ९
तावुद्यतगदौ वीरावन्योन्यवधकांक्षिणौ
भ्रातृव्यौ संप्रजह्राते पुरेव त्र्यम्बकान्तकौ १०
तावन्योन्यं गदाग्राभ्यां संहत्य पतितौ क्षितौ
इन्द्रध्वजाविवोत्सृष्टौ रणमध्ये परन्तपौ ११
दौःशासनिरथोत्थाय कुरूणां कीर्तिवर्धनः
प्रोत्तिष्ठमानं सौभद्रं गदया मूर्ध्न्यताडयत् १२
गदावेगेन महता व्यायामेन च मोहितः
विचेता न्यपतद्भूमौ सौभद्रः परवीरहा
एवं विनिहतो राजन्नेको बहुभिराहवे १३
क्षोभयित्वा चमूं सर्वां नलिनीमिव कुञ्जरः
अशोभत हतो वीरो व्याधैर्वनगजो यथा १४
तं तथा पतितं शूरं तावकाः पर्यवारयन्
दावं दग्ध्वा यथा शान्तं पावकं शिशिरात्यये १५
विमृद्य तरुशृङ्गाणि संनिवृत्तमिवानिलम्
अस्तं गतमिवादित्यं तप्त्वा भारतवाहिनीम् १६
उपप्लुतं यथा सोमं संशुष्कमिव सागरम्
पूर्णचन्द्राभवदनं काकपक्षवृताक्षकम् १७
तं भूमौ पतितं दृष्ट्वा तावकास्ते महारथाः
मुदा परमया युक्ताश्चुक्रुशुः सिंहवन्मुहुः १८
आसीत्परमको हर्षस्तावकानां विशां पते
इतरेषां तु वीराणां नेत्रेभ्यः प्रापतज्जलम् १९
अभिक्रोशन्ति भूतानि अन्तरिक्षे विशां पते
दृष्ट्वा निपतितं वीरं च्युतं चन्द्रमिवाम्बरात् २०
द्रोणकर्णमुखैः षड्भिर्धार्तराष्ट्रैर्महारथैः
एकोऽय निहतः शेते नैष धर्मो मतो हि नः २१
तस्मिंस्तु निहते वीरे बह्वशोभत मेदिनी
द्यौर्यथा पूर्णचन्द्रेण नक्षत्रगणमालिनी २२
रुक्मपुङ्खैश्च संपूर्णा रुधिरौघपरिप्लुता

उत्तमाङ्गैश्च वीराणां भ्राजमानैः सकुण्डलैः २३
विचित्रैश्च परिस्तोमैः पताकाभिश्च संवृता
चामरैश्च कुथाभिश्च प्रविद्धैश्चाम्बरोत्तमैः २४
रथाश्वनरनागानामलंकारैश्च सुप्रभैः
खड्गैश्च निशितैः पीतैर्निर्मुक्तैर्भुजगैरिव २५
चापैश्च विशिखैश्छिनैः शक्त्यृष्टिप्रासकम्पनैः
विविधैरायुधैश्चान्यैः संवृता भूरशोभत २६
वाजिभिश्चापि निर्जीवैः स्वपद्भिः शोणितोक्षितैः
सारोहैर्विषमा भूमिः सौभद्रेण निपातितैः २७
साङ्कुशैः समहामात्रैः सवर्मायुधकेतुभिः
पर्वतैरिव विध्वस्तैर्विशिखोन्मथितैर्गजैः २८
पृथिव्यामनुकीर्णैश्च व्यश्वसारथियोधिभिः
ह्रदैरिव प्रक्षुभितैर्हतनागै रथोत्तमैः २९
पदातिसंघैश्च हतैर्विविधायुधभूषणैः
भीरूणां त्रासजननी घोररूपाभवन्मही ३०
तं दृष्ट्वा पतितं भूमौ चन्द्रार्कसदृशद्युतिम्
तावकानां परा प्रीतिः पाण्डूनां चाभवद्व्यथा ३१
अभिमन्यौ हते राजञ्शिशुकेऽप्राप्तयौवने
संप्राद्रवच्चमूः सर्वा धर्मराजस्य पश्यतः ३२
दीर्यमाणं बलं दृष्ट्वा सौभद्रे विनिपातिते
अजातशत्रुः स्वान्वीरानिदं वचनमब्रवीत् ३३
स्वर्गमेष गतः शूरो यो हतो नपराङ्मुखः
संस्तम्भयत मा भैष्ट विजेष्यामो रणे रिपून् ३४
इत्येवं स महातेजा दुःखितेभ्यो महाद्युतिः
धर्मराजो युधां श्रेष्ठो ब्रुवन्दुःखमपानुदत् ३५
युद्धे ह्याशीविषाकारान्राजपुत्रान्रणे बहून्
पूर्वं निहत्य संग्रामे पश्चादार्जुनिरन्वगात् ३६
हत्वा दशसहस्राणि कौसल्यं च महारथम्
कृष्णार्जुनसमः कार्ष्णिः शक्रसद्म गतो ध्रुवम् ३७
रथाश्वनरमातङ्गान्विनिहत्य सहस्रशः

अवितृप्तः स संग्रामादशोच्यः पुण्यकर्मकृत् ३८
वयं तु प्रवरं हत्वा तेषां तैः शरपीडिताः
निवेशायाभ्युपायाम सायाह्ने रुधिरोक्षिताः ३९
निरीक्षमाणास्तु वयं परे चायोधनं शनैः
अपयाता महाराज ग्लानिं प्राप्ता विचेतसः ४०
ततो निशाया दिवसस्य चाशिवः शिवारुतः संधिरवर्तताद्भुतः
कुशेशयापीडनिभे दिवाकरे विलम्बमानेऽस्तमुपेत्य पर्वतम् ४१
वरासिशक्त्यृष्टिवरूथचर्मणां विभूषणानां च समाक्षिपन्प्रभाम्
दिवं च भूमिं च समानयन्निव प्रियां तनुं भानुरुपैति पावकम् ४२
महाभ्रकूटाचलशृङ्गसंनिभैर्गजैरनेकैरिव वज्रपातितैः
सवैजयन्त्यङ्कुशवर्मयन्तृभिर्निपातितैर्निष्टनतीव गौश्चिता ४३
हतेश्वरैश्चूर्णितपत्त्युपस्करैर्हताश्वसूतैर्विपताककेतुभिः
महारथैर्भूः शुशुभे विचूर्णितैः पुरैरिवामित्रहतैर्नराधिप ४४
रथाश्ववृन्दैः सहसादिभिर्हतैः प्रविद्धभाण्डाभरणैः पृथग्विधैः
निरस्तजिह्वादशनान्त्रलोचनैर्धरा बभौ घोरविरूपदर्शना ४५
प्रविद्धवर्माभरणा वरायुधा विपन्नहस्त्यश्वरथानुगा नराः
महार्हशय्यास्तरणोचिताः सदा क्षितावनाथा इव शेरते हताः ४६
अतीव हृष्टाः श्वसृगालवायसा बडाः सुपर्णाश्च वृकास्तरक्षवः
वयांस्यसृक्पान्यथ रक्षसां गणाः पिशाचसंघाश्च सुदारुणा रणे ४७
त्वचो विनिर्भिद्य पिबन्वसामसृक्तथैव मज्ञां पिशितानि चाश्नुवन्
वपां विलुम्पन्ति हसन्ति गान्ति च प्रकर्षमाणाः कुणपान्यनेकशः ४८
शरीरसंघाटवहा असृग्जला रथोडुपा कुञ्जरशैलसंकटा
मनुष्यशीर्षोपलमांसकर्दमा प्रविद्धनानाविधशस्त्रमालिनी ४९
महाभया वैतरणीव दुस्तरा प्रवर्तिता योधवरैस्तदा नदी
उवाह मध्येन रणाजिरं भृशं भयावहा जीवमृतप्रवाहिनी ५०
पिबन्ति चाश्नन्ति च यत्र दुर्दृशाः पिशाचसंघा विविधाः सुभैरवाः
सुनन्दिताः प्राणभृतां भयंकराः समानभक्षाः श्वसृगालपक्षिणः ५१
तथा तदायोधनमुग्रदर्शनं निशामुखे पितृपतिराष्ट्रसंनिभम्
निरीक्षमाणाः शनकैर्जहुर्नराः समुत्थितारुण्डकुलोपसंकुलम् ५२
अपेतविध्वस्तमहार्हभूषणं निपातितं शक्रसमं महारथम्

रणेऽभिमन्युं ददृशुस्तदा जना व्यपोढहव्यं सदसीव पावकम् ५३
इति श्रीमहाभारते द्रोणपर्वणि अष्टचत्वारिंशोऽध्यायः ४८

## एकोन पञ्चाशोऽध्यायः

सञ्जय उवाच
तस्मिंस्तु निहते वीरे सौभद्रे रथयूथपे
विमुक्तरथसंनाहाः सर्वे निक्षिप्तकार्मुकाः १
उपोपविष्टा राजानं परिवार्य युधिष्ठिरम्
तदेव दुःखं ध्यायन्तः सौभद्रगतमानसाः २
ततो युधिष्ठिरो राजा विललाप सुदुःखितः
अभिमन्यौ हते वीरे भ्रातुः पुत्रे महारथे ३
द्रोणानीकमसंबाधं मम प्रियचिकीर्षया
भित्त्वा व्यूहं प्रविष्टोऽसौ गोमध्यमिव केसरी ४
यस्य शूरा महेष्वासाः प्रत्यनीकगता रणे
प्रभग्ना विनिवर्तन्ते कृतास्त्रा युद्धदुर्मदाः ५
अत्यन्तशत्रुरस्माकं येन दुःशासनः शरैः
क्षिप्रं ह्यभिमुखः संख्ये विसंज्ञो विमुखीकृतः ६
स तीर्त्वा दुस्तरं वीरो द्रोणानीकमहार्णवम्
प्राप्य दौःशासनिं कार्ष्णिर्यातो वैवस्वतक्षयम् ७
कथं द्रक्ष्यामि कौन्तेयं सौभद्रे निहतेऽजुनम्
सुभद्रां वा महाभागां प्रियं पुत्रमपश्यतीम् ८
किं स्विद्वयमपेतार्थमश्लिष्टमसमञ्जसम्
तावुभौ प्रतिवक्ष्यामो हृषीकेशधनञ्जयौ ९
अहमेव सुभद्रायाः केशवार्जुनयोरपि
प्रियकामो जयाकाङ्क्षी कृतवानिदमप्रियम् १०
न लुब्धो बुध्यते दोषान्मोहाल्लोभः प्रवर्तते
मधु लिप्सुर्हि नापश्यं प्रपातमिदमीदृशम् ११
यो हि भोज्ये पुरस्कार्यो यानेषु शयनेषु च
भूषणेषु च सोऽस्माभिर्बालो युधि पुरस्कृतः १२
कथं हि बालस्तरुणो युद्धानामविशारदः

सदश्व इव संबाधे विषमे क्षेममर्हति १३
नो चेद्धि वयमप्येनं महीमनुशयीमहि
बीभत्सोः कोपदीप्तस्य दग्धाः कृपणचक्षुषा १४
अलुब्धो मतिमान्ह्रीमान्क्षमावान्रूपवान्बली
वपुष्मान्मानकृद्वीरः प्रियः सत्यपरायणः १५
यस्य श्लाघन्ति विबुधाः कर्माण्यूर्जितकर्मणः
निवातकवचाञ्जघ्ने कालकेयांश्च वीर्यवान् १६
महेन्द्रशत्रवो येन हिरण्यपुरवासिनः
अक्ष्णोर्निमेषमात्रेण पौलोमाः सगणा हताः १७
परेभ्योऽप्यभयार्थिभ्यो यो ददात्यभयं विभुः
तस्यास्माभिर्न शकितस्त्रातुमद्यात्मजो भयात् १८
भयं तु सुमहत्प्राप्तं धार्तराष्ट्रं महद्बलम्
पार्थः पुत्रवधात्क्रुद्धः कौरवाञ्शोषयिष्यति १९
क्षुद्रः क्षुद्रसहायश्च स्वपक्षक्षयमातुरः
व्यक्तं दुर्योधनो दृष्ट्वा शोचन्हास्यति जीवितम् २०
न मे जयः प्रीतिकरो न राज्यं न चामरत्वं न सुरैः सलोकता
इमं समीक्ष्याप्रतिवीर्यपौरुषं निपातितं देववरात्मजात्मजम् २१
इति श्रीमहाभारते द्रोणपर्वणि एकोनपञ्चाशोऽध्यायः ४९

## पञ्चाशोऽध्यायः

सञ्जय उवाच
तस्मिन्नहनि निर्वृत्ते घोरे प्राणभृतां क्षये
आदित्येऽस्तगते श्रीमान्संध्याकाल उपस्थिते १
व्यपयातेषु सैन्येषु वासाय भरतर्षभ
हत्वा संशप्तकव्रातान्दिव्यैरस्त्रैः कपिध्वजः २
प्रायात्स्वशिबिरं जिष्णुर्जैत्रमास्थाय तं रथम्
गच्छन्नेव च गोविन्दं सन्नकण्ठोऽभ्यभाषत ३
किं नु मे हृदयं त्रस्तं वाक्यं सज्जति केशव
स्पन्दन्ति चाप्यनिष्टानि गात्रं सीदति चाच्युत ४
अनिष्टं चैव मे श्लिष्टं हृदयान्नापसर्पति

भुवि यद्दिक्षु चाप्युग्रा उत्पातास्त्रासयन्ति माम् ५
बहुप्रकारा दृश्यन्ते सर्व एवाघशंसिनः
अपि स्वस्ति भवेद्राज्ञः सामात्यस्य गुरोर्मम ६
वासुदेव उवाच
व्यक्तं शिवं तव भ्रातुः सामात्यस्य भविष्यति
मा शुचः किंचिदेवान्यत्तत्रानिष्टं भविष्यति ७
सञ्जय उवाच
ततः संध्यामुपास्यैव वीरौ वीरावसादने
कथयन्तौ रणे वृत्तं प्रयातौ रथमास्थितौ ८
ततः स्वशिबिरं प्राप्तौ हतानन्दं हतत्विषम्
वासुदेवोऽर्जुनश्चैव कृत्वा कर्म सुदुष्करम् ९
ध्वस्ताकारं समालक्ष्य शिबिरं परवीरहा
बीभत्सुरब्रवीत्कृष्णमस्वस्थहृदयस्ततः १०
नाद्य नन्दन्ति तूर्याणि मङ्गल्यानि जनार्दन
मिश्रा दुन्दुभिनिर्घोषैः शङ्खाश्चाडम्बरैः सह
वीणा वा नाद्य वाद्यन्ते शम्यातालस्वनैः सह ११
मङ्गल्यानि च गीतानि न गायन्ति पठन्ति च
स्तुतियुक्तानि रम्याणि ममानीकेषु बन्दिनः १२
योधाश्चापि हि मां दृष्ट्वा निवर्तन्ते ह्यधोमुखाः
कर्माणि च यथापूर्वं कृत्वा नाभिवदन्ति माम् १३
अपि स्वस्ति भवेदद्य भ्रातृभ्यो मम माधव
न हि शुध्यति मे भावो दृष्ट्वा स्वजनमाकुलम् १४
अपि पाञ्चालराजस्य विराटस्य च मानद
सर्वेषां चैव योधानां सामग्र्यं स्यान्ममाच्युत १५
न च मामद्य सौभद्रः प्रहृष्टो भ्रातृभिः सह
रणादायान्तमुचितं प्रत्युद्याति हसन्निव १६
एवं संकथयन्तौ तौ प्रविष्टौ शिबिरं स्वकम्
ददृशाते भृशास्वस्थान्पाण्डवान्नष्टचेतसः १७
दृष्ट्वा भ्रातॄंश्च पुत्रांश्च विमना वानरध्वजः
अपश्यंश्चैव सौभद्रमिदं वचनमब्रवीत् १८

मुखवर्णोऽप्रसन्नो वः सर्वेषामेव लक्ष्यते
न चाभिमन्युं पश्यामि न च मां प्रतिनन्दथ १९
मया श्रुतश्च द्रोणेन चक्रव्यूहो विनिर्मितः
न च वस्तस्य भेत्तास्ति ऋते सौभद्रमाहवे २०
न चोपदिष्टस्तस्यासीन्मयानीकविनिर्गमः
कच्चिन्न बालो युष्माभिः परानीकं प्रवेशितः २१
भित्त्वानीकं महेष्वासः परेषां बहुशो युधि
कच्चिन्न निहतः शेते सौभद्रः परवीरहा २२
लोहिताक्षं महाबाहुं जातं सिंहमिवाद्रिषु
उपेन्द्रसदृशं ब्रूत कथमायोधने हतः २३
सुकुमारं महेष्वासं वासवस्यात्मजात्मजम्
सदा मम प्रियं ब्रूत कथमायोधने हतः २४
वार्ष्णेयीदयितं शूरं मया सततलालितम्
अम्बायाश्च प्रियं नित्यं कोऽवधीत्कालचोदितः २५
सदृशो वृष्णिसिंहस्य केशवस्य महात्मनः
विक्रमश्रुतमाहात्म्यैः कथमायोधने हतः २६
सुभद्रायाः प्रियं नित्यं द्रौपद्याः केशवस्य च
यदि पुत्रं न पश्यामि यास्यामि यमसादनम् २७
मृदुकुञ्चितकेशान्तं बालं बालमृगेक्षणम्
मत्तद्विरदविक्रान्तं शालपोतमिवोद्गतम् २८
स्मिताभिभाषिणं दान्तं गुरुवाक्यकरं सदा
बाल्येऽप्यबालकर्माणं प्रियवाक्यममत्सरम् २९
महोत्साहं महाबाहुं दीर्घराजीवलोचनम्
भक्तानुकम्पिनं दान्तं न च नीचानुसारिणम् ३०
कृतज्ञं ज्ञानसंपन्नं कृतास्त्रमनिवर्तिनम्
युद्धाभिनन्दिनं नित्यं द्विषतामघवर्धनम् ३१
स्वेषां प्रियहिते युक्तं पितॄणां जयगृद्धिनम्
न च पूर्वप्रहर्तारं संग्रामे नष्टसंभ्रमम्
यदि पुत्रं न पश्यामि यास्यामि यमसादनम् ३२
सुललाटं सुकेशान्तं सुभ्र्वक्षिदशनच्छदम्

अपश्यतस्तद्वदनं का शान्तिर्हृदयस्य मे ३३
तन्त्रीस्वनसुखं रम्यं पुंस्कोकिलसमध्वनिम्
अशृण्वतः स्वनं तस्य का शान्तिर्हृदयस्य मे ३४
रूपं चाप्रतिरूपं तत्त्रिदशेष्वपि दुर्लभम्
अपश्यतोऽद्य वीरस्य का शान्तिर्हृदयस्य मे ३५
अभिवादनदक्षं तं पितॄणां वचने रतम्
नाद्याहं यदि पश्यामि का शान्तिर्हृदयस्य मे ३६
सुकुमारः सदा वीरो महार्हशयनोचितः
भूमावनाथवच्छेते नूनं नाथवतां वरः ३७
शयानं समुपासन्ति यं पुरा परमस्त्रियः
तमद्य विप्रविद्धाङ्गमुपासन्त्यशिवाः शिवाः ३८
यः पुरा बोध्यते सुप्तः सूतमागधबन्दिभिः
बोधयन्त्यद्य तं नूनं श्वापदा विकृतैः स्वरैः ३९
छत्रच्छायासमुचितं तस्य तद्वदनं शुभम्
नूनमद्य रजोध्वस्तं रणे रेणुः करिष्यति ४०
हा पुत्रकावितृप्तस्य सततं पुत्रदर्शने
भाग्यहीनस्य कालेन यथा मे नीयसे बलात् ४१
साद्य संयमनी नूनं सदा सुकृतिनां गतिः
स्वभाभिर्भासिता रम्या त्वयात्यर्थं विराजते ४२
नूनं वैवस्वतश्च त्वा वरुणश्च प्रियातिथिः
शतक्रतुर्धनेशश्च प्राप्तमर्चन्त्यभीरुकम् ४३
एवं विलप्य बहुधा भिन्नपोतो वणिग्यथा
दुःखेन महताविष्टो युधिष्ठिरमपृच्छत ४४
कच्चित्स कदनं कृत्वा परेषां पाण्डुनन्दन
स्वर्गतोऽभिमुखः संख्ये युध्यमानो नरर्षभः ४५
स नूनं बहुभिर्यत्तैर्युध्यमानो नरर्षभैः
असहायः सहायार्थी मामनुध्यातवान्ध्रुवम् ४६
पीड्यमानः शरैर्बालस्तात साध्वभिधाव माम्
इति विप्रलपन्मन्ये नृशंसैर्बहुभिर्हतः ४७
अथ वा मत्प्रसूतश्च स्वस्रीयो माधवस्य च

सुभद्रायां च संभूतो नैवं वक्तुमिहार्हति ४८
वज्रसारमयं नूनं हृदयं सुदृढं मम
अपश्यतो दीर्घबाहुं रक्ताक्षं यन्न दीर्यते ४९
कथं बाले महेष्वासे नृशंसा मर्मभेदिनः
स्वस्रीये वासुदेवस्य मम पुत्रेऽक्षिपञ्शरान् ५०
यो मां नित्यमदीनात्मा प्रत्युद्गम्याभिनन्दति
उपयान्तं रिपून्हत्वा सोऽद्य मां किं न पश्यति ५१
नूनं स पतितः शेते धरण्यां रुधिरोक्षितः
शोभयन्मेदिनीं गात्रैरादित्य इव पातितः ५२
रणे विनिहतं श्रुत्वा शोकार्ता वै विनंक्ष्यति
सुभद्रा वक्ष्यते किं मामभिमन्युमपश्यती
द्रौपदी चैव दुःखार्ते ते च वक्ष्यामि किं न्वहम् ५३
वज्रसारमयं नूनं हृदयं यन्न यास्यति
सहस्रधा वधूं दृष्ट्वा रुदतीं शोककर्शिताम् ५४
हृष्टानां धार्तराष्ट्राणां सिंहनादो मया श्रुतः
युयुत्सुश्चापि कृष्णेन श्रुतो वीरानुपालभन् ५५
अशक्नुवन्तो बीभत्सुं बालं हत्वा महारथाः
किं नदध्वमधर्मज्ञाः पार्थे वै दृश्यतां बलम् ५६
किं तयोर्विप्रियं कृत्वा केशवार्जुनयोर्मृधे
सिंहवन्नदत प्रीताः शोककाल उपस्थिते ५७
आगमिष्यति वः क्षिप्रं फलं पापस्य कर्मणः
अधर्मो हि कृतस्तीव्रः कथं स्यादफलश्चिरम् ५८
इति तान्प्रति भाषन्वै वैश्यापुत्रो महामतिः
अपायाच्छस्त्रमुत्सृज्य कोपदुःखसमन्वितः ५९
किमर्थमेतन्नाख्यातं त्वया कृष्ण रणे मम
अधक्ष्यं तानहं सर्वांस्तदा क्रूरान्महारथान् ६०
निगृह्य वासुदेवस्तं पुत्राधिभिरभिप्लुतम्
मैवमित्यब्रवीत्कृष्णस्तीव्रशोकसमन्वितम् ६१
सर्वेषामेष वै पन्थाः शूराणामनिवर्तिनाम्
क्षत्रियाणां विशेषेण येषां युद्धेन जीविका ६२

एषा वै युध्यमानानां शूराणामनिवर्तिनाम्
विहिता धर्मशास्त्रज्ञैर्गतिर्गतिमतां वर ६३
ध्रुवं युद्धे हि मरणं शूराणामनिवर्तिनाम्
गतः पुण्यकृतां लोकानभिमन्युर्न संशयः ६४
एतच्च सर्ववीराणां काङ्क्षितं भरतर्षभ
संग्रामेऽभिमुखो मृत्युं प्राप्नुयामेति मानद ६५
स च वीरान्रणे हत्वा राजपुत्रान्महाबलान्
वीरैरकाङ्क्षितं मृत्युं संप्राप्तोऽभिमुखो रणे ६६
मा शुचः पुरुषव्याघ्र पूर्वैरेष सनातनः
धर्मकृद्भिः कृतो धर्मः क्षत्रियाणां रणे क्षयः ६७
इमे ते भ्रातरः सर्वे दीना भरतसत्तम
त्वयि शोकसमाविष्टे नृपाश्च सुहृदस्तव ६८
एतांस्त्वं वचसा साम्ना समाश्वासय मानद
विदितं वेदितव्यं ते न शोकं कर्तुमर्हसि ६९
एवमाश्वासितः पार्थः कृष्णेनाद्भुतकर्मणा
ततोऽब्रवीत्तदा भ्रातॄन्सर्वान्पार्थः सगद्गदान् ७०
स दीर्घबाहुः पृथ्वंसो दीर्घराजीवलोचनः
अभिमन्युर्यथा वृत्तः श्रोतुमिच्छाम्यहं तथा ७१
सनागस्यन्दनहयान्द्रक्ष्यध्वं निहतान्मया
संग्रामे सानुबन्धांस्तान्मम पुत्रस्य वैरिणः ७२
कथं च वः कृतास्त्राणां सर्वेषां शस्त्रपाणिनाम्
सौभद्रो निधनं गच्छेद्वज्रिणापि समागतः ७३
यद्येवमहमज्ञास्यमशक्तान्रक्षणे मम
पुत्रस्य पाण्डुपाञ्चालान्मया गुप्तो भवेत्ततः ७४
कथं च वो रथस्थानां शरवर्षाणि मुञ्चताम्
नीतोऽभिमन्युर्निधनं कदर्थीकृत्य वः परैः ७५
अहो वः पौरुषं नास्ति न च वोऽस्ति पराक्रमः
यत्राभिमन्युः समरे पश्यतां वो निपातितः ७६
आत्मानमेव गर्हेयं यदहं वः सुदुर्बलान्
युष्मानाज्ञाय निर्यातो भीरूनकृतनिश्चमान् ७७

आहो स्विद्भूषणार्थाय वर्मशस्त्रायुधानि वः
वाचश्च वक्तुं संसत्सु मम पुत्रमरक्षताम् ७८
एवमुक्त्वा ततो वाक्यं तिष्ठंश्चापवरासिमान्
न स्माशक्यत बीभत्सुः केनचित्प्रसमीक्षितुम् ७९
तमन्तकमिव क्रुद्धं निःश्वसन्तं मुहुर्मुहुः
पुत्रशोकाभिसंतप्तमश्रुपूर्णमुखं तदा ८०
नाभिभाष्टुं शक्नुवन्ति द्रष्टुं वा सुहृदोऽजुनम्
अन्यत्र वासुदेवाद्वाज्येष्ठाद्वा पाण्डुनन्दनात् ८१
सर्वास्ववस्थासु हितावर्जुनस्य मनोनुगौ
बहुमानात्प्रियत्वाच्च तावेनं वक्तुमर्हतः ८२
ततस्तं पुत्रशोकेन भृशं पीडितमानसम्
राजीवलोचनं क्रुद्धं राजा वचनमब्रवीत् ८३
इति श्रीमहाभारते द्रोणपर्वणि पञ्चाशोऽध्यायः ५०

एक पञ्चाशोऽध्यायः

युधिष्ठिर उवाच
त्वयि याते महाबाहो संशप्तकबलं प्रति
प्रयत्नमकरोत्तीव्रमाचार्यो ग्रहणे मम १
व्यूढानीकं वयं द्रोणं वारयामः स्म सर्वशः
प्रतिव्यूह्य रथानीकं यतमानं तथा रणे २
स वार्यमाणो रथिभी रक्षितेन मया तथा
अस्मानपि जघानाशु पीडयन्निशितैः शरैः ३
ते पीड्यमाना द्रोणेन द्रोणानीकं न शक्नुमः
प्रतिवीक्षितुमप्याजौ भेत्तुं तत्कुत एव तु ४
वयं त्वप्रतिमं वीर्ये सर्वे सौभद्रमात्मजम्
उक्तवन्तः स्म ते तात भिन्ध्यनीकमिति प्रभो ५
स तथा चोदितोऽस्माभिः सदश्व इव वीर्यवान्
असह्यमपि तं भारं वोढुमेवोपचक्रमे ६
स तवास्त्रोपदेशेन वीर्येण च समन्वितः
प्राविशत्तद्बलं बालः सुपर्ण इव सागरम् ७

तेऽनुयाता वयं वीरं सात्वतीपुत्रमाहवे
प्रवेष्टुकामास्तेनैव येन स प्राविशच्चमूम् ८
ततः सैन्धवको राजा क्षुद्रस्तात जयद्रथः
वरदानेन रुद्रस्य सर्वान्नः समवारयत् ९
ततो द्रोणः कृपः कर्णो द्रौणिश्च स बृहद्बलः
कृतवर्मा च सौभद्रं षड्रथाः पर्यवारयन् १०
परिवार्य तु तैः सर्वैर्युधि बालो महारथैः
यतमानः परं शक्त्या बहुभिर्विरथीकृतः ११
ततो दौःशासनिः क्षिप्रं तथा तैर्विरथीकृतम्
संशयं परमं प्राप्य दिष्टान्तेनाभ्ययोजयत् १२
स तु हत्वा सहस्राणि द्विपाश्वरथसादिनाम्
राजपुत्रशतं चाग्र्यं वीरांश्चालक्षितान्बहून् १३
बृहद्बलं च राजानं स्वर्गेणाजौ प्रयोज्य ह
ततः परमधर्मात्मा दिष्टान्तमुपजग्मिवान् १४
एतावदेव निर्वृत्तमस्माकं शोकवर्धनम्
स चैवं पुरुषव्याघ्रः स्वर्गलोकमवाप्तवान् १५
सञ्जय उवाच
ततोऽर्जुनो वचः श्रुत्वा धर्मराजेन भाषितम्
हा पुत्र इति निःश्वस्य व्यथितो न्यपतद्भुवि १६
विषण्णवदनाः सर्वे परिगृह्य धनञ्जयम्
नेत्रैरनिमिषैर्दीनाः प्रत्यवेक्षन्परस्परम् १७
प्रतिलभ्य ततः संज्ञां वासविः क्रोधमूर्छितः
कम्पमानो ज्वरेणेव निःश्वसंश्च मुहुर्मुहुः १८
पाणिं पाणौ विनिष्पिष्य श्वसमानोऽश्रुनेत्रवान्
उन्मत्त इव विप्रेक्षन्निदं वचनमब्रवीत् १९
सत्यं वः प्रतिजानामि श्वोऽस्मि हन्ता जयद्रथम्
न चेद्वधभयाद्भीतो धार्तराष्ट्रान्प्रहास्यति २०
न चास्मान्शरणं गच्छेत्कृष्णं वा पुरुषोत्तमम्
भवन्तं वा महाराज श्वोऽस्मि हन्ता जयद्रथम् २१
धार्तराष्ट्रप्रियकरं मयि विस्मृतसौहृदम्

पापं बालवधे हेतुं श्वोऽस्मि हन्ता जयद्रथम् २२
रक्षमाणाश्च तं संख्ये ये मां योत्स्यन्ति केचन
अपि द्रोणकृपौ वीरौ छादयिष्यामि ताञ्शरैः २३
यद्येतदेवं संग्रामे न कुर्यां पुरुषर्षभाः
मा स्म पुण्यकृतां लोकान्प्राप्नुयां शूरसंमतान् २४
ये लोका मातृहन्तॄणां ये चापि पितृघातिनाम्
गुरुदारगामिनां ये च पिशुनानां च ये तथा २५
साधूनसूयतां ये च ये चापि परिवादिनाम्
ये च निक्षेपहर्तॄणां ये च विश्वासघातिनाम् २६
भुक्तपूर्वां स्त्रियं ये च निन्दतामघशंसिनाम्
ब्रह्मघ्नानां च ये लोका ये च गोघातिनामपि २७
पायसं वा यवान्नं वा शाकं कृसरमेव वा
संयावापूपमांसानि ये च लोका वृथाश्नताम्
तानह्नैवाधिगच्छेयं न चेद्धन्यां जयद्रथम् २८
वेदाध्यायिनमत्यर्थं संशितं वा द्विजोत्तमम्
अवमन्यमानो यान्याति वृद्धान्साधूंस्तथा गुरून् २९
स्पृशतां ब्राह्मणं गां च पादेनाग्निं च यां लभेत्
याप्सु श्लेष्म पुरीषं वा मूत्रं वा मुञ्चतां गतिः
तां गच्छेयं गतिं घोरां न चेद्धन्यां जयद्रथम् ३०
नग्नस्य स्नायमानस्य या च वन्ध्यातिथेर्गतिः
उत्कोचिनां मृषोक्तीनां वञ्चकानां च या गतिः
आत्मापहारिणां या च या च मिथ्याभिशंसिनाम् ३१
भृत्यैः संदृश्यमानानां पुत्रदाराश्रितैस्तथा
असंविभज्य क्षुद्राणां या गतिर्मृष्टमश्नताम्
तां गच्छेयं गतिं घोरां न चेद्धन्यां जयद्रथम् ३२
संश्रितं वापि यस्त्यक्त्वा साधुं तद्वचने रतम्
न बिभर्ति नृशंसात्मा निन्दते चोपकारिणम् ३३
अर्हते प्रातिवेश्याय श्राद्धं यो न ददाति च
अनर्हते च यो दद्याद्वृषलीपत्युरेव च ३४
मद्यपो भिन्नमर्यादः कृतघ्नो भ्रातृनिन्दकः

तेषां गतिमियां क्षिप्रं न चेद्धन्यां जयद्रथम् ३५
धर्मादपेता ये चान्ये मया नात्रानुकीर्तिताः
ये चानुकीर्तिताः क्षिप्रं तेषां गतिमवाप्नुयाम्
यदि व्युष्टामिमां रात्रिं श्वो न हन्यां जयद्रथम् ३६
इमां चाप्यपरां भूयः प्रतिज्ञां मे निबोधत
यमस्मिन्नहते पापे सूर्योऽस्तमुपयास्यति
इहैव संप्रवेष्टाहं ज्वलितं जातवेदसम् ३७
असुरसुरमनुष्याः पक्षिणो वोरगा वा पितृरजनिचरा वा ब्रह्मदेवर्षयो वा
चरमचरमपीदं यत्परं चापि तस्मात्तदपि मम रिपुं तं रक्षितुं नैव शक्ताः ३८
यदि विशति रसातलं तदग्र्यं वियदपि देवपुरं दितेः पुरं वा
तदपि शरशतैरहं प्रभाते भृशमभिपत्य रिपोः शिरोऽभिहर्ता ३९
एवमुक्त्वा विचिक्षेप गाण्डीवं सव्यदक्षिणम्
तस्य शब्दमतिक्रम्य धनुःशब्दोऽस्पृशद्दिवम् ४०
अर्जुनेन प्रतिज्ञाते पाञ्चजन्यं जनार्दनः
प्रदध्मौ तत्र संक्रुद्धो देवदत्तं धनंजयः ४१
स पाञ्चजन्योऽच्युतवक्त्रवायुना भृशं सुपूर्णोदरनिःसृतध्वनिः
जगत्सपातालवियद्दिगीश्वरं प्रकम्पयामास युगात्यये यथा ४२
ततो वादित्रघोषाश्च प्रादुरासन्समन्ततः
सिंहनादाश्च पाण्डूनां प्रतिज्ञाते महात्मना ४३

इति श्रीमहाभारते द्रोणपर्वणि एकपञ्चाशोऽध्यायः ५१

समाप्तमभिमन्युवधपर्व

## द्विपञ्चाशोऽध्यायः

सञ्जय उवाच
श्रुत्वा तु तं महाशब्दं पाण्डूनां पुत्रगृद्धिनाम्
चारैः प्रवेदिते तत्र समुत्थाय जयद्रथः १
शोकसंमूढहृदयो दुःखेनाभिहतो भृशम्
मज्जमान इवागाधे विपुले शोकसागरे २
जगाम समितिं राज्ञां सैन्धवो विमृशन्बहु
स तेषां नरदेवानां सकाशे परिदेवयन् ३

अभिमन्योः पितुर्भीतः सव्रीडो वाक्यमब्रवीत्
योऽसौ पाण्डोः किल क्षेत्रे जातः शक्रेण कामिना ४
स निनीषति दुर्बुद्धिर्मां किलैकं यमक्षयम्
तत्स्वस्ति वोऽस्तु यास्यामि स्वगृहं जीवितेप्सया ५
अथ वा स्थ प्रतिबलास्त्रातुं मां क्षत्रियर्षभाः
पार्थेन प्रार्थितं वीरास्ते ददन्तु ममाभयम् ६
द्रोणदुर्योधनकृपाः कर्णमद्रेशबाह्लिकाः
दुःशासनादयः शक्तास्त्रातुमप्यन्तकार्दितम् ७
किमङ्ग पुनरेकेन फल्गुनेन जिघांसता
न त्रायेयुर्भवन्तो मां समस्ताः पतयः क्षितेः ८
प्रहर्षं पाण्डवेयानां श्रुत्वा मम महद्भयम्
सीदन्तीव च मेऽङ्गानि मुमूर्षोरिव पार्थिवाः ९
वधो नूनं प्रतिज्ञातो मम गाण्डीवधन्वना
तथा हि हृष्टाः क्रोशन्ति शोककालेऽपि पाण्डवाः १०
न देवा न च गन्धर्वा नासुरोरगराक्षसाः
उत्सहन्तेऽन्यथा कर्तुं कुत एव नराधिपाः ११
तस्मान्मामनुजानीत भद्रं वोऽस्तु नरर्षभाः
अदर्शनं गमिष्यामि न मां द्रक्ष्यन्ति पाण्डवाः १२
एवं विलपमानं तं भयाद्व्याकुलचेतसम्
आत्मकार्यगरीयस्त्वाद्राजा दुर्योधनोऽब्रवीत् १३
न भेतव्यं नरव्याघ्र को हि त्वा पुरुषर्षभ
मध्ये क्षत्रियवीराणां तिष्ठन्तं प्रार्थयेद्युधि १४
अहं वैकर्तनः कर्णश्चित्रसेनो विविंशतिः
भूरिश्रवाः शलः शल्यो वृषसेनो दुरासदः १५
पुरुमित्रो जयो भोजः काम्बोजश्च सुदक्षिणः
सत्यव्रतो महाबाहुर्विकर्णो दुर्मुखः सहः १६
दुःशासनः सुबाहुश्च कलिङ्गश्चाप्युदायुधः
विन्दानुविन्दावावन्त्यौ द्रोणो द्रोणिः ससौबलः १७
त्वं चापि रथिनां श्रेष्ठः स्वयं शूरोऽमितद्युतिः
स कथं पाण्डवेयेभ्यो भयं पश्यसि सैन्धव १८

अक्षौहिण्यो दशैका च मदीयास्तव रक्षणे
यत्ता योत्स्यन्ति मा भैस्त्वं सैन्धव व्येतु ते भयम् १९
एवमाश्वासितो राजन्पुत्रेण तव सैन्धवः
दुर्योधनेन सहितो द्रोणं रात्रावुपागमत् २०
उपसंग्रहणं कृत्वा द्रोणाय स विशां पते
उपोपविश्य प्रणतः पर्यपृच्छदिदं तदा २१
निमित्ते दूरपातित्वे लघुत्वे दृढवेधने
मम ब्रवीतु भगवान्विशेषं फल्गुनस्य च २२
विद्याविशेषमिच्छामि ज्ञातुमाचार्य तत्त्वतः
ममार्जुनस्य च विभो यथातत्त्वं प्रचक्ष्व मे २३
द्रोण उवाच
सममाचार्यकं तात तव चैवार्जुनस्य च
योगाद्दुःखोचितत्वाच्च तस्मात्त्वत्तोऽधिकोऽजुनः २४
न तु ते युधि संत्रासः कार्यः पार्थात्कथञ्चन
अहं हि रक्षिता तात भयात्त्वां नात्र संशयः २५
न हि मद्बाहुगुप्तस्य प्रभवन्त्यमरा अपि
व्यूहिष्यामि च तं व्यूहं यं पार्थो न तरिष्यति २६
तस्माद्युध्यस्व मा भैस्त्वं स्वधर्ममनुपालय
पितृपैतामहं मार्गनुयाहि नराधिप २७
अधीत्य विधिवद्वेदानग्नयः सुहुतास्त्वया
इष्टं च बहुभिर्यज्ञैर्न ते मृत्युभयाद्भयम् २८
दुर्लभं मानुषैर्मन्दैर्महाभाग्यमवाप्य तु
भुजवीर्यार्जिताँल्लोकान्दिव्यान्प्राप्स्यस्यनुत्तमान् २९
कुरवः पाण्डवाश्चैव वृष्णयोऽन्ये च मानवाः
अहं च सह पुत्रेण अध्रुवा इति चिन्त्यताम् ३०
पर्यायेण वयं सर्वे कालेन बलिना हताः
परलोकं गमिष्यामः स्वैः स्वैः कर्मभिरन्विताः ३१
तपस्तप्त्वा तु याँल्लोकान्प्राप्नुवन्ति तपस्विनः
क्षत्रधर्माश्रिताः शूराः क्षत्रियाः प्राप्नुवन्ति तान् ३२
सञ्जय उवाच

एवमाश्वासितो राजन्भारद्वाजेन सैन्धवः
अपानुदद्भयं पार्थाद्युद्धाय च मनो दधे ३३
इति श्रीमहाभारते द्रोणपर्वणि द्विपञ्चाशोऽध्यायः ५२

त्रिपञ्चाशोऽध्यायः

सञ्जय उवाच
प्रतिज्ञाते तु पार्थेन सिन्धुराजवधे तदा
वासुदेवो महाबाहुर्धनञ्जयमभाषत १
भ्रातॄणां मतमाज्ञाय त्वया वाचा प्रतिश्रुतम्
सैन्धवं श्वोऽस्मि हन्तेति तत्साहसतमं कृतम् २
असंमन्त्र्य मया सार्धमतिभारोऽयमुद्यतः
कथं नु सर्वलोकस्य नावहास्या भवेमहि ३
धार्तराष्ट्रस्य शिबिरे मया प्रणिहिताश्चराः
त इमे शीघ्रमागम्य प्रवृत्तिं वेदयन्ति नः ४
त्वया वै सम्प्रतिज्ञाते सिन्धुराजवधे तदा
सिंहनादः सवादित्रः सुमहानिह तैः श्रुतः ५
तेन शब्देन वित्रस्ता धार्तराष्ट्राः ससैन्धवाः
नाकस्मात्सिंहनादोऽयमिति मत्वा व्यवस्थिताः ६
सुमहाञ्शब्दसम्पातः कौरवाणां महाभुज
आसीन्नागाश्वपत्तीनां रथघोषश्च भैरवः ७
अभिमन्युवधं श्रुत्वा ध्रुवमार्तो धनञ्जयः
रात्रौ निर्यास्यति क्रोधादिति मत्वा व्यवस्थिताः ८
तैर्यतद्भिरियं सत्या श्रुता सत्यवतस्तव
प्रतिज्ञा सिन्धुराजस्य वधे राजीवलोचन ९
ततो विमनसः सर्वे त्रस्ताः क्षुद्रमृगा इव
आसन्सुयोधनामात्याः स च राजा जयद्रथः १०
अथोत्थाय सहामात्यैर्दीनः शिबिरमात्मनः
आयात्सौवीरसिन्धूनामीश्वरो भृशदुःखितः ११
स मन्त्रकाले संमन्त्र्य सर्वा नैःश्रेयसीः क्रियाः
सुयोधनमिदं वाक्यमब्रवीद्राजसंसदि १२

मामसौ पुत्रहन्तेति श्वोऽभियाता धनञ्जयः
प्रतिज्ञातो हि सेनाया मध्ये तेन वधो मम १३
तां न देवा न गन्धर्वा नासुरोरगराक्षसाः
उत्सहन्तेऽन्यथाकर्तुं प्रतिज्ञां सव्यसाचिनः १४
ते मां रक्षत संग्रामे मा वो मूर्ध्नि धनञ्जयः
पदं कृत्वाप्नुयाल्लक्ष्यं तस्मादत्र विधीयताम् १५
अथ रक्षा न मे संख्ये क्रियते कुरुनन्दन
अनुजानीहि मां राजन्गमिष्यामि गृहान्प्रति १६
एवमुक्तस्त्ववाक्शीर्षो विमनाः स सुयोधनः
श्रुत्वाभिशप्तवन्तं त्वां ध्यानमेवान्वपद्यत १७
तमार्तमभिसम्प्रेक्ष्य राजा किल स सैन्धवः
मृदु चात्महितं चैव सापेक्षमिदमुक्तवान् १८
नाहं पश्यामि भवतां तथावीर्यं धनुर्धरम्
योऽजुनस्यास्त्रमस्त्रेण प्रतिहन्यान्महाहवे १९
वासुदेवसहायस्य गाण्डीवं धुन्वतो धनुः
कोऽजुनस्याग्रतस्तिष्ठेत्साक्षादपि शतक्रतुः २०
महेश्वरोऽपि पार्थेन श्रूयते योधितः पुरा
पदातिना महातेजा गिरौ हिमवति प्रभुः २१
दानवानां सहस्राणि हिरण्यपुरवासिनाम्
जघानैकरथेनैव देवराजप्रचोदितः २२
समायुक्तो हि कौन्तेयो वासुदेवेन धीमता
सामरानपि लोकांस्त्रीन्निहन्यादिति मे मतिः २३
सोऽहमिच्छाम्यनुज्ञातुं रक्षितुं वा महात्मना
द्रोणेन सहपुत्रेण वीरेण यदि मन्यसे २४
स राज्ञा स्वयमाचार्यो भृशमाक्रन्दितोऽजुन
संविधानं च विहितं रथाश्च किल सज्जिताः २५
कर्णो भूरिश्रवा द्रौणिर्वृषसेनश्च दुर्जयः
कृपश्च मद्रराजश्च षडेतेऽस्य पुरोगमाः २६
शकटः पद्मपश्चार्धो व्यूहो द्रोणेन कल्पितः
पद्मकर्णिकमध्यस्थः सूचीपाशे जयद्रथः

स्थास्यते रक्षितो वीरैः सिन्धुराडयुद्धदुर्मदैः २७
धनुष्यस्त्रे च वीर्ये च प्राणे चैव तथोरसि
अविषह्यतमा ह्येते निश्चिताः पार्थ षड्रथाः
एतानजित्वा सगणान्नैव प्राप्यो जयद्रथः २८
तेषामेकैकशो वीर्यं षरणां त्वमनुचिन्तय
सहिता हि नरव्याघ्रा न शक्या जेतुमञ्जसा २९
भूयश्चचिन्तयिष्यामि नीतिमात्महिताय वै
मन्त्रज्ञैः सचिवैः सार्धं सुहृद्भिः कार्यसिद्धये ३०
अर्जुन उवाच
षड्रथान्धार्तराष्ट्रस्य मन्यसे यान्बलाधिकान्
तेषां वीर्यं ममार्धेन न तुल्यमिति लक्षये ३१
अस्त्रमस्त्रेण सर्वेषामेतेषां मधुसूदन
मया द्रक्ष्यसि निर्भिन्नं जयद्रथवधैषिणा ३२
द्रोणस्य मिषतः सोऽह सगणस्य विलप्यतः
मूर्धानं सिन्धुराजस्य पातयिष्यामि भूतले ३३
यदि साध्याश्च रुद्राश्च वसवश्च सहाश्विनः
मरुतश्च सहेन्द्रेण विश्वेदेवास्तथासुराः ३४
पितरः सहगन्धर्वाः सुपर्णाः सागराद्रयः
द्यौर्वियत्पृथिवी चेयं दिशश्च सदिगीश्वराः ३५
ग्राम्यारण्यानि भूतानि स्थावराणि चराणि च
त्रातारः सिन्धुराजस्य भवन्ति मधुसूदन ३६
तथापि बाणैर्निहतं श्वो द्रष्टासि रणे मया
सत्येन ते शपे कृष्ण तथैवायुधमालभे ३७
यश्च गोप्ता महेष्वासस्तस्य पापस्य दुर्मतेः
तमेव प्रथमं द्रोणमभियास्यामि केशव ३८
तस्मिन्द्यूतमिदं वद्धं मन्यते स्म सुयोधनः
तस्मात्तस्यैव सेनाग्रं भित्त्वा यास्यामि सैन्धवम् ३९
द्रष्टासि श्वो महेष्वासान्नाराचैस्तिग्मतेजनैः
शृङ्गाणीव गिरेर्वज्रैर्दार्यमाणान्मया युधि ४०
नरनागाश्वदेहेभ्यो विस्रविष्यति शोणितम्

पतद्भ्यः पतितेभ्यश्च विभिन्नेभ्यः शितैः शरैः ४१
गाण्डीवप्रेषिता बाणा मनोनिलसमा जवे
नृनागाश्वान्विदेहासून्कर्तारश्च सहस्रशः ४२
यमात्कुबेराद्वरुणाद्रुद्रादिन्द्राच्च यन्मया
उपात्तमस्त्रं घोरं वै तद्द्रष्टारो नरा युधि ४३
ब्राह्मेणास्त्रेण चास्त्राणि हन्यमानानि संयुगे
मया द्रष्टासि सर्वेषां सैन्धवस्याभिरक्षिणाम् ४४
शरवेगसमुत्कृत्तै राज्ञां केशव मूर्धभिः
आस्तीर्यमाणां पृथिवीं द्रष्टासि श्वो मया युधि ४५
क्रव्यादांस्तर्पयिष्यामि द्रावयिष्यामि शात्रवान्
सुहृदो नन्दयिष्यामि पातयिष्यामि सैन्धवम् ४६
बह्वागस्कृत्कुसंबन्धी पापदेशसमुद्भवः
मया सैन्धवको राजा हतः स्वाञ्शोचयिष्यति ४७
सर्वक्षीरान्नभोक्तारः पापाचारा रणाजिरे
मया सराजका बाणैर्नुन्ना नंन्दयन्ति सैन्धवाः ४८
तथा प्रभाते कर्तास्मि यथा कृष्ण सुयोधनः
नान्यं धनुर्धरं लोके मंस्यते मत्समं युधि ४९
गाण्डीवं च धनुर्दिव्यं योद्धा चाहं नरर्षभ
त्वं च यन्ता हृषीकेश किं नु स्यादजितं मया ५०
यथा हि लक्ष्म चन्द्रे वै समुद्रे च यथा जलम्
एवमेतां प्रतिज्ञां मे सत्यां विद्धि जनार्दन ५१
मावमंस्था ममास्त्राणि मावमंस्था धनुर्दृढम्
मावमंस्था बलं बाह्वोर्मावमंस्था धनञ्जयम् ५२
यथा हि यात्वा संग्रामे न जीये विजयामि च
तेन सत्येन संग्रामे हतं विद्धि जयद्रथम् ५३
ध्रुवं वै ब्राह्मणे सत्यं ध्रुवा साधुषु संनतिः
श्रीर्ध्रुवा चापि दक्षेषु ध्रुवो नारायणे जयः ५४
सञ्जय उवाच
एवमुक्त्वा हृषीकेशं स्वयमात्मानमात्मना
संदिदेशार्जुनो नर्दन्वासविः केशवं प्रभुम् ५५

यथा प्रभातां रजनीं कल्पितः स्याद्रथो मम
तथा कार्यं त्वया कृष्ण कार्यं हि महदुद्यतम् ५६
इति श्रीमहाभारते द्रोणपर्वणि त्रिपञ्चाशोऽध्यायः ५३

## चतुःपञ्चाशोऽध्यायः

सञ्जय उवाच
तां निशां दुःखशोकार्तौ श्वसन्ताविव चोरगौ
निद्रां नैवोपलेभाते वासुदेवधनञ्जयौ १
नरनारायणौ क्रुद्धौ ज्ञात्वा देवाः सवासवाः
व्यथिताश्चिन्तयामासुः किं स्विदेतद्भविष्यति २
ववुश्च दारुणा वाता रूक्षा घोराभिशंसिनः
सकबन्धस्तथादित्ये परिघः समदृश्यत ३
शुष्काशन्यश्च निष्पेतुः सनिर्घाताः सविद्युतः
चचाल चापि पृथिवी सशैलवनकानना ४
चुक्षुभुश्च महाराज सागरा मकरालयाः
प्रतिस्रोतःप्रवृत्ताश्च तथा गन्तुं समुद्रगाः ५
रथाश्वनरनागानां प्रवृत्तमधरोत्तरम्
क्रव्यादानां प्रमोदार्थं यमराष्ट्रविवृद्धये ६
वाहनानि शकृन्मूत्रे मुमुचू रुरुदुश्च ह
तान्दृष्ट्वा दारुणान्सर्वानुत्पाताँल्लोमहर्षणान् ७
सर्वे ते व्यथिताः सैन्यास्त्वदीया भरतर्षभ
श्रुत्वा महाबलस्योग्रां प्रतिज्ञां सव्यसाचिनः ८
अथ कृष्णं महाबाहुरब्रवीत्पाकशासनिः
आश्वासय सुभद्रां त्वं भगिनीं स्नुषया सह ९
स्नुषा श्वश्र्वावनघायस्ते विशोके कुरु माधव
साम्ना सत्येन युक्तेन वचसाश्वासय प्रभो १०
ततोऽर्जुनगृहं गत्वा वासुदेवः सुदुर्मनाः
भगिनीं पुत्रशोकार्तामाश्वासयत दुःखिताम् ११
मा शोकं कुरु वार्ष्णेयि कुमारं प्रति सस्नुषा
सर्वेषां प्राणिनां भीरु निष्ठैषा कालनिर्मिता १२

कुले जातस्य वीरस्य क्षत्रियस्य विशेषतः
सदृशं मरणं ह्येतत्तव पुत्रस्य मा शुचः १३
दिष्ट्या महारथो वीरः पितुस्तुल्यपराक्रमः
क्षात्रेण विधिना प्राप्तो वीराभिलषितां गतिम् १४
जित्वा सुबहुशः शत्रून्प्रेषयित्वा च मृत्यवे
गतः पुण्यकृतां लोकान्सर्वकामदुहोऽक्षयान् १५
तपसा ब्रह्मचर्येण श्रुतेन प्रज्ञयापि च
सन्तो यां गतिमिच्छन्ति प्राप्तस्तां तव पुत्रकः १६
वीरसूर्वीरपत्नी त्वं वीरश्वशुरबान्धवा
मा शुचस्तनयं भद्रे गतः स परमां गतिम् १७
प्राप्स्यते चाप्यसौ क्षुद्रः सैन्धवो बालघातकः
अस्यावलेपस्य फलं ससुहृद्गणबान्धवः १८
व्युष्टायां तु वरारोहे रजन्यां पापकर्मकृत्
न हि मोक्ष्यति पार्थात्स प्रविष्टोऽप्यमरावतीम् १९
श्वः शिरः श्रोष्यसे तस्य सैन्धवस्य रणे हृतम्
समन्तपञ्चकाद्बाह्यं विशोका भव मा रुदः २०
क्षत्रधर्मं पुरस्कृत्य गतः शूरः सतां गतिम्
यां वयं प्राप्नुयामेह ये चान्ये शस्त्रजीविनः २१
व्यूढोरस्को महाबाहुरनिवर्ती वरप्रणुत्
गतस्तव वरारोहे पुत्रः स्वर्गं ज्वरं जहि २२
अनु जातश्च पितरं मातृपक्षं च वीर्यवान्
सहस्रशो रिपून्हत्वा हतः शूरो महारथः २३
आश्वासय स्नुषां राज्ञि मा शुचः क्षत्रिये भृशम्
श्वः प्रियं सुमहच्छ्रुत्वा विशोका भव नन्दिनि २४
यत्पार्थेन प्रतिज्ञातं तत्तथा न तदन्यथा
चिकीर्षितं हि ते भर्तुर्न भवेज्जातु निष्फलम् २५
यदि च मनुजपन्नगाः पिशाचा रजनिचराः पतगाः सुरासुराश्च
रणगतमभियान्ति सिन्धुराजं न स भविता सह तैरपि प्रभाते २६
इति श्रीमहाभारते द्रोणपर्वणि चतुःपञ्चाशोऽध्यायः ५४

पञ्चपञ्चाशोऽध्यायः

सञ्जय उवाच
एतच्छ्रुत्वा वचस्तस्य केशवस्य महात्मनः
सुभद्रा पुत्रशोकार्ता विललाप सुदुःखिता १
हा पुत्र मम मन्दायाः कथं संयुगमेत्य ह
निधनं प्राप्तवांस्तात पितृतुल्यपराक्रमः २
कथमिन्दीवरश्यामं सुदंष्ट्रं चारुलोचनम्
मुखं ते दृश्यते वत्स गुण्ठितं रणरेणुना ३
नूनं शूरं निपतितं त्वां पश्यन्त्यनिवर्तिनम्
सुशिरोग्रीवबाह्वंसं व्यूढोरस्कं निरूदरम् ४
चारूपचितसर्वाङ्गं स्वक्षं शस्त्रक्षताचितम्
भूतानि त्वा निरीक्षन्ते नूनं चन्द्रमिवोदितम् ५
शयनीयं पुरा यस्य स्पर्ध्यास्तरणसंवृतम्
भूमावद्य कथं शेषे विप्रविद्धः सुखोचितः ६
योऽन्वास्यत पुरा वीरो वरस्त्रीभिर्महाभुजः
कथमन्वास्यते सोऽद्य शिवाभिः पतितो मृधे ७
योऽस्तूयत पुरा हृष्टैः सूतमागधबन्दिभिः
सोऽद्य क्रव्याद्गणैर्घोरैर्विनदद्भिरुपास्यते ८
पाण्डवेषु च नाथेषु वृष्णिवीरेषु चाभिभो
पाञ्चालेषु च वीरेषु हतः केनास्यनाथवत् ९
अतृप्तदर्शना पुत्र दर्शनस्य तवानघ
मन्दभाग्या गमिष्यामि व्यक्तमद्य यमक्षयम् १०
विशालाक्षं सुकेशान्तं चारुवाक्यं सुगन्धि च
तव पुत्र कदा भूयो मुखं द्रक्ष्यामि निर्व्रणम् ११
धिग्बलं भीमसेनस्य धिक्पार्थस्य धनुष्मताम्
धिग्वीर्यं वृष्णिवीराणां पाञ्चालानां च धिग्बलम् १२
धिक्केकयांस्तथा चेदीन्मत्स्यांश्चैवाथ सृञ्जयान्
ये त्वा रणे गतं वीरं न जानन्ति निपातितम् १३
अद्य पश्यामि पृथिवीं शून्यामिव हतत्विषम्
अभिमन्युमपश्यन्ती शोकव्याकुललोचना १४

स्वस्त्रीयं वासुदेवस्य पुत्रं गाराडीवधन्वनः
कथं त्वा विरथं वीरं द्रक्ष्याम्यन्यैर्निपातितम् १५
हा वीर दृष्टो नष्टश्च धनं स्वप्न इवासि मे
अहो ह्यनित्यं मानुष्यं जलबुद्बुदचञ्चलम् १६
इमां ते तरुणीं भार्यां त्वदाधिभिरभिप्लुताम्
कथं संधारयिष्यामि विवत्सामिव धेनुकाम् १७
अहो ह्यकाले प्रस्थानं कृतवानसि पुत्रक
विहाय फलकाले मां सुगृद्धां तव दर्शने १८
नूनं गतिः कृतान्तस्य प्राज्ञैरपि सुदुर्विदा
यत्र त्वं केशवे नाथे संग्रामेऽनाथवद्धतः १९
यज्वनां दानशीलानां ब्राह्मणानां कृतात्मनाम्
चरितब्रह्मचर्याणां पुरायतीर्थावगाहिनाम् २०
कृतज्ञानां वदान्यानां गुरुशुश्रूषिणामपि
सहस्रदक्षिणानां च या गतिस्तामवाप्नुहि २१
या गतिर्युध्यमानानां शूराणामनिवर्तिनाम्
हत्वारीन्निहतानां च संग्रामे तां गतिं व्रज २२
गोसहस्रप्रदातॄणां क्रतुदानां च या गतिः
नैवेशिकं चाभिमतं ददतां या गतिः शुभा २३
ब्रह्मचर्येण यां यान्ति मुनयः संशितव्रताः
एकपत्न्यश्च यां यान्ति तां गतिं व्रज पुत्रक २४
राज्ञां सुचरितैर्या च गतिर्भवति शाश्वती
चतुराश्रमिणां पुरायैः पावितानां सुरक्षितैः २५
दीनानुकम्पिनां या च सततं संविभागिनाम्
पैशुन्याच्च निवृत्तानां तां गतिं व्रज पुत्रक २६
व्रतिनां धर्म शीलानां गुरुशुश्रूषिणामपि
अमोघातिथिनां या च तां गतिं व्रज पुत्रक २७
ऋतुकाले स्वकां पत्नीं गच्छतां या मनस्विनाम्
न चान्यदारसेवीनां तां गतिं व्रज पुत्रक २८
साम्ना ये सर्वभूतानि गच्छन्ति गतमत्सराः
नारुन्तुदानां क्षमिणां या गतिस्तामवाप्नुहि २९

मधुमांसनिवृत्तानां मदाद्दम्भात्तथानृतात्
परोपतापत्यक्तानां तां गतिं व्रज पुत्रक ३०
ह्रीमन्तः सर्वशास्त्रज्ञा ज्ञानतृप्ता जितेन्द्रियाः
यां गतिं साधवो यान्ति तां गतिं व्रज पुत्रक ३१
एवं विलपतीं दीनां सुभद्रां शोककर्शिताम्
अभ्यपद्यत पाञ्चाली वैराटीसहिता तदा ३२
ताः प्रकामं रुदित्वा च विलप्य च सुदुःखिताः
उन्मत्तवत्तदा राजन्विसंज्ञा न्यपतन्क्षितौ ३३
सोपचारस्तु कृष्णस्तां दुःखितां भृशदुःखितः
सिक्त्वाम्भसा समाश्वास्य तत्तदुक्त्वा हितं वचः ३४
विसंज्ञकल्पां रुदतीमपविद्धां प्रवेपतीम्
भगिनीं पुण्डरीकाक्ष इदं वचनमब्रवीत् ३५
सुभद्रे मा शुचः पुत्रं पाञ्चाल्याश्वासयोत्तराम्
गतोऽभिमन्युः प्रथितां गतिं क्षत्रियपुङ्गवः ३६
ये चान्येऽपि कुले सन्ति पुरुषा नो वरानने
सर्वे ते वै गतिं यान्तु अभिमन्योर्यशस्विनः ३७
कुर्याम तद्वयं कर्म क्रियासुः सुहृदश्च नः
कृतवान्यादृगद्यैकस्तव पुत्रो महारथः ३८
एवमाश्वास्य भगिनीं द्रौपदीमपि चोत्तराम्
पार्थस्यैव महाबाहुः पार्श्वमागादरिंदमः ३९
ततोऽभ्यनुज्ञाय नृपान्कृष्णो बन्धूंस्तथाभिभूः
विवेशान्तःपुरं राजंस्तेऽन्ये जग्मुर्यथालयम् ४०
इति श्रीमहाभारते द्रोणपर्वणि पञ्चपञ्चाशोऽध्यायः ५५

## षट्पञ्चाशोऽध्यायः

सञ्जय उवाच
ततोऽर्जुनस्य भवनं प्रविश्याप्रतिमं विभुः
स्पृष्ट्वाम्भः पुण्डरीकाक्षः स्थण्डिले शुभलक्षणे
संतस्तार शुभां शय्यां दर्भैर्वैडूर्यसंनिभैः १
ततो माल्येन विधिवल्लाजैर्गन्धैः सुमङ्गलैः

अलञ्चकार तां शय्यां परिवार्यायुधोत्तमैः २
ततः स्पृष्टोदकं पार्थं विनीताः परिचारकाः
दर्शयां नैत्यकं चक्रुर्नैशं त्रैयम्बकं बलिम् ३
ततः प्रीतमनाः पार्थो गन्धैर्माल्यैश्च माधवम्
अलंकृत्योपहारं तं नैशमस्मै न्यवेदयत् ४
स्मयमानस्तु गोविन्दः फल्गुनं प्रत्यभाषत
सुप्यतां पार्थ भद्रं ते कल्याणाय व्रजाम्यहम् ५
स्थापयित्वा ततो द्वाःस्थान्गोप्तृंश्चात्तायुधान्नरान्
दारुकानुगतः श्रीमान्विवेश शिबिरं स्वकम्
शिश्ये च शयने शुभ्रे बहुकृत्यं विचिन्तयन् ६
न पाण्डवानां शिबिरे कश्चित्सुष्वाप तां निशाम्
प्रजागरः सर्वजनमाविवेश विशां पते ७
पुत्रशोकाभिभूतेन प्रतिज्ञातो महात्मना
सहसा सिन्धु राजस्य वधो गाण्डीवधन्वना ८
तत्कथं नु महाबाहुर्वासविः परवीरहा
प्रतिज्ञां सफलां कुर्यादिति ते समचिन्तयन् ९
कष्टं हीदं व्यवसितं पाण्डवेन महात्मना
पुत्रशोकाभितप्तेन प्रतिज्ञा महती कृता १०
भ्रातरश्चापि विक्रान्ता बहुलानि बलानि च
धृतराष्ट्रस्य पुत्रेण सर्वं तस्मै निवेदितम् ११
स हत्वा सैन्धवं संख्ये पुनरेतु धनञ्जयः
जित्वा रिपुगणांश्चैव पारयत्वर्जुनो व्रतम् १२
अहत्वा सिन्धुराजं हि धूमकेतुं प्रवेक्ष्यति
न ह्येतदनृतं कर्तुमर्हः पार्थो धनञ्जयः १३
धर्मपुत्रः कथं राजा भविष्यति मृतेऽजुने
तस्मिन्हि विजयः कृत्स्नः पाण्डवेन समाहितः १४
यदि नः सुकृतं किञ्चिद्यदि दत्तं हुतं यदि
फलेन तस्य सर्वस्य सव्यसाची जयत्वरीन् १५
एवं कथयतां तेषां जयमाशंशतां प्रभो
कृच्छ्रेण महता राजन्रजनी व्यत्यवर्तत १६

तस्यां रजन्यां मध्ये तु प्रतिबुद्धो जनार्दनः
स्मृत्वा प्रतिज्ञां पार्थस्य दारुकं प्रत्यभाषत १७
अर्जुनेन प्रतिज्ञातमार्तेन हतबन्धुना
जयद्रथं हनिष्यामि श्वोभूत इति दारुक १८
तत्तु दुर्योधनः श्रुत्वा मन्त्रिभिर्मन्त्रयिष्यति
यथा जयद्रथं पार्थो न हन्यादिति संयुगे १९
अक्षौहिण्यो हि ताः सर्वा रक्षिष्यन्ति जयद्रथम्
द्रोणश्च सह पुत्रेण सर्वास्त्रविधिपारगः २०
एको वीरः सहस्राक्षो दैत्यदानवमर्दिता
सोऽपि तं नोत्सहेताजौ हन्तुं द्रोणेन रक्षितम् २१
सोऽह श्वस्तत्करिष्यामि यथा कुन्तीसुतोऽजुनः
अप्राप्तेऽस्त दिनकरे हनिष्यति जयद्रथम् २२
न हि दारा न मित्राणि ज्ञातयो न च बान्धवाः
कश्चिन्नान्य प्रियतरः कुन्तीपुत्रान्ममार्जुनात् २३
अनर्जुनमिमं लोकं मुहूर्तमपि दारुक
उदीक्षितुं न शक्तोऽह भविता न च तत्तथा २४
अहं ध्वजिन्यः शत्रूणां सहयाः सरथद्विपाः
अर्जुनार्थे हनिष्यामि सकर्णाः ससुयोधनाः २५
श्वो निरीक्षन्तु मे वीर्यं त्रयो लोका महाहवे
धनञ्जयार्थं समरे पराक्रान्तस्य दारुक २६
श्वो नरेन्द्रसहस्राणि राजपुत्रशतानि च
साश्वद्विपरथान्याजौ विद्रविष्यन्ति दारुक २७
श्वस्तां चक्रप्रमथितां द्रक्ष्यसे नृपवाहिनीम्
मया क्रुद्धेन समरे पाण्डवार्थे निपातिताम् २८
श्वः सदेवाः सगन्धर्वाः पिशाचोरगराक्षसाः
ज्ञास्यन्ति लोकाः सर्वे मां सुहृदं सव्यसाचिनः २९
यस्तं द्वेष्टि स मां द्वेष्टि यस्तमनु स मामनु
इति सङ्कल्प्यतां बुद्ध्या शरीरार्धं ममार्जुनः ३०
यथा त्वमप्रभातायामस्यां निशि रथोत्तमम्
कल्पयित्वा यथाशास्त्रमादाय व्रतसंयतः ३१

गदां कौमोदकीं दिव्यां शक्तिं चक्रं धनुः शरान्
आरोप्य वै रथे सूत सर्वोपकरणानि च ३२
स्थानं हि कल्पयित्वा च रथोपस्थे ध्वजस्य मे
वैनतेयस्य वीरस्य समरे रथशोभिनः ३३
छत्रं जाम्बूनदैर्जालैरर्कज्वलनसंनिभैः
विश्वकर्मकृतैर्दिव्यैरश्वानपि च भूषितान् ३४
बलाहकं मेघपुष्पं सैन्यं सुग्रीवमेव च
युक्त्वा वाजिवरान्यत्तः कवची तिष्ठ दारुक ३५
पाञ्चजन्यस्य निर्घोषमार्षभेणैव पूरितम्
श्रुत्वा तु भैरवं नादमुपयाया जवेन माम् ३६
एकाह्नाहममर्षं च सर्वदुःखानि चैव ह
भ्रातुः पितृष्वसेयस्य व्यपनेष्यामि दारुक ३७
सर्वोपायैर्यतिष्यामि यथा बीभत्सुराहवे
पश्यतां धार्तराष्ट्राणां हनिष्यति जयद्रथम् ३८
यस्य यस्य च बीभत्सुर्वधे यत्नं करिष्यति
आशंसे सारथे तत्र भवितास्य ध्रुवो जयः ३९
दारुक उवाच
जय एव ध्रुवस्तस्य कुत एव पराजयः
यस्य त्वं पुरुषव्याघ्र सारथ्यमुपजग्मिवान् ४०
एवं चैतत्करिष्यामि यथा मामनुशाससि
सुप्रभातामिमां रात्रिं जयाय विजयस्य हि ४१
इति श्रीमहाभारते द्रोणपर्वणि षट्पञ्चाशोऽध्यायः ५६

## सप्तपञ्चाशोऽध्यायः

सञ्जय उवाच
कुन्तीपुत्रस्तु तं मन्त्रं स्मरन्नेव धनञ्जयः
प्रतिज्ञामात्मनो रक्षन्मुमोहाचिन्त्यविक्रमः १
तं तु शोकेन संतप्तं स्वप्ने कपिवरध्वजम्
आससाद महातेजा ध्यायन्तं गरुडध्वजः २
प्रत्युत्थानं तु कृष्णस्य सर्वावस्थं धनञ्जयः

नालोपयत धर्मात्मा भक्त्या प्रेम्णा च सर्वदा ३
प्रत्युत्थाय च गोविन्दं स तस्मायासनं ददौ
न चासने स्वयं बुद्धिं बीभत्सुर्व्यदधात्तदा ४
ततः कृष्णो महातेजा जानन्पार्थस्य निश्चयम्
कुन्तीपुत्रमिदं वाक्यमासीनः स्थितमब्रवीत् ५
मा विषादे मनः पार्थ कृथाः कालो हि दुर्जयः
कालः सर्वाणि भूतानि नियच्छति परे विधौ ६
किमर्थं च विषादस्ते तद्ब्रूहि वदतां वर
न शोचितव्यं विदुषा शोकः कार्यविनाशनः ७
शोचन्नन्दयते शत्रून्कर्शयत्यपि बान्धवान्
क्षीयते च नरस्तस्मान्न त्वं शोचितुमर्हसि ८
इत्युक्तो वासुदेवेन बीभत्सुरपराजितः
आबभाषे तदा विद्वानिदं वचनमर्थवत् ९
मया प्रतिज्ञा महती जयद्रथवधे कृता
श्वोऽस्मि हन्ता दुरात्मानं पुत्रघ्नमिति केशव १०
मत्प्रतिज्ञाविघातार्थं धार्तराष्ट्रैः किलाच्युत
पृष्ठतः सैन्धवः कार्यः सर्वैर्गुप्तो महारथैः ११
दश चैका च ताः कृष्ण अक्षौहिण्यः सुदुर्जयाः
प्रतिज्ञायां च हीनायां कथं जीवेत मद्विधः १२
दुःखोपायस्य मे वीर विकाङ्क्षा परिवर्तते
द्रुतं च याति सविता तत एतद्ब्रवीम्यहम् १३
शोकस्थानं तु तच्छ्रुत्वा पार्थस्य द्विजकेतनः
संस्पृश्याम्भस्ततः कृष्णः प्राङ्मुखः समवस्थितः १४
इदं वाक्यं महातेजा बभाषे पुष्करेक्षणः
हितार्थं पाण्डुपुत्रस्य सैन्धवस्य वधे वृतः १५
पार्थ पाशुपतं नाम परमास्त्रं सनातनम्
येन सर्वान्मृधे दैत्याञ्जघ्ने देवो महेश्वरः १६
यदि तद्विदितं तेऽद्य श्वो हन्तासि जयद्रथम्
अथ ज्ञातुं प्रपद्यस्व मनसा वृषभध्वजम् १७
तं देवं मनसा ध्यायञ्जोषमास्स्व धनञ्जय

ततस्तस्य प्रसादात्त्वं भक्तः प्राप्स्यसि तन्महत् १८
ततः कृष्णवचः श्रुत्वा संस्पृश्याम्भो धनञ्जयः
भूमावासीन एकाग्रो जगाम मनसा भवम् १९
ततः प्रणिहिते ब्राह्मे मुहूर्ते शुभलक्षणे
आत्मानमर्जुनोऽपश्यद्गगने सहकेशवम् २०
ज्योतिर्भिश्च समाकीर्णं सिद्धचारणसेवितम्
वायुवेगगतिः पार्थः खं भेजे सहकेशवः २१
केशवेन गृहीतः स दक्षिणे विभुना भुजे
प्रेक्षमाणो बहून्भावाञ्जगामाद्भुतदर्शनान् २२
उदीच्यां दिशि धर्मात्मा सोऽपश्यच्छ्वेतपर्वतम्
कुबेरस्य विहारे च नलिनीं पद्मभूषिताम् २३
सरिच्छ्रेष्ठां च तां गङ्गां वीक्षमाणो बहूदकाम्
सदापुष्पफलैर्वृक्षैरुपेतां स्फटिकोपलाम् २४
सिंहव्याघ्रसमाकीर्णां नानामृगगणाकुलाम्
पुण्याश्रमवतीं रम्यां मनोज्ञाण्डजसेविताम् २५
मन्दरस्य प्रदेशांश्च किंनरोद्गीतनादितान्
हेमरूप्यमयैः शृङ्गैर्नानौषधिविदीपितान्
तथा मन्दारवृक्षैश्च पुष्पितैरुपशोभितान् २६
स्निग्धाञ्जनचयाकारं संप्राप्तः कालपर्वतम्
पुण्यं हिमवतः पादं मणिमन्तं च पर्वतम्
ब्रह्मतुङ्गं नदीश्चान्यास्तथा जनपदानपि २७
सुशृङ्गं शतशृङ्गं च शर्यातिवनमेव च
पुण्यमश्वशिरःस्थानं स्थानमाथर्वणस्य च २८
वृषदंशं च शैलेन्द्रं महामन्दरमेव च
अप्सरोभिः समाकीर्णं किंनरैश्चोपशोभितम् २९
तांश्च शैलान्व्रजन्पार्थः प्रेक्षते सहकेशवः
शुभैः प्रस्रवणैर्जुष्टान्हेमधातुविभूषितान् ३०
चन्द्ररश्मिप्रकाशाङ्गीं पृथिवीं पुरमालिनीम्
समुद्रांश्चाद्भुताकारानपश्यद्बहुलाकरान् ३१
वियद्द्यां पृथिवीं चैव पश्यन्विष्णुपदे व्रजन्

विस्मितः सह कृष्णेन क्षिप्तो बाण इवात्यगात् ३२
ग्रहनक्षत्रसोमानां सूर्याग्न्योश्च समत्विषम्
अपश्यत तदा पार्थो ज्वलन्तमिव पर्वतम् ३३
समासाद्य तु तं शैलं शैलाग्रे समवस्थितम्
तपोनित्यं महात्मानमपश्यद्वृषभध्वजम् ३४
सहस्रमिव सूर्याणां दीप्यमानं स्वतेजसा
शूलिनं जटिलं गौरं वल्कलाजिनवाससम् ३५
नयनानां सहस्रैश्च विचित्राङ्गं महौजसम्
पार्वत्या सहितं देवं भूतसङ्घैश्च भास्वरैः ३६
गीतवादित्रसंह्लादैस्ताललास्यसमन्वितम्
वल्गितास्फोटितोत्क्रुष्टैः पुण्यगन्धैश्च सेवितम् ३७
स्तूयमानं स्तवैर्दिव्यैर्मुनिभिर्ब्रह्मवादिभिः
गोप्तारं सर्वभूतानामिष्वासधरमच्युतम् ३८
वासुदेवस्तु तं दृष्ट्वा जगाम शिरसा क्षितिम्
पार्थेन सह धर्मात्मा गृणन्ब्रह्म सनातनम् ३९
लोकादिं विश्वकर्माणमजमीशानमव्ययम्
मनसः परमां योनिं खं वायुं ज्योतिषां निधिम् ४०
स्रष्टारं वारिधाराणां भुवश्च प्रकृतिं पराम्
देवदानवयक्षाणां मानवानां च साधनम् ४१
योगिनां च परमं ब्रह्म व्यक्तं ब्रह्मविदां निधिम्
चराचरस्य स्रष्टारं प्रतिहर्तारमेव च ४२
कालकोपं महात्मानं शक्रसूर्यगुणोदयम्
अवन्दत तदा कृष्णो वाङ्मनोबुद्धिकर्मभिः ४३
यं प्रपश्यन्ति विद्वांसः सूक्ष्माध्यात्मपदैषिणः
तमजं कारणात्मानं जग्मतुः शरणं भवम् ४४
अर्जुनश्चापि तं देवं भूयो भूयोऽभ्यवन्दत
ज्ञात्वैकं भूतभव्यादिं सर्वभूतभवोद्भवम् ४५
ततस्तावागतौ शर्वः प्रोवाच प्रहसन्निव
स्वागतं वां नरश्रेष्ठावुत्तिष्ठेतां गतक्लमौ
किं च वामीप्सितं वीरौ मनसः क्षिप्रमुच्यताम् ४६

येन कार्येण सम्प्राप्तौ युवां तत्साधयामि वाम्
व्रियतामात्मनः श्रेयस्तत्सर्वं प्रददानि वाम् ४७
ततस्तद्वचनं श्रुत्वा प्रत्युत्थाय कृताञ्जली
वासुदेवार्जुनौ शर्वं तुष्टुवाते महामती ४८
नमो भवाय शर्वाय रुद्राय वरदाय च
पशूनां पतये नित्यमुग्राय च कपर्दिने ४९
महादेवाय भीमाय त्र्यम्बकाय च संभवे
ईशानाय भगघ्नाय नमोऽस्त्वन्धकघातिने ५०
कुमारगुरवे नित्यं नीलग्रीवाय वेधसे
विलोहिताय धूम्राय व्याधायानपराजिते ५१
नित्यं नीलशिखण्डाय शूलिने दिव्यचक्षुषे
हन्त्रे गोप्त्रे त्रिनेत्राय व्याधाय वसुरेतसे ५२
अचिन्त्यायाम्बिकाभर्त्रे सर्वदेवस्तुताय च
वृषध्वजाय पिङ्गाय जटिने ब्रह्मचारिणे ५३
तप्यमानाय सलिले ब्रह्मण्यायाजिताय च
विश्वात्मने विश्वसृजे विश्वमावृत्य तिष्ठते ५४
नमो नमस्ते सेव्याय भूतानां प्रभवे सदा
ब्रह्मवक्त्राय शर्वाय शंकराय शिवाय च ५५
नमोऽस्तु वाचस्पतये प्रजानां पतये नमः
नमो विश्वस्य पतये महतां पतये नमः ५६
नमः सहस्रशिरसे सहस्रभुजमन्यवे
सहस्रनेत्रपादाय नमोऽसङ्ख्येयकर्मणे ५७
नमो हिरण्यवर्णाय हिरण्यकवचाय च
भक्तानुकम्पिने नित्यं सिध्यतां नौ वरः प्रभो ५८
एवं स्तुत्वा महादेवं वासुदेवः सहार्जुनः
प्रसादयामास भवं तदा ह्यस्त्रोपलब्धये ५९
ततोऽर्जुनः प्रीतमना ववन्दे वृषभध्वजम्
ददर्शोत्फुल्लनयनः समस्तं तेजसां निधिम् ६०
तं चोपहारं स्वकृतं नैशं नैत्यकमात्मनः
ददर्श त्र्यम्बकाभ्याशे वासुदेवनिवेदितम् ६१

ततोऽभिपूज्य मनसा शर्वं कृष्णं च पाण्डवः
इच्छाम्यहं दिव्यमस्त्रमित्यभाषत शङ्करम् ६२
ततः पार्थस्य विज्ञाय वरार्थे वचनं प्रभुः
वासुदेवार्जुनौ देवः स्मयमानोऽभ्यभाषत ६३
सरोऽमृतमयं दिव्यमभ्याशे शत्रुसूदनौ
तत्र मे तद्धनुर्दिव्यं शरश्च निहितः पुरा ६४
येन देवारयः सर्वे मया युधि निपातिताः
तत आनीयतां कृष्णौ सशरं धनुरुत्तमम् ६५
तथेत्युक्त्वा तु तौ वीरौ तं शर्वं पार्षदैः सह
प्रस्थितौ तत्सरो दिव्यं दिव्याश्चर्यशतैर्वृतम् ६६
निर्दिष्टं यद्वृषाङ्केन पुण्यं सर्वार्थसाधकम्
तज्जग्मतुरसंभ्रान्तौ नरनारायणावृषी ६७
ततस्तु तत्सरो गत्वा सूर्यमण्डलसंनिभम्
नागमन्तर्जले घोरं ददृशातेऽजुनाच्युतौ ६८
द्वितीयं चापरं नागं सहस्रशिरसं वरम्
वमन्तं विपुलां ज्वालां ददृशातेऽग्निवर्चसम् ६९
ततः कृष्णश्च पार्थश्च संस्पृश्यापः कृताञ्जली
तौ नागावुपतस्थाते नमस्यन्तौ वृषध्वजम् ७०
गृणन्तौ वेदविदुषौ तद्ब्रह्म शतरुद्रियम्
अप्रमेयं प्रणमन्तौ गत्वा सर्वात्मना भवम् ७१
ततस्तौ रुद्रमाहात्म्याद्धित्वा रूपं महोरगौ
धनुर्बाणश्च शत्रुघ्नं तद्द्वंद्वं समपद्यत ७२
ततो जगृहतुः प्रीतौ धनुर्बाणं च सुप्रभम्
आजह्रतुर्महात्मानौ ददतुश्च महात्मने ७३
ततः पार्श्वाद्वृषाङ्कस्य ब्रह्मचारी न्यवर्तत
पिङ्गाक्षस्तपसः क्षेत्रं बलवान्नीललोहितः ७४
स तद्गृह्य धनुःश्रेष्ठं तस्थौ स्थानं समाहितः
व्यकर्षच्चापि विधिवत्सशरं धनुरुत्तमम् ७५
तस्य मौर्वीं च मुष्टिं च स्थानं चालक्ष्य पाण्डवः
श्रुत्वा मन्त्रं भवप्रोक्तं जग्राहाचिन्त्यविक्रमः ७६

सरस्येव च तं बाणं मुमोचातिबलः प्रभुः
चकार च पुनर्वीरस्तस्मिन्सरसि तद्धनुः ७७
ततः प्रीतं भवं ज्ञात्वा स्मृतिमानर्जुनस्तदा
वरमारण्यके दत्तं दर्शनं शङ्करस्य च
मनसा चिन्तयामास तन्मे संपद्यतामिति ७८
तस्य तन्मतमाज्ञाय प्रीतः प्रादाद्वरं भवः
तच्च पाशुपतं घोरं प्रतिज्ञायाश्च पारणम् ७९
संहृष्टरोमा दुर्धर्षः कृतं कार्यममन्यत
ववन्दतुश्च संहृष्टौ शिरोभ्यां तौ महेश्वरम् ८०
अनुज्ञातौ क्षणे तस्मिन्भवेनार्जुनकेशवौ
प्राप्तौ स्वशिबिरं वीरौ मुदा परमया युतौ
इन्द्राविष्णू यथा प्रीतौ जम्भस्य वधकाङ्क्षिणौ ८१

इति श्रीमहाभारते द्रोणपर्वणि सप्तपञ्चाशोऽध्यायः ५७

## अष्ट पञ्चाशोऽध्यायः

सञ्जय उवाच
तयोः संवदतोरेवं कृष्णदारुकयोस्तदा
सात्यगाद्रजनी राजन्नथ राजान्वबुध्यत १
पठन्ति पाणिस्वनिका मागधा मधुपर्किकाः
वैतालिकाश्च सूताश्च तुष्टुवुः पुरुषर्षभम् २
नर्तकाश्चाप्यनृत्यन्त जगुर्गीतानि गायकाः
कुरुवंशस्तवार्थानि मधुरं रक्तकण्ठिनः ३
मृदङ्गा झर्झरा भेर्यः पणवानकगोमुखाः
आडम्बराश्च शङ्खाश्च दुन्दुभ्यश्च महास्वनाः ४
एवमेतानि सर्वाणि तथान्यान्यपि भारत
वादयन्ति स्म संहृष्टाः कुशलाः साधुशिक्षिताः ५
स मेघसमनिर्घोषो महाञ्शब्दोऽस्पृशद्दिवम्
पार्थिवप्रवरं सुप्तं युधिष्ठिरमबोधयत् ६
प्रतिबुद्धः सुखं सुप्तो महार्हे शयनोत्तमे
उत्थायावश्यकार्यार्थं ययौ स्नानगृहं ततः ७

ततः शुक्लाम्बराः स्नातास्तरुणाष्टोत्तरं शतम्
स्नापकाः काञ्चनैः कुम्भैः पूर्णैः समुपतस्थिरे ८
भद्रासने सूपविष्टः परिधायाम्बरं लघु
सस्नौ चन्दनसंयुक्तैः पानीयैरभिमन्त्रितैः ९
उत्सादितः कषायेण बलवद्भिः सुशिक्षितैः
आप्लुतः साधिवासेन जलेन च सुगन्धिना १०
हरिणा चन्दनेनाङ्गमनुलिप्य महाभुजः
स्रग्वी चाक्लिष्टवसनः प्राङ्मुखः प्राञ्जलि स्थितः ११
जजाप जप्यं कौन्तेयः सतां मार्गमनुष्ठितः
ततोऽग्निशरणं दीप्तं प्रविवेश विनीतवत् १२
समिद्धं स पवित्राभिरग्निमाहुतिभिस्तथा
मन्त्रपूताभिरर्चित्वा निश्चक्राम गृहात्ततः १३
द्वितीयां पुरुषव्याघ्रः कक्ष्यां निष्क्रम्य पार्थिवः
तत्र वेदविदो विप्रानपश्यद्ब्राह्मणर्षभान् १४
दान्तान्वेदव्रतस्नातान्स्नातानवभृथेषु च
सहस्रानुचरान्सौरानष्टौ दशशतानि च १५
अक्षतैः सुमनोभिश्च वाचयित्वा महाभुजः
तान्द्विजान्मधुसर्पिर्भ्यां फलैः श्रेष्ठैः सुमङ्गलैः १६
प्रादात्काञ्चनमेकैकं निष्कं विप्राय पाण्डवः
अलंकृतं चाश्वशतं वासांसीष्टाश्च दक्षिणाः १७
तथा गाः कपिला दोग्ध्रद्यः सर्षभाः पाण्डुनन्दनः
हेमशृङ्गी रूप्यखुरा दत्त्वा चक्रे प्रदक्षिणम् १८
स्वस्तिकान्वर्धमानांश्च नन्द्यावर्तांश्च काञ्चनान्
माल्यं च जलकुम्भांश्च ज्वलितं च हुताशनम् १९
पूर्णान्यक्षतपात्राणि रुचकान्रोचनांस्तथा
स्वलंकृताः शुभाः कन्या दधिसर्पिर्मधूदकम् २०
मङ्गल्यान्पक्षिणश्चैव यच्चान्यदपि पूजितम्
दृष्ट्वा स्पृष्ट्वा च कौन्तेयो बाह्यां कक्ष्यामगात्ततः २१
ततस्तस्य महाबाहोस्तिष्ठतः परिचारकाः
सौवर्णं सर्वतोभद्रं मुक्तावैडूर्यमण्डितम् २२

पराध्यास्तिरणास्तीर्णं सोत्तरच्छदमृद्धिमत्
विश्वकर्मकृतं दिव्यमुपजह्रुर्वरासनम् २३
तत्र तस्योपविष्टस्य भूषणानि महात्मनः
उपजह्रुर्महार्हाणि प्रेष्याः शुभ्राणि सर्वशः २४
युक्ताभरणवेषस्य कौन्तेयस्य महात्मनः
रूपमासीन्महाराज द्विषतां शोकवर्धनम् २५
पाण्डुरैश्चन्द्ररश्म्याभैर्हेमदण्डैश्च चामरैः
दोधूयमानः शुशुभे विद्युद्भिरिव तोयदः २६
संस्तूयमानः सूतैश्च वन्द्यमानश्च बन्दिभिः
उपगीयमानो गन्धर्वैरास्ते स्म कुरुनन्दनः २७
ततो मूहूर्तादासीत्तु बन्दिनां निस्वनो महान्
नेमिघोषश्च रथिनां खुरघोषश्च वाजिनाम् २८
ह्लादेन गजघण्टानां शङ्खानां निनदेन च
नराणां पदशब्दैश्च कम्पतीव स्म मेदिनी २९
ततः शुद्धान्तमासाद्य जानुभ्यां भूतले स्थितः
शिरसा वन्दनीयं तमभिवन्द्य जगत्पतिम् ३०
कुण्डली बद्धनिस्त्रिंशः संनद्धकवचो युवा
अभिप्रणम्य शिरसा द्वाःस्थो धर्मात्मजाय वै
न्यवेदयद्धृषीकेशमुपयातं महात्मने ३१
सोऽब्रवीत्पुरुषव्याघ्रः स्वागतेनैव माधवम्
अर्घ्यं चैवासनं चास्मै दीयतां परमार्चितम् ३२
ततः प्रवेश्य वार्ष्णेयमुपवेश्य वरासने
सत्कृत्य सत्कृतस्तेन पर्यपृच्छद्युधिष्ठिरः ३३
इति श्रीमहाभारते द्रोणपर्वणि अष्टपञ्चाशोऽध्यायः ५८

## एकोनषष्टितमोऽध्यायः

युधिष्ठिर उवाच
सुखेन रजनी व्युष्टा कच्चित्ते मधुसूदन
कच्चिज्ज्ञानानि सर्वाणि प्रसन्नानि तवाच्युत १
सञ्जय उवाच

वासुदेवोऽपि तद्युक्तं पर्यपृच्छद्युधिष्ठिरम्
ततः क्षत्ता प्रकृतयो न्यवेदयदुपस्थिताः २
अनुज्ञातश्च राज्ञा स प्रावेशयत तं जनम्
विराटं भीमसेनं च धृष्टद्युम्नं च सात्यकिम् ३
शिखण्डिनं यमौ चैव चेकितानं च केकयान्
युयुत्सुं चैव कौरव्यं पाञ्चाल्यं चोत्तमौजसम् ४
एते चान्ये च बहवः क्षत्रियाः क्षत्रियर्षभम्
उपतस्थुर्महात्मानं विविशुश्चासनेषु ते ५
एकस्मिन्नासने वीरावुपविष्टौ महाबलौ
कृष्णश्च युयुधानश्च महात्मानौ महाद्युती ६
ततो युधिष्ठिरस्तेषां शृण्वतां मधुसूदनम्
अब्रवीत्पुण्डरीकाक्षमाभाष्य मधुरं वचः ७
एकं त्वां वयमाश्रित्य सहस्राक्षमिवामराः
प्रार्थयामो जयं युद्धे शाश्वतानि सुखानि च ८
त्वं हि राज्यविनाशं च द्विषद्भिश्च निराक्रियाम्
क्लेशांश्च विविधान्कृष्ण सर्वांस्तानपि वेत्थ नः ९
त्वयि सर्वेश सर्वेषामस्माकं भक्तवत्सल
सुखमायत्तमत्यर्थं यात्रा च मधुसूदन १०
स तथा कुरु वार्ष्णेय यथा त्वयि मनो मम
अर्जुनस्य यथा सत्या प्रतिज्ञा स्याच्चिकीर्षिता ११
स भवांस्तारयत्वस्माद्दुःखामर्षमहार्णवात्
पारं तितीर्षतामद्य प्लवो नो भव माधव १२
न हि तत्कुरुते संख्ये कार्तवीर्यसमस्त्वपि
रथी यत्कुरुते कृष्ण सारथिर्यत्नमास्थितः १३
वासुदेव उवाच
सामरेष्वपि लोकेषु सर्वेषु न तथा विधः
शरासनधरः कश्चिद्यथा पार्थो धनञ्जयः १४
वीर्यवानस्त्रसंपन्नः पराक्रान्तो महाबलः
युद्धशौण्डः सदामर्षी तेजसा परमो नृणाम् १५
स युवा वृषभस्कन्धो दीर्घबाहुर्महाबलः

सिंहर्षभगतिः श्रीमान्द्विषतस्ते हनिष्यति १६
अहं च तत्करिष्यामि यथा कुन्तीसुतोऽर्जुनः
धार्तराष्ट्रस्य सैन्यानि धक्ष्यत्यग्निरिवोत्थितः १७
अद्य तं पापकर्माणं क्षुद्रं सौभद्रघातिनम्
अपुनर्दर्शनं मार्गमिषुभिः क्षेप्स्यतेऽर्जुनः १८
तस्याद्य गृध्राः श्येनाश्च वडगोमायवस्तथा
भक्षयिष्यन्ति मांसानि ये चान्ये पुरुषादकाः १९
यद्यस्य देवा गोप्तारः सेन्द्राः सर्वे तथाप्यसौ
राजधानीं यमस्याद्य हतः प्राप्स्यति संकुले २०
निहत्य सैन्धवं जिष्णुरद्य त्वामुपयास्यति
विशोको विज्वरो राजन्भव भूतिपुरस्कृतः २१
इति श्रीमहाभारते द्रोणपर्वणि एकोनषष्टितमोऽध्यायः ५९

## षष्ठितमोऽध्यायः

सञ्जय उवाच
तथा संभाषतां तेषां प्रादुरासीद्धनञ्जयः
दिदृक्षुर्भरतश्रेष्ठं राजानं ससुहृद्गणम् १
तं प्रविष्टं शुभां कक्ष्यामभिवाद्याग्रतः स्थितम्
समुत्थायार्जुनं प्रेम्णा सस्वजे पाण्डवर्षभः २
मूर्ध्नि चैनमुपाघ्राय परिष्वज्य च बाहुना
आशिषः परमाः प्रोच्य स्मयमानोऽभ्यभाषत ३
व्यक्तमर्जुन संग्रामे ध्रुवस्ते विजयो महान्
यादृग्रूपा हि ते छाया प्रसन्नश्च जनार्दनः ४
तमब्रवीत्ततो जिष्णुर्महदाश्चर्यमुत्तमम्
दृष्टवानस्मि भद्रं ते केशवस्य प्रसादजम् ५
ततस्तत्कथयामास यथादृष्टं धनञ्जयः
आश्वासनार्थं सुहृदां त्र्यम्बकेन समागमम् ६
ततः शिरोभिरवनिं स्पृष्ट्वा सर्वे च विस्मिताः
नमस्कृत्य वृषाङ्काय साधु साध्वित्यथाब्रुवन् ७
अनुज्ञातास्ततः सर्वे सुहृदो धर्मसूनुना

त्वरमाणाः सुसंनद्धा हृष्टा युद्धाय निर्ययुः ८
अभिवाद्य तु राजानं युयुधानाच्युतार्जुनाः
हृष्टा विनिर्ययुस्ते वै युधिष्ठिरनिवेशनात् ९
रथेनैकेन दुर्धर्षौ युयुधानजनार्दनौ
जग्मतुः सहितौ वीरावर्जुनस्य निवेशनम् १०
तत्र गत्वा हृषीकेशः कल्पयामास सूतवत्
रथं रथवरस्याजौ वानरर्षभलक्षणम् ११
स मेघसमनिर्घोषस्तप्तकाञ्चनसप्रभः
बभौ रथवरः क्लृप्तः शिशुर्दिवसकृद्यथा १२
ततः पुरुषशार्दूलः सज्जः सज्जं पुरः सरः
कृताह्निकाय पार्थाय न्यवेदयत तं रथम् १३
तं तु लोके वरः पुंसां किरीटी हेमवर्मभृत्
बाणबाणासनी वाहं प्रदक्षिणमवर्तत १४
ततो विद्यावयोवृद्धैः क्रियावद्भिर्जितेन्द्रियैः
स्तूयमानो जयाशीभिरारुरोह महारथम् १५
जैत्रैः सांग्रामिकैर्मन्त्रैः पूर्वमेव रथोत्तमम्
अभिमन्त्रितमर्चिष्मानुदयं भास्करो यथा १६
स रथे रथिनां श्रेष्ठः काञ्चने काञ्चनावृतः
विबभौ विमलोऽचिष्मान्मेराविव दिवाकरः १७
अन्वारुरोहतुः पार्थं युयुधानजनार्दनौ
शर्यातिर्यज्ञमायान्तं यथेन्द्रं देवमश्विनौ १८
अथ जग्राह गोविन्दो रश्मीन्रश्मिवतां वरः
मातलिर्वासवस्येव वृत्रं हन्तुं प्रयास्यतः १९
स ताभ्यां सहितः पार्थो रथप्रवरमास्थितः
सहितो बुधशुक्राभ्यां तमो निघ्नन्यथा शशी २०
सैन्धवस्य वधप्रेप्सुः प्रयातः शत्रुपूगहा
सहाम्बुपतिमित्राभ्यां यथेन्द्रस्तारकामये २१
ततो वादित्रनिर्घोषैर्मङ्गल्यैश्च स्तवैः शुभैः
प्रयान्तमर्जुनं सूता मागधाश्चैव तुष्टुवुः २२
सजयाशीः सपुण्याहः सूतमागधनिस्वनः

युक्तो वादित्रघोषेण तेषां रतिकरोऽभवत् २३
तमनुप्रयतो वायुः पुण्यगन्धवहः शुचिः
ववौ संहर्षयन्पार्थं द्विषतश्चापि शोषयन् २४
प्रादुरासन्निमित्तानि विजयाय बहूनि च
पाण्डवानां त्वदीयानां विपरीतानि मारिष २५
दृष्ट्वार्जुनो निमित्तानि विजयाय प्रदक्षिणम्
युयुधानं महेष्वासमिदं वचनमब्रवीत् २६
युयुधानाद्य युद्धे मे दृश्यते विजयो ध्रुवः
यथा हीमानि लिङ्गानि दृश्यन्ते शिनिपुङ्गव २७
सोऽह तत्र गमिष्यामि यत्र सैन्धवको नृपः
यियासुर्यमलोकाय मम वीर्यं प्रतीक्षते २८
यथा परमकं कृत्यं सैन्धवस्य वधे मम
तथैव सुमहत्कृत्यं धर्मराजस्य रक्षणे २९
स त्वमद्य महाबाहो राजानं परिपालय
यथैव हि मया गुप्तस्त्वया गुप्तो भवेत्तथा ३०
त्वयि चाहं पराश्वस्य प्रद्युम्ने वा महारथे
शक्नुयां सैन्धवं हन्तुमनपेक्षो नरर्षभ ३१
मय्यपेक्षा न कर्तव्या कथञ्चिदपि सात्वत
राजन्येव परा गुप्तिः कार्या सर्वात्मना त्वया ३२
न हि यत्र महाबाहुर्वासुदेवो व्यवस्थितः
किञ्चिद्व्यापद्यते तत्र यत्राहमपि च ध्रुवम् ३३
एवमुक्तस्तु पार्थेन सात्यकिः परवीरहा
तथेत्युक्त्वागमत्तत्र यत्र राजा युधिष्ठिरः ३४

इति श्रीमहाभारते द्रोणपर्वणिषष्टितमोऽध्यायः ६०

समाप्तं प्रतिज्ञापर्व

## एक षष्ठितमोऽध्यायः

धृतराष्ट्र उवाच
श्वोभूते किमकार्षुस्ते दुःखशोकसमन्विताः
अभिमन्यौ हते तत्र के वायुध्यन्त मामकाः १

जानन्तस्तस्य कर्माणि कुरवः सव्यसाचिनः
कथं तत्किल्बिषं कृत्वा निर्भया ब्रूहि मामकाः २
पुत्रशोकाभिसंतप्तं क्रुद्धं मृत्युमिवान्तकम्
आयान्तं पुरुषव्याघ्रं कथं ददृशुराहवे ३
कपिराजध्वजं संख्ये विधुन्वानं महद्धनुः
दृष्ट्वा पुत्रपरिद्यूनं किमकुर्वन्त मामकाः ४
किं नु सञ्जय संग्रामे वृत्तं दुर्योधनं प्रति
परिदेवो महानत्र श्रुतो मे नाभिनन्दनम् ५
बभूवुर्ये मनोग्राह्याः शब्दाः श्रुतिसुखावहाः
न श्रूयन्तेऽद्य ते सर्वे सैन्धवस्य निवेशने ६
स्तुवतां नाद्य श्रूयन्ते पुत्राणां शिबिरे मम
सूतमागधसंघानां नर्तकानां च सर्वशः ७
शब्देन नादिताभीक्ष्णमभवद्यत्र मे श्रुतिः
दीनानामद्य तं शब्दं न शृणोमि समीरितम् ८
निवेशने सत्यधृतेः सोमदत्तस्य सञ्जय
आसीनोऽह पुरा तात शब्दमश्रौषमुत्तमम् ९
तदद्य हीनपुण्योऽहमार्तस्वरनिनादितम्
निवेशनं हतोत्साहं पुत्राणां मम लक्षये १०
विविंशतेर्दुर्मुखस्य चित्रसेनविकर्णयोः
अन्येषां च सुतानां मे न तथा श्रूयते ध्वनिः ११
ब्राह्मणाः क्षत्रिया वैश्या यं शिष्याः पर्युपासते
द्रोणपुत्रं महेष्वासं पुत्राणां मे परायणम् १२
वितण्डालापसंलापैर्हुतयाचितवन्दितैः
गीतैश्च विविधैरिष्टै रमते यो दिवानिशम् १३
उपास्यमानो बहुभिः कुरुपाण्डवसात्वतैः
सूत तस्य गृहे शब्दो नाद्य द्रौणेर्यथा पुरा १४
द्रोणपुत्रं महेष्वासं गायना नर्तकाश्च ये
अत्यर्थमुपतिष्ठन्ति तेषां न श्रूयते ध्वनिः १५
विन्दानुविन्दयोः सायं शिबिरे यो महाध्वनिः
श्रूयते सोऽद्य न तथा केकयानां च वेश्मसु १६

नित्यप्रमुदितानां च तालगीतस्वनो महान्
नृत्यतां श्रूयते तात गणानां सोऽद्य न ध्वनिः १७
सप्ततन्तून्वितन्वाना यमुपासन्ति याजकाः
सौमदत्तिं श्रुतनिधिं तेषां न श्रूयते ध्वनिः १८
ज्याघोषो ब्रह्मघोषश्च तोमरासिरथध्वनिः
द्रोणस्यासीदविरतो गृहे तन्न शृणोम्यहम् १९
नानादेशसमुत्थानां गीतानां योऽभवत्स्वनः
वादित्रनादितानां च सोऽद्य न श्रूयते महान् २०
यदा प्रभृत्युपप्लव्याच्छान्तिमिच्छञ्जनार्दनः
आगतः सर्वभूतानामनुकम्पार्थमच्युतः २१
ततोऽहमब्रुवं सूत मन्दं दुर्योधनं तदा
वासुदेवेन तीर्थेन पुत्र संशाम्य पाण्डवैः २२
कालप्राप्तमहं मन्ये मा त्वं दुर्योधनातिगाः
शमे चेद्याचमानं त्वं प्रत्याख्यास्यसि केशवम्
हितार्थमभिजल्पन्तं न तथास्त्यपराजयः २३
प्रत्याचष्ट स दाशार्हमृषभं सर्वधन्विनाम्
अनुनेयानि जल्पन्तमनयान्नान्वपद्यत २४
ततो दुःशासनस्यैव कर्णस्य च मतं द्वयोः
अन्ववर्तत हित्वा मां कृष्टः कालेन दुर्मतिः २५
न ह्यहं द्यूतमिच्छामि विदुरो न प्रशंसति
सैन्धवो नेच्छते द्यूतं भीष्मो न द्यूतमिच्छति २६
शल्यो भूरिश्रवाश्चैव पुरुमित्रो जयस्तथा
अश्वत्थामा कृपो द्रोणो द्यूतं नेच्छन्ति सञ्जय २७
एतेषां मतमाज्ञाय यदि वर्तेत पुत्रकः
सज्ञातिमित्रः ससुहृच्चिरं जीवेदनामयः २८
श्लक्ष्णा मधुरसंभाषा ज्ञातिमध्ये प्रियंवदाः
कुलीनाः संमताः प्राज्ञाः सुखं प्राप्स्यन्ति पाण्डवाः २९
धर्मापेक्षो नरो नित्यं सर्वत्र लभते सुखम्
प्रेत्यभावे च कल्याणं प्रसादं प्रतिपद्यते ३०
अर्हन्त्यर्धं पृथिव्यास्ते भोक्तुं सामर्थ्यसाधनाः

तेषामपि समुद्रान्ता पितृपैतामही मही ३१
नियुज्यमानाः स्थास्यन्ति पाण्डवा धर्मवर्त्मनि
सन्ति नो ज्ञातयस्तात येषां श्रोष्यन्ति पाण्डवाः ३२
शल्यस्य सोमदत्तस्य भीष्मस्य च महात्मनः
द्रोणस्याथ विकर्णस्य बाह्लिकस्य कृपस्य च ३३
अन्येषां चैव वृद्धानां भरतानां महात्मनाम्
त्वदर्थं ब्रुवतां तात करिष्यन्ति वचो हितम् ३४
कं वा त्वं मन्यसे तेषां यस्त्वा ब्रूयादतोऽन्यथा
कृष्णो न धर्मं सञ्जह्यात्सर्वे ते च त्वदन्वयाः ३५
मयापि चोक्तास्ते वीरा वचनं धर्मसंहितम्
नान्यथा प्रकरिष्यन्ति धर्मात्मानो हि पाण्डवाः ३६
इत्यहं विलपन्सूत बहुशः पुत्रमुक्तवान्
न च मे श्रुतवान्मूढो मन्ये कालस्य पर्ययम् ३७
वृकोदरार्जुनौ यत्र वृष्णिवीरश्च सात्यकिः
उत्तमौजाश्च पाञ्चाल्यो युधामन्युश्च दुर्जयः ३८
धृष्टद्युम्नश्च दुर्धर्षः शिखण्डी चापराजितः
अश्मकाः केकयाश्चैव क्षत्रधर्मा च सौमकिः ३९
चैद्यश्चेकितानश्च पुत्रः काश्यस्य चाभिभुः
द्रौपदेया विराटश्च द्रुपदश्च महारथः
यमौ च पुरुषव्याघ्रौ मन्त्री च मधुसूदनः ४०
क एताञ्जातु युध्येत लोकेऽस्मिन्वै जिजीविषुः
दिव्यमस्त्रं विकुर्वाणान्संहरेयुररिंदमाः ४१
अन्यो दुर्योधनात्कर्णाच्छकुनेश्चापि सौबलात्
दुःशासनचतुर्थानां नान्यं पश्यामि पञ्चमम् ४२
येषामभीशुहस्तः स्याद्विष्वक्सेनो रथे स्थितः
संनद्धश्चार्जुनो योद्धा तेषां नास्ति पराजयः ४३
तेषां मम विलापानां न हि दुर्योधनः स्मरेत्
हतौ हि पुरुषव्याघ्रौ भीष्मद्रोणौ त्वमात्थ मे ४४
तेषां विदुरवाक्यानामुक्तानां दीर्घदर्शिनाम्
दृष्ट्वेमां फलनिर्वृत्तिं मन्ये शोचन्ति पुत्रकाः ४५

हिमात्यये यथा कक्षं शुष्कं वातेरितो महान्
अग्निर्दहेत्तथा सेनां मामिकां स धनञ्जयः ४६
आचक्ष्व तद्धि नः सर्वं कुशलो ह्यसि सञ्जय
यदुपायात्तु सायाह्ने कृत्वा पार्थस्य किल्बिषम्
अभिमन्यौ हते तात कथमासीन्मनो हि वः ४७
न जातु तस्य कर्माणि युधि गाण्डीवधन्वनः
अपकृत्वा महत्तात सोढुं शक्ष्यन्ति मामकाः ४८
किं नु दुर्योधनः कृत्यं कर्णः कृत्यं किमब्रवीत्
दुःशासनः सौबलश्च तेषामेवं गते अपि
सर्वेषां समवेतानां पुत्राणां मम सञ्जय ४९
यद्वृत्तं तात संग्रामे मन्दस्यापनयैर्भृशम्
लोभानुगतदुर्बुद्धेः क्रोधेन विकृतात्मनः ५०
राज्यकामस्य मूढस्य रागोपहतचेतसः
दुर्नीतं वा सुनीतं वा तन्ममाचक्ष्व सञ्जय ५१
इति श्रीमहाभारते द्रोणपर्वणि एकषष्टितमोऽध्यायः ६१

## द्विषष्ठितमोऽध्यायः

सञ्जय उवाच
हन्त ते संप्रवक्ष्यामि सर्वं प्रत्यक्षदर्शिवान्
शुश्रूषस्व स्थिरो भूत्वा तव ह्यपनयो महान् १
गतोदके सेतुबन्धो यादृक्तादृगयं तव
विलापो निष्फलो राजन्मा शुचो भरतर्षभ २
अनतिक्रमणीयोऽय कृतान्तस्याद्भुतो विधिः
मा शुचो भरतश्रेष्ठ दिष्टमेतत्पुरातनम् ३
यदि हि त्वं पुरा द्यूतात्कुन्तीपुत्रं युधिष्ठिरम्
निवर्तयेथाः पुत्रांश्च न त्वां व्यसनमाव्रजेत् ४
युद्धकाले पुनः प्राप्ते तदैव भवता यदि
निवर्तिताः स्युः संरब्धा न त्वां व्यसनमाव्रजेत् ५
दुर्योधनं चाविधेयं बध्नीतेति पुरा यदि
कुरूनचोदयिष्यस्त्वं न त्वां व्यसनमाव्रजेत् ६

तत्ते बुद्धिव्यभीचारमुपलप्स्यन्ति पाण्डवाः
पाञ्चाला वृष्णयः सर्वे ये चान्येऽपि महाजनाः ७
स कृत्वा पितृकर्म त्वं पुत्रं संस्थाप्य सत्पथे
वर्तेथा यदि धर्मेण न त्वां व्यसनमाव्रजेत् ८
त्वं तु प्राज्ञतमो लोके हित्वा धर्मं सनातनम्
दुर्योधनस्य कर्णस्य शकुनेश्चान्वगा मतम् ९
तत्ते विलपितं सर्वं मया राजन्निशामितम्
अर्थे निविशमानस्य विषमिश्रं यथा मधु १०
न तथा मन्यते कृष्णो राजानं पाण्डवं पुरा
न भीष्मं नैव च द्रोणं यथा त्वां मन्यते नृप ११
व्यजानत यदा तु त्वां राजधर्मादधच्च्युतम्
तदा प्रभृति कृष्णस्त्वां न तथा बहु मन्यते १२
परुषाण्युच्यमानांश्च यथा पार्थानुपेक्षसे
तस्यानुबन्धः प्राप्तस्त्वां पुत्राणां राज्यकामुकम् १३
पितृपैतामहं राज्यमपवृत्तं तदानघ
अथ पार्थैर्जितां कृत्स्नां पृथिवीं प्रत्यपद्यथाः १४
पाण्डुनावर्जितं राज्यं कौरवाणां यशस्तथा
ततश्चाभ्यधिकं भूयः पाण्डवैर्धर्मचारिभिः १५
तेषां तत्तादृशं कर्म त्वामासाद्य सुनिष्फलम्
यत्पित्र्याद्भ्रंशिता राज्यात्त्वयेहामिषगृद्धिना १६
यत्पुनर्युद्धकाले त्वं पुत्रान्गर्हयसे नृप
बहुधा व्याहरन्दोषान्न तदद्योपपद्यते १७
न हि रक्षन्ति राजानो युध्यन्तो जीवितं रणे
चमूं विगाह्य पार्थानां युध्यन्ते क्षत्रियर्षभाः १८
यां तु कृष्णार्जुनौ सेनां यां सात्यकिवृकोदरौ
रक्षेरन्को नु तां युध्येच्चमूमन्यत्र कौरवैः १९
येषां योद्धा गुडाकेशो येषां मन्त्री जनार्दनः
येषां च सात्यकिर्गोप्ता येषां गोप्ता वृकोदरः २०
को हि तान्विषहेद्योद्धुं मर्त्यधर्मा धनुर्धरः
अन्यत्र कौरवेयेभ्यो ये वा तेषां पदानुगाः २१

यावत्तु शक्यते कर्तुमनुरक्तैर्जनाधिपैः
क्षत्रधर्मरतैः शूरैस्तावत्कुर्वन्ति कौरवाः २२
यथा तु पुरुषव्याघ्रैर्युद्धं परमसङ्कटम्
कुरूणां पाण्डवैः सार्धं तत्सर्वं शृणु तत्त्वतः २३
इति श्रीमहाभारते द्रोणपर्वणि द्विषष्टितमोऽध्यायः ६२

## त्रिषष्टितमोऽध्यायः

सञ्जय उवाच
तस्यां निशायां व्युष्टायां द्रोणः शस्त्रभृतां वरः
स्वान्यकीनानि सर्वाणि प्रक्रामद्व्यूहितुं ततः १
शूराणां गर्जतां राजन्संक्रुद्धानाममर्षिणाम्
श्रूयन्ते स्म गिरश्चित्राः परस्परवधैषिणाम् २
विस्फार्य च धनूंष्याजौ ज्याः करैः परिमृज्य च
विनिःश्वसन्तः प्राक्रोशन्क्वेदानीं स धनञ्जयः ३
विकोशान्सुत्सरूनन्ये कृतधारान्समाहितान्
पीतानाकाशसङ्काशानसीन्केचिच्च चिक्षिपुः ४
चरन्तस्त्वसिमार्गांश्च धनुर्मार्गांश्च शिक्षया
संग्राममनसः शूरा दृश्यन्ते स्म सहस्रशः ५
सघण्टाश्चन्दनादिग्धाः स्वर्णवज्रविभूषिताः
समुत्क्षिप्य गदाश्चान्ये पर्यपृच्छन्त पाण्डवम् ६
अन्ये बलमदोन्मत्ताः परिघैर्बाहुशालिनः
चक्रुः संबाधमाकाशमुच्छ्रितेन्द्रध्वजोपमैः ७
नानाप्रहरणैश्चान्ये विचित्रस्रगलंकृताः
संग्राममनसः शूरास्तत्र तत्र व्यवस्थिताः ८
क्वार्जुनः क्व च गोविन्दः क्व च मानी वृकोदरः
क्व च ते सुहृदस्तेषामाह्वयन्तो रणे तदा ९
ततः शङ्खमुपाध्माय त्वरयन्वाजिनः स्वयम्
इतस्ततस्तान्रचयन्द्रोणश्चरति वेगितः १०
तेष्वनीकेषु सर्वेषु स्थितेष्वाहवनन्दिषु
भारद्वाजो महाराज जयद्रथमथाब्रवीत् ११

त्वं चैव सौमदत्तिश्च कर्णश्चैव महारथः
अश्वत्थामा च शल्यश्च वृषसेनः कृपस्तथा १२
शतं चाश्वसहस्राणां रथानामयुतानि षट्
द्विरदानां प्रभिन्नानां सहस्राणि चतुर्दश १३
पदातीनां सहस्राणि दंशितान्येकविंशतिः
गव्यूतिषु त्रिमात्रेषु मामनासाद्य तिष्ठत १४
तत्रस्थं त्वां न संसोढुं शक्ता देवाः सवासवाः
किं पुनः पाण्डवाः सर्वे समाश्वसिहि सैन्धव १५
एवमुक्तः समाश्वस्तः सिन्धुराजो जयद्रथः
संप्रायात्सह गान्धारैर्वृतस्तैश्च महारथैः
वर्मिभिः सादिभिर्यत्तैः प्रासपाणिभिरास्थितैः १६
चामरापीडिनः सर्वे जाम्बूनदविभूषिताः
जयद्रथस्य राजेन्द्र हयाः साधुप्रवाहिनः
ते चैव सप्तसाहस्रा द्विसाहस्राश्च सैन्धवाः १७
मत्तानामधिरूढानां हस्त्यारोहैर्विशारदैः
नागानां भीमरूपाणां वर्मिणां रौद्रकर्मिणाम् १८
अध्यर्धेन सहस्रेण पुत्रो दुर्मर्षणस्तव
अग्रतः सर्वसैन्यानां योत्स्यमानो व्यवस्थितः १९
ततो दुःशासनश्चैव विकर्णश्च तवात्मजौ
सिन्धुराजार्थसिद्ध्यर्थमग्रानीके व्यवस्थितौ २०
दीर्घो द्वादशगव्यूतिः पश्चार्धे पञ्च विस्तृतः
व्यूहः स चक्रशकटो भारद्वाजेन निर्मितः २१
नानानृपतिभिर्वीरैस्तत्र तत्र व्यवस्थितैः
रथाश्वगजपत्त्योघैर्द्रोणेन विहितः स्वयम् २२
पश्चार्धे तस्य पद्मस्तु गर्भव्यूहः सुदुर्भिदः
सूची पद्मस्य मध्यस्थो गूढो व्यूहः पुनः कृतः २३
एवमेतं महाव्यूहं व्यूह्य द्रोणो व्यवस्थितः
सूचीमुखे महेष्वासः कृतवर्मा व्यवस्थितः २४
अनन्तरं च काम्बोजो जलसंधश्च मारिष
दुर्योधनः सहामात्यस्तदनन्तरमेव च २५

ततः शतसहस्राणि योधानामनिवर्तिनाम्
व्यूहस्थितानि सर्वाणि शकटे सूचिरक्षिणः २६
तेषां च पृष्ठतो राजा बलेन महता वृतः
जयद्रथस्ततो राजन्सूचिपाशे व्यवस्थितः २७
शकटस्य तु राजेन्द्र भारद्वाजो मुखे स्थितः
अनु तस्याभवद्भोजो जुगोपैनं ततः स्वयम् २८
श्वेतवर्माम्बरोष्णीषो व्यूढोरस्को महाभुजः
धनुर्विस्फारयन्द्रोणस्तस्थौ क्रुद्ध इवान्तकः २९
पताकिनं शोणहयं वेदीकृष्णाजिनध्वजम्
द्रोणस्य रथमालोक्य प्रहृष्टाः कुरवोऽभवन् ३०
सिद्धचारणसंघानां विस्मयः सुमहानभूत्
द्रोणेन विहितं दृष्ट्वा व्यूहं क्षुब्धार्णवोपमम् ३१
सशैलसागरवनां नानाजनपदाकुलाम्
ग्रसेद्व्यूहः क्षितिं सर्वामिति भूतानि मेनिरे ३२
बहुरथमनुजाश्वपत्तिनागं प्रतिभयनिस्वनमद्भुताभरूपम्
अहितहृदयभेदनं महद्वै शकटमवेक्ष्य कृतं ननन्द राजा ३३
इति श्रीमहाभारते द्रोणपर्वणि त्रिषष्टितमोऽध्यायः ६३

## चतुः षष्ठितमोऽध्यायः

सञ्जय उवाच
ततो व्यूढेष्वनीकेषु समुत्क्रुष्टेषु मारिष
ताड्यमानासु भेरीषु मृदङ्गेषु नदत्सु च १
अनीकानां च संह्रादे वादित्राणां च निस्वने
प्रध्मापितेषु शङ्खेषु संनादे लोमहर्षणे २
अभिहारयत्सु शनकैर्भरतेषु युयुत्सुषु
रौद्रे मुहूर्ते संप्राप्ते सव्यसाची व्यदृश्यत ३
वडानां वायसानां च पुरस्तात्सव्यसाचिनः
बहुलानि सहस्राणि प्राक्रीडंस्तत्र भारत ४
मृगाश्च घोरसंनादाः शिवाश्चाशिवदर्शनाः
दक्षिणेन प्रयातानामस्माकं प्राणदंस्तथा ५

सनिर्घाता ज्वलन्त्यश्च पेतुरुल्काः समन्ततः
चचाल च मही कृत्स्ना भये घोरे समुत्थिते ६
विष्वग्वाताः सनिर्घाता रूक्षाः शर्करवर्षिणः
ववुरायाति कौन्तेये संग्रामे समुपस्थिते ७
नाकुलिस्तु शतानीको धृष्टद्युम्नश्च पार्षतः
पाण्डवानामनीकानि प्राज्ञौ तौ व्यूहतुस्तदा ८
ततो रथसहस्रेण द्विरदानां शतेन च
त्रिभिरश्वसहस्रैश्च पदातीनां शतैः शतैः ९
अध्यर्धमात्रे धनुषां सहस्रे तनयस्तव
अग्रतः सर्वसैन्यानां स्थित्वा दुर्मर्षणोऽब्रवीत् १०
अद्य गाण्डीवधन्वानं तपन्तं युद्धदुर्मदम्
अहमावारयिष्यामि वेलेव मकरालयम् ११
अद्य पश्यन्तु संग्रामे धनञ्जयममर्षणम्
विषक्तं मयि दुर्धर्षमश्मकूटमिवाश्मनि १२
एवं ब्रुवन्महाराज महात्मा स महामतिः
महेष्वासैर्वृतो राजन्महेष्वासो व्यवस्थितः १३
ततोऽन्तक इव क्रुद्धः सवज्र इव वासवः
दण्डपाणिरिवासह्यो मृत्युः कालेन चोदितः १४
शूलपाणिरिवाक्षोभ्यो वरुणः पाशवानिव
युगान्ताग्निरिवार्चिष्मान्प्रधक्ष्यन्वै पुनः प्रजाः १५
क्रोधामर्षबलोद्धूतो निवातकवचान्तकः
जयो जेता स्थितः सत्ये पारयिष्यन्महाव्रतम् १६
आमुक्तकवचः खड्गी जाम्बूनदकिरीटभृत्
शुभ्रवर्माम्बरधरः स्वङ्गदी चारुकुण्डली १७
रथप्रवरमास्थाय नरो नारायणानुगः
विधुन्वन्गाण्डिवं संख्ये बभौ सूर्य इवोदितः १८
सोऽग्रानीकस्य महत इषुपाते धनञ्जयः
व्यवस्थाप्य रथं सज्जं शङ्खं दध्मौ प्रतापवान् १९
अथ कृष्णोऽप्यसंभ्रान्तः पार्थेन सह मारिष
प्राध्मापयत्पाञ्चजन्यं शङ्खप्रवरमोजसा २०

तयोः शङ्खप्रणादेन तव सैन्ये विशां पते
आसन्संहृष्टरोमाणः कम्पिता गतचेतसः २१
यथा त्रसन्ति भूतानि सर्वाण्यशनिनिस्वनात्
तथा शङ्खप्रणादेन वित्रेसुस्तव सैनिकाः २२
प्रसुस्रुवुः शकृन्मूत्रं वाहनानि च सर्वशः
एवं सवाहनं सर्वमाविग्नमभवद्बलम् २३
व्यषीदन्त नरा राजञ्शङ्खशब्देन मारिष
विसंज्ञाश्चाभवन्केचित्केचिद्राजन्वितत्रसुः २४
ततः कपिर्महानादं सह भूतैर्ध्वजालयैः
अकरोद्व्यादितास्यश्च भीषयंस्तव सैनिकान् २५
ततः शङ्खाश्च भेर्यश्च मृदङ्गाश्चानकैः सह
पुनरेवाभ्यहन्यन्त तव सैन्यप्रहर्षणाः २६
नानावादित्रसंह्रादैः क्ष्वेडितास्फोटिताकुलैः
सिंहनादैः सवादित्रैः समाहूतैर्महारथैः २७
तस्मिन्सुतुमुले शब्दे भीरूणां भयवर्धने
अतीव हृष्टो दाशार्हमब्रवीत्पाकशासनिः २८
चोदयाश्वान्हृषीकेश यत्र दुर्मर्षणः स्थितः
एतद्भित्त्वा गजानीकं प्रवेक्ष्याम्यरिवाहिनीम् २९
एवमुक्तो महाबाहुः केशवः सव्यसाचिना
अचोदयद्धयांस्तत्र यत्र दुर्मर्षणः स्थितः ३०
स संप्रहारस्तुमुलः संप्रवृत्तः सुदारुणः
एकस्य च बहूनां च रथनागनरक्षयः ३१
ततः सायकवर्षेण पर्जन्य इव वृष्टिमान्
परानवाकिरत्पार्थः पर्वतानिव नीरदः ३२
ते चापि रथिनः सर्वे त्वरिताः कृतहस्तवत्
अवाकिरन्बाणजालैस्ततः कृष्णधनञ्जयौ ३३
ततः क्रुद्धो महाबाहुर्वार्यमाणः परैर्युधि
शिरांसि रथिनां पार्थः कायेभ्योऽपाहरच्छरैः ३४
उद्भ्रान्तनयनैर्वक्त्रैः संदष्टोष्ठपुटैः शुभैः
सकुण्डलशिरस्त्राणैर्वसुधा समकीर्यत ३५

पुण्डरीकवनानीव विध्वस्तानि समन्ततः
विनिकीर्णानि योधानां वदनानि चकाशिरे ३६
तपनीयविचित्राणि सिक्तानि रुधिरेण च
अदृश्यन्त यथा राजन्मेघसंघाः सविद्युतः ३७
शिरसां पततां राजञ्शब्दोऽभूत्पृथिवीतले
कालेन परिपक्वानां तालानां पततामिव ३८
ततः कबन्धः कश्चित्तु धनुरालम्ब्य तिष्ठति
कश्चित्खड्गं विनिष्कृष्य भुजेनोद्यम्य तिष्ठति ३९
नाजानन्त शिरांस्युर्व्यां पतितानि नरर्षभाः
अमृष्यमाणाः कौन्तेयं संग्रामे जयगृद्धिनः ४०
हयानामुत्तमाङ्गैश्च हस्तिहस्तैश्च मेदिनी
बाहुभिश्च शिरोभिश्च वीराणां समकीर्यत ४१
अयं पार्थः कुतः पार्थ एष पार्थ इति प्रभो
तव सैन्येषु योधानां पार्थभूतमिवाभवत् ४२
अन्योन्यमपि चाजघ्नुरात्मानमपि चापरे
पार्थभूतममन्यन्त जगत्कालेन मोहिताः ४३
निष्टनन्तः सरुधिरा विसंज्ञा गाढवेदनाः
शयाना बहवो वीराः कीर्तयन्तः सुहृज्जनम् ४४
सभिण्डपालाः सप्रासाः सशक्त्यृष्टिपरश्वधाः
सनिर्यूहाः सनिस्त्रिंशाः सशरासनतोमराः ४५
सबाणवर्माभरणाः सगदाः साङ्गदा रणे
महाभुजगसङ्काशा बाहवः परिघोपमाः ४६
उद्वेष्टन्ति विचेष्टन्ति संवेष्टन्ति च सर्वशः
वेगं कुर्वन्ति संरब्धा निकृत्ताः परमेषुभिः ४७
यो यः स्म समरे पार्थं प्रतिसंरभते नरः
तस्य तस्यान्तको बाणः शरीरमुपसर्पति ४८
नृत्यतो रथमार्गेषु धनुर्व्यायच्छतस्तथा
न कश्चित्तत्र पार्थस्य ददर्शान्तरमण्वपि ४९
यत्तस्य घटमानस्य क्षिप्रं विक्षिपतः शरान्
लाघवात्पाण्डुपुत्रस्य व्यस्मयन्त परे जनाः ५०

हस्तिनं हस्तियन्तारमश्वमाश्विकमेव च
अभिनत्फल्गुनो बाणै रथिनं च ससारथिम् ५१
आवर्तमानमावृत्तं युध्यमानं च पाण्डवः
प्रमुखे तिष्ठमानं च न कंचिन्न निहन्ति सः ५२
यथोदयन्वै गगने सूर्यो हन्ति महत्तमः
तथार्जुनो गजानीकमवधीत्कङ्कपत्रिभिः ५३
हस्तिभिः पतितैर्भिन्नैस्तव सैन्यमदृश्यत
अन्तकाले यथा भूमिर्विनिकीर्णैर्महीधरैः ५४
यथा मध्यंदिने सूर्यो दुष्प्रेक्षयः प्राणिभिः सदा
तथा धनंजयः क्रुद्धो दुष्प्रेक्षयो युधि शत्रुभिः ५५
तत्तथा तव पुत्रस्य सैन्यं युधि परंतप
प्रभग्नं द्रुतमाविग्नमतीव शरपीडितम् ५६
मारुतेनेव महता मेघानीकं विधूयता
प्रकाल्यमानं तत्सैन्यं नाशकत्प्रतिवीक्षितुम् ५७
प्रतोदैश्चापकोटीभिर्हुंकारैः साधुवाहितैः
कशापार्ष्ण्यभिघातैश्च वाग्भिरुग्राभिरेव च ५८
चोदयन्तो हयांस्तूर्णं पलायन्ते स्म तावकाः
सादिनो रथिनश्चैव पत्तयश्चार्जुनार्दिताः ५९
पार्ष्ण्यङ्गुष्ठाङ्कुशैर्नागाञ्चोदयन्तस्तथापरे
शरैः संमोहिताश्चान्ये तमेवाभिमुखा ययौ
तव योधा हतोत्साहा विभ्रान्तमनसस्तदा ६०
इति श्रीमहाभारते द्रोणपर्वणि चतुःषष्टितमोऽध्यायः ६४

## पञ्चषष्टितमोऽध्यायः

धृतराष्ट्र उवाच
तस्मिन्प्रभग्ने सैन्याग्रे वध्यमाने किरीटिना
के नु तत्र रणे वीराः प्रत्युदीयुर्धनञ्जयम् १
आहो स्विच्छकटव्यूहं प्रविष्टा मोघनिश्चयाः
द्रोणमाश्रित्य तिष्ठन्तः प्राकारमकुतोभयाः २
सञ्जय उवाच

तथार्जुनेन संभग्ने तस्मिंस्तव बले तदा
हतवीरे हतोत्साहे पलायनकृतक्षणे ३
पाकशासनिनाभीक्ष्णं वध्यमाने शरोत्तमैः
न तत्र कश्चित्संग्रामे शशाकार्जुनमीक्षितुम् ४
ततस्तव सुतो राजन्दृष्ट्वा सैन्यं तथागतम्
दुःशासनो भृशं क्रुद्धो युद्धायार्जुनमभ्ययात् ५
स काञ्चनविचित्रेण कवचेन समावृतः
जाम्बूनदशिरस्त्राणः शूरस्तीव्रपराक्रमः ६
नागानीकेन महता ग्रसन्निव महीमिमाम्
दुःशासनो महाराज सव्यसाचिनमावृणोत् ७
ह्रादेन गजघण्टानां शङ्खानां निनदेन च
ज्याक्षेपनिनदैश्चैव विरावेण च दन्तिनाम् ८
भूर्दिशश्चान्तरिक्षं च शब्देनासीत्समावृतम्
स मुहूर्तं प्रतिभयो दारुणः समपद्यत ९
तान्दृष्ट्वा पततस्तूर्णमङ्कुशैरभिचोदितान्
व्यालम्बहस्तान्संरब्धान्सपक्षानिव पर्वतान् १०
सिंहनादेन महता नरसिंहो धनञ्जयः
गजानीकममित्राणामभितो व्यधमच्छरैः ११
महोर्मिणमिवोद्धूतं श्वसनेन महार्णवम्
किरीटी तद्गजानीकं प्राविशन्मकरो यथा १२
काष्ठातीत इवादित्यः प्रतपन्युगसंक्षये
ददृशे दिक्षु सर्वासु पार्थः परपुरञ्जयः १३
खुरशब्देन चाश्वानां नेमिघोषेण तेन च
तेन चोत्क्रुष्टशब्देन ज्यानिनादेन तेन च
देवदत्तस्य घोषेण गाण्डीवनिनदेन च १४
मन्दवेगतरा नागा बभूवुस्ते विचेतसः
शरैराशीविषस्पर्शैर्निर्भिन्नाः सव्यसाचिना १५
ते गजा विशिखैस्तीक्ष्णैर्युधि गाण्डीवचोदितैः
अनेकशतसाहस्रैः सर्वाङ्गेषु समर्पिताः १६
आरावं परमं कृत्वा वध्यमानाः किरीटिना

निपेतुरनिशं भूमौ छिन्नपत्ना इवाद्रयः १७
अपरे दन्तवेष्टेषु कुम्भेषु च कटेषु च
शरैः समर्पिता नागाः क्रौञ्चवद्व्यनदन्मुहुः १८
गजस्कन्धगतानां च पुरुषाणां किरीटिना
आच्छिद्यन्तोत्तमाङ्गानि भल्लैः संनतपर्वभिः १९
सकुण्डलानां पततां शिरसां धरणीतले
पद्मानामिव संघातैः पार्थश्चक्रे निवेदनम् २०
यन्त्रबद्धा विकवचा व्रणार्ता रुधिरोक्षिताः
भ्रमत्सु युधि नागेषु मनुष्या विललम्बिरे २१
केचिदेकेन बाणेन सुमुक्तेन पतत्रिणा
द्वौ त्रयश्च विनिर्भिन्ना निपेतुर्धरणीतले २२
मौर्वीं धनुर्ध्वजं चैव युगानीषास्तथैव च
रथिनां कुट्टयामास भल्लैः संनतपर्वभिः २३
न संदधन्न चाप्यस्यन्न विमुञ्चन्न चोद्धरन्
मण्डलेनैव धनुषा नृत्यन्पार्थः स्म दृश्यते २४
अतिविद्धाश्च नाराचैर्वमन्तो रुधिरं मुखैः
मुहूर्तान्निपतन्त्यन्ये वारणा वसुधातले २५
उत्थितान्यगणेयानि कबन्धानि समन्ततः
अदृश्यन्त महाराज तस्मिन्परमसंकुले २६
सचापाः साङ्गुलित्राणाः सखड्गाः साङ्गदा रणे
अदृश्यन्त भुजाश्छिन्ना हेमाभरणभूषिताः २७
सूपस्करैरधिष्ठानैरीषादण्डकबन्धुरैः
चक्रैर्विमथितैरक्षै भग्नैश्च बहुधा युगैः २८
वर्मचापशरैश्चैव व्यवकीर्णैस्ततस्ततः
स्रग्भिराभरणैर्वस्त्रैः पतितैश्च महाध्वजैः २९
निहतैर्वारणैरश्वैः क्षत्रियैश्च निपातितैः
अदृश्यत मही तत्र दारुणप्रतिदर्शना ३०
एवं दुःशासनबलं वध्यमानं किरीटिना
संप्राद्रवन्महाराज व्यथितं वै सनायकम् ३१
ततो दुःशासनस्त्रस्तः सहानीकः शरार्दितः

द्रोणं त्रातारमाकाङ्क्ञ्शकटव्यूहमभ्यगात् ३२
इति श्रीमहाभारते द्रोणपर्वणि पञ्चषष्टितमोऽध्यायः ६५

## षट्षष्टितमोऽध्यायः

सञ्जय उवाच
दुःशासनबलं हत्वा सव्यसाची धनंजयः
सिन्धुराजं परीप्सन्वै द्रोणानीकमुपाद्रवत् १
स तु द्रोणं समासाद्य व्यूहस्य प्रमुखे स्थितम्
कृताञ्जलिरिदं वाक्यं कृष्णस्यानुमतेऽब्रवीत् २
शिवेन ध्याहि मां ब्रह्मन्स्वस्ति चैव वदस्व मे
भवत्प्रसादादिच्छामि प्रवेष्टुं दुर्भिदां चमूम् ३
भवान्पितृसमो मह्यं धर्मराजसमोऽपि च
तथा कृष्णसमश्चैव सत्यमेतद्ब्रवीमि ते ४
अश्वत्थामा यथा तात रक्षणीयस्तवानघ
तथाहमपि ते रक्ष्यः सदैव द्विजसत्तम ५
तव प्रसादादिच्छामि सिन्धुराजानमाहवे
निहन्तुं द्विपदां श्रेष्ठ प्रतिज्ञां रक्ष मे विभो ६
एवमुक्तस्तदाचार्यः प्रत्युवाच स्मयन्निव
मामजित्वा न बीभत्सो शक्यो जेतुं जयद्रथः ७
एतावदुक्त्वा तं द्रोणः शरव्रातैरवाकिरत्
सरथाश्वध्वजं तीक्ष्णैः प्रहसन्वै ससारथिम् ८
ततोऽजुनः शरव्रातान्द्रोणस्यावार्य सायकैः
द्रोणमभ्यर्दयद्बाणैर्घोररूपैर्महत्तरैः ९
विव्याध च रणे द्रोणमनुमान्य विशां पते
क्षत्रधर्मं समास्थाय नवभिः सायकैः पुनः १०
तस्येषूनिषुभिश्छित्त्वा द्रोणो विव्याध तावुभौ
विषाग्निज्वलनप्रख्यैरिषुभिः कृष्णपाण्डवौ ११
इयेष पाण्डवस्तस्य बाणैश्छेत्तुं शरासनम्
तस्य चिन्तयतस्त्वेवं फल्गुनस्य महात्मनः
द्रोणः शरैरसंभ्रान्तो ज्यां चिच्छेदाशु वीर्यवान् १२

विव्याध च हयानस्य ध्वजं सारथिमेव च
अर्जुनं च शरैर्वीरं स्मयमानोऽभ्यवाकिरत् १३
एतस्मिन्नन्तरे पार्थः सज्जं कृत्वा महद्धनुः
विशेषयिष्यन्नाचार्यं सर्वास्त्रविदुषां वरम्
मुमोच षट्शतान्बाणान्गृहीत्वैकमिव द्रुतम् १४
पुनः सप्त शतानन्यान्सहस्रं चानिवर्तिनाम्
चिक्षेपायुतशश्चान्यांस्तेऽघ्नन्द्रोणस्य तां चमूम् १५
तैः सम्यगस्तैर्बलिना कृतिना चित्रयोधिना
मनुष्यवाजिमातङ्गा विद्धाः पेतुर्गतासवः १६
विद्रुताश्च रणे पेतुः संछिन्नायुधजीविताः
रथिनो रथमुख्येभ्यः सहयाः शरपीडिताः १७
चूर्णिताक्षिप्तदग्धानां वज्रानिलहुताशनैः
तुल्यरूपा गजाः पेतुर्गिर्यग्राम्बुदवेश्मनाम् १८
पेतुरश्वसहस्राणि प्रहतान्यर्जुनेषुभिः
हंसा हिमवतः पृष्ठे वारिविप्रहता इव १९
रथाश्वद्विपपत्त्योघाः सलिलौघा इवाद्भुताः
युगान्तादित्यरश्म्याभैः पाण्डवास्तशरैर्हताः २०
तं पाण्डवादित्यशरांशुजालं कुरुप्रवीरान्युधि निष्टपन्तम्
स द्रोणमेघः शरवर्षवेगैः प्राच्छादयन्मेघ इवार्करश्मीन् २१
अथात्यर्थविसृष्टेन द्विषतामसुभोजिना
आजघ्ने वक्षसि द्रोणो नाराचेन धनञ्जयम् २२
स विह्वलितसर्वाङ्गः क्षितिकम्पे यथाचलः
धैर्यमालम्ब्य बीभत्सुर्द्रोणं विव्याध पत्रिभिः २३
द्रोणस्तु पञ्चभिर्बाणैर्वासुदेवमताडयत्
अर्जुनं च त्रिसप्तत्या ध्वजं चास्य त्रिभिः शरैः २४
विशेषयिष्यञ्शिष्यं च द्रोणो राजन्पराक्रमी
अदृश्यमर्जुनं चक्रे निमेषाच्छरवृष्टिभिः २५
प्रसक्तान्पततोऽद्राक्ष्म भारद्वाजस्य सायकान्
मण्डलीकृतमेवास्य धनुश्चादृश्यताद्भुतम् २६
तेऽभ्ययुः समरे राजन्वासुदेवधनञ्जयौ

द्रोणसृष्टाः सुबहवः कङ्कपत्रपरिच्छदाः २७
तद्दृष्ट्वा तादृशं युद्धं द्रोणपाण्डवयोस्तदा
वासुदेवो महाबुद्धिः कार्यवत्तामचिन्तयत् २८
ततोऽब्रवीद्वासुदेवो धनञ्जयमिदं वचः
पार्थ पार्थ महाबाहो न नः कालात्ययो भवेत् २९
द्रोणमुत्सृज्य गच्छामः कृत्यमेतन्महत्तरम्
पार्थश्चाप्यब्रवीत्कृष्णं यथेष्टमिति केशव ३०
ततः प्रदक्षिणं कृत्वा द्रोणं प्रायान्महाभुजः
परिवृत्तश्च बीभत्सुरगच्छद्विसृजञ्शरान् ३१
ततोऽब्रवीत्स्मयन्द्रोणः क्वेदं पाण्डव गम्यते
ननु नाम रणे शत्रुमजित्वा न निवर्तसे ३२
अर्जुन उवाच
गुरुर्भवान्न मे शत्रुः शिष्यः पुत्रसमोऽस्मि ते
न चास्ति स पुमाँल्लोके यस्त्वां युधि पराजयेत् ३३
सञ्जय उवाच
एवं ब्रुवाणो बीभत्सुर्जयद्रथवधोत्सुकः
त्वरायुक्तो महाबाहुस्तत्सैन्यं समुपाद्रवत् ३४
तं चक्ररक्षौ पाञ्चाल्यौ युधामन्यूत्तमौजसौ
अन्वयातां महात्मानौ विशन्तं तावकं बलम् ३५
ततो जयो महाराज कृतवर्मा च सात्त्वतः
काम्बोजश्च श्रुतायुश्च धनञ्जयमवारयन् ३६
तेषां दशसहस्राणि रथानामनुयायिनाम्
अभीषाहाः शूरसेनाः शिवयोऽथ वसातयः ३७
मावेल्लका ललित्थाश्च केकया मद्रकास्तथा
नारायणाश्च गोपालाः काम्बोजानां च ये गणाः ३८
कर्णेन विजिताः पूर्वं संग्रामे शूरसंमताः
भारद्वाजं पुरस्कृत्य त्यक्तात्मानोऽजुनं प्रति ३९
पुत्रशोकाभिसंतप्तं क्रुद्धं मृत्युमिवान्तकम्
त्यजन्तं तुमुले प्राणान्संनद्धं चित्रयोधिनम् ४०
गाहमानमनीकानि मातङ्गमिव यूथपम्

महेष्वासं पराक्रान्तं नरव्याघ्रमवारयन् ४१
ततः प्रववृते युद्धं तुमुलं लोमहर्षणम्
अन्योन्यं वै प्रार्थयतां योधानामर्जुनस्य च ४२
जयद्रथवधप्रेप्सुमायान्तं पुरुषर्षभम्
न्यवारयन्त सहिताः क्रिया व्याधिमिवोत्थितम् ४३
इति श्रीमहाभारते द्रोणपर्वणि षट्षष्टितमोऽध्यायः ६६

## सप्तषष्टितमोऽध्यायः

सञ्जय उवाच
संनिरुद्धस्तु तैः पार्थो महाबलपराक्रमः
द्रुतं समनुयातश्च द्रोणेन रथिनां वरः १
किरन्निषुगणांस्तीक्ष्णान्स्वरश्मीनिव भास्करः
तापयामास तत्सैन्यं देहं व्याधिगणो यथा २
अश्वो विद्धो ध्वजश्छिन्नः सारोहः पतितो गजः
छत्राणि चापविद्धानि रथाश्चक्रैर्विना कृताः ३
विद्रुतानि च सैन्यानि शरार्तानि समन्ततः
इत्यासीत्तुमुलं युद्धं न प्राज्ञायत किञ्चन ४
तेषामायच्छतां संख्ये परस्परमजिह्मगैः
अर्जुनो ध्वजिनीं राजन्नभीक्ष्णं समकम्पयत् ५
सत्यां चिकीर्षमाणस्तु प्रतिज्ञां सत्यसंगरः
अभ्यद्रवद्रथश्रेष्ठं शोणाश्वं श्वेतवाहनः ६
तं द्रोणः पञ्चविंशत्या मर्मभिद्भिरजिह्मगैः
अन्तेवासिनमाचार्यो महेष्वासं समर्दयत् ७
तं तूर्णमिव बीभत्सुः सर्वशस्त्रभृतां वरः
अभ्यधावदिषूनस्यन्निषुवेगविघातकान् ८
तस्याशु क्षिपतो भल्लान्भल्लैः संनतपर्वभिः
प्रत्यविध्यदमेयात्मा ब्रह्मास्त्रं समुदीरयन् ९
तदद्भुतमपश्याम द्रोणस्याचार्यकं युधि
यतमानो युवा नैनं प्रत्यविध्यद्यदर्जुनः १०
क्षरन्निव महामेघो वारिधाराः सहस्रशः

द्रोणमेघः पार्थशैलं ववर्ष शरवृष्टिभिः ११
अर्जुनः शरवर्षं तद्ब्रह्मास्त्रेणैव मारिष
प्रतिजग्राह तेजस्वी बाणैर्बाणान्विशातयन् १२
द्रोणस्तु पञ्चविंशत्या श्वेतवाहनमार्दयत्
वासुदेवं च सप्तत्या बाह्वोरुरसि चाशुगैः १३
पार्थस्तु प्रहसन्धीमानाचार्यं स शरौघिणम्
विसृजन्तं शितान्बाणानवारयत तं युधि १४
अथ तौ वध्यमानौ तु द्रोणेन रथसत्तमौ
अवर्जयेतां दुर्धर्षं युगान्ताग्निमिवोत्थितम् १५
वर्जयन्निशितान्बाणान्द्रोणचापविनिःसृतान्
किरीटमाली कौन्तेयो भोजानीकं न्यपातयत् १६
सोऽन्तरा कृतवर्माणं काम्बोजं च सुदक्षिणम्
अभ्ययाद्वर्जयन्द्रोणं मैनाकमिव पर्वतम् १७
ततो भोजो नरव्याघ्रं दुःसहः कुरुसत्तम
अविध्यत्तूर्णमव्यग्रो दशभिः कङ्कपत्रिभिः १८
तमर्जुनः शितेनाजौ राजन्विव्याध पत्रिणा
पुनश्चान्यैस्त्रिभिर्बाणैर्मोहयन्निव सात्वतम् १९
भोजस्तु प्रहसन्पार्थं वासुदेवं च माधवम्
एकैकं पञ्चविंशत्या सायकानां समार्पयत् २०
तस्यार्जुनो धनुश्छित्त्वा विव्याधैनं त्रिसप्तभिः
शरैरग्निशिखाकारैः क्रुद्धाशीविषसंनिभैः २१
अथान्यद्धनुरादाय कृतवर्मा महारथः
पञ्चभिः सायकैस्तूर्णं विव्याधोरसि भारत २२
पुनश्च निशितैर्बाणैः पार्थं विव्याध पञ्चभिः
तं पार्थो नवभिर्बाणैराजघान स्तनान्तरे २३
विषक्तं दृश्य कौन्तेयं कृतवर्मरथं प्रति
चिन्तयामास वार्ष्णेयो न नः कालात्ययो भवेत् २४
ततः कृष्णोऽब्रवीत्पार्थं कृतवर्मणि मा दयाम्
कुरुसांबन्धिकं कृत्वा प्रमथ्यैनं विशातय २५
ततः स कृतवर्माणं मोहयित्वार्जुनः शरैः

अभ्यगाज्जवनैरश्वैः काम्बोजानामनीकिनीम् २६
अमर्षितस्तु हार्दिक्यः प्रविष्टे श्वेतवाहने
विधुन्वन्सशरं चापं पाञ्चाल्याभ्यां समागतः २७
चक्ररक्षौ तु पाञ्चाल्यावर्जुनस्य पदानुगौ
पर्यवारयदायान्तौ कृतवर्मा रथेषुभिः २८
तावविध्यत्ततो भोजः सर्वपारशवैः शरैः
त्रिभिरेव युधामन्युं चतुर्भिश्चोत्तमौजसम् २९
तावप्येनं विव्यधतुर्दशभिर्दशभिः शरैः
संचिच्छिदतुरप्यस्य ध्वजं कार्मुकमेव च ३०
अथान्यद्धनुरादाय हार्दिक्यः क्रोधमूर्छितः
कृत्वा विधनुषौ वीरौ शरवर्षैरवाकिरत् ३१
तावन्ये धनुषी सज्ये कृत्वा भोजं विजघ्नतुः
तेनान्तरेण बीभत्सुर्विवेशामित्रवाहिनीम् ३२
न लेभाते तु तौ द्वारं वारितौ कृतवर्मणा
धार्तराष्ट्रेष्वनीकेषु यतमानौ नरर्षभौ ३३
अनीकान्यर्दयन्युद्धे त्वरितः श्वेतवाहनः
नावधीत्कृतवर्माणं प्राप्तमप्यरिसूदनः ३४
तं दृष्ट्वा तु तथायान्तं शूरो राजा श्रुतायुधः
अभ्यद्रवत्सुसंक्रुद्धो विधुन्वानो महद्धनुः ३५
स पार्थं त्रिभिरानर्छत्सप्तत्या च जनार्दनम्
क्षुरप्रेण सुतीक्ष्णेन पार्थकेतुमताडयत् ३६
तमर्जुनो नवत्या तु शराणां नतपर्वणाम्
आजघान भृशं क्रुद्धस्तोत्त्रैरिव महाद्विपम् ३७
स तन्न ममृषे राजन्पाण्डवेयस्य विक्रमम्
अथैनं सप्तसप्तत्या नाराचानां समार्पयत् ३८
तस्यार्जुनो धनुश्छित्त्वा शरावापं निकृत्य च
आजघानोरसि क्रुद्धः सप्तभिर्नतपर्वभिः ३९
अथान्यद्धनुरादाय स राजा क्रोधमूर्छितः
वासविं नवभिर्बाणैर्बाह्वोरुरसि चार्पयत् ४०
ततोऽर्जुनः स्मयन्नेव श्रुतायुधमरिंदमः

शरैरनेकसाहस्रैः पीडयामास भारत ४१
अश्वांश्चास्यावधीत्तूर्णं सारथिं च महारथः
विव्याध चैनं सप्तत्या नाराचानां महाबलः ४२
हताश्वं रथमुत्सृज्य स तु राजा श्रुतायुधः
अभ्यद्रवद्रणे पार्थं गदामुद्यम्य वीर्यवान् ४३
वरुणस्यात्मजो वीरः स तु राजा श्रुतायुधः
पर्णाशा जननी यस्य शीततोया महानदी ४४
तस्य माताब्रवीद्वाक्यं वरुणं पुत्रकारणात्
अवध्योऽय भवेल्लोके शत्रूणां तनयो मम ४५
वरुणस्त्वब्रवीत्प्रीतो ददाम्यस्मै वरं हितम्
दिव्यमस्त्रं सुतस्तेऽय येनावध्यो भविष्यति ४६
नास्ति चाप्यमरत्वं वै मनुष्यस्य कथंचन
सर्वेणावश्यमर्तव्यं जातेन सरितां वरे ४७
दुर्धर्षस्त्वेष शत्रूणां रणेषु भविता सदा
अस्त्रस्यास्य प्रभावाद्वै व्येतु ते मानसो ज्वरः ४८
इत्युक्त्वा वरुणः प्रादाद्गदां मन्त्रपुरस्कृताम्
यामासाद्य दुराधर्षः सर्वलोके श्रुतायुधः ४९
उवाच चैनं भगवान्पुनरेव जलेश्वरः
अयुध्यति न मोक्तव्या सा त्वय्येव पतेदिति ५०
स तया वीरघातिन्या जनार्दनमताडयत्
प्रतिजग्राह तां कृष्णः पीनेनांसेन वीर्यवान् ५१
नाकम्पयत शौरिं सा विन्ध्यं गिरिमिवानिलः
प्रत्यभ्ययात्तं विप्रोढा कृत्येव दुरधिष्ठिता ५२
जघान चास्थितं वीरं श्रुतायुधममर्षणम्
हत्वा श्रुतायुधं वीरं जगतीमन्वपद्यत ५३
हाहाकारो महांस्तत्र सैन्यानां समजायत
स्वेनास्त्रेण हतं दृष्ट्वा श्रुतायुधमरिंदमम् ५४
अयुध्यमानाय हि सा केशवाय नराधिप
क्षिप्ता श्रुतायुधेनाथ तस्मात्तमवधीद्गदा ५५
यथोक्तं वरुणेनाजौ तथा स निधनं गतः

व्यसुश्चाप्यपतद्भूमौ प्रेक्षतां सर्वधन्विनाम् ५६
पतमानस्तु स बभौ पर्णाशायाः प्रियः सुतः
संभग्न इव वातेन बहुशाखो वनस्पतिः ५७
ततः सर्वाणि सैन्यानि सेनामुख्याश्च सर्वशः
प्राद्रवन्त हतं दृष्ट्वा श्रुतायुधमरिंदमम् ५८
ततः काम्बोजराजस्य पुत्रः शूरः सुदक्षिणः
अभ्ययाज्जवनैरश्वैः फल्गुनं शत्रुसूदनम् ५९
तस्य पार्थः शरान्सप्त प्रेषयामास भारत
ते तं शूरं विनिर्भिद्य प्राविशन्धरणीतलम् ६०
सोऽतिविद्धः शरैस्तीक्ष्णैर्गाण्डीवप्रेषितैर्मृधे
अर्जुनं प्रतिविव्याध दशभिः कङ्कपत्रिभिः ६१
वासुदेवं त्रिभिर्विद्ध्वा पुनः पार्थं च पञ्चभिः
तस्य पार्थो धनुश्छित्त्वा केतुं चिच्छेद मारिष ६२
भल्लाभ्यां भृशतीक्ष्णाभ्यां तं च विव्याध पाण्डवः
स तु पार्थं त्रिभिर्विद्ध्वा सिंहनादमथानदत् ६३
सर्वपारशवीं चैव शक्तिं शूरः सुदक्षिणः
सघण्टां प्रहिणोद्घोरां क्रुद्धो गाण्डीवधन्वने ६४
सा ज्वलन्ती महोल्केव तमासाद्य महारथम्
सविस्फुलिङ्गा निर्भिद्य निपपात महीतले ६५
तं चतुर्दशभिः पार्थो नाराचैः कङ्कपत्रिभिः
साश्वध्वजधनुःसूतं विव्याधाचिन्त्यविक्रमः
रथं चान्यैः सुबहुभिश्चक्रे विशकलं शरैः ६६
सुदक्षिणं तुं काम्बोजं मोघसङ्कल्पविक्रमम्
बिभेद हृदि बाणेन पृथुधारेण पाण्डवः ६७
स भिन्नमर्मा स्रस्ताङ्गः प्रभ्रष्टमुकुटाङ्गदः
पपाताभिमुखः शूरो यन्त्रमुक्त इव ध्वजः ६८
गिरेः शिखरजः श्रीमान्सुशाखः सुप्रतिष्ठितः
निर्भग्न इव वातेन कर्णिकारो हिमात्यये ६९
शेते स्म निहतो भूमौ काम्बोजास्तरणोचितः
सुदर्शनीयस्ताम्राक्षः कर्णिना स सुदक्षिणः

पुत्रः काम्बोजराजस्य पार्थेन विनिपातितः ७०
ततः सर्वाणि सैन्यानि व्यद्रवन्त सुतस्य ते
हतं श्रुतायुधं दृष्ट्वा काम्बोजं च सुदक्षिणम् ७१
इति श्रीमहाभारते द्रोणपर्वणि सप्तषष्टितमोऽध्यायः ६७

## अष्टषष्ठितमोऽध्यायः

सञ्जय उवाच
हते सुदक्षिणे राजन्वीरे चैव श्रुतायुधे
जवेनाभ्यद्रवन्पार्थं कुपिताः सैनिकास्तव १
अभीषाहाः शूरसेनाः शिबयोऽथ वसातयः
अभ्यवर्षंस्ततो राजञ्शरवर्षैर्धनञ्जयम् २
तेषां षष्टिशतानार्यान्प्रामथ्नात्पाण्डवः शरैः
ते स्म भीताः पलायन्त व्याघ्रात्क्षुद्रमृगा इव ३
ते निवृत्य पुनः पार्थं सर्वतः पर्यवारयन्
रणे सपत्नान्निघ्नन्तं जिगीषन्तं परान्युधि ४
तेषामापततां तूर्णं गाण्डीवप्रेषितैः शरैः
शिरांसि पातयामास बाहूंश्चैव धनञ्जयः ५
शिरोभिः पतितैस्तत्र भूमिरासीन्निरन्तरा
अभ्रच्छायेव चैवासीद्ध्वाङ्क्षगृध्रवडैर्युधि ६
तेषु तूत्साद्यमानेषु क्रोधामर्षसमन्वितौ
श्रुतायुश्चाच्युतायुश्च धनञ्जयमयुध्यताम् ७
बलिनौ स्पर्धिनौ वीरौ कुलजौ बाहुशालिनौ
तावेनं शरवर्षाणि सव्यदक्षिणमस्यताम् ८
त्वरायुक्तौ महाराज प्रार्थयानौ महद्यशः
अर्जुनस्य वधप्रेप्सू पुत्रार्थे तव धन्विनौ ९
तावर्जुनं सहस्रेण पत्रिणां नतपर्वणाम्
पूरयामासतुः क्रुद्धो तडागं जलदौ यथा १०
श्रुतायुश्च ततः क्रुद्धस्तोमरेण धनञ्जयम्
आजघान रथश्रेष्ठः पीतेन निशितेन च ११
सोऽतिविद्धो बलवता शत्रुणा शत्रुकर्शनः

आजगाम परं मोहं मोहयन्केशवं रणे १२
एतस्मिन्नेव काले तु सोऽच्युतायुर्महारथः
शूलेन भृशतीक्ष्णेन ताडयामास पाण्डवम् १३
क्षते क्षारं स हि ददौ पाण्डवस्य महात्मनः
पार्थोऽपि भृशसंविद्धो ध्वजयष्टिं समाश्रितः १४
ततः सर्वस्य सैन्यस्य तावकस्य विशां पते
सिंहनादो महानासीद्धतं मत्वा धनञ्जयम् १५
कृष्णश्च भृशसंतप्तो दृष्ट्वा पार्थं विचेतसम्
आश्वासयत्सुहृद्याभिर्वाग्भिस्तत्र धनञ्जयम् १६
ततस्तौ रथिनां श्रेष्ठौ लब्धलक्षौ धनञ्जयम्
वासुदेवं च वार्ष्णेयं शरवर्षैः समन्ततः १७
सचक्रकूबररथं साश्वध्वजपताकिनम्
अदृश्यं चक्रतुर्युद्धे तदद्भुतमिवाभवत् १८
प्रत्याश्वस्तस्तु बीभत्सुः शनकैरिव भारत
प्रेतराजपुरं प्राप्य पुनः प्रत्यागतो यथा १९
संछन्नं शरजालेन रथं दृष्ट्वा सकेशवम्
शत्रू चाभिमुखौ दृष्ट्वा दीप्यमानाविवानलौ २०
प्रादुश्चक्रे ततः पार्थः शाक्रमस्त्रं महारथः
तस्मादासन्सहस्राणि शराणां नतपर्वणाम् २१
ते जघ्नुस्तौ महेष्वासौ ताभ्यां सृष्टांश्च सायकान्
विचेरुराकाशगताः पार्थबाणविदारिताः २२
प्रतिहत्य शरांस्तूर्णं शरवेगेन पाण्डवः
प्रतस्थे तत्र तत्रैव योधयन्वै महारथान् २३
तौ च फल्गुनबाणौघैर्विबाहुशिरसौ कृतौ
वसुधामन्वपद्येतां वातनुन्नाविव द्रुमौ २४
श्रुतायुषश्च निधनं वधश्चैवाच्युतायुषः
लोकविस्मापनमभूत्समुद्रस्येव शोषणम् २५
तयोः पदानुगान्हत्वा पुनः पञ्चशतान्रथान्
अभ्यगाद्भारतीं सेनां निघ्नन्पार्थो वरान्वरान् २६
श्रुतायुषं च निहतं प्रेक्ष्य चैवाच्युतायुषम्

अयुतायुश्च संक्रुद्धो दीर्घायुश्चैव भारत २७
पुत्रौ तयोर्नरश्रेष्ठौ कौन्तेयं प्रतिजग्मतुः
किरन्तौ विविधान्बाणान्पितृव्यसनकर्शितौ २८
तावर्जुनो मुहूर्तेन शरैः संनतपर्वभिः
प्रैषयत्परमक्रुद्धो यमस्य सदनं प्रति २९
लोडयन्तमनीकानि द्विपं पद्मसरो यथा
नाशक्नुवन्वारयितुं पार्थं क्षत्रियपुङ्गवाः ३०
अङ्गास्तु गजवारेण पाण्डवं पर्यवारयन्
क्रुद्धाः सहस्रशो राजञ्शिक्षिता हस्तिसादिनः ३१
दुर्योधनसमादिष्टाः कुञ्जरैः पर्वतोपमैः
प्राच्याश्च दाक्षिणात्याश्च कलिङ्गप्रमुखा नृपाः ३२
तेषामापततां शीघ्रं गाण्डीवप्रेषितैः शरैः
निचकर्त शिरांस्युग्रौ बाहूनपि सुभूषणान् ३३
तैः शिरोभिर्मही कीर्णा बाहुभिश्च सहाङ्गदैः
बभौ कनकपाषाणा भुजगैरिव संवृता ३४
बाहवो विशिखैश्छिन्नाः शिरांस्युन्मथितानि च
च्यवमानान्यदृश्यन्त द्रुमेभ्य इव पक्षिणः ३५
शरैः सहस्रशो विद्धा द्विपाः प्रस्रुतशोणिताः
व्यदृश्यन्ताद्रयः काले गैरिकाम्बुस्रवा इव ३६
निहताः शेरते स्मान्ये बीभत्सोर्निशितैः शरैः
गजपृष्ठगता म्लेच्छा नानाविकृतदर्शनाः ३७
नानावेषधरा राजन्नानाशस्त्रौघसंवृताः
रुधिरेणानुलिप्ताङ्गा भान्ति चित्रैः शरैर्हताः ३८
शोणितं निर्वमन्ति स्म द्विपाः पार्थशराहताः
सहस्रशश्छिन्नगात्राः सारोहाः सपदानुगाः ३९
चुक्रुशुश्च निपेतुश्च बभ्रमुश्चापरे दिशः
भृशं त्रस्ताश्च बहुधा स्वानेन ममृदुर्गजाः
सान्तरायुधिका मत्ता द्विपास्तीक्ष्णविषोपमाः ४०
विदन्त्यसुरमायां ये सुघोरा घोरचक्षुषः
यवनाः पारदाश्चैव शकाश्च सुनिकैः सह ४१

गोयोनिप्रभवा म्लेच्छाः कालकल्पाः प्रहारिणः
दार्वाभिसारा दरदाः पुण्ड्राश्च सह बाह्लिकैः ४२
न ते स्म शक्याः संख्यातुं व्राताः शतसहस्रशः
वृष्टिस्तथाविधा ह्यासीच्छलभानामिवायतिः ४३
अभ्रच्छायामिव शरैः सैन्ये कृत्वा धनञ्जयः
मुण्डार्धमुण्डजटिलानशुचीञ्जटिलाननान्
म्लेच्छानशातयत्सर्वान्समेतानस्त्रमायया ४४
शरैश्च शतशो विद्धास्ते संघाः संघचारिणः
प्राद्रवन्त रणे भीता गिरिगह्वरवासिनः ४५
गजाश्वसादिम्लेच्छानां पतितानां शतैः शरैः
वडाः कङ्का वृका भूमावपिबन्रुधिरं मुदा ४६
प्रत्त्यश्वरथनागैश्च पृच्छन्नकृतसंक्रमाम्
शरवर्षप्लवां घोरां केशशैवलशाड्वलाम्
प्रावर्तयन्नदीमुग्रां शोणितौघतरङ्गिणीम् ४७
शिरस्त्राणक्षुद्रमत्स्यां युगान्ते कालसंभृताम्
अकरोद्गजसंबाधां नदीमुत्तरशोणिताम्
देहेभ्यो राजपुत्राणां नागाश्वरथसादिनाम् ४८
यथा स्थलं च निम्नं च न स्याद्वर्षति वासवे
तथासीत्पृथिवी सर्वा शोणितेन परिप्लुता ४९
षट्सहस्रान्वरान्वीरान्पुनर्दशशतान्वरान्
प्राहिणोन्मृत्युलोकाय क्षत्रियान्क्षत्रियर्षभः ५०
शरैः सहस्रशो विद्धा विधिवत्कल्पिता द्विपाः
शेरते भूमिमासाद्य शैला वज्रहता इव ५१
स वाजिरथमातङ्गान्निघ्नन्व्यचरदर्जुनः
प्रभिन्न इव मातङ्गो मृद्नन्नडवनं यथा ५२
भूरिद्रुमलतागुल्मं शुष्केन्धनतृणोलपम्
निर्दहेदनलोऽरण्यं यथा वायुसमीरितः ५३
सैन्यारण्यं तव तथा कृष्णानिलसमीरितः
शरार्चिरदहत्क्रुद्धः पाण्डवाग्निर्धनञ्जयः ५४
शून्यान्कुर्वन्रथोपस्थान्मानवैः संस्तरन्महीम्

प्रानृत्यदिव संबाधे चापहस्तो धनञ्जयः ५५
वज्रकल्पैः शरैर्भूमिं कुर्वन्नुत्तरशोणिताम्
प्राविशद्भारतीं सेनां संक्रुद्धो वै धनञ्जयः
तं श्रुतायुस्तथाम्बष्ठो व्रजमानं न्यवारयत् ५६
तस्यार्जुनः शरैस्तीक्ष्णैः कङ्कपत्रपरिच्छदैः
न्यपातयद्धयाञ्शीघ्रं यतमानस्य मारिष
धनुश्चास्यापरैश्छित्त्वा शरैः पार्थो विचक्रमे ५७
अम्बष्ठस्तु गदां गृह्य क्रोधपर्याकुलेक्षणः
आससाद रणे पार्थं केशवं च महारथम् ५८
ततः स प्रहसन्वीरो गदामुद्यम्य भारत
रथमावार्य गदया केशवं समताडयत् ५९
गदया ताडितं दृष्ट्वा केशवं परवीरहा
अर्जुनो भृशसंक्रुद्धः सोऽम्बष्ठं प्रति भारत ६०
ततः शरैर्हेमपुङ्खैः सगदं रथिनां वरम्
छादयामास समरे मेघः सूर्यमिवोदितम् ६१
ततोऽपरैः शरैश्चापि गदां तस्य महात्मनः
अचूर्णयत्तदा पार्थस्तदद्भुतमिवाभवत् ६२
अथ तां पतितां दृष्ट्वा गृह्यान्यां महतीं गदाम्
अर्जुनं वासुदेवं च पुनः पुनरताडयत् ६३
तस्यार्जुनः क्षुरप्राभ्यां सगदावुद्यतौ भुजौ
चिच्छेदेन्द्रध्वजाकारौ शिरश्चान्येन पत्रिणा ६४
स पपात हतो राजन्वसुधामनुनादयन्
इन्द्रध्वज इवोत्सृष्टो यन्त्रनिर्मुक्तबन्धनः ६५
रथानीकावगाढश्च वारणाश्वशतैर्वृतः
सोऽदृश्यत तदा पार्थो घनैः सूर्य इवावृतः ६६
इति श्रीमहाभारते द्रोणपर्वणिअष्टषष्टितमोऽध्यायः ६८

## एकोन सप्ततितमोऽध्यायः

सञ्जय उवाच
ततः प्रविष्टे कौन्तेये सिन्धुराजजिघांसया

द्रोणानीकं विनिर्भिद्य भोजानीकं च दुस्तरम् १
काम्बोजस्य च दायादे हते राजन्सुदक्षिणे
श्रुतायुधे च विक्रान्ते निहते सव्यसाचिना २
विप्रद्रुतेष्वनीकेषु विध्वस्तेषु समन्ततः
प्रभग्नं स्वबलं दृष्ट्वा पुत्रस्ते द्रोणमभ्ययात् ३
त्वरन्नेकरथेनैव समेत्य द्रोणमब्रवीत्
गतः स पुरुषव्याघ्रः प्रमथ्येमां महाचमूम् ४
अत्र बुद्ध्या समीक्षस्व किं नु कार्यमनन्तरम्
अर्जुनस्य विघाताय दारुणेऽस्मिञ्जनक्षये ५
यथा स पुरुषव्याघ्रो न हन्येत जयद्रथः
तथा विधत्स्व भद्रं ते त्वं हि नः परमा गतिः ६
असौ धनञ्जयाग्निर्हि कोपमारुतचोदितः
सेनाकक्षं दहति मे वह्निः कक्षमिवोत्थितः ७
अतिक्रान्ते हि कौन्तेये भित्त्वा सैन्यं परंतप
जयद्रथस्य गोप्तारः संशयं परमं गताः ८
स्थिरा बुद्धिर्नरेन्द्राणामासीद्ब्रह्मविदां वर
नातिक्रमिष्यति द्रोणं जातु जीवन्धनञ्जयः ९
सोऽसौ पार्थो व्यतिक्रान्तो मिषतस्ते महाद्युते
सर्वं ह्यद्यातुरं मन्ये नैतदस्ति बलं मम १०
जानामि त्वां महाभाग पाण्डवानां हिते रतम्
तथा मुह्यामि च ब्रह्मन्कार्यवत्तां विचिन्तयन् ११
यथाशक्ति च ते ब्रह्मन्वर्तये वृत्तिमुत्तमाम्
प्रीणामि च यथाशक्ति तच्च त्वं नावबुध्यसे १२
अस्मान्न त्वं सदा भक्तानिच्छस्यमितविक्रम
पाण्डवान्सततं प्रीणास्यस्माकं विप्रिये रतान् १३
अस्मानेवोपजीवंस्त्वमस्माकं विप्रिये रतः
न ह्यहं त्वां विजानामि मधुदिग्धमिव क्षुरम् १४
नादास्यच्चेद्वरं मह्यं भवान्पाण्डवनिग्रहे
नावारयिष्यं गच्छन्तमहं सिन्धुपतिं गृहान् १५
मया त्वाशंसमानेन त्वत्तस्त्राणमबुद्धिना

आश्वासितः सिन्धुपतिर्मोहाद्दत्तश्च मृत्यवे १६
यमदंष्ट्रान्तरं प्राप्तो मुच्येतापि हि मानवः
नार्जुनस्य वशं प्राप्तो मुच्येताजौ जयद्रथः १७
स तथा कुरु शोणाश्व यथा रक्ष्येत सैन्धवः
मम चार्तप्रलापानां मा क्रुधः पाहि सैन्धवम् १८
द्रोण उवाच
नाभ्यसूयामि ते वाचमश्वत्थाम्नासि मे समः
सत्यं तु ते प्रवक्ष्यामि तज्जुषस्व विशां पते १९
सारथिः प्रवरः कृष्णः शीघ्राश्चास्य हयोत्तमाः
अल्पं च विवरं कृत्वा तूर्णं याति धनञ्जयः २०
किं नु पश्यसि बाणौघान्क्रोशमात्रे किरीटिनः
पश्चाद्रथस्य पतितान्क्षिप्ताञ्शीघ्रं हि गच्छतः २१
न चाहं शीघ्रयानेऽद्य समर्थो वयसान्वितः
सेनामुखे च पार्थानामेतद्बलमुपस्थितम् २२
युधिष्ठिरश्च मे ग्राह्यो मिषतां सर्वधन्विनाम्
एवं मया प्रतिज्ञातं क्षत्रमध्ये महाभुज २३
धनञ्जयेन चोत्सृष्टो वर्तते प्रमुखे मम
तस्माद्व्यूहमुखं हित्वा नाहं यास्यामि फल्गुनम् २४
तुल्याभिजनकर्माणं शत्रुमेकं सहायवान्
गत्वा योधय मा भैस्त्वं त्वं ह्यस्य जगतः पतिः २५
राजा शूरः कृती दक्षो वैरमुत्पाद्य पाण्डवैः
वीर स्वयं प्रयाह्याशु यत्र यातो धनञ्जयः २६
दुर्योधन उवाच
कथं त्वामप्यतिक्रान्तः सर्वशस्त्रभृतां वरः
धनञ्जयो मया शक्य आचार्य प्रतिबाधितुम् २७
अपि शक्यो रणे जेतुं वज्रहस्तः पुरंदरः
नार्जुनः समरे शक्यो जेतुं परपुरञ्जयः २८
येन भोजश्च हार्दिक्यो भवांश्च त्रिदशोपमः
अस्त्रप्रतापेन जितौ श्रुतायुश्च निबर्हितः २९
सुदक्षिणश्च निहतः स च राजा श्रुतायुधः

श्रुतायुश्चाच्युतायुश्च म्लेच्छाश्च शतशो हताः ३०
तं कथं पाण्डवं युद्धे दहन्तमहितान्बहून्
प्रतियोत्स्यामि दुर्धर्षं तन्मे शंसास्त्रकोविद ३१
क्षमं चेन्मन्यसे युद्धं मम तेनाद्य शाधि माम्
परवानस्मि भवति प्रेष्यकृद्रक्ष मे यशः ३२
द्रोण उवाच
सत्यं वदसि कौरव्य दुराधर्षो धनञ्जयः
अहं तु तत्करिष्यामि यथैनं प्रसहिष्यसि ३३
अद्भुतं चाद्य पश्यन्तु लोके सर्वधनुर्धराः
विषक्तं त्वयि कौन्तेयं वासुदेवस्य पश्यतः ३४
एष ते कवचं राजंस्तथा बध्नामि काञ्चनम्
यथा न बाणा नास्त्राणि विषहिष्यन्ति ते रणे ३५
यदि त्वां सासुरसुराः सयक्षोरगराक्षसाः
योधयन्ति त्रयो लोकाः सनरा नास्ति ते भयम् ३६
न कृष्णो न च कौन्तेयो च चान्यः शस्त्रभृद्रणे
शरानर्पयितुं कश्चित्कवचे तव शक्ष्यति ३७
स त्वं कवचमास्थाय क्रुद्धमद्य रणेऽजुनम्
त्वरमाणः स्वयं याहि न चासौ त्वां सहिष्यते ३८
सञ्जय उवाच
एवमुक्त्वा त्वरन्द्रोणः स्पृष्ट्वाम्भो वर्म भास्वरम्
आबबन्धाद्भुततमं जपन्मन्त्रं यथाविधि ३९
रणे तस्मिन्सुमहति विजयाय सुतस्य ते
विसिस्मापयिषुर्लोकं विद्यया ब्रह्मवित्तमः ४०
द्रोण उवाच
करोतु स्वस्ति ते ब्रह्मा स्वस्ति चापि द्विजातयः
सरीसृपाश्च ये श्रेष्ठास्तेभ्यस्ते स्वस्ति भारत ४१
ययातिर्नहुषश्चैव धुन्धुमारो भगीरथः
तुभ्यं राजर्षयः सर्वे स्वस्ति कुर्वन्तु सर्वशः ४२
स्वस्ति तेऽस्त्वेकपादेभ्यो बहुपादेभ्य एव च
स्वस्त्यस्त्वपादकेभ्यश्च नित्यं तव महारणे ४३

स्वाहा स्वधा शची चैव स्वस्ति कुर्वन्तु ते सदा
लक्ष्मीररुन्धती चैव कुरुतां स्वस्ति तेऽनघ ४४
असितो देवलश्चैव विश्वामित्रस्तथाङ्गिराः
वसिष्ठः कश्यपश्चैव स्वस्ति कुर्वन्तु ते नृप ४५
धाता विधाता लोकेशो दिशश्च सदिगीश्वराः
स्वस्ति तेऽद्य प्रयच्छन्तु कार्त्तिकेयश्च षरामुखः ४६
विवस्वान्भगवान्स्वस्ति करोतु तव सर्वशः
दिग्गजाश्चैव चत्वारः क्षितिः खं गगनं ग्रहाः ४७
अधस्ताद्धरणीं योऽसौ सदा धारयते नृप
स शेषः पन्नगश्रेष्ठः स्वस्ति तुभ्यं प्रयच्छतु ४८
गान्धारे युधि विक्रम्य निर्जिताः सुरसत्तमाः
पुरा वृत्रेण दैत्येन भिन्नदेहाः सहस्रशः ४९
हृततेजोबलाः सर्वे तदा सेन्द्रा दिवौकसः
ब्रह्माणं शरणं जग्मुर्वृत्राद्भीता महासुरात् ५०
देवा ऊचुः
प्रमर्दितानां वृत्रेण देवानां देवसत्तम
गतिर्भव सुरश्रेष्ठ त्राहि नो महतो भयात् ५१
द्रोण उवाच
अथ पार्श्वे स्थितं विष्णुं शक्रादींश्च सुरोत्तमान्
प्राह तथ्यमिदं वाक्यं विषरणान्सुरसत्तमान् ५२
रक्ष्या मे सततं देवाः सहेन्द्राः सद्विजातयः
त्वष्टुः सुदुर्धरं तेजो येन वृत्रो विनिर्मितः ५३
त्वष्ट्रा पुरा तपस्तप्त्वा वर्षायुतशतं तदा
वृत्रो विनिर्मितो देवाः प्राप्यानुज्ञां महेश्वरात् ५४
स तस्यैव प्रसादाद्वै हन्यादेव रिपुर्बली
नागत्वा शङ्करस्थानं भगवान्दृश्यते हरः ५५
दृष्ट्वा हनिष्यथ रिपुं क्षिप्रं गच्छत मन्दरम्
यत्रास्ते तपसां योनिर्दक्षयज्ञविनाशनः
पिनाकी सर्वभूतेशो भगनेत्रनिपातनः ५६
ते गत्वा सहिता देवा ब्रह्मणा सह मन्दरम्

अपश्यंस्तेजसां राशिं सूर्यकोटिसमप्रभम् ५७
सोऽब्रवीत्स्वागतं देवा ब्रूत किं करवाण्यहम्
अमोघं दर्शनं मह्यं कामप्राप्तिरतोऽस्तु वः ५८
एवमुक्तास्तु ते सर्वे प्रत्यूचुस्तं दिवौकसः
तेजो हृतं नो वृत्रेण गतिर्भव दिवौकसाम् ५९
मूर्तीरीक्षस्व नो देव प्रहारैर्जर्जरीकृताः
शरणं त्वां प्रपन्नाः स्म गतिर्भव महेश्वर ६०
महेश्वर उवाच
विदितं मे यथा देवाः कृत्येयं सुमहाबला
त्वष्टुस्तेजोभवा घोरा दुर्निवार्याकृतात्मभिः ६१
अवश्यं तु मया कार्यं साह्यं सर्वदिवौकसाम्
ममेदं गात्रजं शक्र कवचं गृह्य भास्वरम्
बधानानेन मन्त्रेण मानसेन सुरेश्वर ६२
द्रोण उवाच
इत्युक्त्वा वरदः प्रादाद्वर्म तन्मन्त्रमेव च
स तेन वर्मणा गुप्तः प्रायाद्वृत्रचमूं प्रति ६३
नानाविधैश्च शस्त्रौघैः पात्यमानैर्महारणे
न संधिः शक्यते भेत्तुं वर्मबन्धस्य तस्य तु ६४
ततो जघान समरे वृत्रं देवपतिः स्वयम्
तं च मन्त्रमयं बन्धं वर्म चाङ्गिरसे ददौ ६५
अङ्गिराः प्राह पुत्रस्य मन्त्रज्ञस्य बृहस्पतेः
बृहस्पतिरथोवाच अग्निवेश्याय धीमते ६६
अग्निवेश्यो मम प्रादात्तेन बध्नामि वर्म ते
तवाद्य देहरक्षार्थं मन्त्रेण नृपसत्तम ६७
सञ्जय उवाच
एवमुक्त्वा ततो द्रोणस्तव पुत्रं महाद्युतिः
पुनरेव वचः प्राह शनैराचार्यपुङ्गवः ६८
ब्रह्मसूत्रेण बध्नामि कवचं तव पार्थिव
हिरण्यगर्भेण यथा बद्धं विष्णोः पुरा रणे ६९
यथा च ब्रह्मणा बद्धं संग्रामे तारकामये

शक्रस्य कवचं दिव्यं तथा बध्नाम्यहं तव ७०
बद्ध्वा तु कवचं तस्य मन्त्रेण विधिपूर्वकम्
प्रेषयामास राजानं युद्धाय महते द्विजः ७१
स संनद्धो महाबाहुराचार्येण महात्मना
रथानां च सहस्रेण त्रिगर्तानां प्रहारिणाम् ७२
तथा दन्तिसहस्रेण मत्तानां वीर्यशालिनाम्
अश्वानामयुतेनैव तथान्यैश्च महारथैः ७३
वृतः प्रायान्महाबाहुरर्जुनस्य रथं प्रति
नानावादित्रघोषेण यथा वैरोचनिस्तथा ७४
ततः शब्दो महानासीत्सैन्यानां तव भारत
अगाधं प्रस्थितं दृष्ट्वा समुद्रमिव कौरवम् ७५
इति श्रीमहाभारते द्रोणपर्वणि एकोनसप्ततितमोऽध्यायः ६९

## सप्ततितमोऽध्यायः

सञ्जय उवाच
प्रविष्टयोर्महाराज पार्थवार्ष्णेययोस्तदा
दुर्योधने प्रयाते च पृष्ठतः पुरुषर्षभे १
जवेनाभ्यद्रवन्द्रोणं महता निस्वनेन च
पाण्डवाः सोमकैः सार्धं ततो युद्धमवर्तत २
तद्युद्धमभवद्घोरं तुमुलं लोमहर्षणम्
पाञ्चालानां कुरूणां च व्यूहस्य पुरतोऽद्भुतम् ३
राजन्कदाचिन्नास्माभिर्दृष्टं तादृङ्न च श्रुतम्
यादृङ्मध्यगते सूर्ये युद्धमासीद्विशां पते ४
धृष्टद्युम्नमुखाः पार्था व्यूढानीकाः प्रहारिणः
द्रोणस्य सैन्यं ते सर्वे शरवर्षैरवाकिरन् ५
वयं द्रोणं पुरस्कृत्य सर्वशस्त्रभृतां वरम्
पार्षतप्रमुखान्पार्थानभ्यवर्षाम सायकैः ६
महामेघाविवोदीर्णौ मिश्रवातौ हिमात्यये
सेनाग्रे विप्रकाशेते रुचिरे रथभूषिते ७
समेत्य तु महासेने चक्रतुर्वेगमुत्तमम्

जाह्नवीयमुने नद्यौ प्रावृषीवोल्बणोदके ८
नानाशस्त्रपुरोवातो द्विपाश्वरथसंवृतः
गदाविद्युन्महारौद्रः संग्रामजलदो महान् ९
भारद्वाजानिलोद्धूतः शरधारासहस्रवान्
अभ्यवर्षन्महारौद्रः पाण्डुसेनाग्निमुद्धतम् १०
समुद्रमिव घर्मान्ते विवान्घोरो महानिलः
व्यक्षोभयदनीकानि पाण्डवानां द्विजोत्तमः ११
तेऽपि सर्वप्रयत्नेन द्रोणमेव समाद्रवन्
बिभित्सन्तो महासेतुं वार्योघाः प्रबला इव १२
वारयामास तान्द्रोणो जलौघानचलो यथा
पाण्डवान्समरे क्रुद्धान्पाञ्चालांश्च सकेकयान् १३
अथापरेऽपि राजानः परावृत्य समन्ततः
महाबला रणे शूराः पाञ्चालानन्ववारयन् १४
ततो रणे नरव्याघ्रः पार्षतः पाण्डवैः सह
संजघानासकृद्द्रोणं बिभित्सुररिवाहिनीम् १५
यथैव शरवर्षाणि द्रोणो वर्षति पार्षते
तथैव शरवर्षाणि धृष्टद्युम्नोऽभ्यवर्षत १६
सनिस्त्रिंशपुरोवातः शक्तिप्रासर्ष्टिसंवृतः
ज्याविद्युच्चापसंह्रादो धृष्टद्युम्नबलाहकः १७
शरधाराश्मवर्षाणि व्यसृजत्सर्वतोदिशम्
निघ्नन्रथवराश्वौघांश्छादयामास वाहिनीम् १८
यं यमार्छच्छरैर्द्रोणः पाण्डवानां रथव्रजम्
ततस्ततः शरैर्द्रोणमपाकर्षत पार्षतः १९
तथा तु यतमानस्य द्रोणस्य युधि भारत
धृष्टद्युम्नं समासाद्य त्रिधा सैन्यमभिद्यत २०
भोजमेके न्यवर्तन्त जलसंधमथापरे
पाण्डवैर्हन्यमानाश्च द्रोणमेवापरेऽव्रजन् २१
सैन्यान्यघटयद्यानि द्रोणस्तु रथिनां वरः
व्यधमच्चापि तान्यस्य धृष्टद्युम्नो महारथः २२
धार्तराष्ट्रास्त्रिधाभूता वध्यन्ते पाण्डुसृञ्जयैः

अगोपाः पशवोऽरण्ये बहुभिः श्वापदैरिव २३
कालः संग्रसते योधान्धृष्टद्युम्नेन मोहितान्
संग्रामे तुमुले तस्मिन्निति संमेनिरे जनाः २४
कुनृपस्य यथा राष्ट्रं दुर्भिक्षव्याधितस्करैः
द्राव्यते तद्वदापन्ना पाण्डवैस्तव वाहिनी २५
अर्करश्मिप्रभिन्नेषु शस्त्रेषु कवचेषु च
चक्षूंषि प्रतिहन्यन्ते सैन्येन रजसा तथा २६
त्रिधाभूतेषु सैन्येषु वध्यमानेषु पाण्डवैः
अमर्षितस्ततो द्रोणः पाञ्चालान्व्यधमच्छरैः २७
मृद्नतस्तान्यनीकानि निघ्नतश्चापि सायकैः
बभूव रूपं द्रोणस्य कालाग्नेरिव दीप्यतः २८
रथं नागं हयं चापि पत्तिनश्च विशां पते
एकैकेनेषुणा संख्ये निर्बिभेद महारथः २९
पाण्डवानां तु सैन्येषु नास्ति कश्चित्स भारत
दधार यो रणे बाणान्द्रोणचापच्युताञ्शितान् ३०
तत्पच्यमानमर्केण द्रोणसायकतापितम्
बभ्राम पार्षतं सैन्यं तत्र तत्रैव भारत ३१
तथैव पार्षतेनापि काल्यमानं बलं तव
अभवत्सर्वतो दीप्तं शुष्कं वनमिवाग्निना ३२
वध्यमानेषु सैन्येषु द्रोणपार्षतसायकैः
त्यक्त्वा प्राणान्परं शक्त्या प्रायुध्यन्त स्म सैनिकाः ३३
तावकानां परेषां च युध्यतां भरतर्षभ
नासीत्कश्चिन्महाराज योऽत्याक्षीत्संयुगं भयात् ३४
भीमसेनं तु कौन्तेयं सोदर्याः पर्यवारयन्
विविंशतिश्चित्रसेनो विकर्णश्च महारथः ३५
विन्दानुविन्दावावन्त्यौ क्षेमधूर्तिश्च वीर्यवान्
त्रयाणां तव पुत्राणां त्रय एवानुयायिनः ३६
बाह्लीकराजस्तेजस्वी कुलपुत्रो महारथः
सहसेनः सहामात्यो द्रौपदेयानवारयत् ३७
शैब्यो गोवासनो राजा योधैर्दशशतावरैः

काश्यस्याभिभुवः पुत्रं पराक्रान्तमवारयत् ३८
अजातशत्रुं कौन्तेयं ज्वलन्तमिव पावकम्
मद्राणामीश्वरः शल्यो राजा राजानमावृणोत् ३९
दुःशासनस्त्ववस्थाप्य स्वमनीकममर्षणः
सात्यकिं प्रययौ क्रुद्धः शूरो रथवरं युधि ४०
स्वकेनाहमनीकेन संनद्धकवचावृतः
चतुःशतैर्महेष्वासैश्चेकितानमवारयम् ४१
शकुनिस्तु सहानीको माद्रीपुत्रमवारयत्
गान्धारकैः सप्तशतैश्चापशक्तिशरासिभिः ४२
विन्दानुविन्दावावन्त्यौ विराटं मत्स्यमार्छताम्
प्राणांस्त्यक्त्वा महेष्वासौ मित्रार्थेऽभ्युद्यतौ युधि ४३
शिखण्डिनं याज्ञसेनिं रुन्धानमपराजितम्
बाह्लिकः प्रतिसंयत्तः पराक्रान्तमवारयत् ४४
धृष्टद्युम्नं च पाञ्चाल्यं क्रूरैः सार्धं प्रभद्रकैः
आवन्त्यः सह सौवीरैः क्रुद्धरूपमवारयत् ४५
घटोत्कचं तथा शूरं राक्षसं क्रूरयोधिनम्
अलायुधोऽद्रवत्तूर्णं क्रुद्धमायान्तमाहवे ४६
अलम्बुसं राक्षसेन्द्रं कुन्तिभोजो महारथः
सैन्येन महता युक्तः क्रुद्धरूपमवारयत् ४७
सैन्धवः पृष्ठतस्त्वासीत्सर्वसैन्यस्य भारत
रक्षितः परमेष्वासैः कृपप्रभृतिभी रथैः ४८
तस्यास्तां चक्ररक्षौ द्वौ सैन्धवस्य बृहत्तमौ
द्रौणिर्दक्षिणतो राजन्सूतपुत्रश्च वामतः ४९
पृष्ठगोपास्तु तस्यासन्सौमदत्तिपुरोगमाः
कृपश्च वृषसेनश्च शलः शल्यश्च दुर्जयः ५०
नीतिमन्तो महेष्वासाः सर्वे युद्धविशारदाः
सैन्धवस्य विधायैवं रक्षां युयुधिरे तदा ५१

इति श्रीमहाभारते द्रोणपर्वणि सप्ततितमोऽध्यायः ७०

## एक सप्ततितमोऽध्यायः

सञ्जय उवाच
राजन्संग्राममाश्चर्यं शृणु कीर्तयतो मम
कुरूणां पाण्डवानां च यथा युद्धमवर्तत १
भारद्वाजं समासाद्य व्यूहस्य प्रमुखे स्थितम्
अयोधयन्रणे पार्था द्रोणानीकं बिभित्सवः २
रक्षमाणाः स्वकं व्यूहं द्रोणस्यापि च सैनिकाः
अयोधयन्रणे पार्थान्प्रार्थयन्तो महद्यशः ३
विन्दानुविन्दावावन्त्यौ विराटं दशभिः शरैः
आजघ्नतुः सुसंक्रुद्धौ तव पुत्रहितैषिणौ ४
विराटश्च महाराज तावुभौ समरे स्थितौ
पराक्रान्तौ पराक्रम्य योधयामास सानुगौ ५
तेषां युद्धं समभवद्दारुणं शोणितोदकम्
सिंहस्य द्विपमुख्याभ्यां प्रभिन्नाभ्यां यथा वने ६
बाह्लीकं रभसं युद्धे याज्ञसेनिर्महाबलः
आजघ्ने विशिखैस्तीक्ष्णैर्घोरैर्मर्मास्थिभेदिभिः ७
बाह्लीको याज्ञसेनिं तु हेमपुङ्खैः शिलाशितैः
आजघान भृशं क्रुद्धो नवभिर्नतपर्वभिः ८
तद्युद्धमभवद्घोरं शरशक्तिसमाकुलम्
भीरूणां त्रासजननं शूराणां हर्षवर्धनम् ९
ताभ्यां तत्र शरैर्मुक्तैरन्तरिक्षं दिशस्तथा
अभवत्संवृतं सर्वं न प्राज्ञायत किञ्चन १०
शैब्यो गोवासनो युद्धे काश्यपुत्रं महारथम्
ससैन्यो योधयामास गजः प्रतिगजं यथा ११
बाह्लीकराजः संरब्धो द्रौपदेयान्महारथान्
मनः पञ्चेन्द्रियाणीव शुशुभे योधयन्रणे १२
अयोधयंस्ते च भृशं तं शरौघैः समन्ततः
इन्द्रियार्था यथा देहं शश्वद्देहभृतां वर १३
वार्ष्णेयं सात्यकिं युद्धे पुत्रो दुःशासनस्तव
आजघ्ने सायकैस्तीक्ष्णैर्नवभिर्नतपर्वभिः १४

सोऽतिविद्धो बलवता महेष्वासेन धन्विना
ईषन्मूर्छां जगामाशु सात्यकिः सत्यविक्रमः १५
समाश्वस्तस्तु वार्ष्णेयस्तव पुत्रं महारथम्
विव्याध दशभिस्तूर्णं सायकैः कङ्कपत्रिभिः १६
तावन्योन्यं दृढं विद्ध्वावन्योन्यशरविक्षतौ
रेजतुः समरे राजन्पुष्पिताविव किंशुकौ १७
अलम्बुसस्तु संक्रुद्धः कुन्तिभोजशरार्दितः
अशोभत परं लक्ष्म्या पुष्पाढ्य इव किंशुकः १८
कुन्तिभोजं ततो रक्षो विद्ध्वा बहुभिरायसैः
अनदद्भैरवं नादं वाहिन्याः प्रमुखे तव १९
ततस्तौ समरे शूरौ योधयन्तौ परस्परम्
ददृशुः सर्वभूतानि शक्रजम्भौ यथा पुरा २०
शकुनिं रभसं युद्धे कृतवैरं च भारत
माद्रीपुत्रौ च संरब्धौ शरैरर्दयतां मृधे २१
तन्मूलः स महाराज प्रावर्तत जनक्षयः
त्वया संजनितोऽत्यर्थं कर्णेन च विवर्धितः २२
उद्धुक्षितश्च पुत्रेण तव क्रोधहुताशनः
य इमां पृथिवीं राजन्दग्धुं सर्वां समुद्यतः २३
शकुनिः पाण्डुपुत्राभ्यां कृतः स विमुखः शरैः
नाभ्यजानत कर्तव्यं युधि किञ्चित्पराक्रमम् २४
विमुखं चैनमालोक्य माद्रीपुत्रौ महारथौ
ववर्षतुः पुनर्बाणैर्यथा मेघौ महागिरिम् २५
स वध्यमानो बहुभिः शरैः संनतपर्वभिः
संप्रायाज्जवनैरश्वैर्द्रोणानीकाय सौबलः २६
घटोत्कचस्तथा शूरं राक्षसं तमलायुधम्
अभ्ययाद्रभसं युद्धे वेगमास्थाय मध्यमम् २७
तयोर्युद्धं महाराज चित्ररूपमिवाभवत्
यादृशं हि पुरा वृत्तं रामरावणयोर्मृधे २८
ततो युधिष्ठिरो राजा मद्रराजानमाहवे
विद्ध्वा पञ्चाशता बाणैः पुनर्विव्याध सप्तभिः २९

ततः प्रववृते युद्धं तयोरत्यद्भुतं नृप
यथा पूर्वं महद्युद्धं शम्बरामरराजयोः ३०
विविंशतिश्चित्रसेनो विकर्णश्च तवात्मजः
अयोधयन्भीमसेनं महत्या सेनया वृताः ३१
इति श्रीमहाभारते द्रोणपर्वणि एकसप्ततितमोऽध्यायः ७१

## द्विसप्ततितमोऽध्यायः

सञ्जय उवाच
तथा तस्मिन्प्रवृत्ते तु संग्रामे लोमहर्षणे
कौरवेयांस्त्रिधाभूतान्पाण्डवाः समुपाद्रवन् १
जलसंधं महाबाहुर्भीमसेनो न्यवारयत्
युधिष्ठिरः सहानीकः कृतवर्माणमाहवे २
किरन्तं शरवर्षाणि रोचमान इवांशुमान्
धृष्टद्युम्नो महाराज द्रोणमभ्यद्रवद्रणे ३
ततः प्रववृते युद्धं त्वरतां सर्वधन्विनाम्
कुरूणां सोमकानां च संक्रुद्धानां परस्परम् ४
संक्षये तु तथा भूते वर्तमाने महाभये
द्वंद्वीभूतेषु सैन्येषु युद्धमानेष्वभीतवत् ५
द्रोणः पाञ्चालपुत्रेण बली बलवता सह
विचिक्षेप पृषत्कौघांस्तदद्भुतमिवाभवत् ६
पुण्डरीकवनानीव विध्वस्तानि समन्ततः
चक्राते द्रोणपाञ्चाल्यौ नृणां शीर्षाण्यनेकशः ७
विनिकीर्णानि वीराणामनीकेषु समन्ततः
वस्त्राभरणशस्त्राणि ध्वजवर्मायुधानि च ८
तपनीयविचित्राङ्गाः संसिक्ता रुधिरेण च
संसक्ता इव दृश्यन्ते मेघसंघाः सविद्युतः ९
कुञ्जराश्वनरान्संख्ये पातयन्तः पतत्रिभिः
तालमात्राणि चापानि विकर्षन्तो महारथाः १०
असिचर्माणि चापानि शिरांसि कवचानि च
विप्रकीर्यन्त शूराणां संप्रहारे महात्मनाम् ११

उत्थितान्यगणेयानि कबन्धानि समन्ततः
अदृश्यन्त महाराज तस्मिन्परमसंकुले १२
गृध्राः कङ्का वडाः श्येना वायसा जम्बुकास्तथा
बहवः पिशिताशाश्च तत्रादृश्यन्त मारिष १३
भक्षयन्तः स्म मांसानि पिबन्तश्चापि शोणितम्
विलुम्पन्तः स्म केशांश्च मज्जाश्च बहुधा नृप १४
आकर्षन्तः शरीराणि शरीरावयवांस्तथा
नराश्वगजसंघानां शिरांसि च ततस्ततः १५
कृतास्त्रा रणदीक्षाभिर्दीक्षिताः शरधारिणः
रणे जयं प्रार्थयन्तो भृशं युयुधिरे तदा १६
असिमार्गान्बहुविधान्विचेरुस्तावका रणे
ऋष्टिभिः शक्तिभिः प्रासैः शूलतोमरपट्टिशैः १७
गदाभिः परिघैश्चान्ये व्यायुधाश्च भुजैरपि
अन्योन्यं जघ्निरे क्रुद्धा युद्धरङ्गगता नराः १८
रथिनो रथिभिः सार्धमश्वारोहाश्च सादिभिः
मातङ्गा वरमातङ्गैः पदाताश्च पदातिभिः १९
क्षीबा इवान्ये चोन्मत्ता रङ्गेष्विव च चारणाः
उच्चुक्रुशुस्तथान्योन्यं जघ्नुरन्योन्यमाहवे २०
वर्तमाने तथा युद्धे निर्मर्यादे विशां पते
धृष्टद्युम्नो हयानश्वैर्द्रोणस्य व्यत्यमिश्रयत् २१
ते हया साध्वशोभन्त विमिश्रा वातरंहसः
पारावतसवर्णाश्च रक्तशोणाश्च संयुगे
हयाः शुशुभिरे राजन्मेघा इव सविद्युतः २२
धृष्टद्युम्नश्च संप्रेक्ष्य द्रोणमभ्याशमागतम्
असिचर्मादडे वीरो धनुरुत्सृज्य भारत २३
चिकीर्षुर्दुष्करं कर्म पार्षतः परवीरहा
ईषया समतिक्रम्य द्रोणस्य रथमाविशत् २४
अतिष्ठद्युगमध्ये स युगसंनहनेषु च
जघानार्धेषु चाश्वानां तत्सैन्यान्यभ्यपूजयन् २५
खड्गेन चरतस्तस्य शोणाश्वानधितिष्ठतः

न ददर्शान्तरं द्रोणस्तदद्भुतमिवाभवत् २६
यथा श्येनस्य पतनं वनेष्वामिषगृद्धिनः
तथैवासीदभीसारस्तस्य द्रोणं जिघांसतः २७
ततः शरशतेनास्य शतचन्द्रं समाक्षिपत्
द्रोणो द्रुपदपुत्रस्य खड्गं च दशभिः शरैः २८
हयांश्चैव चतुःषष्ट्या शराणां जघ्निवान्बली
ध्वजं छत्रं च भल्लाभ्यां तथोभौ पार्ष्णिसारथी २९
अथास्मै त्वरितो बाणमपरं जीवितान्तकम्
आकर्णपूर्णं चिक्षेप वज्रं वज्रधरो यथा ३०
तं चतुर्दशभिर्बाणैर्बाणं चिच्छेद सात्यकिः
ग्रस्तमाचार्यमुख्येन धृष्टद्युम्नममोचयत् ३१
सिंहेनेव मृगं ग्रस्तं नरसिंहेन मारिष
द्रोणेन मोचयामास पाञ्चाल्यं शिनिपुंगवः ३२
सात्यकिं प्रेक्ष्य गोप्तारं पाञ्चाल्यस्य महाहवे
शराणां त्वरितो द्रोणः षड्विंशत्या समर्पयत् ३३
ततो द्रोणं शिनेः पौत्रो ग्रसन्तमिदि सृञ्जयान्
प्रत्यविध्यच्छितैर्बाणैः षड्विंशत्यास्तनान्तरे ३४
ततः सर्वे रथास्तूर्णं पाञ्चाला जयगृद्धिनः
सात्वताभिसृते द्रोणे धृष्टद्युम्नममोचयन् ३५
इति श्रीमहाभारते द्रोणपर्वणि द्विसप्ततितमोऽध्यायः ७२

## त्रिसप्ततितमोऽध्यायः

धृतराष्ट्र उवाच
बाणे तस्मिन्निकृत्ते तु धृष्टद्युम्ने च मोक्षिते
तेन वृष्णिप्रवीरेण युयुधानेन सञ्जय १
अमर्षितो महेष्वासः सर्वशस्त्रभृतां वरः
नरव्याघ्रः शिनेः पौत्रे द्रोणः किमकरोद्युधि २
सञ्जय उवाच
संप्रद्रुतः क्रोधविषो व्यादितास्यशरासनः
तीक्ष्णधारेषुदशनः शितनाराचदंष्ट्रवान् ३

संरम्भामर्षताम्राक्षो महाहिरिव निःश्वसन्
नरवीरप्रमुदितैः शोणैरश्वैर्महाजवैः ४
उत्पतद्भिरिवाकाशं क्रमद्भिरिव सर्वतः
रुक्मपुङ्खाञ्शरानस्यन्युयुधानमुपाद्रवत् ५
शरपातमहावर्षं रथघोषबलाहकम्
कार्मुकाकर्षविक्षिप्तं नाराचबहुविद्युतम् ६
शक्तिखड्गाशनिधरं क्रोधवेगसमुत्थितम्
द्रोणमेघमनावार्यं हयमारुतचोदितम् ७
दृष्ट्वैवाभिपतन्तं तं शूरः परपुरंजयः
उवाच सूतं शैनेयःप्रहसन्युद्धदुर्मदः ८
एतं वै ब्राह्मणं क्रूरं स्वकर्मण्यनवस्थितम्
आश्रयं धार्तराष्ट्रस्य राज्ञो दुःखभयावहम् ९
शीघ्रं प्रजवितैरश्वैः प्रत्युद्याहि प्रहृष्टवत्
आचार्यं राजपुत्राणां सततं शूरमानिनम् १०
ततो रजतसंकाशा माधवस्य हयोत्तमाः
द्रोणस्याभिमुखाः शीघ्रमगच्छन्वातरंहसः ११
इषुजालावृतं घोरमन्धकारमनन्तरम्
अनाधृष्यमिवान्येषां शूराणामभवत्तदा १२
ततः शीघ्रास्त्रविदुषोर्द्रोणसात्वतयोस्तदा
नान्तरं शरवृष्टीनां दृश्यते नरसिंहयोः १३
इषूणां संनिपातेन शब्दो धाराभिघातजः
शुश्रुवे शक्रमुक्तानामशनीनामिव स्वनः १४
नाराचैरतिविद्धानां शराणां रूपमाबभौ
आशीविषविदष्टानां सर्पाणामिव भारत १५
तयोर्ज्यातलनिर्घोषो व्यश्रूयत सुदारुणः
अजस्रं शैलशृङ्गाणां वज्रेणाहन्यतामिव १६
उभयोस्तौ रथौ राजंस्ते चाश्वास्तौ च सारथी
रुक्मपुङ्खैः शरैश्छन्नाश्चित्ररूपा बभुस्तदा १७
निर्मलानामजिह्मानां नाराचानां विशां पते
निर्मुक्ताशीविषाभानां संपातोऽभूत्सुदारुणः १८

उभयोः पतिते छत्त्रे तथैव पतितौ ध्वजौ
उभौ रुधिरसिक्ताङ्गावुभौ च विजयैषिणौ १९
स्रवद्भिः शोणितं गात्रैः प्रस्रुताविव वारणौ
अन्योन्यमभिविध्येतां जीवितान्तकरैः शरैः २०
गर्जितोत्क्रुष्टसंनादाः शङ्खदुन्दुभिनिस्वनाः
उपारमन्महाराज व्याजहार न कश्चन २१
तूष्णींभूतान्यनीकानि योधा युद्धादुपारमन्
ददृशे द्वैरथं ताभ्यां जातकौतुहलो जनः २२
रथिनो हस्तियन्तारो हयारोहाः पदातयः
अवैक्षन्ताचलैर्नेत्रैःपरिवार्य रथर्षभौ २३
हस्त्यनीकान्यतिष्ठन्त तथानीकानि वाजिनाम्
तथैव रथवाहिन्यः प्रतिव्यूह्य व्यवस्थिताः २४
मुक्ताविद्रुमचित्रैश्च मणिकाञ्चनभूषितैः
ध्वजैराभरणैश्चित्रैः कवचैश्च हिरण्मयैः २५
वैजयन्तीपताकाभिः परिस्तोमाङ्गकम्बलैः
विमलैर्निशितैः शस्त्रैर्हयानां च प्रकीर्णकैः २६
जातरूपमयीभिश्च राजतीभिश्च मूर्धसु
गजानां कुम्भमालाभिर्दन्तवेष्टैश्च भारत २७
सबलाकाः सखद्योताः सैरावतशतह्रदाः
अदृश्यन्तोष्णपर्याये मेघानामिव वागुराः २८
अपश्यन्नस्मदीयाश्च ते च यौधिष्ठिराः स्थिताः
तद्युद्धं युयुधानस्य द्रोणस्य च महात्मनः २९
विमानाग्रगता देवा ब्रह्मशक्रपुरोगमाः
सिद्धचारणसंघाश्च विद्याधरमहोरगाः ३०
गतप्रत्यागताक्षेपैश्चित्रैः शस्त्रविघातिभिः
विविधैर्विस्मयं जग्मुस्तयोः पुरुषसिंहयोः ३१
हस्तलाघवमस्त्रेषु दर्शयन्तौ महाबलौ
अन्योन्यं समविध्येतां शरैस्तौ द्रोणसात्यकी ३२
ततो द्रोणस्य दाशार्हः शरांश्चिच्छेद संयुगे
पत्रिभिः सुदृढैराशु धनुश्चैव महाद्युते ३३

निमेषान्तरमात्रेण भारद्वाजोऽपरं धनुः
सज्यं चकार तच्चाशु चिच्छेदास्य स सात्यकिः ३४
ततस्त्वरन्पुनर्द्रोणो धनुर्हस्तो व्यतिष्ठत
सज्यं सज्यं पुनश्चास्य चिच्छेद निशितैः शरैः ३५
ततोऽस्य संयुगे द्रोणो दृष्ट्वा कर्मातिमानुषम्
युयुधानस्य राजेन्द्र मनसेदमचिन्तयत् ३६
एतदस्त्रवलं रामे कार्तवीर्ये धनंजये
भीष्मे च पुरुषव्याघ्रे यदिदं सात्वतां वरे ३७
तं चास्य मनसा द्रोणः पूजयामास विक्रमम्
लाघवं वासवस्येव संप्रेक्ष्य द्विजसत्तमः ३८
तुतोषास्त्रविदां श्रेष्ठस्तथा देवाः सवासवाः
न तामालक्षयामासुर्लघुतां शीघ्रकारिणः ३९
देवाश्च युयुधानस्य गन्धर्वाश्च विशां पते
सिद्धचारणसंघाश्च विदुर्द्रोणस्य कर्म तत् ४०
ततोऽन्यद्धनुरादाय द्रोणः क्षत्रियमर्दनः
अस्त्रैरस्त्रविदां श्रेष्ठो योधयामास भारत ४१
तस्यास्त्राण्यस्त्रमायाभिः प्रतिहन्य स सात्यकिः
जघान निशितैर्बाणैस्तदद्भुतमिवाभवत् ४२
तस्यातिमानुषं कर्म दृष्ट्वान्यैरसमं रणे
युक्तं योगेन योगज्ञास्तावकाः समपूजयन् ४३
यदस्त्रमस्यति द्रोणस्तदेवास्यति सात्यकिः
तमाचार्योऽप्यसंभ्रान्तोऽयोधयच्छत्रुतापनः ४४
ततः क्रुद्धो महाराज धनुर्वेदस्य पारगः
वधाय युयुधानस्य दिव्यमस्त्रमुदैरयत् ४५
तदाग्नेयं महाघोरं रिपुघ्नमुपलक्ष्य सः
अस्त्रं दिव्यं महेष्वासो वारुणं समुदैरयत् ४६
हाहाकारो महानासीद्दृष्ट्वा दिव्यास्त्रधारिणौ
न विचेरुस्तदाकाशे भूतान्याकाशगान्यपि ४७
अस्त्रे ते वारुणाग्नेये ताभ्यां बाणसमाहिते
न तावदभिषज्येते व्यावर्तदथ भास्करः ४८

ततो युधिष्ठिरो राजा भीमसेनश्च पाण्डवः
नकुलः सहदेवश्च पर्यरक्षन्त सात्यकिम् ४९
धृष्टद्युम्नमुखैः सार्धं विराटश्च सकेकयः
मत्स्याः शाल्वेयसेनाश्च द्रोणमाजग्मुरञ्जसा ५०
दुःशासनं पुरस्कृत्य राजपुत्राः सहस्रशः
द्रोणमभ्युपपद्यन्त सपत्नैः परिवारितम् ५१
ततो युद्धमभूद्राजंस्तव तेषां च धन्विनाम्
रजसा संवृते लोके शरजालसमावृते ५२
सर्वमाविग्नमभवन्न प्राज्ञायत किंचन
सैन्येन रजसा ध्वस्ते निर्मर्यादमवर्तत ५३
इति श्रीमहाभारते द्रोणपर्वणि त्रिसप्ततितमोऽध्यायः ७३

## चतुःसप्ततितमोऽध्यायः

सञ्जय उवाच
परिवर्तमाने त्वादित्ये तत्र सूर्यस्य रश्मिभिः
रजसा कीर्यमाणाश्च मन्दीभूताश्च सैनिकाः १
तिष्ठतां युध्यमानानां पुनरावर्ततामपि
भज्यतां जयतां चैव जगाम तदहः शनैः २
तथा तेषु विषक्तेषु सैन्येषु जयगृद्धिषु
अर्जुनो वासुदेवश्च सैन्धवायैव जग्मतुः ३
रथमार्गप्रमाणं तु कौन्तेयो निशितैः शरैः
चकार तत्र पन्थानं ययौ येन जनार्दनः ४
यत्र यत्र रथो याति पाण्डवस्य महात्मनः
तत्र तत्रैव दीर्यन्ते सेनास्तव विशां पते ५
रथशिक्षां तु दाशार्हो दर्शयामास वीर्यवान्
उत्तमाधममध्यानि मण्डलानि विदर्शयन् ६
ते तु नामाङ्किताः पीताः कालज्वलनसंनिभाः
स्नायुनद्धाः सुपर्वाणः पृथवो दीर्घगामिनः ७
वैणवायस्मयशराः स्वायता विविधाननाः
रुधिरं पतगैः सार्धं प्राणिनां पपुराहवे ८

रथस्थितः क्रोशमात्रे यानस्यत्यर्जुनः शरान्
रथे क्रोशमतिक्रान्ते तस्य ते घ्नन्ति शात्रवान् ९
तार्क्ष्यमारुतरंहोभिर्वाजिभिः साधुवाहिभिः
तथागच्छद्धृषीकेशः कृत्स्नं विस्मापयञ्जगत् १०
न तथा गच्छति रथस्तपनस्य विशां पते
नेन्द्रस्य न च रुद्रस्य नापि वैश्रवणस्य च ११
नान्यस्य समरे राजन्गतपूर्वस्तथा रथः
यथा ययावर्जुनस्य मनोभिप्रायशीघ्रगः १२
प्रविश्य तु रणे राजन्केशवः परवीरहा
सेनामध्ये हयांस्तूर्णं चोदयामास भारत १३
ततस्तस्य रथौघस्य मध्यं प्राप्य हयोत्तमाः
कृच्छ्रेण रथमूहुस्तं क्षुत्पिपासाश्रमान्विताः १४
क्षताश्च बहुभिः शस्त्रैर्युद्धशौण्डैरनेकशः
मण्डलानि विचित्राणि विचेरुस्ते मुहुर्मुहुः १५
हतानां वाजिनागानां रथानां च नरैः सह
उपरिष्टादतिक्रान्ताः शैलाभानां सहस्रशः १६
एतस्मिन्नन्तरे वीरावावन्त्यौ भ्रातरौ नृप
सहसेनौ समार्छेतां पाण्डवं क्लान्तवाहनम् १७
तावर्जुनं चतुःषष्ट्या सप्तत्या च जनार्दनम्
शराणां च शतेनाश्वानविध्येतां मुदान्वितौ १८
तावर्जुनो महाराज नवभिर्नतपर्वभिः
आजघान रणे क्रुद्धो मर्मज्ञो मर्मभेदिभिः १९
ततस्तौ तु शरौघेण बीभत्सुं सहकेशवम्
आच्छादयेतां संरब्धौ सिंहनादं च नेदतुः २०
तयोस्तु धनुषी चित्रे भल्लाभ्यां श्वेतवाहनः
चिच्छेद समरे तूर्णं ध्वजौ च कनकोज्ज्वलौ २१
अथान्ये धनुषी राजन्प्रगृह्य समरे तदा
पाण्डवं भृशसंक्रुद्धावर्दयामासतुः शरैः २२
तयोस्तु भृशसंक्रुद्धः शराभ्यां पाण्डुनन्दनः
चिच्छेद धनुषी तूर्णं भूय एव धनंजयः २३

तथान्यैर्विशिखैस्तूर्णं हेमपुङ्खैः शिलाशितैः
जघानाश्वान्सपादातांस्तथोभौ पार्ष्णिसारथी २४
ज्येष्ठस्य च शिरः कायात्क्षुरप्रेण न्यकृन्तत
स पपात हतः पृथ्व्यां वातरुग्ण इव द्रुमः २५
विन्दं तु निहतं दृष्ट्वा अनुविन्दः प्रतापवान्
हताश्वं रथमुत्सृज्य गदां गृह्य महाबलः २६
अभ्यद्रवत संग्रामे भ्रातुर्वधमनुस्मरन्
गदया गदिनां श्रेष्ठो नृत्यन्निव महारथः २७
अनुविन्दस्तु गदया ललाटे मधुसूदनम्
स्पृष्ट्वा नाकम्पयत्क्रुद्धो मैनाकमिव पर्वतम् २८
तस्यार्जुनः शरैः षड्भिर्ग्रीवां पादौ भुजौ शिरः
निचकर्त स सञ्छिन्नः पपाताद्रिचयो यथा २९
ततस्तौ निहतौ दृष्ट्वा तयो राजन्पदानुगाः
अभ्यद्रवन्त संक्रुद्धाः किरन्तः शतशः शरान् ३०
तानर्जुनः शरैस्तूर्णं निहत्य भरतर्षभ
व्यरोचत यथा वह्निर्दावं दग्ध्वा हिमात्यये ३१
तयोः सेनामतिक्रम्य कृच्छ्रान्नियद्धनंजयः
विबभौ जलदान्भित्त्वा दिवाकर इवोदितः ३२
तं दृष्ट्वा कुरवस्त्रस्ताः प्रहृष्टाश्चाभवन्पुनः
अभ्यवर्षंस्तदा पार्थं समन्ताद्भरतर्षभ ३३
श्रान्तं चैनं समालक्ष्य ज्ञात्वा दूरे च सैन्धवम्
सिंहनादेन महता सर्वतः पर्यवारयन् ३४
तांस्तु दृष्ट्वा सुसंरब्धानुत्स्मयन्पुरुषर्षभः
शनकैरिव दाशार्हमर्जुनो वाक्यमब्रवीत् ३५
शरार्दिताश्च ग्लानाश्च हया दूरे च सैन्धवः
किमिहानन्तरं कार्यं ज्यायिष्ठं तव रोचते ३६
ब्रूहि कृष्ण यथातत्त्वं त्वं हि प्राज्ञतमः सदा
भवन्नेत्रा रणे शत्रून्विजेष्यन्तीह पाण्डवाः ३७
मम त्वनन्तरं कृत्यं यद्वै तत्संनिबोध मे
हयान्विमुच्य हि सुखं विशल्यान्कुरु माधव ३८

एवमुक्तस्तु पार्थेन केशवः प्रत्युवाच तम्
ममाप्येतन्मतं पार्थ यदिदं ते प्रभाषितम् ३९
अर्जुन उवाच
अहमावारयिष्यामि सर्वसैन्यानि केशव
त्वमप्यत्र यथान्यायं कुरु कार्यमनन्तरम् ४०
सञ्जय उवाच
सोऽवतीर्य रथोपस्थादसंभ्रान्तो धनंजयः
गाण्डीवं धनुरादाय तस्थौ गिरिरिवाचलः ४१
तमभ्यधावन्क्रोशन्तः क्षत्रिया जयकाङ्क्षिणः
इदं छिद्रमिति ज्ञात्वा धरणीस्थं धनंजयम् ४२
तमेकं रथवंशेन महता पर्यवारयन्
विकर्षन्तश्च चापानि विसृजन्तश्च सायकान् ४३
अस्त्राणि च विचित्राणि क्रुद्धास्तत्र व्यदर्शयन्
छादयन्तः शरैः पार्थं मेघा इव दिवाकरम् ४४
अभ्यद्रवन्त वेगेन क्षत्रियाः क्षत्रियर्षभम्
रथसिंहं रथोदाराः सिंहं मत्ता इव द्विपाः ४५
तत्र पार्थस्य भुजयोर्महद्बलमदृश्यत
यत्क्रुद्धो बहुलाः सेनाः सर्वतः समवारयत् ४६
अस्त्रैरस्त्राणि संवार्य द्विषतां सर्वतो विभुः
इषुभिर्बहुभिस्तूर्णं सर्वानेव समावृणोत् ४७
तत्रान्तरिक्षे बाणानां प्रगाढानां विशां पते
संघर्षेण महार्चिष्मान्पावकः समजायत ४८
तत्र तत्र महेष्वासैः श्वसद्भिः शोणितोक्षितैः
हयैर्नागैश्च संभिन्नैर्नदद्भिश्चारिकर्शनैः ४९
संरब्धैश्चारिभिर्वीरैः प्रार्थयद्भिर्जयं मृधे
एकस्थैर्बहुभिः क्रुद्धैरूष्मेव समजायत ५०
शरोर्मिणं ध्वजावर्तं नागनक्रं दुरत्ययम्
पदातिमत्स्यकलिलं शङ्खदुन्दुभिनिस्वनम् ५१
असंख्येयमपारं च रजोऽभीलमतीव च
उष्णीषकमठच्छन्नं पताकाफेनमालिनम् ५२

रथसागरमक्षोभ्यं मातङ्गाङ्गशिलाचितम्
वेलाभूतस्तदा पार्थः पत्रिभिः समवारयत् ५३
ततो जनार्दनः संख्ये प्रियं पुरुषसत्तमम्
असंभ्रान्तो महाबाहुरर्जुनं वाक्यमब्रवीत् ५४
उदपानमिहाश्वानां नालमस्ति रणेऽजुन
परीप्सन्ते जलं चेमे पेयं न त्ववगाहनम् ५५
इदमस्तीत्यसंभ्रान्तो ब्रुवन्नस्त्रेण मेदिनीम्
अभिहत्यार्जुनश्चक्रे वाजिपानं सरः शुभम् ५६
शरवंशं शरस्थूणं शराच्छादनमद्भुतम्
शरवेश्माकरोत्पार्थस्त्वष्टेवाद्भुतकर्मकृत् ५७
ततः प्रहस्य गोविन्दः साधु साध्वित्यथाब्रवीत्
शरवेश्मनि पार्थेन कृते तस्मिन्महारणे ५८
इति श्रीमहाभारते द्रोणपर्वणि चतुःसप्ततितमोऽध्यायः ७४

## पञ्चसप्ततितमोऽध्यायः

सञ्जय उवाच
सलिले जनिते तस्मिन्कौन्तेयेन महात्मना
निवारिते द्विषत्सैन्ये कृते च शरवेश्मनि १
वासुदेवो रथात्तूर्णमवतीर्य महाद्युतिः
मोचयामास तुरगान्वितुन्नान्कङ्कपत्रिभिः २
अदृष्टपूर्वं तद्दृष्ट्वा सिंहनादो महानभूत्
सिद्धचारणसंघानां सैनिकानां च सर्वशः ३
पदातिनं तु कौन्तेयं युध्यमानं नरर्षभाः
नाशक्नुवन्वारयितुं तदद्भुतमिवाभवत् ४
आपतत्सु रथौघेषु प्रभूतगजवाजिषु
नासंभ्रमत्तदा पार्थस्तदस्य पुरुषानति ५
व्यसृजन्त शरौघांस्ते पाण्डवं प्रति पार्थिवाः
न चाव्यथत धर्मात्मा वासविः परवीरहा ६
स तानि शरजालानि गदाः प्रासांश्च वीर्यवान्
आगतानग्रसत्पार्थः सरितः सागरो यथा ७

अस्त्रवेगेन महता पार्थो बाहुबलेन च
सर्वेषां पार्थिवेन्द्राणामग्रसत्ताञ्शरोत्तमान् ८
तत्तु पार्थस्य विक्रान्तं वासुदेवस्य चोभयोः
अपूजयन्महाराज कौरवाः परमाद्भुतम् ९
किमद्भुततरं लोके भविताप्यथ वाप्यभूत्
यदश्वान्पार्थगोविन्दौ मोचयामासतू रणे १०
भयं विपुलमस्मासु तावधत्तां नरोत्तमौ
तेजो विदधतुश्चोग्रं विस्रब्धौ रणमूर्धनि ११
अथोत्स्मयन्हृषीकेशः स्त्रीमध्य इव भारत
अर्जुनेन कृते संख्ये शरगर्भगृहे तदा १२
उपावर्तयदव्यग्रस्तानश्वान्पुष्करेक्षणः
मिषतां सर्वसैन्यानां त्वदीयानां विशां पते १३
तेषां श्रमं च ग्लानिं च वेपथुं वमथुं व्रणान्
सर्वं व्यपानुदत्कृष्णः कुशलो ह्यश्वकर्मणि १४
शल्यानुद्धृत्य पाणिभ्यां परिमृज्य च तान्हयान्
उपावृत्य यथान्यायं पाययामास वारि सः १५
स ताँल्लब्धोदकान्स्नाताञ्जग्धान्नान्विगतक्लमान्
योजयामास संहृष्टः पुनरेव रथोत्तमे १६
स तं रथवरं शौरिः सर्वशस्त्रभृतां वरः
समास्थाय महातेजाः सार्जुनः प्रययौ द्रुतम् १७
रथं रथवरस्याजौ युक्तं लब्धोदकैर्हयैः
दृष्ट्वा कुरुबलश्रेष्ठाः पुनर्विमनसोऽभवन् १८
विनिःश्वसन्तस्ते राजन्भग्नदंष्ट्रा इवोरगाः
धिगहो धिग्गतः पार्थः कृष्णश्चेत्यब्रुवन्पृथक् १९
सर्वक्षत्रस्य मिषतो रथेनैकेन दंशितौ
बालक्रीडनकेनेव कदर्थीकृत्य नो बलम् २०
क्रोशतां यतमानानामसंसक्तौ परंतपौ
दर्शयित्वात्मनो वीर्यं प्रयातौ सर्वराजसु २१
तौ प्रयातौ पुनर्दृष्ट्वा तदान्ये सैनिकाब्रुवन्
त्वरध्वं कुरवः सर्वे वधे कृष्णकिरीटिनोः २२

रथं युक्त्वा हि दाशार्हो मिषतां सर्वधन्विनाम्
जयद्रथाय यात्येष कदर्थीकृत्य नो रणे २३
तत्र केचिन्मिथो राजन्समभाषन्त भूमिपाः
अदृष्टपूर्वं संग्रामे तद्दृष्ट्वा महदद्भुतम् २४
सर्वसैन्यानि राजा च धृतराष्ट्रोऽत्ययं गतः
दुर्योधनापराधेन क्षत्रं कृत्स्ना च मेदिनी २५
विलयं समनुप्राप्ता तच्च राजा न बुध्यते
इत्येवं क्षत्रियास्तत्र ब्रुवन्त्यन्ये च भारत २६
सिन्धुराजस्य यत्कृत्यं गतस्य यमसादनम्
तत्करोतु वृथादृष्टिर्धार्तराष्ट्रोऽनुपायवित् २७
ततः शीघ्रतरं प्रायात्पाण्डवः सैन्धवं प्रति
निवर्तमाने तिग्मांशौ हृष्टैः पीतोदकैर्हयैः २८
तं प्रयान्तं महाबाहुं सर्वशस्त्रभृतां वरम्
नाशक्नुवन्वारयितुं योधाः क्रुद्धमिवान्तकम् २९
विद्राव्य तु ततः सैन्यं पाण्डवः शत्रुतापनः
यथा मृगगणान्सिंहः सैन्धवार्थे व्यलोडयत् ३०
गाहमानस्त्वनीकानि तूर्णमश्वानचोदयत्
बलाकवर्णान्दाशार्हः पाञ्चजन्यं व्यनादयत् ३१
कौन्तेयेनाग्रतः सृष्टा न्यपतन्पृष्ठतः शराः
तूर्णात्तूर्णतरं ह्यश्वास्तेऽवहन्वातरंहसः ३२
वातोद्धूतपताकान्तं रथं जलदनिस्वनम्
घोरं कपिध्वजं दृष्ट्वा विषण्णा रथिनोऽभवन् ३३
दिवाकरेऽथ रजसा सर्वतः संवृते भृशम्
शरार्ताश्च रणे योधा न कृष्णौ शेकुरीक्षितुम् ३४
ततो नृपतयः क्रुद्धाः परिवव्रुर्धनञ्जयम्
क्षत्रिया बहवश्चान्ये जयद्रथवधैषिणम् ३५
अपनीयत्सु शल्येषु धिष्ठितं पुरुषर्षभम्
दुर्योधनस्त्वगात्पार्थं त्वरमाणो महाहवे ३६
इति श्रीमहाभारते द्रोणपर्वणि पञ्चसप्ततितमोऽध्यायः ७५

## षट्सप्ततितमोऽध्यायः

सञ्जय उवाच
स्रंसन्त इव मज्ञानस्तावकानां भयान्नृप
तौ दृष्ट्वा समतिक्रान्तौ वासुदेवधनञ्जयौ १
सर्वे तु प्रतिसंरब्धा ह्रीमन्तः सत्त्वचोदिताः
स्थिरीभूता महात्मानः प्रत्यगच्छन्धनञ्जयम् २
ये गताः पाण्डवं युद्धे क्रोधामर्षसमन्विताः
तेऽद्यापि न निवर्तन्ते सिन्धवः सागरादिव ३
असन्तस्तु न्यवर्तन्त वेदेभ्य इव नास्तिकाः
नरकं भजमानास्ते प्रत्यपद्यन्त किल्विषम् ४
तावतीत्य रथानीकं विमुक्तौ पुरुषर्षभौ
ददृशाते यथा राहोरास्यान्मुक्तौ प्रभाकरौ ५
मत्स्याविव महाजालं विदार्य विगतज्वरौ
तथा कृष्णावदृश्येतां सेनाजालं विदार्य तत् ६
विमुक्तौ शस्त्रसंबाधाद्द्रोणानीकात्सुदुर्भिदात्
अदृश्येतां महात्मानौ कालसूर्याविवोदितौ ७
अस्त्रसंबाधनिर्मुक्तौ विमुक्तौ शस्त्रसङ्कटात्
अदृश्येतां महात्मानौ शत्रुसंबाधकारिणौ ८
विमुक्तौ ज्वलनस्पर्शान्मकरास्याज्झषाविव
व्यक्षोभयेतां सेनां तौ समुद्रं मकराविव ९
तावकास्तव पुत्राश्च द्रोणानीकस्थयोस्तयोः
नैतौ तरिष्यतो द्रोणमिति चक्रुस्तदा मतिम् १०
तौ तु दृष्ट्वा व्यतिक्रान्तौ द्रोणानीकं महाद्युती
नाशशंसुर्महाराज सिन्धुराजस्य जीवितम् ११
आशा बलवती राजन्पुत्राणामभवत्तव
द्रोणहार्दिक्ययोः कृष्णौ न मोक्ष्येते इति प्रभो १२
तामाशां विफलां कृत्वा निस्तीर्णौ तौ परन्तपौ
द्रोणानीकं महाराज भोजानीकं च दुस्तरम् १३
अथ दृष्ट्वा व्यतिक्रान्तौ ज्वलिताविव पावकौ
निराशाः सिन्धुराजस्य जीवितं नाशशंसिरे १४

मिथश्च समभाषेतामभीतौ भयवर्धनौ
जयद्रथवधे वाचस्तास्ताः कृष्णधनञ्जयौ १५
असौ मध्ये कृतः षड्भिर्धार्तराष्ट्रैर्महारथैः
चक्षुर्विषयसम्प्राप्तो न नौ मोक्ष्यति सैन्धवः १६
यद्यस्य समरे गोप्ता शक्रो देवगणैः सह
तथाप्येनं हनिष्याव इति कृष्णावभाषताम् १७
इति कृष्णौ महाबाहू मिथः कथयतां तदा
सिन्धुराजमवेक्षन्तौ तत्पुत्रास्तव शुश्रुवुः १८
अतीत्य मरुधन्वेव प्रयान्तौ तृषितौ गजौ
पीत्वा वारि समाश्वस्तौ तथैवास्तामरिन्दमौ १९
व्याघ्रसिंहगजाकीर्णानतिक्रम्येव पर्वतान्
अदृश्येतां महाबाहू तथा मृत्युजरातिगौ २०
तथा हि मुखवर्णोऽयमनयोरिति मेनिरे
तावका दृश्य मुक्तौ तौ विक्रोशन्ति स्म सर्वतः २१
द्रोणादाशीविषाकाराज्ज्वलितादिव पावकात्
अन्येभ्यः पार्थिवेभ्यश्च भास्वन्ताविव भास्करौ २२
तौ मुक्तौ सागरप्रख्याद्द्रोणानीकादरिन्दमौ
अदृश्येतां मुदा युक्तौ समुत्तीर्यार्णवं यथा २३
शस्त्रौघान्महतो मुक्तौ द्रोणहार्दिक्यरक्षितान्
रोचमानावदृश्येतामिन्द्राग्न्योः सदृशौ रणे २४
उद्भिन्नरुधिरौ कृष्णौ भारद्वाजस्य सायकैः
शितैश्चितौ व्यरोचेतां कर्णिकारैरिवाचलौ २५
द्रोणग्राहह्रदान्मुक्तौ शक्त्याशीविषसङ्कटात्
अयःशरोग्रमकरात्क्षत्रियप्रवराम्भसः २६
ज्याघोषतलनिर्ह्रादाद्गदानिस्त्रिंशविद्युतः
द्रोणास्त्रमेघान्निर्मुक्तौ सूर्येन्दू तिमिरादिव २७
बाहुभ्यामिव सन्तीर्णौ सिन्धुषष्ठाः समुद्रगाः
तपान्ते सरितः पूर्णा महाग्राहसमाकुलाः २८
इति कृष्णौ महेष्वासौ यशसा लोकविश्रुतौ
सर्वभूतान्यमन्यन्त द्रोणास्त्रबलविस्मयात् २९

जयद्रथं समीपस्थमवेक्षन्तौ जिघांसया
रुरुं निपाने लिप्सन्तौ ब्याघ्रवत्तावतिष्ठताम् ३०
यथा हि मुखवर्णोऽयमनयोरिति मेनिरे
तव योधा महाराज हतमेव जयद्रथम् ३१
लोहिताक्षौ महाबाहू संयत्तौ कृष्णपाण्डवौ
सिन्धुराजमभिप्रेक्ष्य हृष्टौ व्यनदतां मुहुः ३२
शौरेरभीशुहस्तस्य पार्थस्य च धनुष्मतः
तयोरासीत्प्रतिभ्राजः सूर्यपावकयोरिव ३३
हर्ष एव तयोरासीद्द्रोणानीकप्रमुक्तयोः
समीपे सैन्धवं दृष्ट्वा श्येनयोरामिषं यथा ३४
तौ तु सैन्धवमालोक्य वर्तमानमिवान्तिके
सहसा पेततुः क्रुद्धौ क्षिप्रं श्येनाविवामिषे ३५
तौ तु दृष्ट्वा व्यतिक्रान्तौ हृषीकेशधनञ्जयौ
सिन्धुराजस्य रक्षार्थं पराक्रान्तः सुतस्तव ३६
द्रोणेनाबद्धकवचो राजा दुर्योधनस्तदा
ययावेकरथेनाजौ हयसंस्कारवित्प्रभो ३७
कृष्णपार्थौ महेष्वासौ व्यतिक्रम्याथ ते सुतः
अग्रतः पुण्डरीकाक्षं प्रतीयाय नराधिप ३८
ततः सर्वेषु सैन्येषु वादित्राणि प्रहृष्टवत्
प्रावाद्यन्तमतिक्रान्ते तव पुत्रे धनञ्जयम् ३९
सिंहनादरवाश्चासञ्शङ्खदुन्दुभिमिश्रिताः
दृष्ट्वा दुर्योधनं तत्र कृष्णयोः प्रमुखे स्थितम् ४०
ये च ते सिन्धुराजस्य गोप्तारः पावकोपमाः
ते प्रहृष्यन्त समरे दृष्ट्वा पुत्रं तवाभिभो ४१
दृष्ट्वा दुर्योधनं कृष्णस्त्वतिक्रान्तं सहानुगम्
अब्रवीदर्जुनं राजन्प्राप्तकालमिदं वचः ४२
इति श्रीमहाभारते द्रोणपर्वणि षट्सप्ततितमोऽध्यायः ७६

सप्त सप्ततितमोऽध्यायः

वासुदेव उवाच

सुयोधनमतिक्रान्तमेनं पश्य धनञ्जय
आपद्गतमिमं मन्ये नास्त्यस्य सदृशो रथः १
दूरपाती महेष्वासः कृतास्त्रो युद्धदुर्मदः
दृढास्त्रश्चित्रयोधी च धार्तराष्ट्रो महाबलः २
अत्यन्तसुखसंवृद्धो मानितश्च महारथैः
कृती च सततं पार्थ नित्यं द्वेष्टि च पाण्डवान् ३
तेन युद्धमहं मन्ये प्राप्तकालं तवानघ
अत्र वो द्यूतमायातं विजयायेतराय वा ४
अत्र क्रोधविषं पार्थ विमुञ्च चिरसम्भृतम्
एष मूलमनर्थानां पाण्डवानां महारथः ५
सोऽय प्राप्तस्तवाक्षेपं पश्य साफल्यमात्मनः
कथं हि राजा राज्यार्थी त्वया गच्छेत संयुगम् ६
दिष्ट्या त्विदानीं सम्प्राप्त एष ते बाणगोचरम्
यथा स जीवितं जह्यात्तथा कुरु धनंजय ७
एश्वर्यमदसंमूढो नैष दुःखमुपेयिवान्
न च ते संयुगे वीर्यं जानाति पुरुषर्षभ ८
त्वां हि लोकास्त्रयः पार्थ ससुरासुरमानुषाः
नोत्सहन्ते रणे जेतुं किमुतैकः सुयोधनः ९
स दिष्ट्या समनुप्राप्तस्तव पार्थ रथान्तिकम्
जह्येनं वै महाबाहो यथा वृत्रं पुरन्दरः १०
एष ह्यनर्थे सततं पराक्रान्तस्तवानघ
निकृत्या धर्मराजं च द्यूते वञ्चितवानयम् ११
बहूनि सुनृशंसानि कृतान्येतेन मानद
युष्मासु पापमतिना अपापेष्वेव नित्यदा १२
तमनार्यं सदा क्षुद्रं पुरुषं कामचारिणम्
आर्यां युद्धे मतिं कृत्वा जहि पार्थाविचारयन् १३
निकृत्या राज्यहरणं वनवासं च पाण्डव
परिक्लेशं च कृष्णाया हृदि कृत्वा पराक्रम १४
दिष्ट्यैष तव बाणानां गोचरे परिवर्तते
प्रतिघाताय कार्यस्य दिष्ट्या च यततेऽग्रतः १५

दिष्ट्या जानाति संग्रामे योद्धव्यं हि त्वया सह
दिष्ट्या च सफलाः पार्थ सर्वे कामा हि कामिताः १६
तस्माज्जहि रणे पार्थ धार्तराष्ट्रं कुलाधमम्
यथेन्द्रेण हतः पूर्वं जम्भो देवासुरे मृधे १७
अस्मिन्हते त्वया सैन्यमनाथं भिद्यतामिदम्
वैरस्यास्यास्त्ववभृथो मूलं छिन्धि दुरात्मनाम् १८
सञ्जय उवाच
तं तथेत्यब्रवीत्पार्थः कृत्यरूपमिदं मम
सर्वमन्यदनादृत्य गच्छ यत्र सुयोधनः १९
येनैतद्दीर्घकालं नो भुक्तं राज्यमकण्टकम्
अप्यस्य युधि विक्रम्य छिन्द्यां मूर्धानमाहवे २०
अपि तस्या अनर्हायाः परिक्लेशस्य माधव
कृष्णायाः शक्नुयां गन्तुं पदं केशप्रधर्षणे २१
इत्येवंवादिनौ हृष्टौ कृष्णौ श्वेतान्हयोत्तमान्
प्रेषयामासतुः संख्ये प्रेप्सन्तौ तं नराधिपम् २२
तयोः समीपं सम्प्राप्य पुत्रस्ते भरतर्षभ
न चकार भयं प्राप्ते भये महति मारिष २३
तदस्य क्षत्रियास्तत्र सर्व एवाभ्यपूजयन्
यदर्जुनहृषीकेशौ प्रत्युद्यातोऽविचारयन् २४
ततः सर्वस्य सैन्यस्य तावकस्य विशां पते
महान्नादो ह्यभूत्तत्र दृष्ट्वा राजानमाहवे २५
तस्मिञ्जनसमुन्नादे प्रवृत्ते भैरवे सति
कदर्थीकृत्य ते पुत्रः प्रत्यमित्रमवारयत् २६
आवारितस्तु कौन्तेयस्तव पुत्रेण धन्विना
संरम्भमगमद्भूयः स च तस्मिन्परन्तपः २७
तौ दृष्ट्वा प्रतिसंरब्धौ दुर्योधनधनञ्जयौ
अभ्यवैक्षन्त राजानो भीमरूपाः समन्ततः २८
दृष्ट्वा तु पार्थं संरब्धं वासुदेवं च मारिष
प्रहसन्निव पुत्रस्ते योद्धुकामः समाह्वयत् २९
ततः प्रहृष्टो दाशार्हः पाण्डवश्च धनञ्जयः

व्यक्रोशेतां महानादं दध्मतुश्चाम्बुजोत्तमौ ३०
तौ हृष्टरूपौ सम्प्रेक्ष्य कौरवेयाश्च सर्वशः
निराशाः समपद्यन्त पुत्रस्य तव जीविते ३१
शोकमीयुः परं चैव कुरवः सर्व एव ते
अमन्यन्त च पुत्रं ते वैश्वानरमुखे हुतम् ३२
तथा तु दृष्ट्वा योधास्ते प्रहृष्टौ कृष्णपाण्डवौ
हतो राजा हतो राजेत्यूचुरेवं भयार्दिताः ३३
जनस्य संनिनादं तु श्रुत्वा दुर्योधनोऽब्रवीत्
व्येतु वो भीरहं कृष्णौ प्रेषयिष्यामि मृत्यवे ३४
इत्युक्त्वा सैनिकान्सर्वाञ्जयापेक्षी नराधिपः
पार्थमाभाष्य संरम्भादिदं वचनमब्रवीत् ३५
पार्थ यच्छिक्षितं तेऽस्त्र दिव्यं मानुषमेव च
तद्दर्शय मयि क्षिप्रं यदि जातोऽसि पाण्डुना ३६
यद्बलं तव वीर्यं च केशवस्य तथैव च
तत्कुरुष्व मयि क्षिप्रं पश्यामस्तव पौरुषम् ३७
अस्मत्परोक्षं कर्माणि प्रवदन्ति कृतानि ते
स्वामिसत्कारयुक्तानि यानि तानीह दर्शय ३८
इति श्रीमहाभारते द्रोणपर्वणि सप्तसप्ततितमोऽध्यायः ७७

## अष्टसप्ततितमोऽध्यायः

सञ्जय उवाच
एवमुक्त्वार्जुनं राजा त्रिभिर्मर्मातिगैः शरैः
प्रत्यविध्यन्महावेगैश्चतुर्भिश्चतुरो हयान् १
वासुदेवं च दशभिः प्रत्यविध्यत्स्तनान्तरे
प्रतोदं चास्य भल्लेन छित्त्वा भूमावपातयत् २
तं चतुर्दशभिः पार्थश्चित्रपुङ्खैः शिलाशितैः
अविध्यत्तूर्णमव्यग्रस्तेऽस्याभ्रश्यन्त वर्मणः ३
तेषां वैफल्यमालोक्य पुनर्नव च पञ्च च
प्राहिणोन्निशितान्बाणांस्ते चाभ्रश्यन्त वर्मणः ४
अष्टाविंशत्तु तान्बाणानस्तान्विप्रेक्ष्य निष्फलान्

अब्रवीत्परवीरघ्नः कृष्णोऽजुनमिदं वचः ५
अदृष्टपूर्वं पश्यामि शिलानामिव सर्पणम्
त्वया संप्रेषिताः पार्थ नार्थं कुर्वन्ति पत्रिणः ६
कच्चिद्गाण्डीवतः प्राणास्तथैव भरतर्षभ
मुष्टिश्च ते यथापूर्वं भुजयोश्च बलं तव ७
न चेद्विधेरयं कालः प्राप्तः स्यादद्य पश्चिमः
तव चैवास्य शत्रोश्च तन्ममाचक्ष्व पृच्छतः ८
विस्मयो मे महान्पार्थ तव दृष्ट्वा शरानिमान्
व्यर्थान्निपततः संख्ये दुर्योधनरथं प्रति ९
वज्राशनिसमा घोराः परकायावभेदिनः
शराः कुर्वन्ति ते नार्थं पार्थ काद्य विडम्बना १०
अर्जुन उवाच
द्रोणेनैषा मतिः कृष्ण धार्तराष्ट्रे निवेशिता
अन्ते विहितमस्त्राणामेतत्कवचधारणम् ११
अस्मिन्नन्तर्हितं कृष्ण त्रैलोक्यमपि वर्मणि
एको द्रोणो हि वेदैतदहं तस्माच्च सत्तमात् १२
न शक्यमेतत्कवचं बाणैर्भेत्तुं कथंचन
अपि वज्रेण गोविन्द स्वयं मघवता युधि १३
जानंस्त्वमपि वै कृष्ण मां विमोहयसे कथम्
यद्वृत्तं त्रिषु लोकेषु यच्च केशव वर्तते १४
तथा भविष्यद्यच्चैव तत्सर्वं विदितं तव
न त्वेवं वेद वै कश्चिद्यथा त्वं मधुसूदन १५
एष दुर्योधनः कृष्ण द्रोणेन विहितामिमाम्
तिष्ठत्यभीतवत्संख्ये बिभ्रत्कवचधारणाम् १६
यत्त्वत्र विहितं कार्यं नैष तद्वेत्ति माधव
स्त्रीवदेष बिभर्त्येतां युक्तां कवचधारणाम् १७
पश्य बाह्वोश्च मे वीर्यं धनुषश्च जनार्दन
पराजयिष्ये कौरव्यं कवचेनापि रक्षितम् १८
इदमङ्गिरसे प्रादाद्देवेशो वर्म भास्वरम्
पुनर्ददौ सुरपतिर्मह्यं वर्म सस्त्रंगहम् १९

दैवं यद्यस्य वर्मैतद्ब्रह्मणा वा स्वयं कृतम्
नैतद्गोप्स्यति दुर्बुद्धिमद्य बाणहतं मया २०
सञ्जय उवाच
एवमुक्त्वार्जुनो बाणानभिमन्त्र्य व्यकर्षयत्
विकृष्यमाणांस्तेनैवं धनुर्मध्यगताञ्शरान्
तानस्यास्त्रेण चिच्छेद द्रौणिः सर्वास्त्रघातिना २१
तान्निकृत्तानिषून्दृष्ट्वा दूरतो ब्रह्मवादिना
न्यवेदयत्केशवाय विस्मितः श्वेतवाहनः २२
नैतदस्त्रं मया शक्यं द्विः प्रयोक्तुं जनार्दन
अस्त्रं मामेव हन्याद्धि पश्य त्वद्य बलं मम २३
ततो दुर्योधनः कृष्णौ नवभिर्नतपर्वभिः
अविध्यत रणे राजञ्शरैराशीविषोपमैः
भूय एवाभ्यवर्षच्च समरे कृष्णपाण्डवौ २४
शरवर्षेण महता ततोऽहृष्यन्त तावकाः
चक्रुर्वादित्रनिनदान्सिंहनादरवांस्तथा २५
ततः क्रुद्धो रणे पार्थः सृक्कणी परिसंलिहन्
नापश्यत ततोऽस्याङ्गं यन्न स्याद्वर्मरक्षितम् २६
ततोस्य निशितैर्बाणैः सुमुक्तैरन्तकोपमैः
हयांश्चकार निर्देहानुभौ च पार्ष्णिसारथी २७
धनुरस्याच्छिनच्चित्रं हस्तावापं च वीर्यवान्
रथं च शकलीकर्तुं सव्यसाची प्रचक्रमे २८
दुर्योधनं च बाणाभ्यां तीक्ष्णाभ्यां विरथीकृतम्
अविध्यद्धस्ततलयोरुभयोरर्जुनस्तदा २९
तं कृच्छ्रामापदं प्राप्तं दृष्ट्वा परमधन्विनः
समापेतुः परीप्सन्तो धनञ्जयशरार्दितम् ३०
तं रथैर्बहुसाहस्रैः कल्पितैः कुञ्जरैर्हयैः
पदात्योघैश्च संरब्धैः परिवव्रुर्धनञ्जयम् ३१
अथ नार्जुनगोविन्दौ रथो वापि व्यदृश्यत
अस्त्रवर्षेण महता जनौघैश्चापि संवृतौ ३२
ततोऽर्जुनोऽस्त्रवीर्येण निजघ्ने तां वरूथिनीम्

तत्र व्यङ्गीकृताः पेतुः शतशोऽथ रथद्विपाः ३३
ते हता हन्यमानाश्च न्यगृह्णंस्तं रथोत्तमम्
स रथस्तम्भितस्तस्थौ क्रोशमात्रं समन्ततः ३४
ततोऽर्जुनं वृष्णिवीरस्त्वरितो वाक्यमब्रवीत्
धनुर्विस्फारयात्यर्थमहं ध्मास्यामि चाम्बुजम् ३५
ततो विस्फार्य बलवद्गाण्डीवं जघ्निवान्रिपून्
महता शरवर्षेण तलशब्देन चार्जुनः ३६
पाञ्चजन्यं च बलवद्दध्मौ तारेण केशवः
रजसा ध्वस्तपक्ष्मान्तः प्रस्विन्नवदनो भृशम् ३७
तस्य शङ्खस्य नादेन धनुषो निस्वनेन च
निःसत्त्वाश्च ससत्त्वाश्च क्षितौ पेतुस्तदा जनाः ३८
तैर्विमुक्तो रथो रेजे वाय्वीरित इवाम्बुदः
जयद्रथस्य गोप्तारस्ततः क्षुब्धाः सहानुगाः ३९
ते दृष्ट्वा सहसा पार्थं गोप्तारः सैन्धवस्य तु
चक्रुर्नादान्बहुविधान्कम्पयन्तो वसुन्धराम् ४०
बाणशब्दरवांश्चाग्रान्विमिश्राञ्शङ्खनिस्वनैः
प्रादुश्चक्रुर्महात्मानः सिंहनादरवानपि ४१
तं श्रुत्वा निनदं घोरं तावकानां समुत्थितम्
प्रदध्मतुस्तदा शङ्खौ वासुदेवधनञ्जयौ ४२
तेन शब्देन महता पूरितेयं वसुन्धरा
सशैला सार्णवद्वीपा सपाताला विशां पते ४३
स शब्दो भरतश्रेष्ठ व्याप्य सर्वा दिशो दश
प्रतिसस्वान तत्रैव कुरुपाण्डवयोर्बले ४४
तावका रथिनस्तत्र दृष्ट्वा कृष्णधनञ्जयौ
संरम्भं परमं प्राप्तास्त्वरमाणा महारथाः ४५
अथ कृष्णौ महाभागौ तावका दृश्य दंशितौ
अभ्यद्रवन्त संक्रुद्धास्तदद्भुतमिवाभवत् ४६
इति श्रीमहाभारते द्रोणपर्वणिअष्टसप्ततितमोऽध्यायः ७८

## एकोनाशीतितमोऽध्यायः

सञ्जय उवाच
तावकास्तु समीक्ष्यैव वृष्ण्यन्धककुरूत्तमौ
प्रागत्वरञ्जिघांसन्तस्तथैव विजयः परान् १
सुवर्णचित्रैर्वैयाघ्रैः स्वनवद्भिर्महारथैः
दीपयन्तो दिशः सर्वा ज्वलद्भिरिव पावकैः २
रुक्मपृष्ठैश्च दुष्प्रेक्ष्यैः कार्मुकैः पृथिवीपते
कूजद्भिरतुलान्नादान्रोषितैरुरगैरिव ३
भूरिश्रवाः शलः कर्णो वृषसेनो जयद्रथः
कृपश्च मद्रराजश्च द्रौणिश्च रथिनां वरः ४
ते पिबन्त इवाकाशमश्वैरष्टौ महारथाः
व्यराजयन्दश दिशो वैयाघ्रैर्हेमचन्द्रकैः ५
ते दंशिताः सुसंरब्धा रथैर्मेघौघनिस्वनैः
समावृण्वन्दिशः सर्वाः पार्थं च विशिखैः शितैः ६
कौलूतका हयाश्चित्रा वहन्तस्तान्महारथान्
व्यशोभन्त तदा शीघ्रा दीपयन्तो दिशो दश ७
आजानेयैर्महावेगैर्नानादेशसमुत्थितैः
पार्वतीयैर्नदीजैश्च सैन्धवैश्च हयोत्तमैः ८
कुरुयोधवरा राजंस्तव पुत्रं परीप्सवः
धनञ्जयरथं शीघ्रं सर्वतः समुपाद्रवन् ९
ते प्रगृह्यमहाशङ्खान्दध्मुः पुरुषसत्तमाः
पूरयन्तो दिवं राजन्पृथिवीं च ससागराम् १०
तथैव दध्मतुः शङ्खौ वासुदेवधनञ्जयौ
प्रवरौ सर्वभूतानां सर्वशङ्खवरौ भुवि
देवदत्तं च कौन्तेयः पाञ्चजन्यं च केशवः ११
शब्दस्तु देवदत्तस्य धनञ्जयसमीरितः
पृथिवीं चान्तरिक्षं च दिशश्चैव समावृणोत् १२
तथैव पाञ्चजन्योऽपि वासुदेवसमीरितः
सर्वशब्दानतिक्रम्य पूरयामास रोदसी १३
तस्मिंस्तथा वर्तमाने दारुणे नादसंकुले

भीरूणां त्रासजनने शूराणां हर्षवर्धने १४
प्रवादितासु भेरीषु झर्झरेष्वानकेषु च
मृदङ्गेषु च राजेन्द्र वाद्यमानेष्वनेकशः १५
महारथसमाख्याता दुर्योधनहितैषिणः
अमृष्यमाणास्तं शब्दं क्रुद्धाः परमधन्विनः
नानादेश्या महीपालाः स्वसैन्यपरिरक्षिणः १६
अमर्षिता महाशङ्खान्दध्मुर्वीरा महारथाः
कृते प्रतिकरिष्यन्तः केशवस्यार्जुनस्यच १७
बभूव तव तत्सैन्यं शङ्खशब्दसमीरितम्
उद्विग्नरथनागाश्वमस्वस्थमिव चाभिभो १८
तत्प्रयुक्तमिवाकाशं शूरैः शङ्खनिनादितम्
बभूव भृशमुद्विग्नं निर्घातैरिव नादितम् १९
स शब्दः सुमहान्राजन्दिशः सर्वा व्यनादयत्
त्रासयामास तत्सैन्यं युगान्त इव सम्भृतः २०
ततो दुर्योधनोऽष्टौ च राजानस्ते महारथाः
जयद्रथस्य रक्षार्थं पाण्डवं पर्यवारयन् २१
ततो द्रौणिस्त्रिसप्तत्या वासुदेवमताडयत्
अर्जुनं च त्रिभिर्भल्लैर्ध्वजमश्वांश्च पञ्चभिः २२
तमर्जुनः पृषत्कानां शतैः षड्भिरताडयत्
अत्यर्थमिव संक्रुद्धः प्रतिविद्धे जनार्दने २३
कर्णं द्वादशभिर्विद्ध्वा वृषसेनं त्रिभिस्तथा
शल्यस्य सशरं चापं मुष्टौ चिच्छेद वीर्यवान् २४
गृहीत्वा धनुरन्यत्तु शल्यो विव्याध पाण्डवम्
भूरिश्रवास्त्रिभिर्बाणैर्हेमपुङ्खैः शिलाशितैः २५
कर्णो द्वात्रिंशता चैव वृषसेनश्च सप्तभिः
जयद्रथस्त्रिसप्तत्या कृपश्च दशभिः शरैः
मद्रराजश्च दशभिर्विव्यधुः फल्गुनं रणे २६
ततः शराणां षष्ट्या तु द्रौणिः पार्थमवाकिरत्
वासुदेवं च सप्तत्या पुनः पार्थं च पञ्चभिः २७
प्रहसंस्तु नरव्याघ्रः श्वेताश्वः कृष्णसारथिः

प्रत्यविध्यत्स तान्सर्वान्दर्शयन्पाणिलाघवम् २८
कर्णं द्वादशभिर्विद्ध्वा वृषसेनं त्रिभिः शरैः
शल्यस्य समरे चापं मुष्टिदेशे न्यकृन्तत २९
सौमदत्तिं त्रिभिर्विद्ध्वा शल्यं च दशभिः शरैः
शितैरग्निशिखाकारैर्द्रौणिं विव्याध चाष्टभिः ३०
गौतमं पञ्चविंशत्या सैन्धवं च शतेन ह
पुनर्द्रौणिं च सप्तत्या शराणां सोऽभ्यताडयत् ३१
भूरिश्रवास्तु संक्रुद्धः प्रतोदं चिच्छिदे हरेः
अर्जुनं च त्रिसप्तत्या बाणानामाजघान ह ३२
ततः शरशतैस्तीक्ष्णैस्तानरीञ्श्वेतवाहनः
प्रत्यषेधद्द्रुतं क्रुद्धो महावातो घनानिव ३३
इति श्रीमहाभारते द्रोणपर्वणि एकोनाशीतितमोऽध्यायः ७९

## अशीतितमोऽध्यायः

धृतराष्ट्र उवाच
ध्वजान्बहुविधाकारान्भ्राजमानानतिश्रिया
पार्थानां मामकानां च तन्ममाचक्ष्व सञ्जय १
सञ्जय उवाच
ध्वजान्बहुविधाकाराञ्शृणु तेषां महात्मनाम्
रूपतो वर्णतश्चैव नामतश्च निबोध मे २
तेषां तु रथमुख्यानां रथेषु विविधा ध्वजाः
प्रत्यदृश्यन्त राजेन्द्र ज्वलिता इव पावकाः ३
काञ्चनाः काञ्चनापीडाः काञ्चनस्रगलंकृताः
काञ्चनानीव शृङ्गाणि काञ्चनस्य महागिरेः ४
ते ध्वजाः संवृतास्तेषां पताकाभिः समन्ततः
नानावर्णविरागाभिर्विबभुः सर्वतो वृताः ५
पताकाश्च ततस्तास्तु श्वसनेन समीरिताः
नृत्यमानाः व्यदृश्यन्त रङ्गमध्ये विलासिकाः ६
इन्द्रायुधसवर्णाभाः पताका भरतर्षभ
दोधूयमाना रथिनां शोभयन्ति महारथान् ७

सिंहलाङ्गूलमुग्रास्यं ध्वजं वानरलक्षणम्
धनञ्जयस्य संग्रामे प्रत्यपश्याम भैरवम् ८
स वानरवरो राजन्पताकाभिरलंकृतः
त्रासयामास तत्सैन्यं ध्वजो गाण्डीवधन्वनः ९
तथैव सिंहलाङ्गूलं द्रोणपुत्रस्य भारत
ध्वजाग्रं समपश्याम बालसूर्यसमप्रभम् १०
काञ्चनं पवनोद्धूतं शक्रध्वजसमप्रभम्
नन्दनं कौरवेन्द्राणां द्रौणेर्लक्षणमुच्छ्रितम् ११
हस्तिकक्ष्या पुनर्हैमी बभूवाधिरथेर्ध्वजे
आहवे खं महाराज ददृशे पूरयन्निव १२
पताकी काञ्चनस्रग्वी ध्वजः कर्णस्य संयुगे
नृत्यतीव रथोपस्थे श्वसनेन समीरितः १३
आचार्यस्य च पाण्डूनां ब्राह्मणस्य यशस्विनः
गोवृषो गौतमस्यासीत्कृपस्य सुपरिष्कृतः १४
स तेन भ्राजते राजन्गोवृषेण महारथः
त्रिपुरघ्नरथो यद्वद्गोवृषेण विराजते १५
मयूरो वृषसेनस्य काञ्चनो मणिरत्नवान्
व्याहरिष्यन्निवातिष्ठत्सेनाग्रमपि शोभयन् १६
तेन तस्य रथो भाति मयूरेण महात्मनः
यथा स्कन्दस्य राजेन्द्र मयूरेण विराजता १७
मद्रराजस्य शल्यस्य ध्वजाग्रेऽग्निशिखामिव
सौवर्णीं प्रतिपश्याम सीतामप्रतिमां शुभाम् १८
सा सीता भ्राजते तस्य रथमास्थाय मारिष
सर्वबीजविरूढेव यथा सीता श्रिया वृता १९
वराहः सिन्धुराजस्य राजतोऽभिविराजते
ध्वजाग्रेऽलोहितार्काभो हेमजालपरिष्कृतः २०
शुशुभे केतुना तेन राजतेन जयद्रथः
यथा देवासुरे युद्धे पुरा पूषा स्म शोभते २१
सौमदत्तेः पुनर्यूपो यज्ञशीलस्य धीमतः
ध्वजः सूर्य इवाभाति सोमश्चात्र प्रदृश्यते २२

स यूपः काञ्चनो राजन्सौमदत्तेर्विराजते
राजसूये मखश्रेष्ठे यथा यूपः समुच्छ्रितः २३
शलस्य तु महाराज राजतो द्विरदो महान्
केतुः काञ्चनचित्राङ्गैर्मयूरैरुपशोभितः २४
स केतुः शोभयामास सैन्यं ते भरतर्षभ
यथा श्वेतो महानागो देवराजचमूं तथा २५
नागो मणिमयो राज्ञो ध्वजः कनकसंवृतः
किङ्किणीशतसंह्रादो भ्राजंश्चित्रे रथोत्तमे २६
व्यभ्राजत भृशं राजन्पुत्रस्तव विशां पते
ध्वजेन महता संख्ये कुरूणामृषभस्तदा २७
नवैते तव वाहिन्यामुच्छ्रिताः परमध्वजाः
व्यदीपयंस्ते पृतनां युगान्तादित्यसंनिभाः २८
दशमस्त्वर्जुनस्यासीदेक एव महाकपिः
अदीप्यतार्जुनो येन हिमवानिव वह्निना २९
ततश्चित्राणि शुभ्राणि सुमहान्ति महारथाः
कार्मुकाण्यादुदुस्तूर्णमर्जुनार्थे परन्तपाः ३०
तथैव धनुरायच्छत्पार्थः शत्रुविनाशनः
गाण्डीवं दिव्यकर्मा तद्राजन्दुर्मन्त्रिते तव ३१
तवापराधाद्धि नरा निहता बहुधा युधि
नानादिग्भ्यः समाहूताः सहयाः सरथद्विपाः ३२
तेषामासीद्व्यतिक्षेपो गर्जतामितरेतरम्
दुर्योधनमुखानां च पाण्डूनामृषभस्य च ३३
तत्राद्भुतं परं चक्रे कौन्तेयं कृष्णसारथिः
यदेको बहुभिः सार्धं समागच्छदभीतवत् ३४
अशोभत महाबाहुर्गाण्डीवं विक्षिपन्धनुः
जिगीषुस्तान्नरव्याघ्राञ्जिघांसुश्च जयद्रथम् ३५
तत्रार्जुनो महाराज शरैर्मुक्तैः सहस्रशः
अदृश्यानकरोद्योधांस्तावकाञ्शत्रुतापनः ३६
ततस्तेऽपि नरव्याघ्राः पार्थं सर्वे महारथाः
अदृश्यं समरे चक्रुः सायकौघैः समन्ततः ३७

संवृते नरसिंहैस्तैः कुरूणामृषभेऽजुने
महानासीत्समुद्भूतस्तस्य सैन्यस्य निस्वनः ३८
इति श्रीमहाभारते द्रोणपर्वणि अशीतितमोऽध्यायः ८०

## एकाशीतितमोऽध्यायः

धृतराष्ट्र उवाच
अर्जुने सैन्धवं प्राप्ते भारद्वाजेन संवृताः
पाञ्चालाः कुरुभिः सार्धं किमकुर्वत सञ्जय १
सञ्जय उवाच
अपराह्णे महाराज संग्रामे लोमहर्षणे
पाञ्चालानां कुरूणां च द्रोणे द्यूतमवर्तत २
पाञ्चाला हि जिघांसन्तो द्रोणं संहृष्टचेतसः
अभ्यवर्षन्त गर्जन्तः शरवर्षाणि मारिष ३
ततः सुतुमुलस्तेषां संग्रामोऽवर्तताद्भुतः
पाञ्चालानां कुरूणां च घोरो देवासुरोपमः ४
सर्वे द्रोणरथं प्राप्य पाञ्चालाः पाण्डवैः सह
तदनीकं बिभित्सन्तो महास्त्राणि व्यदर्शयन् ५
द्रोणस्य रथपर्यन्तं रथिनो रथमास्थिताः
कम्पयन्तोऽभ्यवर्तन्त वेगमास्थाय मध्यमम् ६
तमभ्यगाद्बृहत्क्षत्रः केकयानां महारथः
प्रवपन्निशितान्बाणान्महेन्द्राशनिसंनिभान् ७
तं तु प्रत्युदियाच्छीघ्रं क्षेमधूर्तिर्महायशाः
विमुञ्चन्निशितान्बाणाञ्शतशोऽथ सहस्रशः ८
धृष्टकेतुश्च चेदीनामृषभोऽतिबलोदितः
त्वरितोऽभ्यद्रवद्द्रोणं महेन्द्र इव शम्बरम् ९
तमापतन्तं सहसा व्यादितास्यमिवान्तकम्
वीरधन्वा महेष्वासस्त्वरमाणः समभ्ययात् १०
युधिष्ठिरं महाराज जिगीषुं समवस्थितम्
सहानीकं ततो द्रोणो न्यवारयत वीर्यवान् ११
नकुलं कुशलं युद्धे पराक्रान्तं पराक्रमी

अभ्यगच्छत्समायान्तं विकर्णस्ते सुतः प्रभो १२
सहदेवं तथायान्तं दुर्मुखः शत्रुकर्शनः
शरैरनेकसाहस्रैः समवाकिरदाशुगैः १३
सात्यकिं तु नरव्याघ्रं व्याघ्रदत्तस्त्ववारयत्
शरैः सुनिशितैस्तीक्ष्णैः कम्पयन्वै मुहुर्मुहुः १४
द्रौपदेयान्नरव्याघ्रान्मुञ्चतः सायकोत्तमान्
संरब्धान्रथिनां श्रेष्ठान्सौमदत्तिरवारयत् १५
भीमसेनं तदा क्रुद्धं भीमरूपो भयानकम्
प्रत्यवारयदायान्तमार्ष्यशृङ्गिर्महारथः १६
तयोः समभवद्युद्धं नरराक्षसयोर्मृधे
यादृगेव पुरा वृत्तं रामरावणयोर्नृप १७
ततो युधिष्ठिरो द्रोणं नवत्या नतपर्वणाम्
आजघ्ने भरतश्रेष्ठ सर्वमर्मसु भारत १८
तं द्रोणः पञ्चविंशत्या निजघान स्तनान्तरे
रोषितो भरतश्रेष्ठ कौन्तेयेन यशस्विना १९
भूय एव तु विंशत्या सायकानां समाचिनोत्
साश्वसूतध्वजं द्रोणः पश्यतां सर्वधन्विनाम् २०
ताञ्शरान्द्रोणमुक्तांस्तु शरवर्षेण पाण्डवः
अवारयत धर्मात्मा दर्शयन्पाणिलाघवम् २१
ततो द्रोणो भृशं क्रुद्धो धर्मराजस्य संयुगे
चिच्छेद सहसा धन्वी धनुस्तस्य महात्मनः २२
अथैनं छिन्नधन्वानं त्वरमाणो महारथः
शरैरनेकसाहस्रैः पूरयामास सर्वतः २३
अदृश्यं दृश्य राजानं भारद्वाजस्य सायकैः
सर्वभूतान्यमन्यन्त हतमेव युधिष्ठिरम् २४
केचिच्चैनममन्यन्त तथा वै विमुखीकृतम्
हृतो राजेति राजेन्द्र ब्राह्मणेन यशस्विना २५
स कृच्छ्रं परमं प्राप्तो धर्मराजो युधिष्ठिरः
त्यक्त्वा तत्कार्मुकं छिन्नं भारद्वाजेन संयुगे
आददेऽन्यद्धनुर्दिव्यं भास्वरं वेगवत्तरम् २६

ततस्तान्सायकान्सर्वान्द्रोणमुक्तान्सहस्रशः
चिच्छेद समरे वीरस्तदद्भुतमिवाभवत् २७
छित्त्वा च ताञ्शरान्राजा क्रोधसंरक्तलोचनः
शक्तिं जग्राह समरे गिरीणामपि दारिणीम्
स्वर्णदण्डां महाघोरामष्टघण्टां भयावहाम् २८
समुत्क्षिप्य च तां हृष्टो ननाद बलवद्बली
नादेन सर्वभूतानि त्रासयन्निव भारत २९
शक्तिं समुद्यतां दृष्ट्वा धर्मराजेन संयुगे
स्वस्ति द्रोणाय सहसा सर्वभूतान्यथाब्रुवन् ३०
सा राजभुजनिर्मुक्ता निमुक्तोरगसंनिभा
प्रज्वालयन्ती गगनं दिशश्च विदिशस्तथा
द्रोणान्तिकमनुप्राप्ता दीप्तास्या पन्नगी यथा ३१
तामापतन्तीं सहसा प्रेक्ष्य द्रोणो विशां पते
प्रादुश्चक्रे ततो ब्राह्ममस्त्रमस्त्रविदां वरः ३२
तदस्त्रं भस्मसात्कृत्वा तां शक्तिं घोरदर्शनाम्
जगाम स्यन्दनं तूर्णं पाण्डवस्य यशस्विनः ३३
ततो युधिष्ठिरो राजा द्रोणास्त्रं तत्समुद्यतम्
अशामयन्महाप्राज्ञो ब्रह्मास्त्रेणैव भारत ३४
विव्याध च रणे द्रोणं पञ्चभिर्नतपर्वभिः
क्षुरप्रेण च तीक्ष्णेन चिच्छेदास्य महद्धनुः ३५
तदपास्य धनुश्छिन्नं द्रोणः क्षत्रियमर्दनः
गदां चिक्षेप सहसा धर्मपुत्राय मारिष ३६
तामापतन्तीं सहसा गदां दृष्ट्वा युधिष्ठिरः
गदामेवाग्रहीत्क्रुद्धश्चिक्षेप च परन्तपः ३७
ते गदे सहसा मुक्ते समासाद्य परस्परम्
संघर्षात्पावकं मुक्त्वा समेयातां महीतले ३८
ततो द्रोणो भृशं क्रुद्धो धर्मराजस्य मारिष
चतुर्भिर्निशितैस्तीक्ष्णैर्हयाञ्जघ्ने शरोत्तमैः ३९
धनुश्चैकेन बाणेन चिच्छेदेन्द्रध्वजोपमम्
केतुमेकेन चिच्छेद पाण्डवं चार्दयत्त्रिभिः ४०

हताश्वात्तु रथात्तूर्णमवप्लुत्य युधिष्ठिरः
तस्थावूर्ध्वभुजो राजा व्यायुधो भरतर्षभ ४१
विरथं तं समालोक्य व्यायुधं च विशेषतः
द्रोणो व्यमोहयच्छत्रून्सर्वसैन्यानि चाभिभो ४२
मुञ्चन्निषुगणांस्तीक्ष्णाँल्लघुहस्तो दृढव्रतः
अभिदुद्राव राजानं सिंहो मृगमिवोल्बणः ४३
तमभिद्रुतमालोक्य द्रोणेनामित्रघातिना
हा हेति सहसा शब्दः पाण्डूनां समजायत ४४
हृतो राजा हृतो राजा भारद्वाजेन मारिष
इत्यासीत्सुमहाञ्शब्दः पाण्डुसैन्यस्य सर्वतः ४५
ततस्त्वरितमारुह्य सहदेवरथं नृपः
अपायाज्जवनैरश्वैः कुन्तीपुत्रो युधिष्ठिरः ४६
इति श्रीमहाभारते द्रोणपर्वणि एकाशीतितमोऽध्यायः ८१

## द्व्यशीतितमोऽध्यायः

सञ्जय उवाच
बृहत्क्षत्रमथायान्तं केकयं दृढविक्रमम्
क्षेमधूर्तिर्महाराज विव्याधोरसि मार्गणैः १
बृहत्क्षत्रस्तु तं राजा नवत्या नतपर्वणाम्
आजघ्ने त्वरितो युद्धे द्रोणानीकबिभित्सया २
क्षेमधूर्तिस्तु संक्रुद्धः केकयस्य महात्मनः
धनुश्चिच्छेद भल्लेन पीतेन निशितेन च ३
अथैनं छिन्नधन्वानं शरेण नतपर्वणा
विव्याध हृदये तूर्णं प्रवरं सर्वधन्विनाम् ४
अथान्यद्धनुरादाय बृहत्क्षत्रो हसन्निव
व्यश्वसूतध्वजं चक्रे क्षेमधूर्तिं महारथम् ५
ततोऽपरेण भल्लेन पीतेन निशितेन च
जहार नृपतेः कायाच्छिरो ज्वलितकुण्डलम् ६
तच्छिन्नं सहसा तस्य शिरः कुञ्चितमूर्धजम्
सकिरीटं महीं प्राप्य बभौ ज्योतिरिवाम्बरात् ७

तं निहत्य रणे हृष्टो बृहत्क्षत्रो महारथः
सहसाभ्यपतत्सैन्यं तावकं पार्थकारणात् ८
धृष्टकेतुमथायान्तं द्रोणहेतोः पराक्रमी
वीरधन्वा महेष्वासो वारयामास भारत ९
तौ परस्परमासाद्य शरदंष्ट्रौ तरस्विनौ
शरैरनेकसाहस्रैरन्योन्यमभिजघ्नतुः १०
तावुभौ नरशार्दूलौ युयुधाते परस्परम्
महावने तीव्रमदौ वारणाविव रोषितौ ११
गिरिगह्वरमासाद्य शार्दूलाविव यूथपौ
युयुधाते महावीर्यौ परस्परजिघांसया १२
तद्युद्धमासीत्तुमुलं प्रेक्षणीयं विशां पते
सिद्धचारणसंघानां विस्मयाद्भुतदर्शनम् १३
वीरधन्वा ततः क्रुद्धो धृष्टकेतोः शरासनम्
द्विधा चिच्छेद भल्लेन प्रहसन्निव भारत १४
तदुत्सृज्य धनुश्छिन्नं चेदिराजो महारथः
शक्तिं जग्राह विपुलां रुक्मदण्डामयस्मयीम् १५
तां तु शक्तिं महावीर्यां दोर्भ्यामायम्य भारत
चिक्षेप सहसा यत्तो वीरधन्वरथं प्रति १६
स तया वीरघातिन्या शक्त्या त्वभिहतो भृशम्
निर्भिन्नहृदयस्तूर्णं निपपात रथान्महीम् १७
तस्मिन्विनिहते शूरे त्रिगर्तानां महारथे
बलं तेऽभज्यत विभो पाण्डवेयैः समन्ततः १८
सहदेवे ततः षष्टिं सायकान्दुर्मुखोऽक्षिपत्
ननाद च महानादं तर्जयन्पाण्डवं रणे १९
माद्रेयस्तु ततः क्रुद्धो दुर्मुखं दशभिः शरैः
भ्राता भ्रातरमायान्तं विव्याध प्रहसन्निव २०
तं रणे रभसं दृष्ट्वा सहदेवं महाबलम्
दुर्मुखो नवभिर्बाणैस्ताडयामास भारत २१
दुर्मुखस्य तु भल्लेन छित्त्वा केतुं महाबलः
जघान चतुरो वाहांश्चतुर्भिर्निशितैः शरैः २२

अथापरेण भल्लेन पीतेन निशितेन च
चिच्छेद सारथेः कायाच्छिरो ज्वलितकुण्डलम् २३
क्षुरप्रेण च तीक्ष्णेन कौरव्यस्य महद्धनुः
सहदेवो रणे छित्वा तं च विव्याध पञ्चभिः २४
हताश्वं तु रथं त्यक्त्वा दुर्मुखो विमनास्तदा
आरुरोह रथं राजन्निरमित्रस्य भारत २५
सहदेवस्ततः क्रुद्धो निरमित्रं महाहवे
जघान पृतनामध्ये भल्लेन परवीरहा २६
स पपात रथोपस्थान्निरमित्रो जनेश्वरः
त्रिगर्तराजस्य सुतो व्यथयंस्तव वाहिनीम् २७
तं तु हत्वा महाबाहुः सहदेवो व्यरोचत
यथा दाशरथी रामः खरं हत्वा महाबलम् २८
हाहाकारो महानासीत्त्रिगर्तानां जनेश्वर
राजपुत्रं हतं दृष्ट्वा निरमित्रं महाबलम् २९
नकुलस्ते सुतं राजन्विकर्णं पृथुलोचनम्
मुहूर्ताज्जितवान्संख्ये तदद्भुतमिवाभवत् ३०
सात्यकिं व्याघ्रदत्तस्तु शरैः संनतपर्वभिः
चक्रेऽदृश्यं साश्वसूतं सध्वजं पृतनान्तरे ३१
तान्निवार्य शराञ्शूरः शैनेयः कृतहस्तवत्
साश्वसूतध्वजं बाणैर्व्याघ्रदत्तमपातयत् ३२
कुमारे निहते तस्मिन्मागधस्य सुते प्रभो
मागधाः सर्वतो यत्ता युयुधानमुपाद्रवन् ३३
विसृजन्तः शरांश्चैव तोमरांश्च सहस्रशः
भिण्डपालांस्तथा प्रासान्मुद्गरान्मुसलानपि ३४
अयोधयन्रणे शूराः सात्वतं युद्धदुर्मदम्
तांस्तु सर्वान्स वलवान्सात्यकिर्युद्धदुर्मदः
नातिकृच्छ्राद्धसन्नेव विजिग्ये पुरुषर्षभ ३५
मागधान्द्रवतो दृष्ट्वा हतशेषान्समन्ततः
बलं तेऽभज्यत विभो युयुधानशरार्दितम् ३६
नाशयित्वा रणे सैन्यं त्वदीयं माधवोत्तमः

विधुन्वानो धनुःश्रेष्ठं व्यभ्राजत महायशाः ३७
भज्यमानं बलं राजन्सात्वतेन महात्मना
नाभ्यवर्तत युद्धाय त्रासितं दीर्घबाहुना ३८
ततो द्रोणो भृशं क्रुद्धः सहसोद्वृत्य चक्षुषी
सात्यकिं सत्यकर्माणं स्वयमेवाभिदुद्रुवे ३९
इति श्रीमहाभारते द्रोणपर्वणि द्व्यशीतितमोऽध्यायः ८२

## त्र्यशीतितमोऽध्यायः

सञ्जय उवाच
द्रौपदेयान्महेष्वासान्सौमदत्तिर्महायशाः
एकैकं पञ्चभिर्विद्ध्वा पुनर्विव्याध सप्तभिः १
ते पीडिता भृशं तेन रौद्रेण सहसा विभो
प्रमूढा नैव विविदुर्मृधे कृत्यं स्म किञ्चन २
नाकुलिस्तु शतानीकः सौमदत्तिं नरर्षभम्
द्वाभ्यां विद्ध्वानदद्धृष्टः शराभ्यां शत्रुतापनः ३
तथेतरे रणे यत्तास्त्रिभिस्त्रिभिरजिह्मगैः
विव्यधुः समरे तूर्णं सौमदत्तिममर्षणम् ४
स तान्प्रति महाराज चिक्षिपे पञ्च सायकान्
एकैकं हृदि चाजघ्ने एकैकेन महायशाः ५
ततस्ते भ्रातरः पञ्च शरैर्विद्धा महात्मना
परिवार्य रथैर्वीरं विव्यधुः सायकैर्भृशम् ६
आर्जुनिस्तु हयांस्तस्य चतुर्भिर्निशितैः शरैः
प्रेषयामास संक्रुद्धो यमस्य सदनं प्रति ७
भैमसेनिर्धनुश्छित्त्वा सौमदत्तेर्महात्मनः
ननाद बलवन्नादं विव्याध च शितैः शरैः ८
यौधिष्ठिरो ध्वजं तस्य छित्त्वा भूमावपातयत्
नाकुलिश्चाश्वयन्तारं रथनीडादपाहरत् ९
साहदेविस्तु तं ज्ञात्वा भ्रातृभिर्विमुखीकृतम्
क्षुरप्रेण शिरो राजन्निचकर्त महामनाः १०
तच्छिरो न्यपतद्भूमौ तपनीयविभूषितम्

भ्राजयन्तं रणोद्देशं बालसूर्यसमप्रभम् ११
सौमदत्तेः शिरो दृष्ट्वा निपतत्तन्महात्मनः
वित्रस्तास्तावका राजन्प्रदुद्रुवुरनेकधा १२
अलम्बुसस्तु समरे भीमसेनं महाबलम्
योधयामास संक्रुद्धो लक्ष्मणं रावणिर्यथा १३
संप्रयुद्धौ रणे दृष्ट्वा तावुभौ नरराक्षसौ
विस्मयः सर्वभूतानां प्रहर्षश्चाभवत्तदा १४
आर्ष्यशृङ्गिं ततो भीमो नवभिर्निशितैः शरैः
विव्याध प्रहसन्राजन् राक्षसेन्द्रममर्षणम् १५
तद्रक्षः समरे विद्धं कृत्वा नादं भयावहम्
अभ्यद्रवत्ततो भीमं ये च तस्य पदानुगाः १६
स भीमं पञ्चभिर्विद्ध्वा शरैः संनतपर्वभिः
भीमानुगाञ्जघानाशु रथांस्त्रिंशदरिंदमः
पुनश्चतुःशतान्हत्वा भीमं विव्याध पत्रिणा १७
सोऽतिविद्धस्तदा भीमो राक्षसेन महाबलः
निषसाद रथोपस्थे मूर्छयाभिपरिप्लुतः १८
प्रतिलभ्य ततः संज्ञां मारुतिः क्रोधमूर्छितः
विकृष्य कार्मुकं घोरं भारसाधनमुत्तमम्
अलम्बुसं शरैस्तीक्ष्णैरर्दयामास सर्वतः १९
स विद्धो बहुभिर्बाणैर्नीलाञ्जनचयोपमः
शुशुभे सर्वतो राजन्प्रदीप्त इव किंशुकः २०
स वध्यमानः समरे भीमचापच्युतैः शरैः
स्मरन्भ्रातृवधं चैव पाण्डवेन महात्मना २१
घोरं रूपमथो कृत्वा भीमसेनमभाषत
तिष्ठेदानीं रणे पार्थ पश्य मेऽद्य पराक्रमम् २२
बको नाम सुदुर्बुद्धे राक्षसप्रवरो बली
परोक्षं मम तद्वृत्तं यद्भ्राता मे हतस्त्वया २३
एवमुक्त्वा ततो भीममन्तर्धानगतस्तदा
महता शरवर्षेण भृशं तं समवाकिरत् २४
भीमस्तु समरे राजन्नदृश्ये राक्षसे तदा

आकाशं पूरयामास शरैः संनतपर्वभिः २५
स वध्यमानो भीमेन निमेषाद्रथमास्थितः
जगाम धरणीं क्षुद्रः खं चैव सहसागमत् २६
उच्चावचानि रूपाणि चकार सुबहूनि च
उच्चावचास्तथा वाचो व्याजहार समन्ततः २७
तेन पाण्डवसैन्यानां मृदिता युधि वारणाः
हयाश्च बहवो राजन्पत्तयश्च तथा पुनः
रथेभ्यो रथिनः पेतुस्तस्य नुन्नाः स्म सायकैः २८
शोणितोदां रथावर्तां हस्तिग्राहसमाकुलाम्
छत्रहंसां कर्दमिनीं बाहुपन्नगसंकुलाम् २९
नदीं प्रवर्तयामास रक्षोगणसमाकुलाम्
वहन्तीं बहुधा राजंश्चेदिपाञ्चालसृञ्जयान् ३०
तं तथा समरे राजन्विचरन्तमभीतवत्
पाण्डवा भृशसंविग्नाः प्रापश्यंस्तस्य विक्रमम् ३१
तावकानां तु सैन्यानां प्रहर्षः समजायत
वादित्रनिनदश्चोग्रः सुमहाँल्लोमहर्षणः ३२
तं श्रुत्वा निनदं घोरं तव सैन्यस्य पाण्डवः
नामृष्यत यथा नागस्तलशब्दं समीरितम् ३३
ततः क्रोधाभिताम्राक्षो निर्दहन्निव पावकः
संदधे त्वाष्ट्रमस्त्रं स स्वयं त्वष्टेव मारिष ३४
ततः शरसहस्राणि प्रादुरासन्समन्ततः
तैः शरैस्तव सैन्यस्य विद्रावः सुमहानभूत् ३५
तदस्त्रं प्रेषितं तेन भीमसेनेन संयुगे
राक्षसस्य महामायां हत्वा राक्षसमार्दयत् ३६
स वध्यमानो बहुधा भीमसेनेन राक्षसः
संत्यज्य संयुगे भीमं द्रोणानीकमुपाद्रवत् ३७
तस्मिंस्तु निर्जिते राजन्राक्षसेन्द्रे महात्मना
अनादयन्सिंहनादैः पाण्डवाः सर्वतोदिशम् ३८
अपूजयन्मारुतिं च संहृष्टास्ते महाबलम्
प्रह्रादं समरे जित्वा यथा शक्रं मरुद्गणाः ३९

इति श्रीमहाभारते द्रोणपर्वणि त्र्यशीतितमोऽध्यायः ८३

## चतुरशीतितमोऽध्यायः

सञ्जय उवाच
अलम्बुसं तथा युद्धे विचरन्तमभीतवत्
हैडिम्बः प्रययौ तूर्णं विव्याध च शितैः शरैः १
तयोः प्रतिभयं युद्धमासीद्राक्षससिंहयोः
कुर्वतोर्विविधा मायाः शक्रशम्बरयोरिव २
अलम्बुसो भृशं क्रुद्धो घटोत्कचमताडयत्
घटोत्कचस्तु विंशत्या नाराचानां स्तनान्तरे
अलम्बुसमथो विद्ध्वा सिंहवद्व्यनदन्मुहुः ३
तथैवालम्बुसो राजन्हैडिम्बं युद्धदुर्मदम्
विद्ध्वा विद्ध्वानदद्धृष्टः पूरयन्खं समन्ततः ४
तथा तौ भृशसंक्रुद्धौ राक्षसेन्द्रौ महाबलौ
निर्विशेषमयुध्येतां मायाभिरितरेतरम् ५
मायाशतसृजौ दृप्तौ मोहयन्तौ परस्परम्
मायायुद्धे सुकुशलौ मायायुद्धमयुध्यताम् ६
यां यां घटोत्कचो युद्धे मायां दर्शयते नृप
तां तामलम्बुसो राजन्माययैव निजघ्निवान् ७
तं तथा युध्यमानं तु मायायुद्धविशारदम्
अलम्बुसं राक्षसेन्द्रं दृष्ट्वाक्रुध्यन्त पाण्डवाः ८
त एनं भृशसंक्रुद्धाः सर्वतः प्रवरा रथैः
अभ्यद्रवन्त संक्रुद्धा भीमसेनादयो नृप ९
त एनं कोष्ठकीकृत्य रथवंशेन मारिष
सर्वतो व्यकिरन्बाणैरुल्काभिरिव कुञ्जरम् १०
स तेषामस्त्रवेगं तं प्रतिहत्यास्त्रमायया
तस्माद्रथव्रजान्मुक्तो वनदाहादिव द्विपः ११
स विस्फार्य धनुर्घोरमिन्द्राशनिसमस्वनम्
मारुतिं पञ्चविंशत्या भैमसेनिं च पञ्चभिः
युधिष्ठिरं त्रिभिर्विद्ध्वा सहदेवं च सप्तभिः १२

नकुलं च त्रिसप्तत्या द्रौपदेयांश्च मारिष
पञ्चभिः पञ्चभिर्विद्ध्वा घोरं नादं ननाद ह १३
तं भीमसेनो नवभिः सहदेवश्च पञ्चभिः
युधिष्ठिरः शतेनैव राक्षसं प्रत्यविध्यत
नकुलश्च चतुःषष्ट्या द्रौपदेयास्त्रिभिस्त्रिभिः १४
हैडिम्बो राक्षसं विद्ध्वा युद्धे पञ्चाशता शरैः
पुनर्विव्याध सप्तत्या ननाद च महाबलः १५
सोऽतिविद्धो महेष्वासः सर्वतस्तैर्महारथैः
प्रतिविव्याध तान्सर्वान्पञ्चभिः पञ्चभिः शरैः १६
तं क्रुद्धं राक्षसं युद्धे प्रतिक्रुद्धस्तु राक्षसः
हैडिम्बो भरतश्रेष्ठ शरैर्विव्याध सप्तभिः १७
सोऽतिविद्धो बलवता राक्षसेन्द्रो महाबलः
व्यसृजत्सायकांस्तूर्णं स्वर्णपुङ्खाञ्शिलाशितान् १८
ते शरा नतपर्वाणो विविशू राक्षसं तदा
रुषिताः पन्नगा यद्वद्गिरिमुग्रा महाबलाः १९
ततस्ते पाण्डवा राजन्समन्तान्निशिताञ्शरान्
प्रेषयामासुरुद्विग्ना हैडिम्बश्च घटोत्कचः २०
स वध्यमानः समरे पाण्डवैर्जितकाशिभिः
दग्धाद्रिकूटशृङ्गाभं भिन्नाञ्जनचयोपमम् २१
समुत्क्षिप्य च बाहुभ्यामाविध्य च पुनः पुनः
निष्पिपेष क्षितौ क्षिप्रं पूर्णकुम्भमिवाश्मनि २२
बललाघवसंपन्नः संपन्नो विक्रमेण च
भैमसेनी रणे क्रुद्धः सर्वसैन्यान्यभीषयत् २३
स विस्फुटितसर्वाङ्गश्चूर्णितास्थिविभूषणः
घटोत्कचेन वीरेण हतः सालकटङ्कटः २४
ततः सुमनसः पार्था हते तस्मिन्निशाचरे
चुक्रुशुः सिंहनादांश्च वासांस्यादुधुवुश्च ह २५
तावकाश्च हतं दृष्ट्वा राक्षसेन्द्रं महाबलम्
अलम्बुसं भीमरूपं विशीर्णमिव पर्वतम्
हाहाकारमकुर्वन्त सैन्यानि भरतर्षभ २६

जनाश्च तद्ददृशिरे रक्षः कौतूहलान्विताः
यदृच्छया निपतितं भूमावङ्गारकं यथा २७
घटोत्कचस्तु तद्धत्वा रक्षो बलवतां वरम्
मुमोच बलवन्नादं बलं हत्वेव वासवः २८
स पूज्यमानः पितृभिः सबान्धवैर्घटोत्कचः कर्मणि दुष्करे कृते
रिपुं निहत्याभिननन्द वै तदा अलम्बुसं पक्वमलम्बुसं यथा २९
ततो निनादः सुमहान्समुत्थितः सशङ्खनानाविधबाणघोषवान्
निशम्य तं प्रत्यनदंस्तु कौरवास्ततो ध्वनिर्भुवनमथास्पृशद्भृशम् ३०
इति श्रीमहाभारते द्रोणपर्वणि चतुरशीतितमोऽध्यायः ८४

## पञ्चाशीतितमोऽध्यायः

धृतराष्ट्र उवाच
भारद्वाजं कथं युद्धे युयुधानोऽभ्यवारयत्
सञ्जयाचक्ष्व तत्त्वेन परं कौतूहलं हि मे १
सञ्जय उवाच
शृणु राजन्महाप्राज्ञ संग्रामं लोमहर्षणम्
द्रोणस्य पाण्डवैः सार्धं युयुधानपुरोगमैः २
वध्यमानं बलं दृष्ट्वा युयुधानेन मारिष
अभ्यद्रवत्स्वयं द्रोणः सात्यकिं सत्यविक्रमम् ३
तमापतन्तं सहसा भारद्वाजं महारथम्
सात्यकिः पञ्चविंशत्या क्षुद्रकाणां समार्पयत् ४
द्रोणोऽपि युधि विक्रान्तो युयुधानं समाहितः
अविध्यत्पञ्चभिस्तूर्णं हेमपुङ्खैः शिलाशितैः ५
ते वर्म भित्त्वा सुदृढं द्विषत्पिशितभोजनाः
अभ्यगुर्धरणीं राजञ्श्वसन्त इव पन्नगाः ६
दीर्घबाहुरभिक्रुद्धस्तोत्त्रार्दित इव द्विपः
द्रोणं पञ्चाशताविध्यन्नाराचैरग्निसंनिभैः ७
भारद्वाजो रणे विद्धो युयुधानेन सत्वरम्
सात्यकिं बहुभिर्बाणैर्यतमानमविध्यत ८
ततः क्रुद्धो महेष्वासो भूय एव महाबलः

सात्वतं पीडयामास शतेन नतपर्वणा ९
स वध्यमानः समरे भारद्वाजेन सात्यकिः
नाभ्यपद्यत कर्तव्यं किञ्चिदेव विशां पते १०
विषण्णवदनश्चापि युयुधानोऽभवन्नृप
भारद्वाजं रणे दृष्ट्वा विसृजन्तं शिताञ्शरान् ११
तं तु संप्रेक्ष्य ते पुत्राः सैनिकाश्च विशां पते
प्रहृष्टमनसो भूत्वा सिंहवद्व्यनदन्मुहुः १२
तं श्रुत्वा निनदं घोरं पीड्यमानं च माधवम्
युधिष्ठिरोऽब्रवीद्राजन्सर्वसैन्यानि भारत १३
एष वृष्णिवरो वीरः सात्यकिः सत्यकर्मकृत्
ग्रस्यते युधि वीरेण भानुमानिव राहुणा
अभिद्रवत गच्छध्वं सात्यकिर्यत्र युध्यते १४
धृष्टद्युम्नं च पाञ्चाल्यमिदमाह जनाधिपः
अभिद्रव द्रुतं द्रोणं किं नु तिष्ठसि पार्षत
न पश्यसि भयं घोरं द्रोणान्नः समुपस्थितम् १५
असौ द्रोणो महेष्वासो युयुधानेन संयुगे
क्रीडते सूत्रबद्धेन पक्षिणा बालको यथा १६
तत्रैव सर्वे गच्छन्तु भीमसेनमुखा रथाः
त्वयैव सहिता यत्ता युयुधानरथं प्रति १७
पृष्ठतोऽनुगमिष्यामि त्वामहं सहसैनिकः
सात्यकिं मोक्षयस्वाद्य यमदंष्ट्रान्तरं गतम् १८
एवमुक्त्वा ततो राजा सर्वसैन्येन पाण्डवः
अभ्यद्रवद्रणे द्रोणं युयुधानस्य कारणात् १९
तत्रारावो महानासीद्द्रोणमेकं युयुत्सताम्
पाण्डवानां च भद्रं ते सृञ्जयानां च सर्वशः २०
ते समेत्य नरव्याघ्रा भारद्वाजं महारथम्
अभ्यवर्षञ्शरैस्तीक्ष्णैः कङ्कबर्हिणवाजितः २१
स्मयन्नेव तु तान्वीरान्द्रोणः प्रत्यग्रहीत्स्वयम्
अतिथीनागतान्यद्वत्सलिलेनासनेन च २२
तर्पितास्ते शरैस्तस्य भारद्वाजस्य धन्विनः

आतिथेयगृहं प्राप्य नृपतेऽतिथयो यथा २३
भारद्वाजं च ते सर्वे न शेकुः प्रतिवीक्षितुम्
मध्यंदिनमनुप्राप्तं सहस्रांशुमिव प्रभो २४
तांस्तु सर्वान्महेष्वासान्द्रोणः शस्त्रभृतां वरः
अतापयच्छरव्रातैर्गभस्तिभिरिवांशुमान् २५
वध्यमाना रणे राजन्पाण्डवाः सृञ्जयास्तथा
त्रातारं नाध्यगच्छन्त पङ्कमग्ना इव द्विपाः २६
द्रोणस्य च व्यदृश्यन्त विसर्पन्तो महाशराः
गभस्तय इवार्कस्य प्रतपन्तः समन्ततः २७
तस्मिन्द्रोणेननिहताः पाञ्चालाः पञ्चविंशतिः
महारथसमाख्याता धृष्टद्युम्नस्य संमताः २८
पाण्डूनां सर्वसैन्येषु पाञ्चालानां तथैव च
द्रोणं स्म ददृशुः शूरं विनिघ्नन्तं वरान्वरान् २९
केकयानां शतं हत्वा विद्राव्य च समन्ततः
द्रोणस्तस्थौ महाराज व्यादितास्य इवान्तकः ३०
पाञ्चालान्सृञ्जयान्मत्स्यान्केकयान्पाण्डवानपि
द्रोणोऽजयन्महाबाहुः शतशोऽथ सहस्रशः ३१
तेषां समभवच्छब्दो वध्यतां द्रोणसायकैः
वनौकसामिवारण्ये दह्यतां धूमकेतुना ३२
तत्र देवाः सगन्धर्वाः पितरश्चाब्रुवन्नृप
एते द्रवन्ति पाञ्चालाः पाण्डवाश्च ससैनिकाः ३३
तं तथा समरे द्रोणं निघ्नन्तं सोमकान्रणे
न चाप्यभिययुः केचिदपरे नैव विव्यधुः ३४
वर्तमाने तथा रौद्रे तस्मिन्वीरवरक्षये
अशृणोत्सहसा पार्थः पाञ्चजन्यस्य निस्वनम् ३५
पूरितो वासुदेवेन शङ्खराट् स्वनते भृशम्
युध्यमानेषु वीरेषु सैन्धवस्याभिरक्षिषु
नदत्सु धार्तराष्ट्रेषु विजयस्य रथं प्रति ३६
गाण्डीवस्य च निर्घोषे विप्रनष्टे समन्ततः
कश्मलाभिहतो राजा चिन्तयामास पाण्डवः ३७

न नूनं स्वस्ति पार्थस्य यथा नदति शङ्खराट्
कौरवाश्च यथा हृष्टा विनदन्ति मुहुर्मुहुः ३८
एवं संचिन्तयित्वा तु व्याकुलेनान्तरात्मना
अजातशत्रुः कौन्तेयः सात्वतं प्रत्यभाषत ३९
वाष्पगद्गदया वाचा मुह्यमानो मुहुर्मुहुः
कृत्यस्यानन्तरापेक्षी शैनेयं शिनिपुंगवम् ४०
यः स धर्मः पुरा दृष्टः सद्भिः शैनेय शाश्वतः
सांपराये सुहृत्कृत्ये तस्य कालोऽयमागतः ४१
सर्वेष्वपि च योधेषु चिन्तयञ्शिनिपुंगव
त्वत्तः सुहृत्तमं कञ्चिन्नाभिजानामि सात्यके ४२
यो हि प्रीतमना नित्यं यश्च नित्यमनुव्रतः
स कार्ये सांपराये तु नियोज्य इति मे मतिः ४३
यथा च केशवो नित्यं पाण्डवानां परायणम्
तथा त्वमपि वार्ष्णेय कृष्णतुल्यपराक्रमः ४४
सोऽह भारं समाधास्ये त्वयि तं वोढुमर्हसि
अभिप्रायं च मे नित्यं न वृथा कर्तुमर्हसि ४५
स त्वं भ्रातुर्वयस्यस्य गुरोरपि च संयुगे
कुरु कृच्छ्रे सहायार्थमर्जुनस्य नरर्षभ ४६
त्वं हि सत्यव्रतः शूरो मित्राणामभयङ्करः
लोके विख्यायसे वीर कर्मभिः सत्यवागिति ४७
यो हि शैनेय मित्रार्थे युध्यमानस्त्यजेत्तनुम्
पृथिवीं वा द्विजातिभ्यो यो दद्यात्सममेव तत् ४८
श्रुताश्च बहवोऽस्माभी राजानो ये दिवं गताः
दत्त्वेमां पृथिवीं कृत्स्नां ब्राह्मणेभ्यो यथाविधि ४९
एवं त्वामपि धर्मात्मन्प्रयाचेऽह कृताञ्जलि
पृथिवीदानतुल्यं स्यादधिकं वा फलं विभो ५०
एक एव सदा कृष्णो मित्राणामभयङ्करः
रणे संत्यजति प्राणान्द्वितीयस्त्वं च सात्यके ५१
विक्रान्तस्य च वीरस्य युद्धे प्रार्थयतो यशः
शूर एव सहायः स्यान्नेतरः प्राकृतो जनः ५२

ईदृशे तु परामर्दे वर्तमानस्य माधव
त्वदन्यो हि रणे गोप्ता विजयस्य न विद्यते ५३
श्लाघन्नेव हि कर्माणि शतशस्तव पाण्डवः
मम संजनयन्हर्षं पुनः पुनरकीर्तयत् ५४
लघ्वस्त्रश्चित्रयोधी च तथा लघुपराक्रमः
प्राज्ञः सर्वास्त्रविच्छूरो मुह्यते न च संयुगे ५५
महास्कन्धो महोरस्को महाबाहुर्महाधनुः
महाबलो महावीर्यः स महात्मा महारथः ५६
शिष्यो मम सखा चैव प्रियोऽस्याहं प्रियश्च मे
युयुधानः सहायो मे प्रमथिष्यति कौरवान् ५७
अस्मदर्थं च राजेन्द्र संनह्येद्यदि केशवः
रामो वाप्यनिरुद्धो वा प्रद्युम्नो वा महारथः ५८
गदो वा सारणो वापि साम्बो वा सह वृष्णिभिः
सहायार्थं महाराज संग्रामोत्तममूर्धनि ५९
तथाप्यहं नरव्याघ्रं शैनेयं सत्यविक्रमम्
साहाय्ये विनियोक्ष्यामि नास्ति मेऽन्यो हि तत्समः ६०
इति द्वैतवने तात मामुवाच धनंजयः
परोक्षं त्वद्गुणांस्तथ्यान्कथयन्नार्यसंसदि ६१
तस्य त्वमेवं संकल्पं न वृथा कर्तुमर्हसि
धनञ्जयस्य वार्ष्णेय मम भीमस्य चोभयोः ६२
यच्चापि तीर्थानि चरन्नगच्छं द्वारकां प्रति
तत्राहमपि ते भक्तिमर्जुनं प्रति दृष्टवान् ६३
न तत्सौहृदमन्येषु मया शैनेय लक्षितम्
यथा त्वमस्मान्भजसे वर्तमानानुपप्लवे ६४
सोऽभिजात्या च भक्त्या च सख्यस्याचार्यकस्य च
सौहृदस्य च वीर्यस्य कुलीनत्वस्य माधव ६५
सत्यस्य च महाबाहो अनुकम्पार्थमेव च
अनुरूपं महेष्वास कर्म त्वं कर्तुमर्हसि ६६
सुयोधनो हि सहसा गतो द्रोणेन दंशितः
पूर्वमेव तु यातास्ते कौरवाणां महारथाः ६७

सुमहान्निनदश्चैव श्रूयते विजयं प्रति
स शैनेय जवेनात्र गन्तुमर्हसि माधव ६८
भीमसेनो वयं चैव संयत्ताः सहसैनिकाः
द्रोणमावारयिष्यामो यदि त्वां प्रति यास्यति ६९
पश्य शैनेय सैन्यानि द्रवमाणानि संयुगे
महान्तं च रणे शब्दं दीर्यमाणां च भारतीम् ७०
महामारुतवेगेन समुद्रमिव पर्वसु
धार्तराष्ट्रबलं तात विक्षिप्तं सव्यसाचिना ७१
रथैर्विपरिधावद्भिर्मनुष्यैश्च हयैश्च ह
सैन्यं राजःसमुद्धूतमेतत्संपरिवर्तते ७२
संवृतः सिन्धुसौवीरैर्नखरप्रासयोधिभिः
अत्यन्तापचितैः शूरैः फल्गुनः परवीरहा ७३
नैतद्बलमसंवार्य शक्यो हन्तुं जयद्रथः
एते हि सैन्धवस्यार्थे सर्वे संत्यक्तजीविताः ७४
शरशक्तिध्वजवनं हयनागसमाकुलम्
पश्यैतद्धार्तराष्ट्राणामनीकं सुदुरासदम् ७५
शृणु दुन्दुभिनिर्घोषं शङ्खशब्दांश्च पुष्कलान्
सिंहनादरवांश्चैव रथनेमिस्वनांस्तथा ७६
नागानां शृणु शब्दं च पत्तीनां च सहस्रशः
सादिनां द्रवतां चैव शृणु कम्पयतां महीम् ७७
पुरस्तात्सैन्धवानीकं द्रोणानीकस्य पृष्ठतः
बहुत्वाद्धि नरव्याघ्र देवेन्द्रमपि पीडयेत् ७८
अपर्यन्ते बले मग्नो जह्यादपि च जीवितम्
तस्मिंश्च निहते युद्धे कथं जीवेत मादृशः
सर्वथाहमनुप्राप्तः सुकृच्छ्रं बत जीवितम् ७९
श्यामो युवा गुडाकेशो दर्शनीयश्च पाण्डवः
लघ्वस्त्रश्चित्रयोधी च प्रविष्टस्तात भारतीम् ८०
सूर्योदये महाबाहुर्दिवसश्चातिवर्तते
तन्न जानामि वार्ष्णेय यदि जीवति वा न वा
कुरूणां चापि तत्सैन्यं सागरप्रतिमं महत् ८१

एक एव च बीभत्सुः प्रविष्टस्तात भारतीम्
अविषह्यां महाबाहुः सुरैरपि महामृधे ८२
न च मे वर्तते बुद्धिरद्य युद्धे कथञ्चन
द्रोणोऽपि रभसो युद्धे मम पीडयते बलम्
प्रत्यक्षं ते महाबाहो यथासौ चरति द्विजः ८३
युगपच्च समेतानां कार्याणां त्वं विचक्षणः
महार्थं लघुसंयुक्तं कर्तुमर्हसि माधव ८४
तस्य मे सर्वकार्येषु कार्यमेतन्मतं सदा
अर्जुनस्य परित्राणं कर्तव्यमिति संयुगे ८५
नाहं शोचामि दाशार्हं गोप्तारं जगतः प्रभुम्
स हि शक्तो रणे तात त्रीँल्लोकानपि संगतान् ८६
विजेतुं पुरुषव्याघ्र सत्यमेतद्ब्रवीमि ते
किं पुनर्धार्तराष्ट्रस्य बलमेतत्सुदुर्बलम् ८७
अर्जुनस्त्वेव वार्ष्णेय पीडितो बहुभिर्युधि
प्रजह्यात्समरे प्राणांस्तस्माद्विन्दामि कश्मलम् ८८
तस्य त्वं पदवीं गच्छ गच्छेयुस्त्वादृशा यथा
तादृशस्येदृशे काले मादृशेनाभिचोदितः ८९
रणे वृष्णिप्रवीराणां द्वावेवातिरथौ स्मृतौ
प्रद्युम्नश्च महाबाहुस्त्वं च सात्वत विश्रुतः ९०
अस्त्रे नारायणसमः संकर्षणसमो बले
वीरतायां नरव्याघ्र धनञ्जयसमो ह्यसि ९१
भीष्मद्रोणावतिक्रम्य सर्वयुद्धविशारदम्
त्वामद्य पुरुषव्याघ्रं लोके सन्तः प्रचक्षते ९२
नासाध्यं विद्यते लोके सात्यकेरिति माधव
तत्त्वां यदभिवक्ष्यामि तत्कुरुष्व महाबल ९३
संभावना हि लोकस्य तव पार्थस्य चोभयोः
नान्यथा तां महाबाहो संप्रकर्तुमिहार्हसि ९४
परित्यज्य प्रियान्प्राणान्रणे विचर वीरवत्
न हि शैनेय दाशार्हा रणे रक्षन्ति जीवितम् ९५
अयुद्धमनवस्थानं संग्रामे च पलायनम्

भीरूणामसतां मार्गो नैष दाशार्हसेवितः ९६
तवार्जुनो गुरुस्तात धर्मात्मा शिनिपुंगव
वासुदेवो गुरुश्चापि तव पार्थस्य धीमतः ९७
कारणद्वयमेतद्धि जानानस्त्वहमब्रुवम्
मावमंस्था वचो मह्यं गुरुस्तव गुरोर्ह्यहम् ९८
वासुदेवमतं चैतन्मम चैवार्जुनस्य च
सत्यमेतन्मयोक्तं ते याहि यत्र धनञ्जयः ९९
एतद्वचनमाज्ञाय मम सत्यपराक्रम
प्रविशैतद्बलं तात धार्तराष्ट्रस्य दुर्मतेः १००
प्रविश्य च यथान्यायं संगम्य च महारथैः
यथार्हमात्मनः कर्म रणे सात्वत दर्शय १०१
इति श्रीमहाभारते द्रोणपर्वणि पञ्चाशीतितमोऽध्यायः ८५

## षडशीतितमोऽध्यायः

सञ्जय उवाच
प्रीतियुक्तं च हृद्यं च मधुराक्षरमेव च
कालयुक्तं च चित्रं च स्वतया चाभिभाषितम् १
धर्मराजस्य तद्वाक्यं निशम्य शिनिपुङ्गवः
सात्यकिर्भरतश्रेष्ठ प्रत्युवाच युधिष्ठिरम् २
श्रुतं ते गदतो वाक्यं सर्वमेतन्मयाच्युत
न्याययुक्तं च चित्रं च फल्गुनार्थे यशस्करम् ३
एवंविधे तथा काले मादृशं प्रेक्ष्य संमतम्
वक्तुमर्हसि राजेन्द्र यथा पार्थं तथैव माम् ४
न मे धनंजयस्यार्थे प्राणा रक्ष्याः कथंचन
त्वत्प्रयुक्तः पुनरहं किं न कुर्यां महाहवे ५
लोकत्रयं योधयेयं सदेवासुरमानुषम्
त्वत्प्रयुक्तो नरेन्द्रेह किमुतैतत्सुदुर्बलम् ६
सुयोधनबलं त्वद्य योधयिष्ये समन्ततः
विजेष्ये च रणे राजन्सत्यमेतद्ब्रवीमि ते ७
कुशल्यहं कुशलिनं समासाद्य धनंजयम्

हते जयद्रथे राजन्पुनरेष्यामि तेऽन्तिकम् ८
अवश्यं तु मया सर्वं विज्ञाप्यस्त्वं नराधिप
वासुदेवस्य यद्वाक्यं फल्गुनस्य च धीमतः ९
दृढं त्वभिपरीतोऽहमर्जुनेन पुनः पुनः
मध्ये सर्वस्य सैन्यस्य वासुदेवस्य शृणवतः १०
अद्य माधव राजानमप्रमत्तोऽनुपालय
आर्यां युद्धे मतिं कृत्वा यावद्धन्मि जयद्रथम् ११
त्वयि वाहं महाबाहो प्रद्युम्ने वा महारथे
नृपं निक्षिप्य गच्छेयं निरपेक्षो जयद्रथम् १२
जानीषे हि रणे द्रोणं रभसं श्रेष्ठसंमतम्
प्रतिज्ञा चापि ते नित्यं श्रुता द्रोणस्य माधव १३
ग्रहणं धर्मराजस्य भारद्वाजोऽनुगृध्यति
शक्तश्चापि रणे द्रोणो निगृहीतुं युधिष्ठिरम् १४
एवं त्वयि समाधाय धर्मराजं नरोत्तमम्
अहमद्य गमिष्यामि सैन्धवस्य वधाय हि १५
जयद्रथमहं हत्वा ध्रुवमेष्यामि माधव
धर्मराजं यथा द्रोणो निगृह्णीयाद्रणे बलात् १६
निगृहीते नरश्रेष्ठे भारद्वाजेन माधव
सैन्धवस्य वधो न स्यान्ममाप्रीतिस्तथा भवेत् १७
एवं गते नरश्रेष्ठ पाण्डवे सत्यवादिनि
अस्माकं गमनं व्यक्तं वनं प्रति भवेत्पुनः १८
सोऽय मम जयो व्यक्तं व्यर्थ एव भविष्यति
यदि द्रोणो रणे क्रुद्धो निगृह्णीयाद्युधिष्ठिरम् १९
स त्वमद्य महाबाहो प्रियार्थं मम माधव
जयार्थं च यशोऽथ च रक्ष राजानमाहवे २०
स भवान्मयि निक्षेपो निक्षिप्तः सव्यसाचिना
भारद्वाजाद्भयं नित्यं पश्यमानेन ते प्रभो २१
तस्यापि च महाबाहो नित्यं पश्यति संयुगे
नान्यं हि प्रतियोद्धारं रौक्मिणेयादृते प्रभो
मां वापि मन्यते युद्धे भारद्वाजस्य धीमतः २२

सोऽह संभावनां चैतामाचार्यवचनं च तत्
पृष्ठतो नोत्सहे कर्तुं त्वां वा त्यक्तुं महीपते २३
आचार्यो लघुहस्तत्वादभेद्यकवचावृतः
उपलभ्य रणे क्रीडेद्यथा शकुनिना शिशुः २४
यदि कार्ष्णिर्धनुष्पाणिरिह स्यान्मकरध्वजः
तस्मै त्वां विसृजेयं वै स त्वां रक्षेद्यथार्जुनः २५
कुरु त्वमात्मनो गुप्तिं कस्ते गोप्ता गते मयि
यः प्रतीयाद्रणे द्रोणं यावद्गच्छामि पाण्डवम् २६
मा च ते भयमद्यास्तु राजन्नर्जुनसंभवम्
न स जातु महाबाहुर्भारमुद्यम्य सीदति २७
ये च सौवीरका योधास्तथा सैन्धवपौरवाः
उदीच्या दाक्षिणात्याश्च ये चान्येऽपि महारथाः २८
ये च कर्णमुखा राजन्रथोदाराः प्रकीर्तिताः
एतेऽजुनस्य क्रुद्धस्य कलां नार्हन्ति षोडशीम् २९
उद्युक्ता पृथिवी सर्वा ससुरासुरमानुषा
सराक्षसगणा राजन्सकिंनरमहोरगा ३०
जङ्गमाः स्थावरैः सार्धं नालं पार्थस्य संयुगे
एवं ज्ञात्वा महाराज व्येतु ते भीर्धनंजये ३१
यत्र वीरौ महेष्वासौ कृष्णौ सत्यपराक्रमौ
न तत्र कर्मणो व्यापत्कथंचिदपि विद्यते ३२
दैवं कृतास्त्रतां योगममर्षमपि चाहवे
कृतज्ञतां दयां चैव भ्रातुस्त्वमनुचिन्तय ३३
मयि चाप्यपयाते वै गच्छमानेऽजुनं प्रति
द्रोणे चित्रास्त्रतां संख्ये राजंस्त्वमनुचिन्तय ३४
आचार्यो हि भृशं राजन्निग्रहे तव गृध्यति
प्रतिज्ञामात्मनो रक्षन्सत्यां कर्तुं च भारत ३५
कुरुष्वाद्यात्मनो गुप्तिं कस्ते गोप्ता गते मयि
यस्याहं प्रत्ययात्पार्थ गच्छेयं फल्गुनं प्रति ३६
न ह्यहं त्वां महाराज अनिक्षिप्य महाहवे
क्वचिद्यास्यामि कौरव्य सत्यमेतद्ब्रवीमि ते ३७

एतद्विचार्य बहुशो बुद्ध्या बुद्धिमतां वर
दृष्ट्वा श्रेयः परं बुद्ध्या ततो राजन्प्रशाधि माम् ३८
युधिष्ठिर उवाच
एवमेतन्महाबाहो यथा वदसि माधव
न तु मे शुध्यते भावः श्वेताश्वं प्रति मारिष ३९
करिष्ये परमं यत्नमात्मनो रक्षणं प्रति
गच्छ त्वं समनुज्ञातो यत्र यातो धनञ्जयः ४०
आत्मसंरक्षणं संख्ये गमनं चार्जुनं प्रति
विचार्यैतद्द्वयं बुद्ध्या गमनं तत्र रोचये ४१
स त्वमातिष्ठ यानाय यत्र यातो धनञ्जयः
ममापि रक्षणं भीमः करिष्यति महाबलः ४२
पार्षतश्च ससोदर्यः पार्थिवाश्च महाबलाः
द्रौपदेयाश्च मां तात रक्षिष्यन्ति न संशयः ४३
केकया भ्रातरः पञ्च राक्षसश्च घटोत्कचः
विराटो द्रुपदश्चैव शिखण्डी च महारथः ४४
धृष्टकेतुश्च बलवान्कुन्तिभोजश्च मारिष
नकुलः सहदेवश्च पाञ्चालाः सृञ्जयास्तथा
एते समाहितास्तात रक्षिष्यन्ति न संशयः ४५
न द्रोणः सह सैन्येन कृतवर्मा च संयुगे
समासादयितुं शक्तो न च मां धर्षयिष्यति ४६
धृष्टद्युम्नश्च समरे द्रोणं क्रुद्धं परंतपः
वारयिष्यति विक्रम्य वेलेव मकरालयम् ४७
यत्र स्थास्यति संग्रामे पार्षतः परवीरहा
न द्रोणसैन्यं बलवत्क्रामेत्तत्र कथञ्चन ४८
एष द्रोणविनाशाय समुत्पन्नो हुताशनात्
कवची स शरी खड्गी धन्वी च वरभूषणः ४९
विश्रब्धो गच्छ शैनेय मा कार्षीर्मयि संभ्रमम्
धृष्टद्युम्नो रणे क्रुद्धं द्रोणमावारयिष्यति ५०
इति श्रीमहाभारते द्रोणपर्वणि षडशीतितमोऽध्यायः ८६

## सप्ताशीतितमोऽध्यायः

सञ्जय उवाच
धर्मराजस्य तद्वाक्यं निशम्य शिनिपुङ्गवः
पार्थाच्च भयमाशङ्कन्परित्यागान्महीपतेः १
अपवादं ह्यात्मनश्च लोकाद्रक्षन्विशेषतः
न मां भीत इति ब्रूयुरायान्तं फल्गुनं प्रति २
निश्चित्य बहुधैवं स सात्यकिर्युद्धदुर्मदः
धर्मराजमिदं वाक्यमब्रवीत्पुरुषर्षभ ३
कृतां चेन्मन्यसे रक्षां स्वस्ति तेऽस्तु विशां पते
अनुयास्यामि बीभत्सुं करिष्ये वचनं तव ४
न हि मे पाण्डवात्कश्चित्त्रिषु लोकेषु विद्यते
यो वै प्रियतरो राजन्सत्यमेतद्ब्रवीमि ते ५
तस्याहं पदवीं यास्ये संदेशात्तव मानद
त्वत्कृते न च मे किञ्चिदकर्तव्यं कथञ्चन ६
यथा हि मे गुरोर्वाक्यं विशिष्टं द्विपदां वर
तथा तवापि वचनं विशिष्टतरमेव मे ७
प्रिये हि तव वर्तेते भ्रातरौ कृष्णपाण्डवौ
तयोः प्रिये स्थितं चैव विद्धि मां राजपुंगव ८
तवाज्ञां शिरसा गृह्य पाण्डवार्थमहं प्रभो
भित्त्वेदं दुर्भिदं सैन्यं प्रयास्ये नरसत्तम ९
द्रोणानीकं विशाम्येष क्रुद्धो झष इवार्णवम्
तत्र यास्यामि यत्रासौ राजन्राजा जयद्रथः १०
यत्र सेनां समाश्रित्य भीतस्तिष्ठति पाण्डवात्
गुप्तो रथवरश्रेष्ठैर्द्रौणिकर्णकृपादिभिः ११
इतस्त्रियोजनं मन्ये तमध्वानं विशां पते
यत्र तिष्ठति पार्थोऽसौ जयद्रथवधोद्यतः १२
त्रियोजनगतस्यापि तस्य यास्याम्यहं पदम्
आसैन्धववधाद्राजन्सुदृढेनान्तरात्मना १३
अनादिष्टस्तु गुरुणा को नु युध्येत मानवः
आदिष्टस्तु त्वया राजन्को न युध्येत मादृशः

अभिजानामि तं देशं यत्र यास्याम्यहं प्रभो १४
हुडशक्तिगदाप्रासखड्गचर्मर्ष्टितोमरम्
इष्वस्त्रवरसंबाधं क्षोभयिष्ये बलार्णवम् १५
यदेतत्कुञ्जरानीकं साहस्रमनुपश्यसि
कुलमञ्जनकं नाम यत्रैते वीर्यशालिनः १६
आस्थिता बहुभिर्म्लेच्छैर्युद्धशौण्डैः प्रहारिभिः
नागा मेघनिभा राजन्क्षरन्त इव तोयदाः १७
नैते जातु निवर्तेरन्प्रेषिता हस्तिसादिभिः
अन्यत्र हि वधादेषां नास्ति राजन्पराजयः १८
अथ यान्रथिनो राजन्समन्तादनुपश्यसि
एते रुक्मरथा नाम राजपुत्रा महारथाः १९
रथेष्वस्त्रेषु निपुणा नागेषु च विशां पते
धनुर्वेदे गताः पारं मुष्टियुद्धे च कोविदाः २०
गदायुद्धविशेषज्ञा नियुद्धकुशलास्तथा
खड्गप्रहरणे युक्ताः संपाते चासिचर्मणोः २१
शूराश्च कृतविद्याश्च स्पर्धन्ते च परस्परम्
नित्यं च समरे राजन्विजिगीषन्ति मानवान् २२
कर्णेन विजिता राजन्दुःशासनमनुव्रताः
एतांस्तु वासुदेवोऽपि रथोदारान्प्रशंसति २३
सततं प्रियकामाश्च कर्णस्यैते वशे स्थिताः
तस्यैव वचनाद्राजन्निवृत्ताः श्वेतवाहनात् २४
ते न क्षता न च श्रान्ता दृढावरणकार्मुकाः
मदर्थे विष्ठिता नूनं धार्तराष्ट्रस्य शासनात् २५
एतान्प्रमथ्य संग्रामे प्रियार्थं तव कौरव
प्रयास्यामि ततः पश्चात्पदवीं सव्यसाचिनः २६
यांस्त्वेतानपरान्राजन्नागान्सप्तशतानि च
प्रेक्षसे वर्मसंछन्नान्किरातैः समधिष्ठितान् २७
किरातराजो यान्प्रादाद्गृहीतः सव्यसाचिना
स्वलंकृतांस्तथा प्रेष्यानिच्छञ्जीवितमात्मनः २८
आसन्नेते पुरा राजंस्तव कर्मकरा दृढम्

त्वामेवाद्य युयुत्सन्ते पश्य कालस्य पर्ययम् २९
तेषामेते महामात्राः किराता युद्धदुर्मदाः
हस्तिशिक्षाविदश्चैव सर्वे चैवाग्नियोनयः ३०
एते विनिर्जिताः सर्वे संग्रामे सव्यसाचिना
मदर्थमद्य संयत्ता दुर्योधनवशानुगाः ३१
एतान्भित्त्वा शरै राजन्किरातान्युद्धदुर्मदान्
सैन्धवस्य वधे यत्तमनुयास्यामि पाण्डवम् ३२
ये त्वेते सुमहानागा अञ्जनस्य कुलोद्भवाः
कर्कशाश्च विनीताश्च प्रभिन्नकरटामुखाः ३३
जाम्बूनदमयैः सर्वैर्वर्मभिः सुविभूषिताः
लब्धलक्ष्या रणे राजन्नैरावतसमा युधि ३४
उत्तरात्पर्वतादेते तीक्ष्णैर्दस्युभिरास्थिताः
कर्कशैः प्रवरैर्योधैः कार्ष्णायसतनुच्छदैः ३५
सन्ति गोयोनयश्चात्र सन्ति वानरयोनयः
अनेकयोनयश्चान्ये तथा मानुषयोनयः ३६
अनीकमसतामेतद्धूमवर्णमुदीर्यते
म्लेच्छानां पापकर्तॄणां हिमवद्दुर्गवासिनाम् ३७
एतद्दुर्योधनो लब्ध्वा समग्रं नागमण्डलम्
कृपं च सौमदत्तिं च द्रोणं च रथिनां वरम् ३८
सिन्धुराजं तथा कर्णमवमन्यत पाण्डवान्
कृतार्थमथ चात्मानं मन्यते कालचोदितः ३९
ते च सर्वेऽनुसंप्राप्ता मम नाराचगोचरम्
न विमोक्ष्यन्ति कौन्तेय यद्यपि स्युर्मनोजवाः ४०
तेन संभाविता नित्यं परवीर्योपजीविना
विनाशमुपयास्यन्ति मच्छरौघनिपीडिताः ४१
ये त्वेते रथिनो राजन्दृश्यन्ते काञ्चनध्वजाः
एते दुर्वारणा नाम काम्बोजा यदि ते श्रुताः ४२
शूराश्च कृतविद्याश्च धनुर्वेदे च निष्ठिताः
संहताश्च भृशं ह्येते अन्योन्यस्य हितैषिणः ४३
अक्षौहिण्यश्च संरब्धा धार्तराष्ट्रस्य भारत

यत्ता मदर्थं तिष्ठन्ति कुरुवीराभिरक्षिताः ४४
अप्रमत्ता महाराज मामेव प्रत्युपस्थिताः
तांस्त्वहं प्रमथिष्यामि तृणानीव हुताशनः ४५
तस्मात्सर्वानुपासङ्गान्सर्वोपकरणानि च
रथे कुर्वन्तु मे राजन्यथावद्रथकल्पकाः ४६
अस्मिंस्तु खलु संग्रामे ग्राह्यं विविधमायुधम्
यथोपदिष्टमाचार्यैः कार्यः पञ्चगुणो रथः ४७
काम्बोजैर्हि समेष्यामि क्रुद्धैराशीविषोपमैः
नानाशस्त्रसमावापैर्विविधायुधयोधिभिः ४८
किरातैश्च समेष्यामि विषकल्पैः प्रहारिभिः
लालितैः सततं राज्ञा दुर्योधनहितैषिभिः ४९
शकैश्चापि समेष्यामि शक्रतुल्यपराक्रमैः
अग्निकल्पैर्दुराधर्षैः प्रदीप्तैरिव पावकैः ५०
तथान्यैर्विविधैर्योधैः कालकल्पैर्दुरासदैः
समेष्यामि रणे राजन्बहुभिर्युद्धदुर्मदैः ५१
तस्माद्वै वाजिनो मुख्या विश्रान्ताः शुभलक्षणाः
उपावृत्ताश्च पीताश्च पुनर्युज्यन्तु मे रथे ५२
तस्य सर्वानुपासङ्गान्सर्वोपकरणानि च
रथे प्रास्थापयद्राजा शस्त्राणि विविधानि च ५३
ततस्तान्सर्वतो मुक्त्वा सदश्वांश्चतुरो जनाः
रसवत्पाययामासुः पानं मदसमीरणम् ५४
पीतोपवृत्तान्स्नातांश्च जग्धान्नान्समलंकृतान्
विनीतशल्यांस्तुरगांश्चतुरो हेममालिनः ५५
तान्युक्तान्रुक्मवर्णाभान्विनीताञ्शीघ्रगामिनः
संहृष्टमनसोऽव्यग्रान्विधिवत्कल्पिते रथे ५६
महाध्वजेन सिंहेन हेमकेसरमालिना
संवृते केतनैर्हैमैर्मणिविद्रुमचित्रितैः
पाण्डुराभ्रप्रकाशाभिः पताकाभिरलंकृते ५७
हेमदण्डोच्छ्रितच्छत्रे बहुशस्त्रपरिच्छदे
योजयामास विधिवद्धेमभाण्डविभूषितान् ५८

दारुकस्यानुजो भ्राता सूतस्तस्य प्रियः सखा
न्यवेदयद्रथं युक्तं वासवस्येव मातलि ५९
ततः स्नातः शुचिर्भूत्वा कृतकौतुकमङ्गलः
स्नातकानां सहस्रस्य स्वर्णनिष्कानदापयत्
आशीर्वादैः परिष्वक्तः सात्यकिः श्रीमतां वरः ६०
ततः स मधुपर्कार्हः पीत्वा कैलावतं मधु
लोहिताक्षो बभौ तत्र मदविह्वललोचनः ६१
आलभ्य वीरकांस्यं च हर्षेण महतान्वितः
द्विगुणीकृततेजा हि प्रज्वलन्निव पावकः
उत्सङ्गे धनुरादाय सशरं रथिनां वरः ६२
कृतस्वस्त्ययनो विप्रैः कवची समलंकृतः
लाजैर्गन्धैस्तथा माल्यैः कन्याभिश्चाभिनन्दितः ६३
युधिष्ठिरस्य चरणावभिवाद्य कृताञ्जलि
तेन मूर्धन्युपाघ्रात आरुरोह महारथम् ६४
ततस्ते वाजिनो हृष्टाः सुपुष्टा वातरंहसः
अजय्या जैत्रमूहुस्तं विकुर्वन्तः स्म सैन्धवाः ६५
अथ हर्षपरीताङ्गः सात्यकिर्भीममब्रवीत्
त्वं भीम रक्ष राजानमेतत्कार्यतमं हि ते ६६
अहं भित्त्वा प्रवेक्ष्यामि कालपक्वमिदं बलम्
आयत्यां च तदात्वे च श्रेयो राज्ञोऽभिरक्षणम् ६७
जानीषे मम वीर्यं त्वं तव चाहमरिन्दम
तस्माद्भीम निवर्तस्व मम चेदिच्छसि प्रियम् ६८
तथोक्तः सात्यकिं प्राह व्रज त्वं कार्यसिद्धये
अहं राज्ञः करिष्यामि रक्षां पुरुषसत्तम ६९
एवमुक्तः प्रत्युवाच भीमसेनं स माधवः
गच्छ गच्छ द्रुतं पार्थ ध्रुवोऽद्य विजयो मम ७०
यन्मे स्निग्धोऽनुरक्तश्च त्वमद्य वशगः स्थितः
निमित्तानि च धन्यानि यथा भीम वदन्ति मे ७१
निहते सैन्धवे पापे पाण्डवेन महात्मना
परिष्वजिष्ये राजानं धर्मात्मानं न संशयः ७२

एतावदुक्त्वा भीमं तु विसृज्य च महामनाः
संप्रैक्षत्तावकं सैन्यं व्याघ्रो मृगगणानिव ७३
तं दृष्ट्वा प्रविविक्षन्तं सैन्यं तव जनाधिप
भूय एवाभवन्मूढं सुभृशं चाप्यकम्पत ७४
ततः प्रयातः सहसा सैन्यं तव स सात्यकिः
दिदृक्षुरर्जुनं राजन्धर्मराजस्य शासनात् ७५
इति श्रीमहाभारते द्रोणपर्वणि सप्ताशीतितमोऽध्यायः ८७

## अष्टाशीतितमोऽध्यायः

सञ्जय उवाच
प्रयाते तव सैन्यं तु युयुधाने युयुत्सया
धर्मराजो महाराज स्वेनानीकेन संवृतः
प्रायाद्द्रोणरथप्रेप्सुर्युयुधानस्य पृष्ठतः १
ततः पाञ्चालराजस्य पुत्रः समरदुर्मदः
प्राक्रोशत्पाण्डवानीके वसुदानश्च पार्थिवः २
आगच्छत प्रहरत द्रुतं विपरिधावत
यथा सुखेन गच्छेत सात्यकिर्युद्धदुर्मदः ३
महारथा हि बहवो यतिष्यन्त्यस्य निर्जये
इति ब्रुवन्तो वेगेन समापेतुर्बलं तव ४
वयं प्रतिजिगीषन्तस्तत्र तान्समभिद्रुताः
ततः शब्दो महानासीद्युयुधानरथं प्रति ५
प्रकम्प्यमाना महती तव पुत्रस्य वाहिनी
सात्वतेन महाराज शतधाभिव्यदीर्यत ६
तस्यां विदीर्यमाणायां शिनेः पौत्रो महारथः
सप्त वीरान्महेष्वासानग्रानीके व्यपोथयत् ७
ते भीता मृद्यमानाश्च प्रमृष्टा दीर्घबाहुना
आयोधनं जहुर्वीरा दृष्ट्वा तमतिमानुषम् ८
रथैर्विमथिताक्षैश्च भग्ननीडैश्च मारिष
चक्रैर्विमथितैश्छिन्नैर्ध्वजैश्च विनिपातितैः ९
अनुकर्षैः पताकाभिः शिरस्त्राणैः सकाञ्चनैः

बाहुभिश्चन्दनादिग्धैः साङ्गदैश्च विशां पते १०
हस्तिहस्तोपमैश्चापि भुजगाभोगसंनिभैः
ऊरुभिः पृथिवी छन्ना मनुजानां नरोत्तम ११
शशाङ्कसंनिकाशैश्च वदनैश्चारुकुण्डलैः
पतितैर्वृषभाक्षाणां बभौ भारत मेदिनी १२
गजैश्च बहुधा छिन्नैः शयानैः पर्वतोपमैः
रराजातिभृशं भूमिर्विकीर्णैरिव पर्वतैः १३
तपनीयमयैर्योक्त्रैर्मुक्ताजालविभूषितैः
उरश्छदैर्विचित्रैश्च व्यशोभन्त तुरङ्गमाः
गतसत्वा महीं प्राप्य प्रमृष्टा दीर्घबाहुना १४
नानाविधानि सैन्यानि तव हत्वा तु सात्वतः
प्रविष्टस्तावकं सैन्यं द्रावयित्वा चमूं भृशम् १५
ततस्तेनैव मार्गेण येन यातो धनंजयः
इयेष सात्यकिर्गन्तुं ततो द्रोणेन वारितः १६
भारद्वाजं समासाद्य युयुधानस्तु मारिष
नाभ्यवर्तत संक्रुद्धो वेलामिव जलाशयः १७
निवार्य तु रणे द्रोणो युयुधानं महारथम्
विव्याध निशितैर्बाणैः पञ्चभिर्मर्मभेदिभिः १८
सात्यकिस्तु रणे द्रोणं राजन्विव्याध सप्तभिः
हेमपुङ्खैः शिलाधौतैः कङ्कबर्हिणवाजितैः १९
तं षड्भिः सायकैर्द्रोणः साश्वयन्तारमार्दयत्
स तं न ममृषे द्रोणं युयुधानो महारथः २०
सिंहनादं ततः कृत्वा द्रोणं विव्याध सात्यकिः
दशभिः सायकैश्चान्यैः षड्भिरष्टाभिरेव च २१
युयुधानः पुनर्द्रोणं विव्याध दशभिः शरैः
एकेन सारथिं चास्य चतुर्भिश्चतुरो हयान्
ध्वजमेकेन बाणेन विव्याध युधि मारिष २२
तं द्रोणः साश्वयन्तारं सरथध्वजमाशुगैः
त्वरन्प्राच्छादयद्बाणैः शलभानामिव व्रजैः २३
तथैव युयुधानोऽपि द्रोणं बहुभिराशुगैः

प्राच्छादयदसंभ्रान्तस्ततो द्रोण उवाच ह २४
तवाचार्यो रणं हित्वा गतः कापुरुषो यथा
युध्यमानं हि मां हित्वा प्रदक्षिणमवर्तत २५
त्वं हि मे युध्यतो नाद्य जीवन्मोक्ष्यसि माधव
यदि मां त्वं रणे हित्वा न यास्याचार्यवद्द्रुतम् २६
सात्यकिरुवाच
धनंजयस्य पदवीं धर्मराजस्य शासनात्
गच्छामि स्वस्ति ते ब्रह्मन्न मे कालात्ययो भवेत् २७
सञ्जय उवाच
एतावदुक्त्वा शैनेय आचार्यं परिवर्जयन्
प्रयातः सहसा राजन्सारथिं चेदमब्रवीत् २८
द्रोणः करिष्यते यत्नं सर्वथा मम वारणे
यत्तो याहि रणे सूत शृणु चेदं वचः परम् २९
एतदालोक्यते सैन्यमावन्त्यानां महाप्रभम्
अस्यानन्तरतस्त्वेतद्दाक्षिणात्यं महाबलम् ३०
तदनन्तरमेतच्च बाह्लिकानां बलं महत्
बाह्लिकाभ्याशतो युक्तं कर्णस्यापि महद्बलम् ३१
अन्योन्येन हि सैन्यानि भिन्नान्येतानि सारथे
अन्योन्यं समुपाश्रित्य न त्यक्ष्यन्ति रणाजिरम् ३२
एतदन्तरमासाद्य चोदयाश्वान्प्रहृष्टवत्
मध्यमं जवमास्थाय वह मामत्र सारथे ३३
बाह्लिका यत्र दृश्यन्ते नानाप्रहरणोद्यताः
दाक्षिणात्याश्च बहवः सूतपुत्रपुरोगमाः ३४
हस्त्यश्वरथसंबाधं यच्चानीकं विलोक्यते
नानादेशसमुत्थैश्च पदातिभिरधिष्ठितम् ३५
एतावदुक्त्वा यन्तारं ब्राह्मणं परिवर्जयन्
स व्यतीयाय यत्रोग्रं कर्णस्य सुमहद्बलम् ३६
तं द्रोणोऽनुययौ क्रुद्धो विकिरन्विशिखान्बहून्
युयुधानं महाबाहुं गच्छन्तमनिवर्तिनम् ३७
कर्णस्य सैन्यं सुमहदभिहत्य शितैः शरैः

प्राविशद्भारतीं सेनामपर्यन्तां स सात्यकिः ३८
प्रविष्टे युयुधाने तु सैनिकेषु द्रुतेषु च
अमर्षी कृतवर्मा तु सात्यकिं पर्यवारयत् ३९
तमापतन्तं विशिखैः षड्भिराहत्य सात्यकिः
चतुर्भिश्चतुरोऽस्याश्वानाजघानाशु वीर्यवान् ४०
ततः पुनः षोडशभिर्नतपर्वभिराशुगैः
सात्यकिः कृतवर्माणं प्रत्यविध्यत्स्तनान्तरे ४१
स तुद्यमानो विशिखैर्बहुभिस्तिग्मतेजनैः
सात्वतेन महाराज कृतवर्मा न चक्षमे ४२
स वत्सदन्तं संधाय जिह्मगानलसंनिभम्
आकृष्य राजन्नाकर्णाद्विव्याधोरसि सात्यकिम् ४३
स तस्य देहावरणं भित्त्वा देहं च सायकः
सपत्रपुङ्खः पृथिवीं विवेश रुधिरोक्षितः ४४
अथास्य बहुभिर्बाणैरच्छिनत्परमास्त्रवित्
समार्गणगुणं राजन्कृतवर्मा शरासनम् ४५
विव्याध च रणे राजन्सात्यकिं सत्यविक्रमम्
दशभिर्विशिखैस्तीक्ष्णैरभिक्रुद्धः स्तनान्तरे ४६
ततः प्रशीर्णे धनुषि शक्त्या शक्तिमतां वरः
अभ्यहन्दक्षिणं बाहुं सात्यकिः कृतवर्मणः ४७
ततोऽन्यत्सुदृढं वीरो धनुरादाय सात्यकिः
व्यसृजद्विशिखांस्तूर्णं शतशोऽथ सहस्रशः ४८
सरथं कृतवर्माणं समन्तात्पर्यवाकिरत्
छादयित्वा रणेऽत्यर्थं हार्दिक्यं तु स सात्यकिः ४९
अथास्य भल्लेन शिरः सारथेः समकृन्तत
स पपात हतः सूतो हार्दिक्यस्य महारथात्
ततस्ते यन्तरि हते प्राद्रवंस्तुरगा भृशम् ५०
अथ भोजस्त्वसम्भ्रान्तो निगृह्य तुरगान्स्वयम्
तस्थौ शरधनुष्पाणिस्तत्सैन्यान्यभ्यपूजयन् ५१
स मूहूर्तमिवाश्वस्य सदश्वान्समचोदयत्
व्यपेतभीरमित्राणामावहत्सुमहद्भयम्

सात्यकिश्चाभ्यगात्तस्मात्स तु भीममुपाद्रवत् ५२
युयुधानोऽपि राजेन्द्र द्रोणानीकाद्विनिः सृतः
प्रययौ त्वरितस्तूर्णं काम्बोजानां महाचमूम् ५३
स तत्र बहुभिः शूरैः संनिरुद्धो महारथैः
न चचाल तदा राजन्सात्यकिः सत्यविक्रमः ५४
संधाय च चमूं द्रोणो भोजे भारं निवेश्य च
अन्वधावद्रणे यत्तो युयुधानं युयुत्सया ५५
तथा तमनुधावन्तं युयुधानस्य पृष्ठतः
न्यवारयन्त संक्रुद्धाः पाण्डुसैन्ये बृहत्तमाः ५६
समासाद्य तु हार्दिक्यं रथानां प्रवरं रथम्
पाञ्चाला विगतोत्साहा भीमसेनपुरोगमाः
विक्रम्य वारिता राजन्वीरेण कृतवर्मणा ५७
यतमानांस्तु तान्सर्वानीषद्विगतचेतसः
अभितस्ताञ्शरौघेण क्लान्तवाहानवारयत् ५८
निगृहीतास्तु भोजेन भोजानीकेप्सवो रणे
अतिष्ठन्नार्यवद्वीराः प्रार्थयन्तो महद्यशः ५९
इति श्रीमहाभारते द्रोणपर्वणि अष्टाशीतितमोऽध्यायः ८८

## एकोन नवतितमोऽध्यायः

धृतराष्ट्र उवाच
एवं बहुविधं सैन्यमेवं प्रविचितं वरम्
व्यूढमेवं यथान्यायमेवं बहु च सञ्जय १
नित्यं पूजितमस्माभिरभिकामं च नः सदा
प्रौढमत्यद्भुताकारं पुरस्ताद्दृढविक्रमम् २
नातिवृद्धमबालं च न कृशं नातिपीवरम्
लघुवृत्तायतप्राणं सारगात्रमनामयम् ३
आत्तसंनाहसंपन्नं बहुशस्त्रपरिच्छदम्
शस्त्रग्रहणविद्यासु बह्वीषु परिनिष्ठितम् ४
आरोहे पर्यवस्कन्दे सरणे सान्तरप्लुते
सम्यक्प्रहरणे याने व्यपयाने च कोविदम् ५

नागेष्वश्वेषु बहुशो रथेषु च परीक्षितम्
परीक्ष्य च यथान्यायं वेतनेनोपपादितम् ६
न गोष्ठ्या नोपचारेण न संबन्धनिमित्ततः
नानाहूतो न ह्यभृतो मम सैन्ये बभूव ह ७
कुलीनार्यजनोपेतं तुष्टपुष्टमनुद्धतम्
कृतमानोपकारं च यशस्वि च मनस्वि च ८
सचिवैश्चापरैर्मुख्यैर्बहुभिर्मुख्यकर्मभिः
लोकपालोपमैस्तात पालितं नरसत्तमैः ९
बहुभिः पार्थिवैर्गुप्तमस्मत्प्रियचिकीर्षुभिः
अस्मानभिसृतैः कामात्सबलैः सपदानुगैः १०
महोदधिमिवापूर्णमापगाभिः समन्ततः
अपक्षैः पक्षिसंकाशै रथैरश्वैश्च संवृतम् ११
योधाक्षय्यजलं भीमं वाहनोर्मितरङ्गिणम्
क्षेपण्यसिगदाशक्तिशरप्रासझषाकुलम् १२
ध्वजभूषणसंबाधं रत्नपट्टेन संचितम्
वाहनैरपि धावद्भिर्वायुवेगविकम्पितम् १३
द्रोणगम्भीरपातालं कृतवर्ममहाह्रदम्
जलसंधमहाग्राहं कर्णचन्द्रोदयोद्धतम् १४
गते सैन्यार्णवं भित्त्वा तरसा पाण्डवर्षभे
सञ्जयैकरथेनैव युयुधाने च मामकम् १५
तत्र शेषं न पश्यामि प्रविष्टे सव्यसाचिनि
सात्वते च रथोदारे मम सैन्यस्य सञ्जय १६
तौ तत्र समतिक्रान्तौ दृष्ट्वाभीतौ तरस्विनौ
सिन्धुराजं तु संप्रेक्ष्य गाण्डीवस्येषुगोचरे १७
किं तदा कुरवः कृत्यं विदधुः कालचोदिताः
दारुणैकायने काले कथं वा प्रतिपेदिरे १८
ग्रस्तान्हि कौरवान्मन्ये मृत्युना तात संगतान्
विक्रमो हि रणे तेषां न तथा दृश्यतेऽद्य वै १९
अक्षतौ संयुगे तत्र प्रविष्टौ कृष्णपाण्डवौ
न च वारयिता कश्चित्तयोरस्तीह सञ्जय २०

भृताश्च बहवो योधाः परीक्ष्यैव महारथाः
वेतनेन यथायोग्यं प्रियवादेन चापरे २१
अकारणभृतस्तात मम सैन्ये न विद्यते
कर्मणा ह्यनुरूपेण लभ्यते भक्तवेतनम् २२
न च योधोऽभवत्कश्चिन्मम सैन्ये तु सञ्जय
अल्पदानभृतस्तात न कुप्यभृतको नरः २३
पूजिता हि यथाशक्त्या दानमानासनैर्मया
तथा पुत्रैश्च मे तात ज्ञातिभिश्च सबान्धवैः २४
ते च प्राप्यैव संग्रामे निर्जिताः सव्यसाचिना
शैनेयेन परामृष्टाः किमन्यद्भागधेयतः २५
रक्ष्यते यश्च संग्रामे ये च सञ्जय रक्षिणः
एकः साधारणः पन्था रक्ष्यस्य सह रक्षिभिः २६
अर्जुनं समरे दृष्ट्वा सैन्धवस्याग्रतः स्थितम्
पुत्रो मम भृशं मूढः किं कार्यं प्रत्यपद्यत २७
सात्यकिं च रणे दृष्ट्वा प्रविशन्तमभीतवत्
किं नु दुर्योधनः कृत्यं प्राप्तकालममन्यत २८
सर्वशस्त्रातिगौ सेनां प्रविष्टौ रथसत्तमौ
दृष्ट्वा कां वै धृतिं युद्धे प्रत्यपद्यन्त मामकाः २९
दृष्ट्वा कृष्णं तु दाशार्हमर्जुनार्थे व्यवस्थितम्
शिनीनामृषभं चैव मन्ये शोचन्ति पुत्रकाः ३०
दृष्ट्वा सेनां व्यतिक्रान्तां सात्वतेनार्जुनेन च
पलायमानांश्च कुरून्मन्ये शोचन्ति पुत्रकाः ३१
विद्रुतान्रथिनो दृष्ट्वा निरुत्साहान्द्विषज्जये
पलायने कृतोत्साहान्मन्ये शोचन्ति पुत्रकाः ३२
शून्यान्कृतान्रथोपस्थान्सात्वतेनार्जुनेन च
हतांश्च योधान्संदृश्य मन्ये शोचन्ति पुत्रकाः ३३
व्यश्वनागरथान्दृष्ट्वा तत्र वीरान्सहस्रशः
धावमानान्रणे व्यग्रान्मन्ये शोचन्ति पुत्रकाः ३४
विवीरांश्च कृतानश्वान्विरथांश्च कृतान्नरान्
तत्र सात्यकिपार्थाभ्यां मन्ये शोचन्ति पुत्रकाः ३५

पत्तिसंघान्रणे दृष्ट्वा धावमानांश्च सर्वशः
निराशा विजये सर्वे मन्ये शोचन्ति पुत्रकाः ३६
द्रोणस्य समतिक्रान्तावनीकमपराजितौ
क्षणेन दृष्ट्वा तौ वीरौ मन्ये शोचन्ति पुत्रकाः ३७
संमूढोऽस्मि भृशं तात श्रुत्वा कृष्णधनञ्जयौ
प्रविष्टौ मामकं सैन्यं सात्वतेन सहाच्युतौ ३८
तस्मिन्प्रविष्टे पृतनां शिनीनां प्रवरे रथे
भोजानीकं व्यतिक्रान्ते कथमासन्हि कौरवाः ३९
तथा द्रोणेन समरे निगृहीतेषु पाण्डुषु
कथं युद्धमभूत्तत्र तन्ममाचक्ष्व सञ्जय ४०
द्रोणो हि बलवाञ्शूरः कृतास्त्रो दृढविक्रमः
पाञ्चालास्तं महेष्वासं प्रत्ययुध्यन्कथं रणे ४१
बद्धवैरास्तथा द्रोणे धर्मराजजयैषिणः
भारद्वाजस्तथा तेषु कृतवैरो महारथः ४२
अर्जुनश्चापि यच्चक्रे सिन्धुराजवधं प्रति
तन्मे सर्वं समाचक्ष्व कुशलो ह्यसि सञ्जय ४३
इति श्रीमहाभारते द्रोणपर्वणि एकोननवतितमोऽध्यायः ८९

## नवतितमोऽध्यायः

सञ्जय उवाच
आत्मापराधात्संभूतं व्यसनं भरतर्षभ
प्राप्य प्राकृतवद्वीर न त्वं शोचितुमर्हसि १
तव निर्गुणतां ज्ञात्वा पक्षपातं सुतेषु च
द्वैधीभावं तथा धर्मे पाण्डवेषु च मत्सरम्
आर्तप्रलापांश्च बहून्मनुजाधिपसत्तम २
सर्वलोकस्य तत्त्वज्ञः सर्वलोकगुरुः प्रभुः
वासुदेवस्ततो युद्धं कुरूणामकरोन्महत् ३
आत्मापराधात्सुमहान्प्राप्तस्ते विपुलः क्षयः
न हि ते सुकृतं किञ्चिदादौ मध्ये च भारत
दृश्यते पृष्ठतश्चैव त्वन्मूलो हि पराजयः ४

तस्मादद्य स्थिरो भूत्वा ज्ञात्वा लोकस्य निर्णयम्
शृणु युद्धं यथा वृत्तं घोरं देवासुरोपमम् ५
प्रविष्टे तव सैन्यं तु शैनेये सत्यविक्रमे
भीमसेनमुखाः पार्थाः प्रतीयुर्वाहिनीं तव ६
आगच्छतस्तान्सहसा क्रुद्धरूपान्सहानुगान्
दधारैको रणे पाण्डून्कृतवर्मा महारथः ७
यथोद्वृत्तं धारयते वेला वै सलिलार्णवम्
पाण्डुसैन्यं तथा संख्ये हार्दिक्यः समवारयत् ८
तत्राद्भुतममन्यन्त हार्दिक्यस्य पराक्रमम्
यदेनं सहिताः पार्था नातिचक्रमुराहवे ९
ततो भीमस्त्रिभिर्विद्ध्वा कृतवर्माणमायसैः
शङ्खं दध्मौ महाबाहुर्हर्षयन्सर्वपाण्डवान् १०
सहदेवस्तु विंशत्या धर्मराजश्च पञ्चभिः
शतेन नकुलश्चापि हार्दिक्यं समविध्यत ११
द्रौपदेयास्त्रिसप्तत्या सप्तभिश्च घटोत्कचः
धृष्टद्युम्नस्त्रिभिश्चापि कृतवर्माणमार्दयत्
विराटो द्रुपदश्चैव याज्ञसेनिश्च पञ्चभिः १२
शिखण्डी चापि हार्दिक्यं विद्ध्वा पञ्चभिराशुगैः
पुनर्विव्याध विंशत्या सायकानां हसन्निव १३
कृतवर्मा ततो राजन्सर्वतस्तान्महारथान्
एकैकं पञ्चभिर्विद्ध्वा भीमं विव्याध सप्तभिः
धनुर्ध्वजं च संयत्तो रथाद्भूमावपातयत् १४
अथैनं छिन्नधन्वानं त्वरमाणो महारथः
आजघानोरसि क्रुद्धः सप्तत्या निशितैः शरैः १५
स गाढविद्धो बलवान्हार्दिक्यस्य शरोत्तमैः
चचाल रथमध्यस्थः क्षितिकम्पे यथाचलः १६
भीमसेनं तथा दृष्ट्वा धर्मराजपुरोगमाः
विसृजन्तः शरान्राजन्कृतवर्माणमार्दयन् १७
तं तथा कोष्ठकीकृत्य रथवंशेन मारिष
विव्यधुः सायकैर्हृष्टा रक्षार्थं मारुतेर्मृधे १८

प्रतिलभ्य ततः संज्ञां भीमसेनो महाबलः
शक्तिं जग्राह समरे हेमदण्डामयस्मयीम्
चिक्षेप च रथात्तूर्णं कृतवर्मरथं प्रति १९
सा भीमभुजनिर्मुक्ता निर्मुक्तोरगसंनिभा
कृतवर्माणमभितः प्रजज्वाल सुदारुणा २०
तामापतन्तीं सहसा युगान्ताग्निसमप्रभाम्
द्वाभ्यां शराभ्यां हार्दिक्यो निचकर्त द्विधा तदा २१
स छिन्ना पतिता भूमौ शक्तिः कनकभूषणा
द्योतयन्ती दिशो राजन्महोल्केव दिवश्च्युता
शक्तिं विनिहतां दृष्ट्वा भीमश्चुक्रोध वै भृशम् २२
ततोऽन्यद्धनुरादाय वेगवत्सुमहास्वनम्
भीमसेनो रणे क्रुद्धो हार्दिक्यं समवारयत् २३
अथैनं पञ्चभिर्बाणैराजघान स्तनान्तरे
भीमो भीमबलो राजंस्तव दुर्मन्त्रितेन ह २४
भोजस्तु क्षतसर्वाङ्गो भीमसेनेन मारिष
रक्ताशोक इवोत्फुल्लो व्यभ्राजत रणाजिरे २५
ततः क्रुद्धस्त्रिभिर्बाणैर्भीमसेनं हसन्निव
अभिहत्य दृढं युद्धे तान्सर्वान्प्रत्यविध्यत २६
त्रिभिस्त्रिभिर्महेष्वासो यतमानान्महारथान्
तेऽपि तं प्रत्यविध्यन्त सप्तभिः सप्तभिः शरैः २७
शिखण्डिनस्ततः क्रुद्धः क्षुरप्रेण महारथः
धनुश्चिच्छेद समरे प्रहसन्निव भारत २८
शिखण्डी तु ततः क्रुद्धश्छिन्ने धनुषि सत्वरम्
असिं जग्राह समरे शतचन्द्रं च भास्वरम् २९
भ्रामयित्वा महाचर्म चामीकरविभूषितम्
तमसिं प्रेषयामास कृतवर्मरथं प्रति ३०
स तस्य सशरं चापं छित्त्वा संख्ये महानसिः
अभ्यगाद्धरणीं राजंश्च्युतं ज्योतिरिवाम्बरात् ३१
एतस्मिन्नेव काले तु त्वरमाणा महारथाः
विव्यधुः सायकैर्गाढं कृतवर्माणमाहवे ३२

अथान्यद्धनुरादाय त्यक्त्वा तच्च महद्धनुः
विशीर्णं भरतश्रेष्ठ हार्दिक्यः परवीरहा ३३
विव्याध पाण्डवान्युद्धे त्रिभिस्त्रिभिरजिह्मगैः
शिखण्डिनं च विव्याध त्रिभिः पञ्चभिरेव च ३४
धनुरन्यत्समादाय शिखण्डी तु महायशाः
अवारयत्कूर्मनखैराशुगैर्हृदिकात्मजम् ३५
ततः क्रुद्धो रणे राजन्हृदिकस्यात्मसंभवः
अभिदुद्राव वेगेन याज्ञसेनिं महारथम् ३६
भीष्मस्य समरे राजन्मृत्योर्हेतुं महात्मनः
विदर्शयन्बलं शूरः शार्दूल इव कुञ्जरम् ३७
तौ दिशागजसंकाशौ ज्वलिताविव पावकौ
समासेदतुरन्योन्यं शरसंघैररिंदमौ ३८
विधुन्वानौ धनुःश्रेष्ठे संदधानौ च सायकान्
विसृजन्तौ च शतशो गभस्तीनिव भास्करौ ३९
तापयन्तौ शरैस्तीक्ष्णैरन्योन्यं तौ महारथौ
युगान्तप्रतिमौ वीरौ रेजतुर्भास्कराविव ४०
कृतवर्मा तु रभसं याज्ञसेनिं महारथम्
विद्ध्वेषूणां त्रिसप्तत्या पुनर्विव्याध सप्तभिः ४१
स गाढविद्धो व्यथितो रथोपस्थ उपाविशत्
विसृजन्सशरं चापं मूर्च्छयाभिपरिप्लुतः ४२
तं विषण्णं रणे दृष्ट्वा तावका भरतर्षभ
हार्दिक्यं पूजयामासुर्वासांस्यादुधुवुश्च ह ४३
शिखण्डिनं तथा ज्ञात्वा हार्दिक्यशरपीडितम्
अपोवाह रणाद्यन्ता त्वरमाणो महारथम् ४४
सादितं तु रथोपस्थे दृष्ट्वा पार्थाः शिखण्डिनम्
परिवव्रू रथैस्तूर्णं कृतवर्माणमाहवे ४५
तत्राद्भुतं परं चक्रे कृतवर्मा महारथः
यदेकः समरे पार्थान्वारयामास सानुगान् ४६
पार्थाञ्जित्वाजयच्चेदीन्पाञ्चालान्सृञ्जयानपि
केकयांश्च महावीर्यान्कृतवर्मा महारथः ४७

ते वध्यमानाः समरे हार्दिक्येन स्म पाण्डवाः
इतश्चेतश्च धावन्तो नैव चक्रुर्धृतिं रणे ४८
जित्वा पाण्डुसुतान्युद्धे भीमसेनपुरोगमान्
हार्दिक्यः समरेऽतिष्ठद्विधूम इव पावकः ४९
ते द्राव्यमाणाः समरे हार्दिक्येन महारथाः
विमुखाः समपद्यन्त शरवृष्टिभिरर्दिताः ५०
इति श्रीमहाभारते द्रोणपर्वणि नवतितमोऽध्यायः ९०

एक नवतितमोऽध्यायः

सञ्जय उवाच
शृणुष्वैकमना राजन्यन्मां त्वं परिपृच्छसि
द्राव्यमाणे बले तस्मिन्हार्दिक्येन महात्मना १
लज्जयावनते चापि प्रहृष्टैश्चैव तावकैः
द्वीपो य आसीत्पाण्डूनामगाधे गाधमिच्छताम् २
श्रुत्वा तु निनदं भीमं तावकानां महाहवे
शैनेयस्त्वरितो राजन्कृतवर्माणमभ्ययात् ३
कृतवर्मा तु हार्दिक्यः शैनेयं निशितैः शरैः
अवाकिरत्सुसंक्रुद्धस्ततोऽक्रुध्यत सात्यकिः ४
ततः सुनिशितं भल्लं शैनेयः कृतवर्मणे
प्रेषयामास समरे शरांश्च चतुरोऽपरान् ५
ते तस्य जघ्निरे वाहान्भल्लेनास्याच्छिनद्धनुः
पृष्ठरक्षं तथा सूतमविध्यन्निशितैः शरैः ६
ततस्तं विरथं कृत्वा सात्यकिः सत्यविक्रमः
सेनामस्यार्दयामास शरैः संनतपर्वभिः ७
साभज्यताथ पृतना शैनेयशरपीडिता
ततः प्रायाद्वै त्वरितः सात्यकिः सत्यविक्रमः ८
शृणु राजन्यदकरोत्तव सैन्येषु वीर्यवान्
अतीत्य स महाराज द्रोणानीकमहार्णवम् ९
पराजित्य तु संहृष्टः कृतवर्माणमाहवे
यन्तारमब्रवीच्छूरः शनैर्याहीत्यसंभ्रमम् १०

दृष्ट्वा तु तव तत्सैन्यं रथाश्वद्विपसंकुलम्
पदातिजनसंपूर्णमब्रवीत्सारथिं पुनः ११
यदेतन्मेघसंकाशं द्रोणानीकस्य सव्यतः
सुमहत्कुञ्जरानीकं यस्य रुक्मरथो मुखम् १२
एते हि बहवः सूत दुर्निवार्याश्च संयुगे
दुर्योधनसमादिष्टा मदर्थे त्यक्तजीविताः
राजपुत्रा महेष्वासाः सर्वे विक्रान्तयोधिनः १३
त्रिगर्तानां रथोदाराः सुवर्णविकृतध्वजाः
मामेवाभिमुखा वीरा योत्स्यमाना व्यवस्थिताः १४
अत्र मां प्रापय क्षिप्रमश्वांश्चोदय सारथे
त्रिगर्तैः सह योत्स्यामि भारद्वाजस्य पश्यतः १५
ततः प्रायाच्छनैः सूतः सात्वतस्य मते स्थितः
रथेनादित्यवर्णेन भास्वरेण पताकिना १६
तमूहुः सारथेर्वश्या वल्गमाना हयोत्तमाः
वायुवेगसमाः संख्ये कुन्देन्दुरजतप्रभाः १७
आपतन्तं रथं तं तु शङ्खवर्णैर्हयोत्तमैः
परिवव्रुस्ततः शूरा गजानीकेन सर्वतः
किरन्तो विविधांस्तीक्ष्णान्सायकाँल्लघुवेधिनः १८
सात्वतोऽपि शितैर्बाणैर्गजानीकमयोधयत्
पर्वतानिव वर्षेण तपान्ते जलदो महान् १९
वज्राशनिसमस्पर्शैर्वध्यमानाः शरैर्गजाः
प्राद्रवन्रणमुत्सृज्य शिनिवीर्यसमीरितैः २०
शीर्णदन्ता विरुधिरा भिन्नमस्तकपिण्डकाः
विशीर्णकर्णास्यकरा विनियन्तृपताकिनः २१
संभिन्नवर्मघण्टाश्च संनिकृत्तमहाध्वजाः
हतारोहा दिशो राजन्भेजिरे भ्रष्टकम्बलाः २२
रुवन्तो विविधान्नावाञ्जलदोपमनिस्वनाः
नाराचैर्वत्सदन्तैश्च सात्वतेन विदारिताः २३
तस्मिन्द्रुते गजानीके जलसंधो महारथः
यतः संप्रापयन्नागं रजताश्वरथं प्रति २४

रुक्मवर्णकरः शूरस्तपनीयाङ्गदः शुचिः
कुण्डली मुकुटी शङ्खी रक्तचन्दनरूषितः २५
शिरसा धारयन्दीप्तां तपनीयमयीं स्रजम्
उरसा धारयन्निष्कं कण्ठसूत्रं च भास्वरम् २६
चापं च रुक्मविकृतं विधुन्वन्गजमूर्धनि
अशोभत महाराज सविद्युदिव तोयदः २७
तमापतन्तं सहसा मागधस्य गजोत्तमम्
सात्यकिर्वारयामास वेलेवोद्वृत्तमर्णवम् २८
नागं निवारितं दृष्ट्वा शैनेयस्य शरोत्तमैः
अक्रुध्यत रणे राजञ्जलसंधो महाबलः २९
ततः क्रुद्धो महेष्वासो मार्गणैर्भारसाधनैः
अविध्यत शिनेः पौत्रं जलसंधो महोरसि ३०
ततोऽपरेण भल्लेन पीतेन निशितेन च
अस्यतो वृष्णिवीरस्य निचकर्त शरासनम् ३१
सात्यकिं छिन्नधन्वानं प्रहसन्निव भारत
अविध्यन्मागधो वीरः पञ्चभिर्निशितैः शरैः ३२
स विद्धो बहुभिर्बाणैर्जलसंधेन वीर्यवान्
नाकम्पत महाबाहुस्तदद्भुतमिवाभवत् ३३
अचिन्तयन्वै स शरान्नात्यर्थं संभ्रमाद्बली
धनुरन्यत्समादाय तिष्ठ तिष्ठेत्युवाच ह ३४
एतावदुक्त्वा शैनेयो जलसंधं महोरसि
विव्याध षष्ट्या सुभृशं शराणां प्रहसन्निव ३५
क्षुरप्रेण च पीतेन मुष्टिदेशे महद्धनुः
जलसंधस्य चिच्छेद विव्याध च त्रिभिः शरैः ३६
जलसंधस्तु तत्त्यक्त्वा सशरं वै शरासनम्
तोमरं व्यसृजत्तूर्णं सात्यकिं प्रति मारिष ३७
स निर्भिद्य भुजं सव्यं माधवस्य महारणे
अभ्यगाद्धरणीं घोरः श्वसन्निव महोरगः ३८
निर्भिन्ने तु भुजे सव्ये सात्यकिः सत्यविक्रमः
त्रिंशद्भिर्विशिखैस्तीक्ष्णैर्जलसंधमताडयत् ३९

प्रगृह्य तु ततः खड्गं जलसंधो महाबलः
आर्षभं चर्म च महच्छतचन्द्रमलंकृतम्
तत आविध्य तं खड्गं सात्वतायोत्ससर्ज ह ४०
शैनेयस्य धनुश्छित्वा स खड्गो न्यपतन्महीम्
अलातचक्रवच्चैव व्यरोचत महीं गतः ४१
अथान्यद्धनुरादाय सर्वकायावदारणम्
शालस्कन्धप्रतीकाशमिन्द्राशनिसमस्वनम्
विस्फार्य विव्यधे क्रुद्धो जलसंधं शरेण ह ४२
ततः साभरणौ बाहू क्षुराभ्यां माधवोत्तमः
साङ्गदौ जलसंधस्य चिच्छेद प्रहसन्निव ४३
तौ बाहू परिघप्रख्यौ पेततुर्गजसत्तमात्
वसुंधराधराद्भ्रष्टौ पञ्चशीर्षाविवोरगौ ४४
ततः सुदंष्ट्रं सुहनु चारुकुण्डलमुन्नसम्
क्षुरेणास्य तृतीयेन शिरश्चिच्छेद सात्यकिः ४५
तत्पातितशिरोबाहुकबन्धं भीमदर्शनम्
द्विरदं जलसंधस्य रुधिरेणाभ्यषिञ्चत ४६
जलसंधं निहत्याजौ त्वरमाणस्तु सात्वतः
नैषादिं पातयामास गजस्कन्धाद्विशां पते ४७
रुधिरेणावसिक्ताङ्गो जलसंधस्य कुञ्जरः
विलम्बमानमवहत्संश्लिष्टं परमासनम् ४८
शरार्दितः सात्वतेन मर्दमानः स्ववाहिनीम्
घोरमार्तस्वरं कृत्वा विदुद्राव महागजः ४९
हाहाकारो महानासीत्तव सैन्यस्य मारिष
जलसंधं हतं दृष्ट्वा वृष्णीनामृषभेण ह ५०
विमुखाश्चाभ्यधावन्त तव योधाः समन्ततः
पलायने कृतोत्साहा निरुत्साहा द्विषज्जये ५१
एतस्मिन्नन्तरे राजन्द्रोणः शस्त्रभृतां वरः
अभ्ययाज्जवनैरश्वैर्युयुधानं महारथम् ५२
तमुदीर्णं तथा दृष्ट्वा शैनेयं कुरुपुङ्गवाः
द्रोणेनैव सह क्रुद्धाः सात्यकिं पर्यवारयन् ५३

ततः प्रववृते युद्धं कुरूणां सात्वतस्य च
द्रोणस्य च रणे राजन्घोरं देवासुरोपमम् ५४
इति श्रीमहाभारते द्रोणपर्वणि एकनवतितमोऽध्यायः ९१

द्विनवतितमोऽध्यायः

सञ्जय उवाच
ते किरन्तः शरव्रातान्सर्वे यत्ताः प्रहारिणः
त्वरमाणा महाराज युयुधानमयोधयन् १
तं द्रोणः सप्तसप्तत्या जघान निशितैः शरैः
दुर्मर्षणो द्वादशभिर्दुःसहो दशभिः शरैः २
विकर्णश्चापि निशितैस्त्रिंशद्भिः कङ्कपत्रिभिः
विव्याध सव्ये पार्श्वे तु स्तनाभ्यामन्तरे तथा ३
दुर्मुखो दशभिर्बाणैस्तथा दुःशासनोऽष्टभिः
चित्रसेनश्च शैनेयं द्वाभ्यां विव्याध मारिष ४
दुर्योधनश्च महता शरवर्षेण माधवम्
अपीडयद्रणे राजञ्शूराश्चान्ये महारथाः ५
सर्वतः प्रतिविद्धस्तु तव पुत्रैर्महारथैः
तान्प्रत्यविध्यच्छैनेयः पृथक्पृथगजिह्मगैः ६
भारद्वाजं त्रिभिर्बाणैर्दुःसहं नवभिस्तथा
विकर्णं पञ्चविंशत्या चित्रसेनं च सप्तभिः ७
दुर्मर्षणं द्वादशभिश्चतुर्भिश्च विविंशतिम्
सत्यव्रतं च नवभिर्विजयं दशभिः शरैः ८
ततो रुक्माङ्गदं चापं विधुन्वानो महारथः
अभ्ययात्सात्यकिस्तूर्णं पुत्रं तव महारथम् ९
राजानं सर्वलोकस्य सर्वशस्त्रभृतां वरम्
शरैरभ्याहनद्गाढं ततो युद्धमभूत्तयोः १०
विमुञ्चन्तौ शरांस्तीक्ष्णान्संदधानौ च सायकान्
अदृश्यं समरेऽन्योन्यं चक्रतुस्तौ महारथौ ११
सात्यकिः कुरुराजेन निर्विद्धो बह्वशोभत
अस्त्रवद्रुधिरं भूरि स्वरसं चन्दनो यथा १२

सात्वतेन च बाणौघैर्निर्विद्धस्तनयस्तव
शातकुम्भमयापीडो बभौ यूप इवोच्छ्रितः १३
माधवस्तु रणे राजन्कुरुराजस्य धन्विनः
धनुश्चिच्छेद समरे क्षुरप्रेण हसन्निव
अथैनं छिन्नधन्वानं शरैर्बहुभिराचिनोत् १४
निर्भिन्नश्च शरैस्तेन द्विषता क्षिप्रकारिणा
नामृष्यत रणे राजा शत्रोर्विजयलक्षणम् १५
अथान्यद्धनुरादाय हेमपृष्ठं दुरासदम्
विव्याध सात्यकिं तूर्णं सायकानां शतेन ह १६
सोऽतिविद्धो बलवता पुत्रेण तव धन्विना
अमर्षवशमापन्नस्तव पुत्रमपीडयत् १७
पीडितं नृपतिं दृष्ट्वा तव पुत्रा महारथाः
सात्वतं शरवर्षेण छादयामासुरञ्जसा १८
स छाद्यमानो बहुभिस्तव पुत्रैर्महारथैः
एकैकं पञ्चभिर्विद्ध्वा पुनर्विव्याध सप्तभिः १९
दुर्योधनं च त्वरितो विव्याधाष्टभिराशुगैः
प्रहसंश्चास्य चिच्छेद कार्मुकं रिपुभीषणम् २०
नागं मणिमयं चैव शरैर्ध्वजमपातयत्
हत्वा तु चतुरो वाहांश्चतुर्भिर्निशितैः शरैः
सारथिं पातयामास क्षुरप्रेण महायशाः २१
एतस्मिन्नन्तरे चैव कुरुराजं महारथम्
अवाकिरच्छरैर्हृष्टो बहुभिर्मर्मभेदिभिः २२
स वध्यमानः समरे शैनेयस्य शरोत्तमैः
प्राद्रवत्सहसा राजन्पुत्रो दुर्योधनस्तव
आप्लुतश्च ततो यानं चित्रसेनस्य धन्विनः २३
हाहाभूतं जगच्चासीद्दृष्ट्वा राजानमाहवे
ग्रस्यमानं सात्यकिना खे सोममिव राहुणा २४
तं तु शब्दं महच्छ्रुत्वा कृतवर्मा महारथः
अभ्ययात्सहसा तत्र यत्रास्ते माधवः प्रभुः २५
विधुन्वानो धनुःश्रेष्ठं चोदयंश्चैव वाजिनः

भर्त्सयन्सारथिं चोग्रं याहि याहीति सत्वरः २६
तमापतन्तं संप्रेक्ष्य व्यादितास्यमिवान्तकम्
युयुधानो महाराज यन्तारमिदमब्रवीत् २७
कृतवर्मा रथेनैष द्रुतमापतते शरी
प्रत्युद्याहि रथेनैनं प्रवरं सर्वधन्विनाम् २८
ततः प्रजविताश्वेन विधिवत्कल्पितेन च
आससाद रणे भोजं प्रतिमानं धनुष्मताम् २९
ततः परमसंक्रुद्धौ ज्वलन्ताविव पावकौ
समेयातां नरव्याघ्रौ व्याघ्राविव तरस्विनौ ३०
कृतवर्मा तु शैनेयं षड्विंशत्या समार्पयत्
निशितैः सायकैस्तीक्ष्णैर्यन्तारं चास्य सप्तभिः ३१
चतुरश्च हयोदारांश्चतुर्भिः परमेषुभिः
अविध्यत्साधुदान्तान्वै सैन्धवान्सात्वतस्य ह ३२
रुक्मध्वजो रुक्मपृष्ठं महद्विस्फार्य कार्मुकम्
रुक्माङ्गदी रुक्मवर्मा रुक्मपुङ्खानवाकिरत् ३३
ततोऽशीतिं शिनेः पौत्रः सायकान्कृतवर्मणे
प्राहिणोत्त्वरया युक्तो द्रष्टुकामो धनंजयम् ३४
सोऽतिविद्धो बलवता शत्रुणा शत्रुतापनः
समकम्पत दुर्धर्षः क्षितिकम्पे यथाचलः ३५
त्रिषष्ट्या चतुरोऽस्याश्वान्सप्तभिः सारथिं शरैः
विव्याध निशितैस्तूर्णं सात्यकिः कृतवर्मणः ३६
सुवर्णपुङ्खं विशिखं समाधाय च सात्यकिः
व्यसृजत्तं महाज्वालं संक्रुद्धमिव पन्नगम् ३७
सोऽविशत्कृतवर्माणं यमदण्डोपमः शरः
जाम्बूनदविचित्रं च वर्म निर्भिद्य भानुमत्
अभ्यगाद्धरणीमुग्रो रुधिरेण समुक्षितः ३८
संजातरुधिरश्चाजौ सात्वतेषुभिरर्दितः
प्रचलन्धनुरुत्सृज्य न्यपतत्स्यन्दनोत्तमे ३९
स सिंहदंष्ट्रो जानुभ्यामापन्नोऽमितविक्रमः
शरार्दितः सात्यकिना रथोपस्थे नरर्षभः ४०

सहस्रबाहोः सदृशमक्षोभ्यमिव सागरम्
निवार्य कृतवर्माणं सात्यकिः प्रययौ ततः ४१
प्रेक्षतां सर्वसैन्यानां मध्येन शिनिपुंगवः
अभ्यगाद्वाहिनीं भित्त्वा वृत्रहेवासुरीं चमूम् ४३
खड्गशक्तिधनुःकीर्णां गजाश्वरथसंकुलाम्
प्रवर्तितोग्ररुधिरां शतशः क्षत्रियर्षभैः ४२
समाश्वास्य च हार्दिक्यो गृह्य चान्यन्महद्धनुः
तस्थौ तत्रैव बलवान्वारयन्युधि पाण्डवान् ४४
इति श्रीमहाभारते द्रोणपर्वणि द्विनवतितमोऽध्यायः ९२

## त्रिनवतितमोऽध्यायः

सञ्जय उवाच
काल्यमानेषु सैन्येषु शैनेयेन ततस्ततः
भारद्वाजः शरव्रातैर्महद्भिः समवाकिरत् १
स संप्रहारस्तुमुलो द्रोणसात्वतयोरभूत्
पश्यतां सर्वसैन्यानां बलिवासवयोरिव २
ततो द्रोणः शिनेः पौत्रं चित्रैः सर्वायसैः शरैः
त्रिभिराशीविषाकारैर्ललाटे समविध्यत ३
तैर्ललाटार्पितैर्बाणैर्युयुधानः त्वजिह्मगैः
व्यरोचत महाराज त्रिशृङ्ग इव पर्वतः ४
ततोऽस्य बाणानपरानिन्द्राशनिसमस्वनान्
भारद्वाजोऽन्तरप्रेक्षी प्रेषयामास संयुगे ५
तान्द्रोणचापनिर्मुक्तान्दाशार्हः पततः शरान्
द्वाभ्यां द्वाभ्यां सुपुङ्खाभ्यां चिच्छेद परमास्त्रवित् ६
तामस्य लघुतां द्रोणः समवेक्ष्य विशां पते
प्रहस्य सहसाविध्यद्विंशत्या शिनिपुंगवम् ७
पुनः पञ्चाशतेषूणां शतेन च समार्पयत्
लघुतां युयुधानस्य लाघवेन विशेषयन् ८
समुत्पतन्ति वल्मीकाद्यथा क्रुद्धा महोरगाः
तथा द्रोणरथाद्राजन्नुत्पतन्ति तनुच्छिदः ९

तथैव युयुधानेन सृष्टाः शतसहस्रशः
अवाकिरन्द्रोणरथं शरा रुधिरभोजनाः १०
लाघवाद्विजमुख्यस्य सात्वतस्य च मारिष
विशेषं नाध्यगच्छाम समावास्तां नरर्षभौ ११
सात्यकिस्तु ततो द्रोणं नवभिर्नतपर्वभिः
आजघान भृशं क्रुद्धो ध्वजं च निशितैः शरैः
सारथिं च शतेनैव भारद्वाजस्य पश्यतः १२
लाघवं युयुधानस्य दृष्ट्वा द्रोणो महारथः
सप्तत्या सात्यकिं विद्ध्वा तुरगांश्च त्रिभिस्त्रिभिः
ध्वजमेकेन विव्याध माधवस्य रथे स्थितम् १३
अथापरेण भल्लेन हेमपुङ्खेन पत्रिणा
धनुश्चिच्छेद समरे माधवस्य महात्मनः १४
सात्यकिस्तु ततः क्रुद्धो धनुस्त्यक्त्वा महारथः
गदां जग्राह महतीं भारद्वाजाय चाक्षिपत् १५
तामापतन्तीं सहसा पट्टबद्धामयस्मयीम्
न्यवारयच्छरैर्द्रोणो बहुभिर्बहुरूपिभिः १६
अथान्यद्धनुरादाय सात्यकिः सत्यविक्रमः
विव्याध बहुभिर्वीरं भारद्वाजं शिलाशितैः १७
स विद्ध्वा समरे द्रोणं सिंहनादममुञ्चत
तं वै न ममृषे द्रोणः सर्वशस्त्रभृतां वरः १८
ततः शक्तिं गृहीत्वा तु रुक्मदण्डामयस्मयीम्
तरसा प्रेषयामास माधवस्य रथं प्रति १९
अनासाद्य तु शैनेयं सा शक्तिः कालसंनिभा
भित्त्वा रथं जगामोग्रा धरणीं दारुणस्वना २०
ततो द्रोणं शिनेः पौत्रो राजन्विव्याध पत्रिणा
दक्षिणं भुजमासाद्य पीडयन्भरतर्षभ २१
द्रोणोऽपि समरे राजन्माधवस्य महद्धनुः
अर्धचन्द्रेण चिच्छेद रथशक्त्या च सारथिम् २२
मुमोह सारथिस्तस्य रथशक्त्या समाहतः
स रथोपस्थमासाद्य मुहूर्तं संन्यषीदत २३

चकार सात्यकी राजंस्तत्र कर्मातिमानुषम्
अयोधयच्च यद्द्रोणं रश्मीञ्जग्राह च स्वयम् २४
ततः शरशतेनैव युयुधानो महारथः
अविध्यद्ब्राह्मणं संख्ये हृष्टरूपो विशां पते २५
तस्य द्रोणः शरान्पञ्च प्रेषयामास भारत
ते तस्य कवचं भित्त्वा पपुः शोणितमाहवे २६
निर्विद्धस्तु शरैर्घोरैरक्रुध्यत्सात्यकिर्भृशम्
सायकान्व्यसृजच्चापि वीरो रुक्मरथं प्रति २७
ततो द्रोणस्य यन्तारं निपात्यैकेषुणा भुवि
अश्वान्व्यद्रावयद्बाणैर्हतसूतान्महात्मनः २८
स रथः प्रद्रुतः संख्ये मण्डलानि सहस्रशः
चकार राजतो राजन्भ्राजमान इवांशुमान् २९
अभिद्रवत गृह्णीत हयान्द्रोणस्य धावत
इति स्म चुक्रुशुः सर्वे राजपुत्राः सराजकाः ३०
ते सात्यकिमपास्याशु राजन्युधि महारथाः
यतो द्रोणस्ततः सर्वे सहसा समुपाद्रवन् ३१
तान्दृष्ट्वा प्रद्रुतान्सर्वान्सात्वतेन शरार्दितान्
प्रभग्नं पुनरेवासीत्तव सैन्यं समाकुलम् ३२
व्यूहस्यैव पुनर्द्वारं गत्वा द्रोणो व्यवस्थितः
वातायमानैस्तैरश्वैर्हृतो वृष्णिशरार्दितैः ३३
पाण्डुपाञ्चालसंभग्नं व्यूहमालोक्य वीर्यवान्
शैनेये नाकरोद्यत्नं व्यूहस्यैवाभिरक्षणे ३४
निवार्य पाण्डुपाञ्चालान्द्रोणाग्निः प्रदहन्निव
तस्थौ क्रोधाग्निसंदीप्तः कालसूर्य इवोदितः ३५
इति श्रीमहाभारते द्रोणपर्वणि त्रिनवतितमोऽध्यायः ९३

## चतुर्नवतितमोऽध्यायः

सञ्जय उवाच
द्रोणं स जित्वा पुरुषप्रवीरस्तथैव हार्दिक्यमुखांस्त्वदीयान्
प्रहस्य सूतं वचनं बभाषे शिनिप्रवीरः कुरुपुंगवाग्र्य १

निमित्तमात्रं वयमत्र सूत दग्धारयः केशवफल्गुनाभ्याम्
हतान्निहन्मेह नरर्षभेण वयं सुरेशात्मसमुद्भवेन २
तमेवमुक्त्वा शिनिपुंगवस्तदा महामृधे सोऽग्र्यधनुर्धरोऽरिहा
किरन्समन्तात्सहसा शरान्बली समापतच्छ्येन इवामिषं यथा ३
तं यान्तमश्वैः शशिशङ्खवर्णैर्विगाह्य सैन्यं पुरुषप्रवीरम्
नाशक्नुवन्वारयितुं समन्तादादित्यरश्मिप्रतिमं नराग्र्यम् ४
असह्यविक्रान्तमदीनसत्त्वं सर्वे गणा भारत दुर्विषह्यम्
सहस्रनेत्रप्रतिमप्रभावं दिवीव सूर्यं जलदव्यपाये ५
अमर्षपूर्णस्त्वतिचित्रयोधी शरासनी काञ्चनवर्मधारी
सुदर्शनः सात्यकिमापतन्तं न्यवारयद्राजवरः प्रसह्य ६
तयोरभूद्भारत संप्रहारः सुदारुणस्तं समभिप्रशंसन्
योधास्त्वदीयाश्च हि सोमकाश्च वृत्रेन्द्रयोर्युद्धमिवामरौघाः ७
शरैः सुतीक्ष्णैः शतशोऽभ्यविध्यत्सुदर्शनः सात्वतमुख्यमाजौ
अनागतानेव तु तान्पृषत्कांश्चिच्छेद बाणैः शिनिपुंगवोऽपि ८
तथैव शक्रप्रतिमोऽपि सात्यकिः सुदर्शने यान्क्षिपति स्म सायकान्
द्विधा त्रिधा तानकरोत्सुदर्शनः शरोत्तमैः स्यन्दनवर्यमास्थितः ९
संप्रेक्ष्य बाणान्निहतांस्तदानीं सुदर्शनः सात्यकिबाणवेगैः
क्रोधाद्दिधक्षन्निव तिग्मतेजाः शरानमुञ्चत्तपनीयचित्रान् १०
पुनः स बाणैस्त्रिभिरग्निकल्पैराकर्णपूर्णैर्निशितैः सुपुङ्खैः
विव्याध देहावरणं विभिद्य ते सात्यकेराविविशुः शरीरम् ११
तथैव तस्यावनिपालपुत्रः संधाय बाणैरपरैर्ज्वलद्भिः
आजघ्निवांस्तान्रजतप्रकाशांश्चतुर्भिरश्वांश्चतुरः प्रसह्य १२
तथा तु तेनाभिहतस्तरस्वी नप्ता शिनेरिन्द्रसमानवीर्यः
सुदर्शनस्येषुगणैः सुतीक्ष्णैर्हयान्निहत्याशु ननाद नादम् १३
अथास्य सूतस्य शिरो निकृत्य भल्लेन वज्राशनिसंनिभेन
सुदर्शनस्यापि शिनिप्रवीरः क्षुरेण चिच्छेद शिरः प्रसह्य १४
सकुण्डलं पूर्णशशिप्रकाशं भ्राजिष्णु वक्त्रं निचकर्त देहात्
यथा पुरा वज्रधरः प्रसह्य बलस्य संख्येऽतिबलस्य राजन् १५
निहत्य तं पार्थिवपुत्रपौत्रं रणे यदूनामृषभस्तरस्वी
मुदा समेतः परया महात्मा रराज राजन्सुरराजकल्पः १६

ततो ययावर्जुनमेव येन निवार्य सैन्यं तव मार्गणौघैः
सदश्वयुक्तेन रथेन निर्याल्लोकान्विसिस्मापयिषुर्नृवीरः १७
तत्तस्य विस्मापयनीयमग्र्यमपूजयन्योधवरा समेताः
यद्वर्तमानानिषुगोचरेऽरीन्ददाह बाणैर्हुतभुग्यथैव १८
इति श्रीमहाभारते द्रोणपर्वणि चतुर्नवतितमोऽध्यायः ९४

पञ्चनवतितमोऽध्यायः

सञ्जय उवाच
ततः स सात्यकिर्धीमान्महात्मा वृष्णिपुंगवः
सुदर्शनं निहत्याजौ यन्तारमिदमब्रवीत् १
रथाश्वनागकलिलं शरशक्त्यूर्मिमालिनम्
खड्गमत्स्यं गदाग्राहं शूरायुधमहास्वनम् २
प्राणापहारिणं रौद्रं वादित्रोत्क्रुष्टनादितम्
योधानामसुखस्पर्शं दुर्धर्षमजयैषिणाम् ३
तीर्णाः स्म दुस्तरं तात द्रोणानीकमहार्णवम्
जलसंधबलेनाजौ पुरुषादैरिवावृतम् ४
अतोऽन्य पृतनाशेषं मन्ये कुनदिकामिव
तर्तव्यामल्पसलिलां चोदयाश्वानसंभ्रमम् ५
हस्तप्राप्तमहं मन्ये सांप्रतं सव्यसाचिनम्
निर्जित्य दुर्धरं द्रोणं सपदानुगमाहवे ६
हार्दिक्यं योधवर्यं च प्राप्तं मन्ये धनंजयम्
न हि मे जायते त्रासो दृष्ट्वा सैन्यान्यनेकशः
वह्नेरिव प्रदीप्तस्य ग्रीष्मे शुष्कं तृणोलपम् ७
पश्य पाण्डवमुख्येन यातां भूमिं किरीटिना
पत्त्यश्वरथनागौघैः पतितैर्विषमीकृताम् ८
अभ्याशस्थमहं मन्ये श्वेताश्वं कृष्णसारथिम्
स एष श्रूयते शब्दो गाण्डीवस्यामितौजसः ९
यादृशानि निमित्तानि मम प्रादुर्भवन्ति वै
अनस्तंगत आदित्ये हन्ता सैन्धवमर्जुनः १०
शनैर्विश्रम्भयन्नश्वान्याहि यत्तोऽरिवाहिनीम्

यत्रैते सतनुत्रारणाः सुयोधनपुरोगमाः ११
दंशिताः क्रूरकर्माणः काम्बोजा युद्धदुर्मदाः
शरबाणासनधरा यवनाश्च प्रहारिणः १२
शकाः किराता दरदा बर्बरास्ताम्रलिप्तकाः
अन्ये च बहवो म्लेच्छा विविधायुधपाणयः
मामेवाभिमुखाः सर्वे तिष्ठन्ति समरार्थिनः १३
एतान्सरथनागाश्वान्निहत्याजौ सपत्तिनः
इदं दुर्गं महाघोरं तीर्णमेवोपधारय १४
सूत उवाच
न संभ्रमो मे वार्ष्णेय विद्यते सत्यविक्रम
यद्यपि स्यात्सुसंक्रुद्धो जामदग्न्योऽग्रतः स्थितः १५
द्रोणो वा रथिनां श्रेष्ठः कृपो मद्रेश्वरोऽपि वा
तथापि संभ्रमो न स्यात्त्वामाश्रित्य महाभुज १६
त्वया सुबहवो युद्धे निर्जिताः शत्रुसूदन
न च मे संभ्रमः कश्चिद्भूतपूर्वः कदाचन
किमु चैतत्समासाद्य वीर संयुगगोष्पदम् १७
आयुष्मन्कतरेण त्वा प्रापयामि धनंजयम्
केषां क्रुद्धोऽसि वार्ष्णेय केषां मृत्युरुपस्थितः
केषां संयमनीमद्य गन्तुमुत्सहते मनः १८
के त्वां युधि पराक्रान्तं कालान्तकयमोपमम्
दृष्ट्वा विक्रमसंपन्नं विद्रविष्यन्ति संयुगे
केषां वैवस्वतो राजा स्मरतेऽद्य महाभुज १९
सात्यकिरुवाच
मुण्डानेतान्हनिष्यामि दानवानिव वासवः
प्रतिज्ञां पारयिष्यामि काम्बोजानेव मा वह
अद्यैषां कदनं कृत्वा क्षिप्रं यास्यामि पाण्डवम् २०
अद्य द्रक्ष्यन्ति मे वीर्यं कौरवाः ससुयोधनाः
मुण्डानीके हते सूत सर्वसैन्येषु चासकृत् २१
अद्य कौरवसैन्यस्य दीर्यमाणस्य संयुगे
श्रुत्वा विरावं बहुधा संतप्स्यति सुयोधनः २२

अद्य पाण्डवमुख्यस्य श्वेताश्वस्य महात्मनः
आचार्यककृतं मार्गं दर्शयिष्यामि संयुगे २३
अद्य मद्बाणनिहतान्योधमुख्यान्सहस्रशः
दृष्ट्वा दुर्योधनो राजा पश्चात्तापं गमिष्यति २४
अद्य मे क्षिप्रहस्तस्य क्षिपतः सायकोत्तमान्
अलातचक्रप्रतिमं धनुर्द्रक्ष्यन्ति कौरवाः २५
मत्सायकचिताङ्गानां रुधिरं स्रवतां बहु
सैनिकानां वधं दृष्ट्वा संतप्स्यति सुयोधनः २६
अद्य मे क्रुद्धरूपस्य निघ्नतश्च वरान्वरान्
द्विरर्जुनमिमं लोकं मंस्यते स सुयोधनः २७
अद्य राजसहस्राणि निहतानि मया रणे
दृष्ट्वा दुर्योधनो राजा संतप्स्यति महामृधे २८
अद्य स्नेहं च भक्तिं च पाण्डवेषु महात्मसु
हत्वा राजसहस्राणि दर्शयिष्यामि राजसु २९
सञ्जय उवाच
एवमुक्तस्तदा सूतः शिक्षितान्साधुवाहिनः
शशाङ्कसंनिकाशान्वै वाहिनोऽचूचुदद्भृशम् ३०
ते पिबन्त इवाकाशं युयुधानं हयोत्तमाः
प्रापयन्यवनाञ्शीघ्रं मनः पवनरंहसः ३१
सात्यकिं ते समासाद्य पृतनास्वनिवर्तिनम्
बहवो लघुहस्ताश्च शरवर्षैरवाकिरन् ३२
तेषामिषूनथास्त्राणि वेगवन्नतपर्वभिः
अच्छिनत्सात्यकी राजन्नैनं ते प्राप्नुवञ्शराः ३३
रुक्मपुङ्खैः सुनिशितैर्गार्ध्रपत्रैरजिह्मगैः
उच्चकर्त शिरांस्युग्रो यवनानां भुजानपि ३४
शैक्यायसानि वर्माणि कांस्यानि च समन्ततः
भित्त्वा देहांस्तथा तेषां शरा जग्मुर्महीतलम् ३५
ते हन्यमाना वीरेण म्लेच्छाः सात्यकिना रणे
शतशो न्यपतंस्तत्र व्यसवो वसुधातले ३६
सुपूर्णायतमुक्तैस्तानव्यवच्छिन्नपिण्डितैः

पञ्च षट् सप्त चाष्टौ च बिभेद यवनाञ्शरैः ३७
काम्बोजानां सहस्रैस्तु शकानां च विशां पते
शबराणां किरातानां बर्बराणां तथैव च ३८
अगम्यरूपां पृथिवीं मांसशोणितकर्दमाम्
कृतवांस्तत्र शैनेयः क्षपयंस्तावकं बलम् ३९
दस्यूनां सशिरस्त्राणैः शिरोभिर्लूनमूर्धजैः
तत्र तत्र मही कीर्णा विबर्हैरण्डजैरिव ४०
रुधिरोक्षितसर्वाङ्गैस्तैस्तदायोधनं बभौ
कबन्धैः संवृतं सर्वं ताम्राभ्रैः खमिवावृतम् ४१
वज्राशनिसमस्पर्शैः सुपर्वभिरजिह्मगैः
ते साश्वयाना निहताः समावव्रुर्वसुंधराम् ४२
अल्पावशिष्टाः संभग्नाः कृच्छ्रप्राणा विचेतसः
जिताः संख्ये महाराज युयुधानेन दंशिताः ४३
पार्ष्णिभिश्च कशाभिश्च ताडयन्तस्तुरङ्गमान्
जवमुत्तममास्थाय सर्वतः प्राद्रवन्भयात् ४४
काम्बोजसैन्यं विद्राव्य दुर्जयं युधि भारत
यवनानां च तत्सैन्यं शकानां च महद्बलम् ४५
स ततः पुरुषव्याघ्रः सात्यकिः सत्यविक्रमः
प्रहृष्टस्तावकाञ्जित्वा सूतं याहीत्यचोदयत् ४६
तं यान्तं पृष्ठगोप्तारमर्जुनस्य विशां पते
चारणाः प्रेक्ष्य संहृष्टास्त्वदीयाश्चाप्यपूजयन् ४७
इति श्रीमहाभारते द्रोणपर्वणि पञ्चनवतितमोऽध्यायः ९५

## षण्णवतितमोऽध्यायः

सञ्जय उवाच
जित्वा यवनकाम्बोजान्युयुधानस्ततोऽर्जुनम्
जगाम तव सैन्यस्य मध्येन रथिनां वरः १
शरदंष्ट्रो नरव्याघ्रो विचित्रकवचच्छविः
मृगान्व्याघ्र इवाजिघ्रंस्तव सैन्यमभीषयत् २
स रथेन चरन्मार्गान्धनुरभ्रामयद्भृशम्

रुक्मपृष्ठं महावेगं रुक्मचन्द्रकसंकुलम् ३
रुक्माङ्गदशिरस्त्राणो रुक्मवर्मसमावृतः
रुक्मध्वजवरः शूरो मेरुशृङ्ग इवाबभौ ४
सधनुर्मण्डलः संख्ये तेजोभास्वररश्मिवान्
शरदीवोदितः सूर्यो नृसूर्यो विरराज ह ५
वृषभस्कन्धविक्रान्तो वृषभाक्षो नरर्षभः
तावकानां बभौ मध्ये गवां मध्ये यथा वृषः ६
मत्तद्विरदसंकाशं मत्तद्विरदगामिनम्
प्रभिन्नमिव मातङ्गं यूथमध्ये व्यवस्थितम्
व्याघ्रा इव जिघांसन्तस्त्वदीयाभ्यद्रवन्रणे ७
द्रोणानीकमतिक्रान्तं भोजानीकं च दुस्तरम्
जलसंधार्णवं तीर्त्वा काम्बोजानां च वाहिनीम् ८
हार्दिक्यमकरान्मुक्तं तीर्णं वै सैन्यसागरम्
परिवव्रुः सुसंक्रुद्धास्त्वदीयाः सात्यकिं रथाः ९
दुर्योधनश्चित्रसेनो दुःशासनविविंशती
शकुनिर्दुःसहश्चैव युवा दुर्मर्षणः क्रथः १०
अन्ये च बहवः शूराः शस्त्रवन्तो दुरासदाः
पृष्ठतः सात्यकिं यान्तमन्वधावन्नमर्षिताः ११
अथ शब्दो महानासीत्तव सैन्यस्य मारिष
मारुतोद्धूतवेगस्य सागरस्येव पर्वणि १२
तानभिद्रवतः सर्वान्समीक्ष्य शिनिपुंगवः
शनैर्याहीति यन्तारमब्रवीत्प्रहसन्निव १३
इदमेति समुद्धूतं धार्तराष्ट्रस्य यद्बलम्
मामेवाभिमुखं तूर्णं गजाश्वरथपत्तिमत् १४
नादयन्वै दिशः सर्वा रथघोषेण सारथे
पृथिवीं चान्तरिक्षं च कम्पयन्सागरानपि १५
एतद्बलार्णवं तात वारयिष्ये महारणे
पौर्णमास्यामिवोद्धूतं वेलेव सलिलाशयम् १६
पश्य मे सूत विक्रान्तमिन्द्रस्येव महामृधे
एष सैन्यानि शत्रूणां विधमामि शितैः शरैः १७

निहतानाहवे पश्य पदात्यश्वरथद्विपान्
मच्छरैरग्निसंकाशैर्विदेहासून्सहस्रशः १८
इत्येवं ब्रुवतस्तस्य सात्यकेरमितौजसः
समीपं सैनिकास्ते तु शीघ्रमीयुर्युयुत्सवः
जह्याद्रवस्व तिष्ठेति पश्य पश्येति वादिनः १९
तानेवं ब्रुवतो वीरान्सात्यकिर्निशितैः शरैः
जघान त्रिशतानश्वान्कुञ्जरांश्च चतुःशतान् २०
स संप्रहारस्तुमुलस्तस्य तेषां च धन्विनाम्
देवासुररणप्रख्यः प्रावर्तत जनक्षयः २१
मेघजालनिभं सैन्यं तव पुत्रस्य मारिष
प्रत्यगृह्णाच्छिनेः पौत्रः शरैराशीविषोपमैः २२
प्रच्छाद्यमानः समरे शरजालैः स वीर्यवान्
असंभ्रमं महाराज तावकानवधीद्बहून् २३
आश्चर्यं तत्र राजेन्द्र सुमहद्दृष्टवानहम्
न मोघः सायकः कश्चित्सात्यकेरभवत्प्रभो २४
रथनागाश्वकलिलः पदात्यूर्मिसमाकुलः
शैनेयवेलामासाद्य स्थितः सैन्यमहार्णवः २५
संभ्रान्तनरनागाश्वमावर्तत मुहुर्मुहुः
तत्सैन्यमिषुभिस्तेन वध्यमानं समन्ततः
बभ्राम तत्र तत्रैव गावः शीतार्दिता इव २६
पदातिनं रथं नागं सादिनं तुरगं तथा
अविद्धं तत्र नाद्राक्षं युयुधानस्य सायकैः २७
न तादृक्कदनंराजन्कृतवांस्तत्र फल्गुनः
यादृक्क्षयमनीकानामकरोत्सात्यकिर्नृप
अत्यर्जुनं शिनेः पौत्रो युध्यते भरतर्षभ २८
ततो दुर्योधनो राजा सात्वतस्य त्रिभिः शरैः
विव्याध सूतं निशितैश्चतुर्भिश्चतुरो हयान् २९
सात्यकिं च त्रिभिर्विद्ध्वा पुनर्विव्याध सोऽष्टभिः
दुःशासनः षोडशभिर्विव्याध शिनिपुंगवम् ३०
शकुनिः पञ्चविंशत्या चित्रसेनश्च पञ्चभिः

दुःसहः पञ्चदशभिर्विव्याधोरसि सात्यकिम् ३१
उत्स्मयन्वृष्णिशार्दूलस्तथा बाणैः समाहतः
तानविध्यन्महाराज सर्वानेव त्रिभिस्त्रिभिः ३२
गाढविद्धानरीन्कृत्वा मार्गणैः सोऽतितेजनैः
शैनेयः श्येनवत्संख्ये व्यचरल्लघुविक्रमः ३३
सौबलस्य धनुश्छित्वा हस्तावापं निकृत्य च
दुर्योधनं त्रिभिर्बाणैरभ्यविध्यत्स्तनान्तरे ३४
चित्रसेनं शतेनैव दशभिर्दुःसहं तथा
दुःशासनं तु विंशत्या विव्याध शिनिपुङ्गवः ३५
अथान्यद्धनुरादाय श्यालस्तव विशां पते
अष्टभिः सात्यकिं विद्ध्वा पुनर्विव्याध पञ्चभिः ३६
दुःशासनश्च दशभिर्दुःसहश्च त्रिभिः शरैः
दुर्मुखश्च द्वादशभी राजन्विव्याध सात्यकिम् ३७
दुर्योधनस्त्रिसप्तत्या विद्ध्वा भारत माधवम्
ततोऽस्य निशितैर्बाणैस्त्रिभिर्विव्याध सारथिम् ३८
तान्सर्वान्सहिताञ्शूरान्यतमानान्महारथान्
पञ्चभिः पञ्चभिर्बाणैः पुनर्विव्याध सात्यकिः ३९
ततः स रथिनां श्रेष्ठस्तव पुत्रस्य सारथिम्
आजघानाशु भल्लेन स हतो न्यपतद्भुवि ४०
पतिते सारथौ तस्मिंस्तव पुत्ररथः प्रभो
वातायमानैस्तैरश्वैरपानीयत संगरात् ४१
ततस्तव सुता राजन्सैनिकाश्च विशां पते
राज्ञो रथमभिप्रेक्ष्य विद्रुताः शतशोऽभवन् ४२
विद्रुतं तत्र तत्सैन्यं दृष्ट्वा भारत सात्यकिः
अवाकिरच्छरैस्तीक्ष्णै रुक्मपुङ्खैः शिलाशितैः ४३
विद्राव्य सर्वसैन्यानि तावकानि समन्ततः
प्रययौ सात्यकी राजञ्श्वेताश्वस्य रथं प्रति ४४
तं शरानाददानं च रक्षमाणं च सारथिम्
आत्मानं मोचयन्तं च तावकाः समपूजयन् ४५
इति श्रीमहाभारते द्रोणपर्वणि षण्णवतितमोऽध्यायः ९६

## सप्तनवति तमोऽध्यायः

धृतराष्ट्र उवाच
संप्रमृद्य महत्सैन्यं यान्तं शैनेयमर्जुनम्
निर्ह्रीका मम ते पुत्राः किमकुर्वत सञ्जय १
कथं चैषां तथा युद्धे धृतिरासीन्मुमूर्षताम्
शैनेयचरितं दृष्ट्वा सदृशं सव्यसाचिनः २
किं नु वक्ष्यन्ति ते क्षात्रं सैन्यमध्ये पराजिताः
कथं नु सात्यकिर्युद्धे व्यतिक्रान्तो महायशाः ३
कथं च मम पुत्राणां जीवितां तत्र सञ्जय
शैनेयोऽभिययौ युद्धे तन्ममाचक्ष्व तत्त्वतः ४
अत्यद्भुतमिदं तात त्वत्सकाशाच्छृणोम्यहम्
एकस्य बहुभिर्युद्धं शत्रुभिर्वै महारथैः ५
विपरीतमहं मन्ये मन्दभाग्यान्सुतान्प्रति
यत्रावध्यन्त समरे सात्वतेन महात्मना ६
एकस्य हि न प्रर्याप्तं मत्सैन्यं तस्य सञ्जय
क्रुद्धस्य युयुधानस्य सर्वे तिष्ठन्तु पाण्डवाः ७
निर्जित्य समरे द्रोणं कृतिनं युद्धदुर्मदम्
यथा पशुगणान्सिंहस्तद्वद्धन्ता सुतान्मम ८
कृतवर्मादिभिः शूरैर्यत्तैर्बहुभिराहवे
युयुधानो न शकितो हन्तुं यः पुरुषर्षभः ९
नैतदीदृशकं युद्धं कृतवांस्तत्र फल्गुनः
यादृशं कृतवान्युद्धं शिनेर्नप्ता महायशाः १०
सञ्जय उवाच
तव दुर्मन्त्रिते राजन्दुर्योधनकृतेन च
शृणीष्वावहितो भूत्वा यत्ते वक्ष्यामि भारत ११
ते पुनः संन्यवर्तन्त कृत्वा संशप्तकान्मिथः
परां युद्धे मतिं कृत्वा पुत्रस्य तव शासनात् १२
त्रीणि सादिसहस्राणि दुर्योधनपुरोगमाः
शकाः काम्बोजबाल्हीका यवनाः पारदास्तथा १३
कुणिन्दास्तङ्गणाम्बष्ठाः पैशाचाश्च समन्दराः

अभ्यद्रवन्त शैनेयं शलभाः पावकं यथा १४
युक्ताश्च पार्वतीयानां रथाः पाषाणयोधिनाम्
शूराः पञ्चशता राजञ्शैनेयं समुपाद्रवन् १५
ततो रथसहस्रेण महारथशतेन च
द्विरदानां सहस्रेण द्विसाहस्रैश्च वाजिभिः १६
शरवर्षाणि मुञ्चन्तो विविधानि महारथाः
अभ्यद्रवन्त शैनेयमसंख्येयाश्च पत्तयः १७
तांश्च संचोदयन्सर्वान्घ्नतैनमिति भारत
दुःशासनो महाराज सात्यकिं पर्यवारयत् १८
तत्राद्भुतमपश्याम शैनेयचरितं महत्
यदेको बहुभिः सार्धमसंभ्रान्तमयुध्यत १९
अवधीच्च रथानीकं द्विरदानां च तद्बलम्
सादिनश्चैव तान्सर्वान्दस्यूनपि च सर्वशः २०
तत्र चक्रैर्विमथितैर्भग्नैश्च परमायुधैः
अक्षैश्च बहुधा भग्नैरीषादण्डकबन्धुरैः २१
कूबरैर्मथितैश्चापि ध्वजैश्चापि निपातितैः
वर्मभिश्चामरैश्चैव व्यवकीर्णा वसुन्धरा २२
स्रग्भिराभरणैर्वस्त्रैरनुकर्षैश्च मारिष
संछन्ना वसुधा तत्र द्यौर्ग्रहैरिव भारत २३
गिरिरूपधराश्चापि पतिताः कुञ्जरोत्तमाः
अञ्जनस्य कुले जाता वामनस्य च भारत
सुप्रतीककुले जाता महापद्मकुले तथा २४
ऐरावणकुले चैव तथान्येषु कुलेषु च
जाता दन्तिवरा राजञ्शेरते बहवो हताः २५
वनायुजान्पार्वतीयान्काम्बोजारट्टबाल्हिकान्
तथा हयवरान्राजन्निजघ्ने तत्र सात्यकिः २६
नानादेशसमुत्थांश्च नाना जात्यांश्च पत्तिनः
निजघ्ने तत्र शैनेयः शतशोऽथ सहस्रशः २७
तेषु प्रकाल्यमानेषु दस्यून्दुःशासनोऽब्रवीत्
निवर्तध्वमधर्मज्ञाः युध्यध्वं किं सृतेन वः २८

तांश्चापि सर्वान्संप्रेक्ष्य पुत्रो दुःशासनस्तव
पाषाणयोधिनः शूरान्पार्वतीयानचोदयत् २९
अश्मयुद्धेषु कुशला नैतज्जानाति सात्यकिः
अश्मयुद्धमजानन्तं घ्नतैनं युद्धकामुकम् ३०
तथैव कुरवः सर्वे नाश्मयुद्धविशारदाः
अभिद्रवत मा भैष्ट न वः प्राप्स्यति सात्यकिः ३१
ततो गजशिशुप्रख्यैरुपलैः शैलवासिनः
उद्यतैर्युयुधानस्य स्थिता मरणकाङ्क्षिणः ३२
क्षेपणीयैस्तथाप्यन्ये सात्वतस्य वधैषिणः
चोदितास्तव पुत्रेण रुरुधुः सर्वतोदिशम् ३३
तेषामापततामेव शिलायुद्धं चिकीर्षताम्
सात्यकिः प्रतिसंधाय त्रिंशतं प्राहिणोच्छरान् ३४
तामश्मवृष्टिं तुमुलां पार्वतीयैः समीरिताम्
बिभेदोरगसंकाशैर्नाराचैः शिनिपुङ्गवः ३५
तैरश्मचूर्णैर्दीप्यद्भिः खद्योतानामिव व्रजैः
प्रायः सैन्यान्यवध्यन्त हाहाभूतानि मारिष ३६
ततः पञ्चशताः शूराः समुद्यतमहाशिलाः
निकृत्तबाहवो राजन्निपेतुर्धरणीतले ३७
पाषाणयोधिनः शूरान्यतमानानवस्थितान्
अवधीद्बहुसाहस्रांस्तदद्भुतमिवाभवत् ३८
ततः पुनर्बस्तमुखैरश्मवृष्टिं समन्ततः
अयोहस्तैः शूलहस्तैर्दरदैः खशतङ्गणैः ३९
अम्बष्ठैश्च कुणिन्दैश्च क्षिप्तां क्षिप्तां स सात्यकिः
नाराचैः प्रतिविव्याध प्रेक्षमाणो महाबलः ४०
अद्रीणां भिद्यमानानामन्तरिक्षे शितैः शरैः
शब्देन प्राद्रवन्राजन्गजाश्वरथपत्तयः ४१
अश्मचूर्णैः समाकीर्णा मनुष्याश्च वयांसि च
नाशक्नुवन्नवस्थातुं भ्रमरैरिव दंशिताः ४२
हतशिष्टा विरुधिरा भिन्नमस्तकपिण्डकाः
कुञ्जराः संन्यवर्तन्त युयुधानरथं प्रति ४३

ततः शब्दः समभवत्तव सैन्यस्य मारिष
माधवेनार्द्यमानस्य सागरस्येव दारुणः ४४
तं शब्दं तुमुलं श्रुत्वा द्रोणो यन्तारमब्रवीत्
एष सूत रणे क्रुद्धः सात्वतानां महारथः ४५
दारयन्बहुधा सैन्यं रणे चरति कालवत्
यत्रैष शब्दस्तुमुलस्तत्र सूत रथं नय ४६
पाषाणयोधिभिर्नूनं युयुधानः समागतः
तथा हि रथिनः सर्वे ह्रियन्ते विद्रुतैर्हयैः ४७
विशस्त्रकवचा रुग्णास्तत्र तत्र पतन्ति च
न शक्नुवन्ति यन्तारः संयन्तुं तुमुले हयान् ४८
इत्येवं ब्रुवतो राजन्भारद्वाजस्य धीमतः
प्रत्युवाच ततो यन्ता द्रोणं शस्त्रभृतां वरम् ४९
आयुष्मन्द्रवते सैन्यं कौरवेयं समन्ततः
पश्य योधान्रणे भिन्नान्धावमानांस्ततस्ततः ५०
एते च सहिताः शूराः पाञ्चालाः पाण्डवैः सह
त्वामेव हि जिघांसन्तः प्राद्रवन्ति समन्ततः ५१
अत्र कार्यं समाधत्स्व प्राप्तकालमरिंदम
स्थाने वा गमने वापि दूरं यातश्च सात्यकिः ५२
तथैवं वदतस्तस्य भारद्वाजस्य मारिष
प्रत्यदृश्यत शैनेयो निघ्नन्बहुविधान्रथान् ५३
ते वध्यमानाः समरे युयुधानेन तावकाः
युयुधानरथं त्यक्त्वा द्रोणानीकाय दुद्रुवुः ५४
यैस्तु दुःशासनः सार्धं रथैः पूर्वं न्यवर्तत
ते भीतास्त्वभ्यधावन्त सर्वे द्रोणरथं प्रति ५५
इति श्रीमहाभारते द्रोणपर्वणि सप्तनवतितमोऽध्यायः ९७

## अष्टनवतितमोऽध्यायः

सञ्जय उवाच
दुःशासनरथं दृष्ट्वा समीपे पर्यवस्थितम्
भारद्वाजस्ततो वाक्यं दुःशासनमथाब्रवीत् १

दुःशासन रथाः सर्वे कस्मादेते प्रविद्रुताः
कच्चित्क्षेमं तु नृपतेः कच्चिज्जीवति सैन्धवः २
राजपुत्रो भवानत्र राजभ्राता महारथः
किमर्थं द्रवसे युद्धे यौवराज्यमवाप्य हि ३
स्वयं वैरं महत्कृत्वा पाञ्चालैः पाण्डवैः सह
एकं सात्यकिमासाद्य कथं भीतोऽसि संयुगे ४
न जानीषे पुरा त्वं तु गृह्णन्नक्षान्दुरोदरे
शरा ह्येते भविष्यन्ति दारुणाशीविषोपमाः ५
अप्रियाणां च वचनं पाण्डवेषु विशेषतः
द्रौपद्याश्च परिक्लेशस्त्वन्मूलो ह्यभवत्पुरा ६
क्व ते मानश्च दर्पश्च क्व च तद्वीर गर्जितम्
आशीविषसमान्पार्थान्कोपयित्वा क्व यास्यसि ७
शोच्येयं भारती सेना राजा चैव सुयोधनः
यस्य त्वं कर्कशो भ्राता पलायनपरायणः ८
ननु नाम त्वया वीर दीर्यमाणा भयार्दिता
स्वबाहुबलमास्थाय रक्षितव्या ह्यनीकिनी
स त्वमद्य रणं त्यक्त्वा भीतो हर्षयसे परान् ९
विद्रुते त्वयि सैन्यस्य नायके शत्रुसूदन
कोऽन्य स्थास्यति संग्रामे भीतो भीते व्यपाश्रये १०
एकेन सात्वतेनाद्य युध्यमानस्य चानघ
पलायने तव मतिः संग्रामाद्धि प्रवर्तते ११
यदा गाण्डीवधन्वानं भीमसेनं च कौरव
यमौ च युधि द्रष्टासि तदा त्वं किं करिष्यसि १२
युधि फल्गुनबाणानां सूर्याग्निसमतेजसाम्
न तुल्याः सात्यकिशरा येषां भीतः पलायसे १३
यदि तावत्कृता बुद्धिः पलायनपरायणा
पृथिवी धर्मराजस्य शमेनैव प्रदीयताम् १४
यावत्फल्गुननाराचा निर्मुक्तोरगसंनिभाः
नाविशन्ति शरीरं ते तावत्संशाम्य पाण्डवैः १५
यावत्ते पृथिवीं पार्था हत्वा भ्रातृशतं रणे

नाद्रिपन्ति महात्मानस्तावत्संशाम्य पाराडवैः १६
यावन्न क्रुध्यते राजा धर्मपुत्रो युधिष्ठिरः
कृष्णश्च समरश्लाघी तावत्संशाम्य पाराडवैः १७
यावद्भीमो महाबाहुर्विगाह्य महतीं चमूम्
सोदरांस्ते न मृद्नाति तावत्संशाम्य पाराडवैः १८
पूर्वमुक्तश्च ते भ्राता भीष्मेण स सुयोधनः
अजेयाः पाराडवाः संख्ये सौम्य संशाम्य पाराडवैः
न च तत्कृतवान्मन्दस्तव भ्राता सुयोधनः १९
स युद्धे धृतिमास्थाय यत्तो युध्यस्व पाराडवैः
गच्छ तूर्णं रथेनैव यत्र तिष्ठति सात्यकिः २०
त्वया हीनं बलं ह्येतद्विद्रविष्यति भारत
आत्मार्थं योधय रणे सात्यकिं सत्यविक्रमम् २१
एवमुक्तस्तव सुतो नाब्रवीत्किंचिदप्यसौ
श्रुतं चाश्रुतवत्कृत्वा प्रायाद्येन स सात्यकिः २२
सैन्येन महता युक्तो म्लेच्छानामनिवर्तिनाम्
आसाद्य च रणे यत्तो युयुधानमयोधयत् २३
द्रोणोऽपि रथिनां श्रेष्ठः पाञ्चालान्पाराडवांस्तथा
अभ्यद्रवत संक्रुद्धो जवमास्थाय मध्यमम् २४
प्रविश्य च रणे द्रोणः पाञ्चालानां वरूथिनीम्
द्रावयामास योधान्वै शतशोऽथ सहस्रशः २५
ततो द्रोणो महाराज नाम विश्राव्य संयुगे
पाराडुपाञ्चालमत्स्यानां प्रचक्रे कदनं महत् २६
तं जयन्तमनीकानि भारद्वाजं ततस्ततः
पाञ्चालपुत्रो द्युतिमान्वीरकेतुः समभ्ययात् २७
स द्रोणं पञ्चभिर्विद्ध्वा शरैः संनतपर्वभिः
ध्वजमेकेन विव्याध सारथिं चास्य सप्तभिः २८
तत्राद्भुतं महाराज दृष्टवानस्मि संयुगे
यद्द्रोणो रभसं युद्धे पाञ्चाल्यं नाभ्यवर्तत २९
संनिरुद्धं रणे द्रोणं पाञ्चाला वीक्ष्य मारिष
आवव्रुः सर्वतो राजन्धर्मपुत्रजयैषिणः ३०

ते शरैरग्निसंकाशैस्तोमरैश्च महाधनैः
शस्त्रैश्च विविधै राजन्द्रोणमेकमवाकिरन् ३१
निहत्य तान्बाणगणान्द्रोणो राजन्समन्ततः
महाजलधरान्व्योम्नि मातरिश्वा विवानिव ३२
ततः शरं महाघोरं सूर्यपावकसंनिभम्
संदधे परवीरघ्नो वीरकेतुरथं प्रति ३३
स भित्त्वा तु शरो राजन्पाञ्चाल्यं कुलनन्दनम्
अभ्यगाद्धरणीं तूर्णं लोहितार्द्रो ज्वलन्निव ३४
ततोऽपतद्रथात्तूर्णं पाञ्चाल्यः कुलनन्दनः
पर्वताग्रादिव महांश्चम्पको वायुपीडितः ३५
तस्मिन्हते महेष्वासे राजपुत्रे महाबले
पाञ्चालास्त्वरिता द्रोणं समन्तात्पर्यवारयन् ३६
चित्रकेतुः सुधन्वा च चित्रवर्मा च भारत
तथा चित्ररथश्चैव भ्रातृव्यसनकर्शिताः ३७
अभ्यद्रवन्त सहिता भारद्वाजं युयुत्सवः
मुञ्चन्तः शरवर्षाणि तपान्ते जलदा इव ३८
स वध्यमानो बहुधा राजपुत्रैर्महारथैः
व्यश्वसूतरथांश्चक्रे कुमारान्कुपितो रणे ३९
तथापरैः सुनिशितैर्भल्लैस्तेषां महायशाः
पुष्पाणीव विचिन्वन्हि सोत्तमाङ्गान्यपातयत् ४०
ते रथेभ्यो हताः पेतुः क्षितौ राजन्सुवर्चसः
देवासुरे पुरा युद्धे यथा दैतेयदानवाः ४१
तान्निहत्य रणे राजन्भारद्वाजः प्रतापवान्
कार्मुकं भ्रामयामास हेमपृष्ठं दुरासदम् ४२
पाञ्चालान्निहतान्दृष्ट्वा देवकल्पान्महारथान्
धृष्टद्युम्नो भृशं क्रुद्धो नेत्राभ्यां पातयञ्जलम्
अभ्यवर्तत संग्रामे क्रुद्धो द्रोणरथं प्रति ४३
ततो हा हेति सहसा नादः समभवन्नृप
पाञ्चाल्येन रणे दृष्ट्वा द्रोणमावारितं शरैः ४४
संछाद्यमानो बहुधा पार्षतेन महात्मना

न विव्यथे ततो द्रोणः स्मयन्नेवान्वयुध्यत ४५
ततो द्रोणं महाराज पाञ्चाल्यः क्रोधमूर्छितः
आजघानोरसि क्रुद्धो नवत्या नतपर्वणाम् ४६
स गाढविद्धो बलिना भारद्वाजो महायशाः
निषसाद रथोपस्थे कश्मलं च जगाम ह ४७
तं वै तथागतं दृष्ट्वा धृष्टद्युम्नः पराक्रमी
समुत्सृज्य धनुस्तूर्णमसिं जग्राह वीर्यवान् ४८
अवप्लुत्य रथाच्चापि त्वरितः स महारथः
आरुरोह रथं तूर्णं भारद्वाजस्य मारिष
हर्तुमैच्छच्छिरः कायात्क्रोधसंरक्तलोचनः ४९
प्रत्याश्वस्तस्ततो द्रोणो धनुर्गृह्य महाबलः
शरैर्वैतस्तिकै राजन्नित्यमासन्नयोधिभिः
योधयामास समरे धृष्टद्युम्नं महारथम् ५०
ते हि वैतस्तिका नाम शरा आसन्नयोधिनः
द्रोणस्य विदिता राजन्धृष्टद्युम्नमवाक्षिपन् ५१
स वध्यमानो बहुभिः सायकैस्तैर्महाबलः
अवप्लुत्य रथात्तूर्णं भग्नवेगः पराक्रमी ५२
आरुह्य स्वरथं वीरः प्रगृह्य च महद्धनुः
विव्याध समरे द्रोणं धृष्टद्युम्नो महारथः ५३
तदद्भुतं तयोर्युद्धं भूतसंघा ह्यपूजयन्
क्षत्रियाश्च महाराज ये चान्ये तत्र सैनिकाः ५४
अवश्यं समरे द्रोणो धृष्टद्युम्नेन संगतः
वशमेष्यति नो राज्ञः पाञ्चाला इति चुक्रुशुः ५५
द्रोणस्तु त्वरितो युद्धे धृष्टद्युम्नस्य सारथेः
शिरः प्रच्यावयामास फलं पक्वं तरोरिव
ततस्ते प्रद्रुता वाहा राजंस्तस्य महात्मनः ५६
तेषु प्रद्रवमाणेषु पाञ्चालान्सृञ्जयांस्तथा
व्यद्रावयद्रणे द्रोणस्तत्र तत्र पराक्रमी ५७
विजित्य पाण्डुपाञ्चालान्भारद्वाजः प्रतापवान्
स्वं व्यूहं पुनरास्थाय स्थितोऽभवदरिंदमः

न चैनं पाण्डवा युद्धे जेतुमुत्सहिरे प्रभो ५८
इति श्रीमहाभारते द्रोणपर्वणि अष्टनवतितमोऽध्यायः ९८

## नवनवतितमोऽध्यायः

सञ्जय उवाच
ततो दुःशासनो राजञ्शैनेयं समुपाद्रवत्
किरञ्शरसहस्राणि पर्जन्य इव वृष्टिमान् १
स विद्ध्वा सात्यकिं षष्ट्या तथा षोडशभिः शरैः
नाकम्पयत्स्थितं युद्धे मैनाकमिव पर्वतम् २
स तु दुःशासनं वीरः सायकैरावृणोद्भृशम्
मशकं समनुप्राप्तमूर्णनाभिरिवोर्णया ३
दृष्ट्वा दुःशासनं राजा तथा शरशताचितम्
त्रिगर्तांश्चोदयामास युयुधानरथं प्रति ४
तेऽगच्छन्युयुधानस्य समीपं क्रूरकारिणः
त्रिगर्तानां त्रिसाहस्रा रथा युद्धविशारदाः ५
ते तु तं रथवंशेन महता पर्यवारयन्
स्थिरां कृत्वा मतिं युद्धे भूत्वा संशप्तका मिथः ६
तेषां प्रयततां युद्धे शरवर्षाणि मुञ्चताम्
योधान्पञ्चशतान्मुख्यानग्रानीके व्यपोथयत् ७
तेऽपतन्त हतास्तूर्णं शिनिप्रवरसायकैः
महामारुतवेगेन रुग्णा इव महाद्रुमाः ८
रथैश्च बहुधा छिन्नैर्ध्वजैश्चैव विशां पते
हयैश्च कनकापीडैः पतितैस्तत्र मेदिनी ९
शैनेयशरसंकृत्तैः शोणितौघपरिप्लुतैः
अशोभत महाराज किंशुकैरिव पुष्पितैः १०
ते वध्यमानाः समरे युयुधानेन तावकाः
त्रातारं नाध्यगच्छन्त पङ्कमग्ना इव द्विपाः ११
ततस्ते पर्यवर्तन्त सर्वे द्रोणरथं प्रति
भयात्पतगराजस्य गर्तानीव महोरगाः १२
हत्वा पञ्चशतान्योधाञ्शरैराशीविषोपमैः

प्रायात्स शनकैर्वीरो धनंजयरथं प्रति १३
तं प्रयान्तं नरश्रेष्ठं पुत्रो दुःशासनस्तव
विव्याध नवभिस्तूर्णं शरैः संनतपर्वभिः १४
स तु तं प्रतिविव्याध पञ्चभिर्निशितैः शरैः
रुक्मपुङ्खैर्महेष्वासो गार्ध्रपत्रैरजिह्मगैः १५
सात्यकिं तु महाराज प्रहसन्निव भारत
दुःशासनस्त्रिभिर्विद्ध्वा पुनर्विव्याध पञ्चभिः १६
शैनेयस्तव पुत्रं तु विद्ध्वा पञ्चभिराशुगैः
धनुश्चास्य रणे छित्त्वा विस्मयन्नर्जुनं ययौ १७
ततो दुःशासनः क्रुद्धो वृष्णिवीराय गच्छते
सर्वपारशवीं शक्तिं विससर्ज जिघांसया १८
तां तु शक्तिं तदा घोरां तव पुत्रस्य सात्यकिः
चिच्छेद शतधा राजन्निशितैः कङ्कपत्रिभिः १९
अथान्यद्धनुरादाय पुत्रस्तव जनेश्वर
सात्यकिं दशभिर्विद्ध्वा सिंहनादं ननाद ह २०
सात्यकिस्तु रणे क्रुद्धो मोहयित्वा सुतं तव
शरैरग्निशिखाकारैराजघान स्तनान्तरे
सर्वायसैस्तीक्ष्णवक्त्रैरष्टाभिर्विव्यधे पुनः २१
दुःशासनस्तु विंशत्या सात्यकिं प्रत्यविध्यत
सात्वतोऽपि महाराज तं विव्याध स्तनान्तरे
त्रिभिरेव महावेगैः शरैः संनतपर्वभिः २२
ततोऽस्य वाहान्निशितैः शरैर्जघ्ने महारथः
सारथिं च सुसंक्रुद्धः शरैः संनतपर्वभिः २३
धनुरेकेन भल्लेन हस्तावापं च पञ्चभिः
ध्वजं च रथशक्तिं च भल्लाभ्यां परमास्त्रवित्
चिच्छेद विशिखैस्तीक्ष्णैस्तथोभौ पार्ष्णिसारथी २४
स छिन्नधन्वा विरथो हताश्वो हतसारथिः
त्रिगर्तसेनापतिना स्वरथेनापवाहितः २५
तमभिद्रुत्य शैनेयो मुहूर्तमिव भारत
न जघान महाबाहुर्भीमसेनवचः स्मरन् २६

भीमसेनेन हि वधः सुतानां तव भारत
प्रतिज्ञातः सभामध्ये सर्वेषामेव संयुगे २७
ततो दुःशासनं जित्वा सात्यकिः संयुगे प्रभो
जगाम त्वरितो राजन्येन यातो धनंजयः २८
इति श्रीमहाभारते द्रोणपर्वणि नवनवतितमोऽध्यायः ९९

शततमोऽध्यायः

धृतराष्ट्र उवाच
किं तस्यां मम सेनायां नासन्केचिन्महारथाः
ये तथा सात्यकिं यान्तं नैवाघ्नन्नाप्यवारयन् १
एको हि समरे कर्म कृतवान्सत्यविक्रमः
शक्रतुल्यबलो युद्धे महेन्द्रो दानवेष्विव २
अथ वा शून्यमासीत्तद्येन यातः स सात्यकिः
एको वै बहुलाः सेनाः प्रमृद्नन्पुरुषर्षभः ३
कथं च युध्यमानानामपक्रान्तो महात्मनाम्
एको बहूनां शैनेयस्तन्ममाचक्ष्व सञ्जय ४
सञ्जय उवाच
राजन्सेनासमुद्योगो रथनागाश्वपत्तिमान्
तुमुलस्तव सैन्यानां युगान्तसदृशोऽभवत् ५
आह्निकेषु समूहेषु तव सैन्यस्य मानद
नास्ति लोके समः कश्चित्समूह इति मे मतिः ६
तत्र देवाः स्म भाषन्ते चारणाश्च समागताः
एतदन्ताः समूहा वै भविष्यन्ति महीतले ७
न चैव तादृशः कश्चिद्व्यूह आसीद्विशां पते
यादृग्जयद्रथवधे द्रोणेन विहितोऽभवत् ८
चण्डवाताभिपन्नानां समुद्राणामिव स्वनः
रणेऽभवद्बलौघानामन्योन्यमभिधावताम् ९
पार्थिवानां समेतानां बहून्यासन्नरोत्तम
त्वद्बले पाण्डवानां च सहस्राणि शतानि च १०
संरब्धानां प्रवीराणां समरे दृढकर्मणाम्

तत्रासीत्सुमहाञ्शब्दस्तुमुलो लोमहर्षणः ११
अथाक्रन्दद्भीमसेनो धृष्टद्युम्नश्च मारिष
नकुलः सहदेवश्च धर्मराजश्च पाण्डवः १२
आगच्छत प्रहरत बलवत्परिधावत
प्रविष्टावरिसेनां हि वीरौ माधवपाण्डवौ १३
यथा सुखेन गच्छेतां जयद्रथवधं प्रति
तथा प्रकुरुत क्षिप्रमिति सैन्यान्यचोदयत्
तयोरभावे कुरवः कृतार्थाः स्युर्वयं जिताः १४
ते यूयं सहिता भूत्वा तूर्णमेव बलार्णवम्
क्षोभयध्वं महावेगाः पवनाः सागरं यथा १५
भीमसेनेन ते राजन्पाञ्चाल्येन च चोदिताः
आजघ्नुः कौरवान्संख्ये त्यक्त्वासूनात्मनः प्रियान् १६
इच्छन्तो निधनं युद्धे शस्त्रैरुत्तमतेजसः
स्वर्गार्थं मित्रकार्यार्थं नाभ्यरक्षन्त जीवितम् १७
तथैव तावका राजन्प्रार्थयन्तो महद्यशः
आर्यां युद्धे मतिं कृत्वा युद्धायैवोपतस्थिरे १८
तस्मिंस्तु तुमुले युद्धे वर्तमाने महाभये
हत्वा सर्वाणि सैन्यानि प्रायात्सात्यकिरर्जुनम् १९
कवचानां प्रभास्तत्र सूर्यरश्मिविचित्रिताः
दृष्टीः संख्ये सैनिकानां प्रतिजघ्नुः समन्ततः २०
तथा प्रयतमानेषु पाण्डवेयेषु निर्भयः
दुर्योधनो महाराज व्यगाहत महद्बलम् २१
स संनिपातस्तुमुलस्तेषां तस्य च भारत
अभवत्सर्वसैन्यानामभावकरणो महान् २२
धृतराष्ट्र उवाच
तथा गतेषु सैन्येषु तथा कृच्छ्रगतः स्वयम्
कच्चिद्दुर्योधनः सूत नाकार्षीत्पृष्ठतो रणम् २३
एकस्य च बहूनां च संनिपातो महाहवे
विशेषतो नृपतिना विषमः प्रतिभाति मे २४
सोऽत्यन्तसुखसंवृद्धो लक्ष्म्या लोकस्य चेश्वरः

एको बहून्समासाद्य क्वचिन्नासीत्पराङ्मुखः २५
सञ्जय उवाच
राजन्संग्राममाश्चर्यं तव पुत्रस्य भारत
एकस्य च बहूनां च शृणुष्व गदतोऽद्भुतम् २६
दुर्योधनेन सहसा पाण्डवी पृतना रणे
नलिनी द्विरदेनेव समन्ताद्विप्रलोडिता २७
तथा सेनां कृतां दृष्ट्वा तव पुत्रेण कौरव
भीमसेनपुरोगास्तं पाञ्चालाः समुपाद्रवन् २८
स भीमसेनं दशभिर्माद्रीपुत्रौ त्रिभिस्त्रिभिः
विराटद्रुपदौ षड्भिः शतेन च शिखण्डिनम् २९
धृष्टद्युम्नं च विंशत्या धर्मपुत्रं च सप्तभिः
केकयान्दशभिर्विद्ध्वा द्रौपदेयांस्त्रिभिस्त्रिभिः ३०
शतशश्चापरान्योधान्सद्विपांश्च रथान्रणे
शरैरवचकर्तोग्रैः क्रुद्धोऽन्तक इव प्रजाः ३१
न संदधन्विमुञ्चन्वा मण्डलीकृतकार्मुकः
अदृश्यत रिपून्निघ्नञ्शिक्षयास्त्रबलेन च ३२
तस्य तान्निघ्नतः शत्रून्हेमपृष्ठं महद्धनुः
भल्लाभ्यां पाण्डवो ज्येष्ठस्त्रिधा चिच्छेद मारिष ३३
विव्याध चैनं बहुभिः सम्यगस्तैः शितैः शरैः
वर्माण्याशु समासाद्य ते भग्नाः क्षितिमाविशन् ३४
ततः प्रमुदिताः पार्थाः परिवव्रुर्युधिष्ठिरम्
यथा वृत्रवधे देवा मुदा शक्रं महर्षिभिः ३५
अथ दुर्योधनो राजा दृढमादाय कार्मुकम्
तिष्ठ तिष्ठेति राजानं ब्रुवन्पाण्डवमभ्ययात् ३६
तं तथा वादिनं राजंस्तव पुत्रं महारथम्
प्रत्युद्ययुः प्रमुदिताः पाञ्चाला जयगृद्धिनः ३७
तान्द्रोणः प्रतिजग्राह परीप्सन्युधि पाण्डवम्
चण्डवातोद्धुतान्मेघान्सजलानचलो यथा ३८
तत्र राजन्महानासीत्संग्रामो भूरिवर्धनः
रुद्रस्याक्रीडसंकाशः संहारः सर्वदेहिनाम् ३९

इति श्रीमहाभारते द्रोणपर्वणि शततमोऽध्यायः १००

## एकाधिकशततमोऽध्यायः

सञ्जय उवाच
अपराह्णे महाराज संग्रामः समपद्यत
पर्जन्यसमनिर्घोषः पुनर्द्रोणस्य सोमकैः १
शोणाश्वं रथमास्थाय नरवीरः समाहितः
समरेऽभ्यद्रवत्पाण्डूञ्जवमास्थाय मध्यमम् २
तव प्रियहिते युक्तो महेष्वासो महाबलः
चित्रपुङ्खैः शितैर्बाणैः कलशोत्तमसंभवः ३
वरान्वरान्हि योधानां विचिन्वन्निव भारत
अक्रीडत रणे राजन्भारद्वाजः प्रतापवान् ४
तमभ्ययाद्बृहत्क्षत्रः केकयानां महारथः
भ्रातृणां वीरपञ्चानां ज्येष्ठः समरकर्कशः ५
विमुञ्चन्विशिखांस्तीक्ष्णानाचार्यं छादयन्भृशम्
महामेघो यथा वर्षं विमुञ्चन्गन्धमादने ६
तस्य द्रोणो महाराज स्वर्णपुङ्खाञ्शिलाशितान्
प्रेषयामास संक्रुद्धः सायकान्दश सप्त च ७
तांस्तु द्रोणधनुर्मुक्तान्घोरानाशीविषोपमान्
एकैकं दशभिर्बाणैर्युधि चिच्छेद हृष्टवत् ८
तस्य तल्लाघवं दृष्ट्वा प्रहसन्द्विजसत्तमः
प्रेषयामास विशिखानष्टौ संनतपर्वणः ९
तान्दृष्ट्वा पततः शीघ्रं द्रोणचापच्युताञ्शरान्
अवारयच्छरैरेव तावद्भिर्निशितैर्दृढैः १०
ततोऽभवन्महाराज तव सैन्यस्य विस्मयः
बृहत्क्षत्रेण तत्कर्म कृतं दृष्ट्वा सुदुष्करम् ११
ततो द्रोणो महाराज केकयं वै विशेषयन्
प्रादुश्चक्रे रणे दिव्यं ब्राह्ममस्त्रं महातपाः १२
तदस्य राजन्कैकेयः प्रत्यवारयदच्युतः
ब्राह्मेणैव महाबाहुराहवे समुदीरितम् १३

प्रतिहन्य तदस्त्रं तु भारद्वाजस्य संयुगे
विव्याध ब्राह्मणं षष्ट्या स्वर्णपुङ्खैः शिलाशितैः १४
तं द्रोणो द्विपदां श्रेष्ठो नाराचेन समर्पयत्
स तस्य कवचं भित्त्वा प्राविशद्धरणीतलम् १५
कृष्णसर्पो यथा मुक्तो वल्मीकं नृपसत्तम
तथाभ्यगान्महीं बाणो भित्त्वा कैकेयमाहवे १६
सोऽतिविद्धो महाराज द्रोणेनास्त्रविदा भृशम्
क्रोधेन महताविष्टो व्यावृत्य नयने शुभे १७
द्रोणं विव्याध सप्तत्या स्वर्णपुङ्खैः शिलाशितैः
सारथिं चास्य भल्लेन बाह्वोरुरसि चार्पयत् १८
द्रोणस्तु बहुधा विद्धो बृहत्क्षत्रेण मारिष
असृजद्विशिखांस्तीक्ष्णान्केकयस्य रथं प्रति १९
व्याकुलीकृत्य तं द्रोणो बृहत्क्षत्रं महारथम्
व्यसृजत्सायकं तीक्ष्णं केकयं प्रति भारत २०
स गाढविद्धस्तेनाशु महाराज स्तनान्तरे
रथात्पुरुषशार्दूलः संभिन्नहृदयोऽपतत् २१
बृहत्क्षत्रे हते राजन्केकयानां महारथे
शैशुपालि सुसंक्रुद्धो यन्तारमिदमब्रवीत् २२
सारथे याहि यत्रैष द्रोणस्तिष्ठति दंशितः
विनिघ्नन्केकयान्सर्वान्पाञ्चालानां च वाहिनीम् २३
तस्य तद्वचनं श्रुत्वा सारथी रथिनां वरम्
द्रोणाय प्रापयामास काम्बोजैर्जवनैर्हयैः २४
धृष्टकेतुश्च चेदीनामृषभोऽतिबलोदितः
सहसा प्रापतद्द्रोणं पतङ्ग इव पावकम् २५
सोऽभ्यविध्यत्ततो द्रोणं षष्ट्या साश्वरथध्वजम्
पुनश्चान्यैः शरैस्तीक्ष्णैः सुप्तं व्याघ्रं तुदन्निव २६
तस्य द्रोणो धनुर्मध्ये क्षुरप्रेण शितेन ह
चिच्छेद राज्ञो बलिनो यतमानस्य संयुगे २७
अथान्यद्धनुरादाय शैशुपालिर्महारथः
विव्याध सायकैर्द्रोणं पुनः सुनिशितैर्दृढैः २८

तस्य द्रोणो हयान्हत्वा सारथिं च महाबलः
अथैनं पञ्चविंशत्या सायकानां समार्पयत् २९
विरथो विधनुष्कश्च चेदिराजोऽपि संयुगे
गदां चिक्षेप संक्रुद्धो भारद्वाजरथं प्रति ३०
तामापतन्तीं सहसा घोररूपां भयावहाम्
अश्मसारमयीं गुर्वीं तपनीयविभूषिताम्
शरैरनेकसाहस्रैर्भारद्वाजो न्यपातयत् ३१
सा पपात गदा भूमौ भारद्वाजेन सादिता
रक्त माल्याम्बरधरा तारेव नभसस्तलात् ३२
गदां विनिहतां दृष्ट्वा धृष्टकेतुरमर्षणः
तोमरं न्यसृजत्तूर्णं शक्तिं च कनकोज्ज्वलाम् ३३
तोमरं तु त्रिभिर्बाणैर्द्रोणश्छित्त्वा महामृधे
शक्तिं चिच्छेद सहसा कृतहस्तो महाबलः ३४
ततोऽस्य विशिखं तीक्ष्णं वधार्थं वधकाङ्क्षिणः
प्रेषयामास समरे भारद्वाजः प्रतापवान् ३५
स तस्य कवचं भित्त्वा हृदयं चामितौजसः
अभ्यगाद्धरणीं बाणो हंसः पद्मसरो यथा ३६
पतंगं हि ग्रसेच्चाषो यथा राजन्बुभुक्षितः
तथा द्रोणोऽग्रसच्छूरो धृष्टकेतुं महामृधे ३७
निहते चेदिराजे तु तत्खण्डं पित्र्यमाविशत्
अमर्षवशमापन्नः पुत्रोऽस्य परमास्त्रवित् ३८
तमपि प्रहसन्द्रोणः शरैर्निन्ये यमक्षयम्
महाव्याघ्रो महारण्ये मृगशावं यथा बली ३९
तेषु प्रक्षीयमाणेषु पाण्डवेयेषु भारत
जरासंधसुतो वीरः स्वयं द्रोणमुपाद्रवत् ४०
स तु द्रोणं महाराज छादयन्सायकैः शितैः
अदृश्यमकरोत्तूर्णं जलदो भास्करं यथा ४१
तस्य तल्लाघवं दृष्ट्वा द्रोणः क्षत्रियमर्दनः
व्यसृजत्सायकांस्तूर्णं शतशोऽथ सहस्रशः ४२
छादयित्वा रणे द्रोणो रथस्थं रथिनां वरम्

जारासंधिमथो जघ्ने मिषतां सर्वधन्विनाम् ४३
यो यः स्म लीयते द्रोणं तं तं द्रोणोऽन्तकोपमः
आदत्त सर्वभूतानि प्राप्ते काले यथान्तकः ४४
ततो द्रोणो महेष्वासो नाम विश्राव्य संयुगे
शरैरनेकसाहसैः पाण्डवेयान्व्यमोहयत् ४५
ततो द्रोणाङ्किता बाणाः स्वर्णपुङ्खाः शिलाशिताः
नरान्नागान्हयांश्चैव निजघ्नुः सर्वतो रणे ४६
ते वध्यमाना द्रोणेन शक्रेणेव महासुराः
समकम्पन्त पाञ्चाला गावः शीतार्दिता इव ४७
ततो निष्टानको घोरः पाण्डवानामजायत
द्रोणेन वध्यमानेषु सैन्येषु भरतर्षभ ४८
मोहिताः शरवर्षेण भारद्वाजस्य संयुगे
ऊरुग्राहगृहीता हि पाञ्चालानां महारथाः ४९
चेदयश्च महाराज सृञ्जयाः सोमकास्तथा
अभ्यद्रवन्त संहृष्टा भारद्वाजं युयुत्सया ५०
हत द्रोणं हत द्रोणमिति ते द्रोणमभ्ययुः
यतन्तः पुरुषव्याघ्राः सर्वशक्त्या महाद्युतिम्
निनीषन्तो रणे द्रोणं यमस्य सदनं प्रति ५१
यतमानांस्तु तान्वीरान्भारद्वाजः शिलीमुखैः
यमाय प्रेषयामास चेदिमुख्यान्विशेषतः ५२
तेषु प्रक्षीयमाणेषु चेदिमुख्येषु भारत
पाञ्चालाः समकम्पन्त द्रोणसायकपीडिताः ५३
प्राक्रोशन्भीमसेनं ते धृष्टद्युम्नरथं प्रति
दृष्ट्वा द्रोणस्य कर्माणि तथारूपाणि मारिष ५४
ब्राह्मणेन तपो नूनं चरितं दुश्चरं महत्
तथा हि युधि विक्रान्तो दहति क्षत्रियर्षभान् ५५
धर्मो युद्धं क्षत्रियस्य ब्राह्मणस्य परं तपः
तपस्वी कृतविद्यश्च प्रेक्षितेनापि निर्दहेत् ५६
द्रोणास्त्रमग्निसंस्पर्शं प्रविष्टाः क्षत्रियर्षभाः
बहवो दुस्तरं घोरं यत्रादह्यन्त भारत ५७

यथाबलं यथोत्साहं यथासत्त्वं महाद्युतिः
मोहयन्सर्वभूतानि द्रोणो हन्ति बलानि नः ५८
तेषां तद्वचनं श्रुत्वा क्षत्रधर्मा व्यवस्थितः
अर्धचन्द्रेण चिच्छेद द्रोणस्य सशरं धनुः ५९
स संरब्धतरो भूत्वा द्रोणः क्षत्रियमर्दनः
अन्यत्कार्मुकमादाय भास्वरं वेगवत्तरम् ६०
तत्राधाय शरं तीक्ष्णं भारघ्नं विमलं दृढम्
आकर्णपूर्णमाचार्यो बलवानभ्यवासृजत् ६१
स हत्वा क्षत्रधर्माणं जगाम धरणीतलम्
स भिन्नहृदयो वाहादपतन्मेदिनीतले ६२
ततः सैन्यान्यकम्पन्त धृष्टद्युम्नसुते हते
अथ द्रोणं समारोहच्चेकितानो महारथः ६३
स द्रोणं दशभिर्बाणैः प्रत्यविध्यत्स्तनान्तरे
चतुर्भिः सारथिं चास्य चतुर्भिश्चतुरो हयान् ६४
तस्याचार्यः षोडशभिरविध्यद्दक्षिणं भुजम्
ध्वजं षोडशभिर्बाणैर्यन्तारं चास्य सप्तभिः ६५
तस्य सूते हते तेऽश्वा रथमादाय विद्रुताः
समरे शरसंवीता भारद्वाजेन मारिष ६६
चेकितानरथं दृष्ट्वा विद्रुतं हतसारथिम्
पाञ्चालान्पाण्डवांश्चैव महद्भयमथाविशत् ६७
तान्समेतान्रणे शूरांश्चेदिपाञ्चालसृञ्जयान्
समन्ताद्द्रावयन्द्रोणो बह्वशोभत मारिष ६८
आकर्णपलितः श्यामो वयसाशीतिकात्परः
रणे पर्यचरद्द्रोणो वृद्धः षोडशवर्षवत् ६९
अथ द्रोणं महाराज विचरन्तमभीतवत्
वज्रहस्तममन्यन्त शत्रवः शत्रुसूदनम् ७०
ततोऽब्रवीन्महाराज द्रुपदो बुद्धिमान्नृप
लुब्धोऽय क्षत्रियान्हन्ति व्याघ्रः क्षुद्रमृगानिव ७१
कृच्छ्रान्दुर्योधनो लोकान्पापः प्राप्स्यति दुर्मतिः
यस्य लोभाद्विनिहताः समरे क्षत्रियर्षभाः ७२

शतशः शेरते भूमौ निकृत्ता गोवृषा इव
रुधिरेण परीताङ्गाः श्वसृगालादनीकृताः ७३
एवमुक्त्वा महाराज द्रुपदोऽक्षौहिणीपतिः
पुरस्कृत्य रणे पार्थान्द्रोणमभ्यद्रवद्द्रुतम् ७४
इति श्रीमहाभारते द्रोणपर्वणि एकाधिकशततमोऽध्यायः १०१

## द्व्यधिकशततमोऽध्यायः

सञ्जय उवाच
व्यूहेष्वालोड्यमानेषु पाण्डवानां ततस्ततः
सुदूरमन्वयुः पार्थाः पाञ्चालाः सह सोमकैः १
वर्तमाने तथा रौद्रे संग्रामे लोमहर्षणे
प्रक्षये जगतस्तीव्रे युगान्त इव भारत २
द्रोणे युधि पराक्रान्ते नर्दमाने मुहुर्मुहुः
पाञ्चालेषु च क्षीणेषु वध्यमानेषु पाण्डुषु ३
नापश्यच्छरणं किंचिद्धर्मराजो युधिष्ठिरः
चिन्तयामास राजेन्द्र कथमेतद्भविष्यति ४
तत्रावेक्ष्य दिशः सर्वाः सव्यसाचिदिदृक्षया
युधिष्ठिरो ददर्शाथ नैव पार्थं न माधवम् ५
सोऽपश्यन्नरशार्दूलं वानरर्षभलक्षणम्
गाण्डीवस्य च निर्घोषमशृण्वन्व्यथितेन्द्रियः ६
अपश्यन्सात्यकिं चापि वृष्णीनां प्रवरं रथम्
चिन्तयाभिपरीताङ्गो धर्मराजो युधिष्ठिरः
नाध्यगच्छत्तदा शान्तिं तावपश्यन्नरर्षभौ ७
लोकोपक्रोशभीरुत्वाद्धर्मराजो महायशाः
अचिन्तयन्महाबाहुः शैनेयस्य रथं प्रति ८
पदवीं प्रेषितश्चैव फल्गुनस्य मया रणे
शैनेयः सात्यकिः सत्यो मित्राणामभयंकरः ९
तदिदं ह्येकमेवासीद्द्विधा जातं ममाद्य वै
सात्यकिश्च हि मे ज्ञेयः पाण्डवश्च धनंजयः १०
सात्यकिं प्रेषयित्वा तु पाण्डवस्य पदानुगम्

सात्वतस्यापि कं युद्धे प्रेषयिष्ये पदानुगम् ११
करिष्यामि प्रयत्नेन भ्रातुरन्वेषणं यदि
युयुधानमनन्विष्य लोको मां गर्हयिष्यति १२
भ्रातुरन्वेषणं कृत्वा धर्मराजो युधिष्ठिरः
परित्यजति वार्ष्णेयं सात्यकिं सत्यविक्रमम् १३
लोकापवादभीरुत्वात्सोऽहं पार्थं वृकोदरम्
पदवीं प्रेषयिष्यामि माधवस्य महात्मनः १४
यथैव च मम प्रीतिरर्जुने शत्रुसूदने
तथैव वृष्णिवीरेऽपि सात्वते युद्धदुर्मदे १५
अतिभारे नियुक्तश्च मया शैनेयनन्दनः
स तु मित्रोपरोधेन गौरवाच्च महाबलः
प्रविष्टो भारतीं सेनां मकरः सागरं यथा १६
असौ हि श्रूयते शब्दः शूराणामनिवर्तिनाम्
मिथः संयुध्यमानानां वृष्णिवीरेण धीमता १७
प्राप्तकालं सुबलवन्निश्चित्य बहुधा हि मे
तत्रैव पाण्डवेयस्य भीमसेनस्य धन्विनः
गमनं रोचते मह्यं यत्र यातौ महारथौ १८
न चाप्यसह्यं भीमस्य विद्यते भुवि किंचन
शक्तो ह्येष रणे यत्तान्पृथिव्यां सर्वधन्विनः
स्वबाहुबलमास्थाय प्रतिव्यूहितुमञ्जसा १९
यस्य बाहुबलं सर्वे समाश्रित्य महात्मनः
वनवासान्निवृत्ताः स्म न च युद्धेषु निर्जिताः २०
इतो गते भीमसेने सात्वतं प्रति पाण्डवे
सनाथौ भवितारौ हि युधि सात्वतफल्गुनौ २१
कामं त्वशोचनीयौ तौ रणे सात्वतफल्गुनौ
रक्षितौ वासुदेवेन स्वयं चास्त्रविशारदौ २२
अवश्यं तु मया कार्यमात्मनः शोकनाशनम्
तस्माद्भीमं नियोक्ष्यामि सात्वतस्य पदानुगम्
ततः प्रतिकृतं मन्ये विधानं सात्यकिं प्रति २३
एवं निश्चित्य मनसा धर्मपुत्रो युधिष्ठिरः

यन्तारमब्रवीद्राजन्भीमं प्रति नयस्व माम् २४
धर्मराजवचः श्रुत्वा सारथिर्हयकोविदः
रथं हेमपरिष्कारं भीमान्तिकमुपानयत् २५
भीमसेनमनुप्राप्य प्राप्तकालमनुस्मरन्
कश्मलं प्राविशद्राजा बहु तत्र समादिशन् २६
यः सदेवान्सगन्धर्वान्दैत्यांश्चैकरथोऽजयत्
तस्य लक्ष्म न पश्यामि भीमसेनानुजस्य ते २७
ततोऽब्रवीद्धर्मराजं भीमसेनस्तथागतम्
नैवाद्राक्षं न चाश्रौषं तव कश्मलमीदृशम् २८
पुरा हि दुःखदीर्णानां भवान्गतिरभूद्धि नः
उत्तिष्ठोत्तिष्ठ राजेन्द्र शाधि किं करवाणि ते २९
न ह्यसाध्यमकार्यं वा विद्यते मम मानद
आज्ञापय कुरुश्रेष्ठ मा च शोके मनः कृथाः ३०
तमब्रवीदश्रुपूर्णः कृष्णसर्प इव श्वसन्
भीमसेनमिदं वाक्यं प्रम्लानवदनो नृपः ३१
यथा शङ्खस्य निर्घोषः पाञ्चजन्यस्य श्रूयते
प्रेरितो वासुदेवेन संरब्धेन यशस्विना
नूनमद्य हतः शेते तव भ्राता धनंजयः ३२
तस्मिन्विनिहते नूनं युध्यतेऽसौ जनार्दनः
यस्य सत्त्ववतो वीर्यमुपजीवन्ति पाण्डवाः ३३
यं भयेष्वभिगच्छन्ति सहस्राक्षमिवामराः
स शूरः सैन्धवप्रेप्सुरन्वयाद्भारतीं चमूम् ३४
तस्य वै गमनं विद्मो भीम नावर्तनं पुनः
श्यामो युवा गुडाकेशो दर्शनीयो महाभुजः ३५
व्यूढोरस्को महास्कन्धो मत्तद्विरदविक्रमः
चकोरनेत्रस्ताम्राक्षो द्विषतामघवर्धनः ३६
तदिदं मम भद्रं ते शोकस्थानमरिंदम
अर्जुनार्थं महाबाहो सात्वतस्य च कारणात् ३७
वर्धते हविषेवाग्निरिध्यमानः पुनः पुनः
तस्य लक्ष्म न पश्यामि तेन विन्दामि कश्मलम् ३८

तं विद्धि पुरुषव्याघ्रं सात्वतं च महारथम्
स तं महारथं पश्चादनुयातस्तवानुजम्
तमपश्यन्महाबाहुमहं विन्दामि कश्मलम् ३९
तस्मात्कृष्णो रणे नूनं युध्यते युद्धकोविदः
यस्य वीर्यवतो वीर्यमुपजीवन्ति पाण्डवाः ४०
स तत्र गच्छ कौन्तेय यत्र यातो धनंजयः
सात्यकिश्च महावीर्यः कर्तव्यं यदि मन्यसे
वचनं मम धर्मज्ञ ज्येष्ठो भ्राता भवामि ते ४१
न तेऽजुनस्तथा ज्ञेयो ज्ञातव्यः सात्यकिर्यथा
चिकीर्षुर्मत्प्रियं पार्थ प्रयातः सव्यसाचिनः
पदवीं दुर्गमां घोरामगम्यामकृतात्मभिः ४२
भीमसेन उवाच
ब्रह्मेशानेन्द्रवरुणानवहद्यः पुरा रथः
तमास्थाय गतौ कृष्णौ न तयोर्विद्यते भयम् ४३
आज्ञां तु शिरसा बिभ्रदेष गच्छामि मा शुचः
समेत्य तान्नरव्याघ्रांस्तव दास्यामि संविदम् ४४
सञ्जय उवाच
एतावदुक्त्वा प्रययौ परिदाय युधिष्ठिरम्
धृष्टद्युनाय बलवान्सुहृद्भ्यश्च पुनः पुनः
धृष्टद्युम्नं चेदमाह भीमसेनो महाबलः ४५
विदितं ते महाबाहो यथा द्रोणो महारथः
ग्रहणे धर्मराजस्य सर्वोपायेन वर्तते ४६
न च मे गमने कृत्यं तादृक्पार्षत विद्यते
यादृशं रक्षणे राज्ञः कार्यमात्ययिकं हि नः ४७
एवमुक्तोऽस्मि पार्थेन प्रतिवक्तुं स्म नोत्सहे
प्रयास्ये तत्र यत्रासौ मुमूर्षुः सैन्धवः स्थितः
धर्मराजस्य वचने स्थातव्यमविशङ्कया ४८
सोऽद्य यत्तो रणे पार्थं परिरक्ष युधिष्ठिरम्
एतद्धि सर्वकार्याणां परमं कृत्यमाहवे ४९
तमब्रवीन्महाराज धृष्टद्युम्नो वृकोदरम्

ईप्सितेन महाबाहो गच्छ पार्थाविचारयन् ५०
नाहत्वा समरे द्रोणो धृष्टद्युम्नं कथंचन
निग्रहं धर्मराजस्य प्रकरिष्यति संयुगे ५१
ततो निक्षिप्य राजानं धृष्टद्युम्नाय पाण्डवः
अभिवाद्य गुरुं ज्येष्ठं प्रययौ यत्र फल्गुनः ५२
परिष्वक्तस्तु कौन्तेयो धर्मराजेन भारत
आघ्रातश्च तथा मूर्ध्नि श्रावितश्चाशिषः शुभाः ५३
भीमसेनो महाबाहुः कवची शुभकुण्डली
साङ्गदः सतनुत्राणः सशरी रथिनां वरः ५४
तस्य कार्ष्णायसं वर्म हेमचित्रं महर्द्धिमत्
विबभौ पर्वतश्लिष्टः सविद्युदिव तोयदः ५५
पीतरक्तासितसितैर्वासोभिश्च सुवेष्टितः
कण्ठत्राणेन च बभौ सेन्द्रायुध इवाम्बुदः ५६
प्रयाते भीमसेने तु तव सैन्यं युयुत्सया
पाञ्चजन्यरवो घोरः पुनरासीद्विशां पते ५७
तं श्रुत्वा निनदं घोरं त्रैलोक्यत्रासनं महत्
पुनर्भीमं महाबाहुर्धर्मपुत्रोऽभ्यभाषत ५८
एष वृष्णिप्रवीरेण ध्मातः सलिलजो भृशम्
पृथिवीं चान्तरिक्षं च विनादयति शङ्खराट् ५९
नूनं व्यसनमापन्ने सुमहत्सव्यसाचिनि
कुरुभिर्युध्यते सार्धं सर्वैश्चक्रगदाधरः ६०
नूनमार्या महत्कुन्ती पापमद्य निदर्शनम्
द्रौपदी च सुभद्रा च पश्यन्ति सह बन्धुभिः ६१
स भीमस्त्वरया युक्तो याहि यत्र धनंजयः
मुह्यन्तीव हि मे सर्वा धनंजयदिदृक्षया
दिशः सप्रदिशः पार्थ सात्वतस्य च कारणात् ६२
गच्छ गच्छेति च पुनर्भीमसेनमभाषत
भृशं स प्रहितो भ्रात्रा भ्राता भ्रातुः प्रियंकरः
आहत्य दुन्दुभिं भीमः शङ्खं प्रध्माय चासकृत् ६३
विनद्य सिंहनादं च ज्यां विकर्षन्पुनः पुनः

दर्शयन्घोरमात्मानममित्रान्सहसाभ्ययात् ६४
तमूहुर्जवना दान्ता विकुर्वाणा हयोत्तमाः
विशोकेनाभिसंयत्ता मनोमारुतरंहसः ६५
आरुजन्विरुजन्पार्थो ज्यां विकर्षंश्च पाणिना
सोऽवकर्षन्विकर्षंश्च सेनाग्रं समलोडयत् ६६
तं प्रयान्तं महाबाहुं पाञ्चालाः सहसोमकाः
पृष्ठतोऽनुययुः शूरा मघवन्तमिवामराः ६७
तं ससेना महाराज सोदर्याः पर्यवारयन्
दुःशलश्चित्रसेनश्च कुण्डभेदी विविंशतिः ६८
दुर्मुखो दुःसहश्चैव विकर्णश्च शलस्तथा
विन्दानुविन्दौ सुमुखो दीर्घबाहुः सुदर्शनः ६९
वृन्दारकः सुहस्तश्च सुषेणो दीर्घलोचनः
अभयो रौद्रकर्मा च सुवर्मा दुर्विमोचनः ७०
विविधै रथिनां श्रेष्ठाः सह सैन्यैः सहानुगैः
संयत्ताः समरे शूरा भीमसेनमुपाद्रवन् ७१
तान्समीक्ष्य तु कौन्तेयो भीमसेनः पराक्रमी
अभ्यवर्तत वेगेन सिंहः क्षुद्रमृगानिव ७२
ते महास्त्राणि दिव्यानि तत्र वीरा अदर्शयन्
वारयन्तः शरैर्भीमं मेघाः सूर्यमिवोदितम् ७३
स तानतीत्य वेगेन द्रोणानीकमुपाद्रवत्
अग्रतश्च गजानीकं शरवर्षैरवाकिरत् ७४
सोऽचिरेणैव कालेन तद्गजानीकमाशुगैः
दिशः सर्वाः समभ्यस्य व्यधमत्पवनात्मजः ७५
त्रासिताः शरभस्येव गर्जितेन वने मृगाः
प्राद्रवन्द्विरदाः सर्वे नदन्तो भैरवान्रवान् ७६
पुनश्चातीत्य वेगेन द्रोणानीकमुपाद्रवत्
तमवारयदाचार्यो वेलेवोद्वृत्तमर्णवम् ७७
ललाटेऽताडयच्चैनं नाराचेन स्मयन्निव
ऊर्ध्वरश्मिरिवादित्यो विबभौ तत्र पाण्डवः ७८
स मन्यमानस्त्वाचार्यो ममायं फल्गुनो यथा

भीमः करिष्यते पूजामित्युवाच वृकोदरम् ७९
भीमसेन न ते शक्यं प्रवेष्टुमरिवाहिनीम्
मामनिर्जित्य समरे शत्रुमध्ये महाबल ८०
यदि ते सोऽनुजः कृष्णः प्रविष्टोऽनुमते मम
अनीकं न तु शक्यं भोः प्रवेष्टुमिह वै त्वया ८१
अथ भीमस्तु तच्छ्रुत्वा गुरोर्वाक्यमपेतभीः
क्रुद्धः प्रोवाच वै द्रोणं रक्तताम्रेक्षणः श्वसन् ८२
तवार्जुनो नानुमते ब्रह्मबन्धो रणाजिरम्
प्रविष्टः स हि दुर्धर्षः शक्रस्यापि विशेद्बलम् ८३
येन वै परमां पूजां कुर्वता मानितो ह्यसि
नार्जुनोऽह घृणी द्रोण भीमसेनोऽस्मि ते रिपुः ८४
पिता नस्त्वं गुरुर्बन्धुस्तथा पुत्रा हि ते वयम्
इति मन्यामहे सर्वे भवन्तं प्रणताः स्थिताः ८५
अद्य तद्विपरीतं ते वदतोऽस्मासु दृश्यते
यदि शत्रुं त्वमात्मानं मन्यसे तत्तथास्त्विह
एष ते सदृशं शत्रोः कर्म भीमः करोम्यहम् ८६
अथोद्भ्राम्य गदां भीमः कालदण्डमिवान्तकः
द्रोणायावसृजद्राजन्स रथादवपुप्लुवे ८७
साश्वसूतध्वजं यानं द्रोणस्यापोथयत्तदा
प्रामृद्नाच्च बहून्योधान्वायुर्वृक्षानिवौजसा ८८
तं पुनः परिवव्रुस्ते तव पुत्रा रथोत्तमम्
अन्यं च रथमास्थाय द्रोणः प्रहरतां वरः ८९
ततः क्रुद्धो महाराज भीमसेनः पराक्रमी
अग्रतः स्यन्दनानीकं शरवर्षैरवाकिरत् ९०
ते वध्यमानाः समरे तव पुत्रा महारथाः
भीमं भीमबलं युद्धेऽयोधयंस्तु जयैषिणः ९१
ततो दुःशासनः क्रुद्धो रथशक्तिं समाक्षिपत्
सर्वपारशवीं तीक्ष्णां जिघांसुः पाण्डुनन्दनम् ९२
आपतन्तीं महाशक्तिं तव पुत्रप्रचोदिताम्
द्विधा चिच्छेद तां भीमस्तदद्भुतमिवाभवत् ९३

अथान्यैर्निशितैर्बाणैः संक्रुद्धः कुण्डभेदिनम्
सुषेणं दीर्घनेत्रं च त्रिभिस्त्रीनवधीद्बली ९४
ततो वृन्दारकं वीरं कुरूणां कीर्तिवर्धनम्
पुत्राणां तव वीराणां युध्यतामवधीत्पुनः ९५
अभयं रौद्रकर्माणं दुर्विमोचनमेव च
त्रिभिस्त्रीनवधीद्भीमः पुनरेव सुतांस्तव ९६
वध्यमाना महाराज पुत्रास्तव बलीयसा
भीमं प्रहरतां श्रेष्ठं समन्तात्पर्यवारयन् ९७
विन्दानुविन्दौ सहितौ सुवर्माणं च ते सुतम्
प्रहसन्निव कौन्तेयः शरैर्निन्ये यमक्षयम् ९८
ततः सुदर्शनं वीरं पुत्रं ते भरतर्षभ
विव्याध समरे तूर्णं स पपात ममार च ९९
सोऽचिरेणैव कालेन तद्रथानीकमाशुगैः
दिशः सर्वाः समभ्यस्य व्यधमत्पाण्डुनन्दनः १००
ततो वै रथघोषेण गर्जितेन मृगा इव
वध्यमानाश्च समरे पुत्रास्तव विशां पते
प्राद्रवन्सरथाः सर्वे भीमसेनभयार्दिताः १०१
अनुयाय तु कौन्तेयः पुत्राणां ते महद्बलम्
विव्याध समरे राजन्कौरवेयान्समन्ततः १०२
वध्यमाना महाराज भीमसेनेन तावकः
त्यक्त्वा भीमं रणे यान्ति चोदयन्तो हयोत्तमान् १०३
तांस्तु निर्जित्य समरे भीमसेनो महाबलः
सिंहनादरवं चक्रे बाहुशब्दं च पाण्डवः १०४
तलशब्दं च सुमहत्कृत्वा भीमो महाबलः
व्यतीत्य रथिनश्चापि द्रोणानीकमुपाद्रवत् १०५
इति श्रीमहाभारते द्रोणपर्वणि द्व्यधिकशिततमोऽध्यायः १०२

त्र्यधिक शततमोऽध्यायः

सञ्जय उवाच
तमुत्तीर्णं रथानीकात्तमसो भास्करं यथा

दिधारयिषुराचार्यः शरवर्षैरवाकिरत् १
पिबन्निव शरौघांस्तान्द्रोणचापवरातिगान्
सोऽभ्यवर्तत सोदर्यान्मायया मोहयन्बलम् २
तं मृधे वेगमास्थाय परं परमधन्विनः
चोदितास्तव पुत्रैश्च सर्वतः पर्यवारयन् ३
स तथा संवृतो भीमः प्रहसन्निव भारत
उदयच्छद्गदां तेभ्यो घोरां तां सिंहवन्नदन्
अवासृजच्च वेगेन तेषु तान्प्रमथद्बली ४
सेन्द्राशनिरिवेन्द्रेण प्रविद्धा संहतात्मना
घोषेण महता राजन्पूरयित्वेव मेदिनीम्
ज्वलन्ती तेजसा भीमा त्रासयामास ते सुतान् ५
तां पतन्तीं महावेगां दृष्ट्वा तेजोभिसंवृताम्
प्राद्रवंस्तावकाः सर्वे नदन्तो भैरवान्रवान् ६
तं च शब्दमसंसह्यं तस्याः संलक्ष्य मारिष
प्रापतन्मनुजास्तत्र रथेभ्यो रथिनस्तदा ७
स तान्विद्राव्य कौन्तेयः संख्येऽमित्रान्दुरासदः
सुपर्ण इव वेगेन पक्षिराडत्यगाच्चमूम् ८
तथा तं विप्रकुर्वाणं रथयूथपयूथपम्
भारद्वाजो महाराज भीमसेनं समभ्ययात् ९
द्रोणस्तु समरे भीमं वारयित्वा शरोर्मिभिः
अकरोत्सहसा नादं पाण्डूनां भयमादधत् १०
तद्युद्धमासीत्सुमहद्घोरं देवासुरोपमम्
द्रोणस्य च महाराज भीमस्य च महात्मनः ११
यदा तु विशिखैस्तीक्ष्णैर्द्रोणचापविनिःसृतैः
वध्यन्ते समरे वीराः शतशोऽथ सहस्रशः १२
ततो रथादवप्लुत्य वेगमास्थाय पाण्डवः
निमील्य नयने राजन्पदातिर्द्रोणमभ्ययात् १३
यथा हि गोवृषो वर्षं प्रतिगृह्णाति लीलया
तथा भीमो नरव्याघ्रः शरवर्षं समग्रहीत् १४
स वध्यमानः समरे रथं द्रोणस्य मारिष

ईषायां पाणिना गृह्य प्रचिक्षेप महाबलः १५
द्रोणस्तु सत्वरो राजन्क्षिप्तो भीमेन संयुगे
रथमन्यं समास्थाय व्यूह द्वारमुपाययौ १६
तस्मिन्क्षणे तस्य यन्ता तूर्णमश्वानचोदयत्
भीमसेनस्य कौरव्य तदद्भुतमिवाभवत् १७
ततः स्वरथमास्थाय भीमसेनो महाबलः
अभ्यवर्तत वेगेन तव पुत्रस्य वाहिनीम् १८
स मृद्नन्क्षत्रियानाजौ वातो वृक्षानिवोद्धतः
अगच्छद्दारयन्सेनां सिन्धुवेगो नगानिव १९
भोजानीकं समासाद्य हार्दिक्येनाभिरक्षितम्
प्रमथ्य बहुधा राजन्भीमसेनः समभ्ययात् २०
संत्रासयन्ननीकानि तलशब्देन मारिष
अजयत्सर्वसैन्यानि शार्दूल इव गोवृषान् २१
भोजानीकमतिक्रम्य काम्बोजानां च वाहिनीम्
तथा म्लेच्छगणांश्चान्यान्बहून्युद्धविशारदान् २२
सात्यकिं चापि संप्रेक्ष्य युध्यमानं नरर्षभम्
रथेन यत्तः कौन्तेयो वेगेन प्रययौ तदा २३
भीमसेनो महाराज द्रष्टुकामो धनंजयम्
अतीत्य समरे योधांस्तावकान्पाण्डुनन्दनः २४
सोऽपश्यदर्जुनं तत्र युध्यमानं नरर्षभम्
सैन्धवस्य वधार्थं हि पराक्रान्तं पराक्रमी २५
अर्जुनं तत्र दृष्ट्वाथ चुक्रोश महतो रवान्
तं तु तस्य महानादं पार्थः शुश्राव नर्दतः २६
ततः पार्थो महानादं मुञ्चन्वै माधवश्च ह
अभ्ययातां महाराज नर्दन्तौ गोवृषाविव २७
वासुदेवार्जुनौ श्रुत्वा निनादं तस्य शुष्मिणः
पुनः पुनः प्रणदतां दिदृक्षन्तौ वृकोदरम् २८
भीमसेनरवं श्रुत्वा फल्गुनस्य च धन्विनः
अप्रीयत महाराज धर्मपुत्रो युधिष्ठिरः २९
विशोकश्चाभवद्राजा श्रुत्वा तं निनदं महत्

धनंजयस्य च रणे जयमाशास्तवान्विभुः ३०
तथा तु नर्दमाने वै भीमसेने रणोत्कटे
स्मितं कृत्वा महाबाहुर्धर्मपुत्रो युधिष्ठिरः ३१
हृद्गतं मनसा प्राह ध्यात्वा धर्मभृतां वरः
दत्ता भीम त्वया संवित्कृतं गुरुवचस्तथा ३२
न हि तेषां जयो युद्धे येषां द्वेष्टासि पाण्डव
दिष्ट्या जीवति संग्रामे सव्यसाची धनंजयः ३३
दिष्ट्या च कुशली वीरः सात्यकिः सत्यविक्रमः
दिष्ट्या शृणोमि गर्जन्तौ वासुदेवधनंजयौ ३४
येन शक्रं रणे जित्वा तर्पितो हव्यवाहनः
स हन्ता द्विषतां संख्ये दिष्ट्या जीवति फल्गुनः ३५
यस्य बाहुबलं सर्वे वयमाश्रित्य जीविताः
स हन्ता रिपुसैन्यानां दिष्ट्या जीवति फल्गुनः ३६
निवातकवचा येन देवैरपि सुदुर्जयाः
निर्जिता रथिनैकेन दिष्ट्या पार्थः स जीवति ३७
कौरवान्सहितान्सर्वान्गोग्रहार्थे समागतान्
योऽजयन्मत्स्यनगरे दिष्ट्या पार्थः स जीवति ३८
कालकेयसहस्राणि चतुर्दश महारणे
योऽवधीद्भुजवीर्येण दिष्ट्या पार्थः स जीवति ३९
गन्धर्वराजं बलिनं दुर्योधनकृतेन वै
जितवान्योऽस्त्रवीर्येण दिष्ट्या पार्थः स जीवति ४०
किरीटमाली बलवाञ्श्वेताश्वः कृष्णसारथिः
मम प्रियश्च सततं दिष्ट्या जीवति फल्गुनः ४१
पुत्रशोकाभिसंतप्तश्चिकीर्षुः कर्म दुष्करम्
जयद्रथवधान्वेषी प्रतिज्ञां कृतवान्हि यः
कच्चित्स सैन्धवं संख्ये हनिष्यति धनंजयः ४२
कच्चित्तीर्णप्रतिज्ञं हि वासुदेवेन रक्षितम्
अनस्तमित आदित्ये समेष्याम्यहमर्जुनम् ४३
कच्चित्सैन्धवको राजा दुर्योधनहिते रतः
नन्दयिष्यत्यमित्राणि फल्गुनेन निपातितः ४४

कच्चिद्दुर्योधनो राजा फल्गुनेन निपातितम्
दृष्ट्वा सैन्धवकं संख्ये शममस्मासु धास्यति ४५
दृष्ट्वा विनिहतान्भ्रातॄन्भीमसेनेन संयुगे
कच्चिद्दुर्योधनो मन्दः शममस्मासु धास्यति ४६
दृष्ट्वा चान्यान्बहून्योधान्पातितान्धरणीतले
कच्चिद्दुर्योधनो मन्दः पश्चात्तापं करिष्यति ४७
कच्चिद्भीष्मेण नो वैरमेकेनैव प्रशाम्यति
शेषस्य रक्षणार्थं च संधास्यति सुयोधनः ४८
एवं बहुविधं तस्य चिन्तयानस्य पार्थिव
कृपयाभिपरीतस्य घोरं युद्धमवर्तत ४९
इति श्रीमहाभारते द्रोणपर्वणि त्र्यधिकशततमोऽध्यायः १०३

## चतुरधिक शततमोऽध्यायः

धृतराष्ट्र उवाच
तथा तु नर्दमानं तं भीमसेनं महाबलम्
मेघस्तनितनिर्घोषं के वीराः पर्यवारयन् १
न हि पश्याम्यहं तं वै त्रिषु लोकेषु सञ्जय
क्रुद्धस्य भीमसेनस्य यस्तिष्ठेदग्रतो रणे २
गदामुद्यच्छमानस्य कालस्येव महामृधे
न हि पश्याम्यहं तात यस्तिष्ठेत रणाजिरे ३
रथं रथेन यो हन्यात्कुञ्जरं कुञ्जरेण च
कस्तस्य समरे स्थाता साक्षादपि शतक्रतुः ४
क्रुद्धस्य भीमसेनस्य मम पुत्राञ्जिघांसतः
दुर्योधनहिते युक्ताः समतिष्ठन्त केऽग्रतः ५
भीमसेनदवाग्नेस्तु मम पुत्रतृणोलपम्
प्रधक्ष्यतो रणमुखे के वीराः प्रमुखे स्थिताः ६
काल्यमानान्हि मे पुत्रान्भीमेनावेक्ष्य संयुगे
कालेनेव प्रजाः सर्वाः के भीमं पर्यवारयन् ७
भीमवह्नेः प्रदीप्तस्य मम पुत्रान्दिधक्षतः
के शूराः पर्यवर्तन्त तन्ममाचक्ष्व सञ्जय ८

सञ्जय उवाच
तथा तु नर्दमानं तं भीमसेनं महारथम्
तुमुलेनैव शब्देन कर्णोऽप्यभ्यपतद्बली ९
व्याक्षिपन्बलवच्चापमतिमात्रममर्षणः
कर्णस्तु युद्धमाकाङ्क्षन्दर्शयिष्यन्बलं बली १०
प्रावेपन्निव गात्राणि कर्णभीमसमागमे
रथिनां सादिनां चैव तयोः श्रुत्वा तलस्वनम् ११
भीमसेनस्य निनदं घोरं श्रुत्वा रणाजिरे
खं च भूमिं च संबद्धां मेनिरे क्षत्रियर्षभाः १२
पुनर्घोरेण नादेन पाण्डवस्य महात्मनः
समरे सर्वयोधानां धनूंष्यभ्यपतन्क्षितौ १३
वित्रस्तानि च सर्वाणि शकृन्मूत्रं प्रसुस्रुवुः
वाहनानि महाराज बभूवुर्विमनांसि च १४
प्रादुरासन्निमित्तानि घोराणि च बहूनि च
तस्मिंस्तु तुमुले राजन्भीमकर्णसमागमे १५
ततः कर्णस्तु विंशत्या शराणां भीममार्दयत्
विव्याध चास्य त्वरितः सूतं पञ्चभिराशुगैः १६
प्रहस्य भीमसेनस्तु कर्णं प्रत्यर्पयद्रणे
सायकानां चतुःषष्ट्या क्षिप्रकारी महाबलः १७
तस्य कर्णो महेष्वासः सायकांश्चतुरोऽक्षिपत्
असंप्राप्तांस्तु तान्भीमः सायकैर्नतपर्वभिः
चिच्छेद बहुधा राजन्दर्शयन्पाणिलाघवम् १८
तं कर्णश्छादयामास शरव्रातैरनेकशः
संछाद्यमानः कर्णेन बहुधा पाण्डुनन्दनः १९
चिच्छेद चापं कर्णस्य मुष्टिदेशे महारथः
विव्याध चैनं बहुभिः सायकैर्नतपर्वभिः २०
अथान्यद्धनुरादाय सज्यं कृत्वा च सूतजः
विव्याध समरे भीमं भीमकर्मा महारथः २१
तस्य भीमो भृशं क्रुद्धस्त्रीञ्शरान्नतपर्वणः
निचखानोरसि तदा सूतपुत्रस्य वेगितः २२

तैः कर्णोऽभ्राजत शरैरुरोर्मध्यगतैस्तदा
महीधर इवोदग्रस्त्रिशृङ्गो भरतर्षभ २३
सुस्राव चास्य रुधिरं विद्धस्य परमेषुभिः
धातुप्रस्यन्दिनः शैलाद्यथा गैरिकराजयः २४
किंचिद्विचलितः कर्णः सुप्रहाराभिपीडितः
ससायकं धनुः कृत्वा भीमं विव्याध मारिष
चिक्षेप च पुनर्बाणाञ्शतशोऽथ सहस्रशः २५
स छाद्यमानः सहसा कर्णेन दृढधन्विना
धनुर्ज्यामच्छिनत्तूर्णमुत्स्मयन्पाण्डुनन्दनः २६
सारथिं चास्य भल्लेन प्राहिणोद्यमसादनम्
वाहांश्च चतुरः संख्ये व्यसूंश्चक्रे महारथः २७
हताश्वात्तु रथात्कर्णः समाप्लुत्य विशां पते
स्यन्दनं वृषसेनस्य समारोहन्महारथः २८
निर्जित्य तु रणे कर्णं भीमसेनः प्रतापवान्
ननाद सुमहानादं पर्जन्यनिनदोपमम् २९
तस्य तं निनदं श्रुत्वा प्रहृष्टोऽभूद्युधिष्ठिरः
कर्णं च निर्जितं मत्वा भीमसेनेन भारत ३०
समन्ताच्छङ्खनिनदं पाण्डुसेनाकरोत्तदा
शत्रुसेनाध्वनिं श्रुत्वा तावका ह्यपि नानदन्
गाण्डीवं प्राक्षिपत्पार्थः कृष्णोऽप्यब्जमवादयत् ३१
तमन्तर्धाय निनदं ध्वनिर्भीमस्य नर्दतः
अश्रूयत महाराज सर्वसैन्येषु भारत ३२
ततो व्यायच्छतामस्त्रैः पृथक्पृथगरिंदमौ
मृदुपूर्वं च राधेयो दृढपूर्वं च पाण्डवः ३३
इति श्रीमहाभारते द्रोणपर्वणि चतुरधिकशततमोऽध्यायः १०४

## पञ्चाधिक शततमोऽध्यायः

सञ्जय उवाच
तस्मिन्विलुलिते सैन्ये सैन्धवायार्जुने गते
सात्वते भीमसेने च पुत्रस्ते द्रोणमभ्ययात्

त्वरन्नेकरथेनैव बहुकृत्यं विचिन्तयन् १
स रथस्तव पुत्रस्य त्वरया परया युतः
तूर्णमभ्यपतद्द्रोणं मनोमारुतवेगवान् २
उवाच चैनं पुत्रस्ते संरम्भाद्रक्तलोचनः
अर्जुनो भीमसेनश्च सात्यकिश्चापराजितः ३
विजित्य सर्वसैन्यानि सुमहान्ति महारथाः
संप्राप्ताः सिन्धुराजस्य समीपमरिकर्शनाः
व्यायच्छन्ति च तत्रापि सर्व एवापराजिताः ४
यदि तावद्रणे पार्थो व्यतिक्रान्तो महारथः
कथं सात्यकिभीमाभ्यां व्यतिक्रान्तोऽसि मानद ५
आश्चर्यभूतं लोकेऽस्मिन्समुद्रस्येव शोषणम्
निर्जयं तव विप्राग्र्य सात्वतेनार्जुनेन च ६
तथैव भीमसेनेन लोकः संवदते भृशम्
कथं द्रोणो जितः संख्ये धनुर्वेदस्य पारगः ७
नाश एव तु मे नूनं मन्दभाग्यस्य संयुगे
यत्र त्वां पुरुषव्याघ्रमतिक्रान्तास्त्रयो रथाः ८
एवं गते तु कृत्येऽस्मिन्ब्रूहि यत्ते विवक्षितम्
यद्गतं गतमेवेह शेषं चिन्तय मानद ९
यत्कृत्यं सिन्धुराजस्य प्राप्तकालमनन्तरम्
तद्ब्रवीतु भवान्क्षिप्रं साधु तत्संविधीयताम् १०
द्रोण उवाच
चिन्त्यं बहु महाराज कृत्यं यत्तत्र मे शृणु
त्रयो हि समतिक्रान्ताः पाण्डवानां महारथाः
यावदेवं भयं पश्चात्तावदेषां पुरःसरम् ११
तद्गरीयस्तरं मन्ये यत्र कृष्णधनंजयौ
सा पुरस्ताच्च पश्चाच्च गृहीता भारती चमूः १२
तत्र कृत्यमहं मन्ये सैन्धवस्याभिरक्षणम्
स नो रक्ष्यतमस्तात क्रुद्धाद्भीतो धनंजयात् १३
गतौ हि सैन्धवं वीरौ युयुधानवृकोदरौ
संप्राप्तं तदिदं द्यूतं यत्तच्छकुनिबुद्धिजम् १४

न सभायां जयो वृत्तो नापि तत्र पराजयः
इह नो ग्लहमानानामद्य तात जयाजयौ १५
यान्स्म तान्ग्लहते घोराञ्शकुनिः कुरुसंसदि
अक्षान्संमन्यमानः स प्राक्शरास्ते दुरासदाः १६
यत्र ते बहवस्तात कुरवः पर्यवस्थिताः
सेनां दुरोदरं विद्धि शरानक्षान्विशां पते १७
ग्लहं च सैन्धवं राजन्नत्र द्यूतस्य निश्चयः
सैन्धवे हि महाद्यूतं समासक्तं परैः सह १८
अत्र सर्वे महाराज त्यक्त्वा जीवितमात्मनः
सैन्धवस्य रणे रक्षां विधिवत्कर्तुमर्हथ
तत्र नो ग्लहमानानां ध्रुवौ तात जयाजयौ १९
यत्र ते परमेष्वासा यत्ता रक्षन्ति सैन्धवम्
तत्र याहि स्वयं शीघ्रं तांश्च रक्षस्व रक्षिणः २०
इहैव त्वहमासिष्ये प्रेषयिष्यामि चापरान्
निरोत्स्यामि च पाञ्चालान्सहितान्पाण्डुसृञ्जयैः २१
ततो दुर्योधनः प्रायात्तूर्णमाचार्यशासनात्
उद्यम्यात्मानमुग्राय कर्मणे सपदानुगः २२
चक्ररक्षौ तु पाञ्चाल्यौ युधामन्यूत्तमौजसौ
बाह्येन सेनामभ्येत्य जग्मतुः सव्यसाचिनम् २३
तौ हि पूर्वं महाराज वारितौ कृतवर्मणा
प्रविष्टे त्वर्जुने राजंस्तव सैन्यं युयुत्सया २४
ताभ्यां दुर्योधनः सार्धमगच्छद्युद्धमुत्तमम्
त्वरितस्त्वरमाणाभ्यां भ्रातृभ्यां भारतो बली २५
तावभिद्रवतामेनमुभावुद्यतकार्मुकौ
महारथसमाख्यातौ क्षत्रियप्रवरौ युधि २६
युधामन्युस्तु संक्रुद्धः शरांस्त्रिंशतमायसान्
व्यसृजत्तव पुत्रस्य त्वरमाणः स्तनान्तरे २७
दुर्योधनोऽपि राजेन्द्र पाञ्चाल्यस्योत्तमौजसः
जघान चतुरश्चाश्वानुभौ च पार्ष्णिसारथी २८
उत्तमौजा हताश्वस्तु हतसूतश्च संयुगे

आरुरोह रथं भ्रातुर्युधामन्योरभित्वरन् २९
स रथं प्राप्य तं भ्रातुर्दुर्योधनहयाञ्शरैः
बहुभिस्ताडयामास ते हताः प्रापतन्भुवि ३०
हयेषु पतितेष्वस्य चिच्छेद परमेषुणा
युधामन्युर्धनुः शीघ्रं शरावापं च संयुगे ३१
हताश्वसूतात्स रथादवप्लुत्य महारथः
गदामादाय ते पुत्रः पाञ्चाल्यावभ्यधावत ३२
तमापतन्तं संप्रेक्ष्य क्रुद्धं परपुरंजयम्
अवप्लुतौ रथोपस्थाद्युधामन्यूत्तमौजसौ ३३
ततः स हेमचित्रं तं स्यन्दनप्रवरं गदी
गदया पोथयामास साश्वसूतध्वजं रणे ३४
हत्वा चैनं स पुत्रस्ते हताश्वो हतसारथिः
मद्रराजरथं तूर्णमारुरोह परंतपः ३५
पाञ्चालानां तु मुख्यौ तौ राजपुत्रौ महाबलौ
रथमन्यं समारुह्य धनंजयमभीयतुः ३६
इति श्रीमहाभारते द्रोणपर्वणि पञ्चाधिकशततमोऽध्यायः १०५

षडधिक शततमोऽध्यायः

धृतराष्ट्र उवाच
यौ तौ कर्णश्च भीमश्च संप्रयुद्धौ महाबलौ
अर्जुनस्य रथोपान्ते कीदृशः सोऽभवद्रणः १
पूर्वं हि निर्जितः कर्णो भीमसेनेन संयुगे
कथं भूयस्तु राधेयो भीममागान्महारथः २
भीमो वा सूततनयं प्रत्युद्यातः कथं रणे
महारथंसमाख्यातं पृथिव्यां प्रवरं रथम् ३
भीष्मद्रोणावतिक्रम्य धर्मपुत्रो युधिष्ठिरः
नान्यतो भयमादत्त विना कर्णं धनुर्धरम् ४
भयान्न शेते सततं चिन्तयन्वै महारथम्
तं कथं सूतपुत्रं हि भीमोऽयुध्यत संयुगे ५
ब्रह्मण्यं वीर्यसंपन्नं समरेष्वनिवर्तिनम्

कथं कर्णं युधां श्रेष्ठं भीमोऽयुध्यत संयुगे ६
यौ तौ समीयतुर्वीरावर्जुनस्य रथं प्रति
कथं नु तावयुध्येतां सूतपुत्रवृकोदरौ ७
भ्रातृत्वं दर्शितं पूर्वं घृणी चापि स सूतजः
कथं भीमेन युयुधे कुन्त्या वाक्यमनुस्मरन् ८
भीमो वा सूतपुत्रेण स्मरन्वैरं पुरा कृतम्
सोऽयुध्यत कथं वीरः कर्णेन सह संयुगे ९
आशास्ते च सदा सूत पुत्रो दुर्योधनो मम
कर्णो जेष्यति संग्रामे सहितान्पाण्डवानिति १०
जयाशा यत्र मन्दस्य पुत्रस्य मम संयुगे
स कथं भीमकर्माणं भीमसेनमयुध्यत ११
यं समाश्रित्य पुत्रैर्मे कृतं वैरं महारथैः
तं सूततनयं तात कथं भीमो ह्ययोधयत् १२
अनेकान् विप्रकारांश्च सूतपुत्रसमुद्भवान्
स्मरमाणः कथं भीमो युयुधे सूतसूनुना १३
योऽजयत्पृथिवीं सर्वां रथेनैकेन वीर्यवान्
तं सूततनयं युद्धे कथं भीमो ह्ययोधयत् १४
यो जातः कुण्डलाभ्यां च कवचेन सहैव च
तं सूतपुत्रं समरे भीमः कथमयोधयत् १५
यथा तयोर्युद्धमभूद्यश्चासीद्विजयी तयोः
तन्ममाचक्ष्व तत्त्वेन कुशलो ह्यसि सञ्जय १६
सञ्जय उवाच
भीमसेनस्तु राधेयमुत्सृज्य रथिनां वरम्
इयेष गन्तुं यत्रास्तां वीरौ कृष्णधनंजयौ १७
तं प्रयान्तमभिद्रुत्य राधेयः कङ्कपत्रिभिः
अभ्यवर्षन्महाराज मेघो वृष्ट्येव पर्वतम् १८
फुल्लता पङ्कजेनेव वक्त्रेणाभ्युत्स्मयन्बली
आजुहाव रणे यान्तं भीममाधिरथिस्तदा १९
भीमसेनस्तदाह्वानं कर्णान्नामर्षयद्युधि
अर्धमण्डलमावृत्य सूतपुत्रमयोधयत् २०

अवक्रगामिभिर्बाणैरभ्यवर्षन्महायसैः
द्वैरथे दंशितं यत्तं सर्वशस्त्रभृतां वरम् २१
विधित्सुः कलहस्यान्तं जिघांसुः कर्णमक्षिणोत्
तं च हत्वेतरान्सर्वान्हन्तुकामो महाबलः २२
तस्मै चासृजदुग्राणि विविधानि परंतपः
अमर्षी पाण्डवः क्रुद्धः शरवर्षाणि मारिष २३
तस्य तानीषुवर्षाणि मत्तद्विरदगामिनः
सूतपुत्रोऽस्त्रमायाभिरग्रसत्सुमहायशाः २४
स यथावन्महाराज विद्यया वै सुपूजितः
आचार्यवन्महेष्वासः कर्णः पर्यचरद्रणे २५
संरम्भेण तु युध्यन्तं भीमसेनं स्मयन्निव
अभ्यपद्यत राधेयस्तममर्षी वृकोदरम् २६
तन्नामृष्यत कौन्तेयः कर्णस्य स्मितमाहवे
युध्यमानेषु वीरेषु पश्यत्सु च समन्ततः २७
तं भीमसेनः संप्राप्तं वत्सदन्तैः स्तनान्तरे
विव्याध बलवान्क्रुद्धस्तोत्त्रैरिव महाद्विपम् २८
सूतं तु सूतपुत्रस्य सुपुङ्खैर्निशितैः शरैः
सुमुक्तैश्चित्रवर्माणं निर्बिभेद त्रिसप्तभिः २९
कर्णो जाम्बूनदैर्जालैः संछन्नान्वातरंहसः
विव्याध तुरगान्वीरः पञ्चभिः पञ्चभिः शरैः ३०
ततो बाणमयं जालं भीमसेनरथं प्रति
कर्णेन विहितं राजन्निमेषार्धाददृश्यत ३१
सरथः सध्वजस्तत्र ससूतः पाण्डवस्तदा
प्राच्छाद्यत महाराज कर्णचापच्युतैः शरैः ३२
तस्य कर्णश्चतुःषष्ट्या व्यधमत्कवचं दृढम्
क्रुद्धश्चाप्यहनत्पार्श्वे नाराचैर्मर्मभेदिभिः ३३
ततोऽचिन्त्य महावेगान्कर्णकार्मुकनिःसृतान्
समाश्लिष्यदसंभ्रान्तः सूतपुत्रं वृकोदरः ३४
स कर्णचापप्रभवानिषूनाशीविषोपमान्
बिभ्रद्भीमोमहाराज न जगाम व्यथां रणे ३५

ततो द्वात्रिंशता भल्लैर्निशितैस्तिग्मतेजनैः
विव्याध समरे कर्णं भीमसेनः प्रतापवान् ३६
अयत्नेनैव तं कर्णः शरैरुप समाकिरत्
भीमसेनं महाबाहुं सैन्धवस्य वधैषिणम् ३७
मृदुपूर्वं च राधेयो भीममाजावयोधयत्
क्रोधपूर्वं तथा भीमः पूर्ववैरमनुस्मरन् ३८
तं भीमसेनो नामृष्यदवमानममर्षणः
स तस्मै व्यसृजत्तूर्णं शरवर्षममित्रजित् ३९
ते शराः प्रेषिता राजन्भीमसेनेन संयुगे
निपेतुः सर्वतो भीमाः कूजन्त इव पक्षिणः ४०
हेमपुङ्खा महाराज भीमसेनधनुश्च्युताः
अभ्यद्रवंस्ते राधेयं वृकाः क्षुद्रमृगं यथा ४१
कर्णस्तु रथिनां श्रेष्ठश्छाद्यमानः समन्ततः
राजन्व्यसृजदुग्राणि शरवर्षाणि संयुगे ४२
तस्य तानशनिप्रख्यानिषून्समरशोभिनः
चिच्छेद बहुभिर्भल्लैरसंप्राप्तान्वृकोदरः ४३
पुनश्च शरवर्षेण छादयामास भारत
कर्णो वैकर्तनो युद्धे भीमसेनं महारथम् ४४
तत्र भारत भीमं तु दृष्टवन्तः स्म सायकैः
समाचिततनुं संख्ये श्वाविधं शललैरिव ४५
हेमपुङ्खाञ्शिलाधौतान्कर्णचापच्युताञ्शरान्
दधार समरे वीरः स्वरश्मीनिव भास्करः ४६
रुधिरोक्षितसर्वाङ्गो भीमसेनो व्यरोचत
तपनीयनिभैः पुष्पैः पलाश इव कानने ४७
तत्तु भीमो महाराज कर्णस्य चरितं रणे
नामृष्यत महेष्वासः क्रोधादुद्वृत्य चक्षुषी ४८
स कर्णं पञ्चविंशत्या नाराचानां समर्पयत्
महीधरमिव श्वेतं गूढपादैर्विषोल्बणैः ४९
तं विव्याध पुनर्भीमः षड्भिरष्टाभिरेव च
मर्मस्वमरविक्रान्तः सूतपुत्रं महारणे ५०

ततः कर्णस्य संक्रुद्धो भीमसेनः प्रतापवान्
चिच्छेद कार्मुकं तूर्णं सर्वोपकरणानि च ५१
जघान चतुरश्चाश्वान्सूतं च त्वरितः शरैः
नाराचैरर्करश्म्याभैः कर्णं विव्याध चोरसि ५२
ते जग्मुर्धरणीं सर्वे कर्णं निर्भिद्य मारिष
यथा हि जलदं भित्त्वा राजन्सूर्यस्य रश्मयः ५३
स वैकल्यं महत्प्राप्य छिन्नधन्वा शरार्दितः
तथा पुरुषमानी स प्रत्यपायाद्रथान्तरम् ५४
इति श्रीमहाभारते द्रोणपर्वणि षडधिकशततमोऽध्यायः १०६

## सप्ताधिकशततमोऽध्यायः

धृतराष्ट्र उवाच
यस्मिञ्जयाशा सततं पुत्राणां मम सञ्जय
तं दृष्ट्वा विमुखं संख्ये किं नु दुर्योधनोऽब्रवीत्
कर्णो वा समरे तात किमकार्षीदतः परम् १
सञ्जय उवाच
भीमसेनं रणे दृष्ट्वा ज्वलन्तमिव पावकम्
रथमन्यं समास्थाय विधिवत्कल्पितं पुनः
अभ्ययात्पाण्डवं कर्णो वातोद्धूत इवार्णवः २
क्रुद्धमाधिरथिं दृष्ट्वा पुत्रास्तव विशां पते
भीमसेनममन्यन्त वैवस्वतमुखे हुतम् ३
चापशब्दं महत्कृत्वा तलशब्दं च भैरवम्
अभ्यवर्तत राधेयो भीमसेनरथं प्रति ४
पुनरेव ततो राजन्महानासीत्सुदारुणः
विमर्दः सूतपुत्रस्य भीमस्य च विशां पते ५
संरब्धौ हि महाबाहू परस्परवधैषिणौ
अन्योन्यमीक्षांचक्राते दहन्ताविव लोचनैः ६
क्रोधरक्तेक्षणौ क्रुद्धौ निःश्वसन्तौ महारथौ
युद्धेऽन्योन्यं समासाद्य ततक्षतुररिंदमौ ७
व्याघ्राविव सुसंरब्धौ श्येनाविव च शीघ्रगौ

शरभाविव संक्रुद्धौ युयुधाते परस्परम् ८
ततो भीमः स्मरन्क्लेशानक्षद्यूते वनेऽपि च
विराटनगरे चैव प्राप्तं दुःखमरिंदमः ९
राष्ट्राणां स्फीतरत्नानां हरणं च तवात्मजैः
सततं च परिक्लेशान्सपुत्रेण त्वया कृतान् १०
दग्धुमैच्छश्च यत्कुन्तीं सपुत्रां त्वमनागसम्
कृष्णायाश्च परिक्लेशं सभामध्ये दुरात्मभिः ११
पतिमन्यं परीप्सस्व न सन्ति पतयस्तव
नरकं पतिताः पार्थाः सर्वे षण्ढतिलोपमाः १२
समक्षं तव कौरव्य यदूचुः कुरवस्तदा
दासीभोगेन कृष्णां च भोक्तुकामाः सुतास्तव १३
यच्चापि तान्प्रव्रजतः कृष्णाजिननिवासिनः
परुषाण्युक्तवान्कर्णः सभायां संनिधौ तव १४
तृणीकृत्य च यत्पार्थांस्तव पुत्रो ववल्ग ह
विषमस्थान्समस्थो हि संरम्भाद्गतचेतसः १५
बाल्यात्प्रभृति चारिघ्नस्तानि दुःखानि चिन्तयन्
निरविद्यत धर्मात्मा जीवितेन वृकोदरः १६
ततो विस्फार्य सुमहद्धेमपृष्ठं दुरासदम्
चापं भरतशार्दूलस्त्यक्तात्मा कर्णमभ्ययात् १७
स सायकमयैर्जालैर्भीमः कर्णरथं प्रति
भानुमद्भिः शिलाधौतैर्भानोः प्रच्छादयत्प्रभाम् १८
ततः प्रहस्याधिरथिस्तूर्णमस्यञ्शिताञ्शरान्
व्यधमद्भीमसेनस्य शरजालानि पत्रिभिः १९
महारथो महाबाहुर्महावेगैर्महाबलः
विव्याधाधिरथिर्भीमं नवभिर्निशितैः शरैः २०
स तोत्त्रैरिव मातङ्गो वार्यमाणः पतत्रिभिः
अभ्यधावदसंभ्रान्तः सूतपुत्रं वृकोदरः २१
तमापतन्तं वेगेन रभसं पाण्डवर्षभम्
कर्णः प्रत्युद्ययौ योद्धुं मत्तो मत्तमिव द्विपम् २२
ततः प्रध्माप्य जलजं भेरीशतनिनादितम्

अक्षुभ्यत बलं हर्षादुद्धूत इव सागरः २३
तदुद्धूतं बलं दृष्ट्वा रथनागाश्वपत्तिमत्
भीमः कर्णं समासाद्य छादयामास सायकैः २४
अश्वानृश्यसवर्णांस्तु हंसवर्णैर्हयोत्तमैः
व्यामिश्रयद्रणे कर्णः पाण्डवं छादयञ्शरैः २५
ऋृश्यवर्णान्हयान्कर्कैर्मिश्रान्मारुतरंहसः
निरीक्ष्यतवपुत्राणां हाहाकृतमभूद्बलम् २६
ते हया बह्वशोभन्त मिश्रिता वातरंहसः
सितासिता महाराज यथा व्योम्नि बलाहकाः २७
संरब्धौ क्रोधताम्राक्षौ प्रेक्ष्य कर्णवृकोदरौ
संत्रस्ताः समकम्पन्त त्वदीयानां महारथाः २८
यमराष्ट्रोपमं घोरमासीदायोधनं तयोः
दुर्दर्शं भरतश्रेष्ठ प्रेतराजपुरं यथा २९
समाजमिव तच्चित्रं प्रेक्षमाणा महारथाः
नालक्षयञ्जयं व्यक्तमेकैकस्य निवारणे ३०
तयोः प्रैक्षन्त संमर्दं संनिकृष्टमहास्त्रयोः
तव दुर्मन्त्रिते राजन्सपुत्रस्य विशां पते ३१
छादयन्तौ हि शत्रुघ्नावन्योन्यं सायकैः शितैः
शरजालावृतं व्योम चक्राते शरवृष्टिभिः ३२
तावन्योन्यं जिघांसन्तौ शरैस्तीक्ष्णैर्महारथौ
प्रेक्षणीयतरावास्तां वृष्टिमन्ताविवाम्बुदौ ३३
सुवर्णविकृतान्बाणान्प्रमुञ्चन्तावरिंदमौ
भास्वरं व्योम चक्राते बह्न्युल्काभिरिव प्रभो ३४
ताभ्यां मुक्ता व्यकाशन्त कङ्कवर्हिणवाससः
पङ्क्त्यः शरदि मत्तानां सारसानामिवाम्बरे ३५
संसक्तं सूतपुत्रेण दृष्ट्वा भीममरिंदमम्
अतिभारममन्येतां भीमे कृष्णधनंजयौ ३६
तत्राधिरथिभीमाभ्यां शरैर्मुक्तैर्दृढाहताः
इषुपातमतिक्रम्य पेतुरश्वनरद्विपाः ३७
पतद्भिः पतितैश्चान्यैर्गतासुभिरनेकशः

कृतो महान्महाराज पुत्राणां ते जनक्षयः ३८
मनुष्याश्वगजानां च शरीरैर्गतजीवितैः
क्षणेन भूमिः संजज्ञे संवृता भरतर्षभ ३९
इति श्रीमहाभारते सप्ताधिकशततमोऽध्यायः १०७

अष्टाधिक शततमोऽध्यायः

धृतराष्ट्र उवाच
अत्यद्भुतमहं मन्ये भीमसेनस्य विक्रमम्
यत्कर्णं योधयामास समरे लघुविक्रमम् १
त्रिदशानपि चोद्युक्तान्सर्वशस्त्रधरान्युधि
वारयेद्यो रणे कर्णः सयक्षासुरमानवान् २
स कथं पाण्डवं युद्धे भ्राजमानमिव श्रिया
नातरत्संयुगे तात तन्ममाचक्ष्व सञ्जय ३
कथं च युद्धं भूयोऽभूत्तयोः प्राणदुरोदरे
अत्र मन्ये समायत्तो जयो वाजय एव वा ४
कर्णं प्राप्य रणे सूत मम पुत्रः सुयोधनः
जेतुमुत्सहते पार्थान्सगोविन्दान्ससात्वतान् ५
श्रुत्वा तु निर्जितं कर्णमसकृद्भीमकर्मणा
भीमसेनेन समरे मोह आविशतीव माम् ६
विनष्टान्कौरवान्मन्ये मम पुत्रस्य दुर्नयैः
न हि कर्णो महेष्वासान्पार्थाञ्जेष्यति सञ्जय ७
कृतवान्यानि युद्धानि कर्णः पाण्डुसुतैः सह
सर्वत्र पाण्डवाः कर्णमजयन्त रणाजिरे ८
अजय्याः पाण्डवास्तात देवैरपि सवासवैः
न च तद्बुध्यते मन्दः पुत्रो दुर्योधनो मम ९
धनं धनेश्वरस्येव हृत्वा पार्थस्य मे सुतः
मधुप्रेप्सुरिवाबुद्धिः प्रपातं नावबुध्यते १०
निकृत्या निकृतिप्रज्ञो राज्यं हृत्वा महात्मनाम्
जितानित्येव मन्वानः पाण्डवानवमन्यते ११
पुत्रस्नेहाभिभूतेन मया चाप्यकृतात्मना

धर्मे स्थिता महात्मानो निकृताः पाराडुनन्दनाः १२
शमकामः सदा पार्थो दीर्घप्रेन्ही युधिष्ठिरः
अशक्त इति मन्वानैः पुत्रैर्मम निराकृतः १३
तानि दुःखान्यनेकानि विप्रकारांश्च सर्वशः
हृदि कृत्वा महाबाहुर्भीमोऽयुध्यत सूतजम् १४
तस्मान्मे सञ्जय ब्रूहि कर्णभीमौ यथा रणे
अयुध्येतां युधि श्रेष्ठौ परस्परवधैषिणौ १५
सञ्जय उवाच
शृणु राजन्यथा वृत्तः संग्रामः कर्णभीमयोः
परस्परवधप्रेप्स्वोर्वने कुञ्जरयोरिव १६
राजन्वैकर्तनो भीमं क्रुद्धः क्रुद्धमरिंदमम्
पराक्रान्तं पराक्रम्य विव्याध त्रिंशतैःशरैः १७
महावेगैः प्रसन्नाग्रैः शातकुम्भपरिष्कृतैः
आहनद्भरतश्रेष्ठ भीमं वैकर्तनः शरैः १८
तस्यास्यतो धनुर्भीमश्चकर्त निशितैस्त्रिभिः
रथनीडाच्च यन्तारं भल्लेनापातयत्क्षितौ १९
स काङ्क्षन्भीमसेनस्य वधं वैकर्तनो वृषः
शक्तिं कनकवैडूर्यचित्रदराडां परामृशत् २०
प्रगृह्य च महाशक्तिं कालशक्तिमिवापराम्
समुत्क्षिप्य च राधेयः संधाय च महाबलः
चिक्षेप भीमसेनाय जीवितान्तकरीमिव २१
शक्तिं विसृज्य राधेयः पुरंदर इवाशनिम्
ननाद सुमहानादं बलवान्सूतनन्दनः
तं च नादं ततः श्रुत्वा पुत्रास्ते हृषिताभवन् २२
तां कर्णभुजनिर्मुक्तामर्कवैश्वानरप्रभाम्
शक्तिं वियति चिच्छेद भीमः सप्तभिराशुगैः २३
छित्त्वा शक्तिं ततो भीमो निर्मुक्तोरगसंनिभाम्
मार्गमाण इव प्राणान्सूतपुत्रस्य मारिष २४
प्राहिणोन्नव संरब्धः शरान्बर्हिणवाससः
स्वर्णपुङ्खाञ्शिलाधौतान्यमदराडोपमान्मृधे २५

कर्णोऽप्यन्यद्धनुर्गृह्य हेमपृष्ठं दुरासदम्
विकृष्य च महातेजा व्यसृजत्सायकान्नव २६
तान्पाण्डुपुत्रश्चिच्छेद नवभिर्नतपर्वभिः
वसुषेणेन निर्मुक्तान्नव राजन्महाशरान्
छित्त्वा भीमो महाराज नादं सिंह इवानदत् २७
तौ वृषाविव नर्दन्तौ बलिनौ वाशितान्तरे
शार्दूलाविव चान्योन्यमत्यर्थं च ह्यगर्जताम् २८
अन्योन्यं प्रजिहीर्षन्तावन्योन्यस्यान्तरैषिणौ
अन्योन्यमभिवीक्षन्तौ गोष्ठेष्विव महर्षभौ २९
महागजाविवासाद्य विषाणाग्रैः परस्परम्
शरैः पूर्णायतोत्सृष्टैरन्योन्यमभिजघ्नतुः ३०
निर्दहन्तौ महाराज शरवृष्ट्या परस्परम्
अन्योन्यमभिवीक्षन्तौ कोपाद्विवृतलोचनौ ३१
प्रहसन्तौ तथान्योन्यं भर्त्सयन्तौ मुहुर्मुहुः
शङ्खशब्दं च कुर्वाणौ युयुधाते परस्परम् ३२
तस्य भीमः पुनश्चापं मुष्टौ चिच्छेद मारिष
शङ्खवर्णांश्च तानश्वान्बाणैर्निन्ये यमक्षयम् ३३
तथा कृच्छ्रगतं दृष्ट्वा कर्णं दुर्योधनो नृपः
वेपमान इव क्रोधाद्व्यादिदेशाथ दुर्जयम् ३४
गच्छ दुर्जय राधेयं पुरा ग्रसति पाण्डवः
जहि तूबरकं क्षिप्रं कर्णस्य बलमादधत् ३५
एवमुक्तस्तथेत्युक्त्वा तव पुत्रस्तवात्मजम्
अभ्यद्रवद्भीमसेनं व्यासक्तं विकिरञ्शरान् ३६
स भीमं नवभिर्बाणैरश्वानष्टभिरर्दयत्
षड्भिः सूतं त्रिभिः केतुं पुनस्तं चापि सप्तभिः ३७
भीमसेनोऽपि संक्रुद्धः साश्वयन्तारमाशुगैः
दुर्जयं भिन्नमर्माणमनयद्यमसादनम् ३८
स्वलंकृतं क्षितौ क्षुण्णं चेष्टमानं यथोरगम्
रुदन्नार्तस्तव सुतं कर्णश्चक्रे प्रदक्षिणम् ३९
स तु तं विरथं कृत्वा स्मयन्नत्यन्तवैरिणम्

समाचिनोद्बाणगणैः शतघ्नीमिव शङ्कुभिः ४०
तथाप्यतिरथः कर्णो भिद्यमानः स्म सायकैः
न जहौ समरे भीमं क्रुद्धरूपं परंतपः ४१
इति श्रीमहाभारते द्रोणपर्वणि अष्टाधिकशततमोऽध्यायः १०८

## नवाधिकशततमोऽध्यायः

सञ्जय उवाच
स तथा विरथः कर्णः पुनर्भीमेन निर्जितः
रथमन्यं समास्थाय सद्यो विव्याध पाण्डवम् १
महागजाविवासाद्य विषाणाग्रैः परस्परम्
शरैः पूर्णायतोत्सृष्टैरन्योन्यमभिजघ्नतुः २
अथ कर्णः शरव्रातैर्भीमं बलवदर्दयत्
ननाद बलवन्नादं पुनर्विव्याध चोरसि ३
तं भीमो दशभिर्बाणैः प्रत्यविध्यदजिह्मगैः
पुनर्विव्याध विंशत्या शराणां नतपर्वणाम् ४
कर्णस्तु नवभिर्भीमं विद्ध्वा राजन्स्तनान्तरे
ध्वजमेकेन विव्याध सायकेन शितेन ह ५
सायकानां ततः पार्थस्त्रिषष्ट्या प्रत्यविध्यत
तोत्त्रैरिव महानागं कशाभिरिव वाजिनम् ६
सोऽतिविद्धो महाराज पाण्डवेन यशस्विना
सृक्किणी लेलिहन्वीरः क्रोधसंरक्तलोचनः ७
ततः शरं महाराज सर्वकायावदारणम्
प्राहिणोद्भीमसेनाय बलायेन्द्र इवाशनिम् ८
स निर्भिद्य रणे पार्थं सूतपुत्रधनुश्च्युतः
अगच्छद्दारयन्भूमिं चित्रपुङ्खः शिलीमुखः ९
सर्वशैक्यां चतुष्किष्कुं गुर्वीं रुक्माङ्गदां गदाम्
प्राहिणोत्सूतपुत्राय षडस्रामविचारयन् १०
तया जघानाधिरथेः सदश्वान्साधुवाहिनः
गदया भारतः क्रुद्धो वज्रेणेन्द्र इवासुरान् ११
ततो भीमो महाबाहुः क्षुराभ्यां भरतर्षभ

ध्वजमाधिरथेश्छित्त्वा सूतमभ्यहनत्तदा १२
हताश्वसूतमुत्सृज्य रथं स पतितध्वजम्
विस्फारयन्धनुः कर्णस्तस्थौ भारत दुर्मनाः १३
तत्राद्भुतमपश्याम राधेयस्य पराक्रमम्
विरथो रथिनां श्रेष्ठो वारयामास यद्रिपुम् १४
विरथं तं रथश्रेष्ठं दृष्ट्वाधिरथिमाहवे
दुर्योधनस्ततो राजन्नभ्यभाषत दुर्मुखम् १५
एष दुर्मुख राधेयो भीमेन विरथीकृतः
तं रथेन नरश्रेष्ठं सम्पादय महारथम् १६
दुर्योधनवचः श्रुत्वा ततो भारत दुर्मुखः
त्वरमाणोऽभ्ययात्कर्णं भीमं चावारयच्छरैः १७
दुर्मुखं प्रेक्ष्य संग्रामे सूतपुत्रपदानुगम्
वायुपुत्रः प्रहृष्टोऽभूत्सृक्किणी परिलेलिहन् १८
ततः कर्णं महाराज वारयित्वा शिलीमुखैः
दुर्मुखाय रथं शीघ्रं प्रेषयामास पाण्डवः १९
तस्मिन्क्षणे महाराज नवभिर्नतपर्वभिः
सुपुङ्खैर्दुर्मुखं भीमः शरैर्निन्ये यमक्षयम् २०
ततस्तमेवाधिरथिः स्यन्दनं दुर्मुखे हते
आस्थितः प्रबभौ राजन्दीप्यमान इवांशुमान् २१
शयानं भिन्नमर्माणं दुर्मुखं शोणितोक्षितम्
दृष्ट्वा कर्णोऽश्रुपूर्णाक्षो मुहूर्तं नाभ्यवर्तत २२
तं गतासुमतिक्रम्य कृत्वा कर्णः प्रदक्षिणम्
दीर्घमुष्णं श्वसन्वीरो न किंचित्प्रत्यपद्यत २३
तस्मिंस्तु विवरे राजन्नाराचान्गार्ध्रवाससः
प्राहिणोत्सूतपुत्राय भीमसेनश्चतुर्दश २४
ते तस्य कवचं भित्त्वा स्वर्णपुङ्खा महौजसः
हेमचित्रा महाराज द्योतयन्तो दिशो दश २५
अपिबन्सूतपुत्रस्य शोणितं रक्तभोजनाः
क्रुद्धा इव मनुष्येन्द्र भुजगाः कालचोदिताः २६
प्रसर्पमाणा मेदिन्यां ते व्यरोचन्त मार्गणाः

अर्धप्रविष्टाः संरब्धा बिलानीव महोरगाः २७
तं प्रत्यविध्यद्राधेयो जाम्बूनदविभूषितैः
चतुर्दशभिरत्युग्रैर्नाराचैरविचारयन् २८
ते भीमसेनस्य भुजं सव्यं निर्भिद्य पत्रिणः
प्राविशन्मेदिनीं भीमाः क्रौञ्चं पत्ररथा इव २९
ते व्यरोचन्त नाराचाः प्रविशन्तो वसुंधराम्
गच्छत्यस्तं दिनकरे दीप्यमाना इवांशवः ३०
स निर्भिन्नो रणे भीमो नाराचैर्मर्मभेदिभिः
सुस्राव रुधिरं भूरि पर्वतः सलिलं यथा ३१
स भीमस्त्रिभिरायस्तः सूतपुत्रं पतत्रिभिः
सुपर्णवेगैर्विव्याध सारथिं चास्य सप्तभिः ३२
स विह्वलो महाराज कर्णो भीमबलार्दितः
प्राद्रवज्जवनैरश्वै रणं हित्वा महायशाः ३३
भीमसेनस्तु विस्फार्य चापं हेमपरिष्कृतम्
आहवेऽतिरथोऽतिष्ठज्ज्वलन्निव हुताशनः ३४
इति श्रीमहाभारते द्रोणपर्वणि नवाधिकशततमोऽध्यायः १०९

## दशाधिकशततमोऽध्यायः

धृतराष्ट्र उवाच
दैवमेव परं मन्ये धिक्पौरुषमनर्थकम्
यत्राधिरथिरायस्तो नातरत्पाण्डवं रणे १
कर्णः पार्थान्सगोविन्दाञ्जेतुमुत्सहते रणे
न च कर्णसमं योधं लोके पश्यामि कंचन
इति दुर्योधनस्याहमश्रौषं जल्पतो मुहुः २
कर्णो हि बलवाञ्शूरो दृढधन्वा जितक्लमः
इति मामब्रवीत्सूत मन्दो दुर्योधनः पुरा ३
वसुषेणसहायं मां नालं देवापि संयुगे
किमु पाण्डुसुता राजन्गतसत्त्वा विचेतसः ४
तत्र तं निर्जितं दृष्ट्वा भुजंगमिव निर्विषम्
युद्धात्कर्णमपक्रान्तं किं स्विद्दुर्योधनोऽब्रवीत् ५

अहो दुर्मुखमेवैकं युद्धानामविशारदम्
प्रावेशयद्धुतवहं पतंगमिव मोहितः ६
अश्वत्थामा मद्रराजः कृपः कर्णश्च संगताः
न शक्ताः प्रमुखे स्थातुं नूनं भीमस्य सञ्जय ७
तेऽपि चास्य महाघोरं बलंनागायुतोपमम्
जानन्तो व्यवसायं च क्रूरं मारुततेजसः ८
किमर्थं क्रूरकर्माणं यमकालान्तकोपमम्
बलसंरम्भवीर्यज्ञाः कोपयिष्यन्ति संयुगे ९
कर्णस्त्वेको महाबाहुः स्वबाहुबलमाश्रितः
भीमसेनमनादृत्य रणेऽयुध्यत सूतजः १०
योऽजयत्समरे कर्णं पुरंदर इवासुरम्
न स पाण्डुसुतो जेतुं शक्यः केनचिदाहवे ११
द्रोणं यः संप्रमथ्यैकः प्रविष्टो मम वाहिनीम्
भीमो धनंजयान्वेषी कस्तमर्छेञ्जिजीविषुः १२
को हि सञ्जय भीमस्य स्थातुमुत्सहतेऽग्रतः
उद्यताशनिवज्रस्य महेन्द्रस्येव दानवः १३
प्रेतराजपुरं प्राप्य निवर्तेतापि मानवः
न भीमसेनं संप्राप्य निवर्तेत कदाचन १४
पतंगा इव वह्निं ते प्राविशन्नल्पचेतसः
ये भीमसेनं स्नंकुद्धमभ्यधावन्विमोहिताः १५
यत्तत्सभायां भीमेन मम पुत्रवधाश्रयम्
शप्तं संरम्भिणोग्रेण कुरूणां शृण्वतां तदा १६
तन्नूनमभिसंचिन्त्य दृष्ट्वा कर्णं च निर्जितम्
दुःशासनः सह भ्रात्रा भयाद्भीमादुपारमत् १७
यश्च सञ्जय दुर्बुद्धिरब्रवीत्समितौमुहुः
कर्णो दुःशासनोऽह च जेष्यामो युधि पाण्डवान् १८
स नूनं विरथं दृष्ट्वा कर्णं भीमेन निर्जितम्
प्रत्याख्यानाच्च कृष्णस्य भृशं तप्यति सञ्जय १९
दृष्ट्वा भ्रातॄन्हतान्युद्धे भीमसेनेन दंशितान्
आत्मापराधात्सुमहन्नूनं तप्यति पुत्रकः २०

को हि जीवितमन्विच्छन्प्रतीपं पाराडवं व्रजेत्
भीमं भीमायुधं क्रुद्धं साक्षात्कालमिव स्थितम् २१
वडवामुखमध्यस्थो मुच्येतापि हि मानवः
न भीममुखसंप्राप्तो मुच्येतेति मतिर्मम २२
न पाराडवा न पञ्चाला न च केशवसात्यकी
जानन्ति युधि संरब्धा जीवितं परिरक्षितुम् २३
सञ्जय उवाच
यत्संशोचसि कौरव्य वर्तमाने जनक्षये
त्वमस्य जगतो मूलं विनाशस्य न संशयः २४
स्वयं वैरं महत्कृत्वा पुत्राणां वचने स्थितः
उच्यमानो न गृह्णीषे मर्त्यः पथ्यमिवौषधम् २५
स्वयं पीत्वा महाराज कालकूटं सुदुर्जरम्
तस्येदानीं फलं कृत्स्नमवाप्नुहि नरोत्तम २६
यत्तु कुत्सयसे योधान्युध्यमानान्यथाबलम्
अत्र ते वर्णयिष्यामि यथा युद्धमवर्तत २७
दृष्ट्वा कर्णं तु पुत्रास्ते भीमसेनपराजितम्
नामृष्यन्त महेष्वासाः सोदर्याः पञ्च मारिष २८
दुर्मर्षणो दुःसहश्च दुर्मदो दुर्धरो जयः
पाराडवं चित्रसंनाहास्तं प्रतीपमुपाद्रवन् २९
ते समन्तान्महाबाहुं परिवार्य वृकोदरम्
दिशः शरैः समावृरावञ्शलभानामिव व्रजैः ३०
आगच्छतस्तान्सहसा कुमारान्देवरूपिणः
प्रतिजग्राह समरे भीमसेनो हसन्निव ३१
तव दृष्ट्वा तु तनयान्भीमसेन समीपगान्
अभ्यवर्तत राधेयो भीमसेनं महाबलम् ३२
विसृजन्विशिखान्राजन्स्वर्णपुङ्खाञ्शिलाशितान्
तं तु भीमोऽभ्ययात्तूर्णं वार्यमाणः सुतैस्तव ३३
कुरवस्तु ततः कर्णं परिवार्य समन्ततः
अवाकिरन्भीमसेनं शरैः संनतपर्वभिः ३४
तान्बाणैः पञ्चविंशत्या साश्वान्राजन्नरर्षभान्

ससूतान्भीमधनुषो भीमो निन्ये यमक्षयम् ३५
प्रापतन्स्यन्दनेभ्यस्ते सार्धं सूतैर्गतासवः
चित्रपुष्पधरा भग्ना वातेनेव महाद्रुमाः ३६
तत्राद्भुतमपश्याम भीमसेनस्य विक्रमम्
संवार्याधिरथिं बाणैर्यज्जघान तवात्मजान् ३७
स वार्यमाणो भीमेन शितैर्बाणैः समन्ततः
सूतपुत्रो महाराज भीमसेनमवैक्षत ३८
तं भीमसेनः संरम्भात्क्रोधसंरक्तलोचनः
विस्फार्य सुमहच्चापं मुहुः कर्णमवैक्षत ३९
इति श्रीमहाभारते द्रोणपर्वणि दशाधिकशततमोऽध्यायः ११०

## एकादशाधिक शततमोऽध्यायः

सञ्जय उवाच
तवात्मजांस्तु पतितान्दृष्ट्वा कर्णः प्रतापवान्
क्रोधेन महताविष्टो निर्विण्णोऽभूत्स जीवितात् १
आगस्कृतमिवात्मानं मेने चाधिरथिस्तदा
भीमसेनं ततः क्रुद्धः समाद्रवत संभ्रमात् २
स भीमं पञ्चभिर्विद्ध्वा राधेयः प्रहसन्निव
पुनर्विव्याध सप्तत्या स्वर्णपुङ्खैः शिलाशितैः ३
अवहासं तु तं पार्थो नामृष्यत वृकोदरः
ततो विव्याध राधेयं शतेन नतपर्वणाम् ४
पुनश्च विशिखैस्तीक्ष्णैर्विद्ध्वा पञ्चभिराशुगैः
धनुश्चिच्छेद भल्लेन सूतपुत्रस्य मारिष ५
अथान्यद्धनुरादाय कर्णो भारत दुर्मनाः
इषुभिश्छादयामास भीमसेनं समन्ततः ६
तस्य भीमो हयान्हत्वाविनिहत्य च सारथिम्
प्रजहास महाहासं कृते प्रतिकृतं पुनः ७
इषुभिः कार्मुकं चास्य चकर्त पुरुषर्षभः
तत्पपात महाराज स्वर्णपृष्ठं महास्वनम् ८
अवारोहद्रथात्तस्मादथ कर्णो महारथः

गदां गृहीत्वा समरे भीमसेनाय चाक्षिपत् ९
तामापतन्तीं सहसा गदां दृष्ट्वा वृकोदरः
शरैरवारयद्राजन्सर्वसैन्यस्य पश्यतः १०
ततो बाणसहस्राणि प्रेषयामास पाण्डवः
सूतपुत्रवधाकाङ्क्षी त्वरमाणः पराक्रमी ११
तानिषूनिषुभिः कर्णो वारयित्वा महामृधे
कवचं भीमसेनस्य पातयामास सायकैः १२
अथैनं पञ्चविंशत्या क्षुद्रकाणां समार्पयत्
पश्यतां सर्वभूतानां तदद्भुतमिवाभवत् १३
ततो भीमो महाराज नवभिर्नतपर्वणाम्
रणेऽप्रेषयत क्रुद्धः सूतपुत्रस्य मारिष १४
ते तस्य कवचं भित्त्वा तथा बाहुं च दक्षिणम्
अभ्यगुर्धरणीं तीक्ष्णा वल्मीकमिव पन्नगाः १५
राधेयं तु रणे दृष्ट्वा पदातिनमवस्थितम्
भीमसेनेन संरब्धं राजा दुर्योधनोऽब्रवीत्
त्वरध्वं सर्वतो यत्ता राधेयस्य रथं प्रति १६
ततस्तव सुता राजञ्श्रुत्वा भ्रातुर्वचो द्रुतम्
अभ्ययुः पाण्डवं युद्धे विसृजन्तः शिताञ्शरान् १७
चित्रोपचित्रश्चित्राक्षश्चारुचित्रः शरासनः
चित्रायुधश्चित्रवर्मा समरे चित्रयोधिनः १८
आगच्छतस्तान्सहसा भीमो राजन्महारथः
साश्वसूतध्वजान्यत्तान्पातयामास संयुगे
ते हता न्यपतन्भूमौ वातनुन्ना इव द्रुमाः १९
दृष्ट्वा विनिहतान्पुत्रांस्तव राजन्महारथान्
अश्रुपूर्णमुखः कर्णः कश्मलं समपद्यत २०
रथमन्यं समास्थाय विधिवत्कल्पितं पुनः
अभ्ययात्पाण्डवं युद्धे त्वरमाणः पराक्रमी २१
तावन्योन्यंशरैर्विद्ध्वा स्वर्णपुङ्खैः शिलाशितैः
व्यभ्राजेतां महाराज पुष्पिताविव किंशुकौ २२
षट्त्रिंशद्भिस्ततो भल्लैर्निशितैस्तिग्मतेजनैः

व्यधमत्कवचं क्रुद्धः सूतपुत्रस्य पाण्डवः २३
रक्तचन्दनदिग्धाङ्गौ शरैः कृतमहाव्रणौ
शोणिताक्तौ व्यराजेतां कालसूर्याविवोदितौ २४
तौ शोणितोक्षितैर्गात्रैः शरैश्छिन्नतनुच्छदौ
विवर्माणौ व्यराजेतां निर्मुक्ताविव पन्नगौ २५
व्याघ्राविव नरव्याघ्रौ दंष्ट्राभिरितरेतरम्
शरदंष्ट्रा विधुन्वानौ ततक्षतुररिंदमौ २६
वारणाविव संसक्तौ रङ्गमध्ये विरेजतुः
तुदन्तौ विशिखैस्तीक्ष्णैर्मत्तवारण विक्रमौ २७
प्रच्छादयन्तौ समरे शरजालैः परस्परम्
रथाभ्यां नादयन्तौ च दिशः सर्वा विचेरतुः २८
तौ रथाभ्यां महाराज मण्डलावर्तनादिषु
व्यरोचेतां महात्मानौ वृत्रवज्रधराविव २९
सहस्ताभरणाभ्यां तु भुजाभ्यां विक्षिपन्धनुः
व्यरोचत रणे भीमः सविद्युदिव तोयदः ३०
स चापघोषस्तनितः शरधाराम्बुदो महान्
भीममेघो महाराज कर्णपर्वतमभ्ययात् ३१
ततः शरसहस्रेण धनुर्मुक्तेन भारत
पाण्डवो व्यकिरत्कर्णं घनोऽद्रिमिव वृष्टिभिः ३२
तत्रावैक्षन्त पुत्रास्ते भीमसेनस्य विक्रमम्
सुपुङ्खैः कङ्कवासोभिर्यत्कर्णं छादयच्छरैः ३३
स नन्दयन्रणे पार्थं केशवं च यशस्विनम्
सात्यकिं चक्ररक्षौ च भीमः कर्णमयोधयत् ३४
विक्रमं भुजयोर्वीर्यं धैर्यं च विदितात्मनः
पुत्रास्तव महाराज ददृशुः पाण्डवस्य ह ३५
इति श्रीमहाभारते द्रोणपर्वणि एकादशाधिकशततमोऽध्यायः १११

## द्वादशाधिक शततमोऽध्यायः

सञ्जय उवाच
भीमसेनस्य राधेयः श्रुत्वा ज्यातलनिस्वनम्

नामृष्यत यथा मत्तो गजः प्रतिगजस्वनम् १
अपक्रम्य स भीमस्य मुहूर्तं शरगोचरात्
तव चाधिरथिर्दृष्ट्वा स्यन्दनेभ्यश्च्युतान्सुतान् २
भीमसेनेन निहतान्विमना दुःखितोऽभवत्
निःश्वसन्दीर्घमुष्णं च पुनः पाण्डवमभ्ययात् ३
स ताम्रनयनः क्रोधाच्छ्वसन्निव महोरगः
बभौ कर्णः शरानस्यन्रश्मिवानिव भास्करः ४
रश्मिजालैरिवार्कस्य विततैर्भरतर्षभ
कर्णचापच्युतैर्बाणैः प्राच्छाद्यत वृकोदरः ५
कर्णचापच्युताश्चित्राः शरा बर्हिणवाससः
विविशुः सर्वतः पार्थं वासायेवाण्डजा द्रुमम् ६
कर्णचापच्युता बाणाः संपतन्तस्ततस्ततः
रुक्मपुङ्खा व्यराजन्त हंसाः श्रेणीकृता इव ७
चापध्वजोपस्करेभ्यश्छत्त्रादीषामुखाद्युगात्
प्रभवन्तो व्यदृश्यन्त राजन्नाधिरथेः शराः ८
खं पूरयन्महावेगान्खगमान्खगवाससः
सुवर्णविकृतांश्चित्रान्मुमोचाधिरथिः शरान् ९
तमन्तकमिवायस्तमापतन्तं वृकोदरः
त्यक्त्वा प्राणानभिक्रुध्य विव्याध नवभिः शरैः १०
तस्य वेगमसंसह्यं दृष्ट्वा कर्णस्य पाण्डवः
महतश्च शरौघांस्तान्नैवाव्यथत वीर्यवान् ११
ततो विधम्याधिरथेः शरजालानि पाण्डवः
विव्याध कर्णं विंशत्या पुनरन्यैः शितैः शरैः १२
यथैव हि शरैः पार्थः सूतपुत्रेण छादितः
तथैव कर्णं समरे छादयामास पाण्डवः १३
दृष्ट्वा तु भीमसेनस्य विक्रमं युधि भारत
अभ्यनन्दंस्त्वदीयाश्च संप्रहृष्टाश्च चारणाः १४
भूरिश्रवाः कृपो द्रौणिर्मद्रराजो जयद्रथः
उत्तमौजा युधामन्युः सात्यकिः केशवार्जुनौ १५
कुरुपाण्डवानां प्रवरा दश राजन्महारथाः

साधु साध्विति वेगेन सिंहनादमथानदन् १६
तस्मिंस्तु तुमुले शब्दे प्रवृत्ते लोमहर्षणे
अभ्यभाषत पुत्रांस्ते राजन्दुर्योधनस्त्वरन् १७
राज्ञश्च राजपुत्रांश्च सोदर्यांश्च विशेषतः
कर्णं गच्छत भद्रं वः परीप्सन्तो वृकोदरात् १८
पुरा निघ्नन्ति राधेयं भीमचापच्युताः शराः
ते यतध्वं महेष्वासाः सूतपुत्रस्य रक्षणे १९
दुर्योधनसमादिष्टाः सोदर्याः सप्त मारिष
भीमसेनमभिद्रुत्य संरब्धाः पर्यवारयन् २०
ते समासाद्य कौन्तेयमावृण्वञ्शरवृष्टिभिः
पर्वतं वारिधाराभिः प्रावृषीव बलाहकाः २१
तेऽपीडयन्भीमसेनं क्रुद्धाः सप्त महारथाः
प्रजासंहरणे राजन्सोमं सप्त ग्रहा इव २२
ततो वामेन कौन्तेयः पीडयित्वा शरासनम्
मुष्टिना पाण्डवो राजन्दृढेन सुपरिष्कृतम् २३
मनुष्यसमतां ज्ञात्वा सप्त संधाय सायकान्
तेभ्यो व्यसृजदायस्तः सूर्यरश्मिनिभान्प्रभुः २४
निरस्यन्निव देहेभ्यस्तनयानामसूंस्तव
भीमसेनो महाराज पूर्ववैरमनुस्मरन् २५
ते क्षिप्ता भीमसेनेन शरा भारत भारतान्
विदार्य खं समुत्पेतुः स्वर्णपुङ्खाः शिलाशिताः २६
तेषां विदार्य चेतांसि शरा हेमविभूषिताः
व्यराजन्त महाराज सुपर्णा इव खेचराः २७
शोणितादिग्धवाजाग्राः सप्त हेमपरिष्कृताः
पुत्राणां तव राजेन्द्र पीत्वा शोणितमुद्गताः २८
ते शरैर्भिन्नमर्माणो रथेभ्यः प्रापतन्क्षितौ
गिरिसानुरुहा भग्ना द्विपेनेव महाद्रुमाः २९
शत्रुंजयः शत्रुसहश्चित्रश्चित्रायुधो दृढः
चित्रसेनो विकर्णश्च सप्तैते विनिपातिताः ३०
तान्निहत्य महाबाहू राधेयस्यैव पश्यतः

सिंहनादरवं घोरमसृजत्पाराडुनन्दनः ३१
स रवस्तस्य शूरस्य धर्मराजस्य भारत
ग्राचख्याविव तद्युद्धं विजयं चात्मनो महत् ३२
तं श्रुत्वा सुमहानादं भीमसेनस्य धन्विनः
बभूव परमा प्रीतिर्धर्मराजस्य संयुगे ३३
ततो हृष्टो महाराज वादित्राणां महास्वनैः
भीमसेनरवं पार्थः प्रतिजग्राह सर्वशः ३४
ग्रभ्ययाच्चैव समरे द्रोणमस्त्रभृतां वरम्
हर्षेण महता युक्तः कृतसंज्ञे वृकोदरे ३५
एकत्रिंशन्महाराज पुत्रांस्तव महारथान्
हतान्दुर्योधनो दृष्ट्वा ज्ञत्तुः सस्मार तद्वचः ३६
तदिदं समनुप्राप्तं ज्ञत्तुर्हितकरं वचः
इति संचिन्त्य राजासौ नोत्तरं प्रत्यपद्यत ३७
यद्यूतकाले दुर्बुद्धिरब्रवीत्तनयस्तव
यच्च कर्णोऽब्रवीत्कृष्णां सभायां परुषं वचः ३८
प्रमुखे पाराडुपुत्राणां तव चैव विशां पते
कौरवाणां च सर्वेषामाचार्यस्य च संनिधौ ३९
विनष्टाः पाराडवाः कृष्णे शाश्वतं नरकं गताः
पतिमन्यं वृणीष्वेति तस्येदं फलमागतम् ४०
यत्स्म तां परुषाणयाहुः सभामानाय्य द्रौपदीम्
पाराडवानुग्रधनुषः क्रोधयन्तस्तवात्मजाः ४१
तं भीमसेनः क्रोधाग्निं त्रयोदश समाः स्थितम्
विसृजंस्तव पुत्राणामन्तं गच्छति कौरव ४२
विलपंश्च बहु ज्ञत्ता शमं नालभत त्वयि
सपुत्रो भरतश्रेष्ठ तस्य भुङ्च्व फलोदयम्
हतो विकर्णो राजेन्द्र चित्रसेनश्च वीर्यवान् ४३
प्रवरानात्मजानां ते सुतांश्चान्यान्महारथान्
यान्यांश्च ददृशे भीमश्चज्ञुर्विषयमागतान्
पुत्रांस्तव महाबाहो त्वरया ताञ्जघान ह ४४
त्वत्कृते ह्यहमद्राज्ञं दह्यमानां वरूथिनीम्

सहस्रशः शरैर्मुक्तैः पाण्डवेन वृषेण च ४५
इति श्रीमहाभारते द्रोणपर्वणि द्वादशाधिकशततमोऽध्यायः ११२

त्रयोदशाधिक शततमोऽध्यायः

धृतराष्ट्र उवाच
महानपनयः सूत ममैवात्र विशेषतः
स इदानीमनुप्राप्तो मन्ये सञ्जय शोचतः १
यद्गतं तद्गतमिति ममासीन्मनसि स्थितम्
इदानीमत्र किं कार्यं प्रकरिष्यामि सञ्जय २
यथा त्वेष क्षयो वृत्तो ममापनयसंभवः
वीराणां तन्ममाचक्ष्व स्थिरीभूतोऽस्मि सञ्जय ३
सञ्जय उवाच
कर्णभीमौ महाराज पराक्रान्तौ महाहवे
बाणवर्षाण्यवर्षेतां वृष्टिमन्ताविवाम्बुदौ ४
भीमनामाङ्किता बाणाः स्वर्णपुङ्खाः शिलाशिताः
विविशुः कर्णमासाद्य भिन्दन्त इव जीवितम् ५
तथैव कर्णनिर्मुक्तैः सविषैरिव पन्नगैः
अकीर्यत रणे भीमः शतशोऽथ सहस्रशः ६
तयोः शरैर्महाराज संपतद्भिः समन्ततः
बभूव तव सैन्यानां संक्षोभः सागरोपमः ७
भीमचापच्युतैर्बाणैस्तव सैन्यमरिंदम
अवध्यत चमूमध्ये घोरैराशीविषोपमैः ८
वारणैः पतितै राजन्वाजिभिश्च नरैः सह
अदृश्यत मही कीर्णा वातनुन्नैर्द्रुमैरिव ९
ते वध्यमानाः समरे भीमचापच्युतैः शरैः
प्राद्रवंस्तावका योधाः किमेतदिति चाब्रुवन् १०
ततो व्युदस्तं तत्सैन्यं सिन्धुसौवीरकौरवम्
प्रोत्सारितं महावेगैः कर्णपाण्डवयोः शरैः ११
ते शरातुरभूयिष्ठा हताश्वनरवाहनाः
उत्सृज्य कर्णं भीमं च प्राद्रवन्सर्वतोदिशम् १२

नूनं पार्थार्थमेवास्मान्मोहयन्ति दिवौकसः
यत्कर्णभीमप्रभवैर्वध्यते नो बलं शरैः १३
एवं ब्रुवन्तो योधास्ते तावका भयपीडिताः
शरपातं समुत्सृज्य स्थिता युद्धदिदृक्षवः १४
ततः प्रावर्तत नदी घोररूपा महाहवे
बभूव च विशेषेण भीरूणां भयवर्धिनी १५
वारणाश्वमनुष्याणां रुधिरौघसमुद्भवा
संवृता गतसत्त्वैश्च मनुष्यगजवाजिभिः १६
सानुकर्षपताकैश्च द्विपाश्वरथभूषणैः
स्यन्दनैरपविद्धैश्च भग्नचक्राक्षकूबरैः १७
जातरूपपरिष्कारैर्धनुर्भिः सुमहाधनैः
सुवर्णपुङ्खैरिषुभिर्नाराचैश्च सहस्रशः १८
कर्णपाण्डवनिर्मुक्तैर्निर्मुक्तैरिव पन्नगैः
प्रासतोमरसंघातैः खड्गैश्च सपरश्वधैः १९
सुवर्णविकृतैश्चापि गदामुसलपट्टिशैः
वज्रैश्च विविधाकारैः शक्तिभिः परिघैरपि
शतघ्नीभिश्च चित्राभिर्बभौ भारत मेदिनी २०
कनकाङ्गदकेयूरैः कुण्डलैर्मणिभिः शुभैः
तनुत्रैः सतलत्रैश्च हारैर्निष्कैश्च भारत २१
वस्त्रैश्छत्रैश्च विध्वस्तैश्चामरव्यजनैरपि
गजाश्वमनुजैर्भिन्नैः शस्त्रैः स्यन्दनभूषणैः २२
तैस्तैश्च विविधैर्भावैस्तत्र तत्र वसुंधरा
पतितैरपविद्धैश्च संबभौ द्यौरिव ग्रहैः २३
अचिन्त्यमद्भुतं चैव तयोः कर्मातिमानुषम्
दृष्ट्वा चारणसिद्धानां विस्मयः समपद्यत २४
अग्नेर्वायुसहायस्य गतिः कक्ष इवाहवे
आसीद्भीमसहायस्य रौद्रमाधिरथेर्गतम्
निपातितध्वजरथं हतवाजिनरद्विपम् २५
गजाभ्यां संप्रयुक्ताभ्यामासीन्नडवनं यथा
तथाभूतं महत्सैन्यमासीद्भारत संयुगे

विमर्दः कर्णभीमाभ्यामासीच्च परमो रणे २६
इति श्रीमहाभारते द्रोणपर्वणि त्रयोदशाधिकशततमोऽध्यायः ११३

## चतुर्दशाधिक शततमोऽध्यायः

सञ्जय उवाच
ततः कर्णो महाराज भीमं विद्ध्वा त्रिभिः शरैः
मुमोच शरवर्षाणि चित्राणि च बहूनि च १
वध्यमानो महाराज सूतपुत्रेण पाण्डवः
न विव्यथे भीमसेनो भिद्यमान इवाचलः २
स कर्णं कर्णिना कर्णे पीतेन निशितेन च
विव्याध युधि राजेन्द्र भीमसेनः पतत्रिणा ३
स कुण्डलं महत्कर्णात्कर्णस्यापातयद्भुवि
तपनीयं महाराज दीप्तं ज्योतिरिवाम्बरात् ४
अथापरेण भल्लेन सूतपुत्रं स्तनान्तरे
आजघान भृशं भीमः स्मयन्निव महाबलः ५
पुनरस्य त्वरन्भीमो नाराचान्दश भारत
रणे प्रैषीन्महावेगान्यमदण्डोपमांस्तथा ६
ते ललाटं समासाद्य सूतपुत्रस्य मारिष
विविशुश्चोदितास्तेन वल्मीकमिव पन्नगाः ७
ललाटस्थैस्तु तैर्बाणैः सूतपुत्रो व्यरोचत
नीलोत्पलमयीं मालां धारयन्स पुरा यथा ८
ततः क्रुद्धो रणे कर्णः पीडितो दृढधन्वना
वेगं चक्रे महावेगो भीमसेनवधं प्रति ९
तस्मै कर्णः शतं राजन्निषूणां गार्ध्रवाससाम्
अमर्षी बलवान्क्रुद्धः प्रेषयामास भारत १०
ततः प्रासृजदुग्राणि शरवर्षाणि पाण्डवः
समरे तमनादृत्य नास्य वीर्यमचिन्तयत् ११
ततः कर्णो महाराज पाण्डवं निशितैः शरैः
आजघानोरसि क्रुद्धः क्रुद्धरूपं परंतपः १२
जीमूताविव चान्योन्यं तौ ववर्षतुराहवे

तलशब्दरवैश्चैव त्रासयन्तौ परस्परम् १३
शरजालैश्च विविधैश्छादयामासतुर्मृधे
अन्योन्यं समरे क्रुद्धौ कृतप्रतिकृतैषिणौ १४
ततो भीमो महाबाहू राधेयस्य महात्मनः
क्षुरप्रेण धनुश्छित्त्वा कर्णं विव्याध पत्रिणा १५
तदपास्य धनुश्छिन्नं सूतपुत्रो महामनाः
अन्यत्कार्मुकमादत्त वेगघ्नं भारसाधनम् १६
दृष्ट्वा च कुरुसौवीरसैन्धवानां बलक्षयम्
सवर्मध्वजशस्त्रैश्च पतितैः संवृतां महीम् १७
हस्त्यश्वनरदेहांश्च गतासून्प्रेक्ष्य सर्वतः
सूतपुत्रस्य संरम्भाद्दीप्तं वपुरजायत १८
स विस्फार्य महच्चापं कार्तस्वरविभूषितम्
भीमं प्रैक्षत राधेयो राजन्घोरेण चक्षुषा १९
ततः क्रुद्धः शरानस्यन्सूतपुत्रो व्यरोचत
मध्यंदिनगतोऽर्चिष्माञ्शरदीव दिवाकरः २०
मरीचिविकचस्येव राजन्भानुमतो वपुः
आसीदाधिरथेर्घोरं वपुः शरशतार्चिषः २१
कराभ्यामाददानस्य संदधानस्य चाशुगान्
विकर्षतो मुञ्चतो वा नान्तरं ददृशू रणे २२
अग्निचक्रोपमं घोरं मण्डलीकृतमायुधम्
कर्णस्यासीन्महाराज सव्यदक्षिणमस्यतः २३
स्वर्णपुङ्खाः सुनिशिताः कर्णचापच्युताः शराः
प्राच्छादयन्महाराज दिशः सूर्यस्य च प्रभाम् २४
ततः कनकपुङ्खानां शराणां नतपर्वणाम्
धनुश्च्युतानां वियति ददृशे बहुधा व्रजः २५
शरासनादाधिरथेः प्रभवन्तः स्म सायकाः
श्रेणीकृता व्यराजन्त राजन्क्रौञ्चा इवाम्बरे २६
गार्ध्रपत्राञ्शिलाधौतान्कार्तस्वरविभूषितान्
महवेगान्प्रदीप्ताग्रान्मुमोचाधिरथिः शरान् २७
ते तु चापबलोद्धूताः शातकुम्भविभूषिताः

अजस्रमन्वकीर्यन्त शराः पार्थरथं प्रति २८
ते व्योम्नि रत्नविकृता व्याकाशन्त सहस्रशः
शलभानामिव व्राताः शराः कर्णसमीरिताः २९
चापादाधिरथेर्मुक्ताः प्रपतन्तः स्म सायकाः
एको दीर्घ इव प्रांशुः प्रभवन्दृश्यते शरः ३०
पर्वतं वारिधाराभिश्छादयन्निव तोयदः
कर्णः प्राच्छादयत्क्रुद्धो भीमं सायकवृष्टिभिः ३१
तत्र भारत भीमस्य बलवीर्यपराक्रमम्
व्यवसायं च पुत्रास्ते प्रैक्षन्त कुरुभिः सह ३२
तां समुद्रमिवोद्धूतां शरवृष्टिं समुत्थिताम्
अचिन्तयित्वा भीमस्तु क्रुद्धः कर्णमुपाद्रवत् ३३
रुक्मपृष्ठं महच्चापं भीमस्यासीद्विशां पते
आकर्षान्मण्डलीभूतं शक्रचापमिवापरम्
तस्माच्छराः प्रादुरासन्पूरयन्त इवाम्बरम् ३४
सुवर्णपुङ्खैर्भीमेन सायकैर्नतपर्वभिः
गगने रचिता माला काञ्चनीव व्यराजत ३५
ततो व्योम्नि विषक्तानि शरजालानि भागशः
आहतानि व्यशीर्यन्त भीमसेनस्य पत्रिभिः ३६
कर्णस्य शरजालौघैर्भीमसेनस्य चोभयोः
अग्निस्फुलिङ्गसंस्पर्शैरञ्जोगतिभिराहवे
तैस्तैः कनकपुङ्खानां द्यौरासीत्संवृता व्रजैः ३७
स भीमं छादयन्बाणैः सूतपुत्रः पृथग्विधैः
उपारोहदनादृत्य तस्य वीर्यं महात्मनः ३८
तयोर्विसृजतोस्तत्र शरजालानि मारिष
वायुभूतान्यदृश्यन्त संसक्तानीतरेतरम् ३९
तस्मै कर्णः शितान्बाणान्कर्मारपरिमार्जितान्
सुवर्णविकृतान्क्रुद्धः प्राहिणोद्वधकाङ्क्षया ४०
तानन्तरिक्षे विशिखैस्त्रिधैकैकमशातयत्
विशेषयन्सूतपुत्रं भीमस्तिष्ठेति चाब्रवीत् ४१
पुनश्चासृजदुग्राणि शरवर्षाणि पाण्डवः

अमर्षी बलवान्क्रुद्धो दिधक्षन्निव पावकः ४२
तस्य तान्याददे कर्णः सर्वाण्यस्त्राण्यभीतवत्
युध्यतः पाण्डुपुत्रस्य सूतपुत्रोऽस्त्रमायया ४३
तस्येषुधी धनुर्ज्यां च बाणैः संनतपर्वभिः
रश्मीन्योक्त्राणि चाश्वानां कर्णो वैकर्तनोऽच्छिनत् ४४
अथास्याश्वान्पुनर्हत्वा त्रिभिर्विव्याध सारथिम्
सोऽवप्लुत्य द्रुतं सूतो युयुधानरथं ययौ ४५
उत्स्मयन्निव भीमस्य क्रुद्धः कालानलप्रभः
ध्वजं चिच्छेद राधेयः पताकाश्च न्यपातयत् ४६
स विधन्वा महाराज रथशक्तिं परामृशत्
तामवासृजदाविध्य क्रुद्धः कर्णरथं प्रति ४७
तामाधिरथिरायस्तः शक्तिं हेमपरिष्कृताम्
आपतन्तीं महोल्काभां चिच्छेद दशभिः शरैः ४८
सापतद्दशधा राजन्निकृत्ता कर्णसायकैः
अस्यतः सूतपुत्रस्य मित्रार्थे चित्रयोधिनः ४९
स चर्मादत्त कौन्तेयो जातरूपपरिष्कृतम्
खड्गं चान्यतरप्रेप्सुर्मृत्योरग्रे जयस्य वा
तदस्य सहसा कर्णो व्यधमत्प्रहसन्निव ५०
स विचर्मा महाराज विरथः क्रोधमूर्छितः
असिं प्रासृजदाविध्य त्वरन्कर्णरथं प्रति ५१
स धनुः सूतपुत्रस्य छित्त्वा ज्यां च सुसंशितः
अपतद्भुवि निस्त्रिंशश्च्युतः सर्प इवाम्बरात् ५२
ततः प्रहस्याधिरथिरन्यदादत्त कार्मुकम्
शत्रुघ्नं समरे क्रुद्धो दृढज्यं वेगवत्तरम् ५३
स भीमसेनः कुपितो बलवान्सत्यविक्रमः
विहायसं प्राक्रमद्वै कर्णस्य व्यथयन्मनः ५४
तस्य तच्चरितं दृष्ट्वा संग्रामे विजयैषिणः
लयमास्थाय राधेयो भीमसेनमवञ्चयत् ५५
तमदृष्ट्वा रथोपस्थे निलीनं व्यथितेन्द्रियम्
ध्वजमस्य समासाद्य तस्थौ स धरणीतले ५६

तदस्य कुरवः सर्वे चारणाश्चाभ्यपूजयन्
यदियेष रथात्कर्णं हन्तुं तार्क्ष्य इवोरगम् ५७
स छिन्नधन्वा विरथः स्वधर्ममनुपालयन्
स्वरथं पृष्ठतः कृत्वा युद्धायैव व्यवस्थितः ५८
तद्विहत्यास्य राधेयस्तत एनं समभ्ययात्
संरब्धः पाण्डवं संख्ये युद्धाय समुपस्थितम् ५९
तौ समेतौ महारङ्गे स्पर्धमानौ महाबलौ
जीमूताविव घर्मान्ते गर्जमानौ नभस्तले ६०
तयोरासीत्संप्रहारः क्रुद्धयोर्नरसिंहयोः
अमृष्यमाणयोः संख्ये देवदानवयोरिव ६१
क्षीणशस्त्रस्तु कौन्तेयः कर्णेन समभिद्रुतः
दृष्ट्वार्जुनहतान्नागान्पतितान्पर्वतोपमान्
रथमार्गविघातार्थं व्यायुधः प्रविवेश ह ६२
हस्तिनां व्रजमासाद्य रथदुर्गं प्रविश्य च
पाण्डवो जीविताकाङ्क्षी राधेयं नाभ्यहारयत् ६३
व्यवस्थानमथाकाङ्क्षन्धनंजयशरैर्हतम्
उद्यम्य कुञ्जरं पार्थस्तस्थौ परपुरंजयः ६४
तमस्य विशिखैः कर्णो व्याधमत्कुञ्जरं पुनः
हस्त्यङ्गान्यथ कर्णाय प्रहिणोत्पाण्डवो नदन् ६५
चक्राण्यश्वांस्तथा वाहान्यद्यत्पश्यति भूतले
तत्तदादाय चिक्षेप क्रुद्धः कर्णाय पाण्डवः ६६
तदस्य सर्वं चिच्छेद क्षिप्तं क्षिप्तं शितैः शरैः
व्यायुधं नावधीच्चैनं कर्णः कुन्त्या वचः स्मरन् ६७
धनुषोऽग्रेण तं कर्णस्त्वभिद्रुत्य परामृशत्
उत्स्मयन्निव राधेयो भीमसेनमुवाच ह ६८
पुनः पुनस्तूबरक मूढ औदरिकेति च
अकृतास्त्रक मा योत्सीर्बाल संग्रामकातर ६९
यत्र भोज्यं बहुविधं भक्ष्यं पेयं च पाण्डव
तत्रत्वं दुर्मते योग्य न युद्धेषु कथंचन ७०
मुनिर्भूत्वाथ वा भीम फलान्यद्धि सुदुर्मते

वनाय व्रज कौन्तेय न त्वं युद्धविशारदः ७१
फलमूलाशने युक्तस्त्वं तथातिथिभोजने
न त्वां शस्त्रसमुद्योगे योग्यं मन्ये वृकोदर ७२
पुष्पमूलफलाहारो व्रतेषु नियमेषु च
उचितस्त्वं वने भीम न त्वं युद्धविशारदः ७३
क्व युद्धं क्व मुनित्वं च वनं गच्छ वृकोदर
न त्वं युद्धोचितस्तात वनवासरतिर्भव ७४
सूदान्भृत्यजनान्दासांस्त्वं गृहे त्वरयन्भृशम्
योग्यस्ताडयितुं क्रोधाद्भोजनार्थं वृकोदर ७५
कौमारे यानि चाप्यासन्नप्रियाणि विशां पते
पूर्ववृत्तानि चाप्येनं रूक्षाण्यश्रावयद्भृशम् ७६
अथैनं तत्र संलीनमस्पृशद्धनुषा पुनः
प्रहसंश्च पुनर्वाक्यं भीममाह वृषस्तदा ७७
योद्धव्यमाविशान्यत्र न योद्धव्यं तु मादृशैः
मादृशैर्युध्यमानानामेतच्चान्यच्च विद्यते ७८
गच्छ वा यत्र तौ कृष्णौ तौ त्वा रक्षिष्यतो रणे
गृहं वा गच्छ कौन्तेय किं ते युद्धेन बालक ७९
एवं तं विरथं कृत्वा कर्णो राजन्व्यकत्थत
प्रमुखे वृष्णिसिंहस्य पार्थस्य च महात्मनः ८०
ततो राजञ्शिलाधौताञ्शराञ्शाखामृगध्वजः
प्राहिणोत्सूतपुत्राय केशवेन प्रचोदितः ८१
ततः पार्थभुजोत्सृष्टाः शराः काञ्चनभूषणाः
गाण्डीवप्रभवाः कर्णं हंसाः क्रौञ्चमिवाविशन् ८२
स भुजंगैरिवायस्तैर्गाण्डीवप्रेषितैः शरैः
भीमसेनादपासेधत्सूतपुत्रं धनंजयः ८३
स छिन्नधन्वा भीमेन धनंजयशराहतः
कर्णो भीमादपायासीद्रथेन महता द्रुतम् ८४
भीमोऽपि सात्यकेर्वाहं समारुह्य नरर्षभः
अन्वयाद्भ्रातरं संख्ये पाण्डवं सव्यसाचिनम् ८५
ततः कर्णं समुद्दिश्य त्वरमाणो धनंजयः

नाराचं क्रोधताम्राक्षः प्रैषीन्मृत्युमिवान्तकः ८६
स गरुत्मानिवाकाशे प्रार्थयन्भुजगोत्तमम्
नाराचोऽभ्यपतत्कर्णं तूर्णं गाण्डीवचोदितः ८७
तमन्तरिक्षे नाराचं द्रौणिश्चिच्छेद पत्रिणा
धनंजयभयात्कर्णमुज्जिहीर्षुर्महारथः ८८
ततो द्रौणिं चतुःषष्ट्या विव्याध कुपितोऽर्जुनः
शिलीमुखैर्महाराज मा गास्तिष्ठेति चाब्रवीत् ८९
स तु मत्तगजाकीर्णमनीकं रथसंकुलम्
तूर्णमभ्याविशद्द्रौणिर्धनंजयशरार्दितः ९०
ततः सुवर्णपृष्ठानां धनुषां कूजतां रणे
शब्दं गाण्डीवघोषेण कौन्तेयोऽभ्यभवद्बली ९१
धनंजयस्तथा यान्तं पृष्ठतो द्रौणिमभ्ययात्
नातिदीर्घमिवाध्वानं शरैः संत्रासयन्बलम् ९२
विदार्य देहान्नाराचैर्नरवारणवाजिनाम्
कङ्कबर्हिणवासोभिर्बलं व्यधमदर्जुनः ९३
तद्बलं भरतश्रेष्ठ सवाजिद्विपमानवम्
पाकशासनिरायस्तः पार्थः संनिजघान ह ९४
इति श्रीमहाभारते द्रोणपर्वणि चतुर्दशाधिकशततमोऽध्यायः ११४

## पञ्चदशाधिक शततमोऽध्यायः

धृतराष्ट्र उवाच
अहन्यहनि मे दीप्तं यशः पतति सञ्जय
हता मे बहवो योधा मन्ये कालस्य पर्ययम् १
धनंजयस्तु संक्रुद्धः प्रविष्टो मामकं बलम्
रक्षितं द्रोणकर्णाभ्यामप्रवेश्यं सुरैरपि २
ताभ्यामूर्जितवीर्याभ्यामाप्यायितपराक्रमः
सहितः कृष्णभीमाभ्यां शिनीनामृषभेण च ३
तदा प्रभृति मां शोको दहत्यग्निरिवाशयम्
ग्रस्तान्हि प्रतिपश्यामि भूमिपालान्ससैन्धवान् ४
अप्रियं सुमहत्कृत्वा सिन्धुराजः किरीटिनः

चक्षुर्विषयमापन्नः कथं मुच्येत जीवितः ५
अनुमानाच्च पश्यामि नास्ति सञ्जय सैन्धवः
युद्धं तु तद्यथा वृत्तं तन्ममाचक्ष्व पृच्छतः ६
यच्च विक्षोभ्य महतीं सेनां संलोडय चासकृत्
एकः प्रविष्टः संक्रुद्धो नलिनीमिव कुञ्जरः ७
तस्य वृष्णिप्रवीरस्य ब्रूहि युद्धं यथातथम्
धनंजयार्थे यत्तस्य कुशलो ह्यसि सञ्जय ८
सञ्जय उवाच
तथा तु वैकर्तनपीडितं तं भीमं प्रयान्तं पुरुषप्रवीरम्
समीक्ष्य राजन्नरवीरमध्ये शिनिप्रवीरोऽनुययौ रथेन ९
नदन्यथा वज्रधरस्तपान्ते ज्वलन्यथा जलदान्ते च सूर्यः
निघ्नन्नमित्रान्धनुषा दृढेन संकम्पयंस्तव पुत्रस्य सेनाम् १०
तं यान्तमश्वै रजतप्रकाशैरायोधने नरवीरं चरन्तम्
नाशक्नुवन्वारयितुं त्वदीयाः सर्वे रथा भारत माधवाग्र्यम् ११
अमर्षपूर्णस्त्वनिवृत्तयोधी शरासनी काञ्चनवर्मधारी
अलम्बुसः सात्यकिं माधवाग्र्यमवारयद्राजवरोऽभिपत्य १२
तयोरभूद्भारत संप्रहारस्तथागतो नैव बभूव कश्चित्
प्रैक्षन्त एवाहवशोभिनौ तौ योधास्त्वदीयाश्च परे च सर्वे १३
आविध्यदेनं दशभिः पृषत्कैरलम्बुसो राजवरः प्रसह्य
अनागतानेव तु तान्पृषत्कांश्चिच्छेद बाणैः शिनिपुंगवोऽपि १४
पुनः स बाणैस्त्रिभिरग्निकल्पैराकर्णपूर्णैर्निशितैः सुपुङ्खैः
विव्याध देहावरणं विदार्य ते सात्यकेराविविशुः शरीरम् १५
तैः कायमस्याग्न्यनिलप्रभावैर्विदार्य बाणैरपरैर्ज्वलद्भिः
आजघ्निवांस्तान्रजतप्रकाशानश्वांश्चतुर्भिश्चतुरः प्रसह्य १६
तथा तु तेनाभिहतस्तरस्वी नप्ता शिनेश्चक्रधरप्रभावः
अलम्बुसस्योत्तमवेगवद्भिर्हयांश्चतुर्भिर्निजघान बाणैः १७
अथास्य सूतस्य शिरो निकृत्य भल्लेन कालानलसंनिभेन
सकुण्डलं पूर्णशशिप्रकाशं भ्राजिष्णु वक्त्रं निचकर्त देहात् १८
निहत्य तं पार्थिवपुत्रपौत्रं संख्ये मधूनामृषभः प्रमाथी
ततोऽन्वयादर्जुनमेव वीरः सैन्यानि राजंस्तव संनिवार्य १९

अन्वागतं वृष्णिवरं समीक्ष्य तथारिमध्ये परिवर्तमानम्
घ्नन्तं कुरूणामिषुभिर्बलानि पुनः पुनर्वायुरिवाभ्रपूगान् २०
ततोऽवहन्सैन्धवाः साधु दान्ता गोक्षीरकुन्देन्दुहिमप्रकाशाः
सुवर्णजालावतताः सदश्वा यतो यतः कामयते नृसिंहः २१
अथात्मजास्ते सहिताभिपेतुरन्ये च योधास्त्वरितास्त्वदीयाः
कृत्वा मुखं भारत योधमुख्यं दुःशासनं त्वत्सुतमाजमीढ २२
ते सर्वतः संपरिवार्य संख्ये शैनेयमाजघ्नुरनीकसाहाः
स चापि तान्प्रवरः सात्वतानां न्यवारयद्बाणजालेन वीरः २३
निवार्य तांस्तूर्णममित्रघाती नप्ता शिनेः पत्रिभिरग्निकल्पैः
दुःशासनस्याभिजघान वाहानुद्यम्य बाणासनमाजमीढ २४
इति श्रीमहाभारते द्रोणपर्वणि पञ्चदशाधिकशततमोऽध्यायः ११५

## षोडशाधिक शततमोऽध्यायः

सञ्जय उवाच
तमुद्यतं महाबाहुं दुःशासनरथं प्रति
त्वरितं त्वरणीयेषु धनंजयहितैषिणम् १
त्रिगर्तानां महेष्वासाः सुवर्णविकृतध्वजाः
सेनासमुद्रमाविष्टमानर्तं पर्यवारयन् २
अथैनं रथवंशेन सर्वतः संनिवार्य ते
अवाकिरञ्शरव्रातैः क्रुद्धाः परमधन्विनः ३
अजयद्राजपुत्रांस्तान्यतमानान्महारणे
एकः पञ्चाशतं शत्रून्सात्यकिः सत्यविक्रमः ४
संप्राप्य भारतीमध्यं तलघोषसमाकुलम्
असिशक्तिगदापूर्णमप्लवं सलिलं यथा ५
तत्राद्भुतमपश्याम शैनेयचरितं रणे
प्रतीच्यां दिशि तं दृष्ट्वा प्राच्यां पश्याम लाघवात् ६
उदीचीं दक्षिणां प्राचीं प्रतीचीं प्रसृतस्तथा
नृत्यन्निवाचरच्छूरो यथा रथशतं तथा ७
तद्दृष्ट्वा चरितं तस्य सिंहविक्रान्तगामिनः
त्रिगर्ताः संन्यवर्तन्त संतप्ताः स्वजनं प्रति ८

तमन्ये शूरसेनानां शूराः संख्ये न्यवारयन्
नियच्छन्तः शरव्रातैर्मत्तं द्विपमिवाङ्कुशैः ९
तान्न्यवारयदायस्तान्मुहूर्तमिव सात्यकिः
ततः कलिङ्गैर्युयुधे सोऽचिन्त्यबलविक्रमः १०
तां च सेनामतिक्रम्य कलिङ्गानां दुरत्ययाम्
अथ पार्थं महाबाहुर्धनंजयमुपासदत् ११
तरन्निव जले श्रान्तो यथा स्थलमुपेयिवान्
तं दृष्ट्वा पुरुषव्याघ्रं युयुधानः समाश्वसत् १२
तमायान्तमभिप्रेक्ष्य केशवोऽर्जुनमब्रवीत्
असावायाति शैनेयस्तव पार्थ पदानुगः १३
एष शिष्यः सखा चैव तव सत्यपराक्रमः
सर्वान्योधांस्तृणीकृत्य विजिग्ये पुरुषर्षभः १४
एष कौरवयोधानां कृत्वा घोरमुपद्रवम्
तव प्राणैः प्रियतरः किरीटिन्नेति सात्यकिः १५
एष द्रोणं तथा भोजं कृतवर्माणमेव च
कदर्थीकृत्य विशिखैः फल्गुनाभ्येति सात्यकिः १६
धर्मराजप्रियान्वेषी हत्वा योधान्वरान्वरान्
शूरश्चैव कृतास्त्रश्च फल्गुनाभ्येति सात्यकिः १७
कृत्वा सुदुष्करं कर्म सैन्यमध्ये महाबलः
तव दर्शनमन्विच्छन्पाण्डवाभ्येति सात्यकिः १८
बहूनेकरथेनाजौ योधयित्वा महारथान्
आचार्यप्रमुखान्पार्थ आयात्येष हि सात्यकिः १९
स्वबाहुबलमाश्रित्य विदार्य च वरूथिनीम्
प्रेषितो धर्मपुत्रेण पार्थैषोऽभ्येति सात्यकिः २०
यस्य नास्ति समो योधः कौरवेषु कथंचन
सोऽयमायाति कौन्तेय सात्यकिः सत्यविक्रमः २१
कुरुसैन्याद्विमुक्तो वै सिंहो मध्याद्गवामिव
निहत्य बहुलाः सेनाः पार्थैषोऽभ्येति सात्यकिः २२
एष राजसहस्राणां वक्त्रैः पङ्कजसंनिभैः
आस्तीर्य वसुधां पार्थ क्षिप्रमायाति सात्यकिः २३

एष दुर्योधनं जित्वा भ्रातृभिः सहितं रणे
निहत्य जलसंधं च क्षिप्रमायाति सात्यकिः २४
रुधिरौघवतीं कृत्वा नदीं शोणितकर्दमाम्
तृणवन्न्यस्य कौरव्यानेष आयाति सात्यकिः २५
ततोऽप्रहृष्टः कौन्तेयः केशवं वाक्यमब्रवीत्
न मे प्रियं महाबाहो यन्ममाभ्येति सात्यकिः २६
न हि जानामि वृत्तान्तं धर्मराजस्य केशव
सात्वतेन विहीनः स यदि जीवति वा न वा २७
एतेन हि महाबाहो रक्षितव्यः स पार्थिवः
तमेष कथमुत्सृज्य मम कृष्ण पदानुगः २८
राजा द्रोणाय चोत्सृष्टः सैन्धवश्चानिपातितः
प्रत्युद्यातश्च शैनेयमेष भूरिश्रवा रणे २९
सोऽय गुरुतरो भारः सैन्धवान्मे समाहितः
ज्ञातव्यश्च हि मे राजा रक्षितव्यश्च सात्यकिः ३०
जयद्रथश्च हन्तव्यो लम्बते च दिवाकरः
श्रान्तश्चैष महाबाहुरल्पप्राणश्च सांप्रतम् ३१
परिश्रान्ता हयाश्चास्य हययन्ता च माधव
न च भूरिश्रवाः श्रान्तः ससहायश्च केशव ३२
अपीदानीं भवेदस्य क्षेममस्मिन्समागमे
कच्चिन्न सागरं तीर्त्वा सात्यकिः सत्यविक्रमः
गोष्पदं प्राप्य सीदेत महौजाः शिनिपुंगवः ३३
अपि कौरवमुख्येन कृतास्त्रेण महात्मना
समेत्य भूरिश्रवसा स्वस्तिमान्सात्यकिर्भवेत् ३४
व्यतिक्रममिमं मन्ये धर्मराजस्य केशव
आचार्याद्भयमुत्सृज्य यः प्रेषयति सात्यकिम् ३५
ग्रहणं धर्मराजस्य खगः श्येन इवामिषम्
नित्यमाशंसते द्रोणः कच्चित्स्यात्कुशली नृपः ३६

इति श्रीमहाभारते द्रोणपर्वणि षोडशाधिकशततमोऽध्यायः ११६

## सप्तदशाधिकशततमोऽध्यायः

सञ्जय उवाच
तमापतन्तं संप्रेक्ष्य सात्वतं युद्धदुर्मदम्
क्रोधाद्भूरिश्रवा राजन्सहसा समुपाद्रवत् १
तमब्रवीन्महाबाहुः कौरव्यः शिनिपुंगवम्
अद्य प्राप्तोऽसि दिष्ट्या मे चक्षुर्विषयमित्युत २
चिराभिलषितं काममद्य प्राप्स्यामि संयुगे
न हि मे मोक्ष्यसे जीवन्यदि नोत्सृजसे रणम् ३
अद्य त्वां समरे हत्वा नित्यं शूराभिमानिनम्
नन्दयिष्यामि दाशार्ह कुरुराजं सुयोधनम् ४
अद्य मद्बाणनिर्दग्धं पतितं धरणीतले
द्रक्ष्यतस्त्वां रणे वीरौ सहितौ केशवार्जुनौ ५
अद्य धर्मसुतो राजा श्रुत्वा त्वां निहतं मया
सव्रीडो भविता सद्यो येनासीह प्रवेशितः ६
अद्य मे विक्रमं पार्थो विज्ञास्यति धनंजयः
त्वयि भूमौ विनिहते शयाने रुधिरोक्षिते ७
चिराभिलषितो ह्यद्य त्वया सह समागमः
पुरा देवासुरे युद्धे शक्रस्य बलिना यथा ८
अद्य युद्धं महाघोरं तव दास्यामि सात्वत
ततो ज्ञास्यसि तत्त्वेन मद्वीर्यबलपौरुषम् ९
अद्य संयमनीं याता मया त्वं निहतो रणे
यथा रामानुजेनाजौ रावणिर्लक्ष्मणेन वै १०
अद्य कृष्णश्च पार्थश्च धर्मराजश्च माधव
हते त्वयि निरुत्साहा रणं त्यक्ष्यन्त्यसंशयम् ११
अद्य तेऽपचितिं कृत्वा शितैर्माधव सायकैः
तत्स्त्रियो नन्दयिष्यामि ये त्वया निहता रणे १२
चक्षुर्विषयसंप्राप्तो न त्वं माधव मोक्ष्यसे
सिंहस्य विषयं प्राप्तो यथा क्षुद्रमृगस्तथा १३
युयुधानस्तु तं राजन्प्रत्युवाच हसन्निव
कौरवेय न संत्रासो विद्यते मम संयुगे १४

स मां निहन्यात्संग्रामे यो मां कुर्यान्निरायुधम्
समास्तु शाश्वतीर्हन्याद्यो मां हन्याद्धि संयुगे १५
किं मृषोक्तेन बहुना कर्मणा तु समाचर
शारदस्येव मेघस्य गर्जितं निष्फलं हि ते १६
श्रुत्वैतद्गर्जितं वीर हास्यं हि मम जायते
चिरकालेप्सितं लोके युद्धमद्यास्तु कौरव १७
त्वरते मे मतिस्तात त्वयि युद्धाभिकाङ्क्षिणि
नाहत्वा संनिवर्तिष्ये त्वामद्य पुरुषाधम १८
अन्योन्यं तौ तदा वाग्भिस्तक्षन्तौ नरपुंगवौ
जिघांसू परमक्रुद्धावभिजघ्नतुराहवे १९
समेतौ तौ नरव्याघ्रौ शुष्मिणौ स्पर्धिनौ रणे
द्विरदाविव संक्रुद्धौ वाशितार्थे मदोत्कटौ २०
भूरिश्रवाः सात्यकिश्च ववर्षतुररिंदमौ
शरवर्षाणि भीमानि मेघाविव परस्परम् २१
सौमदत्तिस्तु शैनेयं प्रच्छाद्येषुभिराशुगैः
जिघांसुर्भरतश्रेष्ठ विव्याध निशितैः शरैः २२
दशभिः सात्यकिं विद्ध्वा सौमदत्तिरथापरान्
मुमोच निशितान्बाणाञ्जिघांसुः शिनिपुंगवम् २३
तानस्य विशिखांस्तीक्ष्णानन्तरिक्षे विशां पते
अप्राप्तानस्त्रमायाभिरग्रसत्सात्यकिः प्रभो २४
तौ पृथक्शरवर्षाभ्यामवर्षेतां परस्परम्
उत्तमाभिजनौ वीरौ कुरुवृष्णियशस्करौ २५
तौ नखैरिव शार्दूलौ दन्तैरिव महाद्विपौ
रथशक्तिभिरन्योन्यं विशिखैश्चाप्यकृन्तताम् २६
निर्भिदन्तौ हि गात्राणि विक्षरन्तौ च शोणितम्
व्यष्टम्भयेतामन्योन्यं प्राणद्यूताभिदेविनौ २७
एवमुत्तमकर्माणौ कुरुवृष्णियशस्करौ
परस्परमयुध्येतां वारणाविव यूथपौ २८
तावदीर्घेण कालेन ब्रह्मलोकपुरस्कृतौ
जिगीषन्तौ परं स्थानमन्योन्यमभिजघ्नतुः २९

सात्यकिः सौमदत्तिश्च शरवृष्ट्या परस्परम्
हृष्टवद्धार्तराष्ट्राणां पश्यतामभ्यवर्षताम् ३०
संप्रैक्षन्त जनास्तत्र युध्यमानौ युधां पती
यूथपौ वाशिताहेतोः प्रयुद्धाविव कुञ्जरौ ३१
अन्योन्यस्य हयान्हत्वा धनुषी विनिकृत्य च
विरथावसियुद्धाय समेयातां महारणे ३२
आर्षभे चर्मणी चित्रे प्रगृह्य विपुले शुभे
विकोशौ चाप्यसी कृत्वा समरे तौ विचेरतुः ३३
चरन्तौ विविधान्मार्गान्मण्डलानि च भागशः
मुहुराजघ्नतुः क्रुद्धावन्योन्यमरिमर्दनौ ३४
सखड्गौ चित्रवर्माणौ सनिष्काङ्गदभूषणौ
रणे रणोत्कटौ राजन्नन्योन्यं पर्यकर्षताम् ३५
मुहूर्तमिव राजेन्द्र परिकृष्य परस्परम्
पश्यतां सर्वसैन्यानां वीरावाश्वसतां पुनः ३६
असिभ्यां चर्मणी शुभ्रे विपुले च शरावरे
निकृत्य पुरुषव्याघ्रौ बाहुयुद्धं प्रचक्रतुः ३७
व्यूढोरस्कौ दीर्घभुजौ नियुद्धकुशलावुभौ
बाहुभिः समसज्जेतामायसैः परिघैरिव ३८
तयोरासन्भुजाघाता निग्रहप्रग्रहौ तथा
शिक्षाबलसमुद्भूताः सर्वयोधप्रहर्षणाः ३९
तयोर्नृवरयो राजन्समरे युध्यमानयोः
भीमोऽभवन्महाशब्दो वज्रपर्वतयोरिव ४०
द्विपाविव विषाणाग्रैः शृङ्गैरिव महर्षभौ
युयुधाते महात्मानौ कुरुसात्वतपुंगवौ ४१
क्षीणायुधे सात्वते युध्यमाने ततोऽब्रवीदर्जुनं वासुदेवः
पश्यस्वैनं विरथं युध्यमानं रणे केतुं सर्वधनुर्धराणाम् ४२
प्रविष्टो भारतीं सेनां तव पाण्डव पृष्ठतः
योधितश्च महावीर्यैः सर्वैर्भारत भारतैः ४३
परिश्रान्तो युधां श्रेष्ठः संप्राप्तो भूरिदक्षिणम्
युद्धकाङ्क्षिणमायान्तं नैतत्सममिवार्जुन ४४

ततो भूरिश्रवाः क्रुद्धः सात्यकिं युद्धदुर्मदम्
उद्यम्य न्यहनद्राजन्मत्तो मत्तमिव द्विपम् ४५
रथस्थयोर्द्वयोर्युद्धे क्रुद्धयोर्योधमुख्ययोः
केशवार्जुनयो राजन्समरे प्रेक्षमाणयोः ४६
अथ कृष्णो महाबाहुरर्जुनं प्रत्यभाषत
पश्य वृष्ण्यन्धकव्याघ्रं सौमदत्तिवशं गतम् ४७
परिश्रान्तं गतं भूमौ कृत्वा कर्म सुदुष्करम्
तवान्तेवासिनं वीरं पालयार्जुन सात्यकिम् ४८
न वशं यज्ञशीलस्य गच्छेदेष वरारिहन्
त्वत्कृते पुरुषव्याघ्र तदाशु क्रियतां विभो ४९
अथाब्रवीद्धृष्टमना वासुदेवं धनंजयः
पश्य वृष्णिप्रवीरेण क्रीडन्तं कुरुपुंगवम्
महाद्विपेनेव वने मत्तेन हरियूथपम् ५०
हाहाकारो महानासीत्सैन्यानां भरतर्षभ
यदुद्यम्य महाबाहुः सात्यकिं न्यहनद्भुवि ५१
स सिंह इव मातङ्गं विकर्षन्भूरिदक्षिणः
व्यरोचत कुरुश्रेष्ठः सात्वतप्रवरं युधि ५२
अथ कोशाद्विनिष्कृष्य खड्गं भूरिश्रवा रणे
मूर्धजेषु निजग्राह पदा चोरस्यताडयत् ५३
तथा तु परिकृष्यन्तं दृष्ट्वा सात्वतमाहवे
वासुदेवस्ततो राजन्भूयोऽजुनमभाषत ५४
पश्य वृष्ण्यन्धकव्याघ्रं सौमदत्तिवशं गतम्
तव शिष्यं महाबाहो धनुष्यनवरं त्वया ५५
असत्यो विक्रमः पार्थ यत्र भूरिश्रवा रणे
विशेषयति वार्ष्णेयं सात्यकिं सत्यविक्रमम् ५६
एवमुक्तो महाबाहुर्वासुदेवेन पाण्डवः
मनसा पूजयामास भूरिश्रवसमाहवे ५७
विकर्षन्सात्वतश्रेष्ठं क्रीडमान इवाहवे
संहर्षयति मां भूयः कुरूणां कीर्तिवर्धनः ५८
प्रवरं वृष्णिवीराणां यन्न हन्याद्धि सात्यकिम्

महाद्विपमिवारण्ये मृगेन्द्र इव कर्षति ५९
एवं तु मनसा राजन्पार्थः संपूज्य कौरवम्
वासुदेवं महाबाहुरर्जुनः प्रत्यभाषत ६०
सैन्धवासक्तदृष्टित्वान्नैनं पश्यामि माधव
एष त्वसुकरं कर्म यादवार्थे करोम्यहम् ६१
इत्युक्त्वा वचनं कुर्वन्वासुदेवस्य पाण्डवः
सखड्गं यज्ञशीलस्य पत्रिणा बाहुमच्छिनत् ६२
इति श्रीमहाभारते द्रोणपर्वणि सप्तदशाधिकशततमोऽध्यायः ११७

## अष्टादशाधिक शततमोऽध्यायः

सञ्जय उवाच
स बाहुरपतद्भूमौ सखड्गः सशुभाङ्गदः
आदधज्जीवलोकस्य दुःखमुत्तममुत्तमः १
प्रहरिष्यन्हतो बाहुरदृश्येन किरीटिना
वेगेनाभ्यपतद्भूमौ पञ्चास्य इव पन्नगः २
स मोघं कृतमात्मानं दृष्ट्वा पार्थेन कौरवः
उत्सृज्य सात्यकिं क्रोधाद्गर्हयामास पाण्डवम् ३
नृशंसं बत कौन्तेयकर्मेदं कृतवानसि
अपश्यतो विषक्तस्य यन्मे बाहुमचिच्छिदः ४
किं नु वक्ष्यसि राजानं धर्मपुत्रं युधिष्ठिरम्
किं कुर्वाणो मया संख्ये हतो भूरिश्रवा इति ५
इदमिन्द्रेण ते साक्षादुपदिष्टं महात्मना
अस्त्रं रुद्रेण वा पार्थ द्रोणेनाथ कृपेण वा ६
ननु नाम स्वधर्मज्ञस्त्वं लोकेऽभ्यधिकः परैः
अयुध्यमानस्य कथं रणे प्रहृतवानसि ७
न प्रमत्ताय भीताय विरथाय प्रयाचते
व्यसने वर्तमानाय प्रहरन्ति मनस्विनः ८
इदं तु नीचाचरितमसत्पुरुषसेवितम्
कथमाचरितं पार्थ त्वया कर्म सुदुष्करम् ९
आर्येण सुकरं ह्याहुरार्यकर्म धनंजय

अनार्यकर्म त्वार्येण सुदुष्करतरं भुवि १०
येषु येषु नरः पार्थ यत्र यत्र च वर्तते
आशु तच्छीलतामेति तदिदं त्वयि दृश्यते ११
कथं हि राजवंश्यस्त्वं कौरवेयो विशेषतः
क्षत्रधर्मादपक्रान्तः सुवृत्तश्चरितव्रतः १२
इदं तु यदतिक्षुद्रं वार्ष्णेयार्थे कृतं त्वया
वासुदेवमतं नूनं नैतत्त्वय्युपपद्यते १३
को हि नाम प्रमत्ताय परेण सह युध्यते
ईदृशे व्यसनं दद्याद्यो न कृष्णसखा भवेत् १४
व्रात्याः संश्लिष्टकर्माणः प्रकृत्यैव विगर्हिताः
वृष्ण्यन्धकाः कथं पार्थ प्रमाणं भवता कृताः १५
एवमुक्त्वा महाबाहुर्यूपकेतुर्महायशाः
युयुधानं परित्यज्य रणे प्रायमुपाविशत् १६
शरानास्तीर्य सव्येन पाणिना पुण्यलक्षणः
यियासुर्ब्रह्मलोकाय प्राणान्प्राणेष्वथाजुहोत् १७
सूर्ये चक्षुः समाधाय प्रसन्नं सलिले मनः
ध्यायन्महोपनिषदं योगयुक्तोऽभवन्मुनिः १८
ततः स सर्वसेनायां जनः कृष्णधनंजयौ
गर्हयामास तं चापि शशंस पुरुषर्षभम् १९
निन्द्यमानौ तथा कृष्णौ नोचतुः किंचिदप्रियम्
प्रशस्यमानश्च तथा नाहृष्यद्यूपकेतनः २०
तांस्तथा वादिनो राजन्पुत्रांस्तव धनंजयः
अमृष्यमाणो मनसा तेषां तस्य च भाषितम् २१
असंक्रुद्धमना वाचा स्मारयन्निव भारत
उवाच पाण्डुतनयः साक्षेपमिव फल्गुनः २२
मम सर्वेऽपि राजानो जानन्त्येतन्महाव्रतम्
न शक्यो मामको हन्तुं यो मे स्याद्बाणगोचरे २३
यूपकेतो समीक्ष्य त्वं न मां गर्हितुमर्हसि
न हि धर्ममविज्ञाय युक्तं गर्हयितुं परम् २४
आत्तशस्त्रस्य हि रणे वृष्णिवीरं जिघांसतः

यदहं बाहुमच्छैत्सं न स धर्मो विगर्हितः २५
न्यस्तशस्त्रस्य बालस्य विरथस्य विवर्मणः
अभिमन्योर्वधं तात धार्मिकः को न पूजयेत् २६
एवमुक्तस्तु पार्थेन शिरसा भूमिमस्पृशत्
पाणिना चैव सव्येन प्राहिणोदस्य दक्षिणम् २७
एतत्पार्थस्य तु वचस्ततः श्रुत्वा महाद्युतिः
यूपकेतुर्महाराज तूष्णीमासीदवाङ्मुखः २८
अर्जुन उवाच
या प्रीतिर्धर्मराजे मे भीमे च वदतां वरे
नकुले सहदेवे च सा मे त्वयि शलाग्रज २९
मया तु समनुज्ञातः कृष्णेन च महात्मना
गच्छ पुण्यकृताँल्लोकाञ्शिबिरौशीनरौ यथा ३०
सञ्जय उवाच
तत उत्थाय शैनेयो विमुक्तः सौमदत्तिना
खड्गमादाय चिच्छित्सुः शिरस्तस्य महात्मनः ३१
निहतं पाण्डुपुत्रेण प्रमत्तं भूरिदक्षिणम्
इयेष सात्यकिर्हन्तुं शलाग्रजमकल्मषम् ३२
निकृत्तभुजमासीनं छिन्नहस्तमिव द्विपम्
क्रोशतां सर्वसैन्यानां निन्द्यमानः सुदुर्मनाः ३३
वार्यमाणः स कृष्णेन पार्थेन च महात्मना
भीमेन चक्ररक्षाभ्यामश्वत्थाम्ना कृपेण च ३४
कर्णेन वृषसेनेन सैन्धवेन तथैव च
विक्रोशतां च सैन्यानामवधीत्तं यतव्रतम् ३५
प्रायोपविष्टाय रणे पार्थेन छिन्नबाहवे
सात्यकिः कौरवेन्द्राय खड्गेनापाहरच्छिरः ३६
नाभ्यनन्दन्त तत्सैन्याः सात्यकिं तेन कर्मणा
अर्जुनेन हतं पूर्वं यज्जघान कुरूद्वहम् ३७
सहस्राक्षसमं तत्र सिद्धचारणमानवाः
भूरिश्रवसमालोक्य युद्धे प्रायगतं हतम् ३८
अपूजयन्त तं देवा विस्मितास्तस्य कर्मभिः

पक्षवादांश्च बहुशः प्रावदंस्तस्य सैनिकाः ३९
न वार्ष्णेयस्यापराधो भवितव्यं हि तत्तथा
तस्मान्मन्युर्न वः कार्यः क्रोधो दुःखकरो नृणाम् ४०
हन्तव्यश्चैष वीरेण नात्र कार्या विचारणा
विहितो ह्यस्य धात्रैव मृत्युः सात्यकिराहवे ४१
सात्यकिरुवाच
न हन्तव्यो न हन्तव्य इति यन्मां प्रभाषथ
धर्मवादैरधर्मिष्ठा धर्मकञ्चुकमास्थिताः ४२
यदा बालःसुभद्रायाः सुतः शस्त्रविनाकृतः
युष्माभिर्निहतो युद्धे तदा धर्मः क्व वो गतः ४३
मया त्वेतत्प्रतिज्ञातं क्षेपे कस्मिंश्चिदेव हि
यो मां निष्पिष्य संग्रामे जीवन्हन्यात्पदा रुषा
स मे वध्यो भवेच्छत्रुर्यद्यपि स्यान्मुनिव्रत ४४
चेष्टमानं प्रतीघाते सभुजं मां सचक्षुषः
मन्यध्वं मृतमित्येवमेतद्वो बुद्धिलाघवम्
युक्तो ह्यस्य प्रतीघातः कृतो मे कुरुपुंगवाः ४५
यत्तु पार्थेन मत्स्नेहात्स्वां प्रतिज्ञां च रक्षता
सखड्गोऽस्य हृतो बाहुरेतेनैवास्मि वञ्चितः ४६
भवितव्यं च यद्भावि दैवं चेष्टयतीव च
सोऽय हतो विमर्देऽस्मिन्किमत्राधर्मचेष्टितम् ४७
अपि चायं पुरां गीतः श्लोको वाल्मीकिना भुवि
पीडाकरममित्राणां यत्स्यात्कर्तव्यमेव तत् ४८
सञ्जय उवाच
एवमुक्ते महाराज सर्वे कौरवपाण्डवाः
न स्म किंचिदभाषन्त मनसा समपूजयन् ४९
मन्त्रैर्हि पूतस्य महाध्वरेषु यशस्विनो भूरिसहस्रदस्य
मुनेरिवारण्यगतस्य तस्य न तत्र कश्चिद्वधमभ्यनन्दत् ५०
सुनीलकेशं वरदस्य तस्य शूरस्य पारावतलोहिताक्षम्
अश्वस्य मेध्यस्य शिरो निकृत्तं न्यस्तं हविर्धानमिवोत्तरेण ५१
स तेजसा शस्त्रहतेन पूतो महाहवे देहवरं विसृज्य

आक्रामदूर्ध्वं वरदो वरार्हो व्यावृत्य धर्मेण परेण रोदसी ५२
इति श्रीमहाभारते द्रोणपर्वणि अष्टादशाधिकशततमोऽध्यायः ११८

## एकोनविंशत्यधिकशततमोऽध्यायः

धृतराष्ट्र उवाच
अजितो द्रोणराधेयविकर्णकृतवर्मभिः
तीर्णः सैन्यार्णवं वीरः प्रतिश्रुत्य युधिष्ठिरे १
स कथं कौरवेयेण समरेष्वनिवारितः
निगृह्य भूरिश्रवसा बलाद्भुवि निपातितः २
सञ्जय उवाच
शृणु राजन्निहोत्पत्तिं शैनेयस्य यथा पुरा
यथा च भूरिश्रवसो यत्र ते संशयो नृप ३
अत्रेः पुत्रोऽभवत्सोमः सोमस्य तु बुधः स्मृतः
बुधस्यासीन्महेन्द्राभः पुत्र एकः पुरूरवाः ४
पुरूरवस आयुस्तु आयुषो नहुषः स्मृतः
नहुषस्य ययातिस्तु राजर्षिर्देवसंमितः ५
ययातेर्देवयान्यां तु यदुर्ज्येष्ठोऽभवत्सुतः
यदोरभूदन्ववाये देवमीढ इति श्रुतः ६
यादवस्तस्य च सुतः शूरस्त्रैलोक्यसंमतः
शूरस्य शौरिर्नृवरो वसुदेवो महायशाः ७
धनुष्यनवरः शूरः कार्तवीर्यसमो युधि
तद्वीर्यश्चापि तत्रैव कुले शिनिरभून्नृपः ८
एतस्मिन्नेव काले तु देवकस्य महात्मनः
दुहितुः स्वयंवरे राजन्सर्वक्षत्रसमागमे ९
तत्र वै देवकीं देवीं वसुदेवार्थमाप्तवान्
निर्जित्य पार्थिवान्सर्वान्रथमारोपयच्छिनिः १०
तां दृष्ट्वा देवकीं शौरे रथस्थां पुरुषर्षभः
नामृष्यत महातेजाः सोमदत्तः शिनेर्नृप ११
तयोर्युद्धमभूद्राजन्दिनार्धं चित्रमद्भुतम्
बाहुयुद्धं सुबलिनोः शक्रप्रह्रादयोरिव १२

शिनिना सोमदत्तस्तु प्रसह्य भुवि पातितः
असिमुद्यम्य केशेषु प्रगृह्य च पदा हतः १३
मध्ये राजसहस्राणां प्रेक्षकाणां समन्ततः
कृपया च पुनस्तेन जीवेति स विसर्जितः १४
तदवस्थः कृतस्तेन सोमदत्तोऽथ मारिष
प्रसादयन्महादेवममर्षवशमास्थितः १५
तस्य तुष्टो महादेवो वराणां वरदः प्रभुः
वरेण छन्दयामास स तु वव्रे वरं नृपः १६
पुत्रमिच्छामि भगवन्यो निहन्याच्छिनेः सुतम्
मध्ये राजसहस्राणां पदा हन्याच्च संयुगे १७
तस्य तद्वचनं श्रुत्वा सोमदत्तस्य पार्थिव
एवमस्त्विति तत्रोक्त्वा स देवोऽन्तरधीयत १८
स तेन वरदानेन लब्धवान्भूरिदक्षिणम्
न्यपातयच्च समरे सौमदत्तिः शिनेः सुतम् १९
एतत्ते कथितं राजन्यन्मां त्वां परिपृच्छसि
न हि शक्या रणे जेतुं सात्वता मनुजर्षभ २०
लब्धलक्ष्याश्च संग्रामे बहवश्चित्रयोधिनः
देवदानवगन्धर्वान्विजेतारो ह्यविस्मिताः
स्ववीर्यविजये युक्ता नैते परपरिग्रहाः २१
न तुल्यं वृष्णिभिरिह दृश्यते किंचन प्रभो
भूतं भव्यं भविष्यच्च बलेन भरतर्षभ २२
न ज्ञातिमवमन्यन्ते वृद्धानां शासने रताः
न देवासुरगन्धर्वा न यक्षोरगराक्षसाः
जेतारो वृष्णिवीराणां न पुनर्मानुषा रणे २३
ब्रह्मद्रव्ये गुरुद्रव्ये ज्ञातिद्रव्येऽप्यहिंसकाः
एतेषां रक्षितारश्च ये स्युः कस्यांचिदापदि २४
अर्थवन्तो न चोत्सिक्ता ब्रह्मण्याः सत्यवादिनः
समर्थान्नावमन्यन्ते दीनानभ्युद्धरन्ति च २५
नित्यं देवपरा दान्ता दातारश्चाविकत्थनाः
तेन वृष्णिप्रवीराणां चक्रं न प्रतिहन्यते २६

अपि मेरुं वहेत्कश्चित्तरेद्वा मकरालयम्
न तु वृष्णिप्रवीराणां समेत्यान्तं व्रजेन्नृप २७
एतत्ते सर्वमाख्यातं यत्र ते संशयो विभो
कुरुराज नरश्रेष्ठ तव ह्यपनयो महान् २८
इति श्रीमहाभारते द्रोणपर्वणि एकोनविंशत्यधिकशततमोऽध्यायः ११९

## विंशत्यधिक शततमोऽध्यायः

धृतराष्ट्र उवाच
तदवस्थे हते तस्मिन्भूरिश्रवसि कौरवे
यथा भूयोऽभवद्युद्धं तन्ममाचक्ष्व सञ्जय १
सञ्जय उवाच
भूरिश्रवसि संक्रान्ते परलोकाय भारत
वासुदेवं महाबाहुरर्जुनः समचूचुदत् २
चोदयाश्वान्भृशं कृष्ण यतो राजा जयद्रथः
अस्तमेति महाबाहो त्वरमाणो दिवाकरः ३
एतद्धि पुरुषव्याघ्र महदभ्युद्यतं मया
कार्यं संरक्ष्यते चैष कुरुसेनामहारथैः ४
नास्तमेति यथा सूर्यो यथा सत्यं भवेद्वचः
चोदयाश्वांस्तथा कृष्ण यथा हन्यां जयद्रथम् ५
ततः कृष्णो महाबाहू रजतप्रतिमान्हयान्
हयज्ञश्चोदयामास जयद्रथरथं प्रति ६
तं प्रयान्तममोघेषुमुत्पतद्भिरिवाशुगैः
त्वरमाणा महाराज सेनामुख्याः समाव्रजन् ७
दुर्योधनश्च कर्णश्च वृषसेनोऽथ मद्रराट्
अश्वत्थामा कृपश्चैव स्वयमेव च सैन्धवः ८
समासाद्य तु बीभत्सुः सैन्धवं प्रमुखे स्थितम्
नेत्राभ्यां क्रोधदीप्ताभ्यां संप्रैक्षन्निर्दहन्निव ९
ततो दुर्योधनो राजा राधेयं त्वरितोऽब्रवीत्
अर्जुनं वीक्ष्य संयान्तं जयद्रथरथं प्रति १०
अयं स वैकर्तन युद्धकालो विदर्शयस्वात्मबलं महात्मन्

यथा न वध्येत रणेऽजुनेन जयद्रथः कर्ण तथा कुरुष्व ११
अल्पावशिष्टं दिवसं नृवीर विघातयस्वाद्य रिपुं शरौघैः
दिनक्षयं प्राप्य नरप्रवीर ध्रुवं हि नः कर्ण जयो भविष्यति १२
सैन्धवे रक्ष्यमाणे तु सूर्यस्यास्तमयं प्रति
मिथ्याप्रतिज्ञः कौन्तेयः प्रवेक्ष्यति हुताशनम् १३
अनर्जुनायां च भुवि मुहूर्तमपि मानद
जीवितुं नोत्सहेरन्वै भ्रातरोऽस्य सहानुगाः १४
विनष्टैः पाण्डवेयैश्च सशैलवनकाननाम्
वसुंधरामिमां कर्ण भोक्ष्यामो हतकण्टकाम् १५
दैवेनोपहतः पार्थो विपरीतश्च मानद
कार्याकार्यमजानन्वै प्रतिज्ञां कृतवान्रणे १६
नूनमात्मविनाशाय पाण्डवेन किरीटिना
प्रतिज्ञेयं कृता कर्ण जयद्रथवधं प्रति १७
कथं जीवति दुर्धर्षे त्वयि राधेय फल्गुनः
अनस्तंगत आदित्ये हन्यात्सैन्धवकं नृपम् १८
रक्षितं मद्रराजेन कृपेण च महात्मना
जयद्रथं रणमुखे कथं हन्याद्धनंजयः १९
द्रौणिना रक्ष्यमाणं च मया दुःशासनेन च
कथं प्राप्स्यति बीभत्सुः सैन्धवं कालचोदितः २०
युध्यन्ते बहवःशूरा लम्बते च दिवाकरः
शङ्के जयद्रथं पार्थो नैव प्राप्स्यति मानद २१
स त्वं कर्ण मया सार्धं शूरैश्चान्यैर्महारथैः
युध्यस्व यत्नमास्थाय परं पार्थेन संयुगे २२
एवमुक्तस्तु राधेयस्तव पुत्रेण मारिष
दुर्योधनमिदं वाक्यं प्रत्युवाच कुरूत्तमम् २३
दृढलक्ष्येण शूरेण भीमसेनेन धन्विना
भृशमुद्वेजितः संख्ये शरजालैरनेकशः २४
स्थातव्यमिति तिष्ठामि रणे संप्रति मानद
नैवाङ्गमिङ्गति किंचिन्मे संतप्तस्य रणेषुभिः २५
योत्स्यामि तु तथा राजञ्शक्त्याहं परया रणे

यथा पाराडवमुख्योऽसौ न हनिष्यति सैन्धवम् २६
न हि मे युध्यमानस्य सायकांश्चास्यतः शितान्
सैन्धवं प्राप्स्यते वीरः सव्यसाची धनंजयः २७
यत्तु शक्तिमता कार्यं सततं हितकारिणा
तत्करिष्यामि कौरव्य जयो दैवे प्रतिष्ठितः २८
अद्य योत्स्येऽजुनमहं पौरुषं स्वं व्यपाश्रितः
त्वदर्थं पुरुषव्याघ्र जयो दैवे प्रतिष्ठितः २९
अद्य युद्धं कुरुश्रेष्ठ मम पार्थस्य चोभयोः
पश्यन्तु सर्वभूतानि दारुणं लोमहर्षणम् ३०
कर्णकौरवयोरेवं रणे संभाषमाणयोः
अर्जुनो निशितैर्बाणैर्जघान तव वाहिनीम् ३१
चिच्छेद तीक्ष्णाग्रमुखैः शूराणामनिवर्तिनाम्
भुजान्परिघसंकाशान्हस्तिहस्तोपमान्रणे ३२
शिरांसि च महाबाहुश्चिच्छेद निशितैः शरैः
हस्तिहस्तान्हयग्रीवा रथाक्षांश्च समन्ततः ३३
शोणिताक्तान्हयारोहान्गृहीतप्रासतोमरान्
क्षुरैश्चिच्छेद बीभत्सुर्द्विधैकैकं त्रिधैव च ३४
हयवारणमुख्याश्च प्रापतन्त सहस्रशः
ध्वजाश्छत्त्राणि चापानि चामराणि शिरांसि च ३५
कक्षमग्निमिवोद्धूतः प्रदहंस्तव वाहिनीम्
अचिरेण महीं पार्थश्चकार रुधिरोत्तराम् ३६
हतभूयिष्ठयोधं तत्कृत्वा तव बलं बली
आससाद दुराधर्षः सैन्धवं सत्यविक्रमः ३७
बीभत्सुर्भीमसेनेन सात्वतेन च रक्षितः
स बभौ भरतश्रेष्ठ ज्वलन्निव हुताशनः ३८
तं तथावस्थितं दृष्ट्वा त्वदीया वीर्यसंमताः
नामृष्यन्त महेष्वासाः फल्गुनं पुरुषर्षभाः ३९
दुर्योधनश्च कर्णश्च वृषसेनोऽथ मद्रराट्
अश्वत्थामा कृपश्चैव स्वयमेव च सैन्धवः ४०
संरब्धाः सैन्धवस्यार्थे समावृण्वन्किरीटिनम्

नृत्यन्तं रथमार्गेषु धनुर्ज्यातलनिस्वनैः ४१
संग्रामकोविदं पार्थं सर्वे युद्धविशारदाः
अभीताः पर्यवर्तन्त व्यादितास्यमिवान्तकम् ४२
सैन्धवं पृष्ठतः कृत्वा जिघांसन्तोऽजुनाच्युतौ
सूर्यास्तमयमिच्छन्तो लोहितायति भास्करे ४३
ते भुजैर्भोगिभोगाभैर्धनूंष्यायम्य सायकान्
मुमुचुः सूर्यरश्म्याभाञ्शतशः फल्गुनं प्रति ४४
तानस्तानस्यमानांश्च किरीटी युद्धदुर्मदः
द्विधा त्रिधाष्टधैकैकं छित्त्वा विव्याध तान्रणे ४५
सिंहलाङ्गूलकेतुस्तु दर्शयञ्शक्तिमात्मनः
शारद्वतीसुतो राजन्नर्जुनं प्रत्यवारयत् ४६
स विद्ध्वा दशभिः पार्थं वासुदेवं च सप्तभिः
अतिष्ठद्रथमार्गेषु सैन्धवं प्रतिपालयन् ४७
अथैनं कौरवश्रेष्ठाः सर्व एव महारथाः
महता रथवंशेन सर्वतः पर्यवारयन् ४८
विस्फारयन्तश्चापानि विसृजन्तश्च सायकान्
सैन्धवं पर्यरक्षन्त शासनात्तनयस्य ते ४९
तत्र पार्थस्य शूरस्य बाह्वोर्बलमदृश्यत
इषूणामक्षयत्वं च धनुषो गाण्डिवस्य च ५०
अस्त्रैरस्त्राणि संवार्य द्रौणेः शारद्वतस्य च
एकैकं नवभिर्बाणैः सर्वानेव समर्पयत् ५१
तं द्रौणिः पञ्चविंशत्या वृषसेनश्च सप्तभिः
दुर्योधनश्च विंशत्या कर्णशल्यौ त्रिभिस्त्रिभिः ५२
त एनमभिगर्जन्तो विध्यन्तश्च पुनः पुनः
विधुन्वन्तश्च चापानि सर्वतः पर्यवारयन् ५३
श्लिष्टं तु सर्वतश्चक्रू रथमण्डलमाशु ते
सूर्यास्तमयमिच्छन्तस्त्वरमाणा महारथाः ५४
त एनमभिनर्दन्तो विधुन्वाना धनूंषि च
सिषिचुर्मार्गणैर्घोरैर्गिरिं मेघा इवाम्बुभिः ५५
ते महास्त्राणि दिव्यानि तत्र राजन्व्यदर्शयन्

धनंजयस्य गात्रेषु शूराः परिघबाहवः ५६
हतभूयिष्ठयोधं तत्कृत्वा तव बलं बली
आससाद दुराधर्षः सैन्धवं सत्यविक्रमः ५७
तं कर्णः संयुगे राजन्प्रत्यवारयदाशुगैः
मिषतो भीमसेनस्य सात्वतस्य च भारत ५८
तं पार्थो दशभिर्बाणैः प्रत्यविध्यद्रणाजिरे
सूतपुत्रं महाबाहुः सर्वसैन्यस्य पश्यतः ५९
सात्वतश्च त्रिभिर्बाणैः कर्णं विव्याध मारिष
भीमसेनस्त्रिभिश्चैव पुनः पार्थश्च सप्तभिः ६०
तान्कर्णः प्रतिविव्याध षष्ट्या षष्ट्या महारथः
तद्युद्धमभवद्राजन्कर्णस्य बहुभिः सह ६१
तत्राद्भुतमपश्याम सूतपुत्रस्य मारिष
यदेकः समरे क्रुद्धस्त्रीन्रथान्पर्यवारयत् ६२
फल्गुनस्तु महाबाहुः कर्णं वैकर्तनं रणे
सायकानां शतेनैव सर्वमर्मस्वताडयत् ६३
रुधिरोक्षितसर्वाङ्गः सूतपुत्रः प्रतापवान्
शरैः पञ्चाशता वीरः फल्गुनं प्रत्यविध्यत
तस्य तल्लाघवं दृष्ट्वा नामृष्यत रणेऽर्जुनः ६४
ततः पार्थो धनुश्छित्वा विव्याधैनं स्तनान्तरे
सायकैर्नवभिर्वीरस्त्वरमाणो धनंजयः ६५
वधार्थं चास्य समरे सायकं सूर्यवर्चसम्
चिक्षेप त्वरया युक्तस्त्वराकाले धनंजयः ६६
तमापतन्तं वेगेन द्रौणिश्चिच्छेद सायकम्
अर्धचन्द्रेण तीक्ष्णेन स छिन्नः प्रापतद्भुवि ६७
अथान्यद्धनुरादाय सूतपुत्रः प्रतापवान्
कर्णोऽपि द्विषतां हन्ता छादयामास फल्गुनम्
सायकैर्बहुसाहस्रैः कृतप्रतिकृतेप्सया ६८
तौ वृषाविव नर्दन्तौ नरसिंहौमहारथौ
सायकौघप्रतिच्छन्नं चक्रतुःखमजिह्मगैः
अदृश्यौ च शरौघैस्तौ निघ्नन्तामितरेतरम् ६९

पार्थोऽहमस्मि तिष्ठ त्वं कर्णोऽह तिष्ठ फल्गुन
इत्येवं तर्जयन्तौ तौ वाक्शल्यैस्तुदतां तथा ७०
युध्येतां समरे वीरौ चित्रं लघु च सुष्ठु च
प्रेक्षणीयौ चाभवतां सर्वयोधसमागमे ७१
प्रशस्यमानौ समरे सिद्धचारणवातिकैः
अयुध्येतां महाराज परस्परवधैषिणौ ७२
ततो दुर्योधनो राजंस्तावकानभ्यभाषत
यत्ता रक्षत राधेयं नाहत्वा समरेऽजुनम्
निवर्तिष्यति राधेय इति मामुक्तवान्वृषः ७३
एतस्मिन्नन्तरे राजन्दृष्ट्वा कर्णस्य विक्रमम्
आकर्णमुक्तैरिषुभिः कर्णस्य चतुरो हयान्
अनयन्मृत्युलोकाय चतुर्भिः सायकोत्तमैः ७४
सारथिं चास्य भल्लेन रथनीडादपाहरत्
छादयामास स शरैस्तव पुत्रस्य पश्यतः ७५
स छाद्यमानः समरे हताश्वो हतसारथिः
मोहितः शरजालेन कर्तव्यं नाभ्यपद्यत ७६
तं तथा विरथं दृष्ट्वा रथमारोप्य स्वं तदा
अश्वत्थामा महाराज भूयोऽजुनमयोधयत् ७७
मद्रराजस्तु कौन्तेयमविध्यत्त्रिंशता शरैः
शारद्वतस्तु विंशत्या वासुदेवं समार्पयत्
धनंजयं द्वादशभिराजघान शिलीमुखैः ७८
चतुर्भिः सिन्धुराजश्च वृषसेनश्च सप्तभिः
पृथक्पृथङ्महाराज कृष्णपार्थावविध्यताम् ७९
तथैव तान्प्रत्यविध्यत्कुन्तीपुत्रो धनंजयः
द्रोणपुत्रं चतुःषष्ट्या मद्रराजं शतेन च ८०
सैन्धवं दशभिर्भल्लैर्वृषसेनं त्रिभिः शरैः
शारद्वतं च विंशत्या विद्ध्वा पार्थः समुन्नदत् ८१
ते प्रतिज्ञाप्रतीघातमिच्छन्तः सव्यसाचिनः
सहितास्तावकास्तूर्णमभिपेतुर्धनंजयम् ८२
अथार्जुनः सर्वतोधारमस्त्रं प्रादुश्चक्रे त्रासयन्धार्तराष्ट्रान्

तं प्रत्युदीयुः कुरवः पाराडुसूनुं रथैर्महार्हैः शरवर्षाराययवर्षन् ८३
ततस्तु तस्मिंस्तुमुले समुत्थिते सुदारुरो भारत मोहनीये
नामुह्यत प्राप्य स राजपुत्रः किरीटमाली विसृजन्पृषत्कान् ८४
राज्यप्रेप्सुः सव्यसाची कुरूणां स्मरन्क्लेशान्द्वादशवर्षवृत्तान्
गाराडीवमुक्तैरिषुभिर्महात्मा सर्वा दिशो व्यावृणोदप्रमेयैः ८५
प्रदीप्तोल्कमभवच्चान्तरिक्षं देहेषु भूरीराययपतन्वयांसि
यत्पिङ्गलज्येन किरीटमाली क्रुद्धो रिपूनाजगवेन हन्ति ८६
किरीटमाली महता महायशाः शरासनेनास्य शराननीकजित्
हयप्रवेकोत्तमनागधूर्गतान्कुरुप्रवीरानिषुभिर्न्यपातयत् ८७
गदाश्च गुर्वीः परिघानयस्मयानसींश्च शक्तीश्च रणे नराधिपाः
महान्ति शस्त्राणि च भीमदर्शनाः प्रगृह्य पार्थं सहसाभिदुद्रुवुः ८८
स तानुदीर्णान्सरथाश्ववारणान्पदातिसंघांश्च महाधनुर्धरः
विपन्नसर्वायुधजीवितान्ररो चकार वीरो यमराष्ट्रवर्धनान् ८९
इति श्रीमहाभारते द्रोणपर्वणि विंशत्यधिकशततमोऽध्यायः १२०

## एकविंशत्यधिक शततमोऽध्यायः

सञ्जय उवाच
स रणे व्यचरत्पार्थः प्रेक्षणीयो धनंजयः
युगपद्दिक्षु सर्वासु चित्रारायस्त्राणि दर्शयन् १
मध्यंदिनगतं सूर्यं प्रतपन्तमिवाम्बरे
न शेकुः सर्वभूतानि पाराडवं प्रतिवीक्षितुम् २
प्रसृतांस्तस्य गाराडीवाच्छरव्रातान्महात्मनः
संग्रामे समपश्याम हंसपङ्क्तीरिवाम्बरे ३
विनिवार्य स वीराणामस्त्रैरस्त्राणि सर्वशः
दर्शयन्रौद्रमात्मानमुग्रे कर्माणि धिष्ठितः ४
स तान्रथवरान्राजन्नभ्यतिक्रामदर्जुनः
मोहयन्निव नाराचैर्जयद्रथवधेप्सया ५
विसृजन्दिक्षु सर्वासु शरानसितसारथिः
स रणे व्यचरत्तूर्णं प्रेक्षणीयो धनंजयः ६
भ्रमन्त इव शूरस्य शरव्राता महात्मनः

अदृश्यन्तान्तरिक्षस्थाः शतशोऽथ सहस्रशः ७
आददानं महेष्वासं संदधानं च पाण्डवम्
विसृजन्तं च कौन्तेयं नानुपश्यामहे तदा ८
तथा सर्वा दिशो राजन्सर्वांश्च रथिनो रणे
आकुलीकृत्य कौन्तेयो जयद्रथमुपाद्रवत्
विव्याध च चतुःषष्ट्या शराणां नतपर्वणाम् ९
सैन्धवस्तु तथा विद्धः शरैर्गाण्डीवधन्वना
न चक्षमे सुसंक्रुद्धस्तोत्त्रार्दित इव द्विपः १०
स वराहध्वजस्तूर्णं गार्ध्रपत्रानजिह्मगान्
आशीविषसमप्रख्यान्कर्मारपरिमार्जितान्
मुमोच निशितान्संख्ये सायकान्सव्यसाचिनि ११
त्रिभिस्तु विद्ध्वा गाण्डीवं नाराचैः षड्भिरर्जुनम्
अष्टाभिर्वाजिनोऽविध्यद्ध्वजं चैकेन पत्रिणा १२
स विक्षिप्यार्जुनस्तीक्ष्णान्सैन्धवप्रेषिताञ्शरान्
युगपत्तस्य चिच्छेद शराभ्यां सैन्धवस्य ह
सारथेश्च शिरः कायाद्ध्वजं च समलंकृतम् १३
स छिन्नयष्टिः सुमहाञ्शीर्यमाणः शराहतः
वराहः सिन्धुराजस्य पपाताग्निशिखोपमः १४
एतस्मिन्नेव काले तु द्रुतं गच्छति भास्करे
अब्रवीत्पाण्डवं तत्र त्वरमाणो जनार्दनः १५
धनंजय शिरश्छिन्धि सैन्धवस्य दुरात्मनः
अस्तं महीधरश्रेष्ठं यियासति दिवाकरः
शृणुष्वैव च मे वाक्यं जयद्रथवधं प्रति १६
वृद्धक्षत्रः सैन्धवस्य पिता जगति विश्रुतः
स कालेनेह महता सैन्धवं प्राप्तवान्सुतम् १७
जयद्रथममित्रघ्नं तं चोवाच ततो नृपम्
अन्तर्हिता तदा वाणी मेघदुन्दुभिनिस्वना १८
तवात्मजोऽय मर्त्येषु कुलशीलदमादिभिः
गुणैर्भविष्यति विभो सदृशो वंशयोर्द्वयोः
क्षत्रियप्रवरो लोके नित्यं शूराभिसत्कृतः १९

शत्रुभिर्युध्यमानस्य संग्रामे त्वस्य धन्विनः
शिरश्छेत्स्यति संक्रुद्धः शत्रुर्नालक्षितो भुवि २०
एतच्छ्रुत्वा सिन्धुराजो ध्यात्वा चिरमरिंदम
ज्ञातीन्सर्वानुवाचेदं पुत्रस्नेहाभिपीडितः २१
संग्रामे युध्यमानस्य बहतो महतीं धुरम्
धरण्यां मम पुत्रस्य पातयिष्यति यः शिरः
तस्यापि शतधा मूर्धा फलिष्यति न संशयः २२
एवमुक्त्वा ततो राज्ये स्थापयित्वा जयद्रथम्
वृद्धक्षत्रो वनं यातस्तपश्चेष्टं समास्थितः २३
सोऽय तप्यति तेजस्वी तपो घोरं दुरासदम्
समन्तपञ्चकादस्माद्बहिर्वानरकेतन २४
तस्माज्जयद्रथस्य त्वं शिरश्छित्त्वा महामृधे
दिव्येनास्त्रेण रिपुहन्घोरेणाद्भुतकर्मणा २५
सकुण्डलं सिन्धुपतेः प्रभञ्जनसुतानुज
उत्सङ्गे पातयस्वाशु वृद्धक्षत्रस्य भारत २६
अथ त्वमस्य मूर्धानं पातयिष्यसि भूतले
तवापि शतधा मूर्धा फलिष्यति न संशयः २७
यथा चैतन्न जानीयात्स राजा पृथिवीपतिः
तथा कुरु कुरुश्रेष्ठ दिव्यमस्त्रमुपाश्रितः २८
न ह्यसाध्यमकार्यं वा विद्यते तव किंचन
समस्तेष्वपि लोकेषु त्रिषु वासवनन्दन २९
एतच्छ्रुत्वा तु वचनं सृक्किणी परिसंलिहन्
इन्द्राशनिसमस्पर्शं दिव्यमन्त्राभिमन्त्रितम् ३०
सर्वभारसहं शश्वद्गन्धमाल्यार्चितं शरम्
विससर्जार्जुनस्तूर्णं सैन्धवस्य वधे वृतः ३१
स तु गाण्डीवनिर्मुक्तः शरः श्येन इवाशुगः
शकुन्तमिव वृक्षाग्रात्सैन्धवस्य शिरोऽहरत् ३२
अहरत्तत्पुनश्चैव शरैरूर्ध्वं धनंजयः
दुर्हृदामप्रहर्षाय सुहृदां हर्षणाय च ३३
शरैः कदम्बकीकृत्य काले तस्मिंश्च पाण्डवः

समन्तपञ्चकाद्बाह्यं शिरस्तद्व्यहरत्ततः ३४
एतस्मिन्नेव काले तु वृद्धक्षत्रो महीपतिः
संध्यामुपास्ते तेजस्वी संबन्धी तव मारिष ३५
उपासीनस्य तस्याथ कृष्णकेशं सकुण्डलम्
सिन्धुराजस्य मूर्धानमुत्सङ्गे समपातयत् ३६
तस्योत्सङ्गे निपतितं शिरस्तच्चारुकुण्डलम्
वृद्धक्षत्रस्य नृपतेरलक्षितमरिंदम ३७
कृतजप्यस्य तस्याथ वृद्धक्षत्रस्य धीमतः
उत्तिष्ठतस्तत्सहसा शिरोऽगच्छद्धरातलम् ३८
ततस्तस्य नरेन्द्रस्य पुत्रमूर्धनि भूतलम्
गते तस्यापि शतधा मूर्धागच्छदरिंदम ३९
ततः सर्वाणि सैन्यानि विस्मयं जग्मुरुत्तमम्
वासुदेवश्च बीभत्सुं प्रशशंस महारथम् ४०
ततो दृष्ट्वा विनिहतं सिन्धुराजं जयद्रथम्
पुत्राणां तव नेत्रेभ्यो दुःखाद्बह्वपतज्जलम् ४१
भीमसेनोऽपि संग्रामे बोधयन्निव पाण्डवम्
सिंहनादेन महता पूरयामास रोदसी ४२
तं श्रुत्वा तु महानादं धर्मपुत्रो युधिष्ठिरः
सैन्धवं निहतं मेने फल्गुनेन महात्मना ४३
ततो वादित्रघोषेण स्वान्योधानभिहर्षयन्
अभ्यवर्तत संग्रामे भारद्वाजं युयुत्सया ४४
ततः प्रववृते राजन्नस्तं गच्छति भास्करे
द्रोणस्य सोमकैः सार्धं संग्रामो लोमहर्षणः ४५
ते तु सर्वप्रयत्नेन भारद्वाजं जिघांसवः
सैन्धवे निहते राजन्नयुध्यन्त महारथाः ४६
पाण्डवास्तु जयं लब्ध्वा सैन्धवं विनिहत्य च
अयोधयंस्ततो द्रोणं जयोन्मत्तास्ततस्ततः ४७
अर्जुनोऽपि ततो योधांस्तावकान्रथसत्तमान्
अयोधयन्महाराज हत्वा सैन्धवकं नृपम् ४८
स देवशत्रूनिव देवराजः किरीटमाली व्यधमत्समन्तात्

यथा तमांस्यभ्युदितस्तमोघ्नः पूर्वां प्रतिज्ञां समवाप्य वीरः ४६
इति श्रीमहाभारते द्रोणपर्वणि एकविंशत्यधिकशततमोऽध्यायः १२१

## द्वाविंशत्यधिक शततमोऽध्यायः

धृतराष्ट्र उवाच
तस्मिन्विनिहते वीरे सैन्धवे सव्यसाचिना
मामका यदकुर्वन्त तन्ममाचक्ष्व सञ्जय १
सञ्जय उवाच
सैन्धवं निहतं दृष्ट्वा रणे पार्थेन मारिष
अमर्षवशमापन्नः कृपः शारद्वतस्तदा २
महता शरवर्षेण पाण्डवं समवाकिरत्
द्रौणिश्चाभ्यद्रवत्पार्थं रथमास्थाय फल्गुनम् ३
तावेनं रथिनां श्रेष्ठौ रथाभ्यां रथसत्तमम्
उभावुभयतस्तीक्ष्णैर्विशिखैरभ्यवर्षताम् ४
स तथा शरवर्षाभ्यां सुमहद्भ्यां महाभुजः
पीड्यमानः परामार्तिमगमद्रथिनां वरः ५
सोऽजिघांसुर्गुरुं संख्ये गुरोस्तनयमेव च
चकाराचार्यकं तत्र कुन्तीपुत्रो धनंजयः ६
अस्त्रैरस्त्राणि संवार्य द्रौणेः शारद्वतस्य च
मन्दवेगानिषूंस्ताभ्यामजिघांसुरवासृजत् ७
ते नातिभृशमभ्यघ्नन्विशिखा जयचोदिताः
बहुत्वात्तु परामार्तिं शराणां तावगच्छताम् ८
अथ शारद्वतो राजन्कौन्तेयशरपीडितः
अवासीदद्रथोपस्थे मूर्च्छामभिजगाम ह ९
विह्वलं तमभिज्ञाय भर्तारं शरपीडितम्
हतोऽयमिति च ज्ञात्वा सारथिस्तमपावहत् १०
तस्मिन्सन्ने महाराज कृपे शारद्वते युधि
अश्वत्थामाप्यपायासीत्पाण्डवेयाद्रथान्तरम् ११
दृष्ट्वा शारद्वतं पार्थो मूर्छितं शरपीडितम्
रथ एव महेष्वासः कृपणं पर्यदेवयत् १२

पश्यन्निदं महाप्राज्ञः क्षत्ता राजानमुक्तवान्
कुलान्तकरणे पापे जातमात्रे सुयोधने १३
नीयतां परलोकाय साध्वयं कुलपांसनः
अस्माद्धि कुरुमुख्यानां महदुत्पत्स्यते भयम् १४
तदिदं समनुप्राप्तं वचनं सत्यवादिनः
तत्कृते ह्यद्य पश्यामि शरतल्पगतं कृपम् १५
धिगस्तु क्षात्रमाचारं धिगस्तु बलपौरुषम्
को हि ब्राह्मणमाचार्यमभिद्रुह्येत मादृशः १६
ऋषिपुत्रो ममाचार्यो द्रोणस्य दयितः सखा
एष शेते रथोपस्थे मद्बाणैरभिपीडितः १७
अकामयानेन मया विशिखैरर्दितो भृशम्
अवसीदद्रथोपस्थे प्राणान्पीडयतीव मे १८
शरार्दितेन हि मया प्रेक्षणीयो महाद्युतिः
प्रत्यस्तो बहुभिर्बाणैर्दशधर्मगतेन वै १९
शोचयत्येष निपतन्भूयः पुत्रवधाद्धि माम्
कृपणं स्वरथे सन्नं पश्य कृष्ण यथा गतम् २०
उपाकृत्य तु वै विद्यामाचार्येभ्यो नरर्षभाः
प्रयच्छन्तीह ये कामान्देवत्वमुपयान्ति ते २१
ये तु विद्यामुपादाय गुरुभ्यः पुरुषाधमाः
घ्नन्ति तानेव दुर्वृत्तास्ते वै निरयगामिनः २२
तदिदं नरकायाद्य कृतं कर्म मया ध्रुवम्
आचार्यं शरवर्षेण रथे सादयता कृपम् २३
यत्तत्पूर्वमुपाकुर्वन्नस्त्रं मामब्रवीत्कृपः
न कथंचन कौरव्य प्रहर्तव्यं गुराविति २४
तदिदं वचनं साधोराचार्यस्य महात्मनः
नानुष्ठितं तमेवाजौ विशिखैरभिवर्षता २५
नमस्तस्मै सुपूज्याय गौतमायापलायिने
धिगस्तु मम वार्ष्णेय यो ह्यस्मै प्रहराम्यहम् २६
तथा विलपमाने तु सव्यसाचिनि तं प्रति
सैन्धवं निहतं दृष्ट्वा राधेयः समुपाद्रवत् २७

उपायान्तं तु राधेयं दृष्ट्वा पार्थो महारथः
प्रहसन्देवकीपुत्रमिदं वचनमब्रवीत् २८
एष प्रयात्याधिरथिः सात्यकेः स्यन्दनं प्रति
न मृष्यति हतं नूनं भूरिश्रवसमाहवे २९
यत्र यात्येष तत्र त्वं चोदयाश्वाञ्जनार्दन
मा सोमदत्तेः पदवीं गमयेत्सात्यकिं वृषः ३०
एवमुक्तो महाबाहुः केशवः सव्यसाचिना
प्रत्युवाच महातेजाः कालयुक्तमिदं वचः ३१
अलमेष महाबाहुः कर्णायैको हि पाण्डव
किं पुनर्द्रौपदेयाभ्यां सहितः सात्वतर्षभः ३२
न च तावत्क्षमः पार्थ कर्णेन तव संगरः
प्रज्वलन्ती महोल्केव तिष्ठत्यस्य हि वासवी
त्वदर्थं पूज्यमानैषा रक्ष्यते परवीरहन् ३३
अतः कर्णः प्रयात्वत्र सात्वतस्य यथा तथा
अहं ज्ञास्यामि कौन्तेय कालमस्य दुरात्मनः ३४
धृतराष्ट्र उवाच
योऽसौ कर्णेन वीरेण वार्ष्णेयस्य समागमः
हते तु भूरिश्रवसि सैन्धवे च निपातिते ३५
सात्यकिश्चापि विरथः कं समारूढवान्रथम्
चक्ररक्षौ च पाञ्चाल्यौ तन्ममाचक्ष्व सञ्जय ३६
सञ्जय उवाच
हन्त ते वर्णयिष्यामि यथावृत्तं महारणे
शुश्रूषस्व स्थिरो भूत्वा दुराचरितमात्मनः ३७
पूर्वमेव हि कृष्णस्य मनोगतमिदं प्रभो
विजेतव्यो यथा वीरः सात्यकिर्यूपकेतुना ३८
अतीतानागतं राजन्स हि वेत्ति जनार्दनः
अतः सूतं समाहूय दारुकं संदिदेश ह
रथो मे युज्यतां काल्यमिति राजन्महाबलः ३९
न हि देवा न गन्धर्वा न यक्षोरगराक्षसाः
मानवा वा विजेतारः कृष्णयोः सन्ति केचन ४०

पितामहपुरोगाश्च देवाः सिद्धाश्च तं विदुः
तयोः प्रभावमतुलं शृणु युद्धं च तद्यथा ४१
सात्यकिं विरथं दृष्ट्वा कर्णं चाभ्युद्यतायुधम्
दध्मौ शङ्खं महावेगमार्षभेणाथ माधवः ४२
दारुकोऽवेत्य संदेशं श्रुत्वा शङ्खस्य च स्वनम्
रथमन्वानयत्तस्मै सुपर्णोच्छ्रितकेतनम् ४३
स केशवस्यानुमते रथं दारुकसंयुतम्
आरुरोह शिनेः पौत्रो ज्वलनादित्यसंनिभम् ४४
कामगैः सैन्यसुग्रीवमेघपुष्पबलाहकैः
हयोदग्रैर्महावेगैर्हेमभाण्डविभूषितैः ४५
युक्तं समारुह्य च तं विमानप्रतिमं रथम्
अभ्यद्रवत राधेयं प्रवपन्सायकान्बहून् ४६
चक्ररक्षावपि तदा युधामन्यूत्तमौजसौ
धनंजयरथं हित्वा राधेयं प्रत्युदीययुः ४७
राधेयोऽपि महाराज शरवर्षं समुत्सृजन्
अभ्यद्रवत्सुसंक्रुद्धो रणे शैनेयमच्युतम् ४८
नैव दैवं न गान्धर्वं नासुरोरगराक्षसम्
तादृशं भुवि मा युद्धं दिवि वा श्रुतमित्युत ४९
उपारमत तत्सैन्यं सरथाश्वनरद्विपम्
तयोर्दृष्ट्वा महाराज कर्म संमूढचेतनम् ५०
सर्वे च समपश्यन्त तद्युद्धमतिमानुषम्
तयोर्नृवरयो राजन्सारथ्यं दारुकस्य च ५१
गतप्रत्यागतावृत्तैर्मण्डलैः संनिवर्तनैः
सारथेस्तु रथस्थस्य काश्यपेयस्य विस्मिताः ५२
नभस्तलगताश्चैव देवगन्धर्वदानवाः
अतीवावहिता द्रष्टुं कर्णशैनेययो रणम् ५३
मित्रार्थे तौ पराक्रान्तौ स्पर्धिनौ शुष्मिणौ रणे
कर्णश्चामरसंकाशो युयुधानश्च सात्यकिः ५४
अन्योन्यं तौ महाराज शरवर्षैरवर्षताम्
प्रममाथ शिनेः पौत्रं कर्णः सायकवृष्टिभिः ५५

अमृष्यमाणो निधनं कौरव्यजलसंधयोः
कर्णः शोकसमाविष्टो महोरग इव श्वसन् ५६
स शैनेयं रणे क्रुद्धः प्रदहन्निव चक्षुषा
अभ्यद्रवत वेगेन पुनः पुनररिंदमः ५७
तं तु संप्रेक्ष्य संक्रुद्धं सात्यकिः प्रत्यविध्यत
महता शरवर्षेण गजः प्रतिगजं यथा ५८
तौ समेत्य नरव्याघ्रौ व्याघ्राविव तरस्विनौ
अन्योन्यं संततक्षाते रणेऽनुपमविक्रमौ ५९
ततः कर्णं शिनेः पौत्रः सर्वपारशवैः शरैः
बिभेद सर्वगात्रेषु पुनः पुनररिंदमः ६०
सारथिं चास्य भल्लेन रथनीडादपाहरत्
अश्वांश्च चतुरः श्वेतान्निजघ्ने निशितैः शरैः ६१
छित्त्वा ध्वजं शतेनैव शतधा पुरुषर्षभः
चकार विरथं कर्णं तव पुत्रस्य पश्यतः ६२
ततो विमनसो राजंस्तावकाः पुरुषर्षभाः
वृषसेनः कर्णसुतः शल्यो मद्राधिपस्तथा ६३
द्रोणपुत्रश्च शैनेयं सर्वतः पर्यवारयन्
ततः पर्याकुलं सर्वं न प्राज्ञायत किंचन ६४
तथा सात्यकिना वीरे विरथे सूतजे कृते
हाहाकारस्ततो राजन्सर्वसैन्येषु चाभवत् ६५
कर्णोऽपि विह्वलो राजन्सात्वतेनार्दितः शरैः
दुर्योधनरथं राजन्नारुरोह विनिःश्वसन् ६६
मानयंस्तव पुत्रस्य बाल्यात्प्रभृति सौहृदम्
कृतां राज्यप्रदानेन प्रतिज्ञां परिपालयन् ६७
तथा तु विरथे कर्णे पुत्रान्वै तव पार्थिव
दुःशासनमुखाञ्शूरान्नावधीत्सात्यकिर्वशी ६८
रक्षन्प्रतिज्ञां च पुनर्भीमसेनकृतां पुरा
विरथान्विह्वलांश्चक्रे न तु प्राणैर्व्ययोजयत् ६९
भीमसेनेन तु वधः पुत्राणां ते प्रतिश्रुतः
पुनर्द्यूते च पार्थेन वधःकर्णस्य संश्रुतः ७०

वधे त्वकुर्वन्यत्नं ते तस्य कर्णमुखास्तदा
नाशक्नुवंश्च तं हन्तुं सात्यकिं प्रवरा रथाः ७१
द्रौणिश्च कृतवर्मा च तथैवान्ये महारथाः
निर्जिता धनुषैकेन शतशः क्षत्रियर्षभाः
काङ्क्षता परलोकं च धर्मराजस्य च प्रियम् ७२
कृष्णयोः सदृशो वीर्ये सात्यकिः शत्रुकर्शनः
कृष्णो वापि भवेल्लोके पार्थो वापि धनुर्धरः
शैनेयो वा नरव्याघ्रश्चतुर्थो नोपलभ्यते ७३
धृतराष्ट्र उवाच
अजय्यं रथमास्थाय वासुदेवस्य सात्यकिः
विरथं कृतवान्कर्णं वासुदेवसमो युवा ७४
दारुकेण समायुक्तः स्वबाहुबलदर्पितः
कच्चिदन्यं समारूढः स रथं सात्यकिः पुनः ७५
एतदिच्छाम्यहं श्रोतुं कुशलोह्यसि भाषितुम्
असह्यं तमहं मन्ये तन्ममाचक्ष्व सञ्जय ७६
सञ्जय उवाच
शृणु राजन्यथा तस्य रथमन्यं महामतिः
दारुकस्यानुजस्तूर्णं कल्पनाविधिकल्पितम् ७७
आयसैः काञ्चनैश्चापि पटैर्नद्धं सकूबरम्
तारासहस्रखचितं सिंहध्वज पताकिनम् ७८
अश्वैर्वातजवैर्युक्तं हेमभाण्डपरिच्छदैः
पाण्डुरैरिन्दुसंकाशैः सर्वशब्दातिगैर्दृढैः ७९
चित्रकाञ्चनसंनाहैर्वाजिमुख्यैर्विशां पते
घण्टाजालाकुलरवं शक्तितोमरविद्युतम् ८०
वृतं सांग्रामिकैर्द्रव्यैर्बहुशस्त्रपरिच्छदम्
रथं संपादयामास मेघगम्भीरनिःस्वनम् ८१
तं समारुह्य शैनेयस्तव सैन्यमुपाद्रवत्
दारुकोऽपि यथाकामं प्रययौ केशवान्तिकम् ८२
कर्णस्यापि महाराज शङ्खगोक्षीरपाण्डुरैः
चित्रकाञ्चनसंनाहैः सदश्वैर्वेगवत्तरैः ८३

हेमकक्ष्याध्वजोपेतं क्लृप्तयन्त्रपताकिनम्
अग्र्यं रथं सुयन्तारं बहुशस्त्रपरिच्छदम् ८४
उपाजह्रुस्तमास्थाय कर्णोऽप्यभ्यद्रवद्रिपून्
एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ८५
भूयश्चापि निबोध त्वं तवापनयजं क्षयम्
एकत्रिंशत्तव सुता भीमसेनेन पातिताः ८६
दुर्मुखं प्रमुखे कृत्वा सततं चित्रयोधिनम्
शतशो निहताः शूराः सात्वतेनार्जुनेन च ८७
भीष्मं प्रमुखतः कृत्वा भगदत्तं च मारिष
एवमेष क्षयो वृत्तो राजन्दुर्मन्त्रिते तव ८८
इति श्रीमहाभारते द्रोणपर्वणि द्वाविंशत्यधिकशततमोऽध्यायः १२२

## त्रयोविंशत्यधिक शततमोऽध्यायः

धृतराष्ट्र उवाच
तथा गतेषु शूरेषु तेषां मम च सञ्जय
किं वै भीमस्तदा कार्षीत्तन्ममाचक्ष्व सञ्जय १
सञ्जय उवाच
विरथो भीमसेनो वै कर्णवाक्शल्यपीडितः
अमर्षवशमापन्नः फल्गुनं वाक्यमब्रवीत् २
पुनः पुनस्तूबरक मूढ औदरिकेति च
अकृतास्त्रक मा योधीर्बाल संग्रामकातर ३
इति मामब्रवीत्कर्णः पश्यतस्ते धनंजय
एवं वक्ता च मे वध्यस्तेन चोक्तोऽस्मि भारत ४
एतद्व्रतं महाबाहो त्वया सह कृतं मया
यथैतन्मम कौन्तेय तथा तव न संशयः ५
तद्वधाय नरश्रेष्ठ स्मरैतद्वचनं मम
यथा भवति तत्सत्यं तथा कुरु धनंजय ६
तच्छ्रुत्वा वचनं तस्य भीमस्यामितविक्रमः
ततोऽजुनोऽब्रवीत्कर्णं किंचिदभ्येत्य संयुगे ७
कर्ण कर्ण वृथादृष्टे सूतपुत्रात्मसंस्तुत

अधर्मबुद्धे शृणु मे यत्त्वा वक्ष्यामि सांप्रतम् ८
द्विविधं कर्म शूराणां युद्धे जयपराजयौ
तौ चाप्यनित्यौ राधेय वासवस्यापि युध्यतः ९
मुमूर्षुर्युयुधानेन विरथोऽसि विसर्जितः
यदृच्छया भीमसेनं विरथं कृतवानसि १०
अधर्मस्त्वेष राधेय यत्त्वं भीममवोचथाः
युद्धधर्मं विजानन्वै युध्यन्तमपलायिनम्
पूरयन्तं यथाशक्ति शूरकर्माहवे तथा ११
पश्यतां सर्वसैन्यानां केशवस्य ममैव च
विरथो भीमसेनेन कृतोऽसि बहुशो रणे
न च त्वां परुषं किंचिदुक्तवान्पाण्डुनन्दनः १२
यस्मात्तु बहु रूक्षं च श्रावितस्ते वृकोदरः
परोक्षं यच्च सौभद्रो युष्माभिर्निहतो मम १३
तस्मादस्यावलेपस्य सद्यः फलमवाप्नुहि
त्वया तस्य धनुश्छिन्नमात्मनाशाय दुर्मते १४
तस्माद्वध्योऽसि मे मूढ सभृत्यबलवाहनः
कुरु त्वं सर्वकृत्यानि महत्ते भयमागतम् १५
हन्तास्मि वृषसेनं ते प्रेक्षमाणस्य संयुगे
ये चान्येऽप्युपयास्यन्ति बुद्धिमोहेन मां नृपाः
तांश्च सर्वान्हनिष्यामि सत्येनायुधमालभे १६
त्वां च मूढाकृतप्रज्ञमतिमानिनमाहवे
दृष्ट्वा दुर्योधनो मन्दो भृशं तप्स्यति पातितम् १७
अर्जुनेन प्रतिज्ञाते वधे कर्णसुतस्य तु
महान्सुतुमुलः शब्दो बभूव रथिनां तदा १८
तस्मिन्नाकुलसंग्रामे वर्तमाने महाभये
मन्दरश्मिः सहस्रांशुरस्तं गिरिमुपागमत् १९
ततो राजन्हृषीकेशः संग्रामशिरसि स्थितम्
तीर्णप्रतिज्ञं बीभत्सुं परिष्वज्येदमब्रवीत् २०
दिष्ट्या संपादिता जिष्णो प्रतिज्ञा महती त्वया
दिष्ट्या च निहतः पापो वृद्धक्षत्रः सहात्मजः २१

धार्तराष्ट्रबलं प्राप्य देवसेनापि भारत
सीदेत समरे जिष्णो नात्र कार्या विचारणा २२
न तं पश्यामि लोकेषु चिन्तयन्पुरुषं क्वचित्
त्वदृते पुरुषव्याघ्र य एतद्योधयेद्बलम् २३
महाप्रभावा बहवस्त्वया तुल्याधिकापि वा
समेताः पृथिवीपाला धार्तराष्ट्रस्य कारणात्
ते त्वां प्राप्य रणे क्रुद्धं नाभ्यवर्तन्त दंशिताः २४
तव वीर्यं बलं चैव रुद्रशक्रान्तकोपमम्
नेदृशं शक्नुयात्कश्चिद्रणे कर्तुं पराक्रमम्
यादृशं कृतवानद्य त्वमेकः शत्रुतापनः २५
एवमेव हते कर्णे सानुबन्धे दुरात्मनि
वर्धयिष्यामि भूयस्त्वां विजितारिं हतद्विषम् २६
तमर्जुनः प्रत्युवाच प्रसादात्तव माधव
प्रतिज्ञेयं मयोत्तीर्णा विबुधैरपि दुस्तरा २७
अनाश्चर्यो जयस्तेषां येषां नाथोऽसि माधव
त्वत्प्रसादान्महीं कृत्स्नां संप्राप्स्यति युधिष्ठिरः २८
तवैव भारो वार्ष्णेय तवैव विजयः प्रभो
वर्धनीयास्तव वयं प्रेष्याश्च मधुसूदन २९
एवमुक्तः स्मयन्कृष्णः शनकैर्वाहयन्हयान्
दर्शयामास पार्थाय क्रूरमायोधनं महत् ३०
श्रीकृष्ण उवाच
प्रार्थयन्तो जयं युद्धे प्रथितं च महद्यशः
पृथिव्यां शेरते शूराः पार्थिवास्त्वच्छरैर्हताः ३१
विकीर्णशस्त्राभरणा विपन्नाश्वरथद्विपाः
संछिन्नभिन्नवर्माणो वैक्लव्यं परमं गताः ३२
ससत्वा गतसत्त्वाश्च प्रभया परया युताः
सजीवा इव लक्ष्यन्ते गतसत्त्वा नराधिपाः ३३
तेषां शरैः स्वर्णपुङ्खैः शस्त्रैश्च विविधैः शितैः
बाहनैरायुधैश्चैव संपूर्णां पश्य मेदिनीम् ३४
वर्मभिश्चर्मभिर्हारैः शिरोभिश्च सकुण्डलैः

उष्णीषैर्मुकुटैः स्रग्भिश्चूडामणिभिरम्बरैः ३५
कण्ठसूत्रैरङ्गदैश्च निष्कैरपि च सुप्रभैः
अन्यैश्चाभरणैश्चित्रैर्भाति भारत मेदिनी ३६
चामरैर्व्यजनैश्चित्रैर्ध्वजैश्चाश्वरथद्विपैः
विविधैश्च परिस्तोमैरश्वानां च प्रकीर्णकैः ३७
कुथाभिश्च विचित्राभिर्वरूथैश्च महाधनैः
संस्तीर्णां वसुधां पश्य चित्रपट्टैरिवावृताम् ३८
नागेभ्यः पतितानन्यान्कल्पितेभ्यो द्विपैः सह
सिंहान्वज्रप्रणुन्नेभ्यो गिर्यग्रेभ्य इव च्युतान् ३९
संस्यूतान्वाजिभिः सार्धं धरण्यां पश्य चापरान्
पदातिसादिसंघांश्च क्षतजौघपरिप्लुतान् ४०
सञ्जय उवाच
एवं संदर्शयन्कृष्णो रणभूमिं किरीटिनः
स्वैः समेतः स मुदितः पाञ्चजन्यं व्यनादयत् ४१
इति श्रीमाहाभारते द्रोणपर्वणि त्रयोविंशत्यधिकशततमोऽध्यायः १२३

## चतुर्विंशत्यधिक शततमोऽध्यायः

सञ्जय उवाच
ततो युधिष्ठिरो राजा रथादाप्लुत्य भारत
पर्यष्वजत्तदा कृष्णावानन्दाश्रुपरिप्लुतः १
प्रमृज्य वदनं शुभ्रं पुण्डरीकसमप्रभम्
अब्रवीद्वासुदेवं च पाण्डवं च धनंजयम् २
दिष्ट्या पश्यामि संग्रामे तीर्णभारौ महारथौ
दिष्ट्या च निहतः पापः सैन्धवः पुरुषाधमः ३
कृष्ण दिष्ट्या मम प्रीतिर्महती प्रतिपादिता
दिष्ट्या शत्रुगणाश्चैव निमग्नाः शोकसागरे ४
न तेषां दुष्करं किचित्त्रिषु लोकेषु विद्यते
सर्वलोकगुरुर्येषां त्वं नाथो मधुसूदन ५
तव प्रसादाद्गोविन्द वयं जेष्यामहे रिपून्
यथा पूर्वं प्रसादात्ते दानवान्पाकशासनः ६

पृथिवीविजयो वापि त्रैलोक्यविजयोऽपि वा
ध्रुवो हि तेषां वार्ष्णेय येषां तुष्टोऽसि माधव ७
न तेषां विद्यते पापं संग्रामे वा पराजयः
त्रिदशेश्वरनाथस्त्वं येषां तुष्टोऽसि माधव ८
त्वत्प्रसादाद्धृषीकेश शक्रः सुरगणेश्वरः
त्रैलोक्यविजयं श्रीमान्प्राप्तवान्रणमूर्धनि ९
तव चैव प्रसादेन त्रिदशास्त्रिदशेश्वर
अमरत्वं गताः कृष्ण लोकांश्चाश्नुवतेऽक्षयान् १०
त्वत्प्रसादसमुत्थेन विक्रमेणारिसूदन
सुरेशत्वं गतः शक्रो हत्वा दैत्यान्सहस्रशः ११
त्वत्प्रसादाद्धृषीकेश जगत्स्थावरजङ्गमम्
स्ववर्त्मनि स्थितं वीर जपहोमेषु वर्तते १२
एकार्णवमिदं पूर्वं सर्वमासीत्तमोमयम्
त्वत्प्रसादात्प्रकाशत्वं जगत्प्राप्तं नरोत्तम १३
स्रष्टारं सर्वलोकानां परमात्मानमच्युतम्
ये प्रपन्ना हृषीकेशं न ते मुह्यन्ति कर्हिचित् १४
अनादिनिधनं देवं लोककर्तारमव्ययम्
त्वां भक्ता ये हृषीकेश दुर्गाण्यतितरन्ति ते १५
परं पुराणं पुरुषं पुराणानां परं च यत्
प्रपद्यतस्तं परमं परा भूतिर्विधीयते १६
योऽगात चतुरो वेदान्यश्च वेदेषु गीयते
तं प्रपद्य महात्मानं भूतिमाप्नोत्यनुत्तमाम् १७
धनंजयसखा यश्च धनंजयहितश्च यः
तं धनंजयगोप्तारं प्रपद्य सुखमेधते १८
इत्युक्तौ तौ महात्मानावुभौ केशवपाण्डवौ
तावब्रूतां तदा हृष्टौ राजानं पृथिवीपतिम् १९
तव कोपाग्निना दग्धः पापो राजा जयद्रथः
उदीर्णं चापि सुमहद्धार्तराष्ट्रबलं रणे २०
हन्यते निहतं चैव विनङ्क्ष्यति च भारत
तव क्रोधहता ह्येते कौरवाः शत्रुसूदन २१

त्वां हि चक्षुर्हणं वीरं कोपयित्वा सुयोधनः
समित्रबन्धुः समरे प्राणांस्त्यक्ष्यति दुर्मतिः २२
तव क्रोधहतः पूर्वं देवैरपि सुदुर्जयः
शरतल्पगतः शेते भीष्मः कुरुपितामहः २३
दुर्लभो हि जयस्तेषां संग्रामे रिपुसूदन
याता मृत्युवशं ते वै येषां क्रुद्धोऽसि पाण्डव २४
राज्यं प्राणाः प्रियाः पुत्राः सौख्यानि विविधानि च
अचिरात्तस्य नश्यन्ति येषां क्रुद्धोऽसि मानद २५
विनष्टान्कौरवान्मन्ये सपुत्रपशुबान्धवान्
राजधर्मपरे नित्यं त्वयि क्रुद्धे युधिष्ठिर २६
ततो भीमो महाबाहुः सात्यकिश्च महारथः
अभिवाद्य गुरुं ज्येष्ठं मार्गणैः क्षतविक्षतौ
स्थितावास्तां महेष्वासौ पाञ्चाल्यैः परिवारितौ २७
तौ दृष्ट्वा मुदितौ वीरौ प्राञ्जली चाग्रतः स्थितौ
अभ्यनन्दत कौन्तेयस्तावुभौ भीमसात्यकी २८
दिष्ट्या पश्यामि वां वीरौ विमुक्तौ सैन्यसागरात्
द्रोणग्राहाद्दुराधर्षाद्धार्दिक्यमकरालयात्
दिष्ट्या च निर्जिताः संख्ये पृथिव्यां सर्वपार्थिवाः २९
युवां विजयिनौ चापि दिष्ट्या पश्यामि संयुगे
दिष्ट्या द्रोणो जितः संख्ये हार्दिक्यश्च महाबलः ३०
सैन्यार्णवं समुत्तीर्णौ दिष्ट्या पश्यामि चानघौ
समरश्लाघिनौ वीरौ समरेष्वपलायिनौ
मम प्राणसमौ चैव दिष्ट्या पश्यामि वामहम् ३१
इत्युक्त्वा पाण्डवो राजा युयुधानवृकोदरौ
सस्वजे पुरुषव्याघ्रौ हर्षाद्बाष्पं मुमोच ह ३२
ततः प्रमुदितं सर्वं बलमासीद्विशां पते
पाण्डवानां जयं दृष्ट्वा युद्धाय च मनो दधे ३३
इति श्रीमहाभारते द्रोणपर्वणि चतुर्विंशत्यधिकशततमोऽध्यायः १२४

## पञ्चविंशत्यधिक शततमोऽध्यायः

सञ्जय उवाच
सैन्धवे निहते राजन्पुत्रस्तव सुयोधनः
अश्रुक्लिन्नमुखो दीनो निरुत्साहो द्विषज्जये
अमन्यतार्जुनसमो योद्धा भुवि न विद्यते १
न द्रोणो न च राधेयो नाश्वत्थामा कृपो न च
क्रुद्धस्य प्रमुखे स्थातुं पर्याप्ता इति मारिष २
निर्जित्य हि रणे पार्थः सर्वान्मम महारथान्
अवधीत्सैन्धवं संख्ये नैनं कश्चिदवारयत् ३
सर्वथा हतमेवैतत्कौरवाणां महद्बलम्
न ह्यस्य विद्यते त्राता साक्षादपि पुरंदरः ४
यमुपाश्रित्य संग्रामे कृतः शस्त्रसमुद्यमः
स कर्णो निर्जितः संख्ये हतश्चैव जयद्रथः ५
परुषाणि सभामध्ये प्रोक्तवान्यः स्म पाण्डवान्
स कर्णो निर्जितः संख्ये सैन्धवश्च निपातितः ६
यस्य वीर्यं समाश्रित्य शमं याचन्तमच्युतम्
तृणवत्तमहं मन्ये स कर्णो निर्जितो युधि ७
एवं क्लान्तमना राजन्नुपायाद्द्रोणमीक्षितुम्
आगस्कृत्सर्वलोकस्य पुत्रस्ते भरतर्षभ ८
ततस्तत्सर्वमाचख्यौ कुरूणां वैशसं महत्
परान्विजयतश्चापि धार्तराष्ट्रान्निमज्जतः ९
दुर्योधन उवाच
पश्य मूर्धावसिक्तानामाचार्य कदनं कृतम्
कृत्वा प्रमुखतः शूरं भीष्मं मम पितामहम् १०
तं निहत्य प्रलुब्धोऽय शिखण्डी पूर्णमानसः
पाञ्चालैः सहितः सर्वैः सेनाग्रमभिकर्षति ११
अपरश्चापि दुर्धर्षः शिष्यस्ते सव्यसाचिना
अक्षौहिणीः सप्त हत्वा हतो राजा जयद्रथः १२
अस्मद्विजयकामानां सुहृदामुपकारिणाम्
गन्तास्मि कथमानृण्यं गतानां यमसादनम् १३

ये मदर्थं परीप्सन्ति वसुधां वसुधाधिपाः
ते हित्वा वसुधैश्वर्यं वसुधामधिशेरते १४
सोऽहं कापुरुषः कृत्वा मित्राणां क्षयमीदृशम्
नाश्वमेधसहस्रेण पातुमात्मानमुत्सहे १५
मम लुब्धस्य पापस्य तथा धर्मापचायिनः
व्यायच्छन्तो जिगीषन्तः प्राप्ता वैवस्वतक्षयम् १६
कथं पतितवृत्तस्य पृथिवी सुहृदां द्रुहः
विवरं नाशकद्दातुं मम पार्थिवसंसदि १७
सोऽहं रुधिरसिक्ताङ्गं राज्ञां मध्ये पितामहम्
शयानं नाशकं त्रातुं भीष्ममायोधने हतम् १८
तं मामनार्यपुरुषं मित्रद्रुहमधार्मिकम्
किं स वक्ष्यति दुर्धर्षः समेत्य परलोकजित् १९
जलसन्धं महेष्वासं पश्य सात्यकिना हतम्
मदर्थमुद्यतं शूरं प्राणांस्त्यक्त्वा महारथम् २०
काम्बोजं निहतं दृष्ट्वा तथालम्बुसमेव च
अन्यान्बहूंश्च सुहृदो जीवितार्थोऽद्य को मम २१
व्यायच्छन्तो हताः शूरा मदर्थे येऽपराङ्मुखाः
यतमानाः परं शक्त्या विजेतुमहितान्मम २२
तेषां गत्वाहमानृण्यमद्य शक्त्या परंतप
तर्पयिष्यामि तानेव जलेन यमुनामनु २३
सत्यं ते प्रतिजानामि सर्वशस्त्रभृतां वर
इष्टापूर्तेन च शपे वीर्येण च सुतैरपि २४
निहत्य तान्रणे सर्वान्पाञ्चालान्पाण्डवैः सह
शान्तिं लब्धास्मि तेषां वा रणे गन्ता सलोकताम् २५
न हीदानीं सहाया मे परीप्सन्त्यनुपस्कृताः
श्रेयो हि पाण्डून्मन्यन्ते न तथाऽस्मान्महाभुज २६
स्वयं हि मृत्युर्विहितः सत्यसंधेन संयुगे
भवानुपेक्षां कुरुते सुशिष्यत्वाद्धनंजये २७
अतो विनिहताः सर्वे येऽस्मज्जयचिकीर्षवः
कर्णमेव तु पश्यामि संप्रत्यस्मज्जयैषिणम् २८

यो हि मित्रमविज्ञाय याथातथ्येन मन्दधीः
मित्रार्थे योजयत्येनं तस्य सोऽथोऽवसीदति २९
तादृग्रूपमिदं कार्यं कृतं मम सुहृद्ब्रुवैः
मोहाल्लुब्धस्य पापस्य जिह्माचारैस्ततस्ततः ३०
हतो जयद्रथश्चैव सौमदत्तिश्च वीर्यवान्
अभीषाहाः शूरसेनाः शिबयोऽथ वसातयः ३१
सोऽहमद्य गमिष्यामि यत्र ते पुरुषर्षभाः
हता मदर्थं संग्रामे युध्यमानाः किरीटिना ३२
न हि मे जीवितेनार्थस्तानृते पुरुषर्षभान्
आचार्यः पाण्डुपुत्राणामनुजानातु नो भवान् ३३
इति श्रीमहाभारते द्रोणपर्वणि पञ्चविंशत्यधिकशततमोऽध्यायः १२५

## षड्विंशत्यधिक शततमोऽध्यायः

धृतराष्ट्र उवाच
सिन्धुराजे हते तात समरे सव्यसाचिना
तथैव भूरिश्रवसि किमासीद्वो मनस्तदा १
दुर्योधनेन च द्रोणस्तथोक्तः कुरुसंसदि
किमुक्तवान्परं तस्मात्तन्ममाचक्ष्व सञ्जय २
सञ्जय उवाच
निष्टानको महानासीत्सैन्यानां तव भारत
सैन्धवं निहतं दृष्ट्वा भूरिश्रवसमेव च ३
मन्त्रितं तव पुत्रस्य ते सर्वमवमेनिरे
येन मन्त्रेण निहताः शतशः क्षत्रियर्षभाः ४
द्रोणस्तु तद्वचः श्रुत्वा पुत्रस्य तव दुर्मनाः
मुहूर्तमिव तु ध्यात्वा भृशमार्त्तोऽभ्यभाषत ५
दुर्योधन किमेवं मां वाक्शरैरभिकृन्तसि
अजय्यं सततं नित्यं ब्रुवाणं सव्यसाचिनम् ६
एतेनैवार्जुनं ज्ञातुमलं कौरव संयुगे
यच्छिखण्ड्यवधीद्भीष्मं पाल्यमानः किरीटिना ७
अवध्यं निहतं दृष्ट्वा संयुगे देवमानुषैः

तदैवाज्ञासिषमहं नेयमस्तीति भारती ८
यं पुंसां त्रिषु लोकेषु सर्वशूरममंस्महि
तस्मिन्विनिहते शूरे किं शेषं पर्युपास्महे ९
यान्स्म तान्ग्लहते तातः शकुनिः कुरुसंसदि
अक्षान्न तेऽक्षा निशिता बाणास्ते शत्रुतापनाः १०
त एते घ्नन्ति नस्तात विशिखा जयचोदिताः
तांस्तदा ख्याप्यमानांस्त्वं विदुरेण न बुध्यसे ११
तास्ता विलपतश्चापि विदुरस्य महात्मनः
धीरस्य वाचो नाश्रौषीः क्षेमाय वदतः शिवाः १२
तदिदं वर्तते घोरमागतं वैशसं महत्
तस्यावमानाद्वाक्यस्य दुर्योधन कृते तव १३
यच्च नः प्रेक्षमाणानां कृष्णामानाययः सभाम्
अनर्हतीं कुले जातां सर्वधर्मानुचारिणीम् १४
तस्याधर्मस्य गान्धारे फलं प्राप्तमिदं त्वया
नो चेत्पापं परे लोके त्वमर्च्छेथास्ततोऽधिकम् १५
यच्च तान्पाण्डवान्द्यूते विषमेण विजित्य ह
प्राव्राजयस्तदारण्ये रौरवाजिनवाससः १६
पुत्राणामिव चैतेषां धर्ममाचरतां सदा
द्रुह्येत्को नु नरो लोके मदन्यो ब्राह्मणब्रुवः १७
पाण्डवानामयं कोपस्त्वया शकुनिना सह
आहृतो धृतराष्ट्रस्य संमते कुरुसंसदि १८
दुःशासनेन संयुक्तः कर्णेन परिवर्धितः
क्षत्तुर्वाक्यमनादृत्य त्वयाभ्यस्तः पुनः पुनः १९
यत्तत्सर्वे पराभूय पर्यवारयतार्जुनिम्
सिन्धुराजानमाश्रित्य स वो मध्ये कथं हतः २०
कथं त्वयि च कर्णे च कृपे शल्ये च जीवति
अश्वत्थाम्नि च कौरव्य निधनं सैन्धवोऽगमत् २१
यद्वस्तत्सर्वराजानस्तेजस्तिग्ममुपासते
सिन्धुराजं परित्रातुं स वो मध्ये कथं हतः २२
मय्येव हि विशेषेण तथा दुर्योधन त्वयि

स्राशंसत परित्राणमर्जुनात्स महीपतिः २३
ततस्तस्मिन्परित्राणमलब्धवति फल्गुनात्
न किंचिदनुपश्यामि जीवितत्राणमात्मनः २४
मज्जन्तमिव चात्मानं धृष्टद्युम्नस्य किल्विषे
पश्याम्यहत्वा पाञ्चालान्सह तेन शिखण्डिना २५
तन्मा किमभितप्यन्तं वाक्शरैरभिकृन्तसि
अशक्तः सिन्धुराजस्य भूत्वा त्राणाय भारत २६
सौवर्णं सत्यसंधस्य ध्वजमाक्लिष्टकर्मणः
अपश्यन्युधि भीष्मस्य कथमाशंससे जयम् २७
मध्ये महारथानां च यत्राहन्यत सैन्धवः
हतो भूरिश्रवाश्चैव किं शेषं तत्र मन्यसे २८
कृप एव च दुर्धर्षो यदि जीवति पार्थिव
यो नागात्सिन्धुराजस्य वर्त्म तं पूजयाम्यहम् २९
यच्चापश्यं हतं भीष्मं पश्यतस्तेऽनुजस्य वै
दुःशासनस्य कौरव्य कुर्वाणं कर्म दुष्करम्
अवध्यकल्पं संग्रामे देवैरपि सवासवैः ३०
न ते वसुंधरास्तीति तदहं चिन्तये नृप
इमानि पाण्डवानां च सृञ्जयानां च भारत
अनीकान्याद्रवन्ते मां सहितान्यद्य मारिष ३१
नाहत्वा सर्वपाञ्चालान्कवचस्य विमोक्षणम्
कर्तास्मि समरे कर्म धार्तराष्ट्र हितं तव ३२
राजन्ब्रूयाः सुतं मे त्वमश्वत्थामानमाहवे
न सोमकाः प्रमोक्तव्या जीवितं परिरक्षता ३३
यच्च पित्रानुशिष्टोऽसि तद्वचः परिपालय
आनृशंस्ये दमे सत्ये आर्जवे च स्थिरो भव ३४
धर्मार्थकामकुशलो धर्मार्थावप्यपीडयन्
धर्मप्रधानः कार्याणि कुर्याश्चेति पुनः पुनः ३५
चक्षुर्मनोभ्यां सन्तोष्या विप्राः सेव्याश्च शक्तितः
न चैषां विप्रियं कार्यं ते हि वह्निशिखोपमाः ३६
एष त्वहमनीकानि प्रविशाम्यरिसूदन

रणाय महते राजंस्त्वया वाक्शल्यपीडितः ३७
त्वं च दुर्योधन बलं यदि शक्नोषि धारय
रात्रावपि च योत्स्यन्ते संरब्धाः कुरुसृञ्जयाः ३८
एवमुक्त्वा ततः प्रायाद्द्रोणः पाण्डवसृञ्जयान्
मुष्णन्क्षत्रियतेजांसि नक्षत्राणामिवांशुमान् ३९
इति श्रीमहाभारते द्रोणपर्वणि षड्विंशत्यधिकशततमोऽध्यायः १२६

## सप्तविंशत्यधिक शततमोऽध्यायः

सञ्जय उवाच
ततो दुर्योधनो राजा द्रोणेनैवं प्रचोदितः
अमर्षवशमापन्नो युद्धायैव मनो दधे १
अब्रवीच्च तदा कर्णं पुत्रो दुर्योधनस्तव
पश्य कृष्णसहायेन पाण्डवेन किरीटिना
आचार्यविहितं व्यूहं भिन्नं देवैः सुदुर्भिदम् २
तव व्यायच्छमानस्य द्रोणस्य च महात्मनः
मिषतां योधमुख्यानां सैन्धवो विनिपातितः ३
पश्य राधेय राजानः पृथिव्यां प्रवरा युधि
पार्थेनैकेन निहताः सिंहेनेवेतरा मृगाः ४
मम व्यायच्छमानस्य समरे शत्रुसूदन
अल्पावशेषं सैन्यं मे कृतं शक्रात्मजेन ह ५
कथं ह्यनिच्छमानस्य द्रोणस्य युधि फल्गुनः
भिन्द्यात्सुदुर्भिदं व्यूहं यतमानोऽपि संयुगे ६
प्रियो हि फल्गुनो नित्यमाचार्यस्य महात्मनः
ततोऽस्य दत्तवान्द्वारं नयुद्धेनारिमर्दन ७
अभयं सैन्धवस्याजौ दत्त्वा द्रोणः परंतपः
प्रादात्किरीटिने द्वारं पश्य निर्गुणतां मम ८
यद्यदास्यमनुज्ञां वै पूर्वमेव गृहान्प्रति
सिन्धुराजस्य समरे नाभविष्यज्जनक्षयः ९
जयद्रथो जीवितार्थी गच्छमानो गृहान्प्रति
मयानार्येण संरुद्धो द्रोणात्प्राप्याभयं रणे १०

अद्य मे भ्रातरः क्षीणाश्चित्रसेनादयो युधि
भीमसेनं समासाद्य पश्यतां नो दुरात्मनाम् ११
कर्ण उवाच
आचार्यं मा विगर्हस्व शक्त्या युध्यत्यसौ द्विजः
अजय्यान्पाण्डवान्मन्ये द्रोणेनास्त्रविदा मृधे १२
तथा ह्येनमतिक्रम्य प्रविष्टः श्वेतवाहनः
दैवदृष्टोऽन्यथाभावो न मन्ये विद्यते क्वचित् १३
ततो नो युध्यमानानां परं शक्त्या सुयोधन
सैन्धवो निहतो राजन्दैवमत्र परं स्मृतम् १४
परं यत्नं कुर्वतां च त्वया सार्धं रणाजिरे
हत्वास्माकं पौरुषं हि दैवं पश्चात्करोति नः
सततं चेष्टमानानां निकृत्या विक्रमेण च १५
दैवोपसृष्टः पुरुषो यत्कर्म कुरुते क्वचित्
कृतं कृतं स्म तत्तस्य दैवेन विनिहन्यते १६
यत्कर्तव्यं मनुष्येण व्यवसायवता सता
तत्कार्यमविशङ्केन सिद्धिर्दैवे प्रतिष्ठिता १७
निकृत्या निकृताः पार्था विषयोगैश्च भारत
दग्धा जतुगृहे चापि द्यूतेन च पराजिताः १८
राजनीतिं व्यपाश्रित्य प्रहिताश्चैव काननम्
यत्नेन च कृतं यत्ते दैवेन विनिपातितम् १९
युध्यस्व यत्नमास्थाय मृत्युं कृत्वा निवर्तनम्
यततस्तव तेषां च दैवं मार्गेण यास्यति २०
न तेषां मतिपूर्वं हि सुकृतं दृश्यते क्वचित्
दुष्कृतं तव वा वीर बुद्ध्या हीनं कुरूद्वह २१
दैवं प्रमाणं सर्वस्य सुकृतस्येतरस्य वा
अनन्यकर्म दैवं हि जागर्ति स्वपतामपि २२
बहूनि तव सैन्यानि योधाश्च बहवस्तथा
न तथा पाण्डुपुत्राणामेवं युद्धमवर्तत २३
तैरल्पैर्बहवो यूयं क्षयं नीताः प्रहारिणः
शङ्के दैवस्य तत्कर्म पौरुषं येन नाशितम् २४

सञ्जय उवाच
एवं संभाषमाणानां बहु तत्तज्जनाधिप
पाण्डवानामनीकानि समदृश्यन्त संयुगे २५
ततः प्रववृते युद्धं व्यतिषक्तरथद्विपम्
तावकानां परैः सार्धं राजन्दुर्मन्त्रिते तव २६
इति श्रीमहाभारते द्रोणपर्वणि सप्तविंशत्यधिकशततमोऽध्यायः १२७

## अष्टाविंशत्यधिक शततमोऽध्यायः

सञ्जय उवाच
तदुदीर्णगजाश्वौघं बलं तव जनाधिप
पाण्डुसेनामभिद्रुत्य योधयामास सर्वतः १
पाञ्चालाः कुरवश्चैव योधयन्तः परस्परम्
यमराष्ट्राय महते परलोकाय दीक्षिताः २
शूराः दूरैः समागम्य शरतोमरशक्तिभिः
विव्यधुः समरे तूर्णं निन्युश्चैव यमक्षयम् ३
रथिनां रथिभिः सार्धं रुधिरस्राावि दारुणम्
प्रावर्तत महद्युद्धं निघ्नतामितरेतरम् ४
वारणाश्च महाराज समासाद्य परस्परम्
विषाणैर्दारयामासुः संक्रुद्धाश्च मदोत्कटाः ५
हयारोहान्हयारोहाः प्रासशक्तिपरश्वधैः
बिभिदुस्तुमुले युद्धे प्रार्थयन्तो महद्यशः ६
पत्तयश्च महाबाहो शतशः शस्त्रपाणयः
अन्योन्यमार्दयन्राजन्नित्ययत्ताः पराक्रमे ७
गोत्राणां नामधेयानां कुलानां चैव मारिष
श्रवणाद्धि विजानीमः पाञ्चालान्कुरुभिः सह ८
अन्योन्यं समरे योधाः शरशक्तिपरश्वधैः
प्रेषयन्परलोकाय विचरन्तो ह्यभीतवत् ९
शरैर्दश दिशो राजंस्तेषां मुक्तैः सहस्रशः
न भ्राजन्त यथापूर्वं भास्करेऽस्त गतेऽपि च १०
तथा प्रयुध्यमानेषु पाण्डवेयेषु निर्भयः

दुर्योधनो महाराज व्यवगाहत तद्बलम् ११
सैन्धवस्य वधेनैव भृशं दुःखसमन्वितः
मर्तव्यमिति संचिन्त्य प्राविशत्तु द्विषद्बलम् १२
नादयन्रथघोषेण कम्पयन्निव मेदिनीम्
अभ्यवर्तत पुत्रस्ते पाराडवानामनीकिनीम् १३
स संनिपातस्तुमुलस्तस्य तेषां च भारत
अभवत्सर्वसैन्यानामभावकरणो महान् १४
मध्यंदिनगतं सूर्यं प्रतपन्तं गभस्तिभिः
तथा तव सुतं मध्ये प्रतपन्तं शरोर्मिभिः १५
न शेकुर्भारतं युद्धे पाराडवाः समवेक्षितुम्
पलायने कृतोत्साहा निरुत्साहा द्विषज्जये १६
पर्यधावन्त पाञ्चाला वध्यमाना महात्मना
रुक्मपुङ्खैः प्रसन्नाग्रैस्तव पुत्रेण धन्विना
अर्द्यमानाः शरैस्तूर्णं न्यपतन्पाराडुसैनिकाः १७
न तादृशं रणे कर्म कृतवन्तस्तु तावकाः
यादृशं कृतवान्राजा पुत्रस्तव विशां पते १८
पुत्रेण तव सा सेना पाराडवी मथिता रणे
नलिनी द्विरदेनेव समन्तात्फुल्लपङ्कजा १९
क्षीणतोयानिलार्काभ्यां हतत्विडिव पद्मिनी
बभूव पाराडवी सेना तव पुत्रस्य तेजसा २०
पाराडुसेनां हतां दृष्ट्वा तव पुत्रेण भारत
भीमसेनपुरोगास्तु पाञ्चालाः समुपाद्रवन् २१
स भीमसेनं दशभिर्माद्रीपुत्रौ त्रिभिस्त्रिभिः
विराटद्रुपदौ षड्भिः शतेन च शिखरािडनम् २२
धृष्टद्युम्नं च सप्तत्या धर्मपुत्रं च सप्तभिः
केकयांश्चैव चेदींश्च बहुभिर्निशितैः शरैः २३
सात्वतं पञ्चभिर्विद्ध्वा द्रौपदेयांस्त्रिभिस्त्रिभिः
घटोत्कचं च समरे विद्ध्वा सिंह इवानदत् २४
शतशश्चापरान्योधान्सद्विपाश्वरथान्रणे
शरैरवचकर्तोग्रैः क्रुद्धोऽन्तक इव प्रजाः २५

तस्य तान्निघ्नतः शत्रूनुक्मपृष्ठं महद्धनुः
भल्लाभ्यां पाराडवो ज्येष्ठस्त्रिधा चिच्छेद मारिष २६
विव्याध चैनं दशभिः सम्यगस्तैः शितैः शरैः
मर्माणि भित्त्वा ते सर्वे संभग्नाः क्षितिमाविशन् २७
ततः प्रमुदिता योधाः परिवव्रुर्युधिष्ठिरम्
वृत्रहत्यै यथा देवाः परिवव्रुः पुरंदरम् २८
ततो युधिष्ठिरो राजा तव पुत्रस्य मारिष
शरं परमदुर्वारं प्रेषयामास संयुगे
स तेन भृशसंविद्धो निषसाद रथोत्तमे २९
ततः पाञ्चालसैन्यानां भृशमासीद्रवो महान्
हतो राजेति राजेन्द्र मुदितानां समन्ततः ३०
बाणशब्दरवश्चोग्रः शुश्रुवे तत्र मारिष
अथ द्रोणो द्रुतं तत्र प्रत्यदृश्यत संयुगे ३१
हृष्टो दुर्योधनश्चापि दृढमादाय कार्मुकम्
तिष्ठ तिष्ठेति राजानं ब्रुवन्पाराडवमभ्ययात् ३२
प्रत्युद्ययुस्तं त्वरिताः पाञ्चाला राजगृद्धिनः
तान्द्रोणः प्रतिजग्राह परीप्सन्कुरुसत्तमम्
चराडवातोद्धतान्मेघान्निघ्नन्रश्मिमुचो यथा ३३
ततो राजन्महानासीत्संग्रामो भूरिवर्धनः
तावकानां परेषां च समेतानां युयुत्सया ३४
इति श्रीमहाभारते द्रोणपर्वणि अष्टाविंशत्यधिकशततमोऽध्यायः १२८

## एकोनत्रिंशत्यधिक शततमोऽध्यायः

धृतराष्ट्र उवाच
यत्तदा प्राविशत्पाराडूनाचार्यः कुपितो वशी
उक्त्वा दुर्योधनं सम्यङ्मम शास्त्रातिगं सुतम् १
प्रविश्य विचरन्तं च रणे शूरमवस्थितम्
कथं द्रोणं महेष्वासं पाराडवाः पर्यवारयन् २
केऽरक्षन्दक्षिणं चक्रमाचार्यस्य महात्मनः
के चोत्तरमरक्षन्त निघ्नतः शात्रवान्रणे ३

नृत्यन्स रथमार्गेषु सर्वशस्त्रभृतां वरः
धूमकेतुरिव क्रुद्धः कथं मृत्युमुपेयिवान् ४
सञ्जय उवाच
सायाह्ने सैन्धवं हत्वा राज्ञा पार्थः समेत्य च
सात्यकिश्च महेष्वासो द्रोणमेवाभ्यधावताम् ५
तथा युधिष्ठिरस्तूर्णं भीमसेनश्च पाण्डवः
पृथक्चमूभ्यां संसक्तौ द्रोणमेवाभ्यधावताम् ६
तथैव नकुलो धीमान्सहदेवश्च दुर्जयः
धृष्टद्युम्नः शतानीको विराटश्च सकेकयः
मत्स्याः शाल्वेयसेनाश्च द्रोणमेव ययुर्युधि ७
द्रुपदश्च तथा राजा पाञ्चालैरभिरक्षितः
धृष्टद्युम्नपिता राजन्द्रोणमेवाभ्यवर्तत ८
द्रौपदेया महेष्वासा राक्षसश्च घटोत्कचः
ससेनास्तेऽभ्यवर्तन्त द्रोणमेव महाद्युतिम् ९
प्रभद्रकाश्च पाञ्चालाः षट्सहस्राः प्रहारिणः
द्रोणमेवाभ्यवर्तन्त पुरस्कृत्य शिखण्डिनम् १०
तथेतरे नरव्याघ्राः पाण्डवानां महारथाः
सहिताः संन्यवर्तन्त द्रोणमेव द्विजर्षभम् ११
तेषु शूरेषु युद्धाय गतेषु भरतर्षभ
बभूव रजनी घोरा भीरूणां भयवर्धिनी १२
योधानामशिवा रौद्रा राजन्नन्तकगामिनी
कुञ्जराश्वमनुष्याणां प्राणान्तकरणी तदा १३
तस्यां रजन्यां घोरायां नदन्त्यः सर्वतः शिवाः
न्यवेदयन्भयं घोरं सज्वालकवलैर्मुखैः १४
उलूकाश्चाप्यदृश्यन्त शंसन्तो विपुलं भयम्
विशेषतः कौरवाणां ध्वजिन्यामतिदारुणम् १५
ततः सैन्येषु राजेन्द्र शब्दः समभवन्महान्
भेरीशब्देन महता मृदङ्गानां स्वनेन च १६
गजानां गर्जितैश्चापि तुरंगाणां च हेषितैः
खुरशब्दनिपातैश्च तुमुलः सर्वतोऽभवत् १७

ततः समभवद्युद्धं संध्यायामतिदारुणम्
द्रोणस्य च महाराज सृञ्जयानां च सर्वशः १८
तमसा चावृते लोके न प्राज्ञायत किंचन
सैन्येन रजसा चैव समन्तादुत्थितेन ह १९
नरस्याश्वस्य नागस्य समसज्जत शोणितम्
नापश्याम रजो भौमं कश्मलेनाभिसंवृताः २०
रात्रौ वंशवनस्येव दह्यमानस्य पर्वते
घोरश्चटचटाशब्दः शस्त्राणां पतताभूत् २१
नैव स्वे न परे राजन्प्राज्ञायन्त तमोवृते
उन्मत्तमिव तत्सर्वं बभूव रजनीमुखे २२
भौमं रजोऽथ राजेन्द्र शोणितेन प्रशामितम्
शातकौम्भैश्च कवचैर्भूषणैश्च तमोऽभ्यगात् २३
ततः सा भारती सेना मणिहेमविभूषिता
द्यौरिवासीत्सनक्षत्रा रजन्यां भरतर्षभ २४
गोमायुबडसंघुष्टा शक्तिध्वजसमाकुला
दारुणाभिरुता घोरा क्ष्वेडितोत्क्रुष्टनादिता २५
ततोऽभवन्महाशब्दस्तुमुलो लोमहर्षणः
समावृण्वन्दिशः सर्वा महेन्द्राशनिनिस्वनः २६
सा निशीथे महाराज सेनादृश्यत भारती
अङ्गदैः कुण्डलैर्निष्कैः शस्त्रैश्चैवावभासिता २७
तत्र नागा रथाश्चैव जाम्बूनदविभूषिताः
निशायां प्रत्यदृश्यन्त मेघा इव सविद्युतः २८
ऋष्टिशक्तिगदाबाणमुसलप्रासपट्टिशाः
संपतन्तो व्यदृश्यन्त भ्राजमाना इवाग्नयः २९
दुर्योधनपुरोवातां रथनागबलाहकाम्
वादित्रघोषस्तनितां चापविद्युद्ध्वजैर्वृताम् ३०
द्रोणपाण्डवपर्जन्यां खड्गशक्तिगदाशनिम्
शरधारास्त्रपवनां भृशं शीतोष्णसंकुलाम् ३१
घोरां विस्मापनीमुग्रां जीवितच्छिदमप्लवाम्
तां प्राविशन्नतिभयां सेनां युद्धचिकीर्षवः ३२

तस्मिन्रात्रिमुखे घोरे महाशब्दनिनादिते
भीरूणां त्रासजनने शूराणां हर्षवर्धने ३३
रात्रियुद्धे महाघोरे वर्तमाने सुदारुणे
द्रोणमभ्यद्रवन्क्रुद्धाः सहिताः पाण्डुसृञ्जयाः ३४
ये ये प्रमुखतो राजन्न्यवर्तन्त महात्मनः
तान्सर्वान्विमुखांश्चक्रे कांश्चिन्निन्ये यमक्षयम् ३५
इति श्रीमहाभारते द्रोणपर्वणि एकोनत्रिंशत्यधिकशततमोऽध्यायः १२९

त्रिंशदधिक शततमोऽध्यायः

धृतराष्ट्र उवाच
तस्मिन्प्रविष्टे दुर्धर्षे सृञ्जयानमितौजसि
अमृष्यमाणे संरब्धे का वोऽभूद्वै मतिस्तदा १
दुर्योधनं तया पुत्रमुक्त्वा शास्त्रातिगं मम
यत्प्राविशदमेयात्मा किं पार्थः प्रत्यपद्यत २
निहते सैन्धवे वीरे भूरिश्रवसि चैव हि
यदभ्यगान्महातेजाः पाञ्चालानपराजितः ३
किममन्यत दुर्धर्षः प्रविष्टे शत्रुतापने
दुर्योधनश्च किं कृत्यं प्राप्तकालममन्यत ४
के च तं वरदं वीरमन्वयुर्द्विजसत्तमम्
के चास्य पृष्ठतोऽगच्छन्वीराः शूरस्य युध्यतः
के पुरस्तादयुध्यन्त निघ्नतः शात्रवान्रणे ५
मन्येऽह पाण्डवान्सर्वान्भारद्वाजशरार्दितान्
शिशिरे कम्पमाना वै कृशा गाव इवाभिभो ६
प्रविश्य स महेष्वासः पाञ्चालानरिमर्दनः
कथं नु पुरुषव्याघ्रः पञ्चत्वमुपजग्मिवान् ७
सर्वेषु सैन्येषु च संगतेषु रात्रौ समेतेषु महारथेषु
संलोड्यमानेषु पृथग्विधेषु के वस्तदानीं मतिमन्त आसन् ८
हतांश्चैव विषक्तांश्च पराभूतांश्च शंससि
रथिनो विरथांश्चैव कृतान्युद्धेषु मामकान् ९
कथमेषां तदा तत्र पार्थानामपलायिनाम्

प्रकाशमभवद्रात्रौ कथं कुरुषु सञ्जय १०
सञ्जय उवाच
रात्रियुद्धे तदा राजन्वर्तमाने सुदारुणे
द्रोणमभ्यद्रवन्रात्रौ पाण्डवाः सहसैनिकाः ११
ततो द्रोणः केकयांश्च धृष्टद्युम्नस्य चात्मजान्
प्रेषयन्मृत्युलोकाय सर्वानिषुभिराशुगैः १२
तस्य प्रमुखतो राजन्येऽवर्तन्त महारथाः
तान्सर्वान्प्रेषयामास परलोकाय भारत १३
प्रमथ्नन्तं तदा वीरं भारद्वाजं महारथम्
अभ्यवर्तत संक्रुद्धः शिबी राजन्प्रतापवान् १४
तमापतन्तं सम्प्रेक्ष्य पाण्डवानां महारथम्
विव्याध दशभिर्द्रोणः सर्वपारसवैः शरैः १५
तं शिबिः प्रतिविव्याध त्रिंशता निशितैः शरैः
सारथिं चास्य भल्लेन स्मयमानो न्यपातयत् १६
तस्य द्रोणो हयान्हत्वा सारथिं च महात्मनः
अथास्य सशिरस्त्राणं शिरः कायादपाहरत् १७
कलिङ्गानां च सैन्येन कलिङ्गस्य सुतो रणे
पूर्वं पितृवधात्क्रुद्धो भीमसेनमुपाद्रवत् १८
स भीमं पञ्चभिर्विद्ध्वा पुनर्विव्याध सप्तभिः
विशोकं त्रिभिराजघ्ने ध्वजमेकेन पत्रिणा १९
कलिङ्गानां तु तं शूरं क्रुद्धं क्रुद्धो वृकोदरः
रथाद्रथमभिद्रुत्य मुष्टिनाभिजघान ह २०
तस्य मुष्टिहतस्याजौ पाण्डवेन बलीयसा
सर्वाण्यस्थीनि सहसा प्रापतन्वै पृथक्पृथक् २१
तं कर्णो भ्रातरश्चास्य नामृष्यन्त महारथाः
ते भीमसेनं नाराचैर्जघ्नुराशीविषोपमैः २२
ततः शत्रुरथं त्यक्त्वा भीमो ध्रुवरथं गतः
ध्रुवं चास्यन्तमनिशं मुष्टिना समपोथयत्
स तथा पाण्डुपुत्रेण बलिना निहतोऽपतत् २३
तं निहत्य महाराज भीमसेनो महाबलः

जयरातरथं प्राप्य मुहुः सिंह इवानदत् २४
जयरातमथाक्षिप्य नदन्सव्येन पाणिना
तलेन नाशयामास कर्णस्यैवाग्रतः स्थितम् २५
कर्णस्तु पाण्डवे शक्तिं काञ्चनीं समवासृजत्
ततस्तामेव जग्राह प्रहसन्पाण्डुनन्दनः २६
कर्णायैव च दुर्धर्षश्चिक्षेपाजौ वृकोदरः
तामन्तरिक्षे चिच्छेद शकुनिस्तैलपायिना २७
ततस्तव सुता राजन्भीमस्य रथमाव्रजन्
महता शरवर्षेण छादयन्तो वृकोदरम् २८
दुर्मदस्य ततो भीमः प्रहसन्निव संयुगे
सारथिं च हयांश्चैव शरैर्निन्ये यमक्षयम्
दुर्मदस्तु ततो यानं दुष्कर्णस्यावपुप्लुवे २९
तावेकरथमारूढौ भ्रातरौ परतापनौ
संग्रामशिरसो मध्ये भीमं द्वावभ्यधावताम्
यथाम्बुपतिमित्रौ हि तारकं दैत्यसत्तमम् ३०
ततस्तु दुर्मदश्चैव दुष्कर्णश्च तवात्मजौ
रथमेकं समारुह्य भीमं बाणैरविध्यताम् ३१
ततः कर्णस्य मिषतो द्रौणेर्दुर्योधनस्य च
कृपस्य सोमदत्तस्य बाह्लीकस्य च पाण्डवः ३२
दुर्मदस्य च वीरस्य दुष्कर्णस्य च तं रथम्
पादप्रहारेण धरां प्रावेशयदरिंदमः ३३
ततः सुतौ ते बलिनौ शूरौ दुष्कर्णदुर्मदौ
मुष्टिनाहत्य संक्रुद्धो ममर्द चरणेन च ३४
ततो हाहाकृते सैन्ये दृष्ट्वा भीमं नृपाब्रुवन्
रुद्रोऽय भीमरूपेण धार्तराष्ट्रेषु गृध्यति ३५
एवमुक्त्वापलायन्त सर्वे भारत पार्थिवाः
विसंज्ञावाहयन्वाहान्न च द्वौ सह धावतः ३६
ततो बले भृशलुलिते निशामुखे सुपूजितो नृपवृषभैर्वृकोदरः
महाबलः कमलविबुद्धलोचनो युधिष्ठिरं नृपतिमपूजयद्बली ३७
ततो यमौ द्रुपदविराटकेकया युधिष्ठिरश्चापि परां मुदं ययुः

वृकोदरं भृशमभिपूजयंश्च ते यथान्धके प्रतिनिहते हरं सुराः ३८
ततः सुतास्तव वरुणात्मजोपमा रुषान्विताः सह गुरुणा महात्मना
वृकोदरं सरथपदातिकुञ्जरा युयुत्सवो भृशमभिपर्यवारयन् ३९
ततोऽभवत्तिमिरघनैरिवावृतं महाभये भयदमतीव दारुणम्
निशामुखे बडवृकगृध्रमोदनं महात्मनां नृपवरयुद्धमद्भुतम् ४०
इति श्रीमहाभारते द्रोणपर्वणि त्रिंशदधिकशततमोऽध्यायः १३०

## एकत्रिंशदधिक शततमोऽध्यायः

सञ्जय उवाच
प्रायोपविष्टे तु हते पुत्रे सात्यकिना ततः
सोमदत्तो भृशं क्रुद्धः सात्यकिं वाक्यमब्रवीत् १
धत्रधर्मः पुरा दृष्टो यस्तु देवैर्महात्मभिः
तं त्वं सात्वत संत्यज्य दस्युधर्मे कथं रतः २
पराङ्मुखाय दीनाय न्यस्तशस्त्राय याचते
क्षत्रधर्मरतः प्राज्ञः कथं नु प्रहरेद्रणे ३
द्वावेव किल वृष्णीनां तत्र ख्यातौ महारथौ
प्रद्युम्नश्च महाबाहुस्त्वं चैव युधि सात्वत ४
कथं प्रायोपविष्टाय पार्थेन छिन्नबाहवे
नृशंसं पतनीयं च तादृशं कृतवानसि ५
शपे सात्वत पुत्राभ्यामिष्टेन सुकृतेन च
अनतीतामिमां रात्रिं यदि त्वां वीरमानिनम् ६
अरक्ष्यमाणं पार्थेन जिष्णुना ससुतानुजम्
न हन्यां निरये घोरे पतेयं वृष्णिपांसन ७
एवमुक्त्वा सुसंक्रुद्धः सोमदत्तो महाबलः
दध्मौ शङ्खं च तारेण सिंहनादं ननाद च ८
ततः कमलपत्राक्षः सिंहदंष्ट्रो महाबलः
सात्वतो भृशसंक्रुद्धः सोमदत्तमथाब्रवीत् ९
हतो भूरिश्रवा वीरस्तव पुत्रो महारथः
शलश्चैव तथा राजन्भ्रातृव्यसनकर्शितः १०
त्वां चाप्यद्य वधिष्यामि सपुत्रपशुबान्धवम्

तिष्ठेदानीं रणे यत्तः कौरवोऽसि विशेषतः ११
यस्मिन्दानं दमः शौचमहिंसा ह्रीर्धृतिः क्षमा
अनपायीनि सर्वाणि नित्यं राज्ञि युधिष्ठिरे १२
मृदङ्गकेतोस्तस्य त्वं तेजसा निहतः पुरा
सकर्णसौबलः संख्ये विनाशं समुपेष्यसि १३
शपेऽहं कृष्णचरणैरिष्टापूर्तेन चैव ह
यदि त्वां ससुतं पापं न हन्यां युधि रोषितः
अपयास्यसि चेत्त्यक्त्वा ततो मुक्तो भविष्यसि १४
एवमाभाष्य चान्योन्यं क्रोधसंरक्तलोचनौ
प्रवृत्तौ शरसंपातं कर्तुं पुरुषसत्तमौ १५
ततो गजसहस्रेण रथानामयुतेन च
दुर्योधनः सोमदत्तं परिवार्य व्यवस्थितः १६
शकुनिश्च सुसंक्रुद्धः सर्वशस्त्रभृतां वरः
पुत्रपौत्रैः परिवृतो भ्रातृभिश्चेन्द्रविक्रमैः
श्यालस्तव महाबाहुर्वज्रसंहननो युवा १७
साग्रं शतसहस्रं तु हयानां तस्य धीमतः
सोमदत्तं महेष्वासं समन्तात्पर्यरक्षत १८
रक्ष्यमाणश्च बलिभिश्छादयामास सात्यकिम्
तं छाद्यमानंविशिखैर्दृष्ट्वा संनतपर्वभिः
धृष्टद्युम्नोऽभ्ययात्क्रुद्धः प्रगृह्य महतीं चमूम् १९
चण्डवाताभिसृष्टानामुदधीनामिव स्वनः
आसीद्राजन्बलौघानामन्योन्यमभिनिघ्नताम् २०
विव्याध सोमदत्तस्तु सात्वतं नवभिः शरैः
सात्यकिर्दशभिश्चैनमवधीत्कुरुपुंगवम् २१
सोऽतिविद्धो बलवता समरे दृढधन्वना
रथोपस्थं समासाद्य मुमोह गतचेतनः २२
तं विमूढं समालक्ष्य सारथिस्त्वरयान्वितः
अपोवाह रणाद्वीरं सोमदत्तं महारथम् २३
तं विसंज्ञं समालोक्य युयुधानशरार्दितम्
द्रौणिरभ्यद्रवत्क्रुद्धः सात्वतं रणमूर्धनि २४

तमापतन्तं संप्रेद्य शैनेयस्य रथं प्रति
भैमसेनिः सुसंक्रुद्धः प्रत्यमित्रमवारयत् २५
कार्ष्णायसमयं घोरमृत्तचर्मावृतं महत्
युक्तं गजनिभैर्वाहैर्न हयैर्नापि वा गजैः २६
विद्धिप्तमष्टचक्रेण विवृताद्धेण कूजता
ध्वजेनोच्छ्रिततुराडेन गृध्रराजेन राजता २७
लोहितार्द्रपताकं तमन्त्रमालाविभूषितम्
अष्टचक्रसमायुक्तमास्थाय विपुलं रथम् २८
शूलमुद्गरधारिराया शैलपादपहस्तया
रत्तसां घोररूपाणामत्तौहिराया समावृतः २९
तमुद्यतमहाचापं निशाम्य व्यथिता नृपाः
युगान्तकालसमये दराडहस्तमिवान्तकम् ३०
भयार्दिता प्रचुत्तोभ पुत्रस्य तव वाहिनी
वायुना त्तोभितावर्ता गङ्गेवोर्ध्वतरङ्गिणी ३१
घटोत्कचप्रयुक्तेन सिंहनादेन भीषिताः
प्रसुस्त्रुवुर्गजा मूत्रं विव्यथुश्च नरा भृशम् ३२
ततोऽश्मवृष्टिरत्यर्थमासीत्तत्र समन्ततः
संध्याकालाधिकबलैः प्रमुक्ता रात्तसैः त्तितौ ३३
आयसानि च चक्राणि भुशुराड्यः प्रासतोमराः
पतन्त्यविरलाः शूलाः शतघ्न्यः पट्टिशास्तथा ३४
तदुग्रमतिरौद्रं च दृष्ट्वा युद्धं नराधिपाः
तनयास्तव कर्णश्च व्यथिताः प्राद्रवन्दिशः ३५
तत्रैकोऽस्त्रबलश्लाघी द्रौणिर्मानी न विव्यथे
व्यधमच्च शरैर्मायां घटोत्कचविनिर्मिताम् ३६
निहतायां तु मायायाममर्षी स घटोत्कचः
विससर्ज शरान्घोरांस्तेऽश्वत्थामानमाविशन् ३७
भुजगा इव वेगेन वल्मीकं क्रोधमूर्छिताः
ते शरा रुधिराभ्यक्ता भित्त्वा शारद्वतीसुतम्
विविशुर्धरणीं शीघ्रा रुक्मपुङ्खाः शिलाशिताः ३८
अश्वत्थामा तु संक्रुद्धो लघुहस्तः प्रतापवान्

घटोत्कचमभिक्रुद्धं बिभेद दशभिः शरैः ३९
घटोत्कचोऽतिविद्धस्तु द्रोणपुत्रेण मर्मसु
चक्रं शतसहस्रारमगृह्णाद्व्यथितो भृशम् ४०
क्षुरान्तं बालसूर्याभं मणिवज्रविभूषितम्
अश्वत्थाम्नस्तु चिक्षेप भैमसेनिर्जिघांसया ४१
वेगेन महता गच्छद्विक्षिप्तं द्रौणिना शरैः
अभाग्यस्येव संकल्पस्तन्मोघं न्यपतद्भुवि ४२
घटोत्कचस्ततस्तूर्णं दृष्ट्वा चक्रं निपातितम्
द्रौणिं प्राच्छादयद्बाणैः स्वर्भानुरिव भास्करम् ४३
घटोत्कचसुतः श्रीमान्भिन्नाञ्जनचयोपमः
रुरोध द्रौणिमायान्तं प्रभञ्जनमिवाद्रिराट् ४४
पौत्रेण भीमसेनस्य शरैः सोऽञ्जनपर्वणा
बभौ मेघेन धाराभिर्गिरिर्मेरुरिवार्दितः ४५
अश्वत्थामा त्वसंभ्रान्तो रुद्रोपेन्द्रेन्द्रविक्रमः
ध्वजमेकेन बाणेन चिच्छेदाञ्जनपर्वणः ४६
द्वाभ्यां तु रथयन्तारं त्रिभिश्चास्य त्रिवेणुकम्
धनुरेकेन चिच्छेद चतुर्भिश्चतुरो हयान् ४७
विरथस्योद्यतं हस्ताद्धेमबिन्दुभिराचितम्
विशिखेन सुतीक्ष्णेन खड्गमस्य द्विधाकरोत् ४८
गदा हेमाङ्गदा राजंस्तूर्णं हैडिम्बसूनुना
भ्राम्योत्क्षिप्ता शरैः सापि द्रौणिनाभ्याहतापतत् ४९
ततोऽन्तरिक्षमुत्पत्य कालमेघ इवोन्नदन्
ववर्षाञ्जनपर्वा स द्रुमवर्षं नभस्तलात् ५०
ततो मायाधरं द्रौणिर्घटोत्कचसुतं दिवि
मार्गणैरभिविव्याध घनं सूर्य इवांशुभिः ५१
सोऽवतीर्य पुनस्तस्थौ रथे हेमपरिष्कृते
महीधर इवात्युच्चः श्रीमानञ्जनपर्वतः ५२
तमयस्मयवर्माणं द्रौणिर्भीमात्मजात्मजम्
जघानाञ्जनपर्वाणं महेश्वर इवान्धकम् ५३
अथ दृष्ट्वा हतं पुत्रमश्वत्थाम्ना महाबलम्

द्रौणेः सकाशमभ्येत्य रोषात्प्रचलिताङ्गदः ५४
प्राह वाक्यमसंभ्रान्तो वीरं शारद्वतीसुतम्
दहन्तं पाण्डवानीकं वनमग्निमिवोद्धतम् ५५
तिष्ठ तिष्ठ न मे जीवन्द्रोणपुत्र गमिष्यसि
त्वामद्य निहनिष्यामि क्रौञ्चमग्निसुतो यथा ५६
अश्वत्थामोवाच
गच्छ वत्स सहान्यैस्त्वं युध्यस्वामरविक्रम
न हि पुत्रेण हैडिम्बे पिता न्याय्यं प्रबाधितुम् ५७
कामं खलु न मे रोषो हैडिम्बे विद्यते त्वयि
किं तु रोषान्वितो जन्तुर्हन्यादात्मानमप्युत ५८
सञ्जय उवाच
श्रुत्वैतत्क्रोधताम्राक्षः पुत्रशोकशमन्वितः
अश्वत्थामानमायस्तो भैमसेनिरभाषत ५९
किमहं कातरो द्रौणे पृथग्जन इवाहवे
भीमात्खल्वहमुत्पन्नः कुरूणां विपुले कुले ६०
पाण्डवानामहं पुत्रः समरेष्वनिवर्तिनाम्
रक्षसामधिराजोऽह दशग्रीवसमो बले ६१
तिष्ठ तिष्ठ न मे जीवन्द्रोणपुत्र गमिष्यसि
युद्धश्रद्धामहं तेऽद्य विनेष्यामि रणाजिरे ६२
इत्युक्त्वा रोषताम्राक्षो राक्षसः सुमहाबलः
द्रौणिमभ्यद्रवत्क्रुद्धो गजेन्द्रमिव केसरी ६३
रथाक्षमात्रैरिषुभिरभ्यवर्षद्घटोत्कचः
रथिनामृषभं द्रौणिं धाराभिरिव तोयदः ६४
शरवृष्टिं शरैर्द्रौणिरप्राप्तां तां व्यशातयत्
ततोऽन्तरिक्षे बाणानां संग्रामोऽन्य इवाभवत् ६५
अथास्त्रसंघर्षकृतैर्विस्फुलिङ्गैः समाबभौ
विभावरीमुखे व्योम खद्योतैरिव चित्रितम् ६६
निशाम्य निहतां मायां द्रौणिना रणमानिना
घटोत्कचस्ततो मायां ससर्जान्तर्हितः पुनः ६७
सोऽभवद्गिरिरत्युच्चैः शिखरैस्तरुसंकटैः

शूलप्रासासिमुसलजलप्रस्रवणो महान् ६८
तमञ्जनचयप्रख्यं द्रौणिर्दृष्ट्वा महीधरम्
प्रपतद्भिश्च बहुभिः शस्त्रसंघैर्न चुक्षुभे ६९
ततः स्मयन्निव द्रौणिर्वज्रमस्त्रमुदीरयत्
स तेनास्त्रेण शैलेन्द्रः क्षिप्तः क्षिप्रमनश्यत ७०
ततः स तोयदो भूत्वा नीलः सेन्द्रायुधो दिवि
अश्मवृष्टिभिरत्युग्रो द्रौणिमाच्छादयद्रणे ७१
अथ संधाय वायव्यमस्त्रमस्त्रविदां वरः
व्यधमद्द्रोणतनयो नीलमेघं समुत्थितम् ७२
स मार्गणगणैर्द्रौणिर्दिशः प्रच्छाद्य सर्वतः
शतं रथसहस्राणां जघान द्विपदां वरः ७३
स दृष्ट्वा पुनरायान्तं रथेनायतकार्मुकम्
घटोत्कचमसंभ्रान्तं राक्षसैर्बहुभिर्वृतम् ७४
सिंहशार्दूलसदृशैर्मत्तद्विरदविक्रमैः
गजस्थैश्च रथस्थैश्च वाजिपृष्ठगतैरपि ७५
विवृतास्यशिरोग्रीवैर्हैडिम्बानुचरैः सह
पौलस्त्यैर्यातुधानैश्च तामसैश्चोग्रविक्रमैः ७६
नानाशस्त्रधरैर्वीरैर्नानाकवचभूषणैः
महाबलैर्भीमरवैः संरम्भोद्वृत्तलोचनैः ७७
उपस्थितैस्ततो युद्धे राक्षसैर्युद्धदुर्मदैः
विषण्णमभिसंप्रेक्ष्य पुत्रं ते द्रौणिरब्रवीत् ७८
तिष्ठ दुर्योधनाद्य त्वं न कार्यः संभ्रमस्त्वया
सहैभिर्भ्रातृभिर्वीरैः पार्थिवैश्चेन्द्रविक्रमैः ७९
निहनिष्याम्यमित्रांस्ते न तवास्ति पराजयः
सत्यं ते प्रतिजानामि पर्याश्वासय वाहिनीम् ८०
दुर्योधन उवाच
न त्वेतदद्भुतं मन्ये यत्ते महदिदं मनः
अस्मासु च परा भक्तिस्तव गौतमिनन्दन ८१
सञ्जय उवाच
अश्वत्थामानमुक्त्वैवं ततः सौबलमब्रवीत्

वृतः शतसहस्रेण रथानां रणशोभिनाम् ८२
षष्ट्या गजसहस्रैश्च प्रयाहि त्वं धनंजयम्
कर्णश्च वृषसेनश्च कृपो नीलस्तथैव च ८३
उदीच्याः कृतवर्मा च पुरुमित्रः श्रुतार्पणः
दुःशासनो निकुम्भश्च कुण्डभेदी उरुक्रमः ८४
पुरंजयो दृढरथः पताकी हेमपङ्कजः
शल्यारुणीन्द्रसेनाश्च सञ्जयो विजयो जयः ८५
कमलाक्षः पुरुः क्राथी जयवर्मा सुदर्शनः
एते त्वामनुयास्यन्ति पत्तीनामयुतानि षट् ८६
जहि भीमं यमौ चोभौ धर्मराजं च मातुल
असुरानिव देवेन्द्रो जयाशा मे त्वयि स्थिता ८७
दारितान्द्रौणिना बाणैर्भृशं विक्षतविग्रहान्
जहि मातुल कौन्तेयानसुरानिव पावकिः ८८
एवमुक्तो ययौ शीघ्रं पुत्रेण तव सौबलः
पिप्रीषुस्ते सुतान्राजन्दिधक्षुश्चैव पाण्डवान् ८९
अथ प्रववृते युद्धं द्रौणिराक्षसयोर्मृधे
विभावर्यां सुतुमुलं शक्रप्रह्लादयोरिव ९०
ततो घटोत्कचो बाणैर्दशभिर्गौतमीसुतम्
जघानोरसि संक्रुद्धो विषाग्निप्रतिमैर्दृढैः ९१
स तैरभ्याहतो गाढं शरैर्भीमसुतेरितैः
चचाल रथमध्यस्थो वातोद्धूत इव द्रुमः ९२
भूयश्चाञ्जलिकेनास्य मार्गणेन महाप्रभम्
द्रौणिहस्तस्थितं चापं चिच्छेदाशु घटोत्कचः ९३
ततोऽन्यद्द्रौणिरादाय धनुर्भारसहं महत्
ववर्ष विशिखांस्तीक्ष्णान्वारिधारा इवाम्बुदः ९४
ततः शारद्वतीपुत्रः प्रेषयामास भारत
सुवर्णपुङ्खाञ्शत्रुघ्नान्खचरान्खचरान्प्रति ९५
तद्बाणैरर्दितं यूथं रक्षसां पीनवक्षसाम्
सिंहैरिव बभौ मत्तं गजानामाकुलं कुलम् ९६
विधम्य राक्षसान्बाणैः साश्वसूतरथान्विभुः

ददाह भगवान्वह्निर्भूतानीव युगक्षये ९७
स दग्ध्वाक्षौहिणीं बाणैर्नैर्ऋृतान्नुरुचे भृशम्
पुरेव त्रिपुरं दग्ध्वा दिवि देवो महेश्वरः ९८
युगान्ते सर्वभूतानि दग्ध्वेव वसुरुल्बणः
रराज जयतां श्रेष्ठो द्रोणपुत्रस्तवाहितान् ९९
तेषु राजसहस्रेषु पाण्डवेयेषु भारत
नैनं निरीक्षितुं कश्चिच्छक्नोति द्रौणिमाहवे
ऋते घटोत्कचाद्वीराद्राक्षसेन्द्रान्महाबलात् १००
स पुनर्भरतश्रेष्ठ क्रोधाद्रक्तान्तलोचनः
तलं तलेन संहत्य संदश्य दशनच्छदम्
स्व सूतमब्रवीत्क्रुद्धो द्रोणपुत्राय मां वह १०१
स ययौ घोररूपेण तेन जैत्रपताकिना
द्वैरथं द्रोणपुत्रेण पुनरप्यरिसूदनः १०२
स चिक्षेप ततः क्रुद्धो द्रोणपुत्राय राक्षसः
अष्टचक्रां महारौद्रामशनीं रुद्रनिर्मिताम् १०३
तामवप्लुत्य जग्राह द्रौणिर्न्यस्य रथे धनुः
चिक्षेप चैनां तस्यैव स्यन्दनात्सोऽवपुप्लुवे १०४
साश्वसूतध्वजं वाहं भस्म कृत्वा महाप्रभा
विवेश वसुधां भित्त्वा साशनिर्भृशदारुणा १०५
द्रौणेस्तत्कर्म दृष्ट्वा तु सर्वभूतान्यपूजयन्
यदवप्लुत्य जग्राह घोरां शंकरनिर्मिताम् १०६
धृष्टद्युम्नरथं गत्वा भैमसेनिस्ततो नृप
मुमोच निशितान्बाणान्पुनर्द्रौणेर्महोरसि १०७
धृष्टद्युम्नोऽप्यसंभ्रान्तो मुमोचाशीविषोपमान्
सुवर्णपुङ्खान्विशिखान्द्रोणपुत्रस्य वक्षसि १०८
ततो मुमोच नाराचान्द्रौणिस्ताभ्यां सहस्रशः
तावप्यग्निशिखाप्रख्यैर्जघ्नतुस्तस्य मार्गणान् १०९
अतितीव्रमभूद्युद्धं तयोः पुरुषसिंहयोः
योधानां प्रीतिजननं द्रौणेश्च भरतर्षभ ११०
ततो रथसहस्रेण द्विरदानां शतैस्त्रिभिः

षड्भिर्वाजिसहस्रैश्च भीमस्तं देशमाव्रजत् १११
ततो भीमात्मजं रक्षो धृष्टद्युम्नं च सानुगम्
अयोधयत धर्मात्मा द्रौणिरक्लिष्टकर्मकृत् ११२
तत्राद्भुततमं द्रौणिर्दर्शयामास विक्रमम्
अशक्यं कर्तुमन्येन सर्वभूतेषु भारत ११३
निमेषान्तरमात्रेण साश्वसूतरथद्विपाम्
अक्षौहिणीं राक्षसानां शितैर्बाणैरशातयत् ११४
मिषतो भीमसेनस्य हैडिम्बेः पार्षतस्य च
यमयोर्धर्मपुत्रस्य विजयस्याच्युतस्य च ११५
प्रगाढमञ्जोगतिभिर्नाराचैरभिताडिताः
निपेतुर्द्विरदा भूमौ द्विशृङ्गा इव पर्वताः ११६
निकृत्तैर्हस्तिहस्तैश्च विचलद्भिरितस्ततः
रराज वसुधा कीर्णा विसर्पद्भिरिवोरगैः ११७
क्षिप्तैः काञ्चनदण्डैश्च नृपच्छत्रैः क्षितिर्बभौ
द्यौरिवोदितचन्द्रार्का ग्रहाकीर्णा युगक्षये ११८
प्रवृद्धध्वजमण्डूकां भेरीविस्तीर्णकच्छपाम्
छत्रहंसावलीजुष्टां फेनचामरमालिनीम् ११९
कङ्कगृध्रमहाग्राहां नैकायुधझषाकुलाम्
रथक्षिप्तमहावप्रां पताकारुचिरद्रुमाम् १२०
शरमीनां महारौद्रां प्रासशक्त्युग्रडुण्डुभाम्
मज्जामांसमहापङ्कां कबन्धावर्जितोडुपाम् १२१
केशशैवलकल्माषां भीरूणां कश्मलावहाम्
नागेन्द्रहययोधानां शरीरव्ययसंभवाम् १२२
शोणितौघमहावेगां द्रौणिः प्रावर्तयन्नदीम्
योधार्तरवनिर्घोषां क्षतजोर्मिसमाकुलाम् १२३
प्रायादतिमहाघोरं यमक्षयमहोदधिम्
निहत्य राक्षसान्बाणैर्द्रौणिर्हैडिम्बमार्दयत् १२४
पुनरप्यतिसंक्रुद्धः सवृकोदरपार्षतान्
स नाराचगणैः पार्थान्द्रौणिर्विद्ध्वा महाबलः १२५
जघान सुरथं नाम द्रुपदस्य सुतं विभुः

पुनः श्रुतंजयं नाम सुरथस्यानुजं रणे १२६
बलानीकं जयानीकं जयाश्वं चाभिजघ्निवान्
श्रुताह्वयं च राजेन्द्र द्रौणिर्निन्ये यमक्षयम् १२७
त्रिभिश्चान्यैः शरैस्तीक्ष्णैः सुपुङ्खै रुक्ममालिनम्
शत्रुंजयं च बलिनं शक्रलोकं निनाय ह १२८
जघान स पृषध्रं च चन्द्रसेनं च मानिनम्
कुन्तिभोजसुतांश्चाजौ दशभिर्दश जघ्निवान् १२९
अश्वत्थामा सुसंक्रुद्धः संधायोग्रमजिह्मगम्
मुमोचाकर्णपूर्णेन धनुषा शरमुत्तमम्
यमदण्डोपमं घोरमुद्दिश्याशु घटोत्कचम् १३०
स भित्त्वा हृदयं तस्य राक्षसस्य महाशरः
विवेश वसुधां शीघ्रं सपुङ्खः पृथिवीपते १३१
तं हतं पतितं ज्ञात्वा धृष्टद्युम्नो महारथः
द्रौणेः सकाशाद्राजेन्द्र अपनिन्ये रथान्तरम् १३२
तथा पराङ्मुखरथं सैन्यं यौधिष्ठिरं नृप
पराजित्य रणे वीरो द्रोणपुत्रो ननाद ह
पूजितः सर्वभूतैश्च तव पुत्रैश्च भारत १३३
अथ शरशतभिन्नकृत्तदेहैर्हतपतितैः क्षणदाचरैः समन्तात्
निधनमुपगतैर्मही कृताभूद्गिरिशिखरैरिव दुर्गमातिरौद्रा १३४
तं सिद्धगन्धर्वपिशाचसंघा नागाः सुपर्णाः पितरो वयांसि
रक्षोगणा भूतगणाश्च द्रौणिमपूजयन्नप्सरसः सुराश्च १३५
इति श्रीमहाभारते द्रोणपर्वणि एकत्रिंशदधिकशततमोऽध्यायः १३१

## द्वात्रिंशदधिकशततमोऽध्यायः

सञ्जय उवाच
द्रुपदस्यात्मजान्दृष्ट्वा कुन्तिभोजसुतांस्तथा
द्रोणपुत्रेण निहतान्राक्षसांश्च सहस्रशः १
युधिष्ठिरो भीमसेनो धृष्टद्युम्नश्च पार्षतः
युयुधानश्च संयत्ता युद्धायैव मनो दधुः २
सोमदत्तः पुनः क्रुद्धो दृष्ट्वा सात्यकिमाहवे

महता शरवर्षेण छादयामास सर्वतः ३
ततः समभवद्युद्धमतीव भयवर्धनम्
त्वदीयानां परेषां च घोरं विजयकाङ्क्षिणाम् ४
दशभिः सात्वतस्यार्थे भीमो विव्याध कौरवम्
सोमदत्तोऽपि तं वीरं शतेन प्रत्यविध्यत ५
सात्वतस्त्वभिसंक्रुद्धः पुत्राधिभिरभिप्लुतम्
वृद्धमृद्धं गुणैः सर्वैर्ययातिमिव नाहुषम् ६
विव्याध दशभिस्तीक्ष्णैः शरैर्वज्रनिपातिभिः
शक्त्या चैनमथाहत्य पुनर्विव्याध सप्तभिः ७
ततस्तु सात्यकेरर्थे भीमसेनो नवं दृढम्
मुमोच परिघं घोरं सोमदत्तस्य मूर्धनि ८
सात्यकिश्चाग्निसंकाशं मुमोच शरमुत्तमम्
सोमदत्तोरसि क्रुद्धः सुपत्रं निशितं युधि ९
युगपत्पेततुरथ घोरौ परिघमार्गणौ
शरीरे सोमदत्तस्य स पपात महारथः १०
व्यामोहिते तु तनये बाह्लीकः समुपाद्रवत्
विसृजञ्शरवर्षाणि कालवर्षीव तोयदः ११
भीमोऽथ सात्वतस्यार्थे बाह्लीकं नवभिः शरैः
पीडयन्वै महात्मानं विव्याध रणमूर्धनि १२
प्रातिपीयस्तु संक्रुद्धः शक्तिं भीमस्य वक्षसि
निचखान महाबाहुः पुरंदर इवाशनिम् १३
स तयाभिहतो भीमश्चकम्पे च मुमोह च
प्राप्य चेतश्च बलवान्गदामस्मै ससर्ज ह १४
सा पाण्डवेन प्रहिता बाह्लीकस्य शिरोऽहरत्
स पपात हतः पृथ्व्यां वज्राहत इवाद्रिराट् १५
तस्मिन्विनिहते वीरे बाह्लीके पुरुषर्षभे
पुत्रास्तेऽभ्यर्दयन्भीमं दश दाशरथेः समाः १६
नाराचैर्दशभिर्भीमस्तान्निहत्य तवात्मजान्
कर्णस्य दयितं पुत्रं वृषसेनमवाकिरत् १७
ततो वृषरथो नाम भ्राता कर्णस्य विश्रुतः

जघान भीमं नाराचैस्तमप्यभ्यवधीद्बली १८
ततः सप्त रथान्वीरः श्यालानां तव भारत
निहत्य भीमो नाराचैः शतचन्द्रमपोथयत् १९
अमर्षयन्तो निहतं शतचन्द्रं महारथम्
शकुनेर्भ्रातरो वीरा गजाक्षः शरभो विभुः
अभिद्रुत्य शरैस्तीक्ष्णैर्भीमसेनमताडयन् २०
स तुद्यमानो नाराचैर्वृष्टिवेगैरिवर्षभः
जघान पञ्चभिर्बाणैः पञ्चैवातिबलो रथान्
तान्दृष्ट्वा निहतान्वीरान्विचेलुर्नृपसत्तमाः २१
ततो युधिष्ठिरः क्रुद्धस्तवानीकमशातयत्
मिषतः कुम्भयोनेश्च पुत्राणां च तवानघ २२
अम्बष्ठान्मालवाञ्शूरांस्त्रिगर्तान्सशिबीनपि
प्राहिणोन्मृत्युलोकाय गणान्युद्धे युधिष्ठिरः २३
अभीषाहाञ्शूरसेनान्बाह्लीकान्सवसातिकान्
निकृत्य पृथिवीं राजा चक्रे शोणितकर्दमाम् २४
यौधेयारट्टराजन्यमद्रकाणां गणान्युधि
प्राहिणोन्मृत्युलोकाय शूरान्बाणैर्युधिष्ठिरः २५
हताहरत गृह्णीत विध्यत व्यवकृन्तत
इत्यासीत्तुमुलः शब्दो युधिष्ठिररथं प्रति २६
सैन्यानि द्रावयन्तं तं द्रोणो दृष्ट्वा युधिष्ठिरम्
चोदितस्तव पुत्रेण सायकैरभ्यवाकिरत् २७
द्रोणस्तु परमक्रुद्धो वायव्यास्त्रेण पार्थिवम्
विव्याध सोऽस्य तद्दिव्यमस्त्रमस्त्रेण जघ्निवान् २८
तस्मिन्विनिहते चास्त्रे भारद्वाजो युधिष्ठिरे
वारुणं याम्यमाग्नेयं त्वाष्ट्रं सावित्रमेव च
चिक्षेप परमक्रुद्धो जिघांसुः पाण्डुनन्दनम् २९
क्षिप्तानि क्षिप्यमाणानि तानि चास्त्राणि धर्मजः
जघानास्त्रैर्महाबाहुः कुम्भयोनेरवित्रसन् ३०
सत्यां चिकीर्षमाणस्तु प्रतिज्ञां कुम्भसंभवः
प्रादुश्चक्रेऽस्त्रमैन्द्रं वै प्राजापत्यं च भारत

जिघांसुर्धर्मतनयं तव पुत्रहिते रतः ३१
पतिः कुरूणां गजसिंहगामी विशालवक्षाः पृथुलोहिताक्षः
प्रादुश्चकारास्त्रमहीनतेजा माहेन्द्रमन्यत्स जघान तेऽस्त्रे ३२
विहन्यमानेष्वस्त्रेषु द्रोणः क्रोधसमन्वितः
युधिष्ठिरवधप्रेप्सुर्ब्राह्ममस्त्रमुदैरयत् ३३
ततो नाज्ञासिषं किंचिद्घोरेण तमसावृते
सर्वाभूतानि च परं त्रासं जग्मुर्महीपते ३४
ब्रह्मास्त्रमुद्यतं दृष्ट्वा कुन्तीपुत्रो युधिष्ठिरः
ब्रह्मास्त्रेणैव राजेन्द्र तदस्त्रं प्रत्यवारयत् ३५
ततः सैनिकमुख्यास्ते प्रशशंसुर्नरर्षभौ
द्रोणपार्थौ महेष्वासौ सर्वयुद्धविशारदौ ३६
ततः प्रमुच्य कौन्तेयं द्रोणो द्रुपदवाहिनीम्
व्यधमद्रोषताम्राक्षो वायव्यास्त्रेण भारत ३७
ते हन्यमाना द्रोणेन पाञ्चालाः प्राद्रवन्भयात्
पश्यतो भीमसेनस्य पार्थस्य च महात्मनः ३८
ततः किरीटी भीमश्च सहसा संन्यवर्तताम्
महद्भ्यां रथवंशाभ्यां परिगृह्य बलं तव ३९
बीभत्सुर्दक्षिणं पार्श्वमुत्तरं तु वृकोदरः
भारद्वाजं शरौघाभ्यां महद्भ्यामभ्यवर्षताम् ४०
तौ तदा सृञ्जयाश्चैव पाञ्चालाश्च महौजसः
अन्वगच्छन्महाराज मत्स्याश्च सह सात्वतैः ४१
ततः सा भारती सेना वध्यमाना किरीटिना
द्रोणेन वार्यमाणास्ते स्वयं तव सुतेन च
नाशक्यन्त महाराज योधा वारयितुं तदा ४२
इति श्रीमहाभारते द्रोणपर्वणि द्वात्रिंशदधिकशततमोऽध्यायः १३२

त्रयस्त्रिंशदधिक शततमोऽध्यायः

सञ्जय उवाच
उदीर्यमाणं तद्दृष्ट्वा पाण्डवानां महद्बलम्
अविषह्यं च मन्वानः कर्णं दुर्योधनोऽब्रवीत् १

अयं स कालः संप्राप्तो मित्राणां मित्रवत्सल
त्रायस्व समरे कर्ण सर्वान्योधान्महाबल २
पाञ्चालैर्मत्स्यकैकेयैः पाण्डवैश्च महारथैः
वृतान्समन्तात्संक्रुद्धैर्निःश्वसद्भिरिवोरगैः ३
एते नदन्ति संहृष्टाः पाण्डवा जितकाशिनः
शक्रोपमाश्च बहवः पाञ्चालानां रथव्रजाः ४
कर्ण उवाच
परित्रातुमिह प्राप्तो यदि पार्थं पुरंदरः
तमप्याशु पराजित्य ततो हन्तास्मि पाण्डवम् ५
सत्यं ते प्रतिजानामि समाश्वसिहि भारत
हन्तास्मि पाण्डुतनयान्पाञ्चालांश्च समागतान् ६
जयं ते प्रतिजानामि वासवस्येव पावकिः
प्रियं तव मया कार्यमिति जीवामि पार्थिव ७
सर्वेषामेव पार्थानां फल्गुनो बलवत्तरः
तस्याममोघां विमोक्ष्यामि शक्तिं शक्रविनिर्मिताम् ८
तस्मिन्हते महेष्वासे भ्रातरस्तस्य मानद
तव वश्या भविष्यन्ति वनं यास्यन्ति वा पुनः ९
मयि जीवति कौरव्य विषादं मा कृथाः क्वचित्
अहं जेष्यामि समरे सहितान्सर्वपाण्डवान् १०
पाञ्चालान्केकयांश्चैव वृष्णींश्चापि समागतान्
बाणौघैः शकलीकृत्य तव दास्यामि मेदिनीम् ११
सञ्जय उवाच
एवं ब्रुवाणं कर्णं तु कृपः शारद्वतोऽब्रवीत्
स्मयन्निव महाबाहुः सूतपुत्रमिदं वचः १२
शोभनं शोभनं कर्ण सनाथः कुरुपुंगवः
त्वया नाथेन राधेय वचसा यदि सिध्यति १३
बहुशः कत्थसे कर्ण कौरव्यस्य समीपतः
न तु ते विक्रमः कश्चिद्दृश्यते बलमेव वा १४
समागमः पाण्डुसुतैर्दृष्टस्ते बहुशो युधि
सर्वत्र निर्जितश्चासि पाण्डवैः सूतनन्दन १५

ह्रियमाणे तदा कर्ण गन्धर्वैर्धृतराष्ट्रजे
तदायुध्यन्त सैन्यानि त्वमेकस्तु पलायथाः १६
निराटनगरे चापि समेताः सर्वकौरवाः
पार्थेन निर्जिता युद्धे त्वं च कर्ण सहानुजः १७
एकस्याप्यसमर्थस्त्वं फल्गुनस्य रणाजिरे
कथमुत्सहसे जेतुं सकृष्णान्सर्वपाण्डवान् १८
अब्रुवन्कर्ण युध्यस्व बहु कत्थसि सूतज
अनुक्त्वा विक्रमेद्यस्तु तद्वै सत्पुरुषव्रतम् १९
गर्जित्वा सूतपुत्र त्वं शारदाभ्रमिवाजलम्
निष्फलो दृश्यसे कर्ण तच्च राजा न बुध्यते २०
तावद्गर्जसि राधेय यावत्पार्थं न पश्यसि
पुरा पार्थं हि ते दृष्ट्वा दुर्लभं गर्जितं भवेत् २१
त्वमनासाद्य तान्बाणान्फल्गुनस्य विगर्जसि
पार्थसायकविद्धस्य दुर्लभं गर्जितं भवेत् २२
बाहुभिः क्षत्रियाः शूरा वाग्भिः शूरा द्विजातयः
धनुषा फल्गुनः शूरः कर्णः शूरो मनोरथैः २३
एवं परुषितस्तेन तदा शारद्वतेन सः
कर्णः प्रहरतां श्रेष्ठः कृपं वाक्यमथाब्रवीत् २४
शूरा गर्जन्ति सततं प्रावृषीव बलाहकाः
फलं चाशु प्रयच्छन्ति बीजमुप्तमृताविव २५
दोषमत्र न पश्यामि शूराणां रणमूर्धनि
तत्तद्विकत्थमानानां भारं चोद्वहतां मृधे २६
यं भारं पुरुषो वोढुं मनसा हि व्यवस्यति
दैवमस्य ध्रुवं तत्र साहाय्यायोपपद्यते २७
व्यवसायद्वितीयोऽह मनसा भारमुद्वहन्
गर्जामि यद्यहं विप्र तव किं तत्र नश्यति २८
वृथा शूरा न गर्जन्ति सजला इव तोयदाः
सामर्थ्यमात्मनो ज्ञात्वा ततो गर्जन्ति पण्डिताः २९
सोऽहमद्य रणे यत्तः सहितौ कृष्णपाण्डवौ
उत्सहे तरसा जेतुं ततो गर्जामि गौतम ३०

पश्य त्वं गर्जितस्यास्य फलं मे विप्र सानुगः
हत्वा पाराडुसुतानाजौ सहकृष्णान्ससात्वतान्
दुर्योधनाय दास्यामि पृथिवीं हतकराटकाम् ३१
कृप उवाच
मनोरथप्रलापो मे न ग्राह्यस्तव सूतज
यदाक्षिपसि वै कृष्णौ धर्मराजं च पाराडवम् ३२
ध्रुवस्तत्र जयः कर्ण यत्र युद्धविशारदौ
देवगन्धर्वयक्षाणां मनुष्योरगरक्षसाम्
दंशितानामपि रणे अजेयौ कृष्णपाराडवौ ३३
ब्रह्मरायः सत्यवाग्दान्तो गुरुदैवतपूजकः
नित्यं धर्मरतश्चैव कृतास्त्रश्च विशेषतः
धृतिमांश्च कृतज्ञश्च धर्मपुत्रो युधिष्ठिरः ३४
भ्रातरश्चास्य बलिनः सर्वास्त्रेषु कृतश्रमाः
गुरुवृत्तिरताः प्राज्ञा धर्मनित्या यशस्विनः ३५
संबन्धिनश्चेन्द्रवीर्याः स्वनुरक्ताः प्रहारिणः
धृष्टद्युम्नः शिखराडी च दौर्मुखिर्जनमेजयः ३६
चन्द्रसेनो भद्रसेनः कीर्तिधर्मा ध्रुवो धरः
वसुचन्द्रो दामचन्द्रः सिंहचन्द्रः सुवेधनः ३७
द्रुपदस्य तथा पुत्रा द्रुपदश्च महास्त्रवित्
येषामर्थाय संयत्तो मत्स्यराजः सहानुगः ३८
शतानीकः सुदर्शनः श्रुतानीकः श्रुतध्वजः
बलानीको जयानीको जयाश्वो रथवाहनः ३९
चन्द्रोदयः कामरथो विराटभ्रातरः शुभाः
यमौ च द्रौपदेयाश्च राक्षसश्च घटोत्कचः
येषामर्थाय युध्यन्ते न तेषां विद्यते क्षयः ४०
कामं खलु जगत्सर्वं सदेवासुरमानवम्
सयक्षराक्षसगणं सभूतभुजगद्विपम्
निःशेषमस्त्रवीर्येण कुर्यातां भीमफल्गुनौ ४१
युधिष्ठिरश्च पृथिवीं निर्दहेद्घोरचक्षुषा
अप्रमेयबलः शौरिर्येषामर्थे च दंशितः

कथं तान्संयुगे कर्ण जेतुमुत्सहसे परान् ४२
महानपनयस्त्वेष तव नित्यं हि सूतज
यस्त्वमुत्सहसे योद्धुं समरे शौरिणा सह ४३
सञ्जय उवाच
एवमुक्तस्तु राधेयः प्रहसन्भरतर्षभ
अब्रवीच्च तदा कर्णो गुरुं शारद्वतं कृपम् ४४
सत्यमुक्तं त्वया ब्रह्मन्पाण्डवान्प्रति यद्वचः
एते चान्ये च बहवो गुणाः पाण्डुसुतेषु वै ४५
अजय्याश्च रणे पार्था देवैरपि सवासवैः
सदैत्ययक्षगन्धर्वपिशाचोरगराक्षसैः
तथापि पार्थाञ्जेष्यामि शक्त्या वासवदत्तया ४६
ममाप्यमोघा दत्तेयं शक्तिः शक्रेण वै द्विज
एतया निहनिष्यामि सव्यसाचिनमाहवे ४७
हते तु पाण्डवे कृष्णो भ्रातरश्चास्य सोदराः
अनर्जुना न शक्ष्यन्ति महीं भोक्तुं कथंचन ४८
तेषु नष्टेषु सर्वेषु पृथिवीयं ससागरा
अयत्नात्कौरवेयस्य वशे स्थास्यति गौतम ४९
सुनीतैरिह सर्वार्थाः सिध्यन्ते नात्र संशयः
एतमर्थमहं ज्ञात्वा ततो गर्जामि गौतम ५०
त्वं तु वृद्धश्च विप्रश्च अशक्तश्चापि संयुगे
कृतस्नेहश्च पार्थेषु मोहान्मामवमन्यसे ५१
यद्येवं वक्ष्यसे भूयो ममाप्रियमिह द्विज
ततस्ते खड्गमुद्यम्य जिह्वां छेत्स्यामि दुर्मते ५२
यच्चापि पाण्डवान्विप्र स्तोतुमिच्छसि संयुगे
भीषयन्सर्वसैन्यानि कौरवेयाणि दुर्मते
अत्रापि शृणु मे वाक्यं यथावद्गदतो द्विज ५३
दुर्योधनश्च द्रोणश्च शकुनिर्दुर्मुखो जयः
दुःशासनो वृषसेनो मद्रराजस्त्वमेव च
सोमदत्तश्च भूरिश्च तथा द्रौणिर्विविंशतिः ५४
तिष्ठेयुर्दंशिता यत्र सर्वे युद्धविशारदाः

जयेदेतान्रणे को नु शक्रतुल्यबलोऽप्यरिः ५५
शूराश्च हि कृतास्त्राश्च बलिनः स्वर्गलिप्सवः
धर्मज्ञा युद्धकुशला हन्युर्युद्धे सुरानपि ५६
एते स्थास्यन्ति संग्रामे पाण्डवानां वधार्थिनः
जयमाकाङ्क्षमाणा हि कौरवेयस्य दंशिताः ५७
दैवायत्तमहं मन्ये जयं सुबलिनामपि
यत्र भीष्मो महाबाहुः शेते शरशताचितः ५८
विकर्णश्चित्रसेनश्च बाह्लीकोऽथ जयद्रथः
भूरिश्रवा जयश्चैव जलसंधः सुदक्षिणः ५९
शलश्च रथिनां श्रेष्ठो भगदत्तश्च वीर्यवान्
एते चान्ये च राजानो देवैरपि सुदुर्जयाः ६०
निहताः समरे शूराः पाण्डवैर्बलवत्तराः
किमन्यद्दैवसंयोगान्मन्यसे पुरुषाधम ६१
यांश्च तान्स्तौषि सततं दुर्योधनरिपून्द्विज
तेषामपि हताः शूराः शतशोऽथ सहस्रशः ६२
क्षीयन्ते सर्वसैन्यानि कुरूणां पाण्डवैः सह
प्रभावं नात्र पश्यामि पाण्डवानां कथंचन ६३
यांस्तान्बलवतो नित्यं मन्यसे त्वं द्विजाधम
यतिष्येऽहं यथाशक्ति योद्धुं तैः सह संयुगे
दुर्योधनहितार्थाय जयो दैवे प्रतिष्ठितः ६४

इति श्रीमहाभारते द्रोणपर्वणि त्रयस्त्रिंशदधिकशततमोऽध्यायः १३३

## चतुस्त्रिंशदधिक शततमोऽध्यायः

सञ्जय उवाच
तथा परुषितं दृष्ट्वा सूतपुत्रेण मातुलम्
खड्गमुद्यम्य वेगेन द्रौणिरभ्यपतद्द्रुतम् १
अश्वत्थामोवाच
कर्ण पश्य सुदुर्बुद्धे तिष्ठेदानीं नराधम
एष तेऽद्य शिरः कायादुद्धरामि सुदुर्मते २
सञ्जय उवाच

तमुत्पतन्तं वेगेन राजा दुर्योधनः स्वयम्
न्यवारयन्महाराज कृपश्च द्विपदां वरः ३
कर्ण उवाच
शूरोऽय समरश्लाघी दुर्मतिश्च द्विजाधमः
आसादयतु मद्वीर्यं मुञ्चेमं कुरुसत्तम ४
अश्वत्थामोवाच
तवैतत्क्षम्यतेऽस्माभिः सूतात्मज सुदुर्मते
दर्पमुत्सिक्तमेतत्ते फल्गुनो नाशयिष्यति ५
दुर्योधन उवाच
अश्वत्थामन्प्रसीदस्व क्षन्तुमर्हसि मानद
कोपः खलु न कर्तव्यः सूतपुत्रे कथंचन ६
त्वयि कर्णे कृपे द्रोणे मद्रराजेऽथ सौबले
महत्कार्यं समायुक्तं प्रसीद द्विजसत्तम ७
एते ह्यभिमुखाः सर्वे राधेयेन युयुत्सवः
आयान्ति पाण्डवा ब्रह्मन्नाह्वयन्तः समन्ततः ८
सञ्जय उवाच
कर्णोऽपि रथिनां श्रेष्ठश्चापमुद्यम्य वीर्यवान्
कौरवाग्र्यैः परिवृतः शक्रो देवगणैरिव
पर्यतिष्ठत तेजस्वी स्वबाहुबलमाश्रितः ९
ततः प्रववृते युद्धं कर्णस्य सह पाण्डवैः
संरब्धस्य महाराज सिंहनादविनादितम् १०
ततस्ते पाण्डवा राजन्पाञ्चालाश्च यशस्विनः
दृष्ट्वा कर्णं महाबाहुमुच्चैः शब्दमथानदन् ११
अयं कर्णः कुतः कर्णस्तिष्ठ कर्ण महारणे
युध्यस्व सहितोऽस्माभिर्दुरात्मन्पुरुषाधम १२
अन्ये तु दृष्ट्वा राधेयं क्रोधरक्तेक्षणाब्रुवन्
हन्यतामयमुत्सिक्तः सूतपुत्रोऽल्पचेतनः १३
सर्वैः पार्थिवशार्दूलैर्नानेनार्थोऽस्ति जीवता
अत्यन्तवैरी पार्थानां सततं पापपूरुषः १४
एष मूलं ह्यनर्थानां दुर्योधनमते स्थितः

हतैनमिति जल्पन्तः क्षत्रियाः समुपाद्रवन् १५
महता शरवर्षेण छादयन्तो महारथाः
वधार्थं सूतपुत्रस्य पाण्डवेयेन चोदिताः १६
तांस्तु सर्वांस्तथा दृष्ट्वा धावमानान्महारथान्
न विव्यथे सूतपुत्रो न च त्रासमगच्छत १७
दृष्ट्वा नगरकल्पं तमुद्धूतं सैन्यसागरम्
पिप्रीषुस्तव पुत्राणां संग्रामेष्वपराजितः १८
सायकौघेन बलवान्क्षिप्रकारी महाबलः
वारयामास तत्सैन्यं समन्ताद्भरतर्षभ १९
ततस्तु शरवर्षेण पार्थिवास्तमवारयन्
धनूंषि ते विधुन्वानाः शतशोऽथ सहस्रशः
अयोधयन्त राधेयं शक्रं दैत्यगणा इव २०
शरवर्षं तु तत्कर्णः पार्थिवैः समुदीरितम्
शरवर्षेणमहता समन्ताद्व्यकिरत्प्रभो २१
तद्युद्धमभवत्तेषां कृतप्रतिकृतैषिणाम्
यथा देवासुरे युद्धे शक्रस्य सह दानवैः २२
तत्राद्भुतमपश्याम सूतपुत्रस्य लाघवम्
यदेनं समरे यत्ता नाप्नुवन्त परे युधि २३
निवार्य च शरौघांस्तान्पार्थिवानां महारथः
युगेष्वीषासु छत्रेषु ध्वजेषु च हयेषु च
आत्मनामाङ्कितान्बाणान्राधेयः प्राहिणोच्छितान् २४
ततस्ते व्याकुलीभूता राजानः कर्णपीडिताः
बभ्रमुस्तत्र तत्रैव गावः शीतार्दिता इव २५
हयानां वध्यमानानां गजानां रथिनां तथा
तत तत्राभ्यवेक्षामः संघान्कर्णेन पातितान् २६
शिरोभिः पतितै राजन्बाहुभिश्च समन्ततः
आस्तीर्णा वसुधा सर्वा शूराणामनिवर्तिनाम् २७
हतैश्च हन्यमानैश्च निष्टनद्भिश्च सर्वशः
बभूवायोधनं रौद्रं वैवस्वतपुरोपमम् २८
ततो दुर्योधनो राजा दृष्ट्वा कर्णस्य विक्रमम्

अश्वत्थामानमासाद्य तदा वाक्यमुवाच ह २९
युध्यतेऽसौ रणे कर्णो दंशितः सर्वपार्थिवैः
पश्यैतां द्रवतीं सेनां कर्णसायकपीडिताम्
कार्त्तिकेयेन विध्वस्तामासुरीं पृतनामिव ३०
दृष्ट्वैतां निर्जितां सेनां रणे कर्णेन धीमता
अभियात्येष बीभत्सुः सूतपुत्रजिघांसया ३१
तद्यथा प्रेक्षमाणानां सूतपुत्रं महारथम्
न हन्यात्पाण्डवः संख्ये तथा नीतिर्विधीयताम् ३२
ततो द्रौणिः कृपः शल्यो हार्दिक्यश्च महारथः
प्रत्युद्ययुस्तदा पार्थं सूतपुत्रपरीप्सया ३३
आयान्तं दृश्य कौन्तेयं वृत्रं दैवचमूमिव
प्रत्युद्ययौ तदा कर्णो यथा शक्रः प्रतापवान् ३४
धृतराष्ट्र उवाच
संरब्धं फल्गुनं दृष्ट्वा कालान्तकयमोपमम्
कर्णो वैकर्तनः सूत प्रत्यपद्यत्किमुत्तरम् ३५
स ह्यस्पर्धत पार्थेन नित्यमेव महारथः
आशंसते च बीभत्सुं युद्धे जेतुं सुदारुणे ३६
स तु तं सहसा प्राप्तं नित्यमत्यन्तवैरिणम्
कर्णो वैकर्तनः सूत किमुत्तरमपद्यत ३७
सञ्जय उवाच
आयान्तं पाण्डवं दृष्ट्वा गजः प्रतिगजं यथा
असंभ्रान्ततरः कर्णः प्रत्युदीयाद्धनंजयम् ३८
तमापतन्तं वेगेन वैकर्तनमजिह्मगैः
वारयामास तेजस्वी पाण्डवः शत्रुतापनः ३९
तं कर्णः शरजालेन छादयामास मारिष
विव्याध च सुसंक्रुद्धः शरैस्त्रिभिरजिह्मगैः ४०
तस्य तल्लाघवं पार्थो नामृष्यत महाबलः
तस्मै बाणाञ्शिलाधौतान्प्रसन्नाग्रानजिह्मगान् ४१
प्राहिणोत्सूतपुत्राय त्रिंशतं शत्रुतापनः
विव्याध चैनं संरब्धो बाणेनैकेन वीर्यवान् ४२

सव्ये भुजाग्रे बलवान्नाराचेन हसन्निव
तस्य विद्धस्य वेगेन कराच्चापं पपात ह ४३
पुनरादाय तच्चापं निमेषार्धान्महाबलः
छादयामास बाणौघैः फल्गुनं कृतहस्तवत् ४४
शरवृष्टिं तु तां मुक्तां सूतपुत्रेण भारत
व्यधमच्छरवर्षेण स्मयन्निव धनंजयः ४५
तौ परस्परमासाद्य शरवर्षेण पार्थिव
छादयेतां महेष्वासौ कृतप्रतिकृतैषिणौ ४६
तदद्भुतभूद्युद्धं कर्णपाण्डवयोर्मृधे
क्रुद्धयोर्वाशिताहेतोर्वन्ययोर्गजयोरिव ४७
ततः पार्थो महेष्वासो दृष्ट्वा कर्णस्य विक्रमम्
मुष्टिदेशे धनुस्तस्य चिच्छेद त्वरयान्वितः ४८
अश्वांश्च चतुरो भल्लैरनयद्यमसादनम्
सारथेश्च शिरः कायादहरच्छत्रुतापनः ४९
अथैनं छिन्नधन्वानं हताश्वं हतसारथिम्
विव्याध सायकैः पार्थश्चतुर्भिः पाण्डुनन्दनः ५०
हताश्वात्तु रथात्तूर्णमवप्लुत्य नरर्षभः
आरुरोह रथं तूर्णं कृपस्य शरपीडितः ५१
राधेयं निर्जितं दृष्ट्वा तावका भरतर्षभ
धनंजयशरैर्नुन्नाः प्राद्रवन्त दिशो दश ५२
द्रवतस्तान्समालोक्य राजा दुर्योधनो नृप
निवर्तयामास तदा वाक्यं चेदमुवाच ह ५३
अलं द्रुतेन वः शूरास्तिष्ठध्वं क्षत्रियर्षभाः
एष पार्थवधायाहं स्वयं गच्छामि संयुगे
अहं पार्थान्हनिष्यामि सपाञ्चालान्ससोमकान् ५४
अद्य मे युध्यमानस्य सह गाण्डीवधन्वना
द्रक्ष्यन्ति विक्रमं पार्थाः कालस्येव युगक्षये ५५
अद्य मद्बाणजालानि विमुक्तानि सहस्रशः
द्रक्ष्यन्ति समरे योधाः शलभानामिवायतीः ५६
अद्य बाणमयं वर्षं सृजतो मम धन्विनः

जीमूतस्येव घर्मान्ते द्रक्ष्यन्ति युधि सैनिकाः ५७
जेष्याम्यद्य रणे पार्थं सायकैर्नतपर्वभिः
तिष्ठध्वं समरे शूरा भयं त्यजत फल्गुनात् ५८
न हि मद्वीर्यमासाद्य फल्गुनः प्रसहिष्यति
यथा वेलां समासाद्य सागरो मकरालयः ५९
इत्युक्त्वा प्रययौ राजा सैन्येन महता वृतः
फल्गुनं प्रति दुर्धर्षः क्रोधात्संरक्तलोचनः ६०
तं प्रयान्तं महाबाहुं दृष्ट्वा शारद्वतस्तदा
अश्वत्थामानमासाद्य वाक्यमेतदुवाच ह ६१
एष राजा महाबाहुरमर्षी क्रोधमूर्छितः
पतंगवृत्तिमास्थाय फल्गुनं योद्धुमिच्छति ६२
यावन्नः पश्यमानानां प्राणान्पार्थेन संगतः
न जह्यात्पुरुषव्याघ्रस्तावद्वारय कौरवम् ६३
यावत्फल्गुनबाणानां गोचरं नाधिगच्छति
कौरवः पार्थिवो वीरस्तावद्वारय तं द्रुतम् ६४
यावत्पार्थशरैर्घोरैर्निर्मुक्तोरगसंनिभैः
न भस्मीक्रियते राजा तावद्युद्धान्निवार्यताम् ६५
अयुक्तमिव पश्यामि तिष्ठत्स्वस्मासु मानद
स्वयं युद्धाय यद्राजा पार्थं यात्यसहायवान् ६६
दुर्लभं जीवितं मन्ये कौरव्यस्य किरीटिना
युध्यमानस्य पार्थेन शार्दूलेनेव हस्तिनः ६७
मातुलेनैवमुक्तस्तु द्रौणिः शस्त्रभृतां वरः
दुर्योधनमिदं वाक्यं त्वरितं समभाषत ६८
मयि जीवति गान्धारे न युद्धं गन्तुमर्हसि
मामनादृत्य कौरव्य तव नित्यं हितैषिणम् ६९
न हि ते संभ्रमः कार्यः पार्थस्य विजयं प्रति
अहमावारयिष्यामि पार्थं तिष्ठ सुयोधन ७०
दुर्योधन उवाच
आचार्यः पाण्डुपुत्रान्वै पुत्रवत्परिरक्षति
त्वमप्युपेक्षां कुरुषे तेषु नित्यं द्विजोत्तम ७१

मम वा मन्दभाग्यत्वान्मन्दस्ते विक्रमो युधि
धर्मराजप्रियार्थं वा द्रौपद्या वा न विद्म तत् ७२
धिगस्तु मम लुब्धस्य यत्कृते सर्वबान्धवाः
सुखार्हाः परमं दुःखं प्राप्नुवन्त्यपराजिताः ७३
को हि शस्त्रभृतां मुख्यो महेश्वरसमो युधि
शत्रून्न क्षपयेच्छक्तो यो न स्याद्गौतमीसुतः ७४
अश्वत्थामन्प्रसीदस्व नाशयैतान्ममाहितान्
तवास्त्रगोचरे शक्ताः स्थातुं देवापि नानघ ७५
पाञ्चालान्सोमकांश्चैव जहि द्रौणे सहानुगान्
वयं शेषान्हनिष्यामस्त्वयैव परिरक्षिताः ७६
एते हि सोमका विप्र पाञ्चालाश्च यशस्विनः
मम सैन्येषु संक्रुद्धाः विचरन्ति दवाग्निवत् ७७
तान्वारय महाबाहो केकयांश्च नरोत्तम
पुरा कुर्वन्ति निःशेषं रक्ष्यमाणाः किरीटिना ७८
आदौ वा यदि वा पश्चात्तवेदं कर्म मारिष
त्वमुत्पन्नो महाबाहो पाञ्चालानां वधं प्रति ७९
करिष्यसि जगत्सर्वमपाञ्चालं किलाच्युत
एवं सिद्धाब्रुवन्वाचो भविष्यति च तत्तथा ८०
न तेऽस्त्रगोचरे शक्ताः स्थातुं देवाः सवासवाः
किमु पार्थाः सपाञ्चालाः सत्यमेतद्वचो मम ८१
इति श्रीमहाभारते द्रोणपर्वणि चतुस्त्रिंशत्यधिकशततमोऽध्यायः १३४

## पञ्चत्रिंशदधिक शततमोऽध्यायः

सञ्जय उवाच
दुर्योधनेनैवमुक्तो द्रौणिराहवदुर्मदः
प्रत्युवाच महाबाहो यथा वदसि कौरव १
प्रिया हि पाण्डवा नित्यं मम चापि पितुश्च मे
तथैवावां प्रियौ तेषां न तु युद्धे कुरूद्वह
शक्तितस्तात युध्यामस्त्यक्त्वा प्राणानभीतवत् २
अहं कर्णश्च शल्यश्च कृपो हार्दिक्य एव च

निमेषात्पाण्डवीं सेनां क्षपयेम नृपोत्तम ३
ते चापि कौरवीं सेनां निमेषार्धात्कुरूद्वह
क्षपयेयुर्महाबाहो न स्याम यदि संयुगे ४
युध्यतां पाण्डवाञ्शक्त्या तेषां चास्मान्युयुत्सताम्
तेजस्तु तेज आसाद्य प्रशमं याति भारत ५
अशक्या तरसा जेतुं पाण्डवानामनीकिनी
जीवत्सु पाण्डुपुत्रेषु तद्धि सत्यं ब्रवीमि ते ६
आत्मार्थं युध्यमानास्ते समर्थाः पाण्डुनन्दनाः
किमर्थं तव सैन्यानि न हनिष्यन्ति भारत ७
त्वं हि लुब्धतमो राजन्निकृतिज्ञश्च कौरव
सर्वातिशङ्की मानी च ततोऽस्मानतिशङ्कसे ८
अहं तु यत्नमास्थाय त्वदर्थे त्यक्तजीवितः
एष गच्छामि संग्रामं त्वत्कृते कुरुनन्दन ९
योत्स्येऽह शत्रुभिः सार्धं जेष्यामि च वरान्वरान्
पाञ्चालैः सह योत्स्यामि सोमकैः केकयैस्तथा
पाण्डवेयैश्च संग्रामे त्वत्प्रियार्थमरिंदम १०
अद्य मद्बाणनिर्दग्धाः पाञ्चालाः सोमकास्तथा
सिंहेनेवार्दिता गावो विद्रविष्यन्ति सर्वतः ११
अद्य धर्मसुतो राजा दृष्ट्वा मम पराक्रमम्
अश्वत्थाममयं लोकं मंस्यते सह सोमकैः १२
आगमिष्यति निर्वेदं धर्मपुत्रो युधिष्ठिरः
दृष्ट्वा विनिहतान्संख्ये पाञ्चालान्सोमकैः सह १३
ये मां युद्धेऽभियोत्स्यन्ति तान्हनिष्यामि भारत
न हि ते वीर मुच्येरन्मद्बाह्वन्तरमागताः १४
एवमुक्त्वा महाबाहुः पुत्रं दुर्योधनं तव
अभ्यवर्तत युद्धाय त्रासयन्सर्वधन्विनः
चिकीर्षुस्तव पुत्राणां प्रियं प्राणभृतां वरः १५
ततोऽब्रवीत्सकैकेयान्पाञ्चालान्गौतमीसुतः
प्रहरध्वमितः सर्वे मम गात्रे महारथाः
स्थिरीभूताश्च युध्यध्वं दर्शयन्तोऽस्त्रलाघवम् १६

एवमुक्तास्तु ते सर्वे शस्त्रवृष्टिमपातयन्
द्रौणिं प्रति महाराज जलं जलधरा इव १७
तान्निहत्य शरान्द्रौणिर्दश वीरानपोथयत्
प्रमुखे पाराडुपुत्राणां धृष्टद्युम्नस्य चाभिभो १८
ते हन्यमानाः समरे पाञ्चालाः सृञ्जयास्तथा
परित्यज्य रणे द्रौणिं व्यद्रवन्त दिशो दश १९
तान्दृष्ट्वा द्रवतः शूरान्पाञ्चालान्सहसोमकान्
धृष्टद्युम्नो महाराज द्रौणिमभ्यद्रवद्युधि २०
ततः काञ्चनचित्राणां सजलाम्बुदनादिनाम्
वृतः शतेन शूराणां रथानामनिवर्तिनाम् २१
पुत्रः पाञ्चालराजस्य धृष्टद्युम्नो महारथः
द्रौणिमित्यब्रवीद्वाक्यं दृष्ट्वा योधान्निपातितान् २२
आचार्यपुत्र दुर्बुद्धे किमन्यैर्निहतैस्तव
समागच्छ मया सार्धं यदि शूरोऽसि संयुगे
अहं त्वा निहनिष्यामि तिष्ठेदानीं ममाग्रतः २३
ततस्तमाचार्यसुतं धृष्टद्युम्नः प्रतापवान्
मर्मभिद्भिः शरैस्तीक्ष्णैर्जघान भरतर्षभ २४
ते तु पङ्क्तीकृता द्रौणिं शरा विविशुराशुगाः
रुक्मपुङ्खाः प्रसन्नाग्राः सर्वकायावदारणाः
मध्वर्थिन इवोद्दामा भ्रमराः पुष्पितं द्रुमम् २५
सोऽतिविद्धो भृशं क्रुद्धः पदाक्रान्त इवोरगः
मानी द्रौणिरसंभ्रान्तो बाणपाणिरभाषत २६
धृष्टद्युम्न स्थिरो भूत्वा मुहूर्तं प्रतिपालय
यावत्त्वां निशितैर्बाणैः प्रेषयामि यमक्षयम् २७
द्रौणिरेवमथाभाष्य पार्षतं परवीरहा
छादयामास बाणौघैः समन्ताल्लघुहस्तवत् २८
स छाद्यमानः समरे द्रौणिना युद्धदुर्मदः
द्रौणिं पाञ्चालतनयो वाग्भिरातर्जयत्तदा २९
न जानीषे प्रतिज्ञां मे विप्रोत्पत्तिं तथैव च
द्रोणं हत्वा किल मया हन्तव्यस्त्वं सुदुर्मते

ततस्त्वाहं न हन्म्यद्य द्रोणे जीवति संयुगे ३०
इमां तु रजनीं प्राप्तामप्रभातां सुदुर्मते
निहत्य पितरं तेऽद्य ततस्त्वामपि संयुगे
नेष्यामि मृत्युलोकायेत्येवं मे मनसि स्थितम् ३१
यस्ते पार्थेषु विद्वेषो या भक्तिः कौरवेषु च
तां दर्शय स्थिरो भूत्वा न मे जीवन्विमोक्ष्यसे ३२
यो हि ब्राह्मण्यमुत्सृज्य क्षत्रधर्मरतो द्विजः
स वध्यः सर्वलोकस्य यथा त्वं पुरुषाधम ३३
इत्युक्तः परुषं वाक्यं पार्षतेन द्विजोत्तमः
क्रोधमाहारयत्तीव्रं तिष्ठ तिष्ठेति चाब्रवीत् ३४
निर्दहन्निव चक्षुर्भ्यां पार्षतं सोऽभ्यवैक्षत
छादयामास च शरैर्निःश्वसन्पन्नगो यथा ३५
स छाद्यमानः समरे द्रौणिना राजसत्तम
सर्वपाञ्चालसेनाभिः संवृतो रथसत्तमः ३६
नाकम्पत महाबाहुः स्वधैर्यं समुपाश्रितः
सायकांश्चैव विविधानश्वत्थाम्नि मुमोच ह ३७
तौ पुनः संन्यवर्तेतां प्राणद्यूतपरे रणे
निवारयन्तौ बाणौघैः परस्परममर्षिणौ
उत्सृजन्तौ महेष्वासौ शरवृष्टीः समन्ततः ३८
द्रौणिपार्षतयोर्युद्धं घोररूपं भयानकम्
दृष्ट्वा संपूजयामासुः सिद्धचारणवातिकाः ३९
शरौघैः पूरयन्तौ तावाकाशं प्रदिशस्तथा
अलक्ष्यौ समयुध्येतां महत्कृत्वा शरैस्तमः ४०
नृत्यमानाविव रणे मण्डलीकृतकार्मुकौ
परस्परवधे यत्तौ परस्परजयैषिणौ ४१
अयुध्येतां महाबाहू चित्रं लघु च सुष्ठु च
संपूज्यमानौ समरे योधमुख्यैः सहस्रशः ४२
तौ प्रयुद्धौ रणे दृष्ट्वा वने वन्यौ गजाविव
उभयोः सेनयोर्हर्षस्तुमुलः समपद्यत ४३
सिंहनादरवाश्चासन्दध्मुः शङ्खांश्च मारिष

वादित्राणयभ्यवाद्यन्त शतशोऽथ सहस्रशः ४४
तस्मिंस्तु तुमुले युद्धे भीरूणां भयवर्धने
मुहूर्तमिव तद्युद्धं समरूपं तदाभवत् ४५
ततो द्रौणिर्महाराज पार्षतस्य महात्मनः
ध्वजं धनुस्तथा छत्रमुभौ च पार्ष्णिसारथी
सूतमश्वांश्च चतुरो निहत्याभ्यद्रवद्रणे ४६
पाञ्चालांश्चै वतान्सर्वान् बाणैः संनतपर्वभिः
व्यद्रावयदमेयात्मा शतशोऽथसहस्रशः ४७
ततः प्रविव्यथे सेना पाणडवी भरतर्षभ
दृष्ट्वा द्रौणेर्महत्कर्म वासवस्येव संयुगे ४८
शतेन च शतं हत्वा पाञ्चालानां महारथः
त्रिभिश्च निशितैर्बाणैर्हत्वा त्रीन्वै महारथान् ४९
द्रौणिर्द्रुपदपुत्रस्य फल्गुनस्य च पश्यतः
नाशयामास पाञ्चालान्भूयिष्ठं ये व्यवस्थिताः ५०
ते वध्यमानाः पाञ्चालाः समरे सह सृञ्जयैः
अगच्छन्द्रौणिमुत्सृज्य विप्रकीर्णरथध्वजाः ५१
स जित्वा समरे शत्रून्द्रोणपुत्रो महारथः
ननाद सुमहानादं तपान्ते जलदो यथा ५२
स निहत्य बहूञ्शूरानश्वत्थामा व्यरोचत
युगान्ते सर्वभूतानि भस्म कृत्वेव पावकः ५३
संपूज्यमानो युधि कौरवेयैर्विजित्य संख्येऽरिगणान्सहस्रशः
व्यरोचत द्रोणसुतः प्रतापवान्यथा सुरेन्द्रोऽरिगणान्निहत्य ५४
इति श्रीमहाभारते द्रोणपर्वणि पञ्चत्रिंशदधिकशततमोऽध्यायः १३५

षट्त्रिंशदधिक शततमोऽध्यायः

सञ्जय उवाच
ततो युधिष्ठिरश्चैव भीमसेनश्च पाणडवः
द्रोणपुत्रं महाराज समन्तात्पर्यवारयन् १
ततो दुर्योधनो राजा भारद्वाजेन संवृतः
अभ्ययात्पाणडवान्संख्ये ततो युद्धमवर्तत

घोररूपं महाराज भीरूणां भयवर्धनम् २
अम्बष्ठान्मालवान्वङ्गाञ्शिबींस्त्रैगर्तकानपि
प्राहिणोन्मृत्युलोकाय गणान्क्रुद्धो युधिष्ठिरः ३
अभीषाहाञ्शूरसेनान्क्षत्रियान्युद्धदुर्मदान्
निकृत्य पृथिवीं चक्रे भीमः शोणितकर्दमाम् ४
यौधेयारट्टराजन्यान्मद्रकांश्च गणान्युधि
प्राहिणोन्मृत्युलोकाय किरीटी निशितैः शरैः ५
प्रगाढमञ्जोगतिभिर्नाराचैरभिपीडिताः
निपेतुर्द्विरदा भूमौ द्विशृङ्गा इव पर्वताः ६
निकृत्तैर्हस्तिहस्तैश्च लुठमानैस्ततस्ततः
रराज वसुधा कीर्णा विसर्पद्भिरिवोरगैः ७
क्षिप्तैः कनकचित्रैश्च नृपच्छत्रैः क्षितिर्बभौ
द्यौरिवादित्यचन्द्राद्यैर्ग्रहैः कीर्णा युगक्षये ८
हत प्रहरताभीता विध्यत व्यवकृन्तत
इत्यासीत्तुमुलः शब्दः शोणाश्वस्य रथं प्रति ९
द्रोणस्तु परमक्रुद्धो वायव्यास्त्रेण संयुगे
व्यधमत्तान्यथा वायुर्मेघानिव दुरत्ययः १०
ते हन्यमाना द्रोणेन पाञ्चालाः प्राद्रवन्भयात्
पश्यतो भीमसेनस्य पार्थस्य च महात्मनः ११
ततः किरीटी भीमश्च सहसा संन्यवर्तताम्
महता रथवंशेन परिगृह्य बलं तव १२
बीभत्सुर्दक्षिणं पार्श्वमुत्तरं तु वृकोदरः
भारद्वाजं शरौघाभ्यां महद्भ्यामभ्यवर्षताम् १३
तौ तथा सृञ्जयाश्चैव पाञ्चालाश्च महारथाः
अन्वगच्छन्महाराज मत्स्याश्च सह सोमकैः १४
तथैव तव पुत्रस्य रथोदाराः प्रहारिणः
महत्या सेनया सार्धं जग्मुर्द्रोणरथं प्रति १५
ततः सा भारती सेना वध्यमाना किरीटिना
तमसा निद्रया चैव पुनरेव व्यदीर्यत १६
द्रोणेन वार्यमाणास्ते स्वयं तव सुतेन च

नाशक्यन्ते महाराज योधा वारयितुं तदा १७
सा पाण्डुपुत्रस्य शरैर्दार्यमाणा महाचमूः
तमसा संवृते लोके व्यद्रवत्सर्वतोमुखी १८
उत्सृज्य शतशो वाहांस्तत्र केचिन्नराधिपाः
प्राद्रवन्त महाराज भयाविष्टाः समन्ततः १९
इति श्रीमहाभारते द्रोणपर्वणि षट्त्रिंशदधिकशततमोऽध्यायः १३६

## सप्तत्रिंशदधिक शततमोऽध्यायः

सञ्जय उवाच
सोमदत्तं तु संप्रेक्ष्य विधुन्वानं महद्धनुः
सात्यकिः प्राह यन्तारं सोमदत्ताय मां वह १
न ह्यहत्वा रणे शत्रुं बाह्लीकं कौरवाधमम्
निवर्तिष्ये रणात्सूत सत्यमेतद्वचो मम २
ततः संप्रेषयद्यन्ता सैन्धवांस्तान्मनोजवान्
तुरंगमाञ्शङ्खवर्णान्सर्वशब्दातिगान्रणे ३
तेऽवहन्युयुधानं तु मनोमारुतरंहसः
यथेन्द्रं हरयो राजन्पुरा दैत्यवधोद्यतम् ४
तमापतन्तं संप्रेक्ष्य सात्वतं रभसं रणे
सोमदत्तो महाबाहुरसंभ्रान्तोऽभ्यवर्तत ५
विमुञ्चञ्शरवर्षाणि पर्जन्य इव वृष्टिमान्
छादयामास शैनेयं जलदो भास्करं यथा ६
असंभ्रान्तश्च समरे सात्यकिः कुरुपुंगवम्
छादयामास बाणौघैः समन्ताद्भरतर्षभ ७
सोमदत्तस्तु तं षष्ट्या विव्याधोरसि माधवम्
सात्यकिश्चापि तं राजन्नविध्यत्सायकैः शितैः ८
तावन्योन्यं शरैः कृत्तौ व्यराजेतां नरर्षभौ
सुपुष्पौ पुष्पसमये पुष्पिताविव किंशुकौ ९
रुधिरोक्षितसर्वाङ्गौ कुरुवृष्णियशस्करौ
परस्परमवेक्षेतां दहन्ताविव लोचनैः १०
रथमण्डलमार्गेषु चरन्तावरिमर्दनौ

घोररूपौ हि तावास्तां वृष्टिमन्ताविवाम्बुदौ ११
शरसंभिन्नगात्रौ तौ सर्वतः शकलीकृतौ
श्वाविधाविव राजेन्द्र व्यदृश्येतां शरक्षतौ १२
सुवर्णपुङ्खैरिषुभिराचितौ तौ व्यरोचताम्
खद्योतैरावृतौ राजन्प्रावृषीव वनस्पती १३
संप्रदीपितसर्वाङ्गौ सायकैस्तौ महारथौ
अदृश्येतां रणे क्रुद्धावुल्काभिरिव कुञ्जरौ १४
ततो युधि महाराज सोमदत्तो महारथः
अर्धचन्द्रेण चिच्छेद माधवस्य महद्धनुः १५
अथैनं पञ्चविंशत्या सायकानां समार्पयत्
त्वरमाणस्त्वराकाले पुनश्च दशभिः शरैः १६
अथान्यद्धनुरादाय सात्यकिर्वेगवत्तरम्
पञ्चभिः सायकैस्तूर्णं सोमदत्तमविध्यत १७
ततोऽपरेण भल्लेन ध्वजं चिच्छेद काञ्चनम्
बाह्लीकस्य रणे राजन्सात्यकिः प्रहसन्निव १८
सोमदत्तस्त्वसंभ्रान्तो दृष्ट्वा केतुं निपातितम्
शैनेयं पञ्चविंशत्या सायकानां समाचिनोत् १९
सात्वतोऽपि रणे क्रुद्धः सोमदत्तस्य धन्विनः
धनुश्चिच्छेद समरे क्षुरप्रेण शितेन ह २०
अथैनं रुक्मपुङ्खानां शतेन नतपर्वणाम्
आचिनोद्बहुधा राजन्भग्नदंष्ट्रमिव द्विपम् २१
अथान्यद्धनुरादाय सोमदत्तो महारथः
सात्यकिं छादयामास शरवृष्ट्या महाबलः २२
सोमदत्तं तु संक्रुद्धो रणे विव्याध सात्यकिः
सात्यकिं चेषुजालेन सोमदत्तो अपीडयत् २३
दशभिः सात्वतस्यार्थे भीमोऽहन्बाह्लिकात्मजम्
सोमदत्तोऽप्यसंभ्रान्तः शैनेयमवधीच्छरैः २४
ततस्तु सात्वतस्यार्थे भैमसेनिर्नवं दृढम्
मुमोच परिघं घोरं सोमदत्तस्य वक्षसि २५
तमापतन्तं वेगेन परिघं घोरदर्शनम्

द्विधा चिच्छेद समरे प्रहसन्निव कौरवः २६
स पपात द्विधा छिन्न आयसः परिघो महान्
महीधरस्येव महच्छिखरं वज्रदारितम् २७
ततस्तु सात्यकी राजन्सोमदत्तस्य संयुगे
धनुश्चिच्छेद भल्लेन हस्तावापं च पञ्चभिः २८
चतुर्भिस्तु शरैस्तूर्णं चतुरस्तुरगोत्तमान्
समीपं प्रेषयामास प्रेतराजस्य भारत २९
सारथेश्च शिरः कायाद्भल्लेन नतपर्वणा
जहार रथशार्दूलः प्रहसञ्शिनिपुंगवः ३०
ततः शरं महाघोरं ज्वलन्तमिव पावकम्
मुमोच सात्वतो राजन्स्वर्णपुङ्खं शिलाशितम् ३१
स विमुक्तो बलवता शैनेयेन शरोत्तमः
घोरस्तस्योरसि विभो निपपाताशु भारत ३२
सोऽतिविद्धो बलवता सात्वतेन महारथः
सोमदत्तो महाबाहुर्निपपात ममार च ३३
तं दृष्ट्वा निहतं तत्र सोमदत्तं महारथाः
महता शरवर्षेण युयुधानमुपाद्रवन् ३४
छाद्यमानं शरैर्दृष्ट्वा युयुधानं युधिष्ठिरः
महत्या सेनया सार्धं द्रोणानीकमुपाद्रवत् ३५
ततो युधिष्ठिरः क्रुद्धस्तावकानां महाबलम्
शरैर्विद्रावयामास भारद्वाजस्य पश्यतः ३६
सैन्यानि द्रावयन्तं तु द्रोणो दृष्ट्वा युधिष्ठिरम्
अभिदुद्राव वेगेन क्रोधसंरक्तलोचनः ३७
सोऽतिविद्धो महाबाहुः सृक्किणी परिसंलिहन्
युधिष्ठिरस्य चिच्छेद ध्वजं कार्मुकमेव च ३८
स छिन्नधन्वा त्वरितस्त्वराकाले नृपोत्तमः
अन्यदादत्त वेगेन कार्मुकं समरे दृढम् ३९
ततः शरसहस्रेण द्रोणं विव्याध पार्थिवः
साश्वसूतध्वजरथं तदद्भुतमिवाभवत् ४०
ततो मुहूर्तं व्यथितः शरघातप्रपीडितः

निषसाद रथोपस्थे द्रोणो भरतसत्तम ४१
प्रतिलभ्य ततः संज्ञां मुहूर्ताद्द्विजसत्तमः
क्रोधेन महताविष्टो वायव्यास्त्रमवासृजत् ४२
असंभ्रान्तस्ततः पार्थो धनुराकृष्य वीर्यवान्
तदस्त्रमस्त्रेण रणे स्तम्भयामास भारत ४३
ततोऽब्रवीद्वासुदेवः कुन्तीपुत्रं युधिष्ठिरम्
युधिष्ठिर महाबाहो यत्त्वा वक्ष्यामि तच्छृणु ४४
उपारमस्व युद्धाय द्रोणाद्भरतसत्तम
गृध्यते हि सदा द्रोणो ग्रहणे तव संयुगे ४५
नानुरूपमहं मन्ये युद्धमस्य त्वया सह
योऽस्य सृष्टो विनाशाय स एनं श्वो हनिष्यति ४६
परिवर्ज्य गुरुं याहि यत्र राजा सुयोधनः
भीमश्च रथशार्दूलो युध्यते कौरवैः सह ४७
वासुदेववचः श्रुत्वा धर्मराजो युधिष्ठिरः
मुहूर्तं चिन्तयित्वा तु ततो दारुणमाहवम् ४८
प्रायाद्द्रुतममित्रघ्नो यत्र भीमो व्यवस्थितः
विनिघ्नंस्तावकान्योधान्व्यादितास्य इवान्तकः ४९
रथघोषेण महता नादयन्वसुधातलम्
पर्जन्य इव घर्मान्ते नादयन्वै दिशो दश ५०
भीमस्य निघ्नतः शत्रून्पार्ष्णिं जग्राह पाण्डवः
द्रोणोऽपि पाण्डुपाञ्चालान्व्यधमद्रजनीमुखे ५१
इति श्रीमहाभारते द्रोणपर्वणि सप्तत्रिंशदधिकशततमोऽध्यायः १३७

## अष्टत्रिंशदधिक शततमोऽध्यायः

सञ्जय उवाच
वर्तमाने तथा युद्धे घोररूपे भयावहे
तमसा संवृते लोके रजसा च महीपते
नापश्यन्त रणे योधाः परस्परमवस्थिताः १
अनुमानेन संज्ञाभिर्युद्धं तद्ववृते महत्
नरनागाश्वमथनं परमं लोमहर्षणम् २

द्रोणकर्णकृपा वीरा भीमपार्षतसात्यकाः
अन्योन्यं क्षोभयामासुः सैन्यानि नृपसत्तम ३
वध्यमानानि सैन्यानि समन्तात्तैर्महारथैः
तमसा रजसा चैव समन्ताद्विप्रदुद्रुवुः ४
ते सर्वतो विद्रवन्तो योधा वित्रस्तचेतसः
अहन्यन्त महाराज धावमानाश्च संयुगे ५
महारथसहस्राणि जघ्नुरन्योन्यमाहवे
अन्धे तमसि मूढानि पुत्रस्य तव मन्त्रिते ६
ततः सर्वाणि सैन्यानि सेनागोपाश्च भारत
व्यमुह्यन्त रणे तत्र तमसा संवृते सति ७
धृतराष्ट्र उवाच
तेषां संलोड्यमानानां पाण्डवैर्निहतौजसाम्
अन्धे तमसि मग्नानामासीत्का वो मतिस्तदा ८
कथं प्रकाशस्तेषां वा मम सैन्येषु वा पुनः
बभूव लोके तमसा तथा सञ्जय संवृते ९
सञ्जय उवाच
ततः सर्वाणि सैन्यानि हतशिष्टानि यानि वै
सेनागोप्तॄनथादिश्य पुनर्व्यूहमकल्पयत् १०
द्रोणः पुरस्ताज्जघने तु शल्यस्तथा द्रौणिः पार्श्वतः सौबलश्च
स्वयं तु सर्वाणि बलानि राजन्राजाभ्ययाद्गोपयन्वै निशायाम् ११
उवाच सर्वांश्च पदातिसंघान्दुर्योधनः पार्थिव सान्त्वपूर्वम्
उत्सृज्य सर्वे परमायुधानि गृह्णीत हस्तैर्ज्वलितान्प्रदीपान् १२
ते चोदिताः पार्थिवसत्तमेन ततः प्रहृष्टा जगृहुः प्रदीपान्
सा भूय एव ध्वजिनी विभक्ता व्यरोचताग्निप्रभया निशायाम् १३
महाधनैराभरणैश्च दिव्यैः शस्त्रैः प्रदीप्तैरभिसंपतद्भिः
क्षणेन सर्वे विहिताः प्रदीपा व्यदीपयंश्च ध्वजिनीं तदाशु १४
सर्वास्तु सेना व्यतिसेव्यमानाः पदातिभिः पावकतैलहस्तैः
प्रकाश्यमाना ददृशुर्निशायां यथान्तरिक्षे जलदास्तडिद्भिः १५
प्रकाशितायां तु तथा ध्वजिन्यां द्रोणोऽग्निकल्पः प्रतपन्समन्तात्
रराज राजेन्द्र सुवर्णवर्मा मध्यं गतः सूर्य इवांशुमाली १६

जाम्बूनदेष्वाभरणेषु चैव निष्केषु शुद्धेषु शरावरेषु
पीतेषु शस्त्रेषु च पावकस्य प्रतिप्रभास्तत्र तदा बभूवुः १७
गदाश्च शैक्याः परिघाश्च शुभ्रा रथेषु शक्त्यश्च विवर्तमानाः
प्रतिप्रभा रश्मिभिराजमीढ पुनः पुनः संजनयन्ति दीप्ताः १८
छत्राणि बालव्यजनानुषङ्गा दीप्ता महोल्काश्च तथैव राजन्
व्याघूर्णमानाश्च सुवर्णमाला व्यायच्छतां तत्र तदा विरेजुः १९
शस्त्रप्रभाभिश्च विराजमानं दीपप्रभाभिश्च तदा बलं तत्
प्रकाशितं चाभरणप्रभाभिर्भृशं प्रकाशं नृपते बभूव २०
पीतानि शस्त्राण्यसृगुक्षितानि वीरावधूतानि तनुद्रुहाणि
दीप्तां प्रभां प्राजनयन्त तत्र तपात्यये विद्युदिवान्तरिक्षे २१
प्रकम्पितानामभिघातवेगैरभिघ्नतां चापततां जवेन
वक्त्राण्यशोभन्त तदा नराणां वाय्वीरितानीव महाम्बुजानि २२
महावने दाव इव प्रदीप्ते यथा प्रभा भास्करस्यापि नश्येत्
तथा तवासीद्ध्वजिनी प्रदीप्ता महाभये भारत भीमरूपा २३
तत्संप्रदीप्तं बलमस्मदीयं निशाम्य पार्थास्त्वरितास्तथैव
सर्वेषु सैन्येषु पदातिसंघानचोदयंस्तेऽथ चक्रुः प्रदीपान् २४
गजे गजे सप्त कृताः प्रदीपा रथे रथे चैव दश प्रदीपाः
द्वावश्वपृष्ठे परिपार्श्वतोऽन्ये ध्वजेषु चान्ये जघनेषुचान्ये २५
सेनासु सर्वासु च पार्श्वतोऽन्ये पश्चात्पुरस्ताच्च समन्ततश्च
मध्ये तथान्ये ज्वलिताग्निहस्ताः सेनाद्वयेऽपि स्म नरा विचेरुः २६
सर्वेषु सैन्येषु पदातिसंघा व्यामिश्रिता हस्तिरथाश्ववृन्दैः
मध्ये तथान्ये ज्वलिताग्निहस्ता व्यदीपयन्पाण्डुसुतस्य सेनाम् २७
तेन प्रदीप्तेन तथा प्रदीप्तं बलं तदासीद्बलवद्बलेन
भाः कुर्वता भानुमता ग्रहेण दिवाकरेणाग्निरिवाभितप्तः २८
तयोः प्रभाः पृथिवीमन्तरिक्षं सर्वा व्यतिक्रम्य दिशश्च वृद्धाः
तेन प्रकाशेन भृशं प्रकाशं बभूव तेषां तव चैव सैन्यम् २९
तेन प्रकाशेन दिवंगमेन संबोधिता देवगणाश्च राजन्
गन्धर्वयक्षासुरसिद्धसंघाः समागमन्नप्सरसश्च सर्वाः ३०
तद्देवगन्धर्वसमाकुलं च यक्षासुरेन्द्राप्सरसां गणैश्च
हतैश्च वीरैर्दिवमारुहद्भिरायोधनं दिव्यकल्पं बभूव ३१

रथाश्वनागाकुलदीपदीप्तं संरब्धयोधाहतविद्रुताश्वम्
महद्बलं व्यूढरथाश्वनागं सुरासुरव्यूहसमं बभूव ३२
तच्छक्तिसंघाकुलचराडवातं महारथाभ्रं रथवाजिघोषम्
शस्त्रौघवर्षं रुधिराम्बुधारं निशि प्रवृत्तं नरदेवयुद्धम् ३३
तस्मिन्महाग्निप्रतिमो महात्मा संतापयन्पाराडवान्विप्रमुख्यः
गभस्तिभिर्मध्यगतो यथार्को वर्षात्यये तद्वदभून्नरेन्द्र ३४
इति श्रीमहाभारते द्रोगापर्वणि अष्टत्रिंशदधिकशततमोऽध्यायः १३८

## एकोन चत्वारिंशदधिक शततमोऽध्यायः

सञ्जय उवाच
प्रकाशिते तथा लोके रजसा च तमोवृते
समाजग्मुरथो वीराः परस्परवधैषिणः १
ते समेत्य रणे राजञ्शस्त्रप्रासासिधारिणः
परस्परमुदैन्नन्त परस्परकृतागसः २
प्रदीपानां सहस्रैश्च दीप्यमानैः समन्ततः
विरराज तदा भूमिर्द्यौर्ग्रहैरिव भारत ३
उल्काशतैः प्रज्वलितै रणभूमिर्व्यराजत
दह्यमानेव लोकानामभावे वै वसुंधरा ४
प्रदीप्यन्त दिशः सर्वाः प्रदीपैस्तैः समन्ततः
वर्षाप्रदोषे खद्योतैर्वृता वृन्ना इवाबभुः ५
असज्जन्त ततो वीरा वीरेष्वेव पृथक्पृथक्
नागा नागैः समाजग्मुस्तुरगाः सह वाजिभिः ६
रथा रथवरैरेव समाजग्मुर्मुदान्विताः
तस्मिन्रात्रिमुखे घोरे पुत्रस्य तव शासनात् ७
ततोऽजुनो महाराज कौरवाणामनीकिनीम्
व्यधमत्त्वरया युक्तः न्नपयन्सर्वपार्थिवान् ८
धृतराष्ट्र उवाच
तस्मिन्प्रविष्टे संरब्धे मम पुत्रस्य वाहिनीम्
अमृष्यमाणे दुर्धर्षे किं वा आसीन्मनस्तदा ९
किममन्यन्त सैन्यानि प्रविष्टे शत्रुतापने

दुर्योधनश्च किं कृत्यं प्राप्तकालममन्यत १०
के चैनं समरे वीरं प्रत्युद्ययुररिंदमम्
केऽरक्षन्दक्षिणं चक्रं के च द्रोणस्य सव्यतः ११
के पृष्ठतोऽस्य ह्यभवन्वीरा वीरस्य युध्यतः
के पुरस्तादगच्छन्त निघ्नन्तः शात्रवान्रणे १२
यत्प्राविशन्महेष्वासः पाञ्चालानपराजितः
नृत्यन्निव नरव्याघ्रो रथमार्गेषु वीर्यवान् १३
ददाह च शरैर्द्रोणः पाञ्चालानां रथव्रजान्
धूमकेतुरिव क्रुद्धः स कथं मृत्युमीयिवान् १४
अव्यग्रानेव हि परान्कथयस्यपराजितान्
हतांश्चैव विषण्णांश्च विप्रकीर्णांश्च शंससि
रथिनो विरथांश्चैव कृतान्युद्धेषु मामकान् १५
सञ्जय उवाच
द्रोणस्य मतमाज्ञाय योद्धुकामस्य तां निशाम्
दुर्योधनो महाराज वश्यान्भ्रातॄनभाषत १६
विकर्णं चित्रसेनं च महाबाहुं च कौरवम्
दुर्धर्षं दीर्घबाहुं च ये च तेषां पदानुगाः १७
द्रोणं यत्ताः पराक्रान्ताः सर्वे रक्षत पृष्ठतः
हार्दिक्यो दक्षिणं चक्रं शल्यश्चैवोत्तरं तथा १८
त्रिगर्तानां च ये शूरा हतशिष्टा महारथाः
तांश्चैव सर्वान्पुत्रस्ते समचोदयदग्रतः १९
आचार्यो हि सुसंयत्तो भृशं यत्ताश्च पाण्डवाः
तं रक्षत सुसंयत्ता निघ्नन्तं शात्रवान्रणे २०
द्रोणो हि बलवान्युद्धे क्षिप्रहस्तः पराक्रमी
निर्जयेत्त्रिदशान्युद्धे किमु पार्थान्ससोमकान् २१
ते यूयं सहिताः सर्वे भृशं यत्ता महारथाः
द्रोणं रक्षत पाञ्चाल्याद्धृष्टद्युम्नान्महारथात् २२
पाण्डवेयेषु सैन्येषु योधं पश्याम्यहं न तम्
यो जयेत रणे द्रोणं धृष्टद्युम्नादृते नृपाः २३
तस्य सर्वात्मना मन्ये भारद्वाजस्य रक्षणम्

स गुप्तः सोमकान्हन्यात्सृञ्जयांश्च सराजकान् २४
सृञ्जयेष्वथ सर्वेषु निहतेषु चमूमुखे
धृष्टद्युम्नं रणे द्रौणिर्नाशयिष्यत्यसंशयम् २५
तथार्जुनं रणे कर्णो विजेष्यति महारथः
भीमसेनमहं चापि युद्धे जेष्यामि दंशितः २६
सोऽय मम जयो व्यक्तं दीर्घकालं भविष्यति
तस्माद्रक्षत संग्रामे द्रोणमेव महारथाः २७
इत्युक्त्वा भरतश्रेष्ठ पुत्रो दुर्योधनस्तव
व्यादिदेश ततः सैन्यं तस्मिंस्तमसि दारुणे २८
ततः प्रववृते युद्धं रात्रौ तद्भरतर्षभ
उभयोः सेनयोर्घोरं विजयं प्रति काङ्क्षिणोः २९
अर्जुनः कौरवं सैन्यमर्जुनं चापि कौरवाः
नानाशस्त्रसमावापैरन्योन्यं पर्यपीडयन् ३०
द्रौणिः पाञ्चालराजानं भारद्वाजश्च सृञ्जयान्
छादयामासतुः संख्ये शरैः संनतपर्वभिः ३१
पाण्डुपाञ्चालसेनानां कौरवाणां च मारिष
आसीन्निष्टानको घोरो निघ्नतामितरेतरम् ३२
नैवास्माभिर्न पूर्वैनो दृष्टं पूर्वं तथाविधम्
युद्धं यादृशमेवासीत्तां रात्रिं सुमहाभयम् ३३
इति श्रीमहाभारते द्रोणपर्वणि एकोनचत्वारिंशदधिकशततमोऽध्यायः १३९

## चत्वारिंशदधिक शततमोऽध्यायः

सञ्जय उवाच
वर्तमाने तथा रौद्रे रात्रियुद्धे विशां पते
सर्वभूतक्षयकरे धर्मपुत्रो युधिष्ठिरः १
अब्रवीत्पाण्डवांश्चैव पाञ्चालांश्च ससोमकान्
अभ्यद्रवत गच्छध्वं द्रोणमेव जिघांसया २
राज्ञस्ते वचनाद्राजन्पाञ्चालाः सोमकास्तथा
द्रोणमेवाभ्यवर्तन्त नदन्तो भैरवान्रवान् ३
तान्वयं प्रतिगर्जन्तः प्रत्युद्यातास्त्वमर्षिताः

यथाशक्ति यथोत्साहं यथासत्त्वं च संयुगे ४
कृतवर्मा च हार्दिक्यो युधिष्ठिरमुपाद्रवत्
द्रोणं प्रति जिघांसन्तं मत्तो मत्तमिव द्विपम् ५
शैनेयं शरवर्षाणि विकिरन्तं समन्ततः
अभ्ययात्कौरवो राजन्भूरिः संग्राममूर्धनि ६
सहदेवमथायान्तं द्रोणप्रेप्सुं महारथम्
कर्णो वैकर्तनो राजन्वारयामास पाण्डवम् ७
भीमसेनमथायान्तं व्यादितास्यमिवान्तकम्
स्वयं दुर्योधनो युद्धे प्रतीपं मृत्युमाव्रजत् ८
नकुलं च युधां श्रेष्ठं सर्वयुद्धविशारदम्
शकुनिः सौबलो राजन्वारयामास सत्वरः ९
शिखण्डिनमथायान्तं रथेन रथिनां वरम्
कृपो शारद्वतो राजन्वारयामास संयुगे १०
प्रतिविन्ध्यमथायान्तं मयूरसदृशैर्हयैः
दुःशासनो महाराज यत्तो यत्तमवारयत् ११
भैमसेनिमथायान्तं मायाशतविशारदम्
अश्वत्थामा पितुर्मानं कुर्वाणः प्रत्यषेधयत् १२
द्रुपदं वृषसेनस्तु ससैन्यं सपदानुगम्
वारयामास समरे द्रोणप्रेप्सुं महारथम् १३
विराटं द्रुतमायान्तं द्रोणस्य निधनं प्रति
मद्रराजः सुसंक्रुद्धो वारयामास भारत १४
शतानीकमथायान्तं नाकुलिं रभसं रणे
चित्रसेनो रुरोधाशु शरैर्द्रोणवधेप्सया १५
अर्जुनं च युधां श्रेष्ठं प्राद्रवन्तं महारथम्
अलम्बुसो महाराज राक्षसेन्द्रो न्यवारयत् १६
तथा द्रोणं महेष्वासं निघ्नन्तं शात्रवान्रणे
धृष्टद्युम्नोऽथ पाञ्चाल्यो हृष्टरूपमवारयत् १७
तथान्यान्पाण्डुपुत्राणां समायातान्महारथान्
तावका रथिनो राजन्वारयामासुरोजसा १८
गजारोहागजैस्तूर्णं संनिपत्य महामृधे

योधयन्तः स्म दृश्यन्ते शतशोऽथ सहस्रशः १९
निशीथे तुरगा राजन्नाद्रवन्तः परस्परम्
समदृश्यन्त वेगेन पक्षवन्त इवाद्रयः २०
सादिनः सादिभिः सार्धं प्रासशक्त्यृष्टिपाणयः
समागच्छन्महाराज विनदन्तः पृथक्पृथक् २१
नरास्तु बहवस्तत्र समाजग्मुः परस्परम्
गदाभिर्मुसलैश्चैव नानाशस्त्रैश्च संघशः २२
कृतवर्मा तु हार्दिक्यो धर्मपुत्रं युधिष्ठिरम्
वारयामास संक्रुद्धो वेलेवोद्वृत्तमर्णवम् २३
युधिष्ठिरस्तु हार्दिक्यं विद्ध्वा पञ्चभिराशुगैः
पुनर्विव्याध विंशत्या तिष्ठ तिष्ठेति चाब्रवीत् २४
कृतवर्मा तु संक्रुद्धो धर्मपुत्रस्य मारिष
धनुश्चिच्छेद भल्लेन तं च विव्याध सप्तभिः २५
अथान्यद्धनुरादाय धर्मपुत्रो युधिष्ठिरः
हार्दिक्यं दशभिर्बाणैर्बाह्वोरुरसि चार्पयत् २६
माधवस्तु रणे विद्धो धर्मपुत्रेण मारिष
प्राकम्पत च रोषेण सप्तभिश्चार्दयच्छरैः २७
तस्य पार्थो धनुश्छित्वा हस्तावापं निकृत्य च
प्राहिणोन्निशितान्बाणान्पञ्च राजञ्शिलाशितान् २८
ते तस्य कवचं भित्त्वा हेमचित्रं महाधनम्
प्राविशन्धरणीमुग्रा वल्मीकमिव पन्नगाः २९
अक्ष्णोर्निमेषमात्रेण सोऽन्यदादाय कार्मुकम्
विव्याध पाण्डवं षष्ट्या सूतं च नवभिः शरैः ३०
तस्य शक्तिममेयात्मा पाण्डवो भुजगोपमाम्
चिक्षेप भरतश्रेष्ठ रथे न्यस्य महद्धनुः ३१
सा हेमचित्रा महती पाण्डवेन प्रवेरिता
निर्भिद्य दक्षिणं बाहुं प्राविशद्धरणीतलम् ३२
एतस्मिन्नेव काले तु गृह्य पार्थः पुनर्धनुः
हार्दिक्यं छादयामास शरैः संनतपर्वभिः ३३
ततस्तु समरे शूरो वृष्णीनां प्रवरो रथी

व्यश्वसूतरथं चक्रे निमेषार्धाद्युधिष्ठिरम् ३४
ततस्तु पाण्डवो ज्येष्ठः खड्गचर्म समाददे
तदस्य निशितैर्बाणैर्व्यधमन्माधवो रणे ३५
तोमरं तु ततो गृह्य स्वर्णदण्डं दुरासदम्
प्रेषयत्समरे तूर्णं हार्दिक्यस्य युधिष्ठिरः ३६
तमापतन्तं सहसा धर्मराजभुजच्युतम्
द्विधा चिच्छेद हार्दिक्यः कृतहस्तः स्मयन्निव ३७
ततः शरशतेनाजौ धर्मपुत्रमवाकिरत्
कवचं चास्य संक्रुद्धः शरैस्तीक्ष्णैरदारयत् ३८
हार्दिक्यशरसंछिन्नं कवचं तन्महात्मनः
व्यशीर्यत रणे राजंस्ताराजालमिवाम्बरात् ३९
स छिन्नधन्वा विरथः शीर्णवर्मा शरार्दितः
अपायासीद्रणात्तूर्णं धर्मपुत्रो युधिष्ठिरः ४०
कृतवर्मा तु निर्जित्य धर्मपुत्रं युधिष्ठिरम्
पुनर्द्रोणस्य जुगुपे चक्रमेव महाबलः ४१
इति श्रीमहाभारते द्रोणपर्वणि चत्वारिंशदधिकशततमोऽध्यायः १४०

## एकचत्वारिंशदधिक शततमोऽध्यायः

सञ्जय उवाच
भूरिस्तु समरे राजञ्शैनेयं रथिनां वरम्
आपतन्तमपासेधत्प्रपानादिव कुञ्जरम् १
अथैनं सात्यकिः क्रुद्धः पञ्चभिर्निशितैः शरैः
विव्याध हृदये तूर्णं प्रास्रवत्तस्य शोणितम् २
तथैव कौरवो युद्धे शैनेयं युद्धदुर्मदम्
दशभिर्विशिखैस्तीक्ष्णैरविध्यत भुजान्तरे ३
तावन्योन्यं महाराज ततक्षाते शरैर्भृशम्
क्रोधसंरक्तनयनौ क्रोधाद्विस्फार्य कार्मुके ४
तयोरासीन्महाराज शस्त्रवृष्टिः सुदारुणा
क्रुद्धयोः सायकमुचोर्यमान्तकनिकाशयोः ५
तावन्योन्यं शरै राजन्प्रच्छाद्य समरे स्थितौ

मुहूर्तं चैव तद्युद्धं समरूपमिवाभवत् ६
ततः क्रुद्धो महाराज शैनेयः प्रहसन्निव
धनुश्चिच्छेद समरे कौरव्यस्य महात्मनः ७
अथैनं छिन्नधन्वानं नवभिर्निशितैः शरैः
विव्याध हृदये तूर्णं तिष्ठ तिष्ठेति चाब्रवीत् ८
सोऽतिविद्धो बलवता शत्रुणा शत्रुतापनः
धनुरन्यत्समादाय सात्वतं प्रत्यविध्यत ९
स विद्ध्वा सात्वतं बाणैस्त्रिभिरेव विशांपते
धनुश्चिच्छेद भल्लेन सुतीक्ष्णेन हसन्निव १०
छिन्नधन्वा महाराज सात्यकिः क्रोधमूर्छितः
प्रजहार महावेगां शक्तिं तस्य महोरसि ११
स तु शक्त्या विभिन्नाङ्गो निपपात रथोत्तमात्
लोहिताङ्ग इवाकाशाद्दीप्तरश्मिर्यदृच्छया १२
तं तु दृष्ट्वा हतं शूरमश्वत्थामा महारथः
अभ्यधावत वेगेन शैनेयं प्रति संयुगे
अभ्यवर्षच्छरौघेण मेरुं वृष्ट्या यथाम्बुदः १३
तमापतन्तं संरब्धं शैनेयस्य रथं प्रति
घटोत्कचोऽब्रवीद्राजन्नादं मुक्त्वा महारथः १४
तिष्ठ तिष्ठ न मे जीवन्द्रोणपुत्र गमिष्यसि
एष त्वाद्य हनिष्यामि महिषं स्कन्दराडिव
युद्धश्रद्धामहं तेऽद्य विनेष्यामि रणाजिरे १५
इत्युक्त्वा रोषताम्राक्षो राक्षसः परवीरहा
द्रौणिमभ्यद्रवत्क्रुद्धो गजेन्द्रमिव केसरी १६
रथाक्षमात्रैरिषुभिरभ्यवर्षद्घटोत्कचः
रथिनामृषभं द्रौणिं धाराभिरिव तोयदः १७
शरवृष्टिं तु तां प्राप्तां शरैराशीविषोपमैः
शातयामास समरे तरसा द्रौणिरुत्स्मयन् १८
ततः शरशतैस्तीक्ष्णैर्मर्मभेदिभिराशुगैः
समाचिनोद्राक्षसेन्द्रं घटोत्कचमरिंदम १९
स शरैराचितस्तेन राक्षसो रणमूर्धनि

व्यकाशत महाराज श्वाविच्छललितो यथा २०
ततः क्रोधसमाविष्टो भैमसेनिः प्रतापवान्
शरैरवचकर्तोग्रैर्द्रौणिं वज्राशनिस्वनैः २१
ज्ञुरप्रैरर्धचन्द्रैश्च नाराचैः सशिलीमुखैः
वराहकर्णैर्नालीकैस्तीक्ष्णैश्चापि विकर्णिभिः २२
तां शस्त्रवृष्टिमतुलां वज्राशनिसमस्वनाम्
पतन्तीमुपरि क्रुद्धो द्रौणिरव्यथितेन्द्रियः २३
सुदुःसहां शरैर्घोरैर्दिव्यास्त्रप्रतिमन्त्रितैः
व्यधमत्स महातेजा महाभ्राणीव मारुतः २४
ततोऽन्तरिक्षे बाणानां संग्रामोऽन्य इवाभवत्
घोररूपो महाराज योधानां हर्षवर्धनः २५
ततोऽस्त्रसंघर्षकृतैर्विस्फुलिङ्गैः समन्ततः
बभौ निशामुखे व्योम खद्योतैरिव संवृतम् २६
स मार्गणगणैर्द्रौणिर्दिशः प्रच्छाद्य सर्वतः
प्रियार्थं तव पुत्राणां राक्षसं समवाकिरत् २७
ततः प्रववृते युद्धं द्रौणिराक्षसयोर्मृधे
विगाढे रजनीमध्ये शक्रप्रह्रादयोरिव २८
ततो घटोत्कचो बाणैर्दशभिर्द्रौणिमाहवे
जघानोरसि संक्रुद्धः कालज्वलनसंनिभैः २९
स तैरभ्यायतैर्विद्धो राक्षसेन महाबलः
चचाल समरे द्रौणिर्वातनुन्न इव द्रुमः
स मोहमनुसंप्राप्तो ध्वजयष्टिं समाश्रितः ३०
ततो हाहाकृतं सैन्यं तव सर्वं जनाधिप
हतं स्म मेनिरे सर्वे तावकास्तं विशां पते ३१
तं तु दृष्ट्वा तथावस्थमश्वत्थामानमाहवे
पाञ्चालाः सृञ्जयाश्चैव सिंहनादं प्रचक्रिरे ३२
प्रतिलभ्य ततः संज्ञामश्वत्थामा महाबलः
धनुः प्रतीड्य वामेन करेणामित्रकर्शनः ३३
मुमोचाकर्णपूर्णेन धनुषा शरमुत्तमम्
यमदण्डोपमं घोरमुद्दिश्याशु घटोत्कचम् ३४

स भित्त्वा हृदयं तस्य राक्षसस्य शरोत्तमः
विवेश वसुधामुग्रः सुपुङ्खः पृथिवीपते ३५
सोऽतिविद्धो महाराज रथोपस्थ उपाविशत्
राक्षसेन्द्रः सुबलवान्द्रौणिना रणमानिना ३६
दृष्ट्वा विमूढं हैडिम्बं सारथिस्तं रणाजिरात्
द्रौणेः सकाशात्संभ्रान्तस्त्वपनिन्ये त्वरान्वितः ३७
तथा तु समरे विद्ध्वा राक्षसेन्द्रं घटोत्कचम्
ननाद सुमहानादं द्रोणपुत्रो महाबलः ३८
पूजितस्तव पुत्रैश्च सर्वयोधैश्च भारत
वपुषा प्रतिजज्वाल मध्याह्न इव भास्करः ३९
भीमसेनं तु युध्यन्तं भारद्वाजरथं प्रति
स्वयं दुर्योधनो राजा प्रात्यविध्यच्छितैः शरैः ४०
तं भीमसेनो नवभिः शरैर्विव्याध मारिष
दुर्योधनोऽपि विंशत्या शराणां प्रत्यविध्यत ४१
तौ सायकैरवच्छन्नावदृश्येतां रणाजिरे
मेघजालसमाच्छन्नौ नभसीवेन्दुभास्करौ ४२
अथ दुर्योधनो राजा भीमं विव्याध पत्रिभिः
पञ्चभिर्भरतश्रेष्ठ तिष्ठ तिष्ठेति चाब्रवीत् ४३
तस्य भीमो धनुश्छित्वा ध्वजं च नवभिः शरैः
विव्याध कौरवश्रेष्ठं नवत्या नतपर्वणाम् ४४
ततो दुर्योधनः क्रुद्धो भीमसेनस्य मारिष
चिक्षेप स शरान्राजन्पश्यतां सर्वधन्विनाम् ४५
तान्निहत्य शरान्भीमो दुर्योधनधनुश्च्युतान्
कौरवं पञ्चविंशत्या क्षुद्रकाणां समार्पयत् ४६
दुर्योधनस्तु संक्रुद्धो भीमसेनस्य मारिष
क्षुरप्रेण धनुश्छित्त्वा दशभिः प्रत्यविध्यत ४७
अथान्यद्धनुरादाय भीमसेनो महाबलः
विव्याध नृपतिं तूर्णं सप्तभिर्निशितैः शरैः ४८
तदप्यस्य धनुः क्षिप्रं चिच्छेद लघुहस्तवत्
द्वितीयं च तृतीयं च चतुर्थं पञ्चमं तथा ४९

आत्तमात्तं महाराज भीमस्य धनुराच्छिनत्
तव पुत्रो महाराज जितकाशी मदोत्कटः ५०
स तदा छिद्यमानेषु कार्मुकेषु पुनः पुनः
शक्तिं चिक्षेप समरे सर्वपारशवीं शुभाम् ५१
अप्राप्तामेव तां शक्तिं त्रिधा चिच्छेद कौरवः
पश्यतः सर्वलोकस्य भीमस्य च महात्मनः ५२
ततो भीमो महाराज गदां गुर्वीं महाप्रभाम्
चिक्षेपाविध्य वेगेन दुर्योधनरथं प्रति ५३
ततः सा सहसा वाहांस्तव पुत्रस्य संयुगे
सारथिं च गदा गुर्वी ममर्द भरतर्षभ ५४
पुत्रस्तु तव राजेन्द्र रथाद्धेमपरिष्कृतात्
आप्लुतः सहसा यानं नन्दकस्य महात्मनः ५५
ततो भीमो हतं मत्वा तव पुत्रं महारथम्
सिंहनादं महच्चक्रे तर्जयन्निव कौरवान् ५६
तावकाः सैनिकाश्चापि मेनिरे निहतं नृपम्
ततो विचुक्रुशुः सर्वे हा हेति च समन्ततः ५७
तेषां तु निनदं श्रुत्वा त्रस्तानां सर्वयोधिनाम्
भीमसेनस्य नादं च श्रुत्वा राजन्महात्मनः ५८
ततो युधिष्ठिरो राजा हतं मत्वा सुयोधनम्
अभ्यवर्तत वेगेन यत्र पार्थो वृकोदरः ५९
पाञ्चालाः केकया मत्स्याः सृञ्जयाश्च विशां पते
सर्वोद्योगेनाभिजग्मुर्द्रोणमेव युयुत्सया ६०
तत्रासीत्सुमहद्युद्धं द्रोणस्याथ परैः सह
घोरे तमसि मग्नानां निघ्नतामितरेतरम् ६१
इति श्रीमहाभारते द्रोणपर्वणि एकचत्वारिंशदधिकशततमोऽध्यायः १४१

## द्विचत्वारिंशदधिक शततमोऽध्यायः

सञ्जय उवाच
सहदेवमथायान्तं द्रोणप्रेप्सुं विशां पते
कर्णो वैकर्तनो युद्धे वारयामास भारत १

सहदेवस्तु राधेयं विद्ध्वा नवभिराशुगैः
पुनर्विव्याध दशभिर्निशितैर्नतपर्वभिः २
तं कर्णः प्रतिविव्याध शतेन नतपर्वणाम्
सज्यं चास्य धनुः शीघ्रं चिच्छेद लघुहस्तवत् ३
ततोऽन्यद्धनुरादाय माद्रीपुत्रः प्रतापवान्
कर्णं विव्याध विंशत्या तदद्भुतमिवाभवत् ४
तस्य कर्णो हयान्हत्वा शरैः संनतपर्वभिः
सारथिं चास्य भल्लेन द्रुतं निन्ये यमक्षयम् ५
विरथः सहदेवस्तु खड्गं चर्म समाददे
तदप्यस्य शरैः कर्णो व्यधमत्प्रहसन्निव ६
ततो गुर्वीं महाघोरां हेमचित्रां महागदाम्
प्रेषयामास समरे वैकर्तनरथं प्रति ७
तामापतन्तीं सहसा सहदेवप्रवेरिताम्
व्यष्टम्भयच्छरैः कर्णो भूमौ चैनामपातयत् ८
गदां विनिहतां दृष्ट्वा सहदेवस्त्वरान्वितः
शक्तिं चिक्षेप कर्णाय तामप्यस्याच्छिनच्छरैः ९
ससंभ्रमस्ततस्तूर्णमवप्लुत्य रथोत्तमात्
सहदेवो महाराज दृष्ट्वा कर्णं व्यवस्थितम्
रथचक्रं ततो गृह्य मुमोचाधिरथं प्रति १०
तमापतन्तं सहसा कालचक्रमिवोद्यतम्
शरैरनेकसाहस्रैराच्छिनत्सूतनन्दनः ११
तस्मिंस्तु वितथे चक्रे कृते तेन महात्मना
वार्यमाणश्च विशिखैः सहदेवो रणं जहौ १२
तमभिद्रुत्य राधेयो मुहूर्ताद्भरतर्षभ
अब्रवीत्प्रहसन्वाक्यं सहदेवं विशां पते १३
मा युध्यस्व रणे वीर विशिष्टै रथिभिः सह
सदृशैर्युध्य माद्रेय वचो मे मा विशङ्किथाः १४
अथैनं धनुषोऽग्रेण तुदन्भूयोऽब्रवीद्वचः
एषोऽर्जुनो रणे यत्र युध्यते कुरुभिः सह
तत्र गच्छस्व माद्रेय गृहं वा यदि मन्यसे १५

एवमुक्त्वा तु तं कर्णो रथेन रथिनां वरः
प्रायात्पाञ्चालपाण्डूनां सैन्यानि प्रहसन्निव १६
वधप्राप्तं तु माद्रेयं नावधीत्समरेऽरिहा
कुन्त्याः स्मृत्वा वचो राजन्सत्यसंधो महारथः १७
सहदेवस्ततो राजन्विमनाः शरपीडितः
कर्णवाक्शल्यतप्तश्च जीवितान्निरविद्यत १८
आरुरोह रथं चापि पाञ्चाल्यस्य महात्मनः
जनमेजयस्य समरे त्वरायुक्तो महारथः १९
विराटं सहसेनं तु द्रोणार्थे द्रुतमागतम्
मद्रराजः शरौघेण छादयामास धन्विनम् २०
तयोः समभवद्युद्धं समरे दृढधन्विनोः
यादृशं ह्यभवद्राजञ्जम्भवासवयोः पुरा २१
मद्रराजो महाराज विराटं वाहिनीपतिम्
आजघ्ने त्वरितं तीक्ष्णैः शतेन नतपर्वणाम् २२
प्रतिविव्याध तं राजा नवभिर्निशितैः शरैः
पुनश्चैव त्रिसप्तत्या भूयश्चैव शतेन ह २३
तस्य मद्राधिपो हत्वा चतुरो रथवाजिनः
सूतं ध्वजं च समरे रथोपस्थादपातयत् २४
हताश्वात्तु रथात्तूर्णमवप्लुत्य महारथः
तस्थौ विस्फारयंश्चापं विमुञ्चंश्च शिताञ्शरान् २५
शतानीकस्ततो दृष्ट्वा भ्रातरं हतवाहनम्
रथेनाभ्यपतत्तूर्णं सर्वलोकस्य पश्यतः २६
शतानीकमथायान्तं मद्रराजो महामृधे
विशिखैर्बहुभिर्विद्ध्वा ततो निन्ये यमक्षयम् २७
तस्मिंस्तु निहते वीरे विराटो रथसत्तमः
आरुरोह रथं तूर्णं तमेव ध्वजमालिनम् २८
ततो विस्फार्य नयने क्रोधाद्द्विगुणविक्रमः
मद्रराजरथं तूर्णं छादयामास पत्रिभिः २९
ततो मद्राधिपः क्रुद्धः शतेन नतपर्वणाम्
आजघानोरसि दृढं विराटं वाहिनीपतिम् ३०

सोऽतिविद्धो महाराज रथोपस्थ उपाविशत्
कश्मलं चाविशत्तीव्रं विराटो भरतर्षभ
सारथिस्तमपोवाह समरे शरविक्षतम् ३१
ततः सा महती सेना प्राद्रवन्निशि भारत
वध्यमाना शरशतैः शल्येनाहवशोभिना ३२
तां दृष्ट्वा विद्रुतां सेनां वासुदेवधनंजयौ
प्रायातां तत्र राजेन्द्र यत्र शल्यो व्यवस्थितः ३३
तौ तु प्रत्युद्ययौ राजन्राक्षसेन्द्रो ह्यलम्बुसः
अष्टचक्रसमायुक्तमास्थाय प्रवरं रथम् ३४
तुरंगममुखैर्युक्तं पिशाचैर्घोरदर्शनैः
लोहितार्द्रपताकं तं रक्तमाल्यविभूषितम्
कार्ष्णायसमयं घोरमृक्षचर्मावृतं महत् ३५
रौद्रेण चित्रपक्षेण विवृताक्षेण कूजता
ध्वजेनोच्छ्रिततुण्डेन गृध्रराजेन राजता ३६
स बभौ राक्षसो राजन्भिन्नाञ्जनचयोपमः
रुरोधार्जुनमायान्तं प्रभञ्जनमिवाद्रिराट्
किरन्बाणगणान्राजञ्शतशोऽर्जुनमूर्धनि ३७
अतितीव्रमभूद्युद्धं नरराक्षसयोर्मृधे
द्रष्टॄणां प्रीतिजननं सर्वेषां भरतर्षभ ३८
तमर्जुनः शतेनैव पत्रिणामभ्यताडयत्
नवभिश्च शितैर्बाणैश्चिच्छेद ध्वजमुच्छ्रितम् ३९
सारथिं च त्रिभिर्बाणैस्त्रिभिरेव त्रिवेणुकम्
धनुरेकेन चिच्छेद चतुर्भिश्चतुरो हयान्
विरथस्योद्यतं खड्गं शरेणास्य द्विधाच्छिनत् ४०
अथैनं निशितैर्बाणैश्चतुर्भिर्भरतर्षभ
पार्थोऽदयद्राक्षसेन्द्रं स विद्धः प्राद्रवद्भयात् ४१
तं विजित्यार्जुनस्तूर्णं द्रोणान्तिकमुपाययौ
किरञ्शरगणान्राजन्नरवारणवाजिषु ४२
वध्यमाना महाराज पाण्डवेन यशस्विना
सैनिका न्यपतन्नुर्व्यां वातनुन्ना इव द्रुमाः ४३

तेषु तूत्साद्यमानेषु फल्गुनेन महात्मना
संप्राद्रवद्बलं सर्वं पुत्राणां ते विशां पते ४४
इति श्रीमहाभारते द्रोणपर्वणि द्विचत्वारिंशदधिकशततमोऽध्यायः १४२

## त्रिचत्वारिंशदधिक शततमोऽध्यायः

सञ्जय उवाच
शतानीकं शरैस्तूर्णं निर्दहन्तं चमूं तव
चित्रसेनस्तव सुतो वारयामास भारत १
नाकुलिश्चित्रसेनं तु नाराचेनार्दयद्भृशम्
स च तं प्रतिविव्याध दशभिर्निशितैः शरैः २
चित्रसेनो महाराज शतानीकं पुनर्युधि
नवभिर्निशितैर्बाणैराजघान स्तनान्तरे ३
नाकुलिस्तस्य विशिखैर्वर्म संनतपर्वभिः
गात्रात्संच्यावयामास तदद्भुतमिवाभवत् ४
सोऽपेतवर्मा पुत्रस्ते विरराज भृशं नृप
उत्सृज्य काले राजेन्द्र निर्मोकमिव पन्नगः ५
ततोऽस्य निशितैर्बाणैर्ध्वजं चिच्छेद नाकुलि
धनुश्चैव महाराज यतमानस्य संयुगे ६
स छिन्नधन्वा समरे विवर्मा च महारथः
धनुरन्यन्महाराज जग्राहारिविदारणम् ७
ततस्तूर्णं चित्रसेनो नाकुलि नवभिः शरैः
विव्याध समरे क्रुद्धो भरतानां महारथः ८
शतानीकोऽथ संक्रुद्धश्चित्रसेनस्य मारिष
जघान चतुरो वाहान्सारथिं च नरोत्तमः ९
अवप्लुत्य रथात्तस्माच्चित्रसेनो महारथः
नाकुलि पञ्चविंशत्या शराणामार्दयद्बली १०
तस्य तत्कुर्वतः कर्म नकुलस्य सुतो रणे
अर्धचन्द्रेण चिच्छेद चापं रत्नविभूषितम् ११
स छिन्नधन्वा विरथो हताश्वो हतसारथिः
आरुरोह रथं तूर्णं हार्दिक्यस्य महात्मनः १२

द्रुपदं तु सहानीकं द्रोणप्रेप्सुं महारथम्
वृषसेनोऽभ्ययात्तूर्णं किरञ्शरशतैस्तदा १३
यज्ञसेनस्तु समरे कर्णपुत्रं महारथम्
षष्ट्या शराणां विव्याध बाह्वोरुरसि चानघ १४
वृषसेनस्तु संक्रुद्धो यज्ञसेनं रथे स्थितम्
बहुभिः सायकैस्तीक्ष्णैराजघान स्तनान्तरे १५
तावुभौ शरनुन्नाङ्गौ शरकण्टकिनौ रणे
व्यभ्राजेतां महाराज श्वाविधौ शललैरिव १६
रुक्मपुङ्खैरजिह्माग्रैः शरैश्छिन्नतनुच्छदौ
रुधिरौघपरिक्लिन्नौ व्यभ्राजेतां महामृधे १७
तपनीयनिभौ चित्रौ कल्पवृक्षाविवाद्भुतौ
किंशुकाविव चोत्फुल्लौ व्यकाशेतां रणाजिरे १८
वृषसेनस्ततो राजन्नवभिर्द्रुपदं शरैः
विद्ध्वा विव्याध सप्तत्या पुनश्चान्यैस्त्रिभिः शरैः १९
ततः शरसहस्राणि विमुञ्चन्विबभौ तदा
कर्णपुत्रो महाराज वर्षमाण इवाम्बुदः २०
ततस्तु द्रुपदानीकं शरैश्छिन्नतनुच्छदम्
संप्राद्रवद्रणे राजन्निशीथे भैरवे सति २१
प्रदीपैर्हि परित्यक्तैर्ज्वलद्भिस्तैः समन्ततः
व्यराजत मही राजन्वीताभ्रा द्यौरिव ग्रहैः २२
तथाङ्गदैर्निपतितैर्व्यराजत वसुंधरा
प्रावृट्काले महाराज विद्युद्भिरिव तोयदः २३
ततः कर्णसुतत्रस्ताः सोमका विप्रदुद्रुवुः
यथेन्द्रभयवित्रस्ता दानवास्तारकामये २४
तेनार्द्यमानाः समरे द्रवमाणाश्च सोमकाः
व्यराजन्त महाराज प्रदीपैरवभासिताः २५
तांस्तु निर्जित्य समरे कर्णपुत्रो व्यरोचत
मध्यंदिनमनुप्राप्तो घर्मांशुरिव भारत २६
तेषु राजसहस्रेषु तावकेषु परेषु च
एक एव ज्वलंस्तस्थौ वृषसेनः प्रतापवान् २७

स विजित्य रणे शूरान्सोमकानां महारथान्
जगाम त्वरितस्तत्र यत्र राजा युधिष्ठिरः २८
प्रतिविन्ध्यमथ क्रुद्धं प्रदहन्तं रणे रिपून्
दुःशासनस्तव सुतः प्रत्युद्गच्छन्महारथः २९
तयोः समागमो राजंश्चित्ररूपो बभूव ह
व्यपेतजलदे व्योम्नि बुधभार्गवयोरिव ३०
प्रतिविन्ध्यं तु समरे कुर्वाणं कर्म दुष्करम्
दुःशासनस्त्रिभिर्बाणैर्ललाटे समविध्यत ३१
सोऽतिविद्धो बलवता पुत्रेण तव धन्विना
विरराज महाबाहुः सशृङ्ग इव पर्वतः ३२
दुःशासनं तु समरे प्रतिविन्ध्यो महारथः
नवभिः सायकैर्विद्ध्वा पुनर्विव्याध सप्तभिः ३३
तत्र भारत पुत्रस्ते कृतवान्कर्म दुष्करम्
प्रतिविन्ध्यहयानुग्रैः पातयामास यच्छरैः ३४
सारथिं चास्य भल्लेन ध्वजं च समपातयत्
रथं च शतशो राजन्व्यधमत्तस्य धन्विनः ३५
पताकाश्च स तूणीरान्रश्मीन्योक्त्राणि चाभिभो
चिच्छेद तिलशः क्रुद्धः शरैः संनतपर्वभिः ३६
विरथः स तु धर्मात्मा धनुष्पाणिरवस्थितः
अयोधयत्तव सुतं किरञ्शरशतान्बहून् ३७
क्षुरप्रेण धनुस्तस्य चिच्छेद कृतहस्तवत्
अथैनं दशभिर्भल्लैश्छिन्नधन्वानमार्दयत् ३८
तं दृष्ट्वा विरथं तत्र भ्रातरोऽस्य महारथाः
अन्ववर्तन्त वेगेन महत्या सेनया सह ३९
आप्लुतः स ततो यानं सुतसोमस्य भास्वरम्
धनुर्गृह्य महाराज विव्याध तनयं तव ४०
ततस्तु तावकाः सर्वे परिवार्य सुतं तव
अभ्यवर्तन्त संग्रामे महत्या सेनया वृताः ४१
ततः प्रववृते युद्धं तव तेषां च भारत
निशीथे दारुणे काले यमराष्ट्रविवर्धनम् ४२

इति श्रीमहाभारते द्रोणपर्वणि त्रिचत्वारिंशदधिकशततमोऽध्यायः १४३

## चतुश्चत्वारिंशदधिक शततमोऽध्यायः

सञ्जय उवाच
नकुलं रभसं युद्धे निघ्नन्तं वाहिनीं तव
अभ्ययात्सौबलः क्रुद्धस्तिष्ठ तिष्ठेति चाब्रवीत् १
कृतवैरौ तु तौ वीरावन्योन्यवधकाङ्क्षिणौ
शरैः पूर्णायतोत्सृष्टैरन्योन्यमभिजघ्नतुः २
यथैव सौबलः क्षिप्रं शरवर्षाणि मुञ्चति
तथैव नकुलो राजञ्शिक्षां संदर्शयन्युधि ३
तावुभौ समरे शूरौ शरकण्टकिनौ तदा
व्यराजेतां महाराज कण्टकैरिव शाल्मली ४
सुजिह्मं प्रेक्षमाणौ च राजन्विवृतलोचनौ
क्रोधसंरक्तनयनौ निर्दहन्तौ परस्परम् ५
श्यालस्तु तव संक्रुद्धो माद्रीपुत्रं हसन्निव
कर्णिनैकेन विव्याध हृदये निशितेन ह ६
नकुलस्तु भृशं विद्धः श्यालेन तव धन्विना
निषसाद रथोपस्थे कश्मलं चैनमाविशत् ७
अत्यन्तवैरिणं दृप्तं दृष्ट्वा शत्रुं तथागतम्
ननाद शकुनी राजंस्तपान्ते जलदो यथा ८
प्रतिलभ्य ततः संज्ञां नकुलः पाण्डुनन्दनः
अभ्ययात्सौबलं भूयो व्यात्तानन इवान्तकः ९
संक्रुद्धः शकुनिं षष्ट्या विव्याध भरतर्षभ
पुनश्चैव शतेनैव नाराचानां स्तनान्तरे १०
ततोऽस्य सशरं चापं मुष्टिदेशे स चिच्छिदे
ध्वजं च त्वरितं छित्त्वा रथाद्भूमावपातयत् ११
सोऽतिविद्धो महाराज रथोपस्थ उपाविशत्
तं विसंज्ञं निपतितं दृष्ट्वा श्यालं तवानघ
अपोवाह रथेनाशु सारथिर्ध्वजिनीमुखात् १२
ततः संचुक्रुशुः पार्था ये च तेषां पदानुगाः

निर्जित्य च रणे शत्रून्नकुलः शत्रुतापनः
अब्रवीत्सारथिं क्रुद्धो द्रोणानीकाय मां वह १३
तस्य तद्वचनं श्रुत्वा माद्रीपुत्रस्य धीमतः
प्रायात्तेन रणे राजन्येन द्रोणोऽन्वयुध्यत १४
शिखण्डिनं तु समरे द्रोणप्रेप्सुं विशां पते
कृपः शारद्वतो यत्तः प्रत्युद्गच्छत्सुवेगितः १५
गौतमं द्रुतमायान्तं द्रोणान्तिकमरिंदमम्
विव्याध नवभिर्भल्लैः शिखण्डी प्रहसन्निव १६
तमाचार्यो महाराज विद्ध्वा पञ्चभिराशुगैः
पुर्विव्याध विंशत्या पुत्राणां प्रियकृत्तव १७
महद्युद्धं तयोरासीद्घोररूपं विशां पते
यथा देवासुरे युद्धे शम्बरामरराजयोः १८
शरजालावृतं व्योम चक्रतुस्तौ महारथौ
प्रकृत्या घोररूपं तदासीद्घोरतरं पुनः १९
रात्रिश्च भरतश्रेष्ठ योधानां युद्धशालिनाम्
कालरात्रिनिभा ह्यासीद्घोररूपा भयावहा २०
शिखण्डी तु महाराज गौतमस्य महद्धनुः
अर्धचन्द्रेण चिच्छेद सज्यं सविशिखं तदा २१
तस्य क्रुद्धः कृपो राजञ्शक्तिं चिक्षेप दारुणाम्
स्वर्णदण्डामकुण्ठाग्रां कर्मारपरिमार्जिताम् २२
तामापतन्तीं चिच्छेद शिखण्डी बहुभिः शरैः
सापतन्मेदिनीं दीप्ता भासयन्ती महाप्रभा २३
अथान्यद्धनुरादाय गौतमो रथिनां वरः
प्राच्छादयच्छितैर्बाणैर्महाराज शिखण्डिनम् २४
स छाद्यमानः समरे गौतमेन यशस्विना
व्यषीदत रथोपस्थे शिखण्डी रथिनां वरः २५
सीदन्तं चैनमालोक्य कृपः शारद्वतो युधि
आजघ्ने बहुभिर्बाणैर्जिघांसन्निव भारत २६
विमुखं तं रणे दृष्ट्वा याज्ञसेनिं महारथम्
पाञ्चालाः सोमकाश्चैव परिवव्रुः समन्ततः २७

तथैव तव पुत्राश्च परिवव्रुर्द्विजोत्तमम्
महत्या सेनया सार्धं ततो युद्धमभूत्पुनः २८
रथानां च रणे राजन्नन्योन्यमभिधावताम्
बभूव तुमुलः शब्दो मेघानां नदतामिव २९
द्रवतां सादिनां चैव गजानां च विशां पते
अन्योन्यमभितो राजन्क्रूरमायोधनं बभौ ३०
पत्तीनां द्रवतां चैव पदशब्देन मेदिनी
अकम्पत महाराज भयत्रस्तेव चाङ्गना ३१
रथा रथान्समासाद्य प्रद्रुता वेगवत्तरम्
न्यगृह्णन्बहवो राजञ्शलभान्वायसा इव ३२
तथा गजान्प्रभिन्नांश्च सुप्रभिन्ना महागजाः
तस्मिन्नेव पदे यत्ता निगृह्णन्ति स्म भारत ३३
सादी सादिनमासाद्य पदाती च पदातिनम्
समासाद्य रणेऽन्योन्यं संरब्धा नातिचक्रमुः ३४
धावतां द्रवतां चैव पुनरावर्ततामपि
बभूव तत्र सैन्यानां शब्दः सुतुमुलो निशि ३५
दीप्यमानाः प्रदीपाश्च रथवारणवाजिषु
अदृश्यन्त महाराज महोल्का इव खाच्च्युताः ३६
सा निशा भरतश्रेष्ठ प्रदीपैरवभासिता
दिवसप्रतिमा राजन्बभूव रणमूर्धनि ३७
आदित्येन यथा व्याप्तं तमो लोके प्रणश्यति
तथा नष्टं तमो घोरं दीपैर्दीप्तैरलंकृतम् ३८
शस्त्राणां कवचानां च मणीनां च महात्मनाम्
अन्तर्दधुः प्रभाः सर्वा दीपैस्तैरवभासिताः ३९
तस्मिन्कोलाहले युद्धे वर्तमाने निशामुखे
अवधीत्समरे पुत्रं पिता भरतसत्तम ४०
पुत्रश्च पितरंमोहात्सखायं च सखा तथा
संबन्धिनं च संबन्धी स्वस्त्रीयं चापि मातुलः ४१
स्वे स्वान्परे परांश्चापि निजघ्नुरितरेतरम्
निर्मर्यादमभूद्युद्धं रात्रौ घोरं भयावहम् ४२

इति श्रीमहाभारते द्रोणपर्वणि चतुश्चत्वारिंशदधिकशततमोऽध्यायः १४४

पञ्चचत्वारिंशदधिक शततमोऽध्यायः

सञ्जय उवाच
तस्मिन्सुतुमुले युद्धे वर्तमाने भयावहे
धृष्टद्युम्नो महाराज द्रोणमेवाभ्यवर्तत १
संमृजानो धनुः श्रेष्ठं ज्यां विकर्षन्पुनः पुनः
अभ्यवर्तत द्रोणस्य रथं रुक्मविभूषितम् २
धृष्टद्युम्नं तदायान्तं द्रोणस्यान्तचिकीर्षया
परिवव्रुर्महाराज पाञ्चालाः पाण्डवैः सह ३
तथा परिवृतं दृष्ट्वा द्रोणमाचार्यसत्तमम्
पुत्रास्ते सर्वतो यत्ता ररक्षुर्द्रोणमाहवे ४
बलार्णवौ ततस्तौ तु समेयातां निशामुखे
वातोद्धूतौ क्षुब्धसत्त्वौ भैरवौ सागराविव ५
ततो द्रोणं महाराज पाञ्चाल्यः पञ्चभिः शरैः
विव्याध हृदये तूर्णं सिंहनादं ननाद च ६
तं द्रोणः पञ्चविंशत्या विद्ध्वा भारत संयुगे
चिच्छेदान्येन भल्लेन धनुरस्य महाप्रभम् ७
धृष्टद्युम्नस्तु निर्विद्धो द्रोणेन भरतर्षभ
उत्ससर्ज धनुस्तूर्णं संदश्य दशनच्छदम् ८
ततः क्रुद्धो महाराज धृष्टद्युम्नः प्रतापवान्
आददेऽन्यद्धनुः श्रेष्ठं द्रोणस्यान्तचिकीर्षया ९
विकृष्य च धनुश्चित्रमाकर्णात्परवीरहा
द्रोणस्यान्तकरं घोरं व्यसृजत्सायकं ततः १०
स विसृष्टो बलवता शरो घोरो महामृधे
भासयामास तत्सैन्यं दिवाकर इवोदितः ११
तं दृष्ट्वा तु शरं घोरं देवगन्धर्वमानवाः
स्वस्त्यस्तु समरे राजन्द्रोणायेत्यब्रुवन्वचः १२
तं तु सायकमप्राप्तमाचार्यस्य रथं प्रति
कर्णो द्वादशधा राजंश्चिच्छेद कृतहस्तवत् १३

स छिन्नो बहुधा राजन्सूतपुत्रेण मारिष
निपपात शरस्तूर्णं निकृत्तः कर्णसायकैः १४
छित्त्वा तु समरे बाणं शरैः संनतपर्वभिः
धृष्टद्युम्नं रणे कर्णो विव्याध दशभिः शरैः १५
पञ्चभिर्द्रोणपुत्रस्तु स्वयं द्रोणश्च सप्तभिः
शल्यश्च नवभिर्बाणैस्त्रिभिर्दुःशासनस्तथा १६
दुर्योधनश्च विंशत्या शकुनिश्चापि पञ्चभिः
पाञ्चाल्यं त्वरिताविध्यन्सर्व एव महारथाः १७
स विद्धः सप्तभिर्वीरैर्द्रोणत्राणार्थमाहवे
सर्वानसंभ्रमाद्राजन्प्रत्यविध्यत्त्रिभिस्त्रिभिः
द्रोणं द्रौणिं च कर्णं च विव्याध तव चात्मजम् १८
ते विद्ध्वा धन्विना तेन धृष्टद्युम्नं पुनर्मृधे
विव्यधुः पञ्चभिस्तूर्णमेकैको रथिनां वरः १९
द्रुमसेनस्तु संक्रुद्धो राजन्विव्याध पत्रिणा
त्रिभिश्चान्यैः शरैस्तूर्णं तिष्ठ तिष्ठेति चाब्रवीत् २०
स तु तं प्रतिविव्याध त्रिभिस्तीक्ष्णैरजिह्मगैः
स्वर्णपुङ्खैः शिलाधौतैः प्राणान्तकरणैर्युधि २१
भल्लेनान्येन तु पुनः सुवर्णोज्ज्वलकुण्डलम्
उन्ममाथ शिरः कायाद्द्रुमसेनस्य वीर्यवान् २२
तच्छिरो न्यपतद्भूमौ संदष्टौष्ठपुटं रणे
महावातसमुद्धूतं पक्वं तालफलं यथा २३
तांश्च विद्ध्वा पुनर्वीरान्वीरः सुनिशितैः शरैः
राधेयस्याच्छिनद्भल्लैः कार्मुकं चित्रयोधिनः २४
न तु तन्ममृषे कर्णो धनुषश्छेदनं तथा
निकर्तनमिवात्युग्रो लाङ्गूलस्य यथा हरिः २५
सोऽन्यद्धनुः समादाय क्रोधरक्तेक्षणः श्वसन्
अभ्यवर्षच्छरौघैस्तं धृष्टद्युम्नं महाबलम् २६
दृष्ट्वा तु कर्णं संरब्धं ते वीराः षड्रथर्षभाः
पाञ्चाल्यपुत्रं त्वरिताः परिवव्रुर्जिघांसया २७
षण्णां योधप्रवीराणां तावकानां पुरस्कृतम्

मृत्योरास्यमनुप्राप्तं धृष्टद्युम्नममंस्महि २८
एतस्मिन्नेव काले तु दाशार्हो विकिरञ्शरान्
धृष्टद्युम्नं पराक्रान्तं सात्यकिः प्रत्यपद्यत २९
तमायान्तं महेष्वासं सात्यकिं युद्धदुर्मदम्
राधेयो दशभिर्बाणैः प्रत्यविध्यदजिह्मगैः ३०
तं सात्यकिर्महाराज विव्याध दशभिः शरैः
पश्यतां सर्ववीराणां मागास्तिष्ठेति चाब्रवीत् ३१
स सात्यकेस्तु बलिनः कर्णस्य च महात्मनः
आसीत्समागमो घोरो बलिवासवयोरिव ३२
त्रासयंस्तलघोषेण क्षत्रियान्क्षत्रियर्षभः
राजीवलोचनं कर्णं सात्यकिः प्रत्यविध्यत ३३
कम्पयन्निव घोषेण धनुषो वसुधां बली
सूतपुत्रो महाराज सात्यकिं प्रत्ययोधयत् ३४
विपाठकर्णिनाराचैर्वत्सदन्तैः क्षुरैरपि
कर्णः शरशतैश्चापि शैनेयं प्रत्यविध्यत ३५
तथैव युयुधानोऽपि वृष्णीनां प्रवरो रथः
अभ्यवर्षच्छरैः कर्णं तद्युद्धमभवत्समम् ३६
तावकाश्च महाराज कर्णपुत्रश्च दंशितः
सात्यकिं विव्यधुस्तूर्णं समन्तान्निशितैः शरैः ३७
अस्त्रैरस्त्राणि संवार्य तेषां कर्णस्य चाभिभो
अविध्यत्सात्यकिः क्रुद्धो वृषसेनं स्तनान्तरे ३८
तेन बाणेन निर्विद्धो वृषसेनो विशां पते
न्यपतत्स रथे मूढो धनुरुत्सृज्य वीर्यवान् ३९
ततः कर्णो हतं मत्वा वृषसेनं महारथः
पुत्रशोकाभिसंतप्तः सात्यकिं प्रत्यपीडयत् ४०
पीड्यमानस्तु कर्णेन युयुधानो महारथः
विव्याध बहुभिः कर्णं त्वरमाणः पुनः पुनः ४१
स कर्णं दशभिर्विद्ध्वा वृषसेनं च सप्तभिः
सहस्तावापधनुषी तयोश्चिच्छेद सात्वतः ४२
तावन्ये धनुषी सज्ये कृत्वा शत्रुभयंकरे

युयुधानमविध्येतां समन्तान्निशितैः शरैः ४३
वर्तमाने तु संग्रामे तस्मिन्वीरवरक्षये
अतीव शुश्रुवे राजन्गाण्डीवस्य महास्वनः ४४
श्रुत्वा तु रथनिर्घोषं गाण्डीवस्य च निस्वनम्
सूतपुत्रोऽब्रवीद्राजन्दुर्योधनमिदं वचः ४५
एष सर्वाञ्शिबीन्हत्वा मुख्यशश्च नरर्षभान्
पौरवांश्च महेष्वासान्गाण्डीवनिनदो महान् ४६
श्रूयते रथघोषश्च वासवस्येव नर्दतः
करोति पाण्डवो व्यक्तं कर्मौपयिकमात्मनः ४७
एषा विदीर्यते राजन्बहुधा भारती चमूः
विप्रकीर्णान्यनीकानि नावतिष्ठन्ति कर्हिचित् ४८
वातेनेव समुद्धूतमभ्रजालं विदीर्यते
सव्यसाचिनमासाद्य भिन्ना नौरिव सागरे ४९
द्रवतां योधमुख्यानां गाण्डीवप्रेषितैः शरैः
विद्धानां शतशो राजञ्श्रूयते निनदो महान्
निशीथे राजशार्दूल स्तनयित्नोरिवाम्बरे ५०
हाहाकाररवांश्चैव सिंहनादांश्च पुष्कलान्
शृणु शब्दान्बहुविधानर्जुनस्य रथं प्रति ५१
अयं मध्ये स्थितोऽस्माकं सात्यकिः सात्वताधमः
इह चेल्लभ्यते लक्ष्यं कृत्स्नाञ्जेष्यामहे परान् ५२
एष पाञ्चालराजस्य पुत्रो द्रोणेन संगतः
सर्वतः संवृतो योधै राजन्पुरुषसत्तमैः ५३
सात्यकिं यदि हन्यामो धृष्टद्युम्नं च पार्षतम्
असंशयं महाराज ध्रुवो नो विजयो भवेत् ५४
सौभद्रवदिमौ वीरौ परिवार्य महारथौ
प्रयतामो महाराज निहन्तुं वृष्णिपार्षतौ ५५
सव्यसाची पुरोऽभ्येति द्रोणानीकाय भारत
संसक्तं सात्यकिं ज्ञात्वा बहुभिः कुरुपुंगवैः ५६
तत्र गच्छन्तु बहवः प्रवरा रथसत्तमाः
यावत्पार्थो न जानाति सात्यकिं बहुभिर्वृतम् ५७

ते त्वरध्वं यथा शूराः शराणां मोक्षणे भृशम्
यथा तूर्णं व्रजत्येष परलोकाय माधवः ५८
कर्णस्य मतमाज्ञाय पुत्रस्ते प्राह सौबलम्
यथेन्द्रः समरे राजन्प्राह विष्णुं यशस्विनम् ५९
वृतः सहस्रैर्दशभिर्गजानामनिवर्तिनाम्
रथैश्च दशसाहस्रैर्वृतो याहि धनंजयम् ६०
दुःशासनो दुर्विषहः सुबाहुर्दुष्प्रधर्षणः
एते त्वामनुयास्यन्ति पत्तिभिर्बहुभिर्वृताः ६१
जहि कृष्णौ महाबाहो धर्मराजं च मातुल
नकुलं सहदेवं च भीमसेनं च भारत ६२
देवानामिव देवेन्द्रे जयाशा मे त्वयि स्थिता
जहि मातुल कौन्तेयानसुरानिव पावकिः ६३
एवमुक्तो ययौ पार्थान्पुत्रेण तव सौबलः
महत्या सेनया सार्धं तव पुत्रैस्तथा विभो ६४
प्रियार्थं तव पुत्राणां दिधक्षुः पाण्डुनन्दनान्
ततः प्रववृते युद्धं तावकानां परैः सह ६५
प्रयाते सौबले राजन्पाण्डवानामनीकिनीम्
बलेन महता युक्तः सूतपुत्रस्तु सात्वतम् ६६
अभ्ययात्त्वरितं युद्धे किरञ्शरशतान्बहून्
तथैव पाण्डवाः सर्वे सात्यकिं पर्यवारयन् ६७
महद्युद्धं तदासीत्तु द्रोणस्य निशि भारत
धृष्टद्युम्नेन शूरेण पाञ्चालैश्च महात्मनः ६८
इति श्रीमहाभारते द्रोणपर्वणि पञ्चचत्वारिंशदधिकशततमोऽध्यायः १४५

## षट्चत्वारिंशदधिकशततमोऽध्यायः

सञ्जय उवाच
ततस्ते प्राद्रवन्सर्वे त्वरिता युद्धदुर्मदाः
अमृष्यमाणाः संरब्धा युयुधानरथं प्रति १
ते रथैः कल्पितै राजन्हेमरूप्यविभूषितैः
सादिभिश्च गजैश्चैव परिवव्रुः स्म सात्वतम् २

अथैनं कोष्ठकीकृत्य सर्वतस्ते महारथाः
सिंहनादांस्तदा चक्रुस्तर्जयन्तः स्म सात्यकिम् ३
तेऽभ्यवर्षञ्शरैस्तीक्ष्णैः सात्यकिं सत्यविक्रमम्
त्वरमाणा महावीर्या माधवस्य वधैषिणः ४
तान्दृष्ट्वा पततस्तूर्णं शैनेयः परवीरहा
प्रत्यगृह्णान्महाबाहुः प्रमुञ्चन्विशिखान्बहून् ५
तत्र वीरो महेष्वासः सात्यकिर्युद्धदुर्मदः
निचकर्त शिरांस्युग्रैः शरैः संनतपर्वभिः ६
हस्तिहस्तान्हयग्रीवान्बाहूनपि च सायुधान्
क्षुरप्रैः पातयामास तावकानां स माधवः ७
पतितैश्चामरैश्चैव श्वेतच्छत्रैश्च भारत
बभूव धरणी पूर्णा नक्षत्रैर्द्यौरिव प्रभो ८
तेषां तु युयुधानेन युध्यतां युधि भारत
बभूव तुमुलः शब्दः प्रेतानामिव क्रन्दताम् ९
तेन शब्देन महता पूरितासीद्वसुंधरा
रात्रिः समभवच्चैव तीव्ररूपा भयावहा १०
दीर्यमाणं बलं दृष्ट्वा युयुधानशराहतम्
श्रुत्वा च विपुलं नादं निशीथे लोमहर्षणम् ११
सुतस्तवाब्रवीद्राजन्सारथिं रथिनां वरः
यत्रैष शब्दस्तत्राश्वांश्चोदयेति पुनः पुनः १२
तेन संचोद्यमानस्तु ततस्तांस्तुरगोत्तमान्
सूतः संचोदयामास युयुधानरथं प्रति १३
ततो दुर्योधनः क्रुद्धो दृढधन्वा जितक्लमः
शीघ्रहस्तश्चित्रयोधी युयुधानमुपाद्रवत् १४
ततः पूर्णायतोत्सृष्टैर्मांसशोणित भोजनैः
दुर्योधनं द्वादशभिर्माधवः प्रत्यविध्यत १५
दुर्योधनस्तेन तथा पूर्वमेवार्दितः शरैः
शैनेयं दशभिर्बाणैः प्रत्यविध्यदमर्षितः १६
ततः समभवद्युद्धमाकुलं भरतर्षभ
पाञ्चालानां च सर्वेषां भारतानां च दारुणम् १७

शैनेयस्तु रणे क्रुद्धस्तव पुत्रं महारथम्
सायकानामशीत्या तु विव्याधोरसि भारत १८
ततोऽस्य वाहान्समरे शरैर्निन्ये यमक्षयम्
सारथिं च रथात्तूर्णं पातयामास पत्रिणा १९
हताश्वे तु रथे तिष्ठन्पुत्रस्तव विशां पते
मुमोच निशितान्बाणाञ्शैनेयस्य रथं प्रति २०
शरान्पञ्चाशतस्तांस्तु शैनेयः कृतहस्तवत्
चिच्छेद समरे राजन्प्रेषितांस्तनयेन ते २१
अथापरेण भल्लेन मुष्टिदेशे महद्धनुः
चिच्छेद रभसो युद्धे तव पुत्रस्य मारिष २२
विरथो विधनुष्कश्च सर्वलोकेश्वरः प्रभुः
आरुरोह रथं तूर्णं भास्करं कृतवर्मणः २३
दुर्योधने परावृत्ते शैनेयस्तव वाहिनीम्
द्रावयामास विशिखैर्निशामध्ये विशां पते २४
शकुनिश्चार्जुनं राजन्परिवार्य समन्ततः
रथैरनेकसाहस्रैर्गजैश्चैव सहस्रशः
तथा हयसहस्रैश्च तुमुलं सर्वतोऽकरोत् २५
ते महास्त्राणि दिव्यानि विकिरन्तोऽजुनं प्रति
अर्जुनं योधयन्ति स्म क्षत्रियाः कालचोदिताः २६
तान्यर्जुनः सहस्राणि रथवारणवाजिनाम्
प्रत्यवारयदायस्तः प्रकुर्वन्विपुलं क्षयम् २७
ततस्तु समरे शूरः शकुनिः सौबलस्तदा
विव्याध निशितैर्बाणैरर्जुनं प्रहसन्निव २८
पुनश्चैव शतेनास्य संरुरोध महारथम्
तमर्जुनस्तु विंशत्या विव्याध युधि भारत २९
अथेतरान्महेष्वासांस्त्रिभिस्त्रिभिरविध्यत
संवार्य तान्बाणगणैर्युधि राजन्धनंजयः
अवधीत्तावकान्योधान्वज्रपाणिरिवासुरान् ३०
भुजैश्छिन्नैर्महाराज शरीरैश्च सहस्रशः
समास्तीर्णा धरा तत्र बभौ पुष्पैरिवाचिता ३१

स विद्ध्वा शकुनिं भूयः पञ्चभिर्नतपर्वभिः
उलूकं त्रिभिराजघ्ने त्रिभिरेव महायसैः ३२
तमुलूकस्तथा विद्ध्वा वासुदेवमताडयत्
ननाद च महानादं पूरयन्वसुधातलम् ३३
अर्जुनस्तु द्रुतं गत्वा शकुनेर्धनुराच्छिनत्
निन्ये च चतुरो वाहान्यमस्य सदनं प्रति ३४
ततो रथादवप्लुत्य सौबलो भरतर्षभ
उलूकस्य रथं तूर्णमारुरोह विशां पते ३५
तावेकरथमारूढौ पितापुत्रौ महारथौ
पार्थं सिषिचतुर्बाणैर्गिरिं मेघाविवोत्थितौ ३६
तौ तु विद्ध्वा महाराज पाण्डवो निशितैः शरैः
विद्रावयंस्तव चमूं शतशो व्यधमच्छरैः ३७
अनिलेन यथाभ्राणि विच्छिन्नानि समन्ततः
विच्छिन्नानि तथा राजन्बलान्यासन्विशां पते ३८
तद्बलं भरतश्रेष्ठ वध्यमानं तदा निशि
प्रदुद्राव दिशः सर्वा वीक्षमाणं भयार्दितम् ३९
उत्सृज्य वाहान्समरे चोदयन्तस्तथापरे
संभ्रान्ताः पर्यधावन्त तस्मिंस्तमसि दारुणे ४०
विजित्य समरे योधांस्तावकान्भरतर्षभ
दध्मतुर्मुदितौ शङ्खौ वासुदेवधनंजयौ ४१
धृष्टद्युम्नो महाराज द्रोणं विद्ध्वा त्रिभिः शरैः
चिच्छेद धनुषस्तूर्णं ज्यां शरेण शितेन ह ४२
तन्निधाय धनुर्नीडे द्रोणः क्षत्रियमर्दनः
आददेऽन्यद्धनुः शूरो वेगवत्सारवत्तरम् ४३
धृष्टद्युम्नं ततो द्रोणो विद्ध्वा सप्तभिराशुगैः
सारथिं पञ्चभिर्बाणै राजन्विव्याध संयुगे ४४
तं निवार्य शरैस्तूर्णं धृष्टद्युम्नो महारथः
व्यधमत्कौरवीं सेनां शतशोऽथ सहस्रशः ४५
वध्यमाने बले तस्मिंस्तव पुत्रस्य मारिष
प्रावर्तत नदी घोरा शोणितौघतरङ्गिणी ४६

उभयोः सेनयोर्मध्ये नराश्वद्विपवाहिनी
यथा वैतरणी राजन्यमराष्ट्रपुरं प्रति ४७
द्रावयित्वा तु तत्सैन्यं धृष्टद्युम्नः प्रतापवान्
अत्यराजत तेजस्वी शक्रो देवगणेष्विव ४८
अथ दध्मुर्महाशङ्खान्धृष्टद्युम्नशिखण्डिनौ
यमौ च युयुधानश्च पाण्डवश्च वृकोदरः ४९
जित्वा रथसहस्राणि तावकानां महारथाः
सिंहनादरवांश्चक्रुः पाण्डवा जितकाशिनः ५०
पश्यतस्तव पुत्रस्य कर्णस्य च मदोत्कटाः
तथा द्रोणस्य शूरस्य द्रौणेश्चैव विशां पते ५१
इति श्रीमहाभारते द्रोणपर्वणि षट्चत्वारिंशदधिकशततमोऽध्यायः १४६

## सप्तचत्वारिंशदधिक शततमोऽध्यायः

सञ्जय उवाच
विद्रुतं स्वबलं दृष्ट्वा वध्यमानं महात्मभिः
क्रोधेन महताविष्टः पुत्रस्तव विशां पते १
अभ्येत्य सहसा कर्णं द्रोणं च जयतां वरम्
अमर्षवशमापन्नो वाक्यज्ञो वाक्यमब्रवीत् २
भवद्भ्यामिह संग्रामो क्रुद्धाभ्यां संप्रवर्तितः
आहवे निहतं दृष्ट्वा सैन्धवं सव्यसाचिना ३
निहन्यमानां पाण्डूनां बलेन मम वाहिनीम्
भूत्वा तद्विजये शक्तावशक्ताविव पश्यतः ४
यद्यहं भवतोस्त्याज्यो न वाच्योऽस्मि तदैव हि
आवां पाण्डुसुतान्संख्ये जेष्याव इति मानदौ ५
तदैवाहं वचः श्रुत्वा भवद्भ्यामनुसंमतम्
कृतवान्पाण्डवैः सार्धं वैरं योधविनाशनम् ६
यदि नाहं परित्याज्यो भवद्भ्यां पुरुषर्षभौ
युध्येतामनुरूपेण विक्रमेण सुविक्रमौ ७
वाक्प्रतोदेन तौ वीरौ प्रणुन्नौ तनयेन ते
प्रावर्तयेतां तौ युद्धं घट्टिताविव पन्नगौ ८

ततस्तौ रथिनां श्रेष्ठौ सर्वलोकधनुर्धरौ
शैनेयप्रमुखान्पार्थानभिदुद्रुवतू रणे ९
तथैव सहिताः पार्थाः स्वेन सैन्येन संवृताः
अभ्यवर्तन्त तौ वीरौ नर्दमानौ महुर्मुहुः १०
अथ द्रोणो महेष्वासो दशभिः शिनिपुंगवम्
अविध्यत्त्वरितं क्रुद्धः सर्वशस्त्रभृतां वरः ११
कर्णश्च दशभिर्बाणैः पुत्रश्च तव सप्तभिः
दशभिर्वृषसेनश्च सौबलश्चापि सप्तभिः
एते कौरव संक्रन्दे शैनेयं पर्यवारयन् १२
दृष्ट्वा च समरे द्रोणं निघ्नन्तं पाण्डवीं चमूम्
विव्यधुः सोमकास्तूर्णं समन्ताच्छरवृष्टिभिः १३
ततो द्रोणोऽहरत्प्राणान्क्षत्रियाणां विशां पते
रश्मिभिर्भास्करो राजंस्तमसामिव भारत १४
द्रोणेन वध्यमानानां पाञ्चालानां विशां पते
शुश्रुवे तुमुलः शब्दः क्रोशतामितरेतरम् १५
पुत्रानन्ये पितॄनन्ये भ्रातॄनन्ये च मातुलान्
भागिनेयान्वयस्यांश्च तथा संबन्धिबान्धवान्
उत्सृज्योत्सृज्य गच्छन्ति त्वरिता जीवितेप्सवः १६
अपरे मोहिता मोहात्तमेवाभिमुखा ययुः
पाण्डवानां रणे योधाः परलोकं तथापरे १७
सा तथा पाण्डवी सेना वध्यमाना महात्मभिः
निशि संप्राद्रवद्राजन्नुत्सृज्योल्काः सहस्रशः १८
पश्यतो भीमसेनस्य विजयस्याच्युतस्य च
यमयोर्धर्मपुत्रस्य पार्षतस्य च पश्यतः १९
तमसा संवृते लोके न प्राज्ञायत किंचन
कौरवाणां प्रकाशेन दृश्यन्ते तु द्रुताः परे २०
द्रवमाणं तु तत्सैन्यं द्रोणकर्णौ महारथौ
जघ्नतुः पृष्ठतो राजन्किरन्तौ सायकान्बहून् २१
पाञ्चालेषु प्रभग्नेषु दीर्यमाणेषु सर्वशः
जनार्दनो दीनमनाः प्रत्यभाषत फल्गुनम् २२

द्रोणकर्णौ महेष्वासावेतौ पार्षतसात्यकी
पाञ्चालांश्चैव सहितौ जघ्नतुः सायकैर्भृशम् २३
एतयोः शरवर्षेण प्रभग्ना नो महारथाः
वार्यमाणापि कौन्तेय पृतना नावतिष्ठते २४
एतावावां सर्वसैन्यैर्व्यूढैः सम्यगुदायुधैः
द्रोणं च सूतपुत्रं च प्रयतावः प्रबाधितुम् २५
एतौ हि बलिनौ शूरौ कृतास्त्रौ जितकाशिनौ
उपेक्षितौ बलं क्रुद्धौ नाशयेतां निशामिमाम्
एष भीमोऽभियात्युग्रः पुनरावर्त्य वाहिनीम् २६
वृकोदरं तथायान्तं दृष्ट्वा तत्र जनार्दनः
पुनरेवाब्रवीद्राजन्हर्षयन्निव पाण्डवम् २७
एष भीमो रणश्लाघी वृतः सोमकपाण्डवैः
रुषितोऽभ्येति वेगेन द्रोणकर्णौ महाबलौ २८
एतेन सहितो युध्य पाञ्चालैश्च महारथैः
आश्वासनार्थं सर्वेषां सैन्यानां पाण्डुनन्दन २९
ततस्तौ पुरुषव्याघ्रावुभौ माधवपाण्डवौ
द्रोणकर्णौ समासाद्य धिष्ठितौ रणमूर्धनि ३०
ततस्तत्पुनरावृत्तं युधिष्ठिरबलं महत्
ततो द्रोणश्च कर्णश्च परान्ममृदतुर्युधि ३१
स संप्रहारस्तुमुलो निशि प्रत्यभवन्महान्
यथा सागरयो राजंश्चन्द्रोदयविवृद्धयोः ३२
तत उत्सृज्य पाणिभ्यः प्रदीपांस्तव वाहिनी
युयुधे पाण्डवैः सार्धमुन्मत्तवदहःक्षये ३३
रजसा तमसा चैव संवृते भृशदारुणे
केवलं नामगोत्रेण प्रायुध्यन्त जयैषिणः ३४
अश्रूयन्त हि नामानि श्राव्यमाणानि पार्थिवैः
प्रहरद्भिर्महाराज स्वयंवर इवाहवे ३५
निःशब्दमासीत्सहसा पुनः शब्दो महानभूत्
क्रुद्धानां युध्यमानानां जयतां जीयतामपि ३६
यत्र यत्र स्म दृश्यन्ते प्रदीपाः कुरुसत्तम

तत्र तत्र स्म ते शूरा निपतन्ति पतंगवत् ३७
तथा संयुध्यमानानां विगाढाभून्महानिशा
पाण्डवानां च राजेन्द्र कौरवाणां च सर्वशः ३८
इति श्रीमहाभारते द्रोणपर्वणि सप्तचत्वारिंशदधिकशततमोऽध्यायः १४७

## अष्टचत्वारिंशदधिक शततमोऽध्यायः

सञ्जय उवाच
ततः कर्णो रणे दृष्ट्वा पार्षतं परवीरहा
आजघानोरसि शरैर्दशभिर्मर्मभेदिभिः १
प्रतिविव्याध तं तूर्णं धृष्टद्युम्नोऽपि मारिष
पञ्चभिः सायकैर्हृष्टस्तिष्ठ तिष्ठेति चाब्रवीत् २
तावन्योन्यं शरैः संख्ये संछाद्य सुमहारथौ
पुनः पूर्णायतोत्सृष्टैर्विव्यधाते परस्परम् ३
ततः पाञ्चालमुख्यस्य धृष्टद्युम्नस्य संयुगे
सारथिं चतुरश्चाश्वान्कर्णो विव्याध सायकैः ४
कार्मुकप्रवरं चास्य प्रचिच्छेद शितैः शरैः
सारथिं चास्य भल्लेन रथनीडादपातयत् ५
धृष्टद्युम्नस्तु विरथो हताश्वो हतसारथिः
गृहीत्वा परिघं घोरं कर्णस्याश्वानपीपिषत् ६
विद्धश्च बहुभिस्तेन शरैराशीविषोपमैः
ततो युधिष्ठिरानीकं पद्मामेवान्ववर्तत
आरुरोह रथं चापि सहदेवस्य मारिष ७
कर्णस्यापि रथे वाहानन्यान्सूतो न्ययोजयत्
शङ्खवर्णान्महावेगान्सैन्धवान्साधुवाहिनः ८
लब्धलक्ष्यस्तु राधेयः पाञ्चालानां महारथान्
अभ्यपीडयदायस्तः शरैर्मेघ इवाचलान् ९
सा पीड्यमाना कर्णेन पाञ्चालानां महाचमूः
संप्राद्रवत्सुसंत्रस्ता सिंहेनेवार्दिता मृगी १०
पतितास्तुरगेभ्यश्च गजेभ्यश्च महीतले
रथेभ्यश्च नरास्तूर्णमदृश्यन्त ततस्ततः ११

धावमानस्य योधस्य क्षुरप्रैः स महामृधे
बाहू चिच्छेद वै कर्णः शिरश्चैव सकुण्डलम् १२
ऊरू चिच्छेद चान्यस्य गजस्थस्य विशां पते
वाजिपृष्ठगतस्यापि भूयिष्ठस्य च मारिष १३
नाज्ञासिषुर्धावमाना बहवश्च महारथाः
संछिन्नान्यात्मगात्राणि वाहनानि च संयुगे १४
ते वध्यमानाः समरे पाञ्चालाः सृञ्जयैः सह
तृणप्रस्पन्दनाच्चापि सूतपुत्रं स्म मेनिरे १५
अपि स्वं समरे योधं धावमानं विचेतसः
कर्णमेवाभ्यमन्यन्त ततो भीता द्रवन्ति ते १६
तान्यनीकानि भग्नानि द्रवमाणानि भारत
अभ्यद्रवद्द्रुतं कर्णः पृष्ठतो विकिरञ्शरान् १७
अवेक्षमाणास्तेऽन्योन्यं सुसंमूढा विचेतसः
नाशक्नुवन्नवस्थातुं काल्यमाना महात्मना १८
कर्णेनाभ्याहता राजन्पाञ्चालाः परमेषुभिः
द्रोणेन च दिशः सर्वा वीक्षमाणाः प्रदुद्रुवुः १९
ततो युधिष्ठिरो राजा स्वसैन्यं प्रेक्ष्य विद्रुतम्
अपयाने मतिं कृत्वा फल्गुनं वाक्यमब्रवीत् २०
पश्य कर्णं महेष्वासं धनुष्पाणिमवस्थितम्
निशीथे दारुणे काले तपन्तमिव भास्करम् २१
कर्णसायकनुन्नानां क्रोशतामेष निस्वनः
अनिशं श्रूयते पार्थ त्वद्बन्धूनामनाथवत् २२
यथा विसृजतश्चास्य संदधानस्य चाशुगान्
पश्यामि जयविक्रान्तं क्षपयिष्यति नो ध्रुवम् २३
यदत्रानन्तरं कार्यं प्राप्तकालं प्रपश्यसि
कर्णस्य वधसंयुक्तं तत्कुरुष्व धनंजय २४
एवमुक्तो महाबाहुः पार्थः कृष्णमथाब्रवीत्
भीतः कुन्तीसुतो राजा राधेयस्यातिविक्रमात् २५
एवं गते प्राप्तकालं कर्णानीके पुनः पुनः
भवान्व्यवस्यतां क्षिप्रं द्रवते हि वरूथिनी २६

द्रोणसायकनुन्नानां भग्नानां मधुसूदन
कर्णेन त्रास्यमानानामवस्थानं न विद्यते २७
पश्यामि च तथा कर्णं विचरन्तमभीतवत्
द्रवमाणान्रथोदारान्किरन्तं विशिखैः शितैः २८
नैतदस्योत्सहे सोढुं चरितं रणमूर्धनि
प्रत्यक्षं वृष्णिशार्दूल पादस्पर्शमिवोरगः २९
स भवानत्र यात्वाशु यत्र कर्णो महारथः
अहमेनं वधिष्यामि मां वैष मधुसूदन ३०
वासुदेव उवाच
पश्यामि कर्णं कौन्तेय देवराजमिवाहवे
विचरन्तं नरव्याघ्रमतिमानुषविक्रमम् ३१
नैतस्यान्योऽस्ति समरे प्रत्युद्याता धनंजय
ऋते त्वां पुरुषव्याघ्र राक्षसाद्वा घटोत्कचात् ३२
न तु तावदहं मन्ये प्राप्तकालं तवानघ
समागमं महाबाहो सूतपुत्रेण संयुगे ३३
दीप्यमाना महोल्केव तिष्ठत्यस्य हि वासवी
त्वदर्थं हि महाबाहो रौद्ररूपं बिभर्ति च ३४
घटोत्कचस्तु राधेयं प्रत्युद्यातु महाबलः
स हि भीमसेन बलिना जातः सुरपराक्रमः ३५
तस्मिन्नस्त्राणि दिव्यानि राक्षसान्यसुराणि च
सततं चानुरक्तो वो हितैषी च घटोत्कचः
विजेष्यति रणे कर्णमिति मे नात्र संशयः ३६
सञ्जय उवाच
एवमुक्त्वा महाबाहुः पार्थं पुष्करलोचनः
आजुहावाथ तद्रक्षः तच्चासीत्प्रादुरग्रतः ३७
कवची स शरी खड्गी सधन्वा च विशां पते
अभिवाद्य ततः कृष्णं पाण्डवं च धनंजयम्
अब्रवीत्तं तदा हृष्टस्त्वयमस्म्यनुशाधि माम् ३८
ततस्तं मेघसंकाशं दीप्तास्यं दीप्तकुण्डलम्
अभ्यभाषत हैडिम्बं दाशार्हः प्रहसन्निव ३९

घटोत्कच विजानीहि यत्त्वां वक्ष्यामि पुत्रक
प्राप्तो विक्रमकालोऽय तव नान्यस्य कस्यचित् ४०
स भवान्मज्जमानानां बन्धूनां त्वं प्लवो यथा
विविधानि तवास्त्राणि सन्ति माया च राक्षसी ४१
पश्य कर्णेन हैडिम्ब पाण्डवानामनीकिनी
काल्यमाना यथा गावः पालेन रणमूर्धनि ४२
एष कर्णो महेष्वासो मतिमान्दृढविक्रमः
पाण्डवानामनीकेषु निहन्ति क्षत्रियर्षभान् ४३
किरन्तः शरवर्षाणि महान्ति दृढधन्विनः
न शक्नुवन्त्यवस्थातुं पीड्यमानाः शरार्चिषा ४४
निशीथे सूतपुत्रेण शरवर्षेण पीडिताः
एते द्रवन्ति पाञ्चालाः सिंहस्येव भयान्मृगाः ४५
एतस्यैवं प्रवृद्धस्य सूतपुत्रस्य संयुगे
निषेद्धा विद्यते नान्यस्त्वदृते भीमविक्रम ४६
स त्वं कुरु महाबाहो कर्म युक्तमिहात्मनः
मातुलानां पितॄणां च तेजसोऽस्त्रबलस्य च ४७
एतदर्थं हि हैडिम्ब पुत्रानिच्छन्ति मानवाः
कथं नस्तारयेद्दुःखात्स त्वं तारय बान्धवान् ४८
तव ह्यस्त्रबलं भीमं मायाश्च तव दुस्तराः
संग्रामे युध्यमानस्य सततं भीमनन्दन ४९
पाण्डवानां प्रभग्नानां कर्णेन शितसायकैः
मज्जतां धार्तराष्ट्रेषु भव पारं परंतप ५०
रात्रौ हि राक्षसा भूयो भवन्त्यमितविक्रमाः
बलवन्तः सुदुर्धर्षाः शूरा विक्रान्तचारिणः ५१
जहि कर्णं महेष्वासं निशीथे मायया रणे
पार्था द्रोणं वधिष्यन्ति धृष्टद्युम्नपुरोगमाः ५२
केशवस्य वचः श्रुत्वा बीभत्सुरपि राक्षसम्
अभ्यभाषत कौरव्य घटोत्कचमरिंदमम् ५३
घटोत्कच भवांश्चैव दीर्घबाहुश्च सात्यकिः
मतौ मे सर्वसैन्येषु भीमसेनश्च पाण्डवः ५४

स भवान्यातु कर्णेन द्वैरथं युध्यतां निशि
सात्यकिः पृष्ठगोपस्ते भविष्यति महारथः ५५
जहि कर्णं रणे शूरं सात्वतेन सहायवान्
यथेन्द्रस्तारकं पूर्वं स्कन्देन सह जघ्निवान् ५६
घटोत्कच उवाच
अलमेवास्मि कर्णाय द्रोणायालं च सत्तम
अन्येषां क्षत्रियाणां च कृतास्त्राणां महात्मनाम् ५७
अद्य दास्यामि संग्रामं सूतपुत्राय तं निशि
यं जनाः संप्रवक्ष्यन्ति यावद्भूमिर्धरिष्यति ५८
न चात्र शूरान्मोक्ष्यामि न भीतान्न कृताञ्जलीन्
सर्वानेव वधिष्यामि राक्षसं धर्ममास्थितः ५९
सञ्जय उवाच
एवमुक्त्वा महाबाहुर्हैडिम्बः परवीरहा
अभ्ययात्तुमुले कर्णं तव सैन्यं विभीषयन् ६०
तमापतन्तं संक्रुद्धं दीप्तास्यमिव पन्नगम्
अभ्यस्यन्परमेष्वासः प्रतिजग्राह सूतजः ६१
तयोः समभवद्युद्धं कर्णराक्षसयोर्निशि
गर्जतो राजशार्दूल शक्रप्रह्लादयोरिव ६२
इति श्रीमहाभारते द्रोणपर्वणि अष्टचत्वारिंशदधिकशततमोऽध्यायः १४८

## एकोन पञ्चाशदधिक शततमोऽध्यायः

सञ्जय उवाच
दृष्ट्वा घटोत्कचं राजन्सूतपुत्ररथं प्रति
प्रयान्तं त्वरया युक्तं जिघांसुं कर्णमाहवे १
अब्रवीत्तव पुत्रस्तु दुःशासनमिदं वचः
एतद्रक्षो रणे तूर्णं दृष्ट्वा कर्णस्य विक्रमम् २
अभियाति द्रुतं कर्णं तद्वारय महारथम्
वृतः सैन्येन महता याहि यत्र महाबलः ३
कर्णो वैकर्तनो युद्धे राक्षसेन युयुत्सति
रक्ष कर्णं रणे यत्तो वृतः सैन्येन मानद ४

एतस्मिन्नन्तरे राजञ्जटासुरसुतो बली
दुर्योधनमुपागम्य प्राह प्रहरतां वरः ५
दुर्योधन तवामित्रान्प्रख्यातान्युद्धदुर्मदान्
पाण्डवान्हन्तुमिच्छामि त्वयाज्ञप्तः सहानुगान् ६
जटासुरो मम पिता रक्षसामग्रणीः पुरा
प्रयुज्य कर्म रक्षोघ्नं क्षुद्रैः पार्थैर्निपातितः
तस्यापचितिमिच्छामि त्वद्दिष्टो गन्तुमीश्वर ७
तमब्रवीत्ततो राजा प्रीयमाणः पुनः पुनः
द्रोणकर्णादिभिः सार्धं प्रर्याप्तोऽह द्विषद्वधे
त्वं तु गच्छ मयाज्ञप्तो जहि युद्धं घटोत्कचम् ८
तथेत्युक्त्वा महाकायः समाहूय घटोत्कचम्
जटासुरिर्भैमसेनिं नानाशस्त्रैरवाकिरत् ९
अलंबलं च कर्णं च कुरुसैन्यं च दुस्तरम्
हैडिम्बः प्रममाथैको महावातोऽम्बुदानिव १०
ततो मायामयं दृष्ट्वा रथं तूर्णमलंबलः
घटोत्कचं शरव्रातैर्नानालिङ्गैः समार्दयत् ११
विद्ध्वा च बहुभिर्बाणैर्भैमसेनिमलंबलः
व्यद्रावयच्छरव्रातैः पाण्डवानामनीकिनीम् १२
तेन विद्राव्यमाणानि पाण्डुसैन्यानि मारिष
निशीथे विप्रकीर्यन्त वातनुन्ना घना इव १३
घटोत्कचशरैर्नुन्ना तथैव कुरुवाहिनी
निशीथे प्राद्रवद्राजन्नुत्सृज्योल्काः सहस्रशः १४
अलंबलस्ततः क्रुद्धो भैमसेनिं महामृधे
आजघ्ने निशितैर्बाणैस्तोत्त्रैरिव महाद्विपम् १५
तिलशस्तस्य तद्यानं सूतं सर्वायुधानि च
घटोत्कचः प्रचिच्छेद प्राणदच्चातिदारुणम् १६
ततः कर्णं शरव्रातैः कुरूनन्यान्सहस्रशः
अलंबलं चाभ्यवर्षन्मेघो मेरुमिवाचलम् १७
ततः संचुक्षुभे सैन्यं कुरूणां राक्षसार्दितम्
उपर्युपरि चान्योन्यं चतुरङ्गं ममर्द ह १८

जटासुरिर्महाराज विरथो हतसारथिः
घटोत्कचं रणे क्रुद्धो मुष्टिनाभ्यहनद्दृढम् १९
मुष्टिनाभिहतस्तेन प्रचचाल घटोत्कचः
क्षितिकम्पे यथा शैलः सवृक्षगणगुल्मवान् २०
ततः स परिघाभेन द्विट्संघघ्नेन बाहुना
जाटासुरिं भैमसेनिरवधीन्मुष्टिना भृशम् २१
तं प्रमथ्य ततः क्रुद्धस्तूर्णं हैडिम्बिराक्षिपत्
दोर्भ्यामिन्द्रध्वजाभाभ्यां निष्पिपेष महीतले २२
अलंबलोऽपि विक्षिप्य समुत्क्षिप्य च राक्षसम्
घटोत्कचं रणे रोषान्निष्पिपेष महीतले २३
तयोः समभवद्युद्धं गर्जतोरतिकाययोः
घटोत्कचालंबलयोस्तुमुलं लोमहर्षणम् २४
विशेषयन्तावन्योन्यं मायाभिरतिमायिनौ
युयुधाते महावीर्याविन्द्रवैरोचनाविव २५
पावकाम्बुनिधी भूत्वा पुनर्गरुडतक्षकौ
पुनर्मेघमहावातौ पुनर्वज्रमहाचलौ
पुनः कुञ्जरशार्दूलौ पुनः स्वर्भानुभास्करौ २६
एवं मायाशतसृजावन्योन्यवधकाङ्क्षिणौ
भृशं चित्रमयुध्येतामलंबलघटोत्कचौ २७
परिघैश्च गदाभिश्च प्रासमुद्गरपट्टिशैः
मुसलैः पर्वताग्रैश्च तावन्योन्यं निजघ्नतुः २८
हयाभ्यां च गजाभ्यां च पदातिरथिनौ पुनः
युयुधाते महामायौ राक्षसप्रवरौ युधि २९
ततो घटोत्कचो राजन्नलंबलवधेप्सया
उत्पपात भृशं क्रुद्धः श्येनवन्निपपात ह ३०
गृहीत्वा च महाकायं राक्षसेन्द्रमलंबलम्
उद्यम्य न्यवधीद्भूमौ मयं विष्णुरिवाहवे ३१
ततो घटोत्कचः खड्गमुद्गृह्याद्भुतदर्शनम्
चकर्त कायाद्धि शिरो भीमं विकृतदर्शनम् ३२
तच्छिरो रुधिराभ्यक्तं गृह्य केशेषु राक्षसः

घटोत्कचो ययावाशु दुर्योधनरथं प्रति ३३
अभ्येत्य च महाबाहुः स्मयमानः स राक्षसः
रथेऽस्य निक्षिप्य शिरो विकृताननमूर्धजम्
प्राणदद्भैरवं नादं प्रावृषीव बलाहकः ३४
अब्रवीच्च ततो राजन्दुर्योधनमिदं वचः
एष ते निहतो बन्धुस्त्वया दृष्टोऽस्य विक्रमः
पुनर्द्रष्टासि कर्णस्य निष्ठामेतां तथात्मनः ३५
एवमुक्त्वा ततः प्रायात्कर्णं प्रति जनेश्वर
किरञ्शरशतांस्तीक्ष्णान्विमुञ्चन्कर्णमूर्धनि ३६
ततः समभवद्युद्धं घोररूपं भयानकम्
विस्मापनं महाराज नरराक्षसयोर्मृधे ३७
इति श्रीमहाभारते द्रोणपर्वणि एकोनपञ्चाशदधिकशततमोऽध्यायः १४९

## पञ्चाशदधिक शततमोऽध्यायः

धृतराष्ट्र उवाच
यत्र वैकर्तनः कर्णो राक्षसश्च घटोत्कचः
निशीथे समसज्जेतां तद्युद्धमभवत्कथम् १
कीदृशं चाभवद्युद्धं तस्य घोरस्य रक्षसः
रथश्च कीदृशस्तस्य मायाः सर्वायुधानि च २
किंप्रमाणाहयास्तस्य रथकेतुर्धनुस्तथा
कीदृशं वर्म चैवास्य कण्ठत्राणं च कीदृशम्
पृष्टस्त्वमेतदाचक्ष्व कुशलो ह्यसि सञ्जय ३
सञ्जय उवाच
लोहिताक्षो महाकायस्ताम्रास्यो निम्नितोदरः
ऊर्ध्वरोमा हरिश्मश्रुः शङ्कुकर्णो महाहनुः ४
आकर्णाद्दारितास्यश्च तीक्ष्णदंष्ट्रः करालवान्
सुदीर्घताम्रजिह्वोष्ठो लम्बभ्रूः स्थूलनासिकः ५
नीलाङ्गो लोहितग्रीवो गिरिवर्ष्मा भयंकरः
महाकायो महाबाहुर्महाशीर्षो महाबलः ६
विकचः परुषस्पर्शो विकटोद्बद्धपिण्डिकः

स्थूलस्फिग्गूढनाभिश्च शिथिलोपचयो महान् ७
तथैव हस्ताभरणी महामायोऽङ्गदी तथा
उरसा धारयन्निष्कमग्निमालां यथाचलः ८
तस्य हेममयं चित्रं बहुरूपाङ्गशोभितम्
तोरणप्रतिमं शुभ्रं किरीटं मूर्ध्न्यशोभत ९
कुण्डले बालसूर्याभे मालां हेममयीं शुभाम्
धारयन्विपुलं कांस्यं कवचं च महाप्रभम् १०
किङ्किणीशतनिर्घोषं रक्तध्वजपताकिनम्
ऋृक्षचर्मावनद्धाङ्गं नल्वमात्रं महारथम् ११
सर्वायुधवरोपेतमास्थितो ध्वजमालिनम्
अष्टचक्रसमायुक्तं मेघगम्भीरनिस्वनम् १२
तत्र मातङ्गसंकाशा लोहिताक्षा विभीषणाः
कामवर्णजवा युक्ता बलवन्तोऽवहन्हयाः १३
राक्षसोऽस्य विरूपाक्षः सूतो दीप्तास्यकुण्डलः
रश्मिभिः सूर्यरश्म्याभैः संजग्राह हयान्रणे
स तेन सहितस्तस्थावरुणेन यथा रविः १४
संसक्त इव चाभ्रेण यथाद्रिर्महता महान्
दिवस्पृक्सुमहान्केतुः स्यन्दनेऽस्य समुच्छ्रितः
रक्तोत्तमाङ्गः क्रव्यादो गृध्रः परमभीषणः १५
वासवाशनिनिर्घोषं दृढज्यमभिविक्षिपन्
व्यक्तं किष्कुपरीणाहं द्वादशारत्नि कार्मुकम् १६
रथाक्षमात्रैरिषुभिः सर्वाः प्रच्छादयन्दिशः
तस्यां वीरापहारिण्यां निशायां कर्णमभ्ययात् १७
तस्य विक्षिपतश्चापं रथे विष्टभ्य तिष्ठतः
अश्रूयत धनुर्घोषो विस्फूर्जितमिवाशनेः १८
तेन वित्रास्यमानानि तव सैन्यानि भारत
समकम्पन्त सर्वाणि सिन्धोरिव महोर्मयः १९
तमापतन्तं संप्रेक्ष्य विरूपाक्षं विभीषणम्
उत्स्मयन्निव राधेयस्त्वरमाणोऽभ्यवारयत् २०
ततः कर्णोऽभ्ययादेनमस्यन्नस्यन्तमन्तिकात्

मातङ्ग इव मातङ्गं यूथर्षभ इवर्षभम् २१
स संनिपातस्तुमुलस्तयोरासीद्विशां पते
कर्णराक्षसयो राजन्निन्द्रशम्बरयोरिव २२
तौ प्रगृह्य महावेगे धनुषी भीमनिस्वने
प्राच्छादयेतामन्योन्यं तक्षमाणौ महेषुभिः २३
ततः पूर्णायतोत्सृष्टैः शरैः संनतपर्वभिः
न्यवारयेतामन्योन्यं कांस्ये निर्भिद्य वर्मणी २४
तौ नखैरिव शार्दूलौ दन्तैरिव महाद्विपौ
रथशक्तिभिरन्योन्यं विशिखैश्च ततक्षतुः २५
संछिन्दन्तौ हि गात्राणि संदधानौ च सायकान्
धक्ष्यमाणौ शरव्रातैर्नोदीक्षितुमशक्नुताम् २६
तौ तु विक्षतसर्वाङ्गौ रुधिरौघपरिप्लुतौ
व्यभ्राजेतां यथा वारिप्रस्रुतौ गैरिकाचलौ २७
तौ शराग्रविभिन्नाङ्गौ निर्भिन्दन्तौ परस्परम्
नाकम्पयेतामन्योन्यं यतमानौ महाद्युती २८
तत्प्रवृत्तं निशायुद्धं चिरं सममिवाभवत्
प्राणयोर्दीव्यतो राजन्कर्णराक्षसयोर्मृधे २९
तस्य संदधतस्तीक्ष्णाञ्शरांश्चासक्तमस्यतः
धनुर्घोषेण वित्रस्ताः स्वे परे च तदाभवन्
घटोत्कचं यदा कर्णो विशेषयति नो नृप ३०
ततः प्रादुष्करोद्दिव्यमस्त्रमस्त्रविदां वरः
कर्णेन विहितं दृष्ट्वा दिव्यमस्त्रं घटोत्कचः
प्रादुश्चक्रे महामायां राक्षसः पाण्डुनन्दनः ३१
शूलमुद्गरधारिण्या शैलपादपहस्तया
रक्षसां घोररूपाणां महत्या सेनया वृतः ३२
तमुद्यतमहाचापं दृष्ट्वा ते व्यथिता नृपाः
भूतान्तकमिवायान्तं कालदण्डोग्रधारिणम् ३३
घटोत्कचप्रयुक्तेन सिंहनादेन भीषिताः
प्रसुस्रुवुर्गजा मूत्रं विव्यथुश्च नरा भृशम् ३४
ततोऽश्मवृष्टिरत्युग्रा महत्यासीत्समन्ततः

अर्धरात्रेऽधिकबलैर्विमुक्ता रक्षसां बलैः ३५
आयसानि च चक्राणि भुशुण्ड्यः शक्तितोमराः
पतन्त्यविरलाः शूलाः शतघ्न्यः पट्टिशास्तथा ३६
तदुग्रमतिरौद्रं च दृष्ट्वा युद्धं नराधिपाः
पुत्राश्च तव योधाश्च व्यथिता विप्रदुद्रुवुः ३७
तत्रैकोऽस्त्रबलश्लाघी कर्णो मानी न विव्यथे
व्यधमच्च शरैर्मायां घटोत्कचविनिर्मिताम् ३८
मायायां तु प्रहीणायाममर्षात्स घटोत्कचः
विससर्ज शरान्घोरान्सूतपुत्रं त आविशन् ३९
ततस्ते रुधिराभ्यक्ता भित्त्वा कर्णं महाहवे
विविशुर्धरणीं बाणाः संक्रुद्धा इव पन्नगाः ४०
सूतपुत्रस्तु संक्रुद्धो लघुहस्तः प्रतापवान्
घटोत्कचमतिक्रम्य बिभेद दशभिः शरैः ४१
घटोत्कचो विनिर्भिन्नः सूतपुत्रेण मर्मसु
चक्रं दिव्यं सहस्रारमगृह्णाद्व्यथितो भृशम् ४२
क्षुरान्तं बालसूर्याभं मणिरत्नविभूषितम्
चिक्षेपाधिरथेः क्रुद्धो भैमसेनिर्जिघांसया ४३
प्रविद्धमतिवेगेन विक्षिप्तं कर्णसायकैः
अभाग्यस्येव संकल्पस्तन्मोघमपतद्भुवि ४४
घटोत्कचस्तु संक्रुद्धो दृष्ट्वा चक्रं निपातितम्
कर्णं प्राच्छादयद्बाणैः स्वर्भानुरिव भास्करम् ४५
सूतपुत्रस्त्वसंभ्रान्तो रुद्रोपेन्द्रेन्द्रविक्रमः
घटोत्कचरथं तूर्णं छादयामास पत्रिभिः ४६
घटोत्कचेन क्रुद्धेन गदा हेमाङ्गदा तदा
क्षिप्ता भ्राम्य शरैः सापि कर्णेनाभ्याहतापतत् ४७
ततोऽन्तरिक्षमुत्पत्य कालमेघ इवोन्नदन्
प्रववर्ष महाकायो द्रुमवर्षं नभस्तलात् ४८
ततो मायाविनं कर्णो भीमसेनसुतं दिवि
मार्गणैरभिविव्याध घनं सूर्य इवांशुभिः ४९
तस्य सर्वान्हयान्हत्वा संछिद्य शतधा रथम्

अभ्यवर्षच्छरैः कर्णः पर्जन्य इव वृष्टिमान् ५०
न चास्यासीदनिर्भिन्नं गात्रे द्व्यङ्गुलमन्तरम्
सोऽदृश्यत मुहूर्तेन श्वाविच्छललितो यथा ५१
न हयान्न रथं तस्य न ध्वजं न घटोत्कचम्
दृष्टवन्तः स्म समरे शरौघैरभिसंवृतम् ५२
स तु कर्णस्य तद्दिव्यमस्त्रमस्त्रेण शातयन्
मायायुद्धेन मायावी सूतपुत्रमयोधयत् ५३
सोऽयोधयत्तदा कर्णं मायया लाघवेन च
अलक्ष्यमाणोऽथ दिवि शरजालेषु संपतन् ५४
भैमसेनिर्महामायो मायया कुरुसत्तम
प्रचकार महामायां मोहयन्निव भारत ५५
स स्म कृत्वा विरूपाणि वदनान्यशुभाननः
अग्रसत्सूतपुत्रस्य दिव्यान्यस्त्राणि मायया ५६
पुनश्चापि महाकायः संछिन्नः शतधा रणे
गतसत्त्वो निरुत्साहः पतितः खाद्व्यदृश्यत
हतं तं मन्यमानाः स्म प्राणदन्कुरुपुंगवाः ५७
अथ देहैर्नवैरन्यैर्दिक्षु सर्वास्वदृश्यत
पुनश्चापि महाकायः शतशीर्षः शतोदरः ५८
व्यदृश्यत महाबाहुर्मैनाक इव पर्वतः
अङ्गुष्ठमात्रो भूत्वा च पुनरेव स राक्षसः
सागरोर्मिरिवोद्धूतस्तिर्यगूर्ध्वमवर्तत ५९
वसुधां दारयित्वा च पुनरप्सु न्यमज्जत
अदृश्यत तदा तत्र पुनरुन्मज्जितोऽन्यतः ६०
सोऽवतीर्य पुनस्तस्थौ रथे हेमपरिष्कृते
क्षितिं द्यां च दिशश्चैव माययावृत्य दंशितः ६१
गत्वा कर्णरथाभ्याशं विचलत्कुण्डलाननः
प्राह वाक्यमसंभ्रान्तः सूतपुत्रं विशां पते ६२
तिष्ठेदानीं न मे जीवन्सूतपुत्र गमिष्यसि
युद्धश्रद्धामहं तेऽद्य विनेष्यामि रणाजिरे ६३
इत्युक्त्वा रोषताम्राक्षं रक्षः क्रूरपराक्रमम्

उत्पपातान्तरिक्षं च जहास च सुविस्वरम्
कर्णमभ्याहनच्चैव गजेन्द्रमिव केसरी ६४
रथाक्षमात्रैरिषुभिरभ्यवर्षद्घटोत्कचः
रथिनामृषभं कर्णं धाराभिरिव तोयदः
शरवृष्टिं च तां कर्णो दूरप्राप्तामशातयत् ६५
दृष्ट्वा च विहतां मायां कर्णेन भरतर्षभ
घटोत्कचस्ततो मायां ससर्जान्तर्हितः पुनः ६६
सोऽभवद्गिरिरित्युच्चः शिखरैस्तरुसंकटैः
शूलप्रासासिमुसलजलप्रस्रवणो महान् ६७
तमञ्जनचयप्रख्यं कर्णो दृष्ट्वा महीधरम्
प्रपातैरायुधान्युग्राण्युद्वहन्तं न चुक्षुभे ६८
स्मयन्निव ततः कर्णो दिव्यमस्त्रमुदीरयत्
ततः सोऽस्त्रेण शैलेन्द्रो विक्षिप्तो वै व्यनश्यत ६९
ततः स तोयदो भूत्वा नीलः सेन्द्रायुधो दिवि
अश्मवृष्टिभिरत्युग्रः सूतपुत्रमवाकिरत् ७०
अथ संधाय वायव्यमस्त्रमस्त्रविदां वरः
व्यधमत्कालमेघं तं कर्णो वैकर्तनो वृषा ७१
स मार्गणगणैः कर्णो दिशः प्रच्छाद्य सर्वशः
जघानास्त्रं महाराज घटोत्कचसमीरितम् ७२
ततः प्रहस्य समरे भैमसेनिर्महाबलः
प्रादुश्चक्रे महामायां कर्णं प्रति महारथम् ७३
स दृष्ट्वा पुनरायान्तं रथेन रथिनां वरम्
घटोत्कचमसंभ्रान्तं राक्षसैर्बहुभिर्वृतम् ७४
सिंहशार्दूलसदृशैर्मत्तद्विरदविक्रमैः
गजस्थैश्च रथस्थैश्च वाजिपृष्ठगतैस्तथा ७५
नानाशस्त्रधरैर्घोरैर्नानाकवचभूषणैः
वृतं घटोत्कचं क्रूरैर्मरुद्भिरिव वासवम्
दृष्ट्वा कर्णो महेष्वासो योधयामास राक्षसम् ७६
घटोत्कचस्ततः कर्णं विद्ध्वा पञ्चभिराशुगैः
ननाद भैरवं नादं भीषयन्सर्वपार्थिवान् ७७

भूयश्चाञ्जलिकेनाथ समार्गणगणं महत्
कर्णहस्तस्थितं चापं चिच्छेदाशु घटोत्कचः ७८
अथान्यद्धनुरादाय दृढं भारसहं महत्
व्यकर्षत बलात्कर्ण इन्द्रायुधमिवोच्छ्रितम् ७९
ततः कर्णो महाराज प्रेषयामास सायकान्
सुवर्णपुङ्खाञ्शत्रुघ्नान्खचरान्राक्षसान्प्रति ८०
तद्बाणैरर्दितं यूथं रक्षसां पीनवक्षसाम्
सिंहेनेवार्दितं वन्यं गजानामाकुलं कुलम् ८१
विधम्य राक्षसान्बाणैः साश्वसूतगजान्विभुः
ददाह भगवान्वह्निर्भूतानीव युगक्षये ८२
स हत्वा राक्षसीं सेनां शुशुभे सूतनन्दनः
पुरेव त्रिपुरं दग्ध्वा दिवि देवो महेश्वरः ८३
तेषु राजसहस्रेषु पाण्डवेयेषु मारिष
नैनं निरीक्षितुमपि कश्चिच्छक्नोति पार्थिव ८४
ऋते घटोत्कचाद्राजन्राक्षसेन्द्रान्महाबलात्
भीमवीर्यबलोपेतात्क्रुद्धाद्वैवस्वतादिव ८५
तस्य क्रुद्धस्य नेत्राभ्यां पावकः समजायत
महोल्काभ्यां यथा राजन्सार्चिषः स्नेहबिन्दवः ८६
तलं तलेन संहत्य संदश्य दशनच्छदम्
रथमास्थाय च पुनर्मायया निर्मितं पुनः ८७
युक्तं गजनिभैर्वाहैः पिशाचवदनैः खरैः
स सूतमब्रवीत्क्रुद्धः सूतपुत्राय मा वह ८८
स ययौ घोररूपेण रथेन रथिनां वरः
द्वैरथं सूतपुत्रेण पुनरेव विशां पते ८९
स चिक्षेप पुनः क्रुद्धः सूतपुत्राय राक्षसः
अष्टचक्रां महाघोरामशनिं रुद्रनिर्मिताम् ९०
तामवप्लुत्य जग्राह कर्णो न्यस्य रथे धनुः
चिक्षेप चैनां तस्यैव स्यन्दनात्सोऽवपुप्लुवे ९१
साश्वसूतध्वजं यानं भस्म कृत्वा महाप्रभा
विवेश वसुधां भित्त्वा सुरास्तत्र विसिस्मियुः ९२

कर्णं तु सर्वभूतानि पूजयामासुरञ्जसा
यदवप्लुत्य जग्राह देवसृष्टां महाशनिम् ९३
एवं कृत्वा रणे कर्ण आरुरोह रथं पुनः
ततो मुमोच नाराचान्सूतपुत्रः परंतप ९४
अशक्यं कर्तुमन्येन सर्वभूतेषु मानद
यदकार्षीत्तदा कर्णः संग्रामे भीमदर्शने ९५
स हन्यमानो नाराचैर्धाराभिरिव पर्वतः
गन्धर्वनगराकारः पुनरन्तरधीयत ९६
एवं स वै महामायो मायया लाघवेन च
अस्त्राणि तानि दिव्यानि जघान रिपुसूदनः ९७
निहन्यमानेष्वस्त्रेषु मायया तेन रक्षसा
असंभ्रान्तस्ततः कर्णस्तद्रक्षः प्रत्ययुध्यत ९८
ततः क्रुद्धो महाराज भैमसेनिर्महाबलः
चकार बहुधात्मानं भीषयाणो नराधिपान् ९९
ततो दिग्भ्यः समापेतुः सिंहव्याघ्रतरक्षवः
अग्निजिह्वाश्च भुजगा विहगाश्चाप्ययोमुखाः १००
स कीर्यमाणो निशितैः कर्णचापच्युतैः शरैः
नगराद्रिवनप्रख्यस्तत्रैवान्तरधीयत १०१
राक्षसाश्च पिशाचाश्च यातुधानाः शलावृकाः
ते कर्णं भक्षयिष्यन्तः सर्वतः समुपाद्रवन्
अथैनं वाग्भिरुग्राभिस्त्रासयांचक्रिरे तदा १०२
उद्यतैर्बहुभिर्घोरैरायुधैः शोणितोक्षितैः
तेषामनेकैरेकैकं कर्णो विव्याध चाशुगैः १०३
प्रतिहत्य तु तां मायां दिव्येनास्त्रेण राक्षसीम्
आजघान हयानस्य शरैः संनतपर्वभिः १०४
ते भग्ना विकृताङ्गाश्च छिन्नपृष्ठाश्च सायकैः
वसुधामन्वपद्यन्त पश्यतस्तस्य रक्षसः १०५
स भग्नमायो हैडिम्बः कर्णं वैकर्तनं ततः
एष ते विदधे मृत्युमित्युक्त्वान्तरधीयत १०६
इति श्रीमहाभारते द्रोणपर्वणि पञ्चाशदधिकशततमोऽध्यायः १५०

## एकपञ्चाशदधिक शततमोऽध्यायः

सञ्जय उवाच
तस्मिंस्तथा वर्तमाने कर्णराक्षसयोर्मृधे
अलायुधो राक्षसेन्द्रो वीर्यवानभ्यवर्तत १
महत्या सेनया युक्तः सुयोधनमुपागमत्
राक्षसानां विरूपाणां सहस्रैः परिवारितः
नानारूपधरैर्वीरैः पूर्ववैरमनुस्मरन् २
तस्य ज्ञातिर्हि विक्रान्तो ब्राह्मणादो बको हतः
किर्मीरश्च महातेजा हिडिम्बश्च सखा तथा ३
स दीर्घकालाध्युषितं पूर्ववैरमनुस्मरन्
विज्ञायैतन्निशायुद्धं जिघांसुर्भीममाहवे ४
स मत्त इव मातङ्गः संक्रुद्ध इव चोरगः
दुर्योधनमिदं वाक्यमब्रवीद्युद्धलालसः ५
विदितं ते महाराज यथा भीमेन राक्षसाः
हिडिम्बबककिर्मीरा निहता मम बान्धवाः ६
परामर्शश्च कन्याया हिडिम्बायाः कृतः पुरा
किमन्यद्राक्षसानन्यानस्मांश्च परिभूय ह ७
तमहं सगणं राजन्सवाजिरथकुञ्जरम्
हैडिम्बं च सहामात्यं हन्तुमभ्यागतः स्वयम् ८
अद्य कुन्तीसुतान्सर्वान्वासुदेवपुरोगमान्
हत्वा संभक्षयिष्यामि सर्वैरनुचरैः सह
निवारय बलं सर्वं वयं योत्स्याम पाण्डवान् ९
तस्य तद्वचनं श्रुत्वा हृष्टो दुर्योधनस्तदा
प्रतिपूज्याब्रवीद्वाक्यं भ्रातृभिः परिवारितः १०
त्वां पुरस्कृत्य सगणं वयं योत्स्यामहे परान्
न हि वैरान्तमनसः स्थास्यन्ति मम सैनिकाः ११
एवमस्त्विति राजानमुक्त्वा राक्षसपुंगवः
अभ्ययात्त्वरितो भीमं सहितः पुरुषाशनैः १२
दीप्यमानेन वपुषा रथेनादित्यवर्चसा
तादृशेनैव राजेन्द्र यादृशेन घटोत्कचः १३

तस्याप्यतुलनिर्घोषो बहुतोरणचित्रितः
ऋृद्मचर्मावनद्धाङ्गो नल्वमात्रो महारथः १४
तस्यापि तुरगाः शीघ्रा हस्तिकायाः खरस्वनाः
शतं युक्ता महाकाया मांसशोणितभोजनाः १५
तस्यापि रथनिर्घोषो महामेघरवोपमः
तस्यापि सुमहच्चापं दृढज्यं बलवत्तरम् १६
तस्याप्यद्मसमा बाणा रुक्मपुङ्खाः शिलाशिताः
सोऽपि वीरो महाबाहुर्यथैव स घटोत्कचः १७
तस्यापि गोमायुबडाभिगुप्तो बभूव केतुर्ज्वलनार्कतुल्यः
स चापि रूपेण घटोत्कचस्य श्रीमत्तमो व्याकुलदीपितास्यः १८
दीप्ताङ्गदो दीप्तकिरीटमाली बद्धस्रगुष्णीषनिबद्धखड्गः
गदी भुशुणडी मुसली हली च शरासनी वारणतुल्यवर्ष्मा १९
रथेन तेनानलवर्चसा च विद्रावयन्पाणडववाहिनीं ताम्
रराज संख्ये परिवर्तमानो विद्युन्माली मेघ इवान्तरिद्मे २०
ते चापि सर्वे प्रवरा नरेन्द्रा महाबला वर्मिणश्चर्मिणश्च
हर्षान्विता युयुधुस्तत्र राजन्समन्ततः पाणडवयोधवीराः २१
इति श्रीमहाभारते द्रोणपर्वणि एकपञ्चाशदधिकशततमोऽध्यायः १५१

## द्विपञ्चाशदधिक शततमोऽध्यायः

सञ्जय उवाच
तमागतमभिप्रेद्मय भीमकर्माणमाहवे
हर्षमाहारयांचक्रुः कुरवः सर्व एव ते १
तथैव तव पुत्रास्ते दुर्योधनपुरोगमाः
ग्रप्लवाः प्लवमासाद्य तर्तुकामा इवार्णवम् २
पुनर्जातमिवात्मानं मन्वानाः पार्थिवास्तदा
ग्रलायुधं राद्मसेन्द्रं स्वागतेनाभ्यपूजयन् ३
तस्मिंस्त्वमानुषे युद्धे वर्तमाने भयावहे
कर्णराद्मसयोर्नक्तं दारुणप्रतिदर्शने ४
उपप्रैद्मन्त पाञ्चालाः स्मयमानाः सराजकाः
तथैव तावका राजन्घूर्णमानास्ततस्ततः ५

चुक्रुशुर्नेदमस्तीति द्रोणद्रौणिकृपादयः
तत्कर्म दृष्ट्वा संभ्रान्ता हैडिम्बस्य रणाजिरे ६
सर्वमाविग्नमभवद्धाहाभूतमचेतनम्
तव सैन्यं महाराज निराशं कर्णजीविते ७
दुर्योधनस्तु संप्रेक्ष्य कर्णमार्तिं परां गतम्
अलायुधं राक्षसेन्द्रमाहूयेदमथाब्रवीत् ८
एष वैकर्तनः कर्णो हैडिम्बेन समागतः
कुरुते कर्म सुमहद्यदस्यौपयिकं मृधे ९
पश्यैतान्पार्थिवाञ्शूरान्निहतान्भैमसेनिना
नानाशस्त्रैरभिहतान्पादपानिव दन्तिना १०
तवैष भागः समरे राजमध्ये मया कृतः
तवैवानुमते वीर तं विक्रम्य निबर्हय ११
पुरा वैकर्तनं कर्णमेष पापो घटोत्कचः
मायाबलमुपाश्रित्य कर्शयत्यरिकर्शनः १२
एकमुक्तः स राज्ञा तु राक्षसस्तीव्रविक्रमः
तथेत्युक्त्वा महाबाहुर्घटोत्कचमुपाद्रवत् १३
ततः कर्णं समुत्सृज्य भैमसेनिरपि प्रभो
प्रत्यमित्रमुपायान्तं मर्दयामास मार्गणैः १४
तयोः समभवद्युद्धं क्रुद्धयो राक्षसेन्द्रयोः
मत्तयोर्वाशिताहेतोर्द्विपयोरिव कानने १५
रक्षसा विप्रमुक्तस्तु कर्णोऽपि रथिनां वरः
अभ्यद्रवद्भीमसेनं रथेनादित्यवर्चसा १६
तमायान्तमनादृत्य दृष्ट्वा ग्रस्तं घटोत्कचम्
अलायुधेन समरे सिंहेनेव गवां पतिम् १७
रथेनादित्यवपुषा भीमः प्रहरतां वरः
किरञ्शरौघान्प्रययावलायुधरथं प्रति १८
तमायान्तमभिप्रेक्ष्य स तदालायुधः प्रभो
घटोत्कचं समुत्सृज्य भीमसेनं समाह्वयत् १९
तं भीमः सहसाभ्येत्य राक्षसान्तकरः प्रभो
सगणं राक्षसेन्द्रं तं शरवर्षैरवाकिरत् २०

तथैवालायुधो राजञ्शिलाधौतैरजिह्मगैः
अभ्यवर्षत कौन्तेयं पुनः पुनररिंदमः २१
तथा ते राक्षसाः सर्वे भीमसेनमुपाद्रवन्
नानाप्रहरणा भीमास्त्वत्सुतानां जयैषिणः २२
स ताडयमानो बलिभिर्भीमसेनो महाबलः
पञ्चभिः पञ्चभिः सर्वांस्तानविध्यच्छितैः शरैः २३
ते वध्यमाना भीमेन राक्षसाः खरयोनयः
विनेदुस्तुमुलान्नादान्दुद्रुवुश्च दिशो दश २४
तांस्त्रास्यमानान्भीमेन दृष्ट्वा रक्षो महाबलम्
अभिदुद्राव वेगेन शरैश्चैनमवाकिरत् २५
तं भीमसेनः समरे तीक्ष्णाग्रैरक्षिणोच्छरैः
अलायुधस्तु तानस्तान्भीमेन विशिखान्रणे
चिच्छेद कांश्चित्समरे त्वरया कांश्चिदग्रहीत् २६
स तं दृष्ट्वा राक्षसेन्द्रं भीमो भीमपराक्रमः
गदां चिक्षेप वेगेन वज्रपातोपमां तदा २७
तामापतन्तींवेगेन गदां ज्वालाकुलां ततः
गदया ताडयामास सा गदा भीममाव्रजत् २८
स राक्षसेन्द्रं कौन्तेयः शरवर्षैरवाकिरत्
तानप्यस्याकरोन्मोघान्राक्षसो निशितैः शरैः २९
ते चापि राक्षसाः सर्वे सैनिकाः भीमरूपिणः
शासनाद्राक्षसेन्द्रस्य निजघ्नू रथकुञ्जरान् ३०
पाञ्चालाः सृञ्जयाश्चैव वाजिनः परमद्विपाः
न शान्तिं लेभिरे तत्र राक्षसैर्भृशपीडिताः ३१
तं तु दृष्ट्वा महाघोरं वर्तमानं महाहवे
अब्रवीत्पुरुषश्रेष्ठो धनंजयमिदं वचः ३२
पश्य भीमं महाबाहो राक्षसेन्द्रवशं गतम्
पदवीमस्य गच्छ त्वं मा विचारय पाण्डव ३३
धृष्टद्युम्नः शिखण्डी च युधामन्यूत्तमौजसौ
सहितो द्रौपदेयाश्च कर्णं यान्तु महारथाः ३४
नकुलः सहदेवश्च युयुधानश्च वीर्यवान्

इतरान्राक्षसान्घन्तु शासनात्तव पाराडव ३५
त्वमपीमां महाबाहो चमूं द्रोणपुरस्कृताम्
वारयस्व नरव्याघ्र महद्धि भयमागतम् ३६
एवमुक्ते तु कृष्णेन यथोद्दिष्टा महारथाः
जग्मुर्वैकर्तनं कर्णं राक्षसांश्चेतरान्रणे ३७
अथ पूर्णायतोत्सृष्टैः शरैराशीविषोपमैः
धनुश्चिच्छेद भीमस्य राक्षसेन्द्रः प्रतापवान् ३८
हयांश्चास्य शितैर्बाणैः सारथिं च महाबलः
जघान मिषतः संख्ये भीमसेनस्य भारत ३९
सोऽवतीर्य रथोपस्थाद्धताश्वो हतसारथिः
तस्मै गुर्वीं गदां घोरां स विनद्योत्ससर्ज ह ४०
ततस्तां भीमनिर्घोषामापतन्तीं महागदाम्
गदया राक्षसो घोरो निजघान ननाद च ४१
तद्दृष्ट्वा राक्षसेन्द्रस्य घोरं कर्म भयावहम्
भीमसेनः प्रहृष्टात्मा गदामाशु परामृशत् ४२
तयोः समभवद्युद्धं तुमुलं नरराक्षसोः
गदानिपातसंह्रादैर्भुवं कम्पयतोर्भृशम् ४३
गदाविमुक्तौ तौ भूयः समासाद्येतरेतरम्
मुष्टिभिर्वज्रसंह्रादैरन्योन्यमभिजघ्नतुः ४४
रथचक्रैर्युगैरक्षैरधिष्ठानैरुपस्करैः
यथासन्नमुपादाय निजघ्नतुरमर्षणौ ४५
तौ विक्षरन्तौ रुधिरं समासाद्येतरेतरम्
मत्ताविव महानागावकृष्येतां पुनः पुनः ४६
तमपश्यद्धृषीकेशः पाराडवानां हिते रतः
स भीमसेनरक्षार्थं हैडिम्बं प्रत्यचोदयत् ४७

इति श्रीमहाभारते द्रोणपर्वणि द्विपञ्चाशदधिकशततमोऽध्यायः १५२

## त्रिपञ्चाशदधिक शततमोऽध्यायः

सञ्जय उवाच
संप्रेक्ष्य समरे भीमं रक्षसा ग्रस्तमन्तिकात्

वासुदेवोऽब्रवीद्वाक्यं घटोत्कचमिदं तदा १
पश्य भीमं महाबाहो रक्षसा ग्रस्तमन्तिकात्
पश्यतां सर्वसैन्यानां तव चैव महाद्युते २
स कर्णं त्वं समुत्सृज्य राक्षसेन्द्रमलायुधम्
जहि क्षिप्रं महाबाहो पश्चात्कर्णं वधिष्यसि ३
स वार्ष्णेयवचः श्रुत्वा कर्णमुत्सृज्य वीर्यवान्
युयुधे राक्षसेन्द्रेण बकभ्रात्रा घटोत्कचः
तयोः सुतुमुलं युद्धं बभूव निशि रक्षसोः ४
अलायुधस्य योधांस्तु राक्षसान्भीमदर्शनान्
वेगेनापततः शूरान्प्रगृहीतशरासनान् ५
आत्तायुधः सुसंक्रुद्धो युयुधानो महारथः
नकुलः सहदेवश्च चिच्छिदुर्निशितैः शरैः ६
सर्वांश्च समरे राजन्किरीटी क्षत्रियर्षभान्
परिचिक्षेप बीभत्सुः सर्वतः प्रक्षिपञ्शरान् ७
कर्णश्च समरे राजन्व्यद्रावयत पार्थिवान्
धृष्टद्युम्नशिखण्ड्यादीन्पाञ्चालानां महारथान् ८
तान्वध्यमानान्दृष्ट्वा तु भीमो भीमपराक्रमः
अभ्ययात्त्वरितः कर्णं विशिखान्विकिरन्रणे ९
ततस्तेऽप्याययुर्हत्वा राक्षसान्यत्र सूतजः
नकुलः सहदेवश्च सात्यकिश्च महारथः
ते कर्णं योधयामासुः पाञ्चाला द्रोणमेव च १०
अलायुधस्तु संक्रुद्धो घटोत्कचमरिंदमम्
परिघेणातिकायेन ताडयामास मूर्धनि ११
स तु तेन प्रहारेण भैमसेनिर्महाबलः
ईषन्मूर्छान्वितोऽत्मानं संस्तम्भयत वीर्यवान् १२
ततो दीप्ताग्नि संकाशां शतघण्टामलंकृताम्
चिक्षेप समरे तस्मै गदां काञ्चनभूषणाम् १३
सा हयान्सारथिं चैव रथं चास्य महास्वना
चूर्णयामास वेगेन विसृष्टा भीमकर्मणा १४
स भग्नहयचक्राक्षो विशीर्णध्वजकूबरः

उत्पपात रथात्तूर्णं मायामास्थाय राक्षसीम् १५
स समास्थाय मायां तु ववर्ष रुधिरं बहु
विद्युद्भिर्भ्राजितं चासीत्तिमिराभ्राकुलं नभः १६
ततो वज्रनिपाताश्च साशनिस्तनयित्नवः
महांश्चटचटाशब्दस्तत्रासीद्धि महाहवे १७
तां प्रेक्ष्य विहितां मायां राक्षसो राक्षसेन तु
ऊर्ध्वमुत्पत्य हैडिम्बस्तां मायां माययावधीत् १८
सोऽभिवीक्ष्य हतां मायां मायावी माययैव हि
अश्मवर्षं सुतुमुलं विससर्ज घटोत्कचे १९
अश्मवर्षं स तद्घोरं शरवर्षेण वीर्यवान्
दिशो विध्वंसयामास तदद्भुतमिवाभवत् २०
ततो नानाप्रहरणैरन्योन्यमभिवर्षताम्
आयसैः परिघैः शूलैर्गदामुसलमुद्गरैः २१
पिनाकैः करवालैश्च तोमरप्रासकम्पनैः
नाराचैर्निशितैर्भल्लैः शरैश्चक्रैः परश्वधैः २२
अयोगुडैर्भिण्डिपालैर्गोशीर्षोलूखलैरपि
उत्पाट्य च महाशाखैर्विविधैर्जगतीरुहैः २३
शमीपीलुकरीरैश्च शम्याकैश्चैव भारत
इङ्गुदैर्बदरीभिश्च कोविदारैश्च पुष्पितैः २४
पलाशैररिमेदैश्च प्लक्षन्यग्रोधपिप्पलैः
महद्भिः समरे तस्मिन्नन्योन्यमभिजघ्नतुः २५
विविधैः पर्वताग्रैश्च नानाधातुभिराचितैः
तेषां शब्दो महानासीद्वज्राणां भिद्यतामिव २६
युद्धं तदभवद्घोरं भैम्यलायुधयोर्नृप
हरीन्द्रयोर्यथा राजन्वालिसुग्रीवयोः पुरा २७
तौ युद्ध्वा विविधैर्घोरैरायुधैर्विशिखैस्तथा
प्रगृह्य निशितौ खड्गावन्योन्यमभिजघ्नतुः २८
तावन्योन्यमभिद्रुत्य केशेषु सुमहाबलौ
भुजाभ्यां पर्यगृह्णीतां महाकायौ महाबलौ २९
तौ भिन्नगात्रौ प्रस्वेदं सुस्रुवाते जनाधिप

रुधिरं च महाकायावभिवृष्टाविवाचलौ ३०
अथाभिपत्य वेगेन समुद्भ्राम्य च राक्षसम्
बलेनाक्षिप्य हैडिम्बश्चकर्तास्य शिरो महत् ३१
सोऽपहृत्य शिरस्तस्य कुण्डलाभ्यां विभूषितम्
तदा सुतुमुलं नादं ननाद सुमहाबलः ३२
हतं दृष्ट्वा महाकायं बकज्ञातिमरिंदमम्
पाञ्चालाः पाण्डवाश्चैव सिंहनादान्विनेदिरे ३३
ततो भेरीसहस्राणि शङ्खानामयुतानि च
अवादयन्पाण्डवेयास्तस्मिन्रक्षसि पातिते ३४
अतीव सा निशा तेषां बभूव विजयावहा
विद्योतमाना विबभौ समन्ताद्दीपमालिनी ३५
अलायुधस्य तु शिरो भैमसेनिर्महाबलः
दुर्योधनस्य प्रमुखे चिक्षेप गतचेतनम् ३६
अथ दुर्योधनो राजा दृष्ट्वा हतमलायुधम्
बभूव परमोद्विग्नः सह सैन्येन भारत ३७
तेन ह्यस्य प्रतिज्ञातं भीमसेनमहं युधि
हन्तेति स्वयमागम्य स्मरता वैरमुत्तमम् ३८
ध्रुवं स तेन हन्तव्य इत्यमन्यत पार्थिवः
जीवितं चिरकालाय भ्रातॄणां चाप्यमन्यत ३९
स तं दृष्ट्वा विनिहतं भीमसेनात्मजेन वै
प्रतिज्ञां भीमसेनस्य पूर्णामेवाभ्यमन्यत ४०
इति श्रीमहाभारते द्रोणपर्वणि त्रिपञ्चाशदधिकशततमोऽध्यायः १५३

## चतुः पञ्चाशदधिक शततमोऽध्यायः

सञ्जय उवाच
निहत्यालायुधं रक्षः प्रहृष्टात्मा घटोत्कचः
ननाद विविधान्नादान्वाहिन्याः प्रमुखे स्थितः १
तस्य तं तुमुलं शब्दं श्रुत्वा कुञ्जरकम्पनम्
तावकानां महाराज भयमासीत्सुदारुणम् २
अलायुधविषक्तं तु भैमसेनिं महाबलम्

दृष्ट्वा कर्णो महाबाहुः पाञ्चालान्समुपाद्रवत् ३
दशभिर्दशभिर्बाणैर्धृष्टद्युम्नशिखण्डिनौ
दृढैः पूर्णायतोत्सृष्टैर्बिभेद नतपर्वभिः ४
ततः परमनाराचैर्युधामन्यूत्तमौजसौ
सात्यकिं च रथोदारं कम्पयामास मार्गणैः ५
तेषामभ्यस्यतां तत्र सर्वेषां सव्यदक्षिणम्
मण्डलान्येव चापानि व्यदृश्यन्त जनाधिप ६
तेषां ज्यातलनिर्घोषो रथनेमिस्वनश्च ह
मेघानामिव घर्मान्ते बभूव तुमुलो निशि ७
ज्यानेमिघोषस्तनयित्नुमान्वै धनुस्तडिन्मण्डलकेतुशृङ्गः
शरौघवर्षाकुलवृष्टिमांश्च संग्राममेघः स बभूव राजन् ८
तदुद्धतं शैल इवाप्रकम्प्यो वर्षं महच्छैलसमानसारः
विध्वंसयामास रणे नरेन्द्र वैकर्तनः शत्रुगणावमर्दी ९
ततोऽतुलैर्वज्रनिपातकल्पैः शितैः शरैः काञ्चनचित्रपुङ्खैः
शत्रून्व्यपोहत्समरे महात्मा वैकर्तनः पुत्रहिते रतस्ते १०
संछिन्नभिन्नध्वजिनश्च केचित्केचिच्छरैरर्दितभिन्नदेहाः
केचिद्विसूता विहयाश्च केचिद्वैकर्तनेनाशु कृता बभूवुः ११
अविन्दमानास्त्वथ शर्म संख्ये यौधिष्ठिरं ते बलमन्वपद्यन्
तान्प्रेक्ष्य भग्नान्विमुखीकृतांश्च घटोत्कचो रोषमतीव चक्रे १२
आस्थाय तं काञ्चनरत्नचित्रं रथोत्तमं सिंह इवोन्ननाद
वैकर्तनं कर्णमुपेत्य चापि विव्याध वज्रप्रतिमैः पृषत्कैः १३
तौ कर्णिनाराचशिलीमुखैश्च नालीकदण्डैश्च सवत्सदन्तैः
वराहकर्णैः सविषाणशृङ्गैः क्षुरप्रवर्षैश्च विनेदतुः खम् १४
तद्बाणधारावृतमन्तरिक्षं तिर्यग्गताभिः समरे रराज
सुवर्णपुङ्खज्वलितप्रभाभिर्विचित्रपुष्पाभिरिव स्रजाभिः १५
समं हि तावप्रतिमप्रभावावन्योन्यमाजघ्नतुरुत्तमास्त्रैः
तयोर्हि वीरोत्तमयोर्न कश्चिद्ददर्श तस्मिन्समरे विशेषम् १६
अतीव तच्चित्रमतीव रूपं बभूव युद्धं रविभीमसून्वोः
समाकुलं शस्त्रनिपातघोरं दिवीव राह्वंशुमतोः प्रतप्तम् १७
घटोत्कचो यदा कर्णं न विशेषयते नृप

तदा प्रादुश्चकारोग्रमस्त्रमस्त्रविदां वरः १८
तेनास्त्रेण हयान्पूर्वं हत्वा कर्णस्य राक्षसः
सारथिं चैव हैडिम्बः क्षिप्रमन्तरधीयत १९
धृतराष्ट्र उवाच
तथा ह्यन्तर्हिते तस्मिन्कूटयोधिनि राक्षसे
मामकैः प्रतिपन्नं यत्तन्ममाचक्ष्व सञ्जय २०
सञ्जय उवाच
अन्तर्हितं राक्षसं तं विदित्वा संप्राक्रोशन्कुरवः सर्व एव
कथं नायं राक्षसः कूटयोधी हन्यात्कर्णं समरेऽदृश्यमानः २१
ततः कर्णो लघुचित्रास्त्रयोधी सर्वा दिशो व्यावृणोद्बाणजालैः
न वै किञ्चिद्व्यापतत्तत्र भूतं तमोभूते सायकैरन्तरिक्षे २२
न चाददानो न च संदधानो न चेषुधी स्पृशमानः कराग्रैः
अदृश्यद्वै लाघवात्सूतपुत्रः सर्वं बाणैश्छादयानोऽन्तरिक्षम् २३
ततो मायां विहितामन्तरिक्षे घोरां भीमां दारुणां राक्षसेन
संपश्यामो लोहिताभ्रप्रकाशां देदीप्यन्तीमग्निशिखामिवोग्राम् २४
ततस्तस्या विद्युतः प्रादुरासन्नुल्काश्चापि ज्वलिताः कौरवेन्द्र
घोषश्चान्यः प्रादुरासीत्सुघोरः सहस्रशो नदतां दुन्दुभीनाम् २५
ततः शराः प्रापतन्रुक्मपुङ्खाः शक्त्यः प्रासा मुसलान्यायुधानि
परश्वधास्तैलधौताश्च खड्गाः प्रदीप्ताग्राः पट्टिशातोमराश्च २६
मयूखिनः परिघा लोहबद्धा गदाश्चित्राः शितधाराश्च शूलाः
गुर्व्यो गदा हेमपट्टावनद्धाः शतघ्नयश्च पादुरासन्समन्तात् २७
महाशिलाश्चापतंस्तत्र तत्र सहस्रशः साशनयः सवज्राः
चक्राणि चानेकक्षतक्षुराणि प्रादुर्बभूवुर्ज्वलनप्रभाणि २८
तां शक्तिपाषाणपरश्वधानां प्रासासिवज्राशनिमुद्गराणाम्
वृष्टिं विशालां ज्वलितां पतन्तीं कर्णःशरौघैर्न शशाक हन्तुम् २९
शराहतानां पततां हयानां वज्राहतानां पततां गजानाम्
शिलाहतानां च महारथानां महान्निनादः पततां बभूव ३०
सुभीमनानाविधशस्त्रपातैर्घटोत्कचेनाभिहतं समन्तात्
दौर्योधनं तद्बलमार्तरूपमावर्तमानं ददृशे भ्रमन्तम् ३१
हाहाकृतं संपरिवर्तमानं संलीयमानं च विषण्णरूपम्

ते त्वार्यभावात्पुरुषप्रवीराः पराङ्मुखा न बभूवुस्तदानीम् ३२
तां राक्षसीं घोरतरां सुभीमां वृष्टिं महाशस्त्रमयीं पतन्तीम्
दृष्ट्वा बलौघांश्च निपात्यमानान्महद्भयं तव पुत्रान्विवेश ३३
शिवाश्च वैश्वानरदीप्तजिह्वाः सुभीमनादाः शतशो नदन्त्यः
रक्षोगणान्नर्दतश्चाभिवीक्ष्य नरेन्द्रयोधाव्यथिता बभूवुः ३४
ते दीप्तजिह्वाननतीक्ष्णदंष्ट्रा विभीषणाः शैलनिकाशकायाः
नभोगताः शक्तिविषक्तहस्ता मेघा व्यमुञ्चन्निव वृष्टिमार्गम् ३५
तैराहतास्ते शरशक्तिशूलैर्गदाभिरुग्रैः परिघैश्च दीप्तैः
वज्रैः पिनाकैरशनिप्रहारैश्चक्रैः शतघ्न्युन्मथिताश्च पेतुः ३६
हुडा भुशुण्ड्योऽश्मगुडाः शतघ्न्यः स्थूणाश्च कार्ष्णायसपट्टनद्धाः
अवाकिरंस्तव पुत्रस्य सैन्यं तथा रौद्रं कश्मलं प्रादुरासीत् ३७
निष्कीर्णान्त्रा विहतैरुत्तमाङ्गैः संभग्नाङ्गाः शेरते तत्र शूराः
भिन्ना हयाः कुञ्जराश्चावमग्नाः संचूर्णिताश्चैव रथाः शिलाभिः ३८
एवं महच्छस्त्रवर्षं सृजन्तस्ते यातुधाना भुवि घोररूपाः
मायाः सृष्टास्तत्र घटोत्कचेन नामुञ्चन्वै याचमानं न भीतम् ३९
तस्मिन्घोरे कुरुवीरावमर्दे कालोत्सृष्टे क्षत्रियाणामभावे
ते वै भग्नाः सहसा व्यद्रवन्त प्राक्रोशन्तः कौरवाः सर्व एव ४०
पलायध्वं कुरवो नैतदस्ति सेन्द्रा देवा घ्नन्ति नः पाण्डवार्थे
तथा तेषां मज्जतां भारतानां न स्म द्वीपस्तत्र कश्चिद्बभूव ४१
तस्मिन्संक्रन्दे तुमुले वर्तमाने सैन्ये भग्ने लीयमाने कुरूणाम्
अनीकानां प्रविभागेऽप्रकाशे न ज्ञायन्ते कुरवो नेतरे वा ४२
निर्मर्यादे विद्रवे घोररूपे सर्वा दिशः प्रेक्षमाणाः स्म शून्याः
तां शस्त्रवृष्टिमुरसा गाहमानं कर्णं चैकं तत्र राजन्नपश्यम् ४३
ततो बाणैरावृणोदन्तरिक्षं दिव्यां मायां योधयन्राक्षसस्य
ह्रीमान्कुर्वन्दुष्करमार्यकर्म नैवामुह्यत्संयुगे सूतपुत्रः ४४
ततो भीताः समुदैक्षन्त कर्णं राजन्सर्वे सैन्धवा बाह्लिकाश्च
असंमोहं पूजयन्तोऽस्य संख्ये संपश्यन्तो विजयं राक्षसस्य ४५
तेनोत्सृष्टा चक्रयुक्ता शतघ्नी समं सर्वांश्चतुरोऽश्वाञ्जघान
ते जानुभिर्जगतीमन्वपद्यन्गतासवो निर्दशनाक्षिजिह्वाः ४६
ततो हताश्वादवरुह्य वाहादन्तर्मनाः कुरुषु प्राद्रवत्सु

दिव्ये चास्त्रे मायया वध्यमाने नैवामुह्यच्चिन्तयन्प्राप्तकालम् ४७
ततोऽब्रुवन्कुरवः सर्व एव कर्णं दृष्ट्वा घोररूपां च मायाम्
शक्त्या रक्षो जहि कर्णाद्य तूर्णं नश्यन्त्येते कुरवो धार्तराष्ट्राः ४८
करिष्यतः किं च नो भीमपार्थौ तपन्तमेनं जहि रक्षो निशीथे
यो नः संग्रामाद्घोररूपाद्विमुच्येत्स नः पार्थान्समरे योधयेत ४९
तस्मादेनं राक्षसं घोररूपं जहि शक्त्या दत्तया वासवेन
मा कौरवाः सर्व एवेन्द्रकल्पा रात्रीमुखे कर्ण नेशुः सयोधाः ५०
स वध्यमानो रक्षसा वै निशीथे दृष्ट्वा राजन्नश्यमानं बलं च
महच्च श्रुत्वा निनदं कौरवाणां मतिं दध्रे शक्तिमोक्षाय कर्णः ५१
स वै क्रुद्धः सिंह इवात्यमर्षी नामर्षयत्प्रतिघातं रणे तम्
शक्तिं श्रेष्ठां वैजयन्तीमसह्यां समाददे तस्य वधं चिकीर्षन् ५२
यासौ राजन्निहिता वर्षपूगान्वधायाजौ सत्कृता फल्गुनस्य
यां वै प्रादात्सूतपुत्राय शक्रः शक्तिं श्रेष्ठां कुण्डलाभ्यां निमाय ५३
तां वै शक्तिं लेलिहानां प्रदीप्तां पाशैर्युक्तामन्तकस्येव रात्रिम्
मृत्योः स्वसारं ज्वलितामिवोल्कां वैकर्तनः प्राहिणोद्राक्षसाय ५४
तामुत्तमां परकायापहन्त्रीं दृष्ट्वा सौतेर्बाहुसंस्थां ज्वलन्तीम्
भीतं रक्षो विप्रदुद्राव राजन्कृत्वात्मानं विन्ध्यपादप्रमाणम् ५५
दृष्ट्वा शक्तिं कर्णबाह्वन्तरस्थां नेदुर्भूतान्यन्तरिक्षे नरेन्द्र
ववुर्वातास्तुमुलाश्चापि राजन्सनिर्घाता चाशनिर्गां जगाम ५६
सा तां मायां भस्म कृत्वा ज्वलन्ती भित्त्वा गाढं हृदयं राक्षसस्य
ऊर्ध्वं ययौ दीप्यमाना निशायां नक्षत्राणामन्तराण्याविशन्ती ५७
युद्ध्वा चित्रैर्विविधैः शस्त्रपूगैर्दिव्यैर्वीरो मानुषै राक्षसैश्च
नदन्नादान्विविधान्भैरवांश्च प्राणानिष्टांस्त्याजितः शक्रशक्त्या ५८
इदं चान्यच्चित्रमाश्चर्यरूपं चकारासौ कर्म शत्रुक्षयाय
तस्मिन्काले शक्तिनिर्भिन्नमर्मा बभौ राजन्मेघशैलप्रकाशः ५९
ततोऽन्तरिक्षादपतद्गतासुः स राक्षसेन्द्रो भुवि भिन्नदेहः
अवाक्शिराः स्तब्धगात्रो विजिह्वो घटोत्कचो महदास्थाय रूपम् ६०
स तद्रूपं भैरवं भीमकर्मा भीमं कृत्वा भैमसेनिः पपात
हतोऽप्येवं तव सैन्यैकदेशमपोथयत्कौरवान्भीषयाणः ६१
ततो मिश्राः प्राणदन्सिंहनादैर्भेर्यः शङ्खा मुरजाश्चानकाश्च

दग्धां मायां निहतं राक्षसं च दृष्ट्वा हृष्टाः प्राणदन्कौरवेयाः ६२
ततः कर्णः कुरुभिः पूज्यमानो यथा शक्रो वृत्रवधे मरुद्भिः
अन्वारूढस्तव पुत्रं रथस्थं हृष्टश्चापि प्राविशत्स्वं स सैन्यम् ६३
इति श्रीमहाभारते द्रोणपर्वणि चतुःपञ्चाशदधिकशततमोऽध्यायः १५४
समाप्तं घटोत्कचवधपर्व

पञ्चपञ्चाशदधिक शततमोऽध्यायः

सञ्जय उवाच
हैडिम्बं निहतं दृष्ट्वा विकीर्णमिव पर्वतम्
पाण्डवा दीनमनसः सर्वे बाष्पाकुलेक्षणाः १
वासुदेवस्तु हर्षेण महताभिपरिप्लुतः
ननाद सिंहवन्नादं व्यथयन्निव भारत
विनद्य च महानादं पर्यष्वजत फल्गुनम् २
स विनद्य महानादमभीशून्संनियम्य च
ननर्त हर्षसंवीतो वातोद्धूत इव द्रुमः ३
ततो विनिर्भ्राम्य पुनः पार्थमास्फोट्य चासकृत्
रथोपस्थगतो भीम प्राणदत्पुनरच्युतः ४
प्रहृष्टमनसं ज्ञात्वा वासुदेवं महाबलम्
अब्रवीदर्जुनो राजन्नातिहृष्टमना इव ५
अतिहर्षोऽयमस्थाने तवाद्य मधुसूदन
शोकस्थाने परे प्राप्ते हैडिम्बस्य वधेन वै ६
विमुखानि च सैन्यानि हतं दृष्ट्वा घटोत्कचम्
वयं च भृशमाविग्ना हैडिम्बस्य निपातनात् ७
नैतत्कारणमल्पं हि भविष्यति जनार्दन
तदद्य शंस मे पृष्टः सत्यं सत्यवतां वर ८
यद्येतन्न रहस्यं ते वक्तुमर्हस्यरिंदम
धैर्यस्य वैकृतं ब्रूहि त्वमद्य मधुसूदन ९
समुद्रस्येव संक्षोभो मेरोरिव विसर्पणम्
तथैतल्लाघवं मन्ये तव कर्म जनार्दन १०
वासुदेव उवाच

अतिहर्षमिमं प्राप्तं शृणु मे त्वं धनंजय
अतीव मनसः सद्यः प्रसादकरमुत्तमम् ११
शक्तिं घटोत्कचेनेमां व्यंसयित्वा महाद्युते
कर्णं निहतमेवाजौ विद्धि सद्यो धनंजय १२
शक्तिहस्तं पुनः कर्णं को लोकेऽस्ति पुमानिह
य एनमभितस्तिष्ठेत्कार्त्तिकेयमिवाहवे १३
दिष्ट्यापनीतकवचो दिष्ट्यापहृतकुण्डलः
दिष्ट्या च व्यंसिता शक्तिरमोघास्य घटोत्कचे १४
यदि हि स्यात्सकवचस्तथैव च सकुण्डलः
सामरानपि लोकांस्त्रीनेकः कर्णो जयेद्बली १५
वासवो वा कुबेरो वा वरुणो वा जलेश्वरः
यमो वा नोत्सहेत्कर्णं रणे प्रतिसमासितुम् १६
गाण्डीवमायम्य भवांश्चक्रं वाहं सुदर्शनम्
न शक्तौ स्वो रणे जेतुं तथायुक्तं नरर्षभम् १७
त्वद्धितार्थं तु शक्रेण मायया हृतकुण्डलः
विहीनकवचश्चायं कृतः परपुरंजयः १८
उत्कृत्य कवचं यस्मात्कुण्डले विमले च ते
प्रादाच्छक्राय कर्णो वै तेन वैकर्तनः स्मृतः १९
आशीविष इव क्रुद्धः स्तम्भितो मन्त्रतेजसा
तथाद्य भाति कर्णो मे शान्तज्वाल इवानलः २०
यदा प्रभृति कर्णाय शक्तिर्दत्ता महात्मना
वासवेन महाबाहो प्राप्ता यासौ घटोत्कचे २१
कुण्डलाभ्यां निमायाथ दिव्येन कवचेन च
तां प्राप्यामन्यत वृषा सततं त्वां हतं रणे २२
एवं गतेऽपि शक्योऽय हन्तुं नान्येन केनचित्
ऋते त्वा पुरुषव्याघ्र शपे सत्येन चानघ २३
ब्रह्मण्यः सत्यवादी च तपस्वी नियतव्रतः
रिपुष्वपि दयावांश्च तस्मात्कर्णो वृषा स्मृतः २४
युद्धशौण्डो महाबाहुर्नित्योद्यतशरासनः
केसरीव वने मर्दन्मत्तमातङ्गयूथपान्

विमदान्रथशार्दूलान्कुरुते रणमूर्धनि २५
मध्यंगत इवादित्यो यो न शक्यो निरीक्षितुम्
त्वदीयैः पुरुषव्याघ्र योधमुख्यैर्महात्मभिः
शरजालसहस्रांशुः शरदीव दिवाकरः २६
तपान्ते तोयदो यद्वच्छरधाराः क्षरत्यसौ
दिव्यास्त्रजलदः कर्णः पर्जन्य इव वृष्टिमान्
सोऽद्य मानुषतां प्राप्तो विमुक्तः शक्रदत्तया २७
एको हि योगोऽस्य भवेद्वधाय छिद्रे ह्येनं स्वप्रमत्तः प्रमत्तम्
कृच्छ्रप्राप्तं रथचक्रे निमग्ने हन्याः पूर्वं त्वं तु संज्ञां विचार्य २८
जरासंधश्चेदिराजो महात्मा महाबलश्चैकलव्यो निषादः
एकैकशो निहताः सर्व एव योगैस्तैस्तैस्त्वद्धितार्थं मयैव २९
अथापरे निहता राक्षसेन्द्रा हिडिम्बकिर्मीरबकप्रधानाः
अलायुधः परसैन्यावमर्दी घटोत्कचश्चोग्रकर्मा तरस्वी ३०
इति श्रीमहाभारते द्रोणपर्वणि पञ्चपञ्चाशदधिकशततमोऽध्यायः १५५

## षट्पञ्चाशदधिक शततमोऽध्यायः

अर्जुन उवाच
कथमस्मद्धितार्थं ते कैश्च योगैर्जनार्दन
जरासंधप्रभृतयो घातिताः पृथिवीश्वराः १
वासुदेव उवाच
जरासंधश्चेदिराजो नैषादिश्च महाबलः
यदि स्युर्न हताः पूर्वमिदानीं स्युर्भयंकराः २
सुयोधनस्तानवश्यं वृणुयाद्रथसत्तमान्
तेऽस्माभिर्नित्यसंदुष्टाः संश्रयेयुश्च कौरवान् ३
ते हि वीरा महामानः कृतास्त्रा दृढयोधिनः
धार्तराष्ट्रीं चमूं कृत्स्नां रक्षेयुरमरा इव ४
सूतपुत्रो जरासंधश्चेदिराजो निषादजः
सुयोधनं समाश्रित्य तपेरन्पृथिवीमिमाम् ५
योगैरपि हता यैस्ते तन्मे शृणु धनंजय
अजय्या हि विना योगैर्मृधे ते दैवतैरपि ६

एकैको हि पृथक्तेषां समस्तां सुरवाहिनीम्
योधयेत्समरे पार्थ लोकपालाभिरक्षिताम् ७
जरासंधो हि रुषितो रौहिणेयप्रधर्षितः
अस्मद्वधार्थं चिक्षेप गदां वै लोहितामुखीम् ८
सीमन्तमिव कुर्वाणां नभसः पावकप्रभाम्
व्यदृश्यतापतन्ती सा शक्रमुक्ता यथाशनिः ९
तामापतन्तीं दृष्ट्वैव गदां रोहिणिनन्दनः
प्रतिघातार्थमस्त्रं वै स्थूणाकर्णमवासृजत् १०
अस्त्रवेगप्रतिहता सा गदा प्रापतद्भुवि
दारयन्ती धरां देवीं कम्पयन्तीव पर्वतान् ११
तत्र स्म राक्षसी घोरा जरा नामाशुविक्रमा
संधयामास तं जातं जरासंधमरिंदमम् १२
द्वाभ्यां जातो हि मातृभ्यामर्धदेहः पृथक्पृथक्
तया स संधितो यस्माज्जरासंधस्ततः स्मृतः १३
सा तु भूमिगता पार्थ हता ससुतबान्धवा
गदया तेन चास्त्रेण स्थूणाकर्णेन राक्षसी १४
विनाभूतः स गदया जरासंधो महामृधे
निहतो भीमसेनेन पश्यतस्ते धनंजय १५
यदि हि स्याद्गदापाणिर्जरासंधः प्रतापवान्
सेन्द्रा देवा न तं हन्तुं रणे शक्ता नरोत्तम १६
त्वद्धितार्थं च नैषादिरङ्गुष्ठेन वियोजितः
द्रोणेनाचार्यकं कृत्वा छद्मना सत्यविक्रमः १७
स तु बद्धाङ्गुलित्राणो नैषादिर्दृढविक्रमः
अस्यन्नेको वनचरो बभौ राम इवापरः १८
एकलव्यं हि साङ्गुष्ठमशक्ता देवदानवाः
सराक्षसोरगाः पार्थ विजेतुं युधि कर्हिचित् १९
किमु मानुषमात्रेण शक्यः स्यात्प्रतिवीक्षितुम्
दृढमुष्टिः कृती नित्यमस्यमानो दिवानिशम् २०
त्वद्धितार्थं तु स मया हतः संग्राममूर्धनि
चेदिराजश्च विक्रान्तः प्रत्यक्षं निहतस्तव २१

स चाप्यशक्यः संग्रामे जेतुं सर्वैः सुरासुरैः
वधार्थं तस्य जातोऽहमन्येषां च सुरद्विषाम् २२
त्वत्सहायो नरव्याघ्र लोकानां हितकाम्यया
हिडिम्बबककिर्मीरा भीमसेनेन पातिताः
रावणेन समप्राणा ब्रह्मयज्ञविनाशनाः २३
हतस्तथैव मायावी हैडिम्बेनाप्यलायुधः
हैडिम्बश्चाप्युपायेन शक्त्या कर्णेन घातितः २४
यदि ह्येनं नाहनिष्यत्कर्णः शक्त्या महामृधे
मया वध्योऽभविष्यत्स भैमसेनिर्घटोत्कचः २५
मया न निहतः पूर्वमेष युष्मत्प्रियेप्सया
एष हि ब्राह्मणद्वेषी यज्ञद्वेषी च राक्षसः २६
धर्मस्य लोप्ता पापात्मा तस्मादेष निपातितः
व्यंसिता चाप्युपायेन शक्रदत्ता मयानघ २७
ये हि धर्मस्य लोप्तारो वध्यास्ते मम पाण्डव
धर्मसंस्थापनार्थं हि प्रतिज्ञैषा ममाव्यया २८
ब्रह्म सत्यं दमः शौचं धर्मो ह्रीः श्रीर्धृतिः क्षमा
यत्र तत्र रमे नित्यमहं सत्येन ते शपे २९
न विषादस्त्वया कार्यः कर्णं वैकर्तनं प्रति
उपदेक्ष्याम्युपायं ते येन तं प्रसहिष्यसि ३०
सुयोधनं चापि रणे हनिष्यति वृकोदरः
तस्य चापि वधोपायं वक्ष्यामि तव पाण्डव ३१
वर्धते तुमुलस्त्वेष शब्दः परचमूं प्रति
विद्रवन्ति च सैन्यानि त्वदीयानि दिशो दश ३२
लब्धलक्ष्या हि कौरव्या विधमन्ति चमूं तव
दहत्येष च वः सैन्यं द्रोणः प्रहरतां वरः ३३

इति श्रीमहाभारते द्रोणपर्वणि षट्पञ्चाशदधिकशततमोऽध्यायः १५६

## सप्तपञ्चाशदधिक शततमोऽध्यायः

धृतराष्ट्र उवाच
एकवीरवधे मोघा शक्तिः सूतात्मजे यदा

कस्मात्सर्वान्समुत्सृज्य स तां पार्थे न मुक्तवान् १
तस्मिन्हते हता हि स्युः सर्वे पाराडवसृञ्जयाः
एकवीरवधे कस्मान्न युद्धे जयमादधत् २
आहूतो न निवर्तेयमिति तस्य महाव्रतम्
स्वयमाह्वयितव्यः स सूतपुत्रेण फल्गुनः ३
ततो द्वैरथमानीय फल्गुनं शक्रदत्तया
न जघान वृषा कस्मात्तन्ममाचद्व सञ्जय ४
नूनं बुद्धिविहीनश्चाप्यसहायश्च मे सुतः
शत्रुभिर्व्यंसितोपायः कथं नु स जयेदरीन् ५
या ह्यस्य परमा शक्तिर्जयस्य च परायणम्
सा शक्तिर्वासुदेवेन व्यंसितास्य घटोत्कचे ६
कुणेर्यथा हस्तगतं ह्रियेद्बिल्वं बलीयसा
तथा शक्तिरमोघा सा मोघीभूता घटोत्कचे ७
यथा वराहस्य शुनश्च युध्यतोस्तयोरभावे श्वपचस्य लाभः
मन्ये विद्वन्वासुदेवस्य तद्वद्युद्धे लाभः कर्णहैडिम्बयोर्वै ८
घटोत्कचो यदि हन्याद्धि कर्णं परो लाभः स भवेत्पाराडवानाम्
वैकर्तनो वा यदि तं निहन्यात्तथापि कृत्यं शक्तिनाशात्कृतं स्यात् ९
इति प्राज्ञः यज्ञैतद्विचार्य घटोत्कचं सूतपुत्रेण युद्धे
अयोधयद्वासुदेवो नृसिंहः प्रियं कुर्वन्पाराडवानां हितं च १०
सञ्जय उवाच
एतच्चिकीर्षितं ज्ञात्वा कर्णे मधुनिहा नृप
नियोजयामास तदा द्वैरथे राक्षसेश्वरम् ११
घटोत्कचं महावीर्यं महाबुद्धिर्जनार्दनः
अमोघाया विघातार्थं राजन्दुर्मन्त्रिते तव १२
तदैव कृतकार्या हि वयं स्याम कुरूद्वह
न रक्षेद्यदि कृष्णस्तं पार्थं कर्णान्महारथात् १३
साश्वध्वजरथः संख्ये धृतराष्ट्र पतेद्भुवि
विना जनार्दनं पार्थो योगानामीश्वरं प्रभुम् १४
तैस्तैरुपायैर्बहुभी रक्ष्यमाणः स पार्थिव
जयत्यभिमुखः शत्रून्पार्थः कृष्णेन पालितः १५

सविशेषं त्वमोघायाः कृष्णोऽरक्षत पाण्डवम्
हन्यात्क्षिप्ता हि कौन्तेयं शक्तिर्वृक्षमिवाशनिः १६
धृतराष्ट्र उवाच
विरोधी च कुमन्त्री च प्राज्ञमानी ममात्मजः
यस्यैष समतिक्रान्तो वधोपायो जयं प्रति १७
तवापि समतिक्रान्तमेतद्गावल्गणे कथम्
एतमर्थं महाबुद्धे यत्त्वया नावबोधितः १८
सञ्जय उवाच
दुर्योधनस्य शकुनेर्मम दुःशासनस्य च
रात्रौ रात्रौ भवत्येषा नित्यमेव समर्थना १९
श्वः सर्वसैन्यानुत्सृज्य जहि कर्ण धनंजयम्
प्रेष्यवत्पाण्डुपाञ्चालानुपभोक्ष्यामहे ततः २०
अथ वा निहते पार्थे पाण्डुष्वन्यतमं ततः
स्थापयेद्युधि वार्ष्णेयस्तस्मात्कृष्णो निपात्यताम् २१
कृष्णो हि मूलं पाण्डूनां पार्थः स्कन्ध इवोद्गतः
शाखा इवेतरे पार्थाः पाञ्चालाः पत्रसंज्ञिताः २२
कृष्णाश्रयाः कृष्णबलाः कृष्णनाथाश्च पाण्डवाः
कृष्णः परायणं चैषां ज्योतिषामिव चन्द्रमाः २३
तस्मात्पर्णानि शाखाश्च स्कन्धं चोत्सृज्य सूतज
कृष्णं निकृन्धि पाण्डूनां मूलं सर्वत्र सर्वदा २४
हन्याद्यदि हि दाशार्हं कर्णो यादवनन्दनम्
कृत्स्ना वसुमती राजन्वशे ते स्यान्न संशयः २५
यदि हि स निहतः शयीत भूमौ यदुकुलपाण्डवनन्दनो महात्मा
ननु तव वसुधा नरेन्द्र सर्वा सगिरिसमुद्रवना वशं व्रजेत २६
सा तु बुद्धिः कृताप्येवं जाग्रति त्रिदशेश्वरे
अप्रमेये हृषीकेशे युद्धकाले व्यमुह्यत २७
अर्जुनं चापि कौन्तेयं सदा रक्षति केशवः
न ह्येनमैच्छत्प्रमुखे सौतेः स्थापयितुं रणे २८
अन्यांश्चास्मै रथोदारानुपस्थापयदच्युतः
अमोघां तां कथं शक्तिं मोघां कुर्यामिति प्रभो २९

ततः कृष्णं महाबाहुः सात्यकिः सत्यविक्रमः
पप्रच्छ रथशार्दूल कर्णं प्रति महारथम् ३०
अयं च प्रत्ययः कर्णे शक्त्या चामितविक्रम
किमर्थं सूतपुत्रेण न मुक्ता फल्गुने तु सा ३१
वासुदेव उवाच
दुःशासनश्च कर्णश्च शकुनिश्च ससैन्धवः
सततं मन्त्रयन्ति स्म दुर्योधनपुरोगमाः ३२
कर्ण कर्ण महेष्वास रणेऽमितपराक्रम
नान्यस्य शक्तिरेषा ते मोक्तव्या जयतां वर ३३
ऋते महारथात्पार्थात्कुन्तीपुत्राद्धनंजयात्
स हि तेषामतियशा देवानामिव वासवः ३४
तस्मिन्विनिहते पार्थे पाण्डवाः सृञ्जयैः सह
भविष्यन्ति गतात्मानः सुरा इव निरग्नयः ३५
तथेति च प्रतिज्ञातं कर्णेन शिनिपुंगव
हृदि नित्यं च कर्णस्य वधो गाण्डीवधन्वनः ३६
अहमेव तु राधेयं मोहयामि युधां वर
ततो नावसृजच्छक्तिं पाण्डवे श्वेतवाहने ३७
फल्गुनस्य हि तां मृत्युमवगम्य युयुत्सतः
न निद्रा न च मे हर्षो मनसोऽस्ति युधां वर ३८
घटोत्कचे व्यंसितां तु दृष्ट्वा तां शिनिपुंगव
मृत्योरास्यान्तरान्मुक्तं पश्याम्यद्य धनंजयम् ३९
न पिता न च मे माता न यूयं भ्रातरस्तथा
न च प्राणास्तथा रक्ष्या यथा बीभत्सुराहवे ४०
त्रैलोक्यराज्याद्यत्किंचिद्भवेदन्यत्सुदुर्लभम्
नेच्छेयं सात्वताहं तद्विना पार्थं धनंजयम् ४१
अतः प्रहर्षः सुमहान्युयुधानाद्य मेऽभवत्
मृतं प्रत्यागतमिव दृष्ट्वा पार्थं धनंजयम् ४२
अतश्च प्रहितो युद्धे मया कर्णाय राक्षसः
न ह्यन्यः समरे रात्रौ शक्तः कर्णं प्रबाधितुम् ४३
सञ्जय उवाच

इति सात्यकये प्राह तदा देवकिनन्दनः
धनंजयहिते युक्तस्तत्प्रिये सततं रतः ४४
इति श्रीमहाभारते द्रोणपर्वणि सप्तपञ्चाशदधिकशततमोऽध्यायः १५७

## अष्टपञ्चाशदधिक शततमोऽध्यायः

धृतराष्ट्र उवाच
कर्णदुर्योधनादीनां शकुनेः सौबलस्य च
अपनीतं महत्तात इव चैव विशेषतः १
यदाजानीत तां शक्तिमेकघ्नीं सततं रणे
अनिवार्यामसह्यां च देवैरपि सवासवैः २
सा किमर्थं तु कर्णेन प्रवृत्ते समरे पुरा
न देवकीसुते मुक्ता फल्गुने वापि सञ्जय ३
सञ्जय उवाच
संग्रामाद्विनिवृत्तानां सर्वेषां नो विशां पते
रात्रौ कुरुकुलश्रेष्ठ मन्त्रोऽय समजायत ४
प्रभातमात्रे श्वो भूते केशवायार्जुनाय वा
शक्तिरेषा विमोक्तव्या कर्ण कर्णेति नित्यशः ५
ततः प्रभातसमये राजन्कर्णस्यदैवतेः
अन्येषां चैव योधानां सा बुद्धिर्नश्यते पुनः ६
दैवमेव परं मन्ये यत्कर्णो हस्तसंस्थया
न जघान रणे पार्थं कृष्णं वा देवकीसुतम् ७
तस्य हस्तस्थिता शक्तिः कालरात्रिरिवोद्यता
दैवोपहतबुद्धित्वान्न तां कर्णो विमुक्तवान् ८
कृष्णे वा देवकीपुत्रे मोहितो देवमायया
पार्थे वा शक्रकल्पे वै वधार्थं वासवीं प्रभो ९
धृतराष्ट्र उवाच
दैवेनैव हता यूयं स्वबुद्ध्या केशवस्य च
गता हि वासवी हत्वा तृणभूतं घटोत्कचम् १०
कर्णश्च मम पुत्राश्च सर्वे चान्ये च पार्थिवाः
अनेन दुष्प्रणीतेन गता वैवस्वतक्षयम् ११

भूय एव तु मे शंस यथा युद्धमवर्तत
कुरूणां पाण्डवानां च हैडिम्बे निहते तदा १२
ये च तेऽभ्यद्रवन्द्रोणं व्यूढानीकाः प्रहारिणः
सृञ्जयाः सह पाञ्चालैस्तेऽप्यकुर्वन्कथं रणम् १३
सौमदत्तेर्वधाद्द्रोणमायस्तं सैन्धवस्य च
अमर्षाज्जीवितं त्यक्त्वा गाहमानं वरूथिनीम् १४
जृम्भमाणमिव व्याघ्रं व्यात्ताननमिवान्तकम्
कथं प्रत्युद्ययुर्द्रोणमस्यन्तं पाण्डुसृञ्जयाः १५
आचार्यं ये च तेऽरक्षन्दुर्योधनपुरोगमाः
द्रौणिकर्णकृपास्तात ते ऽप्यकुर्वन्किमाहवे १६
भारद्वाजं जिघांसन्तौ सव्यसाचिवृकोदरौ
समार्च्छन्मामका युद्धे कथं सञ्जय शंस मे १७
सिन्धुराजवधेनेमे घटोत्कचवधेन ते
अमर्षिताः सुसंक्रुद्धा रणं चक्रुः कथं निशि १८
सञ्जय उवाच
हते घटोत्कचे राजन्कर्णेन निशि राक्षसे
प्रणदत्सु च हृष्टेषु तावकेषु युयुत्सुषु १९
आपतत्सु च वेगेन वध्यमाने बलेऽपि च
विगाढायां रजन्यां च राजा दैन्यं परं गतः २०
अब्रवीच्च महाबाहुर्भीमसेनं परंतपः
आवारय महाबाहो धार्तराष्ट्रस्य वाहिनीम्
हैडिम्बस्याभिघातेन मोहो मामाविशन्महान् २१
एवं भीमं समादिश्य स्वरथे समुपाविशत्
अश्रुपूर्णमुखो राजा निःश्वसंश्च पुनः पुनः
कश्मलं प्राविशद्घोरं दृष्ट्वा कर्णस्य विक्रमम् २२
तं तथा व्यथितं दृष्ट्वा कृष्णो वचनमब्रवीत्
मा व्यथां कुरु कौन्तेय नैतत्त्वय्युपपद्यते
वैक्लव्यं भरतश्रेष्ठ यथा प्राकृतपूरुषे २३
उत्तिष्ठ राजन्युध्यस्व वह गुर्वीं धुरं विभो
त्वयि वैक्लव्यमापन्ने संशयो विजये भवेत् २४

श्रुत्वा कृष्णस्य वचनं धर्मराजो युधिष्ठिरः
विमृज्य नेत्रे पाणिभ्यां कृष्णं वचनमब्रवीत् २५
विदिता मे महाबाहो धर्माणां परमा गतिः
ब्रह्महत्याफलं तस्य यः कृतं नावबुध्यते २६
अस्माकं हि वनस्थानां हैडिम्बेन महात्मना
बालेनापि सता तेन कृतं साह्यं जनार्दन २७
अस्त्रहेतोर्गतं ज्ञात्वा पाण्डवं श्वेतवाहनम्
असौ कृष्ण महेष्वासः काम्यके मामुपस्थितः
उषितश्च सहास्माभिर्यावन्नासीद्धनंजयः २८
गन्धमादनयात्रायां दुर्गेभ्यश्च स्म तारिताः
पाञ्चाली च परिश्रान्ता पृष्ठेनोढा महात्मना २९
आरम्भाच्चैव युद्धानां यदेष कृतवान्प्रभो
मदर्थं दुष्करं कर्म कृतं तेन महात्मना ३०
स्वभावाद्या च मे प्रीतिः सहदेवे जनार्दन
सैव मे द्विगुणा प्रीती राक्षसेन्द्रे घटोत्कचे ३१
भक्तश्च मे महाबाहुः प्रियोऽस्याहं प्रियश्च मे
येन विन्दामि वार्ष्णेय कश्मलं शोकतापितः ३२
पश्य सैन्यानि वार्ष्णेय द्राव्यमाणानि कौरवैः
द्रोणकर्णौ तु संयत्तौ पश्य युद्धे महारथौ ३३
निशीथे पाण्डवं सैन्यमाभ्यां पश्य प्रमर्दितम्
गजाभ्यामिव मत्ताभ्यां यथा नडवनं महत् ३४
अनादृत्य बलं बाह्वोर्भीमसेनस्य माधव
चित्रास्त्रतां च पार्थस्य विक्रमन्ते स्म कौरवाः ३५
एष द्रोणश्च कर्णश्च राजा चैव सुयोधनः
निहत्य राक्षसं युद्धे हृष्टा नर्दन्ति संयुगे ३६
कथमस्मासु जीवत्सु त्वयि चैव जनार्दन
हैडिम्बः प्राप्तवान्मृत्युं सूतपुत्रेण संगतः ३७
कदर्थीकृत्य नः सर्वान्पश्यतः सव्यसाचिनः
निहतो राक्षसः कृष्ण भैमसेनिर्महाबलः ३८
यदाभिमन्युर्निहतो धार्तराष्ट्रैर्दुरात्मभिः

नासीत्तत्र रणे कृष्ण सव्यसाची महारथः ३९
निरुद्धाश्च वयं सर्वे सैन्धवेन दुरात्मना
निमित्तमभवद्द्रोणः सपुत्रस्तत्र कर्मणि ४०
उपदिष्टो वधोपायः कर्णस्य गुरुणा स्वयम्
व्यायच्छतश्च खड्गेन द्विधा खड्गं चकार ह ४१
व्यसने वर्तमानस्य कृतवर्मा नृशंसवत्
अश्वाञ्जघान सहसा तथोभौ पार्ष्णिसारथी
तथेतरे महेष्वासाः सौभद्रं युध्यपातयन् ४२
अल्पे च कारणे कृष्ण हतो गाण्डीवधन्वना
सैन्धवो यादवश्रेष्ठ तच्च नातिप्रियं मम ४३
यदि शत्रुवधे न्याय्यो भवेत्कर्तुं च पाण्डवैः
द्रोणकर्णौ रणे पूर्वं हन्तव्याविति मे मतिः ४४
एतौ मूलं हि दुःखानामस्माकं पुरुषर्षभ
एतौ रणे समासाद्य पराश्वस्तः सुयोधनः ४५
यत्र वध्यो भवेद्द्रोणः सूतपुत्रश्च सानुगः
तत्रावधीन्महाबाहुः सैन्धवं दूरवासिनम् ४६
अवश्यं तु मया कार्यः सूतपुत्रस्य निग्रहः
ततो यास्याम्यहं वीर स्वयं कर्णजिघांसया
भीमसेनो महाबाहुर्द्रोणानीकेन संगतः ४७
एवमुक्त्वा ययौ तूर्णं त्वरमाणो युधिष्ठिरः
स विस्फार्य महच्चापं शङ्खं प्राध्माप्य भैरवम् ४८
ततो रथसहस्रेण गजानां च शतैस्त्रिभिः
वाजिभिः पञ्चसाहस्रैस्त्रिसाहस्रैः प्रभद्रकैः
वृतः शिखण्डी त्वरितो राजानं पृष्ठतोऽन्वयात् ४९
ततो भेरीः समाजघ्नुः शङ्खान्दध्मुश्च दंशिताः
पाञ्चालाः पाण्डवाश्चैव युधिष्ठिरपुरोगमाः ५०
ततोऽब्रवीन्महाबाहुर्वासुदेवो धनंजयम्
एष प्रयाति त्वरितो क्रोधाविष्टो युधिष्ठिरः
जिघांसुः सूतपुत्रस्य तस्योपेक्षा न युज्यते ५१
एवमुक्त्वा हृषीकेशः शीघ्रमश्वानचोदयत्

दूरं च यातं राजानमन्वगच्छज्जनार्दनः ५२
तं दृष्ट्वा सहसा यान्तं सूतपुत्रजिघांसया
शोकोपहतसंकल्पं दह्यमानमिवाग्निना
अभिगम्याब्रवीद्व्यासो धर्मपुत्रं युधिष्ठिरम् ५३
कर्णमासाद्य संग्रामे दिष्ट्या जीवति फल्गुनः
सव्यसाचिवधाकाङ्क्षी शक्तिं रक्षितवान्हि सः ५४
न चागाद्द्वैरथं जिष्णुर्दिष्ट्या तं भरतर्षभ
सृजेतां स्पर्धिनावेतौ दिव्यान्यस्त्राणि सर्वशः ५५
वध्यमानेषु चास्त्रेषु पीडितः सूतनन्दनः
वासवीं समरे शक्तिं ध्रुवं मुञ्चेद्युधिष्ठिर ५६
ततो भवेत्ते व्यसनं घोरं भरतसत्तम
दिष्ट्या रक्षो हतं युद्धे सूतपुत्रेण मानद ५७
वासवीं कारणं कृत्वा कालेनापहतो ह्यसौ
तवैव कारणाद्रक्षो निहतं तात संयुगे ५८
मा क्रुधो भरतश्रेष्ठ मा च शोके मनः कृथाः
प्राणिनामिह सर्वेषामेषा निष्ठा युधिष्ठिर ५९
भ्रातृभिः सहितः सर्वैः पार्थिवैश्च महात्मभिः
कौरवान्समरे राजन्नभियुध्यस्व भारत
पञ्चमे दिवसे चैव पृथिवी ते भविष्यति ६०
नित्यं च पुरुषव्याघ्र धर्ममेव विचिन्तय
आनृशंस्यं तपो दानं क्षमां सत्यं च पाण्डव ६१
सेवेथाः परमप्रीतो यतो धर्मस्ततो जयः
इत्युक्त्वा पाण्डवं व्यासस्तत्रैवान्तरधीयत ६२
इति श्रीमहाभारते द्रोणपर्वणि अष्टपञ्चाशदधिकशततमोऽध्यायः १५८

## एकोनषष्ट्यधिक शततमोऽध्यायः

सञ्जय उवाच
घटोत्कचे तु निहते सूतपुत्रेण तां निशाम्
दुःखामर्षवशं प्राप्तो धर्मपुत्रो युधिष्ठिरः १
दृष्ट्वा भीमेन महतीं वार्यमाणां चमूं तव

धृष्टद्युम्नमुवाचेदं कुम्भयोनिं निवारय २
त्वं हि द्रोणविनाशाय समुत्पन्नो हुताशनात्
सशरः कवची खड्गी धन्वी च परतापनः
अभिद्रव रणे हृष्टो न च ते भीः कथंचन ३
जनमेजयः शिखण्डी च द्रौर्मुखिश्च यशोधनः
अभिद्रवन्तु संहृष्टाः कुम्भयोनिं समन्ततः ४
नकुलः सहदेवश्च द्रौपदेयाः प्रभद्रकाः
द्रुपदश्च विराटश्च पुत्रभ्रातृसमन्वितौ ५
सात्यकिः केकयाश्चैव पाण्डवश्च धनंजयः
अभिद्रवन्तु वेगेन भारद्वाजवधेप्सया ६
तथैव रथिनः सर्वे हस्त्यश्वं यच्च किंचन
पादाताश्च रणे द्रोणं प्रापयन्तु महारथम् ७
तथाज्ञप्तास्तु ते सर्वे पाण्डवेन महात्मना
अभ्यद्रवन्त वेगेन कुम्भयोनिं युयुत्सया ८
आगच्छतस्तान्सहसा सर्वोद्योगेन पाण्डवान्
प्रतिजग्राह समरे द्रोणः शस्त्रभृतां वरः ९
ततो दुर्योधनो राजा सर्वोद्योगेन पाण्डवान्
अभ्यद्रवत्सुसंक्रुद्ध इच्छन्द्रोणस्य जीवितम् १०
ततः प्रववृते युद्धं श्रान्तवाहनसैनिकम्
पाण्डवानां कुरूणां च गर्जतामितरेतरम् ११
निद्रान्धास्ते महाराज परिश्रान्ताश्च संयुगे
नाभ्यपद्यन्त समरे कांचिच्चेष्टां महारथाः १२
त्रियामा रजनी चैषा घोररूपा भयानका
सहस्रयामप्रतिमा बभूव प्राणहारिणी
वध्यतां च तथा तेषां क्षतानां च विशेषतः १३
अहो रात्रिः समाजज्ञे निद्रान्धानां विशेषतः
सर्वे ह्यासन्निरुत्साहाः क्षत्रिया दीनचेतसः
तव चैव परेषां च गतास्त्रा विगतेषवः १४
ते तथा पारयन्तश्च ह्रीमन्तश्च विशेषतः
स्वधर्ममनुपश्यन्तो न जहुः स्वामनीकिनीम् १५

शस्त्राण्यन्ये समुत्सृज्य निद्रान्धाः शेरते जनाः
गजेष्वन्ये रथेष्वन्ये हयेष्वन्ये च भारत १६
निद्रान्धा नो बुबुधिरे कांचिच्चेष्टां नराधिपाः
तेऽन्योन्यं समरे योधाः प्रेषयन्त यमक्षयम् १७
स्वप्नायमानास्त्वपरे परानिति विचेतसः
आत्मानं समरे जघ्नुः स्वानेव च परानपि १८
नानावाचो विमुञ्चन्तो निद्रान्धास्ते महारणे
योद्धव्यमिति तिष्ठन्तो निद्रासंसक्तलोचनाः १९
संमर्द्यान्ये रणे केचिन्निद्रान्धाश्च परस्परम्
जघ्नुः शूरा रणे राजंस्तस्मिंस्तमसि दारुणे २०
हन्यमानं तथात्मानं परेभ्यो बहवो जनाः
नाभ्यजानन्त समरे निद्रया मोहिता भृशम् २१
तेषामेतादृशीं चेष्टां विज्ञाय पुरुषर्षभः
उवाच वाक्यं बीभत्सुरुच्चैः संनादयन्दिशः २२
श्रान्ता भवन्तो निद्रान्धाः सर्व एव सवाहनाः
तमसा चावृते सैन्ये रजसा बहुलेन च २३
ते यूयं यदि मन्यध्वमुपारमत सैनिकाः
निमीलयत चात्रैव रणभूमौ मुहूर्तकम् २४
ततो विनिद्रा विश्रान्ताश्चन्द्रमस्युदिते पुनः
संसाधयिष्यथान्योन्यं स्वर्गाय कुरुपाण्डवाः २५
तद्वचः सर्वधर्मज्ञा धार्मिकस्य निशम्य ते
अरोचयन्त सैन्यानि तथा चान्योन्यमब्रुवन् २६
चुक्रुशुः कर्ण कर्णेति राजन्दुर्योधनेति च
उपारमत पाण्डूनां विरता हि वरूथिनी २७
तथा विक्रोशमानस्य फल्गुनस्य ततस्ततः
उपारमत पाण्डूनां सेना तव च भारत २८
तामस्य वाचं देवाश्च ऋषयश्च महात्मनः
सर्वसैन्यानि चाक्षुद्राः प्रहृष्टाः प्रत्यपूजयन् २९
तत्संपूज्य वचोऽक्रूरं सर्वसैन्यानि भारत
मुहूर्तमस्वपन्राजञ्श्रान्तानि भरतर्षभ ३०

सा तु संप्राप्य विश्रामं ध्वजिनी तव भारत
सुखमाप्तवती वीरमर्जुनं प्रत्यपूजयत् ३१
त्वयि वेदास्तथास्त्राणि त्वयि बुद्धिपराक्रमौ
धर्मस्त्वयि महाबाहो दया भूतेषु चानघ ३२
यच्चाश्वस्तास्तवेच्छामः शर्म पार्थ तदस्तु ते
मनसश्च प्रियानर्थान्वीर क्षिप्रमवाप्नुहि ३३
इति ते तं नरव्याघ्रं प्रशंसन्तो महारथाः
निद्रया समवाक्षिप्तास्तूष्णीमासन्विशां पते ३४
अश्वपृष्ठेषु चाप्यन्ये रथनीडेषु चापरे
गजस्कन्धगताश्चान्ये शेरते चापरे क्षितौ ३५
सायुधाः सगदाश्चैव सखड्गाः सपरश्वधाः
सप्रासकवचाश्चान्ये नराः सुप्ताः पृथक्पृथक् ३६
गजास्ते पन्नगाभोगैर्हस्तैर्भूरेणुरूषितैः
निद्रान्धा वसुधां चक्रुर्घ्राणनिःश्वासशीतलाम् ३७
गजाः शुशुभिरे तत्र निःश्वसन्तो महीतले
विशीर्णा गिरयो यद्वन्निःश्वशद्भिर्महोरगैः ३८
समां च विषमां चक्रुः खुराग्रैर्विक्षतां महीम्
हयाः काञ्चनयोक्त्राश्च केसरालम्बिभिर्युगैः
सुषुपुस्तत्र राजेन्द्र युक्ता वाहेषु सर्वशः ३९
तत्तथा निद्रया भग्नमवाचमस्वपद्बलम्
कुशलैरिव विन्यस्तं पटे चित्रमिवाद्भुतम् ४०
ते क्षत्रियाः कुण्डलिनो युवानः परस्परं सायकविक्षताङ्गाः
कुम्भेषु लीनाः सुषुपुर्गजानां कुचेषु लग्ना इव कामिनीनाम् ४१
ततः कुमुदनाथेन कामिनीगण्डपाण्डुना
नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलंकृता ४२
ततो मुहूर्ताद्भगवान्पुरस्ताच्छशलक्षणः
अरुणं दर्शयामास ग्रसञ्ज्योतिःप्रभं प्रभुः ४३
अरुणस्य तु तस्यानु जातरूपसमप्रभम्
रश्मिजालं महच्चन्द्रो मन्दं मन्दमवासृजत् ४४
उत्सारयन्तः प्रभया तमस्ते चन्द्ररश्मयः

पर्यगच्छञ्शनैः सर्वा दिशः खं च क्षितिं तथा ४५
ततो मुहूर्ताद्भुवनं ज्योतिर्भूतमिवाभवत्
अप्रख्यमप्रकाशं च जगामाशु तमस्तथा ४६
प्रतिप्रकाशिते लोके दिवाभूते निशाकरे
विचेरुर्न विचेरुश्च राजन्नक्तंचरास्ततः ४७
बोध्यमानं तु तत्सैन्यं राजंश्चन्द्रस्य रश्मिभिः
बुबुधे शतपत्राणां वनं महदिवाम्भसि ४८
यथा चन्द्रोदयोद्धूतः क्षुभितः सागरो भवेत्
तथा चन्द्रोदयोद्धूतः स बभूव बलार्णवः ४९
ततः प्रववृते युद्धं पुनरेव विशां पते
लोके लोकविनाशाय परं लोकमभीप्सताम् ५०
इति श्रीमहाभारते द्रोणपर्वणि एकोनषष्ट्यधिकशततमोऽध्यायः १५९

## षष्ट्यधिक शततमोऽध्यायः

सञ्जय उवाच
ततो दुर्योधनो द्रोणमभिगम्येदमब्रवीत्
अमर्षवशमापन्नो जनयन्हर्षतेजसी १
न मर्षणीयाः संग्रामे विश्रमन्तः श्रमान्विताः
सपत्ना ग्लानमनसो लब्धलक्ष्या विशेषतः २
तत्तु मर्षितमस्माभिर्भवतः प्रियकाम्यया
त एते परिविश्रान्ताः पाण्डवा बलवत्तराः ३
सर्वथा परिहीनाः स्म तेजसा च बलेन च
भवता पाल्यमानास्ते विवर्धन्ते पुनः पुनः ४
दिव्यान्यस्त्राणि सर्वाणि ब्रह्मास्त्रादीनि यान्यपि
तानि सर्वाणि तिष्ठन्ति भवत्येव विशेषतः ५
न पाण्डवेया न वयं नान्ये लोके धनुर्धराः
युध्यमानस्य ते तुल्याः सत्यमेतद्ब्रवीमि ते ६
ससुरासुरगन्धर्वानिमाँल्लोकान्द्विजोत्तम
सर्वास्त्रविद्भवान्हन्याद्दिव्यैरस्त्रैर्न संशयः ७
स भवान्मर्षयत्येनांस्त्वत्तो भीतान्विशेषतः

शिष्यत्वं वा पुरस्कृत्य मम वा मन्दभाग्यताम् ८
एवमुद्धर्षितो द्रोणः कोपितश्चात्मजेन ते
समन्युरब्रवीद्राजन्दुर्योधनमिदं वचः ९
स्थविरः सन्परं शक्त्या घटे दुर्योधनाहवे
अतः परं मया कार्यं क्षुद्रं विजयगृद्धिना
अनस्त्रविदयं सर्वो हन्तव्योऽस्त्रविदा जनः १०
यद्भवान्मन्यते चापि शुभं वा यदि वाशुभम्
तद्वै कर्तास्मि कौरव्य वचनात्तव नान्यथा ११
निहत्य सर्वपाञ्चालान्युद्धे कृत्वा पराक्रमम्
विमोक्ष्ये कवचं राजन्सत्येनायुधमालभे १२
मन्यसे यच्च कौन्तेयमर्जुनं श्रान्तमाहवे
तस्य वीर्यं महाबाहो शृणु सत्येन कौरव १३
तं न देवा न गन्धर्वा न यक्षा न च राक्षसाः
उत्सहन्ते रणे सोढुं कुपितं सव्यसाचिनम् १४
खाण्डवे येन भगवान्प्रत्युद्यातः सुरेश्वरः
सायकैर्वारितश्चापि वर्षमाणो महात्मना १५
यक्षा नागास्तथा दैत्या ये चान्ये बलगर्विताः
निहताः पुरुषेन्द्रेण तच्चापि विदितं तव १६
गन्धर्वा घोषयात्रायां चित्रसेनादयो जिताः
यूयं तैर्ह्रियमाणाश्च मोक्षिता दृढधन्वना १७
निवातकवचाश्चापि देवानां शत्रवस्तथा
सुरैरवध्याः संग्रामे तेन वीरेण निर्जिताः १८
दानवानां सहस्राणि हिरण्यपुरवासिनाम्
विजिग्ये पुरुषव्याघ्रः स शक्यो मानुषैः कथम् १९
प्रत्यक्षं चैव ते सर्वं यथा बलमिदं तव
क्षपितं पाण्डुपुत्रेण चेष्टतां नो विशां पते २०
तं तथाभिप्रशंसन्तमर्जुनं कुपितस्तदा
द्रोणं तव सुतो राजन्पुनरेवेदमब्रवीत् २१
अहं दुःशासनः कर्णः शकुनिर्मातुलश्च मे
हनिष्यामोऽजुनं संख्ये द्वैधीकृत्याद्य भारतीम् २२

तस्य तद्वचनं श्रुत्वा भारद्वाजो हसन्निव
अन्ववर्तत राजानं स्वस्ति तेऽस्त्विति चाब्रवीत् २३
को हि गाण्डीवधन्वानं ज्वलन्तमिव तेजसा
अक्षयं क्षपयेत्कश्चित्क्षत्रियः क्षत्रियर्षभम् २४
तं न वित्तपतिर्नेन्द्रो न यमो न जलेश्वरः
नासुरोरगरक्षांसि क्षपयेयुः सहायुधम् २५
मूढास्त्वेतानि भाषन्ते यानीमान्यात्थ भारत
युद्धे ह्यर्जुनमासाद्य स्वस्तिमान्को व्रजेद्गृहान् २६
त्वं तु सर्वातिशङ्कित्वान्निष्ठुरः पापनिश्चयः
श्रेयसस्त्वद्धिते युक्तांस्तत्तद्वक्तुमिहेच्छसि २७
गच्छ त्वमपि कौन्तेयमात्मार्थेभ्यो हि माचिरम्
त्वमप्याशंससे योद्धुं कुलजः क्षत्रियो ह्यसि २८
इमान्किं पार्थिवान्सर्वान्घातयिष्यस्यनागसः
त्वमस्य मूलं वैरस्य तस्मादासादयार्जुनम् २९
एष ते मातुलः प्राज्ञः क्षत्रधर्ममनुव्रतः
दुर्द्यूतदेवी गान्धारिः प्रयात्वर्जुनमाहवे ३०
एषोऽक्षकुशलो जिह्मो द्यूतकृत्कितवः शठः
देविता निकृतिप्रज्ञो युधि जेष्यति पाण्डवान् ३१
त्वया कथितमत्यन्तं कर्णेन सह हृष्टवत्
असकृच्छून्यवन्मोहाद्धृतराष्ट्रस्य शृण्वतः ३२
अहं च तात कर्णश्च भ्राता दुःशासनश्च मे
पाण्डुपुत्रान्हनिष्यामः सहिताः समरे त्रयः ३३
इति ते कत्थमानस्य श्रुतं संसदि संददि
अनुतिष्ठ प्रतिज्ञां तां सत्यवाग्भव तैः सह ३४
एष ते पाण्डवः शत्रुरविषह्योऽग्रतः स्थितः
क्षत्रधर्ममवेक्षस्व श्लाघ्यस्तव वधो जयात् ३५
दत्तं भुक्तमधीतं च प्राप्तमैश्वर्यमीप्सितम्
कृतकृत्योऽनृणश्चासि मा भैर्युध्यस्व पाण्डवम् ३६
इत्युक्त्वा समरे द्रोणो न्यवर्तत यतः परे
द्वैधीकृत्य ततः सेनां युद्धं समभवत्तदा ३७

इति श्रीमहाभारते द्रोणपर्वणि षष्ट्यधिकशततमोऽध्यायः १६०

एकषष्ट्यधिक शततमोऽध्यायः

सञ्जय उवाच
त्रिभागमात्रशेषायां रात्र्यां युद्धमवर्तत
कुरूणां पाण्डवानां च संहृष्टानां विशां पते १
अथ चन्द्रप्रभां मुष्णन्नादित्यस्य पुरः सरः
अरुणोऽभ्युदयांचक्रे ताम्रीकुर्वन्निवाम्बरम् २
ततो द्वैधीकृते सैन्ये द्रोणः सोमकपाण्डवान्
अभ्यद्रवत्सपाञ्चालान्दुर्योधनपुरोगमः ३
द्वैध्भूतान्कुरून्दृष्ट्वा माधवोऽजुनमब्रवीत्
सपत्नान्सव्यतः कुर्मि सव्यसाचिन्निमान्कुरून् ४
स माधवमनुज्ञाय कुरुष्वेति धनंजयः
द्रोणकर्णौ महेष्वासौ सव्यतः पर्यवर्तत ५
अभिप्रायं तु कृष्णस्य ज्ञात्वा परपुरंजयः
आजिशीर्षगतं दृष्ट्वा भीमसेनं समासदत् ६
भीम उवाच
अर्जुनार्जुन बीभत्सो शृणु मे तत्त्वतो वचः
यदर्थं क्षत्रिया सूते तस्य कालोऽयमागतः ७
अस्मिंश्चेदागते काले श्रेयो न प्रतिपत्स्यसे
असंभावितरूपः सन्नानृशंस्यं करिष्यसि ८
सत्यश्रीधर्मयशसां वीर्येणानृण्यमाप्नुहि
भिन्ध्यनीकं युधां श्रेष्ठ सव्यसाचिन्निमान्कुरु ९
सञ्जय उवाच
स सव्यसाची भीमेन चोदितः केशवेन च
कर्णद्रोणावतिक्रम्य समन्तात्पर्यवारयत् १०
तमाजिशीर्षमायान्तं दहन्तं क्षत्रियर्षभान्
पराक्रान्तं पराक्रम्य यतन्तः क्षत्रियर्षभाः
नाशक्नुवन्वारयितुं वर्धमानमिवानलम् ११
अथ दुर्योधनः कर्णः शकुनिश्चापि सौबलः

अभ्यवर्षञ्शरव्रातैः कुन्तीपुत्रं धनंजयम् १२
तेषामस्त्राणि सर्वेषामुत्तमास्त्रविदां वरः
कदर्थीकृत्य राजेन्द्र शरवर्षैरवाकिरत् १३
अस्त्रैरस्त्राणि संवार्य लघुहस्तो धनंजयः
सर्वानविध्यन्निशितैर्दशभिर्दशभिः शरैः १४
उद्भूता रजसो वृष्टिः शरवृष्टिस्तथैव च
तमश्च घोरं शब्दश्च तदा समभवन्महान् १५
न द्यौर्न भूमिर्न दिशः प्राज्ञायन्त तथा गते
सैन्येन रजसा मूढं सर्वमन्धमिवाभवत् १६
नैव ते न वयं राजन्प्रज्ञासिष्म परस्परम्
उद्देशेन हि तेन स्म समयुध्यन्त पार्थिवाः १७
विरथा रथिनो राजन्समासाद्य परस्परम्
केशेषु समसज्जन्त कवचेषु भुजेषुच १८
हताश्वा हतसूताश्च निश्चेष्टा रथिनस्तदा
जीवन्त इव तत्र स्म व्यदृश्यन्त भयार्दिताः १९
हतान्गजान्समाश्लिष्य पर्वतानिव वाजिनः
गतसत्त्वा व्यदृश्यन्त तथैव सह सादिभिः २०
ततस्त्वभ्यवसृत्यैव संग्रामादुत्तरां दिशम्
अतिष्ठदाहवे द्रोणो विधूम इव पावकः २१
तमाजिशीर्षादेकान्तमपक्रान्तं निशाम्य तु
समकम्पन्त सैन्यानि पाण्डवानां विशां पते २२
भ्राजमानं श्रिया युक्तं ज्वलन्तमिव तेजसा
द्रोणं दृष्ट्वारयस्त्रसुश्चेलुर्मम्लुश्च मारिष २३
आह्वयन्तं परानीकं प्रभिन्नमिव वारणम्
नैनं शशंसिरे जेतुं दानवा वासवं यथा २४
केचिदासन्निरुत्साहाः केचित्क्रुद्धा मनस्विनः
विस्मिताश्चाभवन्केचित्केचिदासन्नमर्षिताः २५
हस्तैर्हस्ताग्रमपरे प्रत्यपिंषन्नराधिपाः
अपरे दशनैरोष्ठानदशन्क्रोधमूर्छिताः २६
व्याक्षिपन्नायुधानन्ये ममृदुश्चापरे भुजान्

अन्ये चान्वपतन्द्रोणं त्यक्तात्मानो महौजसः २७
पाञ्चालास्तु विशेषेण द्रोणसायकपीडिताः
समसज्जन्त राजेन्द्र समरे भृशवेदनाः २८
ततो विराटद्रुपदौ द्रोणं प्रतिययू रणे
तथा चरन्तं संग्रामे भृशं समरदुर्जयम् २९
द्रुपदस्य ततः पौत्रास्त्रय एव विशां पते
चेदयश्च महेष्वासा द्रोणमेवाभ्ययुर्युधि ३०
तेषां द्रुपदपौत्राणां त्रयाणां निशितैः शरैः
त्रिभिर्द्रोणोऽहरत्प्राणांस्ते हता न्यपतन्भुवि ३१
ततो द्रोणोऽजयद्युद्धे चेदिकेकयसृञ्जयान्
मत्स्यांश्चैवाजयत्सर्वान्भारद्वाजो महारथः ३२
ततस्तु द्रुपदः क्रोधाच्छरवर्षमवाकिरत्
द्रोणं प्रति महाराज विराटश्चैव संयुगे ३३
ततो द्रोणः सुपीताभ्यां भल्लाभ्यामरिमर्दनः
द्रुपदं च विराटं च प्रैषीद्वैवस्वतक्षयम् ३४
हते विराटे द्रुपदे केकयेषु तथैव च
तथैव चेदिमत्स्येषु पाञ्चालेषु तथैव च
हतेषु त्रिषु वीरेषु द्रुपदस्य च नप्तृषु ३५
द्रोणस्य कर्म तद्दृष्ट्वा कोपदुःखसमन्वितः
शशाप रथिनां मध्ये धृष्टद्युम्नो महामनाः ३६
इष्टापूर्तात्तथा क्षात्राद्ब्राह्मण्याच्च स नश्यतु
द्रोणो यस्याद्य मुच्येत यो वा द्रोणात्पराङ्मुखः ३७
इति तेषां प्रतिश्रुत्य मध्ये सर्वधनुष्मताम्
आयाद्द्रोणं सहानीकः पाञ्चाल्यः परवीरहा
पाञ्चालास्त्वेकतो द्रोणमभ्यघ्नन्पाण्डवान्यतः ३८
दुर्योधनश्च कर्णश्च शकुनिश्चापि सौबलः
सोदर्याश्च यथा मुख्यास्तेऽरक्षन्द्रोणमाहवे ३९
रक्ष्यमाणं तथा द्रोणं समरे तैर्महात्मभिः
यतमानापि पाञ्चाला न शेकुःप्रतिवीक्षितुम् ४०
तत्राक्रुध्यद्भीमसेनो धृष्टद्युम्नस्य मारिष

स एनं वाग्भिरुग्राभिस्ततक्ष पुरुषर्षभ ४१
द्रुपदस्य कुले जातः सर्वास्त्रेष्वस्त्रवित्तमः
कः क्षत्रियो मन्यमानः प्रेक्षेतारिमवस्थितम् ४२
पितृपुत्रवधं प्राप्य पुमान्कः परिहापयेत्
विशेषतस्तु शपथं शपित्वा राजसंसदि ४३
एष वैश्वानर इव समिद्धः स्वेन तेजसा
शरचापेन्धनो द्रोणः क्षत्रं दहति तेजसा ४४
पुरा करोति निःशेषां पाण्डवानामनीकिनीम्
स्थिताः पश्यत मे कर्म द्रोणमेव व्रजाम्यहम् ४५
इत्युक्त्वा प्राविशत्क्रुद्धो द्रोणानीकं वृकोदरः
दृढैः पूर्णायतोत्सृष्टैर्द्रावयंस्तव वाहिनीम् ४६
धृष्टद्युम्नोऽपि पाञ्चाल्यः प्रविश्य महतीं चमूम्
आससाद रणे द्रोणं तदासीत्तुमुलं महत् ४७
नैव नस्तादृशं युद्धं दृष्टपूर्वं न च श्रुतम्
यथा सूर्योदये राजन्समुत्पिञ्जोऽभवन्महान् ४८
संसक्तानि व्यदृश्यन्त रथवृन्दानि मारिष
हतानि च विकीर्णानि शरीराणि शरीरिणाम् ४९
केचिदन्यत्र गच्छन्तः पथि चान्यैरुपद्रुताः
विमुखाः पृष्ठतश्चान्ये ताडयन्ते पार्श्वतोऽपरे ५०
तथा संसक्तयुद्धं तदभवद्भृशदारुणम्
अथ संध्यागतः सूर्यः क्षणेन समपद्यत ५१
इति श्रीमहाभारते द्रोणपर्वणि एकषष्ट्यधिकशततमोऽध्यायः १६१

## द्विषष्ट्यधिक शततमोऽध्यायः

सञ्जय उवाच
ते तथैव महाराज दंशिता रणमूर्धनि
संध्यागतं सहस्रांशुमादित्यमुपतस्थिरे १
उदिते तु सहस्रांशौ तप्तकाञ्चनसप्रभे
प्रकाशितेषु लोकेषु पुनर्युद्धमवर्तत २
द्वंद्वानि यानि तत्रासन्संसक्तानि पुरोदयात्

तान्येवाभ्युदिते सूर्ये समसज्जन्त भारत ३
रथैर्हया हयैर्नागाः पादाताश्चापि कुञ्जरैः
हया हयैः समाजग्मुः पादाताश्च पदातिभिः
संसक्ताश्च वियुक्ताश्च योधाः संन्यपतन्रणे ४
ते रात्रौ कृतकर्माणः श्रान्ताः सूर्यस्य तेजसा
क्षुत्पिपासापरीताङ्गा विसंज्ञा बहवोऽभवन् ५
शङ्खभेरीमृदङ्गानां कुञ्जराणां च गर्जताम्
विस्फारितविकृष्टानां कार्मुकाणां च कूजताम् ६
शब्दः समभवद्राजन्दिविस्पृग्भरतर्षभ
द्रवतां च पदातीनां शस्त्राणां विनिपात्यताम् ७
हयानां हेषतां चैव रथानां च निवर्तताम्
क्रोशतां गर्जतां चैव तदासीत्तुमुलं महत् ८
विवृद्धस्तुमुलः शब्दो द्यामगच्छन्महास्वनः
नानायुधनिकृत्तानां चेष्टतामातुरः स्वनः ९
भूमावश्रूयत महांस्तदासीत्कृपणं महत्
पततां पतितानां च पत्त्यश्वरथहस्तिनाम् १०
तेषु सर्वेष्वनीकेषु व्यतिषक्तेष्वनेकशः
स्वे स्वाञ्जघ्नुः परे स्वांश्च स्वे परांश्च परान्परे ११
वीरबाहुविसृष्टाश्च योधेषु च गजेषु च
असयः प्रत्यदृश्यन्त वाससां नेजनेष्विव १२
उद्यतप्रतिपिष्टानां खड्गानां वीरबाहुभिः
स एव शब्दस्तद्रूपो वाससां निज्यतामिव १३
अर्धासिभिस्तथा खड्गैस्तोमरैः सपरश्वधैः
निकृष्टयुद्धं संसक्तं महदासीत्सुदारुणम् १४
गजाश्वकायप्रभवां नरदेहप्रवाहिनीम्
शस्त्रमत्स्यसुसंपूर्णां मांसशोणितकर्दमाम् १५
आर्तनादस्वनवतीं पताकावस्त्रफेनिलाम्
नदीं प्रावर्तयन्वीराः परलोकप्रवाहिनीम् १६
शरशक्त्यर्दिताः क्लान्ता रात्रिमूढाल्पचेतसः
विष्टभ्य सर्वगात्राणि व्यतिष्ठन्गजवाजिनः

संशुष्कवदना वीराः शिरोभिश्चारुकुण्डलैः १७
युद्धोपकरणैश्चान्यैस्तत्र तत्र प्रकाशितैः
क्रव्यादसंघैराकीर्णं मृतैरर्धमृतैरपि
नासीद्रथपथस्तत्र सर्वमायोधनं प्रति १८
मज्जत्सु चक्रेषु रथान्सत्त्वमास्थाय वाजिनः
कथंचिदवहञ्श्रान्ता वेपमानाः शरार्दिताः
कुलसत्त्वबलोपेता वाजिनो वारणोपमाः १९
विह्वलं तत्समुद्भ्रान्तं सभयं भारतातुरम्
बलमासीत्तदा सर्वमृते द्रोणार्जुनावुभौ २०
तावेवास्तां निलयनं तावार्तायनमेव च
तावेवान्ये समासाद्य जग्मुर्वैवस्वतक्षयम् २१
आविग्नमभवत्सर्वं कौरवाणां महद्बलम्
पाञ्चालानां च संसक्तं न प्राज्ञायत किंचन २२
अन्तकाक्रीडसदृशे भीरूणां भयवर्धने
पृथिव्यां राजवंशानामुत्थिते महति क्षये २३
न तत्र कर्णं न द्रोणं नार्जुनं न युधिष्ठिरम्
न भीमसेनं न यमौ न पाञ्चाल्यं न सात्यकिम् २४
न च दुःशासनं द्रौणिं न दुर्योधनसौबलौ
न कृपं मद्रराजं वा कृतवर्माणमेव च २५
न चान्यान्नैव चात्मानं न क्षितिं न दिशस्तथा
पश्याम राजन्संसक्तान्सैन्येन रजसावृतान् २६
संभ्रान्ते तुमुले घोर रजोमेघे समुत्थिते
द्वितीयामिव संप्राप्ताममन्यन्त निशां तदा २७
न ज्ञायन्ते कौरवेया न पाञ्चाला न पाण्डवाः
न दिशो न दिवं नोर्वीं न समं विषमं तथा २८
हस्तसंस्पर्शमापन्नान्परान्वाप्यथ वा स्वकान्
न्यपातयंस्तदा युद्धे नराः स्म विजयैषिणः २९
उद्धूतत्वात्तुरजसः प्रसेकाच्छोणितस्य च
प्रशशाम रजो भौमं शीघ्रत्वादनिलस्य च ३०
तत्र नागा हया योधा रथिनोऽथ पदातयः

पारिजातवनानीव व्यरोचन्रुधिरोक्षिताः ३१
ततो दुर्योधनः कर्णो द्रोणो दुःशासनस्तथा
पाण्डवैः समसज्जन्त चतुर्भिश्चतुरो रथाः ३२
दुर्योधनः सह भ्रात्रा यमाभ्यां समसज्जत
वृकोदरेण राधेयो भारद्वाजेन चार्जुनः ३३
तद्घोरं महदाश्चर्यं सर्वे प्रैक्षन्समन्ततः
रथर्षभाणामुग्राणां संनिपातममानुषम् ३४
रथमार्गैर्विचित्रैश्च विचित्ररथसंकुलम्
अपश्यन्रथिनो युद्धं विचित्रं चित्रयोधिनाम् ३५
यतमानाः पराक्रान्ताः परस्परजिगीषवः
जीमूता इव घर्मान्ते शरवर्षैरवाकिरन् ३६
ते रथान्सूर्यसंकाशानास्थिताः पुरुषर्षभाः
अशोभन्त यथा मेघाः शारदाः समुपस्थिताः ३७
स्पर्धिनस्ते महेष्वासाः कृतयत्ना धनुर्धराः
अभ्यगच्छंस्तथान्योन्यं मत्ता गजवृषा इव ३८
न नूनं देहभेदोऽस्ति काले तस्मिन्समागते
यत्र सर्वे न युगपद्व्यशीर्यन्त महारथाः ३९
बाहुभिश्चरणैश्छिन्नैः शिरोभिश्चारुकुण्डलैः
कार्मुकैर्विशिखैः प्रासैः खड्गैः परशुपट्टिशैः ४०
नालीकक्षुरनाराचैर्नखरैः शक्तितोमरैः
अन्यैश्च विविधाकारैर्धौतैः प्रहरणोत्तमैः ४१
चित्रैश्च विविधाकारैः शरीरावरणैरपि
विचित्रैश्च रथैर्भग्नैर्हतैश्च गजवाजिभिः ४२
शून्यैश्च नगराकारैर्हतयोधध्वजै रथैः
अमनुष्यैर्हयैस्त्रस्तैः कृष्यमाणैस्ततस्ततः ४३
वातायमानैरसकृद्धतवीरैरलंकृतैः
व्यजनैः कङ्कटैश्चैव ध्वजैश्च विनिपातितैः ४४
छत्रैराभरणैर्वस्त्रैर्माल्यैश्च सुसुगन्धिभिः
हारैः किरीटैर्मुकुटैरुष्णीषैः किङ्किणीगणैः ४५
उरस्यैर्मणिभिर्निष्कैश्चूडामणिभिरेव च

आसीदायोधनं तत्र नभस्तारागणैरिव ४६
ततो दुर्योधनस्यासीन्नकुलेन समागमः
अमर्षितेन क्रुद्धस्य क्रुद्धेनामर्षितस्य च ४७
अपसव्यं चकाराथ माद्रीपुत्रस्तवात्मजम्
किरञ्शरशतैर्हृष्टस्तत्र नादो महानभूत् ४८
अपसव्यं कृतः संख्ये भ्रातृव्येनात्यमर्षिणा
सोऽमर्षितस्तमप्याजौ प्रतिचक्रेऽपसव्यतः ४९
ततः प्रतिचिकीर्षन्तमपसव्यं तु ते सुतम्
न्यवारयत तेजस्वी नकुलश्चित्रमार्गवित् ५०
सर्वतो विनिवार्यैनं शरजालेन पीडयन्
विमुखं नकुलश्चक्रे तत्सैन्याः समपूजयन् ५१
तिष्ठ तिष्ठेति नकुलो बभाषे तनयं तव
संस्मृत्य सर्वदुःखानि तव दुर्मन्त्रितेन च ५२
इति श्रीमहाभारते द्रोणपर्वणि द्विषष्ट्यधिकशततमोऽध्यायः १६२

त्रिषष्ठ्यधिक शततमोऽध्यायः

सञ्जय उवाच
ततो दुःशासनः क्रुद्धः सहदेवमुपाद्रवत्
रथवेगेन तीव्रेण कम्पयन्निव मेदिनीम् १
तस्यापतत एवाशु भल्लेनामित्रकर्शनः
माद्रीसुतः शिरो यन्तुः सशिरस्त्राणमच्छिनत् २
नैनं दुःशासनः सूतं नापि कश्चन सैनिकः
हृतोत्तमाङ्गमाशुत्वात्सहदेवेन बुद्धवान् ३
यदा त्वसंगृहीतत्वात्प्रयान्त्यश्वा यथासुखम्
ततो दुःशासनः सूतं बुद्धवान्गतचेतसम् ४
स हयान्संनिगृह्याजौ स्वयं हयविशारदः
युयुधे रथिनां श्रेष्ठश्चित्रं लघु च सुष्ठु च ५
तदस्यापूजयन्कर्म स्वे परे चैव संयुगे
हतसूतरथेनाजौ व्यचरद्यदभीतवत् ६
सहदेवस्तु तानश्वांस्तीक्ष्णैर्बाणैरवाकिरत्

पीड्यमानाः शरैश्चाशु प्राद्रवंस्ते ततस्ततः ७
स रश्मिषु विषक्तत्वादुत्ससर्ज शरासनम्
धनुषा कर्म कुर्वंस्तु रश्मीन्स पुनरुत्सृजत् ८
छिद्रेषु तेषु तं बाणैर्माद्रीपुत्रोऽभ्यवाकिरत्
परीप्संस्त्वत्सुतं कर्णस्तदन्तरमवापतत् ९
वृकोदरस्ततः कर्णं त्रिभिर्भल्लैः समाहितैः
आकर्णपूर्णैरभ्यघ्नन्बाह्वोरुरसि चानदत् १०
संन्यवर्तत तं कर्णः संघट्टित इवोरगः
तदभूत्तुमुलं युद्धं भीमराधेययोस्तदा ११
तौ वृषाविव संक्रुद्धौ विवृत्तनयनावुभौ
वेगेन महतान्योन्यं संरब्धावभिपेततुः १२
अभिसंश्लिष्टयोस्तत्र तयोराहवशौण्डयोः
अभिन्नशरपातत्वाद्गदायुद्धमवर्तत १३
गदया भीमसेनस्तु कर्णस्य रथकूबरम्
विभेदाशु तदा राजंस्तदद्भुतमिवाभवत् १४
ततो भीमस्य राधेयो गदामादाय वीर्यवान्
अवासृद्रथे तां तु बिभेद गदया गदाम् १५
ततो भीमः पुनर्गुर्वीं चिक्षेपाधिरथेर्गदाम्
तां शरैर्दशभिः कर्णः सुपुङ्खैः सुसमाहितैः
प्रत्यविध्यत्पुनश्चान्यैः सा भीमं पुनराव्रजत् १६
तस्याः प्रतिनिपातेन भीमस्य विपुलो ध्वजः
पपात सारथिश्चास्य मुमोह गदया हतः १७
स कर्णे सायकानष्टौ व्यसृजत्क्रोधमूर्छितः
ध्वजे शरासने चैव शरावापे च भारत १८
ततः पुनस्तु राधेयो हयानस्य रथेषुभिः
ऋष्यवर्णाञ्जघानाशु तथोभौ पार्ष्णिसारथी १९
स विपन्नरथो भीमो नकुलस्याप्लुतो रथम्
हरिर्यथा गिरेः शृङ्गं समाक्रामदरिंदमः २०
तथा द्रोणार्जुनौ चित्रमयुध्येतां महारथौ
आचार्यशिष्यौ राजेन्द्र कृतप्रहरणौ युधि २१

लघुसंधानयोगाभ्यां रथयोश्च रणेन च
मोहयन्तौ मनुष्याणां चक्षूंषि च मनांसि च २२
उपारमन्त ते सर्वे योधास्माकं परे तथा
अदृष्टपूर्वं पश्यन्तस्तद्युद्धं गुरुशिष्ययोः २३
विचित्रान्पृतनामध्ये रथमार्गानुदीर्यतः
अन्योन्यमपसव्यं च कर्तुं वीरौ तदैषतुः
पराक्रमं तयोर्योधा ददृशुस्तं सुविस्मिताः २४
तयोः समभवद्युद्धं द्रोण पाण्डवयोर्महत्
आमिषार्थं महाराज गगने श्येनयोरिव २५
यद्यच्चकार द्रोणस्तु कुन्तीपुत्रजिगीषया
तत्तत्प्रतिजघानाशु प्रहसंस्तस्य पाण्डवः २६
यदा द्रोणो न शक्नोति पाण्डवस्य विशेषणे
ततः प्रादुश्चकारास्त्रमस्त्रमार्गविशारदः २७
एन्द्रं पाशुपतं त्वाष्ट्रं वायव्यमथ वारुणम्
मुक्तं मुक्तं द्रोणचापात्तज्जघान धनंजयः २८
अस्त्राण्यस्त्रैर्यदा तस्य विधिवद्धन्ति पाण्डवः
ततोऽस्त्रै परमैर्दिव्यैर्द्रोणः पार्थमवाकिरत् २९
यद्यदस्त्रं स पार्थाय प्रयुङ्क्ते विजिगीषया
तस्यास्त्रस्य विघातार्थं तत्तत्स कुरुतेऽजुनः ३०
स वध्यमानेष्वस्त्रेषु दिव्येष्वपि यथाविधि
अर्जुनेनार्जुनं द्रोणो मनसैवाभ्यपूजयत् ३१
मेने चात्मानमधिकं पृथिव्यामपि भारत
तेन शिष्येण सर्वेभ्यः शस्त्रविद्यः समन्ततः ३२
वार्यमाणस्तु पार्थेन तथा मध्ये महात्मनाम्
यतमानोऽजुनं प्रीत्या प्रत्यवारयदुत्स्मयन् ३३
ततोऽन्तरिक्षे देवाश्च गन्धर्वाश्च सहस्रशः
ऋषयः सिद्धसंघाश्च व्यतिष्ठन्त दिदृक्षया ३४
तदप्सरोभिराकीर्णं यक्षराक्षससंकुलम्
श्रीमदाकाशमभवद्भूयो मेघाकुलं यथा ३५
तत्र स्मान्तर्हिता वाचो व्यचरन्त पुनः पुनः

द्रोणस्य स्तवसंयुक्ताः पार्थस्य च महात्मनः
विसृज्यमानेष्वस्त्रेषु ज्वालयत्सु दिशो दश ३६
नैवेदं मानुषं युद्धं नासुरं न च राक्षसम्
न दैवं न च गान्धर्वं ब्राह्मं ध्रुवमिदं परम्
विचित्रमिदमाश्चर्यं न नो दृष्टं न च श्रुतम् ३७
अति पाण्डवमाचार्यो द्रोणं चाप्यति पाण्डवः
नानयोरन्तरं द्रष्टुं शक्यमस्त्रेण केनचित् ३८
यदि रुद्रो द्विधाकृत्य युध्येतात्मानमात्मना
तत्र शक्योपमा कर्तुमन्यत्र तु न विद्यते ३९
ज्ञानमेकस्थमाचार्ये ज्ञानं योगश्च पाण्डवे
शौर्यमेकस्थमाचार्ये बलं शौर्यं च पाण्डवे ४०
नेमौ शक्यौ महेष्वासौ रणे क्षेपयितुं परैः
इच्छमानौ पुनरिमौ हन्येतां सामरं जगत् ४१
इत्यब्रुवन्महाराज दृष्ट्वा तौ पुरुषर्षभौ
अन्तर्हितानि भूतानि प्रकाशानि च संघशः ४२
ततो द्रोणो ब्राह्ममस्त्रं प्रादुश्चक्रे महामतिः
संतापयन्रणे पार्थं भूतान्यन्तर्हितानि च ४३
ततश्चचाल पृथिवी सपर्वतवनद्रुमा
ववौ च विषमो वायुः सागराश्चापि चुक्षुभुः ४४
ततस्त्रासो महानासीत्कुरुपाण्डवसेनयोः
सर्वेषां चैव भूतानामुद्यतेऽस्त्रे महात्मना ४५
ततः पार्थोऽप्यसंभ्रान्तस्तदस्त्रं प्रतिजघ्निवान्
ब्रह्मास्त्रेणैव राजेन्द्र ततः सर्वमशीशमत् ४६
यदा न गम्यते पारं तयोरन्यतरस्य वा
ततः संकुलयुद्धेन तद्युद्धं व्याकुलीकृतम् ४७
नाज्ञायत ततः किंचित्पुनरेव विशां पते
प्रवृत्ते तुमुले युद्धे द्रोणपाण्डवयोर्मृधे ४८
शरजालैः समाकीर्णे मेघजालैरिवाम्बरे
न स्म संपतते कश्चिदन्तरिक्षचरस्तदा ४९

इति श्रीमहाभारते द्रोणपर्वणि त्रिषष्ट्यधिकशततमोऽध्यायः १६३

## चतुःषष्ठ्यधिकशततमोऽध्यायः

सञ्जय उवाच
तस्मिंस्तथा वर्तमाने नराश्वगजसंक्षये
दुःशासनो महाराज धृष्टद्युम्नमयोधयत् १
स तु रुक्मरथासक्तो दुःशासनशरार्दितः
अमर्षात्तव पुत्रस्य शरैर्वाहानवाकिरत् २
क्षणेन स रथस्तस्य सध्वजः सहसारथिः
नादृश्यत महाराज पार्षतस्य शरैश्चितः ३
दुःशासनस्तु राजेन्द्र पाञ्चाल्यस्य महात्मनः
नाशकत्प्रमुखे स्थातुं शरजालप्रपीडितः ४
स तु दुःशासनं बाणैर्विमुखीकृत्य पार्षतः
किरञ्शरसहस्राणि द्रोणमेवाभ्ययाद्रणे ५
प्रत्यपद्यत हार्दिक्यः कृतवर्मा तदन्तरम्
सोदर्याणां त्रयश्चैव त एनं पर्यवारयन् ६
तं यमौ पृष्ठतोऽन्वैतां रक्षन्तौ पुरुषर्षभौ
द्रोणायाभिमुखं यान्तं दीप्यमानमिवानलम् ७
संप्रहारमकुर्वंस्ते सर्वे सप्त महारथाः
अमर्षिताः सत्त्ववन्तः कृत्वा मरणमग्रतः ८
शुद्धात्मानः शुद्धवृत्ता राजन्स्वर्गपुरस्कृताः
आर्यं युद्धमकुर्वन्त परस्परजिगीषवः ९
शुक्लाभिजनकर्माणो मतिमन्तो जनाधिपाः
धर्मयुद्धमयुध्यन्त प्रेक्षन्तो गतिमुत्तमाम् १०
न तत्रासीदधर्मिष्ठमशस्त्रं युद्धमेव च
नात्र कर्णी न नालीको न लिप्तो न च वस्तकः ११
न सूची कपिशो नात्र न गवास्थिर्गजास्थिकः
इषुरासीन्न संश्लिष्टो न पूतिर्न च जिह्मगः १२
ऋजून्येव विशुद्धानि सर्वे शस्त्राण्यधारयन्
सुयुद्धेन पराँल्लोकानीप्सन्तः कीर्तिमेव च १३
तदासीत्तुमुलं युद्धं सर्वदोषविवर्जितम्
चतुर्णां तव योधानां तैस्त्रिभिः पाण्डवैः सह १४

धृष्टद्युम्नस्तु तान्हित्वा तव राजन्नर्थर्षभान्
यमाभ्यां वारितान्दृष्ट्वा शीघ्रास्त्रो द्रोणमभ्ययात् १५
निवारितास्तु ते वीरास्तयोः पुरुषसिंहयोः
समसज्जन्त चत्वारो वाताः पर्वतयोरिव १६
द्वाभ्यां द्वाभ्यां यमौ सार्धं रथाभ्यां रथपुंगवौ
समासक्तौ ततो द्रोणं धृष्टद्युम्नोऽभ्यवर्तत १७
दृष्ट्वा द्रोणाय पाञ्चाल्यं व्रजन्तं युद्धदुर्मदम्
यमाभ्यां तांश्च संसक्तांस्तदन्तरमुपाद्रवत् १८
दुर्योधनो महाराज किरञ्शोणित भोजनान्
तं सात्यकिः शीघ्रतरं पुनरेवाभ्यवर्तत १९
तौ परस्परमासाद्य समीपे कुरुमाधवौ
हसमानौ नृशार्दूलावभीतौ समगच्छताम् २०
बाल्ये वृत्तानि सर्वाणि प्रीयमाणौ विचिन्त्य तौ
अन्योन्यं प्रेक्षमाणौ च हसमानौ पुनः पुनः २१
अथ दुर्योधनो राजा सात्यकिं प्रत्यभाषत
प्रियं सखायं सततं गर्हयन्वृत्तमात्मनः २२
धिक्क्रोधं धिक्सखे लोभं धिङ्मोहं धिगमर्षितम्
धिगस्तु क्षात्रमाचारं धिगस्तु बलमौरसम् २३
यत्त्वं मामभिसंधत्से त्वां चाहं शिनिपुंगव
त्वं हि प्राणैः प्रियतरो ममाहं च सदा तव २४
स्मरामि तानि सर्वाणि बाल्ये वृत्तानि यानि नौ
तानि सर्वाणि जीर्णानि सांप्रतं नौ रणाजिरे
किमन्यत्क्रोधलोभाभ्यां युध्यामि त्वाद्य सात्वत २५
तं तथावादिनं राजन्सात्यकिः प्रत्यभाषत
प्रहसन्विशिखांस्तीक्ष्णानुद्यम्य परमास्त्रवित् २६
नेयं सभा राजपुत्र न चाचार्यनिवेशनम्
यत्र क्रीडितमस्माभिस्तदा राजन्समागतैः २७
दुर्योधन उवाच
क्व सा क्रीडा गतास्माकं बाल्ये वै शिनिपुंगव
क्व च युद्धमिदं भूयः कालो हि दुरतिक्रमः २८

किं नु नो विद्यते कृत्यं धनेन धनलिप्सया
यत्र युध्यामहे सर्वे धनलोभात्समागताः २९
सञ्जय उवाच
तं तथावादिनं तत्र राजानं माधवोऽब्रवीत्
एवंवृत्तं सदा क्षत्रं युध्यन्तीह गुरूनपि ३०
यदि तेऽह प्रियो राजञ्जहि मां मा चिरं कृथाः
त्वत्कृते सुकृताँल्लोकान्गच्छेयं भरतर्षभ ३१
या ते शक्तिर्बलं चैव तत्क्षिप्रं मयि दर्शय
नेच्छाम्येतदहं द्रष्टुं मित्राणां व्यसनं महत् ३२
इत्येवं व्यक्तमाभाष्य प्रतिभाष्य च सात्यकिः
अभ्ययात्तूर्णमव्यग्रो निरपेक्षो विशां पते ३३
तमायान्तमभिप्रेक्ष्य प्रत्यगृह्णात्तवात्मजः
शरैश्चावाकिरद्राजञ्शैनेयं तनयस्तव ३४
ततः प्रववृते युद्धं कुरुमाधवसिंहयोः
अन्योन्यं क्रुद्धयोर्घोरं यथा द्विरदसिंहयोः ३५
ततः पूर्णायतोत्सृष्टैः सात्वतं युद्धदुर्मदम्
दुर्योधनः प्रत्यविध्यद्दशभिर्निशितैः शरैः ३६
तं सात्यकिः प्रत्यविद्धत्तथैव दशभिः शरैः
पञ्चाशता पुनश्चाजौ त्रिंशता दशभिश्च ह ३७
तस्य संदधतश्चेषुन्संहितेषुं च कार्मुकम्
अच्छिनत्सात्यकिस्तूर्णं शरैश्चैवाभ्यवीवृषत् ३८
स गाढविद्धो व्यथितः प्रत्यपायाद्रथान्तरम्
दुर्योधनो महाराज दाशार्हशरपीडितः ३९
समाश्वस्य तु पुत्रस्ते सात्यकिं पुनरभ्ययात्
विसृजन्निषुजालानि युयुधानरथं प्रति ४०
तथैव सात्यकिर्बाणान्दुर्योधनरथं प्रति
प्रततं व्यसृजद्राजंस्तत्संकुलमवर्तत ४१
तत्रेषुभिः क्षिप्यमाणैः पतद्भिश्च समन्ततः
अग्नेरिव महाकक्षे शब्दः समभवन्महान् ४२
तत्राभ्यधिकमालक्ष्य माधवं रथसत्तमम्

क्षिप्रमभ्यपतत्कर्णः परीप्संस्तनयं तव ४३
न तु तं मर्षयामास भीमसेनो महाबलः
अभ्ययात्त्वरितः कर्णं विसृजन्सायकान्बहून् ४४
तस्य कर्णः शितान्बाणान्प्रतिहन्य हसन्निव
धनुः शरांश्च चिच्छेद सूतं चाभ्यहनच्छरैः ४५
भीमसेनस्तु संक्रुद्धो गदामादाय पाण्डवः
ध्वजं धनुश्च सूतं च संममर्दाहवे रिपोः ४६
अमृष्यमाणः कर्णस्तु भीमसेनमयुध्यत
विविधैरिषुजालैश्च नानाशस्त्रैश्च संयुगे ४७
संकुले वर्तमाने तु राजा धर्मसुतोऽब्रवीत्
पाञ्चालानां नरव्याघ्रान्मत्स्यानां च नरर्षभान् ४८
ये नः प्राणा शिरो ये नो ये नो योधा महाबलाः
त एते धार्तराष्ट्रेषु विषक्ताः पुरुषर्षभाः ४९
किं तिष्ठत यथा मूढाः सर्वे विगतचेतसः
तत्र गच्छत यत्रैते युध्यन्ते मामका रथाः ५०
क्षत्रधर्मं पुरस्कृत्य सर्व एव गतज्वराः
जयन्तो वध्यमाना वा गतिमिष्टां गमिष्यथ ५१
जित्वा च बहुभिर्यज्ञैर्यक्ष्यध्वं भूरिदक्षिणैः
हता वा देवसाद्भूत्वा लोकान्प्राप्स्यथ पुष्कलान् ५२
ते राज्ञा चोदिता वीरा योत्स्यमाना महारथाः
चतुर्धा वाहिनीं कृत्वा त्वरिता द्रोणमभ्ययुः ५३
पाञ्चालास्त्वेकतो द्रोणमभ्यघ्नन्बहुभिः शरैः
भीमसेनपुरोगाश्च एकतः पर्यवारयन् ५४
आसंस्तु पाण्डुपुत्राणां त्रयोऽजिह्मा महारथाः
यमौ च भीमसेनश्च प्राक्रोशन्त धनंजयम् ५५
अभिद्रवार्जुन क्षिप्रं कुरून्द्रोणादपानुद
तत एनं हनिष्यन्ति पाञ्चाला हतरक्षिणम् ५६
कौरवेयांस्ततः पार्थः सहसा समुपाद्रवत्
पाञ्चालानेव तु द्रोणो धृष्टद्युम्नपुरोगमान् ५७
पाञ्चालानां ततो द्रोणोऽप्यकरोत्कदनं महत्

यथा क्रुद्धो रणे शक्रो दानवानां क्षयं पुरा ५८
द्रोणास्त्रेण महाराज वध्यमानाः परे युधि
नात्रसन्त रणे द्रोणात्सत्त्ववन्तो महारथाः ५९
वध्यमाना महाराज पाञ्चालाः सृञ्जयास्तथा
द्रोणमेवाभ्ययुर्युद्धे मोहयन्तो महारथम् ६०
तेषां तूत्साद्यमानानां पाञ्चालानां समन्ततः
अभवद्भैरवो नादो वध्यतां शरशक्तिभिः ६१
वध्यमानेषु संग्रामे पाञ्चालेषु महात्मना
उदीर्यमाणे द्रोणास्त्रे पाण्डवान्भयमाविशत् ६२
दृष्ट्वाश्वनरसंघानां विपुलं च क्षयं युधि
पाण्डवेया महाराज नाशंसुर्विजयं तदा ६३
कच्चिद्द्रोणो न नः सर्वान्क्षपयेत्परमास्त्रवित्
समिद्धः शिशिरापाये दहन्कक्षमिवानलः ६४
न चैनं संयुगे कश्चित्समर्थः प्रतिवीक्षितुम्
न चैनमर्जुनो जातु प्रतियुध्येत धर्मवित् ६५
त्रस्तान्कुन्तीसुतान्दृष्ट्वा द्रोणसायकपीडितान्
मतिमाञ्श्रेयसे युक्तः केशवोऽजुनमब्रवीत् ६६
नैष युद्धेन संग्रामे जेतुं शक्यः कथंचन
अपि वृत्रहणा युद्धे रथयूथपयूथपः ६७
आस्थीयतां जये योगो धर्ममुत्सृज्य पाण्डव
यथा वः संयुगे सर्वान्न हन्याद्रुक्मवाहनः ६८
अश्वत्थाम्नि हते नैष युध्येदिति मतिर्मम
तं हतं संयुगे कश्चिदस्मै शंसतु मानवः ६९
एतन्नारोचयद्राजन्कुन्तीपुत्रो धनंजयः
अन्ये त्वरोचयन्सर्वे कृच्छ्रेण तु युधिष्ठिरः ७०
ततो भीमो महाबाहुरनीके स्वे महागजम्
जघान गदया राजन्नश्वत्थामानमित्युत ७१
भीमसेनस्तु सव्रीडमुपेत्य द्रोणमाहवे
अश्वत्थामा हत इति शब्दमुच्चैश्चकार ह ७२
अश्वत्थामेति हि गजः ख्यातो नाम्ना हतोऽभवत्

कृत्वा मनसि तं भीमो मिथ्या व्याहृतवांस्तदा ७३
भीमसेनवचः श्रुत्वा द्रोणस्तत्परमप्रियम्
मनसा सन्नगात्रोऽभूद्यथा सैकतमम्भसि ७४
शङ्कमानः स तन्मिथ्या वीर्यज्ञः स्वसुतस्य वै
हतः स इति च श्रुत्वा नैव धैर्यादकम्पत ७५
स लब्ध्वा चेतनां द्रोणः क्षणेनैव समाश्वसत्
अनुचिन्त्यात्मनः पुत्रमविषह्यमरातिभिः ७६
स पार्षतमभिद्रुत्य जिघांसुर्मृत्युमात्मनः
अवाकिरत्सहस्रेण तीक्ष्णानां कङ्कपत्रिणाम् ७७
तं वै विंशतिसाहस्राः पाञ्चालानां नरर्षभाः
तथा चरन्तं संग्रामे सर्वतो व्यकिरञ्शरैः ७८
ततः प्रादुष्करोद्द्रोणो ब्राह्ममस्त्रं परंतपः
वधाय तेषां शूराणां पाञ्चालानाममर्षितः ७९
ततो व्यरोचत द्रोणो विनिघ्नन्सर्वसोमकान्
शिरांस्यपातयच्चापि पाञ्चालानां महामृधे
तथैव परिघाकारान्बाहून्कनकभूषणान् ८०
ते वध्यमानाः समरे भारद्वाजेन पार्थिवाः
मेदिन्यामन्वकीर्यन्त वातनुन्ना इव द्रुमाः ८१
कुञ्जराणां च पततां हयौघानां च भारत
अगम्यरूपा पृथिवी मांसशोणितकर्दमा ८२
हत्वा विंशतिसाहस्रान्पाञ्चालानां रथव्रजान्
अतिष्ठदाहवे द्रोणो विधूमोऽग्निरिव ज्वलन् ८३
तथैव च पुनः क्रुद्धो भारद्वाजः प्रतापवान्
वसुदानस्य भल्लेन शिरः कायादपाहरत् ८४
पुनः पञ्चशतान्मत्स्यान्षट्सहस्रांश्च सृञ्जयान्
हस्तिनामयुतं हत्वा जघानाश्वायुतं पुनः ८५
क्षत्रियाणामभावाय दृष्ट्वा द्रोणमवस्थितम्
ऋषयोऽभ्यागमंस्तूर्णं हव्यवाहपुरोगमाः ८६
विश्वामित्रो जमदग्निर्भारद्वाजोऽथ गौतमः
वसिष्ठः कश्यपोऽत्रिश्च ब्रह्मलोकं निनीषवः ८७

सिकताः पृश्नयो गर्गा बालखिल्या मरीचिपाः
भृगवोऽङ्गिरसश्चैव सूक्ष्माश्चान्ये महर्षयः ८८
त एनमब्रुवन्सर्वे द्रोणमाहवशोभिनम्
अधर्मतः कृतं युद्धं समयो निधनस्य ते ८९
न्यस्यायुधं रणे द्रोण समेत्यास्मानवस्थितान्
नातः क्रूरतरं कर्म पुनः कर्तुं त्वमर्हसि ९०
वेदवेदाङ्गविदुषः सत्यधर्मपरस्य च
ब्राह्मणस्य विशेषेण तवैतन्नोपपद्यते ९१
न्यस्यायुधममोघेषो तिष्ठ वर्त्मनि शाश्वते
परिपूर्णश्च कालस्ते वस्तुं लोकेऽद्य मानुषे ९२
इति तेषां वचः श्रुत्वा भीमसेनवचश्च तत्
धृष्टद्युम्नं च संप्रेक्ष्य रणे स विमनाभवत् ९३
स दह्यमानो व्यथितः कुन्तीपुत्रं युधिष्ठिरम्
अहतं वा हतं वेति पप्रच्छ सुतमात्मनः ९४
स्थिरा बुद्धिर्हि द्रोणस्य न पार्थो वक्ष्यतेऽनृतम्
त्रयाणामपि लोकानामैश्वर्यार्थे कथंचन ९५
तस्मात्तं परिपप्रच्छ नान्यं कंचिद्विशेषतः
तस्मिंस्तस्य हि सत्याशा बाल्यात्प्रभृति पाण्डवे ९६
ततो निष्पाण्डवामुर्वीं करिष्यन्तं युधां पतिम्
द्रोणं ज्ञात्वा धर्मराजं गोविन्दो व्यथितोऽब्रवीत् ९७
यद्यर्धदिवसं द्रोणो युध्यते मन्युमास्थितः
सत्यं ब्रवीमि ते सेना विनाशं समुपैष्यति ९८
स भवांस्त्रातु नो द्रोणात्सत्याज्ज्यायोऽनृतं भवेत्
अनृतं जीवितस्यार्थे वदन्न स्पृश्यतेऽनृतैः ९९
तयोः संवदतोरेवं भीमसेनोऽब्रवीदिदम्
श्रुत्वैव तं महाराज वधोपायं महात्मनः १००
गाहमानस्य ते सेनां मालवस्येन्द्रवर्मणः
अश्वत्थामेति विख्यातो गजः शक्रगजोपमः १०१
निहतो युधि विक्रम्य ततोऽहं द्रोणमब्रुवम्
अश्वत्थामा हतो ब्रह्मन्निवर्तस्वाहवादिति १०२

नूनं नाश्रद्दधद्वाक्यमेष मे पुरुषर्षभः
स त्वं गोविन्दवाक्यानि मानयस्व जयैषिणः १०३
द्रोणाय निहतं शंस राजञ्शारद्वतीसुतम्
त्वयोक्तो नैष युध्येत जातु राजन्द्विजर्षभः
सत्यवान्हि नृलोकेऽस्मिन्भवान्ख्यातो जनाधिप १०४
तस्य तद्वचनं श्रुत्वा कृष्णवाक्यप्रचोदितः
भावित्वाच्च महाराज वक्तुं समुपचक्रमे १०५
तमतथ्यभये मग्नो जये सक्तो युधिष्ठिरः
अव्यक्तमब्रवीद्राजन्हतः कुञ्जर इत्युत १०६
तस्य पूर्वं रथः पृथ्व्याश्चतुरङ्गुल उत्तरः
बभूवैवं च तेनोक्ते तस्य वाहास्पृशन्महीम् १०७
युधिष्ठिरात्तु तद्वाक्यं श्रुत्वा द्रोणो महारथः
पुत्रव्यसनसंतप्तो निराशो जीवितेऽभवत् १०८
आगस्कृतमिवात्मानं पाण्डवानां महात्मनाम्
ऋषिवाक्यं च मन्वानःश्रुत्वा च निहतं सुतम् १०९
विचेताः परमोद्विग्नो धृष्टद्युम्नमवेक्ष्य च
योद्धुं नाशक्नुवद्राजन्यथापूर्वमरिंदम ११०
सञ्जय उवाच
तं दृष्ट्वा परमोद्विग्नं शोकोपहतचेतसम्
पाञ्चालराजस्य सुतो धृष्टद्युम्नः समाद्रवत् १११
य इष्ट्वा मनुजेन्द्रेण द्रुपदेन महामखे
लब्धो द्रोणविनाशाय समिद्धाद्धव्यवाहनात् ११२
स धनुर्जैत्रमादाय घोरं जलदनिस्वनम्
दृढज्यमजरं दिव्यं शरांश्चाशीविषोपमान् ११३
संदधे कार्मुके तस्मिञ्शरमाशीविषोपमम्
द्रोणं जिघांसुः पाञ्चाल्यो महाज्वालमिवानलम् ११४
तस्य रूपं शरस्यासीद्धनुर्ज्यामण्डलान्तरे
द्योततो भास्करस्येव घनान्ते परिवेशिनः ११५
पार्षतेन परामृष्टं ज्वलन्तमिव तद्धनुः
अन्तकालमिव प्राप्तं मेनिरे वीक्ष्य सैनिकाः ११६

तमिषुं संहितं तेन भारद्वाजः प्रतापवान्
दृष्ट्वामन्यत देहस्य कालपर्यायमागतम् ११७
ततः स यत्नमातिष्ठदाचार्यस्तस्य वारणे
न चास्यास्त्राणि राजेन्द्र प्रादुरासन्महात्मनः ११८
तस्य त्वहानि चत्वारि क्षपा चैकास्यतो गता
तस्य चाह्नस्त्रिभागेन क्षयं जग्मुः पतत्रिणः ११९
स शरक्षयमासाद्य पुत्रशोकेन चार्दितः
विविधानां च दिव्यानामस्त्राणामप्रसन्नताम् १२०
उत्स्रष्टुकामः शस्त्राणि विप्रवाक्याभिचोदितः
तेजसा प्रेर्यमाणश्च युयुधे सोऽतिमानुषम् १२१
अथान्यत्स समादाय दिव्यमाङ्गिरसं धनुः
शरांश्च ब्रह्मदण्डाभान्धृष्टद्युम्नमयोधयत् १२२
ततस्तं शरवर्षेण महता समवाकिरत्
व्यशातयच्च संक्रुद्धो धृष्टद्युम्नममर्षणः १२३
तं शरं शतधा चास्य द्रोणश्चिच्छेद सायकैः
ध्वजं धनुश्च निशितैः सारथिं चाप्यपातयत् १२४
धृष्टद्युम्नः प्रहस्यान्यत्पुनरादाय कार्मुकम्
शितेन चैनं बाणेन प्रत्यविध्यत्स्तनान्तरे १२५
सोऽतिविद्धो महेष्वासः संभ्रान्त इव संयुगे
भल्लेन शितधारेण चिच्छेदास्य महद्धनुः १२६
यच्चास्य बाणं विकृतं धनूंषि च विशां पते
सर्वं संछिद्य दुर्धर्षो गदां खड्गमथापि च १२७
धृष्टद्युम्नं ततोऽविध्यन्नवभिर्निशितैः शरैः
जीवितान्तकरैः क्रुद्धः क्रुद्धरूपं परंतपः १२८
धृष्टद्युम्नरथस्याश्वान्स्वरथाश्वैर्महारथः
अमिश्रयदमेयात्मा ब्राह्ममस्त्रमुदीरयन् १२९
ते मिश्रा बह्वशोभन्त जवना वातरंहसः
पारावतसवर्णाश्च शोणाश्च भरतर्षभ १३०
यथा सविद्युतो मेघा नदन्तो जलदागमे
तथा रेजुर्महाराज मिश्रिता रणमूर्धनि १३१

ईषाबन्धं चक्रबन्धं रथबन्धं तथैव च
प्राणाशयदमेयात्मा धृष्टद्युम्नस्य स द्विजः १३२
स छिन्नधन्वा विरथो हताश्वो हतसारथिः
उत्तमामापदं प्राप्य गदां वीरः परामृशत् १३३
तामस्य विशिखैस्तीक्ष्णैः क्षिप्यमाणां महारथः
निजघान शरैर्द्रोणः क्रुद्धः सत्यपराक्रमः १३४
तां दृष्ट्वा तु नरव्याघ्रो द्रोणेन निहतां शरैः
विमलं खड्गमादत्त शतचन्द्रं च भानुमत् १३५
असंशयं तथाभूते पाञ्चाल्यः साध्वमन्यत
वधमाचार्यमुख्यस्य प्राप्तकालं महात्मनः १३६
ततः स्वरथनीडस्थः स्वरथस्य रथेषया
अगच्छदसिमुद्यम्य शतचन्द्रं च भानुमत् १३७
चिकीर्षुर्दुष्करं कर्म धृष्टद्युम्नो महारथः
इयेष वक्षो भेत्तुं स भारद्वाजस्य संयुगे १३८
सोऽतिष्ठद्युगमध्ये वै युगसंनहनेषु च
शोणानां जघनार्धेषु तत्सैन्याः समपूजयन् १३९
तिष्ठतो युगपालीषु शोणानप्यधितिष्ठतः
नापश्यदन्तरं द्रोणस्तदद्भुतमिवाभवत् १४०
क्षिप्रं श्येनस्य चरतो यथैवामिषगृद्धिनः
तद्वदासीदभीसारो द्रोणं पार्थयतो रणे १४१
तस्याश्वान्रथशक्त्यासौ तदा क्रुद्धः पराक्रमी
सर्वानेकैकशो द्रोणः कपोताभानजीघनत् १४२
ते हता न्यपतन्भूमौ धृष्टद्युम्नस्य वाजिनः
शोणाश्च पर्यमुच्यन्त रथबन्धाद्विशां पते १४३
तान्हयान्निहतान्दृष्ट्वा द्विजाग्र्येण स पार्षतः
नामृष्यत युधां श्रेष्ठो याज्ञसेनिर्महारथः १४४
विरथः स गृहीत्वा तु खड्गं खड्गभृतां वरः
द्रोणमभ्यपतद्राजन्वैनतेय इवोरगम् १४५
तस्य रूपं बभौ राजन्भारद्वाजं जिघांसतः
यथा रूपं परं विष्णोर्हिरण्यकशिपोर्वधे १४६

सोऽचरद्विविधान्मार्गान्प्रकारानेकविंशतिम्
भ्रान्तमुद्भ्रान्तमाविद्धमाप्लुतं प्रसृतं सृतम् १४७
परिवृत्तं निवृत्तं च खड्गं चर्म च धारयन्
संपातं समुदीर्णं च दर्शयामास पार्षतः १४८
ततः शरसहस्रेण शतचन्द्रमपातयत्
खड्गं चर्म च संबाधे धृष्टद्युम्नस्य स द्विजः १४९
ते तु वैतस्तिका नाम शरा ह्यासन्नघातिनः
निकृष्टयुद्धे द्रोणस्य नान्येषां सन्ति ते शराः १५०
शारद्वतस्य पार्थस्य द्रौणेर्वैकर्तनस्य च
प्रद्युम्नयुयुधानाभ्यामभिमन्योश्च ते शराः १५१
अथास्येषुं समाधत्त दृढं परमसंशितम्
अन्तेवासिनमाचार्यो जिघांसुः पुत्रसंमितम् १५२
तं शरैर्दशभिस्तीक्ष्णैश्चिच्छेद शिनिपुंगवः
पश्यतस्तव पुत्रस्य कर्णस्य च महात्मनः
ग्रस्तमाचार्यमुख्येन धृष्टद्युम्नममोचयत् १५३
चरन्तं रथमार्गेषु सात्यकिं सत्यविक्रमम्
द्रोणकर्णान्तरगतं कृपस्यापि च भारत
अपश्येतां महात्मानौ विष्वक्सेनधनंजयौ १५४
अपूजयेतां वार्ष्णेयं ब्रुवाणौ साधु साध्विति
दिव्यान्यस्त्राणि सर्वेषां युधि निघ्नन्तमच्युतम्
अभिपत्य ततः सेनां विष्वक्सेनधनंजयौ १५५
धनंजयस्ततः कृष्णमब्रवीत्पश्य केशव
आचार्यवरमुख्यानां मध्ये क्रीडन्मधूद्वहः १५६
आनन्दयति मां भूयः सात्यकिः सत्यविक्रमः
माद्रीपुत्रौ च भीमं च राजानं च युधिष्ठिरम् १५७
यच्छिक्षयानुद्धतः सन्रणे चरति सात्यकिः
महारथानुपक्रीडन्वृष्णीनां कीर्तिवर्धनः १५८
तमेते प्रतिनन्दन्ति सिद्धाः सैन्याश्च विस्मिताः
अजय्यं समरे दृष्ट्वा साधु साध्विति सात्वतम्
योधाश्चोभयतः सर्वे कर्मभिः समपूजयन् १५९

इति श्रीमहाभारते द्रोणपर्वणि चतुःषष्ट्यधिकशततमोऽध्यायः १६४

पञ्चषष्ट्यधिकशततमोऽध्यायः

सञ्जय उवाच
क्रूरमायोधनं जज्ञे तस्मिन्राजसमागमे
रुद्रस्येव हि क्रुद्धस्य निघ्नतस्तु पशून्यथा १
हस्तानामुत्तमाङ्गानां कार्मुकाणां च भारत
छत्त्राणां चापविद्धानां चामराणां च संयुगे २
भग्नचक्रै रथैश्चापि पातितैश्च महाध्वजैः
सादिभिश्च हतैः शूरैः संकीर्णा वसुधाभवत् ३
बाणपातनिकृत्तास्तु योधास्ते कुरुसत्तम
चेष्टन्तो विविधाश्चेष्टा व्यदृश्यन्त महाहवे ४
वर्तमाने तथा युद्धे घोरे देवासुरोपमे
अब्रवीत्क्षत्रियांस्तत्र धर्मराजो युधिष्ठिरः
अभिद्रवत संयत्ताः कुम्भयोनिं महारथाः ५
एष वै पार्षतो वीरो भारद्वाजेन संगतः
घटते च यथाशक्ति भारद्वाजस्य नाशने ६
यादृशानि हि रूपाणि दृश्यन्ते नो महारणे
अद्य द्रोणं रणे क्रुद्धः पातयिष्यति पार्षतः
ते यूयं सहिता भूत्वा कुम्भयोनिं परीप्सत ७
युधिष्ठिरसमाज्ञप्ताः सृञ्जयानां महारथाः
अभ्यद्रवन्त संयत्ता भारद्वाजं जिघांसवः ८
तान्समापततः सर्वान्भारद्वाजो महारथः
अभ्यद्रवत वेगेन मर्तव्यमिति निश्चितः ९
प्रयाते सत्यसंधे तु समकम्पत मेदिनी
ववुर्वाताः सनिर्घातास्त्रासयन्तो वरूथिनीम् १०
पपात महती चोल्का आदित्यान्निर्गतेव ह
दीपयन्तीव तापेन शंसन्तीव महद्भयम् ११
जज्वलुश्चैव शस्त्राणि भारद्वाजस्य मारिष
रथाः स्वनन्ति चात्यर्थं हयाश्चाश्रूण्यवासृजन् १२

हतौजा इव चाप्यासीद्भारद्वाजो महारथः
ऋषीणां ब्रह्मवादानां स्वर्गस्य गमनं प्रति
सुयुद्धेन ततः प्राणानुत्स्रष्टुमुपचक्रमे १३
ततश्चतुर्दिशं सैन्यैर्द्रुपदस्याभिसंवृतः
निर्दहन्क्षत्रियव्रातान्द्रोणः पर्यचरद्रणे १४
हत्वा विंशतिसाहस्रान्क्षत्रियानरिमर्दनः
दशायुतानि तीक्ष्णाग्रैरवधीद्विशिखैः शितैः १५
सोऽतिष्ठदाहवे यत्तो विधूम इव पावकः
क्षत्रियाणामभावाय ब्राह्ममात्मानमास्थितः १६
पाञ्चाल्यं विरथं भीमो हतसर्वायुधं वशी
अविषण्णं महात्मानं त्वरमाणः समभ्ययात् १७
ततः स्वरथमारोप्य पाञ्चाल्यमरिमर्दनः
अब्रवीदभिसंप्रेक्ष्य द्रोणमस्यन्तमन्तिकात् १८
न त्वदन्य इहाचार्यं योद्धुमुत्सहते पुमान्
त्वरस्व प्राग्वधायैव त्वयि भारः समाहितः १९
स तथोक्तो महाबाहुः सर्वभारसहं नवम्
अभिपत्याददे क्षिप्रमायुधप्रवरं दृढम् २०
संरब्धश्च शरानस्यन्द्रोणं दुर्वारणं रणे
विवारयिषुराचार्यं शरवर्षैरवाकिरत् २१
तौ न्यवारयतां श्रेष्ठौ संरब्धौ रणशोभिनौ
उदीरयेतां ब्राह्माणि दिव्यान्यस्त्राण्यनेकशः २२
स महास्त्रैर्महाराज द्रोणमाच्छादयद्रणे
निहत्य सर्वाण्यस्त्राणि भारद्वाजस्य पार्षतः २३
स वसातीञ्शिबींश्चैव बाह्लीकान्कौरवानपि
रक्षिष्यमाणान्संग्रामे द्रोणं व्यधमदच्युतः २४
धृष्टद्युम्नस्तदा राजन्गभस्तिभिरिवांशुमान्
बभौ प्रच्छादयन्नाशाः शरजालैः समन्ततः २५
तस्य द्रोणो धनुश्छित्त्वा विद्ध्वा चैनं शिलीमुखैः
मर्माण्यभ्यहनद्भूयः स व्यथां परमामगात् २६
ततो भीमो दृढक्रोधो द्रोणस्याश्लिष्य तं रथम्

शनकैरिव राजेन्द्र द्रोणं वचनमब्रवीत् २७
यदि नाम न युध्येरञ्शिक्षिता ब्रह्मबन्धवः
स्वकर्मभिरसंतुष्टा न स्म क्षत्रं क्षयं व्रजेत् २८
अहिंसा सर्वभूतेषु धर्मं ज्यायस्तरं विदुः
तस्य च ब्राह्मणो मूलं भवांश्च ब्रह्मवित्तमः २९
श्वपाकवन्म्लेच्छगणान्हत्वा चान्यान्पृथग्विधान्
अज्ञानान्मूढवद्ब्रह्मन्पुत्रदारधनेप्सया ३०
एकस्यार्थे बहून्हत्वा पुत्रस्याधर्मविद्यथा
स्वकर्मस्थान्विकर्मस्थो न व्यपत्रपसे कथम् ३१
स चाद्य पतितः शेते पृष्ठेनावेदितस्तव
धर्मराजेन तद्वाक्यं नातिशङ्कितुमर्हसि ३२
एवमुक्तस्ततो द्रोणो भीमेनोत्सृज्य तद्धनुः
सर्वाण्यस्त्राणिधर्मात्मा हातुकामोऽभ्यभाषत
कर्ण कर्ण महेष्वास कृप दुर्योधनेति च ३३
संग्रामे क्रियतां यत्नो ब्रवीम्येष पुनः पुनः
पाण्डवेभ्यः शिवं वोऽस्तु शस्त्रमभ्युत्सृजाम्यहम् ३४
इति तत्र महाराज प्राक्रोशद्द्रौणिमेव च
उत्सृज्य च रणे शस्त्रं रथोपस्थे निवेश्य च
अभयं सर्वभूतानां प्रददौ योगयुक्तवान् ३५
तस्य तच्छिद्रमाज्ञाय धृष्टद्युम्नः समुत्थितः
खड्गी रथादवप्लुत्य सहसा द्रोणमभ्ययात् ३६
हाहाकृतानि भूतानि मानुषाणीतराणि च
द्रोणं तथागतं दृष्ट्वा धृष्टद्युम्नवशं गतम् ३७
हाहाकारं भृशं चक्रुरहो धिगिति चाब्रुवन्
द्रोणोऽपि शस्त्राण्युत्सृज्य परमं साम्यमास्थितः ३८
तथोक्त्वा योगमास्थाय ज्योतिर्भूतो महातपाः
दिवमाक्रामदाचार्यः सद्भिः सह दुराक्रमम् ३९
द्वौ सूर्याविति नो बुद्धिरासीत्तस्मिंस्तथा गते
एकाग्रमिव चासीद्धि ज्योतिर्भिः पूरितं नभः
समपद्यतचार्काभेभारद्वाजनिशाकरे ४०

निमेषमात्रेण च तज्ज्योतिरन्तरधीयत
आसीत्किलकिलाशब्दः प्रहृष्टानां दिवौकसाम्
ब्रह्मलोकं गते द्रोणे धृष्टद्युम्ने च मोहिते ४१
वयमेव तदाद्राक्ष्म पञ्च मानुषयोनयः
योगयुक्तं महात्मानं गच्छन्तं परमां गतिम् ४२
अहं धनंजयः पार्थः कृपः शारद्वतो द्विजः
वासुदेवश्च वार्ष्णेयो धर्मराजश्च पाण्डवः ४३
अन्ये तु सर्वे नापश्यन्भारद्वाजस्य धीमतः
महिमानं महाराज योगमुक्तस्य गच्छतः ४४
गतिं परमिकां प्राप्तमजानन्तो नृयोनयः
नापश्यन्गच्छमानं हि तं सार्धमृषिपुंगवैः
आचार्यं योगमास्थाय ब्रह्मलोकमरिंदमम् ४५
वितुन्नाङ्गं शरशतैर्न्यस्तायुधमसृक्क्षरम्
धिक्कृतः पार्षतस्तं तु सर्वभूतैः परामृशत् ४६
तस्य मूर्धानमालम्ब्य गतसत्त्वस्य देहिनः
किंचिदब्रुवतः कायाद्विचकर्तासिना शिरः ४७
हर्षेण महता युक्तो भारद्वाजे निपातिते
सिंहनादरवं चक्रे भ्रामयन्खड्गमाहवे ४८
आकर्णपलितः श्यामो वयसाशीतिपञ्चकः
त्वत्कृते व्यचरत्संख्ये स तु षोडशवर्षवत् ४९
उक्तवांश्च महाबाहुः कुन्तीपुत्रो धनंजयः
जीवन्तमानयाचार्यं मा वधीर्द्रुपदात्मज ५०
न हन्तव्यो न हन्तव्य इति ते सैनिकाश्च ह
उत्क्रोशन्नर्जुनश्चैव सानुक्रोशस्तमाद्रवत् ५१
क्रोशमानेऽर्जुने चैव पार्थिवेषु च सर्वशः
धृष्टद्युम्नोऽवधीद्द्रोणं रथतल्पे नरर्षभम् ५२
शोणितेन परिक्लिन्नो रथाद्भूमिमरिंदमः
लोहिताङ्ग इवादित्यो दुर्दर्शः समपद्यत
एवं तं निहतं संख्ये ददृशे सैनिको जनः ५३
धृष्टद्युम्नस्तु तद्राजन्भारद्वाजशिरो महत्

तावकानां महेष्वासः प्रमुखे तत्समाक्षिपत् ५४
ते तु दृष्ट्वा शिरो राजन्भारद्वाजस्य तावकाः
पलायनकृतोत्साहा दुद्रुवुः सर्वतो दिशम् ५५
द्रोणस्तु दिवमास्थाय नक्षत्रपथमाविशत्
अहमेव तदाद्राक्षं द्रोणस्य निधनं नृप ५६
ऋषेः प्रसादात्कृष्णस्य सत्यवत्याः सुतस्य च
विधूमामिव संयान्तीमुल्कां प्रज्वलितामिव
अपश्याम दिवं स्तब्ध्वा गच्छन्तं तं महाद्युतिम् ५७
हते द्रोणे निरुत्साहान्कुरून्पाण्डवसृञ्जयाः
अभ्यद्रवन्महावेगास्ततः सैन्यं व्यदीर्यत ५८
निहता हयभूयिष्ठाः संग्रामे निशितैः शरैः
तावका निहते द्रोणे गतासव इवाभवन् ५९
पराजयमथावाप्य परत्र च महद्भयम्
उभयेनैव ते हीना नाविन्दन्धृतिमात्मनः ६०
अन्विच्छन्तः शरीरं तु भारद्वाजस्य पार्थिवाः
नाध्यगच्छंस्तदा राजन्कबन्धायुतसंकुले ६१
पाण्डवास्तु जयं लब्ध्वा परत्र च महद्यशः
बाणशब्दरवांश्चक्रुः सिंहनादांश्च पुष्कलान् ६२
भीमसेनस्ततो राजन्धृष्टद्युम्नश्च पार्षतः
वरूथिन्यामनृत्येतां परिष्वज्य परस्परम् ६३
अब्रवीच्च तदा भीमः पार्षतं शत्रुतापनम्
भूयोऽह त्वां विजयिनं परिष्वक्ष्यामि पार्षत
सूतपुत्रे हते पापे धार्तराष्ट्रे च संयुगे ६४
एतावदुक्त्वा भीमस्तु हर्षेण महता युतः
बाहुशब्देन पृथिवीं कम्पयामास पाण्डवः ६५
तस्य शब्देन वित्रस्ताः प्राद्रवंस्तावका युधि
क्षत्रधर्मं समुत्सृज्य पलायनपरायणाः ६६
पाण्डवास्तु जयं लब्ध्वा हृष्टा ह्यासन्विशां पते
अरिक्षयं च संग्रामे तेन ते सुखमाप्नुवन् ६७
ततो द्रोणे हते राजन्कुरवः शस्त्रपीडिताः

हतप्रवीरा विध्वस्ता भृशं शोकपरायणाः ६८
विचेतसो हतोत्साहाः कश्मलाभिहतौजसः
आर्तस्वरेण महता पुत्रं ते पर्यवारयन् ६९
रजस्वला वेपमाना वीक्षमाणा दिशो दश
अश्रुकण्ठा यथा दैत्या हिरण्याक्षे पुरा हते ७०
स तैः परिवृतो राजा त्रस्तैः क्षुद्रमृगैरिव
अशक्नुवन्नवस्थातुमपायात्तनयस्तव ७१
क्षुत्पिपासापरिश्रान्तास्ते योधास्तव भारत
आदित्येन च संतप्ता भृशं विमनसोऽभवन् ७२
भास्करस्येव पततं समुद्रस्येव शोषणम्
विपर्यासं यथा मेरोर्वासवस्येव निर्जयम् ७३
अमर्षणीयं तद्दृष्ट्वा भारद्वाजस्य पातनम्
त्रस्तरूपतरा राजन्कौरवाः प्राद्रवन्भयात् ७४
गान्धारराजः शकुनिस्त्रस्तस्त्रस्ततरैः सह
हतं रुक्मरथं दृष्ट्वा प्राद्रवत्सहितो रथैः ७५
वरूथिनीं वेगवतीं विद्रुतां सपताकिनीम्
परिगृह्य महासेनां सूतपुत्रोऽपयाद्भयात् ७६
रथनागाश्वकलिलां पुरस्कृत्य तु वाहिनीम्
मद्राणामीश्वरः शल्यो वीक्ष्यमाणोऽपयाद्भयात् ७७
हतप्रवीरैर्भूयिष्ठं द्विपैर्बहुपदातिभिः
वृतः शारद्वतोऽगच्छत्कष्टं कष्टमिति ब्रुवन् ७८
भोजानीकेन शिष्टेन कलिङ्गारट्टबाह्लिकैः
कृतवर्मा वृतो राजन्प्रायात्सुजवनैर्हयैः ७९
पदातिगणसंयुक्तस्त्रस्तो राजन्भयार्दितः
उलूकः प्राद्रवत्तत्र दृष्ट्वा द्रोणं निपातितम् ८०
दर्शनीयो युवा चैव शौर्ये च कृतलक्षणः
दुःशासनो भृशोद्विग्नः प्राद्रवद्गजसंवृतः ८१
गजाश्वरथसंयुक्तो वृतश्चैव पदातिभिः
दुर्योधनो महाराज प्रायात्तत्र महारथः ८२
गजान्रथान्समारुह्य परस्यापि हयाञ्जनाः

प्रकीर्णकेशा विध्वस्ता न द्वावेकत्र धावतः ८३
नेदमस्तीति पुरुषा हतोत्साहा हतौजसः
उत्सृज्य कवचानन्ये प्राद्रवंस्तावका विभो ८४
अन्योन्यं ते समाक्रोशन्सैनिका भरतर्षभ
तिष्ठ तिष्ठेति न च ते स्वयं तत्रावतस्थिरे ८५
धुर्यान्प्रमुच्य तु रथाद्धतसूतान्स्वलंकृतान्
अधिरुह्य हयान्योधाः क्षिप्रं पद्भिरचोदयन् ८६
द्रवमाणे तथा सैन्ये त्रस्तरूपे हतौजसि
प्रतिस्रोत इव ग्राहो द्रोणपुत्रः परानियात् ८७
हत्वा बहुविधां सेनां पाण्डूनां युद्धदुर्मदः
कथंचित्संकटान्मुक्तो मत्तद्विरदविक्रमः ८८
द्रवमाणं बलं दृष्ट्वा पलायनकृतक्षणम्
दुर्योधनं समासाद्य द्रोणपुत्रोऽब्रवीदिदम् ८९
किमियं द्रवते सेना त्रस्तरूपेव भारत
द्रवमाणां च राजेन्द्र नावस्थापयसे रणे ९०
त्वं चापि न यथापूर्वं प्रकृतिस्थो नराधिप
कर्णप्रभृतयश्चेमे नावतिष्ठन्ति पार्थिवाः ९१
अन्येष्वपि च युद्धेषु नैव सेनाद्रवत्तदा
कच्चित्क्षेमं महाबाहो तव सैन्यस्य भारत ९२
कस्मिन्निदं हते राजन्रथसिंहे बलं तव
एतामवस्थां संप्राप्तं तन्ममाचक्ष्व कौरव ९३
तत्तु दुर्योधनः श्रुत्वा द्रोणपुत्रस्य भाषितम्
घोरमप्रियमाख्यातुं नाशकत्पार्थिवर्षभः ९४
भिन्ना नौरिव ते पुत्रो निमग्नः शोकसागरे
बाष्पेण पिहितो दृष्ट्वा द्रोणपुत्रं रथे स्थितम् ९५
ततः शारद्वतं राजा सव्रीडमिदमब्रवीत्
शंसेह सर्वं भद्रं ते यथा सैन्यमिदं द्रुतम् ९६
अथ शारद्वतो राजन्नार्तिं गच्छन्पुनः पुनः
शशंस द्रोणपुत्राय यथा द्रोणो निपातितः ९७
कृप उवाच

वयं द्रोणं पुरस्कृत्य पृथिव्यां प्रवरं रथम्
प्रावर्तयाम संग्रामं पाञ्चालैरेव केवलैः ९८
ततः प्रवृत्ते संग्रामे विमिश्रा कुरुसोमकाः
अन्योन्यमभिगर्जन्तः शस्त्रैर्देहानपातयन् ९९
ततो द्रोणो ब्राह्ममस्त्रं विकुर्वाणो नरर्षभः
अहनच्छात्रवान्भल्लैः शतशोऽथ सहस्रशः १००
पाण्डवाः केकया मत्स्याः पाञ्चालाश्च विशेषतः
संख्ये द्रोणरथं प्राप्य व्यनशन्कालचोदिताः १०१
सहस्रं रथसिंहानां द्विसाहस्रं च दन्तिनाम्
द्रोणो ब्रह्मास्त्रनिर्दग्धं प्रेषयामास मृत्यवे १०२
आकर्णपलितः श्यामो वयसाशीतिपञ्चकः
रणे पर्यचरद्द्रोणो वृद्धः षोडशवर्षवत् १०३
क्लिश्यमानेषु सैन्येषु वध्यमानेषु राजसु
अमर्षवशमापन्नाः पाञ्चाला विमुखाभवन् १०४
तेषु किंचित्प्रभग्नेषु विमुखेषु सपत्नजित्
दिव्यमस्त्रं विकुर्वाणो बभूवार्क इवोदितः १०५
स मध्यं प्राप्य पाण्डूनां शररश्मिः प्रतापवान्
मध्यंगत इवादित्यो दुष्प्रेक्ष्यस्ते पिताभवत् १०६
ते दह्यमाना द्रोणेन सूर्येणेव विराजता
दग्धवीर्या निरुत्साहा बभूवुर्गतचेतसः १०७
तान्दृष्ट्वा पीडितान्बाणैर्द्रोणेन मधुसूदनः
जयैषी पाण्डुपुत्राणामिदं वचनमब्रवीत् १०८
नैष जातु परैः शक्यो जेतुं शस्त्रभृतां वरः
अपि वृत्रहणा संख्ये रथयूथपयूथपः १०९
ते यूयं धर्ममुत्सृज्य जयं रक्षत पाण्डवाः
यथा वः संयुगे सर्वान्न हन्याद्रुक्मवाहनः ११०
अश्वत्थाम्नि हते नैष युध्येदिति मतिर्मम
हतं तं संयुगे कश्चिदाख्यात्वस्मै मृषा नरः १११
एतन्नारोचयद्वाक्यं कुन्तीपुत्रो धनंजयः
अरोचयंस्तु सर्वेऽन्ये कृच्छ्रेण तु युधिष्ठिरः ११२

भीमसेनस्तु सव्रीडमब्रवीत्पितरं तव
अश्वत्थामा हत इति तच्चाबुध्यत ते पिता ११३
स शङ्कमानस्तन्मिथ्या धर्मराजमपृच्छत
हतं वाप्यहतं वाजौ त्वां पिता पुत्रवत्सलः ११४
तदतथ्यभये मग्नो जये सक्तो युधिष्ठिरः
अश्वत्थामानमाहेदं हतं कुञ्जर इत्युत
भीमेन गिरिवर्ष्माणं मालवस्येन्द्रवर्मणः ११५
उपसृत्य तदा द्रोणमुच्चैरिदमभाषत
यस्यार्थे शस्त्रमाधत्से यमवेक्ष्य च जीवसि
पुत्रस्ते दयितो नित्यं सोऽश्वत्थामा निपातितः ११६
तच्छ्रुत्वा विमनास्तत्र आचार्यो महदप्रियम्
नियम्य दिव्यान्यस्त्राणि नायुध्यत यथा पुरा ११७
तं दृष्ट्वा परमोद्विग्नं शोकोपहतचेतसम्
पाञ्चालराजस्य सुतः क्रूरकर्मा समाद्रवत् ११८
तं दृष्ट्वा विहितं मृत्युं लोकतत्त्वविचक्षणः
दिव्यान्यस्त्राण्यथोत्सृज्य रणे प्राय उपाविशत् ११९
ततोऽस्य केशान्सव्येन गृहीत्वा पाणिना तदा
पार्षतः क्रोशमानानां वीराणामच्छिनच्छिरः १२०
न हन्तव्यो न हन्तव्य इति ते सर्वतोऽब्रुवन्
तथैव चार्जुनो वाहादवरुह्यैनमाद्रवत् १२१
उद्यम्य बाहू त्वरितो ब्रुवाणश्च पुनः पुनः
जीवन्तमानयाचार्यं मा वधीरिति धर्मवित् १२२
तथापि वार्यमाणेन कौरवैरर्जुनेन च
हत एव नृशंसेन पिता तव नरर्षभ १२३
सैनिकाश्च ततः सर्वे प्राद्रवन्त भयार्दिताः
वयं चापि निरुत्साहा हते पितरि तेऽनघ १२४
सञ्जय उवाच
तच्छ्रुत्वा द्रोणपुत्रस्तु निधनं पितुराहवे
क्रोधमाहारयत्तीव्रं पदाहत इवोरगः १२५
इति श्रीमहाभारते द्रोणपर्वणि पञ्चषष्ट्यधिकशततमोऽध्यायः १६५

समाप्तं द्रोणवधपर्व

षट्षष्ठ्यधिकशततमोऽध्यायः

धृतराष्ट्र उवाच
अधर्मेण हतं श्रुत्वा धृष्टद्युम्नेन सञ्जय
ब्राह्मणं पितरं वृद्धमश्वत्थामा किमब्रवीत् १
मानुषं वारुणाग्नेयं ब्राह्ममस्त्रं च वीर्यवान्
ऐन्द्रं नारायणं चैव यस्मिन्नित्यं प्रतिष्ठितम् २
तमधर्मेण धर्मिष्ठं धृष्टद्युम्नेन सञ्जय
श्रुत्वा निहतमाचार्यमश्वत्थामा किमब्रवीत् ३
येन रामादवाप्येह धनुर्वेदं महात्मना
प्रोक्तान्यस्त्राणि दिव्यानि पुत्राय गुणकाङ्क्षिणे ४
एकमेव हि लोकेऽस्मिन्नात्मनो गुणवत्तरम्
इच्छन्ति पुत्रं पुरुषा लोके नान्यं कथंचन ५
आचार्याणां भवन्त्येव रहस्यानि महात्मनाम्
तानि पुत्राय वा दद्युः शिष्यायानुगताय वा ६
स शिल्पं प्राप्य तत्सर्वं सविशेषं च सञ्जय
शूरः शारद्वतीपुत्रः संख्ये द्रोणादनन्तरः ७
रामस्यानुमतः शास्त्रे पुरंदरसमो युधि
कार्तवीर्यसमो वीर्ये बृहस्पतिसमो मतौ ८
महीधरसमो धृत्या तेजसाग्निसमो युवा
समुद्र इव गाम्भीर्ये क्रोधे सर्पविषोपमः ९
स रथी प्रथमो लोके दृढधन्वा जितक्लमः
शीघ्रोऽनिल इवाक्रन्दे चरन्क्रुद्ध इवान्तकः १०
अस्यता येन संग्रामे धरण्यभिनिपीडिता
यो न व्यथति संग्रामे वीरः सत्यपराक्रमः ११
वेदस्नातो व्रतस्नातो धनुर्वेदे च पारगः
महोदधिरिवाक्षोभ्यो रामो दाशरथिर्यथा १२
तमधर्मेण धर्मिष्ठं धृष्टद्युम्नेन संयुगे
श्रुत्वा निहतमाचार्यमश्वत्थामा किमब्रवीत् १३

धृष्टद्युम्नस्य यो मृत्युः सृष्टस्तेन महात्मना
यथा द्रोणस्य पाञ्चाल्यो यज्ञसेनसुतोऽभवत् १४
तं नृशंसेन पापेन क्रूरेणात्यल्पदर्शिना
श्रुत्वा निहतमाचार्यमश्वत्थामा किमब्रवीत् १५
सञ्जय उवाच
छद्मना निहतं श्रुत्वा पितरं पापकर्मणा
बाष्पेणापूर्यत द्रौणी रोषेण च नरर्षभ १६
तस्य क्रुद्धस्य राजेन्द्र वपुर्दिव्यमदृश्यत
अन्तकस्येव भूतानि जिहीर्षोः कालपर्यये १७
अश्रुपूर्णे ततो नेत्रे अपमृज्य पुनः पुनः
उवाच कोपान्निःश्वस्य दुर्योधनमिदं वचः १८
पिता मम यथा क्षुद्रैर्न्यस्तशस्त्रो निपातितः
धर्मध्वजवता पापं कृतं तद्विदितं मम
अनार्यं सुनृशंसस्य धर्मपुत्रस्य मे श्रुतम् १९
युद्धेष्वपि प्रवृत्तानां ध्रुवौ जयपराजयौ
द्वयमेतद्भवेद्राजन्वधस्तत्र प्रशस्यते २०
न्यायवृत्तो वधो यस्तु संग्रामे युध्यतो भवेत्
न स दुःखाय भवति तथा दृष्टो हि स द्विजः २१
गतः स वीरलोकाय पिता मम न संशयः
न शोच्यः पुरुषव्याघ्रस्तथा स निधनं गतः २२
यत्तु धर्मप्रवृत्तः सन्केशग्रहणमाप्तवान्
पश्यतां सर्वसैन्यानां तन्मे मर्माणि कृन्तति २३
कामात्क्रोधादवज्ञानाद्दर्पाद्बाल्येन वा पुनः
वैधर्मिकानि कुर्वन्ति तथा परिभवेन च २४
तदिदं पार्षतेनेह महदाधर्मिकं कृतम्
अवज्ञाय च मां नूनं नृशंसेन दुरात्मना २५
तस्यानुबन्धं स द्रष्टा धृष्टद्युम्नः सुदारुणम्
अनार्यं परमं कृत्वा मिथ्यावादी च पाण्डवः २६
यो ह्यसौ छद्मनाचार्यं शस्त्रं संन्यासयत्तदा
तस्याद्य धर्मराजस्य भूमिः पास्यति शोणितम् २७

सर्वोपायैर्यतिष्यामि पाञ्चालानामहं वधे
धृष्टद्युम्नं च समरे हन्ताहं पापकारिणम् २८
कर्मणा येन तेनेह मृदुना दारुणेन वा
पाञ्चालानां वधं कृत्वा शान्तिं लब्धास्मि कौरव २९
यदर्थं पुरुषव्याघ्र पुत्रमिच्छन्ति मानवाः
प्रेत्य चेह च संप्राप्तं त्राणाय महतो भयात् ३०
पित्रा तु मम सावस्था प्राप्ता निर्बन्धुना यथा
मयि शैलप्रतीकाशे पुत्रे शिष्ये च जीवति ३१
धिङ्ममास्त्राणि दिव्यानि धिग्बाहू धिक्पराक्रमम्
यन्मां द्रोणः सुतं प्राप्य केशग्रहणमाप्तवान् ३२
स तथाहं करिष्यामि यथा भरतसत्तम
परलोकगतस्यापि गमिष्याम्यनृणः पितुः ३३
आर्येण तु न वक्तव्या कदाचित्स्तुतिरात्मनः
पितुर्वधममृष्यंस्तु वक्ष्याम्यद्येह पौरुषम् ३४
अद्य पश्यन्तु मे वीर्यं पाण्डवाः सजनार्दनाः
मृद्नतः सर्वसैन्यानि युगान्तमिव कुर्वतः ३५
न हि देवा न गन्धर्वा नासुरा न च राक्षसाः
अद्य शक्ता रणे जेतुं रथस्थं मां नरर्षभ ३६
मदन्यो नास्ति लोकेऽस्मिन्नर्जुनाद्वास्त्रवित्तमः
अहं हि ज्वलतां मध्ये मयूखानामिवांशुमान्
प्रयोक्ता देवसृष्टानामस्त्राणां पृतनागतः ३७
कृशाश्वतनया ह्यद्य मत्प्रयुक्ता महामृधे
दर्शयन्तोऽत्मनो वीर्यं प्रमथिष्यन्ति पाण्डवान् ३८
अद्य सर्वा दिशो राजन्धाराभिरिव संकुलाः
आवृताः पत्रिभिस्तीक्ष्णैर्द्रष्टारो मामकैरिह ३९
किरन्हि शरजालानि सर्वतो भैरवस्वरम्
शत्रून्निपातयिष्यामि महावात इव द्रुमान् ४०
न च जानाति बीभत्सुस्तदस्त्रं न जनार्दनः
न भीमसेनो न यमौ न च राजा युधिष्ठिरः ४१
न पार्षतो दुरात्मासौ न शिखण्डी न सात्यकिः

यदिदं मयि कौरव्य सकल्यं सनिवर्तनम् ४२
नारायणाय मे पित्रा प्रणम्य विधिपूर्वकम्
उपहारः पुरा दत्तो ब्रह्मरूप उपस्थिते ४३
तं स्वयं प्रतिगृह्याथ भगवान्स वरं ददौ
वव्रे पिता मे परममस्त्रं नारायणं ततः ४४
अथैनमब्रवीद्राजन्भगवान्देवसत्तमः
भविता त्वत्समो नान्यः कश्चिद्युधि नरः क्वचित् ४५
न त्विदं सहसा ब्रह्मन्प्रयोक्तव्यं कथंचन
न ह्येतदस्त्रमन्यत्र वधाच्छत्रोर्निवर्तते ४६
न चैतच्छक्यते ज्ञातुं को न वध्येदिति प्रभो
अवध्यमपि हन्याद्धि तस्मान्नैतत्प्रयोजयेत् ४७
वधः संख्ये द्रवश्चैव शस्त्राणां च विसर्जनम्
प्रयाचनं च शत्रूणां गमनं शरणस्य च ४८
एते प्रशमने योगा महास्त्रस्य परंतप
सर्वथा पीडितो हि स्यादवध्यान्पीडयन्रणे ४९
तज्जग्राह पिता मह्यमब्रवीच्चैव स प्रभुः
त्वं वर्षिष्यसि दिव्यानि शस्त्रवर्षाण्यनेकशः
अनेनास्त्रेण संग्रामे तेजसा च ज्वलिष्यसि ५०
एवमुक्त्वा स भगवान्दिवमाचक्रमे प्रभुः
एतन्नारायणादस्त्रं तत्प्राप्तं मम बन्धुना ५१
तेनाहं पाण्डवांश्चैव पाञ्चालान्मत्स्यकेकयान्
विद्रावयिष्यामि रणे शचीपतिरिवासुरान् ५२
यथा यथाहमिच्छेयं तथा भूत्वा शरा मम
निपतेयुः सपत्नेषु विक्रमत्स्वपि भारत ५३
यथेष्टमश्मवर्षेण प्रवर्षिष्ये रणे स्थितः
अयोमुखैश्च विहगैर्द्रावयिष्ये महारथान्
परश्वधांश्च विविधान्प्रसक्ष्येऽहमसंशयम् ५४
सोऽह नारायणास्त्रेण महता शत्रुतापन
शत्रून्विध्वंसयिष्यामि कदर्थीकृत्य पाण्डवान् ५५
मित्रब्रह्मगुरुद्वेषी जाल्मकः सुविगर्हितः

पाञ्चालापसदश्चाद्य न मे जीवन्विमोक्ष्यते ५६
तच्छ्रुत्वा द्रोणपुत्रस्य पर्यवर्तत वाहिनी
ततः सर्वे महाशङ्खान्दध्मुः पुरुषसत्तमाः ५७
भेरीश्चाभ्यहनन्हृष्टा डिण्डिमांश्च सहस्रशः
तथा ननाद वसुधा खुरनेमिप्रपीडिता
स शब्दस्तुमुलः खं द्यां पृथिवीं च व्यनादयत् ५८
तं शब्दं पाण्डवाः श्रुत्वा पर्जन्यनिनदोपमम्
समेत्य रथिनां श्रेष्ठाः सहिताः संन्यमन्त्रयन् ५९
तथोक्त्वा द्रोणपुत्रोऽपि तदोपस्पृश्य भारत
प्रादुश्चकार तद्दिव्यमस्त्रं नारायणं तदा ६०
इति श्रीमहाभारते द्रोणपर्वणि षट्षष्ट्यधिकशततमोऽध्यायः १६६

## सप्तषष्ट्यधिकशततमोऽध्यायः

सञ्जय उवाच
प्रादुर्भूते ततस्तस्मिन्नस्त्रे नारायणे तदा
प्रावात्सपृषतो वायुरनभ्रे स्तनयित्नुमान् १
चचाल पृथिवी चापि चुक्षुभे च महोदधिः
प्रतिस्रोतः प्रवृत्ताश्च गन्तुं तत्र समुद्रगाः २
शिखराणि व्यदीर्यन्त गिरीणां तत्र भारत
अपसव्यं मृगाश्चैव पाण्डुपुत्रान्प्रचक्रिरे ३
तमसा चावकीर्यन्त सूर्यश्च कलुषोऽभवत्
संपतन्ति च भूतानि क्रव्यादानि प्रहृष्टवत् ४
देवदानवगन्धर्वास्त्रस्ता आसन्विशां पते
कथं कथाभवत्तीव्रा दृष्ट्वा तद्व्याकुलं महत् ५
व्यथिताः सर्वराजानस्तदा ह्यासन्विचेतसः
तद्दृष्ट्वा घोररूपं वै द्रौणेरस्त्रं भयावहम् ६
धृतराष्ट्र उवाच
निवर्तितेषु सैन्येषु द्रोणपुत्रेण संयुगे
भृशं शोकाभितप्तेन पितुर्वधममृष्यता ७
कुरूनापततो दृष्ट्वा धृष्टद्युम्नस्य रक्षणे

को मन्त्रः पाण्डवेष्वासीत्तन्ममाचक्ष्व सञ्जय ८
सञ्जय उवाच
प्रागेव विद्रुतान्दृष्ट्वा धार्तराष्ट्रान्युधिष्ठिरः
पुनश्च तुमुलं शब्दं श्रुत्वार्जुनमभाषत ९
आचार्ये निहते द्रोणे धृष्टद्युम्नेन संयुगे
निहते वज्रहस्तेन यथा वृत्रे महासुरे १०
नाशंसन्त जयं युद्धे दीनात्मानो धनंजय
आत्मत्राणे मतिं कृत्वा प्राद्रवन्कुरवो यथा ११
केचिद्भ्रान्तै रथैस्तूर्णं निहतपार्ष्णियन्तृभिः
विपताकध्वजच्छत्रैः पार्थिवाः शीर्णकूबरैः १२
भग्ननीडैराकुलाश्वैरारुह्यान्ये विचेतसः
भीताः पादैर्हयान्केचित्त्वरयन्तः स्वयं रथैः
युगचक्राक्षभग्नैश्च द्रुताः केचिद्भयातुराः १३
गजस्कन्धेषु संस्यूता नाराचैश्चलितासनाः
शरार्तैर्विद्रुतैर्नागैर्हृताः केचिद्दिशो दश १४
विशस्त्रकवचाश्चान्ये वाहनेभ्यः क्षितिं गताः
संछिन्ना नेमिषु गता मृदिताश्च हतद्विपैः १५
क्रोशन्तस्तात पुत्रेति पलायन्तोऽपरे भयात्
नाभिजानन्ति चान्योन्यं कश्मलाभिहतौजसः १६
पुत्रान्पितॄन्सखीन्भ्रातॄन्समारोप्य दृढक्षतान्
जलेन क्लेदयन्त्यन्ये विमुच्य कवचान्यपि १७
अवस्थां तादृशीं प्राप्य हते द्रोणे द्रुतं बलम्
पुनरावर्तितं केन यदि जानासि शंस मे १८
हयानां हेषतां शब्दः कुञ्जराणां च बृंहताम्
रथनेमिस्वनश्चात्र विमिश्रः श्रूयते महान् १९
एते शब्दा भृशं तीव्राः प्रवृत्ताः कुरुसागरे
मुहुर्मुहुरुदीर्यन्तः कम्पयन्ति हि मामकान् २०
य एष तुमुलः शब्दः श्रूयते लोमहर्षणः
सेन्द्रानप्येष लोकांस्त्रीन्भञ्ज्यादिति मतिर्मम २१
मन्ये वज्रधरस्यैष निनादो भैरवस्वनः

द्रोणे हते कौरवार्थं व्यक्तमभ्येति वासवः २२
प्रहृष्टलोमकूपाः स्म संविग्नरथकुञ्जराः
धनंजय गुरुं श्रुत्वा तत्र नादं सुभीषणम् २३
क एष कौरवान्दीर्णानवस्थाप्य महारथः
निवर्तयति युद्धार्थं मृधे देवेश्वरो यथा २४
अर्जुन उवाच
उद्यम्यात्मानमुग्राय कर्मणे धैर्यमास्थिताः
धमन्ति कौरवाः शङ्खान्यस्य वीर्यमुपाश्रिताः २५
यत्र ते संशयो राजन्यस्तशस्त्रे गुरौ हते
धार्तराष्ट्रानवस्थाप्य क एष नदतीति ह २६
ह्रीमन्तं तं महाबाहुं मत्तद्विरदगामिनम्
व्याख्यास्याम्युग्रकर्माणं कुरूणामभयंकरम् २७
यस्मिञ्जाते ददौ द्रोणो गवां दशशतं धनम्
ब्राह्मणेभ्यो महार्हेभ्यः सोऽश्वत्थामैष गर्जति २८
जातमात्रेण वीरेण येनोच्चैःश्रवसा इव
हेषता कम्पिता भूमिर्लोकाश्च सकलास्त्रयः २९
तच्छ्रुत्वान्तर्हितं भूतं नाम चास्याकरोत्तदा
अश्वत्थामेति सोऽद्यैष शूरो नदति पाण्डव ३०
योऽद्यानाथ इवाक्रम्य पार्षतेन हतस्तथा
कर्मणा सुनृशंसेन तस्य नाथो व्यवस्थितः ३१
गुरुं मे यत्र पाञ्चाल्यः केशपक्षे परामृशत्
तन्न जातु क्षमेद्द्रौणिर्जानन्पौरुषमात्मनः ३२
उपचीर्णो गुरुर्मिथ्या भवता राज्यकारणात्
धर्मज्ञेन सता नाम सोऽधर्मः सुमहान्कृतः ३३
सर्वधर्मोपपन्नोऽय मम शिष्यश्च पाण्डवः
नायं वक्ष्यति मिथ्येति प्रत्ययं कृतवांस्त्वयि ३४
स सत्यकञ्चुकं नाम प्रविष्टेन ततोऽनृतम्
आचार्य उक्तो भवता हतः कुञ्जर इत्युत ३५
ततः शस्त्रं समुत्सृज्य निर्ममो गतचेतनः
आसीत्स विह्वलो राजन्यथा दृष्टस्त्वया विभुः ३६

स तु शोकेन चाविष्टो विमुखः पुत्रवत्सलः
शाश्वतं धर्ममुत्सृज्य गुरुः शिष्येण घातितः ३७
न्यस्तशस्त्रमधर्मेण घातयित्वा गुरुं भवान्
रक्षत्विदानीं सामात्यो यदि शक्नोषि पार्षतम् ३८
ग्रस्तमाचार्यपुत्रेण क्रुद्धेन हतबन्धुना
सर्वे वयं परित्रातुं न शक्ष्यामोऽद्य पार्षतम् ३९
सौहार्दं सर्वभूतेषु यः करोत्यतिमात्रशः
सोऽद्य केशग्रहं श्रुत्वा पितुर्धक्ष्यति नो रणे ४०
विक्रोशमाने हि मयि भृशमाचार्यगृद्धिनि
अवकीर्य स्वधर्मं हि शिष्येण निहतो गुरुः ४१
यदा गतं वयो भूयः शिष्टमल्पतरं च नः
तस्येदानीं विकारोऽयमधर्मो यत्कृतो महान् ४२
पितेव नित्यं सौहार्दात्पितेव स हि धर्मतः
सोऽल्पकालस्य राज्यस्य कारणान्निहतो गुरुः ४३
धृतराष्ट्रेण भीष्माय द्रोणाय च विशां पते
विसृष्टा पृथिवी सर्वा सह पुत्रैश्च तत्परैः ४४
स प्राप्य तादृशीं वृत्तिं सत्कृतः सततं परैः
अवृणीत सदा पुत्रान्मामेवाभ्यधिकं गुरुः ४५
अक्षीयमाणो न्यस्तास्त्रस्त्वद्वाक्येनाहवे हतः
न त्वेनं युध्यमानं वै हन्यादपि शतक्रतुः ४६
तस्याचार्यस्य वृद्धस्य द्रोहो नित्योपकारिणः
कृतो ह्यनार्यैरस्माभी राज्यार्थे लघुबुद्धिभिः ४७
पुत्रान्भ्रातॄन्पितॄन्दारांजीवितं चैव वासविः
त्यजेत्सर्वं मम प्रेम्णा जानात्येतद्धि मे गुरुः ४८
स मया राज्यकामेन हन्यमानोऽप्युपेक्षितः
तस्मादवाक्शिरा राजन्प्राप्तोऽस्मि नरकं विभो ४९
ब्राह्मणं वृद्धमाचार्यं न्यस्तशस्त्रं यथा मुनिम्
घातयित्वाद्य राज्यार्थे मृतं श्रेयो न जीवितम् ५०
इति श्रीमहाभारते द्रोणपर्वणिसप्तषष्ट्यधिकशततमोऽध्यायः १६७

## अष्टषष्ट्यधिकशततमोऽध्यायः

सञ्जय उवाच
अर्जुनस्य वचः श्रुत्वा नोचुस्तत्र महारथाः
अप्रियं वा प्रियं वापि महाराज धनंजयम् १
ततः क्रुद्धो महाबाहुर्भीमसेनोऽभ्यभाषत
उत्स्मयन्निव कौन्तेयमर्जुनं भरतर्षभ २
मुनिर्यथारण्यगतो भाषसे धर्मसंहितम्
न्यस्तदण्डो यथा पार्थ ब्राह्मणः संशितव्रतः ३
क्षतात्त्राता क्षताज्जीवन्क्षान्तस्त्रिष्वपि साधुषु
क्षत्रियः क्षितिमाप्नोति क्षिप्रं धर्मं यशः श्रियम् ४
स भवान्क्षत्रियगुणैर्युक्तः सर्वैः कुलोद्वहः
अविपश्चिद्यथा वाक्यं व्याहरन्नाद्य शोभसे ५
पराक्रमस्ते कौन्तेय शक्रस्येव शचीपतेः
न चातिर्वतसे धर्मं वेलामिव महोदधिः ६
न पूजयेत्त्वा कोऽन्वद्य यत्त्रयोदशवार्षिकम्
अमर्षं पृष्ठतः कृत्वा धर्ममेवाभिकाङ्क्षसे ७
दिष्ट्या तात मनस्तेऽद्य स्वधर्ममनुवर्तते
आनृशंस्ये च ते दिष्ट्या बुद्धिः सततमच्युत ८
यत्तु धर्मप्रवृत्तस्य हृतं राज्यमधर्मतः
द्रौपदी च परामृष्टा सभामानीय शत्रुभिः ९
वनं प्रव्राजिताश्चास्म वल्कलाजिनवाससः
अनर्हमाणास्तं भावं त्रयोदश समाः परैः १०
एतान्यमर्षस्थानानि मर्षितानि त्वयानघ
क्षत्रधर्मप्रसक्तेन सर्वमेतदनुष्ठितम् ११
तमधर्ममपाक्रुष्टमारब्धः सहितस्त्वया
सानुबन्धान्हनिष्यामि क्षुद्रान्राज्यहरानहम् १२
त्वया तु कथितं पूर्वं युद्धायाभ्यागता वयम्
घटामश्च यथाशक्ति त्वं तु नोऽद्य जुगुप्ससे १३
स्वधर्मं नेच्छसे ज्ञातुं मिथ्या वचनमेव ते
भयार्दितानामस्माकं वाचा मर्माणि कृन्तसि १४

वपन्व्रणे क्षारमिव क्षतानां शत्रुकर्शन
विदीर्यते मे हृदयं त्वया वाक्शल्यपीडितम् १५
अधर्ममेतद्विपुलं धार्मिकः सन्न बुध्यसे
यत्त्वमात्मानमस्मांश्च प्रशंस्यान्न प्रशंससि
यः कलां षोडशीं त्वत्तो नार्हते तं प्रशंससि १६
स्वयमेवात्मनो वक्तुं न युक्तं गुणसंस्तवम्
दारयेयं महीं क्रोधाद्विकिरेयं च पर्वतान् १७
आविध्य च गदां गुर्वीं भीमां काञ्चनमालिनीम्
गिरिप्रकाशान्क्षितिजान्भञ्जेयमनिलो यथा १८
स त्वमेवंविधं जानन्भ्रातरं मां नरर्षभ
द्रोणपुत्राद्भयं कर्तुं नार्हस्यमितविक्रम १९
अथ वा तिष्ठ बीभत्सो सह सर्वैर्नरर्षभैः
अहमेनं गदापाणिर्जेष्याम्येको महाहवे २०
ततः पाञ्चालराजस्य पुत्रः पार्थमथाब्रवीत्
संक्रुद्धमिव नर्दन्तं हिरण्यकशिपुं हरिः २१
बीभत्सो विप्रकर्माणि विदितानि मनीषिणाम्
याजनाध्यापने दानं तथा यज्ञप्रतिग्रहौ २२
षष्ठमध्ययनं नाम तेषां कस्मिन्प्रतिष्ठितः
हतो द्रोणो मया यत्तत्किं मां पार्थ विगर्हसे २३
अपक्रान्तः स्वधर्माच्च क्षत्रधर्ममुपाश्रितः
अमानुषेण हन्त्यस्मानस्त्रेण क्षुद्रकर्मकृत् २४
तथा मायां प्रयुञ्जानमसह्यं ब्राह्मणब्रुवम्
माययैव निहन्याद्यो न युक्तं पार्थ तत्र किम् २५
तस्मिंस्तथा मया शस्ते यदि द्रौणायनी रुषा
कुरुते भैरवं नादं तत्र किं मम हीयते २६
न चाद्भुतमिदं मन्ये यद्द्रौणिः शुद्धगर्जया
घातयिष्यति कौरव्यान्परित्रातुमशक्नुवन् २७
यच्च मां धार्मिको भूत्वा ब्रवीषि गुरुघातिनम्
तदर्थमहमुत्पन्नः पाञ्चाल्यस्य सुतोऽनलात् २८
यस्य कार्यमकार्यं वा युध्यतः स्यात्समं रणे

तं कथं ब्राह्मणं ब्रूयाः क्षत्रियं वा धनंजय २९
यो ह्यनस्त्रविदो हन्याद्ब्रह्मास्त्रैः क्रोधमूर्छितः
सर्वोपायैर्न स कथं वध्यः पुरुषसत्तम ३०
विधर्मिणं धर्मविद्भिः प्रोक्तं तेषां विषोपमम्
जानन्धर्मार्थतत्त्वज्ञः किमर्जुन विगर्हसे ३१
नृशंसः स मयाक्रम्य रथ एव निपातितः
तन्माभिनन्द्यं बीभत्सो किमर्थं नाभिनन्दसे ३२
कृते रणे कथं पार्थ ज्वलनार्कविषोपमम्
भीमं द्रोणशिरश्छेदे प्रशस्यं न प्रशंससि ३३
योऽसौ ममैव नान्यस्य बान्धवान्युधि जघ्निवान्
छित्त्वापि तस्य मूर्धानं नैवास्मि विगतज्वरः ३४
तच्च मे कृन्तते मर्म यन्न तस्य शिरो मया
निषादविषये क्षिप्तं जयद्रथशिरो यथा ३५
अवधश्चापि शत्रूणामधर्मः शिष्यतेऽजुन
क्षत्रियस्य ह्ययं धर्मो हन्याद्धन्येत वा पुनः ३६
स शत्रुर्निहतः संख्ये मया धर्मेण पाण्डव
यथा त्वया हतः शूरो भगदत्तः पितुः सखा ३७
पितामहं रणे हत्वा मन्यसे धर्ममात्मनः
मया शत्रौ हते कस्मात्पापे धर्मं न मन्यसे ३८
नानृतः पाण्डवो ज्येष्ठो नाहं वाधार्मिकोऽजुन
शिष्यध्रुङ्निहतः पापो युध्यस्व विजयस्तव ३९
इति श्रीमहाभारते द्रोणपर्वणि अष्टषष्ट्यधिकशततमोऽध्यायः १६८

## एकोनसप्तत्यधिकशततमोऽध्यायः

धृतराष्ट्र उवाच
साङ्गा वेदा यथान्यायं येनाधीता महात्मना
यस्मिन्साक्षाद्धनुर्वेदो ह्रीनिषेधे प्रतिष्ठितः १
तस्मिन्नाक्रुश्यति द्रोणे महर्षितनये तदा
नीचात्मना नृशंसेन क्षुद्रेण गुरुघातिना २
यस्य प्रसादात्कर्माणि कुर्वन्ति पुरुषर्षभाः

अमानुषाणि संग्रामे देवैरसुकराणि च ३
तस्मिन्नाक्रुश्यति द्रोणे समक्षं पापकर्मिणः
नामर्षं तत्र कुर्वन्ति धिक्क्षत्रं धिगमर्षितम् ४
पार्थाः सर्वे च राजानः पृथिव्यां ये धनुर्धराः
श्रुत्वा किमाहुः पाञ्चाल्यं तन्ममाचक्ष्व सञ्जय ५
सञ्जय उवाच
श्रुत्वा द्रुपदपुत्रस्य ता वाचः क्रूरकर्मणः
तूष्णींबभूवू राजानः सर्व एव विशां पते ६
अर्जुनस्तु कटाक्षेण जिह्मं प्रेक्ष्य च पार्षतम्
सबाष्पमभिनिःश्वस्य धिग्धिग्धिगिति चाब्रवीत् ७
युधिष्ठिरश्चभीमश्चयमौकृष्णस्तथापरे
आसन्सुव्रीडिताराजन्सात्यकिरिदमब्रवीत् ८
नेहास्ति पुरुषः कश्चिद्य इमं पापपूरुषम्
भाषमाणमकल्याणं शीघ्रं हन्यान्नराधमम् ९
कथं च शतधा जिह्वा न ते मूर्धा च दीर्यते
गुरुमाक्रोशतः क्षुद्र न चाधर्मेण पात्यसे १०
याप्यस्त्वमसि पार्थैश्च सर्वैश्चान्धकवृष्णिभिः
यत्कर्म कलुषं कृत्वा श्लाघसे जनसंसदि ११
अकार्यं तादृशं कृत्वा पुनरेव गुरुं क्षिपन्
वध्यस्त्वं न त्वयार्थोऽस्ति मुहूर्तमपि जीवता १२
कस्त्वेतद्व्यवसेदार्यस्त्वदन्यः पुरुषाधमः
निगृह्य केशेषु वधं गुरोर्धर्मात्मनः सतः १३
सप्तावरे तथा पूर्वे बान्धवास्ते निपातिताः
यशसा च परित्यक्तास्त्वां प्राप्य कुलपांसनम् १४
उक्तवांश्चापि यत्पार्थं भीष्मं प्रति नरर्षभम्
तथान्तो विहितस्तेन स्वयमेव महात्मना १५
तस्यापि तव सोदर्यो निहन्ता पापकृत्तमः
नान्यः पाञ्चालपुत्रेभ्यो विद्यते भुवि पापकृत् १६
स चापि सृष्टः पित्रा ते भीष्मस्यान्तकरः किल
शिखण्डी रक्षितस्तेन स च मृत्युर्महात्मनः १७

पाञ्चालाश्चलिता धर्मात्क्षुद्रा मित्रगुरुद्रुहः
त्वां प्राप्य सहसोदर्यं धिक्कृतं सर्वसाधुभिः १८
पुनश्चेदीदृशीं वाचं मत्समीपे वदिष्यसि
शिरस्ते पातयिष्यामि गदया वज्रकल्पया १९
सात्वतेनैवमाक्षिप्तः पार्षतः परुषाक्षरम्
संरब्धः सात्यकिं प्राह संक्रुद्धः प्रहसन्निव २०
श्रूयते श्रूयते चेति क्षम्यते चेति माधव
न चानार्य शुभं साधुं पुरुषं क्षेप्तुमर्हसि २१
क्षमा प्रशस्यते लोके न तु पापोऽहति क्षमाम्
क्षमावन्तं हि पापात्मा जितोऽयमिति मन्यते २२
स त्वं क्षुद्रसमाचारो नीचात्मा पापनिश्चयः
आ केशाग्रान्नखाग्राच्च वक्तव्यो वक्तुमिच्छसि २३
यः स भूरिश्रवाश्छिन्ने भुजे प्रायगतस्त्वया
वार्यमाणेननिहतस्ततः पापतरं नु किम् २४
व्यूहमानो मया द्रोणो दिव्येनास्त्रेण संयुगे
विसृष्टशस्त्रो निहतः किं तत्र क्रूर दुष्कृतम् २५
अयुध्यमानं यस्त्वाजौ तथा प्रायगतं मुनिम्
छिन्नबाहुं परैर्हन्यात्सात्यके स कथं भवेत् २६
निहत्य त्वां यदा भूमौ स विक्रामति वीर्यवान्
किं तदा न निहंस्येनं भूत्वा पुरुषसत्तमः २७
त्वया पुनरनार्येण पूर्वं पार्थेन निर्जितः
यदा तदा हतः शूरः सौमदत्तिः प्रतापवान् २८
यत्र यत्र तु पाण्डूनां द्रोणो द्रावयते चमूम्
किरञ्शरसहस्राणि तत्र तत्र प्रयाम्यहम् २९
स त्वमेवंविधं कृत्वा कर्म चाण्डालवत्स्वयम्
वक्तुमिच्छसि वक्तव्यः कस्मान्मां परुषाण्यथ ३०
कर्ता त्वं कर्मणोग्रस्य नाहं वृष्णिकुलाधम
पापानां च त्वमावासः कर्मणां मा पुनर्वद ३१
जोषमास्स्व न मां भूयो वक्तुमर्हस्यतः परम्
अधरोत्तरमेतद्धि यन्मा त्वं वक्तुमिच्छसि ३२

अथ वक्ष्यसि मां मौर्ख्याद्भूयः परुषमीदृशम्
गमयिष्यामि बाणैस्त्वां युधि वैवस्वतक्षयम् ३३
न चैव मूर्ख धर्मेण केवलेनैव शक्यते
तेषामपि ह्यधर्मेण चेष्टितं शृणु यादृशम् ३४
वञ्चितः पाण्डवः पूर्वमधर्मेण युधिष्ठिरः
द्रौपदी च परिक्लिष्टा तथाधर्मेण सात्यके ३५
प्रव्राजिता वनं सर्वे पाण्डवाः सह कृष्णया
सर्वस्वमपकृष्टं च तथाधर्मेण बालिश ३६
अधर्मेणापकृष्टश्च मद्रराजः परैरितः
इतोऽप्यधर्मेण हतो भीष्मः कुरुपितामहः
भूरिश्रवा ह्यधर्मेण त्वया धर्मविदा हतः ३७
एवं परैराचरितं पाण्डवेयैश्च संयुगे
रक्षमाणैर्जयं वीरैर्धर्मज्ञैरपि सात्वत ३८
दुर्ज्ञेयः परमो धर्मस्तथाधर्मः सुदुर्विदः
युध्यस्व कौरवैः सार्धं मा गाः पितृनिवेशनम् ३९
एवमादीनि वाक्यानि क्रूराणि परुषाणि च
श्रावितः सात्यकिः श्रीमानाकम्पित इवाभवत् ४०
तच्छ्रुत्वा क्रोधताम्राक्षः सात्यकिस्त्वाददे गदाम्
विनिःश्वस्य यथा सर्पः प्रणिधाय रथे धनुः ४१
ततोऽभिपत्य पाञ्चाल्यं संरम्भेणेदमब्रवीत्
न त्वां वक्ष्यामि परुषं हनिष्ये त्वां वधक्षमम् ४२
तमापतन्तं सहसा महाबलममर्षणम्
पाञ्चाल्यायाभिसंक्रुद्धमन्तकायान्तकोपमम् ४३
चोदितो वासुदेवेन भीमसेनो महाबलः
अवप्लुत्य रथात्तूर्णं बाहुभ्यां समवारयत् ४४
द्रवमाणं तथा क्रुद्धं सात्यकिं पाण्डवो बली
प्रस्कन्दमानमादाय जगाम बलिनं बलात् ४५
स्थित्वा विष्टभ्य चरणौ भीमेन शिनिपुंगवः
निगृहीतः पदे षष्ठे बलेन बलिनां वरः ४६
अवरुह्य रथात्तं तु ह्रियमाणं बलीयसा

उवाच श्लक्ष्णया वाचा सहदेवो विशां पते ४७
अस्माकं पुरुषव्याघ्र मित्रमन्यन्न विद्यते
परमन्धकवृष्णिभ्यः पाञ्चालेभ्यश्च माधव ४८
तथैवान्धकवृष्णीनां तव चैव विशेषतः
कृष्णस्य च तथास्मत्तो मित्रमन्यन्न विद्यते ४९
पाञ्चालानां च वार्ष्णेय समुद्रान्तां विचिन्वताम्
नान्यदस्ति परं मित्रं यथा पाण्डववृष्णयः ५०
स भवानीदृशं मित्रं मन्यते च यथा भवान्
भवन्तश्च यथास्माकं भवतां च तथा वयम् ५१
स एवं सर्वधर्मज्ञो मित्रधर्ममनुस्मरन्
नियच्छ मन्युं पाञ्चाल्यात्प्रशाम्य शिनिपुंगव ५२
पार्षतस्य क्षम त्वं वै क्षमतां तव पार्षतः
वयं क्षमयितारश्च किमन्यत्र शमाद्भवेत् ५३
प्रशाम्यमाने शैनेये सहदेवेन मारिष
पाञ्चालराजस्य सुतः प्रहसन्निदमब्रवीत् ५४
मुञ्च मुञ्च शिनेः पौत्रं भीम युद्धमदान्वितम्
आसादयतु मामेष धराधरमिवानिलः ५५
यावदस्य शितैर्बाणैः संरम्भं विनयाम्यहम्
युद्धश्रद्धां च कौन्तेय जीवितस्य च संयुगे ५६
किं नु शक्यं मया कर्तुंकार्यंयदिदमुद्यतम्
सुमहत्पाण्डुपुत्राणामायान्त्येते हि कौरवाः ५७
अथ वा फल्गुनः सर्वान्वारयिष्यति संयुगे
अहमप्यस्य मूर्धानं पातयिष्यामि सायकैः ५८
मन्यते छिन्नबाहुं मां भूरिश्रवसमाहवे
उत्सृजैनमहं वैनमेष मां वा हनिष्यति ५९
शृण्वन्पाञ्चालवाक्यानि सात्यकिः सर्पवच्छ्वसन्
भीमबाह्वन्तरे सक्तो विस्फुरत्यनिशं बली ६०
त्वरया वासुदेवश्च धर्मराजश्च मारिष
यत्नेन महता वीरौ वारयामासतुस्ततः ६१
निवार्य परमेष्वासौ क्रोधसंरक्तलोचनौ

युयुत्सवः परान्संख्ये प्रतीयुः क्षत्रियर्षभाः ६२
इति श्रीमहाभारते द्रोणपर्वणि एकोनसप्तत्यधिकशततमोऽध्यायः १६९

## सप्तत्यधिकशततमोऽध्यायः

सञ्जय उवाच
ततः स कदनं चक्रे रिपूणां द्रोणनन्दनः
युगान्ते सर्वभूतानां कालसृष्ट इवान्तकः १
ध्वजद्रुमं शस्त्रशृङ्गं हतनागमहाशिलम्
अश्वकिंपुरुषाकीर्णं शरासनलतावृतम् २
शूलक्रव्यादसंघुष्टं भूतयक्षगणाकुलम्
निहत्य शात्रवान्भल्लैः सोऽचिनोद्देहपर्वतम् ३
ततो वेगेन महता विनद्य स नरर्षभः
प्रतिज्ञां श्रावयामास पुनरेव तवात्मजम् ४
यस्माद्युध्यन्तमाचार्यं धर्मकञ्चुकमास्थितः
मुञ्च शस्त्रमिति प्राह कुन्तीपुत्रो युधिष्ठिरः ५
तस्मात्संपश्यतस्तस्य द्रावयिष्यामि वाहिनीम्
विद्राव्य सत्यं हन्तास्मि पापं पाञ्चाल्यमेव तु ६
सर्वानेतान्हनिष्यामि यदि योत्स्यन्ति मां रणे
सत्यं ते प्रतिजानामि परावर्तय वाहिनीम् ७
तच्छ्रुत्वा तव पुत्रस्तु वाहिनीं पर्यवर्तयत्
सिंहनादेन महता व्यपोह्य सुमहद्भयम् ८
ततः समागमो राजन्कुरु पाण्डव सेनयोः
पुनरेवाभवत्तीव्रः पूर्णसागरयोरिव ९
संरब्धा हि स्थिरीभूता द्रोणपुत्रेण कौरवाः
उदग्राः पाण्डुपाञ्चाला द्रोणस्य निधनेन च १०
तेषां परमहृष्टानां जयमात्मनि पश्यताम्
संरब्धानां महावेगः प्रादुरासीद्रणाजिरे ११
यथा शिलोच्चये शैलः सागरे सागरो यथा
प्रतिहन्येत राजेन्द्र तथासन्कुरुपाण्डवाः १२
ततः शङ्खसहस्राणि भेरीणामयुतानि च

अवादयन्त संहृष्टाः कुरुपाण्डव सैनिकाः १३
ततो निर्मथ्यमानस्य सागरस्येव निस्वनः
अभवत्तस्य सैन्यस्य सुमहानद्भुतोपमः १४
प्रादुश्चक्रे ततो द्रौणिरस्त्रं नारायणं तदा
अभिसंधाय पाण्डूनां पाञ्चालानां च वाहिनीम् १५
प्रादुरासंस्ततो बाणा दीप्ताग्राः खे सहस्रशः
पाण्डवान्भक्षयिष्यन्तो दीप्तास्या इव पन्नगाः १६
ते दिशः खं च सैन्यं च समावृण्वन्महाहवे
मुहूर्ताद्भास्करस्येव राजँल्लोकं गभस्तयः १७
तथापरे द्योतमाना ज्योतींषीवाम्बरेऽमले
प्रादुरासन्महीपाल कार्ष्णायसमया गुडाः १८
चतुर्दिशं विचित्राश्च शतघ्न्योऽथ हुताशदाः
चक्राणि च क्षुरान्तानि मण्डलानीव भास्वतः १९
शस्त्राकृतिभिराकीर्णमतीव भरतर्षभ
दृष्ट्वान्तरिक्षमाविग्नाः पाण्डुपाञ्चालसृञ्जयाः २०
यथा यथा ह्ययुध्यन्त पाण्डवानां महारथाः
तथा तथा तदस्त्रं वै व्यवर्धत जनाधिप २१
वध्यमानास्तथास्त्रेण तेन नारायणेन वै
दह्यमानानलेनेव सर्वतोऽभ्यर्दिता रणे २२
यथा हि शिशिरापाये दहेत्कक्षं हुताशनः
तथा तदस्त्रं पाण्डूनां ददाह ध्वजिनीं प्रभो २३
आपूर्यमाणेनास्त्रेण सैन्ये क्षीयति चाभिभो
जगाम परमं त्रासं धर्मपुत्रो युधिष्ठिरः २४
द्रवमाणं तु तत्सैन्यं दृष्ट्वा विगतचेतनम्
मध्यस्थतां च पार्थस्य धर्मपुत्रोऽब्रवीदिदम् २५
धृष्टद्युम्न पलायस्व सह पाञ्चालसेनया
सात्यके त्वं च गच्छस्व वृष्ण्यन्धकवृतो गृहान् २६
वासुदेवोऽपि धर्मात्मा करिष्यत्यात्मनः क्षमम्
उपदेष्टुं समर्थोऽय लोकस्य किमुतात्मनः २७
संग्रामस्तु न कर्तव्यः सर्वसैन्यान्ब्रवीमि वः

अहं हि सह सोदर्यैः प्रवेक्ष्ये हव्यवाहनम् २८
भीष्मद्रोणार्णवं तीर्त्वा संग्रामं भीरुदुस्तरम्
अवसत्स्याम्यसलिले सगणो द्रौणिगोष्पदे २९
कामः संपद्यतामस्य बीभत्सोराशु मां प्रति
कल्याणवृत्त आचार्यो मया युधि निपातितः ३०
येन बालः स सौभद्रो युद्धानामविशारदः
समर्थैर्बहुभिः क्रूरैर्घातितो नाभिपालितः ३१
येनाविब्रुवता प्रश्नं तथा कृष्णा सभां गता
उपेक्षिता सपुत्रेण दासभावं नियच्छती ३२
जिघांसुर्धार्तराष्ट्रश्च श्रान्तेष्वश्वेषु फल्गुनम्
कवचेन तथा युक्तो रक्षार्थं सैन्धवस्य च ३३
येन ब्रह्मास्त्रविदुषा पाञ्चालाः सत्यजिन्मुखाः
कुर्वाणा मज्जये यत्नं समूला विनिपातिताः ३४
येन प्रव्राज्यमानाश्च राज्याद्वयमधर्मतः
निवार्यमाणेनास्माभिरनुगन्तुं तदेषिताः ३५
योऽसावत्यन्तमस्मासु कुर्वाणः सौहृदं परम्
हतस्तदर्थे मरणं गमिष्यामि सबान्धवः ३६
एवं ब्रुवति कौन्तेये दाशार्हस्त्वरितस्ततः
निवार्य सैन्यं बाहुभ्यामिदं वचनमब्रवीत् ३७
शीघ्रं न्यस्यत शस्त्राणि वाहेभ्यश्चावरोहत
एष योगोऽत्र विहितः प्रतिघातो महात्मना ३८
द्विपाश्वस्यन्दनेभ्यश्च क्षितिं सर्वेऽवरोहत
एवमेतन्न वो हन्यादस्त्रं भूमौ निरायुधान् ३९
यथा यथा हि युध्यन्ते योधा ह्यस्त्रबलं प्रति
तथा तथा भवन्त्येते कौरवा बलवत्तराः ४०
निक्षेप्स्यन्ति च शस्त्राणि वाहनेभ्योऽवरुह्य ये
तान्नैतदस्त्रं संग्रामे निहनिष्यति मानवान् ४१
ये त्वेतत्प्रतियोत्स्यन्ति मनसापीह केचन
निहनिष्यति तान्सर्वान्रसातलगतानपि ४२
ते वचस्तस्य तच्छ्रुत्वा वासुदेवस्य भारत

ईषुः सर्वेऽस्त्रमुत्स्रष्टुं मनोभिः करणेन च ४३
तत उत्स्रष्टुकामांस्तानस्त्राण्यालक्ष्य पाण्डवः
भीमसेनोऽब्रवीद्राजन्निदं संहर्षयन्वचः ४४
न कथंचन शस्त्राणि मोक्तव्यानीह केनचित्
अहमावारयिष्यामि द्रोणपुत्रास्त्रमाशुगैः ४५
अथ वाप्यनया गुर्व्या हेमविग्रहया रणे
कालवद्विचरिष्यामि द्रौणेरस्त्रं विशातयन् ४६
न हि मे विक्रमे तुल्यः कश्चिदस्ति पुमानिह
यथैव सवितुस्तुल्यं ज्योतिरन्यन्न विद्यते ४७
पश्यध्वं मे दृढौ बाहू नागराजकरोपमा
समर्थौ पर्वतस्यापि शैशिरस्य निपातने ४८
नागायुतसमप्राणो ह्यहमेको नरेष्विह
शक्रो यथाप्रतिद्वंद्वो दिवि देवेषु विश्रुतः ४९
अद्य पश्यत मे वीर्यं बाह्वोः पीनांसयोर्युधि
ज्वलमानस्य दीप्तस्य द्रौणेरस्त्रस्य वारणे ५०
यदि नारायणास्त्रस्य प्रतियोद्धा न विद्यते
अद्यैनं प्रतियोत्स्यामि पश्यत्सु कुरुपाण्डुषु ५१
एवमुक्त्वा ततो भीमो द्रोणपुत्रमरिंदमः
अभ्ययान्मेघघोषेण रथेनादित्यवर्चसा ५२
स एनमिषुजालेन लघुत्वाच्छीघ्रविक्रमः
निमेषमात्रेणासाद्य कुन्तीपुत्रोऽभ्यवाकिरत् ५३
ततो द्रौणिः प्रहस्यैनमुदासमभिभाष्य च
अवाकिरत्प्रदीप्ताग्रैः शरैस्तैरभिमन्त्रितैः ५४
पन्नगैरिव दीप्तास्यैर्वमद्भिरनलं रणे
अवकीर्णोऽभवत्पार्थः स्फुलिङ्गैरिव काञ्चनैः ५५
तस्य रूपमभूद्राजन्भीमसेनस्य संयुगे
खद्योतैरावृतस्येव पर्वतस्य दिनक्षये ५६
तदस्त्रं द्रोणपुत्रस्य तस्मिन्प्रतिसमस्यति
अवर्धत महाराज यथाग्निरनिलोद्धतः ५७
विवर्धमानमालक्ष्य तदस्त्रं भीमविक्रमम्

पाण्डुसैन्यमृते भीमं सुमहद्भयमाविशत् ५८
ततः शस्त्राणि ते सर्वे समुत्सृज्य महीतले
अवारोहन्रथेभ्यश्च हस्त्यश्वेभ्यश्च सर्वशः ५९
तेषु निक्षिप्तशस्त्रेषु वाहनेभ्यश्च्युतेषु च
तदस्त्रवीर्यं विपुलं भीममूर्धन्यथापतत् ६०
हाहाकृतानि भूतानि पाण्डवाश्च विशेषतः
भीमसेनमपश्यन्त तेजसा संवृतं तदा ६१
इति श्रीमहाभारते द्रोणपर्वणि सप्तत्यधिकशततमोऽध्यायः १७०

## एकसप्तत्यधिकशततमोऽध्यायः

सञ्जय उवाच
भीमसेनं समाकीर्णं दृष्ट्वास्त्रेण धनंजयः
तेजसः प्रतिघातार्थं वारुणेन समावृणोत् १
नालक्षयत तं कश्चिद्वारुणास्त्रेण संवृतम्
अर्जुनस्य लघुत्वाच्च संवृतत्वाच्च तेजसः २
साश्वसूतरथो भीमो द्रोणपुत्रास्त्रसंवृतः
अग्नावग्निरिव न्यस्तो ज्वालामाली सुदुर्दृशः ३
यथा रात्रिक्षये राजञ्ज्योतींष्यस्तगिरिं प्रति
समापेतुस्तथा बाणा भीमसेनरथं प्रति ४
स हि भीमो रथश्चास्य हयाः सूतश्च मारिष
संवृता द्रोणपुत्रेण पावकान्तर्गताभवन् ५
यथा दग्ध्वा जगत्कृत्स्नं समये सचराचरम्
गच्छेदग्निर्विभोरास्यं तथास्त्रं भीममावृणोत् ६
सूर्यमग्निः प्रविष्टः स्याद्यथा चाग्निं दिवाकरः
तथा प्रविष्टं तत्तेजो न प्राज्ञायत किंचन ७
विकीर्णमस्त्रं तद्दृष्ट्वा तथा भीमरथं प्रति
उदीर्यमाणं द्रौणिं च निष्प्रतिद्वंद्वमाहवे ८
सर्वसैन्यानि पाण्डूनां न्यस्तशस्त्राण्यचेतसः
युधिष्ठिरपुरोगांश्च विमुखांस्तान्महारथान् ९
अर्जुनो वासुदेवश्च त्वरमाणौ महाद्युती

अवप्लुत्य रथाद्वीरौ भीममाद्रवतां ततः १०
ततस्तद्द्रोणपुत्रस्य तेजोऽस्त्रबलसंभवम्
विगाह्य तौ सुबलिनौ माययाविशतां तदा ११
न्यस्तशस्त्रौ ततस्तौ तु नादहदस्त्रजोऽनलः
वारुणास्त्रप्रयोगाच्च वीर्यवत्त्वाच्च कृष्णयोः १२
ततश्चकृषतुर्भीमं तस्य सर्वायुधानि च
नारायणास्त्रशान्त्यर्थं नरनारायणौ बलात् १३
अपकृष्यमाणः कौन्तेयो नदत्येव महारथः
वर्धते चैव तद्घोरं द्रौणेरस्त्रं सुदुर्जयम् १४
तमब्रवीद्वासुदेवः किमिदं पाण्डुनन्दन
वार्यमाणोऽपि कौन्तेय यद्युद्धान्न निवर्तसे १५
यदि युद्धेन जेयाः स्युरिमे कौरवनन्दनाः
वयमप्यत्र युध्येम तथा चेमे नरर्षभाः १६
रथेभ्यस्त्ववतीर्णास्तु सर्व एव स्म तावकाः
तस्मात्त्वमपि कौन्तेय रथात्तूर्णमपाक्रम १७
एवमुक्त्वा ततः कृष्णो रथाद्भूमिमपातयत्
निःश्वसन्तं यथा नागं क्रोधसंरक्तलोचनम् १८
यदापकृष्टः स रथान्न्यासितश्चायुधं भुवि
ततो नारायणास्त्रं तत्प्रशान्तं शत्रुतापनम् १९
तस्मिन्प्रशान्ते विधिना तदा तेजसि दुःसहे
बभूवुर्विमलाः सर्वा दिशः प्रदिश एव च २०
प्रववुश्च शिवा वाताः प्रशान्ता मृगपक्षिणः
वाहनानि च हृष्टानि योधाश्च मनुजेश्वर २१
व्यपोढे च ततो घोरे तस्मिंस्तेजसि भारत
बभौ भीमो निशापाये धीमान्सूर्य इवोदितः २२
हतशेषं बलं तत्र पाण्डवानामतिष्ठत
अस्त्रव्युपरमाद्धृष्टं तव पुत्रजिघांसया २३
व्यवस्थिते बले तस्मिन्नस्त्रे प्रतिहते तथा
दुर्योधनो महाराज द्रोणपुत्रमथाब्रवीत् २४
अश्वत्थामन्पुनः शीघ्रमस्त्रमेतत्प्रयोजय

व्यवस्थिता हि पाञ्चालाः पुनरेव जयैषिणः २५
अश्वत्थामा तथोक्तस्तु तव पुत्रेण मारिष
सुदीनमभिनिःश्वस्य राजानमिदमब्रवीत् २६
नैतदावर्तते राजन्नस्त्रं द्विर्नोपपद्यते
आवर्तयन्निहन्त्येतत्प्रयोक्तारं न संशयः २७
एष चास्त्रप्रतीघातं वासुदेवः प्रयुक्तवान्
अन्यथा विहितः संख्ये वधः शत्रोर्जनाधिप २८
पराजयो वा मृत्युर्वा श्रेयो मृत्युर्न निर्जयः
निर्जिताश्चारयो ह्येते शस्त्रोत्सर्गान्मृतोपमाः २९
दुर्योधन उवाच
आचार्यपुत्र यद्येतद्द्विरस्त्रं न प्रयुज्यते
अन्यैर्गुरुघ्ना वध्यन्तामस्त्रैरस्त्रविदां वर ३०
त्वयि ह्यस्त्राणि दिव्यानि यथा स्युस्त्र्यम्बके तथा
इच्छतो न हि ते मुच्येत्क्रुद्धस्यापि पुरंदरः ३१
धृतराष्ट्र उवाच
तस्मिन्नस्त्रे प्रतिहते द्रोणे चोपधिना हते
तथा दुर्योधनेनोक्तो द्रौणिः किमकरोत्पुनः ३२
दृष्ट्वा पार्थांश्च संग्रामे युद्धाय समवस्थितान्
नारायणास्त्रनिर्मुक्तांश्चरतः पृतनामुखे ३३
सञ्जय उवाच
जानन्पितुः स निधनं सिंहलाङ्गूलकेतनः
सक्रोधो भयमुत्सृज्य अभिदुद्राव पार्षतम् ३४
अभिद्रुत्य च विंशत्या क्षुद्रकाणां नरर्षभः
पञ्चभिश्चातिवेगेन विव्याध पुरुषर्षभम् ३५
धृष्टद्युम्नस्ततो राजञ्ज्वलन्तमिव पावकम्
द्रोणपुत्रं त्रिषष्ट्या तु राजन्विव्याध पत्रिणाम् ३६
सारथिं चास्य विंशत्या स्वर्णपुङ्खैः शिलाशितैः
हयांश्च चतुरोऽविध्यच्चतुर्भिर्निशितैः शरैः ३७
विद्ध्वा विद्ध्वानदद्द्रौणिः कम्पयन्निव मेदिनीम्
आददत्सर्वलोकस्य प्राणानिव महारणे ३८

पार्षतस्तु बली राजन्कृतास्त्रः कृतनिश्रमः
द्रौणिमेवाभिदुद्राव कृत्वा मृत्युं निवर्तनम् ३९
ततो बाणमयं वर्षं द्रोणपुत्रस्य मूर्धनि
अवासृजदमेयात्मा पाञ्चाल्यो रथिनां वरः ४०
तं द्रौणिः समरे क्रुद्धश्छादयामास पत्रिभिः
विव्याध चैनं दशभिः पितुर्वधमनुस्मरन् ४१
द्वाभ्यां च सुविकृष्टाभ्यां क्षुराभ्यां ध्वजकार्मुके
छित्त्वा पाञ्चालराजस्य द्रौणिरन्यैः समार्दयत् ४२
व्यश्वसूतरथं चैनं द्रौणिश्चक्रे महाहवे
तस्य चानुचरान्सर्वान्क्रुद्धः प्राच्छादयच्छरैः ४३
प्रदुद्राव ततः सैन्यं पाञ्चालानां विशां पते
संभ्रान्तरूपमार्तं च शरवर्षपरिक्षतम् ४४
दृष्ट्वा च विमुखान्योधान्धृष्टद्युम्नं च पीडितम्
शैनेयोऽचोदयत्तूर्णं रथं द्रौणिरथं प्रति ४५
अष्टभिर्निशितैश्चैव सोऽश्वत्थामानमार्दयत्
विंशत्या पुनराहत्य नानारूपैरमर्षणम्
विव्याध च तथा सूतं चतुर्भिश्चतुरो हयान् ४६
सोऽतिविद्धो महेष्वासो नानालिङ्गैरमर्षणः
युयुधानेन वै द्रौणिः प्रहसन्वाक्यमब्रवीत् ४७
शैनेयाभ्यवपत्तिं ते जानाम्याचार्यघातिनः
न त्वेनं त्रास्यसि मया ग्रस्तमात्मानमेव च ४८
एवमुक्त्वार्करश्म्याभं सुपर्वाणं शरोत्तमम्
व्यसृजत्सात्वते द्रौणिर्वज्रं वृत्रे यथा हरिः ४९
स तं निर्भिद्य तेनास्तः सायकः सशरावरम्
विवेश वसुधां भित्त्वा श्वसन्बिलमिवोरगः ५०
स भिन्नकवचः शूरस्तोत्त्रार्दित इव द्विपः
विमुच्य सशरं चापं भूरिव्रणपरिस्रवः ५१
सीदन्रुधिरसिक्तश्च रथोपस्थ उपाविशत्
सूतेनापहृतस्तूर्णं द्रोणपुत्राद्रथान्तरम् ५२
अथान्येन सुपुङ्खेन शरेण नतपर्वणा

आजघान भ्रुवोर्मध्ये धृष्टद्युम्नं परंतपः ५३
स पूर्वमतिविद्धश्च भृशं पश्चाच्च पीडितः
ससाद युधि पाञ्चाल्यो व्यपाश्रयत च ध्वजम् ५४
तं मत्तमिव सिंहेन राजन्कुञ्जरमर्दितम्
जवेनाभ्यद्रवञ्शूराः पञ्च पाण्डवतो रथाः ५५
किरीटी भीमसेनश्च वृद्धक्षत्रश्च पौरवः
युवराजश्च चेदीनां मालवश्च सुदर्शनः
पञ्चभिः पञ्चभिर्बाणैरभ्यघ्नन्सर्वतः समम् ५६
आशीविषाभैर्विंशद्भिः पञ्चभिश्चापि ताञ्शरैः
चिच्छेद युगपद्द्रौणिः पञ्चविंशतिसायकान् ५७
सप्तभिश्च शितैर्बाणैः पौरवं द्रौणिरार्दयत्
मालवं त्रिभिरेकेन पार्थं षड्भिर्वृकोदरम् ५८
ततस्ते विव्यधुः सर्वे द्रौणिं राजन्महारथाः
युगपच्च पृथक्चैव रुक्मपुङ्खैः शिलाशितैः ५९
युवराजस्तु विंशत्या द्रौणिं विव्याध पत्रिणाम्
पार्थश्च पुनरष्टाभिस्तथा सर्वे त्रिभिस्त्रिभिः ६०
ततोऽर्जुनं षड्भिरथाजघान द्रौणायनिर्दशभिर्वासुदेवम्
भीमं दशार्धैर्युवराजं चतुर्भिर्द्वाभ्यां छित्त्वा कार्मुकं च ध्वजं च
पुनः पार्थं शरवर्षेण विद्ध्वा द्रौणिर्घोरं सिंहनादं ननाद ६१
तस्यास्यतः सुनिशितान्पीतधारान्द्रौणेः शरान्पृष्ठतश्चाग्रतश्च
धरा वियद्द्यौः प्रदिशो दिशश्च छन्ना बाणैरभवन्घोररूपैः ६२
आसीनस्य स्वरथं तूग्रतेजाः सुदर्शनस्येन्द्रकेतुप्रकाशौ
भुजौ शिरश्चेन्द्रसमानवीर्यस्त्रिभिः शरैर्युगपत्संचकर्त ६३
स पौरवं रथशक्त्या निहत्य छित्त्वा रथं तिलशश्चापि बाणैः
छित्त्वास्य बाहू वरचन्दनाक्तौ भल्लेन कायाच्छिर उच्चकर्त ६४
युवानमिन्दीवरदामवर्णं चेदिप्रियं युवराजं प्रहस्य
बाणैस्त्वरावाञ्ज्वलिताग्निकल्पैर्विद्ध्वा प्रादान्मृत्यवे साश्वसूतम् ६५
तान्निहत्य रणे वीरो द्रोणपुत्रो युधां पतिः
दध्मौ प्रमुदितः शङ्खं बृहन्तमपराजितः ६६
ततः सर्वे च पाञ्चाला भीमसेनश्च पाण्डवः

धृष्टद्युम्नरथं भीतास्त्यक्त्वा संप्राद्रवन्दिशः ६७
तान्प्रभग्नांस्तथा द्रौणिः पृष्ठतो विकिरञ्शरैः
अभ्यवर्तत वेगेन कालवत्पाण्डुवाहिनीम् ६८
ते वध्यमानाः समरे द्रोणपुत्रेण क्षत्रियाः
द्रोणपुत्रं भयाद्राजन्दिक्षु सर्वासु मेनिरे ६९
इति श्रीमहाभारते द्रोणपर्वणि एकसप्तत्यधिकशततमोऽध्यायः १७१

## द्विसप्तत्यधिकशततमोऽध्यायः

सञ्जय उवाच
तत्प्रभग्नं बलं दृष्ट्वा कुन्तीपुत्रो धनंजयः
न्यवारयदमेयात्मा द्रोणपुत्रवधेप्सया १
ततस्ते सैनिका राजन्नैव तत्रावतस्थिरे
संस्थाप्यमाना यत्नेन गोविन्देनार्जुनेन च २
एक एव तु बीभत्सुः सोमकावयवैः सह
मत्स्यैरन्यैश्च संधाय कौरवैः संन्यवर्तत ३
ततो द्रुतमतिक्रम्य सिंहलाङ्गूलकेतनम्
सव्यसाची महेष्वासमश्वत्थामानमब्रवीत् ४
या शक्तिर्यच्च ते वीर्यं यज्ज्ञानं यच्च पौरुषम्
धार्तराष्ट्रेषु या प्रीतिः प्रद्वेषोऽस्मासु यश्च ते
यच्च भूयोऽस्ति तेजस्तत्परमं मम दर्शय ५
स एव द्रोणहन्ता ते दर्पं भेत्स्यति पार्षतः
कालानलसमप्रख्यो द्विषतामन्तको युधि
समासादय पाञ्चाल्यं मां चापि सहकेशवम् ६
धृतराष्ट्र उवाच
आचार्यपुत्रो मानार्हो बलवांश्चापि सञ्जय
प्रीतिर्धनंजये चास्य प्रियश्चापि स वासवेः ७
न भूतपूर्वं बीभत्सोर्वाक्यं परुषमीदृशम्
अथ कस्मात्स कौन्तेयः सखायं रूक्षमब्रवीत् ८
सञ्जय उवाच
युवराजे हते चैव वृद्धक्षत्रे च पौरवे

इष्वस्त्रविधिसंपन्ने मालवे च सुदर्शने ९
धृष्टद्युम्ने सात्यकौ च भीमे चापि पराजिते
युधिष्ठिरस्य तैर्वाक्यैर्मर्मरायपि च घट्टिते १०
अन्तर्भेदे च संजाते दुःखं संस्मृत्य च प्रभो
अभूतपूर्वो बीभत्सोर्दुःखान्मन्युरजायत ११
तस्मादनर्हमश्लीलमप्रियं द्रौणिमुक्तवान्
मान्यमाचार्यतनयं रूक्षं कापुरुषो यथा १२
एवमुक्तः श्वसन्क्रोधान्महेष्वासतमो नृप
पार्थेन परुषं वाक्यं सर्वमर्मघ्नया गिरा
द्रौणिश्चुकोप पार्थाय कृष्णाय च विशेषतः १३
स तु यत्तो रथे स्थित्वा वार्युपस्पृश्य वीर्यवान्
देवैरपि सुदुर्धर्षमस्त्रमाग्नेयमाददे १४
दृश्यादृश्यानरिगणानुद्दिश्याचार्यनन्दनः
सोऽभिमन्त्र्य शरं दीप्तं विधूममिव पावकम्
सर्वतः क्रोधमाविश्य चिक्षेप परवीरहा १५
ततस्तुमुलमाकाशे शरवर्षमजायत
ववुश्च शिशिरा वाताः सूर्यो नैव तताप च १६
चुक्रुशुर्दानवाश्चापि दिक्षु सर्वासु भैरवम्
रुधिरं चापि वर्षन्तो विनेदुस्तोयदाम्बरे १७
पक्षिणः पशवो गावो मुनयश्चापि सुव्रताः
परमं प्रयतात्मानो न शान्तिमुपलेभिरे १८
भ्रान्तसर्वमहाभूतमावर्जितदिवाकरम्
त्रैलोक्यमभिसंतप्तं ज्वराविष्टमिवातुरम् १९
शरतेजोऽभिसंतप्ता नागा भूमिशयास्तथा
निःश्वसन्तः समुत्पेतुस्तेजो घोरं मुमुक्षवः २०
जलजानि च सत्त्वानि दह्यमानानि भारत
न शान्तिमुपजग्मुर्हि तप्यमानैर्जलाशयैः २१
दिशः खं प्रदिशश्चैव भुवं च शरवृष्टयः
उच्चावचा निपेतुर्वै गरुडानिलरंहसः २२
तैः शरैर्द्रोणपुत्रस्य वज्रवेगसमाहितैः

प्रदग्धाः शत्रवः पेतुरग्निदग्धा इव द्रुमाः २३
दह्यमाना महानागाः पेतुरुर्व्यां समन्ततः
नदन्तो भैरवान्नादाञ्जलदोपमनिस्वनान् २४
अपरे प्रद्रुतास्तत्र दह्यमाना महागजाः
त्रेसुस्तथापरे घोरे वने दावाग्निसंवृताः २५
द्रुमाणां शिखराणीव दावदग्धानि मारिष
अश्ववृन्दान्यदृश्यन्त रथवृन्दानि चाभिभो
अपतन्त रथौघाश्च तत्र तत्र सहस्रशः २६
तत्सैन्यं भगवानग्निर्ददाह युधि भारत
युगान्ते सर्वभूतानि संवर्तक इवानलः २७
दृष्ट्वा तु पाण्डवीं सेनां दह्यमानां महाहवे
प्रहृष्टास्तावका राजन्सिंहनादान्विनेदिरे २८
ततस्तूर्यसहस्राणि नानालिङ्गानि भारत
तूर्णमाजघ्निरे हृष्टास्तावका जितकाशिनः २९
कृत्स्ना ह्यक्षौहिणी राजन्सव्यसाची च पाण्डवः
तमसा संवृते लोके नादृश्यत महाहवे ३०
नैव नस्तादृशं राजन्दृष्टपूर्वं न च श्रुतम्
यादृशं द्रोणपुत्रेण सृष्टमस्त्रममर्षिणा ३१
अर्जुनस्तु महाराज ब्राह्ममस्त्रमुदैरयत्
सर्वास्त्रप्रतिघाताय विहितं पद्मयोनिना ३२
ततो मूहूर्तादिव तत्तमो व्युपशशाम ह
प्रववौ चानिलः शीतो दिशश्च विमलाभवन् ३३
तत्राद्भुतमपश्याम कृत्स्नामक्षौहिणीं हताम्
अनभिज्ञेयरूपां च प्रदग्धामस्त्रमायया ३४
ततो वीरौ महेष्वासौ विमुक्तौ केशवार्जुनौ
सहितौ संप्रदृश्येतां नभसीव तमोनुदौ ३५
सपताकध्वजहयः सानुकर्षवरायुधः
प्रबभौ स रथो मुक्तस्तावकानां भयंकरः ३६
ततः किलकिलाशब्दः शङ्खभेरीरवैः सह
पाण्डवानां प्रहृष्टानां क्षणेन समजायत ३७

हताविति तयोरासीत्सेनयोरुभयोर्मतिः
तरसाभ्यागतौ दृष्ट्वा विमुक्तौ केशवार्जुनौ ३८
तावक्षतौ प्रमुदितौ दध्मतुर्वारिजोत्तमौ
दृष्ट्वा प्रमुदितान्पार्थांस्त्वदीया व्यथिताभवन् ३९
विमुक्तौ च महात्मानौ दृष्ट्वा द्रौणिः सुदुःखितः
मुहूर्तं चिन्तयामास किं त्वेतदिति मारिष ४०
चिन्तयित्वा तु राजेन्द्र ध्यानशोकपरायणः
निःश्वसन्दीर्घमुष्णं च विमनाश्चाभवत्तदा ४१
ततो द्रौणिर्धनुर्न्यस्य रथात्प्रस्कन्द्य वेगितः
धिग्धिक्सर्वमिदं मिथ्येत्युक्त्वा संप्राद्रवद्रणात् ४२
ततः स्निग्धाम्बुदाभासं वेदव्यासमकल्मषम्
आवासं च सरस्वत्याः स वै व्यासं ददर्श ह ४३
तं द्रौणिरग्रतो दृष्ट्वा स्थितं कुरुकुलोद्वह
सन्नकण्ठोऽब्रवीद्वाक्यमभिवाद्य सुदीनवत् ४४
भो भो माया यदृच्छा वा न विद्मः किमिदं भवेत्
अस्त्रं त्विदं कथं मिथ्या मम कश्च व्यतिक्रमः ४५
अधरोत्तरमेतद्वा लोकानां वा पराभवः
यदिमौ जीवतः कृष्णौ कालो हि दुरतिक्रमः ४६
नासुरामरगन्धर्वा न पिशाचा न राक्षसाः
न सर्पयक्षपतगा न मनुष्याः कथंचन ४७
उत्सहन्तेऽन्यथा कर्तुमेतदस्त्रं मयेरितम्
तदिदं केवलं हत्वा युक्तामक्षौहिणीं ज्वलत् ४८
केनेमौ मर्त्यधर्माणौ नावधीत्केशवार्जुनौ
एतत्प्रब्रूहि भगवन्मया पृष्टो यथातथम् ४९
व्यास उवाच
महान्तमेतमर्थं मां यं त्वं पृच्छसि विस्मयात्
तत्प्रवक्ष्यामि ते सर्वं समाधाय मनः शृणु ५०
योऽसौ नारायणो नाम पूर्वेषामपि पूर्वजः
अजायत च कार्यार्थं पुत्रो धर्मस्य विश्वकृत् ५१
स तपस्तीव्रमातस्थे मैनाकं गिरिमास्थितः

ऊर्ध्वबाहुर्महातेजा ज्वलनादित्यसंनिभः ५२
षष्टिं वर्षसहस्राणि तावन्त्येव शतानि च
अशोषयत्तदात्मानं वायुभक्षोऽम्बुजेक्षणः ५३
अथापरं तपस्तप्त्वा द्विस्ततोऽन्यत्पुनर्महत्
द्यावापृथिव्योर्विवरं तेजसा समपूरयत् ५४
स तेन तपसा तात ब्रह्मभूतो यदाभवत्
ततो विश्वेश्वरं योनिं विश्वस्य जगतः पतिम् ५५
ददर्श भृशदुर्दर्शं सर्वदेवैरपीश्वरम्
अणीयसामणीयांसं बृहद्भ्यश्च बृहत्तरम् ५६
रुद्रमीशानमृषभं चेकितानमजं परम्
गच्छतस्तिष्ठतो वापि सर्वभूतहृदि स्थितम् ५७
दुर्वारणं दुर्दृशं तिग्ममन्युं महात्मानं सर्वहरं प्रचेतसम्
दिव्यं चापमिषुधी चाददानं हिरण्यवर्माणमनन्तवीर्यम् ५८
पिनाकिनं वज्रिणं दीप्तशूलं परश्वधिं गदिनं स्वायतासिम्
सुभ्रुं जटामण्डलचन्द्रमौलि व्याघ्राजिनं परिघं दण्डपाणिम् ५९
शुभाङ्गदं नागयज्ञोपवीतिं विश्वैर्गणैः शोभितं भूतसंघैः
एकीभूतं तपसां संनिधानं वयोतिगैः सुष्टुतमिष्टवाग्भिः ६०
जलं दिवं खं क्षितिं चन्द्रसूर्यौ तथा वाय्वग्नी प्रतिमानं जगच्च
नालं द्रष्टुं यमजं भिन्नवृत्ता ब्रह्मद्विषघ्नममृतस्य योनिम् ६१
यं पश्यन्ति ब्राह्मणाः साधुवृत्ताः क्षीणे पापे मनसा ये विशोकाः
स तन्निष्ठस्तपसा धर्ममीड्यं तद्भक्त्या वै विश्वरूपं ददर्श
दृष्ट्वा चैनं वाङ्मनोबुद्धिदेहैः संहृष्टात्मा मुमुदे देवदेवम् ६२
अक्षमालापरिक्षिप्तं ज्योतिषां परमं निधिम्
ततो नारायणो दृष्ट्वा ववन्दे विश्वसंभवम् ६३
वरदं पृथुचार्वङ्ग्या पार्वत्या सहितं प्रभुम्
अजमीशानमव्यग्रं कारणात्मानमच्युतम् ६४
अभिवाद्याथ रुद्राय सद्योऽन्धकनिपातिने
पद्माक्षस्तं विरूपाक्षमभितुष्टाव भक्तिमान् ६५
त्वत्संभूता भूतकृतो वरेण्य गोप्तारोऽद्य भुवनं पूर्वदेवाः
आविश्येमां धरणीं येऽभ्यरक्षन्पुरा पुराणां तव देव सृष्टिम् ६६

सुरासुरान्नागरक्षः पिशाचान्नरान्सुपर्णानथ गन्धर्वयक्षान्
पृथग्विधान्भूतसंघांश्च विश्वांस्त्वत्संभूतान्विद्म सर्वांस्तथैव
एन्द्रं याम्यं वारुणं वैत्तपाल्यं मैत्रं त्वाष्ट्रं कर्म सौम्यं च तुभ्यम् ६७
रूपं ज्योतिः शब्द आकाशवायुः स्पर्शः स्वाद्यं सलिलं गन्ध उर्वी
कामो ब्रह्मा ब्रह्म च ब्राह्मणाश्च त्वत्संभूतं स्थास्नु चरिष्णु चेदम् ६८
अद्भ्यः स्तोका यान्ति यथा पृथक्त्वं ताभिश्चैक्यं संक्षये यान्ति भूयः
एवं विद्वान्प्रभवं चाप्ययं च हित्या भूतानां तत्र सायुज्यमेति ६९
दिव्यावृतौ मानसौ द्वौ सुपर्णाववाक्शाखः पिप्पलः सप्त गोपाः
दशाप्यन्ये ये पुरं धारयन्ति त्वया सृष्टास्ते हि तेभ्यः परस्त्वम्
भूतं भव्यं भविता चाप्यधृष्यं त्वत्संभूता भुवनानीह विश्वा ७०
भक्तं च मां भजमानं भजस्व मा रीरिषो मामहिताहितेन
आत्मानं त्वामात्मनोऽनन्यभावो विद्वानेवं गच्छति ब्रह्म शुक्रम् ७१
अस्तौषं त्वां तव संमानमिच्छन्विचिन्वन्वै सवृषं देववर्य
सुदुर्लभान्देहि वरान्ममेष्टानभिष्टुतः प्रतिकार्षीश्च मा माम् ७२
तस्मै वरानचिन्त्यात्मा नीलकण्ठः पिनाकधृक्
अर्हते देवमुख्याय प्रायच्छदृषिसंस्तुतः ७३
नीलकण्ठ उवाच
मत्प्रसादान्मनुष्येषु देवगन्धर्वयोनिषु
अप्रमेयबलात्मा त्वं नारायण भविष्यसि ७४
न च त्वां प्रसहिष्यन्ति देवासुरमहोरगाः
न पिशाचा न गन्धर्वा न नरा न च राक्षसाः ७५
न सुपर्णास्तथा नागा न च विश्वे वियोनिजाः
न कश्चित्त्वां च देवोऽपि समरेषु विजेष्यति ७६
न शस्त्रेण न वज्रेण नाग्निना न च वायुना
नार्द्रेण न च शुष्केण त्रसेन स्थावरेण वा ७७
कश्चित्तव रुजं कर्ता मत्प्रसादात्कथंचन
अपि चेत्समरं गत्वा भविष्यसि ममाधिकः ७८
व्यास उवाच
एवमेते वरा लब्धाः पुरस्ताद्विद्धि शौरिणा
स एष देवश्चरति मायया मोहयञ्जगत् ७९

तस्यैव तपसा जातं नरं नाम महामुनिम्
तुल्यमेतेन देवेन तं जानीह्यर्जुनं सदा ८०
तावेतौ पूर्वदेवानां परमोपचितावृषी
लोकयात्राविधानार्थं संजायेते युगे युगे ८१
तथैव कर्मणः कृत्स्नं महतस्तपसोऽपि च
तेजोमन्युश्च विद्वंस्त्वं जातो रौद्रो महामते ८२
स भवान्देववत्प्राज्ञो ज्ञात्वा भवमयं जगत्
अवाकर्षस्त्वमात्मानं नियमैस्तत्प्रियेप्सया ८३
शुभमौर्वं नवं कृत्वा महापुरुषविग्रहम्
ईजिवांस्त्वं जपैर्होमैरुपहारैश्च मानद ८४
स तथा पूज्यमानस्ते पूर्वदेवोऽप्यतूतुषत्
पुष्कलांश्च वरान्प्रदात्तव विद्वन्हृदि स्थितान् ८५
जन्मकर्मतपोयोगास्तयोस्तव च पुष्कलाः
ताभ्यां लिङ्गेऽचितो देवस्त्वयार्चायां युगे युगे ८६
सर्वरूपं भवं ज्ञात्वा लिङ्गे योऽचयति प्रभुम्
आत्मयोगाश्च तस्मिन्वै शास्त्रयोगाश्च शाश्वताः ८७
एवं देवा यजन्तो हि सिद्धाश्च परमर्षयः
प्रार्थयन्ति परं लोके स्थानमेव च शाश्वतम् ८८
स एष रुद्रभक्तश्च केशवो रुद्रसंभवः
कृष्ण एव हि यष्टव्यो यज्ञैश्चैष सनातनः ८९
सर्वभूतभवं ज्ञात्वा लिङ्गेऽचयति यः प्रभुम्
तस्मिन्नभ्यधिकां प्रीतिं करोति वृषभध्वजः ९०
सञ्जय उवाच
तस्य तद्वचनं श्रुत्वा द्रोणपुत्रो महारथः
नमश्चकार रुद्राय बहु मेने च केशवम् ९१
हृष्टलोमा च वश्यात्मा नमस्कृत्य महर्षये
वरूथिनीमभिप्रेत्य अवहारमकारयत् ९२
ततः प्रत्यवहारोऽभूत्पाण्डवानां विशां पते
कौरवाणां च दीनानां द्रोणे युधि निपातिते ९३
युद्धं कृत्वा दिनान्पञ्च द्रोणो हत्वा वरूथिनीम्

ब्रह्मलोकं गतो राजन्ब्राह्मणो वेदपारगः ६४
इति श्रीमहाभारते द्रोणपर्वणि द्विसप्तत्यधिकशततमोऽध्यायः १७२

त्रिसप्तत्यधिकशततमोऽध्यायः

धृतराष्ट्र उवाच
तस्मिन्नतिरथे द्रोणे निहते तत्र सञ्जय
मामकाः पाण्डवाश्चैव किमकुर्वन्नतः परम् १
सञ्जय उवाच
तस्मिन्नतिरथे द्रोणे निहते पार्षतेन वै
कौरवेषु च भग्नेषु कुन्तीपुत्रो धनंजयः २
दृष्ट्वा सुमहदाश्चर्यमात्मनो विजयावहम्
यदृच्छयागतं व्यासं पप्रच्छ भरतर्षभ ३
संग्रामे निघ्नतः शत्रूञ्शरौघैर्विमलैरहम्
अग्रतो लक्षये यान्तं पुरुषं पावकप्रभम् ४
ज्वलन्तं शूलमुद्यम्य यां दिशं प्रतिपद्यते
तस्यां दिशि विशीर्यन्ते शत्रवो मे महामुने ५
न पद्भ्यां स्पृशते भूमिं न च शूलं विमुञ्चति
शूलाच्छूलसहस्राणि निष्पेतुस्तस्य तेजसा ६
तेन भग्नानरीन्सर्वान्मद्भग्नान्मन्यते जनः
तेन दग्धानि सैन्यानि पृष्ठतोऽनुदहाम्यहम् ७
भगवंस्तन्ममाचक्ष्व को वै स पुरुषोत्तमः
शूलपाणिर्महान्कृष्ण तेजसा सूर्यसंनिभः ८
व्यास उवाच
प्रजापतीनां प्रथमं तैजसं पुरुषं विभुम्
भुवनं भूर्भुवं देवं सर्वलोकेश्वरं प्रभुम् ९
ईशानं वरदं पार्थ दृष्टवानसि शंकरम्
तं गच्छ शरणं देवं सर्वादिं भुवनेश्वरम् १०
महादेवं महात्मानमीशानं जटिलं शिवम्
त्र्यक्षं महाभुजं रुद्रं शिखिनं चीरवाससम्
दातारं चैव भक्तानां प्रसादविहितान्वरान् ११

तस्य ते पार्षदा दिव्या रूपैर्नानाविधैः विभोः
वामना जटिला मुण्डा ह्रस्वग्रीवा महोदराः १२
महाकाया महोत्साहा महाकर्णास्तथापरे
आननैर्विकृतैः पादैः पार्थ वेषैश्च वैकृतैः १३
ईदृशैः स महादेवः पूज्यमानो महेश्वरः
स शिवस्तात तेजस्वी प्रसादाद्याति तेऽग्रतः
तस्मिन्घोरे तदा पार्थ संग्रामे लोमहर्षणे १४
द्रोणकर्णकृपैर्गुप्तां महेष्वासैः प्रहारिभिः
कस्तां सेनां तदा पार्थ मनसापि प्रधर्षयेत्
ऋते देवान्महेष्वासाद्बहुरूपान्महेश्वरात् १५
स्थातुमुत्सहते कश्चिन्न तस्मिन्नग्रतः स्थिते
न हि भूतं समं तेन त्रिषु लोकेषु विद्यते १६
गन्धेनापि हि संग्रामे तस्य क्रुद्धस्य शत्रवः
विसंज्ञा हतभूयिष्ठा वेपन्ति च पतन्ति च १७
तस्मै नमस्तु कुर्वन्तो देवास्तिष्ठन्ति वै दिवि
ये चान्ये मानवा लोके ये च स्वर्गजितो नराः १८
ये भक्ता वरदं देवं शिवं रुद्रमुमापतिम्
इह लोके सुखं प्राप्य ते यान्ति परमां गतिम् १९
नमस्कुरुष्व कौन्तेय तस्मै शान्ताय वै सदा
रुद्राय शितिकण्ठाय कनिष्ठाय सुवर्चसे २०
कपर्दिने करालाय हर्यक्ष्णे वरदाय च
याम्यायाव्यक्तकेशाय सद्वृत्ते शंकराय च २१
काम्याय हरिनेत्राय स्थाणवे पुरुषाय च
हरिकेशाय मुण्डाय कृशायोत्तरणाय च २२
भास्कराय सुतीर्थाय देवदेवाय रंहसे
बहुरूपाय शर्वाय प्रियाय प्रियवाससे २३
उष्णीषिणे सुवक्त्राय सहस्राक्षाय मीढुषे
गिरिशाय प्रशान्ताय पतये चीरवाससे २४
हिरण्यबाहवे चैव उग्राय पतये दिशाम्
पर्जन्यपतये चैव भूतानां पतये नमः २५

वृक्षाणां पतये चैव अपां च पतये तथा
वृक्षैरावृतकायाय सेनान्ये मध्यमाय च २६
स्रुवहस्ताय देवाय धन्विने भार्गवाय च
बहुरूपाय विश्वस्य पतये चीरवाससे २७
सहस्रशिरसे चैव सहस्रनयनाय च
सहस्रबाहवे चैव सहस्रचरणाय च २८
शरणं प्राप्य कौन्तेय वरदं भुवनेश्वरम्
उमापतिं विरूपाक्षं दक्षयज्ञनिबर्हणम्
प्रजानांपतिमव्यग्रं भूतानां पतिमव्ययम् २९
कपर्दिनं वृषावर्तं वृषनाभं वृषध्वजम्
वृषदर्पं वृषपतिं वृषशृङ्गं वृषर्षभम् ३०
वृषाङ्कं वृषभोदारं वृषभं वृषभेक्षणम्
वृषायुधं वृषशरं वृषभूतं महेश्वरम् ३१
महोदरं महाकायं द्वीपिचर्मनिवासिनम्
लोकेशं वरदं मुण्डं ब्रह्मण्यं ब्राह्मणप्रियम् ३२
त्रिशूलपाणिं वरदं खड्गचर्मधरं प्रभुम्
पिनाकिनं खण्डपरशुं लोकानां पतिमीश्वरम्
प्रपद्ये शरणं देवं शरण्यं चीरवाससम् ३३
नमस्तस्मै सुरेशाय यस्य वैश्रवणः सखा
सुवाससे नमो नित्यं सुव्रताय सुधन्विने ३४
स्रुवहस्ताय देवाय सुखधन्वाय धन्विने
धन्वन्तराय धनुषे धन्वाचार्याय धन्विने ३५
उग्रायुधाय देवाय नमः सुरवराय च
नमोऽस्तु बहुरूपाय नमश्च बहुधन्विने ३६
नमोऽस्तु स्थाणवे नित्यं सुव्रताय सुधन्विने
नमोऽस्तु त्रिपुरघ्नाय भगघ्नाय च वै नमः ३७
वनस्पतीनां पतये नराणां पतये नमः
अपां च पतये नित्यं यज्ञानां पतये नमः ३८
पूष्णो दन्तविनाशाय त्र्यक्षाय वरदाय च
नीलकण्ठाय पिङ्गाय स्वर्णकेशाय वै नमः ३९

कर्माणि चैव दिव्यानि महादेवस्य धीमतः
तानि ते कीर्तयिष्यामि यथाप्रज्ञं यथाश्रुतम् ४०
न सुरा नासुरा लोके न गन्धर्वा न राक्षसाः
सुखमेधन्ति कुपिते तस्मिन्नपि गुहागताः ४१
विव्याध कुपितो यज्ञं निर्भयस्तु भवस्तदा
धनुषा बाणमुत्सृज्य सघोषं विननाद च ४२
ते न शर्म कुतः शान्तिं लेभिरे स्म सुरास्तदा
विद्रुते सहसा यज्ञे कुपिते च महेश्वरे ४३
तेन ज्यातलघोषेण सर्वे लोकाः समाकुलाः
बभूवुर्वशगाः पार्थ निपेतुश्च सुरासुराः ४४
आपश्चुक्षुभिरे सर्वाश्चकम्पे च वसुंधरा
पर्वताश्च व्यशीर्यन्त दिशो नागाश्च मोहिताः ४५
अन्धाश्च तमसा लोका न प्रकाशन्त संवृताः
जघ्निवान्सह सूर्येण सर्वेषां ज्योतिषां प्रभाः ४६
चुक्रुशुर्भयभीताश्च शान्तिं चक्रुस्तथैव च
ऋषयः सर्वभूतानामात्मनश्च सुखैषिणः ४७
पूषाणमभ्यद्रवत शंकरः प्रहसन्निव
पुरोडाशं भक्षयतो दशनान्वै व्यशातयत् ४८
ततो निश्चक्रमुर्देवा वेपमाना नताः स्म तम्
पुनश्च संदधे दीप्तं देवानां निशितं शरम् ४९
रुद्रस्य यज्ञभागं च विशिष्टं ते न्वकल्पयन्
भयेन त्रिदशा राजञ्शरणं च प्रपेदिरे ५०
तेन चैवातिकोपेन स यज्ञः संधितस्तदा
यत्ताश्चापि सुरा आसन्यत्ताश्चाद्यापि तं प्रति ५१
असुराणां पुराण्यासंस्त्रीणि वीर्यवतां दिवि
आयसं राजतं चैव सौवर्णमपरं महत् ५२
आयसं तारकाक्षस्य कमलाक्षस्य राजतम्
सौवर्णं परमं ह्यासीद्विद्युन्मालिन एव च ५३
न शक्तस्तानि मघवान्भेत्तुं सर्वायुधैरपि
अथ सर्वेऽमरा रुद्रं जग्मुः शरणमर्दिताः ५४

ते तमूचुर्महात्मानं सर्वे देवाः सवासवाः
रुद्र रौद्रा भविष्यन्ति पशवः सर्वकर्मसु
निपातयिष्यसे चैनानसुरान्भुवनेश्वर ५५
स तथोक्तस्तथेत्युक्त्वा देवानां हितकाम्यया
अतिष्ठत्स्थाणुभूतः स सहस्रं परिवत्सरान् ५६
यदा त्रीणि समेतानि अन्तरिक्षे पुराणि वै
त्रिपर्वणा त्रिशल्येन तेन तानि बिभेद सः ५७
पुराणि न च तं शेकुर्दानवाः प्रतिवीक्षितुम्
शरं कालाग्निसंयुक्तं विष्णुसोमसमायुतम् ५८
बालमङ्कगतं कृत्वा स्वयं पञ्चशिखं पुनः
उमा जिज्ञासमाना वै कोऽयमित्यब्रवीत्सुरान् ५९
बाहुं सवज्रं शक्रस्य क्रुद्धस्यास्तम्भयत्प्रभुः
स एष भगवान्देवः सर्वलोकेश्वरः प्रभुः ६०
न संबुबुधिरे चैनं देवास्तं भुवनेश्वरम्
सप्रजापतयः सर्वे बालार्कसदृशप्रभम् ६१
अथाभ्येत्य ततो ब्रह्मा दृष्ट्वा च स महेश्वरम्
अयं श्रेष्ठ इति ज्ञात्वा ववन्दे तं पितामहः ६२
ततः प्रसादयामासुरुमां रुद्रं च ते सुराः
अभवच्च पुनर्बाहुर्यथाप्रकृति वज्रिणः ६३
तेषां प्रसन्नो भगवान्सपत्नीको वृषध्वजः
देवानां त्रिदशश्रेष्ठो दक्षयज्ञविनाशनः ६४
स वै रुद्रः स च शिवः सोऽग्नि शर्वः स सर्ववित्
स चेन्द्रश्चैव वायुश्च सोऽश्विनौ स च विद्युतः ६५
स भवः स च पर्जन्यो महादेवः स चानघः
स चन्द्रमाः स चेशानः स सूर्यो वरुणश्च सः ६६
स कालः सोऽन्तको मृत्युः स यमो रात्र्यहानि च
मासार्धमासा ऋतवः संध्ये संवत्सरश्च सः ६७
स च धाता विधाता च विश्वात्मा विश्वकर्मकृत्
सर्वासां देवतानां च धारयत्यवपुर्वपुः ६८
सर्वैर्देवैः स्तुतो देवः सैकधा बहुधा च सः

शतधा सहस्रधा चैव तथा शतसहस्रधा ६९
ईदृशः स महादेवो भूयश्च भगवानजः
न हि सर्वे मया शक्या वक्तुं भगवतो गुणाः ७०
सर्वैर्ग्रहैर्ग्रहीतान्वै सर्वपापसमन्वितान्
स मोचयति सुप्रीतः शरण्यः शरणागतान् ७१
आयुरारोग्यमैश्वर्यं वित्तं कामांश्च पुष्कलान्
स ददाति मनुष्येभ्यः स चैवाक्षिपते पुनः ७२
सेन्द्रादिषु च देवेषु तस्य चैश्वर्यमुच्यते
स चैव व्याहृते लोके मनुष्याणां शुभाशुभे ७३
एश्वर्याच्चैव कामानामीश्वरः पुनरुच्यते
महेश्वरश्च भूतानां महतामीश्वरश्च सः ७४
बहुभिर्बहुधा रूपैर्विश्वं व्याप्नोति वै जगत्
अस्य देवस्य यद्वक्त्रं समुद्रे तदतिष्ठत ७५
एष चैव श्मशानेषु देवो वसति नित्यशः
यजन्त्येनं जनास्तत्र वीरस्थान इतीश्वरम् ७६
अस्य दीप्तानि रूपाणि घोराणि च बहूनि च
लोके यान्यस्य कुर्वन्ति मनुष्याः प्रवदन्ति च ७७
नामधेयानि लोकेषु बहून्यत्र यथार्थवत्
निरुच्यन्ते महत्त्वाच्च विभुत्वात्कर्मभिस्तथा ७८
वेदे चास्य समाम्नातं शतरुद्रीयमुत्तमम्
नाम्ना चानन्तरुद्रेति उपस्थानं महात्मनः ७९
स कामानां प्रभुर्देवो ये दिव्या ये च मानुषाः
स विभुः स प्रभुर्देवो विश्वं व्याप्नुवते महत् ८०
ज्येष्ठं भूतं वदन्त्येनं ब्राह्मणा मुनयस्तथा
प्रथमो ह्येष देवानां मुखादस्यानलोऽभवत् ८१
सर्वथा यत्पशून्पाति तैश्च यद्रमते पुनः
तेषामधिपतिर्यच्च तस्मात्पशुपतिः स्मृतः ८२
नित्येन ब्रह्मचर्येण लिङ्गमस्य यदा स्थितम्
महयन्ति च लोकाश्च महेश्वर इति स्मृतः ८३
ऋषयश्चैव देवाश्च गन्धर्वाप्सरसस्तथा

लिङ्गमस्यार्चयन्ति स्म तच्चाप्यूर्ध्वं समास्थितम् ८४
पूज्यमाने ततस्तस्मिन्मोदते स महेश्वरः
सुखी प्रीतश्च भवति प्रहृष्टश्चैव शंकरः ८५
यदस्य बहुधा रूपं भूतभव्यभवत्स्थितम्
स्थावरं जङ्गमं चैव बहुरूपस्ततः स्मृतः ८६
एकाक्षो जाज्वलन्नास्ते सर्वतोऽक्षिमयोऽपि वा
क्रोधाद्यश्चाविशल्लोकांस्तस्माच्छर्व इति स्मृतः ८७
धूम्रं रूपं च यत्तस्य धूर्जटिस्तेन उच्यते
विश्वे देवाश्च यत्तस्मिन्विश्वरूपस्ततः स्मृतः ८८
तिस्रो देवीर्यदा चैव भजते भुवनेश्वरः
द्यामपः पृथिवीं चैव त्र्यम्बकश्च ततः स्मृतः ८९
समेधयति यन्नित्यं सर्वार्थान्सर्वकर्मसु
शिवमिच्छन्मनुष्याणां तस्मादेष शिवः स्मृतः ९०
सहस्राक्षोऽयुताक्षो वा सर्वतोऽक्षिमयोऽपि वा
यच्च विश्वं महत्पाति महादेवस्ततः स्मृतः ९१
दहत्यूर्ध्वं स्थितो यच्च प्राणोत्पत्तिस्थितश्च यत्
स्थितलिङ्गश्च यन्नित्यं तस्मात्स्थाणुरिति स्मृतः ९२
विषमस्थः शरीरेषु समश्च प्राणिनामिह
स वायुर्विषमस्थेषु प्राणापानशरीरिषु ९३
पूजयेद्विग्रहं यस्तु लिङ्गं वापि समर्चयेत्
लिङ्गं पूजयिता नित्यं महतीं श्रियमश्नुते ९४
ऊरुभ्यामर्धमाग्नेयं सोमार्धं च शिवा तनुः
आत्मनोऽध च तस्याग्निः सोमोऽध पुनरुच्यते ९५
तैजसी महती दीप्ता देवेभ्यश्च शिवा तनुः
भास्वती मानुषेष्वस्य तनुर्घोराग्निरुच्यते ९६
ब्रह्मचर्यं चरत्येष शिवा यास्य तनुस्तया
यास्य घोरतरा मूर्तिः सर्वानत्ति तयेश्वरः ९७
यन्निर्दहति यत्तीक्ष्णो यदुग्रो यत्प्रतापवान्
मांसशोणितमज्जादो यत्ततो रुद्र उच्यते ९८
एष देवो महादेवो योऽसौ पार्थ तवाग्रतः

संग्रामे शात्रवान्निघ्नंस्त्वया दृष्टः पिनाकधृक् ९९
एष वै भगवान्देवः संग्रामे याति तेऽग्रतः
येन दत्तानि तेऽस्त्राणि यैस्त्वया दानवा हताः १००
धन्यं यशस्यमायुष्यं पुण्यं वेदैश्च संज्ञितम्
देवदेवस्य ते पार्थ व्याख्यातं शतरुद्रियम् १०१
सर्वार्थसाधकं पुण्यं सर्वकिल्विषनाशनम्
सर्वपापप्रशमनं सर्वदुःखभयापहम् १०२
चतुर्विधमिदं स्तोत्रं यः शृणोति नरः सदा
विजित्य सर्वाञ्शत्रून्स रुद्रलोके महीयते १०३
चरितं महात्मनो दिव्यं सांग्रामिकमिदं शुभम्
पठन्वै शतरुद्रीयं शृण्वंश्च सततोत्थितः १०४
भक्तो विश्वेश्वरं देवं मानुषेषु तु यः सदा
वरान्स कामाँल्लभते प्रसन्ने त्र्यम्बके नरः १०५
गच्छ युध्यस्व कौन्तेय न तवास्ति पराजयः
यस्य मन्त्री च गोप्ता च पार्श्वतस्ते जनार्दनः १०६
सञ्जय उवाच
एवमुक्त्वार्जुनं संख्ये पराशरसुतस्तदा
जगाम भरतश्रेष्ठ यथागतमरिंदम १०७

इति श्रीमहाभारते द्रोणपर्वणि त्रिसप्तत्यधिकशततमोऽध्यायः १७३

समाप्तं नारायणास्त्रमोक्षपर्व

द्रोणपर्व समाप्तम्

Mahābhārata, by Veda Vyāsa, edited by Shri Pad Damodar Satvalekar, 1972 edition.
Drona Parva typed by Om Prakash Sharma, B.A.
Proofread by Soorveer Snigh, Ph.D.
Font conversion by Claude Setzer and Ralph Bunker.

# महाभारत
## कर्णपर्व

श्रीगणेशाय नमः
ॐ नारायणं नमस्कृत्य नरं चैव नरोत्तमम्
देवीं सरस्वतीं चैव ततो जयमुदीरयेत्

### अथ प्रथमोऽध्यायः

वैशम्पायन उवाच
ततो द्रोणे हते राजन्दुर्योधनमुखा नृपाः
भृशमुद्विग्नमनसो द्रोणपुत्रमुपागमन् १
ते द्रोणमुपशोचन्तः कश्मलाभिहतौजसः
पर्युपासन्त शोकार्तास्ततः शारद्वतीसुतम् २
मुहूर्तं ते समाश्वास्य हेतुभिः शास्त्रसंमितैः
रात्र्यागमे महीपालाः स्वानि वेश्मानि भेजिरे ३
विशेषतः सूतपुत्रो राजा चैव सुयोधनः
दुःशासनोऽथ शकुनिर्न निद्रामुपलेभिरे ४
ते वेश्मस्वपि कौरव्य पृथ्वीशा नाप्नुवन्सुखम्
चिन्तयन्तः क्षयं तीव्रं निद्रां नैवोपलेभिरे ५
सहितास्ते निशायां तु दुर्योधननिवेशने
अतिप्रचण्डाद्विद्वेषात्पाण्डवानां महात्मनाम् ६
यत्तद्द्यूतपरिक्लिष्टां कृष्णामानिन्यिरे सभाम्
तत्स्मरन्तोऽन्वतप्यन्त भृशमुद्विग्नचेतसः ७
चिन्तयन्तश्च पार्थानां तान्क्लेशान्द्यूतकारितान्
कृच्छ्रेण क्षणदां राजन्निन्युरब्दशतोपमाम् ८
ततः प्रभाते विमले स्थिता दिष्टस्य शासने
चक्रुरावश्यकं सर्वे विधिदृष्टेन कर्मणा ९
ते कृत्वावश्यकार्याणि समाश्वस्य च भारत
योगमाज्ञापयामासुर्युद्धाय च विनिर्ययुः १०

कर्णं सेनापतिं कृत्वा कृतकौतुकमङ्गलाः
वाचयित्वा द्विजश्रेष्ठान्दधिपात्रघृताक्षतैः ११
निष्कैर्गोभिर्हिरण्येन वासोभिश्च महाधनैः
वर्ध्यमाना जयाशीर्भिः सूतमागधबन्दिभिः १२
तथैव पाण्डवा राजन्कृतसर्वाह्णिकक्रियाः
शिबिरान्निर्ययू राजन्युद्धाय कृतनिश्चयाः १३
ततः प्रववृते युद्धं तुमुलं रोमहर्षणम्
कुरूणां पाण्डवानां च परस्परवधैषिणाम् १४
तयोर्द्वे दिवसे युद्धं कुरुपाण्डवसेनयोः
कर्णे सेनापतौ राजन्नभूदद्भुतदर्शनम् १५
ततः शत्रुक्षयं कृत्वा सुमहान्तं रणे वृषः
पश्यतां धार्तराष्ट्राणां फल्गुनेन निपातितः १६
ततस्तत्सञ्जयः सर्वं गत्वा नागाह्वयं पुरम्
आचख्यौ धृतराष्ट्राय यद्वृत्तं कुरुजाङ्गले १७
जनमेजय उवाच
आपगेयं हतं श्रुत्वा द्रोणंच समरे परैः
यो जगाम परामार्तिं वृद्धो राजाम्बिकासुतः १८
स श्रुत्वा निहतं कर्णं दुर्योधनहितैषिणम्
कथं द्विजवर प्राणानधारयत दुःखितः १९
यस्मिञ्जयाशां पुत्राणाममन्यत स पार्थिवः
तस्मिन्हते स कौरव्यः कथं प्राणानधारयत् २०
दुर्मरं बत मन्येऽह नृणां कृच्छ्रेऽपि वर्तताम्
यत्र कर्णं हतं श्रुत्वा नात्यजज्जीवितं नृपः २१
तथा शान्तनवं वृद्धं ब्रह्मन्बाह्लीकमेव च
द्रोणं च सोमदत्तं च भूरिश्रवसमेव च २२
तथैव चान्यान्सुहृदः पुत्रपौत्रांश्च पातितान्
श्रुत्वा यन्नाजहात्प्राणांस्तन्मन्ये दुष्करं द्विज २३
एतन्मे सर्वमाचक्ष्व विस्तरेण तपोधन
न हि तृप्यामि पूर्वेषां शृण्वानश्चरितं महत् २४
वैशम्पायन उवाच

हते कर्णे महाराज निशि गावल्गणिस्तदा
दीनो ययौ नागपुरमश्वैर्वातसमैर्जवे २५
स हास्तिनपुरं गत्वा भृशमुद्विग्नमानसः
जगाम धृतराष्ट्रस्य क्षयं प्रक्षीणबान्धवम् २६
स समुद्वीक्ष्य राजानं कश्मलाभिहतौजसम्
ववन्दे प्राञ्जलिर्भूत्वा मूर्ध्ना पादौ नृपस्य ह २७
संपूज्य च यथान्यायं धृतराष्ट्रं महीपतिम्
हा कष्टमिति चोक्त्वा स ततो वचनमाददे २८
सञ्जयोऽहं क्षितिपते कच्चिदास्ते सुखं भवान्
स्वदोषेणापदं प्राप्य कच्चिन्नाद्य विमुह्यसि २९
हितान्युक्तानि विदुरद्रोणगाङ्गेयकेशवैः
अगृहीतान्यनुस्मृत्य कच्चिन्न कुरुषे व्यथाम् ३०
रामनारदकण्वैश्च हितमुक्तं सभातले
नगृहीतमनुस्मृत्य कच्चिन्न कुरुषे व्यथाम् ३१
सुहृदस्त्वद्धिते युक्तान्भीष्मद्रोणमुखान्परैः
निहतान्युधि संस्मृत्य कच्चिन्न कुरुषे व्यथाम् ३२
तमेवंवादिनं राजा सूतपुत्रं कृताञ्जलिम्
सुदीर्घमभिनिःश्वस्य दुःखार्त इदमब्रवीत् ३३
गाङ्गेये निहते शूरे दिव्यास्त्रवति सञ्जय
द्रोणे च परमेष्वासे भृशं मे व्यथितं मनः ३४
यो रथानां सहस्राणि दंशितानां दशैव हि
अहन्यहनि तेजस्वी निजघ्ने वसुसंभवः ३५
स हतो यज्ञसेनस्य पुत्रेणेह शिखण्डिना
पाण्डवेयाभिगुप्तेन भृशं मे व्यथितं मनः ३६
भार्गवः प्रददौ यस्मै परमास्त्रं महात्मने
साक्षाद्रामेण यो बाल्ये धनुर्वेद उपाकृतः ३७
यस्य प्रसादात्कौन्तेया राजपुत्रा महाबलाः
महारथत्वं संप्राप्तास्तथान्ये वसुधाधिपाः ३८
तं द्रोणं निहतं श्रुत्वा धृष्टद्युम्नेन संयुगे
सत्यसंधं महेष्वासं भृशं मे व्यथितं मनः ३९

त्रैलोक्ये यस्य शास्त्रेषु न पुमान्विद्यते समः
तं द्रोणं निहतं श्रुत्वा किमकुर्वत मामकाः ४०
संशप्तकानां च बले पाण्डवेन महात्मना
धनञ्जयेन विक्रम्य गमिते यमसादनम् ४१
नारायणास्त्रे निहते द्रोणपुत्रस्य धीमतः
हतशेषेष्वनीकेषु किमकुर्वत मामकाः ४२
विप्रद्रुतानहं मन्ये निमग्नः शोकसागरे
प्लवमानान्हते द्रोणे सन्ननौकानिवार्णवे ४३
दुर्योधनस्य कर्णस्य भोजस्य कृतवर्मणः
मद्रराजस्य शल्यस्य द्रौणेश्चैव कृपस्य च ४४
मत्पुत्रशेषस्य तथा तथान्येषां च सञ्जय
विप्रकीर्णेष्वनीकेषु मुखवर्णोऽभवत्कथम् ४५
एतत्सर्वं यथा वृत्तं तत्त्वं गावल्गणे रणे
आचक्ष्व पाण्डवेयानां मामकानां च सर्वशः ४६
सञ्जय उवाच
पाण्डवेयैर्हि यद्वृत्तं कौरवेयेषु मारिष
तच्छ्रुत्वा मा व्यथां कार्षीर्दिष्टे न व्यथते मनः ४७
यस्मादभावी भावी वा भवेदर्थो नरं प्रति
अप्राप्तौ तस्य वा प्राप्तौ न कश्चिद्व्यथते बुधः ४८
धृतराष्ट्र उवाच
न व्यथा शृण्वतः काचिद्विद्यते मम सञ्जय
दिष्टमेतत्पुरा मन्ये कथयस्व यथेच्छकम् ४९
इति श्रीमहाभारते कर्णपर्वणि प्रथमोऽध्यायः १

## द्वितीयोऽध्यायः

सञ्जय उवाच
हते द्रोणे महेष्वासे तव पुत्रा महारथाः
बभूवुरश्वस्तमुखा विषण्णा गतचेतसः १
अवाङ्मुखाः शस्त्रभृतः सर्व एव विशां पते
अप्रेक्षमाणाः शोकार्ता नाभ्यभाषन्परस्परम् २

तान्दृष्ट्वा व्यथिताकारान्सैन्यानि तव भारत
ऊर्ध्वमेवाभ्यवेक्षन्त दुःखत्रस्तान्यनेकशः ३
शस्त्राण्येषां च राजेन्द्र शोणिताक्तान्यशेषतः
प्राभ्रश्यन्त कराग्रेभ्यो दृष्ट्वा द्रोणं निपातितम् ४
तानि बद्धान्यनिष्टानि लम्बमानानि भारत
अदृश्यन्त महाराज नक्षत्राणि यथा दिवि ५
तथार्तं स्तिमितं दृष्ट्वा गतसत्वमिव स्थितम्
स्वं बलं तन्महाराज राजा दुर्योधनोऽब्रवीत् ६
भवतां बाहुवीर्यं हि समाश्रित्य मया युधि
पाण्डवेयाः समाहूता युद्धं चेदं प्रवर्तितम् ७
तदिदं निहते द्रोणे विषण्णमिव लक्ष्यते
युध्यमानाश्च समरे योधा वध्यन्ति सर्वतः ८
जयो वापि वधो वापि युध्यमानस्य संयुगे
भवेत्किमत्र चित्रं वै युध्यध्वं सर्वतोमुखाः ९
पश्यध्वं च महात्मानं कर्णं वैकर्तनं युधि
प्रचरन्तं महेष्वासं दिव्यैरस्त्रैर्महाबलम् १०
यस्य वै युधि सन्त्रासात्कुन्तीपुत्रो धनञ्जयः
निवर्तते सदामर्षात्सिंहात्क्षुद्रमृगो यथा ११
येन नागायुतप्राणो भीमसेनो महाबलः
मानुषेणैव युद्धेन तामवस्थां प्रवेशितः १२
येन दिव्यास्त्रविच्छूरो मायावी स घटोत्कचः
अमोघया रणे शक्त्या निहतो भैरवं नदन् १३
तस्य दुष्पारवीर्यस्य सत्यसन्धस्य धीमतः
बाह्वोर्द्रविणमक्षय्यमद्य द्रक्ष्यथ संयुगे १४
द्रोणपुत्रस्य विक्रान्तं राधेयस्यैव चोभयोः
पाण्डुपाञ्चालसैन्येषु द्रक्ष्यथापि महात्मनोः १५
सर्व एव भवन्तश्च शूराः प्राज्ञाः कुलोद्गताः
शीलवन्तः कृतास्त्राश्च द्रक्ष्यथाद्य परस्परम् १६
एवमुक्ते महराज कर्णो वैकर्तनो नृपः
सिंहनादं विनद्योच्चैः प्रायुध्यत महाबलः १७

स सृञ्जयानां सर्वेषां पाञ्चालानां च पश्यताम्
केकयानां विदेहानामकरोत्कदनं महत् १८
तस्येषुधाराः शतशः प्रादुरासञ्शरासनात्
अग्रे पुङ्खे च संसक्ता यथा भ्रमरपङ्क्तयः १९
स पीडयित्वा पाञ्चालान्पाण्डवांश्च तरस्विनः
हत्वा सहस्रशो योधानर्जुनेन निपातितः २०
इति श्रीमहाभारते कर्णपर्वणि द्वितीयोऽध्यायः २

## तृतीयोऽध्यायः

वैशम्पायन उवाच
एतच्छ्रुत्वा महाराज धृतराष्ट्रोऽम्बिकासुतः
शोकस्यान्तमपश्यन्वै हतं मत्वा सुयोधनम्
विह्वलः पतितो भूमौ नष्टचेता इव द्विपः १
तस्मिन्निपतिते भूमौ विह्वले राजसत्तमे
आर्तनादो महानासीत्स्त्रीणां भरतसत्तम २
स शब्दः पृथिवीं सर्वां पूरयामास सर्वशः
शोकार्णवे महाघोरे निमग्ना भरतस्त्रियः ३
राजानं च समासाद्य गान्धारी भरतर्षभ
निःसंज्ञा पतिता भूमौ सर्वाण्यन्तःपुराणि च ४
ततस्ताः सञ्जयो राजन्समाश्वासयदातुराः
मुह्यमानाः सुबहुशो मुञ्चन्त्यो वारि नेत्रजम् ५
समाश्वस्ताः स्त्रियस्तास्तु वेपमाना मुहुर्मुहुः
कदल्य इव वातेन धूयमानाः समन्ततः ६
राजानं विदुरश्चापि प्रज्ञाचक्षुषमीश्वरम्
आश्वासयामास तदा सिञ्चंस्तोयेन कौरवम् ७
स लब्ध्वा शनकैः संज्ञां ताश्च दृष्ट्वा स्त्रियो नृप
उन्मत्त इव राजा स स्थितस्तूष्णीं विशां पते ८
ततो ध्यात्वा चिरं कालं निःश्वसंश्च पुनः पुनः
स्वान्पुत्रान्गर्हयामास बहु मेने च पाण्डवान् ९
गर्हयित्वात्मनो बुद्धिं शकुनेः सौबलस्य च

ध्यात्वा च सुचिरं कालं वेपमानो मुहुर्मुहुः १०
संस्तभ्य च मनो भूयो राजा धैर्यसमन्वितः
पुनर्गावल्गणिं सूतं पर्यपृच्छत सञ्जयम् ११
यत्त्वया कथितं वाक्यं श्रुतं सञ्जय तन्मया
कच्चिद्दुर्योधनः सूत न गतो वै यमक्षयम्
ब्रूहि सञ्जय तत्त्वेन पुनरुक्तां कथामिमाम् १२
एवमुक्तोऽब्रवीत्सूतो राजानं जनमेजय
हतो वैकर्तनो राजन्सह पुत्रैर्महारथैः
भ्रातृभिश्च महेष्वासैः सूतपुत्रैस्तनुत्यजैः १३
दुःशासनश्च निहतः पाण्डवेन यशस्विना
पीतं च रुधिरं कोपाद्भीमसेनेन संयुगे १४
इति श्रीमहाभारते कर्णपर्वणि तृतीयोऽध्यायः ३

## चतुर्थोऽध्यायः

वैशम्पायन उवाच
एतच्छ्रुत्वा महाराज धृतराष्ट्रोऽम्बिकासुतः
अब्रवीत्सञ्जयं सूतं शोकव्याकुलचेतनः १
दुष्प्रणीतेन मे तात मनसाभिप्लुतात्मनः
हतं वैकर्तनं श्रुत्वा शोको मर्माणि कृन्तति २
कृतास्त्रपरमाः शल्ये दुःखपारं तितीर्षवः
कुरूणां सृञ्जयानां च के नु जीवन्ति के मृताः ३
सञ्जय उवाच
हतः शांतनवो राजन्दुराधर्षः प्रतापवान्
हत्वा पाण्डवयोधानामर्बुदं दशभिर्दिनैः ४
ततो द्रोणो महेष्वासः पाञ्चालानां रथव्रजान्
निहत्य युधि दुर्धर्षः पश्चाद्रुक्मरथो हतः ५
हतशिष्टस्य भीष्मेण द्रोणेन च महात्मना
अर्धं निहत्य सैन्यस्य कर्णो वैकर्तनो हतः ६
विविंशतिर्महाराज राजपुत्रो महाबलः
आनर्तयोधाञ्शतशो निहत्य निहतो रणे ७

अथ पुत्रो विकर्णस्ते क्षत्रव्रतमनुस्मरन्
क्षीणवाहायुधः शूरः स्थितोऽभिमुखतः परान् ८
घोररूपान्परिक्लेशान्दुर्योधनकृतान्बहून्
प्रतिज्ञां स्मरता चैव भीमसेनेन पातितः ९
विन्दानुविन्दावावन्त्यौ राजपुत्रौ महाबलौ
कृत्वा नसुकरं कर्म गतौ वैवस्वतक्षयम् १०
सिन्धुराष्ट्रमुखानीह दश राष्ट्राणि यस्य वै
वशे तिष्ठन्ति वीरस्य यः स्थितस्तव शासने ११
अक्षौहिणीर्दशैकां च निर्जित्य निशितैः शरैः
अर्जुनेन हतो राजन्महावीर्यो जयद्रथः १२
तथा दुर्योधनसुतस्तरस्वी युद्धदुर्मदः
वर्तमानः पितुः शास्त्रे सौभद्रेण निपातितः १३
तथा दौःशासनिर्वीरो बाहुशाली रणोत्कटः
द्रौपदेयेन विक्रम्य गमितो यमसादनम् १४
किरातानामधिपतिः सागरानूपवासिनाम्
देवराजस्य धर्मात्मा प्रियो बहुमतः सखा १५
भगदत्तो महीपालः क्षत्रधर्मरतः सदा
धनंजयेन विक्रम्य गमितो यमसादनम् १६
तथा कौरवदायादः सौमदत्तिर्महायशाः
हतो भूरिश्रवा राजञ्शूरः सात्यकिना युधि १७
श्रुतायुरपि चाम्बष्ठः क्षत्रियाणां धनुर्धरः
चरन्नभीतवत्संख्ये निहतः सव्यसाचिना १८
तव पुत्रः सदा संख्ये कृतास्त्रो युद्धदुर्मदः
दुःशासनो महाराज भीमसेनेन पातितः १९
यस्य राजन्गजानीकं बहुसाहस्रमद्भुतम्
सुदक्षिणः स संग्रामे निहतः सव्यसाचिना २०
कोसलानामधिपतिर्हत्वा बहुशतान्परान्
सौभद्रेण हि विक्रम्य गमितो यमसादनम् २१
बहुशो योधयित्वा च भीमसेनं महारथः
चित्रसेनस्तव सुतो भीमसेनेन पातितः २२

मद्रराजात्मजः शूरः परेषां भयवर्धनः
असिचर्मधरः श्रीमान्सौभद्रेण निपातितः २३
समः कर्णस्य समरे यः स कर्णस्य पश्यतः
वृषसेनो महातेजाः शीघ्रास्त्रः कृतनिश्चयः २४
अभिमन्योर्वधं स्मृत्वा प्रतिज्ञामपि चात्मनः
धनंजयेन विक्रम्य गमितो यमसादनम् २५
नित्यप्रसक्तवैरो यः पाण्डवैः पृथिवीपतिः
विश्राव्य वैरं पार्थेन श्रुतायुः स निपातितः २६
शल्यपुत्रस्तु विक्रान्तः सहदेवेन मारिष
हतो रुक्मरथो राजन्भ्राता मातुलजो युधि २७
राजा भगीरथो वृद्धो बृहत्क्षत्रश्च केकयः
पराक्रमन्तौ विक्रान्तौ निहतौ वीर्यवत्तरौ २८
भगदत्तसुतो राजन्कृतप्रज्ञो महाबलः
श्येनवच्चरता संख्ये नकुलेन निपातितः २९
पितामहस्तव तथा बाह्लिकः सह बाह्लिकैः
भीमसेनेन विक्रम्य गमितो यमसादनम् ३०
जयत्सेनस्तथा राजञ्जारासंधिर्महाबलः
मागधो निहतः संख्ये सौभद्रेण महात्मना ३१
पुत्रस्ते दुर्मुखो राजन्दुःसहश्च महारथः
गदया भीमसेनेन निहतौ शूरमानिनौ ३२
दुर्मर्षणो दुर्विषहो दुर्जयश्च महारथः
कृत्वा नसुकरं कर्म गता वैवस्वतक्षयम् ३३
सचिवो वृषवर्मा ते सूतः परमवीर्यवान्
भीमसेनेन विक्रम्य गमितो यमसादनम् ३४
नागायुतबलो राजा नागायुतबलो महान्
सगणः पाण्डुपुत्रेण निहतः सव्यसाचिना ३५
वसातयो महाराज द्विसाहस्राः प्रहारिणः
शूरसेनाश्च विक्रान्ताः सर्वे युधि निपातिताः ३६
अभीषाहाः कवचिनः प्रहरन्तो मदोत्कटाः
शिबयश्च रथोदाराः कलिङ्गसहिता हताः ३७

गोकुले नित्यसंवृद्धा युद्धे परमकोविदाः
श्रेण्यो बहुसाहस्राः संशप्तकगणाश्च ये
ते सर्वे पार्थमासाद्य गता वैवस्वतक्षयम् ३८
श्यालौ तव महाराज राजानौ वृषकाचलौ
त्वदर्थे संपराक्रान्तौ निहतौ सव्यसाचिना ३९
उग्रकर्मा महेष्वासो नामतः कर्मतस्तथा
शाल्वराजो महाराज भीमसेनेन पातितः ४०
ओघवांश्च महाराज बृहन्तः सहितो रणे
पराक्रमन्तौ मित्रार्थे गतौ वैवस्वतक्षयम् ४१
तथैव रथिनां श्रेष्ठः क्षेमधूर्तिर्विशां पते
निहतो गदया राजन्भीमसेनेन संयुगे ४२
तथा राजा महेष्वासो जलसंधो महाबलः
सुमहत्कदनं कृत्वा हतः सात्यकिना रणे ४३
अलायुधो राक्षसेन्द्रः खरबन्धुरयानगः
घटोत्कचेन विक्रम्य गमितो यमसादनम् ४४
राधेयाः सूतपुत्राश्च भ्रातरश्च महारथाः
केकयाः सर्वशश्चापि निहताः सव्यसाचिना ४५
मालवा मद्रकाश्चैव द्रविडाश्चोग्रविक्रमाः
यौधेयाश्च ललित्थाश्च क्षुद्रकाश्चाप्युशीनराः ४६
मावेल्लकास्तुण्डिकेराः सावित्रीपुत्रकाञ्चलाः
प्राच्योदीच्याः प्रतीच्याश्च दाक्षिणात्याश्च मारिष ४७
पत्तीनां निहताः संघा हयानामयुतानि च
रथव्रजाश्च निहता हताश्च वरवारणाः ४८
सध्वजाः सायुधाः शूराः सवर्माम्बरभूषणाः
कालेन महता यत्ताः कुले ये च विवर्धिताः ४९
ते हताः समरे राजन्पार्थेनाक्लिष्टकर्मणा
अन्ये तथामितबलाः परस्परवधैषिणः ५०
एते चान्ये च बहवो राजानः सगणा रणे
हताः सहस्रशो राजन्यन्मां त्वं परिपृच्छसि
एवमेष क्षयो वृत्तः कर्णार्जुनसमागमे ५१

महेन्द्रेण यथा वृत्रो यथा रामेण रावणः
यथा कृष्णेन निहतो मुरो रणनिपातितः
कार्तवीर्यश्च रामेण भार्गवेण हतो यथा ५२
सज्ञातिबान्धवः शूरः समरे युद्धदुर्मदः
रणे कृत्वा महायुद्धं घोरं त्रैलोक्यविश्रुतम् ५३
तथार्जुनेन निहतो द्वैरथे युद्धदुर्मदः
सामात्यबान्धवो राजन्कर्णः प्रहरतां वरः ५४
जयाशा धार्तराष्ट्राणां वैरस्य च मुखं यतः
तीर्णं तत्पाण्डवै राजन्यत्पुरा नावबुध्यसे ५५
उच्यमानो महाराज बन्धुभिर्हितकाङ्क्षिभिः
तदिदं समनुप्राप्तं व्यसनं त्वां महात्ययम् ५६
पुत्राणां राज्यकामानां त्वया राजन्हितैषिणा
अहितानीव चीर्णानि तेषां ते फलमागतम् ५७
धृतराष्ट्र उवाच
आख्याता मामकास्तात निहता युधि पाण्डवैः
निहतान्पाण्डवेयानां मामकैर्ब्रूहि सञ्जय ५८
सञ्जय उवाच
कुन्तयो युधि विक्रान्ता महासत्त्वा महाबलाः
सानुबन्धाः सहामात्या भीष्मेण युधि पातिताः ५९
समः किरीटिना संख्ये वीर्येण च बलेन च
सत्यजित्सत्यसन्धेन द्रोणेन निहतो रणे ६०
तथा विराटद्रुपदौ वृद्धौ सहसुतौ नृपौ
पराक्रमन्तौ मित्रार्थे द्रोणेन निहतौ रणे ६१
यो बाल एव समरे संमितः सव्यसाचिना
केशवेन च दुर्धर्षो बलदेवेन चाभिभूः ६२
स एष कदनं कृत्वा महद्रणविशारदः
परिवार्य महामात्रैः षड्भिः परमकै रथैः
अशक्नुवद्भिर्बीभत्सुमभिमन्युर्निपातितः ६३
तं कृतं विरथं वीरं क्षत्रधर्मे व्यवस्थितम्
दौःशासनिर्महाराज सौभद्रं हतावान्रणे ६४

बृहन्तस्तु महेष्वासः कृतास्त्रो युद्धदुर्मदः
दुःशासनेन विक्रम्य गमितो यमसादनम् ६५
मणिमान्दण्डधारश्च राजानौ युद्धदुर्मदौ
पराक्रमन्तौ मित्रार्थे द्रोणेन विनिपातितौ ६६
अंशुमान्भोजराजस्तु सहसैन्यो महारथः
भारद्वाजेन विक्रम्य गमितो यमसादनम् ६७
चित्रायुधश्चित्रयोधी कृत्वा तौ कदनं महत्
चित्रमार्गेण विक्रम्य कर्णेन निहतौ युधि ६८
वृकोदरसमो युद्धे दृढः केकयजो युधि
केकयेनैव विक्रम्य भ्रात्रा भ्राता निपातितः ६९
जनमेजयो गदायोधी पार्वतीयः प्रतापवान्
दुर्मुखेन महाराज तव पुत्रेण पातितः ७०
रोचमानौ नरव्याघ्रौ रोचमानौ ग्रहाविव
द्रोणेन युगपद्राजन्दिवं संप्रेषितौ शरैः ७१
नृपाश्च प्रतियुध्यन्तः पराक्रान्ता विशां पते
कृत्वा नसुकरं कर्म गता वैवस्वतक्षयम् ७२
पुरुजित्कुन्तिभोजश्च मातुलः सव्यसाचिनः
संग्रामनिर्जिताँल्लोकान्गमितो द्रोणसायकैः ७३
अभिभूः काशिराजश्च काशिकैर्बहुभिर्वृतः
वसुदानस्य पुत्रेण न्यासितो देहमाहवे ७४
अमितौजा युधामन्युरुत्तमौजाश्च वीर्यवान्
निहत्य शतशः शूरान्परैर्विनिहतौ रणे ७५
क्षत्रधर्मा च पाञ्चाल्यः क्षत्रवर्मा च मारिष
द्रोणेन परमेष्वासौ गमितौ यमसादनम् ७६
शिखण्डितनयो युद्धे क्षत्रदेवो युधां पतिः
लक्ष्मणेन हतो राजंस्तव पौत्रेण भारत ७७
सुचित्रश्चित्रधर्मा च पितापुत्रौ महारथौ
प्रचरन्तौ महावीर्यौ द्रोणेन निहतौ रणे ७८
वार्धक्षेमिर्महाराज कृत्वा कदनमाहवे
बाह्लिकेन महाराज कौरवेण निपातितः ७९

धृष्टकेतुर्महाराज चेदीनां प्रवरो रथः
कृत्वा नसुकरं कर्म गतो वैवस्वतक्षयम् ८०
तथा सत्यधृतिस्तात कृत्वा कदनमाहवे
पाण्डवार्थे पराक्रान्तो गमितो यमसादनम् ८१
पुत्रस्तु शिशुपालस्य सुकेतुः पृथिवीपते
निहत्य शात्रवान्संख्ये द्रोणेन निहतो युधि ८२
तथा सत्यधृतिर्वीरो मदिराश्वश्च वीर्यवान्
सूर्यदत्तश्च विक्रान्तो निहतो द्रोणसायकैः ८३
श्रेणिमांश्च महाराज युध्यमानः पराक्रमी
कृत्वा नसुकरं कर्म गतो वैवस्वतक्षयम् ८४
तथैव युधि विक्रान्तो मागधः परवीरहा
भीष्मेण निहतो राजन्युध्यमानः पराक्रमी ८५
वसुदानश्च कदनं कुर्वाणोऽतीव संयुगे
भारद्वाजेन विक्रम्य गमितो यमसादनम् ८६
एते चान्ये च बहवः पाण्डवानां महारथाः
हता द्रोणेन विक्रम्य यन्मां त्वं परिपृच्छसि ८७
धृतराष्ट्र उवाच
हतप्रवीरे सैन्येऽस्मिन्मामके वदतां वर
अहताञ्शंस मे सूत येऽत्र जीवन्ति केचन ८८
एतेषु निहतेष्वद्य ये त्वया परिकीर्तिताः
अहतान्मन्यसे यांस्त्वं तेऽपि स्वर्गजितो मताः ८९
सञ्जय उवाच
यस्मिन्महास्त्राणि समर्पितानि चित्राणि शुभ्राणि चतुर्विधानि
दिव्यानि राजन्निहितानि चैव द्रोणेन वीरद्विजसत्तमेन ९०
महारथः कृतिमान्क्षिप्रहस्तो दृढायुधोदृढमुष्टिर्दृढेषुः
स वीर्यवान्द्रोणपुत्रस्तरस्वी व्यवस्थितो योद्धुकामस्त्वदर्थे ९१
आनर्तवासी हृदिकात्मजोऽसौ महारथः सात्वतानां वरिष्ठः
स्वयं भोजः कृतवर्मा कृतास्त्रो व्यवस्थितो योद्धुकामस्त्वदर्थे ९२
शारद्वतो गौतमश्चापि राजन्महाबलो बहुचित्रास्त्रयोधी
धनुश्चित्रं सुमहद्भारसाहं व्यवस्थितो योत्स्यमानः प्रगृह्य ९३

आर्तायनिः समरे दुष्प्रकम्प्यः सेनाग्रणीः प्रथमस्तावकानाम्
स्वस्त्रेयांस्तान्पाण्डवेयान्विसृज्य सत्यां वाचं तां चिकीर्षुस्तरस्वी ९४
तेजोवधं सूतपुत्रस्य संख्ये प्रतिश्रुत्वाजातशत्रोः पुरस्तात्
दुराधर्षः शक्रसमानवीर्यः शल्यः स्थितो योद्धुकामस्त्वदर्थे ९५
आजानेयैः सैन्धवैः पार्वतीयैर्नदीजकाम्बोजवनायुबाह्लिकैः
गान्धारराजः स्वबलेन युक्तो व्यवस्थितो योद्धुकामस्त्वदर्थे ९६
तथा सुतस्ते ज्वलनार्कवर्णं रथं समास्थाय कुरुप्रवीर
व्यवस्थितः कुरुमित्रो नरेन्द्र व्यभ्रे सूर्यो भ्राजमानो यथा वै ९७
दुर्योधनो नागकुलस्य मध्ये महावीर्यः सह सैन्यप्रवीरैः
रथेन जाम्बूनदभूषणेन व्यवस्थितः समरे योद्धुकामः ९८
स राजमध्ये पुरुषप्रवीरो रराज जाम्बूनदचित्रवर्मा
पद्मप्रभो वह्निरिवाल्पधूमो मेघान्तरे सूर्य इव प्रकाशः ९९
तथा सुषेणोऽप्यसिचर्मपाणिस्तवात्मजः सत्यसेनश्च वीरः
व्यवस्थितौ चित्रसेनेन सार्धं हृष्टात्मानौ समरे योद्धुकामौ १००
ह्रीनिषेधा भरता राजपुत्राश्चित्रायुधः श्रुतवर्मा जयश्च
शलश्च सत्यव्रतदुःशलौ च व्यवस्थिता बलिनो योद्धुकामाः १०१
कैतव्यानामधिपः शूरमानी रणे रणे शत्रुहा राजपुत्रः
पत्री हयी नागरथप्रयायी व्यवस्थितो योद्धुकामस्त्वदर्थे १०२
वीरः श्रुतायुश्च श्रुतायुधश्च चित्राङ्गदश्चित्रवर्मा स वीरः
व्यवस्थिता ये तु सैन्ये नराग्र्याः प्रहारिणो मानिनः सत्यसंधाः १०३
कर्णात्मजः सत्यसेनो महात्मा व्यवस्थितः समरे योद्धुकामः
अथापरौ कर्णसुतौ वरार्हौ व्यवस्थितौ लघुहस्तौ नरेन्द्र
बलं महद्दुर्भिदमल्पधैर्यैः समाश्रितौ योत्स्यमानौ त्वदर्थे १०४
एतैश्च मुख्यैरपरैश्च राजन्योधप्रवीरैरमितप्रभावैः
व्यवस्थितो नागकुलस्य मध्ये यथा महेन्द्रः कुरुराजो जयाय १०५
धृतराष्ट्र उवाच
आख्याता जीवमाना ये परेभ्योऽन्ये यथातथम्
इतीदमभिगच्छाभि व्यक्तमर्थाभिपत्तितः १०६
वैशम्पायन उवाच
एवं ब्रुवन्नेव तदा धृतराष्ट्रोऽम्बिकासुतः

हतप्रवीरं विध्वस्तं किंचिच्छेषं स्वकं बलम्
श्रुत्वा व्यामोहमगमच्छोकव्याकुलितेन्द्रियः १०७
मुह्यमानोऽब्रवीच्चापि मुहूर्तं तिष्ठ सञ्जय
व्याकुलं मे मनस्तात श्रुत्वा सुमहदप्रियम्
नष्टचित्तस्ततः सोऽथ बभूव जगतीपतिः १०८
इति श्रीमहाभारते कर्णपर्वणि चतुर्थोऽध्यायः ४

पञ्चमोऽध्यायः

जनमेजय उवाच
श्रुत्वा कर्णं हतं युद्धे पुत्रांश्चैवापलायिनः
नरेन्द्रः किंचिदाश्वस्तो द्विजश्रेष्ठ किमब्रवीत् १
प्राप्तवान्परमं दुःखं पुत्रव्यसनजं महत्
तस्मिन्यदुक्तवान्काले तन्ममाचक्ष्व पृच्छतः २
वैशम्पायन उवाच
श्रुत्वा कर्णस्य निधनमश्रद्धेयमिवाद्भुतम्
भूतसंमोहनं भीमं मेरोः पर्यसनं यथा ३
चित्तमोहमिवायुक्तं भार्गवस्य महामतेः
पराजयमिवेन्द्रस्य द्विषद्भ्यो भीमकर्मणः ४
दिवः प्रपतनं भानोरुर्व्यामिव महाद्युतेः
संशोषणमिवाचिन्त्यं समुद्रस्याक्षयाम्भसः ५
महीवियद्दिगीशानां सर्वनाशमिवाद्भुतम्
कर्मणोरिव वैफल्यमुभयोः पुण्यपापयोः ६
संचिन्त्य निपुणं बुद्ध्या धृतराष्ट्रो जनेश्वरः
नेदमस्तीति संचिन्त्य कर्णस्य निधनं प्रति ७
प्राणिनामेतदात्मत्वात्स्यादपीति विनाशनम्
शोकाग्निना दह्यमानो धम्यमान इवाशयः ८
विध्वस्तात्मा श्वसन्दीनो हा हेत्युक्त्वा सुदुःखितः
विललाप महाराज धृतराष्ट्रोऽम्बिकासुतः ९
धृतराष्ट्र उवाच
सञ्जयाधिरथो वीरः सिंहद्विरदविक्रमः

वृषभप्रतिमस्कन्धो वृषभाक्षगतिस्वनः १०
वृषभो वृषभस्येव यो युद्धे न निवर्तते
शत्रोरपि महेन्द्रस्य वज्रसंहननो युवा ११
यस्य ज्यातलशब्देन शरवृष्टिरवेण च
रथाश्वनरमातङ्गा नावतिष्ठन्ति संयुगे १२
यमाश्रित्य महाबाहुं द्विषत्संघघ्नमच्युतम्
दुर्योधनोऽकरोद्वैरं पाण्डुपुत्रैर्महाबलैः १३
स कथं रथिनां श्रेष्ठः कर्णः पार्थेन संयुगे
निहतः पुरुषव्याघ्रः प्रसह्यासह्यविक्रमः १४
यो नामन्यत वै नित्यमच्युतं न धनंजयम्
न वृष्णीनपि तानन्यान्स्वबाहुबलमाश्रितः १५
शार्ङ्गगाण्डीवधन्वानौ सहितावपराजितौ
अहं दिव्याद्रथादेकः पातयिष्यामि संयुगे १६
इति यः सततं मन्दमवोचल्लोभमोहितम्
दुर्योधनमपादीनं राज्यकामुकमातुरम् १७
यश्चाजैषीदतिबलानमित्रानपि दुर्जयान्
गान्धारान्मद्रकान्मत्स्यांस्त्रिगर्तांस्तङ्गणाञ्शकान् १८
पाञ्चालांश्च विदेहांश्च कुणिन्दान्काशिकोसलान्
सुह्मानङ्गांश्च पुण्ड्रांश्च निषादान्वङ्गकीचकान् १९
वत्सान्कलिङ्गांस्तरलानश्मकानृषिकांस्तथा
यो जित्वा समरे वीरश्चक्रे बलिभृतः पुरा २०
उच्चैःश्रवा वरोऽश्वानां राज्ञां वैश्रवणो वरः
वरो महेन्द्रो देवानां कर्णः प्रहरतां वरः २१
यं लब्ध्वा मागधो राजा सान्त्वमानार्थगौरवैः
अरौत्सीत्पार्थिवं क्षत्रमृते कौरवयादवान् २२
तं श्रुत्वा निहतं कर्णं द्वैरथे सव्यसाचिना
शोकार्णवे निमग्नोऽहमप्लवः सागरे यथा २३
ईदृशैर्यद्यहं दुःखैर्न विनश्यामि सञ्जय
वज्राद्दृढतरं मन्ये हृदयं मम दुर्भिदम् २४
ज्ञातिसंबन्धिमित्राणामिमं श्रुत्वा पराजयम्

को मदन्यः पुमाँल्लोके न जह्यात्सूत जीवितम् २५
विषमग्निं प्रपातं वा पर्वताग्रादहं वृणे
न हि शक्ष्यामि दुःखानि सोढुं कष्टानि सञ्जय २६
सञ्जय उवाच
श्रिया कुलेन यशसा तपसा च श्रुतेन च
त्वामद्य सन्तो मन्यन्ते ययातिमिव नाहुषम् २७
श्रुते महर्षिप्रतिमः कृतकृत्योऽसि पार्थिव
पर्यवस्थापयात्मानं मा विषादे मनः कृथाः २८
धृतराष्ट्र उवाच
दैवमेव परं मन्ये धिक्पौरुषमनर्थकम्
यत्र रामप्रतीकाशः कर्णोऽहन्यत संयुगे २९
हत्वा युधिष्ठिरानीकं पाञ्चालानां रथव्रजान्
प्रताप्य शरवर्षेण दिशः सर्वा महारथः ३०
मोहयित्वा रणे पार्थान्वज्रहस्त इवासुरान्
स कथं निहतः शेते वायुरुग्ण इव द्रुमः ३१
शोकस्यान्तं न पश्यामि समुद्रस्येव विप्लुकाः
चिन्ता मे वर्धते तीव्रा मुमूर्षा चापि जायते ३२
कर्णस्य निधनं श्रुत्वा विजयं फल्गुनस्य च
अश्रद्धेयमहं मन्ये वधं कर्णस्य सञ्जय ३३
वज्रसारमयं नूनं हृदयं सुदृढं मम
यच्छ्रुत्वा पुरुषव्याघ्रं हतं कर्णं न दीर्यते ३४
आयुर्नूनं सुदीर्घं मे विहितं दैवतैः पुरा
यत्र कर्णं हतं श्रुत्वा जीवामीह सुदुःखितः ३५
धिग्जीवितमिदं मेऽद्य सुहृद्धीनस्य सञ्जय
अद्य चाहं दशामेतां गतः सञ्जय गर्हिताम्
कृपणं वर्तयिष्यामि शोच्यः सर्वस्य मन्दधीः ३६
अहमेव पुरा भूत्वा सर्वलोकस्य सत्कृतः
परिभूतः कथं सूत पुनः शक्ष्यामि जीवितुम्
दुःखात्सुदुःखं व्यसनं प्राप्तवानस्मि सञ्जय ३७
तस्माद्भीष्मवधे चैव द्रोणस्य च महात्मनः

नात्र शेषं प्रपश्यामि सूतपुत्रे हते युधि ३८
स हि पारं महानासीत्पुत्राणां मम सञ्जय
युद्धे विनिहतः शूरो विसृजन्सायकान्बहून् ३९
को हि मे जीवितेनार्थस्तमृते पुरुषर्षभम्
रथादतिरथो नूनमपतत्सायकार्दितः ४०
पर्वतस्येव शिखरं वज्रपातविदारितम्
शयीत पृथिवीं नूनं शोभयन्रुधिरोक्षितः
मातङ्ग इव मत्तेन मातङ्गेन निपातितः ४१
यद्बलं धार्तराष्ट्राणां पाण्डवानां यतो भयम्
सोऽर्जुनेन हतः कर्णः प्रतिमानं धनुष्मताम् ४२
स हि वीरो महेष्वासः पुत्राणामभयंकरः
शेते विनिहतो वीरः शक्रेणेव यथा बलः ४३
पङ्गोरिवाध्वगमनं दरिद्रस्येव कामितम्
दुर्योधनस्य चाकूतं तृषितस्येव पिप्लुकाः ४४
अन्यथा चिन्तितं कार्यमन्यथा तत्तु जायते
अहो नु बलवद्दैवं कालश्च दुरतिक्रमः ४५
पलायमानः कृपणं दीनात्मा दीनपौरुषः
कच्चिन्न निहतः सूत पुत्रो दुःशासनो मम ४६
कच्चिन्न नीचाचरितं कृतवांस्तात संयुगे
कचिन्न निहतः शूरो यप्या न क्षत्रिया हताः ४७
युधिष्ठिरस्य वचनं मा युद्धमिति सर्वदा
दुर्योधनो नाभ्यगृह्णान्मूढः पथ्यमिवौषधम् ४८
शरतल्पे शयानेन भीष्मेण सुमहात्मना
पानीयं याचितः पार्थः सोऽविध्यन्मेदिनीतलम् ४९
जलस्य धारां विहितां दृष्ट्वा तां पाण्डवेन ह
अब्रवीत्स महाबाहुस्तात संशाम्य पाण्डवैः ५०
प्रशमाद्धि भवेच्छान्तिर्मदन्तं युद्धमस्तु च
भ्रातृभावेन पृथिवीं भुङ्क्ष्व पाण्डुसुतैः सह ५१
अकुर्वन्वचनं तस्य नूनं शोचति मे सुतः
तदिदं समनुप्राप्तं वचनं दीर्घदर्शिनः ५२

अहं तु निहतामात्यो हतपुत्रश्च सञ्जय
द्यूततः कृच्छ्रमापन्नो लूनपक्ष इव द्विजः ५३
यथा हि शकुनिं गृह्य छित्वा पक्षौ च सञ्जय
विसर्जयन्ति संहृष्टाः क्रीडमानाः कुमारकाः ५४
छिन्नपक्षतया तस्य गमनं नोपपद्यते
तथाहमपि संप्राप्तो लूनपक्ष इव द्विजः ५५
क्षीणः सर्वार्थहीनश्च निर्बन्धुर्ज्ञातिवर्जितः
कां दिशं प्रतिपत्स्यामि दीनः शत्रुवशं गतः ५६
दुर्योधनस्य वृद्ध्यर्थं पृथिवीं योऽजयत्प्रभुः
स जितः पाण्डवैः शूरैः समर्थैर्वीर्यशालिभिः ५७
तस्मिन्हते महेष्वासे कर्णे युधि किरीटिना
के वीराः पर्यवर्तन्ति तन्ममाचक्ष्व सञ्जय ५८
कच्चिन्नैकः परित्यक्तः पाण्डवैर्निहतो रणे
उक्तं त्वया पुरा वीर यथा वीरा निपातिताः ५९
भीष्ममप्रतियुध्यन्तं शिखण्डी सायकोत्तमैः
पातयामास समरे सर्वशस्त्रभृतां वरम् ६०
तथा द्रौपदिना द्रोणो न्यस्तसर्वायुधो युधि
युक्तयोगो महेष्वासः शरैर्बहुभिराचितः
निहतः खड्गमुद्यम्य धृष्टद्युम्नेन सञ्जय ६१
अन्तरेण हतावेतौ छलेन च विशेषतः
अश्रौषमहमेतद्वै भीष्मद्रोणौ निपातितौ ६२
भीष्मद्रोणौ हि समरे न हन्याद्वज्रभृत्स्वयम्
न्यायेन युध्यमानौ हि तद्वै सत्यं ब्रवीमि ते ६३
कर्णं त्वस्यन्तमस्त्राणि दिव्यानि च बहूनि च
कथमिन्द्रोपमं वीरं मृत्युर्युद्धे समस्पृशत् ६४
यस्य विद्युत्प्रभां शक्तिं दिव्यां कनकभूषणाम्
प्रायच्छद्द्विषतां हन्त्रीं कुण्डलाभ्यां पुरन्दरः ६५
यस्य सर्पमुखो दिव्यः शरः कनकभूषणः
अशेत निहतः पत्री चन्दनेष्वरिसूदनः ६६
भीष्मद्रोणमुखान्वीरान्योऽवमन्य महारथान्

जामदग्न्यान्महाघोरं ब्रह्मस्त्रमशिक्षत ६७
यश्च द्रोणमुखान्दृष्ट्वा विमुखानर्दिताञ्शरैः
सौभद्रस्य महाबाहुर्व्यधमत्कार्मुकं शरैः ६८
यश्च नागायुतप्राणं वातरंहसमच्युतम्
विरथं भ्रातरं कृत्वा भीमसेनमुपाहसत् ६९
सहदेवं च निर्जित्य शरैः संनतपर्वभिः
कृपया विरथं कृत्वा नाहनद्धर्मवित्तया ७०
यश्च मायासहस्राणि ध्वंसयित्वा रणोत्कटम्
घटोत्कचं राक्षसेन्द्रं शक्रशक्त्याभिजघ्निवान् ७१
एतानि दिवसान्यस्य युद्धे भीतो धनंजयः
नागमद्द्वैरथं वीरः स कथं निहतो रणे ७२
रथसङ्गो न चेत्तस्य धनुर्वा न व्यशीर्यत
न चेदस्त्राणि निर्णेशुः स कथं निहतः परैः ७३
को हि शक्तो रणे कर्णं विधुन्वानं महद्धनुः
विमुञ्चन्तं शरान्घोरान्दिव्यान्यस्त्राणि चाहवे
जेतुं पुरुषशार्दूलं शार्दूलमिव वेगितम् ७४
ध्रुवं तस्य धनुश्छिन्नं रथो वापि गतो महीम्
अस्त्राणि वा प्रनष्टानि यथा शंससि मे हतम्
न ह्यन्यदनुपश्यामि कारणं तस्य नाशने ७५
न हन्यामर्जुनं यावत्तावत्पादौ न धावये
इति यस्य महाघोरं व्रतमासीन्महात्मनः ७६
यस्य भीतो रणे नित्यं धर्मराजो युधिष्ठिरः
त्रयोदश समा निद्रां न लेभे पुरुषर्षभः ७७
यस्य वीर्यवतो वीर्यं समाश्रित्य महात्मनः
मम पुत्रः सभां भार्यां पाण्डूनां नीतवान्बलात् ७८
तत्र चापि सभामध्ये पाण्डवानां च पश्यताम्
दासभार्येति पाञ्चालीमब्रवीत्कुरुसंसदि ७९
यश्चगाण्डीवमुक्तानां स्पर्शमुग्रमचिन्तयन्
अपतिर्ह्यसि कृष्णेति ब्रुवन्पार्थानवैक्षत ८०
यस्य नासीद्भयं पार्थैः सपुत्रैः सजनार्दनैः

स्वबाहुबलमाश्रित्य मुहूर्तमपि सञ्जय ८१
तस्य नाहं वधं मन्ये देवैरपि सवासवैः
प्रतीपमुपधावद्भिः किं पुनस्तात पाराडवैः ८२
न हि ज्यां स्पृशमानस्य तलत्रे चापि गृह्णतः
पुमानाधिरथेः कश्चित्प्रमुखे स्थातुमर्हति ८३
अपि स्यान्मेदिनी हीना सोमसूर्यप्रभांशुभिः
न वधः पुरुषेन्द्रस्य समरेष्वपलायिनः ८४
यदि मन्दः सहायेन भ्रात्रा दुःशासनेन च
वासुदेवस्य दुर्बुद्धिः प्रत्याख्यानमरोचयत् ८५
स नूनमृषभस्कन्धं दृष्ट्वा कर्णं निपातितम्
दुःशासनं च निहतं मन्ये शोचति पुत्रकः ८६
हतं वैकर्तनं श्रुत्वा द्वैरथे सव्यसाचिना
जयतः पाराडवान्दृष्ट्वा किंस्विद्दुर्योधनोऽब्रवीत् ८७
दुर्मर्षणं हतं श्रुत्वा वृषसेनं च संयुगे
प्रभग्नं च बलं दृष्ट्वा वध्यमानं महारथैः ८८
पराङ्मुखांस्तथा राज्ञः पलायनपरायणान्
विद्रुतान्रथिनो दृष्ट्वा मन्ये शोचति पुत्रकः ८९
अनेयश्चाभिमानेन बालबुद्धिरमर्षणः
हतोत्साहं बलं दृष्ट्वा किंस्विद्दुर्योधनोऽब्रवीत् ९०
भ्रातरं निहतं दृष्ट्वा भीमसेनेन संयुगे
रुधिरे पीयमानेन किंस्विद्दुर्योधनोऽब्रवीत् ९१
सह गान्धारराजेन सभायां यदभाषत
कर्णोऽर्जुनं रणे हन्ता हते तस्मिन्किमब्रवीत् ९२
द्यूतं कृत्वा पुरा हृष्टो वञ्चयित्वा च पाराडवान्
शकुनिः सौबलस्तात हते कर्णे किमब्रवीत् ९३
कृतवर्मा महेष्वासः सात्वतानां महारथः
कर्णं विनिहतं दृष्ट्वा हार्दिक्यः किमभाषत ९४
ब्राह्मणाः क्षत्रिया वैश्या यस्य शिक्षामुपासते
धनुर्वेदं चिकीर्षन्तो द्रोण पुत्रस्य धीमतः ९५
युवा रूपेण संपन्नो दर्शनीयो महायशाः

अश्वत्थामा हते कर्णे किमभाषत सञ्जय ९६
आचार्यत्वं धनुर्वेदे गतः परमतत्त्ववित्
कृपः शारद्वतस्तात हते कर्णे किमब्रवीत् ९७
मद्रराजो महेष्वासः शल्यः समितिशोभनः
दिष्टं तेन हि तत्सर्वं यथा कर्णो निपातितः ९८
ये च केचन राजानः पृथिव्यां योद्धुमागताः
वैकर्तनं हतं दृष्ट्वा किमभाषन्त सञ्जय ९९
कर्णे तु निहते वीरे रथव्याघ्रे नरर्षभे
किं वो मुखमनीकानामासीत्सञ्जय भागशः १००
मद्रराजः कथं शल्यो नियुक्तो रथिनां वरः
वैकर्तनस्य सारथ्ये तन्ममाचक्ष्व सञ्जय १०१
केऽरक्षन्दक्षिणं चक्रं सूतपुत्रस्य संयुगे
वामं चक्रं ररक्षुर्वा के वा वीरस्य पृष्ठतः १०२
के कर्णं वाजहुः शूराः के क्षुद्राः प्राद्रवन्भयात्
कथं च वः समेतानां हतः कर्णो महारथः १०३
पाण्डवाश्च कथं शूराः प्रत्युदीयुर्महारथम्
सृजन्तं शरवर्षाणि वारिधारा इवाम्बुदम् १०४
स च सर्पमुखो दिव्यो महेषुप्रवरस्तदा
व्यर्थः कथं समभवत्तन्ममाचक्ष्व सञ्जय १०५
मामकस्यास्य सैन्यस्य हतोत्सेधस्य सञ्जय
अवशेषं न पश्यामि ककुदे मृदिते सति १०६
तौ हि वीरौ महेष्वासौ मदर्थे कुरुसत्तमौ
भीष्मद्रोणौ हतौ श्रुत्वा को न्वर्थो जीवितेन मे १०७
न मृष्यामि च राधेयं हतमाहवशोभिनम्
यस्य बाह्वोर्बलं तुल्यं कुञ्जराणां शतं शतम् १०८
द्रोणे हते च यद्वृत्तं कौरवाणां परैः सह
संग्रामे नरवीराणां तन्ममाचक्ष्व सञ्जय १०९
यथा च कर्णः कौन्तेयैः सह युद्धमयोजयत्
यथा च द्विषतां हन्ता रणे शान्तस्तदुच्यताम् ११०
इति श्रीमहाभारते कर्णपर्वणि पञ्चमोऽध्यायः ५

षष्ठोऽध्यायः

सञ्जय उवाच
हते द्रोणे महेष्वासे तस्मिन्नहनि भारत
कृते च मोघसंकल्पे द्रोणपुत्रे महारथे १
द्रवमाणे महाराज कौरवाणां बले तथा
व्यूह्य पार्थः स्वकं सैन्यमतिष्ठद्भ्रातृभिः सह २
तमवस्थितमाज्ञाय पुत्रस्ते भरतर्षभ
द्रवच्च स्वबलं दृष्ट्वा पौरुषेण न्यवारयत् ३
स्वमनीकमवस्थाप्य बाहुवीर्ये व्यवस्थितः
युद्ध्वा च सुचिरं कालं पाण्डवैः सह भारत ४
लब्धलक्षैः परैर्हृष्टैर्व्यायच्छद्भिश्चिरं तदा
संध्याकालं समासाद्य प्रत्याहारमकारयत् ५
कृत्वावहारं सैन्यानां प्रविश्य शिबिरं स्वकम्
कुरवोऽत्महितं मन्त्रं मन्त्रयांचक्रिरे तदा ६
पर्यङ्केषु परार्ध्येषु स्पर्ध्यास्तरणवत्सु च
वरासनेषूपविष्टाः सुखशय्यास्विवामराः ७
ततो दुर्योधनो राजा साम्ना परमवल्गुना
तानाभाष्य महेष्वासान्प्राप्तकालमभाषत ८
मतिं मतिमतां श्रेष्ठाः सर्वे प्रब्रूत माचिरम्
एवं गते तु यत्कार्यं भवेत्कार्यकरं नृपाः ९
एवमुक्ते नरेन्द्रेण नरसिंहा युयुत्सवः
चक्रुर्नानाविधाश्चेष्टाः सिंहासनगतास्तदा १०
तेषां निशम्येङ्गितानि युद्धे प्राणाञ्जुहूषताम्
समुद्वीक्ष्य मुखं राज्ञो बालार्कसमवर्चसः
आचार्यपुत्रो मेधावी वाक्यज्ञो वाक्यमाददे ११
रागो योगस्तथा दाक्ष्यं नयश्चेत्यर्थसाधकाः
उपायाः पण्डितैः प्रोक्ताः सर्वे दैवसमाश्रिताः १२
लोकप्रवीरा येऽस्माकं देवकल्पा महारथाः
नीतिमन्तास्तथा युक्ता दक्षा रक्ताश्च ते हताः १३
न त्वेव कार्यं नैराश्यमस्माभिर्विजयं प्रति

सुनीतैरिह सर्वार्थैर्दैवमप्यनुलोम्यते १४
ते वयं प्रवरं नृणां सर्वैर्गुणगणैर्युतम्
कर्णं सेनापतिं कृत्वा प्रमथिष्यामहे रिपून् १५
ततो दुर्योधनः प्रीतः प्रियं श्रुत्वा वचस्तदा
प्रीतिसत्कारसंयुक्तं तथ्यमात्महितं शुभम् १६
स्वं मनः समवस्थाप्य बाहुवीर्यमुपाश्रितः
दुर्योधनो महाराज राधेयमिदमब्रवीत् १७
कर्ण जानामि ते वीर्यं सौहृदं च परं मयि
तथापि त्वां महाबाहो प्रवक्ष्यामि हितं वचः १८
श्रुत्वा यथेष्टं च कुरु वीर यत्तव रोचते
भवान्प्राज्ञतमो नित्यं मम चैव परा गतिः १९
भीष्मद्रोणावतिरथौ हतौ सेनापती मम
सेनापतिर्भवानस्तु ताभ्यां द्रविणवत्तरः २०
वृद्धौ च तौ महेष्वासौ सापेक्षौ च धनंजये
मानितौ च मया वीरौ राधेय वचनात्तव २१
पितामहत्वं संप्रेक्ष्य पाण्डुपुत्रा महारणे
रक्षितास्तात भीष्मेण दिवसानि दशैव ह २२
न्यस्तशस्त्रे न भवति हतो भीष्मः पितामहः
शिखण्डिनं पुरस्कृत्य फल्गुनेन महाहवे २३
हते तस्मिन्महाभागे शरतल्पगते तदा
त्वयोक्ते पुरुषव्याघ्र द्रोणो ह्यासीत्पुरःसरः २४
तेनापि रक्षिताः पार्थाः शिष्यत्वादिह संयुगे
स चापि निहतो वृद्धो धृष्टद्युम्नेन सत्वरम् २५
निहताभ्यां प्रधानाभ्यां ताभ्याममितविक्रम
त्वत्समं समरे योधं नान्यं पश्यामि चिन्तयन् २६
भवानेव तु नः शक्तो विजयाय न संशयः
पूर्वं मध्ये च पश्चाच्च तवैव विदितं हि तत् २७
स भवान्धुर्यवत्संख्ये धुरमुद्वोढुमर्हसि
अभिषेचय सेनान्ये स्वयमात्मानमात्मना २८
देवतानां यथा स्कन्दः सेनानीः प्रभुरव्ययः

तथा भवानिमां सेनां धार्तराष्ट्रीं बिभर्तु मे
जहि शत्रुगणान्सर्वान्महेन्द्र इव दानवान् २९
अवस्थितं रणे ज्ञात्वा पाण्डवास्त्वां महारथम्
द्रविष्यन्ति सपाञ्चाला विष्णुं दृष्ट्वेव दानवाः
तस्मात्त्वं पुरुषव्याघ्र प्रकर्षेथा महाचमूम् ३०
भवत्यवस्थिते यत्ते पाण्डवा गतचेतसः
भविष्यन्ति सहामात्याः पाञ्चालैः सृञ्जयैः सह ३१
यथा ह्यभ्युदितः सूर्यः प्रतपन्स्वेन तेजसा
व्यपोहति तमस्तीव्रं तथा शत्रून्व्यपोह नः ३२
कर्ण उवाच
उक्तमेतन्मया पूर्वं गान्धारे तव संनिधौ
जेष्यामि पाण्डवान्राजन्सपुत्रान्सजनार्दनान् ३३
सेनापतिर्भविष्यामि तवाहं नात्र संशयः
स्थिरो भव महाराज जितान्विद्धि च पाण्डवान् ३४
सञ्जय उवाच
एवमुक्तो महातेजास्ततो दुर्योधनो नृपः
उत्तस्थौ राजभिः सार्धं देवैरिव शतक्रतुः
सेनापत्येन सत्कर्तुं कर्णं स्कन्दमिवामराः ३५
ततोऽभिषिषिचुस्तूर्णं विधिदृष्टेन कर्मणा
दुर्योधनमुखा राजन्राजानो विजयैषिणः
शातकौम्भमयैः कुम्भैर्माहेयैश्चाभिमन्त्रितैः ३६
तोयपूर्णैर्विषाणैश्च द्वीपिखड्गमहर्षभैः
मणिमुक्तामयैश्चान्यैः पुण्यगन्धैस्तथौषधैः ३७
औदुम्बरे समासीनमासने क्षौमसंवृतम्
शास्त्रदृष्टेन विधिना संभारैश्च सुसंभृतैः ३८
जय पार्थान्सगोविन्दान्सानुगांस्त्वं महाहवे
इति तं बन्दिनः प्राहुर्द्विजाश्च भरतर्षभ ३९
जहि पार्थान्सपाञ्चालान्राधेय विजयाय नः
उद्यन्निव सदा भानुस्तमांस्युग्रैर्गभस्तिभिः ४०
न ह्यलं त्वद्विसृष्टानां शराणां ते सकेशवाः

कृतघ्नाः सूर्यरश्मीनां ज्वलतामिव दर्शने ४१
न हि पार्थाः सपाञ्चालाः स्थातुं शक्तास्तवाग्रतः
आत्तशस्त्रस्य समरे महेन्द्रस्येव दानवाः ४२
अभिषिक्तस्तु राधेयः प्रभया सोऽमितप्रभः
व्यत्यरिच्यत रूपेण दिवाकर इवापरः ४३
सेनापत्येन राधेयमभिषिच्य सुतस्तव
अमन्यत तदात्मानं कृतार्थं कालचोदितः ४४
कर्णोऽपि राजन्संप्राप्य सेनापत्यमरिंदमः
योगमाज्ञापयामास सूर्यस्योदयनं प्रति ४५
तव पुत्रैर्वृतः कर्णः शुशुभे तत्र भारत
देवैरिव यथा स्कन्दः संग्रामे तारकामये ४६
इति श्रीमहाभारते कर्णपर्वणि षष्ठोऽध्यायः ६

सप्तमोऽध्यायः

धृतराष्ट्र उवाच
सेनापत्यं तु संप्राप्य कर्णो वैकर्तनस्तदा
तथोक्तश्च स्वयं राज्ञा स्निग्धं भ्रातृसमं वचः १
योगमाज्ञाप्य सेनाया आदित्येऽभ्युदिते तदा
अकरोत्किं महाप्राज्ञस्तन्ममाचक्ष्व सञ्जय २
सञ्जय उवाच
कर्णस्य मतमाज्ञाय पुत्रस्ते भरतर्षभ
योगमाज्ञापयामास नान्दीतूर्यपुरः सरम् ३
महत्यपररात्रे तु तव पुत्रस्य मारिष
योगो योगेति सहसा प्रादुरासीन्महास्वनः ४
नागानां कल्पमानानां रथानां च वरूथिनाम्
संनह्यतां पदातीनां वाजिनां च विशां पते ५
क्रोशतां चापि योधानां त्वरितानां परस्परम्
बभूव तुमुलः शब्दो दिवस्पृक्सुमहांस्तदा ६
ततः श्वेतपताकेन बालार्काकारवाजिना
हेमपृष्ठेन धनुषा हस्तिकक्ष्येण केतुना ७

तूणेन शरपूर्णेन साङ्गदेन वरूथिना
शतघ्नीकिङ्किणीशक्तिशूलतोमरधारिणा ८
कार्मुकेणोपपन्नेन विमलादित्यवर्चसा
रथेनातिपताकेन सूतपुत्रो व्यदृश्यत ९
धमन्तं वारिजं तात हेमजालविभूषितम्
विधुन्वानं महच्चापं कार्तस्वरविभूषितम् १०
दृष्ट्वा कर्णं महेष्वासं रथस्थं रथिनां वरम्
भानुमन्तमिवोद्यन्तं तमो घ्नन्तं सहस्रशः ११
न भीष्मव्यसनं केचिन्नापि द्रोणस्य मारिष
नान्येषां पुरुषव्याघ्र मेनिरे तत्र कौरवाः १२
ततस्तु त्वरयन्योधाञ्शङ्खशब्देन मारिष
कर्णो निष्कासयामास कौरवाणां वरूथिनीम् १३
व्यूहं व्यूह्य महेष्वासो माकरं शत्रुतापनः
प्रत्युद्ययौ तथा कर्णः पाण्डवान्विजिगीषया १४
मकरस्य तु तुण्डे वै कर्णो राजन्व्यवस्थितः
नेत्राभ्यां शकुनिः शूर उलूकश्च महारथः १५
द्रोणपुत्रस्तु शिरसि ग्रीवायां सर्वसोदराः
मध्ये दुर्योधनो राजा बलेन महता वृतः १६
वामे पादे तु राजेन्द्र कृतवर्मा व्यवस्थितः
नारायणबलैर्युक्तो गोपालैर्युद्धदुर्मदः १७
पादे तु दक्षिणे राजन्गौतमः सत्यविक्रमः
त्रिगर्तैश्च महेष्वासैर्दाक्षिणात्यैश्च संवृतः १८
अनुपादस्तु यो वामस्तत्र शल्यो व्यवस्थितः
महत्या सेनया सार्धं मद्रदेशसमुत्थया १९
दक्षिणे तु महाराज सुषेणः सत्यसंगरः
वृतो रथसहस्रैश्च दन्तिनां च शतैस्तथा २०
पुच्छे आस्तां महावीरौ भ्रातरौ पार्थिवौ तदा
चित्रसेनश्च चित्रश्च महत्या सेनया वृतौ २१
ततः प्रयाते राजेन्द्र कर्णे नरवरोत्तमे
धनंजयमभिप्रेक्ष्य धर्मराजोऽब्रवीदिदम् २२

पश्य पार्थ महासेनां धार्तराष्ट्रस्य संयुगे
कर्णेन निर्मितां वीर गुप्तां वीरैर्महारथैः २३
हतवीरतमा ह्येषा धार्तराष्ट्री महाचमूः
फल्गुशेषा महाबाहो तृणैस्तुल्या मता मम २४
एको ह्यत्र महेष्वासः सूतपुत्रो व्यवस्थितः
सदेवासुरगन्धर्वैः सकिन्नरमहोरगैः
चराचरैस्त्रिभिर्लोकैर्योऽजय्यो रथिनां वरः २५
तं हत्वाद्य महाबाहो विजयस्तव फल्गुन
उद्धृतश्च भवेच्छल्यो मम द्वादशवार्षिकः
एवं ज्ञात्वा महाबाहो व्यूहं व्यूह यथेच्छसि २६
भ्रातुस्तद्वचनं श्रुत्वा पाण्डवः श्वेतवाहनः
अर्धचन्द्रेण व्यूहेन प्रत्यव्यूहत तां चमूम् २७
वामपार्श्वेऽभवद्राजन्भीमसेनो व्यवस्थितः
दक्षिणे च महेष्वासो धृष्टद्युम्नो महाबलः २८
मध्ये व्यूहस्य साक्षात्तु पाण्डवः कृष्णसारथिः
नकुलः सहदेवश्च धर्मराजश्च पृष्ठतः २९
चक्ररक्षौ तु पाञ्चाल्यौ युधामन्यूत्तमौजसौ
नार्जुनं जहतुर्युद्धे पाल्यमानौ किरीटिना ३०
शेषा नृपतयो वीराः स्थिता व्यूहस्य दंशिताः
यथाभावं यथोत्साहं यथासत्त्वं च भारत ३१
एवमेतन्महाव्यूहं व्यूह्य भारत पाण्डवाः
तावकाश्च महेष्वासा युद्धायैव मनो दधुः ३२
दृष्ट्वा व्यूढां तव चमूं सूतपुत्रेण संयुगे
निहतान्पाण्डवान्मेने तव पुत्रः सहान्वयः ३३
तथैव पाण्डवीं सेनां व्यूढां दृष्ट्वा युधिष्ठिरः
धार्तराष्ट्रान्हतान्मेने सकर्णान्वै जनाधिप ३४
ततः शङ्खाश्च भेर्यश्च पणवानकगोमुखाः
सहसैवाभ्यहन्यन्त सशब्दाश्च समन्ततः ३५
सेनयोरुभयो राजन्प्रावाद्यन्त महास्वनाः
सिंहनादश्च संजज्ञे शूराणां जयगृद्धिनाम् ३६

हयहेषितशब्दाश्च वारणानां च बृंहितम्
रथनेमिस्वनाश्चोग्राः संबभूवुर्जनाधिप ३७
न द्रोणव्यसनं कश्चिज्जानीते भरतर्षभ
दृष्ट्वा कर्णं महेष्वासं मुखे व्यूहस्य दंशितम् ३८
उभे सेने महासत्त्वे प्रहृष्टनरकुञ्जरे
योद्धुकामे स्थिते राजन्हन्तुमन्योन्यमञ्जसा ३९
तत्र यत्तौ सुसंरब्धौ दृष्ट्वान्योन्यं व्यवस्थितौ
अनीकमध्ये राजेन्द्र रेजतुः कर्णपाण्डवौ ४०
नृत्यमाने तु ते सेने समेयातां परस्परम्
तयोः पक्षैः प्रपक्षैश्च निर्जग्मुर्वै युयुत्सवः ४१
ततः प्रववृते युद्धं नरवारणवाजिनाम्
रथिनां च महाराज अन्योन्यं निघ्नतां दृढम् ४२
इति श्रीमहाभारते कर्णपर्वणि सप्तमोऽध्यायः

## अष्टमोऽध्यायः

सञ्जय उवाच
ते सेनेऽन्योन्यमासाद्य प्रहृष्टाश्वनरद्विपे
बृहत्यौ संप्रजह्राते देवासुरचमूपमे १
ततो गजा रथाश्चाश्वाः पत्तयश्च महाहवे
संप्रहारं परं चक्रुर्देहपाप्मप्रणाशनम् २
पूर्णचन्द्रार्कपद्मानां कान्तित्विड्गन्धतः समैः
उत्तमाङ्गैर्नृसिंहानां नृसिंहास्तस्तरुर्महीम् ३
अर्धचन्द्रैस्तथा भल्लैः क्षुरप्रैरसिपट्टिशैः
परश्वधैश्चाप्य कृन्तन्नुत्तमाङ्गानि युध्यताम् ४
व्यायतायतबाहूनां व्यायतायतबाहुभिः
व्यायता बाहवः पेतुश्छिन्नमुष्ट्यायुधाङ्गदाः ५
तैः स्फुरद्भिर्मही भाति रक्ताङ्गुलितलैस्तदा
गरुडप्रहतैरुग्रैः पञ्चास्यैरिव पन्नगैः ६
हयस्यन्दननागेभ्यः पेतुर्वीरा द्विषद्धताः
विमानेभ्यो यथा क्षीणे पुण्ये स्वर्गसदस्तथा ७

गदाभिरन्यैर्गुर्वीभिः परिघैर्मुसलैरपि
पोथिताः शतशः पेतुर्वीरा वीरतरै रणे ८
रथा रथैर्विनिहता मत्ता मत्तैर्द्विपैर्द्विपाः
सादिनः सादिभिश्चैव तस्मिन्परमसंकुले ९
रथा वररथैर्नागैरश्वारोहाश्च पत्तिभिः
अश्वारोहैः पदाताश्च निहता युधि शेरते १०
रथाश्वपत्तयो नागै रथैर्नागाश्च पत्तयः
रथपत्तिद्विपाश्चाश्वैर्नृभिश्चाश्वरथद्विपाः ११
रथाश्वेभनराणां च नराश्वेभरथैः कृतम्
पाणिपादैश्च शस्त्रैश्च रथैश्च कदनं महत् १२
तथा तस्मिन्बले शूरैर्वध्यमाने हतेऽपि च
अस्मानभ्यागमन्पार्था वृकोदरपुरोगमाः १३
धृष्टद्युम्नः शिखण्डी च द्रौपदेयाः प्रभद्रकाः
सात्यकिश्चेकितानश्च द्रविडैः सैनिकैः सह १४
भृता वित्तेन महता पाण्ड्याश्चौड्राः सकेरलाः
व्यूढोरस्का दीर्घभुजाः प्रांशवः प्रियदर्शनाः १५
आपीडिनो रक्तदन्ता मत्तमातङ्गविक्रमाः
नानाविरागवसना गन्धचूर्णावचूर्णिताः १६
बद्धासयः पाशहस्ता वारणप्रतिवारणाः
समानमृत्यवो राजन्ननीकस्थाः परस्परम् १७
कलापिनश्चापहस्ता दीर्घकेशाः प्रियाहवाः
पत्तयः सात्यकेरन्ध्रा घोररूपपराक्रमाः १८
अथापरे पुनः शूराश्चेदिपाञ्चालकेकयाः
करूषाः कोसलाः काश्या मागधाश्चापि दुद्रुवुः १९
तेषां रथाश्च नागाश्च प्रवराश्चापि पत्तयः
नानाविधरवैर्हृष्टा नृत्यन्ति च हसन्ति च २०
तस्य सैन्यस्य महतो महामात्रवरैर्वृतः
मध्यं वृकोदरोऽभ्यागात्त्वदीयं नागधूर्गतः २१
स नागप्रवरोऽत्युग्रो विधिवत्कल्पितो बभौ
उदयाद्र्यग्र्यभवनं यथाभ्युदितभास्करम् २२

तस्यायसं वर्मवरं वररत्नविभूषितम्
तारोद्भासस्य नभसः शारदस्य समत्विषम् २३
स तोमरप्रासकरश्चारुमौलि स्वलंकृतः
चरन्मध्यंदिनार्काभस्तेजसा व्यदहद्रिपून् २४
तं दृष्ट्वा द्विरदं दूरात्क्षेमधूर्तिर्द्विपस्थितः
आह्वयानोऽभिदुद्राव प्रमनाः प्रमनस्तरम् २५
तयोः समभवद्युद्धं द्विपयोरुग्ररूपयोः
यदृच्छया द्रुमवतोर्महापर्वतयोरिव २६
संसक्तनागौ तौ वीरौ तोमरैरितरेतरम्
बलवत्सूर्यरश्म्याभैर्भित्त्वा भित्त्वा विनेदतुः २७
व्यपसृत्य तु नागाभ्यां मण्डलानि विचेरतुः
प्रगृह्य चैव धनुषी जघ्नतुर्वै परस्परम् २८
क्ष्वेडितास्फोटितरवैर्बाणशब्दैश्च सर्वशः
तौ जनान्हर्षयित्वा च सिंहनादान्प्रचक्रतुः २९
समुद्यतकराभ्यां तौ द्विपाभ्यां कृतिनावुभौ
वातोद्धूतपताकाभ्यां युयुधाते महाबलौ ३०
तावन्योन्यस्य धनुषी छित्त्वान्योन्यं विनेदतुः
शक्तितोमरवर्षेण प्रावृण्मेघाविवाम्बुभिः ३१
क्षेमधूर्तिस्तदा भीमं तोमरेण स्तनान्तरे
निर्बिभेद तु वेगेन षड्भिश्चाप्यपरैर्नदन् ३२
स भीमसेनः शुशुभे तोमरैरङ्गमाश्रितैः
क्रोधदीप्तवपुर्मेघैः सप्तसप्तिरिवांशुमान् ३३
ततो भास्करवर्णाभमञ्जोगतिमयस्मयम्
ससर्ज तोमरं भीमः प्रत्यमित्राय यत्नवान् ३४
ततः कुलूताधिपतिश्चापमायम्य सायकैः
दशभिस्तोमरं छित्त्वा शक्त्या विव्याध पाण्डवम् ३५
अथ कार्मुकमादाय महाजलदनिस्वनम्
रिपोरभ्यर्दयन्नागमुन्मदः पाण्डवः शरैः ३६
स शरौघार्दितो नागो भीमसेनेन संयुगे
निगृह्यमाणो नातिष्ठद्वातध्वस्त इवाम्बुदः ३७

तमभ्यधावद्द्विरदं भीमसेनस्य नागराट्
महावातेरितं मेघं वातोद्धूत इवाम्बुदः ३८
संनिवर्त्यात्मनो नागं क्षेमधूर्तिः प्रयत्नतः
विव्याधाभिद्रुतं बाणैर्भीमसेनं सकुञ्जरम् ३९
ततः साधुविसृष्टेन क्षुरेण पुरुषर्षभः
छित्त्वा शरासनं शत्रोर्नागमामित्रमार्दयत् ४०
ततः खजाकया भीमं क्षेमधूर्तिः पराभिनत्
जघान चास्य द्विरदं नाराचैः सर्वमर्मसु ४१
पुरा नागस्य पतनादवप्लुत्य स्थितो महीम्
भीमसेनो रिपोर्नागं गदया समपोथयत् ४२
तस्मात्प्रमथितान्नागात्क्षेमधूर्तिमवद्रुतम्
उद्यतासिमुपायान्तं गदयाहन्वृकोदरः ४३
स पपात हतः सासिर्व्यसुः स्वमभितो द्विपम्
वज्रप्ररुग्णमचलं सिंहो वज्रहतो यथा ४४
निहतं नृपतिं दृष्ट्वा कुलूतानां यशस्करम्
प्राद्रवद्व्यथिता सेना त्वदीया भरतर्षभ ४५
इति श्रीमहाभारते कर्णपर्वणि अष्टमोऽध्यायः ८

## नवमोऽध्यायः

सञ्जय उवाच
ततः कर्णो महेष्वासः पाण्डवानामनीकिनीम्
जघान समरे शूरः शरैः संनतपर्वभिः १
तथैव पाण्डवा राजंस्तव पुत्रस्य वाहिनीम्
कर्णस्य प्रमुखे क्रुद्धा विनिजघ्नुर्महारथाः २
कर्णो राजन्महाबाहुर्न्यवधीत्पाण्डवीं चमूम्
नाराचैरर्करश्म्याभैः कर्मारपरिमार्जितैः ३
तत्र भारत कर्णेन नाराचैस्ताडिता गजाः
नेदुः सेदुश्च मम्लुश्च बभ्रमुश्च दिशो दश ४
वध्यमाने बले तस्मिन्सूतपुत्रेण मारिष
नकुलोऽभ्यद्रवत्तूर्णं सूतपुत्रं महारणे ५

भीमसेनस्तथा द्रौणिं कुर्वाणं कर्म दुष्करम्
विन्दानुविन्दौ कैकेयौ सात्यकिः समवारयत् ६
श्रुतकर्माणमायान्तं चित्रसेनो महीपतिः
प्रतिविन्ध्यं तथा चित्रश्चित्रकेतनकार्मुकः ७
दुर्योधनस्तु राजानं धर्मपुत्रं युधिष्ठिरम्
संशप्तकगणान्क्रुद्धो अभ्यधावद्धनंजयः ८
धृष्टद्युम्नः कृपं चाथ तस्मिन्वीरवरक्षये
शिखण्डी कृतवर्माणं समासादयदच्युतम् ९
श्रुतकीर्तिस्तथा शल्यं माद्रीपुत्रः सुतं तव
दुःशासनं महाराज सहदेवः प्रतापवान् १०
केकयौ सात्यकिं युद्धे शरवर्षेण भास्वता
सात्यकिः केकयौ चैव छादयामास भारत ११
तावेनं भ्रातरौ वीरं जघ्नतुर्हृदये भृशम्
विषाणाभ्यां यथा नागौ प्रतिनागं महाहवे १२
शरसंभिन्नवर्माणौ तावुभौ भ्रातरौ रणे
सात्यकिं सत्यकर्माणं राजन्विव्यधतुः शरैः १३
तौ सात्यकिर्महाराज प्रहसन्सर्वतोदिशम्
छादयञ्शरवर्षेण वारयामास भारत १४
वार्यमाणौ ततस्तौ तु शैनेयशरवृष्टिभिः
शैनेयस्य रथं तूर्णं छादयामासतुः शरैः १५
तयोस्तु धनुषी चित्रे छित्त्वा शौरिर्महाहवे
अथ तौ सायकैस्तीक्ष्णैश्छादयामास दुःसहैः १६
अथान्ये धनुषी मृष्टे प्रगृह्य च महाशरान्
सात्यकिं पूरयन्तौ तौ चेरतुर्लघु सुष्ठु च १७
ताभ्यां मुक्ता महाबाणाः कङ्कबर्हिणवाससः
द्योतयन्तो दिशः सर्वाः संपेतुः स्वर्णभूषणाः १८
बाणान्धकारमभवत्तयो राजन्महाहवे
अन्योन्यस्य धनुश्चैव चिच्छिदुस्ते महारथाः १९
ततः क्रुद्धो महाराज सात्वतो युद्धदुर्मदः
धनुरन्यत्समादाय सज्यं कृत्वा च संयुगे

क्षुरप्रेण सुतीक्ष्णेन अनुविन्दशिरोऽहरत् २०
तच्छिरो न्यपतद्भूमौ कुण्डलोत्पीडितं महत्
शम्बरस्य शिरो यद्वन्निहतस्य महारणे
शोषयन्केकयान्सर्वाञ्जगामाशु वसुंधराम् २१
तं दृष्ट्वा निहतं शूरं भ्राता तस्य महारथः
सज्यमन्यद्धनुः कृत्वा शैनेयं प्रत्यवारयत् २२
स शक्त्या सात्यकिं विद्ध्वा स्वर्णपुङ्खैः शिलाशितैः
ननाद बलवन्नादं तिष्ठ तिष्ठेति चाब्रवीत् २३
स सात्यकिं पुनः क्रुद्धः केकयानां महारथः
शरैरग्निशिखाकारैर्बाह्वोरुरसि चार्दयत् २४
स शरैः क्षतसर्वाङ्गः सात्वतः सत्त्वकोविदः
रराज समरे राजन्सपत्र इव किंशुकः २५
सात्यकिः समरे विद्धः केकयेन महात्मना
केकयं पञ्चविंशत्या विव्याध प्रहसन्निव २६
शतचन्द्रचिते गृह्य चर्मणी सुभुजौ तु तौ
व्यरोचेतां महारङ्गे निस्त्रिंशवरधारिणौ
यथा देवासुरे युद्धे जम्भशक्रौ महाबलौ २७
मण्डलानि ततस्तौ च विचरन्तौ महारणे
अन्योन्यमसिभिस्तूर्णं समाजघ्नतुराहवे २८
केकयस्य ततश्चर्म द्विधा चिच्छेद सात्वतः
सात्यकेश्च तथैवासौ चर्म चिच्छेद पार्थिवः २९
चर्म च्छित्त्वा तु कैकेयस्तारागणशतैर्वृतम्
चचार मण्डलान्येव गतप्रत्यागतानि च ३०
तं चरन्तं महारङ्गे निस्त्रिंशवरधारिणम्
अपहस्तेन चिच्छेद शैनेयस्त्वरयान्वितः ३१
सवर्मा केकयो राजन्द्विधा छिन्नो महाहवे
निपपात महेष्वासो वज्रनुन्न इवाचलः ३२
तं निहत्य रणे शूरः शैनेयो रथसत्तमः
युधामन्यो रथं तूर्णमारुरोह परंतपः ३३
ततोऽन्य रथमास्थाय विधिवत्कल्पितं पुनः

केकयानां महत्सैन्यं व्यधमत्सात्यकिः शरैः ३४
सा वध्यमाना समरे केकयस्य महाचमूः
तमुत्सृज्य रथं शत्रुं प्रदुद्राव दिशो दश ३५
इति श्रीमहाभारते कर्णपर्वणि नवमोऽध्यायः ९

## दशमोऽध्यायः

सञ्जय उवाच
श्रुतकर्मा महाराज चित्रसेनं महीपतिम्
आजघ्ने समरे क्रुद्धः पञ्चाशद्भिः शिलीमुखैः १
अभिसारस्तु तं राजा नवभिर्निशितैः शरैः
श्रुतकर्माणमाहत्य सूतं विव्याध पञ्चभिः २
श्रुतकर्मा ततः क्रुद्धश्चित्रसेनं चमूमुखे
नाराचेन सुतीक्ष्णेन मर्मदेशे समर्दयत् ३
एतस्मिन्नन्तरे चैनं श्रुतकीर्तिर्महायशाः
नवत्या जगतीपालं छादयामास पत्रिभिः ४
प्रतिलभ्य ततः संज्ञां चित्रसेनो महारथः
धनुश्चिच्छेद भल्लेन तं च विव्याध सप्तभिः ५
सोऽन्यत्कार्मुकमादाय वेगघ्नं रुक्मभूषणम्
चित्ररूपतरं चक्रे चित्रसेनं शरोर्मिभिः ६
स शरैश्चित्रितो राजंश्चित्रमाल्यधरो युवा
युवेव समशोभत्स गोष्ठीमध्ये स्वलंकृतः ७
श्रुतकर्माणमथ वै नाराचेन स्तनान्तरे
बिभेद समरे क्रुद्धस्तिष्ठ तिष्ठेति चाब्रवीत् ८
श्रुतकर्मापि समरे नराचेन समर्दितः
सुस्राव रुधिरं भूरि गैरिकाम्भ इवाचलः ९
ततः स रुधिराक्ताङ्गो रुधिरेण कृतच्छविः
रराज समरे राजन्सपुष्प इव किंशुकः १०
श्रुतकर्मा ततो राजञ्शत्रूणां समभिद्रुतः
शत्रुसंवरणं कृत्वा द्विधा चिच्छेद कार्मुकम् ११
अथैनं छिन्नधन्वानं नाराचानां त्रिभिः शतैः

विव्याध भरतश्रेष्ठ श्रुतकर्मा महायशाः १२
ततोऽपरेण भल्लेन भृशं तीक्ष्णेन सत्वरः
जहार सशिरस्त्राणं शिरस्तस्य महात्मनः १३
तच्छिरो न्यपतद्भूमौ सुमहच्चित्रवर्मणः
यदृच्छया यथा चन्द्रश्च्युतः स्वर्गान्महीतले १४
राजानं निहतं दृष्ट्वा अभिसारं च मारिष
अभ्यद्रवन्त वेगेन चित्रसेनस्य सैनिकाः १५
ततः क्रुद्धो महेष्वासस्तत्सैन्यं प्राद्रवच्छरैः
अन्तकाले यथा क्रुद्धः सर्वभूतानि प्रेतराट्
द्रावयन्निषुभिस्तूर्णं श्रुतकर्मा व्यरोचत १६
प्रतिविन्ध्यस्ततश्चित्रं भित्त्वा पञ्चभिराशुगैः
सारथिं त्रिभिरानर्च्छद्ध्वजमेकेषुणा ततः १७
तं चित्रो नवभिर्भल्लैर्बाह्वोरुरसि चार्दयत्
स्वर्णपुङ्खैः शीलाधौतैः कङ्कबर्हिणवाजितैः १८
प्रतिविन्ध्यो धनुस्तस्य छित्त्वा भारत सायकैः
पञ्चभिर्निशितैर्बाणैरथैनं स्त्रंपजघ्निवान् १९
ततः शक्तिं महाराज हेमदण्डां दुरासदाम्
प्राहिणोत्तव पुत्राय घोरामग्निशिखामिव २०
तामापतन्तीं सहसा शक्तिमुल्कामिवाम्बरात्
द्विधा चिच्छेद समरे प्रतिविन्ध्यो हसन्निव २१
सा पपात तदा छिन्ना प्रतिविन्ध्यशरैः शितैः
युगान्ते सर्वभूतानि त्रासयन्ती यथाशनिः २२
शक्तिं तां प्रहतां दृष्ट्वा चित्रो गृह्य महागदाम्
प्रतिविन्ध्याय चिक्षेप रुक्मजालविभूषिताम् २३
सा जघान हयांस्तस्य सारथिं च महारणे
रथं प्रमृद्य वेगेन धरणीमन्वपद्यत २४
एतस्मिन्नेव काले तु रथादाप्लुत्य भारत
शक्तिं चिक्षेप चित्राय स्वर्णघण्टामलंकृताम् २५
तामापतन्तीं जग्राह चित्रो राजन्महामनाः
ततस्तामेव चिक्षेप प्रतिविन्ध्याय भारत २६

समासाद्य रणे शूरं प्रतिविन्ध्यं महाप्रभा
निर्भिद्य दक्षिणं बाहुं निपपात महीतले
पतिताभासयच्चैव तं देशमशनिर्यथा २७
प्रतिविन्ध्यस्ततो राजंस्तोमरं हेमभूषितम्
प्रेषयामास संक्रुद्धश्चित्रस्य वधकाम्यया २८
स तस्य देहावरणं भित्त्वा हृदयमेव च
जगाम धरणीं तूर्णं महोरग इवाशयम् २९
स पपात तदा राजंस्तोमरेण समाहतः
प्रसार्य विपुलौ बाहू पीनौ परिघसंनिभौ ३०
चित्रं संप्रेक्ष्य निहतं तावका रणशोभिनः
अभ्यद्रवन्त वेगेन प्रतिविन्ध्यं समन्ततः ३१
सृजन्तो विविधान्बाणाञ्शतघ्नीश्च सकिङ्किणीः
त एनं छादयामासुः सूर्यमभ्रगणा इव ३२
तानपास्य महाबाहुः शरजालेन संयुगे
व्यद्रावयत्तव चमूं वज्रहस्त इवासुरीम् ३३
ते वध्यमानाः समरे तावकाः पाण्डवैर्नृप
विप्रकीर्यन्त सहसा वातनुन्ना घना इव ३४
विप्रद्रुते बले तस्मिन्वध्यमाने समन्ततः
द्रौणिरेकोऽभ्ययात्तूर्णं भीमसेनं महाबलम् ३५
ततः समागमो घोरो बभूव सहसा तयोः
यथा देवासुरे युद्धे वृत्रवासवयोरभूत् ३६
इति श्रीमहाभारते कर्णपर्वणि दशमोऽध्यायः १०

## एकादशोऽध्यायः

सञ्जय उवाच
भीमसेनं ततो द्रौणी राजन्विव्याध पत्रिणा
त्वरया परया युक्तो दर्शयन्नस्त्रलाघवम् १
अथैनं पुनराजघ्ने नवत्या निशितैः शरैः
सर्वमर्माणि संप्रेक्ष्य मर्मज्ञो लघुहस्तवत् २
भीमसेनः समाकीर्णो द्रौणिना निशितैः शरैः

रराज समरे राजन्रश्मिवानिव भास्करः ३
ततः शरसहस्रेण सुप्रयुक्तेन पाण्डवः
द्रोणपुत्रमवच्छाद्य सिंहनादममुञ्चत ४
शरैः शरांस्ततो द्रौणिः संवार्य युधि पाण्डवम्
ललाटेऽभ्यहनद्राजन्नाराचेन स्मयन्निव ५
ललाटस्थं ततो बाणं धारयामास पाण्डवः
यथा शृङ्गं वने दृप्तः खड्गो धारयते नृप ६
ततो द्रौणिं रणे भीमो यतमानं पराक्रमी
त्रिभिर्विव्याध नाराचैर्ललाटे विस्मयन्निव ७
ललाटस्थैस्ततो बाणैर्ब्राह्मणः स व्यरोचत
प्रावृषीव यथा सिक्तस्त्रिशृङ्गः पर्वतोत्तमः ८
ततः शरशतैर्द्रौणिमर्दयामास पाण्डवः
न चैनं कम्पयामास मातरिश्वेव पर्वतम् ९
तथैव पाण्डवं युद्धे द्रौणिः शरशतैः शितैः
नाकम्पयत संहृष्टो वार्योघ इव पर्वतम् १०
तावन्योन्यं शरैर्घोरैश्छादयानौ महारथौ
रथचर्यागतौ शूरौ शुशुभाते रणोत्कटौ ११
आदित्याविव संदीप्तौ लोकक्षयकरावुभौ
स्वरश्मिभिरिवान्योन्यं तापयन्तौ शरोत्तमैः १२
कृतप्रतिकृते यत्नं कुर्वाणौ च महारणे
कृतप्रतिकृते यत्नं चक्राते तावभीतवत् १३
व्याघ्राविव च संग्रामे चेरतुस्तौ महारथौ
शरदंष्ट्रौ दुराधर्षौ चापव्यात्तौ भयानकौ १४
अभूतां तावदृश्यौ च शरजालैः समन्ततः
मेघजालैरिव च्छन्नौ गगने चन्द्रभास्करौ १५
प्रकाशौ च मुहूर्तेन तत्रैवास्तामरिंदमौ
विमुक्तौ मेघजालेन शशिसूर्यौ यथा दिवि १६
अपसव्यं ततश्चक्रे द्रौणिस्तत्र वृकोदरम्
किरञ्शरशतैरुग्रैर्धाराभिरिव पर्वतम् १७
न तु तन्ममृषे भीमः शत्रोर्विजयलक्षणम्

प्रतिचक्रे च तं राजन्पाण्डवोऽप्यपसव्यतः १८
मण्डलानां विभागेषु गतप्रत्यागतेषु च
बभूव तुमुलं युद्धं तयोस्तत्र महामृधे १९
चरित्वा विविधान्मार्गान्मण्डलं स्थानमेव च
शरैः पूर्णायतोत्सृष्टैरन्योन्यमभिजघ्नतुः २०
अन्योन्यस्य वधे यत्नं चक्रतुस्तौ महारथौ
ईषतुर्विरथं चैव कर्तुमन्योन्यमाहवे २१
ततो द्रौणिर्महास्त्राणि प्रादुश्चक्रे महारथः
तान्यस्त्रैरेव समरे प्रतिजघ्नेऽस्य पाण्डवः २२
ततो घोरं महाराज अस्त्रयुद्धमवर्तत
ग्रहयुद्धं यथा घोरं प्रजासंहरणे अभूत् २३
ते बाणाः समसज्जन्त क्षिप्तास्ताभ्यां तु भारत
द्योतयन्तो दिशः सर्वास्तच्च सैन्यं समन्ततः २४
बाणसंघावृतं घोरमाकाशं समपद्यत
उल्कापातकृतं यद्वत्प्रजानां संक्षये नृप २५
बाणाभिघातात्संजज्ञे तत्र भारत पावकः
सविस्फुलिङ्गो दीप्तार्चिः सोऽदहद्वाहिनीद्वयम् २६
तत्र सिद्धा महाराज संपतन्तोऽब्रुवन्वचः
अति युद्धानि सर्वाणि युद्धमेतत्ततोऽधिकम् २७
सर्वयुद्धानि चैतस्य कलां नार्हन्ति षोडशीम्
नैतादृशं पुनर्युद्धं न भूतं न भविष्यति २८
अहो ज्ञानेन संयुक्तावुभौ चोग्रपराक्रमौ
अहो भीमे बलं भीममेतयोश्च कृतास्त्रता २९
अहो वीर्यस्य सारत्वमहो सौष्ठवमेतयोः
स्थितावेतौ हि समरे कालान्तकयमोपमौ ३०
रुद्रौ द्वाविव संभूतौ यथा द्वाविव भास्करौ
यमौ वा पुरुषव्याघ्रौ घोररूपाविमौ रणे ३१
श्रूयन्ते स्म तदा वाचः सिद्धानां वै मुहुर्मुहुः
सिंहनादश्च संजज्ञे समेतानां दिवौकसाम्
अद्भुतं चाप्यचिन्त्यं च दृष्ट्वा कर्म तयोर्मृधे ३२

तौ शूरौ समरे राजन्परस्परकृतागसौ
परस्परमुदैक्षेतां क्रोधादुद्वृत्य चक्षुषी ३३
क्रोधरक्तेक्षणौ तौ तु क्रोधात्प्रस्फुरिताधरौ
क्रोधात्संदष्टदशनौ संदष्टदशनच्छदौ ३४
अन्योन्यं छादयन्तौ स्म शरवृष्ट्या महारथौ
शराम्बुधारौ समरे शस्त्रविद्युत्प्रकाशिनौ ३५
तावन्योन्यं ध्वजं विद्ध्वा सारथी च महारथौ
अन्योन्यस्य हयान्विद्ध्वा बिभिदाते परस्परम् ३६
ततः क्रुद्धौ महाराज बाणौ गृह्य महाहवे
उभौ चिक्षिपतुस्तूर्णमन्योन्यस्य वधैषिणौ ३७
तौ सायकौ महाराज द्योतमानौ चमूमुखे
आजघ्नाते समासाद्य वज्रवेगौ दुरासदौ ३८
तौ परस्परवेगाच्च शराभ्यां च भृशाहतौ
निपेततुर्महावीरौ स्वरथोपस्थयोस्तदा ३९
ततस्तु सारथिर्ज्ञात्वा द्रोणपुत्रमचेतनम्
अपोवाह रणाद्राजन्सर्वक्षत्रस्य पश्यतः ४०
तथैव पाण्डवं राजन्विह्वलन्तं मुहुर्मुहुः
अपोवाह रथेनाजौ सारथिः शत्रुतापनम् ४१
इति श्रीमहाभारते कर्णपर्वणि एकादशोऽध्यायः ११

## द्वादशोऽध्यायः

धृतराष्ट्र उवाच
यथा संशप्तकैः सार्धमर्जुनस्याभवद्रणः
अन्येषां च मदीयानां पाण्डवैस्तद्ब्रवीहि मे १
सञ्जय उवाच
शृणु राजन्यथावृत्तं संग्रामं ब्रुवतो मम
वीराणां शत्रुभिः सार्धं देहपाप्मप्रणाशनम् २
पार्थः संशप्तकगणं प्रविश्यार्णवसंनिभम्
व्यक्षोभयदमित्रघ्नो महावात इवार्णवम् ३
शिरांस्युन्मथ्य वीराणां शितैर्भल्लैर्धनंजयः

पूर्णचन्द्राभवक्त्राणि स्वक्षिभ्रूदशनानि च
संतस्तार क्षितिं क्षिप्रं विनालैर्नलिनैरिव ४
सुवृत्तानायतान्पुष्टांश्चन्दनागुरुभूषितान्
सायुधान्सतनुत्राणान्पञ्चास्योरगसंनिभान्
बाहून्क्षुरैरमित्राणां विचकर्तार्जुनो रणे ५
धुर्यान्धुर्यतरान्सूतान्ध्वजांश्चापानि सायकान्
पाणीनरत्नीनसकृद्भल्लैश्चिच्छेद पाण्डवः ६
द्विपान्हयान्रथांश्चैव सारोहानर्जुनो रणे
शरैरनेकसाहस्रै राजन्निन्ये यमक्षयम् ७
तं प्रवीरं प्रतीयाता नर्दमाना इवर्षभाः
वाशितार्थमभिक्रुद्धा हुंकृत्वा चाभिदुद्रुवुः
निघ्नन्तमभिजघ्नुस्ते शरैः शृङ्गैरिवर्षभाः ८
तस्य तेषां च तद्युद्धमभवल्लोमहर्षणम्
त्रैलोक्यविजये यादृग्दैत्यानां सह वज्रिणा ९
अस्त्रैरस्त्राणि संवार्य द्विषतां सर्वतोऽजुनः
इषुभिर्बहुभिस्तूर्णं विद्ध्वा प्राणान्नरास सः १०
छिन्नत्रिवेणुचक्राक्षान्हतयोधाश्वसारथीन्
विध्वस्तायुधतूणीरान्समुन्मथितकेतनान् ११
संछिन्नयोक्त्ररश्मीकान्वित्रिवेणून्विकूबरान्
विध्वस्तबन्धुरयुगान्विशस्तायुधमण्डलान्
रथान्विशकलीकुर्वन्महाभ्राणीव मारुतः १२
विस्मापयन्प्रेक्षणीयं द्विषतां भयवर्धनम्
महारथसहस्रस्य समं कर्मार्जुनोऽकरोत् १३
सिद्धदेवर्षिसंघाश्च चारणाश्चैव तुष्टुवुः
देवदुन्दुभयो नेदुः पुष्पवर्षाणि चापतन्
केशवार्जुनयोर्मूर्ध्नि प्राह वाक्चाशरीरिणी १४
चन्द्रार्कानिलवह्नीनां कान्तिदीप्तिबलद्युतीः
यौ यदा बिभ्रतुर्वीरौ ताविमौ केशवार्जुनौ १५
ब्रह्मेशानाविवाजय्यौ वीरावेकरथे स्थितौ
सर्वभूतवरौ वीरौ नरनारायणावुभौ १६

इत्येतन्महदाश्चर्यं दृष्ट्वा श्रुत्वा च भारत
अश्वत्थामा सुसंयत्तः कृष्णावभ्यद्रवद्रणे १७
अथ पाण्डवमस्यन्तं यमकालान्तकाञ्शरान्
सेषुणा पाणिनाहूय हसन्द्रौणिरथाब्रवीत् १८
यदि मां मन्यसे वीर प्राप्तमर्हमिवातिथिम्
ततः सर्वात्मनाद्य त्वं युद्धातिथ्यं प्रयच्छ मे १९
एवमाचार्यपुत्रेण समाहूतो युयुत्सया
बहुमेनेऽजुनोऽत्मानमिदं चाह जनार्दनम् २०
संशप्तकाश्च मे वध्या द्रौणिराह्वयते च माम्
यदत्रानन्तरं प्राप्तं प्रशाधि त्वं महाभुज २१
एवमुक्तोऽवहत्पार्थं कृष्णो द्रोणात्मजान्तिकम्
जैत्रेण विधिनाहूतं वायुरिन्द्रमिवाध्वरे २२
तमामन्त्र्यैकमनसा केशवो द्रौणिमब्रवीत्
अश्वत्थामन्स्थिरो भूत्वा प्रहराशु सहस्व च २३
निर्वेष्टुं भर्तृपिण्डं हि कालोऽयमुपजीविनाम्
सूक्ष्मो विवादो विप्राणां स्थूलौ क्षात्रौ जयाजयौ २४
यां न संक्षमसे मोहाद्दिव्यां पार्थस्य सत्क्रियाम्
तामाप्तुमिच्छन्युध्यस्व स्थिरो भूत्वाद्य पाण्डवम् २५
इत्युक्तो वासुदेवेन तथेत्युक्त्वा द्विजोत्तमः
विव्याध केशवं षष्ठ्या नाराचैरर्जुनं त्रिभिः २६
तस्यार्जुनः सुसंक्रुद्धस्त्रिभिर्भल्लैः शरासनम्
चिच्छेदाथान्यदादत्त द्रौणिर्घोरतरं धनुः २७
सज्यं कृत्वा निमेषात्तद्विव्याधार्जुनकेशवौ
त्रिभिः शरैर्वासुदेवं सहस्रेण च पाण्डवम् २८
ततः शरसहस्राणि प्रयुतान्यर्बुदानि च
ससृजे द्रौणिरायस्तः संस्तभ्य च रणेऽजुनम् २९
इषुधेर्धनुषो ज्याया अङ्गुलीभ्यश्च मारिष
बाह्वोः कराभ्यामुरसो वदनघ्राणनेत्रतः ३०
कर्णाभ्यां शिरसोऽङ्गेभ्यो लोमवर्त्मभ्य एव च
रथध्वजेभ्यश्च शरा निष्पेतुर्ब्रह्मवादिनः ३१

शरजालेन महता विद्ध्वा केशवपाण्डवौ
ननाद मुदितो द्रौणिर्महामेघौघनिस्वनः ३२
तस्य नानदतः श्रुत्वा पाण्डवोऽच्युतमब्रवीत्
पश्य माधव दौरात्म्यं द्रोणपुत्रस्य मां प्रति ३३
वधप्राप्तौ मन्यते नौ प्रवेश्य शरवेश्मनि
एषोऽस्य हन्मि संकल्पं शिक्षया च बलेन च ३४
अश्वत्थाम्नः शरानस्तांश्छित्त्वैकैकं त्रिधा त्रिधा
व्यधमद्भरतश्रेष्ठो नीहारमिव मारुतः ३५
ततः संशप्तकान्भूयः साश्वसूतरथद्विपान्
ध्वजपत्तिगणानुग्रैर्बाणैर्विव्याध पाण्डवः ३६
ये ये ददृशिरे तत्र यद्यद्रूपं यथा यथा
ते ते तत्तच्छरैर्व्याप्तं मेनिरेऽत्मानमेव च ३७
ते गाण्डीवप्रणुदिता नानारूपाः पतत्रिणः
क्रोशे साग्रे स्थितान्घ्नन्ति द्विपांश्च पुरुषान्रणे ३८
भल्लैश्छिन्नाः कराः पेतुः करिणां मदकर्षिणाम्
छिन्ना यथा परशुभिः प्रवृद्धाः शरदि द्रुमाः ३९
पश्चात्तु शैलवत्पेतुस्ते गजाः सह सादिभिः
वज्रिवज्रप्रमथिता यथैवाद्रिचयास्तथा ४०
गन्धर्वनगराकारान्विधिवत्कल्पितान्रथान्
विनीतजवनान्युक्तानास्थितान्युद्धदुर्मदान् ४१
शरैर्विशकलीकुर्वन्नमित्रानभ्यवीवृषत्
अलंकृतानश्वसादीन्पत्तींश्चाहन्धनंजयः ४२
धनंजययुगान्तार्कः संशप्तकमहार्णवम्
व्यशोषयत दुःशोषं तीव्रैः शरगभस्तिभिः ४३
पुनर्द्रौणिमहाशैलं नाराचैः सूर्यसंनिभैः
निर्बिभेद महावेगैस्त्वरन्वज्रीव पर्वतम् ४४
तमाचार्यसुतः क्रुद्धः साश्वयन्तारमाशुगैः
ययुत्सुर्नाशकद्योद्धुं पार्थस्तानन्तराच्छिनत् ४५
ततः परमसंक्रुद्धः काण्डकोशानवासृजत्
अश्वत्थामाभिरूपाय गृहानतिथये यथा ४६

अथ संशप्तकांस्त्यक्त्वा पाण्डवो द्रौणिमभ्ययात्
अपाङ्क्तेयमिव त्यक्त्वा दाता पाङ्क्तेयमर्थिनम् ४७
ततः समभवद्युद्धं शुक्राङ्गिरसवर्चसोः
नक्षत्रमभितो व्योम्नि शुक्राङ्गिरसयोरिव ४८
संतापयन्तावन्योन्यं दीप्तैः शरगभस्तिभिः
लोकत्रासकरावास्तां विमार्गस्थौ ग्रहाविव ४९
ततोऽविध्यद्भ्रुवोर्मध्ये नाराचेनार्जुनो भृशम्
स तेन विबभौ द्रौणिरूर्ध्वरश्मिर्यथा रविः ५०
अथ कृष्णौ शरशतैरश्वत्थाम्नार्दितौ भृशम्
सरश्मिजालनिकरौ युतान्तार्काविवासतुः ५१
ततोऽजुनः सर्वतोधारमस्त्रमवासृजद्वासुदेवाभिगुप्तः
द्रौणायनिं चाभ्यहनत्पृषत्कैर्वज्राग्निवैवस्वतदण्डकल्पैः ५२
स केशवं चार्जुनं चातितेजा विव्याध मर्मस्वतिरौद्रकर्मा
बाणैः सुमुक्तैरतितीव्रवेगैर्यैराहतो मृत्युरपि व्यथेत ५३
द्रौणेरिषूनर्जुनः संनिवार्य व्यायच्छतस्तद्द्विगुणैः सुपुङ्खैः
तं साश्वसूतध्वजमेकवीरमावृत्य संशप्तकसैन्यमार्छत् ५४
धनूंषि बाणानिषुधीर्धनुर्ज्याः पाणीन्भुजान्पाणिगतं च शस्त्रम्
छत्राणि केतूंस्तुरगानथैषां वस्त्राणि माल्यान्यथ भूषणानि ५५
चर्माणि वर्माणि मनोरथांश्च प्रियाणि सर्वाणि शिरांसि चैव
चिच्छेद पार्थो द्विषतां प्रमुक्तैर्बाणैः स्थितानामपराङ्मुखानाम् ५६
सुकल्पिताः स्यन्दनवाजिनागाः समास्थिताः कृतयत्नैर्नृवीरैः
पार्थेरितैर्बाणगणैर्निरस्तास्तैरेव सार्धं नृवरैर्निपेतुः ५७
पद्मार्कपूर्णेन्दुसमाननानि किरीटमालामुकुटोत्कटानि
भल्लार्धचन्द्रक्षुरहिंसितानि प्रपेतुरुर्व्यां नृशिरांस्यजस्रम् ५८
अथ द्विपैर्देवपतिद्विपाभैर्देवारिदर्पोल्बणमन्युदर्पैः
कलिङ्गवङ्गाङ्गनिषादवीरा जिघांसवः पाण्डवमभ्यधावन् ५९
तेषां द्विपानां विचकर्त पार्थो वर्माणि मर्माणि करान्नियन्तॄन्
ध्वजाः पताकाश्च ततः प्रपेतुर्वज्राहतानीव गिरेः शिरांसि ६०
तेषु प्ररुग्णेषु गुरोस्तनूजं बाणैः किरीटी नवसूर्यवर्णैः
प्रच्छादयामास महाभ्रजालैर्वायुः समुद्युक्तमिवांशुमन्तम् ६१

ततोऽजुनेषूनिषुभिर्निरस्य द्रौणिः शरैरर्जुनवासुदेवौ
प्रच्छादयित्वा दिवि चन्द्रसूर्यौ ननाद सोऽम्भोद इवातपान्ते ६२
तमर्जुनस्तांश्च पुनस्त्वदीयानभ्यर्दितस्तैरविकृत्तशस्त्रैः
बाणान्धकारं सहसैव कृत्वा विव्याध सर्वानिषुभिः सुपुङ्खैः ६३
नाप्याददत्संदधन्नैव मुञ्चन्बाणान्रणेऽदृश्यत सव्यसाची
हतांश्च नागांस्तुरगान्पदातीन्संस्यूतदेहान्ददृशू रथांश्च ६४
संधाय नाराचवरान्दशाशु द्रौणिस्त्वरन्नेकमिवोत्ससर्ज
तेषां च पञ्चार्जुनमभ्यविध्यन्पञ्चाच्युतं निर्बिभिदुः सुमुक्ताः ६५
तैराहतौ सर्वमनुष्यमुख्यावसृक्क्षरन्तौ धनदेन्द्रकल्पौ
समाप्तविद्येन यथाभिभूतौ हतौ स्विदेतौ किमु मेनिरेऽन्ये ६६
अथार्जुनं प्राह दशार्हनाथः प्रमाद्यसे किं जहि योधमेतम्
कुर्याद्धि दोषं समुपेक्षितोऽसौ कष्टो भवेद्व्याधिरिवाक्रियावान् ६७
तथेति चोक्त्वाच्युतमप्रमादी द्रौणिं प्रयत्नादिषुभिस्ततक्ष
छित्त्वाश्वरश्मींस्तुरगानविध्यत्ते तं रणादूहुरतीव दूरम् ६८
आवृत्य नेयेष पुनस्तु युद्धं पार्थेन सार्धं मतिमान्विमृश्य
जानञ्जयं नियतं वृष्णिवीरे धनंजये चाङ्गिरसां वरिष्ठः ६९
प्रतीपकाये तु रणादश्वत्थाम्नि हृते हयैः
मन्त्रौषधिक्रियादानैर्व्याधौ देहादिवाहृते ७०
संशप्तकानभिमुखौ प्रयातौ केशवार्जुनौ
वातोद्धूतपताकेन स्यन्दनेनौघनादिना ७१

इति श्रीमहाभारते कर्णपर्वणि द्वादशोऽध्यायः १२

## त्रयोदशोऽध्यायः

सञ्जय उवाच
अथोत्तरेण पाण्डूनां सेनायां ध्वनिरुत्थितः
रथनागाश्वपत्तीनां दण्डधारेण वध्यताम् १
निवर्तयित्वा तु रथं केशवोऽजुनमब्रवीत्
वाहयन्नेव तुरगान्गरुडानिलरंहसः २
मागधोऽथाप्यतिक्रान्तो द्विरदेन प्रमाथिना
भगदत्तादनवरः शिक्षया च बलेन च ३

एनं हत्वा निहन्तासि पुनः संशप्तकानिति
वाक्यान्ते प्रापयत्पार्थं दण्डधारान्तिकं प्रति ४
स मागधानां प्रवरोऽङ्कुशग्रहो ग्रहेष्वसह्यो विकचो यथा ग्रहः
सपत्नसेनां प्रममाथ दारुणो महीं समग्रां विकचो यथा ग्रहः ५
सुकल्पितं दानवनागसंनिभं महाभ्रसंह्लादममित्रमर्दनम्
रथाश्वमातङ्गगणान्सहस्रशः समास्थितो हन्ति शरैर्द्विपानपि ६
रथानधिष्ठाय सवाजिसारथीन्रथांश्च पद्भिस्त्वरितो व्यपोथयत्
द्विपांश्च पद्भ्यां चरणैः करेण च द्विपास्थितो हन्ति स कालचक्रवत् ७
नरांश्च कार्ष्णायसवर्मभूषणान्निपात्य साश्वानपि पत्तिभिः सह
व्यपोथयद्दन्तिवरेण शुष्मिणा सशब्दवत्स्थूलनडान्यथा तथा ८
अथार्जुनो ज्यातलनेमिनिस्वने मृदङ्गभेरीबहुशङ्खनादिते
नराश्वमातङ्गसहस्रनादितै रथोत्तमेनाभ्यपतद्द्विपोत्तमम् ९
ततोऽर्जुनं द्वादशभिः शरोत्तमैर्जनार्दनं षोडशभिः समार्दयत्
स दण्डधारस्तुरगांस्त्रिभिस्त्रिभिस्ततो ननाद प्रजहास चासकृत् १०
ततोऽस्य पार्थः सगुणेषुकार्मुकं चकर्त भल्लैर्ध्वजमप्यलंकृतम्
पुनर्नियन्तॄन्सह पादगोप्तृभिस्ततस्तु चुक्रोध गिरिव्रजेश्वरः ११
ततोऽर्जुनं भिन्नकटेन दन्तिना घनाघनेनानिलतुल्यरंहसा
अतीव चुक्षोभयिषुर्जनार्दनं धनंजयं चाभिजघान तोमरैः १२
अथास्य बाहू द्विपहस्तसंनिभौ शिरश्च पूर्णेन्दुनिभाननं त्रिभिः
क्षुरैः प्रचिच्छेद सहैव पाण्डवस्ततो द्विपं बाणशतैः समार्दयत् १३
स पार्थबाणैस्तपनीयभूषणैः समारुचत्काञ्चनवर्मभृद्द्विपः
तथा चकाशे निशि पर्वतो यथा दवाग्निना प्रज्वलितौषधिद्रुमः १४
स वेदनार्तोऽम्बुदनिस्वनो नदंश्चलन्भ्रमन्प्रस्खलितोऽतुरोऽद्रवन्
पपात रुग्णः सनियन्तृकस्तथा यथा गिरिर्वज्रनिपातचूर्णितः १५
हिमावदातेन सुवर्णमालिना हिमाद्रिकूटप्रतिमेन दन्तिना
हते रणे भ्रातरि दण्ड आव्रजज्जिघांसुरिन्द्रावरजं धनञ्जयम् १६
स तोमरैरर्ककरप्रभैस्त्रिभिर्जनार्दनं पञ्चभिरेव चार्जुनम्
समर्पयित्वा विननाद चार्दयत्ततोऽस्य बाहू विचकर्त पाण्डवः १७
क्षुरप्रकृत्तौ सुभृशं सतोमरौच्युताङ्गदौ चन्दनरूषितौ भुजौ
गजात्पतन्तौ युगपद्विरेजतुर्यथाद्रिशृङ्गात्पतितौ महोरगौ १८

अथार्धचन्द्रेण हृतं किरीटिना पपात दण्डस्य शिरः क्षितिं द्विपात्
तच्छोणिताभं निपतद्विरेजे दिवाकरोऽस्तादिव पश्चिमां दिशम् १९
अथ द्विपं श्वेतनगाग्रसंनिभं दिवाकरांशुप्रतिमैः शरोत्तमैः
बिभेद पार्थः स पपात नानदन्हिमाद्रिकूटः कुलिशाहतो यथा २०
ततोऽपरे तत्प्रतिमा गजोत्तमा जिगीषवः संयति सव्यसाचिनम्
तथा कृतास्तेन यथैव तौ द्विपौ ततः प्रभग्नं सुमहद्रिपोर्बलम् २१
गजा रथाश्वाः पुरुषाश्च संघशः परस्परघ्नाः परिपेतुराहवे
परस्परप्रस्खलिताः समाहता भृशं च तत्तत्कुलभाषिणो हताः २२
अथार्जुनं स्वे परिवार्य सैनिकाः पुरंदरं देवगणा इवाब्रुवन्
अभैष्म यस्मान्मरणादिव प्रजाः स वीर दिष्ट्या निहतस्त्वया रिपुः २३
न चेत्परित्रास्य इमाञ्जनान्भयाद्द्विषद्भिरेवं बलिभिः प्रपीडितान्
तथाभविष्यद्द्विषतां प्रमोदनं यथा हतेष्वेष्विह नोऽरिषु त्वया २४
इतीव भूयश्च सुहृद्भिरीरिता निशम्य वाचः सुमनास्ततोऽजुनः
यथानुरूपं प्रतिपूज्य तं जनं जगाम संशप्तकसंघहा पुनः २५
इति श्रीमहाभारते कर्णपर्वणि त्रयोदशोऽध्यायः १३

## चतुर्दशोऽध्यायः

सञ्जय उवाच
प्रत्यागत्य पुनर्जिष्णुरहन्संशप्तकान्बहून्
वक्रानुवक्रगमनादङ्गारक इव ग्रहः १
पार्थबाणहता राजन्नराश्वरथकुञ्जराः
विचेलुर्बभ्रमुर्नेदुः पेतुर्मम्लुश्च मारिष २
धुर्यं धुर्यतरान्सूतान्रथांश्च परिसंक्षिपन्
पाणीन्पाणिगतं शस्त्रं बाहूनपि शिरांसि च ३
भल्लैः क्षुरैरर्धचन्द्रैर्वत्सदन्तैश्च पाण्डवः
चिच्छेदामित्रवीराणां समरे प्रतियुध्यताम् ४
वाशितार्थे युयुत्सन्तो वृषभा वृषभं यथा
आपतन्त्यर्जुनं शूराः शतशोऽथ सहस्रशः ५
तेषां तस्य च तद्युद्धमभवल्लोमहर्षणम्
त्रैलोक्यविजये यादृग्दैत्यानां सह वज्रिणा ६

तमविध्यत्त्रिभिर्बाणैर्दन्दशूकैरिवाहिभिः
उग्रायुधस्ततस्तस्य शिरः कायादपाहरत् ७
तेऽर्जुनं सर्वतः क्रुद्धा नानाशस्त्रैरवीवृषन्
मरुद्भिः प्रेषिता मेघा हिमवन्तमिवोष्णगे ८
अस्त्रैरस्त्राणि संवार्य द्विषतां सर्वतोऽर्जुनः
सम्यगस्तैः शरैः सर्वान्सहितानहनद्बहून् ९
छिन्नत्रिवेणुजङ्घेषान्निहतपार्ष्णिसारथीन्
संछिन्नरश्मियोक्त्राक्षान्व्यनुकर्षयुगान्रथान्
विध्वस्तसर्वसंनाहान्बाणैश्चक्रेऽर्जुनस्त्वरन् १०
ते रथास्तत्र विध्वस्ताः परार्ध्या भान्त्यनेकशः
धनिनामिव वेश्मानि हतान्यग्न्यनिलाम्बुभिः ११
द्विपाः संभिन्नमर्माणो वज्राशनिसमैः शरैः
पेतुर्गिर्यग्रवेश्मानि वज्रवाताग्निभिर्यथा १२
सारोहास्तुरगाः पेतुर्बहवोऽर्जुनताडिताः
निर्जिह्वान्त्राः क्षितौ क्षीणा रुधिरार्द्राः सुदुर्दृशः १३
नराश्वनागा नाराचैः संस्यूताः सव्यसाचिना
बभ्रमुश्चस्खलुः पेतुर्नेदुर्मम्लुश्च मारिष १४
अणकैश्च शिलाधौतैर्वज्राशनिविषोपमैः
शरैर्निजघ्निवान्पार्थो महेन्द्र इव दानवान् १५
महार्हवर्माभरणा नानारूपाम्बरायुधाः
सरथाः सध्वजा वीरा हताः पार्थेन शेरते १६
विजिताः पुण्यकर्माणो विशिष्टाभिजनश्रुताः
गताः शरीरैर्वसुधामूर्जितैः कर्मभिर्दिवम् १७
अथार्जुनरथं वीरास्त्वदीयाः समुपाद्रवन्
नानाजनपदाध्यक्षाः सगणा जातमन्यवः १८
उह्यमाना रथाश्वैस्ते पत्तयश्च जिघांसवः
समभ्यधावन्नस्यन्तो विविधं क्षिप्रमायुधम् १९
तदायुधमहावर्षं क्षिप्तं योधमहाम्बुदैः
व्यधमन्निशितैर्बाणैः क्षिप्रमर्जुनमारुतः २०
साश्वपत्तिद्विपरथं महाशस्त्रौघमप्लवम्

सहसा संतितीर्षन्तं पार्थं शस्त्रास्त्रसेतुना २१
अथाब्रवीद्वासुदेवः पार्थ किं क्रीडसेऽनघ
संशप्तकान्प्रमथ्यैतांस्ततः कर्णवधे त्वर २२
तथेत्युक्त्वार्जुनः क्षिप्रं शिष्टान्संशप्तकांस्तदा
आक्षिप्य शस्त्रेण बलाद्दैत्यानिन्द्र इवावधीत् २३
आदधत्संदधन्नेषून्दृष्टः कैश्चिद्रणेऽजुनः
विमुञ्चन्वा शराञ्शीघ्रं दृश्यते स्म हि कैरपि २४
आश्चर्यमिति गोविन्दो ब्रुवन्नश्वानचोदयत्
हंसांसगौरास्ते सेनां हंसाः सर इवाविशन् २५
ततः संग्रामभूमिं तां वर्तमाने जनक्षये
अवेक्षमाणो गोविन्दः सव्यसाचिनमब्रवीत् २६
एष पार्थ महारौद्रो वर्तते भरतक्षयः
पृथिव्यां पार्थिवानां वै दुर्योधनकृते महान् २७
पश्य भारत चापानि रुक्मपृष्ठानि धन्विनाम्
महतामपविद्धानि कलापानिषुधीस्तथा २८
जातरूपमयैः पुङ्खैः शरांश्च नतपर्वणः
तैलधौतांश्च नाराचान्निर्मुक्तानिव पन्नगान् २९
हस्तिदन्तत्सरून्खड्गाञ्जातरूपपरिष्कृतान्
आकीर्णांस्तोमरांश्चापांश्चित्रान्हेमविभूषितान् ३०
वर्माणि चापविद्धानि रुक्मपृष्ठानि भारत
सुवर्णविकृतान्प्रासाञ्शक्तीः कनकभूषिताः ३१
जाम्बूनदमयैः पट्टैर्बद्धाश्च विपुला गदाः
जातरूपमयीश्चर्ष्टीः पट्टिशान्हेमभूषितान् ३२
दण्डैः कनकचित्रैश्च विप्रविद्धान्परश्वधान्
अयस्कुशान्तान्पतितान्मुसलानि गुरूणि च ३३
शतघ्नीः पश्य चित्राश्च विपुलान्परिघांस्तथा
चक्राणि चापविद्धानि मुद्गरांश्च बहून्रणे ३४
नानाविधानि शस्त्राणि प्रगृह्य जयगृद्धिनः
जीवन्त इव लक्ष्यन्ते गतसत्त्वास्तरस्विनः ३५
गदाविमथितैर्गात्रैर्मुसलैर्भिन्नमस्तकान्

गजवाजिरथक्षुरणान्पश्य योधान्सहस्रशः ३६
मनुष्यगजवाजीनां शरशक्त्यृष्टितोमरैः
निस्त्रिंशैः पट्टिशैः प्रासैर्नखरैर्लगुडैरपि ३७
शरीरैर्बहुधा भिन्नैः शोणितौघपरिप्लुतैः
गतासुभिरमित्रघ्न संवृता रणभूमयः ३८
बाहुभिश्चन्दनादिग्धैः साङ्गदैः शुभभूषणैः
सतलत्रैः सकेयूरैर्भाति भारत मेदिनी ३९
साङ्गुलित्रैर्भुजाग्रैश्च विप्रविद्धैरलंकृतैः
हस्तिहस्तोपमैश्छिन्नैरूरुभिश्च तरस्विनाम् ४०
बद्धचूडामणिवरैः शिरोभिश्च सकुण्डलैः
निकृत्तैर्वृषभाक्षाणां विराजति वसुंधरा ४१
कबन्धैः शोणितादिग्धैश्छिन्नगात्रशिरोधरैः
भूर्भाति भरतश्रेष्ठ शान्तार्चिर्भिरिवाग्निभिः ४२
रथान्बहुविधान्भग्नान्हेमकिङ्किणिनः शुभान्
अश्वांश्च बहुधा पश्य शोणितेन परिप्लुतान् ४३
योधानां च महाशङ्खान्पाण्डुरांश्च प्रकीर्णकान्
निरस्तजिह्वान्मातङ्गाञ्शयानान्पर्वतोपमान् ४४
वैजयन्तीविचित्रांश्च हतांश्चगजयोधिनः
वारणानां परिस्तोमान्सुयुक्ताम्बरकम्बलान् ४५
विपाटिता विचित्राश्चरूपचित्राः कुथास्तथा
भिन्नाश्च बहुधा घण्टाः पतद्भिश्चूर्णिता गजैः ४६
वैडूर्यमणिदण्डांश्च पतितानङ्कुशान्भुवि
बद्धाः सादिध्वजाग्रेषु सुवर्णविकृताः कशाः ४७
विचित्रान्मणिचित्रांश्च जातरूपपरिष्कृतान्
अश्वास्तरपरिस्तोमान्राङ्कवान्पतितान्भुवि ४८
चूडामणीन्नरेन्द्राणां विचित्राः काञ्चनस्रजः
छत्राणि चापविद्धानि चामरव्यजनानि च ४९
चन्द्रनक्षत्रभासैश्च वदनैश्चारुकुण्डलैः
क्लृप्तश्मश्रुभिरत्यर्थं वीराणां समलंकृतैः
वदनैः पश्य संछन्नां महीं शोणितकर्दमाम् ५०

सजीवांश्च नरान्पश्य कूजमानान्समन्ततः
उपास्यमानान्बहुभिर्न्यस्तशस्त्रैर्विशां पते ५१
ज्ञातिभिः सहितैस्तत्र रोदमानैर्मुहुर्मुहुः
व्युत्क्रान्तानपरान्योधांश्छादयित्वा तरस्विनः
पुनर्युद्धाय गच्छन्ति जयगृद्धाः प्रमन्यवः ५२
अपरे तत्र तत्रैव परिधावन्ति मानिनः
ज्ञातिभिः पतितैः शूरैर्याच्यमानास्तथोदकम् ५३
जलार्थं च गताः केचिन्निष्प्राणा बहवोऽजुन
संनिवृत्ताश्च ते शूरास्तान्दृष्ट्वैव विचेतसः ५४
जलं दृष्ट्वा प्रधावन्ति क्रोशमानाः परस्परम्
जलं पीत्वा मृतान्पश्य पिबतोऽन्याश्च भारत ५५
परित्यज्य प्रियानन्ये बान्धवान्बान्धवप्रिय
व्युत्क्रान्ताः समदृश्यन्त तत्र तत्र महारणे ५६
पश्यापरान्नरश्रेष्ठ संदष्टौष्ठपुटान्पुनः
भ्रुकुटी कुटिलैर्वक्त्रैः प्रेक्षमाणान्समन्ततः ५७
एतत्तवैवानुरूपं कर्मार्जुन महाहवे
दिवि वा देवराजस्य त्वया यत्कृतमाहवे ५८
एवं तां दर्शयन्कृष्णो युद्धभूमिं किरीटिने
गच्छन्नेवाशृणोच्छब्दं दुर्योधनबले महत् ५९
शङ्खदुन्दुभिनिर्घोषान्भेरीपणवमिश्रितान्
रथाश्वगजनादांश्च शस्त्रशब्दांश्च दारुणान् ६०
प्रविश्य तद्बलं कृष्णस्तुरगैर्वातवेगिभिः
पाण्ड्येनाभ्यर्दितां सेनां त्वदीयां वीक्ष्य धिष्ठितः ६१
स हि नानाविधैर्बाणैरिष्वासप्रवरो युधि
न्यहनद्द्विषतां व्रातान्गतासूनन्तको यथा ६२
गजवाजिमनुष्याणां शरीराणि शितैः शरैः
भित्त्वा प्रहरतां श्रेष्ठो विदेहासूंश्चकार सः ६३
शत्रुप्रवीरैरस्तानि नानाशस्त्राणि सायकैः
भित्त्वा तानहनत्पाण्ड्यः शत्रूञ्शक्र इवासुरान् ६४
इति श्रीमहाभारते कर्णपर्वणि चतुर्दशोऽध्यायः १४

पञ्चदशोऽध्यायः

धृतराष्ट्र उवाच
प्रोक्तस्त्वया पूर्वमेव प्रवीरो लोकविश्रुतः
न त्वस्य कर्म संग्रामे त्वया सञ्जय कीर्तितम् १
तस्य विस्तरतो ब्रूहि प्रवीरस्याद्य विक्रमम्
शिक्षां प्रभावं वीर्यं च प्रमाणं दर्पमेव च २
सञ्जय उवाच
द्रोणभीष्मकृपद्रौणिकर्णार्जुनजनार्दनान्
समाप्तविद्यान्धनुषि श्रेष्ठान्यान्मन्यसे युधि ३
तुल्यता कर्णभीष्माभ्यामात्मनो येन दृश्यते
वासुदेवार्जुनाभ्यां च न्यूनतां नात्मनीच्छति ४
स पाण्ड्यो नृपतिश्रेष्ठः सर्वशस्त्रभृतां वरः
कर्णस्यानीकमवधीत्परिभूत इवान्तकः ५
तदुदीर्णरथाश्वं च पत्तिप्रवरकुञ्जरम्
कुलालचक्रवद्भ्रान्तं पाण्ड्येनाधिष्ठितं बलम् ६
व्यश्वसूतध्वजरथान्विप्रविद्धायुधान्रिपून्
सम्यगस्तैः शरैः पाण्ड्यो वायुर्मेघानिवाक्षिपत् ७
द्विरदान्प्रहतप्रोथान्विपताकध्वजायुधान्
सपादरक्षानवधीद्वज्रेणारीनिवारिहा ८
सशक्तिप्रासतूणीरानश्वारोहान्हयानपि
पुलिन्दखशबाह्लीकान्निषादान्ध्रकतङ्गणान् ९
दाक्षिणात्यांश्च भोजांश्च क्रूरान्संग्रामकर्कशान्
विशस्त्रकवचान्बाणैः कृत्वा पाण्ड्योकरोद्व्यसून् १०
चतुरङ्गं बलं बाणैर्निघ्नन्तं पाण्ड्यमाहवे
दृष्ट्वा द्रौणिरसंभ्रान्तमसंभ्रान्ततरोऽभ्ययात् ११
आभाष्य चैनं मधुरमभि नृत्यन्नभीतवत्
प्राह प्रहरतां श्रेष्ठः स्मितपूर्वं समाह्वयन् १२
राजन्कमलपत्राक्ष प्रधानायुधवाहन
वज्रसंहननप्रख्य प्रधानबलपौरुष १३
मुष्टिश्लिष्टायुधाभ्यां च व्यायताभ्यां महद्धनुः

दोर्भ्यां विस्फारयन्भासि महाजलदवद्धृशम् १४
शरवर्षैर्महावेगैरमित्रानभिवर्षतः
मदन्यं नानुपश्यामि प्रतिवीरं तवाहवे १५
रथद्विरदपत्त्यश्वानेकः प्रमथसे बहून्
मृगसङ्घानिवारण्ये विभीर्भीमबलो हरिः १६
महता रथघोषेण दिवं भूमिं च नादयन्
वर्षान्ते सस्यहा पाथो भाभिरापूरयन्निव १७
संस्पृशानः शरांस्तीक्ष्णांस्तूणादाशीविषोपमान्
मयैवैकेन युध्यस्व त्र्यम्बकेणान्धको यथा १८
एवमुक्तस्तथेत्युक्त्वा प्रहरेति च ताडितः
कर्णिना द्रोणतनयं विव्याध मलयध्वजः १९
मर्मभेदिभिरत्युग्रैर्बाणैरग्निशिखोपमैः
स्मयन्नभ्यहनद्द्रौणिः पाण्ड्यमाचार्यसत्तमः २०
ततो नवापरांस्तीक्ष्णान्नाराचान्कङ्कवाससः
गत्या दशम्या संयुक्तानश्वत्थामा व्यवासृजत् २१
तेषां पञ्चाच्छिनत्पाण्ड्यः पंचभिर्निशितैः शरैः
चत्वारोऽभ्याहनन्वाहानाशु ते व्यसवोऽभवन् २२
अथ द्रोणसुतस्येषूंस्तांश्छित्त्वा निशितैः शरैः
धनुर्ज्यां विततां पाण्ड्यश्चिच्छेदादित्यवर्चसः २३
विज्यं धनुरथाधिज्यं कृत्वा द्रौणिरमित्रहा
ततः शरसहस्राणि प्रेषयामास पाण्ड्यतः
इषुसंबाधमाकाशमकरोद्दिश एव च २४
ततस्तानस्यतः सर्वान्द्रौणेर्बाणान्महात्मनः
जानानोऽप्यक्षयान्पाण्ड्योऽशातयत्पुरुषर्षभः २५
प्रहितांस्तान्प्रयत्नेन छित्त्वा द्रौणेरिषून्नरिः
चक्ररक्षौ ततस्तस्य प्राणुदन्निशितैः शरैः २६
अथारेर्लाघवं दृष्ट्वा मण्डलीकृतकार्मुकः
प्रास्यद्द्रोणसुतो बाणान्वृष्टिं पूषानुजो यथा २७
अष्टावष्टगवान्यूहुः शकटानि यदायुधम्
अह्नस्तदष्टभागेन द्रौणिश्चिक्षेप मारिष २८

तमन्तकमिव क्रुद्धमन्तकालान्तकोपमम्
ये ये ददृशिरे तत्र विसंज्ञाः प्रायशोऽभवन् २९
पर्जन्य इव घर्मान्ते वृष्ट्या साद्रिद्रुमां महीम्
आचार्यपुत्रस्तां सेनां बाणवृष्ट्याभ्यवीवृषत् ३०
द्रौणिपर्जन्यमुक्तां तां बाणवृष्टिं सुदुःसहाम्
वायव्यास्त्रेण स क्षिप्रं रुद्ध्वा पाण्ड्यानिलोऽनदत् ३१
तस्य नानदतः केतुं चन्दनागुरुभूषितम्
मलयप्रतिमं द्रौणिश्छित्त्वाश्वांश्चतुरोऽहनत् ३२
सूतमेकेषुणा हत्वा महाजलदनिस्वनम्
धनुश्छित्त्वार्धचन्द्रेण व्यधमत्तिलशो रथम् ३३
अस्त्रैरस्त्राणि संवार्य छित्त्वा सर्वायुधानि च
प्राप्तमप्यहितं द्रौणिर्न जघान रणेप्सया ३४
हतेश्वरो दन्तिवरः सुकल्पितस्त्वराभिसृष्टः प्रतिशर्मगो बली
तमध्यतिष्ठन्मलयेश्वरो महान्यथाद्रिशृङ्गं हरिरुन्नदंस्तथा ३५
स तोमरं भास्कररश्मिसंनिभं बलास्त्रसर्गोत्तमयत्नमन्युभिः
ससर्ज शीघ्रं प्रतिपीडयन्गजं गुरोः सुतायाद्रिपतीश्वरो नदन् ३६
मणिप्रतानोत्तमवज्रहाटकैरलंकृतं चांशुकमाल्यमौक्तिकैः
हतोऽस्यसावित्यसकृन्मुदा नदन्पराभिनद्द्रौणिवराङ्गभूषणम् ३७
तदर्कचन्द्रग्रहपावकत्विषं भृशाविघातात्पतितं विचूर्णितम्
महेन्द्रवज्राभिहतं महावनं यथाद्रिशृङ्गं धरणीतले तथा ३८
ततः प्रजज्वाल परेण मन्युना पदाहतो नागपतिर्यथा तथा
समादधे चान्तकदण्डसंनिभानिषूनमित्रान्तकरांश्चतुर्दश ३९
गजस्य पादाग्रकरान्स पञ्चभिर्नृपस्य बाहू च शिरोऽथ च त्रिभिः
जघान षड्भिः षडृतूत्तमत्विषः स पाण्ड्यराजानुचरान्महारथान् ४०
सुदीर्घवृत्तौ वरचन्दनोक्षितौ सुवर्णमुक्तामणिवज्रभूषितौ
भुजौ धरायां पतितौ नृपस्य तौ विवेष्टतुस्तार्क्ष्यहताविवोरगौ ४१
शिरश्च तत्पूर्णशशिप्रभाननं सरोषताम्रायतनेत्रमुन्नसम्
क्षितौ विबभ्राज पतत्सकुण्डलं विशाखयोर्मध्यगतः शशी यथा ४२
समाप्तविद्यं तु गुरोः सुतं नृपः समाप्तकर्माणमुपेत्य ते सुतः
सुहृद्वृतोऽत्यर्थमपूजयन्मुदा जिते बलौ विष्णुमिवामरेश्वरः ४३

इति श्रीमहाभारते कर्णपर्वणि पञ्चदशोऽध्यायः १५

षोडशोऽध्यायः

धृतराष्ट्र उवाच
पाण्ड्ये हते किमकरोदर्जुनो युधि सञ्जय
एकवीरेण कर्णेन द्रावितेषु परेषु च १
समाप्तविद्यो बलवान्युक्तो वीरश्च पाण्डवः
सर्वभूतेष्वनुज्ञातः शंकरेण महात्मना २
तस्मान्महद्भयं तीव्रममित्रघ्नाद्धनंजयात्
स यत्तत्राकरोत्पार्थस्तन्ममाचक्ष्व सञ्जय ३
सञ्जय उवाच
हते पाण्ड्येऽजुनं कृष्णस्त्वरन्नाह वचो हितम्
पश्यातिमान्यं राजानमपयातांश्च पाण्डवान् ४
अश्वत्थाम्नश्च संकल्पाद्धताः कर्णेन सृञ्जयाः
तथाश्वनरनागानां कृतं च कदनं महत्
इत्याचष्ट सुदुर्धर्षो वासुदेवः किरीटिने ५
एतच्छ्रुत्वा च दृष्ट्वा च भ्रातुर्घोरं महद्भयम्
वाहयाश्वान्हृषीकेश क्षिप्रमित्याह पाण्डवः ६
ततः प्रायाद्धृषीकेशो रथेनाप्रतियोधिना
दारुणश्चपुनस्तत्र प्रादुरासीत्समागमः ७
ततः प्रववृते भूयः संग्रामो राजसत्तम
कर्णस्य पाण्डवानां च यमराष्ट्रविवर्धनः ८
धनूंषि बाणान्परिघानसितोमरपट्टिशान्
मुसलानि भुशुण्डीश्च शक्तिऋृष्टिपरश्वधान् ९
गदाः प्रासानसीन्कुन्तान्भिण्डिपालान्महाङ्कुशान्
प्रगृह्य क्षिप्रमापेतुः परस्परजिगीषया १०
बाणज्यातलशब्देन द्यां दिशः प्रदिशो वियत्
पृथिवीं नेमिघोषेण नादयन्तोऽभ्ययुः परान् ११
तेन शब्देन महता संहृष्टाश्चक्रुराहवम्
वीरा वीरैर्महाघोरं कलहान्तं तितीर्षवः १२

ज्यातलत्रधनुःशब्दाः कुञ्जराणां च बृंहितम्
ताडितानां च पततां निनादः सुमहानभूत् १३
बाणशब्दांश्च विविधाञ्शूराणामभिगर्जताम्
श्रुत्वा शब्दं भृशं त्रेसुर्जघ्नुर्मम्लुश्च भारत १४
तेषां नानद्यतां चैव शस्त्रवृष्टिं च मुञ्चताम्
बहूनाधिरथिः कर्णः प्रममाथ रणेषुभिः १५
पञ्च पाञ्चालवीराणां रथान्दश च पञ्च च
साश्वसूतध्वजान्कर्णः शरैर्निन्ये यमक्षयम् १६
योधमुख्या महावीर्याः पाण्डूनां कर्णमाहवे
शीघ्रास्त्रा दिवमावृत्य परिवव्रुः समन्ततः १७
ततः कर्णो द्विषत्सेनां शरवर्षैर्विलोडयन्
विजगाहेऽण्डजापूर्णां पद्मिनीमिव यूथपः १८
द्विषन्मध्यमवस्कन्द्य रोधेयो धनुरुत्तमम्
विधुन्वानः शितैर्बाणैः शिरांस्युन्मथ्य पातयत् १९
चर्मवर्माणि संछिन्द्य निर्वापमिव देहिनाम्
विषेहुर्नास्य संपर्कं द्वितीयस्य पतत्त्रिणः २०
वर्मदेहासुमथनैर्धनुषः प्रच्युतैः शरैः
मौर्व्या तलत्रैर्न्यवृधीत्कशया वाजिनो यथा २१
पाण्डसृञ्जयपाञ्चालाञ्शरगोचरमानयत्
ममर्दकर्णस्तरसा सिंहो मृगगणानिव २२
ततः पाञ्चालपुत्राश्च द्रौपदेयाश्च मारिष
यमौ च युयुधान श्चसहिताः कर्णमभ्ययुः २३
व्यायच्छमानाः सुभृशं कुरुपाण्डवसृञ्जयाः
प्रियानसून्रणे त्यक्त्वा योधा जग्मुः परस्परम् २४
सुसंनद्धाः कवचिनः सशिरस्त्राणभूषणाः
गदाभिर्मुसलैश्चान्ये परिघैश्च महारथाः २५
समभ्यधावन्त भृशं देवा दण्डैरिवोद्यतैः
नदन्तश्चाह्वयन्तश्च प्रवल्गन्तश्च मारिष २६
ततो निजघ्नुरन्योन्यं पेतुश्चाहवताडिताः
वमन्तो रुधिरं गात्रैर्विमस्तिष्केक्षणा युधि २७

दन्तपूर्णैः सरुधिरैर्वक्त्रैर्दाडिमसंनिभैः
जीवन्त इव चाप्येते तस्थुः शस्त्रोपबृंहिताः २८
परस्परं चाप्यपरे पट्टिशैरसिभिस्तथा
शक्तिभिर्भिण्डिपालैश्च नखरप्रासतोमरैः २९
ततक्षुश्चिच्छिदुश्चान्ये बिभिदुश्चिक्षिपुस्तथा
संचकर्तुश्च जघ्नुश्च क्रुद्धा निर्बिभिदुश्च ह ३०
पेतुरन्योन्यनिहता व्यसवो रुधिरोक्षिताः
क्षरन्तः स्वरसं रक्तं प्रकृत्ताश्चन्दना इव ३१
रथै रथा विनिहता हस्तिभिश्चापि हस्तिभिः
नरा नरवरैः पेतुरश्वाश्चाश्वैः सहस्रशः ३१
ध्वजाः शिरांसि च्छत्राणि द्विपहस्ता नृणां भुजाः
क्षुरैर्भल्लार्धचन्द्रैश्च छिन्नां शस्त्राणि तत्यजुः ३३
नरांश्च नागांश्च रथान्हयान्ममृदुराहवे
अश्वारोहैर्हताः शूराश्छिन्नहस्ताश्च दन्तिनः ३४
सपताका ध्वजाः पेतुर्विशीर्णा इव पर्वताः
पत्तिभिश्च समाप्लुत्य द्विरदाः स्यन्दनास्तथा ३५
प्रहता हन्यमानाश्च पतिताश्चैव सर्वशः
अश्वारोहाः समासाद्य त्वरिताः पत्तिभिर्हताः
सादिभिः पत्तिसंघाश्च निहता युधि शेरते ३६
मृदितानीव पद्मानि प्रम्लाना इव च स्रजः
हतानां वदनान्यासन्गात्राणि च महामते ३७
रूपाण्यभ्यर्थकाम्यानि द्विरदाश्वनृणां नृप
समुन्नानीव वस्त्राणि प्रापुर्दुर्दर्शतां परम् ३८
इति श्रीमहाभारते कर्णपर्वणि षोडशोऽध्यायः १६

## सप्तदशोऽध्यायः

सञ्जय उवाच
हस्तिभिस्तु महामात्रास्तव पुत्रेण चोदिताः
धृष्टद्युम्नं जिघांसन्तः क्रुद्धाः पार्षतमभ्ययुः १
प्राच्याश्च दाक्षिणात्याश्च प्रवीरा गजयोधिनः

अङ्गा वङ्गाश्च पुण्ड्राश्च मागधास्ताम्रलिप्तकाः २
मेकलाः कोशला मद्रा दशार्णा निषधास्तथा
गजयुद्धेषु कुशलाः कलिङ्गैः सह भारत ३
शरतोमरनाराचैर्वृष्टिमन्त इवाम्बुदाः
सिषिचुस्ते ततः सर्वे पाञ्चालाचलमाहवे ४
तान्संमिमर्दिषुर्नागान्पार्ष्ण्यङ्गुष्ठाङ्कुशैर्भृशम्
पोथितान्पार्षतो बाणैर्नाराचैश्चाभ्यवीवृषत् ५
एकैकं दशभिः षड्भिरष्टाभिरपि भारत
द्विरदानभिविव्याध क्षिप्तैर्गिरिनिभाञ्शरैः
प्रच्छाद्यमानो द्विरदैर्मेघैरिव दिवाकरः ६
पर्यासुः पाण्डुपाञ्चाला नदन्तो निशितायुधाः
तान्नागानभिवर्षन्तो ज्यातन्त्रीशरनादितैः ७
नकुलः सहदेवश्च द्रौपदेयाः प्रभद्रकाः
सात्यकिश्च शिखण्डी च चेकितानश्च वीर्यवान् ८
ते म्लेच्छैः प्रेषिता नागा नरानश्वान्रथानपि
हस्तैराक्षिप्य ममृदुः पद्भिश्चाप्यतिमन्यवः ९
बिभिदुश्च विषाणाग्रैः समाक्षिप्य च चिक्षिपुः
विषाणलग्नैश्चाप्यन्ये परिपेतुर्विभीषणाः १०
प्रमुखे वर्तमानं तु द्विपं वङ्गस्य सात्यकिः
नाराचेनोग्रवेगेन भित्त्वा मर्मण्यपातयत् ११
तस्यावर्जितनागस्य द्विरदादुत्पतिष्यतः
नाराचेनाभिनद्वक्षः सोऽपतद्भुवि सात्यकेः १२
पुण्ड्रस्यापततो नागं चलन्तमिव पर्वतम्
सहदेवः प्रयत्नात्तैर्नाराचैर्व्यहनत्त्रिभिः १३
विपताकं वियन्तारं विवर्मध्वजजीवितम्
तं कृत्वा द्विरदं भूयः सहदेवोऽङ्गमभ्यगात् १४
सहदेवं तु नकुलो वारयित्वाङ्गमार्दयत्
नाराचैर्यमदण्डाभैस्त्रिभिर्नागं शतेन च १५
दिवाकरकरप्रख्यानङ्गश्चिक्षेप तोमरान्
नकुलाय शतान्यष्टौ त्रिधैकैकं तु सोऽच्छिनत् १६

तथार्धचन्द्रेण शिरस्तस्य चिच्छेद पाण्डवः
स पपात हतो म्लेच्छस्तेनैव सह दन्तिना १७
आचार्यपुत्रे निहते हस्तिशिक्षाविशारदे
अङ्गाः क्रुद्धा महामात्रा नागैर्नकुलमभ्ययुः १८
चलत्पताकैः प्रमुखैर्हेमकक्षातनुच्छदैः
मिमर्दिषन्तस्त्वरिताः प्रदीप्तैरिव पर्वतैः १९
मेकलोत्कलकालिङ्गा निषादास्ताम्रलिप्तकाः
शरतोमरवर्षाणि विमुञ्चन्तो जिघांसवः २०
तैश्छाद्यमानं नकुलं दिवाकरमिवाम्बुदैः
परि पेतुः सुसंरब्धाः पाण्डुपाञ्चालसोमकाः २१
ततस्तदभवद्युद्धं रथिनां हस्तिभिः सह
सृजतां शरवर्षाणि तोमरांश्च सहस्रशः २२
नागानां प्रस्फुटुः कुम्भा मर्माणि विविधानि च
दन्ताश्चैवातिविद्धानां नाराचैर्भूषणानि च २३
तेषामष्टौ महानागाञ्चतुःषष्ठ्या सुतेजनैः
सहदेवो जघानाशु ते पेतुः सह सादिभिः २४
अञ्जोगतिभिरायम्य प्रयत्नाद्धनुरुत्तमम्
नाराचैरहनन्नागान्नकुलः कुरुनन्दन २५
ततः शैनेयपाञ्चाल्यौ द्रौपदेयाः प्रभद्रकाः
शिखण्डी च महानागान्सिषिचुः शरवृष्टिभिः २६
ते पाण्डयोधाम्बुधरैः शत्रुद्विरदपर्वताः
बाणवर्षैर्हताः पेतुर्वज्रवर्षैरिवाचलाः २७
एवं हत्वा तव गजांस्ते पाण्डुनरकुञ्जराः
द्रुतं सेनामवैक्षन्त भिन्नकूलामिवापगाम् २८
ते तां सेनामवालोक्य पाण्डुपुत्रस्य सैनिकाः
विक्षोभयित्वा च पुनः कर्णमेवाभिदुद्रुवुः २९
सहदेवं ततः क्रुद्धं दहन्तं तव वाहिनीम्
दुःशासनो महाराज भ्राता भ्रातरमभ्ययात् ३०
तौ समेतौ महायुद्धे दृष्ट्वा तत्र नराधिपाः
सिंहनादरवांश्चक्रुर्वासांस्यादुधुवुश्च ह ३१

ततो भारत क्रुद्धेन तव पुत्रेण धन्विना
पाण्डुपुत्रस्त्रिभिर्बाणैर्वक्षस्यभिहतो बली ३२
सहदेवस्ततो राजन्नाराचेन तवात्मजम्
विद्ध्वा विव्याध सप्तत्या सारथिं च त्रिभिस्त्रिभिः ३३
दुःशासनस्तदा राजंश्छित्त्वा चापं महाहवे
सहदेवं त्रिसप्तत्या बाह्वोरुरसि चार्दयत् ३४
सहदेवस्ततः क्रुद्धः खड्गं गृह्य महाहवे
व्याविध्यत युधां श्रेष्ठः श्रीमांस्तव सुतं प्रति ३५
समार्गणगणं चापं छित्त्वा तस्य महानसिः
निपपात ततो भूमौ च्युतः सर्प इवाम्बरात् ३६
अथान्यद्धनुरादाय सहदेवः प्रतापवान्
दुःशासनाय चिक्षेप बाणमन्तकरं ततः ३७
तमापतन्तं विशिखं यमदण्डोपमत्विषम्
खड्गेन शितधारेण द्विधा चिच्छेद कौरवः ३८
तमापतन्तं सहसा निस्त्रिंशं निशितैः शरैः
पातयामास समरे सहदेवो हसन्निव ३९
ततो बाणांश्चतुःषष्टिं तव पुत्रो महारणे
सहदेवरथे तूर्णं पातयामास भारत ४०
ताञ्शरान्समरे राजन्वेगेनापततो बहून्
एकैकं पञ्चभिर्बाणैः सहदेवो न्यकृन्तत ४१
स निवार्य महाबाणांस्तव पुत्रेण प्रेषितान्
अथास्मै सुबहून्बाणान्माद्रीपुत्रः समाचिनोत् ४२
ततः क्रुद्धो महाराज सहदेवः प्रतापवान्
समाधत्त शरं घोरं मृत्युकालान्तकोपमम्
विकृष्य बलवच्चापं तव पुत्राय सोऽसृजत् ४३
स तं निर्भिद्य वेगेन भित्त्वा च कवचं महत्
प्राविशद्धरणीं राजन्वल्मीकमिव पन्नगः
ततः स मुमुहे राजंस्तव पुत्रो महारथः ४४
मूढं चैनं समालक्ष्य सारथिस्त्वरितो रथम्
अपोवाह भृशं त्रस्तो वध्यमानां शितैः शरैः ४५

पराजित्य रणे तं तु पाण्डवः पाण्डुपूर्वज
दुर्योधनबलं हृष्टः प्रामथद्वै समन्ततः ४६
पिपीलिकापुटं राजन्यथामृद्नान्नरो रुषा
तथा सा कौरवी सेना मृदिता तेन भारत ४७
नकुलं रभसं युद्धे दारयन्तं वरूथिनीम्
कर्णो वैकर्तनो राजन्वारयामास वै तदा ४८
नकुलश्च तदा कर्णं प्रहसन्निदमब्रवीत्
चिरस्य बत दृष्टोऽह दैवतैः सौम्यचक्षुषा ४९
यस्य मे त्वं रणे पाप चक्षुर्विषयमागतः
त्वं हि मूलमनर्थानां वैरस्य कलहस्य च ५०
त्वद्दोषात्कुरवः क्षीणाः समासाद्य परस्परम्
त्वामद्य समरे हत्वा कृतकृत्योऽस्मि विज्वरः ५१
एवमुक्तः प्रत्युवाच नकुलं सूतनन्दनः
सदृशं राजपुत्रस्य धन्विनश्च विशेषतः ५२
प्रहरस्व रणे बाल पश्यामस्तव पौरुषम्
कर्म कृत्वा रणे शूर ततः कत्थितुमर्हसि ५३
अनुक्त्वा समरे तात शूरा युध्यन्ति शक्तितः
स युध्यस्व मया शक्त्या विनेष्ये दर्पमद्य ते ५४
इत्युक्त्वा प्राहरत्तूर्णं पाण्डुपुत्राय सूतजः
विव्याध चैनं समरे त्रिसप्तत्या शिलीमुखैः ५५
नकुलस्तु ततो विद्धः सूतपुत्रेण भारत
अशीत्याशीविषप्रख्यैः सूतपुत्रमविध्यत ५६
तस्य कर्णो धनुश्छित्त्वा स्वर्णपुङ्खैः शिलाशितैः
त्रिंशता परमेष्वासः शरैः पाण्डवमार्दयत् ५७
ते तस्य कवचं भित्त्वा पपुः शोणितमाहवे
आशीविषा यथा नागा भित्त्वा गां सलिलं पपुः ५८
अथान्यद्धनुरादाय हेमपृष्ठं दुरासदम्
कर्णं विव्याध विंशत्या सारथिं च त्रिभिः शरैः ५९
ततः क्रुद्धो महाराज नकुलः परवीरहा
क्षुरप्रेण सुतीक्ष्णेन कर्णस्य धनुरच्छिनत् ६०

अथैनं छिन्नधन्वानं सायकानां शतैस्त्रिभिः
आजघ्ने प्रहसन्वीरः सर्वलोकमहारथम् ६१
कर्णमभ्यर्दितंदृष्ट्वा पाण्डुपुत्रेण मारिष
विस्मयं परमं जग्मू रथिनः सह दैवतैः ६२
अथान्यद्धनुरादाय कर्णो वैकर्तनस्तदा
नकुलं पञ्चभिर्बाणैर्जत्रुदेशे समार्दयत् ६३
उरःस्थैरथ तैर्बाणैर्माद्रीपुत्रो व्यरोचत
स्वरश्मिभिरिवादित्यो भुवने विसृजन्प्रभाम् ६४
नकुलस्तु ततः कर्णं विद्ध्वा सप्तभिरायसैः
अथास्य धनुषः कोटिं पुनश्चिच्छेद मारिष ६५
सोऽन्यत्कार्मुकमादाय समरे वेगवत्तरम्
नकुलस्य ततो बाणैः सर्वतोऽवारयद्दिशः ६६
संछाद्यमानः सहसा कर्णचापच्युतैः शरैः
चिच्छेद स शरांस्तूर्णं शरैरेव महारथः ६७
ततो बाणमयं जालं विततं व्योम्न्यदृश्यत
खद्योतानां गणैरेव संपतद्भिर्यथा नभः ६८
तैर्विमुक्तैः शरशतैश्छादितं गगनं तदा
शलभानां यथा व्रातैस्तद्वदासीत्समाकुलम् ६९
ते शरा हेमविकृताः संपतन्तो मुहुर्मुहुः
श्रेणीकृता अभासन्त हंसाः श्रेणीगता इव ७०
बाणजालावृते व्योम्नि छादिते च दिवाकरे
समसर्पत्ततो भूतं किंचिदेव विशां पते ७१
निरुद्धे तत्र मार्गे तु शरसंघैः समन्ततः
व्यरोचतां महाभागौ बालसूर्याविवोदितौ ७२
कर्णचापच्युतैर्बाणैर्वध्यमानास्तु सोमकाः
अवालीयन्त राजेन्द्र वेदनार्ताः शरार्दिताः ७३
नकुलस्य तथा बाणैर्वध्यमाना चमूस्तव
व्यशीर्यत दिशो राजन्वातनुन्ना इवाम्बुदाः ७४
ते सेने वध्यमाने तु ताभ्यां दिव्यैर्महाशरैः
शरपातमपक्रम्य ततः प्रेक्षकवत्स्थिते ७५

प्रोत्सारिते जने तस्मिन्कर्णपाण्डवयोः शरैः
विव्याधाते महात्मानावन्योन्यं शरवृष्टिभिः ७६
निदर्शयन्तौ त्वस्त्राणि दिव्यानि रणमूर्धनि
छादयन्तौ च सहसा परस्परवधैषिणौ ७७
नकुलेन शरा मुक्ताः कङ्कबर्हिणवाससः
ते तु कर्णमवच्छाद्य व्यतिष्ठन्त यथा परे ७८
शरवेश्मप्रविष्टौ तौ ददृशाते न कैश्चन
चन्द्रसूर्यौ यथा राजंश्छाद्यमानौ जलागमे ७९
ततः क्रुद्धो रणे कर्णः कृत्वा घोरतरं वपुः
पाण्डवं छादयामास समन्ताच्छरवृष्टिभिः ८०
स च्छाद्यमानः समरे सूतपुत्रेण पाण्डवः
न चकार व्यथां राजन्भास्करो जलदैर्यथा ८१
ततः प्रहस्याधिरथिः शरजालानि मारिष
प्रेषयामास समरे शतशोऽथ सहस्रशः ८२
एकच्छायमभूत्सर्वं तस्य बाणैर्महात्मनः
अभ्रच्छायेव संजज्ञे संपतद्भिः शरोत्तमैः ८३
ततः कर्णो महाराज धनुश्छित्त्वा महात्मनः
सारथिं पातयामास रथनीडाद्धसन्निव ८४
तथाश्वांश्चतुरश्चास्य चतुर्भिर्निशितैः शरैः
यमस्य सदनं तूर्णं प्रेषयामास भारत ८५
अथास्य तं रथं तूर्णं तिलशो व्यधमच्छरैः
पताकां चक्ररक्षौ च ध्वजं खड्गं च मारिष
शतचन्द्रं ततश्चर्म सर्वोपकरणानि च ८६
हताश्वो विरथश्चैव विवर्मा च विशां पते
अवतीर्य रथात्तूर्णं परिघं गृह्य विष्ठितः ८७
तमुद्यतं महाघोरं परिघं तस्य सूतजः
व्यहनत्सायकै राजञ्शतशोऽथ सहस्रशः ८८
व्यायुधं चैनमालक्ष्य शरैः संनतपर्वभिः
आर्दयद्बहुशः कर्णो न चैनं समपीडयत् ८९
स वध्यमानः समरे कृतास्त्रेण बलीयसा

प्राद्रवत्सहसा राजन्नकुलो व्याकुलेन्द्रियः ९०
तमभिद्रुत्य राधेयः प्रहसन्वै पुनः पुनः
सज्यमस्य धनुः कण्ठे सोऽवासृजत भारत ९१
ततः स शुशुभे राजन्कण्ठासक्तमहाधनुः
परिवेषमनुप्राप्तो यथा स्याद्व्योम्नि चन्द्रमाः
यथैव च सितो मेघः शक्रचापेन शोभितः ९२
तमब्रवीत्तदा कर्णो व्यर्थं व्याहृतवानसि
वदेदानीं पुनर्हृष्टो वध्यं मां त्वं पुनः पुनः ९३
मा योत्सीर्गुरुभिः सार्धं बलवद्भिश्च पाण्डव
सदृशैस्तात युध्यस्व व्रीडां मा कुरु पाण्डव
गृहं वा गच्छ माद्रेय यत्र वा कृष्णफल्गुनौ ९४
एवमुक्त्वा महाराज व्यसर्जयत तं ततः
वधप्राप्तं तु तं राजन्नावधीत्सूतनन्दनः
स्मृत्वा कुन्त्या वचो राजंस्तत एनं व्यसर्जयत् ९५
विसृष्टः पाण्डवो राजन्सूतपुत्रेण धन्विना
व्रीडन्निव जगामाथ युधिष्ठिररथं प्रति ९६
आरुरोह रथं चापि सूतपुत्रप्रतापितः
निःश्वसन्दुःखसंतप्तः कुम्भे क्षिप्त इवोरगः ९७
तं विसृज्य रणे कर्णः पाञ्चालांस्त्वरितो ययौ
रथेनातिपताकेन चन्द्रवर्णहयेन च ९८
तत्राक्रन्दो महानासीत्पाण्डवानां विशां पते
दृष्ट्वा सेनापतिं यान्तं पाञ्चालानां रथव्रजान् ९९
तत्राकरोन्महाराज कदनं सूतनन्दनः
मध्यं गते दिनकरे चक्रवत्प्रचरन्प्रभुः १००
भग्नचक्रै रथैः केचिच्छिन्नध्वजपताकिभिः
ससूतैर्हतसूतैश्च भग्नाक्षैश्चैव मारिष
ह्रियमाणानपश्याम पाञ्चालानां रथव्रजान् १०१
तत्र तत्र च संभ्रान्ता विचेरुर्मत्तकुञ्जराः
दवाग्निना परीताङ्गा यथैव स्युर्महावने १०२
भिन्नकुम्भा विरुधिराश्छिन्न हस्ताश्च वारणाः

भिन्नगात्रवराश्चैव च्छिन्नवालाश्च मारिष
छिन्नाभ्राणीव संपेतुर्वध्यमाना महात्मना १०३
अपरे त्रासिता नागा नाराचशततोमरैः
तमेवाभिमुखा यान्ति शलभा इव पावकम् १०४
अपरे निष्टनन्तः स्म व्यदृश्यन्त महाद्विपाः
क्षरन्तः शोणितं गात्रैर्नगा इव जलप्लवम् १०५
उरश्छदैर्विमुक्ताश्च वालबन्धैश्च वाजिनः
राजतैश्च तथा कांस्यैः सौवर्णैश्चैव भूषणैः १०६
हीना आस्तरणैश्चैव खलीनैश्च विवर्जिताः
चामरैश्च कुथाभिश्च तूणीरैः पतितैरपि १०७
निहतैः सादिभिश्चैव शूरैराहवशोभिभिः
अपश्याम रणे तत्र भ्राम्यमाणान्हयोत्तमान् १०८
प्रासैः खड्गैश्च संस्यूतानृष्टिभिश्च नराधिप
हययोधानपश्याम कंचुकोष्णीषधारिणः १०९
रथान्हेमपरिष्कारान्सुयुक्ताञ्जवनैर्हयैः
भ्रममाणानपश्याम हतेषु रथिषु द्रुतम् ११०
भग्नाक्षकूबरान्कांश्चिच्छिन्नचक्रांश्च मारिष
बिपताकाध्वजांश्चान्याञ्छिन्नेषायुगबन्धुरान् १११
बिहीनान्रथिनस्तत्र धावमानान्समन्ततः
सूर्यपुत्रशरैस्त्रस्तानपश्याम विशां पते ११२
विशस्त्रांश्च तथैवान्यान्सशस्त्रांश्च बहून्हतान्
तावकाञ्जालसंछन्नानुरोघण्टाविभूषितान् ११३
नानावर्णविचित्राभिः पताकाभिरलंकृतान्
पदातीनन्वपश्याम धावमानान्समन्ततः ११४
शिरांसि बाहूनूरूंश्च छिन्नानन्यांस्तथा युधि
कर्णचापच्युतैर्बाणैरपश्याम विनाकृतान् ११५
महान्व्यतिकरो रौद्रो योधानामन्वदृश्यत
कर्णसायकनुन्नानां हतानां निशितैः शरैः ११६
ते वध्यमानाः समरे सूतपुत्रेण सृञ्जयाः
तमेवाभिमुखा यान्ति पतंगा इव पावकम् ११७

तं दहन्तमनीकानि तत्र तत्र महारथम्
क्षत्रिया वर्जयामासुर्युगान्ताग्निमिवोल्बणम् ११८
हतशेषास्तु ये वीराः पाञ्चालानां महारथाः
तान्प्रभग्नान्द्रुतान्कर्णः पृष्ठतो विकिरञ्छरैः
अभ्यधावत तेजस्वी विशीर्णकवचध्वजान् ११९
तापयामास तान्बाणैः सूतपुत्रो महारथः
मध्यंदिनमनुप्राप्तो भूतानीव तमोनुदः १२०
इति श्रीमहाभारते कर्णपर्वणि सप्तदशोऽध्यायः १७

अष्टादशोऽध्यायः

सञ्जय उवाच
युयुत्सुं तव पुत्रं तु प्राद्रवन्तं महद्बलम्
उलूकोऽभ्यपतत्तूर्णं तिष्ठ तिष्ठेति चाब्रवीत् १
युयुत्सुस्तु ततो राजञ्शितधारेण पत्रिणा
उलूकं ताडयामास वज्रेणेन्द्र इवाचलम् २
उलूकस्तु ततः क्रुद्धस्तव पुत्रस्य संयुगे
क्षुरप्रेण धनुश्छित्त्वा ताडयामास कर्णिना ३
तदपास्य धनुश्छिन्नं युयुत्सुर्वेगवत्तरम्
अन्यदादत्त सुमहच्चापं संरक्तलोचनः ४
शाकुनिं च ततः षष्ठ्या विव्याध भरतर्षभ
सारथिं त्रिभिरानर्छत्तं च भूयो व्यविध्यत ५
उलूकस्तं तु विंशत्या विद्ध्वा हेमविभूषितैः
अथास्य समरे क्रुद्धो ध्वजं चिच्छेद काञ्चनम् ६
स च्छिन्नयष्टिः सुमहाञ्शीर्यमाणो महाध्वजः
पपात प्रमुखे राजन्युयुत्सोः काञ्चनोज्ज्वलः ७
ध्वजमुन्मथितं दृष्ट्वा युयुत्सुः क्रोधमूर्छितः
उलूकं पञ्चभिर्बाणैराजघान स्तनान्तरे ८
उलूकस्तस्य भल्लेन तैलधौतेन मारिष
शिरश्चिच्छेद सहसा यन्तुर्भरतसत्तम ९
जघान चतुरोऽश्वांश्च तं च विव्याध पञ्चभिः

सोऽतिविद्धो बलवता प्रत्यपायाद्रथान्तरम् १०
तं निर्जित्य रणे राजन्नुलूकस्त्वरितो ययौ
पाञ्चालान्सृञ्जयांश्चैव विनिघ्नन्निशितैः शरैः ११
शतानीकं महाराज श्रुतकर्मा सुतस्तव
व्यश्व सूतरथं चक्रे निमेषार्धादसंभ्रमम् १२
हताश्वे तु रथे तिष्ठञ्शतानीको महाबलः
गदां चिक्षेप संक्रुद्धस्तव पुत्रस्य मारिष १३
सा कृत्वा स्यन्दनं भस्म हयांश्चैव ससारथीन्
पपात धरणीं तूर्णं दारयन्तीव भारत १४
तावुभौ विरथौ वीरौ कुरूणां कीर्तिवर्धनौ
अपाक्रमेतां युद्धार्तौ प्रेक्षमाणौ परस्परम् १५
पुत्रस्तु तव संभ्रान्तो विवित्सो रथमाविशत्
शतानीकोऽपि त्वरितः प्रतिविन्ध्यरथं गतः १६
सुतसोमस्तु शकुनिं विव्याध निशितैः शरैः
नाकम्पयत संरब्धो वार्योघ इव पर्वतम् १७
सुतसोमस्तु तं दृष्ट्वा पितुरत्यन्तवैरिणम्
शरैरनेकसाहस्रैश्छादयामास भारत १८
ताञ्शराञ्शकुनिस्तूर्णं चिच्छेदान्यैः पतत्रिभिः
लघ्वस्त्रश्चित्रयोधी च जितकाशी च संयुगे १९
निवार्य समरे चापि शरांस्तान्निशितैः शरैः
आजघान सुसंक्रुद्धः सुतसोमं त्रिभिः शरैः २०
तस्याश्वान्केतनं सूतं तिलशो व्यधमच्छरैः
श्यालस्तव महावीर्यस्ततस्ते चुक्रुशुर्जनाः २१
हताश्वो विरथश्चैव छिन्नधन्वा च मारिष
धन्वी धनुर्वरं गृह्य रथाद्भूमावतिष्ठत
व्यसृजत्सायकांश्चैव स्वर्णपुङ्खाञ्शिलाशितान् २२
छादयामासुरथ ते तव श्यालस्य तं रथम्
पतंगानामिव व्राताः शरव्राता महारथम् २३
रथोपस्थान्समीक्ष्यापि विव्यथे नैव सौबलः
प्रमृद्नंश्च शरांस्तांस्ताञ्शरव्रातैर्महायशाः २४

तत्रातुष्यन्त योधाश्च सिद्धाश्चापि दिवि स्थिताः
सुतसोमस्य तत्कर्म दृष्ट्वाश्रद्धेयमद्भुतम्
रथस्थं नृपतिं तं तु पदातिः सन्नयोधयत् २५
तस्य तीक्ष्णैर्महावेगैर्भल्लैः संनतपर्वभिः
व्यहनत्कार्मुकं राजा तूणीरंचैव सर्वशः २६
स च्छिन्नधन्वा समरे खड्गमुद्यम्य नानदन्
वैडूर्योत्पलवर्णाभं हस्तिदन्तमयत्सरुम् २७
भ्राम्यमाणं ततस्तं तु विमलाम्बरवर्चसम्
कालोपमं ततो मेने सुतसोमस्य धीमतः २८
सोऽचरत्सहसा खड्गी मण्डलानि सहस्रशः
चतुर्विंशन्महाराज शिक्षाबलसमन्वितः २९
सौबलस्तु ततस्तस्य शरांश्चिक्षेप वीर्यवान्
तानापतत एवाशु चिच्छेद परमासिना ३०
ततः क्रुद्धो महाराज सौबलः परवीरहा
प्राहिणोत्सुतसोमस्य शरानाशीविषोपमान् ३१
चिच्छेद तांश्च खड्गेन शिक्षया च बलेन च
दर्शयँल्लाघवं युद्धे तार्क्ष्यवीर्यसमद्युतिः ३२
तस्य संचरतो राजन्मण्डलावर्तने तदा
क्षुरप्रेण सुतीक्ष्णेन खड्गं चिच्छेद सुप्रभम् ३३
स च्छिन्नः सहसा भूमौ निपपात महानसिः
अवशस्य स्थितं हस्ते तं खड्गं सत्सरुं तदा ३४
छिन्नमाज्ञाय निस्त्रिंशमवप्लुत्य पदानि षट्
प्राविध्यत ततः शेषं सुतसोमो महारथः ३५
स च्छित्त्वा सगुणं चापं रणे तस्य महात्मनः
पपात धरणीं तूर्णं स्वर्णवज्रविभूषितः
सुतसोमस्ततोऽगच्छच्छ्रुतकीर्तेर्महारथम् ३६
सौबलोऽपि धनुर्गृह्यघोरमन्यत्सुदुःसहम्
अभ्ययात्पाण्डवानीकं निघ्नञ्शत्रुगणान्बहून् ३७
तत्र नादो महानासीत्पाण्डवानां विशां पते
सौबलं समरे दृष्ट्वा विचरन्तमभीतवत् ३८

तान्यनीकानि दृप्तानि शस्त्रवन्ति महान्ति च
द्राव्यमाणान्यदृश्यन्त सौबलेन महात्मना ३९
यथा दैत्यचमूं राजन्देवराजो ममर्द ह
तथैव पाण्डवीं सेनां सौबलेयो व्यनाशयत् ४०
धृष्टद्युम्नं कृपो राजन्वारयामास संयुगे
यथा दृप्तं वने नागं शरभो वारयेद्युधि ४१
निरुद्धः पार्षतस्तेन गौतमेन बलीयसा
पदात्पदं विचलितुं नाशक्नोत्तत्र भारत ४२
गौतमस्य वपुर्दृष्ट्वा धृष्टद्युम्नरथं प्रति
वित्रेसुः सर्वभूतानि क्षयं प्राप्तं च मेनिरे ४३
तत्रावोचन्विमनसो रथिनः सादिनस्तथा
द्रोणस्य निधने नूनं संक्रुद्धो द्विपदां वरः ४४
शारद्वतो महातेजा दिव्यास्त्रविदुदारधीः
अपि स्वस्ति भवेदद्य धृष्टद्युम्नस्य गौतमात् ४५
अपीयं वाहिनी कृत्स्ना मुच्येत महतो भयात्
अप्ययं ब्राह्मणः सर्वान्न नो हन्यात्समागतान् ४६
यादृशं दृश्यते रूपमन्तकप्रतिमं भृशम्
गमिष्यत्यद्य पदवीं भारद्वाजस्य संयुगेः ४७
आचार्यः क्षिप्रहस्तश्च विजयी च सदा युधि
अस्त्रवान्वीर्यसंपन्नः क्रोधेन च समन्वितः ४८
पार्षतश्च भृशं युद्धे विमुखोऽद्यापि लक्ष्यते
इत्येवं विविधा वाचस्तावकानां परैः सह ४९
विनिः श्वस्य ततः क्रुद्धः कृपः शारद्वतो नृप
पार्षतं छादयामास निश्चेष्टं सर्वमर्मसु ५०
स वध्यमानः समरे गौतमेन महात्मना
कर्तव्यं न प्रजानाति मोहितः परमाहवे ५१
तमब्रवीत्ततो यन्ता कच्चित्क्षेमं नु पार्षत
ईदृशं व्यसनं युद्धे न ते दृष्टं कदाचन ५२
दैवयोगात्तु ते बाणा नातरन्मर्मभेदिनः
प्रेषिता द्विजमुख्येन मर्माण्युद्दिश्य सर्वशः ५३

व्यावर्तये तत्र रथं नदी वेगमिवार्णवात्
अवध्यं ब्राह्मणं मन्ये येन ते विक्रमो हतः ५४
धृष्टद्युम्नस्ततो राजञ्शनकैरब्रवीद्वचः
मुह्यते मे मनस्तात गात्रे स्वेदश्च जायते ५५
वेपथुं च शरीरे मे रोमहर्षं च पश्य वै
वर्जयन्ब्राह्मणं युद्धे शनैर्याहि यतोऽच्युतः ५६
अर्जुनं भीमसेनं वा समरे प्राप्य सारथे
क्षेममद्य भवेद्यन्तरिति मे नैष्ठिकी मतिः ५७
ततः प्रायान्महाराज सारथिस्त्वरयन्हयान्
यतो भीमो महेष्वासो युयुधे तव सैनिकैः ५८
प्रद्रुतं तु रथं दृष्ट्वा धृष्टद्युम्नस्य मारिष
किरञ्शरशतान्येव गौतमोऽनुययौ तदा ५९
शङ्खं च पूरयामास मुहुर्मुहुररिंदमः
पार्षतं प्राद्रवद्यन्तं महेन्द्र इव शम्बरम् ६०
शिखण्डिनं तु समरे भीष्ममृत्युं दुरासदम्
हार्दिक्यो वारयामास स्मयन्निव मुहुर्मुहुः ६१
शिखण्डी च समासाद्य हृदिकानां महारथम्
पञ्चभिर्निशितैर्भल्लैर्जत्रुदेशे समार्दयत् ६२
कृतवर्मा तु संक्रुद्धो भित्त्वा षष्टिभिराशुगैः
धनुरेकेन चिच्छेद हसन्राजन्महारथः ६३
अथान्यद्धनुरादाय द्रुपदस्यात्मजो बली
तिष्ठ तिष्ठेति संक्रुद्धो हार्दिक्यं प्रत्यभाषत ६४
ततोऽस्य नवतिं बाणान्रुक्मपुङ्खान्सुतेजनान्
प्रेषयामास राजेन्द्र तेऽस्याभ्रश्यन्त वर्मणः ६५
वितथांस्तान्समालक्ष्य पतितांश्च महीतले
क्षुरप्रेण सुतीक्ष्णेन कार्मुकं चिच्छिदे बली ६६
अथैनं छिन्नधन्वानं भग्नशृङ्गमिवर्षभम्
अशीत्या मार्गणैः क्रुद्धो बाह्वोरुरसि चार्दयत् ६७
कृतवर्मा तु संक्रुद्धो मार्गणैः कृतविक्षतः
धनुरन्यत्समादाय समार्गणगणं प्रभो

शिखण्डिनं बाणवरैः स्कन्धदेशेऽभ्यताडयत् ६८
स्कन्धदेशे स्थितैर्बाणैः शिखण्डी च रराज ह
शाखाप्रतानैर्विमलैः सुमहान्स यथा द्रुमः ६९
तावन्योन्यं भृशं विद्ध्वा रुधिरेण समुक्षितौ
अन्योन्यशृङ्गाभिहतौ रेजतुर्वृषभाविव ७०
अन्योन्यस्य वधे यत्नं कुर्वाणौ तौ महारथौ
रथाभ्यां चेरतुस्तत्र मण्डलानि सहस्रशः ७१
कृतवर्मा महाराज पार्षतं निशितैः शरैः
रणे विव्याध सप्तत्या स्वर्णपुङ्खैः शिलाशितैः ७२
ततोऽस्य समरे बाणं भोजः प्रहरतां वरः
जीवितान्तकरं घोरं व्यसृजत्त्वरयान्वितः ७३
स तेनाभिहतो राजन्मूर्च्छामाशु समाविशत्
ध्वजयष्टिं च सहसा शिश्रिये कश्मलावृतः ७४
अपोवाह रणात्तं तु सारथी रथिनां वरम्
हार्दिक्यशरसंतप्तं निःश्वसन्तं पुनः पुनः ७५
पराजिते ततः शूरे द्रुपदस्य सुते प्रभो
प्राद्रवत्पाण्डवी सेना वध्यमाना समन्ततः ७६
इति श्रीमहाभारते कर्णपर्वणि अष्टादशोऽध्यायः १८

## एकोनविंशोऽध्यायः

सञ्जय उवाच
श्वेताश्वोऽपि महाराज व्यधमत्तावकं बलम्
यथा वायुः समासाद्य तूलराशिं समन्ततः १
प्रत्युद्ययुस्त्रिगर्तास्तं शिबयः कौरवैः सह
शाल्वाः संशप्तकाश्चैव नारायणबलं च यत् २
सत्यसेनः सत्यकीर्तिर्मित्रदेवः श्रुतंजयः
सौश्रुतिश्चित्रसेनश्च मित्रवर्मा च भारत ३
त्रिगर्तराजः समरे भ्रातृभिः परिवारितः
पुत्रैश्चैव महेष्वासैर्नानाशस्त्रधरैर्युधि ४
ते सृजन्तः शरव्रातान्किरन्तोऽजुनमाहवे

अभ्यद्रवन्त समरे वार्योघा इव सागरम् ५
ते त्वर्जुनं समासाद्य योधाः शतसहस्रशः
अगच्छन्विलयं सर्वे तार्क्ष्यं दृष्ट्वेव पन्नगाः ६
ते वध्यमानाः समरे नाजहुः पाण्डवं तदा
दह्यमाना यथा राजञ्शलभा इव पावकम् ७
सत्यसेनस्त्रिभिर्बाणैर्विव्याध युधि पाण्डवम्
मित्रदेवस्त्रिषष्ट्या च चन्द्रदेवश्च सप्तभिः ८
मित्रवर्मा त्रिसप्तत्या सौश्रुतिश्चापि पञ्चभिः
शत्रुंजयश्च विंशत्या शुशर्मा नवभिः शरैः ९
शत्रुञ्जयं च राजानं हत्वा तत्र शिलाशितैः
सौश्रुतेः सशिरस्त्राणं शिरः कायादपाहरत्
त्वरितश्चन्द्रदेवं च शरैर्निन्ये यमक्षयम् १०
अथेतरान्महाराज यतमानान्महारथान्
पञ्चभिः पञ्चभिर्बाणैरेकैकं प्रत्यवारयत् ११
सत्यसेनस्तु संक्रुद्धस्तोमरं व्यसृजन्महत्
समुद्दिश्य रणे कृष्णं सिंहनादं ननाद च १२
स निर्भिद्य भुजं सव्यं माधवस्य महात्मनः
अयस्मयो महाचण्डो जगाम धरणीं तदा १३
माधवस्य तु विद्धस्य तोमरेण महारणे
प्रतोदः प्रापतद्धस्ताद्रश्मयश्च विशां पते १४
स प्रतोदं पुनर्गृह्य रश्मींश्चैव महायशाः
वाहयामास तानश्वान्सत्यसेनरथ्थंपति १५
विष्वक्सेनं तु निर्भिन्नं प्रेक्ष्य पार्थो धनञ्जयः
सत्यसेनं शरैस्तीक्ष्णैर्दारयित्वा महाबलः १६
ततः सुनिशितैर्बाणैः राज्ञस्तस्य महच्छिरः
कुण्डलोपचितं कायाच्चकर्त पृतनान्तरे १७
तं निहत्य शितैर्बाणैर्मित्रवर्माणमाक्षिपत्
वत्सदन्तेन तीक्ष्णेन सारथिं चास्य मारिष १८
ततः शरशतैर्भूयः संशप्तकगणान्वशी
पातयामास संक्रुद्धः शतशोऽथ सहस्रशः १९

ततो रजतपुङ्खेन राज्ञः शीर्षं महात्मनः
मित्रदेवस्य चिच्छेद क्षुरप्रेण महायशाः
सुशर्माणं च संक्रुद्धो जत्रुदेशे समार्दयत् २०
ततः संशप्तकाः सर्वे परिवार्य धनंजयम्
शस्त्रौघैर्ममृदुः क्रुद्धा नादयन्तो दिशो दश २१
अभ्यर्दितस्तु तैर्जिष्णुः शक्रतुल्यपराक्रमः
ऐन्द्रमस्त्रममेयात्मा प्रादुश्चक्रे महारथः
ततः शरसहस्राणि प्रादुरासन्विशां पते २२
ध्वजानां छिद्यमानानां कार्मुकाणां च संयुगे
रथानां सपताकानां तूणीराणां शरैः सह २३
अक्षाणामथ योक्त्राणां चक्राणां रश्मिभिः सह
कूबराणां वरूथानां पृषत्कानां च संयुगे २४
अश्मनां पततां चैव प्रासानामृष्टिभिः सह
गदानां परिघाणां च शक्तीनां तोमरैः सह २५
शतघ्नीनां सचक्राणां भुजानामूरुभिः सह
कण्ठसूत्राङ्गदानां च केयूराणां च मारिष २६
हाराणामथ निष्काणां तनुत्राणां च भारत
छत्राणां व्यजनानां च शिरसां मुकुटैः सह
अश्रूयत महाञ्शब्दस्तत्र तत्र विशां पते २७
सकुण्डलानि स्वक्षीणि पूर्णचन्द्रनिभानि च
शिरांस्युर्व्यामदृश्यन्त तारागण इवाम्बरे २८
सुस्रग्वीणि सुवासांसि चन्दनेनोक्षितानि च
शरीराणि व्यदृश्यन्त हतानां च महीतले
गन्धर्वनगराकारं घोरमायोधनं तदा २९
निहतै राजपुत्रैश्च क्षत्रियैश्च महाबलैः
हस्तिभिः पतितैश्चैव तुरगैश्चाभवन्मही
अगम्यमार्गा समरे विशीर्णैरिव पर्वतैः ३०
नासीच्चक्रपथश्चैव पाण्डवस्य महात्मनः
निघ्नतः शात्रवान्भल्लैर्हस्त्यश्वं चामितं महत् ३१
आ तुम्बादवसीदन्ति रथचक्राणि मारिष

रणे विचरतस्तस्य तस्मिँल्लोहितकर्दमे ३२
सीदमानानि चक्राणि समूहुस्तुरगा भृशम्
श्रमेण महता युक्ता मनोमारुतरंहसः ३३
वध्यमानं तु तत्सैन्यं पाण्डुपुत्रेण धन्विना
प्रायशो विमुखं सर्वं नावतिष्ठत संयुगे ३४
ताञ्जित्वा समरे जिष्णुः संशप्तकगणान्बहून्
रराज स महाराज विधूमोऽग्निरिव ज्वलन् ३५
युधिष्ठिरं महाराज विसृजन्तं शरान्बहून्
स्वयं दुर्योधनो राजा प्रत्यगृह्णादभीतवत् ३६
तमापतन्तं सहसा तव पुत्रं महाबलम्
धर्मराजो द्रुतं विद्ध्वा तिष्ठ तिष्ठेति चाब्रवीत् ३७
स च तं प्रतिविव्याध नवभिर्निशितैः शरैः
सारथिं चास्य भल्लेन भृशं क्रुद्धोऽभ्यताडयत् ३८
ततो युधिष्ठिरो राजा हेमपुङ्खाञ्शिलीमुखान्
दुर्योधनाय चिक्षेप त्रयोदश शिलाशितान् ३९
चतुर्भिश्चतुरो वाहांस्तस्य हत्वा महारथः
पञ्चमेन शिरः कायात्सारथेस्तु समाक्षिपत् ४०
षष्ठेन च ध्वजं राज्ञः सप्तमेन च कार्मुकम्
अष्टमेन तथा खड्गं पातयामास भूतले
पञ्चभिर्नृपतिं चापि धर्मराजोऽदयद्भृशम् ४१
हताश्वात्तु रथात्तस्मादवप्लुत्य सुतस्तव
उत्तमं व्यसनं प्राप्तो भूमावेव व्यतिष्ठत ४२
तं तु कृच्छ्रगतं दृष्ट्वा कर्णद्रौणिकृपादयः
अभ्यवर्तन्त सहिताः परीप्सन्तो नराधिपम् ४३
अथ पाण्डुसुताः सर्वे परिवार्य युधिष्ठिरम्
अभ्ययुः समरे राजंस्ततो युद्धमवर्तत ४४
अथ तूर्यसहस्राणि प्रावाद्यन्त महामृधे
क्ष्वेडाः किलकिलाशब्दाः प्रादुरासन्महीपते
यदभ्यगच्छन्समरे पाञ्चालाः कौरवैः सह ४५
नरा नरैः समाजग्मुर्वारणा वरवारणैः

रथाश्च रथिभिः सार्धं हयाश्च हयसादिभिः ४६
द्वंद्वान्यासन्महाराज प्रेक्षणीयानि संयुगे
विस्मापनान्यचिन्त्यानि शस्त्रवन्त्युत्तमानि च ४७
अयुध्यन्त महावेगाः परस्परवधैषिणः
अन्योन्यं समरे जघ्नुर्योधव्रतमनुष्ठिताः
न हि ते समरं चक्रुः पृष्ठतो वै कथंचन ४८
मुहूर्तमेव तद्युद्धमासीन्मधुरदर्शनम्
तत उन्मत्तवद्राजन्निर्मर्यादमवर्तत ४९
रथी नागं समासाद्य विचरन्रणमूर्धनि
प्रेषयामास कालाय शरैः संनतपर्वभिः ५०
नागा हयान्समासाद्य विक्षिपन्तो बहूनथ
द्रावयामासुरत्युग्रास्तत्र तत्र तदा तदा ५१
विद्राव्य च बहूनश्वान्नागा राजन्बलोत्कटाः
विषाणैश्चापरे जघ्नुर्ममृदुश्चापरे भृशम् ५२
साश्वारोहांश्च तुरगान्विषाणैर्बिभिदू रणे
अपरांश्चिक्षिपुर्वेगात्प्रगृह्यातिबलास्तथा ५३
पादातैराहता नागा विवरेषु समन्ततः
चक्रुरार्तस्वरं घोरं व्यद्रवन्त दिशो दश ५४
पदातीनां तु सहसा प्रद्रुतानां महामृधे
उत्सृज्याभरणं तूर्णमवप्लुत्य रणाजिरे ५५
निमित्तं मन्यमानस्तु परिणम्य महागजाः
जगृहुर्बिभिदुश्चैव चित्राण्याभरणानि च ५६
प्रतिमानेषु कुम्भेषु दन्तवेष्टेषु चापरे
निगृहीता भृशं नागाः प्रासतोमरशक्तिभिः ५७
निगृह्य च गदाः केचित्पार्श्वस्थैर्भृशदारुणैः
रथाश्वसादिभिस्तत्र संभिन्ना न्यपतन्भुवि ५८
सरथं सादिनं तत्र अपरे तु महागजाः
भूमावमृद्नन्वेगेन सवर्माणं पताकिनम् ५९
रथं नागाः समासाद्य धुरि गृह्य च मारिष
व्याक्षिपन्सहसा तत्र घोररूपे महामृधे ६०

नाराचैर्निहतश्चापि निपपात महागजः
पर्वतस्येव शिखरं वज्रभग्नं महीतले ६१
योधा योधान्समासाद्य मुष्टिभिर्व्यहनन्युधि
केशेष्वन्योन्यमाक्षिप्य चिच्छिदुर्बिभिदुः सह ६२
उद्यम्य च भुजावन्यो निक्षिप्य च महीतले
पदा चोरः समाक्रम्य स्फुरतो व्यहनच्छिरः ६३
मृतमन्यो महाराज पद्भ्यां ताडितवांस्तदा
जीवतश्च तथैवान्यः शस्त्रं काये न्यमज्जयत् ६४
मुष्टियुद्धं महच्चासीद्योधानां तत्र भारत
तथा केशग्रहश्चोग्रो बाहुयुद्धं च केवलम् ६५
समासक्तस्य चान्येन अविज्ञातस्तथापरः
जहार समरे प्राणान्नानाशस्त्रैरनेकधा ६६
संसक्तेषु च योधेषु वर्तमाने च संकुले
कबन्धान्युत्थितानि स्म शतशोऽथ सहस्रशः ६७
लोहितैः सिच्यमानानि शस्त्राणि कवचानि च
महारङ्गानुरक्तानि वस्त्राणीव चकाशिरे ६८
एवमेतन्महायुद्धं दारुणं भृशसंकुलम्
उन्मत्तरङ्गप्रतिमं शब्देनापूरयज्जगत् ६९
नैव स्वे न परे राजन्विज्ञायन्ते शरातुराः
योद्धव्यमिति युध्यन्ते राजानो जयगृद्धिनः ७०
स्वान्स्वे जघ्नुर्महाराज परांश्चैव समागतान्
उभयोः सेनयोर्वीरैर्व्याकुलं समपद्यत ७१
रथैर्भग्नैर्महाराज वारणैश्च निपातितैः
हयैश्च पतितैस्तत्र नरैश्च विनिपातितैः ७२
अगम्यरूपा पृथिवी मांसशोणितकर्दमा
क्षणेनासीन्महाराज क्षतजौघप्रवर्तिनी ७३
पाञ्चालानवधीत्कर्णस्त्रिगर्तांश्च धनंजयः
भीमसेनः कुरून्राजन्हस्त्यनीकं च सर्वशः ७४
एवमेष क्षयो वृत्तः कुरुपाण्डवसेनयोः
अपराह्णे महाराज काङ्क्षन्त्योर्विपुलं जयम् ७५

इति श्रीमहाभारते कर्णपर्वणि एकोनविंशोऽध्यायः १९

## विंशोऽध्यायः

धृतराष्ट्र उवाच
अतितीव्राणि दुःखानि दुःसहानि बहूनि च
तवाहं सञ्जयाश्रौषं पुत्राणां मम संक्षयम् १
तथा तु मे कथयसे यथा युद्धं तु वर्तते
न सन्ति सूत कौरव्या इति मे नैष्ठिकी मतिः २
दुर्योधनस्तु विरथः कृतस्तत्र महारणे
धर्मपुत्रः कथं चक्रे तस्मिन्वा नृपतिः कथम् ३
अपराह्णे कथं युद्धमभवल्लोमहर्षणम्
तन्ममाचक्ष्व तत्त्वेन कुशलो ह्यसि सञ्जय ४
सञ्जय उवाच
संसक्तेषु च सैन्येषु युध्यमानेषु भागशः
रथमन्यं समास्थाय पुत्रस्तव विशां पते ५
क्रोधेन महताविष्टः सविषो भुजगो यथा
दुर्योधनस्तु दृष्ट्वा वै धर्मराजं युधिष्ठिरम्
उवाच सूत त्वरित याहि याहीति भारत ६
अत्र मां प्रापय क्षिप्रं सारथे यत्र पाण्डवः
ध्रियमाणेन छत्रेण राजा राजति दंशितः ७
स सूतश्चोदितो राज्ञा राज्ञः स्यन्दनमुत्तमम्
युधिष्ठिरस्याभिमुखं प्रेषयामास संयुगे ८
ततो युधिष्ठिरः क्रुद्धः प्रमत्त इव सद्गवः
सारथिं चोदयामास याहि यत्र सुयोधनः ९
तौ समाजग्मतुर्वीरौ भ्रातरौ रथसत्तमौ
समेत्य च महावीर्यौ संनद्धौ युद्धदुर्मदौ
ततक्षतुर्महेष्वासौ शरैरन्योन्यमाहवे १०
ततो दुर्योधनो राजा धर्मशीलस्य मारिष
शिलाशितेन भल्लेन धनुश्चिच्छेद संयुगे
तं नामृष्यत संक्रुद्धो व्यवसायं युधिष्ठिरः ११

अपविध्य धनुश्छिन्नं क्रोधसंरक्तलोचनः
अन्यत्कार्मुकमादाय धर्मपुत्रश्चमूमुखे १२
दुर्योधनस्य चिच्छेद ध्वजं कार्मुकमेव च
अथान्यद्धनुरादाय प्रत्यविध्यत पाण्डवम् १३
तावन्योन्यं सुसंरब्धौ शरवर्षाण्यमुञ्चताम्
सिंहाविव सुसंक्रुद्धौ परस्परजिगीषया १४
अन्योन्यं जघ्नतुश्चैव नर्दमानौ वृषाविव
अन्योन्यं प्रेक्षमाणौ च चेरतुस्तौ महारथौ १५
ततः पूर्णायतोत्सृष्टैरन्योन्यं सुकृतव्रणौ
विरेजतुर्महाराज पुष्पिताविव किंशुकौ १६
ततो राजन्प्रतिभयान्सिंहनादान्मुहुर्मुहुः
तलयोश्च तथा शब्दान्धनुषोश्च महाहवे १७
शङ्खशब्दरवांश्चैव चक्रतुस्तौ रथोत्तमौ
अन्योन्यं च महाराज पीडयांचक्रतुर्भृशम् १८
ततो युधिष्ठिरो राजा तव पुत्रं त्रिभिः शरैः
आजघानोरसि क्रुद्धो वज्रवेगो दुरासदः १९
प्रतिविव्याध तं तूर्णं तव पुत्रो महीपतिम्
पञ्चभिर्निशितैर्बाणैर्हेमपुङ्खैः शिलाशितैः २०
ततो दुर्योधनो राजा शक्तिं चिक्षेप भारत
सर्वपारशवीं तीक्ष्णां महोल्काप्रतिमां तदा २१
तामापतन्तीं सहसा धर्मराजः शिलाशितैः
त्रिभिश्चिच्छेद सहसा तं च विव्याध सप्तभिः २२
निपपात ततः साथ हेमदण्डा महाघना
निपतन्ती महोल्केव व्यराजच्छिखिसंनिभा २३
शक्तिं विनिहतां दृष्ट्वा पुत्रस्तव विशां पते
नवभिर्निशितैर्भल्लैर्निजघान युधिष्ठिरम् २४
सोऽतिविद्धो बलवतामग्रणीः शत्रुतापनः
दुर्योधनं समुद्दिश्य बाणं जग्राह सत्वरः २५
समाधत्त च तं बाणं धनुष्युग्रं महाबलः
चिक्षेप च ततो राजा राज्ञः क्रुद्धः पराक्रमी २६

स तु बाणः समासाद्य तव पुत्रं महारथम्
व्यामोयहयत राजानं धरणीं च जगाम ह २७
ततो दुर्योधनः क्रुद्धो गदामुद्यम्य वेगितः
विधित्सुः कलहस्यान्तमभिदुद्राव पाण्डवम् २८
तमालक्ष्योद्यतगदं दण्डहस्तमिवान्तकम्
धर्मराजो महाशक्तिं प्राहिणोत्तव सूनवे
दीप्यमानां महावेगां महोल्कां ज्वलितामिव २९
रथस्थः स तया विद्धो वर्म भित्त्वा महाहवे
भृशं संविग्नहृदयः पपात च मुमोह च ३०
ततस्त्वरितमागत्य कृतवर्मा तवात्मजम्
प्रत्यपद्यत राजानं मग्नं वै व्यसनार्णवे ३१
भीमोऽपि महतीं गृह्य गदां हेमपरिष्कृताम्
अभिदुद्राव वेगेन कृतवर्माणमाहवे
एवं तदभवद्युद्धं त्वदीयानां परैः सह ३२
इति श्रीमहाभारते कर्णपर्वणि विंशोऽध्यायः २०

## एक विंशोऽध्यायः

सञ्जय उवाच
ततः कर्णं पुरस्कृत्य त्वदीया युद्धदुर्मदाः
पुनरावृत्य संग्रामं चक्रुर्देवासुरोपमम् १
द्विरदरथनराश्वशङ्खशब्दैः परिहृषिता विविधैश्च शस्त्रपातैः
द्विरदरथपदातिसार्थवाहाः परिपतिताभिमुखाः प्रजह्रिरे ते २
शरपरशुवरासिपट्टिशैरिषुभिरनेकविधैश्च सादिताः
द्विरदरथहया महाहवे वरपुरुषैः पुरुषाश्च वाहनैः ३
कमलदिनकरेन्दुसंनिभैः सितदशनैः सुमुखाक्षिनासिकैः
रुचिरमुकुटकुण्डलैर्मही पुरुषशिरोभिरवस्तृता बभौ ४
परिघमुसलशक्तितोमरैर्नखरभुशुण्डिगदाशतैर्द्रुताः
द्विरदनरहयाः सहस्रशो रुधिरनदीप्रवहास्तदाभवन् ५
प्रहतनररथाश्वकुञ्जरं प्रतिभयदर्शनमुल्बणं तदा
तदहितनिहतं बभौ बलं पितृपतिराष्ट्रमिव प्रजात्यये ६

अथ तव नरदेव सैनिकास्तव च सुताः सुरसूनुसंनिभाः
अमितबलपुरःसरा रणे कुरुवृषभाः शिनिपुत्रमभ्ययुः ७
तदतिरुचिरभीममाबभौ पुरुषवराश्वरथद्विपाकुलम्
लवणजलसमुद्धतस्वनं बलममरासुरसैन्यसंनिभम् ८
सुरपतिसमविक्रमस्ततस्त्रिदशवरावरजोपमं युधि
दिनकरकिरणप्रभैः पृषत्कै रवितनयोऽभ्यहनच्छिनिप्रवीरम् ९
तमपि सरथवाजिसारथिं शिनिवृषभो विविधैः शरैस्त्वरन्
भुजगविषसमप्रभै रणे पुरुषवरं समवास्तृणोत्तदा १०
शिनिवृषभशरप्रपीडितं तव सुहृदो वसुषेणमभ्ययुः
त्वरितमतिरथा रथर्षभं द्विरदरथाश्वपदातिभिः सह ११
तमुदधिनिभमाद्रवद्बली त्वरिततरैः समभिद्रुतं परैः
द्रुपदसुतसखस्तदाकरोत्पुरुषरथाश्वगजक्षयं महत् १२
अथ पुरुषवरौ कृताह्निकौ भवमभिपूज्य यथाविधि प्रभुम्
अरिवधकृतनिश्चयौ द्रुतं तव बलमर्जुनकेशवौ सृतौ १३
जलदनिनदनिस्वनं रथं पवनविधूतपताककेतनम्
सितहयमुपयान्तमन्तिकं हृतमनसो ददृशुस्तदारयः १४
अथ विस्फार्य गाण्डीवं रणे नृत्यन्निवार्जुनः
शरसंबाधमकरोत्खं दिशः प्रदिशस्तथा १५
रथान्विमानप्रतिमान्सज्जयन्त्रायुधध्वजान्
ससारथींस्तदा बाणैरभ्राणीवानिलोऽवधीत् १६
गजान्गजप्रयन्तॄंश्च वैजयन्त्यायुधध्वजान्
सादिनोऽश्वांश्च पत्तींश्च शरैर्निन्ये यमक्षयम् १७
तमन्तकमिव क्रुद्धमनिवार्यं महारथम्
दुर्योधनोऽभ्ययादेको निघ्नन्बाणैः पृथग्विधैः १८
तस्यार्जुनो धनुः सूतं केतुमश्वांश्च सायकैः
हत्वा सप्तभिरेकैकं छत्रं चिच्छेद पत्रिणा १९
नवमं च समासाद्य व्यसृजत्प्रातिघातिनम्
दुर्योधनायेषुवरं तं द्रौणिः सप्तधाच्छिनत् २०
ततो द्रौणेर्धनुश्छित्त्वा हत्वा चाश्ववराञ्शरैः
कृपस्यापि तथात्युग्रं धनुश्चिच्छेद पाण्डवः २१

हार्दिक्यस्य धनुश्छित्त्वा ध्वजं चाश्वं तथावधीत्
दुःशासनस्येषुवरं छित्त्वा राधेयमभ्ययात् २२
अथ सात्यकिमुत्सृज्य त्वरन्कर्णोऽजुनं त्रिभिः
विद्ध्वा विव्याध विंशत्या कृष्णं पार्थं पुनस्त्रिभिः २३
अथ सात्यकिरागत्य कर्णं विद्ध्वा शितैः शरैः
नवत्या नवभिश्चोग्रैः शतेन पुनरार्दयत् २४
ततः प्रवीराः पाण्डूनां सर्वे कर्णमपीडयन्
युधामन्युः शिखण्डी च द्रौपदेयाः प्रभद्रकाः २५
उत्तमौजा युयुत्सुश्च यमौ पार्षत एव च
चेदिकारूषमत्स्यानां केकयानां च यद्बलम्
चेकितानश्च बलबान्धर्मराजश्च सुव्रतः २६
एते रथाश्वद्विरदैः पत्तिभिश्चोग्रविक्रमैः
परिवार्य रणे कर्णं नानाशस्त्रैरवाकिरन्
भाषन्तो वाग्भिरुग्राभिः सर्वे कर्णवधे वृताः २७
तां शस्त्र वृष्टिं बहुधा छित्त्वा कर्णः शितैः शरैः
अपोवाह स्म तान्सर्वान्द्रुमान्भङ्क्त्वेव मारुतः २८
रथिनः समहामात्रान्गजानश्वान्ससादिनः
शरव्रातांश्च संक्रुद्धो निघ्नन्कर्णो व्यदृश्यत २९
तद्वध्यमानं पाण्डूनां बलं कर्णास्त्रतेजसा
विशस्त्रक्षतदेहं च प्राय आसीत्पराङ्मुखम् ३०
अथ कर्णास्त्रमस्त्रेण प्रतिहत्यार्जुनः स्वयम्
दिशः खं चैव भूमिं च प्रावृणोच्छरवृष्टिभिः ३१
मुसलानीव निष्पेतुः परिघा इव चेषवः
शतघ्न्य इव चाप्यन्ये वज्राण्युग्राणि वापरे ३२
तैर्वध्यमानं तत्सैन्यं सपत्त्यश्वरथद्विपम्
निमीलिताक्षमत्यर्थमुदभ्राम्यत्समन्ततः ३३
निष्कवल्यं तदा युद्धं प्रापुरश्वनरद्विपाः
वध्यमानाः शरैरन्ये तदा भीताः प्रदुद्रुवुः ३४
एवं तेषां तदा युद्धे संसक्तानां जयैषिणाम्
गिरिमस्तं समासाद्य प्रत्यपद्यत भानुमान् ३५

तमसा च महाराज रजसा च विशेषतः
न किञ्चित्प्रत्यपश्याम शुभं वा यदि वाशुभम् ३६
ते त्रसन्तो महेष्वासा रात्रियुद्धस्य भारत
अपयानं ततश्चक्रुः सहिताः सर्ववाजिभिः ३७
कौरवेषु च यातेषु तदा राजन्दिनक्षये
जयं सुमनसः प्राप्य पार्थाः स्वशिबिरं ययुः ३८
वादित्रशब्दैर्विविधैः सिंहनादैश्च नर्तितैः
परानवहसन्तश्च स्तुवन्तश्चाच्युतार्जुनौ ३९
कृतेऽवहारे तैर्वीरैः सैनिकाः सर्व एव ते
आशिषः पाण्डवेयेषु प्रायुज्यन्त नरेश्वराः ४०
ततः कृतेऽवहारे च प्रहृष्टाः कुरुपाण्डवाः
निशायां शिबिरं गत्वा न्यविशन्त नरेश्वराः ४१
यक्षरक्षःपिशाचाश्च श्वापदानि च संघशः
जग्मुरायोधनं घोरं रुद्रस्यानर्तनोपमम् ४२
इति श्रीमहाभारते कर्णपर्वणि एकविंशोऽध्यायः २१

## द्वाविंशोऽध्यायः

धृतराष्ट्र उवाच
स्वेन च्छन्देन नः सर्वान्नावधीद्व्यक्तमर्जुनः
न ह्यस्य समरे मुच्येतान्तकोऽप्याततायिनः १
पार्थो ह्येकोऽहरद्भद्रामेकश्चाग्निमतर्पयत्
एकश्चेमां महीं जित्वा चक्रे बलिभृतो नृपान् २
एको निवातकवचानवधीद्दिव्यकार्मुकः
एकः किरातरूपेण स्थितं शर्वमयोधयत् ३
एकोऽभ्यरक्षद्भरतानेको भवमतोषयत्
तेनैकेन जिताः सर्वे मदीया उग्रतेजसाः
ते न निन्द्याः प्रशस्याश्च यत्ते चक्रुर्ब्रवीहि तत् ४
सञ्जय उवाच
हतप्रहतविध्वस्ता विवर्मायुधवाहनाः
दीनस्वरा दूयमाना मानिनः शत्रुभिर्जिताः ५

शिबिरस्थाः पुनर्मन्त्रं मन्त्रयन्ति स्म कौरवाः
भग्नदंष्ट्रा हतविषाः पदाक्रान्ता इवोरगाः ६
तानब्रवीत्ततः कर्णः क्रुद्धः सर्प इव श्वसन्
करं करेणाभिपीड्य प्रेक्षमाणस्तवात्मजम् ७
यत्तो दृढश्च दक्षश्च धृतिमानर्जुनः सदा
स बोधयति चाप्येनं प्राप्तकालमधोक्षजः ८
सहसास्त्रविसर्गेण वयं तेनाद्य वञ्चिताः
श्वस्त्वहं तस्य संकल्पं सर्वं हन्ता महीपते ९
एवमुक्तस्तथेत्युक्त्वा सोऽनुजज्ञे नृपोत्तमान्
सुखोषितास्ते रजनीं हृष्टा युद्धाय निर्ययुः १०
तेऽपश्यन्विहितं व्यूहं धर्मराजेन दुर्जयम्
प्रयत्नात्कुरुमुख्येन बृहस्पत्युशनोमतात् ११
अथ प्रतीपकर्तारं सततं विजितात्मनाम्
सस्मार वृषभस्कन्धं कर्णं दुर्योधनस्तदा १२
पुरंदरसमं युद्धे मरुद्गणसमं बले
कार्तवीर्यसमं वीर्ये कर्णं राजोऽगमन्मनः
सूतपुत्रं महेष्वासं बन्धुमात्ययिकेष्विव १३
धृतराष्ट्र उवाच
यद्वोऽगमन्मनो मन्दाः कर्णं वैकर्तनं तदा
अप्यद्राक्षत तं यूयं शीतार्ता इव भास्करम् १४
कृतेऽवहारे सैन्यानां प्रवृत्ते च रणे पुनः
कथं वैकर्तनः कर्णस्तत्रायुध्यत सञ्जय
कथं च पाण्डवाः सर्वे युयुधुस्तत्र सूतजम् १५
कर्णो ह्येको महाबाहुर्हन्यात्पार्थान्ससोमकान्
कर्णस्य भुजयोर्वीर्यं शक्रविष्णुसमं मतम्
तथास्त्राणि सुघोराणि विक्रमश्च महात्मनः १६
दुर्योधनं तदा दृष्ट्वा पाण्डवेन भृशार्दितम्
पराक्रान्तान्पाण्डुसुतान्दृष्ट्वा चापि महाहवे १७
कर्णमाश्रित्य संग्रामे दर्पो दुर्योधने पुनः
जेतुमुत्सहते पार्थान्सपुत्रान्सहकेशवान् १८

अहो बत महद्दुःखं यत्र पाण्डुसुतान्रणे
नातरद्रभसः कर्णो दैवं नूनं परायणम्
अहो द्यूतस्य निष्ठेयं घोरा संप्रति वर्तते १९
अहो दुःखानि तीव्राणि दुर्योधनकृतान्यहम्
सहिष्यामि सुघोराणि शल्यभूतानि सञ्जय २०
सौबलं च तथा तात नीतिमानिति मन्यते २१
युद्धेषु नाम दिव्येषु वर्तमानेषु सञ्जय
अश्रौषं निहतान्पुत्रान्नित्यमेव च निर्जितान् २२
न पाण्डवानां समरे कश्चिदस्ति निवारकः
स्त्रीमध्यमिव गाहन्ति दैवं हि बलवत्तरम् २३
सञ्जय उवाच
अतिक्रान्तं हि यत्कार्यं पश्चाच्चिन्तयतीति च
तच्चास्य न भवेत्कार्यं चिन्तया च विनश्यति २४
तदिदं तव कार्यं तु दूरप्राप्तं विजानता
न कृतं यत्त्वया पूर्वं प्राप्ताप्राप्तविचारणे २५
उक्तोऽसि बहुधा राजन्मा युध्यस्वेति पाण्डवैः
गृह्णीषे न च तन्मोहात्पाण्डवेषु विशां पते २६
त्वया पापानि घोराणि समाचीर्णानि पाण्डुषु
त्वत्कृते वर्तते घोरः पार्थिवानां जनक्षयः २७
तत्त्विदानीमतिक्रम्य मा शुचो भरतर्षभ
शृणु सर्वं यथावृत्तं घोरं वैशसमच्युत २८
प्रभातायां रजन्यां तु कर्णो राजानमभ्ययात्
समेत्य च महाबाहुर्दुर्योधनमभाषत २९
अद्य राजन्समेष्यामि पाण्डवेन यशस्विना
हनिष्यामि च तं वीरं स वा मां निहनिष्यति ३०
बहुत्वान्मम कार्याणां तथा पार्थस्य पार्थिव
नाभूत्समागमो राजन्मम चैवार्जुनस्य च ३१
इदं तु मे यथाप्रज्ञं शृणु वाक्यं विशां पते
अनिहत्य रणे पार्थं नाहमेष्यामि भारत ३२
हतप्रवीरे सैन्येऽस्मिन्मयि चैव स्थिते युधि

अभियास्यति मां पार्थः शक्रशक्त्या विनाकृतम् ३३
ततः श्रेयस्करं यत्ते तन्निबोध जनेश्वर
आयुधानां च यद्वीर्यं द्रव्याणामर्जुनस्य च ३४
कायस्य महतो भेदे लाघवे दूरपातने
सौष्ठवे चास्त्रयोगे च सव्यसाची न मत्समः ३५
सर्वायुधमहामात्रं विजयं नाम तद्धनुः
इन्द्रार्थमभिकामेन निर्मितं विश्वकर्मणा ३६
येन दैत्यगणान्राजञ्जितवान्वै शतक्रतुः
यस्य घोषेण दैत्यानां विमुह्यन्ति दिशो दश
तद्भार्गवाय प्रायच्छच्छक्रः परमसंमतम् ३७
तद्दिव्यं भार्गवो मह्यमददाद्धनुरुत्तमम्
येन योत्स्ये महाबाहुमर्जुनं जयतां वरम्
यथेन्द्रः समरे सर्वान्दैतेयान्वै समागतान् ३८
धनुर्घोरं रामदत्तं गाण्डीवात्तद्विशिष्यते
त्रिः सप्तकृत्वः पृथिवी धनुषा तेन निर्जिता ३९
धनुषो यस्य कर्माणि दिव्यानि प्राह भार्गवः
तद्रामो ह्यददान्मह्यं येन योत्स्यामि पाण्डवम् ४०
अद्य दुर्योधनाहं त्वां नन्दयिष्ये सबान्धवम्
निहत्य समरे वीरमर्जुनं जयतां वरम् ४१
सपर्वत वन द्वीपा हत द्विड्भूः ससागरा
पुत्र पौत्र प्रतिष्ठा ते भविष्यत्यद्य पार्थिव ४२
नासाध्यं विद्यते मेऽद्य त्वत्प्रियार्थं विशेषतः
सम्यग्धर्मानुरक्तस्य सिद्धिरात्मवतो यथा ४३
न हि मां समरे सोढुं स शक्तोऽग्निं तरुर्यथा
अवश्यं तु मया वाच्यं येन हीनोऽस्मि फल्गुनात् ४४
ज्या तस्य धनुषो दिव्या तथाक्षय्यौ महेषुधी
तस्य दिव्यं धनुः श्रेष्ठं गाण्डीवमजरं युधि ४५
विजयं च महद्दिव्यं ममापि धनुरुत्तमम्
तत्राहमधिकः पार्थाद्धनुषा तेन पार्थिव ४६
मया चाभ्यधिको वीरः पाण्डवस्तन्निबोध मे

रश्मिग्राहश्च दाशार्हः सर्वलोकनमस्कृतः ४७
अग्निदत्तश्च वै दिव्यो रथः काञ्चनभूषणः
अच्छेद्यः सर्वतो वीर वाजिनश्च मनोजवाः
ध्वजश्च दिव्यो द्युतिमान्वानरो विस्मयंकरः ४८
कृष्णश्च स्रष्टा जगतो रथं तमभिरक्षति
एभिर्द्रव्यैरहं हीनो योद्धुमिच्छामि पाण्डवम् ४९
अयं तु सदृशो वीरः शल्यः समितिशोभनः
सारथ्यं यदि मे कुर्याद्ध्रुवस्ते विजयो भवेत् ५०
तस्य मे सारथिः शल्यो भवत्वसुकरः परैः
नाराचान्गार्ध्रपत्रांश्च शकटानि वहन्तु मे ५१
रथाश्च मुख्या राजेन्द्र युक्ता वाजिभिरुत्तमैः
आयान्तु पश्चात्सततं मामेव भरतर्षभ ५२
एवमभ्यधिकः पार्थाद्भविष्यामि गुणैरहम्
शल्यो ह्यभ्यधिकः कृष्णादर्जुनादधिको ह्यहम् ५३
यथाश्वहृदयं वेद दाशार्हः परवीरहा
तथा शल्योऽपि जानीते हयानां वै महारथः ५४
बाहुवीर्ये समो नास्ति मद्रराजस्य कश्चन
तथास्त्रैर्मत्समो नास्ति कश्चिदेव धनुर्धरः ५५
तथा शल्यसमो नास्ति हययाने ह कश्चन
सोऽयमभ्यधिकः पार्थाद्भविष्यति रथो मम ५६
एतत्कृतं महाराज त्वयेच्छामि परंतप
एवं कृते कृतं मह्यं सर्वकामैर्भविष्यति ५७
ततो द्रष्टासि समरे यत्करिष्यामि भारत
सर्वथा पाण्डवान्सर्वाञ्जेष्याम्यद्य समागतान् ५८
दुर्योधन उवाच
सर्वमेतत्करिष्यामि यथा त्वं कर्ण मन्यसे
सोपासङ्गा रथाः साश्वा अनुयास्यन्ति सूतज ५९
नाराचान्गार्ध्रपक्षांश्च शकटानि वहन्तु ते
अनुयास्याम कर्ण त्वां वयं सर्वे च पार्थिवाः ६०
सञ्जय उवाच

एवमुक्त्वा महाराज तव पुत्रः प्रतापवान्
अभिगम्याब्रवीद्राजा मद्रराजमिदं वचः ६१
इति श्रीमहाभारते कर्णपर्वणि द्वाविंशतितमोऽध्यायः २२

त्रयोविंशोऽध्यायः

सञ्जय उवाच
पुत्रस्तव महाराज मद्रराजमिदं वचः
विनयेनोपसंगम्य प्रणयाद्वाक्यमब्रवीत् १
सत्यव्रत महाभाग द्विषतामघवर्धन
मद्रेश्वर रणे शूर परसैन्यभयङ्कर २
श्रुतवानसिकर्णस्य ब्रुवतो वदतां वर
यथा नृपतिसिंहानां मध्ये त्वां वरयत्वयम् ३
तस्मात्पार्थविनाशार्थं हितार्थे मम चैव हि
सारथ्यं रथिनां श्रेष्ठ सुमनाः कर्तुमर्हसि ४
अस्याभीशुग्रहो लोके नान्योऽस्ति भवता समः
स पातु सर्वतः कर्णं भवान्ब्रह्मेव शंकरम् ५
पार्थस्य सचिवः कृष्णो यथाभीशुग्रहो वरः
तथा त्वमपि राधेयं सर्वतः परिपालय ६
भीष्मो द्रोणः कृपः कर्णो भवान्भोजश्च वीर्यवान्
शकुनिः सौबलो द्रोणिरहमेव च नो बलम्
एषामेव कृतो भागो नवधा पृतनापते ७
नैव भागोऽत्र भीष्मस्य द्रोणस्य च महात्मनः
ताभ्यामतीत्य तौ भागौ निहता मम शत्रवः ८
वृद्धौ हि तौ नरव्याघ्रौ छलेन निहतौ च तौ
कृत्वा नसुकरं कर्म गतौ स्वर्गमितोऽनघ ९
तथान्ये पुरुषव्याघ्राः परैर्विनिहता युधि
अस्मदीयाश्च बहवः स्वर्गायोपगता रणे
त्यक्त्वा प्राणान्यथाशक्ति चेष्टाः कृत्वा च पुष्कलाः १०
कर्णो ह्येको महाबाहुरस्मत्प्रियहिते रतः
भवांश्च पुरुषव्याघ्र सर्वलोकमहारथः

तस्मिञ्जयाशा विपुला मम मद्रजनाधिप ११
पार्थस्य समरे कृष्णो यथा भीशुवरग्रहः
तेन युक्तो रणे पार्थो रक्ष्यमाणश्च पार्थिव
यानि कर्माणि कुरुते प्रत्यक्षाणि तथैव ते १२
पूर्वं न समरे ह्येवमवधीदर्जुनो रिपून्
अहन्यहनि मद्रेश द्रावयन्दृश्यते युधि १३
भागोऽवशिष्टः कर्णस्य तव चैव महाद्युते
तं भागं सह कर्णेन युगपन्नाशयाहवे १४
सूर्यारुणौ यथा दृष्ट्वा तमो नश्यति मारिष
तथा नश्यन्तु कौन्तेयाः सपाञ्चालाः ससृञ्जयाः १५
रथानां प्रवरः कर्णो यन्तॄणां प्रवरो भवान्
संनिपातः समो लोके भवतोर्नास्ति कश्चन १६
यथा सर्वास्ववस्थासु वार्ष्णेयः पाति पाण्डवम्
तथा भवान्परित्रातु कर्णं वैकर्तनं रणे १७
त्वया सारथिना ह्येष अप्रधृष्यो भविष्यति
देवतानामपि रणे सशक्राणां महीपते
किं पुनः पाण्डवेयानां मातिशङ्कीर्वचो मम १८
दुर्योधनवचः श्रुत्वा शल्यः क्रोधसमन्वितः
त्रिशिखां भ्रुकुटीं कृत्वा धुन्वन्हस्तौ पुनः पुनः १९
क्रोधरक्ते महानेत्रे परिवर्त्य महाभुजः
कुलैश्वर्यश्रुतिबलैर्दृप्तः शल्योऽब्रवीदिदम् २०
अवमन्यसेमां गान्धारे ध्रुवं मां परिशङ्कसे
यन्मां ब्रवीषि विस्रब्धं सारथ्यं क्रियतामिति २१
अस्मत्तोऽभ्यधिकं कर्णं मन्यमानः प्रशंससि
न चाहं युधि राधेयं गणये तुल्यमात्मना २२
आदिश्यतामभ्यधिको ममांशः पृथिवीपते
तमहं समरे हित्वा गमिष्यामि यथागतम् २३
अथ वाप्येक एवाहं योत्स्यामि कुरुनन्दन
पश्य वीर्यं ममाद्य त्वं संग्रामे दहतो रिपून् २४
न चाभिकामान्कौरव्य विधाय हृदये पुमान्

अस्मद्विधः प्रवर्तेत मा मा त्वमतिशङ्किथाः २५
युधि चाप्यवमानो मे न कर्तव्यः कथंचन
पश्य हीमौ मम भुजौ वज्रसंहननोपमौ २६
धनुः पश्य च मे चित्रं शरांश्चाशीविषोपमान्
रथं पश्य च मे क्लृप्तं सदश्वैर्वातवेगितैः
गदां च पश्य गान्धारे हेमपट्ट विभूषिताम् २७
दारयेयं महीं क्रुद्धो विकिरेयं च पर्वतान्
शोषयेयं समुद्रांश्च तेजसा स्वेन पार्थिव २८
तन्मामेवंविधं जानन्समर्थमरिनिग्रहे
कस्माद्युनक्षि सारथ्ये न्यूनस्याधिरथेर्नृप २९
न मामधुरि राजेन्द्र प्रयोक्तुं त्वमिहार्हसि
न हि पापीयसः श्रेयान्भूत्वा प्रेष्यत्वमुत्सहे ३०
यो ह्यभ्युपगतं प्रीत्या गरीयांसं वशे स्थितम्
वशे पापीयसो धत्ते तत्पापमधरोत्तरम् ३१
ब्राह्मणा ब्रह्मणा सृष्टा मुखात्क्षत्रमथोरसः
ऊरुभ्यामसृजद्वैश्याञ्शूद्रान्पद्भ्यामितिश्रुतिः
तेभ्यो वर्णविशेषाश्च प्रतिलोमानुलोमजाः ३२
अथान्योन्यस्य संयोगाच्चातुर्वर्ण्यस्य भारत
गोप्तारः संग्रहीतारो दातारः क्षत्रियाः स्मृताः ३३
याजनाध्यापनैर्विप्रा विशुद्धैश्च प्रतिग्रहैः
लोकस्यानुग्रहार्थाय स्थापिता ब्रह्मणा भुवि ३४
कृषिश्च पाशुपाल्यं च विशां दानं च सर्वशः
ब्रह्मक्षत्रविशां शूद्रा विहिताः परिचारकाः ३५
ब्रह्मक्षत्रस्य विहिताः सूता वै परिचारकाः
न विट्शूद्रस्य तत्रैव शृणु वाक्यं ममानघ ३६
सोऽह मूर्धावसिक्तः सन्राजर्षिकुलसंभवः
महारथः समाख्यातः सेव्यः स्तव्यश्च बन्दिनाम् ३७
सोऽहमेतादृशो भूत्वा नेहारिकुलमर्दन
सूतपुत्रस्य संग्रामे सारथ्यं कर्तुमुत्सहे ३८
अवमानमहं प्राप्य न योत्स्यामि कथंचन

आपृच्छ्य त्वाद्य गान्धारे गमिष्यामि यथागतम् ३९
एवमुक्त्वा नरव्याघ्रः शल्यः समितिशोभनः
उत्थाय प्रययौ तूर्णं राजमध्यादमर्षितः ४०
प्रणयाद्बहुमानाच्च तं निगृह्य सुतस्तव
अब्रवीन्मधुरं वाक्यं सामा सर्वार्थसाधकम् ४१
यथा शल्य त्वमात्थेदमेवमेतदसंशयम्
अभिप्रायस्तु मे कश्चित्तं निबोध जनेश्वर ४२
न कर्णोऽभ्यधिकस्त्वत्तः शङ्के नैव कथंचन
न हि मद्रेश्वरो राजा कुर्याद्यदनृतं भवेत् ४३
ऋतमेव हि पूर्वास्ते वहन्ति पुरुषोत्तमाः
तस्मादार्तायनिः प्रोक्तो भवानिति मतिर्मम ४४
शल्यभूतश्च शत्रूणां यस्मात्त्वं भुवि मानद
तस्माच्छल्येति ते नाम कथ्यते पृथिवीपते ४५
यदेव व्याहृतं पूर्वं भवता भूरिदक्षिण
तदेव कुरु धर्मज्ञ मदर्थं यद्यदुच्यसे ४६
न च त्वत्तो हि राधेयो न चाहमपि वीर्यवान्
वृणीमस्त्वां हयाग्र्याणां यन्तारमिति संयुगे ४७
यथा ह्यभ्यधिकं कर्णं गुणैस्तात धनञ्जयात्
वासुदेवादपि त्वां च लोकोऽयमिति मन्यते ४८
कर्णो ह्यभ्यधिकः पार्थादस्त्रैरेव नरर्षभ
भवानप्यधिकः कृष्णादश्वयाने बले तथा ४९
यथाश्वहृदयं वेद वासुदेवो महामनाः
द्विगुणं त्वं तथा वेत्थ मद्रराज न संशयः ५०
शल्य उवाच
यन्मा ब्रवीषि गान्धारे मध्ये सैन्यस्य कौरव
विशिष्टं देवकीपुत्रात्प्रीतिमानस्म्यहं त्वयि ५१
एष सारथ्यमातिष्ठे राधेयस्य यशस्विनः
युध्यतः पाण्डवाग्र्येण यथा त्वं वीर मन्यसे ५२
समयश्च हि मे वीर कश्चिद्वैकर्तनं प्रति
उत्सृजेयं यथाश्रद्धमहं वाचोऽस्य संनिधौ ५३

सञ्जय उवाच
तथेति राजन्पुत्रस्ते सह कर्णेन भारत
अब्रवीन्मद्रराजस्य सुतं भरतसत्तम ५४
इति श्रीमहाभारते कर्णपर्वणि त्रयोविंशोऽध्यायः २३

चतुर्विंशोऽध्यायः

दुर्योधन उवाच
भूय एव तु मद्रेश यत्ते वक्ष्यामि तच्छृणु
यथा पुरा वृत्तमिदं युद्धे देवासुरे विभो १
यदुक्तवान्पितुर्मह्यं मार्कण्डेयो महानृषिः
तदशेषेण ब्रुवतो मम राजर्षि सत्तम
त्वं निबोध न चाप्यत्र कर्तव्या ते विचारणा २
देवानामसुराणां च महानासीत्समागमः
बभूव प्रथमो राजन्संग्रामस्तारकामयः
निर्जिताश्च तदा दैत्या दैवतैरिति नः श्रुतम् ३
निर्जितेषु च दैत्येषु तारकस्य सुतास्त्रयः
ताराक्षः कमलाक्षश्च विद्युन्माली च पार्थिव ४
तप उग्रं समास्थाय नियमे परमे स्थिताः
तपसा कर्शयामासुर्देहान्स्वाञ्शत्रुतापन ५
दमेन तपसा चैव नियमेन च पार्थिव
तेषां पितामहः प्रीतो वरदः प्रददौ वरान् ६
अवध्यत्वं च ते राजन्सर्वभूतेषु सर्वदा
सहिता वरयामासुः सर्वलोकपितामहम् ७
तानब्रवीत्तदा देवो लोकानां प्रभुरीश्वरः
नास्ति सर्वामरत्वं वै निवर्तध्वमितोऽसुराः
वरमन्यं वृणीध्वं वै यादृशं संप्ररोचते ८
ततस्ते सहिता राजन्संप्रधार्यासकृद्बहु
सर्वलोकेश्वरं वाक्यं प्रणम्यैनमथाब्रुवन् ९
अस्माकं त्वं वरं देव प्रयच्छेमं पितामह
वयं पुराणि त्रीण्येव समास्थाय महीमिमाम्

विचरिष्यामि लोकेऽस्मिस्त्वत्प्रसादपुरस्कृताः १०
ततो वर्षसहस्रे तु समेष्यामः परस्परम्
एकीभावं गमिष्यन्ति पुराण्येतानि चानघ ११
समागतानि चैतानि यो हन्याद्भगवंस्तदा
एकेषुणा देववरः स नो मृत्युर्भविष्यति
एवमस्त्विति तान्देवः प्रत्युक्त्वा प्राविशद्दिवम् १२
ते तु लब्धवराः प्रीताः संप्रधार्य परस्परम्
पुरत्रयविसृष्ट्यर्थं मयं वव्रुर्महासुरम्
विश्वकर्माणमजरं दैत्यदानवपूजितम् १३
ततो मयः स्वतपसा चक्रे धीमान्पुराणि ह
त्रीणि काञ्चनमेकं तु रौप्यं कार्ष्णायसं तथा १४
काञ्चनं दिवि तत्रासीदन्तरिक्षे च राजतम्
आयसं चाभवद्भूमौ चक्रस्थं पृथिवीपते १५
एकैकं योजनशतं विस्तारायामसंमितम्
गृहाट्टाट्टालकयुतं बृहत्प्राकारतोरणम् १६
गुणप्रसवसंबाधमसंबाधमनामयम्
प्रासादैर्विविधैश्चैव द्वारैश्चाप्युपशोभितम् १७
पुरेषु चाभवन्राजन्राजानो वै पृथक्पृथक्
काञ्चनं तारकाक्षस्य चित्रमासीन्महात्मनः
राजतं कमलाक्षस्य विद्युन्मालिन आयसम् १८
त्रयस्ते दैत्यराजानस्त्रीँल्लोकानाशु तेजसा
आक्रम्य तस्थुर्वर्षाणां पूगान्नाम प्रजापतिः १९
तेषां दानवमुख्यानां प्रयुतान्यर्बुदानि च
कोट्यश्चाप्रतिवीराणां समाजग्मुस्ततस्ततः
महदैश्वर्यमिच्छन्तस्त्रिपुरं दुर्गमाश्रिताः २०
सर्वेषां च पुनस्तेषां सर्वयोगवहो मयः
तमाश्रित्य हि ते सर्वे अवर्तन्ताकुतोभयाः २१
यो हि यं मनसा कामं दध्यौ त्रिपुरसंश्रयः
तस्मै कामं मयस्तं तं विदधे मायया तदा २२
तारकाक्षसुतश्चासीद्धरिर्नाम महाबलः

तपस्तेपे परमकं येनातुष्यत्पितामहः २३
स तुष्टमवृणोद्देवं वापी भवतु नः पुरे
शस्त्रैर्विनिहता यत्र क्षिप्ताः स्युर्बलवत्तराः २४
स तु लब्ध्वा वरं वीरस्तारकाक्षसुतो हरिः
ससृजे तत्र वापीं तां मृतानां जीवनीं प्रभो २५
येन रूपेण दैत्यस्तु येन वेषेण चैव ह
मृतस्तस्यां परिक्षिप्तस्तादृशेनैव जज्ञिवान् २६
तां प्राप्य त्रैपुरस्थास्तु सर्वाँल्लोकान्बबाधिरे
महता तपसा सिद्धाः सुराणां भयवर्धनाः
न तेषामभवद्राजन्क्षयो युद्धे कथंचन २७
ततस्ते लोभमोहाभ्यामभिभूता विचेतसः
निर्ह्रीकाः संस्थितिं सर्वे स्थापितां समलूलुपन् २८
विद्राव्य सगणान्देवांस्तत्र तत्र तदा तदा
विचेरुः स्वेन कामेन वरदानेन दर्पिताः २९
देवारण्यानि सर्वाणि प्रियाणि च दिवौकसाम्
ऋषीणामाश्रमान्पुण्यान्यूपाञ्जनपदांस्तथा
व्यनाशयन्त मर्यादा दानवा दुष्टचारिणः ३०
ते देवाः सहिताः सर्वे पितामहमरिंदम
अभिजग्मुस्तदाख्यातुं विप्रकारं सुरेतरैः ३१
ते तत्त्वं सर्वमाख्याय शिरसाभिप्रणम्य च
वधोपायमपृच्छन्त भगवन्तं पितामहम् ३२
श्रुत्वा तद्भगवान्देवो देवानिदमुवाच ह
असुराश्च दुरात्मानस्ते चापि विबुधद्विषः
अपराध्यन्ति सततं ये युष्मान्पीडयन्त्युत ३३
अहं हि तुल्यः सर्वेषां भूतानां नात्र संशयः
अधार्मिकास्तु हन्तव्या इत्यहं प्रब्रवीमि वः ३४
ते यूयं स्थाणुमीशानं जिष्णुमक्लिष्टकारिणम्
योद्धारं वृणुतादित्याः स तान्हन्ता सुरेतरान् ३५
इति तस्य वचः श्रुत्वा देवाः शक्रपुरोगमाः
ब्रह्माणमग्रतः कृत्वा वृषाङ्कं शरणं ययुः ३६

तपः परं समातस्थुर्गृणन्तो ब्रह्म शाश्वतम्
ऋषिभिः सह धर्मज्ञा भवं सर्वात्मना गताः ३७
तुष्टुवुर्वाग्भिरर्थ्याभिर्भयेष्वभयकृत्तमम्
सर्वात्मानं महात्मानं येनाप्तं सर्वमात्मना ३८
तपोविशेषैर्बहुभिर्योगं यो वेद चात्मनः
यः सांख्यमात्मनो वेद यस्य चात्मा वशे सदा ३९
ते तं ददृशुरीशानं तेजोराशिमुमापतिम्
अनन्यसदृशं लोके व्रतवन्तमकल्मषम् ४०
एकं च भगवन्तं ते नानारूपमकल्पयन्
आत्मनः प्रतिरूपाणि रूपाण्यथ महात्मनि
परस्परस्य चापश्यन्सर्वे परमविस्मिताः ४१
सर्वभूतमयं चेशं तमजं जगतः पतिम्
देवा ब्रह्मर्षयश्चैव शिरोभिर्धरणीं गताः ४२
तान्स्वस्तिवाक्येनाभ्यर्च्य समुत्थाप्य च शंकरः
ब्रूत ब्रूतेति भगवान्स्मयमानोऽभ्यभाषत ४३
त्र्यम्बकेणाभ्यनुज्ञातास्ततस्तेऽस्वस्थचेतसः
नमो नमस्तेऽस्तु विभो तत इत्यब्रुवन्भवम् ४४
नमो देवातिदेवाय धन्विने चातिमन्यवे
प्रजापतिमखघ्नाय प्रजापतिभिरीड्यसे ४५
नमः स्तुताय स्तुत्याय स्तूयमानाय मृत्यवे
विलोहिताय रुद्राय नीलग्रीवाय शूलिने ४६
अमोघाय मृगाक्षाय प्रवरायुधयोधिने
दुर्वारणाय शुक्राय ब्रह्मणे ब्रह्मचारिणे ४७
ईशानायाप्रमेयाय नियन्त्रे चर्मवाससे
तपोनित्याय पिङ्गाय व्रतिने कृत्तिवाससे ४८
कुमारपित्रे त्र्यक्षाय प्रवरायुधधारिणे
प्रपन्नार्तिविनाशाय ब्रह्मद्विट्सङ्घघातिने ४९
वनस्पतीनां पतये नराणां पतये नमः
गवां च पतये नित्यं यज्ञानां पतये नमः ५०
नमोऽस्तु ते ससैन्याय त्र्यम्बकायोग्रतेजसे

मनोवाक्कर्मभिर्देव त्वां प्रपन्नान्भजस्व नः ५१
ततः प्रसन्नो भगवान्स्वागतेनाभिनन्द्य तान्
प्रोवाच व्येतु वस्त्रासो ब्रूत किं करवाणि वः ५२
पितृदेवर्षिसङ्घेभ्यो वरे दत्ते महात्मना
सत्कृत्य शङ्करं प्राह ब्रह्मा लोकहितं वचः ५३
तवातिसर्गाद्देवेश प्राजापत्यमिदं पदम्
मयाधितिष्ठता दत्तो दानवेभ्यो महान्वरः ५४
तानतिक्रान्तमर्यादान्नान्यः संहर्तुमर्हति
त्वामृते भूतभव्येश त्वं ह्येषां प्रत्यरिर्वधे ५५
स त्वं देव प्रपन्नानां याचतां च दिवौकसाम्
कुरु प्रसादं देवेश दानवाञ्जहि शूलभृत् ५६
श्रीभगवानुवाच
हन्तव्याः शत्रवः सर्वे युष्माकमिति मे मतिः
न त्वेकोऽह वधे तेषां समर्थो वै सुरद्विषाम् ५७
ते यूयं सहिताः सर्वे मदीयेनास्त्रतेजसा
जयध्वं युधि ताञ्शत्रून्संघातो हि महाबलः ५८
देवा ऊचुः
अस्मत्तेजोबलं यावत्तावद्द्विगुणमेव च
तेषामिति हि मन्यामो दृष्टतेजोबला हि ते ५९
भगवानुवाच
वध्यास्ते सर्वतः पापा ये युष्मास्वपराधिनः
मम तेजोबलार्धेन सर्वांस्तान्घत शात्रवान् ६०
देवा ऊचुः
बिभर्तुं तेजसोऽध ते न शक्ष्यामो महेश्वर
सर्वेषां नो बलार्धेन त्वमेव जहि शात्रवान् ६१
दुर्योधन उवाच
ततस्तथेति देवेशस्तैरुक्तो राजसत्तम
अर्धमादाय सर्वेभ्यस्तेजसाभ्यधिकोऽभवत् ६२
स तु देवो बलेनासीत्सर्वेभ्यो बलवत्तरः
महादेव इति ख्यातस्तदाप्रभृति शंकरः ६३

ततोऽब्रवीन्महादेवो धनुर्बाणधरस्त्वहम्
हनिष्यामि रथेनाजौ तान्रिपून्वै दिवौकसः ६४
ते यूयं मे रथं चैव धनुर्बाणं तथैव च
पश्यध्वं यावदद्यैतान्पातयामि महीतले ६५
देवा ऊचुः
मूर्तिसर्वस्वमादाय त्रैलोक्यस्य ततस्ततः
रथं ते कल्पयिष्याम देवेश्वर महौजसम् ६६
तथैव बुद्ध्या विहितं विश्वकर्मकृतं शुभम्
ततो विबुधशार्दूलास्तं रथं समकल्पयन् ६७
वन्धुरं पृथिवीं देवीं विशालपुरमालिनीम्
सपर्वतवनद्वीपां चक्रुर्भूतधरां तदा ६८
मन्दरं पर्वतं चाक्षं जङ्घास्तस्य महानदीः
दिशश्च प्रदिशश्चैव परिवारं रथस्य हि ६९
अनुकर्षान्ग्रहान्दीप्तान्वरूथं चापि तारकाः
धर्मार्थकामसंयुक्तं त्रिवेणुं चापि बन्धुरम्
ओषधीर्विविधास्तत्र नानापुष्पफलोद्गमाः ७०
सूर्याचन्द्रमसौ कृत्वा चक्रे रथवरोत्तमे
पक्षौ पूर्वापरौ तत्र कृते रात्र्यहनी शुभे ७१
दश नागपतीनीषां धृतराष्ट्रमुखान्दृढाम्
द्यां युगं युगचर्माणि संवर्तकबलाहकान् ७२
शम्यां धृतिं च मेधां च स्थितिं संनतिमेव च
ग्रहनक्षत्रताराभिश्चर्म चित्रं नभस्तलम् ७३
सुराम्बुप्रेतवित्तानां पतींल्लोकेश्वरान्हयान्
सिनीवालीमनुमतिं कुहूं राकां च सुव्रताम्
योक्त्राणि चक्रुर्वाहानां रोहकांश्चापि कण्ठकम् ७४
कर्म सत्यं तपोऽर्थश्च विहितास्तत्र रश्मयः
अधिष्ठानं मनस्त्वासीत्परिरथ्यं सरस्वती ७५
नानावर्णाश्च चित्राश्च पताकाः पवनेरिताः
विद्युदिन्द्रधनुर्नद्धं रथं दीप्तं व्यदीपयत् ७६
एवं तस्मिन्महाराज कल्पिते रथसत्तमे

देवैर्मनुजशार्दूल द्विषतामभिमर्दने ७७
स्वान्यायुधानि मुख्यानि न्यदधाच्छंकरो रथे
रथयष्टिं वियत्कृष्टां स्थापयामास गोवृषम् ७८
ब्रह्मदण्डः कालदण्डो रुद्रदण्डस्तथा ज्वरः
परिस्कन्दा रथस्यास्य सर्वतोदिशमुद्यताः ७९
अथर्वाङ्गिरसावास्तां चक्ररक्षौ महात्मनः
ऋग्वेदः सामवेदश्च पुराणं च पुरःसराः ८०
इतिहासयजुर्वेदौ पृष्ठरक्षौ बभूवतुः
दिव्या वाचश्च विद्याश्च परिपार्श्वचराः कृताः ८१
तोत्रादयश्च राजेन्द्र वषट्कारस्तथैव च
ॐकारश्च मुखे राजन्नतिशोभाकरोऽभवत् ८२
विचित्रमृतुभिः षड्भिः कृत्वा संवत्सरं धनुः
तस्मान्नृणां कालरात्रिर्ज्या कृता धनुषोऽजरा ८३
इषुश्चाप्यभवद्विष्णुर्ज्वलनः सोम एव च
अग्नीषोमौ जगत्कृत्स्नं वैष्णवं चोच्यते जगत् ८४
विष्णुश्चात्मा भगवतो भवस्यामिततेजसः
तस्माद्धनुर्ज्यासंस्पर्शं न विषेहुर्हरस्य ते ८५
तस्मिञ्शरे तिग्ममन्युर्मुमोचाविषहं प्रभुः
भृग्वङ्गिरोमन्युभवं क्रोधाग्निमतिदुःसहम् ८६
स नीललोहितो धूम्रः कृत्तिवासा भयङ्करः
आदित्यायुतसंकाशस्तेजोज्वालावृतो ज्वलन् ८७
दुश्च्यावश्च्यावनो जेता हन्ता ब्रह्मद्विषां हरः
नित्यं त्राता च हन्ता च धर्माधर्माश्रिताञ्जनान् ८८
प्रमाथिभिर्घोररूपैर्भीमोदग्रैर्गणैर्वृतः
विभाति भगवान्स्थाणुस्तैरेवात्मगुणैर्वृतः ८९
तस्याङ्गानि समाश्रित्य स्थितं विश्वमिदं जगत्
जङ्गमाजङ्गमं राजञ्शुशुभेऽद्भुतदर्शनम् ९०
दृष्ट्वा तु तं रथं दिव्यं कवची स शरासनी
बाणमादत्त तं दिव्यं सोमविष्णवग्निसम्भवम् ९१
तस्य वाजांस्ततो देवाः कल्पयांचक्रिरे विभोः

पुरायगन्धवहं राजञ्श्वसनं राजसत्तम ९२
तमास्थाय महादेवस्त्रासयन्दैवतान्यपि
आरुरोह तदा यत्तः कम्पयन्निव रोदसी ९३
स शोभमानो वरदः खड्गी बाणी शरासनी
हसन्निवाब्रवीद्देवो सारथिः को भविष्यति ९४
तमब्रुवन्देवगणा यं भवान्संनियोक्ष्यते
स भविष्यति देवेश सारथिस्ते न संशयः ९५
तानब्रवीत्पुनर्देवो मत्तः श्रेष्ठतरो हि यः
तं सारथिं कुरुध्वं मे स्वयं संचिन्त्य माचिरम् ९६
एतच्छ्रुत्वा ततो देवा वाक्यमुक्तं महात्मना
गत्वा पितामहं देवं प्रसाद्यैवं वचोऽब्रुवन् ९७
देव त्वयेदं कथितं त्रिदशारिनिबर्हणम्
तथा च कृतमस्माभिः प्रसन्नो वृषभध्वजः ९८
रथश्च विहितोऽस्माभिर्विचित्रायुधसंवृतः
सारथिं तु न जानीमः कः स्यात्तस्मिन्रथोत्तमे ९९
तस्माद्विधीयतां कश्चित्सारथिर्देवसत्तम
सफलां तां गिरं देव कर्तुमर्हसि नो विभो १००
एवमस्मासु हि पुरा भगवन्नुक्तवानसि
हितं कर्तास्मि भवतामिति तत्कर्तुमर्हसि १०१
स देव युक्तो रथसत्तमो नो दुरावरो द्रावणः शात्रवाणाम्
पिनाकपाणिर्विहितोऽत्र योद्धा विभीषयन्दानवानुद्यतोऽसौ १०२
तथैव वेदाश्चतुरो हयाग्र्या धरा सशैला च रथो महात्मन्
नक्षत्रवंशोऽनुगतो वरूथे यस्मिन्योद्धा सारथिनाभिरक्ष्यः १०३
तत्र सारथिरेष्टव्यः सर्वैरेतैर्विशेषवान्
तत्प्रतिष्ठो रथो देव हया योद्धा तथैव च
कवचानि च शस्त्राणि कार्मुकं च पितामह १०४
त्वामृते सारथिं तत्र नान्यं पश्यामहे वयम्
त्वं हि सर्वैर्गुणैर्युक्तो देवताभ्योऽधिकः प्रभो
सारथ्ये तूर्णमारोह संयच्छ परमान्हयान् १०५
इति ते शिरसा नत्वा त्रिलोकेशं पितामहम्

देवाः प्रसादयामासुः सारथ्यायेति नः श्रुतम् १०६
ब्रह्मोवाच
नात्र किञ्चिन्मृषा वाक्यं यदुक्तं वो दिवौकसः
संयच्छामि हयानेष युध्यतो वै कपर्दिनः १०७
ततः स भगवान्देवो लोकस्रष्टा पितामहः
सारथ्ये कल्पितो देवैरीशानस्य महात्मनः १०८
तस्मिन्नारोहति क्षिप्रं स्यन्दनं लोकपूजिते
शिरोभिरगमंस्तूर्णं ते हया वातरंहसः १०९
महेश्वरे त्वारुहति जानुभ्यामगमन्महीम् ११०
अभीशून्हि त्रिलोकेशः संगृह्य प्रपितामहः
तानश्वांश्चोदयामास मनोमारुतरंहसः १११
ततोऽधिरूढे वरदे प्रयाते चासुरान्प्रति
साधु साध्विति विश्वेशः स्मयमानोऽभ्यभाषत ११२
याहि देव यतो दैत्याश्चोदयाश्वानतन्द्रितः
पश्य बाह्वोर्बलं मेऽद्य निघ्नतः शात्रवान्रणे ११३
ततस्तांश्चोदयामास वायुवेगसमाञ्जवे
येन तत्त्रिपुरं राजन्दैत्यदानवरक्षितम् ११४
अथाधिज्यं धनुः कृत्वा शर्वः संधाय तं शरम्
युक्त्वा पाशुपतास्त्रेण त्रिपुरं समचिन्तयत् ११५
तस्मिन्स्थिते तदा राजन्क्रुद्धे विधृतकार्मुके
पुराणि तानि कालेन जग्मुरेकत्वतां तदा ११६
एकीभावं गते चैव त्रिपुरे समुपागते
बभूव तुमुलो हर्षो दैवतानां महात्मनाम् ११७
ततो देवगणाः सर्वे सिद्धाश्च परमर्षयः
जयेति वाचो मुमुचुः संस्तुवन्तो मुदान्विताः ११८
ततोऽग्रतः प्रादुरभूत्त्रिपुरं जघ्नुषोऽसुरान्
अनिर्देश्योग्रवपुषो देवस्यासह्यतेजसः ११९
स तद्विकृष्य भगवान्दिव्यं लोकेश्वरो धनुः
त्रैलोक्यसारं तमिषुं मुमोच त्रिपुरं प्रति
तत्सासुरगणंदग्ध्वा प्राक्षिपत्पश्चिमार्णवे १२०

एवं तत्त्रिपुरं दग्धं दानवाश्चाप्यशेषतः
महेश्वरेण क्रुद्धेन त्रैलोक्यस्य हितैषिणा १२१
स चात्मक्रोधजो वह्निर्हाहेत्युक्त्वा निवारितः
मा कार्षीर्भस्मसाल्लोकानिति त्र्यक्षोऽब्रवीच्च तम् १२२
ततः प्रकृति मापन्ना देवा लोकास्तथर्षयः
तुष्टुवुर्वाग्भिरर्थ्याभिः स्थाणुमप्रतिमौजसम् १२३
तेऽनुज्ञाता भगवता जग्मुः सर्वे यथागतम्
कृतकामाः प्रसन्नेन प्रजापतिमुखाः सुराः १२४
यथैव भगवान्ब्रह्मा लोकधाता पितामहः
संयच्छ त्वं हयानस्य राधेयस्य महात्मनः १२५
त्वं हि कृष्णाच्च कर्णाच्च फल्गुनाच्च विशेषतः
विशिष्टो राजशार्दूल नास्ति तत्र विचारणा १२६
युद्धे ह्ययं रुद्रकल्पस्त्वं च ब्रह्मसमोऽनघ
तस्माच्छक्तौ युवां जेतुं मच्छत्रूंस्ताविवासुरान् १२७
यथा शल्याद्य कर्णोऽय श्वेताश्वं कृष्णसारथिम्
प्रमथ्य हन्यात्कौन्तेयं तथा शीघ्रं विधीयताम्
त्वयि कर्णश्च राज्यं च वयं चैव प्रतिष्ठिताः १२८
इमं चाप्यपरं भूय इतिहासं निबोध मे
पितुर्मम सकाशे यं ब्राह्मणः प्राह धर्मवित् १२९
श्रुत्वा चैतद्वचश्चित्रं हेतुकार्यार्थसंहितम्
कुरुशल्य विनिश्चित्य मा भूदत्र विचारणा १३०
भार्गवाणां कुले जातो जमदग्निर्महातपाः
तस्य रामेति विख्यातः पुत्रस्तेजोगुणान्वितः १३१
स तीव्रं तप आस्थाय प्रसादयितवान्भवम्
अस्त्रहेतोः प्रसन्नात्मा नियतः संयतेन्द्रियः १३२
तस्य तुष्टो महादेवो भक्त्या च प्रशमेन च
हृद्गतं चास्य विज्ञाय दर्शयामास शङ्करः १३३
ईश्वर उवाच
राम तुष्टोऽस्मि भद्रं ते विदितं मे तवेप्सितम्
कुरुष्व पूतमात्मानं सर्वमेतदवाप्स्यसि १३४

दास्यामि ते तदास्त्राणि यदा पूतो भविष्यसि
अपात्रमसमर्थं च दहन्त्यस्त्राणि भार्गव १३५
इत्युक्तो जामदग्न्यस्तु देवदेवेन शूलिना
प्रत्युवाच महात्मानं शिरसावनतः प्रभुम् १३६
यदा जानासि देवेश पात्रं मामस्त्रधारणे
तदा शुश्रूषतेऽस्त्राणि भवान्मे दातुमर्हति १३७
दुर्योधन उवाच
ततः स तपसा चैव दमेन नियमेन च
पूजोपहारबलिभिर्होममन्त्रपुरस्कृतैः १३८
आराधयितवाञ्शर्वं बहून्वर्षगणांस्तदा
प्रसन्नश्च महादेवो भार्गवस्य महात्मनः १३९
अब्रवीत्तस्य बहुशो गुणान्देव्याः समीपतः
भक्तिमानेष सततं मयि रामो दृढव्रतः १४०
एवं तस्य गुणान्प्रीतो बहुशोऽकथयत्प्रभुः
देवतानां पितृणां च समक्षमरिसूदनः १४१
एतस्मिन्नेव काले तु दैत्या आसन्महाबलाः
तैस्तदा दर्पमोहान्धैरबाध्यन्त दिवौकसः १४२
ततः सम्भूय विबुधास्तान्हन्तुं कृतनिश्चयाः
चक्रुः शत्रुवधे यत्नं न शेकुर्जेतुमेव ते १४३
अभिगम्य ततो देवा महेश्वरमथाब्रुवन्
प्रसादयन्तस्तं भक्त्या जहि शत्रुगणानिति १४४
प्रतिज्ञाय ततो देवो देवतानां रिपुक्षयम्
रामं भार्गवमाहूय सोऽभ्यभाषत शंकरः १४५
रिपून्भार्गव देवानां जहि सर्वान्समागतान्
लोकानां हितकामार्थं मत्प्रीत्यर्थं तथैव च १४६
राम उवाच
अकृतास्त्रस्य देवेश का शक्तिर्मे महेश्वर
निहन्तुं दानवान्सर्वान्कृतास्त्रान्युद्धदुर्मदान् १४७
ईश्वर उवाच
गच्छ त्वं मदनुध्यानान्निहनिष्यसि दानवान्

विजित्य च रिपून्सर्वान्गुणान्प्राप्स्यसि पुष्कलान् १४८
दुर्योधन उवाच
एतच्छ्रुत्वा च वचनं प्रतिगृह्य च सर्वशः
रामः कृतस्वस्त्ययनः प्रययौ दानवान्प्रति १४९
अवधीद्देवशत्रूंस्तान्मददर्पबलान्वितान्
वज्राशनिसमस्पर्शैः प्रहारैरेव भार्गवः १५०
स दानवैः क्षततनुर्जामदग्न्यो द्विजोत्तमः
संस्पृष्टः स्थाणुना सद्यो निर्व्रणः समजायत १५१
प्रीतश्च भगवान्देवः कर्मणा तेन तस्य वै
वरान्प्रादाद्ब्रह्मविदे भार्गवाय महात्मने १५२
उक्तश्च देवदेवेन प्रीतियुक्तेन शूलिना
निपातात्तव शस्त्राणां शरीरे याभवद्रुजा १५३
तया ते मानुषं कर्म व्यपोढं भृगुनन्दन
गृहाणास्त्राणि दिव्यानि मत्सकाशाद्यथेप्सितम् १५४
ततोऽस्त्राणि समस्तानि वरांश्च मनसेप्सितान्
लब्ध्वा बहुविधान्रामः प्रणम्य शिरसा शिवम् १५५
अनुज्ञां प्राप्य देवेशाज्जगाम स महातपाः
एवमेतत्पुरावृत्तं तदा कथितवानृषिः १५६
भार्गवोऽप्यददात्सर्वं धनुर्वेदं महात्मने
कर्णाय पुरुषव्याघ्र सुप्रीतेनान्तरात्मना १५७
वृजिनं हि भवेत्किंचिद्यदि कर्णस्य पार्थिव
नास्मै ह्यस्त्राणि दिव्यानि प्रादास्यद्भृगुनन्दनः १५८
नापि सूतकुले जातं कर्णं मन्ये कथञ्चन
देवपुत्रमहं मन्ये क्षत्रियाणां कुलोद्भवम् १५९
सकुण्डलं सकवचं दीर्घबाहुं महारथम्
कथमादित्यसदृशं मृगी व्याघ्रं जनिष्यति १६०
पश्य ह्यस्य भुजौ पीनौ नागराजकरोपमौ
वक्षः पश्य विशालं च सर्वशत्रुनिबर्हणम् १६१
इति श्रीमहाभारते कर्णपर्वणि चतुर्विंशोऽध्यायः २४

## पञ्चविंशोऽध्यायः

दुर्योधन उवाच
एवं स भगवान्देवः सर्वलोकपितामहः
सारथ्यमकरोत्तत्र यत्र रुद्रोऽभवद्रथी १
रथिनाभ्यधिको वीरः कर्तव्यो रथसारथिः
तस्मात्त्वं पुरुषव्याघ्र नियच्छ तुरगान्युधि २
सञ्जय उवाच
ततः शल्यः परिष्वज्य सुतं ते वाक्यमब्रवीत्
दुर्योधनममित्रघ्नः प्रीतो मद्राधिपस्तदा ३
एवं चेन्मन्यसे राजन्गान्धारे प्रियदर्शन
तस्मात्ते यत्प्रियं किञ्चित्तत्सर्वं करवाण्यहम् ४
यत्रास्मि भरतश्रेष्ठ योग्यः कर्मणि कर्हिचित्
तत्र सर्वात्मना युक्तो वक्ष्ये कार्यधुरं तव ५
यत्तु कर्णमहं ब्रूयां हितकामः प्रियाप्रियम्
मम तत्क्षमतां सर्वं भवान्कर्णश्च सर्वशः ६
कर्ण उवाच
ईशानस्य यथा ब्रह्मा यथा पार्थस्य केशवः
तथा नित्यं हिते युक्तो मद्रराज भजस्व नः ७
शल्य उवाच
आत्मनिन्दात्मपूजा च परनिन्दा परस्तवः
अनाचरितमार्याणां वृत्तमेतच्चतुर्विधम् ८
यत्तु विद्वन्प्रवक्ष्यामि प्रत्ययार्थमहं तव
आत्मनः स्तवसंयुक्तं तन्निबोध यथातथम् ९
अहं शक्रस्य सारथ्ये योग्यो मातलिवत्प्रभो
अप्रमादप्रयोगाच्च ज्ञानविद्याचिकित्सितैः १०
ततः पार्थेन संग्रामे युध्यमानस्य तेऽनघ
वाहयिष्यामि तुरगान्विज्वरो भव सूतज ११

इति श्रीमहाभारते कर्णपर्वणि पञ्चविंशोऽध्यायः २५

षड्विंशोऽध्यायः

दुर्योधन उवाच
अयं ते कर्ण सारथ्यं मद्रराजः करिष्यति
कृष्णादभ्यधिको यन्ता देवेन्द्रस्येव मातलि १
यथा हरिहयैर्युक्तं संगृह्णाति स मातलि
शल्यस्तव तथाद्यायं संयन्ता रथवाजिनाम् २
योधे त्वयि रथस्थे च मद्रराजे च सारथौ
रथश्रेष्ठो ध्रुवं संख्ये पार्थो नाभिभविष्यति ३
सञ्जय उवाच
ततो दुर्योधनो भूयो मद्रराजं तरस्विनम्
उवाच राजन्संग्रामे संयच्छन्तं हयोत्तमान् ४
त्वयाभिगुप्तो राधेयो विजेष्यति धनञ्जयम्
इत्युक्तो रथमास्थाय तथेति प्राह भारत ५
शल्येऽभ्युपगते कर्णः सारथिं सुमनोऽब्रवीत्
स्वं सूत स्यन्दनं मह्यं कल्पयेत्यसकृत्त्वरन् ६
ततो जैत्रं रथवरं गन्धर्वनगरोपमम्
विधिवत्कल्पितं भर्त्रे जयेत्युक्त्वा न्यवेदयत् ७
तं रथं रथिनां श्रेष्ठः कर्णोऽभ्यर्च्य यथाविधि
संपादितं ब्रह्मविदा पूर्वमेव पुरोधसा ८
कृत्वा प्रदक्षिणं यत्नादुपस्थाय च भास्करम्
समीपस्थं मद्रराजं समारोपयदग्रतः ९
ततः कर्णस्य दुर्धर्षं स्यन्दनप्रवरं महत्
आरुरोह महातेजाः शल्यः सिंह इवाचलम् १०
ततः शल्यास्थितं राजन्कर्णः स्वरथमुत्तमम्
अध्यतिष्ठद्यथाम्भोदं विद्युत्वन्तं दिवाकरः ११
तावेकरथमारूढावादित्याग्निसमत्विषौ
व्यभ्राजेतां यथा मेघं सूर्याग्नी सहितौ दिवि १२
संस्तूयमानौ तौ वीरौ तदास्तां द्युतिमत्तरौ
ऋत्विक्सदस्यैरिन्द्राग्नी हूयमानाविवाध्वरे १३
स शल्यसंगृहीताश्वे रथे कर्णः स्थितोऽभवत्

धनुर्विस्फारयन्घोरं परिवेषीव भास्करः १४
आस्थितः स रथश्रेष्ठं कर्णः शरगभस्तिमान्
प्रबभौ पुरुषव्याघ्रो मन्दरस्थ इवांशुमान् १५
तं रथस्थं महावीरं यान्तं चामिततेजसम्
दुर्योधनः स्म राधेयमिदं वचनमब्रवीत् १६
अकृतं द्रोणभीष्माभ्यां दुष्करं कर्म संयुगे
कुरुष्वाधिरथे वीर मिषतां सर्वधन्विनाम् १७
मनोगतं मम ह्यासीद्भीष्मद्रोणौ महारथौ
अर्जुनं भीमसेनं च निहन्ताराविति ध्रुवम् १८
ताभ्यां यदकृतं वीर वीरकर्म महामृधे
तत्कर्म कुरु राधेय वज्रपाणिरिवापरः १९
गृहाण धर्मराजं वा जहि वा त्वं धनञ्जयम्
भीमसेनं च राधेय माद्रीपुत्रौ यमावपि २०
जयश्च तेऽस्तु भद्रं च प्रयाहि पुरुषर्षभ
पाण्डुपुत्रस्य सैन्यानि कुरु सर्वाणि भस्मसात् २१
ततस्तूर्यसहस्राणि भेरीणामयुतानि च
वाद्यमानान्यरोचन्त मेघशब्दो यथा दिवि २२
प्रतिगृह्य तु तद्वाक्यं रथस्थो रथसत्तमः
अभ्यभाषत राधेयः शल्यं युद्धविशारदम् २३
चोदयाश्वान्महाबाहो यावद्धन्मि धनञ्जयम्
भीमसेनं यमौ चोभौ राजानं च युधिष्ठिरम् २४
अद्य पश्यतु मे शल्य बाहुवीर्यं धनञ्जयः
अस्यतः कङ्कपत्राणां सहस्राणि शतानि च २५
अद्य क्षेप्स्याम्यहं शल्य शरान्परमतेजनान्
पाण्डवानां विनाशाय दुर्योधनजयाय च २६
शल्य उवाच
सूतपुत्र कथं नु त्वं पाण्डवानवमन्यसे
सर्वास्त्रज्ञान्महेष्वासान्सर्वानेव महारथान् २७
अनिवर्तिनो महाभागानजेयान्सत्यविक्रमान्
अपि संजनयेयुर्ये भयं साक्षाच्छतक्रतोः २८

यदा श्रोष्यसि निर्घोषं विस्फूर्जितमिवाशनेः
राधेय गाण्डिवस्याजौ तदा नैवं वदिष्यसि २९
सञ्जय उवाच
अनादृत्य तु तद्वाक्यं मद्रराजेन भाषितम्
ददस्यद्येत्यवोचद्वै शल्यं कर्णो नरेश्वर ३०
दृष्ट्वा कर्णं महेष्वासं युयुत्सुं समवस्थितम्
चुक्रुशुः कुरवः सर्वे हृष्टरूपाः परंतप ३१
ततो दुन्दुभिघोषेण भेरीणां निनदेन च
बाणशब्दैश्च विविधैर्गर्जितैश्च तरस्विनाम्
निर्ययुस्तावका युद्धे मृत्युं कृत्वा निवर्तनम् ३२
प्रयाते तु ततः कर्णे योधेषु मुदितेषु च
चचाल पृथिवी राजन्ररास च सुविस्वरम् ३३
निश्चरन्तो व्यदृश्यन्त सूर्यात्सप्त महाग्रहाः
उल्कापातश्च सञ्जज्ञे दिशां दाहस्तथैव च
तथाशन्यश्च संपेतुर्ववुर्वाताश्च दारुणाः ३४
मृगपक्षिगणाश्चैव बहुशः पृतनां तव
अपसव्यं तदा चक्रुर्वेदयन्तो महद्भयम् ३५
प्रस्थितस्य च कर्णस्य निपेतुस्तुरगा भुवि
अस्थिवर्षं च पतितमन्तरिक्षाद्भयानकम् ३६
जज्वलुश्चैव शस्त्राणि ध्वजाश्चैव चकम्पिरे
अश्रूणि च व्यमुञ्चन्त वाहनानि विशां पते ३७
एते चान्ये च बहव उत्पातास्तत्र मारिष
समुत्पेतुर्विनाशाय कौरवाणां सुदारुणाः ३८
न च तान्गणयामासुः सर्वे ते दैवमोहिताः
प्रस्थितं सूतपुत्रं च जयेत्यूचुर्नरा भुवि
निर्जितान्पाण्डवांश्चैव मेनिरे तव कौरवाः ३९
ततो रथस्थः परवीरहन्ता भीष्मद्रोणावत्तवीर्यौ निरीक्ष्य
समज्वलद्भारता पावकाभो वैकर्तनोऽसौ रथकुञ्जरो वृषः ४०
स शल्यमाभाष्य जगाद वाक्यं पार्थस्य कर्माप्रतिमं च दृष्ट्वा
मानेन दर्पेण च दह्यमानः क्रोधेन दीप्यन्निव निःश्वासित्वा ४१

नाहं महेन्द्रादपि वज्रपाणेः क्रुद्धाद्बिभेम्यात्तधनू रथस्थः
दृष्ट्वा तु भीष्मप्रमुखाञ्शयानान्न त्वेव मां स्थिरता संजहाति ४२
महेन्द्रविष्णुप्रतिमावनिन्दितौ रथाश्वनागप्रवरप्रमाथिनौ
अवध्यकल्पौ निहतौ यदा परैस्ततो ममाद्यापि रणेऽस्ति साध्वसम् ४३
समीक्ष्य सङ्ख्येऽतिबलान्नराधिपैर्नराश्वमातङ्गरथाञ्शरैर्हतान्
कथं न सर्वानहितान्रणेऽवधीन्महास्त्रविद्ब्राह्मणपुङ्गवो गुरुः ४४
स संस्मरन्द्रोणहवं महाहवे ब्रवीमि सत्यं कुरवो निबोधत
न वा मदन्यः प्रसहेद्रणेऽजुनं क्रमागतं मृत्युमिवोग्ररूपिणम् ४५
शिक्षा प्रसादश्च बलं धृतिश्च द्रोणे महास्त्राणि च संनतिश्च
स चेदगान्मृत्युवशं महात्मा सर्वानन्यानातुरानद्य मन्ये ४६
नेह ध्रुवं किञ्चिदपि प्रचिन्त्यं विदुर्लोके कर्मणोऽनित्ययोगात्
सूर्योदये को हि विमुक्तसंशयो गर्वं कुर्वीताद्य गुरौ निपातिते ४७
न नूनमस्त्राणि बलं पराक्रमः क्रिया सुनीतं परमायुधानि वा
अलं मनुष्यस्य सुखाय वर्तितुं तथा हि युद्धे निहतः परैर्गुरुः ४८
हुताशनादित्यसमानतेजसं पराक्रमे विष्णुपुरंदरोपमम्
नये बृहस्पत्युशनः समं सदा न चैनमस्त्रं तदुपात्सुदुःसहम् ४९
संप्रक्रुष्टे रुदितस्त्रीकुमारे पराभूते पौरुषे धार्तराष्ट्रे
मया कृत्यमिति जानामि शल्य प्रयाहि तस्माद्द्विषतामनीकम् ५०
यत्र राजा पाण्डवः सत्यसंधो व्यवस्थितो भीमसेनार्जुनौ च
वासुदेवः सृञ्जयाः सात्यकिश्च यमौ च कस्तौ विषहेन्मदन्यः ५१
तस्मात्क्षिप्रं मद्रपते प्रयाहि रणे पाञ्चालान्पाण्डवान्सृञ्जयांश्च
तान्वा हनिष्यामि समेत्य सङ्ख्ये यास्यामि वा द्रोणमुखाय मन्ये ५२
न त्वेवाहं न गमिष्यामि मध्यं तेषां शूराणामिति मा शल्य विद्धि
मित्रद्रोहो मर्षणीयो न मेऽय त्यक्त्वा प्राणाननुयास्यामि द्रोणम् ५३
प्राज्ञस्य मूढस्य च जीवितान्ते प्राणप्रमोक्षोऽन्तकवत्क्रमस्य
अतो विद्वन्नभियास्यामि पार्थं दिष्टं न शक्यं व्यतिवर्तितुं वै ५४
कल्याणवृत्तः सततं हि राजन्वैचित्रवीर्यस्य सुतो ममासीत्
तस्यार्थसिद्ध्यर्थमहं त्यजामि प्रियान्भोगान्दुस्त्यजं जीवितं च ५५
वैयाघ्रचर्माणमकूजनाक्षं हैमत्रिकोशं रजतत्रिवेणुम्
रथप्रबर्हं तुरगप्रबर्हैर्युक्तं प्रादान्मह्यमिदं हि रामः ५६

धनूंषि चित्राणि निरीक्ष्य शल्य ध्वजं गदां सायकांश्चोग्ररूपान्
असिं च दीप्तंपरमायुधं च शङ्खं च शुभ्रं स्वनवन्तमुग्रम् ५७
पताकिनं वज्रनिपातनिस्वनं सिताश्वयुक्तं शुभतूणशोभितम्
इमं समास्थाय रथं रथर्षभं रणे हनिष्याम्यहमर्जुनं बलात् ५८
तं चेन्मृत्युः सर्वहरोऽभिरक्षते सदाप्रमत्तः समरे पाण्डुपुत्रम्
तं वा हनिष्यामि समेत्य युद्धे यास्यामि वा भीष्ममुखो यमाय ५९
यमवरुणकुबेर वासवा वा यदि युगपत्सगणा महाहवे
जुगुपिषव इहैत्य पाण्डवं किमु बहुना सह तैर्जयामि तम् ६०
इति रणरभसस्य कत्थतस्तदुपनिशम्य वचः स मद्रराट्
अवहसदवमन्य वीर्यवान्प्रतिषिषिधे च जगाद चोत्तरम् ६१
विरम विरम कर्ण कत्थनादतिरभसोऽस्यति चाप्ययुक्तवाक्
क्व च हि नरवरो धनञ्जयः क्व पुनरिह त्वमुपारमाबुध ६२
यदुसदनमुपेन्द्रपालितं त्रिदिवमिवामरराजरक्षितम्
प्रसभमिह विलोक्य को हरेत्पुरुषवरावरजामृतेऽजुनात् ६३
त्रिभुवनसृजमीश्वरेश्वरं क इह पुमान्भवमाह्वयेद्युधि
मृगवधकलहे ऋतेऽजुनात्सुरपतिवीर्यसमप्रभावतः ६४
असुरसुरमहोरगान्नरान्गरुडपिशाचसयक्षराक्षसान्
इषुभिरजयदग्निगौरवात्स्वभिलषितं च हविर्ददौ जयः ६५
स्मरसि ननु यदा परैर्हृतः स च धृतराष्ट्रसुतो विमोक्षितः
दिनकरज नरोत्तमैर्यदा मरुषु बहून्विनिहत्य तानरीन् ६६
प्रथममपि पलायिते त्वयि प्रियकलहा धृतराष्ट्रसूनवः
स्मरसि ननु यदा प्रमोचिताः खचरगणानवजित्य पाण्डवैः ६७
समुदितबलवाहनाः पुनः पुरुषवरेण जिताः स्थ गोग्रहे
सगुरुगुरुसुताः सभीष्मकाः किमु न जितः स तदा त्वयार्जुनः ६८
इदमपरमुपस्थितं पुनस्तव निधनाय सुयुद्धमद्य वै
यदि न रिपुभयात्पलायसे समरगतोऽद्य हतोऽसि सूतज ६९
सञ्जय उवाच
इति बहुपरुषं प्रभाषति प्रमनसि मद्रपतौ रिपुस्तवम्
भृशमतिरुषितः परं वृषः कुरुपृतनापतिराह मद्रपम् ७०
भवतु भवतु किं विकत्थसे ननु मम तस्य च युद्धमुद्यतम्

यदि स जयति मां महाहवे तत इदमस्तु सुकत्थितं तव ७१
एवमस्त्विति मद्रेश उक्त्वा नोत्तरमुक्तवान्
याहि मद्रेश चाप्येनं कर्णः प्राह युयुत्सया ७२
स रथः प्रययौ शत्रूञ्श्वेताश्वः शल्यसारथिः
निघ्नन्नमित्रान्समरे तमो घ्नन्सविता यथा ७३
ततः प्रायात्प्रीतिमान्वै रथेन वैयाघ्रेण श्वेतयुजाथ कर्णः
स चालोक्य ध्वजिनीं पाण्डवानां धनञ्जयं त्वरया पर्यपृच्छत् ७४
इति श्रीमहाभारते कर्णपर्वणि षड्विंशोऽध्यायः २६

## सप्तविंशोऽध्यायः

सञ्जय उवाच
प्रयानेव तदा कर्णो हर्षयन्वाहिनीं तव
एकैकं समरे दृष्ट्वा पाण्डवं पर्यपृच्छत १
यो ममाद्य महात्मानं दर्शयेच्छ्वेतवाहनम्
तस्मै दद्यामभिप्रेतं वरं यं मनसेच्छति २
स चेत्तदभिमन्येत तस्मै दद्यामहं पुनः
शकटं रत्नसंपूर्णं यो मे ब्रूयाद्धनञ्जयम् ३
स चेत्तदभिमन्येत पुरुषोऽजुनदर्शिवान्
अन्यं तस्मै पुनर्दद्यां सौवर्णं हस्तिषड्गवम् ४
तथा तस्मै पुनर्दद्यां स्त्रीणां शतमलंकृतम्
श्यामानां निष्ककण्ठीनां गीतवाद्यविपश्चिताम् ५
न चेत्तदभिमन्येत पुरुषोऽजुनदर्शिवान्
अन्यं तस्मै वरं दद्यां श्वेतान्पञ्चशतान्हयान् ६
हेमभाण्डपरिच्छन्नान्सुमृष्टमणिकुण्डलान्
सुदान्तानपि चैवाहं दद्यामष्टशतान्परान् ७
रथं च शुभ्रं सौवर्णं दद्यां तस्मै स्वलंकृतम्
युक्तं परमकाम्बोजैर्यो मे ब्रूयाद्धनञ्जयम् ८
अन्यं तस्मै वरं दद्यां कुञ्जराणां शतानि षट्
काञ्चनैर्विविधैर्भाण्डैराच्छन्नान्हेममालिनः
उत्पन्नानपरान्तेषु विनीतान्हस्तिशिक्षकैः ९

स चेत्तदभिमन्येत पुरुषोऽर्जुनदर्शिवान्
अन्यं तस्मै वरं दद्यां यमसौ कामयेत्स्वयम् १०
पुत्रदारान्विहारांश्च यदन्यद्वित्तमस्ति मे
तच्च तस्मै पुनर्दद्यां यद्यत्स मनसेच्छति ११
हत्वा च सहितौ कृष्णौ तयोर्वित्तानि सर्वशः
तस्मै दद्यामहं यो मे प्रब्रूयात्केशवार्जुनौ १२
एता वाचः सुबहुशः कर्ण उच्चारयन्युधि
दध्मौ सागरसंभूतं सुस्वनं शङ्खमुत्तमम् १३
ता वाचः सूतपुत्रस्य तथा युक्ता निशम्य तु
दुर्योधनो महाराज प्रहृष्टः सानुगोऽभवत् १४
ततो दुन्दुभिनिर्घोषो मृदङ्गानां च सर्वशः
सिंहनादः सवादित्रः कुञ्जराणां च निस्वनः १५
प्रादुरासीत्तदा राजंस्त्वत्सैन्ये भरतर्षभ
योधानां संप्रहृष्टानां तथा समभवत्स्वनः १६
तथा प्रहृष्टे सैन्ये तु प्लवमानं महारथम्
विकत्थमानं समरे राधेयमरिकर्शनम्
मद्रराजः प्रहस्येदं वचनं प्रत्यभाषत १७
मा सूतपुत्र मानेन सौवर्णं हस्तिषड्गवम्
प्रयच्छ पुरुषायाद्य द्रक्ष्यसि त्वं धनञ्जयम् १८
बाल्याद्धि त्वं त्यजसि वसु वैश्रवणो यथा
अयत्नेनैव राधेयद्रष्टास्यद्य धनञ्जयम् १९
परासृजसि मिथ्या किं किं च त्वं बहु मूढवत्
अपात्रदाने ये दोषास्तान्मोहान्नावबुध्यसे २०
यत्प्रवेदयसे वित्तं बहुत्वेन खलु त्वया
शक्यं बहुविधैर्यज्ञैर्यष्टुं सूत यजस्व तैः २१
यच्च प्रार्थयसे हन्तुं कृष्णौ मोहान्मृषैव तत्
न हि शुश्रुम संमर्दे क्रोष्ट्रा सिंहौ निपातितौ २२
अप्रार्थितं प्रार्थयसे सुहृदो न हि सन्ति ते
ये त्वां न वारयन्त्याशु प्रपतन्तं हुताशने २३
कालकार्यं न जानीषे कालपक्वोऽस्यसंशयम्

बह्वबद्धमकर्णीयं को हि ब्रूयाज्जिजीविषुः २४
समुद्रतरणं दोर्भ्यां कण्ठे बद्ध्वा यथा शिलाम्
गिर्यग्राद्वा निपतनं तादृक्तव चिकीर्षितम् २५
सहितः सर्वयोधैस्त्वं व्यूढानीकैः सुरक्षितः
धनञ्जयेन युध्यस्व श्रेयश्चेत्प्राप्तुमिच्छसि २६
हितार्थं धार्तराष्ट्रस्य ब्रवीमि त्वा न हिंसया
श्रद्धस्वैतन्मया प्रोक्तं यदि तेऽस्ति जिजीविषा २७
कर्ण उवाच
स्ववीर्येऽह पराश्वस्य प्रार्थयाम्यर्जुनं रणे
त्वं तु मित्रमुखः शत्रुर्मां भीषयितुमिच्छसि २८
न मामस्मादभिप्रायात्कश्चिदद्य निवर्तयेत्
अपीन्द्रो वज्रमुद्यम्य किं नु मर्त्यः करिष्यति २९
सञ्जय उवाच
इति कर्णस्य वाक्यान्ते शल्यः प्राहोत्तरं वचः
चुकोपयिषुरत्यर्थं कर्णं मद्रेश्वरं पुनः ३०
यदा वै त्वां फल्गुनवेगनुन्ना ज्याचोदिता हस्तवता विसृष्टाः
अन्वेतारः कङ्कपत्राः शिताग्रास्तदा तप्स्यस्यर्जुनस्याभियोगात् ३१
यदा दिव्यं धनुरादाय पार्थः प्रभासयन्पृतनां सव्यसाची
त्वामर्दयेत निशितैः पृषत्कैस्तदा पश्चात्तप्स्यसे सूतपुत्र ३२
बालश्चन्द्रं मातुरङ्के शयानो यथा कश्चित्प्रार्थयतेऽपहर्तुम्
तद्वन्मोहाद्यतमानो रथस्थस्त्वं प्रार्थयस्यर्जुनमद्य जेतुम् ३३
त्रिशूलमाश्लिष्य सुतीक्ष्णधारं सर्वाणि गात्राणि निघर्षसि त्वम्
सुतीक्ष्णधारोपमकर्मणा त्वं युयुत्ससे योऽजुनेनाद्य कर्ण ३४
सिद्धं सिंहं केसरिणं बृहन्तं बालो मूढः क्षुद्रमृगस्तरस्वी
समाह्वयेत्तद्वदेतत्तवाद्य समाह्वानं सूतपुत्रार्जुनस्य ३५
मा सूतपुत्राह्वय राजपुत्रं महावीर्यं केसरिणं यथैव
वने शृगालः पिशितस्य तृप्तो मा पार्थमासाद्य विनङ्क्ष्यसि त्वम् ३६
ईषादन्तं महानागं प्रभिन्नकरटामुखम्
शशकाह्वयसे युद्धे कर्ण पार्थं धनञ्जयम् ३७
बिलस्थं कृष्णसर्पं त्वं बाल्यात्काष्ठेन विध्यसि

महाविषं पूर्णकोशं यत्पार्थं योद्धुमिच्छसि ३८
सिहं केसरिणं क्रुद्धमतिक्रम्याभिनर्दसि
शृगाल इव मूढत्वान्नृसिंहं कर्ण पाण्डवम् ३९
सुपर्णं पतगश्रेष्ठं वैनतेयं तरस्विनम्
लट्वेवाह्वयसे पाते कर्ण पार्थं धनञ्जयम् ४०
सर्वाम्भोनिलयं भीममूर्मिमन्तं झषायुतम्
चन्द्रोदये विवर्तन्तमप्लवः संतितीर्षसि ४१
ऋषभं दुन्दुभिग्रीवं तीक्ष्णशृङ्गं प्रहारिणम्
वत्स आह्वयसे युद्धे कर्ण पार्थं धनञ्जयम् ४२
महाघोषं महामेघं दर्दुरः प्रतिनर्दसि
कामतोयप्रदं लोके नरपर्जन्यमर्जुनम् ४३
यथा च स्वगृहस्थः श्वा व्याघ्रं वनगतं भषेत्
तथा त्वं भषसे कर्ण नरव्याघ्रं धनञ्जयम् ४४
शृगालोऽपि वने कर्ण शशैः परिवृतो वसन्
मन्यते सिंहमात्मानं यावत्सिंहं न पश्यति ४५
तथा त्वमपि राधेय सिंहमात्मानमिच्छसि
अपश्यञ्शत्रुदमनं नरव्याघ्रं धनञ्जयम् ४६
व्याघ्रं त्वं मन्यसेऽत्मानं यावत्कृष्णौ न पश्यसि
समास्थितावेकरथे सूर्याचन्द्रमसाविव ४७
यावद्गाण्डीवनिर्घोषं न शृणोषि महाहवे
तावदेव त्वया कर्ण शक्यं वक्तुं यथेच्छसि ४८
रथशब्दधनुः शब्दैर्नादयन्तं दिशो दश
नर्दन्तमिव शार्दूलं दृष्ट्वा क्रोष्टा भविष्यसि ४९
नित्यमेव शृगालस्त्वं नित्यं सिंहो धनञ्जयः
वीरप्रद्वेषणान्मूढ नित्यं क्रोष्टेव लक्ष्यसे ५०
यथाखुः स्याद्बिडालश्च श्वा व्याघ्रश्च बलाबले
यथा शृगालः सिंहश्च यथा च शशकुञ्जरौ ५१
यथानृतं च सत्यं च यथा चापि विषामृते
तथा त्वमपि पार्थश्च प्रख्यातावात्मकर्मभिः ५२
सञ्जय उवाच

अधिक्षिप्तस्तु राधेयः शल्येनामिततेजसा
शल्यमाह सुसंक्रुद्धो वाक्शल्यमवधारयन् ५३
गुणान्गुणवतः शल्य गुणवान्वेत्ति नागुणः
त्वं तु नित्यं गुणैर्हीनः किं ज्ञास्यस्यगुणो गुणान् ५४
अर्जुनस्य महास्त्राणि क्रोधं वीर्यं धनुः शरान्
अहं शल्याभिजानामि न त्वं जानासि तत्तथा ५५
एवमेवात्मनो वीर्यमहं वीर्यं च पाण्डवे
जानन्नेवाह्वये युद्धे शल्य नाग्निं पतंगवत् ५६
अस्ति चायमिषुः शल्य सुपुङ्खो रक्तभोजनः
एकतूणीशयः पत्री सुधौतः समलंकृतः ५७
शेते चन्दनपूर्णेन पूजितो बहुलाः समाः
आहेयो विषवानुग्रो नराश्वद्विपसंघहा ५८
एकवीरो महारौद्रस्तनुत्रास्थिविदारणः
निर्भिन्द्यां येन रुष्टोऽहमपि मेरुं महागिरिम् ५९
तमहं जातु नास्येयमन्यस्मिन्फल्गुनादृते
कृष्णाद्वा देवकीपुत्रात्सत्यं चात्र शृणुष्व मे ६०
तेनाहमिषुणा शल्य वासुदेवधनंजयौ
योत्स्ये परमसंक्रुद्धस्तत्कर्म सदृशं मम ६१
सर्वेषां वासुदेवानां कृष्णे लक्ष्मीः प्रतिष्ठिता
सर्वेषां पाण्डुपुत्राणां जयः पार्थे प्रतिष्ठितः
उभयं तत्समासाद्य कोऽतिवर्तितुमर्हति ६२
तावेतौ पुरुष व्याघ्रौ समेतौ स्यन्दने स्थितौ
मामेकमभिसंयातौ सुजातं शल्य पश्य मे ६३
पितृष्वसामातुलजौ भ्रातरावपराजितौ
मणी सूत्र इव प्रोतौ द्रष्टासि निहतौ मया ६४
अर्जुने गाण्डिवं कृष्णे चक्रं तार्क्ष्यकपिध्वजौ
भीरूणां त्रासजननौ शल्य हर्षकरौ मम ६५
त्वं तु दुष्प्रकृतिर्मूढो महायुद्धेष्वकोविदः
भयावतीर्णः संत्रासादबद्धं बहु भाषसे ६६
संस्तौषि त्वं तु केनापि हेतुना तौ कुदेशज

तौ हत्वा समरे हन्ता त्वामद्धा सहबान्धवम् ६७
पापदेशज दुर्बुद्धे क्षुद्र क्षत्रियपांसन
सुहृद्भूत्वा रिपुः किं मां कृष्णाभ्यां भीषयन्नसि ६८
तौ वा ममाद्य हन्तारौ हन्तास्मि समरे स्थितौ
नाहं बिभेमि कृष्णाभ्यां विजानन्नात्मनो बलम् ६९
वासुदेवसहस्रं वा फल्गुनानां शतानि च
अहमेको हनिष्यामि जोषमास्स्व कुदेशज ७०
स्त्रियो बालाश्च वृद्धाश्च प्रायः क्रीडागता जनाः
या गाथाः संप्रगायन्ति कुर्वन्तोऽध्ययनं यथा
ता गाथाः शृणु मे शल्य मद्रकेषु दुरात्मसु ७१
ब्राह्मणैः कथिताः पूर्वं यथावद्राजसंनिधौ
श्रुत्वा चैकमना मूढ क्षम वा ब्रूहि वोत्तरम् ७२
मित्रध्रुङ्मद्रको नित्यं यो नो द्वेष्टि स मद्रकः
मद्रके संगतं नास्ति क्षुद्रवाक्ये नराधमे ७३
दुरात्मा मद्रको नित्यं नित्यं चानृतिकोऽनृजुः
यावदन्तं हि दौरात्म्यं मद्रकेष्विति नः श्रुतम् ७४
पिता माता च पुत्रश्च श्वश्रूश्वशुरमातुलाः
जामाता दुहिता भ्राता नप्ता ते ते च बान्धवाः ७५
वयस्याभ्यागताश्चान्ये दासीदासं च संगतम्
पुंभिर्विमिश्रा नार्यश्च ज्ञाताज्ञाताः स्वयेच्छया ७६
येषां गृहेषु शिष्टानां सक्तुमन्थाशिनां सदा
पीत्वा सीधुं सगोमांसं नर्दन्ति च हसन्ति च ७७
यानि चैवाप्यबद्धानि प्रवर्तन्ते च कामतः
कामप्रलापिनोऽन्योन्यं तेषु धर्मः कथं भवेत् ७८
मद्रकेषु विलुप्तेषु प्रख्याताशुभकर्मसु
नापि वैरं न सौहार्दं मद्रकेषु समाचरेत् ७९
मद्रके संगतं नास्ति मद्रको हि सचापलः
मद्रकेषु च दुःस्पर्शं शौचं गान्धारकेषु च ८०
राजयाजकयाज्येन नष्टं दत्तं हविर्भवेत् ८१
शूद्रसंस्कारको विप्रो यथा याति पराभवम्

तथा ब्रह्मद्विषो नित्यं गच्छन्तीह पराभवम् ८२
मद्रके संगतं नास्ति हतं वृश्चिकतो विषम्
आथर्वणेन मन्त्रेण सर्वा शान्तिः कृताभवेत् ८३
इति वृश्चिकदष्टस्य नानाविषहतस्य च
कुर्वन्ति भेषजं प्राज्ञाः सत्यं तच्चापि दृश्यते
एवं विद्वञ्जोषमास्स्व शृणु चात्रोत्तरं वचः ८४
वासांस्युत्सृज्य नृत्यन्ति स्त्रियो या मद्यमोहिताः
मिथुनेऽसयताश्चापि यथाकामचराश्च ताः
तासां पुत्रः कथं धर्मं मद्रको वक्तुमर्हति ८५
यास्तिष्ठन्त्यः प्रमेहन्ति यथैवोष्ट्रीदशेरके
तासां विभ्रष्टलज्जानां निर्लज्जानां ततस्ततः
त्वं पुत्रस्तादृशीनां हि धर्मं वक्तुमिहेच्छसि ८६
सुवीरकं याच्यमाना मद्रका कर्षति स्फिजौ
अदातुकामा वचनमिदं वदति दारुणम् ८७
मा मा सुवीरकं कश्चिद्याचतां दयितो मम
पुत्रं दद्यां प्रतिपदं न तु दद्यां सुवीरकम् ८८
नार्यो बृहत्यो निर्ह्रीका मद्रकाः कम्बलावृताः
घस्मरा नष्टशौचाश्च प्राय इत्यनुशुश्रुम ८९
एवमादि मयान्यैर्वा शक्यं वक्तुं भवेद्बहु
आ केशाग्रान्नखाग्राच्च वक्तव्येषु कुवर्त्मसु ९०
मद्रकाः सिन्धुसौवीरा धर्मं विद्युः कथं त्विह
पापदेशोद्भवा म्लेच्छा धर्माणामविचक्षणाः ९१
एष मुख्यतमो धर्मः क्षत्रियस्येति नः श्रुतम्
यदाजौ निहतः शेते सद्भिः समभिपूजितः ९२
आयुधानां संपराये यन्मुच्येयमहं ततः
न मे स प्रथमः कल्पो निधने स्वर्गमिच्छतः ९३
सोऽह प्रियः सखा चास्मि धार्तराष्ट्रस्य धीमतः
तदर्थे हि मम प्राणा यच्च मे विद्यते वसु ९४
व्यक्तं त्वमप्युपहितः पाण्डवैः पापदेशज
यथा ह्यमित्रवत्सर्वं त्वमस्मासु प्रवर्तसे ९५

कामं न खलु शक्योऽह त्वद्विधानां शतैरपि
संग्रामाद्विमुखः कर्तुं धर्मज्ञ इव नास्तिकैः ९६
सारङ्ग इव घर्मार्तः कातं विलप शुष्य च
नाहं भीषयितुं शक्यः क्षत्रवृत्ते व्यवस्थितः ९७
तनुत्यजां नृसिंहानामाहवेष्वनिवर्तिनाम्
या गतिर्गुरुणा प्राङ्गे प्रोक्ता रामेण तां स्मरे ९८
स्वेषां त्राणार्थमुद्युक्तं वधाय द्विषतामपि
विद्धि मामास्थितं वृत्तं पौरूरवसमुत्तमम् ९९
न तद्भूतं प्रपश्यामि त्रिषु लोकेषु मद्रक
यो मामस्मादभिप्रायाद्वारयेदिति मे मतिः १००
एवं विद्वञ्जोषमास्स्व त्रासात्किं बहु भाषसे
मा त्वा हत्वा प्रदास्यामि क्रव्याद्भ्यो मद्रकाधम १०१
मित्रप्रतीक्षया शल्य धार्तराष्ट्रस्य चोभयोः
अपवादतितिक्षाभिस्त्रिभिरेतैर्हि जीवसि १०२
पुनश्चेदीदृशं वाक्यं मद्रराज वदिष्यसि
शिरस्ते पातयिष्यामि गदया वज्रकल्पया १०३
श्रोतारस्त्विदमद्येह द्रष्टारो वा कुदेशज
कर्णं वा जघ्नतुः कृष्णौ कर्णो वापि जघान तौ १०४
एवमुक्त्वा तु राधेयः पुनरेव विशां पते
अब्रवीन्मद्रराजानं याहि याहीत्यसंभ्रमम् १०५
इति श्रीमहाभारते कर्णपर्वणि सप्तविंशोऽध्यायः २७

## अष्टाविंशोऽध्यायः

सञ्जय उवाच
मारिषाधिरथेः श्रुत्वा वचो युद्धाभिनन्दिनः
शल्योऽब्रवीत्पुनः कर्णं निदर्शनमुदाहरन् १
यथैव मत्तो मद्येन त्वं तथा न च वा तथा
तथाहं त्वां प्रमाद्यन्तं चिकित्सामि सुहृत्तया २
इमां काकोपमां कर्ण प्रोच्यमानां निबोध मे
श्रुत्वा यथेष्टं कुर्यास्त्वं विहीन कुलपांसन ३

नाहमात्मनि किञ्चिद्वै किल्बिषं कर्ण संस्मरे
येन त्वं मां महाबाहो हन्तुमिच्छस्यनागसम् ४
अवश्यं तु मया वाच्यं बुध्यतां यदि ते हितम्
विशेषतो रथस्थेन राज्ञश्चैव हितैषिणा ५
समं च विषमं चैव रथिनश्च बलाबलम्
श्रमः खेदश्च सततं हयानां रथिना सह ६
आयुधस्य परिज्ञानं रुतं च मृगपक्षिणाम्
भारश्चाप्यतिभारश्च शल्यानां च प्रतिक्रिया ७
अस्त्रयोगश्च युद्धं च निमित्तानि तथैव च
सर्वमेतन्मया ज्ञेयं रथस्यास्य कुटुम्बिना
अतस्त्वां कथये कर्ण निदर्शनमिदं पुनः ८
वैश्यः किल समुद्रान्ते प्रभूतधनधान्यवान्
यज्वा दानपतिः क्षान्तः स्वकर्मस्थोऽभवच्छुचिः ९
बहुपुत्रः प्रियापत्यः सर्वभूतानुकम्पकः
राज्ञो धर्मप्रधानस्य राष्ट्रे वसति निर्भयः १०
पुत्राणां तस्य बालानां कुमाराणां यशस्विनाम्
काको बहूनामभवदुच्छिष्टकृतभोजनः ११
तस्मै सदा प्रयच्छन्ति वैश्यपुत्राः कुमारकाः
मांसोदनं दधि क्षीरं पायसं मधुसर्पिषी १२
स चोच्छिष्टभृतः काको वैश्यपुत्रैः कुमारकैः
सदृशान्पक्षिणो दृप्तः श्रेयसश्चावमन्यते १३
अथ हंसाः समुद्रास्ते कदाचिदभिपातिनः
गरुडस्य गतौ तुल्याश्चक्राङ्गा हृष्टचेतसः १४
कुमारकास्ततो हंसान्दृष्ट्वा काकमथाब्रुवन्
भवानेव विशिष्टो हि पतत्रिभ्यो विहंगम १५
प्रतार्यमाणस्तु स तैरल्पबुद्धिभिरण्डजः
तद्वचः सत्यमित्येव मौर्ख्याद्दर्पाच्च मन्यते १६
तान्सोऽभिपत्य जिज्ञासुः क एषां श्रेष्ठभागिति
उच्छिष्टदर्पितः काको बहूनां दूरपातिनाम् १७
तेषां यं प्रवरं मेने हंसानां दूरपातिनाम्

तमाह्वयत दुर्बुद्धिः पताम इति पक्षिणम् १८
तच्छ्रुत्वा प्राहसन्हंसा ये तत्रासन्समागताः
भाषतो बहु काकस्य बलिनः पततां वराः
इदमूचुश्च चक्राङ्गा वचः काकं विहंगमाः १९
वयं हंसाश्चरामेमां पृथिवीं मानसौकसः
पक्षिणां च वयं नित्यं दूरपातेन पूजिताः २०
कथं नु हंसं बलिनं वज्राङ्गं दूरपातिनम्
काको भूत्वा निपतने समाह्वयसि दुर्मते
कथं त्वं पतनं काक सहास्माभिर्ब्रवीषि तत् २१
अथ हंसवचो मूढः कुत्सयित्वा पुनः पुनः
प्रजगादोत्तरं काकः कत्थनो जातिलाघवात् २२
शतमेकं च पातानां पतितास्मि न संशयः
शतयोजनमेकैकं विचित्रं विविधं तथा २३
उड्डीनमवडीनं च प्रडीनं डीनमेव च
निडीनमथ संडीनं तिर्यक्चातिगतानि च २४
विडीनं परिडीनं च पराडीनं सुडीनकम्
अतिडीनं महाडीनं निडीनं परिडीनकम् २५
गतागतप्रतिगता वह्वीश्च निकुडीनिकाः
कर्तास्मि मिषतां वोऽद्य ततो द्रक्ष्यथ मे बलम् २६
एवमुक्ते तु काकेन प्रहस्यैको विहंगमः
उवाच हंसस्तं काकं वचनं तन्निबोध मे २७
शतमेकं च पातानां त्वं काक पतिता ध्रुवम्
एकमेव तु ये पातं विदुः सर्वे विहंगमाः २८
तमहं पतिता काक नान्यं जानामि कंचन
पत त्वमपि रक्ताक्ष येन वा तेन मन्यसे २९
अथ काकाः प्रजहसुर्ये तत्रासन्समागताः
कथमेकेन पातेन हंसः पातशतं जयेत् ३०
एकेनैव शतस्यैकं पातेनाभिभविष्यति
हंसस्य पतितं काको बलवानाशुविक्रमः ३१
प्रपेततुः स्पर्धयाथ ततस्तौ हंसवायसौ

एकपाती च चक्राङ्गः काकः पातशतेन च ३२
पेतिवानथ चक्राङ्गः पेतिवानथ वायसः
विसिस्मापयिषुः पातैराचक्षाणोऽत्मनः क्रियाम् ३३
अथ काकस्य चित्राणि पतितानीतराणि च
दृष्ट्वा प्रमुदिताः काका विनेदुरथ तैः स्वरैः ३४
हंसांश्चावहसन्ति स्म प्रावदन्नप्रियाणि च
उत्पत्योत्पत्य च प्राहुर्मुहूर्तमिति चेति च ३५
वृक्षाग्रेभ्यः स्थलेभ्यश्च निपतन्त्युत्पतन्ति च
कुर्वाणा विविधान्रावानाशंसन्तस्तदा जयम् ३६
हंसस्तु मृदुनैकेव विक्रान्तुमुपचक्रमे
प्रत्यहीयत काकाच्च मुहूर्तमिव मारिष ३७
अवमन्य रयं हंसानिदं वचनमब्रवीत्
योऽसावुत्पतितो हंसः सोऽसावेव प्रहीयते ३८
अथ हंसः स तच्छ्रुत्वा प्रापतत्पश्चिमां दिशम्
उपर्युपरि वेगेन सागरं वरुणालयम् ३९
ततोः भीः प्राविशत्काकं तदा तत्र विचेतसम्
द्वीपद्रुमानपश्यन्तं निपतन्तं श्रमान्वितम्
निपतेयं क्व नु श्रान्त इति तस्मिञ्जलार्णवे ४०
अविषह्यः समुद्रो हि बहुसत्त्वगणालयः
महाभूतशतोद्भासी नभसोऽपि विशिष्यते ४१
गाम्भीर्याद्धि समुद्रस्य न विशेषः कुलाधम
दिगम्बराम्भसां कर्ण समुद्रस्था हि दुर्जयाः
विदूरपातात्तोयस्य किं पुनः कर्ण वायसः ४२
अथ हंसोऽभ्यतिक्रम्य मुहूर्तमिति चेति च
अवेक्षमाणस्तं काकं नाशक्नोद्व्यपसर्पितुम्
अतिक्रम्य च चक्राङ्गः काकं तं समुदैक्षत ४३
तं तथा हीयमानं च हंसो दृष्ट्वा ब्रवीदिदम्
उज्जिहीर्षुर्निमज्जन्तं स्मरन्सत्पुरुषव्रतम् ४४
बहूनि पतनानि त्वमाचक्षाणो मुहुर्मुहुः
पतस्यव्याहरंश्चेदं न नो गुह्यं प्रभाषसे ४५

किं नाम पतनं काक यत्त्वं पतसि सांप्रतम्
जलं स्पृशसि पक्षाभ्यां तुण्डेन च पुनः पुनः ४६
स पक्षाभ्यां स्पृशन्नार्तस्तुण्डेन जलमर्णवे
काको दृढं परिश्रान्तः सहसा निपपात ह ४७
हंस उवाच
शतमेकं च पातानां यत्प्रभाषसि वायस
नानाविधानीह पुरा तच्चानृतमिहाद्य ते ४८
काक उवाच
उच्छिष्टदर्पितो हंस मन्येऽत्मानं सुपर्णवत्
अवमन्य बहूंश्चाहं काकानन्यांश्च पक्षिणः
प्राणैर्हंस प्रपद्ये त्वां द्वीपान्तं प्रापयस्व माम् ४९
यद्यहं स्वस्तिमान्हंस स्वदेशं प्राप्नुयां पुनः
न कंचिदवमन्येयमापदो मां समुद्धर ५०
तमेवंवादिनं दीनं विलपन्तमचेतनम्
काक काकेति वाशन्तं निमज्जन्तं महार्णवे ५१
तथैत्य वायसं हंसो जलक्लिन्नं सुदुर्दशम्
पद्भ्यामुत्क्षिप्य वेपन्तं पृष्ठमारोपयच्छनैः ५२
आरोप्य पृष्ठं काकं तं हंसः कर्ण विचेतसम्
आजगाम पुनर्द्वीपं स्पर्धया पेततुर्यतः ५३
संस्थाप्य तं चापि पुनः समाश्वास्य च खेचरम्
गतो यथेप्सितं देशं हंसो मन इवाशुगः ५४
उच्छिष्टभोजनात्काको यथा वैश्यकुले तु सः
एवं त्वमुच्छिष्टभृतो धार्तराष्ट्रैर्न संशयः
सदृशाञ्श्रेयसश्चापि सर्वान्कर्णातिमन्यसे ५५
द्रोणद्रौणिकृपैर्गुप्तो भीष्मेणान्यैश्च कौरवैः
विराटनगरे पार्थमेकं किं नावधीस्तदा ५६
यत्र व्यस्ताः समस्ताश्च निर्जिताः स्थ किरीटिना
शृगाला इव सिंहेन क्व ते वीर्यमभूत्तदा ५७
भ्रातरं च हितं दृष्ट्वा निर्जितः सव्यसाचिना
पश्यतां कुरुवीराणां प्रथमं त्वं पलायथाः ५८

तथा द्वैतवने कर्ण गन्धर्वैः समभिद्रुतः
कुरून्समग्रानुत्सृज्य प्रथमं त्वं पलायथाः ५९
हत्वा जित्वा च गन्धर्वांश्चित्रसेनमुखान्रणे
कर्ण दुर्योधनं पार्थः सभार्यं सममोचयत् ६०
पुनः प्रभावः पार्थस्य पुराणः केशवस्य च
कथितः कर्ण रामेण सभायां राजसंसदि ६१
सततं च तदश्रौषीर्वचनं द्रोणभीष्मयोः
अवध्यौ वदतोः कृष्णौ संनिधौ वै महीक्षिताम् ६२
कियन्तं तत्र वक्ष्यामि येन येन धनञ्जयः
त्वत्तोऽतिरिक्तः सर्वेभ्यो भूतेभ्यो ब्राह्मणो यथा ६३
इदानीमेव द्रष्टासि प्रधने स्यन्दने स्थितौ
पुत्रं च वसुदेवस्य पाण्डवं च धनञ्जयम् ६४
देवासुरमनुष्येषु प्रख्यातौ यौ नरर्षभौ
प्रकाशेनाभिविख्यातौ त्वं तु खद्योतवन्नृषु ६५
एवं विद्वान्मावमंस्थाः सूतपुत्राच्युतार्जुनौ
नृसिंहौ तौ नरश्वा त्वं जोषमास्स्व विकत्थन ६६
इति श्रीमहाभारतेकर्णपर्वणि अष्टाविंशोऽध्यायः २८

## एकोनत्रिंशोऽध्यायः

सञ्जय उवाच
मद्राधिपस्याधिरथिस्तदैवं वचो निशम्याप्रियमप्रतीतः
उवाच शल्यं विदितं ममैतद्यथाविधावर्जुनवासुदेवौ १
शौरे रथं वाहयतोऽजुनस्य बलं महास्त्राणि च पाण्डवस्य
अहं विजानामि यथावदद्य परोक्षभूतं तव तत्तु शल्य २
तौ चाप्रधृष्यौ शस्त्रभृतां वरिष्ठौ व्यपेतभीर्योधयिष्यामि कृष्णौ
संतापयत्यभ्यधिकं तु रामाच्छापोऽद्य मां ब्राह्मणसत्तमाच्च ३
अवात्सं वै ब्राह्मणच्छद्मनाहंरामे पुरा दिव्यमस्त्रं चिकीर्षुः
तत्रापि मे देवराजेन विघ्नो हितार्थिना फल्गुनस्यैव शल्य ४
कृतोऽवभेदेन ममोरुमेत्य प्रविश्य कीटस्य तनुं विरूपाम्
गुरोर्भयाच्चापि न चेलिवानहं तच्चावबुद्धो ददृशे स विप्रः ५

पृष्टश्चाहं तमवोचं महर्षिं सूतोऽहमस्मीति स मां शशाप
सूतोपधावाप्तमिदं त्वयास्त्रं न कर्मकाले प्रतिभास्यति त्वाम् ६
अन्यत्र यस्मात्तव मृत्युकालादब्राह्मणे ब्रह्म न हि ध्रुवं स्यात्
तदद्य पर्याप्तमतीव शस्त्रमस्मिन्संग्रामे तुमुले तात भीमे ७
अपां पतिर्वेगवानप्रमेयो निमज्जयिष्यन्निवहान्प्रजानाम्
महानगं यः कुरुते समुद्रं वेलैव तं वारयत्यप्रमेयम् ८
प्रमुञ्चन्तं बाणसङ्घानमोघान्मर्मच्छिदो वीरहणः सपत्रान्
कुन्तीपुत्रं प्रतियोत्स्यामि युद्धे ज्याकर्षिणामुत्तममद्य लोके ९
एवं बलेनातिबलं महास्त्रं समुद्रकल्पं सुदुरापमुग्रम्
शरौघिणं पार्थिवान्मज्जयन्तं वेलेव पार्थमिषुभिः संसहिष्ये १०
अद्याहवे यस्य न तुल्यमन्यं मन्ये मनुष्यं धनुराददानम्
सुरासुरान्वै युधि यो जयेत तेनाद्य मे पश्य युद्धं सुघोरम् ११
अतिमानी पाण्डवो युद्धकामो अमानुषैरेष्यति मे महास्त्रैः
तस्यास्त्रमस्त्रैरभिहत्य संख्ये शरोत्तमैः पातयिष्यामि पार्थम् १२
दिवाकरेणापि समं तपन्तं समाप्तरश्मिं यशसा ज्वलन्तम्
तमोनुदं मेघ इवातिमात्रो धनञ्जयं छादयिष्यामि बाणैः १३
वैश्वानरं धूमशिखं ज्वलन्तं तेजस्विनं लोकमिमं दहन्तम्
मेघो भूत्वा शरवर्षैर्यथाग्निं तथा पार्थं शमयिष्यामि युद्धे १४
प्रमाथिनं बलवन्तं प्रहारिणं प्रभञ्जनं मातरिश्वानमुग्रम्
युद्धे सहिष्ये हिमवानिवाचलो धनञ्जयं क्रुद्धममृष्यमाणम् १५
विशारदं रथमार्गेष्वसक्तं धुर्यं नित्यं समरेषु प्रवीरम्
लोके वरं सर्वधनुर्धराणां धनञ्जयं संयुगे संसहिष्ये १६
अद्याहवे यस्य न तुल्यमन्यं मध्येमनुष्यं धनुराददानम्
सर्वामिमां यः पृथिवीं सहेत तथा विद्वान्योत्स्यमानोऽस्मि तेन १७
यः सर्वभूतानि सदेवकानि प्रस्थेऽजयत्खाण्डवे सव्यसाची
को जीवितं रक्षमाणो हि तेन युयुत्सते मामृते मानुषोऽन्य १८
अहं तस्य पौरुषं पाण्डवस्य ब्रूयां हृष्टः समितौ क्षत्रियाणाम्
किं त्वं मूर्खः प्रभषन्मूढचेता मामवोचः पौरुषमर्जुनस्य १९
अप्रियो यः पुरुषो निष्ठुरो हि क्षुद्रः क्षेप्ता क्षमिणश्चाक्षमावान्
हन्यामहं तादृशानां शतानि क्षमामि त्वां क्षमया कालयोगात् २०

अवोचस्त्वं पाण्डवार्थेऽप्रियाणि प्रधर्षयन्मां मूढवत्पापकर्मन्
मय्यार्जवे जिह्मगतिर्हतस्त्वं मित्रद्रोही सप्तपदं हि मित्रम् २१
कालस्त्वयं मृत्युमयोऽतिदारुणो दुर्योधनो युद्धमुपागमद्यत्
तस्यार्थ सिद्धिमभिकाङ्क्षमाणस्तमभ्येष्ये यत्र नैकान्त्यमस्ति २२
मित्रं मिदेर्नन्दतेः प्रीयतेर्वा संत्रायतेर्मानद मोदतेर्वा
ब्रवीति तच्चामुत विप्रपूर्वात्तच्चापि सर्वं मम दुर्योधनेऽस्ति २३
शत्रुः शदेः शासतेः शायतेर्वा शृणातेर्वा श्वयतेर्वापि सर्गे
उपसर्गाद्बहुधा सूदतेश्च प्रायेण सर्वं त्वयि तच्च मह्यम् २४
दुर्योधनार्थं तव चाप्रियार्थं यशोर्थमात्मार्थमपीश्वरार्थम्
तस्मादहं पाण्डववासुदेवौ योत्स्ये यत्नात्कर्म तत्पश्य मेऽद्य २५
अस्त्राणि पश्याद्य ममोत्तमानि ब्राह्माणि दिव्यान्यथ मानुषाणि
आसादयिष्याम्यहमुग्रवीर्यं द्विपोत्तमं मत्तमिवाभिमत्तः २६
अस्त्रं ब्राह्मं मनसा तद्ध्यजय्यं क्षेप्स्ये पार्थायाप्रतिमं जयाय
तेनापि मे नैव मुच्येत युद्धे न चेत्पतेद्विषमे मेऽद्य चक्रम् २७
वैवस्वताद्दण्डहस्ताद्वरुणाद्वापि पाशिनः
सगदाद्वा धनपतेः सवज्राद्वापि वासवात् २८
नान्यस्मादपि कस्माच्चिद्बिभिमो ह्याततायिनः
इति शल्य विजानीहि यथा नाहं बिभेम्यभीः २९
तस्माद्भयं न मे पार्थान्नापि चैव जनार्दनात्
अद्य युद्धं हि ताभ्यां मे संपराये भविष्यति ३०
श्वभ्रे ते पततां चक्रमिति मे ब्राह्मणोऽवदत्
युध्यमानस्य संग्रामे प्राप्तस्यैकायने भयम् ३१
तस्माद्बिभेमि बलवद्ब्राह्मणव्याहृतादहम्
एते हि सोमराजान ईश्वराः सुखदुःखयोः ३२
होमधेन्वा वत्समस्य प्रमत्त इषुणाहनम्
चरन्तमजने शल्य ब्राह्मणात्तपसो निधेः ३३
ईषादन्तान्सप्तशतान्दासीदासशतानि च
ददतो द्विजमुख्याय प्रसादं न चकार मे ३४
कृष्णानां श्वेतवत्सानां सहस्राणि चतुर्दश
आहरन्न लभे तस्मात्प्रसादं द्विजसत्तमात् ३५

ऋद्धं गेहं सर्वकामैर्यच्च मे वसु किञ्चन
तत्सर्वमस्मै सत्कृत्य प्रयच्छामि न चेच्छति ३६
ततोऽब्रवीन्मां याचन्तमपराद्धं प्रयत्नतः
व्याहृतं यन्मया सूत तत्तथा न तदन्यथा ३७
अनृतोक्तं प्रजा हन्यात्ततः पापमवाप्नुयात्
तस्माद्धर्माभिरक्षार्थं नानृतं वक्तुमुत्सहे ३८
मा त्वं ब्रह्मगतिं हिंस्याः प्रायश्चित्तं कृतं त्वया
मद्वाक्यं नानृतं लोके कश्चित्कुर्यात्समाप्नुहि ३९
इत्येतत्ते मया प्रोक्तं क्षिप्तेनापि सुहृत्तया
जानामि त्वाधिक्षिपन्तं जोषमास्स्वोत्तरं शृणु ४०
इति श्रीमहाभारते कर्णपर्वणि एकोनत्रिंशोऽध्यायः २९

त्रिंशोऽध्यायः

सञ्जय उवाच
ततः पुनर्महाराज मद्रराजमरिंदमम्
अभ्यभाषत राधेयः संनिवार्योत्तरं वचः १
यत्त्वं निदर्शनार्थं मां शल्य जल्पितवानसि
नाहं शक्यस्त्वया वाचा विभीषयितुमाहवे २
यदि मां देवताः सर्वा योधयेधुः सवासवाः
तथापि मे भयं न स्यात्किमु पार्थात्सकेशवात् ३
नाहं भीषयितुं शक्यो वाङ्मात्रेण कथञ्चन
अन्यं जानीहि यः शक्यस्त्वया भीषयितुं रणे ४
नीचस्य बलमेतावत्पारुष्यं यत्त्वमात्थ माम्
अशक्तोऽस्मद्गुणान्प्राप्तुं वल्गसे बहु दुर्मते ५
न हि कर्णः समुद्भूतो भयार्थमिह मारिष
विक्रमार्थमहं जातो यशोर्थं च तथैव च ६
इदं तु मे त्वमेकाग्रः शृणु मद्रजनाधिप
संनिधौ धृतराष्ट्रस्य प्रोच्यमानं मया श्रुतम् ७
देशांश्च विविधांश्चित्रान्पूर्ववृत्तांश्च पार्थिवान्
ब्राह्मणाः कथयन्तः स्म धृतराष्ट्रमुपासते ८

तत्र वृद्धः पुरावृत्ताः कथाः कश्चिद्द्विजोत्तमः
बाह्लीकदेशं मद्रांश्च कुत्सयन्वाक्यमब्रवीत् ९
बहिष्कृता हिमवता गङ्गया च तिरस्कृताः
सरस्वत्या यमुनया कुरुक्षेत्रेण चापि ये १०
पञ्चानां सिन्धुषष्ठानां नदीनां येऽन्तराश्रिताः
तान्धर्मबाह्यानशुचीन्बाह्लीकान्परिवर्जयेत् ११
गोवर्धनो नाम वटः शुभाण्डं नाम चत्वरम्
एतद्राजकुलद्वारमाकुमारः स्मराम्यहम् १२
कार्येणात्यर्थगाढेन बाह्लीकेषूषितं मया
तत एषां समाचारः संवासाद्विदितो मम १३
शाकलं नाम नगरमापगा नाम निम्नगा
जर्तिका नाम बाह्लीकास्तेषां वृत्तं सुनिन्दितम् १४
धानागौडासवे पीत्वा गोमांसं लशुनैः सह
अपूपमांसवाट्यानामाशिनः शीलवर्जिताः १५
हसन्ति गान्ति नृत्यन्ति स्त्रीभिर्मत्ता विवाससः
नगरागारवप्रेषु बहिर्माल्यानुलेपनाः १६
मत्तावगीतैर्विविधैः खरोष्ट्रनिनदोपमैः
आहुरन्योन्यमुक्तानि प्रब्रुवाणा मदोत्कटाः १७
हा हते हा हतेत्येव स्वाभिभर्तृहतेति च
आक्रोशन्त्यः प्रनृत्यन्ति मन्दाः पर्वस्वसंयताः १८
तेषां किलावलिप्तानां निवसन्कुरुजाङ्गले
कश्चिद्बाह्लीकमुख्यानां नातिहृष्टमना जगौ १९
सा नूनं बृहती गौरी सूक्ष्मकम्बलवासिनी
मामनुस्मरती शेते बाह्लीकं कुरुवासिनम् २०
शतद्रुकनदीं तीर्त्वा तां च रम्यामिरावतीम्
गत्वा स्वदेशं द्रक्ष्यामि स्थूलशङ्खाः शुभाः स्त्रियः २१
मनः शिलोज्ज्वलापाङ्गा गौर्यस्त्रिककुदाञ्जनाः
केवलाजिनसंवीताः कूर्दन्त्यः प्रियदर्शनाः २२
मृदङ्गानकशङ्खानां मर्दलानां च निस्वनैः
खरोष्ट्राश्वतरैश्चैव मत्ता यास्यामहे सुखम् २३

शमीपीलुकरीराणां वनेषु सुखवर्त्मसु
अपूपान्सक्तुपिण्डीश्च खादन्तो मथितान्विताः २४
पथिषु प्रबला भूत्वा कदासमृदितेऽध्वनि
खलोपहारं कुर्वाणास्ताडयिष्याम भूयसः २५
एवं हीनेषु व्रात्येषु बाह्लीकेषु दुरात्मसु
कश्चेतयानो निवसेन्मुहूर्तमपि मानवः २६
ईदृशा ब्राह्मणेनोक्ता बाह्लीका मोघचारिणः
येषां षड्भागहर्ता त्वमुभयोः शुभपापयोः २७
इत्युक्त्वा ब्राह्मणः साधुरुत्तरं पुनरुक्तवान्
बाह्लीकेष्वविनीतेषु प्रोच्यमानं निबोधत २८
तत्र स्म राक्षसी गाति सदा कृष्णचतुर्दशीम्
नगरे शाकले स्फीते आहत्य निशि दुन्दुभिम् २९
कदा वा घोषिका गाथाः पुनर्गास्यन्ति शाकले
गव्यस्य तृप्ता मांसस्य पीत्वा गौडं महासवम् ३०
गौरीभिः सह नारीभिर्बृहतीभिः स्वलंकृताः
पलाण्डुगण्डूषयुतान्खादन्ते चैडकान्बहून् ३१
वाराहं कौक्कुटं मांसं गव्यं गार्दभमौष्ट्रकम्
एडं च ये न खादन्ति तेषां जन्म निरर्थकम् ३२
इति गायन्ति ये मत्ताः शीधुना शाकलावतः
सबालवृद्धाः कूर्दन्तस्तेषु वृत्तं कथं भवेत् ३३
इति शल्य विजानीहि हन्त भूयो ब्रवीमि ते
यदन्योऽप्युक्तवानस्मान्ब्राह्मणः कुरुसंसदि ३४
पञ्च नद्यो वहन्त्येता यत्र पीलुवनान्यपि
शतद्रुश्च विपाशा च तृतीयेरावती तथा
चन्द्रभागा वितस्ता च सिन्धुषष्ठा बहिर्गताः ३५
आरट्टा नाम ते देशा नष्टधर्मान्न तान्व्रजेत्
व्रात्यानां दासमीयानां विदेहानामयज्वनाम् ३६
न देवाः प्रतिगृह्णन्ति पितरो ब्राह्मणास्तथा
तेषां प्रनष्टधर्माणां बाह्लीकानामिति श्रुतिः ३७
ब्राह्मणेन तथा प्रोक्तं विदुषा साधुसंसदि

काष्ठकुण्डेषु बाह्लीका मृण्मयेषु च भुञ्जते
सक्तुवाट्यावलिप्तेषु श्वादिलीढेषु निर्घृणाः ३८
आविकं चौष्ट्रिकं चैवक्षीरं गार्दभमेव च
तद्विकारांश्च बाह्लीकाः खादन्ति च पिबन्ति च ३९
पुत्रसंकरिणो जाल्माः सर्वान्नक्षीरभोजनाः
आरट्टा नाम बाह्लीका वर्जनीया विपश्चिता ४०
उत शल्य विजानीहि हन्त भूयो ब्रवीमि ते
यदन्योऽप्युक्तवान्सभ्यो ब्राह्मणः कुरुसंसदि ४१
युगंधरे पयः पीत्वा प्रोष्य चाप्यच्युतस्थले
तद्वद्भूतिलये स्नात्वा कथं स्वर्गं गमिष्यति ४२
पञ्च नद्यो वहन्त्येता यत्र निःसृत्य पर्वतात्
आरट्टा नाम बाह्लीका न तेष्वार्यो द्व्यहं वसेत् ४३
बहिश्च नाम ह्लीकश्च विपाशायां पिशाचकौ
तयोरपत्यं बाह्लीका नैषा सृष्टिः प्रजापतेः ४४
कारस्करान्महिषकान्कलिङ्गान्कीकटाटवीन्
कर्कोटकान्वीरकांश्चदुर्धर्मांश्च विवर्जयेत् ४५
इति तीर्थानुसर्तारं राक्षसी काचिदब्रवीत्
एकरात्रा शमीगेहे महोलूखलमेखला ४६
आरट्टा नाम ते देशा बाह्लीका नाम ते जनाः
वसातिसिन्धुसौवीरा इति प्रायो विकुत्सिताः ४७
उत शल्य विजानीहि हन्त भूयो ब्रवीमि ते
उच्यमानं मया सम्यक्तदेकाग्रमनाः शृणु ४८
ब्राह्मणः शिल्पिनो गेहमभ्यगच्छत्पुरातिथिः
आचारं तत्र संप्रेक्ष्य प्रीतः शिल्पिमथाब्रवीत् ४९
मया हिमवतः शृङ्गमेकेनाध्युषितं चिरम्
दृष्टाश्च बहवो देशा नानाधर्मसमाकुलाः ५०
न च केन च धर्मेण विरुध्यन्ते प्रजा इमाः
सर्वे हि तेऽब्रुवन्धर्म यथोक्तं वेदपारगैः ५१
अटता तु सदा देशान्नानाधर्मसमाकुलान्
आगच्छता महाराज बाह्लीकेषु निशामितम् ५२

तत्रैव ब्राह्मणो भूत्वा ततो भवति क्षत्रियः
वैश्यः शूद्रश्च बाह्लीकस्ततो भवति नापितः ५३
नापितश्च ततो भूत्वा पुनर्भवति ब्राह्मणः
द्विजो भूत्वा च तत्रैव पुनर्दासोऽपि जायते ५४
भवत्येकः कुले विप्रः शिष्टान्ये कामचारिणः
गान्धारा मद्रकाश्चैव बाह्लीकाः केऽप्यचेतसः ५५
एतन्मया श्रुतं तत्र धर्मसंकरकारकम्
कृत्स्नामटित्वा पृथिवीं बाह्लीकेषु विपर्ययः ५६
उत शल्य विजानीहि हन्त भूयो ब्रवीमि ते
यदप्यन्योऽब्रवीद्वाक्यं बाह्लीकानां विकुत्सितम् ५७
सती पुरा हृता काचिदारट्टा किल दस्युभिः
अधर्मतश्चोपयाता सा तानभ्यशपत्ततः ५८
बालां वन्धुमतीं यन्मामधर्मेणोपगच्छथ
तस्मान्नार्यो भविष्यन्ति बन्धक्यो वै कुलेषु वः
न चैवास्मात्प्रमोक्ष्यध्वं घोरात्पापान्नराधमाः ५९
कुरवः सहपाञ्चालाः शाल्वा मत्स्याः सनैमिषाः
कोसलाः काशयोऽङ्गाश्च कलिङ्गा मगधास्तथा ६०
चेदयश्च महाभागा धर्मं जानन्ति शाश्वतम्
नानादेशेषु सन्तश्च प्रायो बाह्या लयादृते ६१
आ मत्स्येभ्यः कुरुपाञ्चालदेश्या आ नैमिषाच्चेदयो ये विशिष्टाः
धर्मं पुराणमुपजीवन्ति सन्तो मद्रानृते पञ्चनदांश्च जिह्मान् ६२
एवं विद्वन्धर्मकथांश्च राजंस्तूष्णींभूतो जडवच्छल्य भूयाः
त्वं तस्य गोप्ता च जनस्य राजा षड्भागहर्ता शुभदुष्कृतस्य ६३
अथ वा दुष्कृतस्य त्वं हर्ता तेषामरक्षिता
रक्षिता पुण्यभाग्राजा प्रजानां त्वं त्वपुण्यभाक् ६४
पूज्यमाने पुरा धर्मे सर्वदेशेषु शाश्वते
धर्मं पाञ्चनदं दृष्ट्वा धिगित्याह पितामहः ६५
व्रात्यानां दाशमीयानां कृतेऽप्यशुभकर्मणाम्
इति पाञ्चनदं धर्ममवमेने पितामहः
स्वधर्मस्थेषु वर्णेषु सोऽप्येतं नाभिपूजयेत् ६६

उत शल्य विजानीहि हन्त भूयो ब्रवीमि ते
कल्माषपादः सरसि निमज्जन्राक्षसोऽब्रवीत् ६७
क्षत्रियस्य मलं भैक्षं ब्राह्मणस्यानृतं मलम्
मलं पृथिव्या बाह्लीकाः स्त्रीणां मद्रस्त्रियो मलम् ६८
निमज्जमानमुद्धृत्य कश्चिद्राजा निशाचरम्
अपृच्छत्तेन चाख्यातं प्रोक्तवान्यन्निबोध तत् ६९
मानुषाणां मलं म्लेच्छा म्लेच्छानां मौष्टिका मलम्
मौष्टिकानां मलं शण्डः शण्डानां राजयाजकाः ७०
राजयाजकयाज्यानां मद्रकाणांच यन्मलम्
तद्भवेद्वै तव मलं यद्यस्मान्न विमुञ्चसि ७१
इति रक्षोपसृष्टेषु विषवीर्यहतेषु च
राक्षसं भेषजं प्रोक्तं ससिद्धं वचनोत्तरम् ७२
ब्राह्मं पाञ्चालाः कौरवेयाः स्वधर्मः सत्यं मत्स्याः शूरसेनाश्च यज्ञः
प्राच्या दासा वृषला दाक्षिणात्याःस्तेना बाह्लीकाः सङ्करा वै सुराष्ट्राः ७३
कृतघ्नता परवित्तापहारः सुरापानं गुरुदारावमर्शः
येषां धर्मस्तान्प्रति नास्त्यधर्म आरट्टाकान्पाञ्चनदान्धिगस्तु ७४
आ पाञ्चलेभ्यः कुरवो नैमिषाश्च मत्स्याश्चैवाप्यथ जानन्ति धर्मम्
कलिङ्गकाश्चाङ्गका मागधाश्च शिष्टान्धर्मानुपजीवन्ति वृद्धाः ७५
प्राचीं दिशं श्रिता देवा जातवेदःपुरोगमाः
दक्षिणां पितरो गुप्तां यमेन शुभकर्मणा ७६
प्रतीचीं वरुणः पाति पालयन्नसुरान्बली
उदीचीं भगवान्सोमो ब्रह्मण्यो ब्राह्मणैः सह ७७
रक्षः पिशाचान्हिमवान्गुह्यकान्गन्धमादनः
ध्रुवः सर्वाणि भूतानि विष्णुर्लोकाञ्जनार्दनः ७८
इङ्गितज्ञाश्च मगधाः प्रेक्षितज्ञाश्च कोसलाः
अर्धोक्ताः कुरुपाञ्चालाः शाल्वाः कृत्स्नानुशासनाः
पार्वतीयाश्च विषमा यथैव गिरयस्तथा ७९
सर्वज्ञा यवना राजञ्शूराश्चैव विशेषतः
म्लेच्छाः स्वसंज्ञानियता नानुक्त इतरो जनः ८०
प्रतिरब्धास्तु बाह्लीका न च केचन मद्रकाः

स त्वमेतादृशः शल्य नोत्तरं वक्तुमर्हसि ८१
एतज्ज्ञात्वा जोषमास्स्व प्रतीपं मा स्म वै कृथाः
स त्वां पूर्वमहं हत्वा हनिष्ये केशवार्जुनौ ८२
शल्य उवाच
आतुराणां परित्यागः स्वदारसुतविक्रयः
अङ्गेषु वर्तते कर्ण येषामधिपतिर्भवान् ८३
रथातिरथसंख्यायां यत्त्वा भीष्मस्तदाब्रवीत्
तान्विदित्वात्मनो दोषान्निर्मन्युर्भव मा क्रुधः ८४
सर्वत्र ब्राह्मणाः सन्ति सन्ति सर्वत्र क्षत्रियाः
वैश्याः शूद्रास्तथा कर्ण स्त्रियः साध्व्यश्च सुव्रताः ८५
रमन्ते चोपहासेन पुरुषाः पुरुषैः सह
अन्योन्यमवतक्षन्तो देशे देशे समैथुनाः ८६
परवाच्येषु निपुणः सर्वे भवति सर्वदा
आत्मवाच्यं न जानीते जानन्नपि विमुह्यति ८७
सञ्जय उवाच
कर्णोऽपि नोत्तरं प्राह शल्योऽप्यभिमुखः परान्
पुनः प्रहस्य राधेय पुनर्याहीत्यचोदयत् ८८
इति श्रीमहाभारते कर्णपर्वणि त्रिंशोऽध्यायः ३०

## एकत्रिंशोऽध्यायः

सञ्जय उवाच
ततः परानीकभिदं व्यूहमप्रतिमं परैः
समीक्ष्य कर्णः पार्थानां धृष्टद्युम्नाभिरक्षितम् १
प्रययौ रथघोषेण सिंहनादरवेण च
वादित्राणां च निनदैः कम्पयन्निव मेदिनीम् २
वेपमान इव क्रोधाद्युद्धशौण्डः परन्तपः
प्रतिव्यूह्य महातेजा यथावद्भरतर्षभ ३
व्यधमत्पाण्डवीं सेनामासुरीं मघवानिव
युधिष्ठिरं चाभिभवन्नपसव्यं चकार ह ४
धृतराष्ट्र उवाच

कथं सञ्जय राधेयः प्रत्यव्यूहत पाण्डवान्
धृष्टद्युम्नमुखान्वीरान्भीमसेनाभिरक्षितान् ५
के च प्रपक्षौ पक्षौ वा मम सैन्यस्य सञ्जय
प्रविभज्य यथान्यायं कथं वा समवस्थिताः ६
कथं पाण्डुसुताश्चापि प्रत्यव्यूहन्त मामकान्
कथं चैतन्महायुद्धं प्रावर्तत सुदारुणम् ७
क्व च बीभत्सुरभवद्यत्कर्णोऽयाद्युधिष्ठिरम्
को ह्यर्जुनस्य सांनिध्ये शक्तोऽभ्येतुं युधिष्ठिरम् ८
सर्वभूतानि यो ह्येकः खाण्डवे जितवान्पुरा
कस्तमन्यत्र राधेयात्प्रतियुध्येज्जिजीविषुः ९
सञ्जय उवाच
शृणु व्यूहस्य रचनामर्जुनश्च यथा गतः
परिदाय नृपं तेभ्यः संग्रामश्चाभवद्यथा १०
कृपः शारद्वतो राजन्मागधश्च तरस्विनः
सात्वतः कृतवर्मा च दक्षिणं पक्षमाश्रिताः ११
तेषां प्रपक्षे शकुनिरुलूकश्च महारथः
सादिभिर्विमलप्रासैस्तवानीकमरक्षताम् १२
गान्धारिभिरसंभ्रान्तैः पार्वतीयैश्च दुर्जयैः
शलभानामिव व्रातैः पिशाचैरिव दुर्दृशैः १३
चतुस्त्रिंशत्सहस्राणि रथानामनिवर्तिनाम्
संशप्तका युद्धशौण्डा वामं पार्श्वमपालयन् १४
समुच्छ्रितास्तव सुतैः कृष्णार्जुनजिघांसवः
तेषां प्रपक्षः काम्बोजाः शकाश्च यवनैः सह १५
निदेशात्सूतपुत्रस्य सरथाः साश्वपत्तयः
आह्वयन्तोऽर्जुनं तस्थुः केशवं च महाबलम् १६
मध्येसेनामुखं कर्णो व्यवातिष्ठत दंशितः
चित्रवर्माङ्गदः स्रग्वी पालयन्ध्वजिनीमुखम् १७
रक्ष्यमाणः सुसंरब्धैः पुत्रैः शस्त्रभृतां वरः
वाहिनीप्रमुखं वीरः सम्प्रकर्षन्नशोभत १८
अयोरत्निर्महाबाहुः सूर्यवैश्वानरद्युतिः

महाद्विपस्कन्धगतः पिङ्गलः प्रियदर्शनः
दुःशासनो वृतः सैन्यैः स्थितो व्यूहस्य पृष्ठतः १९
तमन्वयान्महाराज स्वयं दुर्योधनो नृपः
चित्राश्वैश्चित्रसंनाहैः सोदर्यैरभिरक्षितः २०
रक्ष्यमाणो महावीर्यैः सहितैर्मद्रकेकयैः
अशोभत महाराज देवैरिव शतक्रतुः २१
अश्वत्थामा कुरूणां च ये प्रवीरा महारथाः
नित्यमत्ताश्च मातङ्गाः शूरैर्म्लेच्छैरधिष्ठिताः
अन्वयुस्तद्रथानीकं क्षरन्त इव तोयदाः २२
ते ध्वजैर्वैजयन्तीभिर्ज्वलद्भिः परमायुधैः
सादिभिश्चास्थिता रेजुर्द्रुमवन्त इवाचलाः २३
तेषां पदातिनागानां पादरक्षाः सहस्रशः
पट्टिशासिधराः शूरा बभूवुरनिवर्तिनः २४
सादिभिः स्यन्दनैर्नागैरधिकं समलंकृतैः
स व्यूहराजो विबभौ देवासुरचमूपमः २५
बार्हस्पत्यः सुविहितो नायकेन विपश्चिता
नृत्यतीव महाव्यूहः परेषामादधद्भयम् २६
तस्य पक्षप्रपक्षेभ्यो निष्पतन्ति युयुत्सवः
पत्त्यश्वरथमातङ्गाः प्रावृषीव बलाहकाः २७
ततः सेनामुखे कर्णं दृष्ट्वा राजा युधिष्ठिरः
धनञ्जयममित्रघ्नमेकवीरमुवाच ह २८
पश्यार्जुन महाव्यूहं कर्णेन विहितं रणे
युक्तं पक्षैः प्रपक्षैश्च सेनानीकं प्रकाशते २९
तदेतद्वै समालोक्य प्रत्यमित्रं महद्बलम्
यथा नाभिभवत्यस्मांस्तथा नीतिर्विधीयताम् ३०
एवमुक्तोऽजुनो राज्ञा प्राञ्जलिर्नृपमब्रवीत्
यथा भवानाह तथा तत्सर्वं न तदन्यथा ३१
यस्त्वस्य विहितो घातस्तं करिष्यामि भारत
प्रधानवध एवास्य विनाशस्तं करोम्यहम् ३२
युधिष्ठिर उवाच

तस्मात्त्वमेव राधेयं भीमसेनः सुयोधनम्
वृषसेनं च नकुलः सहदेवोऽपि सौबलम् ३३
दुःशासनं शतानीको हार्दिक्यं शिनिपुंगवः
धृष्टद्युम्नस्तथा द्रौणिं स्वयं यास्याम्यहं कृपम् ३४
द्रौपदेया धार्तराष्ट्राञ्शिष्टान्सह शिखण्डिना
ते ते च तांस्तानहितानस्माकं घ्नन्तु मामकाः ३५
सञ्जय उवाच
इत्युक्तो धर्मराजेन तथेत्युक्त्वा धनञ्जयः
व्यादिदेश स्वसैन्यानि स्वयं चागाच्चमूमुखम् ३६
अथ तं रथमायान्तं दृष्ट्वात्यद्भुतदर्शनम्
उवाचाधिरथिं शल्यः पुनस्तं युद्धदुर्मदम् ३७
अयं स रथ आयाति श्वेताश्वः कृष्णसारथिः
निघ्नन्नमित्रान्कौन्तेयो यं यं त्वं परिपृच्छसि ३८
श्रूयते तुमुलः शब्दो रथनेमिस्वनो महान्
एष रेणुः समुद्भूतो दिवमावृत्य तिष्ठति ३९
चक्रनेमिप्रणुन्ना च कम्पते कर्ण मेदिनी
प्रवात्येष महावायुरभितस्तव वाहिनीम्
क्रव्यादा व्याहरन्त्येते मृगाः कुर्वन्ति भैरवम् ४०
पश्य कर्ण महाघोरं भयदं लोमहर्षणम्
कबन्धं मेघसंकाशं भानुमावृत्य संस्थितम् ४१
पश्य यूथैर्बहुविधैर्मृगाणां सर्वतोदिशम्
बलिभिर्दृप्तशार्दूलैरादित्योऽभिनिरीक्ष्यते ४२
पश्य कङ्कांश्च गृध्रांश्च समवेतान्सहस्रशः
स्थितानभिमुखान्घोरानन्योन्यमभिभाषतः ४३
सिताश्चाश्वाः समायुक्तास्तव कर्ण महारथे
प्रदराः प्रज्वलन्त्येते ध्वजश्चैव प्रकम्पते ४४
उदीर्यतो हयान्पश्य महाकायान्महाजवान्
प्लवमानान्दर्शनीयानाकाशे गरुडानिव ४५
ध्रुवमेषु निमित्तेषु भूमिमावृत्य पार्थिवाः
स्वप्स्यन्ति निहताः कर्ण शतशोऽथ सहस्रशः ४६

शङ्खानां तुमुलः शब्दः श्रूयते लोमहर्षणः
आनकानां च राधेय मृदङ्गानां च सर्वशः ४७
बाणशब्दान्बहुविधान्नराश्वरथनिस्वनान्
ज्यातलत्रेषुशब्दांश्च शृणु कर्ण महात्मनाम् ४८
हेमरूप्यप्रमृष्टानां वाससां शिल्पिनिर्मिताः
नानावर्णा रथे भान्ति श्वसनेन प्रकम्पिताः ४९
सहेमचन्द्रतारार्काः पताकाः किङ्किणीयुताः
पश्य कर्णार्जुनस्यैताः सौदामिन्य इवाम्बुदे ५०
ध्वजाः कणकणायन्ते वातेनाभिसमीरिताः
सपताका रथाश्चापि पाञ्चालानां महात्मनाम् ५१
नागाश्वरथपत्त्यौघांस्तावकान्समभिघ्नतः
ध्वजाग्रं दृश्यते त्वस्य ज्याशब्दश्चापि श्रूयते ५२
अद्य द्रष्टासि तं वीरं श्वेताश्वं कृष्णसारथिम्
निघ्नन्तं शात्रवान्संख्ये यं कर्ण परिपृच्छसि ५३
अद्य तौ पुरुषव्याघ्रौ लोहिताक्षौ परन्तपौ
वासुदेवार्जुनौ कर्ण द्रष्टास्येकरथस्थितौ ५४
सारथिर्यस्य वार्ष्णेयो गाण्डीवं यस्य कार्मुकम्
तं चेद्धन्तासि राधेय त्वं नो राजा भविष्यसि ५५
एष संशप्तकाहूतस्तानेवाभिमुखो गतः
करोति कदनं चैषां संग्रामे द्विषतां बली
इति ब्रुवाणं मद्रेशं कर्णः प्राहातिमन्युमान् ५६
पश्य संशप्तकैः क्रुद्धैः सर्वतः समभिद्रुतः
एष सूर्य इवाम्भोदैश्छन्नः पार्थो न दृश्यते
एतदन्तोऽर्जुनः शल्य निमग्नः शोकसागरे ५७
शल्य उवाच
वरुणं कोऽम्भसा हन्यादिन्धनेन च पावकम्
को वानिलं निगृह्णीयात्पिबेद्वा को महार्णवम् ५८
ईदृग्रूपमहं मन्ये पार्थस्य युधि निग्रहम्
न हि शक्योऽर्जुनो जेतुं सेन्द्रैः सर्वैः सुरासुरैः ५९
अथैवं परितोषस्ते वाचोक्त्वा सुमना भव

न स शक्यो युधा जेतुमन्यं कुरु मनोरथम् ६०
बाहुभ्यामुद्धरेद्भूमिं दहेत्क्रुद्ध इमाः प्रजाः
पातयेत्त्रिदिवाद्देवान्योऽजुनं समरे जयेत् ६१
पश्य कुन्तीसुतं वीरं भीममक्लिष्टकारिणम्
प्रभासन्तं महाबाहुं स्थितं मेरुमिवाचलम् ६२
अमर्षी नित्यसंरब्धश्चिरं वैरमनुस्मरन्
एष भीमो जयप्रेप्सुर्युधि तिष्ठति वीर्यवान् ६३
एष धर्मभृतां श्रेष्ठो धर्मराजो युधिष्ठिरः
तिष्ठत्यसुकरः संख्ये परैः परपुरञ्जयः ६४
एतौ च पुरुषव्याघ्रावश्विनाविव सोदरौ
नकुलः सहदेवश्च तिष्ठतो युधि दुर्जयौ ६५
दृश्यन्त एते कार्ष्णेयाः पञ्च पञ्चाचला इव
व्यवस्थिता योत्स्यमानाः सर्वेऽजुनसमा युधि ६६
एते द्रुपदपुत्राश्च धृष्टद्युम्नपुरोगमाः
हीनाः सत्यजिता वीरास्तिष्ठन्ति परमौजसः ६७
इति संवदतोरेव तयोः पुरुषसिंहयोः
ते सेने समसज्जेतां गङ्गायमुनवद्भृशम् ६८
इति श्रीमहाभारते कर्णपर्वणि एकत्रिंशोऽध्यायः ३१

## द्वात्रिंशोऽध्यायः

धृतराष्ट्र उवाच
तथा व्यूढेष्वनीकेषु संसक्तेषु च सञ्जय
संशप्तकान्कथं पार्थो गतः कर्णश्च पाण्डवान् १
एतद्विस्तरतो युद्धं प्रब्रूहि कुशलो ह्यसि
न हि तृप्यामि वीराणां शृण्वानो विक्रमान्रणे २
सञ्जय उवाच
तत्स्थाने समवस्थाप्य प्रत्यमित्रं महाबलम्
अव्यूहतार्जुनो व्यूहं पुत्रस्य तव दुर्नये ३
तत्सादिनागकलिलं पदातिरथसंकुलम्
धृष्टद्युम्नमुखैर्व्यूढमशोभत महद्बलम् ४

पारावतसवर्णाश्वश्चन्द्रादित्यसमद्युतिः
पार्षतः प्रबभौ धन्वी कालो विग्रहवानिव ५
पार्षतं त्वभि संतस्थुर्द्रौपदेया युयुत्सवः
सानुगा भीमवपुषश्चन्द्रं तारागणा इव ६
अथ व्यूढेष्वनीकेषु प्रेक्ष्य संशप्तकान्रणे
क्रुद्धोऽर्जुनोऽभिदुद्राव व्याक्षिपन्गाण्डिवं धनुः ७
अथ संशप्तकाः पार्थमभ्यधावन्वधैषिणः
विजये कृतसंकल्पा मृत्युं कृत्वा निवर्तनम् ८
तदश्वसंघबहुलं मत्तनागरथाकुलम्
पत्तिमच्छूरवीरौघैर्द्रुतमर्जुनमाद्रवत् ९
स संप्रहारस्तुमुलस्तेषमासीत्किरीटिना
तस्यैवं नः श्रुतो यादृङ्निवातकवचैः सह १०
रथानश्वान्ध्वजान्नागान्पत्तीन्रथपतीनपि
इषून्धनूंषि खड्गांश्च चक्राणि च परश्वधान् ११
सायुधानुद्यतान्बाहूनुद्यतान्यायुधानि च
चिच्छेद द्विषतां पार्थः शिरांसि च सहस्रशः १२
तस्मिन्सैन्ये महावर्ते पातालावर्तसंनिभे
निमग्नं तं रथं मत्वा नेदुः संशप्तका मुदा १३
स पुरस्तादरीन्हत्वा पश्चार्धेनोत्तरेण च
दक्षिणेन च बीभत्सुः क्रुद्धो रुद्रः पशूनिव १४
अथ पाञ्चालचेदीनां सृञ्जयानां च मारिष
त्वदीयैः सह संग्राम आसीत्परमदारुणः १५
कृपश्च कृतवर्मा च शकुनिश्चापि सौबलः
हृष्टसेनाः सुसंरब्धा रथानीकैः प्रहारिणः १६
कोसलैः काशिमत्स्यैश्च कारूषैः केकयैरपि
शूरसेनैः शूरवीरैर्युयुधुर्युद्धदुर्मदाः १७
तेषामन्तकरं युद्धं देहपाप्मप्रणाशनम्
शूद्रविट्क्षत्रवीराणां धर्म्यं स्वर्ग्यं यशस्करम् १८
दुर्योधनोऽपि सहितो भ्रातृभिर्भरतर्षभ
गुप्तः कुरुप्रवीरैश्च मद्राणां च महारथैः १९

पाण्डवैः सहपाञ्चालैश्चेदिभिः सात्यकेन च
युध्यमानं रणे कर्णं कुरुवीरोऽभ्यपालयत् २०
कर्णोऽपि निशितैर्बाणैर्विनिहत्य महाचमूम्
प्रमृद्य च रथश्रेष्ठान्युधिष्ठिरमपीडयत् २१
विपत्रायुध देहासून्कृत्वा शत्रून्सहस्रशः
युक्त्वा स्वर्गयशोभ्यां च स्वेभ्यो मुदमुदावहत् २२
धृतराष्ट्र उवाच
यत्तत्प्रविश्य पार्थानां सेनां कुर्वञ्जनक्षयम्
कर्णो राजानमभ्यर्च्छत्तन्ममाचक्ष्व सञ्जय २३
के च प्रवीराः पार्थानां युधि कर्णमवारयन्
कांश्च प्रमथ्याधिरथिर्युधिष्ठिरमपीडयत् २४
सञ्जय उवाच
धृष्टद्युम्नमुखान्पार्थान्दृष्ट्वा कर्णो व्यवस्थितान्
समभ्यधावत्त्वरितः पाञ्चालाञ्शत्रुकर्शनः २५
तं तूर्णमभिधावन्तं पाञ्चाला जितकाशिनः
प्रत्युद्ययुर्महाराज हंसा इव महार्णवम् २६
ततः शङ्खसहस्राणां निस्वनो हृदयंगमः
प्रादुरासीदुभयतो भेरीशब्दश्च दारुणः २७
नानावादित्रनादश्च द्विपाश्वरथनिस्वनः
सिंहनादश्च वीराणामभवद्दारुणस्तदा २८
साद्रिद्रुमार्णवा भूमिः सवाताम्बुदमम्बरम्
सार्केन्दुग्रहनक्षत्रा द्यौश्च व्यक्तं व्यघूर्णत २९
अति भूतानि तं शब्दं मेनिरेऽति च विव्यथुः
यानि चाप्लवसत्त्वानि प्रायस्तानि मृतानि च ३०
अथ कर्णो भृशं क्रुद्धः शीघ्रमस्त्रमुदीरयन्
जघान पाण्डवीं सेनामासुरीं मघवानिव ३१
स पाण्डवरथांस्तूर्णं प्रविश्य विसृजञ्शरान्
प्रभद्रकाणां प्रवरानहनत्सप्तसप्ततिम् ३२
ततः सुपुङ्खैर्निशितै रथश्रेष्ठो रथेषुभिः
अवधीत्पञ्चविंशत्या पाञ्चालान्पञ्चविंशतिम् ३३

सुवर्णपुङ्खैर्नाराचैः परकायविदारणैः
चेदिकानवधीद्वीरः शतशोऽथ सहस्रशः ३४
तं तथा समरे कर्म कुर्वाणमतिमानुषम्
परिवव्रुर्महाराज पाञ्चालानां रथव्रजाः ३५
ततः संधाय विशिखान्पञ्च भारत दुःसहान्
पाञ्चालानवधीत्पञ्च कर्णो वैकर्तनो वृषः ३६
भानुदेवं चित्रसेनं सेनाबिन्दुं च भारत
तपनं शूरसेनं च पाञ्चालानवधीद्रणे ३७
पाञ्चालेषु च शूरेषु वध्यमानेषु सायकैः
हाहाकारो महानासीत्पाञ्चालानां महाहवे ३८
तेषां संकीर्यमाणानां हाहाकारकृता दिशः
पुनरेव च तान्कर्णो जघानाशु पतत्रिभिः ३९
चक्ररक्षौ तु कर्णस्य पुत्रौ मारिष दुर्जयौ
सुषेणः सत्यसेनश्च त्यक्त्वा प्राणानयुध्यताम् ४०
पृष्ठगोपस्तु कर्णस्य ज्येष्ठः पुत्रो महारथः
वृषसेनः स्वयं कर्णं पृष्ठतः पर्यपालयत् ४१
धृष्टद्युम्नः सात्यकिश्च द्रौपदेया वृकोदरः
जनमेजयः शिखण्डी च प्रवीराश्च प्रभद्रकाः ४२
चेदिकेकयपाञ्चाला यमौ मत्स्याश्च दंशिताः
समभ्यधावन्राधेयं जिघांसन्तः प्रहारिणः ४३
त एनं विविधैः शस्त्रैः शरधाराभिरेव च
अभ्यवर्षन्विमृद्नन्तः प्रावृषीवाम्बुदा गिरिम् ४४
पितरं तु परीप्सन्तः कर्णपुत्राः प्रहारिणः
त्वदीयाश्चापरे राजन्वीरा वीरानवारयन् ४५
सुषेणो भीमसेनस्य छित्वा भल्लेन कार्मुकम्
नाराचैः सप्तभिर्विद्ध्वा हृदि भीमं ननाद ह ४६
अथान्यद्धनुरादाय सुदृढं भीमविक्रमः
सज्यं वृकोदरः कृत्वा सुषेणस्याच्छिनद्धनुः ४७
विव्याध चैनं नवभिः क्रुद्धो नृत्यन्निवेषुभिः
कर्णं च तूर्णं विव्याध त्रिसप्तत्या शितैः शरैः ४८

सत्यसेनं च दशभिः साश्वसूतध्वजायुधम्
पश्यतां सुहृदां मध्ये कर्णपुत्रमपातयत् ४९
क्षुरप्रणुन्नं तत्तस्य शिरश्चन्द्रनिभाननम्
शुभदर्शनमेवासीन्नालभ्रष्टमिवाम्बुजम् ५०
हत्वा कर्णसुतं भीमस्तावकान्पुनरार्दयत्
कृपहार्दिक्ययोश्छित्त्वा चापे तावप्यथार्दयत् ५१
दुःशासनं त्रिभिर्विद्ध्वा शकुनिं षड्भिरायसैः
उलूकं च पतत्रिं च चकार विरथावुभौ ५२
हे सुषेण हतोऽसीति ब्रुवन्नादत्त सायकम्
तमस्य कर्णश्चिच्छेद त्रिभिश्चैनमताडयत् ५३
अथान्यमपि जग्राह सुपर्वाणं सुतेजनम्
सुषेणायासृजद्भीमस्तमप्यस्याच्छिनद्वृषः ५४
पुनः कर्णस्त्रिसप्तत्या भीमसेनं रथेषुभिः
पुत्रं परीप्सन्विव्याध क्रूरं क्रूरैर्जिघांसया ५५
सुषेणस्तु धनुर्गृह्य भारसाधनमुत्तमम्
नकुलं पञ्चभिर्बाणैर्बाह्वोरुरसि चार्दयत् ५६
नकुलस्तं तु विंशत्या विद्ध्वा भारसहैर्दृढैः
ननाद बलवन्नादं कर्णस्य भयमादधत् ५७
तं सुषेणो महाराज विद्ध्वा दशभिराशुगैः
चिच्छेद च धनुः शीघ्रं क्षुरप्रेण महारथः ५८
अथान्यद्धनुरादाय नकुलः क्रोधमूर्च्छितः
सुषेणं बहुभिर्बाणैर्वारयामास संयुगे ५९
स तु बाणैर्दिशो राजन्नाच्छाद्य परवीरहा
आजघ्ने सारथिं चास्य सुषेणं च ततस्त्रिभिः
चिच्छेद चास्य सुदृढं धनुर्भल्लैस्त्रिभिस्त्रिधा ६०
अथान्यद्धनुरादाय सुषेणः क्रोधमूर्छितः
अविध्यन्नकुलं षष्ट्या सहदेवं च सप्तभिः ६१
तद्युद्धं सुमहद्घोरमासीद्देवासुरोपमम्
निघ्नतां सायकैस्तूर्णमन्योन्यस्य वधं प्रति ६२
सात्यकिर्वृषसेनस्य हत्वा सूतं त्रिभिः शरैः

धनुश्चिच्छेद भल्लेन जघानाश्वांश्च सप्तभिः
ध्वजमेकेषुणोन्मथ्य त्रिभिस्तं हृद्यताडयत् ६३
अथावसन्नः स्वरथे मुहूर्तात्पुनरुत्थितः
अथो जिघांसुः शैनेयं खड्गचर्मभृदभ्ययात् ६४
तस्य चाप्लवतः शीघ्रं वृषसेनस्य सात्यकिः
वराहकर्णैर्दशभिरविध्यदसिचर्मणी ६५
दुःशासनस्तु तं दृष्ट्वा विरथं व्यायुधं कृतम्
आरोप्य स्वरथे तूर्णमपोवाह रथान्तरम् ६६
अथान्यं रथमास्थाय वृषसेनो महारथः
कर्णस्य युधि दुर्धर्षः पुनः पृष्ठमपालयत् ६७
दुःशासनं तु शैनेयो नवैर्नवभिराशुगैः
विसूताश्वरथं कृत्वा ललाटे त्रिभिरार्पयत् ६८
स त्वन्यं रथमास्थाय विधिवत्कल्पितं पुनः
युयुधे पाण्डुभिः सार्धं कर्णस्याप्याययन्बलम् ६९
धृष्टद्युम्नस्ततः कर्णमविध्यद्दशभिः शरैः
द्रौपदेयास्त्रिसप्तत्या युयुधानस्तु सप्तभिः ७०
भीमसेनश्चतुःषष्ठ्या सहदेवश्च पंचभिः
नकुलस्त्रिंशता बाणैः शतानीकश्च सप्तभिः
शिखण्डी दशभिर्वीरो धर्मराजः शतेन तु ७१
एते चान्ये च राजेन्द्र प्रवीरा जयगृद्धिनः
अभ्यर्दयन्महेष्वासं सूतपुत्रं महामृधे ७२
तान्सूतपुत्रो विशिखैर्दशभिर्दशभिः शितैः
रथे चारु चरन्वीरः प्रत्यविध्यदरिंदमः ७३
तत्रास्त्रवीर्यं कर्णस्य लाघवं च महात्मनः
अपश्याम महाराज तदद्भुतमिवाभवत् ७४
न ह्याददानं ददृशुः संदधानं च सायकान्
विमुञ्चन्तं च संरम्भाद्ददृशुस्ते महारथम् ७५
द्यौर्वियद्भूर्दिशश्चाशु प्रणुन्ना निशितैः शरैः
अरुणाभ्रावृताकारं तस्मिन्देशे बभौ वियत् ७६
नृत्यन्निव हि राधेयश्चापहस्तः प्रतापवान्

यैर्विद्धः प्रत्यविध्यत्तानेकैकं त्रिगुणैः शरैः ७७
दशभिर्दशभिश्चैनान्पुनर्विद्ध्वा ननाद ह
साश्वसूतध्वजच्छत्रास्ततस्ते विवरं ददुः ७८
तान्प्रमृद्नन्महेष्वासान्राधेयः शरवृष्टिभिः
राजानीकमसंबाधं प्राविशच्छत्रुकर्शनः ७९
स रथांस्त्रिशतान्हत्वा चेदीनामनिवर्तिनाम्
राधेयो निशितैर्बाणैस्ततोऽभ्यार्च्छद्युधिष्ठिरम् ८०
ततस्ते पाण्डवा राजञ्शिखण्डीच ससात्यकिः
राधेयात्परिरक्षन्तो राजानं पर्यवारयन् ८१
तथैव तावकाः सर्वे कर्णं दुर्वारणं रणे
यत्ताः सेनामहेष्वासाः पर्यरक्षन्त सर्वशः ८२
नानावादित्रघोषाश्च प्रादुरासन्विशां पते
सिंहनादश्च संजज्ञे शूराणामनिवर्तिनाम् ८३
ततः पुनः समाजग्मुरभीताः कुरुपाण्डवाः
युधिष्ठिरमुखाः पार्थाः सूतपुत्रमुखा वयम् ८४

इति श्रीमहाभारते कर्णपर्वणि द्वात्रिंशोऽध्यायः ३२

## त्रयस्त्रिंशोऽध्यायः

सञ्जय उवाच
विदार्य कर्णस्तां सेनां धर्मराजमुपाद्रवत्
रथहस्त्यश्वपत्तीनां सहस्रैः परिवारितः १
नानायुधसहस्राणि प्रेषितान्यरिभिर्वृषः
छित्त्वा बाणशतैरुग्रैस्तानविध्यदसंभ्रमः २
निचकर्त शिरांस्येषां बाहूनूरूंश्च सर्वशः
ते हता वसुधां पेतुर्भग्नाश्चान्ये विदुद्रुवुः ३
द्रविडान्ध्रनिषादास्तु पुनः सात्यकिचोदिताः
अभ्यर्दयञ्जिघांसन्तः पत्तयः कर्णमाहवे ४
ते विबाहुशिरस्त्राणाः प्रहताः कर्णसायकैः
पेतुः पृथिव्यां युगपच्छिन्नं शालवनं यथा ५
एवं योधशतान्याजौ सहस्राण्ययुतानि च

हतानीयुर्महीं देहैर्यशसापूरयन्दिशः ६
अथ वैकर्तनं कर्णं रणे क्रुद्धमिवान्तकम्
रुरुधुः पाण्डुपाञ्चाला व्याधिं मन्त्रौषधैरिव ७
स तान्प्रमृद्याभ्यपतत्पुनरेव युधिष्ठिरम्
मन्त्रौषधिक्रियातीतो व्याधिरत्युल्बणो यथा ८
स राजगृद्धिभी रुद्धः पाण्डुपाञ्चालकेकयैः
नाशकत्तानतिक्रान्तुं मृत्युर्ब्रह्मविदो यथा ९
ततो युधिष्ठिरः कर्णमदूरस्थं निवारितम्
अब्रवीत्परवीरघ्नः क्रोधसंरक्तलोचनः १०
कर्ण कर्ण वृथादृष्टे सूतपुत्र वचः शृणु
सदा स्पर्धसि संग्रामे फल्गुनेन यशस्विना
तथास्मान्बाधसे नित्यं धार्तराष्ट्रमते स्थितः ११
यद्बलं यच्च ते वीर्यं प्रद्वेषो यश्च पाण्डुषु
तत्सर्वं दर्शयस्वाद्य पौरुषं महदास्थितः
युद्धश्रद्धां च तेऽद्याहं विनेष्यामि महाहवे १२
एवमुक्त्वा महाराज कर्णं पाण्डुसुतस्तदा
सुवर्णपुङ्खैर्दशभिर्विव्याधायस्मयैः शितैः १३
तं सूतपुत्रो नवभिः प्रत्यविध्यदरिन्दमः
वत्सदन्तैर्महेष्वासः प्रहसन्निव भारत १४
ततः क्षुराभ्यां पाञ्चाल्यौ चक्ररक्षौ महात्मनः
जघान समरे शूरः शरैः संनतपर्वभिः १५
तावुभौ धर्मराजस्य प्रवीरौ परिपार्श्वतः
रथाभ्याशे चकाशेते चन्द्रस्येव पुनर्वसू १६
युधिष्ठिरः पुनः कर्णमविध्यत्त्रिंशता शरैः
सुषेणं सत्यसेनं च त्रिभिस्त्रिभिरताडयत् १७
शल्यं नवत्या विव्याध त्रिसप्तत्या च सूतजम्
तांश्चास्य गोप्तृन्विव्याध त्रिभिस्त्रिभिरजिह्मगैः १८
ततः प्रहस्याधिरथिर्विधुन्वानः स कार्मुकम्
भित्त्वा भल्लेन राजानं विद्ध्वा षष्ट्यानदन्मुदा १९
ततः प्रवीराः पाण्डूनामभ्यधावन्युधिष्ठिरम्

सूतपुत्रात्परीप्सन्तः कर्णमभ्यर्दयञ्शरैः २०
सात्यकिश्चेकितानश्च युयुत्सुः पाण्ड्य एव च
धृष्टद्युम्नः शिखण्डी च द्रौपदेयाः प्रभद्रकाः २१
यमौ च भीमसेनश्च शिशुपालस्य चात्मजः
कारूषा मत्स्यशेषाश्च केकयाः काशिकोसलाः
एते च त्वरिता वीरा वसुषेणमवारयन् २२
जनमेजयश्च पाञ्चाल्यः कर्णं विव्याध सायकैः
वराहकर्णैर्नाराचैर्नालीकैर्निशितैः शरैः
वत्सदन्तैर्विपाठैश्च क्षुरप्रैश्चटकामुखैः २३
नानाप्रहरणैश्चोग्रै रथहस्त्यश्वसादिनः
सर्वतोऽभ्याद्रवन्कर्णं परिवार्य जिघांसया २४
स पाण्डवानां प्रवरैः सर्वतः समभिद्रुतः
उदैरयद्ब्राह्ममस्त्रं शरैः संपूरयन्दिशः २५
ततः शरमहाज्वालो वीर्योष्मा कर्णपावकः
निर्दहन्पाण्डववनं चारुः पर्यचरद्रणे २६
स संवार्य महास्त्राणि महेष्वासो महात्मनाम्
प्रहस्य पुरुषेन्द्रस्य शरैश्चिच्छेद कार्मुकम् २७
ततः संधाय नवतिं निमेषान्नतपर्वणाम्
विभेद कवचं राज्ञो रणे कर्णः शितैः शरैः २८
तद्वर्म हेमविकृतं रराज निपतत्तदा
सविद्युदभ्रं सवितुः शिष्टं वातहतं यथा २९
तदङ्गं पुरुषेन्द्रस्य भ्रष्टवर्म व्यरोचत
रत्नैरलंकृतं दिव्यैर्व्यभ्रं निशि यथा नभः ३०
स विवर्मा शरैः पार्थो रुधिरेण समुक्षितः
क्रुद्धः सर्वायसीं शक्तिं चिक्षेपाधिरथिं प्रति ३१
तां ज्वलन्तीमिवाकाशे शरैश्चिच्छेद सप्तभिः
सा छिन्ना भूमिमपतन्महेष्वासस्य सायकैः ३२
ततो बाह्वोर्ललाटे च हृदि चैव युधिष्ठिरः
चतुर्भिस्तोमरैः कर्णं ताडयित्वा मुदानदत् ३३
उद्भिन्नरुधिरः कर्णः क्रुद्धः सर्प इव श्वसन्

ध्वजं चिच्छेद भल्लेन त्रिभिर्विव्याध पाण्डवम्
इषुधीचास्यचिच्छेद रथं च तिलशोऽच्छिनत् ३४
एवं पार्थो व्यपायात्स निहतप्रार्ष्टिसारथिः
अशक्नुवन्प्रमुखतः स्थातुं कर्णस्य दुर्मनाः ३५
तमभिद्रुत्य राधेयः स्कन्धं संस्पृश्य पाणिना
अब्रवीत्प्रहसन्राजन्कुत्सयन्निव पाण्डवम् ३६
कथं नाम कुले जातः क्षत्रधर्मे व्यवस्थितः
प्रजह्यात्समरे शत्रून्प्राणान्रक्षन्महाहवे ३७
न भवान्क्षत्रधर्मेषु कुशलोऽसीति मे मतिः
ब्राह्मे बले भवान्युक्तः स्वाध्याये यज्ञकर्मणि ३८
मा स्म युध्यस्व कौन्तेय मा च वीरान्समासदः
मा चैनानप्रियं ब्रूहि मा च व्रज महारणम् ३९
एवमुक्त्वा ततः पार्थं विसृज्य च महाबलः
न्यहनत्पाण्डवीं सेनां वज्रहस्त इवासुरीम्
ततः प्रायाद्द्रुतं राजन्व्रीडन्निव जनेश्वरः ४०
अथ प्रयान्तं राजानमन्वयुस्ते तदाच्युतम्
चेदिपाण्डवपाञ्चालाः सात्यकिश्च महारथः
द्रोपदेयास्तथाशूरामाद्रीपुत्रौ च पाण्डवौ ४१
ततो युधिष्ठिरानीकं दृष्ट्वा कर्णः पराङ्मुखम्
कुरुभिः सहितो वीरैः पृष्ठगैः पृष्ठमन्वयात् ४२
शङ्खभेरीनिनादैश्च कार्मुकाणां च निस्वनैः
बभूव धार्तराष्ट्राणां सिंहनादरवस्तदा ४३
युधिष्ठिरस्तु कौरव्य रथमारुह्य सत्वरः
श्रुतकीर्तेर्महाराज दृष्टवान्कर्णविक्रमम् ४४
काल्यमानं बलं दृष्ट्वा धर्मराजो युधिष्ठिरः
तान्योधानब्रवीत्क्रुद्धो हतैनं वै सहस्रशः ४५
ततो राज्ञाभ्यनुज्ञाताःपाण्डवानां महारथाः
भीमसेनमुखाः सर्वे पुत्रांस्ते प्रत्युपाद्रवन् ४६
अभवत्तुमुलः शब्दो योधानां तत्र भारत
हस्त्यश्वरथपत्तीनां शस्त्राणां च ततस्ततः ४७

उत्तिष्ठत प्रहरत प्रैताभिपततेति च
इति ब्रुवाणा अन्योन्यं जघ्नुर्योधा रणाजिरे ४८
अभ्रच्छायेव तत्रासीच्छरवृष्टिभिरम्बरे
समावृत्तैर्नरवरैर्निघ्नद्भिरितरेतरम् ४९
विपताकाध्वजच्छत्रा व्यश्वसूतायुधा रणे
व्यङ्गाङ्गावयवाः पेतुः क्षितौ क्षीणा हतेश्वराः ५०
प्रवराणीव शैलानां शिखराणि द्विपोत्तमाः
सारोहा निहताः पेतुर्वज्रभिन्ना इवाद्रयः ५१
छिन्नभिन्नविपर्यस्तैर्वर्मालंकारविग्रहैः
सारोहास्तुरगाः पेतुर्हतवीराः सहस्रशः ५२
विप्रविद्धायुधाङ्गाश्च द्विरदाश्वरथैर्हताः
प्रतिवीरैश्च संमर्दे पत्तिसंघाः सहस्रशः ५३
विशालायतताम्राक्षैः पद्मेन्दुसदृशाननैः
शिरोभिर्युद्धशौण्डानां सर्वतः संस्तृता मही ५४
तथा तु वितते व्योम्नि निस्वनं शुश्रुवुर्जनाः
विमानैरप्सरः संघैर्गीतवादित्रनिस्वनैः ५५
हतान्कृत्तानभिमुखान्वीरान्वीरैः सहस्रशः
आरोप्यारोप्य गच्छन्ति विमानेष्वप्सरोगणाः ५६
तद्दृष्ट्वा महदाश्चर्यं प्रत्यक्षं स्वर्गलिप्सया
प्रहृष्टमनसः शूराः क्षिप्रं जग्मुः परस्परम् ५७
रथिनो रथिभिः सार्धं चित्रं युयुधुराहवे
पत्तयः पत्तिभिर्नागा नागैः सह हयैर्हयाः ५८
एवं प्रवृत्ते संग्रामे गजवाजिजनक्षये
सैन्ये च रजसा व्याप्ते स्वे स्वाञ्जघ्नुः परे परान् ५९
कचाकचि बभौ युद्धं दन्तादन्ति नखानखि
मुष्टियुद्धं नियुद्धं च देहपाप्मविनाशनम् ६०
तथा वर्तति स्त्रंगामे गजवाजिजनक्षये
नराश्वगजदेहेभ्यः प्रसृता लोहितापगा
नराश्वगजदेहान्सा व्युवाह पतितान्बहून् ६१
नराश्वगजसंबाधे नराश्वगजसादिनाम्

लोहितोदा महाघोरा नदी लोहितकर्दमा
नराश्वगजदेहान्सा वहन्ती भीरुभीषणी ६२
तस्याः परमपारं च व्रजन्ति विजयैषिणः
गाधेन च प्लवन्तश्च निमज्ज्योन्मज्ज्य चापरे ६३
ते तु लोहितदिग्धाङ्गा रक्तवर्मायुधाम्बराः
सस्नुस्तस्यां पपुश्चासृङ्मम्लुश्च भरतर्षभ ६४
रथानश्वान्नरान्नागानायुधाभरणानि च
वसनान्यथ वर्माणि हन्यमानान्हतानपि
भूमिं खं द्यां दिशश्चैव प्रायः पश्याम लोहितम् ६५
लोहितस्य तु गन्धेन स्पर्शेन च रसेन च
रूपेण चातिरक्तेन शब्देन च विसर्पता
विषादः सुमहानासीत्प्रायः सैन्यस्य भारत ६६
तत्तु विप्रहतं सैन्यं भीमसेनमुखैस्तव
भूयः समाद्रवन्वीराः सात्यकिप्रमुखा रथाः ६७
तेषामापततां वेगमविषह्य महात्मनाम्
पुत्राणां ते महत्सैन्यमासीद्राजन्पराङ्मुखम् ६८
तत्प्रकीर्णरथाश्वेभं नरवाजिसमाकुलम्
विध्वस्तचर्मकवचं प्रविद्धायुधकार्मुकम् ६९
व्यद्रवत्तावकं सैन्यं लोड्यमानं समन्ततः
सिंहार्दितं महारण्ये यथा गजकुलं तथा ७०
इति श्रीमहाभारते कर्णपर्वणि त्रयस्त्रिंशोऽध्यायः ३३

## चतुस्त्रिंशोऽध्यायः

सञ्जय उवाच
तानभिद्रवतो दृष्ट्वा पाण्डवांस्तावकं बलम्
क्रोशतस्तव पुत्रस्य न स्म राजन्व्यवर्तत १
ततः पक्षात्प्रपक्षाच्च प्रपक्षैश्चापि दक्षिणात्
उदस्तशस्त्राः कुरवो भीममभ्यद्रवन्रणे २
कर्णोऽपि दृष्ट्वा द्रवतो धार्तराष्ट्रान्पराङ्मुखान्
हंसवर्णान्हयाग्र्यांस्तान्प्रैषीद्यत्र वृकोदरः ३

ते प्रेषिता महाराज शल्येनाहवशोभिना
भीमसेनरथं प्राप्य समसज्जन्त वाजिनः ४
दृष्ट्वा कर्णं समायान्तं भीमः क्रोधसमन्वितः
मतिं दध्रे विनाशाय कर्णस्य भरतर्षभ ५
सोऽब्रवीत्सात्यकिं वीरं धृष्टद्युम्नं च पार्षतम्
एनं रक्षत राजानं धर्मात्मानं युधिष्ठिरम्
संशयान्महतो मुक्तं कथंचित्प्रेक्षतो मम ६
अग्रतो मे कृतो राजा छिन्नसर्वपरिच्छदः
दुर्योधनस्य प्रीत्यर्थं राधेयेन दुरात्मना ७
अन्तमद्य करिष्यामि तस्य दुःखस्य पार्षत
हन्ता वास्मि रणे कर्णं स वा मां निहनिष्यति
संग्रामेण सुघोरेण सत्यमेतद्ब्रवीमि वः ८
राजानमद्य भवतां न्यासभूतं ददामि वै
अस्य संरक्षणे सर्वे यतध्वं विगतज्वराः ९
एवमुक्त्वा महाबाहुः प्रायादाधिरथिं प्रति
सिंहनादेन महता सर्वाः संनादयन्दिशः १०
दृष्ट्वा त्वरितमायान्तं भीमं युद्धाभिनन्दिनम्
सूतपुत्रमथोवाच मद्राणामीश्वरो विभुः ११
पश्य कर्ण महाबाहुं क्रुद्धं पाण्डवनन्दनम्
दीर्घकालार्जितं क्रोधं मोक्तुकामं त्वयि ध्रुवम् १२
ईदृशं नास्य रूपं मे दृष्टपूर्वं कदाचन
अभिमन्यौ हते कर्ण राक्षसे वा घटोत्कचे १३
त्रैलोक्यस्य समस्तस्य शक्तः क्रुद्धो निवारणे
बिभर्ति यादृशं रूपं कालाग्निसदृशं शुभम् १४
इति ब्रुवति राधेयं मद्राणामीश्वरे नृप
अभ्यवर्तत वै कर्णं क्रोधदीप्तो वृकोदरः १५
तथागतं तु संप्रेक्ष्य भीमं युद्धाभिनन्दिनम्
अब्रवीद्वचनं शल्यं राधेयः प्रहसन्निव १६
यदुक्तं वचनं मेऽद्य त्वया मद्रजनेश्वर
भीमसेनं प्रति विभो तत्सत्यं नात्र संशयः १७

एष शूरश्च वीरश्च क्रोधनश्च वृकोदरः
निरपेक्षः शरीरे च प्राणतश्च बलाधिकः १८
अज्ञातवासं वसता विराटनगरे तदा
द्रौपद्याः प्रियकामेन केवलं बाहुसंश्रयात्
गूढभावं समाश्रित्य कीचकः सगणो हतः १९
सोऽद्य संग्रामशिरसि संनद्धः क्रोधमूर्च्छितः
किंकरोद्यतदण्डेन मृत्युनापि व्रजेद्रणम् २०
चिरकालाभिलषितो ममायं तु मनोरथः
अर्जुनं समरे हन्यां मां वा हन्याद्धनञ्जयः
स मे कदाचिदद्यैव भवेद्भीमसमागमात् २१
निहते भीमसेने तु यदि वा विरथीकृते
अभियास्यति मां पार्थस्तन्मे साधु भविष्यति
अत्र यन्मन्यसे प्राप्तं तच्छीघ्रं संप्रधारय २२
एतच्छ्रुत्वा तु वचनं राधेयस्य महात्मनः
उवाच वचनं शल्यः सूतपुत्रं तथागतम् २३
अभियासि महाबाहो भीमसेनं महाबलम्
निरस्य भीमसेनं तु ततः प्राप्स्यसि फल्गुनम् २४
यस्ते कामोऽभिलषितश्चिरात्प्रभृति हृद्गतः
स वै संपत्स्यते कर्ण सत्यमेतद्ब्रवीमि ते २५
एवमुक्ते ततः कर्णः शल्यं पुनरभाषत
हन्ताहमर्जुनं संख्ये मां वा हन्ता धनञ्जयः
युद्धे मनः समाधाय याहि याहीत्यचोदयत् २६
ततः प्रायाद्रथेनाशु शल्यस्तत्र विशां पते
यत्र भीमो महेष्वासो व्यद्रावयत वाहिनीम् २७
ततस्तूर्यनिनादश्च भेरीणां च महास्वनः
उदतिष्ठत राजेन्द्र कर्णभीमसमागमे २८
भीमसेनोऽथ संक्रुद्धस्तव सैन्यं दुरासदम्
नाराचैर्विमलैस्तीक्ष्णैर्दिशः प्राद्रावयद्बली २९
स संनिपातस्तुमुलो भीमरूपो विशां पते
आसीद्रौद्रो महाराज कर्णपाण्डवयोर्मृधे

ततो मुहूर्ताद्राजेन्द्र पाराडवः कर्णमाद्रवत् ३०
तमापतन्तं संप्रेक्ष्य कर्णो वैकर्तनो वृषः
आजघानोरसि क्रुद्धो नाराचेन स्तनान्तरे
पुनश्चैनममेयात्मा शरवर्षैरवाकिरत् ३१
स विद्धः सूतपुत्रेण छादयामास पत्रिभिः
विव्याध निशितैः कर्ण नवभिर्नतपर्वभिः ३२
तस्य कर्णो धनुर्मध्ये द्विधा चिच्छेद पत्रिणा
अथ तं छिन्नधन्वानमभ्यविध्यत्स्तनान्तरे
नाराचेन सुतीक्ष्णेन सर्वावरणभेदिना ३३
सोऽन्यत्कार्मुकमादाय सूतपुत्रं वृकोदरः
राजन्मर्मसु मर्मज्ञो विद्ध्वा सुनिशितैः शरैः
ननाद बलवन्नादं कम्पयन्निव रोदसी ३४
तं कर्णः पञ्चविंशत्या नाराचानां समार्दयत्
मदोत्कटं वने दृप्तमुल्काभिरिव कुञ्जरम् ३५
ततः सायकभिन्नाङ्गः पाराडवः क्रोधमूर्च्छितः
संरम्भामर्षताम्राक्षः सूतपुत्रवधेच्छया ३६
स कार्मुके महावेगं भारसाधनमुत्तमम्
गिरीणामपि भेत्तारं सायकं समयोजयत् ३७
विकृष्य बलवच्चापमाकर्णादतिमारुतिः
तं मुमोच महेष्वासः क्रुद्धः कर्णजिघांसया ३८
स विसृष्टो बलवता बाणो वज्राशनिस्वनः
अदारयद्रणे कर्णं वज्रवेग इवाचलम् ३९
स भीमसेनाभिहतो सूतपुत्रः कुरूद्वह
निषसाद रथोपस्थे विसंज्ञः पृतनापतिः ४०
ततो मद्राधिपो दृष्ट्वा विसंज्ञं सूतनन्दनम्
अपोवाह रथेनाजौ कर्णमाहवशोभिनम् ४१
ततः पराजिते कर्णे धार्तराष्ट्रीं महाचमूम्
व्यद्रावयद्भीमसेनो यथेन्द्रो दानवीं चमूम् ४२

इति श्रीमहाभारते कर्णपर्वणि चतुस्त्रिंशत्तमोऽध्यायः ३४

पञ्चत्रिंशोऽध्यायः

धृतराष्ट्र उवाच
सुदुष्करमिदं कर्म कृतं भीमेन सञ्जय
येन कर्णो महाबाहू रथोपस्थे निपातितः १
कर्णो ह्येको रणे हन्ता सृञ्जयान्पाण्डवैः सह
इति दुर्योधनः सूत प्राब्रवीन्मां मुहुर्मुहुः २
पराजितं तु राधेयं दृष्ट्वा भीमेन संयुगे
ततः परं किमकरोत्पुत्रो दुर्योधनो मम ३
सञ्जय उवाच
विभ्रान्तं प्रेक्ष्य राधेयं सूतपुत्रं महाहवे
महत्या सेनया राजन्सोदर्यान्समभाषत ४
शीघ्रं गच्छत भद्रं वो राधेयं परिरक्षत
भीमसेनभयागाधे मज्जन्तं व्यसनार्णवे ५
ते तु राज्ञा समादिष्टा भीमसेनजिघांसवः
अभ्यवर्तन्त संक्रुद्धाः पतंगा इव पावकम् ६
श्रुतायुर्दुर्धरः क्राथो विवित्सुर्विकटः समः
निषङ्गी कवची पाशी तथा नन्दोपनन्दकौ ७
दुष्प्रधर्षः सुबाहुश्च वातवेगसुवर्चसौ
धनुर्ग्राहो दुर्मदश्च तथा सत्त्वसमः सहः ८
एते रथैः परिवृता वीर्यवन्तो महाबलाः
भीमसेनं समासाद्य समन्तात्पर्यवारयन्
ते व्यमुञ्चञ्शरव्रातान्नानालिङ्गान्समन्ततः ९
स तैरभ्यर्द्यमानस्तु भीमसेनो महाबलः
तेषामापततां क्षिप्रं सुतानां ते नराधिप
रथैः पञ्चाशता सार्धं पञ्चाशन्न्यहनद्रथान् १०
विवित्सोस्तु ततः क्रुद्धो भल्लेनापाहरच्छिरः
सकुण्डलशिरस्त्राणं पूर्णचन्द्रोपमं तदा
भीमेन च महाराज स पपात हतो भुवि ११
तं दृष्ट्वा निहतं शूरं भ्रातरः सर्वतः प्रभो
अभ्यद्रवन्त समरे भीमं भीमपराक्रमम् १२

ततोऽपराभ्यां भल्लाभ्यां पुत्रयोस्ते महाहवे
जहार समरे प्राणान्भीमो भीमपराक्रमः १३
तौ धरामन्वपद्येतां वातरुग्णाविव द्रुमौ
विकटश्च समश्चोभौ देवगर्भसमौ नृप १४
ततस्तु त्वरितो भीमः क्राथं निन्ये यमक्षयम्
नाराचेन सुतीक्ष्णेन स हतो न्यपतद्भुवि १५
हाहाकारस्ततस्तीव्रः संबभूव जनेश्वरः
वध्यमानेषु ते राजंस्तदा पुत्रेषु धन्विषु १६
तेषां संलुलिते सैन्ये भीमसेनो महाबलः
नन्दोपनन्दौ समरे प्रापयद्यमसादनम् १७
ततस्ते प्राद्रवन्भीताः पुत्रास्ते विह्वलीकृताः
भीमसेनं रणेदृष्ट्वा कालान्तकयमोपमम् १८
पुत्रांस्ते निहतान्दृष्ट्वा सूतपुत्रो महामनाः
हंसवर्णान्हयान्भूयः प्राहिणोद्यत्र पाण्डवः १९
ते प्रेषिता महाराज मद्रराजेन वाजिनः
भीमसेनरथं प्राप्य समसज्जन्त वेगिताः २०
स संनिपातस्तुमुलो घोररूपो विशां पते
आसीद्रौद्रो महाराज कर्णपाण्डवयोर्मृधे २१
दृष्ट्वा मम महाराज तौ समेतौ महारथौ
आसीद्बुद्धिः कथं नूनमेतदद्य भविष्यति २२
ततो मुहूर्ताद्राजेन्द्र नातिकृच्छ्राद्धसन्निव
विरथं भीमकर्माणं भीमं कर्णश्चकार ह २३
विरथो भरतश्रेष्ठः प्रहसन्ननिलोपमः
गदाहस्तो महाबाहुरपतत्स्यन्दनोत्तमात् २४
नागान्सप्तशतान्राजन्नीषादन्तान्प्रहारिणः
व्यधमत्सहसा भीमः क्रुद्धरूपः परंतपः २५
दन्तवेष्टेषु नेत्रेषु कुम्भेषु स कटेषु च
मर्मस्वपि च मर्मज्ञो निनदन्व्यधमद्भृशम् २६
ततस्ते प्राद्रवन्भीताः प्रतीपं प्रहिताः पुनः
महामात्रैस्तमावव्रुर्मेघा इव दिवाकरम् २७

तान्स सप्तशतान्नागान्सारोहायुधकेतनान्
भूमिष्ठो गदया जघ्ने शरन्मेघानिवानिलः २८
ततः सुबलपुत्रस्य नागानतिबलान्पुनः
पोथयामास कौन्तेयो द्वापञ्चाशतमाहवे २९
तथा रथशतं साग्रं पत्तींश्च शतशोऽपरान्
न्यहनत्पाण्डवो युद्धे तापयंस्तव वाहिनीम् ३०
प्रताप्यमानं सूर्येण भीमेन च महात्मना
तव सैन्यं संचुकोच चर्म वह्निगतं यथा ३१
ते भीमभयसंत्रस्तास्तावका भरतर्षभ
विहाय समरे भीमं दुद्रुवुर्वै दिशो दश ३२
रथाः पञ्चशताश्चान्ये ह्रादिनश्चर्मवर्मिणः
भीममभ्यद्रवंस्तूर्णं शरपूगैः समन्ततः ३३
तान्ससूतरथान्सर्वान्सपताकाध्वजायुधान्
पोथयामास गदया भीमो विष्णुरिवासुरान् ३४
ततः शकुनिनिर्दिष्टाः सादिनः शूरसंमताः
त्रिसाहस्रा ययुर्भीमं शक्त्यृष्टिप्रासपाणयः ३५
तान्प्रत्युद्गम्य यवनानश्वारोहान्वरारिहा
विचरन्विविधान्मार्गान्घातयामास पोथयन् ३६
तेषामासीन्महाञ्शब्दस्ताडितानां च सर्वशः
असिभिश्छिद्यमानानां नडानामिव भारत ३७
एवं सुबलपुत्रस्य त्रिसाहस्रान्हयोत्तमान्
हत्वान्यं रथमास्थाय क्रुद्धो राधेयमभ्ययात् ३८
कर्णोऽपि समरे राजन्धर्मपुत्रमरिंदमम्
शरैः प्रच्छादयामास सारथिं चाप्यपातयत् ३९
ततः संप्रद्रुतं संख्ये रथं दृष्ट्वा महारथः
अन्वधावत्किरन्बाणैः कङ्कपत्रैरजिह्मगैः ४०
राजानमभि धावन्तं शरैरावृत्य रोदसी
क्रुद्धः प्रच्छादयामास शरजालेन मारुतिः ४१
संनिवृत्तस्ततस्तूर्णं राधेयः शत्रुकर्शनः
भीमं प्रच्छादयामास समन्तान्निशितैः शरैः ४२

भीमसेनरथव्यग्रं कर्णं भारत सात्यकिः
अभ्यर्दयदमेयात्मा पार्ष्णिग्रहणकारणात्
अभ्यवर्तत कर्णस्तमर्दितोऽपि शरैर्भृशम् ४३
तावन्योन्यं समासाद्य वृषभौ सर्वधन्विनाम्
विसृजन्तौ शरांश्चित्रान्विभ्राजेतां मनस्विनौ ४४
ताभ्यां वियति राजेन्द्र विततं भीमदर्शनम्
क्रौञ्चपृष्ठारुणं रौद्रं बाणजालं व्यदृश्यत ४५
नैव सूर्यप्रभां खं वा न दिशः प्रदिशः कुतः
प्राज्ञासिष्म वयं ताभ्यां शरैर्मुक्तैः सहस्रशः ४६
मध्याह्ने तपतो राजन्भास्करस्य महाप्रभाः
हृताः सर्वाः शरौघैस्तैः कर्णमाधवयोस्तदा ४७
सौबलं कृतवर्माणं द्रौणिमाधिरथिं कृपम्
संसक्तान्पाण्डवैर्दृष्ट्वा निवृत्ताः कुरवः पुनः ४८
तेषामापततां शब्दस्तीव्र आसीद्विशां पते
उद्धूतानां यथा वृष्ट्या सागराणां भयावहः ४९
ते सेने भृशसंविग्ने दृष्ट्वान्योन्यं महारणे
हर्षेण महता युक्ते परिगृह्य परस्परम् ५०
ततः प्रववृते युद्धं मध्यं प्राप्ते दिवाकरे
यादृशं न कदाचिद्धि दृष्टपूर्वं न च श्रुतम् ५१
बलौघस्तु समासाद्य बलौघं सहसा रणे
उपासर्पत वेगेन जलौघ इव सागरम् ५२
आसीन्निनादः सुमहान्बलौघानां परस्परम्
गर्जतां सागरौघाणां यथा स्यान्निस्वनो महान् ५३
ते तु सेने समासाद्य वेगवत्यौ परस्परम्
एकीभावमनुप्राप्ते नद्याविव समागमे ५४
ततः प्रववृते युद्धं घोररूपं विशां पते
कुरूणां पाण्डवानां च लिप्सतां सुमहद्यशः ५५
कुरूणां गर्जतां तत्र अविच्छेदकृता गिरः
श्रूयन्ते विविधा राजन्नामान्युद्दिश्य भारत ५६
यस्य यद्धि रणे न्यङ्गं पितृतो मातृतोऽपि वा

कर्मतः शीलतो वापि स तच्छ्रावयते युधि ५७
तान्दृष्ट्वा समरे शूरांस्तर्जयानान्परस्परम्
अभवन्मे मती राजन्नैषामस्तीति जीवितम् ५८
तेषां दृष्ट्वा तु क्रुद्धानां वपूंष्यमिततेजसाम्
अभवन्मे भयं तीव्रं कथमेतद्भविष्यति ५९
ततस्ते पाण्डवा राजन्कौरवाश्च महारथाः
ततक्षुः सायकैस्तीक्ष्णैर्निघ्नन्तो हि परस्परम् ६०
इति श्रीमहाभारते कर्णपर्वणि पञ्चत्रिंशोऽध्यायः ३५

## षट्त्रिंशोऽध्यायः

सञ्जय उवाच
क्षत्रियास्ते महाराज परस्परवधैषिणः
अन्योन्यं समरे जघ्नुः कृतवैराः परस्परम् १
रथौघाश्च हयौघाश्च नरौघाश्च समन्ततः
गजौघाश्च महाराज संसक्ताः स्म परस्परम् २
गदानां परिघाणां च कणपानां च सर्पताम्
प्रासानां भिण्डिपालानां भुशुण्डीनां च सर्वशः ३
संपातं चान्वपश्याम संग्रामे भृशदारुणे
शलभा इव संपेतुः समन्ताच्छरवृष्टयः ४
नागा नागान्समासाद्य व्यधमन्त परस्परम्
हया हयांश्च समरे रथिनो रथिनस्तथा
पत्तयः पत्तिसंघैश्च हयसंघैर्हयास्तथा ५
पत्तयो रथमातङ्गान्रथा हस्त्यश्वमेव च
नागाश्च समरे त्र्यङ्गं ममृदुः शीघ्रगा नृप ६
पततां तत्र शूराणां क्रोशतां च परस्परम्
घोरमायोधनं जज्ञे पशूनां वैशसं यथा ७
रुधिरेण समास्तीर्णा भाति भारत मेदिनी
शक्रगोपगणाकीर्णा प्रावृषीव यथा धरा ८
यथा वा वाससी शुक्ले महारजनरञ्जिते
बिभृयाद्युवतिः श्यामा तद्वदासीद्वसुंधरा

मांसशोणितचित्रेव शातकौम्भमयीव च ९
छिन्नानां चोत्तमाङ्गानां बाहूनां चोरुभिः सह
कुण्डलानां प्रविद्धानां भूषणानां च भारत १०
निष्काणामधिसूत्राणां शरीराणां च धन्विनाम्
वर्मणां सपताकानां संघास्तत्रापतन्भुवि ११
गजान्गजाः समासाद्य विषाणाग्रैरदारयन्
विषाणाभिहतास्ते च भ्राजन्ते द्विरदा यथा १२
रुधिरेणावसिक्ताङ्गा गैरिकप्रस्रवा इव
यथा भ्राजन्ति स्यन्दन्तः पर्वता धातुमण्डिताः १३
तोमरान्गजिभिर्मुक्तान्प्रतीपानास्थितान्बहून्
हस्तैर्विचेरुस्ते नागा बभञ्जुश्चापरे तथा १४
नाराचैश्छिन्नवर्माणो भ्राजन्ते स्म गजोत्तमाः
हिमागमे महाराज व्यभ्रा इव महीधराः १५
शरैः कनकपुङ्खैस्तु चित्रा रेजुर्गजोत्तमाः
उल्काभिः संप्रदीप्ताग्राः पर्वता इव मारिष १६
केचिदभ्याहता नागा नागैर्नगनिभा भुवि
निपेतुः समरे तस्मिन्पक्षवन्त इवाद्रयः १७
अपरे प्राद्रवन्नागाः शल्यार्ता व्रणपीडिताः
प्रतिमानैश्च कुम्भैश्च पेतुरुर्व्यां महाहवे १८
निषेदुः सिंहवच्चान्ये नदन्तो भैरवान्रवान्
मम्लुश्च बहवो राजंश्चुकूजुश्चापरे तथा १९
हयाश्च निहता बाणैः स्वर्णभाण्डपरिच्छदाः
निषेदुश्चैव मम्लुश्च बभ्रमुश्च दिशो दश २०
अपरे कृष्यमाणाश्च विवेष्टन्तो महीतले
भावान्बहुविधांश्चक्रुस्ताडिताः शरतोमरैः २१
नरास्तु निहता भूमौ कूजन्तस्तत्र मारिष
दृष्ट्वा च बान्धवानन्ये पितॄनन्ये पितामहान् २२
धावमानान्परांश्चैव दृष्ट्वान्ये तत्र भारत
गोत्रनामानि ख्यातानि शशंसुरितरेतरम् २३
तेषां छिन्ना महाराज भुजाः कनकभूषणाः

उद्वेष्टन्ते विवेष्टन्ते पतन्ते चोत्पतन्ति च २४
निपतन्ति तथा भूमौ स्फुरन्ति च सहस्रशः
वेगांश्चान्ये रणे चक्रुः स्फुरन्त इव पन्नगाः २५
ते भुजा भोगिभोगाभाश्चन्दनाक्ता विशां पते
लोहितार्द्रा भृशं रेजुस्तपनीयध्वजा इव २६
वर्तमाने तथा घोरे संकुले सर्वतोदिशम्
अविज्ञाताः स्म युध्यन्ते विनिघ्नन्तः परस्परम् २७
भौमेन रजसा कीर्णे शस्त्रसंपातसंकुले
नैव स्वे न परे राजन्व्यज्ञायन्त तमोवृते २८
तथा तदभवद्युद्धं घोररूपं भयानकम्
शोणितोदा महानद्यः प्रसस्रुस्तत्र चासकृत् २९
शीर्षपाषाणसंछन्नाः केशशैवलशाद्वलाः
अस्थिसंघातसंकीर्णा धनुःशरवरोत्तमाः ३०
मांसकर्दमपङ्काश्च शोणितौघाः सुदारुणाः
नदीः प्रवर्तयामासुर्यमराष्ट्रविवर्धिनीः ३१
ता नद्यो घोररूपाश्च नयन्त्यो यमसादनम्
अवगाढा मज्जयन्त्यः क्षत्रस्याजनयन्भयम् ३२
क्रव्यादानां नरव्याघ्र नर्दतां तत्र तत्र ह
घोरमायोधनं जज्ञे प्रेतराजपुरोपमम् ३३
उत्थितान्यगणेयानि कबन्धानि समन्ततः
नृत्यन्त वै भूतगणाः संतृप्ता मांसशोणितैः ३४
पीत्वा च शोणितं तत्र वसां पीत्वा च भारत
मेदोमज्जावसातृप्तास्तृप्ता मांसस्य चैव हि
धावमानाश्च दृश्यन्ते काकगृध्रबलास्तथा ३५
शूरास्तु समरे राजन्भयं त्यक्त्वा सुदुस्त्यजम्
योधव्रतसमाख्याताश्चक्रुः कर्माण्यभीतवत् ३६
शरशक्तिसमाकीर्णे क्रव्यादगणसंकुले
व्यचरन्त गणैः शूराः ख्यापयन्तः स्वपौरुषम् ३७
अन्योन्यं श्रावयन्ति स्म नामगोत्राणि भारत
पितृनामानि च रणे गोत्रनामानि चाभितः ३८

श्रावयन्तो हि बहवस्तत्र योधा विशां पते
अन्योन्यमवमृद्नन्तः शक्तितोमरपट्टिशैः ३९
वर्तमाने तथा युद्धे घोररूपे सुदारुणे
व्यषीदत्कौरवी सेना भिन्ना नौरिव सागरे ४०
इति श्रीमहाभारते कर्णपर्वणि षट्त्रिंशोऽध्यायः ३६

सप्तत्रिंशोऽध्यायः

सञ्जय उवाच
वर्तमाने तदा युद्धे क्षत्रियाणां निमज्जने
गाण्डीवस्य महान्घोषः शुश्रुवे युधि मारिष १
संशप्तकानां कदनमकरोद्यत्र पाण्डवः
कोसलानां तथा राजन्नारायणबलस्य च २
संशप्तकास्तु समरे शरवृष्टिं समन्ततः
अपातयन्पार्थमूर्ध्नि जयगृद्धाः प्रमन्यवः ३
तां वृष्टिं सहसा राजंस्तरसा धारयन्प्रभुः
व्यगाहत रणे पार्थो विनिघ्नन्रथिनां वरः ४
निगृह्य तु रथानीकं कङ्कपत्रैः शिलाशितैः
आससाद रणे पार्थः सुशर्माणं महारथम् ५
स तस्य शरवर्षाणि ववर्ष रथिनां वरः
तथा संशप्तकाश्चैव पार्थस्य समरे स्थिताः ६
सुशर्मा तु ततः पार्थं विद्ध्वा नवभिराशुगैः
जनार्दनं त्रिभिर्बाणैरभ्यहन्दक्षिणे भुजे
ततोऽपरेण भल्लेन केतुं विव्याध मारिष ७
स वानरवरो राजन्विश्वकर्मकृतो महान्
ननाद सुमहन्नादं भीषयन्वै ननर्द च ८
कपेस्तु निनदं श्रुत्वा संत्रस्ता तव वाहिनी
भयं विपुलमादाय निश्चेष्टा समपद्यत ९
ततः सा शुशुभे सेना निश्चेष्टावस्थिता नृप
नानापुष्पसमाकीर्णं यथा चैत्ररथं वनम् १०
प्रतिलभ्य ततः संज्ञां योधास्ते कुरुसत्तम

अर्जुनं सिषिचुर्बाणैः पर्वतं जलदा इव
परिवव्रुस्तदा सर्वे पाण्डवस्य महारथम् ११
ते हयान्रथचक्रे च रथेषाश्चापि भारत
निगृह्य बलवत्तूर्णं सिंहनादमथानदन् १२
अपरे जगृहुश्चैव केशवस्य महाभुजौ
पार्थमन्ये महाराज रथस्थं जगृहुर्मुदा १३
केशवस्तु तदा बाहू विधुन्वन्रणमूर्धनि
पातयामास तान्सर्वान्दुष्टहस्तीव हस्तिनः १४
ततः क्रुद्धो रणे पार्थः संवृतस्तैर्महारथैः
निगृहीतं रथं दृष्ट्वा केशवं चाप्यभिद्रुतम्
रथारूढांश्च सुबहून्पदातींश्चाप्यपातयत् १५
आसन्नांश्च ततो योधाञ्शरैरासन्नयोधिभिः
च्यावयामास समरे केशवं चेदमब्रवीत् १६
पश्य कृष्ण महाबाहो संशप्तकगणान्मया
कुर्वाणान्दारुणं कर्म वध्यमानान्सहस्रशः १७
रथबन्धमिमं घोरं पृथिव्यां नास्ति कश्चन
यः सहेत पुमाँल्लोके मदन्यो यदुपुंगव १८
इत्येवमुक्त्वा बीभत्सुर्देवदत्तमथाधमत्
पाञ्चजन्यं च कृष्णोऽपि पूरयन्निव रोदसी १९
तं तु शङ्खस्वनं श्रुत्वा संशप्तकवरूथिनी
संचचाल महाराज वित्रस्ता चाभवद्भृशम् २०
पदबन्धं ततश्चक्रे पाण्डवः परवीरहा
नागमस्त्रं महाराज संप्रोदीर्य मुहुर्मुहुः २१
यानुद्दिश्य रणे पार्थः पदबन्धं चकार ह
ते बद्धाः पदबन्धेन पाण्डवेन महात्मना
निश्चेष्टा अभवन्राजन्नश्मसारमया इव २२
निश्चेष्टांस्तु ततो योधानवधीत्पाण्डुनन्दनः
यथेन्द्रः समरे दैत्यांस्तारकस्य वधे पुरा २३
ते वध्यमानाः समरे मुमुचुस्तं रथोत्तमम्
आयुधानि च सर्वाणि विस्रष्टुमुपचक्रमुः २४

ततः सुशर्मा राजेन्द्र गृहीतां वीक्ष्य वाहिनीम्
सौपर्णमस्त्रं त्वरितः प्रादुश्चक्रे महारथः २५
ततः सुपर्णाः संपेतुर्भक्षयन्तो भुजंगमान्
ते वै विदुद्रुवुर्नागा दृष्ट्वा तान्खचरान्नृप २६
बभौ बलं तद्विमुक्तं पदबन्धाद्विशां पते
मेघवृन्दाद्यथा मुक्तो भास्करस्तापयन्प्रजाः २७
विप्रमुक्तास्तु ते योधाः फल्गुनस्य रथं प्रति
ससृजुर्बाणसंघांश्च शस्त्रसंघांश्च मारिष २८
तां महास्त्रमयीं वृष्टिं संछिद्य शरवृष्टिभिः
व्यवातिष्ठत्ततो योधान्वासविः परवीरहा २९
सुशर्मा तु ततो राजन्बाणेनानतपर्वणा
अर्जुनं हृदये विद्ध्वा विव्याधान्यैस्त्रिभिः शरैः
स गाढविद्धो व्यथितो रथोपस्थ उपाविशत् ३०
प्रतिलभ्य ततः संज्ञां श्वेताश्वः कृष्णसारथिः
एन्द्रमस्त्रममेयात्मा प्रादुश्चक्रे त्वरान्वितः
ततो बाणसहस्राणि समुत्पन्नानि मारिष ३१
सर्वदिक्षु व्यदृश्यन्त सूदयन्तो नृप द्विपान्
हयान्रथांश्च समरे शस्त्रैः शतसहस्रशः ३२
वध्यमाने ततः सैन्ये विपुला भीः समाविशत्
संशप्तकगणानां च गोपालानां च भारत
न हि कश्चित्पुमांस्तत्र योऽजुनं प्रत्ययुध्यत ३३
पश्यतां तत्र वीराणामहन्यत महद्बलम्
हन्यमानमपश्यंश्च निश्चेष्टाः स्म पराक्रमे ३४
अयुतं तत्र योधानां हत्वा पाण्डुसुतो रणे
व्यभ्राजत रणे राजन्विधूमोऽग्निरिव ज्वलन् ३५
चतुर्दश सहस्राणि यानि शिष्टानि भारत
रथानामयुतं चैव त्रिसाहस्राश्च दन्तिनः ३६
ततः संशप्तका भूयः परिवव्रुर्धनंजयम्
मर्तव्यमिति निश्चित्य जयं वापि निवर्तनम् ३७
तत्र युद्धं महच्चासीत्तावकानां विशां पते

शूरेण बलिना सार्धं पाण्डवेन किरीटिना ३८
इति श्रीमहाभारते कर्णपर्वणि सप्तत्रिंशोऽध्यायः ३७

अष्टत्रिंशोऽध्यायः

सञ्जय उवाच
कृतवर्मा कृपो द्रौणिः सूतपुत्रश्च मारिष
उलूकः सौबलश्चैव राजा च सह सोदरैः १
सीदमानां चमूं दृष्ट्वा पाण्डुपुत्रभयार्दिताम्
समुज्जिहीर्षुर्वेगेन भिन्नां नावमिवार्णवे २
ततो युद्धमतीवासीन्मुहूर्तमिव भारत
भीरूणां त्रासजननं शूराणां हर्षवर्धनम् ३
कृपेण शरवर्षाणि विप्रमुक्तानि संयुगे
सृञ्जयाः शातयामासुः शलभानां व्रजा इव ४
शिखण्डी तु ततः क्रुद्धो गौतमं त्वरितो ययौ
ववर्ष शरवर्षाणि समन्तादेव ब्राह्मणे ५
कृपस्तु शरवर्षं तद्विनिहत्य महास्त्रवित्
शिखण्डिनं रणे क्रुद्धो विव्याध दशभिः शरैः ६
ततः शिखण्डी कुपितः शरैः सप्तभिराहवे
कृपं विव्याध सुभृशं कङ्कपत्रैरजिह्मगैः ७
ततः कृपः शरैस्तीक्ष्णैः सोऽतिविद्धो महारथः
व्यश्वसूतरथं चक्रे पार्षतं तु द्विजोत्तमः ८
हताश्वात्तु ततो यानादवप्लुत्य महारथः
चर्मखड्गे च संगृह्य सत्वरं ब्राह्मणं ययौ ९
तमापतन्तं सहसा शरैः संनतपर्वभिः
छादयामास समरे तदद्भुतमिवाभवत् १०
तत्राद्भुतमपश्याम शिलानां प्लवनं यथा
निश्चेष्टो यद्रणे राजञ्शिखण्डी समतिष्ठत ११
कृपेण छादितं दृष्ट्वा नृपोत्तम शिखण्डिनम्
प्रत्युद्ययौ कृपं तूर्णं धृष्टद्युम्नो महारथः १२
धृष्टद्युम्नं ततो यान्तं शारद्वतरथं प्रति

प्रतिजग्राह वेगेन कृतवर्मा महारथः १३
युधिष्ठिरमथायान्तं शारद्वतरथं प्रति
सपुत्रं सहसेनं च द्रोणपुत्रो न्यवारयत् १४
नकुलं सहदेवं च त्वरमाणौ महारथौ
प्रतिजग्राह ते पुत्रः शरवर्षेण वारयन् १५
भीमसेनं करूषांश्च केकयान्सहसृञ्जयान्
कर्णो वैकर्तनो युद्धे वारयामास भारत १६
शिखण्डिनस्ततो बाणान्कृपः शारद्वतो युधि
प्राहिणोत्त्वरया युक्तो दिधक्षुरिव मारिष १७
ताञ्शरान्प्रेषितांस्तेन समन्ताद्धेमभूषणान्
चिच्छेद खड्गमाविध्य भ्रामयंश्च पुनः पुनः १८
शतचन्द्रं ततश्चर्म गौतमः पार्षतस्य ह
व्यधमत्सायकैस्तूर्णं तत उच्चुक्रुशुर्जनाः १९
स विचर्मा महराज खड्गपाणिरुपाद्रवत्
कृपस्य वशमापन्नो मृत्योरास्यमिवातुरः २०
शारद्वतशरैर्ग्रस्तं क्लिश्यमानं महाबलम्
चित्रकेतुसुतो राजन्सुकेतुस्त्वरितो ययौ २१
विकिरन्ब्राह्मणं युद्धे बहुभिर्निशितैः शरैः
अभ्यापतदमेयात्मा गौतमस्य रथं प्रति २२
दृष्ट्वाविषह्यं तं युद्धे ब्राह्मणं चरितव्रतम्
अपयातस्ततस्तूर्णं शिखण्डी राजसत्तम २३
सुकेतुस्तु ततो राजन्गौतमं नवभिः शरैः
विद्ध्वा विव्याध सप्तत्या पुनश्चैनं त्रिभिः शरैः २४
अथास्य सशरं चापं पुनश्चिच्छेद मारिष
सारथिं च शरेणास्य भृशं मर्मण्यताडयत् २५
गौतमस्तु ततः क्रुद्धो धनुर्गृह्य नवं दृढम्
सुकेतुं त्रिंशता बाणैः सर्वमर्मस्वताडयत् २६
स विह्वलितसर्वाङ्गः प्रचचाल रथोत्तमे
भूमिचाले यथा वृक्षश्चलत्याकम्पितो भृशम् २७
चलतस्तस्य कायात्तु शिरो ज्वलितकुण्डलम्

सोष्णीषं सशिरस्त्राणं क्षुरप्रेणान्वपातयत् २८
तच्छिरः प्रापतद्भूमौ श्येनाहृतमिवामिषम्
ततोऽस्य कायो वसुधां पश्चात्प्राप तदा च्युतः २९
तस्मिन्हते महाराज त्रस्तास्तस्य पदानुगाः
गौतमं समरे त्यक्त्वा दुद्रुवुस्ते दिशो दश ३०
धृष्टद्युम्नं तु समरे संनिवार्य महाबलः
कृतवर्माब्रवीद्धृष्टस्तिष्ठ तिष्ठेति पार्षतम् ३१
तदभूत्तुमुलं युद्धं वृष्णिपार्षतयो रणे
आमिषार्थे यथा युद्धं श्येनयोर्गृद्ध्योर्नृप ३२
धृष्टद्युम्नस्तु समरे हार्दिक्यं नवभिः शरैः
आजघानोरसि क्रुद्धः पीडयन्हृदिकात्मजम् ३३
कृतवर्मा तु समरे पार्षतेन दृढाहतः
पार्षतं सरथं साश्वं छादयामास सायकैः ३४
सरथच्छादितो राजन्धृष्टद्युम्नो न दृश्यते
मेघैरिव परिच्छन्नो भास्करो जलदागमे ३५
विधूय तं बाणगणं शरैः कनकभूषणैः
व्यरोचत रणे राजन्धृष्टद्युम्नः कृतव्रणः ३६
ततस्तु पार्षतः क्रुद्धः शस्त्रवृष्टिं सुदारुणाम्
कृतवर्माणमासाद्य व्यसृजत्पृतनापतिः ३७
तामापतन्तीं सहसा शस्त्रवृष्टिं निरन्तराम्
शरैरनेकसाहस्रैर्हार्दिक्यो व्यधमद्युधि ३८
दृष्ट्वा तु दारितां युद्धे शस्त्रवृष्टिं दुरुत्तराम्
कृतवर्माणमभ्येत्य वारयामास पार्षतः ३९
सारथिं चास्य तरसा प्राहिणोद्यमसादनम्
भल्लेन शितधारेण स हतः प्रापतद्रथात् ४०
धृष्टद्युम्नस्तु बलवाञ्जित्वा शत्रुं महारथम्
कौरवान्समरे तूर्णं वारयामास सायकैः ४१
ततस्ते तावका योधा धृष्टद्युम्नमुपाद्रवन्
सिंहनादरवं कृत्वा ततो युद्धमवर्तत ४२
इति श्रीमहाभारते कर्णपर्वणि अष्टत्रिंशोऽध्यायः ३८

## एकोन चत्वारिंशोऽध्यायः

सञ्जय उवाच
द्रौणिर्युधिष्ठिरं दृष्ट्वा शैनेयेनाभिरक्षितम्
द्रौपदेयैस्तथा शूरैरभ्यवर्तत हृष्टवत् १
किरन्निषुगणान्घोरान्स्वर्णपुङ्खाञ्शिलाशितान्
दर्शयन्विविधान्मार्गाञ्शिक्षार्थं लघुहस्तवत् २
ततः खं पूरयामास शरैर्दिव्यास्त्रमन्त्रितैः
युधिष्ठिरं च समरे पर्यवारयदस्त्रवित् ३
द्रौणायनिशरच्छन्नं न प्राज्ञायत किंचन
बाणभूतमभूत्सर्वमायोधनशिरो हि तत् ४
बाणजालं दिविष्ठं तत्स्वर्णजालविभूषितम्
शुशुभे भरतश्रेष्ठ वितानमिव विष्ठितम् ५
तेन छन्ने रणे राजन्बाणजालेन भास्वता
अभ्रच्छायेव संजज्ञे बाणरुद्धे नभस्तले ६
तत्राश्चर्यमपश्याम बाणभूते तथाविधे
न स्म संपतते भूमौ दृष्ट्वा द्रौणेः पराक्रमम् ७
लाघवं द्रोणपुत्रस्य दृष्ट्वा तत्र महारथाः
व्यस्मयन्त महाराज न चैनं प्रतिवीक्षितुम्
शेकुस्ते सर्वराजानस्तपन्तमिव भास्करम् ८
सात्यकिर्यतमानस्तु धर्मराजश्च पाण्डवः
तथेतराणि सैन्यानि न स्म चक्रुः पराक्रमम् ९
वध्यमाने ततः सैन्ये द्रौपदेया महारथाः
सात्यकिर्धर्मराजश्च पाञ्चालाश्चापि संगताः
त्यक्त्वा मृत्युभयं घोरं द्रौणायनिमुपाद्रवन् १०
सात्यकिः पञ्चविंशत्या द्रौणिं विद्ध्वा शिलीमुखैः
पुनर्विव्याध नाराचैः सप्तभिः स्वर्णभूषितैः ११
युधिष्ठिरस्त्रिसप्तत्या प्रतिविन्ध्यश्च सप्तभिः
श्रुतकर्मा त्रिभिर्बाणैः श्रुतकीर्तिस्तु सप्तभिः १२
सुतसोमश्च नवभिः शतानीकश्च सप्तभिः
अन्ये च बहवः शूरा विव्यधुस्तं समन्ततः १३

सोऽतिक्रुद्धस्ततो राजन्नाशीविष इव श्वसन्
सात्यकिं पञ्चविंशत्या प्राविध्यत शिलाशितैः १४
श्रुतकीर्तिं च नवभिः सुतसोमं च पञ्चभिः
अष्टभिः श्रुतकर्माणं प्रतिविन्ध्यं त्रिभिः शरैः
शतानीकं च नवभिर्धर्मपुत्रं च सप्तभिः १५
अथेतरांस्ततः शूरान्द्वाभ्यां द्वाभ्यामताडयत्
श्रुतकीर्तेस्तथा चापं चिच्छेद निशितैः शरैः १६
अथान्यद्धनुरादाय श्रुतकीर्तिर्महारथः
द्रौणायनिं त्रिभिर्विद्ध्वा विव्याधान्यैः शितैः शरैः १७
ततो द्रौणिर्महाराज शरवर्षेण भारत
छादयामास तत्सैन्यं समन्ताच्च शरैर्नृपान् १८
ततः पुनरमेयात्मा धर्मराजस्य कार्मुकम्
द्रौणिश्चिच्छेद विहसन्विव्याध च शरैस्त्रिभिः १९
ततो धर्मसुतो राजन्प्रगृह्यान्यन्महद्धनुः
द्रौणिं विव्याध सप्तत्या बाह्वोरुरसि चार्दयत् २०
सात्यकिस्तु ततः क्रुद्धो द्रौणेः प्रहरतो रणे
अर्धचन्द्रेण तीक्ष्णेन धनुश्छित्त्वानदद्भृशम् २१
छिन्नधन्वा ततो द्रौणिः शक्त्या शक्तिमतां वरः
सारथिं पातयामास शैनेयस्य रथाद्द्रुतम् २२
अथान्यद्धनुरादाय द्रोणपुत्रः प्रतापवान्
शैनेयं शरवर्षेण छादयामास भारत २३
तस्याश्वाः प्रद्रुताः संख्ये पतिते रथसारथौ
तत्र तत्रैव धावन्तः समदृश्यन्त भारत २४
युधिष्ठिरपुरोगास्ते द्रौणिं शस्त्रभृतां वरम्
अभ्यवर्षन्त वेगेन विसृजन्तः शिताञ्शरान् २५
आगच्छमानांस्तान्दृष्ट्वा रौद्ररूपान्परंतपः
प्रहसन्प्रतिजग्राह द्रोणपुत्रो महारणे २६
ततः शरशतज्वालः सेनाकक्षं महारथः
द्रौणिर्ददाह समरे कक्षमग्निर्यथा वने २७
तद्बलं पाण्डुपुत्रस्य द्रोणपुत्रप्रतापितम्

चुक्षुभे भरतश्रेष्ठ तिमिनेव नदीमुखम् २८
दृष्ट्वा ते च महाराज द्रोणपुत्रपराक्रमम्
निहतान्मेनिरे सर्वान्पाण्डून्द्रोणसुतेन वै २९
युधिष्ठिरस्तु त्वरितो द्रौणिं श्लिष्य महारथम्
अब्रवीद्द्रोणपुत्रं तु रोषामर्षसमन्वितः ३०
नैव नाम तव प्रीतिर्नैव नाम कृतज्ञता
यतस्त्वं पुरुषव्याघ्र मामेवाद्य जिघांससि ३१
ब्राह्मणेन तपः कार्यं दानमध्ययनं तथा
क्षत्रियेण धनुर्नाम्यं स भवान्ब्राह्मणब्रुवः ३२
मिषतस्ते महाबाहो जेष्यामि युधि कौरवान्
कुरुष्व समरे कर्म ब्रह्मबन्धुरसि ध्रुवम् ३३
एवमुक्तो महाराज द्रोणपुत्रः स्मयन्निव
युक्तत्वं तच्च संचिन्त्य नोत्तरं किंचिदब्रवीत् ३४
अनुक्त्वा च ततः किंचिच्छरवर्षेण पाण्डवम्
छादयामास समरे क्रुद्धोऽन्तक इव प्रजाः ३५
संछाद्यमानस्तु तदा द्रोणपुत्रेण मारिष
पार्थोऽपयातः शीघ्रं वै विहाय महतीं चमूम् ३६
अपयाते ततस्तस्मिन्धर्मपुत्रे युधिष्ठिरे
द्रोणपुत्रः स्थितो राजन्प्रत्यादेशान्महात्मनः ३७
ततो युधिष्ठिरो राजा त्यक्त्वा द्रौणिं महाहवे
प्रययौ तावकं सैन्यं युक्तः क्रूराय कर्मणे ३८
इति श्रीमहाभारते कर्णपर्वणि एकोनचत्वारिंशोऽध्यायः ३९

## चत्वारिंशोऽध्यायः

सञ्जय उवाच
भीमसेनं सपाञ्चाल्यं चेदिकेकयसंवृतम्
वैकर्तनः स्वयं रुद्ध्वा वारयामास सायकैः १
ततस्तु चेदिकारूषान्सृञ्जयांश्च महारथान्
कर्णो जघान संक्रुद्धो भीमसेनस्य पश्यतः २
भीमसेनस्ततः कर्णं विहाय रथसत्तमम्

प्रययौ कौरवं सैन्यं कक्षमग्निरिव ज्वलन् ३
सूतपुत्रोऽपि समरे पाञ्चालान्केकयांस्तथा
सृञ्जयांश्च महेष्वासान्निजघान सहस्रशः ४
संशप्तकेषु पार्थश्च कौरवेषु वृकोदरः
पञ्चालेषु तथा कर्णः क्षयं चक्रुर्महारथाः ५
ते क्षत्रिया दह्यमानास्त्रिभिस्तैः पावकोपमैः
जग्मुर्विनाशं समरे राजन्दुर्मन्त्रिते तव ६
ततो दुर्योधनः क्रुद्धो नकुलं नवभिः शरैः
विव्याध भरतश्रेष्ठ चतुरश्चास्य वाजिनः ७
ततः पुनरमेयात्मा तव पुत्रो जनाधिपः
क्षुरेण सहदेवस्य ध्वजं चिच्छेद काञ्चनम् ८
नकुलस्तु ततः क्रुद्धस्तव पुत्रं त्रिसप्तभिः
जघान समरे राजन्सहदेवश्च पञ्चभिः ९
तावुभौ भरतश्रेष्ठौ श्रेष्ठौ सर्वधनुष्मताम्
विव्याधोरसि संक्रुद्धः पञ्चभिः पञ्चभिः शरैः १०
ततोऽपराभ्यां भल्लाभ्यां धनुषी समकृन्तत
यमयोः प्रहसन्राजन्विव्याधैव च सप्तभिः ११
तावन्ये धनुषी श्रेष्ठे शक्रचापनिभे शुभे
प्रगृह्य रेजतुः शूरौ देवपुत्रसमौ युधि १२
ततस्तौ रभसौ युद्धे भ्रातरौ भ्रातरं नृप
शरैर्ववर्षतुर्घोरैर्महामेघौ यथाचलम् १३
ततः क्रुद्धो महाराज तव पुत्रो महारथः
पाण्डुपुत्रौ महेष्वासौ वारयामास पत्रिभिः १४
धनुर्मण्डलमेवास्य दृश्यते युधि भारत
सायकाश्चैव दृश्यन्ते निश्चरन्तः समन्ततः १५
तस्य सायकसंछन्नौ चकाशेतां च पाण्डवौ
मेघच्छन्नौ यथा व्योम्नि चन्द्रसूर्यौ हतप्रभौ १६
ते तु बाणा महाराज हेमपुङ्खाः शिलाशिताः
आच्छादयन्दिशः सर्वाः सूर्यस्येवांशवस्तदा १७
बाणभूते ततस्तस्मिन्संछन्ने च नभस्तले

यमाभ्यां ददृशे रूपं कालान्तकयमोपमम् १८
पराक्रमं तु तं दृष्ट्वा तव सूनोर्महारथाः
मृत्योरुपान्तिकं प्राप्तौ माद्रीपुत्रौ स्म मेनिरे १९
ततः सेनापती राजन्पाण्डवस्य महात्मनः
पार्षतः प्रययौ तत्र यत्र राजा सुयोधनः २०
माद्रीपुत्रौ ततः शूरौ व्यतिक्रम्य महारथौ
धृष्टद्युम्नस्तव सुतं ताडयामास सायकैः २१
तमविध्यदमेयात्मा तव पुत्रोऽत्यमर्षणः
पाञ्चाल्यं पञ्चविंशत्या प्रहस्य पुरुषर्षभ २२
ततः पुनरमेयात्मा पुत्रस्ते पृथिवीपते
विद्ध्वा ननाद पाञ्चाल्यं षष्ट्या पञ्चभिरेव च २३
अथास्य सशरं चापं हस्तावापं च मारिष
क्षुरप्रेण सुतीक्ष्णेन राजा चिच्छेद संयुगे २४
तदपास्य धनुश्छिन्नं पाञ्चाल्यः शत्रुकर्शनः
अन्यदादत्त वेगेन धनुर्भारसहं नवम् २५
प्रज्वलन्निव वेगेन संरम्भाद्रुधिरेक्षणः
अशोभत महेष्वासो धृष्टद्युम्नः कृतव्रणः २६
स पञ्चदश नाराचाञ्श्वसतः पन्नगानिव
जिघांसुर्भरतश्रेष्ठं धृष्टद्युम्नो व्यवासृजत् २७
ते वर्म हेमविकृतं भित्त्वा राज्ञः शिलाशिताः
विविशुर्वसुधां वेगात्कङ्कबर्हिणवाससः २८
सोऽतिविद्धो महाराज पुत्रस्तेऽतिव्यराजत
वसन्ते पुष्पशबलः सपुष्प इव किंशुकः २९
स छिन्नवर्मा नाराचैः प्रहारैर्जर्जरच्छविः
धृष्टद्युम्नस्य भल्लेन क्रुद्धश्चिच्छेद कार्मुकम् ३०
अथैनं छिन्नधन्वानं त्वरमाणो महीपतिः
सायकैर्दशभी राजन्भ्रुवोर्मध्ये समार्दयत् ३१
तस्य तेऽशोभयन्वक्त्रं कर्मारपरिमार्जिताः
प्रफुल्लं चम्पकं यद्वद्भ्रमरा मधुलिप्सवः ३२
तदपास्य धनुश्छिन्नं धृष्टद्युम्नो महामनाः

अन्यदादत्त वेगेन धनुर्भल्लांश्च षोडश ३३
ततो दुर्योधनस्याश्वान्हत्वा सूतं च पञ्चभिः
धनुश्चिच्छेद भल्लेन जातरूपपरिष्कृतम् ३४
रथं सोपस्करं छत्रं शक्तिं खड्गं गदां ध्वजम्
भल्लैश्चिच्छेद नवभिः पुत्रस्य तव पार्षतः ३५
तपनीयाङ्गदं चित्रं नागं मणिमयं शुभम्
ध्वजं कुरुपतेश्छिन्नं ददृशुः सर्वपार्थिवाः ३६
दुर्योधनं तु विरथं छिन्नसर्वायुधं रणे
भ्रातरः पर्यरक्षन्त सोदर्या भरतर्षभ ३७
तमारोप्य रथे राजन्दण्डधारो जनाधिपम्
अपोवाह च संभ्रान्तो धृष्टद्युम्नस्य पश्यतः ३८
कर्णस्तु सात्यकिं जित्वा राजगृद्धी महाबलः
द्रोणहन्तारमुग्रेषुं ससाराभिमुखं रणे ३९
तं पृष्ठतोऽभ्ययात्तूर्णं शैनेयो वितुदञ्शरैः
वारणं जघनोपान्ते विषाणाभ्यामिव द्विपः ४०
स भारत महानासीद्योधानां सुमहात्मनाम्
कर्णपार्षतयोर्मध्ये त्वदीयानां महारणः ४१
न पाण्डवानां नास्माकं योधः कश्चित्पराङ्मुखः
प्रत्यदृश्यत यत्कर्णः पाञ्चालांस्त्वरितो ययौ ४२
तस्मिन्क्षणे नरश्रेष्ठ गजवाजिनरक्षयः
प्रादुरासीदुभयतो राजन्मध्यंगतेऽहनि ४३
पाञ्चालास्तु महाराज त्वरिता विजिगीषवः
सर्वतोऽभ्यद्रवन्कर्णं पतत्रिण इव द्रुमम् ४४
तेषामाधिरथिः क्रुद्धो यतमानान्मनस्विनः
विचिन्वन्नेव बाणाग्रैः समासादयदग्रतः ४५
व्याघ्रकेतुं सुशर्माणं शङ्कुं चोग्रं धनञ्जयम्
शुक्लं च रोचमानं च सिंहसेनं च दुर्जयम् ४६
ते वीरा रथवेगेन परिवव्रुर्नरोत्तमम्
सृजन्तं सायकान्क्रुद्धं कर्णमाहवशोभिनम् ४७
युध्यमानांस्तु ताञ्शूरान्मनुजेन्द्रः प्रतापवान्

अष्टाभिरष्टौ राधेयो न्यहनन्निशितैः शरैः ४८
अथापरान्महाराज सूतपुत्रः प्रतापवान्
जघान बहुसाहस्रान्योधान्युद्धविशारदः ४९
विष्णुं च विष्णुकर्माणं देवापिं भद्रमेव च
दण्डं च समरे राजंश्चित्रं चित्रायुधं हरिम् ५०
सिंहकेतुं रोचमानं शलभं च महारथम्
निजघान सुसंक्रुद्धश्चेदीनां च महारथान् ५१
तेषामाददतः प्राणानासीदाधिरथेर्वपुः
शोणिताभ्युक्षिताङ्गस्य रुद्रस्येवोर्जितं महत् ५२
तत्र भारत कर्णेन मातङ्गास्ताडिताः शरैः
सर्वतोऽभ्यद्रवन्भीताः कुर्वन्तो महदाकुलम् ५३
निपेतुरुर्व्यां समरे कर्णसायकपीडिताः
कुर्वन्तो विविधान्नादान्वज्रनुन्ना इवाचलाः ५४
गजवाजिमनुष्यैश्च निपतद्भिः समन्ततः
रथैश्चावगतैर्मार्गे पर्यस्तीर्यत मेदिनी ५५
नैव भीष्मो न च द्रोणो नाप्यन्ये युधि तावकाः
चक्रुः स्म तादृशं कर्म यादृशं वै कृतं रणे ५६
सूतपुत्रेण नागेषु रथेषु च हयेषु च
नरेषु च नरव्याघ्र कृतं स्म कदनं महत् ५७
मृगमध्ये यथा सिंहो दृश्यते निर्भयश्चरन्
पञ्चालानां तथा मध्ये कर्णोऽचरदभीतवत् ५८
यथा मृगगणांस्त्रस्तान्सिंहो द्रावयते दिशः
पाञ्चालानां रथव्रातान्कर्णो द्रावयते तथा ५९
सिंहास्यं च यथा प्राप्य न जीवन्ति मृगाः क्वचित्
तथा कर्णमनुप्राप्य न जीवन्ति महारथाः ६०
वैश्वानरं यथा दीप्तं दह्यन्त प्राप्य वै जनाः
कर्णाग्निना रणे तद्वद्दग्धा भारत सृञ्जयाः ६१
कर्णेन चेदिष्वेकेन पाञ्चालेषु च भारत
विश्राव्य नाम निहता बहवः शूरसंमताः ६२
मम चासीन्मनुष्येन्द्र दृष्ट्वा कर्णस्य विक्रमम्

नैकोऽप्याधिरथेर्जीवन्पाञ्चाल्यो मोच्यते युधि ६३
पाञ्चालान्विधमन्संख्ये सूतपुत्रः प्रतापवान्
अभ्यधावत संक्रुद्धो धर्मपुत्रं युधिष्ठिरम् ६४
धृष्टद्युम्नश्च राजानं द्रौपदेयाश्च मारिष
परिवव्रुरमित्रघ्नं शतशश्चापरे जनाः ६५
शिखण्डी सहदेवश्च नकुलो नाकुलिस्तथा
जनमेजयः शिनेर्नप्ता बहवश्च प्रभद्रकाः ६६
एते पुरोगमा भूत्वा धृष्टद्युम्नश्च संयुगे
कर्णमस्यन्तमिष्वस्त्रैर्विचेरुरमितौजसः ६७
तांस्तत्राधिरथिः संख्ये चेदिपाञ्चालपाण्डवान्
एको बहूनभ्यपतद्गरुत्मन्पान्नगानिव ६८
भीमसेनस्तु संक्रुद्धः कुरून्मद्रान्सकेकयान्
एकः संख्ये महेष्वासो योधयन्बह्वशोभत ६९
तत्र मर्मसु भीमेन नाराचैस्ताडिता गजाः
प्रपतन्तो हतारोहाः कम्पयन्ति स्म मेदिनीम् ७०
वाजिनश्च हतारोहाः पत्तयश्च गतासवः
शेरते युधि निर्भिन्ना वमन्तो रुधिरं बहु ७१
सहस्रशश्च रथिनः पतिताः पतितायुधाः
अक्षताः समदृश्यन्त भीमाद्भीता गतासवः ७२
रथिभिर्वाजिभिः सूतैःपत्तिभिश्च तथा गजैः
भीमसेनशरच्छिन्नैरास्तीर्णा वसुधाभवत् ७३
तत्स्तम्भितमिवातिष्ठद्भीमसेनबलार्दितम्
दुर्योधनबलं राजन्निरुत्साहं कृतव्रणम् ७४
निश्चेष्टं तुमुले दीनं बभौ तस्मिन्महारणे
प्रसन्नसलिलः काले यथा स्यात्सागरो नृप ७५
मन्युवीर्यबलोपेतं बलात्पर्यवरोपितम्
अभवत्तव पुत्रस्य तत्सैन्यमिषुभिस्तदा
रुधिरौघपरिक्लिन्नं रुधिरार्द्रं बभूव ह ७६
सूतपुत्रो रणे क्रुद्धः पाण्डवानामनीकिनीम्
भीमसेनः कुरूंश्चापि द्रावयन्बह्वशोभत ७७

वर्तमाने तथा रौद्रे संग्रामेऽद्भुतदर्शने
निहत्य पृतनामध्ये संशप्तकगणान्बहून् ७८
अर्जुनो जयतां श्रेष्ठो वासुदेवमथाब्रवीत्
प्रभग्नं बलमेतद्धि योत्स्यमानं जनार्दन ७९
एते धावन्ति सगणाः संशप्तकमहारथाः
अपारयन्तो मद्बाणान्सिंहशब्दान्मृगा इव ८०
दीर्यते च महत्सैन्यं सृञ्जयानां महारणे
हस्तिकक्ष्यो ह्यसौ कृष्ण केतुः कर्णस्य धीमतः
दृश्यते राजसैन्यस्य मध्ये विचरतो मुहुः ८१
न च कर्णं रणे शक्ता जेतुमन्ये महारथाः
जानीते हि भवान्कर्णं वीर्यवन्तं पराक्रमे ८२
तत्र याहि यतः कर्णो द्रावयत्येष नो बलम् ८३
वर्जयित्वा रणे याहि सूतपुत्रं महारथम्
श्रमो मा बाधते कृष्ण यथा वा तव रोचते ८४
एतच्छ्रुत्वा महाराज गोविन्दः प्रहसन्निव
अब्रवीदर्जुनं तूर्णं कौरवाञ्जहि पाण्डव ८५
ततस्तव महत्सैन्यं गोविन्दप्रेरिता हयाः
हंसवर्णाः प्रविविशुर्वहन्तः कृष्णपाण्डवौ ८६
केशवप्रहितैरश्वैः श्वैतैः काञ्चनभूषणैः
प्रविशद्भिस्तव बलं चतुर्दिशमभिद्यत ८७
तौ विदार्य महासेनां प्रविष्टौ केशवार्जुनौ
क्रुद्धौ संरम्भरक्ताक्षौ व्यभ्राजेतां महाद्युती ८८
युद्धशौण्डौ समाहूतावरिभिस्तौ रणाध्वरम्
यज्वभिर्विधिनाहूतौ मखे देवाविवाश्विनौ ८९
क्रुद्धौ तौ तु नरव्याघ्रौ वेगवन्तौ बभूवतुः
तलशब्देन रुषितौ यथा नागौ महाहवे ९०
विगाहन्स रथानीकमश्वसंघांश्च फल्गुनः
व्यचरत्पृतनामध्ये पाशहस्त इवान्तकः ९१
तं दृष्ट्वा युधि विक्रान्तं सेनायां तव भारत
संशप्तकगणान्भूयः पुत्रस्ते समचोदयत् ९२

ततो रथसहस्रेण द्विरदानां त्रिभिः शतैः
चतुर्दशसहस्रैश्च तुरगाणां महाहवे ९३
द्वाभ्यां शतसहस्राभ्यां पदातीनां च धन्विनाम्
शूराणां नामलब्धानां विदितानां समन्ततः
अभ्यवर्तन्त तौ वीरौ छादयन्तो महारथाः ९४
स छाद्यमानः समरे शरैः परबलार्दनः
दर्शयन्रौद्रमात्मानं पाशहस्त इवान्तकः
निघ्नन्संशप्तकान्पार्थः प्रेक्षणीयतरोऽभवत् ९५
ततो विद्युत्प्रभैर्बाणैः कार्तस्वरविभूषितैः
निरन्तरमिवाकाशमासीन्नुन्नैः किरीटिना ९६
किरीटिभुजनिर्मुक्तैः संपतद्भिर्महाशरैः
समाच्छन्नं बभौ सर्वं काद्रवेयैरिव प्रभो ९७
रुक्मपुङ्खान्प्रसन्नाग्राञ्शरान्संनतपर्वणः
अदर्शयदमेयात्मा दिक्षु सर्वासु पाण्डवः ९८
हत्वा दश सहस्राणि पार्थिवानां महारथः
संशप्तकानां कौन्तेयः प्रपक्षं त्वरितोऽभ्ययात् ९९
प्रपक्षं स समासाद्य पार्थः काम्बोजरक्षितम्
प्रममाथ बलाद्बाणैर्दानवानिव वासवः १००
प्रचिच्छेदाशु भल्लैश्च द्विषतामाततायिनाम्
शस्त्रपाणींस्तथा बाहूंस्तथापि च शिरांस्युत १०१
अङ्गाङ्गावयवैश्छिन्नैर्व्यायुधास्तेऽपतन्क्षितौ
विष्वग्वाताभिसंभग्ना बहुशाखा इव द्रुमाः १०२
हस्त्यश्वरथपत्तीनां व्रातान्निघ्नन्तमर्जुनम्
सुदक्षिणादवरजः शरवृष्ट्याभ्यवीवृषत् १०३
अस्यास्यतोऽधचन्द्राभ्यां स बाहू परिघोपमौ
पूर्णचन्द्राभवक्त्रं च क्षुरेणाभ्यहनच्छिरः १०४
स पपात ततो वाहात्स्वलोहितपरिस्रवः
मनः शिलागिरेः शृङ्गं वज्रेणेवावदारितम् १०५
सुदक्षिणादवरजं काम्बोजं ददृशुर्हतम्
प्रांशुं कमलपत्राक्षमत्यर्थं प्रियदर्शनम्

काञ्चनस्तम्भसंकाशं भिन्नं हेमगिरिं यथा १०६
ततोऽभवत्पुनर्युद्धं घोरमद्भुतदर्शनम्
नानावस्थाश्च योधानां बभूवुस्तत्र युध्यताम् १०७
एतेष्वावर्जितैरश्वैः काम्बोजैर्यवनैः शकैः
शोणिताक्तैस्तदा रक्तं सर्वमासीद्दिशां पते १०८
रथै रथाश्वसूतैश्च हतारोहैश्च वाजिभिः
द्विरदैश्च हतारोहैर्महामात्रैर्हतद्विपैः
अन्योन्येन महाराज कृतो घ्रो जनक्षयः १०९
तस्मिन्प्रपक्षे पक्षे च वध्यमाने महात्मना
अर्जुनं जयतां श्रेष्ठं त्वरितो द्रौणिराययौ ११०
विधुन्वानो महच्चापं कार्तस्वरविभूषितम्
आददानः शरान्घोरान्स्वरश्मीनिव भास्करः १११
तैः पतद्भिर्महाराज द्रौणिमुक्तैः समन्ततः
संछादितौ रथस्थौ तावुभौ कृष्णधनञ्जयौ ११२
ततः शरशतैस्तीक्ष्णैर्भारद्वाजः प्रतापवान्
निश्चेष्टौ तावुभौ चक्रे युद्धे माधवपाण्डवौ ११३
हाहाकृतमभूत्सर्वं जङ्गमं स्थावरं तथा
चराचरस्य गोप्तारौ दृष्ट्वा संछादितौ शरैः ११४
सिद्धचारणसंघाश्च संपेतुर्वै समन्ततः
चिन्तयन्तो भवेदद्य लोकानां स्वस्त्यपीत्यह ११५
न मया तादृशो राजन्दृष्टपूर्वः पराक्रमः
संजज्ञे यादृशो द्रौणेः कृष्णौ संछादयिष्यतः ११६
द्रौणेस्तु धनुषः शब्दमहितत्रासनं रणे
अश्रौषं बहुशो राजन्सिंहस्य नदतो यथा ११७
ज्या चास्य चरतो युद्धे सव्यदक्षिणमस्यतः
विद्युदम्बुदमध्यस्था भ्राजमानेव साभवत् ११८
स तथा क्षिप्रकारी च दृढहस्तश्च पाण्डवः
संमोहं परमं गत्वा प्रैक्षत द्रोणजं ततः ११९
स विक्रमं हृतं मेने आत्मनः सुमहात्मना
तथास्य समरे राजन्वपुरासीत्सुदुर्दृशम् १२०

द्रौणिपाण्डवयोरेवं वर्तमाने महारणे
वर्धमाने च राजेन्द्र द्रोणपुत्रे महाबले
हीयमाने च कौन्तेये कृष्णं रोषः समभ्ययात् १२१
स रोषान्निःश्वसन्राजन्निर्दहन्निव चक्षुषा
द्रौणिं ह्यपश्यत्संग्रामे फल्गुनं च मुहुर्मुहुः १२२
ततः क्रुद्धोऽब्रवीत्कृष्णः पार्थं सप्रणयं तदा
अत्यद्भुतमिदं पार्थ तव पश्यामि संयुगे
अतिशेते हि यत्र त्वा द्रोणपुत्रोऽद्य भारत १२३
कच्चित्ते गाण्डिवं हस्ते रथे तिष्ठसि चार्जुन
कच्चित्कुशलिनौ बाहू कच्चिद्वीर्यं तदेव ते १२४
एवमुक्तस्तु कृष्णेन क्षिप्त्वा भल्लांश्चतुर्दश
त्वरमाणस्त्वराकाले द्रौणेर्धनुरथाच्छिनत्
ध्वजं छत्रं पताकां च रथं शक्तिं गदां तथा १२५
जत्रुदेशे च सुभृशं वत्सदन्तैरताडयत्
स मूर्च्छां परमां गत्वा ध्वजयष्टिं समाश्रितः १२६
तं विसंज्ञं महाराज किरीटिभयपीडितम्
अपोवाह रणात्सूतो रक्षमाणो धनंजयात् १२७
एतस्मिन्नेव काले तु विजयः शत्रुतापनः
न्यवधीत्तावकं सैन्यं शतशोऽथ सहस्रशः
पश्यतस्तव पुत्रस्य तस्य वीरस्य भारत १२८
एवमेष क्षयो वृत्तस्तावकानां परैः सह
क्रूरो विशसनो घोरो राजन्दुर्मन्त्रिते तव १२९
संशप्तकांश्च कौन्तेयः कुरूंश्चापि वृकोदरः
वसुषेणं च पाञ्चालः कृत्स्नेन व्यधमद्रणे १३०
इति श्रीमहाभारते कर्णपर्वणि चत्वारिंशत्तमोऽध्यायः ४०

## एक चत्वारिंशत्तमोऽध्यायः

सञ्जय उवाच
त्वरमाणः पुनः कृष्णः पार्थमभ्यवदच्छनैः
पश्य कौरव्य राजानमपयातांश्च पाण्डवान् १

कर्ण पश्य महारङ्गे ज्वलन्तमिव पावकम्
असौ भीमो महेष्वासः संनिवृत्तो रणं प्रति २
तमेतेऽनु निवर्तन्ते धृष्टद्युम्नपुरोगमाः
पाञ्चालानां सृञ्जयानां पाण्डवानां च यन्मुखम्
निवृत्तैश्च तथा पार्थैर्भग्नं शत्रुबलं महत् ३
कौरवान्द्रवतो ह्येष कर्णो धारयतेऽर्जुन
अन्तकप्रतिमो वेगे शक्रतुल्यपराक्रमः ४
असौ गच्छति कौरव्य द्रौणिरस्त्रभृतां वरः
तमेष प्रद्रुतः संख्ये धृष्टद्युम्नो महारथः ५
सर्वं व्याचष्ट दुर्धर्षो वासुदेवः किरीटिने
ततो राजन्प्रादुरासीन्महाघोरो महारणः ६
सिंहनादरवाश्चात्र प्रादुरासन्समागमे
उभयोः सेनयो राजन्मृत्युं कृत्वा निवर्तनम् ७
इति श्रीमहाभारते कर्णपर्वणि एकचत्वारिंशोऽध्यायः ४१

## द्विचत्वारिंशोऽध्यायः

सञ्जय उवाच
ततः पुनः समाजग्मुरभीताः कुरुसृञ्जयाः
युधिष्ठिरमुखाः पार्था वैकर्तनमुखा वयम् १
ततः प्रववृते भीमः संग्रामो लोमहर्षणः
कर्णस्य पाण्डवानां च यमराष्ट्रविवर्धनः २
तस्मिन्प्रवृत्ते संग्रामे तुमुले शोणितोदके
संशप्तकेषु शूरेषु किंचिच्छिष्टेषु भारत ३
धृष्टद्युम्नो महाराज सहितः सर्वराजभिः
कर्णमेवाभिदुद्राव पाण्डवाश्च महारथाः ४
आगच्छमानांस्तान्संख्ये प्रहृष्टान्विजयैषिणः
दधारैको रणे कर्णो जलौघानिव पर्वतः ५
तमासाद्य तु ते कर्णं व्यशीर्यन्त महारथाः
यथाचलं समासाद्य जलौघाः सर्वतोदिशम्
तयोरासीन्महाराज संग्रामो लोमहर्षणः ६

धृष्टद्युम्नस्तु राधेयं शरेण नतपर्वणा
ताडयामास संक्रुद्धस्तिष्ठ तिष्ठेति चाब्रवीत् ७
विजयं तु धनुःश्रेष्ठं विधुन्वानो महारथः
पार्षतस्य धनुश्छित्त्वा शरानाशीविषोपमान्
ताडयामास संक्रुद्धः पार्षतं नवभिः शरैः ८
ते वर्म हेमविकृतं भित्त्वा तस्य महात्मनः
शोणिताक्ता व्यराजन्त शक्रगोपा इवानघ ९
तदपास्य धनुश्छिन्नं धृष्टद्युम्नो महारथः
अन्यद्धनुरुपादाय शरांश्चाशीविषोपमान्
कर्णं विव्याध सप्तत्या शरैः संनतपर्वभिः १०
तथैव राजन्कर्णोऽपि पार्षतं शत्रुतापनम्
द्रोणशत्रुं महेष्वासो विव्याध निशितैः शरैः ११
तस्य कर्णो महाराज शरं कनकभूषणम्
प्रेषयामास संक्रुद्धो मृत्युदण्डमिवापरम् १२
तमापतन्तं सहसा घोररूपं विशां पते
चिच्छेद सप्तधा राजञ्शैनेयः कृतहस्तवत् १३
दृष्ट्वा विनिहितं बाणं शरैः कर्णो विशां पते
सात्यकिं शरवर्षेण समन्तात्पर्यवारयत् १४
विव्याध चैनं समरे नाराचैस्तत्र सप्तभिः
तं प्रत्यविध्यच्छैनेयः शरैर्हेमविभूषितैः १५
ततो युद्धमतीवासीच्चक्षुः श्रोत्रभयावहम्
राजन्घोरं च चित्रं च प्रेक्षणीयं समन्ततः १६
सर्वेषां तत्र भूतानां लोमहर्षो व्यजायत
तद्दृष्ट्वा समरे कर्म कर्णशैनेययोर्नृप १७
एतस्मिन्नन्तरे द्रौणिरभ्ययात्सुमहाबलम्
पार्षतं शत्रुदमनं शत्रुवीर्यासुनाशनम् १८
अभ्यभाषत संक्रुद्धो द्रौणिर्दूरे धनंजये
तिष्ठ तिष्ठाद्य ब्रह्मघ्न न मे जीवन्विमोक्ष्यसे १९
इत्युक्त्वा सुभृशं वीरः शीघ्रकृन्निशितैः शरैः
पार्षतं छादयामास घोररूपैः सुतेजनैः

यतमानं परं शक्त्या यतमानो महारथः २०
यथा हि समरे द्रौणिः पार्षतं वीक्ष्य मारिष
तथा द्रौणिं रणे दृष्ट्वा पार्षतः परवीरहा
नातिहृष्टमना भूत्वा मन्यते मृत्युमात्मनः २१
द्रौणिस्तु दृष्ट्वा राजेन्द्र धृष्टद्युम्नं रणे स्थितम्
क्रोधेन निःश्वसन्वीरः पार्षतं समुपाद्रवत्
तावन्योन्यं तु दृष्ट्वैव संरम्भं जग्मतुः परम् २२
अथाब्रवीन्महाराज द्रोणपुत्रः प्रतापवान्
धृष्टद्युम्नं समीपस्थं त्वरमाणो विशां पते
पाञ्चालापसदाद्य त्वां प्रेषयिष्यामि मृत्यवे २३
पापं हि यत्त्वया कर्म घ्नता द्रोणं पुरा कृतम्
अद्य त्वा पत्स्यते तद्वै यथा ह्यकुशलं तथा २४
अरक्ष्यमाणः पार्थेन यदि तिष्ठसि संयुगे
नापक्रमसि वा मूढ सत्यमेतद्ब्रवीमि ते २५
एवमुक्तः प्रत्युवाच धृष्टद्युम्नः प्रतापवान्
प्रतिवाक्यं स एवासिर्मामको दास्यते तव
येनैव ते पितुर्दत्तं यतमानस्य संयुगे २६
यदि तावन्मया द्रोणो निहतो ब्राह्मणब्रुवः
त्वामिदानीं कथं युद्धे न हनिष्यामि विक्रमात् २७
एवमुक्त्वा महाराज सेनापतिरमर्षणः
निशितेनाथ बाणेन द्रौणिं विव्याध पार्षतः २८
ततो द्रौणिः सुसंक्रुद्धः सरैः संनतपर्वभिः
प्राच्छादयद्दिशो राजन्धृष्टद्युम्नस्य संयुगे २९
नैवान्तरिक्षं न दिशो नैव योधाः समन्ततः
दृश्यन्ते वै महाराज शरैश्छन्नाः सहस्रशः ३०
तथैव पार्षतो राजन्द्रौणिमाहवशोभिनम्
शरैः संछादयामास सूतपुत्रस्य पश्यतः ३१
राधेयोऽपि महाराज पाञ्चालान्सह पाण्डवैः
द्रौपदेयान्युधामन्युं सात्यकिं च महारथम्
एकः स वारयामास प्रेक्षणीयः समन्ततः ३२

धृष्टद्युम्नोऽपि समरे द्रौणेश्चिच्छेद कार्मुकम्
तदपास्य धनुश्छिन्नमन्यदादत्त कार्मुकम्
वेगवत्समरे घोरे शरांश्चाशीविषोपमान् ३३
स पार्षतस्य राजेन्द्र धनुः शक्तिं गदां ध्वजम्
हयान्सूतं रथं चैव निमेषाद्व्यधमच्छरैः ३४
स छिन्नधन्वा विरथो हताश्वो हतसारथिः
खड्गमादत्त विपुलं शतचन्द्रं च भानुमत् ३५
द्रौणिस्तदपि राजेन्द्रभल्लैः क्षिप्रं महारथः
चिच्छेद समरेवीरः क्षिप्रहस्तो दृढायुधः
रथादनवरूढस्य तदद्भुतमिवाभवत् ३६
धृष्टद्युम्नं हि विरथं हताश्वं छिन्नकार्मुकम्
शरैश्च बहुधा विद्धमस्त्रैश्च शकलीकृतम्
नातरद्भरतश्रेष्ठ यतमानो महारथः ३७
तस्यान्तमिषुभी राजन्यदा द्रौणिर्न जग्मिवान्
अथ त्यक्त्वा धनुर्वीरः पार्षतं त्वरितोऽन्वगात् ३८
आसीदाद्रवतो राजन्वेगस्तस्य महात्मनः
गरुडस्येव पततो जिघृक्षोः पन्नगोत्तमम् ३९
एतस्मिन्नेव काले तु माधवोऽजुनमब्रवीत्
पश्य पार्थ यथा द्रौणिः पार्षतस्य वधं प्रति
यत्नं करोति विपुलं हन्याच्चैनमसंशयम् ४०
तं मोचय महाबाहो पार्षतं शत्रुतापनम्
द्रौणेरास्यमनुप्राप्तं मृत्योरास्यगतं यथा ४१
एवमुक्त्वा महाराज वासुदेवः प्रतापवान्
प्रैषयत्तत्र तुरगान्यत्र द्रौणिर्व्यवस्थितः ४२
ते हयाश्चंद्रसंकाशाः केशवेन प्रचोदिताः
पिबन्त इव तद्व्योम जग्मुर्द्रौणिरथं प्रति ४३
दृष्ट्वायान्तौ महावीर्यावुभौ कृष्णधनञ्जयौ
धृष्टद्युम्नवधे राजंश्चक्रे यत्नं महाबलः ४४
विकृष्यमाणं दृष्ट्वैव धृष्टद्युम्नं जनेश्वर
शरांश्चिक्षेप वै पार्थो द्रौणिं प्रति महाबलः ४५

ते शरा हेमविकृता गाण्डीवप्रेषिता भृशम्
द्रौणिमासाद्य विविशुर्वल्मीकमिव पन्नगाः ४६
स विद्धस्तैः शरैर्घोरैर्द्रोणपुत्रः प्रतापवान्
रथमारुरुहे वीरो धनंजय शरार्दितः
प्रगृह्य च धनुः श्रेष्ठं पार्थं विव्याध सायकैः ४७
एतस्मिन्नन्तरे वीरः सहदेवो जनाधिप
अपोवाह रथेनाजौ पार्षतं शत्रुतापनम् ४८
अर्जुनोऽपि महाराज द्रौणिं विव्याध पत्रिभिः
तं द्रोणपुत्रः संक्रुद्धो बाह्वोरुरसि चार्दयत् ४९
क्रोधितस्तु रणे पार्थो नाराचं कालसंमितम्
द्रोणपुत्राय चिक्षेप कालदण्डमिवापरम्
स ब्राह्मणस्यांसदेशे निपपात महाद्युतिः ५०
स विह्वलो महाराज शरवेगेन संयुगे
निषसाद रथोपस्थे वैक्लव्यं च परं ययौ ५१
ततः कर्णो महाराज व्याक्षिपद्विजयं धनुः
अर्जुनं समरे क्रुद्धः प्रेक्षमाणो मुहुर्मुहुः
द्वैरथं चापि पार्थेन कामयानो महारणे ५२
तं तु हित्वा हतं वीरं सारथिः शत्रुकर्शनम्
अपोवाह रथेनाजौ त्वरमाणो रणाजिरात् ५३
अथोत्कृष्टं महाराज पाञ्चालैर्जितकाशिभिः
मोक्षितं पार्षतं दृष्ट्वा द्रोणपुत्रं च पीडितम् ५४
वादित्राणि च दिव्यानि प्रावाद्यन्त सहस्रशः
सिंहनादश्च संजज्ञे दृष्ट्वा घोरं महाद्भुतम् ५५
एवं कृत्वाब्रवीत्पार्थो वासुदेवं धनंजयः
याहि संशप्तकान्कृष्ण कार्यमेतत्परं मम ५६
ततः प्रयातो दाशार्हः श्रुत्वा पाण्डवभाषितम्
रथेनातिपताकेन मनोमारुतरंहसा ५७
इति श्रीमहाभारते कर्णपर्वणि द्विचत्वारिंशोऽध्यायः ४२

## त्रिचत्वारिंशोऽध्यायः

सञ्जय उवाच
एतस्मिन्नन्तरे कृष्णः पार्थं वचनमब्रवीत्
दर्शयन्निव कौन्तेयं धर्मराजं युधिष्ठिरम् १
एष पाण्डव ते भ्राता धार्तराष्ट्रैर्महाबलैः
जिघांसुभिर्महेष्वासैर्द्रुतं पार्थाऽनुसर्यते २
तथानुयान्ति संरब्धाः पञ्चाला युद्धदुर्मदाः
युधिष्ठिरं महात्मानं परीप्सन्तो महाजवाः ३
एष दुर्योधनः पार्थ रथानीकेन दंशितः
राजा सर्वस्य लोकस्य राजानमनुधावति ४
जिघांशुः पुरुषव्याघ्रं भ्रातृभिः सहितो बली
आशीविषसमस्पर्शैः सर्वयुद्धविशारदैः ५
एते जिघृक्षवो यान्ति द्विपाश्वरथपत्तयः
युधिष्ठिरं धार्तराष्ट्रा रत्नोत्तममिवार्थिनः ६
पश्य सात्वतभीमाभ्यां निरुद्धाधिष्ठितः प्रभुः
जिहीर्षवोऽमृतं दैत्याः शक्राग्निभ्यामिवावशाः ७
एते बहुत्वात्त्वरिताः पुनर्गच्छन्ति पाण्डवम्
समुद्रमिव वार्योघाः प्रावृट्काले महारथाः ८
नदन्तः सिंहनादांश्च धमन्तश्चापि वारिजान्
बलवन्तो महेष्वासा विधुन्वन्तो धनूंषि च ९
मृत्योर्मुखगतं मन्ये कुन्तीपुत्रं युधिष्ठिरम्
हुतमग्नौ च भद्रं ते दुर्योधनवशं गतम् १०
यथायुक्तमनीकं हि धार्तराष्ट्रस्य पाण्डव
नास्य शक्रोऽपि मुच्येत संप्राप्तो बाणगोचरम् ११
दुर्योधनस्य शूरस्य द्रौणेः शारद्वतस्य च
कर्णस्य चेषुवेगो वै पर्वतानपि दारयेत् १२
दुर्योधनस्य शूरस्य शरौघाञ्शीघ्रमस्यतः
संक्रुद्धस्यान्तकस्येव को वेगं संसहेद्रणे १३
कर्णेन च कृतो राजा विमुखः शत्रुतापनः
बलवाँल्लघुहस्तश्च कृती युद्धविशारदः १४

राधेयः पाण्डवश्रेष्ठं शक्तः पीडयितुं रणे
सहितो धृतराष्ट्रस्य पुत्रैः शूरो महात्मभिः १५
तस्यैवं युध्यमानस्य स्त्रंगामे संयतात्मनः
अन्यैरपि च पार्थस्य हृतं वर्म महारथैः १६
उपवासकृशो राजा भृशं भरतसत्तम
ब्राह्मे बले स्थितो ह्येष न क्षत्रेऽतिबले विभो १७
न जीवति महाराजो मन्ये पार्थ युधिष्ठिरः
यद्भीमसेनः सहते सिंहनादममर्षणः १८
नर्दतां धार्तराष्ट्राणां पुनः पुनररिंदम
धमतां च महाशङ्खान्संग्रामे जितकाशिनाम् १९
युधिष्ठिरं पाण्डवेयं हतेति भरतर्षभ
संचोदयत्यसौ कर्णो धार्तराष्ट्रान्महाबलान् २०
स्थूणाकर्णेन्द्रजालेन पार्थ पाशुपतेन च
प्रच्छादयन्तो राजानमनुयान्ति महारथाः
आतुरो मे मतो राजा संनिषेव्यश्च भारत २१
यथैनमनुवर्तन्ते पाञ्चालाः सह पाण्डवैः
त्वरमाणास्त्वराकाले सर्वशस्त्रभृतां वराः
मज्जन्तमिव पाताले बलिनोऽप्युज्जिहीर्षवः २२
न केतुर्दृश्यते राज्ञः कर्णेन निहतः शरैः
पश्यतोर्यमयोः पार्थ सात्यकेश्च शिखण्डिनः २३
धृष्टद्युम्नस्य भीमस्य शतानीकस्य वा विभो
पाञ्चालानां च सर्वेषां चेदीनां चैव भारत २४
एष कर्णो रणे पार्थ पाण्डवानामनीकिनीम्
शरैर्विध्वंसयति वै नलिनीमिव कुञ्जरः २५
एते द्रवन्ति रथिनस्त्वदीयाः पाण्डुनन्दन
पश्य पश्य यथा पार्थ गच्छन्त्येते महारथाः २६
एते भारत मातङ्गाः कर्णेनाभिहता रणे
आर्तनादान्विकुर्वाणा विद्रवन्ति दिशो दश २७
रथानां द्रवतां वृन्दं पश्य पार्थ समन्ततः
द्राव्यमाणं रणे चैव कर्णेनामित्रकर्शिना २८

हस्तिकद्त्यां रणे पश्य चरन्तीं तत्र तत्र ह
रथस्थं सूतपुत्रस्य केतुं केतुमतां वर २९
असौ धावति राधेयो भीमसेनरथं प्रति
किरञ्शरशतानीव विनिघ्नंस्तव वाहिनीम् ३०
एतान्पश्य च पाञ्चालान्द्राव्यमाणान्महात्मना
शक्रेणेव यथा दैत्यान्हन्यमानान्महाहवे ३१
एष कर्णो रणे जित्वा पाञ्चालान्पाण्डुसृञ्जयान्
दिशो विप्रेक्षते सर्वास्त्वदर्थमिति मे मतिः ३२
पश्य पार्थ धनुः श्रेष्ठं विकर्षन्साधु शोभते
शत्रूञ्जित्वा यथा शक्रो देवसंघैः समावृतः ३३
एते नदन्ति कौरव्या दृष्ट्वा कर्णस्य विक्रमम्
त्रासयन्तो रणे पार्थान्सृञ्जयांश्च सहस्रशः ३४
एष सर्वात्मना पाण्डूंस्त्रासयित्वा महारणे
अभिभाषति राधेयः सर्वसैन्यानि मानदः ३५
अभिद्रवत गच्छध्वं द्रुतं द्रवत कौरवाः
यथा जीवन्न वः कश्चिन्मुच्यते युधि सृञ्जयः ३६
तथा कुरुत संयत्ता वयं यास्याम पृष्ठतः
एवमुक्त्वा ययावेष पृष्ठतो विकिरञ्शरैः ३७
पश्य कर्णं रणे पार्थ श्वेतश्छविविराजितम्
उदयं पर्वतं यद्वच्छोभयन्वै दिवाकरः ३८
पूर्णचन्द्रनिकाशेन मूर्ध्नि छत्रेण भारत
ध्रियमाणेन समरे तथा शतशलाकिना ३९
एष त्वां प्रेक्षते कर्णः सकटाक्षो विशां पते
उत्तमं यत्नमास्थाय ध्रुवमेष्यति संयुगे ४०
पश्य ह्येनं महाबाहो विधुन्वानं महद्धनुः
शरांश्चाशीविषाकारान्विसृजन्तं महाबलम् ४१
असौ निवृत्तो राधेयो दृश्यते वानरध्वज
वधाय चात्मनोऽभ्येति दीपस्य शलभो यथा ४२
कर्णमेकाकिनं दृष्ट्वा रथानीकेन भारत
रिरक्षिषुः सुसंयत्तो धार्तराष्ट्रोऽभिवर्तते ४३

सर्वैः सहैभिर्दुष्टात्मा वध्य एष प्रयत्नतः
त्वया यशश्च राज्यं च सुखं चोत्तममिच्छता ४४
आत्मानं च कृतात्मानं समीक्ष्य भरतर्षभ
कृतागसं च राधेयं धर्मात्मनि युधिष्ठिरे ४५
प्रतिपद्यस्व राधेयं प्राप्तकालमनन्तरम्
आर्यां युद्धे मतिं कृत्वा प्रत्येहि रथयूथपम् ४६
पञ्च ह्येतानि मुख्यानां रथानां रथसत्तम
शतान्यायान्ति वेगेन बलिनां भीमतेजसाम् ४७
पञ्च नागसहस्राणि द्विगुणा वाजिनस्तथा
अभिसंहत्य कौन्तेय पदातिप्रयुतानि च
अन्योन्यरक्षितं वीर बलं त्वामभिवर्तते ४८
सूतपुत्रे महेष्वासे दर्शयात्मानमात्मना
उत्तमं यत्नमास्थाय प्रत्येहि भरतर्षभ ४९
असौ कर्णः सुसंरब्धः पाञ्चालानभिधावति
केतुमस्य हि पश्यामि धृष्टद्युम्नरथं प्रति
समुच्छेत्स्यति पाञ्चालानिति मन्ये परंतप ५०
आचक्षे ते प्रियं पार्थ तदेवं भरतर्षभ
राजा जीवति कौरव्यो धर्मपुत्रो युधिष्ठिरः ५१
असौ भीमो महाबाहुः संनिवृत्तश्चमूमुखे
वृतः सृञ्जयसैन्येन सात्यकेन च भारत ५२
वध्यन्त एते समरे कौरवा निशितैः शरैः
भीमसेनेन कौन्तेय पाञ्चालैश्च महात्मभिः ५३
सेना हि धार्तराष्ट्रस्य विमुखा चाभवद्रणात्
विप्रधावति वेगेन भीमस्य निहता शरैः ५४
विपन्नसस्येव मही रुधिरेण समुक्षिता
भारती भरतश्रेष्ठ सेना कृपणदर्शना ५५
निवृत्तं पश्य कौन्तेय भीमसेनं युधां पतिम्
आशीविषमिव क्रुद्धं तस्माद्द्रवति वाहिनी ५६
पीतरक्तासितसितास्ताराचन्द्रार्कमण्डिताः
पताका विप्रकीर्यन्ते छत्राण्येतानि चार्जुन ५७

सौवर्णा राजताश्चैव तैजसाश्च पृथग्विधाः
केतवो विनिपात्यन्ते हस्त्यश्वं विप्रकीर्यते ५८
रथेभ्यः प्रपतन्त्येते रथिनो विगतासवः
नानावर्णैर्हता बाणैः पञ्चालैरपलायिभिः ५९
निर्मनुष्यान्गजानश्वान्रथांश्चैव धनञ्जय
समाद्रवन्ति पाञ्चाला धार्तराष्ट्रांस्तरस्विनः ६०
मृद्नन्ति च नरव्याघ्रा भीमसेनव्यपाश्रयात्
बलं परेषां दुर्धर्षं त्यक्त्वा प्राणानरिंदम ६१
एते नदन्ति पाञ्चाला धमन्त्यपि च वारिजान्
अभिद्रवन्ति च रणे निघ्नन्तः सायकैः परान् ६२
पश्य स्वर्गस्य माहात्म्यं पाञ्चाला हि परंतप
धार्तराष्ट्रान्विनिघ्नन्ति क्रुद्धाः सिंहा इव द्विपान् ६३
सर्वतश्चाभिपन्नैषा धार्तराष्ट्री महाचमूः
पाञ्चालैर्मानसादेत्य हंसैर्गङ्गेव वेगितैः ६४
सुभृशं च पराक्रान्ताः पाञ्चालानां निवारणे
कृपकर्णादयो वीरा ऋषभाणामिवर्षभाः ६५
सुनिमग्नांश्च भीमास्त्रैर्धार्तराष्ट्रान्महारथान्
धृष्टद्युम्नमुखा वीरा घ्नन्ति शत्रून्सहस्रशः
विषण्णभूयिष्ठरथा धार्तराष्ट्री महाचमूः ६६
पश्य भीमेन नाराचैश्छिन्ना नागाः पतन्त्यमी
वज्रिवज्राहतानीव शिखराणि महीभृताम् ६७
भीमसेनस्य निर्विद्धा बाणैः संनतपर्वभिः
स्वान्यनीकानि मृद्नन्तो द्रवन्त्येते महागजाः ६८
नाभिजानासि भीमस्य सिंहनादं दुरुत्सहम्
नदतोऽर्जुन संग्रामे वीरस्य जितकाशिनः ६९
एष नैषादिरभ्येति द्विपमुख्येन पाण्डवम्
जिघांसुस्तोमरैः क्रुद्धो दण्डपाणिरिवान्तकः ७०
सतोमरावस्य भुजौ छिन्नौ भीमेन गर्जतः
तीक्ष्णैरग्निशिखाप्रख्यैर्नाराचैर्दशभिर्हतः ७१
हत्वैनं पुनरायाति नागानन्यान्प्रहारिणः

पश्य नीलाम्बुदनिभान्महामात्रैरधिष्ठितान्
शक्तितोमरसंकाशैर्विनिघ्नन्तं वृकोदरम् ७२
सप्त सप्त च नागांस्तान्वैजयन्तीश्च सध्वजाः
निहत्य निशितैर्बाणैश्छिन्नाः पार्थाग्रजेन ते
दशभिर्दशभिश्चैको नाराचैर्निहतो गजः ७३
न चासौ धार्तराष्ट्राणां श्रूयते निनदस्तथा
पुरंदरसमे क्रुद्धे निवृत्ते भरतर्षभे ७४
अक्षौहिण्यस्तथा तिस्रो धार्तराष्ट्रस्य संहताः
क्रुद्धेन नरसिंहेन भीमसेनेन वारिताः ७५
सञ्जय उवाच
भीमसेनेन तत्कर्म कृतं दृष्ट्वा सुदुष्करम्
अर्जुनो व्यधमच्छिष्टानहितान्निशितैः शरैः ७६
ते वध्यमानाः समरे संशप्तकगणाः प्रभो
शक्रस्यातिथितां गत्वा विशोका ह्यभवन्मुदा ७७
पार्थश्च पुरुषव्याघ्रः शरैः संनतपर्वभिः
जघान धार्तराष्ट्रस्य चतुर्विधबलां चमूम् ७८
इति श्रीमहाभारते कर्णपर्वणि त्रिचत्वारिंशोऽध्यायः ४३

## चतुश्चत्वारिंशोऽध्यायः

धृतराष्ट्र उवाच
निवृत्ते भीमसेने च पाण्डवे च युधिष्ठिरे
वध्यमाने बले चापि मामके पाण्डसृञ्जयैः १
द्रवमाणे बलौघे च निराक्रन्दे मुहुर्मुहुः
किमकुर्वन्त कुरवस्तन्ममाचक्ष्व सञ्जय २
सञ्जय उवाच
दृष्ट्वा भीमं महाबाहुं सूतपुत्रः प्रतापवान्
क्रोधरक्तेक्षणो राजन्भीमसेनमुपाद्रवत् ३
तावकं च बलं दृष्ट्वा भीमसेनात्पराङ्मुखम्
यत्नेन महता राजन्पर्यवस्थापयद्बली ४
व्यवस्थाप्य महाबाहुस्तव पुत्रस्य वाहिनीम्

प्रत्युद्ययौ तदा कर्णः पाण्डवान्युद्धदुर्मदान् ५
प्रत्युद्ययुस्तु राधेयं पाण्डवानां महारथाः
धुन्वानाः कार्मुकाण्याजौ विक्षिपन्तश्च सायकान् ६
भीमसेनः शिनेर्नप्ता शिखण्डी जनमेजयः
धृष्टद्युम्नश्च बलवान्सर्वे चापि प्रभद्रकाः ७
पाञ्चालाश्च नरव्याघ्राः समन्तात्तव वाहिनीम्
अभ्यद्रवन्त संक्रुद्धाः समरे जितकाशिनः ८
तथैव तावका राजन्पाण्डवानामनीकिनीम्
अभ्यद्रवन्त त्वरिता जिघांसन्तो महारथाः ९
रथनागाश्वकलिलं पत्तिध्वजसमाकुलम्
बभूव पुरुषव्याघ्र सैन्यमद्भुतदर्शनम् १०
शिखण्डी च ययौ कर्णं धृष्टद्युम्नं सुतं तव
दुःशासनं महाराज महत्या सेनया वृतम् ११
नकुलो वृषसेनं च चित्रसेनं युधिष्ठिरः
उलूकं समरे राजन्सहदेवः समभ्ययात् १२
सात्यकिः शकुनिं चापि भीमसेनश्च कौरवान्
अर्जुनं च रणे यत्तं द्रोणपुत्रो महारथः १३
युधामन्युं महेष्वासं गौतमोऽभ्यपतद्रणे
कृतवर्मा च बलवानुत्तमौजसमाद्रवत् १४
भीमसेनः कुरून्सर्वान्पुत्रांश्च तव मारिष
सहानीकान्महाबाहुरेक एवाभ्यवारयत् १५
शिखण्डी च ततः कर्णं विचरन्तमभीतवत्
भीष्महन्ता महाराज वारयामास पत्रिभिः १६
प्रतिरब्धस्ततः कर्णो रोषात्प्रस्फुरिताधरः
शिखण्डिनं त्रिभिर्बाणैर्भ्रुवोर्मध्ये व्यताडयत् १७
धारयंस्तु स तान्बाणाञ्शिखण्डी बह्वशोभत
राजतः पर्वतो यद्वत्त्रिभिः शृङ्गैः समन्वितः १८
सोऽतिविद्धो महेष्वासः सूतपुत्रेण संयुगे
कर्णं विव्याध समरे नवत्या निशितैः शरैः १९
तस्य कर्णो हयान्हत्वा सारथिं च त्रिभिः शरैः

उन्ममाथ ध्वजं चास्य क्षुरप्रेण महारथः २०
हताश्वात्तु ततो यानादवप्लुत्य महारथः
शक्तिं चिक्षेप कर्णाय संक्रुद्धः शत्रुतापनः २१
तां छित्त्वा समरे कर्णस्त्रिभिर्भारत सायकैः
शिखण्डिनमथाविध्यन्नवभिर्निशितैः शरैः २२
कर्णचापच्युतान्बाणान्वर्जयंस्तु नरोत्तमः
अपयातस्ततस्तूर्णं शिखण्डी जयतां वरः २३
ततः कर्णो महाराज पाण्डुसैन्यान्यशातयत्
तूलराशिं समासाद्य यथा वायुर्महाजवः २४
धृष्टद्युम्नो महाराज तव पुत्रेण पीडितः
दुःशासनं त्रिभिर्बाणैरभ्यविध्यत्स्तनान्तरे २५
तस्य दुःशासनो बाहुं सव्यं विव्याध मारिष
शितेन रुक्मपुङ्खेन भल्लेन नतपर्वणा २६
धृष्टद्युम्नस्तु निर्विद्धः शरं घोरममर्षणः
दुःशासनाय संक्रुद्धः प्रेषयामास भारत २७
आपतन्तं महावेगं धृष्टद्युम्न समीरितम्
शरैश्चिच्छेद पुत्रस्ते त्रिभिरेव विशां पते २८
अथापरैः सप्तदशैर्भल्लैः कनकभूषणैः
धृष्टद्युम्नं समासाद्य बाह्वोरुरसि चार्दयत् २९
ततः स पार्षतः क्रुद्धो धनुश्चिच्छेद मारिष
क्षुरप्रेण सुतीक्ष्णेन तत उच्चुक्रुशुर्जनाः ३०
अथान्यद्धनुरादाय पुत्रस्ते भरतर्षभ
धृष्टद्युम्नं शरव्रातैः समन्तात्पर्यवारयत् ३१
तव पुत्रस्य ते दृष्ट्वा विक्रमं तं महात्मनः
व्यहसन्त रणे योधाः सिद्धाश्चाप्सरसां गणाः ३२
ततः प्रववृते युद्धं तावकानां परैः सह
घोरं प्राणभृतां काले घोररूपं परंतप ३३
नकुलं वृषसेनस्तु विद्ध्वा पञ्चभिरायसैः
पितुः समीपे तिष्ठन्तं त्रिभिरन्यैरविध्यत ३४
नकुलस्तु ततः क्रुद्धो वृषसेनं स्मयन्निव

नाराचेन सुतीक्ष्णेन विव्याध हृदये दृढम् ३५
सोऽतिविद्धो बलवता शत्रुणा शत्रुकर्शनः
शत्रुं विव्याध विंशत्या स च तं पञ्चभिः शरैः ३६
ततः शरसहस्रेण तावुभौ पुरुषर्षभौ
अन्योन्यमाच्छादयतामथाभज्यत वाहिनी ३७
दृष्ट्वा तु प्रद्रुतां सेनां धार्तराष्ट्रस्य सूतजः
निवारयामास बलादनुपत्य विशां पते
निवृत्ते तु ततः कर्णे नकुलः कौरवान्ययौ ३८
कर्णपुत्रस्तु समरे हित्वा नकुलमेव तु
जुगोप चक्रं त्वरितं राधेयस्यैव मारिष ३९
उलूकस्तु रणे क्रुद्धः सहदेवेन वारितः
तस्याश्वांश्चतुरो हत्वा सहदेवः प्रतापवान्
सारथिं प्रेषयामास यमस्य सदनं प्रति ४०
उलूकस्तु ततो यानादवप्लुत्य विशां पते
त्रिगर्तानां बलं पूर्णं जगाम पितृनन्दनः ४१
सात्यकिः शकुनिं विद्ध्वा विंशत्या निशितैः शरैः
ध्वजं चिच्छेद भल्लेन सौबलस्य हसन्निव ४२
सौबलस्तस्य समरे क्रुद्धो राजन्प्रतापवान्
विदार्य कवचं भूयो ध्वजं चिच्छेद काञ्चनम् ४३
अथैनं निशितैर्बाणैः सात्यकिः प्रत्यविध्यत
सारथिं च महाराज त्रिभिरेव समार्दयत्
अथास्य वाहांस्त्वरितः शरैर्निन्ये यमक्षयम् ४४
ततोऽवप्लुत्य सहसा शकुनिर्भरतर्षभ
आरुरोह रथं तूर्णमुलूकस्य महारथः
अपोवाहाथ शीघ्रं स शैनेयाद्युद्धशालिनः ४५
सात्यकिस्तु रणे राजंस्तावकानामनीकिनीम्
अभिदुद्राव वेगेन ततोऽनीकमभिद्यत ४६
शैनेयशरनुन्नं तु ततः सैन्यं विशां पते
भेजे दश दिशस्तूर्णं न्यपतच्च गतासुवत् ४७
भीमसेनं तव सुतो वारयामास संयुगे

तं तु भीमो मुहूर्तेन व्यश्वसूतरथध्वजम्
चक्रे लोकेश्वरं तत्र तेनातुष्यन्त चारणाः ४८
ततोऽपायान्नृपस्तत्र भीमसेनस्य गोचरात्
कुरुसैन्यं ततः सर्वं भीमसेनमुपाद्रवत्
तत्र रावो महानासीद्भीममेकं जिघांसताम् ४९
युधामन्युः कृपं विद्ध्वा धनुरस्याशु चिच्छिदे
अथान्यद्धनुरादाय कृपः शस्त्रभृतां वरः ५०
युधामन्योर्ध्वजं सूतं छत्रं चापातयत्ततौ
ततोऽपायाद्रथेनैव युधामन्युर्महारथः ५१
उत्तमौजास्तु हार्दिक्यं शरैर्भीमपराक्रमम्
छादयामास सहसा मेघो वृष्ट्या यथाचलम् ५२
तद्युद्धं सुमहच्चासीद्घोररूपं परंतप
यादृशं न मया युद्धं दृष्टपूर्वं विशां पते ५३
कृतवर्मा ततो राजन्नुत्तमौजसमाहवे
हृदि विव्याध स तदा रथोपस्थ उपाविशत् ५४
सारथिस्तमपोवाह रथेन रथिनां वरम्
ततस्तु सत्वरं राजन्पाण्डुसैन्यमुपाद्रवत् ५५
इति श्रीमहाभारते कर्णपर्वणि चतुश्चत्वारिंशोऽध्यायः ४४

## पञ्चचत्वारिंशोऽध्यायः

सञ्जय उवाच
द्रौणिस्तु रथवंशेन महता परिवारितः
आपतत्सहसा राजन्यत्र राजा व्यवस्थितः १
तमापतन्तं सहसा शूरः शौरिसहायवान्
दधार सहसा पार्थो वेलेव मकरालयम् २
ततः क्रुद्धो महाराज द्रोणपुत्रः प्रतापवान्
अर्जुनं वासुदेवं च छादयामास पत्रिभिः ३
अवच्छन्नौ ततः कृष्णौ दृष्ट्वा तत्र महारथाः
विस्मयं परमं गत्वा प्रैक्षन्त कुरवस्तदा ४
अर्जुनस्तु ततो दिव्यमस्त्रं चक्रे हसन्निव

तदस्त्रं ब्राह्मणो युद्धे वारयामास भारत ५
यद्यद्धि व्याक्षिपद्युद्धे पाण्डवोऽस्त्र जिघांसया
तत्तदस्त्रं महेष्वासो द्रोणपुत्रो व्यशातयत् ६
अस्त्रयुद्धे ततो राजन्वर्तमाने भयावहे
अपश्याम रणे द्रौणिं व्यात्ताननमिवान्तकम् ७
स दिशो विदिशश्चैव छादयित्वा विजिह्मगैः
वासुदेवं त्रिभिर्बाणैरविध्यद्दक्षिणे भुजे ८
ततोऽजुनो हयान्हत्वा सर्वांस्तस्य महात्मनः
चकार समरे भूमिं शोणितौघतरङ्गिणीम् ९
निहता रथिनः पेतुः पार्थचापच्युतैः शरैः
हयाश्च पर्यधावन्त मुक्तयोक्त्रास्ततस्ततः १०
तद्दृष्ट्वा कर्म पार्थस्य द्रौणिराहवशोभिनः
अवाकिरद्रणे कृष्णं समन्तान्निशितैःशरैः ११
ततोऽजुनं महाराज द्रौणिरायम्य पत्रिणा
वक्षोदेशे समासाद्य ताडयामास संयुगे १२
सोऽतिविद्धो रणे तेन द्रोणपुत्रेण भारत
आदत्त परिघं घोरं द्रौणेश्चैनमवाक्षिपत् १३
तमापतन्तं परिघं कार्तस्वरविभूषितम्
द्रौणिश्चिच्छ्द सहसा तत उच्चुक्रुशुर्जनाः १४
सोऽनेकधापतद्भूमौ भारद्वाजस्य सायकैः
विशीर्णः पर्वतो राजन्यथा स्यान्मातरिश्वना १५
ततोऽजुनो रणे द्रौणिं विव्याध दशभिः शरैः
सारथिं चास्य भल्लेन रथनीडादपाहरत् १६
स संगृह्य स्वयं वाहान्कृष्णौ प्राच्छादयच्छरैः
तत्राद्भुतमपश्याम द्रौणेराशु पराक्रमम् १७
अयच्छत्तुरगान्यच्च फल्गुनं चाप्ययोधयत्
तदस्य समरे राजन्सर्वे योधा अपूजयन् १८
यदा त्वग्रस्यत रणे द्रोणपुत्रेण फल्गुनः
ततो रश्मीन्रथाश्वानां क्षुरप्रैश्चिच्छिदे जयः १९
प्राद्रवंस्तुरगास्ते तु शरवेगप्रबाधिताः

ततोऽभून्निनदो भूयस्तव सैन्यस्य भारत २०
पाण्डवास्तु जयं लब्ध्वा तव सैन्यमुपाद्रवन्
समन्तान्निशितान्बाणान्विमुञ्चन्तो जयैषिणः २१
पाण्डवैस्तु महाराज धार्तराष्ट्री महाचमूः
पुनः पुनरथो वीरैरभज्यत जयोद्धतैः २२
पश्यतां ते महाराज पुत्राणां चित्रयोधिनाम्
शकुनेः सौबलेयस्य कर्णस्य च महात्मनः २३
वार्यमाणा महासेना पुत्रैस्तव जनेश्वर
नावतिष्ठत संग्रामे ताड्यमाना समन्ततः २४
ततो योधैर्महाराज पलायद्भिस्ततस्ततः
अभवद्व्याकुलं भीतैः पुत्राणां ते महद्बलम् २५
तिष्ठ तिष्ठेति सततं सूतपुत्रस्य जल्पतः
नावतिष्ठत सा सेना वध्यमाना महात्मभिः २६
अथोत्क्रुष्टं महाराज पाण्डवैर्जितकाशिभिः
धार्तराष्ट्रबलं दृष्ट्वा द्रवमाणं समन्ततः २७
ततो दुर्योधनः कर्णमब्रवीत्प्रणयादिव
पश्य कर्ण यथा सेना पाण्डवैरर्दिता भृशम् २८
त्वयि तिष्ठति संत्रासात्पलायति समन्ततः
एतज्ज्ञात्वा महाबाहो कुरु प्राप्तमरिंदम २९
सहस्राणि च योधानां त्वामेव पुरुषर्षभ
क्रोशन्ति समरे वीर द्राव्यमाणानि पाण्डवैः ३०
एतच्छ्रुत्वा तु राधेयो दुर्योधनवचो महत्
मद्रराजमिदं वाक्यमब्रवीत्सूतनन्दनः ३१
पश्य मे भुजयोर्वीर्यमस्त्राणां च जनेश्वर
अद्य हन्मि रणे सर्वान्पाञ्चालान्पाण्डुभिः सह
वाहयाश्वान्नरव्याघ्र भद्रेणैव जनेश्वर ३२
एवमुक्त्वा महाराज सूतपुत्रः प्रतापवान्
प्रगृह्य विजयं वीरो धनुःश्रेष्ठं पुरातनम्
सज्यं कृत्वा महाराज संमृज्य च पुनः पुनः ३३
संनिवार्य च योधान्स्वान्सत्येन शपथेन च

प्रायोजयदमेयात्मा भार्गवास्त्रं महाबलः ३४
ततो राजन्सहस्राणि प्रयुतान्यर्बुदानि च
कोटिशश्च शरास्तीक्ष्णा निरगच्छन्महामृधे ३५
ज्वलितैस्तैर्महाघोरैः कङ्कबर्हिणवाजितैः
संछन्ना पाण्डवी सेना न प्राज्ञायत किंचन ३६
हाहाकारो महानासीत्पाञ्चालानां विशां पते
पीडितानां बलवता भार्गवास्त्रेण संयुगे ३७
निपतद्भिर्गजै राजन्नरैश्चापि सहस्रशः
रथैश्चापि नरव्याघ्र हयैश्चापि समन्ततः ३८
प्राकम्पत मही राजन्निहतैस्तैस्ततस्ततः
व्याकुलं सर्वमभवत्पाण्डवानां महद्बलम् ३९
कर्णस्त्वेको युधां श्रेष्ठो विधूम इव पावकः
दहञ्शत्रून्नरव्याघ्र शुशुभे स परंतपः ४०
ते वध्यमानाः कर्णेन पाञ्चालाश्चेदिभिः सह
तत्र तत्र व्यमुह्यन्त वनदाहे यथा द्विपाः
चुक्रुशुस्ते नरव्याघ्र यथाप्राग्वा नरोत्तमाः ४१
तेषां तु क्रोशतां श्रुत्वा भीतानां रणमूर्धनि
धावतां च दिशो राजन्वित्रस्तानां समन्ततः
आर्तनादो महांस्तत्र प्रेतानामिव संप्लवे ४२
वध्यमानांस्तु तान्दृष्ट्वा सूतपुत्रेण मारिष
वित्रेसुः सर्वभूतानि तिर्यग्योनिगतान्यपि ४३
ते वध्यमानाः समरे सूतपुत्रेण सृञ्जयाः
अर्जुनं वासुदेवं च व्याक्रोशन्त मुहुर्मुहुः
प्रेतराजपुरे यद्वत्प्रेतराजं विचेतसः ४४
अथाब्रवीद्वासुदेवं कुन्तीपुत्रो धनंजयः
भार्गवास्त्रं महाघोरं दृष्ट्वा तत्र समीरितम् ४५
पश्य कृष्ण महाबाहो भार्गवास्त्रस्य विक्रमम्
नैतदस्त्रं हि समरे शक्यं हन्तुं कथंचन ४६
सूतपुत्रं च संरब्धं पश्य कृष्ण महारणे
अन्तकप्रतिमं वीरं कुर्वाणं कर्म दारुणम् ४७

सुतीक्ष्णं चोदयन्नश्वान्प्रेक्षते मां मुहुर्मुहुः
न च पश्यामि समरे कर्णस्य प्रपलायितम् ४८
जीवन्प्राप्नोति पुरुषः संख्ये जयपराजयौ
जितस्य तु हृषीकेश वध एव कुतो जयः ४९
ततो जनार्दनः प्रायाद्द्रष्टुमिच्छन्युधिष्ठिरम्
श्रमेण ग्राहयिष्यंश्च कर्णं युद्धेन मारिष ५०
अर्जुनं चाब्रवीत्कृष्णो भृशं राजा परिक्षतः
तमाश्वास्य कुरुश्रेष्ठ ततः कर्णं हनिष्यसि ५१
ततो धनंजयो द्रष्टुं राजानं बाणपीडितम्
रथेन प्रययौ क्षिप्रं संग्रामे केशवाज्ञया ५२
गच्छन्नेव तु कौन्तेयो धर्मराजदिदृक्षया
सैन्यमालोकयामास नापश्यत्तत्र चाग्रजम् ५३
युद्धं कृत्वा तु कौन्तेयो द्रोणपुत्रेण भारत
दुःसहं वज्रिणा संख्ये पराजिग्ये भृगोः सुतम् ५४
द्रौणिं पराजित्य ततोग्रधन्वा कृत्वा महद्दुष्करमार्यकर्म
आलोकयामास ततः स्वसैन्यं धनंजयः शत्रुभिरप्रधृष्यः ५५
स युध्यमानः पृतनामुखस्थाञ्शूराञ्शूरो हर्षयन्सव्यसाची
पूर्वापदानैः प्रथितैः प्रशंसन्स्थिरांश्चकारात्मरथाननीके ५६
अपश्यमानस्तु किरीटमाली युधि ज्येष्ठं भ्रातरमाजमीढम्
उवाच भीमं तरसाभ्युपेत्य राज्ञः प्रवृत्तिस्त्विह केति राजन् ५७
भीम उवाच
अपयात इतो राजा धर्मपुत्रो युधिष्ठिरः
कर्णबाणविभुग्नाङ्गो यदि जीवेत्कथंचन ५८
अर्जुन उवाच
तस्माद्भवाञ्शीघ्रमितः प्रयातु राज्ञः प्रवृत्त्यै कुरुसत्तमस्य
नूनं हि विद्धोऽतिभृशं पृषत्कैः कर्णेन राजा शिबिरं गतोऽसौ ५९
यः संप्रहारे निशि संप्रवृत्ते द्रोणेन विद्धोऽतिभृशं तरस्वी
तस्थौ च तत्रापि जयप्रतीक्षो द्रोणेन यावन्न हतः किलासीत् ६०
स संशयं गमितः पाण्डवाग्र्यः संख्येऽद्य कर्णेन महानुभावः
ज्ञातुं प्रयाह्याशु तमद्य भीम स्थास्याम्यहं शत्रुगणान्निरुध्य ६१

भीम उवाच
त्वमेव जानीहि महानुभाव राज्ञः प्रवृत्तिं भरतर्षभस्य
अहं हि यद्यर्जुन यामि तत्र वक्ष्यन्ति मां भीत इति प्रवीराः ६२
ततोऽब्रवीदर्जुनो भीमसेनं संशप्तकाः प्रत्यनीकं स्थिता मे
एतानहत्वा न मया तु शक्यमितोऽपयातुं रिपुसंघगोष्ठात् ६३
अथाब्रवीदर्जुनं भीमसेनः स्ववीर्यमाश्रित्य कुरुप्रवीर
संशप्तकान्प्रतियोत्स्यामि संख्ये सर्वानहं याहि धनंजयेति ६४
तद्भीमसेनस्य वचो निशम्य सुदुर्वचं भ्रातुरमित्रमध्ये
द्रष्टुं कुरुश्रेष्ठमभिप्रयातुं प्रोवाच वृष्णिप्रवरं तदानीम् ६५
चोदयाश्वान्हृषीकेश विगाह्यैतं रथार्णवम्
अजातशत्रुं राजानं द्रष्टुमिच्छामि केशव ६६
ततो हयान्सर्वदाशार्हमुख्यः प्राचोदयद्भीममुवाच चेदम्
नैतच्चित्रं तव कर्माद्य वीर यास्यामहे जहि भीमारिसंघान् ६७
ततो ययौ हृषीकेशो यत्र राजा युधिष्ठिरः
शीघ्राच्छीघ्रतरं राजन्वाजिभिर्गरुडोपमैः ६८
प्रत्यनीके व्यवस्थाप्य भीमसेनमरिंदमम्
संदिश्य चैव राजेन्द्र युद्धं प्रति वृकोदरम् ६९
ततस्तु गत्वा पुरुषप्रवीरौ राजानमासाद्य शयानमेकम्
रथादुभौ प्रत्यवरुह्य तस्माद्ववन्दतुर्धर्मराजस्य पादौ ७०
तौ दृष्ट्वा पुरुषव्याघ्रौ क्षेमिणौ पुरुषर्षभ
मुदाभ्युपगतौ कृष्णावश्विनाविव वासवम् ७१
तावभ्यनन्दद्राजा हि विवस्वानश्विनाविव
हते महासुरे जम्भे शक्रविष्णू यथा गुरुः ७२
मन्यमानो हतं कर्णं धर्मराजो युधिष्ठिरः
हर्षगद्गदया वाचा प्रीतः प्राह परंतपौ ७३
इति श्रीमहाभारते कर्णपर्वणि पञ्चचत्वारिंशोऽध्यायः ४५

## षट्चत्वारिंशोऽध्यायः

सञ्जय उवाच
महासत्त्वौ तु तौ दृष्ट्वा सहितौ केशवार्जुनौ

हतमाधिरथिं मेने संख्ये गाण्डीवधन्वना १
तावभ्यनन्दत्कौन्तैयः साम्ना परमवल्गुना
स्मितपूर्वममित्रघ्नः पूजयन्भरतर्षभ २
युधिष्ठिर उवाच
स्वागतं देवकीपुत्र स्वागतं ते धनंजय
प्रियं मे दर्शनं बाढं युवयोरच्युतार्जुनौ ३
अक्षताभ्यामरिष्टाभ्यां कथं युध्य महारथम्
आशीविषसमं युद्धे सर्वशस्त्रविशारदम् ४
अग्रगं धार्तराष्ट्राणां सर्वेषां शर्म वर्म च
रक्षितं वृषसेनेन सुषेणेन च धन्विना ५
अनुज्ञातं महावीर्यं रामेणास्त्रेषु दुर्जयम्
त्रातारं धार्तराष्ट्राणां गन्तारं वाहिनीमुखे ६
हन्तारमरिसैन्यानाममित्रगणमर्दनम्
दुर्योधनहिते युक्तमस्मद्युद्धाय चोद्यतम् ७
अप्रधृष्यं महायुद्धे देवैरपि सवासवैः
अनलानिलयोस्तुल्यं तेजसा च बलेन च ८
पातालमिव गम्भीरं सुहृदानन्दवर्धनम्
अन्तकाभममित्राणां कर्णं हत्वा महाहवे
दिष्ट्या युवामनुप्राप्तौ जित्वासुरमिवामरौ ९
तेन युद्धमदीनेन मया ह्यद्याच्युतार्जुनौ
कुपितेनान्तकेनेव प्रजाः सर्वा जिघांसता १०
तेन केतुश्च मे छिन्नो हतौ च पार्ष्णिसारथी
हतवाहः कृतश्चास्मि युयुधानस्य पश्यतः ११
धृष्टद्युम्नस्य यमयोर्वीरस्य च शिखण्डिनः
पश्यतां द्रौपदेयानां पञ्चालानां च सर्वशः १२
एताञ्जित्वा महावीर्यान्कर्णः शत्रुगणान्बहून्
जितवान्मां महाबाहो यतमानं महारणे १३
अनुसृत्य च मां युद्धे परुषाण्युक्तवान्बहु
तत्र तत्र युधां श्रेष्ठः परिभूय न संशयः १४
भीमसेनप्रभावात्तु यज्जीवामि धनंजय

बहुनात्र किमुक्तेन नाहं तत्सोढुमुत्सहे १५
त्रयोदशाहं वर्षाणि यस्माद्भीतो धनंजय
न स्म निद्रां लभे रात्रौ न चाहनि सुखं क्वचित् १६
तस्य द्वेषेण संयुक्तः परिदह्ये धनंजय
आत्मनो मरणं जानन्वाध्रीणस इव द्विपः १७
यस्यायमगमत्कालश्चिन्तयानस्य मे विभो
कथं शक्यो मया कर्णो युद्धे क्षपयितुं भवेत् १८
जाग्रत्स्वपंश्च कौन्तेय कर्णमेव सदा ह्यहम्
पश्यामि तत्र तत्रैव कर्णभूतमिदं जगत् १९
यत्र यत्र हि गच्छामि कर्णाद्भीतो धनंजय
तत्र तत्र हि पश्यामि कर्णमेवाग्रतः स्थितम् २०
सोऽह तेनैव वीरेण समरेष्वपलायिना
सहयः सरथः पार्थ जित्वा जीवन्विसर्जितः २१
को नु मे जीवितेनार्थो राज्येनार्थोऽथ वा पुनः
ममैवं धिक्कृतस्येह कर्णेनाहवशोभिना २२
न प्राप्त पूर्वं यद्भीष्मात्कृपाद्द्रोणाच्च संयुगे
तत्प्राप्तमद्य मे युद्धे सूतपुत्रान्महारथात् २३
तत्त्वा पृच्छामि कौन्तेय यथा ह्यकुशलस्तथा
तन्ममाचक्ष्व कार्त्स्न्येन यथा कर्णस्त्वया हतः २४
शक्रवीर्यसमो युद्धे यमतुल्यपराक्रमः
रामतुल्यस्तथास्त्रे यः स कथं वै निषूदितः २५
महारथः समाख्यातः सर्वयुद्धविशारदः
धनुर्धराणां प्रवरः सर्वेषामेकपूरुषः २६
पूजितो धृतराष्ट्रेण सपुत्रेण विशां पते
सदा त्वदर्थं राधेयः स कथं निहतस्त्वया २७
धृतराष्ट्रो हि योधेषु सर्वेष्वेव सदार्जुन
तव मृत्युं रणे कर्णं मन्यते पुरुषर्षभः २८
स त्वया पुरुषव्याघ्र कथं युद्धे निषूदितः
तन्ममाचक्ष्व बीभत्सो यथा कर्णो हतस्त्वया २९
सोत्सेधमस्य च शिरः पश्यतां सुहृदां हृतम्

त्वया पुरुषशार्दूल शार्दूलेन यथा रुरोः ३०
यः पर्युपासीत्प्रदिशो दिशश्च त्वां सूतपुत्रः समरे परीप्सन्
दित्सुः कर्णः समरे हस्तिपूगं स हीदानीं कङ्कपत्रैः सुतीक्ष्णैः ३१
त्वया रणे निहतः सूतपुत्रः कच्चिच्छेते भूमितले दुरात्मा
कच्चित्प्रियं मे परमं त्वयाद्य कृतं रणे सूतपुत्रं निहत्य ३२
यः सर्वतः पर्यपतत्त्वदर्थे मदान्वितो गर्वितः सूतपुत्रः
स शूरमानी समरे समेत्य कच्चित्त्वया निहतः संयुगेऽद्य ३३
रौक्मं रथं हस्तिवरैश्च युक्तं रथं दित्सुर्यः परेभ्यस्त्वदर्थे
सदा रणे स्पर्धते यः स पापः कच्चित्त्वया निहतस्तात युद्धे ३४
योऽसौ नित्यं शूरमदेन मत्तो विकत्थते संसदि कौरवाणाम्
प्रियोऽत्यर्थं तस्य सुयोधनस्य कच्चित्स पापो निहतस्त्वयाद्य ३५
कच्चित्समागम्य धनुःप्रमुक्तैस्त्वत्प्रेषितैर्लोहितार्थैर्विहंगैः
शेतेऽद्य पापः स विभिन्नगात्रः कच्चिद्भग्नो धार्तराष्ट्रस्य बाहुः ३६
योऽसौ सदा श्लाघते राजमध्ये दुर्योधनं हर्षयन्दर्पपूर्णः
अहं हन्ता फल्गुनस्येति मोहात्कच्चिद्धतस्तस्य न वै तथा रथः ३७
नाहं पादौ धावयिष्ये कदाचिद्यावत्स्थितः पार्थ इत्यल्पबुद्धिः
व्रतं तस्यैतत्सर्वदा शक्रसूनो कच्चित्त्वया निहतः सोऽद्य कर्णः ३८
योऽसौ कृष्णामब्रवीद्दुष्टबुद्धिः कर्णः सभायां कुरुवीरमध्ये
किं पाण्डवांस्त्वं न जहासि कृष्णे सुदुर्बलान्पतितान्हीनसत्त्वान् ३९
यत्तत्कर्णः प्रत्यजानात्त्वदर्थे नाहत्वाहं सह कृष्णेन पार्थम्
इहोपयातेति स पापबुद्धिः कच्चिच्छेते शरसंभिन्नगात्रः ४०
कच्चित् संग्रामे विदितो वा तदायं समागमः सृञ्जयकौरवाणाम्
यत्रावस्थामीदृशीं प्रापितोऽह कच्चित्त्वया सोऽद्य हतः समेत्य ४१
कच्चित्त्वया तस्य सुमन्दबुद्धेर्गाण्डीवमुक्तैर्विशिखैर्ज्वलद्भिः
सकुण्डलं भानुमदुत्तमाङ्गं कायात्प्रकृत्तं युधि सव्यसाचिन् ४२
यत्तन्मया बाणसमर्पितेन ध्यातोऽसि कर्णस्य वधाय वीर
तन्मे त्वया कच्चिदमोघमद्य ध्यातं कृतं कर्णनिपातनेन ४३
यद्दर्पपूर्णः स सुयोधनोऽस्मानवेक्षते कर्णसमाश्रयेण
कच्चित्त्वया सोऽद्य समाश्रयोऽस्य भग्नः पराक्रम्य सुयोधनस्य ४४
यो नः पुरा षण्ढतिलानवोचत्सभामध्ये पार्थिवानां समक्षम्

स दुर्मतिः कच्चिदुपेत्य संख्ये त्वया हतः सूतपुत्रोऽत्यमर्षी ४५
यः सूतपुत्रः प्रहसन्दुरात्मा पुराब्रवीन्निर्जितां सौबलेन
स्वयं प्रसह्यानय याज्ञसेनीमपीह कच्चित्स हतस्त्वयाद्य ४६
यः शस्त्रभृच्छ्रेष्ठ तमं पृथिव्यां पितामहं व्याक्षिपदल्पचेताः
संख्यायमानोऽधरथः स कच्चित्त्वया हतोऽद्याधिरथिर्दुरात्मा ४७
अमर्षणं निकृतिसमीरणेरितं हृदि श्रितं ज्वलनमिमं सदा मम
हतो मया सोऽद्य समेत्य पापधीरिति ब्रुवन्प्रशमय मेऽद्य फल्गुन ४८
इति श्रीमहाभारते कर्णपर्वणि षट्चत्वारिंशोऽध्यायः ४६

## सप्त चत्वारिंशोऽध्यायः

सञ्जय उवाच
तद्धर्मशीलस्य वचो निशम्य राज्ञः क्रुद्धस्याधिरथो महात्मा
उवाच दुर्धर्षमदीनसत्त्वं युधिष्ठिरं जिष्णुरनन्तवीर्यः १
संशप्तकैर्युध्यमानस्य मेऽद्य सेनाग्रयायी कुरुसैन्यस्य राजन्
आशीविषाभान्खगमान्प्रमुञ्चन्द्रौणिः पुरस्तात्सहसा व्यतिष्ठत् २
दृष्ट्वा रथं मेघनिभं ममेममम्बष्ठसेना मरणे व्यतिष्ठत्
तेषामहं पञ्च शतानि हत्वा ततो द्रौणिमगमं पार्थिवाग्र्य ३
ततोऽपरान्बाणसंघाननेकानाकर्णपूर्णायतविप्रमुक्तान्
ससर्ज शिक्षास्त्रबलप्रयत्नैस्तथा यथा प्रावृषि कालमेघः ४
नैवाददानं न च संदधानं जानीमहे कतरेणास्यतीति
वामेन वा यदि वा दक्षिणेन स द्रोणपुत्रः समरे पर्यवर्तत् ५
अविध्यन्मां पञ्चभिर्द्रोणपुत्रः शितैः शरैः पञ्चभिर्वासुदेवम्
अहं तु तं त्रिंशता वज्रकल्पैः समार्दयं निमिषस्यान्तरेण ६
स विक्षरन्रुधिरं सर्वगात्रै रथानीकं सूतसूनोर्विवेश
मयाभिभूतः सैनिकानां प्रबर्हानसावपश्यन्रुधिरेण प्रदिग्धान् ७
ततोऽभिभूतं युधि वीक्ष्य सैन्यं विध्वस्तयोधं द्रुतवाजिनागम्
पञ्चाशता रथमुख्यैः समेतः कर्णस्त्वरन्मामुपायात्प्रमाथी ८
तान्सूदयित्वाहमपास्य कर्णं द्रष्टुं भवन्तं त्वरयाभियातः
सर्वे पाञ्चाला ह्युद्विजन्ते स्म कर्णाद्गन्धाद्गावः केसरिणो यथैव ९
महाझषस्येव मुखं प्रपन्नाः प्रभद्रकाः कर्णमभि द्रवन्ति

मृत्योरास्यं व्यात्तमिवान्वपद्यन्प्रभद्रकाः कर्णमासाद्य राजन् १०
आयाहि पश्याद्य युयुत्समानं मां सूतपुत्रं च वृतौ जयाय
षट्साहस्रा भारत राजपुत्राः स्वर्गाय लोकाय रथा निमग्नाः ११
समेत्याहं सूतपुत्रेण संख्ये वृत्रेण वज्रीव नरेन्द्रमुख्य
योत्स्ये भृशं भारत सूतपुत्रमस्मिन्संगामे यदि वै दृश्यतेऽद्य १२
कर्णं न चेदद्य निहन्मि राजन्सबान्धवं युध्यमानं प्रसह्य
प्रतिश्रुत्याकुर्वतां वै गतिर्या कष्टां गच्छेयं तामहं राजसिंह १३
आमन्त्रये त्वां ब्रूहि जयं रणे मे पुरा भीमं धार्तराष्ट्रा ग्रसन्ते
सौतिं हनिष्यामि नरेन्द्रसिंह सैन्यं तथा शत्रुगणांश्च सर्वान् १४
इति श्रीमहाभारते कर्णपर्वणि सप्तचत्वारिंशोऽध्यायः ४७

## अष्टचत्वारिंशोऽध्यायः

सञ्जय उवाच
श्रुत्वा कर्णं कल्पमुदारवीर्यं क्रुद्धः पार्थः फल्गुनस्यामितौजाः
धनंजयं वाक्यमुवाच चेदं युधिष्ठिरं कर्णशराभितप्तः १
इदं यदि द्वैतवने ह्यवक्ष्यः कर्णं योद्धुं न प्रसहे नृपेति
वयं तदा प्राप्तकालानि सर्वे वृत्तान्युपैष्याम तदैव पार्थ २
मयि प्रतिश्रुत्य वधं हि तस्य बलस्य चाप्तस्य तथैव वीर
आनीय नः शत्रुमध्यं स कस्मात्समुत्क्षिप्य स्थण्डिले प्रत्यपिंष्ठाः ३
अन्वाशिष्म वयमर्जुन त्वयि यियासवो बहु कल्याणमिष्टम्
तन्नः सर्वं विफलं राजपुत्र फलार्थिनां निचुल इवातिपुष्पः ४
प्रच्छादितं बडिशमिवामिषेण प्रच्छादितो गवय इवापवाचा
अनर्थकं मे दर्शितवानसि त्वं राज्यार्थिनो राज्यरूपं विनाशम् ५
यत्तत्पृथां वागुवाचान्तरिक्षे सप्ताहजाते त्वयि मन्दबुद्धौ
जातः पुत्रो वासवविक्रमोऽय सर्वाञ्शूराञ्शात्रवाञ्जेष्यतीति ६
अयं जेता खाण्डवे देवसंघान्सर्वाणि भूतान्यपि चोत्तमौजाः
अयं जेता मद्रकलिङ्गकेकयानयं कुरून्हन्ति च राजमध्ये ७
अस्मात्परो न भविता धनुर्धरो न वै भूतः कश्चन जातु जेता
इच्छन्नार्यः सर्वभूतानि कुर्याद्वशे वशी सर्वसमाप्तविद्यः ८
कान्त्या शशाङ्कस्य जवेन वायोः स्थैर्येण मेरोः क्षमया पृथिव्याः

सूर्यस्य भासा धनदस्य लक्ष्म्या शौर्येण शक्रस्य बलेन विष्णोः ९
तुल्यो महात्मा तव कुन्ति पुत्रो जातोऽदितेर्विष्णुरिवारिहन्ता
स्वेषां जयाय द्विषतां वधाय ख्यातोऽमितौजाः कुलतन्तुकर्ता १०
इत्यन्तरिक्षे शतशृङ्गमूर्ध्नि तपस्विनां शृणवतां वागुवाच
एवंविधं त्वां तच्च नाभूत्तवाद्य देवा हि नूनमनृतं वदन्ति ११
तथापरेषामृषिसत्तमानां श्रुत्वा गिरं पूजयतां सदैव
न संनतिं प्रैमि सुयोधनस्य न त्वा जानाम्याधिरथेर्भयार्तम् १२
त्वष्ट्रा कृतं वाहमकूजनाक्षं शुभं समास्थाय कपिध्वजं त्वम्
खड्गं गृहीत्वा हेमचित्रं समिद्धं धनुश्चेदं गाण्डिवं तालमात्रम्
स केशवेनोह्यमानः कथं नु कर्णाद्भीतो व्यपयातोऽसि पार्थ १३
धनुश्चैतत्केशवाय प्रदाय यन्ताभविष्यस्त्वं रणे चेद्दुरात्मन्
ततोऽहनिष्यत्केशवः कर्णमुग्रं मरुत्पतिर्वृत्रमिवात्तवज्रः १४
मासेऽपतिष्यः पञ्चमे त्वं प्रकृच्छ्रे न वा गर्भोऽप्यभविष्यः पृथायाः
तत्ते श्रमो राजपुत्राभविष्यन्न संग्रामादपयातुं दुरात्मन् १५
इति श्रीमहाभारते कर्णपर्वणि अष्टचत्वारिंशोऽध्यायः ४८

## एकोनपञ्चाशोऽध्यायः

सञ्जय उवाच
युधिष्ठिरेणैवमुक्तः कौन्तेयः श्वेतवाहनः
असिं जग्राह संक्रुद्धो जिघांसुर्भरतर्षभम् १
तस्य कोपं समुद्वीक्ष्य चित्तज्ञः केशवस्तदा
उवाच किमिदं पार्थ गृहीतः खड्ग इत्युत २
नेह पश्यामि योद्धव्यं तव किंचिद्धनंजय
ते ध्वस्ता धार्तराष्ट्रा हि सर्वे भीमेन धीमता ३
अपयातोऽसि कौन्तेय राजा द्रष्टव्य इत्यपि
स राजा भवता दृष्टः कुशली च युधिष्ठिरः ४
तं दृष्ट्वा नृपशार्दूलं शार्दूलसमविक्रमम्
हर्षकाले तु संप्राप्ते कस्मात्त्वा मन्युराविशत् ५
न तं पश्यामि कौन्तेय यस्ते वध्यो भवेदिह
कस्माद्भवान्महाखड्गं परिगृह्णाति सत्वरम् ६

तत्त्वा पृच्छामि कौन्तेय किमिदं ते चिकीर्षितम्
परामृशसि यत्क्रुद्धः खड्गमद्भुतविक्रम ७
एवमुक्तस्तु कृष्णेन प्रेक्षमाणो युधिष्ठिरम्
अर्जुनः प्राह गोविन्दं क्रुद्धः सर्प इव श्वसन् ८
दद गाण्डीवमन्यस्मा इति मां योऽभिचोदयेत्
छिन्द्यामहं शिरस्तस्य इत्युपांशुव्रतं मम ९
तदुक्तोऽहमदीनात्मन्राज्ञामितपराक्रम
समक्षं तव गोविन्द न तत्क्षन्तुमिहोत्सहे १०
तस्मादेनं वधिष्यामि राजानं धर्मभीरुकम्
प्रतिज्ञां पालयिष्यामि हत्वेमं नरसत्तमम्
एतदर्थं मया खड्गो गृहीतो यदुनन्दन ११
सोऽह युधिष्ठिरं हत्वा सत्येऽप्यानृण्यतां गतः
विशोको विज्वरश्चापि भविष्यामि जनार्दन १२
किं वा त्वं मन्यसे प्राप्तमस्मिन्काले समुत्थिते
त्वमस्य जगतस्तात वेत्थ सर्वं गतागतम्
तत्तथा प्रकरिष्यामि यथा मां वक्ष्यते भवान् १३
कृष्ण उवाच
इदानीं पार्थ जानामि न वृद्धाः सेवितास्त्वया
अकाले पुरुषव्याघ्र संरम्भक्रिययानया
न हि धर्मविभागज्ञः कुर्यादेवं धनंजय १४
अकार्याणां च कार्याणां संयोगं यः करोति वै
कार्याणामक्रियाणां च स पार्थ पुरुषाधमः १५
अनुसृत्य तु ये धर्मं कवयः समुपस्थिताः
समासविस्तारविदां न तेषां वेत्थ निश्चयम् १६
अनिश्चयज्ञो हि नरः कार्याकार्यविनिश्चये
अवशो मुह्यते पार्थ यथा त्वं मूढ एव तु १७
न हि कार्यमकार्यं वा सुखंज्ञातुं कथंचन
श्रुतेन ज्ञायते सर्वं तच्च त्वं नावबुध्यसे १८
अविज्ञानाद्भवान्यच्च धर्मं रक्षति धर्मवित्
प्राणिनां हि वधं पार्थ धार्मिको नावबुध्यते १९

प्राणिनामवधस्तात सर्वज्यायान्मतो मम
अनृतं तु भवेद्वाच्यं न च हिंस्यात्कथंचन २०
स कथं भ्रातरं ज्येष्ठं राजानं धर्मकोविदम्
हन्याद्भवान्नरश्रेष्ठ प्राकृतोऽन्य पुमानिव २१
अयुध्यमानस्य वधस्तथाशस्त्रस्य भारत
पराङ्मुखस्य द्रवतः शरणं वाभिगच्छतः
कृताञ्जलेः प्रपन्नस्य न वधः पूज्यते बुधैः २२
त्वया चैव व्रतं पार्थ बालेनैव कृतं पुरा
तस्मादधर्मसंयुक्तं मौढ्यात्कर्म व्यवस्यसि २३
स गुरुं पार्थ कस्मात्त्वं हन्या धर्ममनुस्मरन्
असंप्रधार्य धर्माणां गतिं सूक्ष्मां दुरन्वयाम् २४
इदं धर्मरहस्यं च वक्ष्यामि भरतर्षभ
यद्ब्रूयात्तव भीष्मो वा धर्मज्ञो वा युधिष्ठिरः २५
विदुरो वा तथा क्षत्ता कुन्ती वापि यशस्विनी
तत्ते वक्ष्यामि तत्त्वेन तन्निबोध धनंजय २६
सत्यस्य वचनं साधु न सत्याद्विद्यते परम्
तत्त्वेनैतत्सुदुर्ज्ञेयं यस्य सत्यमनुष्ठितम् २७
भवेत्सत्यमवक्तव्यं वक्तव्यमनृतं भवेत्
सर्वस्वस्यापहारे तु वक्तव्यमनृतं भवेत् २८
प्राणात्यये विवाहे च वक्तव्यमनृतंभवेत्
यत्रानृतं भवेत्सत्यं सत्यं चाप्यनृतंभवेत् २९
तादृशं पश्यते बालो यस्य सत्यमनुष्ठितम्
सत्यानृते विनिश्चित्य ततो भवति धर्मवित् ३०
किमाश्चर्यं कृतप्रज्ञः पुरुषोऽपि सुदारुणः
सुमहत्प्राप्नुयात्पुण्यं बलाकोऽन्धवधादिव ३१
किमाश्चर्यं पुनर्मूढो धर्मकामोऽप्यपण्डितः
सुमहत्प्राप्नुयात्पापमापगामिव कौशिकः ३२
अर्जुन उवाच
आचक्ष्व भगवन्नेतद्यथा विद्यामहं तथा
बलाकान्धाभिसंबद्धं नदीनां कौशिकस्य च ३३

कृष्ण उवाच
मृगव्याधोऽभवत्कश्चिद्बलाको नाम भारत
यात्रार्थं पुत्रदारस्य मृगान्हन्ति न कामतः ३४
सोऽन्धौ च मातापितरौ बिभर्त्यन्यांश्च संश्रितान्
स्वधर्मनिरतो नित्यं सत्यवागनसूयकः ३५
स कदाचिन्मृगाँल्लिप्सुर्नान्वविन्दत्प्रयत्नवान्
अथापश्यत्स पीतोदं श्वापदं घ्राणचक्षुषम् ३६
अदृष्टपूर्वमपि तत्सत्त्वं तेन हतं तदा
अन्वेव च ततो व्योम्नः पुष्पवर्षमवापतत् ३७
अप्सरोगीतवादित्रैर्नादितं च मनोरमम्
विमानमागमत्स्वर्गान्मृगव्याधनिनीषया ३८
तद्भूतं सर्वभूतानामभावाय किलार्जुन
तपस्तप्त्वा वरं प्राप्तं कृतमन्धं स्वयंभुवा ३९
तद्धत्वा सर्वभूतानामभावकृतनिश्चयम्
ततो बलाकः स्वरगादेवं धर्मः सुदुर्विदः ४०
कौशिकोऽप्यभवद्विप्रस्तपस्वी न बहुश्रुतः
नदीनां संगमे ग्रामाददूरे स किलावसत् ४१
सत्यं मया सदा वाच्यमिति तस्याभवद्व्रतम्
सत्यवादीति विख्यातः स तदासीद्धनंजय ४२
अथ दस्युभयात्केचित्तदा तद्वनमाविशन्
दस्यवोऽपि गताः क्रूरा व्यमार्गन्त प्रयत्नतः ४३
अथ कौशिकमभ्येत्य प्राहुस्तं सत्यवादिनम्
कतमेन यथा याता भगवन्बहवो जनाः
सत्येन पृष्टः प्रब्रूहि यदि तान्वेत्थ शंस नः ४४
स पृष्टः कौशिकः सत्यं वचनं तानुवाच ह
बहुवृक्षलतागुल्ममेतद्वनमुपाश्रिताः
ततस्ते तान्समासाद्य क्रूरा जघ्नुरिति श्रुतिः ४५
तेनाधर्मेण महता वाग्दुरुक्तेन कौशिकः
गतः सुकष्टं नरकं सूक्ष्मधर्मेष्वकोविदः
अप्रभूतश्रुतो मूढो धर्माणामविभागवित् ४६

वृद्धानपृष्ट्वा संदेहं महच्छ्वभ्रमितोऽहति
तत्र ते लक्षणोद्देशः कश्चिदेव भविष्यति ४७
दुष्करं परमज्ञानं तर्केणात्र व्यवस्यति
श्रुतिर्धर्म इति ह्येके वदन्ति बहवो जनाः ४८
न त्वेतत्प्रतिसूयामि न हि सर्वं विधीयते
प्रभवार्थाय भूतानां धर्मप्रवचनं कृतम् ४९
धारणाद्धर्ममित्याहुर्धर्मो धारयति प्रजाः
यः स्याद्धारणसंयुक्तः स धर्म इति निश्चयः ५०
येऽन्यायेन जिहीर्षन्तो जना इच्छन्ति कर्हिचित्
अकूजनेन चेन्मोक्षो नात्र कूजेत्कथंचन ५१
अवश्यं कूजितव्यं वा शङ्केरन्वाप्यकूजतः
श्रेयस्तत्रानृतं वक्तुं सत्यादिति विचारितम् ५२
प्राणात्यये विवाहे वा सर्वज्ञातिधनक्षये
नर्मण्यभिप्रवृत्ते वा प्रवक्तव्यं मृषा भवेत्
अधर्मं नात्र पश्यन्ति धर्मतत्त्वार्थदर्शिनः ५३
यः स्तेनैः सह संबन्धान्मुच्यते शपथैरपि
श्रेयस्तत्रानृतं वक्तुं तत्सत्यमविचारितम् ५४
न च तेभ्यो धनं देयं शक्ये सति कथंचन
पापेभ्यो हि धनं दत्तं दातारमपि पीडयेत्
तस्माद्धर्मार्थमनृतमुक्त्वा नानृतवाग्भवेत् ५५
एष ते लक्षणोद्देशः समुद्दिष्टो यथाविधि
एतच्छ्रुत्वा ब्रूहि पार्थ यदि वध्यो युधिष्ठिरः ५६
अर्जुन उवाच
यथा ब्रूयान्महाप्राज्ञो यथा ब्रूयान्महामतिः
हितं चैव यथास्माकं तथैतद्वचनं तव ५७
भवान्मातृसमोऽस्माकं तथा पितृसमोऽपि च
गतिश्च परमा कृष्ण तेन ते वाक्यमद्भुतम् ५८
न हि ते त्रिषु लोकेषु विद्यतेऽविदितं क्वचित्
तस्माद्भवान्परं धर्मं वेद सर्वं यथातथम् ५९
अवध्यं पाण्डवं मन्ये धर्मराजं युधिष्ठिरम्

तस्मिन्समयसंयोगे ब्रूहि किंचिदनुग्रहम्
इदं चापरमत्रैव शृणु हृत्स्थं विवक्षितम् ६०
जानासि दाशार्ह मम व्रतं त्वं यो मां ब्रूयात्कश्चन मानुषेषु
अन्यस्मै त्वं गाण्डिवं देहि पार्थ यस्त्वत्तोऽस्त्रैर्भविता वा विशिष्टः ६१
हन्यामहं केशव तं प्रसह्य भीमो हन्यात्तूबरकेति चोक्तः
तन्मे राजा प्रोक्तवांस्ते समक्षं धनुर्देहीत्यसकृद्वृष्णिसिंह ६२
तं हत्वा चेत्केशव जीवलोके स्थाता कालंनाहमप्यल्पमात्रम्
सा च प्रतिज्ञा मम लोकप्रबुद्धा भवेत्सत्या धर्मभृतां वरिष्ठ
यथा जीवेत्पाण्डवोऽहं च कृष्ण तथा बुद्धिं दातुमद्यार्हसि त्वम् ६३
वासुदेव उवाच
राजा श्रान्तो जगतो विक्षतश्च कर्णेन संख्ये निशितैर्बाणसंघैः
तस्मात्पार्थ त्वां परुषाण्यवोचत्कर्णे द्यूतं ह्यद्य रणे निबद्धम् ६४
तस्मिन्हते कुरवो निर्जिताः स्युरेवंबुद्धिः पार्थिवे धर्मपुत्रः
यदावमानं लभते महान्तं तदा जीवन्मृत इत्युच्यते सः ६५
तन्मानितः पार्थिवोऽय सदैव त्वया सभीमेन तथा यमाभ्याम्
वृद्धैश्च लोके पुरुषप्रवीरैस्तस्यावमानं कलया त्वं प्रयुङ्क्ष्व ६६
त्वमित्यत्रभवन्तं त्वं ब्रूहि पार्थ युधिष्ठिरम्
त्वमित्युक्तो हि निहतो गुरुर्भवति भारत ६७
एवमाचर कौन्तेय धर्मराजे युधिष्ठिरे
अधर्मयुक्तं संयोगं कुरुष्वैवं कुरूद्वह ६८
अथर्वाङ्गिरसी ह्येषा श्रुतीनामुत्तमा श्रुतिः
अविचार्यैव कार्यैषा श्रेयःकामैर्नरैः सदा ६९
वधो ह्ययं पाण्डव धर्मराज्ञस्त्वत्तो युक्तो वेत्स्यते चैवमेषः
ततोऽस्य पादावभिवाद्य पश्चाच्छमं ब्रूयाः सान्त्वपूर्वं च पार्थम् ७०
भ्राता प्राज्ञस्तव कोपं न जातु कुर्याद्राजा कंचन पाण्डवेयः
मुक्तोऽनृताद्भ्रातृवधाच्च पार्थ हृष्टः कर्णं त्वं जहि सूतपुत्रम् ७१
सञ्जय उवाच
इत्येवमुक्तस्तु जनार्दनेन पार्थः प्रशस्याथ सुहृद्वधं तम्
ततोऽब्रवीदर्जुनो धर्मराजमनुक्त पूर्वं पुरुषं प्रसह्य ७२
मा त्वं राजन्व्याहर व्याहरत्सु न तिष्ठसे क्रोशमात्रे रणार्धे

भीमस्तु मामर्हति गर्हणाय यो युध्यते सर्वयोधप्रवीरः ७३
काले हि शत्रून्प्रतिपीड्य संख्ये हत्वा च शूरान्पृथिवीपतींस्तान्
यः कुञ्जराणामधिकं सहस्रं हत्वानदत्तुमुलं सिंहनादम् ७४
सुदुष्करं कर्म करोति वीरः कर्तुं यथा नार्हसि त्वं कदाचित्
रथादवप्लुत्य गदां परामृशंस्तया निहन्त्यश्वनरद्विपान्रणे ७५
वरासिना वाजिरथाश्वकुञ्जरांस्तथा रथाङ्गैर्धनुषा च हन्त्यरीन्
प्रमृद्य पद्मामहितान्निहन्ति यः पुनश्च दोर्भ्यां शतमन्युविक्रमः ७६
महाबलो वैश्रवणान्तकोपमः प्रसह्य हन्ता द्विषतां यथार्हम्
स भीमसेनोऽहति गर्हणां मे न त्वं नित्यं रक्ष्यसे यः सुहृद्भिः ७७
महारथान्नागरान्हयांश्च पदातिमुख्यानपि च प्रमथ्य
एको भीमो धार्तराष्ट्रेषु मग्नः स मामुपालब्धुमरिंदमोऽहति ७८
कलिङ्गवङ्गाङ्गनिषादमागधान्सदामदान्नीलबलाहकोपमान्
निहन्ति यः शत्रुगणाननेकशः स माभिवक्तुं प्रभवत्यनागसम् ७९
सुयुक्तमास्थाय रथं हि काले धनुर्विकर्षञ्शरपूर्णमुष्टिः
सृजत्यसौ शरवर्षाणि वीरो महाहवे मेघ इवाम्बुधाराः ८०
बलं तु वाचि द्विजसत्तमानां क्षात्रं बुधा बाहुबलं वदन्ति
त्वं वाग्बलो भारत निष्ठुरश्च त्वमेव मां वेत्सि यथाविधोऽहम् ८१
यतामि नित्यं तव कर्तुमिष्टं दारैः सुतैर्जीवितेनात्मना च
एवं च मां वाग्विशिखैर्निहंसि त्वत्तः सुखं न वयं विद्म किञ्चित् ८२
अवामंस्था मां द्रौपदीतल्पसंस्थो महारथान्प्रतिहन्मि त्वदर्थे
तेनातिशङ्की भारत निष्ठुरोऽसि त्वत्तः सुखं नाभिजानामि किञ्चित् ८३
प्रोक्तःस्वयं सत्यसंधेन मृत्युस्तव प्रियार्थं नरदेव युद्धे
वीरः शिखण्डी द्रौपदोऽसौ महात्मा मयाभिगुप्तेन हतश्च तेन ८४
न चाभिनन्दामि तवाधिराज्यं यतस्त्वमक्षेष्वहिताय सक्तः
स्वयं कृत्वा पापमनार्यजुष्टमेभिर्युद्धे तर्तुमिच्छस्यरींस्तु ८५
अक्षेषु दोषा बहवो विधर्माः श्रुतास्त्वया सहदेवोऽब्रवीद्यान्
तान्नैषि संतर्तुमसाधुजुष्टान्येन स्म सर्वे निरयं प्रपन्नाः ८६
त्वं देविता त्वत्कृते राज्यनाशस्त्वत्संभवं व्यसनं नो नरेन्द्र
मास्मान्क्रूरैर्वाक्प्रतोदैस्तुद त्वं भूयो राजन्कोपयन्नल्पभाग्यान् ८७
एता वाचः परुषाः सव्यसाची स्थिरप्रज्ञं श्रावयित्वा ततक्ष

तदानुतेपे सुरराजपुत्रो विनिःश्वसंश्चाप्यसिमुद्बबर्ह ८८
तमाह कृष्णः किमिदं पुनर्भवान्विकोशमाकाशनिभं करोत्यसिम्
प्रब्रूहि सत्यं पुनरुत्तरं विधेर्वचः प्रवक्ष्याम्यहमर्थसिद्धये ८९
इत्येव पृष्टः पुरुषोत्तमेन सुदुःखितः केशवमाह वाक्यम्
अहं हनिष्ये स्वशरीरमेव प्रसह्य येनाहितमाचरं वै ९०
निशम्य तत्पार्थवचोऽब्रवीदिदं धनंजयं धर्मभृतां वरिष्ठः
प्रब्रूहि पार्थ स्वगुणानिहात्मनस्तथा स्वहार्दं भवतीह सद्यः ९१
तथास्तु कृष्णेत्यभिनन्द्य वाक्यं धनंजयः प्राह धनुर्विनाम्य
युधिष्ठिरं धर्मभृतां वरिष्ठं शृणुष्व राजन्निति शक्रसूनुः ९२
न मादृशोऽन्यो नरदेव विद्यते धनुर्धरो देवमृते पिनाकिनम्
अहं हि तेनानुमतो महात्मना क्षणेन हन्यां सचराचरं जगत् ९३
मया हि राजन्सदिगीश्वरा दिशो विजित्य सर्वा भवतः कृता वशे
स राजसूयश्च समाप्तदक्षिणः सभा च दिव्या भवतो ममौजसा ९४
पाणौ पृषत्का लिखिता ममेमे धनुश्च संख्ये विततं सबाणम्
पादौ च मे सशरौ सहध्वजौ न मादृशं युद्धगतं जयन्ति ९५
हता उदीच्या निहताः प्रतीच्याः प्राच्या निरस्ता दाक्षिणात्या विशस्ताः
संशप्तकानां किञ्चिदेवावशिष्टं सर्वस्य सैन्यस्य हतं मयार्धम् ९६
शेते मया निहता भारती च चमू राजन्देवचमूप्रकाशा
ये नास्त्रज्ञास्तानहं हन्मि शस्त्रैस्तस्माल्लोकं नेह करोमि भस्मसात् ९७
इत्येवमुक्त्वा पुनराह पार्थो युधिष्ठिरं धर्मभृतां वरिष्ठम्
अद्यापुत्रा तेन राधा भवित्री कुन्ती मया वा तदृतं विद्धि राजन्
प्रसीद राजन्क्षम यन्मयोक्तं काले भवान्वेत्स्यति तन्नमस्ते ९८
प्रसाद्य राजानममित्रसाहं स्थितोऽब्रवीच्चैनमभिप्रपन्नः
याम्येष भीमं समरात्प्रमोक्तुं सर्वात्मना सूतपुत्रं च हन्तुम् ९९
तव प्रियार्थं मम जीवितं हि ब्रवीमि सत्यं तदवेहि राजन्
इति प्रायादुपसंगृह्य पादौ समुत्थितो दीप्ततेजाः किरीटी
नेदं चिरात्क्षिप्रमिदं भविष्यत्यावर्ततेऽसावभियामि चैनम् १००
एतच्छ्रुत्वा पाण्डवो धर्मराजो भ्रातुर्वाक्यं परुषं फल्गुनस्य
उत्थाय तस्माच्छयनादुवाच पार्थं ततो दुःखपरीतचेताः १०१
कृतं मया पार्थ यथा न साधु येन प्राप्तं व्यसनं वः सुघोरम्

तस्माच्छिरश्छिन्द्धि ममेदमद्य कुलान्तकस्याधमपूरुषस्य १०२
पापस्य पापव्यसनान्वितस्य विमूढबुद्धेरलसस्य भीरोः
वृद्धावमन्तुः परुषस्य चैव किं ते चिरं मामनुवृत्य रूक्षम् १०३
गच्छाम्यहं वनमेवाद्य पापः सुखं भवान्वर्ततां मद्विहीनः
योग्यो राजा भीमसेनो महात्मा क्लीबस्य वा मम किं राज्यकृत्यम् १०४
न चास्मि शक्तः परुषाणि सोढुं पुनस्तवेमानि रुषान्वितस्य
भीमोऽस्तु राजा मम जीवितेन किं कार्यमद्यावमतस्य वीर १०५
इत्येवमुक्त्वा सहसोत्पपात राजा ततस्तच्छयनं विहाय
इयेष निर्गन्तुमथो वनाय तं वासुदेवः प्रणतोऽभ्युवाच १०६
राजन्विदितमेतत्ते यथा गाण्डीवधन्वनः
प्रतिज्ञा सत्यसंधस्य गाण्डीवं प्रति विश्रुता १०७
ब्रूयाद्य एवं गाण्डीवं देह्यन्यस्मै त्वमित्युत
स वध्योऽस्य पुमाँल्लोके त्वया चोक्तोऽयमीदृशम् १०८
अतः सत्यां प्रतिज्ञां तां पार्थेन परिरक्षता
मच्छन्दादवमानोऽय कृतस्तव महीपते
गुरूणामवमानो हि वध इत्यभिधीयते १०९
तस्मात्त्वं वै महाबाहो मम पार्थस्य चोभयोः
व्यतिक्रममिमं राजन् संक्षमस्वार्जुनं प्रति ११०
शरणं त्वां महाराज प्रपन्नौ स्व उभावपि
क्षन्तुमर्हसि मे राजन्प्रणतस्याभियाचतः १११
राधेयस्याद्य पापस्य भूमिः पास्यति शोणितम्
सत्यं ते प्रतिजानामि हतं विद्ध्यद्य सूतजम्
यस्येच्छसि वधंतस्य गतमेवाद्य जीवितम् ११२
इति कृष्णवचः श्रुत्वा धर्मराजो युधिष्ठिरः
ससंभ्रमं हृषीकेशमुत्थाप्य प्रणतं तदा
कृताञ्जलिमिदं वाक्यमुवाचानन्तरं वचः ११३
एवमेतद्यथात्थ त्वमस्त्येषोऽतिक्रमो मम
अनुनीतोऽस्मि गोविन्द तारितश्चाद्य माधव
मोक्षिता व्यसनाद्घोराद्वयमद्य त्वयाच्युत ११४
भवन्तं नाथमासाद्य आवां व्यसनसागरात्

घोरादद्य समुत्तीर्णावुभावज्ञानमोहितौ ११५
त्वद्बुद्धिप्लवमासाद्य दुःखशोकार्णवाद्वयम्
समुत्तीर्णाः सहामात्याः सनाथाः स्म त्वयाच्युत ११६
इति श्रीमहाभारते कर्णपर्वणि एकोनपञ्चाशोऽध्यायः ८९

पञ्चाशोऽध्यायः

सञ्जय उवाच
इति स्म कृष्णवचनात्प्रत्युच्चार्य युधिष्ठिरम्
बभूव विमनाः पार्थः किंचित्कृत्वेव पातकम् १
ततोऽब्रवीद्वासुदेवः प्रहसन्निव पाण्डवम्
कथं नाम भवेदेतद्यदि त्वं पार्थ धर्मजम्
असिना तीक्ष्णधारेण हन्या धर्मे व्यवस्थितम् २
त्वमित्युक्त्वैव राजानमेवं कश्मलमाविशः
हत्वा तु नृपतिं पार्थ अकरिष्यः किमुत्तरम्
एवं सुदुर्विदो धर्मो मन्दप्रज्ञैर्विशेषतः ३
स भवान्धर्मभीरुत्वाद्ध्रुवमैष्यन्महत्तमः
नरकं घोररूपं च भ्रातुर्ज्येष्ठस्य वै वधात् ४
स त्वं धर्मभृतां श्रेष्ठं राजानं धर्मसंहितम्
प्रसादय कुरुश्रेष्ठमेतदत्र मतं मम ५
प्रसाद्य भक्त्या राजानं प्रीतं चैव युधिष्ठिरम्
प्रयामस्त्वरिता योद्धुं सूतपुत्ररथं प्रति ६
हत्वा सुदुर्जयं कर्णं त्वमद्य निशितैः शरैः
विपुलां प्रीतिमाधत्स्व धर्मपुत्रस्य मानद ७
एतदत्र महाबाहो प्राप्तकालं मतं मम
एवंकृते कृतंचैव तवकार्यं भविष्यति ८
ततोऽर्जुनो महाराज लज्जया वै समन्वितः
धर्मराजस्य चरणौ प्रपेदे शिरसानघ ९
उवाच भरतश्रेष्ठ प्रसीदेति पुनः पुनः
क्षमस्व राजन्यत्प्रोक्तं धर्मकामेन भीरुणा १०
पादयोः पतितं दृष्ट्वा धर्मराजो युधिष्ठिरः

धनंजयममित्रघ्नं रुदन्तं भरतर्षभ ११
उत्थाप्य भ्रातरं राजा धर्मराजो धनंजयम्
समाश्लिष्य च सस्नेहं प्ररुरोद महीपतिः १२
रुदित्वा तु चिरं कालं भ्रातरौ सुमहाद्युती
कृतशौचौ नरव्याघ्रौ प्रीतिमन्तौ बभूवतुः १३
तत आश्लिष्य स प्रेम्णा मूर्ध्नि चाघ्राय पाण्डवम्
प्रीत्या परमया युक्तः प्रस्मयंश्चाब्रवीज्जयम् १४
कर्णेन मे महाबाहो सर्वसैन्यस्य पश्यतः
कवचं च ध्वजश्चैव धनुः शक्तिर्हया गदा
शरैः कृत्ता महेष्वास यतमानस्य संयुगे १५
सोऽह ज्ञात्वा रणे तस्य कर्म दृष्ट्वा च फल्गुन
व्यवसीदामि दुःखेन न च मे जीवितं प्रियम् १६
तमद्य यदि वै वीर न हनिष्यसि सूतजम्
प्राणानेव परित्यक्ष्ये जीवितार्थो हि को मम १७
एवमुक्तः प्रत्युवाच विजयो भरतर्षभ
सत्येन ते शपे राजन्प्रसादेन तवैव च
भीमेन च नरश्रेष्ठ यमाभ्यां च महीपते १८
यथाद्य समरे कर्णं हनिष्यामि हतोऽथ वा
महीतले पतिष्यामि सत्येनायुधमालभे १९
एवमाभाष्य राजानमब्रवीन्माधवं वचः
अद्य कर्णं रणे कृष्ण सूदयिष्ये न संशयः
तदनुध्याहि भद्रं ते वधं तस्य दुरात्मनः २०
एवमुक्तोऽब्रवीत्पार्थं केशवो राजसत्तम
शक्तोऽस्मि भरतश्रेष्ठ यत्नं कर्तुं यथाबलम् २१
एवं चापि हि मे कामो नित्यमेव महारथ
कथं भवान्रणे कर्णं निहन्यादिति मे मतिः २२
भूयश्चोवाच मतिमान्माधवो धर्मनन्दनम्
युधिष्ठिरेमं बीभत्सुं त्वं सान्त्वयितुमर्हसि
अनुज्ञातुं च कर्णस्य वधायाद्य दुरात्मनः २३
श्रुत्वा ह्ययमहं चैव त्वां कर्णशरपीडितम्

प्रवृत्तिं ज्ञातुमायाताविह पाण्डवनन्दन २४
दिष्ट्यासि राजन्निरुजो दिष्ट्या न ग्रहणं गतः
परिसान्त्वय बीभत्सुं जयमाशाधि चानघ २५
युधिष्ठिर उवाच
एह्येहि पार्थ बीभत्सो मां परिष्वज पाण्डव
वक्तव्यमुक्तोऽस्म्यहितं त्वया क्षान्तं च तन्मया २६
अहं त्वामनुजानामि जहि कर्णं धनंजय
मन्युं च मा कृथाः पार्थ यन्मयोक्तोऽसि दारुणम् २७
सञ्जय उवाच
ततो धनंजयो राजञ्शिरसा प्रणतस्तदा
पादौ जग्राह पाणिभ्यां भ्रातुर्ज्येष्ठस्य मारिष २८
समुत्थाप्य ततो राजा परिष्वज्य च पीडितम्
मूर्ध्न्युपाघ्राय चैवेनमिदं पुनरुवाच ह २९
धनंजय महाबाहो मानितोऽस्मि दृढं त्वया
माहात्म्यं विजयं चैव भूयः प्राप्नुहि शाश्वतम् ३०
अर्जुन उवाच
अद्य तं पापकर्माणं सानुबन्धं रणे शरैः
नयाम्यन्तं समासाद्य राधेयं बलगर्वितम् ३१
येन त्वं पीडितो बाणैर्दृढमायम्य कार्मुकम्
तस्याद्य कर्मणः कर्णः फलं प्राप्स्यति दारुणम् ३२
अद्य त्वामहमेष्यामि कर्णं हत्वा महीपते
सभाजयितुमाक्रन्दादिति सत्यं ब्रवीमि ते ३३
नाहत्वा विनिवर्तेऽहं कर्णमद्य रणाजिरात्
इति सत्येन ते पादौ स्पृशामि जगतीपते ३४
सञ्जय उवाच
प्रसाद्य धर्मराजानं प्रहृष्टेनान्तरात्मना
पार्थः प्रोवाच गोविन्दं सूतपुत्रवधोद्यतः ३५
कल्प्यतां च रथो भूयो युज्यन्तां च हयोत्तमाः
आयुधानि च सर्वाणि सज्ज्यन्तां वै महारथे ३६
उपावृत्ताश्च तुरगाः शिक्षिताश्चाश्वसादिनः

रथोपकरणैः सर्वैरुपायान्तु त्वरान्विताः ३७
एवमुक्ते महाराज फल्गुनेन महात्मना
उवाच दारुकं कृष्णः कुरु सर्वं यथाब्रवीत्
अर्जुनो भरतश्रेष्ठः श्रेष्ठःसर्वधनुष्मताम् ३८
आज्ञप्तस्त्वथ कृष्णेन दारुको राजसत्तम
योजयामास स रथं वैयाघ्रं शत्रुतापनम् ३९
युक्तं तु रथमास्थाय दारुकेण महात्मना
आपृच्छ्य धर्मराजानं ब्राह्मणान्स्वस्ति वाच्य च
समङ्गलस्वस्त्ययनमारुरोह रथोत्तमम् ४०
तस्य राजा महाप्राज्ञो धर्मराजो युधिष्ठिरः
आशिषोऽयुङ्क्त परमा युक्ताः कर्णवधं प्रति ४१
तं प्रयान्तं महेष्वासं दृष्ट्वा भूतानि भारत
निहतं मेनिरे कर्णं पाण्डवेन महात्मना ४२
बभूवुर्विमलाः सर्वा दिशो राजन्समन्ततः
चाषाश्च शतपत्राश्च क्रौञ्चाश्चैव जनेश्वर
प्रदक्षिणमकुर्वन्त तदा वै पाण्डुनन्दनम् ४३
बहवः पक्षिणो राजन्पुंनामानः शुभाः शिवाः
त्वरयन्तोऽजुनं युद्धे हृष्टरूपा ववाशिरे ४४
कङ्का गृध्रा वडाश्चैव वायसाश्च विशां पते
अग्रतस्तस्य गच्छन्ति भक्ष्यहेतोर्भयानकाः ४५
निमित्तानि च धन्यानि पार्थस्य प्रशशंसिरे
विनाशमरिसैन्यानां कर्णस्य च वधं तथा ४६
प्रयातस्याथ पार्थस्य महान्स्वेदो व्यजायत
चिन्ता च विपुला यज्ञे कथं न्वेतद्भविष्यति ४७
ततो गाण्डीवधन्वानमब्रवीन्मधुसूदनः
दृष्ट्वा पार्थं तदायस्तं चिन्तापरिगतं तदा ४८
गाण्डीवधन्वन्संग्रामे ये त्वया धनुषा जिताः
न तेषां मानुषो जेता त्वदन्य इह विद्यते ४९
दृष्टा हि बहवः शूराः शक्रतुल्यपराक्रमाः
त्वां प्राप्य समरे वीरं ते गताः परमां गतिम् ५०

को हि द्रोणं च भीष्मं च भगदत्तं च मारिष
विन्दानुविन्दावावन्त्यौ काम्बोजं च सुदक्षिणम् ५१
श्रुतायुषं महावीर्यमच्युतायुषमेव च
प्रत्युद्गम्य भवेत्क्षेमी यो न स्यात्त्वमिव क्षमी ५२
तव ह्यस्त्राणि दिव्यानि लाघवं बलमेव च
वेधः पातश्च लक्षश्च योगश्चैव तवार्जुन
असंमोहश्च युद्धेषु विज्ञानस्य च संनतिः ५३
भवान्देवासुरान्सर्वान्हन्यात्सहचराचरान्
पृथिव्यां हि रणे पार्थ न योद्धा त्वत्समः पुमान् ५४
धनुर्ग्रहा हि ये केचित्क्षत्रिया युद्धदुर्मदाः
आ देवात्त्वत्समं तेषां न पश्यामि शृणोमि वा ५५
ब्रह्मणा च प्रजाः सृष्टा गाण्डीवं च महाद्भुतम्
येन त्वं युध्यसे पार्थ तस्मान्नास्ति त्वया समः ५६
अवश्यं तु मया वाच्यं यत्पथ्यं तव पाण्डव
मावमंस्था महाबाहो कर्णमाहवशोभिनम् ५७
कर्णो हि बलवान्धृष्टः कृतास्त्रश्च महारथः
कृती च चित्रयोधी च देशे काले च कोविदः ५८
तेजसा वह्निसदृशो वायुवेगसमो जवे
अन्तकप्रतिमः क्रोधे सिंहसंहननो बली ५९
अयोरत्निर्महाबाहुर्व्यूढोरस्कः सुदुर्जयः
अतिमानी च शूरश्च प्रवीरः प्रियदर्शनः ६०
सर्वैर्योधगुणैर्युक्तो मित्राणामभयंकरः
सततं पाण्डवद्वेषी धार्तराष्ट्रहिते रतः ६१
सर्वैरवध्यो राधेयो देवैरपि सवासवैः
ऋते त्वामिति मे बुद्धिस्त्वमद्य जहि सूतजम् ६२
देवैरपि हि संयत्तैर्बिभ्रद्भिर्मांसशोणितम्
अशक्यः समरे जेतुं सर्वैरपि युयुत्सुभिः ६३
दुरात्मानं पापमतिं नृशंसं दुष्टप्रज्ञं पाण्डवेयेषु नित्यम्
हीनस्वार्थं पाण्डवेयैर्विरोधे हत्वा कर्णं धिष्ठितार्थो भवाद्य ६४
वीरं मन्यत आत्मानं येन पापः सुयोधनः

तमद्य मूलं पापानां जय सौतिं धनंजय ६५
इति श्रीमहाभारते कर्णपर्वणि पञ्चाशत्तमोऽध्यायः ५०

एक पञ्चाशोऽध्यायः

सञ्जय उवाच
ततः पुनरमेयात्मा केशवोऽजुनमब्रवीत्
कृतसंकल्पमायस्तं वधे कर्णस्य सर्वशः १
अद्य सप्तदशाहानि वर्तमानस्य भारत
विनाशस्यातिघोरस्य नरवारणवाजिनाम् २
भूत्वा हि विपुला सेना तावकानां परैः सह
अन्योन्यं समरे प्राप्य किंचिच्छेषा विशां पते ३
भूत्वा हि कौरवाः पार्थ प्रभूतगजवाजिनः
त्वां वै शत्रुं समासाद्य विनष्टा रणमूर्धनि ४
एते च सर्वे पञ्चालाः सृञ्जयाश्च सहान्वयाः
त्वां समासाद्य दुर्धर्षं पाण्डवाश्च व्यवस्थिताः ५
पाञ्चालैः पाण्डवैर्मत्स्यैः कारूषैश्चेदि केकयैः
त्वयागुप्तैरमित्रघ्न कृतः शत्रुगणक्षयः ६
को हि शक्तो रणे जेतुं कौरवांस्तात संगतान्
अन्यत्र पाण्डवान्युद्धे त्वया गुप्तान्महारथान् ७
त्वं हि शक्तो रणे जेतुं ससुरासुरमानुषान्
त्रीँल्लोकान्सममुद्युक्तान्किं पुनः कौरवं बलम् ८
भगदत्तं हि राजानं कोऽन्य शक्तस्त्वया विना
जेतुं पुरुषशार्दूल योऽपि स्याद्वासवोपमः ९
तथेमां विपुलां सेनां गुप्तां पार्थ त्वयानघ
न शेकुः पार्थिवाः सर्वे चक्षुर्भिरभिवीक्षितुम् १०
तथैव सततं पार्थ रक्षिताभ्यां त्वया रणे
धृष्टद्युम्नशिखण्डिभ्यां भीष्मद्रोणौ निपातितौ ११
को हि शक्तो रणे पार्थ पाञ्चालानां महारथौ
भीष्मद्रोणौ युधा जेतुं शक्रतुल्यपराक्रमौ १२
को हि शांतनवं संख्ये द्रोणं वैकर्तनं कृपम्

द्रौणिं च सौमदत्तिं च कृतवर्माणमेव च
सैन्धवं मद्रराजं च राजानं च सुयोधनम् १३
वीरान्कृतास्त्रान्समरे सर्वानेवानुवर्तिनः
अक्षौहिणीपतीनुग्रान्संरब्धान्युद्धदुर्मदान् १४
श्रेण्यश्च बहुलाः क्षीणाः प्रदीर्णाश्वरथद्विपाः
नानाजनपदाश्चोग्राः क्षत्रियाणाममर्षिणाम् १५
गोवासदासमीयानां वसातीनां च भारत
व्रात्यानां वाटधानानां भोजानां चापि मानिनाम् १६
उदीर्णाश्च महासेना ब्रह्मक्षत्रस्य भारत
त्वां समासाद्य निधनं गताः साश्वरथद्विपाः १७
उग्राश्च क्रूरकर्माणस्तुखारा यवनाः खशाः
दार्वाभिसारा दरदाः शंका रमठतङ्गणाः १८
अन्ध्रकाश्च पुलिन्दाश्च किराताश्चोग्रविक्रमाः
म्लेच्छाश्च पार्वतीयाश्च सागरानूपवासिनः
संरम्भिणो युद्धशौण्डा बलिनो दृब्धपाणयः १९
एते सुयोधनस्यार्थे संरब्धाः कुरुभिः सह
न शक्या युधि निर्जेतुं त्वदन्येन परंतप २०
धार्तराष्ट्रमुदग्रं हि व्यूढं दृष्ट्वा महाबलम्
यस्य त्वं न भवेस्त्राता प्रतीयात्को नु मानवः २१
तत्सागरमिवोद्धूतं रजसा संवृतं बलम्
विदार्य पाण्डवैः क्रुद्धैस्त्वया गुप्तैर्हतं विभो २२
मागधानामधिपतिर्जयत्सेनो महाबलः
अद्य सप्तैव चाहानि हतः संख्येऽभिमन्युना २३
ततो दश सहस्राणि गजानां भीमकर्मणाम्
जघान गदया भीमस्तस्य राज्ञः परिच्छदम्
ततोऽन्येऽपि हता नागा रथाश्च शतशो बलात् २४
तदेवं समरे तात वर्तमाने महाभये
भीमसेनं समासाद्य त्वां च पाण्डव कौरवाः
सवाजिरथनागाश्च मृत्युलोकमितो गताः २५
तथा सेनामुखे तत्र निहते पार्थ पाण्डवैः

भीष्मः प्रासृजदुग्राणि शरवर्षाणि मारिष २६
स चेदिकाशिपाञ्चालान्करूषान्मत्स्यकेकयान्
शरैः प्रच्छाद्य निधनमनयत्पुरुषास्त्रवित् २७
तस्य चापच्युतैर्बाणैः परदेहविदारणैः
पूर्णमाकाशमभवद्रुक्मपुङ्खैरजिह्मगैः २८
गत्या दशम्या ते गत्वा जघ्नुर्वाजिरथद्विपान्
हित्वा नव गतीर्दुष्टाः स बाणान्व्यायतोऽमुचत् २९
दिनानि दश भीष्मेण निघ्नता तावकं बलम्
शून्याः कृता रथोपस्था हताश्च गजवाजिनः ३०
दर्शयित्वात्मनो रूपं रुद्रोपेन्द्रसमं युधि
पाण्डवानामनीकानि प्रविगाह्य व्यशातयत् ३१
विनिघ्नन्पृथिवीपालांश्चेदिपाञ्चालकेकयान्
व्यदहत्पाण्डवीं सेनां नराश्वगजसंकुलाम् ३२
मज्जन्तमप्लवे मन्दमुज्जिहीर्षुः सुयोधनम्
तथा चरन्तं समरे तपन्तमिव भास्करम्
न शेकुः सृञ्जया द्रष्टुं तथैवान्ये महीक्षितः ३३
विचरन्तं तथा तं तु संग्रामे जितकाशिनम्
सर्वोद्योगेन सहसा पाण्डवाः समुपाद्रवन् ३४
स तु विद्राव्य समरे पाण्डवान्सृञ्जयानपि
एक एव रणे भीष्म एकवीरत्वमागतः ३५
तं शिखण्डी समासाद्य त्वया गुप्तो महारथम्
जघान पुरुषव्याघ्रं शरैः संनतपर्वभिः ३६
स एष पतितः शेते शरतल्पे पितामहः
त्वां प्राप्य पुरुषव्याघ्र गृध्रः प्राप्येव वायसम् ३७
द्रोणः पञ्च दिनान्युग्रो विधम्य रिपुवाहिनीः
कृत्वा व्यूहं महायुद्धे पातयित्वा महारथान् ३८
जयद्रथस्य समरे कृत्वा रक्षां महारथः
अन्तकप्रतिमश्चोग्रां रात्रिं युद्ध्वादहत्प्रजाः ३९
अद्येति द्वे दिने वीरो भारद्वाजः प्रतापवान्
धृष्टद्युम्नं समासाद्य स गतः परमां गतिम् ४०

यदि चैव परान्युद्धे सूतपुत्रमुखान्रथान्
नावारयिष्यः स्नंगामे न स्म द्रोणो व्यनङ्क्ष्यत ४१
भवता तु बलं सर्वं धार्तराष्ट्रस्य वारितम्
ततो द्रोणो हतो युद्धे पार्षतेन धनंजय ४२
क इवान्यो रणे कुर्यात्त्वदन्यः क्षत्रियो युधि
यादृशं ते कृतं पार्थ जयद्रथवधं प्रति ४३
निवार्य सेनां महतीं हत्वा शूरांश्च पार्थिवान्
निहतः सैन्धवो राजा त्वयास्त्रबलतेजसा ४४
आश्चर्यं सिन्धुराजस्य वधं जानन्ति पार्थिवाः
अनाश्चर्यं हि तत्त्वत्तस्त्वं हि पार्थ महारथः ४५
त्वां हि प्राप्य रणे क्षत्रमेकाहादिति भारत
तप्यमानमसंयुक्तं न भवेदिति मे मतिः ४६
सैयं पार्थ चमूर्घोरा धार्तराष्ट्रस्य संयुगे
हता ससर्ववीरा हि भीष्मद्रोणौ यदा हतौ ४७
शीर्णप्रवरयोधाद्य हतवाजिनरद्विपा
हीना सूर्येन्दुनक्षत्रैर्द्यौरिवाभाति भारती ४८
विध्वस्ता हि रणे पार्थ सेनेयं भीमविक्रमात्
आसुरीव पुरा सेना शक्रस्येव पराक्रमैः ४९
तेषां हतावशिष्टास्तु पञ्च सन्ति महारथाः
अश्वत्थामा कृतवर्मा कर्णो मद्राधिपः कृपः ५०
तांस्त्वमद्य नरव्याघ्र हत्वा पञ्च महारथान्
हतामित्रः प्रयच्छोर्वीं राज्ञः सद्वीपपत्तनाम् ५१
साकाशजलपातालां सपर्वतमहावनाम्
प्राप्नोत्वमितवीर्यश्रीरद्य पार्थो वसुंधराम् ५२
एतां पुरा विष्णुरिव हत्वा दैतेयदानवान्
प्रयच्छ मेदिनीं राज्ञे शक्रायेव यथा हरिः ५३
अद्य मोदन्तु पाञ्चाला निहतेष्वरिषु त्वया
विष्णुना निहतेष्वेव दानवेयेषु देवताः ५४
यदि वा द्विपदां श्रेष्ठ द्रोणं मानयतो गुरुम्
अश्वत्थाम्नि कृपा तेऽस्ति कृपे चाचार्यगौरवात् ५५

अन्यन्तोपचितान्वा त्वं मानयन्भ्रातृबान्धवान्
कृतवर्माणमासाद्य न नेष्यसि यमक्षयम् ५६
भ्रातरं मातुरासाद्य शल्यं मद्रजनाधिपम्
यदि त्वमरविन्दाक्ष दयावान्न जिघांससि ५७
इमं पापमतिं क्षुद्रमत्यन्तं पाण्डवान्प्रति
कर्णमद्य नरश्रेष्ठ जह्याशु निशितैः शरैः ५८
एतत्ते सुकृतं कर्म नात्र किंचिन्न युज्यते
वयमप्यत्र जानीमो नात्र दोषोऽस्ति कश्चन ५९
दहने यत्सपुत्राया निशि मातुस्तवानघ
द्यूतार्थे यच्च युष्मासु प्रावर्तत सुयोधनः
तत्र सर्वत्र दुष्टात्मा कर्णो मूलमिहार्जुन ६०
कर्णाद्धि मन्यते त्राणं नित्यमेव सुयोधनः
ततो मामपि संरब्धो निग्रहीतुं प्रचक्रमे ६१
स्थिरा बुद्धिर्नरेन्द्रस्य धार्तराष्ट्रस्य मानद
कर्णः पार्थान्रणे सर्वान्विजेष्यति न संशयः ६२
कर्णमाश्रिय कौन्तेय धार्तराष्ट्रेण विग्रहः
रोचितो भवता सार्धं जानतापि बलं तव ६३
कर्णो हि भाषते नित्यमहं पार्थान्समागतान्
वासुदेवं सराजानं विजेष्यामि महारणे ६४
प्रोत्साहयन्दुरात्मानं धार्तराष्ट्रं सुदुर्मतिः
समितौ गर्जते कर्णस्तमद्य जहि भारत ६५
यच्च युष्मासु पापं वै धार्तराष्ट्रः प्रयुक्तवान्
तत्र सर्वत्र दुष्टात्मा कर्णः पापमतिर्मुखम् ६६
यच्च तद्धार्तराष्ट्राणां क्रूरैः षड्भिर्महारथैः
अपश्यं निहतं वीरं सौभद्रमृषभेक्षणम् ६७
द्रोणद्रौणिकृपान्वीरान्कम्पयन्तो महारथान्
निर्मनुष्यांश्च मातङ्गान्विरथांश्च महारथान् ६८
व्यश्वारोहांश्च तुरगान्पत्तीन्व्यायुधजीवितान्
कुर्वन्तमृषभस्कन्धं कुरुवृष्णियशस्करम् ६९
विधमन्तमनीकानि व्यथयन्तं महारथान्

मनुष्यवाजिमातङ्गान्प्रहिणवन्तं यमक्षयम् ७०
शरैः सौभद्रमायस्तं दहन्तमिव वाहिनीम्
तन्मे दहति गात्राणि सखे सत्येन ते शपे ७१
यत्तत्रापि च दुष्टात्मा कर्णोऽभ्यद्रुह्यत प्रभो
अशक्नुवंश्चाभिमन्योः कर्णः स्थातुं रणेऽग्रतः ७२
सौभद्रशरनिर्भिन्नो विसंज्ञः शोणितोक्षितः
निःश्वसन्क्रोधसंदीप्तो विमुखः सायकार्दितः ७३
अपयानकृतोत्साहो निराशश्चापि जीविते
तस्थौ सुविह्वलः संख्ये प्रहारजनितश्रमः ७४
अथ द्रोणस्य समरे तत्कालसदृशं तदा
श्रुत्वा कर्णो वचः क्रूरं ततश्चिच्छेद कार्मुकम् ७५
ततश्छिन्नायुधं तेन रणे पञ्च महारथाः
स चैव निकृतिप्रज्ञः प्रावधीच्छरवृष्टिभिः ७६
यच्च कर्णोऽब्रवीत्कृष्णां सभायां परुषं वचः
प्रमुखे पाण्डवेयानां कुरूणां च नृशंसवत् ७७
विनष्टाः पाण्डवाः कृष्णे शाश्वतं नरकं गताः
पतिमन्यं पृथुश्रोणि वृणीष्व मितभाषिणि ७८
लेखाभ्रु धृतराष्ट्रस्य दासी भूत्वा निवेशनम्
प्रविशारालपक्ष्माक्षि न सन्ति पतयस्तव ७९
इत्युक्तवानधर्मज्ञस्तदा परमदुर्मतिः
पापः पापं वचः कर्णः शृणवतस्तव भारत ८०
तस्य पापस्य तद्वाक्यं सुवर्णविकृताः शराः
शमयन्तु शिलाधौतास्त्वयास्ता जीवितच्छिदः ८१
यानि चान्यानि दुष्टात्मा पापानि कृतवांस्त्वयि
तान्यद्य जीवितं चास्य शमयन्तु शरास्तव ८२
गाण्डीवप्रहितान्घ्रानद्य गात्रैः स्पृशञ्शरान्
कर्णः स्मरतु दुष्टात्मा वचनं द्रोणभीष्मयोः ८३
सुवर्णपुङ्खा नाराचाः शत्रुघ्ना वैद्युतप्रभाः
त्वयास्तास्तस्य मर्माणि भित्त्वा पास्यन्ति शोणितम् ८४
उग्रास्त्वद्भुजनिर्मुक्ता मर्म भित्त्वा शिताः शराः

अद्य कर्णं महावेगाः प्रेषयन्तु यमक्षयम् ८५
अद्य हाहाकृता दीना विषण्णास्त्वच्छरार्दिताः
प्रपतन्तं रथात्कर्णं पश्यन्तु वसुधाधिपाः ८६
अद्य स्वशोणिते मग्नं शयानं पतितं भुवि
अपविद्धायुधं कर्णं पश्यन्तु सुहृदो निजाः ८७
हस्तिकक्ष्यो महानस्य भल्लेनोन्मथितस्त्वया
प्रकम्पमानः पततु भूमावाधिरथेर्ध्वजः ८८
त्वया शरशतैश्छिन्नं रथं हेमविभूषितम्
हतयोधं समुत्सृज्य भीतः शल्यः पलायताम् ८९
ततः सुयोधनो दृष्ट्वा हतमाधिरथिं त्वया
निराशो जीविते त्वद्य राज्ये चैव धनंजय ९०
एते द्रवन्ति पाञ्चाला वध्यमानाः शितैः शरैः
कर्णेन भरतश्रेष्ठ पाण्डवानुज्जिहीर्षवः ९१
पाञ्चालान्द्रौपदेयांश्च धृष्टद्युम्नशिखण्डिनौ
धृष्टद्युम्नतनूजांश्च शतानीकं च नाकुलिम् ९२
नकुलं सहदेवं च दुर्मुखं जनमेजयम्
सुवर्माणं सात्यकिं च विद्धि कर्णवशं गतान् ९३
अभ्याहतानां कर्णेन पाञ्चालानां महारणे
श्रूयते निनदो घोरस्त्वद्बन्धूनां परंतप ९४
न त्वेव भीताः पाञ्चालाः कथंचित्स्युः पराङ्मुखाः
न हि मृत्युं महेष्वासा गणयन्ति महारथाः ९५
य एकः पाण्डवीं सेनां शरौघैः समवेष्टयत्
तं समासाद्य पाञ्चाला भीष्मं नासन्पराङ्मुखाः ९६
तथा ज्वलन्तमस्त्राग्निं गुरुं सर्वधनुष्मताम्
निर्दहन्तं समारोहन्दुर्धर्षं द्रोणमोजसा ९७
ते नित्यमुदिता जेतुं युद्धे शत्रूनरिंदमाः
न जात्वाधिरथेर्भीताः पाञ्चालाः स्युः पराङ्मुखाः ९८
तेषामापततां शूरः पाञ्चालानां तरस्विनाम्
आदत्तेऽसूञ्शरैः कर्णः पतंगानामिवानलः ९९
तांस्तथाभिमुखान्वीरान्मित्रार्थे त्यक्तजीवितान्

क्षयं नयति राधेयः पाञ्चालाञ्शतशो रणे १००
अस्त्रं हि रामात्कर्णेन भार्गवादृषिसत्तमात्
यदुपात्तं पुरा घोरं तस्य रूपमुदीर्यते १०१
तापनं सर्वसैन्यानां घोररूपं सुदारुणम्
समावृत्य महासेनां ज्वलति स्वेन तेजसा १०२
एते चरन्ति संग्रामे कर्णचापच्युताः शराः
भ्रमराणामिव व्रातास्तापयन्तः स्म तावकान् १०३
एते चरन्ति पाञ्चाला दिक्षु सर्वासु भारत
कर्णास्त्रं समरे प्राप्य दुर्निवारमनात्मभिः १०४
एष भीमो दृढक्रोधो वृतः पार्थ समन्ततः
सृञ्जयैर्योधयन्कर्णं पीडयते स्म शितैः शरैः १०५
पाण्डवान्सृञ्जयांश्चैव पाञ्चालांश्चैव भारत
हन्यादुपेक्षितः कर्णो रोगो देहमिवाततः १०६
नान्यं त्वत्तोऽभिपश्यामि योधं यौधिष्ठिरे बले
यः समासाद्य राधेयं स्वस्तिमानाव्रजेद्गृहम् १०७
तमद्य निशितैर्बाणैर्निहत्य भरतर्षभ
यथाप्रतिज्ञं पार्थ त्वं कृत्वा कीर्तिमवाप्नुहि १०८
त्वं हि शक्तो रणे जेतुं सकर्णानपि कौरवान्
नान्यो युधि युधां श्रेष्ठ सत्यमेतद्ब्रवीमि ते १०९
एतत्कृत्वा महत्कर्म हत्वा कर्णं महारथम्
कृतार्थः सफलः पार्थ सुखी भव नरोत्तम ११०
इति श्रीमहाभारते कर्णपर्वणि एकपञ्चाशोऽध्यायः ५१

## द्विपञ्चाशोऽध्यायः

सञ्जय उवाच
स केशवस्य बीभत्सुः श्रुत्वा भारत भाषितम्
विशोकः संप्रहृष्टश्च क्षणेन समपद्यत १
ततो ज्यामनुमृज्याशु व्याक्षिपद्गाण्डिवं धनुः
दध्रे कर्णविनाशाय केशवं चाभ्यभाषत २
त्वया नाथेन गोविन्द ध्रुव एष जयो मम

प्रसन्नो यस्य मेऽद्य त्वं भूतभव्यभवत्प्रभुः ३
त्वत्सहायो ह्यहं कृष्ण त्रीँल्लोकान्वै समागतान्
प्रापयेयं परं लोकं किमु कर्णं महारणे ४
पश्यामि द्रवतीं सेनां पाञ्चालानां जनार्दन
पश्यामि कर्णं समरे विचरन्तमभीतवत् ५
भार्गवास्त्रं च पश्यामि विचरन्तं समन्ततः
सृष्टं कर्णेन वार्ष्णेय शक्रेणेव महाशनिम् ६
अयं खलु स संग्रामो यत्र कृष्ण मया कृतम्
कथयिष्यन्ति भूतानि यावद्भूमिर्धरिष्यति ७
अद्य कृष्ण विकर्णा मे कर्णं नेष्यन्ति मृत्यवे
गाण्डीवमुक्ताः क्षिण्वन्तो मम हस्तप्रचोदिताः ८
अद्य राजा धृतराष्ट्रः स्वां बुद्धिमवमंस्यते
दुर्योधनमराज्यार्हं यया राज्येऽभ्यषेचयत् ९
अद्य राज्यात्सुखाच्चैव श्रियो राष्ट्रात्तथा पुरात्
पुत्रेभ्यश्च महाबाहो धृतराष्ट्रो वियोक्ष्यते १०
अद्य दुर्योधनो राजा जीविताच्च निराशकः
भविष्यति हते कर्णे कृष्ण सत्यं ब्रवीमि ते ११
अद्य दृष्ट्वा मया कर्णं शरैर्विशकलीकृतम्
स्मरतां तव वाक्यानि शमं प्रति जनेश्वरः १२
अद्यासौ सौबलः कृष्ण ग्लहं जानातु वै शरान्
दुरोदरं च गाण्डीवं मण्डलं च रथं मम १३
योऽसौ रणे नरं नान्यं पृथिव्यामभिमन्यते
तस्याद्य सूतपुत्रस्य भूमिः पास्यति शोणितम्
गाण्डीवसृष्टा दास्यन्ति कर्णस्य परमां गतिम् १४
अद्य तप्स्यति राधेयः पाञ्चालद्यं यत्तदाब्रवीत्
सभामध्ये वचः क्रूरं कुत्सयन्पाण्डवान्प्रति १५
ये वै षण्ढतिलास्तत्र भवितारोऽद्य ते तिलाः
हते वैकर्तने कर्णे सूतपुत्रे दुरात्मनि १६
अहं वः पाण्डुपुत्रेभ्यस्त्रास्यामीति यदब्रवीत्
अनृतं तत्करिष्यन्ति मामका निशिताः शराः १७

हन्ताहं पाण्डवान्सर्वान्सपुत्रानिति योऽब्रवीत्
तमद्य कर्णं हन्तास्मि मिषतां सर्वधन्विनाम् १८
यस्य वीर्ये समाश्वस्य धार्तराष्ट्रो बृहन्मनाः
अवामन्यत दुर्बुद्धिर्नित्यमस्मान्दुरात्मवान्
तमद्य कर्णं राधेयं हन्तास्मि मधुसूदन १९
अद्य कर्णे हते कृष्ण धार्तराष्ट्राः सराजकाः
विद्रवन्तु दिशो भीताः सिंहत्रस्ता मृगा इव २०
अद्य दुर्योधनो राजा पृथिवीमन्ववेक्षताम्
हते कर्णे मया संख्ये सपुत्रे ससुहृज्जने २१
अद्य कर्णं हतं दृष्ट्वा धार्तराष्ट्रोऽत्यमर्षणः
जानातु मां रणे कृष्ण प्रवरं सर्वधन्विनाम् २२
अद्याहमनृणः कृष्ण भविष्यामि धनुर्भृताम्
क्रोधस्य च कुरूणां च शराणां गाण्डिवस्य च २३
अद्य दुःखमहं मोक्ष्ये त्रयोदशसमार्जितम्
हत्वा कर्णं रणे कृष्ण शम्बरं मघवानिव २४
अद्य कर्णे हते युद्धे सोमकानां महारथाः
कृतं कार्यं च मन्यन्तां मित्रकार्येप्सवो युधि २५
न जाने च कथं प्रीतिः शैनेयस्याद्य माधव
भविष्यति हते कर्णे मयि चापि जयाधिके २६
अहं हत्वा रणे कर्णं पुत्रं चास्य महारथम्
प्रीतिं दास्यामि भीमस्य यमयोः सात्यकेरपि २७
धृष्टद्युम्नशिखण्डिभ्यां पाञ्चालानां च माधव
अद्यानृण्यं गमिष्यामि हत्वा कर्णं महारणे २८
अद्य पश्यन्तु संग्रामे धनंजयममर्षणम्
युध्यन्तं कौरवान्संख्ये पातयन्तं च सूतजम्
भवत्सकाशे वक्ष्ये च पुनरेवात्मसंस्तवम् २९
धनुर्वेदे मत्समो नास्ति लोके पराक्रमे वा मम कोऽस्ति तुल्यः
को वाप्यन्यो मत्समोऽस्ति क्षमायां तथा क्रोधे सदृशोऽन्यो न मेऽस्ति ३०
अहं धनुष्मानसुरान्सुरांश्च सर्वाणि भूतानि च सङ्गतानि
स्वबाहुवीर्याद्गमये पराभवं मत्पौरुषं विद्धि परः परेभ्यः ३१

शरार्चिषा गाण्डिवेनाहमेकः सर्वान्कुरूनबाह्लिकांश्चाभिपत्य
हिमात्यये कक्षगतो यथाग्निस्तथा दहेयं सगणान्प्रसह्य ३२
पाणौ पृषत्का लिखिता ममैते धनुश्च सव्ये निहितं सबाणम्
पादौ च मे सरथौ सध्वजौ च न मादृशं युद्धगतं जयन्ति ३३
इति श्रीमहाभारते कर्णपर्वणि द्विपञ्चाशोऽध्यायः ५२

त्रिपञ्चाशोऽध्यायः

सञ्जय उवाच
तेषामनीकानि बृहद्ध्वजानि रणे समृद्धानि समागतानि
गर्जन्ति भेरीनिनदोन्मुखानि मेघैर्यथा मेघगणास्तपान्ते १
महागजाभ्राकुलमस्त्रतोयं वादित्रनेमीतलशब्दवच्च
हिरण्यचित्रायुधवैद्युतं च महारथैरावृतशब्दवच्च २
तद्भीमवेगं रुधिरौघवाहि खड्गाकुलं क्षत्रियजीववाहि
अनार्तवं क्रूरमनिष्टवर्षं बभूव तत्संहरणं प्रजानाम् ३
रथान्ससूतान्सहयान्गजांश्च सर्वानरीन्मृत्युवशं शरौघैः
निन्ये हयांश्चैव तथा ससादीन्पदातिसंघांश्च तथैव पार्थः ४
कृपः शिखण्डी च रणे समेतौ दुर्योधनं सात्यकिरभ्यगच्छत्
श्रुतश्रवा द्रोणसुतेन सार्धं युधामन्युश्चित्रसेनेन चापि ५
कर्णस्य पुत्रस्तु रथी सुषेणं समागतः सृञ्जयांश्चोत्तमौजाः
गान्धारराजं सहदेवः क्षुधार्तो महर्षभं सिंह इवाभ्यधावत् ६
शतानीको नाकुलि कर्णपुत्रं युवा युवानं वृषसेनं शरौघैः
समार्दयत्कर्णसुतश्च वीरः पाञ्चालेयं शरवर्षैरनेकैः ७
रथर्षभः कृतवर्माणमार्च्छन्माद्रीपुत्रो नकुलश्चित्रयोधी
पाञ्चालानामधिपो याज्ञसेनिः सेनापतिं कर्णमार्च्छत्ससैन्यम् ८
दुःशासनो भारत भारती च संशप्तकानां पृतना समृद्धा
भीमं रणे शस्त्रभृतां वरिष्ठं तदा समार्च्छत्तमसह्य वेगम् ९
कर्णात्मजं तत्र जघान शूरस्तथाच्छिनच्चोत्तमौजाः प्रसह्य
तस्योत्तमाङ्गं निपपात भूमौ निनादयद्गां निनदेन खं च १०
सुषेणशीर्षं पतितं पृथिव्यां विलोक्य कर्णोऽथ तदार्तरूपः
क्रोधाद्धयांस्तस्य रथं ध्वजं च बाणैः सुधारैर्निशितैर्न्यकृन्तत् ११

स तूत्तमौजा निशितैः पृषत्कैर्विव्याध खड्गेन च भास्वरेण
पार्ष्णिं हयांश्चैव कृपस्य हत्वा शिखण्डिवाहं स ततोऽभ्यरोहत् १२
कृपं तु दृष्ट्वा विरथं रथस्थो नैच्छच्छरैस्ताडयितुं शिखण्डी
तं द्रौणिरावार्य रथं कृपं स्म समुज्जह्रे पङ्कगतां यथा गाम् १३
हिरण्यवर्मा निशितैः पृषत्कैस्तवात्मजानामनिलात्मजो वै
अतापयत्सैन्यमतीव भीमः काले शुचौ मध्यगतो यथार्कः १४
इति श्रीमहाभारते कर्णपर्वणि त्रिपञ्चाशोऽध्यायः ५३

## चतुःपञ्चाशोऽध्यायः

सञ्जय उवाच
अथ त्विदानीं तुमुले विमर्दे द्विषद्भिरेको बहुभिः समावृतः
महाभये सारथिमित्युवाच भीमश्चमूं वारयन्धार्तराष्ट्रीम्
त्वं सारथे याहि जवेन वाहैर्नयाम्येतान्धार्तराष्ट्रान्यमाय १
संचोदितो भीमसेनेन चैवं स सारथिः पुत्रबलं त्वदीयम्
प्रायात्ततः सारथिरुग्रवेगो यतो भीमस्तद्बलं गन्तुमैच्छत् २
ततोऽपरे नागरथाश्वपत्तिभिः प्रत्युद्ययुः कुरवस्तं समन्तात्
भीमस्य वाहाग्र्यमुदारवेगं समन्ततो बाणगणैर्निजघ्नुः ३
ततः शरानापततो महात्मा चिच्छेद बाणैस्तपनीयपुङ्खैः
ते वै निपेतुस्तपनीयपुङ्खा द्विधा त्रिधा भीमशरैर्निकृत्ताः ४
ततो राजन्नागरथाश्वयूनां भीमाहतानां तव राजमध्ये
घोरो निनादः प्रबभौ नरेन्द्र वज्राहतानामिव पर्वतानाम् ५
ते वध्यमानाश्च नरेन्द्रमुख्या निर्भिन्ना वै भीमसेनप्रवेकैः
भीमं समन्तात्समरेऽध्यरोहन्वृक्षं शकुन्ता इव पुष्पहेतोः ६
ततोऽभिपातं तव सैन्यमध्ये प्रादुश्चक्रे वेगमिवात्तवेगः
यथान्तकाले क्षपयन्दिधक्षुर्भूतान्तकृत्काल इवात्त दण्डः ७
तस्यातिवेगस्य रणेऽतिवेगं नाशक्नुवन्धारयितुं त्वदीयाः
व्यात्ताननस्यापततो यथैव कालस्य काले हरतः प्रजा वै ८
ततो बलं भारत भारतानां प्रदह्यमानं समरे महात्मन्
भीतं दिशोऽकीर्यत भीमनुन्नं महानिलेनाभ्रगणो यथैव ९
ततो धीमान्सारथिमब्रवीद्बली स भीमसेनः पुनरेव हृष्टः

सूताभिजानीहि परान्स्वकान्वा रथान्ध्वजांश्चापततः समेतान्
युध्यन्नहं नाभिजानामि किंचिन्मा सैन्यं स्वं छादयिष्ये पृषत्कैः १०
अरीन्विशोकाभिनिरीक्ष्य सर्वतो मनस्तु चिन्ता प्रदुनोति मे भृशम्
राजातुरो नागमद्यत्किरीटी बहूनि दुःखान्यभिजातोऽस्मि सूत ११
एतद्दुःखं सारथे धर्मराजो यन्मां हित्वा यातवाञ्शत्रुमध्ये
नैनं जीवन्नापि जानाम्यजीवन्बीभत्सुं वा तन्ममाद्यातिदुःखम् १२
सोऽह द्विषत्सैन्यमुदग्रकल्पं विनाशयिष्ये परमप्रतीतः
एतान्निहत्याजिमध्ये समेतान्प्रीतो भविष्यामि सह त्वयाद्य १३
सर्वांस्तूणीरान्मार्गणान्वान्ववेक्ष्य किं शिष्टं स्यात्सायकानां रथे मे
का वा जातिः किः प्रमाणं च तेषां ज्ञात्वा व्यक्तं तन्ममाचक्ष्व सूत १४
विशोक उवाच
षरामार्गणानामयुतानि वीर क्षुराश्च भल्लाश्च तथायुताख्याः
नाराचानां द्वे सहस्रे तु वीर त्रीण्येव च प्रदराणां च पार्थ १५
अस्त्यायुधं पाण्डवेयावशिष्टं न यद्वहेच्छकटं षड्गवीयम्
एतद्विद्वन्मुञ्च सहस्रशोऽपि गदासिबाहुद्रविणं च तेऽस्ति १६
भीम उवाच
सूताद्येमं पश्य भीमप्रमुक्तैः संभिन्दद्भिः पार्थिवानाशुवेगैः
उग्रैर्बाणैराहवं घोररूपं नष्टादित्यं मृत्युलोकेन तुल्यम् १७
अद्यैव तद्विदितं पार्थिवानां भविष्यति आकुमारं च सूत
निमग्नो वा समरे भीमसेन एकः कुरून्वा समरे विजेता १८
सर्वे संख्ये कुरवो निष्पतन्तु मां वा लोकाः कीर्तयन्त्वाकुमारम्
सर्वानेकस्तानहं पातयिष्ये ते वा सर्वे भीमसेनं तुदन्तु १९
आशास्तारः कर्म चात्युत्तमं वा तन्मे देवाः केवलं साधयन्तु
आयात्विहाद्यार्जुनः शत्रुघाती शक्रस्तूर्णं यज्ञ इवोपहूतः २०
ईक्षस्वैतां भारतीं दीर्यमाणामेते कस्माद्विद्रवन्ते नरेन्द्राः
व्यक्तं धीमान्सव्यसाची नराग्र्यः सैन्यं ह्येतच्छादयत्याशु बाणैः २१
पश्य ध्वजांश्च द्रवतो विशोक नागान्हयान्पत्तिसङ्घांश्च संख्ये
रथान्विशीर्णाञ्शरशक्तिताडितान्पश्यस्वैतान्रथिनश्चैव सूत २२
आपूर्यते कौरवी चाप्यभीक्ष्णं सेना ह्यसौ सुभृशं हन्यमाना
धनंजयस्याशनितुल्यवेगैर्ग्रस्ता शरैर्बर्हिसुवर्णवाजैः २३

एते द्रवन्ति स्म रथाश्वनागाः पदातिसङ्घानवमर्दयन्तः
संमुह्यमानाः कौरवाः सर्व एव द्रवन्ति नागा इव दावभीताः
हाहाकृताश्चैव रणे विशोक मुञ्चन्ति नादान्विपुलान्गजेन्द्राः २४
विशोक उवाच
सर्वे कामाः पाण्डव ते समृद्धाः कपिध्वजो दृश्यते हस्तिसैन्ये
नीलाद्घनाद्विद्युतमुच्चरन्तीं तथापश्यं विस्फुरद्वै धनुस्तत् २५
कपिर्ह्यसौ वीक्ष्यते सर्वतो वै ध्वजाग्रमारुह्य धनंजयस्य
दिवाकराभो मणिरेष दिव्यो विभ्राजते चैव किरीटसंस्थः २६
पार्श्वे भीमं पाण्डुराभ्रप्रकाशं पश्येमं देवदत्तं सुघोषम्
अभीशुहस्तस्य जनार्दनस्य विगाहमानस्य चमूं परेषाम् २७
रविप्रभं वज्रनाभं क्षुरान्तं पार्श्वे स्थितं पश्य जनार्दनस्य
चक्रं यशो वर्धयत्केशवस्य सदार्चितं यदुभिः पश्य वीर २८
भीम उवाच
ददामि ते ग्रामवरांश्चतुर्दश प्रियाख्याने सारथे सुप्रसन्नः
दासीशतं चापि रथांश्च विंशतिं यदर्जुनं वेदयसे विशोक २९
इति श्रीमहाभारते कर्णपर्वणि चतुःपञ्चाशोऽध्यायः ५४

पञ्चपञ्चाशोऽध्यायः

सञ्जय उवाच
श्रुत्वा च रथनिर्घोषं सिंहनादं च संयुगे
अर्जुनः प्राह गोविन्दं शीघ्रं चोदय वाजिनः १
अर्जुनस्य वचः श्रुत्वा गोविन्दोऽर्जुनमब्रवीत्
एष गच्छामि सुक्षिप्रं यत्र भीमो व्यवस्थितः २
आयान्तमश्वैर्हिमशङ्खवर्णैः सुवर्णमुक्तामणिजालनद्धैः
जम्भं जिघांसुं प्रगृहीतवज्रं जयाय देवेन्द्रमिवोग्रमन्युम् ३
रथाश्वमातङ्गपदातिसंघा बाणस्वनैर्नेमिखुरस्वनैश्च
संनादयन्तो वसुधां दिशश्च क्रुद्धा नृसिंहा जयमभ्युदीयुः ४
तेषां च पार्थस्य महत्तदासीद्देहासुपाप्मक्षपणं सुयुद्धम्
त्रैलोक्यहेतोरसुरैर्यथासीद्देवस्य विष्णोर्जयतां वरस्य ५
तैरस्तमुच्चावचमायुधौघमेकः प्रचिच्छेद किरीटमाली

क्षुरार्धचन्द्रैर्निशितैश्च बाणैः शिरांसि तेषां बहुधा च बाहून् ६
छत्राणि वालव्यजनानि केतूनश्वान्रथान्पत्तिगणान्द्विपांश्च
ते पेतुरुर्व्यां बहुधा विरूपा वातप्रभग्नानि यथा वनानि ७
सुवर्णजालावतता महागजाः सवैजयन्तीध्वजयोधकल्पिताः
सुवर्णपुङ्खैरिषुभिः समाचिताश्चकाशिरे प्रज्वलिता यथाचलाः ८
विदार्य नागांश्च रथांश्च वाजिनः शरोत्तमैर्वासववज्रसंनिभैः
द्रुतं ययौ कर्णजिघांसया तथा यथा मरुत्वान्बलभेदने पुरा ९
ततः स पुरुषव्याघ्रः सूतसैन्यमरिंदम
प्रविवेश महाबाहुर्मकरः सागरं यथा १०
तं दृष्ट्वा तावका राजन्रथपत्तिसमन्विताः
गजाश्वसादिबहुलाः पाण्डवं समुपाद्रवन् ११
तत्राभिद्रवतां पार्थमारावः सुमहानभूत्
सागरस्येव मत्तस्य यथा स्यात्सलिलस्वनः १२
ते तु तं पुरुषव्याघ्रं व्याघ्रा इव महारथाः
अभ्यद्रवन्त संग्रामे त्यक्त्वा प्राणकृतं भयम् १३
तेषामापततां तत्र शरवर्षाणि मुञ्चताम्
अर्जुनो व्यधमत्सैन्यं महावातो घनानिव १४
तेऽजुनं सहिता भूत्वा रथवंशैः प्रहारिणः
अभियाय महेष्वासा विव्यधुर्निशितैः शरैः १५
ततोऽजुनः सहस्राणि रथवारणवाजिनाम्
प्रेषयामास विशिखैर्यमस्य सदनं प्रति १६
ते वध्यमानाः समरे पार्थचापच्युतैः शरैः
तत्र तत्र स्म लीयन्ते भये जाते महारथाः १७
तेषां चतुःशतान्वीरान्यतमानान्महारथान्
अर्जुनो निशितैर्बाणैरनयद्यमसादनम् १८
ते वध्यमानाः समरे नानालिङ्गैः शितैः शरैः
अर्जुनं समभित्यज्य दुद्रुवुर्वै दिशो भयात् १९
तेषां शब्दो महानासीद्द्रवतां वाहिनीमुखे
महौघस्येव भद्रं ते गिरिमासाद्य दीर्यतः २०
तां तु सेनां भृशं विद्ध्वा द्रावयित्वार्जुनः शरैः

प्रायादभिमुखः पार्थः सूतानीकानि मारिष २१
तस्य शब्दो महानासीत्परानभिमुखस्य वै
गरुडस्येव पततः पन्नगार्थे यथा पुरा २२
तं तु शब्दमभिश्रुत्य भीमसेनो महाबलः
बभूव परमप्रीतः पार्थदर्शनलालसः २३
श्रुत्वैव पार्थमायान्तं भीमसेनः प्रतापवान्
त्यक्त्वा प्राणान्महाराज सेनां तव ममर्द ह २४
स वायुवेगप्रतिमो वायुवेगसमो जवे
वायुवद्व्यचरद्भीमो वायुपुत्रः प्रतापवान् २५
तेनार्द्यमाना राजेन्द्र सेना तव विशां पते
व्यभ्राम्यत महाराज भिन्ना नौरिव सागरे २६
तां तु सेनां तदा भीमो दर्शयन्पाणिलाघवम्
शरैरवचकर्तोग्रैः प्रेषयिष्यन्यमक्षयम् २७
तत्र भारत भीमस्य बलं दृष्ट्वातिमानुषम्
व्यत्रस्यन्त रणे योधाः कालस्येव युगक्षये २८
तथार्दितान्भीमबलान्भीमसेनेन भारत
दृष्ट्वा दुर्योधनो राजा इदं वचनमब्रवीत् २९
सैनिकान्स महेष्वासो योधांश्च भरतर्षभ
समादिशद्रणे सर्वान्हत भीममिति स्म ह
तस्मिन्हते हतं मन्ये सर्वसैन्यमशेषतः ३०
प्रतिगृह्य च तामाज्ञां तव पुत्रस्य पार्थिवाः
भीमं प्रच्छादयामासुः सरवर्षैः समन्ततः ३१
गजाश्च बहुला राजन्नराश्च जयगृद्धिनः
रथा हयाश्च राजेन्द्र परिवव्रुर्वृकोदरम् ३२
स तैः परिवृतः शूरैः शूरो राजन्समन्ततः
शुशुभे भरतश्रेष्ठो नक्षत्रैरिव चन्द्रमाः ३३
स रराज तथा सङ्ख्ये दर्शनीयो नरोत्तमः
निर्विशेषं महाराज यथा हि विजयस्तथा ३४
तत्र ते पार्थिवाः सर्वे शरवृष्टीः समासृजन्
क्रोधरक्तेक्षणाः क्रूरा हन्तुकामा वृकोदरम् ३५

स विदार्य महासेनां शरैः संनतपर्वभिः
निश्चक्राम रणाद्भीमो मत्स्यो जालादिवाम्भसि ३६
हत्वा दश सहस्राणि गजानामनिवर्तिनाम्
नृणां शतसहस्रे द्वे द्वे शते चैव भारत ३७
पञ्चचाश्वसहस्राणि रथानां शतमेव च
हत्वा प्रास्यन्दयद्भीमो नदीं शोणितकर्दमाम् ३८
शोणितोदां रथावर्तां हस्तिग्राहसमाकुलाम्
नरमीनामश्वनक्रां केशशैबलशाद्वलाम् ३९
संछिन्नभुजनागेन्द्रां बहुरत्नापहारिणीम्
ऊरुग्राहां मज्जपङ्कां शीर्षोपलसमाकुलाम् ४०
धनुष्काशां शरावापां गदापरिघकेतनाम्
योधव्रातवतीं सङ्ख्ये वहन्तीं यमसादनम् ४१
क्षणेन पुरुषव्याघ्रः पावर्तयत निम्नगाम्
यथा वैतरणीमुग्रां दुस्तरामकृतात्मभिः ४२
यतो यतः पाण्डवेयः प्रवृत्तो रथसत्तमः
ततस्ततोऽपातयत योधाञ्शतसहस्रशः ४३
एवं दृष्ट्वा कृतं कर्म भीमसेनेन संयुगे
दुर्योधनो महाराज शकुनिं वाक्यमब्रवीत् ४४
जय मातुल संग्रामे भीमसेनं महाबलम्
अस्मिञ्जिते जितं मन्ये पाण्डवेयं महाबलम् ४५
ततः प्रायान्महाराज सौबलेयः प्रतापवान्
रणाय महते युक्तो भ्रातृभिः परिवारितः ४६
स समासाद्य संग्रामे भीमं भीमपराक्रमम्
वारयामास तं वीरो वेलेव मकरालयम्
स न्यवर्तत तं भीमो वार्यमाणः शितैः शरैः ४७
शकुनिस्तस्य राजेन्द्र वामे पार्श्वे स्तनान्तरे
प्रेषयामास नाराचान्रुक्मपुङ्खाञ्शिलाशितान् ४८
वर्म भित्त्वा तु सौवर्णं बाणास्तस्य महात्मनः
न्यमज्जन्त महाराज कङ्कबर्हिणवाससः ४९
सोऽतिविद्धो रणे भीमः शरं हेमविभूषितम्

प्रेषयामास सहसा सौबलं प्रति भारत ५०
तमायान्तं शरं घोरं शकुनिः शत्रुतापनः
चिच्छेद शतधा राजन्कृतहस्तो महाबलः ५१
तस्मिन्निपतिते भूमौ भीमः क्रुद्धो विशां पते
धनुश्चिच्छेद भल्लेन सौबलस्य हसन्निव ५२
तदपास्य धनुश्छिन्नं सौबलेयः प्रतापवान्
अन्यदादत्त वेगेन धनुर्भल्लांश्च षोडश ५३
तैस्तस्य तु महाराज भल्लैः संनतपर्वभिः
चतुर्भिः सारथिं ह्यार्च्छद्भीमं पञ्चभिरेव च ५४
ध्वजमेकेन चिच्छेद छत्रं द्वाभ्यां विशां पते
चतुर्भिश्चतुरो वाहान्विव्याध सुबलात्मजः ५५
ततः क्रुद्धो महाराज भीमसेनः प्रतापवान्
शक्तिं चिक्षेप समरे रुक्मदण्डामयस्मयीम् ५६
सा भीमभुजनिर्मुक्ता नागजिह्वेव चञ्चला
निपपात रथे तूर्णं सौबलस्य महात्मनः ५७
ततस्तामेव संगृह्य शक्तिं कनकभूषणाम्
भीमसेनाय चिक्षेप क्रुद्धरूपो विशां पते ५८
सा निर्भिद्य भुजं सव्यं पाण्डवस्य महात्मनः
पपात च ततो भूमौ यथा विद्युन्नभश्च्युता ५९
अथोत्क्रुष्टं महाराज धार्तराष्ट्रैः समन्ततः
न तु तं ममृषे भीमः सिंहनादं तरस्विनाम् ६०
स संगृह्य धनुः सज्यं त्वरमाणो महारथः
मुहूर्तादिव राजेन्द्र छादयामास सायकैः
सौबलस्य बलं संख्ये त्यक्त्वात्मानं महाबलः ६१
तस्याश्वांश्चतुरो हत्वा सूतं चैव विशां पते
ध्वजं चिच्छेद भल्लेन त्वरमाणः पराक्रमी ६२
हताश्वं रथमुत्सृज्य त्वरमाणो नरोत्तमः
तस्थौ विस्फारयंश्चापं क्रोधरक्तेक्षणः श्वसन्
शरैश्च बहुधा राजन्भीममार्छत्समन्ततः ६३
प्रतिहत्य तु वेगेन भीमसेनः प्रतापवान्

धनुश्चिच्छ्द संक्रुद्धो विव्याध च शितैः शरैः ६४
सोऽतिविद्धो बलवता शत्रुणा शत्रुकर्शनः
निपपात ततो भूमौ किंचित्प्राणो नराधिप ६५
ततस्तं विह्वलं ज्ञात्वा पुत्रस्तव विशां पते
अपोवाह रथेनाजौ भीमसेनस्य पश्यतः ६६
रथस्थे तु नरव्याघ्रे धार्तराष्ट्राः पराङ्मुखाः
प्रदुद्रुवुर्दिशो भीता भीमाज्जाते महाभये ६७
सौबले निर्जिते राजन्भीमसेनेन धन्विना
भयेन महता मग्नः पुत्रो दुर्योधनस्तव
अपायाज्जवनैरश्वैः सापेक्षो मातुलं प्रति ६८
पराङ्मुखं तु राजानं दृष्ट्वा सैन्यानि भारत
विप्रजग्मुः समुत्सृज्य द्वैरथानि समन्ततः ६९
तान्दृष्ट्वातिरथान्सर्वान्धार्तराष्ट्रान्पराङ्मुखान्
जवेनाभ्यपतद्भीमः किरञ्शरशतान्बहून् ७०
ते वध्यमाना भीमेन धार्तराष्ट्राःपराङ्मुखाः
कर्णमासाद्य समरे स्थिता राजन्समन्ततः
स हि तेषां महावीर्यो द्वीपोऽभूत्सुमहाबलः ७१
भिन्ननौका यथा राजन्द्वीपमासाद्य निर्वृताः
भवन्ति पुरुषव्याघ्र नाविकाः कालपर्यये ७२
तथाकर्णं समासाद्य तावका भरतर्षभ
समाश्वस्ताः स्थिता राजन्संप्रहृष्टाः परस्परम्
समाजग्मुश्च युद्धाय मृत्युं कृत्वा निवर्तनम् ७३
इति श्रीमहाभारते कर्णपर्वणि पञ्चपञ्चाशोऽध्यायः ५५

षट्पञ्चाशोऽध्यायः

धृतराष्ट्र उवाच
ततो भग्नेषु सैन्येषु भीमसेनेन संयुगे
दुर्योधनोऽब्रवीत्किं नु सौबलो वापि सञ्जय १
कर्णो वा जयतां श्रेष्ठो योधा वा मामका युधि
कृपो वा कृतवर्मा च द्रौणिर्दुःशासनोऽपि वा २

अत्यद्भुतमिदं मन्ये पाण्डवेयस्य विक्रमम्
यथाप्रतिज्ञं योधानां राधेयः कृतवानपि ३
कुरूणामपि सर्वेषां कर्णः शत्रुनिषूदनः
शर्म वर्म प्रतिष्ठा च जीविताशा च सञ्जय ४
तत्प्रभग्नं बलं दृष्ट्वा कौन्तेयेनामितौजसा
राधेयानामधिरथः कर्णः किमकरोद्युधि ५
पुत्रा वा मम दुर्धर्षा राजानो वा महारथाः
एतन्मे सर्वमाचक्ष्व कुशलो ह्यसि सञ्जय ६
सञ्जय उवाच
अपराह्णे महाराज सूतपुत्रः प्रतापवान्
जघान सोमकान्सर्वान्भीमसेनस्य पश्यतः
भीमोऽप्यतिबलः सैन्यं धार्तराष्ट्रं व्यपोथयत् ७
द्राव्यमाणं बलं दृष्ट्वा भीमसेनेन धीमता
यन्तारमब्रवीत्कर्णः पाञ्चालानेव मा वह ८
मद्रराजस्ततः शल्यः श्वेतानश्वान्महाजवान्
प्राहिणोच्चेदिपाञ्चालान्करूषांश्च महाबलः ९
प्रविश्य च स तां सेनां शल्यः परबलार्दनः
न्ययच्छत्तुरगान्हृष्टो यत्र यत्रैच्छदग्रणीः १०
तं रथं मेघसंकाशं वैयाघ्रपरिवारणम्
संदृश्य पाण्डुपाञ्चालास्त्रस्ता आसन्विशां पते ११
ततो रथस्य निनदः प्रादुरासीन्महारणे
पर्जन्यसमनिर्घोषः पर्वतस्येव दीर्यतः १२
ततः शरशतैस्तीक्ष्णैः कर्णोऽप्याकर्णनिःसृतैः
जघान पाण्डवबलं शतशोऽथ सहस्रशः १३
तं तथा समरे कर्म कुर्वाणमतिमानुषम्
परिवव्रुर्महेष्वासाः पाण्डवानां महारथाः १४
तं शिखण्डी च भीमश्च धृष्टद्युम्नश्च पार्षतः
नकुलः सहदेवश्च द्रौपदेयाः ससात्यकाः
परिवव्रुर्जिघांसन्तो राधेयं शरवृष्टिभिः १५
सात्यकिस्तु ततः कर्णं विंशत्या निशितैः शरैः

अताडयद्रणे शूरो जत्रुदेशे नरोत्तमः १६
शिखण्डी पञ्चविंशत्या धृष्टद्युम्नश्च पञ्चभिः
द्रौपदेयाश्चतुःषष्ट्या सहदेवश्च सप्तभिः
नकुलश्च शतेनाजौ कर्णं विव्याध सायकैः १७
भीमसेनस्तु राधेयं नवत्या नतपर्वणाम्
विव्याध समरे क्रुद्धो जत्रुदेशे महाबलः १८
ततः प्रहस्याधिरथिर्विक्षिपन्धनुरुत्तमम्
मुमोच निशितान्बाणान्पीडयन्सुमहाबलः
तान्प्रत्यविध्यद्राधेयः पञ्चभिः पञ्चभिः शरैः १९
सात्यकेस्तु धनुश्छित्त्वा ध्वजं च पुरुषर्षभः
अथैनं नवभिर्बाणैराजघान स्तनान्तरे २०
भीमसेनस्तु तं क्रुद्धो विव्याध त्रिंशता शरैः
सारथिं च त्रिभिर्बाणैराजघान परन्तपः २१
विरथान्द्रौपदेयांश्च चकार पुरुषर्षभः
अक्ष्णोर्निमेषमात्रेण तदद्भुतमिवाभवत् २२
विमुखीकृत्य तान्सर्वाञ्शरैः संनतपर्वभिः
पाञ्चालानहनच्छूरश्चेदीनां च महारथान् २३
ते वध्यमानाः समरे चेदिमत्स्या विशां पते
कर्णमेकमभिद्रुत्य शरसङ्घैः समार्दयन्
ताञ्जघान शितैर्बाणैः सूतपुत्रो महारथः २४
एतदत्यद्भुतं कर्णे दृष्टवानस्मि भारत
यदेकः समरे शूरान्सूतपुत्रः प्रतापवान् २५
यतमानान्परं शक्त्यायोधयत्तांश्च धन्विनः
पाण्डवेयान्महाराज शरैर्वारितवान्रणे २६
तत्र भारत कर्णस्य लाघवेन महात्मनः
तुतुषुर्देवताः सर्वाः सिद्धाश्च परमर्षयः २७
अपूजयन्महेष्वासा धार्तराष्ट्रा नरोत्तमम्
कर्णं रथवरश्रेष्ठं श्रेष्ठं सर्वधनुष्मताम् २८
ततः कर्णो महाराज ददाह रिपुवाहिनीम्
कक्षमिद्धो यथा वह्निर्निदाघे ज्वलितो महान् २९

ते वध्यमानाः कर्णेन पाण्डवेयास्ततस्ततः
प्राद्रवन्त रणे भीताः कर्णं दृष्ट्वा महाबलम् ३०
तत्राक्रन्दो महानासीत्पाञ्चालानां महारणे
वध्यतां सायकैस्तीक्ष्णैः कर्णचापवरच्युतैः ३१
तेन शब्देन वित्रस्ता पाण्डवानां महाचमूः
कर्णमेकं रणे योधं मेनिरे तत्र शात्रवाः ३२
तत्राद्भुतं परं चक्रे राधेयः शत्रुकर्शनः
यदेकं पाण्डवाः सर्वे न शेकुरभिवीक्षितुम् ३३
यथौघः पर्वतश्रेष्ठमासाद्याभिप्रदीर्यते
तथा तत्पाण्डवं सैन्यं कर्णमासाद्य दीर्यते ३४
कर्णोऽपि समरे राजन्विधूमोऽग्निरिव ज्वलन्
दहंस्तस्थौ महाबाहुः पाण्डवानां महाचमूम् ३५
शिरांसि च महाराज कर्णांश्चञ्चलकुण्डलान्
बाहूंश्च वीरो वीराणां चिच्छेद लघु चेषुभिः ३६
हस्तिदन्तान्त्सरून्खड्गान्ध्वजाञ्शक्तीर्हयान्गजान्
रथांश्च विविधान्राजन्पताका व्यजनानि च ३७
अक्षेषायुगयोक्त्राणि चक्राणि विविधानि च
चिच्छेद शतधा कर्णो योधव्रतमनुष्ठितः ३८
तत्र भारत कर्णेन निहतैर्गजवाजिभिः
अगम्यरूपा पृथिवी मांसशोणितकर्दमा ३९
विषमं च समं चैव हतैरश्वपदातिभिः
रथैश्च कुञ्जरैश्चैव न प्राज्ञायत किञ्चन ४०
नापि स्वे न परे योधाः प्राज्ञायन्त परस्परम्
घोरे शरान्धकारे तु कर्णास्त्रे च विजृम्भिते ४१
राधेयचापनिर्मुक्तैः शरैः काञ्चनभूषितैः
संछादिता महाराज यतमाना महारथाः ४२
ते पाण्डवेयाः समरे कर्णेन स्म पुनः पुनः
अभज्यन्त महाराज यतमाना महारथाः ४३
मृगसंघान्यथा क्रुद्धः सिंहो द्रावयते वने
कर्णस्तु समरे योधांस्तत्र तत्र महायशाः

कालयामास तत्सैन्यं यथा पशुगणान्वृकः ४४
दृष्ट्वा तु पाण्डवीं सेनां धार्तराष्ट्राः पराङ्मुखीम्
अभिजग्मुर्महेष्वासा रुवन्तो भैरवान्रवान् ४५
दुर्योधनो हि राजेन्द्र मुदा परमया युतः
वादयामास संहृष्टो नानावाद्यानि सर्वशः ४६
पाञ्चालापि महेष्वासा भग्ना भग्ना नरोत्तमाः
न्यवर्तन्त यथा शूरा मृत्युं कृत्वा निवर्तनम् ४७
तान्निवृत्तान्रणे शूरान्राधेयः शत्रुतापनः
अनेकशो महाराज बभञ्ज पुरुषर्षभः ४८
तत्र भारत कर्णेन पाञ्चाला विंशती रथाः
निहताः सादयः क्रोधाच्चेदयश्च परःशताः ४९
कृत्वा शून्यान्रथोपस्थान्वाजिपृष्ठांश्च भारत
निर्मनुष्यान्गजस्कन्धान्पादातांश्चैव विद्रुतान् ५०
आदित्य इव मध्याह्ने दुर्निरीक्ष्यः परन्तपः
कालान्तकवपुः क्रूरः सूतपुत्रश्चचार ह ५१
एवमेतान्महाराज नरवाजिरथद्विपान्
हत्वा तस्थौ महेष्वासः कर्णोऽरिगणसूदनः ५२
यथा भूतगणान्हत्वा कालस्तिष्ठेन्महाबलः
तथा स सोमकान्हत्वा तस्थावेको महारथः ५३
तत्राद्भुतमपश्याम पाञ्चालानां पराक्रमम्
वध्यमानापि कर्णेन नाजहू रणमूर्धनि ५४
राजा दुःशासनश्चैव कृपः शारद्वतस्तथा
अश्वत्थामा कृतवर्मा शकुनिश्चापि सौबलः
न्यहनन्पाण्डवीं सेनां शतशोऽथ सहस्रशः ५५
कर्णपुत्रौ च राजेन्द्र भ्रातरौ सत्यविक्रमौ
अनाशयेतां बलिनः पाञ्चालान्वै ततस्ततः
तत्र युद्धं तदा ह्यासीत्क्रूरं विशसनं महत् ५६
तथैव पाण्डवाः शूरा धृष्टद्युम्नशिखण्डिनौ
द्रौपदेयाश्च संक्रुद्धा अभ्यघ्नंस्तावकं बलम् ५७
एवमेष क्षयो वृत्तः पाण्डवानां ततस्ततः

तावकानामपि रणे भीमं प्राप्य महाबलम् ५८
इति श्रीमहाभारते कर्णपर्वणि षट्पञ्चाशोऽध्यायः ५६

सप्तपञ्चाशोऽध्यायः

सञ्जय उवाच
अर्जुनस्तु महाराज कृत्वा सैन्यं पृथग्विधम्
सूतपुत्रं सुसंरब्धं दृष्ट्वा चैव महारणे १
शोणितोदां महीं कृत्वा मांसमज्जास्थिवाहिनीम्
वासुदेवमिदं वाक्यमब्रवीत्पुरुषर्षभ २
एष केतू रणे कृष्ण सूतपुत्रस्य दृश्यते
भीमसेनादयश्चैते योधयन्ति महारथान्
एते द्रवन्ति पाञ्चालाः कर्णात्त्रस्ता जनार्दन ३
एष दुर्योधनो राजा श्वेतच्छत्रेण भास्वता
कर्णेन भग्नान्पाञ्चालान्द्रावयन्बहु शोभते ४
कृपश्च कृतवर्मा च द्रौणिश्चैव महाबलः
एते रक्षन्ति राजानं सूतपुत्रेण रक्षिताः
अवध्यमानास्तेऽस्माभिर्घातयिष्यन्ति सोमकान् ५
एष शल्यो रथोपस्थे रश्मिसंचारकोविदः
सूतपुत्ररथं कृष्ण वाहयन्बहु शुभते ६
तत्र मे बुद्धिरुत्पन्ना वाहयात्र महारथम्
नाहत्वा समरे कर्णं निवर्तिष्ये कथञ्चन ७
राधेयोऽप्यन्यथा पार्थान्सृञ्जयांश्च महारथान्
निःशेषान्समरे कुर्यात्पश्यतोर्नौ जनार्दन ८
ततः प्रायाद्रथेनाशु केशवस्तव वाहिनीम्
कर्णं प्रति महेष्वासं द्वैरथे सव्यसाचिना ९
प्रयातश्च महाबाहुः पाण्डवानुज्ञया हरिः
आश्वासयन्रथेनैव पाण्डुसैन्यानि सर्वशः १०
रथघोषः स संग्रामे पाण्डवेयस्य संबभौ
वासवाशनितुल्यस्य महौघस्येव मारिष ११
महता रथघोषेण पाण्डवः सत्यविक्रमः

अभ्ययादप्रमेयात्मा निजयस्तव वाहिनीम् १२
तमायान्तं समीक्ष्यैव श्वेताश्वं कृष्णसारथिम्
मद्रराजोऽब्रवीत्कर्णं केतुं दृष्ट्वा महात्मनः १३
अयं स रथ आयाति श्वेताश्वः कृष्णसारथिः
निघ्नन्नमित्रान्समरे यं कर्ण परिपृच्छसि १४
एष तिष्ठति कौन्तेयः संस्पृशन्गाण्डिवं धनुः
तं हनिष्यसि चेदद्य तन्नः श्रेयो भविष्यति १५
एषा विदीर्यते सेना धार्तराष्ट्री समन्ततः
अर्जुनस्य भयात्तूर्णं निघ्नतः शात्रवान्बहून् १६
वर्जयन्सर्वसैन्यानि त्वरते हि धनञ्जयः
त्वदर्थमिति मन्येऽह यथास्योदीर्यते वपुः १७
न ह्यवस्थाप्यते पार्थो युयुत्सुः केनचित्सह
त्वामृते क्रोधदीप्तो हि पीड्यमाने वृकोदरे १८
विरथं धर्मराजं च दृष्ट्वा सुदृढविक्षतम्
शिखण्डिनं सात्यकिं च धृष्टद्युम्नं च पार्षतम् १९
द्रौपदेयान्युधामन्युमुत्तमौजसमेव च
नकुलं सहदेवं च भ्रातरौ द्वौ समीक्ष्य च २०
सहसैकरथः पार्थस्त्वामभ्येति परन्तप
क्रोधरक्तेक्षणः क्रुद्धो जिघांसुः सर्वधन्विनाम् २१
त्वरितोऽभिपतत्यस्मांस्त्यक्त्वा सैन्यान्यसंशयम्
त्वं कर्ण प्रतियाह्येनं नास्त्यन्यो हि धनुर्धरः २२
न तं पश्यामि लोकेऽस्मिस्त्वत्तोऽप्यन्यं धनुर्धरम्
अर्जुनं समरे क्रुद्धं यो वेलामिव धारयेत् २३
न चास्य रक्षां पश्यामि पृष्ठतो न च पार्श्वतः
एक एवाभियाति त्वां पश्य साफल्यमात्मनः २४
त्वं हि कृष्णौ रणे शक्तः संसाधयितुमाहवे
तवैष भारो राधेय प्रत्युद्याहि धनञ्जयम् २५
त्वं कृतो ह्येव भीष्मेण द्रोणद्रौणिकृपैरपि
सव्यसाचिप्रतिरथस्तं निवर्तय पाण्डवम् २६
लेलिहानं यथा सर्पं गर्जन्तमृषभं यथा

लयस्थितं यथा व्याघ्रं जहि कर्ण धनञ्जयम् २७
एते द्रवन्ति समरे धार्तराष्ट्रा महारथाः
अर्जुनस्यभयात्तूर्णं निरपेक्षा जनाधिपाः २८
द्रवतामथ तेषां तु युधि नान्योऽस्ति मानवः
भयहा यो भवेद्वीर त्वामृते सूतनन्दन २९
एते त्वां कुरवः सर्वे द्वीपमासाद्य संयुगे
विष्ठिताः पुरुषव्याघ्र त्वत्तः शरणकाङ्क्षिणः ३०
वैदेहाम्बष्ठकाम्बोजास्तथा नग्नजितस्त्वया
गान्धाराश्च यया धृत्या जिताः संख्ये सुदुर्जयाः ३१
तां धृतिं कुरु राधेय ततः प्रत्येहि पाण्डवम्
वासुदेवं च वार्ष्णेयं प्रीयमाणं किरीटिना ३२
कर्ण उवाच
प्रकृतिस्थो हि मे शल्य इदानीं संमतस्तथा
प्रतिभासि महाबाहो विभीश्चैव धनञ्जयात् ३३
पश्य बाह्वोर्बलं मेऽद्य शिक्षितस्य च पश्य मे
एकोऽद्य निहनिष्यामि पाण्डवानां महाचमूम् ३४
कृष्णौ च पुरुषव्याघ्रौ तच्च सत्यं ब्रवीमि ते
नाहत्वा युधि तौ वीरावपयास्ये कथंचन ३५
स्वप्स्ये वा निहतस्ताभ्यामसत्यो हि रणे जयः
कृतार्थो वा भविष्यामि हत्वा तावथ वा हतः ३६
नैतादृशो जातु बभूव लोके रथोत्तमो यावदनुश्रुतं नः
तमीदृशं प्रतियोत्स्यामि पार्थं महाहवे पश्य च पौरुषं मे ३७
रथे चरत्येष रथप्रवीरः शीघ्रैर्हयैः कौरवराजपुत्रः
स वाद्य मां नेष्यति कृच्छ्रमेतत्कर्णस्यान्तादेतदन्ताः स्थ सर्वे ३८
अस्वेदिनौ राजपुत्रस्य हस्ताववेपिनौ जातकिणौ बृहन्तौ
दृढायुधः कृतिमान्क्षिप्रहस्तो न पाण्डवेयेन समोऽस्ति योधः ३९
गृह्णात्यनेकानपि कङ्कपत्रानेकं यथा तान्क्षितिपान्प्रमथ्य
ते क्रोशमात्रं निपतन्त्यमोघाः कस्तेन योधोऽस्ति समः पृथिव्याम् ४०
अतोषयत्पाण्डवेयो हुताशं कृष्णद्वितीयोऽतिरथस्तरस्वी
लेभे चक्रं यत्र कृष्णो महात्मा धनुर्गाण्डीवं पाण्डवः सव्यसाची ४१

श्वेताश्वयुक्तं च सुघोषमग्र्यं रथं महाबाहुरदीनसत्त्वः
महेषुधी चाक्षयौ दिव्यरूपौ शस्त्राणि दिव्यानि च हव्यवाहात् ४२
तथेन्द्र लोके निजघान दैत्यानसंख्येयान्कालकेयांश्च सर्वान्
लेभे शङ्खं देवदत्तं स्म तत्र को नाम तेनाभ्यधिकः पृथिव्याम् ४३
महादेवं तोषयामास चैव साक्षात्सुयुद्धेन महानुभावः
लेभे ततः पाशुपतं सुघोरं त्रैलोक्यसंहारकरं महास्त्रम् ४४
पृथक्पृथग्लोकपालाः समेता ददुर्ह्यस्त्राण्यप्रमेयाणि यस्य
यैस्ताञ्जघानाशु रणे नृसिंहान्स कालखञ्जानसुरान्समेतान् ४५
तथा विराटस्य पुरे समेतान्सर्वानस्मानेकरथेन जित्वा
जहार तद्गोधनमाजिमध्ये वस्त्राणि चादत्त महारथेभ्यः ४६
तमीदृशं वीर्यगुणोपपन्नं कृष्णद्वितीयं वरये रणाय
अनन्तवीर्येण च केशवेन नारायणेनाप्रतिमेन गुप्तम् ४७
वर्षायुतैर्यस्य गुणा न शक्या वक्तुं समेतैरपि सर्वलोकैः
महात्मनः शङ्खचक्रासिपाणेर्विष्णोर्जिष्णोर्वसुदेवात्मजस्य
भयं मे वै जायते साध्वसं च दृष्ट्वा कृष्णावेकरथे समेतौ ४८
उभौ हि शूरौ कृतिनौ दृढास्त्रौ महारथौ संहननोपपन्नौ
एतादृशौ फल्गुनवासुदेवौ कोऽन्य प्रतीयान्मदृते नु शल्य ४९
एतावाहं युधि वा पातयिष्ये मां वा कृष्णौ निहनिष्यतोऽद्य
इति ब्रुवञ्शल्यममित्रहन्ता कर्णो रणे मेघ इवोन्ननाद ५०
अभ्येत्य पुत्रेण तवाभिनन्दितः समेत्य चोवाच कुरुप्रवीरान्
कृपं च भोजं च महाभुजावुभौ तथैव गान्धारनृपं सहानुजम्
गुरोः सुतं चावरजं तथात्मनः पदातिनोऽथ द्विपसादिनोऽन्यान् ५१
निरुन्धताभिद्रवताच्युतार्जुनौ श्रमेण संयोजयताशु सर्वतः
यथा भवद्भिर्भृशविक्षतावुभौ सुखेन हन्यामहमद्य भूमिपाः ५२
तथेति चोक्त्वा त्वरिताः स्म तेऽर्जुनं जिघांसवो वीरतमाः समभ्ययुः
नदीनदान्भूरिजलो महार्णवो यथा तथा तान्समरेऽर्जुनोऽग्रसत् ५३
न सन्दधानो न तथा शरोत्तमान्प्रमुञ्चमानो रिपुभिः प्रदृश्यते
धनञ्जयस्तस्य शरैश्च दारिता हताश्च पेतुर्नरवाजिकुञ्जराः ५४
शरार्चिषं गाण्डिवचारुमण्डलं युगान्तसूर्यप्रतिमानतेजसम्
न कौरवाः शेकुरुदीक्षितुं जयं यथा रविं व्याधितचक्षुषो जनाः ५५

तमभ्यधावद्विसृजञ्शरान्कृपस्तथैव भोजस्तव चात्मजः स्वयम्
जिघांसुभिस्तान्कुशलैः शरोत्तमान्महाहवे संजवितान्प्रयत्नतः
शरैः प्रचिच्छेद स पाण्डवस्त्वरन्पराभिनद्वक्षसि च त्रिभिस्त्रिभिः ५६
स गाण्डिवाभ्यायतपूर्णमण्डलस्तपन्रिपूनर्जुन भास्करो बभौ
शरोग्ररश्मिः शुचिचक्रमध्यगो यथैव सूर्यः परिवेषगस्तथा ५७
अथाग्र्यबाणैर्दशभिर्धनञ्जयं पराभिनद्द्रोणसुतोऽच्युतं त्रिभिः
चतुर्भिरश्वांश्चतुरः कपिं तथा शरैः स नाराचवरैरवाकिरत् ५८
तथा तु तत्तत्स्फुरदात्तकार्मुकं त्रिभिः शरैर्यन्तृशिरः क्षुरेण
हयांश्चतुर्भिश्चतुरस्त्रिभिर्ध्वजं धनञ्जयो द्रौणिरथान्यपातयत् ५९
स रोषपूर्णोऽशनिवज्रहाटकैरलंकृतं तक्षकभोगवर्चसम्
सुबन्धनं कार्मुकमन्यदाददे यथा महाहिप्रवरं गिरेस्तथा ६०
स्वमायुधं चोपविकीर्य भूतले धनुश्च कृत्वा सगुणं गुणाधिकः
समानयानावजितौ नरोत्तमौ शरोत्तमैर्द्रौणिरविध्यदन्तिकात् ६१
कृपश्च भोजश्च तथात्मजश्च ते तमोनुदं वारिधरा इवापतन्
कृपस्य पार्थः सशरं शरासनं हयान्ध्वजं सारथिमेव पत्रिभिः ६२
शरैः प्रचिच्छेद तवात्मजस्य ध्वजं धनुश्च प्रचकर्त नर्दतः
जघान चाश्वान्कृतवर्मणः शुभान्ध्वजं च चिच्छेद ततः प्रतापवान् ६३
सवाजिसूतेष्वसनान्सकेतनाञ्जघान नागाश्वरथांस्त्वरंश्च सः
ततः प्रकीर्णं सुमहद्बलं तव प्रदारितं सेतुरिवाम्भसा यथा
ततोऽजुनस्याशु रथेन केशवश्चकार शत्रूनपसव्यमातुरान् ६४
ततः प्रयान्तं त्वरितं धनञ्जयं शतक्रतुं वृत्रनिजघ्नुषं यथा
समन्वधावन्पुनरुच्छ्रितैर्ध्वजै रथैः सुयुक्तैरपरे युयुत्सवः ६५
अथाभिसृत्य प्रतिवार्य तानरीन्धनञ्जयस्याभि रथं महारथाः
शिखण्डिशैनेययमाः शितैः शरैर्विदारयन्तो व्यनदन्सुभैरवम् ६६
ततोऽभिजघ्नुः कुपिताः परस्परं शरैस्तदाञ्जोगतिभिः सुतेजनैः
कुरुप्रवीराः सह सृञ्जयैर्यथासुराः पुरा देववरैरयोधयन् ६७
जयेप्सवः स्वर्गमनाय चोत्सुकाः पतन्ति नागाश्वरथाः परन्तप
जगर्जरुच्चैर्बलवच्च विव्यधुः शरैः सुमुक्तैरितरेतरं पृथक् ६८
शरान्धकारे तु महात्मभिः कृते महामृधे योधवरैः परस्परम्
बभुर्दशाशा न दिवं च पार्थिव प्रभा च सूर्यस्य तमोवृताभवत् ६९

इति श्रीमहाभारते कर्णपर्वणि सप्तपञ्चाशोऽध्यायः ५७

## अष्टपञ्चाशोऽध्यायः

सञ्जय उवाच
राजन्कुरूणां प्रवरैर्बलैर्भीममभिद्रुतम्
मज्जन्तमिव कौन्तेयमुज्जिहीर्षुर्धनञ्जयः १
विमृद्य सूतपुत्रस्य सेनां भारत सायकैः
प्राहिणोन्मृत्युलोकाय परवीरान्धनञ्जयः २
ततोऽस्याम्बरमावृत्य शरजालानि भागशः
अदृश्यन्त तथान्ये च निघ्नन्तस्तव वाहिनीम् ३
स पक्षिसङ्घाचरितमाकाशं पूरयञ्शरैः
धनञ्जयो महाराज कुरूणामन्तकोऽभवत् ४
ततो भल्लैः क्षुरप्रैश्च नाराचैर्निर्मलैरपि
गात्राणि प्राक्षिणोत्पार्थः शिरांसि च चकर्त ह ५
छिन्नगात्रैर्विकवचैर्विशिरस्कैः समन्ततः
पतितैश्च पतद्भिश्च योधैरासीत्समावृतम् ६
धनञ्जयशराभ्यस्तैः स्यन्दनाश्वनरद्विपैः
रणभूमिरभूद्राजन्महावैतरणी यथा ७
ईषाचक्राक्षभङ्गैश्च व्यश्वैः साश्वैश्च युध्यताम्
ससूतैर्हतसूतैश्च रथैः स्तीर्णाभवन्मही ८
सुवर्णवर्मसंनाहैर्योधैः कनकभूषणैः
आस्थिताः कृतवर्माणो भद्रा नित्यमदा द्विपाः
क्रुद्धाः क्रुद्धैर्महामात्रैः प्रेषितार्जुनमभ्ययुः ९
चतुःशताः शरवर्षैर्हताः पेतुः किरीटिना
पर्यस्तानीव शृङ्गाणि ससत्त्वानि महागिरेः १०
धनञ्जयशराभ्यस्तैः स्तीर्णा भूर्वरवारणैः
अभिपेदेऽजुनरथो घनान्भिन्दन्निवांशुमान् ११
हतैर्गजमनुष्याश्वैर्भग्नैश्च बहुधा रथैः
विशस्त्रपत्रकवचैर्युद्धशौण्डैर्गतासुभिः
अपविद्धायुधैर्मार्गः स्तीर्णोऽभूत्फल्गुनेन वै १२

व्यस्फूर्जयच्च गाण्डीवं सुमहद्भैरवस्वनम्
घोरो वज्रविनिष्पेषः स्तनयित्नोरिवाम्बरे १३
ततः प्रादीर्यत चमूर्धनञ्जयशराहता
महावात समाविद्धा महानौरिव सागरे १४
नानारूपाः प्राहरणाः शरा गाण्डीवचोदिताः
अलातोल्काशनिप्रख्यास्तव सैन्यं विनिर्दहन् १५
महागिरौ वेणुवनं निशि प्रज्वलितं यथा
तथा तव महत्सैन्यं प्रास्फुरच्छरपीडितम् १६
संपिष्टदग्धविध्वस्तं तव सैन्यं किरीटिना
हतं प्रविहतं बाणैः सर्वतः प्रद्रुतं दिशः १७
महावने मृगगणा दावाग्निग्रसिता यथा
कुरवः पर्यवर्तन्त निर्दग्धा सव्यसाचिना १८
उत्सृज्य हि महाबाहुं भीमसेनं तदा रणे
बलं कुरूणामुद्विग्नं सर्वमासीत्पराङ्मुखम् १९
ततः कुरुषु भग्नेषु बीभत्सुरपराजितः
भीमसेनं समाद्याय मुहूर्तं सोऽभ्यवर्तत २०
समागम्य च भीमेन मन्त्रयित्वा च फल्गुनः
विशल्यमरुजं चास्मै कथयित्वा युधिष्ठिरम् २१
भीमसेनाभ्यनुज्ञातस्ततः प्रायाद्धनञ्जयः
नादयन्रथघोषेण पृथिवीं द्यां च भारत २२
ततः परिवृतो भीमैर्दशभिः शत्रुपुङ्गवैः
दुःशासनादवरजैस्तव पुत्रैर्धनञ्जयः २३
ते तमभ्यर्दयन्बाणैरुल्काभिरिव कुञ्जरम्
आततेष्वसनाः क्रूरा नृत्यन्त इव भारत २४
अपसव्यांस्तु तांश्चक्रे रथेन मधुसूदनः
ततस्ते प्राद्रवञ्शूराः पराङ्मुखरथेऽजुने २५
तेषामापततां केतून्रथांश्चापानि सायकान्
नाराचैरर्धचन्द्रैश्च क्षिप्रं पार्थो न्यपातयत् २६
अथान्यैर्दशभिर्भल्लैः शिरांस्येषां न्यपातयत्
रोषसंरक्तनेत्राणि संदष्टौष्ठानि भूतले

तानि वक्त्राणि विबभुर्व्योम्नि तारागणा इव २७
तांस्तु भल्लैर्महावेगैर्दशभिर्दश कौरवान्
रुक्माङ्गदान्रुक्मपुङ्खैर्विद्ध्वा प्रायादमित्रहा २८
इति श्रीमहाभारते कर्णपर्वणि अष्टपञ्चाशोऽध्यायः ५८

## एकोनषष्टितमोऽध्यायः

सञ्जय उवाच
तं तु यान्तं महावेगैरश्वैः कपिवरध्वजम्
युद्धायाभ्यद्रवन्वीराः कुरूणां नवती रथाः
परिवव्रुर्नरव्याघ्रा नरव्याघ्रं रणेऽजुनम् १
कृष्णः श्वेतान्महावेगानश्वान्कनकभूषणान्
मुक्ताजालप्रतिच्छन्नान्प्रैषीत्कर्णरथं प्रति २
ततः कर्णरथं यान्तमरीन्घ्नन्तं धनञ्जयम्
बाणवर्षैरभिघ्नन्तः संशप्तकरथा ययुः ३
त्वरमाणांस्तु तान्सर्वान्ससूतेष्वसनध्वजान्
जघान नवतिं वीरानर्जुनो निशितैः शरैः ४
तेऽपतन्त हता बाणैर्नानारूपैः किरीटिना
सविमाना यथा सिद्धाः स्वर्गात्पुण्यक्षये तथा ५
ततः सरथनागाश्वाः कुरवः कुरुसत्तम
निर्भया भरतश्रेष्ठमभ्यवर्तन्त फल्गुनम् ६
तदायस्तममुक्तास्त्रमुदीर्णवरवारणम्
पुत्राणां ते महत्सैन्यं समरौत्सीद्धनञ्जयः ७
शक्त्यृष्टितोमरप्रासैर्गदानिस्त्रिंशसायकैः
प्राच्छादयन्महेष्वासाः कुरवः कुरुनन्दनम् ८
तां कुरूणां प्रविततां शस्त्रवृष्टिं समुद्यताम्
व्यधमत्पाण्डवो बाणैस्तमः सूर्य इवांशुभिः ९
ततो म्लेच्छाः स्थितैर्मत्तैस्त्रयोदशशतैर्गजैः
पार्श्वतोऽभ्यहनन्पार्थं तव पुत्रस्य शासनात् १०
कर्णिनालीकनाराचैस्तोमरैः प्रासशक्तिभिः
कम्पनैर्भिण्डिपालैश्च रथस्थं पार्थमार्दयन् ११

तामस्त्रवृष्टिं प्रहितां द्विपस्थैर्यवनैः स्मयन्
चिच्छेद निशितैर्भल्लैरर्धचन्द्रैश्च फल्गुनः १२
अथ तान्द्विरदान्सर्वान्नानालिङ्गैर्महाशरैः
सपताकान्सहारोहान्गिरीन्वज्रैरिवाभिनत् १३
ते हेमपुङ्खैरिषुभिराचिता हेममालिनः
हताः पेतुर्महानागाः साग्निज्वाला इवाद्रयः १४
ततो गाण्डीवनिर्घोषो महानासीद्विशां पते
स्तनतां कूजतां चैव मनुष्यगजवाजिनाम् १५
कुञ्जराश्च हता राजन्प्राद्रवंस्ते समन्ततः
अश्वाश्च पर्यधावन्त हतारोहा दिशो दश १६
रथा हीना महाराज रथिभिर्वाजिभिस्तथा
गन्धर्वनगराकारा दृश्यन्ते स्म सहस्रशः १७
अश्वारोहा महाराज धावमानास्ततस्ततः
तत्र तत्रैव दृश्यन्ते पतिताः पार्थसायकैः १८
तस्मिन्क्षणे पाण्डवस्य बाह्वोर्बलमदृश्यत
यत्सादिनो वारणांश्च रथांश्चैकोऽजयद्युधि १९
ततस्त्र्यङ्गेण महता बलेन भरतर्षभ
दृष्ट्वा परिवृतं राजन्भीमसेनः किरीटिनम् २०
हतावशेषानुत्सृज्य त्वदीयान्कतिचिद्रथान्
जवेनाभ्यद्रवद्राजन्धनञ्जयरथं प्रति २१
ततस्तत्प्राद्रवत्सैन्यं हतभूयिष्ठमातुरम्
दृष्ट्वा यदर्जुनं भीमो जगाम भ्रातरं प्रति २२
हतावशिष्टांस्तुरगानर्जुनेन महाजवान्
भीमो व्यधमदभ्रान्तो गदापाणिर्महाहवे २३
कालरात्रिमिवात्युग्रां नरनागाश्वभोजनाम्
प्राकाराट्टपुरद्वारदारणीमतिदारुणाम् २४
ततो गदां नृनागाश्वेष्वाशु भीमो व्यवासृजत्
सा जघान बहूनश्वानश्वारोहांश्च मारिष २५
कांस्यायसतनुत्रांस्तान्नरानश्वांश्च पाण्डवः
पोथयामास गदया सशब्दं तेऽपतन्हताः २६

हत्वा तु तद्गजानीकं भीमसेनो महाबलः
पुनः स्वरथमास्थाय पृष्ठतोऽर्जुनमन्वगात् २७
हतं पराङ्मुखप्रायं निरुत्साहं परं बलम्
व्यालम्बत महाराज प्रायशः शस्त्रवेष्टितम् २८
विलम्बमानं तत्सैन्यमप्रगल्भमवस्थितम्
दृष्ट्वा प्राच्छादयद्बाणैरर्जुनः प्राणतापनैः २९
ततः कुरूणामभवदार्तनादो महामृधे
रथाश्वनागासुहरैर्वध्यतामर्जुनेषुभिः ३०
हाहाकृतं भृशं तस्थौ लीयमानं परस्परम्
अलातचक्रवत्सैन्यं तदाभ्रमत तावकम् ३१
आदीप्तं तव तत्सैन्यं शरैश्छिन्नतनुच्छदम्
आसीत्स्वशोणितक्लिन्नं फुल्लाशोकवनं यथा ३२
तद्दृष्ट्वा कुरवस्तत्र विक्रान्तं सव्यसाचिनः
निराशाः समपद्यन्त सर्वे कर्णस्य जीविते ३३
अविषह्यं तु पार्थस्य शरसंपातमाहवे
मत्वा न्यवर्तन्कुरवो जिता गाण्डीवधन्वना ३४
ते हित्वा समरे पार्थं वध्यमानाश्च सायकैः
प्रदुद्रुवुर्दिशो भीताश्चुक्रुशुश्चापि सूतजम् ३५
अभ्यद्रवत तान्पार्थः किरञ्शरशतान्बहून्
हर्षयन्पाण्डवान्योधान्भीमसेनपुरोगमान् ३६
पुत्रास्तु ते महाराज जग्मुः कर्णरथं प्रति
अगाधे मज्जतां तेषां द्वीपः कर्णोऽभवत्तदा ३७
कुरवो हि महाराज निर्विषाः पन्नगा इव
कर्णमेवोपलीयन्त भयाद्गाण्डीवधन्वनः ३८
यथा सर्वाणि भूतानि मृत्योर्भीतानि भारत
धर्ममेवोपलीयन्ते कर्मवन्ति हि यानि च ३९
तथा कर्णं महेष्वासं पुत्रास्तव नराधिप
उपालीयन्त सन्त्रासात्पाण्डवस्य महात्मनः ४०
ताञ्शोणितपरिक्लिन्नान्विषमस्थाञ्शरातुरान्
मा भैष्टेत्यब्रवीत्कर्णो ह्यभितो मामितेति च ४१

संभग्नं हि बलं दृष्ट्वा बलात्पार्थेन तावकम्
धनुर्विस्फारयन्कर्णस्तस्थौ शत्रुजिघांसया
पाञ्चालान्पुनराधावत्पश्यतः सव्यसाचिनः ४२
ततः क्षणेन क्षितिपाः क्षतजप्रतिमेक्षणाः
कर्णं ववर्षुर्बाणौघैर्यथा मेघा महीधरम् ४३
ततः शरसहस्राणि कर्णमुक्तानि मारिष
व्ययोजयन्त पाञ्चालान्प्राणैः प्राणभृतां वर ४४
ततो रणो महानासीत्पाञ्चालानां विशां पते
वध्यतां सूतपुत्रेण मित्रार्थेऽमित्रघातिनाम् ४५
इति श्रीमहाभारते कर्णपर्वणि एकोनषष्टितमोऽध्यायः ५९

षष्टितमोऽध्यायः

सञ्जय उवाच
ततः कर्णः कुरुषु प्रद्रुतेषु वरूथिना श्वेतहयेन राजन्
पाञ्चालपुत्रान्व्यधमत्सूतपुत्रो महेषुभिर्वात इवाभ्रसङ्घान् १
सूतं रथादञ्जलिकेन पात्य जघान चाश्वाञ्जनमेजयस्य
शतानीकं सुतसोमं च भल्लैरवाकिरद्धनुषी चाप्यकृन्तत् २
धृष्टद्युम्नं निर्बिभेदाथ षड्भिर्जघान चाश्वं दक्षिणं तस्य संख्ये
हत्वा चाश्वान्सात्यकेः सूतपुत्रः कैकेयपुत्रं न्यवधीद्विशोकम् ३
तमभ्यधावन्निहते कुमारे कैकेयसेनापतिरुग्रधन्वा
शरैर्विभिन्नं भृशमुग्रवेगैः कर्णात्मजं सोऽभ्यहनत्सुषेणम् ४
तस्यार्धचन्द्रैस्त्रिभिरुच्चकर्त प्रसह्य बाहू च शिरश्च कर्णः
स स्यन्दनाद्गामपतद्गतासुः परश्वधैः शाल इवावरुग्णः ५
हताश्वमञ्जोगतिभिः सुषेणः शिनिप्रवीरं निशितैः पृषत्कैः
प्रच्छाद्य नृत्यन्निव सौतिपुत्रः शैनेयबाणाभिहतः पपात ६
पुत्रे हते क्रोधपरीतचेताः कर्णः शिनीनामृषभं जिघांसुः
हतोऽसि शैनेय इति ब्रुवन्स व्यवासृजद्बाणममित्रसाहम् ७
स तस्य चिच्छेद शरं शिखण्डी त्रिभिस्त्रिभिश्च प्रतुतोद कर्णम्
शिखण्डिनः कार्मुकं स ध्वजं च च्छित्त्वा शराभ्यामहनत्सुजातम् ८
शिखण्डिनं षड्भिरविध्यदुग्रो दान्तो धार्ष्टद्युम्नोशिरश्चकर्त

अथाभिनत्सुतसोमं शरेण स संशितेनाधिरथिर्महात्मा ९
अथाक्रन्दे तुमुले वर्तमाने धार्ष्टद्युम्ने निहते तत्र कृष्णः
अपाञ्चाल्यं क्रियते याहि पार्थ कर्णं जहीत्यब्रवीद्राजसिंह १०
ततः प्रहस्याशु नरप्रवीरो रथं रथेनाधिरथेर्जगाम
भये तेषां त्राणमिच्छन्सुबाहुरभ्याहतानां रथयूथपेन ११
विस्फार्य गाण्डीवमथोग्रघोषं ज्यया समाहत्य तले भृशं च
बाणान्धकारं सहसैव कृत्वा जघान नागाश्वरथान्नरांश्च १२
तं भीमसेनोऽनु ययौ रथेन पृष्ठे रक्षन्पाण्डवमेकवीरम्
तौ राजपुत्रौ त्वरितौ रथाभ्यां कर्णाय यातावरिभिर्विमुक्तौ १३
अत्रान्तरे सुमहत्सूतपुत्रश्चक्रे युद्धं सोमकान्संप्रमृद्नन्
रथाश्वमातङ्गगणाञ्जघान प्रच्छादयामास दिशः शरैश्च १४
तमुत्तमौजा जनमेजयश्च क्रुद्धौ युधामन्युशिखण्डिनौ च
कर्णं विनेदुः सहिताः पृषत्कैः संमर्दमानाः सह पार्षतेन १५
ते पञ्च पाञ्चालरथाः सुरूपैर्वैकर्तनं कर्णमभिद्रवन्तः
तस्माद्रथाच्च्यावयितुं न शेकुर्धैर्यात्कृतात्मानमिवेन्द्रियाणि १६
तेषां धनूंषि ध्वजवाजिसूतांतूणं पताकाश्च निकृत्य बाणैः
तान्पञ्चभिः स त्वहनत्पृषत्कैः कर्णस्ततः सिंह इवोन्ननाद १७
तस्यास्यतस्तानभिनिघ्नतश्च ज्याबाणहस्तस्य धनुःस्वनेन
साद्रिद्रुमा स्यात्पृथिवी विशीर्णा इत्येव मत्वा जनता व्यषीदत् १८
स शक्रचापप्रतिमेन धन्वना भृशाततेनाधिरथिः शरान्सृजन्
बभौ रणे दीप्तमरीचिमण्डलो यथांशुमाली परिवेषवांस्तथा १९
शिखण्डिनं द्वादशभिः पराभिनच्छितैः शरैः षड्भिरथोत्तमौजसम्
त्रिभिर्युधामन्युमविध्यदाशुगैस्त्रिभिस्त्रिभिः सोमकपार्षतात्मजौ २०
पराजिताः पञ्च महारथास्तु ते महाहवे सूतसुतेन मारिष
निरुद्यमास्तस्थुरमित्रमर्दना यथेन्द्रियार्थात्मवता पराजिताः २१
निमज्जतस्तानथ कर्ण सागरे विपन्ननावो वणिजो यथार्णवे
उद्दध्रिरे नौभिरिवार्णवाद्रथैः सु कल्पितैर्द्रौपदिजाः स्वमातुलान् २२
ततः शिनीनामृषभः शितैः शरैर्निकृत्य कर्णप्रहितानिषून्बहून्
विदार्य कर्णं निशितैरयस्मयैस्तवात्मजं ज्येष्ठमविध्यदष्टभिः २३
कृपोऽथ भोजश्च तवात्मजस्तथा स्वयं च कर्णो निशितैरताडयत्

स तैश्चतुर्भिर्युयुधे यदूत्तमो दिगीश्वरैर्दैत्यपतिर्यथा तथा २४
समानतेनेष्वसनेन कूजता भृशाततेनामितबाणवर्षिणा
बभूव दुर्धर्षतरः स सात्यकिः शरन्नभोमध्यगतो यथा रविः २५
पुनः समासाद्य रथान्सुदंशिताः शिनिप्रवीरं जुगुपुः परंतपाः
समेत्यपाञ्चालरथा महारणे मरुद्गणाः शक्रमिवारिनिग्रहे २६
ततोऽभवद्युद्धमतीव दारुणं तवाहितानां तव सैनिकैः सह
रथाश्वमातङ्गविनाशनं तथा यथा सुराणामसुरैः पुराभवत् २७
रथद्विपा वाजिपदातयोऽपि वा भ्रमन्ति नानाविधशस्त्रवेष्टिताः
परस्परेणाभिहताश्च चस्खलुर्विनेदुरार्ता व्यसवोऽपतन्त च २८
तथा गते भीममभीस्तवात्मजः ससार राजावरजः किरञ्शरैः
तमभ्यधावत्त्वरितो वृकोदरो महारुरुं सिंह इवाभिपेतिवान् २९
ततस्तयोर्युद्धमतीतमानुषं प्रदीव्यतोः प्राण दुरोदरेऽभवत्
परस्परेणाभिनिविष्ट रोषयो रुदग्रयोः शम्बरशक्रयोर्यथा ३०
शरैः शरीरान्तकरैः सुतेजनैर्निजघ्नतुस्तावितरेतरं भृशम्
सकृत्प्रभिन्नाविव वाशितान्तरे महागजौ मन्मथसक्तचेतसौ ३१
तवात्मजस्याथ वृकोदरस्त्वरन्धनुः क्षुराभ्यां ध्वजमेव चाच्छिनत्
ललाटमप्यस्य बिभेद पत्रिणा शिरश्च कायात्प्रजहार सारथेः ३२
स राजपुत्रोऽन्यदवाप्य कार्मुकं वृकोदरं द्वादशभिः पराभिनत्
स्वयं नियच्छंस्तुरगानजिह्मगैः शरैश्च भीमं पुनरभ्यवीवृषत् ३३
इति श्रीमहाभारते कर्णपर्वणि षष्टितमोऽध्यायः ६०

## एक षष्टितमोऽध्यायः

सञ्जय उवाच
तत्राकरोद्दुष्करं राजपुत्रो दुःशासनस्तुमुले युध्यमानः
चिच्छेद भीमस्य धनुः क्षुरेण षड्भिः शरैः सारथिमप्यविध्यत् १
ततोऽभिनद्बहुभिः क्षिप्रमेव वरेषुभिर्भीमसेनं महात्मा
स विक्षरन्नाग इव प्रभिन्नो गदामस्मै तुमुले प्राहिणोद्वै २
तयाहरद्दश धन्वन्तराणि दुःशासनं भीमसेनः प्रसह्य
तया हतः पतितो वेपमानो दुःशासनो गदया वेगवत्या ३
हयाः ससूताश्च हता नरेन्द्र चूर्णीकृतश्चास्य रथः पतन्त्या

विध्वस्तवर्माभरणाम्बरस्त्रग्विचेष्टमानो भृशवेदनार्तः ४
ततः स्मृत्वा भीमसेनस्तरस्वी सापत्नकं यत्प्रयुक्तं सुतैस्ते
रथादवप्लुत्य गतः स भूमौ यत्नेन तस्मिन्प्रणिधाय चक्षुः ५
असिं समुद्धृत्य शितं सुधारं कण्ठे समाक्रम्य च वेपमानम्
उत्कृत्य वक्षः पतितस्य भूमावथापिबच्छोणितमस्य कोष्णम्
आस्वाद्य चास्वाद्य च वीक्षमाणः क्रुद्धोऽतिवेलं प्रजगाद वाक्यम् ६
स्तन्यस्य मातुर्मधुसर्पिषो वा माध्वीकपानस्य च सत्कृतस्य
दिव्यस्य वा तोयरसस्य पानात्पयोदधिभ्यां मथिताच्च मुख्यात्
सर्वेभ्य एवाभ्यधिको रसोऽय मतो ममाद्याहितलोहितस्य ७
एवं ब्रुवाणं पुनराद्रवन्तमास्वाद्य वल्गन्तमतिप्रहृष्टम्
ये भीमसेनं ददृशुस्तदानीं भयेन तेऽपि व्यथिता निपेतुः ८
ये चापि तत्रापतिता मनुष्यास्तेषां करेभ्यः पतितं च शस्त्रम्
भयाच्च संचुक्रुशुरुच्चकैस्ते निमीलिताक्षा ददृशुश्च तन्न ९
ये तत्र भीमं ददृशुः समन्ताद्दौःशासनं तद्रुधिरं पिबन्तम्
सर्वे पलायन्त भयाभिपन्ना नायं मनुष्य इति भाषमाणाः १०
शृण्वतां लोकवीराणामिदं वचनमब्रवीत्
एष ते रुधिरं कण्ठात्पिबामि पुरुषाधम
ब्रूहीदानीं सुसंरब्धः पुनर्गौरिति गौरिति ११
प्रमाणकोटयां शयनं कालकूटस्य भोजनम्
दशनं चाहिभिः कष्टं दाहं च जतुवेश्मनि १२
द्यूतेन राज्यहरणमरण्ये वसतिश्च या
इष्वस्त्राणि च स्त्रंगामेष्वसुखानि च वेश्मनि १३
दुःखान्येतानि जानीमो न सुखानि कदाचन
धृतराष्ट्रस्य दौरात्म्यात्सपुत्रस्य सदा वयम् १४
इत्युक्त्वा वचनं राजञ्जयं प्राप्य वृकोदरः
पुनराह महाराज स्मयंस्तौ केशवार्जुनौ १५
दुःशासने यद्रणे संश्रुतं मे तद्वै सर्वं कृतमद्येह वीरौ
अद्यैव दास्याम्यपरं द्वितीयं दुर्योधनं यज्ञपशुं विशस्य
शिरो मृदित्वा च पदा दुरात्मनः शान्तिं लप्स्ये कौरवाणां समक्षम् १६
एतावदुक्त्वा वचनं प्रहृष्टो ननाद चोच्चै रुधिरार्द्रगात्रः

ननर्त चैवातिबलो महात्मा वृत्रं निहत्येव सहस्रनेत्रः १७
इति श्रीमहाभारते कर्णपर्वणि एकषष्टितमोऽध्यायः ६१

## द्विषष्टितमोऽध्यायः

सञ्जय उवाच
दुःशासने तु निहते पुत्रास्तव महारथाः
महाक्रोधविषा वीराः समरेष्वपलायिनः
दश राजन्महावीर्या भीमं प्राच्छादयञ्शरैः १
कवची निषङ्गी पाशी दण्डधारो धनुर्धरः
अलोलुपः शलः संधो वातवेगसुवर्चसौ २
एते समेत्य सहिता भ्रातृव्यसनकर्शिताः
भीमसेनं महाबाहुं मार्गणैः समवारयन् ३
स वार्यमाणो विशिखैः समन्तात्तैर्महारथैः
भीमः क्रोधाभिरक्ताक्षः क्रुद्धः काल इवाबभौ ४
तांस्तु भल्लैर्महावेगैर्दशभिर्दशभिः शितैः
रुक्माङ्गदो रुक्मपुङ्खैः पार्थो निन्ये यमक्षयम् ५
हतेषु तेषु वीरेषु प्रदुद्राव बलं तव
पश्यतः सूतपुत्रस्य पाण्डवस्य भयार्दितम् ६
ततः कर्णो महाराज प्रविवेश महारणम्
दृष्ट्वा भीमस्य विक्रान्तमन्तकस्य प्रजास्विव ७
तस्य त्वाकारभावज्ञः शल्यः समितिशोभनः
उवाच वचनं कर्णं प्राप्तकालमरिंदम
मा व्यथां कुरु राधेय नैतत्त्वय्युपपद्यते ८
एते द्रवन्ति राजानो भीमसेनभयार्दिताः
दुर्योधनश्च संमूढो भ्रातृव्यसनदुःखितः ९
दुःशासनस्य रुधिरे पीयमाने महात्मना
व्यापन्नचेतसश्चैव शोकोपहतमन्यवः १०
दुर्योधनमुपासन्ते परिवार्य समन्ततः
कृपप्रभृतयः कर्ण हतशेषाश्च सोदराः ११
पाण्डवा लब्धलक्षाश्च धनंजयपुरोगमाः

त्वामेवाभिमुखाः शूरा युद्धाय समुपास्थिताः १२
स त्वं पुरुषशार्दूल पौरुषे महति स्थितः
क्षत्रधर्मं पुरस्कृत्य प्रत्युद्याहि धनंजयम् १३
भारो हि धार्तराष्ट्रेण त्वयि सर्वः समर्पितः
तमुद्वह महाबाहो यथाशक्ति यथाबलम्
जये स्याद्विपुला कीर्तिर्ध्रुवः स्वर्गः पराजये १४
वृषसेनश्च राधेय संक्रुद्धस्तनयस्तव
त्वयि मोहसमापन्ने पाण्डवानभिधावति १५
एतच्छ्रुत्वा तु वचनं शल्यस्यामिततेजसः
हृदि मानुष्यकं भावं चक्रे युद्धाय सुस्थिरम् १६
ततः क्रुद्धो वृषसेनोऽभ्यधावदातस्थिवांसं स्वरथं हतारिम्
वृकोदरं कालमिवात्तदण्डं गदाहस्तं पोथमानं त्वदीयान् १७
तमभ्यधावन्नकुलः प्रवीरो रोषादमित्रं प्रतुदन्पृषत्कैः
कर्णस्य पुत्रं समरे प्रहृष्टं जिष्णुर्जिघांसुर्मघवेव जम्भम् १८
ततो ध्वजं स्फाटिकचित्रकम्बुं चिच्छेद वीरो नकुलः क्षुरेण
कर्णात्मजस्येष्वसनं च चित्रं भल्लेन जाम्बूनदपट्टनद्धम् १९
अथान्यदादाय धनुः सुशीघ्रं कर्णात्मजः पाण्डवमभ्यविध्यत्
दिव्यैर्महास्त्रैर्नकुलं महास्त्रो दुःशासनस्यापचितिं यियासुः २०
ततःक्रुद्धो नकुलस्तं महात्मा शरैर्महोल्काप्रतिमैरविध्यत्
दिव्यैरस्त्रैरभ्यविध्यच्च सोऽपि कर्णस्य पुत्रो नकुलं कृतास्त्रः २१
कर्णस्य पुत्रो नकुलस्य राजन्सर्वानश्वानक्षिणोदुत्तमास्त्रैः
वनायुजान्सुकुमारस्य शुभ्रानलंकृताञ्जातरूपेण शीघ्रान् २२
ततो हताश्वादवरुह्य यानादादाय चर्म रुचिरं चाष्टचन्द्रम्
आकशसंकाशमसिं गृहीत्वा पोप्लूयमानः खगवच्चचार २३
ततोऽन्तरिक्षे नृवराश्वनागांश्चिच्छेद मार्गान्विचरन्विचित्रान्
ते प्रापतन्नसिना गां विशस्ता यथाश्वमेधे पशवः शमित्रा २४
द्विसाहस्रा विदिता युद्धशौण्डा नानादेश्याः सुभृताः सत्यसंधाः
एकेन शीघ्रं नकुलेन कृत्ताः सारेप्सुनेवोत्तमचन्दनास्ते २५
तमापतन्तं नकुलं सोऽभिपत्य समन्ततः सायकैरभ्यविध्यत्
स तुद्यमानो नकुलः पृषत्कैर्विव्याथ वीरं स चुकोप विद्धः २६

तं कर्णपुत्रो विधमन्तमेकं नराश्वमातङ्गरथप्रवेकान्
क्रीडन्तमष्टादशभिः पृषत्कैर्विव्याध वीरं स चुकोप विद्धः २७
ततोऽभ्यधावत्समरे जिघांसुः कर्णात्मजं पाण्डुसुतो नृवीरः
तस्येषुभिर्व्यधमत्कर्णपुत्रो महारणे चर्म सहस्रतारम् २८
तस्यायसं निशितं तीक्ष्णधारमसिं विकोशं गुरुभारसाहम्
द्विषच्छरीरापहरं सुघोरमाधुन्वतः सर्पमिवोग्ररूपम् २९
क्षिप्रं शरैः षड्भिरमित्रसाहश्चकर्त खड्गं निशितैः सुधारैः
पुनश्च पीतैर्निशितैः पृषत्कैः स्तनान्तरे गाढमथाभ्यविध्यत् ३०
स भीमसेनस्य रथं हताश्वो माद्रीसुतः कर्णसुताभितप्तः
आपुप्लुवे सिंह इवाचलाग्रं संप्रेक्षमाणस्य धनंजयस्य ३१
नकुलमथ विदित्वा छिन्नबाणासनासिं विरथमरिशरार्तं कर्णपुत्रास्त्र भग्नम्
पवनधुतपताका ह्रादिनो वल्गिताश्वा वरपुरुषनियत्तास्ते रथः शीघ्रमीयुः ३२
द्रुपदसुतवरिष्ठाः पञ्च शैनेयषष्ठा द्रुपददुहितृपुत्राः पञ्च चामित्रसाहाः
द्विरदरथनराश्वान्सूदयन्तस्त्वदीयान्भुजगपतिसकाशैर्मार्गणैरात्तशस्त्राः ३३
अथ तव रथमुख्यास्तान्प्रतीयुस्त्वरन्तो हृदिकसुतकृपौ च द्रौणिदुर्योधनौ च
शकुनिशुकवृकाश्च क्राथदेवावृधौ च द्विरदजलदघोषैः स्यन्दनैः कार्मुकैश्च
३४
तव नरवरवर्यास्तान्दशैकं च वीरान्प्रवरशरवराग्र्यैस्ताडयन्तोऽभ्यरुन्धन्
नवजलदसवर्णैर्हस्तिभिस्तानुदीयुर्गिरिशिखरनिकाशैर्भीमवेगैः कुणिन्दाः ३५
सुकल्पिता हैमवता मदोत्कटा रणाभिकामैः कृतिभिः समास्थिताः
सुवर्णजालावतता बभुर्गजास्तथा यथा वै जलदाः सविद्युतः ३६
कुणिन्दपुत्रो दशभिर्महायसैः कृपं ससूताश्वमपीडयद्भृशम्
ततः शरद्वत्सुतसायकैर्हतः सहैव नागेन पपात भूतले ३७
कुणिन्दपुत्रावरजस्तु तोमरैर्दिवाकारांशुप्रतिमैरयस्मयैः
रथं च विक्षोभ्य ननाद नर्दतस्ततोऽस्य गान्धारपतिः शिरोऽहरत् ३८
ततः कुणिन्देषु हतेषु तेष्वथ प्रहृष्टरूपास्तव ते महारथाः
भृशं प्रदध्मुर्लवणाम्बुसंभवान्परांश्च बाणासनपाणयोऽभ्ययुः ३९
अथाभवद्युद्धमतीव दारुणं पुनः कुरूणां सह पाण्डुसृञ्जयैः
शरासिशक्त्यृष्टिगदापरश्वधैर्नराश्वनागासुहरं भृशाकुलम् ४०
रथाश्वमातङ्गपदातिभिस्ततः परस्परं विप्रहतापतन्क्षितौ

यथा सविद्युत्स्तनिता बलाहकाः समास्थिता दिग्भ्य इवोग्रमारुतैः ४१
ततः शतानीकहतान्महागजांस्तथा रथान्पत्तिगणांश्च तावकान्
जघान भोजश्च हयानथापतन्विशस्त्रकृत्ताः कृतवर्मणा द्विपाः ४२
अथापरे द्रौणिशराहता द्विपास्त्रयः ससर्वायुधयोधकेतवः
निपेतुरुर्व्यां व्यसवः प्रपातितास्तथा यथा वज्रहता महाचलाः ४३
कुणिन्दराजावरजादनन्तरः स्तनान्तरे पत्रिवरैरताडयत्
तवात्मजं तस्य तवात्मजः शरैः शितैः शरीरं बिभिदे द्विपं च तम् ४४
स नागराजः सह राजसूनुना पपात रक्तं बहु सर्वतः क्षरन्
शचीशवज्रप्रहतोऽम्बुदागमे यथा जलं गैरिकपर्वतस्तथा ४५
कुणिन्दपुत्रप्रहितोऽपरद्विपः शुकं ससूताश्वरथं व्यपोथयत्
ततोऽपतत्क्राथशराभिदारितः सहेश्वरो वज्रहतो यथा गिरिः ४६
रथी द्विपस्थेन हतोऽपतच्छरैः क्राथाधिपः पर्वतजेन दुर्जयः
स वाजिसूतेष्वसनस्तथापतद्यथा महावातहतो महाद्रुमः ४७
वृको द्विपस्थं गिरिराजवासिनं भृशं शरैर्द्वादशभिः पराभिनत्
ततो वृकं साश्वरथं महाजवं त्वरंश्चतुर्भिश्चरणै व्यपोथयत् ४८
स नागराजः सनियन्तृकोऽपतत्पराहतो बभ्रुसुतेषुभिभृशम्
स चापि देवावृधसूनुरर्दितः पपात नुन्नः सहदेवसूनुना ४९
विषाणपोत्रापरगात्रघातिना गजेन हन्तुं शकुनः कुणिन्दजः
जगाम वेगेन भृशार्दयंश्च तं ततोऽस्य गान्धारपतिः शिरोऽहरत् ५०
ततः शतानीकहता महागजा हया रथाः पत्तिगणाश्च तावकाः
सुपर्णवातप्रहता यथा नगास्तथा गता गामवशा विचूर्णिताः ५१
ततोऽभ्यविध्यद्बहुभिःशितैः शरैः कुणिन्दपुत्रो नकुलात्मजं स्मयन्
ततोऽस्य कायान्निचकर्त नाकुलि शिरः क्षुरेणाम्बुजसंनिभाननम् ५२
ततः शतानीकमविध्यदाशुगैस्त्रिभिः शितैः कर्णसुतोऽजुनं त्रिभिः
त्रिभिश्च भीमं नकुलं च सप्तभिर्जनार्दनं द्वादशभिश्च सायकैः ५३
तदस्य कर्मातिमनुष्यकर्मणः समीक्ष्य हृष्टाः कुरवोऽभ्यपूजयन्
पराक्रमज्ञास्तु धनंजयस्य ते हुतोऽयमग्नाविति तं तु मेनिरे ५४
ततः किरीटी परवीरघाती हताश्वमालोक्य नरप्रवीरम्
तमभ्यधावद्वृषसेनमाहवे स सूतजस्य प्रमुखे स्थितं तदा ५५
तमापतन्तं नरवीरमुग्रं महाहवे बाणसहस्रधारिणम्

अभ्यापतत्कर्णसुतो महारथो यथैव चेन्द्रं नमुचिः पुरातने ५६
ततोऽद्भुतेनैकशतेन पार्थं शरैर्विद्ध्वा सूतपुत्रस्य पुत्रः
ननाद नादं सुमहानुभावो विद्ध्वेव शक्रं नमुचिः पुरा वै ५७
पुनः स पार्थं वृषसेन उग्रैर्बाणैरविध्यद्भुजमूलमध्ये
तथैव कृष्णं नवभिः समार्दयत्पुनश्च पार्थं दशभिः शिताग्रैः ५८
ततः किरीटी रणमूर्ध्नि कोपात्कृत्वा त्रिशाखां भ्रुकुटिं ललाटे
मुमोच बाणान्विशिखान्महात्मा वधाय राजन्सूतपुत्रस्य संख्ये ५९
विव्याध चैनं दशभिः पृषत्कैर्मर्मस्वसक्तं प्रसभं किरीटी
चिच्छेद चास्येष्वसनं भुजौ च क्षुरैश्चतुर्भिः शिर एव चोग्रैः ६०
स पार्थबाणाभिहतः पपात रथाद्विबाहुर्विशिरा धरायाम्
सुपुष्पितः पर्णधरोऽतिकायो वातेरितः शाल इवाद्रिशृङ्गात् ६१
तं प्रेक्ष्य बाणाभिहतं पतन्तं रथात्सुतं सूतजः क्षिप्रकारी
रथं रथेनाशु जगाम वेगात्किरीटिनं पुत्रवधाभितप्तः ६२
इति श्रीमहाभारते कर्णपर्वणिद्विषष्टितमोऽध्यायः ६२

## त्रिषष्टितमोऽध्यायः

सञ्जय उवाच
वृषसेनं हतं दृष्ट्वा शोकामर्षसमन्वितः
मुक्त्वा शोकोद्भवं वारि नेत्राभ्यां सहसा वृषः १
रथेन कर्णस्तेजस्वी जगामाभिमुखो रिपून्
युद्धायामर्षताम्राक्षः समाहूय धनंजयम् २
तौ रथौ सूर्यसंकाशौ वैयाघ्रपरिवारणौ
समेतौ ददृशुस्तत्र द्वाविवार्कौ समागतौ ३
श्वेताश्वौ पुरुषादित्यावास्थितावरिमर्दनौ
शुशुभाते महात्मानौ चन्द्रादित्यौ यथा दिवि ४
तौ दृष्ट्वा विस्मयं जग्मुः सर्वभूतानि मारिष
त्रैलोक्यविजये यत्ताविन्द्रवैरोचनाविव ५
रथज्यातलनिर्ह्रादैर्बाणशङ्खरवैरपि
तौ रथावभिधावन्तौ समालोक्य महीक्षिताम् ६
ध्वजौ च दृष्ट्वा संसक्तौ विस्मयः समपद्यत

हस्तिकद्त्यां च कर्णस्य वानरं च किरीटिनः ७
तौ रथौ संप्रसक्तौ च दृष्ट्वा भारत पार्थिवाः
सिंहनादरवांश्चक्रुः साधुवादांश्च पुष्कलान् ८
श्रुत्वा तु द्वैरथं ताभ्यां तत्र योधाः समन्ततः
चक्रुर्बाहु वलं चैव तथा चेलवलं महत् ९
आजग्मुः कुरवस्तत्र वादित्रानुगतास्तदा
कर्णं प्रहर्षयन्तश्च शङ्खान्दध्मुश्च पुष्कलान् १०
तथैव पाण्डवाः सर्वे हर्षयन्तो धनंजयम्
तूर्यशङ्खनिनादेन दिशः सर्वा व्यनादयन् ११
द्त्वेडितास्फोटितोत्क्रुष्टैस्तुमुलं सर्वतोऽभवत्
बाहुघोषाश्च वीराणां कर्णार्जुनसमागमे १२
तौ दृष्ट्वा पुरुषव्याघ्रौ रथस्थौ रथिनां वरौ
प्रगृहीतमहाचापौ शरशक्तिगदायुधौ १३
वर्मिणौ बद्धनिस्त्रिंशौ श्वेताश्वौ शङ्खशोभिनौ
तूणीरवरसंपन्नौ द्वावपि स्म सुदर्शनौ १४
रक्तचन्दनदिग्धाङ्गौ समदौ वृषभाविव
आशीविषसमप्रख्यौ यमकालान्तकोपमौ १५
इन्द्रवृत्राविव क्रुद्धौ सूर्याचन्द्रमसप्रभौ
महाग्रहाविव क्रूरौ युगान्ते समुपस्थितौ १६
देवगर्भौ देवसमौ देवतुल्यौ च रूपतः
समेतौ पुरुषव्याघ्रौ प्रेद्त्य कर्णधनंजयौ १७
उभौ वरायुधधरावुभौ रणकृतश्रमौ
उभौ च बाहुशब्देन नादयन्तौ नभस्तलम् १८
उभौ विश्रुतकर्माणौ पौरुषेण बलेन च
उभौ च सदृशौ युद्धे शम्बरामरराजयोः १९
कार्तवीर्यसमौ युद्धे तथा दाशरथेः समौ
विष्णुवीर्यसमौ वीर्ये तथा भवसमौ युधि २०
उभौ श्वेतहयौ राजन्रथप्रवरवाहिनौ
सारथी प्रवरौ चैव तयोरास्तां महाबलौ २१
तौ तु दृष्ट्वा महाराज राजमानौ महारथौ

सिद्धचारणसंघानां विस्मयः समपद्यत २२
धार्तराष्ट्रास्ततः कर्णं सबला भरतर्षभ
परिवव्रुर्महात्मानं क्षिप्रमाहवशोभिनम् २३
तथैव पाण्डवा हृष्टा धृष्टद्युम्नपुरोगमाः
परिवव्रुर्महात्मानं पार्थमप्रतिमं युधि २४
तावकानां रणे कर्णो ग्लह आसीद्विशां पते
तथैव पाण्डवेयानां ग्लहः पार्थोऽभवद्युधि २५
त एव सभ्यास्तत्रासन्प्रेक्षकाश्चाभवन्स्म ते
तत्रैषां ग्लहमानानां ध्रुवौ जयपराजयौ २६
ताभ्यां द्यूतं समायत्तं विजयायेतराय वा
अस्माकं पाण्डवानां च स्थितानां रणमूर्धनि २७
तौ तु स्थितौ महाराज समरे युद्धशालिनौ
अन्योन्यं प्रतिसंरब्धावन्योन्यस्य जयैषिणौ २८
तावुभौ प्रजिहीर्षेतामिन्द्रवृत्राविवाभितः
भीमरूपधरावास्तां महाधूमाविव ग्रहौ २९
ततोऽन्तरिक्षे साक्षेपा विवादा भरतर्षभ
मिथो भेदाश्च भूतानामासन्कर्णार्जुनान्तरे
व्याश्रयन्त दिशो भिन्नाः सर्वलोकाश्च मारिष ३०
देवदानवगन्धर्वाः पिशाचोरगराक्षसाः
प्रतिपक्षग्रहं चक्रुः कर्णार्जुनसमागमे ३१
द्यौरासीत्कर्णतो व्यग्रा सनक्षत्रा विशां पते
भूमिर्विशाला पार्थस्य माता पुत्रस्य भारत ३२
सरितः सागराश्चैव गिरयश्च नरोत्तम
वृक्षाश्चौषधयस्तत्र व्याश्रयन्त किरीटिनम् ३३
असुरा यातुधानाश्च गुह्यकाश्च परंतप
कर्णतः समपद्यन्त खेचराणि वयांसि च ३४
रत्नानि निधयः सर्वे वेदाश्चाख्यानपञ्चमाः
सोपवेदोपनिषदः सरहस्याः ससंग्रहाः ३५
वासुकिश्चित्रसेनश्च तक्षकश्चोपतक्षकः
पर्वताश्च तथा सर्वे काद्रवेयाश्च सान्वयाः

विषवन्तो महारोषा नागाश्चार्जुनतोऽभवन् ३६
एरावताः सौरभेया वैशालेयाश्च भोगिनः
एतेऽभवन्नर्जुनतः क्षुद्रसर्पास्तु कर्णतः ३७
ईहामृगा व्याडमृगा मङ्गल्याश्च मृगद्विजाः
पार्थस्य विजयं राजन्सर्व एवाभिसंश्रिताः ३८
वसवो मरुतः साध्या रुद्रा विश्वेऽश्विनौ तथा
अग्निरिन्द्रश्च सोमश्च पवनश्च दिशो दश
धनंजयमुपाजग्मुरादित्याः कर्णतोऽभवन् ३९
देवास्तु पितृभिः सार्धं सगणार्जुनतोऽभवन्
यमो वैश्रवणश्चैव वरुणश्च यतोऽजुनः ४०
देवब्रह्म नृपर्षीणां गणाः पाण्डवतोऽभवन्
तुम्बुरुप्रमुखा राजन्गन्धर्वाश्च यतोऽजुनः ४१
प्रावेयाः सह मौनेयैर्गन्धर्वाप्सरसां गणाः
ईहामृगव्याडमृगैर्द्विपाश्च रथपत्तिभिः ४२
उह्यमानास्तथा मेघैर्वायुना च मनीषिणः
दिदृक्षवः समाजग्मुः कर्णार्जुनसमागमम् ४३
देवदानवगन्धर्वा नागा यक्षाः पतत्रिणः
महर्षयो वेदविदः पितरश्च स्वधाभुजः ४४
तपो विद्यास्तथौषध्यो नानारूपाम्बरत्विषः
अन्तरिक्षे महाराज विनदन्तोऽवतस्थिरे ४५
ब्रह्मा ब्रह्मर्षिभिः सार्धं प्रजापतिभिरेव च
भवेनावस्थितो यानं दिव्यं तं देशमभ्ययात् ४६
दृष्ट्वा प्रजापतिं देवाः स्वयंभुवमुपागमन्
समोऽस्तु देव विजय एतयोर्नरसिंहयोः ४७
तदुपश्रुत्य मघवा प्रणिपत्य पितामहम्
कर्णार्जुनविनाशेन मा नश्यत्वखिलं जगत् ४८
स्वयंभो ब्रूहि तद्वाक्यं समोऽस्तु विजयोऽनयोः
तत्तथास्तु नमस्तेऽस्तु प्रसीद भगवन्मम ४९
ब्रह्मेशानावथो वाक्यमूचतुस्त्रिदशेश्वरम्
विजयो ध्रुव एवास्तु विजयस्य महात्मनः ५०

मनस्वी बलवाञ्शूरः कृतास्त्रश्च तपोधनः
बिभर्ति च महातेजा धनुर्वेदमशेषतः ५१
अतिक्रमेच्च माहात्म्याद्दिष्टमेतस्य पर्ययात्
अतिक्रान्ते च लोकानामभावो नियतो भवेत् ५२
न विद्यते व्यवस्थानं कृष्णयोः क्रुद्धयोः क्वचित्
स्रष्टारौ ह्यसतश्चोभौ सतश्च पुरुषर्षभौ ५३
नरनारायणावेतौ पुराणावृषिसत्तमौ
अनियत्तौ नियन्तारावभीतौ स्म परंतपौ ५४
कर्णो लोकानयं मुख्यान्प्राप्नोतु पुरुषर्षभः
वीरो वैकर्तनः शूरो विजयस्त्वस्तु कृष्णयोः ५५
वसूनां च सलोकत्वं मरुतां वा समाप्नुयात्
सहितो द्रोणभीष्माभ्यां नाकलोके महीयताम् ५६
इत्युक्तो देवदेवाभ्यां सहस्राक्षोऽब्रवीद्वचः
आमन्त्र्य सर्वभूतानि ब्रह्मेशानानुशासनात् ५७
श्रुतं भवद्भिर्यत्प्रोक्तं भगवद्भ्यां जगद्धितम्
तत्तथा नान्यथा तद्धि तिष्ठध्वं गतमन्यवः ५८
इति श्रुत्वेन्द्रवचनं सर्वभूतानि मारिष
विस्मितान्यभवन्राजन्पूजयांचक्रिरे च तत् ५९
व्यसृजंश्च सुगन्धीनि नानारूपाणि खात्तथा
पुष्पवर्षाणि विबुधा देवतूर्याण्यवादयन् ६०
दिदृक्षवश्चाप्रतिमं द्वैरथं नरसिंहयोः
देवदानवगन्धर्वाः सर्व एवावतस्थिरे
रथौ च तौ श्वेतहयौ युक्तकेतू महास्वनौ ६१
समागता लोकवीराः शङ्खान्दध्मुः पृथक्पृथक्
वासुदेवार्जुनौ वीरौ कर्णशल्यौ च भारत ६२
तद्भीरुसंत्रासकरं युद्धं समभवत्तदा
अन्योन्यस्पर्धिनोर्वीर्ये शक्रशम्बरयोरिव ६३
तयोर्ध्वजौ वीतमालौ शुशुभाते रथस्थितौ
पृथग्रूपौ समार्छन्तौ क्रोधं युद्धे परस्परम् ६४
कर्णस्याशीविषनिभा रत्नसारवती दृढा

पुरंदरधनुःप्रख्या हस्तिकक्ष्या व्यराजत ६५
कपिश्रेष्ठस्तु पार्थस्य व्यादितास्यो भयंकरः
भीषयन्नेव दंष्ट्राभिर्दुर्निरीक्ष्यो रविर्यथा ६६
युद्धाभिलाषुको भूत्वा ध्वजो गाण्डीवधन्वनः
कर्णध्वजमुपातिष्ठत्सोऽवधीदभिनर्दयन् ६७
उत्पत्य च महावेगः कक्ष्यामभ्यहनत्कपिः
नखैश्च दशनैश्चैव गरुडः पन्नगं यथा ६८
सुकिङ्किणीकाभरणा कालपाशोपमायसी
अभ्यद्रवत्सुसंक्रुद्धा नागकक्ष्या महाकपिम् ६९
उभयोरुत्तमे युद्धे द्वैरथे द्यूत आहृते
प्राकुर्वाते ध्वजौ युद्धं प्रत्यहेषन्हयान्हयाः ७०
अविध्यत्पुण्डरीकाक्षः शल्यं नयनसायकैः
स चापि पुण्डरीकाक्षं तथैवाभिसमैक्षत ७१
तत्राजयद्वासुदेवः शल्यं नयनसायकैः
कर्णं चाप्यजयद्दृष्ट्या कुन्तीपुत्रो धनंजयः ७२
अथाब्रवीत्सूतपुत्रः शल्यमाभाष्य सस्मितम्
यदि पार्थो रणे हन्यादद्य मामिह कर्हिचित्
किमुत्तरं तदा ते स्यात्सखे सत्यं ब्रवीहि मे ७३
शल्य उवाच
यदि कर्णं रणे हन्यादद्य त्वां श्वेतवाहनः
उभावेकरथेनाहं हन्यां माधवपाण्डवौ ७४
सञ्जय उवाच
एवमेव तु गोविंदमर्जुनः प्रत्यभाषत
तं प्रहस्याब्रवीत्कृष्णः पार्थं परमिदं वचः ७५
पतेद्दिवाकरः स्थानाच्छीर्येतानेकधा क्षितिः
शैत्यमग्निरियान्न त्वा कर्णो हन्याद्धनंजयम् ७६
यदि त्वेवं कथंचित्स्याल्लोकपर्यसनं यथा
हन्यां कर्णं तथा शल्यं बाहुभ्यामेव संयुगे ७७
इति कृष्णवचः श्रुत्वा प्रहसन्कपिकेतनः
अर्जुनः प्रत्युवाचेदं कृष्णमक्लिष्टकारिणम्

ममाप्येतावपर्याप्तौ कर्णशल्यौ जनार्दन ७८
सपताकाध्वजं कर्णं सशल्यरथवाजिनम्
सच्छत्रकवचं चैव सशक्तिशरकार्मुकम् ७९
द्रष्टास्यद्य शरैः कर्णं रणे कृत्तमनेकधा
अद्यैनं सरथं साश्वं सशक्तिकवचायुधम्
न हि मे शाम्यते वैरं कृष्णां यत्प्राहसत्पुरा ८०
अद्य द्रष्टासि गोविन्द कर्णमुन्मथितं मया
वारणेनेव मत्तेन पुष्पितं जरतीरुहम् ८१
अद्य ता मधुरा वाचः श्रोतासि मधुसूदन
अद्याभिमन्युजननीमनृणः सान्त्वयिष्यसि
कुन्तीं पितृष्वसारं च संप्रहृष्टो जनार्दन ८२
अद्य बाष्पमुखीं कृष्णां सान्त्वयिष्यसि माधव
वाग्भिश्चामृतकल्पाभिर्धर्मराजं युधिष्ठिरम् ८३
इति श्रीमहाभारते कर्णपर्वणि त्रिषष्टितमोऽध्यायः ६३

## चतुःषष्टितमोऽध्यायः

सञ्जय उवाच
तद्देवनागासुरसिद्धसंघैर्गन्धर्वयक्षाप्सरसां च संघैः
ब्रह्मर्षिराजर्षिसुपर्णजुष्टं बभौ वियद्विस्मयनीयरूपम् १
नानद्यमानं निनदैर्मनोज्ञैर्वादित्रगीतस्तुतिभिश्च नृत्यैः
सर्वेऽन्तरिक्षे ददृशुर्मनुष्याः खस्थांश्च तान्विस्मयनीयरूपान् २
ततः प्रहृष्टाः कुरुपाण्डुयोधा वादित्रपत्रायुधसिंहनादैः
निनादयन्तो वसुधां दिशश्च स्वनेन सर्वे द्विषतो निजघ्नुः ३
नानाश्वमातङ्गरथायुताकुलं वरासिशक्त्यृष्टिनिपातदुःसहम्
अभीरुजुष्टं हतदेहसंकुलं रणाजिरं लोहितरक्तमाबभौ ४
तथा प्रवृत्तेऽस्त्रभृतां पराभवे धनंजयश्चाधिरथिश्च सायकैः
दिशश्च सैन्यं च शितैरजिह्मगैः परस्परं प्रोर्णुवतुः स्म दंशितौ ५
ततस्त्वदीयाश्च परे च सायकैः कृतेऽन्धकारे विविदुर्न किंचन
भयात्तु तावेव रथौ समाश्रयंस्तमोनुदौ खे प्रसृता इवांशवः ६
ततोऽस्त्रमस्त्रेण परस्परस्य तौ विधूय वाताविव पूर्वपश्चिमौ

घनान्धकारे वितते तमोनुदौ यथोदितौ तद्वदतीव रेजतुः ७
न चाभिमन्तव्यमिति प्रचोदिताः परे त्वदीयाश्च तदावतस्थिरे
महारथौ तौ परिवार्य सर्वतः सुरासुरा वासवशम्बराविव ८
मृदङ्गभेरीपणवानकस्वनैर्निनादिते भारत शङ्खनिस्वनैः
ससिंहनादौ बभतुर्नरोत्तमौ शशाङ्कसूर्याविव मेघसंप्लवे ९
महाधनुर्मण्डलमध्यगावुभौ सुवर्चसौ बाणसहस्ररश्मिनौ
दिधक्षमाणौ सचराचरं जगद्युगास्तसूर्याविव दुःसहौ रणे १०
उभावजेयावहितान्तकावुभौ जिघांसतुस्तौ कृतिनौ परस्परम्
महाहवे वीरवरौ समीयतुर्यथेन्द्रजम्भाविव कर्णपाण्डवौ ११
ततो महास्त्राणि महाधनुर्धरौ विमुञ्चमानाविषुभिर्भयानकैः
नराश्वनागानमितौ निजघ्नतुः परस्परं जघ्नतुरुत्तमेषुभिः १२
ततो विसस्रुः पुनरर्दिताः शरैर्नरोत्तमाभ्यां कुरुपाण्डवाश्रयाः
सनागपत्त्यश्वरथा दिशो गतास्तथा यथा सिंहभयाद्वनौकसः १३
ततस्तु दुर्योधनभोजसौबलाः कृपश्च शारद्वतसूनुना सह
महारथाः पञ्च धनंजयाच्युतौ शरैः शरीरान्तकरैरताडयन् १४
धनूषिं तेषामिषुधीन्हयान्ध्वजान्रथांश्च सूतांश्च धनंजयः शरैः
समं च चिच्छेद पराभिनच्च ताञ्शरोत्तमैर्द्वादशभिश्च सूतजम् १५
अथाभ्यधावंस्त्वरिताः शतं रथाः शतं च नागार्जुनमाततायिनः
शकास्तुखारा यवनाश्च सादिनः सहैव काम्बोजवरैर्जिघांसवः १६
वरायुधान्पाणिगतान्करैः सह क्षुरैर्न्यकृन्तंस्त्वरिताः शिरांसि च
हयांश्च नागांश्च रथांश्च युध्यतां धनंजयः शत्रुगणं तमक्षिणोत् १७
ततोऽन्तरिक्षे सुरतूर्यनिस्वनाः ससाधुवादा हृषितैः समीरिताः
निपेतुरप्युत्तमपुष्पवृष्टयः सुरूपगन्धाः पवनेरिताः शिवाः १८
तदद्भुतं देवमनुष्यसाक्षिकं समीक्ष्य भूतानि विसिष्मियुर्नृप
तवात्मजः सूतसुतश्च न व्यथां न विस्मयं जग्मतुरेकनिश्चयौ १९
अथाब्रवीद्द्रोणसुतस्तवात्मजं करं करेण प्रतिपीड्य सान्त्वयन्
प्रसीद दुर्योधन शाम्य पाण्डवैरलं विरोधेन धिगस्तु विग्रहम् २०
हतो गुरुर्ब्रह्मसमो महास्त्रवित्तथैव भीष्मप्रमुखा नरर्षभाः
अहं त्ववध्यो मम चापि मातुलः प्रशाधि राज्यं सह पाण्डवैश्चिरम् २१
धनंजयः स्थास्यति वारितो मया जनार्दनो नैव विरोधमिच्छति

युधिष्ठिरो भूतहिते सदा रतो वृकोदरस्तद्वशगस्तथा यमौ २२
त्वया च पार्थैश्च परस्परेण प्रजाः शिवं प्राप्नुयुरिच्छति त्वयि
व्रजन्तु शेषाः स्वपुराणि पार्थिवा निवृत्तवैराश्च भवन्तु सैनिकाः २३
न चेद्वचः श्रोष्यसि मे नराधिप ध्रुवं प्रतप्तासि हतोऽरिभिर्युधि
इदं च दृष्टं जगता सह त्वया कृतं यदेकेन किरीटमालिना
यथा न कुर्याद्बलभिन्न चान्तको न च प्रचेता भगवान्न यक्षराट् २४
अतोऽपि भूयांश्च गुणैर्धनंजयः स चाभिपत्स्यत्यखिलं वचो मम
तवानुयात्रां च तथा करिष्यति प्रसीद राजञ्जगतः शमाय वै २५
ममापि मानः परमः सदा त्वयि ब्रवीम्यतस्त्वां परमाच्च सौहृदात्
निवारयिष्यामि हि कर्णमप्यहं यदा भवान्सप्रणयो भविष्यति २६
वदन्ति मित्रं सहजं विचक्षणास्तथैव साम्ना च धनेन चार्जितम्
प्रतापतश्चोपनतं चतुर्विधं तदस्ति सर्वं त्वयि पाण्डवेषु च २७
निसर्गतस्ते तव वीर बान्धवाः पुनश्च साम्ना च समाप्नुहि स्थिरम्
त्वयि प्रसन्ने यदि मित्रतामियुर्ध्रुवं नरेन्द्रेन्द्र तथा त्वमाचर २८
स एवमुक्तः सुहृदा वचो हितं विचिन्त्य निःश्वस्य च दुर्मनाब्रवीत्
यथा भवानाह सखे तथैव तन्ममापि च ज्ञापयतो वचः शृणु २९
निहत्य दुःशासनमुक्तवान्बहु प्रसह्य शार्दूलवदेष दुर्मतिः
वृकोदरस्तद्धृदये मम स्थितं न तत्परोक्षं भवतः कुतः शमः ३०
न चापि कर्णं गुरुपुत्र संस्तवादुपारमेत्यर्हसि वक्तुमच्युत
श्रमेण युक्तो महताद्य फल्गुनस्तमेष कर्णः प्रसभं हनिष्यति ३१
तमेवमुक्त्वाभ्यनुनीय चासकृत्तवात्मजः स्वाननुशास्ति सैनिकान्
समाघ्नताभिद्रवताहितानिमान्सबाणशद्बान्किमु जोषमास्यते ३२
इति श्रीमहाभारते कर्णपर्वणि चतुःषष्टितमोऽध्यायः ६४

## पञ्चषष्टितमोऽध्यायः

सञ्जय उवाच
तौ शङ्खभेरीनिनदे समृद्धे समीयतुः श्वेतहयौ नराग्र्यौ
वैकर्तनः सूतपुत्रोऽजुनश्च दुर्मन्त्रिते तव पुत्रस्य राजन् १
यथा गजौ हैमवतौ प्रभिन्नौ प्रगृह्य दन्ताविव वाशितार्थे
तथा समाजग्मतुरुग्रवेगौ धनंजयश्चाधिरथिश्च वीरौ २

बलाहकेनेव यथा बलाहको यदृच्छया वा गिरिणा गिरिर्यथा
तथा धनुर्ज्यातलनेमिनिस्वनौ समीयतुस्ताविषुवर्षवर्षिणौ ३
प्रवृद्धशृङ्गद्रुमवीरुदोषधी प्रवृद्धनानाविधपर्वतौकसौ
यथाचलौ वा गलितौ महाबलौ तथा महास्त्रैरितरेतरं घ्नतः ४
स संनिपातस्तु तयोर्महानभूत्सुरेशवैरोचनयोर्यथा पुरा
शरैर्विभुग्नाङ्गनियन्तृवाहनः सुदुःसहोऽन्यै पटुशोणितोदकः ५
प्रभूतपद्मोत्पलमत्स्यकच्छपौ महाह्रदौ पक्षिगणानुनादितौ
सुसंनिकृष्टावनिलोद्धतौ यथा तथा रथौ तौ ध्वजिनौ समीयतुः ६
उभौ महेन्द्रस्य समानविक्रमावुभौ महेन्द्रप्रतिमौ महारथौ
महेन्द्रवज्रप्रतिमैश्च सायकैर्महेन्द्रवृत्राविव संप्रजह्रतुः ७
सनागपत्त्यश्वरथे उभे बले विचित्रवर्णाभरणाम्बरस्त्रजे
चकम्पतुश्चोन्नमतः स्म विस्मयाद्वियद्गताश्चार्जुनकर्णसंयुगे ८
भुजाःसवज्राङ्गुलयः समुच्छ्रिताः ससिंहनादा हृषितैर्दिदृक्षुभिः
यदार्जुनं मत्तमिव द्विपो द्विपं समभ्ययादाधिरथिर्जिघांसया ९
अभ्यक्रोशन्सोमकास्तत्र पार्थं त्वरस्व याह्यर्जुन विध्य कर्णम्
छिन्ध्यस्य मूर्धानमलं चिरेण श्रद्धां च राज्याद्धृतराष्ट्रसूनोः १०
तथास्माकं बहवस्तत्र योधाः कर्णं तदा याहि याहीत्यवोचन्
जह्यर्जुनं कर्ण ततःसचीराः पुनर्वनं यान्तु चिराय पार्थाः ११
ततः कर्णः प्रथमं तत्र पार्थं महेषुभिर्दशभिः पर्यविध्यत्
तमर्जुनः प्रत्यविध्यच्छिताग्रैः कक्षान्तरे दशभिरतीव क्रुद्धः १२
परस्परं तौ विशिखैः सुतीक्ष्णैस्ततक्षतुः सूतपुत्रोऽजुनश्च
परस्परस्यान्तरेप्सू विमर्दे सुभीममभ्याययतुः प्रहृष्टौ १३
अमृष्यमाणश्च महाविमर्दे तत्राकुध्यद्भीमसेनो महात्मा
अथाब्रवीत्पाणिना पाणिमाघ्नन्संदष्टौष्ठो नृत्यति वादयन्निव
कथं तु त्वां सूतपुत्रः किरीटिन्महेषुभिर्दशभिरविध्यदग्रे १४
यया धृत्या सर्वभूतान्यजैषीर्ग्रासं ददद्वह्नये खाण्डवे त्वम्
तया धृत्या सूतपुत्रं जहि त्वमहं वैनं गदया पोथयिष्ये १५
अथाब्रवीद्वासुदेवोऽपि पार्थं दृष्ट्वा रथेषून्प्रतिहन्यमानान्
अमीमृदत्सर्वथा तेऽद्य कर्णो ह्यस्त्रैरस्त्राणि किमिदं किरीटिन् १६
स वीर किं मुह्यसि नावधीयसे नदन्त्येते कुरवः संप्रहृष्टाः

कर्णं पुरस्कृत्य विदुर्हि सर्वे त्वदस्त्रमस्त्रैर्विनिपात्यमानम् १७
यया धृत्या निहतं तामसास्त्रं युगे युगे राक्षसाश्चापि घोराः
दम्भोद्भवाश्चासुराश्चाहवेषु तया धृत्या त्वं जहि सूतपुत्रम् १८
अनेन वास्य क्षुरनेमिनाद्य संछिन्द्धि मूर्धानमरेः प्रसह्य
मया निसृष्टेन सुदर्शनेन वज्रेण शक्रो नमुचेरिवारेः १९
किरातरूपी भगवान्यया च त्वया महत्या परितोषितोऽभूत्
तां त्वं धृतिं वीर पुनर्गृहीत्वा सहानुबन्धं जहि सूतपुत्रम् २०
ततो महीं सागरमेखलां त्वं सपत्तनां ग्रामवतीं समृद्धाम्
प्रयच्छ राज्ञे निहतारिसंघां यशश्च पार्थातुलमाप्नुहि त्वम् २१
संचोदितो भीमजनार्दनाभ्यां स्मृत्वा तदात्मानमवेक्ष्य सत्त्वम्
महात्मनश्चागमने विदित्वा प्रयोजनं केशवमित्युवाच २२
प्रादुष्करोम्येष महास्त्रमुग्रं शिवाय लोकस्य वधाय सौतेः
तन्मेऽनुजानातु भवान्सुराश्च ब्रह्मा भवो ब्रह्मविदश्च सर्वे २३
इत्यूचिवान्ब्राह्ममसह्यमस्त्रं प्रादुश्चक्रे मनसा संविधेयम्
ततो दिशश्च प्रदिशश्च सर्वाः समावृणोत्सायकैर्भूरितेजाः
ससर्ज बाणान्भरतर्षभोऽपि शतंशतानेकवदाशुवेगान् २४
वैकर्तनेनापि तथाजिमध्ये सहस्रशो बाणगणा विसृष्टाः
ते घोषिणः पाण्डवमभ्युपेयुः पर्जन्यमुक्ता इव वारिधाराः २५
स भीमसेनं च जनार्दनं च किरीटिनं चाप्यमनुष्यकर्मा
त्रिभिस्त्रिभिर्भीमबलो निहत्य ननाद घोरं महता स्वरेण २६
स कर्णबाणाभिहतः किरीटी भीमं तथा प्रेक्ष्य जनार्दनं च
अमृष्यमाणं पुनरेव पार्थः शरान्दशाष्टौ च समुद्बबर्ह २७
सुषेणमेकेन शरेण विद्ध्वा शल्यं चतुर्भिस्त्रिभिरेव कर्णम्
ततः सुमुक्तैर्दशभिर्जघान सभापतिं काञ्चनवर्मनद्धम् २८
स राजपुत्रो विशिरा विबाहुर्विवाजिसूतो विधनुर्विकेतुः
ततो रथाग्रादपतत्प्रभग्नः परश्वधैः शाल इवाभिकृत्तः २९
पुनश्च कर्णं त्रिभिरष्टभिश्च द्वाभ्यां चतुर्भिर्दशभिश्च विद्ध्वा
चतुः शतान्द्विरदान्सायुधीयान्हत्वा रथानष्टशतं जघान
सहस्रमश्वांश्च पुनश्च सादीनष्टौ सहस्राणि च पत्तिवीरान् ३०
दृष्ट्वाजिमुख्यावथ युध्यमानौ दिदृक्षवः शूरवरावरिघ्नौ

कर्णं च पार्थं च नियम्य वाहान्खस्था महीस्थाश्च जनावतस्थुः ३१
ततो धनुर्ज्या सहसातिकृष्टा सुघोषमाच्छिद्यत पाण्डवस्य
तस्मिन्क्षणे सूतपुत्रस्तु पार्थं समाचिनोत्क्षुद्रकाणां शतेन ३२
निर्मुक्तसर्पप्रतिमैश्च तीक्ष्णैस्तैलप्रधौतैः खगपत्रवाजैः
षष्ट्या नाराचैर्वासुदेवं बिभेद तदन्तरं सोमकाः प्राद्रवन्त ३३
ततो धनुर्ज्यामवधम्य शीघ्रं शरानस्तानाधिरथेर्विधम्य
सुसंरब्धः कर्णशरक्षताङ्गो रणे पार्थः सौमकान्प्रत्यगृह्णात्
न पक्षिणः संपतन्त्यन्तरिक्षे क्षेपीयसास्त्रेण कृतेऽन्धकारे ३४
शल्यं च पार्थो दशभिः पृषत्कैर्भृशं तनुत्रे प्रहसन्नविध्यत्
ततः कर्णं द्वादशभिः सुमुक्तैर्विद्ध्वा पुनः सप्तभिरभ्यविध्यत् ३५
स पार्थबाणासन वेग नुन्नैर्दृढाहतः पत्रिभिरुग्रवेगैः
विभिन्नगात्रः क्षतजोक्षिताङ्गः कर्णो बभौ रुद्र इवाततेषुः ३६
ततस्त्रिभिश्च त्रिदशाधिपोपमं शरैर्बिभेदाधिरथिर्धनंजयम्
शरांस्तु पञ्च ज्वलितानिवोरगान्प्रवीरयामास जिघांसुरच्युते ३७
ते वर्म भित्त्वा पुरुषोत्तमस्य सुवर्णचित्रं न्यपतन्सुमुक्ताः
वेगेन गामाविविशुः सुवेगाः स्नात्वा च कर्णाभिमुखाः प्रतीयुः ३८
तान्पञ्चभल्लैस्त्वरितैः सुमुक्तैस्त्रिधा त्रिधैकैकमथोच्चकर्त
धनंजयस्ते न्यपतन्पृथिव्यां महाहयस्तक्षकपुत्रपक्षाः ३९
ततः प्रजज्वाल किरीटमाली क्रोधेन कक्षं प्रदहन्निवाग्निः
स कर्णमाकर्णविकृष्टसृष्टैः शरैः शरीरान्तकरैर्ज्वलद्भिः
मर्मस्वविध्यत्स चचाल दुःखाद्धैर्यात्तु तस्थावतिमात्रधैर्यः ४०
ततः शरौघैः प्रदिशो दिशश्च रविप्रभा कर्णरथश्च राजन्
अदृश्य आसीत्कुपिते धनंजये तुषारनीहारवृतं यथा नभः ४१
स चक्ररक्षानथ पादरक्षान्पुरः सरान्पृष्ठगोपांश्च सर्वान्
दुर्योधनेनानुमतानरिघ्नान्समुच्चितान्सुरथान्सारभूतान् ४२
द्विसाहस्रान्समरे सव्यसाची कुरुप्रवीरानृषभः कुरूणाम्
क्षणेन सर्वान्सरथाश्वसूतान्निनाय राजन्क्षयमेकवीरः ४३
अथापलायन्त विहाय कर्णं तवात्मजाः कुरवश्चावशिष्टाः
हतानवाकीर्य शरक्षतांश्च लालप्यमानांस्तनयान्पितॄंश्च ४४
स सर्वतः प्रेक्ष्य दिशो विशून्या भयावदीर्णैः कुरुभिर्विहीनः

न विव्यथे भारत तत्र कर्णः प्रतीपमेवार्जुनमभ्यधावत् ४५
इति श्रीमहाभारते कर्णपर्वणि पञ्चषष्टितमोऽध्यायः ६५

षट्षष्ठितमोऽध्यायः

सञ्जय उवाच
ततोऽपयाताः शरपातमात्रमवस्थिताः कुरवो भिन्नसेनाः
विद्युत्प्रकाशं ददृशुः समन्ताद्धनंजयास्त्रं समुदीर्यमाणम् १
तदर्जुनास्त्रं ग्रसते स्म वीरान्वियत्तथाकाशमनन्तघोषम्
क्रुद्धेन पार्थेन तदाशु सृष्टं वधाय कर्णस्य महाविमर्दे २
रामादुपात्तेन महामहिम्ना आथर्वणेनारिविनाशनेन
तदर्जुनास्त्रं व्यधमद्दहन्तं पार्थं च बाणैर्निशितैर्निजघ्ने ३
ततो विमर्दः सुमहान्बभूव तस्यार्जुनस्याधिरथेश्च राजन्
अन्योन्यमासादयतोः पृषत्कैर्विषाणघातैर्द्विपयोरिवोग्रैः ४
ततो रिपुघ्नं समधत्त कर्णः सुसंशितं सर्पमुखं ज्वलन्तम्
रौद्रं शरं संयति सुप्रधौतं पार्थार्थमत्यर्थचिराय गुप्तम् ५
सदार्चितं चन्दनचूर्णशायिनं सुवर्णनालीशयनं महाविषम्
प्रदीप्तमैरावतवंशसंभवं शिरो जिहीर्षुर्युधि फल्गुनस्य ६
तमब्रवीन्मद्रराजो महात्मा वैकर्तनं प्रेक्ष्य हि संहितेषुम्
न कर्ण ग्रीवामिषुरेष प्राप्स्यते संलक्ष्य संधस्व शरं शिरोघ्नम् ७
अथाब्रवीत्क्रोधसंरक्तनेत्रः कर्णः शल्यं संधितेषुः प्रसह्य
न संधत्ते द्विः शरं शल्य कर्णो न मादृशाः शाठ्ययुक्ता भवन्ति ८
तथैवमुक्त्वा विससर्ज तं शरं बलाहकं वर्षघनाभिपूजितम्
हतोऽसि वै फल्गुन इत्यवोचत्ततस्त्वरन्नूर्जितमुत्ससर्ज ९
संधीयमानं भुजगं दृष्ट्वा कर्णेन माधवः
आक्रम्य स्यन्दनं पद्भ्यां बलेन बलिनां वरः १०
अवगाढे रथे भूमौ जानुभ्यामगमन्हयाः
ततः शरः सोऽभ्यहनत्किरीटं तस्य धीमतः ११
अथार्जुनस्योत्तमगात्रभूषणं धरावियद्द्यौसलिलेषु विश्रुतम्
बलास्त्रसर्गोत्तमयत्नमन्युभिः शरेण मूर्ध्नः स जहार सूतजः १२
दिवाकरेन्दुज्वलनग्रहत्विषं सुवर्णमुक्तामणिजालभूषितम्

पुरंदरार्थं तपसा प्रयत्नतः स्वयं कृतं यद्भुवनस्य सूनुना १३
महार्हरूपं द्विषतां भयंकरं विभाति चात्यर्थसुखं सुगन्धि तत्
निजघ्नुषे देवरिपून्सुरेश्वरः स्वयं ददौ यत्सुमनाः किरीटिने १४
हराम्बुपाखराडलवित्तगोप्तृभिः पिनाकपाशाशनिसायकोत्तमैः
सुरोत्तमैरप्यविषह्यमर्दितुं प्रसह्य नागेन जहार यद्वृषः १५
तदुत्तमेषून्मथितं विषाग्निना प्रदीप्तमर्चिष्मदभिज्वलिति प्रियम्
पपात पार्थस्य किरीटमुत्तमं दिवाकरोऽस्तादिव पर्वताज्ज्वलन् १६
ततः किरीटं बहुरत्नमरिडतं जहार नागोऽजुनमूर्धतो बलात्
गिरेः सुजाताङ्कुरपुष्पितद्रुमं महेन्द्रवज्रः शिखरं यथोत्तमम् १७
मही वियद्द्यौः सलिलानि वायुना यथा विभिन्नानि विभान्ति भारत
तथैव शब्दो भुवनेष्वभूत्तदा जना व्यवस्यन्व्यथिताश्च चस्खलुः १८
ततः समुद्ग्रथ्य सितेन वाससा स्वमूर्धजानव्यथितः स्थितोऽजुनः
विभाति संपूर्णमरीचिभास्वता शिरोगतेनोदयपर्वतो यथा १९
बलाहकः कर्णभुजेरितस्ततो हुताशनार्कप्रतिमद्युतिर्महान्
महोरगः कृतवैरोऽजुनेन किरीटमासाद्य समुत्पपात २०
तमब्रवीद्विद्धि कृतागसं मे कृष्णाद्य मातुर्वधजातवैरम्
ततः कृष्णः पार्थमुवाच संख्ये महोरगं कृतवैरं जहि त्वम् २१
स एवमुक्तो मधुसूदनेन गाराडीवधन्वा रिपुषूग्रधन्वा
उवाच को न्वेष ममाद्य नागः स्वयं य आगाद्गरुडस्य वक्त्रम् २२
कृष्ण उवाच
योऽसौ त्वया खाराडवे चित्रभानुं संतर्पयानेन धनुर्धरेण
वियद्गतो बाणनिकृत्तदेहो ह्यनेकरूपो निहतास्य माता २३
ततस्तु जिष्णुः परिहृत्य शेषांश्चिच्छेद षड्भिर्निशितैः सुधारैः
नागं वियत्तिर्यगिवोत्पतन्तं स छिन्नगात्रो निपपात भूमौ २४
तस्मिन्मुहूर्ते दशभिः पृषत्कैः शिलाशितैर्बर्हिणवाजितैश्च
विव्याध कर्णः पुरुष प्रवीरं धनंजयं तिर्यगवेक्षमाणम् २५
ततोऽजुनो द्वादशभिर्विमुक्तैराकर्णमुक्तैर्निशितैः समर्प्य
नाराचमाशीविषतुल्यवेगमाकर्णपूर्णायतमुत्ससर्ज २६
स चित्रवर्मेषुवरो विदार्य प्राणान्निरस्यन्निव साधु मुक्तः
कर्णस्य पीत्वा रुधिरं विवेश वसुंधरां शोणितवाजदिग्धः २७

ततो वृषो बाणनिपातकोपितो महोरगो दण्डविघट्टितो यथा
तथाशुकारी व्यसृजच्छरोत्तमान्महाविषः सर्प इवोत्तमं विषम् २८
जनार्दनं द्वादशभिः पराभिनन्नवैर्नवत्या च शरैस्तथार्जुनम्
शरेण घोरेण पुनश्च पाण्डवं विभिद्य कर्णोऽभ्यनदज्जहास च २९
तमस्य हर्षं ममृषे न पाण्डवो बिभेद मर्माणि ततोऽस्य मर्मवित्
परं शरैः पत्रिभिरिन्द्रविक्रमस्तथा यथेन्द्रो बलमोजसाहनत् ३०
ततः शराणां नवतिर्नवार्जुनः ससर्ज कर्णेऽन्तकदण्डसंनिभाः
शरैर्भृशायस्ततनुः प्रविव्यथे तथा यथा वज्रविदारितोऽचलः ३१
मणिप्रवेकोत्तमवज्रहाटकैरलंकृतं चास्य वराङ्गभूषणम्
प्रविद्धमुर्व्यां निपपात पत्रिभिर्धनंजयेनोत्तमकुण्डलेऽपि च ३२
महाधनं शिल्पिवरैः प्रयत्नतः कृतं यदस्योत्तमवर्म भास्वरम्
सुदीर्घकालेन तदस्य पाण्डवः क्षणेन बाणैर्बहुधा व्यशातयत् ३३
स तं विवर्माणमथोत्तमेषुभिः शरैश्चतुर्भिः कुपितः पराभिनत्
स विव्यथेऽत्यर्थमरिप्रहारितो यथातुरः पित्तकफानिलव्रणैः ३४
महाधनुर्मण्डलनिःसृतैः शितैः क्रियाप्रयत्नप्रहितैर्बलेन च
ततक्ष कर्णं बहुभिः शरोत्तमैर्बिभेद मर्मस्वपि चार्जुनस्त्वरन् ३५
दृढाहतः पत्रिभिरुग्रवेगैः पार्थेन कर्णो विविधैः शिताग्रैः
बभौ गिरिर्गैरिकधातुरक्तः क्षरन्प्रपातैरिव रक्तमम्भः ३६
साश्वं तु कर्णं सरथं किरीटी समाचिनोद्भारत वत्सदन्तैः
प्रच्छादयामास दिशश्च बाणैः सर्वप्रयत्नात्तपनीयपुङ्खैः ३७
स वत्सदन्तैः पृथुपीनवक्षाः समाचितः स्माधिरथिर्विभाति
सुपुष्पिताशोकपलाशशाल्मलिर्यथाचलः स्पन्दनचन्दनायुतः ३८
शरैः शरीरे बहुधा समर्पितैर्विभाति कर्णः समरे विशां पते
महीरुहैराचितसानुकन्दरो यथा महेन्द्रः शुभकर्णिकारवान् ३९
स बाणसंघान्धनुषा व्यवासृजन्विभाति कर्णः शरजालरश्मिवान्
सलोहितो रक्तगभस्तिमण्डलो दिवाकरोऽस्ताभिमुखो यथा तथा ४०
बाह्वन्तरादाधिरथेर्विमुक्तान्बाणान्महाहीनिव दीप्यमानान्
व्यध्वंसयन्नर्जुनबाहुमुक्ताः शराः समासाद्य दिशः शिताग्राः ४१
ततश्चक्रमपतत्तस्य भूमौ स विह्वलः समरे सूतपुत्रः
घूर्णे रथे ब्राह्मणस्याभिशापाद्रामादुपात्तेऽप्रतिभातिचास्त्रे ४२

अमृष्यमाणो व्यसनानि तानि हस्तौ विधुन्वन्स विगर्हमाणः
धर्मप्रधानानभिपाति धर्म इत्यब्रुवन्धर्मविदः सदैव
ममापि निम्नोऽद्य न पाति भक्तान्मन्ये न नित्यं परिपाति धर्मः ४३
एवं ब्रुवन्प्रस्खलिताश्वसूतो विचाल्यमानोऽर्जुनशस्त्रपातैः
मर्माभिघाताच्छलितः क्रियासु पुनः पुनर्धर्ममगर्हदाजौ ४४
ततः शरैर्भीमतरैरविध्यत्त्रिभिराहवे
हस्ते कर्णस्तदा पार्थमभ्यविध्यच्च सप्तभिः ४५
ततोऽर्जुनः सप्तदश तिग्मतेजानजिह्मगान्
इन्द्राशनिसमान्घोरानसृजत्पावकोपमान् ४६
निर्भिद्य ते भीमवेगा न्यपतन्पृथिवीतले
कम्पितात्मा तथा कर्णः शक्त्या चेष्टामदर्शयत् ४७
बलेनाथ स संस्तभ्य ब्रह्मास्त्रं समुदैरयत्
एन्द्रास्त्रमर्जुनश्चापि तद्दृष्ट्वाभिन्यमन्त्रयत् ४८
गाण्डीवं ज्यां च बाणांश्च अनुमन्त्र्य धनंजयः
असृजच्छरवर्षाणि वर्षाणीव पुरंदरः ४९
ततस्तेजोमया बाणा रथात्पार्थस्य निःसृताः
प्रादुरासन्महावीर्याः कर्णस्य रथमन्तिकात् ५०
तान्कर्णस्त्वग्रतोऽभ्यस्तान्मोघांश्चक्रे महारथः
ततोऽब्रवीद्वृष्णिवीरस्तस्मिन्नस्त्रे विनाशिते ५१
विसृजास्त्रं परं पार्थ राधेयो ग्रसते शरान्
ब्रह्मास्त्रमर्जुनश्चापि संमन्त्र्याथ प्रयोजयत् ५२
छादयित्वा ततो बाणैः कर्णं प्रभ्राम्य चार्जुनः
तस्य कर्णः शरैः क्रुद्धश्चिच्छेद ज्यां सुतेजनैः ५३
ततो ज्यामवधायान्यामनुमृज्य च पाण्डवः
शरैरवाकिरत्कर्णं दीप्यमानैः सहस्रशः ५४
तस्य ज्याच्छेदनं कर्णो ज्यावधानं च संयुगे
नान्वबुध्यत शीघ्रत्वात्तदद्भुतमिवाभवत् ५५
अस्त्रैरस्त्राणि राधेयः प्रत्यहन्सव्यसाचिनः
चक्रे चाभ्यधिकं पार्थात्स्ववीर्यं प्रतिदर्शयन् ५६
ततः कृष्णोऽर्जुनं दृष्ट्वा कर्णास्त्रेणाभिपीडितम्

अभ्यस्येत्यब्रवीत्पार्थमातिष्ठास्त्रमनुत्तमम् ५७
ततोऽन्यमग्निसदृशं शरं सर्पविषोपमम्
अश्मसारमयं दिव्यमभिमन्त्र्य धनंजयः ५८
रौद्रमस्त्रं समादाय क्षेप्तुकामः किरीटवान्
ततोऽग्रसन्मही चक्रं राधेयस्य महामृधे ५९
ग्रस्तचक्रस्तु राधेयः कोपादश्रूण्यवर्तयत्
सोऽब्रवीदर्जुनं चापि मुहूर्तं क्षम पाण्डव ६०
मध्ये चक्रमवग्रस्तं दृष्ट्वा दैवादिदं मम
पार्थकापुरुषाचीर्णमभिसंधिं विवर्जय ६१
प्रकीर्णकेशे विमुखे ब्राह्मणे च कृताञ्जलौ
शरणागते न्यस्तशस्त्रे तथा व्यसनगेऽजुन ६२
अबाणे भ्रष्टकवचे भ्रष्टभग्नायुधे तथा
न शूराः प्रहरन्त्याजौ न राज्ञे पार्थिवास्तथा
त्वं च शूरोऽसि कौन्तेय तस्मात्क्षम मुहूर्तकम् ६३
यावच्चक्रमिदं भूमेरुद्धरामि धनंजय
न मां रथस्थो भूमिष्ठमसज्जं हन्तुमर्हसि
न वासुदेवात्त्वत्तो वा पाण्डवेय बिभेम्यहम् ६४
त्वं हि क्षत्रियदायादो महाकुलविवर्धनः
स्मृत्वा धर्मोपदेशं त्वं मुहूर्तं क्षम पाण्डव ६५
इति श्रीमहाभारते कर्णपर्वणि षट्षष्टितमोऽध्यायः ६६

## सप्तषष्टितमोऽध्यायः

सञ्जय उवाच
अथाब्रवीद्वासुदेवो रथस्थो राधेय दिष्ट्या स्मरसीह धर्मम्
प्रायेण नीचा व्यसनेषु मग्ना निन्दन्ति दैवं कुकृतं न तत्तत् १
यद्द्रौपदीमेकवस्त्रां सभायामानाय्य त्वं चैव सुयोधनश्च
दुःशासनः शकुनिः सौबलश्च न ते कर्ण प्रत्यभात्तत्र धर्मः २
यदा सभायां कौन्तेयमनक्षज्ञं युधिष्ठिरम्
अक्षज्ञः शकुनिर्जेता तदा धर्मः क्व ते गतः ३
यदा रजस्वलां कृष्णां दुःशासनवशे स्थिताम्

सभायां प्राहसः कर्ण क्व ते धर्मस्तदा गतः ४
राज्यलुब्धः पुनः कर्ण समाह्वयसि पाण्डवम्
गन्धारराजमाश्रित्य क्व ते धर्मस्तदा गतः ५
एवमुक्ते तु राधेयो वासुदेवेन पाण्डवम्
मन्युरभ्याविशत्तीव्रः स्मृत्वा तत्तद्धनंजयम् ६
तस्य क्रोधेन सर्वेभ्यः स्रोतोभ्यस्तेजसोऽर्चिषः
प्रादुरासन्महाराज तदद्भुतमिवाभवत् ७
तं समीक्ष्य ततः कर्णो ब्रह्मास्त्रेण धनंजयम्
अभ्यवर्षत्पुनर्यत्नमकरोद्रथसर्जने
तदस्त्रमस्त्रेणावार्य प्रजहारास्य पाण्डवः ८
ततोऽन्यदस्त्रं कौन्तेयो दयितं जातवेदसः
मुमोच कर्णमुद्दिश्य तत्प्रजज्वाल वै भृशम् ९
वारुणेन ततः कर्णः शमयामास पावकम्
जीमूतैश्च दिशः सर्वाश्चक्रे तिमिरदुर्दिनाः १०
पाडवेयस्त्वसम्भ्रान्तो वायव्यास्त्रेण वीर्यवान्
अपोवाह तदाभ्राणि राधेयस्य प्रपश्यतः ११
तं हस्तिकक्ष्याप्रवरं च बाणैः सुवर्णमुक्तामणिवज्रमृष्टम्
कालप्रयत्नोत्तमशिल्पियत्नैः कृतं सुरूपं वितमस्कमुच्चैः १२
ऊर्जस्करं तव सैन्यस्य नित्यममित्रवित्रासनमीड्यरूपम्
विख्यातमादित्यसमस्य लोके त्विषा समं पावकभानुचन्द्रैः १३
ततः क्षुरेणाधिरथेः किरीटी सुवर्णपुङ्खेन शितेन यत्तः
श्रिया ज्वलन्तं ध्वजमुन्ममाथ महारथस्याधिरथेर्महात्मा १४
यशश्च धर्मश्च जयश्च मारिष प्रियाणि सर्वाणि च तेन केतुना
तदा कुरूणां हृदयानि चापतन्बभूव हाहेति च निस्वनो महान् १५
अथ त्वरन्कर्णवधाय पाण्डवो महेन्द्रवज्रानलदण्डसंनिभम्
आदत्त पार्थोऽञ्जलिकं निषङ्गात्सहस्ररश्मेरिव रश्मिमुत्तमम् १६
मर्मच्छिदं शोणितमांसदिग्धं वैश्वानरार्कप्रतिमं महार्हम्
नराश्वनागासुहरं त्र्यरत्निं षड्वाजमञ्जोगतिमुग्रवेगम् १७
सहस्रनेत्राशनितुल्यतेजसं समानक्रव्यादमिवातिदुःसहम्
पिनाकनारायणचक्रसंनिभं भयंकरं प्राणभृतां विनाशनम् १८

युक्त्वा महास्त्रेण परेण मन्त्रविद्विकृष्य गाण्डीवमुवाच सस्वनम्
अयं महास्त्रोऽप्रतिमो धृतः शरः शरीरभिच्चासुहरश्च दुर्हृदः १९
तपोऽस्ति तप्तं गुरवश्च तोषिता मया यदिष्टं सुहृदां तथा श्रुतम्
अनेन सत्येन निहन्त्वयं शरः सुदंशितः कर्णमरिं ममाजितः २०
इत्यूचिवांस्तं स मुमोच बाणं धनंजयः कर्णवधाय घोरम्
कृत्यामथर्वाङ्गिरसीमिवोग्रां दीप्तामसह्यां युधि मृत्युनापि २१
ब्रुवन्किरीटी तमतिप्रहृष्टो अयं शरो मे विजयावहोऽस्तु
जिघांसुरर्केन्दुसमप्रभावः कर्णं समाप्तिं नयतां यमाय २२
तेनेषुवर्येण किरीटमाली प्रहृष्टरूपो विजयावहेन
जिघांसुरर्केन्दुसमप्रभेण चक्रे विषक्तं रिपुमाततायी २३
तदुद्यतादित्यसमानवर्चसं शरन्नभोमध्यगभास्करोपमम्
वराङ्गमुर्व्यामपतच्चमूपतेर्दिवाकरोऽस्तादिव रक्तमण्डलः २४
तदस्य देही सततः सुखोदितं स्वरूपमत्यर्थमुदारकर्मणः
परेण कृच्छ्रेण शरीरमत्यजद्गृहं महर्द्धीव ससङ्गमीश्वरः २५
शरैर्विभुग्नं व्यसु तद्विवर्मणः पपात कर्णस्य शरीरमुच्छ्रितम्
स्रवद्व्रणं गैरिकतोयविस्रवं गिरेर्यथा वज्रहतं शिरस्तथा २६
देहात्तु कर्णस्य निपातितस्य तेजो दीप्तं खं विगाह्याचिरेण
तदद्भुतं सर्वमनुष्ययोधाः पश्यन्ति राजन्निहते स्म कर्णे २७
तं सोमकाः प्रेक्ष्य हतं शयानं प्रीता नादं सह सैन्यैरकुर्वन्
तूर्याणि चाजघ्नुरतीव हृष्टा वासांसि चैवादुधुवुर्भुजांश्च
बलान्विताश्चाप्यपरे ह्यनृत्यन्नन्योन्यमाश्लिष्य नदन्त ऊचुः २८
दृष्ट्वा तु कर्णं भुवि निष्टनन्तं हतं रथात्सायकेनावभिन्नम्
महानिलेनाग्निमिवापविद्धं यज्ञावसाने शयने निशान्ते २९
शरैराचितसर्वाङ्गः शोणितौघपरिप्लुतः
विभाति देहः कर्णस्य स्वरश्मिभिरिवांशुमान् ३०
प्रताप्य सेनामामित्रीं दीप्तैः शरगभस्तिभिः
बलिनार्जुनकालेन नीतोऽस्त कर्णभास्करः ३१
अस्तं गच्छन्यथादित्यः प्रभामादाय गच्छति
एवं जीवितमादाय कर्णस्येषुर्जगाम ह ३२
अपराह्णे पराह्णस्य सूतपुत्रस्य मारिष

छिन्नमञ्जलिकेनाजौ सोत्सेधमपतच्छिरः ३३
उपर्युपरि सैन्यानां तस्य शत्रोस्तदञ्जसा
शिरः कर्णस्य सोत्सेधमिषुः सोऽपाहरद्द्रुतम् ३४
सञ्जय उवाच
कर्णं तु शूरं पतितं पृथिव्यां शराचितं शोणितदिग्धगात्रम्
दृष्ट्वा शयानं भुवि मद्रराजश्छिन्नध्वजेनापययौ रथेन ३५
कर्णे हते कुरवः प्राद्रवन्त भयार्दिता गाढविद्धाश्च संख्ये
अवेक्षमाणा मुहुरर्जुनस्य ध्वजं महान्तं वपुषा ज्वलन्तम् ३६
सहस्रनेत्रप्रतिमानकर्मणः सहस्रपत्रप्रतिमाननं शुभम्
सहस्ररश्मिर्दिनसंक्षये यथा तथापतत्तस्य शिरो वसुंधराम् ३७
इति श्रीमहाभारते कर्णपर्वणि सप्तषष्टितमोऽध्यायः ६७

## अष्टषष्ठितमोऽध्यायः

सञ्जय उवाच
शल्यस्तु कर्णार्जुनयोर्विमर्दे बलानि दृष्ट्वा मृदितानि बाणैः
दुर्योधनं यान्तमवेक्षमाणो संदर्शयद्भारत युद्धभूमिम् १
निपातितस्यन्दनवाजिनागं दृष्ट्वा बलं तद्धतसूतपुत्रम्
दुर्योधनोऽश्रुप्रतिपूर्णनेत्रो मुहुर्मुहुर्न्यश्वसदार्तरूपः २
कर्णं तु शूरं पतितं पृथिव्यां शराचितं शोणितदिग्धगात्रम्
यदृच्छया सूर्यमिवावनिस्थं दिदृक्षवः संपरिवार्य तस्थुः ३
प्रहृष्टवित्रस्तविषण्णविस्मृतास्तथापरे शोकगता इवाभवन्
परे त्वदीयाश्च परस्परेण यथा यथैषां प्रकृतिस्तथाभवन् ४
प्रविद्धवर्माभरणाम्बरायुधं धनंजयेनाभिहतं हतौजसम्
निशम्य कर्णं कुरवः प्रदुद्रुवुर्हतर्षभा गाव इवाकुलाकुलाः ५
कृत्वा विमर्दं भृशमर्जुनेन कर्णं हतं केसरिणेव नागम्
दृष्ट्वा शयानं भुवि मद्रराजो भीतोऽपसर्पत्सरथः सुशीघ्रम् ६
मद्राधिपश्चापि विमूढचेतास्तूर्णं रथेनापहृतध्वजेन
दुर्योधनस्यान्तिकमेत्य शीघ्रं संभाष्य दुःखार्तमुवाच वाक्यम् ७
विशीर्णनागाश्वरथप्रवीरं बलं त्वदीयं यमराष्ट्रकल्पम्
अन्योन्यमासाद्य हतं महद्भिर्नराश्वनागैर्गिरिकूटकल्पैः ८

नैतादृशं भारत युद्धमासीद्यथाद्य कर्णार्जुनयोर्बभूव
ग्रस्तौ हि कर्णेन समेत्य कृष्णावन्ये च सर्वे तव शत्रवो ये ९
दैवं तु यत्तत्स्ववशं प्रवृत्तं तत्पाण्डवान्पाति हिनस्ति चास्मान्
तवार्थसिद्ध्यर्थकरा हि सर्वे प्रसह्य वीरा निहता द्विषद्भिः १०
कुबेरवैवस्वतवासवानां तुल्यप्रभावाम्बुपतेश्च वीराः
वीर्येण शौर्येण बलेन चैव तैस्तैश्च युक्ता विपुलैर्गुणौघैः ११
अवध्यकल्पा निहता नरेन्द्रास्तवार्थकामा युधि पाण्डवेयैः
तन्मा शुचो भारत दिष्टमेतत्पर्यायसिद्धिर्न सदास्ति सिद्धिः १२
एतद्वचो मद्रपतेर्निशम्य स्वं चापनीतं मनसा निरीक्ष्य
दुर्योधनो दीनमना विसंज्ञः पुनः पुनर्न्यश्वसदार्तरूपः १३
तं ध्यानमूकं कृपणं भृशार्तमार्तायनिर्दीनमुवाच वाक्यम्
पश्येदमुग्रं नरवाजिनागैरायोधनं वीरहतैः प्रपन्नम् १४
महीधराभैः पतितैर्महागजैः सकृत्प्रविद्धैः शरविद्धमर्मभिः
तैर्विह्वलद्भिश्च गतासुभिश्च प्रध्वस्तयन्त्रायुधवर्मयोधैः १५
वज्रापविद्धैरिव चाचलेन्द्रैर्विभिन्नपाषाणमृगद्रुमौषधैः
प्रविद्धघण्टाङ्कुशतोमरध्वजैः सहेममालै रुधिरौघसंप्लुतैः १६
शरावभिन्नैः पतितैश्च वाजिभिः श्वसद्भिरन्यैः क्षतजं वमद्भिः
दीनैः स्तनद्भिः परिवृत्तनेत्रैर्महीं दशद्भिःकृपणं नदद्भिः १७
तथापविद्धैर्गजवाजियोधैर्मन्दासुभिश्चैव गतासुभिश्च
नराश्वनागैश्च रथैश्च मर्दितैर्मही महावैतरणीव दुर्दृशा १८
गजैर्निकृत्तापरहस्तगात्रैरुद्वेपमानैः पतितैः पृथिव्याम्
यशस्विभिर्नागरथाश्व योधिभिः पदातिभिश्चाभिमुखैर्हतैः परैः
विशीर्णवर्माभरणाम्बरायुधैर्वृता निशान्तैरिव पावकैर्मही १९
शरप्रहाराभिहतैर्महाबलैरवेक्ष्यमाणैः पतितैः सहस्रशः
प्रनष्टसंज्ञैः पुनरुच्छ्वसद्भिर्मही बभूवानुगतैरिवाग्निभिः
दिवश्च्युतैर्भूरतिदीप्तिमद्भिर्नक्तं ग्रहैर्द्यौरमलेव दीप्तैः २०
शरास्तु कर्णार्जुनबाहुमुक्ता विदार्य नागाश्वमनुष्यदेहान्
प्राणान्निरस्याशु महीमतीयुर्महोरगा वासमिवाभितोऽस्त्रै २१
हतैर्मनुष्याश्वगजैश्च संख्ये शरावभिन्नैश्च रथैर्बभूव
धनञ्जयस्याधिरथेश्च मार्गे गजैरगम्या वसुधातिदुर्गा २२

रथैर्व रेषून्मथितैश्च योधैः संस्यूतसूताश्ववरायुधध्वजैः
विशीर्णशस्त्रैर्विनिकृत्तबन्धुरैर्निकृत्तचक्राक्षयुगत्रिवेणुभिः २३
विमुक्तयन्त्रैर्निहतैरयस्मयैर्हतानुषङ्गैर्विनिषङ्गबन्धुरैः
प्रभग्ननीडैर्मणिहेममण्डितैः स्तृता मही द्यौरिव शारदैर्घनैः २४
विकृष्यमाणैर्जवनैरलंकृतैर्हतेश्वरैराजिरथैः सुकल्पितैः
मनुष्यमातङ्गरथाश्वराशिभिर्द्रुतं व्रजन्तो बहुधा विचूर्णिताः २५
सहेमपट्टाः परिघाः परश्वधाः कडङ्गरायोमुसलानि पट्टिशाः
पेतुश्च खड्गा विमला विकोशा गदाश्च जाम्बूनदपट्टबद्धाः २६
चापानि रुक्माङ्गदभूषणानि शराश्च कार्तस्वरचित्रपुङ्खाः
ऋष्टयश्च पीता विमला विकोशाः प्रासाः सखड्गाः कनकावभासाः २७
छत्राणि वालव्यजनानि शङ्खाः स्रजश्च पुष्पोत्तमहेमचित्राः
कुथाः पताकाम्बरवेष्टिताश्च किरीटमाला मुकुटाश्च शुभ्राः २८
प्रकीर्णका विप्रकीर्णाः कुथाश्च प्रधानमुक्तातरलाश्च हाराः
आपीडकेयूरवराङ्गदानि ग्रैवेयनिष्काः ससुवर्णसूत्राः २९
मण्युत्तमा वज्रसुवर्णमुक्ता रत्नानि चोच्चावचमङ्गलानि
गात्राणि चात्यन्तसुखोचितानि शिरांसि चेन्दुप्रतिमाननानि ३०
देहांश्च भोगांश्च परिच्छदांश्च त्यक्त्वा मनोज्ञानि सुखानि चापि
स्वधर्मनिष्ठां महतीमवाप्य व्याप्तांश्च लोकान्यशसा समीयुः ३१
इत्येवमुक्त्वा विरराम शल्यो दुर्योधनः शोकपरीतचेताः
हा कर्ण हा कर्ण इति ब्रुवाण आर्तो विसंज्ञो भृशमश्रुनेत्रः ३२
तं द्रोणपुत्रप्रमुखा नरेन्द्राः सर्वे समाश्वास्य सह प्रयान्ति
निरीक्षमाणा मुहुरर्जुनस्य ध्वजं महान्तं यशसा ज्वलन्तम् ३३
नराश्वमातङ्गशरीरजेन रक्तेन सिक्ता रुधिरेण भूमिः
रक्ताम्बरस्रक्तपनीययोगान्नारी प्रकाशा इव सर्वगम्या ३४
प्रच्छन्नरूपा रुधिरेण राजन्रौद्रे मुहूर्तेऽतिविराजमानाः
नैवावतस्थुः कुरवः समीक्ष्य प्रव्राजिता देवलोकाश्च सर्वे ३५
वधेन कर्णस्य सुदुःखितास्ते हा कर्ण हा कर्ण इति ब्रुवाणाः
द्रुतं प्रयाताः शिबिराणि राजन्दिवाकरं रक्तमवेक्षमाणाः ३६
गाण्डीवमुक्तैस्तु सुवर्णपुङ्खैः शितैः शरैः शोणितदिग्धवाजैः
शरैश्चिताङ्गो भुवि भाति कर्णो हतोऽपि सन्सूर्य इवांशुमाली ३७

कर्णस्य देहं रुधिरावसिक्तं भक्तानुकम्पी भगवान्विवस्वान्
स्पृष्ट्वा करैर्लोहितरक्तरूपः सिष्णासुरभ्येति परं समुद्रम् ३८
इतीव संचिन्त्य सुरर्षिसंघाः संप्रस्थिता यान्ति यथानिकेतम्
संचिन्तयित्वा च जना विसस्रुर्यथासुखं खं च महीतलं च ३९
तदद्भुतं प्राणभृतां भयङ्करं निशम्य युद्धं कुरुवीरमुख्ययोः
धनञ्जयस्याधिरथेश्च विस्मिताः प्रशंसमानाः प्रययुस्तदा जनाः ४०
शरैः संकृत्तवर्माणं वीरं विशसने हतम्
गतासुमपि राधेयं नैव लक्ष्मीर्व्यमुञ्चत ४१
नानाभरणवान्राजन्मृष्टजाम्बूनदाङ्गदः
हतो वैकर्तनः शेते पादपोऽङकुरवानिव ४२
कनकोत्तमसंकाशः प्रदीप्त इव पावकः
सपुत्रः पुरुषव्याघ्रः संशान्तः पार्थतेजसा
प्रताप्य पाण्डवान्राजन्पाञ्चालांश्चास्त्रतेजसा ४३
ददानीत्येव योऽवोचन्न नास्तीत्यर्थितोऽर्थिभिः
सद्भिः सदा सत्पुरुषः स हतो द्वैरथे वृषः ४४
यस्य ब्राह्मणसात्सर्वमात्मार्थं न महात्मनः
नादेयं ब्राह्मणेष्वासीद्यस्य स्वमपि जीवितम् ४५
सदा नृणां प्रियो दाता प्रियदानो दिवं गतः
आदाय तव पुत्राणां जयाशां शर्मवर्म च ४६
हते स्म कर्णे सरितो न स्रवन्ति जगाम चास्तं कलुषो दिवाकरः
ग्रहश्च तिर्यग्ज्वलितार्कवर्णो यमस्य पुत्रोऽभ्युदियाय राजन् ४७
नभः पफालाथ ननाद चोर्वी ववुश्च वाताः परुषातिवेलम्
दिशः सधूमाश्च भृशं प्रजज्वलुर्महार्णवाश्चुक्षुभिरे च सस्वनाः ४८
सकाननाः साद्रिचयाश्चकम्पुः प्रविव्यथुर्भूतगणाश्च मारिष
बृहस्पती रोहिणीं संप्रपीड्य बभूव चन्द्रार्कसमानवर्णः ४९
हते कर्णे न दिशो विप्रजज्ञुस्तमोवृता द्यौर्विचचाल भूमिः
पपात चोल्का ज्वलनप्रकाशा निशाचराश्चाप्यभवन्प्रहृष्टाः ५०
शशिप्रकाशाननमर्जुनो यदा क्षुरेण कर्णस्य शिरो न्यपातयत्
अथान्तरिक्षे दिवि चेह चासकृद्बभूव हाहेति जनस्य निस्वनः ५१
स देवगन्धर्वमनुष्यपूजितं निहत्य कर्णं रिपुमाहवेऽजुनः

रराज पार्थः परमेण तेजसा वृत्रं निहत्येव सहस्त्रलोचनः ५२
ततो रथेनाम्बुदवृन्दनादिना शरन्नभोमध्यगभास्करत्विषा
पताकिना भीमनिनादकेतुना हिमेन्दुशङ्खस्फटिकावभासिना
सुवर्णमुक्तामणिवज्रविद्रुमैरलंकृतेनाप्रतिमानरंहसा ५३
नरोत्तमौ पाण्डवकेशिमर्दनावुदाहितावग्निदिवाकरोपमौ
रणाजिरे वीतभयौ विरेजतुः समानयानाविव विष्णुवासवौ ५४
ततो धनुर्ज्यातलनेमिनिस्वनैः प्रसह्य कृत्वा च रिपून्हतप्रभान्
संसाधयित्वैव कुरूञ्शरौघैः कपिध्वजः पक्षिवरध्वजश्च
प्रसह्य शङ्खौ धमतुः सुघोषौ मनांस्यरीणामवसादयन्तौ ५५
सुवर्णजालावततौ महास्वनौ हिमावदातौ परिगृह्य पाणिभिः
चुचुम्बतुः शङ्खवरौ नृणां वरौ वराननाभ्यां युगपच्च दध्मतुः ५६
पाञ्चजन्यस्य निर्घोषो देवदत्तस्य चोभयोः
पृथिवीमन्तरिक्षं च द्यामपश्चाप्यपूरयत् ५७
तौ शङ्खशब्देन निनादयन्तौ वनानि शैलान्सरितो दिशश्च
वित्रासयन्तौ तव पुत्रसेनां युधिष्ठिरं नन्दयतः स्म वीरौ ५८
ततः प्रयाताः कुरवो जवेन श्रुत्वैव शङ्खस्वनमीर्यमाणम्
विहाय मद्राधिपतिं पतिं च दुर्योधनं भारत भारतानाम् ५९
महाहवे तं बहु शोभमानं धनञ्जयं भूतगणाः समेताः
तदान्वमोदन्त जनार्दनं च प्रभाकरावभ्युदितौ यथैव ६०
समाचितौ कर्णशरैः परंतपावुभौ व्यभातां समरेऽच्युतार्जुनौ
तमो निहत्याभ्युदितौ यथामलौ शशाङ्कसूर्याविव रश्मिमालिनौ ६१
विहाय तान्बाणगणानथागतौ सुहृद्वृतावप्रतिमानविक्रमौ
सुखं प्रविष्टौ शिबिरं स्वमीश्वरौ सदस्यहूताविव वासवाच्युतौ ६२
सदेवगन्धर्वमनुष्यचारणैर्महर्षिभिर्यक्षमहोरगैरपि
जयाभिवृद्ध्या परयाभिपूजितौ निहत्य कर्णं परमाहवे तदा ६३
इति श्रीमहाभारते कर्णपर्वणि अष्टषष्टितमोऽध्यायः ६८

## एकोनसप्ततितमोऽध्यायः

सञ्जय उवाच
तथा निपातिते कर्णे तव सैन्ये च विद्रुते

आश्लिष्य पार्थं दाशार्हो हर्षाद्वचनमब्रवीत् १
हतो बलभिदा वृत्रस्त्वया कर्णो धनंजय
वधं वै कर्णवृत्राभ्यां कथयिष्यन्ति मानवाः २
वज्रिणा निहतो वृत्रः संयुगे भूरितेजसा
त्वया तु निहतः कर्णो धनुषा निशितैः शरैः ३
तमिमं विक्रमं लोके प्रथितं ते यशोवहम्
निवेदयावः कौन्तेय धर्मराजाय धीमते ४
वधं कर्णस्य संग्रामे दीर्घकालचिकीर्षितम्
निवेद्य धर्मराजस्य त्वमानृण्यं गमिष्यसि ५
तथेत्युक्ते केशवस्तु पार्थेन यदुपुंगवः
पर्यवर्तयदव्यग्रो रथं रथवरस्य तम् ६
धृष्टद्युम्नं युधामन्युं माद्रीपुत्रौ वृकोदरम्
युयुधानं च गोविन्द इदं वचनमब्रवीत् ७
परानभिमुखा यत्तास्तिष्ठध्वं भद्रमस्तु वः
यावदावेद्यते राज्ञे हतः कर्णोऽर्जुनेन वै ८
स तैः शूरैरनुज्ञातो ययौ राजनिवेशनम्
पार्थमादाय गोविन्दो ददर्श च युधिष्ठिरम् ९
शयानं राजशार्दूलं काञ्चने शयनोत्तमे
अगृह्णीतां च चरणौ मुदितौ पार्थिवस्य तौ १०
तयोः प्रहर्षमालक्ष्य प्रहारांश्चातिमानुषान्
राधेयं निहतं मत्वा समुत्तस्थौ युधिष्ठिरः ११
ततोऽस्मै तद्यथावृत्तं वासुदेवः प्रियंवदः
कथयामास कर्णस्य निधनं यदुनन्दनः १२
ईषदुत्स्मयमानस्तु कृष्णो राजानमब्रवीत्
युधिष्ठिरं हतामित्रं कृताञ्जलिरथाच्युतः १३
दिष्ट्या गाण्डीवधन्वा च पाण्डवश्च वृकोदरः
त्वं चापि कुशली राजन्माद्रीपुत्रौ च पाण्डवौ १४
मुक्ता वीरक्षयादस्मात्संग्रामाल्लोमहर्षणात्
क्षिप्रमुत्तरकालानि कुरु कार्याणि पार्थिव १५
हतो वैकर्तनः क्रूरः सूतपुत्रो महाबलः

दिष्ट्या जयसि राजेन्द्र दिष्ट्या वर्धसि पाराडव १६
यः स द्यूतजितां कृष्णां प्राह सत्पुरुषाधमः
तस्याद्य सूतपुत्रस्य भूमिः पिबति शोणितम् १७
शेतेऽसौ शरदीर्णाङ्गः शत्रुस्ते कुरुपुंगव
तं पश्य पुरुषव्याघ्र विभिन्नं बहुधा शरैः १८
युधिष्ठिरस्तु दाशार्हं प्रहृष्टः प्रत्यपूजयत्
दिष्ट्या दिष्ट्येति राजेन्द्र प्रीत्या चेदमुवाच ह १९
नैतच्चित्रं महाबाहो त्वयि देवकिनन्दन
त्वया सारथिना पार्थो यत्कुर्यादद्य पौरुषम् २०
प्रगृह्य च कुरुश्रेष्ठः साङ्गदं दक्षिणं भुजम्
उवाच धर्मभृत्पार्थ उभौ तौ केशवार्जुनौ २१
नरनारायणौ देवौ कथितौ नारदेन ह
धर्मसंस्थापने युक्तौ पुराणौ पुरुषोत्तमौ २२
असकृच्चापि मेधावी कृष्णद्वैपायनो मम
कथामेतां महाबाहो दिव्यामकथयत्प्रभुः २३
तव कृष्ण प्रभावेण गाराडीवेन धनञ्जयः
जयत्यभिमुखाञ्शत्रून्न चासीद्विमुखः क्वचित् २४
जयश्चैव ध्रुवोऽस्माकं न त्वस्माकं पराजयः
यदा त्वं युधि पार्थस्य सारथ्यमुपजग्मिवान् २५
एवमुक्त्वा महाराज तं रथं हेमभूषितम्
दन्तवर्णैर्हयैर्युक्तं कालवालैर्महारथः २६
आस्थाय पुरुषव्याघ्रः स्वबलेनाभिसंवृतः
कृष्णार्जुनाभ्यां वीराभ्यामनुमन्य ततः प्रियम् २७
आगतो बहुवृत्तान्तं द्रष्टुमायोधनं तदा
आभाषमाणस्तौ वीरावुभौ माधवफल्गुनौ २८
स ददर्श रणे कर्णं शयानं पुरुषर्षभम्
गाराडीवमुक्तैर्विशिखैः सर्वतः शकलीकृतम् २९
सपुत्रं निहतं दृष्ट्वा कर्णं राजा युधिष्ठिरः
प्रशशंस नरव्याघ्रावुभौ माधवपाराडवौ ३०
अद्य राजास्मि गोविन्द पृथिव्यां भ्रातृभिः सह

त्वया नाथेन वीरेण विदुषा परिपालितः ३१
हतं दृष्ट्वा नरव्याघ्रं राधेयमभिमानिनम्
निराशोऽद्य दुरात्मासौ धार्तराष्ट्रो भविष्यति
जीविताच्चापि राज्याच्च हते कर्णे महारथे ३२
त्वत्प्रसादाद्वयं चैव कृतार्थाः पुरुषर्षभ
त्वं च गाण्डीवधन्वा च विजयी यदुनन्दन
दिष्ट्या जयसि गोविन्द दिष्ट्या कर्णो निपातितः ३३
एवं स बहुशो हृष्टः प्रशशंस जनार्दनम्
अर्जुनं चापि राजेन्द्र धर्मराजो युधिष्ठिरः ३४
ततो भीमप्रभृतिभिः सर्वैश्च भ्रातृभिर्वृतम्
वर्धयन्ति स्म राजानं हर्षयुक्ता महारथाः ३५
नकुलः सहदेवश्च पाण्डवश्च वृकोदरः
सात्यकिश्च महाराज वृष्णीनां प्रवरो रथः ३६
धृष्टद्युम्नः शिखण्डी च पाण्डुपाञ्चालसृञ्जयाः
पूजयन्ति स्म कौन्तेयं निहते सूतनन्दने ३७
ते वर्धयित्वा नृपतिं पाण्डुपुत्रं युधिष्ठिरम्
जितकाशिनो लब्धलक्षा युद्धशौण्डाः प्रहारिणः ३८
स्तुवन्तः स्तवयुक्ताभिर्वाग्भिः कृष्णौ परंतपौ
जग्मुः स्वशिबिरायैव मुदा युक्ता महारथाः ३९
एवमेष क्षयो वृत्तः सुमहाँल्लोमहर्षणः
तव दुर्मन्त्रिते राजन्ननीतं किं नु शोचसि ४०
वैशम्पायन उवाच
श्रुत्वा तदप्रियं राजन्धृतराष्ट्रो महीपतिः
पपात भूमौ निश्चेष्टः कौरव्यः परमार्तिवान्
तथा सत्यव्रता देवी गान्धारी धर्मदर्शिनी ४१
तं प्रत्यगृह्णाद्विदुरो नृपतिं सञ्जयस्तथा
पर्याश्वासयतश्चैवं तावुभावेव भूमिपम् ४२
तथैवोत्थापयामासुर्गान्धारीं राजयोषितः
ताभ्यामाश्वासितो राजा तूष्णीमासीद्विचेतनः ४३
इति श्रीमहाभारते कर्णपर्वणि एकोनसप्ततितमोऽध्यायः ६९

# महाभारत
## शल्यपर्व

श्रीगणेशाय नमः
ॐ नारायणं नमस्कृत्य नरं चैव नरोत्तमम्
देवीं सरस्वतीं चैव ततो जयमुदीरयेत् १

### अथ प्रथमोऽध्यायः

जनमेजय उवाच
एवं निपातिते कर्णे समरे सव्यसाचिना
अल्पावशिष्टाः कुरवः किमकुर्वत वै द्विज १
उदीर्यमाणं च बलं दृष्ट्वा राजा सुयोधनः
पाण्डवैः प्राप्तकालं च किं प्रापद्यत कौरवः २
एतदिच्छाम्यहं श्रोतुं तदाचक्ष्व द्विजोत्तम
न हि तृप्यामि पूर्वेषां शृण्वानश्चरितं महत् ३
वैशम्पायन उवाच
ततः कर्णे हते राजन्धार्तराष्ट्रः सुयोधनः
भृशं शोकार्णवे मग्नो निराशः सर्वतोऽभवत् ४
हा कर्ण हा कर्ण इति शोचमानः पुनः पुनः
कृच्छ्रात्स्वशिबिरं प्रायाद्धतशेषैर्नृपैः सह ५
स समाश्वास्यमानोऽपि हेतुभिः शास्त्रनिश्चितैः
राजभिर्नालभच्छर्म सूतपुत्रवधं स्मरन् ६
स दैवं बलवन्मत्वा भवितव्यं च पार्थिवः
संग्रामे निश्चयं कृत्वा पुनर्युद्धाय निर्ययौ ७
शल्यं सेनापतिं कृत्वा विधिवद्राजपुंगवः
रणाय निर्ययौ राजा हतशेषैर्नृपैः सह ८
ततः सुतुमुलं युद्धं कुरुपाण्डवसेनयोः
बभूव भरतश्रेष्ठ देवासुररणोपमम् ९
ततः शल्यो महाराज कृत्वा कदनमाहवे

पाराडुसैन्यस्य मध्याह्ने धर्मराजेन पातितः १०
ततो दुर्योधनो राजा हतबन्धू रणाजिरात्
अपसृत्य ह्रदं घोरं विवेश रिपुजाद्भयात् ११
अथापराह्णे तस्याह्नः परिवार्य महारथैः
ह्रदादाहूय योगेन भीमसेनेन पातितः १२
तस्मिन्हते महेष्वासे हतशिष्टास्त्रयो रथाः
संरभान्निशि राजेन्द्र जघ्नुः पाञ्चालसैनिकान् १३
ततः पूर्वाह्णसमये शिबिरादेत्य सञ्जयः
प्रविवेश पुरीं दीनो दुःखशोकसमन्वितः १४
प्रविश्य च पुरं तूर्णं भुजावुच्छ्रित्य दुःखितः
वेपमानस्ततो राज्ञः प्रविवेश निवेशनम् १५
रुरोद च नरव्याघ्र हा राजन्निति दुःखितः
अहो बत विविग्नाः स्म निधनेन महात्मनः १६
अहो सुबलवान्कालो गतिश्च परमा तथा
शक्रतुल्यबलाः सर्वे यत्रावध्यन्त पार्थिवाः १७
दृष्ट्वैव च पुरो राजञ्जनः सर्वः स सञ्जयम्
प्ररुरोद भृशोद्विग्नो हा राजन्निति सस्वरम् १८
आकुमारं नरव्याघ्र तत्पुरं वै समन्ततः
आर्तनादं महच्चक्रे श्रुत्वा विनिहतं नृपम् १९
धावतश्चाप्यपश्यच्च तत्र त्रीन्पुरुषर्षभान्
नष्टचित्तानिवोन्मत्ताञ्शोकेन भृशपीडितान् २०
तथा स विह्वलः सूतः प्रविश्य नृपतिक्षयम्
ददर्श नृपतिश्रेष्ठं प्रज्ञाचक्षुषमीश्वरम् २१
दृष्ट्वा चासीनमनघं समन्तात्परिवारितम्
स्नुषाभिर्भरतश्रेष्ठ गान्धार्या विदुरेण च २२
तथान्यैश्च सुहृद्भिश्च ज्ञातिभिश्च हितैषिभिः
तमेव चार्थं ध्यायन्तं कर्णस्य निधनं प्रति २३
रुदन्नेवाब्रवीद्वाक्यं राजानं जनमेजय
नातिहृष्टमनाः सूतो बाष्पसंदिग्धया गिरा २४
सञ्जयोऽह नरव्याघ्र नमस्ते भरतर्षभ

मद्राधिपो हतः शल्यः शकुनिः सौबलस्तथा
उलूकः पुरुषव्याघ्र कैतव्यो दृढविक्रमः २५
संशप्तका हताः सर्वे काम्बोजाश्च शकैः सह
म्लेच्छाश्च पार्वतीयाश्च यवनाश्च निपातिताः २६
प्राच्या हता महाराज दाक्षिणात्याश्च सर्वशः
उदीच्या निहताः सर्वे प्रतीच्याश्च नराधिप
राजानो राजपुत्राश्च सर्वतो निहता नृप २७
दुर्योधनो हतो राजन्यथोक्तं पाण्डवेन च
भग्नसक्थो महाराज शेते पांसुषु रूषितः २८
धृष्टद्युम्नो हतो राजञ्शिखण्डी चापराजितः
उत्तमौजा युधामन्युस्तथा राजन्प्रभद्रकाः २९
पाञ्चालाश्च नरव्याघ्राश्चेदयश्च निषूदिताः
तव पुत्रा हताः सर्वे द्रौपदेयाश्च भारत
कर्णपुत्रो हतः शूरो वृषसेनो महाबलः ३०
नरा विनिहताः सर्वे गजाश्च विनिपातिताः
रथिनश्च नरव्याघ्र हयाश्च निहिता युधि ३१
किञ्चिच्छेषं च शिबिरं तावकानां कृतं विभो
पाण्डवानां च शूराणां समासाद्य परस्परम् ३२
प्रायः स्त्रीशेषमभवज्जगत्कालेन मोहितम्
सप्त पाण्डवतः शेषा धार्तराष्ट्रास्तथा त्रयः ३३
ते चैव भ्रातरः पञ्च वासुदेवोऽथ सात्यकिः
कृपश्च कृतवर्मा च द्रौणिश्च जयतां वरः ३४
तवाप्येते महाराज रथिनो नृपसत्तम
अक्षौहिणीनां सर्वासां समेतानां जनेश्वर
एते शेषा महाराज सर्वेऽन्ये निधनं गताः ३५
कालेन निहतं सर्वं जगद्वै भरतर्षभ
दुर्योधनं वै पुरतः कृत्वा वैरस्य भारत ३६
एतच्छ्रुत्वा वचः क्रूरं धृतराष्ट्रो जनेश्वरः
निपपात महाराज गतसत्त्वो महीतले ३७
तस्मिन्निपतिते भूमौ विदुरोऽपि महायशाः

निपपात महाराज राजव्यसनकर्शितः ३८
गान्धारी च नृपश्रेष्ठ सर्वाश्च कुरुयोषितः
पतिताः सहसा भूमौ श्रुत्वा क्रूरं वचश्च ताः ३९
निःसंज्ञं पतितं भूमौ तदासीद्राजमण्डलम्
प्रलापयुक्ता महती कथा न्यस्ता पटे यथा ४०
कृच्छ्रेण तु ततो राजा धृतराष्ट्रो महीपतिः
शनैरलभत प्राणान्पुत्रव्यसनकर्शितः ४१
लब्ध्वा तु स नृपः संज्ञां वेपमानः सुदुःखितः
उदीक्ष्य च दिशः सर्वाः क्षत्तारं वाक्यमब्रवीत् ४२
विद्वन्क्षत्तर्महाप्राज्ञ त्वं गतिर्भरतर्षभ
ममानाथस्य सुभृशं पुत्रैर्हीनस्य सर्वशः
एवमुक्त्वा ततो भूयो विसंज्ञो निपपात ह ४३
तं तथा पतितं दृष्ट्वा बान्धवा येऽस्य केचन
शीतैस्ते सिषिचुस्तोयैर्विव्यजुर्व्यजनैरपि ४४
स तु दीर्घेण कालेन प्रत्याश्वस्तो महीपतिः
तूष्णीं दध्यौ महीपालः पुत्रव्यसनकर्शितः
निःश्वसञ्जिह्मग इव कुम्भक्षिप्तो विशां पते ४५
सञ्जयोऽप्यरुदत्तत्र दृष्ट्वा राजानमातुरम्
तथा सर्वाः स्त्रियश्चैव गान्धारी च यशस्विनी ४६
ततो दीर्घेण कालेन विदुरं वाक्यमब्रवीत्
धृतराष्ट्रो नरव्याघ्रो मुह्यमानो मुहुर्मुहुः ४७
गच्छन्तु योषितः सर्वा गान्धारी च यशस्विनी
तथेमे सुहृदः सर्वे भ्रश्यते मे मनो भृशम् ४८
एवमुक्तस्ततः क्षत्ता ताः स्त्रियो भरतर्षभ
विसर्जयामास शनैर्वेपमानः पुनः पुनः ४९
निश्चक्रमुस्ततः सर्वास्ताः स्त्रियो भरतर्षभ
सुहृदश्च ततः सर्वे दृष्ट्वा राजानमातुरम् ५०
ततो नरपतिं तत्र लब्धसंज्ञं परंतप
अवेक्ष्य सञ्जयो दीनो रोदमानं भृशातुरम् ५१
प्राञ्जलिर्निःश्वसन्तं च तं नरेन्द्रं मुहुर्मुहुः

समाश्वासयत क्षत्ता वचसा मधुरेण ह ५२
इति श्रीमहाभारते शल्यपर्वणि प्रथमोऽध्यायः १

## द्वितीयोऽध्यायः

वैशम्पायन उवाच
विसृष्टास्वथ नारीषु धृतराष्ट्रोऽम्बिकासुतः
विललाप महाराज दुःखाद्दुःखतरं गतः १
सधूममिव निःश्वस्य करौ धुन्वन्पुनः पुनः
विचिन्त्य च महाराज ततो वचनमब्रवीत् २
अहो बत महद्दुःखं यदहं पाण्डवान्रणे
क्षेमिणश्चाव्ययांश्चैव त्वत्तः सूत शृणोमि वै ३
वज्रसारमयं नूनं हृदयं सुदृढं मम
यच्छ्रुत्वा निहतान्पुत्रान्दीर्यते न सहस्रधा ४
चिन्तयित्वा वचस्तेषां बालक्रीडां च सञ्जय
अद्य श्रुत्वा हतान्पुत्रान्भृशं मे दीर्यते मनः ५
अन्धत्वाद्यदि तेषां तु न मे रूपनिदर्शनम्
पुत्रस्नेहकृता प्रीतिर्नित्यमेतेषु धारिता ६
बालभावमतिक्रान्तान्यौवनस्थांश्च तानहम्
मध्यप्राप्तांस्तथा श्रुत्वा हृष्ट आसं तथानघ ७
तानद्य निहताञ्श्रुत्वा हृतैश्वर्यान्हृतौजसः
न लभे वै क्वचिच्छान्तिं पुत्राधिभिरभिप्लुतः ८
एह्येहि पुत्र राजेन्द्र ममानाथस्य सांप्रतम्
त्वया हीनो महाबाहो कां नु यास्याम्यहं गतिम् ९
गतिर्भूत्वा महाराज ज्ञातीनां सुहृदां तथा
अन्धं वृद्धं च मां वीर विहाय क्व नु गच्छसि १०
सा कृपा सा च ते प्रीतिः सा च राजन्सुमानिता
कथं विनिहतः पार्थैः संयुगेष्वपराजितः ११
कथं त्वं पृथिवीपालान्भुक्त्वा तात समागतान्
शेषे विनिहतो भूमौ प्राकृतः कुनृपो यथा १२
को नु मामुत्थितं काल्ये तात तातेति वक्ष्यति

महाराजेति सततं लोकनाथेति चासकृत् १३
परिष्वज्य च मां कराठे स्नेहेनाक्लिन्नलोचनः
अनुशाधीति कौरव तत्साधु वद मे वचः १४
ननु नामाहमश्रौषं वचनं तव पुत्रक
भूयसी मम पृथ्वीयं यथा पार्थस्य नो तथा १५
भगदत्तः कृपः शल्य आवन्त्योऽथ जयद्रथः
भूरिश्रवाः सोमदत्तो महाराजोऽथ बाह्लिकः १६
अश्वत्थामा च भोजश्च मागधश्च महाबलः
बृहद्बलश्च काशीशः शकुनिश्चापि सौबलः १७
म्लेच्छाश्च बहुसाहस्राः शकाश्च यवनैः सह
सुदक्षिणश्च काम्बोजस्त्रिगर्ताधिपतिस्तथा १८
भीष्मः पितामहश्चैव भारद्वाजोऽथ गौतमः
श्रुतायुश्चाच्युतायुश्च शतायुश्चापि वीर्यवान् १९
जलसंधोऽथार्श्यशृङ्गी राक्षसश्चाप्यलायुधः
अलंबुसो महाबाहुः सुबाहुश्च महारथः २०
एते चान्ये च बहवो राजानो राजसत्तम
मदर्थमुद्यताः सर्वे प्राणांस्त्यक्त्वा रणे प्रभो २१
येषां मध्ये स्थितो युद्धे भ्रातृभिः परिवारितः
योधयिष्याम्यहं पार्थान्पाञ्चालांश्चैव सर्वशः २२
चेदींश्च नृपशार्दूल द्रौपदेयांश्च संयुगे
सात्यकिं कुन्तिभोजं च राक्षसं च घटोत्कचम् २३
एकोऽप्येषां महाराज समर्थः संनिवारणे
समरे पाराडवेयानां संक्रुद्धो ह्यभिधावताम्
किं पुनः सहिता वीराः कृतवैराश्च पाराडवैः २४
अथ वा सर्व एवैते पाराडवस्यानुयायिभिः
योत्स्यन्ति सह राजेन्द्र हनिष्यन्ति च तान्मृधे २५
कर्णस्त्वेको मया सार्धं निहनिष्यति पाराडवान्
ततो नृपतयो वीराः स्थास्यन्ति मम शासने २६
यश्च तेषां प्रणेता वै वासुदेवो महाबलः
न स संनह्यते राजन्निति मामब्रवीद्वचः २७

तस्याहं वदतः सूत बहुशो मम संनिधौ
युक्तितो ह्यनुपश्यामि निहतान्पाराडवान्मृधे २८
तेषां मध्ये स्थिता यत्र हन्यन्ते मम पुत्रकाः
व्यायच्छमानाः समरे किमन्यद्भागधेयतः २९
भीष्मश्च निहतो यत्र लोकनाथः प्रतापवान्
शिखरिडनं समासाद्य मृगेन्द्र इव जम्बुकम् ३०
द्रोणश्च ब्राह्मणो यत्र सर्वशस्त्रास्त्रपारगः
निहतः पाराडवैः संख्ये किमन्यद्भागधेयतः ३१
भूरिश्रवा हतो यत्र सोमदत्तश्च संयुगे
बाह्लीकश्च महाराज किमन्यद्भागधेयतः ३२
सुदक्षिणो हतो यत्र जलसंधश्च कौरवः
श्रुतायुश्चाच्युतायुश्च किमन्यद्भागधेयतः ३३
बृहद्बलो हतो यत्र मागधश्च महाबलः
आवन्त्यो निहतो यत्र त्रिगर्तश्च जनाधिपः
संशप्तकाश्च बहवः किमन्यद्भागधेयतः ३४
अलंबुसस्तथा राजन्राक्षसश्चाप्यलायुधः
आर्श्यशृङ्गश्च निहतः किमन्यद्भागधेयतः ३५
नारायणा हता यत्र गोपाला युद्धदुर्मदाः
म्लेच्छाश्च बहुसाहस्राः किमन्यद्भागधेयतः ३६
शकुनिः सौबलो यत्र कैतव्यश्च महाबलः
निहतः सबलो वीरः किमन्यद्भागधेयतः ३७
राजानो राजपुत्राश्च शूराः परिघबाहवः
निहता बहवो यत्र किमन्यद्भागधेयतः ३८
नानादेशसमावृत्ताः क्षत्रिया यत्र सञ्जय
निहताः समरे सर्वे किमन्यद्भागधेयतः ३९
पुत्राश्च मे विनिहताः पौत्राश्चैव महाबलाः
वयस्या भ्रातरश्चैव किमन्यद्भागधेयतः ४०
भागधेयसमायुक्तो ध्रुवमुत्पद्यते नरः
यश्च भाग्यसमायुक्तः स शुभं प्राप्नुयान्नरः ४१
अहं वियुक्तः स्वैर्भाग्यैः पुत्रैश्चैवेह सञ्जय

कथमद्य भविष्यामि वृद्धः शत्रुवशं गतः ४२
नान्यदत्र परं मन्ये वनवासादृते प्रभो
सोऽह वनं गमिष्यामि निर्बन्धुर्ज्ञातिसंक्षये ४३
न हि मेऽन्यद्भवेच्छ्रेयो वनाभ्युपगमादृते
इमामवस्थां प्राप्तस्य लूनपक्षस्य सञ्जय ४४
दुर्योधनो हतो यत्र शल्यश्च निहतो युधि
दुःशासनो विशस्तश्च विकर्णश्च महाबलः ४५
कथं हि भीमसेनस्य श्रोष्येऽह शब्दमुत्तमम्
एकेन समरे येन हतं पुत्रशतं मम ४६
असकृद्वदतस्तस्य दुर्योधनवधेन च
दुःखशोकाभिसंतप्तो न श्रोष्ये परुषा गिरः ४७
एवं स शोकसंतप्तः पार्थिवो हतबान्धवः
मुहुर्मुहुर्मुह्यमानः पुत्राधिभिरभिप्लुतः ४८
विलप्य सुचिरं कालं धृतराष्ट्रोऽम्बिकासुतः
दीर्घमुष्णं च निःश्वस्य चिन्तयित्वा पराभवम् ४९
दुःखेन महता राजा संतप्तो भरतर्षभ
पुनर्गावल्गणिं सूतं पर्यपृच्छद्यथातथम् ५०
भीष्मद्रोणौ हतौ श्रुत्वा सूतपुत्रं च पातितम्
सेनापतिं प्रणेतारं किमकुर्वत मामकाः ५१
यं यं सेनाप्रणेतारं युधि कुर्वन्ति मामकाः
अचिरेणैव कालेन तं तं निघ्नन्ति पाण्डवाः ५२
रणमूर्ध्नि हतो भीष्मः पश्यतां वः किरीटिना
एवमेव हतो द्रोणः सर्वेषामेव पश्यताम् ५३
एवमेव हतः कर्णः सूतपुत्रः प्रतापवान्
स राजकानां सर्वेषां पश्यतां वः किरीटिना ५४
पूर्वमेवाहमुक्तो वै विदुरेण महात्मना
दुर्योधनापराधेन प्रजेयं विनशिष्यति ५५
केचिन्न सम्यक्पश्यन्ति मूढाः सम्यक्तथापरे
तदिदं मम मूढस्य तथाभूतं वचः स्म ह ५६
यदब्रवीन्मे धर्मात्मा विदुरो दीर्घदर्शिवान्

तत्तथा समनुप्राप्तं वचनं सत्यवादिनः ५७
दैवोपहतचित्तेन यन्मयापकृतं पुरा
अनयस्य फलं तस्य ब्रूहि गावल्गणे पुनः ५८
को वा मुखमनीकानामासीत्कर्णे निपातिते
अर्जुनं वासुदेवं च को वा प्रत्युद्ययौ रथी ५९
केऽरक्षन्दक्षिणं चक्रं मद्रराजस्य संयुगे
वामं च योद्धुकामस्य के वा वीरस्य पृष्ठतः ६०
कथं च वः समेतानां मद्रराजो महाबलः
निहतः पाण्डवैः संख्ये पुत्रो वा मम सञ्जय ६१
ब्रूहि सर्वं यथातत्त्वं भरतानां महाक्षयम्
यथा च निहतः संख्ये पुत्रो दुर्योधनो मम ६२
पाञ्चालाश्च यथा सर्वे निहताः सपदानुगाः
धृष्टद्युम्नः शिखण्डी च द्रौपद्याः पञ्च चात्मजाः ६३
पाण्डवाश्च यथा मुक्तास्तथोभौ सात्वतौ युधि
कृपश्च कृतवर्मा च भारद्वाजस्य चात्मजः ६४
यद्यथा यादृशं चैव युद्धं वृत्तं च सांप्रतम्
अखिलं श्रोतुमिच्छामि कुशलो ह्यसि सञ्जय ६५
इति श्रीमहाभारते शल्यपर्वणि द्वितीयोऽध्यायः २

## तृतीयोऽध्यायः

सञ्जय उवाच
शृणु राजन्नवहितो यथा वृत्तो महान्क्षयः
कुरूणां पाण्डवानां च समासाद्य परस्परम् १
निहते सूतपुत्रे तु पाण्डवेन महात्मना
विद्रुतेषु च सैन्येषु समानीतेषु चासकृत् २
विमुखे तव पुत्रे तु शोकोपहतचेतसि
भृशोद्विग्नेषु सैन्येषु दृष्ट्वा पार्थस्य विक्रमम् ३
ध्यायमानेषु सैन्येषु दुःखं प्राप्तेषु भारत
बलानां मथ्यमानानां श्रुत्वा निनदमुत्तमम् ४
अभिज्ञानं नरेन्द्राणां विकृतं प्रेक्ष्य संयुगे

पतितान्रथनीडांश्च रथांश्चापि महात्मनाम् ५
रणे विनिहतान्नागान्दृष्ट्वा पत्तींश्च मारिष
आयोधनं चातिघोरं रुद्रस्याक्रीडसंनिभम् ६
अप्रख्यातिं गतानां तु राज्ञां शतसहस्रशः
कृपाविष्टः कृपो राजन्वयःशीलसमन्वितः ७
अब्रवीत्तत्र तेजस्वी सोऽभिसृत्य जनाधिपम्
दुर्योधनं मन्युवशाद्वचनं वचनक्षमः ८
दुर्योधन निबोधेदं यत्त्वा वक्ष्यामि कौरव
श्रुत्वा कुरु महाराज यदि ते रोचतेऽनघ ९
न युद्धधर्माच्छ्रेयान्वै पन्था राजेन्द्र विद्यते
यं समाश्रित्य युध्यन्ते क्षत्रियाः क्षत्रियर्षभ १०
पुत्रो भ्राता पिता चैव स्वस्रेयो मातुलस्तथा
संबन्धिबान्धवाश्चैव योध्या वै क्षत्रजीविना ११
वधे चैव परो धर्मस्तथाधर्मः पलायने
ते स्म घोरां समापन्ना जीविकां जीवितार्थिनः १२
तत्र त्वां प्रतिवक्ष्यामि किंचिदेव हितं वचः
हते भीष्मे च द्रोणे च कर्णे चैव महारथे १३
जयद्रथे च निहते तव भ्रातृषु चानघ
लक्ष्मणे तव पुत्रे च किं शेषं पर्युपास्महे १४
येषु भारं समासज्य राज्ये मतिमकुर्महि
ते संत्यज्य तनूर्याताः शूरा ब्रह्मविदां गतिम् १५
वयं त्विह विनाभूता गुणवद्भिर्महारथैः
कृपणं वर्तयिष्याम पातयित्वा नृपान्बहून् १६
सर्वैरपि च जीवद्भिर्बीभत्सुरपराजितः
कृष्णनेत्रो महाबाहुर्देवैरपि दुरासदः १७
इन्द्रकार्मुकवज्राभमिन्द्रकेतुमिवोच्छ्रितम्
वानरं केतुमासाद्य संचचाल महाचमूः १८
सिंहनादेन भीमस्य पाञ्चजन्यस्वनेन च
गाण्डीवस्य च निर्घोषात्संहृष्यन्ति मनांसि नः १९
चरन्तीव महाविद्युन्मुष्णन्ती नयनप्रभाम्

अलातमिव चाविद्धं गाण्डीवं समदृश्यत २०
जाम्बूनदविचित्रं च धूयमानं महद्धनुः
दृश्यते दिक्षु सर्वासु विद्युदभ्रघनेष्विव २१
उह्यमानश्च कृष्णेन वायुनेव बलाहकः
तावकं तद्बलं राजन्नर्जुनोऽस्त्रविदां वरः
गहनं शिशिरे कक्षं ददाहाग्निरिवोत्थितः २२
गाहमानमनीकानि महेन्द्रसदृशप्रभम्
धनंजयमपश्याम चतुर्दन्तमिव द्विपम् २३
विक्षोभयन्तं सेनां ते त्रासयन्तं च पार्थिवान्
धनंजयमपश्याम नलिनीमिव कुञ्जरम् २४
त्रासयन्तं तथा योधान्धनुर्घोषेण पाण्डवम्
भूय एनमपश्याम सिंहं मृगगणा इव २५
सर्वलोकमहेष्वासौ वृषभौ सर्वधन्विनाम्
आमुक्तकवचौ कृष्णौ लोकमध्ये विरेजतुः २६
अद्य सप्तदशाहानि वर्तमानस्य भारत
संग्रामस्यातिघोरस्य वध्यतां चाभितो युधि २७
वायुनेव विधूतानि तवानीकानि सर्वशः
शरदम्भोदजालानि व्यशीर्यन्त समन्ततः २८
तां नावमिव पर्यस्तां भ्रान्तवातां महार्णवे
तव सेनां महाराज सव्यसाची व्यकम्पयत् २९
क्व नु ते सूतपुत्रोऽभूत्क्व नु द्रोणः सहानुगः
अहं क्व च क्व चात्मा ते हार्दिक्यश्च तथा क्व नु
दुःशासनश्च भ्राता ते भ्रातृभिः सहितः क्व नु ३०
बाणगोचरसंप्राप्तं प्रेक्ष्य चैव जयद्रथम्
संबन्धिनस्ते भ्रातॄंश्च सहायान्मातुलांस्तथा ३१
सर्वान्विक्रम्य मिषतो लोकांश्चाक्रम्य मूर्धनि
जयद्रथो हतो राजन्किं नु शेषमुपास्महे ३२
को वेह स पुमानस्ति यो विजेष्यति पाण्डवम्
तस्य चास्त्राणि दिव्यानि विविधानि महात्मनः
गाण्डीवस्य च निर्घोषो वीर्याणि हरते हि नः ३३

नष्टचन्द्रा यथा रात्रिः सेनेयं हतनायका
नागभग्नद्रुमा शुष्का नदीवाकुलतां गता ३४
ध्वजिन्यां हतनेत्रायां यथेष्टं श्वेतवाहनः
चरिष्यति महाबाहुः कत्तेऽग्निरिव संज्वलन् ३५
सात्यकेश्चैव यो वेगो भीमसेनस्य चोभयोः
दारयेत गिरीन्सर्वाञ्शोषयेत च सागरान् ३६
उवाच वाक्यं यद्भीमः सभामध्ये विशां पते
कृतं तत्सकलं तेन भूयश्चैव करिष्यति ३७
प्रमुखस्थे तदा कर्णे बलं पाराडवरत्तितम्
दुरासदं तथा गुप्तं गूढं गाराडीवधन्वना ३८
युष्माभिस्तानि चीर्णानि यान्यसाधूनि साधुषु
अकारणकृतान्येव तेषां वः फलमागतम् ३९
आत्मनोऽर्थे त्वया लोको यत्नतः सर्व आहृतः
स ते संशयितस्तात आत्मा च भरतर्षभ ४०
रत्त दुर्योधनात्मानमात्मा सर्वस्य भाजनम्
भिन्ने हि भाजने तात दिशो गच्छति तद्गतम् ४१
हीयमानेन वै संधिः पर्येष्टव्यः समेन च
विग्रहो वर्धमानेन नीतिरेषा बृहस्पतेः ४२
ते वयं पाराडुपुत्रेभ्यो हीनाः स्वबलशक्तितः
अत्र ते पाराडवैः सार्धं संधिं मन्ये त्तमं प्रभो ४३
न जानीते हि यः श्रेयः श्रेयसश्चावमन्यते
स त्तिप्रं भ्रश्यते राज्यान्न च श्रेयोऽनुविन्दति ४४
प्रणिपत्य हि राजानं राज्यं यदि लभेमहि
श्रेयः स्यान्न तु मौढ्येन राजन्गन्तुं पराभवम् ४५
वैचित्रवीर्यवचनात्कृपाशीलो युधिष्ठिरः
विनियुञ्जीत राज्ये त्वां गोविन्दवचनेन च ४६
यद्ब्रूयाद्धि हृषीकेशो राजानमपराजितम्
अर्जुनं भीमसेनं च सर्वं कुर्युरसंशयम् ४७
नातिक्रमिष्यते कृष्णो वचनं कौरवस्य ह
धृतराष्ट्रस्य मन्येऽह नापि कृष्णस्य पाराडवः ४८

एतत्क्षममहं मन्ये तव पार्थैरविग्रहम्
न त्वा ब्रवीमि कार्पण्यान्न प्राणपरिरक्षणात्
पथ्यं राजन्ब्रवीमि त्वां तत्परासुः स्मरिष्यसि ४९
इति वृद्धो विलप्यैतत्कृपः शारद्वतो वचः
दीर्घमुष्णं च निःश्वस्य शुशोच च मुमोह च ५०
इति श्रीमहाभारते शल्यपर्वणि तृतीयोऽध्यायः ३

## चतुर्थोऽध्यायः

सञ्जय उवाच
एवमुक्तस्ततो राजा गौतमेन यशस्विना
निःश्वस्य दीर्घमुष्णं च तूष्णीमासीद्विशां पते १
ततो मुहूर्तं स ध्यात्वा धार्तराष्ट्रो महामनाः
कृपं शारद्वतं वाक्यमित्युवाच परंतपः २
यत्किंचित्सुहृदा वाच्यं तत्सर्वं श्रावितो ह्यहम्
कृतं च भवता सर्वं प्राणान्संत्यज्य युध्यता ३
गाहमानमनीकानि युध्यमानं महारथैः
पाण्डवैरतितेजोभिर्लोकस्त्वामनुदृष्टवान् ४
सुहृदा यदिदं वाच्यं भवता श्रावितो ह्यहम्
न मां प्रीणाति तत्सर्वं मुमूर्षोरिव भेषजम् ५
हेतुकारणसंयुक्तं हितं वचनमुत्तमम्
उच्यमानं महाबाहो न मे विप्राग्र्य रोचते ६
राज्याद्विनिकृतोऽस्माभिः कथं सोऽस्मासु विश्वसेत्
अक्षद्यूते च नृपतिर्जितोऽस्माभिर्महाधनः
स कथं मम वाक्यानि श्रद्दध्याद्भूय एव तु ७
तथा दौत्येन संप्राप्तः कृष्णः पार्थहिते रतः
प्रलब्धश्च हृषीकेशस्तच्च कर्म विरोधितम्
स च मे वचनं ब्रह्मन्कथमेवाभिमंस्यते ८
विललाप हि यत्कृष्णा सभामध्ये समेयुषी
न तन्मर्षयते कृष्णो न राज्यहरणं तथा ९
एकप्राणावुभौ कृष्णावन्योन्यं प्रति संहतौ

पुरा यच्छ्रुतमेवासीदद्य पश्यामि तत्प्रभो १०
स्वस्रीयं च हतं श्रुत्वा दुःखं स्वपिति केशवः
कृतागसो वयं तस्य स मदर्थं कथं क्षमेत् ११
अभिमन्योर्विनाशेन न शर्म लभतेऽर्जुनः
स कथं मद्धिते यत्नं प्रकरिष्यति याचितः १२
मध्यमः पाण्डवस्तीक्ष्णो भीमसेनो महाबलः
प्रतिज्ञातं च तेनोग्रं स भज्येत न संनमेत् १३
उभौ तौ बद्धनिस्त्रिंशावुभौ चाबद्धकङ्कटौ
कृतवैरावुभौ वीरौ यमावपि यमोपमौ १४
धृष्टद्युम्नः शिखण्डी च कृतवैरौ मया सह
तौ कथं मद्धिते यत्नं प्रकुर्यातां द्विजोत्तम १५
दुःशासनेन यत्कृष्णा एकवस्त्रा रजस्वला
परिक्लिष्टा सभामध्ये सर्वलोकस्य पश्यतः १६
तथा विवसनां दीनां स्मरन्त्यद्यापि पाण्डवाः
न निवारयितुं शक्याः संग्रामात्ते परन्तपाः १७
यदा च द्रौपदी कृष्णा मद्विनाशाय दुःखिता
उग्रं तेपे तपः कृष्णा भर्तॄणामर्थसिद्धये
स्थण्डिले नित्यदा शेते यावद्वैरस्य यातना १८
निक्षिप्य मानं दर्पं च वासुदेवसहोदरा
कृष्णायाः प्रेष्यवद्भूत्वा शुश्रूषां कुरुते सदा १९
इति सर्वं समुन्नद्धं न निर्वाति कथंचन
अभिमन्योर्विनाशेन स संधेयः कथं मया २०
कथं च नाम भुक्त्वेमां पृथिवीं सागराम्बराम्
पाण्डवानां प्रसादेन भुञ्जीयां राज्यमल्पकम् २१
उपर्युपरि राज्ञां वै ज्वलितो भास्करो यथा
युधिष्ठिरं कथं पश्चादनुयास्यामि दासवत् २२
कथं भुक्त्वा स्वयं भोगान्दत्वा दायांश्च पुष्कलान्
कृपणं वर्तयिष्यामि कृपणैः सह जीविकाम् २३
नाभ्यसूयामि ते वाक्यमुक्तं स्निग्धं हितं त्वया
न तु संधिमहं मन्ये प्राप्तकालं कथंचन २४

सुनीतमनुपश्यामि सुयुद्धेन परंतप
नायं क्लीबयितुं कालः संयोद्धुं काल एव नः २५
इष्टं मे बहुभिर्यज्ञैर्दत्ता विप्रेषु दक्षिणाः
प्राप्ताः क्रमश्रुता वेदाः शत्रूणां मूर्ध्नि च स्थितम् २६
भृत्या मे सुभृतास्तात दीनश्चाभ्युद्धृतो जनः
यातानि परराष्ट्राणि स्वराष्ट्रमनुपालितम् २७
भुक्ताश्च विविधा भोगास्त्रिवर्गः सेवितो मया
पितृणां गतमानृण्यं क्षत्रधर्मस्य चोभयोः २८
न ध्रुवं सुखमस्तीह कुतो राज्यं कुतो यशः
इह कीर्तिर्विधातव्या सा च युद्धेन नान्यथा २९
गृहे यत्क्षत्रियस्यापि निधनं तद्विगर्हितम्
अधर्मः सुमहानेष यच्छय्यामरणं गृहे ३०
अरण्ये यो विमुञ्चेत संग्रामे वा तनुं नरः
क्रतूनाहृत्य महतो महिमानं स गच्छति ३१
कृपणं विलपन्नार्तो जरयाभिपरिप्लुतः
म्रियते रुदतां मध्ये ज्ञातीनां न स पूरुषः ३२
त्यक्त्वा तु विविधान्भोगान्प्राप्तानां परमां गतिम्
अपीदानीं सुयुद्धेन गच्छेयं सत्सलोकताम् ३३
शूराणामार्यवृत्तानां संग्रामेष्वनिवर्तिनाम्
धीमतां सत्यसंधानां सर्वेषां क्रतुयाजिनाम् ३४
शस्त्रावभृथमाप्तानां ध्रुवं वासस्त्रिविष्टपे
मुदा नूनं प्रपश्यन्ति शुभ्रा ह्यप्सरसां गणाः ३५
पश्यन्ति नूनं पितरः पूजिताञ्शक्रसंसदि
अप्सरोभिः परिवृतान्मोदमानांस्त्रिविष्टपे ३६
पन्थानममरैर्यातं शूरैश्चैवानिवर्तिभिः
अपि तैः सङ्गतं मार्गं वयमप्यारुहेमहि ३७
पितामहेन वृद्धेन तथाचार्येण धीमता
जयद्रथेन कर्णेन तथा दुःशासनेन च ३८
घटमाना मदर्थेऽस्मिन्हताः शूरा जनाधिपाः
शेरते लोहिताक्ताङ्गाः पृथिव्यां शरविक्षताः ३९

उत्तमास्त्रविदः शूरा यथोक्तक्रतुयाजिनः
त्यक्त्वा प्राणान्यथान्यायमिन्द्रसद्मसु धिष्ठिताः ४०
तैस्त्वयं रचितः पन्था दुर्गमो हि पुनर्भवेत्
सम्पतद्भिर्महावेगैरितो याद्भिश्च सद्गतिम् ४१
ये मदर्थे हताः शूरास्तेषां कृतमनुस्मरन्
ऋणं तत्प्रतिमुञ्चानो न राज्ये मन आदधे ४२
पातयित्वा वयस्यांश्च भ्रातृनथ पितामहान्
जीवितं यदि रक्षेयं लोको मां गर्हयेद्ध्रुवम् ४३
कीदृशं च भवेद्राज्यं मम हीनस्य बन्धुमिः
सखिभिश्च सुहृद्भिश्च प्रणिपत्य च पाण्डवम् ४४
सोऽहमेतादृशं कृत्वा जगतोऽस्य पराभवम्
सुयुद्धेन ततः स्वर्गं प्राप्स्यामि न तदन्यथा ४५
एवं दुर्योधनेनोक्तं सर्वे सम्पूज्य तद्वचः
साधु साध्विति राजानं क्षत्रियाः सम्बभाषिरे ४६
पराजयमशोचन्तः कृतचित्ताश्च विक्रमे
सर्वे सुनिश्चिता योद्धुमुदग्रमनसोऽभवन् ४७
ततो वाहान्समाश्वास्य सर्वे युद्धाभिनन्दिनः
ऊने द्वियोजने गत्वा प्रत्यतिष्ठन्त कौरवाः ४८
आकाशे विद्रुमे पुण्ये प्रस्थे हिमवतः शुभे
अरुणां सरस्वतीं प्राप्य पपुः सस्नुश्च तज्जलम् ४९
तव पुत्राः कृतोत्साहाः पर्यवर्तन्त ते ततः
पर्यवस्थाप्य चात्मानमन्योन्येन पुनस्तदा
सर्वे राजन्यवर्तन्त क्षत्रियाः कालचोदिताः ५०
इति श्रीमहाभारते शल्यपर्वणि चतुर्थोऽध्यायः ४२१७

## पञ्चमोऽध्यायः

सञ्जय उवाच
अथ हैमवते प्रस्थे स्थित्वा युद्धाभिनन्दिनः
सर्व एव महाराज योधास्तत्र समागताः १
शल्यश्च चित्रसेनश्च शकुनिश्च महारथः

अश्वत्थामा कृपश्चैव कृतवर्मा च सात्वतः २
सुषेणोऽरिष्टसेनश्च धृतसेनश्च वीर्यवान्
जयत्सेनश्च राजानस्ते रात्रिमुषितास्ततः ३
रणे कर्णे हते वीरे त्रासिता जितकाशिभिः
नालभञ्शर्म ते पुत्रा हिमवन्तमृते गिरिम् ४
तेऽब्रुवन्सहितास्तत्र राजानं सैन्यसंनिधौ
कृतयत्ना रणे राजन्संपूज्य विधिवत्तदा ५
कृत्वा सेनाप्रणेतारं परांस्त्वं योद्धुमर्हसि
येनाभिगुप्ताः संग्रामे जयेमासुहृदो वयम् ६
ततो दुर्योधनः स्थित्वा रथे रथवरोत्तमम्
सर्वयुद्धविभागज्ञमन्तकप्रतिमं युधि ७
स्वङ्गं प्रच्छन्नशिरसं कम्बुग्रीवं प्रियंवदम्
व्याकोशपद्माभिमुखं व्याघ्रास्यं मेरुगौरवम् ८
स्थाणोर्वृषस्य सदृशं स्कन्धनेत्रगतिस्वरैः
पुष्टश्लिष्टायतभुजं सुविस्तीर्णघनोरसम् ९
जवे बले च सदृशमरुणानुजवातयोः
आदित्यस्य त्विषा तुल्यं बुद्ध्या चोशनसा समम् १०
कान्तिरूपमुखैश्वर्यैस्त्रिभिश्चन्द्रमसोपमम्
काञ्चनोपलसंघातैः सदृशं श्लिष्टसंधिकम् ११
सुवृत्तोरुकटीजङ्घं सुपादं स्वङ्गुलीनखम्
स्मृत्वा स्मृत्वैव च गुणान्धात्रा यत्नाद्विनिर्मितम् १२
सर्वलक्षणसंपन्नं निपुणं श्रुतिसागरम्
जेतारं तरसारीणामजेयं शत्रुभिर्बलात् १३
दशाङ्गं यश्चतुष्पादमिष्वस्त्रं वेद तत्त्वतः
साङ्गांश्च चतुरो वेदान्सम्यगाख्यानपञ्चमान् १४
आराध्य त्र्यम्बकं यत्नाद्व्रतैरुग्रैर्महातपाः
अयोनिजायामुत्पन्नो द्रोणेनायोनिजेन यः १५
तमप्रतिमकर्माणं रूपेणासदृशं भुवि
पारगं सर्वविद्यानां गुणार्णवमनिन्दितम्
तमभ्येत्यात्मजस्तुभ्यमश्वत्थामानमब्रवीत् १६

यं पुरस्कृत्य सहिता युधि जेष्याम पाण्डवान्
गुरुपुत्रोऽद्य सर्वेषामस्माकं परमा गतिः
भवांस्तस्मान्नियोगात्ते कोऽस्तु सेनापतिर्मम १७
द्रौणिरुवाच
अयं कुलेन वीर्येण तेजसा यशसा श्रिया
सर्वैर्गुणैः समुदितः शल्यो नोऽस्तु चमूपतिः १८
भागिनेयान्निजांस्त्यक्त्वा कृतज्ञोऽस्मानुपागतः
महासेनो महाबाहुर्महासेन इवापरः १९
एनं सेनापतिं कृत्वा नृपतिं नृपसत्तम
शक्यः प्राप्तुं जयोऽस्माभिर्देवैः स्कन्दमिवाजितम् २०
तथोक्ते द्रोणपुत्रेण सर्व एव नराधिपाः
परिवार्य स्थिताः शल्यं जयशब्दांश्च चक्रिरे
युद्धाय च मतिं चक्रुरावेशं च परं ययुः २१
ततो दुर्योधनः शल्यं भूमौ स्थित्वा रथे स्थितम्
उवाच प्राञ्जलिर्भूत्वा रामभीष्मसमं रणे २२
अयं स कालः संप्राप्तो मित्राणां मित्रवत्सल
यत्र मित्रममित्रं वा परीक्षन्ते बुधा जनाः २३
स भवानस्तु नः शूरः प्रणेता वाहिनीमुखे
रणं च याते भवति पाण्डवा मन्दचेतसः
भविष्यन्ति सहामात्याः पाञ्चालाश्च निरुद्यमाः २४
शल्य उवाच
यत्तु मां मन्यसे राजन्कुरुराज करोमि तत्
त्वत्प्रियार्थं हि मे सर्वं प्राणा राज्यं धनानि च २५
दुर्योधन उवाच
सेनापत्येन वरये त्वामहं मातुलातुलम्
सोऽस्मान्पाहि युधां श्रेष्ठ स्कन्दो देवानिवाहवे २६
अभिषिच्यस्व राजेन्द्र देवानामिव पावकिः
जहि शत्रून्रणे वीर महेन्द्रो दानवानिव २७
इति श्रीमहाभारते शल्यपर्वणि पञ्चमोऽध्यायः ५

## षष्ठोऽध्यायः

सञ्जय उवाच
एतच्छ्रुत्वा वचो राज्ञो मद्रराजः प्रतापवान्
दुर्योधनं तदा राजन्वाक्यमेतदुवाच ह १
दुर्योधन महाबाहो शृणु वाक्यविदां वर
यावेतौ मन्यसे कृष्णौ रथस्थौ रथिनां वरौ
न मे तुल्यावुभावेतौ बाहुवीर्ये कथञ्चन २
उद्यतां पृथिवीं सर्वां ससुरासुरमानवाम्
योधयेयं रणमुखे संक्रुद्धः किमु पाण्डवान्
विजेष्ये च रणे पार्थान्सोमकांश्च समागतान् ३
अहं सेनाप्रणेता ते भविष्यामि न संशयः
तं च व्यूहं विधास्यामि न तरिष्यन्ति यं परे
इति सत्यं ब्रवीम्येष दुर्योधन न संशयः ४
एवमुक्तस्ततो राजा मद्राधिपतिमञ्जसा
अभ्यषिञ्चत सेनाया मध्ये भरतसत्तम
विधिना शास्त्रदृष्टेन हृष्टरूपो विशां पते ५
अभिषिक्ते ततस्तस्मिन्सिंहनादो महानभूत्
तव सैन्येष्ववाद्यन्त वादित्राणि च भारत ६
हृष्टाश्चासंस्तदा योधा मद्रकाश्च महारथाः
तुष्टुवुश्चैव राजानं शल्यमाहवशोभिनम् ७
जय राजंश्चिरं जीव जहि शत्रून्समागतान्
तव बाहुबलं प्राप्य धार्तराष्ट्रा महाबलाः
निखिलां पृथिवीं सर्वां प्रशासन्तु हतद्विषः ८
त्वं हि शक्तो रणे जेतुं ससुरासुरमानवान्
मर्त्यधर्माण इह तु किमु सोमकसृञ्जयान् ९
एवं संस्तूयमानस्तु मद्राणामधिपो बली
हर्षं प्राप तदा वीरो दुरापमकृतात्मभिः १०
शल्य उवाच
अद्यैवाहं रणे सर्वान्पाञ्चालान्सह पाण्डवैः
निहनिष्यामि राजेन्द्र स्वर्गं यास्यामि वा हतः ११

अद्य पश्यन्तु मां लोका विचरन्तमभीतवत्
अद्य पाण्डुसुताः सर्वे वासुदेवः ससात्यकिः १२
पाञ्चालाश्चेदयश्चैव द्रौपदेयाश्च सर्वशः
धृष्टद्युम्नः शिखण्डी च सर्वे चापि प्रभद्रकाः १३
विक्रमं मम पश्यन्तु धनुषश्च महद्बलम्
लाघवं चास्त्रवीर्यं च भुजयोश्च बलं युधि १४
अद्य पश्यन्तु मे पार्थाः सिद्धाश्च सह चारणैः
यादृशं मे बलं बाह्वोः संपदस्त्रेषु या च मे १५
अद्य मे विक्रमं दृष्ट्वा पाण्डवानां महारथाः
प्रतीकारपरा भूत्वा चेष्टन्तां विविधाः क्रियाः १६
अद्य सैन्यानि पाण्डूनां द्रावयिष्ये समन्ततः
द्रोणभीष्मावति विभो सूतपुत्रं च संयुगे
विचरिष्ये रणे युध्यन्प्रियार्थं तव कौरव १७
सञ्जय उवाच
अभिषिक्ते तदा शल्ये तव सैन्येषु मानद
न कर्णव्यसनं किंचिन्मेनिरे तत्र भारत १८
हृष्टाः सुमनसश्चैव बभूवुस्तत्र सैनिकाः
मेनिरे निहतान्पार्थान्मद्रराजवशं गतान् १९
प्रहर्षं प्राप्य सेना तु तावकी भरतर्षभ
तां रात्रिं सुखिनी सुप्ता स्वस्थचित्तेव साभवत् २०
सैन्यस्य तव तं शब्दं श्रुत्वा राजा युधिष्ठिरः
वार्ष्णेयमब्रवीद्वाक्यं सर्वक्षत्रस्य शृण्वतः २१
मद्रराजः कृतः शल्यो धार्तराष्ट्रेण माधव
सेनापतिर्महेष्वासः सर्वसैन्येषु पूजितः २२
एतच्छ्रुत्वा यथाभूतं कुरु माधव यत्क्षमम्
भवान्नेता च गोप्ता च विधत्स्व यदनन्तरम् २३
तमब्रवीन्महाराज वासुदेवो जनाधिपम्
आर्तायनिमहं जाने यथातत्त्वेन भारत २४
वीर्यवांश्च महातेजा महात्मा च विशेषतः
कृती च चित्रयोधी च संयुक्तो लाघवेन च २५

यादृग्भीष्मस्तथा द्रोणो यादृक्कर्णश्च संयुगे
तादृशस्तद्विशिष्टो वा मद्रराजो मतो मम २६
युध्यमानस्य तस्याजौ चिन्तयन्नैव भारत
योद्धारं नाधिगच्छामि तुल्यरूपं जनाधिप २७
शिखण्डयर्जुनभीमानां सात्वतस्य च भारत
धृष्टद्युम्नस्य च तथा बलेनाभ्यधिको रणे २८
मद्रराजो महाराज सिंहद्विरदविक्रमः
विचरिष्यत्यभीः काले कालः क्रुद्धः प्रजास्विव २९
तस्याद्य न प्रपश्यामि प्रतियोद्धारमाहवे
त्वामृते पुरुषव्याघ्र शार्दूलसमविक्रमम् ३०
सदेवलोके कृत्स्नेऽस्मिन्नान्यस्त्वत्तः पुमान्भवेत्
मद्रराजं रणे क्रुद्धं यो हन्यात्कुरुनन्दन
अहन्यहनि युध्यन्तं क्षोभयन्तं बलं तव ३१
तस्माज्जहि रणे शल्यं मघवानिव शम्बरम्
अतिपश्चादसौ वीरो धार्तराष्ट्रेण सत्कृतः ३२
तवैव हि जयो नूनं हते मद्रेश्वरे युधि
तस्मिन्हते हतं सर्वं धार्तराष्ट्रबलं महत् ३३
एतच्छ्रुत्वा महाराज वचनं मम सांप्रतम्
प्रत्युद्याहि रणे पार्थ मद्रराजं महाबलम्
जहि चैनं महाबाहो वासवो नमुचिं यथा ३४
न चैवात्र दया कार्या मातुलोऽय ममेति वै
क्षत्रधर्मं पुरस्कृत्य जहि मद्रजनेश्वरम् ३५
भीष्मद्रोणार्णवं तीर्त्वा कर्णपातालसंभवम्
मा निमज्जस्व सगणः शल्यमासाद्य गोष्पदम् ३६
यच्च ते तपसो वीर्यं यच्च क्षात्रं बलं तव
तद्दर्शय रणे सर्वं जहि चैनं महारथम् ३७
एतावदुक्त्वा वचनं केशवः परवीरहा
जगाम शिबिरं सायं पूज्यमानोऽथ पाण्डवैः ३८
केशवे तु तदा याते धर्मराजो युधिष्ठिरः
विसृज्य सर्वान्भ्रातॄंश्च पाञ्चालानथ सोमकान्

सुष्वाप रजनीं तां तु विशल्य इव कुञ्जरः ३९
ते च सर्वे महेष्वासाः पाञ्चालाः पाण्डवास्तथा
कर्णस्य निधने हृष्टाः सुषुपुस्तां निशां तदा ४०
गतज्वरं महेष्वासं तीर्णपारं महारथम्
बभूव पाण्डवेयानां सैन्यं प्रमुदितं निशि
सूतपुत्रस्य निधने जयं लब्ध्वा च मारिष ४१
इति श्रीमहाभारते शल्यपर्वणि षष्ठोऽध्यायः ६

## सप्तमोऽध्यायः

सञ्जय उवाच
व्यतीतायां रजन्यां तु राजा दुर्योधनस्तदा
अब्रवीत्तावकान्सर्वान्संनह्यन्तां महारथाः १
राज्ञस्तु मतमाज्ञाय समनह्यत सा चमूः
अयोजयन्रथांस्तूर्णं पर्यधावंस्तथापरे २
अकल्प्यन्त च मातङ्गाः समनह्यन्त पत्तयः
हयानास्तरणोपेतांश्चक्रुरन्ये सहस्रशः ३
वादित्राणां च निनदः प्रादुरासीद्विशां पते
बोधनार्थं हि योधानां सैन्यानां चाप्युदीर्यताम् ४
ततो बलानि सर्वाणि सेनाशिष्टानि भारत
संनद्धान्येव ददृशुर्मृत्युं कृत्वा निवर्तनम् ५
शल्यं सेनापतिं कृत्वा मद्रराजं महारथाः
प्रविभज्य बलं सर्वमनीकेषु व्यवस्थिताः ६
ततः सर्वे समागम्य पुत्रेण तव सैनिकाः
कृपश्च कृतवर्मा च द्रौणिः शल्योऽथ सौबलः ७
अन्ये च पार्थिवाः शेषाः समयं चक्रिरे तदा
न न एकेन योद्धव्यं कथंचिदपि पाण्डवैः ८
यो ह्येकः पाण्डवैर्युध्येद्यो वा युध्यन्तमुत्सृजेत्
स पञ्चभिर्भवेद्युक्तः पातकैः सोपपातकैः
अन्योन्यं परिरक्षद्भिर्योद्धव्यं सहितैश्च नः ९
एवं ते समयं कृत्वा सर्वे तत्र महारथाः

मद्रराजं पुरस्कृत्य तूर्णमभ्यद्रवन्परान् १०
तथैव पाराडवा राजन्व्यूह्य सैन्यं महाररो
अभ्ययुः कौरवान्सर्वान्योत्स्यमानाः समन्ततः ११
तद्बलं भरतश्रेष्ठ ज्ञुब्धार्णवसमस्वनम्
समुद्धूतार्णवाकारमुद्धूतरथकुञ्जरम् १२
धृतराष्ट्र उवाच
द्रोणस्य भीष्मस्य च वै राधेयस्य च मे श्रुतम्
पातनं शंस मे भूयः शल्यस्याथ सुतस्य मे १३
कथं रणे हतः शल्यो धर्मराजेन सञ्जय
भीमेन च महाबाहुः पुत्रो दुर्योधनो मम १४
सञ्जय उवाच
ज्ञयं मनुष्यदेहानां रथनागाश्वसंज्ञयम्
शृणु राजन्स्थिरो भूत्वा संग्रामं शंसतो मम १५
आशा बलवती राजन्पुत्राणां तेऽभवत्तदा
हते भीष्मे च द्रोणे च सूतपुत्रे च पातिते
शल्यः पार्थान्रणे सर्वान्निहनिष्यति मारिष १६
तामाशां हृदये कृत्वा समाश्वास्य च भारत
मद्रराजं च समरे समाश्रित्य महारथम्
नाथवन्तमथात्मानममन्यत सुतस्तव १७
यदा कर्णे हते पार्थाः सिंहनादं प्रचक्रिरे
तदा राजन्धार्तराष्ट्रानाविवेश महद्भयम् १८
तान्समाश्वास्य तु तदा मद्रराजः प्रतापवान्
व्यूह्य व्यूहं महाराज सर्वतोभद्रमृद्धिमत् १९
प्रत्युद्यातो रणे पार्थान्मद्रराजः प्रतापवान्
विधुन्वन्कार्मुकं चित्रं भारघ्नं वेगवत्तरम् २०
रथप्रवरमास्थाय सैन्धवाश्वं महारथः
तस्य सीता महाराज रथस्थाशोभयद्रथम् २१
स तेन संवृतो वीरो रथेनामित्रकर्शनः
तस्थौ शूरो महाराज पुत्राणां ते भयप्रणुत् २२
प्रयाणे मद्रराजोऽभून्मुखं व्यूहस्य दंशितः

मद्रकैः सहितो वीरैः कर्णपुत्रैश्च दुर्जयैः २३
सव्येऽभूत्कृतवर्मा च त्रिगर्तैः परिवारितः
गौतमो दक्षिणे पार्श्वे शकैश्च यवनैः सह २४
अश्वत्थामा पृष्ठतोऽभूत्काम्बोजैः परिवारितः
दुर्योधनोऽभवन्मध्ये रक्षितः कुरुपुंगवैः २५
हयानीकेन महता सौबलश्चापि संवृतः
प्रययौ सर्वसैन्येन कैतव्यश्च महारथः २६
पाण्डवाश्च महेष्वासा व्यूह्य सैन्यमरिंदमाः
त्रिधा भूत्वा महाराज तव सैन्यमुपाद्रवन् २७
धृष्टद्युम्नः शिखण्डी च सात्यकिश्च महारथः
शल्यस्य वाहिनीं तूर्णमभिदुद्रुवुराहवे २८
ततो युधिष्ठिरो राजा स्वेनानीकेन संवृतः
शल्यमेवाभिदुद्राव जिघांसुर्भरतर्षभ २९
हार्दिक्यं तु महेष्वासमर्जुनः शत्रुपूगहा
संशप्तकगणांश्चैव वेगतोऽभिविदुद्रुवे ३०
गौतमं भीमसेनो वै सोमकाश्च महारथाः
अभ्यद्रवन्त राजेन्द्र जिघांसन्तः परान्युधि ३१
माद्रीपुत्रौ तु शकुनिमुलूकं च महारथौ
ससैन्यौ सहसेनौ तावुपतस्थतुराहवे ३२
तथैवायुतशो योधास्तावकाः पाण्डवान्रणे
अभ्यद्रवन्त संक्रुद्धा विविधायुधपाणयः ३३
धृतराष्ट्र उवाच
हते भीष्मे महेष्वासे द्रोणे कर्णे महारथे
कुरुष्वल्पावशिष्टेषु पाण्डवेषु च संयुगे ३४
सुसंरब्धेषु पार्थेषु पराक्रान्तेषु सञ्जय
मामकानां परेषां च किं शिष्टमभवद्बलम् ३५
सञ्जय उवाच
यथा वयं परे राजन्युद्धाय समवस्थिताः
यावच्चासीद्बलं शिष्टं संग्रामे तन्निबोध मे ३६
एकादश सहस्राणि रथानां भरतर्षभ

दश दन्तिसहस्राणि सप्त चैव शतानि च ३७
पूर्णे शतसहस्रे द्वे हयानां भरतर्षभ
नरकोटयस्तथा तिस्रो बलमेतत्तवाभवत् ३८
रथानां षट्सहस्राणि षट्सहस्राश्च कुञ्जराः
दश चाश्वसहस्राणि पत्तिकोटी च भारत ३९
एतद्बलं पाण्डवानामभवच्छेषमाहवे
एत एव समाजग्मुर्युद्धाय भरतर्षभ ४०
एवं विभज्य राजेन्द्र मद्रराजमते स्थिताः
पाण्डवान्प्रत्युदीयाम जयगृद्धाः प्रमन्यवः ४१
तथैव पाण्डवाः शूराः समरे जितकाशिनः
उपयाता नरव्याघ्राः पाञ्चालाश्च यशस्विनः ४२
एवमेते बलौघेन परस्परवधैषिणः
उपयाता नरव्याघ्राः पूर्वां संध्यां प्रति प्रभो ४३
ततः प्रववृते युद्धं घोररूपं भयानकम्
तावकानां परेषां च निघ्नतामितरेतरम् ४४
इति श्रीमहाभारते शल्यपर्वणि सप्तमोऽध्यायः ७

## अष्टमोऽध्यायः

सञ्जय उवाच
ततः प्रववृते युद्धं कुरूणां भयवर्धनम्
सृञ्जयैः सह राजेन्द्र घोरं देवासुरोपमम् १
नरा रथा गजौघाश्च सादिनश्च सहस्रशः
वाजिनश्च पराक्रान्ताः समाजग्मुः परस्परम् २
नागानां भीमरूपाणां द्रवतां निस्वनो महान्
अश्रूयत यथा काले जलदानां नभस्तले ३
नागैरभ्याहताः केचित्सरथा रथिनोऽपतन्
व्यद्रवन्त रणे वीरा द्राव्यमाणा मदोत्कटैः ४
हयौघान्पादरक्षांश्च रथिनस्तत्र शिक्षिताः
शरैः संप्रेषयामासुः परलोकाय भारत ५
सादिनः शिक्षिता राजन्परिवार्य महारथान्

विचरन्तो रणेऽभ्यघ्नन्प्रासशक्त्यृष्टिभिस्तथा ६
धन्विनः पुरुषाः केचित्संनिवार्य महारथान्
एकं बहव आसाद्य प्रेषयेयुर्यमक्षयम् ७
नागं रथवरांश्चान्ये परिवार्य महारथाः
सोत्तरायुधिनं जघ्नुर्द्रवमाणा महारवम् ८
तथा च रथिनं क्रुद्धं विकिरन्तं शरान्बहून्
नागा जघ्नुर्महाराज परिवार्य समन्ततः ९
नागो नागमभिद्रुत्य रथी च रथिनं रणे
शक्तितोमरनाराचैर्निजघ्नुस्तत्र तत्र ह १०
पादातानवमृद्नन्तो रथवारणवाजिनः
रणमध्ये व्यदृश्यन्त कुर्वन्तो महदाकुलम् ११
हयाश्च पर्यधावन्त चामरैरुपशोभिताः
हंसा हिमवतः प्रस्थे पिबन्त इव मेदिनीम् १२
तेषां तु वाजिनां भूमिः खुरैश्चित्रा विशां पते
अशोभत यथा नारी करजक्षतविक्षता १३
वाजिनां खुरशब्देन रथनेमिस्वनेन च
पत्तीनां चापि शब्देन नागानां बृंहितेन च १४
वादित्राणां च घोषेण शंखानां निस्वनेन च
अभवन्नादिता भूमिर्निर्घातैरिव भारत १५
धनुषां कूजमानानां निस्त्रिंशानां च दीप्यताम्
कवचानां प्रभाभिश्च न प्राज्ञायत किंचन १६
बहवो बाहवश्छिन्ना नागराजकरोपमाः
उद्वेष्टन्ते विवेष्टन्ते वेगं कुर्वन्ति दारुणम् १७
शिरसां च महाराज पततां वसुधातले
च्युतानामिव तालेभ्यः फलानां श्रूयते स्वनः १८
शिरोभिः पतितैर्भाति रुधिरार्द्रैर्वसुंधरा
तपनीयनिभैः काले नलिनैरिव भारत १९
उद्वृत्तनयनैस्तैस्तु गतसत्त्वैः सुविक्षतैः
व्यभ्राजत महाराज पुण्डरीकैरिवावृता २०
बाहुभिश्चन्दनादिग्धैः सकेयूरैर्महाधनैः

पतितैर्भाति राजेन्द्र मही शक्रध्वजैरिव २१
ऊरुभिश्च नरेन्द्राणां विनिवृत्तैर्महाहवे
हस्तिहस्तोपमैरन्यैः संवृतं तद्रणाङ्गणम् २२
कबन्धशतसंकीर्णं छत्रचामरशोभितम्
सेनावनं तच्छुशुभे वनं पुष्पाचितं यथा २३
तत्र योधा महाराज विचरन्तो ह्यभीतवत्
दृश्यन्ते रुधिराक्ताङ्गाः पुष्पिता इव किंशुकाः २४
मातङ्गाश्चाप्यदृश्यन्त शरतोमरपीडिताः
पतन्तस्तत्र तत्रैव छिन्नाभ्रसदृशा रणे २५
गजानीकं महाराज वध्यमानं महात्मभिः
व्यदीर्यत दिशः सर्वा वातनुन्ना घना इव २६
ते गजा घनसंकाशाः पेतुरुर्व्यां समन्ततः
वज्ररुग्णा इव बभुः पर्वता युगसंक्षये २७
हयानां सादिभिः सार्धं पतितानां महीतले
राशयः संप्रदृश्यन्ते गिरिमात्रास्ततस्ततः २८
सञ्जज्ञे रणभूमौ तु परलोकवहा नदी
शोणितोदा रथावर्ता ध्वजवृक्षास्थिशर्करा २९
भुजनक्रा धनुःस्रोता हस्तिशैला हयोपला
मेदोमज्जाकर्दमिनी छत्रहंसा गदोडुपा ३०
कवचोष्णीषसंछन्ना पताकारुचिरद्रुमा
चक्रचक्रावलीजुष्टा त्रिवेणूदण्डकावृता ३१
शूराणां हर्षजननी भीरूणां भयवर्धिनी
प्रावर्त्तत नदी रौद्रा कुरुसृञ्जयसंकुला ३२
तां नदीं पितृलोकाय वहन्तीमतिभैरवाम्
तेरुर्वाहननौभिस्ते शूराः परिघबाहवः ३३
वर्तमाने तदा युद्धे निर्मर्यादे विशां पते
चतुरङ्गक्षये घोरे पूर्वं देवासुरोपमे ३४
अक्रोशन्बान्धवानन्ये तत्र तत्र परन्तप
क्रोशद्भिर्बान्धवैश्चान्ये भयार्ता न निवर्तिरे ३५
निर्मर्यादे तथा युद्धे वर्तमाने भयानके

अर्जुनो भीमसेनश्च मोहयांचक्रतुः परान् ३६
सा वध्यमाना महती सेना तव जनाधिप
अमुह्यत्तत्र तत्रैव योषिन्मदवशादिव ३७
मोहयित्वा च तां सेनां भीमसेनधनंजयौ
दध्मतुर्वारिजौ तत्र सिंहनादं च नेदतुः ३८
श्रुत्वैव तु महाशब्दं धृष्टद्युम्नशिखण्डिनौ
धर्मराजं पुरस्कृत्य मद्रराजमभिद्रुतौ ३९
तत्राश्चर्यमपश्याम घोररूपं विशां पते
शल्येन संगताः शूरा यदयुध्यन्त भागशः ४०
माद्रीपुत्रौ सरभसौ कृतास्त्रौ युद्धदुर्मदौ
अभ्ययातां त्वरायुक्तौ जिगीषन्तौ बलं तव ४१
ततो न्यवर्तत बलं तावकं भरतर्षभ
शरैः प्रणुन्नं बहुधा पाण्डवैर्जितकाशिभिः ४२
वध्यमाना चमूः सा तु पुत्राणां प्रेक्षतां तव
भेजे दिशो महाराज प्रणुन्ना दृढधन्विभिः
हाहाकारो महाञ्जज्ञे योधानां तव भारत ४३
तिष्ठ तिष्ठेति वागासीद्द्रावितानां महात्मनाम्
क्षत्रियाणां तदान्योन्यं संयुगे जयमिच्छताम्
आद्रवन्नेव भग्नास्ते पाण्डवैस्तव सैनिकाः ४४
त्यक्त्वा युद्धे प्रियान्पुत्रान्भ्रातॄनथ पितामहान्
मातुलान्भागिनेयांश्च तथा संबन्धिबान्धवान् ४५
हयान्द्विपांस्त्वरयन्तो योधा जग्मुः समन्ततः
आत्मत्राणकृतोत्साहास्तावका भरतर्षभ ४६
इति श्रीमहाभारते शल्यपर्वणि अष्टमोऽध्यायः ८

## नवमोऽध्यायः

सञ्जय उवाच
तत्प्रभग्नं बलं दृष्ट्वा मद्रराजः प्रतापवान्
उवाच सारथिं तूर्णं चोदयाश्वान्महाजवान् १
एष तिष्ठति वै राजा पाण्डुपुत्रो युधिष्ठिरः

छत्रेण ध्रियमाणेन पाण्डुरेण विराजता २
अत्र मां प्रापय क्षिप्रं पश्य मे सारथे बलम्
न समर्था हि मे पार्थाः स्थातुमद्य पुरो युधि ३
एवमुक्तस्ततः प्रायान्मद्रराजस्य सारथिः
यत्र राजा सत्यसंधो धर्मराजो युधिष्ठिरः ४
आपतन्तं च सहसा पाण्डवानां महद्बलम्
दधारैको रणे शल्यो वेलेवोद्वृत्तमर्णवम् ५
पाण्डवानां बलौघस्तु शल्यमासाद्य मारिष
व्यतिष्ठत तदा युद्धे सिन्धोर्वेग इवाचलम् ६
मद्रराजं तु समरे दृष्ट्वा युद्धाय विष्ठितम्
कुरवः संन्यवर्तन्त मृत्युं कृत्वा निवर्तनम् ७
तेषु राजन्निवृत्तेषु व्यूढानीकेषु भागशः
प्रावर्तत महारौद्रः संग्रामः शोणितोदकः
समार्छच्चित्रसेनेन नकुलो युद्धदुर्मदः ८
तौ परस्परमासाद्य चित्रकार्मुकधारिणौ
मेघाविव यथोद्वृत्तौ दक्षिणोत्तरवर्षिणौ ९
शरतोयैः सिषिचतुस्तौ परस्परमाहवे
नान्तरं तत्र पश्यामि पाण्डवस्येतरस्य वा १०
उभौ कृतास्त्रौ बलिनौ रथचर्याविशारदौ
परस्परवधे यत्तौ छिद्रान्वेषणतत्परौ ११
चित्रसेनस्तु भल्लेन पीतेन निशितेन च
नकुलस्य महाराज मुष्टिदेशेऽच्छिनद्धनुः १२
अथैनं छिन्नधन्वानं रुक्मपुङ्खैः शिलाशितैः
त्रिभिः शरैरसम्भ्रान्तो ललाटे वै समर्पयत् १३
हयांश्चास्य शरैस्तीक्ष्णैः प्रेषयामास मृत्यवे
तथा ध्वजं सारथिं च त्रिभिस्त्रिभिरपातयत् १४
स शत्रुभुजनिर्मुक्तैर्ललाटस्थस्त्रिभिः शरैः
नकुलः शुशुभे राजंस्त्रिशृङ्ग इव पर्वतः १५
स छिन्नधन्वा विरथः खड्गमादाय चर्म च
रथादवातरद्वीरः शैलाग्रादिव केसरी १६

पद्भ्यामापततस्तस्य शरवृष्टिमवासृजत्
नकुलोऽप्यग्रसत्तां वै चर्मणा लघुविक्रमः १७
चित्रसेनरथं प्राप्य चित्रयोधी जितश्रमः
आरुरोह महाबाहुः सर्वसैन्यस्य पश्यतः १८
सकुण्डलं समुकुटं सुनसं स्वायतेक्षणम्
चित्रसेनशिरः कायादपाहरत पाण्डवः
स पपात रथोपस्थाद्दिवाकरसमप्रभः १९
चित्रसेनं विशस्तं तु दृष्ट्वा तत्र महारथाः
साधुवादस्वनांश्चक्रुः सिंहनादांश्च पुष्कलान् २०
विशस्तं भ्रातरं दृष्ट्वा कर्णपुत्रौ महारथौ
सुषेणः सत्यसेनश्च मुञ्चन्तौ निशिताञ्शरान् २१
ततोऽभ्यधावतां तूर्णं पाण्डवं रथिनां वरम्
जिघांसन्तौ यथा नागं व्याघ्रौ राजन्महावने २२
तावभ्यधावतां तीक्ष्णौ द्वावप्येनं महारथम्
शरौघान्सम्यगस्यन्तौ जीमूतौ सलिलं यथा २३
स शरैः सर्वतो विद्धः प्रहृष्ट इव पाण्डवः
अन्यत्कार्मुकमादाय रथमारुह्य वीर्यवान्
अतिष्ठत रणे वीरः क्रुद्धरूप इवान्तकः २४
तस्य तौ भ्रातरौ राजञ्शरैः संनतपर्वभिः
रथं विशकलीकर्तुं समारब्धौ विशां पते २५
ततः प्रहस्य नकुलश्चतुर्भिश्चतुरो रणे
जघान निशितैस्तीक्ष्णैः सत्यसेनस्य वाजिनः २६
ततः संधाय नाराचं रुक्मपुङ्खं शिलाशितम्
धनुश्चिच्छेद राजेन्द्र सत्यसेनस्य पाण्डवः २७
अथान्यं रथमास्थाय धनुरादाय चापरम्
सत्यसेनः सुषेणश्च पाण्डवं पर्यधावताम् २८
अविध्यत्तावसंभ्रान्तौ माद्रीपुत्रः प्रतापवान्
द्वाभ्यां द्वाभ्यां महाराज शराभ्यां रणमूर्धनि २९
सुषेणस्तु ततः क्रुद्धः पाण्डवस्य महद्धनुः
चिच्छेद प्रहसन्युद्धे क्षुरप्रेण महारथः ३०

अथान्यद्धनुरादाय नकुलः क्रोधमूर्छितः
सुषेणं पञ्चभिर्विद्ध्वा ध्वजमेकेन चिच्छिदे ३१
सत्यसेनस्य स धनुर्हस्तावापं च मारिष
चिच्छेद तरसा युद्धे तत उच्चुक्रुशुर्जनाः ३२
अथान्यद्धनुरादाय वेगघ्नं भारसाधनम्
शरैः संछादयामास समन्तात्पाण्डुनन्दनम् ३३
संनिवार्य तु तान्बाणान्नकुलः परवीरहा
सत्यसेनं सुषेणं च द्वाभ्यां द्वाभ्यामविध्यत ३४
तावेनं प्रत्यविध्येतां पृथक्पृथगजिह्मगैः
सारथिं चास्य राजेन्द्र शरैर्विव्यधतुः शितैः ३५
सत्यसेनो रथेषां तु नकुलस्य धनुस्तथा
पृथक्शराभ्यां चिच्छेद कृतहस्तः प्रतापवान् ३६
स रथेऽतिरथस्तिष्ठन्रथशक्तिं परामृशत्
स्वर्णदण्डामकुण्ठाग्रां तैलधौतां सुनिर्मलाम् ३७
लेलिहानामिव विभो नागकन्यां महाविषाम्
समुद्यम्य च चिक्षेप सत्यसेनस्य संयुगे ३८
सा तस्य हृदयं संख्ये बिभेद शतधा नृप
स पपात रथाद्भूमौ गतसत्वोऽल्पचेतनः ३९
भ्रातरं निहतं दृष्ट्वा सुषेणः क्रोधमूर्छितः
अभ्यवर्षच्छरैस्तूर्णं पदातिं पाण्डुनन्दनम् ४०
नकुलं विरथं दृष्ट्वा द्रौपदेयो महाबलः
सुतसोमोऽभिदुद्राव परीप्सन्पितरं रणे ४१
ततोऽधिरुह्य नकुलः सुतसोमस्य तं रथम्
शुशुभे भरतश्रेष्ठो गिरिस्थ इव केसरी
सोऽन्यत्कार्मुकमादाय सुषेणं समयोधयत् ४२
तावुभौ शरवर्षाभ्यां समासाद्य परस्परम्
परस्परवधे यत्नं चक्रतुः सुमहारथौ ४३
सुषेणस्तु ततः क्रुद्धः पाण्डवं विशिखैस्त्रिभिः
सुतसोमं च विंशत्या बाह्वोरुरसि चार्पयत् ४४
ततः क्रुद्धो महाराज नकुलः परवीरहा

शरैस्तस्य दिशः सर्वाश्छादयामास वीर्यवान् ४५
ततो गृहीत्वा तीक्ष्णाग्रमर्धचन्द्रं सुतेजनम्
स वेगयुक्तं चिक्षेप कर्णपुत्रस्य संयुगे ४६
तस्य तेन शिरः कायाज्जहार नृपसत्तम
पश्यतां सर्वसैन्यानां तदद्भुतमिवाभवत् ४७
स हतः प्रापतद्राजन्नकुलेन महात्मना
नदीवेगादिवारुग्णस्तीरजः पादपो महान् ४८
कर्णपुत्रवधं दृष्ट्वा नकुलस्य च विक्रमम्
प्रदुद्राव भयात्सेना तावकी भरतर्षभ ४९
तां तु सेनां महाराज मद्रराजः प्रतापवान्
अपालयद्रणे शूरः सेनापतिररिन्दमः ५०
विभीस्तस्थौ महाराज व्यवस्थाप्य च वाहिनीम्
सिंहनादं भृशं कृत्वा धनुःशब्दं च दारुणम् ५१
तावकाः समरे राजन्रक्षिता दृढधन्वना
प्रत्युद्ययुररातींस्ते समन्ताद्विगतव्यथाः ५२
मद्रराजं महेष्वासं परिवार्य समन्ततः
स्थिता राजन्महासेना योद्धुकामाः समन्ततः ५३
सात्यकिर्भीमसेनश्च माद्रीपुत्रौ च पाण्डवौ
युधिष्ठिरं पुरस्कृत्य ह्रीनिषेधमरिन्दमम् ५४
परिवार्य रणे वीराः सिंहनादं प्रचक्रिरे
बाणशब्दरवांश्चोग्रान्क्ष्वेडांश्च विविधान्दधुः ५५
तथैव तावकाः सर्वे मद्राधिपतिमञ्जसा
परिवार्य सुसंरब्धाः पुनर्युद्धमरोचयन् ५६
ततः प्रववृते युद्धं भीरूणां भयवर्धनम्
तावकानां परेषां च मृत्युं कृत्वा निवर्तनम् ५७
यथा देवासुरं युद्धं पूर्वमासीद्विशां पते
अभीतानां तथा राजन्यमराष्ट्रविवर्धनम् ५८
ततः कपिध्वजो राजन्हत्वा संशप्तकान्रणे
अभ्यद्रवत तां सेनां कौरवीं पाण्डुनन्दनः ५९
तथैव पाण्डवाः शेषा धृष्टद्युम्नपुरोगमाः

अभ्यधावन्त तां सेनां विसृजन्तः शिताञ्शरान् ६०
पाण्डवैरवकीर्णानां संमोहः समजायत
न च जज्ञुरनीकानि दिशो वा प्रदिशस्तथा ६१
आपूर्यमाणा निशितैः शरैः पाण्डवचोदितैः
हतप्रवीरा विध्वस्ता कीर्यमाणा समन्ततः
कौरव्यवध्यत चमूः पाण्डुपुत्रैर्महारथैः ६२
तथैव पाण्डवी सेना शरै राजन्समन्ततः
रणेऽहन्यत पुत्रैस्ते शतशोऽथ सहस्रशः ६३
ते सेने भृशसंतप्ते वध्यमाने परस्परम्
व्याकुले समपद्येतां वर्षासु सरिताविव ६४
आविवेश ततस्तीव्रं तावकानां महद्भयम्
पाण्डवानां च राजेन्द्र तथाभूते महाहवे ६५
इति श्रीमहाभारते शल्यपर्वणि नवमोऽध्यायः ९

## दशमोऽध्यायः

सञ्जय उवाच
तस्मिन्विलुलिते सैन्ये वध्यमाने परस्परम्
द्रवमाणेषु योधेषु निनदत्सु च दन्तिषु १
कूजतां स्तनतां चैव पदातीनां महाहवे
विद्रुतेषु महाराज हयेषु बहुधा तदा २
प्रक्षये दारुणे जाते संहारे सर्वदेहिनाम्
नानाशस्त्रसमावापे व्यतिषक्तरथद्विपे ३
हर्षणे युद्धशौण्डानां भीरूणां भयवर्धने
गाहमानेषु योधेषु परस्परवधैषिषु ४
प्राणादाने महाघोरे वर्तमाने दुरोदरे
संग्रामे घोररूपे तु यमराष्ट्रविवर्धने ५
पाण्डवास्तावकं सैन्यं व्यधमन्निशितैः शरैः
तथैव तावका योधा जघ्नुः पाण्डवसैनिकान् ६
तस्मिंस्तथा वर्तमाने युद्धे भीरुभयावहे
पूर्वाह्णे चैव संप्राप्ते भास्करोदयनं प्रति ७

लब्धलक्षाः परे राजन्रक्षिताश्च महात्मना
अयोधयंस्तव बलं मृत्युं कृत्वा निवर्तनम् ८
बलिभिः पाण्डवैर्दृप्तैर्लब्धलक्षैः प्रहारिभिः
कौरव्यसीदत्पृतना मृगीवाग्निसमाकुला ९
तां दृष्ट्वा सीदतीं सेनां पङ्के गामिव दुर्बलाम्
उज्जिहीर्षुस्तदा शल्यः प्रायात्पाण्डुचमूं प्रति १०
मद्रराजस्तु संक्रुद्धो गृहीत्वा धनुरुत्तमम्
अभ्यद्रवत संग्रामे पाण्डवानाततायिनः ११
पाण्डवाश्च महाराज समरे जितकाशिनः
मद्रराजं समासाद्य विव्यधुर्निशितैः शरैः १२
ततः शरशतैस्तीक्ष्णैर्मद्रराजो महाबलः
अर्दयामास तां सेनां धर्मराजस्य पश्यतः १३
प्रादुरासंस्ततो राजन्नानारूपाण्यनेकशः
चचाल शब्दं कुर्वाणा मही चापि सपर्वता १४
सदण्डशूला दीप्ताग्राः शीर्यमाणाः समन्ततः
उल्का भूमिं दिवः पेतुराहत्य रविमण्डलम् १५
मृगाश्च महिषाश्चापि पक्षिणश्च विशां पते
अपसव्यं तदा चक्रुः सेनां ते बहुशो नृप १६
ततस्तद्युद्धमत्युग्रमभवत्संघचारिणाम्
तथा सर्वाण्यनीकानि संनिपत्य जनाधिप
अभ्ययुः कौरवा राजन्पाण्डवानामनीकिनीम् १७
शल्यस्तु शरवर्षेण वर्षन्निव सहस्रदृक्
अभ्यवर्षददीनात्मा कुन्तीपुत्रं युधिष्ठिरम् १८
भीमसेनं शरैश्चापि रुक्मपुङ्खैः शिलाशितैः
द्रौपदेयांस्तथा सर्वान्माद्रीपुत्रौ च पाण्डवौ १९
धृष्टद्युम्नं च शैनेयं शिखण्डिनमथापि च
एकैकं दशभिर्बाणैर्विव्याध च महाबलः
ततोऽसृजद्बाणवर्षं घर्मान्ते मघवानिव २०
ततः प्रभद्रका राजन्सोमकाश्च सहस्रशः
पतिताः पात्यमानाश्च दृश्यन्ते शल्यसायकैः २१

भ्रमराणामिव व्राताः शलभानामिव व्रजाः
ह्लादिन्य इव मेघेभ्यः शल्यस्य न्यपतञ्शराः २२
द्विरदास्तुरगाश्चार्ताः पत्तयो रथिनस्तथा
शल्यस्य बाणैर्न्यपतन्बभ्रमुर्व्यनदंस्तथा २३
आविष्ट इव मद्रेशो मन्युना पौरुषेण च
प्राच्छादयदरीन्संख्ये कालसृष्ट इवान्तकः
विनर्दमानो मद्रेशो मेघह्लादो महाबलः २४
सा वध्यमाना शल्येन पाण्डवानामनीकिनी
अजातशत्रुं कौन्तेयमभ्यधावद्युधिष्ठिरम् २५
तां समर्प्य ततः संख्ये लघुहस्तः शितैः शरैः
शरवर्षेण महता युधिष्ठिरमपीडयत् २६
तमापतन्तं पत्त्यश्वैः क्रुद्धो राजा युधिष्ठिरः
अवारयच्छरैस्तीक्ष्णैर्मत्तं द्विपमिवाङ्कुशैः २७
तस्य शल्यः शरं घोरं मुमोचाशीविषोपमम्
सोऽभ्यविध्यन्महात्मानं वेगेनाभ्यपतच्च गाम् २८
ततो वृकोदरः क्रुद्धः शल्यं विव्याध सप्तभिः
पञ्चभिः सहदेवस्तु नकुलो दशभिः शरैः २९
द्रौपदेयाश्च शत्रुघ्नं शूरमार्तायनिं शरैः
अभ्यवर्षन्महाभागं मेघा इव महीधरम् ३०
ततो दृष्ट्वा तुद्यमानं शल्यं पार्थैः समन्ततः
कृतवर्मा कृपश्चैव संक्रुद्धावभ्यधावताम् ३१
उलूकश्च पतत्री च शकुनिश्चापि सौबलः
स्मयमानश्च शनकैरश्वत्थामा महारथः
तव पुत्राश्च कार्त्स्न्येन जुगुपुः शल्यमाहवे ३२
भीमसेनं त्रिभिर्विद्ध्वा कृतवर्मा शिलीमुखैः
बाणवर्षेण महता क्रुद्धरूपमवारयत् ३३
धृष्टद्युम्नं कृपः क्रुद्धो बाणवर्षैरपीडयत्
द्रौपदेयांश्च शकुनिर्यमौ च द्रौणिरभ्ययात् ३४
दुर्योधनो युधां श्रेष्ठावाहवे केशवार्जुनौ
समभ्ययादुग्रतेजाः शरैश्चाभ्यहनद्बली ३५

एवं द्वंद्वशतान्यासंस्त्वदीयानां परैः सह
घोररूपाणि चित्राणि तत्र तत्र विशां पते ३६
ऋश्यवर्णाञ्जघानाश्वान्भोजो भीमस्य संयुगे
सोऽवतीर्य रथोपस्थाद्धताश्वः पाण्डुनन्दनः
कालो दण्डमिवोद्यम्य गदापाणिरयुध्यत ३७
प्रमुखे सहदेवस्य जघानाश्वांश्च मद्रराट्
ततः शल्यस्य तनयं सहदेवोऽसिनावधीत् ३८
गौतमः पुनराचार्यो धृष्टद्युम्नमयोधयत्
असंभ्रान्तमसंभ्रान्तो यत्नवान्यत्नवत्तरम् ३९
द्रौपदेयांस्तथा वीरानेकैकं दशभिः शरैः
अविध्यदाचार्यसुतो नातिक्रुद्धः स्मयन्निव ४०
शल्योऽपि राजन्संक्रुद्धो निघ्नन्सोमकपाण्डवान्
पुनरेव शितैर्बाणैर्युधिष्ठिरमपीडयत् ४१
तस्य भीमो रणे क्रुद्धः संदष्टदशनच्छदः
विनाशायाभिसंधाय गदामादत्त वीर्यवान् ४२
यमदण्डप्रतीकाशां कालरात्रिमिवोद्यताम्
गजवाजिमनुष्याणां प्राणान्तकरणीमपि ४३
हेमपट्टपरिक्षिप्तामुल्कां प्रज्वलितामिव
शैक्यां व्यालीमिवात्युग्रां वज्रकल्पामयस्मयीम् ४४
चन्दनागुरुपङ्काक्तां प्रमदामीप्सितामिव
वसामेदोसृगादिग्धां जिह्वां वैवस्वतीमिव ४५
पटुघण्टारवशतां वासवीमशनीमिव
निर्मुक्ताशीविषाकारां पृक्तां गजमदैरपि ४६
त्रासनीं रिपुसैन्यानां स्वसैन्यपरिहर्षिणीम्
मनुष्यलोके विख्यातां गिरिशृङ्गविदारिणीम् ४७
यया कैलासभवने महेश्वरसखं बली
आह्वयामास कौन्तेयः संक्रुद्धमलकाधिपम् ४८
यया मायाविनो दृप्तान्सुबहून्धनदालये
जघान गुह्यकान्क्रुद्धो मन्दारार्थे महाबलः
निवार्यमाणो बहुभिर्द्रौपद्याः प्रियमास्थितः ४९

तां वज्रमणिरत्नौघामष्टाश्रिं वज्रगौरवाम्
समुद्यम्य महाबाहुः शल्यमभ्यद्रवद्रणे ५०
गदया युद्धकुशलस्तया दारुणनादया
पोथयामास शल्यस्य चतुरोऽश्वान्महाजवान् ५१
ततः शल्यो रणे क्रुद्धः पीने वक्षसि तोमरम्
निचखान नदन्वीरो वर्म भित्त्वा च सोऽभ्यगात् ५२
वृकोदरस्त्वसंभ्रांतस्तमेवोद्धृत्य तोमरम्
यन्तारं मद्रराजस्य निर्बिभेद ततो हृदि ५३
स भिन्नवर्मा रुधिरं वमन्वित्रस्तमानसः
पपाताभिमुखो दीनो मद्रराजस्त्वपाक्रमत् ५४
कृतप्रतिकृतं दृष्ट्वा शल्यो विस्मितमानसः
गदामाश्रित्य धीरात्मा प्रत्यमित्रमवैक्षत ५५
ततः सुमनसः पार्था भीमसेनमपूजयन्
तद्दृष्ट्वा कर्म संग्रामे घोरमक्लिष्टकर्मणः ५६
इति श्रीमहाभारते शल्यपर्वणि दशमोऽध्यायः १०

## एकादशोऽध्यायः

सञ्जय उवाच
पतितं प्रेक्ष्य यन्तारं शल्यः सर्वायसीं गदाम्
आदाय तरसा राजंस्तस्थौ गिरिरिवाचलः १
तं दीप्तमिव कालाग्निं पाशहस्तमिवान्तकम्
सशृङ्गमिव कैलासं सवज्रमिव वासवम् २
सशूलमिव हर्यक्षं वने मत्तमिव द्विपम्
जवेनाभ्यपतद्भीमः प्रगृह्य महतीं गदाम् ३
ततः शंखप्रणादश्च तूर्याणां च सहस्रशः
सिंहनादश्च सञ्जज्ञे शूराणां हर्षवर्धनः ४
प्रेक्षन्तः सर्वतस्तौ हि योधा योधमहाद्विपौ
तावकाश्च परे चैव साधु साध्वित्यथाब्रुवन् ५
न हि मद्राधिपादन्यो रामाद्वा यदुनन्दनात्
सोढुमुत्सहते वेगं भीमसेनस्य संयुगे ६

तथा मद्राधिपस्यापि गदावेगं महात्मनः
सोढुमुत्सहते नान्यो योधो युधि वृकोदरात् ७
तौ वृषाविव नर्दन्तौ मराडलानि विचेरतुः
स्रावल्गितौ गदाहस्तौ मद्रराजवृकोदरौ ८
मराडलावर्तमार्गेषु गदाविहरगोषु च
निर्विशेषमभूद्युद्धं तयोः पुरुषसिंहयोः ९
तप्तहेममयैः शुभ्रैर्बभूव भयवर्धनी
स्रग्निज्वालैरिवाविद्धा पट्टैः शल्यस्य सा गदा १०
तथैव चरतो मार्गान्मराडलेषु महात्मनः
विद्युदभ्रप्रतीकाशा भीमस्य शुशुभे गदा ११
ताडिता मद्रराजेन भीमस्य गदया गदा
दीप्यमानेव वै राजन्ससृजे पावकार्चिषः १२
तथा भीमेन शल्यस्य ताडिता गदया गदा
स्रंगारवर्षं मुमुचे तदद्भुतमिवाभवत् १३
दन्तैरिव महानागौ शृङ्गैरिव महर्षभौ
तोत्त्रैरिव तदान्योन्यं गदाग्राभ्यां निजघ्नतुः १४
तौ गदानिहतैर्गात्रैः न्नरोन रुधिरोन्नितौ
प्रेन्नणीयतरावास्तां पुष्पिताविव किंशुकौ १५
गदया मद्रराजेन सव्यदन्निरामाहतः
भीमसेनो महाबाहुर्न चचालाचलो यथा १६
तथा भीमगदावेगैस्ताडचमानो मुहुर्मुहुः
शल्यो न विव्यथे राजन्दन्तिनेवाहतो गिरिः १७
शुश्रुवे दिन्नु सर्वासु तयोः पुरुषसिंहयोः
गदानिपातसंह्रादो वज्रयोरिव निःस्वनः १८
निवृत्य तु महावीर्यौ समुच्छ्रितगदावुभौ
पुनरन्तरमार्गस्थौ मराडलानि विचेरतुः १९
स्रथाभ्येत्य पदान्यष्टौ संनिपातोऽभवत्तयोः
उद्यम्य लोहदराडाभ्यामतिमानुषकर्मगोः २०
प्रार्थयानौ तदान्योऽन्य मराडलानि विचेरतुः
क्रियाविशेषं कृतिनौ दर्शयामासतुस्तदा २१

अथोद्यम्य गदे घोरे सशृङ्गाविव पर्वतौ
तावाजघ्नतुरन्योन्यं यथा भूमिचलेऽचलौ २२
तौ परस्परवेगाच्च गदाभ्यां च भृशाहतौ
युगपत्पेततुर्वीरावुभाविन्द्रध्वजाविव २३
उभयोः सेनयोर्वीरास्तदा हाहाकृतोऽभवन्
भृशं मर्मण्यभिहतावुभावास्तां सुविह्वलौ २४
ततः सगदमारोप्य मद्राणामृषभं रथे
अपोवाह कृपः शल्यं तूर्णमायोधनादपि २५
क्षीबवद्विह्वलत्वात्तु निमेषात्पुनरुत्थितः
भीमसेनो गदापाणिः समाह्वयत मद्रपम् २६
ततस्तु तावकाः शूरा नानाशस्त्रसमायुताः
नानावादित्रशब्देन पाण्डुसेनामयोधयन् २७
भुजावुच्छ्रित्य शस्त्रं च शब्देन महता ततः
अभ्यद्रवन्महाराज दुर्योधनपुरोगमाः २८
तदनीकमभिप्रेक्ष्य ततस्ते पाण्डुनन्दनाः
प्रययुः सिंहनादेन दुर्योधनवधेप्सया २९
तेषामापततां तूर्णं पुत्रस्ते भरतर्षभ
प्रासेन चेकितानं वै विव्याध हृदये भृशम् ३०
स पपात रथोपस्थे तव पुत्रेण ताडितः
रुधिरौघपरिक्लिन्नः प्रविश्य विपुलं तमः ३१
चेकितानं हतं दृष्ट्वा पाण्डवानां महारथाः
प्रसक्तमभ्यवर्षन्त शरवर्षाणि भागशः ३२
तावकानामनीकेषु पाण्डवा जितकाशिनः
व्यचरन्त महाराज प्रेक्षणीयाः समन्ततः ३३
कृपश्च कृतवर्मा च सौबलश्च महाबलः
अयोधयन्धर्मराजं मद्रराजपुरस्कृताः ३४
भारद्वाजस्य हन्तारं भूरिवीर्यपराक्रमम्
दुर्योधनो महाराज धृष्टद्युम्नमयोधयत् ३५
त्रिसाहस्रा रथा राजंस्तव पुत्रेण चोदिताः
अयोधयन्त विजयं द्रोणपुत्रपुरस्कृताः ३६

विजये धृतसंकल्पाः समभित्यक्तजीविताः
प्राविशंस्तावका राजन्हंसा इव महत्सरः ३७
ततो युद्धमभूद्घोरं परस्परवधैषिणाम्
अन्योन्यवधसंयुक्तमन्योन्यप्रीतिवर्धनम् ३८
तस्मिन्प्रवृत्ते संग्रामे राजन्वीरवरक्षये
अनिलेनेरितं घोरमुत्तस्थौ पार्थिवं रजः ३९
श्रवणान्नामधेयानां पाण्डवानां च कीर्तनात्
परस्परं विजानीमो ये चायुध्यन्नभीतवत् ४०
तद्रजः पुरुषव्याघ्र शोणितेन प्रशामितम्
दिशश्च विमला जज्ञुस्तस्मिन्रजसि शामिते ४१
तथा प्रवृत्ते संग्रामे घोररूपे भयानके
तावकानां परेषां च नासीत्कश्चित्पराङ्मुखः ४२
ब्रह्मलोकपरा भूत्वा प्रार्थयन्तो जयं युधि
सुयुद्धेन पराक्रान्ता नराः स्वर्गमभीप्सवः ४३
भर्तृपिण्डविमोक्षार्थं भर्तृकार्यविनिश्चिताः
स्वर्गसंसक्तमनसो योधा युयुधिरे तदा ४४
नानारूपाणि शस्त्राणि विसृजन्तो महारथाः
अन्योन्यमभिगर्जन्तः प्रहरन्तः परस्परम् ४५
हत विध्यत गृह्णीत प्रहरध्वं निकृन्तत
इति स्म वाचः श्रूयन्ते तव तेषां च वै बले ४६
ततः शल्यो महाराज धर्मराजं युधिष्ठिरम्
विव्याध निशितैर्बाणैर्हन्तुकामो महारथम् ४७
तस्य पार्थो महाराज नाराचान्वै चतुर्दश
मर्माण्युद्दिश्य मर्मज्ञो निचखान हसन्निव ४८
तं वार्य पाण्डवं बाणैर्हन्तुकामो महायशाः
विव्याध समरे क्रुद्धो बहुभिः कङ्कपत्रिभिः ४९
अथ भूयो महाराज शरेण नतपर्वणा
युधिष्ठिरं समाजघ्ने सर्वसैन्यस्य पश्यतः ५०
धर्मराजोऽपि संक्रुद्धो मद्रराजं महायशाः
विव्याध निशितैर्बाणैः कङ्कबर्हिणवाजितैः ५१

चन्द्रसेनं च सप्तत्या सूतं च नवभिः शरैः
द्रुमसेनं चतुःषष्ट्या निजधान महारथः ५२
चक्ररक्षे हते शल्यः पाण्डवेन महात्मना
निजघान ततो राजंश्चेदीन्वै पञ्चविंशतिम् ५३
सात्यकिं पञ्चविंशत्या भीमसेनं च पञ्चभिः
माद्रीपुत्रौ शतेनाजौ विव्याध निशितैः शरैः ५४
एवं विचरतस्तस्य संग्रामे राजसत्तम
संप्रेषयच्छितान्पार्थः शरानाशीविषोपमान् ५५
ध्वजाग्रं चास्य समरे कुन्तीपुत्रो युधिष्ठिरः
प्रमुखे वर्तमानस्य भल्लेनापहरद्रथात् ५६
पाण्डुपुत्रेण वै तस्य केतुं छिन्नं महात्मना
निपतन्तमपश्याम गिरिशृङ्गमिवाहतम् ५७
ध्वजं निपतितं दृष्ट्वा पाण्डवं च व्यवस्थितम्
संक्रुद्धो मद्रराजोऽभूच्छरवर्षं मुमोच ह ५८
शल्यः सायकवर्षेण पर्जन्य इव वृष्टिमान्
अभ्यवर्षदमेयात्मा क्षत्रियं क्षत्रियर्षभः ५९
सात्यकिं भीमसेनं च माद्रीपुत्रौ च पाण्डवौ
एकैकं पंचभिर्विद्ध्वा युधिष्ठिरमपीडयत् ६०
ततो बाणमयं जालं विततं पाण्डवोरसि
अपश्याम महाराज मेघजालमिवोद्गतम् ६१
तस्य शल्यो रणे क्रुद्धो बाणैः संनतपर्वभिः
दिशः प्रच्छादयामास प्रदिशश्च महारथः ६२
ततो युधिष्ठिरो राजा बाणजालेन पीडितः
बभूव हतविक्रान्तो जम्भो वृत्रहणा यथा ६३
इति श्रीमहाभारते शल्यपर्वण्येकादशोऽध्यायः ११

## द्वादशोऽध्यायः

सञ्जय उवाच
पीडिते धर्मराजे तु मद्रराजेन मारिष
सात्यकिर्भीमसेनश्च माद्रीपुत्रौ च पाण्डवौ

परिवार्य रथैः शल्यं पीडयामासुराहवे १
तमेकं बहुभिर्दृष्ट्वा पीड्यमानं महारथैः
साधुवादो महाञ्जज्ञे सिद्धाश्चासन्प्रहर्षिताः
आश्चर्यमित्यभाषन्त मुनयश्चापि संगताः २
भीमसेनो रणे शल्यं शल्यभूतं पराक्रमे
एकेन विद्ध्वा बाणेन पुनर्विव्याध सप्तभिः ३
सात्यकिश्च शतेनैनं धर्मपुत्रपरीप्सया
मद्रेश्वरमवाकीर्य सिंहनादमथानदत् ४
नकुलः पञ्चभिश्चैनं सहदेवश्च सप्तभिः
विद्ध्वा तं तु ततस्तूर्णं पुनर्विव्याध सप्तभिः ५
स तु शूरो रणे यत्तः पीडितस्तैर्महारथैः
विकृष्य कार्मुकं घोरं वेगघ्नं भारसाधनम् ६
सात्यकिं पञ्चविंशत्या शल्यो विव्याध मारिष
भीमसेनं त्रिसप्तत्या नकुलं सप्तभिस्तथा ७
ततः सविशिखं चापं सहदेवस्य धन्विनः
छित्त्वा भल्लेन समरे विव्याधैनं त्रिसप्तभिः ८
सहदेवस्तु समरे मातुलं भूरिवर्चसम्
सज्यमन्यद्धनुः कृत्वा पञ्चभिः समताडयत्
शरैराशीविषाकारैर्ज्वलज्ज्वलनसंनिभैः ९
सारथिं चास्य समरे शरेणानतपर्वणा
विव्याध भृशसंक्रुद्धस्तं च भूयस्त्रिभिः शरैः १०
भीमसेनस्त्रिसप्तत्या सात्यकिर्नवभिः शरैः
धर्मराजस्तथा षष्ट्या गात्रे शल्यं समर्पयत् ११
ततः शल्यो महाराज निर्विद्धस्तैर्महारथैः
सुस्राव रुधिरं गात्रैर्गैरिकं पर्वतो यथा १२
तांश्च सर्वान्महेष्वासान्पञ्चभिः पञ्चभिः शरैः
विव्याध तरसा राजंस्तदद्भुतमिवाभवत् १३
ततोऽपरेण भल्लेन धर्मपुत्रस्य मारिष
धनुश्चिच्छेद समरे सज्यं स सुमहारथः १४
अथान्यद्धनुरादाय धर्मपुत्रो महारथः

साश्वसूतध्वजरथं शल्यं प्राच्छादयच्छरैः १५
स च्छाद्यमानः समरे धर्मपुत्रस्य सायकैः
युधिष्ठिरमथाविध्यद्दशभिर्निशितैः शरैः १६
सात्यकिस्तु ततः क्रुद्धो धर्मपुत्रे शरार्दिते
मद्राणामधिपं शूरं शरौघैः समवारयत् १७
स सात्यकेः प्रचिच्छेद क्षुरप्रेण महद्धनुः
भीमसेनमुखांस्तांश्च त्रिभिस्त्रिभिरताडयत् १८
तस्य क्रुद्धो महाराज सात्यकिः सत्यविक्रमः
तोमरं प्रेषयामास स्वर्णदण्डं महाधनम् १९
भीमसेनोऽथ नाराचं ज्वलन्तमिव पन्नगम्
नकुलः समरे शक्तिं सहदेवो गदां शुभाम्
धर्मराजः शतघ्नीं तु जिघांसुः शल्यमाहवे २०
तानापतत एवाशु पञ्चानां वै भुजच्युतान्
सात्यकिप्रहितं शल्यो भल्लैश्चिच्छेद तोमरम् २१
भीमेन प्रहितं चापि शरं कनकभूषणम्
द्विधा चिच्छेद समरे कृतहस्तः प्रतापवान् २२
नकुलप्रेषितां शक्तिं हेमदण्डां भयावहाम्
गदां च सहदेवेन शरौघैः समवारयत् २३
शराभ्यां च शतघ्नीं तां राज्ञश्चिच्छेद भारत
पश्यतां पाण्डुपुत्राणां सिंहनादं ननाद च
नामृष्यत्तं तु शैनेयः शत्रोर्विजयमाहवे २४
अथान्यद्धनुरादाय सात्यकिः क्रोधमूर्छितः
द्वाभ्यां मद्रेश्वरं विद्ध्वा सारथिं च त्रिभिः शरैः २५
ततः शल्यो महाराज सर्वांस्तान्दशभिः शरैः
विव्याध सुभृशं क्रुद्धस्तोत्त्रैरिव महाद्विपान् २६
ते वार्यमाणाः समरे मद्रराज्ञा महारथाः
न शेकुः प्रमुखे स्थातुं तस्य शत्रुनिषूदनाः २७
ततो दुर्योधनो राजा दृष्ट्वा शल्यस्य विक्रमम्
निहतान्पाण्डवान्मेने पाञ्चालानथ सृञ्जयान् २८
ततो राजन्महाबाहुर्भीमसेनः प्रतापवान्

संत्यज्य मनसा प्राणान्मद्राधिपमयोधयत् २९
नकुलः सहदेवश्च सात्यकिश्च महारथः
परिवार्य तदा शल्यं समन्ताद्व्यकिरञ्शरैः ३०
स चतुर्भिर्महेष्वासैः पाण्डवानां महारथैः
वृतस्तान्योधयामास मद्रराजः प्रतापवान् ३१
तस्य धर्मसुतो राजन्क्षुरप्रेण महाहवे
चक्ररक्षं जघानाशु मद्रराजस्य पार्थिव ३२
तस्मिंस्तु निहते शूरे चक्ररक्षे महारथे
मद्रराजोऽतिबलवान्सैनिकानास्तृणोच्छरैः ३३
समाच्छन्नांस्ततस्तांस्तु राजन्वीक्ष्य स सैनिकान्
चिन्तयामास समरे धर्मराजो युधिष्ठिरः ३४
कथं नु न भवेत्सत्यं तन्माधववचो महत्
न हि क्रुद्धो रणे राजा क्षपयेत बलं मम ३५
ततः सरथनागाश्वाः पाण्डवाः पाण्डुपूर्वज
मद्रेश्वरं समासेदुः पीडयन्तः समन्ततः ३६
नानाशस्त्रौघबहुलां शस्त्रवृष्टिं समुत्थिताम्
व्यधमत्समरे राजन्महाभ्राणीव मारुतः ३७
ततः कनकपुङ्खां तां शल्यक्षिप्तां वियद्गताम्
शरवृष्टिमपश्याम शलभानामिवाततिम् ३८
ते शरा मद्रराजेन प्रेषिता रणमूर्धनि
संपतन्तः स्म दृश्यन्ते शलभानां व्रजा इव ३९
मद्रराजधनुर्मुक्तैः शरैः कनकभूषणैः
निरन्तरमिवाकाशं संबभूव जनाधिप ४०
न पाण्डवानां नास्माकं तत्र किञ्चिद्व्यदृश्यत
बाणान्धकारे महति कृते तत्र महाभये ४१
मद्रराजेन बलिना लाघवाच्छरवृष्टिभिः
लोड्यमानं तथा दृष्ट्वा पाण्डवानां बलार्णवम्
विस्मयं परमं जग्मुर्देवगन्धर्वदानवाः ४२
स तु तान्सर्वतो यत्ताञ्शरैः संपीड्य मारिष
धर्मराजमवच्छाद्य सिंहवद्व्यनदन्मुहुः ४३

ते छन्नाः समरे तेन पाण्डवानां महारथाः
न शेकुस्तं तदा युद्धे प्रत्युद्यातुं महारथम् ४४
धर्मराजपुरोगास्तु भीमसेनमुखा रथाः
न जहुः समरे शूरं शल्यमाहवशोभिनम् ४५
इति श्रीमहाभारते शल्यपर्वणि द्वादशोऽध्यायः १२

## त्रयोदशोऽध्यायः

सञ्जय उवाच
अर्जुनो द्रौणिना विद्धो युद्धे बहुभिरायसैः
तस्य चानुचरैः शूरैस्त्रिगर्तानां महारथैः
द्रौणिं विव्याध समरे त्रिभिरेव शिलीमुखैः १
तथेतरान्महेष्वासान्द्वाभ्यां द्वाभ्यां धनंजयः
भूयश्चैव महाबाहुः शरवर्षैरवाकिरत् २
शरकण्टकितास्ते तु तावका भरतर्षभ
न जहुः समरे पार्थं वध्यमानाः शितैः शरैः ३
तेऽर्जुनं रथवंशेन द्रोणपुत्रपुरोगमाः
अयोधयन्त समरे परिवार्य महारथाः ४
तैस्तु क्षिप्ताः शरा राजन्कार्तस्वरविभूषिताः
अर्जुनस्य रथोपस्थं पूरयामासुरञ्जसा ५
तथा कृष्णौ महेष्वासौ वृषभौ सर्वधन्विनाम्
शरैर्वीक्ष्य वितुन्नाङ्गौ प्रहृष्टौ युद्धदुर्मदौ ६
कूबरं रथचक्राणि ईषा योक्त्राणि चाभिभो
युगं चैवानुकर्षं च शरभूतमभूत्तदा ७
नैतादृशं दृष्टपूर्वं राजन्नैव च नः श्रुतम्
यादृशं तत्र पार्थस्य तावकाः संप्रचक्रिरे ८
स रथः सर्वतो भाति चित्रपुङ्खैः शितैः शरैः
उल्काशतैः संप्रदीप्तं विमानमिव भूतले ९
ततोऽर्जुनो महाराज शरैः संनतपर्वभिः
अवाकिरत्तां पृतनां मेघो वृष्ट्या यथाचलम् १०
ते वध्यमानाः समरे पार्थनामाङ्कितैः शरैः

पार्थभूतममन्यन्त प्रेक्षमाणास्तथाविधम् ११
ततोऽद्भुतशरज्वालो धनुःशब्दानिलो महान्
सेनेन्धनं ददाहाशु तावकं पार्थपावकः १२
चक्राणां पततां चैव युगानां च धरातले
तूणीराणां पताकानां ध्वजानां च रथैः सह १३
ईषाणामनुकर्षाणां त्रिवेणूनां च भारत
अक्षाणामथ योक्त्राणां प्रतोदानां च सर्वशः १४
शिरसां पततां चैव कुण्डलोष्णीषधारिणाम्
भुजानां च महाराज स्कन्धानां च समन्ततः १५
छत्राणां व्यजनैः सार्धं मुकुटानां च राशयः
समदृश्यन्त पार्थस्य रथमार्गेषु भारत १६
अगम्यरूपा पृथिवी मांसशोणितकर्दमा
बभूव भरतश्रेष्ठ रुद्रस्याक्रीडनं यथा
भीरूणां त्रासजननी शूराणां हर्षवर्धनी १७
हत्वा तु समरे पार्थः सहस्रे द्वे परंतप
रथानां सवरूथानां विधूमोऽग्निरिव ज्वलन् १८
यथा हि भगवानग्निर्जगद्दग्ध्वा चराचरम्
विधूमो दृश्यते राजंस्तथा पार्थो महारथः १९
द्रौणिस्तु समरे दृष्ट्वा पाण्डवस्य पराक्रमम्
रथेनातिपताकेन पाण्डवं प्रत्यवारयत् २०
तावुभौ पुरुषव्याघ्रौ श्वेताश्वौ धन्विनां वरौ
समीयतुस्तदा तूर्णं परस्परवधैषिणौ २१
तयोरासीन्महाराज बाणवर्षं सुदारुणम्
जीमूतानां यथा वृष्टिस्तपान्ते भरतर्षभ २२
अन्योन्यस्पर्धिनौ तौ तु शरैः संनतपर्वभिः
ततक्षतुर्मृधेऽन्योन्यं शृङ्गाभ्यां वृषभाविव २३
तयोर्युद्धं महाराज चिरं सममिवाभवत्
अस्त्राणां संगमश्चैव घोरस्तत्राभवन्महान् २४
ततोऽर्जुनं द्वादशभी रुक्मपुङ्खैः सुतेजनैः
वासुदेवं च दशभिर्द्रौणिर्विव्याध भारत २५

ततः प्रहस्य बीभत्सुर्व्याक्षिपद्गाण्डिवं धनुः
मानयित्वा मुहूर्तं च गुरुपुत्रं महाहवे २६
व्यश्वसूतरथं चक्रे सव्यसाची महारथः
मृदुपूर्वं ततश्चैनं त्रिभिर्विव्याध सायकैः २७
हताश्वे तु रथे तिष्ठन्द्रोणपुत्रस्त्वयस्मयम्
मुसलं पाण्डुपुत्राय चिक्षेप परिघोपमम् २८
तमापतन्तं सहसा हेमपट्टविभूषितम्
चिच्छेद सप्तधा वीरः पार्थः शत्रुनिबर्हणः २९
स च्छिन्नं मुसलं दृष्ट्वा द्रौणिः परमकोपनः
आददे परिघं घोरं नगेन्द्रशिखरोपमम्
चिक्षेप चैव पार्थाय द्रौणिर्युद्धविशारदः ३०
तमन्तकमिव क्रुद्धं परिघं प्रेक्ष्य पाण्डवः
अर्जुनस्त्वरितो जघ्ने पञ्चभिः सायकोत्तमैः ३१
स च्छिन्नः पतितो भूमौ पार्थबाणैर्महाहवे
दारयन्पृथिवीन्द्राणां मनः शब्देन भारत ३२
ततोऽपरैस्त्रिभिर्बाणैर्द्रौणिं विव्याध पाण्डवः
सोऽतिविद्धो बलवता पार्थेन सुमहाबलः
न संभ्रान्तस्तदा द्रौणिः पौरुषे स्वे व्यवस्थितः ३३
सुधर्मा तु ततो राजन्भारद्वाजं महारथम्
अवाकिरच्छरव्रातैः सर्वक्षत्रस्य पश्यतः ३४
ततस्तु सुरथोऽप्याजौ पाञ्चालानां महारथः
रथेन मेघघोषेण द्रौणिमेवाभ्यधावत ३५
विकर्षन्वै धनुः श्रेष्ठं सर्वभारसहं दृढम्
ज्वलनाशीविषनिभैः शरैश्चैनमवाकिरत् ३६
सुरथं तु ततः क्रुद्धमापतन्तं महारथम्
चुकोप समरे द्रौणिर्दण्डाहत इवोरगः ३७
त्रिशिखां भ्रुकुटीं कृत्वा सृक्किणी परिलेलिहन्
उद्वीक्ष्य सुरथं रोषाद्धनुर्ज्यामवमृज्य च
मुमोच तीक्ष्णं नाराचं यमदण्डसमद्युतिम् ३८
स तस्य हृदयं भित्त्वा प्रविवेशातिवेगतः

शक्राशनिरिवोत्सृष्टा विदार्य धरणीतलम् ३९
ततस्तं पतितं भूमौ नाराचेन समाहतम्
वज्रेणेव यथा शृङ्गं पर्वतस्य महाधनम् ४०
तस्मिंस्तु निहते वीरे द्रोणपुत्रः प्रतापवान्
आरुरोह रथं तूर्णं तमेव रथिनां वरः ४१
ततः सन्नो महाराज द्रौणिराहवदुर्मदः
अर्जुनं योधयामास संशप्तकवृतो रणे ४२
तत्र युद्धं महच्चासीदर्जुनस्य परैः सह
मध्यंदिनगते सूर्ये यमराष्ट्रविवर्धनम् ४३
तत्राश्चर्यमपश्याम दृष्ट्वा तेषां पराक्रमम्
यदेको युगपद्वीरान्समयोधयदर्जुनः ४४
विमर्दस्तु महानासीदर्जुनस्य परैः सह
शतक्रतोर्यथा पूर्वं महत्या दैत्यसेनया ४५
इति श्रीमहाभारते शल्यपर्वणि त्रयोदशोऽध्यायः १३

## चतुर्दशोऽध्यायः

सञ्जय उवाच
दुर्योधनो महाराज धृष्टद्युम्नश्च पार्षतः
चक्रतुः सुमहद्युद्धं शरशक्तिसमाकुलम् १
तयोरासन्महाराज शरधाराः सहस्रशः
अम्बुदानां यथा काले जलधाराः समन्ततः २
राजा तु पार्षतं विद्ध्वा शरैः पञ्चभिरायसैः
द्रोणहन्तारमुग्रेषुः पुनर्विव्याध सप्तभिः ३
धृष्टद्युम्नस्तु समरे बलवान्दृढविक्रमः
सप्तत्या विशिखानां वै दुर्योधनमपीडयत् ४
पीडितं प्रेक्ष्य राजानं सोदर्या भरतर्षभ
महत्या सेनया सार्धं परिवव्रुः स्म पार्षतम् ५
स तैः परिवृतः शूरैः सर्वतोऽतिरथैर्भृशम्
व्यचरत्समरे राजन्दर्शयन्हस्तलाघवम् ६
शिखण्डी कृतवर्माणं गौतमं च महारथम्

प्रभद्रकैः समायुक्तो योधयामास धन्विनौ ७
तत्रापि सुमहद्युद्धं घोररूपं विशां पते
प्राणान्संत्यजतां युद्धे प्राणद्यूताभिदेवने ८
शल्यस्तु शरवर्षाणि विमुञ्चन्सर्वतोदिशम्
पाण्डवान्पीडयामास ससात्यकिवृकोदरान् ९
तथोभौ च यमौ युद्धे यमतुल्यपराक्रमौ
योधयामास राजेन्द्र वीर्येण च बलेन च १०
शल्यसायकनुन्नानां पाण्डवानां महामृधे
त्रातारं नाध्यगच्छन्त केचित्तत्र महारथाः ११
ततस्तु नकुलः शूरो धर्मराजे प्रपीडिते
अभिदुद्राव वेगेन मातुलं माद्रिनन्दनः १२
संछाद्य समरे शल्यं नकुलः परवीरहा
विव्याध चैनं दशभिः स्मयमानः स्तनान्तरे १३
सर्वपारशवैर्बाणैः कर्मारपरिमार्जितैः
स्वर्णपुङ्खैः शिलाधौतैर्धनुर्यन्त्रप्रचोदितैः १४
शल्यस्तु पीडितस्तेन स्वस्रीयेण महात्मना
नकुलं पीडयामास पत्रिभिर्नतपर्वभिः १५
ततो युधिष्ठिरो राजा भीमसेनोऽथ सात्यकिः
सहदेवश्च माद्रेयो मद्रराजमुपाद्रवन् १६
तानापतत एवाशु पूरयानान्रथस्वनैः
दिशश्च प्रदिशश्चैव कम्पयानांश्च मेदिनीम्
प्रतिजग्राह समरे सेनापतिरमित्रजित् १७
युधिष्ठिरं त्रिभिर्विद्ध्वा भीमसेनं च सप्तभिः
सात्यकिं च शतेनाजौ सहदेवं त्रिभिः शरैः १८
ततस्तु सशरं चापं नकुलस्य महात्मनः
मद्रेश्वरः क्षुरप्रेण तदा चिच्छेद मारिष
तदशीर्यत विच्छिन्नं धनुः शल्यस्य सायकैः १९
अथान्यद्धनुरादाय माद्रीपुत्रो महारथः
मद्रराजरथं तूर्णं पूरयामास पत्रिभिः २०
युधिष्ठिरस्तु मद्रेशं सहदेवश्च मारिष

दशभिर्दशभिर्बाणैरुरस्येनमविध्यताम् २१
भीमसेनस्ततः षष्ट्या सात्यकिर्नवभिः शरैः
मद्रराजमभिद्रुत्य जघ्नतुः कङ्कपत्रिभिः २२
मद्रराजस्ततः क्रुद्धः सात्यकिं नवभिः शरैः
विव्याध भूयः सप्तत्या शराणां नतपर्वणाम् २३
अथास्य सशरं चापं मुष्टौ चिच्छेद मारिष
हयांश्च चतुरः संख्ये प्रेषयामास मृत्यवे २४
विरथं सात्यकिं कृत्वा मद्रराजो महाबलः
विशिखानां शतेनैनमाजघान समन्ततः २५
माद्रीपुत्रौ तु संरब्धौ भीमसेनं च पाण्डवम्
युधिष्ठिरं च कौरव्य विव्याध दशभिः शरैः २६
तत्राद्भुतमपश्याम मद्रराजस्य पौरुषम्
यदेनं सहिताः पार्था नाभ्यवर्तन्त संयुगे २७
अथान्यं रथमास्थाय सात्यकिः सत्यविक्रमः
पीडितान्पाण्डवान्दृष्ट्वा मद्रराजवशं गतान्
अभिदुद्राव वेगेन मद्राणामधिपं बली २८
आपतन्तं रथं तस्य शल्यः समितिशोभनः
प्रत्युद्ययौ रथेनैव मत्तो मत्तमिव द्विपम् २९
स संनिपातस्तुमुलो बभूवाद्भुतदर्शनः
सात्यकेश्चैव शूरस्य मद्राणामधिपस्य च
यादृशो वै पुरा वृत्तः शम्बरामरराजयोः ३०
सात्यकिः प्रेक्ष्य समरे मद्रराजं व्यवस्थितम्
विव्याध दशभिर्बाणैस्तिष्ठ तिष्ठेति चाब्रवीत् ३१
मद्रराजस्तु सुभृशं विद्धस्तेन महात्मना
सात्यकिं प्रतिविव्याध चित्रपुङ्खैः शितैः शरैः ३२
ततः पार्था महेष्वासाः सात्वताभिसृतं नृपम्
अभ्यद्रवन्रथैस्तूर्णं मातुलं वधकाम्यया ३३
तत आसीत्परामर्दस्तुमुलः शोणितोदकः
शूराणां युध्यमानानां सिंहानामिव नर्दताम् ३४
तेषामासीन्महाराज व्यतिक्षेपः परस्परम्

सिंहानामामिषेप्सूनां कूजतामिव संयुगे ३५
तेषां बाणसहस्रौघैराकीर्णा वसुधाभवत्
अन्तरिक्षं च सहसा बाणभूतमभूत्तदा ३६
शरान्धकारं बहुधा कृतं तत्र समन्ततः
अभ्रच्छायेव सञ्जज्ञे शरैर्मुक्तैर्महात्मभिः ३७
तत्र राजञ्शरैर्मुक्तैर्निर्मुक्तैरिव पन्नगैः
स्वर्णपुङ्खैः प्रकाशद्भिर्व्यरोचन्त दिशस्तथा ३८
तत्राद्भुतं परं चक्रे शल्यः शत्रुनिबर्हणः
यदेकः समरे शूरो योधयामास वै बहून् ३९
मद्रराजभुजोत्सृष्टैः कङ्कबर्हिणवाजितैः
सम्पतद्भिः शरैर्घोरैरवाकीर्यत मेदिनी ४०
तत्र शल्यरथं राजन्विचरन्तं महाहवे
अपश्याम यथा पूर्वं शक्रस्यासुरसंक्षये ४१
इति श्रीमहाभारते शल्यपर्वणि चतुर्दशोऽध्यायः १४

## पञ्चदशोऽध्यायः

सञ्जय उवाच
ततः सैन्यास्तव विभो मद्रराजपुरस्कृताः
पुनरभ्यद्रवन्पार्थान्वेगेन महता रणे १
पीडितास्तावकाः सर्वे प्रधावन्तो रणोत्कटाः
क्षणेनैव च पार्थांस्ते बहुत्वात्समलोडयन् २
ते वध्यमानाः कुरुभिः पाण्डवा नावतस्थिरे
निवार्यमाणा भीमेन पश्यतोः कृष्णपार्थयोः ३
ततो धनंजयः क्रुद्धः कृपं सह पदानुगैः
अवाकिरच्छरौघेण कृतवर्माणमेव च ४
शकुनिं सहदेवस्तु सहसैन्यमवारयत्
नकुलः पार्श्वतः स्थित्वा मद्रराजमवैक्षत ५
द्रौपदेया नरेन्द्रांश्च भूयिष्ठं समवारयन्
द्रोणपुत्रं च पाञ्चाल्यः शिखण्डी समवारयत् ६
भीमसेनस्तु राजानं गदापाणिरवारयत्

शल्यं तु सह सैन्येन कुन्तीपुत्रो युधिष्ठिरः ७
ततः समभवद्युद्धं संसक्तं तत्र तत्र ह
तावकानां परेषां च संग्रामेष्वनिवर्तिनाम् ८
तत्र पश्यामहे कर्म शल्यस्यातिमहद्रणे
यदेकः सर्वसैन्यानि पाराडवानामयुध्यत ९
व्यदृश्यत तदा शल्यो युधिष्ठिरसमीपतः
रणे चन्द्रमसोऽभ्याशे शनैश्चर इव ग्रहः १०
पीडयित्वा तु राजानं शरैराशीविषोपमैः
अभ्यधावत्पुनर्भीमं शरवर्षैरवाकिरत् ११
तस्य तल्लाघवं दृष्ट्वा तथैव च कृतास्त्रताम्
अपूजयन्ननीकानि परेषां तावकानि च १२
पीड्यमानास्तु शल्येन पाराडवा भृशविक्षताः
प्राद्रवन्त रणं हित्वा क्रोशमाने युधिष्ठिरे १३
वध्यमानेष्वनीकेषु मद्रराजेन पाराडवः
अमर्षवशमापन्नो धर्मराजो युधिष्ठिरः
ततः पौरुषमास्थाय मद्रराजमपीडयत् १४
जयो वास्तु वधो वेति कृतबुद्धिर्महारथः
समाहूयाब्रवीत्सर्वान्भ्रातॄन्कृष्णं च माधवम् १५
भीष्मो द्रोणश्च कर्णश्च ये चान्ये पृथिवीक्षितः
कौरवार्थे पराक्रान्ताः संग्रामे निधनं गताः १६
यथाभागं यथोत्साहं भवन्तः कृतपौरुषाः
भागोऽवशिष्ट एकोऽय मम शल्यो महारथः १७
सोऽहमद्य युधा जेतुमाशंसे मद्रकेश्वरम्
तत्र यन्मानसं मह्यं तत्सर्वं निगदामि वः १८
चक्ररक्षाविमौ शूरौ मम माद्रवतीसुतौ
अजेयौ वासवेनापि समरे वीरसंमतौ १९
साध्विमौ मातुलं युद्धे क्षत्रधर्मपुरस्कृतौ
मदर्थं प्रतियुध्येतां मानार्हौ सत्यसंगरौ २०
मां वा शल्यो रणे हन्ता तं वाहं भद्रमस्तु वः
इति सत्यामिमां वाणीं लोकवीरा निबोधत २१

योत्स्येऽहं मातुलेनाद्य क्षत्रधर्मेण पार्थिवाः
स्वयं समभिसंधाय विजयायेतराय वा २२
तस्य मेऽभ्यधिकं शस्त्रं सर्वोपकरणानि च
संयुञ्जन्तु रणे क्षिप्रं शास्त्रवद्रथयोजकाः २३
शैनेयो दक्षिणं चक्रं धृष्टद्युम्नस्तथोत्तरम्
पृष्ठगोपो भवत्वद्य मम पार्थो धनंजयः २४
पुरःसरो ममाद्यास्तु भीमः शस्त्रभृतां वरः
एवमभ्यधिकः शल्याद्भविष्यामि महामृधे २५
एवमुक्तास्तथा चक्रुः सर्वे राज्ञः प्रियैषिणः
ततः प्रहर्षः सैन्यानां पुनरासीत्तदा नृप २६
पाञ्चालानां सोमकानां मत्स्यानां च विशेषतः
प्रतिज्ञां तां च संग्रामे धर्मराजस्य पूरयन् २७
ततः शङ्खांश्च भेरीश्च शतशश्चैव पुष्करान्
अवादयन्त पाञ्चालाः सिंहनादांश्च नेदिरे २८
तेऽभ्यधावन्त संरब्धा मद्रराजं तरस्विनः
महता हर्षजेनाथ नादेन कुरुपुंगवाः २९
ह्रादेन गजघण्टानां शङ्खानां निनदेन च
तूर्यशब्देन महता नादयन्तश्च मेदिनीम् ३०
तान्प्रत्यगृह्णात्पुत्रस्ते मद्रराजश्च वीर्यवान्
महामेघानिव बहूञ्शैलावस्तोदयावुभौ ३१
शल्यस्तु समरश्लाघी धर्मराजमरिंदमम्
ववर्ष शरवर्षेण वर्षेण मघवानिव ३२
तथैव कुरुराजोऽपि प्रगृह्य रुचिरं धनुः
द्रोणोपदेशान्विविधान्दर्शयानो महामनाः ३३
ववर्ष शरवर्षाणि चित्रं लघु च सुष्ठु च
न चास्य विवरं कश्चिद्ददर्श चरतो रणे ३४
तावुभौ विविधैर्बाणैस्ततक्षाते परस्परम्
शार्दूलावामिषप्रेप्सू पराक्रान्ताविवाहवे ३५
भीमस्तु तव पुत्रेण रणशौण्डेन संगतः
पाञ्चाल्यः सात्यकिश्चैव माद्रीपुत्रौ च पाण्डवौ

शकुनिप्रमुखान्वीरान्प्रत्यगृह्णन्समन्ततः ३६
तदासीत्तुमुलं युद्धं पुनरेव जयैषिणाम्
तावकानां परेषां च राजन्दुर्मन्त्रिते तव ३७
दुर्योधनस्तु भीमस्य शरेणानतपर्वणा
चिच्छेदादिश्य संग्रामे ध्वजं हेमविभूषितम् ३८
सकिङ्किणीकजालेन महता चारुदर्शनः
पपात रुचिरः सिंहो भीमसेनस्य नानदन् ३९
पुनश्चास्य धनुश्चित्रं गजराजकरोपमम्
क्षुरेण शितधारेण प्रचकर्त नराधिपः ४०
स च्छिन्नधन्वा तेजस्वी रथशक्त्या सुतं तव
बिभेदोरसि विक्रम्य स रथोपस्थ आविशत् ४१
तस्मिन्मोहमनुप्राप्ते पुनरेव वृकोदरः
यन्तुरेव शिरः कायात्क्षुरप्रेणाहरत्तदा ४२
हतसूता हयास्तस्य रथमादाय भारत
व्यद्रवन्त दिशो राजन्हाहाकारस्तदाभवत् ४३
तमभ्यधावत्त्राणार्थं द्रोणपुत्रो महारथः
कृपश्च कृतवर्मा च पुत्रं तेऽभिपरीप्सवः ४४
तस्मिन्विलुलिते सैन्ये त्रस्तास्तस्य पदानुगाः
गाण्डीवधन्वा विस्फार्य धनुस्तानहनच्छरैः ४५
युधिष्ठिरस्तु मद्रेशमभ्यधावदमर्षितः
स्वयं संचोदयन्नश्वान्दन्तवर्णान्मनोजवान् ४६
तत्राद्भुतमपश्याम कुन्तीपुत्रे युधिष्ठिरे
पुरा भूत्वा मृदुर्दान्तो यत्तदा दारुणोऽभवत् ४७
विवृताक्षश्च कौन्तेयो वेपमानश्च मन्युना
चिच्छेद योधान्निशितैः शरैः शतसहस्रशः ४८
यां यां प्रत्युद्ययौ सेनां तां तां ज्येष्ठः स पाण्डवः
शरैरपातयद्राजन्गिरीन्वज्रैरिवोत्तमैः ४९
साश्वसूतध्वजरथान्रथिनः पातयन्बहून्
आक्रीडदेको बलवान्पवनस्तोयदानिव ५०
साश्वारोहांश्च तुरगान्पत्तींश्चैव सहस्रशः

व्यपोथयत संग्रामे क्रुद्धो रुद्रः पशूनिव ५१
शून्यमायोधनं कृत्वा शरवर्षैः समन्ततः
अभ्यद्रवत मद्रेशं तिष्ठ शल्येति चाब्रवीत् ५२
तस्य तच्चरितं दृष्ट्वा संग्रामे भीमकर्मणः
वित्रेसुस्तावकाः सर्वे शल्यस्त्वेनं समभ्ययात् ५३
ततस्तौ तु सुसंरब्धौ प्रध्माप्य सलिलोद्भवौ
समाहूय तदान्योन्यं भर्त्सयन्तौ समीयतुः ५४
शल्यस्तु शरवर्षेण युधिष्ठिरमवाकिरत्
मद्रराजं च कौन्तेयः शरवर्षैरवाकिरत् ५५
व्यदृश्येतां तदा राजन्कङ्कपत्रिभिराहवे
उद्भिन्नरुधिरौ शूरौ मद्रराजयुधिष्ठिरौ ५६
पुष्पिताविव रेजाते वने शल्मलिकिंशुकौ
दीप्यमानौ महामानौ प्राणयोर्युद्धदुर्मदौ ५७
दृष्ट्वा सर्वाणि सैन्यानि नाध्यवस्यंस्तयोर्जयम्
हत्वा मद्राधिपं पार्थो भोक्ष्यतेऽद्य वसुंधराम् ५८
शल्यो वा पाण्डवं हत्वा दद्याद्दुर्योधनाय गाम्
इतीव निश्चयो नाभूद्योधानां तत्र भारत ५९
प्रदक्षिणमभूत्सर्वं धर्मराजस्य युध्यतः ६०
ततः शरशतं शल्यो मुमोचाशु युधिष्ठिरे
धनुश्चास्य शिताग्रेण बाणेन निरकृन्तत ६१
सोऽन्यत्कार्मुकमादाय शल्यं शरशतैस्त्रिभिः
अविध्यत्कार्मुकं चास्य क्षुरेण निरकृन्तत ६२
अथास्य निजघानाश्वांश्चतुरो नतपर्वभिः
द्वाभ्यामथ शिताग्राभ्यामुभौ च पार्ष्णिसारथी ६३
ततोऽस्य दीप्यमानेन पीतेन निशितेन च
प्रमुखे वर्तमानस्य भल्लेनापाहरद्ध्वजम्
ततः प्रभग्नं तत्सैन्यं दौर्योधनमरिंदम ६४
ततो मद्राधिपं द्रौणिरभ्यधावत्तथाकृतम्
आरोप्य चैनं स्वरथं त्वरमाणः प्रदुद्रुवे ६५
मुहूर्तमिव तौ गत्वा नर्दमाने युधिष्ठिरे

स्थित्वा ततो मद्रपतिरन्यं स्यन्दनमास्थितः ६६
विधिवत्कल्पितं शुभ्रं महाम्बुदनिनादिनम्
सज्ञयन्त्रोपकरणं द्विषतां लोमहर्षणम् ६७
इति श्रीमहाभारते शल्यपर्वणि पञ्चदशोऽध्यायः १५

षोडशोऽध्यायः

सञ्जय उवाच
अथान्यद्धनुरादाय बलवान्वेगवत्तरम्
युधिष्ठिरं मद्रपतिर्विद्ध्वा सिंह इवानदत् १
ततः स शरवर्षेण पर्जन्य इव वृष्टिमान्
अभ्यवर्षदमेयात्मा क्षत्रियान्क्षत्रियर्षभः २
सात्यकिं दशभिर्विद्ध्वा भीमसेनं त्रिभिः शरैः
सहदेवं त्रिभिर्विद्ध्वा युधिष्ठिरमपीडयत् ३
तांस्तानन्यान्महेष्वासान्साश्वान्सरथकुञ्जरान्
कुञ्जरान्कुञ्जरारोहानश्वानश्वप्रयायिनः
रथांश्च रथिभिः सार्धं जघान रथिनां वरः ४
बाहूंश्चिच्छेद च तथा सायुधान्केतनानि च
चकार च महीं योधैस्तीर्णां वेदीं कुशैरिव ५
तथा तमरिसैन्यानि घ्नन्तं मृत्युमिवान्तकम्
परिवव्रुर्भृशं क्रुद्धाः पाण्डुपाञ्चालसोमकाः ६
तं भीमसेनश्च शिनेश्च नप्ता माद्र्याश्च पुत्रौ पुरुषप्रवीरौ
समागतं भीमबलेन राज्ञा पर्यापुरन्योन्यमथाह्वयन्तः ७
ततस्तु शूराः समरे नरेन्द्रं मद्रेश्वरं प्राप्य युधां वरिष्ठम्
आवार्य चैनं समरे नृवीरा जघ्नुः शरैः पत्रिभिरुग्रवेगैः ८
संरक्षितो भीमसेनेन राजा माद्रीसुताभ्यामथ माधवेन
मद्राधिपं पत्रिभिरुग्रवेगैः स्तनान्तरे धर्मसुतो निजघ्ने ९
ततो रणे तावकानां रथौघाः समीक्ष्य मद्राधिपतिं शरार्तम्
पर्यावव्रुः प्रवराः सर्वशश्च दुर्योधनस्यानुमते समन्तात् १०
ततो द्रुतं मद्रजनाधिपो रणे युधिष्ठिरं सप्तभिरभ्यविध्यत्
तं चापि पार्थो नवभिः पृषत्कैर्विव्याध राजंस्तुमुले महात्मा ११

आकर्णपूर्णायतसम्प्रयुक्तैः शरैस्तदा संयति तैलधौतैः
अन्योन्यमाच्छादयतां महारथौ मद्राधिपश्चापि युधिष्ठिरश्च १२
ततस्तु तूर्णं समरे महारथौ परस्परस्यान्तरमीक्षमाणौ
शरैर्भृशं विव्यधतुर्नृपोत्तमौ महाबलौ शत्रुभिरप्रधृष्यौ १३
तयोर्धनुर्ज्यातलनिस्वनो महान्महेन्द्रवज्राशनितुल्यनिस्वनः
परस्परं बाणगणैर्महात्मनोः प्रवर्षतोर्मद्रपपाण्डुवीरयोः १४
तौ चेरतुर्व्याघ्रशिशुप्रकाशौ महावनेष्वामिषगृद्धिनाविव
विषाणिनौ नागवराविवोभौ ततक्षतुः संयुगजातदर्पौ १५
ततस्तु मद्राधिपतिर्महात्मा युधिष्ठिरं भीमबलं प्रसह्य
विव्याध वीरं हृदयेऽतिवेगं शरेण सूर्याग्निसमप्रभेण १६
ततोऽतिविद्धोऽथ युधिष्ठिरोऽपि सुसम्प्रयुक्तेन शरेण राजन्
जघान मद्राधिपतिं महात्मा मुदं च लेभे ऋषभः कुरूणाम् १७
ततो मुहूर्तादिव पार्थिवेन्द्रो लब्ध्वा संज्ञां क्रोधसंरक्तनेत्रः
शतेन पार्थं त्वरितो जघान सहस्रनेत्रप्रतिमप्रभावः १८
त्वरंस्ततो धर्मसुतो महात्मा शल्यस्य क्रुद्धो नवभिः पृषत्कैः
भित्त्वा ह्युरस्तपनीयं च वर्म जघान षड्भिस्त्वपरैः पृषत्कैः १९
ततस्तु मद्राधिपतिः प्रहृष्टो धनुर्विकृष्य व्यसृजत्पृषत्कान्
द्वाभ्यां क्षुराभ्यां च तथैव राज्ञश्चिच्छेद चापं कुरुपुङ्गवस्य २०
नवं ततोऽन्यत्समरे प्रगृह्य राजा धनुर्घोरतरं महात्मा
शल्यं तु विद्ध्वा निशितैः समन्ताद्यथा महेन्द्रो नमुचिं शिताग्रैः २१
ततस्तु शल्यो नवभिः पृषत्कैर्भीमस्य राज्ञश्च युधिष्ठिरस्य
निकृत्य रौक्मे पटुवर्मणी तयोर्विदारयामास भुजौ महात्मा २२
ततोऽपरेण ज्वलितार्कतेजसा क्षुरेण राज्ञो धनुरुन्ममाथ
कृपश्च तस्यैव जघान सूतं षड्भिः शरैः सोऽभिमुखं पपात २३
मद्राधिपश्चापि युधिष्ठिरस्य शरैश्चतुर्भिर्निजघान वाहान्
वाहांश्च हत्वा व्यकरोन्महात्मा योधक्षयं धर्मसुतस्य राज्ञः २४
तथा कृते राजनि भीमसेनो मद्राधिपस्याशु ततो महात्मा
छित्त्वा धनुर्वेगवता शरेण द्वाभ्यामविध्यत्सुभृशं नरेन्द्रम् २५
अथापरेणास्य जहार यन्तुः कायाच्छिरः संनहनीयमध्यात्
जघान चाश्वांश्चतुरः स शीघ्रं तथा भृशं कुपितो भीमसेनः २६

तमग्रणीः सर्वधनुर्धराणामेकं चरन्तं समरेऽतिवेगम्
भीमः शतेन व्यकिरच्छराणां माद्रीपुत्रः सहदेवस्तथैव २७
तैः सायकैर्मोहितं वीक्ष्य शल्यं भीमः शरैरस्य चकर्त वर्म
स भीमसेनेन निकृत्तवर्मा मद्राधिपश्चर्म सहस्रतारम् २८
प्रगृह्य खड्गं च रथान्महात्मा प्रस्कन्द्य कुन्तीसुतमभ्यधावत्
छित्त्वा रथेषां नकुलस्य सोऽथ युधिष्ठिरं भीमबलोऽभ्यधावत् २९
तं चापि राजानमथोत्पतन्तं क्रुद्धं यथैवान्तकमापतन्तम्
धृष्टद्युम्न् द्रौपदेयाः शिखण्डी शिनेश्च नप्ता सहसा परीयुः ३०
अथास्य चर्माप्रतिमं न्यकृन्तद्भीमो महात्मा दशभिः पृषत्कः
खड्गं च भल्लैर्निचकर्त्त मुष्टौ नदन्प्रहृष्टस्तव सैन्यमध्ये ३१
तत्कर्म भीमस्य समीक्ष्य हृष्टास्ते पाण्डवानां प्रवरा रथौघाः
नादं च चक्रुर्भृशमुत्स्मयन्तः शङ्खांश्च दध्मुः शशिसंनिकाशान् ३२
तेनाथ शब्देन विभीषणेन तवाभितप्तं बलमप्रहृष्टम्
स्वेदाभिभूतं रुधिरोक्षिताङ्गं विसंज्ञकल्पं च तथा विषण्णम् ३३
स मद्रराजः सहसावकीर्णो भीमाग्रगैः पाण्डवयोधमुख्यैः
युधिष्ठिरस्याभिमुखं जवेन सिंहो यथा मृगहेतोः प्रयातः ३४
स धर्मराजो निहताश्वसूतं क्रोधेन दीप्तोज्वलनप्रकाशम्
दृष्ट्वा तु मद्राधिपतिं स तूर्णं समभ्यधावत्तमरिं बलेन ३५
गोविंदवाक्यं त्वरितं विचिन्त्य दध्रे मतिं शल्यविनाशनाय
स धर्मराजो निहताश्वसूते रथे तिष्ठञ्शक्तिमेवाभिकाङ्क्षन् ३६
तच्चापि शल्यस्य निशम्य कर्म महात्मनो भागमथावशिष्टम्
स्मृत्वा मनः शल्यवधे यथात्मा यथोक्तमिन्द्रावरजस्य चक्रे ३७
स धर्मराजो मणिहेमदण्डां जग्राह शक्तिं कनकप्रकाशाम्
नेत्रे च दीप्ते सहसा विवृत्य मद्राधिपं क्रुद्धमना निरैक्षत् ३८
निरीक्षितो वै नरदेव राज्ञा पूतात्मना निर्हृतकल्मषेण
अभून्न यद्भस्मसान्मद्रराजस्तदद्भुतं मे प्रतिभाति राजन् ३९
ततस्तु शक्तिं रुचिरोग्रदण्डां मणिप्रवालोज्ज्वलितां प्रदीप्ताम्
चिक्षेप वेगात्सुभृशं महात्मा मद्राधिपाय प्रवरः कुरूणाम् ४०
दीप्तामथैनां महता बलेन सविस्फुलिङ्गां सहसा पतन्तीम्
प्रैक्षन्त सर्वे कुरवः समेता यथा युगान्ते महतीमिवोल्काम् ४१

तां कालरात्रीमिव पाशहस्तां यमस्य धात्रीमिव चोग्ररूपाम्
स ब्रह्मदण्डप्रतिमाममोघां ससर्ज यत्तो युधि धर्मराजः ४२
गन्धस्रगग्र्यासनपानभोजनैरभ्यर्चितां पाण्डुसुतैः प्रयत्नात्
संवर्तकाग्निप्रतिमां ज्वलन्तीं कृत्यामथर्वाङ्गिरसीमिवोग्राम् ४३
ईशानहेतोः प्रतिनिर्मितां तां त्वष्ट्रा रिपूणामसुदेहभक्षाम्
भूम्यन्तरिक्षादिजलाशयानि प्रसह्य भूतानि निहन्तुमीशाम् ४४
घण्टापताकामणिवज्रभाजं वैडूर्यचित्रां तपनीयदण्डाम्
त्वष्ट्रा प्रयत्नान्नियमेन क्लृप्तां ब्रह्मद्विषामन्तकरीममोघाम् ४५
बलप्रयत्नादधिरूढवेगां मन्त्रैश्च घोरैरभिमन्त्रयित्वा
ससर्ज मार्गेण च तां परेण वधाय मद्राधिपतेस्तदानीम् ४६
हतोऽस्यसावित्यभिगर्जमानो रुद्रोऽन्तकायान्तकरं यथेषुम्
प्रसार्य बाहुं सुदृढं सुपाणिं क्रोधेन नृत्यन्निव धर्मराजः ४७
तां सर्वशक्त्या प्रहितां स शक्तिं युधिष्ठिरेणाप्रतिवार्यवीर्याम्
प्रतिग्रहायाभिननर्द शल्यः सम्यग्घुतामग्निरिवाज्यधाराम् ४८
सा तस्य मर्माणि विदार्य शुभ्रमुरो विशालं च तथैव वर्म
विवेश गां तोयमिवाप्रसक्ता यशो विशालं नृपतेर्दहन्ती ४९
नासाक्षिकर्णास्यविनिःसृतेन प्रस्यन्दता च व्रणसंभवेन
संसिक्तगात्रो रुधिरेण सोऽभूत्क्रौञ्चो यथा स्कन्दहतो महाद्रिः ५०
प्रसार्य बाहू स रथाद्गतो गां संछिन्नवर्मा कुरुनन्दनेन
महेन्द्रवाहप्रतिमो महात्मा वज्राहतं शृङ्गमिवाचलस्य ५१
बाहू प्रसार्याभिमुखो धर्मराजस्य मद्रराट्
ततो निपतितो भूमाविन्द्रध्वज इवोच्छ्रितः ५२
स तथा भिन्नसर्वाङ्गो रुधिरेण समुक्षितः
प्रत्युद्गत इव प्रेम्णा भूम्या स नरपुङ्गवः ५३
प्रियया कान्तया कान्तः पतमान इवोरसि
चिरं भुक्त्वा वसुमतीं प्रियां कान्तामिव प्रभुः
सर्वैरङ्गैः समाश्लिष्य प्रसुप्त इव सोऽभवत् ५४
धर्म्ये धर्मात्मना युद्धे निहतो धर्मसूनुना
सम्यग्घुत इव स्विष्टः प्रशान्तोऽग्निरिवाध्वरे ५५
शक्त्या विभिन्नहृदयं विप्रविद्धायुधध्वजम्

संशान्तमपि मद्रेशं लक्ष्मीर्नैव व्यमुञ्चत ५६
ततो युधिष्ठिरश्चापमादायेन्द्रधनुष्प्रभम्
व्यधमद्द्विषतः संख्ये खगराडिव पन्नगान्
देहासून्निशितैर्भल्लै रिपूणां नाशयन्क्षणात् ५७
ततः पार्थस्य बाणौघैरावृताः सैनिकास्तव
निमीलिताक्षाः क्षिण्वन्तो भृशमन्योन्यमर्दिताः
संन्यस्तकवचा देहैर्विपन्नायुधजीविताः ५८
ततः शल्ये निपतिते मद्रराजानुजो युवा
भ्रातुः सर्वैर्गुणैस्तुल्यो रथी पाण्डवमभ्ययात् ५९
विव्याध च नरश्रेष्ठो नाराचैर्बहुभिस्त्वरन्
हतस्यापचितिं भ्रातुश्चिकीर्षुर्युद्धदुर्मदः ६०
तं विव्याधाशुगैः षड्भिर्धर्मराजस्त्वरन्निव
कार्मुकं चास्य चिच्छेद क्षुराभ्यां ध्वजमेव च ६१
ततोऽस्य दीप्यमानेन सुदृढेन शितेन च
प्रमुखे वर्तमानस्य भल्लेनापाहरच्छिरः ६२
सकुण्डलं तद्ददृशे पतमानं शिरो रथात्
पुण्यक्षयमिव प्राप्य पतन्तं स्वर्गवासिनम् ६३
तस्यापकृष्टशीर्षं तच्छरीरं पतितं रथात्
रुधिरेणावसिक्ताङ्गं दृष्टा सैन्यमभज्यत ६४
विचित्रकवचे तस्मिन्हते मद्रनृपानुजे
हाहाकारं विकुर्वाणाः कुरवो विप्रदुद्रुवुः ६५
शल्यानुजं हतं दृष्ट्वा तावकास्त्यक्तजीविताः
वित्रेसुः पाण्डवभयाद्रजोध्वस्तास्तथा भृशम् ६६
तांस्तथा भज्यतस्त्रस्तान्कौरवान्भरतर्षभ
शिनेर्नप्ता किरन्बाणैरभ्यवर्तत सात्यकिः ६७
तमायान्तं महेष्वासमप्रसह्यं दुरासदम्
हार्दिक्यस्त्वरितो राजन्प्रत्यगृह्णादभीतवत् ६८
तौ समेतौ महात्मानौ वार्ष्णेयावपराजितौ
हार्दिक्यः सात्यकिश्चैव सिंहाविव मदोत्कटौ ६९
इषुभिर्विमलाभासैश्छादयन्तौ परस्परम्

अर्चिर्भिरिव सूर्यस्य दिवाकरसमप्रभौ ७०
चापमार्गबलोद्धूतान्मार्गणान्वृष्णिसिंहयोः
आकाशे समपश्याम पतङ्गानिव शीघ्रगान् ७१
सात्यकिं दशभिर्विद्ध्वा हयांश्चास्य त्रिभिः शरैः
चापमेकेन चिच्छेद हार्दिक्यो नतपर्वणा ७२
तन्निकृत्तं धनुः श्रेष्ठमपास्य शिनिपुङ्गवः
अन्यदादत्त वेगेन वेगवत्तरमायुधम् ७३
तदादाय धनुः श्रेष्ठं वरिष्ठः सर्वधन्विनाम्
हार्दिक्यं दशभिर्बाणैः प्रत्यविध्यत्स्तनान्तरे ७४
ततो रथं युगेषां च छित्त्वा भल्लैः सुसंयतैः
अश्वांस्तस्यावधीत्तूर्णमुभौ च पार्ष्णिसारथी ७५
मद्रराजे हते राजन्विरथे कृतवर्मणि
दुर्योधनबलं सर्वं पुनरासीत्पराङ्मुखम् ७६
तत्परे नावबुध्यन्त सैन्येन रजसा वृते
बलं तु हतभूयिष्ठं तत्तदासीत्पराङ्मुखम् ७७
ततो मुहूर्तात्तेऽपश्यन्रजो भौमं समुत्थितम्
विविधैः शोणितस्रावैः प्रशान्तं पुरुषर्षभ ७८
ततो दुर्योधनो दृष्ट्वा भग्नं स्वबलमन्तिकात्
जवेनापततः पार्थानेकः सर्वानवारयत् ७९
पाण्डवान्सरथान्दृष्ट्वा धृष्टद्युम्नं च पार्षतम्
आनर्तं च दुराधर्षं शितैर्बाणैरवाकिरत् ८०
तं परे नाभ्यवर्तन्त मर्त्या मृत्युमिवागतम्
अथान्यं रथमास्थाय हार्दिक्योऽपि न्यवर्तत ८१
ततो युधिष्ठिरो राजा त्वरमाणो महारथः
चतुर्भिर्निजघानाश्वान्पत्रिभिः कृतवर्मणः
विव्याध गौतमं चापि षड्भिर्भल्लैः सुतेजनैः ८२
अश्वत्थामा ततो राज्ञा हताश्वं विरथीकृतम्
समपोवाह हार्दिक्यं स्वरथेन युधिष्ठिरात् ८३
ततः शारद्वतोऽष्टाभिः प्रत्यविध्यद्युधिष्ठिरम्
विव्याध चाश्वान्निशितैस्तस्याष्टाभिः शिलीमुखैः ८४

एवमेतन्महाराज युद्धशेषमवर्तत
तव दुर्मन्त्रिते राजन्सहपुत्रस्य भारत ८५
तस्मिन्महेष्वासवरे विशस्ते संग्राममध्ये कुरुपुङ्गवेन
पार्थाः समेताः परमप्रहृष्टाः शङ्खान्प्रदध्मुर्हतमीक्ष्य शल्यम् ८६
युधिष्ठिरं च प्रशशंसुराजौ पुरा सुरा वृत्रवधे यथेन्द्रम्
चक्रुश्च नानविधवाद्यशब्दान्निनादयन्तो वसुधां समन्तात् ८७
इति श्रीमहाभारते शल्यपर्वणि षोडशोऽध्यायः १६
समाप्तं शल्यवधपर्व

सप्तदशोऽध्यायः

सञ्जय उवाच
शल्ये तु निहते राजन्मद्रराजपदानुगाः
रथाः सप्तशता वीर निर्ययुर्महतो बलात् १
दुर्योधनस्तु द्विरदमारुह्याचलसंनिभम्
छत्रेण ध्रियमाणेन वीज्यमानश्च चामरैः
न गन्तव्यं न गन्तव्यमिति मद्रानवारयत् २
दुर्योधनेन ते वीरा वार्यमाणाः पुनः पुनः
युधिष्ठिरं जिघांसन्तः पाण्डूनां प्राविशन्बलम् ३
ते तु शूरा महाराज कृतचित्ताः स्म योधने
धनुःशब्दं महत्कृत्वा सहायुध्यन्त पाण्डवैः ४
श्रुत्वा तु निहतं शल्यं धर्मपुत्रं च पीडितम्
मद्रराजप्रिये युक्तैर्मद्रकाणां महारथैः ५
आजगाम ततः पार्थो गाण्डीवं विक्षिपन्धनुः
पूरयन्रथघोषेण दिशः सर्वा महारथः ६
ततोऽजुनश्च भीमश्च माद्रीपुत्रौ च पाण्डवौ
सात्यकिश्च नरव्याघ्रो द्रौपदेयाश्च सर्वशः ७
धृष्टद्युम्नः शिखण्डी च पाञ्चालाः सह सोमकैः
युधिष्ठिरं परीप्सन्तः समन्तात्पर्यवारयन् ८
ते समन्तात्परिवृताः पाण्डवैः पुरुषर्षभाः
क्षोभयन्ति स्म तां सेनां मकराः सागरं यथा ९

पुरोवातेन गङ्गेव क्षोभ्यमाना महानदी
अक्षोभ्यत तदा राजन्पाण्डूनां ध्वजिनी पुनः १०
प्रस्कन्द्य सेनां महतीं त्यक्तात्मानो महारथाः
वृक्षानिव महावाताः कम्पयन्ति स्म तावकाः ११
बहवश्चुक्रुशुस्तत्र क्व स राजा युधिष्ठिरः
भ्रातरो वास्य ते शूरा दृश्यन्ते नेह केचन १२
पाञ्चालानां महावीर्याः शिखण्डी च महारथः
धृष्टद्युम्नोऽथ शैनेयो द्रौपदेयाश्च सर्वशः १३
एवं तान्वादिनः शूरान्द्रौपदेया महारथाः
अभ्यघ्नन्युयुधानश्च मद्रराजपदानुगान् १४
चक्रैर्विमथितैः केचित्केचिच्छिन्नैर्महाध्वजैः
प्रत्यदृश्यन्त समरे तावका निहताः परैः १५
आलोक्य पाण्डवान्युद्धे योधा राजन्समन्ततः
वार्यमाणा ययुर्वेगात्तव पुत्रेण भारत १६
दुर्योधनस्तु तान्वीरान्वारयामास सान्त्वयन्
न चास्य शासनं कश्चित्तत्र चक्रे महारथः १७
ततो गान्धारराजस्य पुत्रः शकुनिरब्रवीत्
दुर्योधनं महाराज वचनं वचनक्षमः १८
किं नः सम्प्रेक्षमाणानां मद्राणां हन्यते बलम्
न युक्तमेतत्समरे त्वयि तिष्ठति भारत १९
सहितैर्नाम योद्धव्यमित्येष समयः कृतः
अथ कस्मात्परानेव घ्नतो मर्षयसे नृप २०
दुर्योधन उवाच
वार्यमाणा मया पूर्वं नैते चक्रुर्वचो मम
एते हि निहताः सर्वे प्रस्कन्नाः पाण्डुवाहिनीम् २१
शकुनिरुवाच
न भर्तुः शासनं वीरा रणे कुर्वन्त्यमर्षिताः
अलं क्रोद्धुं तथैतेषां नायं काल उपेक्षितुम् २२
यामः सर्वेऽत्र संभूय सवाजिरथकुञ्जराः
परित्रातुं महेष्वासान्मद्रराजपदानुगान् २३

अन्योन्यं परिरक्षामो यत्नेन महता नृप
एवं सर्वेऽनुसंचिन्त्य प्रययुर्यत्र सैनिकाः २४
सञ्जय उवाच
एवमुक्तस्ततो राजा बलेन महता वृतः
प्रययौ सिंहनादेन कम्पयन्वै वसुन्धराम् २५
हत विध्यत गृह्णीत प्रहरध्वं निकृन्तत
इत्यासीत्तुमुलः शब्दस्तव सैन्यस्य भारत २६
पाण्डवास्तु रणे दृष्ट्वा मद्रराजपदानुगान्
सहितानभ्यवर्तन्त गुल्ममास्थाय मध्यमम् २७
ते मुहूर्ताद्रणे वीरा हस्ताहस्तं विशां पते
निहताः प्रत्यदृश्यन्त मद्रराजपदानुगाः २८
ततो नः सम्प्रयातानां हतामित्रास्तरस्विनः
हृष्टाः किलकिलाशब्दमकुर्वन्सहिताः परे २९
अथोत्थितानि रुण्डानि समदृश्यन्त सर्वशः
पपात महती चोल्का मध्येनादित्यमण्डलम् ३०
रथैर्भग्नैर्युगाक्षैश्च निहतैश्च महारथैः
अश्वैर्निपतितैश्चैव संछन्नाभूद्वसुन्धरा ३१
वातायमानैस्तुरगैर्युगासक्तैस्तुरंगमैः
अदृश्यन्त महाराज योधास्तत्र रणाजिरे ३२
भग्नचक्रान्रथान्केचिदवहंस्तुरगा रणे
रथार्धं केचिदादाय दिशो दश विबभ्रमुः
तत्र तत्र च दृश्यन्ते योक्त्रैः श्लिष्टाः स्म वाजिनः ३३
रथिनः पतमानाश्च व्यदृश्यन्त नरोत्तम
गगनात्प्रच्युताः सिद्धाः पुण्यानामिव संक्षये ३४
निहतेषु च शूरेषु मद्रराजानुगेषु च
अस्मानापततश्चापि दृष्ट्वा पार्था महारथाः ३५
अभ्यवर्तन्त वेगेन जयगृध्राः प्रहारिणः
बाणशब्दरवान्कृत्वा विमिश्राञ्शङ्खनिस्वनैः ३६
अस्मांस्तु पुनरासाद्य लब्धलक्षाः प्रहारिणः
शरासनानि धुन्वानाः सिंहनादान्प्रचुक्रुशुः ३७

ततो हतमभिप्रेक्ष्य मद्रराजबलं महत्
मद्रराजं च समरे दृष्ट्वा शूरं निपातितम्
दुर्योधनबलं सर्वं पुनरासीत्पराङ्मुखम् ३८
वध्यमानं महाराज पाण्डवैर्जितकाशिभिः
दिशो भेजेऽथ संभ्रान्तं त्रासितं दृढधन्विभिः ३९
इति श्रीमहाभारते शल्यपर्वणि सप्तदशोऽध्यायः १६

अष्टादशोऽध्यायः

सञ्जय उवाच
पातिते युधि दुर्धर्षे मद्रराजे महारथे
तावकास्तव पुत्राश्च प्रायशो विमुखाभवन् १
वणिजो नावि भिन्नायां यथागाधेऽप्लवेऽर्णवे
अपारे पारमिच्छन्तो हते शूरे महात्मनि २
मद्रराजे महाराज वित्रस्ताः शरविक्षताः
अनाथा नाथमिच्छन्तो मृगाः सिंहार्दिता इव ३
वृषा यथा भग्नशृङ्गाः शीर्णदन्ता गजा इव
मध्याह्ने प्रत्यपायाम निर्जिता धर्मसूनुना ४
न संधातुमनीकानि न च राजन्पराक्रमे
आसीद्बुद्धिर्हते शल्ये तव योधस्य कस्यचित् ५
भीष्मे द्रोणे च निहते सूतपुत्रे च भारत
यद्दुःखं तव योधानां भयं चासीद्विशां पते
तद्भयं स च नः शोको भूय एवाभ्यवर्तत ६
निराशाश्च जये तस्मिन्हते शल्ये महारथे
हतप्रवीरा विध्वस्ता विकृत्ताश्च शितैः शरैः
मद्रराजे हते राजन्योधास्ते प्राद्रवन्भयात् ७
अश्वानन्ये गजानन्ये रथानन्ये महारथाः
आरुह्य जवसंपन्नाः पादाताः प्राद्रवन्भयात् ८
द्विसाहस्राश्च मातङ्गा गिरिरूपाः प्रहारिणः
संप्राद्रवन्हते शल्ये अङ्कुशाङ्गुष्ठचोदिताः ९
ते रणाद्भरतश्रेष्ठ तावकाः प्राद्रवन्दिशः

धावन्तश्चाप्यदृश्यन्त श्वसमानाः शरातुराः १०
तान्प्रभग्नान्द्रुतान्दृष्ट्वा हतोत्साहान्पराजितान्
अभ्यद्रवन्त पाञ्चालाः पाण्डवाश्च जयैषिणः ११
बाणशब्दरवश्चापि सिंहनादश्च पुष्कलः
शङ्खशब्दश्च शूराणां दारुणः समपद्यत १२
दृष्ट्वा तु कौरवं सैन्यं भयत्रस्तं प्रविद्रुतम्
अन्योन्यं समभाषन्त पञ्चालाः पाण्डवैः सह १३
अद्य राजा सत्यधृतिर्जितामित्रो युधिष्ठिरः
अद्य दुर्योधनो हीनो दीप्तया नृपतिश्रिया १४
अद्य श्रुत्वा हतं पुत्रं धृतराष्ट्रो जनेश्वरः
निःसंज्ञः पतितो भूमौ किल्बिषं प्रतिपद्यताम् १५
अद्य जानातु कौन्तेयं समर्थं सर्वधन्विनाम्
अद्यात्मानं च दुर्मेधा गर्हयिष्यति पापकृत्
अद्य क्षत्तुर्वचः सत्यं स्मरतां ब्रुवतो हितम् १६
अद्यप्रभृति पार्थांश्च प्रेष्यभूत उपाचरन्
विजानातु नृपो दुःखं यत्प्राप्तं पाण्डुनन्दनैः १७
अद्य कृष्णस्य माहात्म्यं जानातु स महीपतिः
अद्यार्जुनधनुर्घोषं घोरं जानातु संयुगे १८
अस्त्राणां च बलं सर्वं बाह्वोश्च बलमाहवे
अद्य ज्ञास्यति भीमस्य बलं घोरं महात्मनः १९
हते दुर्योधने युद्धे शक्रेणेवासुरे मये
यत्कृतं भीमसेनेन दुःशासनवधे तदा
नान्यः कर्तास्ति लोके तदृते भीमं महाबलम् २०
जानीतामद्य ज्येष्ठस्य पाण्डवस्य पराक्रमम्
मद्रराजं हतं श्रुत्वा देवैरपि सुदुःसहम् २१
अद्य ज्ञास्यति संग्रामे माद्रीपुत्रौ महाबलौ
निहते सौबले शूरे गान्धारेषु च सर्वशः २२
कथं तेषां जयो न स्याद्येषां योद्धा धनंजयः
सात्यकिर्भीमसेनश्च धृष्टद्युम्नश्च पार्षतः २३
द्रौपद्यास्तनयाः पञ्च माद्रीपुत्रौ च पाण्डवौ

शिखण्डी च महेष्वासो राजा चैव युधिष्ठिरः २४
येषां च जगतां नाथो नाथः कृष्णो जनार्दनः
कथं तेषां जयो न स्याद्येषां धर्मो व्यपाश्रयः २५
भीष्मं द्रोणं च कर्णं च मद्रराजानमेव च
तथान्यान्नृपतीन्वीराञ्शतशोऽथ सहस्रशः २६
कोऽन्य शक्तो रणे जेतुमृते पार्थं युधिष्ठिरम्
यस्य नाथो हृषीकेशः सदा धर्मयशोनिधिः २७
इत्येवं वदमानास्ते हर्षेण महता युताः
प्रभग्नांस्तावकान्राजन्सृञ्जयाः पृष्ठतोऽन्वयुः २८
धनंजयो रथानीकमभ्यवर्तत वीर्यवान्
माद्रीपुत्रौ च शकुनिं सात्यकिश्च महारथः २९
तान्प्रेक्ष्य द्रवतः सर्वान्भीमसेनभयार्दितान्
दुर्योधनस्तदा सूतमब्रवीदुत्स्मयन्निव ३०
न मातिक्रमते पार्थो धनुष्पाणिमवस्थितम्
जघने सर्वसैन्यानां ममाश्वान्प्रतिपादय ३१
जघने युध्यमानं हि कौन्तेयो मां धनंजयः
नोत्सहेताभ्यतिक्रान्तुं वेलामिव महोदधिः ३२
पश्य सैन्यं महत्सूत पाण्डवैः समभिद्रुतम्
सैन्यरेणुं समुद्धूतं पश्यस्वैनं समन्ततः ३३
सिंहनादांश्च बहुशः शृणु घोरान्भयानकान्
तस्माद्याहि शनैः सूत जघनं परिपालय ३४
मयि स्थिते च समरे निरुद्धेषु च पाण्डुषु
पुनरावर्तते तूर्णं मामकं बलमोजसा ३५
तच्छ्रुत्वा तव पुत्रस्य शूराग्र्यसदृशं वचः
सारथिर्हेमसंछन्नाञ्शनैरश्वानचोदयत् ३६
गजाश्वरथिभिर्हीनास्त्यक्तात्मानः पदातयः
एकविंशतिसाहस्राः संयुगायावतस्थिरे ३७
नानादेशसमुद्भूता नानारञ्जितवाससः
अवस्थितास्तदा योधाः प्रार्थयन्तो महद्यशः ३८
तेषामापततां तत्र संहृष्टानां परस्परम्

संमर्दः सुमहाञ्जज्ञे घोररूपो भयानकः ३९
भीमसेनं तदा राजन्धृष्टद्युम्नं च पार्षतम्
बलेन चतुरङ्गेण नानादेश्या न्यवारयन् ४०
भीममेवाभ्यवर्तन्त रणेऽन्ये तु पदातयः
प्रक्ष्वेड्यास्फोट्य संहृष्टा वीरलोकं यियासवः ४१
आसाद्य भीमसेनं तु संरब्धा युद्धदुर्मदाः
धार्तराष्ट्रा विनेदुर्हि नान्यां चाकथयन्कथाम्
परिवार्य रणे भीमं निजघ्नुस्ते समन्ततः ४२
स वध्यमानः समरे पदातिगणसंवृतः
न चचाल रथोपस्थे मैनाक इव पर्वतः ४३
ते तु क्रुद्धा महाराज पाण्डवस्य महारथम्
निग्रहीतुं प्रचक्रुर्हि योधांश्चान्यानवारयन् ४४
अक्रुध्यत रणे भीमस्तैस्तदा पर्यवस्थितैः
सोऽवतीर्य रथात्तूर्णं पदातिः समवस्थितः ४५
जातरूपपरिच्छन्नां प्रगृह्य महतीं गदाम्
अवधीत्तावकान्योधान्दण्डपाणिरिवान्तकः ४६
रथाश्वद्विपहीनांस्तु तान्भीमो गदया बली
एकविंशतिसाहस्रान्पदातीनवपोथयत् ४७
हत्वा तत्पुरुषानीकं भीमः सत्यपराक्रमः
धृष्टद्युम्नं पुरस्कृत्य नचिरात्प्रत्यदृश्यत ४८
पादाता निहता भूमौ शिश्यिरे रुधिरोक्षिताः
संभग्ना इव वातेन कर्णिकाराः सुपुष्पिताः ४९
नानापुष्पस्रजोपेता नानाकुण्डलधारिणः
नानाजात्या हतास्तत्र नानादेशसमागताः ५०
पताकाध्वजसंछन्नं पदातीनां महद्बलम्
निकृत्तं विबभौ तत्र घोररूपं भयानकम् ५१
युधिष्ठिरपुरोगास्तु सर्वसैन्यमहारथाः
अभ्यधावन्महात्मानं पुत्रं दुर्योधनं तव ५२
ते सर्वे तावकान्दृष्ट्वा महेष्वासान्पराङ्मुखान्
नाभ्यवर्तन्त ते पुत्रं वेलेव मकरालयम् ५३

तदद्भुतमपश्याम तव पुत्रस्य पौरुषम्
यदेकं सहिताः पार्था न शेकुरतिवर्तितुम् ५४
नातिदूरापयातं तु कृतवुद्धिं पलायने
दुर्योधनः स्वकं सैन्यमब्रवीद्भृशविक्षतम् ५५
न तं देशं प्रपश्यामि पृथिव्यां पर्वतेषु वा
यत्र यातान्न वो हन्युः पाण्डवाः किं सृतेन वः ५६
अल्पं च बलमेतेषां कृष्णौ च भृशविक्षतौ
यदि सर्वेऽत्र तिष्ठामो ध्रुवो नो विजयो भवेत् ५७
विप्रयातांस्तु वो भिन्नान्पाण्डवाः कृतकिल्बिषान्
अनुसृत्य हनिष्यन्ति श्रेयो नः समरे स्थितम् ५८
शृणुध्वं क्षत्रियाः सर्वे यावन्तः स्थ समागताः
यदा शूरं च भीरुं च मारयत्यन्तकः सदा
को न मूढो न युध्येत पुरुषः क्षत्रियब्रुवः ५९
श्रेयो नो भीमसेनस्य क्रुद्धस्य प्रमुखे स्थितम्
सुखः सांग्रामिको मृत्युः क्षत्रधर्मेण युध्यताम्
जित्वेह सुखमाप्नोति हतः प्रेत्य महत्फलम् ६०
न युद्धधर्माच्छ्रेयान्वै पन्थाः स्वर्गस्य कौरवाः
अचिरेण जिताँल्लोकान्हतो युद्धे समश्नुते ६१
श्रुत्वा तु वचनं तस्य पूजयित्वा च पार्थिवाः
पुनरेवान्ववर्तन्त पाण्डवानाततायिनः ६२
तानापतत एवाशु व्यूढानीकाः प्रहारिणः
प्रत्युद्ययुस्तदा पार्था जयगृध्राः प्रहारिणः ६३
धनंजयो रथेनाजावभ्यवर्तत वीर्यवान्
विश्रुतं त्रिषु लोकेषु गाण्डीवं विक्षिपन्धनुः ६४
माद्रीपुत्रौ च शकुनिं सात्यकिश्च महाबलः
जवेनाभ्यपतन्हृष्टा यतो वै तावकं बलम् ६५
इति श्रीमहाभारते शल्यपर्वण्यष्टादशोऽध्यायः १८

## एकोनविंशोऽध्यायः

सञ्जय उवाच

संनिवृत्ते बलौघे तु शाल्वो म्लेच्छगणाधिपः
अभ्यवर्तत संक्रुद्धः पाण्डूनां सुमहद्बलम् १
आस्थाय सुमहानागं प्रभिन्नं पर्वतोपमम्
दृप्तमैरावतप्रख्यममित्रगणमर्दनम् २
योऽसौ महाभद्रकुलप्रसूतः सुपूजितो धार्तराष्ट्रेण नित्यम्
सुकल्पितः शास्त्रविनिश्चयज्ञैः सदोपवाह्यः समरेषु राजन् ३
तमास्थितो राजवरो बभूव यथोदयस्थः सविता क्षपान्ते
स तेन नागप्रवरेण राजन्नभ्युद्ययौ पाण्डसुतान्समन्तात्
शितैः पृषत्कैर्विददार चापि महेन्द्रवज्रप्रतिमैः सुघोरैः ४
ततः शरान्वै सृजतो महारणे योधांश्च राजन्नयतो यमाय
नास्यान्तरं ददृशुः स्वे परे वा यथा पुरा वज्रधरस्य दैत्याः ५
ते पाण्डवाः सोमकाः सृञ्जयाश्च तमेव नागं ददृशुः समन्तात्
सहस्रशो वै विचरन्तमेकं यथा महेन्द्रस्य गजं समीपे ६
संद्राव्यमाणं तु बलं परेषां परीतकल्पं विबभौ समन्तात्
नैवावतस्थे समरे भृशं भयाद्विमर्दमानं तु परस्परं तदा ७
ततः प्रभग्ना सहसा महाचमूः सा पाण्डवी तेन नराधिपेन
दिशश्चतस्त्रः सहसा प्रधाविता गजेन्द्रवेगं तमपारयन्ती ८
दृष्ट्वा च तां वेगवता प्रभग्नां सर्वे त्वदीया युधि योधमुख्याः
अपूजयंस्तत्र नराधिपं तं दध्मुश्च शङ्खाञ्शशिसन्निकाशान् ९
श्रुत्वा निनादं त्वथ कौरवाणां हर्षाद्विमुक्तं सह शङ्खशब्दैः
सेनापतिः पाण्डवसृञ्जयानां पाञ्चालपुत्रो न ममर्ष रोषात् १०
ततस्तु तं वै द्विरदं महात्मा प्रत्युद्ययौ त्वरमाणो जयाय
जम्भो यथा शक्रसमागमे वै नागेन्द्रमैरावणमिन्द्रवाह्यम् ११
तमापतन्तं सहसा तु दृष्ट्वा पाञ्चालराजं युधि राजसिंहः
तं वै द्विपं प्रेषयामास तूर्णं वधाय राजन्द्रुपदात्मजस्य १२
स तं द्विपं सहसाभ्यापतन्तमविध्यदर्कप्रतिमैः पृषत्कैः
कर्मारधौतैर्निशितैर्ज्वलद्भिर्नाराचमुख्यैस्त्रिभिरुग्रवेगैः १३
ततोऽपरान्पञ्च शितान्महात्मा नाराचमुख्यान्विससर्ज कुम्भे
स तैस्तु विद्धः परमद्विपो रणे तदा परावृत्य भृशं प्रदुद्रुवे १४
तं नागराजं सहसा प्रणुन्नं विद्राव्यमाणं च निगृह्य शाल्वः

तोत्राङ्कुशैः प्रेषयामास तूर्णं पाञ्चालराजस्य रथं प्रदिश्य १५
दृष्ट्वापतन्तं सहसा तु नागं धृष्टद्युम्नः स्वरथाच्छीघ्रमेव
गदां प्रगृह्याशु जवेन वीरो भूमिं प्रपन्नो भयविह्वलाङ्गः १६
स तं रथं हेमविभूषिताङ्गं साश्वं ससूतं सहसा विमृद्य
उत्क्षिप्य हस्तेन तदा महाद्विपो विपोथयामास वसुंधरातले १७
पाञ्चालराजस्य सुतं स दृष्ट्वा तदार्दितं नागवरेण तेन
तमभ्यधावत्सहसा जवेन भीमः शिखण्डी च शिनेश्च नप्ता १८
शरैश्च वेगं सहसा निगृह्य तस्याभितोऽभ्यापततो गजस्य
स संगृहीतो रथिभिर्गजो वै चचाल तैर्वार्यमाणश्च संख्ये १९
ततः पृषत्कान्प्रववर्ष राजा सूर्यो यथा रश्मिजालं समन्तात्
तैनाशुगैर्वध्यमाना रथौघाः प्रदुद्रुवुस्तत्र ततस्तु सर्वे २०
तत्कर्म शाल्वस्य समीक्ष्य सर्वे पाञ्चालमत्स्या नृप सृञ्जयाश्च
हाहाकारैर्नादयन्तः स्म युद्धे द्विपं समन्ताद्रुरुधुर्नराग्र्याः २१
पाञ्चालराजस्त्वरितस्तु शूरो गदां प्रगृह्याचलशृङ्गकल्पाम्
असंभ्रमं भारत शत्रुघाती जवेन वीरोऽनुससार नागम् २२
ततोऽथ नागं धरणीधराभं मदं स्रवन्तं जलदप्रकाशम्
गदां समाविध्य भृशं जघान पाञ्चालराजस्य सुतस्तरस्वी २३
स भिन्नकुम्भः सहसा विनद्य मुखात्प्रभूतं क्षतजं विमुञ्चन्
पपात नागो धरणीधराभः क्षितिप्रकम्पाच्चलितो यथाद्रिः २४
निपात्यमाने तु तदा गजेन्द्रे हाहाकृते तव पुत्रस्य सैन्ये
स शाल्वराजस्य शिनिप्रवीरो जहार भल्लेन शिरः शितेन २५
हृतोत्तमाङ्गो युधि सात्वतेन पपात भूमौ सह नागराज्ञा
यथाद्रिशृङ्गं सुमहत्प्रणुन्नं वज्रेण देवाधिपचोदितेन २६
इति श्रीमहाभारते शल्यपर्वण्येकोनविंशोऽध्यायः १९

## विंशोऽध्यायः

सञ्जय उवाच
तस्मिंस्तु निहते शूरे शाल्वे समितिशोभने
तवाभज्यद्बलं वेगाद्वातेनेव महाद्रुमः १
तत्प्रभग्नं बलं दृष्ट्वा कृतवर्मा महारथः

दधार समरे शूरः शत्रुसैन्यं महाबलः २
संनिवृत्तास्तु ते शूरा दृष्ट्वा सात्वतमाहवे
शैलोपमं स्थितं राजन्कीर्यमाणं शरैर्युधि ३
ततः प्रववृते युद्धं कुरूणां पाण्डवैः सह
निवृत्तानां महाराज मृत्युं कृत्वा निवर्तनम् ४
तत्राश्चर्यमभूद्युद्धं सात्वतस्य परैः सह
यदेको वारयामास पाण्डुसेनां दुरासदाम् ५
तेषामन्योन्यसुहृदां कृते कर्मणि दुष्करे
सिंहनादः प्रहृष्टानां दिवःस्पृक्सुमहानभूत् ६
तेन शब्देन वित्रस्तान्पाञ्चालान्भरतर्षभ
शिनेर्नप्ता महाबाहुरन्वपद्यत सात्यकिः ७
स समासाद्य राजानं क्षेमधूर्तिं महाबलम्
सप्तभिर्निशितैर्बाणैरनयद्यमसादनम् ८
तमायान्तं महाबाहुं प्रवपन्तं शिताञ्शरान्
जवेनाभ्यपतद्धीमान्हार्दिक्यः शिनिपुंगवम् ९
तौ सिंहाविव नर्दन्तौ धन्विनौ रथिनां वरौ
अन्योन्यमभ्यधावेतां शस्त्रप्रवरधारिणौ १०
पाण्डवाः सह पाञ्चालैर्योधाश्चान्ये नृपोत्तमाः
प्रेक्षकाः समपद्यन्त तयोः पुरुषसिंहयोः ११
नाराचैर्वत्सदन्तैश्च वृष्ण्यन्धकमहारथौ
अभिजघ्नतुरन्योन्यं प्रहृष्टाविव कुञ्जरौ १२
चरन्तौ विविधान्मार्गान्हार्दिक्यशिनिपुङ्गवौ
मुहुरन्तर्दधाते तौ बाणवृष्ट्या परस्परम् १३
चापवेगबलोद्धूतान्मार्गणान्वृष्णिसिंहयोः
आकाशे समपश्याम पतंगानिव शीघ्रगान् १४
तमेकं सत्यकर्माणमासाद्य हृदिकात्मजः
अविध्यन्निशितैर्बाणैश्चतुर्भिश्चतुरो हयान् १५
स दीर्घबाहुः संक्रुद्धस्तोत्त्रार्दित इव द्विपः
अष्टभिः कृतवर्माणमविध्यत्परमेषुभिः १६
ततः पूर्णायतोत्सृष्टैः कृतवर्मा शिलाशितैः

सात्यकिं त्रिभिराहत्य धनुरेकेन चिच्छिदे १७
निकृत्तं तद्धनुःश्रेष्ठमपास्य शिनिपुंगवः
अन्यदादत्त वेगेन शैनेयः सशरं धनुः १८
तदादाय धनुःश्रेष्ठं वरिष्ठः सर्वधन्विनाम्
आरोप्य च महावीर्यो महाबुद्धिर्महाबलः १९
अमृष्यमाणो धनुषश्छेदनं कृतवर्मणा
कुपितोऽतिरथः शीघ्रं कृतवर्माणमभ्ययात् २०
ततः सुनिशितैर्बाणैर्दशभिः शिनिपुंगवः
जघान सूतमश्वांश्च ध्वजं च कृतवर्मणः २१
ततो राजन्महेष्वासः कृतवर्मा महारथः
हताश्वसूतं संप्रेक्ष्य रथं हेमपरिष्कृतम् २२
रोषेण महताविष्टः शूलमुद्यम्य मारिष
चिक्षेप भुजवेगेन जिघांसुः शिनिपुंगवम् २३
तच्छूलं सात्वतो ह्याजौ निर्भिद्य निशितैः शरैः
चूर्णितं पातयामास मोहयन्निव माधवम्
ततोऽपरेण भल्लेन हृद्येनं समताडयत् २४
स युद्धे युयुधानेन हताश्वो हतसारथिः
कृतवर्मा कृतास्त्रेण धरणीमन्वपद्यत २५
तस्मिन्सात्यकिना वीरे द्वैरथे विरथीकृते
समपद्यत सर्वेषां सैन्यानां सुमहद्भयम् २६
पुत्रस्य तव चात्यर्थं विषादः समपद्यत
हतसूते हताश्वे च विरथे कृतवर्मणि २७
हताश्वं च समालक्ष्य हतसूतमरिन्दमम्
अभ्यधावत्कृपो राजञ्जिघांसुः शिनिपुंगवम् २८
तमारोप्य रथोपस्थे मिषतां सर्वधन्विनाम्
अपोवाह महाबाहुस्तूर्णमायोधनादपि २९
शैनेयेऽधिष्ठिते राजन्विरथे कृतवर्मणि
दुर्योधनबलं सर्वं पुनरासीत्पराङ्मुखम् ३०
तत्परे नावबुध्यन्त सैन्येन रजसावृते
तावकाः प्रद्रुता राजन्दुर्योधनमृते नृपम् ३१

दुर्योधनस्तु सम्प्रेक्ष्य भग्नं स्वबलमन्तिकात्
जवेनाभ्यपतत्तूर्णं सर्वांश्चैको न्यवारयत् ३२
पाण्डूंश्च सर्वान्संक्रुद्धो धृष्टद्युम्नं च पार्षतम्
शिखण्डिनं द्रौपदेयान्पाञ्चालानां च ये गणाः ३३
केकयान्सोमकांश्चैव पाञ्चालांश्चैव मारिष
असम्भ्रमं दुराधर्षः शितैरस्त्रैरवारयत् ३४
अतिष्ठदाहवे यत्तः पुत्रस्तव महाबलः
यथा यज्ञे महानग्निर्मन्त्रपूतः प्रकाशयन् ३५
तं परे नाभ्यवर्तंत मर्त्या मृत्युमिवाहवे
अथान्यं रथमास्थाय हार्दिक्यः समपद्यत ३६
इति श्रीमहाभारते शल्यपर्वणि विंशोऽध्यायः २०

## एकविंशोऽध्यायः

सञ्जय उवाच
पुत्रस्तु ते महाराज रथस्थो रथिनां वरः
दुरुत्सहो बभौ युद्धे यथा रुद्रः प्रतापवान् १
तस्य बाणसहस्रैस्तु प्रच्छन्ना ह्यभवन्मही
परांश्च सिषिचे बाणैर्धाराभिरिव पर्वतान् २
न च सोऽस्ति पुमान्कश्चित्पाण्डवानां महाहवे
हयो गजो रथो वापि योऽस्य बाणैरविक्षतः ३
यं यं हि समरे योधं प्रपश्यामि विशां पते
स स बाणैश्चितोऽभूद्वै पुत्रेण तव भारत ४
यथा सैन्येन रजसा समुद्धूतेन वाहिनी
प्रत्यदृश्यत संछन्ना तथा बाणैर्महात्मनः ५
बाणभूतामपश्याम पृथिवीं पृथिवीपते
दुर्योधनेन प्रकृतां क्षिप्रहस्तेन धन्विना ६
तेषु योधसहस्रेषु तावकेषु परेषु च
एको दुर्योधनो ह्यासीत्पुमानिति मतिर्मम ७
तत्राद्भुतमपश्याम तव पुत्रस्य विक्रमम्
यदेकं सहिताः पार्था नात्यवर्तन्त भारत ८

युधिष्ठिरं शतेनाजौ विव्याध भरतर्षभ
भीमसेनं च सप्तत्या सहदेवं च सप्तभिः ९
नकुलं च चतुःषष्ट्या धृष्टद्युम्नं च पञ्चभिः
सप्तभिर्द्रौपदेयांश्च त्रिभिर्विव्याध सात्यकिम्
धनुश्चिच्छेद भल्लेन सहदेवस्य मारिष १०
तदपास्य धनुश्छिन्नं माद्रीपुत्रः प्रतापवान्
अभ्यधावत राजानं प्रगृह्यान्यन्महद्धनुः
ततो दुर्योधनं संख्ये विव्याध दशभिः शरैः ११
नकुलश्च ततो वीरो राजानं नवभिः शरैः
घोररूपैर्महेष्वासो विव्याध च ननाद च १२
सात्यकिश्चापि राजानं शरेणानतपर्वणा
द्रौपदेयास्त्रिसप्तत्या धर्मराजश्च सप्तभिः
अशीत्या भीमसेनश्च शरै राजानमार्दयत् १३
समन्तात्कीर्यमाणस्तु बाणसङ्घैर्महात्मभिः
न चचाल महाराज सर्वसैन्यस्य पश्यतः १४
लाघवं सौष्ठवं चापि वीर्यं चैव महात्मनः
अति सर्वाणि भूतानि ददृशुः सर्वमानवाः १५
धार्तराष्ट्रास्तु राजेन्द्र यात्वा तु स्वल्पमन्तरम्
अपश्यमाना राजानं पर्यवर्तन्त दंशिताः १६
तेषामापततां घोरस्तुमुलः समजायत
क्षुब्धस्य हि समुद्रस्य प्रावृट्काले यथा निशि १७
समासाद्य रणे ते तु राजानमपराजितम्
प्रत्युद्ययुर्महेष्वासाः पाण्डवानाततायिनः १८
भीमसेनं रणे क्रुद्धं द्रोणपुत्रो न्यवारयत्
ततो बाणैर्महाराज प्रमुक्तैः सर्वतोदिशम्
नाज्ञायन्त रणे वीरा न दिशः प्रदिशस्तथा १९
तावुभौ क्रूरकर्माणावुभौ भारत दुःसहौ
घोररूपमयुध्येतां कृतप्रतिकृतैषिणौ
त्रासयन्तौ जगत्सर्वं ज्याक्षेपविहतत्वचौ २०
शकुनिस्तु रणे वीरो युधिष्ठिरमपीडयत्

तस्याश्वांश्चतुरो हत्वा सुबलस्य सुतो विभुः
नादं चकार बलवान्सर्वसैन्यानि कम्पयन् २१
एतस्मिन्नन्तरे वीरं राजानमपराजितम्
अपोवाह रथेनाजौ सहदेवः प्रतापवान् २२
अथान्यं रथमास्थाय धर्मराजो युधिष्ठिरः
शकुनिं नवभिर्विद्ध्वा पुनर्विव्याध पञ्चभिः
ननाद च महानादं प्रवरः सर्वधन्विनाम् २३
तद्युद्धमभवच्चित्रं घोररूपं च मारिष
ईक्षितृप्रीतिजननं सिद्धचारणसेवितम् २४
उलूकस्तु महेष्वासं नकुलं युद्धदुर्मदम्
अभ्यद्रवदमेयात्मा शरवर्षैः समन्ततः २५
तथैव नकुलः शूरः सौबलस्य सुतं रणे
शरवर्षेण महता समन्तात्पर्यवारयत् २६
तौ तत्र समरे वीरौ कुलपुत्रौ महारथौ
योधयन्तावपश्येतां परस्परकृतागसौ २७
तथैव कृतवर्मा तु शैनेयं शत्रुतापनम्
योधयञ्शुशुभे राजन्बलं शक्र इवाहवे २८
दुर्योधनो धनुश्छित्त्वा धृष्टद्युम्नस्य संयुगे
अथैनं छिन्नधन्वानं विव्याध निशितैः शरैः २९
धृष्टद्युम्नोऽपि समरे प्रगृह्य परमायुधम्
राजानं योधयामास पश्यतां सर्वधन्विनाम् ३०
तयोर्युद्धं महच्चासीत्संग्रामे भरतर्षभ
प्रभिन्नयोर्यथा सक्तं मत्तयोर्वरहस्तिनोः ३१
गौतमस्तु रणे क्रुद्धो द्रौपदेयान्महाबलान्
विव्याध बहुभिः शूरः शरैः सन्नतपर्वभिः ३२
तस्य तैरभवद्युद्धमिन्द्रियैरिव देहिनः
घोररूपमसंवार्यं निर्मर्यादमतीव च ३३
ते च तं पीडयामासुरिन्द्रियाणीव बालिशम्
स च तान्प्रतिसंरब्धः प्रत्ययोधयदाहवे ३४
एवं चित्रमभूद्युद्धं तस्य तैः सह भारत

उत्थायोत्थाय हि यथा देहिनामिन्द्रियैर्विभो ३५
नराश्चैव नरैः सार्धं दन्तिनो दन्तिभिस्तथा
हया हयैः समासक्ता रथिनो रथिभिस्तथा
संकुलं चाभवद्भूयो घोररूपं विशां पते ३६
इदं चित्रमिदं घोरमिदं रौद्रमिति प्रभो
युद्धान्यासन्महाराज घोराणि च बहूनि च ३७
ते समासाद्य समरे परस्परमरिन्दमाः
विव्यधुश्चैव जघ्नुश्च समासाद्य महाहवे ३८
तेषां शस्त्रसमुद्भूतं रजस्तीव्रमदृश्यत
प्रवातेनोद्धतं राजन्धावद्भिश्चाश्वसादिभिः ३९
रथनेमिसमुद्भूतं निःश्वासैश्चापि दन्तिनाम्
रजः सन्ध्याभ्रकपिलं दिवाकरपथं ययौ ४०
रजसा तेन संपृक्ते भास्करे निष्प्रभीकृते
संछादिताभवद्भूमिस्ते च शूरा महारथाः ४१
मुहूर्तादिव संवृत्तं नीरजस्कं समन्ततः
वीरशोणितसिक्तायां भूमौ भरतसत्तम
उपाशाम्यत्ततस्तीव्रं तद्रजो घोरदर्शनम् ४२
ततोऽपश्यं महाराज द्वंद्वयुद्धानि भारत
यथाप्राग्र्यं यथाज्येष्ठं मध्याह्ने वै सुदारुणे
वर्मणां तत्र राजेन्द्र व्यदृश्यन्तोज्ज्वलाः प्रभाः ४३
शब्दः सुतुमुलः संख्ये शराणां पततामभूत्
महावेणुवनस्येव दह्यमानस्य सर्वतः ४४
इति श्रीमहाभारते शल्यपर्वण्येकविंशोऽध्यायः २१

## द्वाविंशोऽध्यायः

सञ्जय उवाच
वर्तमाने यथा युद्धे घोररूपे भयानके
अभज्यत बलं तत्र तव पुत्रस्य पाण्डवैः १
तांस्तु यत्नेन महता संनिवार्य महारथान्
पुत्रस्ते योधयामास पाण्डवानामनीकिनीम् २

निवृत्ताः सहसा योधास्तव पुत्रप्रियैषिणः
संनिवृत्तेषु तेष्वेवं युद्धमासीत्सुदारुणम् ३
तावकानां परेषां च देवासुररणोपमम्
परेषां तव सैन्ये च नासीत्कश्चित्पराङ्मुखः ४
अनुमानेन युध्यन्ते संज्ञाभिश्च परस्परम्
तेषां क्षयो महानासीद्युध्यतामितरेतरम् ५
ततो युधिष्ठिरो राजा क्रोधेन महता युतः
जिगीषमाणः संग्रामे धार्तराष्ट्रान्सराजकान् ६
त्रिभिः शारद्वतं विद्ध्वा रुक्मपुङ्खैः शिलाशितैः
चतुर्भिर्निजघानाश्वान्कल्याणान्कृतवर्मणः ७
अश्वत्थामा तु हार्दिक्यमपोवाह यशस्विनम्
अथ शारद्वतोऽष्टाभिः प्रत्यविध्यद्युधिष्ठिरम् ८
ततो दुर्योधनो राजा रथान्सप्तशतान्रणे
प्रेषयद्यत्र राजासौ धर्मपुत्रो युधिष्ठिरः ९
ते रथा रथिभिर्युक्ता मनोमारुतरंहसः
अभ्यद्रवन्त संग्रामे कौन्तेयस्य रथं प्रति १०
ते समन्तान्महाराज परिवार्य युधिष्ठिरम्
अदृश्यं सायकैश्चक्रुर्मेघा इव दिवाकरम् ११
नामृष्यन्त सुसंरब्धाः शिखण्डिप्रमुखा रथाः
रथैरग्र्यजवैर्युक्तैः किङ्किणीजालसंवृतैः
आजग्मुरभिरक्षन्तः कुन्तीपुत्रं युधिष्ठिरम् १२
ततः प्रववृते रौद्रः संग्रामः शोणितोदकः
पाण्डवानां कुरूणां च यमराष्ट्रविवर्धनः १३
रथान्सप्तशतान्हत्वा कुरूणामाततायिनाम्
पाण्डवाः सह पाञ्चालैः पुनरेवाभ्यवारयन् १४
तत्र युद्धं महच्चासीत्तव पुत्रस्य पाण्डवैः
न च नस्तादृशं दृष्टं नैव चापि परिश्रुतम् १५
वर्तमाने तथा युद्धे निर्मर्यादे समन्ततः
वध्यमानेषु योधेषु तावकेष्वितरेषु च १६
निनदत्सु च योधेषु शङ्खवर्यैश्च पूरितैः

उत्कृष्टैः सिंहनादैश्च गर्जितेन च धन्विनाम् १७
अतिप्रवृद्धे युद्धे च छिद्यमानेषु मर्मसु
धावमानेषु योधेषु जयगृद्धिषु मारिष १८
संहारे सर्वतो जाते पृथिव्यां शोकसम्भवे
बह्वीनामुत्तमस्त्रीणां सीमन्तोद्धरणे तथा १९
निर्मर्यादे यथा युद्धे वर्तमाने सुदारुणे
प्रादुरासन्विनाशाय तदोत्पाताः सुदारुणाः
चचाल शब्दं कुवार्णा सपर्वतवना मही २०
सदण्डाः सोल्मुका राजन्शीर्यमाणाः समन्ततः
उल्काः पेतुर्दिवो भूमावाहत्य रविमण्डलम् २१
विष्वग्वाताः प्रादुरासन्नीचैः शर्करवर्षिणः
अश्रूणि मुमुचुर्नागा वेपथुश्चास्पृशद्भृशम् २२
एतान्घोराननादृत्य समुत्पातान्सुदारुणान्
पुनर्युद्धाय संमन्त्र्य क्षत्रियास्तस्थुरव्यथाः
रमणीये कुरुक्षेत्रे पुण्ये स्वर्गं यियासवः २३
ततो गान्धारराजस्य पुत्रः शकुनिरब्रवीत्
युध्यध्वमग्रतो यावत्पृष्ठतो हन्मि पाण्डवान् २४
ततो नः सम्प्रयातानां मद्रयोधास्तरस्विनः
हृष्टाः किलकिलाशब्दमकुर्वन्तापरे तथा २५
अस्मांस्तु पुनरासाद्य लब्धलक्षा दुरासदाः
शरासनानि धुन्वन्तः शरवर्षैरवाकिरन् २६
ततो हतं परैस्तत्र मद्रराजबलं तदा
दुर्योधनबलं दृष्ट्वा पुनरासीत्पराङ्मुखम् २७
गान्धारराजस्तु पुनर्वाक्यमाह ततो बली
निवर्तध्वमधर्मज्ञा युध्यध्वं किं सृतेन वः २८
अनीकं दशसाहस्रमश्वानां भरतर्षभ
आसीद्गान्धारराजस्य विमलप्रासयोधिनाम् २९
बलेन तेन विक्रम्य वर्तमाने जनक्षये
पृष्ठतः पाण्डवानीकमभ्यघ्नन्निशितैः शरैः ३०
तदभ्रमिव वातेन क्षिप्यमाणं समन्ततः

अभज्यत महाराज पाण्डूनां सुमहद्बलम् ३१
ततो युधिष्ठिरः प्रेक्ष्य भग्नं स्वबलमन्तिकात्
अभ्यचोदयदव्यग्रः सहदेवं महाबलम् ३२
असौ सुबलपुत्रो नो जघनं पीड्य दंशितः
सेनां निसूदयत्येष पश्य पाण्डव दुर्मतिम् ३३
गच्छ त्वं द्रौपदेयाश्च शकुनिं सौबलं जहि
रथानीकमहं रक्ष्ये पाञ्चालसहितोऽनघ ३४
गच्छन्तु कुञ्जराः सर्वे वाजिनश्च सह त्वया
पादाताश्च त्रिसाहस्राः शकुनिं सौबलं जहि ३५
ततो गजाः सप्तशताश्चापपाणिभिरास्थिताः
पञ्च चाश्वसहस्राणि सहदेवश्च वीर्यवान् ३६
पादाताश्च त्रिसाहस्रा द्रौपदेयाश्च सर्वशः
रणे ह्यभ्यद्रवंस्ते तु शकुनिं युद्धदुर्मदम् ३७
ततस्तु सौबलो राजन्नभ्यतिक्रम्य पाण्डवान्
जघान पृष्ठतः सेनां जयगृध्रः प्रतापवान् ३८
अश्वारोहास्तु संरब्धाः पाण्डवानां तरस्विनाम्
प्राविशन्सौबलानीकमभ्यतिक्रम्य तान्रथान् ३९
ते तत्र सादिनः शूराः सौबलस्य महद्बलम्
गजमध्येऽवतिष्ठन्तः शरवर्षैरवाकिरन् ४०
तदुद्यतगदाप्रासमकापुरुषसेवितम्
प्रावर्तत महद्युद्धं राजन्दुर्मन्त्रिते तव ४१
उपारमन्त ज्याशब्दाः प्रेक्षका रथिनोऽभवन्
न हि स्वेषां परेषां वा विशेषः प्रत्यदृश्यत ४२
शूरबाहुविसृष्टानां शक्तीनां भरतर्षभ
ज्योतिषामिव संपातमपश्यन्कुरुपाण्डवाः ४३
ऋष्टिभिर्विमलाभिश्च तत्र तत्र विशां पते
संपतन्तीभिराकाशमावृतं बह्वशोभत ४४
प्रासानां पततां राजन्रूपमासीत्समन्ततः
शलभानामिवाकाशे तदा भरतसत्तम ४५
रुधिरोक्षितसर्वाङ्गा विप्रविद्धैर्नियन्तृभिः

हयाः परिपतन्ति स्म शतशोऽथ सहस्रशः ४६
अन्योन्यपरिपिष्टाश्च समासाद्य परस्परम्
अविक्षताः स्म दृश्यन्ते वमन्तो रुधिरं मुखैः ४७
ततोऽभवत्तमो घोरं सैन्येन रजसा वृते
तानपाक्रमतोऽद्राक्षं तस्माद्देशादरिन्दमान्
अश्वान्राजन्मनुष्यांश्च रजसा संवृते सति ४८
भूमौ निपतिताश्चान्ये वमन्तो रुधिरं बहु
केशाकेशिसमालग्ना न शेकुश्चेष्टितुं जनाः ४९
अन्योन्यमश्वपृष्ठेभ्यो विकर्षन्तो महाबलाः
मल्ला इव समासाद्य निजघ्नुरितरेतरम्
अश्वैश्च व्यपकृष्यन्त बहवोऽत्र गतासवः ५०
भूमौ निपतिताश्चान्ये बहवो विजयैषिणः
तत्र तत्र व्यदृश्यन्त पुरुषाः शूरमानिनः ५१
रक्तोक्षितैश्छिन्नभुजैरपकृष्टशिरोरुहैः
व्यदृश्यत मही कीर्णा शतशोऽथ सहस्रशः ५२
दूरं न शक्यं तत्रासीद्गन्तुमश्वेन केनचित्
साश्वारोहैर्हतैरश्वैरावृते वसुधातले ५३
रुधिरोक्षितसंनाहैरात्तशस्त्रैरुदायुधैः
नानाप्रहरणैर्घोरैः परस्परवधैषिभिः
सुसंनिकृष्टैः संग्रामे हतभूयिष्ठसैनिकैः ५४
स मुहूर्तं ततो युद्ध्वा सौबलोऽथ विशां पते
षट्सहस्रैर्हयैः शिष्टैरपायाच्छकुनिस्ततः ५५
तथैव पाण्डवानीकं रुधिरेण समुक्षितम्
षट्सहस्रैर्हयैः शिष्टैरपायाच्छ्रान्तवाहनम् ५६
अश्वारोहास्तु पाण्डूनामब्रुवन्रुधिरोक्षिताः
सुसंनिकृष्टाः संग्रामे भूयिष्ठं त्यक्तजीविताः ५७
नेह शक्यं रथैर्योद्धुं कुत एव महागजैः
रथानेव रथा यान्तु कुञ्जराः कुञ्जरानपि ५८
प्रतियातो हि शकुनिः स्वमनीकमवस्थितः
न पुनः सौबलो राजा युद्धमभ्यागमिष्यति ५९

ततस्तु द्रौपदेयाश्च ते च मत्ता महाद्विपाः
प्रययुर्यत्र पाञ्चाल्यो धृष्टद्युम्नो महारथः ६०
सहदेवोऽपि कौरव्य रजोमेघे समुत्थिते
एकाकी प्रययौ तत्र यत्र राजा युधिष्ठिरः ६१
ततस्तेषु प्रयातेषु शकुनिः सौबलः पुनः
पार्श्वतोऽभ्यहनत्क्रुद्धो धृष्टद्युम्नस्य वाहिनीम् ६२
तत्पुनस्तुमुलं युद्धं प्राणांस्त्यक्त्वाभ्यवर्तत
तावकानां परेषां च परस्परवधैषिणाम् ६३
ते ह्यन्योन्यमवेक्षन्त तस्मिन्वीरसमागमे
योधाः पर्यपतन्राजञ्शतशोऽथ सहस्रशः ६४
असिभिश्छिद्यमानानां शिरसां लोकसंक्षये
प्रादुरासीन्महाशब्दस्तालानां पततामिव ६५
विमुक्तानां शरीराणां भिन्नानां पततां भुवि
सायुधानां च बाहूनामुरूणां च विशां पते
आसीत्कटकटाशब्दः सुमहाँल्लोमहर्षणः ६६
निघ्नन्तो निशितैः शस्त्रैर्भ्रातॄन्पुत्रान्सखीनपि
योधाः परिपतन्ति स्म यथामिषकृते खगाः ६७
अन्योन्यं प्रतिसंरब्धाः समासाद्य परस्परम्
अहं पूर्वमहं पूर्वमिति न्यघ्नन्सहस्रशः ६८
संघातैरासनभ्रष्टैरश्वारोहैर्गतासुभिः
हयाः परिपतन्ति स्म शतशोऽथ सहस्रशः ६९
स्फुरतां प्रतिपिष्टानामश्वानां शीघ्रसारिणाम्
स्तनतां च मनुष्याणां संनद्धानां विशां पते ७०
शक्त्यृष्टिप्रासशब्दश्च तुमुलः समजायत
भिन्दतां परमर्माणि राजन्दुर्मन्त्रिते तव ७१
श्रमाभिभूताः संरब्धाः श्रान्तवाहाः पिपासिताः
विक्षताश्च शितैः शस्त्रैरभ्यवर्तन्त तावकाः ७२
मत्ता रुधिरगन्धेन बहवोऽत्र विचेतसः
जघ्नुः परान्स्वकांश्चैव प्राप्तान्प्राप्ताननन्तरान् ७३
बहवश्च गतप्राणाः क्षत्रिया जयगृद्धिनः

भूमावभ्यपतन्राजञ्शरवृष्टिभिरावृताः ७४
वृकगृध्रशृगालानां तुमुले मोदनेऽहनि
आसीद्बलक्षयो घोरस्तव पुत्रस्य पश्यतः ७५
नराश्वकायसंछन्ना भूमिरासीद्विशां पते
रुधिरोदकचित्रा च भीरूणां भयवर्धिनी ७६
असिभिः पट्टिशैः शूलैस्तक्षमाणाः पुनः पुनः
तावकाः पाण्डवाश्चैव नाभ्यवर्तन्त भारत ७७
प्रहरन्तो यथाशक्ति यावत्प्राणस्य धारणम्
योधाः परिपतन्ति स्म वमन्तो रुधिरं व्रणैः ७८
शिरो गृहीत्वा केशेषु कबन्धः समदृश्यत
उद्यम्य निशितं खड्गं रुधिरेण समुक्षितम् ७९
अथोत्थितेषु बहुषु कबन्धेषु जनाधिप
तथा रुधिरगन्धेन योधाः कश्मलमाविशन् ८०
मन्दीभूते ततः शब्दे पाण्डवानां महद्बलम्
अल्पावशिष्टैस्तुरगैरभ्यवर्तत सौबलः ८१
ततोऽभ्यधावंस्त्वरिताः पाण्डवा जयगृद्धिनः
पदातयश्च नागाश्च सादिनश्चोद्यतायुधाः ८२
कोष्टकीकृत्य चाप्येनं परिक्षिप्य च सर्वशः
शस्त्रैर्नानाविधैर्जघ्नुर्युद्धपारं तितीर्षवः ८३
त्वदीयास्तांस्तु सम्प्रेक्ष्य सर्वतः समभिद्रुतान्
साश्वपत्तिद्विपरथाः पाण्डवानभिदुद्रुवुः ८४
केचित्पदातयः पद्भिर्मुष्टिभिश्च परस्परम्
निजघ्नुः समरे शूराः क्षीणशस्त्रास्ततोऽपतन् ८५
रथेभ्यो रथिनः पेतुर्द्विपेभ्यो हस्तिसादिनः
विमानेभ्य इव भ्रष्टाः सिद्धाः पुण्यक्षयाद्यथा ८६
एवमन्योन्यमायस्ता योधा जघ्नुर्महामृधे
पितॄन्भ्रातॄन्वयस्यांश्च पुत्रानपि तथापरे ८७
एवमासीदमर्यादं युद्धं भरतसत्तम
प्रासासिबाणकलिले वर्तमाने सुदारुणे ८८

इति श्रीमहाभारते शल्यपर्वणि द्वाविंशोऽध्यायः २२

त्रयोविंशोऽध्यायः
सञ्जय उवाच
तस्मिञ्शब्दे मृदौ जाते पाण्डवैर्निहते बले
अश्वैः सप्तशतैः शिष्टैरुपावर्तत सौबलः १
स यात्वा वाहिनीं तूर्णमब्रवीत्त्वरयन्युधि
युध्यध्वमिति संहृष्टाः पुनः पुनररिंदमः
अपृच्छत्क्षत्रियांस्तत्र क्व नु राजा महारथः २
शकुनेस्तु वचः श्रुत्वा तं ऊचुर्भरतर्षभ
असौ तिष्ठति कौरव्यो रणमध्ये महारथः ३
यत्रैतत्सुमहच्छत्रं पूर्णचन्द्रसमप्रभम्
यत्रैते सतलत्राणा रथास्तिष्ठन्ति दंशिताः ४
यत्रैष शब्दस्तुमुलः पर्जन्यनिनदोपमः
तत्र गच्छ द्रुतं राजंस्ततो द्रक्ष्यसि कौरवम् ५
एवमुक्तस्तु तैः शूरैः शकुनिः सौबलस्तदा
प्रययौ तत्र यत्रासौ पुत्रस्तव नराधिप
सर्वतः संवृतो वीरैः समरेष्वनिवर्तिभिः ६
ततो दुर्योधनं दृष्ट्वा रथानीके व्यवस्थितम्
सरथांस्तावकान्सर्वान्हर्षयञ्शकुनिस्ततः ७
दुर्योधनमिदं वाक्यं हृष्टरूपो विशां पते
कृतकार्यमिवात्मानं मन्यमानोऽब्रवीन्नृपम् ८
जहि राजन्रथानीकमश्वाः सर्वे जिता मया
नात्यक्त्वा जीवितं संख्ये शक्यो जेतुं युधिष्ठिरः ९
हते तस्मिन्रथानीके पाण्डवेनाभिपालिते
गजानेतान्हनिष्यामः पदातींश्चेतरांस्तथा १०
श्रुत्वा तु वचनं तस्य तावका जयगृद्धिनः

जवेनाभ्यपतन्हृष्टाः पाण्डवानामनीकिनीम् ११
सर्वे विवृततूणीराः प्रगृहीतशरासनाः
शरासनानि धुन्वानाः सिंहनादं प्रचक्रिरे १२
ततो ज्यातलनिर्घोषः पुनरासीद्विशां पते
प्रादुरासीच्छराणां च सुमुक्तानां सुदारुणः १३
तान्समीपगतान्दृष्ट्वा जवेनोद्यतकार्मुकान्
उवाच देवकीपुत्रं कुन्तीपुत्रो धनंजयः १४
चोदयाश्वानसंभ्रान्तः प्रविशैतद्बलार्णवम्
अन्तमद्य गमिष्यामि शत्रूणां निशितैः शरैः १५
अष्टादश दिनान्यद्य युद्धस्यास्य जनार्दन
वर्तमानस्य महतः समासाद्य परस्परम् १६
अनन्तकल्पा ध्वजिनी भूत्वा ह्येषां महात्मनाम्
क्षयमद्य गता युद्धे पश्य दैवं यथाविधम् १७
समुद्रकल्पं तु बलं धार्तराष्ट्रस्य माधव
अस्मानासाद्य सञ्जातं गोष्पदोपममच्युत १८
हते भीष्मे च संदध्याच्छिवं स्यादिह माधव
न च तत्कृतवान्मूढो धार्तराष्ट्रः सुबालिशः १९
उक्तं भीष्मेण यद्वाक्यं हितं पथ्यं च माधव
तच्चापि नासौ कृतवान्वीतबुद्धिः सुयोधनः २०
तस्मिंस्तु पतिते भीष्मे प्रच्युते पृथिवीतले
न जाने कारणं किं नु येन युद्धमवर्तत २१
मूढांस्तु सर्वथा मन्ये धार्तराष्ट्रान्सुबालिशान्
पतिते शंतनोः पुत्रे येऽकार्षुः संयुगं पुनः २२
अनन्तरं च निहते द्रोणे ब्रह्मविदां वरे
राधेये च विकर्णे च नैवाशाम्यत वैशसम् २३
अल्पावशिष्टे सैन्येऽस्मिन्सूतपुत्रे च पातिते
सपुत्रे वै नरव्याघ्रे नैवाशाम्यत वैशसम् २४
श्रुतायुषि हते शूरे जलसंधे च पौरवे
श्रुतायुधे च नृपतौ नैवाशाम्यत वैशसम् २५
भूरिश्रवसि शल्ये च शाल्वे चैव जनार्दन

आवन्त्येषु च वीरेषु नैवाशाम्यत वैशसम् २६
जयद्रथे च निहते राक्षसे चाप्यलायुधे
बाल्हिके सोमदत्ते च नैवाशाम्यत वैशसम् २७
भगदत्ते हते शूरे काम्बोजे च सुदक्षिणे
दुःशासने च निहते नैवाशाम्यत वैशसम् २८
दृष्ट्वा च निहताञ्शूरान्पृथङ्माण्डलिकान्नृपान्
बलिनश्च रणे कृष्ण नैवाशाम्यत वैशसम् २९
अक्षौहिणीपतीन्दृष्ट्वा भीमसेनेन पातितान्
मोहाद्वा यदि वा लोभान्नैवाशाम्यत वैशसम् ३०
को नु राजकुले जातः कौरवेयो विशेषतः
निरर्थकं महद्वैरं कुर्यादन्यः सुयोधनात् ३१
गुणतोऽभ्यधिकं ज्ञात्वा बलतः शौर्यतोऽपि वा
अमूढः को नु युध्येत जानन्प्राज्ञो हिताहितम् ३२
यन्न तस्य मनो ह्यासीत्त्वयोक्तस्य हितं वचः
प्रशमे पाण्डवैः सार्धं सोऽन्यस्य शृणुयात्कथम् ३३
येन शांतनवो भीष्मो द्रोणो विदुर एव च
प्रत्याख्याताः शमस्यार्थे किं नु तस्याद्य भेषजम् ३४
मौर्ख्याद्येन पिता वृद्धः प्रत्याख्यातो जनार्दन
तथा माता हितं वाक्यं भाषमाणा हितैषिणी
प्रत्याख्याता ह्यसत्कृत्य स कस्मै रोचयेद्वचः ३५
कुलान्तकरणो व्यक्तं जात एष जनार्दन
तथास्य दृश्यते चेष्टा नीतिश्चैव विशां पते
नैष दास्यति नो राज्यमिति मे मतिरच्युत ३६
उक्तोऽह बहुशस्तात विदुरेण महात्मना
न जीवन्दास्यते भागं धार्तराष्ट्रः कथंचन ३७
यावत्प्राणा धमिष्यन्ति धार्तराष्ट्रस्य मानद
तावद्युष्मास्वपापेषु प्रचरिष्यति पातकम् ३८
न स युक्तोऽन्यथा जेतुमृते युद्धेन माधव
इत्यब्रवीत्सदा मां हि विदुरः सत्यदर्शनः ३९
तत्सर्वमद्य जानामि व्यवसायं दुरात्मनः

यदुक्तं वचनं तेन विदुरेण महात्मना ४०
यो हि श्रुत्वा वचः पथ्यं जामदग्न्याद्यथातथम्
अवामन्यत दुर्बुद्धिर्ध्रुवं नाशमुखे स्थितः ४१
उक्तं हि बहुभिः सिद्धैर्जातमात्रे सुयोधने
एनं प्राप्य दुरात्मानं क्षयं क्षत्रं गमिष्यति ४२
तदिदं वचनं तेषां निरुक्तं वै जनार्दन
क्षयं याता हि राजानो दुर्योधनकृते भृशम् ४३
सोऽद्य सर्वान्रणे योधान्निहनिष्यामि माधव
क्षत्रियेषु हतेष्वाशु शून्ये च शिबिरे कृते ४४
वधाय चात्मनोऽस्माभिः संयुगं रोचयिष्यति
तदन्तं हि भवेद्वैरमनुमानेन माधव ४५
एवं पश्यामि वार्ष्णेय चिन्तयन्प्रज्ञया स्वया
विदुरस्य च वाक्येन चेष्टया च दुरात्मनः ४६
संयाहि भारतीं वीर यावद्धन्मि शितैः शरैः
दुर्योधनं दुरात्मानं वाहिनीं चास्य संयुगे ४७
क्षेममद्य करिष्यामि धर्मराजस्य माधव
हत्वैतद्दुर्बलं सैन्यं धार्तराष्ट्रस्य पश्यतः ४८
सञ्जय उवाच
अभीशुहस्तो दाशार्हस्तथोक्तः सव्यसाचिना
तद्बलौघममित्राणामभीतः प्राविशद्रणे ४९
शरासनवरं घोरं शक्तिकण्टकसंवृतम्
गदापरिघपन्थानं रथनागमहाद्रुमम् ५०
हयपत्तिलताकीर्णं गाहमानो महायशाः
व्यचरत्तत्र गोविन्दो रथेनातिपताकिना ५१
ते हयाः पाण्डुरा राजन्वहन्तोऽर्जुनमाहवे
दिक्षु सर्वास्वदृश्यन्त दाशार्हेण प्रचोदिताः ५२
ततः प्रायाद्रथेनाजौ सव्यसाची परंतपः
किरञ्शरशतांस्तीक्ष्णान्वारिधारा इवाम्बुदः ५३
प्रादुरासीन्महाञ्शब्दः शराणां नतपर्वणाम्
इषुभिश्छाद्यमानानां समरे सव्यसाचिना ५४

असज्जन्तस्तनुत्रेषु शरौघाः प्रापतन्भुवि
इन्द्राशनिसमस्पर्शा गाण्डीवप्रेषिताः शराः ५५
नरान्नागान्समाहत्य हयांश्चापि विशां पते
अपतन्त रणे बाणाः पतंगा इव घोषिणः ५६
आसीत्सर्वमवच्छन्नं गाण्डीवप्रेषितैः शरैः
न प्राज्ञायन्त समरे दिशो वा प्रदिशोऽपि वा ५७
सर्वमासीज्जगत्पूर्णं पार्थनामाङ्कितैः शरैः
रुक्मपुङ्खैस्तैलधौतैः कर्मारपरिमार्जितैः ५८
ते दह्यमानाः पार्थेन पावकेनेव कुञ्जराः
समासीदन्त कौरव्या वध्यमानाः शितैः शरैः ५९
शरचापधरः पार्थः प्रज्वलन्निव भारत
ददाह समरे योधान्कक्षमग्निरिव ज्वलन् ६०
यथा वनान्ते वनपैर्विसृष्टः कक्षं दहेत्कृष्णगतिः सघोषः
भूरिद्रुमं शुष्कलतावितानं भृशं समृद्धो ज्वलनः प्रतापी ६१
एवं स नाराचगणप्रतापी शरार्चिरुच्चावचतिग्मतेजाः
ददाह सर्वां तव पुत्रसेनाममृष्यमाणस्तरसा तरस्वी ६२
तस्येषवः प्राणहराः सुमुक्ता नासज्जन्वै वर्मसु रुक्मपुङ्खाः
न च द्वितीयं प्रमुमोच बाणं नरे हये वा परमद्विपे वा ६३
अनेकरूपाकृतिभिर्हि बाणैर्महारथानीकमनुप्रविश्य
स एव एकस्तव पुत्रसेनां जघान दैत्यानिव वज्रपाणिः ६४
इति श्रीमहाभारते शल्यपर्वणि त्रयोविंशोऽध्यायः २३

## चतुर्विंशोऽध्यायः

सञ्जय उवाच
अस्यतां यतमानानां शूराणामनिवर्तिनाम्
संकल्पमकरोन्मोघं गाण्डीवेन धनंजयः १
इन्द्राशनिसमस्पर्शानविषह्यान्महौजसः
विसृजन्दृश्यते बाणान्धारा मुञ्चन्निवाम्बुदः २
तत्सैन्यं भरतश्रेष्ठ वध्यमानं किरीटिना
सम्प्रदुद्राव संग्रामात्तव पुत्रस्य पश्यतः ३

हतधुर्या रथाः केचिद्धतसूतास्तथापरे
भग्नाक्षयुगचक्रेषाः केचिदासन्विशां पते ४
अन्येषां सायकाः क्षीणास्तथान्ये शरपीडिताः
अक्षता युगपत्केचित्प्राद्रवन्भयपीडिताः ५
केचित्पुत्रानुपादाय हतभूयिष्ठवाहनाः
विचुक्रुशुः पितॄनन्ये सहायानपरे पुनः ६
बान्धवांश्च नरव्याघ्र भ्रातॄन्संबन्धिनस्तथा
दुद्रुवुः केचिदुत्सृज्य तत्र तत्र विशां पते ७
बहवोऽत्र भृशं विद्धा मुह्यमाना महारथाः
निष्टनन्तः स्म दृश्यन्ते पार्थबाणहता नराः ८
तानन्ये रथमारोप्य समाश्वास्य मुहूर्तकम्
विश्रान्ताश्च वितृष्णाश्च पुनर्युद्धाय जग्मिरे ९
तानपास्य गताः केचित्पुनरेव युयुत्सवः
कुर्वन्तस्तव पुत्रस्य शासनं युद्धदुर्मदाः १०
पानीयमपरे पीत्वा पर्याश्वास्य च वाहनम्
वर्माणि च समारोप्य केचिद्भरतसत्तम ११
समाश्वास्यापरे भ्रातॄन्निक्षिप्य शिबिरेऽपि च
पुत्रानन्ये पितॄनन्ये पुनर्युद्धमरोचयन् १२
सज्जयित्वा रथान्केचिद्यथामुख्यं विशां पते
आप्लुत्य पाण्डवानीकं पुनर्युद्धमरोचयन् १३
ते शूराः किङ्किणीजालैः समाच्छन्ना बभासिरे
त्रैलोक्यविजये युक्ता यथा दैतेयदानवाः १४
आगम्य सहसा केचिद्रथैः स्वर्णविभूषितैः
पाण्डवानामनीकेषु धृष्टद्युम्नमयोधयन् १५
धृष्टद्युम्नोऽपि पाञ्चाल्यः शिखण्डी च महारथः
नाकुलिश्च शतानीको रथानीकमयोधयन् १६
पाञ्चाल्यस्तु ततः क्रुद्धः सैन्येन महता वृतः
अभ्यद्रवत्सुसंरब्धस्तावकान्हन्तुमुद्यतः १७
ततस्त्वापततस्तस्य तव पुत्रो जनाधिप
बाणसंघाननेकान्वै प्रेषयामास भारत १८

धृष्टद्युम्नस्ततो राजंस्तव पुत्रेण धन्विना
नाराचैर्बहुभिः क्षिप्रं बाह्वोरुरसि चार्पितः १९
सोऽतिविद्धो महेष्वासस्तोत्रार्दित इव द्विपः
तस्याश्वांश्चतुरो बाणैः प्रेषयामास मृत्यवे
सारथेश्चास्य भल्लेन शिरः कायादपाहरत् २०
ततो दुर्योधनो राजा पृष्ठमारुह्य वाजिनः
अपाक्रामद्धतरथो नातिदूरमरिंदमः २१
दृष्ट्वा तु हतविक्रान्तं स्वमनीकं महाबलः
तव पुत्रो महाराज प्रययौ यत्र सौबलः २२
ततो रथेषु भग्नेषु त्रिसाहस्रा महाद्विपाः
पाण्डवान्रथिनः पञ्च समन्तात्पर्यवारयन् २३
ते वृताः समरे पञ्च गजानीकेन भारत
अशोभन्त नरव्याघ्रा ग्रहा व्याप्ता घनैरिव २४
ततोऽजुनो महाराज लब्धलक्षो महाभुजः
विनिर्ययौ रथेनैव श्वेताश्वः कृष्णसारथिः २५
तैः समन्तात्परिवृतः कुञ्जरैः पर्वतोपमैः
नाराचैर्विमलैस्तीक्ष्णैर्गजानीकमपोथयत् २६
तत्रैकबाणनिहतानपश्याम महागजान्
पतितान्पात्यमानांश्च विभिन्नान्सव्यसाचिना २७
भीमसेनस्तु तान्दृष्ट्वा नागान्मत्तगजोपमः
करेण गृह्य महतीं गदामभ्यपतद्बली
अवप्लुत्य रथात्तूर्णं दण्डपाणिरिवान्तकः २८
तमुद्यतगदं दृष्ट्वा पाण्डवानां महारथम्
वित्रेसुस्तावकाः सैन्याः शकृन्मूत्रं प्रसुस्रुवुः
आविग्नं च बलं सर्वं गदाहस्ते वृकोदरे २९
गदया भीमसेनेन भिन्नकुम्भान्रजस्वलान्
धावमानानपश्याम कुञ्जरान्पर्वतोपमान् ३०
प्रधाव्य कुञ्जरास्ते तु भीमसेनगदाहताः
पेतुरार्तस्वरं कृत्वा छिन्नपक्षा इवाद्रयः ३१
तान्भिन्नकुम्भान्सुबहून्द्रवमाणानितस्ततः

पतमानांश्च सम्प्रेक्ष्य वित्रेसुस्तव सैनिकाः ३२
युधिष्ठिरोऽपि संक्रुद्धो माद्रीपुत्रौ च पाण्डवौ
गृध्रपक्षैः शितैर्बाणैर्जघ्नुर्वै गजयोधिनः ३३
धृष्टद्युम्नस्तु समरे पराजित्य नराधिपम्
अपक्रान्ते तव सुते हयपृष्ठं समाश्रिते ३४
दृष्ट्वा च पाण्डवान्सर्वान्कुञ्जरैः परिवारितान्
धृष्टद्युम्नो महाराज सह सर्वैः प्रभद्रकैः
पुत्रः पाञ्चालराजस्य जिघांसुः कुञ्जरान्ययौ ३५
अदृष्ट्वा तु रथानीके दुर्योधनमरिन्दमम्
अश्वत्थामा कृपश्चैव कृतवर्मा च सात्वतः
अपृच्छन्क्षत्रियांस्तत्र क्व नु दुर्योधनो गतः ३६
अपश्यमाना राजानं वर्त्तमाने जनक्षये
मन्वाना निहतं तत्र तव पुत्रं महारथाः
विषण्णवदना भूत्वा पर्यपृच्छन्त ते सुतम् ३७
आहुः केचिद्धते सूते प्रयातो यत्र सौबलः
अपरे त्वब्रुवंस्तत्र क्षत्रिया भृशविक्षताः ३८
दुर्योधनेन किं कार्यं द्रक्ष्यध्वं यदि जीवति
युध्यध्वं सहिताः सर्वे किं वो राजा करिष्यति ३९
ते क्षत्रियाः क्षतैर्गात्रैर्हतभूयिष्ठवाहनाः
शरैः संपीड्यमानाश्च नातिव्यक्तमिवाब्रुवन् ४०
इदं सर्वं बलं हन्मो येन स्म परिवारिताः
एते सर्वे गजान्हत्वा उपयान्ति स्म पाण्डवाः ४१
श्रुत्वा तु वचनं तेषामश्वत्थामा महाबलः
हित्वा पाञ्चालराजस्य तदनीकं दुरुत्सहम् ४२
कृपश्च कृतवर्मा च प्रययुर्यत्र सौबलः
रथानीकं परित्यज्य शूराः सुदृढधन्विनः ४३
ततस्तेषु प्रयातेषु धृष्टद्युम्नपुरोगमाः
आययुः पाण्डवा राजन्विनिघ्नन्तः स्म तावकान् ४४
दृष्ट्वा तु तानापततः संप्रहृष्टान्महारथान्
पराक्रान्तांस्ततो वीरान्निराशाञ्जीविते तदा

विवर्णमुखभूयिष्ठमभवत्तावकं बलम् ४५
परिक्षीणायुधान्दृष्ट्वा तानहं परिवारितान्
राजन्बलेन द्व्यङ्गेन त्यक्त्वा जीवितमात्मनः ४६
आत्मनापञ्चमोऽयुध्यं पाञ्चालस्य बलेन ह
तस्मिन्देशे व्यवस्थाप्य यत्र शारद्वतः स्थितः ४७
संप्रयुद्धा वयं पञ्च किरीटिशरपीडिताः
धृष्टद्युम्नं महानीकं तत्र नोऽभूद्रणो महान्
जितास्तेन वयं सर्वे व्यपयाम रणात्ततः ४८
अथापश्यं सात्यकिं तमुपायान्तं महारथम्
रथैश्चतुःशतैर्वीरो मां चाभ्यद्रवदाहवे ४९
धृष्टद्युम्नादहं मुक्तः कथंचिच्छ्रान्तवाहनः
पतितो माधवानीकं दुष्कृती नरकं यथा
तत्र युद्धमभूद्घोरं मुहूर्तमतिदारुणम् ५०
सात्यकिस्तु महाबाहुर्मम हत्वा परिच्छदम्
जीवग्राहमगृह्णान्मां मूर्छितं पतितं भुवि ५१
ततो मुहूर्तादिव तद्गजानीकमवध्यत
गदया भीमसेनेन नाराचैरर्जुनेन च ५२
प्रतिपिष्टैर्महानागैः समन्तात्पर्वतोपमैः
नातिप्रसिद्धेव गतिः पाण्डवानामजायत ५३
रथमार्गांस्ततश्चक्रे भीमसेनो महाबलः
पाण्डवानां महाराज व्यपकर्षन्महागजान् ५४
अश्वत्थामा कृपश्चैव कृतवर्मा च सात्वतः
अपश्यन्तो रथानीके दुर्योधनमरिंदमम्
राजानं मृगयामासुस्तव पुत्रं महारथम् ५५
परित्यज्य च पाञ्चालं प्रयाता यत्र सौबलः
राज्ञोऽदर्शनसंविग्ना वर्तमाने जनक्षये ५६
इति श्रीमहाभारते शल्यपर्वणि चतुर्विंशोऽध्यायः २४

पञ्चविंशोऽध्यायः

सञ्जय उवाच

गजानीके हते तस्मिन्पाराडुपुत्रेण भारत
वध्यमाने बले चैव भीमसेनेन संयुगे १
चरन्तं च तथा दृष्ट्वा भीमसेनमरिंदमम्
दराडहस्तं यथा क्रुद्धमन्तकं प्राणहारिणम् २
समेत्य समरे राजन्हतशेषाः सुतास्तव
श्रदृश्यमाने कौरव्ये पुत्रे दुर्योधने तव
सोदर्याः सहिता भूत्वा भीमसेनमुपाद्रवन् ३
दुर्मर्षणो महाराज जैत्रो भूरिबलो रविः
इत्येते सहिता भूत्वा तव पुत्राः समन्ततः
भीमसेनमभिद्रुत्य रुरुधुः सर्वतोदिशम् ४
ततो भीमो महाराज स्वरथं पुनरास्थितः
मुमोच निशितान्बाणान्पुत्राणां तव मर्मसु ५
ते कीर्यमाणा भीमेन पुत्रास्तव महारणे
भीमसेनमपासेधन्प्रवणादिव कुञ्जरम् ६
ततः क्रुद्धो रणे भीमः शिरो दुर्मर्षणस्य ह
क्षुरप्रेण प्रमथ्याशु पातयामास भूतले ७
ततोऽपरेण भल्लेन सर्वावरणभेदिना
श्रुतान्तमवधीद्भीमस्तव पुत्रं महारथः ८
जयत्सेनं ततो विद्ध्वा नाराचेन हसन्निव
पातयामास कौरव्यं रथोपस्थादरिंदमः
स पपात रथाद्राजन्भूमौ तूर्णं ममार च ९
श्रुतर्वा तु ततो भीमं क्रुद्धो विव्याध मारिष
शतेन गृध्रवाजानां शराणां नतपर्वणाम् १०
ततः क्रुद्धो रणे भीमो जैत्रं भूरिबलं रविम्
त्रीनेतांस्त्रिभिरानर्छद्विषाग्निप्रतिमैः शरैः ११
ते हता न्यपतन्भूमौ स्यन्दनेभ्यो महारथाः
वसन्ते पुष्पशबला निकृत्ता इव किंशुकाः १२
ततोऽपरेण तीक्ष्णेन नाराचेन परंतपः
दुर्विमोचनमाहत्य प्रेषयामास मृत्यवे १३
स हतः प्रापतद्भूमौ स्वरथाद्रथिनां वरः

गिरेस्तु कूटजो भग्नो मारुतेनेव पादपः १४
दुष्प्रधर्षं ततश्चैव सुजातं च सुतौ तव
एकैकं न्यवधीत्संख्ये द्वाभ्यां द्वाभ्यां चमूमुखे
तौ शिलीमुखविद्धाङ्गौ पेततू रथसत्तमौ १५
ततो यतन्तमपरमभिवीक्ष्य सुतं तव
भल्लेन युधि विव्याध भीमो दुर्विषहं रणे
स पपात हतो वाहात्पश्यतां सर्वधन्विनाम् १६
दृष्ट्वा तु निहतान्भ्रातॄन्बहूनेकेन संयुगे
अमर्षवशमापन्नः श्रुतर्वा भीममभ्ययात् १७
विक्षिपन्सुमहच्चापं कार्तस्वरविभूषितम्
विसृजन्सायकांश्चैव विषाग्निप्रतिमान्बहून् १८
स तु राजन्धनुश्छित्त्वा पाण्डवस्य महामृधे
अथैनं छिन्नधन्वानं विंशत्या समवाकिरत् १९
ततोऽन्यद्धनुरादाय भीमसेनो महारथः
अवाकिरत्तव सुतं तिष्ठ तिष्ठेति चाब्रवीत् २०
महदासीत्तयोर्युद्धं चित्ररूपं भयानकम्
यादृशं समरे पूर्वं जम्भवासवयोरभूत् २१
तयोस्तत्र शरैर्मुक्तैर्यमदण्डनिभैः शुभैः
समाच्छन्ना धरा सर्वा खं च सर्वा दिशस्तथा २२
ततः श्रुतर्वा संक्रुद्धो धनुरायम्य सायकैः
भीमसेनं रणे राजन्बाह्वोरुरसि चार्पयत् २३
सोऽतिविद्धो महाराज तव पुत्रेण धन्विना
भीमः संचुक्षुभे क्रुद्धः पर्वणीव महोदधिः २४
ततो भीमो रुषाविष्टः पुत्रस्य तव मारिष
सारथिं चतुरश्चाश्वान्बाणैर्निन्ये यमक्षयम् २५
विरथं तं समालक्ष्य विशिखैर्लोमवाहिभिः
अवाकिरदमेयात्मा दर्शयन्पाणिलाघवम् २६
श्रुतर्वा विरथो राजन्नाददे खड्गचर्मणी
अथास्याददतः खड्गं शतचन्द्रं च भानुमत्
क्षुरप्रेण शिरः कायात्पातयामास पाण्डवः २७

छिन्नोत्तमाङ्गस्य ततः क्षुरप्रेण महात्मनः
पपात कायः स रथाद्वसुधामनुनादयन् २८
तस्मिन्निपतिते वीरे तावका भयमोहिताः
अभ्यद्रवन्त संग्रामे भीमसेनं युयुत्सवः २९
तानापतत एवाशु हतशेषाद्बलार्णवात्
दंशितः प्रतिजग्राह भीमसेनः प्रतापवान्
ते तु तं वै समासाद्य परिवव्रुः समन्ततः ३०
ततस्तु संवृतो भीमस्तावकैर्निशितैः शरैः
पीडयामास तान्सर्वान्सहस्राक्ष इवासुरान् ३१
ततः पञ्चशतान्हत्वा सवरूथान्महारथान्
जघान कुञ्जरानीकं पुनः सप्तशतं युधि ३२
हत्वा दश सहस्राणि पत्तीनां परमेषुभिः
वाजिनां च शतान्यष्टौ पाण्डवः स्म विराजते ३३
भीमसेनस्तु कौन्तेयो हत्वा युद्धे सुतांस्तव
मेने कृतार्थमात्मानं सफलं जन्म च प्रभो ३४
तं तथा युध्यमानं च विनिघ्नन्तं च तावकान्
ईक्षितुं नोत्सहन्ते स्म तव सैन्यानि भारत ३५
विद्राव्य तु कुरून्सर्वांस्तांश्च हत्वा पदानुगान्
दोर्भ्यां शब्दं ततश्चक्रे त्रासयानो महाद्विपान् ३६
हतभूयिष्ठयोधा तु तव सेना विशां पते
किंचिच्छेषा महाराज कृपणा समपद्यत ३७
इति श्रीमहाभारते शल्यपर्वणि पञ्चविंशोऽध्यायः २५

## षड्विंशोऽध्यायः

सञ्जय उवाच
दुर्योधनो महाराज सुदर्शश्चापि ते सुतः
हतशेषौ तदा संख्ये वाजिमध्ये व्यवस्थितौ १
ततो दुर्योधनं दृष्ट्वा वाजिमध्ये व्यवस्थितम्
उवाच देवकीपुत्रः कुन्तीपुत्रं धनंजयम् २
शत्रवो हतभूयिष्ठा ज्ञातयः परिपालिताः

गृहीत्वा सञ्जयं चासौ निवृत्तः शिनिपुंगवः ३
परिश्रान्तश्च नकुलः सहदेवश्च भारत
योधयित्वा रणे पापान्धार्तराष्ट्रपदानुगान् ४
सुयोधनमभित्यज्य त्रय एते व्यवस्थिताः
कृपश्च कृतवर्मा च द्रौणिश्चैव महारथः ५
असौ तिष्ठति पाञ्चाल्यः श्रिया परमया युतः
दुर्योधनबलं हत्वा सह सर्वैः प्रभद्रकैः ६
असौ दुर्योधनः पार्थ वाजिमध्ये व्यवस्थितः
छत्रेण ध्रियमाणेन प्रेक्षमाणो मुहुर्मुहुः ७
प्रतिव्यूह्य बलं सर्वं रणमध्ये व्यवस्थितः
एनं हत्वा शितैर्बाणैः कृतकृत्यो भविष्यसि ८
गजानीकं हतं दृष्ट्वा त्वां च प्राप्तमरिंदम
यावन्न विद्रवन्त्येते तावज्जहि सुयोधनम् ९
यातु कश्चित्तु पाञ्चाल्यं क्षिप्रमागम्यतामिति
परिश्रान्तबलस्तात नैष मुच्येत किल्बिषी १०
तव हत्वा बलं सर्वं संग्रामे धृतराष्ट्रजः
जितान्पाण्डुसुतान्मत्वा रूपं धारयते महत् ११
निहतं स्वबलं दृष्ट्वा पीडितं चापि पाण्डवैः
ध्रुवमेष्यति संग्रामे वधायैवात्मनो नृपः १२
एवमुक्तः फल्गुनस्तु कृष्णं वचनमब्रवीत्
धृतराष्ट्रसुताः सर्वे हता भीमेन मानद
यावेतावास्थितौ कृष्ण तावद्य न भविष्यतः १३
हतो भीष्मो हतो द्रोणः कर्णो वैकर्तनो हतः
मद्रराजो हतः शल्यो हतः कृष्ण जयद्रथः १४
हयाः पञ्चशताः शिष्टाः शकुनेः सौबलस्य च
रथानां तु शते शिष्टे द्वे एव तु जनार्दन
दन्तिनां च शतं साग्रं त्रिसाहस्राः पदातयः १५
अश्वत्थामा कृपश्चैव त्रिगर्ताधिपतिस्तथा
उलूकः शकुनिश्चैव कृतवर्मा च सात्वतः १६
एतद्बलमभूच्छेषं धार्तराष्ट्रस्य माधव

मोक्षो न नूनं कालाद्धि विद्यते भुवि कस्यचित् १७
तथा विनिहते सैन्ये पश्य दुर्योधनं स्थितम्
अद्याहा हि महाराजो हतामित्रो भविष्यति १८
न हि मे मोक्ष्यते कश्चित्परेषामिति चिन्तये
ये त्वद्य समरं कृष्ण न हास्यन्ति रणोत्कटाः
तान्वै सर्वान्हनिष्यामि यद्यपि स्युरमानुषाः १९
अद्य युद्धे सुसंक्रुद्धो दीर्घं राज्ञः प्रजागरम्
अपनेष्यामि गान्धारं पातयित्वा शितैः शरैः २०
निकृत्या वै दुराचारो यानि रत्नानि सौबलः
सभायामहरद्द्यूते पुनस्तान्याहराम्यहम् २१
अद्य ता अपि वेत्स्यन्ति सर्वा नागपुरस्त्रियः
श्रुत्वा पतींश्च पुत्रांश्च पाण्डवैर्निहतान्युधि २२
समाप्तमद्य वै कर्म सर्वं कृष्ण भविष्यति
अद्य दुर्योधनो दीप्तां श्रियं प्राणांश्च त्यक्ष्यति २३
नापयाति भयात्कृष्ण संग्रामाद्यदि चेन्मम
निहतं विद्धि वार्ष्णेय धार्तराष्ट्रं सुबालिशम् २४
मम ह्येतदशक्तं वै वाजिवृन्दमरिंदम
सोढुं ज्यातलनिर्घोषं याहि यावन्निहन्म्यहम् २५
एवमुक्तस्तु दाशार्हः पाण्डवेन यशस्विना
अचोदयद्धयान्राजन्दुर्योधनबलं प्रति २६
तदनीकमभिप्रेक्ष्य त्रयः सज्जा महारथाः
भीमसेनोऽजुनश्चैव सहदेवश्च मारिष
प्रययुः सिंहनादेन दुर्योधनजिघांसया २७
तान्प्रेक्ष्य सहितान्सर्वाञ्जवेनोद्यतकार्मुकान्
सौबलोऽभ्यद्रवद्युद्धे पाण्डवानाततायिनः २८
सुदर्शनस्तव सुतो भीमसेनं समभ्ययात्
सुशर्मा शकुनिश्चैव युयुधाते किरीटिना
सहदेवं तव सुतो हयपृष्ठगतोऽभ्ययात् २९
ततो ह्ययत्नतः क्षिप्रं तव पुत्रो जनाधिप
प्रासेन सहदेवस्य शिरसि प्राहरद्भृशम् ३०

सोपाविशद्रथोपस्थे तव पुत्रेण ताडितः
रुधिराप्लुतसर्वाङ्ग आशीविष इव श्वसन् ३१
प्रतिलभ्य ततः संज्ञां सहदेवो विशां पते
दुर्योधनं शरैस्तीक्ष्णैः संक्रुद्धः समवाकिरत् ३२
पार्थोऽपि युधि विक्रम्य कुन्तीपुत्रो धनंजयः
शूराणामश्वपृष्ठेभ्यः शिरांसि निचकर्त ह ३३
तदनीकं तदा पार्थो व्यधमद्बहुभिः शरैः
पातयित्वा हयान्सर्वांस्त्रिगर्तानां रथान्ययौ ३४
ततस्ते सहिता भूत्वा त्रिगर्तानां महारथाः
अर्जुनं वासुदेवं च शरवर्षैरवाकिरन् ३५
सत्यकर्माणमाक्षिप्य क्षुरप्रेण महायशाः
ततोऽस्य स्यन्दनस्येषां चिच्छिदे पाण्डुनन्दनः ३६
शिलाशितेन च विभो क्षुरप्रेण महायशाः
शिरश्चिच्छेद प्रहसंस्तप्तकुण्डलभूषणम् ३७
सत्येषुमथ चादत्त योधानां मिषतां ततः
यथा सिंहो वने राजन्मृगं परिबुभुक्षितः ३८
तं निहत्य ततः पार्थः सुशर्माणं त्रिभिः शरैः
विद्ध्वा तानहनत्सर्वान्रथान्रुक्मविभूषितान् ३९
ततस्तु प्रत्वरन्पार्थो दीर्घकालं सुसंभृतम्
मुञ्चन्क्रोधविषं तीक्ष्णं प्रस्थलाधिपतिं प्रति ४०
तमर्जुनः पृषत्कानां शतेन भरतर्षभ
पूरयित्वा ततो वाहान्यहनत्तस्य धन्विनः ४१
ततः शरं समादाय यमदण्डोपमं शितम्
सुशर्माणं समुद्दिश्य चिक्षेपाशु हसन्निव ४२
स शरः प्रेषितस्तेन क्रोधदीप्तेन धन्विना
सुशर्माणं समासाद्य बिभेद हृदयं रणे ४३
स गतासुर्महाराज पपात धरणीतले
नन्दयन्पाण्डवान्सर्वान्व्यथयंश्चापि तावकान् ४४
सुशर्माणं रणे हत्वा पुत्रानस्य महारथान्
सप्त चाष्टौ च त्रिंशच्च सायकैरनयत्क्षयम् ४५

ततोऽस्य निशितैर्बाणैः सर्वान्हत्वा पदानुगान्
अभ्यगाद्भारतीं सेनां हतशेषां महारथः ४६
भीमस्तु समरे क्रुद्धः पुत्रं तव जनाधिप
सुदर्शनमदृश्यन्तं शरैश्चक्रे हसन्निव ४७
ततोऽस्य प्रहसन्क्रुद्धः शिरः कायादपाहरत्
क्षुरप्रेण सुतीक्ष्णेन स हतः प्रापतद्भुवि ४८
तस्मिंस्तु निहते वीरे ततस्तस्य पदानुगाः
परिवव्रू रणे भीमं किरन्तो विशिखाञ्शितान् ४९
ततस्तु निशितैर्बाणैस्तदानीकं वृकोदरः
इन्द्राशनिसमस्पर्शैः समन्तात्पर्यवाकिरत्
ततः क्षणेन तद्भीमो न्यहनद्भरतर्षभ ५०
तेषु तूत्साद्यमानेषु सेनाध्यक्षा महाबलाः
भीमसेनं समासाद्य ततोऽयुध्यन्त भारत
तांस्तु सर्वाञ्शरैर्घोरैरवाकिरत पाण्डवः ५१
तथैव तावका राजन्पाण्डवेयान्महारथान्
शरवर्षेण महता समन्तात्पर्यवारयन् ५२
व्याकुलं तदभूत्सर्वं पाण्डवानां परैः सह
तावकानां च समरे पाण्डवेयैर्युयुत्सताम् ५३
तत्र योधास्तदा पेतुः परस्परसमाहताः
उभयोः सेनयो राजन्संशोचन्तः स्म बान्धवान् ५४
इति श्रीमहाभारते शल्यपर्वणि षड्विंशोऽध्यायः २६

## सप्तविंशोऽध्यायः

सञ्जय उवाच
तस्मिन्प्रवृत्ते संग्रामे नरवाजिगजक्षये
शकुनिः सौबलो राजन्सहदेवं समभ्ययात् १
ततोऽस्यापततस्तूर्णं सहदेवः प्रतापवान्
शरौघान्प्रेषयामास पतंगानिव शीघ्रगान्
उलूकश्च रणे भीमं विव्याध दशभिः शरैः २
शकुनिस्तु महाराज भीमं विद्ध्वा त्रिभिः शरैः

सायकानां नवत्या वै सहदेवमवाकिरत् ३
ते शूराः समरे राजन्समासाद्य परस्परम्
विव्यधुर्निशितैर्बाणैः कङ्कबर्हिणवाजितैः
स्वर्णपुङ्खैः शिलाधौतैराकर्णात्प्रहितैः शरैः ४
तेषां चापभुजोत्सृष्टा शरवृष्टिर्विशां पते
आच्छादयद्दिशः सर्वा धाराभिरिव तोयदः ५
ततः क्रुद्धो रणे भीमः सहदेवश्च भारत
चेरतुः कदनं संख्ये कुर्वन्तौ सुमहाबलौ ६
ताभ्यां शरशतैश्छन्नं तद्बलं तव भारत
अन्धकारमिवाकाशमभवत्तत्र तत्र ह ७
अश्वैर्विपरिधावद्भिः शरच्छन्नैर्विशां पते
तत्र तत्र कृतो मार्गो विकर्षद्भिर्हतान्बहून् ८
निहतानां हयानां च सहैव हययोधिभिः
वर्मभिर्विनिकृत्तैश्च प्रासैश्छिन्नैश्च मारिष
संछन्ना पृथिवी जज्ञे कुसुमैः शबला इव ९
योधास्तत्र महाराज समासाद्य परस्परम्
व्यचरन्त रणे क्रुद्धा विनिघ्नन्तः परस्परम् १०
उद्वृत्तनयनै रोषात्संदष्टौष्ठपुटैर्मुखैः
सकुण्डलैर्मही छन्ना पद्मकिञ्जल्कसंनिभैः ११
भुजैश्छिन्नैर्महाराज नागराजकरोपमैः
साङ्गदैः सतनुत्रैश्च सासिप्रासपरश्वधैः १२
कबन्धैरुत्थितैश्छिन्नैर्नृत्यद्भिश्चापरैर्युधि
क्रव्यादगणसंकीर्णा घोराभूत्पृथिवी विभो १३
अल्पावशिष्टे सैन्ये तु कौरवेयान्महाहवे
प्रहृष्टाः पाण्डवाः भूत्वा निन्यिरे यमसादनम् १४
एतस्मिन्नन्तरे शूरः सौबलेयः प्रतापवान्
प्रासेन सहदेवस्य शिरसि प्राहरद्भृशम्
स विह्वलो महाराज रथोपस्थ उपाविशत् १५
सहदेवं तथा दृष्ट्वा भीमसेनः प्रतापवान्
सर्वसैन्यानि संक्रुद्धो वारयामास भारत १६

निर्बिभेद च नाराचैः शतशोऽथ सहस्रशः
विनिर्भिद्याकरोच्चैव सिंहनादमरिंदमः १७
तेन शब्देन वित्रस्ताः सर्वे सहयवारणाः
प्राद्रवन्सहसा भीताः शकुनेश्च पदानुगाः १८
प्रभग्नानथ तान्दृष्ट्वा राजा दुर्योधनोऽब्रवीत्
निवर्तध्वमधर्मज्ञा युध्यध्वं किं सृतेन वः १९
इह कीर्तिं समाधाय प्रेत्य लोकान्समश्नुते
प्राणाञ्जहाति यो वीरो युधि पृष्ठमदर्शयन् २०
एवमुक्तास्तु ते राज्ञा सौबलस्य पदानुगाः
पाण्डवानभ्यवर्तन्त मृत्युं कृत्वा निवर्तनम् २१
द्रवद्भिस्तत्र राजेन्द्र कृतः शब्दोऽतिदारुणः
क्षुब्धसागरसङ्काशः क्षुभिताः सर्वतोऽभवत् २२
तांस्तदापततो दृष्ट्वा सौबलस्य पदानुगान्
प्रत्युद्ययुर्महाराज पाण्डवा विजये वृताः २३
प्रत्याश्वस्य च दुर्धर्षः सहदेवो विशां पते
शकुनिं दशभिर्विद्ध्वा हयांश्चास्य त्रिभिः शरैः
धनुश्चिच्छेद च शरैः सौबलस्य हसन्निव २४
अथान्यद्धनुरादाय शकुनिर्युद्धदुर्मदः
विव्याध नकुलं षष्ठ्या भीमसेनं च सप्तभिः २५
उलूकोऽपि महाराज भीमं विव्याध सप्तभिः
सहदेवं च सप्तत्या परीप्सन्पितरं रणे २६
तं भीमसेनः समरे विव्याध निशितैः शरैः
शकुनिं च चतुःषष्ट्या पार्श्वस्थांश्च त्रिभिस्त्रिभिः २७
ते हन्यमाना भीमेन नाराचैस्तैलपायितैः
सहदेवं रणे क्रुद्धाश्छादयञ्शरवृष्टिभिः
पर्वतं वारिधाराभिः सविद्युत इवाम्बुदाः २८
ततोऽस्यापततः शूरः सहदेवः प्रतापवान्
उलूकस्य महाराज भल्लेनापाहरच्छिरः २९
स जगाम रथाद्भूमिं सहदेवेन पातितः
रुधिराप्लुतसर्वाङ्गो नन्दयन्पाण्डवान्युधि ३०

पुत्रं तु निहतं दृष्ट्वा शकुनिस्तत्र भारत
साश्रुकण्ठो विनिःश्वस्य क्षत्तुर्वाक्यमनुस्मरन् ३१
चिन्तयित्वा मुहूर्तं स बाष्पपूर्णेक्षणः श्वसन्
सहदेवं समासाद्य त्रिभिर्विव्याध सायकैः ३२
तानपास्य शरान्मुक्ताञ्शरसंघैः प्रतापवान्
सहदेवो महाराज धनुश्चिच्छेद संयुगे ३३
छिन्ने धनुषि राजेन्द्र शकुनिः सौबलस्तदा
प्रगृह्य विपुलं खड्गं सहदेवाय प्राहिणोत् ३४
तमापतन्तं सहसा घोररूपं विशां पते
द्विधा चिच्छेद समरे सौबलस्य हसन्निव ३५
असिं दृष्ट्वा द्विधा छिन्नं प्रगृह्य महतीं गदाम्
प्राहिणोत्सहदेवाय सा मोघा न्यपतद्भुवि ३६
ततः शक्तिं महाघोरां कालरात्रिमिवोद्यताम्
प्रेषयामास संक्रुद्धः पाण्डवं प्रति सौबलः ३७
तामापतन्तीं सहसा शरैः काञ्चनभूषणैः
त्रिधा चिच्छेद समरे सहदेवो हसन्निव ३८
सा पपात त्रिधा छिन्ना भूमौ कनकभूषणा
शीर्यमाणा यथा दीप्ता गगनाद्वै शतह्रदा ३९
शक्तिं विनिहतां दृष्ट्वा सौबलं च भयार्दितम्
दुद्रुवुस्तावकाः सर्वे भये जाते ससौबलाः ४०
अथोत्क्रुष्टं महद्ध्यासीत्पाण्डवैर्जितकाशिभिः
धार्तराष्ट्रास्ततः सर्वे प्रायशो विमुखाभवन् ४१
तान्वै विमनसो दृष्ट्वा माद्रीपुत्रः प्रतापवान्
शरैरनेकसाहस्रैर्वारयामास संयुगे ४२
ततो गान्धारकैर्गुप्तं पृष्ठैरश्वैर्जये धृतम्
आससाद रणे यान्तं सहदेवोऽथ सौबलम् ४३
स्वमंशमवशिष्टं सं संस्मृत्य शकुनिं नृप
रथेन काञ्चनाङ्गेन सहदेवः समभ्ययात्
अधिज्यं बलवत्कृत्वा व्याक्षिपन्सुमहद्धनुः ४४
स सौबलमभिद्रुत्य गृध्रपत्रैः शिलाशितैः

भृशमभ्यहनत्क्रुद्धस्तोत्रैरिव महाद्विपम् ४५
उवाच चैनं मेधावी निगृह्य स्मारयन्निव
क्षत्रधर्मे स्थितो भूत्वा युध्यस्व पुरुषो भव ४६
यत्तदा हृष्यसे मूढ ग्लहन्नक्षैः सभातले
फलमद्य प्रपद्यस्व कर्मणस्तस्य दुर्मते ४७
निहतास्ते दुरात्मानो येऽस्मानवहसन्पुरा
दुर्योधनः कुलाङ्गारः शिष्टस्त्वं तस्य मातुलः ४८
अद्य ते विहनिष्यामि क्षुरेणोन्मथितं शिरः
वृक्षात्फलमिवोद्धृत्य लगुडेन प्रमाथिना ४९
एवमुक्त्वा महाराज सहदेवो महाबलः
संक्रुद्धो नरशार्दूलो वेगेनाभिजगाम ह ५०
अभिगम्य तु दुर्धर्षः सहदेवो युधां पतिः
विकृष्य बलवच्चापं क्रोधेन प्रहसन्निव ५१
शकुनिं दशभिर्विद्ध्वा चतुर्भिश्चास्य वाजिनः
छत्रं ध्वजं धनुश्चास्य छित्त्वा सिंह इवानदत् ५२
छिन्नध्वजधनुश्छत्रः सहदेवेन सौबलः
ततो विद्धश्च बहुभिः सर्वमर्मसु सायकैः ५३
ततो भूयो महाराज सहदेवः प्रतापवान्
शकुनेः प्रेषयामास शरवृष्टिं दुरासदाम् ५४
ततस्तु क्रुद्धः सुबलस्य पुत्रो माद्रीसुतं सहदेवं विमर्दे
प्रासेन जाम्बूनदभूषणेन जिघांसुरेकोऽभिपपात शीघ्रम् ५५
माद्रीसुतस्तस्य समुद्यतं तं प्रासं सुवृत्तौ च भुजौ रणाग्रे
भल्लैस्त्रिभिर्युगपत्संचकर्त ननाद चोच्चैस्तरसाजिमध्ये ५६
तस्याशुकारी सुसमाहितेन सुवर्णपुङ्खेन दृढायसेन
भल्लेन सर्वावरणातिगेन शिरः शरीरात्प्रममाथ भूयः ५७
शरेण कार्तस्वरभूषितेन दिवाकराभेन सुसंशितेन
हृतोत्तमाङ्गो युधि पाण्डवेन पपात भूमौ सुबलस्य पुत्रः ५८
स तच्छिरो वेगवता शरेण सुवर्णपुङ्खेन शिलाशितेन
प्रावेरयत्कुपितः पाण्डुपुत्रो यत्तत्कुरूणामनयस्य मूलम् ५९
हृतोत्तमाङ्गं शकुनिं समीक्ष्य भूमौ शयानं रुधिरार्द्रगात्रम्

योधास्त्वदीया भयनष्टसत्त्वा दिशः प्रजग्मुः प्रगृहीतशस्त्राः ६०
विप्रद्रुताः शुष्कमुखा विसंज्ञा गाण्डीवघोषेण समाहताश्च
भयार्दिता भग्नरथाश्वनागाः पदातयश्चैव सधार्तराष्ट्राः ६१
ततो रथाच्छकुनिं पातयित्वा मुदान्विता भारत पाण्डवेयाः
शङ्खान्प्रदध्मुः समरे प्रहृष्टाः सकेशवाः सैनिकान्हर्षयन्तः ६२
तं चापि सर्वे प्रतिपूजयन्तो हृष्टा ब्रुवाणाः सहदेवमाजौ
दिष्ट्या हतो नैकृतिको दुरात्मा सहात्मजो वीर रणे त्वयेति ६३
इति श्रीमहाभारते शल्यपर्वणि सप्तविंशोऽध्यायः २७

## अष्टाविंशोऽध्यायः

सञ्जय उवाच
ततः क्रुद्धा महाराज सौबलस्य पदानुगाः
त्यक्त्वा जीवितमाक्रन्दे पाण्डवान्पर्यवारयन् १
तानर्जुनः प्रत्यगृह्णात्सहदेवजये धृतः
भीमसेनश्च तेजस्वी क्रुद्धाशीविषदर्शनः २
शक्त्यृष्टिप्रासहस्तानां सहदेवं जिघांसताम्
संकल्पमकरोन्मोघं गाण्डीवेन धनंजयः ३
प्रगृहीतायुधान्बाहून्योधानामभिधावताम्
भल्लैश्चिच्छेद बीभत्सुः शिरांस्यपि हयानपि ४
ते हताः प्रत्यपद्यन्त वसुधां विगतासवः
त्वरिता लोकवीरेण प्रहताः सव्यसाचिना ५
ततो दुर्योधनो राजा दृष्ट्वा स्वबलसंक्षयम्
हतशेषान्समानीय क्रुद्धो रथशतान्विभो ६
कुञ्जरांश्च हयांश्चैव पादातांश्च परंतप
उवाच सहितान्सर्वान्धार्तराष्ट्र इदं वचः ७
समासाद्य रणे सर्वान्पाण्डवान्ससुहृद्गणान्
पाञ्चाल्यं चापि सबलं हत्वा शीघ्रं निवर्तत ८
तस्य ते शिरसा गृह्य वचनं युद्धदुर्मदाः
प्रत्युद्ययू रणे पार्थांस्तव पुत्रस्य शासनात् ९
तानभ्यापततः शीघ्रं हतशेषान्महारणे

शरैराशीविषाकारैः पाण्डवाः समवाकिरन् १०
तत्सैन्यं भरतश्रेष्ठ मुहूर्तेन महात्मभिः
अवध्यत रणं प्राप्य त्रातारं नाभ्यविन्दत
प्रतिष्ठमानं तु भयान्नावतिष्ठत दंशितम् ११
अश्वैर्विपरिधावद्भिः सैन्येन रजसा वृते
न प्राज्ञायन्त समरे दिशश्च प्रदिशस्तथा १२
ततस्तु पाण्डवानीकान्निःसृत्य बहवो जनाः
अभ्यघ्नंस्तावकान्युद्धे मुहूर्तादिव भारत
ततो निःशेषमभवत्तत्सैन्यं तव भारत १३
अक्षौहिण्यः समेतास्तु तव पुत्रस्य भारत
एकादश हता युद्धे ताः प्रभो पाण्डुसृञ्जयैः १४
तेषु राजसहस्रेषु तावकेषु महात्मसु
एको दुर्योधनो राजन्नदृश्यत भृशं क्षतः १५
ततो वीक्ष्य दिशः सर्वा दृष्ट्वा शून्यां च मेदिनीम्
विहीनः सर्वयोधैश्च पाण्डवान्वीक्ष्य संयुगे १६
मुदितान्सर्व सिद्धार्थान्नर्दमानान्समन्ततः
बाणशब्दरवांश्चैव श्रुत्वा तेषां महात्मनाम् १७
दुर्योधनो महाराज कश्मलेनाभिसंवृतः
अपयाने मनश्चक्रे विहीनबलवाहनः १८
धृतराष्ट्र उवाच
निहते मामके सैन्ये निःशेषे शिबिरे कृते
पाण्डवानां बलं सूत किं नु शेषमभूत्तदा
एतन्मे पृच्छतो ब्रूहि कुशलो ह्यसि सञ्जय १९
यच्च दुर्योधनो मन्दः कृतवांस्तनयो मम
बलक्षयं तथा दृष्ट्वा स एकः पृथिवीपतिः २०
सञ्जय उवाच
रथानां द्वे सहस्रे तु सप्त नागशतानि च
पञ्च चाश्वसहस्राणि पत्तीनां च शतं शताः २१
एतच्छेषमभूद्राजन्पाण्डवानां महद्बलम्
परिगृह्य हि यद्युद्धे धृष्टद्युम्नो व्यवस्थितः २२

एकाकी भरतश्रेष्ठ ततो दुर्योधनो नृपः
नापश्यत्समरे कंचित्सहायं रथिनां वरः २३
नर्दमानान्परांश्चैव स्वबलस्य च संक्षयम्
हतं स्वहयमुत्सृज्य प्राङ्मुखः प्राद्रवद्भयात् २४
एकादशचमूभर्ता पुत्रो दुर्योधनस्तव
गदामादाय तेजस्वी पदातिः प्रस्थितो ह्रदम् २५
नातिदूरं ततो गत्वा पद्भ्यामेव नराधिपः
सस्मार वचनं क्षत्तुर्धर्मशीलस्य धीमतः २६
इदं नूनं महाप्राज्ञो विदुरो दृष्टवान्पुरा
महद्वैशसमस्माकं क्षत्रियाणां च संयुगे २७
एवं विचिन्तयानस्तु प्रविविक्षुर्ह्रदं नृपः
दुःखसंतप्तहृदयो दृष्ट्वा राजन्बलक्षयम् २८
पाण्डवाश्च महाराज धृष्टद्युम्नपुरोगमाः
अभ्यधावन्त संक्रुद्धास्तव राजन्बलं प्रति २९
शक्त्यृष्टिप्रासहस्तानां बलानामभिगर्जताम्
संकल्पमकरोन्मोघं गाण्डीवेन धनंजयः ३०
तान्हत्वा निशितैर्बाणैः सामात्यान्सह बन्धुभिः
रथे श्वेतहये तिष्ठन्नर्जुनो बह्वशोभत ३१
सुबलस्य हते पुत्रे सवाजिरथकुञ्जरे
महावनमिव छिन्नमभवत्तावकं बलम् ३२
अनेकशतसाहस्रे बले दुर्योधनस्य ह
नान्यो महारथो राजञ्जीवमानो व्यदृश्यत ३३
द्रोणपुत्रादृते वीरात्तथैव कृतवर्मणः
कृपाच्च गौतमाद्राजन्पार्थिवाच्च तवात्मजात् ३४
धृष्टद्युम्नस्तु मां दृष्ट्वा हसन्सात्यकिमब्रवीत्
किमनेन गृहीतेन नानेनार्थोऽस्ति जीवता ३५
धृष्टद्युम्नवचः श्रुत्वा शिनेर्नप्ता महारथः
उद्यम्य निशितं खड्गं हन्तुं मामुद्यतस्तदा ३६
तमागम्य महाप्राज्ञः कृष्णद्वैपायनोऽब्रवीत्
मुच्यतां सञ्जयो जीवन्न हन्तव्यः कथंचन ३७

द्वैपायनवचः श्रुत्वा शिनेर्नप्ता कृताञ्जलि
ततो मामब्रवीन्मुक्त्वा स्वस्ति सञ्जय साधय ३८
अनुज्ञातस्त्वहं तेन न्यस्तवर्मा निरायुधः
प्रातिष्ठं येन नगरं सायाह्ने रुधिरोक्षितः ३९
क्रोशमात्रमपक्रान्तं गदापाणिमवस्थितम्
एकं दुर्योधनं राजन्नपश्यं भृशविक्षतम् ४०
स तु मामश्रुपूर्णाक्षो नाशक्नोदभिवीक्षितुम्
उपप्रैक्षत मां दृष्ट्वा तदा दीनमवस्थितम् ४१
तं चाहमपि शोचन्तं दृष्ट्वैकाकिनमाहवे
मुहूर्तं नाशकं वक्तुं किंचिद्दुःखपरिप्लुतः ४२
ततोऽस्मै तदहं सर्वमुक्तवान्ग्रहणं तदा
द्वैपायनप्रसादाच्च जीवतो मोक्षमाहवे ४३
मुहूर्तमिव च ध्यात्वा प्रतिलभ्य च चेतनाम्
भ्रातॄंश्च सर्वसैन्यानि पर्यपृच्छत मां ततः ४४
तस्मै तदहमाचक्षं सर्वं प्रत्यक्षदर्शिवान्
भ्रातॄंश्च निहतान्सर्वान्सैन्यं च विनिपातितम् ४५
त्रयः किल रथाः शिष्टास्तावकानां नराधिप
इति प्रस्थानकाले मां कृष्णद्वैपायनोऽब्रवीत् ४६
स दीर्घमिव निःश्वस्य विप्रेक्ष्य च पुनः पुनः
अंसे मां पाणिना स्पृष्ट्वा पुत्रस्ते पर्यभाषत ४७
त्वदन्यो नेह संग्रामे कश्चिज्जीवति सञ्जय
द्वितीयं नेह पश्यामि ससहायाश्च पाण्डवाः ४८
ब्रूयाः सञ्जय राजानं प्रज्ञाचक्षुषमीश्वरम्
दुर्योधनस्तव सुतः प्रविष्टो ह्रदमित्युत ४९
सुहृद्भिस्तादृशैर्हीनः पुत्रैर्भ्रातृभिरेव च
पाण्डवैश्च हृते राज्ये को नु जीवति मादृशः ५०
आचक्षेथाः सर्वमिदं मां च मुक्तं महाहवात्
अस्मिंस्तोयह्रदे सुप्तं जीवन्तं भृशविक्षतम् ५१
एवमुक्त्वा महाराज प्राविशत्तं ह्रदं नृपः
अस्तम्भयत तोयं च मायया मनुजाधिपः ५२

तस्मिन्ह्रदं प्रविष्टे तु त्रीन्रथाञ्श्रान्तवाहनान्
अपश्यं सहितानेकस्तं देशं समुपेयुषः ५३
कृपं शारद्वतं वीरं द्रौणिं च रथिनां वरम्
भोजं च कृतवर्माणं सहिताञ्शरविक्षतान् ५४
ते सर्वे मामभिप्रेक्ष्य तूर्णमश्वानचोदयन्
उपयाय च मामूचुर्दिष्ट्या जीवसि सञ्जय ५५
अपृच्छंश्चैव मां सर्वे पुत्रं तव जनाधिपम्
कच्चिद्दुर्योधनो राजा स नो जीवति सञ्जय ५६
आख्यातवानहं तेभ्यस्तदा कुशलिनं नृपम्
तच्चैव सर्वमाचक्षं यन्मां दुर्योधनोऽब्रवीत्
ह्रदं चैवाहमाचष्ट यं प्रविष्टो नराधिपः ५७
अश्वत्थामा तु तद्राजन्निशम्य वचनं मम
तं ह्रदं विपुलं प्रेक्ष्य करुणं पर्यदेवयत् ५८
अहो धिङ्न स जानाति जीवतोऽस्मान्नराधिपः
पार्याप्ता हि वयं तेन सह योधयितुं परान् ५९
ते तु तत्र चिरं कालं विलप्य च महारथाः
प्राद्रवन्रथिनां श्रेष्ठा दृष्ट्वा पाण्डुसुतान्रणे ६०
ते तु मां रथमारोप्य कृपस्य सुपरिष्कृतम्
सेनानिवेशमाजग्मुर्हतशेषास्त्रयो रथाः ६१
तत्र गुल्माः परित्रस्ताः सूर्ये चास्तमिते सति
सर्वे विचुक्रुशुः श्रुत्वा पुत्राणां तव संक्षयम् ६२
ततो वृद्धा महाराज योषितां रक्षिणो नराः
राजदारानुपादाय प्रययुर्नगरं प्रति ६३
तत्र विक्रोशतीनां च रुदतीनां च सर्वशः
प्रादुरासीन्महाञ्शब्दः श्रुत्वा तद्बलसंक्षयम् ६४
ततस्ता योषितो राजन्क्रन्दन्त्यो वै मुहुर्मुहुः
कुरर्य इव शब्देन नादयन्त्यो महीतलम् ६५
आजघ्नुः करजैश्चापि पाणिभिश्च शिरांस्युत
लुलुवुश्च तदा केशान्क्रोशन्त्यस्तत्र तत्र ह ६६
हाहाकारविनादिन्यो विनिघ्नन्त्य उरांसि च

क्रोशन्त्यस्तत्र रुरुदुः क्रन्दमाना विशां पते ६७
ततो दुर्योधनामात्याः साश्रुकण्ठा भृशातुराः
राजदारानुपादाय प्रययुर्नगरं प्रति ६८
वेत्रझर्झरहस्ताश्च द्वाराध्यक्षा विशां पते
शयनीयानि शुभ्राणि स्पर्ध्यास्तरणवन्ति च
समादाय ययुस्तूर्णं नगरं दाररक्षिणः ६९
आस्थायाश्वतरीयुक्तान्स्यन्दनानपरे जनाः
स्वान्स्वान्दारानुपादाय प्रययुर्नगरं प्रति ७०
अदृष्टपूर्वा या नार्यो भास्करेणापि वेश्मसु
ददृशुस्ता महाराज जना यान्तीः पुरं प्रति ७१
ताः स्त्रियो भरतश्रेष्ठ सौकुमार्यसमन्विताः
प्रययुर्नगरं तूर्णं हतस्वजनबान्धवाः ७२
आ गोपालाविपालेभ्यो द्रवन्तो नगरं प्रति
ययुर्मनुष्याः संभ्रान्ता भीमसेनभयार्दिताः ७३
अपि चैषां भयं तीव्रं पार्थेभ्योऽभूत्सुदारुणम्
प्रेक्षमाणास्तदान्योन्यमाधावन्नगरं प्रति ७४
तस्मिंस्तदा वर्तमाने विद्रवे भृशदारुणे
युयुत्सुः शोकसंमूढः प्राप्तकालमचिन्तयत् ७५
जितो दुर्योधनः संख्ये पाण्डवैर्भीमविक्रमैः
एकादशचमूभर्ता भ्रातरश्चास्य सूदिताः
हताश्च कुरवः सर्वे भीष्मद्रोणपुरःसराः ७६
अहमेको विमुक्तस्तु भाग्ययोगाद्यदृच्छया
विद्रुतानि च सर्वाणि शिबिराणि समन्ततः ७७
दुर्योधनस्य सचिवा ये केचिदवशेषिताः
राजदारानुपादाय व्यधावन्नगरं प्रति ७८
प्राप्तकालमहं मन्ये प्रवेशं तैः सहाभिभो
युधिष्ठिरमनुज्ञाप्य भीमसेनं तथैव च ७९
एतमर्थं महाबाहुरुभयोः स न्यवेदयत्
तस्य प्रीतोऽभवद्राजा नित्यं करुणवेदिता
परिष्वज्य महाबाहुर्वैश्यापुत्रं व्यसर्जयत् ८०

ततः स रथमास्थाय द्रुतमश्वानचोदयत्
असंभावितवांश्चापि राजदारान्पुरं प्रति ८१
तैश्चैव सहितः क्षिप्रमस्तं गच्छति भास्करे
प्रविष्टो हास्तिनपुरं बाष्पकण्ठोऽश्रुलोचनः ८२
अपश्यत महाप्राज्ञं विदुरं साश्रुलोचनम्
राज्ञः समीपान्निष्क्रान्तं शोकोपहतचेतसम् ८३
तमब्रवीत्सत्यधृतिः प्रणतं त्वग्रतः स्थितम्
अस्मिन्कुरुक्षये वृत्ते दिष्टया त्वं पुत्र जीवसि ८४
विना राज्ञः प्रवेशाद्वै किमसि त्वमिहागतः
एतन्मे कारणं सर्वं विस्तरेण निवेदय ८५
युयुत्सुरुवाच
निहते शकुनौ तात सज्ञातिसुतबान्धवे
हतशेषपरीवारो राजा दुर्योधनस्ततः
स्वकं स हयमुत्सृज्य प्राङ्मुखः प्राद्रवद्भयात् ८६
अपक्रान्ते तु नृपतौ स्कन्धावारनिवेशनात्
भयव्याकुलितं सर्वं प्राद्रवन्नगरं प्रति ८७
ततो राज्ञः कलत्राणि भ्रातॄणां चास्य सर्वशः
वाहनेषु समारोप्य स्त्र्यध्यक्षाः प्राद्रवन्भयात् ८८
ततोऽह समनुज्ञाप्य राजानं सहकेशवम्
प्रविष्टो हास्तिनपुरं रक्षँल्लोकाद्धि वाच्यताम् ८९
एतच्छ्रुत्वा तु वचनं वैश्यापुत्रेण भाषितम्
प्राप्तकालमिति ज्ञात्वा विदुरः सर्वधर्मवित्
अपूजयदमेयात्मा युयुत्सुं वाक्यकोविदम् ९०
प्राप्तकालमिदं सर्वं भवतो भरतक्षये
अद्य त्वमिह विश्रान्तः श्वोऽभिगन्ता युधिष्ठिरम् ९१
एतावदुक्त्वा वचनं विदुरः सर्वधर्मवित्
युयुत्सुं समनुज्ञाप्य प्रविवेश नृपक्षयम्
युयुत्सुरपि तां रात्रिं स्वगृहे न्यवसत्तदा ९२
इति श्रीमहाभारते शल्यपर्वणि अष्टाविंशोऽध्यायः २८
समाप्तं ह्रदप्रवेशपर्व

## एकोनत्रिंशोऽध्यायः

धृतराष्ट्र उवाच
हतेषु सर्वसैन्येषु पाण्डुपुत्रै रणाजिरे
मम सैन्यावशिष्टास्ते किमकुर्वत सञ्जय १
कृतवर्मा कृपश्चैव द्रोणपुत्रश्च वीर्यवान्
दुर्योधनश्च मन्दात्मा राजा किमकरोत्तदा २
सञ्जय उवाच
संप्राद्रवत्सु दारेषु क्षत्रियाणां महात्मनाम्
विद्रुते शिबिरे शून्ये भृशोद्विग्नास्त्रयो रथाः ३
निशम्य पाण्डुपुत्राणां तदा विजयिनां स्वनम्
विद्रुतं शिबिरं दृष्ट्वा सायाह्ने राजगृद्धिनः
स्थानं नारोचयंस्तत्र ततस्ते ह्रदमभ्ययुः ४
युधिष्ठिरोऽपि धर्मात्मा भ्रातृभिः सहितो रणे
हृष्टः पर्यपतद्राजन्दुर्योधनवधेप्सया ५
मार्गमाणास्तु संक्रुद्धास्तव पुत्रं जयैषिणः
यत्नतोऽन्वेषमाणास्तु नैवापश्यञ्जनाधिपम् ६
स हि तीव्रेण वेगेन गदापाणिरपाक्रमत्
तं ह्रदं प्राविशच्चापि विष्टभ्यापः स्वमायया ७
यदा तु पाण्डवाः सर्वे सुपरिश्रान्तवाहनाः
ततः स्वशिबिरं प्राप्य व्यतिष्ठन्सहसैनिकाः ८
ततः कृपश्च द्रौणिश्च कृतवर्मा च सात्वतः
संनिविष्टेषु पार्थेषु प्रयातास्तं ह्रदं शनैः ९
ते तं ह्रदं समासाद्य यत्र शेते जनाधिपः
अभ्यभाषन्त दुर्धर्षं राजानं सुप्तमम्भसि १०
राजन्नुत्तिष्ठ युध्यस्व सहास्माभिर्युधिष्ठिरम्
जित्वा वा पृथिवीं भुङ्क्ष्व हतो वा स्वर्गमाप्नुहि ११
तेषामपि बलं सर्वं हतं दुर्योधन त्वया
प्रतिरब्धाश्च भूयिष्ठं ये शिष्टास्तत्र सैनिकाः १२
न ते वेगं विषहितुं शक्तास्तव विशां पते
अस्माभिरभिगुप्तस्य तस्मादुत्तिष्ठ भारत १३

दुर्योधन उवाच
दिष्ट्या पश्यामि वो मुक्तानीदृशात्पुरुषक्षयात्
पाण्डुकौरवसंमर्दाज्जीवमानान्नरर्षभान् १४
विजेष्यामो वयं सर्वे विश्रान्ता विगतक्लमाः
भवन्तश्च परिश्रान्ता वयं च भृशविक्षताः
उदीर्णं च बलं तेषां तेन युद्धं न रोचये १५
न त्वेतदद्भुतं वीरा यद्वो महदिदं मनः
अस्मासु च परा भक्तिर्न तु कालः पराक्रमे १६
विश्रम्यैकां निशामद्य भवद्भिः सहितो रणे
प्रतियोत्स्याम्यहं शत्रूञ्श्वो न मेऽस्त्यत्र संशयः १७
सञ्जय उवाच
एवमुक्तोऽब्रवीद्द्रौणी राजानं युद्धदुर्मदम्
उत्तिष्ठ राजन्भद्रं ते विजेष्यामो वयं परान् १८
इष्टापूर्तेन दानेन सत्येन च जपेन च
शपे राजन्यथा ह्यद्य निहनिष्यामि सोमकान् १९
मा स्म यज्ञकृतां प्रीतिं प्राप्नुयां सज्जनोचिताम्
यदीमां रजनीं व्युष्टां न निहन्मि परान्रणे २०
नाहत्वा सर्वपाञ्चालान्विमोक्ष्ये कवचं विभो
इति सत्यं ब्रवीम्येतत्तन्मे शृणु जनाधिप २१
तेषु संभाषमाणेषु व्याधास्तं देशमाययुः
मांसभारपरिश्रान्ताः पानीयार्थं यदृच्छया २२
ते हि नित्यं महाराज भीमसेनस्य लुब्धकाः
मांसभारानुपाजह्रुर्भक्त्या परमया विभो २३
ते तत्र विष्ठितास्तेषां सर्वं तद्वचनं रहः
दुर्योधनवचश्चैव शुश्रुवुः संगता मिथः २४
तेऽपि सर्वे महेष्वासा अयुद्धार्थिनि कौरवे
निर्बन्धं परमं चक्रुस्तदा वै युद्धकाङ्क्षिणः २५
तांस्तथा समुदीक्ष्याथ कौरवाणां महारथान्
अयुद्धमनसं चैव राजानं स्थितमम्भसि २६
तेषां श्रुत्वा च संवादं राज्ञश्च सलिले सतः

व्याधाभ्यजानन्राजेन्द्र सलिलस्थं सुयोधनम् २७
ते पूर्वं पाण्डुपुत्रेण पृष्टा ह्यासन्सुतं तव
यदृच्छोपगतास्तत्र राजानं परिमार्गिताः २८
ततस्ते पाण्डुपुत्रस्य स्मृत्वा तद्भाषितं तदा
अन्योन्यमब्रुवन्राजन्मृगव्याधाः शनैरिदम् २९
दुर्योधनं ख्यापयामो धनं दास्यति पाण्डवः
सुव्यक्तमिति नः ख्यातो ह्रदे दुर्योधनो नृपः ३०
तस्माद्गच्छामहे सर्वे यत्र राजा युधिष्ठिरः
आख्यातुं सलिले सुप्तं दुर्योधनममर्षणम् ३१
धृतराष्ट्रात्मजं तस्मै भीमसेनाय धीमते
शयानं सलिले सर्वे कथयामो धनुर्भृते ३२
स नो दास्यति सुप्रीतो धनानि बहुलान्युत
किं नो मांसेन शुष्केण परिक्लिष्टेन शोषिणा ३३
एवमुक्त्वा ततो व्याधाः संप्रहृष्टा धनार्थिनः
मांसभारानुपादाय प्रययुः शिबिरं प्रति ३४
पाण्डवाश्च महाराज लब्धलक्षाः प्रहारिणः
अपश्यमानाः समरे दुर्योधनमवस्थितम् ३५
निकृतेस्तस्य पापस्य ते पारं गमनेप्सवः
चारान्संप्रेषयामासुः समन्तात्तद्रणाजिरम् ३६
आगम्य तु ततः सर्वे नष्टं दुर्योधनं नृपम्
न्यवेदयन्त सहिता धर्मराजस्य सैनिकाः ३७
तेषां तद्वचनं श्रुत्वा चाराणां भरतर्षभ
चिन्तामभ्यगमत्तीव्रां निःशश्वास च पार्थिवः ३८
अथ स्थितानां पाण्डूनां दीनानां भरतर्षभ
तस्माद्देशादपक्रम्य त्वरिता लुब्धका विभो ३९
आजग्मुः शिबिरं हृष्टा दृष्ट्वा दुर्योधनं नृपम्
वार्यमाणाः प्रविष्टाश्च भीमसेनस्य पश्यतः ४०
ते तु पाण्डवमासाद्य भीमसेनं महाबलम्
तस्मै तत्सर्वमाचख्युर्यद्वृत्तं यच्च वै श्रुतम् ४१
ततो वृकोदरो राजन्दत्त्वा तेषां धनं बहु

धर्मराजाय तत्सर्वमाचचक्षे परन्तपः ४२
असौ दुर्योधनो राजन्विज्ञातो मम लुब्धकैः
संस्तभ्य सलिलं शेते यस्यार्थे परितप्यसे ४३
तद्वचो भीमसेनस्य प्रियं श्रुत्वा विशां पते
अजातशत्रुः कौन्तेयो हृष्टोऽभूत्सह सोदरैः ४४
तं च श्रुत्वा महेष्वासं प्रविष्टं सलिलह्रदम्
क्षिप्रमेव ततोऽगच्छत्पुरस्कृत्य जनार्दनम् ४५
ततः किलकिलाशब्दः प्रादुरासीद्विशां पते
पाण्डवानां प्रहृष्टानां पाञ्चालानां च सर्वशः ४६
सिंहनादांस्ततश्चक्रुः क्ष्वेडांश्च भरतर्षभ
त्वरिताः क्षत्रिया राजञ्जग्मुर्द्वैपायनं ह्रदम् ४७
ज्ञातः पापो धार्तराष्ट्रो दृष्टश्चेत्यसकृद्रणे
प्राक्रोशन्सोमकास्तत्र हृष्टरूपाः समन्ततः ४८
तेषामाशु प्रयातानां रथानां तत्र वेगिनाम्
बभूव तुमुलः शब्दो दिवस्पृक्पृथिवीपते ४९
दुर्योधनं परीप्सन्तस्तत्र तत्र युधिष्ठिरम्
अन्वयुस्त्वरितास्ते वै राजानं श्रान्तवाहनाः ५०
अर्जुनो भीमसेनश्च माद्रीपुत्रौ च पाण्डवौ
धृष्टद्युम्नश्च पाञ्चाल्यः शिखण्डी चापराजितः ५१
उत्तमौजा युधामन्युः सात्यकिश्चापराजितः
पाञ्चालानां च ये शिष्टा द्रौपदेयाश्च भारत
हयाश्च सर्वे नागाश्च शतशश्च पदातयः ५२
ततः प्राप्तो महाराज धर्मपुत्रो युधिष्ठिरः
द्वैपायनह्रदं ख्यातं यत्र दुर्योधनोऽभवत् ५३
शीतामलजलं हृद्यं द्वितीयमिव सागरम्
मायया सलिलं स्तभ्य यत्राभूत्ते सुतः स्थितः ५४
अत्यद्भुतेन विधिना दैवयोगेन भारत
सलिलान्तर्गतः शेते दुर्दर्शः कस्यचित्प्रभो
मानुषस्य मनुष्येन्द्र गदाहस्तो जनाधिपः ५५
ततो दुर्योधनो राजा सलिलान्तर्गतो वसन्

शुश्रुवे तुमुलं शब्दं जलदोपमनिःस्वनम् ५६
युधिष्ठिरस्तु राजेन्द्र ह्रदं तं सह सोदरैः
आजगाम महाराज तव पुत्रवधाय वै ५७
महता शङ्खनादेन रथनेमिस्वनेन च
उद्धुन्वंश्च महारेणुं कम्पयंश्चापि मेदिनीम् ५८
यौधिष्ठिरस्य सैन्यस्य श्रुत्वा शब्दं महारथाः
कृतवर्मा कृपो द्रौणी राजानमिदमब्रुवन् ५९
इमे ह्यायान्ति संहृष्टाः पाण्डवा जितकाशिनः
अपयास्यामहे तावदनुजानातु नो भवान् ६०
दुर्योधनस्तु तच्छ्रुत्वा तेषां तत्र यशस्विनाम्
तथेत्युक्त्वा ह्रदं तं वै माययास्तम्भयत्प्रभो ६१
ते त्वनुज्ञाप्य राजानं भृशं शोकपरायणाः
जग्मुर्दूरं महाराज कृपप्रभृतयो रथाः ६२
ते गत्वा दूरमध्वानं न्यग्रोधं प्रेक्ष्य मारिष
न्यविशन्त भृशं श्रान्ताश्चिन्तयन्तो नृपं प्रति ६३
विष्टभ्य सलिलं सुप्तो धार्तराष्ट्रो महाबलः
पाण्डवाश्चापि संप्राप्तास्तं देशं युद्धमीप्सवः ६४
कथं नु युद्धं भविता कथं राजा भविष्यति
कथं नु पाण्डवा राजन्प्रतिपत्स्यन्ति कौरवम् ६५
इत्येवं चिन्तयन्तस्ते रथेभ्योऽश्वान्विमुच्य ह
तत्रासाञ्चक्रिरे राजन्कृपप्रभृतयो रथाः ६६
इति श्रीमहाभारते शल्यपर्वणि एकोनत्रिंशोऽध्यायः २९

त्रिंशोऽध्यायः

सञ्जय उवाच
ततस्तेष्वपयातेषु रथेषु त्रिषु पाण्डवाः
ते ह्रदं प्रत्यपद्यन्त यत्र दुर्योधनोऽभवत् १
आसाद्य च कुरुश्रेष्ठ तदा द्वैपायनह्रदम्
स्तम्भितं धार्तराष्ट्रेण दृष्ट्वा तं सलिलाशयम्
वासुदेवमिदं वाक्यमब्रवीत्कुरुनन्दनः २

पश्येमां धार्तराष्ट्रेण मायामप्सु प्रयोजिताम्
विष्टभ्य सलिलं शेते नास्य मानुषतो भयम् ३
दैवीं मायामिमां कृत्वा सलिलान्तर्गतो ह्ययम्
निकृत्या निकृतिप्रज्ञो न मे जीवन्विमोक्ष्यते ४
यद्यस्य समरे साह्यं कुरुते वज्रभृत्स्वयम्
तथाप्येनं हतं युद्धे लोको द्रक्ष्यति माधव ५
श्रीवासुदेव उवाच
मायाविन इमां मायां मायया जहि भारत
मायावी मायया वध्यः सत्यमेतद्युधिष्ठिर ६
क्रियाभ्युपायैर्बहुलैर्मायामप्सु प्रयोज्य ह
जहि त्वं भरतश्रेष्ठ पापात्मानं सुयोधनम् ७
क्रियाभ्युपायैरिन्द्रेण निहता दैत्यदानवाः
क्रियाभ्युपायैर्बहुभिर्बलिर्बद्धो महात्मना ८
क्रियाभ्युपायैः पूर्वं हि हिरण्याक्षो महासुरः
हिरण्यकशिपुश्चैव क्रिययैव निषूदितौ
वृत्रश्च निहतो राजन्क्रिययैव न संशयः ९
तथा पौलस्त्यतनयो रावणो नाम राक्षसः
रामेण निहतो राजन्सानुबन्धः सहानुगः
क्रियया योगमास्थाय तथा त्वमपि विक्रम १०
क्रियाभ्युपायैर्निहतो मया राजन्पुरातने
तारकश्च महादैत्यो विप्रचित्तिश्च वीर्यवान् ११
वातापिरिल्वलश्चैव त्रिशिराश्च तथा विभो
सुन्दोपसुन्दावसुरौ क्रिययैव निषूदितौ १२
क्रियाभ्युपायैरिन्द्रेण त्रिदिवं भुज्यते विभो
क्रिया बलवती राजन्नान्यत्किंचिद्युधिष्ठिर १३
दैत्याश्च दानवाश्चैव राक्षसाः पार्थिवास्तथा
क्रियाभ्युपायैर्निहताः क्रियां तस्मात्समाचर १४
सञ्जय उवाच
इत्युक्तो वासुदेवेन पाण्डवः संशितव्रतः
जलस्थं तं महाराज तव पुत्रं महाबलम्

अभ्यभाषत कौन्तेयः प्रहसन्निव भारत १५
सुयोधन किमर्थोऽयमारम्भोऽप्सु कृतस्त्वया
सर्वं क्षत्रं घातयित्वा स्वकुलं च विशां पते १६
जलाशयं प्रविष्टोऽद्य वाञ्छञ्जीवितमात्मनः
उत्तिष्ठ राजन्युध्यस्व सहास्माभिः सुयोधन १७
स च दर्पो नरश्रेष्ठ स च मानः क्व ते गतः
यस्त्वं संस्तभ्य सलिलं भीतो राजन्व्यवस्थितः १८
सर्वे त्वां शूर इत्येव जना जल्पन्ति संसदि
व्यर्थं तद्भवतो मन्ये शौर्यं सलिलशायिनः १९
उत्तिष्ठ राजन्युध्यस्व क्षत्रियोऽसि कुलोद्भवः
कौरवेयो विशेषेण कुले जन्म च संस्मर २०
स कथं कौरवे वंशे प्रशंसञ्जन्म चात्मनः
युद्धाद्भीतस्ततस्तोयं प्रविश्य प्रतितिष्ठसि २१
अयुद्धमव्यवस्थानं नैष धर्मः सनातनः
अनार्यजुष्टमस्वर्ग्यं रणे राजन्पलायनम् २२
कथं पारमगत्वा हि युद्धे त्वं वै जिजीविषुः
इमान्निपतितान्दृष्ट्वा पुत्रान्भ्रातॄन्पितॄंस्तथा २३
संबन्धिनो वयस्यांश्च मातुलान्बान्धवांस्तथा
घातयित्वा कथं तात ह्रदे तिष्ठसि सांप्रतम् २४
शूरमानी न शूरस्त्वं मिथ्या वदसि भारत
शूरोऽहमिति दुर्बुद्धे सर्वलोकस्य शृण्वतः २५
न हि शूराः पलायन्ते शत्रून्दृष्ट्वा कथंचन
ब्रूहि वा त्वं यया धृत्या शूर त्यजसि संगरम् २६
स त्वमुत्तिष्ठ युध्यस्व विनीय भयमात्मनः
घातयित्वा सर्वसैन्यं भ्रातॄंश्चैव सुयोधन २७
नेदानीं जीविते बुद्धिः कार्या धर्मचिकीर्षया
क्षत्रधर्ममपाश्रित्य त्वद्विधेन सुयोधन २८
यत्तत्कर्णमुपाश्रित्य शकुनिं चापि सौबलम्
अमर्त्य इव संमोहात्त्वमात्मानं न बुद्धवान् २९
तत्पापं सुमहत्कृत्वा प्रतियुध्यस्व भारत

कथं हि त्वद्विधो मोहाद्रोचयेत पलायनम् ३०
क्व ते तत्पौरुषं यातं क्व च मानः सुयोधन
क्व च विक्रान्तता याता क्व च विस्फूर्जितं महत् ३१
क्व ते कृतास्त्रता याता किं च शेषे जलाशये
स त्वमुत्तिष्ठ युध्यस्व क्षत्रधर्मेण भारत ३२
अस्मान्वा त्वं पराजित्य प्रशाधि पृथिवीमिमाम्
अथ वा निहतोऽस्माभिर्भूमौ स्वप्स्यसि भारत ३३
एष ते प्रथमो धर्मः सृष्टो धात्रा महात्मना
तं कुरुष्व यथातथ्यं राजा भव महारथ ३४
दुर्योधन उवाच
नैतच्चित्रं महाराज यद्भीः प्राणिनमाविशेत्
न च प्राणभयाद्भीतो व्यपयातोऽस्मि भारत ३५
अरथश्चानिषङ्गी च निहतः पार्ष्णिसारथिः
एकश्चाप्यगणः संख्ये प्रत्याश्वासमरोचयम् ३६
न प्राणहेतोर्न भयान्न विषादाद्विशां पते
इदमम्भः प्रविष्टोऽस्मि श्रमात्त्विदमनुष्ठितम् ३७
त्वं चाश्वसिहि कौन्तेय ये चाप्यनुगतास्तव
अहमुत्थाय वः सर्वान्प्रतियोत्स्यामि संयुगे ३८
युधिष्ठिर उवाच
आश्वस्ता एव सर्वे स्म चिरं त्वां मृगयामहे
तदिदानीं समुत्तिष्ठ युध्यस्वेह सुयोधन ३९
हत्वा वा समरे पार्थान्स्फीतं राज्यमवाप्नुहि
निहतो वा रणेऽस्माभिर्वीरलोकमवाप्स्यसि ४०
दुर्योधन उवाच
यदर्थं राज्यमिच्छामि कुरूणां कुरुनन्दन
त इमे निहताः सर्वे भ्रातरो मे जनेश्वर ४१
क्षीणरत्नां च पृथिवीं हतक्षत्रियपुंगवाम्
नाभ्युत्सहाम्यहं भोक्तुं विधवामिव योषितम् ४२
अद्यापि त्वहमाशंसे त्वां विजेतुं युधिष्ठिर
भङ्क्त्वा पाञ्चालपाण्डूनामुत्साहं भरतर्षभ ४३

न त्विदानीमहं मन्ये कार्यं युद्धेन कर्हिचित्
द्रोणे कर्णे च संशान्ते निहते च पितामहे ४४
अस्त्विदानीमियं राजन्केवला पृथिवी तव
असहायो हि को राजा राज्यमिच्छेत्प्रशासितुम् ४५
सुहृदस्तादृशान्हित्वा पुत्रान्भ्रातॄन्पितॄनपि
भवद्भिश्च हृते राज्ये को नु जीवेत मादृशः ४६
अहं वनं गमिष्यामि ह्यजिनैः प्रतिवासितः
रतिर्हि नास्ति मे राज्ये हतपक्षस्य भारत ४७
हतबान्धवभूयिष्ठा हताश्वा हतकुञ्जरा
एषा ते पृथिवी राजन्भुङ्क्ष्वैनां विगतज्वरः ४८
वनमेव गमिष्यामि वसानो मृगचर्मणी
न हि मे निर्जितस्यास्ति जीवतेऽद्य स्पृहा विभो ४९
गच्छ त्वं भुङ्क्ष्व राजेन्द्र पृथिवीं निहतेश्वराम्
हतयोधां नष्टरत्नां क्षीणवप्रां यथासुखम् ५०
युधिष्ठिर उवाच
आर्तप्रलापान्मा तात सलिलस्थः प्रभाषथाः
नैतन्मनसि मे राजन्वाशितं शकुनेरिव ५१
यदि चापि समर्थः स्यास्त्वं दानाय सुयोधन
नाहमिच्छेयमवनिं त्वया दत्तां प्रशासितुम् ५२
अधर्मेण न गृह्णीयां त्वया दत्तां महीमिमाम्
न हि धर्मः स्मृतो राजन्क्षत्रियस्य प्रतिग्रहः ५३
त्वया दत्तां न चेच्छेयं पृथिवीमखिलामहम्
त्वां तु युद्धे विनिर्जित्य भोक्तास्मि वसुधामिमाम् ५४
अनीश्वरश्च पृथिवीं कथं त्वं दातुमिच्छसि
त्वयेयं पृथिवी राजन्किं न दत्ता तदैव हि ५५
धर्मतो याचमानानां शमार्थं च कुलस्य नः
वार्ष्णेयं प्रथमं राजन्प्रत्याख्याय महाबलम् ५६
किमिदानीं ददासि त्वं को हि ते चित्तविभ्रमः
अभियुक्तस्तु को राजा दातुमिच्छेद्धि मेदिनीम् ५७
न त्वमद्य महीं दातुमीशः कौरवनन्दन

आच्छेत्तुं वा बलाद्राजन्स कथं दातुमिच्छसि
मां तु निर्जित्य संग्रामे पालयेमां वसुंधराम् ५८
सूच्यग्रेणापि यद्भूमेरपि ध्रीयेत भारत
तन्मात्रमपि नो मह्यं न ददाति पुरा भवान् ५९
स कथं पृथिवीमेतां प्रददासि विशां पते
सूच्यग्रं नात्यजः पूर्वं स कथं त्यजसि क्षितिम् ६०
एवमैश्वर्यमासाद्य प्रशास्य पृथिवीमिमाम्
को हि मूढो व्यवस्येत शत्रोर्दातुं वसुंधराम् ६१
त्वं तु केवलमौर्ख्येण विमूढो नावबुध्यसे
पृथिवीं दातुकामोऽपि जीवितेनाद्य मोक्ष्यसे ६२
अस्मान्वा त्वं पराजित्य प्रशाधि पृथिवीमिमाम्
अथ वा निहतोऽस्माभिर्व्रज लोकाननुत्तमान् ६३
आवयोर्जीवतो राजन्मयि च त्वयि च ध्रुवम्
संशयः सर्वभूतानां विजये नो भविष्यति ६४
जीवितं तव दुष्प्रज्ञ मयि संप्रति वर्तते
जीवयेयं त्वहं कामं न तु त्वं जीवितुं क्षमः ६५
दहने हि कृतो यत्नस्त्वयास्मासु विशेषतः
आशीविषैर्विषैश्चापि जले चापि प्रवेशनैः
त्वया विनिकृता राजन्राज्यस्य हरणेन च ६६
एतस्मात्कारणात्पाप जीवितं ते न विद्यते
उत्तिष्ठोत्तिष्ठ युध्यस्व तत्ते श्रेयो भविष्यति ६७
सञ्जय उवाच
एवं तु विविधा वाचो जययुक्ताः पुनः पुनः
कीर्तयन्ति स्म ते वीरास्तत्र तत्र जनाधिप ६८
इति श्रीमहाभारते शल्यपर्वणि त्रिंशोऽध्यायः ३०

एकत्रिंशोऽध्यायः

धृतराष्ट्र उवाच
एवं संतर्ज्यमानस्तु मम पुत्रो महीपतिः
प्रकृत्या मन्युमान्वीरः कथमासीत्परंतपः १

न हि संतर्जना तेन श्रुतपूर्वा कदाचन
राजभावेन मान्यश्च सर्वलोकस्य सोऽभवत् २
इयं च पृथिवी सर्वा सम्लेच्छाटविका भृशम्
प्रसादाद्ध्रियते यस्य प्रत्यक्षं तव सञ्जय ३
स तथा तर्ज्यमानस्तु पाण्डुपुत्रैर्विशेषतः
विहीनश्च स्वकैर्भृत्यैर्निर्जने चावृतो भृशम् ४
श्रुत्वा स कटुका वाचो जययुक्ताः पुनः पुनः
किमब्रवीत्पाण्डवेयांस्तन्ममाचक्ष्व सञ्जय ५
सञ्जय उवाच
तर्ज्यमानस्तदा राजन्नुदकस्थस्तवात्मजः
युधिष्ठिरेण राजेन्द्र भ्रातृभिः सहितेन ह ६
श्रुत्वा स कटुका वाचो विषमस्थो जनाधिपः
दीर्घमुष्णं च निःश्वस्य सलिलस्थः पुनः पुनः ७
सलिलान्तर्गतो राजा धुन्वन्हस्तौ पुनः पुनः
मनश्चकार युद्धाय राजानं चाभ्यभाषत ८
यूयं ससुहृदः पार्थाः सर्वे सरथवाहनाः
अहमेकः परिद्यूनो विरथो हतवाहनः ९
आत्तशस्त्रै रथगतैर्बहुभिः परिवारितः
कथमेकः पदातिः सन्नशस्त्रो योद्धुमुत्सहे १०
एकैकेन तु मां यूयं योधयध्वं युधिष्ठिर
न ह्येको बहुभिर्वीरैर्न्याय्यं योधयितुं युधि ११
विशेषतो विकवचः श्रान्तश्चापः समाश्रितः
भृशं विक्षतगात्रश्च श्रान्तवाहनसैनिकः १२
न मे त्वत्तो भयं राजन्न च पार्थाद्वृकोदरात्
फल्गुनाद्वासुदेवाद्वा पाञ्चालेभ्योऽथ वा पुनः १३
यमाभ्यां युयुधानाद्वा ये चान्ये तव सैनिकाः
एकः सर्वानहं क्रुद्धो न तान्योद्धुमिहोत्सहे १४
धर्ममूला सतां कीर्तिर्मनुष्याणां जनाधिप
धर्मं चैवेह कीर्तिं च पालयन्प्रब्रवीम्यहम् १५
अहमुत्थाय वः सर्वान्प्रतियोत्स्यामि संयुगे

अन्वंशाभ्यागतान्सर्वानृतून्संवत्सरो यथा १६
अद्य वः सरथान्साश्वानशस्त्रो विरथोऽपि सन्
नक्षत्राणीव सर्वाणि सविता रात्रिसंक्षये
तेजसा नाशयिष्यामि स्थिरीभवत पाण्डवाः १७
अद्यानृण्यं गमिष्यामि क्षत्रियाणां यशस्विनाम्
बाह्लीकद्रोणभीष्माणां कर्णस्य च महात्मनः १८
जयद्रथस्य शूरस्य भगदत्तस्य चोभयोः
मद्रराजस्य शल्यस्य भूरिश्रवस एव च १९
पुत्राणां भरतश्रेष्ठ शकुनेः सौबलस्य च
मित्राणां सुहृदां चैव बान्धवानां तथैव च २०
आनृण्यमद्य गच्छामि हत्वा त्वां भ्रातृभिः सह
एतावदुक्त्वा वचनं विरराम जनाधिपः २१
युधिष्ठिर उवाच
दिष्ट्या त्वमपि जानीषे क्षत्रधर्मं सुयोधन
दिष्ट्या ते वर्तते बुद्धिर्युद्धायैव महाभुज २२
दिष्ट्या शूरोऽसि कौरव्य दिष्ट्या जानासि संगरम्
यस्त्वमेको हि नः सर्वान्संयुगे योद्धुमिच्छसि २३
एक एकेन संगम्य यत्ते संमतमायुधम्
तत्त्वमादाय युध्यस्व प्रेक्षकास्ते वयं स्थिताः २४
अयमिष्टं च ते कामं वीर भूयो ददाम्यहम्
हत्वैकं भवतो राज्यं हतो वा स्वर्गमाप्नुहि २५
दुर्योधन उवाच
एकश्चेद्योद्धुमाक्रन्दे वरोऽद्य मम दीयते
आयुधानामियं चापि वृता त्वत्संमते गदा २६
भ्रातॄणां भवतामेकः शक्यं मां योऽभिमन्यते
पदातिर्गदया संख्ये स युध्यतु मया सह २७
वृत्तानि रथयुद्धानि विचित्राणि पदे पदे
इदमेकं गदायुद्धं भवत्वद्याद्भुतं महत् २८
अन्नानामपि पर्यायं कर्तुमिच्छन्ति मानवाः
युद्धानामपि पर्यायो भवत्वनुमते तव २९

गदया त्वां महाबाहो विजेष्यामि सहानुजम्
पाञ्चालान्सृञ्जयांश्चैव ये चान्ये तव सैनिकाः ३०
युधिष्ठिर उवाच
उत्तिष्ठोत्तिष्ठ गान्धारे मां योधय सुयोधन
एक एकेन संगम्य संयुगे गदया बली ३१
पुरुषो भव गान्धारे युध्यस्व सुसमाहितः
अद्य ते जीवितं नास्ति यद्यपि त्वं मनोजवः ३२
सञ्जय उवाच
एतत्स नरशार्दूलो नामृष्यत तवात्मजः
सलिलान्तर्गतः श्वभ्रे महानाग इव श्वसन् ३३
तथासौ वाक्प्रतोदेन तुद्यमानः पुनः पुनः
वाचं न ममृषे धीमानुत्तमाश्वः कशामिव ३४
संक्षोभ्य सलिलं वेगाद्गदामादाय वीर्यवान्
अद्रिसारमयीं गुर्वीं काञ्चनाङ्गदभूषणाम्
अन्तर्जलात्समुत्तस्थौ नागेन्द्र इव निःश्वसन् ३५
स भित्त्वा स्तम्भितं तोयं स्कन्धे कृत्वायसीं गदाम्
उदतिष्ठत पुत्रस्ते प्रतपन्रश्मिमानिव ३६
ततः शैक्यायसीं गुर्वीं जातरूपपरिष्कृताम्
गदां परामृशद्धीमान्धार्तराष्ट्रो महाबलः ३७
गदाहस्तं तु तं दृष्ट्वा सशृङ्गमिव पर्वतम्
प्रजानामिव संक्रुद्धं शूलपाणिमवस्थितम्
सगदो भारतो भाति प्रतपन्भास्करो यथा ३८
तमुत्तीर्णं महाबाहुं गदाहस्तमरिंदमम्
मेनिरे सर्वभूतानि दण्डहस्तमिवान्तकम् ३९
वज्रहस्तं यथा शक्रं शूलहस्तं यथा हरम्
ददृशुः सर्वपाञ्चालाः पुत्रं तव जनाधिप ४०
तमुत्तीर्णं तु संप्रेक्ष्य समहृष्यन्त सर्वशः
पाञ्चालाः पाण्डवेयाश्च तेऽन्योन्यस्य तलान्ददुः ४१
अवहासं तु तं मत्वा पुत्रो दुर्योधनस्तव
उद्वृत्य नयने क्रुद्धो दिधक्षुरिव पाण्डवान् ४२

त्रिशिखां भ्रुकुटीं कृत्वा संदष्टदशनच्छदः
प्रत्युवाच ततस्तान्वै पाण्डवान्सहकेशवान् ४३
अवहासस्य वोऽस्याद्य प्रतिवक्तास्मि पाण्डवाः
गमिष्यथ हताः सद्यः सपाञ्चाला यमक्षयम् ४४
उत्थितस्तु जलात्तस्मात्पुत्रो दुर्योधनस्तव
अतिष्ठत गदापाणी रुधिरेण समुक्षितः ४५
तस्य शोणितदिग्धस्य सलिलेन समुक्षितम्
शरीरं स्म तदा भाति स्रवन्निव महीधरः ४६
तमुद्यतगदं वीरं मेनिरे तत्र पाण्डवाः
वैवस्वतमिव क्रुद्धं किंकरोद्यतपाणिनम् ४७
स मेघनिनदो हर्षान्नदन्निव च गोवृषः
आजुहाव ततः पार्थान्गदया युधि वीर्यवान् ४८
दुर्योधन उवाच
एकैकेन च मां यूयमासीदत युधिष्ठिर
न ह्येको बहुभिर्न्याय्यो वीरो योधयितुं युधि ४९
न्यस्तवर्मा विशेषेण श्रान्तश्चाप्सु परिप्लुतः
भृशं विक्षतगात्रश्च हतवाहनसैनिकः ५०
युधिष्ठिर उवाच
नाभूदियं तव प्रज्ञा कथमेवं सुयोधन
यदाभिमन्युं बहवो जघ्नुर्युधि महारथाः ५१
आमुञ्च कवचं वीर मूर्धजान्यमयस्व च
यच्चान्यदपि ते नास्ति तदप्यादत्स्व भारत
इममेकं च ते कामं वीर भूयो ददाम्यहम् ५२
पञ्चानां पाण्डवेयानां येन योद्धुमिहेच्छसि
तं हत्वा वै भवान्राजा हतो वा स्वर्गमाप्नुहि
ऋते च जीविताद्वीर युद्धे किं कुर्म ते प्रियम् ५३
सञ्जय उवाच
ततस्तव सुतो राजन्वर्म जग्राह काञ्चनम्
विचित्रं च शिरस्त्राणं जाम्बूनदपरिष्कृतम् ५४
सोऽवबद्धशिरस्त्राणः शुभकाञ्चनवर्मभृत्

रराज राजन्पुत्रस्ते काञ्चनः शैलराडिव ५५
संनद्धः स गदी राजन्सज्जः संग्राममूर्धनि
अब्रवीत्पाण्डवान्सर्वान्पुत्रो दुर्योधनस्तव ५६
भ्रातॄणां भवतामेको युध्यतां गदया मया
सहदेवेन वा योत्स्ये भीमेन नकुलेन वा ५७
अथ वा फाल्गुनेनाद्य त्वया वा भरतर्षभ
योत्स्येऽहं संगरं प्राप्य विजेष्ये च रणाजिरे ५८
अहमद्य गमिष्यामि वैरस्यान्तं सुदुर्गमम्
गदया पुरुषव्याघ्र हेमपट्टविनद्धया ५९
गदायुद्धे न मे कश्चित्सदृशोऽस्तीति चिन्तय
गदया वो हनिष्यामि सर्वानेव समागतान्
गृह्णातु स गदां यो वै युध्यतेऽद्य मया सह ६०
इति श्रीमहाभारते शल्यपर्वणि एकत्रिंशोऽध्यायः ३१

## द्वात्रिंशोऽध्यायः

सञ्जय उवाच
एवं दुर्योधने राजन्गर्जमाने मुहुर्मुहुः
युधिष्ठिरस्य संक्रुद्धो वासुदेवोऽब्रवीदिदम् १
यदि नाम ह्ययं युद्धे वरयेत्त्वां युधिष्ठिर
अर्जुनं नकुलं वापि सहदेवमथापि वा २
किमिदं साहसं राजंस्त्वया व्याहृतमीदृशम्
एकमेव निहत्याजौ भव राजा कुरुष्विति ३
एतेन हि कृता योग्या वर्षाणीह त्रयोदश
आयसे पुरुषे राजन्भीमसेनजिघांसया ४
कथं नाम भवेत्कार्यमस्माभिर्भरतर्षभ
साहसं कृतवांस्त्वं तु ह्यनुक्रोशान्नृपोत्तम ५
नान्यमस्यानुपश्यामि प्रतियोद्धारमाहवे
ऋते वृकोदरात्पार्थात्स च नातिकृतश्रमः ६
तदिदं द्यूतमारब्धं पुनरेव यथा पुरा
विषमं शकुनेश्चैव तव चैव विशां पते ७

बली भीमः समर्थश्च कृती राजा सुयोधनः
बलवान् वा कृती वेति कृती राजन्विशिष्यते ८
सोऽय राजंस्त्वया शत्रुः समे पथि निवेशितः
न्यस्तश्चात्मा सुविषमे कृच्छ्रमापादिता वयम् ९
को नु सर्वान्विनिर्जित्य शत्रूनेकेन वैरिणा
पणित्वा चैकपाणेन रोचयेदेवमाहवम् १०
न हि पश्यामि तं लोके गदाहस्तं नरोत्तमम्
युध्येदुर्योधनं संख्ये कृतित्वाद्धि विशेषयेत् ११
फल्गुनं वा भवन्तं वा माद्रीपुत्रावथापि वा
न समर्थानहंमन्ये गदाहस्तस्य संयुगे १२
स कथं वदसे शत्रुं युध्यस्व गदयेति ह
एकं च नो निहत्याजौ भव राजेति भारत १३
वृकोदरं समासाद्य संशयो विजये हि नः
न्यायतो युध्यमानानां कृती ह्येष महाबलः १४
भीमसेन उवाच
मधुसूदन मा कार्षीर्विषादं यदुनन्दन
अद्य पारं गमिष्यामि वैरस्य भृशदुर्गमम् १५
अहं सुयोधनं संख्ये हनिष्यामि न संशयः
विजयो वै ध्रुवं कृष्ण धर्मराजस्य दृश्यते १६
अध्यर्धेन गुणेनेयं गदा गुरुतरी मम
न तथा धार्तराष्ट्रस्य मा कार्षीर्माधव व्यथाम् १७
सामरानपि लोकांस्त्रीन्नानाशस्त्रधरान्युधि
योधयेयं रणे हृष्टः किमुताद्य सुयोधनम् १८
सञ्जय उवाच
तथा संभाषमाणं तु वासुदेवो वृकोदरम्
हृष्टः संपूजयामास वचनं चेदमब्रवीत् १९
त्वामाश्रित्य महाबाहो धर्मराजो युधिष्ठिरः
निहतारिः स्वकां दीप्तां श्रियं प्राप्तो न संशयः २०
त्वया विनिहताः सर्वे धृतराष्ट्रसुता रणे
राजानो राजपुत्राश्च नागाश्च विनिपातिताः २१

कलिङ्गा मागधाः प्राच्या गान्धाराः कुरवस्तथा
त्वामासाद्य महायुद्धे निहताः पाण्डुनन्दन २२
हत्वा दुर्योधनं चापि प्रयच्छोर्वीं ससागराम्
धर्मराजाय कौन्तेय यथा विष्णुः शचीपतेः २३
त्वां च प्राप्य रणे पापो धार्तराष्ट्रो विनङ्क्ष्यति
त्वमस्य सक्थिनी भङ्क्त्वा प्रतिज्ञां पारयिष्यसि २४
यत्नेन तु सदा पार्थ योद्धव्यो धृतराष्ट्रजः
कृती च बलवांश्चैव युद्धशौण्डश्च नित्यदा २५
ततस्तु सात्यकी राजन्पूजयामास पाण्डवम्
विविधाभिश्च तं वाग्भिः पूजयामास माधवः २६
पाञ्चालाः पाण्डवेयाश्च धर्मराजपुरोगमाः
तद्वचो भीमसेनस्य सर्व एवाभ्यपूजयन् २७
ततो भीमबलो भीमो युधिष्ठिरमथाब्रवीत्
सृञ्जयैः सह तिष्ठन्तं तपन्तमिव भास्करम् २८
अहमेतेन संगम्य संयुगे योद्धुमुत्सहे
न हि शक्तो रणे जेतुं मामेष पुरुषाधमः २९
अद्य क्रोधं विमोक्ष्यामि निहितं हृदये भृशम्
सुयोधने धार्तराष्ट्रे खाण्डवेऽग्निमिवार्जुनः ३०
शल्यमद्योद्धरिष्यामि तव पाण्डव हृच्छयम्
निहत्य गदया पापमद्य राजन्सुखी भव ३१
अद्य कीर्तिमयीं मालां प्रतिमोक्ष्ये तवानघ
प्राणाञ्श्रियं च राज्यं च मोक्ष्यतेऽद्य सुयोधनः ३२
राजा च धृतराष्ट्रोऽद्य श्रुत्वा पुत्रं मया हतम्
स्मरिष्यत्यशुभं कर्म यत्तच्छकुनिबुद्धिजम् ३३
इत्युक्त्वा भरतश्रेष्ठो गदामुद्यम्य वीर्यवान्
उदतिष्ठत युद्धाय शक्रो वृत्रमिवाह्वयन् ३४
तमेकाकिनमासाद्य धार्तराष्ट्रं महाबलम्
निर्यूथमिव मातङ्गं समहृष्यन्त पाण्डवाः ३५
तमुद्यतगदं दृष्ट्वा कैलासमिव शृङ्गिणम्
भीमसेनस्तदा राजन्दुर्योधनमथाब्रवीत् ३६

राज्ञापि धृतराष्ट्रेण त्वया चास्मासु यत्कृतम्
स्मर तद्दुष्कृतं कर्म यद्वृत्तं वारणावते ३७
द्रौपदी च परिक्लिष्टा सभामध्ये रजस्वला
द्यूते यद्विजितो राजा शकुनेर्बुद्धिनिश्चयात् ३८
यानि चान्यानि दुष्टात्मन्पापानि कृतवानसि
अनागःसु च पार्थेषु तस्य पश्य महत्फलम् ३९
त्वत्कृते निहतः शेते शरतल्पे महायशाः
गाङ्गेयो भरतश्रेष्ठः सर्वेषां नः पितामहः ४०
हतो द्रोणश्च कर्णश्च हतः शल्यः प्रतापवान्
वैरस्य चादिकर्तासौ शकुनिर्निहतो युधि ४१
भ्रातरस्ते हताः शूराः पुत्राश्च सहसैनिकाः
राजानश्च हताः शूराः समरेष्वनिवर्तिनः ४२
एते चान्ये च निहता बहवः क्षत्रियर्षभाः
प्रातिकामी तथा पापो द्रौपद्याः क्लेशकृद्धतः ४३
अवशिष्टस्त्वमेवैकः कुलघ्नोऽधमपूरुषः
त्वामप्यद्य हनिष्यामि गदया नात्र संशयः ४४
अद्य तेऽहं रणे दर्पं सर्वं नाशयिता नृप
राज्याशां विपुलां राजन्पाण्डवेषु च दुष्कृतम् ४५
दुर्योधन उवाच
किं कत्थितेन बहुधा युध्यस्वाद्य मया सह
अद्य तेऽहं विनेष्यामि युद्धश्रद्धां वृकोदर ४६
किं न पश्यसि मां पाप गदायुद्धे व्यवस्थितम्
हिमवच्छिखराकारां प्रगृह्य महतीं गदाम् ४७
गदिनं कोऽद्य मां पाप जेतुमुत्सहते रिपुः
न्यायतो युध्यमानस्य देवेष्वपि पुरंदरः ४८
मा वृथा गर्ज कौन्तेय शारदाभ्रमिवाजलम्
दर्शयस्व बलं युद्धे यावत्तत्तेऽद्य विद्यते ४९
तस्य तद्वचनं श्रुत्वा पाञ्चालाः सहसृञ्जयाः
सर्वे संपूजयामासुस्तद्वचो विजिगीषवः ५०
तं मत्तमिव मातङ्गं तलशब्देन मानवाः

भूयः संहर्षयामासू राजन्दुर्योधनं नृपम् ५१
बृंहन्ति कुञ्जरास्तत्र हया हेषन्ति चासकृत्
शस्त्राणि संप्रदीप्यन्ते पाण्डवानां जयैषिणाम् ५२
इति श्रीमहाभारते शल्यपर्वणि द्वात्रिंशोऽध्यायः ३२

## त्रयस्त्रिंशोऽध्यायः

सञ्जय उवाच
तस्मिन्युद्धे महाराज संप्रवृत्ते सुदारुणे
उपविष्टेषु सर्वेषु पाण्डवेषु महात्मसु १
ततस्तालध्वजो रामस्तयोर्युद्ध उपस्थिते
श्रुत्वा तच्छिष्ययो राजन्नाजगाम हलायुधः २
तं दृष्ट्वा परमप्रीताः पूजयित्वा नराधिपाः
शिष्ययोः कौशलं युद्धे पश्य रामेति चाब्रुवन् ३
अब्रवीच्च तदा रामो दृष्ट्वा कृष्णं च पाण्डवम्
दुर्योधनं च कौरव्यं गदापाणिमवस्थितम् ४
चत्वारिंशदहान्यद्य द्वे च मे निःसृतस्य वै
पुष्येण संप्रयातोऽस्मि श्रवणे पुनरागतः
शिष्ययोर्वै गदायुद्धं द्रष्टुकामोऽस्मि माधव ५
ततो युधिष्ठिरो राजा परिष्वज्य हलायुधम्
स्वागतं कुशलं चास्मै पर्यपृच्छद्यथातथम् ६
कृष्णौ चापि महेष्वासावभिवाद्य हलायुधम्
सस्वजाते परिप्रीतौ प्रियमाणौ यशस्विनौ ७
माद्रीपुत्रौ तथा शूरौ द्रौपद्याः पञ्च चात्मजाः
अभिवाद्य स्थिता राजन्रौहिणेयं महाबलम् ८
भीमसेनोऽथ बलवान्पुत्रस्तव जनाधिप
तथैव चोद्यतगदौ पूजयामासतुर्बलम् ९
स्वागतेन च ते तत्र प्रतिपूज्य पुनः पुनः
पश्य युद्धं महाबाहो इति ते राममब्रुवन्
एवमूचुर्महात्मानं रौहिणेयं नराधिपाः १०
परिष्वज्य तदा रामः पाण्डवान्सृञ्जयानपि

अपृच्छत्कुशलं सर्वान्पाण्डवांश्चामितौजसः
तथैव ते समासाद्य पप्रच्छुस्तमनामयम् ११
प्रत्यभ्यर्च्य हली सर्वान्क्षत्रियांश्च महामनाः
कृत्वा कुशलसंयुक्तां संविदं च यथावयः १२
जनार्दनं सात्यकिं च प्रेम्णा स परिषस्वजे
मूर्ध्नि चैतावुपाघ्राय कुशलं पर्यपृच्छत १३
तौ चैनं विधिवद्राजन्पूजयामासतुर्गुरुम्
ब्रह्माणमिव देवेशमिन्द्रोपेन्द्रौ मुदा युतौ १४
ततोऽब्रवीद्धर्मसुतो रौहिणेयमरिंदमम्
इदं भ्रात्रोर्महायुद्धं पश्य रामेति भारत १५
तेषां मध्ये महाबाहुः श्रीमान्केशवपूर्वजः
न्यविशत्परमप्रीतः पूज्यमानो महारथैः १६
स बभौ राजमध्यस्थो नीलवासाः सितप्रभः
दिवीव नक्षत्रगणैः परिकीर्णो निशाकरः १७
ततस्तयोः संनिपातस्तुमुलो लोमहर्षणः
आसीदन्तकरो राजन्वैरस्य तव पुत्रयोः १८
इति श्रीमहाभारते शल्यपर्वणि त्रयस्त्रिंशोऽध्यायः ३३

## चतुस्त्रिंशोऽध्यायः

जनमेजय उवाच
पूर्वमेव यदा रामस्तस्मिन्युद्ध उपस्थिते
आमंत्र्य केशवं यातो वृष्णिभिः सहितः प्रभुः १
साहाय्यं धार्तराष्ट्रस्य न च कर्तास्मि केशव
न चैव पाण्डुपुत्राणां गमिष्यामि यथागतम् २
एवमुक्त्वा तदा रामो यातः शत्रुनिबर्हणः
तस्य चागमनं भूयो ब्रह्मञ्शंसितुमर्हसि ३
आख्याहि मे विस्तरतः कथं राम उपस्थितः
कथं च दृष्टवान्युद्धं कुशलो ह्यसि सत्तम ४
वैशम्पायन उवाच
उपप्लव्ये निविष्टेषु पाण्डवेषु महात्मसु

प्रेषितो धृतराष्ट्रस्य समीपं मधुसूदनः
शमं प्रति महाबाहो हितार्थं सर्वदेहिनाम् ५
स गत्वा हास्तिनपुरं धृतराष्ट्रं समेत्य च
उक्तवान्वचनं तथ्यं हितं चैव विशेषतः
न च तत्कृतवान्राजा यथाख्यातं हि ते पुरा ६
अनवाप्य शमं तत्र कृष्णः पुरुषसत्तमः
आगच्छत महाबाहुरुपप्लव्यं जनाधिप ७
ततः प्रत्यागतः कृष्णो धार्तराष्ट्रविसर्जितः
अक्रियायां नरव्याघ्र पाण्डवानिदमब्रवीत् ८
न कुर्वन्ति वचो मह्यं कुरवः कालचोदिताः
निर्गच्छध्वं पाण्डवेयाः पुष्येण सहिता मया ९
ततो विभज्यमानेषु बलेषु बलिनां वरः
प्रोवाच भ्रातरं कृष्णं रौहिणेयो महामनाः १०
तेषामपि महाबाहो साहाय्यं मधुसूदन
क्रियतामिति तत्कृष्णो नास्य चक्रे वचस्तदा ११
ततो मन्युपरीतात्मा जगाम यदुनन्दनः
तीर्थयात्रां हलधरः सरस्वत्यां महायशाः
मैत्रे नक्षत्रयोगे स्म सहितः सर्वयादवैः १२
आश्रयामास भोजस्तु दुर्योधनमरिंदमः
युयुधानेन सहितो वासुदेवस्तु पाण्डवान् १३
रौहिणेये गते शूरे पुष्येण मधुसूदनः
पाण्डवेयान्पुरस्कृत्य ययावभिमुखः कुरून् १४
गच्छन्नेव पथिस्थस्तु रामः प्रेष्यानुवाच ह
संभारांस्तीर्थयात्रायां सर्वोपकरणानि च
आनयध्वं द्वारकाया अग्नीन्वै याजकांस्तथा १५
सुवर्णं रजतं चैव धेनुर्वासांसि वाजिनः
कुञ्जरांश्च रथांश्चैव खरोष्ट्रं वाहनानि च
क्षिप्रमानीयतां सर्वं तीर्थहेतोः परिच्छदम् १६
प्रतिस्रोतः सरस्वत्या गच्छध्वं शीघ्रगामिनः
ऋत्विजश्चानयध्वं वै शतशश्च द्विजर्षभान् १७

एवं संदिश्य तु प्रेष्यान्बलदेवो महाबलः
तीर्थयात्रां ययौ राजन्कुरूणां वैशसे तदा
सरस्वतीं प्रतिस्रोतः समुद्रादभिजग्मिवान् १८
ऋत्विग्भिश्च सुहृद्भिश्च तथान्यैर्द्विजसत्तमैः
रथैर्गजैस्तथाश्वैश्च प्रेष्यैश्च भरतर्षभ
गोखरोष्ट्रप्रयुक्तैश्च यानैश्च बहुभिर्वृतः १९
श्रान्तानां क्लान्तवपुषां शिशूनां विपुलायुषाम्
तानि यानानि देशेषु प्रतीक्ष्यन्ते स्म भारत
बुभुक्षितानामर्थाय क्लृप्तमन्नं समन्ततः २०
यो यो यत्र द्विजो भोक्तुं कामं कामयते तदा
तस्य तस्य तु तत्रैवमुपजह्रुस्तदा नृप २१
तत्र स्थिता नरा राजन्रौहिणेयस्य शासनात्
भक्ष्यपेयस्य कुर्वन्ति राशींस्तत्र समन्ततः २२
वासांसि च महार्हाणि पर्यङ्कास्तरणानि च
पूजार्थं तत्र क्लृप्तानि विप्राणां सुखमिच्छताम् २३
यत्र यः स्वपते विप्रः क्षत्रियो वापि भारत
तत्र तत्र तु तस्यैव सर्वं क्लृप्तमदृश्यत २४
यथासुखं जनः सर्वस्तिष्ठते याति वा तदा
यातुकामस्य यानानि पानानि तृषितस्य च २५
बुभुक्षितस्य चान्नानि स्वादूनि भरतर्षभ
उपजह्रुर्नरास्तत्र वस्त्राण्याभरणानि च २६
स पन्थाः प्रबभौ राजन्सर्वस्यैव सुखावहः
स्वर्गोपमस्तदा वीर नराणां तत्र गच्छताम् २७
नित्यप्रमुदितोपेतः स्वादुभक्ष्यः शुभान्वितः
विपण्यापणपण्यानां नानाजनशतैर्वृतः
नानाद्रुमलतोपेतो नानारत्नविभूषितः २८
ततो महात्मा नियमे स्थितात्मा पुण्येषु तीर्थेषु वसूनि राजन्
ददौ द्विजेभ्यः क्रतुदक्षिणाश्च यदुप्रवीरो हलभृत्प्रतीतः २९
दोग्ध्रीश्च धेनूश्च सहस्रशो वै सुवाससः काञ्चनबद्धशृङ्गीः
हयांश्च नानाविधदेशजातान्यानानि दासीश्च तथा द्विजेभ्यः ३०

रत्नानि मुक्तामणिविद्रुमं च शृङ्गीसुवर्णं रजतं च शुभ्रम्
अयस्मयं ताम्रमयं च भाण्डं ददौ द्विजातिप्रवरेषु रामः ३१
एवं स वित्तं प्रददौ महात्मा सरस्वतीतीर्थवरेषु भूरि
ययौ क्रमेणाप्रतिमप्रभावस्ततः कुरुक्षेत्रमुदारवृत्तः ३२
जनमेजय उवाच
सारस्वतानां तीर्थानां गुणोत्पत्तिं वदस्व मे
फलं च द्विपदां श्रेष्ठ कर्मनिर्वृत्तिमेव च ३३
यथाक्रमं च भगवंस्तीर्थानामनुपूर्वशः
ब्रह्मन्ब्रह्मविदां श्रेष्ठ परं कौतूहलं हि मे ३४
वैशम्पायन उवाच
तीर्थानां विस्तरं राजन्गुणोत्पत्तिं च सर्वशः
मयोच्यमानां शृणु वै पुण्यां राजेन्द्र कृत्स्नशः ३५
पूर्वं महाराज यदुप्रवीर ऋत्विक्सुहृद्विप्रगणैश्च सार्धम्
पुण्यं प्रभासं समुपाजगाम यत्रोडराडयक्ष्मणा क्लिश्यमानः ३६
विमुक्तशापः पुनराप्य तेजः सर्वं जगद्भासयते नरेन्द्र
एवं तु तीर्थप्रवरं पृथिव्यां प्रभासनात्तस्य ततः प्रभासः ३७
जनमेजय उवाच
किमर्थं भगवान्सोमो यक्ष्मणा समगृह्यत
कथं च तीर्थप्रवरे तस्मिंश्चंद्रो न्यमज्जत ३८
कथमाप्लुत्य तस्मिंस्तु पुनराप्यायितः शशी
एतन्मे सर्वमाचक्ष्व विस्तरेण महामुने ३९
वैशम्पायन उवाच
दक्षस्य तनया यास्ताः प्रादुरासन्विशां पते
स सप्तविंशतिं कन्या दक्षः सोमाय वै ददौ ४०
नक्षत्रयोगनिरताः संख्यानार्थं च भारत
पत्न्यो वै तस्य राजेन्द्र सोमस्य शुभलक्षणाः ४१
तास्तु सर्वा विशालाक्ष्यो रूपेणाप्रतिमा भुवि
अत्यरिच्यत तासां तु रोहिणी रूपसंपदा ४२
ततस्तस्यां स भगवान्प्रीतिं चक्रे निशाकरः
सास्य हृद्या बभूवाथ तस्मात्तां बुभुजे सदा ४३

पुरा हि सोमो राजेन्द्र रोहिरयामवसच्चिरम्
ततोऽस्य कुपितान्यासन्नक्षत्राणि महात्मनः ४४
ता गत्वा पितरं प्राहुः प्रजापतिमतन्द्रिताः
सोमो वसति नास्मासु रोहिणीं भजते सदा ४५
ता वयं सहिताः सर्वास्त्वत्सकाशे प्रजेश्वर
वत्स्यामो नियताहारास्तपश्चरणतत्पराः ४६
श्रुत्वा तासां तु वचनं दक्षः सोममथाब्रवीत्
समं वर्तस्व भार्यासु मा त्वाधर्मो महान्स्पृशेत् ४७
ताश्च सर्वाब्रवीद्दक्षो गच्छध्वं सोममन्तिकात्
समं वत्स्यति सर्वासु चन्द्रमा मम शासनात् ४८
विसृष्टास्तास्तदा जग्मुः शीतांशुभवनं तदा
तथापि सोमो भगवान्पुनरेव महीपते
रोहिणीं निवसत्येव प्रीयमाणो मुहुर्मुहुः ४९
ततस्ताः सहिताः सर्वा भूयः पितरमब्रुवन्
तव शुश्रूषणे युक्ता वत्स्यामो हि तवाश्रमे
सोमो वसति नास्मासु नाकरोद्वचनं तव ५०
तासां तद्वचनं श्रुत्वा दक्षः सोममथाब्रवीत्
समं वर्तस्व भार्यासु मा त्वां शप्स्ये विरोचन ५१
अनादृत्य तु तद्वाक्यं दक्षस्य भगवाञ्शशी
रोहिरया सार्धमवसत्ततस्ताः कुपिताः पुनः ५२
गत्वा च पितरं प्राहुः प्रणम्य शिरसा तदा
सोमो वसति नास्मासु तस्मान्नः शरणं भव ५३
रोहिरयामेव भगवन्सदा वसति चन्द्रमाः
तस्मान्नस्त्राहि सर्वा वै यथा नः सोम आविशेत् ५४
तच्छ्रुत्वा भगवान्क्रुद्धो यक्ष्माणं पृथिवीपते
ससर्ज रोषात्सोमाय स चोडुपतिमाविशत् ५५
स यक्ष्मणाभिभूतात्माक्षीयताहरहः शशी
यत्नं चाप्यकरोद्राजन्मोक्षार्थं तस्य यक्ष्मणः ५६
इष्ट्वेष्टिभिर्महाराज विविधाभिर्निशाकरः
न चामुच्यत शापाद्वै क्षयं चैवाभ्यगच्छत ५७

क्षीयमाणे ततः सोमे ओषध्यो न प्रजज्ञिरे
निरास्वादरसाः सर्वा हतवीर्याश्च सर्वशः ५८
ओषधीनां क्षये जाते प्राणिनामपि संक्षयः
कृशाश्चासन्प्रजाः सर्वाः क्षीयमाणे निशाकरे ५९
ततो देवाः समागम्य सोममूचुर्महीपते
किमिदं भवतो रूपमीदृशं न प्रकाशते ६०
कारणं ब्रूहि नः सर्वं येनेदं ते महद्भयम्
श्रुत्वा तु वचनं त्वत्तो विधास्यामस्ततो वयम् ६१
एवमुक्तः प्रत्युवाच सर्वांस्ताञ्शशलक्षणः
शापं च कारणं चैव यक्ष्माणं च तथात्मनः ६२
देवास्तस्य वचः श्रुत्वा गत्वा दक्षमथाब्रुवन्
प्रसीद भगवन्सोमे शापश्चैष निवर्त्यताम् ६३
असौ हि चन्द्रमाः क्षीणः किंचिच्छेषो हि लक्ष्यते
क्षयाच्चैवास्य देवेश प्रजाश्चापि गताः क्षयम् ६४
वीरुदोषधयश्चैव बीजानि विविधानि च
तथा वयं लोकगुरो प्रसादं कर्तुमर्हसि ६५
एवमुक्तस्तदा चिन्त्य प्राह वाक्यं प्रजापतिः
नैतच्छक्यं मम वचो व्यावर्तयितुमन्यथा
हेतुना तु महाभागा निवर्तिष्यति केनचित् ६६
समं वर्ततु सर्वासु शशी भार्यासु नित्यशः
सरस्वत्या वरे तीर्थे उन्मज्जञ्शशलक्षणः
पुनर्वर्धिष्यते देवास्तद्वै सत्यं वचो मम ६७
मासार्धं च क्षयं सोमो नित्यमेव गमिष्यति
मासार्धं च सदा वृद्धिं सत्यमेतद्वचो मम ६८
सरस्वतीं ततः सोमो जगाम ऋषिशासनात्
प्रभासं परमं तीर्थं सरस्वत्या जगाम ह ६९
अमावास्यां महातेजास्तत्रोन्मज्जन्महाद्युतिः
लोकान्प्रभासयामास शीतांशुत्वमवाप च ७०
देवाश्च सर्वे राजेन्द्र प्रभासं प्राप्य पुष्कलम्
सोमेन सहिता भूत्वा दक्षस्य प्रमुखेऽभवन् ७१

ततः प्रजापतिः सर्वा विससर्जाथ देवताः
सोमं च भगवान्प्रीतो भूयो वचनमब्रवीत् ७२
मावमंस्था स्त्रियः पुत्र मा च विप्रान्कदाचन
गच्छ युक्तः सदा भूत्वा कुरु वै शासनं मम ७३
स विसृष्टो महाराज जगामाथ स्वमालयम्
प्रजाश्च मुदिता भूत्वा भोजने च यथा पुरा ७४
एतत्ते सर्वमाख्यातं यथा शप्तो निशाकरः
प्रभासं च यथा तीर्थं तीर्थानां प्रवरं ह्यभूत् ७५
अमावास्यां महाराज नित्यशः शशलक्षणः
स्नात्वा ह्याप्यायते श्रीमान्प्रभासे तीर्थ उत्तमे ७६
अतश्चैनं प्रजानन्ति प्रभासमिति भूमिप
प्रभां हि परमां लेभे तस्मिन्नुन्मज्ज्य चन्द्रमाः ७७
ततस्तु चमसोद्भेदमच्युतस्त्वगमद्बली
चमसोद्भेद इत्येवं यं जनाः कथयन्त्युत ७८
तत्र दत्त्वा च दानानि विशिष्टानि हलायुधः
उषित्वा रजनीमेकां स्नात्वा च विधिवत्तदा ७९
उदपानमथागच्छत्त्वरावान्केशवाग्रजः
आद्यं स्वस्त्ययनं चैव तत्रावाप्य महत्फलम् ८०
स्निग्धत्वादोषधीनां च भूमेश्च जनमेजय
जानन्ति सिद्धा राजेन्द्र नष्टामपि सरस्वतीम् ८१
इति श्रीमहाभारते शल्यपर्वणि चतुस्त्रिंशोऽध्यायः ३४

पञ्चत्रिंशोऽध्यायः

वैशम्पायन उवाच
तस्मान्नदीगतं चापि उदपानं यशस्विनः
त्रितस्य च महाराज जगामाथ हलायुधः १
तत्र दत्त्वा बहु द्रव्यं पूजयित्वा तथा द्विजान्
उपस्पृश्य च तत्रैव प्रहृष्टो मुसलायुधः २
तत्र धर्मपरो ह्यासीत्त्रितः स सुमहातपाः
कूपे च वसता तेन सोमः पीतो महात्मना ३

तत्र चैनं समुत्सृज्य भ्रातरौ जग्मतुर्गृहान्
ततस्तौ वै शशापाथ त्रितो ब्राह्मणसत्तमः ४
जनमेजय उवाच
उदपानं कथं ब्रह्मन्कथं च सुमहातपाः
पतितः किं च संत्यक्तो भ्रातृभ्यां द्विजसत्तमः ५
कूपे कथं च हित्वैनं भ्रातरौ जग्मतुर्गृहान्
एतदाचक्ष्व मे ब्रह्मन्यदि श्राव्यं हि मन्यसे ६
वैशम्पायन उवाच
आसन्पूर्वयुगे राजन्मुनयो भ्रातरस्त्रयः
एकतश्च द्वितश्चैव त्रितश्चादित्यसंनिभाः ७
सर्वे प्रजापतिसमाः प्रजावन्तस्तथैव च
ब्रह्मलोकजितः सर्वे तपसा ब्रह्मवादिनः ८
तेषां तु तपसा प्रीतो नियमेन दमेन च
अभवद्गौतमो नित्यं पिता धर्मरतः सदा ९
स तु दीर्घेण कालेन तेषां प्रीतिमवाप्य च
जगाम भगवान्स्थानमनुरूपमिवात्मनः १०
राजानस्तस्य ये पूर्वे याज्या ह्यासन्महात्मनः
ते सर्वे स्वर्गते तस्मिंस्तस्य पुत्रानपूजयन् ११
तेषां तु कर्मणा राजंस्तथैवाध्ययनेन च
त्रितः स श्रेष्ठतां प्राप यथैवास्य पिता तथा १२
तं स्म सर्वे महाभागा मुनयः पुण्यलक्षणाः
अपूजयन्महाभागं यथा विद्वत्तयैव तु १३
कदाचिद्धि ततो राजन्भ्रातरावेकतद्वितौ
यज्ञार्थं चक्रतुश्चित्तं धनार्थं च विशेषतः १४
तयोश्चिन्ता समभवत्त्रितं गृह्य परन्तप
याज्यान्सर्वानुपादाय प्रतिगृह्य पशूंस्ततः १५
सोमं पास्यामहे हृष्टाः प्राप्य यज्ञं महाफलम्
चक्रुश्चैव महाराज भ्रातरस्त्रय एव ह १६
तथा तु ते परिक्रम्य याज्यान्सर्वान्पशून्प्रति
याजयित्वा ततो याज्याँल्लब्ध्वा च सुबहून्पशून् १७

याज्येन कर्मणा तेन प्रतिगृह्य विधानतः
प्राचीं दिशं महात्मान आजग्मुस्ते महर्षयः १८
त्रितस्तेषां महाराज पुरस्ताद्याति हृष्टवत्
एकतश्च द्वितश्चैव पृष्ठतः कालयन्पशून् १९
तयोश्चिन्ता समभवद्दृष्ट्वा पशुगणं महत्
कथं न स्युरिमा गाव आवाभ्यां वै विना त्रितम् २०
तावन्योन्यं समाभाष्य एकतश्च द्वितश्च ह
यदूचतुर्मिथः पापौ तन्निबोध जनेश्वर २१
त्रितो यज्ञेषु कुशलस्त्रितो वेदेषु निष्ठितः
अन्यास्त्रितो बहुतरा गावः समुपलप्स्यते २२
तदावां सहितौ भूत्वा गाः प्रकाल्य व्रजावहे
त्रितोऽपि गच्छतां काममावाभ्यां वै विनाकृतः २३
तेषामागच्छतां रात्रौ पथिस्थानो वृकोऽभवत्
तथा कूपोऽविदूरेऽभूत्सरस्वत्यास्तटे महान् २४
अथ त्रितो वृकं दृष्ट्वा पथि तिष्ठन्तमग्रतः
तद्भयादपसर्पन्वै तस्मिन्कूपे पपात ह
अगाधे सुमहाघोरे सर्वभूतभयंकरे २५
त्रितस्ततो महाभागः कूपस्थो मुनिसत्तमः
आर्तनादं ततश्चक्रे तौ तु शुश्रुवतुर्मुनी २६
तं ज्ञात्वा पतितं कूपे भ्रातरावेकतद्वितौ
वृकत्रासाच्च लोभाच्च समुत्सृज्य प्रजग्मतुः २७
भ्रातृभ्यां पशुलुब्धाभ्यामुत्सृष्टः स महातपाः
उदपाने महाराज निर्जले पांसुसंवृते २८
त्रित आत्मानमालक्ष्य कूपे वीरुत्तृणावृते
निमग्नं भरतश्रेष्ठ पापकृन्नरके यथा २९
बुद्ध्या ह्यगणयत्प्राज्ञो मृत्योर्भीतो ह्यसोमपः
सोमः कथं नु पातव्य इहस्थेन मया भवेत् ३०
स एवमनुसंचिन्त्य तस्मिन्कूपे महातपाः
ददर्श वीरुधं तत्र लम्बमानां यदृच्छया ३१
पांसुग्रस्ते ततः कूपे विचिन्त्य सलिलं मुनिः

अग्नीन्संकल्पयामास होत्रे चात्मानमेव च ३२
ततस्तां वीरुधं सोमं संकल्प्य सुमहातपाः
ऋचो यजूंषि सामानि मनसा चिन्तयन्मुनिः
ग्रावाणः शर्कराः कृत्वा प्रचक्रेऽभिषवं नृप ३३
आज्यं च सलिलं चक्रे भागांश्च त्रिदिवौकसाम्
सोमस्याभिषवं कृत्वा चकार तुमुलं ध्वनिम् ३४
स चाविशद्दिवं राजन्स्वरः शैक्षस्त्रितस्य वै
समवाप च तं यज्ञं यथोक्तं ब्रह्मवादिभिः ३५
वर्तमाने तथा यज्ञे त्रितस्य सुमहात्मनः
आविग्नं त्रिदिवं सर्वं कारणं च न बुध्यते ३६
ततः सुतुमुलं शब्दं शुश्रावाथ बृहस्पतिः
श्रुत्वा चैवाब्रवीद्देवान्सर्वान्देवपुरोहितः ३७
त्रितस्य वर्तते यज्ञस्तत्र गच्छामहे सुराः
स हि क्रुद्धः सृजेदन्यान्देवानपि महातपाः ३८
तच्छ्रुत्वा वचनं तस्य सहिताः सर्वदेवताः
प्रययुस्तत्र यत्रासौ त्रितयज्ञः प्रवर्तते ३९
ते तत्र गत्वा विबुधास्तं कूपं यत्र स त्रितः
ददृशुस्तं महात्मानं दीक्षितं यज्ञकर्मसु ४०
दृष्ट्वा चैनं महात्मानं श्रिया परमया युतम्
ऊचुश्चाथ महाभागं प्राप्ता भागार्थिनो वयम् ४१
अथाब्रवीदृषिर्देवान्पश्यध्वं मां दिवौकसः
अस्मिन्प्रतिभये कूपे निमग्नं नष्टचेतसम् ४२
ततस्त्रितो महाराज भागांस्तेषां यथाविधि
मंत्रयुक्तान्समददात्ते च प्रीतास्तदाभवन् ४३
ततो यथाविधि प्राप्तान्भागान्प्राप्य दिवौकसः
प्रीतात्मानो ददुस्तस्मै वरान्यान्मनसेच्छति ४४
स तु वव्रे वरं देवांस्त्रातुमर्हथ मामितः
यश्चेहोपस्पृशेत्कूपे स सोमपगतिं लभेत् ४५
तत्र चोर्मिमती राजन्नुत्पपात सरस्वती
तयोत्क्षिप्तस्त्रितस्तस्थौ पूजयंस्त्रिदिवौकसः ४६

तथेति चोक्त्वा विबुधा जग्मू राजन्यथागतम्
त्रितश्चाप्यगमत्प्रीतः स्वमेव निलयं तदा ४७
क्रुद्धः स तु समासाद्य तावृषी भ्रातरौ तदा
उवाच परुषं वाक्यं शशाप च महातपाः ४८
पशुलुब्धौ युवां यस्मान्मामुत्सृज्य प्रधावितौ
तस्माद्रूपेण तेषां वै दंष्ट्रिणामभितश्चरौ ४९
भवितारौ मया शप्तौ पापेनानेन कर्मणा
प्रसवश्चैव युवयोर्गोलाङ्गूलर्क्षवानराः ५०
इत्युक्ते तु तदा तेन क्षणादेव विशां पते
तथाभूतावदृश्येतां वचनात्सत्यवादिनः ५१
तत्राप्यमितविक्रान्तः स्पृष्ट्वा तोयं हलायुधः
दत्त्वा च विविधान्दायान्पूजयित्वा च वै द्विजान् ५२
उदपानं च तं दृष्ट्वा प्रशस्य च पुनः पुनः
नदीगतमदीनात्मा प्राप्तो विनशनं तदा ५३
इति श्रीमहाभारते शल्यपर्वणि पञ्चत्रिंशोऽध्यायः ३५

षट्त्रिंशोऽध्यायः

वैशम्पायन उवाच
ततो विनशनं राजन्नाजगाम हलायुधः
शूद्राभीरान्प्रति द्विषाद्यत्र नष्टा सरस्वती १
यस्मात्सा भरतश्रेष्ठ द्वेषान्नष्टा सरस्वती
तस्मात्तदृषयो नित्यं प्राहुर्विनशनेति ह २
तच्चाप्युपस्पृश्य बलः सरस्वत्यां महाबलः
सुभूमिकं ततोऽगच्छत्सरस्वत्यास्तटे वरे ३
तत्र चाप्सरसः शुभ्रा नित्यकालमतन्द्रिताः
क्रीडाभिर्विमलाभिश्च क्रीडन्ति विमलाननाः ४
तत्र देवाः सगन्धर्वा मासि मासि जनेश्वर
अभिगच्छन्ति तत्तीर्थं पुण्यं ब्राह्मणसेवितम् ५
तत्रादृश्यन्त गन्धर्वास्तथैवाप्सरसां गणाः
समेत्य सहिता राजन्यथाप्राप्तं यथासुखम् ६

तत्र मोदन्ति देवाश्च पितरश्च सवीरुधः
पुरायैः पुष्पैः सदा दिव्यैः कीर्यमाणाः पुनः पुनः ७
आक्रीडभूमिः सा राजंस्तासामप्सरसां शुभा
सुभूमिकेति विख्याता सरस्वत्यास्तटे वरे ८
तत्र स्नात्वा च दत्त्वा च वसु विप्रेषु माधवः
श्रुत्वा गीतं च तद्दिव्यं वादित्राणां च निःस्वनम् ९
छायाश्च विपुला दृष्ट्वा देवगन्धर्वरक्षसाम्
गन्धर्वाणां ततस्तीर्थमागच्छद्रोहिणीसुतः १०
विश्वावसुमुखास्तत्र गन्धर्वास्तपसान्विताः
नृत्तवादित्रगीतं च कुर्वन्ति सुमनोरमम् ११
तत्र दत्त्वा हलधरो विप्रेभ्यो विविधं वसु
अजाविकं गोखरोष्ट्रं सुवर्णं रजतं तथा १२
भोजयित्वा द्विजान्कामैः संतर्प्य च महाधनैः
प्रययौ सहितो विप्रैः स्तूयमानश्च माधवः १३
तस्माद्गन्धर्वतीर्थाच्च महाबाहुररिंदमः
गर्गस्त्रोतो महातीर्थमाजगामैककुण्डली १४
यत्र गर्गेण वृद्धेन तपसा भावितात्मना
कालज्ञानगतिश्चैव ज्योतिषां च व्यतिक्रमः १५
उत्पाता दारुणाश्चैव शुभाश्च जनमेजय
सरस्वत्याः शुभे तीर्थे विहिता वै महात्मना
तस्य नाम्ना च तत्तीर्थं गर्गस्त्रोत इति स्मृतम् १६
तत्र गर्गं महाभागमृषयः सुव्रता नृप
उपासांचक्रिरे नित्यं कालज्ञानं प्रति प्रभो १७
तत्र गत्वा महाराज बलः श्वेतानुलेपनः
विधिवद्धि धनं दत्त्वा मुनीनां भावितात्मनाम् १८
उच्चावचांस्तथा भक्ष्यान्द्विजेभ्यो विप्रदाय सः
नीलवासास्ततोऽगच्छच्छङ्खतीर्थं महायशाः १९
तत्रापश्यन्महाशङ्खं महामेरुमिवोच्छ्रितम्
श्वेतपर्वतसंकाशमृषिसंघैर्निषेवितम्
सरस्वत्यास्तटे जातं नगं तालध्वजो बली २०

यक्षा विद्याधराश्चैव राक्षसाश्चामितौजसः
पिशाचाश्चामितबला यत्र सिद्धाः सहस्रशः २१
ते सर्वे ह्यशनं त्यक्त्वा फलं तस्य वनस्पतेः
व्रतैश्च नियमैश्चैव काले काले स्म भुञ्जते २२
प्राप्तैश्च नियमैस्तैस्तैर्विचरन्तः पृथक्पृथक्
अदृश्यमाना मनुजैर्व्यचरन्पुरुषर्षभ २३
एवं ख्यातो नरपते लोकेऽस्मिन्स वनस्पतिः
तत्र तीर्थं सरस्वत्याः पावनं लोकविश्रुतम् २४
तस्मिंश्च यदुशार्दूलो दत्त्वा तीर्थे यशस्विनाम्
ताम्रायसानि भाण्डानि वस्त्राणि विविधानि च २५
पूजयित्वा द्विजांश्चैव पूजितश्च तपोधनैः
पुण्यं द्वैतवनं राजन्नाजगाम हलायुधः २६
तत्र गत्वा मुनीन्दृष्ट्वा नानावेषधरान्बलः
आप्लुत्य सलिले चापि पूजयामास वै द्विजान् २७
तथैव दत्त्वा विप्रेभ्यः परिभोगान्सुपुष्कलान्
ततः प्रायाद्बलो राजन्दक्षिणेन सरस्वतीम् २८
गत्वा चैव महाबाहुर्नातिदूरं महायशाः
धर्मात्मा नागधन्वानं तीर्थमागमदच्युतः २९
यत्र पन्नगराजस्य वासुकेः संनिवेशनम्
महाद्युतेर्महाराज बहुभिः पन्नगैर्वृतम्
यत्रासन्नृषयः सिद्धाः सहस्राणि चतुर्दश ३०
यत्र देवाः समागम्य वासुकिं पन्नगोत्तमम्
सर्वपन्नगराजानमभ्यषिञ्चन्यथाविधि
पन्नगेभ्यो भयं तत्र विद्यते न स्म कौरव ३१
तत्रापि विधिवद्दत्त्वा विप्रेभ्यो रत्नसंचयान्
प्रायात्प्राचीं दिशं राजन्दीप्यमानः स्वतेजसा ३२
आप्लुत्य बहुशो हृष्टस्तेषु तीर्थेषु लाङ्गली
दत्त्वा वसु द्विजातिभ्यो जगामाति तपस्विनः ३३
तत्रस्थानृषिसंघांस्तानभिवाद्य हलायुधः
ततो रामोऽगमत्तीर्थमृषिभिः सेवितं महत् ३४

यत्र भूयो निप्रवृते प्राङ्मुखा वै सरस्वती
ऋषीणां नैमिषेयाणामवेक्षार्थं महात्मनाम् ३५
निवृत्तां तां सरिच्छ्रेष्ठां तत्र दृष्ट्वा तु लाङ्गली
बभूव विस्मितो राजन्बलः श्वेतानुलेपनः ३६
जनमेजय उवाच
कस्मात्सरस्वती ब्रह्मन्निवृत्ता प्राङ्मुखी ततः
व्याख्यातुमेतदिच्छामि सर्वमध्वर्युसत्तम ३७
कस्मिंश्च कारणे तत्र विस्मितो यदुनन्दनः
विनिवृत्ता सरिच्छ्रेष्ठा कथमेतद्द्विजोत्तम ३८
वैशम्पायन उवाच
पूर्वं कृतयुगे राजन्नैमिषेयास्तपस्विनः
वर्तमाने सुबहुले सत्रे द्वादशवार्षिके
ऋषयो बहवो राजंस्तत्र संप्रतिपेदिरे ३९
उषित्वा च महाभागास्तस्मिन्सत्रे यथाविधि
निवृत्ते नैमिषेये वै सत्रे द्वादशवार्षिके
आजग्मुरृषयस्तत्र बहवस्तीर्थकारणात् ४०
ऋषीणां बहुलत्वात्तु सरस्वत्या विशां पते
तीर्थानि नगरायन्ते कूले वै दक्षिणे तदा ४१
समन्तपञ्चकं यावत्तावत्ते द्विजसत्तमाः
तीर्थलोभान्नरव्याघ्र नद्यास्तीरं समाश्रिताः ४२
जुह्वतां तत्र तेषां तु मुनीनां भावितात्मनाम्
स्वाध्यायेनापि महता बभूवुः पूरिता दिशः ४३
अग्निहोत्रैस्ततस्तेषां हूयमानैर्महात्मनाम्
अशोभत सरिच्छ्रेष्ठा दीप्यमानैः समन्ततः ४४
वालखिल्या महाराज अश्मकुट्टाश्च तापसाः
दन्तोलूखलिनश्चान्ये संप्रक्षालास्तथापरे ४५
वायुभक्षा जलाहाराः पर्णभक्षाश्च तापसाः
नानानियमयुक्ताश्च तथा स्थण्डिलशायिनः ४६
आसन्वै मुनयस्तत्र सरस्वत्याः समीपतः
शोभयन्तः सरिच्छ्रेष्ठां गङ्गामिव दिवौकसः ४७

ततः पश्चात्समापेतुर्ऋषयः सत्रयाजिनः
तेऽवकाशं न ददृशुः कुरुक्षेत्रे महाव्रताः ४८
ततो यज्ञोपवीतैस्ते तत्तीर्थं निर्मिमाय वै
जुहुवुश्चाग्निहोत्राणि चक्रुश्च विविधाः क्रियाः ४९
ततस्तमृषिसंघातं निराशं चिन्तयान्वितम्
दर्शयामास राजेन्द्र तेषामर्थे सरस्वती ५०
ततः कुञ्जान्बहून्कृत्वा सन्निवृत्ता सरिद्वरा
ऋषीणां पुण्यतपसां कारुण्याज्जनमेजय ५१
ततो निवृत्य राजेन्द्र तेषामर्थे सरस्वती
भूयः प्रतीच्यभिमुखी सुस्राव सरितां वरा ५२
अमोघा गमनं कृत्वा तेषां भूयो व्रजाम्यहम्
इत्यद्भुतं महच्चक्रे ततो राजन्महानदी ५३
एवं स कुञ्जो राजेन्द्र नैमिषेय इति स्मृतः
कुरुक्षेत्रे कुरुश्रेष्ठ कुरुष्व महतीः क्रियाः ५४
तत्र कुञ्जान्बहून्दृष्ट्वा सनिवृत्तां च तां नदीम्
बभूव विस्मयस्तत्र रामस्याथ महात्मनः ५५
उपस्पृश्य तु तत्रापि विधिवद्यदुनन्दनः
दत्त्वा दायान्द्विजातिभ्यो भाण्डानि विविधानि च
भक्ष्यं पेयं च विविधं ब्राह्मणान्प्रत्यपादयत् ५६
ततः प्रायाद्बलो राजन्पूज्यमानो द्विजातिभिः
सरस्वतीतीर्थवरं नानाद्विजगणायुतम् ५७
बदरेङ्गुदकाश्मर्यप्लक्षाश्वत्थविभीतकैः
वनसैश्च पलाशैश्च करीरैः पीलुभिस्तथा ५८
सरस्वतीतीररुहैर्बन्धनैः स्यन्दनैस्तथा
परूषकवनैश्चैव बिल्वैराम्रातकैस्तथा ५९
अतिमुक्तकषण्डैश्च पारिजातैश्च शोभितम्
कदलीवनभूयिष्ठमिष्टं कान्तं मनोरमम् ६०
वाय्वम्बुफलपर्णादैर्दन्तोलूखलिकैरपि
तथाश्मकुट्टैर्वानेयैर्मुनिभिर्बहुभिर्वृतम् ६१
स्वाध्यायघोषसंघुष्टं मृगयूथशताकुलम्

अहिंस्रैर्धर्मपरमैर्नृभिरत्यन्तसेवितम् ६२
सप्तसारस्वतं तीर्थमाजगाम हलायुधः
यत्र मङ्कणकः सिद्धस्तपस्तेपे महामुनिः ६३
इति श्रीमहाभारते शल्यपर्वणि षट्त्रिंशोऽध्यायः ३६

## सप्तत्रिंशोऽध्यायः

जनमेजय उवाच
सप्तसारस्वतं कस्मात्कश्च मङ्कणको मुनिः
कथं सिद्धश्च भगवान्कश्चास्य नियमोऽभवत् १
कस्य वंशे समुत्पन्नः किं चाधीतं द्विजोत्तम
एतदिच्छाम्यहं श्रोतुं विधिवद्द्विजसत्तम २
वैशम्पायन उवाच
राजन्सप्त सरस्वत्यो याभिर्व्याप्तमिदं जगत्
आहूता बलवद्भिर्हि तत्र तत्र सरस्वती ३
सुप्रभा काञ्चनाक्षी च विशाला मानसह्रदा
सरस्वती ओघवती सुवेणुर्विमलोदका ४
पितामहस्य महतो वर्तमाने महीतले
वितते यज्ञवाटे वै समेतेषु द्विजातिषु ५
पुण्याहघोषैर्विमलैर्वेदानां निनदैस्तथा
देवेषु चैव व्यग्रेषु तस्मिन्यज्ञविधौ तदा ६
तत्र चैव महाराज दीक्षिते प्रपितामहे
यजतस्तस्य सत्रेण सर्वकामसमृद्धिना ७
मनसा चिन्तिता ह्यर्था धर्मार्थकुशलैस्तदा
उपतिष्ठन्ति राजेन्द्र द्विजातींस्तत्र तत्र ह ८
जगुश्च तत्र गन्धर्वा ननृतुश्चाप्सरोगणाः
वादित्राणि च दिव्यानि वादयामासुरञ्जसा ९
तस्य यज्ञस्य संपत्त्या तुतुषुर्देवता अपि
विस्मयं परमं जग्मुः किमु मानुषयोनयः १०
वर्तमाने यथा यज्ञे पुष्करस्थे पितामहे
अब्रुवन्नृषयो राजन्नायं यज्ञो महाफलः

न दृश्यते सरिच्छ्रेष्ठा यस्मादिह सरस्वती ११
तच्छ्रुत्वा भगवान्प्रीतः सस्माराथ सरस्वतीम्
पितामहेन यजता आहूता पुष्करेषु वै
सुप्रभा नाम राजेन्द्र नाम्ना तत्र सरस्वती १२
तां दृष्ट्वा मुनयस्तुष्टा वेगयुक्तां सरस्वतीम्
पितामहं मानयंतीं क्रतुं ते बहु मेनिरे १३
एवमेषा सरिच्छ्रेष्ठा पुष्करेषु सरस्वती
पितामहार्थं संभूता तुष्ट्यर्थं च मनीषिणाम् १४
नैमिषे मुनयो राजन्समागम्य समासते
तत्र चित्राः कथा ह्यासन्वेदं प्रति जनेश्वर १५
तत्र ते मुनयो ह्यासन्नानास्वाध्यायवेदिनः
ते समागम्य मुनयः सस्मरुर्वै सरस्वतीम् १६
सा तु ध्याता महाराज ऋषिभिः सत्रयाजिभिः
समागतानां राजेन्द्र सहायार्थं महात्मनाम्
आजगाम महाभागा तत्र पुण्या सरस्वती १७
नैमिषे कांचनाक्षी तु मुनीनां सत्रयाजिनाम्
आगता सरितां श्रेष्ठा तत्र भारत पूजिता १८
गयस्य यजमानस्य गयेष्वेव महाक्रतुम्
आहूता सरितां श्रेष्ठा गययज्ञे सरस्वती १९
विशालां तु गयेष्वाहुर्ऋषयः संशितव्रताः
सरित्सा हिमवत्पार्श्वात्प्रसूता शीघ्रगामिनी २०
औद्दालकेस्तथा यज्ञे यजतस्तत्र भारत
समेते सर्वतः स्फीते मुनीनां मण्डले तदा २१
उत्तरे कोसलाभागे पुण्ये राजन्महात्मनः
औद्दालकेन यजता पूर्वं ध्याता सरस्वती २२
आजगाम सरिच्छ्रेष्ठा तं देशमृषिकारणात्
पूज्यमाना मुनिगणैर्वल्कलाजिनसंवृतैः
मनोह्रदेति विख्याता सा हि तैर्मनसा हृता २३
सुवेणुर्ऋषभद्वीपे पुण्ये राजर्षिसेविते
कुरोश्च यजमानस्य कुरुक्षेत्रे महात्मनः

आजगाम महाभागा सरिच्छ्रेष्ठा सरस्वती २४
ओघवत्यपि राजेन्द्र वसिष्ठेन महात्मना
समाहूता कुरुक्षेत्रे दिव्यतोया सरस्वती २५
दक्षेण यजता चापि गङ्गाद्वारे सरस्वती
विमलोदा भगवती ब्रह्मणा यजता पुनः
समाहूता ययौ तत्र पुण्ये हैमवते गिरौ २६
एकीभूतास्ततस्तास्तु तस्मिंस्तीर्थे समागताः
सप्तसारस्वतं तीर्थं ततस्तत्प्रथितं भुवि २७
इति सप्त सरस्वत्यो नामतः परिकीर्तिताः
सप्तसारस्वतं चैव तीर्थं पुण्यं तथा स्मृतम् २८
शृणु मङ्कणकस्यापि कौमारब्रह्मचारिणः
आपगामवगाढस्य राजन्प्रक्रीडितं महत् २९
दृष्ट्वा यदृच्छया तत्र स्त्रियमम्भसि भारत
स्नायन्तीं रुचिरापाङ्गीं दिग्वाससमनिंदिताम्
सरस्वत्यां महाराज चस्कन्दे वीर्यमम्भसि ३०
तद्रेतः स तु जग्राह कलशे वै महातपाः
सप्तधा प्रविभागं तु कलशस्थं जगाम ह
तत्रर्षयः सप्त जाता जज्ञिरे मरुतां गणाः ३१
वायुवेगो वायुबलो वायुहा वायुमण्डलः
वायुज्वालो वायुरेता वायुचक्रश्च वीर्यवान्
एवमेते समुत्पन्ना मरुतां जनयिष्णवः ३२
इदमन्यच्च राजेन्द्र शृण्वाश्चर्यतरं भुवि
महर्षेश्चरितं यादृक्त्रिषु लोकेषु विश्रुतम् ३३
पुरा मङ्कणकः सिद्धः कुशाग्रेणेति नः श्रुतम्
क्षतः किल करे राजंस्तस्य शाकरसोऽस्रवत्
स वै शाकरसं दृष्ट्वा हर्षाविष्टः प्रनृत्तवान् ३४
ततस्तस्मिन्प्रनृत्ते वै स्थावरं जङ्गमं च यत्
प्रनृत्तमुभयं वीर तेजसा तस्य मोहितम् ३५
ब्रह्मादिभिः सुरैः राजन्नृषिभिश्च तपोधनैः
विज्ञप्तो वै महादेव ऋषेरर्थे नराधिप

नायं नृत्येद्यथा देव तया त्वं कर्तुमर्हसि ३६
ततो देवो मुनिं दृष्ट्वा हर्षाविष्टमतीव ह
सुराणां हितकामार्थं महादेवोऽभ्यभाषत ३७
भो भो ब्राह्मण धर्मज्ञ किमर्थं नरिनर्त्सि वै
हर्षस्थानं किमर्थं वै तवेदं मुनिसत्तम
तपस्विनो धर्मपथे स्थितस्त द्विजसत्तम ३८
ऋषिरुवाच
किं न पश्यसि मे ब्रह्मन्कराच्छाकरसं स्रुतम्
यं दृष्ट्वा वै प्रनृत्तोऽह हर्षेण महता विभो ३९
तं प्रहस्याब्रवीद्देवो मुनिं रागेण मोहितम्
अहं न विस्मयं विप्र गच्छामीति प्रपश्य माम् ४०
एवमुक्त्वा मुनिश्रेष्ठं महादेवेन धीमता
अङ्गुल्यग्रेण राजेन्द्र स्वाङ्गुष्ठस्ताडितोऽभवत् ४१
ततो भस्म क्षताद्राजन्निर्गतं हिमसंनिभम्
तद्दृष्ट्वा व्रीडितो राजन्स मुनिः पादयोर्गतः ४२
ऋषिरुवाच
नान्यं देवादहं मन्ये रुद्रात्परतरं महत्
सुरासुरस्य जगतो गतिस्त्वमसि शूलधृक् ४३
त्वया सृष्टमिदं विश्वं वदन्तीह मनीषिणः
त्वामेव सर्वं विशति पुनरेव युगक्षये ४४
देवैरपि न शक्यस्त्वं परिज्ञातुं कुतो मया
त्वयि सर्वे स्म दृश्यन्ते सुरा ब्रह्मादयोऽनघ ४५
सर्वस्त्वमसि देवानां कर्ता कारयिता च ह
त्वत्प्रसादात्सुराः सर्वे मोदन्तीहाकुतोभयाः ४६
एवं स्तुत्वा महादेवं स ऋषिः प्रणतोऽब्रवीत्
भगवंस्त्वत्प्रसादाद्वै तपो मे न क्षरेदिति ४७
ततो देवः प्रीतमनास्तमृषिं पुनरब्रवीत्
तपस्ते वर्धतां विप्र मत्प्रसादात्सहस्रधा
आश्रमे चेह वत्स्यामि त्वया सार्धमहं सदा ४८
सप्तसारस्वते चास्मिन्यो मामर्चिष्यते नरः

न तस्य दुर्लभं किंचिद्भवितेह परत्र च
सारस्वतं च लोकं ते गमिष्यन्ति न संशयः ४९
एतन्मङ्कणकस्यापि चरितं भूरितेजसः
स हि पुत्रः सजन्यायामुत्पन्नो मातरिश्वना ५०
इति श्रीमहाभारते शल्यपर्वणि सप्तत्रिंशोऽध्यायः ३७

## अष्टत्रिंशोऽध्यायः

वैशम्पायन उवाच
उषित्वा तत्र रामस्तु सम्पूज्याश्रमवासिनः
तथा मङ्कणके प्रीतिं शुभां चक्रे हलायुधः १
दत्त्वा दानं द्विजातिभ्यो रजनीं तामुपोष्य च
पूजितो मुनिसंघैश्च प्रातरुत्थाय लाङ्गली २
अनुज्ञाप्य मुनीन्सर्वान्स्पृष्ट्वा तोयं च भारत
प्रययौ त्वरितो रामस्तीर्थहेतोर्महाबलः ३
तत औशनसं तीर्थमाजगाम हलायुधः
कपालमोचनं नाम यत्र मुक्तो महामुनिः ४
महता शिरसा राजन्ग्रस्तजङ्घो महोदरः
राक्षसस्य महाराज रामक्षिप्तस्य वै पुरा ५
तत्र पूर्वं तपस्तप्तं काव्येन सुमहात्मना
यत्रास्य नीतिरखिला प्रादुर्भूता महात्मनः
तत्रस्थश्चिन्तयामास दैत्यदानवविग्रहम् ६
तत्प्राप्य च बलो राजंस्तीर्थप्रवरमुत्तमम्
विधिवद्धि ददौ वित्तं ब्राह्मणानां महात्मनाम् ७
जनमेजय उवाच
कपालमोचनं ब्रह्मन्कथं यत्र महामुनिः
मुक्तः कथं चास्य शिरो लग्नं केन च हेतुना ८
वैशम्पायन उवाच
पुरा वै दण्डकारण्ये राघवेण महात्मना
वसता राजशार्दूल राक्षसास्तत्र हिंसिताः ९
जनस्थाने शिरश्छिन्नं राक्षसस्य दुरात्मनः

क्षुरेण शितधारेण तत्पपात महावने १०
महोदरस्य तल्लग्नं जङ्घायां वै यदृच्छया
वने विचरतो राजन्नस्थि भित्त्वास्फुरत्तदा ११
स तेन लग्नेन तदा द्विजातिर्न शशाक ह
अभिगन्तुं महाप्राज्ञस्तीर्थान्यायतनानि च १२
स पूतिना विस्रवता वेदनार्तो महामुनिः
जगाम सर्वतीर्थानि पृथिव्यामिति नः श्रुतम् १३
स गत्वा सरितः सर्वाः समुद्रांश्च महातपाः
कथयामास तत्सर्वमृषीणां भावितात्मनाम् १४
आप्लुतः सर्वतीर्थेषु न च मोक्षमवाप्तवान्
स तु शुश्राव विप्रेन्द्रो मुनीनां वचनं महत् १५
सरस्वत्यास्तीर्थवरं ख्यातमौशनसं तदा
सर्वपापप्रशमनं सिद्धिक्षेत्रमनुत्तमम् १६
स तु गत्वा ततस्तत्र तीर्थमौशनसं द्विजः
तत औशनसे तीर्थे तस्योपस्पृशतस्तदा
तच्छिरश्चरणं मुक्त्वा पपातान्तर्जले तदा १७
ततः स विरुजो राजन्पूतात्मा वीतकल्मषः
आजगामाश्रमं प्रीतः कृतकृत्यो महोदरः १८
सोऽथ गत्वाश्रमं पुण्यं विप्रमुक्तो महातपाः
कथयामास तत्सर्वमृषीणां भावितात्मनाम् १९
ते श्रुत्वा वचनं तस्य ततस्तीर्थस्य मानद
कपालमोचनमिति नाम चक्रुः समागताः २०
तत्र दत्त्वा बहून्दायान्विप्रान्संपूज्य माधवः
जगाम वृष्णिप्रवरो रुषङ्गोराश्रमं तदा २१
यत्र तप्तं तपो घोरमर्ष्टिषेणेन भारत
ब्राह्मण्यं लब्धवांस्तत्र विश्वामित्रो महामुनिः २२
ततो हलधरः श्रीमान्ब्राह्मणैः परिवारितः
जगाम यत्र राजेन्द्र रुषङ्गुस्तनुमत्यजत् २३
रुषङ्गुर्ब्राह्मणो वृद्धस्तपोनित्यश्च भारत
देहन्यासे कृतमना विचिन्त्य बहुधा बहु २४

ततः सर्वानुपादाय तनयान्वै महातपाः
रुषङ्गुरब्रवीत्तत्र नयध्वं मा पृथूदकम् २५
विज्ञायातीतवयसं रुषङ्गुं ते तपोधनाः
तं वै तीर्थमुपानिन्युः सरस्वत्यास्तपोधनम् २६
स तैः पुत्रैस्तदा धीमानानीतो वै सरस्वतीम्
पुण्यां तीर्थशतोपेतां विप्रसंघैर्निषेविताम् २७
स तत्र विधिना राजन्नाप्लुतः सुमहातपाः
ज्ञात्वा तीर्थगुणांश्चैव प्राहेदमृषिसत्तमः
सुप्रीतः पुरुषव्याघ्र सर्वान्पुत्रानुपासतः २८
सरस्वत्युत्तरे तीरे यस्त्यजेदात्मनस्तनुम्
पृथूदके जप्यपरो नैनं श्वोमरणं तपेत् २९
तत्राप्लुत्य स धर्मात्मा उपस्पृश्य हलायुधः
दत्त्वा चैव बहून्दायान्विप्राणां विप्रवत्सलः ३०
ससर्ज यत्र भगवाँल्लोकाँल्लोकपितामहः
यत्रार्ष्टिषेणः कौरव्य ब्राह्मण्यं संशितव्रतः
तपसा महता राजन्प्राप्तवानृषिसत्तमः ३१
सिन्धुद्वीपश्च राजर्षिर्देवापिश्च महातपाः
ब्राह्मण्यं लब्धवान्यत्र विश्वामित्रो महामुनिः
महातपस्वी भगवानुग्रतेजा महातपाः ३२
तत्राजगाम बलवान्बलभद्रः प्रतापवान् ३३

इति श्रीमहाभारते शल्यपर्वणि अष्टत्रिंशोऽध्यायः ३८

## एकोनचत्वारिंशोऽध्यायः

जनमेजय उवाच
कथमार्ष्टिषेणो भगवान्विपुलं तप्तवांस्तपः
सिन्धुद्वीपः कथं चापि ब्राह्मण्यं लब्धवांस्तदा १
देवापिश्च कथं ब्रह्मन्विश्वामित्रश्च सत्तम
तन्ममाचक्ष्व भगवन्परं कौतूहलं हि मे २
वैशम्पायन उवाच
पुरा कृतयुगे राजन्नार्ष्टिषेणो द्विजोत्तमः

वसन्गुरुकुले नित्यं नित्यमध्ययने रतः ३
तस्य राजन्गुरुकुले वसतो नित्यमेव ह
समाप्तिं नागमद्विद्या नापि वेदा विशां पते ४
स निर्विण्णस्ततो राजंस्तपस्तेपे महातपाः
ततो वै तपसा तेन प्राप्य वेदाननुत्तमान् ५
स विद्वान्वेदयुक्तश्च सिद्धश्चाप्यृषिसत्तमः
तत्र तीर्थे वरान्प्रादात्त्रीनेव सुमहातपाः ६
अस्मिंस्तीर्थे महानद्या अद्यप्रभृति मानवः
आप्लुतो वाजिमेधस्य फलं प्राप्नोति पुष्कलम् ७
अद्यप्रभृति नैवात्र भयं व्यालाद्भविष्यति
अपि चाल्पेन यत्नेन फलं प्राप्स्यति पुष्कलम् ८
एवमुक्त्वा महातेजा जगाम त्रिदिवं मुनिः
एवं सिद्धः स भगवानार्ष्टिषेणः प्रतापवान् ९
तस्मिन्नेव तदा तीर्थे सिन्धुद्वीपः प्रतापवान्
देवापिश्च महाराज ब्राह्मण्यं प्रापतुर्महत् १०
तथा च कौशिकस्तात तपोनित्यो जितेन्द्रियः
तपसा वै सुतप्तेन ब्राह्मणत्वमवाप्तवान् ११
गाधिर्नाम महानासीत्क्षत्रियः प्रथितो भुवि
तस्य पुत्रोऽभवद्राजन्विश्वामित्रः प्रतापवान् १२
स राजा कौशिकस्तात महायोग्यभवत्किल
स पुत्रमभिषिच्याथ विश्वामित्रं महातपाः १३
देहन्यासे मनश्चक्रे तमूचुः प्रणताः प्रजाः
न गन्तव्यं महाप्राज्ञ त्राहि चास्मान्महाभयात् १४
एवमुक्तः प्रत्युवाच ततो गाधिः प्रजास्तदा
विश्वस्य जगतो गोप्ता भविष्यति सुतो मम १५
इत्युक्त्वा तु ततो गाधिर्विश्वामित्रं निवेश्य च
जगाम त्रिदिवं राजन्विश्वामित्रोऽभवन्नृपः
न च शक्नोति पृथिवीं यत्नवानपि रक्षितुम् १६
ततः शुश्राव राजा स राक्षसेभ्यो महाभयम्
निर्ययौ नगराच्चापि चतुरङ्गबलान्वितः १७

स गत्वा दूरमध्वानं वसिष्ठाश्रममभ्ययात्
तस्य ते सैनिका राजंश्चक्रुस्तत्रानयान्बहून् १८
ततस्तु भगवान्विप्रो वसिष्ठोऽश्रममभ्ययात्
ददृशे च ततः सर्वं भज्यमानं महावनम् १९
तस्य क्रुद्धो महाराज वसिष्ठो मुनिसत्तमः
सृजस्व शबरान्घोरानिति स्वां गामुवाच ह २०
तथोक्ता सासृजद्धेनुः पुरुषान्घोरदर्शनान्
ते च तद्बलमासाद्य बभञ्जुः सर्वतोदिशम् २१
तद्दृष्ट्वा विद्रुतं सैन्यं विश्वामित्रस्तु गाधिजः
तपः परं मन्यमानस्तपस्येव मनो दधे २२
सोऽस्मिंस्तीर्थवरे राजन्सरस्वत्याः समाहितः
नियमैश्चोपवासैश्च कर्शयन्देहमात्मनः २३
जलाहारो वायुभक्षः पर्णाहारश्च सोऽभवत्
तथा स्थण्डिलशायी च ये चान्ये नियमाः पृथक् २४
असकृत्तस्य देवास्तु व्रतविघ्नं प्रचक्रिरे
न चास्य नियमाद्बुद्धिरपयाति महात्मनः २५
ततः परेण यत्नेन तप्त्वा बहुविधं तपः
तेजसा भास्कराकारो गाधिजः समपद्यत २६
तपसा तु तथा युक्तं विश्वामित्रं पितामहः
अमन्यत महातेजा वरदो वरमस्य तत् २७
स तु वव्रे वरं राजन्स्यामहं ब्राह्मणस्त्विति
तथेति चाब्रवीद्ब्रह्मा सर्वलोकपितामहः २८
स लब्ध्वा तपसोग्रेण ब्राह्मणत्वं महायशाः
विचचार महीं कृत्स्नां कृतकामः सुरोपमः २९
तस्मिंस्तीर्थवरे रामः प्रदाय विविधं वसु
पयस्विनीस्तथा धेनूर्यानानि शयनानि च ३०
तथा वस्त्राण्यलंकारं भक्ष्यं पेयं च शोभनम्
अददान्मुदितो राजन्पूजयित्वा द्विजोत्तमान् ३१
ययौ राजंस्ततो रामो बकस्याश्रममन्तिकात्
यत्र तेपे तपस्तीव्रं दाल्भ्यो बक इति श्रुतिः ३२

इति श्रीमहाभारते शल्यपर्वणि एकोनचत्वारिंशोऽध्यायः ३९

## चत्वारिंशोऽध्यायः

वैशम्पायन उवाच
ब्रह्मयोनिभिराकीर्णं जगाम यदुनन्दनः
यत्र दाल्भ्यो बको राजन्पश्वर्थं सुमहातपाः
जुहाव धृतराष्ट्रस्य राष्ट्रं वैचित्रवीर्यिणः १
तपसा घोररूपेण कर्शयन्देहमात्मनः
क्रोधेन महताविष्टो धर्मात्मा वै प्रतापवान् २
पुरा हि नैमिषेयाणां सत्रे द्वादशवार्षिके
वृत्ते विश्वजितोऽन्ते वै पाञ्चालानृषयोऽगमन् ३
तत्रेश्वरमयाचन्त दक्षिणार्थं मनीषिणः
बलान्वितान्वत्सतरान्निर्व्याधीनेकविंशतिम् ४
तानब्रवीद्बको वृद्धो विभजध्वं पशूनिति
पशूनेतानहं त्यक्त्वा भिक्षिष्ये राजसत्तमम् ५
एवमुक्त्वा ततो राजन्नृषीन्सर्वान्प्रतापवान्
जगाम धृतराष्ट्रस्य भवनं ब्राह्मणोत्तमः ६
स समीपगतो भूत्वा धृतराष्ट्रं जनेश्वरम्
अयाचत पशून्दाल्भ्यः स चैनं रुषितोऽब्रवीत् ७
यदृच्छया मृता दृष्ट्वा गास्तदा नृपसत्तम
एतान्पशून्नय क्षिप्रं ब्रह्मबन्धो यदीच्छसि ८
ऋषिस्त्वथ वचः श्रुत्वा चिन्तयामास धर्मवित्
अहो बत नृशंसं वै वाक्यमुक्तोऽस्मि संसदि ९
चिन्तयित्वा मुहूर्तं च रोषाविष्टो द्विजोत्तमः
मतिं चक्रे विनाशाय धृतराष्ट्रस्य भूपतेः १०
स उत्कृत्य मृतनां वै मांसानि द्विजसत्तमः
जुहाव धृतराष्ट्रस्य राष्ट्रं नरपतेः पुरा ११
अवकीर्णे सरस्वत्यास्तीर्थे प्रज्वाल्य पावकम्
बको दाल्भ्यो महाराज नियमं परमास्थितः
स तैरेव जुहावास्य राष्ट्रं मांसैर्महातपाः १२

तस्मिंस्तु विधिवत्सत्रे सम्प्रवृत्ते सुदारुणे
अक्षीयत ततो राष्ट्रं धृतराष्ट्रस्य पार्थिव १३
छिद्यमानं यथानन्तं वनं परशुना विभो
बभूवापहतं तच्चाप्यवकीर्णमचेतनम् १४
दृष्ट्वा तदवकीर्णं तु राष्ट्रं स मनुजाधिपः
बभूव दुर्मना राजंश्चिन्तयामास च प्रभुः १५
मोक्षार्थमकरोद्यत्नं ब्राह्मणैः सहितः पुरा
अथासौ पार्थिवः खिन्नस्ते च विप्रास्तदा नृप १६
यदा चापि न शक्नोति राष्ट्रं मोचयितुं नृप
अथ वैप्राश्निकांस्तत्र पप्रच्छ जनमेजय १७
ततो वैप्राश्निकाः प्राहुः पशुविप्रकृतस्त्वया
मांसैरभिजुहोतीति तव राष्ट्रं मुनिर्बकः १८
तेन ते हूयमानस्य राष्ट्रस्यास्य क्षयो महान्
तस्यैतत्तपसः कर्म येन ते ह्यनयो महान्
अपां कुञ्जे सरस्वत्यास्तं प्रसादय पार्थिव १९
सरस्वतीं ततो गत्वा स राजा बकमब्रवीत्
निपत्य शिरसा भूमौ प्राञ्जलिर्भरतर्षभ २०
प्रसादये त्वा भगवन्नपराधं क्षमस्व मे
मम दीनस्य लुब्धस्य मौर्ख्येण हतचेतसः
त्वं गतिस्त्वं च मे नाथः प्रसादं कर्तुमर्हसि २१
तं तथा विलपन्तं तु शोकोपहतचेतसम्
दृष्ट्वा तस्य कृपा जज्ञे राष्ट्रं तच्च व्यमोचयत् २२
ऋषिः प्रसन्नस्तस्याभूत्संरम्भं च विहाय सः
मोक्षार्थं तस्य राष्ट्रस्य जुहाव पुनराहुतिम् २३
मोक्षयित्वा ततो राष्ट्रं प्रतिगृह्य पशून्बहून्
हृष्टात्मा नैमिषारण्यं जगाम पुनरेव ह २४
धृतराष्ट्रोऽपि धर्मात्मा स्वस्थचेता महामनाः
स्वमेव नगरं राजा प्रतिपेदे महर्द्धिमत् २५
तत्र तीर्थे महाराज बृहस्पतिरुदारधीः
असुराणामभावाय भवाय च दिवौकसाम् २६

मांसैरपि जुहावेष्टिमक्षीयन्त ततोऽसुराः
दैवतैरपि संभग्ना जितकाशिभिराहवे २७
तत्रापि विधिवद्दत्त्वा ब्राह्मणेभ्यो महायशाः
वाजिनः कुञ्जरांश्चैव रथांश्चाश्वतरीयुतान् २८
रत्नानि च महार्हाणि धनं धान्यं च पुष्कलम्
ययौ तीर्थं महाबाहुर्यायातं पृथिवीपते २९
यत्र यज्ञे ययातेस्तु महाराज सरस्वती
सर्पिः पयश्च सुस्राव नाहुषस्य महात्मनः ३०
तत्रेष्ट्वा पुरुषव्याघ्रो ययातिः पृथिवीपतिः
अक्रामदूर्ध्वं मुदितो लेभे लोकांश्च पुष्कलान् ३१
ययातेर्यजमानस्य यत्र राजन्सरस्वती
प्रसृता प्रददौ कामान्ब्राह्मणानां महात्मनाम् ३२
यत्र यत्र हि यो विप्रो यान्यान्कामानभीप्सति
तत्र तत्र सरिच्छ्रेष्ठा ससर्ज सुबहून्रसान् ३३
तत्र देवाः सगन्धर्वाः प्रीता यज्ञस्य संपदा
विस्मिता मानुषाश्चासन्दृष्ट्वा तां यज्ञसंपदम् ३४
ततस्तालकेतुर्महाधर्मसेतुर्महात्मा कृतात्मा महादाननित्यः
वसिष्ठापवाहं महाभीमवेगं धृतात्मा जितात्मा समभ्याजगाम ३५
इति श्रीमहाभारते शल्यपर्वणि चत्वारिंशोऽध्यायः ४०

## एक चत्वारिंशोऽध्यायः

जनमेजय उवाच
वसिष्ठस्यापवाहो वै भीमवेगः कथं नु सः
किमर्थं च सरिच्छ्रेष्ठा तमृषिं प्रत्यवाहयत् १
केन चास्याभवद्वैरं कारणं किं च तत्प्रभो
शंस पृष्टो महाप्राज्ञ न हि तृप्यामि कथ्यताम् २
वैशम्पायन उवाच
विश्वामित्रस्य चैवर्षेर्वसिष्ठस्य च भारत
भृशं वैरमभूद्राजंस्तपःस्पर्धाकृतं महत् ३
आश्रमो वै वसिष्ठस्य स्थाणुतीर्थेऽभवन्महान्

पूर्वतः पश्चिमश्चासीद्विश्वामित्रस्य धीमतः ४
यत्र स्थाणुर्महाराज तप्तवान्सुमहत्तपः
यत्रास्य कर्म तद्घोरं प्रवदन्ति मनीषिणः ५
यत्रेष्ट्वा भगवान्स्थाणुः पूजयित्वा सरस्वतीम्
स्थापयामास तत्तीर्थं स्थाणुतीर्थमिति प्रभो ६
तत्र सर्वे सुराः स्कन्दमभ्यषिञ्चन्नराधिप
सेनापत्येन महता सुरारिविनिबर्हणम् ७
तस्मिन्सरस्वतीतीर्थे विश्वामित्रो महामुनिः
वसिष्ठं चालयामास तपसोग्रेण तच्छृणु ८
विश्वामित्रवसिष्ठौ तावहन्यहनि भारत
स्पर्धां तपःकृतां तीव्रां चक्रतुस्तौ तपोधनौ ९
तत्राप्यधिकसंतापो विश्वामित्रो महामुनिः
दृष्ट्वा तेजो वसिष्ठस्य चिन्तामभिजगाम ह
तस्य बुद्धिरियं ह्यासीद्धर्मनित्यस्य भारत १०
इयं सरस्वती तूर्णं मत्समीपं तपोधनम्
आनयिष्यति वेगेन वसिष्ठं जपतां वरम्
इहागतं द्विजश्रेष्ठं हनिष्यामि न संशयः ११
एवं निश्चित्य भगवान्विश्वामित्रो महामुनिः
सस्मार सरितां श्रेष्ठां क्रोधसंरक्तलोचनः १२
सा ध्याता मुनिना तेन व्याकुलत्वं जगाम ह
जज्ञे चैनं महावीर्यं महाकोपं च भामिनी १३
तत एनं वेपमाना विवर्णा प्राञ्जलिस्तदा
उपतस्थे मुनिवरं विश्वामित्रं सरस्वती १४
हतवीरा यथा नारी साभवद्दुःखिता भृशम्
ब्रूहि किं करवाणीति प्रोवाच मुनिसत्तमम् १५
तामुवाच मुनिः क्रुद्धो वसिष्ठं शीघ्रमानय
यावदेनं निहन्म्यद्य तच्छ्रुत्वा व्यथिता नदी १६
साञ्जलिं तु ततः कृत्वा पुण्डरीकनिभेक्षणा
विव्यथे सुविरूढेव लता वायुसमीरिता १७
तथागतां तु तां दृष्ट्वा वेपमानां कृताञ्जलिम्

विश्वामित्रोऽब्रवीत्क्रुद्धो वसिष्ठं शीघ्रमानय १८
ततो भीता सरिच्छ्रेष्ठा चिन्तयामास भारत
उभयोः शापयोर्भीता कथमेतद्भविष्यति १९
साभिगम्य वसिष्ठं तु इममर्थमचोदयत्
यदुक्ता सरितां श्रेष्ठा विश्वामित्रेण धीमता २०
उभयोः शापयोर्भीता वेपमाना पुनः पुनः
चिन्तयित्वा महाशापमृषिवित्रासिता भृशम् २१
तां कृशां च विवर्णां च दृष्ट्वा चिन्तासमन्विताम्
उवाच राजन्धर्मात्मा वसिष्ठो द्विपदां वरः २२
त्राह्यात्मानं सरिच्छ्रेष्ठे वह मां शीघ्रगामिनी
विश्वामित्रः शपेद्धि त्वां मा कृथास्त्वंविचारणाम् २३
तस्य तद्वचनं श्रुत्वा कृपाशीलस्य सा सरित्
चिन्तयामास कौरव्य किं कृतं सुकृतं भवेत् २४
तस्याश्चिन्ता समुत्पन्ना वसिष्ठो मय्यतीव हि
कृतवान्हि दयां नित्यं तस्य कार्यं हितं मया २५
अथ कूले स्वके राजञ्जपन्तमृषिसत्तमम्
जुह्वानं कौशिकं प्रेक्ष्य सरस्वत्यभ्यचिन्तयत् २६
इदमन्तरमित्येव ततः सा सरितां वरा
कूलापहारमकरोत्स्वेन वेगेन सा सरित् २७
तेन कूलापहारेण मैत्रावरुणिरौह्यत
उह्यमानश्च तुष्टाव तदा राजन्सरस्वतीम् २८
पितामहस्य सरसः प्रवृत्तासि सरस्वति
व्याप्तं चेदं जगत्सर्वं तवैवाम्भोभिरुत्तमैः २९
त्वमेवाकाशगा देवि मेघेषूत्सृजसे पयः
सर्वाश्चापस्त्वमेवेति त्वत्तो वयमधीमहे ३०
पुष्टिर्द्युतिस्तथा कीर्तिः सिद्धिर्वृद्धिरुमा तथा
त्वमेव वाणी स्वाहा त्वं त्वय्यायत्तमिदं जगत्
त्वमेव सर्वभूतेषु वससीह चतुर्विधा ३१
एवं सरस्वती राजन्स्तूयमाना महर्षिणा
वेगेनोवाह तं विप्रं विश्वामित्राश्रमं प्रति

न्यवेदयत चाभीक्ष्णं विश्वामित्राय तं मुनिम् ३२
तमानीतं सरस्वत्या दृष्ट्वा कोपसमन्वितः
अथान्वेषत्प्रहरणं वसिष्ठान्तकरं तदा ३३
तं तु क्रुद्धमभिप्रेक्ष्य ब्रह्महत्याभयान्नदी
अपोवाह वसिष्ठं तु प्राचीं दिशमतन्द्रिता
उभयोः कुर्वती वाक्यं वञ्चयित्वा तु गाधिजम् ३४
ततोऽपवाहितं दृष्ट्वा वसिष्ठमृषिसत्तमम्
अब्रवीदथ संक्रुद्धो विश्वमित्रो ह्यमर्षणः ३५
यस्मान्मा त्वं सरिच्छ्रेष्ठे वञ्चयित्वा पुनर्गता
शोणितं वह कल्याणि रक्षोग्रामणिसंमतम् ३६
ततः सरस्वती शप्ता विश्वामित्रेण धीमता
अवहच्छोणितोन्मिश्रं तोयं संवत्सरं तदा ३७
अथर्षयश्च देवाश्च गन्धर्वाप्सरसस्तथा
सरस्वतीं तथा दृष्ट्वा बभूवुर्भृशदुःखिताः ३८
एवं वसिष्ठापवाहो लोके ख्यातो जनाधिप
आगच्छच्च पुनर्मार्गं स्वमेव सरितां वरा ३९
इति श्रीमहाभारते शल्यपर्वणि एकचत्वारिंशोऽध्यायः ४१

## द्विचत्वारिंशोऽध्यायः

वैशम्पायन उवाच
सा शप्ता तेन क्रुद्धेन विश्वामित्रेण धीमता
तस्मिंस्तीर्थवरे शुभ्रे शोणितं समुपावहत् १
अथाजग्मुस्ततो राजन्राक्षसास्तत्र भारत
तत्र ते शोणितं सर्वे पिबन्तः सुखमासते २
तृप्ताश्च सुभृशं तेन सुखिता विगतज्वराः
नृत्यन्तश्च हसन्तश्च यथा स्वर्गजितस्तथा ३
कस्यचित्त्वथ कालस्य ऋषयः सुतपोधनाः
तीर्थयात्रां समाजग्मुः सरस्वत्यां महीपते ४
तेषु सर्वेषु तीर्थेषु आप्लुत्य मुनिपुंगवाः
प्राप्य प्रीतिं परां चापि तपोलुब्धा विशारदाः

प्रययुर्हि ततो राजन्येन तीर्थं हि तत्तथा ५
अथागम्य महाभागास्तत्तीर्थं दारुणं तदा
दृष्ट्वा तोयं सरस्वत्याः शोणितेन परिप्लुतम्
पीयमानं च रक्षोभिर्बहुभिर्नृपसत्तम ६
तान्दृष्ट्वा राक्षसान्राजन्मुनयः संशितव्रताः
परित्राणे सरस्वत्याः परं यत्नं प्रचक्रिरे ७
ते तु सर्वे महाभागाः समागम्य महाव्रताः
आहूय सरितां श्रेष्ठामिदं वचनमब्रुवन् ८
कारणं ब्रूहि कल्याणि किमर्थं ते ह्रदो ह्ययम्
एवमाकुलतां यातः श्रुत्वा पास्यामहे वयम् ९
ततः सा सर्वमाचष्ट यथावृत्तं प्रवेपती
दुःखितामथ तां दृष्ट्वा त ऊचुर्वै तपोधनाः १०
कारणं श्रुतमस्माभिः शापश्चैव श्रुतोऽनघे
करिष्यन्ति तु यत्प्राप्तं सर्व एव तपोधनाः ११
एवमुक्त्वा सरिच्छ्रेष्ठामूचुस्तेऽथ परस्परम्
विमोचयामहे सर्वे शापादेतां सरस्वतीम् १२
तेषां तु वचनादेव प्रकृतिस्था सरस्वती
प्रसन्नसलिला जज्ञे यथा पूर्वं तथैव हि
विमुक्ता च सरिच्छ्रेष्ठा विबभौ सा यथा पुरा १३
दृष्ट्वा तोयं सरस्वत्या मुनिभिस्तैस्तथा कृतम्
कृताञ्जलिस्ततो राजन्राक्षसाः क्षुधयार्दिताः
ऊचुस्तान्वै मुनीन्सर्वान्कृपायुक्तान्पुनः पुनः १४
वयं हि क्षुधिताश्चैव धर्माद्धीनाश्च शाश्वतात्
न च नः कामकारोऽय यद्वयं पापकारिणः १५
युष्माकं चाप्रसादेन दुष्कृतेन च कर्मणा
पक्षोऽय वर्धतेऽस्माकं यतः स्म ब्रह्मराक्षसाः १६
एवं हि वैश्यशूद्राणां क्षत्रियाणां तथैव च
ये ब्राह्मणान्प्रद्विषन्ति ते भवन्तीह राक्षसाः १७
आचार्यमृत्विजं चैव गुरुं वृद्धजनं तथा
प्राणिनो येऽवमन्यन्ते ते भवन्तीह राक्षसाः

योषितां चैव पापानां योनिदोषेण वर्धते १८
तत्कुरुध्वमिहास्माकं कारुण्यं द्विजसत्तमाः
शक्ता भवन्तः सर्वेषां लोकानामपि तारणे १९
तेषां ते मुनयः श्रुत्वा तुष्टुवुस्तां महानदीम्
मोक्षार्थं रक्षसां तेषामूचुः प्रयतमानसाः २०
क्षुतकीटावपन्नं च यच्चोच्छिष्टाशितं भवेत्
केशावपन्नमाधूतमारुग्णमपि यद्भवेत्
श्वभिः संस्पृष्टमन्नं च भागोऽसौ रक्षसामिह २१
तस्माज्ज्ञात्वा सदा विद्वानेतान्यन्नानि वर्जयेत्
राक्षसान्नमसौ भुङ्क्ते यो भुङ्क्ते ह्यन्नमीदृशम् २२
शोधयित्वा ततस्तीर्थमृषयस्ते तपोधनाः
मोक्षार्थं राक्षसानां च नदीं तां प्रत्यचोदयन् २३
महर्षीणां मतं ज्ञात्वा ततः सा सरितां वरा
अरुणामानयामास स्वां तनुं पुरुषर्षभ २४
तस्यां ते राक्षसाः स्नात्वा तनूस्त्यक्त्वा दिवं गताः
अरुणायां महाराज ब्रह्महत्यापहा हि सा २५
एतमर्थमभिज्ञाय देवराजः शतक्रतुः
तस्मिंस्तीर्थवरे स्नात्वा विमुक्तः पाप्मना किल २६
जनमेजय उवाच
किमर्थं भगवाञ्शक्रो ब्रह्महत्यामवाप्तवान्
कथमस्मिंश्च तीर्थे वै आप्लुत्याकल्मषोऽभवत् २७
वैशम्पायन उवाच
शृणुष्वैतदुपाख्यानं यथावृत्तं जनेश्वर
यथा बिभेद समयं नमुचेर्वासवः पुरा २८
नमुचिर्वासवाद्भीतः सूर्यरश्मिं समाविशत्
तेनेन्द्रः सख्यमकरोत्समयं चेदमब्रवीत् २९
नार्द्रेण त्वा न शुष्केण न रात्रौ नापि वाहनि
वधिष्याम्यसुरश्रेष्ठ सखे सत्येन ते शपे ३०
एवं स कृत्वा समयं दृष्ट्वा नीहारमीश्वरः
चिच्छेदास्य शिरो राजन्नपां फेनेन वासवः ३१

तच्छिरो नमुचेश्छिन्नं पृष्ठतः शक्रमन्वयात्
हे मित्रहन्पाप इति ब्रुवाणं शक्रमन्तिकात् ३२
एवं स शिरसा तेन चोद्यमानः पुनः पुनः
पितामहाय संतप्त एतमर्थं न्यवेदयत् ३३
तमब्रवील्लोकगुरुररुणायां यथाविधि
इष्ट्वोपस्पृश देवेन्द्र ब्रह्महत्यापहा हि सा ३४
इत्युक्तःस सरस्वत्याः कुञ्जे वै जनमेजय
इष्ट्वा यथावद्बलभिदरुणायामुपास्पृशत् ३५
स मुक्तः पाप्मना तेन ब्रह्महत्याकृतेन ह
जगाम संहृष्टमनास्त्रिदिवं त्रिदशेश्वरः ३६
शिरस्तच्चापि नमुचेस्तत्रैवाप्लुत्य भारत
लोकान्कामदुघान्प्राप्तमक्षयान्राजसत्तम ३७
तत्राप्युपस्पृश्य बलो महात्मा दत्त्वा च दानानि पृथग्विधानि
अवाप्य धर्मं परमार्यकर्मा जगाम सोमस्य महत्स तीर्थम् ३८
यत्रायजद्राजसूयेन सोमः साक्षात्पुरा विधिवत्पार्थिवेन्द्र
अत्रिर्धीमान्विप्रमुख्यो बभूव होता यस्मिन्क्रतुमुख्ये महात्मा ३९
यस्यान्तेऽभूत्सुमहान्दानवानां दैतेयानां राक्षसानां च देवैः
स संग्रामस्तारकाख्यं सुतीव्रो यत्र स्कन्दस्तारकाख्यं जघान ४०
सेनापत्यं लब्धवान्देवतानां महासेनो यत्र दैत्यांतकर्ता
साक्षाच्चात्र न्यवसत्कार्त्तिकेयः सदा कुमारो यत्र स प्लक्षराजः ४१
इति श्रीमहाभारते शल्यपर्वणि द्विचत्वारिंशोऽध्यायः ४२

## त्रिचत्वारिंशोऽध्यायः

जनमेजय उवाच
सरस्वत्याः प्रभावोऽयमुक्तस्ते द्विजसत्तम
कुमारस्याभिषेकं तु ब्रह्मन्व्याख्यातुमर्हसि १
यस्मिन्काले च देशे च यथा च वदतां वर
यैश्चाभिषिक्तो भगवान्विधिना येन च प्रभुः २
स्कंदो यथा च दैत्यानामकरोत्कदनं महत्
तथा मे सर्वमाचक्ष्व परं कौतूहलं हि मे ३

वैशम्पायन उवाच
कुरुवंशस्य सदृशमिदं कौतूहलं तव
हर्षमुत्पादयत्येतद्वचो मे जनमेजय ४
हन्त ते कथयिष्यामि शृणवानस्य जनाधिप
अभिषेकं कुमारस्य प्रभावं च महात्मनः ५
तेजो माहेश्वरं स्कन्नमग्नौ प्रपतितं पुरा
तत्सर्वभक्षो भगवान्नाशकद्दग्धुमक्षयम् ६
तेनासीदति तेजस्वी दीप्तिमान्हव्यवाहनः
न चैव धारयामास गर्भं तेजोमयं तदा ७
स गङ्गामभिसंगम्य नियोगाद्ब्रह्मणः प्रभुः
गर्भमाहितवान्दिव्यं भास्करोपमतेजसम् ८
अथ गङ्गापि तं गर्भमसहन्ती विधारणे
उत्ससर्ज गिरौ रम्ये हिमवत्यमरार्चिते ९
स तत्र ववृधे लोकानावृत्य ज्वलनात्मजः
ददृशुर्ज्वलनाकारं तं गर्भमथ कृत्तिकाः १०
शरस्तम्बे महात्मानमनलात्मजमीश्वरम्
ममायमिति ताः सर्वाः पुत्रार्थिन्योऽभिचक्रमुः ११
तासां विदित्वा भावं तं मातॄणां भगवान्प्रभुः
प्रस्नुतानां पयः षड्भिर्वदनैरपिबत्तदा १२
तं प्रभावं समालक्ष्य तस्य बालस्य कृत्तिकाः
परं विस्मयमापन्ना देव्यो दिव्यवपुर्धराः १३
यत्रोत्सृष्टः स भगवान्गङ्गया गिरिमूर्धनि
स शैलः काञ्चनः सर्वः संबभौ कुरुसत्तम १४
वर्धता चैव गर्भेण पृथिवी तेन रञ्जिता
अतश्च सर्वे संवृत्ता गिरयः काञ्चनाकराः १५
कुमारश्च महावीर्यः कार्त्तिकेय इति स्मृतः
गाङ्गेयः पूर्वमभवन्महायोगबलान्वितः १६
स देवस्तपसा चैव वीर्येण च समन्वितः
ववृधेऽतीव राजेन्द्र चन्द्रवत्प्रियदर्शनः १७
स तस्मिन्काञ्चने दिव्ये शरस्तम्बे श्रिया वृतः

स्तूयमानस्तदा शेते गन्धर्वैर्मुनिभिस्तथा १८
तथैनमन्वनृत्यन्त देवकन्याः सहस्रशः
दिव्यवादित्रनृत्तज्ञाः स्तुवन्त्यश्चारुदर्शनाः १९
अन्वास्ते च नदी देवं गङ्गा वै सरितां वरा
दधार पृथिवी चैनं बिभ्रती रूपमुत्तमम् २०
जातकर्मादिकास्तस्य क्रियाश्चक्रे बृहस्पतिः
वेदश्चैनं चतुर्मूर्तिरुपतस्थे कृताञ्जलि २१
धनुर्वेदश्चतुष्पादः शस्त्रग्रामः ससंग्रहः
तत्रैनं समुपातिष्ठत्साक्षाद्वाणी च केवला २२
स ददर्श महावीर्यं देवदेवमुमापतिम्
शैलपुत्र्या सहासीनं भूतसंघशतैर्वृतम् २३
निकाया भूतसंघानां परमाद्भुतदर्शनाः
विकृता विकृताकारा विकृताभरणध्वजाः २४
व्याघ्रसिंहर्क्षवदना बिडालमकराननाः
वृषदंशमुखाश्चान्ये गजोष्ट्रवदनास्तथा २५
उलूकवदनाः केचिद्गृध्रगोमायुदर्शनाः
क्रौञ्चपारावतनिभैर्वदनै राङ्कवैरपि २६
श्वाविच्छल्यकगोधानां खरैडकगवां तथा
सदृशानि वपूंष्यन्ये तत्र तत्र व्यधारयन् २७
केचिच्छैलाम्बुदप्रख्याश्चक्रालातगदायुधाः
केचिदञ्जनपुञ्जाभाः केचिच्छ्वेताचलप्रभाः २८
सप्तमातृगणाश्चैव समाजग्मुर्विशां पते
साध्या विश्वेऽथ मरुतो वसवः पितरस्तथा २९
रुद्रादित्यास्तथा सिद्धा भुजगा दानवाः खगाः
ब्रह्मा स्वयंभूर्भगवान्सपुत्रः सह विष्णुना ३०
शक्रस्तथाऽभ्ययाद्द्रष्टुं कुमारवरमच्युतम्
नारदप्रमुखाश्चापि देवगन्धर्वसत्तमाः ३१
देवर्षयश्च सिद्धाश्च बृहस्पतिपुरोगमाः
ऋभवो नाम वरदा देवानामपि देवताः
तेऽपि तत्र समाजग्मुर्यामा धामाश्च सर्वशः ३२

स तु बालोऽपि भगवान्महायोगबलान्वितः
अभ्याजगाम देवेशं शूलहस्तं पिनाकिनम् ३३
तमाव्रजन्तमालक्ष्य शिवस्यासीन्मनोगतम्
युगपच्छैलपुत्र्याश्च गङ्गायाः पावकस्य च ३४
किं नु पूर्वमयं बालो गौरवादभ्युपैष्यति
अपि मामिति सर्वेषां तेषामासीन्मनोगतम् ३५
तेषामेतमभिप्रायं चतुर्णामुपलक्ष्य सः
युगपद्योगमास्थाय ससर्ज विविधास्तनूः ३६
ततोऽभवच्चतुर्मूर्तिः क्षणेन भगवान्प्रभुः
स्कन्दः शाखो विशाखश्च नैगमेषश्च पृष्ठतः ३७
एवं स कृत्वा ह्यात्मानं चतुर्धा भगवान्प्रभुः
यतो रुद्रस्ततः स्कन्दो जगामाद्भुतदर्शनः ३८
विशाखस्तु ययौ येन देवी गिरिवरात्मजा
शाखो ययौ च भगवान्वायुमूर्तिर्विभावसुम्
नैगमेषोऽगमद्गङ्गां कुमारः पावकप्रभः ३९
सर्वे भास्वरदेहास्ते चत्वारः समरूपिणः
तान्समभ्ययुरव्यग्रास्तदद्भुतमिवाभवत् ४०
हाहाकारो महानासीद्देवदानवरक्षसाम्
तद्दृष्ट्वा महदाश्चर्यमद्भुतं लोमहर्षणम् ४१
ततो रुद्रश्च देवी च पावकश्च पितामहम्
गङ्गया सहिताः सर्वे प्रणिपेतुर्जगत्पतिम् ४२
प्रणिपत्य ततस्ते तु विधिवद्राजपुंगव
इदमूचुर्वचो राजन्कार्तिकेयप्रियेप्सया ४३
अस्य बालस्य भगवन्नाधिपत्यं यथेप्सितम्
अस्मत्प्रियार्थं देवेश सदृशं दातुमर्हसि ४४
ततः स भगवान्धीमान्सर्वलोकपितामहः
मनसा चिन्तयामास किमयं लभतामिति ४५
ऐश्वर्याणि हि सर्वाणि देवगन्धर्वरक्षसाम्
भूतयक्षविहंगानां पन्नगानां च सर्वशः ४६
पूर्वमेवादिदेशासौ निकायेषु महात्मनाम्

समर्थं च तमैश्वर्ये महामतिरमन्यत ४७
ततो मुहूर्तं स ध्यात्वा देवानां श्रेयसि स्थितः
सेनापत्यं ददौ तस्मै सर्वभूतेषु भारत ४८
सर्वदेवनिकायानां ये राजानः परिश्रुताः
तान्सर्वान्व्यादिदेशास्मै सर्वभूतपितामहः ४९
ततः कुमारमादाय देवा ब्रह्मपुरोगमाः
अभिषेकार्थमाजग्मुः शैलेन्द्रं सहितास्ततः ५०
पुण्यां हमैवतीं देवीं सरिच्छ्रेष्ठां सरस्वतीम्
समन्तपञ्चके या वै त्रिषु लोकेषु विश्रुता ५१
तत्र तीरे सरस्वत्याः पुण्ये सर्वगुणान्विते
निषेदुर्देवगन्धर्वाः सर्वे सम्पूर्णमानसाः ५२
इति श्रीमहाभारते शल्यपर्वणि त्रिचत्वारिंशोऽध्यायः ४३

## चतुश्चत्वारिंशोऽध्यायः

वैशम्पायन उवाच
ततोऽभिषेकसंभारान्सर्वान्संभृत्य शास्त्रतः
बृहस्पतिः समिद्धेऽग्नौ जुहावाज्यं यथाविधि १
ततो हिमवता दत्ते मणिप्रवरशोभिते
दिव्यरत्नाचिते दिव्ये निषण्णः परमासने २
सर्वमङ्गलसंभारैर्विधिमन्त्रपुरस्कृतम्
आभिषेचनिकं द्रव्यं गृहीत्वा देवतागणाः ३
इन्द्राविष्णू महावीर्यौ सूर्याचन्द्रमसौ तथा
धाता चैव विधाता च तथा चैवानिलानलौ ४
पूष्णा भगेनार्यम्णा च अंशेन च विवस्वता
रुद्रश्च सहितो धीमान्मित्रेण वरुणेन च ५
रुद्रैर्वसुभिरादित्यैरश्विभ्यां च वृतः प्रभुः
विश्वेदेवैर्मरुद्भिश्च साध्यैश्च पितृभिः सह ६
गन्धर्वैरप्सरोभिश्च यक्षराक्षसपन्नगैः
देवर्षिभिरसंख्येयैस्तथा ब्रह्मर्षिभिर्वरैः ७
वैखानसैर्वालखिल्यैर्वाय्वाहारैर्मरीचिपैः

भृगुभिश्चाङ्गिरोभिश्च यतिभिश्च महात्मभिः
सर्वैर्विद्याधरैः पुरायैर्योगसिद्धैस्तथा वृतः ८
पितामहः पुलस्त्यश्च पुलहश्च महातपाः
अङ्गिराः कश्यपोऽत्रिश्च मरीचिर्भृगुरेव च ९
क्रतुर्हरः प्रचेताश्च मनुर्दत्तस्तथैव च
ऋतवश्च ग्रहाश्चैव ज्योतींषि च विशां पते १०
मूर्तिमत्यश्च सरितो वेदाश्चैव सनातनाः
समुद्राश्च ह्रदाश्चैव तीर्थानि विविधानि च
पृथिवी द्यौर्दिशश्चैव पादपाश्च जनाधिप ११
अदितिर्देवमाता च ह्रीः श्रीः स्वाहा सरस्वती
उमा शची सिनीवाली तथा चानुमतिः कुहूः
राका च धिषणा चैव पत्न्यश्चान्या दिवौकसाम् १२
हिमवांश्चैव विन्ध्यश्च मेरुश्चानेकशृङ्गवान्
एरावतः सानुचरः कलाः काष्ठास्तथैव च
मासार्धमासा ऋतवस्तथा रात्र्यहनी नृप १३
उच्चैःश्रवा हयश्रेष्ठो नागराजश्च वामनः
अरुणो गरुडश्चैव वृक्षाश्चौषधिभिः सह १४
धर्मश्च भगवान्देवः समाजग्मुर्हि संगताः
कालो यमश्च मृत्युश्च यमस्यानुचराश्च ये १५
बहुलत्वाच्च नोक्ता ये विविधा देवतागणाः
ते कुमाराभिषेकार्थं समाजग्मुस्ततस्ततः १६
जगृहुस्ते तदा राजन्सर्व एव दिवौकसः
आभिषेचनिकं भाराडं मङ्गलानि च सर्वशः १७
दिव्यसंभारसंयुक्तैः कलशैः काञ्चनैर्नृप
सरस्वतीभिः पुरायाभिर्दिव्यतोयाभिरेव तु १८
अभ्यषिञ्चन्कुमारं वै संप्रहृष्टा दिवौकसः
सेनापतिं महात्मानमसुराणां भयावहम् १९
पुरा यथा महाराज वरुणं वै जलेश्वरम्
तथाभ्यषिञ्चद्भगवान्ब्रह्मा लोकपितामहः
कश्यपश्च महातेजा ये चान्ये नानुकीर्तिताः २०

तस्मै ब्रह्मा ददौ प्रीतो बलिनो वातरंहसः
कामवीर्यधरान्सिद्धान्महापारिषदान्प्रभुः २१
नन्दिषेणं लोहिताक्षं घण्टाकर्णं च संमतम्
चतुर्थमस्यानुचरं ख्यातं कुमुदमालिनम् २२
ततः स्थाणुं महावेगं महापारिषदं क्रतुम्
मायाशतधरं कामं कामवीर्यबलान्वितम्
ददौ स्कन्दाय राजेन्द्र सुरारिविनिबर्हणम् २३
स हि देवासुरे युद्धे दैत्यानां भीमकर्मणाम्
जघान दोर्भ्यां संक्रुद्धः प्रयुतानि चतुर्दश २४
तथा देवा ददुस्तस्मै सेनां नैर्ऋतसंकुलाम्
देवशत्रुक्षयकरीमजय्यां विश्वरूपिणीम् २५
जयशब्दं ततश्चक्रुर्देवाः सर्वे सवासवाः
गन्धर्वयक्षरक्षांसि मुनयः पितरस्तथा २६
यमः प्रादादनुचरौ यमकालोपमावुभौ
उन्माथं च प्रमाथं च महावीर्यौ महाद्युती २७
सुभ्राजो भास्करश्चैव यौ तौ सूर्यानुयायिनौ
तौ सूर्यः कार्तिकेयाय ददौ प्रीतः प्रतापवान् २८
कैलासशृङ्गसंकाशौ श्वेतमाल्यानुलेपनौ
सोमोऽप्यनुचरौ प्रादान्मणिं सुमणिमेव च २९
ज्वालाजिह्वं तथा ज्योतिरात्मजाय हुताशनः
ददावनुचरौ शूरौ परसैन्यप्रमाथिनौ ३०
परिघं च वटं चैव भीमं च सुमहाबलम्
दहतिं दहनं चैव प्रचण्डौ वीर्यसंमतौ
अंशोऽप्यनुचरान्पञ्च ददौ स्कन्दाय धीमते ३१
उत्क्रोशं पङ्कजं चैव वज्रदण्डधरावुभौ
ददावनलपुत्राय वासवः परवीरहा
तौ हि शत्रून्महेन्द्रस्य जघ्नतुः समरे बहून् ३२
चक्रं विक्रमकं चैव संक्रमं च महाबलम्
स्कन्दाय त्रीननुचरान्ददौ विष्णुर्महायशाः ३३
वर्धनं नंदनं चैव सर्वविद्याविशारदौ

स्कन्दाय ददतुः प्रीतावश्विनौ भरतर्षभ ३४
कुन्दनं कुसुमं चैव कुमुदं च महायशाः
डम्बराडम्बरौ चैव ददौ धाता महात्मने ३५
वक्रानुवक्रौ बलिनौ मेषवक्त्रौ बलोत्कटौ
ददौ त्वष्टा महामायौ स्कन्दायानुचरौ वरौ ३६
सुव्रतं सत्यसंधं च ददौ मित्रो महात्मने
कुमाराय महात्मानौ तपोविद्याधरौ प्रभुः ३७
सुदर्शनीयौ वरदौ त्रिषु लोकेषु विश्रुतौ
सुप्रभं च महात्मानं शुभकर्माणमेव च
कार्त्तिकेयाय संप्रादाद्विधाता लोकविश्रुतौ ३८
पालितकं कालिकं च महामायाविनावुभौ
पूषा च पार्षदौ प्रादात्कार्तिकेयाय भारत ३९
बलं चातिबलं चैव महावक्त्रौ महाबलौ
प्रददौ कार्तिकेयाय वायुर्भरतसत्तम ४०
घसं चातिघसं चैव तिमिवक्त्रौ महाबलौ
प्रददौ कार्तिकेयाय वरुणः सत्यसंगरः ४१
सुवर्चसं महात्मानं तथैवाप्यतिवर्चसम्
हिमवान्प्रददौ राजन्हुताशनसुताय वै ४२
काञ्चनं च महात्मानं मेघमालिनमेव च
ददावनुचरौ मेरुरग्निपुत्राय भारत ४३
स्थिरं चातिस्थिरं चैव मेरुरेवापरौ ददौ
महात्मनेऽग्निपुत्राय महाबलपराक्रमौ ४४
उच्छ्रितं चातिशृङ्गं च महापाषाणयोधिनौ
प्रददावग्निपुत्राय विन्ध्यः पारिषदावुभौ ४५
संग्रहं विग्रहं चैव समुद्रोऽपि गदाधरौ
प्रददावग्निपुत्राय महापारिषदावुभौ ४६
उन्मादं पुष्पदन्तं च शङ्कुकर्णं तथैव च
प्रददावग्निपुत्राय पार्वती शुभदर्शना ४७
जयं महाजयं चैव नागौ ज्वलनसूनवे
प्रददौ पुरुषव्याघ्र वासुकिः पन्नगेश्वरः ४८

एवं साध्याश्च रुद्राश्च वसवः पितरस्तथा
सागराः सरितश्चैव गिरयश्च महाबलाः ४९
ददुः सेनागणाध्यक्षाञ्शूलपट्टिशधारिणः
दिव्यप्रहरणोपेतान्नानावेषविभूषितान् ५०
शृणु नामानि चान्येषां येऽन्ये स्कन्दस्य सैनिकाः
विविधायुधसंपन्नाश्चित्राभरणवर्मिणः ५१
शङ्कुकर्णो निकुम्भश्च पद्मः कुमुद एव च
अनन्तो द्वादशभुजस्तथा कृष्णोपकृष्णकौ ५२
द्रोणश्रवाः कपिस्कन्धः काञ्चनाक्षो जलंधमः
अक्षसंतर्जनो राजन्कुनदीकस्तमोभ्रकृत् ५३
एकाक्षो द्वादशाक्षश्च तथैवैकजटः प्रभुः
सहस्रबाहुर्विकटो व्याघ्राक्षः क्षितिकम्पनः ५४
पुण्यनामा सुनामा च सुवक्त्रः प्रियदर्शनः
परिश्रुतः कोकनदः प्रियमाल्यानुलेपनः ५५
अजोदरो गजशिराः स्कंधाक्षः शतलोचनः
ज्वालाजिह्वः करालाश्च सितकेशो जटी हरिः ५६
चतुर्दंष्ट्रोऽष्टजिह्वश्च मेघनादः पृथुश्रवाः
विद्युदक्षो धनुर्वक्त्रो जाठरो मारुताशनः ५७
उदराक्षो झषाक्षश्च वज्रनाभो वसुप्रभः
समुद्रवेगो राजेन्द्र शैलकम्पी तथैव च ५८
पुत्रमेषः प्रवाहश्च तथा नन्दोपनन्दकौ
धूम्रः श्वेतः कलिङ्गश्च सिद्धार्थो वरदस्तथा ५९
प्रियकश्चैव नन्दश्च गोनन्दश्च प्रतापवान्
आनन्दश्च प्रमोदश्च स्वस्तिको ध्रुवकस्तथा ६०
क्षेमवापः सुजातश्च सिद्धयात्रश्च भारत
गोव्रजः कनकापीडो महापारिषदेश्वरः ६१
गायनो हसनश्चैव बाणः खड्गश्च वीर्यवान्
वैताली चातिताली च तथा कतिकवातिकौ ६२
हंसजः पङ्कदिग्धाङ्गः समुद्रोन्मादनश्च ह
रणोत्कटः प्रहासश्च श्वेतशीर्षश्च नन्दकः ६३

कालकण्ठः प्रभासश्च तथा कुम्भाण्डकोऽपरः
कालकाक्षः सितश्चैव भूतलोन्मथनस्तथा ६४
यज्ञवाहः प्रवाहश्च देवयाजी च सोमपः
सजालश्च महातेजाः क्रथक्राथौ च भारत ६५
तुहनश्च तुहानश्च चित्रदेवश्च वीर्यवान्
मधुरः सुप्रसादश्च किरीटी च महाबलः ६६
वसनो मधुवर्णश्च कलशोदर एव च
धमन्तो मन्मथकरः सूचीवक्त्रश्च वीर्यवान् ६७
श्वेतवक्त्रः सुवक्त्रश्च चारुवक्त्रश्च पाण्डुरः
दण्डबाहुः सुबाहुश्च रजः कोकिलकस्तथा ६८
अचलः कनकाक्षश्च बालानामयिकः प्रभुः
संचारकः कोकनदो गृध्रवक्त्रश्च जम्बुकः ६९
लोहाशवक्त्रो जठरः कुम्भवक्त्रश्च कुण्डकः
मद्गुग्रीवश्च कृष्णौजा हंसवक्त्रश्च चन्द्रभाः ७०
पाणिकूर्मा च शम्बूकः पञ्चवक्त्रश्च शिक्षकः
चाषवक्त्रश्च जम्बूकः शाकवक्त्रश्च कुण्डकः ७१
योगयुक्ता महात्मानः सततं ब्राह्मणप्रियाः
पैतामहा महात्मानो महापारिषदाश्च ह
यौवनस्थाश्च बालाश्च वृद्धाश्च जनमेजय ७२
सहस्रशः पारिषदाः कुमारमुपतस्थिरे
वक्त्रैर्नानाविधैर्ये तु शृणु तान्जनमेजय ७३
कूर्मकुक्कुटवक्त्राश्च शशोलूकमुखास्तथा
खरोष्ट्रवदनाश्चैव वराहवदनास्तथा ७४
मनुष्यमेषवक्त्राश्च शृगालवदनास्तथा
भीमा मकरवक्त्राश्च शिंशुमारमुखास्तथा ७५
मार्जारशशवक्त्राश्च दीर्घवक्त्राश्च भारत
नकुलोलूकवक्त्राश्च श्ववक्त्राश्च तथापरे ७६
आखुबभ्रुकवक्त्राश्च मयूरवदनास्तथा
मत्स्यमेषाननाश्चान्ये अजाविमहिषाननाः ७७
ऋक्षशार्दूलवक्त्राश्च द्वीपिसिंहाननास्तथा

भीमा गजाननाश्चैव तथा नक्रमुखाः परे ७८
गरुडाननाः खड्गमुखा वृककाकमुखास्तथा
गोखरोष्ट्रमुखाश्चान्ये वृषदंशमुखास्तथा ७९
महाजठरपादाङ्गास्तारकाक्षाश्च भारत
पारावतमुखाश्चान्ये तथा वृषमुखाः परे ८०
कोकिलावदनाश्चान्ये श्येनतित्तिरिकाननाः
कृकलासमुखाश्चैव विरजोम्बरधारिणः ८१
व्यालवक्त्राः शूलमुखाश्चण्डवक्त्राः शताननाः
आशीविषाश्चीरधरा गोनासावरणास्तथा ८२
स्थूलोदराः कृशाङ्गाश्च स्थूलाङ्गाश्च कृशोदराः
ह्रस्वग्रीवा महाकर्णा नानाव्यालविभूषिताः ८३
गजेन्द्रचर्मवसनास्तथा कृष्णाजिनाम्बराः
स्कन्धेमुखा महाराज तथा ह्युदरतोमुखाः ८४
पृष्ठेमुखा हनुमुखास्तथा जङ्घामुखा अपि
पार्श्वाननाश्च बहवो नानादेशमुखास्तथा ८५
तथा कीटपतंगानां सदृशास्या गणेश्वराः
नानाव्यालमुखाश्चान्ये बहुबाहुशिरोधराः ८६
नानावृक्षभुजाः केचित्कटिशीर्षास्तथापरे
भुजंगभोगवदना नानागुल्मनिवासिनः ८७
चीरसंवृतगात्राश्च तथा फलकवाससः
नानावेषधराश्चैव चर्मवासस एव च ८८
उष्णीषिणो मुकुटिनः कम्बुग्रीवाः सुवर्चसः
किरीटिनः पञ्चशिखास्तथा कठिनमूर्धजाः ८९
त्रिशिखा द्विशिखाश्चैव तथा सप्तशिखाः परे
शिखण्डिनो मुकुटिनो मुण्डाश्च जटिलास्तथा ९०
चित्रमाल्यधराः केचित्केचिद्रोमाननास्तथा
दिव्यमाल्याम्बरधराः सततं प्रियविग्रहाः ९१
कृष्णा निर्मांसवक्त्राश्च दीर्घपृष्ठा निरूदराः
स्थूलपृष्ठा ह्रस्वपृष्ठाः प्रलम्बोदरमेहनाः ९२
महाभुजा ह्रस्वभुजा ह्रस्वगात्राश्च वामनाः

कुब्जाश्च दीर्घजङ्घाश्च हस्तिकर्णशिरोधराः ९३
हस्तिनासाः कूर्मनासा वृकनासास्तथापरे
दीर्घोष्ठा दीर्घजिह्वाश्च विकराला ह्यधोमुखाः ९४
महादंष्ट्रा ह्रस्वदंष्ट्राश्चतुर्दंष्ट्रास्तथापरे
वारणेन्द्रनिभाश्चान्ये भीमा राजन्सहस्रशः ९५
सुविभक्तशरीराश्च दीप्तिमन्तः स्वलंकृताः
पिङ्गाक्षाः शङ्कुकर्णाश्च वक्रनासाश्च भारत ९६
पृथुदंष्ट्रा महादंष्ट्राः स्थूलौष्ठा हरिमूर्धजाः
नानापादौष्ठदंष्ट्राश्च नानाहस्तशिरोधराः
नानावर्मभिराच्छन्ना नानाभाषाश्च भारत ९७
कुशला देशभाषासु जल्पन्तोऽन्योन्यमीश्वराः
हृष्टाः परिपतन्ति स्म महापारिषदास्तथा ९८
दीर्घग्रीवा दीर्घनखा दीर्घपादशिरोभुजाः
पिङ्गाक्षा नीलकण्ठाश्च लम्बकर्णाश्च भारत ९९
वृकोदरनिभाश्चैव केचिदञ्जनसंनिभाः
श्वेताङ्गा लोहितग्रीवाः पिङ्गाक्षाश्च तथापरे
कल्माषा बहवो राजंश्चित्रवर्णाश्च भारत १००
चामरापीडकनिभाः श्वेतलोहितराजयः
नानावर्णाः सवर्णाश्च मयूरसदृशप्रभाः १०१
पुनः प्रहरणान्येषां कीर्त्यमानानि मे शृणु
शेषैः कृतं पारिषदैरायुधानां परिग्रहम् १०२
पाशोद्यतकराः केचिद्व्यादितास्याः खराननाः
पृथ्वक्षा नीलकण्ठाश्च तथा परिघबाहवः १०३
शतघ्नीचक्रहस्ताश्च तथा मुसलपाणयः
शूलासिहस्ताश्च तथा महाकाया महाबलाः १०४
गदाभुशुण्डिहस्ताश्च तथा तोमरपाणयः
असिमुद्गरहस्ताश्च दण्डहस्ताश्च भारत १०५
आयुधैर्विविधैर्घोरैर्महात्मानो महाजवाः
महाबला महावेगा महापारिषदास्तथा १०६
अभिषेकं कुमारस्य दृष्ट्वा हृष्टा रणप्रियाः

घण्टाजलिपिनद्धाङ्गा ननृतुस्ते महौजसः १०७
एते चान्ये च बहवो महापारिषदा नृप
उपतस्थुर्महात्मानं कार्तिकेयं यशस्विनम् १०८
दिव्याश्चाप्यान्तरिक्षाश्च पार्थिवाश्चानिलोपमाः
व्यादिष्टा दैवतैः शूराः स्कन्दस्यानुचराभवन् १०९
तादृशानां सहस्राणि प्रयुतान्यर्बुदानि च
अभिषिक्तं महात्मानं परिवार्योपतस्थिरे ११०
इति श्रीमहाभारते शल्यपर्वणि चतुश्चत्वारिंशोऽध्यायः ४४

## पञ्चचत्वारिंशोऽध्यायः

वैशम्पायन उवाच
शृणु मातृगणान्राजन्कुमारानुचरानिमान्
कीर्त्यमानान्मया वीर सपत्नगणसूदनान् १
यशस्विनीनां मातॄणां शृणु नामानि भारत
याभिर्व्याप्तास्त्रयो लोकाः कल्याणीभिश्चराचराः २
प्रभावती विशालाक्षी पलिता गोनसी तथा
श्रीमती बहुला चैव तथैव बहुपुत्रिका ३
अप्सुजाता च गोपाली बृहदम्बालिका तथा
जयावती मालतिका ध्रुवरत्ना भयंकरी ४
वसुदामा सुदामा च विशोका नन्दिनी तथा
एकचूडा महाचूडा चक्रनेमिश्च भारत ५
उत्तेजनी जयत्सेना कमलाक्ष्यथ शोभना
शत्रुंजया तथा चैव क्रोधना शलभी खरी ६
माधवी शुभवक्त्रा च तीर्थनेमिश्च भारत
गीतप्रिया च कल्याणी कद्रुला चामिताशना ७
मेघस्वना भोगवती सुभ्रूश्च कनकावती
अलाताक्षी वीर्यवती विद्युज्जिह्वा च भारत ८
पद्मावती सुनक्षत्रा कन्दरा बहुयोजना
संतानिका च कौरव्य कमला च महाबला ९
सुदामा बहुदामा च सुप्रभा च यशस्विनी

नृत्यप्रिया च राजेन्द्र शतोलूखलमेखला १०
शतघराटा शतानन्दा भगनन्दा च भामिनी
वपुष्मती चन्द्रशीता भद्रकाली च भारत ११
संकारिका निष्कुटिका भ्रमा चत्वरवासिनी
सुमङ्गला स्वस्तिमती वृद्धिकामा जयप्रिया १२
धनदा सुप्रसादा च भवदा च जलेश्वरी
एडी भेडी समेडी च वेतालजननी तथा
कराडूतिः कालिका चैव देवमित्रा च भारत १३
लम्बसी केतकी चैव चित्रसेना तथा बला
कुक्कुटिका शङ्खनिका तथा जर्जरिका नृप १४
कुराडारिका कोकलिका कराडरा च शतोदरी
उत्क्राथिनी जरेणा च महावेगा च कङ्करणा १५
मनोजवा कराटकिनी प्रघसा पूतना तथा
खशया चुर्व्युटिर्वामा क्रोशनाथ तडित्प्रभा १६
मराडोदरी च तुराडा च कोटरा मेघवासिनी
सुभगा लम्बिनी लम्बा वसुचूडा विकत्थनी १७
ऊर्ध्ववेणीधरा चैव पिङ्गाची लोहमेखला
पृथुवक्त्रा मधुरिका मधुकुम्भा तथैव च १८
पद्मालिका मन्थनिका जरायुर्जर्जरानना
रव्याता दहदहा चैव तथा धमधमा नृप १९
खराडखराडा च राजेन्द्र पूषणा मणिकुराडला
अमोचा चैव कौरव्य तथा लम्बपयोधरा २०
वेणुवीणाधरा चैव पिङ्गाची लोहमेखला
शशोलूकमुखी कृष्णा खरजङ्घा महाजवा २१
शिशुमारमुखी श्वेता लोहिताची विभीषणा
जटालिका कामचरी दीर्घजिह्वा बलोत्कटा २२
कालेडिका वामनिका मुकुटा चैव भारत
लोहिताची महाकाया हरिपिराडी च भूमिप २३
एकाचरा सुकुसुमा कृष्णकर्णी च भारत
चुरकर्णी चतुष्कर्णी कर्णप्रावरणा तथा २४

चतुष्पथनिकेता च गोकर्णी महिषानना
खरकर्णी महाकर्णी भेरीस्वनमहास्वना २५
शङ्खकुम्भस्वना चैव भङ्गदा च महाबला
गणा च सुगणा चैव तथाभीत्यथ कामदा २६
चतुष्पथरता चैव भूतितीर्थान्यगोचरा
पशुदा वित्तदा चैव सुखदा च महायशाः
पयोदा गोमहिषदा सुविषाणा च भारत २७
प्रतिष्ठा सुप्रतिष्ठा च रोचमाना सुरोचना
गोकर्णी च सुकर्णी च ससिरा स्थेरिका तथा
एकचक्रा मेघरवा मेघमाला विरोचना २८
एताश्चान्याश्च बहवो मातरो भरतर्षभ
कार्तिकेयानुयायिन्यो नानारूपाः सहस्रशः २९
दीर्घनख्यो दीर्घदन्त्यो दीर्घतुण्ड्यश्च भारत
सरला मधुराश्चैव यौवनस्थाः स्वलंकृताः ३०
माहात्म्येन च संयुक्ताः कामरूपधरास्तथा
निर्मांसगात्र्यः श्वेताश्च तथा काञ्चनसंनिभाः ३१
कृष्णमेघनिभाश्चान्या धूम्राश्च भरतर्षभ
अरुणाभा महाभागा दीर्घकेश्यः सिताम्बराः ३२
ऊर्ध्ववेणीधराश्चैव पिङ्गाक्ष्यो लम्बमेखलाः
लम्बोदर्यो लम्बकर्णास्तथा लम्बपयोधराः ३३
ताम्राक्ष्यस्ताम्रवर्णाश्च हर्यक्ष्यश्च तथापराः
वरदाः कामचारिण्यो नित्यप्रमुदितास्तथा ३४
याम्यो रौद्र्यस्तथा सौम्याः कौबेर्योऽथ महाबलाः
वारुण्योऽथ च माहेन्द्र्यस्तथाग्नेय्यः परंतप ३५
वायव्याश्चाथ कौमार्यो ब्राह्म्यश्च भरतर्षभ
रूपेणाप्सरसां तुल्या जवे वायुसमास्तथा ३६
परपुष्टोपमा वाक्ये तथर्द्ध्या धनदोपमाः
शक्रवीर्योपमाश्चैव दीप्त्या वह्निसमास्तथा ३७
वृक्षचत्वरवासिन्यश्चतुष्पथनिकेतनाः
गुहाश्मशानवासिन्यः शैलप्रस्रवणालयाः ३८

नानाभरणधारिण्यो नानामाल्याम्बरास्तथा
नानाविचित्रवेषाश्च नानाभाषास्तथैव च ३९
एते चान्ये च बहवो गणाः शत्रुभयंकराः
अनुजग्मुर्महात्मानं त्रिदशेन्द्रस्य संमते ४०
ततः शक्त्यस्त्रमददद्भगवान्पाकशासनः
गुहाय राजशार्दूल विनाशाय सुरद्विषाम् ४१
महास्वनां महाघण्टां द्योतमानां सितप्रभाम्
तरुणादित्यवर्णां च पताकां भरतर्षभ ४२
ददौ पशुपतिस्तस्मै सर्वभूतमहाचमूम्
उग्रां नानाप्रहरणां तपोवीर्यबलान्विताम् ४३
विष्णुर्ददौ वैजयन्तीं मालां बलविवर्धिनीम्
उमा ददौ चारजसी वाससी सूर्यसप्रभे ४४
गङ्गा कमण्डलुं दिव्यममृतोद्भवमुत्तमम्
ददौ प्रीत्या कुमाराय दण्डं चैव बृहस्पतिः ४५
गरुडो दयितं पुत्रं मयूरं चित्रबर्हिणम्
अरुणस्ताम्रचूडं च प्रददौ चरणायुधम् ४६
पाशं तु वरुणो राजा बलवीर्यसमन्वितम्
कृष्णाजिनं तथा ब्रह्मा ब्रह्मण्याय ददौ प्रभुः
समरेषु जयं चैव प्रददौ लोकभावनः ४७
सेनापत्यमनुप्राप्य स्कन्दो देवगणस्य ह
शुशुभे ज्वलितोऽर्चिष्मान्द्वितीय इव पावकः
ततः पारिषदैश्चैव मातृभिश्च समन्वितः ४८
सा सेना नैर्ऋती भीमा सघण्टोच्छ्रितकेतना
सभेरीशङ्खमुरजा सायुधा सपताकिनी
शारदी द्यौरिवाभाति ज्योतिर्भिरुपशोभिता ४९
ततो देवनिकायास्ते भूतसेनागणास्तथा
वादयामासुरव्यग्रा भेरीशङ्खांश्च पुष्कलान् ५०
पटहाञ्झर्झरांश्चैव कृकचान्गोविषाणिकान्
आडम्बरान्गोमुखांश्च डिण्डिमांश्च महास्वनान् ५१
तुष्टुवुस्ते कुमारं च सर्वे देवाः सवासवाः

जगुश्च देवगन्धर्वा ननृतुश्चाप्सरोगणाः ५२
ततः प्रीतो महासेनस्त्रिदशेभ्यो वरं ददौ
रिपून्हन्तास्मि समरे ये वो वधचिकीर्षवः ५३
प्रतिगृह्य वरं देवास्तस्माद्विबुधसत्तमात्
प्रीतात्मानो महात्मानो मेनिरे निहतान्रिपून् ५४
सर्वेषां भूतसंघानां हर्षान्नादः समुत्थितः
अपूरयत लोकांस्त्रीन्वरे दत्ते महात्मना ५५
स निर्ययौ महासेनो महत्या सेनया वृतः
वधाय युधि दैत्यानां रक्षार्थं च दिवौकसाम् ५६
व्यवसायो जयो धर्मः सिद्धिर्लक्ष्मीर्धृतिः स्मृतिः
महासेनस्य सैन्यानामग्रे जग्मुर्नराधिप ५७
स तया भीमया देवः शूलमुद्गरहस्तया
गदामुसलनाराचशक्तितोमरहस्तया
दृप्तसिंहनिनादिन्या विनद्य प्रययौ गुहः ५८
तं दृष्ट्वा सर्वदैतेया राक्षसा दानवास्तथा
व्यद्रवन्त दिशः सर्वा भयोद्विग्नाः समन्ततः
अभ्यद्रवन्त देवास्तान्विविधायुधपाणयः ५९
दृष्ट्वा च स ततः क्रुद्धः स्कन्दस्तेजोबलान्वितः
शक्त्यस्त्रं भगवान्भीमं पुनः पुनरवासृजत्
आदधच्चात्मनस्तेजो हविषेद्ध इवानलः ६०
अभ्यस्यमाने शक्त्यस्त्रे स्कन्देनामिततेजसा
उल्काज्वाला महाराज पपात वसुधातले ६१
संह्रादयन्तश्च तथा निर्घाताश्चापतन्क्षितौ
यथान्तकालसमये सुघोराः स्युस्तथा नृप ६२
क्षिप्ता ह्येका तथा शक्तिः सुघोरानलसूनुना
ततः कोटयो विनिष्पेतुः शक्तीनां भरतर्षभ ६३
स शक्त्यस्त्रेण संग्रामे जघान भगवान्प्रभुः
दैत्येन्द्रं तारकं नाम महाबलपराक्रमम्
वृतं दैत्यायुतैर्वीरैर्बलिभिर्दशभिर्नृप ६४
महिषं चाष्टभिः पद्मैर्वृतं संख्ये निजघ्निवान्

त्रिपादं चायुतशतैर्जघान दशभिर्वृतम् ६५
हृदोदरं निखर्वैश्च वृतं दशभिरीश्वरः
जघानानुचरैः सार्धं विविधायुधपाणिभिः ६६
तत्राकुर्वन्त विपुलं नादं वध्यत्सु शत्रुषु
कुमारानुचरा राजन्पूरयन्तो दिशो दश ६७
शक्त्यस्त्रस्य तु राजेन्द्र ततोऽर्चिर्भिः समन्ततः
दग्धाः सहस्रशो दैत्या नादैः स्कन्दस्य चापरे ६८
पताकयावधूताश्च हताः केचित्सुरद्विषः
केचिद्घण्टारवत्रस्ता निपेतुर्वसुधातले
केचित्प्रहरणैश्छिन्ना विनिपेतुर्गतासवः ६९
एवं सुरद्विषोऽनेकान्बलवानाततायिनः
जघान समरे वीरः कार्तिकेयो महाबलः ७०
बाणो नामाथ दैतेयो बलेः पुत्रो महाबलः
क्रौञ्चं पर्वतमासाद्य देवसंघानबाधत ७१
तमभ्ययान्महासेनः सुरशत्रुमुदारधीः
स कार्तिकेयस्य भयात्क्रौञ्चं शरणमेयिवान् ७२
ततः क्रौञ्चं महामन्युः क्रौञ्चनादनिनादितम्
शक्त्या बिभेद भगवान्कार्तिकेयोऽग्निदत्तया ७३
सशालस्कन्धसरलं त्रस्तवानरवारणम्
पुलिनत्रस्तविहगं विनिष्पतितपन्नगम् ७४
गोलाङ्गूलर्क्षसंघैश्च द्रवद्भिरनुनादितम्
कुरङ्गगतिनिर्घोषमुद्भ्रान्तसृमराचितम् ७५
विनिष्पतद्भिः शरभैः सिंहैश्च सहसा द्रुतैः
शोच्यामपि दशां प्राप्तो रराजैव स पर्वतः ७६
विद्याधराः समुत्पेतुस्तस्य शृङ्गनिवासिनः
किंनराश्च समुद्विग्नाः शक्तिपातरवोद्धताः ७७
ततो दैत्या विनिष्पेतुः शतशोऽथ सहस्रशः
प्रदीप्तात्पर्वतश्रेष्ठाद्विचित्राभरणस्रजः ७८
तान्निजघ्नुरतिक्रम्य कुमारानुचरा मृधे
बिभेद शक्त्या क्रौञ्चं च पावकिः परवीरहा ७९

बहुधा चैकधा चैव कृत्वात्मानं महात्मना
शक्तिः क्षिप्ता रणे तस्य पाणिमेति पुनः पुनः ८०
एवंप्रभावो भगवानतो भूयश्च पावकिः
क्रौञ्चस्तेन विनिर्भिन्नो दैत्याश्च शतशो हताः ८१
ततः स भगवान्देवो निहत्य विबुधद्विषः
सभाज्यमानो विबुधैः परं हर्षमवाप ह ८२
ततो दुन्दुभयो राजन्नेदुः शङ्खाश्च भारत
मुमुचुर्देवयोषाश्च पुष्पवर्षमनुत्तमम् ८३
दिव्यगन्धमुपादाय ववौ पुण्यश्च मारुतः
गन्धर्वास्तुष्टुवुश्चैनं यज्वानश्च महर्षयः ८४
केचिदेनं व्यवस्यन्ति पितामहसुतं प्रभुम्
सनत्कुमारं सर्वेषां ब्रह्मयोनिं तमग्रजम् ८५
केचिन्महेश्वरसुतं केचित्पुत्रं विभावसोः
उमायाः कृत्तिकानां च गङ्गायाश्च वदन्त्युत ८६
एकधा च द्विधा चैव चतुर्धा च महाबलम्
योगिनामीश्वरं देवं शतशोऽथ सहस्रशः ८७
एतत्ते कथितं राजन्कार्तिकेयाभिषेचनम्
शृणु चैव सरस्वत्यास्तीर्थवंशस्य पुण्यताम् ८८
बभूव तीर्थप्रवरं हतेषु सुरशत्रुषु
कुमारेण महाराज त्रिविष्टपमिवापरम् ८९
ऐश्वर्याणि च तत्रस्थो ददावीशः पृथक्पृथक्
तदा नैर्ऋतमुख्येभ्यस्त्रैलोक्ये पावकात्मजः ९०
एवं स भगवांस्तस्मिंस्तीर्थे दैत्यकुलान्तकः
अभिषिक्तो महाराज देवसेनापतिः सुरैः ९१
औजसं नाम तत्तीर्थं यत्र पूर्वमपां पतिः
अभिषिक्तः सुरगणैर्वरुणो भरतर्षभ ९२
तस्मिंस्तीर्थवरे स्नात्वा स्कन्दं चाभ्यर्च्य लाङ्गली
ब्राह्मणेभ्यो ददौ रुक्मं वासांस्याभरणानि च ९३
उषित्वा रजनीं तत्र माधवः परवीरहा
पूज्य तीर्थवरं तच्च स्पृष्ट्वा तोयं च लाङ्गली

हृष्टः प्रीतमनाश्चैव ह्यभवन्माधवोत्तमः ६४
एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि
यथाभिषिक्तो भगवान्स्कन्दो देवैः समागतैः ६५
इति श्रीमहाभारते शल्यपर्वणि पञ्चचत्वारिंशोऽध्यायः ४५

## षट्चत्वारिंशोऽध्यायः

जनमेजय उवाच
अत्यद्भुतमिदं ब्रह्मञ्श्रुतवानस्मि तत्त्वतः
अभिषेकं कुमारस्य विस्तरेण यथाविधि १
यच्छ्रुत्वा पूतमात्मानं विजानामि तपोधन
प्रहृष्टानि च रोमाणि प्रसन्नं च मनो मम २
अभिषेकं कुमारस्य दैत्यानां च वधं तथा
श्रुत्वा मे परमा प्रीतिर्भूयः कौतूहलं हि मे ३
अपां पतिः कथं ह्यस्मिन्नभिषिक्तः सुरासुरैः
तन्मे ब्रूहि महाप्राज्ञ कुशलो ह्यसि सत्तम ४
वैशम्पायन उवाच
शृणु राजन्निदं चित्रं पूर्वकल्पे यथातथम्
आदौ कृतयुगे तस्मिन्वर्तमाने यथाविधि
वरुणं देवताः सर्वाः समेत्येदमथाब्रुवन् ५
यथास्मान्सुरराट् शक्रो भयेभ्यः पाति सर्वदा
तथा त्वमपि सर्वासां सरितां वै पतिर्भव ६
वासश्च ते सदा देव सागरे मकरालये
समुद्रोऽय तव वशे भविष्यति नदीपतिः ७
सोमेन सार्धं च तव हानिवृद्धी भविष्यतः
एवमस्त्विति तान्देवान्वरुणो वाक्यमब्रवीत् ८
समागम्य ततः सर्वे वरुणं सागरालयम्
अपां पतिं प्रचक्रुर्हि विधिदृष्टेन कर्मणा ९
अभिषिच्य ततो देवा वरुणं यादसां पतिम्
जग्मुः स्वान्येव स्थानानि पूजयित्वा जलेश्वरम् १०
अभिषिक्तस्ततो देवैर्वरुणोऽपि महायशाः

सरितः सागरांश्चैव नदांश्चैव सरांसि च
पालयामास विधिना यथा देवाञ्शतक्रतुः ११
ततस्तत्राप्युपस्पृश्य दत्त्वा च विविधं वसु
अग्नितीर्थं महाप्राज्ञः स जगाम प्रलम्बहा
नष्टो न दृश्यते यत्र शमीगर्भे हुताशनः १२
लोकालोकविनाशे च प्रादुर्भूते तदानघ
उपतस्थुर्महात्मानं सर्वलोकपितामहम् १३
अग्निः प्रनष्टो भगवान्कारणं च न विद्महे
सर्वलोकक्षयो मा भूत्संपादयतु नोऽनलम् १४
जनमेजय उवाच
किमर्थं भगवानग्निः प्रनष्टो लोकभावनः
विज्ञातश्च कथं देवैस्तन्ममाचक्ष्व तत्त्वतः १५
वैशम्पायन उवाच
भृगोः शापाद्भृशं भीतो जातवेदाः प्रतापवान्
शमीगर्भमथासाद्य ननाश भगवांस्ततः १६
प्रनष्टे तु तदा वह्नौ देवाः सर्वे सवासवाः
अन्वेषन्त तदा नष्टं ज्वलनं भृशदुःखिताः १७
ततोऽग्नितीर्थमासाद्य शमीगर्भस्थमेव हि
ददृशुर्ज्वलनं तत्र वसमानं यथाविधि १८
देवाः सर्वे नरव्याघ्र बृहस्पतिपुरोगमाः
ज्वलनं तं समासाद्य प्रीताभूवन्सवासवाः
पुनर्यथागतं जग्मुः सर्वभक्षश्च सोऽभवत् १९
भृगोः शापान्महीपाल यदुक्तं ब्रह्मवादिना
तत्राप्याप्लुत्य मतिमान्ब्रह्मयोनिं जगाम ह २०
ससर्ज भगवान्यत्र सर्वलोकपितामहः
तत्राप्लुत्य ततो ब्रह्मा सह देवैः प्रभुः पुरा
ससर्ज चान्नानि तथा देवतानां यथाविधि २१
तत्र स्नात्वा च दत्त्वा च वसूनि विविधानि च
कौबेरं प्रययौ तीर्थं तत्र तप्त्वा महत्तपः
धनाधिपत्यं संप्राप्तो राजन्नैलबिलः प्रभुः २२

तत्रस्थमेव तं राजन्धनानि निधयस्तथा
उपतस्थुर्नरश्रेष्ठ तत्तीर्थं लाङ्गली ततः
गत्वा स्नात्वा च विधिवद्ब्राह्मणेभ्यो धनं ददौ २३
ददृशे तत्र तत्स्थानं कौबेरे काननोत्तमे
पुरा यत्र तपस्तप्तं विपुलं सुमहात्मना २४
यत्र राजा कुबेरेण वरा लब्धाश्च पुष्कलाः
धनाधिपत्यं सख्यं च रुद्रेणामिततेजसा २५
सुरत्वं लोकपालत्वं पुत्रं च नलकूबरम्
यत्र लेभे महाबाहो धनाधिपतिरञ्जसा २६
अभिषिक्तश्च तत्रैव समागम्य मरुद्गणैः
वाहनं चास्य तद्दत्तं हंसयुक्तं मनोरमम्
विमानं पुष्पकं दिव्यं नैरृतैश्वर्यमेव च २७
तत्राप्लुप्य बलो राजन्दत्त्वा दायांश्च पुष्कलान्
जगाम त्वरितो रामस्तीर्थं श्वेतानुलेपनः २८
निषेवितं सर्वसत्त्वैर्नाम्ना बदरपाचनम्
नानर्तुकवनोपेतं सदापुष्पफलं शुभम् २९
इति श्रीमहाभारते शल्यपर्वणि षट्चत्वारिंशोऽध्यायः ४६

## सप्तचत्वारिंशोऽध्यायः

वैशम्पायन उवाच
ततस्तीर्थवरं रामो ययौ बदरपाचनम्
तपस्विसिद्धचरितं यत्र कन्या धृतव्रता १
भरद्वाजस्य दुहिता रूपेणाप्रतिमा भुवि
स्रुचावती नाम विभो कुमारी ब्रह्मचारिणी २
तपश्चचार सात्युग्रं नियमैर्बहुभिर्नृप
भर्ता मे देवराजः स्यादिति निश्चित्य भामिनी ३
समास्तस्या व्यतिक्रान्ता बह्व्यः कुरुकुलोद्वह
चरन्त्या नियमांस्तांस्तान्स्त्रीभिस्तीव्रान्सुदुश्चरान् ४
तस्यास्तु तेन वृत्तेन तपसा च विशां पते
भक्त्या च भगवान्प्रीतः परया पाकशासनः ५

आजगामाश्रमं तस्यास्त्रिदशाधिपतिः प्रभुः
आस्थाय रूपं विप्रर्षेर्वसिष्ठस्य महात्मनः ६
सा तं दृष्ट्वोग्रतपसं वसिष्ठं तपतां वरम्
आचारैर्मुनिभिर्दृष्टैः पूजयामास भारत ७
उवाच नियमज्ञा च कल्याणी सा प्रियंवदा
भगवन्मुनिशार्दूल किमाज्ञापयसि प्रभो ८
सर्वमद्य यथाशक्ति तव दास्यामि सुव्रत
शक्रभक्त्या तु ते पाणिं न दास्यामि कथंचन ९
व्रतैश्च नियमैश्चैव तपसा च तपोधन
शक्रस्तोषयितव्यो वै मया त्रिभुवनेश्वरः १०
इत्युक्तो भगवान्देवः स्मयन्निव निरीक्ष्य ताम्
उवाच नियमज्ञां तां सान्त्वयन्निव भारत ११
उग्रं तपश्चरसि वै विदिता मेऽसि सुव्रते
यदर्थमयमारम्भस्तव कल्याणि हृद्गतः १२
तच्च सर्वं यथाभूतं भविष्यति वरानने
तपसा लभ्यते सर्वं सर्वं तपसि तिष्ठति १३
यानि स्थानानि दिव्यानि विबुधानां शुभानने
तपसा तानि प्राप्यानि तपोमूलं महत्सुखम् १४
इह कृत्वा तपो घोरं देहं संन्यस्य मानवाः
देवत्वं यान्ति कल्याणि शृणु चेदं वचो मम १५
पचस्वैतानि सुभगे बदराणि शुभव्रते
पचेत्युक्त्वा स भगवाञ्जगाम बलसूदनः १६
आमन्त्र्य तां तु कल्याणीं ततो जप्यं जजाप सः
अविदूरे ततस्तस्मादाश्रमात्तीर्थ उत्तमे
इन्द्रतीर्थे महाराज त्रिषु लोकेषु विश्रुते १७
तस्या जिज्ञासनार्थं स भगवान्पाकशासनः
बदराणामपचनं चकार विबुधाधिपः १८
ततः सा प्रयता राजन्वाग्यता विगतक्लमा
तत्परा शुचिसंवीता पावके समधिश्रयत्
अपचद्राजशार्दूल बदराणि महाव्रता १९

तस्याः पचन्त्याः सुमहान्कालोऽगात्पुरुषर्षभ
न च स्म तान्यपच्यन्त दिनं च क्षयमभ्यगात् २०
हुताशनेन दग्धश्च यस्तस्याः काष्ठसंचयः
अकाष्ठमग्निं सा दृष्ट्वा स्वशरीरमथादहत् २१
पादौ प्रक्षिप्य सा पूर्वं पावके चारुदर्शना
दग्धौ दग्धौ पुनः पादावुपावर्तयतानघा २२
चरणौ दह्यमानौ च नाचिन्तयदनिन्दिता
दुःखं कमलपत्राक्षी महर्षेः प्रियकाम्यया २३
अथ तत्कर्म दृष्ट्वास्याः प्रीतस्त्रिभुवनेश्वरः
ततः संदर्शयामास कन्यायै रूपमात्मनः २४
उवाच च सुरश्रेष्ठस्तां कन्यां सुदृढव्रताम्
प्रीतोऽस्मि ते शुभे भक्त्या तपसा नियमेन च २५
तस्माद्योऽभिमतः कामः स ते संपत्स्यते शुभे
देहं त्यक्त्वा महाभागे त्रिदिवे मयि वत्स्यसि २६
इदं च ते तीर्थवरं स्थिरं लोके भविष्यति
सर्वपापापहं सुभ्रु नाम्ना बदरपाचनम्
विख्यातं त्रिषु लोकेषु ब्रह्मर्षिभिरभिप्लुतम् २७
अस्मिन्खलु महाभागे शुभे तीर्थवरे पुरा
त्यक्त्वा सप्तर्षयो जग्मुर्हिमवन्तमरुन्धतीम् २८
ततस्ते वै महाभागा गत्वा तत्र सुसंशिताः
वृत्त्यर्थं फलमूलानि समाहर्तुं ययुः किल २९
तेषां वृत्त्यर्थिनां तत्र वसतां हिमवद्वने
अनावृष्टिरनुप्राप्ता तदा द्वादशवार्षिकी ३०
ते कृत्वा चाश्रमं तत्र न्यवसन्त तपस्विनः
अरुन्धत्यपि कल्याणी तपोनित्याभवत्तदा ३१
अरुन्धतीं ततो दृष्ट्वा तीव्रं नियममास्थिताम्
अथागमत्त्रिनयनः सुप्रीतो वरदस्तदा ३२
ब्राह्मं रूपं ततः कृत्वा महादेवो महायशाः
तामभ्येत्याब्रवीद्देवो भिक्षामिच्छाम्यहं शुभे ३३
प्रत्युवाच ततः सा तं ब्राह्मणं चारुदर्शना

क्षीणोऽन्नसंचयो विप्र बदराणीह भक्षय
ततोऽब्रवीन्महादेवः पचस्वैतानि सुव्रते ३४
इत्युक्ता सापचत्तानि ब्राह्मणप्रियकाम्यया
अधिश्रित्य समिद्धेऽग्नौ बदराणि यशस्विनी ३५
दिव्या मनोरमाः पुण्याः कथाः शुश्राव सा तदा
अतीता सा त्वनावृष्टिर्घोरा द्वादशवार्षिकी ३६
अनश्नन्त्याः पचन्त्याश्च शृण्वन्त्याश्च कथाः शुभाः
अहःसमः स तस्यास्तु कालोऽतीतः सुदारुणः ३७
ततस्ते मुनयः प्राप्ताः फलान्यादाय पर्वतात्
ततः स भगवान्प्रीतः प्रोवाचारुन्धतीं तदा ३८
उपसर्पस्व धर्मज्ञे यथापूर्वमिमानृषीन्
प्रीतोऽस्मि तव धर्मज्ञे तपसा नियमेन च ३९
ततः संदर्शयामास स्वरूपं भगवान्हरः
ततोऽब्रवीत्तदा तेभ्यस्तस्यास्तच्चरितं महत् ४०
भवद्भिर्हिमवत्पृष्ठे यत्तपः समुपार्जितम्
अस्याश्च यत्तपो विप्रा न समं तन्मतं मम ४१
अनया हि तपस्विन्या तपस्तप्तं सुदुश्चरम्
अनश्नन्त्या पचन्त्या च समा द्वादश पारिताः ४२
ततः प्रोवाच भगवांस्तामेवारुन्धतीं पुनः
वरं वृणीष्व कल्याणि यत्तेऽभिलषितं हृदि ४३
साब्रवीत्पृथुताम्राक्षी देवं सप्तर्षिसंसदि
भगवान्यदि मे प्रीतस्तीर्थं स्यादिदमुत्तमम्
सिद्धदेवर्षिदयितं नाम्ना बदरपाचनम् ४४
तथास्मिन्देवदेवेश त्रिरात्रमुषितः शुचिः
प्राप्नुयादुपवासेन फलं द्वादशवार्षिकम्
एवमस्त्विति तां चोक्त्वा हरो यातस्तदा दिवम् ४५
ऋषयो विस्मयं जग्मुस्तां दृष्ट्वा चाप्यरुन्धतीम्
अश्रान्तां चाविवर्णां च क्षुत्पिपासासहां सतीम् ४६
एवं सिद्धिः परा प्राप्ता अरुंधत्या विशुद्धया
यथा त्वया महाभागे मदर्थं संशितव्रते ४७

विशेषो हि त्वया भद्रे व्रते ह्यस्मिन्समर्पितः
तथा चेदं ददाम्यद्य नियमेन सुतोषितः ४८
विशेषं तव कल्याणि प्रयच्छामि वरं वरे
अरुन्धत्या वरस्तस्या यो दत्तो वै महात्मना ४९
तस्य चाहं प्रसादेन तव कल्याणि तेजसा
प्रवक्ष्याम्यपरं भूयो वरमत्र यथाविधि ५०
यस्त्वेकां रजनीं तीर्थे वत्स्यते सुसमाहितः
स स्नात्वा प्राप्स्यते लोकान्देहन्यासाच्च दुर्लभान् ५१
इत्युक्त्वा भगवान्देवः सहस्राक्षः प्रतापवान्
स्रुचावतीं ततः पुण्यां जगाम त्रिदिवं पुनः ५२
गते वज्रधरे राजंस्तत्र वर्षं पपात ह
पुष्पाणां भरतश्रेष्ठ दिव्यानां दिव्यगन्धिनाम् ५३
नेदुर्दुन्दुभयश्चापि समन्तात्सुमहास्वनाः
मारुतश्च ववौ युक्त्या पुण्यगन्धो विशां पते ५४
उत्सृज्य तु शुभं देहं जगामेन्द्रस्य भार्यताम्
तपसोग्रेण सा लब्ध्वा तेन रेमे सहाच्युत ५५
जनमेजय उवाच
का तस्या भगवन्माता क्व संवृद्धा च शोभना
श्रोतुमिच्छाम्यहं ब्रह्मन्परं कौतूहलं हि मे ५६
वैशम्पायन उवाच
भारद्वाजस्य विप्रर्षेः स्कन्नं रेतो महात्मनः
दृष्ट्वाप्सरसमायान्तीं घृताचीं पृथुलोचनाम् ५७
स तु जग्राह तद्रेतः करेण जपतां वरः
तदापवत्पर्णपुटे तत्र सा संभवच्छुभा ५८
तस्यास्तु जातकर्मादि कृत्वा सर्वं तपोधनः
नाम चास्याः स कृतवान्भारद्वाजो महामुनिः ५९
स्रुचावतीति धर्मात्मा तदर्षिगणसंसदि
स च तामाश्रमे न्यस्य जगाम हिमवद्वनम् ६०
तत्राप्युपस्पृश्य महानुभावो वसूनि दत्त्वा च महाद्विजेभ्यः
जगाम तीर्थं सुसमाहितात्मा शक्रस्य वृष्णिप्रवरस्तदानीम् ६१

इति श्रीमहाभारते शल्यपर्वणि सप्तचत्वारिंशोऽध्यायः ४७

## अष्टचत्वारिंशोऽध्यायः

वैशम्पायन उवाच
इन्द्रतीर्थं ततो गत्वा यदूनां प्रवरो बली
विप्रेभ्यो धनरत्नानि ददौ स्नात्वा यथाविधि १
तत्र ह्यमरराजोऽसावीजे क्रतुशतेन ह
बृहस्पतेश्च देवेशः प्रददौ विपुलं धनम् २
निरर्गलान्सजारूथ्यान्सर्वान्विविधदक्षिणान्
आजहार क्रतूंस्तत्र यथोक्तान्वेदपारगैः ३
तान्क्रतून्भरतश्रेष्ठ शतकृत्वो महाद्युतिः
पूरयामास विधिवत्ततः ख्यातः शतक्रतुः ४
तस्य नाम्ना च तत्तीर्थं शिवं पुण्यं सनातनम्
इन्द्रतीर्थमिति ख्यातं सर्वपापप्रमोचनम् ५
उपस्पृश्य च तत्रापि विधिवन्मुसलायुधः
ब्राह्मणान्पूजयित्वा च पानाच्छादनभोजनैः
शुभं तीर्थवरं तस्माद्रामतीर्थं जगाम ह ६
यत्र रामो महाभागो भार्गवः सुमहातपाः
असकृत्पृथिवीं सर्वां हतक्षत्रियपुंगवाम् ७
उपाध्यायं पुरस्कृत्य कश्यपं मुनिसत्तमम्
अयजद्वाजपेयेन सोऽश्वमेधशतेन च
प्रददौ दक्षिणार्थं च पृथिवीं वै ससागराम् ८
रामो दत्त्वा धनं तत्र द्विजेभ्यो जनमेजय
उपस्पृश्य यथान्यायं पूजयित्वा तथा द्विजान् ९
पुण्ये तीर्थे शुभे देशे वसु दत्त्वा शुभाननः
मुनींश्चैवाभिवाद्याथ यमुनातीर्थमागमत् १०
यत्रानयामास तदा राजसूयं महीपते
पुत्रोऽदितेर्महाभागो वरुणो वै सितप्रभः ११
तत्र निर्जित्य संग्रामे मानुषान्दैवतांस्तथा
वरं क्रतुं समाजह्रे वरुणः परवीरहा १२

तस्मिन्क्रतुवरे वृत्ते संग्रामः समजायत
देवानां दानवानां च त्रैलोक्यस्य क्षयावहः १३
राजसूये क्रतुश्रेष्ठे निवृत्ते जनमेजय
जायते सुमहाघोरः संग्रामः क्षत्रियान्प्रति १४
सीरायुधस्तदा रामस्तस्मिंस्तीर्थवरे तदा
तत्र स्नात्वा च दत्त्वा च द्विजेभ्यो वसु माधवः १५
वनमाली ततो हृष्टः स्तूयमानो द्विजातिभिः
तस्मादादित्यतीर्थं च जगाम कमलेक्षणः १६
यत्रेष्ट्वा भगवाञ्ज्योतिर्भास्करो राजसत्तम
ज्योतिषामाधिपत्यं च प्रभावं चाभ्यपद्यत १७
तस्या नद्यास्तु तीरे वै सर्वे देवाः सवासवाः
विश्वेदेवाः समरुतो गन्धर्वाप्सरसश्च ह १८
द्वैपायनः शुकश्चैव कृष्णश्च मधुसूदनः
यक्षाश्च राक्षसाश्चैव पिशाचाश्च विशां पते १९
एते चान्ये च बहवो योगसिद्धाः सहस्रशः
तस्मिंस्तीर्थे सरस्वत्याः शिवे पुण्ये परंतप २०
तत्र हत्वा पुरा विष्णुरसुरौ मधुकैटभौ
आप्लुतो भरतश्रेष्ठ तीर्थप्रवर उत्तमे २१
द्वैपायनश्च धर्मात्मा तत्रैवाप्लुत्य भारत
संप्राप्तः परमं योगं सिद्धिं च परमां गतः २२
असितो देवलश्चैव तस्मिन्नेव महातपाः
परमं योगमास्थाय ऋषिर्योगमवाप्तवान् २३
इति श्रीमहाभारते शल्यपर्वणि अष्टचत्वारिंशोऽध्यायः ४८

## एकोन पञ्चाशोऽध्यायः

वैशम्पायन उवाच
तस्मिन्नेव तु धर्मात्मा वसति स्म तपोधनः
गार्हस्थ्यं धर्ममास्थाय असितो देवलः पुरा १
धर्मनित्यः शुचिर्दान्तो न्यस्तदण्डो महातपाः
कर्मणा मनसा वाचा समः सर्वेषु जन्तुषु २

अक्रोधनो महाराज तुल्यनिन्दाप्रियाप्रियः
काञ्चने लोष्टके चैव समदर्शी महातपाः ३
देवताः पूजयन्नित्यमतिथींश्च द्विजैः सह
ब्रह्मचर्यरतो नित्यं सदा धर्मपरायणः ४
ततोऽभ्येत्य महाराज योगमास्थाय भिक्षुकः
जैगीषव्यो मुनिर्धीमांस्तस्मिंस्तीर्थे समाहितः ५
देवलस्याश्रमे राजन्न्यवसत्स महाद्युतिः
योगनित्यो महाराज सिद्धिं प्राप्तो महातपाः ६
तं तत्र वसमानं तु जैगीषव्यं महामुनिम्
देवलो दर्शयन्नेव नैवायुञ्जत धर्मतः ७
एवं तयोर्महाराज दीर्घकालो व्यतिक्रमत्
जैगीषव्यं मुनिं चैव न ददर्शाथ देवलः ८
आहारकाले मतिमान्परिव्राड् जनमेजय
उपातिष्ठत धर्मज्ञो भैक्षकाले स देवलम् ९
स दृष्ट्वा भिक्षुरूपेण प्राप्तं तत्र महामुनिम्
गौरवं परमं चक्रे प्रीतिं च विपुलां तथा १०
देवलस्तु यथाशक्ति पूजयामास भारत
ऋषिदृष्टेन विधिना समा बह्व्यः समाहितः ११
कदाचित्तस्य नृपते देवलस्य महात्मनः
चिन्ता सुमहती जाता मुनिं दृष्ट्वा महाद्युतिम् १२
समास्तु समतिक्रान्ता बह्व्यः पूजयतो मम
न चायमलसो भिक्षुरभ्यभाषत किंचन १३
एवं विगणयन्नेव स जगाम महोदधिम्
अन्तरिक्षचरः श्रीमान्कलशं गृह्य देवलः १४
गच्छन्नेव स धर्मात्मा समुद्रं सरितां पतिम्
जैगीषव्यं ततोऽपश्यद्गतं प्रागेव भारत १५
ततः सविस्मयश्चिन्तां जगामाथासितः प्रभुः
कथं भिक्षुरयं प्राप्तः समुद्रे स्नात एव च १६
इत्येवं चिंतयामास महर्षिरसितस्तदा
स्नात्वा समुद्रे विधिवच्छुचिर्जप्यं जजाप ह १७

कृतजप्याह्निकः श्रीमानाश्रमं च जगाम ह
कलशं जलपूर्णं वै गृहीत्वा जनमेजय १८
ततः स प्रविशन्नेव स्वमाश्रमपदं मुनिः
आसीनमाश्रमे तत्र जैगीषव्यमपश्यत १९
न व्याहरति चैवैनं जैगीषव्यः कथंचन
काष्ठभूतोऽश्रमपदे वसति स्म महातपाः २०
तं दृष्ट्वा चाप्लुतं तोये सागरे सागरोपमम्
प्रविष्टमाश्रमं चापि पूर्वमेव ददर्श सः २१
असितो देवलो राजंश्चिन्तयामास बुद्धिमान्
दृष्टः प्रभावं तपसो जैगीषव्यस्य योगजम् २२
चिन्तयामास राजेन्द्र तदा स मुनिसत्तमः
मया दृष्टः समुद्रे च आश्रमे च कथं त्वयम् २३
एवं विगणयन्नेव स मुनिर्मन्त्रपारगः
उत्पपाताश्रमात्तस्मादन्तरिक्षं विशां पते
जिज्ञासार्थं तदा भिक्षोर्जैगीषव्यस्य देवलः २४
सोऽन्तरिक्षचरान्सिद्धान्समपश्यत्समाहितान्
जैगीषव्यं च तैः सिद्धैः पूज्यमानमपश्यत २५
ततोऽसितः सुसंरब्धो व्यवसायी दृढव्रतः
अपश्यद्वै दिवं यान्तं जैगीषव्यं स देवलः २६
तस्माच्च पितृलोकं तं व्रजन्तं सोऽन्वपश्यत
पितृलोकाच्च तं यान्तं याम्यं लोकमपश्यत २७
तस्मादपि समुत्पत्य सोमलोकमभिष्टुतम्
व्रजन्तमन्वपश्यत्स जैगीषव्यं महामुनिम् २८
लोकान्समुत्पतन्तं च शुभानेकान्तयाजिनाम्
ततोऽग्निहोत्रिणां लोकांस्तेभ्यश्चाप्युत्पपात ह २९
दर्शं च पौर्णमासं च ये यजन्ति तपोधनाः
तेभ्यः स ददृशे धीमाँल्लोकेभ्यः पशुयाजिनाम्
व्रजन्तं लोकममलमपश्यद्देवपूजितम् ३०
चातुर्मास्यैर्बहुविधैर्यजन्ते ये तपोधनाः
तेषां स्थानं तथा यान्तं तथाग्निष्टोमयाजिनाम् ३१

अग्निष्टुतेन च तथा ये यजन्ति तपोधनाः
तत्स्थानमनुसंप्राप्तमन्वपश्यत देवलः ३२
वाजपेयं क्रतुवरं तथा बहुसुवर्णकम्
आहरन्ति महाप्राज्ञास्तेषां लोकेष्वपश्यत ३३
यजन्ते पुण्डरीकेण राजसूयेन चैव ये
तेषां लोकेष्वपश्यच्च जैगीषव्यं स देवलः ३४
अश्वमेधं क्रतुवरं नरमेधं तथैव च
आहरन्ति नरश्रेष्ठास्तेषां लोकेष्वपश्यत ३५
सर्वमेधं च दुष्प्रापं तथा सौत्रामणिं च ये
तेषां लोकेष्वपश्यच्च जैगीषव्यं स देवलः ३६
द्वादशाहैश्च सत्रैर्ये यजन्ते विविधैर्नृप
तेषां लोकेष्वपश्यच्च जैगीषव्यं स देवलः ३७
मित्रावरुणयोर्लोकानादित्यानां तथैव च
सलोकतामनुप्राप्तमपश्यत ततोऽसितः ३८
रुद्राणां च वसूनां च स्थानं यच्च बृहस्पतेः
तानि सर्वाण्यतीतं च समपश्यत्ततोऽसितः ३९
आरुह्य च गवां लोकं प्रयान्तं ब्रह्मसत्रिणाम्
लोकानपश्यद्गच्छन्तं जैगीषव्यं ततोऽसितः ४०
त्रीँल्लोकानपरान्विप्रमुत्पतन्तं स्वतेजसा
पतिव्रतानां लोकांश्च व्रजन्तं सोऽन्वपश्यत ४१
ततो मुनिवरं भूयो जैगीषव्यमथासितः
नान्वपश्यत योगस्थमन्तर्हितमरिंदम ४२
सोऽचिन्तयन्महाभागो जैगीषव्यस्य देवलः
प्रभावं सुव्रतत्वं च सिद्धिं योगस्य चातुलाम् ४३
असितोऽपृच्छत तदा सिद्धाँल्लोकेषु सत्तमान्
प्रयतः प्राञ्जलिर्भूत्वा धीरस्तान्ब्रह्मसत्रिणः ४४
जैगीषव्यं न पश्यामि तं शंसत महौजसम्
एतदिच्छाम्यहं श्रोतुं परं कौतूहलं हि मे ४५
सिद्धा ऊचुः
शृणु देवल भूतार्थं शंसतां नो दृढव्रत

जैगीषव्यो गतो लोकं शाश्वतं ब्रह्मणोऽव्ययम् ४६
स श्रुत्वा वचनं तेषां सिद्धानां ब्रह्मसत्रिणाम्
असितो देवलस्तूर्णमुत्पपात पपात च ४७
ततः सिद्धास्त ऊचुर्हि देवलं पुनरेव ह
न देवल गतिस्तत्र तव गन्तुं तपोधन
ब्रह्मणः सदनं विप्र जैगीषव्यो यदाप्तवान् ४८
तेषां तद्वचनं श्रुत्वा सिद्धानां देवलः पुनः
आनुपूर्व्येण लोकांस्तान्सर्वानवततार ह ४९
स्वमाश्रमपदं पुण्यमाजगाम पतंगवत्
प्रविशन्नेव चापश्यज्जैगीषव्यं स देवलः ५०
ततो बुद्ध्या व्यगणयद्देवलो धर्मयुक्तया
दृष्ट्वा प्रभावं तपसो जैगीषव्यस्य योगजम् ५१
ततोऽब्रवीन्महात्मानं जैगीषव्यं स देवलः
विनयावनतो राजन्नुपसर्प्य महामुनिम्
मोक्षधर्मं समास्थातुमिच्छेयं भगवन्नहम् ५२
तस्य तद्वचनं श्रुत्वा उपदेशं चकार सः
विधिं च योगस्य परं कार्याकार्यं च शास्त्रतः ५३
संन्यासकृतबुद्धिं तं ततो दृष्ट्वा महातपाः
सर्वाश्चास्य क्रियाश्चक्रे विधिदृष्टेन कर्मणा ५४
संन्यासकृतबुद्धिं तं भूतानि पितृभिः सह
ततो दृष्ट्वा प्ररुरुदुः कोऽस्मान्संविभजिष्यति ५५
देवलस्तु वचः श्रुत्वा भूतानां करुणं तथा
दिशो दश व्याहरतां मोक्षं त्यक्तुं मनो दधे ५६
ततस्तु फलमूलानि पवित्राणि च भारत
पुष्पाण्योषधयश्चैव रोरूयन्ते सहस्रशः ५७
पुनर्नो देवलः क्षुद्रो नूनं छेत्स्यति दुर्मतिः
अभयं सर्वभूतेभ्यो यो दत्त्वा नावबुध्यते ५८
ततो भूयो व्यगणयत्स्वबुद्ध्या मुनिसत्तमः
मोक्षे गार्हस्थ्यधर्मे वा किं नु श्रेयस्करं भवेत् ५९
इति निश्चित्य मनसा देवलो राजसत्तम

त्यक्त्वा गार्हस्थ्यधर्मं स मोक्षधर्ममरोचयत् ६०
एवमादीनि संचिन्त्य देवलो निश्चयात्ततः
प्राप्तवान्परमां सिद्धिं परं योगं च भारत ६१
ततो देवाः समागम्य बृहस्पतिपुरोगमाः
जैगीषव्यं तपश्चास्य प्रशंसन्ति तपस्विनः ६२
अथाब्रवीदृषिवरो देवान्वै नारदस्तदा
जैगीषव्ये तपो नास्ति विस्मापयति योऽसितम् ६३
तमेवंवादिनं धीरं प्रत्युचुस्ते दिवौकसः
मैवमित्येव शंसन्तो जैगीषव्यं महामुनिम् ६४
तत्राप्युपस्पृश्य ततो महात्मा दत्त्वा च वित्तं हलभृद्द्विजेभ्यः
अवाप्य धर्मं परमार्यकर्मा जगाम सोमस्य महत्स तीर्थम् ६५
इति श्रीमहाभारते शल्यपर्वणि एकोनपञ्चाशोऽध्यायः ४९

पञ्चाशोऽध्यायः

वैशम्पायन उवाच
यत्रेजिवानुडुपती राजसूयेन भारत
तस्मिन्वृत्ते महानासीत्संग्रामस्तारकामयः १
तत्राप्युपस्पृश्य बलो दत्त्वा दानानि चात्मवान्
सारस्वतस्य धर्मात्मा मुनेस्तीर्थं जगाम ह २
यत्र द्वादशवार्षिक्यामनावृष्ट्यां द्विजोत्तमान्
वेदानध्यापयामास पुरा सारस्वतो मुनिः ३
जनमेजय उवाच
कथं द्वादशवार्षिक्यामनावृष्ट्यां तपोधनः
वेदानध्यापयामास पुरा सारस्वतो मुनिः ४
वैशम्पायन उवाच
आसीत्पूर्वं महाराज मुनिर्धीमान्महातपाः
दधीच इति विख्यातो ब्रह्मचारी जितेन्द्रियः ५
तस्यातितपसः शक्रो बिभेति सततं विभो
न स लोभयितुं शक्यः फलैर्बहुविधैरपि ६
प्रलोभनार्थं तस्याथ प्राहिणोत्पाकशासनः

दिव्यामप्सरसं पुरायां दर्शनीयामलम्बुसाम् ७
तस्य तर्पयतो देवान्सरस्वत्यां महात्मनः
समीपतो महाराज सोपातिष्ठत भामिनी ८
तां दिव्यवपुषं दृष्ट्वा तस्यर्षेर्भावितात्मनः
रेतः स्कन्नं सरस्वत्यां तत्सा जग्राह निम्नगा ९
कुत्तौ चाप्यदधद्दृष्ट्वा तद्रेतः पुरुषर्षभ
सा दधार च तं गर्भं पुत्रहेतोर्महानदी १०
सुषुवे चापि समये पुत्रं सा सरितां वरा
जगाम पुत्रमादाय तमृषिं प्रति च प्रभो ११
ऋषिसंसदि तं दृष्ट्वा सा नदी मुनिसत्तमम्
ततः प्रोवाच राजेन्द्र ददती पुत्रमस्य तम्
ब्रह्मर्षे तव पुत्रोऽय त्वद्भक्त्या धारितो मया १२
दृष्ट्वा तेऽप्सरसं रेतो यत्स्कन्नं प्रागलम्बुसाम्
तत्कुत्तिणा वै ब्रह्मर्षे त्वद्भक्त्या धृतवत्यहम् १३
न विनाशमिदं गच्छेत्त्वत्तेज इति निश्चयात्
प्रतिगृह्णीष्व पुत्रं स्वं मया दत्तमनिन्दितम् १४
इत्युक्तः प्रतिजग्राह प्रीतिं चावाप उत्तमाम्
मन्त्रवच्चोपजिघ्रत्तं मूर्ध्नि प्रेम्णा द्विजोत्तमः १५
परिष्वज्य चिरं कालं तदा भरतसत्तम
सरस्वत्यै वरं प्रादात्प्रीयमाणो महामुनिः १६
विश्वे देवाः सपितरो गन्धर्वाप्सरसां गणाः
तृप्तिं यास्यन्ति सुभगे तर्प्यमाणास्तवाम्भसा १७
इत्युक्त्वा स तु तुष्टाव वचोभिर्वै महानदीम्
प्रीतः परमहृष्टात्मा यथावच्छृणु पार्थिव १८
प्रसृतासि महाभागे सरसो ब्रह्मणः पुरा
जानन्ति त्वां सरिच्छ्रेष्ठे मुनयः संशितव्रताः १९
मम प्रियकरी चापि सततं प्रियदर्शने
तस्मात्सारस्वतः पुत्रो महांस्ते वरवर्णिनि २०
तवैव नाम्ना प्रथितः पुत्रस्ते लोकभावनः
सारस्वत इति ख्यातो भविष्यति महातपाः २१

एष द्वादशवार्षिक्यामनावृष्ट्यां द्विजर्षभान्
सारस्वतो महाभागे वेदानध्यापयिष्यति २२
पुण्याभ्यश्च सरिद्भ्यस्त्वं सदा पुण्यतमा शुभे
भविष्यसि महाभागे मत्प्रसादात्सरस्वति २३
एवं सा संस्तुता तेन वरं लब्ध्वा महानदी
पुत्रमादाय मुदिता जगाम भरतर्षभ २४
एतस्मिन्नेव काले तु विरोधे देवदानवैः
शक्रः प्रहरणान्वेषी लोकांस्त्रीन्विचचार ह २५
न चोपलेभे भगवाञ्शक्रः प्रहरणं तदा
यद्वै तेषां भवेद्योग्यं वधाय विबुधद्विषाम् २६
ततोऽब्रवीत्सुराञ्शक्रो न मे शक्या महासुराः
ऋतेऽस्थिभिर्दधीचस्य निहन्तुं त्रिदशद्विषः २७
तस्माद्गत्वा ऋषिश्रेष्ठो याच्यतां सुरसत्तमाः
दधीचास्थीनि देहीति तैर्वधिष्यामहे रिपून् २८
स देवैर्याचितोऽस्थीनि यत्नादृषिवरस्तदा
प्राणत्यागं कुरुष्वेति चकारैवाविचारयन्
स लोकानक्षयान्प्राप्तो देवप्रियकरस्तदा २९
तस्यास्थिभिरथो शक्रः संप्रहृष्टमनास्तदा
कारयामास दिव्यानि नानाप्रहरणान्युत
वज्राणि चक्राणि गदा गुरुदण्डांश्च पुष्कलान् ३०
स हि तीव्रेण तपसा संभृतः परमर्षिणा
प्रजापतिसुतेनाथ भृगुणा लोकभावनः ३१
अतिकायः स तेजस्वी लोकसारविनिर्मितः
जज्ञे शैलगुरुः प्रांशुर्महिम्ना प्रथितः प्रभुः
नित्यमुद्विजते चास्य तेजसा पाकशासनः ३२
तेन वज्रेण भगवान्मन्त्रयुक्तेन भारत
भृशं क्रोधविसृष्टेन ब्रह्मतेजोभवेन च
दैत्यदानववीराणां जघान नवतीर्नव ३३
अथ काले व्यतिक्रान्ते महत्यतिभयंकरे
अनावृष्टिरनुप्राप्ता राजन्द्वादशवार्षिकी ३४

तस्यां द्वादशवार्षिक्यामनावृष्ट्यां महर्षयः
वृत्त्यर्थं प्राद्रवन्राजन्क्षुधार्ताः सर्वतोदिशम् ३५
दिग्भ्यस्तान्प्रद्रुतान्दृष्ट्वा मुनिः सारस्वतस्तदा
गमनाय मतिं चक्रे तं प्रोवाच सरस्वती ३६
न गन्तव्यमितः पुत्र तवाहारमहं सदा
दास्यामि मत्स्यप्रवरानुष्यतामिह भारत ३७
इत्युक्तस्तर्पयामास स पितॄन्देवतास्तथा
आहारमकरोन्नित्यं प्राणान्वेदांश्च धारयन् ३८
अथ तस्यामतीतायामनावृष्ट्यां महर्षयः
अन्योन्यं परिपप्रच्छुः पुनः स्वाध्यायकारणात् ३९
तेषां क्षुधापरीतानां नष्टा वेदा विधावताम्
सर्वेषामेव राजेन्द्र न कश्चित्प्रतिभानवान् ४०
अथ कश्चिदृषिस्तेषां सारस्वतमुपेयिवान्
कुर्वाणं संशितात्मानं स्वाध्यायमृषिसत्तमम् ४१
स गत्वाचष्ट तेभ्यश्च सारस्वतमतिप्रभम्
स्वाध्यायममरप्रख्यं कुर्वाणं विजने जने ४२
ततः सर्वे समाजग्मुस्तत्र राजन्महर्षयः
सारस्वतं मुनिश्रेष्ठमिदमूचुः समागताः ४३
अस्मानध्यापयस्वेति तानुवाच ततो मुनिः
शिष्यत्वमुपगच्छध्वं विधिवद्धो ममेत्युत ४४
ततोऽब्रवीदृषिगणो बालस्त्वमसि पुत्रक
स तानाह न मे धर्मो नश्येदिति पुनर्मुनीन् ४५
यो ह्यधर्मेण विब्रूयाद्गृह्णीयाद्वाप्यधर्मतः
म्रियतां तावुभौ क्षिप्रं स्यातां वा वैरिणावुभौ ४६
न हायनैर्न पलितैर्न वित्तेन न बन्धुभिः
ऋषयश्चक्रिरे धर्मं योऽनूचानः स नो महान् ४७
एतच्छ्रुत्वा वचस्तस्य मुनयस्ते विधानतः
तस्माद्वेदाननुप्राप्य पुनर्धर्मं प्रचक्रिरे ४८
षष्टिर्मुनिसहस्राणि शिष्यत्वं प्रतिपेदिरे
सारस्वतस्य विप्रर्षेर्वेदस्वाध्यायकारणात् ४९

मुष्टिं मुष्टिं ततः सर्वे दर्भाणां तेऽभ्युपाहरन्
तस्यासनार्थं विप्रर्षेर्बालस्यापि वशे स्थिताः ५०
तत्रापि दत्त्वा वसु रौहिणेयो महाबलः केशवपूर्वजोऽथ
जगाम तीर्थं मुदितः क्रमेण ख्यातं महद्वृद्धकन्या स्म यत्र ५१
इति श्रीमहाभारते शल्यपर्वणि पञ्चाशोऽध्यायः ५०

## एक पञ्चाशोऽध्यायः

जनमेजय उवाच
कथं कुमारी भगवंस्तपोयुक्ता ह्यभूत्पुरा
किमर्थं च तपस्तेपे को वास्या नियमोऽभवत् १
सुदुष्करमिदं ब्रह्मंस्त्वत्तः श्रुतमनुत्तमम्
आख्याहि तत्त्वमखिलं यथा तपसि सा स्थिता २
वैशम्पायन उवाच
ऋषिरासीन्महावीर्यः कुणिर्गार्ग्यो महायशाः
स तप्त्वा विपुलं राजंस्तपो वै तपतां वरः
मानसीं स सुतां सुभ्रूं समुत्पादितवान्विभुः ३
तां च दृष्ट्वा भृशं प्रीतः कुणिर्गार्ग्यो महायशाः
जगाम त्रिदिवं राजन्संत्यज्येह कलेवरम् ४
सुभ्रूः सा ह्यथ कल्याणी पुण्डरीकनिभेक्षणा
महता तपसोग्रेण कृत्वाश्रममनिन्दिता ५
उपवासैः पूजयन्ती पितृन्देवांश्च सा पुरा
तस्यास्तु तपसोग्रेण महान्कालोऽत्यगान्नृप ६
सा पित्रा दीयमानापि भर्त्रे नैच्छदनिन्दिता
आत्मनः सदृशं सा तु भर्तारं नान्वपश्यत ७
ततः सा तपसोग्रेण पीडयित्वात्मनस्तनुम्
पितृदेवार्चनरता बभूव विजने वने ८
सात्मानं मन्यमानापि कृतकृत्यं श्रमान्विता
वार्द्धकेन च राजेन्द्र तपसा चैव कर्शिता ९
सा नाशकद्यदा गन्तुं पदात्पदमपि स्वयम्
चकार गमने बुद्धिं परलोकाय वै तदा १०

मोक्तुकामां तु तां दृष्ट्वा शरीरं नारदोऽब्रवीत्
असंस्कृतायाः कन्यायाः कुतो लोकास्तवानघे ११
एवं हि श्रुतमस्माभिर्देवलोके महाव्रते
तपः परमकं प्राप्तं न तु लोकास्त्वया जिताः १२
तन्नारदवचः श्रुत्वा साब्रवीदृषिसंसदि
तपसोऽध प्रयच्छामि पाणिग्राहस्य सत्तमाः १३
इत्युक्ते चास्या जग्राह पाणिं गालवसंभवः
ऋषिः प्राक्श्रृङ्गवान्नाम समयं चेदमब्रवीत् १४
समयेन तवाद्याहं पाणिं स्प्रक्ष्यामि शोभने
यद्येकरात्रं वस्तव्यं त्वया सह मयेति ह १५
तथेति सा प्रतिश्रुत्य तस्मै पाणिं ददौ तदा
चक्रे च पाणिग्रहणं तस्योद्वाहं च गालविः १६
सा रात्रावभवद्राजंस्तरुणी देववर्णिनी
दिव्याभरणवस्त्रा च दिव्यस्त्रगनुलेपना १७
तां दृष्ट्वा गालविः प्रीतो दीपयन्तीमिवात्मना
उवास च क्षपामेकां प्रभाते साब्रवीच्च तम् १८
यस्त्वया समयो विप्र कृतो मे तपतां वर
तेनोषितास्मि भद्रं ते स्वस्ति तेऽस्तु व्रजाम्यहम् १९
सानुज्ञाताब्रवीद्भूयो योऽस्मिंस्तीर्थे समाहितः
वत्स्यते रजनीमेकां तर्पयित्वा दिवौकसः २०
चत्वारिंशतमष्टौ च द्वे चाष्टौ सम्यगाचरेत्
यो ब्रह्मचर्यं वर्षाणि फलं तस्य लभेत सः
एवमुक्त्वा ततः साध्वी देहं त्यक्त्वा दिवं गता २१
ऋषिरप्यभवद्दीनस्तस्या रूपं विचिन्तयन्
समयेन तपोऽध च कृच्छ्रात्प्रतिगृहीतवान् २२
साधयित्वा तदात्मानं तस्याः स गतिमन्वयात्
दुःखितो भरतश्रेष्ठ तस्या रूपबलात्कृतः
एतत्ते वृद्धकन्याया व्याख्यातं चरितं महत् २३
तत्रस्थश्चापि शुश्राव हतं शल्यं हलायुधः
तत्रापि दत्त्वा दानानि द्विजातिभ्यः परंतप

शुशोच शल्यं संग्रामे निहतं पांडवैस्तदा २४
समन्तपञ्चकद्वारात्ततो निष्क्रम्य माधवः
पप्रच्छर्षिगणान्रामः कुरुक्षेत्रस्य यत्फलम् २५
ते पृष्टा यदुसिंहेन कुरुक्षेत्रफलं विभो
समाचख्युर्महात्मानस्तस्मै सर्वं यथातथम् २६
इति श्रीमहाभारते शल्यपर्वणि एकपञ्चाशोऽध्यायः ५१

## द्विपञ्चाशोऽध्यायः

ऋषय ऊचुः
प्रजापतेरुत्तरवेदिरुच्यते सनातना राम समन्तपंचकम्
समीजिरे यत्र पुरा दिवौकसो वरेण सत्रेण महावरप्रदाः १
पुरा च राजर्षिवरेण धीमता बहूनि वर्षाण्यमितेन तेजसा
प्रकृष्टमेतत्कुरुणा महात्मना ततः कुरुक्षेत्रमितीह पप्रथे २
राम उवाच
किमर्थं कुरुणा कृष्टं क्षेत्रमेतन्महात्मना
एतदिच्छाम्यहं श्रोतुं कथ्यमानं तपोधनाः ३
ऋषय ऊचुः
पुरा किल कुरुं राम कृषन्तं सततोत्थितम्
अभ्येत्य शक्रस्त्रिदिवात्पर्यपृच्छत कारणम् ४
किमिदं वर्तते राजन्प्रयत्नेन परेण च
राजर्षे किमभिप्रेतं येनेयं कृष्यते क्षितिः ५
कुरुरुवाच
इह ये पुरुषाः क्षेत्रे मरिष्यन्ति शतक्रतो
ते गमिष्यन्ति सुकृताँल्लोकान्पापविवर्जितान् ६
अवहस्य ततः शक्रो जगाम त्रिदिवं प्रभुः
राजर्षिरप्यनिर्विण्णः कर्षत्येव वसुंधराम् ७
आगम्यागम्य चैवैनं भूयो भूयोऽवहस्य च
शतक्रतुरनिर्विण्णं पृष्ट्वा पृष्ट्वा जगाम ह ८
यदा तु तपसोग्रेण चकर्ष वसुधां नृपः
ततः शक्रोऽब्रवीद्देवान्राजर्षेर्यच्चिकीर्षितम् ९

तच्छ्रुत्वा चाब्रुवन्देवाः सहस्राक्षमिदं वचः
वरेण च्छन्द्यतां शक्र राजर्षिर्यदि शक्यते १०
यदि ह्यत्र प्रमीता वै स्वर्गं गच्छन्ति मानवाः
अस्माननिष्ट्वा क्रतुभिर्भागो नो न भविष्यति ११
आगम्य च ततः शक्रस्तदा राजर्षिमब्रवीत्
अलं खेदेन भवतः क्रियतां वचनं मम १२
मानवा ये निराहारा देहं त्यक्ष्यन्त्यतन्द्रिताः
युधि वा निहताः सम्यगपि तिर्यग्गता नृप १३
ते स्वर्गभाजो राजेन्द्र भवन्त्विति महामते
तथास्त्विति ततो राजा कुरुः शक्रमुवाच ह १४
ततस्तमभ्यनुज्ञाप्य प्रहृष्टेनान्तरात्मना
जगाम त्रिदिवं भूयः क्षिप्रं बलनिषूदनः १५
एवमेतद्यदुश्रेष्ठ कृष्टं राजर्षिणा पुरा
शक्रेण चाप्यनुज्ञातं पुण्यं प्राणान्विमुञ्चताम् १६
अपि चात्र स्वयं शक्रो जगौ गाथां सुराधिपः
कुरुक्षेत्रे निबद्धां वै तां शृणुष्व हलायुध १७
पांसवोऽपि कुरुक्षेत्राद्वायुना समुदीरिताः
अपि दुष्कृतकर्माणं नयन्ति परमां गतिम् १८
सुरर्षभा ब्राह्मणसत्तमाश्च तथा नृगाद्या नरदेवमुख्याः
इष्ट्वा महार्हैः क्रतुभिर्नृसिंह संन्यस्य देहान्सुगतिं प्रपन्नाः १९
तरन्तुकारन्तुकयोर्यदन्तरं रामह्रदानां च मचक्रुकस्य
एतत्कुरुक्षेत्रसमन्तपञ्चकं प्रजापतेरुत्तरवेदिरुच्यते २०
शिवं महत्पुण्यमिदं दिवौकसां सुसंमतं स्वर्गगुणैः समन्वितम्
अतश्च सर्वेऽपि वसुंधराधिपा हता गमिष्यन्ति महात्मनां गतिम् २१
इति श्रीमहाभारते शल्यपर्वणि द्विपञ्चाशोऽध्यायः ५२

## त्रिपञ्चाशोऽध्यायः

वैशम्पायन उवाच
कुरुक्षेत्रं ततो दृष्ट्वा दत्त्वा दायांश्च सात्वतः
आश्रमं सुमहद्दिव्यमगमज्जनमेजय १

मधूकाम्रवनोपेतं प्लक्षन्यग्रोधसंकुलम्
चिरिबिल्वयुतं पुण्यं पनसार्जुनसंकुलम् २
तं दृष्ट्वा यादवश्रेष्ठः प्रवरं पुण्यलक्षणम्
पप्रच्छ तानृषीन्सर्वान्कस्याश्रमवरस्त्वयम् ३
ते तु सर्वे महात्मानमूचू राजन्हलायुधम्
शृणु विस्तरतो राम यस्यायं पूर्वमाश्रमः ४
अत्र विष्णुः पुरा देवस्तप्तवांस्तप उत्तमम्
अत्रास्य विधिवद्यज्ञाः सर्वे वृत्ताः सनातनाः ५
अत्रैव ब्राह्मणी सिद्धा कौमारब्रह्मचारिणी
योगयुक्ता दिवं याता तपःसिद्धा तपस्विनी ६
बभूव श्रीमती राजञ्शाण्डिल्यस्य महात्मनः
सुता धृतव्रता साध्वी नियता ब्रह्मचारिणी ७
सा तु प्राप्य परं योगं गता स्वर्गमनुत्तमम्
भुक्त्वाश्रमेऽश्वमेधस्य फलं फलवतां शुभा
गता स्वर्गं महाभागा पूजितानियतात्मभिः ८
अभिगम्याश्रमं पुण्यं दृष्ट्वा च यदुपुंगवः
ऋषींस्तानभिवाद्याथ पार्श्वे हिमवतोऽच्युतः
स्कन्धावाराणि सर्वाणि निवर्त्यारुरुहेऽचलम् ९
नातिदूरं ततो गत्वा नगं तालध्वजो बली
पुण्यं तीर्थवरं दृष्ट्वा विस्मयं परमं गतः १०
प्रभवं च सरस्वत्याः प्लक्षप्रस्रवणं बलः
संप्राप्तः कारपचनं तीर्थप्रवरमुत्तमम् ११
हलायुधस्तत्र चापि दत्त्वा दानं महाबलः
आप्लुतः सलिले शीते तस्माच्चापि जगाम ह
आश्रमं परमप्रीतो मित्रस्य वरुणस्य च १२
इंद्रोऽग्निरर्यमा चैव यत्र प्राक्प्रीतिमाप्नुवन्
तं देशं कारपचनाद्यमुनायां जगाम ह १३
स्नात्वा तत्रापि धर्मात्मा परां तुष्टिमवाप्य च
ऋषिभिश्चैव सिद्धैश्च सहितो वै महाबलः
उपविष्टः कथाः शुभ्राः शुश्राव यदुपुंगवः १४

तथा तु तिष्ठतां तेषां नारदो भगवानृषिः
आजगामाथ तं देशं यत्र रामो व्यवस्थितः १५
जटामण्डलसंवीतः स्वर्णचीरी महातपाः
हेमदण्डधरो राजन्कमण्डलुधरस्तथा १६
कच्छपीं सुखशब्दां तां गृह्य वीणां मनोरमाम्
नृत्ये गीते च कुशलो देवब्राह्मणपूजितः १७
प्रकर्ता कलहानां च नित्यं च कलहप्रियः
तं देशमगमद्यत्र श्रीमान्रामो व्यवस्थितः १८
प्रत्युत्थाय तु ते सर्वे पूजयित्वा यतव्रतम्
देवर्षिं पर्यपृच्छन्त यथावृत्तं कुरून्प्रति १९
ततोऽस्याकथयद्राजन्नारदः सर्वधर्मवित्
सर्वमेव यथावृत्तमतीतं कुरुसंक्षयम् २०
ततोऽब्रवीद्रौहिणेयो नारदं दीनया गिरा
किमवस्थं तु तत्क्षत्रं ये च तत्राभवन्नृपाः २१
श्रुतमेतन्मया पूर्वं सर्वमेव तपोधन
विस्तरश्रवणे जातं कौतूहलमतीव मे २२
नारद उवाच
पूर्वमेव हतो भीष्मो द्रोणः सिन्धुपतिस्तथा
हतो वैकर्तनः कर्णः पुत्राश्चास्य महारथाः २३
भूरिश्रवा रौहिणेय मद्रराजश्च वीर्यवान्
एते चान्ये च बहवस्तत्र तत्र महाबलाः २४
प्रियान्प्राणान्परित्यज्य प्रियार्थं कौरवस्य वै
राजानो राजपुत्राश्च समरेष्वनिवर्तिनः २५
अहतांस्तु महाबाहो शृणु मे तत्र माधव
धार्तराष्ट्रबले शेषाः कृपो भोजश्च वीर्यवान्
अश्वत्थामा च विक्रान्तो भग्नसैन्या दिशो गताः २६
दुर्योधनो हते सैन्ये प्रद्रुतेषु कृपादिषु
ह्रदं द्वैपायनं नाम विवेश भृशदुःखितः २७
शयानं धार्तराष्ट्रं तु स्तम्भिते सलिले तदा
पाण्डवाः सह कृष्णेन वाग्भिरुग्राभिरार्दयन् २८

स तुद्यमानो बलवान्वाग्भी राम समन्ततः
उत्थितः प्राग्घ्रदाद्वीरः प्रगृह्य महतीं गदाम् २९
स चाप्युपगतो युद्धं भीमेन सह सांप्रतम्
भविष्यति च तत्सद्यस्तयो राम सुदारुणम् ३०
यदि कौतूहलं तेऽस्ति व्रज माधव मा चिरम्
पश्य युद्धं महाघोरं शिष्ययोर्यदि मन्यसे ३१
वैशम्पायन उवाच
नारदस्य वचः श्रुत्वा तानभ्यर्च्य द्विजर्षभान्
सर्वान्विसर्जयामास ये तेनाभ्यागताः सह
गम्यतां द्वारकां चेति सोऽन्वशादनुयायिनः ३२
सोऽवतीर्याचलश्रेष्ठात्प्लक्षप्रस्रवणाच्छुभात्
ततः प्रीतमना रामः श्रुत्वा तीर्थफलं महत्
विप्राणां संनिधौ श्लोकमगायदिदमच्युतः ३३
सरस्वतीवाससमा कुतो रतिः सरस्वतीवाससमाः कुतो गुणाः
सरस्वतीं प्राप्य दिवं गता जनाः सदा स्मरिष्यन्ति नदीं सरस्वतीम् ३४
सरस्वती सर्वनदीषु पुण्या सरस्वती लोकसुखावहा सदा
सरस्वतीं प्राप्य जनाः सुदुष्कृताः सदा न शोचन्ति परत्र चेह च ३५
ततो मुहुर्मुहुः प्रीत्या प्रेक्षमाणः सरस्वतीम्
हयैर्युक्तं रथं शुभ्रमातिष्ठत परंतपः ३६
स शीघ्रगामिना तेन रथेन यदुपुंगवः
दिदृक्षुरभिसंप्राप्तः शिष्ययुद्धमुपस्थितम् ३७
इति श्रीमहाभारते शल्यपर्वणि त्रिपञ्चाशोऽध्यायः ५३

## चतुःपञ्चाशोऽध्यायः

वैशम्पायन उवाच
एवं तदभवद्युद्धं तुमुलं जनमेजय
यत्र दुःखान्वितो राजा धृतराष्ट्रोऽब्रवीदिदम् १
रामं संनिहितं दृष्ट्वा गदायुद्ध उपस्थिते
मम पुत्रः कथं भीमं प्रत्ययुध्यत सञ्जय २
सञ्जय उवाच

रामसांनिध्यमासाद्य पुत्रो दुर्योधनस्तव
युद्धकामो महाबाहुः समहृष्यत वीर्यवान् ३
दृष्ट्वा लाङ्गलिनं राजा प्रत्युत्थाय च भारत
प्रीत्या परमया युक्तो युधिष्ठिरमथाब्रवीत् ४
समन्तपञ्चकं क्षिप्रमितो याम विशां पते
प्रथितोत्तरवेदी सा देवलोके प्रजापतेः ५
तस्मिन्महापुण्यतमे त्रैलोक्यस्य सनातने
संग्रामे निधनं प्राप्य ध्रुवं स्वर्गो भविष्यति ६
तथेत्युक्त्वा महाराज कुन्तीपुत्रो युधिष्ठिरः
समन्तपञ्चकं वीरः प्रायादभिमुखः प्रभुः ७
ततो दुर्योधनो राजा प्रगृह्य महतीं गदाम्
पद्भ्याममर्षाद्द्युतिमानगच्छत्पाण्डवैः सह ८
तथा यान्तं गदाहस्तं वर्मणा चापि दंशितम्
अन्तरिक्षगता देवाः साधु साध्वित्यपूजयन्
वातिकाश्च नरा येऽत्र दृष्ट्वा ते हर्षमागताः ९
स पाण्डवैः परिवृतः कुरुराजस्तवात्मजः
मत्तस्येव गजेन्द्रस्य गतिमास्थाय सोऽव्रजत् १०
ततः शङ्खनिनादेन भेरीणां च महास्वनैः
सिंहनादैश्च शूराणां दिशः सर्वाः प्रपूरिताः ११
प्रतीच्यभिमुखं देशं यथोद्दिष्टं सुतेन ते
गत्वा च तैः परिक्षिप्तं समन्तात्सर्वतोदिशम् १२
दक्षिणेन सरस्वत्याः स्वयनं तीर्थमुत्तमम्
तस्मिन्देशे त्वनिरिणे तत्र युद्धमरोचयन् १३
ततो भीमो महाकोटिं गदां गृह्याथ वर्मभृत्
बिभ्रद्रूपं महाराज सदृशं हि गरुत्मतः १४
अवबद्धशिरस्त्राणः संख्ये काञ्चनवर्मभृत्
रराज राजन्पुत्रस्ते काञ्चनः शैलराडिव १५
वर्मभ्यां संवृतौ वीरौ भीमदुर्योधनावुभौ
संयुगे च प्रकाशेते संरब्धाविव कुञ्जरौ १६
रणमण्डलमध्यस्थौ भ्रातरौ तौ नरर्षभौ

अशोभेतां महाराज चन्द्रसूर्याविवोदितौ १७
तावन्योन्यं निरीक्षेतां क्रुद्धाविव महाद्विपौ
दहन्तौ लोचनै राजन्परस्परवधैषिणौ १८
संप्रहृष्टमना राजन्गदामादाय कौरवः
सृक्किणी संलिहन्राजन्क्रोधरक्तेक्षणः श्वसन् १९
ततो दुर्योधनो राजा गदामादाय वीर्यवान्
भीमसेनमभिप्रेक्ष्य गजो गजमिवाह्वयत् २०
अद्रिसारमयीं भीमस्तथैवादाय वीर्यवान्
आह्वयामास नृपतिं सिंहः सिंहं यथा वने २१
तावुद्यतगदापाणी दुर्योधनवृकोदरौ
संयुगे स्म प्रकाशेते गिरी सशिखराविव २२
तावुभावभिसंक्रुद्धावुभौ भीमपराक्रमौ
उभौ शिष्यौ गदायुद्धे रौहिणेयस्य धीमतः २३
उभौ सदृशकर्माणौ यमवासवयोरिव
तथा सदृशकर्माणौ वरुणस्य महाबलौ २४
वासुदेवस्य रामस्य तथा वैश्रवणस्य च
सदृशौ तौ महाराज मधुकैटभयोर्युधि २५
उभौ सदृशकर्माणौ रणे सुन्दोपसुन्दयोः
तथैव कालस्य समौ मृत्योश्चैव परंतपौ २६
अन्योन्यमभिधावन्तौ मत्ताविव महाद्विपौ
वाशितासंगमे दृप्तौ शरदीव मदोत्कटौ २७
मत्ताविव जिगीषन्तौ मातङ्गौ भरतर्षभौ
उभौ क्रोधविषं दीप्तं वमन्तावुरगाविव २८
अन्योन्यमभिसंरब्धौ प्रेक्षमाणावरिंदमौ
उभौ भरतशार्दूलौ विक्रमेण समन्वितौ २९
सिंहाविव दुराधर्षौ गदायुद्धे परंतपौ
नखदंष्ट्रायुधौ वीरौ व्याघ्राविव दुरुत्सहौ ३०
प्रजासंहरणे क्षुब्धौ समुद्राविव दुस्तरौ
लोहिताङ्गाविव क्रुद्धौ प्रतपन्तौ महारथौ ३१
रश्मिमन्तौ महात्मानौ दीप्तिमन्तौ महाबलौ

ददृशाते कुरुश्रेष्ठौ कालसूर्याविवोदितौ ३२
व्याघ्राविव सुसंरब्धौ गर्जन्ताविव तोयदौ
जहृषाते महाबाहू सिंहौ केसरिणाविव ३३
गजाविव सुसंरब्धौ ज्वलिताविव पावकौ
ददृशुस्तौ महात्मानौ सशृङ्गाविव पर्वतौ ३४
रोषात्प्रस्फुरमाणोष्ठौ निरीक्षन्तौ परस्परम्
तौ समेतौ महात्मानौ गदाहस्तौ नरोत्तमौ ३५
उभौ परमसंहृष्टावुभौ परमसंमतौ
सदश्वाविव हेषन्तौ बृंहन्ताविव कुञ्जरौ ३६
वृषभाविव गर्जन्तौ दुर्योधनवृकोदरौ
दैत्याविव बलोन्मत्तौ रेजतुस्तौ नरोत्तमौ ३७
ततो दुर्योधनो राजन्निदमाह युधिष्ठिरम्
सृञ्जयैः सह तिष्ठन्तं तपन्तमिव भास्करम् ३८
इदं व्यवसितं युद्धं मम भीमस्य चोभयोः
उपोपविष्टाः पश्यध्वं विमर्दं नृपसत्तमाः ३९
ततः समुपविष्टं तत्सुमहद्राजमण्डलम्
विराजमानं ददृशे दिवीवादित्यमण्डलम् ४०
तेषां मध्ये महाबाहुः श्रीमान्केशवपूर्वजः
उपविष्टो महाराज पूज्यमानः समन्ततः ४१
शुशुभे राजमध्यस्थो नीलवासाः सितप्रभः
नक्षत्रैरिव संपूर्णो वृतो निशि निशाकरः ४२
तौ तथा तु महाराज गदाहस्तौ दुरासदौ
अन्योन्यं वाग्भिरुग्राभिस्तक्षमाणौ व्यवस्थितौ ४३
अप्रियाणि ततोऽन्योन्यमुक्त्वा तौ कुरुपुंगवौ
उदीक्षन्तौ स्थितौ वीरौ वृत्रशक्राविवाहवे ४४
इति श्रीमहाभारते शल्यपर्वणि चतुष्पञ्चाशोऽध्यायः ५४

पञ्चपञ्चाशोऽध्यायः

वैशम्पायन उवाच
ततो वाग्युद्धमभवत्तुमुलं जनमेजय

यत्र दुःखान्वितो राजा धृतराष्ट्रोऽब्रवीदिदम् १
धिगस्तु खलु मानुष्यं यस्य निष्ठेयमीदृशी
एकादशचमूभर्ता यत्र पुत्रो ममाभिभूः २
आज्ञाप्य सर्वान्नृपतीन्भुक्त्वा चेमां वसुंधराम्
गदामादाय वेगेन पदातिः प्रस्थितो रणम् ३
भूत्वा हि जगतो नाथो ह्यनाथ इव मे सुतः
गदामुद्यम्य यो याति किमन्यद्भागधेयतः ४
अहो दुःखं महत्प्राप्तं पुत्रेण मम सञ्जय
एवमुक्त्वा स दुःखार्तो विरराम जनाधिपः ५
सञ्जय उवाच
स मेघनिनदो हर्षाद्विनदन्निव गोवृषः
आजुहाव ततः पार्थं युद्धाय युधि वीर्यवान् ६
भीममाह्वयमाने तु कुरुराजे महात्मनि
प्रादुरासन्सुघोराणि रूपाणि विविधान्युत ७
ववुर्वाताः सनिर्घाताः पांसुवर्षं पपात च
बभूवुश्च दिशः सर्वास्तिमिरेण समावृताः ८
महास्वनाः सनिर्घातास्तुमुला लोमहर्षणाः
पेतुस्तथोल्काः शतशः स्फोटयन्त्यो नभस्तलम् ९
राहुश्चाग्रसदादित्यमपर्वणि विशां पते
चकम्पे च महाकम्पं पृथिवी सवनद्रुमा १०
रूक्षाश्च वाताः प्रववुर्नीचैः शर्करवर्षिणः
गिरीणां शिखराण्येव न्यपतन्त महीतले ११
मृगा बहुविधाकाराः संपतन्ति दिशो दश
दीप्ताः शिवाश्चाप्यनदन्घोररूपाः सुदारुणाः १२
निर्घाताश्च महाघोरा बभूवुर्लोमहर्षणाः
दीप्तायां दिशि राजेन्द्र मृगाश्चाशुभवादिनः १३
उदपानगताश्चापो व्यवर्धन्त समन्ततः
अशरीरा महानादाः श्रूयन्ते स्म तदा नृप १४
एवमादीनि दृष्ट्वाथ निमित्तानि वृकोदरः
उवाच भ्रातरं ज्येष्ठं धर्मराजं युधिष्ठिरम् १५

नैष शक्तो रणे जेतुं मन्दात्मा मां सुयोधनः
अद्य क्रोधं विमोक्ष्यामि निगूढं हृदये चिरम्
सुयोधने कौरवेन्द्रे खाण्डवे पावको यथा १६
शल्यमद्योद्धरिष्यामि तव पाण्डव हृच्छयम्
निहत्य गदया पापमिमं कुरुकुलाधमम् १७
अद्य कीर्तिमयीं मालां प्रतिमोक्ष्याम्यहं त्वयि
हत्वेमं पापकर्माणं गदया रणमूर्धनि १८
अद्यास्य शतधा देहं भिनद्मि गदयानया
नायं प्रवेष्टा नगरं पुनर्वारणसाह्वयम् १९
सर्पोत्सर्गस्य शयने विषदानस्य भोजने
प्रमाणकोट्यां पातस्य दाहस्य जतुवेश्मनि २०
सभायामवहासस्य सर्वस्वहरणस्य च
वर्षमज्ञातवासस्य वनवासस्य चानघ २१
अद्यान्तमेषां दुःखानां गन्ता भरतसत्तम
एकाह्ना विनिहत्येमं भविष्याम्यात्मनोऽनृणः २२
अद्यायुर्धार्तराष्ट्रस्य दुर्मतेरकृतात्मनः
समाप्तं भरतश्रेष्ठ मातापित्रोश्च दर्शनम् २३
अद्यायं कुरुराजस्य शंतनोः कुलपांसनः
प्राणाञ्श्रियं च राज्यं च त्यक्त्वा शेष्यति भूतले २४
राजा च धृतराष्ट्रोऽद्य श्रुत्वा पुत्रं मया हतम्
स्मरिष्यत्यशुभं कर्म यत्तच्छकुनिबुद्धिजम् २५
इत्युक्त्वा राजशार्दूल गदामादाय वीर्यवान्
अवातिष्ठत युद्धाय शक्रो वृत्रमिवाह्वयन् २६
तमुद्यतगदं दृष्ट्वा कैलासमिव शृङ्गिणम्
भीमसेनः पुनः क्रुद्धो दुर्योधनमुवाच ह २७
राज्ञश्च धृतराष्ट्रस्य तथा त्वमपि चात्मनः
स्मर तद्दुष्कृतं कर्म यद्वृत्तं वारणावते २८
द्रौपदी च परिक्लिष्टा सभायां यद्रजस्वला
द्यूते च वञ्चितो राजा यत्त्वया सौबलेन च २९
वने दुःखं च यत्प्राप्तमस्माभिस्त्वत्कृतं महत्

विराटनगरे चैव योन्यन्तरगतैरिव
तत्सर्वं यातयाम्यद्य दिष्ट्या दृष्टोऽसि दुर्मते ३०
त्वत्कृतेऽसौ हतः शेते शरतल्पे प्रतापवान्
गाङ्गेयो रथिनां श्रेष्ठो निहतो याज्ञसेनिना ३१
हतो द्रोणश्च कर्णश्च तथा शल्यः प्रतापवान्
वैराग्नेरादिकर्ता च शकुनिः सौबलो हतः ३२
प्रातिकामी तथा पापो द्रौपद्याः क्लेशकृद्धतः
भ्रातरस्ते हताः सर्वे शूरा विक्रान्तयोधिनः ३३
एते चान्ये च बहवो निहतास्त्वत्कृते नृपाः
त्वामद्य निहनिष्यामि गदया नात्र संशयः ३४
इत्येवमुच्चै राजेन्द्र भाषमाणं वृकोदरम्
उवाच वीतभी राजन्पुत्रस्ते सत्यविक्रमः ३५
किं कत्थितेन बहुधा युध्यस्व त्वं वृकोदर
अद्य तेऽह विनेष्यामि युद्धश्रद्धां कुलाधम ३६
नैव दुर्योधनः क्षुद्र केनचित्त्वद्विधेन वै
शक्यस्त्रासयितुं वाचा यथान्यः प्राकृतो नरः ३७
चिरकालेप्सितं दिष्ट्या हृदयस्थमिदं मम
त्वया सह गदायुद्धं त्रिदशैरुपपादितम् ३८
किं वाचा बहुनोक्तेन कत्थितेन च दुर्मते
वाणी संपद्यतामेषा कर्मणा मा चिरं कृथाः ३९
तस्य तद्वचनं श्रुत्वा सर्व एवाभ्यपूजयन्
राजानः सोमकाश्चैव ये तत्रासन्समागताः ४०
ततः संपूजितः सर्वैः संप्रहृष्टतनूरुहः
भूयो धीरं मनश्चक्रे युद्धाय कुरुनन्दनः ४१
तं मत्तमिव मातङ्गं तलतालैर्नराधिपाः
भूयः संहर्षयांचक्रुर्दुर्योधनममर्षणम् ४२
तं महात्मा महात्मानं गदामुद्यम्य पाण्डवः
अभिदुद्राव वेगेन धार्तराष्ट्रं वृकोदरः ४३
बृंहन्ति कुञ्जरास्तत्र हया हेषन्ति चासकृत्
शस्त्राणि चाप्यदीप्यन्त पाण्डवानां जयैषिणाम् ४४

इति श्रीमहाभारते शल्यपर्वणि पञ्चपञ्चाशोऽध्यायः ५५

## षट्पञ्चाशोऽध्यायः

सञ्जय उवाच
ततो दुर्योधनो दृष्ट्वा भीमसेनं तथागतम्
प्रत्युद्ययावदीनात्मा वेगेन महता नदन् १
समापेततुरानद्य शृङ्गिणौ वृषभाविव
महानिर्घातघोषश्च संप्रहारस्तयोरभूत् २
अभवच्च तयोर्युद्धं तुमुलं लोमहर्षणम्
जिगीषतोर्युधान्योन्यमिन्द्रप्रह्लादयोरिव ३
रुधिरोक्षितसर्वाङ्गौ गदाहस्तौ मनस्विनौ
ददृशाते महात्मानौ पुष्पिताविव किंशुकौ ४
तथा तस्मिन्महायुद्धे वर्तमाने सुदारुणे
खद्योतसंघैरिव खं दर्शनीयं व्यरोचत ५
तथा तस्मिन्वर्तमाने संकुले तुमुले भृशम्
उभावपि परिश्रान्तौ युध्यमानावरिंदमौ ६
तौ मुहूर्तं समाश्वस्य पुनरेव परंतपौ
अभ्यहारयतां तत्र संप्रगृह्य गदे शुभे ७
तौ तु दृष्ट्वा महावीर्यौ समाश्वस्तौ नरर्षभौ
बलिनौ वारणौ यद्वद्वाशितार्थे मदोत्कटौ ८
अपारवीर्यौ संप्रेक्ष्य प्रगृहीतगदावुभौ
विस्मयं परमं जग्मुर्देवगन्धर्वदानवाः ९
प्रगृहीतगदौ दृष्ट्वा दुर्योधनवृकोदरौ
संशयः सर्वभूतानां विजये समपद्यत १०
समागम्य ततो भूयो भ्रातरौ बलिनां वरौ
अन्योन्यस्यान्तरप्रेप्सू प्रचक्रातेऽन्तरं प्रति ११
यमदण्डोपमां गुर्वीमिन्द्राशनिमिवोद्यताम्
ददृशुः प्रेक्षका राजन्रौद्रीं विशसनीं गदाम् १२
आविध्यतो गदां तस्य भीमसेनस्य संयुगे
शब्दः सुतुमुलो घोरो मुहूर्तं समपद्यत १३

आविध्यन्तमभिप्रेक्ष्य धार्तराष्ट्रोऽथ पाण्डवम्
गदामलघुवेगां तां विस्मितः संबभूव ह १४
चरंश्च विविधान्मार्गान्मण्डलानि च भारत
अशोभत तदा वीरो भूय एव वृकोदरः १५
तौ परस्परमासाद्य यत्तावन्योन्यरक्षणे
मार्जाराविव भक्षार्थे ततक्षाते मुहुर्मुहुः १६
अचरद्भीमसेनस्तु मार्गान्बहुविधांस्तथा
मण्डलानि विचित्राणि स्थानानि विविधानि च १७
गोमूत्रिकाणि चित्राणि गतप्रत्यागतानि च
परिमोक्षं प्रहाराणां वर्जनं परिधावनम् १८
अभिद्रवणमाक्षेपमवस्थानं सविग्रहम्
परावर्तनसंवर्तमवप्लुतमथाप्लुतम्
उपन्यस्तमपन्यस्तं गदायुद्धविशारदौ १९
एवं तौ विचरन्तौ तु न्यघ्नतां वै परस्परम्
वञ्चयन्तौ पुनश्चैव चेरतुः कुरुसत्तमौ २०
विक्रीडन्तौ सुबलिनौ मण्डलानि प्रचेरतुः
गदाहस्तौ ततस्तौ तु मण्डलावस्थितौ बली २१
दक्षिणं मण्डलं राजन्धार्तराष्ट्रोऽभ्यवर्तत
सव्यं तु मण्डलं तत्र भीमसेनोऽभ्यवर्तत २२
तथा तु चरतस्तस्य भीमस्य रणमूर्धनि
दुर्योधनो महाराज पार्श्वदेशेऽभ्यताडयत् २३
आहतस्तु तदा भीमस्तव पुत्रेण भारत
आविध्यत गदां गुर्वीं प्रहारं तमचिन्तयन् २४
इन्द्राशनिसमां घोरां यमदण्डमिवोद्यताम्
ददृशुस्ते महाराज भीमसेनस्य तां गदाम् २५
आविध्यन्तं गदां दृष्ट्वा भीमसेनं तवात्मजः
समुद्यम्य गदां घोरां प्रत्यविध्यदरिंदमः २६
गदामारुतवेगेन तव पुत्रस्य भारत
शब्द आसीत्सुतुमुलस्तेजश्च समजायत २७
स चरन्विविधान्मार्गान्मण्डलानि च भागशः

समशोभत तेजस्वी भूयो भीमात्सुयोधनः २८
आविद्धा सर्ववेगेन भीमेन महती गदा
सधूमं सार्चिषं चाग्निं मुमोचोग्रा महास्वना २९
आधूतां भीमसेनेन गदां दृष्ट्वा सुयोधनः
अद्रिसारमयीं गुर्वीमाविध्यन्बह्वशोभत ३०
गदामारुतवेगं हि दृष्ट्वा तस्य महात्मनः
भयं विवेश पाण्डून्वै सर्वानेव ससोमकान् ३१
तौ दर्शयन्तौ समरे युद्धक्रीडां समन्ततः
गदाभ्यां सहसान्योन्यमाजघ्नतुररिंदमौ ३२
तौ परस्परमासाद्य दंष्ट्राभ्यां द्विरदौ यथा
अशोभेतां महाराज शोणितेन परिप्लुतौ ३३
एवं तदभवद्युद्धं घोररूपमसंवृतम्
परिवृत्तेऽहनि क्रूरं वृत्रवासवयोरिव ३४
दृष्ट्वा व्यवस्थितं भीमं तव पुत्रो महाबलः
चरंश्चित्रतरान्मार्गान्कौन्तेयमभिदुद्रुवे ३५
तस्य भीमो महावेगां जाम्बूनदपरिष्कृताम्
अभिक्रुद्धस्य क्रुद्धस्तु ताडयामास तां गदाम् ३६
सविस्फुलिङ्गो निर्ह्रादस्तयोस्तत्राभिघातजः
प्रादुरासीन्महाराज सृष्टयोर्वज्रयोरिव ३७
वेगवत्या तया तत्र भीमसेनप्रमुक्तया
निपतन्त्या महाराज पृथिवी समकम्पत ३८
तां नामृष्यत कौरव्यो गदां प्रतिहतां रणे
मत्तो द्विप इव क्रुद्धः प्रतिकुञ्जरदर्शनात् ३९
स सव्यं मण्डलं राजन्नुद्भ्राम्य कृतनिश्चयः
आजघ्ने मूर्ध्नि कौन्तेयं गदया भीमवेगया ४०
तया त्वभिहतो भीमः पुत्रेण तव पाण्डवः
नाकम्पत महाराज तदद्भुतमिवाभवत् ४१
आश्चर्यं चापि तद्राजन्सर्वसैन्यान्यपूजयन्
यद्गदाभिहतो भीमो नाकम्पत पदात्पदम् ४२
ततो गुरुतरां दीप्तां गदां हेमपरिष्कृताम्

दुर्योधनाय व्यसृजद्भीमो भीमपराक्रमः ४३
तं प्रहारमसंभ्रान्तो लाघवेन महाबलः
मोघं दुर्योधनश्चक्रे तत्राभूद्विस्मयो महान् ४४
सा तु मोघा गदा राजन्पतन्ती भीमचोदिता
चालयामास पृथिवीं महानिर्घातनिस्वना ४५
आस्थाय कौशिकान्मार्गानुत्पतन्स पुनः पुनः
गदानिपातं प्रज्ञाय भीमसेनमवञ्चयत् ४६
वञ्चयित्वा तथा भीमं गदया कुरुसत्तमः
ताडयामास संक्रुद्धो वक्षोदेशे महाबलः ४७
गदयाभिहतो भीमो मुह्यमानो महारणे
नाभ्यमन्यत कर्तव्यं पुत्रेणाभ्याहतस्तव ४८
तस्मिंस्तथा वर्तमाने राजन्सोमकपाण्डवाः
भृशोपहतसंकल्पा नहृष्टमनसोऽभवन् ४९
स तु तेन प्रहारेण मातङ्ग इव रोषितः
हस्तिवद्धस्तिसंकाशमभिदुद्राव ते सुतम् ५०
ततस्तु रभसो भीमो गदया तनयं तव
अभिदुद्राव वेगेन सिंहो वनगजं यथा ५१
उपसृत्य तु राजानं गदामोक्षविशारदः
आविध्यत गदां राजन्समुद्दिश्य सुतं तव ५२
अताडयद्भीमसेनः पार्श्वे दुर्योधनं तदा
स विह्वलः प्रहारेण जानुभ्यामगमन्महीम् ५३
तस्मिंस्तु भरतश्रेष्ठं जानुभ्यामवनीं गते
उदतिष्ठत्ततो नादः सृञ्जयानां जगत्पते ५४
तेषां तु निनदं श्रुत्वा सृञ्जयानां नरर्षभः
अमर्षाद्भरतश्रेष्ठ पुत्रस्ते समकुप्यत ५५
उत्थाय तु महाबाहुः क्रुद्धो नाग इव श्वसन्
दिधक्षन्निव नेत्राभ्यां भीमसेनमवैक्षत ५६
ततः स भरतश्रेष्ठो गदापाणिरभिद्रवत्
प्रमथिष्यन्निव शिरो भीमसेनस्य संयुगे ५७
स महात्मा महात्मानं भीमं भीमपराक्रमः

अताडयच्छङ्खदेशे न चचालाचलोपमः ५८
स भूयः शुशुभे पार्थस्ताडितो गदया रणे
उद्भिन्नरुधिरो राजन्प्रभिन्न इव कुञ्जरः ५९
ततो गदां वीरहणीमयस्मयीं प्रगृह्य वज्राशनितुल्यनिस्वनाम्
अताडयच्छत्रुममित्रकर्शनो बलेन विक्रम्य धनंजयाग्रजः ६०
स भीमसेनाभिहतस्तवात्मजः पपात संकम्पितदेहबन्धनः
सुपुष्पितो मारुतवेगताडितो महावने साल इवावघूर्णितः ६१
ततः प्रणेदुर्जहृषुश्च पाण्डवाः समीक्ष्य पुत्रं पतितं क्षितौ तव
ततः सुतस्ते प्रतिलभ्य चेतनां समुत्पपात द्विरदो यथा ह्रदात् ६२
स पार्थिवो नित्यममर्षितस्तदा महारथः शिक्षितवत्परिभ्रमन्
अताडयत्पाण्डवमग्रतः स्थितं स विह्वलाङ्गो जगतीमुपास्पृशत् ६३
स सिंहनादान्विननाद कौरवो निपात्य भूमौ युधि भीममोजसा
बिभेद चैवाशनितुल्यतेजसा गदानिपातेन शरीररक्षणम् ६४
ततोऽन्तरिक्षे निनदो महानभूद्दिवौकसामप्सरसां च नेदुषाम्
पपात चोच्चैरमरप्रवेरितं विचित्रपुष्पोत्करवर्षमुत्तमम् ६५
ततः परानाविशदुत्तमं भयं समीक्ष्य भूमौ पतितं नरोत्तमम्
अहीयमानं च बलेन कौरवं निशम्य भेदं च दृढस्य वर्मणः ६६
ततो मुहूर्तादुपलभ्य चेतनां प्रमृज्य वक्त्रं रुधिरार्द्रमात्मनः
धृतिं समालम्ब्य विवृत्तलोचनो बलेन संस्तभ्य वृकोदरः स्थितः ६७
इति श्रीमहाभारते शल्यपर्वणि षट्पञ्चाशोऽध्यायः ५६

## सप्तपञ्चाशोऽध्यायः

सञ्जय उवाच
समुदीर्णं ततो दृष्ट्वा संग्रामं कुरुमुख्ययोः
अथाब्रवीदर्जुनस्तु वासुदेवं यशस्विनम् १
अनयोर्वीरयोर्युद्धे को ज्यायान्भवतो मतः
कस्य वा को गुणो भूयानेतद्वद जनार्दन २
वासुदेव उवाच
उपदेशोऽनयोस्तुल्यो भीमस्तु बलवत्तरः
कृतयत्नतरस्त्वेष धार्तराष्ट्रो वृकोदरात् ३

भीमसेनस्तु धर्मेण युध्यमानो न जेष्यति
अन्यायेन तु युध्यन्वै हन्यादेष सुयोधनम् ४
मायया निर्जिता देवैरसुरा इति नः श्रुतम्
विरोचनश्च शक्रेण मायया निर्जितः सखे
मायया चाक्षिपत्तेजो वृत्रस्य बलसूदनः ५
प्रतिज्ञातं तु भीमेन द्यूतकाले धनंजय
ऊरू भेत्स्यामि ते संख्ये गदयेति सुयोधनम् ६
सोऽय प्रतिज्ञां तां चापि पारयित्वारिकर्शनः
मायाविनं च राजानं माययैव निकृन्ततु ७
यद्येष बलमास्थाय न्यायेन प्रहरिष्यति
विषमस्थस्ततो राजा भविष्यति युधिष्ठिरः ८
पुनरेव च वक्ष्यामि पाण्डवेदं निबोध मे
धर्मराजापराधेन भयं नः पुनरागतम् ९
कृत्वा हि सुमहत्कर्म हत्वा भीष्ममुखान्कुरून्
जयः प्राप्तो यशश्चाग्र्यं वैरं च प्रतियातितम्
तदेवं विजयः प्राप्तः पुनः संशयितः कृतः १०
अबुद्धिरेषा महती धर्मराजस्य पाण्डव
यदेकविजये युद्धं पणितं कृतमीदृशम्
सुयोधनः कृती वीर एकायनगतस्तथा ११
अपि चोशनसा गीतः श्रूयतेऽय पुरातनः
श्लोकस्तत्त्वार्थसहितस्तन्मे निगदतः शृणु १२
पुनरावर्तमानानां भग्नानां जीवितैषिणाम्
भेतव्यमरिशेषाणामेकायनगता हि ते १३
सुयोधनमिमं भग्नं हतसैन्यं ह्रदं गतम्
पराजितं वनप्रेप्सुं निराशं राज्यलम्भने १४
को न्वेष संयुगे प्राज्ञः पुनर्द्वंद्वे समाह्वयेत्
अपि वो निर्जितं राज्यं न हरेत सुयोधनः १५
यस्त्रयोदशवर्षाणि गदया कृतनिश्रमः
चरत्यूर्ध्वं च तिर्यक्च भीमसेनजिघांसया १६
एवं चेन्न महाबाहुरन्यायेन हनिष्यति

एष वः कौरवो राजा धार्तराष्ट्रो भविष्यति १७
धनंजयस्तु श्रुत्वैतत्केशवस्य महात्मनः
प्रेक्षतो भीमसेनस्य हस्तेनोरुमताडयत् १८
गृह्य संज्ञां ततो भीमो गदया व्यचरद्रणे
मण्डलानि विचित्राणि यमकानीतराणि च १९
दक्षिणं मण्डलं सव्यं गोमूत्रकमथापि च
व्यचरत्पाण्डवो राजन्नरिं संमोहयन्निव २०
तथैव तव पुत्रोऽपि गदामार्गविशारदः
व्यचरल्लघु चित्रं च भीमसेनजिघांसया २१
आधुन्वन्तौ गदे घोरे चन्दनागरुरूषिते
वैरस्यान्तं परीप्सन्तौ रणे क्रुद्धाविवान्तकौ २२
अन्योन्यं तौ जिघांसन्तौ प्रवीरौ पुरुषर्षभौ
युयुधाते गरुत्मन्तौ यथा नागामिषैषिणौ २३
मण्डलानि विचित्राणि चरतोर्नृपभीमयोः
गदासंपातजास्तत्र प्रजज्ञुः पावकार्चिषः २४
समं प्रहरतोस्तत्र शूरयोर्बलिनोर्मृधे
क्षुब्धयोर्वायुना राजन्द्वयोरिव समुद्रयोः २५
तयोः प्रहरतोस्तुल्यं मत्तकुञ्जरयोरिव
गदानिर्घातसंह्रादः प्रहाराणामजायत २६
तस्मिंस्तदा संप्रहारे दारुणे संकुले भृशम्
उभावपि परिश्रान्तौ युध्यमानावरिंदमौ २७
तौ मुहूर्तं समाश्वस्य पुनरेव परंतपौ
अभ्यहारयतां क्रुद्धौ प्रगृह्य महती गदे २८
तयोः समभवद्युद्धं घोररूपमसंवृतम्
गदानिपातै राजेन्द्र तक्षतोर्वै परस्परम् २९
व्यायामप्रद्रुतौ तौ तु वृषभाक्षौ तरस्विनौ
अन्योन्यं जघ्नतुर्वीरौ पङ्कस्थौ महिषाविव ३०
जर्जरीकृतसर्वाङ्गौ रुधिरेणाभिसंप्लुतौ
ददृशाते हिमवति पुष्पिताविव किंशुकौ ३१
दुर्योधनेन पार्थस्तु विवरे संप्रदर्शिते

ईषदुत्स्मयमानस्तु सहसा प्रससार ह ३२
तमभ्याशगतं प्राज्ञो रणे प्रेक्ष्य वृकोदरः
अवाक्षिपद्गदां तस्मै वेगेन महता बली ३३
अवक्षेपं तु तं दृष्ट्वा पुत्रस्तव विशां पते
अपासर्पत्ततः स्थानात्सा मोघा न्यपतद्भुवि ३४
मोक्षयित्वा प्रहारं तं सुतस्तव स संभ्रमात्
भीमसेनं च गदया प्राहरत्कुरुसत्तमः ३५
तस्य विष्यन्दमानेन रुधिरेणामितौजसः
प्रहारगुरुपाताच्च मूर्छेव समजायत ३६
दुर्योधनस्तं न वेद पीडितं पाण्डवं रणे
धारयामास भीमोऽपि शरीरमतिपीडितम् ३७
अमन्यत स्थितं ह्येनं प्रहरिष्यन्तमाहवे
अतो न प्राहरत्तस्मै पुनरेव तवात्मजः ३८
ततो मुहूर्तमाश्वस्य दुर्योधनमवस्थितम्
वेगेनाभ्यद्रवद्राजन्भीमसेनः प्रतापवान् ३९
तमापतन्तं संप्रेक्ष्य संरब्धममितौजसम्
मोघमस्य प्रहारं तं चिकीर्षुर्भरतर्षभ ४०
अवस्थाने मतिं कृत्वा पुत्रस्तव महामनाः
इयेषोत्पतितुं राजंश्छलयिष्यन्वृकोदरम् ४१
अबुध्यद्भीमसेनस्तद्राज्ञस्तस्य चिकीर्षितम्
अथास्य समभिद्रुत्य समुत्क्रम्य च सिंहवत् ४२
सृत्या वञ्चयतो राजन्पुनरेवोत्पतिष्यतः
ऊरुभ्यां प्राहिणोद्राजन्गदां वेगेन पाण्डवः ४३
सा वज्रनिष्पेषसमा प्रहिता भीमकर्मणा
ऊरू दुर्योधनस्याथ बभञ्ज प्रियदर्शनौ ४४
स पपात नरव्याघ्रो वसुधामनुनादयन्
भग्नोरुर्भीमसेनेन पुत्रस्तव महीपते ४५
ववुर्वाताः सनिर्घाताः पांसुवर्षं पपात च
चचाल पृथिवी चापि सवृक्षक्षुपपर्वता ४६
तस्मिन्निपतिते वीरे पत्यौ सर्वमहीक्षिताम्

महास्वना पुनर्दीप्ता सनिर्घाता भयंकरी
पपात चोल्का महती पतिते पृथिवीपतौ ४७
तथा शोणितवर्षं च पांसुवर्षं च भारत
ववर्ष मघवांस्तत्र तव पुत्रे निपातिते ४८
यक्षाणां राक्षसानां च पिशाचानां तथैव च
अन्तरिक्षे महानादः श्रूयते भरतर्षभ ४९
तेन शब्देन घोरेण मृगाणामथ पक्षिणाम्
जज्ञे घोरतमः शब्दो बहूनां सर्वतोदिशम् ५०
ये तत्र वाजिनः शेषा गजाश्च मनुजैः सह
मुमुचुस्ते महानादं तव पुत्रे निपातिते ५१
भेरीशङ्खमृदङ्गानामभवच्च स्वनो महान्
अन्तर्भूमिगतश्चैव तव पुत्रे निपातिते ५२
बहुपादैर्बहुभुजैः कबन्धैर्घोरदर्शनैः
नृत्यद्भिर्भयदैर्व्याप्ता दिशस्तत्राभवन्नृप ५३
ध्वजवन्तोऽस्त्रवन्तश्च शस्त्रवन्तस्तथैव च
प्राकम्पन्त ततो राजंस्तव पुत्रे निपातिते ५४
ह्रदाः कूपाश्च रुधिरमुद्वेमुर्नृपसत्तम
नद्यश्च सुमहावेगाः प्रतिस्रोतोवहाभवन् ५५
पुल्लिङ्गा इव नार्यस्तु स्त्रीलिङ्गाः पुरुषाभवन्
दुर्योधने तदा राजन्पतिते तनये तव ५६
दृष्ट्वा तानद्भुतोत्पातान्पाञ्चालाः पाण्डवैः सह
आविग्नमनसः सर्वे बभूवुर्भरतर्षभ ५७
ययुर्देवा यथाकामं गन्धर्वाप्सरसस्तथा
कथयन्तोऽद्भुतं युद्धं सुतयोस्तव भारत ५८
तथैव सिद्धा राजेन्द्र तथा वातिकचारणाः
नरसिंहौ प्रशंसन्तौ विप्रजग्मुर्यथागतम् ५९

इति श्रीमहाभारते शल्यपर्वणि सप्तपञ्चाशोऽध्यायः ५७

## अष्टपञ्चाशोऽध्यायः

सञ्जय उवाच

तं पातितं ततो दृष्ट्वा महाशालमिवोद्गतम्
प्रहृष्टमनसः सर्वे बभूवुस्तत्र पाण्डवाः १
उन्मत्तमिव मातङ्गं सिंहेन विनिपातितम्
ददृशुर्हृष्टरोमाणः सर्वे ते चापि सोमकाः २
ततो दुर्योधनं हत्वा भीमसेनः प्रतापवान्
पतितं कौरवेन्द्रं तमुपगम्येदमब्रवीत् ३
गौर्गौरिति पुरा मन्द द्रौपदीमेकवाससम्
यत्सभायां हसन्नस्मांस्तदा वदसि दुर्मते
तस्यावहासस्य फलमद्य त्वं समवाप्नुहि ४
एवमुक्त्वा स वामेन पदा मौलिमुपास्पृशत्
शिरश्च राजसिंहस्य पादेन समलोडयत् ५
तथैव क्रोधसंरक्तो भीमः परबलार्दनः
पुनरेवाब्रवीद्वाक्यं यत्तच्छृणु नराधिप ६
येऽस्मान्पुरोऽपनृत्यन्त पुनर्गौरिति गौरिति
तान्वयं प्रतिनृत्यामः पुनर्गौरिति गौरिति ७
नास्माकं निकृतिर्वह्निर्नाक्षद्यूतं न वञ्चना
स्वबाहुबलमाश्रित्य प्रबाधामो वयं रिपून् ८
सोऽवाप्य वैरस्य परस्य पारं वृकोदरः प्राह शनैः प्रहस्य
युधिष्ठिरं केशवसृञ्जयांश्च धनंजयं माद्रवतीसुतौ च ९
रजस्वलां द्रौपदीमानयन्ये ये चाप्यकुर्वन्त सदस्यवस्त्राम्
तान्पश्यध्वं पाण्डवैर्धार्तराष्ट्रान्रणे हतांस्तपसा याज्ञसेन्याः १०
ये नः पुरा षण्ढतिलानवोचन्क्रूरा राज्ञो धृतराष्ट्रस्य पुत्राः
ते नो हताः सगणाः सानुबन्धाः कामं स्वर्गं नरकं वा व्रजामः ११
पुनश्च राज्ञः पतितस्य भूमौ स तां गदां स्कन्धगतां निरीक्ष्य
वामेन पादेन शिरः प्रमृद्य दुर्योधनं नैकृतिकेत्यवोचत् १२
हृष्टेन राजन्कुरुपार्थिवस्य क्षुद्रात्मना भीमसेनेन पादम्
दृष्ट्वा कृतं मूर्धनि नाभ्यनन्दन्धर्मात्मानः सोमकानां प्रबर्हाः १३
तव पुत्रं तथा हत्वा कत्थमानं वृकोदरम्
नृत्यमानं च बहुशो धर्मराजोऽब्रवीदिदम् १४
मा शिरोऽस्य पदा मर्दीर्मा धर्मस्तेऽत्यगान्महान्

राजा ज्ञातिर्हतश्चायं नैतन्न्याय्यं तवानघ १५
विध्वस्तोऽय हतामात्यो हतभ्राता हतप्रजः
उत्सन्नपिण्डो भ्राता च नैतन्न्याय्यं कृतं त्वया १६
धार्मिको भीमसेनोऽसावित्याहुस्त्वां पुरा जनाः
स कस्माद्भीमसेन त्वं राजानमधितिष्ठसि १७
दृष्ट्वा दुर्योधनं राजा कुन्तीपुत्रस्तथागतम्
नेत्राभ्यामश्रुपूर्णाभ्यामिदं वचनमब्रवीत् १८
नूनमेतद्बलवता धात्रादिष्टं महात्मना
यद्वयं त्वां जिघांसामस्त्वं चास्मान्कुरुसत्तम १९
आत्मनो ह्यपराधेन महद्व्यसनमीदृशम्
प्राप्तवानसि यल्लोभान्मदाद्बाल्याच्च भारत २०
घातयित्वा वयस्यांश्च भ्रातॄनथ पितॄंस्तथा
पुत्रान्पौत्रांस्तथाचार्यांस्ततोऽसि निधनं गतः २१
तवापराधादस्माभिर्भ्रातरस्ते महारथाः
निहता ज्ञातयश्चान्ये दिष्टं मन्ये दुरत्ययम् २२
स्नुषाश्च प्रस्नुषाश्चैव धृतराष्ट्रस्य विह्वलाः
गर्हयिष्यन्ति नो नूनं विधवाः शोककर्शिताः २३
एवमुक्त्वा सुदुःखार्तो निशश्वास स पार्थिवः
विललाप चिरं चापि धर्मपुत्रो युधिष्ठिरः २४
इति श्रीमहाभारते शल्यपर्वणि अष्टपञ्चाशोऽध्यायः ५८

## एकोनषष्ठितमोऽध्यायः

धृतराष्ट्र उवाच
अधर्मेण हतं दृष्ट्वा राजानं माधवोत्तमः
किमब्रवीत्तदा सूत बलदेवो महाबलः १
गदायुद्धविशेषज्ञो गदायुद्धविशारदः
कृतवान्रौहिणेयो यत्तन्ममाचक्ष्व सञ्जय २
सञ्जय उवाच
शिरस्यभिहतं दृष्ट्वा भीमसेनेन ते सुतम्
रामः प्रहरतां श्रेष्ठश्चुक्रोध बलवद्बली ३

ततो मध्ये नरेन्द्राणामूर्ध्वबाहुर्हलायुधः
कुर्वन्नार्तस्वरं घोरं धिग्धिग्भीमेत्युवाच ह ४
अहो धिग्यदधो नाभेः प्रहृतं शुद्धविक्रमे
नैतद्दृष्टं गदायुद्धे कृतवान्यद्वृकोदरः ५
अधो नाभ्या न हन्तव्यमिति शास्त्रस्य निश्चयः
अयं त्वशास्त्रविन्मूढः स्वच्छन्दात्संप्रवर्तते ६
तस्य तत्तद्ब्रुवाणस्य रोषः समभवन्महान्
ततो लाङ्गलमुद्यम्य भीममभ्यद्रवद्बली ७
तस्योर्ध्वबाहोः सदृशं रूपमासीन्महात्मनः
बहुधातुविचित्रस्य श्वेतस्येव महागिरेः ८
तमुत्पतन्तं जग्राह केशवो विनयानतः
बाहुभ्यां पीनवृत्ताभ्यां प्रयत्नाद्बलवद्बली ९
सितासितौ यदुवरौ शुशुभातेऽधिकं ततः
नभोगतौ यथा राजंश्चन्द्रसूर्यौ दिनक्षये १०
उवाच चैनं संरब्धं शमयन्निव केशवः
आत्मवृद्धिर्मित्रवृद्धिर्मित्रमित्रोदयस्तथा
विपरीतं द्विषत्स्वेतत्षड्विधा वृद्धिरात्मनः ११
आत्मन्यपि च मित्रेषु विपरीतं यदा भवेत्
तदा विद्यान्मनोज्यानिमाशु शान्तिकरो भवेत् १२
अस्माकं सहजं मित्रं पाण्डवाः शुद्धपौरुषाः
स्वकाः पितृष्वसुः पुत्रास्ते परैर्निकृता भृशम् १३
प्रतिज्ञापारणं धर्मः क्षत्रियस्येति वेत्थ ह
सुयोधनस्य गदया भङ्क्तास्म्यूरू महाहवे
इति पूर्वं प्रतिज्ञातं भीमेन हि सभातले १४
मैत्रेयेणाभिशप्तश्च पूर्वमेव महर्षिणा
उरू भेत्स्यति ते भीमो गदयेति परन्तप
अतो दोषं न पश्यामि मा क्रुधस्त्वं प्रलम्बहन् १५
यौनैर्हार्दैश्च संबन्धैः संबद्धाः स्मेह पाण्डवैः
तेषां वृद्ध्याभिवृद्धिर्नो मा क्रुधः पुरुषर्षभ १६
राम उवाच

धर्मः सुचरितः सद्भिः सह द्वाभ्यां नियच्छति
अर्थश्चात्यर्थलुब्धस्य कामश्चातिप्रसङ्गिनः १७
धर्मार्थौ धर्मकामौ च कामार्थौ चाप्यपीडयन्
धर्मार्थकामान्योऽभ्येति सोऽत्यन्तं सुखमश्नुते १८
तदिदं व्याकुलं सर्वं कृतं धर्मस्य पीडनात्
भीमसेनेन गोविन्द कामं त्वं तु तथात्थ माम् १९
वासुदेव उवाच
अरोषणो हि धर्मात्मा सततं धर्मवत्सलः
भवान्प्रख्यायते लोके तस्मात्संशाम्य मा क्रुधः २०
प्राप्तं कलियुगं विद्धि प्रतिज्ञां पाण्डवस्य च
आनृण्यं यातु वैरस्य प्रतिज्ञायाश्च पाण्डवः २१
सञ्जय उवाच
धर्मच्छलमपि श्रुत्वा केशवात्स विशां पते
नैव प्रीतमना रामो वचनं प्राह संसदि २२
हत्वाधर्मेण राजानं धर्मात्मानं सुयोधनम्
जिह्मयोधीति लोकेऽस्मिन्ख्यातिं यास्यति पाण्डवः २३
दुर्योधनोऽपि धर्मात्मा गतिं यास्यति शाश्वतीम्
ऋजुयोधी हतो राजा धार्तराष्ट्रो नराधिपः २४
युद्धदीक्षां प्रविश्याजौ रणयज्ञं वितत्य च
हुत्वात्मानममित्राग्नौ प्राप चावभृथं यशः २५
इत्युक्त्वा रथमास्थाय रौहिणेयः प्रतापवान्
श्वेताभ्रशिखराकारः प्रययौ द्वारकां प्रति २६
पाञ्चालाश्च सवार्ष्णेयाः पाण्डवाश्च विशां पते
रामे द्वारवतीं याते नातिप्रमनसोऽभवन् २७
ततो युधिष्ठिरं दीनं चिन्तापरमधोमुखम्
शोकोपहतसंकल्पं वासुदेवोऽब्रवीदिदम् २८
धर्मराज किमर्थं त्वमधर्ममनुमन्यसे
हतबन्धोर्यदेतस्य पतितस्य विचेतसः २९
दुर्योधनस्य भीमेन मृद्यमानं शिरः पदा
उपप्रेक्षसि कस्मात्त्वं धर्मज्ञः सन्नराधिप ३०

युधिष्ठिर उवाच
न ममैतत्प्रियं कृष्ण यद्राजानं वृकोदरः
पदा मूर्ध्न्यस्पृशत्क्रोधान्न च हृष्ये कुलक्षये ३१
निकृत्या निकृता नित्यं धृतराष्ट्रसुतैर्वयम्
बहूनि परुषाण्युक्त्वा वनं प्रस्थापिताः स्म ह ३२
भीमसेनस्य तद्दुःखमतीव हृदि वर्तते
इति संचिन्त्य वार्ष्णेय मयैतत्समुपेक्षितम् ३३
तस्माद्धत्वाकृतप्रज्ञं लुब्धं कामवशानुगम्
लभतां पाण्डवः कामं धर्मेऽधर्मेऽपि वा कृते ३४
सञ्जय उवाच
इत्युक्ते धर्मराजेन वासुदेवोऽब्रवीदिदम्
काममस्त्वेवमिति वै कृच्छ्राद्यदुकुलोद्वहः ३५
इत्युक्तो वासुदेवेन भीमप्रियहितैषिणा
अन्वमोदत तत्सर्वं यद्भीमेन कृतं युधि ३६
भीमसेनोऽपि हत्वाजौ तव पुत्रममर्षणः
अभिवाद्याग्रतः स्थित्वा संप्रहृष्टः कृताञ्जलि ३७
प्रोवाच सुमहातेजा धर्मराजं युधिष्ठिरम्
हर्षादुत्फुल्लनयनो जितकाशी विशां पते ३८
तवाद्य पृथिवी राजन्क्षेमा निहतकण्टका
तां प्रशाधि महाराज स्वधर्ममनुपालयन् ३९
यस्तु कर्तास्य वैरस्य निकृत्या निकृतिप्रियः
सोऽय विनिहतः शेते पृथिव्यां पृथिवीपते ४०
दुःशासनप्रभृतयः सर्वे ते चोग्रवादिनः
राधेयः शकुनिश्चापि निहतास्तव शत्रवः ४१
सेयं रत्नसमाकीर्णा मही सवनपर्वता
उपावृत्ता महाराज त्वामद्य निहतद्विषम् ४२
युधिष्ठिर उवाच
गतं वैरस्य निधनं हतो राजा सुयोधनः
कृष्णस्य मतमास्थाय विजितेयं वसुन्धरा ४३
दिष्ट्या गतस्त्वमानृण्यं मातुः कोपस्य चोभयोः

दिष्ट्या जयसि दुर्धर्ष दिष्ट्या शत्रुर्निपातितः ४४
इति श्रीमहाभारते शल्यपर्वणि एकोनषष्टितमोऽध्यायः ५९

षष्टितमोऽध्यायः

धृतराष्ट्र उवाच
हतं दुर्योधनं दृष्ट्वा भीमसेनेन संयुगे
पाण्डवाः सृञ्जयाश्चैव किमकुर्वत सञ्जय १
सञ्जय उवाच
हतं दुर्योधनं दृष्ट्वा भीमसेनेन संयुगे
सिंहेनेव महाराज मत्तं वनगजं वने २
प्रहृष्टमनसस्तत्र कृष्णेन सह पाण्डवाः
पाञ्चालाः सृञ्जयाश्चैव निहते कुरुनन्दने ३
आविध्यन्नुत्तरीयाणि सिंहनादांश्च नेदिरे
नैतानान्हर्षसमाविष्टानियं सेहे वसुंधरा ४
धनूंष्यन्ये व्याक्षिपन्त ज्याश्चाप्यन्ये तथाक्षिपन्
दध्मुरन्ये महाशङ्खानन्ये जघ्नुश्च दुन्दुभीः ५
चिक्रीडुश्च तथैवान्ये जहसुश्च तवाहिताः
अब्रुवंश्चासकृद्वीरा भीमसेनमिदं वचः ६
दुष्करं भवता कर्म रणेऽद्य सुमहत्कृतम्
कौरवेन्द्रं रणे हत्वा गदयातिकृतश्रमम् ७
इन्द्रेणेव हि वृत्रस्य वधं परमसंयुगे
त्वया कृतममन्यन्त शत्रोर्वधमिमं जनाः ८
चरन्तं विविधान्मार्गान्मण्डलानि च सर्वशः
दुर्योधनमिमं शूरं कोऽन्यो हन्याद्वृकोदरात् ९
वैरस्य च गतः पारं त्वमिहान्यैः सुदुर्गमम्
अशक्यमेतदन्येन संपादयितुमीदृशम् १०
कुञ्जरेणेव मत्तेन वीर संग्राममूर्धनि
दुर्योधनशिरो दिष्ट्या पादेन मृदितं त्वया ११
सिंहेन महिषस्येव कृत्वा संगरमद्भुतम्
दुःशासनस्य रुधिरं दिष्ट्या पीतं त्वयानघ १२

ये विप्रकुर्वन्राजानं धर्मात्मानं युधिष्ठिरम्
मूर्ध्नि तेषां कृतः पादो दिष्ट्या ते स्वेन कर्मणा १३
अमित्राणामधिष्ठानाद्वधाद्दुर्योधनस्य च
भीम दिष्ट्या पृथिव्यां ते प्रथितं सुमहद्यशः १४
एवं नूनं हते वृत्रे शक्रं नन्दन्ति बन्दिनः
तथा त्वां निहतामित्रं वयं नन्दाम भारत १५
दुर्योधनवधे यानि रोमाणि हृषितानि नः
अद्यापि न विहृष्यन्ति तानि तद्विद्धि भारत
इत्यब्रुवन्भीमसेनं वातिकास्तत्र संगताः १६
तान्हृष्टान्पुरुषव्याघ्रान्पाञ्चालान्पाण्डवैः सह
ब्रुवतः सदृशं तत्र प्रोवाच मधुसूदनः १७
न न्याय्यं निहतः शत्रुर्भूयो हन्तुं जनाधिपाः
असकृद्वाग्भिरुग्राभिर्निहतो ह्येष मन्दधीः १८
तदैवैष हतः पापो यदैव निरपत्रपः
लुब्धः पापसहायश्च सुहृदां शासनातिगः १९
बहुशो विदुरद्रोणकृपगाङ्गेयसृञ्जयैः
पाण्डुभ्यः प्रोच्यमानोऽपि पित्र्यमंशं न दत्तवान् २०
नैष योग्योऽद्य मित्रं वा शत्रुर्वा पुरुषाधमः
किमनेनातिनुन्नेन वाग्भिः काष्ठसधर्मणा २१
रथेष्वारोहत क्षिप्रं गच्छामो वसुधाधिपाः
दिष्ट्या हतोऽय पापात्मा सामात्यज्ञातिबान्धवः २२
इति श्रुत्वा त्वधिक्षेपं कृष्णाद्दुर्योधनो नृपः
अमर्षवशमापन्न उदतिष्ठद्विशां पते २३
स्फिग्देशेनोपविष्टः स दोर्भ्यां विष्टभ्य मेदिनीम्
दृष्टिं भ्रूसंकटां कृत्वा वासुदेवे न्यपातयत् २४
अर्धोन्नतशरीरस्य रूपमासीन्नृपस्य तत्
क्रुद्धस्याशीविषस्येव च्छिन्नपुच्छस्य भारत २५
प्राणान्तकरणीं घोरां वेदनामविचिन्तयन्
दुर्योधनो वासुदेवं वाग्भिरुग्राभिरार्दयत् २६
कंसदासस्य दायाद न ते लज्जास्त्यनेन वै

अधर्मेण गदायुद्धे यदहं विनिपातितः २७
ऊरू भिन्धीति भीमस्य स्मृतिं मिथ्या प्रयच्छता
किं न विज्ञातमेतन्मे यदर्जुनमवोचथाः २८
घातयित्वा महीपालानृजुयुद्धान्सहस्रशः
जिह्मैरुपायैर्बहुभिर्न ते लज्जा न ते घृणा २९
अहन्यहनि शूराणां कुर्वाणः कदनं महत्
शिखण्डिनं पुरस्कृत्य घातितस्ते पितामहः ३०
अश्वत्थाम्नः सनामानं हत्वा नागं सुदुर्मते
आचार्यो न्यासितः शस्त्रं किं तन्न विदितं मम ३१
स चानेन नृशंसेन धृष्टद्युम्नेन वीर्यवान्
पात्यमानस्त्वया दृष्टो न चैनं त्वमवारयः ३२
वधार्थं पाण्डुपुत्रस्य याचितां शक्तिमेव च
घटोत्कचे व्यंसयथाः कस्त्वत्तः पापकृत्तमः ३३
छिन्नबाहुः प्रायगतस्तथा भूरिश्रवा बली
त्वया निसृष्टेन हतः शैनेयेन दुरात्मना ३४
कुर्वाणश्चोत्तमं कर्म कर्णः पार्थजिगीषया
व्यंसनेनाश्वसेनस्य पन्नगेन्द्रसुतस्य वै ३५
पुनश्च पतिते चक्रे व्यसनार्तः पराजितः
पातितः समरे कर्णश्चक्रव्यग्रोऽग्रणीर्नृणाम् ३६
यदि मां चापि कर्णं च भीष्मद्रोणौ च संयुगे
ऋजुना प्रतियुध्येथा न ते स्याद्विजयो ध्रुवम् ३७
त्वया पुनरनार्येण जिह्ममार्गेण पार्थिवाः
स्वधर्ममनुतिष्ठन्तो वयं चान्ये च घातिताः ३८
वासुदेव उवाच
हतस्त्वमसि गान्धारे सभ्रातृसुतबान्धवः
सगणः ससुहृच्चैव पापमार्गमनुष्ठितः ३९
तवैव दुष्कृतैर्वीरौ भीष्मद्रोणौ निपातितौ
कर्णश्च निहतः संख्ये तव शीलानुवर्तकः ४०
याच्यमानो मया मूढ पित्र्यमंशं न दित्ससि
पाण्डवेभ्यः स्वराज्यार्धं लोभाच्छकुनिनिश्चयात् ४१

विषं ते भीमसेनाय दत्तं सर्वे च पाण्डवाः
प्रदीपिता जतुगृहे मात्रा सह सुदुर्मते ४२
सभायां याज्ञसेनी च कृष्टा द्यूते रजस्वला
तदैव तावद्दुष्टात्मन्वध्यस्त्वं निरपत्रपः ४३
अनक्षज्ञं च धर्मज्ञं सौबलेनाक्षवेदिना
निकृत्या यत्पराजैषीस्तस्मादसि हतो रणे ४४
जयद्रथेन पापेन यत्कृष्णा क्लेशिता वने
यातेषु मृगयां तेषु तृणबिन्दोरथाश्रमे ४५
अभिमन्युश्च यद्बाल एको बहुभिराहवे
त्वद्दोषैर्निहतः पाप तस्मादसि हतो रणे ४६
दुर्योधन उवाच
अधीतं विधिवद्दत्तं भूः प्रशास्ता ससागरा
मूर्ध्नि स्थितममित्राणां को नु स्वन्ततरो मया ४७
यदिष्टं क्षत्रबन्धूनां स्वधर्ममनुपश्यताम्
तदिदं निधनं प्राप्तं को नु स्वन्ततरो मया ४८
देवार्हा मानुषा भोगाः प्राप्ता असुलभा नृपैः
एश्वर्यं चोत्तमं प्राप्तं को नु स्वन्ततरो मया ४९
ससुहृत्सानुबन्धश्च स्वर्गं गन्ताहमच्युत
यूयं विहतसंकल्पाः शोचन्तो वर्तयिष्यथ ५०
सञ्जय उवाच
अस्य वाक्यस्य निधने कुरुराजस्य भारत
अपतत्सुमहद्वर्षं पुष्पाणां पुण्यगन्धिनाम् ५१
अवादयन्त गन्धर्वा जगुश्चाप्सरसां गणाः
सिद्धाश्च मुमुचुर्वाचः साधु साध्विति भारत ५२
ववौ च सुरभिर्वायुः पुण्यगन्धो मृदुः सुखः
व्यराजतामलं चैव नभो वैडूर्यसंनिभम् ५३
अत्यद्भुतानि ते दृष्ट्वा वासुदेवपुरोगमाः
दुर्योधनस्य पूजां च दृष्ट्वा व्रीडामुपागमन् ५४
हतांश्चाधर्मतः श्रुत्वा शोकार्ताः शुशुचुर्हि ते
भीष्मं द्रोणं तथा कर्णं भूरिश्रवसमेव च ५५

तांस्तु चिन्तापरान्दृष्ट्वा पाण्डवान्दीनचेतसः
प्रोवाचेदं वचः कृष्णो मेघदुन्दुभिनिस्वनः ५६
नैष शक्योऽतिशीघ्रास्त्रस्ते च सर्वे महारथाः
ऋजुयुद्धेन विक्रान्ता हन्तुं युष्माभिराहवे ५७
उपाया विहिता ह्येते मया तस्मान्नराधिपाः
अन्यथा पाण्डवेयानां नाभविष्यज्जयः क्वचित् ५८
ते हि सर्वे महात्मानश्चत्वारोऽतिरथा भुवि
न शक्या धर्मतो हन्तुं लोकपालैरपि स्वयम् ५९
तथैवायं गदापाणिर्धार्तराष्ट्रो गतक्लमः
न शक्यो धर्मतो हन्तुं कालेनापीह दण्डिना ६०
न च वो हृदि कर्तव्यं यदयं घातितो नृपः
मिथ्यावध्यास्तथोपायैर्बहवः शत्रवोऽधिकाः ६१
पूर्वैरनुगतो मार्गो देवैरसुरघातिभिः
सद्भिश्चानुगतः पन्थाः स सर्वैरनुगम्यते ६२
कृतकृत्याः स्म सायाह्ने निवासं रोचयामहे
साश्वनागरथाः सर्वे विश्रमामो नराधिपाः ६३
वासुदेववचः श्रुत्वा तदानीं पाण्डवैः सह
पाञ्चाला भृशसंहृष्टा विनेदुः सिंहसंघवत् ६४
ततः प्राध्मापयञ्शङ्खान्पाञ्चजन्यं च माधवः
हृष्टा दुर्योधनं दृष्ट्वा निहतं पुरुषर्षभाः ६५
इति श्रीमहाभारते शल्यपर्वणि षष्टितमोऽध्यायः ६०

## एकषष्टितमोऽध्यायः

सञ्जय उवाच
ततस्ते प्रययुः सर्वे निवासाय महीक्षितः
शङ्खान्प्रध्मापयन्तो वै हृष्टाः परिघबाहवः १
पाण्डवान्गच्छतश्चापि शिबिरं नो विशां पते
महेष्वासोऽन्वगात्पश्चाद्युयुत्सुः सात्यकिस्तथा २
धृष्टद्युम्नः शिखण्डी च द्रौपदेयाश्च सर्वशः
सर्वे चान्ये महेष्वासा ययुः स्वशिबिराण्युत ३

ततस्ते प्राविशन्पार्था हतत्विट्कं हतेश्वरम्
दुर्योधनस्य शिबिरं रङ्गवद्विसृते जने ४
गतोत्सवं पुरमिव हृतनागमिव ह्रदम्
स्त्रीवर्षवरभूयिष्ठं वृद्धामात्यैरधिष्ठितम् ५
तत्रैतान्पर्युपातिष्ठन्दुर्योधनपुरःसराः
कृताञ्जलिपुटा राजन्काषायमलिनाम्बराः ६
शिबिरं समनुप्राप्य कुरुराजस्य पाण्डवाः
अवतेरुर्महाराज रथेभ्यो रथसत्तमाः ७
ततो गाण्डीवधन्वानमभ्यभाषत केशवः
स्थितः प्रियहिते नित्यमतीव भरतर्षभ ८
अवरोपय गाण्डीवमक्षय्यौ च महेषुधी
अथाहमवरोक्ष्यामि पश्चाद्भरतसत्तम ९
स्वयं चैवावरोह त्वमेतच्छ्रेयस्तवानघ
तच्चाकरोत्तथा वीरः पाण्डुपुत्रो धनंजयः १०
अथ पश्चात्ततः कृष्णो रश्मीनुत्सृज्य वाजिनाम्
अवारोहत मेधावी रथाद्गाण्डीवधन्वनः ११
अथावतीर्णे भूतानामीश्वरे सुमहात्मनि
कपिरन्तर्दधे दिव्यो ध्वजो गाण्डीवधन्वनः १२
स दग्धो द्रोणकर्णाभ्यां दिव्यैरस्त्रैर्महारथः
अथ दीप्तोऽग्निना ह्याशु प्रजज्वाल महीपते १३
सोपासङ्गः सरश्मिश्च साश्वः सयुगबन्धुरः
भस्तीभूतोऽपतद्भूमौ रथो गाण्डीवधन्वनः १४
तं तथा भस्मभूतं तु दृष्ट्वा पाण्डुसुताः प्रभो
अभवन्विस्मिता राजन्नर्जुनश्चेदमब्रवीत् १५
कृताञ्जलि सप्रणयं प्रणिपत्याभिवाद्य च
गोविन्द कस्माद्भगवन्रथो दग्धोऽयमग्निना १६
किमेतन्महदाश्चर्यमभवद्यदुनन्दन
तन्मे ब्रूहि महाबाहो श्रोतव्यं यदि मन्यसे १७
वासुदेव उवाच
अस्त्रैर्बहुविधैर्दग्धः पूर्वमेवायमर्जुन

मदधिष्ठितत्वात्समरे न विशीर्णः परंतप १८
इदानीं तु विशीर्णोऽय दग्धो ब्रह्मास्त्रतेजसा
मया विमुक्तः कौन्तेय त्वय्यद्य कृतकर्मणि १९
सञ्जय उवाच
ईषदुत्स्मयमानश्च भगवान्केशवोऽरिहा
परिष्वज्य च राजानं युधिष्ठिरमभाषत २०
दिष्ट्या जयसि कौन्तेय दिष्ट्या ते शत्रवो जिताः
दिष्ट्या गाण्डीवधन्वा च भीमसेनश्च पाण्डवः २१
त्वं चापि कुशली राजन्माद्रीपुत्रौ च पाण्डवौ
मुक्ता वीरक्षयादस्मात्संग्रामान्निहतद्विषः
क्षिप्रमुत्तरकालानि कुरु कार्याणि भारत २२
उपयातमुपप्लव्यं सह गाण्डीवधन्वना
आनीय मधुपर्कं मां यत्पुरा त्वमवोचथाः २३
एष भ्राता सखा चैव तव कृष्ण धनञ्जयः
रक्षितव्यो महाबाहो सर्वास्वापत्स्विति प्रभो
तव चैवं ब्रुवाणस्य तथेत्येवाहमब्रुवम् २४
स सव्यसाची गुप्तस्ते विजयी च नरेश्वर
भ्रातृभिः सह राजेन्द्र शूरः सत्यपराक्रमः
मुक्तो वीरक्षयादस्मात्संग्रामाल्लोमहर्षणात् २५
एवमुक्तस्तु कृष्णेन धर्मराजो युधिष्ठिरः
हृष्टरोमा महाराज प्रत्युवाच जनार्दनम् २६
प्रमुक्तं द्रोणकर्णाभ्यां ब्रह्मास्त्रमरिमर्दन
कस्त्वदन्यः सहेत्साक्षादपि वज्री पुरंदरः २७
भवतस्तु प्रसादेन संग्रामे बहवो जिताः
महारणगतः पार्थो यच्च नासीत्पराङ्मुखः २८
तथैव च महाबाहो पर्यायैर्बहुभिर्मया
कर्मणामनुसंतानं तेजसश्च गतिः शुभा २९
उपप्लव्ये महर्षिर्मे कृष्णद्वैपायनोऽब्रवीत्
यतो धर्मस्ततः कृष्णो यतः कृष्णस्ततो जयः ३०
इत्येवमुक्ते ते वीराः शिबिरं तव भारत

प्रविश्य प्रत्यपद्यन्त कोशरत्नर्द्धिसंचयान् ३१
रजतं जातरूपं च मणीनथ च मौक्तिकान्
भूषणान्यथ मुख्यानि कम्बलान्यजिनानि च
दासीदासमसंख्येयं राज्योपकरणानि च ३२
ते प्राप्य धनमक्षय्यं त्वदीयं भरतर्षभ
उदक्रोशन्महेष्वासा नरेन्द्र विजितारयः ३३
ते तु वीराः समाश्वस्य वाहनान्यवमुच्य च
अतिष्ठन्त मुहुः सर्वे पाण्डवाः सात्यकिस्तथा ३४
अथाब्रवीन्महाराज वासुदेवो महायशाः
अस्माभिर्मङ्गलार्थाय वस्तव्यं शिबिराद्बहिः ३५
तथेत्युक्त्वा च ते सर्वे पाण्डवाः सात्यकिस्तथा
वासुदेवेन सहिता मङ्गलार्थं ययुर्बहिः ३६
ते समासाद्य सरितं पुण्यामोघवतीं नृप
न्यवसन्नथ तां रात्रिं पाण्डवा हतशत्रवः ३७
ततः संप्रेषयामासुर्यादवं नागसाह्वयम्
स च प्रायाज्जवेनाशु वासुदेवः प्रतापवान्
दारुकं रथमारोप्य येन राजाम्बिकासुतः ३८
तमूचुः संप्रयास्यन्तं शैन्यसुग्रीववाहनम्
प्रत्याश्वासय गान्धारीं हतपुत्रां यशस्विनीम् ३९
स प्रायात्पाण्डवैरुक्तस्तत्पुरं सात्वतां वरः
आससादयिषुः क्षिप्रं गान्धारीं निहतात्मजाम् ४०
इति श्रीमहाभारते शल्यपर्वणि एकषष्टितमोऽध्यायः ६१

द्विषष्टितमोऽध्यायः

जनमेजय उवाच
किमर्थं राजशार्दूलो धर्मराजो युधिष्ठिरः
गान्धार्याः प्रेषयामास वासुदेवं परंतपम् १
यदा पूर्वं गतः कृष्णः शमार्थं कौरवान्प्रति
न च तं लब्धवान्कामं ततो युद्धमभूदिदम् २
निहतेषु तु योधेषु हते दुर्योधने तथा

पृथिव्यां पाण्डवेयस्य निःसपत्ने कृते युधि ३
विद्रुते शिबिरे शून्ये प्राप्ते यशसि चोत्तमे
किं नु तत्कारणं ब्रह्मन्येन कृष्णो गतः पुनः ४
न चैतत्कारणं ब्रह्मन्नल्पं वै प्रतिभाति मे
यत्रागमदमेयात्मा स्वयमेव जनार्दनः ५
तत्त्वतो वै समाचक्ष्व सर्वमध्वर्युसत्तम
यच्चात्र कारणं ब्रह्मन्कार्यस्यास्य विनिश्चये ६
वैशम्पायन उवाच
त्वद्युक्तोऽयमनुप्रश्नो यन्मां पृच्छसि पार्थिव
तत्तेऽहं संप्रवक्ष्यामि यथावद्भरतर्षभ ७
हतं दुर्योधनं दृष्ट्वा भीमसेनेन संयुगे
व्युत्क्रम्य समयं राजन्धार्तराष्ट्रं महाबलम् ८
अन्यायेन हतं दृष्ट्वा गदायुद्धेन भारत
युधिष्ठिरं महाराज महद्भयमथाविशत् ९
चिन्तयानो महाभागां गान्धारीं तपसान्विताम्
घोरेण तपसा युक्तां त्रैलोक्यमपि सा दहेत् १०
तस्य चिन्तयमानस्य बुद्धिः समभवत्तदा
गान्धार्याः क्रोधदीप्तायाः पूर्वं प्रशमनं भवेत् ११
सा हि पुत्रवधं श्रुत्वा कृतमस्माभिरीदृशम्
मानसेनाग्निना क्रुद्धा भस्मसान्नः करिष्यति १२
कथं दुःखमिदं तीव्रं गान्धारी प्रसहिष्यति
श्रुत्वा विनिहतं पुत्रं छलेनाजिह्मयोधिनम् १३
एवं विचिन्त्य बहुधा भयशोकसमन्वितः
वासुदेवमिदं वाक्यं धर्मराजोऽभ्यभाषत १४
तव प्रसादाद्गोविन्द राज्यं निहतकण्टकम्
अप्राप्यं मनसापीह प्राप्तमस्माभिरच्युत १५
प्रत्यक्षं मे महाबाहो संग्रामे लोमहर्षणे
विमर्दः सुमहान्प्राप्तस्त्वया यादवनन्दन १६
त्वया देवासुरे युद्धे वधार्थममरद्विषाम्
यथा साह्यं पुरा दत्तं हताश्च विबुधद्विषः १७

साह्यं तथा महाबाहो दत्तमस्माकमच्युत
सारथ्येन च वार्ष्णेय भवता यद्धृता वयम् १८
यदि न त्वं भवेन्नाथः फल्गुनस्य महारणे
कथं शक्यो रणे जेतुं भवेदेष बलार्णवः १९
गदाप्रहारा विपुलाः परिघैश्चापि ताडनम्
शक्तिभिर्भिण्डिपालैश्च तोमरैः सपरश्वधैः २०
वाचश्च परुषाः प्राप्तास्त्वया ह्यस्मद्धितैषिणा
ताश्च ते सफलाः सर्वा हते दुर्योधनेऽच्युत २१
गान्धार्या हि महाबाहो क्रोधं बुध्यस्व माधव
सा हि नित्यं महाभागा तपसोग्रेण कर्शिता २२
पुत्रपौत्रवधं श्रुत्वा ध्रुवं नः संप्रधक्ष्यति
तस्याः प्रसादनं वीर प्राप्तकालं मतं मम २३
कश्च तां क्रोधदीप्ताक्षीं पुत्रव्यसनकर्शिताम्
वीक्षितुं पुरुषः शक्तस्त्वामृते पुरुषोत्तम २४
तत्र मे गमनं प्राप्तं रोचते तव माधव
गान्धार्याः क्रोधदीप्तायाः प्रशमार्थमरिंदम २५
त्वं हि कर्ता विकर्ता च लोकानां प्रभवाप्ययः
हेतुकारणसंयुक्तैर्वाक्यैः कालसमीरितैः २६
क्षिप्रमेव महाप्राज्ञ गान्धारीं शमयिष्यसि
पितामहश्च भगवान्कृष्णस्तत्र भविष्यति २७
सर्वथा ते महाबाहो गान्धार्याः क्रोधनाशनम्
कर्तव्यं सात्वतश्रेष्ठ पाण्डवानां हितैषिणा २८
धर्मराजस्य वचनं श्रुत्वा यदुकुलोद्वहः
आमन्त्र्य दारुकं प्राह रथः सज्जो विधीयताम् २९
केशवस्य वचः श्रुत्वा त्वरमाणोऽथ दारुकः
न्यवेदयद्रथं सज्जं केशवाय महात्मने ३०
तं रथं यादवश्रेष्ठः समारुह्य परंतपः
जगाम हास्तिनपुरं त्वरितः केशवो विभुः ३१
ततः प्रायान्महाराज माधवो भगवान्रथी
नागसाह्वयमासाद्य प्रविवेश च वीर्यवान् ३२

प्रविश्य नगरं वीरो रथघोषेण नादयन्
विदितो धृतराष्ट्रस्य सोऽवतीर्य रथोत्तमात् ३३
अभ्यगच्छददीनात्मा धृतराष्ट्रनिवेशनम्
पूर्वं चाभिगतं तत्र सोऽपश्यदृषिसत्तमम् ३४
पादौ प्रपीड्य कृष्णस्य राज्ञश्चापि जनार्दनः
अभ्यवादयदव्यग्रो गान्धारीं चापि केशवः ३५
ततस्तु यादवश्रेष्ठो धृतराष्ट्रमधोक्षजः
पाणिमालम्ब्य राज्ञः स सस्वरं प्ररुरोद ह ३६
स मुहूर्तमिवोत्सृज्य बाष्पं शोकसमुद्भवम्
प्रक्षाल्य वारिणा नेत्रे आचम्य च यथाविधि
उवाच प्रश्रितं वाक्यं धृतराष्ट्रमरिंदमः ३७
न तेऽस्त्यविदितं किंचिद्भूतभव्यस्य भारत
कालस्य च यथा वृत्तं तत्ते सुविदितं प्रभो ३८
यदिदं पाण्डवैः सर्वैस्तव चित्तानुरोधिभिः
कथं कुलक्षयो न स्यात्तथा क्षत्रस्य भारत ३९
भ्रातृभिः समयं कृत्वा क्षान्तवान्धर्मवत्सलः
द्यूतच्छलजितैः शक्तैर्वनवासोऽभ्युपागतः ४०
अज्ञातवासचर्या च नानावेशसमावृतैः
अन्ये च बहवः क्लेशास्त्वशक्तैरिव नित्यदा ४१
मया च स्वयमागम्य युद्धकाल उपस्थिते
सर्वलोकस्य सांनिध्ये ग्रामांस्त्वं पञ्च याचितः ४२
त्वया कालोपसृष्टेन लोभतो नापवर्जिताः
तवापराधान्नृपते सर्वं क्षत्रं क्षयं गतम् ४३
भीष्मेण सोमदत्तेन बाह्लिकेन कृपेण च
द्रोणेन च सपुत्रेण विदुरेण च धीमता
याचितस्त्वं शमं नित्यं न च तत्कृतवानसि ४४
कालोपहतचित्तो हि सर्वो मुह्यति भारत
यथा मूढो भवान्पूर्वमस्मिन्नर्थे समुद्यते ४५
किमन्यत्कालयोगाद्धि दिष्टमेव परायणम्
मा च दोषं महाराज पाण्डवेषु निवेशय ४६

अल्पोऽप्यतिक्रमो नास्ति पाण्डवानां महात्मनाम्
धर्मतो न्यायतश्चैव स्नेहतश्च परंतप ४७
एतत्सर्वं तु विज्ञाय आत्मदोषकृतं फलम्
असूयां पाण्डुपुत्रेषु न भवान्कर्तुमर्हति ४८
कुलं वंशश्च पिण्डश्च यच्च पुत्रकृतं फलम्
गान्धार्यास्तव चैवाद्य पाण्डवेषु प्रतिष्ठितम् ४९
एतत्सर्वमनुध्यात्वा आत्मनश्च व्यतिक्रमम्
शिवेन पाण्डवान्ध्याहि नमस्ते भरतर्षभ ५०
जानासि च महाबाहो धर्मराजस्य या त्वयि
भक्तिर्भरतशार्दूल स्नेहश्चापि स्वभावतः ५१
एतच्च कदनं कृत्वा शत्रूणामपकारिणाम्
दह्यते स्म दिवारात्रं न च शर्माधिगच्छति ५२
त्वां चैव नरशार्दूल गान्धारीं च यशस्विनीम्
स शोचन्भरतश्रेष्ठ न शान्तिमधिगच्छति ५३
ह्रिया च परयाविष्टो भवन्तं नाधिगच्छति
पुत्रशोकाभिसंतप्तं बुद्धिव्याकुलितेन्द्रियम् ५४
एवमुक्त्वा महाराज धृतराष्ट्रं यदूत्तमः
उवाच परमं वाक्यं गान्धारीं शोककर्शिताम् ५५
सौबलेयि निबोध त्वं यत्त्वां वक्ष्यामि सुव्रते
त्वत्समा नास्ति लोकेऽस्मिन्नद्य सीमन्तिनी शुभे ५६
जानामि च यथा राज्ञि सभायां मम संनिधौ
धर्मार्थसहितं वाक्यमुभयोः पक्षयोर्हितम्
उक्तवत्यसि कल्याणि न च ते तनयैः श्रुतम् ५७
दुर्योधनस्त्वया चोक्तो जयार्थी परुषं वचः
शृणु मूढ वचो मह्यं यतो धर्मस्ततो जयः ५८
तदिदं समनुप्राप्तं तव वाक्यं नृपात्मजे
एवं विदित्वा कल्याणि मा स्म शोके मनः कृथाः
पाण्डवानां विनाशाय मा ते बुद्धिः कदाचन ५९
शक्ता चासि महाभागे पृथिवीं सचराचराम्
चक्षुषा क्रोधदीप्तेन निर्दग्धुं तपसो बलात् ६०

वासुदेववचः श्रुत्वा गान्धारी वाक्यमब्रवीत्
एवमेतन्महाबाहो यथा वदसि केशव ६१
आधिभिर्दह्यमानाया मतिः संचलिता मम
सा मे व्यवस्थिता श्रुत्वा तव वाक्यं जनार्दन ६२
राज्ञस्त्वन्धस्य वृद्धस्य हतपुत्रस्य केशव
त्वं गतिः सह तैर्वीरैः पाण्डवैर्द्विपदां वर ६३
एतावदुक्त्वा वचनं मुखं प्रच्छाद्य वाससा
पुत्रशोकाभिसंतप्ता गान्धारी प्ररुरोद ह ६४
तत एनां महाबाहुः केशवः शोककर्शिताम्
हेतुकारणसंयुक्तैर्वाक्यैराश्वासयत्प्रभुः ६५
समाश्वास्य च गान्धारीं धृतराष्ट्रं च माधवः
द्रौणेः संकल्पितं भावमन्वबुध्यत केशवः ६६
ततस्त्वरित उत्थाय पादौ मूर्ध्ना प्रणम्य च
द्वैपायनस्य राजेन्द्र ततः कौरवमब्रवीत् ६७
आपृच्छे त्वां कुरुश्रेष्ठ मा च शोके मनः कृथाः
द्रौणेः पापोऽस्त्यभिप्रायस्तेनास्मि सहसोत्थितः
पाण्डवानां वधे रात्रौ बुद्धिस्तेन प्रदर्शिता ६८
एतच्छ्रुत्वा तु वचनं गान्धार्या सहितोऽब्रवीत्
धृतराष्ट्रो महाबाहुः केशवं केशिसूदनम् ६९
शीघ्रं गच्छ महाबाहो पाण्डवान्परिपालय
भूयस्त्वया समेष्यामि क्षिप्रमेव जनार्दन
प्रायात्ततस्तु त्वरितो दारुकेण सहाच्युतः ७०
वासुदेवे गते राजन्धृतराष्ट्रं जनेश्वरम्
आश्वासयदमेयात्मा व्यासो लोकनमस्कृतः ७१
वासुदेवोऽपि धर्मात्मा कृतकृत्यो जगाम ह
शिबिरं हास्तिनपुराद्दिदृक्षुः पाण्डवान्नृप ७२
आगम्य शिबिरं रात्रौ सोऽभ्यगच्छत पाण्डवान्
तच्च तेभ्यः समाख्याय सहितस्तैः समाविशत् ७३
इति श्रीमहाभारते शल्यपर्वणि द्विषष्टितमोऽध्यायः ६२

## त्रिषष्टितमोऽध्यायः

धृतराष्ट्र उवाच
अधिष्ठितः पदा मूर्ध्नि भग्नसक्थो महीं गतः
शौटीरमानी पुत्रो मे कान्यभाषत सञ्जय १
अत्यर्थं कोपनो राजा जातवैरश्च पाण्डुषु
व्यसनं परमं प्राप्तः किमाह परमाहवे २
सञ्जय उवाच
शृणु राजन्प्रवक्ष्यामि यथावृत्तं नराधिप
राज्ञा यदुक्तं भग्नेन तस्मिन्व्यसन आगते ३
भग्नसक्थो नृपो राजन्पांसुना सोऽवगुण्ठितः
यमयन्मूर्धजांस्तत्र वीक्ष्य चैव दिशो दश ४
केशान्नियम्य यत्नेन निःश्वसन्नुरगो यथा
संरम्भाश्रुपरीताभ्यां नेत्राभ्यामभिवीक्ष्य माम् ५
बाहू धरण्यां निष्पिष्य मुहुर्मत्त इव द्विपः
प्रकीर्णान्मूर्धजान्धुन्वन्दन्तैर्दन्तानुपस्पृशन्
गर्हयन्पाण्डवं ज्येष्ठं निःश्वस्येदमथाब्रवीत् ६
भीष्मे शान्तनवे नाथे कर्णे चास्त्रभृतां वरे
गौतमे शकुनौ चापि द्रोणे चास्त्रभृतां वरे ७
अश्वत्थाम्नि तथा शल्ये शूरे च कृतवर्मणि
इमामवस्थां प्राप्तोऽस्मि कालो हि दुरतिक्रमः ८
एकादशचमूभर्ता सोऽहमेतां दशां गतः
कालं प्राप्य महाबाहो न कश्चिदतिवर्तते ९
आख्यातव्यं मदीयानां येऽस्मिञ्जीवन्ति संगरे
यथाहं भीमसेनेन व्युत्क्रम्य समयं हतः १०
बहूनि सुनृशंसानि कृतानि खलु पाण्डवैः
भूरिश्रवसि कर्णे च भीष्मे द्रोणे च श्रीमति ११
इदं चाकीर्तिजं कर्म नृशंसैः पाण्डवैः कृतम्
येन ते सत्सु निर्वेदं गमिष्यन्तीति मे मतिः १२
का प्रीतिः सत्त्वयुक्तस्य कृत्वोपधिकृतं जयम्
को वा समयभेत्तारं बुधः संमन्तुमर्हति १३

अधर्मेण जयं लब्ध्वा को नु हृष्येत पण्डितः
यथा संहृष्यते पापः पाण्डुपुत्रो वृकोदरः १४
किं नु चित्रमतस्त्वद्य भग्नसक्थस्य यन्मम
क्रुद्धेन भीमसेनेन पादेन मृदितं शिरः १५
प्रतपन्तं श्रिया जुष्टं वर्तमानं च बन्धुषु
एवं कुर्यान्नरो यो हि स वै सञ्जय पूजितः १६
अभिज्ञौ क्षत्रधर्मस्य मम माता पिता च मे
तौ हि सञ्जय दुःखार्तौ विज्ञाप्यौ वचनान्मम १७
इष्टं भृत्या भृताः सम्यग्भूः प्रशास्ता ससागरा
मूर्ध्नि स्थितममित्राणां जीवतामेव सञ्जय १८
दत्ता दाया यथाशक्ति मित्राणां च प्रियं कृतम्
अमित्रा बाधिताः सर्वे को नु स्वन्ततरो मया १९
यातानि परराष्ट्राणि नृपा भुक्ताश्च दासवत्
प्रियेभ्यः प्रकृतं साधु को नु स्वन्ततरो मया २०
मानिता बान्धवाः सर्वे मान्यः संपूजितो जनः
त्रितयं सेवितं सर्वं को नु स्वन्ततरो मया २१
आज्ञप्तं नृपमुख्येषु मानः प्राप्तः सुदुर्लभः
आजानेयैस्तथा यातं को नु स्वन्ततरो मया २२
अधीतं विधिवद्दत्तं प्राप्तमायुर्निरामयम्
स्वधर्मेण जिता लोकाः को नु स्वन्ततरो मया २३
दिष्ट्या नाहं जितः संख्ये परान्प्रेष्यवदाश्रितः
दिष्ट्या मे विपुला लक्ष्मीर्मृते त्वन्यं गता विभो २४
यदिष्टं क्षत्रबन्धूनां स्वधर्ममनुतिष्ठताम्
निधनं तन्मया प्राप्तं को नु स्वन्ततरो मया २५
दिष्ट्या नाहं परावृत्तो वैरात्प्राकृतवज्जितः
दिष्ट्या न विमतिं कांचिद्भजित्वा तु पराजितः २६
सुप्तं वाथ प्रमत्तं वा यथा हन्याद्विषेण वा
एवं व्युत्क्रान्तधर्मेण व्युत्क्रम्य समयं हतः २७
अश्वत्थामा महाभागः कृतवर्मा च सात्वतः
कृपः शारद्वतश्चैव वक्तव्या वचनान्मम २८

अधर्मेण प्रवृत्तानां पाण्डवानामनेकशः
विश्वासं समयघ्नानां न यूयं गन्तुमर्हथ २९
वातिकांश्चाब्रवीद्राजा पुत्रस्ते सत्यविक्रमः
अधर्माद्भीमसेनेन निहतोऽह यथा रणे ३०
सोऽह द्रोणं स्वर्गगतं शल्यकर्णावुभौ तथा
वृषसेनं महावीर्यं शकुनिं चापि सौबलम् ३१
जलसंधं महावीर्यं भगदत्तं च पार्थिवम्
सौमदत्तिं महेष्वासं सैन्धवं च जयद्रथम् ३२
दुःशासनपुरोगांश्च भ्रातॄनात्मसमांस्तथा
दौःशासनिं च विक्रान्तं लक्ष्मणं चात्मजावुभौ ३३
एतांश्चान्यांश्च सुबहून्मदीयांश्च सहस्रशः
पृष्ठतोऽनुगमिष्यामि सार्थहीन इवाध्वगः ३४
कथं भ्रातॄन्हताञ्श्रुत्वा भर्तारं च स्वसा मम
रोरूयमाणा दुःखार्ता दुःशला सा भविष्यति ३५
स्नुषाभिः प्रस्नुषाभिश्च वृद्धो राजा पिता मम
गान्धारीसहितः क्रोशन्कां गतिं प्रतिपत्स्यते ३६
नूनं लक्ष्मणमातापि हतपुत्रा हतेश्वरा
विनाशं यास्यति क्षिप्रं कल्याणी पृथुलोचना ३७
यदि जानाति चार्वाकः परिव्राड्वाग्विशारदः
करिष्यति महाभागो ध्रुवं सोऽपचितिं मम ३८
समन्तपञ्चके पुण्ये त्रिषु लोकेषु विश्रुते
अहं निधनमासाद्य लोकान्प्राप्स्यामि शाश्वतान् ३९
ततो जनसहस्राणि बाष्पपूर्णानि मारिष
प्रलापं नृपतेः श्रुत्वा विद्रवन्ति दिशो दश ४०
ससागरवना घोरा पृथिवी सचराचरा
चचालाथ सनिर्ह्लादा दिशश्चैवाविलाभवन् ४१
ते द्रोणपुत्रमासाद्य यथावृत्तं न्यवेदयन्
व्यवहारं गदायुद्धे पार्थिवस्य च घातनम् ४२
तदाख्याय ततः सर्वे द्रोणपुत्रस्य भारत
ध्यात्वा च सुचिरं कालं जग्मुरार्ता यथागतम् ४३

इति श्रीमहाभारते शल्यपर्वणि त्रिषष्टितमोऽध्यायः ६३

## चतुःषष्टितमोऽध्यायः

सञ्जय उवाच
वातिकानां सकाशात्तु श्रुत्वा दुर्योधनं हतम्
हतशिष्टास्ततो राजन्कौरवाणां महारथाः १
विनिर्भिन्नाः शितैर्बाणैर्गदातोमरशक्तिभिः
अश्वत्थामा कृपश्चैव कृतवर्मा च सात्वतः
त्वरिता जवनैरश्वैरायोधनमुपागमन् २
तत्रापश्यन्महात्मानं धार्तराष्ट्रं निपातितम्
प्रभग्नं वायुवेगेन महाशालं यथा वने ३
भूमौ विवेष्टमानं तं रुधिरेण समुक्षितम्
महागजमिवारण्ये व्याधेन विनिपातितम् ४
विवर्तमानं बहुशो रुधिरौघपरिप्लुतम्
यदृच्छया निपतितं चक्रमादित्यगोचरम् ५
महावातसमुत्थेन संशुष्कमिव सागरम्
पूर्णचन्द्रमिव व्योम्नि तुषारावृतमण्डलम् ६
रेणुध्वस्तं दीर्घभुजं मातङ्गसमविक्रमम्
वृतं भूतगणैर्घोरैः क्रव्यादैश्च समन्ततः
यथा धनं लिप्समानैर्भृत्यैर्नृपतिसत्तमम् ७
भ्रुकुटीकृतवक्त्रान्तं क्रोधादुद्वृत्तचक्षुषम्
सामर्षं तं नरव्याघ्रं व्याघ्रं निपतितं यथा ८
ते तु दृष्ट्वा महेष्वासा भूतले पतितं नृपम्
मोहमभ्यागमन्सर्वे कृपप्रभृतयो रथाः ९
अवतीर्य रथेभ्यस्तु प्राद्रवन्राजसंनिधौ
दुर्योधनं च संप्रेक्ष्य सर्वे भूमावुपाविशन् १०
ततो द्रौणिर्महाराज बाष्पपूर्णेक्षणः श्वसन्
उवाच भरतश्रेष्ठं सर्वलोकेश्वरेश्वरम् ११
न नूनं विद्यतेऽसह्यं मानुष्ये किंचिदेव हि
यत्र त्वं पुरुषव्याघ्र शेषे पांसुषु रूषितः १२

भूत्वा हि नृपतिः पूर्वं समाज्ञाप्य च मेदिनीम्
कथमेकोऽद्य राजेन्द्र तिष्ठसे निर्जने वने १३
दुःशासनं न पश्यामि नापि कर्णं महारथम्
नापि तान्सुहृदः सर्वान्किमिदं भरतर्षभ १४
दुःखं नूनं कृतान्तस्य गतिं ज्ञातुं कथंचन
लोकानां च भवान्यत्र शेषे पांसुषु रूषितः १५
एष मूर्धावसिक्तानामग्रे गत्वा परंतपः
सतृणं ग्रसते पांसुं पश्य कालस्य पर्ययम् १६
क्व ते तदमलं छत्रं व्यजनं क्व च पार्थिव
सा च ते महती सेना क्व गता पार्थिवोत्तम १७
दुर्विज्ञेया गतिर्नूनं कार्याणां कारणान्तरे
यद्वै लोकगुरुर्भूत्वा भवानेतां दशां गतः १८
अध्रुवा सर्वमर्त्येषु ध्रुवं श्रीरुपलक्ष्यते
भवतो व्यसनं दृष्ट्वा शक्रविस्पर्धिनो भृशम् १९
तस्य तद्वचनं श्रुत्वा दुःखितस्य विशेषतः
उवाच राजन्पुत्रस्ते प्राप्तकालमिदं वचः २०
विमृज्य नेत्रे पाणिभ्यां शोकजं बाष्पमुत्सृजन्
कृपादीन्स तदा वीरान्सर्वानेव नराधिपः २१
ईदृशो मर्त्यधर्मोऽय धात्रा निर्दिष्ट उच्यते
विनाशः सर्वभूतानां कालपर्यायकारितः २२
सोऽय मां समनुप्राप्तः प्रत्यक्षं भवतां हि यः
पृथिवीं पालयित्वाहमेतां निष्ठामुपागतः २३
दिष्ट्या नाहं परावृत्तो युद्धे कस्यांचिदापदि
दिष्ट्याहं निहतः पापैश्छलेनैव विशेषतः २४
उत्साहश्च कृतो नित्यं मया दिष्ट्या युयुत्सता
दिष्ट्या चास्मि हतो युद्धे निहतज्ञातिबान्धवः २५
दिष्ट्या च वोऽह पश्यामि मुक्तानस्माज्जनक्षयात्
स्वस्तियुक्तांश्च कल्यांश्च तन्मे प्रियमनुत्तमम् २६
मा भवन्तोऽनुतप्यन्तां सौहृदान्निधनेन मे
यदि वेदाः प्रमाणं वो जिता लोका मयाक्षयाः २७

मन्यमानः प्रभावं च कृष्णस्यामिततेजसः
तेन न च्यावितश्चाहं क्षत्रधर्मात्स्वनुष्ठितात् २८
स मया समनुप्राप्तो नास्मि शोच्यः कथंचन
कृतं भवद्भिः सदृशमनुरूपमिवात्मनः
यतितं विजये नित्यं दैवं तु दुरतिक्रमम् २९
एतावदुक्त्वा वचनं बाष्पव्याकुललोचनः
तूष्णीं बभूव राजेन्द्र रुजासौ विह्वलो भृशम् ३०
तथा तु दृष्ट्वा राजानं बाष्पशोकसमन्वितम्
द्रौणिः क्रोधेन जज्वाल यथा वह्निर्जगत्क्षये ३१
स तु क्रोधसमाविष्टः पाणौ पाणिं निपीड्य च
बाष्पविह्वलया वाचा राजानमिदमब्रवीत् ३२
पिता मे निहतः क्षुद्रैः सुनृशंसेन कर्मणा
न तथा तेन तप्यामि यथा राजंस्त्वयाद्य वै ३३
शृणु चेदं वचो मह्यं सत्येन वदतः प्रभो
इष्टापूर्तेन दानेन धर्मेण सुकृतेन च ३४
अद्याहं सर्वपाञ्चालान्वासुदेवस्य पश्यतः
सर्वोपायैर्हि नेष्यामि प्रेतराजनिवेशनम्
अनुज्ञां तु महाराज भवान्मे दातुमर्हति ३५
इति श्रुत्वा तु वचनं द्रोणपुत्रस्य कौरवः
मनसः प्रीतिजननं कृपं वचनमब्रवीत्
आचार्य शीघ्रं कलशं जलपूर्णं समानय ३६
स तद्वचनमाज्ञाय राज्ञो ब्राह्मणसत्तमः
कलशं पूर्णमादाय राज्ञोऽन्तिकमुपागमत् ३७
तमब्रवीन्महाराज पुत्रस्तव विशां पते
ममाज्ञया द्विजश्रेष्ठ द्रोणपुत्रोऽभिषिच्यताम्
सेनापत्येन भद्रं ते मम चेदिच्छसि प्रियम् ३८
राज्ञो नियोगाद्योद्धव्यं ब्राह्मणेन विशेषतः
वर्तता क्षत्रधर्मेण ह्येवं धर्मविदो विदुः ३९
राज्ञस्तु वचनं श्रुत्वा कृपः शारद्वतस्ततः
द्रौणिं राज्ञो नियोगेन सेनापत्येऽभ्यषेचयत् ४०

सोऽभिषिक्तो महाराज परिष्वज्य नृपोत्तमम्
प्रययौ सिंहनादेन दिशः सर्वा विनादयन् ४१
दुर्योधनोऽपि राजेन्द्र शोणितौघपरिप्लुतः
तां निशां प्रतिपेदेऽथ सर्वभूतभयावहाम् ४२
अपक्रम्य तु ते तूर्णं तस्मादायोधनान्नृप
शोकसंविग्नमनसश्चिन्ताध्यानपराभवन् ४३
इति श्रीमहाभारते शल्यपर्वणि चतुःषष्टितमोऽध्यायः ६४

समाप्तं शल्यपर्व

# महाभारत
# सौप्तिकपर्व

श्रीगणेशाय नमः
ॐ नारायणं नमस्कृत्य नरं चैव नरोत्तमम्
देवीं सरस्वतीं चैव ततो जयमुदीरयेत्

## अथ प्रथमोऽध्यायः

सञ्जय उवाच
ततस्ते सहिता वीराः प्रयाता दक्षिणामुखाः
उपास्तमयवेलायां शिबिराभ्याशमागताः १
विमुच्य वाहांस्त्वरिता भीताः समभवंस्तदा
गहनं देशमासाद्य प्रच्छन्ना न्यविशन्त ते २
सेनानिवेशमभितो नातिदूरमवस्थिताः
निकृत्ता निशितैः शस्त्रैः समन्तात्क्षतविक्षताः ३
दीर्घमुष्णं च निःश्वस्य पाण्डवानन्वचिन्तयन्
श्रुत्वा च निनदं घोरं पाण्डवानां जयैषिणाम् ४
अनुसारभयाद्भीताः प्राङ्मुखाः प्राद्रवन्पुनः
ते मुहूर्तं ततो गत्वा श्रान्तवाहाः पिपासिताः ५
नामृष्यन्त महेष्वासाः क्रोधामर्षवशं गताः
राज्ञो वधेन संतप्ता मुहूर्तं समवस्थिताः ६
धृतराष्ट्र उवाच
अश्रद्धेयमिदं कर्म कृतं भीमेन सञ्जय
यत्स नागायुतप्राणः पुत्रो मम निपातितः ७
अवध्यः सर्वभूतानां वज्रसंहननो युवा
पाण्डवैः समरे पुत्रो निहतो मम सञ्जय ८
न दिष्टमभ्यतिक्रान्तुं शक्यं गावल्गणे नरैः
यत्समेत्य रणे पार्थैः पुत्रो मम निपातितः ९
अद्रिसारमयं नूनं हृदयं मम सञ्जय

हतं पुत्रशतं श्रुत्वा यन्न दीर्णं सहस्रधा १०
कथं हि वृद्धमिथुनं हतपुत्रं भविष्यति
न ह्यहं पाण्डवेयस्य विषये वस्तुमुत्सहे ११
कथं राज्ञः पिता भूत्वा स्वयं राजा च सञ्जय
प्रेष्यभूतः प्रवर्तेयं पाण्डवेयस्य शासनात् १२
आज्ञाप्य पृथिवीं सर्वां स्थित्वा मूर्ध्नि च सञ्जय
कथमद्य भविष्यामि प्रेष्यभूतो दुरन्तकृत् १३
कथं भीमस्य वाक्यानि श्रोतुं शक्ष्यामि सञ्जय
येन पुत्रशतं पूर्णमेकेन निहतं मम १४
कृतं सत्यं वचस्तस्य विदुरस्य महात्मनः
अकुर्वता वचस्तेन मम पुत्रेण सञ्जय १५
अधर्मेण हते तात पुत्रे दुर्योधने मम
कृतवर्मा कृपो द्रौणिः किमकुर्वत सञ्जय १६
सञ्जय उवाच
गत्वा तु तावका राजन्नातिदूरमवस्थिताः
अपश्यन्त वनं घोरं नानाद्रुमलताकुलम् १७
ते मुहूर्तं तु विश्रम्य लब्धतोयैर्हयोत्तमैः
सूर्यास्तमयवेलायामासेदुः सुमहद्वनम् १८
नानामृगगणैर्जुष्टं नानापक्षिसमाकुलम्
नानाद्रुमलताच्छन्नं नानाव्यालनिषेवितम् १९
नानातोयसमाकीर्णं तडागैरुपशोभितम्
पद्मिनीशतसंछन्नं नीलोत्पलसमायुतम् २०
प्रविश्य तद्वनं घोरं वीक्षमाणाः समन्ततः
शाखासहस्रसंछन्नं न्यग्रोधं ददृशुस्ततः २१
उपेत्य तु तदा राजन्न्यग्रोधं ते महारथाः
ददृशुर्द्विपदां श्रेष्ठाः श्रेष्ठं तं वै वनस्पतिम् २२
तेऽवतीर्य रथेभ्यस्तु विप्रमुच्य च वाजिनः
उपस्पृश्य यथान्यायं संध्यामन्वासत प्रभो २३
ततोऽस्त पर्वतश्रेष्ठमनुप्राप्ते दिवाकरे
सर्वस्य जगतो धात्री शर्वरी समपद्यत २४

ग्रहनक्षत्रताराभिः प्रकीर्णाभिरलंकृतम्
नभोंऽशुकमिवाभाति प्रेक्षणीयं समन्ततः २५
ईषच्चापि प्रवल्गन्ति ये सत्त्वा रात्रिचारिणः
दिवाचराश्च ये सत्त्वास्ते निद्रावशमागताः २६
रात्रिंचराणां सत्त्वानां निनादोऽभूत्सुदारुणः
क्रव्यादाश्च प्रमुदिता घोरा प्राप्ता च शर्वरी २७
तस्मिन्रात्रिमुखे घोरे दुःखशोकसमन्विताः
कृतवर्मा कृपो द्रौणिरुपोपविविशुः समम् २८
तत्रोपविष्टाः शोचन्तो न्यग्रोधस्य समन्ततः
तमेवार्थमतिक्रान्तं कुरुपाण्डवयोः क्षयम् २९
निद्रया च परीताङ्गा निषेदुर्धरणीतले
श्रमेण सुदृढं युक्ता विक्षता विविधैः शरैः ३०
ततो निद्रावशं प्राप्तौ कृपभोजौ महारथौ
सुखोचितावदुःखार्हौ निषण्णौ धरणीतले
तौ तु सुप्तौ महाराज श्रमशोकसमन्वितौ ३१
क्रोधामर्षवशं प्राप्तो द्रोणपुत्रस्तु भारत
नैव स्म स जगामाथ निद्रां सर्प इव श्वसन् ३२
न लेभे स तु निद्रां वै दह्यमानोऽतिमन्युना
वीक्षांचक्रे महाबाहुस्तद्वनं घोरदर्शनम् ३३
वीक्षमाणो वनोद्देशं नानासत्त्वैर्निषेवितम्
अपश्यत महाबाहुर्न्यग्रोधं वायसायुतम् ३४
तत्र काकसहस्राणि तां निशां पर्यणामयन्
सुखं स्वपन्तः कौरव्य पृथक्पृथगपाश्रयाः ३५
सुप्तेषु तेषु काकेषु विस्रब्धेषु समन्ततः
सोऽपश्यत्सहसायान्तमुलूकं घोरदर्शनम् ३६
महास्वनं महाकायं हर्यक्षं बभ्रुपिङ्गलम्
सुदीर्घघोणानखरं सुपर्णमिव वेगिनम् ३७
सोऽथ शब्दं मृदुं कृत्वा लीयमान इवाण्डजः
न्यग्रोधस्य ततः शाखां प्रार्थयामास भारत ३८
सन्निपत्य तु शाखायां न्यग्रोधस्य विहङ्गमः

सुप्ताञ्जघान सुबहून्वायसान्वायसान्तकः ३९
केषांचिदच्छिनत्पक्षाञ्शिरांसि च चकर्त ह
चरणांश्चैव केषांचिद्बभञ्ज चरणायुधः ४०
क्षणेनाहन्स बलवान्येऽस्य दृष्टिपथे स्थिताः
तेषां शरीरावयवैः शरीरैश्च विशां पते
न्यग्रोधमण्डलं सर्वं संछन्नं सर्वतोऽभवत् ४१
तांस्तु हत्वा ततः काकान्कौशिको मुदितोऽभवत्
प्रतिकृत्य यथाकामं शत्रूणां शत्रुसूदनः ४२
तद्दृष्ट्वा सोपधं कर्म कौशिकेन कृतं निशि
तद्भावकृतसङ्कल्पो द्रौणिरेको व्यचिन्तयत् ४३
उपदेशः कृतोऽनेन पक्षिणा मम संयुगे
शत्रूणां क्षपणे युक्तः प्राप्तकालश्च मे मतः ४४
नाद्य शक्या मया हन्तुं पाण्डवा जितकाशिनः
बलवन्तः कृतोत्साहा लब्धलक्षाः प्रहारिणः
राज्ञः सकाशे तेषां च प्रतिज्ञातो वधो मया ४५
पतङ्गाग्निसमां वृत्तिमास्थायात्मविनाशिनीम्
न्यायतो युध्यमानस्य प्राणत्यागो न संशयः
छद्मना तु भवेत्सिद्धिः शत्रूणां च क्षयो महान् ४६
तत्र संशयितादर्थाद्योऽथो निःसंशयो भवेत्
तं जना बहु मन्यन्ते येऽथशास्त्रविशारदाः ४७
यच्चाप्यत्र भवेद्वाच्यं गर्हितं लोकनिन्दितम्
कर्तव्यं तन्मनुष्येण क्षत्रधर्मेण वर्तता ४८
निन्दितानि च सर्वाणि कुत्सितानि पदे पदे
सोपधानि कृतान्येव पाण्डवैरकृतात्मभिः ४९
अस्मिन्नर्थे पुरा गीतौ श्रूयेते धर्मचिन्तकैः
श्लौकौ न्यायमवेक्षद्भिस्तत्त्वार्थं तत्त्वदर्शिभिः ५०
परिश्रान्ते विदीर्णे च भुञ्जाने चापि शत्रुभिः
प्रस्थाने च प्रवेशे च प्रहर्तव्यं रिपोर्बलम् ५१
निद्रार्तमर्धरात्रे च तथा नष्टप्रणायकम्
भिन्नयोधं बलं यच्च द्विधा युक्तं च यद्भवेत् ५२

इत्येवं निश्चयं चक्रे सुप्तानां युधि मारणे
पाण्डूनां सह पाञ्चालैर्द्रोणपुत्रः प्रतापवान् ५३
स क्रूरां मतिमास्थाय विनिश्चित्य मुहुर्मुहुः
सुप्तौ प्राबोधयत्तौ तु मातुलं भोजमेव च ५४
नोत्तरं प्रतिपेदे च तत्र युक्तं ह्रिया वृतः
स मुहूर्तमिव ध्यात्वा बाष्पविह्वलमब्रवीत् ५५
हतो दुर्योधनो राजा एकवीरो महाबलः
यस्यार्थे वैरमस्माभिरासक्तं पाण्डवैः सह ५६
एकाकी बहुभिः क्षुद्रैराहवे शुद्धविक्रमः
पातितो भीमसेनेन एकादशचमूपतिः ५७
वृकोदरेण क्षुद्रेण सुनृशंसमिदं कृतम्
मूर्धाभिषिक्तस्य शिरः पादेन परिमृद्नता ५८
विनर्दन्ति स्म पाञ्चालाः क्ष्वेडन्ति च हसन्ति च
धमन्ति शङ्खाञ्शतशो हृष्टा घ्नन्ति च दुन्दुभीन् ५९
वादित्रघोषस्तुमुलो विमिश्रः शङ्खनिस्वनैः
अनिलेनेरितो घोरो दिशः पूरयतीव हि ६०
अश्वानां हेषमाणानां गजानां चैव बृंहताम्
सिंहनादश्च शूराणां श्रूयते सुमहानयम् ६१
दिशं प्राचीं समाश्रित्य हृष्टानां गर्जतां भृशम्
रथनेमिस्वनाश्चैव श्रूयन्ते लोमहर्षणाः ६२
पाण्डवैर्धार्तराष्ट्राणां यदिदं कदनं कृतम्
वयमेव त्रयः शिष्टास्तस्मिन्महति वैशसे ६३
केचिन्नागशतप्राणाः केचित्सर्वास्त्रकोविदाः
निहताः पाण्डवेयैः स्म मन्ये कालस्य पर्ययम् ६४
एवमेतेन भाव्यं हि नूनं कार्येण तत्त्वतः
यथा ह्यस्येदृशी निष्ठा कृते कार्येऽपि दुष्करे ६५
भवतोस्तु यदि प्रज्ञा न मोहादपचीयते
व्यापन्नेऽस्मिन्महत्यर्थे यन्नः श्रेयस्तदुच्यताम् ६६
इति श्रीमहाभारते सौप्तिकपर्वणि प्रथमोऽध्यायः १

द्वितीयोऽध्यायः

कृप उवाच
श्रुतं ते वचनं सर्वं हेतुयुक्तं मया विभो
ममापि तु वचः किंचिच्छृणुष्वाद्य महाभुज १
आबद्धा मानुषाः सर्वे निर्बन्धाः कर्मणोर्द्वयोः
दैवे पुरुषकारे च परं ताभ्यां न विद्यते २
न हि दैवेन सिध्यन्ति कर्माण्येकेन सत्तम
न चापि कर्मणैकेन द्वाभ्यां सिद्धिस्तु योगतः ३
ताभ्यामुभाभ्यां सर्वार्था निबद्धा ह्यधमोत्तमाः
प्रवृत्ताश्चैव दृश्यन्ते निवृत्ताश्चैव सर्वशः ४
पर्जन्यः पर्वते वर्षन्किं नु साधयते फलम्
कृष्टे क्षेत्रे तथावर्षन्किं नु साधयते फलम् ५
उत्थानं चाप्यदैवस्य ह्यनुत्थानस्य दैवतम्
व्यर्थं भवति सर्वत्र पूर्वं कस्तत्र निश्चयः ६
प्रवृष्टे च यथा देवे सम्यक्क्षेत्रे च कर्षिते
बीजं महागुणं भूयात्तथा सिद्धिर्हि मानुषी ७
तयोर्दैवं विनिश्चित्य स्ववशेनैव वर्तते
प्राज्ञाः पुरुषकारं तु घटन्ते दाक्ष्यमास्थिताः ८
ताभ्यां सर्वे हि कार्यार्था मनुष्याणां नरर्षभ
विचेष्टन्तश्च दृश्यन्ते निवृत्ताश्च तथैव हि ९
कृतः पुरुषकारः सन्सोऽपि दैवेन सिध्यति
तथास्य कर्मणः कर्तुरभिनिर्वर्तते फलम् १०
उत्थानं तु मनुष्याणां दक्षाणां दैववर्जितम्
अफलं दृश्यते लोके सम्यगप्युपपादितम् ११
तत्रालसा मनुष्याणां ये भवन्त्यमनस्विनः
उत्थानं ते विगर्हन्ति प्राज्ञानां तन्न रोचते १२
प्रायशो हि कृतं कर्म अफलं दृश्यते भुवि
अकृत्वा च पुनर्दुःखं कर्म दृश्येन्महाफलम् १३
चेष्टामकुर्वँल्लभते यदि किंचिद्यदृच्छया
यो वा न लभते कृत्वा दुर्दशौ तावुभावपि १४

शक्नोति जीवितुं दक्षो नालसः सुखमेधते
दृश्यन्ते जीवलोकेऽस्मिन्दक्षाः प्रायो हितैषिणः १५
यदि दक्षः समारम्भात्कर्मणां नाश्नुते फलम्
नास्य वाच्यं भवेत्किंचित्तत्त्वं चाप्यधिगच्छति १६
अकृत्वा कर्म यो लोके फलं विन्दति विष्ठितः
स तु वक्तव्यतां याति द्वेष्यो भवति प्रायशः १७
एवमेतदनादृत्य वर्तते यस्त्वतोऽन्यथा
स करोत्यात्मनोऽनर्थान्नैष बुद्धिमतां नयः १८
हीनं पुरुषकारेण यदा दैवेन वा पुनः
कारणाभ्यामथैताभ्यामुत्थानमफलं भवेत्
हीनं पुरुषकारेण कर्म त्विह न सिध्यति १९
दैवतेभ्यो नमस्कृत्य यस्त्वर्थान्सम्यगीहते
दक्षो दाक्षिण्यसंपन्नो न स मोघं विहन्यते २०
सम्यगीहा पुनरियं यो वृद्धानुपसेवते
आपृच्छति च यच्छ्रेयः करोति च हितं वचः २१
उत्थायोत्थाय हि सदा प्रष्टव्या वृद्धसंमताः
तेऽस्य योगे परं मूलं तन्मूला सिद्धिरुच्यते २२
वृद्धानां वचनं श्रुत्वा यो ह्युत्थानं प्रयोजयेत्
उत्थानस्य फलं सम्यक्तदा स लभतेऽचिरात् २३
रागात्क्रोधाद्भयाल्लोभाद्योऽथानीहेत मानवः
अनीशश्चावमानी च स शीघ्रं भ्रश्यते श्रियः २४
सोऽय दुर्योधनेनार्थो लुब्धेनादीर्घदर्शिना
असमर्थ्य समारब्धो मूढत्वादविचिन्तितः २५
हितबुद्धीननादृत्य संमन्त्र्यासाधुभिः सह
वार्यमाणोऽकरोद्वैरं पाण्डवैर्गुणवत्तरैः २६
पूर्वमप्यतिदुःशीलो न दैन्यं कर्तुमर्हति
तपत्यर्थे विपन्ने हि मित्राणामकृतं वचः २७
अन्वावर्तामहि वयं यत्तु तं पापपूरुषम्
अस्मानप्यनयस्तस्मात्प्राप्तोऽय दारुणो महान् २८
अनेन तु ममाद्यापि व्यसनेनोपतापिता

बुद्धिश्चिन्तयतः किंचित्स्वं श्रेयो नावबुध्यते २९
मुह्यता तु मनुष्येण प्रष्टव्याः सुहृदो बुधाः
ते च पृष्टा यथा ब्रूयुस्तत्कर्तव्यं तथा भवेत् ३०
ते वयं धृतराष्ट्रं च गान्धारीं च समेत्य ह
उपपृच्छामहे गत्वा विदुरं च महामतिम् ३१
ते पृष्टाश्च वदेयुर्यच्छ्रेयो नः समनन्तरम्
तदस्माभिः पुनः कार्यमिति मे नैष्ठिकी मतिः ३२
अनारम्भात्तु कार्याणां नार्थः संपद्यते क्वचित्
कृते पुरुषकारे च येषां कार्यं न सिध्यति
दैवेनोपहतास्ते तु नात्र कार्या विचारणा ३३
इति श्रीमहाभारते सौप्तिकपर्वणि द्वितीयोऽध्यायः २

## तृतीयोऽध्यायः

सञ्जय उवाच
कृपस्य वचनं श्रुत्वा धर्मार्थसहितं शुभम्
अश्वत्थामा महाराज दुःखशोकसमन्वितः १
दह्यमानस्तु शोकेन प्रदीप्तेनाग्निना यथा
क्रूरं मनस्ततः कृत्वा तावुभौ प्रत्यभाषत २
पुरुषे पुरुषे बुद्धिः सा सा भवति शोभना
तुष्यन्ति च पृथक्सर्वे प्रज्ञया ते स्वया स्वया ३
सर्वो हि मन्यते लोक आत्मानं बुद्धिमत्तरम्
सर्वस्यात्मा बहुमतः सर्वात्मानं प्रशंसति ४
सर्वस्य हि स्वका प्रज्ञा साधुवादे प्रतिष्ठिता
परबुद्धिं च निन्दन्ति स्वां प्रशंसन्ति चासकृत् ५
कारणान्तरयोगेन योगे येषां समा मतिः
तेऽन्योन्येन च तुष्यन्ति बहु मन्यन्ति चासकृत् ६
तस्यैव तु मनुष्यस्य सा सा बुद्धिस्तदा तदा
कालयोगेविपर्यासं प्राप्यान्योन्यं विपद्यते ७
अचिन्त्यत्वाद्धि चित्तानां मनुष्याणां विशेषतः
चित्तवैकल्यमासाद्य सा सा बुद्धिः प्रजायते ८

यथा हि वैद्यः कुशलो ज्ञात्वा व्याधिं यथाविधि
भेषजं कुरुते योगात्प्रशमार्थमिहाभिभो ९
एवं कार्यस्य योगार्थं बुद्धिं कुर्वन्ति मानवाः
प्रज्ञया हि स्वया युक्तास्तां च निन्दन्ति मानवाः १०
अन्यया यौवने मर्त्यो बुद्ध्या भवति मोहितः
मध्येऽन्यया जरायां तु सोऽन्या रोचयते मतिम् ११
व्यसनं वा पुनर्घोरं समृद्धिं वापि तादृशीम्
अवाप्य पुरुषो भोज कुरुते बुद्धिवैकृतम् १२
एकस्मिन्नेव पुरुषे सा सा बुद्धिस्तदा तदा
भवत्यनित्यप्रज्ञत्वात्सा तस्यैव न रोचते १३
निश्चित्य तु यथाप्रज्ञं यां मतिं साधु पश्यति
तस्यां प्रकुरुते भावं सा तस्योद्योगकारिका १४
सर्वो हि पुरुषो भोज साध्वेतदिति निश्चितः
कर्तुमारभते प्रीतो मरणादिषु कर्मसु १५
सर्वे हि युक्तिं विज्ञाय प्रज्ञां चापि स्वकां नराः
चेष्टन्ते विविधाश्चेष्टा हितमित्येव जानते १६
उपजाता व्यसनजा येयमद्य मतिर्मम
युवयोस्तां प्रवक्ष्यामि मम शोकविनाशिनीम् १७
प्रजापतिः प्रजाः सृष्ट्वा कर्म तासु विधाय च
वर्णे वर्णे समाधत्त एकैकं गुणवत्तरम् १८
ब्राह्मणे दममव्यग्रं क्षत्रिये तेज उत्तमम्
दाक्ष्यं वैश्ये च शूद्रे च सर्ववर्णानुकूलताम् १९
अदान्तो ब्राह्मणोऽसाधुर्निस्तेजाः क्षत्रियोऽधमः
अदक्षो निन्द्यते वैश्यः शूद्रश्च प्रतिकूलवान् २०
सोऽस्मि जातः कुले श्रेष्ठे ब्राह्मणानां सुपूजिते
मन्दभाग्यतयास्म्येतं क्षत्रधर्ममनुष्ठितः २१
क्षत्रधर्मं विदित्वाहं यदि ब्राह्मण्यसंश्रितम्
प्रकुर्यां सुमहत्कर्म न मे तत्साधु संमतम् २२
धारयित्वा धनुर्दिव्यं दिव्यान्यस्त्राणि चाहवे
पितरं निहतं दृष्ट्वा किं नु वक्ष्यामि संसदि २३

सोऽहमद्य यथाकामं क्षत्रधर्ममुपास्य तम्
गन्तास्मि पदवीं राज्ञः पितुश्चापि महाद्युतेः २४
अद्य स्वप्स्यन्ति पाञ्चाला विश्वस्ता जितकाशिनः
विमुक्तयुग्यकवचा हर्षेण च समन्विताः
वयं जिता मताश्चैषां श्रान्ता व्यायमनेन च २५
तेषां निशि प्रसुप्तानां स्वस्थानां शिबिरे स्वके
अवस्कन्दं करिष्यामि शिबिरस्याद्य दुष्करम् २६
तानवस्कन्द्य शिबिरे प्रेतभूतान्विचेतसः
सूदयिष्यामि विक्रम्य मघवानिव दानवान् २७
अद्य तान्सहितान्सर्वान्धृष्टद्युम्नपुरोगमान्
सूदयिष्यामि विक्रम्य कक्षं दीप्त इवानलः
निहत्य चैव पाञ्चालाञ्शान्तिं लब्धास्मि सत्तम २८
पाञ्चालेषु चरिष्यामि सूदयन्नद्य संयुगे
पिनाकपाणिः संक्रुद्धः स्वयं रुद्रः पशुष्विव २९
अद्याहं सर्वपाञ्चालान्निहत्य च निकृत्य च
अर्दयिष्यामि संक्रुद्धो रणे पाण्डुसुतांस्तथा ३०
अद्याहं सर्वपाञ्चालैः कृत्वा भूमिं शरीरिणीम्
प्रहृत्यैकैकशस्तेभ्यो भविष्याम्यनृणः पितुः ३१
दुर्योधनस्य कर्णस्य भीष्मसैन्धवयोरपि
गमयिष्यामि पाञ्चालान्पदवीमद्य दुर्गमाम् ३२
अद्य पाञ्चालराजस्य धृष्टद्युम्नस्य वै निशि
विरात्रे प्रमथिष्यामि पशोरिव शिरो बलात् ३३
अद्य पाञ्चालपाण्डूनां शयितानात्मजान्निशि
खड्गेन निशितेनाजौ प्रमथिष्यामि गौतम ३४
अद्य पाञ्चालसेनां तां निहत्य निशि सौप्तिके
कृतकृत्यः सुखी चैव भविष्यामि महामते ३५
इति श्रीमहाभारते सौप्तिकपर्वणि तृतीयोऽध्यायः ३

## चतुर्थोऽध्यायः

कृप उवाच

दिष्ट्या ते प्रतिकर्तव्ये मतिर्जातेयमच्युत
न त्वा वारयितुं शक्तो वज्रपाणिरपि स्वयम् १
अनुयास्यावहे त्वां तु प्रभाते सहितावुभौ
अद्य रात्रौ विश्रमस्व विमुक्तकवचध्वजः २
अहं त्वामनुयास्यामि कृतवर्मा च सात्वतः
परानभिमुखं यान्तं रथावास्थाय दंशितौ ३
आवाभ्यां सहितः शत्रूञ्श्वोऽसि हन्ता समागमे
विक्रम्य रथिनां श्रेष्ठ पाञ्चालान्सपदानुगान् ४
शक्तस्त्वमसि विक्रान्तुं विश्रमस्व निशामिमाम्
चिरं ते जाग्रतस्तात स्वप तावन्निशामिमाम् ५
विश्रान्तश्च विनिद्रश्च स्वस्थचित्तश्च मानद
समेत्य समरे शत्रून्वधिष्यसि न संशयः ६
न हि त्वा रथिनां श्रेष्ठ प्रगृहीतवरायुधम्
जेतुमुत्सहते कश्चिदपि देवेषु पावकिः ७
कृपेण सहितं यान्तं युक्तं च कृतवर्मणा
को द्रौणिं युधि संरब्धं योधयेदपि देवराट् ८
ते वयं परिविश्रान्ता विनिद्रा विगतज्वराः
प्रभातायां रजन्यां वै निहनिष्याम शात्रवान् ९
तव ह्यस्त्राणि दिव्यानि मम चैव न संशयः
सात्वतोऽपि महेष्वासो नित्यं युद्धेषु कोविदः १०
ते वयं सहितास्तात सर्वाञ्शत्रून्समागतान्
प्रसह्य समरे हत्वा प्रीतिं प्राप्स्याम पुष्कलाम्
विश्रमस्व त्वमव्यग्रः स्वप चेमां निशां सुखम् ११
अहं च कृतवर्मा च प्रयान्तं त्वां नरोत्तम
अनुयास्याव सहितौ धन्विनौ परतापिनौ
रथिनं त्वरया यान्तं रथावास्थाय दंशितौ १२
स गत्वा शिबिरं तेषां नाम विश्राव्य चाहवे
ततः कर्तासि शत्रूणां युध्यतां कदनं महत् १३
कृत्वा च कदनं तेषां प्रभाते विमलेऽहनि
विहरस्व यथा शक्रः सूदयित्वा महासुरान् १४

त्वं हि शक्तो रणे जेतुं पाञ्चालानां वरूथिनीम्
दैत्यसेनामिव क्रुद्धः सर्वदानवसूदनः १५
मया त्वां सहितं संख्ये गुप्तं च कृतवर्मणा
न सहेत विभुः साक्षाद्वज्रपाणिरपि स्वयम् १६
न चाहं समरे तात कृतवर्मा तथैव च
अनिर्जित्य रणे पाण्डून्व्यपयास्याव कर्हिचित् १७
हत्वा च समरे क्षुद्रान्पाञ्चालान्पाण्डुभिः सह
निवर्तिष्यामहे सर्वे हता वा स्वर्गगा वयम् १८
सर्वोपायैः सहायास्ते प्रभाते वयमेव हि
सत्यमेतन्महाबाहो प्रब्रवीमि तवानघ १९
एवमुक्तस्ततो द्रौणिर्मातुलेन हितं वचः
अब्रवीन्मातुलं राजन्क्रोधादुद्वृत्य लोचने २०
आतुरस्य कुतो निद्रा नरस्यामर्षितस्य च
अर्थांश्चिन्तयतश्चापि कामयानस्य वा पुनः २१
तदिदं समनुप्राप्तं पश्य मेऽद्य चतुष्टयम्
यस्य भागश्चतुर्थो मे स्वप्नमह्नाय नाशयेत् २२
किं नाम दुःखं लोकेऽस्मिन्पितुर्वधमनुस्मरन्
हृदयं निर्दहन्मेऽद्य रात्र्यहानि न शाम्यति २३
यथा च निहतः पापैः पिता मम विशेषतः
प्रत्यक्षमपि ते सर्वं तन्मे मर्माणि कृन्तति २४
कथं हि मादृशो लोके मुहूर्तमपि जीवति
द्रोणो हतेति यद्वाचः पाञ्चालानां शृणोम्यहम् २५
धृष्टद्युम्नमहत्वाजौ नाहं जीवितुमुत्सहे
स मे पितृवधाद्वध्यः पाञ्चाला ये च संगताः २६
विलापो भग्नसक्थस्य यस्तु राज्ञो मया श्रुतः
स पुनर्हृदयं कस्य क्रूरस्यापि न निर्दहेत् २७
कस्य ह्यकरुणस्यापि नेत्राभ्यामश्रु नाव्रजेत्
नृपतेर्भग्नसक्थस्य श्रुत्वा तादृग्वचः पुनः २८
यश्चायं मित्रपक्षो मे मयि जीवति निर्जितः
शोकं मे वर्धयत्येष वारिवेग इवार्णवम्

एकाग्रमनसो मेऽद्य कुतो निद्रा कुतः सुखम् २९
वासुदेवार्जुनाभ्यां हि तानहं परिरक्षितान्
अविषह्यतमान्मन्ये महेन्द्रेणापि मातुल ३०
न चास्मि शक्यः संयन्तुमस्मात्कार्यात्कथंचन
न तं पश्यामि लोकेऽस्मिन्यो मां कार्यान्निवर्तयेत्
इति मे निश्चिता बुद्धिरेषा साधुमता च मे ३१
वार्त्तिकैः कथ्यमानस्तु मित्राणां मे पराभवः
पाण्डवानां च विजयो हृदयं दहतीव मे ३२
अहं तु कदनं कृत्वा शत्रूणामद्य सौप्तिके
ततो विश्रमिता चैव स्वप्ता च विगतज्वरः ३३
इति श्रीमहाभारते सौप्तिकपर्वणि चतुर्थोऽध्यायः ४

पञ्चमोऽध्यायः

कृप उवाच
शुश्रूषुरपि दुर्मेधाः पुरुषोऽनियतेन्द्रियः
नालं वेदयितुं कृत्स्नौ धर्मार्थाविति मे मतिः १
तथैव तावन्मेधावी विनयं यो न शिक्षति
न च किञ्चन जानाति सोऽपि धर्मार्थनिश्चयम् २
शुश्रूषुस्त्वेव मेधावी पुरुषो नियतेन्द्रियः
जानीयादागमान्सर्वान्ग्राह्यं च न विरोधयेत् ३
अनेयस्त्ववमानी यो दुरात्मा पापपूरुषः
दिष्टमुत्सृज्य कल्याणं करोति बहुपापकम् ४
नाथवन्तं तु सुहृदः प्रतिषेधन्ति पातकात्
निवर्तते तु लक्ष्मीवान्नालक्ष्मीवान्निवर्तते ५
यथा ह्युच्चावचैर्वाक्यैः क्षिप्तचित्तो नियम्यते
तथैव सुहृदा शक्यो नशक्यस्त्ववसीदति ६
तथैव सुहृदं प्राज्ञं कुर्वाणं कर्म पापकम्
प्राज्ञाः संप्रतिषेधन्ते यथाशक्ति पुनः पुनः ७
स कल्याणे मतिं कृत्वा नियम्यात्मानमात्मना
कुरु मे वचनं तात येन पश्चान्न तप्यसे ८

न वधः पूज्यते लोके सुप्तानामिह धर्मतः
तथैव न्यस्तशस्त्राणां विमुक्तरथवाजिनाम् ९
ये च ब्रूयुस्तवास्मीति ये च स्युः शरणागताः
विमुक्तमूर्धजा ये च ये चापि हतवाहनाः १०
अद्य स्वप्स्यन्ति पाञ्चाला विमुक्तकवचा विभो
विश्वस्ता रजनीं सर्वे प्रेता इव विचेतसः ११
यस्तेषां तदवस्थानां द्रुह्येत पुरुषोऽनृजुः
व्यक्तं स नरके मज्जेदगाधे विपुलेऽप्लवे १२
सर्वास्त्रविदुषां लोके श्रेष्ठस्त्वमसि विश्रुतः
न च ते जातु लोकेऽस्मिन्सुसूक्ष्ममपि किल्बिषम् १३
त्वं पुनः सूर्यसङ्काशः श्वोभूत उदिते रवौ
प्रकाशे सर्वभूतानां विजेता युधि शात्रवान् १४
असंभावितरूपं हि त्वयि कर्म विगर्हितम्
शुक्ले रक्तमिव न्यस्तं भवेदिति मतिर्मम १५
अश्वत्थामोवाच
एवमेतद्यथात्थ त्वमनुशास्मीह मातुल
तैस्तु पूर्वमयं सेतुः शतधा विदलीकृतः १६
प्रत्यक्षं भूमिपालानां भवतां चापि सन्निधौ
न्यस्तशस्त्रो मम पिता धृष्टद्युम्नेन पातितः १७
कर्णश्च पतिते चक्रे रथस्य रथिनां वरः
उत्तमे व्यसने सन्नो हतो गाण्डीवधन्वना १८
तथा शांतनवो भीष्मो न्यस्तशस्त्रो निरायुधः
शिखण्डिनं पुरस्कृत्य हतो गाण्डीवधन्वना १९
भूरिश्रवा महेष्वासस्तथा प्रायगतो रणे
क्रोशतां भूमिपालानां युयुधानेन पातितः २०
दुर्योधनश्च भीमेन समेत्य गदया मृधे
पश्यतां भूमिपालानामधर्मेण निपातितः २१
एकाकी बहुभिस्तत्र परिवार्य महारथैः
अधर्मेण नरव्याघ्रो भीमसेनेन पातितः २२
विलापो भग्नसक्थस्य यो मे राज्ञः परिश्रुतः

वार्त्तिकानां कथयतां स मे मर्माणि कृन्तति २३
एवमधार्मिकाः पापाः पाञ्चाला भिन्नसेतवः
तानेतां भिन्नमर्यादान्किं भवान्न विगर्हति २४
पितृहन्तॄनहं हत्वा पाञ्चालान्निशि सौप्तिके
कामं कीटः पतङ्गो वा जन्म प्राप्य भवामि वै २५
त्वरे चाहमनेनाद्य यदिदं मे चिकीर्षितम्
तस्य मे त्वरमाणस्य कुतो निद्रा कुतः सुखम् २६
न स जातः पुमाँल्लोके कश्चिन्न च भविष्यति
यो मे व्यावर्तयेदेतां वधे तेषां कृतां मतिम् २७
सञ्जय उवाच
एवमुक्त्वा महाराज द्रोणपुत्रः प्रतापवान्
एकान्ते योजयित्वाश्वान्प्रायादभिमुखः परान् २८
तमब्रूतां महात्मानौ भोजशारद्वतावुभौ
किमयं स्यन्दनो युक्तः किं च कार्यं चिकीर्षितम् २९
एकसार्थं प्रयातौ स्वस्त्वया सह नरर्षभ
सहदुःखसुखौ चैव नावां शङ्कितुमर्हसि ३०
अश्वत्थामा तु संक्रुद्धः पितुर्वधमनुस्मरन्
ताभ्यां तथ्यं तदाचख्यौ यदस्यात्मचिकीर्षितम् ३१
हत्वा शतसहस्राणि योधानां निशितैः शरैः
न्यस्तशस्त्रो मम पिता धृष्टद्युम्नेन पातितः ३२
तं तथैव हनिष्यामि न्यस्तवर्माणमद्य वै
पुत्रं पाञ्चालराजस्य पापं पापेन कर्मणा ३३
कथं च निहतः पापः पाञ्चालः पशुवन्मया
शस्त्राहवजितां लोकान्प्राप्नुयादिति मे मतिः ३४
क्षिप्रं सन्नद्धकवचौ सखड्गावात्तकार्मुकौ
समास्थाय प्रतीक्षेतां रथवर्यौ परन्तपौ ३५
इत्युक्त्वा रथमास्थाय प्रायादभिमुखः परान्
तमन्वगात्कृपो राजन्कृतवर्मा च सात्वतः ३६
ते प्रयाता व्यरोचन्त परानभिमुखास्त्रयः
हूयमाना यथा यज्ञे समिद्धा हव्यवाहनाः ३७

ययुश्च शिबिरं तेषां संप्रसुप्तजनं विभो
द्वारदेशं तु संप्राप्य द्रौणिस्तस्थौ रथोत्तमे ३८
इति श्रीमहाभारते सौप्तिकपर्वणि पञ्चमोऽध्यायः ५

षष्ठोऽध्यायः

धृतराष्ट्र उवाच
द्वारदेशे ततो द्रौणिमवस्थितमवेक्ष्य तौ
अकुर्वतां भोजकृपौ किं सञ्जय वदस्व मे १
सञ्जय उवाच
कृतवर्माणमामन्त्र्य कृपं च स महारथम्
द्रौणिर्मन्युपरीतात्मा शिबिरद्वारमासदत् २
तत्र भूतं महाकायं चन्द्रार्कसदृशद्युतिम्
सोऽपश्यद्द्वारमावृत्य तिष्ठन्तं लोमहर्षणम् ३
वसानं चर्म वैयाघ्रं महारुधिरविस्रवम्
कृष्णाजिनोत्तरासङ्गं नागयज्ञोपवीतिनम् ४
बाहुभिः स्वायतैः पीनैर्नानाप्रहरणोद्यतैः
बद्धाङ्गदमहासर्पं ज्वालामालाकुलाननम् ५
दंष्ट्राकरालवदनं व्यादितास्यं भयावहम्
नयनानां सहस्रैश्च विचित्रैरभिभूषितम् ६
नैव तस्य वपुः शक्यं प्रवक्तुं वेष एव वा
सर्वथा तु तदालक्ष्य स्फुटेयुरपि पर्वताः ७
तस्यास्यान्नासिकाभ्यां च श्रवणाभ्यां च सर्वशः
तेभ्यश्चाक्षिसहस्रेभ्यः प्रादुरासन्महार्चिषः ८
तथा तेजोमरीचिभ्यः शङ्खचक्रगदाधराः
प्रादुरासन्हृषीकेशाः शतशोऽथ सहस्रशः ९
तदत्यद्भुतमालोक्य भूतं लोकभयंकरम्
द्रौणिरव्यथितो दिव्यैरस्त्रवर्षैरवाकिरत् १०
द्रौणिमुक्ताञ्शरांस्तांस्तु तद्भूतं महदग्रसत्
उदधेरिव वार्योघान्पावको वडवामुखः ११
अश्वत्थामा तु संप्रेक्ष्य ताञ्शरौघान्निरर्थकान्

रथशक्तिं मुमोचास्मै दीप्तामग्निशिखामिव १२
सा तदाहत्य दीप्ताग्रा रथशक्तिरशीर्यत
युगान्ते सूर्यमाहत्य महोल्केव दिवश्च्युता १३
अथ हेमत्सरुं दिव्यं खड्गमाकाशवर्चसम्
कोशात्समुद्बबर्हाशु बिलाद्दीप्तमिवोरगम् १४
ततः खड्गवरं धीमान्भूताय प्राहिणोत्तदा
स तदासाद्य भूतं वै विलयं तूलवद्ययौ १५
ततः स कुपितो द्रौणिरिन्द्रकेतुनिभां गदाम्
ज्वलन्तीं प्राहिणोत्तस्मै भूतं तामपि चाग्रसत् १६
ततः सर्वायुधाभावे वीक्षमाणस्ततस्ततः
अपश्यत्कृतमाकाशमनाकाशं जनार्दनैः १७
तदद्भुततमं दृष्ट्वा द्रोणपुत्रो निरायुधः
अब्रवीदभिसन्तप्तः कृपवाक्यमनुस्मरन् १८
ब्रुवतामप्रियं पथ्यं सुहृदां न शृणोति यः
स शोचत्यापदं प्राप्य यथाहमतिवर्त्य तौ १९
शास्त्रदृष्टानवध्यान्यः समतीत्य जिघांसति
स पथः प्रच्युतो धर्म्यात्कुपथं प्रतिपद्यते २०
गोब्राह्मणनृपस्त्रीषु सख्युर्मातुर्गुरोस्तथा
वृद्धबालजडान्धेषु सुप्तभीतोत्थितेषु च २१
मत्तोन्मत्तप्रमत्तेषु न शस्त्राण्युपधारयेत्
इत्येवं गुरुभिः पूर्वमुपदिष्टं नृणां सदा २२
सोऽहमुत्क्रम्य पन्थानं शास्त्रदृष्टं सनातनम्
अमार्गेणैवमारभ्य घोरामापदमागतः २३
तां चापदं घोरतरां प्रवदन्ति मनीषिणः
यदुद्यम्य महत्कृत्यं भयादपि निवर्तते २४
अशक्यं चैव कः कर्तुं शक्तः शक्तिबलादिह
न हि दैवाद्गरीयो वै मानुषं कर्म कथ्यते २५
मानुषं कुर्वतः कर्म यदि दैवान्न सिध्यति
स पथः प्रच्युतो धर्माद्विपदं प्रतिपद्यते २६
प्रतिघातं ह्यविज्ञातं प्रवदन्ति मनीषिणः

यदारभ्य क्रियां काञ्चिद्भयादिह निवर्तते २७
तदिदं दुष्प्रणीतेन भयं मां समुपस्थितम्
न हि द्रोणसुतः संख्ये निवर्तेत कथञ्चन २८
इदं च सुमहद्भूतं दैवदण्डमिवोद्यतम्
न चैतदभिजानामि चिन्तयन्नपि सर्वथा २९
ध्रुवं येयमधर्मे मे प्रवृत्ता कलुषा मतिः
तस्याः फलमिदं घोरं प्रतिघाताय दृश्यते ३०
तदिदं दैवविहितं मम संख्ये निवर्तनम्
नान्यत्र दैवादुद्यन्तुमिह शक्यं कथञ्चन ३१
सोऽहमद्य महादेवं प्रपद्ये शरणं प्रभुम्
दैवदण्डमिमं घोरं स हि मे नाशयिष्यति ३२
कपर्दिनं प्रपद्याथ देवदेवमुमापतिम्
कपालमालिनं रुद्रं भगनेत्रहरं हरम् ३३
स हि देवोऽत्यगाद्देवांस्तपसा विक्रमेण च
तस्माच्छरणमभ्येष्ये गिरिशं शूलपाणिनम् ३४
इति श्रीमहाभारते सौप्तिकपर्वणि षष्ठोऽध्यायः ६

सप्तमोऽध्यायः

सञ्जय उवाच
स एवं चिन्तयित्वा तु द्रोणपुत्रो विशां पते
अवतीर्य रथोपस्थाद्दध्यौ स्त्रंपयतः स्थितः १
द्रौणिरुवाच
उग्रं स्थाणुं शिवं रुद्रं शर्वमीशानमीश्वरम्
गिरिशं वरदं देवं भवं भावनमव्ययम् २
शितिकण्ठमजं शक्रं क्रथं क्रतुहरं हरम्
विश्वरूपं विरूपाक्षं बहुरूपमुमापतिम् ३
श्मशानवासिनं दृप्तं महागणपतिं प्रभुम्
खट्वाङ्गधारिणं मुण्डं जटिलं ब्रह्मचारिणम् ४
मनसाप्यसुचिन्त्येन दुष्करेणाल्पचेतसा
सोऽहमात्मोपहारेण यक्ष्ये त्रिपुरघातिनम् ५

स्तुतं स्तुत्यं स्तूयमानममोघं चर्मवाससम्
विलोहितं नीलकराठमपृक्तं दुर्निवारणम् ६
शुक्रं विश्वसृजं ब्रह्म ब्रह्मचारिणमेव च
व्रतवन्तं तपोनित्यमनन्तं तपतां गतिम् ७
बहुरूपं गणाध्यक्षं त्र्यक्षं पारिषदप्रियम्
गणाध्यक्षेक्षितमुखं गौरीहृदयवल्लभम् ८
कुमारपितरं पिङ्गं गोवृषोत्तमवाहनम्
तनुवाससमत्युग्रमुमाभूषणतत्परम् ९
परं परेभ्यः परमं परं यस्मान्न विद्यते
इष्वस्त्रोत्तमभर्तारं दिगन्तं चैव दक्षिणम् १०
हिरणयकवचं देवं चन्द्रमौलिविभूषितम्
प्रपद्ये शरणं देवं परमेण समाधिना ११
इमां चाप्यापदं घोरां तराम्यद्य सुदुस्तराम्
सर्वभूतोपहारेण यक्ष्येऽहं शुचिना शुचिम् १२
इति तस्य व्यवसितं ज्ञात्वा त्यागात्मकं मनः
पुरस्तात्काञ्चनी वेदिः प्रादुरासीन्महात्मनः १३
तस्यां वेद्यां तदा राजंश्चित्रभानुरजायत
द्यां दिशो विदिशः खं च ज्वालाभिरभिपूरयन् १४
दीप्तास्यनयनाश्चात्र नैकपादशिरोभुजाः
द्वीपशैलप्रतीकाशाः प्रादुरासन्महाननाः १५
श्ववराहोष्ट्ररूपाश्च हयगोमायुगोमुखाः
ऋक्षमार्जारवदना व्याघ्रद्वीपिमुखास्तथा १६
काकवक्त्राः प्लवमुखाः शुकवक्त्रास्तथैव च
महाजगरवक्त्राश्च हंसवक्त्राः सितप्रभाः १७
दार्वाघाटमुखाश्चैव चाषवक्त्राश्च भारत
कूर्मनक्रमुखाश्चैव शिशुमारमुखास्तथा १८
महामकरवक्त्राश्च तिमिवक्त्रास्तथैव च
हरिवक्त्राः क्रौञ्चमुखाः कपोतेभमुखास्तथा १९
पारावतमुखाश्चैव मद्गुवक्त्रास्तथैव च
पाणिकर्णाः सहस्राक्षास्तथैव च शतोदराः २०

निर्मांसाः कोकवक्त्राश्च श्येनवक्त्राश्च भारत
तथैवाशिरसो राजन्नृक्षवक्त्राश्च भीषणाः २१
प्रदीप्तनेत्रजिह्वाश्च ज्वालावक्त्रास्तथैव च
मेषवक्त्रास्तथैवान्ये तथा छागमुखा नृप २२
शङ्खाभाः शङ्खवक्त्राश्च शङ्खकर्णास्तथैव च
शङ्खमालापरिकराः शङ्खध्वनिसमस्वनाः २३
जटाधराः पञ्चशिखास्तथा मुण्डाः कृशोदराः
चतुर्दंष्ट्राश्चतुर्जिह्वाः शङ्कुकर्णाः किरीटिनः २४
मौलीधराश्च राजेन्द्र तथाकुञ्चितमूर्धजाः
उष्णीषिणो मुकुटिनश्चारुवक्त्राः स्वलंकृताः २५
पद्मोत्पलापीडधरास्तथा कुमुदधारिणः
माहात्म्येन च संयुक्ताः शतशोऽथ सहस्रशः २६
शतघ्नीचक्रहस्ताश्च तथा मुसलपाणयः
भुशुण्डीपाशहस्ताश्च गदाहस्ताश्च भारत २७
पृष्ठेषु बद्धेषुधयश्चित्रबाणा रणोत्कटाः
सध्वजाः सपताकाश्च सघण्टाः सपरश्वधाः २८
महापाशोद्यतकरास्तथा लगुडपाणयः
स्थूणाहस्ताः खड्गहस्ताः सर्पोच्छ्रितकिरीटिनः
महासर्पाङ्गदधराश्चित्राभरणधारिणः २९
रजोध्वस्ताः पङ्कदिग्धाः सर्वे शुक्लाम्बरस्रजः
नीलाङ्गाः कमलाङ्गाश्च मुण्डवक्त्रास्तथैव च ३०
भेरीशङ्खमृदङ्गांस्ते झर्झरानकगोमुखान्
अवादयन्पारिषदाः प्रहृष्टाः कनकप्रभाः ३१
गायमानास्तथैवान्ये नृत्यमानास्तथापरे
लङ्घयन्तः प्लवन्तश्च वल्गन्तश्च महाबलाः ३२
धावन्तो जवनाश्चण्डाः पवनोद्धूतमूर्धजाः
मत्ता इव महानागा विनदन्तो मुहुर्मुहुः ३३
सुभीमा घोररूपाश्च शूलपट्टिशपाणयः
नानाविरागवसनाश्चित्रमाल्यानुलेपनाः ३४
रत्नचित्राङ्गदधराः समुद्यतकरास्तथा

हन्तारो द्विषतां शूराः प्रसह्यासह्यविक्रमाः ३५
पातारोऽसृग्वसाद्यानां मांसान्त्रकृतभोजनाः
चूडालाः कर्णिकालाश्च प्रकृशाः पिठरोदराः ३६
अतिह्रस्वातिदीर्घाश्च प्रबलाश्चातिभैरवाः
विकटाः काललम्बोष्ठा बृहच्छेफास्थिपिण्डकाः ३७
महार्हनानामुकुटा मुण्डाश्च जटिलाः परे
सार्केन्दुग्रहनक्षत्रां द्यां कुर्युर्ये महीतले ३८
उत्सहेरंश्च ये हन्तुं भूतग्रामं चतुर्विधम्
ये च वीतभया नित्यं हरस्य भ्रुकुटीभटाः ३९
कामकारकराः सिद्धास्त्रैलोक्यस्येश्वरेश्वराः
नित्यानन्दप्रमुदिता वागीशा वीतमत्सराः ४०
प्राप्याष्टगुणमैश्वर्यं ये न यान्ति च विस्मयम्
येषां विस्मयते नित्यं भगवान्कर्मभिर्हरः ४१
मनोवाक्कर्मभिर्भक्तैर्नित्यमाराधितश्च यैः
मनोवाक्कर्मभिर्भक्तान्पाति पुत्रानिवौरसान् ४२
पिबन्तोऽसृग्वसास्त्वन्ये क्रुद्धा ब्रह्मद्विषां सदा
चतुर्विंशात्मकं सोमं ये पिबन्ति च नित्यदा ४३
श्रुतेन ब्रह्मचर्येण तपसा च दमेन च
ये समाराध्य शूलाङ्कं भवसायुज्यमागताः ४४
यैरात्मभूतैर्भगवान्पार्वत्या च महेश्वरः
सह भूतगणान्भुङ्क्ते भूतभव्यभवत्प्रभुः ४५
नानाविचित्रहसितक्ष्वेडितोत्क्रुष्टगर्जितैः
संनादयन्तस्ते विश्वमश्वत्थामानमभ्ययुः ४६
संस्तुवन्तो महादेवं भाः कुर्वाणाः सुवर्चसः
विवर्धयिषवो द्रौणेर्महिमानं महात्मनः ४७
जिज्ञासमानास्तत्तेजः सौप्तिकं च दिदृक्षवः
भीमोग्रपरिघालातशूलपट्टिशपाणयः
घोररूपाः समाजग्मुर्भूतसंघाः समन्ततः ४८
जनयेयुर्भयं ये स्म त्रैलोक्यस्यापि दर्शनात्
तान्प्रेक्षमाणोऽपि व्यथां न चकार महाबलः ४९

अथ द्रौणिर्धनुष्पाणिर्बद्धगोधाङ्गुलित्रवान्
स्वयमेवात्मनात्मानमुपहारमुपाहरत् ५०
धनूंषि समिधस्तत्र पवित्राणि शिता शराः
हविरात्मवतश्चात्मा तस्मिन्भारत कर्मणि ५१
ततः सौम्येन मन्त्रेण द्रोणपुत्रः प्रतापवान्
उपहारं महामन्युरथात्मानमुपाहरत् ५२
तं रुद्रं रौद्रकर्माणं रौद्रैः कर्मभिरच्युतम्
अभिष्टुत्य महात्मानमित्युवाच कृताञ्जलि ५३
इममात्मानमद्याहं जातमाङ्गिरसे कुले
अग्नौ जुहोमि भगवन्प्रतिगृह्णीष्व मां बलिम् ५४
भवद्भक्त्या महादेव परमेण समाधिना
अस्यामापदि विश्वात्मन्नुपाकुर्मि तवाग्रतः ५५
त्वयि सर्वाणि भूतानि सर्वभूतेषु चासि वै
गुणानां हि प्रधानानामेकत्वं त्वयि तिष्ठति ५६
सर्वभूताशय विभो हविर्भूतमुपस्थितम्
प्रतिगृहाण मां देव यद्यशक्याः परे मया ५७
इत्युक्त्वा द्रौणिरास्थाय तां वेदीं दीप्तपावकाम्
संत्यक्तात्मा समारुह्य कृष्णवर्त्मन्युपाविशत् ५८
तमूर्ध्वबाहुं निश्चेष्टं दृष्ट्वा हविरुपस्थितम्
अब्रवीद्भगवान्साक्षान्महादेवो हसन्निव ५९
सत्यशौचार्जवत्यागैस्तपसा नियमेन च
क्षान्त्या भक्त्या च धृत्या च बुद्ध्या च वचसा तथा ६०
यथावदहमाराद्धः कृष्णेनाक्लिष्टकर्मणा
तस्मादिष्टतमः कृष्णादन्यो मम न विद्यते ६१
कुर्वता तस्य संमानं त्वां च जिज्ञासता मया
पाञ्चालाः सहसा गुप्ता मायाश्च बहुशः कृताः ६२
कृतस्तस्यैष संमानः पाञ्चालान्रक्षता मया
अभिभूतास्तु कालेन नैषामद्यास्ति जीवितम् ६३
एवमुक्त्वा महेष्वासं भगवानात्मनस्तनुम्
आविवेश ददौ चास्मै विमलं खड्गमुत्तमम् ६४

अथाविष्टो भगवता भूयो जज्वाल तेजसा
वर्ष्मवांश्चाभवद्युद्धे देवसृष्टेन तेजसा ६५
तमदृश्यानि भूतानि रक्षांसि च समाद्रवन्
अभितः शत्रुशिबिरं यान्तं साक्षादिवेश्वरम् ६६
इति श्रीमहाभारते सौप्तिकपर्वणि सप्तमोऽध्यायः ७

## अष्टमोऽध्यायः

धृतराष्ट्र उवाच
तथा प्रयाते शिबिरं द्रोणपुत्रे महारथे
कच्चित्कृपश्च भोजश्च भयार्तौ न न्यवर्तताम् १
कच्चिन्न वारितौ क्षुद्रै रक्षिभिर्नोपलक्षितौ
असह्यमिति वा मत्वा न निवृत्तौ महारथौ २
कच्चित्प्रमथ्य शिबिरं हत्वा सोमकपाण्डवान्
दुर्योधनस्य पदवीं गतौ परमिकां रणे ३
पाञ्चालैर्वा विनिहतौ कच्चिन्नास्वपतां क्षितौ
कच्चित्ताभ्यां कृतं कर्म तन्ममाचक्ष्व सञ्जय ४
सञ्जय उवाच
तस्मिन्प्रयाते शिबिरं द्रोणपुत्रे महात्मनि
कृपश्च कृतवर्मा च शिबिरद्वार्यतिष्ठताम् ५
अश्वत्थामा तु तौ दृष्ट्वा यत्नवन्तौ महारथौ
प्रहृष्टः शनकै राजन्निदं वचनमब्रवीत् ६
यत्तौ भवन्तौ पर्याप्तौ सर्वक्षत्रस्य नाशने
किं पुनर्योधशेषस्य प्रसुप्तस्य विशेषतः ७
अहं प्रवेक्ष्ये शिबिरं चरिष्यामि च कालवत्
यथा न कश्चिदपि मे जीवन्मुच्येत मानवः ८
इत्युक्त्वा प्राविशद्द्रौणिः पार्थानां शिबिरं महत्
अद्वारेणाभ्यवस्कन्द्य विहाय भयमात्मनः ९
स प्रविश्य महाबाहुरुद्देशज्ञश्च तस्य ह
धृष्टद्युम्नस्य निलयं शनकैरभ्युपागमत् १०
ते तु कृत्वा महत्कर्म श्रान्ताश्च बलवद्रणे

प्रसुप्ता वै सुविश्वस्ताः स्वसैन्यपरिवारिताः ११
अथ प्रविश्य तद्वेश्म धृष्टद्युम्नस्य भारत
पाञ्चाल्यं शयने द्रौणिरपश्यत्सुप्तमन्तिकात् १२
क्षौमावदाते महति स्पर्ध्यास्तरणसंवृते
माल्यप्रवरसंयुक्ते धूपैश्चूर्णैश्च वासिते १३
तं शयानं महात्मानं विस्रब्धमकुतोभयम्
प्राबोधयत पादेन शयनस्थं महीपते १४
सबुद्ध्वा चरणस्पर्शमुत्थाय रणदुर्मदः
अभ्यजानदमेयात्मा द्रोणपुत्रं महारथम् १५
तमुत्पतन्तं शयनादश्वत्थामा महाबलः
केशेष्वालम्ब्य पाणिभ्यां निष्पिपेष महीतले १६
स बलात्तेन निष्पिष्टः साध्वसेन च भारत
निद्रया चैव पाञ्चाल्यो नाशकच्चेष्टितुं तदा १७
तमाक्रम्य पदा राजन्कण्ठे चोरसि चोभयोः
नदन्तं विस्फुरन्तं च पशुमारममारयत् १८
तुदन्नखैस्तु स द्रौणिं नातिव्यक्तमुदाहरत्
आचार्यपुत्र शस्त्रेण जहि मां मा चिरं कृथाः
त्वत्कृते सुकृताँल्लोकान्गच्छेयं द्विपदां वर १९
तस्याव्यक्तां तु तां वाचं संश्रुत्य द्रौणिरब्रवीत्
आचार्यघातिनां लोका न सन्ति कुलपांसन
तस्माच्छस्त्रेण निधनं न त्वमर्हसि दुर्मते २०
एवं ब्रुवाणस्तं वीरं सिंहो मत्तमिव द्विपम्
मर्मस्वभ्यवधीत्क्रुद्धः पादाष्ठीलैः सुदारुणैः २१
तस्य वीरस्य शब्देन मार्यमाणस्य वेश्मनि
अबुध्यन्त महाराज स्त्रियो ये चास्य रक्षिणः २२
ते दृष्ट्वा वर्ष्मवन्तं तमतिमानुषविक्रमम्
भूतमेव व्यवस्यन्तो न स्म प्रव्याहरन्भयात् २३
तं तु तेनाभ्युपायेन गमयित्वा यमक्षयम्
अध्यतिष्ठत्स तेजस्वी रथं प्राप्य सुदर्शनम् २४
स तस्य भवनाद्राजन्निष्क्रम्यानादयन्दिशः

रथेन शिबिरं प्रायाज्जिघांसुर्द्विषतो बली २५
अपक्रान्ते ततस्तस्मिन्द्रोणपुत्रे महारथे
सह तै रक्षिभिः सर्वैः प्रणेदुर्योषितस्तदा २६
राजानं निहतं दृष्ट्वा भृशं शोकपरायणाः
व्याक्रोशन्क्षत्रियाः सर्वे धृष्टद्युम्नस्य भारत २७
तासां तु तेन शब्देन समीपे क्षत्रियर्षभाः
क्षिप्रं च समनह्यन्त किमेतदिति चाब्रुवन् २८
स्त्रियस्तु राजन्वित्रस्ता भारद्वाजं निरीक्ष्य तम्
अब्रुवन्दीनकण्ठेन क्षिप्रमाद्रवतेति वै २९
राक्षसो वा मनुष्यो वा नैनं जानीमहे वयम्
हत्वा पाञ्चालराजं यो रथमारुह्य तिष्ठति ३०
ततस्ते योधमुख्यास्तं सहसा पर्यवारयन्
स तानापततः सर्वान्रुद्रास्त्रेण व्यपोथयत् ३१
धृष्टद्युम्नं च हत्वा स तांश्चैवास्य पदानुगान्
अपश्यच्छयने सुप्तमुत्तमौजसमन्तिके ३२
तमप्याक्रम्य पादेन कण्ठे चोरसि चौजसा
तथैव मारयामास विनर्दन्तमरिंदमम् ३३
युधामन्युस्तु संप्राप्तो मत्वा तं रक्षसा हतम्
गदामुद्यम्य वेगेन हृदि द्रौणिमताडयत् ३४
तमभिद्रुत्य जग्राह क्षितौ चैनमपातयत्
विस्फुरन्तं च पशुवत्तथैवैनममारयत् ३५
तथा स वीरो हत्वा तं ततोऽन्यान्समुपाद्रवत्
संसुप्तानेव राजेन्द्र तत्र तत्र महारथान्
स्फुरतो वेपमानांश्च शमितेव पशून्मखे ३६
ततो निस्त्रिंशमादाय जघानान्यान्पृथग्जनान्
भागशो विचरन्मार्गानसियुद्धविशारदः ३७
तथैव गुल्मे संप्रेक्ष्य शयानान्मध्यगौल्मिकान्
श्रान्तान्न्यस्तायुधान्सर्वान्क्षणेनैव व्यपोथयत् ३८
योधानश्वान्द्विपांश्चैव प्राच्छिनत्स वरासिना
रुधिरोक्षितसर्वाङ्गः कालसृष्ट इवान्तकः ३९

विस्फुरद्भिश्च तैर्द्रौणिर्निस्त्रिंशस्योद्यमेन च
आक्षेपेण तथैवासेस्त्रिधा रक्तोक्षितोऽभवत् ४०
तस्य लोहितसिक्तस्य दीप्तखड्गस्य युध्यतः
अमानुष इवाकारो बभौ परमभीषणः ४१
ये त्वजाग्रत कौरव्य तेऽपि शब्देन मोहिताः
निरीक्ष्यमाणा अन्योन्यं द्रौणिं दृष्ट्वा प्रविव्यथुः ४२
तद्रूपं तस्य ते दृष्ट्वा क्षत्रियाः शत्रुकर्शनाः
राक्षसं मन्यमानास्तं नयनानि न्यमीलयन् ४३
स घोररूपो व्यचरत्कालवच्छिबिरे ततः
अपश्यद्द्रौपदीपुत्रानवशिष्टांश्च सोमकान् ४४
धृष्टद्युम्नं हतं श्रुत्वा द्रौपदेया विशां पते
अवाकिरञ्शरव्रातैर्भारद्वाजमभीतवत् ४५
ततस्तेन निनादेन संप्रबुद्धाः प्रभद्रकाः
शिलीमुखैः शिखण्डी च द्रोणपुत्रं समार्दयन् ४६
भारद्वाजस्तु तान्दृष्ट्वा शरवर्षाणि वर्षतः
ननाद बलवन्नादं जिघांसुस्तान्सुदुर्जयान् ४७
ततः परमसंक्रुद्धः पितुर्वधमनुस्मरन्
अवरुह्य रथोपस्थात्त्वरमाणोऽभिदुद्रुवे ४८
सहस्रचन्द्रं विपुलं गृहीत्वा चर्म संयुगे
खड्गं च विपुलं दिव्यं जातरूपपरिष्कृतम्
द्रौपदेयानभिद्रुत्य खड्गेन व्यचरद्बली ४९
ततः स नरशार्दूलः प्रतिविन्ध्यं तमाहवे
कुक्षिदेशेऽवधीद्राजन्स हतो न्यपतद्भुवि ५०
प्रासेन विद्ध्वा द्रौणिं तु सुतसोमः प्रतापवान्
पुनश्चासिं समुद्यम्य द्रोणपुत्रमुपाद्रवत् ५१
सुतसोमस्य सासिं तु बाहुं छित्त्वा नरर्षभः
पुनरभ्यहनत्पार्श्वे स भिन्नहृदयोऽपतत् ५२
नाकुलिस्तु शतानीको रथचक्रेण वीर्यवान्
दोर्भ्यामुत्क्षिप्य वेगेन वक्षस्येनमताडयत् ५३
अताडयच्छतानीकं मुक्तचक्रं द्विजस्तु सः

स विह्वलो ययौ भूमिं ततोऽस्यापाहरच्छिरः ५४
श्रुतकर्मा तु परिघं गृहीत्वा समताडयत्
अभिद्रुत्य ततो द्रौणिं सव्ये स फलके भृशम् ५५
स तु तं श्रुतकर्माणमास्ये जघ्ने वरासिना
स हतो न्यपतद्भूमौ विमूढो विकृताननः ५६
तेन शब्देन वीरस्तु श्रुतकीर्तिर्महाधनुः
अश्वत्थामानमासाद्य शरवर्षैरवाकिरत् ५७
तस्यापि शरवर्षाणि चर्मणा प्रतिवार्य सः
सकुण्डलं शिरः कायाद्भ्राजमानमपाहरत् ५८
ततो भीष्मनिहन्ता तं सह सर्वैः प्रभद्रकैः
अहनत्सर्वतो वीरं नानाप्रहरणैर्बली
शिलीमुखेन चाप्येनं भ्रुवोर्मध्ये समार्दयत् ५९
स तु क्रोधसमाविष्टो द्रोणपुत्रो महाबलः
शिखण्डिनं समासाद्य द्विधा चिच्छेद सोऽसिना ६०
शिखण्डिनं ततो हत्वा क्रोधाविष्टः परन्तपः
प्रभद्रकगणान्सर्वानभिदुद्राव वेगवान्
यच्च शिष्टं विराटस्य बलं तच्च समाद्रवत् ६१
द्रुपदस्य च पुत्राणां पौत्राणां सुहृदामपि
चकार कदनं घोरं दृष्ट्वा दृष्ट्वा महाबलः ६२
अन्यानन्यांश्च पुरुषानभिसृत्याभिसृत्य च
न्यकृन्तदसिना द्रौणिरसिमार्गविशारदः ६३
कालद्यं रक्तास्यनयनां रक्तमाल्यानुलेपनाम्
रक्ताम्बरधरामेकां पाशहस्तां शिखण्डिनीम् ६४
ददृशुः कालरात्रिं ते स्मयमानामवस्थिताम्
नराश्वकुञ्जरान्पाशैर्बद्ध्वा घोरैः प्रतस्थुषीम्
हरन्तीं विविधान्प्रेतान्पाशबद्धान्विमूर्धजान् ६५
स्वप्ने सुप्तान्नयन्तीं तां रात्रिष्वन्यासु मारिष
ददृशुर्योधमुख्यास्ते घ्नन्तं द्रौणिं च नित्यदा ६६
यतः प्रवृत्तः संग्रामः कुरुपाण्डवसेनयोः
ततः प्रभृति तां कृत्यामपश्यन्द्रौणिमेव च ६७

तांस्तु दैवहतान्पूर्वं पश्चाद्द्रौणिर्न्यपातयत्
त्रासयन्सर्वभूतानि विनदन्भैरवान्रवान् ६८
तदनुस्मृत्य ते वीरा दर्शनं पौर्वकालिकम्
इदं तदित्यमन्यन्त दैवेनोपनिपीडिताः ६९
ततस्तेन निनादेन प्रत्यबुध्यन्त धन्विनः
शिबिरे पाण्डवेयानां शतशोऽथ सहस्रशः ७०
सोऽच्छिनत्कस्यचित्पादौ जघनं चैव कस्यचित्
कांश्चिद्बिभेद पार्श्वेषु कालसृष्ट इवान्तकः ७१
अत्युग्रप्रतिपिष्टैश्च नदद्भिश्च भृशातुरैः
गजाश्वमथितैश्चान्यैर्मही कीर्णाभवत्प्रभो ७२
क्रोशतां किमिदं कोऽय किं शब्दः किं नु किं कृतम्
एवं तेषां तदा द्रौणिरन्तकः समपद्यत ७३
अपेतशस्त्रसंनाहान्संरब्धान्पाण्डुसृञ्जयान्
प्राहिणोन्मृत्युलोकाय द्रौणिः प्रहरतां वरः ७४
ततस्तच्छस्त्रवित्रस्ता उत्पतन्तो भयातुराः
निद्रान्धा नष्टसंज्ञाश्च तत्र तत्र निलिल्यिरे ७५
ऊरुस्तम्भगृहीताश्च कश्मलाभिहतौजसः
विनदन्तो भृशं त्रस्ताः संन्यपेषन्परस्परम् ७६
ततो रथं पुनर्द्रौणिरास्थितो भीमनिस्वनम्
धनुष्पाणिः शरैरन्यान्प्रेषयद्वै यमक्षयम् ७७
पुनरुत्पततः कांश्चिद्दूरादपि नरोत्तमान्
शूरान्संपततश्चान्यान्कालरात्र्यै न्यवेदयत् ७८
तथैव स्यन्दनाग्रेण प्रमथन्स विधावति
शरवर्षैश्च विविधैरवर्षच्छात्रवांस्ततः ७९
पुनश्च सुविचित्रेण शतचन्द्रेण चर्मणा
तेन चाकाशवर्णेन तदाचरत सोऽसिना ८०
तथा स शिबिरं तेषां द्रौणिराहवदुर्मदः
व्यक्षोभयत राजेन्द्र महाह्रदमिव द्विपः ८१
उत्पेतुस्तेन शब्देन योधा राजन्विचेतसः
निद्रार्ताश्च भयार्ताश्च व्यधावन्त ततस्ततः ८२

विस्वरं चुक्रुशुश्चान्ये बह्वबद्धं तथावदन्
न च स्म प्रतिपद्यन्ते शस्त्राणि वसनानि च ८३
विमुक्तकेशाश्चाप्यन्ये नाभ्यजानन्परस्परम्
उत्पतन्तः परे भीताः केचित्तत्र तथाभ्रमन्
पुरीषमसृजन्केचित्केचिन्मूत्रं प्रसुस्रुवुः ८४
बन्धनानि च राजेन्द्र संछिद्य तुरगा द्विपाः
समं पर्यपतंश्चान्ये कुर्वन्तो महदाकुलम् ८५
तत्र केचिन्नरा भीता व्यलीयन्त महीतले
तथैव तान्निपतितानपिंषन्गजवाजिनः ८६
तस्मिंस्तथा वर्तमाने रक्षांसि पुरुषर्षभ
तृप्तानि व्यनदन्नुच्चैर्मुदा भरतसत्तम ८७
स शब्दः प्रेरितो राजन्भूतसंघैर्मुदा युतैः
अपूरयद्दिशः सर्वा दिवं चापि महास्वनः ८८
तेषामार्तस्वरं श्रुत्वा वित्रस्ता गजवाजिनः
मुक्ताः पर्यपतन्राजन्मृद्नन्तः शिबिरे जनम् ८९
तैस्तत्र परिधावद्भिश्चरणोदीरितं रजः
अकरोच्छिबिरे तेषां रजन्यां द्विगुणं तमः ९०
तस्मिंस्तमसि सञ्जाते प्रमूढाः सर्वतो जनाः
नाजानन्पितरः पुत्रान्भ्रातॄन्भ्रातर एव च ९१
गजा गजानतिक्रम्य निर्मनुष्या हया हयान्
अताडयंस्तथाभञ्जंस्तथामृद्नंश्च भारत ९२
ते भग्नाः प्रपतन्तश्च निघ्नन्तश्च परस्परम्
न्यपातयन्त च परान्पातयित्वा तथापिषन् ९३
विचेतसः सनिद्राश्च तमसा चावृता नराः
जघ्नुः स्वानेव तत्राथ कालेनाभिप्रचोदिताः ९४
त्यक्त्वा द्वाराणि च द्वाःस्थास्तथा गुल्मांश्च गौल्मिकाः
प्राद्रवन्त यथाशक्ति कान्दिशीका विचेतसः ९५
विप्रनष्टाश्च तेऽन्योन्यं नाजानन्त तदा विभो
क्रोशन्तस्तात पुत्रेति दैवोपहतचेतसः ९६
पलायतां दिशस्तेषां स्वानप्युत्सृज्य बान्धवान्

गोत्रनामभिरन्योन्यमाक्रन्दन्त ततो जनाः ९७
हाहाकारं च कुर्वाणाः पृथिव्यां शेरते परे
तान्बुद्ध्वा रणमत्तोऽसौ द्रोणपुत्रो व्यपोथयत् ९८
तत्रापरे वध्यमाना मुहुर्मुहुरचेतसः
शिबिरान्निष्पतन्ति स्म क्षत्रिया भयपीडिताः ९९
तांस्तु निष्पततस्त्रस्ताञ्शिबिराज्जीवितैषिणः
कृतवर्मा कृपश्चैव द्वारदेशे निजघ्नतुः १००
विशस्त्रयन्त्रकवचान्मुक्तकेशान्कृताञ्जलीन्
वेपमानान्क्षितौ भीतान्नैव कांश्चिदमुञ्चताम् १०१
नामुच्यत तयोः कश्चिन्निष्क्रान्तः शिबिराद्बहिः
कृपस्य च महाराज हार्दिक्यस्य च दुर्मतेः १०२
भूयश्चैव चिकीर्षन्तौ द्रोणपुत्रस्य तौ प्रियम्
त्रिषु देशेषु ददतुः शिबिरस्य हुताशनम् १०३
ततः प्रकाशे शिबिरे खड्गेन पितृनन्दनः
अश्वत्थामा महाराज व्यचरत्कृतहस्तवत् १०४
कांश्चिदापततो वीरानपरांश्च प्रधावतः
व्ययोजयत खड्गेन प्राणैर्द्विजवरो नरान् १०५
कांश्चिद्योधान्स खड्गेन मध्ये संछिद्य वीर्यवान्
अपातयद्द्रोणसुतः संरब्धस्तिलकाण्डवत् १०६
विनदद्भिर्भृशायस्तैर्नराश्वद्विरदोत्तमैः
पतितैरभवत्कीर्णा मेदिनी भरतर्षभ १०७
मानुषाणां सहस्रेषु हतेषु पतितेषु च
उदतिष्ठन्कबन्धानि बहून्युत्थाय चापतन् १०८
सायुधान्साङ्गदान्बाहून्निचकर्त शिरांसि च
हस्तिहस्तोपमानूरून्हस्तान्पादांश्च भारत १०९
पृष्ठच्छिन्नाञ्शिरश्छिन्नान्पार्श्वछिन्नांस्तथापरान्
समासाद्याकरोद्द्रौणिः कांश्चिच्चापि पराङ्मुखान् ११०
मध्यकायान्नरानन्यांश्चिच्छेदान्यांश्च कर्णतः
अंसदेशे निहत्यान्यान्काये प्रावेशयच्छिरः १११
एवं विचरतस्तस्य निघ्नतः सुबहून्नरान्

तमसा रजनी घोरा बभौ दारुणदर्शना ११२
किंचित्प्राणैश्च पुरुषैर्हतैश्चान्यैः सहस्रशः
बहुना च गजाश्वेन भूरभूद्भीमदर्शना ११३
यक्षरक्षःसमाकीर्णे रथाश्वद्विपदारुणे
क्रुद्धेन द्रोणपुत्रेण संछिन्नाः प्रापतन्भुवि ११४
मातॄरन्ये पितॄनन्ये भ्रातॄनन्ये विचुक्रुशुः
केचिदूचुर्न तत्क्रुद्धैर्धार्तराष्ट्रैः कृतं रणे ११५
यत्कृतं नः प्रसुप्तानां रक्षोभिः क्रूरकर्मभिः
असांनिध्याद्धि पार्थानामिदं नः कदनं कृतम् ११६
न देवासुरगन्धर्वैर्न यक्षैर्न च राक्षसैः
शक्यो विजेतुं कौन्तेयो गोप्ता यस्य जनार्दनः ११७
ब्रह्मण्यः सत्यवाग्दान्तः सर्वभूतानुकम्पकः
न च सुप्तं प्रमत्तं वा न्यस्तशस्त्रं कृताञ्जलिम्
धावन्तं मुक्तकेशं वा हन्ति पार्थो धनञ्जयः ११८
तदिदं नः कृतं घोरं रक्षोभिः क्रूरकर्मभिः
इति लालप्यमानाः स्म शेरते बहवो जनाः ११९
स्तनतां च मनुष्याणामपरेषां च कूजताम्
ततो मुहूर्तात्प्राशाम्यत्स शब्दस्तुमुलो महान् १२०
शोणितव्यतिषिक्तायां वसुधायां च भूमिप
तद्रजस्तुमुलं घोरं क्षणेनान्तरधीयत १२१
संवेष्टमानानुद्विग्नान्निरुत्साहान्सहस्रशः
न्यपातयन्नरान्क्रुद्धः पशून्पशुपतिर्यथा १२२
अन्योन्यं संपरिष्वज्य शयानान्द्रवतोऽपरान्
संलीनान्युध्यमानांश्च सर्वान्द्रौणिरपोथयत् १२३
दह्यमाना हुताशेन वध्यमानाश्च तेन ते
परस्परं तदा योधा अनयन्यमसादनम् १२४
तस्या रजन्यास्त्वर्धेन पाण्डवानां महद्बलम्
गमयामास राजेन्द्र द्रौणिर्यमनिवेशनम् १२५
निशाचराणां सत्त्वानां सा रात्रिर्हर्षवर्धिनी
आसीन्नरगजाश्वानां रौद्री क्षयकरी भृशम् १२६

तत्रादृश्यन्त रक्षांसि पिशाचाश्च पृथग्विधाः
खादन्तो नरमांसानि पिबन्तः शोणितानि च १२७
करालाः पिङ्गला रौद्राः शैलदन्ता रजस्वलाः
जटिला दीर्घसक्थाश्च पञ्चपादा महोदराः १२८
पश्चादङ्गुलयो रूक्षा विरूपा भैरवस्वनाः
घटजानवोऽतिह्रस्वाश्च नीलकण्ठा विभीषणाः १२९
सपुत्रदाराः सुक्रूरा दुर्दर्शनसुनिर्घृणाः
विविधानि च रूपाणि तत्रादृश्यन्त रक्षसाम् १३०
पीत्वा च शोणितं हृष्टाः प्रानृत्यन्गणशोऽपरे
इदं वरमिदं मेध्यमिदं स्वाद्विति चाब्रुवन् १३१
मेदोमज्जास्थिरक्तानां वसानां च भृशाशिताः
परमांसानि खादन्तः क्रव्यादा मांसजीविनः १३२
वसां चाप्यपरे पीत्वा पर्यधावन्विकुक्षिलाः
नानावक्त्रास्तथा रौद्राः क्रव्यादाः पिशिताशिनः १३३
अयुतानि च तत्रासन्प्रयुतान्यर्बुदानि च
रक्षसां घोररूपाणां महतां क्रूरकर्मणाम् १३४
मुदितानां वितृप्तानां तस्मिन्महति वैशसे
समेतानि बहून्यासन्भूतानि च जनाधिप १३५
प्रत्यूषकाले शिबिरात्प्रतिगन्तुमियेष सः
नृशोणितावसिक्तस्य द्रौणेरासीदसित्सरुः
पाणिना सह संश्लिष्ट एकीभूत इव प्रभो १३६
स निःशेषानरीन्कृत्वा विरराज जनक्षये
युगान्ते सर्वभूतानि भस्म कृत्वेव पावकः १३७
यथाप्रतिज्ञं तत्कर्म कृत्वा द्रौणायनिः प्रभो
दुर्गमां पदवीं कृत्वा पितुरासीद्गतज्वरः १३८
यथैव संसुप्तजने शिबिरे प्राविशन्निशि
तथैव हत्वा निःशब्दे निश्चक्राम नरर्षभः १३९
निष्क्रम्य शिबिरात्तस्मात्ताभ्यां संगम्य वीर्यवान्
आचख्यौ कर्म तत्सर्वं हृष्टः संहर्षयन्विभो १४०
तावप्याचख्यतुस्तस्मै प्रियं प्रियकरौ तदा

पाञ्चालान्सृञ्जयांश्चैव विनिकृत्तान्सहस्रशः
प्रीत्या चोच्चैरुदक्रोशंस्तथैवास्फोटयंस्तलान् १४१
एवंविधा हि सा रात्रिः सोमकानां जनक्षये
प्रसुप्तानां प्रमत्तानामासीत्सुभृशदारुणा १४२
असंशयं हि कालस्य पर्यायो दुरतिक्रमः
तादृशा निहता यत्र कृत्वास्माकं जनक्षयम् १४३
धृतराष्ट्र उवाच
प्रागेव सुमहत्कर्म द्रौणिरेतन्महारथः
नाकरोदीदृशं कस्मान्मत्पुत्रविजये धृतः १४४
अथ कस्माद्धते क्षत्रे कर्मेदं कृतवानसौ
द्रोणपुत्रो महेष्वासस्तन्मे शंसितुमर्हसि १४५
सञ्जय उवाच
तेषां नूनं भयान्नासौ कृतवान्कुरुनन्दन
असांनिध्याद्धि पार्थानां केशवस्य च धीमतः १४६
सात्यकेश्चापि कर्मेदं द्रोणपुत्रेण साधितम्
न हि तेषां समक्षं तान्हन्यादपि मरुत्पतिः १४७
एतदीदृशकं वृत्तं राजन्सुप्तजने विभो
ततो जनक्षयं कृत्वा पाण्डवानां महात्ययम्
दिष्ट्या दिष्ट्येति चान्योन्यं समेत्योचुर्महारथाः १४८
पर्यष्वजत्ततो द्रौणिस्ताभ्यां च प्रतिनन्दितः
इदं हर्षाच्च सुमहदाददे वाक्यमुत्तमम् १४९
पाञ्चाला निहताः सर्वे द्रौपदेयाश्च सर्वशः
सोमका मत्स्यशेषाश्च सर्वे विनिहता मया १५०
इदानीं कृतकृत्याः स्म याम तत्रैव माचिरम्
यदि जीवति नो राजा तस्मै शंसामहे प्रियम् १५१
इति श्रीमहाभारते सौप्तिकपर्वणि अष्टमोऽध्यायः ८

## नवमोऽध्यायः

सञ्जय उवाच
ते हत्वा सर्वपाञ्चालान्द्रौपदेयांश्च सर्वशः

अगच्छन्सहितास्तत्र यत्र दुर्योधनो हतः १
गत्वा चैनमपश्यंस्ते किञ्चित्प्राणं नराधिपम्
ततो रथेभ्यः प्रस्कन्द्य परिवव्रुस्तवात्मजम् २
तं भग्नसक्थं राजेन्द्र कृच्छ्रप्राणमचेतसम्
वमन्तं रुधिरं वक्त्रादपश्यन्वसुधातले ३
वृतं समन्ताद्बहुभिः श्वापदैर्घोरदर्शनैः
शालावृकगणैश्चैव भक्षयिष्यद्भिरन्तिकात् ४
निवारयन्तं कृच्छ्रात्ताञ्श्वापादान्संचिखादिषून्
विवेष्टमानं मह्यां च सुभृशं गाढवेदनम् ५
तं शयानं महात्मानं भूमौ स्वरुधिरोक्षितम्
हतशिष्टास्त्रयो वीराः शोकार्ताः पर्यवारयन्
अश्वत्थामा कृपश्चैव कृतवर्मा च सात्वतः ६
तैस्त्रिभिः शोणितादिग्धैर्निःश्वसद्भिर्महारथैः
शुशुभे संवृतो राजा वेदी त्रिभिरिवाग्निभिः ७
ते तं शयानं सम्प्रेक्ष्य राजानमतथोचितम्
अविषह्येन दुःखेन ततस्ते रुरुदुस्त्रयः ८
ततस्ते रुधिरं हस्तैर्मुखान्निर्मृज्य तस्य ह
रणे राज्ञः शयानस्य कृपणं पर्यदेवयन् ९
कृप उवाच
न दैवस्यातिभारोऽस्ति यदयं रुधिरोक्षितः
एकादशचमूभर्ता शेते दुर्योधनो हतः १०
पश्य चामीकराभस्य चामीकरविभूषिताम्
गदां गदाप्रियस्येमां समीपे पतितां भुवि ११
इयमेनं गदा शूरं न जहाति रणे रणे
स्वर्गायापि व्रजन्तं हि न जहाति यशस्विनम् १२
पश्येमां सह वीरेण जाम्बूनदविभूषिताम्
शयानां शयने धर्मे भार्यां प्रीतिमतीमिव १३
यो वै मूर्धावसिक्तानामग्रे यातः परन्तपः
स हतो ग्रसते पांसून्पश्य कालस्य पर्ययम् १४
येनाजौ निहता भूमावशेरत पुरा द्विषः

स भूमौ निहतः शेते कुरुराजः परैरयम् १५
भयान्नमन्ति राजानो यस्य स्म शतसंघशः
स वीरशयने शेते क्रव्याद्भिः परिवारितः १६
उपासत नृपाः पूर्वमर्थहेतोर्यमीश्वरम्
धिक्सद्यो निहतः शेते पश्य कालस्य पर्ययम् १७
सञ्जय उवाच
तं शयानं नृपश्रेष्ठं ततो भरतसत्तम
अश्वत्थामा समालोक्य करुणं पर्यदेवयत् १८
आहुस्त्वां राजशार्दूल मुख्यं सर्वधनुष्मताम्
धनाध्यक्षोपमं युद्धे शिष्यं सङ्कर्षणस्य ह १९
कथं विवरमद्राक्षीद्भीमसेनस्तवानघ
बलिनः कृतिनो नित्यं स च पापात्मवान्नृप २०
कालो नूनं महाराज लोकेऽस्मिन्बलवत्तरः
पश्यामो निहतं त्वां चेद्भीमसेनेन संयुगे २१
कथं त्वां सर्वधर्मज्ञं क्षुद्रः पापो वृकोदरः
निकृत्या हतवान्मन्दो नूनं कालो दुरत्ययः २२
धर्मयुद्धे ह्यधर्मेण समाहूयौजसा मृधे
गदया भीमसेनेन निर्भिन्ने सक्थिनी तव २३
अधर्मेण हतस्याजौ मृद्यमानं पदा शिरः
यदुपेक्षितवान्क्षुद्रो धिक्तमस्तु युधिष्ठिरम् २४
युद्धेष्वपवदिष्यन्ति योधा नूनं वृकोदरम्
यावत्स्थास्यन्ति भूतानि निकृत्या ह्यसि पातितः २५
ननु रामोऽब्रवीद्राजंस्त्वां सदा यदुनन्दनः
दुर्योधनसमो नास्ति गदया इति वीर्यवान् २६
श्लाघते त्वां हि वार्ष्णेयो राजन्संसत्सु भारत
सुशिष्यो मम कौरव्यो गदायुद्ध इति प्रभो २७
यां गतिं क्षत्रियस्याहुः प्रशस्तां परमर्षयः
हतस्याभिमुखस्याजौ प्राप्तस्त्वमसि तां गतिम् २८
दुर्योधन न शोचामि त्वामहं पुरुषर्षभ
हतपुत्रां तु शोचामि गान्धारीं पितरं च ते

भिक्षुकौ विचरिष्येते शोचन्तौ पृथिवीमिमाम् २९
धिगस्तु कृष्णं वार्ष्णेयमर्जुनं चापि दुर्मतिम्
धर्मज्ञमानिनौ यौ त्वां वध्यमानमुपेक्षताम् ३०
पाण्डवाश्चापि ते सर्वे किं वक्ष्यन्ति नराधिपान्
कथं दुर्योधनोऽस्माभिर्हत इत्यनपत्रपाः ३१
धन्यस्त्वमसि गान्धारे यस्त्वमायोधने हतः
प्रयातोऽभिमुखः शत्रून्धर्मेण पुरुषर्षभ ३२
हतपुत्रा हि गान्धारी निहतज्ञातिबान्धवा
प्रज्ञाचक्षुश्च दुर्धर्षः कां गतिं प्रतिपत्स्यते ३३
धिगस्तु कृतवर्माणं मां कृपं च महारथम्
ये वयं न गताः स्वर्गं त्वां पुरस्कृत्य पार्थिवम् ३४
दातारं सर्वकामानां रक्षितारं प्रजाहितम्
यद्वयं नानुगच्छामस्त्वां धिगस्मान्नराधमान् ३५
कृपस्य तव वीर्येण मम चैव पितुश्च मे
सभृत्यानां नरव्याघ्र रत्नवन्ति गृहाणि च ३६
भवत्प्रसादादस्माभिः समित्रैः सहबान्धवैः
अवाप्ताः क्रतवो मुख्या बहवो भूरिदक्षिणाः ३७
कुतश्चापीदृशं सार्थमुपलप्स्यामहे वयम्
यादृशेन पुरस्कृत्य त्वं गतः सर्वपार्थिवान् ३८
वयमेव त्रयो राजन्गच्छन्तं परमां गतिम्
यद्वै त्वां नानुगच्छामस्तेन तप्स्यामहे वयम् ३९
त्वत्स्वर्गहीना हीनार्थाः स्मरन्तः सुकृतस्य ते
किं नाम तद्भवेत्कर्म येन त्वानुव्रजेम वै ४०
दुःखं नूनं कुरुश्रेष्ठ चरिष्यामो महीमिमाम्
हीनानां नस्त्वया राजन्कुतः शान्तिः कुतः सुखम् ४१
गत्वैतांस्तु महाराज समेत्य त्वं महारथान्
यथाश्रेष्ठं यथाज्येष्ठं पूजयेर्वचनान्मम ४२
आचार्यं पूजयित्वा च केतुं सर्वधनुष्मताम्
हतं मयाद्य शंसेथा धृष्टद्युम्नं नराधिप ४३
परिष्वजेथा राजानं बाह्लिकं सुमहारथम्

सैन्धवं सोमदत्तं च भूरिश्रवसमेव च ४४
तथा पूर्वगतानन्यान्स्वर्गं पार्थिवसत्तमान्
अस्माद्वाक्यात्परिष्वज्य पृच्छेथास्त्वमनामयम् ४५
इत्येवमुक्त्वा स राजा भग्नसक्थमचेतसम्
अश्वत्थामा समुद्वीक्ष्य पुनर्वचनमब्रवीत् ४६
दुर्योधन जीवसि चेद्वाचं श्रोत्रसुखां शृणु
सप्त पाण्डवतः शेषा धार्तराष्ट्रास्त्रयो वयम् ४७
ते चैव भ्रातरः पञ्च वासुदेवोऽथ सात्यकिः
अहं च कृतवर्मा च कृपः शारद्वतस्तथा ४८
द्रौपदेया हताः सर्वे धृष्टद्युम्नस्य चात्मजाः
पाञ्चाला निहताः सर्वे मत्स्यशेषं च भारत ४९
कृते प्रतिकृतं पश्य हतपुत्रा हि पाण्डवाः
सौप्तिके शिबिरं तेषां हतं सनरवाहनम् ५०
मया च पापकर्मासौ धृष्टद्युम्नो महीपते
प्रविश्य शिबिरं रात्रौ पशुमारेण मारितः ५१
दुर्योधनस्तु तां वाचं निशम्य मनसः प्रियाम्
प्रतिलभ्य पुनश्चेत इदं वचनमब्रवीत् ५२
न मेऽकरोत्तद्गाङ्गेयो न कर्णो न च ते पिता
यत्त्वया कृपभोजाभ्यां सहितेनाद्य मे कृतम् ५३
स चेत्सेनापतिः क्षुद्रो हतः सार्धं शिखण्डिना
तेन मन्ये मघवता सममात्मानमद्य वै ५४
स्वस्ति प्राप्नुत भद्रं वः स्वर्गे नः सङ्गमः पुनः
इत्येवमुक्त्वा तूष्णीं स कुरुराजो महामनाः
प्राणानुदसृजद्वीरः सुहृदां शोकमादधत् ५५
तथेति ते परिष्वक्ताः परिष्वज्य च तं नृपम्
पुनः पुनः प्रेक्षमाणाः स्वकानारुरुहू रथान् ५६
इत्येवं तव पुत्रस्य निशम्य करुणां गिरम्
प्रत्यूषकाले शोकार्तः प्राधावं नगरं प्रति ५७
तव पुत्रे गते स्वर्गं शोकार्तस्य ममानघ
ऋषिदत्तं प्रनष्टं तद्दिव्यदर्शित्वमद्य वै ५८

वैशम्पायन उवाच
इति श्रुत्वा स नृपतिः पुत्रज्ञातिवधं तदा
निःश्वस्य दीर्घमुष्णं च ततश्चिन्तापरोऽभवत् ५९
इति श्रीमहाभारते सौप्तिकपर्वणि नवमोऽध्यायः ९
समाप्तं सौप्तिकपर्व

दशमोऽध्यायः
वैशम्पायन उवाच
तस्यां रात्र्यां व्यतीतायां धृष्टद्युम्नस्य सारथिः
शशंस धर्मराजाय सौप्तिके कदनं कृतम् १
द्रौपदेया महाराज द्रुपदस्यात्मजैः सह
प्रमत्ता निशि विश्वस्ताः स्वपन्तः शिबिरे स्वके २
कृतवर्मणा नृशंसेन गौतमेन कृपेण च
अश्वत्थाम्ना च पापेन हतं वः शिबिरं निशि ३
एतैर्नरगजाश्वानां प्रासशक्तिपरश्वधैः
सहस्राणि निकृन्तद्भिर्निःशेषं ते बलं कृतम् ४
छिद्यमानस्य महतो वनस्येव परश्वधैः
शुश्रुवे सुमहाञ्शब्दो बलस्य तव भारत ५
अहमेकोऽवशिष्टस्तु तस्मात्सैन्यान्महीपते
मुक्तः कथंचिद्धर्मात्मन्व्यग्रस्य कृतवर्मणः ६
तच्छ्रुत्वा वाक्यमशिवं कुन्तीपुत्रो युधिष्ठिरः
पपात मह्यां दुर्धर्षः पुत्रशोकसमन्वितः ७
तं पतन्तमभिक्रम्य परिजग्राह सात्यकिः
भीमसेनोऽर्जुनश्चैव माद्रीपुत्रौ च पाण्डवौ ८
लब्धचेतास्तु कौन्तेयः शोकविह्वलया गिरा
जित्वा शत्रूञ्जितः पश्चात्पर्यदेवयदातुरः ९
दुर्विदा गतिरर्थानामपि ये दिव्यचक्षुषः
जीयमाना जयन्त्यन्ये जयमाना वयं जिताः १०
हत्वा भ्रातॄन्वयस्यांश्च पितॄन्पुत्रान्सुहृद्गणान्
बन्धूनमात्यान्पौत्रांश्च जित्वा सर्वाञ्जिता वयम् ११

अनर्थो ह्यर्थसंकाशस्तथार्थोऽनर्थदर्शनः
जयोऽयमजयाकारो जयस्तस्मात्पराजयः १२
यं जित्वा तप्यते पश्चादापन्न इव दुर्मतिः
कथं मन्येत विजयं ततो जिततरः परैः १३
येषामर्थाय पापस्य धिग्जयस्य सुहृद्वधे
निर्जितैरप्रमत्तैर्हि विजिता जितकाशिनः १४
कर्णिनालीकदंष्ट्रस्य खड्गजिह्वस्य संयुगे
चापव्यात्तस्य रौद्रस्य ज्यातलस्वननादिनः १५
क्रुद्धस्य नरसिंहस्य संग्रामेष्वपलायिनः
ये व्यमुच्यन्त कर्णस्य प्रमादात्त इमे हताः १६
रथह्रदं शरवर्षोर्मिमन्तं रत्नाचितं वाहनराजियुक्तम्
शक्त्यृष्टिमीनध्वजनागनक्रं शरासनावर्तमहेषुफेनम् १७
संग्रामचन्द्रोदयवेगवेलं द्रोणार्णवं ज्यातलनेमिघोषम्
ये तेरुरुच्चावचशस्त्रनौभिस्ते राजपुत्रा निहताः प्रमादात् १८
न हि प्रमादात्परमोऽस्ति कश्चिद्वधो नराणामिह जीवलोके
प्रमत्तमर्था हि नरं समन्तात्त्यजन्त्यनर्थाश्च समाविशन्ति १९
ध्वजोत्तमाग्रोच्छ्रितधूमकेतुं शरार्चिषं कोपमहासमीरम्
महाधनुर्ज्यातलनेमिघोषं तनुत्रनानाविधशस्त्रहोमम् २०
महाचमूकक्षवराभिपन्नं महाहवे भीष्ममहादवाग्निम्
ये सेहुरात्तायतशस्त्रवेगं ते राजपुत्रा निहताः प्रमादात् २१
न हि प्रमत्तेन नरेण लभ्या विद्या तपः श्रीर्विपुलं यशो वा
पश्याप्रमादेन निहत्य शत्रून्सर्वान्महेन्द्रं सुखमेधमानम् २२
इन्द्रोपमान्पार्थिवपुत्रपौत्रान्पश्याविशेषेण हतान्प्रमादात्
तीर्त्वा समुद्रं वणिजः समृद्धाः सन्नाः कुनद्यामिव हेलमानाः
अमर्षितैर्ये निहताः शयाना निःसंशयं ते त्रिदिवं प्रपन्नाः २३
कृष्णां नु शोचामि कथं न साध्वीं शोकार्णवे साद्य विनङ्क्ष्यतीति
भ्रातॄंश्च पुत्रांश्च हतान्निशम्य पाञ्चालराजं पितरं च वृद्धम्
ध्रुवं विसंज्ञा पतिता पृथिव्यां सा शेष्यते शोककृशाङ्गयष्टिः २४
तच्छोकजं दुःखमपारयन्ती कथं भविष्यत्युचिता सुखानाम्
पुत्रक्षयभ्रातृवधप्रणुन्ना प्रदह्यमानेव हुताशनेन २५

इत्येवमार्तः परिदेवयन्स राजा कुरूणां नकुलं बभाषे
गच्छानयैनामिह मन्दभाग्यां समातृपक्षामिति राजपुत्रीम् २६
माद्रीसुतस्तत्परिगृह्य वाक्यं धर्मेण धर्मप्रतिमस्य राज्ञः
ययौ रथेनालयमाशु देव्याः पाञ्चालराजस्य च यत्र दाराः २७
प्रस्थाप्य माद्रीसुतमाजमीढः शोकार्दितस्तैः सहितः सुहृद्भिः
रोरूयमाणः प्रययौ सुतानामायोधनं भूतगणानुकीर्णम् २८
स तत्प्रविश्याशिवमुग्ररूपं ददर्श पुत्रान्सुहृदः सखींश्च
भूमौ शयानान्रुधिरार्द्रगात्रान्विभिन्नभग्नापहृतोत्तमाङ्गान् २९
स तांस्तु दृष्ट्वा भृशमार्तरूपो युधिष्ठिरो धर्मभृतां वरिष्ठः
उच्चैः प्रचुक्रोश च कौरवाग्र्यः पपात चोर्व्यां सगणो विसंज्ञः ३०
इति श्रीमहाभारते सौप्तिकपर्वणि दशमोऽध्यायः १०

एकादशोऽध्यायः

वैशम्पायन उवाच
स दृष्ट्वा निहतान्संख्ये पुत्रान्भ्रातॄन्सखींस्तथा
महादुःखपरीतात्मा बभूव जनमेजय १
ततस्तस्य महाञ्शोकः प्रादुरासीन्महात्मनः
स्मरतः पुत्रपौत्राणां भ्रातॄणां स्वजनस्य ह २
तमश्रुपरिपूर्णाक्षं वेपमानमचेतसम्
सुहृदो भृशसंविग्नाः सान्त्वयांचक्रिरे तदा ३
ततस्तस्मिन्क्षणे काल्ये रथेनादित्यवर्चसा
नकुलः कृष्णया सार्धमुपायात्परमार्तया ४
उपप्लव्यगता सा तु श्रुत्वा सुमहदप्रियम्
तदा विनाशं पुत्राणां सर्वेषां व्यथिताभवत् ५
कम्पमानेव कदली वातेनाभिसमीरिता
कृष्णा राजानमासाद्य शोकार्ता न्यपतद्भुवि ६
बभूव वदनं तस्याः सहसा शोककर्शितम्
फुल्लपद्मपलाशाक्ष्यास्तमोध्वस्त इवांशुमान् ७
ततस्तां पतितां दृष्ट्वा संरम्भी सत्यविक्रमः
बाहुभ्यां परिजग्राह समुपेत्य वृकोदरः ८

सा समाश्वासिता तेन भीमसेनेन भामिनी
रुदती पाण्डवं कृष्णा सहभ्रातरमब्रवीत् ९
दिष्ट्या राजंस्त्वमद्येमामखिलां भोक्ष्यसे महीम्
आत्मजान्क्षत्रधर्मेण संप्रदाय यमाय वै १०
दिष्ट्या त्वं पार्थ कुशली मत्तमातङ्गगामिनम्
अवाप्य पृथिवीं कृत्स्नां सौभद्रं न स्मरिष्यसि ११
आत्मजांस्तेन धर्मेण श्रुत्वा शूरान्निपातितान्
उपप्लव्ये मया सार्धं दिष्ट्या त्वं न स्मरिष्यसि १२
प्रसुप्तानां वधं श्रुत्वा द्रौणिना पापकर्मणा
शोकस्तपति मां पार्थ हुताशन इवाशयम् १३
तस्य पापकृतो द्रौणेर्न चेदद्य त्वया मृधे
ह्रियते सानुबन्धस्य युधि विक्रम्य जीवितम् १४
इहैव प्रायमासिष्ये तन्निबोधत पाण्डवाः
न चेत्फलमवाप्नोति द्रौणिः पापस्य कर्मणः १५
एवमुक्त्वा ततः कृष्णा पाण्डवं प्रत्युपाविशत्
युधिष्ठिरं याज्ञसेनी धर्मराजं यशस्विनी १६
दृष्ट्वोपविष्टां राजर्षिः पाण्डवो महिषीं प्रियाम्
प्रत्युवाच स धर्मात्मा द्रौपदीं चारुदर्शनाम् १७
धर्म्यं धर्मेण धर्मज्ञे प्राप्तास्ते निधनं शुभे
पुत्रास्ते भ्रातरश्चैव तान्न शोचितुमर्हसि १८
द्रोणपुत्रः स कल्याणि वनं दूरमितो गतः
तस्य त्वं पातनं संख्ये कथं ज्ञास्यसि शोभने १९
द्रौपद्युवाच
द्रोणपुत्रस्य सहजो मणिः शिरसि मे श्रुतः
निहत्य संख्ये तं पापं पश्येयं मणिमाहृतम्
राजञ्शिरसि तं कृत्वा जीवेयमिति मे मतिः २०
वैशम्पायन उवाच
इत्युक्त्वा पाण्डवं कृष्णा राजानं चारुदर्शना
भीमसेनमथाभ्येत्य कुपिता वाक्यमब्रवीत् २१
त्रातुमर्हसि मां भीम क्षत्रधर्ममनुस्मरन्

जहि तं पापकर्माणं शम्बरं मघवानिव
न हि ते विक्रमे तुल्यः पुमानस्तीह कश्चन २२
श्रुतं तत्सर्वलोकेषु परमव्यसने यथा
द्वीपोऽभूस्त्वं हि पार्थानां नगरे वारणावते
हिडिम्बदर्शने चैव तथा त्वमभवो गतिः २३
तथा विराटनगरे कीचकेन भृशार्दिताम्
मामप्युद्धृतवान्कृच्छ्रात्पौलोमीं मघवानिव २४
यथैतान्यकृथाः पार्थ महाकर्माणि वै पुरा
तथा द्रौणिममित्रघ्न विनिहत्य सुखी भव २५
तस्या बहुविधं दुःखान्निशम्य परिदेवितम्
नामर्षयत कौन्तेयो भीमसेनो महाबलः २६
स काञ्चनविचित्राङ्गमारुरोह महारथम्
आदाय रुचिरं चित्रं समार्गणगुणं धनुः २७
नकुलं सारथिं कृत्वा द्रोणपुत्रवधे वृतः
विस्फार्य सशरं चापं तूर्णमश्वानचोदयत् २८
ते हयाः पुरुषव्याघ्र चोदिता वातरंहसः
वेगेन त्वरिता जग्मुर्हरयः शीघ्रगामिनः २९
शिबिरात्स्वाद्गृहीत्वा स रथस्य पदमच्युतः
द्रोणपुत्ररथस्याशु ययौ मार्गेण वीर्यवान् ३०
इति श्रीमहाभारते सौप्तिकपर्वणि एकादशोऽध्यायः ११

## द्वादशोऽध्यायः

वैशम्पायन उवाच
तस्मिन्प्रयाते दुर्धर्षे यदूनामृषभस्ततः
अब्रवीत्पुण्डरीकाक्षः कुन्तीपुत्रं युधिष्ठिरम् १
एष पाण्डव ते भ्राता पुत्रशोकमपारयन्
जिघांसुर्द्रौणिमाक्रन्दे याति भारत भारतः २
भीमः प्रियस्ते सर्वेभ्यो भ्रातृभ्यो भरतर्षभ
तं कृच्छ्रगतमद्य त्वं कस्मान्नाभ्यवपद्यसे ३
यत्तदाचष्ट पुत्राय द्रोणः परपुरञ्जयः

अस्त्रं ब्रह्मशिरो नाम दहेद्यत्पृथिवीमपि ४
तन्महात्मा महाभागः केतुः सर्वधनुष्मताम्
प्रत्यपादयदाचार्यः प्रीयमाणो धनञ्जयम् ५
तत्पुत्रोऽस्यैवमेवैनमन्वयाचदमर्षणः
ततः प्रोवाच पुत्राय नातिहृष्टमना इव ६
विदितं चापलं ह्यासीदात्मजस्य महात्मनः
सर्वधर्मविदाचार्यो नान्विषत्सततं सुतम् ७
परमापद्गतेनापि न स्म तात त्वया रणे
इदमस्त्रं प्रयोक्तव्यं मानुषेषु विशेषतः ८
इत्युक्तवान्गुरुः पुत्रं द्रोणः पश्चादथोक्तवान्
न त्वं जातु सतां मार्गे स्थातेति पुरुषर्षभ ९
स तदाज्ञाय दुष्टात्मा पितुर्वचनमप्रियम्
निराशः सर्वकल्याणैः शोचन्पर्यपतन्महीम् १०
ततस्तदा कुरुश्रेष्ठ वनस्थे त्वयि भारत
अवसद्द्वारकामेत्य वृष्णिभिः परमार्चितः ११
स कदाचित्समुद्रान्ते वसन्द्वारवतीमनु
एक एकं समागम्य मामुवाच हसन्निव १२
यत्तदुग्रं तपः कृष्ण चरन्सत्यपराक्रमः
अगस्त्याद्भारताचार्यः प्रत्यपद्यत मे पिता १३
अस्त्रं ब्रह्मशिरो नाम देवगन्धर्वपूजितम्
तदद्य मयि दाशार्ह यथा पितरि मे तथा १४
अस्मत्तस्तदुपादाय दिव्यमस्त्रं यदूत्तम
ममाप्यस्त्रं प्रयच्छ त्वं चक्रं रिपुहरं रणे १५
स राजन्प्रीयमाणेन मयाप्युक्तः कृताञ्जलि
याचमानः प्रयत्नेन मत्तोऽस्त्र भरतर्षभ १६
देवदानवगन्धर्वमनुष्यपतगोरगाः
न समा मम वीर्यस्य शतांशेनापि पिण्डिताः १७
इदं धनुरियं शक्तिरिदं चक्रमियं गदा
यद्यदिच्छसि चेदस्त्रं मत्तस्तत्तद्ददानि ते १८
यच्छक्नोषि समुद्यन्तुं प्रयोक्तुमपि वा रणे

तद्गृहाण विनास्त्रेण यन्मे दातुमभीप्ससि १९
स सुनाभं सहस्रारं वज्रनाभमयस्मयम्
वव्रे चक्रं महाबाहो स्पर्धमानो मया सह २०
गृहाण चक्रमित्युक्तो मया तु तदनन्तरम्
जग्राहोपेत्य सहसा चक्रं सव्येन पाणिना
न चैतदशकत्स्थानात्संचालयितुमच्युत २१
अथ तद्दक्षिणेनापि ग्रहीतुमुपचक्रमे
सर्वयत्नेन तेनापि गृह्णन्नैतदकल्पयत् २२
ततः सर्वबलेनापि यच्चैतन्न शशाक सः
उद्धर्तुं वा चालयितुं द्रौणिः परमदुर्मनाः
कृत्वा यत्नं परं श्रान्तः स न्यवर्तत भारत २३
निवृत्तमथ तं तस्मादभिप्रायाद्विचेतसम्
अहमामन्त्र्य सुस्निग्धमश्वत्थामानमब्रुवम् २४
यः स दैवमनुष्येषु प्रमाणं परमं गतः
गाण्डीवधन्वा श्वेताश्वः कपिप्रवरकेतनः २५
यः साक्षाद्देवदेवेशं शितिकण्ठमुमापतिम्
द्वंद्वयुद्धे पराजिष्णुस्तोषयामास शङ्करम् २६
यस्मात्प्रियतरो नास्ति ममान्यः पुरुषो भुवि
नादेयं यस्य मे किंचिदपि दाराः सुतास्तथा २७
तेनापि सुहृदा ब्रह्मन्पार्थेनाक्लिष्टकर्मणा
नोक्तपूर्वमिदं वाक्यं यत्त्वं मामभिभाषसे २८
ब्रह्मचर्यं महद्घोरं चीर्त्वा द्वादशवार्षिकम्
हिमवत्पार्श्वमभ्येत्य यो मया तपसार्चितः २९
समानव्रतचारिण्यां रुक्मिण्यां योऽन्वजायत
सनत्कुमारस्तेजस्वी प्रद्युम्नो नाम मे सुतः ३०
तेनाप्येतन्महद्दिव्यं चक्रमप्रतिमं मम
न प्रार्थितमभून्मूढ यदिदं प्रार्थितं त्वया ३१
रामेणातिबलेनैतन्नोक्तपूर्वं कदाचन
न गदेन न साम्बेन यदिदं प्रार्थितं त्वया ३२
द्वारकावासिभिश्चान्यैर्वृष्ण्यन्धकमहारथैः

नोक्तपूर्वमिदं जातु यदिदं प्रार्थितं त्वया ३३
भारताचार्यपुत्रः सन्मानितः सर्वयादवैः
चक्रेण रथिनां श्रेष्ठ किं नु तात युयुत्ससे ३४
एवमुक्तो मया द्रौणिर्मामिदं प्रत्युवाच ह
प्रयुज्य भवते पूजां योत्स्ये कृष्ण त्वयेत्युत ३५
ततस्ते प्रार्थितं चक्रं देवदानवपूजितम्
अजेयः स्यामिति विभो सत्यमेतद्ब्रवीमि ते ३६
त्वत्तोऽह दुर्लभं काममनवाप्यैव केशव
प्रतियास्यामि गोविन्द शिवेनाभिवदस्व माम् ३७
एतत्सुनाभं वृष्णीनामृषभेण त्वया धृतम्
चक्रमप्रतिचक्रेण भुवि नान्योऽभिपद्यते ३८
एतावदुक्त्वा द्रौणिर्मां युग्यमश्वान्धनानि च
आदायोपययौ बालो रत्नानि विविधानि च ३९
स संरम्भी दुरात्मा च चपलः क्रूर एव च
वेद चास्त्रं ब्रह्मशिरस्तस्माद्रक्ष्यो वृकोदरः ४०
इति श्रीमहाभारते सौप्तिकपर्वणि द्वादशोऽध्यायः १२

## त्रयोदशोऽध्यायः

वैशम्पायन उवाच
एवमुक्त्वा युधां श्रेष्ठः सर्वयादवनन्दनः
सर्वायुधवरोपेतमारुरोह महारथम्
युक्तं परमकाम्बोजैस्तुरगैर्हेममालिभिः १
आदित्योदयवर्णस्य धुरं रथवरस्य तु
दक्षिणामवहत्सैन्यः सुग्रीवः सव्यतोऽवहत्
पार्ष्णिवाहौ तु तस्यास्तां मेघपुष्पबलाहकौ २
विश्वकर्मकृता दिव्या नानारत्नविभूषिता
उच्छ्रितेव रथे माया ध्वजयष्टिरदृश्यत ३
वैनतेयः स्थितस्तस्यां प्रभामण्डलरश्मिवान्
तस्य सत्यवतः केतुर्भुजगारिरदृश्यत ४
अन्वारोहद्धृषीकेशः केतुः सर्वधनुष्मताम्

अर्जुनः सत्यकर्मा च कुरुराजो युधिष्ठिरः ५
अशोभेतां महात्मानौ दाशार्हमभितः स्थितौ
रथस्थं शार्ङ्गधन्वानमश्विनाविव वासवम् ६
तावुपारोप्य दाशार्हः स्यन्दनं लोकपूजितम्
प्रतोदेन जवोपेतान्परमाश्वानचोदयत् ७
ते हयाः सहसोत्पेतुर्गृहीत्वा स्यन्दनोत्तमम्
आस्थितं पाण्डवेयाभ्यां यदूनामृषभेण च ८
वहतां शार्ङ्गधन्वानमश्वानां शीघ्रगामिनाम्
प्रादुरासीन्महाञ्शब्दः पक्षिणां पततामिव ९
ते समार्छन्नरव्याघ्राः क्षणेन भरतर्षभ
भीमसेनं महेष्वासं समनुद्रुत्य वेगिताः १०
क्रोधदीप्तं तु कौन्तेयं द्विषदर्थे समुद्यतम्
नाशक्नुवन्वारयितुं समेत्यापि महारथाः ११
स तेषां प्रेक्षतामेव श्रीमतां दृढधन्विनाम्
ययौ भागिरथीकच्छं हरिभिर्भृशवेगितैः
यत्र स्म श्रूयते द्रौणिः पुत्रहन्ता महात्मनाम् १२
स ददर्श महात्मानमुदकान्ते यशस्विनम्
कृष्णद्वैपायनं व्यासमासीनमृषिभिः सह १३
तं चैव क्रूरकर्माणं घृताक्तं कुशचीरिणम्
रजसा ध्वस्तकेशान्तं ददर्श द्रौणिमन्तिके १४
तमभ्यधावत्कौन्तेयः प्रगृह्य सशरं धनुः
भीमसेनो महाबाहुस्तिष्ठ तिष्ठेति चाब्रवीत् १५
स दृष्ट्वा भीमधन्वानं प्रगृहीतशरासनम्
भ्रातरौ पृष्ठतश्चास्य जनार्दनरथे स्थितौ
व्यथितात्माभवद्द्रौणिः प्राप्तं चेदममन्यत १६
स तद्दिव्यमदीनात्मा परमास्त्रमचिन्तयत्
जग्राह च स चैषीकां द्रौणिः सव्येन पाणिना
स तामापदमासाद्य दिव्यमस्त्रमुदीरयत् १७
अमृष्यमाणस्ताञ्शूरान्दिव्यायुधधरान्स्थितान्
अपाण्डवायेति रुषा व्यसृजद्दारुणं वचः १८

इत्युक्त्वा राजशार्दूल द्रोणपुत्रः प्रतापवान्
सर्वलोकप्रमोहार्थं तदस्त्रं प्रमुमोच ह १९
ततस्तस्यामिषीकायां पावकः समजायत
प्रधक्ष्यन्निव लोकांस्त्रीन्कालान्तकयमोपमः २०
इति श्रीमहाभारते सौप्तिकपर्वणि त्रयोदशोऽध्यायः १३

## चतुर्दशोऽध्यायः

वैशम्पायन उवाच
इङ्गितेनैव दाशार्हस्तमभिप्रायमादितः
द्रौणेर्बुद्ध्वा महाबाहुरर्जुनं प्रत्यभाषत १
अर्जुनार्जुन यद्दिव्यमस्त्रं ते हृदि वर्तते
द्रोणोपदिष्टं तस्यायं कालः सम्प्रति पाण्डव २
भ्रातॄणामात्मनश्चैव परित्राणाय भारत
विसृजैतत्त्वमप्याजावस्त्रमस्त्रनिवारणम् ३
केशवेनैवमुक्तस्तु पाण्डवः परवीरहा
अवातरद्रथात्तूर्णं प्रगृह्य सशरं धनुः ४
पूर्वमाचार्यपुत्राय ततोऽनन्तरमात्मने
भ्रातृभ्यश्चैव सर्वेभ्यः स्वस्तीत्युक्त्वा परन्तपः ५
देवताभ्यो नमस्कृत्य गुरुभ्यश्चैव सर्वशः
उत्ससर्ज शिवं ध्यायन्नस्त्रमस्त्रेण शाम्यताम् ६
ततस्तदस्त्रं सहसा सृष्टं गाण्डीवधन्वना
प्रजज्वाल महार्चिष्मद्युगान्तानलसंनिभम् ७
तथैव द्रोणपुत्रस्य तदस्त्रं तिग्मतेजसः
प्रजज्वाल महाज्वालं तेजोमण्डलसंवृतम् ८
निर्घाता बहवश्चासन्पेतुरुल्काः सहस्रशः
महद्भयं च भूतानां सर्वेषां समजायत ९
सशब्दमभवद्व्योम ज्वालामालाकुलं भृशम्
चचाल च मही कृत्स्ना सपर्वतवनद्रुमा १०
ते अस्त्रे तेजसा लोकांस्तापयन्ती व्यवस्थिते
महर्षी सहितौ तत्र दर्शयामासतुस्तदा ११

नारदः स च धर्मात्मा भरतानां पितामहः
उभौ शमयितुं वीरौ भारद्वाजधनञ्जयौ १२
तौ मुनी सर्वधर्मज्ञौ सर्वभूतहितैषिणौ
दीप्तयोरस्त्रयोर्मध्ये स्थितौ परमतेजसौ १३
तदन्तरमनाधृष्यावुपगम्य यशस्विनौ
आस्तामृषिवरौ तत्र ज्वलिताविव पावकौ १४
प्राणभृद्भिरनाधृष्यौ देवदानवसंमतौ
अस्त्रतेजः शमयितुं लोकानां हितकाम्यया १५
ऋषी ऊचतुः
नानाशस्त्रविदः पूर्वे येऽप्यतीता महारथाः
नैतदस्त्रं मनुष्येषु तैः प्रयुक्तं कथञ्चन १६
इति श्रीमहाभारते सौप्तिकपर्वणि चतुर्दशोऽध्यायः १४

## पञ्चदशोऽध्यायः

वैशम्पायन उवाच
दृष्ट्वैव नरशार्दूलस्तावग्निसमतेजसौ
सञ्जहार शरं दिव्यं त्वरमाणो धनञ्जयः १
उवाच वदतां श्रेष्ठस्तावृषी प्राञ्जलिस्तदा
प्रयुक्तमस्त्रमस्त्रेण शाम्यतामिति वै मया २
संहृते परमास्त्रेऽस्मिन्सर्वानस्मानशेषतः
पापकर्मा ध्रुवं द्रौणिः प्रधक्ष्यत्यस्त्रतेजसा ३
अत्र यद्धितमस्माकं लोकानां चैव सर्वथा
भवन्तौ देवसंकाशौ तथा संहर्तुमर्हतः ४
इत्युक्त्वा संजहारास्त्रं पुनरेव धनञ्जयः
संहारो दुष्करस्तस्य देवैरपि हि संयुगे ५
विसृष्टस्य रणे तस्य परमास्त्रस्य संग्रहे
न शक्तः पाण्डवादन्यः साक्षादपि शतक्रतुः ६
ब्रह्मतेजोभवं तद्धि विसृष्टमकृतात्मना
न शक्यमावर्तयितुं ब्रह्मचारिव्रतादृते ७
अचीर्णब्रह्मचर्यो यः सृष्ट्वावर्तयते पुनः

तदस्त्रं सानुबन्धस्य मूर्धानं तस्य कृन्तति ८
ब्रह्मचारी व्रती चापि दुरवापमवाप्य तत्
परमव्यसनार्तोऽपि नार्जुनोऽस्त्र व्यमुञ्चत ९
सत्यव्रतधरः शूरो ब्रह्मचारी च पाण्डवः
गुरुवर्ती च तेनास्त्रं संजहारार्जुनः पुनः १०
द्रौणिरप्यथ सम्प्रेक्ष्य तावृषी पुरतः स्थितौ
न शशाक पुनर्घोरमस्त्रं संहर्तुमाहवे ११
अशक्तः प्रतिसंहारे परमास्त्रस्य संयुगे
द्रौणिर्दीनमना राजन्द्वैपायनमभाषत १२
उत्तमव्यसनार्तेन प्राणत्राणमभीप्सुना
मयैतदस्त्रमुत्सृष्टं भीमसेनभयान्मुने १३
अधर्मश्च कृतोऽनेन धार्तराष्ट्रं जिघांसता
मिथ्याचारेण भगवन्भीमसेनेन संयुगे १४
अतः सृष्टमिदं ब्रह्मन्मयास्त्रमकृतात्मना
तस्य भूयोऽद्य संहारं कर्तुं नाहमिहोत्सहे १५
विसृष्टं हि मया दिव्यमेतदस्त्रं दुरासदम्
अपाण्डवायेति मुने वह्नितेजोऽनुमन्त्र्य वै १६
तदिदं पाण्डवेयानामन्तकायाभिसंहितम्
अद्य पाण्डुसुतान्सर्वाञ्जीवितादभ्रंशयिष्यति १७
कृतं पापमिदं ब्रह्मन्रोषाविष्टेन चेतसा
वधमाशास्य पार्थानां मयास्त्रं सृजता रणे १८
व्यास उवाच
अस्त्रं ब्रह्मशिरस्तात विद्वान्पार्थो धनञ्जयः
उत्सृष्टवान्न रोषेण न वधाय तवाहवे १९
अस्त्रमस्त्रेण तु रणे तव संशमयिष्यता
विसृष्टमर्जुनेनेदं पुनश्च प्रतिसंहृतम् २०
ब्रह्मास्त्रमप्यवाप्यैतदुपदेशात्पितुस्तव
क्षत्रधर्मान्महाबाहुर्नाकम्पत धनंजयः २१
एवं धृतिमतः साधोः सर्वास्त्रविदुषः सतः
सभ्रातृबन्धोः कस्मात्त्वं वधमस्य चिकीर्षसि २२

अस्त्रं ब्रह्मशिरो यत्र परमास्त्रेण वध्यते
समा द्वादश पर्जन्यस्तद्राष्ट्रं नाभिवर्षति २३
एतदर्थं महाबाहुः शक्तिमानपि पाण्डवः
न विहन्त्येतदस्त्रं तु प्रजाहितचिकीर्षया २४
पाण्डवास्त्वं च राष्ट्रं च सदा संरक्ष्यमेव नः
तस्मात्संहर दिव्यं त्वमस्त्रमेतन्महाभुज २५
अरोषस्तव चैवास्तु पार्थाः सन्तु निरामयाः
न ह्यधर्मेण राजर्षिः पाण्डवो जेतुमिच्छति २६
मणिं चैतं प्रयच्छैभ्यो यस्ते शिरसि तिष्ठति
एतदादाय ते प्राणान्प्रतिदास्यन्ति पाण्डवाः २७
द्रौणिरुवाच
पाण्डवैर्यानि रत्नानि यच्चान्यत्कौरवैर्धनम्
अवाप्तानीह तेभ्योऽय मणिर्मम विशिष्यते २८
यमाबध्य भयं नास्ति शस्त्रव्याधिक्षुधाश्रयम्
देवेभ्यो दानवेभ्यो वा नागेभ्यो वा कथञ्चन २९
न च रक्षोगणभयं न तस्करभयं तथा
एवंवीर्यो मणिरयं न मे त्याज्यः कथञ्चन ३०
यत्तु मे भगवानाह तन्मे कार्यमनन्तरम्
अयं मणिरयं चाहमिषीका निपतिष्यति
गर्भेषु पाण्डवेयानाममोघं चैतदुद्यतम् ३१
व्यास उवाच
एवं कुरु न चान्या ते बुद्धिः कार्या कदाचन
गर्भेषु पाण्डवेयानां विसृज्यैतदुपारम ३२
वैशम्पायन उवाच
ततः परममस्त्रं तदश्वत्थामा भृशातुरः
द्वैपायनवचः श्रुत्वा गर्भेषु प्रमुमोच ह ३३
इति श्रीमहाभारते सौप्तिकपर्वणि पञ्चदशोऽध्यायः १५

षोडशोऽध्यायः

वैशम्पायन उवाच

तदाज्ञाय हृषीकेशो विसृष्टं पापकर्मणा
हृष्यमाण इदं वाक्यं द्रौणिं प्रत्यब्रवीत्तदा १
विराटस्य सुतां पूर्वं स्नुषां गाण्डीवधन्वनः
उपप्लव्यगतां दृष्ट्वा व्रतवान्ब्राह्मणोऽब्रवीत् २
परिक्षीणेषु कुरुषु पुत्रस्तव जनिष्यति
एतदस्य परिक्षित्त्वं गर्भस्थस्य भविष्यति ३
तस्य तद्वचनं साधोः सत्यमेव भविष्यति
परिक्षिद्भविता ह्येषां पुनर्वंशकरः सुतः ४
एवं ब्रुवाणं गोविन्दं सात्वतप्रवरं तदा
द्रौणिः परमसंरब्धः प्रत्युवाचेदमुत्तरम् ५
नैतदेवं यथात्थ त्वं पक्षपातेन केशव
वचनं पुण्डरीकाक्ष न च मद्वाक्यमन्यथा ६
पतिष्यत्येतदस्त्रं हि गर्भे तस्या मयोद्यतम्
विराटदुहितुः कृष्ण यां त्वं रक्षितुमिच्छसि ७
वासुदेव उवाच
अमोघः परमास्त्रस्य पातस्तस्य भविष्यति
स तु गर्भो मृतो जातो दीर्घमायुरवाप्स्यति ८
त्वां तु कापुरुषं पापं विदुः सर्वे मनीषिणः
असकृत्पापकर्माणं बालजीवितघातकम् ९
तस्मात्त्वमस्य पापस्य कर्मणः फलमाप्नुहि
त्रीणि वर्षसहस्राणि चरिष्यसि महीमिमाम्
अप्राप्नुवन्क्वचित्काञ्चित्संविदं जातु केनचित् १०
निर्जनानसहायस्त्वं देशान्प्रविचरिष्यसि
भवित्री न हि ते क्षुद्र जनमध्येषु संस्थितिः ११
पूयशोणितगन्धी च दुर्गकान्तारसंश्रयः
विचरिष्यसि पापात्मन्सर्वव्याधिसमन्वितः १२
वयः प्राप्य परिक्षित्तु वेदव्रतमवाप्य च
कृपाच्छारद्वताद्वीरः सर्वास्त्राण्युपलप्स्यते १३
विदित्वा परमास्त्राणि क्षत्रधर्मव्रते स्थितः
षष्टिं वर्षाणि धर्मात्मा वसुधां पालयिष्यति १४

इतश्चोर्ध्वं महाबाहुः कुरुराजो भविष्यति
परिक्षिन्नाम नृपतिर्मिषतस्ते सुदुर्मते
पश्य मे तपसो वीर्यं सत्यस्य च नराधम १५
व्यास उवाच
यस्मादनादृत्य कृतं त्वयास्मान्कर्म दारुणम्
ब्राह्मणस्य सतश्चैव यस्मात्ते वृत्तमीदृशम् १६
तस्माद्यद्देवकीपुत्र उक्तवानुत्तमं वचः
असंशयं ते तद्भावि क्षुद्रकर्मन्व्रजाश्वितः १७
अश्वत्थामोवाच
सहैव भवता ब्रह्मन्स्थास्यामि पुरुषेष्वहम्
सत्यवागस्तु भगवानयं च पुरुषोत्तमः १८
वैशम्पायन उवाच
प्रदायाथ मणिं द्रौणिः पाण्डवानां महात्मनाम्
जगाम विमनास्तेषां सर्वेषां पश्यतां वनम् १९
पाण्डवाश्चापि गोविन्दं पुरस्कृत्य हतद्विषः
कृष्णद्वैपायनं चैव नारदं च महामुनिम् २०
द्रोणपुत्रस्य सहजं मणिमादाय सत्वराः
द्रौपदीमभ्यधावन्त प्रायोपेतां मनस्विनीम् २१
ततस्ते पुरुषव्याघ्राः सदश्वैरनिलोपमैः
अभ्ययुः सहदाशार्हाः शिबिरं पुनरेव ह २२
अवतीर्य रथाभ्यां तु त्वरमाणा महारथाः
ददृशुर्द्रौपदीं कृष्णामार्तामार्ततराः स्वयम् २३
तामुपेत्य निरानन्दां दुःखशोकसमन्विताम्
परिवार्य व्यतिष्ठन्त पाण्डवाः सहकेशवाः २४
ततो राज्ञाभ्यनुज्ञातो भीमसेनो महाबलः
प्रददौ तु मणिं दिव्यं वचनं चेदमब्रवीत् २५
अयं भद्रे तव मणिः पुत्रहन्ता जितः स ते
उत्तिष्ठ शोकमुत्सृज्य क्षत्रधर्ममनुस्मर २६
प्रयाणे वासुदेवस्य शमार्थमसितेक्षणे
यान्युक्तानि त्वया भीरु वाक्यानि मधुघातिनः २७

नैव मे पतयः सन्ति न पुत्रा भ्रातरो न च
नैव त्वमपि गोविन्द शममिच्छति राजनि २८
उक्तवत्यसि धीराणि वाक्यानि पुरुषोत्तमम्
क्षत्रधर्मानुरूपाणि तानि संस्मर्तुमर्हसि २९
हतो दुर्योधनः पापो राज्यस्य परिपन्थकः
दुःशासनस्य रुधिरं पीतं विस्फुरतो मया ३०
वैरस्य गतमानृण्यं न स्म वाच्या विवक्षताम्
जित्वा मुक्तो द्रोणपुत्रो ब्राह्मण्याद्गौरवेण च ३१
यशोऽस्य पातितं देवि शरीरं त्ववशेषितम्
वियोजितश्च मणिना न्यासितश्चायुधं भुवि ३२
द्रौपद्युवाच
केवलानृण्यमाप्तास्मि गुरुपुत्रो गुरुर्मम
शिरस्येतं मणिं राजा प्रतिबध्नातु भारत ३३
वैशम्पायन उवाच
तं गृहीत्वा ततो राजा शिरस्येवाकरोत्तदा
गुरोरुच्छिष्टमित्येव द्रौपद्या वचनादपि ३४
ततो दिव्यं मणिवरं शिरसा धारयन्प्रभुः
शुशुभे स महाराजः सचन्द्र इव पर्वतः ३५
उत्तस्थौ पुत्रशोकार्ता ततः कृष्णा मनस्विनी
कृष्णं चापि महाबाहुं पर्यपृच्छत धर्मराट् ३६
इति श्रीमहाभारते सौप्तिकपर्वणि षोडशोऽध्यायः १६

## सप्तदशोऽध्यायः

वैशम्पायन उवाच
हतेषु सर्वसैन्येषु सौप्तिके तै रथैस्त्रिभिः
शोचन्युधिष्ठिरो राजा दाशार्हमिदमब्रवीत् १
कथं नु कृष्ण पापेन क्षुद्रेणाक्लिष्टकर्मणा
द्रौणिना निहताः सर्वे मम पुत्रा महारथाः २
तथा कृतास्त्रा विक्रान्ताः सहस्रशतयोधिनः
द्रुपदस्यात्मजाश्चैव द्रोणपुत्रेण पातिताः ३

यस्य द्रोणो महेष्वासो न प्रादादाहवे मुखम्
तं जघ्ने रथिनां श्रेष्ठं धृष्टद्युम्नं कथं नु सः ४
किं नु तेन कृतं कर्म यथायुक्तं नरर्षभ
यदेकः शिबिरं सर्वमवधीन्नो गुरोः सुतः ५
वासुदेव उवाच
नूनं स देवदेवानामीश्वरेश्वरमव्ययम्
जगाम शरणं द्रौणिरेकस्तेनावधीद्बहून् ६
प्रसन्नो हि महादेवो दद्यादमरतामपि
वीर्यं च गिरिशो दद्याद्येनेन्द्रमपि शातयेत् ७
वेदाहं हि महादेवं तत्त्वेन भरतर्षभ
यानि चास्य पुराणानि कर्माणि विविधान्युत ८
आदिरेष हि भूतानां मध्यमन्तश्च भारत
विचेष्टते जगच्चेदं सर्वमस्यैव कर्मणा ९
एवं सिसृक्षुर्भूतानि ददर्श प्रथमं विभुः
पितामहोऽब्रवीच्चैनं भूतानि सृज माचिरम् १०
हरिकेशस्तथेत्युक्त्वा भूतानां दोषदर्शिवान्
दीर्घकालं तपस्तेपे मग्नोऽम्भसि महातपाः ११
सुमहान्तं ततः कालं प्रतीक्ष्यैनं पितामहः
स्रष्टारं सर्वभूतानां ससर्ज मनसापरम् १२
सोऽब्रवीत्पितरं दृष्ट्वा गिरिशं मग्नमम्भसि
यदि मे नाग्रजस्त्वन्यस्ततः स्रक्ष्याम्यहं प्रजाः १३
तमब्रवीत्पिता नास्ति त्वदन्यः पुरुषोऽग्रजः
स्थाणुरेषः जले मग्नो विस्रब्धः कुरु वै कृतिम् १४
सभूतान्यसृजत्सप्त दक्षादींस्तु प्रजापतीन्
यैरिमं व्यकरोत्सर्वं भूतग्रामं चतुर्विधम् १५
ताः सृष्टमात्राः क्षुधिताः प्रजाः सर्वाः प्रजापतिम्
बिभक्षयिषवो राजन्सहसा प्राद्रवंस्तदा १६
स भक्ष्यमाणस्त्राणार्थी पितामहमुपाद्रवत्
आभ्यो मां भगवान्पातु वृत्तिरासां विधीयताम् १७
ततस्ताभ्यो ददावन्नमोषधीः स्थावराणि च

जङ्गमानि च भूतानि दुर्बलानि बलीयसाम् १८
विहितान्नाः प्रजास्तास्तु जग्मुस्तुष्टा यथागतम्
ततो ववृधिरे राजन्प्रीतिमत्यः स्वयोनिषु १९
भूतग्रामे विवृद्धे तु तुष्टे लोकगुरावपि
उदतिष्ठज्जलाज्ज्येष्ठः प्रजाश्चेमा ददर्श सः २०
बहुरूपाः प्रजा दृष्ट्वा विवृद्धाः स्वेन तेजसा
चुक्रोध भगवान्रुद्रो लिङ्गं स्वं चाप्यविध्यत २१
तत्प्रविद्धं तथा भूमौ तथैव प्रत्यतिष्ठत
तमुवाचाव्ययो ब्रह्मा वचोभिः शमयन्निव २२
किं कृतं सलिले शर्व चिरकालं स्थितेन ते
किमर्थं चैतदुत्पाट्य भूमौ लिङ्गं प्रवेरितम् २३
सोऽब्रवीज्जातसंरम्भस्तदा लोकगुरुर्गुरुम्
प्रजाः सृष्टाः परेणेमाः किं करिष्याम्यनेन वै २४
तपसाधिगतं चान्नं प्रजार्थं मे पितामह
ओषध्यः परिवर्तेरन्यथैव सततं प्रजाः २५
एवमुक्त्वा नु संक्रुद्धो जगाम विमना भवः
गिरेर्मुञ्जवतः पादं तपस्तप्तुं महातपाः २६
इति श्रीमहाभारते सौप्तिकपर्वणि सप्तदशोऽध्यायः १७

## अष्टादशोऽध्यायः

वासुदेव उवाच
ततो देवयुगेऽतीते देवा वै समकल्पयन्
यज्ञं वेदप्रमाणेन विधिवद्यष्टुमीप्सवः १
कल्पयामासुरव्यग्रा देशान्यज्ञोचितांस्ततः
भागार्हा देवताश्चैव यज्ञियं द्रव्यमेव च २
ता वै रुद्रमजानन्त्यो याथातथ्येन देवताः
नाकल्पयन्त देवस्य स्थाणोर्भागं नराधिप ३
सोऽकल्प्यमाने भागे तु कृत्तिवासा मखेऽमरैः
तरसा भागमन्विच्छन्धनुरादौ ससर्ज ह ४
लोकयज्ञः क्रियायज्ञो गृहयज्ञः सनातनः

पञ्चभूतमयो यज्ञो नृयज्ञश्चैव पञ्चमः ५
लोकयज्ञेन यज्ञैषी कपर्दी विदधे धनुः
धनुः सृष्टमभूत्तस्य पञ्चकिष्कुप्रमाणतः ६
वषट्कारोऽभवज्ज्या तु धनुषस्तस्य भारत
यज्ञाङ्गानि च चत्वारि तस्य संहननेऽभवन् ७
ततः क्रुद्धो महादेवस्तदुपादाय कार्मुकम्
आजगामाथ तत्रैव यत्र देवाः समीजिरे ८
तमात्तकार्मुकं दृष्ट्वा ब्रह्मचारिणमव्ययम्
विव्यथे पृथिवी देवी पर्वताश्च चकम्पिरे ९
न ववौ पवनश्चैव नाग्निर्जज्वाल चैधितः
व्यभ्रमच्चापि संविग्नं दिवि नक्षत्रमण्डलम् १०
न बभौ भास्करश्चापि सोमः श्रीमुक्तमण्डलः
तिमिरेणाकुलं सर्वमाकाशं चाभवद्वृतम् ११
अभिभूतास्ततो देवा विषयान्न प्रजज्ञिरे
न प्रत्यभाच्च यज्ञस्तान्वेदा बभ्रंशिरे तदा १२
ततः स यज्ञं रौद्रेण विव्याध हृदि पत्रिणा
अपक्रान्तस्ततो यज्ञो मृगो भूत्वा सपावकः १३
स तु तेनैव रूपेण दिवं प्राप्य व्यरोचत
अन्वीयमानो रुद्रेण युधिष्ठिर नभस्तले १४
अपक्रान्ते ततो यज्ञे संज्ञा न प्रत्यभात्सुरान्
नष्टसंज्ञेषु देवेषु न प्राज्ञायत किंचन १५
त्र्यम्बकः सवितुर्बाहू भगस्य नयने तथा
पूष्णश्च दशनान्क्रुद्धो धनुष्कोट्या व्यशातयत् १६
पाद्रवन्त ततो देवा यज्ञाङ्गानि च सर्वशः
केचित्तत्रैव घूर्णन्तो गतासव इवाभवन् १७
स तु विद्राव्य तत्सर्वं शितिकण्ठोऽवहस्य च
अवष्टभ्य धनुष्कोटिं रुरोध विबुधांस्ततः १८
ततो वागमरैरुक्ता ज्यां तस्य धनुषोऽच्छिनत्
अथ तत्सहसा राजंश्छिन्नज्यं विस्फुरद्धनुः १९
ततो विधनुषं देवा देवश्रेष्ठमुपागमन्

शरणं सह यज्ञेन प्रसादं चाकरोत्प्रभुः २०
ततः प्रसन्नो भगवान्प्रास्यत्कोपं जलाशये
स जलं पावको भूत्वा शोषयत्यनिशं प्रभो २१
भगस्य नयने चैव बाहू च सवितुस्तथा
प्रादात्पूष्णश्च दशनान्पुनर्यज्ञं च पाण्डव २२
ततः सर्वमिदं स्वस्थं बभूव पुनरेव ह
सर्वाणि च हवींष्यस्य देवा भागमकल्पयन् २३
तस्मिन्क्रुद्धेऽभवत्सर्वमस्वस्थं भुवनं विभो
प्रसन्ने च पुनः स्वस्थं स प्रसन्नोऽस्य वीर्यवान् २४
ततस्ते निहताः सर्वे तव पुत्रा महारथाः
अन्ये च बहवः शूराः पाञ्चालाश्च सहानुगाः २५
न तन्मनसि कर्तव्यं न हि तद्द्रौणिना कृतम्
महादेवप्रसादः स कुरु कार्यमनन्तरम् २६

इति श्रीमहाभारते सौप्तिकपर्वणि अष्टादशोऽध्यायः १८

समाप्तं एषीकपर्व

सौप्तिकपर्व समाप्त

# महाभारत
## स्त्रीपर्व

श्रीगणेशाय नमः
ॐ नारायणं नमस्कृत्य नरं चैव नरोत्तमम्
देवीं सरस्वतीं चैव ततो जयमुदीरयेत्

अथ प्रथमोऽध्यायः

जनमेजय उवाच
हते दुर्योधने चैव हते सैन्ये च सर्वशः
धृतराष्ट्रो महाराजः श्रुत्वा किमकरोन्मुने १
तथैव कौरवो राजा धर्मपुत्रो महामनाः
कृपप्रभृतयश्चैव किमकुर्वत ते त्रयः २
अश्वत्थाम्नः श्रुतं कर्म शापश्चान्योन्यकारितः
वृत्तान्तमुत्तरं ब्रूहि यदभाषत सञ्जयः ३
वैशम्पायन उवाच
हते पुत्रशते दीनं छिन्नशाखमिव द्रुमम्
पुत्रशोकाभिसंतप्तं धृतराष्ट्रं महीपतिम् ४
ध्यानमूकत्वमापन्नं चिन्तया समभिप्लुतम्
अभिगम्य महाप्राज्ञः सञ्जयो वाक्यमब्रवीत् ५
किं शोचसि महाराज नास्ति शोके सहायता
अक्षौहिण्यो हताश्चाष्टौ दश चैव विशां पते
निर्जनेयं वसुमती शून्या संप्रति केवला ६
नानादिग्भ्यः समागम्य नानादेश्या नराधिपाः
सहितास्तव पुत्रेण सर्वे वै निधनं गताः ७
पितॄणां पुत्रपौत्राणां ज्ञातीनां सुहृदां तथा
गुरूणां चानुपूर्व्येण प्रेतकार्याणि कारय ८
वैशम्पायन उवाच
तच्छ्रुत्वा करुणं वाक्यं पुत्रपौत्रवधार्दितः

पपात भुवि दुर्धर्षो वाताहत इव द्रुमः ९
धृतराष्ट्र उवाच
हतपुत्रो हतामात्यो हतसर्वसुहृज्जनः
दुःखं नूनं भविष्यामि विचरन्पृथिवीमिमाम् १०
किं नु बन्धुविहीनस्य जीवितेन ममाद्य वै
लूनपक्षस्य इव मे जराजीर्णस्य पक्षिणः ११
हृतराज्यो हतसुहृद्धतचक्षुश्च वै तथा
न भ्राजिष्ये महाप्राज्ञ क्षीणरश्मिरिवांशुमान् १२
न कृतं सुहृदो वाक्यं जामदग्न्यस्य जल्पतः
नारदस्य च देवर्षेः कृष्णद्वैपायनस्य च १३
सभामध्ये तु कृष्णेन यच्छ्रेयोऽभिहितं मम
अलं वैरेण ते राजन्पुत्रः संगृह्यतामिति १४
तच्च वाक्यमकृत्वाहं भृशं तप्यामि दुर्मतिः
न हि श्रोतास्मि भीष्मस्य धर्मयुक्तं प्रभाषितम् १५
दुर्योधनस्य च तथा वृषभस्येव नर्दतः
दुःशासनवधं श्रुत्वा कर्णस्य च विपर्ययम्
द्रोणसूर्योपरागं च हृदयं मे विदीर्यते १६
न स्मराम्यात्मनः किञ्चित्पुरा सञ्जय दुष्कृतम्
यस्येदं फलमद्येह मया मूढेन भुज्यते १७
नूनं ह्यपकृतं किञ्चिन्मया पूर्वेषु जन्मसु
येन मां दुःखभागेषु धाता कर्मसु युक्तवान् १८
परिणामश्च वयसः सर्वबन्धुक्षयश्च मे
सुहृन्मित्रविनाशश्च दैवयोगादुपागतः
कोऽन्योऽस्ति दुःखिततरो मया लोके पुमानिह १९
तन्मामद्यैव पश्यन्तु पाण्डवाः संशितव्रतम्
निवृतं ब्रह्मलोकस्य दीर्घमध्वानमास्थितम् २०
वैशम्पायन उवाच
तस्य लालप्यमानस्य बहुशोकं विचिन्वतः
शोकापहं नरेन्द्रस्य सञ्जयो वाक्यमब्रवीत् २१
शोकं राजन्व्यपनुद श्रुतास्ते वेदनिश्चयाः

शास्त्रागमाश्च विविधा वृद्धेभ्यो नृपसत्तम
सृञ्जये पुत्रशोकार्ते यदूचुर्मुनयः पुरा २२
तथा यौवनजं दर्पमास्थिते ते सुते नृप
न त्वया सुहृदां वाक्यं ब्रुवतामवधारितम्
स्वार्थश्च न कृतः कश्चिल्लुब्धेन फलगृद्धिना २३
तव दुःशासनो मन्त्री राधेयश्च दुरात्मवान्
शकुनिश्चैव दुष्टात्मा चित्रसेनश्च दुर्मतिः
शल्यश्च येन वै सर्वं शल्यभूतं कृतं जगत् २४
कुरुवृद्धस्य भीष्मस्य गान्धार्या विदुरस्य च
न कृतं वचनं तेन तव पुत्रेण भारत २५
न धर्मः सत्कृतः कश्चिन्नित्यं युद्धमिति ब्रुवन्
क्षपिताः क्षत्रियाः सर्वे शत्रूणां वर्धितं यशः २६
मध्यस्थो हि त्वमप्यासीर्न क्षमं किञ्चिदुक्तवान्
धूर्धरेण त्वया भारस्तुलया न समं धृतः २७
आदावेव मनुष्येण वर्तितव्यं यथा क्षमम्
यथा नातीतमर्थं वै पश्चात्तापेन युज्यते २८
पुत्रगृद्ध्या त्वया राजन्प्रियं तस्य चिकीर्षता
पश्चात्तापमिदं प्राप्तं न त्वं शोचितुमर्हसि २९
मधु यः केवलं दृष्ट्वा प्रपातं नानुपश्यति
स भ्रष्टो मधुलोभेन शोचत्येव यथा भवान् ३०
अर्थान्न शोचन्प्राप्नोति न शोचन्विन्दते सुखम्
न शोचञ्श्रियमाप्नोति न शोचन्विन्दते परम् ३१
स्वयमुत्पादायित्वाग्निं वस्त्रेण परिवेष्टयेत्
दह्यमानो मनस्तापं भजते न स पण्डितः ३२
त्वयैव ससुतेनायं वाक्यवायुसमीरितः
लोभाज्येन च संसिक्तो ज्वलितः पार्थपावकः ३३
तस्मिन्समिद्धे पतिताः शलभा इव ते सुताः
तान्केशवार्चिर्निर्दग्धान्न त्वं शोचितुमर्हसि ३४
यच्चाश्रुपातकलिलं वदनं वहसे नृप
अशास्त्रदृष्टमेतद्धि न प्रशंसन्ति पण्डिताः ३५

विस्फुलिङ्गा इव ह्येतान्दहन्ति किल मानवान्
जहीहि मन्युं बुद्ध्या वै धारयात्मानमात्मना ३६
एवमाश्वासितस्तेन सञ्जयेन महात्मना
विदुरो भूय एवाह बुद्धिपूर्वं परंतप ३७
इति श्रीमहाभारते स्त्रीपर्वणि प्रथमोऽध्यायः १

द्वितीयोऽध्यायः

वैशम्पायन उवाच
ततोऽमृतसमैर्वाक्यैर्ह्लादयन्पुरुषर्षभम्
वैचित्रवीर्यं विदुरो यदुवाच निबोध तत् १
विदुर उवाच
उत्तिष्ठ राजन्किं शेषे धारयात्मानमात्मना
स्थिरजङ्गममर्त्यानां सर्वेषामेष निर्णयः २
सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः
संयोगा विप्रयोगान्ता मरणान्तं हि जीवितम् ३
यदा शूरं च भीरुं च यमः कर्षति भारत
तत्किं न योत्स्यन्ति हि ते क्षत्रियाः क्षत्रियर्षभ ४
अयुध्यमानो म्रियते युध्यमानश्च जीवति
कालं प्राप्य महाराज न कश्चिदतिवर्तते ५
न चाप्येतान्हतान्युद्धे राजञ्शोचितुमर्हसि
प्रमाणं यदि शास्त्राणि गतास्ते परमां गतिम् ६
सर्वे स्वाध्यायवन्तो हि सर्वे च चरितव्रताः
सर्वे चाभिमुखाः क्षीणास्तत्र का परिवेदना ७
अदर्शनादापतिताः पुनश्चादर्शनं गताः
न ते तव न तेषां त्वं तत्र का परिदेवना ८
हतोऽपि लभते स्वर्गं हत्वा च लभते यशः
उभयं नो बहुगुणं नास्ति निष्फलता रणे ९
तेषां कामदुघाँल्लोकानिन्द्रः संकल्पयिष्यति
इन्द्रस्यातिथयो ह्येते भवन्ति पुरुषर्षभ १०
न यज्ञैर्दक्षिणावद्भिर्न तपोभिर्न विद्यया

स्वर्गं यान्ति तथा मर्त्या यथा शूरा रणे हताः ११
मातापितृसहस्राणि पुत्रदारशतानि च
संसारेष्वनुभूतानि कस्य ते कस्य वा वयम् १२
शोकस्थानसहस्राणि भयस्थानशतानि च
दिवसे दिवसे मूढमाविशन्ति न पण्डितम् १३
न कालस्य प्रियः कश्चिन्न द्वेष्यः कुरुसत्तम
न मध्यस्थः क्वचित्कालः सर्वं कालः प्रकर्षति १४
अनित्यं जीवितं रूपं यौवनं द्रव्यसंचयः
आरोग्यं प्रियसंवासो गृध्येदेषु न पण्डितः १५
न जानपदिकं दुःखमेकः शोचितुमर्हसि
अप्यभावेन युज्येत तच्चास्य न निवर्तते १६
अशोचन्प्रतिकुर्वीत यदि पश्येत्पराक्रमम्
भैषज्यमेतद्दुःखस्य यदेतन्नानुचिन्तयेत्
चिन्त्यमानं हि न व्येति भूयश्चापि विवर्धते १७
अनिष्टसम्प्रयोगाच्च विप्रयोगात्प्रियस्य च
मनुष्या मानसैर्दुःखैर्युज्यन्ते येऽल्पबुद्धयः १८
नार्थो न धर्मो न सुखं यदेतदनुशोचसि
न च नापैति कार्योर्थात्त्रिवर्गाच्चैव भ्रश्यते १९
अन्यामन्यां धनावस्थां प्राप्य वैशेषिकीं नराः
असंतुष्टाः प्रमुह्यन्ति संतोषं यान्ति पण्डिताः २०
प्रज्ञया मानसं दुःखं हन्याच्छारीरमौषधैः
एतज्ज्ञानस्य सामर्थ्यं न बालैः समतामियात् २१
शयानं चानुशयति तिष्ठन्तं चानुतिष्ठति
अनुधावति धावन्तं कर्म पूर्वकृतं नरम् २२
यस्यां यस्यामवस्थायां यत्करोति शुभाशुभम्
तस्यां तस्यामवस्थायां तत्तत्फलमुपाश्नुते २३
इति श्रीमहाभारते स्त्रीपर्वणि द्वितीयोऽध्यायः २

तृतीयोऽध्यायः

धृतराष्ट्र उवाच

सुभाषितैर्महाप्राज्ञ शोकोऽय विगतो मम
भूय एव तु वाक्यानि श्रोतुमिच्छामि तत्त्वतः १
अनिष्टानां च संसर्गादिष्टानां च विवर्जनात्
कथं हि मानसैर्दुःखैः प्रमुच्यन्तेऽत्र पण्डिताः २
विदुर उवाच
यतो यतो मनो दुःखात्सुखाद्वापि प्रमुच्यते
ततस्ततः शमं लब्ध्वा सुगतिं विन्दते बुधः ३
अशाश्वतमिदं सर्वं चिन्त्यमानं नरर्षभ
कदलीसंनिभो लोकः सारो ह्यस्य न विद्यते ४
गृहाण्येव हि मर्त्यानामाहुर्देहानि पण्डिताः
कालेन विनियुज्यन्ते सत्त्वमेकं तु शोभनम् ५
यथा जीर्णमजीर्णं वा वस्त्रं त्यक्त्वा तु वै नरः
अन्यद्रोचयते वस्त्रमेवं देहाः शरीरिणाम् ६
वैचित्रवीर्य वासं हि दुःखं वा यदि वा सुखम्
प्राप्नुवन्तीह भूतानि स्वकृतेनैव कर्मणा ७
कर्मणा प्राप्यते स्वर्गं सुखं दुःखं च भारत
ततो वहति तं भारमवशः स्ववशोऽपि वा ८
यथा च मृन्मयं भाण्डं चक्रारूढं विपद्यते
किञ्चित्प्रक्रियमाणं वा कृतमात्रमथापि वा ९
छिन्नं वाप्यवरोप्यन्तमवतीर्णमथापि वा
आर्द्रं वाप्यथ वा शुष्कं पच्यमानमथापि वा १०
अवतार्यमाणमापाकादुद्धृतं वापि भारत
अथ वा परिभुज्यन्तमेवं देहाः शरीरिणाम् ११
गर्भस्थो वा प्रसूतो वाप्यथ वा दिवसान्तरः
अर्धमासगतो वापि मासमात्रगतोऽपि वा १२
संवत्सरगतो वापि द्विसंवत्सर एव वा
यौवनस्थोऽपि मध्यस्थो वृद्धो वापि विपद्यते १३
प्राक्कर्मभिस्तु भूतानि भवन्ति न भवन्ति च
एवं सांसिद्धिके लोके किमर्थमनुतप्यसे १४
यथा च सलिले राजन्क्रीडार्थमनुसंचरन्

उन्मज्जेच्च निमज्जेच्च किञ्चित्सत्त्वं नराधिप १५
एवं संसारगहनादुन्मज्जननिमज्जनात्
कर्मभोगेन बध्यन्तः क्लिश्यन्ते येऽल्पबुद्धयः १६
ये तु प्राज्ञाः स्थिताः सत्ये संसारान्तगवेषिणः
समागमज्ञा भूतानां ते यान्ति परमां गतिम् १७
इति श्रीमहाभारते स्त्रीपर्वणि तृतीयोऽध्यायः ३

## चतुर्थोऽध्यायः

धृतराष्ट्र उवाच
कथं संसारगहनं विज्ञेयं वदतां वर
एतदिच्छाम्यहं श्रोतुं तत्त्वमाख्याहि पृच्छतः १
विदुर उवाच
जन्मप्रभृति भूतानां क्रियाः सर्वाः शृणु प्रभो
पूर्वमेवेह कलिले वसते किञ्चिदन्तरम् २
ततः स पञ्चमेऽतीते मासे मांसं प्रकल्पयेत्
ततः सर्वाङ्गसंपूर्णो गर्भो मासे प्रजायते ३
अमेध्यमध्ये वसति मांसशोणितलेपने
ततस्तु वायुवेगेन ऊर्ध्वपादो ह्यधःशिराः ४
योनिद्वारमुपागम्य बहून्क्लेशान्समृच्छति
योनिसंपीडनाच्चैव पूर्वकर्मभिरन्वितः ५
तस्मान्मुक्तः स संसारादन्यान्पश्यत्युपद्रवान्
ग्रहास्तमुपसर्पन्ति सारमेया इवामिषम् ६
ततः प्राप्तोत्तरे काले व्याधयश्चापि तं तथा
उपसर्पन्ति जीवन्तं बध्यमानं स्वकर्मभिः ७
बद्धमिन्द्रियपाशैस्तं सङ्गस्वादुभिरातुरम्
व्यसनान्युपवर्तन्ते विविधानि नराधिप
बध्यमानश्च तैर्भूयो नैव तृप्तिमुपैति सः ८
अयं न बुध्यते तावद्यमलोकमथागतम्
यमदूतैर्विकृष्यंश्च मृत्युं कालेन गच्छति ९
वाग्घीनस्य च यन्मात्रमिष्टानिष्टं कृतं मुखे

भूय एवात्मनात्मानं बध्यमानमुपेक्षते १०
अहो विनिकृतो लोको लोभेन च वशीकृतः
लोभक्रोधमदोन्मत्तो नात्मानमवबुध्यते ११
कुलीनत्वेन रमते दुष्कुलीनान्विकुत्सयन्
धनदर्पेण दृप्तश्च दरिद्रान्परिकुत्सयन् १२
मूर्खानिति परानाह नात्मानं समवेक्षते
शिक्षां क्षिपति चान्येषां नात्मानं शास्तुमिच्छति १३
अध्रुवे जीवलोकेऽस्मिन्यो धर्ममनुपालयन्
जन्मप्रभृति वर्तेत प्राप्नुयात्परमां गतिम् १४
एवं सर्वं विदित्वा वै यस्तत्त्वमनुवर्तते
स प्रमोक्षाय लभते पन्थानं मनुजाधिप १५
इति श्रीमहाभारते स्त्रीपर्वणि चतुर्थोऽध्यायः ४

## पञ्चमोऽध्यायः

धृतराष्ट्र उवाच
यदिदं धर्मगहनं बुद्ध्या समनुगम्यते
एतद्विस्तरशः सर्वं बुद्धिमार्गं प्रशंस मे १
विदुर उवाच
अत्र ते वर्तयिष्यामि नमस्कृत्वा स्वयंभुवे
यथा संसारगहनं वदन्ति परमर्षयः २
कश्चिन्महति संसारे वर्तमानो द्विजः किल
वनं दुर्गमनुप्राप्तो महत्क्रव्यादसंकुलम् ३
सिंहव्याघ्रगजाकारैरतिघोरैर्महाशनैः
समन्तात्संपरिक्षिप्तं मृत्योरपि भयप्रदम् ४
तदस्य दृष्ट्वा हृदयमुद्वेगमगमत्परम्
अभ्युच्छ्रयश्च रोम्णां वै विक्रियाश्च परंतप ५
स तद्वनं व्यनुसरन्विप्रधावन्नितस्ततः
वीक्षमाणो दिशः सर्वाः शरणं क्व भवेदिति ६
स तेषां छिद्रमन्विच्छन्प्रद्रुतो भयपीडितः
न च निर्याति वै दूरं न च तैर्विप्रयुज्यते ७

अथापश्यद्वनं घोरं समन्ताद्वागुरावृतम्
बाहुभ्यां सम्परिष्वक्तं स्त्रिया परमघोरया ८
पञ्चशीर्षधरैर्नागैः शैलैरिव समुन्नतैः
नभःस्पृशैर्महावृक्षैः परिक्षिप्तं महावनम् ९
वनमध्ये च तत्राभूदुदपानः समावृतः
वल्लीभिस्तृणछन्नाभिर्गूढाभिरभिसंवृतः १०
पपात स द्विजस्तत्र निगूढे सलिलाशये
विलग्नश्चाभवत्तस्मिँल्लतासंतानसंकटे ११
पनसस्य यथा जातं वृन्तबद्धं महाफलम्
स तथा लम्बते तत्र ऊर्ध्वपादो ह्यधःशिराः १२
अथ तत्रापि चान्योऽस्य भूयो जात उपद्रवः
कूपवीनाहवेलायामपश्यत महागजम् १३
षड्वक्त्रं कृष्णशबलं द्विषट्कपदचारिणम्
क्रमेण परिसर्पन्तं वल्लीवृक्षसमावृतम् १४
तस्य चापि प्रशाखासु वृक्षशाखावलम्बिनः
नानारूपा मधुकरा घोररूपा भयावहाः
आसते मधु संभृत्य पूर्वमेव निकेतजाः १५
भूयो भूयः समीहन्ते मधूनि भरतर्षभ
स्वादनीयानि भूतानां न यैर्बालोऽपि तृप्यते १६
तेषां मधूनां बहुधा धारा प्रस्रवते सदा
तां लम्बमानः स पुमान्धारां पिबति सर्वदा
न चास्य तृष्णा विरता पिबमानस्य संकटे १७
अभीप्सति च तां नित्यमतृप्तः स पुनः पुनः
न चास्य जीविते राजन्निर्वेदः समजायत १८
तत्रैव च मनुष्यस्य जीविताशा प्रतिष्ठिता
कृष्णाः श्वेताश्च तं वृक्षं कुट्टयन्ति स्म मूषकाः १९
व्यालैश्च वनदुर्गान्ते स्त्रिया च परमोग्रया
कूपाधस्ताच्च नागेन वीनाहे कुञ्जरेण च २०
वृक्षप्रपाताच्च भयं मूषकेभ्यश्च पञ्चमम्
मधुलोभान्मधुकरैः षष्ठमाहुर्महद्भयम् २१

एवं स वसते तत्र क्षिप्तः संसारसागरे
न चैव जीविताशायां निर्वेदमुपगच्छति २२
इति श्रीमहाभारते स्त्रीपर्वणि पञ्चमोऽध्यायः ५

षष्ठोऽध्यायः

धृतराष्ट्र उवाच
अहो खलु महद्दुःखं कृच्छ्रवासं वसत्यसौ
कथं तस्य रतिस्तत्र तुष्टिर्वा वदतां वर १
स देशः क्व नु यत्रासौ वसते धर्मसंकटे
कथं वा स विमुच्येत नरस्तस्मान्महाभयात् २
एतन्मे सर्वमाचक्ष्व साधु चेष्टामहे तथा
कृपा मे महती जाता तस्याभ्युद्धरणेन हि ३
विदुर उवाच
उपमानमिदं राजन्मोक्षविद्भिरुदाहृतम्
सुगतिं विन्दते येन परलोकेषु मानवः ४
यत्तदुच्यति कान्तारं महत्संसार एव सः
वनं दुर्गं हि यत्त्वेतत्संसारगहनं हि तत् ५
ये च ते कथिता व्याला व्याधयस्ते प्रकीर्तिताः
या सा नारी बृहत्काया अधितिष्ठति तत्र वै
तामाहुस्तु जरां प्राज्ञा वर्णरूपविनाशिनीम् ६
यस्तत्र कूपो नृपते स तु देहः शरीरिणाम्
यस्तत्र वसतेऽधस्तान्महाहिः काल एव सः
अन्तकः सर्वभूतानां देहिनां सर्वहार्यसौ ७
कूपमध्ये च या जाता वल्ली यत्र स मानवः
प्रताने लम्बते सा तु जीविताशा शरीरिणाम् ८
स यस्तु कूपवीनाहे तं वृक्षं परिसर्पति
षड्वक्त्रः कुञ्जरो राजन्स तु संवत्सरः स्मृतः
मुखानि ऋतवो मासाः पादा द्वादश कीर्तिताः ९
ये तु वृक्षं निकृन्तन्ति मूषकाः सततोत्थिताः
रात्र्यहानि तु तान्याहुर्भूतानां परिचिन्तकाः

ये ते मधुकरास्तत्र कामास्ते परिकीर्तिताः १०
यास्तु ता बहुशो धाराः स्रवन्ति मधुनिस्रवम्
तांस्तु कामरसान्विद्याद्यत्र मज्जन्ति मानवाः ११
एवं संसारचक्रस्य परिवृत्तिं स्म ये विदुः
ते वै संसारचक्रस्य पाशांश्छिन्दन्ति वै बुधाः १२
इति श्रीमहाभारते स्त्रीपर्वणि षष्ठोऽध्यायः ६

सप्तमोऽध्यायः

धृतराष्ट्र उवाच
अहोऽभिहितमाख्यानं भवता तत्त्वदर्शिना
भूय एव तु मे हर्षः श्रोतुं वागमृतं तव १
विदुर उवाच
शृणु भूयः प्रवक्ष्यामि मार्गस्यैतस्य विस्तरम्
यच्छ्रुत्वा विप्रमुच्यन्ते संसारेभ्यो विचक्षणाः २
यथा तु पुरुषो राजन्दीर्घमध्वानमास्थितः
क्वचित्क्वचिच्छ्रमात्स्थाता कुरुते वासमेव वा ३
एवं संसारपर्याये गर्भवासेषु भारत
कुर्वन्ति दुर्बुधा वासं मुच्यन्ते तत्र पण्डिताः ४
तस्मादध्वानमेवैतमाहुः शास्त्रविदो जनाः
यत्तु संसारगहनं वनमाहुर्मनीषिणः ५
सोऽय लोकसमावर्तो मर्त्यानां भरतर्षभ
चराणां स्थावराणां च गृध्येत्तत्र न पण्डितः ६
शारीरा मानसाश्चैव मर्त्यानां ये तु व्याधयः
प्रत्यक्षाश्च परोक्षाश्च ते व्यालाः कथिता बुधैः ७
क्लिश्यमानाश्च तैर्नित्यं हन्यमानाश्च भारत
स्वकर्मभिर्महाव्यालैर्नोद्विजन्त्यल्पबुद्धयः ८
अथापि तैर्विमुच्येत व्याधिभिः पुरुषो नृप
आवृणोत्येव तं पश्चाज्जरा रूपविनाशिनी ९
शब्दरूपरसस्पर्शैर्गन्धैश्च विविधैरपि
मज्जमानं महापङ्के निरालम्बे समन्ततः १०

संवत्सरर्तवो मासाः पक्षाहोरात्रसंधयः
क्रमेणास्य प्रलुम्पन्ति रूपमायुस्तथैव च ११
एते कालस्य निधयो नैताञ्जानन्ति दुर्बुधाः
अत्राभिलिखितान्याहुः सर्वभूतानि कर्मणा १२
रथं शरीरं भूतानां तत्त्वमाहुस्तु सारथिम्
इन्द्रियाणि हयानाहुः कर्मबुद्धिश्च रश्मयः १३
तेषां हयानां यो वेगं धावतामनुधावति
स तु संसारचक्रेऽस्मिंश्चक्रवत्परिवर्तते १४
यस्तान्यमयते बुद्ध्या स यन्ता न निवर्तते
याम्यमाहू रथं ह्येनं मुह्यन्ते येन दुर्बुधाः १५
स चैतत्प्राप्नुते राजन्यत्त्वं प्राप्तो नराधिप
राज्यनाशं सुहृन्नाशं सुतनाशं च भारत १६
अनुतर्षुलमेवैतद्दुःखं भवति भारत
साधुः परमदुःखानां दुःखभैषज्यमाचरेत् १७
न विक्रमो न चाप्यर्थो न मित्रं न सुहृज्जनः
तथोन्मोचयते दुःखाद्यथात्मा स्थिरसंयमः १८
तस्मान्मैत्रं समास्थाय शीलमापद्य भारत
दमस्त्यागोऽप्रमादश्च ते त्रयो ब्रह्मणो हयाः १९
शीलरश्मिसमायुक्ते स्थितो यो मानसे रथे
त्यक्त्वा मृत्युभयं राजन्ब्रह्मलोकं स गच्छति २०
इति श्रीमहाभारते स्त्रीपर्वणि सप्तमोऽध्यायः ७

अष्टमोऽध्यायः

वैशम्पायन उवाच
विदुरस्य तु तद्वाक्यं निशम्य कुरुसत्तमः
पुत्रशोकाभिसंतप्तः पपात भुवि मूर्छितः १
तं तथा पतितं भूमौ निःसंज्ञं प्रेक्ष्य बान्धवाः
कृष्णद्वैपायनश्चैव क्षत्ता च विदुरस्तथा २
सञ्जयः सुहृदश्चान्ये द्वाःस्था ये चास्य संमताः
जलेन सुखशीतेन तालवृन्तैश्च भारत ३

पस्पृशुश्च करैर्गात्रं वीजमानाश्च यत्नतः
अन्वासन्सुचिरं कालं धृतराष्ट्रं तथागतम् ४
अथ दीर्घस्य कालस्य लब्धसंज्ञो महीपतिः
विललाप चिरं कालं पुत्राधिभिरभिप्लुतः ५
धिगस्तु खलु मानुष्यं मानुष्ये च परिग्रहम्
यतोमूलानि दुःखानि संभवन्ति मुहुर्मुहुः ६
पुत्रनाशेऽथनाशे च ज्ञातिसंबन्धिनामपि
प्राप्यते सुमहद्दुःखं विषाग्निप्रतिमं विभो ७
येन दह्यन्ति गात्राणि येन प्रज्ञा विनश्यति
येनाभिभूतः पुरुषो मरणं बहु मन्यते ८
तदिदं व्यसनं प्राप्तं मया भाग्यविपर्ययात्
तच्चैवाहं करिष्यामि अद्यैव द्विजसत्तम ९
इत्युक्त्वा तु महात्मानं पितरं ब्रह्मवित्तमम्
धृतराष्ट्रोऽभवन्मूढः शोकं च परमं गतः
अभूच्च तूष्णीं राजासौ ध्यायमानो महीपते १०
तस्य तद्वचनं श्रुत्वा कृष्णद्वैपायनः प्रभुः
पुत्रशोकाभिसंतप्तं पुत्रं वचनमब्रवीत् ११
धृतराष्ट्र महाबाहो यत्त्वां वक्ष्यामि तच्छृणु
श्रुतवानसि मेधावी धर्मार्थकुशलस्तथा १२
न तेऽस्त्यविदितं किंचिद्वेदितव्यं परंतप
अनित्यतां हि मर्त्यानां विजानासि न संशयः १३
अध्रुवे जीवलोके च स्थाने वाशाश्वते सति
जीविते मरणान्ते च कस्माच्छोचसि भारत १४
प्रत्यक्षं तव राजेन्द्र वैरस्यास्य समुद्भवः
पुत्रं ते कारणं कृत्वा कालयोगेन कारितः १५
अवश्यं भवितव्ये च कुरूणां वैशसे नृप
कस्माच्छोचसि ताञ्शूरान्गतान्परमिकां गतिम् १६
जानता च महाबाहो विदुरेण महात्मना
यतितं सर्वयत्नेन शमं प्रति जनेश्वर १७
न च दैवकृतो मार्गः शक्यो भूतेन केनचित्

घटतापि चिरं कालं नियन्तुमिति मे मतिः १८
देवतानां हि यत्कार्यं मया प्रत्यक्षतः श्रुतम्
तत्तेऽह संप्रवक्ष्यामि कथं स्थैर्यं भवेत्तव १९
पुराहं त्वरितो यातः सभामैन्द्रीं जितक्लमः
अपश्यं तत्र च तदा समवेतान्दिवौकसः
नारदप्रमुखांश्चापि सर्वान्देवऋषींस्तथा २०
तत्र चापि मया दृष्टा पृथिवी पृथिवीपते
कार्यार्थमुपसम्प्राप्ता देवतानां समीपतः २१
उपगम्य तदा धात्री देवानाह समागतान्
यत्कार्यं मम युष्माभिर्ब्रह्मणः सदने तदा
प्रतिज्ञातं महाभागास्तच्छीघ्रं संविधीयताम् २२
तस्यास्तद्वचनं श्रुत्वा विष्णुर्लोकनमस्कृतः
उवाच प्रहसन्वाक्यं पृथिवीं देवसंसदि २३
धृतराष्ट्रस्य पुत्राणां यस्तु ज्येष्ठः शतस्य वै
दुर्योधन इति ख्यातः स ते कार्यं करिष्यति
तं च प्राप्य महीपालं कृतकृत्या भविष्यसि २४
तस्यार्थे पृथिवीपालाः कुरुक्षेत्रे समागताः
अन्योन्यं घातयिष्यन्ति दृढैः शस्त्रैः प्रहारिणः २५
ततस्ते भविता देवि भारस्य युधि नाशनम्
गच्छ शीघ्रं स्वकं स्थानं लोकान्धारय शोभने २६
स एष ते सुतो राजँल्लोकसंहारकारणात्
कलेरंशः समुत्पन्नो गान्धार्या जठरे नृप २७
अमर्षी चपलश्चापि क्रोधनो दुष्प्रसाधनः
दैवयोगात्समुत्पन्ना भ्रातरश्चास्य तादृशाः २८
शकुनिर्मातुलश्चैव कर्णश्च परमः सखा
समुत्पन्ना विनाशार्थं पृथिव्यां सहिता नृपाः
एतमर्थं महाबाहो नारदो वेद तत्त्वतः २९
आत्मापराधात्पुत्रास्ते विनष्टाः पृथिवीपते
मा ताञ्शोचस्व राजेन्द्र न हि शोकेऽस्ति कारणम् ३०
न हि ते पाण्डवाः स्वल्पमपराध्यन्ति भारत

पुत्रास्तव दुरात्मानो यैरियं घातिता मही ३१
नारदेन च भद्रं ते पूर्वमेव न संशयः
युधिष्ठिरस्य समितौ राजसूये निवेदितम् ३२
पाण्डवाः कौरवाश्चैव समासाद्य परस्परम्
न भविष्यन्ति कौन्तेय यत्ते कृत्यं तदाचर ३३
नारदस्य वचः श्रुत्वा तदाशोचन्त पाण्डवाः
एतत्ते सर्वमाख्यातं देवगुह्यं सनातनम् ३४
कथं ते शोकनाशः स्यात्प्राणेषु च दया प्रभो
स्नेहश्च पाण्डुपुत्रेषु ज्ञात्वा दैवकृतं विधिम् ३५
एष चार्थो महाबाहो पूर्वमेव मया श्रुतः
कथितो धर्मराजस्य राजसूये क्रतूत्तमे ३६
यतितं धर्मपुत्रेण मया गुह्ये निवेदिते
अविग्रहे कौरवाणां दैवं तु बलवत्तरम् ३७
अनतिक्रमणीयो हि विधी राजन्कथंचन
कृतान्तस्य हि भूतेन स्थावरेण त्रसेन च ३८
भवान्कर्मपरो यत्र बुद्धिश्रेष्ठश्च भारत
मुह्यते प्राणिनां ज्ञात्वा गतिं चागतिमेव च ३९
त्वां तु शोकेन संतप्तं मुह्यमानं मुहुर्मुहुः
ज्ञात्वा युधिष्ठिरो राजा प्राणानपि परित्यजेत् ४०
कृपालुर्नित्यशो वीरस्तिर्यग्योनिगतेष्वपि
स कथं त्वयि राजेन्द्र कृपां वै न करिष्यति ४१
मम चैव नियोगेन विधेश्चाप्यनिवर्तनात्
पाण्डवानां च कारुण्यात्प्राणान्धारय भारत ४२
एवं ते वर्तमानस्य लोके कीर्तिर्भविष्यति
धर्मश्च सुमहांस्तात तप्तं स्याच्च तपश्चिरात् ४३
पुत्रशोकसमुत्पन्नं हुताशं ज्वलितं यथा
प्रज्ञाम्भसा महाराज निर्वापय सदा सदा ४४
एतच्छ्रुत्वा तु वचनं व्यासस्यामिततेजसः
मुहूर्तं समनुध्याय धृतराष्ट्रोऽभ्यभाषत ४५
महता शोकजालेन प्रणुन्नोऽस्मि द्विजोत्तम

नात्मानमवबुध्यामि मुह्यमानो मुहुर्मुहुः ४६
इदं तु वचनं श्रुत्वा तव दैवनियोगजम्
धारयिष्याम्यहं प्राणान्यतिष्ये च न शोचितुम् ४७
एतच्छ्रुत्वा तु वचनं व्यासः सत्यवतीसुतः
धृतराष्ट्रस्य राजेन्द्र तत्रैवान्तरधीयत ४८
इति श्रीमहाभारते स्त्रीपर्वणि अष्टमोऽध्यायः ८
समाप्तं विशोकपर्व

नवमोऽध्यायः
जनमेजय उवाच
गते भगवति व्यासे धृतराष्ट्रो महीपतिः
किमचेष्टत विप्रर्षे तन्मे व्याख्यातुमर्हसि १
वैशम्पायन उवाच
एतच्छ्रुत्वा नरश्रेष्ठ चिरं ध्यात्वा त्वचेतनः
सञ्जयं योजयेत्युक्त्वा विदुरं प्रत्यभाषत २
क्षिप्रमानय गान्धारीं सर्वाश्च भरतस्त्रियः
वधूं कुन्तीमुपादाय याश्चान्यास्तत्र योषितः ३
एवमुक्त्वा स धर्मात्मा विदुरं धर्मवित्तमम्
शोकविप्रहतज्ञानो यानमेवान्वपद्यत ४
गान्धारी चैव शोकार्ता भर्तुर्वचनचोदिता
सह कुन्त्या यतो राजा सह स्त्रीभिरुपाद्रवत् ५
ताः समासाद्य राजानं भृशं शोकसमन्विताः
आमंत्र्यान्योन्यमीयुः स्म भृशमुच्चुक्रुशुस्ततः ६
ताः समाश्वासयत्क्षत्ता ताभ्यश्चार्ततरः स्वयम्
अश्रुकण्ठीः समारोप्य ततोऽसौ निर्ययौ पुरात् ७
ततः प्रणादः सञ्जज्ञे सर्वेषु कुरुवेश्मसु
आकुमारं पुरं सर्वमभवच्छोककर्शितम् ८
अदृष्टपूर्वा या नार्यः पुरा देवगणैरपि
पृथग्जनेन दृश्यन्त तास्तदा निहतेश्वराः ९
प्रकीर्य केशान्सुशुभान्भूषणान्यवमुच्य च

एकवस्त्रधरा नार्यः परिपेतुरनाथवत् १०
श्वेतपर्वतरूपेभ्यो गृहेभ्यस्तास्त्वपाक्रमन्
गुहाभ्य इव शैलानां पृषत्यो हतयूथपाः ११
तान्युदीर्णानि नारीणां तदा वृन्दान्यनेकशः
शोकार्तान्यद्रवान्राजन्किशोरीणामिवाङ्गने १२
प्रगृह्य बाहून्क्रोशन्त्यः पुत्रान्भ्रातृन्पितृनपि
दर्शयन्तीव ता ह स्म युगान्ते लोकसंक्षयम् १३
विलपन्त्यो रुदन्त्यश्च धावमानास्ततस्ततः
शोकेनाभ्याहतज्ञानाः कर्तव्यं न प्रजज्ञिरे १४
व्रीडां जग्मुः पुरा याः स्म सखीनामपि योषितः
ता एकवस्त्रा निर्लज्ञाः श्वश्रूणां पुरतोऽभवन् १५
परस्परं सुसूक्ष्मेषु शोकेष्वाश्वासयन्स्म याः
ताः शोकविह्वला राजन्नुपैक्षन्त परस्परम् १६
ताभिः परिवृतो राजा रुदतीभिः सहस्रशः
निर्ययौ नगराद्दीनस्तूर्णमायोधनं प्रति १७
शिल्पिनो वणिजो वैश्याः सर्वकर्मोपजीविनः
ते पार्थिवं पुरस्कृत्य निर्ययुर्नगराद्बहिः १८
तासां विक्रोशमनानामार्तानां कुरुसंक्षये
प्रादुरासीन्महाञ्शब्दो व्यथयन्भुवनान्युत १९
युगान्तकाले संप्राप्ते भूतानां दह्यतामिव
अभावः स्यादयं प्राप्त इति भूतानि मेनिरे २०
भृशमुद्विग्नमनसस्ते पौराः कुरुसंक्षये
प्राक्रोशन्त महाराज स्वनुरक्तास्तदा भृशम् २१
इति श्रीमहाभारते स्त्रीपर्वणि नवमोऽध्यायः ९

दशमोऽध्यायः

वैशम्पायन उवाच
क्रोशमात्रं ततो गत्वा ददृशुस्तान्महारथान्
शारद्वतं कृपं द्रौणिं कृतवर्माणमेव च १
ते तु दृष्ट्वैव राजानं प्रज्ञाचक्षुषमीश्वरम्

अश्रुकण्ठा विनिःश्वस्य रुदन्तमिदमब्रुवन् २
पुत्रस्तव महाराज कृत्वा कर्म सुदुष्करम्
गतः सानुचरो राजञ्शक्रलोकं महीपतिः ३
दुर्योधनबलान्मुक्ता वयमेव त्रयो रथाः
सर्वमन्यत्परिक्षीणं सैन्यं ते भरतर्षभ ४
इत्येवमुक्त्वा राजानं कृपः शारद्वतस्तदा
गान्धारीं पुत्रशोकार्तामिदं वचनमब्रवीत् ५
अभीता युध्यमानास्ते घ्नन्तः शत्रुगणान्बहून्
वीरकर्माणि कुर्वाणाः पुत्रास्ते निधनं गताः ६
ध्रुवं संप्राप्य लोकांस्ते निर्मलाञ्शस्त्रनिर्जितान्
भास्वरं देहमास्थाय विहरन्त्यमरा इव ७
न हि कश्चिद्धि शूराणां युध्यमानः पराङ्मुखः
शस्त्रेण निधनं प्राप्तो न च कश्चित्कृताञ्जलि ८
एतां तां क्षत्रियस्याहुः पुराणां परमां गतिम्
शस्त्रेण निधनं संख्ये तान्न शोचितुमर्हसि ९
न चापि शत्रवस्तेषामृध्यन्ते राज्ञि पाण्डवाः
शृणु यत्कृतमस्माभिरश्वत्थामपुरोगमैः १०
अधर्मेण हतं श्रुत्वा भीमसेनेन ते सुतम्
सुप्तं शिबिरमाविश्य पाण्डूनां कदनं कृतम् ११
पाञ्चाला निहताः सर्वे धृष्टद्युम्नपुरोगमाः
द्रुपदस्यात्मजाश्चैव द्रौपदेयाश्च पातिताः १२
तथा विशसनं कृत्वा पुत्रशत्रुगणस्य ते
प्राद्रवाम रणे स्थातुं न हि शक्यामहे त्रयः १३
ते हि शूरा महेष्वासाः क्षिप्रमेष्यन्ति पाण्डवाः
अमर्षवशमापन्ना वैरं प्रतिजिहीर्षवः १४
निहतानात्मजाञ्श्रुत्वा प्रमत्तान्पुरुषर्षभाः
निनीषन्तः पदं शूराः क्षिप्रमेव यशस्विनि १५
पाण्डूनां किल्बिषं कृत्वा संस्थातुं नोत्सहामहे
अनुजानीहि नो राज्ञि मा च शोके मनः कृथाः १६
राजंस्त्वमनुजानीहि धैर्यमातिष्ठ चोत्तमम्

निष्ठान्तं पश्य चापि त्वं क्षत्रधर्मं च केवलम् १७
इत्येवमुक्त्वा राजानं कृत्वा चाभिप्रदक्षिणम्
कृपश्च कृतवर्मा च द्रोणपुत्रश्च भारत १८
अवेक्षमाणा राजानं धृतराष्ट्रं मनीषिणम्
गङ्गामनु महात्मानस्तूर्णमश्वानचोदयन् १९
अपक्रम्य तु ते राजन्सर्व एव महारथाः
आमन्त्र्यान्योन्यमुद्विग्नास्त्रिधा ते प्रययुस्ततः २०
जगाम हास्तिनपुरं कृपः शारद्वतस्तदा
स्वमेव राष्ट्रं हार्दिक्यो द्रौणिर्व्यासाश्रमं ययौ २१
एवं ते प्रययुर्वीरा वीक्षमाणाः परस्परम्
भयार्ताः पाण्डुपुत्राणामागस्कृत्वा महात्मनाम् २२
समेत्य वीरा राजानं तदा त्वनुदिते रवौ
विप्रजग्मुर्महाराज यथेच्छकमरिंदमाः २३
इति श्रीमहाभारते स्त्रीपर्वणि दशमोऽध्यायः १०

एकादशोऽध्यायः

वैशम्पायन उवाच
हतेषु सर्वसैन्येषु धर्मराजो युधिष्ठिरः
शुश्रुवे पितरं वृद्धं निर्यातं गजसाह्वयात् १
सोऽभ्ययात्पुत्रशोकार्तः पुत्रशोकपरिप्लुतम्
शोचमानो महाराज भ्रातृभिः सहितस्तदा २
अन्वीयमानो वीरेण दाशार्हेण महात्मना
युयुधानेन च तथा तथैव च युयुत्सुना ३
तमन्वगात्सुदुःखार्ता द्रौपदी शोककर्शिता
सह पाञ्चालयोषिद्भिर्यास्तत्रासन्समागताः ४
स गङ्गामनु वृन्दानि स्त्रीणां भरतसत्तम
कुररीणामिवार्तानां क्रोशन्तीनां ददर्श ह ५
ताभिः परिवृतो राजा रुदतीभिः सहस्रशः
ऊर्ध्वबाहुभिरार्ताभिर्ब्रुवतीभिः प्रियाप्रिये ६
क्व नु धर्मज्ञता राज्ञः क्व नु साद्यानृशंसता

यदावधीत्पितॄन्भ्रातॄन्गुरून्पुत्रान्सखीनपि ७
घातयित्वा कथं द्रोणं भीष्मं चापि पितामहम्
मनस्तेऽभून्महाबाहो हत्वा चापि जयद्रथम् ८
किं नु राज्येन ते कार्यं पितॄन्भ्रातॄनपश्यतः
अभिमन्युं च दुर्धर्षं द्रौपदेयांश्च भारत ९
अतीत्य ता महाबाहुः क्रोशन्तीः कुररीरिव
ववन्दे पितरं ज्येष्ठं धर्मराजो युधिष्ठिरः १०
ततोऽभिवाद्य पितरं धर्मेणामित्रकर्शनाः
न्यवेदयन्त नामानि पाण्डवास्तेऽपि सर्वशः ११
तमात्मजान्तकरणं पिता पुत्रवधार्दितः
अप्रीयमाणः शोकार्तः पाण्डवं परिषस्वजे १२
धर्मराजं परिष्वज्य सान्त्वयित्वा च भारत
दुष्टात्मा भीममन्वैच्छद्दिधक्षुरिव पावकः १३
स कोपपावकस्तस्य शोकवायुसमीरितः
भीमसेनमयं दावं दिधक्षुरिव दृश्यते १४
तस्य संकल्पमाज्ञाय भीमं प्रत्यशुभं हरिः
भीममाक्षिप्य पाणिभ्यां प्रददौ भीममायसम् १५
प्रागेव तु महाबुद्धिर्बुद्ध्वा तस्येङ्गितं हरिः
संविधानं महाप्राज्ञस्तत्र चक्रे जनार्दनः १६
तं तु गृह्यैव पाणिभ्यां भीमसेनमयस्मयम्
बभञ्ज बलवान्राजा मन्यमानो वृकोदरम् १७
नागायुतबलप्राणः स राजा भीममायसम्
भङ्क्त्वा विमथितोरस्कः सुस्राव रुधिरं मुखात् १८
ततः पपात मेदिन्यां तथैव रुधिरोक्षितः
प्रपुष्पिताग्रशिखरः पारिजात इव द्रुमः १९
पर्यगृह्णत तं विद्वान्सूतो गावल्गणिस्तदा
मैवमित्यब्रवीच्चैनं शमयन्सान्त्वयन्निव २०
स तु कोपं समुत्सृज्य गतमन्युर्महामनाः
हा हा भीमेति चुक्रोश भूयः शोकसमन्वितः २१
तं विदित्वा गतक्रोधं भीमसेनवधार्दितम्

वासुदेवो वरः पुंसामिदं वचनमब्रवीत् २२
मा शुचो धृतराष्ट्र त्वं नैष भीमस्त्वया हतः
आयसी प्रतिमा ह्येषा त्वया राजन्निपातिता २३
त्वां क्रोधवशमापन्नं विदित्वा भरतर्षभ
मयापकृष्टः कौन्तेयो मृत्योर्दंष्ट्रान्तरं गतः २४
न हि ते राजशार्दूल बले तुल्योऽस्ति कश्चन
कः सहेत महाबाहो बाह्वोर्निग्रहणं नरः २५
यथान्तकमनुप्राप्य जीवन्कश्चिन्न मुच्यते
एवं बाह्वन्तरं प्राप्य तव जीवेन्न कश्चन २६
तस्मात्पुत्रेण या सा ते प्रतिमा कारितायसी
भीमस्य सेयं कौरव्य तवैवोपहृता मया २७
पुत्रशोकाभिसंतापाद्धर्मादपहृतं मनः
तव राजेन्द्र तेन त्वं भीमसेनं जिघांससि २८
न च ते तत्क्षमं राजन्हन्यास्त्वं यद्वृकोदरम्
न हि पुत्रा महाराज जीवेयुस्ते कथञ्चन २९
तस्माद्यत्कृतमस्माभिर्मन्यमानैः क्षमं प्रति
अनुमन्यस्व तत्सर्वं मा च शोके मनः कृथाः ३०
इति श्रीमहाभारते स्त्रीपर्वणि एकादशोऽध्यायः ११

## द्वादशोऽध्यायः

वैशम्पायन उवाच
तत एनमुपातिष्ठञ्शौचार्थं परिचारकाः
कृतशौचं पुनश्चैनं प्रोवाच मधुसूदनः १
राजन्नधीता वेदास्ते शास्त्राणि विविधानि च
श्रुतानि च पुराणानि राजधर्माश्च केवलाः २
एवं विद्वान्महाप्राज्ञ नाकार्षीर्वचनं तदा
पाण्डवानधिकाञ्जानन्बले शौर्ये च कौरव ३
राजा हि यः स्थिरप्रज्ञः स्वयं दोषानवेक्षते
देशकालविभागं च परं श्रेयः स विन्दति ४
उच्यमानं च यः श्रेयो गृह्णीते नो हिताहिते

आपदं समनुप्राप्य स शोचत्यनये स्थितः ५
ततोऽन्यवृत्तमात्मानं समवेक्षस्व भारत
राजंस्त्वं ह्यविधेयात्मा दुर्योधनवशे स्थितः ६
आत्मापराधादायस्तस्तत्किं भीमं जिघांससि
तस्मात्संयच्छ कोपं त्वं स्वमनुस्मृत्य दुष्कृतम् ७
यस्तु तां स्पर्धया क्षुद्रः पाञ्चालीमानयत्सभाम्
स हतो भीमसेनेन वैरं प्रतिचिकीर्षता ८
आत्मनोऽतिक्रमं पश्य पुत्रस्य च दुरात्मनः
यदनागसि पाण्डूनां परित्यागः परंतप ९
एवमुक्तः स कृष्णेन सर्वं सत्यं जनाधिप
उवाच देवकीपुत्रं धृतराष्ट्रो महीपतिः १०
एवमेतन्महाबाहो यथा वदसि माधव
पुत्रस्नेहस्तु धर्मात्मन्धैर्यान्मां समचालयत् ११
दिष्ट्या तु पुरुषव्याघ्रो बलवान्सत्यविक्रमः
त्वद्गुप्तो नागमत्कृष्ण भीमो बाह्वन्तरं मम १२
इदानीं त्वहमेकाग्रो गतमन्युर्गतज्वरः
मध्यमं पाण्डवं वीरं स्प्रष्टुमिच्छामि केशव १३
हतेषु पार्थिवेन्द्रेषु पुत्रेषु निहतेषु च
पाण्डुपुत्रेषु मे शर्म प्रीतिश्चाप्यवतिष्ठते १४
ततः स भीमं च धनंजयं च माद्र्याश्च पुत्रौ पुरुषप्रवीरौ
पस्पर्श गात्रैः प्ररुदन्सुगात्रानाश्वास्य कल्याणमुवाच चैनान् १५
इति श्रीमहाभारते स्त्रीपर्वणि द्वादशोऽध्यायः १२

## त्रयोदशोऽध्यायः

वैशम्पायन उवाच
धृतराष्ट्राभ्यनुज्ञातास्ततस्ते कुरुपुंगवाः
अभ्ययुर्भ्रातरः सर्वे गान्धारीं सहकेशवाः १
ततो ज्ञात्वा हतामित्रं धर्मराजं युधिष्ठिरम्
गान्धारी पुत्रशोकार्ता शप्तुमैच्छदनिन्दिता २
तस्याः पापमभिप्रायं विदित्वा पाण्डवान्प्रति

ऋषिः सत्यवतीपुत्रः प्रागेव समबुध्यत ३
स गङ्गायामुपस्पृश्य पुण्यगन्धं पयः शुचिः
तं देशमुपसंपेदे परमर्षिर्मनोजवः ४
दिव्येन चक्षुषा पश्यन्मनसानुद्धतेन च
सर्वप्राणभृतां भावं स तत्र समबुध्यत ५
स स्नुषामब्रवीत्काले कल्यवादी महातपाः
शापकालमवाक्षिप्य शमकालमुदीरयन् ६
न कोपः पाण्डवे कार्यो गान्धारि शममाप्नुहि
रजो निगृह्यतामेतच्छृणु चेदं वचो मम ७
उक्तास्यष्टादशाहानि पुत्रेण जयमिच्छता
शिवमाशास्स्व मे मातर्युध्यमानस्य शत्रुभिः ८
सा तथा याच्यमाना त्वं काले काले जयैषिणा
उक्तवत्यसि गान्धारि यतो धर्मस्ततो जयः ९
न चाप्यतीतां गान्धारि वाचं ते वितथामहम्
स्मरामि भाषमाणायास्तथा प्रणिहिता ह्यसि १०
सा त्वं धर्मं परिस्मृत्य वाचा चोक्त्वा मनस्विनि
कोपं संयच्छ गान्धारि मैवं भूः सत्यवादिनि ११
गान्धार्युवाच
भगवन्नाभ्यसूयामि नैतानिच्छामि नश्यतः
पुत्रशोकेन तु बलान्मनो विह्वलतीव मे १२
यथैव कुन्त्या कौन्तेया रक्षितव्यास्तथा मया
यथैव धृतराष्ट्रेण रक्षितव्यास्तथा मया १३
दुर्योधनापराधेन शकुनेः सौबलस्य च
कर्णदुःशासनाभ्यां च वृत्तोऽय कुरुसंक्षयः १४
नापराध्यति बीभत्सुर्न च पार्थो वृकोदरः
नकुलः सहदेवो वा नैव जातु युधिष्ठिरः १५
युध्यमाना हि कौरव्याः कृन्तमानाः परस्परम्
निहताः सहिताश्चान्यैस्तत्र नास्त्यप्रियं मम १६
यत्तु कर्माकरोद्भीमो वासुदेवस्य पश्यतः
दुर्योधनं समाहूय गदायुद्धे महामनाः १७

शिक्षयाभ्यधिकं ज्ञात्वा चरन्तं बहुधा रणे
अधो नाभ्यां प्रहृतवांस्तन्मे कोपमवर्धयत् १८
कथं नु धर्मं धर्मज्ञैः समुद्दिष्टं महात्मभिः
त्यजेयुराहवे शूराः प्राणहेतोः कथंचन १९
इति श्रीमहाभारते स्त्रीपर्वणि त्रयोदशोऽध्यायः १३

## चतुर्दशोऽध्यायः

वैशम्पायन उवाच
तच्छ्रुत्वा वचनं तस्या भीमसेनोऽथ भीतवत्
गान्धारीं प्रत्युवाचेदं वचः सानुनयं तदा १
अधर्मो यदि वा धर्मस्त्रासात्तत्र मया कृतः
आत्मानं त्रातुकामेन तन्मे त्वं क्षन्तुमर्हसि २
न हि युद्धेन पुत्रस्ते धर्मेण स महाबलः
शक्यः केनचिदुद्यन्तुमतो विषममाचरम् ३
सैन्यस्यैकोऽवशिष्टोऽय गदायुद्धे च वीर्यवान्
मां हत्वा न हरेद्राज्यमिति चैतत्कृतं मया ४
राजपुत्रीं च पाञ्चालीमेकवस्त्रां रजस्वलाम्
भवत्या विदितं सर्वमुक्तवान्यत्सुतस्तव ५
सुयोधनमसंगृह्य न शक्या भूः ससागरा
केवला भोक्तुमस्माभिरतश्चैतत्कृतं मया ६
तच्चाप्यप्रियमस्माकं पुत्रस्ते समुपाचरत्
द्रौपद्या यत्सभामध्ये सव्यमूरुमदर्शयत् ७
तत्रैव वध्यः सोऽस्माकं दुराचारोऽम्ब ते सुतः
धर्मराजाज्ञया चैव स्थिताः स्म समये तदा ८
वैरमुद्धुक्षितं राज्ञि पुत्रेण तव तन्महत्
क्लेशिताश्च वने नित्यं तत एतत्कृतं मया ९
वैरस्यास्य गतः पारं हत्वा दुर्योधनं रणे
राज्यं युधिष्ठिरः प्राप्तो वयं च गतमन्यवः १०
गान्धार्युवाच
न तस्यैष वधस्तात यत्प्रशंससि मे सुतम्

कृतवांश्चापि तत्सर्वं यदिदं भाषसे मयि ११
हताश्वे नकुले यत्तद्वृषसेनेन भारत
अपिबः शोणितं संख्ये दुःशासनशरीरजम् १२
सद्भिर्विगर्हितं घोरमनार्यजनसेवितम्
क्रूरं कर्माकरोः कस्मात्तदयुक्तं वृकोदरः १३
भीमसेन उवाच
अन्यस्यापि न पातव्यं रुधिरं किं पुनः स्वकम्
यथैवात्मा तथा भ्राता विशेषो नास्ति कश्चन १४
रुधिरं न व्यतिक्रामद्दन्तोष्ठं मेऽम्ब मा शुचः
वैवस्वतस्तु तद्वेद हस्तौ मे रुधिरोक्षितौ १५
हताश्वं नकुलं दृष्ट्वा वृषसेनेन संयुगे
भ्रातृणां संप्रहृष्टानां त्रासः संजनितो मया १६
केशपक्षपरामर्शे द्रौपद्या द्यूतकारिते
क्रोधाद्यदब्रुवं चाहं तच्च मे हृदि वर्तते १७
क्षत्रधर्माच्च्युतो राज्ञि भवेयं शाश्वतीः समाः
प्रतिज्ञां तामनिस्तीर्य ततस्तत्कृतवानहम् १८
न मामर्हसि गान्धारि दोषेण परिशङ्कितुम्
अनिगृह्य पुरा पुत्रानस्मास्वनपकारिषु १९
गान्धार्युवाच
वृद्धस्यास्य शतं पुत्रान्निघ्नंस्त्वमपराजितः
कस्मान्न शेषयः किंचिद्येनाल्पमपराधितम् २०
संतानमावयोस्तात वृद्धयोर्हृतराज्ययोः
कथमन्धद्वयस्यास्य यष्टिरेका न वर्जिता २१
शेषे ह्यवस्थिते तात पुत्राणामन्तके त्वयि
न मे दुःखं भवेदेतद्यदि त्वं धर्ममाचरः २२
इति श्रीमहाभारते स्त्रीपर्वणि चतुर्दशोऽध्यायः १४

पञ्चदशोऽध्यायः

वैशम्पायन उवाच
एवमुक्त्वा तु गान्धारी युधिष्ठिरमपृच्छत

क्व स राजेति सक्रोधा पुत्रपौत्रवधार्दिता १
तामभ्यगच्छद्राजेन्द्रो वेपमानः कृताञ्जलि
युधिष्ठिर इदं चैनां मधुरं वाक्यमब्रवीत् २
पुत्रहन्ता नृशंसोऽह तव देवि युधिष्ठिरः
शापार्हः पृथिवीनाशे हेतुभूतः शपस्व माम् ३
न हि मे जीवितेनार्थो न राज्येन धनेन वा
तादृशान्सुहृदो हत्वा मूढस्यास्य सुहृद्द्रुहः ४
तमेवंवादिनं भीतं संनिकर्षगतं तदा
नोवाच किंचिद्गान्धारी निःश्वासपरमा भृशम् ५
तस्यावनतदेहस्य पादयोर्निपतिष्यतः
युधिष्ठिरस्य नृपतेर्धर्मज्ञा धर्मदर्शिनी
अङ्गुल्यग्राणि ददृशे देवी पट्टान्तरेण सा ६
ततः स कुनखीभूतो दर्शनीयनखो नृपः
तं दृष्ट्वा चार्जुनोऽगच्छद्वासुदेवस्य पृष्ठतः ७
एवं संचेष्टमानांस्तानितश्चेतश्च भारत
गान्धारी विगतक्रोधा सान्त्वयामास मातृवत् ८
तया ते समनुज्ञाता मातरं वीरमातरम्
अभ्यगच्छन्त सहिताः पृथां पृथुलवक्षसः ९
चिरस्य दृष्ट्वा पुत्रान्सा पुत्राधिभिरभिप्लुता
बाष्पमाहारयद्देवी वस्त्रेणावृत्य वै मुखम् १०
ततो बाष्पं समुत्सृज्य सह पुत्रैस्तदा पृथा
अपश्यदेताञ्शस्त्रौघैर्बहुधा परिविक्षतान् ११
सा तानेकैकशः पुत्रान्संस्पृशन्ती पुनः पुनः
अन्वशोचत दुःखार्ता द्रौपदीं च हतात्मजाम्
रुदतीमथ पाञ्चालद्यं ददर्श पतितां भुवि १२
द्रौपद्युवाच
आर्ये पौत्राः क्व ते सर्वे सौभद्रसहिता गताः
न त्वां तेऽद्याभिगच्छन्ति चिरदृष्टां तपस्विनीम्
किं नु राज्येन वै कार्यं विहीनायाः सुतैर्मम १३
वैशम्पायन उवाच

तां समाश्वासयामास पृथा पृथुललोचना
उत्थाप्य याज्ञसेनीं तु रुदतीं शोककर्शिताम् १४
तयैव सहिता चापि पुत्रैरनुगता पृथा
अभ्यगच्छत गान्धारीमार्तामार्ततरा स्वयम् १५
तामुवाचाथ गान्धारी सह वध्वा यशस्विनीम्
मैवं पुत्रीति शोकार्ता पश्य मामपि दुःखिताम् १६
मन्ये लोकविनाशोऽय कालपर्यायचोदितः
अवश्यभावी संप्राप्तः स्वभावाल्लोमहर्षणः १७
इदं तत्समनुप्राप्तं विदुरस्य वचो महत्
असिद्धानुनये कृष्णे यदुवाच महामतिः १८
तस्मिन्नपरिहार्येऽथे व्यतीते च विशेषतः
मा शुचो न हि शोच्यास्ते संग्रामे निधनं गताः १९
यथैव त्वं तथैवाहं को वा माश्वासयिष्यति
ममैव ह्यपराधेन कुलमग्र्यं विनाशितम् २०
इति श्रीमहाभारते स्त्रीपर्वणि पञ्चदशोऽध्यायः १५

## षोडशोऽध्यायः

वैशम्पायन उवाच
एवमुक्त्वा तु गान्धारी कुरूणामाविकर्तनम्
अपश्यत्तत्र तिष्ठन्ती सर्वं दिव्येन चक्षुषा १
पतिव्रता महाभागा समानव्रतचारिणी
उग्रेण तपसा युक्ता सततं सत्यवादिनी २
वरदानेन कृष्णस्य महर्षेः पुण्यकर्मणः
दिव्यज्ञानबलोपेता विविधं पर्यदेवयत् ३
ददर्श सा बुद्धिमती दूरादपि यथान्तिके
रणाजिरं नृवीराणामद्भुतं लोमहर्षणम् ४
अस्थिकेशपरिस्तीर्णं शोणितौघपरिप्लुतम्
शरीरैर्बहुसाहस्रैर्विनिकीर्णं समन्ततः ५
गजाश्वरथयोधानामावृतं रुधिराविलैः
शरीरैरशिरस्कैश्च विदेहैश्च शिरोगणैः ६

गजाश्वनरवीराणां निःसत्त्वैरभिसंवृतम्
शृगालबडकाकोलकङ्ककाकनिषेवितम् ७
रक्षसां पुरुषादानां मोदनं कुरराकुलम्
अशिवाभिः शिवाभिश्च नादितं गृध्रसेवितम् ८
ततो व्यासाभ्यनुज्ञातो धृतराष्ट्रो महीपतिः
पाण्डुपुत्राश्च ते सर्वे युधिष्ठिरपुरोगमाः ९
वासुदेवं पुरस्कृत्य हतबन्धुं च पार्थिवम्
कुरुस्त्रियः समासाद्य जग्मुरायोधनं प्रति १०
समासाद्य कुरुक्षेत्रं ताः स्त्रियो निहतेश्वराः
अपश्यन्त हतांस्तत्र पुत्रान्भ्रातॄन्पितॄन्पतीन् ११
क्रव्यादैर्भक्ष्यमाणान्वै गोमायुबडवायसैः
भूतैः पिशाचै रक्षोभिर्विविधैश्च निशाचरैः १२
रुद्राक्रीडनिभं दृष्ट्वा तदा विशसनं स्त्रियः
महार्हेभ्योऽथ यानेभ्यो विक्रोशन्त्यो निपेतिरे १३
अदृष्टपूर्वं पश्यन्त्यो दुःखार्ता भरतस्त्रियः
शरीरेष्वस्खलन्नन्या न्यपतंश्चापरा भुवि १४
श्रान्तानां चाप्यनाथानां नासीत्काचन चेतना
पाञ्चालकुरुयोषाणां कृपणं तदभून्महत् १५
दुःखोपहतचित्ताभिः समन्तादनुनादितम्
दृष्ट्वायोधनमत्युग्रं धर्मज्ञा सुबलात्मजा १६
ततः सा पुण्डरीकाक्षमामन्त्र्य पुरुषोत्तमम्
कुरूणां वैशसं दृष्ट्वा दुःखाद्वचनमब्रवीत् १७
पश्यैताः पुण्डरीकाक्ष स्नुषा मे निहतेश्वराः
प्रकीर्णकेशाः क्रोशन्तीः कुररीरिव माधव १८
अमूस्त्वभिसमागम्य स्मरन्त्यो भरतर्षभान्
पृथगेवाभ्यधावन्त पुत्रान्भ्रातॄन्पितॄन्पतीन् १९
वीरसूभिर्महाबाहो हतपुत्राभिरावृतम्
क्वचिच्च वीरपत्नीभिर्हतवीराभिराकुलम् २०
शोभितं पुरुषव्याघ्रैर्भीष्मकर्णाभिमन्युभिः
द्रोणद्रुपदशल्यैश्च ज्वलद्भिरिव पावकैः २१

काञ्चनैः कवचैर्निष्कैर्मणिभिश्च महात्मनाम्
अङ्गदैर्हस्तकेयूरैः स्रग्भिश्च समलंकृतम् २२
वीरबाहुविसृष्टाभिः शक्तिभिः परिघैरपि
खड्गैश्च विमलैस्तीक्ष्णैः सशरैश्च शरासनैः २३
क्रव्यादसंघैर्मुदितैस्तिष्ठद्भिः सहितैः क्वचित्
क्वचिदाक्रीडमानैश्च शयानैरपरैः क्वचित् २४
एतदेवंविधं वीर संपश्यायोधनं विभो
पश्यमाना च दह्यामि शोकेनाहं जनार्दन २५
पञ्चालानां कुरूणां च विनाशं मधुसूदन
पञ्चानामिव भूतानां नाहं वधमचिन्तयम् २६
तान्सुपर्णाश्च गृध्राश्च निष्कर्षन्त्यसृगुक्षितान्
निगृह्य कवचेषूग्रा भक्षयन्ति सहस्रशः २७
जयद्रथस्य कर्णस्य तथैव द्रोणभीष्मयोः
अभिमन्योर्विनाशं च कश्चिन्तयितुमर्हति २८
अवध्यकल्पान्निहतान्दृष्ट्वाहं मधुसूदन
गृध्रकङ्कबडश्येनश्वशृगालादनीकृतान् २९
अमर्षवशमापन्नान्दुर्योधनवशे स्थितान्
पश्येमान्पुरुषव्याघ्रान्संशान्तान्पावकानिव ३०
शयनान्युचिताः सर्वे मृदूनि विमलानि च
विपन्नास्तेऽद्य वसुधां विवृतामधिशेरते ३१
बन्दिभिः सततं काले स्तुवद्भिरभिनन्दिताः
विशानामशिबा घोराः शृणवन्ति विविधा गिराः ३२
ये पुरा शेरते वीराः शयनेषु यशस्विनः
चन्दनागुरुदिग्धाङ्गास्तेऽद्य पांसुषु शेरते ३३
तेषामाभरणान्येते गृध्रगोमायुवायसाः
आक्षिपन्त्यशिवा घोरा विनदन्तः पुनः पुनः ३४
चापानि विशिखान्पीतान्निस्त्रिंशान्विमला गदाः
युद्धाभिमानिनः प्रीता जीवन्त इव बिभ्रति ३५
सुरूपवर्णा बहवः क्रव्यादैरवघट्टिताः
ऋषभप्रतिरूपाक्षाः शेरते हरितस्रजः ३६

अपरे पुनरालिङ्ग्य गदाः परिघबाहवः
शेरतेऽभिमुखाः शूरा दयिता इव योषितः ३७
बिभ्रतः कवचान्यन्ये विमलान्यायुधानि च
न धर्षयन्ति क्रव्यादा जीवन्तीति जनार्दन ३८
क्रव्यादैः कृष्यमाणानामपरेषां महात्मनाम्
शातकौम्भ्यः स्रजश्चित्रा विप्रकीर्णाः समन्ततः ३९
एते गोमायवो भीमा निहतानां यशस्विनाम्
कण्ठान्तरगतान्हारानाक्षिपन्ति सहस्रशः ४०
सर्वेष्वपररात्रेषु याननन्दन्त बन्दिनः
स्तुतिभिश्च परार्ध्याभिरुपचारैश्च शिक्षिताः ४१
तानिमाः परिदेवन्ति दुःखार्ताः परमाङ्गनाः
कृपणं वृष्णिशार्दूल दुःखशोकार्दिता भृशम् ४२
रक्तोत्पलवनानीव विभान्ति रुचिराणि वै
मुखानि परमस्त्रीणां परिशुष्काणि केशव ४३
रुदितोपरता ह्येता ध्यायन्त्यः संपरिप्लुताः
कुरुस्त्रियोऽभिगच्छन्ति तेन तेनैव दुःखिताः ४४
एतान्यादित्यवर्णानि तपनीयनिभानि च
रोषरोदनताम्राणि वक्त्राणि कुरुयोषिताम् ४५
आसामपरिपूर्णार्थं निशम्य परिदेवितम्
इतरेतरसंक्रन्दान्न विजानन्ति योषितः ४६
एता दीर्घमिवोछ्वस्य विक्रुश्य च विलप्य च
विस्पन्दमाना दुःखेन वीरा जहति जीवितम् ४७
बह्व्यो दृष्ट्वा शरीराणि क्रोशन्ति विलपन्ति च
पाणिभिश्चापरा घ्नन्ति शिरांसि मृदुपाणयः ४८
शिरोभिः पतितैर्हस्तैः सर्वाङ्गैर्यूथशः कृतैः
इतरेतरसंपृक्तैराकीर्णा भाति मेदिनी ४९
विशिरस्कानथो कायान्दृष्ट्वा घोराभिनन्दिनः
मुह्यन्त्यनुचिता नार्यो विदेहानि शिरांसि च ५०
शिरः कायेन संधाय प्रेक्षमाणा विचेतसः
अपश्यन्त्यो परं तत्र नेदमस्येति दुःखिताः ५१

बाहूरुचरणानन्यान्विशिखोन्मथितान्पृथक्
संदधत्योऽसुखाविष्टा मूर्छन्त्येताः पुनः पुनः ५२
उत्कृत्तशिरसश्चान्यान्विजग्धान्मृगपक्षिभिः
दृष्ट्वा काश्चिन्न जानन्ति भर्तृन्भरतयोषितः ५३
पाणिभिश्चापरा घ्नन्ति शिरांसि मधुसूदन
प्रेक्ष्य भ्रातृन्पितृन्पुत्रान्पतींश्च निहतान्परैः ५४
बाहुभिश्च सखड्गैश्च शिरोभिश्च सकुण्डलैः
अगम्यकल्पा पृथिवी मांसशोणितकर्दमा ५५
न दुःखेषूचिताः पूर्वं दुःखं गाहन्त्यनिन्दिताः
भ्रातृभिः पितृभिः पुत्रैरुपकीर्णां वसुंधराम् ५६
यूथानीव किशोरीणां सुकेशीनां जनार्दन
स्नुषाणां धृतराष्ट्रस्य पश्य वृन्दान्यनेकशः ५७
अतो दुःखतरं किं नु केशव प्रतिभाति मे
यदिमाः कुर्वते सर्वा रूपमुच्चावचं स्त्रियः ५८
नूनमाचरितं पापं मया पूर्वेषु जन्मसु
या पश्यामि हतान्पुत्रान्पौत्रान्भ्रातृंश्च केशव
एवमार्ता विलपती ददर्श निहतं सुतम् ५९
इति श्रीमहाभारते स्त्रीपर्वणि षोडशोऽध्यायः १६

## सप्तदशोऽध्यायः

वैशम्पायन उवाच
ततो दुर्योधनं दृष्ट्वा गान्धारी शोककर्शिता
सहसा न्यपतद्भूमौ छिन्नेव कदली वने १
सा तु लब्ध्वा पुनः संज्ञां विक्रुश्य च पुनः पुनः
दुर्योधनमभिप्रेक्ष्य शयानं रुधिरोक्षितम् २
परिष्वज्य च गान्धारी कृपणं पर्यदेवयत्
हा हा पुत्रेति शोकार्ता विललापाकुलेन्द्रिया ३
सुगूढजत्रु विपुलं हारनिष्कनिषेवितम्
वारिणा नेत्रजेनोरः सिञ्चन्ती शोकतापिता
समीपस्थं हृषीकेशमिदं वचनमब्रवीत् ४

उपस्थितेऽस्मिन्संग्रामे ज्ञातीनां संक्षये विभो
मामयं प्राह वार्ष्णेय प्राञ्जलिर्नृपसत्तमः
अस्मिञ्ज्ञातिसमुद्धर्षे जयमम्बा ब्रवीतु मे ५
इत्युक्ते जानती सर्वमहं स्वं व्यसनागमम्
अब्रुवं पुरुषव्याघ्र यतो धर्मस्ततो जयः ६
यथा न युध्यमानस्त्वं न संप्रमुह्यसि पुत्रक
ध्रुवं शस्त्रजिताँल्लोकान्प्राप्तास्यमरवद्विभो ७
इत्येवमब्रुवं पूर्वं नैनं शोचामि वै प्रभो
धृतराष्ट्रं तु शोचामि कृपणं हतबान्धवम् ८
अमर्षणं युधां श्रेष्ठं कृतास्त्रं युद्धदुर्मदम्
शयानं वीरशयने पश्य माधव मे सुतम् ९
योऽय मूर्धावसिक्तानामग्रे याति परंतपः
सोऽय पांसुषु शेतेऽद्य पश्य कालस्य पर्ययम् १०
ध्रुवं दुर्योधनो वीरो गतिं नसुलभां गतः
तथा ह्यभिमुखः शेते शयने वीरसेविते ११
यं पुरा पर्युपासीना रमयन्ति महीक्षितः
महीतलस्थं निहतं गृध्रास्तं पर्युपासते १२
यं पुरा व्यजनैरग्र्यैरुपवीजन्ति योषितः
तमद्य पक्षव्यजनैरुपवीजन्ति पक्षिणः १३
एष शेते महाबाहुर्बलवान्सत्यविक्रमः
सिंहेनेव द्विपः संख्ये भीमसेनेन पातितः १४
पश्य दुर्योधनं कृष्ण शयानं रुधिरोक्षितम्
निहतं भीमसेनेन गदामुद्यम्य भारत १५
अक्षौहिणीर्महाबाहुर्दश चैकां च केशव
अनयद्यः पुरा संख्ये सोऽनयान्निधनं गतः १६
एष दुर्योधनः शेते महेष्वासो महारथः
शार्दूल इव सिंहेन भीमसेनेन पातितः १७
विदुरं ह्यवमन्यैष पितरं चैव मन्दभाक्
बालो वृद्धावमानेन मन्दो मृत्युवशं गतः १८
निःसपत्ना मही यस्य त्रयोदश समाः स्थिता

स शेते निहतो भूमौ पुत्रो मे पृथिवीपतिः १९
अपश्यं कृष्ण पृथिवीं धार्तराष्ट्रानुशासनात्
पूर्णां हस्तिगवाश्वस्य वार्ष्णेय न तु तच्चिरम् २०
तामेवाद्य महाबाहो पश्याम्यन्यानुशासनात्
हीनां हस्तिगवाश्वेन किं नु जीवामि माधव २१
इदं कृच्छ्रतरं पश्य पुत्रस्यापि वधान्मम
यदिमाः पर्युपासन्ते हताञ्शूरान्रणे स्त्रियः २२
प्रकीर्णकेशां सुश्रोणीं दुर्योधनभुजाङ्कगाम्
रुक्मवेदीनिभां पश्य कृष्ण लक्ष्मणमातरम् २३
नूनमेषा पुरा बाला जीवमाने महाभुजे
भुजावाश्रित्य रमते सुभुजस्य मनस्विनी २४
कथं तु शतधा नेदं हृदयं मम दीर्यते
पश्यन्त्या निहतं पुत्रं पुत्रेण सहितं रणे २५
पुत्रं रुधिरसंसिक्तमुपजिघ्रत्यनिन्दिता
दुर्योधनं तु वामोरूः पाणिना परिमार्जति २६
किं नु शोचति भर्तारं पुत्रं चैषा मनस्विनी
तथा ह्यवस्थिता भाति पुत्रं चाप्यभिवीक्ष्य सा २७
स्वशिरः पञ्चशाखाभ्यामभिहत्यायतेक्षणा
पतत्युरसि वीरस्य कुरुराजस्य माधव २८
पुण्डरीकनिभा भाति पुण्डरीकान्तरप्रभा
मुखं विमृज्य पुत्रस्य भर्तुश्चैव तपस्विनी २९
यदि चाप्यागमाः सन्ति यदि वा श्रुतयस्तथा
ध्रुवं लोकानवाप्तोऽय नृपो बाहुबलार्जितान् ३०
इति श्रीमहाभारते स्त्रीपर्वणि सप्तदशोऽध्यायः १७

## अष्टादशोऽध्यायः

गान्धार्युवाच
पश्य माधव पुत्रान्मे शतसंख्याञ्जितक्लमान्
गदया भीमसेनेन भूयिष्ठं निहतान्रणे १
इदं दुःखतरं मेऽद्य यदिमा मुक्तमूर्धजाः

हतपुत्रा रणे बालाः परिधावन्ति मे स्नुषाः २
प्रासादतलचारिण्यश्चरणैर्भूषणान्वितैः
आपन्ना यत्स्पृशन्तीमा रुधिरार्द्रां वसुंधराम् ३
गृध्रानुत्सारयन्त्यश्च गोमायून्वायसांस्तथा
शोकेनार्ता विघूर्णन्त्यो मत्ता इव चरन्त्युत ४
एषान्या त्वनवद्याङ्गी करसंमितमध्यमा
घोरं तद्वैशसं दृष्ट्वा निपतत्यतिदुःखिता ५
दृष्ट्वा मे पार्थिवसुतामेतां लक्ष्मणमातरम्
राजपुत्रीं महाबाहो मनो न व्युपशाम्यति ६
भ्रातॄंश्चान्याः पतींश्चान्याः पुत्रांश्च निहतान्भुवि
दृष्ट्वा परिपतन्त्येताः प्रगृह्य सुभुजा भुजान् ७
मध्यमानां तु नारीणां वृद्धानां चापराजित
आक्रन्दं हतबन्धूनां दारुणे वैशसे शृणु ८
रथनीडानि देहांश्च हतानां गजवाजिनाम्
आश्रिताः श्रममोहार्ताः स्थिताः पश्य महाबल ९
अन्या चापहृतं कायाच्चारुकुण्डलमुन्नसम्
स्वस्य बन्धोः शिरः कृष्ण गृहीत्वा पश्य तिष्ठति १०
पूर्वजातिकृतं पापं मन्ये नाल्पमिवानघ
एताभिरनवद्याभिर्मया चैवाल्पमेधया ११
तदिदं धर्मराजेन यातितं नो जनार्दन
न हि नाशोऽस्ति वार्ष्णेय कर्मणोः शुभपापयोः १२
प्रत्यग्रवयसः पश्य दर्शनीयकुचोदराः
कुलेषु जाता ह्रीमत्यः कृष्णपक्ष्माक्षिमूर्धजाः १३
हंसगद्गदभाषिण्यो दुःखशोकप्रमोहिताः
सारस्य इव वाशन्त्यः पतिताः पश्य माधव १४
फुल्लपद्मप्रकाशानि पुण्डरीकाक्ष योषिताम्
अनवद्यानि वक्त्राणि तपत्यसुखरश्मिवान् १५
ईर्षूणां मम पुत्राणां वासुदेवावरोधनम्
मत्तमातङ्गदर्पाणां पश्यन्त्यद्य पृथग्जनाः १६
शतचन्द्राणि चर्माणि ध्वजांश्चादित्यसंनिभान्

रौक्माणि चैव वर्माणि निष्कानपि च काञ्चनान् १७
शीर्षत्राणानि चैतानि पुत्राणां मे महीतले
पश्य दीप्तानि गोविन्द पावकान्सुहुतानिव १८
एष दुःशासनः शेते शूरेणामित्रघातिना
पीतशोणितसर्वाङ्गो भीमसेनेन पातितः १९
गदया वीरघातिन्या पश्य माधव मे सुतम्
द्यूतक्लेशाननुस्मृत्य द्रौपद्या चोदितेन च २०
उक्ता ह्यनेन पाञ्चाली सभायां द्यूतनिर्जिता
प्रियं चिकीर्षता भ्रातुः कर्णस्य च जनार्दन २१
सहैव सहदेवेन नकुलेनार्जुनेन च
दासाभार्यासि पाञ्चालि क्षिप्रं प्रविश नो गृहान् २२
ततोऽहमब्रुवं कृष्ण तदा दुर्योधनं नृपम्
मृत्युपाशपरिक्षिप्तं शकुनिं पुत्र वर्जय २३
निबोधैनं सुदुर्बुद्धिं मातुलं कलहप्रियम्
क्षिप्रमेनं परित्यज्य पुत्र शाम्यस्व पाण्डवैः २४
न बुध्यसे त्वं दुर्बुद्धे भीमसेनममर्षणम्
वाङ्नाराचैस्तुदंस्तीक्ष्णैरुल्काभिरिव कुञ्जरम् २५
तानेष रभसः क्रूरो वाक्शल्यानवधारयन्
उत्ससर्ज विषं तेषु सर्पो गोवृषभेष्विव २६
एष दुःशासनः शेते विक्षिप्य विपुलौ भुजौ
निहतो भीमसेनेन सिंहेनेव महर्षभः २७
अत्यर्थमकरोद्रौद्रं भीमसेनोऽत्यमर्षणः
दुःशासनस्य यत्क्रुद्धोऽपिबच्छोणितमाहवे २८
इति श्रीमहाभारते स्त्रीपर्वणि अष्टादशोऽध्यायः १८

## एकोनविंशोऽध्यायः

गान्धार्युवाच
एष माधव पुत्रो मे विकर्णः प्राज्ञसंमतः
भूमौ विनिहतः शेते भीमेन शतधा कृतः १
गजमध्यगतः शेते विकर्णो मधुसूदन

नीलमेघपरिक्षिप्तः शरदीव दिवाकरः २
अस्य चापग्रहेणैष पाणिः कृतकिणो महान्
कथंचिच्छिद्यते गृध्रैरत्तुकामैस्तलत्रवान् ३
अस्य भार्यामिषप्रेप्सून्गृध्रानेतांस्तपस्विनी
वारयत्यनिशं बाला न च शक्नोति माधव ४
युवा वृन्दारकः शूरो विकर्णः पुरुषर्षभ
सुखोचितः सुखार्हश्च शेते पांसुषु माधव ५
कर्णिनालीकनाराचैर्भिन्नमर्माणमाहवे
अद्यापि न जहात्येनं लक्ष्मीर्भरतसत्तमम् ६
एष संग्रामशूरेण प्रतिज्ञां पालयिष्यता
दुर्मुखोऽभिमुखः शेते हतोऽरिगणहा रणे ७
तस्यैतद्वदनं कृष्ण श्वापदैरर्धभक्षितम्
विभात्यभ्यधिकं तात सप्तम्यामिव चन्द्रमाः ८
शूरस्य हि रणे कृष्ण यस्याननमथेदृशम्
स कथं निहतोऽमित्रैः पांसून्ग्रसति मे सुतः ९
यस्याहवमुखे सौम्य स्थाता नैवोपपद्यते
स कथं दुर्मुखोऽमित्रैर्हतो विबुधलोकजित् १०
चित्रसेनं हतं भूमौ शयानं मधुसूदन
धार्तराष्ट्रमिमं पश्य प्रतिमानं धनुष्मताम् ११
तं चित्रमाल्याभरणं युवत्यः शोककर्शिताः
क्रव्यादसंघैः सहिता रुदन्त्यः पर्युपासते १२
स्त्रीणां रुदितनिर्घोषः श्वापदानां च गर्जितम्
चित्ररूपमिदं कृष्ण विचित्रं प्रतिभाति मे १३
युवा वृन्दारको नित्यं प्रवरस्त्रीनिषेवितः
विविंशतिरसौ शेते ध्वस्तः पांसुषु माधव १४
शरसंकृत्तवर्माणं वीरं विशसने हतम्
परिवार्यासते गृध्राः परिविंशा विविंशतिम् १५
प्रविश्य समरे वीरः पाण्डवानामनीकिनीम्
आविश्य शयने शेते पुनः सत्पुरुषोचितम् १६
स्मितोपपन्नं सुनसं सुभ्रु ताराधिपोपमम्

अतीव शुभ्रं वदनं पश्य कृष्ण विविंशतेः १७
यं स्म तं पर्युपासन्ते वसुं वासवयोषितः
क्रीडन्तमिव गन्धर्वं देवकन्याः सहस्रशः १८
हन्तारं वीरसेनानां शूरं समितिशोभनम्
निबर्हणममित्राणां दुःसहं विषहेत कः १९
दुःसहस्यैतदाभाति शरीरं संवृतं शरैः
गिरिरात्मरुहैः फुल्लैः कर्णिकारैरिवावृतः २०
शातकौम्भ्या स्रजा भाति कवचेन च भास्वता
अग्निनेव गिरिः श्वेतो गतासुरपि दुःसहः २१
इति श्रीमहाभारते स्त्रीपर्वणि एकोनविंशोऽध्यायः १९

## विंशोऽध्यायः

गान्धार्युवाच
अध्यर्धगुणमाहुर्यं बले शौर्ये च माधव
पित्रा त्वया च दाशार्ह दृप्तं सिंहमिवोत्कटम् १
यो बिभेद चमूमेको मम पुत्रस्य दुर्भिदाम्
स भूत्वा मृत्युरन्येषां स्वयं मृत्युवशं गतः २
तस्योपलक्षये कृष्ण कार्ष्णेरमिततेजसः
अभिमन्योर्हतस्यापि प्रभा नैवोपशाम्यति ३
एषा विराटदुहिता स्नुषा गाण्डीवधन्वनः
आर्ता बाला पतिं वीरं शोच्या शोचत्यनिन्दिता ४
तमेषा हि समासाद्य भार्या भर्तारमन्तिके
विराटदुहिता कृष्ण पाणिना परिमार्जति ५
तस्य वक्त्रमुपाघ्राय सौभद्रस्य यशस्विनी
विबुद्धकमलाकारं कम्बुवृत्तशिरोधरम् ६
काम्यरूपवती चैषा परिष्वजति भामिनी
लज्जमाना पुरेवैनं माध्वीकमदमूर्छिता ७
तस्य क्षतजसंदिग्धं जातरूपपरिष्कृतम्
विमुच्य कवचं कृष्ण शरीरमभिवीक्षते ८
अवेक्षमाणा तं बाला कृष्ण त्वामभिभाषते

अयं ते पुण्डरीकाक्ष सदृशाक्षो निपातितः ९
बले वीर्ये च सदृशस्तेजसा चैव तेऽनघ
रूपेण च तवात्यर्थं शेते भुवि निपातितः १०
अत्यन्तसुकुमारस्य राङ्कवाजिनशायिनः
कच्चिदद्य शरीरं ते भूमौ न परितप्यते ११
मातङ्गभुजवर्ष्माणौ ज्याक्षेपकठिनत्वचौ
काञ्चनाङ्गदिनौ शेषे निक्षिप्य विपुलौ भुजौ १२
व्यायम्य बहुधा नूनं सुखसुप्तः श्रमादिव
एवं विलपतीमार्तां न हि मामभिभाषसे १३
आर्यामार्य सुभद्रां त्वमिमांश्च त्रिदशोपमान्
पितॄन्मां चैव दुःखार्तां विहाय क्व गमिष्यसि १४
तस्य शोणितसंदिग्धान्केशानुन्नाम्य पाणिना
उत्संगे वक्त्रमाधाय जीवन्तमिव पृच्छति
स्वस्त्रीयं वासुदेवस्य पुत्रं गाण्डीवधन्वनः १५
कथं त्वां रणमध्यस्थं जघ्नुरेते महारथाः
धिगस्तु क्रूरकर्तॄंस्तान्कृपकर्णजयद्रथान् १६
द्रोणद्रौणायनी चोभौ यैरसि व्यसनीकृतः
रथर्षभाणां सर्वेषां कथमासीत्तदा मनः १७
बालं त्वां परिवार्यैकं मम दुःखाय जघ्नुषाम्
कथं नु पाण्डवानां च पाञ्चालानां च पश्यताम्
त्वं वीर निधनं प्राप्तो नाथवान्सन्ननाथवत् १८
दृष्ट्वा बहुभिराक्रन्दे निहतं त्वामनाथवत्
वीरः पुरुषशार्दूलः कथं जीवति पाण्डवः १९
न राज्यलाभो विपुलः शत्रूणां वा पराभवः
प्रीतिं दास्यति पार्थानां त्वामृते पुष्करेक्षण २०
तव शस्त्रजिताँल्लोकान्धर्मेण च दमेन च
क्षिप्रमन्वागमिष्यामि तत्र मां प्रतिपालय २१
दुर्मरं पुनरप्राप्ते काले भवति केनचित्
यदहं त्वां रणे दृष्ट्वा हतं जीवामि दुर्भगा २२
कामिदानीं नरव्याघ्र श्लक्ष्णया स्मितया गिरा

पितृलोके समेत्यान्यां मामिवामन्त्रयिष्यसि २३
नूनमप्सरसां स्वर्गे मनांसि प्रमथिष्यसि
परमेण च रूपेण गिरा च स्मितपूर्वया २४
प्राप्य पुण्यकृताँल्लोकानप्सरोभिः समेयिवान्
सौभद्र विहरन्काले स्मरेथाः सुकृतानि मे २५
एतावानिह संवासो विहितस्ते मया सह
षण्मासान्सप्तमे मासि त्वं वीर निधनं गतः २६
इत्युक्तवचनामेतामपकर्षन्ति दुःखिताम्
उत्तरां मोघसंकल्पां मत्स्यराजकुलस्त्रियः २७
उत्तरामपकृष्यैनामार्तामार्ततराः स्वयम्
विराटं निहतं दृष्ट्वा क्रोशन्ति विलपन्ति च २८
द्रोणास्त्रशरसंकृत्तं शयानं रुधिरोक्षितम्
विराटं वितुदन्त्येते गृध्रगोमायुवायसाः २९
वितुद्यमानं विहगैर्विराटमसितेक्षणाः
न शक्नुवन्ति विवशा निवर्तयितुमातुराः ३०
आसामातपतप्तानामायासेन च योषिताम्
श्रमेण च विवर्णानां रूपाणां विगतं वपुः ३१
उत्तरं चाभिमन्युं च काम्बोजं च सुदक्षिणम्
शिशूनेतान्हतान्पश्य लक्ष्मणं च सुदर्शनम्
आयोधनशिरोमध्ये शयानं पश्य माधव ३२
इति श्रीमहाभारते स्त्रीपर्वणि विंशतितमोऽध्यायः २०

## एकविंशतितमोऽध्यायः

गान्धार्युवाच
एष वैकर्तनः शेते महेष्वासो महारथः
ज्वलितानलवत्संख्ये संशान्तः पार्थतेजसा १
पश्य वैकर्तनं कर्णं निहत्यातिरथान्बहून्
शोणितौघपरीताङ्गं शयानं पतितं भुवि २
अमर्षी दीर्घरोषश्च महेष्वासो महारथाः
रणे विनिहतः शेते शूरो गाण्डीवधन्वना ३

यं स्म पाण्डवसंत्रासान्मम पुत्रा महारथः
प्रायुध्यन्त पुरस्कृत्य मातङ्गा इव यूथपम् ४
शार्दूलमिव सिंहेन समरे सव्यसाचिना
मातङ्गमिव मत्तेन मातङ्गेन निपातितम् ५
समेताः पुरुषव्याघ्र निहतं शूरमाहवे
प्रकीर्णमूर्धजाः पत्न्यो रुदत्यः पर्युपासते ६
उद्विग्नः सततं यस्माद्धर्मराजो युधिष्ठिरः
त्रयोदश समा निद्रां चिन्तयन्नाध्यगच्छत ७
अनाधृष्यः परैर्युद्धे शत्रुभिर्मघवानिव
युगान्ताग्निरिवार्चिष्मान्हिमवानिव च स्थिरः ८
स भूत्वा शरणं वीरो धार्तराष्ट्रस्य माधव
भूमौ विनिहतः शेते वातरुग्ण इव द्रुमः ९
पश्य कर्णस्य पत्नीं त्वं वृषसेनस्य मातरम्
लालप्यमानां करुणं रुदतीं पतितां भुवि १०
आचार्यशापोऽनुगतो ध्रुवं त्वां यदग्रसच्चक्रमियं धरा ते
ततः शरेणापहृतं शिरस्ते धनंजयेनाहवे शत्रुमध्ये ११
अहो धिगेषा पतिता विसंज्ञा समीक्ष्य जाम्बूनदबद्धनिष्कम्
कर्णं महाबाहुमदीनसत्त्वं सुषेणमाता रुदती भृशार्ता १२
अल्पावशेषो हि कृतो महात्मा शरीरभक्षैः परिभक्षयद्भिः
द्रष्टुं न संप्रीतिकरः शशीव कृष्णस्य पक्षस्य चतुर्दशाहे १३
सावर्तमाना पतिता पृथिव्यामुत्थाय दीना पुनरेव चैषा
कर्णस्य वक्त्रं परिजिघ्रमाणा रोरूयते पुत्रवधाभितप्ता १४
इति श्रीमहाभारते स्त्रीपर्वणि एकविंशतितमोऽध्यायः २१

## द्वाविंशोऽध्यायः

गान्धार्युवाच
आवन्त्यं भीमसेनेन भक्षयन्ति निपातितम्
गृध्रगोमायवः शूरं बहुबन्धुमबन्धुवत् १
तं पश्य कदनं कृत्वा शत्रूणां मधुसूदन
शयानं वीरशयने रुधिरेण समुक्षितम् २

तं सृगालाश्च कङ्काश्च क्रव्यादाश्च पृथग्विधाः
तेन तेन विकर्षन्ति पश्य कालस्य पर्ययम् ३
शयानं वीरशयने वीरमाक्रन्दसारिणम्
आवन्त्यमभितो नार्यो रुदत्यः पर्युपासते ४
प्रातिपीयं महेष्वासं हतं भल्लेन बाह्लिकम्
प्रसुप्तमिव शार्दूलं पश्य कृष्ण मनस्विनम् ५
अतीव मुखवर्णोऽस्य निहतस्यापि शोभते
सोमस्येवाभिपूर्णस्य पौर्णमास्यां समुद्यतः ६
पुत्रशोकाभितप्तेन प्रतिज्ञां परिरक्षता
पाकशासनिना संख्ये वार्द्धक्षत्रिर्निपातितः ७
एकादश चमूर्जित्वा रक्ष्यमाणं महात्मना
सत्यं चिकीर्षता पश्य हतमेनं जयद्रथम् ८
सिन्धुसौवीरभर्तारं दर्पपूर्णं मनस्विनम्
भक्षयन्ति शिवा गृध्रा जनार्दनजयद्रथम् ९
संरक्ष्यमाणं भार्याभिरनुरक्ताभिरच्युत
भषन्तो व्यपकर्षन्ति गहनं निम्नमन्तिकात् १०
तमेताः पर्युपासन्ते रक्षमाणा महाभुजम्
सिन्धुसौवीरगान्धारकाम्बोजयवनस्त्रियः ११
यदा कृष्णामुपादाय प्राद्रवत्केकयैः सह
तदैव वध्यः पाण्डूनां जनार्दन जयद्रथः १२
दुःशलां मानयद्भिस्तु यदा मुक्तो जयद्रथः
कथमद्य न तां कृष्ण मानयन्ति स्म ते पुनः १३
सैषा मम सुता बाला विलपन्ती सुदुःखिता
प्रमापयति चात्मानमाक्रोशति च पाण्डवान् १४
किं नु दुःखतरं कृष्ण परं मम भविष्यति
यत्सुता विधवा बाला स्नुषाश्च निहतेश्वराः १५
अहो धिग्दुःशलां पश्य वीतशोकभयामिव
शिरोभर्तुरनासाद्य धावमानामितस्ततः १६
वारयामास यः सर्वान्पाण्डवान्पुत्रगृद्धिनः
स हत्वा विपुलाः सेनाः स्वयं मृत्युवशं गतः १७

तं मत्तमिव मातङ्गं वीरं परमदुर्जयम्
परिवार्य रुदन्त्येताः स्त्रियश्चन्द्रोपमाननाः १८
इति श्रीमहाभारते स्त्रीपर्वणि द्वाविंशोऽध्यायः २२

त्रयोविंशोऽध्यायः

गान्धार्युवाच
एष शल्यो हतः शेते साक्षान्नकुलमातुलः
धर्मज्ञेन सता तात धर्मराजेन संयुगे १
यस्त्वया स्पर्धते नित्यं सर्वत्र पुरुषर्षभ
स एष निहतः शेते मद्रराजो महारथः २
येन संगृह्णता तात रथमाधिरथेर्युधि
जयार्थं पाण्डुपुत्राणां तथा तेजोवधः कृतः ३
अहो धिक्पश्य शल्यस्य पूर्णचन्द्रसुदर्शनम्
मुखं पद्मपलाशाक्षं वडैरादष्टमव्रणम् ४
एषा चामीकराभस्य तप्तकाञ्चनसप्रभा
आस्याद्विनिःसृता जिह्वा भक्ष्यते कृष्ण पक्षिभिः ५
युधिष्ठिरेण निहतं शल्यं समितिशोभनम्
रुदन्त्यः पर्युपासन्ते मद्रराजकुलस्त्रियः ६
एताः सुसूक्ष्मवसना मद्रराजं नरर्षभम्
क्रोशन्त्यभिसमासाद्य क्षत्रियाः क्षत्रियर्षभम् ७
शल्यं निपतितं नार्यः परिवार्याभितः स्थिताः
वासिता गृष्टयः पङ्के परिमग्नमिवर्षभम् ८
शल्यं शरणदं शूरं पश्यैनं रथसत्तमम्
शयानं वीरशयने शरैर्विशकलीकृतम् ९
एष शैलालयो राजा भगदत्तः प्रतापवान्
गजाङ्कुशधरः श्रेष्ठः शेते भुवि निपातितः १०
यस्य रुक्ममयी माला शिरस्येषा विराजते
श्वापदैर्भक्ष्यमाणस्य शोभयन्तीव मूर्धजान् ११
एतेन किल पार्थस्य युद्धमासीत्सुदारुणम्
लोमहर्षणमत्युग्रं शक्रस्य बलिना यथा १२

योधयित्वा महाबाहुरेष पार्थं धनंजयम्
संशयं गमयित्वा च कुन्तीपुत्रेण पातितः १३
यस्य नास्ति समो लोके शौर्ये वीर्ये च कश्चन
स एष निहतः शेते भीष्मो भीष्मकृदाहवे १४
पश्य शांतनवं कृष्ण शयानं सूर्यवर्चसम्
युगान्त इव कालेन पातितं सूर्यमम्बरात् १५
एष तप्त्वा रणे शत्रूञ्शस्त्रतापेन वीर्यवान्
नरसूर्योऽस्तमभ्येति सूर्योऽस्तमिव केशव १६
शरतल्पगतं वीरं धर्मे देवापिना समम्
शयानं वीरशयने पश्य शूरनिषेविते १७
कर्णिनालीकनाराचैरास्तीर्य शयनोत्तमम्
आविश्य शेते भगवान्स्कन्दः शरवणं यथा १८
अतूलपूर्णं गाङ्गेयस्त्रिभिर्बाणैः समन्वितम्
उपधायोपधानाग्र्यं दत्तं गाण्डीवधन्वना १९
पालयानः पितुः शास्त्रमूर्ध्वरेता महायशाः
एष शांतनवः शेते माधवाप्रतिमो युधि २०
धर्मात्मा तात धर्मज्ञः पारंपर्येण निर्णये
अमर्त्य इव मर्त्यः सन्नेष प्राणानधारयत् २१
नास्ति युद्धे कृती कश्चिन्न विद्वान्न पराक्रमी
यत्र शांतनवो भीष्मः शेतेऽद्य निहतः परैः २२
स्वयमेतेन शूरेण पृच्छ्यमानेन पाण्डवैः
धर्मज्ञेनाहवे मृत्युराख्यातः सत्यवादिना २३
प्रनष्टः कुरुवंशश्च पुनर्येन समुद्धृतः
स गतः कुरुभिः सार्धं महाबुद्धिः पराभवम् २४
धर्मेषु कुरवः कं नु परिप्रक्ष्यन्ति माधव
गते देवव्रते स्वर्गं देवकल्पे नरर्षभे २५
अर्जुनस्य विनेतारमाचार्यं सात्यकेस्तथा
तं पश्य पतितं द्रोणं कुरूणां गुरुसत्तमम् २६
अस्त्रं चतुर्विधं वेद यथैव त्रिदशेश्वरः
भार्गवो वा महावीर्यस्तथा द्रोणोऽपि माधव २७

यस्य प्रसादाद्बीभत्सुः पाण्डवः कर्म दुष्करम्
चकार स हतः शेते नैनमस्त्राण्यपालयन् २८
यं पुरोधाय कुरव आह्वयन्ति स्म पाण्डवान्
सोऽय शस्त्रभृतां श्रेष्ठो द्रोणः शस्त्रैः पृथक्कृतः २९
यस्य निर्दहतः सेनां गतिरग्नेरिवाभवत्
स भूमौ निहतः शेते शान्तार्चिरिव पावकः ३०
धनुर्मुष्टिरशीर्णश्च हस्तावापश्च माधव
द्रोणस्य निहतस्यापि दृश्यते जीवितो यथा ३१
वेदा यस्माच्च चत्वारः सर्वास्त्राणि च केशव
अनपेतानि वै शूराद्यथैवादौ प्रजापतेः ३२
वन्दनार्हाविमौ तस्य बन्दिभिर्वन्दितौ शुभौ
गोमायवो विकर्षन्ति पादौ शिष्यशतार्चितौ ३३
द्रोणं द्रुपदपुत्रेण निहतं मधुसूदन
कृपी कृपणमन्वास्ते दुःखोपहतचेतना ३४
तां पश्य रुदतीमार्तां मुक्तकेशीमधोमुखीम्
हतं पतिमुपासन्तीं द्रोणं शस्त्रभृतां वरम् ३५
बाणैर्भिन्नतनुत्राणं धृष्टद्युम्नेन केशव
उपास्ते वै मृधे द्रोणं जटिला ब्रह्मचारिणी ३६
प्रेतकृत्ये च यतते कृपी कृपणमातुरा
हतस्य समरे भर्तुः सुकुमारी यशस्विनी ३७
अग्नीनाहृत्य विधिवच्चितां प्रज्वाल्य सर्वशः
द्रोणमाधाय गायन्ति त्रीणि सामानि सामगाः ३८
किरन्ति च चितामेते जटिला ब्रह्मचारिणः
धनुर्भिः शक्तिभिश्चैव रथनीडैश्च माधव ३९
शस्त्रैश्च विविधैरन्यैर्धक्ष्यन्ते भूरितेजसम्
त एते द्रोणमाधाय शंसन्ति च रुदन्ति च ४०
सामभिस्त्रिभिरन्तःस्थैरनुशंसन्ति चापरे
अग्नावग्निमिवाधाय द्रोणं हुत्वा हुताशने ४१
गच्छन्त्यभिमुखा गङ्गां द्रोणशिष्या द्विजातयः
अपसव्यां चितिं कृत्वा पुरस्कृत्य कृपीं तदा ४२

इति श्रीमहाभारते स्त्रीपर्वणि त्रयोविंशोऽध्यायः २३

## चतुर्विंशोऽध्यायः

गान्धार्युवाच
सोमदत्तसुतं पश्य युयुधानेन पातितम्
वितुद्यमानं विहगैर्बहुभिर्माधवान्तिके १
पुत्रशोकाभिसंतप्तः सोमदत्तो जनार्दन
युयुधानं महेष्वासं गर्हयन्निव दृश्यते २
असौ तु भूरिश्रवसो माता शोकपरिप्लुता
आश्वासयति भर्तारं सोमदत्तमनिन्दिता ३
दिष्ट्या नेदं महाराज दारुणं भरतक्षयम्
कुरुसंक्रन्दनं घोरं युगान्तमनुपश्यसि ४
दिष्ट्या यूपध्वजं वीरं पुत्रं भूरिसहस्रदम्
अनेकक्रतुयज्वानं निहतं नाद्य पश्यसि ५
दिष्ट्या स्नुषाणामाक्रन्दे घोरं विलपितं बहु
न शृणोषि महाराज सारसीनामिवार्णवे ६
एकवस्त्रानुसंवीताः प्रकीर्णासितमूर्धजाः
स्नुषास्ते परिधावन्ति हतापत्या हतेश्वराः ७
श्वापदैर्भक्ष्यमाणं त्वमहो दिष्ट्या न पश्यसि
छिन्नबाहुं नरव्याघ्रमर्जुनेन निपातितम् ८
शलं विनिहतं संख्ये भूरिश्रवसमेव च
स्नुषाश्च विधवाः सर्वा दिष्ट्या नाद्येह पश्यसि ९
दिष्ट्या तत्काञ्चनं छत्रं यूपकेतोर्महात्मनः
विनिकीर्णं रथोपस्थे सौमदत्तेर्न पश्यसि १०
अमूस्तु भूरिश्रवसो भार्याः सात्यकिना हतम्
परिवार्यानुशोचन्ति भर्तारमसितेक्षणाः ११
एता विलप्य बहुलं भर्तृशोकेन कर्शिताः
पतन्त्यभिमुखा भूमौ कृपणं बत केशव १२
बीभत्सुरतिबीभत्सं कर्मेदमकरोत्कथम्
प्रमत्तस्य यदच्छैत्सीद्बाहुं शूरस्य यज्वनः १३

ततः पापतरं कर्म कृतवानपि सात्यकिः
यस्मात्प्रायोपविष्टस्य प्राहार्षीत्संशितात्मनः १४
एको द्वाभ्यां हतः शेषे त्वमधर्मेण धार्मिकः
इति यूपध्वजस्यैताः स्त्रियः क्रोशन्ति माधव १५
भार्या यूपध्वजस्यैषा करसंमितमध्यमा
कृत्वोत्सङ्गे भुजं भर्तुः कृपणं पर्यदेवयत् १६
अयं स रशनोत्कर्षी पीनस्तनविमर्दनः
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः १७
वासुदेवस्य सांनिध्ये पार्थेनाक्लिष्टकर्मणा
युध्यतः समरेऽन्येन प्रमत्तस्य निपातितः १८
किं नु वक्ष्यसि संसत्सु कथासु च जनार्दन
अर्जुनस्य महत्कर्म स्वयं वा स किरीटवान् १९
इत्येवं गर्हयित्वैषा तूष्णीमास्ते वराङ्गना
तामेतामनुशोचन्ति सपत्न्यः स्वामिव स्नुषाम् २०
गान्धारराजः शकुनिर्बलवान्सत्यविक्रमः
निहतः सहदेवेन भागिनेयेन मातुलः २१
यः पुरा हेमदण्डाभ्यां व्यजनाभ्यां स्म वीज्यते
स एष पक्षिभिः पक्षैः शयान उपवीज्यते २२
यः स्म रूपाणि कुरुते शतशोऽथ सहस्रशः
तस्य मायाविनो माया दग्धाः पाण्डवतेजसा २३
मायया निकृतिप्रज्ञो जितवान्यो युधिष्ठिरम्
सभायां विपुलं राज्यं स पुनर्जीवितं जितः २४
शकुन्ताः शकुनिं कृष्ण समन्तात्पर्युपासते
कितवं मम पुत्राणां विनाशायोपशिक्षितम् २५
एतेनैतन्महद्वैरं प्रसक्तं पाण्डवैः सह
वधाय मम पुत्राणामात्मनः सगणस्य च २६
यथैव मम पुत्राणां लोकाः शस्त्रजिताः प्रभो
एवमस्यापि दुर्बुद्धेर्लोकाः शस्त्रेण वै जिताः २७
कथं च नायं तत्रापि पुत्रान्मे भ्रातृभिः सह
विरोधयेदृजुप्रज्ञाननृजुर्मधुसूदन २८

इति श्रीमहाभारते स्त्रीपर्वणि चतुर्विंशोऽध्यायः २४

## पञ्चविंशोऽध्यायः

गान्धार्युवाच
काम्बोजं पश्य दुर्धर्षं काम्बोजास्तरणोचितम्
शयानमृषभस्कन्धं हतं पांसुषु माधव १
यस्य क्षतजसंदिग्धौ बाहू चन्दनरूषितौ
अवेक्ष्य कृपणं भार्या विलपत्यतिदुःखिता २
इमौ तौ परिघप्रख्यौ बाहू शुभतलाङ्गुली
ययोर्विवरमापन्नां न रतिर्मां पुराजहत् ३
कां गतिं नु गमिष्यामि त्वया हीना जनेश्वर
दूरबन्धुरनाथेव अतीव मधुरस्वरा ४
आतपे क्लाम्यमानानां विविधानामिव स्रजाम्
क्लान्तानामपि नारीणां न श्रीर्जहति वै तनुम् ५
शयानमभितः शूरं कालिङ्गं मधुसूदन
पश्य दीप्ताङ्गदयुगप्रतिबद्धमहाभुजम् ६
मागधानामधिपतिं जयत्सेनं जनार्दन
परिवार्य प्ररुदिता मागध्यः पश्य योषितः ७
आसामायतनेत्राणां सुस्वराणां जनार्दन
मनःश्रुतिहरो नादो मनो मोहयतीव मे ८
प्रकीर्णसर्वाभरणा रुदन्त्यः शोककर्शिताः
स्वास्तीर्णशयनोपेता मागध्यः शेरते भुवि ९
कोसलानामधिपतिं राजपुत्रं बृहद्बलम्
भर्तारं परिवार्यैताः पृथक्प्ररुदिताः स्त्रियः १०
अस्य गात्रगतान्बाणान्कार्ष्णिबाहुबलार्पितान्
उद्धरन्त्यसुखाविष्टा मूर्छमानाः पुनः पुनः ११
आसां सर्वानवद्यानामातपेन परिश्रमात्
प्रम्लाननलिनाभानि भान्ति वक्त्राणि माधव १२
द्रोणेन निहताः शूराः शेरते रुचिराङ्गदाः
द्रोणेनाभिमुखाः सर्वे भ्रातरः पञ्च केकयाः १३

तप्तकाञ्चनवर्माणस्ताम्रध्वजरथस्रजः
भासयन्ति महीं भासा ज्वलिता इव पावकाः १४
द्रोणेन द्रुपदं संख्ये पश्य माधव पातितम्
महाद्विपमिवारण्ये सिंहेन महता हतम् १५
पाञ्चालराज्ञो विपुलं पुण्डरीकाक्ष पाण्डुरम्
आतपत्रं समाभाति शरदीव दिवाकरः १६
एतास्तु द्रुपदं वृद्धं स्नुषा भार्याश्च दुःखिताः
दग्ध्वा गच्छन्ति पाञ्चाल्यं राजानमपसव्यतः १७
धृष्टकेतुं महेष्वासं चेदिपुंगवमङ्गनाः
द्रोणेन निहतं शूरं हरन्ति हतचेतसः १८
द्रोणास्त्रमभिहत्यैष विमर्दे मधुसूदन
महेष्वासो हतः शेते नद्या हृत इव द्रुमः १९
एष चेदिपतिः शूरो धृष्टकेतुर्महारथः
शेते विनिहतः संख्ये हत्वा शत्रून्सहस्रशः २०
वितुद्यमानं विहगैस्तं भार्याः प्रत्युपस्थिताः
चेदिराजं हृषीकेश हतं सबलबान्धवम् २१
दाशार्हीपुत्रजं वीरं शयानं सत्यविक्रमम्
आरोप्याङ्के रुदन्त्येताश्चेदिराजवराङ्गनाः २२
अस्य पुत्रं हृषीकेश सुवक्त्रं चारुकुण्डलम्
द्रोणेन समरे पश्य निकृत्तं बहुधा शरैः २३
पितरं नूनमाजिस्थं युध्यमानं परैः सह
नाजहात्पृष्ठतो वीरमद्यापि मधुसूदन २४
एवं ममापि पुत्रस्य पुत्रः पितरमन्वगात्
दुर्योधनं महाबाहो लक्ष्मणः परवीरहा २५
विन्दानुविन्दावावन्त्यौ पतितौ पश्य माधव
हिमान्ते पुष्पितौ शालौ मरुता गलिताविव २६
काञ्चनाङ्गदवर्माणौ बाणखड्गधनुर्धरौ
ऋषभप्रतिरूपाक्षौ शयानौ विमलस्रजौ २७
अवध्याः पाण्डवाः कृष्ण सर्व एव त्वया सह
ये मुक्ता द्रोणभीष्माभ्यां कर्णाद्वैकर्तनात्कृपात् २८

दुर्योधनाद्द्रोणसुतात्सैन्धवाच्च महारथात्
सोमदत्ताद्विकर्णाच्च शूराच्च कृतवर्मणः
ये हन्युः शस्त्रवेगेन देवानपि नरर्षभाः २९
त इमे निहताः संख्ये पश्य कालस्य पर्ययम्
नातिभारोऽस्ति दैवस्य ध्रुवं माधव कश्चन
यदिमे निहताः शूराः क्षत्रियैः क्षत्रियर्षभाः ३०
तदैव निहताः कृष्ण मम पुत्रास्तरस्विनः
यदैवाकृतकामस्त्वमुपप्लव्यं गतः पुनः ३१
शंतनोश्चैव पुत्रेण प्राज्ञेन विदुरेण च
तदैवोक्तास्मि मा स्नेहं कुरुष्वात्मसुतेष्विति ३२
तयोर्न दर्शनं तात मिथ्या भवितुमर्हति
अचिरेणैव मे पुत्रा भस्मीभूता जनार्दन ३३
वैशम्पायन उवाच
इत्युक्त्वा न्यपतद्भूमौ गान्धारी शोककर्शिता
दुःखोपहतविज्ञाना धैर्यमुत्सृज्य भारत ३४
ततः कोपपरीताङ्गी पुत्रशोकपरिप्लुता
जगाम शौरिं दोषेण गान्धारी व्यथितेन्द्रिया ३५
गान्धार्युवाच
पाण्डवा धार्त्तराष्ट्राश्च द्रुग्धाः कृष्ण परस्परम्
उपेक्षिता विनश्यन्तस्त्वया कस्माज्जनार्दन ३६
शक्तेन बहुभृत्येन विपुले तिष्ठता बले
उभयत्र समर्थेन श्रुतवाक्येन चैव ह ३७
इच्छतोपेक्षितो नाशः कुरूणां मधुसूदन
यस्मात्त्वया महाबाहो फलं तस्मादवाप्नुहि ३८
पतिशुश्रूषया यन्मे तपः किंचिदुपार्जितम्
तेन त्वां दुरवापात्मञ्शप्स्ये चक्रगदाधर ३९
यस्मात्परस्परं घ्नन्तो ज्ञातयः कुरुपाण्डवाः
उपेक्षितास्ते गोविन्द तस्माज्ज्ञातीन्वधिष्यति ४०
त्वमप्युपस्थिते वर्षे षट्त्रिंशे मधुसूदन
हतज्ञातिर्हतामात्यो हतपुत्रो वनेचरः

कुत्सितेनाभ्युपायेन निधनं समवाप्स्यसि ४१
तवाप्येवं हतसुता निहतज्ञातिबान्धवाः
स्त्रियः परिपतिष्यन्ति यथैता भरतस्त्रियः ४२
वैशम्पायन उवाच
तच्छ्रुत्वा वचनं घोरं वासुदेवो महामनाः
उवाच देवीं गान्धारीमीषदभ्युत्स्मयन्निव ४३
संहर्ता वृष्णिचक्रस्य नान्यो मद्विद्यते शुभे
जानेऽहमेतदप्येवं चीर्णं चरसि क्षत्रिये ४४
अवध्यास्ते नरैरन्यैरपि वा देवदानवैः
परस्परकृतं नाशमतः प्राप्स्यन्ति यादवाः ४५
इत्युक्तवति दाशार्हे पाण्डवास्त्रस्तचेतसः
बभूवुर्भृशसंविग्ना निराशाश्चापि जीविते ४६

इति श्रीमहाभारते स्त्रीपर्वणि पञ्चविंशोऽध्यायः २५

समाप्तं स्त्रीपर्व

षड्विंशोऽध्यायः

वासुदेव उवाच
उत्तिष्ठोत्तिष्ठ गान्धारि मा च शोके मनः कृथाः
तवैव ह्यपराधेन कुरवो निधनं गताः १
या त्वं पुत्रं दुरात्मानमीर्षुमत्यन्तमानिनम्
दुर्योधनं पुरस्कृत्य दुष्कृतं साधु मन्यसे २
निष्ठुरं वैरपरुषं वृद्धानां शासनातिगम्
कथमात्मकृतं दोषं मय्याधातुमिहेच्छसि ३
मृतं वा यदि वा नष्टं योऽतीतमनुशोचति
दुःखेन लभते दुःखं द्वावनर्थौ प्रपद्यते ४
तपोर्थीयं ब्राह्मणी धत्त गर्भं गौर्वोढारं धावितारं तुरंगी
शूद्रा दासं पशुपालं तु वैश्या वधार्थीयं त्वद्विधा राजपुत्री ५
वैशम्पायन उवाच
तच्छ्रुत्वा वासुदेवस्य पुनरुक्तं वचोऽप्रियम्
तूष्णीं बभूव गान्धारी शोकव्याकुललोचना ६

धृतराष्ट्रस्तु राजर्षिर्निगृह्याबुद्धिजं तमः
पर्यपृच्छत धर्मात्मा धर्मराजं युधिष्ठिरम् ७
जीवतां परिमाणज्ञः सैन्यानामसि पाण्डव
हतानां यदि जानीषे परिमाणं वदस्व मे ८
युधिष्ठिर उवाच
दशायुतानामयुतं सहस्राणि च विंशतिः
कोटयः षष्टिश्च षट्चैव येऽस्मिन्राजमृधे हताः ९
अलक्ष्याणां तु वीराणां सहस्राणि चतुर्दश
दश चान्यानि राजेन्द्र शतं षष्टिश्च पञ्च च १०
धृतराष्ट्र उवाच
युधिष्ठिर गतिं कां ते गताः पुरुष सत्तमाः
आचक्ष्व मे महाबाहो सर्वज्ञो ह्यसि मे मतः ११
युधिष्ठिर उवाच
यैर्हुतानि शरीराणि हृष्टैः परमसंयुगे
देवराजसमाँल्लोकान्गतास्ते सत्यविक्रमाः १२
ये त्वहृष्टेन मनसा मर्तव्यमिति भारत
युध्यमाना हताः संख्ये ते गन्धर्वैः समागताः १३
ये तु संग्रामभूमिष्ठा याचमानाः पराङ्मुखाः
शस्त्रेण निधनं प्राप्ता गतास्ते गुह्यकान्प्रति १४
पीड्यमानाः परैर्ये तु हीयमाना निरायुधाः
ह्रीनिषेधा महात्मानः परानभिमुखा रणे १५
छिद्यमानाः शितैः शस्त्रैः क्षत्रधर्मपरायणाः
गतास्ते ब्रह्मसदनं हता वीराः सुवर्चसः १६
ये तत्र निहता राजन्नन्तरायोधनं प्रति
यथाकथंचित्ते राजन्संप्राप्ता उत्तरान्कुरून् १७
धृतराष्ट्र उवाच
केन ज्ञानबलेनैवं पुत्र पश्यसि सिद्धवत्
तन्मे वद महाबाहो श्रोतव्यं यदि वै मया १८
युधिष्ठिर उवाच
निदेशाद्भवतः पूर्वं वने विचरता मया

तीर्थयात्राप्रसङ्गेन संप्राप्तोऽयमनुग्रहः १९
देवर्षिर्लोशमो दृष्टस्ततः प्राप्तोऽस्म्यनुस्मृतिम्
दिव्यं चक्षुरपि प्राप्तं ज्ञानयोगेन वै पुरा २०
धृतराष्ट्र उवाच
येऽत्रानाथा जनस्यास्य सनाथा ये च भारत
कच्चित्तेषां शरीराणि धक्ष्यन्ति विधिपूर्वकम् २१
न येषां सन्ति कर्तारो न च येऽत्राहिताग्नयः
वयं च कस्य कुर्यामो बहुत्वात्तात कर्मणः २२
यान्सुपर्णाश्च गृध्राश्च विकर्षन्ति ततस्ततः
तेषां तु कर्मणा लोका भविष्यन्ति युधिष्ठिर २३
वैशम्पायन उवाच
एवमुक्तो महाप्राज्ञः कुन्तीपुत्रो युधिष्ठिरः
आदिदेश सुधर्माणं धौम्यं सूतं च सञ्जयम् २४
विदुरं च महाबुद्धिं युयुत्सुं चैव कौरवम्
इन्द्रसेनमुखांश्चैव भृत्यान्सूतांश्च सर्वशः २५
भवन्तः कारयन्त्वेषां प्रेतकार्याणि सर्वशः
यथा चानाथवत्किंचिच्छरीरं न विनश्यति २६
शासनाद्धर्मराजस्य क्षत्ता सूतश्च सञ्जयः
सुधर्मा धौम्यसहित इन्द्रसेनादयस्तथा २७
चन्दनागुरुकाष्ठानि तथा कालीयकान्युत
घृतं तैलं च गन्धांश्च क्षौमाणि वसनानि च २८
समाहृत्य महार्हाणि दारूणां चैव संचयान्
रथांश्च मृदितांस्तत्र नानाप्रहरणानि च २९
चिताः कृत्वा प्रयत्नेन यथामुख्यान्नराधिपान्
दाहयामासुरव्यग्रा विधिदृष्टेन कर्मणा ३०
दुर्योधनं च राजानं भ्रातॄंश्चास्य शताधिकान्
शल्यं शलं च राजानं भूरिश्रवसमेव च ३१
जयद्रथं च राजानमभिमन्युं च भारत
दौःशासनिं लक्ष्मणं च धृष्टकेतुं च पार्थिवम् ३२
बृहन्तं सोमदत्तं च सृञ्जयांश्च शताधिकान्

राजानं क्षेमधन्वानं विराटद्रुपदौ तथा ३३
शिखण्डिनं च पाञ्चाल्यं धृष्टद्युम्नं च पार्षतम्
युधामन्युं च विक्रान्तमुत्तमौजसमेव च ३४
कौसल्यं द्रौपदेयांश्च शकुनिं चापि सौबलम्
अचलं वृषकं चैव भगदत्तं च पार्थिवम् ३५
कर्णं वैकर्तनं चैव सहपुत्रममर्षणम्
केकयांश्च महेष्वासांस्त्रिगर्तांश्च महारथान् ३६
घटोत्कचं राक्षसेन्द्रं बकभ्रातरमेव च
अलम्बुसं च राजानं जलसंधं च पार्थिवम् ३७
अन्यांश्च पार्थिवान्राजञ्शतशोऽथ सहस्रशः
घृतधाराहुतैर्दीप्तैः पावकैः समदाहयन् ३८
पितृमेधाश्च केषांचिदवर्तन्त महात्मनाम्
सामभिश्चाप्यगायन्त तेऽन्वशोच्यन्त चापरैः ३९
साम्नामृचां च नादेन स्त्रीणां च रुदितस्वनैः
कश्मलं सर्वभूतानां निशायां समपद्यत ४०
ते विधूमाः प्रदीप्ताश्च दीप्यमानाश्च पावकाः
नभसीवान्वदृश्यन्त ग्रहास्तन्वभ्रसंवृताः ४१
ये चाप्यनाथास्तत्रासन्नानादेशसमागताः
तांश्च सर्वान्समानाय्य राशीन्कृत्वा सहस्रशः ४२
चित्वा दारुभिरव्यग्रः प्रभूतैः स्नेहतापितैः
दाहयामास विदुरो धर्मराजस्य शासनात् ४३
कारयित्वा क्रियास्तेषां कुरुराजो युधिष्ठिरः
धृतराष्ट्रं पुरस्कृत्य गङ्गामभिमुखोऽगमत् ४४
इति श्रीमहाभारते स्त्रीपर्वणि षड्विंशोऽध्यायः २६

## सप्तविंशोऽध्यायः

वैशम्पायन उवाच
ते समासाद्य गङ्गां तु शिवां पुण्यजनोचिताम्
ह्रदिनीं वप्रसंपन्नां महानूपां महावनाम् १
भूषणान्युत्तरीयाणि वेष्टनान्यवमुच्य च

ततः पितॄणां पौत्राणां भ्रातॄणां स्वजनस्य च २
पुत्राणामार्यकाणां च पतीनां च कुरुस्त्रियः
उदकं चक्रिरे सर्वा रुदन्त्यो भृशदुःखिताः
सुहृदां चापि धर्मज्ञाः प्रचक्रुः सलिलक्रियाः ३
उदके क्रियमाणे तु वीराणां वीरपत्निभिः
सूपतीर्थाभवद्गङ्गा भूयो विप्रससार च ४
तन्महोदधिसंकाशं निरानन्दमनुत्सवम्
वीरपत्नीभिराकीर्णं गंगातीरमशोभत ५
ततः कुन्ती महाराज सहसा शोककर्शिता
रुदती मन्दया वाचा पुत्रान्वचनमब्रवीत् ६
यः स शूरो महेष्वासो रथयूथपयूथपः
अर्जुनेन हतः संख्ये वीरलक्षणलक्षितः ७
यं सूतपुत्रं मन्यध्वं राधेयमिति पाण्डवाः
यो व्यराजच्चमूमध्ये दिवाकर इव प्रभुः ८
प्रत्ययुध्यत यः सर्वान्पुरा वः सपदानुगान्
दुर्योधनबलं सर्वं यः प्रकर्षन्व्यरोचत ९
यस्य नास्ति समो वीर्ये पृथिव्यामपि कश्चन
सत्यसंधस्य शूरस्य संग्रामेष्वपलायिनः १०
कुरुध्वमुदकं तस्य भ्रातुरक्लिष्टकर्मणः
स हि वः पूर्वजो भ्राता भास्करान्मय्यजायत
कुण्डली कवची शूरो दिवाकरसमप्रभः ११
श्रुत्वा तु पाण्डवाः सर्वे मातुर्वचनमप्रियम्
कर्णमेवानुशोचन्त भूयश्चार्ततराभवन् १२
ततः सः पुरुषव्याघ्रः कुन्तीपुत्रो युधिष्ठिरः
उवाच मातरं वीरो निःश्वसन्निव पन्नगः १३
यस्येषुपातमासाद्य नान्यस्तिष्ठेद्धनंजयात्
कथं पुत्रो भवत्यां स देवगर्भः पुराभवत् १४
यस्य बाहुप्रतापेन तापिताः सर्वतो वयम्
तमग्निमिव वस्त्रेण कथं छादितवत्यसि
यस्य बाहुबलं घोरं धार्तराष्ट्रैरुपासितम् १५

नान्यः कुन्तीसुतात्कर्णादगृह्णाद्रथिनां रथी
स नः प्रथमजो भ्राता सर्वशस्त्रभृतां वरः
असूत तं भवत्यग्रे कथमद्भुतविक्रमम् १६
अहो भवत्या मन्त्रस्य पिधानेन वयं हताः
निधनेन हि कर्णस्य पीडिताः स्म सबान्धवाः १७
अभिमन्योर्विनाशेन द्रौपदेयवधेन च
पाञ्चालानां च नाशेन कुरूणां पतनेन च १८
ततः शतगुणं दुःखमिदं मामस्पृशद्भृशम्
कर्णमेवानुशोचन्हि दह्याम्यग्नाविवाहितः १९
न हि स्म किंचिदप्राप्यं भवेदपि दिवि स्थितम्
न च स्म वैशसं घोरं कौरवान्तकरं भवेत् २०
एवं विलप्य बहुलं धर्मराजो युधिष्ठिरः
विनदञ्शनकै राजंश्चकारास्योदकं प्रभुः २१
ततो विनेदुः सहसा स्त्रीपुंसास्तत्र सर्वशः
अभितो ये स्थितास्तत्र तस्मिन्नुदककर्मणि २२
तत आनाययामास कर्णस्य सपरिच्छदम्
स्त्रियः कुरुपतिर्धीमान्भ्रातुः प्रेम्णा युधिष्ठिरः २३
स ताभिः सह धर्मात्मा प्रेतकृत्यमनन्तरम्
कृत्वोत्ततार गङ्गायाः सलिलादाकुलेन्द्रियः २४

इति श्रीमहाभारते स्त्रीपर्वणि सप्तविंशोऽध्यायः २७

समाप्तं जलप्रदानिकपर्व

स्त्रीपर्व समाप्तम्

# महाभारत
## शान्तिपर्व

श्रीगणेशाय नमः
ॐ नारायणं नमस्कृत्य नरं चैव नरोत्तमम्
देवीं सरस्वतीं चैव ततो जयमुदीरयेत्

### अथ प्रथमोऽध्यायः

वैशम्पायन उवाच
कृतोदकास्ते सुहृदां सर्वेषां पाण्डुनन्दनाः
विदुरो धृतराष्ट्रश्च सर्वाश्च भरतस्त्रियः १
तत्र ते सुमहात्मानो न्यवसन्कुरुनन्दनाः
शौचं निवर्तयिष्यन्तो मासमेकं बहिः पुरात् २
कृतोदकं तु राजानं धर्मात्मानं युधिष्ठिरम्
अभिजग्मुर्महात्मानः सिद्धा ब्रह्मर्षिसत्तमाः ३
द्वैपायनो नारदश्च देवलश्च महानृषिः
देवस्थानश्च कण्वश्च तेषां शिष्याश्च सत्तमाः ४
अन्ये च वेदविद्वांसः कृतप्रज्ञा द्विजातयः
गृहस्थाः स्नातकाः सर्वे ददृशुः कुरुसत्तमम् ५
अभिगम्य महात्मानः पूजिताश्च यथाविधि
आसनेषु महार्हेषु विविशुस्ते महर्षयः ६
प्रतिगृह्य ततः पूजां तत्कालसदृशीं तदा
पर्युपासन्यथान्यायं परिवार्य युधिष्ठिरम् ७
पुण्ये भागीरथीतीरे शोकव्याकुलचेतसम्
आश्वासयन्तो राजानं विप्राः शतसहस्रशः ८
नारदस्त्वब्रवीत्काले धर्मात्मानं युधिष्ठिरम्
विचार्य मुनिभिः सार्धं तत्कालसदृशं वचः ९
भवतो बाहुवीर्येण प्रसादान्माधवस्य च
जितेयमवनिः कृत्स्ना धर्मेण च युधिष्ठिर १०

दिष्ट्या मुक्ताः स्थ संग्रामादस्माल्लोकभयंकरात्
क्षत्रधर्मरतश्चापि कच्चिन्मोदसि पाण्डव ११
कच्चिच्च निहतामित्रः प्रीणासि सुहृदो नृप
कच्चिच्छ्रियमिमां प्राप्य न त्वां शोकः प्रबाधते १२
युधिष्ठिर उवाच
विजितेयं मही कृत्स्ना कृष्णबाहुबलाश्रयात्
ब्राह्मणानां प्रसादेन भीमार्जुनबलेन च १३
इदं तु मे महद्दुःखं वर्तते हृदि नित्यदा
कृत्वा ज्ञातिक्षयमिमं महान्तं लोभकारितम् १४
सौभद्रं द्रौपदेयांश्च घातयित्वा प्रियान्सुतान्
जयोऽयमजयाकारो भगवन्प्रतिभाति मे १५
किं नु वक्ष्यति वार्ष्णेयी वधूर्मे मधुसूदनम्
द्वारकावासिनी कृष्णमितः प्रतिगतं हरिम् १६
द्रौपदी हतपुत्रेयं कृपणा हतबान्धवा
अस्मत्प्रियहिते युक्ता भूयः पीडयतीव माम् १७
इदमन्यच्च भगवन्यत्त्वां वक्ष्यामि नारद
मन्त्रसंवरणेनास्मि कुन्त्या दुःखेन योजितः १८
योऽसौ नागायुतबलो लोकेऽप्रतिरथो रणे
सिंहखेलगतिर्धीमान्घृणी दान्तो यतव्रतः १९
आश्रयो धार्तराष्ट्राणां मानी तीक्ष्णपराक्रमः
अमर्षी नित्यसंरम्भी क्षेप्तास्माकं रणे रणे २०
शीघ्रास्त्रश्चित्रयोधी च कृती चाद्भुतविक्रमः
गूढोत्पन्नः सुतः कुन्त्या भ्रातास्माकं च सोदरः २१
तोयकर्मणि यं कुन्ती कथयामास सूर्यजम्
पुत्रं सर्वगुणोपेतमवकीर्णं जले पुरा २२
यं सूतपुत्रं लोकोऽय राधेयं चाप्यमन्यत
स ज्येष्ठपुत्रः कुन्त्या वै भ्रातास्माकं च मातृजः २३
अजानता मया संख्ये राज्यलुब्धेन घातितः
तन्मे दहति गात्राणि तूलराशिमिवानलः २४
न हि तं वेद पार्थोऽपि भ्रातरं श्वेतवाहनः

नाहं न भीमो न यमौ स त्वस्मान्वेद सुब्रतः २५
गता किल पृथा तस्य सकाशमिति नः श्रुतम्
अस्माकं शमकामा वै त्वं च पुत्रो ममेत्यथ २६
पृथाया न कृतः कामस्तेन चापि महात्मना
अतिपश्चादिदं मातर्यवोचदिति नः श्रुतम् २७
न हि शक्ष्याम्यहं त्यक्तुं नृपं दुर्योधनं रणे
अनार्यं च नृशंसं च कृतघ्नं च हि मे भवेत् २८
युधिष्ठिरेण संधिं च यदि कुर्यां मते तव
भीतो रणे श्वेतवाहादिति मां मंस्यते जनः २९
सोऽह निर्जित्य समरे विजयं सहकेशवम्
संधास्ये धर्मपुत्रेण पश्चादिति च सोऽब्रवीत् ३०
तमवोचत्किल पृथा पुनः पृथुलवक्षसम्
चतुर्णामभयं देहि कामं युध्यस्व फल्गुनम् ३१
सोऽब्रवीन्मातरं धीमान्वेपमानः कृताञ्जलि
प्राप्तान्विषह्यांश्चतुरो न हनिष्यामि ते सुतान् ३२
पञ्चैव हि सुता मातर्भविष्यन्ति हि ते ध्रुवम्
सकर्णा वा हते पार्थे सार्जुना वा हते मयि ३३
तं पुत्रगृद्धिनी भूयो माता पुत्रमथाब्रवीत्
भ्रातॄणां स्वस्ति कुर्वीथा येषां स्वस्ति चिकीर्षसि ३४
तमेवमुक्त्वा तु पृथा विसृज्योपययौ गृहान्
सोऽजुनेन हतो वीरो भ्रात्रा भ्रात्रा सहोदरः ३५
न चैव विवृतो मन्त्रः पृथायास्तस्य वा मुने
अथ शूरो महेष्वासः पार्थेनासौ निपातितः ३६
अहं त्वज्ञासिषं पश्चात्स्वसोदर्यं द्विजोत्तम
पूर्वजं भ्रातरं कर्णं पृथाया वचनात्प्रभो ३७
तेन मे दूयतेऽतीव हृदयं भ्रातृघातिनः
कर्णार्जुनसहायोऽह जयेयमपि वासवम् ३८
सभायां क्लिश्यमानस्य धार्तराष्ट्रैर्दुरात्मभिः
सहसोत्पतितः क्रोधः कर्णं दृष्ट्वा प्रशाम्यति ३९
यदा ह्यस्य गिरो रूक्षाः शृणोमि कटुकोदयाः

सभायां गदतो द्यूते दुर्योधनहितैषिणः ४०
तदा नश्यति मे क्रोधः पादौ तस्य निरीक्ष्य ह
कुन्त्या हि सदृशौ पादौ कर्णस्येति मतिर्मम ४१
सादृश्यहेतुमन्विच्छन्पृथायास्तस्य चैव ह
कारणं नाधिगच्छामि कथंचिदपि चिन्तयन् ४२
कथं नु तस्य संग्रामे पृथिवी चक्रमग्रसत्
कथं च शप्तो भ्राता मे तत्त्वं वक्तुमिहार्हसि ४३
श्रोतुमिच्छामि भगवंस्त्वत्तः सर्वं यथातथम्
भवान्हि सर्वविद्विद्वाँल्लोके वेद कृताकृतम् ४४
इति श्रीमहाभारते शान्तिपर्वणि प्रथमोऽध्यायः १

द्वितीयोऽध्यायः

वैशम्पायन उवाच
स एवमुक्तस्तु मुनिर्नारदो वदतां वरः
कथयामास तत्सर्वं यथा शप्तः स सूतजः १
एवमेतन्महाबाहो यथा वदसि भारत
न कर्णार्जुनयोः किंचिदविषह्यं भवेद्रणे २
गुह्यमेतत्तु देवानां कथयिष्यामि ते नृप
तन्निबोध महाराज यथा वृत्तमिदं पुरा ३
क्षत्रं स्वर्गं कथं गच्छेच्छस्त्रपूतमिति प्रभो
संघर्षजननस्तस्मात्कन्यागर्भो विनिर्मितः ४
स बालस्तेजसा युक्तः सूतपुत्रत्वमागतः
चकाराङ्गिरसां श्रेष्ठे धनुर्वेदं गुरौ तव ५
स बलं भीमसेनस्य फल्गुनस्य च लाघवम्
बुद्धिं च तव राजेन्द्र यमयोर्विनयं तथा ६
सख्यं च वासुदेवेन बाल्ये गाण्डीवधन्वनः
प्रजानामनुरागं च चिन्तयानो व्यदह्यत ७
स सख्यमगमद्बाल्ये राज्ञा दुर्योधनेन वै
युष्माभिर्नित्यसंद्विष्टो दैवाच्चापि स्वभावतः ८
विद्याधिकमथालक्ष्य धनुर्वेदे धनंजयम्

द्रोणं रहस्युपागम्य कर्णो वचनमब्रवीत् ९
ब्रह्मास्त्रं वेत्तुमिच्छामि सरहस्यनिवर्तनम्
अर्जुनेन समो युद्धे भवेयमिति मे मतिः १०
समः पुत्रेषु च स्नेहः शिष्येषु च तव ध्रुवम्
त्वत्प्रसादान्न मां ब्रूयुरकृतास्त्रं विचक्षणाः ११
द्रोणस्तथोक्तः कर्णेन सापेक्षः फल्गुनं प्रति
दौरात्म्यं चापि कर्णस्य विदित्वा तमुवाच ह १२
ब्रह्मास्त्रं ब्राह्मणो विद्याद्यथावच्चरितव्रतः
क्षत्रियो वा तपस्वी यो नान्यो विद्यात्कथंचन १३
इत्युक्तोऽङ्गिरसां श्रेष्ठमामन्त्र्य प्रतिपूज्य च
जगाम सहसा रामं महेन्द्रं पर्वतं प्रति १४
स तु राममुपागम्य शिरसाभिप्रणम्य च
ब्राह्मणो भार्गवोऽस्मीति गौरवेणाभ्यगच्छत १५
रामस्तं प्रतिजग्राह पृष्ट्वा गोत्रादि सर्वशः
उष्यतां स्वागतं चेति प्रीतीमांश्चाभवद्भृशम् १६
तत्र कर्णस्य वसतो महेन्द्रे पर्वतोत्तमे
गन्धर्वै राक्षसैर्यक्षैर्देवैश्चासीत्समागमः १७
स तत्रेष्वस्त्रमकरोद्भृगुश्रेष्ठाद्यथाविधि
प्रियश्चाभवदत्यर्थं देवगन्धर्वरक्षसाम् १८
स कदाचित्समुद्रान्ते विचरन्नाश्रमान्तिके
एकः खड्गधनुष्पाणिः परिचक्राम सूतजः १९
सोऽग्निहोत्रप्रसक्तस्य कस्यचिद्ब्रह्मवादिनः
जघानाज्ञानतः पार्थ होमधेनुं यदृच्छया २०
तदज्ञानकृतं मत्वा ब्राह्मणाय न्यवेदयत्
कर्णः प्रसादयंश्चैनमिदमित्यब्रवीद्वचः २१
अबुद्धिपूर्वं भगवान्धेनुरेषा हता तव
मया तत्र प्रसादं मे कुरुष्वेति पुनः पुनः २२
तं स विप्रोऽब्रवीत्क्रुद्धो वाचा निर्भर्त्सयन्निव
दुराचार वधार्हस्त्वं फलं प्राप्नुहि दुर्मते २३
येन विस्पर्धसे नित्यं यदर्थं घटसेऽनिशम्

युध्यतस्तेन ते पाप भूमिश्चक्रं ग्रसिष्यति २४
ततश्चक्रे महीग्रस्ते मूर्धानं ते विचेतसः
पातयिष्यति विक्रम्य शत्रुर्गच्छ नराधम २५
यथेयं गौर्हता मूढ प्रमत्तेन त्वया मम
प्रमत्तस्यैवमेवान्यः शिरस्ते पातयिष्यति २६
ततः प्रसादयामास पुनस्तं द्विजसत्तमम्
गोभिर्धनैश्च रत्नैश्च स चैनं पुनरब्रवीत् २७
नेदं मद्व्याहृतं कुर्यात्सर्वलोकोऽपि वै मृषा
गच्छ वा तिष्ठ वा यद्वा कार्यं ते तत्समाचर २८
इत्युक्तो ब्राह्मणेनाथ कर्णो दैन्यादधोमुखः
राममभ्यागमद्भीतस्तदेव मनसा स्मरन् २९

इति श्रीमहाभारते शान्तिपर्वणि द्वितीयोऽध्यायः २

## तृतीयोऽध्यायः

नारद उवाच
कर्णस्य बाहुवीर्येण प्रश्रयेण दमेन च
तुतोष भृगुशार्दूलो गुरुशुश्रूषया तथा १
तस्मै स विधिवत्कृत्स्नं ब्रह्मास्त्रं सनिवर्तनम्
प्रोवाचाखिलमव्यग्रं तपस्वी सुतपस्विने २
विदितास्त्रस्ततः कर्णो रममाणोऽश्रमे भृगोः
चकार वै धनुर्वेदे यत्नमद्भुतविक्रमः ३
ततः कदाचिद्रामस्तु चरन्नाश्रममन्तिकात्
कर्णेन सहितो धीमानुपवासेन कर्शितः ४
सुष्वाप जामदग्न्यो वै विस्रम्भोत्पन्नसौहृदः
कर्णस्योत्सङ्ग आधाय शिरः क्लान्तमना गुरुः ५
अथ कृमिः श्लेष्ममयो मांसशोणितभोजनः
दारुणो दारुणस्पर्शः कर्णस्याभ्याशमागमत् ६
स तस्योरुमथासाद्य बिभेद रुधिराशनः
न चैनमशकत्क्षेप्तुं हन्तुं वापि गुरोर्भयात् ७
सदंश्यमानोऽपि तथा कृमिणा तेन भारत

गुरुप्रबोधशङ्की च तमुपैक्षत सूतजः ८
कर्णस्तु वेदनां धैर्यादसह्यां विनिगृह्य ताम्
अकम्पन्नव्यथंश्चैव धारयामास भार्गवम् ९
यदा तु रुधिरेणाङ्गे परिस्पृष्टो भृगूद्वहः
तदाबुध्यत तेजस्वी संतप्तश्चेदमब्रवीत् १०
अहोऽस्म्यशुचितां प्राप्तः किमिदं क्रियते त्वया
कथयस्व भयं त्यक्त्वा याथातथ्यमिदं मम ११
तस्य कर्णस्तदाचष्ट कृमिणा परिभक्षणम्
ददर्श रामस्तं चापि कृमिं सूकरसंनिभम् १२
अष्टपादं तीक्ष्णदंष्ट्रं सूचीभिरिव संवृतम्
रोमभिः संनिरुद्धाङ्गमलर्कं नाम नामतः १३
स दृष्टमात्रो रामेण कृमिः प्राणानवासृजत्
तस्मिन्नेवासृक्संक्लिन्ने तदद्भुतमिवाभवत् १४
ततोऽन्तरिक्षे ददृशे विश्वरूपः करालवान्
राक्षसो लोहितग्रीवः कृष्णाङ्गो मेघवाहनः १५
स रामं प्राञ्जलिर्भूत्वा बभाषे पूर्णमानसः
स्वस्ति ते भृगुशार्दूल गमिष्यामि यथागतम् १६
मोक्षितो नरकादस्मि भवता मुनिसत्तम
भद्रं च तेऽस्तु नन्दिश्च प्रियं मे भवता कृतम् १७
तमुवाच महाबाहुर्जामदग्न्यः प्रतापवान्
कस्त्वं कस्माच्च नरकं प्रतिपन्नो ब्रवीहि तत् १८
सोऽब्रवीदहमासं प्राग्गृत्सो नाम महासुरः
पुरा देवयुगे तात भृगोस्तुल्यवया इव १९
सोऽह भृगोः सुदयितां भार्यामपहरं बलात्
महर्षेरभिशापेन कृमिभूतोऽपतं भुवि २०
अब्रवीत्तु स मां क्रोधात्तव पूर्वपितामहः
मूत्रश्लेष्माशनः पाप निरयं प्रतिपत्स्यसे २१
शापस्यान्तो भवेद्ब्रह्मन्नित्येवं तमथाब्रुवम्
भविता भार्गवे राम इति मामब्रवीद्भृगुः २२
सोऽहमेतां गतिं प्राप्तो यथा नकुशलं तथा

त्वया साधो समागम्य विमुक्तः पापयोनितः २३
एवमुक्त्वा नमस्कृत्य ययौ रामं महासुरः
रामः कर्णं तु सक्रोधमिदं वचनमब्रवीत् २४
अतिदुःखमिदं मूढ न जातु ब्राह्मणः सहेत्
क्षत्रियस्यैव ते धैर्यं कामया सत्यमुच्यताम् २५
तमुवाच ततः कर्णः शापभीतः प्रसादयन्
ब्रह्मक्षत्रान्तरे सूतं जातं मां विद्धि भार्गव २६
राधेयः कर्ण इति मां प्रवदन्ति जना भुवि
प्रसादं कुरु मे ब्रह्मन्नस्त्रलुब्धस्य भार्गव २७
पिता गुरुर्न संदेहो वेदविद्याप्रदः प्रभुः
अतो भार्गव इत्युक्तं मया गोत्रं तवान्तिके २८
तमुवाच भृगुश्रेष्ठः सरोषः प्रहसन्निव
भूमौ निपतितं दीनं वेपमानं कृताञ्जलिम् २९
यस्मान्मिथ्योपचरितो अस्त्रलोभादिह त्वया
तस्मादेतद्धि ते मूढ ब्रह्मास्त्रं प्रतिभास्यति ३०
अन्यत्र वधकालात्ते सदृशेन समेयुषः
अब्राह्मणे न हि ब्रह्म ध्रुवं तिष्ठेत्कदाचन ३१
गच्छेदानीं न ते स्थानमनृतस्येह विद्यते
न त्वया सदृशो युद्धे भविता क्षत्रियो भुवि ३२
एवमुक्तस्तु रामेण न्यायेनोपजगाम सः
दुर्योधनमुपागम्य कृतास्त्रोऽस्मीति चाब्रवीत् ३३
इति श्रीमहाभारते शान्तिपर्वणि तृतीयोऽध्यायः ३

## चतुर्थोऽध्यायः

नारद उवाच
कर्णस्तु समवाप्यैतदस्त्रं भार्गवनन्दनात्
दुर्योधनेन सहितो मुमुदे भरतर्षभ १
ततः कदाचिद्राजानः समाजग्मुः स्वयंवरे
कलिङ्गविषये राजन्राज्ञश्चित्राङ्गदस्य च २
श्रीमद्राजपुरं नाम नगरं तत्र भारत

राजानः शतशस्तत्र कन्यार्थं समुपागमन् ३
श्रुत्वा दुर्योधनस्तत्र समेतान्सर्वपार्थिवान्
रथेन काञ्चनाङ्गेन कर्णेन सहितो ययौ ४
ततः स्वयंवरे तस्मिन्संप्रवृत्ते महोत्सवे
समापेतुर्नृपतयः कन्यार्थे नृपसत्तम ५
शिशुपालो जरासंधो भीष्मको वक्र एव च
कपोतरोमा नीलश्च रुक्मी च दृढविक्रमः ६
सृगालश्च महाराज स्त्रीराज्याधिपतिश्च यः
अशोकः शतधन्वा च भोजो वीरश्च नामतः ७
एते चान्ये च बहवो दक्षिणां दिशमाश्रिताः
म्लेच्छाचार्याश्च राजानः प्राच्योदीच्याश्च भारत ८
काञ्चनाङ्गदिनः सर्वे बद्धजाम्बूनदस्रजः
सर्वे भास्वरदेहाश्च व्याघ्रा इव मदोत्कटाः ९
ततः समुपविष्टेषु तेषु राजसु भारत
विवेश रङ्गं सा कन्या धात्रीवर्षधरान्विता १०
ततः संश्राव्यमाणेषु राज्ञां नामसु भारत
अत्यक्रामद्धार्तराष्ट्रं सा कन्या वरवर्णिनी ११
दुर्योधनस्तु कौरव्यो नामर्षयत लङ्घनम्
प्रत्यषेधच्च तां कन्यामसत्कृत्य नराधिपान् १२
स वीर्यमदमत्तत्वाद्भीष्मद्रोणावुपाश्रितः
रथमारोप्य तां कन्यामाजुहाव नराधिपान् १३
तमन्वयाद्रथी खड्गी बद्धगोधाङ्गुलित्रवान्
कर्णः शस्त्रभृतां श्रेष्ठः पृष्ठतः पुरुषर्षभ १४
ततो विमर्दः सुमहान्राज्ञामासीद्युधिष्ठिर
संनह्यतां तनुत्राणि रथान्योजयतामपि १५
तेऽभ्यधावन्त संक्रुद्धाः कर्णदुर्योधनावुभौ
शरवर्षाणि मुञ्चन्तो मेघाः पर्वतयोरिव १६
कर्णस्तेषामापततामेकैकेन क्षुरेण ह
धनूंषि सशरावापान्यपातयत भूतले १७
ततो विधनुषः कांश्चित्कांश्चिदुद्यतकार्मुकान्

कांश्चिदुद्वहतो बाणान्रथशक्तिगदास्तथा १८
लाघवादाकुलीकृत्य कर्णः प्रहरतां वरः
हतसूतांश्च भूयिष्ठानवजिग्ये नराधिपान् १९
ते स्वयं त्वरयन्तोऽश्वान्याहि याहीति वादिनः
व्यपेयुस्ते रणं हित्वा राजानो भग्नमानसाः २०
दुर्योधनस्तु कर्णेन पाल्यमानोऽभ्ययात्तदा
हृष्टः कन्यामुपादाय नगरं नागसाह्वयम् २१
इति श्रीमहाभारते शान्तिपर्वणि चतुर्थोऽध्यायः ४

पञ्चमोऽध्यायः

नारद उवाच
आविष्कृतबलं कर्णं ज्ञात्वा राजा तु मागधः
आह्वयद्द्वैरथेनाजौ जरासंधो महीपतिः १
तयोः समभवद्युद्धं दिव्यास्त्रविदुषोर्द्वयोः
युधि नानाप्रहरणैरन्योन्यमभिवर्षतोः २
क्षीणबाणौ विधनुषौ भग्नखड्गौ महीं गतौ
बाहुभिः समसज्जेतामुभावपि बलान्वितौ ३
बाहुकण्टकयुद्धेन तस्य कर्णोऽथ युध्यतः
बिभेद संधिं देहस्य जरया श्लेषितस्य ह ४
स विकारं शरीरस्य दृष्ट्वा नृपतिरात्मनः
प्रीतोऽस्मीत्यब्रवीत्कर्णं वैरमुत्सृज्य भारत ५
प्रीत्या ददौ स कर्णाय मालिनीं नगरीमथ
अङ्गेषु नरशार्दूल स राजासीत्सपत्नजित् ६
पालयामास चम्पां तु कर्णः परबलार्दनः
दुर्योधनस्यानुमते तवापि विदितं तथा ७
एवं शस्त्रप्रतापेन प्रथितः सोऽभवत्क्षितौ
त्वद्धितार्थं सुरेन्द्रेण भिक्षितो वर्मकुण्डले ८
स दिव्ये सहजे प्रादात्कुण्डले परमार्चिते
सहजं कवचं चैव मोहितो देवमायया ९
विमुक्तः कुण्डलाभ्यां च सहजेन च वर्मणा

निहतो विजयेनाजौ वासुदेवस्य पश्यतः १०
ब्राह्मणस्याभिशापेन रामस्य च महात्मनः
कुन्त्याश्च वरदानेन मायया च शतक्रतोः ११
भीष्मावमानात्संख्यायां रथानामर्धकीर्तनात्
शल्यात्तेजोवधाच्चापि वासुदेवनयेन च १२
रुद्रस्य देवराजस्य यमस्य वरुणस्य च
कुबेरद्रोणयोश्चैव कृपस्य च महात्मनः १३
अस्त्राणि दिव्यान्यादाय युधि गाण्डीवधन्वना
हतो वैकर्तनः कर्णो दिवाकरसमद्युतिः १४
एवं सप्तस्तव भ्राता बहुभिश्चापि वञ्चितः
न शोच्यः स नरव्याघ्रो युद्धे हि निधनं गतः १५
इति श्रीमहाभारते शान्तिपर्वणि पञ्चमोऽध्यायः ५

## षष्ठोऽध्यायः

वैशम्पायन उवाच
एतावदुक्त्वा देवर्षिर्विरराम स नारदः
युधिष्ठिरस्तु राजर्षिर्दध्यौ शोकपरिप्लुतः १
तं दीनमनसं वीरमधोवदनमातुरम्
निःश्वसन्तं यथा नागं पर्यश्रुनयनं तथा २
कुन्ती शोकपरीताङ्गी दुःखोपहतचेतना
अब्रवीन्मधुराभाषा काले वचनमर्थवत् ३
युधिष्ठिर महाबाहो नैनं शोचितुमर्हसि
जहि शोकं महाप्राज्ञ शृणु चेदं वचो मम ४
यतितः स मया पूर्वं भ्रात्र्यं ज्ञापयितुं तव
भास्करेण च देवेन पित्रा धर्मभृतां वर ५
यद्वाच्यं हितकामेन सुहृदा भूतिमिच्छता
तथा दिवाकरेणोक्तः स्वप्नान्ते मम चाग्रतः ६
न चैनमशकद्भानुरहं वा स्नेहकारणैः
पुरा प्रत्यनुनेतुं वा नेतुं वाप्येकतां त्वया ७
ततः कालपरीतः स वैरस्योद्धुक्षणे रतः

प्रतीपकारी युष्माकमिति चोपेक्षितो मया ८
इत्युक्तो धर्मराजस्तु मात्रा बाष्पाकुलेक्षणः
उवाच वाक्यं धर्मात्मा शोकव्याकुलचेतनः ९
भवत्या गूढमन्त्रत्वात्पीडितोऽस्मीत्युवाच ताम्
शशाप च महातेजाः सर्वलोकेषु च स्त्रियः
न गुह्यं धारयिष्यन्तीत्यतिदुःखसमन्वितः १०
स राजा पुत्रपौत्राणां सम्बन्धिसुहृदां तथा
स्मरन्नुद्विग्नहृदयो बभूवास्वस्थचेतनः ११
ततः शोकपरीतात्मा सधूम इव पावकः
निर्वेदमगमद्धीमान्राजा सन्तापपीडितः १२
इति श्रीमहाभारते शान्तिपर्वणि षष्ठोऽध्यायः ६

सप्तमोऽध्यायः

वैशम्पायन उवाच
युधिष्ठिरस्तु धर्मात्मा शोकव्याकुलचेतनः
शुशोच दुःखसन्तप्तः स्मृत्वा कर्णं महारथम् १
आविष्टो दुःखशोकाभ्यां निःश्वसंश्च पुनः पुनः
दृष्ट्वार्जुनमुवाचेदं वचनं शोककर्शितः २
यद्भैक्षमाचरिष्याम वृष्ण्यन्धकपुरे वयम्
ज्ञातीन्निष्पुरुषान्कृत्वा नेमां प्राप्स्याम दुर्गतिम् ३
अमित्रा नः समृद्धार्था वृत्तार्थाः कुरवः किल
आत्मानमात्मना हत्वा किं धर्मफलमाप्नुमः ४
धिगस्तु क्षात्रमाचारं धिगस्तु बलमौरसम्
धिगस्त्वमर्षं येनेमामापदं गमिता वयम् ५
साधु क्षमा दमः शौचमवैरोध्यममत्सरः
अहिंसा सत्यवचनं नित्यानि वनचारिणाम् ६
वयं तु लोभान्मोहाच्च स्तम्भं मानं च संश्रिताः
इमामवस्थामापन्ना राज्यलेशबुभुक्षया ७
त्रैलोक्यस्यापि राज्येन नास्मान्कश्चित्प्रहर्षयेत्
बान्धवान्निहतान्दृष्ट्वा पृथिव्यामामिषैषिणः ८

ते वयं पृथिवीहेतोरवध्यान्पृथिवीसमान्
संपरित्यज्य जीवामो हीनार्था हतबान्धवाः ९
आमिषे गृध्यमानानामशुनां नः शुनामिव
आमिषं चैव नो नष्टमामिषस्य च भोजिनः १०
न पृथिव्या सकलया न सुवर्णस्य राशिभिः
न गवाश्वेन सर्वेण ते त्याज्या य इमे हताः ११
संयुक्ताः काममन्युभ्यां क्रोधामर्षसमन्विताः
मृत्युयानं समारुह्य गता वैवस्वतक्षयम् १२
बहु कल्याणमिच्छन्त ईहन्ते पितरः सुतान्
तपसा ब्रह्मचर्येण वन्दनेन तितिक्षया १३
उपवासैस्तथेज्याभिर्व्रतकौतुकमङ्गलैः
लभन्ते मातरो गर्भांस्तान्मासान्दश बिभ्रति १४
यदि स्वस्ति प्रजायन्ते जाता जीवन्ति वा यदि
संभाविता जातबलास्ते दद्युर्यदि नः सुखम्
इह चामुत्र चैवेति कृपणाः फलहेतुकाः १५
तासामयं समारम्भो निवृत्तः केवलोऽफलः
यदासां निहताः पुत्रा युवानो मृष्टकुण्डलाः १६
अभुक्त्वा पार्थिवान्भोगानृणान्यनवदाय च
पितृभ्यो देवताभ्यश्च गता वैवस्वतक्षयम् १७
यदैषामङ्ग पितरौ जातौ काममयाविव
संजातबलरूपेषु तदैव निहता नृपाः १८
संयुक्ताः काममन्युभ्यां क्रोधहर्षासमञ्जसाः
न ते जन्मफलं किंचिद्भोक्तारो जातु कर्हिचित् १९
पाञ्चालानां कुरूणां च हता एव हि येऽहताः
ते वयं त्वधमाँल्लोकान्प्रपद्येम स्वकर्मभिः २०
वयमेवास्य लोकस्य विनाशे कारणं स्मृताः
धृतराष्ट्रस्य पुत्रेण निकृत्या प्रत्यपत्स्महि २१
सदैव निकृतिप्रज्ञो द्वेष्टा मायोपजीवनः
मिथ्यावृत्तः स सततमस्मास्वनपकारिषु २२
अंशकामा वयं ते च न चास्माभिर्न तैर्जितम्

न तैर्भुक्तेयमवनिर्न नार्यो गीतवादितम् २३
नामात्यसमितौ कथ्यं न च श्रुतवतां श्रुतम्
न रत्नानि परार्ध्यानि न भूर्न द्रविणागमः २४
ऋद्धिमस्मासु तां दृष्ट्वा विवर्णो हरिणः कृशः
धृतराष्ट्रस्य नृपतेः सौबलेन निवेदितः २५
तं पिता पुत्रगृद्धित्वादनुमेनेऽनये स्थितम्
अनवेक्ष्यैष पितरं गाङ्गेयं विदुरं तथा
असंशयं धृतराष्ट्रो यथैवाहं तथा गतः २६
अनियम्याशुचिं लुब्धं पुत्रं कामवशानुगम्
पतितो यशसो दीप्ताद्घातयित्वा सहोदरान् २७
इमौ वृद्धौ च शोकाग्नौ प्रक्षिप्य स सुयोधनः
अस्मत्प्रद्वेषसंयुक्तः पापबुद्धिः सदैव हि २८
को हि बन्धुः कुलीनः संस्तथा ब्रूयात्सुहृज्जने
यथासावुक्तवान्क्षुद्रो युयुत्सुर्वृष्णिसंनिधौ २९
आत्मनो हि वयं दोषाद्विनष्टाः शाश्वतीः समाः
प्रदहन्तो दिशः सर्वास्तेजसा भास्करा इव ३०
सोऽस्माकं वैरपुरुषो दुर्मन्त्रिप्रग्रहं गतः
दुर्योधनकृते ह्येतत्कुलं नो विनिपातितम्
अवध्यानां वधं कृत्वा लोके प्राप्ताः स्म वाच्यताम् ३१
कुलस्यास्यान्तकरणं दुर्मतिं पापकारिणम्
राजा राष्ट्रेश्वरं कृत्वा धृतराष्ट्रोऽद्य शोचति ३२
हताः शूराः कृतं पापं विषयः स्वो विनाशितः
हत्वा नो विगतो मन्युः शोको मां रुन्धयत्ययम् ३३
धनंजय कृतं पापं कल्याणेनोपहन्यते
त्यागवांश्च पुनः पापं नालं कर्तुमिति श्रुतिः ३४
त्यागवाञ्जन्ममरणे नाप्नोतीति श्रुतिर्यदा
प्राप्तवर्त्मा कृतमतिर्ब्रह्म संपद्यते तदा ३५
स धनंजय निर्द्वंद्वो मुनिर्ज्ञानसमन्वितः
वनमामन्त्र्य वः सर्वान्गमिष्यामि परंतप ३६
न हि कृत्स्नतमो धर्मः शक्यः प्राप्तुमिति श्रुतिः

परिग्रहवता तन्मे प्रत्यक्षमरिसूदन ३७
मया निसृष्टं पापं हि परिग्रहमभीप्सता
जन्मक्षयनिमित्तं च शक्यं प्राप्तुमिति श्रुतिः ३८
स परिग्रहमुत्सृज्य कृत्स्नं राज्यं तथैव च
गमिष्यामि विनिर्मुक्तो विशोको विज्वरस्तथा ३९
प्रशाधि त्वमिमामुर्वीं क्षेमां निहतकण्टकाम्
न ममार्थोऽस्ति राज्येन न भोगैर्वा कुरूत्तम ४०
एतावदुक्त्वा वचनं धर्मराजो युधिष्ठिरः
व्युपारमत्ततः पार्थः कनीयान्प्रत्यभाषत ४१
इति श्रीमहाभारते शान्तिपर्वणि सप्तमोऽध्यायः ७

## अष्टमोऽध्यायः

वैशम्पायन उवाच
अथार्जुन उवाचेदमधिक्षिप्त इवाक्षमी
अभिनीततरं वाक्यं दृढवादपराक्रमः १
दर्शयन्नैन्द्रिरात्मानमुग्रमुग्रपराक्रमः
स्मयमानो महातेजाः सृक्किणी संलिहन्मुहुः २
अहो दुःखमहो कृच्छ्रमहो वैक्लव्यमुत्तमम्
यत्कृत्वामानुषं कर्म त्यजेथाः श्रियमुत्तमाम् ३
शत्रून्हत्वा महीं लब्ध्वा स्वधर्मेणोपपादिताम्
हतामित्रः कथं सर्वं त्यजेथा बुद्धिलाघवात् ४
क्लीबस्य हि कुतो राज्यं दीर्घसूत्रस्य वा पुनः
किमर्थं च महीपालानवधीः क्रोधमूर्छितः ५
यो ह्याजिजीविषेद्भैक्ष्यं कर्मणा नैव केनचित्
समारम्भान्बुभूषेत हतस्वस्तिरकिंचनः
सर्वलोकेषु विख्यातो न पुत्रपशुसंहितः ६
कापालक्ष्यं नृप पापिष्ठां वृत्तिमास्थाय जीवतः
संत्यज्य राज्यमृद्धं ते लोकोऽय किं वदिष्यति ७
सर्वारम्भान्समुत्सृज्य हतस्वस्तिरकिंचनः
कस्मादाशंससे भैक्ष्यं चर्तुं प्राकृतवत्प्रभो ८

अस्मिन्राजकुले जातो जित्वा कृत्स्नां वसुंधराम्
धर्मार्थावखिलौ हित्वा वनं मौढ्यात्प्रतिष्ठसे ९
यदीमानि हवींषीह विमथिष्यन्त्यसाधवः
भवता विप्रहीणानि प्राप्तं त्वामेव किल्बिषम् १०
आकिंचन्यमनाशास्यमिति वै नहुषोऽब्रवीत्
कृत्या नृशंसा ह्यधने धिगस्त्वधनतामिह ११
अश्वस्तनमृषीणां हि विद्यते वेद तद्भवान्
यं त्विमं धर्ममित्याहुर्धनादेष प्रवर्तते १२
धर्मं संहरते तस्य धनं हरति यस्य सः
ह्रियमाणे धने राजन्वयं कस्य क्षमेमहि १३
अभिशस्तवत्प्रपश्यन्ति दरिद्रं पार्श्वतः स्थितम्
दारिद्र्यं पातकं लोके कस्तच्छंसितुमर्हति १४
पतितः शोच्यते राजन्निर्धनश्चापि शोच्यते
विशेषं नाधिगच्छामि पतितस्याधनस्य च १५
अर्थेभ्यो हि विवृद्धेभ्यः संभृतेभ्यस्ततस्ततः
क्रियाः सर्वाः प्रवर्तन्ते पर्वतेभ्य इवापगाः १६
अर्थाद्धर्मश्च कामश्च स्वर्गश्चैव नराधिप
प्राणयात्रा हि लोकस्य विनार्थं न प्रसिध्यति १७
अर्थेन हि विहीनस्य पुरुषस्याल्पमेधसः
व्युच्छिद्यन्ते क्रियाः सर्वा ग्रीष्मे कुसरितो यथा १८
यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः
यस्यार्थाः स पुमाँल्लोके यस्यार्थाः स च पण्डितः १९
अधनेनार्थकामेन नार्थः शक्यो विवित्सता
अर्थैरर्था निबध्यन्ते गजैरिव महागजाः २०
धर्मः कामश्च स्वर्गश्च हर्षः क्रोधः श्रुतं दमः
अर्थादेतानि सर्वाणि प्रवर्तन्ते नराधिप २१
धनात्कुलं प्रभवति धनाद्धर्मः प्रवर्तते
नाधनस्यास्त्ययं लोको न परः पुरुषोत्तम २२
नाधनो धर्मकृत्यानि यथावदनुतिष्ठति
धनाद्धि धर्मः स्रवति शैलाद्गिरिनदी यथा २३

यः कृशाश्वः कृशगवः कृशभृत्यः कृशातिथिः
स वै राजन्कृशो नाम न शरीरकृशः कृशः २४
अवेक्षस्व यथान्यायं पश्य देवासुरं यथा
राजन्किमन्यज्ज्ञातीनां वधादृध्यन्ति देवताः २५
न चेद्धर्तव्यमन्यस्य कथं तद्धर्ममारभेत्
एतावानेव वेदेषु निश्चयः कविभिः कृतः २६
अध्येतव्या त्रयी विद्या भवितव्यं विपश्चिता
सर्वथा धनमाहार्यं यष्टव्यं चापि यत्नतः २७
द्रोहाद्देवैरवाप्तानि दिवि स्थानानि सर्वशः
इति देवा व्यवसिता वेदवादाश्च शाश्वताः २८
अधीयन्ते तपस्यन्ति यजन्ते याजयन्ति च
कृत्स्नं तदेव च श्रेयो यदप्याददतेऽन्यतः २९
न पश्यामोऽनपहृतं धनं किंचित्क्वचिद्वयम्
एवमेव हि राजानो जयन्ति पृथिवीमिमाम् ३०
जित्वा ममत्वं ब्रुवते पुत्रा इव पितुर्धने
राजर्षयो जितस्वर्गा धर्मो ह्येषां निगद्यते ३१
यथैव पूर्णादुदधेः स्यन्दन्त्यापो दिशो दश
एवं राजकुलाद्वित्तं पृथिवीं प्रतितिष्ठति ३२
आसीदियं दिलीपस्य नृगस्य नहुषस्य च
अम्बरीषस्य मान्धातुः पृथिवी सा त्वयि स्थिता ३३
स त्वां द्रव्यमयो यज्ञः संप्राप्तः सर्वदक्षिणः
तं चेन्न यजसे राजन्प्राप्तस्त्वं देवकिल्बिषम् ३४
येषां राजाश्वमेधेन यजते दक्षिणावता
उपेत्य तस्यावभृथं पूताः सर्वे भवन्ति ते ३५
विश्वरूपो महादेवः सर्वमेधे महामखे
जुहाव सर्वभूतानि तथैवात्मानमात्मना ३६
शाश्वतोऽय भूतिपथो नास्यान्तमनुशुश्रुम
महान्दाशरथः पन्था मा राजन्कापथं गमः ३७

इति श्रीमहाभारते शान्तिपर्वणि अष्टमोऽध्यायः ८

## नवमोऽध्यायः

युधिष्ठिर उवाच
मुहूर्तं तावदेकाग्रो मनःश्रोत्रेऽन्तरात्मनि
धारयित्वापि ते श्रुत्वा रोचतां वचनं मम १
सार्थगम्यमहं मार्गं न जातु त्वत्कृते पुनः
गच्छेयं तद्गमिष्यामि हित्वा ग्राम्यसुखान्युत २
क्षेम्यश्चैकाकिना गम्यः पंथाः कोऽस्तीति पृच्छ माम्
अथ वा नेच्छसि प्रष्टुमपृच्छन्नपि मे शृणु ३
हित्वा ग्राम्यसुखाचारं तप्यमानो महत्तपः
अरण्ये फलमूलाशी चरिष्यामि मृगैः सह ४
जुह्वानोऽग्निं यथाकालमुभौ कालावुपस्पृशन्
कृशः परिमिताहारश्चर्मचीरजटाधरः ५
शीतवातातपसहः क्षुत्पिपासाश्रमक्षमः
तपसा विधिदृष्टेन शरीरमुपशोषयन् ६
मनःकर्णसुखा नित्यं शृण्वन्नुच्चावचा गिरः
मुदितानामरण्येषु वसतां मृगपक्षिणाम् ७
आजिघ्रन्पेशलान्गन्धान्फुल्लानां वृक्षवीरुधाम्
नानारूपान्वने पश्यन्रमणीयान्वनौकसः ८
वानप्रस्थजनस्यापि दर्शनं कुलवासिनः
नाप्रियाण्याचरिष्यामि किं पुनर्ग्रामवासिनाम् ९
एकान्तशीली विमृशन्पक्वापक्वेन वर्तयन्
पितॄन्देवांश्च वन्येन वाग्भिरद्भिश्च तर्पयन् १०
एवमारण्यशास्त्राणामुग्रमुग्रतरं विधिम्
सेवमानः प्रतीक्षिष्ये देहस्यास्य समापनम् ११
अथ वैकोऽहमेकाहमेकैकस्मिन्वनस्पतौ
चरन्भैक्ष्यं मुनिर्मुण्डः क्षपयिष्ये कलेवरम् १२
पांसुभिः समवच्छन्नः शून्यागारप्रतिश्रयः
वृक्षमूलनिकेतो वा त्यक्तसर्वप्रियाप्रियः १३
न शोचन्न प्रहृष्यंश्च तुल्यनिन्दात्मसंस्तुतिः
निराशीर्निर्ममो भूत्वा निर्द्वंद्वो निष्परिग्रहः १४

आत्मारामः प्रसन्नात्मा जडान्धबधिराकृतिः
अकुर्वाणः परैः कांचित्संविदं जातु केनचित् १५
जङ्गमाजङ्गमान्सर्वान्नविहिंसंश्चतुर्विधान्
प्रजाः सर्वाः स्वधर्मस्थाः समः प्राणभृतः प्रति १६
न चाप्यवहसन्कंचिन्न कुर्वन्भ्रुकुटीं क्वचित्
प्रसन्नवदनो नित्यं सर्वेन्द्रियसुसंयतः १७
अपृच्छन्कस्यचिन्मार्गं व्रजन्येनैव केनचित्
न देशं न दिशं कांचिद्गन्तुमिच्छन्विशेषतः १८
गमने निरपेक्षश्च पश्चादनवलोकयन्
ऋजुः प्रणिहितो गच्छंस्त्रसस्थावरवर्जकः १९
स्वभावस्तु प्रयात्यग्रे प्रभवन्त्यशनान्यपि
द्वंद्वानि च विरुद्धानि तानि सर्वाण्यचिन्तयन् २०
अल्पं वास्वादु वा भोज्यं पूर्वालाभेन जातुचित्
अन्येष्वपि चरँल्लाभमलाभे सप्त पूरयन् २१
विधूमे न्यस्तमुसले व्यङ्गारे भुक्तवज्जने
अतीतपात्रसंचारे काले विगतभिक्षुके २२
एककालं चरन्भैक्ष्यं गृहे द्वे चैव पञ्च च
स्पृहापाशान्विमुच्याहं चरिष्यामि महीमिमाम् २३
न जिजीविषुवत्किंचिन्न मुमूर्षुवदाचरन्
जीवितं मरणं चैव नाभिनन्दन्न च द्विषन् २४
वास्यैकं तक्षतो बाहुं चन्दनेनैकमुक्षतः
नाकल्याणं न कल्याणं चिन्तयन्नुभयोस्तयोः २५
याः काश्चिज्जीवता शक्याः कर्तुमभ्युदयक्रियाः
सर्वास्ताः समभित्यज्य निमेषादिव्यवस्थितः २६
तेषु नित्यमसक्तश्च त्यक्तसर्वेन्द्रियक्रियः
सुपरित्यक्तसंकल्पः सुनिर्णिक्तात्मकल्मषः २७
विमुक्तः सर्वसङ्गेभ्यो व्यतीतः सर्ववागुराः
न वशे कस्यचित्तिष्ठन्सधर्मा मातरिश्वनः २८
वीतरागश्चरन्नेवं तुष्टिं प्राप्स्यामि शाश्वतीम्
तृष्णया हि महत्पापमज्ञानादस्मि कारितः २९

कुशलाकुशलान्येके कृत्वा कर्माणि मानवाः
कार्यकारणसंश्लिष्टं स्वजनं नाम बिभ्रति ३०
आयुषोऽन्ते प्रहायेदं क्षीणप्रायं कलेवरम्
प्रतिगृह्णाति तत्पापं कर्तुः कर्मफलं हि तत् ३१
एवं संसारचक्रेऽस्मिन्व्याविद्धे रथचक्रवत्
समेति भूतग्रामोऽय भूतग्रामेण कार्यवान् ३२
जन्ममृत्युजराव्याधिवेदनाभिरुपद्रुतम्
असारमिममस्वन्तं संसारं त्यजतः सुखम् ३३
दिवः पतत्सु देवेषु स्थानेभ्यश्च महर्षिषु
को हि नाम भवेनार्थी भवेत्कारणतत्त्ववित् ३४
कृत्वा हि विविधं कर्म तत्तद्विविधलक्षणम्
पार्थिवैर्नृपतिः स्वल्पैः कारणैरेव बध्यते ३५
तस्मात्प्रज्ञामृतमिदं चिरान्मां प्रत्युपस्थितम्
तत्प्राप्य प्रार्थये स्थानमव्ययं शाश्वतं ध्रुवम् ३६
एतया सततं वृत्त्या चरन्नेवंप्रकारया
देहं संस्थापयिष्यामि निर्भयं मार्गमास्थितः ३७
इति श्रीमहाभारते शान्तिपर्वणि नवमोऽध्यायः ९

## दशमोऽध्यायः

भीम उवाच
श्रोत्रियस्येव ते राजन्मन्दकस्याविपश्चितः
अनुवाकहताबुद्धिर्नैषा तत्त्वार्थदर्शिनी १
आलस्ये कृतचित्तस्य राजधर्मानसूयतः
विनाशे धार्तराष्ट्राणां किं फलं भरतर्षभ २
क्षमानुकम्पा कारुण्यमानृशंस्यं न विद्यते
क्षात्रमाचरतो मार्गमपि बन्धोस्त्वदन्तरे ३
यदीमां भवतो बुद्धिं विद्याम वयमीदृशीम्
शस्त्रं नैव ग्रहीष्यामो न वधिष्याम कंचन ४
भैक्ष्यमेवाचरिष्याम शरीरस्या विमोक्षणात्
न चेदं दारुणं युद्धमभविष्यन्महीक्षिताम् ५

प्राणस्यान्नमिदं सर्वमिति वै कवयो विदुः
स्थावरं जङ्गमं चैव सर्वं प्राणस्य भोजनम् ६
आददानस्य चेद्राज्यं ये केचित्परिपन्थिनः
हन्तव्यास्त इति प्राज्ञाः क्षत्रधर्मविदो विदुः ७
ते सदोषा हतास्माभी राज्यस्य परिपन्थिनः
तान्हत्वा भुङ्क्ष्व धर्मेण युधिष्ठिर महीमिमाम् ८
यथा हि पुरुषः खात्वा कूपमप्राप्य चोदकम्
पङ्कदिग्धो निवर्तेत कर्मेदं नस्तथोपमम् ९
यथारुह्य महावृक्षमपहृत्य ततो मधु
अप्राश्य निधनं गच्छेत्कर्मेदं नस्तथोपमम् १०
यथा महान्तमध्वानमाशया पुरुषः पतन्
स निराशो विनर्तेत कर्मेदं नस्तथोपमम् ११
यथा शत्रून्घातयित्वा पुरुषः कुरुसत्तम
आत्मानं घातयेत्पश्चात्कर्मेदं नस्तथाविधम् १२
यथान्नं क्षुधितो लब्ध्वा न भुञ्जीत यदृच्छया
कामी च कामिनीं लब्ध्वा कर्मेदं नस्तथाविधम् १३
वयमेवात्र गर्ह्या हि ये वयं मन्दचेतसः
त्वां राजन्ननुगच्छामो ज्येष्ठोऽयमिति भारत १४
वयं हि बाहुबलिनः कृतविद्या मनस्विनः
क्लीबस्य वाक्ये तिष्ठामो यथैवाशक्तयस्तथा १५
अगतीन्कागतीनस्मान्नष्टार्थानर्थसिद्धये
कथं वै नानुपश्येयुर्जनाः पश्यन्ति यादृशम् १६
आपत्काले हि संन्यासः कर्तव्य इति शिष्यते
जरयाभिपरीतेन शत्रुभिर्व्यंसितेन च १७
तस्मादिह कृतप्रज्ञास्त्यागं न परिचक्षते
धर्मव्यतिक्रमं चेदं मन्यन्ते सूक्ष्मदर्शिनः १८
कथं तस्मात्समुत्पन्नस्तन्निष्ठस्तदुपाश्रयः
तदेव निन्दन्नासीत श्रद्धा वान्यत्र गृह्यते १९
श्रिया विहीनैरधनैर्नास्तिकैः संप्रवर्तितम्
वेदवादस्य विज्ञानं सत्याभासमिवानृतम् २०

शक्यं तु मौराड्यमास्थाय बिभ्रतात्मानमात्मना
धर्मच्छद्म समास्थाय ग्रासितुं न तु जीवितुम् २१
शक्यं पुनररगयेषु सुखमेकेन जीवितुम्
ग्रबिभ्रता पुत्रपौत्रान्देवर्षीनतिथीन्पितॄन् २२
नेमे मृगाः स्वर्गजितो न वराहा न पक्षिणः
ग्रथैतेन प्रकारेण पुरयमाहुर्न ताञ्जनाः २३
यदि संन्यासतः सिद्धिं राजन्कश्चिदवाप्नुयात्
पर्वताश्च द्रुमाश्चैव क्षिप्रं सिद्धिमवाप्नुयुः २४
एते हि नित्यसंन्यासा दृश्यन्ते निरुपद्रवाः
ग्रपरिग्रहवन्तश्च सततं चात्मचारिणः २५
ग्रथ चेदात्मभाग्येषु नान्येषां सिद्धिमश्नुते
तस्मात्कर्मैव कर्तव्यं नास्ति सिद्धिरकर्मणः २६
ग्रौदकाः सृष्टयश्चैव जन्तवः सिद्धिमाप्नुयुः
येषामात्मैव भर्तव्यो नान्यः कश्चन विद्यते २७
ग्रवेक्षस्व यथा स्वैः स्वैः कर्मभिर्व्यापृतं जगत्
तस्मात्कर्मैव कर्तव्यं नास्ति सिद्धिरकर्मणः २८
इति श्रीमहाभारते शान्तिपर्वणि दशमोऽध्यायः १०

## एकादशोऽध्यायः

ग्रर्जुन उवाच
ग्रत्रैवोदाहरन्तीममितिहासं पुरातनम्
तापसैः सह संवादं शक्रस्य भरतर्षभ १
केचिद्गृहान्परित्यज्य वनमभ्यगमन्द्विजाः
ग्रजातश्मश्रवो मन्दाः कुले जाताः प्रवव्रजुः २
धर्मोऽयमिति मन्वाना ब्रह्मचर्ये व्यवस्थिताः
त्यक्त्वा गृहान्पितॄंश्चैव तानिन्द्रोऽन्वकृपायत ३
तानाबभाषे भगवान्पक्षी भूत्वा हिररामयः
सुदुष्करं मनुष्यैश्च यत्कृतं विघसाशिभिः ४
पुरयं च बत कर्मैषां प्रशस्तं चैव जीवितम्
संसिद्धास्ते गतिं मुख्यां प्राप्ता धर्मपरायणाः ५

ऋषय ऊचुः
अहो बतायं शकुनिर्विघसाशान्प्रशंसति
अस्मान्नूनमयं शास्ति वयं च विघसाशिनः ६
शकुनिरुवाच
नाहं युष्मान्प्रशंसामि पङ्कदिग्धान्रजस्वलान्
उच्छिष्टभोजिनो मन्दानन्ये वै विघसाशिनः ७
ऋषय ऊचुः
इदं श्रेयः परमिति वयमेवाभ्युपास्महे
शकुने ब्रूहि यच्छ्रेयो भृशं वै श्रद्दधाम ते ८
शकुनिरुवाच
यदि मां नाभिशङ्कध्वं विभज्यात्मानमात्मना
ततोऽह वः प्रवक्ष्यामि याथातथ्यं हितं वचः ९
ऋषय ऊचुः
शृणुमस्ते वचस्तात पन्थानो विदितास्तव
नियोगे चैव धर्मात्मन्स्थातुमिच्छाम शाधि नः १०
शकुनिरुवाच
चतुष्पदां गौः प्रवरा लोहानां काञ्चनं वरम्
शब्दानां प्रवरो मन्त्रो ब्राह्मणो द्विपदां वरः ११
मन्त्रोऽय जातकर्मादि ब्राह्मणस्य विधीयते
जीवतो यो यथाकालं श्मशाननिधनादिति १२
कर्माणि वैदिकान्यस्य स्वर्ग्यः पन्थास्त्वनुत्तमः
अथ सर्वाणि कर्माणि मन्त्रसिद्धानि चक्षते १३
आम्नायदृढवादीनि तथा सिद्धिरिहेष्यते
मासार्धमासा ऋतव आदित्यशशितारकम् १४
ईहन्ते सर्वभूतानि तदृतं कर्मसङ्गिनाम्
सिद्धिक्षेत्रमिदं पुण्यमयमेवाश्रमो महान् १५
अथ ये कर्म निन्दन्तो मनुष्याः कापथं गताः
मूढानामर्थहीनानां तेषामेनस्तु विद्यते १६
देववंशान्पितृवंशान्ब्रह्मवंशांश्च शाश्वतान्
संत्यज्य मूढा वर्तन्ते ततो यान्त्यश्रुतीपथम् १७

एतद्वोऽस्तु तपो युक्तं ददानीत्यृषिचोदितम्
तस्मात्तदध्यवसतस्तपस्वि तप उच्यते १८
देववंशान्पितृवंशान्ब्रह्मवंशांश्च शाश्वतान्
संविभज्य गुरोश्चर्यां तद्वै दुष्करमुच्यते १९
देवा वै दुष्करं कृत्वा विभूतिं परमां गताः
तस्माद्गार्हस्थ्यमुद्वोढुं दुष्करं प्रब्रवीमि वः २०
तपः श्रेष्ठं प्रजानां हि मूलमेतन्न संशयः
कुटुम्बविधिनानेन यस्मिन्सर्वं प्रतिष्ठितम् २१
एतद्विदुस्तपो विप्रा द्वंद्वातीता विमत्सराः
तस्माद्वनं मध्यमं च लोकेषु तप उच्यते २२
दुराधर्षं पदं चैव गच्छन्ति विघसाशिनः
सायंप्रातर्विभज्यान्नं स्वकुटुम्बे यथाविधि २३
दत्त्वातिथिभ्यो देवेभ्यः पितृभ्यः स्वजनस्य च
अवशिष्टानि येऽश्नन्ति तानाहुर्विघसाशिनः २४
तस्मात्स्वधर्ममास्थाय सुव्रताः सत्यवादिनः
लोकस्य गुरवो भूत्वा ते भवन्त्यनुपस्कृताः २५
त्रिदिवं प्राप्य शक्रस्य स्वर्गलोके विमत्सराः
वसन्ति शाश्वतीर्वर्षा जना दुष्करकारिणः २६
ततस्ते तद्वचः श्रुत्वा तस्य धर्मार्थसंहितम्
उत्सृज्य नास्तिकागतिं गार्हस्थ्यं धर्ममाश्रिताः २७
तस्मात्त्वमपि दुर्धर्ष धैर्यमालम्ब्य शाश्वतम्
प्रशाधि पृथिवीं कृत्स्नां हतामित्रां नरोत्तम २८
इति श्रीमहाभारते शान्तिपर्वणि एकादशोऽध्यायः ११

## द्वादशोऽध्यायः

वैशम्पायन उवाच
अर्जुनस्य वचः श्रुत्वा नकुलो वाक्यमब्रवीत्
राजानमभिसंप्रेक्ष्य सर्वधर्मभृतां वरम् १
अनुरुध्य महाप्राज्ञो भ्रातुश्चित्तमरिंदमः
व्यूढोरस्को महाबाहुस्ताम्रास्यो मितभाषिता २

विशाखयूपे देवानां सर्वेषामग्नयश्चिताः
तस्माद्विद्धि महाराज देवान्कर्मपथि स्थितान् ३
अनास्तिकानास्तिकानां प्राणदाः पितरश्च ये
तेऽपि कर्मैव कुर्वन्ति विधिं पश्यस्व पार्थिव
वेदवादापविद्धांस्तु तान्विद्धि भृशनास्तिकान् ४
न हि वेदोक्तमुत्सृज्य विप्रः सर्वेषु कर्मसु
देवयानेन नाकस्य पृष्ठमाप्नोति भारत ५
अत्याश्रमानयं सर्वानित्याहुर्वेदनिश्चयाः
ब्राह्मणाः श्रुतिसंपन्नास्तान्निबोध जनाधिप ६
वित्तानि धर्मलब्धानि क्रतुमुख्येष्ववासृजन्
कृतात्मसु महाराज स वै त्यागी स्मृतो नरः ७
अनवेक्ष्य सुखादानं तथैवोर्ध्वं प्रतिष्ठितः
आत्मत्यागी महाराज स त्यागी तामसः प्रभो ८
अनिकेतः परिपतन्वृक्षमूलाश्रयो मुनिः
अपाचकः सदा योगी स त्यागी पार्थ भिक्षुकः ९
क्रोधहर्षावनादृत्य पैशुन्यं च विशां पते
विप्रो वेदानधीते यः स त्यागी गुरुपूजकः १०
आश्रमांस्तुलया सर्वान्धृतानाहुर्मनीषिणः
एकतस्ते त्रयो राजन्गृहस्थाश्रम एकतः ११
समीक्षते तु योऽथ वै कामं स्वर्गं च भारत
अयं पन्था महर्षीणामियं लोकविदां गतिः १२
इति यः कुरुते भावं स त्यागी भरतर्षभ
न यः परित्यज्य गृहान्वनमेति विमूढवत् १३
यदा कामान्समीक्षेत धर्मवैतंसिकोऽनृजुः
अथैनं मृत्युपाशेन कण्ठे बध्नाति मृत्युराट् १४
अभिमानकृतं कर्म नैतत्फलवदुच्यते
त्यागयुक्तं महाराज सर्वमेव महाफलम् १५
शमो दमस्तपो दानं सत्यं शौचमथार्जवम्
यज्ञो धृतिश्च धर्मश्च नित्यमार्षो विधिः स्मृतः १६
पितृदेवातिथिकृते समारम्भोऽत्र शस्यते

अत्रैव हि महाराज त्रिवर्गः केवलं फलम् १७
एतस्मिन्वर्तमानस्य विधौ विप्रनिषेविते
त्यागिनः प्रसृतस्येह नोच्छित्तिर्विद्यते क्वचित् १८
असृजद्धि प्रजा राजन्प्रजापतिरकल्मषः
मां यक्ष्यन्तीति शान्तात्मा यज्ञैर्विविधदक्षिणैः १९
विरुधश्चैव वृक्षांश्च यज्ञार्थं च तथौषधीः
पशूंश्चैव तथा मेध्यान्यज्ञार्थानि हवींषि च २०
गृहस्थाश्रमिणस्तच्च यज्ञकर्म विरोधकम्
तस्माद्गार्हस्थ्यमेवेह दुष्करं दुर्लभं तथा २१
तत्संप्राप्य गृहस्था ये पशुधान्यसमन्विताः
न यजन्ते महाराज शाश्वतं तेषु किल्बिषम् २२
स्वाध्याययज्ञा ऋषयो ज्ञानयज्ञास्तथापरे
अथापरे महायज्ञान्मनसैव वितन्वते २३
एवं दानसमाधानं मार्गमातिष्ठतो नृप
द्विजातेर्ब्रह्मभूतस्य स्पृहयन्ति दिवौकसः २४
स रत्नानि विचित्राणि संभृतानि ततस्ततः
मखेष्वनभिसंत्यज्य नास्तिक्यमभिजल्पसि
कुटुम्बमास्थिते त्यागं न पश्यामि नराधिप २५
राजसूयाश्वमेधेषु सर्वमेधेषु वा पुनः
ये चान्ये क्रतवस्तात ब्राह्मणैरभिपूजिताः
तैर्यजस्व महाराज शक्रो देवपतिर्यथा २६
राज्ञः प्रमाददोषेण दस्युभिः परिमुष्यताम्
अशरण्यः प्रजानां यः स राजा कलिरुच्यते २७
अश्वान्गाश्चैव दासीश्च करेणूश्च स्वलंकृताः
ग्रामाञ्जनपदांश्चैव क्षेत्राणि च गृहाणि च २८
अप्रदाय द्विजातिभ्यो मात्सर्याविष्टचेतसः
वयं ते राजकलयो भविष्यामो विशां पते २९
अदातारोऽशरण्याश्च राजकिल्बिषभागिनः
दुःखानामेव भोक्तारो न सुखानां कदाचन ३०
अनिष्ट्वा च महायज्ञैरकृत्वा च पितृस्वधाम्

तीर्थेष्वनभिसंत्यज्य प्रव्रजिष्यसि चेदथ ३१
छिन्नाभ्रमिव गन्ताऽसि विलयं मारुतेरितम्
लोकयोरुभयोर्भ्रष्टो ह्यन्तराले व्यवस्थितः ३२
अन्तर्बहिश्च यत्किञ्चिन्मनोव्यासङ्गकारकम्
परित्यज्य भवेत्त्यागी न यो हित्वा प्रतिष्ठते ३३
एतस्मिन्वर्तमानस्य विधौ विप्रतिषेविते
ब्राह्मणस्य महाराज नोच्छित्तिर्विद्यते क्वचित् ३४
निहत्य शत्रूंस्तरसा समृद्धाञ्शक्रो यथा दैत्यबलानि संख्ये
कः पार्थ शोचेन्निरतः स्वधर्मे पूर्वैः स्मृते पार्थिव शिष्टजुष्टे ३५
क्षात्रेण धर्मेण पराक्रमेण जित्वा महीं मन्त्रविद्भ्यः प्रदाय
नाकस्य पृष्ठेऽसि नरेन्द्र गन्ता न शोचितव्यं भवताद्य पार्थ ३६
इति श्रीमहाभारते शान्तिपर्वणि द्वादशोऽध्यायः १२

## त्रयोदशोऽध्यायः

सहदेव उवाच
न बाह्यं द्रव्यमुत्सृज्य सिद्धिर्भवति भारत
शारीरं द्रव्यमुत्सृज्य सिद्धिर्भवति वा न वा १
बाह्यद्रव्यविमुक्तस्य शरीरेषु च गृध्यतः
यो धर्मो यत्सुखं वा स्याद्द्विषतां तत्तथास्तु नः २
शारीरं द्रव्यमुत्सृज्य पृथिवीमनुशासतः
यो धर्मो यत्सुखं वा स्यात्सुहृदां तत्तथास्तु नः ३
द्व्यक्षरस्तु भवेन्मृत्युस्त्र्यक्षरं ब्रह्म शाश्वतम्
ममेति च भवेन्मृत्युर्न ममेति च शाश्वतम् ४
ब्रह्ममृत्यू च तौ राजन्नात्मन्येव समाश्रितौ
अदृश्यमानौ भूतानि योधयेतामसंशयम् ५
अविनाशोऽस्य सत्त्वस्य नियतो यदि भारत
भित्वा शरीरं भूतानां न हिंसा प्रतिपत्स्यते ६
अथापि च सहोत्पत्तिः सत्त्वस्य प्रलयस्तथा
नष्टे शरीरे नष्टं स्याद्वृथा च स्यात्क्रियापथः ७
तस्मादेकान्तमुत्सृज्य पूर्वैः पूर्वतरैश्च यः

पन्था निषेवितः सद्भिः स निषेव्यो विजानता ८
लब्ध्वापि पृथिवीं कृत्स्नां सहस्थावरजङ्गमाम्
न भुङ्क्ते यो नृपः सम्यङ्निष्फलं तस्य जीवितम् ९
अथ वा वसतो राजन्वने वन्येन जीवतः
द्रव्येषु यस्य ममता मृत्योरास्ये स वर्तते १०
बाह्याभ्यन्तरभूतानां स्वभावं पश्य भारत
ये तु पश्यन्ति तद्भावं मुच्यन्ते महतो भयात् ११
भवान्पिता भवान्माता भवान्भ्राता भवान्गुरुः
दुःखप्रलापानार्तस्य तस्मान्मे क्षन्तुमर्हसि १२
तथ्यं वा यदि वातथ्यं यन्मयैतत्प्रभाषितम्
तद्विद्धि पृथिवीपाल भक्त्या भरतसत्तम १३
इति श्रीमहाभारते शान्तिपर्वणि त्रयोदशोऽध्यायः १३

## चतुर्दशोऽध्यायः

वैशम्पायन उवाच
अव्याहरति कौन्तेये धर्मराजे युधिष्ठिरे
भ्रातृणां ब्रुवतां तांस्तान्विविधान्वेदनिश्चयान् १
महाभिजनसंपन्ना श्रीमत्यायतलोचना
अभ्यभाषत राजेन्द्रं द्रौपदी योषितां वरा २
आसीनमृषभं राज्ञां भ्रातृभिः परिवारितम्
सिंहशार्दूलसदृशैर्वारणैरिव यूथपम् ३
अभिमानवती नित्यं विशेषेण युधिष्ठिरे
लालिता सततं राज्ञा धर्मज्ञा धर्मदर्शिनी ४
आमन्त्र्य विपुलश्रोणी साम्ना परमवल्गुना
भर्तारमभिसंप्रेक्ष्य ततो वचनमब्रवीत् ५
इमे ते भ्रातरः पार्थ शुष्यन्त स्तोकका इव
वावाश्यमानास्तिष्ठन्ति न चैनानभिनन्दसे ६
नन्दयैतान्महाराज मत्तानिव महाद्विपान्
उपपन्नेन वाक्येन सततं दुःखभागिनः ७
कथं द्वैतवने राजन्पूर्वमुक्त्वा तथा वचः

भ्रातॄनेतान्स्म सहिताञ्शीतवातातपार्दितान् ८
वयं दुर्योधनं हत्वा मृधे भोक्ष्याम मेदिनीम्
संपूर्णां सर्वकामानामाहवे विजयैषिणः ९
विरथांश्च रथान्कृत्वा निहत्य च महागजान्
संस्तीर्य च रथैर्भूमिं ससादिभिररिंदमाः १०
यजतां विविधैर्यज्ञैः समृद्धैराप्तदक्षिणैः
वनवासकृतं दुःखं भविष्यति सुखाय नः ११
इत्येतानेवमुक्त्वा त्वं स्वयं धर्मभृतां वर
कथमद्य पुनर्वीर विनिहंसि मनांस्युत १२
न क्लीबो वसुधां भुङ्क्ते न क्लीबो धनमश्नुते
न क्लीबस्य गृहे पुत्रा मत्स्याः पङ्क इवासते १३
नादण्डः क्षत्रियो भाति नादण्डो भूतिमश्नुते
नादण्डस्य प्रजा राज्ञः सुखमेधन्ति भारत १४
मित्रता सर्वभूतेषु दानमध्ययनं तपः
ब्राह्मणस्यैष धर्मः स्यान्न राज्ञो राजसत्तम १५
असतां प्रतिषेधश्च सतां च परिपालनम्
एष राज्ञां परो धर्मः समरे चापलायनम् १६
यस्मिन्क्षमा च क्रोधश्च दानादाने भयाभये
निग्रहानुग्रहौ चोभौ स वै धर्मविदुच्यते १७
न श्रुतेन न दानेन न सान्त्वेन न चेज्यया
त्वयेयं पृथिवी लब्धा नोत्कोचेन तथाप्युत १८
यत्तद्बलममित्राणां तथा वीरसमुद्यतम्
हस्त्यश्वरथसंपन्नं त्रिभिरङ्गैर्महत्तरम् १९
रक्षितं द्रोणकर्णाभ्यामश्वत्थाम्ना कृपेण च
तत्त्वया निहतं वीर तस्माद्भुङ्क्ष्व वसुंधराम् २०
जम्बूद्वीपो महाराज नानाजनपदायुतः
त्वया पुरुषशार्दूल दण्डेन मृदितः प्रभो २१
जम्बूद्वीपेन सदृशः क्रौञ्चद्वीपो नराधिप
अपरेण महामेरोर्दण्डेन मृदितस्त्वया २२
क्रौञ्चद्वीपेन सदृशः शाकद्वीपो नराधिप

पूर्वेण तु महामेरोर्दण्डेन मृदितस्त्वया २३
उत्तरेण महामेरोः शाकद्वीपेन संमितः
भद्राश्वः पुरुषव्याघ्र दण्डेन मृदितस्त्वया २४
द्वीपाश्च सान्तरद्वीपा नानाजनपदालयाः
विगाह्य सागरं वीर दण्डेन मृदितास्त्वया २५
एतान्यप्रतिमानि त्वं कृत्वा कर्माणि भारत
न प्रीयसे महाराज पूज्यमानो द्विजातिभिः २६
स त्वं भ्रातॄनिमान्दृष्ट्वा प्रतिनन्दस्व भारत
ऋषभानिव संमत्तान्गजेन्द्रानूर्जितानिव २७
अमरप्रतिमाः सर्वे शत्रुसाहाः परंतपाः
एकोऽपि हि सुखायैषां क्षमः स्यादिति मे मतिः २८
किं पुनः पुरुषव्याघ्राः पतयो मे नरर्षभाः
समस्तानीन्द्रियाणीव शरीरस्य विचेष्टने २९
अनृतं माब्रवीच्छ्वश्रूः सर्वज्ञा सर्वदर्शिनी
युधिष्ठिरस्त्वां पाञ्चालि सुखे धास्यत्यनुत्तमे ३०
हत्वा राजसहस्राणि बहून्याशुपराक्रमः
तद्व्यर्थं संप्रपश्यामि मोहात्तव जनाधिप ३१
येषामुन्मत्तको ज्येष्ठः सर्वे तस्योपचारिणः
तवोन्मादेन राजेन्द्र सोन्मादाः सर्वपाण्डवाः ३२
यदि हि स्युरनुन्मत्ता भ्रातरस्ते जनाधिप
बद्ध्वा त्वां नास्तिकैः सार्धं प्रशासेयुर्वसुंधराम् ३३
कुरुते मूढमेवं हि यः श्रेयो नाधिगच्छति
धूपैरञ्जनयोगैश्च नस्यकर्मभिरेव च
भेषजैः स चिकित्स्यः स्याद्य उन्मार्गेण गच्छति ३४
साहं सर्वाधमा लोके स्त्रीणां भरतसत्तम
तथा विनिकृतामित्रैर्याहमिच्छामि जीवितुम् ३५
एतेषां यतमानानामुत्पद्यन्ते तु संपदः
त्वं तु सर्वां महीं लब्ध्वा कुरुषे स्वयमापदम् ३६
यथास्तां संमतौ राज्ञां पृथिव्यां राजसत्तमौ
मान्धाता चाम्बरीषश्च तथा राजन्विराजसे ३७

प्रशाधि पृथिवीं देवीं प्रजा धर्मेण पालयन्
सपर्वतवनद्वीपां मा राजन्विमना भव ३८
यजस्व विविधैर्यज्ञैर्जुह्वन्नग्नीन्प्रयच्छ च
पुराणि भोगान्वासांसि द्विजातिभ्यो नृपोत्तम ३९
इति श्रीमहाभारते शान्तिपर्वणि चतुर्दशोऽध्यायः १४

पञ्चदशोऽध्यायः

वैशम्पायन उवाच
याज्ञसेन्या वचः श्रुत्वा पुनरेवार्जुनोऽब्रवीत्
अनुमान्य महाबाहुं ज्येष्ठं भ्रातरमीश्वरम् १
दण्डः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति
दण्डः सुप्तेषु जागर्ति दण्डं धर्मं विदुर्बुधाः २
धर्मं संरक्षते दण्डस्तथैवार्थं नराधिप
कामं संरक्षते दण्डस्त्रिवर्गो दण्ड उच्यते ३
दण्डेन रक्ष्यते धान्यं धनं दण्डेन रक्ष्यते
एतद्विद्वन्नुपादत्स्व स्वभावं पश्य लौकिकम् ४
राजदण्डभयादेके पापाः पापं न कुर्वते
यमदण्डभयादेके परलोकभयादपि ५
परस्परभयादेके पापाः पापं न कुर्वते
एवं सांसिद्धिके लोके सर्वं दण्डे प्रतिष्ठितम् ६
दण्डस्यैव भयादेके न खादन्ति परस्परम्
अन्धे तमसि मज्जेयुर्यदि दण्डो न पालयेत् ७
यस्माददान्तान्दमयत्यशिष्टान्दण्डयत्यपि
दमनाद्दण्डनाच्चैव तस्माद्दण्डं विदुर्बुधाः ८
वाचि दण्डो ब्राह्मणानां क्षत्रियाणां भुजार्पणम्
दानदण्डः स्मृतौ वैश्यो निर्दण्डः शूद्र उच्यते ९
असंमोहाय मर्त्यानामर्थसंरक्षणाय च
मर्यादा स्थापिता लोके दण्डसंज्ञा विशां पते १०
यत्र श्यामो लोहिताक्षो दण्डश्चरति सूनृतः
प्रजास्तत्र न मुह्यन्ति नेता चेत्साधु पश्यति ११

ब्रह्मचारी गृहस्थश्च वानप्रस्थोऽथ भिक्षुकः
दण्डस्यैव भयादेते मनुष्या वर्त्मनि स्थिताः १२
नाभीतो यजते राजन्नाभीतो दातुमिच्छति
नाभीतः पुरुषः कश्चित्समये स्थातुमिच्छति १३
नाच्छित्त्वा परमर्माणि नाकृत्वा कर्म दारुणम्
नाहत्वा मत्स्यघातीव प्राप्नोति महतीं श्रियम् १४
नाघ्नतः कीर्तिरस्तीह न वित्तं न पुनः प्रजाः
इंद्रो वृत्रवधेनैव महेन्द्रः समपद्यत १५
य एव देवा हन्तारस्ताँल्लोकोऽचयते भृशम्
हन्ता रुद्रस्तथा स्कन्दः शक्रोऽग्निर्वरुणो यमः १६
हन्ता कालस्तथा वायुर्मृत्युर्वैश्रवणो रविः
वसवो मरुतः साध्या विश्वेदेवाश्च भारत १७
एतान्देवान्नमस्यन्ति प्रतापप्रणता जनाः
न ब्रह्माणं न धातारं न पूषाणं कथंचन १८
मध्यस्थान्सर्वभूतेषु दान्ताञ्शमपरायणान्
यजन्ते मानवाः केचित्प्रशान्ताः सर्वकर्मसु १९
न हि पश्यामि जीवन्तं लोके कंचिदहिंसया
सत्त्वैः सत्त्वानि जीवन्ति दुर्बलैर्बलवत्तराः २०
नकुलो मूषकानत्ति बिडालो नकुलं तथा
बिडालमत्ति श्वा राजञ्श्वानं व्यालमृगस्तथा २१
तानत्ति पुरुषः सर्वान्पश्य धर्मो यथागतः
प्राणस्यान्नमिदं सर्वं जङ्गमं स्थावरं च यत् २२
विधानं देवविहितं तत्र विद्वान्न मुह्यति
यथा सृष्टोऽसि राजेन्द्र तथा भवितुमर्हसि २३
विनीतक्रोधहर्षा हि मन्दा वनमुपाश्रिताः
विना वधं न कुर्वन्ति तापसाः प्राणयापनम् २४
उदके बहवः प्राणाः पृथिव्यां च फलेषु च
न च कश्चिन्न तान्हन्ति किमन्यत्प्राणयापनात् २५
सूक्ष्मयोनीनि भूतानि तर्कगम्यानि कानिचित्
पक्ष्मणोऽपि निपातेन येषां स्यात्स्कन्धपर्ययः २६

ग्रामान्निष्क्रम्य मुनयो विगतक्रोधमत्सराः
वने कुटुम्बधर्माणो दृश्यन्ते परिमोहिताः २७
भूमिं भित्त्वौषधीश्छित्त्वा वृक्षादीनण्डजान्पशून्
मनुष्यास्तन्वते यज्ञांस्ते स्वर्गं प्राप्नुवन्ति च २८
दण्डनीत्यां प्रणीतायां सर्वे सिध्यन्त्युपक्रमाः
कौन्तेय सर्वभूतानां तत्र मे नास्ति संशयः २९
दण्डश्चेन्न भवेल्लोके व्यनशिष्यन्निमाः प्रजाः
शूले मत्स्यानिवापक्ष्यन्दुर्बलान्बलवत्तराः ३०
सत्यं चेदं ब्रह्मणा पूर्वमुक्तं दण्डः प्रजा रक्षति साधु नीतः
पश्याग्नयश्च प्रतिशाम्यन्त्यभीताः संतर्जिता दण्डभयाज्ज्वलन्ति ३१
अन्धं तम इवेदं स्यान्न प्रज्ञायेत किंचन
दण्डश्चेन्न भवेल्लोके विभजन्साध्वसाधुनी ३२
येऽपि संभिन्नमर्यादा नास्तिका वेदनिन्दकाः
तेऽपि भोगाय कल्पन्ते दण्डेनोपनिपीडिताः ३३
सर्वो दण्डजितो लोको दुर्लभो हि शुचिर्नरः
दण्डस्य हि भयाद्भीतो भोगायेह प्रकल्पते ३४
चातुर्वर्ण्याप्रमोहाय सुनीतनयनाय च
दण्डो विधात्रा विहितो धर्मार्थावभिरक्षितुम् ३५
यदि दण्डान्न बिभ्येयुर्वयांसि श्वापदानि च
अद्युः पशून्मनुष्यांश्च यज्ञार्थानि हवींषि च ३६
न ब्रह्मचार्यधीयीत कल्याणी गौर्न दुह्यते
न कन्योद्वहनं गच्छेद्यदि दण्डो न पालयेत् ३७
विश्वलोपः प्रवर्तेत भिद्येरन्सर्वसेतवः
ममत्वं न प्रजानीयुर्यदि दण्डो न पालयेत् ३८
न संवत्सरसत्राणि तिष्ठेयुरकुतोभयाः
विधिवद्दक्षिणावन्ति यदि दण्डो न पालयेत् ३९
चरेयुर्नाश्रमे धर्मं यथोक्तं विधिमाश्रिताः
न विद्यां प्राप्नुयात्कश्चिद्यदि दण्डो न पालयेत् ४०
न चोष्ट्रा न बलीवर्दा नाश्वाश्वतरगर्दभाः
युक्ता वहेयुर्यानानि यदि दण्डो न पालयेत् ४१

न प्रेष्या वचनं कुर्युर्न बालो जातु कर्हिचित्
तिष्ठेत्पितृमते धर्मे यदि दण्डो न पालयेत् ४२
दण्डे स्थिताः प्रजाः सर्वा भयं दण्डे विदुर्बुधाः
दण्डे स्वर्गो मनुष्याणां लोकोऽय च प्रतिष्ठितः ४३
न तत्र कूटं पापं वा वञ्चना वापि दृश्यते
यत्र दण्डः सुविहितश्चरत्यरिविनाशनः ४४
हविः श्वा प्रपिबेद्धृष्टो दण्डश्चेन्नोद्यतो भवेत्
हरेत्काकः पुरोडाशं यदि दण्डो न पालयेत् ४५
यदिदं धर्मतो राज्यं विहितं यद्यधर्मतः
कार्यस्तत्र न शोको वै भुङ्क्ष्व भोगान्यजस्व च ४६
सुखेन धर्मं श्रीमन्तश्चरन्ति शुचिवाससः
संवसन्तः प्रियैर्दारैर्भुञ्जानाश्चान्नमुत्तमम् ४७
अर्थे सर्वे समारम्भाः समायत्ता न संशयः
स च दण्डे समायत्तः पश्य दण्डस्य गौरवम् ४८
लोकयात्रार्थमेवेह धर्मप्रवचनं कृतम्
अहिंसा साधुहिंसेति श्रेयान्धर्मपरिग्रहः ४९
नात्यन्तगुणवान्कश्चिन्न चाप्यत्यन्तनिर्गुणः
उभयं सर्वकार्येषु दृश्यते साध्वसाधु च ५०
पशूनां वृषणं छित्त्वा ततो भिन्दन्ति नस्तकान्
कृषन्ति बहवो भारान्बध्नन्ति दमयन्ति च ५१
एवं पर्याकुले लोके विपथे जर्जरीकृते
तैस्तैर्न्यायैर्महाराज पुराणं धर्ममाचर ५२
यज देहि प्रजा रक्ष धर्मं समनुपालय
अमित्राञ्जहि कौन्तेय मित्राणि परिपालय ५३
मा च ते निघ्नतः शत्रून्मन्युर्भवतु भारत
न तत्र किल्बिषं किंचित्कर्तुर्भवति भारत ५४
आततायी हि यो हन्यादाततायिनमागतम्
न तेन भ्रूणहा स स्यान्मन्युस्तं मन्युमृच्छति ५५
अवध्यः सर्वभूतानामन्तरात्मा न संशयः
अवध्ये चात्मनि कथं वध्यो भवति केनचित् ५६

यथा हि पुरुषः शालां पुनः संप्रविशेन्नवाम्
एवं जीवः शरीराणि तानि तानि प्रपद्यते ५७
देहान्पुराणानुत्सृज्य नवान्संप्रतिपद्यते
एवं मृत्युमुखं प्राहुर्वै जनास्तत्त्वदर्शिनः ५८
इति श्रीमहाभारते शान्तिपर्वणि पञ्चदशोऽध्यायः १५

षोडशोऽध्यायः

वैशम्पायन उवाच
अर्जुनस्य वचः श्रुत्वा भीमसेनोऽत्यमर्षणः
धैर्यमास्थाय तेजस्वी ज्येष्ठं भ्रातरमब्रवीत् १
राजन्विदितधर्मोऽसि न तेऽस्त्यविदितं भुवि
उपशिक्षाम ते वृत्तं सदैव न च शक्नुमः २
न वक्ष्यामि न वक्ष्यामीत्येवं मे मनसि स्थितम्
अतिदुःखात्तु वक्ष्यामि तन्निबोध जनाधिप ३
भवतस्तु प्रमोहेन सर्वं संशयितं कृतम्
विक्लवत्वं च नः प्राप्तमबलत्वं तथैव च ४
कथं हि राजा लोकस्य सर्वशास्त्रविशारदः
मोहमापद्यते दैन्याद्यथा कुपुरुषस्तथा ५
आगतिश्च गतिश्चैव लोकस्य विदिता तव
आयत्यां च तदात्वे च न तेऽस्त्यविदितं प्रभो ६
एवं गते महाराज राज्यं प्रति जनाधिप
हेतुमत्र प्रवक्ष्यामि तदिहैकमनाः शृणु ७
द्विविधो जायते व्याधिः शारीरो मानसस्तथा
परस्परं तयोर्जन्म निर्द्वंद्वं नोपलभ्यते ८
शारीराज्जायते व्याधिर्मानसो नात्र संशयः
मानसाज्जायते व्याधिः शारीर इति निश्चयः ९
शारीरमानसे दुःखे योऽतीते अनुशोचति
दुःखेन लभते दुःखं द्वावनर्थौ प्रपद्यते १०
शीतोष्णे चैव वायुश्च त्रयः शारीरजा गुणाः
तेषां गुणानां साम्यं च तदाहुः स्वस्थलक्षणम् ११

तेषामन्यतमोत्सेके विधानमुपदिश्यते
उष्णेन बाध्यते शीतं शीतेनोष्णं प्रबाध्यते १२
सत्त्वं रजस्तमश्चैव मानसाः स्युस्त्रयो गुणाः
हर्षेण बाध्यते शोको हर्षः शोकेन बाध्यते १३
कश्चिद्दुःखे वर्तमानः सुखस्य स्मर्तुमिच्छति
कश्चित्सुखे वर्तमानो दुःखस्य स्मर्तुमिच्छति १४
स त्वं न दुःखी दुःखस्य न सुखी च सुखस्य च
न दुःखी सुखजातस्य न सुखी दुःखजस्य वा १५
स्मर्तुमर्हसि कौरव्य दिष्टं तु बलवत्तरम्
अथ वा ते स्वभावोऽय येन पार्थिव कृष्यसे १६
दृष्ट्वा सभागतां कृष्णामेकवस्त्रां रजस्वलाम्
मिषतां पाण्डुपुत्राणां न तस्य स्मर्तुमर्हसि १७
प्रव्राजनं च नगरादजिनैश्च निवासनम्
महारण्यनिवासश्च न तस्य स्मर्तुमर्हसि १८
जटासुरात्परिक्लेशं चित्रसेनेन चाहवम्
सैन्धवाच्च परिक्लेशं कथं विस्मृतवानसि
पुनरज्ञातचर्यायां कीचकेन पदा वधम् १९
यच्च ते द्रोणभीष्माभ्यां युद्धमासीदरिंदम
मनसैकेन ते युद्धमिदं घोरमुपस्थितम् २०
यत्र नास्ति शरैः कार्यं न मित्रैर्न च बन्धुभिः
आत्मनैकेन योद्धव्यं तत्ते युद्धमुपस्थितम् २१
तस्मिन्ननिर्जिते युद्धे प्राणान्यदि ह मोक्ष्यसे
अन्यं देहं समास्थाय पुनस्तेनैव योत्स्यसे २२
तस्मादद्यैव गन्तव्यं युद्धस्य भरतर्षभ
एतज्जित्वा महाराज कृतकृत्यो भविष्यसि २३
एतां बुद्धिं विनिश्चित्य भूतानामागतिं गतिम्
पितृपैतामहे वृत्ते शाधि राज्यं यथोचितम् २४
दिष्ट्या दुर्योधनः पापो निहतः सानुगो युधि
द्रौपद्याः केशपक्षस्य दिष्ट्या त्वं पदवीं गतः २५
यजस्व वाजिमेधेन विधिवद्दक्षिणावता

वयं ते किंकराः पार्थ वासुदेवश्च वीर्यवान् २६
इति श्रीमहाभारते शान्तिपर्वणि षोडशोऽध्यायः १६

सप्तदशोऽध्यायः

युधिष्ठिर उवाच
असंतोषः प्रमादश्च मदो रागोऽप्रशान्तता
बलं मोहोऽभिमानश्च उद्वेगश्चापि सर्वशः १
एभिः पाप्मभिराविष्टो राज्यं त्वमभिकाङ्क्षसि
निरामिषो विनिर्मुक्तः प्रशान्तः सुसुखी भव २
य इमामखिलां भूमिं शिष्यादेको महीपतिः
तस्याप्युदरमेवैकं किमिदं त्वं प्रशंससि ३
नाह्ना पूरयितुं शक्या न मासेन नरर्षभ
अपूर्या पूरयन्निच्छामायुषापि न शक्नुयात् ४
यथेद्धः प्रज्वलत्यग्निरसमिद्धः प्रशाम्यति
अल्पाहारतया त्वग्निं शमयौदर्यमुत्थितम्
जयोदरं पृथिव्या ते श्रेयो निर्जितया जितम् ५
मानुषान्कामभोगांस्त्वमैश्वर्यं च प्रशंससि
अभोगिनोऽबलाश्चैव यान्ति स्थानमनुत्तमम् ६
योगक्षेमौ च राष्ट्रस्य धर्माधर्मौ त्वयि स्थितौ
मुच्यस्व महतो भारात्त्यागमेवाभिसंश्रय ७
एकोदरकृते व्याघ्रः करोति विघसं बहु
तमन्येऽप्युपजीवन्ति मन्दवेगंचरा मृगाः ८
विषयान्प्रतिसंहृत्य संन्यासं कुरुते यतिः
न च तुष्यन्ति राजानः पश्य बुद्ध्यन्तरं यथा ९
पत्राहारैरश्मकुट्टैर्दन्तोलूखलिकैस्तथा
अब्भक्षैर्वायुभक्षैश्च तैरयं नरको जितः १०
यश्चेमां वसुधां कृत्स्नां प्रशासेदखिलां नृपः
तुल्याश्मकाञ्चनो यश्च स कृतार्थो न पार्थिवः ११
सङ्कल्पेषु निरारम्भो निराशो निर्ममो भव
विशोकं स्थानमातिष्ठ इह चामुत्र चाव्ययम् १२

निरामिषा न शोचन्ति शोचसि त्वं किमामिषम्
परित्यज्यामिषं सर्वं मृषावादात्प्रमोद्यसे १३
पन्थानौ पितृयानश्च देवयानश्च विश्रुतौ
ईजानाः पितृयानेन देवयानेन मोक्षिणः १४
तपसा ब्रह्मचर्येण स्वाध्यायेन च पाविताः
विमुच्य देहान्वै भान्ति मृत्योरविषयं गताः १५
आमिषं बन्धनं लोके कर्मेहोक्तं तथामिषम्
ताभ्यां विमुक्तः पाशाभ्यां पदमाप्नोति तत्परम् १६
अपि गाथामिमां गीतां जनकेन वदन्त्युत
निर्द्वन्द्वेन विमुक्तेन मोक्षं समनुपश्यता १७
अनन्तं बत मे वित्तं यस्य मे नास्ति किंचन
मिथिलायां प्रदीप्तायां न मे दह्यति किंचन १८
प्रज्ञाप्रासादमारुह्य नशोच्याञ्शोचतो जनान्
जगतीस्थानिवाद्रिस्थो मन्दबुद्धीनवेक्षते १९
दृश्यं पश्यति यः पश्यन्स चक्षुष्मान्स बुद्धिमान्
अज्ञातानां च विज्ञानात्संबोधाद्बुद्धिरुच्यते २०
यस्तु वाचं विजानाति बहुमानमियात्स वै
ब्रह्मभावप्रसूतानां वैद्यानां भावितात्मनाम् २१
यदा भूतपृथग्भावमेकस्थमनुपश्यति
तत एव च विस्तारं ब्रह्म संपद्यते तदा २२
ते जनानां गतिं यान्ति नाविद्वांसोऽल्पचेतसः
नाबुद्धयो नातपसः सर्वं बुद्धौ प्रतिष्ठितम् २३
इति श्रीमहाभारते शान्तिपर्वणि सप्तदशोऽध्यायः १७

## अष्टादशोऽध्यायः

वैशम्पायन उवाच
तूष्णींभूतं तु राजानं पुनरेवार्जुनोऽब्रवीत्
संतप्तः शोकदुःखाभ्यां राज्ञो वाक्शल्यपीडितः १
कथयन्ति पुरावृत्तमितिहासमिमं जनाः
विदेहराज्ञः संवादं भार्यया सह भारत २

उत्सृज्य राज्यं भैक्षार्थं कृतबुद्धिं जनेश्वरम्
विदेहराजं महिषी दुःखिता प्रत्यभाषत ३
धनान्यपत्यं मित्राणि रत्नानि विविधानि च
पन्थानं पावकं हित्वा जनको मौण्ड्यमास्थितः ४
तं ददर्श प्रिया भार्या भैक्ष्यवृत्तिमकिंचनम्
धानामुष्टिमुपासीनं निरीहं गतमत्सरम् ५
तमुवाच समागम्य भर्तारमकुतोभयम्
क्रुद्धा मनस्विनी भार्या विविक्ते हेतुमद्वचः ६
कथमुत्सृज्य राज्यं स्वं धनधान्यसमाचितम्
कापालद्यं वृत्तिमास्थाय धानामुष्टिर्वनेऽचरः ७
प्रतिज्ञा तेऽन्यथा राजन्विचेष्टा चान्यथा तव
यद्राज्यं महदुत्सृज्य स्वल्पे तुष्यसि पार्थिव ८
नैतेनातिथयो राजन्देवर्षिपितरस्तथा
शक्यमद्य त्वया भर्तुं मोघस्तेऽय परिश्रमः ९
देवतातिथिभिश्चैव पितृभिश्चैव पार्थिव
सर्वैरेतैः परित्यक्तः परिव्रजसि निष्क्रियः १०
यस्त्वं त्रैविद्यवृद्धानां ब्राह्मणानां सहस्रशः
भर्ता भूत्वा च लोकस्य सोऽद्यान्यैर्भृतिमिच्छसि ११
श्रियं हित्वा प्रदीप्तां त्वं श्ववत्संप्रति वीक्ष्यसे
अपुत्रा जननी तेऽद्य कौसल्या चापतिस्त्वया १२
अशीतिर्धर्मकामास्त्वां क्षत्रियाः पर्युपासते
त्वदाशामभिकाङ्क्षन्त्यः कृपणाः फलहेतुकाः १३
ताश्च त्वं विफलाः कुर्वन्काँल्लोकान्नु गमिष्यसि
राजन्संशयिते मोक्षे परतन्त्रेषु देहिषु १४
नैव तेऽस्ति परो लोको नापरः पापकर्मणः
धर्म्यान्दारान्परित्यज्य यस्त्वमिच्छसि जीवितुम् १५
स्रजो गन्धानलंकारान्वासांसि विविधानि च
किमर्थमभिसंत्यज्य परिव्रजसि निष्क्रियः १६
निपानं सर्वभूतानां भूत्वा त्वं पावनं महत्
आढ्यो वनस्पतिर्भूत्वा सोऽद्यान्यान्पर्युपाससे १७

खादन्ति हस्तिनं न्यासे क्रव्यादा बहवोऽप्युत
बहवः कृमयश्चैव किंपुनस्त्वामनर्थकम् १८
य इमां कुण्डिकां भिन्द्यात्त्रिविष्टब्धं च ते हरेत्
वासश्चापहरेत्तस्मिन्कथं ते मानसं भवेत् १९
यस्त्वयं सर्वमुत्सृज्य धानामुष्टिपरिग्रहः
यदानेन समं सर्वं किमिदं मम दीयते
धानामुष्टिरिहार्थश्चेत्प्रतिज्ञा ते विनश्यति २०
का वाहं तव को मे त्वं कोऽद्य ते मय्यनुग्रहः
प्रशाधि पृथिवीं राजन्यत्र तेऽनुग्रहो भवेत्
प्रासादं शयनं यानं वासांस्याभरणानि च २१
श्रिया निराशैरधनैस्त्यक्तमित्रैरकिंचनैः
सौखिकैः संभृतानर्थान्यः संत्यजसि किं नु तत् २२
योऽत्यन्तं प्रतिगृह्णीयाद्यश्च दद्यात्सदैव हि
तयोस्त्वमन्तरं विद्धि श्रेयांस्ताभ्यां क उच्यते २३
सदैव याचमानेषु सत्सु दम्भविवर्जिषु
एतेषु दक्षिणा दत्ता दावाग्नाविव दुर्हुतम् २४
जातवेदा यथा राजन्नादग्ध्वैवोपशाम्यति
सदैव याचमानो वै तथा शाम्यति न द्विजः २५
सतां च वेदा अन्नं च लोकेऽस्मिन्प्रकृतिर्ध्रुवा
न चेद्दाता भवेद्दाता कुतः स्युर्मोक्षकाङ्क्षिणः २६
अन्नाद्गृहस्था लोकेऽस्मिन्भिक्षवस्तत एव च
अन्नात्प्राणः प्रभवति अन्नदः प्राणदो भवेत् २७
गृहस्थेभ्योऽभिनिर्वृत्ता गृहस्थानेव संश्रिताः
प्रभवं च प्रतिष्ठां च दान्ता निन्दन्त आसते २८
त्यागान्न भिक्षुकं विद्यान्न मौण्ड्यान्न च याचनात्
ऋजुस्तु योऽथ त्यजति तं सुखं विद्धि भिक्षुकम् २९
असक्तः सक्तवद्गच्छन्निःसङ्गो मुक्तबन्धनः
समः शत्रौ च मित्रे च स वै मुक्तो महीपते ३०
परिव्रजन्ति दानार्थं मुण्डाः काषायवाससः
सिता बहुविधैः पाशैः संचिन्वन्तो वृथामिषम् ३१

त्रयीं च नाम वार्तां च त्यक्त्वा पुत्रांस्त्यजन्ति ये
त्रिविष्टब्धं च वासश्च प्रतिगृह्णन्त्यबुद्धयः ३२
अनिष्कषाये काषायमीहार्थमिति विद्धि तत्
धर्मध्वजानां मुण्डानां वृत्त्यर्थमिति मे मतिः ३३
काषायैरजिनैश्चीरैर्नग्नान्मुण्डाञ्जटाधरान्
बिभ्रत्साधून्महाराज जय लोकाञ्जितेन्द्रियः ३४
अग्न्याधेयानि गुर्वर्थान्क्रतून्सपशुदक्षिणान्
ददात्यहरहः पूर्वं को नु धर्मतरस्ततः ३५
तत्त्वज्ञो जनको राजा लोकेऽस्मिन्निति गीयते
सोऽप्यासीन्मोहसंपन्नो मा मोहवशमन्वगाः ३६
एवं धर्ममनुक्रान्तं सदा दानपरैर्नरैः
आनृशंस्यगुणोपेतैः कामक्रोधविवर्जिताः ३७
पालयन्तः प्रजाश्चैव दानमुत्तममास्थिताः
इष्टाँल्लोकानवाप्स्यामो ब्रह्मण्याः सत्यवादिनः ३८
इति श्रीमहाभारते शान्तिपर्वणि अष्टादशोऽध्यायः १८

एकोनविंशोऽध्यायः

युधिष्ठिर उवाच
वेदाहं तात शास्त्राणि अपराणि पराणि च
अभयं वेदवचनं कुरु कर्म त्यजेति च १
आकुलानि च शास्त्राणि हेतुभिश्चित्रितानि च
निश्चयश्चैव यन्मात्रो वेदाहं तं यथाविधि २
त्वं तु केवलमस्त्रज्ञो वीरव्रतमनुष्ठितः
शास्त्रार्थं तत्त्वतो गन्तुं न समर्थः कथंचन ३
शास्त्रार्थसूक्ष्मदर्शी यो धर्मनिश्चयकोविदः
तेनाप्येवं न वाच्योऽहं यदि धर्मं प्रपश्यसि ४
भ्रातृसौहृदमास्थाय यदुक्तं वचनं त्वया
न्याय्यं युक्तं च कौन्तेय प्रीतोऽहं तेन तेऽर्जुन ५
युद्धधर्मेषु सर्वेषु क्रियाणां नैपुणेषु च
न त्वया सदृशः कश्चित्त्रिषु लोकेषु विद्यते ६

धर्मसूक्ष्मं तु यद्वाक्यं तत्र दुष्प्रतरं त्वया
धनंजय न मे बुद्धिमभिशङ्कितुमर्हसि ७
युद्धशास्त्रविदेव त्वं न वृद्धाः सेवितास्त्वया
समासविस्तरविदां न तेषां वेत्सि निश्चयम् ८
तपस्त्यागो विधिरिति निश्चयस्तात धीमताम्
परं परं ज्याय एषां सैषा नैःश्रेयसी गतिः ९
न त्वेतन्मन्यसे पार्थ न ज्यायोऽस्ति धनादिति
अत्र ते वर्तयिष्यामि यथा नैतत्प्रधानतः १०
तपःस्वाध्यायशीला हि दृश्यन्ते धार्मिका जनाः
ऋषयस्तपसा युक्ता येषां लोकाः सनातनाः ११
अजातश्मश्रवो धीरास्तथान्ये वनवासिनः
अनन्ता अधना एव स्वाध्यायेन दिवं गताः १२
उत्तरेण तु पन्थानमार्या विषयनिग्रहात्
अबुद्धिजं तमस्त्यक्त्वा लोकांस्त्यागवतां गताः १३
दक्षिणेन तु पन्थानं यं भास्वन्तं प्रपश्यसि
एते क्रियावतां लोका ये श्मशानानि भेजिरे १४
अनिर्देश्या गतिः सा तु यां प्रपश्यन्ति मोक्षिणः
तस्मात्त्यागः प्रधानेष्टः स तु दुःखः प्रवेदितुम् १५
अनुसृत्य तु शास्त्राणि कवयः समवस्थिताः
अपीह स्यादपीह स्यात्सारासारदिदृक्षया १६
वेदवादानतिक्रम्य शास्त्राण्यारण्यकानि च
विपाट्य कदलीस्कन्धं सारं ददृशिरे न ते १७
अथैकान्तव्युदासेन शरीरे पञ्चभौतिके
इच्छाद्वेषसमायुक्तमात्मानं प्राहुरिङ्गितैः १८
अग्राह्यश्चक्षुषा सोऽपि अनिर्देश्यं च तद्गिरा
कर्महेतुपुरस्कारं भूतेषु परिवर्तते १९
कल्याणगोचरं कृत्वा मनस्तृष्णां निगृह्य च
कर्मसंततिमुत्सृज्य स्यान्निरालम्बनः सुखी २०
अस्मिन्नेवं सुक्ष्मगम्ये मार्गे सद्भिर्निषेविते
कथमर्थमनर्थाढ्यमर्जुन त्वं प्रशंससि २१

पूर्वशास्त्रविदो ह्येवं जनाः पश्यन्ति भारत
क्रियासु निरता नित्यं दाने यज्ञे च कर्मणि २२
भवन्ति सुदुरावर्ता हेतुमन्तोऽपि पण्डिताः
दृढपूर्वश्रुता मूढा नैतदस्तीति वादिनः २३
अमृतस्यावमन्तारो वक्तारो जनसंसदि
चरन्ति वसुधां कृत्स्नां वावदूका बहुश्रुताः २४
यान्वयं नाभिजानीमः कस्ताञ्ज्ञातुमिहार्हति
एवं प्राज्ञान्सतश्चापि महतः शास्त्रवित्तमान् २५
तपसा महदाप्नोति बुद्ध्या वै विन्दते महत्
त्यागेन सुखमाप्नोति सदा कौन्तेय धर्मवित् २६
इति श्रीमहाभारते शान्तिपर्वणि एकोनविंशतितमोऽध्यायः १९

## विंशतितमोऽध्यायः

वैशम्पायन उवाच
तस्मिन्वाक्यान्तरे वक्ता देवस्थानो महातपाः
अभिनीततरं वाक्यमित्युवाच युधिष्ठिरम् १
यद्वचः फल्गुनेनोक्तं न ज्यायोऽस्ति धनादिति
अत्र ते वर्तयिष्यामि तदेकाग्रमनाः शृणु २
अजातशत्रो धर्मेण कृत्स्ना ते वसुधा जिता
तां जित्वा न वृथा राजंस्त्वं परित्यक्तुमर्हसि ३
चतुष्पदी हि निःश्रेणी कर्मण्येषा प्रतिष्ठिता
तां क्रमेण महाबाहो यथावज्जय पार्थिव ४
तस्मात्पार्थ महायज्ञैर्यजस्व बहुदक्षिणैः
स्वाध्याययज्ञा ऋषयो ज्ञानयज्ञास्तथापरे ५
कर्मनिष्ठांस्तु बुध्येथास्तपोनिष्ठांश्च भारत
वैखानसानां राजेन्द्र वचनं श्रूयते यथा ६
ईहते धनहेतोर्यस्तस्यानीहा गरीयसी
भूयान्दोषः प्रवर्धेत यस्तं धनमपाश्रयेत् ७
कृच्छ्राच्च द्रव्यसंहारं कुर्वन्ति धनकारणात्
धनेन तृषितोऽबुद्ध्या भ्रूणहत्यां न बुध्यते ८

अनर्हते यद्ददाति न ददाति यदर्हते
अनर्हार्हापरिज्ञानाद्दानधर्मोऽपि दुष्करः ९
यज्ञाय सृष्टानि धनानि धात्रा यष्टादिष्टः पुरुषो रक्षिता च
तस्मात्सर्वं यज्ञ एवोपयोज्यं धनं ततोऽनन्तर एव कामः १०
यज्ञैरिन्द्रो विविधैरन्नवद्भिर्देवान्सर्वानभ्ययान्महौजाः
तेनेन्द्रत्वं प्राप्य विभ्राजतेऽसौ तस्माद्यज्ञे सर्वमेवोपयोज्यम् ११
महादेवः सर्वमेधे महात्मा हुत्वात्मानं देवदेवो विभूतः
विश्वाँल्लोकान्व्याप्य विष्टभ्य कीर्त्या विरोचते द्युतिमान्कृत्तिवासाः १२
आविक्षितः पार्थिवो वै मरुत्तः स्वृद्ध्या मर्त्यो योऽजयद्देवराजम्
यज्ञे यस्य श्रीः स्वयं संनिविष्टा यस्मिन्भाण्डं काञ्चनं सर्वमासीत् १३
हरिश्चन्द्रः पार्थिवेन्द्रः श्रुतस्ते यज्ञैरिष्ट्वा पुण्यकृद्वीतशोकः
ऋद्ध्या शक्रं योऽजयन्मानुषः संस्तस्माद्यज्ञे सर्वमेवोपयोज्यम् १४
इति श्रीमहाभारते शान्तिपर्वणि विंशतितमोऽध्यायः २०

## एकविंशोऽध्यायः

देवस्थान उवाच
अत्रैवोदाहरन्तीममितिहासं पुरातनम्
इन्द्रेण समये पृष्टो यदुवाच बृहस्पतिः १
संतोषो वै स्वर्गतमः सन्तोषः परमं सुखम्
तुष्टेर्न किंचित्परतः सुसम्यक्परितिष्ठति २
यदा संहरते कामान्कूर्मोऽङ्गानीव सर्वशः
तदात्मज्योतिरात्मैव स्वात्मनैव प्रसीदति ३
न बिभेति यदा चायं यदा चास्मान्न बिभ्यति
कामद्वेषौ च जयति तदात्मानं प्रपश्यति ४
यदासौ सर्वभूतानां न क्रुध्यति न दुष्यति
कर्मणा मनसा वाचा ब्रह्म संपद्यते तदा ५
एवं कौन्तेय भूतानि तं तं धर्मं तथा तथा
तदा तदा प्रपश्यन्ति तस्माद्बुध्यस्व भारत ६
अन्ये शमं प्रशंसन्ति व्यायाममपरे तथा
नैकं न चापरं केचिदुभयं च तथापरे ७

यज्ञमेके प्रशंशन्ति संन्यासमपरे जनाः
दानमेके प्रशंसन्ति केचिदेव प्रतिग्रहम्
केचित्सर्वं परित्यज्य तूष्णीं ध्यायन्त आसते ८
राज्यमेके प्रशंसन्ति सर्वेषां परिपालनम्
हत्वा भित्त्वा च छित्त्वा च केचिदेकान्तशीलिनः ९
एतत्सर्वं समालोक्य बुधानामेष निश्चयः
अद्रोहेणैव भूतानां यो धर्मः स सतां मतः १०
अद्रोहः सत्यवचनं संविभागो धृतिः क्षमा
प्रजनः स्वेषु दारेषु मार्दवं ह्रीरचापलम् ११
धनं धर्मप्रधानेष्टं मनुः स्वायंभुवोऽब्रवीत्
तस्मादेवं प्रयत्नेन कौन्तेय परिपालय १२
यो हि राज्ये स्थितः शश्वद्वशी तुल्यप्रियाप्रियः
क्षत्रियो यज्ञशिष्टाशी राजशास्त्रार्थतत्त्ववित् १३
असाधुनिग्रहरतः साधूनां प्रग्रहे रतः
धर्मे वर्त्मनि संस्थाप्य प्रजा वर्तेत धर्मवित् १४
पुत्रसंक्रामितश्रीस्तु वने वन्येन वर्तयन्
विधिना श्रामणेनैव कुर्यात्कालमतन्द्रितः १५
य एवं वर्तते राजा राजधर्मविनिश्चितः
तस्यायं च परश्चैव लोकः स्यात्सफलो नृप
निर्वाणं तु सुदुष्पारं बहुविघ्नं च मे मतम् १६
एवं धर्ममनुक्रान्ताः सत्यदानतपःपराः
आनृशंस्यगुणैर्युक्ताः कामक्रोधविवर्जिताः १७
प्रजानां पालने युक्ता दममुत्तममास्थिताः
गोब्राह्मणार्थं युद्धेन संप्राप्ता गतिमुत्तमाम् १८
एवं रुद्राः सवसवस्तथादित्याः परंतप
साध्या राजर्षिसंघाश्च धर्ममेतं समाश्रिताः
अप्रमत्तास्ततः स्वर्गं प्राप्ताः पुण्यैः स्वकर्मभिः १९
इति श्रीमहाभारते शान्तिपर्वणि एकविंशोऽध्यायः २१

द्वाविंशोऽध्यायः
वैशम्पायन उवाच
तस्मिन्वाक्यान्तरे वाक्यं पुनरेवार्जुनोऽब्रवीत्
विषण्णमनसं ज्येष्ठमिदं भ्रातरमीश्वरम् १
क्षत्रधर्मेण धर्मज्ञ प्राप्य राज्यमनुत्तमम्
जित्वा चारीन्नरश्रेष्ठ तप्यते किं भवान्भृशम् २
क्षत्रियाणां महाराज संग्रामे निधनं स्मृतम्
विशिष्टं बहुभिर्यज्ञैः क्षत्रधर्ममनुस्मर ३
ब्राह्मणानां तपस्त्यागः प्रेत्यधर्मविधिः स्मृतः
क्षत्रियाणां च विहितं संग्रामे निधनं विभो ४
क्षत्रधर्मो महारौद्रः शस्त्रनित्य इति स्मृतः
वधश्च भरतश्रेष्ठ काले शस्त्रेण संयुगे ५
ब्राह्मणस्यापि चेद्राजन्क्षत्रधर्मेण तिष्ठतः
प्रशस्तं जीवितं लोके क्षत्रं हि ब्रह्मसंस्थितम् ६
न त्यागो न पुनर्याच्ञा न तपो मनुजेश्वर
क्षत्रियस्य विधीयन्ते न परस्वोपजीवनम् ७
स भवान्सर्वधर्मज्ञः सर्वात्मा भरतर्षभ
राजा मनीषी निपुणो लोके दृष्टपरावरः ८
त्यक्त्वा संतापजं शोकं संशितो भव कर्मणि
क्षत्रियस्य विशेषेण हृदयं वज्रसंहतम् ९
जित्वारीन्क्षत्रधर्मेण प्राप्य राज्यमकण्टकम्
विजितात्मा मनुष्येन्द्र यज्ञदानपरो भव १०
इन्द्रो वै ब्रह्मणः पुत्रः कर्मणा क्षत्रियोऽभवत्
ज्ञातीनां पापवृत्तीनां जघान नवतीर्नव ११
तच्चास्य कर्म पूज्यं हि प्रशस्यं च विशां पते
तेन चेन्द्रत्वमापेदे देवानामिति नः श्रुतम् १२
स त्वं यज्ञैर्महाराज यजस्व बहुदक्षिणैः
यथैवेन्द्रो मनुष्येन्द्र चिराय विगतज्वरः १३
मा त्वमेवंगते किंचित्क्षत्रियर्षभ शोचिथाः
गतास्ते क्षत्रधर्मेण शस्त्रपूताः परां गतिम् १४

भवितव्यं तथा तच्च यद्वृत्तं भरतर्षभ
दिष्टं हि राजशार्दूल न शक्यमतिवर्तितुम् १५
इति श्रीमहाभारते शान्तिपर्वणि द्वाविंशोऽध्यायः २२

त्रयोविंशोऽध्यायः

वैशम्पायन उवाच
एवमुक्तस्तु कौन्तेयो गुडाकेशेन भारत
नोवाच किंचित्कौरव्यस्ततो द्वैपायनोऽब्रवीत् १
बीभत्सोर्वचनं सम्यक्सत्यमेतद्युधिष्ठिर
शास्त्रदृष्टः परो धर्मः स्मृतो गार्हस्थ्य आश्रमः २
स्वधर्मं चर धर्मज्ञ यथाशास्त्रं यथाविधि
न हि गार्हस्थ्यमुत्सृज्य तवारण्यं विधीयते ३
गृहस्थं हि सदा देवाः पितर ऋषयस्तथा
भृत्याश्चैवोपजीवन्ति तान्भजस्व महीपते ४
वयांसि पशवश्चैव भूतानि च महीपते
गृहस्थैरेव धार्यन्ते तस्माज्ज्येष्ठाश्रमो गृही ५
सोऽय चतुर्णामेतेषामाश्रमाणां दुराचरः
तं चराविमनाः पार्थ दुश्चरं दुर्बलेन्द्रियैः ६
वेदज्ञानं च ते कृत्स्नं तपश्च चरितं महत्
पितृपैतामहे राज्ये धुरमुद्वोढुमर्हसि ७
तपो यज्ञस्तथा विद्या भैक्षमिन्द्रियनिग्रहः
ध्यानमेकान्तशीलत्वं तुष्टिर्दानं च शक्तितः ८
ब्राह्मणानां महाराज चेष्टाः संसिद्धिकारिकाः
क्षत्रियाणां च वक्ष्यामि तवापि विदितं पुनः ९
यज्ञो विद्या समुत्थानमसंतोषः श्रियं प्रति
दण्डधारणमत्युग्रं प्रजानां परिपालनम् १०
वेदज्ञानं तथा कृत्स्नं तपः सुचरितं तथा
द्रविणोपार्जनं भूरि पात्रेषु प्रतिपादनम् ११
एतानि राज्ञां कर्माणि सुकृतानि विशां पते
इमं लोकममुं लोकं साधयन्तीति नः श्रुतम् १२

तेषां ज्यायस्तु कौन्तेय दण्डधारणमुच्यते
बलं हि क्षत्रिये नित्यं बले दण्डः समाहितः १३
एताश्चेष्टाः क्षत्रियाणां राजन्संसिद्धिकारिकाः
अपि गाथामिमां चापि बृहस्पतिरभाषत १४
भूमिरेतौ निगिरति सर्पो बिलशयानिव
राजानं चाविरोद्धारं ब्राह्मणं चाप्रवासिनम् १५
सुद्युम्नश्चापि राजर्षिः श्रूयते दण्डधारणात्
प्राप्तवान्परमां सिद्धिं दक्षः प्राचेतसो यथा १६
इति श्रीमहाभारते शान्तिपर्वणि त्रयोविंशोऽध्यायः २३

## चतुर्विंशोऽध्यायः

युधिष्ठिर उवाच
भगवन्कर्मणा केन सुद्युम्नो वसुधाधिपः
संसिद्धिं परमां प्राप्तः श्रोतुमिच्छामि तं नृपम् १
व्यास उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
शङ्खश्च लिखितश्चास्तां भ्रातरौ संयतव्रतौ २
तयोरावसथावास्तां रमणीयौ पृथक्पृथक्
नित्यपुष्पफलैर्वृक्षैरुपेतौ बाहुदामनु ३
ततः कदाचिल्लिखितः शङ्खस्याश्रममागमत्
यदृच्छयापि शङ्खोऽथ निष्क्रान्तोऽभवदाश्रमात् ४
सोऽभिगम्याश्रमं भ्रातुः शङ्खस्य लिखितस्तदा
फलानि शातयामास सम्यक्परिणतान्युत ५
तान्युपादाय विस्रब्धो भक्षयामास स द्विजः
तस्मिंश्च भक्षयत्येव शङ्खोऽप्याश्रममागमत् ६
भक्षयन्तं तु तं दृष्ट्वा शङ्खो भ्रातरमब्रवीत्
कुतः फलान्यवाप्तानि हेतुना केन खादसि ७
सोऽब्रवीद्भ्रातरं ज्येष्ठमुपस्पृश्याभिवाद्य च
इत एव गृहीतानि मयेति प्रहसन्निव ८
तमब्रवीत्तदा शङ्खस्तीव्रकोपसमन्वितः

स्तेयं त्वया कृतमिदं फलान्याददता स्वयम्
गच्छ राजानमासाद्य स्वकर्म प्रथयस्व वै ९
अदत्तादानमेवेदं कृतं पार्थिवसत्तम
स्तेनं मां त्वं विदित्वा च स्वधर्ममनुपालय
शीघ्रं धारय चौरस्य मम दण्डं नराधिप १०
इत्युक्तस्तस्य वचनात्सुद्युम्नं वसुधाधिपम्
अभ्यगच्छन्महाबाहो लिखितः संशितव्रतः ११
सुद्युम्नस्त्वन्तपालेभ्यः श्रुत्वा लिखितमागतम्
अभ्यगच्छत्सहामात्यः पद्भ्यामेव नरेश्वरः १२
तमब्रवीत्समागत्य स राजा ब्रह्मवित्तमम्
किमागमनमाचक्ष्व भगवन्कृतमेव तत् १३
एवमुक्तः स विप्रर्षिः सुद्युम्नमिदमब्रवीत्
प्रतिश्रौषि करिष्येति श्रुत्वा तत्कर्तुमर्हसि १४
अनिसृष्टानि गुरुणा फलानि पुरुषर्षभ
भक्षितानि मया राजंस्तत्र मां शाधि माचिरम् १५
सुद्युम्न उवाच
प्रमाणं चेन्मतो राजा भवतो दण्डधारणे
अनुज्ञायामपि तथा हेतुः स्याद्ब्राह्मणर्षभ १६
स भवानभ्यनुज्ञातः शुचिकर्मा महाव्रतः
ब्रूहि कामानतोऽन्यास्त्वं करिष्यामि हि ते वचः १७
व्यास उवाच
छन्द्यमानोऽपि ब्रह्मर्षिः पार्थिवेन महात्मना
नान्यं वै वरयामास तस्माद्दण्डादृते वरम् १८
ततः स पृथिवीपालो लिखितस्य महात्मनः
करौ प्रच्छेदयामास धृतदण्डो जगाम सः १९
स गत्वा भ्रातरं शङ्खमार्तरूपोऽब्रवीदिदम्
धृतदण्डस्य दुर्बुद्धेर्भगवन्क्षन्तुमर्हसि २०
शङ्ख उवाच
न कुप्ये तव धर्मज्ञ न च दूषयसे मम
धर्मस्तु ते व्यतिक्रान्तस्ततस्ते निष्कृतिः कृता २१

स गत्वा बाहुदां शीघ्रं तर्पयस्व यथाविधि
देवान्पितॄनृषींश्चैव मा चाधर्मे मनः कृथाः २२
व्यास उवाच
तस्य तद्वचनं श्रुत्वा शङ्खस्य लिखितस्तदा
अवगाह्यापगां पुण्यामुदकार्थं प्रचक्रमे २३
प्रादुरास्तां ततस्तस्य करौ जलजसंनिभौ
ततः स विस्मितो भ्रातुर्दर्शयामास तौ करौ २४
ततस्तमब्रवीच्छङ्खस्तपसेदं कृतं मया
मा च तेऽत्र विशङ्का भूद्दैवमेव विधीयते २५
लिखित उवाच
किं नु नाहं त्वया पूतः पूर्वमेव महाद्युते
यस्य ते तपसो वीर्यमीदृशं द्विजसत्तम २६
शङ्ख उवाच
एवमेतन्मया कार्यं नाहं दण्डधरस्तव
स च पूतो नरपतिस्त्वं चापि पितृभिः सह २७
व्यास उवाच
स राजा पाण्डवश्रेष्ठ श्रेष्ठो वै तेन कर्मणा
प्राप्तवान्परमां सिद्धिं दक्षः प्राचेतसो यथा २८
एष धर्मः क्षत्रियाणां प्रजानां परिपालनम्
उत्पथेऽस्मिन्महाराज मा च शोके मनः कृथाः २९
भ्रातुरस्य हितं वाक्यं शृणु धर्मज्ञसत्तम
दण्ड एव हि राजेन्द्र क्षत्रधर्मो न मुण्डनम् ३०
इति श्रीमहाभारते शान्तिपर्वणि चतुर्विंशोऽध्यायः २४

## पञ्चविंशोऽध्यायः

वैशम्पायन उवाच
पुनरेव महर्षिस्तं कृष्णद्वैपायनोऽब्रवीत्
अजातशत्रुं कौन्तेयमिदं वचनमर्थवत् १
अरण्ये वसतां तात भ्रातॄणां ते तपस्विनाम्
मनोरथा महाराज ये तत्रासन्युधिष्ठिर २

तानिमे भरतश्रेष्ठ प्राप्नुवन्तु महारथाः
प्रशाधि पृथिवीं पार्थ ययातिरिव नाहुषः ३
अरण्ये दुःखवसतिरनुभूता तपस्विभिः
दुःखस्यान्ते नरव्याघ्राः सुखं त्वनुभवन्त्विमे ४
धर्ममर्थं च कामं च भ्रातृभिः सह भारत
अनुभूय ततः पश्चात्प्रस्थातासि विशां पते ५
अतिथीनां च पितृणां देवतानां च भारत
आनृण्यं गच्छ कौन्तेय ततः स्वर्गं गमिष्यसि ६
सर्वमेधाश्वमेधाभ्यां यजस्व कुरुनन्दन
ततः पश्चान्महाराज गमिष्यसि परां गतिम् ७
भ्रातॄंश्च सर्वान्क्रतुभिः संयोज्य बहुदक्षिणैः
संप्राप्तः कीर्तिमतुलां पाण्डवेय भविष्यसि ८
विद्म ते पुरुषव्याघ्र वचनं कुरुनन्दन
शृणु मत्त्व यथा कुर्वन्धर्मान्न च्यवते नृपः ९
आददानस्य च धनं निग्रहं च युधिष्ठिर
समानं धर्मकुशलाः स्थापयन्ति नरेश्वर १०
देशकालप्रतीक्षे यो दस्योर्दर्शयते नृपः
शास्त्रजां बुद्धिमास्थाय नैनसा स हि युज्यते ११
आदाय बलिषड्भागं यो राष्ट्रं नाभिरक्षति
प्रतिगृह्णाति तत्पापं चतुर्थांशेन पार्थिवः १२
निबोध च यथातिष्ठन्धर्मान्न च्यवते नृपः
निग्रहाद्धर्मशास्त्राणामनुरुध्यन्नपेतभीः
कामक्रोधावनादृत्य पितेव समदर्शनः १३
दैवेनोपहते राजा कर्मकाले महाद्युते
प्रमादयति तत्कर्म न तत्राहुरतिक्रमम् १४
तरसा बुद्धिपूर्वं वा निग्राह्या एव शत्रवः
पापैः सह न संदध्याद्राष्ट्रं पुण्यं च कारयेत् १५
शूराश्चार्याश्च सत्कार्या विद्वांसश्च युधिष्ठिर
गोमतो धनिनश्चैव परिपाल्या विशेषतः १६
व्यवहारेषु धर्म्येषु नियोज्याश्च बहुश्रुताः

गुणयुक्तेऽपि नैकस्मिन्विश्वस्याच्च विचक्षणः १७
अरक्षिता दुर्विनीतो मानी स्तब्धोऽभ्यसूयकः
एनसा युज्यते राजा दुर्दान्त इति चोच्यते १८
येऽरक्ष्यमाणा हीयन्ते दैवेनोपहते नृपे
तस्करैश्चापि हन्यन्ते सर्वं तद्राजकिल्बिषम् १९
सुमन्त्रिते सुनीते च विधिवच्चोपपादिते
पौरुषे कर्मणि कृते नास्त्यधर्मो युधिष्ठिर २०
विपद्यन्ते समारम्भाः सिध्यन्त्यपि च दैवतः
कृते पुरुषकारे तु नैनः स्पृशति पार्थिवम् २१
अत्र ते राजशार्दूल वर्तयिष्ये कथामिमाम्
यद्वृत्तं पूर्वराजर्षेर्हयग्रीवस्य पार्थिव २२
शत्रून्हत्वा हतस्याजौ शूरस्याक्लिष्टकर्मणः
असहायस्य धीरस्य निर्जितस्य युधिष्ठिर २३
यत्कर्म वै निग्रहे शात्रवाणां योगश्चाग्र्यः पालने मानवानाम्
कृत्वा कर्म प्राप्य कीर्तिं सुयुद्धे वाजिग्रीवो मोदते देवलोके २४
संत्यक्तात्मा समरेष्वाततायी शस्त्रैश्छिन्नो दस्युभिरर्द्यमानः
अश्वग्रीवः कर्मशीलो महात्मा संसिद्धात्मा मोदते देवलोके २५
धनुर्यूपो रशना ज्या शरः स्रुक्स्रुवः खड्गो रुधिरं यत्र चाज्यम्
रथो वेदी कामगो युद्धमग्निश्चातुर्होत्रं चतुरो वाजिमुख्याः २६
हुत्वा तस्मिन्यज्ञवह्नावथारीन्पापान्मुक्ता राजसिंहस्तरस्वी
प्राणान्हुत्वा चावभृथे रणे स वाजिग्रीवो मोदते देवलोके २७
राष्ट्रं रक्षन्बुद्धिपूर्वं नयेन संत्यक्तात्मा यज्ञशीलो महात्मा
सर्वाँल्लोकान्व्याप्य कीर्त्या मनस्वी वाजिग्रीवो मोदते देवलोके २८
दैवीं सिद्धिं मानुषीं दण्डनीतिं योगन्यायैः पालयित्वा महीं च
तस्माद्राजा धर्मशीलो महात्मा हयग्रीवो मोदते स्वर्गलोके २९
विद्वांस्त्यागी श्रद्दधानः कृतज्ञस्त्यक्त्वा लोकं मानुषं कर्म कृत्वा
मेधाविनां विदुषां संमतानां तनुत्यजां लोकमाक्रम्य राजा ३०
सम्यग्वेदान्प्राप्य शास्त्राण्यधीत्य सम्यग्राष्ट्रं पालयित्वा महात्मा
चातुर्वर्ण्यं स्थापयित्वा स्वधर्मे वाजिग्रीवो मोदते देवलोके ३१
जित्वा संग्रामान्पालयित्वा प्रजाश्च सोमं पीत्वा तर्पयित्वा द्विजाग्र्यान्

युक्त्या दण्डं धारयित्वा प्रजानां युद्धे क्षीणो मोदते देवलोके ३२
वृत्तं यस्य श्लाघनीयं मनुष्याः सन्तो विद्वांसश्चार्हयन्त्यर्हणीयाः
स्वर्गं जित्वा वीरलोकांश्च गत्वा सिद्धिं प्राप्तः पुण्यकीर्तिर्महात्मा ३३
इति श्रीमहाभारते शान्तिपर्वणि पञ्चविंशोऽध्यायः २५

## षड्विंशोऽध्यायः

वैशम्पायन उवाच
द्वैपायनवचः श्रुत्वा कुपिते च धनंजये
व्यासमामन्त्र्य कौन्तेयः प्रत्युवाच युधिष्ठिरः १
न पार्थिवमिदं राज्यं न च भोगाः पृथग्विधाः
प्रीणयन्ति मनो मेऽद्य शोको मां नर्दयत्ययम् २
श्रुत्वा च वीरहीनानामपुत्राणां च योषिताम्
परिदेवयमानानां शान्तिं नोपलभे मुने ३
इत्युक्तः प्रत्युवाचेदं व्यासो योगविदां वरः
युधिष्ठिरं महाप्राज्ञं धर्मज्ञो वेदपारगः ४
न कर्मणा लभ्यते चिन्तया वा नाप्यस्य दाता पुरुषस्य कश्चित्
पर्याययोगाद्विहितं विधात्रा कालेन सर्वं लभते मनुष्यः ५
न बुद्धिशास्त्राध्ययनेन शक्यं प्राप्तुं विशेषैर्मनुजैरकाले
मूर्खोऽपि प्राप्नोति कदाचिदर्थान्कालो हि कार्यं प्रति निर्विशेषः ६
नाभूतिकाले च फलं ददाति शिल्पं न मन्त्राश्च तथौषधानि
तान्येव कालेन समाहितानि सिध्यन्ति चेध्यन्ति च भूतिकाले ७
कालेन शीघ्राः प्रविवान्ति वाताः कालेन वृष्टिर्जलदानुपैति
कालेन पद्मोत्पलवज्जलं च कालेन पुष्यन्ति नगा वनेषु ८
कालेन कृष्णाश्च सिताश्च रात्र्यः कालेन चन्द्रः परिपूर्णबिम्बः
नाकालतः पुष्पफलं नगानां नाकालवेगाः सरितो वहन्ति ९
नाकालमत्ताः खगपन्नगाश्च मृगद्विपाः शैलमहाग्रहाश्च
नाकालतः स्त्रीषु भवन्ति गर्भा नायान्त्यकाले शिशिरोष्णवर्षाः १०
नाकालतो म्रियते जायते वा नाकालतो व्याहरते च बालः
नाकालतो यौवनमभ्युपैति नाकालतो रोहति बीजमुप्तम् ११
नाकालतो भानुरुपैति योगं नाकालतोऽस्त गिरिमभ्युपैति

नाकालतो वर्धते हीयते च चन्द्रः समुद्रश्च महोर्मिमाली १२
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
गीतं राज्ञा सेनजिता दुःखार्तेन युधिष्ठिर १३
सर्वानेवैष पर्यायो मर्त्यान्स्पृशति दुस्तरः
कालेन परिपक्वा हि म्रियन्ते सर्वमानवाः १४
घ्नन्ति चान्यान्नरा राजंस्तानप्यन्ये नरास्तथा
संज्ञैषा लौकिकी राजन्न हिनस्ति न हन्यते १५
हन्तीति मन्यते कश्चिन्न हन्तीत्यपि चापरे
स्वभावतस्तु नियतौ भूतानां प्रभवाप्ययौ १६
नष्टे धने वा दारे वा पुत्रे पितरि वा मृते
अहो कष्टमिति ध्यायञ्शोकस्यापचितिं चरेत् १७
स किं शोचसि मूढः सञ्शोच्यः किमनुशोचसि
पश्य दुःखेषु दुःखानि भयेषु च भयान्यपि १८
आत्मापि चायं न मम सर्वापि पृथिवी मम
यथा मम यथान्येषामिति पश्यन्न मुह्यति १९
शोकस्थानसहस्राणि हर्षस्थानशतानि च
दिवसे दिवसे मूढमाविशन्ति न पण्डितम् २०
एवमेतानि कालेन प्रियद्वेष्याणि भागशः
जीवेषु परिवर्तन्ते दुःखानि च सुखानि च २१
दुःखमेवास्ति न सुखं तस्मात्तदुपलभ्यते
तृष्णार्तिप्रभवं दुःखं दुःखार्तिप्रभवं सुखम् २२
सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम्
न नित्यं लभते दुःखं न नित्यं लभते सुखम् २३
सुखमन्ते हि दुःखानां दुःखमन्ते सुखस्य च
तस्मादेतद्द्वयं जह्याद्य इच्छेच्छाश्वतं सुखम् २४
यन्निमित्तं भवेच्छोकस्तापो वा दुःखमूर्छितः
आयासो वापि यन्मूलस्तदेकाङ्गमपि त्यजेत् २५
सुखं वा यदि वा दुखं प्रियं वा यदि वाप्रियम्
प्राप्तं प्राप्तमुपासीत हृदयेनापराजितः २६
ईषदप्यङ्ग दाराणां पुत्राणां वा चराप्रियम्

ततो ज्ञास्यसि कः कस्य केन वा कथमेव वा २७
ये च मूढतमा लोके ये च बुद्धेः परं गताः
त एव सुखमेधन्ते मध्यः क्लेशेन युज्यते २८
इत्यब्रवीन्महाप्राज्ञो युधिष्ठिर स सेनजित्
परावरज्ञो लोकस्य धर्मवित्सुखदुःखवित् २९
सुखी परस्य यो दुःखे न जातु स सुखी भवेत्
दुःखानां हि क्षयो नास्ति जायते ह्यपरात्परम् ३०
सुखं च दुःखं च भवाभवौ च लाभालाभौ मरणं जीवितं च
पर्यायशः सर्वमिव स्पृशन्ति तस्माद्धीरो नैव हृष्येन्न कुप्येत् ३१
दीक्षां यज्ञे पालनं युद्धमाहुर्योगं राष्ट्रे दण्डनीत्या च सम्यक्
वित्तत्यागं दक्षिणानां च यज्ञे सम्यग्ज्ञानं पावनानीति विद्यात् ३२
रक्षन्राष्ट्रं बुद्धिपूर्वं नयेन संत्यक्तात्मा यज्ञशीलो महात्मा
सर्वाल्लोँकान्धर्ममूर्त्या चरंश्चाप्यूर्ध्वं देहान्मोदते देवलोके ३३
जित्वा संग्रामान्पालयित्वा च राष्ट्रं सोमं पीत्वा वर्धयित्वा प्रजाश्च
युक्त्या दण्डं धारयित्वा प्रजानां युद्धे क्षीणो मोदते देवलोके ३४
सम्यग्वेदान्प्राप्य शास्त्राण्यधीत्य सम्यग्राष्ट्रं पालयित्वा च राजा
चातुर्वर्ण्यं स्थापयित्वा स्वधर्मे पूतात्मा वै मोदते देवलोके ३५
यस्य वृत्तं नमस्यन्ति स्वर्गस्थस्यापि मानवाः
पौरजानपदामात्याः स राजा राजसत्तमः ३६
इति श्रीमहाभारते शान्तिपर्वणि षडिंवशोऽध्यायः २६

## सप्तविंशोऽध्यायः

युधिष्ठिर उवाच
अभिमन्यौ हते बाले द्रौपद्यास्तनयेषु च
धृष्टद्युम्ने विराटे च द्रुपदे च महीपतौ १
वसुषेण च धर्मज्ञे धृष्टकेतौ च पार्थिवे
तथान्येषु नरेन्द्रेषु नानादेश्येषु संयुगे २
न विमुञ्चति मां शोको ज्ञातिघातिनमातुरम्
राज्यकामुकमत्युग्रं स्ववंशोच्छेदकारकम् ३
यस्याङ्के क्रीडमानेन मया वै परिवर्तितम्

स मया राज्यलुब्धेन गाङ्गेयो विनिपातितः ४
यदा ह्येनं विघूर्णन्तमपश्यं पार्थसायकैः
कम्पमानं यथा वज्रैः प्रेक्षमाणं शिखण्डिनम् ५
जीर्णं सिंहमिव प्रांशुं नरसिंहं पितामहम्
कीर्यमाणं शरैस्तीक्ष्णैर्दृष्ट्वा मे व्यथितं मनः ६
प्राङ्मुखं सीदमानं च रथादपच्युतं शरैः
घूर्णमानं यथा शैलं तदा मे कश्मलोऽभवत् ७
यः स बाणधनुष्पाणिर्योधयामास भार्गवम्
बहून्यहानि कौरव्यः कुरुक्षेत्रे महामृधे ८
समेतं पार्थिवं क्षत्रं वाराणस्यां नदीसुतः
कन्यार्थमाह्वयद्वीरो रथेनैकेन संयुगे ९
येन चोग्रायुधो राजा चक्रवर्ती दुरासदः
दग्धः शस्त्रप्रतापेन स मया युधि घातितः १०
स्वयं मृत्युं रक्षमाणः पाञ्चाल्यं यः शिखण्डिनम्
न बाणैः पातयामास सोऽजुनेन निपातितः ११
यदैनं पतितं भूमावपश्यं रुधिरोक्षितम्
तदैवाविशदत्युग्रो ज्वरो मे मुनिसत्तम १२
येन संवर्धिता बाला येन स्म परिरक्षिताः
स मया राज्यलुब्धेन पापेन गुरुघातिना
अल्पकालस्य राज्यस्य कृते मूढेन घातितः १३
आचार्यश्च महेष्वासः सर्वपार्थिवपूजितः
अभिगम्य रणे मिथ्या पापेनोक्तः सुतं प्रति १४
तन्मे दहति गात्राणि यन्मां गुरुरभाषत
सत्यवाक्यो हि राजंस्त्वं यदि जीवति मे सुतः
सत्यं मा मर्शयन्विप्रो मयि तत्परिपृष्टवान् १५
कुञ्जरं चान्तरं कृत्वा मिथ्योपचरितं मया
सुभृशं राज्यलुब्धेन पापेन गुरुघातिना १६
सत्यकञ्चुकमास्थाय मयोक्तो गुरुराहवे
अश्वत्थामा हत इति कुञ्जरे विनिपातिते
कान्नु लोकान्गमिष्यामि कृत्वा तत्कर्म दारुणम् १७

अघातयं च यत्कर्णं समरेष्वपलायिनम्
ज्येष्ठं भ्रातरमत्युग्रं को मत्तः पापकृत्तमः १८
अभिमन्युं च यद्बालं जातं सिंहमिवाद्रिषु
प्रावेशयमहं लुब्धो वाहिनीं द्रोणपालिताम् १९
तदाप्रभृति बीभत्सुं न शक्नोमि निरीक्षितुम्
कृष्णं च पुण्डरीकाक्षं किल्बिषी भ्रूणहा यथा २०
द्रौपदीं चाप्यदुःखार्हां पञ्चपुत्रविनाकृताम्
शोचामि पृथिवीं हीनां पञ्चभिः पर्वतैरिव २१
सोऽहमागस्करः पापः पृथिवीनाशकारकः
आसीन एवमेवेदं शोषयिष्ये कलेवरम् २२
प्रायोपविष्टं जानीध्वमद्य मां गुरुघातिनम्
जातिष्वन्यास्वपि यथा न भवेयं कुलान्तकृत् २३
न भोक्ष्ये न च पानीयमुपयोक्ष्ये कथंचन
शोषयिष्ये प्रियान्प्राणानिहस्थोऽह तपोधन २४
यथेष्टं गम्यतां काममनुजाने प्रसाद्य वः
सर्वे मामनुजानीत त्यक्ष्यामीदं कलेवरम् २५
वैशम्पायन उवाच
तमेवंवादिनं पार्थं बन्धुशोकेन विह्वलम्
मैवमित्यब्रवीद्व्यासो निगृह्य मुनिसत्तमः २६
अतिवेलं महाराज न शोकं कर्तुमर्हसि
पुनरुक्तं प्रवक्ष्यामि दिष्टमेतदिति प्रभो २७
संयोगा विप्रयोगाश्च जातानां प्राणिनां ध्रुवम्
बुद्बुदा इव तोयेषु भवन्ति न भवन्ति च २८
सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः
संयोगा विप्रयोगान्ता मरणान्तं हि जीवितम् २९
सुखं दुःखान्तमालस्यं दाक्ष्यं दुःखं सुखोदयम्
भूतिः श्रीर्ह्रीर्धृतिः सिद्धिर्नादक्षे निवसन्त्युत ३०
नालं सुखाय सुहृदो नालं दुःखाय दुर्हृदः
न च प्रज्ञालमर्थेभ्यो न सुखेभ्योऽप्यलं धनम् ३१
यथा सृष्टोऽसि कौन्तेय धात्रा कर्मसु तत्कुरु

अत एव हि सिद्धिस्ते नेशस्त्वमात्मना नृप ३२
इति श्रीमहाभारते शान्तिपर्वणि सप्तविंशोऽध्यायः २७

## अष्टाविंशोऽध्यायः

वैशम्पायन उवाच
ज्ञातिशोकाभितप्तस्य प्राणानभ्युत्सिसृक्षतः
ज्येष्ठस्य पाण्डुपुत्रस्य व्यासः शोकमपानुदत् १
व्यास उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
अश्मगीतं नरव्याघ्र तन्निबोध युधिष्ठिर २
अश्मानं ब्राह्मणं प्राज्ञं वैदेहो जनको नृपः
संशयं परिपप्रच्छ दुःखशोकपरिप्लुतः ३
जनक उवाच
आगमे यदि वापाये ज्ञातीनां द्रविणस्य च
नरेण प्रतिपत्तव्यं कल्याणं कथमिच्छता ४
अश्मोवाच
उत्पन्नमिममात्मानं नरस्यानन्तरं ततः
तानि तान्यभिवर्तन्ते दुःखानि च सुखानि च ५
तेषामन्यतरापत्तौ यद्यदेवोपसेवते
तत्तद्धि चेतनामस्य हरत्यभ्रमिवानिलः ६
अभिजातोऽस्मि सिद्धोऽस्मि नास्मि केवलमानुषः
इत्येवं हेतुभिस्तस्य त्रिभिश्चित्तं प्रसिच्यति ७
स प्रसिक्तमना भोगान्विसृज्य पितृसंचितान्
परिक्षीणः परस्वानामादानं साधु मन्यते ८
तमतिक्रान्तमर्यादमाददानमसांप्रतम्
प्रतिषेधन्ति राजानो लुब्धा मृगमिवेषुभिः ९
ये च विंशतिवर्षा वा त्रिंशद्वर्षाश्च मानवाः
परेण ते वर्षशतान्न भविष्यन्ति पार्थिव १०
तेषां परमदुःखानां बुद्ध्या भेषजमादिशेत्
सर्वप्राणभृतां वृत्तं प्रेक्षमाणस्ततस्ततः ११

मानसानां पुनर्योनिर्दुःखानां चित्तविभ्रमः
अनिष्टोपनिपातो वा तृतीयं नोपपद्यते १२
एवमेतानि दुःखानि तानि तानीह मानवम्
विविधान्युपवर्तन्ते तथा सांस्पर्शकानि च १३
जरामृत्यू हि भूतानि खादितारौ वृकाविव
बलिनां दुर्बलानां च ह्रस्वानां महतामपि १४
न कश्चिज्जात्वतिक्रामेज्जरामृत्यू ह मानवः
अपि सागरपर्यन्तां विजित्येमां वसुंधराम् १५
सुखं वा यदि वा दुःखं भूतानां पर्युपस्थितम्
प्राप्तव्यमवशैः सर्वं परिहारो न विद्यते १६
पूर्वे वयसि मध्ये वाप्युत्तमे वा नराधिप
अवर्जनीयास्तेऽथा वै काङ्क्षिताश्च ततोऽन्यथा १७
सुप्रियैर्विप्रयोगश्च संप्रयोगस्तथाप्रियैः
अर्थानर्थौ सुखं दुःखं विधानमनुवर्तते १८
प्रादुर्भावश्च भूतानां देहन्यासस्तथैव च
प्राप्तिव्यायामयोगश्च सर्वमेतत्प्रतिष्ठितम् १९
गन्धवर्णरसस्पर्शा निवर्तन्ते स्वभावतः
तथैव सुखदुःखानि विधानमनुवर्तते २०
आसनं शयनं यानमुत्थानं पानभोजनम्
नियतं सर्वभूतानां कालेनैव भवन्त्युत २१
वैद्याश्चाप्यातुराः सन्ति बलवन्तः सुदुर्बलाः
स्त्रीमन्तश्च तथा षण्ढा विचित्रः कालपर्ययः २२
कुले जन्म तथा वीर्यमारोग्यं धैर्यमेव च
सौभाग्यमुपभोगश्च भवितव्येन लभ्यते २३
सन्ति पुत्राः सुबहवो दरिद्राणामनिच्छताम्
बहूनामिच्छतां नास्ति समृद्धानां विचेष्टताम् २४
व्याधिरग्निर्जलं शस्त्रं बुभुक्षा श्वापदं विषम्
रज्ज्वा च मरणं जन्तोरुच्चाच्च पतनं तथा २५
निर्याणं यस्य यद्दिष्टं तेन गच्छति हेतुना
दृश्यते नाभ्यतिक्रामन्नतिक्रान्तो न वा पुनः २६

दृश्यते हि युवैवेह विनश्यन्वसुमान्नरः
दरिद्रश्च परिक्लिष्टः शतवर्षो जनाधिप २७
अकिंचनाश्च दृश्यन्ते पुरुषश्चिरजीविनः
समृद्धे च कुले जाता विनश्यन्ति पतंगवत् २८
प्रायेण श्रीमतां लोके भोक्तुं शक्तिर्न विद्यते
काष्ठान्यपि हि जीर्यन्ते दरिद्राणां नराधिप २९
अहमेतत्करोमीति मन्यते कालचोदितः
यद्यदिष्टमसंतोषाद्दुरात्मा पापमाचरन् ३०
स्त्रियोऽक्षा मृगया पानं प्रसङ्गान्निन्दिता बुधैः
दृश्यन्ते चापि बहवः संप्रसक्ता बहुश्रुताः ३१
इति कालेन सर्वार्थानीप्सितानीप्सितानि च
स्पृशन्ति सर्वभूतानि निमित्तं नोपलभ्यते ३२
वायुमाकाशमग्निं च चन्द्रादित्यावहःक्षपे
ज्योतींषि सरितः शैलान्कः करोति बिभर्ति वा ३३
शीतमुष्णं तथा वर्षं कालेन परिवर्तते
एवमेव मनुष्याणां सुखदुःखे नरर्षभ ३४
नौषधानि न शास्त्राणि न होमा न पुनर्जपाः
त्रायन्ते मृत्युनोपेतं जरया वापि मानवम् ३५
यथा काष्ठं च काष्ठं च समेयातां महोदधौ
समेत्य च व्यतीयातां तद्वद्भूतसमागमः ३६
ये चापि पुरुषैः स्त्रीभिर्गीतवाद्यैरुपस्थिताः
ये चानाथाः परान्नादाः कालस्तेषु समक्रियः ३७
मातृपितृसहस्राणि पुत्रदारशतानि च
संसारेष्वनुभूतानि कस्य ते कस्य वा वयम् ३८
नैवास्य कश्चिद्भविता नायं भवति कस्यचित्
पथि संगतमेवेदं दारबन्धुसुहृद्गणैः ३९
क्वासं क्वास्मि गमिष्यामि को न्वहं किमिहास्थितः
कस्मात्कमनुशोचेयमित्येवं स्थापयेन्मनः
अनित्ये प्रियसंवासे संसारे चक्रवद्गतौ ४०
न दृष्टपूर्वं प्रत्यक्षं परलोकं विदुर्बुधाः

आगमांस्त्वनतिक्रम्य श्रद्धातव्यं बुभूषता ४१
कुर्वीत पितृदैवत्यं धर्माणि च समाचरेत्
यजेच्च विद्वान्विधिवत्त्रिवर्गं चाप्यनुव्रजेत् ४२
संनिमज्जज्जगदिदं गम्भीरे कालसागरे
जरामृत्युमहाग्राहे न कश्चिदवबुध्यते ४३
आयुर्वेदमधीयानाः केवलं सपरिग्रहम्
दृश्यन्ते बहवो वैद्या व्याधिभिः समभिप्लुताः ४४
ते पिबन्तः कषायांश्च सर्पींषि विविधानि च
न मृत्युमतिवर्तन्ते वेलामिव महोदधिः ४५
रसायनविदश्चैव सुप्रयुक्तरसायनाः
दृश्यन्ते जरया भग्ना नगा नागैरिवोत्तमैः ४६
तथैव तपसोपेताः स्वाध्यायाभ्यसने रताः
दातारो यज्ञशीलाश्च न तरन्ति जरान्तकौ ४७
न ह्यहानि निवर्तन्ते न मासा न पुनः समाः
जातानां सर्वभूतानां न पक्षा न पुनः क्षपाः ४८
सोऽय विपुलमध्वानं कालेन ध्रुवमध्रुवः
नरोऽवशः समभ्येति सर्वभूतनिषेवितम् ४९
देहो वा जीवतोऽभ्येति जीवो वाभ्येति देहतः
पथि संगतमेवेदं दारैरन्यैश्च बन्धुभिः ५०
नायमत्यन्तसंवासो लभ्यते जातु केनचित्
अपि स्वेन शरीरेण किमुतान्येन केनचित् ५१
क्व नु तेऽद्य पिता राजन्क्व नु तेऽद्य पितामहः
न त्वं पश्यसि तानद्य न त्वां पश्यन्ति तेऽपि च ५२
न ह्येव पुरुषो द्रष्टा स्वर्गस्य नरकस्य वा
आगमस्तु सतां चक्षुर्नृपते तमिहाचर ५३
चरितब्रह्मचर्यो हि प्रजायेत यजेत च
पितृदेवमहर्षीणामानृण्यायानसूयकः ५४
स यज्ञशीलः प्रजने निविष्टः प्राग्ब्रह्मचारी प्रविभक्तपक्षः
आराधयन्स्वर्गमिमं च लोकं परं च मुक्त्वा हृदयव्यलीकम् ५५
सम्यग्घि धर्मं चरतो नृपस्य द्रव्याणि चाप्याहरतो यथावत्

प्रवृत्तचक्रस्य यशोऽभिवर्धते सर्वेषु लोकेषु चराचरेषु ५६
व्यास उवाच
इत्येवमाज्ञाय विदेहराजो वाक्यं समग्रं परिपूर्णहेतुः
अश्मानमामन्त्र्य विशुद्धबुद्धिर्ययौ गृहं स्वं प्रति शान्तशोकः ५७
तथा त्वमप्यच्युत मुञ्च शोकमुत्तिष्ठ शक्रोपम हर्षमेहि
क्षात्रेण धर्मेण मही जिता ते तां भुङ्क्ष्व कुन्तीसुत मा विषादीः ५८
इति श्रीमहाभारते शान्तिपर्वणि अष्टाविंशोऽध्यायः २८

## एकोनत्रिंशोऽध्यायः

वैशम्पायन उवाच
अव्याहरति कौन्तेये धर्मपुत्रे युधिष्ठिरे
गुडाकेशो हृषीकेशमभ्यभाषत पाण्डवः १
ज्ञातिशोकाभिसंतप्तो धर्मराजः परंतपः
एष शोकार्णवे मग्नस्तमाश्वासय माधव २
सर्वे स्म ते संशयिताः पुनरेव जनार्दन
अस्य शोकं महाबाहो प्रणाशयितुमर्हसि ३
एवमुक्तस्तु गोविन्दो विजयेन महात्मना
पर्यवर्तत राजानं पुण्डरीकेक्षणोऽच्युतः ४
अनतिक्रमणीयो हि धर्मराजस्य केशवः
बाल्यात्प्रभृति गोविन्दः प्रीत्या चाभ्यधिकोऽजुनात् ५
संप्रगृह्य महाबाहुर्भुजं चन्दनभूषितम्
शैलस्तम्भोपमं शौरिरुवाचाभिविनोदयन् ६
शुशुभे वदनं तस्य सुदंष्ट्रं चारुलोचनम्
व्याकोशमिव विस्पष्टं पद्मं सूर्यविबोधितम् ७
मा कृथाः पुरुषव्याघ्र शोकं त्वं गात्रशोषणम्
न हि ते सुलभा भूयो ये हतास्मिन्रणाजिरे ८
स्वप्नलब्धा यथा लाभा वितथाः प्रतिबोधने
एवं ते क्षत्रिया राजन्ये व्यतीता महारणे ९
सर्वे ह्यभिमुखाः शूरा विगता रणशोभिनः
नैषां कश्चित्पृष्ठतो वा पलायन्वापि पातितः १०

सर्वे त्यक्त्वात्मनः प्राणान्युद्ध्वा वीरा महाहवे
शस्त्रपूता दिवं प्राप्ता न ताञ्शोचितुमर्हसि ११
अत्रैवोदाहरन्तीममितिहासं पुरातनम्
सृञ्जयं पुत्रशोकार्तं यथायं प्राह नारदः १२
सुखदुःखैरहं त्वं च प्रजाः सर्वाश्च सृञ्जय
अविमुक्तं चरिष्यामस्तत्र का परिदेवना १३
महाभाग्यं परं राज्ञां कीर्त्यमानं मया शृणु
गच्छावधानं नृपते ततो दुःखं प्रहास्यसि १४
मृतान्महानुभावांस्त्वं श्रुत्वैव तु महीपतीन्
श्रुत्वापनय सन्तापं शृणु विस्तरशश्च मे १५
आविक्षितं मरुत्तं मे मृतं सृञ्जय शुश्रुहि
यस्य सेन्द्राः सवरुणा बृहस्पतिपुरोगमाः
देवा विश्वसृजो राज्ञो यज्ञमीयुर्महात्मनः १६
यः स्पर्धामनयच्छक्रं देवराजं शतक्रतुम्
शक्रप्रियैषी यं विद्वान्प्रत्याचष्ट बृहस्पतिः
संवर्तो यजयामास यं पीडार्थं बृहस्पतेः १७
यस्मिन्प्रशासति सतां नृपतौ राजसत्तम
अकृष्टपच्या पृथिवी विबभौ चैत्यमालिनी १८
आविक्षितस्य वै सत्रे विश्वे देवाः सभासदः
मरुतः परिवेष्टारः साध्याश्चासन्महात्मनः १९
मरुद्गणा मरुत्तस्य यत्सोममपिबन्त ते
देवान्मनुष्यान्गन्धर्वानत्यरिच्यन्त दक्षिणाः २०
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः २१
सुहोत्रं चेद्वैतिथिनं मृतं सृञ्जय शुश्रुम
यस्मै हिरण्यं ववृषे मघवान्परिवत्सरम् २२
सत्यनामा वसुमती यं प्राप्यासीज्जनाधिप
हिरण्यमवहन्नद्यस्तस्मिञ्जनपदेश्वरे २३
कूर्मान्कर्कटकान्नक्रान्मकराञ्शिंशुकानपि
नदीष्वपातयद्राजन्मघवा लोकपूजितः २४

हैरण्यान्पतितान्दृष्ट्वा मत्स्यान्मकरकच्छपान्
सहस्रशोऽथ शतशस्ततोऽस्मयत वैतिथिः २५
तद्धिरण्यमपर्यन्तमावृत्तं कुरुजाङ्गले
ईजानो वितते यज्ञे ब्राह्मणेभ्यः समाहितः २६
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः
अदक्षिणमयज्वानं श्वैत्य संशाम्य मा शुचः २७
अङ्गं बृहद्रथं चैव मृतं शुश्रुम सृञ्जय
यः सहस्रं सहस्राणां श्वेतानश्वानवासृजत् २८
सहस्रं च सहस्राणां कन्या हेमविभूषिताः
ईजानो वितते यज्ञे दक्षिणामत्यकालयत् २९
शतं शतसहस्राणां वृषाणां हेममालिनाम्
गवां सहस्रानुचरं दक्षिणामत्यकालयत् ३०
अङ्गस्य यजमानस्य तदा विष्णुपदे गिरौ
अमाद्यदिन्द्रः सोमेन दक्षिणाभिर्द्विजातयः ३१
यस्य यज्ञेषु राजेन्द्र शतसंख्येषु वै पुनः
देवान्मनुष्यान्गन्धर्वानत्यरिच्यन्त दक्षिणाः ३२
न जातो जनिता चान्यः पुमान्यस्तत्प्रदास्यति
यदङ्गः प्रददौ वित्तं सोमसंस्थासु सप्तसु ३३
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ३४
शिबिमौशीनरं चैव मृतं शुश्रुम सृञ्जय
य इमां पृथिवीं कृत्स्नां चर्मवत्समवेष्टयत् ३५
महता रथघोषेण पृथिवीमनुनादयन्
एकच्छत्रां महीं चक्रे जैत्रेणैकरथेन यः ३६
यावदद्य गवाश्वं स्यादारण्यैः पशुभिः सह
तावतीः प्रददौ गाः स शिबिरौशीनरोऽध्वरे ३७
नाद्यन्तारं धुरं तस्य कंचिन्मेने प्रजापतिः
न भूतं न भविष्यन्तं सर्वराजसु भारत
अन्यत्रौशीनराच्छैब्याद्राजर्षेरिन्द्रविक्रमात् ३८

स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया
पुत्रात्पुरायतरश्चैव मा पुत्रमनुतप्यथाः
अदक्षिणमयज्वानं तं वै संशाम्य मा शुचः ३९
भरतं चैव दौःषन्तिं मृतं सृञ्जय शुश्रुम
शाकुन्तलि महेष्वासं भूरिद्रविणतेजसम् ४०
यो बद्ध्वा त्रिंशतो ह्यश्वान्देवेभ्यो यमुनामनु
सरस्वतीं विंशतिं च गङ्गामनु चतुर्दश ४१
अश्वमेधसहस्रेण राजसूयशतेन च
इष्टवान्स महातेजा दौःषन्तिर्भरतः पुरा ४२
भरतस्य महत्कर्म सर्वराजसु पार्थिवाः
खं मर्त्या इव बाहुभ्यां नानुगन्तुमशक्नुवन् ४३
परं सहस्राद्यो बद्ध्वा हयान्वेदीं विचित्य च
सहस्रं यत्र पद्मानां करावाय भरतो ददौ ४४
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया
पुत्रात्पुरायतरश्चैव मा पुत्रमनुतप्यथाः ४५
रामं दाशरथिं चैव मृतं शुश्रुम सृञ्जय
योऽन्वकम्पत वै नित्यं प्रजाः पुत्रानिवौरसान् ४६
विधवा यस्य विषये नानाथाः काश्चनाभवन्
सर्वस्यासीत्पितृसमो रामो राज्यं यदान्वशात् ४७
कालवर्षाश्च पर्जन्याः सस्यानि रसवन्ति च
नित्यं सुभिक्षमेवासीद्रामे राज्यं प्रशासति ४८
प्राणिनो नाप्सु मज्जन्ति नान्यर्थे पावकोऽदहत्
न व्यालजं भयं चासीद्रामे राज्यं प्रशासति ४९
आसन्वर्षसहस्राणि तथा पुत्रसहस्रिकाः
अरोगाः सर्वसिद्धार्थाः प्रजा रामे प्रशासति ५०
नान्योन्येन विवादोऽभूत्स्त्रीणामपि कुतो नृणाम्
धर्मनित्याः प्रजाश्चासन्रामे राज्यं प्रशासति ५१
नित्यपुष्पफलाश्चैव पादपा निरुपद्रवाः
सर्वा द्रोणदुघा गावो रामे राज्यं प्रशासति ५२
स चतुर्दश वर्षाणि वने प्रोष्य महातपाः

दशाश्वमेधाञ्जारूथ्यानाजहार निरर्गलान् ५३
श्यामो युवा लोहिताक्षो मत्तवारणविक्रमः
दश वर्षसहस्राणि रामो राज्यमकारयत् ५४
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ५५
भगीरथं च राजानं मृतं शुश्रुम सृञ्जय
यस्येन्द्रो वितते यज्ञो सोमं पीत्वा मदोत्कटः ५६
असुराणां सहस्राणि बहूनि सुरसत्तमः
अजयद्बाहुवीर्येण भगवान्पाकशासनः ५७
यः सहस्रं सहस्राणां कन्या हेमविभूषिताः
ईजानो वितते यज्ञे दक्षिणामत्यकालयत् ५८
सर्वा रथगताः कन्या रथाः सर्वे चतुर्युजः
रथे रथे शतं नागाः पद्मिनो हेममालिनः ५९
सहस्रमश्वा एकैकं हस्तिनं पृष्ठतोऽन्वयुः
गवां सहस्रमश्वेऽश्वे सहस्रं गव्यजाविकम् ६०
उपह्वरे निवसतो यस्याङ्के निषसाद ह
गङ्गा भागीरथी तस्मादुर्वशी ह्यभवत्पुरा ६१
भूरिदक्षिणमिक्ष्वाकुं यजमानं भगीरथम्
त्रिलोकपथगा गङ्गा दुहितृत्वमुपेयुषी ६२
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ६३
दिलीपं चैवैलविलं मृतं शुश्रुम सृञ्जय
यस्य कर्माणि भूरीणि कथयन्ति द्विजातयः ६४
इमां वै वसुसंपन्नां वसुधां वसुधाधिपः
ददौ तस्मिन्महायज्ञे ब्राह्मणेभ्यः समाहितः ६५
यस्येह यजमानस्य यज्ञे यज्ञे पुरोहितः
सहस्रं वारणान्हैमान्दक्षिणामत्यकालयत् ६६
यस्य यज्ञे महानासीद्यूपः श्रीमान्हिरण्मयः
तं देवाः कर्म कुर्वाणाः शक्रज्येष्ठा उपाश्रयन् ६७
चषालो यस्य सौवर्णस्तस्मिन्यूपे हिरण्मये

ननृतुर्देवगन्धर्वाः षट्सहस्राणि सप्तधा ६८
अवादयत्तत्र वीणां मध्ये विश्वावसुः स्वयम्
सर्वभूतान्यमन्यन्त मम वादयतीत्ययम् ६९
एतद्राज्ञो दिलीपस्य राजानो नानुचक्रिरे
यत्स्त्रियो हेमसंपन्नाः पथि मत्ताः स्म शेरते ७०
राजानमुग्रधन्वानं दिलीपं सत्यवादिनम्
येऽपश्यन्सुमहात्मानं तेऽपि स्वर्गजितो नराः ७१
त्रयः शब्दा न जीर्यन्ते दिलीपस्य निवेशने
स्वाध्यायघोषो ज्याघोषो दीयतामिति चैव हि ७२
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ७३
मांधातारं यौवनाश्वं मृतं शुश्रुम सृञ्जय
यं देवा मरुतो गर्भं पितुः पार्श्वादपाहरन् ७४
संवृद्धो युवनाश्वस्य जठरे यो महात्मनः
पृषदाज्योद्भवः श्रीमांस्त्रिलोकविजयी नृपः ७५
यं दृष्ट्वा पितुरुत्सङ्गे शयानं देवरूपिणम्
अन्योन्यमब्रुवन्देवाः कमयं धास्यतीति वै ७६
मामेव धास्यतीत्येवमिन्द्रो अभ्यवपद्यत
मांधातेति ततस्तस्य नाम चक्रे शतक्रतुः ७७
ततस्तु पयसो धारां पुष्टिहेतोर्महात्मनः
तस्यास्ये यौवनाश्वस्य पाणिरिन्द्रस्य चास्रवत् ७८
तं पिबन्पाणिमिन्द्रस्य समामह्ना व्यवर्धत
स आसीद्द्वादशसमो द्वादशाहेन पार्थिव ७९
तमियं पृथिवी सर्वा एकाह्ना समपद्यत
धर्मात्मानं महात्मानं शूरमिन्द्रसमं युधि ८०
य आङ्गारं हि नृपतिं मरुत्तमसितं गयम्
अङ्गं बृहद्रथं चैव मांधाता समरेऽजयत् ८१
यौवनाश्वो यदाङ्गारं समरे समयोधयत्
विस्फारैर्धनुषो देवा द्यौरभेदीति मेनिरे ८२
यतः सूर्य उदेति स्म यत्र च प्रतितिष्ठति

सर्वं तद्यौवनाश्वस्य मान्धातुः क्षेत्रमुच्यते ८३
अश्वमेधशतेनेष्ट्वा राजसूयशतेन च
अददाद्रोहितान्मत्स्यान्ब्राह्मणेभ्यो महीपतिः ८४
हैरण्यान्योजनोत्सेधानायतान्दशयोजनम्
अतिरिक्तान्द्विजातिभ्यो व्यभजन्नितरे जनाः ८५
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ८६
ययातिं नाहुषं चैव मृतं शुश्रुम सृञ्जय
य इमां पृथिवीं सर्वां विजित्य सहसागराम् ८७
शम्यापातेनाभ्यतीयाद्वेदीभिश्चित्रयन्नृप
ईजानः क्रतुभिः पुण्यैः पर्यगच्छद्वसुन्धराम् ८८
इष्ट्वा क्रतुसहस्रेण वाजमेधशतेन च
तर्पयामास देवेन्द्रं त्रिभिः काञ्चनपर्वतैः ८९
व्यूढे देवासुरे युद्धे हत्वा दैतेयदानवान्
व्यभजत्पृथिवीं कृत्स्नां ययातिर्नहुषात्मजः ९०
अन्तेषु पुत्रान्निक्षिप्य यदुद्रुह्युपुरोगमान्
पूरुं राज्येऽभिषिच्य स्वे सदारः प्रास्थितो वनम् ९१
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ९२
अम्बरीषं च नाभागं मृतं शुश्रुम सृञ्जय
यं प्रजा वव्रिरे पुण्यं गोप्तारं नृपसत्तम ९३
यः सहस्रं सहस्राणां राज्ञामयुत याजिनाम्
ईजानो वितते यज्ञे ब्राह्मणेभ्यः समाहितः ९४
नैतत्पूर्वे जनाश्चक्रुर्न करिष्यन्ति चापरे
इत्यम्बरीषं नाभागमन्वमोदन्त दक्षिणाः ९५
शतं राजसहस्राणि शतं राजशतानि च
सर्वेऽश्वमेधैरीजानास्तेऽभ्ययुर्दक्षिणायनम् ९६
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ९७
शशबिन्दुं चैत्ररथं मृतं शुश्रुम सृञ्जय

यस्य भार्यासहस्राणां शतमासीन्महात्मनः ९८
सहस्रं तु सहस्राणां यस्यासञ्शाशबिन्दवः
हिरण्यकवचाः सर्वे सर्वे चोत्तमधन्विनः ९९
शतं कन्याराजपुत्रमेकैकं पृष्ठतोऽन्वयुः
कन्यां कन्यां शतं नागा नागं नागं शतं रथाः १००
रथं रथं शतं चाश्वा देशजा हेममालिनः
अश्वमश्वं शतं गावो गां गां तद्वदजाविकम् १०१
एतद्धनमपर्यन्तमश्वमेधे महामखे
शशबिन्दुर्महाराज ब्राह्मणेभ्यः समादिशत् १०२
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः १०३
गयमामूर्तरयसं मृतं शुश्रुम सृञ्जय
यः स वर्षशतं राजा हुतशिष्टाशनोऽभवत् १०४
यस्मै वह्निर्वरान्प्रादात्ततो वव्रे वरान्गयः
ददतो मेऽक्षया चास्तु धर्मे श्रद्धा च वर्धताम् १०५
मनो मे रमतां सत्ये त्वत्प्रसादाद्धुताशन
लेभे च कामांस्तान्सर्वान्पावकादिति नः श्रुतम् १०६
दर्शेन पौर्णमासेन चातुर्मास्यैः पुनः पुनः
अयजत्स महातेजाः सहस्रं परिवत्सरान् १०७
शतं गवां सहस्राणि शतमश्वशतानि च
उत्थायोत्थाय वै प्रादात्सहस्रं परिवत्सरान् १०८
तर्पयामास सोमेन देवान्वित्तैर्द्विजानपि
पितॄन्स्वधाभिः कामैश्च स्त्रियः स्वाः पुरुषर्षभ १०९
सौवर्णां पृथिवीं कृत्वा दशव्यामां द्विरायताम्
दक्षिणामददद्राजा वाजिमेधमहामखे ११०
यावत्यः सिकता राजन्गङ्गायाः पुरुषर्षभ
तावतीरेव गाः प्रादादामूर्तरयसो गयः १११
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ११२
रन्तिदेवं च साङ्कृत्यं मृतं शुश्रुम सृञ्जय

सम्यगाराध्य यः शक्रं वरं लेभे महायशाः ११३
अन्नं च नो बहु भवेदतिथींश्च लभेमही
श्रद्धा च नो मा व्यगमन्मा च याचिष्म कंचन ११४
उपातिष्ठन्त पशवः स्वयं तं संशितव्रतम्
ग्राम्यारण्या महात्मानं रन्तिदेवं यशस्विनम् ११५
महानदी चर्मराशेरुत्क्लेदात्सुस्रुवे यतः
ततश्चर्मण्वतीत्येवं विख्याता सा महानदी ११६
ब्राह्मणेभ्यो ददौ निष्कान्सदसि प्रतते नृपः
तुभ्यं तुभ्यं निष्कमिति यत्राक्रोशन्ति वै द्विजाः
सहस्रं तुभ्यमित्युक्त्वा ब्राह्मणान्स्म प्रपद्यते ११७
अन्वाहार्योपकरणं द्रव्योपकरणं च यत्
घटाः स्थाल्यः कटाहाश्च पात्र्यश्च पिठरा अपि
न तत्किंचिदसौवर्णं रन्तिदेवस्य धीमतः ११८
साङ्कृते रन्तिदेवस्य यां रात्रिमवसद्गृहे
आलभ्यन्त शतं गावः सहस्राणि च विंशतिः ११९
तत्र स्म सूदाः क्रोशन्ति सुमृष्टमणिकुण्डलाः
सूपभूयिष्ठमश्नीध्वं नाद्य मांसं यथा पुरा १२०
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः १२१
सगरं च महात्मानं मृतं शुश्रुम सृञ्जय
ऐक्ष्वाकं पुरुषव्याघ्रमतिमानुषविक्रमम् १२२
षष्टिः पुत्रसहस्राणि यं यान्तं पृष्ठतोऽन्वयुः
नक्षत्रराजं वर्षान्ते व्यभ्रे ज्योतिर्गणा इव १२३
एकच्छत्रा मही यस्य प्रणता ह्यभवत्पुरा
योऽश्वमेधसहस्रेण तर्पयामास देवताः १२४
यः प्रादात्काञ्चनस्तम्भं प्रासादं सर्वकाञ्चनम्
पूर्णं पद्मदलाक्षीणां स्त्रीणां शयनसंकुलम् १२५
द्विजातिभ्योऽनुरूपेभ्यः कामानुच्चावचांस्तथा
यस्यादेशेन तद्वित्तं व्यभजन्त द्विजातयः १२६
खानयामास यः कोपात्पृथिवीं सागराङ्किताम्

यस्य नाम्ना समुद्रश्च सागरत्वमुपागतः १२७
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया
पुत्रात्पुरायतरश्चैव मा पुत्रमनुतप्यथाः १२८
राजानं च पृथुं वैन्यं मृतं शुश्रुम सृञ्जय
यमभ्यषिञ्चन्संभूय महाररये महर्षयः १२९
प्रथयिष्यति वै लोकान्पृथुरित्येव शब्दितः
ज्ञताच्च नस्त्रायतीति स तस्मात्ज्ञत्रियः स्मृतः १३०
पृथुं वैन्यं प्रजा दृष्ट्वा रक्ताः स्मेति यदब्रुवन्
ततो राजेति नामास्य अनुरागादजायत १३१
अकृष्टपच्या पृथिवी पुटके पुटके मधु
सर्वा द्रोणदुधा गावो वैन्यस्यासन्प्रशासतः १३२
अरोगाः सर्वसिद्धार्था मनुष्या अकुतोभयाः
यथाभिकाममवसन्ज्ञेत्रेषु च गृहेषु च १३३
आपः संस्तम्भिरे यस्य समुद्रस्य यियासतः
सरितश्चानुदीर्यन्त ध्वजसङ्गश्च नाभवत् १३४
हैररयांस्त्रिनलोत्सेधान्पर्वतानेकविंशतिम्
ब्राह्मणेभ्यो ददौ राजा योऽश्वमेधे महामखे १३५
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया
पुत्रात्पुरायतरश्चैव मा पुत्रमनुतप्यथाः १३६
किं वै तूष्णीं ध्यायसि सृञ्जय त्वं न मे राजन्वाचमिमां शृणोषि
न चेन्मोघं विप्रलप्तं मयेदं पथ्यं मुमूर्षोरिव सम्यगुक्तम् १३७
सृञ्जय उवाच
शृणोमि ते नारद वाचमेतां विचित्रार्थां स्त्रजमिव पुरायगन्धाम्
राजर्षीणां पुरायकृतां महात्मनां कीर्त्या युक्तां शोकनिर्णाशनार्थम् १३८
न ते मोघं विप्रलप्तं महर्षे दृष्ट्वैव त्वां नारदाहं विशोकः
शुश्रूषे ते वचनं ब्रह्मवादिन्न ते तृप्याम्यमृतस्येव पानात् १३९
अमोघदर्शिन्मम चेत्प्रसादं सुताघदग्धस्य विभो प्रकुर्याः
मृतस्य संजीवनमद्य मे स्यात्तव प्रसादात्सुतसंगमश्च १४०
नारद उवाच
यस्ते पुत्रो दमितोऽय वियातः स्वर्णष्ठीवी यमदात्पर्वतस्ते

पुनस्ते तं पुत्रमहं ददामि हिरण्यनाभं वर्षसहस्रिणं च १४१
इति श्रीमहाभारते शान्तिपर्वणि एकोनत्रिंशोऽध्यायः २९

त्रिंशोऽध्यायः

युधिष्ठिर उवाच
स कथं काञ्चनष्ठीवी सृञ्जयस्य सुतोऽभवत्
पर्वतेन किमर्थं च दत्तः केन ममार च १
यदा वर्षसहस्रायुस्तदा भवति मानवः
कथमप्राप्तकौमारः सृञ्जयस्य सुतो मृतः २
उताहो नाममात्रं वै सुवर्णष्ठीविनोऽभवत्
तथ्यं वा काञ्चनष्ठीवीत्येतदिच्छामि वेदितुम् ३
वासुदेव उवाच
अत्र ते कथयिष्यामि यथा वृत्तं जनेश्वर
नारदः पर्वतश्चैव प्रागृषी लोकपूजितौ ४
मातुलो भागिनेयश्च देवलोकादिहागतौ
विहर्तुकामौ संप्रीत्या मानुष्येषु पुरा प्रभू ५
हविः पवित्रभोज्येन देवभोज्येन चैव ह
नारदो मातुलश्चैव भागिनेयश्च पर्वतः ६
तावुभौ तपसोपेताववनीतलचारिणौ
भुञ्जानौ मानुषान्भोगान्यथावत्पर्यधावताम् ७
प्रीतिमन्तौ मुदा युक्तौ समयं तत्र चक्रतुः
यो भवेद्धृदि सङ्कल्पः शुभो वा यदि वाशुभः
अन्योन्यस्य स आख्येयो मृषा शापोऽन्यथा भवेत् ८
तौ तथेति प्रतिज्ञाय महर्षी लोकपूजितौ
सृञ्जयं श्वैत्यमभ्येत्य राजानमिदमूचतुः ९
आवां भवति वत्स्यावः कंचित्कालं हिताय ते
यथावत्पृथिवीपाल आवयोः प्रगुणीभव
तथेति कृत्वा तौ राजा सत्कृत्योपचचार ह १०
ततः कदाचित्तौ राजा महात्मानौ तथागतौ
अब्रवीत्परमप्रीतः सुतेयं वरवर्णिनी ११

एकैव मम कन्यैषा युवां परिचरिष्यति
दर्शनीयानवद्याङ्गी शीलवृत्तसमन्विता
सुकुमारी कुमारी च पद्मकिञ्जल्कसंनिभा १२
परमं सौम्य इत्युक्तस्ताभ्यां राजा शशास ताम्
कन्ये विप्रावुपचर देववत्पितृवच्च ह १३
सा तु कन्या तथेत्युक्त्वा पितरं धर्मचारिणी
यथानिदेशं राज्ञस्तौ सत्कृत्योपचचार ह १४
तस्यास्तथोपचारेण रूपेणाप्रतिमेन च
नारदं हृच्छयस्तूर्णं सहसैवान्वपद्यत १५
ववृधे च ततस्तस्य हृदि कामो महात्मनः
यथा शुक्लस्य पक्षस्य प्रवृत्तावुडुराट्छनैः १६
न च तं भागिनेयाय पर्वताय महात्मने
शशंस मन्मथं तीव्रं व्रीडमानः स धर्मवित् १७
तपसा चेङ्गितेनाथ पर्वतोऽथ बुबोध तत्
कामार्तं नारदं क्रुद्धः शशापैनं ततो भृशम् १८
कृत्वा समयमव्यग्रो भवान्वै सहितो मया
यो भवेद्धृदि सङ्कल्पः शुभो वा यदि वाशुभः १९
अन्योन्यस्य स आख्येय इति तद्वै मृषा कृतम्
भवता वचनं ब्रह्मंस्तस्मादेतद्वदाम्यहम् २०
न हि कामं प्रवर्तन्तं भवानाचष्ट मे पुरा
सुकुमार्यां कुमार्यां ते तस्मादेष शपाम्यहम् २१
ब्रह्मचारी गुरुर्यस्मात्तपस्वी ब्राह्मणश्च सन्
अकार्षीः समयभ्रंशमावाभ्यां यः कृतो मिथः २२
शप्स्ये तस्मात्सुसंक्रुद्धो भवन्तं तं निबोध मे
सुकुमारी च ते भार्या भविष्यति न संशयः २३
वानरं चैव कन्या त्वां विवाहात्प्रभृति प्रभो
संद्रक्ष्यन्ति नरश्चान्ये स्वरूपेण विनाकृतम् २४
स तद्वाक्यं तु विज्ञाय नारदः पर्वतात्तदा
अशपत्तमपि क्रोधाद्भागिनेयं स मातुलः २५
तपसा ब्रह्मचर्येण सत्येन च दमेन च

युक्तोऽपि धर्मनित्यश्च न स्वर्गवासमाप्स्यसि २६
तौ तु शप्त्वा भृशं क्रुद्धौ परस्परममर्षणौ
प्रतिजग्मतुरन्योन्यं क्रुद्धाविव गजोत्तमौ २७
पर्वतः पृथिवीं कृत्स्नां विचचार महामुनिः
पूज्यमानो यथान्यायं तेजसा स्वेन भारत २८
अथ तामलभत्कन्यां नारदः सृञ्जयात्मजाम्
धर्मेण धर्मप्रवरः सुकुमारीमनिन्दिताम् २९
सा तु कन्या यथाशापं नारदं तं ददर्श ह
पाणिग्रहणमन्त्राणां प्रयोगादेव वानरम् ३०
सुकुमारी च देवर्षिं वानरप्रतिमाननम्
नैवावमन्यत तदा प्रीतिमत्येव चाभवत् ३१
उपतस्थे च भर्तारं न चान्यं मनसाप्यगात्
देवं मुनिं वा यक्षं वा पतित्वे पतिवत्सला ३२
ततः कदाचिद्भगवान्पर्वतोऽनुससार ह
वनं विरहितं किंचित्तत्रापश्यत्स नारदम् ३३
ततोऽभिवाद्य प्रोवाच नारदं पर्वतस्तदा
भवान्प्रसादं कुरुतां स्वर्गादेशाय मे प्रभो ३४
तमुवाच ततो दृष्ट्वा पर्वतं नारदस्तदा
कृताञ्जलिमुपासीनं दीनं दीनतरः स्वयम् ३५
त्वयाहं प्रथमं शप्तो वानरस्त्वं भविष्यसि
इत्युक्तेन मया पश्चाच्छप्तस्त्वमपि मत्सरात्
अद्यप्रभृति वै वासं स्वर्गे नावाप्स्यसीति ह ३६
तव नैतद्धि सदृशं पुत्रस्थाने हि मे भवान्
निवर्तयेतां तौ शापमन्योऽन्येन तदा मुनी ३७
श्रीसमृद्धं तदा दृष्ट्वा नारदं देवरूपिणम्
सुकुमारी प्रदुद्राव परपत्यभिशङ्कया ३८
तां पर्वतस्ततो दृष्ट्वा प्रद्रवन्तीमनिन्दिताम्
अब्रवीत्तव भर्तैष नात्र कार्या विचारणा ३९
ऋषिः परमधर्मात्मा नारदो भगवान्प्रभुः
तवैवाभेद्यहृदयो मा ते भूदत्र संशयः ४०

सानुनीता बहुविधं पर्वतेन महात्मना
शापदोषं च तं भर्तुः श्रुत्वा स्वां प्रकृतिं गता
पर्वतोऽथ ययौ स्वर्गं नारदोऽथ ययौ गृहान् ४१
प्रत्यक्षकर्मा सर्वस्य नारदोऽय महानृषिः
एष वक्ष्यति वै पृष्टो यथा वृत्तं नरोत्तम ४२
इति श्रीमहाभारते शान्तिपर्वणि त्रिंशोऽध्यायः ३०

एकत्रिंशोऽध्यायः

वैशम्पायन उवाच
ततो राजा पाण्डुसुतो नारदं प्रत्यभाषत
भगवञ्श्रोतुमिच्छामि सुवर्णष्ठीविसंभवम् १
एवमुक्तस्तु स मुनिर्धर्मराजेन नारदः
आचचक्षे यथा वृत्तं सुवर्णष्ठीविनं प्रति २
एवमेतन्महाबाहो यथायं केशवोऽब्रवीत्
कार्यस्यास्य तु यच्छेषं तत्ते वक्ष्यामि पृच्छतः ३
अहं च पर्वतश्चैव स्वस्त्रीयो मे महामुनिः
वस्तुकामावभिगतौ सृञ्जयं जयतां वरम् ४
तत्र संपूजितौ तेन विधिदृष्टेन कर्मणा
सर्वकामैः सुविहितौ निवसावोऽस्य वेश्मनि ५
व्यतिक्रान्तासु वर्षासु समये गमनस्य च
पर्वतो मामुवाचेदं काले वचनमर्थवत् ६
आवामस्य नरेन्द्रस्य गृहे परमपूजितौ
उषितौ समये ब्रह्मंश्चिन्त्यतामत्र सांप्रतम् ७
ततोऽहमब्रुवं राजन्पर्वतं शुभदर्शनम्
सर्वमेतत्त्वयि विभो भागिनेयोपपद्यते ८
वरेण छन्द्यतां राजा लभतां यद्यदिच्छति
आवयोस्तपसा सिद्धिं प्राप्नोतु यदि मन्यसे ९
तत आहूय राजानं सृञ्जयं शुभदर्शनम्
पर्वतोऽनुमतं वाक्यमुवाच मुनिपुङ्गवः १०
प्रीतौ स्वो नृप सत्कारैस्तव ह्यार्जवसंभृतैः

आवाभ्यामभ्यनुज्ञातो वरं नृवर चिन्तय ११
देवानामविहिंसायां यद्भवेन्मानुषक्षमम्
तद्गृहाण महाराज पूजार्हो नौ मतो भवान् १२
सृञ्जय उवाच
प्रीतौ भवन्तौ यदि मे कृतमेतावता मम
एष एव परो लाभो निर्वृत्तो मे महाफलः १३
नारद उवाच
तमेवंवादिनं भूयः पर्वतः प्रत्यभाषत
वृणीष्व राजन्सङ्कल्पो यस्ते हृदि चिरं स्थितः १४
सृञ्जय उवाच
अभीप्सामि सुतं वीरं वीर्यवन्तं दृढव्रतम्
आयुष्मन्तं महाभागं देवराजसमद्युतिम् १५
पर्वत उवाच
भविष्यत्येष ते कामो न त्वायुष्मान्भविष्यति
देवराजाभिभूत्यर्थं सङ्कल्पो ह्येष ते हृदि १६
सुवर्णष्ठीवनाच्चैव स्वर्णष्ठीवी भविष्यति
रक्ष्यश्च देवराजात्स देवराजसमद्युतिः १७
नारद उवाच
तच्छ्रुत्वा सृञ्जयो वाक्यं पर्वतस्य महात्मनः
प्रसादयामास तदा नैतदेवं भवेदिति १८
आयुष्मान्मे भवेत्पुत्रो भवतस्तपसा मुने
न च तं पर्वतः किंचिदुवाचेन्द्रव्यपेक्षया १९
तमहं नृपतिं दीनमब्रुवं पुनरेव तु
स्मर्तव्योऽह महाराज दर्शयिष्यामि ते स्मृतः २०
अहं ते दयितं पुत्रं प्रेतराजवशं गतम्
पुनर्दास्यामि तद्रूपं मा शुचः पृथिवीपते २१
एवमुक्त्वा तु नृपतिं प्रयातौ स्वो यथेप्सितम्
सृञ्जयश्च यथाकामं प्रविवेश स्वमन्दिरम् २२
सृञ्जयस्याथ राजर्षेः कस्मिंश्चित्कालपर्यये
जज्ञे पुत्रो महावीर्यस्तेजसा प्रज्वलन्निव २३

ववृधे स यथाकालं सरसीव महोत्पलम्
बभूव काञ्चनष्ठीवी यथार्थं नाम तस्य तत् २४
तदद्भुततमं लोके पप्रथे कुरुसत्तम
बुबुधे तच्च देवेन्द्रो वरदानं महात्मनोः २५
ततस्त्वभिभवाद्भीतो बृहस्पतिमते स्थितः
कुमारस्यान्तरप्रेक्षी बभूव बलवृत्रहा २६
चोदयामास वज्रं स दिव्यास्त्रं मूर्तिसंस्थितम्
व्याघ्रो भूत्वा जहीमं त्वं राजपुत्रमिति प्रभो २७
विवृद्धः किल वीर्येण मामेषोऽभिभविष्यति
सृञ्जयस्य सुतो वज्र यथैनं पर्वतो ददौ २८
एवमुक्तस्तु शक्रेण वज्रः परपुरंजयः
कुमारस्यान्तरप्रेक्षी नित्यमेवान्वपद्यत २९
सृञ्जयोऽपि सुतं प्राप्य देवराजसमद्युतिम्
हृष्टः सान्तःपुरो राजा वननित्योऽभवत्तदा ३०
ततो भागीरथीतीरे कदाचिद्वननिर्झरे
धात्रीद्वितीयो बालः स क्रीडार्थं पर्यधावत ३१
पञ्चवर्षकदेशीयो बालो नागेन्द्रविक्रमः
सहसोत्पतितं व्याघ्रमाससाद महाबलः ३२
तेन चैव विनिष्पिष्टो वेपमानो नृपात्मजः
व्यसुः पपात मेदिन्यां ततो धात्री विचुक्रुशे ३३
हत्वा तु राजपुत्रं स तत्रैवान्तरधीयत
शार्दूलो देवराजस्य माययान्तर्हितस्तदा ३४
धात्र्यास्तु निनदं श्रुत्वा रुदत्याः परमार्तवत्
अभ्यधावत तं देशं स्वयमेव महीपतिः ३५
स ददर्श गतासुं तं शयानं पीतशोणितम्
कुमारं विगतानन्दं निशाकरमिव च्युतम् ३६
स तमुत्सङ्गमारोप्य परिपीडितवक्षसम्
पुत्रं रुधिरसंसिक्तं पर्यदेवयदातुरः ३७
ततस्ता मातरस्तस्य रुदन्त्यः शोककर्शिताः
अभ्यधावन्त तं देशं यत्र राजा स सृञ्जयः ३८

ततः स राजा संस्मार मामन्तर्गतमानसः
तच्चाहं चिन्तितं ज्ञात्वा गतवांस्तस्य दर्शनम् ३९
स मयैतानि वाक्यानि श्रावितः शोकलालसः
यानि ते यदुवीरेण कथितानि महीपते ४०
संजीवितश्चापि मया वासवानुमते तदा
भवितव्यं तथा तच्च न तच्छक्यमतोऽन्यथा ४१
अत ऊर्ध्वं कुमारः स स्वर्णष्ठीवी महायशाः
चित्तं प्रसादयामास पितुर्मातुश्च वीर्यवान् ४२
कारयामास राज्यं स पितरि स्वर्गते विभुः
वर्षाणामेकशतवत्सहस्त्रं भीमविक्रमः ४३
तत इष्ट्वा महायज्ञैर्बहुभिर्भूरिदक्षिणैः
तर्पयामास देवांश्च पितॄंश्चैव महाद्युतिः ४४
उत्पाद्य च बहून्पुत्रान्कुलसंतानकारिणः
कालेन महता राजन्कालधर्ममुपेयिवान् ४५
स त्वं राजेन्द्र संजातं शोकमेतन्निवर्तय
यथा त्वां केशवः प्राह व्यासश्च सुमहातपाः ४६
पितृपैतामहं राज्यमास्थाय धुरमुद्वह
इष्ट्वा पुण्यैर्महायज्ञैरिष्टाँल्लोकानवाप्स्यसि ४७
इति श्रीमहाभारते शान्तिपर्वणि एकत्रिंशोऽध्यायः ३१

## द्वात्रिंशोऽध्यायः

वैशम्पायन उवाच
तूष्णींभूतं तु राजानं शोचमानं युधिष्ठिरम्
तपस्वी धर्मतत्त्वज्ञः कृष्णद्वैपायनोऽब्रवीत् १
प्रजानां पालनं धर्मो राज्ञां राजीवलोचन
धर्मः प्रमाणं लोकस्य नित्यं धर्मानुवर्तनम् २
अनुतिष्ठस्व वै राजन्पितृपैतामहं पदम्
ब्राह्मणेषु च यो धर्मः स नित्यो वेदनिश्चितः ३
तत्प्रमाणं प्रमाणानां शाश्वतं भरतर्षभ
तस्य धर्मस्य कृत्स्नस्य क्षत्रियः परिरक्षिता ४

तथा यः प्रतिहन्त्यस्य शासनं विषये नरः
स बाहुभ्यां विनिग्राह्यो लोकयात्राविघातकः ५
प्रमाणमप्रमाणं यः कुर्यान्मोहवशं गतः
भृत्यो वा यदि वा पुत्रस्तपस्वी वापि कश्चन
पापान्सर्वैरुपायैस्तान्नियच्छेद्घातयेत वा ६
अतोऽन्यथा वर्तमानो राजा प्राप्नोति किल्बिषम्
धर्मं विनश्यमानं हि यो न रक्षेत्स धर्महा ७
ते त्वया धर्महन्तारो निहताः सपदानुगाः
स्वधर्मे वर्तमानस्त्वं किं नु शोचसि पाण्डव
राजा हि हन्याद्दद्याच्च प्रजा रक्षेच्च धर्मतः ८
युधिष्ठिर उवाच
न तेऽभिशङ्के वचनं यद्ब्रवीषि तपोधन
अपरोक्षो हि ते धर्मः सर्वधर्मभृतां वर ९
मया ह्यवध्या बहवो घातिता राज्यकारणात्
तान्यकार्याणि मे ब्रह्मन्दहन्ति च तपन्ति च १०
व्यास उवाच
ईश्वरो वा भवेत्कर्ता पुरुषो वापि भारत
हठो वा वर्तते लोके कर्मजं वा फलं स्मृतम् ११
ईश्वरेण नियुक्ता हि साध्वसाधु च पार्थिव
कुर्वन्ति पुरुषाः कर्म फलमीश्वरगामि तत् १२
यथा हि पुरुषश्छिन्द्याद्वृक्षं परशुना वने
छेत्तुरेव भवेत्पापं परशोर्न कथंचन १३
अथ वा तदुपादानात्प्राप्नुयुः कर्मणः फलम्
दण्डशस्त्रकृतं पापं पुरुषे तन्न विद्यते १४
न चैतदिष्टं कौन्तेय यदन्येन फलं कृतम्
प्राप्नुयादिति तस्माच्च ईश्वरे तन्निवेशय १५
अथ वा पुरुषः कर्ता कर्मणोः शुभपापयोः
न परं विद्यते तस्मादेवमन्यच्छुभं कुरु १६
न हि कश्चित्क्वचिद्राजन्दिष्टात्प्रतिनिवर्तते
दण्डशस्त्रकृतं पापं पुरुषे तन्न विद्यते १७

यदि वा मन्यसे राजन्हठे लोकं प्रतिष्ठितम्
एवमप्यशुभं कर्म न भूतं न भविष्यति १८
अथाभिपत्तिर्लोकस्य कर्तव्या शुभपापयोः
अभिपन्नतमं लोके राज्ञामुद्यतदण्डनम् १९
अथापि लोके कर्माणि समावर्तन्त भारत
शुभाशुभफलं चेमे प्राप्नुवन्तीति मे मतिः २०
एवं सत्यं शुभादेशं कर्मणस्तत्फलं ध्रुवम्
त्यज तद्राजशार्दूल मैवं शोके मनः कृथाः २१
स्वधर्मे वर्तमानस्य सापवादेऽपि भारत
एवमात्मपरित्यागस्तव राजन्न शोभनः २२
विहितानीह कौन्तेय प्रायश्चित्तानि कर्मिणाम्
शरीरवांस्तानि कुर्यादशरीरः पराभवेत् २३
तद्राजञ्जीवमानस्त्वं प्रायश्चित्तं चरिष्यसि
प्रायश्चित्तमकृत्वा तु प्रेत्य तप्तासि भारत २४
इति श्रीमहाभारते शान्तिपर्वणि द्वात्रिंशोऽध्यायः ३२

## त्रयस्त्रिंशोऽध्यायः

युधिष्ठिर उवाच
हताः पुत्राश्च पौत्राश्च भ्रातरः पितरस्तथा
श्वशुरा गुरवश्चैव मातुलाः सपितामहाः १
क्षत्रियाश्च महात्मानः संबन्धिसुहृदस्तथा
वयस्या ज्ञातयश्चैव भ्रातरश्च पितामह २
बहवश्च मनुष्येन्द्रा नानादेशसमागताः
घातिता राज्यलुब्धेन मयैकेन पितामह ३
तांस्तादृशानहं हत्वा धर्मनित्यान्महीक्षितः
असकृत्सोमपान्वीरान्किं प्राप्स्यामि तपोधन ४
दह्याम्यनिशमद्याहं चिन्तयानः पुनः पुनः
हीनां पार्थिवसिंहैस्तैः श्रीमद्भिः पृथिवीमिमाम् ५
दृष्ट्वा ज्ञातिवधं घोरं हतांश्च शतशः परान्
कोटिशश्च नरानन्यान्परितप्ये पितामह ६

का नु तासां वरस्त्रीणामवस्थाद्य भविष्यति
विहीनानां स्वतनयैः पतिभिर्भ्रातृभिस्तथा ७
अस्मानन्तकरान्घोरान्पाण्डवान्वृष्णिसंहितान्
आक्रोशन्त्यः कृशा दीना निपतन्त्यश्च भूतले ८
अपश्यन्त्यः पितॄन्भ्रातॄन्पतीन्पुत्रांश्च योषितः
त्यक्त्वा प्राणान्प्रियान्सर्वा गमिष्यन्ति यमक्षयम् ९
वत्सलत्वादिद्वजश्रेष्ठ तत्र मे नास्ति संशयः
व्यक्तं सौक्ष्म्याच्च धर्मस्य प्राप्स्यामः स्त्रीवधं वयम् १०
ते वयं सुहृदो हत्वा कृत्वा पापमनन्तकम्
नरके निपतिष्यामो ह्यधःशिरस एव च ११
शरीराणि विमोक्ष्यामस्तपसोग्रेण सत्तम
आश्रमांश्च विशेषांस्त्वं ममाचक्ष्व पितामह १२
इति श्रीमहाभारते शान्तिपर्वणि त्रयस्त्रिंशोऽध्यायः ३३

## चतुस्त्रिंशोऽध्यायः

वैशम्पायन उवाच
युधिष्ठिरस्य तद्वाक्यं श्रुत्वा द्वैपायनस्तदा
समीक्ष्य निपुणं बुद्ध्या ऋषिः प्रोवाच पाण्डवम् १
मा विषादं कृथा राजन्क्षत्रधर्ममनुस्मर
स्वधर्मेण हता ह्येते क्षत्रियाः क्षत्रियर्षभ २
काङ्क्षमाणाः श्रियं कृत्स्नां पृथिव्यां च महद्यशः
कृतान्तविधिसंयुक्ताः कालेन निधनं गताः ३
न त्वं हन्ता न भीमोऽपि नार्जुनो न यमावपि
कालः पर्यायधर्मेण प्राणानादत्त देहिनाम् ४
न यस्य मातापितरौ नानुग्राह्योऽसि कश्चन
कर्मसाक्षी प्रजानां यस्तेन कालेन संहृताः ५
हेतुमात्रमिदं तस्य कालस्य पुरुषर्षभ
यद्धन्ति भूतैर्भूतानि तदस्मै रूपमैश्वरम् ६
कर्ममूर्त्यात्मकं विद्धि साक्षिणं शुभपापयोः
सुखदुःखगुणोदर्कं कालं कालफलप्रदम् ७

तेषामपि महाबाहो कर्माणि परिचिन्तय
विनाशहेतुकारित्वे यैस्ते कालवशं गताः ८
आत्मनश्च विजानीहि नियमव्रतशीलताम्
यदा त्वमीदृशं कर्म विधिनाक्रम्य कारितः ९
त्वष्ट्रेव विहितं यन्त्रं यथा स्थापयितुर्वशे
कर्मणा कालयुक्तेन तथेदं भ्राम्यते जगत् १०
पुरुषस्य हि दृष्ट्वेमामुत्पत्तिमनिमित्ततः
यदृच्छया विनाशं च शोकहर्षावनर्थकौ ११
व्यलीकं वापि यत्त्वत्र चित्तवैतंसिकं तव
तदर्थमिष्यते राजन्प्रायश्चित्तं तदाचर १२
इदं च श्रूयते पार्थ युद्धे देवासुरे पुरा
असुरा भ्रातरो ज्येष्ठा देवाश्चापि यवीयसः १३
तेषामपि श्रीनिमित्तं महानासीत्समुच्छ्रयः
युद्धं वर्षसहस्राणि द्वात्रिंशदभवत्किल १४
एकार्णवां महीं कृत्वा रुधिरेण परिप्लुताम्
जघ्नुर्दैत्यांस्तदा देवास्त्रिदिवं चैव लेभिरे १५
तथैव पृथिवीं लब्ध्वा ब्राह्मणा वेदपारगाः
संश्रिता दानवानां वै साह्यार्थे दर्पमोहिताः १६
शालावृका इति ख्यातास्त्रिषु लोकेषु भारत
अष्टाशीतिसहस्राणि ते चापि विबुधैर्हताः १७
धर्मव्युच्छित्तिमिच्छन्तो येऽधर्मस्य प्रवर्तकाः
हन्तव्यास्ते दुरात्मानो देवैर्दैत्या इवोल्बणाः १८
एकं हत्वा यदि कुले शिष्टानां स्यादनामयम्
कृतं हत्वाथ राष्ट्रं वा न तद्वृत्तोपघातकम् १९
अधर्मरूपो धर्मो हि कश्चिदस्ति नराधिप
धर्मश्चाधर्मरूपोऽस्ति तच्च ज्ञेयं विपश्चिता २०
तस्मात्संस्तम्भयात्मानं श्रुतवानसि पाण्डव
देवैः पूर्वगतं मार्गमनुयातोऽसि भारत २१
न हीदृशा गमिष्यन्ति नरकं पाण्डवर्षभ
भ्रातृनाश्वासयैतांस्त्वं सुहृदश्च परंतप २२

यो हि पापसमारम्भे कार्ये तद्भावभावितः
कुर्वन्नपि तथैव स्यात्कृत्वा च निरपत्रपः २३
तस्मिंस्तत्कलुषं सर्वं समाप्तमिति शब्दितम्
प्रायश्चित्तं न तस्यास्ति ह्रासो वा पापकर्मणः २४
त्वं तु शुक्लाभिजातीयः परदोषेण कारितः
अनिच्छमानः कर्मेदं कृत्वा च परितप्यसे २५
अश्वमेधो महायज्ञः प्रायश्चित्तमुदाहृतम्
तमाहर महाराज विपाप्मैवं भविष्यसि २६
मरुद्भिः सह जित्वारीन्मघवान्पाकशासनः
एकैकं क्रतुमाहृत्य शतकृत्वः शतक्रतुः २७
पूतपाप्मा जितस्वर्गो लोकान्प्राप्य सुखोदयान्
मरुद्गणवृतः शक्रः शुशुभे भासयन्दिशः २८
स्वर्गलोके महीयन्तमप्सरोभिः शचीपतिम्
ऋषयः पर्युपासन्ते देवाश्च विबुधेश्वरम् २९
सोऽय त्वमिह संक्रान्तो विक्रमेण वसुंधराम्
निर्जिताश्च महीपाला विक्रमेण त्वयानघ ३०
तेषां पुराणि राष्ट्राणि गत्वा राजन्सुहृद्वृतः
भ्रातॄन्पुत्रांश्च पौत्रांश्च स्वे स्वे राज्येऽभिषेचय ३१
बालानपि च गर्भस्थान्सान्त्वानि समुदाचरन्
रञ्जयन्प्रकृतीः सर्वाः परिपाहि वसुंधराम् ३२
कुमारो नास्ति येषां च कन्यास्तत्राभिषेचय
कामाशयो हि स्त्रीवर्गः शोकमेवं प्रहास्यति ३३
एवमाश्वासनं कृत्वा सर्वराष्ट्रेषु भारत
यजस्व वाजिमेधेन यथेन्द्रो विजयी पुरा ३४
अशोच्यास्ते महात्मानः क्षत्रियाः क्षत्रियर्षभ
स्वकर्मभिर्गता नाशं कृतान्तबलमोहिताः ३५
अवाप्तः क्षत्रधर्मस्ते राज्यं प्राप्तमकल्मषम्
चरस्व धर्मं कौन्तेय श्रेयान्यः प्रेत्य भाविकः ३६

इति श्रीमहाभारते शान्तिपर्वणि चतुस्त्रिंशोऽध्यायः ३४

पञ्चत्रिंशोऽध्यायः

युधिष्ठिर उवाच
कानि कृत्वेह कर्माणि प्रायश्चित्तीयते नरः
किं कृत्वा चैव मुच्येत तन्मे ब्रूहि पितामह १
व्यास उवाच
अकुर्वन्विहितं कर्म प्रतिषिद्धानि चाचरन्
प्रायश्चित्तीयते ह्येवं नरो मिथ्या च वर्तयन् २
सूर्येणाभ्युदितो यश्च ब्रह्मचारी भवत्युत
तथा सूर्याभिनिर्मुक्तः कुनखी श्यावदन्नपि ३
परिवित्तिः परिवेत्ता ब्रह्मोज्झो यश्च कुत्सकः
दिधिषूपतिस्तथा यः स्यादग्रेदिधिषुरेव च ४
अवकीर्णी भवेद्यश्च द्विजातिवधकस्तथा
अतीर्थे ब्राह्मणस्त्यागी तीर्थे चाप्रतिपादकः ५
ग्रामयाजी च कौन्तेय राज्ञश्च परिविक्रयी
शूद्रस्त्रीवधको यश्च पूर्वः पूर्वस्तु गर्हितः ६
वृथापशुसमालम्भी वनदाहस्य कारकः
अनृतेनोपचर्ता च प्रतिरोद्धा गुरोस्तथा ७
यश्चाग्नीनपविध्येत तथैव ब्रह्मविक्रयी
एतान्येनांसि सर्वाणि व्युत्क्रान्तसमयश्च यः ८
अकार्याण्यपि वक्ष्यामि यानि तानि निबोध मे
लोकवेदविरुद्धानि तान्येकाग्रमनाः शृणु ९
स्वधर्मस्य परित्यागः परधर्मस्य च क्रिया
अयाज्ययाजनं चैव तथाभक्ष्यस्य भक्षणम् १०
शरणागतसंत्यागो भृत्यस्याभरणं तथा
रसानां विक्रयश्चापि तिर्यग्योनिवधस्तथा ११
आधानादीनि कर्माणि शक्तिमान्न करोति यः
अप्रयच्छंश्च सर्वाणि नित्यं देयानि भारत १२
दक्षिणानामदानं च ब्राह्मणस्वाभिमर्शनम्
सर्वाण्येतान्यकार्याणि प्राहुर्धर्मविदो जनाः १३
पित्रा विभजते पुत्रो यश्च स्याद्गुरुतल्पगः

अप्रजायन्नधर्मेण भवत्याधर्मिको जनः १४
उक्तान्येतानि कर्माणि विस्तरेणेतरेण च
यानि कुर्वन्नकुर्वंश्च प्रायश्चित्तीयते जनः १५
एतान्येव तु कर्माणि क्रियमाणानि मानवान्
येषु येषु निमित्तेषु न लिम्पन्त्यथ तच्छृणु १६
प्रगृह्य शस्त्रमायान्तमपि वेदान्तगं रणे
जिघांसन्तं निहत्याजौ न तेन ब्रह्महा भवेत् १७
अपि चाप्यत्र कौन्तेय मन्त्रो वेदेषु पठ्यते
वेदप्रमाणविहितं तं धर्मं प्रब्रवीमि ते १८
अपेतं ब्राह्मणं वृत्ताद्यो हन्यादाततायिनम्
न तेन ब्रह्महा स स्यान्मन्युस्तं मन्युमृच्छति १९
प्राणात्यये तथाज्ञानादाचरन्मदिरामपि
अचोदितो धर्मपरः पुनः संस्कारमर्हति २०
एतत्ते सर्वमाख्यातं कौन्तेयाभक्ष्यभक्षणम्
प्रायश्चित्तविधानेन सर्वमेतेन शुध्यति २१
गुरुतल्पं हि गुर्वर्थे न दूषयति मानवम्
उद्दालकः श्वेतकेतुं जनयामास शिष्यतः २२
स्तेयं कुर्वंस्तु गुर्वर्थमापत्सु न निबध्यते
बहुशः कामकारेण न चेद्यः संप्रवर्तते २३
अन्यत्र ब्राह्मणस्वेभ्य आददानो न दुष्यति
स्वयमप्राशिता यश्च न स पापेन लिप्यते २४
प्राणत्राणेऽनृतं वाच्यमात्मनो वा परस्य वा
गुर्वर्थे स्त्रीषु चैव स्याद्विवाहकरणेषु च २५
नावर्तते व्रतं स्वप्ने शुक्रमोक्षे कथंचन
आज्यहोमः समिद्धेऽग्नौप्रायश्चित्तं विधीयते २६
पारिवित्त्यं तु पतिते नास्ति प्रव्रजिते तथा
भिक्षिते पारदार्यं च न तद्धर्मस्य दूषकम् २७
वृथापशुसमालम्भं नैव कुर्यान्न कारयेत्
अनुग्रहः पशूनां हि संस्कारो विधिचोदितः २८
अनर्हे ब्राह्मणे दत्तमज्ञानात्तन्न दूषकम्

सकारणं तथा तीर्थेऽतीर्थे वा प्रतिपादनम् २९
स्त्रियस्तथापचारिण्यो निष्कृतिः स्याददूषिका
अपि सा पूयते तेन न तु भर्ता प्रदुष्यते ३०
तत्त्वं ज्ञात्वा तु सोमस्य विक्रयः स्याददूषकः
असमर्थस्य भृत्यस्य विसर्गः स्याददोषवान्
वनदाहो गवामर्थे क्रियमाणो न दूषकः ३१
उक्तान्येतानि कर्माणि यानि कुर्वन्न दुष्यति
प्रायश्चित्तानि वक्ष्यामि विस्तरेणैव भारत ३२
इति श्रीमहाभारते शान्तिपर्वणि पञ्चत्रिंशोऽध्यायः ३५

## षट्त्रिंशोऽध्यायः

व्यास उवाच
तपसा कर्मभिश्चैव प्रदानेन च भारत
पुनाति पापं पुरुषः पुनश्चेन्न प्रवर्तते १
एककालं तु भुञ्जानश्चरन्भैक्षं स्वकर्मकृत्
कपालपाणिः खट्वाङ्गी ब्रह्मचारी सदोत्थितः २
अनसूयुरधःशायी कर्म लोके प्रकाशयन्
पूर्णैर्द्वादशभिर्वर्षैर्ब्रह्महा विप्रमुच्यते ३
षड्भिर्वर्षैः कृच्छ्रभोजी ब्रह्महा पूयते नरः
मासे मासे समश्नंस्तु त्रिभिर्वर्षैः प्रमुच्यते ४
संवत्सरेण मासाशी पूयते नात्र संशयः
तथैवोपरमन्राजन्स्वल्पेनापि प्रमुच्यते ५
क्रतुना चाश्वमेधेन पूयते नात्र संशयः
ये चास्यावभृथे स्नान्ति केचिदेवंविधा नराः ६
ते सर्वे पूतपाप्मानो भवन्तीति परा श्रुतिः
ब्राह्मणार्थे हतो युद्धे मुच्यते ब्रह्महत्यया ७
गवां शतसहस्रं तु पात्रेभ्यः प्रतिपादयन्
ब्रह्महा विप्रमुच्येत सर्वपापेभ्य एव च ८
कपिलानां सहस्राणि यो दद्यात्पञ्चविंशतिम्
दोग्ध्रीणां स च पापेभ्यः सर्वेभ्यो विप्रमुच्यते ९

गोसहस्रं सवत्सानां दोग्ध्रीणां प्राणसंशये
साधुभ्यो वै दरिद्रेभ्यो दत्त्वा मुच्येत किल्बिषात् १०
शतं वै यस्तु काम्बोजान्ब्राह्मणेभ्यः प्रयच्छति
नियतेभ्यो महीपाल स च पापात्प्रमुच्यते ११
मनोरथं तु यो दद्यादेकस्मा अपि भारत
न कीर्तयेत दत्त्वा यः स च पापात्प्रमुच्यते १२
सुरापानं सकृत्पीत्वा योऽग्निवर्णां पिबेद्द्विजः
स पावयत्यथात्मानमिह लोके परत्र च १३
मेरुप्रपातं प्रपतञ्ज्वलनं वा समाविशन्
महाप्रस्थानमातिष्ठन्मुच्यते सर्वकिल्बिषैः १४
बृहस्पतिसवेनेष्ट्वा सुरापो ब्राह्मणः पुनः
समितिं ब्राह्मणैर्गच्छेदिति वै ब्रह्मणी श्रुतिः १५
भूमिप्रदानं कुर्याद्यः सुरां पीत्वा विमत्सरः
पुनर्न च पिबेद्राजन्संस्कृतः शुध्यते नरः १६
गुरुतल्पी शिलां तप्तामायसीमधिसंविशेत्
पाणावाधाय वा शेफं प्रव्रजेदूर्ध्वदर्शनः १७
शरीरस्य विमोक्षेण मुच्यते कर्मणोऽशुभात्
कर्मभ्यो विप्रमुच्यन्ते यत्ताः संवत्सरं स्त्रियः १८
महाव्रतं चरेद्यस्तु दद्यात्सर्वस्वमेव तु
गुर्वर्थे वा हतो युद्धे स मुच्येत्कर्मणोऽशुभात् १९
अनृतेनोपचर्ता च प्रतिरोद्धा गुरोस्तथा
उपहृत्य प्रियं तस्मै तस्मात्पापात्प्रमुच्यते २०
अवकीर्णिनिमित्तं तु ब्रह्महत्याव्रतं चरेत्
खरचर्मवासाः षण्मासं तथा मुच्येत किल्बिषात् २१
परदारापहारी तु परस्यापहरन्वसु
संवत्सरं व्रती भूत्वा तथा मुच्येत किल्बिषात् २२
स्तेयं तु यस्यापहरेत्तस्मै दद्यात्समं वसु
विविधेनाभ्युपायेन तेन मुच्येत किल्बिषात् २३
कृच्छ्राद्द्वादशरात्रेण स्वभ्यस्तेन दशावरम्
परिवेत्ता भवेत्पूतः परिवित्तिश्च भारत २४

निवेश्यं तु भवेत्तेन सदा तारयिता पितॄन्
न तु स्त्रिया भवेद्दोषो न तु सा तेन लिप्यते २५
भजने ह्यृतुना शुद्धं चातुर्मास्यं विधीयते
स्त्रियस्तेन विशुध्यन्ति इति धर्मविदो विदुः २६
स्त्रियस्त्वाशङ्किताः पापैर्नोपगम्या हि जानता
रजसा ता विशुध्यन्ते भस्मना भाजनं यथा २७
चतुष्पात्सकलो धर्मो ब्राह्मणानां विधीयते
पादावकृष्टो राजन्ये तथा धर्मो विधीयते २८
तथा वैश्ये च शूद्रे च पादः पादो विधीयते
विद्यादेवंविधेनैषां गुरुलाघवनिश्चयम् २९
तिर्यग्योनिवधं कृत्वा द्रुमांश्छित्त्वेतरान्बहून्
त्रिरात्रं वायुभक्षः स्यात्कर्म च प्रथयेन्नरः ३०
अगम्यागमने राजन्प्रायश्चित्तं विधीयते
आर्द्रवस्त्रेण षण्मासं विहार्यं भस्मशायिना ३१
एष एव तु सर्वेषामकार्याणां विधिर्भवेत्
ब्रह्मणोक्तेन विधिना दृष्टान्तागमहेतुभिः ३२
सावित्रीमप्यधीयानः शुचौ देशे मिताशनः
अहिंस्रोऽमन्दकोऽजल्पन्मुच्यते सर्वकिल्बिषैः ३३
अहःसु सततं तिष्ठेदभ्याकाशं निशि स्वपेत्
त्रिरह्नस्त्रिर्निशायाश्च सवासा जलमाविशेत् ३४
स्त्रीशूद्रपतितांश्चापि नाभिभाषेद्व्रतान्वितः
पापान्यज्ञानतः कृत्वा मुच्येदेवंव्रतो द्विजः ३५
शुभाशुभफलं प्रेत्य लभते भूतसाक्षिकः
अतिरिच्येत्तयोर्यत्तु तत्कर्ता लभते फलम् ३६
तस्माद्दानेन तपसा कर्मणा च शुभं फलम्
वर्धयेदशुभं कृत्वा यथा स्यादतिरेकवान् ३७
कुर्याच्छुभानि कर्माणि निमित्ते पापकर्मणाम्
दद्यान्नित्यं च वित्तानि तथा मुच्येत किल्बिषात् ३८
अनुरूपं हि पापस्य प्रायश्चित्तमुदाहृतम्
महापातकवर्जं तु प्रायश्चित्तं विधीयते ३९

भक्ष्याभक्ष्येषु सर्वेषु वाच्यावाच्ये तथैव च
अज्ञानज्ञानयो राजन्विहितान्यनुजानते ४०
जानता तु कृतं पापं गुरु सर्वं भवत्युत
अज्ञानात्स्खलिते दोषे प्रायश्चित्तं विधीयते ४१
शक्यते विधिना पापं यथोक्तेन व्यपोहितुम्
आस्तिके श्रद्दधाने तु विधिरेष विधीयते ४२
नास्तिकाश्रद्दधानेषु पुरुषेषु कदाचन
दम्भदोषप्रधानेषु विधिरेष न दृश्यते ४३
शिष्टाचारश्च शिष्टश्च धर्मो धर्मभृतां वर
सेवितव्यो नरव्याघ्र प्रेत्य चेह सुखार्थिना ४४
स राजन्मोक्ष्यसे पापात्तेन पूर्वेण हेतुना
त्राणार्थं वा वधेनैषामथ वा नृपकर्मणा ४५
अथ वा ते घृणा काचित्प्रायश्चित्तं चरिष्यसि
मा त्वेवानार्यजुष्टेन कर्मणा निधनं गमः ४६
इति श्रीमहाभारते शान्तिपर्वणि षट्त्रिंशोऽध्यायः ३६

## सप्तत्रिंशोऽध्यायः

वैशम्पायन उवाच
एवमुक्तो भगवता धर्मराजो युधिष्ठिरः
चिन्तयित्वा मुहूर्तं तु प्रत्युवाच तपोधनम् १
किं भक्ष्यं किमभक्ष्यं च किं च देयं प्रशस्यते
किं च पात्रमपात्रं वा तन्मे ब्रूहि पितामह २
व्यास उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
सिद्धानां चैव संवादं मनोश्चैव प्रजापतेः ३
सिद्धास्तपोव्रतपराः समागम्य पुरा विभुम्
धर्मं पप्रच्छुरासीनमादिकाले प्रजापतिम् ४
कथमन्नं कथं दानं कथमध्ययनं तपः
कार्याकार्यं च नः सर्वं शंस वै त्वं प्रजापते ५
तैरेवमुक्तो भगवान्मनुः स्वायंभुवोऽब्रवीत्

शुश्रूषध्वं यथावृत्तं धर्मं व्याससमासतः ६
अदत्तस्यानुपादानं दानमध्ययनं तपः
अहिंसा सत्यमक्रोधः क्षमेज्या धर्मलक्षणम् ७
य एव धर्मः सोऽधर्मोऽदेशेऽकाले प्रतिष्ठितः
आदानमनृतं हिंसा धर्मो व्यावस्थिकः स्मृतः ८
द्विविधौ चाप्युभावेतौ धर्माधर्मौ विजानताम्
अप्रवृत्तिः प्रवृत्तिश्च द्वैविध्यं लोकवेदयोः ९
अप्रवृत्तेरमर्त्यत्वं मर्त्यत्वं कर्मणः फलम्
अशुभस्याशुभं विद्याच्छुभस्य शुभमेव च १०
एतयोश्चोभयोः स्यातां शुभाशुभतया तथा
दैवं च दैवयुक्तं च प्राणश्च प्रलयश्च ह ११
अप्रेक्षापूर्वकरणादशुभानां शुभं फलम्
ऊर्ध्वं भवति संदेहादिह दृष्टार्थमेव वा
अप्रेक्षापूर्वकरणात्प्रायश्चित्तं विधीयते १२
क्रोधमोहकृते चैव दृष्टान्तागमहेतुभिः
शरीराणामुपक्लेशो मनसश्च प्रियाप्रिये
तदौषधैश्च मन्त्रैश्च प्रायश्चित्तैश्च शाम्यति १३
जातिश्रेण्यधिवासानां कुलधर्मांश्च सर्वतः
वर्जयेन्न हि तं धर्मं येषां धर्मो न विद्यते १४
दश वा वेदशास्त्रज्ञास्त्रयो वा धर्मपाठकाः
यद्ब्रूयुः कार्य उत्पन्ने स धर्मो धर्मसंशये १५
अरुणा मृत्तिका चैव तथा चैव पिपीलकाः
श्लेष्मातकस्तथा विप्रैरभक्ष्यं विषमेव च १६
अभक्ष्या ब्राह्मणैर्मत्स्याः शकलैर्ये विवर्जिताः
चतुष्पात्कच्छपादन्यो मण्डूका जलजाश्च ये १७
भासा हंसाः सुपर्णाश्च चक्रवाका बकाः प्लवाः
कङ्को मद्गुश्च गृध्राश्च काकोलूकं तथैव च १८
क्रव्यादाः पक्षिणः सर्वे चतुष्पादाश्च दंष्ट्रिणः
येषां चोभयतो दन्ताश्चतुर्दंष्ट्राश्च सर्वशः १९
एडकाश्वखरोष्ट्रीणां सूतिकानां गवामपि

मानुषीणां मृगीणां च न पिबेद्ब्राह्मणः पयः २०
प्रेतान्नं सूतिकान्नं च यच्च किंचिदनिर्दशम्
अभोज्यं चाप्यपेयं च धेन्वा दुग्धमनिर्दशम् २१
तक्ष्णश्चर्मावकर्तुश्च पुंश्चल्या रजकस्य च
चिकित्सकस्य यच्चान्नमभोज्यं रक्षिणस्तथा २२
गणग्रामाभिशस्तानां रङ्गस्त्रीजीविनश्च ये
परिवित्तिनपुंसां च बन्दिद्यूतविदां तथा २३
वार्यमाणाहृतं चान्नं शुक्तं पर्युषितं च यत्
सुरानुगतमुच्छिष्टमभोज्यं शेषितं च यत् २४
पिष्टमांसेक्षुशाकानां विकाराः पयसस्तथा
सक्तुधानाकरम्भाश्च नोपभोज्याश्चिरस्थिताः २५
पायसं कृसरं मांसमपूपाश्च वृथा कृताः
अभोज्याश्चाप्यभक्ष्याश्च ब्राह्मणैर्गृहमेधिभिः २६
देवान्पितृन्मनुष्यांश्च मुनीन्गृह्याश्च देवताः
पूजयित्वा ततः पश्चाद्गृहस्थो भोक्तुमर्हति २७
यथा प्रव्रजितो भिक्षुर्गृहस्थः स्वगृहे वसेत्
एवंवृत्तः प्रियैर्दारैः संवसन्धर्ममाप्नुयात् २८
न दद्याद्यशसे दानं न भयान्नोपकारिणे
न नृत्तगीतशीलेषु हासकेषु च धार्मिकः २९
न मत्ते नैव चोन्मत्ते न स्तेने न चिकित्सके
न वाग्घीने विवर्णे वा नाङ्गहीने न वामने ३०
न दुर्जने दौष्कुले वा व्रतैर्वा यो न संस्कृतः
अश्रोत्रिये मृतं दानं ब्राह्मणेऽब्रह्मवादिनि ३१
असम्यक्चैव यद्दत्तमसम्यक्च प्रतिग्रहः
उभयोः स्यादनर्थाय दातुरादातुरेव च ३२
यथा खदिरमालम्ब्य शिलां वाप्यर्णवं तरन्
मज्जते मज्जते तद्वद्दाता यश्च प्रतीच्छकः ३३
काष्ठैरार्द्रैर्यथा वह्निरुपस्तीर्णो न दीप्यते
तपःस्वाध्यायचारित्रैरेवं हीनः प्रतिग्रही ३४
कपाले यद्वदापः स्युः श्वदृतौ वा यथा पयः

आश्रयस्थानदोषेण वृत्तहीने तथा श्रुतम् ३५
निर्मन्त्रो निर्व्रतो यः स्यादशास्त्रज्ञोऽनसूयकः
अनुक्रोशात्प्रदातव्यं दीनेष्वेवं नरेष्वपि ३६
न वै देयमनुक्रोशाद्दीनायाप्यपकारिणे
आप्ताचरितमित्येव धर्म इत्येव वा पुनः ३७
निष्कारणं स्म तद्दत्तं ब्राह्मणे धर्मवर्जिते
भवेदपात्रदोषेण न मेऽत्रास्ति विचारणा ३८
यथा दारुमयो हस्ती यथा चर्ममयो मृगः
ब्राह्मणश्चानधीयानस्त्रयस्ते नामधारकाः ३९
यथा षण्ढोऽफलः स्त्रीषु यथा गौर्गवि चाफला
शकुनिर्वाप्यपक्षः स्यान्निर्मन्त्रो ब्राह्मणस्तथा ४०
ग्रामधान्यं यथा शून्यं यथा कूपश्च निर्जलः
यथा हुतमनग्नौ च तथैव स्यान्निराकृतौ ४१
देवतानां पितॄणां च हव्यकव्यविनाशनः
शत्रुरर्थहरो मूर्खो न लोकान्प्राप्तुमर्हति ४२
एतत्ते कथितं सर्वं यथा वृत्तं युधिष्ठिर
समासेन महद्ध्येतच्छ्रोतव्यं भरतर्षभ ४३
इति श्रीमहाभारते शान्तिपर्वणि सप्तत्रिंशोऽध्यायः ३७

## अष्टत्रिंशोऽध्यायः

युधिष्ठिर उवाच
श्रोतुमिच्छामि भगवन्विस्तरेण महामुने
राजधर्मान्द्विजश्रेष्ठ चातुर्वर्ण्यस्य चाखिलान् १
आपत्सु च यथा नीतिर्विधातव्या महीक्षिता
धर्म्यमालम्ब्य पन्थानं विजयेयं कथं महीम् २
प्रायश्चित्तकथा ह्येषा भक्ष्याभक्ष्यविवर्धिता
कौतूहलानुप्रवणा हर्षं जनयतीव मे ३
धर्मचर्या च राज्यं च नित्यमेव विरुध्यते
येन मुह्यति मे चेतश्चिन्तयानस्य नित्यशः ४
वैशम्पायन उवाच

तमुवाच महातेजा व्यासो वेदविदां वरः
नारदं समभिप्रेक्ष्य सर्वं जानन्पुरातनम् ५
श्रोतुमिच्छसि चेद्धर्मानखिलेन युधिष्ठिर
प्रैहि भीष्मं महाबाहो वृद्धं कुरुपितामहम् ६
स ते सर्वरहस्येषु संशयान्मनसि स्थितान्
छेत्ता भागीरथीपुत्रः सर्वज्ञः सर्वधर्मवित् ७
जनयामास यं देवी दिव्या त्रिपथगा नदी
साक्षाद्ददर्श यो देवान्सर्वाञ्शक्रपुरोगमान् ८
बृहस्पतिपुरोगांश्च देवर्षीनसकृत्प्रभुः
तोषयित्वोपचारेण राजनीतिमधीतवान् ९
उशना वेद यच्छास्त्रं देवासुरगुरुर्द्विजः
तच्च सर्वं सवैयाख्यं प्राप्तवान्कुरुसत्तमः १०
भार्गवाच्च्यवनाच्चापि वेदानङ्गोपबृंहितान्
प्रतिपेदे महाबुद्धिर्वसिष्ठाच्च यतव्रतात् ११
पितामहसुतं ज्येष्ठं कुमारं दीप्ततेजसम्
अध्यात्मगतितत्त्वज्ञमुपाशिक्षत यः पुरा १२
मार्कण्डेयमुखात्कृत्स्नं यतिधर्ममवाप्तवान्
रामादस्त्राणि शक्राच्च प्राप्तवान्भरतर्षभ १३
मृत्युरात्मेच्छया यस्य जातस्य मनुजेष्वपि
तथानपत्यस्य सतः पुण्यलोका दिवि श्रुताः १४
यस्य ब्रह्मर्षयः पुण्या नित्यमासन्सभासदः
यस्य नाविदितं किंचिज्ज्ञानज्ञेयेषु विद्यते १५
स ते वक्ष्यति धर्मज्ञः सूक्ष्मधर्मार्थतत्त्ववित्
तमभ्येहि पुरा प्राणान्स विमुञ्चति धर्मवित् १६
एवमुक्तस्तु कौन्तेयो दीर्घप्रज्ञो महाद्युतिः
उवाच वदतां श्रेष्ठं व्यासं सत्यवतीसुतम् १७
वैशसं सुमहत्कृत्वा ज्ञातीनां लोमहर्षणम्
आगस्कृत्सर्वलोकस्य पृथिवीनाशकारकः १८
घातयित्वा तमेवाजौ छलेनाजिह्मयोधिनम्
उपसंप्रष्टुमर्हामि तमहं केन हेतुना १९

ततस्तं नृपतिश्रेष्ठं चातुर्वर्ण्यहितेप्सया
पुनराह महाबाहुर्यदुश्रेष्ठो महाद्युतिः २०
नेदानीमतिनिर्बन्धं शोके कर्तुमिहार्हसि
यदाह भगवान्व्यासस्तत्कुरुष्व नृपोत्तम २१
ब्राह्मणास्त्वां महाबाहो भ्रातरश्च महौजसः
पर्जन्यमिव घर्मार्ता आशंसाना उपासते २२
हतशिष्टाश्च राजानः कृत्स्नं चैव समागतम्
चातुर्वर्ण्यं महाराज राष्ट्रं ते कुरुजाङ्गलम् २३
प्रियार्थमपि चैतेषां ब्राह्मणानां महात्मनाम्
नियोगादस्य च गुरोर्व्यासस्यामिततेजसः २४
सुहृदां चास्मदादीनां द्रौपद्याश्च परन्तप
कुरु प्रियममित्रघ्न लोकस्य च हितं कुरु २५
एवमुक्तस्तु कृष्णेन राजा राजीवलोचनः
हितार्थं सर्वलोकस्य समुत्तस्थौ महातपाः २६
सोऽनुनीतो नरव्याघ्रो विष्टरश्रवसा स्वयम्
द्वैपायनेन च तथा देवस्थानेन जिष्णुना २७
एतैश्चान्यैश्च बहुभिरनुनीतो युधिष्ठिरः
व्यजहान्मानसं दुःखं सन्तापं च महामनाः २८
श्रुतवाक्यः श्रुतनिधिः श्रुतश्रव्यविशारदः
व्यवस्य मनसः शान्तिमगच्छत्पाण्डुनन्दनः २९
स तैः परिवृतो राजा नक्षत्रैरिव चन्द्रमाः
धृतराष्ट्रं पुरस्कृत्य स्वपुरं प्रविवेश ह ३०
प्रविविक्षुः स धर्मज्ञः कुन्तीपुत्रो युधिष्ठिरः
अर्चयामास देवांश्च ब्राह्मणांश्च सहस्रशः ३१
ततो रथं नवं शुभ्रं कम्बलाजिनसंवृतम्
युक्तं षोडशभिर्गोभिः पाण्डुरैः शुभलक्षणैः ३२
मन्त्रैरभ्यर्चितः पुण्यैः स्तूयमानो महर्षिभिः
आरुरोह यथा देवः सोमोऽमृतमयं रथम् ३३
जग्राह रश्मीन्कौन्तेयो भीमो भीमपराक्रमः
अर्जुनः पाण्डुरं छत्रं धारयामास भानुमत् ३४

ध्रियमाणं तु तच्छत्रं पाण्डुरं तस्य मूर्धनि
शुशुभे तारकाराजसितमभ्रमिवाम्बरे ३५
चामरव्यजने चास्य वीरौ जगृहतुस्तदा
चन्द्ररश्मिप्रभे शुभ्रे माद्रीपुत्रावलंकृते ३६
ते पञ्च रथमास्थाय भ्रातरः समलंकृताः
भूतानीव समस्तानि राजन्ददृशिरे तदा ३७
आस्थाय तु रथं शुभ्रं युक्तमश्वैर्महाजवैः
अन्वयात्पृष्ठतो राजन्युयुत्सुः पाण्डवाग्रजम् ३८
रथं हेममयं शुभ्रं सैन्यसुग्रीवयोजितम्
सह सात्यकिना कृष्णः समास्थायान्वयात्कुरून् ३९
नरयानेन तु ज्येष्ठः पिता पार्थस्य भारत
अग्रतो धर्मराजस्य गान्धारीसहितो ययौ ४०
कुरुस्त्रियश्च ताः सर्वाः कुन्ती कृष्णा च द्रौपदी
यानैरुच्चावचैर्जग्मुर्विदुरेण पुरस्कृताः ४१
ततो रथाश्च बहुला नागाश्च समलंकृताः
पादाताश्च हयाश्चैव पृष्ठतः समनुव्रजन् ४२
ततो वैतालिकैः सूतैर्मागधैश्च सुभाषितैः
स्तूयमानो ययौ राजा नगरं नागसाह्वयम् ४३
तत्प्रयाणं महाबाहोर्बभूवाप्रतिमं भुवि
आकुलाकुलमुत्सृष्टं हृष्टपुष्टजनान्वितम् ४४
अभियाने तु पार्थस्य नरैर्नगरवासिभिः
नगरं राजमार्गश्च यथावत्समलंकृतम् ४५
पाण्डुरेण च माल्येन पताकाभिश्च वेदिभिः
संवृतो राजमार्गश्च धूपनैश्च सुधूपितः ४६
अथ चूर्णैश्च गन्धानां नानापुष्पैः प्रियङ्गुभिः
माल्यदामभिरासक्तैः राजवेश्माभिसंवृतम् ४७
कुम्भाश्च नगरद्वारि वारिपूर्णा दृढा नवाः
कन्याः सुमनसश्छागाः स्थापितास्तत्र तत्र ह ४८
तथा स्वलंकृतद्वारं नगरं पाण्डुनन्दनः
स्तूयमानः शुभैर्वाक्यैः प्रविवेश सुहृद्वृतः ४९

इति श्रीमहाभारते शान्तिपर्वणि अष्टत्रिंशोऽध्यायः ३८

एकोनचत्वारिंशोऽध्यायः

वैशम्पायन उवाच
प्रवेशने तु पार्थानां जनास्य पुरवासिनः
दिदृक्षूणां सहस्राणि समाजग्मुर्बहून्यथ १
स राजमार्गः शुशुभे समलंकृतचत्वरः
यथा चन्द्रोदये राजन्वर्धमानो महोदधिः २
गृहाणि राजमार्गे तु रत्नवन्ति बृहन्ति च
प्राकम्पन्तेव भारेण स्त्रीणां पूर्णानि भारत ३
ताः शनैरिव सव्रीडं प्रशशंसुर्युधिष्ठिरम्
भीमसेनार्जुनौ चैव माद्रीपुत्रौ च पाण्डवौ ४
धन्या त्वमसि पाञ्चालि या त्वं पुरुषसत्तमान्
उपतिष्ठसि कल्याणि महर्षीनिव गौतमी ५
तव कर्माण्यमोघानि व्रतचर्या च भामिनि
इति कृष्णां महाराज प्रशशंसुस्तदा स्त्रियः ६
प्रशंसावचनैस्तासां मिथःशब्दैश्च भारत
प्रीतिजैश्च तदा शब्दैः पुरमासीत्समाकुलम् ७
तमतीत्य यथायुक्तं राजमार्गं युधिष्ठिरः
अलंकृतं शोभमानमुपायाद्राजवेश्म ह ८
ततः प्रकृतयः सर्वाः पौरजानपदास्तथा
ऊचुः कथाः कर्णसुखाः समुपेत्य ततस्ततः ९
दिष्ट्या जयसि राजेन्द्र शत्रूञ्शत्रुनिसूदन
दिष्ट्या राज्यं पुनः प्राप्तं धर्मेण च बलेन च १०
भव नस्त्वं महाराज राजेह शरदां शतम्
प्रजाः पालय धर्मेण यथेन्द्रस्त्रिदिवं नृप ११
एवं राजकुलद्वारि मङ्गलैरभिपूजितः
आशीर्वादान्द्विजैरुक्तान्प्रतिगृह्य समन्ततः १२
प्रविश्य भवनं राजा देवराजगृहोपमम्
श्रुत्वा विजयसंयुक्तं रथात्पश्चादवातरत् १३

प्रविश्याभ्यन्तरं श्रीमान्दैवतान्यभिगम्य च
पूजयामास रत्नैश्च गन्धैर्माल्यैश्च सर्वशः १४
निश्चक्राम ततः श्रीमान्पुनरेव महायशाः
ददर्श ब्राह्मणांश्चैव सोऽभिरूपानुपस्थितान् १५
स संवृतस्तदा विप्रैराशीर्वादविवक्षुभिः
शुशुभे विमलश्चन्द्रस्तारागणवृतो यथा १६
तान्स संपूजयामास कौन्तेयो विधिवद्द्विजान्
धौम्यं गुरुं पुरस्कृत्य ज्येष्ठं पितरमेव च १७
सुमनोमोदकै रत्नैर्हिरण्येन च भूरिणा
गोभिर्वस्त्रैश्च राजेन्द्र विविधैश्च किमिच्छकैः १८
ततः पुण्याहघोषोऽभूद्दिवं स्तब्ध्वेव भारत
सुहृदां हर्षजननः पुण्यः श्रुतिसुखावहः १९
हंसवन्नेदुषां राजन्द्विजानां तत्र भारती
शुश्रुवे वेदविदुषां पुष्कलार्थपदाक्षरा २०
ततो दुन्दुभिनिर्घोषः शङ्खानां च मनोरमः
जयं प्रवदतां तत्र स्वनः प्रादुरभून्नृप २१
निःशब्दे च स्थिते तत्र ततो विप्रजने पुनः
राजानं ब्राह्मणच्छद्मा चार्वाको राक्षसोऽब्रवीत् २२
तत्र दुर्योधनसखा भिक्षुरूपेण संवृतः
सांख्यः शिखी त्रिदण्डी च धृष्टो विगतसाध्वसः २३
वृतः सर्वैस्तदा विप्रैराशीर्वादविवक्षुभिः
परंसहस्रै राजेन्द्र तपोनियमसंस्थितैः २४
स दुष्टः पापमाशंसन्पाण्डवानां महात्मनाम्
अनामन्त्र्यैव तान्विप्रांस्तमुवाच महीपतिम् २५
इमे प्राहुर्द्विजाः सर्वे समारोप्य वचो मयि
धिग्भवन्तं कुनृपतिं ज्ञातिघातिनमस्तु वै २६
किं ते राज्येन कौन्तेय कृत्वेमं ज्ञातिसंक्षयम्
घातयित्वा गुरूंश्चैव मृतं श्रेयो न जीवितम् २७
इति ते वै द्विजाः श्रुत्वा तस्य घोरस्य रक्षसः
विव्यथुश्चुक्रुशुश्चैव तस्य वाक्यप्रधर्षिताः २८

ततस्ते ब्राह्मणाः सर्वे स च राजा युधिष्ठिरः
व्रीडिताः परमोद्विग्नास्तूष्णीमासन्विशां पते २९
युधिष्ठिर उवाच
प्रसीदन्तु भवन्तो मे प्रणतस्याभियाचतः
प्रत्यापन्नं व्यसनिनं न मां धिक्कर्तुमर्हथ ३०
वैशम्पायन उवाच
ततो राजन्ब्राह्मणास्ते सर्व एव विशां पते
ऊचुर्नैतद्वचोऽस्माकं श्रीरस्तु तव पार्थिव ३१
जज्ञुश्चैव महात्मानस्ततस्तं ज्ञानचक्षुषा
ब्राह्मणा वेदविद्वांसस्तपोभिर्विमलीकृताः ३२
ब्राह्मणा ऊचुः
एष दुर्योधनसखा चार्वाको नाम राक्षसः
परिव्राजकरूपेण हितं तस्य चिकीर्षति ३३
न वयं ब्रूम धर्मात्मन्व्येतु ते भयमीदृशम्
उपतिष्ठतु कल्याणं भवन्तं भ्रातृभिः सह ३४
वैशम्पायन उवाच
ततस्ते ब्राह्मणाः सर्वे हुंकारैः क्रोधमूर्छिताः
निर्भर्त्सयन्तः शुचयो निजघ्नुः पापराक्षसम् ३५
स पपात विनिर्दग्धस्तेजसा ब्रह्मवादिनाम्
महेन्द्राशनिनिर्दग्धः पादपोऽङ्कुरवानिव ३६
पूजिताश्च ययुर्विप्रा राजानमभिनन्द्य तम्
राजा च हर्षमापेदे पाण्डवः ससुहृज्जनः ३७
वासुदेव उवाच
ब्राह्मणास्तात लोकेऽस्मिन्नर्चनीयाः सदा मम
एते भूमिचरा देवा वाग्विषाः सुप्रसादकाः ३८
पुरा कृतयुगे तात चार्वाको नाम राक्षसः
तपस्तेपे महाबाहो बदर्यां बहुवत्सरम् ३९
छन्द्यमानो वरेणाथ ब्रह्मणा स पुनः पुनः
अभयं सर्वभूतेभ्यो वरयामास भारत ४०
द्विजावमानादन्यत्र प्रादाद्वरमनुत्तमम्

अभयं सर्वभूतेभ्यस्ततस्तस्मै जगत्प्रभुः ४१
स तु लब्धवरः पापो देवानमितविक्रमः
राक्षसस्तापयामास तीव्रकर्मा महाबलः ४२
ततो देवाः समेत्याथ ब्रह्माणमिदमब्रुवन्
वधाय रक्षसस्तस्य बलविप्रकृतास्तदा ४३
तानुवाचाव्ययो देवो विहितं तत्र वै मया
यथास्य भविता मृत्युरचिरेणैव भारत ४४
राजा दुर्योधनो नाम सखास्य भविता नृप
तस्य स्नेहावबद्धोऽसौ ब्राह्मणानवमंस्यते ४५
तत्रैनं रुषिता विप्रा विप्रकारप्रधर्षिताः
धक्ष्यन्ति वाग्बलाः पापं ततो नाशं गमिष्यति ४६
स एष निहतः शेते ब्रह्मदण्डेन राक्षसः
चार्वाको नृपतिश्रेष्ठ मा शुचो भरतर्षभ ४७
हतास्ते क्षत्रधर्मेण ज्ञातयस्तव पार्थिव
स्वर्गताश्च महात्मानो वीराः क्षत्रियपुंगवाः ४८
स त्वमातिष्ठ कल्याणं मा ते भूद्ग्लानिरच्युत
शत्रूञ्जहि प्रजा रक्ष द्विजांश्च प्रतिपालय ४९
इति श्रीमहाभारते शान्तिपर्वणि एकोनचत्वारिंशोऽध्यायः ३९

## चत्वारिंशोऽध्यायः

वैशम्पायन उवाच
ततः कुन्तीसुतो राजा गतमन्युर्गतज्वरः
काञ्चने प्राङ्मुखो हृष्टो न्यषीदत्परमासने १
तमेवाभिमुखौ पीठे सेव्यास्तरणसंवृते
सात्यकिर्वासुदेवश्च निषीदतुररिंदमौ २
मध्ये कृत्वा तु राजानं भीमसेनार्जुनावुभौ
निषीदतुर्महात्मानौ श्लक्ष्णयोर्मणिपीठयोः ३
दान्ते शय्यासने शुभ्रे जाम्बूनदविभूषिते
पृथापि सहदेवेन सहास्ते नकुलेन च ४
सुधर्मा विदुरो धौम्यो धृतराष्ट्रश्च कौरवः

निषेदुर्ज्वलनाकारेष्वासनेषु पृथक्पृथक् ५
युयुत्सुः सञ्जयश्चैव गान्धारी च यशस्विनी
धृतराष्ट्रो यतो राजा ततः सर्वे उपाविशन् ६
तत्रोपविष्टो धर्मात्मा श्वेताः सुमनसोऽस्पृशत्
स्वस्तिकानक्षतान्भूमिं सुवर्णं रजतं मणीन् ७
ततः प्रकृतयः सर्वाः पुरस्कृत्य पुरोहितम्
ददृशुर्धर्मराजानमादाय बहु मङ्गलम् ८
पृथिवीं च सुवर्णं च रत्नानि विविधानि च
आभिषेचनिकं भाण्डं सर्वसंभारसंभृतम् ९
काञ्चनौदुम्बरास्तत्र राजताः पृथिवीमयाः
पूर्णकुम्भाः सुमनसो लाजा बर्हींषि गोरसाः १०
शमीपलाशपुंनागाः समिधो मधुसर्पिषी
स्रुव औदुम्बरः शङ्खास्तथा हेमविभूषिताः ११
दाशार्हेणाभ्यनुज्ञातस्तत्र धौम्यः पुरोहितः
प्रागुदक्प्रवणां वेदीं लक्षणेनोपलिप्य ह १२
व्याघ्रचर्मोत्तरे श्लक्ष्णे सर्वतोभद्र आसने
दृढपादप्रतिष्ठाने हुताशनसमत्विषि १३
उपवेश्य महात्मानं कृष्णां च द्रुपदात्मजाम्
जुहाव पावकं धीमान्विधिमन्त्रपुरस्कृतम् १४
अभ्यषिञ्चत्पतिं पृथ्व्याः कुन्तीपुत्रं युधिष्ठिरम्
धृतराष्ट्रश्च राजर्षिः सर्वाः प्रकृतयस्तथा १५
ततोऽनुवादयामासुः पणवानकदुन्दुभीः
धर्मराजोऽपि तत्सर्वं प्रतिजग्राह धर्मतः १६
पूजयामास तांश्चापि विधिवद्भूरिदक्षिणः
ततो निष्कसहस्रेण ब्राह्मणान्स्वस्ति वाचयत्
वेदाध्ययनसंपन्नाञ्शीलवृत्तसमन्वितान् १७
ते प्रीता ब्राह्मणा राजन्स्वस्त्यूचुर्जयमेव च
हंसा इव च नर्दन्तः प्रशशंसुर्युधिष्ठिरम् १८
युधिष्ठिर महाबाहो दिष्ट्या जयसि पाण्डव
दिष्ट्या स्वधर्मं प्राप्तोऽसि विक्रमेण महाद्युते १९

दिष्ट्या गाण्डीवधन्वा च भीमसेनश्च पाण्डवः
त्वं चापि कुशली राजन्माद्रीपुत्रौ च पाण्डवौ २०
मुक्ता वीरक्षयादस्मात्संग्रामान्निहतद्विषः
क्षिप्रमुत्तरकालानि कुरु कार्याणि पाण्डव २१
ततः प्रत्यर्चितः सद्भिर्धर्मराजो युधिष्ठिरः
प्रतिपेदे महद्राज्यं सुहृद्भिः सह भारत २२
इति श्रीमहाभारते शान्तिपर्वणि चत्वारिंशोऽध्यायः ४०

## एकचत्वारिंशोऽध्यायः

वैशम्पायन उवाच
प्रकृतीनां तु तद्वाक्यं देशकालोपसंहितम्
श्रुत्वा युधिष्ठिरो राजाथोत्तरं प्रत्यभाषत १
धन्याः पाण्डुसुता लोके येषां ब्राह्मणपुंगवाः
तथ्यान्वाप्यथ वातथ्यान्गुणानाहुः समागताः २
अनुग्राह्या वयं नूनं भवतामिति मे मतिः
यत्रैवं गुणसंपन्नानस्मान्ब्रूथ विमत्सराः ३
धृतराष्ट्रो महाराजः पिता नो दैवतं परम्
शासनेऽस्य प्रिये चैव स्थेयं मत्प्रियकाङ्क्षिभिः ४
एतदर्थं हि जीवामि कृत्वा ज्ञातिवधं महत्
अस्य शुश्रूषणं कार्यं मया नित्यमतन्द्रिणा ५
यदि चाहमनुग्राह्यो भवतां सुहृदां ततः
धृतराष्ट्रे यथापूर्वं वृत्तिं वर्तितुमर्हथ ६
एष नाथो हि जगतो भवतां च मया सह
अस्यैव पृथिवी कृत्स्ना पाण्डवाः सर्व एव च
एतन्मनसि कर्तव्यं भवद्भिर्वचनं मम ७
अनुगम्य च राजानं यथेष्टं गम्यतामिति
पौरजानपदान्सर्वान्विसृज्य कुरुनन्दनः
यौवराज्येन कौरव्यो भीमसेनमयोजयत् ८
मन्त्रे च निश्चये चैव षाड्गुण्यस्य च चिन्तने
विदुरं बुद्धिसंपन्नं प्रीतिमान्वै समादिशत् ९

कृताकृतपरिज्ञाने तथायव्ययचिन्तने
सञ्जयं योजयामास ऋद्धमृद्धैर्गुणैर्युतम् १०
बलस्य परिमाणे च भक्तवेतनयोस्तथा
नकुलं व्यादिशद्राजा कर्मिणामन्ववेक्षणे ११
परचक्रोपरोधे च दृप्तानां चावमर्दने
युधिष्ठिरो महाराजः फल्गुनं व्यादिदेश ह १२
द्विजानां वेदकार्येषु कार्येष्वन्येषु चैव हि
धौम्यं पुरोधसां श्रेष्ठं व्यादिदेश परंतपः १३
सहदेवं समीपस्थं नित्यमेव समादिशत्
तेन गोप्यो हि नृपतिः सर्वावस्थो विशां पते १४
यान्यानमन्यद्योग्यांश्च येषु येष्विह कर्मसु
तांस्तांस्तेष्वेव युयुजे प्रीयमाणो महीपतिः १५
विदुरं सञ्जयं चैव युयुत्सुं च महामतिम्
अब्रवीत्परवीरघ्नो धर्मात्मा धर्मवत्सलः १६
उत्थायोत्थाय यत्कार्यमस्य राज्ञः पितुर्मम
सर्वं भवद्भिः कर्तव्यमप्रमत्तैर्यथातथम् १७
पौरजानपदानां च यानि कार्याणि नित्यशः
राजानं समनुज्ञाप्य तानि कर्माणि धर्मतः १८
इति श्रीमहाभारते शान्तिपर्वणि एकचत्वारिंशोऽध्यायः ४१

## द्विचत्वारिंशोऽध्यायः

वैशम्पायन उवाच
ततो युधिष्ठिरो राजा ज्ञातीनां ये हता मृधे
श्राद्धानि कारयामास तेषां पृथगुदारधीः १
धृतराष्ट्रो ददौ राजा पुत्राणामौर्ध्वदेहिकम्
सर्वकामगुणोपेतमन्नं गाश्च धनानि च
रत्नानि च विचित्राणि महार्हाणि महायशाः २
युधिष्ठिरस्तु कर्णस्य द्रोणस्य च महात्मनः
धृष्टद्युम्नाभिमन्युभ्यां हैडिम्बस्य च रक्षसः ३
विराटप्रभृतीनां च सुहृदामुपकारिणाम्

द्रुपदद्रौपदेयानां द्रौपद्या सहितो ददौ ४
ब्राह्मणानां सहस्राणि पृथगेकैकमुद्दिशन्
धनैश्च वस्त्रै रत्नैश्च गोभिश्च समतर्पयत् ५
ये चान्ये पृथिवीपाला येषां नास्ति सुहृज्जनः
उद्दिश्योद्दिश्य तेषां च चक्रे राजौर्ध्वदैहिकम् ६
सभाः प्रपाश्च विविधास्तडागानि च पाण्डवः
सुहृदां कारयामास सर्वेषामौर्ध्वदैहिकम् ७
स तेषामनृणो भूत्वा गत्वा लोकेष्ववाच्यताम्
कृतकृत्योऽभवद्राजा प्रजा धर्मेण पालयन् ८
धृतराष्ट्रं यथापूर्वं गान्धारीं विदुरं तथा
सर्वांश्च कौरवामात्यान्भृत्यांश्च समपूजयत् ९
याश्च तत्र स्त्रियः काश्चिद्धतवीरा हतात्मजाः
सर्वास्ताः कौरवो राजा संपूज्यापालयद्घृणी १०
दीनान्धकृपणानां च गृहाच्छादनभोजनैः
आनृशंस्यपरो राजा चकारानुग्रहं प्रभुः ११
स विजित्य महीं कृत्स्नामानृण्यं प्राप्य वैरिषु
निःसपत्नः सुखी राजा विजहार युधिष्ठिरः १२
इति श्रीमहाभारते शान्तिपर्वणि द्विचत्वारिंशोऽध्यायः ४२

## त्रिचत्वारिंशोऽध्यायः

वैशम्पायन उवाच
अभिषिक्तो महाप्राज्ञो राज्यं प्राप्य युधिष्ठिरः
दाशार्हं पुण्डरीकाक्षमुवाच प्राञ्जलि शुचिः १
तव कृष्ण प्रसादेन नयेन च बलेन च
बुद्ध्या च यदुशार्दूल तथा विक्रमणेन च २
पुनः प्राप्तमिदं राज्यं पितृपैतामहं मया
नमस्ते पुण्डरीकाक्ष पुनः पुनररिंदम ३
त्वामेकमाहुः पुरुषं त्वामाहुः सात्वतां पतिम्
नामभिस्त्वां बहुविधैः स्तुवन्ति परमर्षयः ४
विश्वकर्मन्नमस्तेऽस्तु विश्वात्मन्विश्वसंभव

विष्णो जिष्णो हरे कृष्ण वैकुण्ठ पुरुषोत्तम ५
अदित्याः सप्तरात्रं तु पुराणे गर्भतां गतः
पृश्निगर्भस्त्वमेवैकस्त्रियुगं त्वां वदन्त्यपि ६
शुचिश्रवा हृषीकेशो घृतार्चिर्हंस उच्यसे
त्रिचक्षुः शंभुरेकस्त्वं विभुर्दामोदरोऽपि च ७
वराहोऽग्निर्बृहद्भानुर्वृषणस्तार्क्ष्यलक्षणः
अनीकसाहः पुरुषः शिपिविष्ट उरुक्रमः ८
वाचिष्ठ उग्रः सेनानीः सत्यो वाजसनिर्गुहः
अच्युतश्च्यावनोऽरीणां संकृतिर्विकृतिर्वृषः ९
कृतवर्मा त्वमेवाद्रिर्वृषगर्भो वृषाकपिः
सिन्धुक्षिदूर्मिस्त्रिककुत्त्रिधामा त्रिवृदच्युतः १०
सम्राड्विराट् स्वराट्चैव सुरराड्धर्मदो भवः
विभुर्भूरभिभूः कृष्णः कृष्णवर्त्मा त्वमेव च ११
स्विष्टकृद्भिषगावर्तः कपिलस्त्वं च वामनः
यज्ञो ध्रुवः पतंगश्च जयत्सेनस्त्वमुच्यसे १२
शिखण्डी नहुषो बभ्रुर्दिवस्पृक्त्वं पुनर्वसुः
सुबभ्रुरुक्षो रुक्मस्त्वं सुषेणो दुन्दुभिस्तथा १३
गभस्तिनेमिः श्रीपद्मं पुष्करं पुष्पधारणः
ऋभुर्विभुः सर्वसूक्ष्मस्त्वं सावित्रं च पठ्यसे १४
अम्भोनिधिस्त्वं बह्मा त्वं पवित्रं धाम धन्व च
हिरण्यगर्भं त्वामाहुः स्वधा स्वाहा च केशव १५
योनिस्त्वमस्य प्रलयश्च कृष्ण त्वमेवेदं सृजसि विश्वमग्रे
विश्वं चेदं त्वद्वशे विश्वयोने नमोऽस्तु ते शार्ङ्गचक्रासिपाणे १६
एवं स्तुतो धर्मराजेन कृष्णः सभामध्ये प्रीतिमान्पुष्कराक्षः
तमभ्यनन्दद्भारतं पुष्कलाभिर्वाग्भिर्ज्येष्ठं पाण्डवं यादवाग्र्यः १७
इति श्रीमहाभारते शान्तिपर्वणि त्रिचत्वारिंशोऽध्यायः ४३

## चतुश्चत्वारिंशोऽध्यायः

वैशम्पायन उवाच
ततो विसर्जयामास सर्वाः प्रकृतयो नृपः

विविशुश्चाभ्यनुज्ञाता यथास्वानि गृहाणि च १
ततो युधिष्ठिरो राजा भीमं भीमपराक्रमम्
सान्त्वयन्नब्रवीद्धीमानर्जुनं यमजौ तथा २
शत्रुभिर्विविधैः शस्त्रैः कृत्तदेहा महारणे
श्रान्ता भवन्तः सुभृशं तापिताः शोकमन्युभिः ३
अरण्ये दुःखवसतीर्मत्कृते पुरुषोत्तमाः
भवद्भिरनुभूताश्च यथा कुपुरुषैस्तथा ४
यथासुखं यथाजोषं जयोऽयमनुभूयताम्
विश्रान्ताँल्लब्धविज्ञानाञ्श्वः समेतास्मि वः पुनः ५
ततो दुर्योधनगृहं प्रासादैरुपशोभितम्
बहुरत्नसमाकीर्णं दासीदाससमाकुलम् ६
धृतराष्ट्राभ्यनुज्ञातं भ्रात्रा दत्तं वृकोदरः
प्रतिपेदे महाबाहुर्मन्दरं मघवानिव ७
यथा दुर्योधनगृहं तथा दुःशासनस्य च
प्रासादमालासंयुक्तं हेमतोरणभूषितम् ८
दासीदाससुसंपूर्णं प्रभूतधनधान्यवत्
प्रतिपेदे महाबाहुरर्जुनो राजशासनात् ९
दुर्मर्षणस्य भवनं दुःशासनगृहाद्वरम्
कुबेरभवनप्रख्यं मणिहेमविभूषितम् १०
नकुलाय वरार्हाय कर्शिताय महावने
ददौ प्रीतो महाराज धर्मराजो युधिष्ठिरः ११
दुर्मुखस्य च वेश्माग्र्यं श्रीमत्कनकभूषितम्
पूर्णं पद्मदलाक्षीणां स्त्रीणां शयनसंकुलम् १२
प्रददौ सहदेवाय सततं प्रियकारिणे
मुमुदे तच्च लब्ध्वा स कैलासं धनदो यथा १३
युयुत्सुर्विदुरश्चैव सञ्जयश्च महाद्युतिः
सुधर्मा चैव धौम्यश्च यथास्वं जग्मुरालयान् १४
सह सात्यकिना शौरिरर्जुनस्य निवेशनम्
विवेश पुरुषव्याघ्रो व्याघ्रो गिरिगुहामिव १५
तत्र भक्षान्नपानैस्ते समुपेताः सुखोषिताः

सुखप्रबुद्धा राजानमुपतस्थुर्युधिष्ठिरम् १६
इति श्रीमहाभारते शान्तिपर्वणि चतुश्चत्वारिंशोऽध्यायः ४४

## पञ्चचत्वारिंशोऽध्यायः

जनमेजय उवाच
प्राप्य राज्यं महातेजा धर्मराजो युधिष्ठिरः
यदन्यदकरोद्विप्र तन्मे वक्तुमिहार्हसि १
भगवान्वा हृषीकेशस्त्रैलोक्यस्य परो गुरुः
ऋषे यदकरोद्वीरस्तच्च व्याख्यातुमर्हसि २
वैशम्पायन उवाच
शृणु राजेन्द्र तत्त्वेन कीर्त्यमानं मयानघ
वासुदेवं पुरस्कृत्य यदकुर्वत पाण्डवाः ३
प्राप्य राज्यं महातेजा धर्मराजो युधिष्ठिरः
चातुर्वर्ण्यं यथायोगं स्वे स्वे धर्मे न्यवेशयत् ४
ब्राह्मणानां सहस्रं च स्नातकानां महात्मनाम्
सहस्रनिष्कमेकैकं वाचयामास पाण्डवः ५
तथानुजीविनो भृत्यान्संश्रितानतिथीनपि
कामैः संतर्पयामास कृपणांस्तर्ककानपि ६
पुरोहिताय धौम्याय प्रादादयुतशः स गाः
धनं सुवर्णं रजतं वासांसि विविधानि च ७
कृपाय च महाराज गुरुवृत्तिमवर्तत
विदुराय च धर्मात्मा पूजां चक्रे यतव्रतः ८
भक्ष्यान्नपानैर्विविधैर्वासोभिः शयनासनैः
सर्वान्संतोषयामास संश्रितान्ददतां वरः ९
लब्धप्रशमनं कृत्वा स राजा राजसत्तम
युयुत्सोर्धार्तराष्ट्रस्य पूजां चक्रे महायशाः १०
धृतराष्ट्राय तद्राज्यं गान्धार्यै विदुराय च
निवेद्य स्वस्थवद्राजन्नास्ते राजा युधिष्ठिरः ११
तथा सर्वं स नगरं प्रसाद्य जनमेजय
वासुदेवं महात्मानमभ्यगच्छत्कृताञ्जलि १२

ततो महति पर्यङ्के मणिकाञ्चनभूषिते
ददर्श कृष्णमासीनं नीलं मेराविवाम्बुदम् १३
जाज्वल्यमानं वपुषा दिव्याभरणभूषितम्
पीतकौशेयसंवीतं हेम्नीवोपहितं मणिम् १४
कौस्तुभेन उरःस्थेन मणिनाभिविराजितम्
उद्यतेवोदयं शैलं सूर्येणाप्तकिरीटिनम्
नौपम्यं विद्यते यस्य त्रिषु लोकेषु किंचन १५
सोऽभिगम्य महात्मानं विष्णुं पुरुषविग्रहम्
उवाच मधुराभाषः स्मितपूर्वमिदं तदा १६
सुखेन ते निशा कच्चिद्व्युष्टा बुद्धिमतां वर
कच्चिज्ज्ञानानि सर्वाणि प्रसन्नानि तवाच्युत १७
तव ह्याश्रित्य तां देवीं बुद्धिं बुद्धिमतां वर
वयं राज्यमनुप्राप्ताः पृथिवी च वशे स्थिता १८
भवत्प्रसादाद्भगवंस्त्रिलोकगतिविक्रम
जयः प्राप्तो यशश्चाग्र्यं न च धर्माच्च्युता वयम् १९
तं तथा भाषमाणं तु धर्मराजं युधिष्ठिरम्
नोवाच भगवान्किंचिद्ध्यानमेवान्वपद्यत २०
इति श्रीमहाभारते शान्तिपर्वणि पञ्चचत्वारिंशोऽध्यायः ४५

## षट्चत्वारिंशोऽध्यायः

युधिष्ठिर उवाच
किमिदं परमाश्चर्यं ध्यायस्यमितविक्रम
कच्चिल्लोकत्रयस्यास्य स्वस्ति लोकपरायण १
चतुर्थं ध्यानमार्गं त्वमालम्ब्य पुरुषोत्तम
अपक्रान्तो यतो देव तेन मे विस्मितं मनः २
निगृहीतो हि वायुस्ते पञ्चकर्मा शरीरगः
इन्द्रियाणि च सर्वाणि मनसि स्थापितानि ते ३
इन्द्रियाणि मनश्चैव बुद्धौ संवेशितानि ते
सर्वश्चैव गणो देव क्षेत्रज्ञे ते निवेशितः ४
नेङ्गन्ति तव रोमाणि स्थिरा बुद्धिस्तथा मनः

स्थाणुकुड्यशिलाभूतो निरीहश्चासि माधव ५
यथा दीपो निवातस्थो निरिङ्गो ज्वलतेऽच्युत
तथासि भगवन्देव निश्चलो दृढनिश्चयः ६
यदि श्रोतुमिहार्हामि न रहस्यं च ते यदि
छिन्धि मे संशयं देव प्रपन्नायाभियाचते ७
त्वं हि कर्ता विकर्ता च त्वं क्षरं चाक्षरं च हि
अनादिनिधनश्चाद्यस्त्वमेव पुरुषोत्तम ८
त्वत्प्रपन्नाय भक्ताय शिरसा प्रणताय च
ध्यानस्यास्य यथातत्त्वं ब्रूहि धर्मभृतां वर ९
वैशम्पायन उवाच
ततः स्वगोचरे न्यस्य मनो बुद्धीन्द्रियाणि च
स्मितपूर्वमुवाचेदं भगवान्वासवानुजः १०
शरतल्पगतो भीष्मः शाम्यन्निव हुताशनः
मां ध्याति पुरुषव्याघ्रस्ततो मे तद्गतं मनः ११
यस्य ज्यातलनिर्घोषं विस्फूर्जितमिवाशनेः
न सहेद्देवराजोऽपि तमस्मि मनसा गतः १२
येनाभिद्रुत्य तरसा समस्तं राजमण्डलम्
ऊढास्तिस्रः पुरा कन्यास्तमस्मि मनसा गतः १३
त्रयोविंशतिरात्रं यो योधयामास भार्गवम्
न च रामेण निस्तीर्णस्तमस्मि मनसा गतः १४
यं गङ्गा गर्भविधिना धारयामास पार्थिवम्
वसिष्ठशिष्यं तं तात मनसास्मि गतो नृप १५
दिव्यास्त्राणि महातेजा यो धारयति बुद्धिमान्
साङ्गांश्च चतुरो वेदांस्तमस्मि मनसा गतः १६
रामस्य दयितं शिष्यं जामदग्न्यस्य पाण्डव
आधारं सर्वविद्यानां तमस्मि मनसा गतः १७
एकीकृत्येन्द्रियग्रामं मनः संयम्य मेधया
शरणं मामुपागच्छत्ततो मे तद्गतं मनः १८
स हि भूतं च भव्यं च भवच्च पुरुषर्षभ
वेत्ति धर्मभृतां श्रेष्ठस्ततो मे तद्गतं मनः १९

तस्मिन्हि पुरुषव्याघ्रे कर्मभिः स्वैर्दिवं गते
भविष्यति मही पार्थ नष्टचन्द्रेव शर्वरी २०
तद्युधिष्ठिर गाङ्गेयं भीष्मं भीमपराक्रमम्
अभिगम्योपसंगृह्य पृच्छ यत्ते मनोगतम् २१
चातुर्वेद्यं चातुर्होत्रं चातुराश्रम्यमेव च
चातुर्वर्ण्यस्य धर्मं च पृच्छैनं पृथिवीपते २२
तस्मिन्नस्तमिते भीष्मे कौरवाणां धुरंधरे
ज्ञानान्यल्पीभविष्यन्ति तस्मात्त्वां चोदयाम्यहम् २३
तच्छ्रुत्वा वासुदेवस्य तथ्यं वचनमुत्तमम्
साश्रुकण्ठः स धर्मज्ञो जनार्दनमुवाच ह २४
यद्भवानाह भीष्मस्य प्रभावं प्रति माधव
तथा तन्नात्र संदेहो विद्यते मम मानद २५
महाभाग्यं हि भीष्मस्य प्रभावश्च महात्मनः
श्रुतं मया कथयतां ब्राह्मणानां महात्मनाम् २६
भवांश्च कर्ता लोकानां यद्ब्रवीत्यरिसूदन
तथा तदनभिध्येयं वाक्यं यादवनन्दन २७
यतस्त्वनुग्रहकृता बुद्धिस्ते मयि माधव
त्वामग्रतः पुरस्कृत्य भीष्मं पश्यामहे वयम् २८
आवृत्ते भगवत्यर्के स हि लोकान्गमिष्यति
त्वद्दर्शनं महाबाहो तस्मादर्हति कौरवः २९
तव ह्याद्यस्य देवस्य क्षरस्यैवाक्षरस्य च
दर्शनं तस्य लाभः स्यात्त्वं हि ब्रह्ममयो निधिः ३०
श्रुत्वैतद्धर्मराजस्य वचनं मधुसूदनः
पार्श्वस्थं सात्यकिं प्राह रथो मे युज्यतामिति ३१
सात्यकिस्तूपनिष्क्रम्य केशवस्य समीपतः
दारुकं प्राह कृष्णस्य युज्यतां रथ इत्युत ३२
स सात्यकेराशु वचो निशम्य रथोत्तमं काञ्चनभूषिताङ्गम्
मसारगल्वर्कमयैर्विभङ्गैर्विभूषितं हेमपिनद्धचक्रम् ३३
दिवाकरांशुप्रभमाशुगामिनं विचित्रनानामणिरत्नभूषितम्
नवोदितं सूर्यमिव प्रतापिनं विचित्रतार्क्ष्यध्वजिनं पताकिनम् ३४

सुग्रीवसैन्यप्रमुखैर्वराश्वैर्मनोजवैः काञ्चनभूषिताङ्गैः
सुयुक्तमावेदयदच्युताय कृताञ्जलिर्दारुको राजसिंह ३५
इति श्रीमहाभारते शान्तिपर्वणि षट्चत्वारिंशोऽध्यायः ४६

सप्त चत्वारिंशोऽध्यायः

जनमेजय उवाच
शरतल्पे शयानस्तु भरतानां पितामहः
कथमुत्सृष्टवान्देहं कं च योगमधारयत् १
वैशम्पायन उवाच
शृणुष्वावहितो राजञ्शुचिर्भूत्वा समाहितः
भीष्मस्य कुरुशार्दूल देहोत्सर्गं महात्मनः २
निवृत्तमात्रे त्वयन उत्तरे वै दिवाकरे
समावेशयदात्मानमात्मन्येव समाहितः ३
विकीर्णांशुरिवादित्यो भीष्मः शरशतैश्चितः
शिश्ये परमया लक्ष्म्या वृतो ब्राह्मणसत्तमैः ४
व्यासेन वेदश्रवसा नारदेन सुरर्षिणा
देवस्थानेन वात्स्येन तथाश्मकसुमन्तुना ५
एतैश्चान्यैर्मुनिगणैर्महाभागैर्महात्मभिः
श्रद्धादमपुरस्कारैर्वृतश्चन्द्र इव ग्रहैः ६
भीष्मस्तु पुरुषव्याघ्रः कर्मणा मनसा गिरा
शरतल्पगतः कृष्णं प्रदध्यौ प्राञ्जलि स्थितः ७
स्वरेण पुष्टनादेन तुष्टाव मधुसूदनम्
योगेश्वरं पद्मनाभं विष्णुं जिष्णुं जगत्पतिम् ८
कृताञ्जलि शुचिर्भूत्वा वाग्विदां प्रवरः प्रभुम्
भीष्मः परमधर्मात्मा वासुदेवमथास्तुवत् ९
आरिराधयिषुः कृष्णं वाचं जिगमिषामि याम्
तया व्याससमासिन्या प्रीयतां पुरुषोत्तमः १०
शुचिः शुचिषदं हंसं तत्परः परमेष्ठिनम्
युक्त्वा सर्वात्मनात्मानं तं प्रपद्ये प्रजापतिम् ११
यस्मिन्विश्वानि भूतानि तिष्ठन्ति च विशन्ति च

गुणभूतानि भूतेशे सूत्रे मणिगणा इव १२
यस्मिन्नित्ये तते तन्तौ दृढे स्रगिव तिष्ठति
सदसद्ग्रथितं विश्वं विश्वाङ्गे विश्वकर्मणि १३
हरिं सहस्रशिरसं सहस्रचरणेक्षणम्
प्राहुर्नारायणं देवं यं विश्वस्य परायणम् १४
अणीयसामणीयांसं स्थविष्ठं च स्थवीयसाम्
गरीयसां गरिष्ठं च श्रेष्ठं च श्रेयसामपि १५
यं वाकेष्वनुवाकेषु निषत्सूपनिषत्सु च
गृणन्ति सत्यकर्माणं सत्यं सत्येषु सामसु १६
चतुर्भिश्चतुरात्मानं सत्वस्थं सात्वतां पतिम्
यं दिव्यैर्देवमर्चन्ति गुह्यैः परमनामभिः १७
यं देवं देवकी देवी वसुदेवादजीजनत्
भौमस्य ब्रह्मणो गुप्त्यै दीप्तमग्निमिवारणिः १८
यमनन्यो व्यपेताशीरात्मानं वीतकल्मषम्
इष्ट्वानन्त्याय गोविन्दं पश्यत्यात्मन्यवस्थितम् १९
पुराणे पुरुषः प्रोक्तो ब्रह्मा प्रोक्तो युगादिषु
क्षये संकर्षणः प्रोक्तस्तमुपास्यमुपास्महे २०
अतिवाय्विन्द्रकर्माणमतिसूर्याग्नितेजसम्
अतिबुद्धीन्द्रियात्मानं तं प्रपद्ये प्रजापतिम् २१
यं वै विश्वस्य कर्तारं जगतस्तस्थुषां पतिम्
वदन्ति जगतोऽध्यक्षमक्षरं परमं पदम् २२
हिरण्यवर्णं यं गर्भमदितिर्दैत्यनाशनम्
एकं द्वादशधा जज्ञे तस्मै सूर्यात्मने नमः २३
शुक्ले देवान्पितॄन्कृष्णे तर्पयत्यमृतेन यः
यश्च राजा द्विजातीनां तस्मै सोमात्मने नमः २४
महतस्तमसः पारे पुरुषं ज्वलनद्युतिम्
यं ज्ञात्वा मृत्युमत्येति तस्मै ज्ञेयात्मने नमः २५
यं बृहन्तं बृहत्युक्थे यमग्नौ यं महाध्वरे
यं विप्रसंघा गायन्ति तस्मै वेदात्मने नमः २६
ऋग्यजुःसामधामानं दशार्धहविराकृतिम्

यं सप्ततन्तुं तन्वन्ति तस्मै यज्ञात्मने नमः २७
यः सुपर्णो यजुर्नाम छन्दोगात्रस्त्रिवृच्छिराः
रथंतरबृहत्यक्षस्तस्मै स्तोत्रात्मने नमः २८
यः सहस्रसवे सत्रे जज्ञे विश्वसृजामृषिः
हिरण्यवर्णः शकुनिस्तस्मै हंसात्मने नमः २९
पदाङ्गं संधिपर्वाणं स्वरव्यञ्जनलक्षणम्
यमाहुरक्षरं दिव्यं तस्मै वागात्मने नमः ३०
यश्चिनोति सतां सेतुमृतेनामृतयोनिना
धर्मार्थव्यवहाराङ्गैस्तस्मै सत्यात्मने नमः ३१
यं पृथग्धर्मचरणाः पृथग्धर्मफलैषिणः
पृथग्धर्मैः समर्चन्ति तस्मै धर्मात्मने नमः ३२
यं तं व्यक्तस्थमव्यक्तं विचिन्वन्ति महर्षयः
क्षेत्रे क्षेत्रज्ञमासीनं तस्मै क्षेत्रात्मने नमः ३३
यं दृगात्मानमात्मस्थं वृतं षोडशभिर्गुणैः
प्राहुः सप्तदशं सांख्यास्तस्मै सांख्यात्मने नमः ३४
यं विनिद्रा जितश्वासाः सत्त्वस्थाः संयतेन्द्रियाः
ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः ३५
अपुण्यपुण्योपरमे यं पुनर्भवनिर्भयाः
शान्ताः संन्यासिनो यान्ति तस्मै मोक्षात्मने नमः ३६
योऽसौ युगसहस्रान्ते प्रदीप्तार्चिर्विभावसुः
संभक्षयति भूतानि तस्मै घोरात्मने नमः ३७
संभक्ष्य सर्वभूतानि कृत्वा चैकार्णवं जगत्
बालः स्थपिति यश्चैकस्तस्मै मायात्मने नमः ३८
सहस्रशिरसे तस्मै पुरुषायामितात्मने
चतुःसमुद्रपर्यायियोगनिद्रात्मने नमः ३९
अजस्य नाभावध्येकं यस्मिन्विश्वं प्रतिष्ठितम्
पुष्करं पुष्कराक्षस्य तस्मै पद्मात्मने नमः ४०
यस्य केशेषु जीमूता नद्यः सर्वाङ्गसंधिषु
कुक्षौ समुद्राश्चत्वारस्तस्मै तोयात्मने नमः ४१
युगेष्वावर्तते योऽशैर्दिनर्त्वयनहायनैः

सर्गप्रलययोः कर्ता तस्मै कालात्मने नमः ४२
ब्रह्म वक्त्रं भुजौ क्षत्रं कृत्स्नमूरूदरं विशः
पादौ यस्याश्रिताः शूद्रास्तस्मै वर्णात्मने नमः ४३
यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः
सूर्यश्चक्षुर्दिशः श्रोत्रे तस्मै लोकात्मने नमः ४४
विषये वर्तमानानां यं तं वैशेषिकैर्गुणैः
प्राहुर्विषयगोप्तारं तस्मै गोप्त्रात्मने नमः ४५
अन्नपानेन्धनमयो रसप्राणविवर्धनः
यो धारयति भूतानि तस्मै प्राणात्मने नमः ४६
परः कालात्परो यज्ञात्परः सदसतोश्च यः
अनादिरादिर्विश्वस्य तस्मै विश्वात्मने नमः ४७
यो मोहयति भूतानि स्नेहरागानुबन्धनैः
सर्गस्य रक्षणार्थाय तस्मै मोहात्मने नमः ४८
आत्मज्ञानमिदं ज्ञानं ज्ञात्वा पञ्चस्ववस्थितम्
यं ज्ञानिनोऽधिगच्छन्ति तस्मै ज्ञानात्मने नमः ४९
अप्रमेयशरीराय सर्वतोऽनन्तचक्षुषे
अपारपरिमेयाय तस्मै चिन्त्यात्मने नमः ५०
जटिने दण्डिने नित्यं लम्बोदरशरीरिणे
कमण्डलुनिषङ्गाय तस्मै ब्रह्मात्मने नमः ५१
शूलिने त्रिदशेशाय त्र्यम्बकाय महात्मने
भस्मदिग्धोर्ध्वलिङ्गाय तस्मै रुद्रात्मने नमः ५२
पञ्चभूतात्मभूताय भूतादिनिधनात्मने
अक्रोधद्रोहमोहाय तस्मै शान्तात्मने नमः ५३
यस्मिन्सर्वं यतः सर्वं यः सर्वं सर्वतश्च यः
यश्च सर्वमयो नित्यं तस्मै सर्वात्मने नमः ५४
विश्वकर्मन्नमस्तेऽस्तु विश्वात्मन्विश्वसंभव
अपवर्गोऽसि भूतानां पञ्चानां परतः स्थितः ५५
नमस्ते त्रिषु लोकेषु नमस्ते परतस्त्रिषु
नमस्ते दिक्षु सर्वासु त्वं हि सर्वपरायणम् ५६
नमस्ते भगवन्विष्णो लोकानां प्रभवाप्यय

त्वं हि कर्ता हृषीकेश संहर्ता चापराजितः ५७
तेन पश्यामि ते दिव्यान्भावान्हि त्रिषु वर्त्मसु
तच्च पश्यामि तत्त्वेन यत्ते रूपं सनातनम् ५८
दिवं ते शिरसा व्याप्तं पद्भ्यां देवी वसुंधरा
विक्रमेण त्रयो लोकाः पुरुषोऽसि सनातनः ५९
अतसीपुष्पसंकाशं पीतवाससमच्युतम्
ये नमस्यन्ति गोविन्दं न तेषां विद्यते भयम् ६०
यथा विष्णुमयं सत्यं यथा विष्णुमयं हविः
यथा विष्णुमयं सर्वं पाप्मा मे नश्यतां तथा ६१
त्वां प्रपन्नाय भक्ताय गतिमिष्टां जिगीषवे
यच्छ्रेयः पुण्डरीकाक्ष तद्ध्यायस्व सुरोत्तम ६२
इति विद्यातपोयोनिरयोनिर्विष्णुरीडितः
वाग्यज्ञेनार्चितो देवः प्रीयतां मे जनार्दनः ६३
एतावदुक्त्वा वचनं भीष्मस्तद्गतमानसः
नम इत्येव कृष्णाय प्रणाममकरोत्तदा ६४
अभिगम्य तु योगेन भक्तिं भीष्मस्य माधवः
त्रैकाल्यदर्शनं ज्ञानं दिव्यं दातुं ययौ हरिः ६५
तस्मिन्नुपरते शब्दे ततस्ते ब्रह्मवादिनः
भीष्मं वाग्भिर्बाष्पकण्ठास्तमानर्चुर्महामतिम् ६६
ते स्तुवन्तश्च विप्राग्र्याः केशवं पुरुषोत्तमम्
भीष्मं च शनकैः सर्वे प्रशशंसुः पुनः पुनः ६७
विदित्वा भक्तियोगं तु भीष्मस्य पुरुषोत्तमः
सहसोत्थाय संहृष्टो यानमेवान्वपद्यत ६८
केशवः सात्यकिश्चैव रथेनैकेन जग्मतुः
अपरेण महात्मानौ युधिष्ठिरधनंजयौ ६९
भीमसेनो यमौ चोभौ रथमेकं समास्थितौ
कृपो युयुत्सुः सूतश्च सञ्जयश्चापरं रथम् ७०
ते रथैर्नगराकारैः प्रयाताः पुरुषर्षभाः
नेमिघोषेण महता कम्पयन्तो वसुंधराम् ७१
ततो गिरः पुरुषवरस्तवान्विता द्विजेरिताः पथि सुमनाः स शुश्रुवे

कृताञ्जलि प्रणतमथापरं जनं स केशिहा मुदितमनाभ्यनन्दत ७२
इति श्रीमहाभारते शान्तिपर्वणि सप्तचत्वारिंशोऽध्यायः ४७

## अष्टचत्वारिंशोऽध्यायः

वैशम्पायन उवाच
ततः स च हृषीकेशः स च राजा युधिष्ठिरः
कृपादयश्च ते सर्वे चत्वारः पाण्डवाश्च ह १
रथैस्ते नगराकारैः पताकाध्वजशोभितैः
ययुराशु कुरुक्षेत्रं वाजिभिः शीघ्रगामिभिः २
तेऽवतीर्य कुरुक्षेत्रं केशमज्जास्थिसंकुलम्
देहन्यासः कृतो यत्र क्षत्रियैस्तैर्महात्मभिः ३
गजाश्वदेहास्थिचयैः पर्वतैरिव संचितम्
नरशीर्षकपालैश्च शङ्खैरिव समाचितम् ४
चितासहस्रैर्निचितं वर्मशस्त्रसमाकुलम्
आपानभूमिं कालस्य तदा भुक्तोज्झितामिव ५
भूतसंघानुचरितं रक्षोगणनिषेवितम्
पश्यन्तस्ते कुरुक्षेत्रं ययुराशु महारथाः ६
गच्छन्नेव महाबाहुः सर्वयादवनन्दनः
युधिष्ठिराय प्रोवाच जामदग्न्यस्य विक्रमम् ७
अमी रामह्रदाः पञ्च दृश्यन्ते पार्थ दूरतः
येषु संतर्पयामास पूर्वान्क्षत्रियशोणितैः ८
त्रिःसप्तकृत्वो वसुधां कृत्वा निःक्षत्रियां प्रभुः
इहेदानीं ततो रामः कर्मणो विरराम ह ९
युधिष्ठिर उवाच
त्रिःसप्तकृत्वः पृथिवी कृता निःक्षत्रिया तदा
रामेणेति यदात्थ त्वमत्र मे संशयो महान् १०
क्षत्रबीजं यदा दग्धं रामेण यदुपुंगव
कथं भूयः समुत्पत्तिः क्षत्रस्यामितविक्रम ११
महात्मना भगवता रामेण यदुपुंगव
कथमुत्सादितं क्षत्रं कथं वृद्धिं पुनर्गतम् १२

महाभारतयुद्धे हि कोटिशः क्षत्रिया हताः
तथाभूच्च मही कीर्णा क्षत्रियैर्वदतां वर १३
एवं मे छिन्धि वार्ष्णेय संशयं तार्क्ष्यकेतन
आगमो हि परः कृष्ण त्वत्तो नो वासवानुज १४
वैशम्पायन उवाच
ततो व्रजन्नेव गदाग्रजः प्रभुः शशंस तस्मै निखिलेन तत्त्वतः
युधिष्ठिरायाप्रतिमौजसे तदा यथाभवत्क्षत्रियसंकुला मही १५
इति श्रीमहाभारते शान्तिपर्वणि अष्टचत्वारिंशोऽध्यायः ४८

## एकोन पञ्चाशोऽध्यायः

वासुदेव उवाच
शृणु कौन्तेय रामस्य मया यावत्परिश्रुतम्
महर्षीणां कथयतां कारणं तस्य जन्म च १
यथा च जामदग्न्येन कोटिशः क्षत्रिया हताः
उद्भूता राजवंशेषु ये भूयो भारते हताः २
जह्नोरजह्नुस्तनयो बल्लवस्तस्य चात्मजः
कुशिको नाम धर्मज्ञस्तस्य पुत्रो महीपतिः ३
उग्रं तपः समातिष्ठत्सहस्राक्षसमो भुवि
पुत्रं लभेयमजितं त्रिलोकेश्वरमित्युत ४
तमुग्रतपसं दृष्ट्वा सहस्राक्षः पुरंदरः
समर्थः पुत्रजनने स्वयमेवैत्य भारत ५
पुत्रत्वमगमद्राजंस्तस्य लोकेश्वरेश्वरः
गाधिर्नामाभवत्पुत्रः कौशिकः पाकशासनः ६
तस्य कन्याभवद्राजन्नाम्ना सत्यवती प्रभो
तां गाधिः कविपुत्राय सोर्चीकाय ददौ प्रभुः ७
ततः प्रीतस्तु कौन्तेय भार्गवः कुरुनन्दन
पुत्रार्थे श्रपयामास चरुं गाधेस्तथैव च ८
आहूय चाह तां भार्यामृचीको भार्गवस्तदा
उपयोज्यश्चरुरयं त्वया मात्राप्ययं तव ९
तस्या जनिष्यते पुत्रो दीप्तिमान्क्षत्रियर्षभः

अजय्यः क्षत्रियैर्लोके क्षत्रियर्षभसूदनः १०
तवापि पुत्रं कल्याणि धृतिमन्तं तपोन्वितम्
शमात्मकं द्विजश्रेष्ठं चरुरेष विधास्यति ११
इत्येवमुक्त्वा तां भार्यामृचीको भृगुनन्दनः
तपस्यभिरतो धीमाञ्जगामारण्यमेव ह १२
एतस्मिन्नेव काले तु तीर्थयात्रापरो नृपः
गाधिः सदारः संप्राप्त ऋचीकस्याश्रमं प्रति १३
चरुद्वयं गृहीत्वा तु राजन्सत्यवती तदा
भर्तुर्वाक्यादथाव्यग्रा मात्रे हृष्टा न्यवेदयत् १४
माता तु तस्याः कौन्तेय दुहित्रे स्वं चरुं ददौ
तस्याश्चरुमथाज्ञातमात्मसंस्थं चकार ह १५
अथ सत्यवती गर्भं क्षत्रियान्तकरं तदा
धारयामास दीप्तेन वपुषा घोरदर्शनम् १६
तामृचीकस्तदा दृष्ट्वा ध्यानयोगेन वै ततः
अब्रवीद्राजशार्दूल स्वां भार्यां वरवर्णिनीम् १७
मात्रासि व्यंसिता भद्रे चरुव्यत्यासहेतुना
जनिष्यते हि ते पुत्रः क्रूरकर्मा महाबलः १८
जनिष्यते हि ते भ्राता ब्रह्मभूतस्तपोधनः
विश्वं हि ब्रह्म तपसा मया तत्र समर्पितम् १९
सैवमुक्ता महाभागा भर्त्रा सत्यवती तदा
पपात शिरसा तस्मै वेपन्ती चाब्रवीदिदम् २०
नार्होऽसि भगवन्नद्य वक्तुमेवंविधं वचः
ब्राह्मणापसदं पुत्रं प्राप्स्यसीति महामुने २१
ऋचीक उवाच
नैष संकल्पितः कामो मया भद्रे तथा त्वयि
उग्रकर्मा भवेत्पुत्रश्चरुर्माता च कारणम् २२
सत्यवत्युवाच
इच्छँल्लोकानपि मुने सृजेथाः किं पुनर्मम
शमात्मकमृजुं पुत्रं लभेयं जपतां वर २३
ऋचीक उवाच

नोक्तपूर्वं मया भद्रे स्वैरेष्वप्यनृतं वचः
किमुताग्निं समाधाय मन्त्रवच्चरुसाधने २४
सत्यवत्युवाच
काममेवं भवेत्पौत्रो ममेह तव चैव ह
शमात्मकमृजुं पुत्रं लभेयं जपतां वर २५
ऋचीक उवाच
पुत्रे नास्ति विशेषो मे पौत्रे वा वरवर्णिनि
यथा त्वयोक्तं तु वचस्तथा भद्रे भविष्यति २६
वासुदेव उवाच
ततः सत्यवती पुत्रं जनयामास भार्गवम्
तपस्यभिरतं शान्तं जमदग्निं शमात्मकम् २७
विश्वामित्रं च दायादं गाधिः कुशिकनन्दनः
प्राप ब्रह्मर्षिसमितं विश्वेन ब्रह्मणा युतम् २८
आर्चीको जनयामास जमदग्निः सुदारुणम्
सर्वविद्यान्तगं श्रेष्ठं धनुर्वेदे च पारगम्
रामं क्षत्रियहन्तारं प्रदीप्तमिव पावकम् २९
एतस्मिन्नेव काले तु कृतवीर्यात्मजो बली
अर्जुनो नाम तेजस्वी क्षत्रियो हैहयान्वयः ३०
ददाह पृथिवीं सर्वां सप्तद्वीपां सपत्तनाम्
स्वबाहस्त्रबलेनाजौ धर्मेण परमेण च ३१
तृषितेन स कौरव्य भिक्षितश्चित्रभानुना
सहस्रबाहुर्विक्रान्तः प्रादाद्भिक्षामथाग्नये ३२
ग्रामान्पुराणि घोषांश्च पत्तनानि च वीर्यवान्
जज्वाल तस्य बाणैस्तु चित्रभानुर्दिधक्षया ३३
स तस्य पुरुषेन्द्रस्य प्रभावेन महातपाः
ददाह कार्तवीर्यस्य शैलानथ वनानि च ३४
स शून्यमाश्रमारण्यं वरुणस्यात्मजस्य तत्
ददाह पवनेनेद्धश्चित्रभानुः सहैहयः ३५
आपवस्तं ततो रोषाच्छशापार्जुनमच्युत
दग्धेऽश्रमे महाराज कार्तवीर्येण वीर्यवान् ३६

त्वया न वर्जितं मोहाद्यस्माद्वनमिदं मम
दग्धं तस्माद्रणे रामो बाहूंस्ते छेत्स्यतेऽजुन ३७
अर्जुनस्तु महाराज बली नित्यं शमात्मकः
ब्रह्मण्यश्च शरण्यश्च दाता शूरश्च भारत ३८
तस्य पुत्राः सुबलिनः शापेनासन्पितुर्वधे
निमित्तमवलिप्ता वै नृशंसाश्चैव नित्यदा ३९
जमदग्निधेन्वास्ते वत्समानिन्युर्भरतर्षभ
अज्ञातं कार्तवीर्यस्य हैहयेन्द्रस्य धीमतः ४०
ततोऽजुनस्य बाहूंस्तु छित्त्वा वै पौरुषान्वितः
तं रुवन्तं ततो वत्सं जामदग्न्यः स्वमाश्रमम्
प्रत्यानयत राजेन्द्र तेषामन्तःपुरात्प्रभुः ४१
अर्जुनस्य सुतास्ते तु संभूयाबुद्धयस्तदा
गत्वाश्रममसंबुद्धं जमदग्नेर्महात्मनः ४२
अपातयन्त भल्लाग्रैः शिरः कायान्नराधिप
समित्कुशार्थं रामस्य निर्गतस्य महात्मनः ४३
ततः पितृवधामर्षाद्रामः परममन्युमान्
निःक्षत्रियां प्रतिश्रुत्य महीं शस्त्रमगृह्णत ४४
ततः स भृगुशार्दूलः कार्तवीर्यस्य वीर्यवान्
विक्रम्य निजघानाशु पुत्रान्पौत्रांश्च सर्वशः ४५
स हैहयसहस्राणि हत्वा परममन्युमान्
चकार भार्गवो राजन्महीं शोणितकर्दमाम् ४६
स तथा तु महातेजाः कृत्वा निःक्षत्रियां महीम्
कृपया परयाविष्टो वनमेव जगाम ह ४७
ततो वर्षसहस्रेषु समतीतेषु केषुचित्
क्षोभं संप्राप्तवांस्तीव्रं प्रकृत्या कोपनः प्रभुः ४८
विश्वामित्रस्य पौत्रस्तु रैभ्यपुत्रो महातपाः
परावसुर्महाराज क्षिप्त्वाह जनसंसदि ४९
ये ते ययातिपतने यज्ञे सन्तः समागताः
प्रतर्दनप्रभृतयो राम किं क्षत्रिया न ते ५०
मिथ्याप्रतिज्ञो रामः त्वं कत्थसे जनसंसदि

भयात्क्षत्रियवीराणां पर्वतं समुपाश्रितः ५१
स पुनः क्षत्रियशतैः पृथिवीमनुसंतताम्
परावसोस्तदा श्रुत्वा शस्त्रं जग्राह भार्गवः ५२
ततो ये क्षत्रिया राजञ्शतशस्तेन जीविताः
ते विवृद्धा महावीर्याः पृथिवीपतयोऽभवन् ५३
स पुनस्ताञ्जघानाशु बालानपि नराधिप
गर्भस्थैस्तु मही व्याप्ता पुनरेवाभवत्तदा ५४
जातं जातं स गर्भं तु पुनरेव जघान ह
अरक्षंश्च सुतान्कांश्चित्तदा क्षत्रिययोषितः ५५
त्रिःसप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां प्रभुः
दक्षिणामश्वमेधान्ते कश्यपायाददत्ततः ५६
क्षत्रियाणां तु शेषार्थं करेणोद्दिश्य कश्यपः
स्रुक्प्रग्रहवता राजञ्श्रीमान्वाक्यमथाब्रवीत् ५७
गच्छ पारं समुद्रस्य दक्षिणस्य महामुने
न ते मद्विषये राम वस्तव्यमिह कर्हिचित् ५८
ततः शूर्पारकं देशं सागरस्तस्य निर्ममे
संत्रासाज्जामदग्न्यस्य सोऽपरान्तं महीतलम् ५९
कश्यपस्तु महाराज प्रतिगृह्य महीमिमाम्
कृत्वा ब्राह्मणसंस्थां वै प्रविवेश महावनम् ६०
ततः शूद्राश्च वैश्याश्च यथास्वैरप्रचारिणः
अवर्तन्त द्विजाग्र्याणां दारेषु भरतर्षभ ६१
अराजके जीवलोके दुर्बला बलवत्तरैः
बाध्यन्ते न च वित्तेषु प्रभुत्वमिह कस्यचित् ६२
ततः कालेन पृथिवी प्रविवेश रसातलम्
अरक्ष्यमाणा विधिवत्क्षत्रियैर्धर्मरक्षिभिः ६३
ऊरुणा धारयामास कश्यपः पृथिवीं ततः
निमज्जन्तीं तदा राजंस्तेनोर्वीति मही स्मृता ६४
रक्षिणश्च समुद्दिश्य प्रायाचत्पृथिवी तदा
प्रसाद्य कश्यपं देवी क्षत्रियान्बाहुशालिनः ६५
सन्ति ब्रह्मन्मया गुप्ता नृषु क्षत्रियपुंगवाः

हैहयानां कुले जातास्ते संरक्षन्तु मां मुने ६६
अस्ति पौरवदायादो विडूरथसुतः प्रभो
ऋक्षैः संवर्धितो विप्र ऋक्षवत्येव पर्वते ६७
तथानुकम्पमानेन यज्वनाथामितौजसा
पराशरेण दायादः सौदासस्याभिरक्षितः ६८
सर्वकर्माणि कुरुते तस्यर्षेः शूद्रवद्धि सः
सर्वकर्मेत्यभिख्यातः स मां रक्षतु पार्थिव ६९
शिबेः पुत्रो महातेजा गोपतिर्नाम नामतः
वने संरक्षितो गोभिः सोऽभिरक्षतु मां मुने ७०
प्रतर्दनस्य पुत्रस्तु वत्सो नाम महायशाः
वत्सैः संवर्धितो गोष्ठे स मां रक्षतु पार्थिवः ७१
दधिवाहनपौत्रस्तु पुत्रो दिविरथस्य ह
अङ्गः स गौतमेनापि गङ्गाकूलेऽभिरक्षितः ७२
बृहद्रथो महाबाहुर्भुवि भूतिपुरस्कृतः
गोलाङ्गूलैर्महाभागो गृध्रकूटेऽभिरक्षितः ७३
मरुत्तस्यान्ववाये तु क्षत्रियास्तुर्वसोस्त्रयः
मरुत्पतिसमा वीर्ये समुद्रेणाभिरक्षिताः ७४
एते क्षत्रियदायादास्तत्र तत्र परिश्रुताः
सम्यङ्गामभिरक्षन्तु ततः स्थास्यामि निश्चला ७५
एतेषां पितरश्चैव तथैव च पितामहाः
मदर्थं निहता युद्धे रामेणाक्लिष्टकर्मणा ७६
तेषामपचितिश्चैव मया कार्या न संशयः
न ह्यहं कामये नित्यमविक्रान्तेन रक्षणम् ७७
ततः पृथिव्या निर्दिष्टांस्तान्समानीय कश्यपः
अभ्यषिञ्चन्महीपालान्क्षत्रियान्वीर्यसंमतान् ७८
तेषां पुत्राश्च पौत्राश्च येषां वंशाः प्रतिष्ठिताः
एवमेतत्पुरा वृत्तं यन्मां पृच्छसि पाण्डव ७९
वैशम्पायन उवाच
एवं ब्रुवन्नेव यदुप्रवीरो युधिष्ठिरं धर्मभृतां वरिष्ठम्
रथेन तेनाशु ययौ यथार्को विशन्प्रभाभिर्भगवांस्त्रिलोकम् ८०

इति श्रीमहाभारते शान्तिपर्वणि एकोनपञ्चाशोऽध्यायः ४९

पञ्चाशोऽध्यायः

वैशम्पायन उवाच
ततो रामस्य तत्कर्म श्रुत्वा राजा युधिष्ठिरः
विस्मयं परमं गत्वा प्रत्युवाच जनार्दनम् १
अहो रामस्य वार्ष्णेय शक्रस्येव महात्मनः
विक्रमो येन वसुधा क्रोधान्निःक्षत्रिया कृता २
गोभिः समुद्रेण तथा गोलाङ्गूलर्क्षवानरैः
गुप्ता रामभयोद्विग्नाः क्षत्रियाणां कुलोद्वहाः ३
अहो धन्यो हि लोकेऽय सभाग्याश्च नरा भुवि
यत्र कर्मेदृशं धर्म्यं द्विजेन कृतमच्युत ४
तथा यान्तौ तदा तात तावच्युतयुधिष्ठिरौ
जग्मतुर्यत्र गाङ्गेयः शरतल्पगतः प्रभुः ५
ततस्ते ददृशुर्भीष्मं शरप्रस्तरशायिनम्
स्वरश्मिजालसंवीतं सायंसूर्यमिवानलम् ६
उपास्यमानं मुनिभिर्देवैरिव शतक्रतुम्
देशे परमधर्मिष्ठे नदीमोघवतीमनु ७
दूरादेव तमालोक्य कृष्णो राजा च धर्मराट्
चत्वारः पाण्डवाश्चैव ते च शारद्वतादयः ८
अवस्कन्द्याथ वाहेभ्यः संयम्य प्रचलं मनः
एकीकृत्येन्द्रियग्राममुपतस्थुर्महामुनीन् ९
अभिवाद्य च गोविन्दः सात्यकिस्ते च कौरवाः
व्यासादींस्तानृषीन्पश्चाद्गाङ्गेयमुपतस्थिरे १०
तपोवृद्धिं ततः पृष्ट्वा गाङ्गेयं यदुकौरवाः
परिवार्य ततः सर्वे निषेदुः पुरुषर्षभाः ११
ततो निशम्य गाङ्गेयं शाम्यमानमिवानलम्
किंचिद्दीनमना भीष्ममिति होवाच केशवः १२
कच्चिज्ज्ञानानि ते राजन्प्रसन्नानि यथा पुरा
कच्चिदव्याकुला चैव बुद्धिस्ते वदतां वर १३

शराभिघातदुःखात्ते कच्चिद्गात्रं न दूयते
मानसादपि दुःखाद्धि शारीरं बलवत्तरम् १४
वरदानात्पितुः कामं छन्दमृत्युरसि प्रभो
शंतनोर्धर्मशीलस्य न त्वेतच्छमकारणम् १५
सुसूक्ष्मोऽपीह देहे वै शल्यो जनयते रुजम्
किं पुनः शरसंघातैश्चितस्य तव भारत १६
कामं नैतत्तवाख्येयं प्राणिनां प्रभवाप्ययौ
भवान्ह्युपदिशेच्छ्रेयो देवानामपि भारत १७
यद्धि भूतं भविष्यच्च भवच्च पुरुषर्षभ
सर्वं तज्ज्ञानवृद्धस्य तव पाणाविवाहितम् १८
संसारश्चैव भूतानां धर्मस्य च फलोदयः
विदितस्ते महाप्राज्ञ त्वं हि ब्रह्ममयो निधिः १९
त्वां हि राज्ये स्थितं स्फीते समग्राङ्गमरोगिणम्
स्त्रीसहस्रैः परिवृतं पश्यामीहोर्ध्वरेतसम् २०
ऋते शांतनवाद्भीष्मात्त्रिषु लोकेषु पार्थिव
सत्यसंधान्महावीर्याच्छूराद्धर्मैकतत्परात् २१
मृत्युमावार्य तरसा शरप्रस्तरशायिनः
निसर्गप्रभवं किंचिन्न च तातानुशुश्रुम २२
सत्ये तपसि दाने च यज्ञाधिकरणे तथा
धनुर्वेदे च वेदे च नीत्यं चैवान्ववेक्षणे २३
अनृशंसं शुचिं दान्तं सर्वभूतहिते रतम्
महारथं त्वत्सदृशं न कंचिदनुशुश्रुम २४
त्वं हि देवान्सगन्धर्वान्ससुरासुरराक्षसान्
शक्तएकरथेनैव विजेतुं नात्र संशयः २५
त्वं हि भीष्म महाबाहो वसूनां वासवोपमः
नित्यं विप्रैः समाख्यातो नवमोऽनवमो गुणैः २६
अहं हि त्वाभिजानामि यस्त्वं पुरुषसत्तम
त्रिदशेष्वपि विख्यातः स्वशक्त्या सुमहाबलः २७
मनुष्येषु मनुष्येन्द्र न दृष्टो न च मे श्रुतः
भवतो वो गुणैस्तुल्यः पृथिव्यां पुरुषः क्वचित् २८

त्वं हि सर्वैर्गुणै राजन्देवानप्यतिरिच्यसे
तपसा हि भवाञ्शक्तः स्रष्टुं लोकांश्चराचरान् २९
तदस्य तप्यमानस्य ज्ञातीनां संक्षयेण वै
ज्येष्ठस्य पाण्डुपुत्रस्य शोकं भीष्म व्यपानुद ३०
ये हि धर्माः समाख्याताश्चातुर्वर्ण्यस्य भारत
चातुराश्रम्यसंसृष्टास्ते सर्वे विदितास्तव ३१
चातुर्वेद्ये च ये प्रोक्ताश्चातुर्होत्रे च भारत
सांख्ये योगे च नियता ये च धर्माः सनातनाः ३२
चातुर्वर्ण्येन यश्चैको धर्मो न स्म विरुध्यते
सेव्यमानः स चैवाद्यो गाङ्गेय विदितस्तव ३३
इतिहासपुराणं च कात्स्न्र्येन विदितं तव
धर्मशास्त्रं च सकलं नित्यं मनसि ते स्थितम् ३४
ये च केचन लोकेऽस्मिन्नर्थाः संशयकारकाः
तेषां छेत्ता नास्ति लोके त्वदन्यः पुरुषर्षभ ३५
स पाण्डवेयस्य मनःसमुत्थितं नरेन्द्र शोकं व्यपकर्ष मेधया
भवद्विधा ह्युत्तमबुद्धिविस्तरा विमुह्यमानस्य जनस्य शान्तये ३६
इति श्रीमहाभारते शान्तिपर्वणि पञ्चाशोऽध्यायः ५०

## एक पञ्चाशोऽध्यायः

वैशम्पायन उवाच
श्रुत्वा तु वचनं भीष्मो वासुदेवस्य धीमतः
किंचिदुन्नाम्य वदनं प्राञ्जलिर्वाक्यमब्रवीत् १
नमस्ते भगवन्विष्णो लोकानां निधनोद्भव
त्वं हि कर्ता हृषीकेश संहर्ता चापराजितः २
विश्वकर्मन्नमस्तेऽस्तु विश्वात्मन्विश्वसंभव
अपवर्गोऽसि भूतानां पञ्चानां परतः स्थितः ३
नमस्ते त्रिषु लोकेषु नमस्ते परतस्त्रिषु
योगेश्वर नमस्तेऽस्तु त्वं हि सर्वपरायणम् ४
मत्संश्रितं यदात्थ त्वं वचः पुरुषसत्तम
तेन पश्यामि ते दिव्यान्भावान्हि त्रिषु वर्त्मसु ५

तच्च पश्यामि तत्त्वेन यत्ते रूपं सनातनम्
सप्त मार्गा निरुद्धास्ते वायोरमिततेजसः ६
दिवं ते शिरसा व्याप्तं पद्भ्यां देवी वसुंधरा
दिशो भुजौ रवीश्चक्षुर्वीर्ये शक्रः प्रतिष्ठितः ७
अतसीपुष्पसंकाशं पीतवाससमच्युतम्
वपुर्ह्यनुमिमीमस्ते मेघस्येव सविद्युतः ८
त्वत्प्रपन्नाय भक्ताय गतिमिष्टां जिगीषवे
यच्छ्रेयः पुण्डरीकाक्ष तद्ध्यायस्व सुरोत्तम ९
वासुदेव उवाच
यतः खलु परा भक्तिर्मयि ते पुरुषर्षभ
ततो वपुर्मया दिव्यं तव राजन्प्रदर्शितम् १०
न ह्यभक्ताय राजेन्द्र भक्तायानृजवे न च
दर्शयाम्यहमात्मानं न चादान्ताय भारत ११
भवांस्तु मम भक्तश्च नित्यं चार्जवमास्थितः
दमे तपसि सत्ये च दाने च निरतः शुचिः १२
अर्हस्त्वं भीष्म मां द्रष्टुं तपसा स्वेन पार्थिव
तव ह्युपस्थिता लोका येभ्यो नावर्तते पुनः १३
पञ्चाशतं षट्च कुरुप्रवीर शेषं दिनानां तव जीवितस्य
ततः शुभैः कर्मफलोदयैस्त्वं समेष्यसे भीष्म विमुच्य देहम् १४
एते हि देवा वसवो विमानान्यास्थाय सर्वे ज्वलिताग्निकल्पाः
अन्तर्हितास्त्वां प्रतिपालयन्ति काष्ठां प्रपद्यन्तमुदक्पतंगम् १५
व्यावृत्तमात्रे भगवत्युदीचीं सूर्ये दिशं कालवशात्प्रपन्ने
गन्तासि लोकान्पुरुषप्रवीर नावर्तते यानुपलभ्य विद्वान् १६
अमुं च लोकं त्वयि भीष्म याते ज्ञानानि यङ्क्ष्यन्त्यखिलेन वीर
अतः स्म सर्वे त्वयि संनिकर्षं समागता धर्मविवेचनाय १७
तज्ज्ञातिशोकोपहतश्रुताय सत्याभिसंधाय युधिष्ठिराय
प्रब्रूहि धर्मार्थसमाधियुक्तमर्थ्यं वचोऽस्यापनुदास्य शोकम् १८
इति श्रीमहाभारते शान्तिपर्वणि एकपञ्चाशोऽध्यायः ५१

## द्विपञ्चाशोऽध्यायः

वैशम्पायन उवाच
ततः कृष्णस्य तद्वाक्यं धर्मार्थसहितं हितम्
श्रुत्वा शांतनवो भीष्मः प्रत्युवाच कृताञ्जलि १
लोकनाथ महाबाहो शिव नारायणाच्युत
तव वाक्यमभिश्रुत्य हर्षेणास्मि परिप्लुतः २
किं चाहमभिधास्यामि वाक्पते तव संनिधौ
यदा वाचोगतं सर्वं तव वाचि समाहितम् ३
यद्धि किंचित्कृतं लोके कर्तव्यं क्रियते च यत्
त्वत्तस्तन्निःसृतं देव लोका बुद्धिमया हि ते ४
कथयेद्देवलोकं यो देवराजसमीपतः
धर्मकामार्थशास्त्राणां सोऽथान्ब्रूयात्तवाग्रतः ५
शराभिघाताद्व्यथितं मनो मे मधुसूदन
गात्राणि चावसीदन्ति न च बुद्धिः प्रसीदति ६
न च मे प्रतिभा काचिदस्ति किंचित्प्रभाषितुम्
पीड्यमानस्य गोविन्द विषानलसमैः शरैः ७
बलं मेधाः प्रजरति प्राणाः संत्वरयन्ति च
मर्माणि परितप्यन्ते भ्रान्तं चेतस्तथैव च ८
दौर्बल्यात्सज्जते वाङ्मे स कथं वक्तुमुत्सहे
साधु मे त्वं प्रसीदस्व दाशार्हकुलनन्दन ९
तत्क्षमस्व महाबाहो न ब्रूयां किंचिदच्युत
त्वत्संनिधौ च सीदेत वाचस्पतिरपि ब्रुवन् १०
न दिशः संप्रजानामि नाकाशं न च मेदिनीम्
केवलं तव वीर्येण तिष्ठामि मधुसूदन ११
स्वयमेव प्रभो तस्माद्धर्मराजस्य यद्धितम्
तद्ब्रवीह्याशु सर्वेषामागमानां त्वमागमः १२
कथं त्वयि स्थिते लोके शाश्वते लोककर्तरि
प्रब्रूयान्मद्विधः कश्चिद्गुरौ शिष्य इव स्थिते १३
वासुदेव उवाच
उपपन्नमिदं वाक्यं कौरवाणां धुरंधरे

महावीर्ये महासत्त्वे स्थिते सर्वार्थदर्शिनि १४
यच्च मामात्थ गाङ्गेय बाणघातरुजं प्रति
गृहाणात्र वरं भीष्म मत्प्रसादकृतं विभो १५
न ते ग्लानिर्न ते मूर्छा न दाहो न च ते रुजा
प्रभविष्यन्ति गाङ्गेय क्षुत्पिपासे न चाप्युत १६
ज्ञानानि च समग्राणि प्रतिभास्यन्ति तेऽनघ
न च ते क्वचिदासक्तिर्बुद्धेः प्रादुर्भविष्यति १७
सत्त्वस्थं च मनो नित्यं तव भीष्म भविष्यति
रजस्तमोभ्यां रहितं घनैर्मुक्त इवोडुराट् १८
यद्यच्च धर्मसंयुक्तमर्थयुक्तमथापि वा
चिन्तयिष्यसि तत्राग्र्या बुद्धिस्तव भविष्यति १९
इमं च राजशार्दूल भूतग्रामं चतुर्विधम्
चक्षुर्दिव्यं समाश्रित्य द्रक्ष्यस्यमितविक्रम २०
चतुर्विधं प्रजाजालं संयुक्तो ज्ञानचक्षुषा
भीष्म द्रक्ष्यसि तत्त्वेन जले मीन इवामले २१
वैशम्पायन उवाच
ततस्ते व्याससहिताः सर्व एव महर्षयः
ऋग्यजुःसामसंयुक्तैर्वचोभिः कृष्णमर्चयन् २२
ततः सर्वार्तवं दिव्यं पुष्पवर्षं नभस्तलात्
पपात यत्र वार्ष्णेयः सगाङ्गेयः सपाण्डवः २३
वादित्राणि वा दिव्यानि जगुश्चाप्सरसां गणाः
न चाहितमनिष्टं च किंचित्तत्र व्यदृश्यत २४
ववौ शिवः सुखो वायुः सर्वगन्धवहः शुचिः
शान्तायां दिशि शान्ताश्च प्रावदन्मृगपक्षिणः २५
ततो मुहूर्ताद्भगवान्सहस्रांशुर्दिवाकरः
दहन्वनमिवैकान्ते प्रतीच्यां प्रत्यदृश्यत २६
ततो महर्षयः सर्वे समुत्थाय जनार्दनम्
भीष्ममामन्त्रयांचक्रू राजानं च युधिष्ठिरम् २७
ततः प्रणाममकरोत्केशवः पाण्डवस्तथा
सात्यकिः सञ्जयश्चैव स च शारद्वतः कृपः २८

ततस्ते धर्मनिरताः सम्यक्तैरभिपूजिताः
श्वः समेष्याम इत्युक्त्वा यथेष्टं त्वरिता ययुः २९
तथैवामन्त्र्य गाङ्गेयं केशवस्ते च पाराडवाः
प्रदक्षिणमुपावृत्य रथानारुरुहुः शुभान् ३०
ततो रथैः काञ्चनदन्तकूबरैर्महीधराभैः समदैश्च दन्तिभिः
हयैः सुपर्णैरिव चाशुगामिभिः पदातिभिश्चात्तशरासनादिभिः ३१
ययौ रथानां पुरतो हि सा चमूस्तथैव पश्चादतिमात्रसारिणी
पुरश्च पश्चाच्च यथा महानदी पुरर्क्षवन्तं गिरिमेत्य नर्मदा ३२
ततः पुरस्ताद्भगवान्निशाकरः समुत्थितस्तामभिहर्षयंश्चमूम्
दिवाकरापीतरसास्तथौषधीः पुनः स्वकेनैव गुणेन योजयन् ३३
ततः पुरं सुरपुरसंनिभद्युति प्रविश्य ते यदुवृषपाराडवास्तदा
यथोचितान्भवनवरान्समाविशञ्श्रमान्विता मृगपतयो गुहा इव ३४
इति श्रीमहाभारते शान्तिपर्वणि द्विपञ्चाशोऽध्यायः ५२

त्रिपञ्चाशोऽध्यायः

वैशम्पायन उवाच
ततः प्रविश्य भवनं प्रसुप्तो मधुसूदनः
याममात्रावशेषायां यामिन्यां प्रत्यबुध्यत १
स ध्यानपथमाश्रित्य सर्वज्ञानानि माधवः
अवलोक्य ततः पश्चाद्दध्यौ ब्रह्म सनातनम् २
ततः श्रुतिपुराणज्ञाः शिक्षिता रक्तकराठनः
अस्तुवन्विश्वकर्माणं वासुदेवं प्रजापतिम् ३
पठन्ति पाणिस्वनिकास्तथा गायन्ति गायनाः
शङ्खानकमृदङ्गांश्च प्रवाद्यन्त सहस्रशः ४
वीणापणववेणूनां स्वनश्चातिमनोरमः
प्रहास इव विस्तीर्णः शुश्रुवे तस्य वेश्मनः ५
तथा युधिष्ठिरस्यापि राज्ञो मङ्गलसंहिताः
उच्चेरुर्मधुरा वाचो गीतवादित्रसंहिताः ६
तत उत्थाय दाशार्हः स्नातः प्राञ्जलिरच्युतः
जप्त्वा गुह्यं महाबाहुरग्नीनाश्रित्य तस्थिवान् ७

ततः सहस्रं विप्राणां चतुर्वेदविदां तथा
गवां सहस्रेणैकैकं वाचयामास माधवः ८
मङ्गलालम्भनं कृत्वा आत्मानमवलोक्य च
आदर्शे विमले कृष्णस्ततः सात्यकिमब्रवीत् ९
गच्छ शैनेय जानीहि गत्वा राजनिवेशनम्
अपि सज्जो महातेजा भीष्मं द्रष्टुं युधिष्ठिरः १०
ततः कृष्णस्य वचनात्सात्यकिस्त्वरितो ययौ
उपगम्य च राजानं युधिष्ठिरमुवाच ह ११
युक्तो रथवरो राजन्वासुदेवस्य धीमतः
समीपमापगेयस्य प्रयास्यति जनार्दनः १२
भवत्प्रतीक्षः कृष्णोऽसौ धर्मराज महाद्युते
यदत्रानन्तरं कृत्यं तद्भवान्कर्तुमर्हति १३
युधिष्ठिर उवाच
युज्यतां मे रथवरः फल्गुनाप्रतिमद्युते
न सैनिकैश्च यातव्यं यास्यामो वयमेव हि १४
न च पीडयितव्यो मे भीष्मो धर्मभृतां वरः
अतः पुरःसराश्चापि निवर्तन्तु धनंजय १५
अद्य प्रभृति गाङ्गेयः परं गुह्यं प्रवक्ष्यति
ततो नेच्छामि कौन्तेय पृथग्जनसमागमम् १६
वैशम्पायन उवाच
तद्वाक्यमाकर्ण्य तथा कुन्तीपुत्रो धनंजयः
युक्तं रथवरं तस्मा आचचक्षे नरर्षभ १७
ततो युधिष्ठिरो राजा यमौ भीमार्जुनावपि
भूतानीव समस्तानि ययुः कृष्णनिवेशनम् १८
आगच्छत्स्वथ कृष्णोऽपि पाण्डवेषु महात्मसु
शैनेयसहितो धीमान्रथमेवान्वपद्यत १९
रथस्थाः संविदं कृत्वा सुखां पृष्ट्वा च शर्वरीम्
मेघघोषै रथवरैः प्रययुस्ते महारथाः २०
मेघपुष्पं बलाहं च सैन्यं सुग्रीवमेव च
दारुकश्चोदयामास वासुदेवस्य वाजिनः २१

ते हया वासुदेवस्य दारुकेण प्रचोदिताः
गां खुराग्रैस्तथा राजँल्लिखन्तः प्रययुस्तदा २२
ते ग्रसन्त इवाकाशं वेगवन्तो महाबलाः
क्षेत्रं धर्मस्य कृत्स्नस्य कुरुक्षेत्रमवातरन् २३
ततो ययुर्यत्र भीष्मः शरतल्पगतः प्रभुः
आस्ते ब्रह्मर्षिभिः सार्धं ब्रह्मा देवगणैर्यथा २४
ततोऽवतीर्य गोविन्दो रथात्स च युधिष्ठिरः
भीमो गाण्डीवधन्वा च यमौ सात्यकिरेव च
ऋषीनभ्यर्चयामासुः करानुद्यम्य दक्षिणान् २५
स तैः परिवृतो राजा नक्षत्रैरिव चन्द्रमाः
अभ्याजगाम गाङ्गेयं ब्रह्माणमिव वासवः २६
शरतल्पे शयानं तमादित्यं पतितं यथा
ददर्श स महाबाहुर्भयादागतसाध्वसः २७
इति श्रीमहाभारते शान्तिपर्वणि त्रिपञ्चाशोऽध्यायः ५३

## चतुः पञ्चाशोऽध्यायः

जनमेजय उवाच
धर्मात्मनि महासत्त्वे सत्यसंधे जितात्मनि
देवव्रते महाभागे शरतल्पगतेऽच्युते १
शयाने वीरशयने भीष्मे शंतनुनन्दने
गाङ्गेये पुरुषव्याघ्रे पाण्डवैः पर्युपस्थिते २
काः कथाः समवर्तन्त तस्मिन्वीरसमागमे
हतेषु सर्वसैन्येषु तन्मे शंस महामुने ३
वैशम्पायन उवाच
शरतल्पगते भीष्मे कौरवाणां धुरंधरे
आजग्मुरृषयः सिद्धा नारदप्रमुखा नृप ४
हतशिष्टाश्च राजानो युधिष्ठिरपुरोगमाः
धृतराष्ट्रश्च कृष्णश्च भीमार्जुनयमास्तथा ५
तेऽभिगम्य महात्मानो भरतानां पितामहम्
अन्वशोचन्त गाङ्गेयमादित्यं पतितं यथा ६

मुहूर्तमिव च ध्यात्वा नारदो देवदर्शनः
उवाच पाण्डवान्सर्वान्हतशिष्टांश्च पार्थिवान् ७
प्राप्तकालं च आचक्षे भीष्मोऽयमनुयुज्यताम्
अस्तमेति हि गाङ्गेयो भानुमानिव भारत ८
अयं प्राणानुत्सिसृक्षुस्तं सर्वेऽभ्येत्य पृच्छत
कृत्स्नान्हि विविधान्धर्मांश्चातुर्वर्ण्यस्य वेत्त्ययम् ९
एष वृद्धः पुरा लोकान्संप्राप्नोति तनुत्यजाम्
तं शीघ्रमनुयुञ्जध्वं संशयान्मनसि स्थितान् १०
एवमुक्ता नारदेन भीष्ममीयुर्नराधिपाः
प्रष्टुं चाशक्नुवन्तस्ते वीक्षांचक्रुः परस्परम् ११
अथोवाच हृषीकेशं पाण्डुपुत्रो युधिष्ठिरः
नान्यस्त्वद्देवकीपुत्र शक्तः प्रष्टुं पितामहम् १२
प्रव्याहरय दुर्धर्ष त्वमग्रे मधुसूदन
त्वं हि नस्तात सर्वेषां सर्वधर्मविदुत्तमः १३
एवमुक्तः पाण्डवेन भगवान्केशवस्तदा
अभिगम्य दुराधर्षं प्रव्याहारयदच्युतः १४
वासुदेव उवाच
कच्चित्सुखेन रजनी व्युष्टा ते राजसत्तम
विस्पष्टलक्षणा बुद्धिः कच्चिच्चोपस्थिता तव १५
कच्चिज्ज्ञानानि सर्वाणि प्रतिभान्ति च तेऽनघ
न ग्लायते च हृदयं न च ते व्याकुलं मनः १६
भीष्म उवाच
दाहो मोहः श्रमश्चैव क्लमो ग्लानिस्तथा रुजा
तव प्रसादाद्गोविन्द सद्यो व्यपगतानघ १७
यच्च भूतं भविष्यच्च भवच्च परमद्युते
तत्सर्वमनुपश्यामि पाणौ फलमिवाहितम् १८
वेदोक्ताश्चैव ये धर्मा वेदान्तनिहिताश्च ये
तान्सर्वान्संप्रपश्यामि वरदानात्तवाच्युत १९
शिष्टैश्च धर्मो यः प्रोक्तः स च मे हृदि वर्तते
देशजातिकुलानां च धर्मज्ञोऽस्मि जनार्दन २०

चतुर्ष्वाश्रमधर्मेषु योऽथ स च हृदि स्थितः
राजधर्मांश्च सकलानवगच्छामि केशव २१
यत्र यत्र च वक्तव्यं तद्वक्ष्यामि जनार्दन
तव प्रसादाद्धि शुभा मनो मे बुद्धिराविशत् २२
युवेव चास्मि संवृत्तस्त्वदनुध्यानबृंहितः
वक्तुं श्रेयः समर्थोऽस्मि त्वत्प्रसादाज्जनार्दन २३
स्वयं किमर्थं तु भवाञ्श्रेयो न प्राह पाण्डवम्
किं ते विवक्षितं चात्र तदाशु वद माधव २४
वासुदेव उवाच
यशसः श्रेयसश्चैव मूलं मां विद्धि कौरव
मत्तः सर्वेऽभिनिर्वृत्ता भावाः सदसदात्मकाः २५
शीतांशुश्चन्द्र इत्युक्ते को लोके विस्मयिष्यति
तथैव यशसा पूर्णे मयि को विस्मयिष्यति २६
आधेयं तु मया भूयो यशस्तव महाद्युते
ततो मे विपुला बुद्धिस्त्वयि भीष्म समाहिता २७
यावद्धि पृथिवीपाल पृथिवी स्थास्यते ध्रुवा
तावत्तवाक्षया कीर्तिर्लोकाननु चरिष्यति २८
यच्च त्वं वक्ष्यसे भीष्म पाण्डवायानुपृच्छते
वेदप्रवादा इव ते स्थास्यन्ति वसुधातले २९
यश्चैतेन प्रमाणेन योक्ष्यत्यात्मानमात्मना
स फलं सर्वपुण्यानां प्रेत्य चानुभविष्यति ३०
एतस्मात्कारणाद्भीष्म मतिर्दिव्या मया हि ते
दत्ता यशो विप्रथेत कथं भूयस्तवेति ह ३१
यावद्धि प्रथते लोके पुरुषस्य यशो भुवि
तावत्तस्याक्षयं स्थानं भवतीति विनिश्चितम् ३२
राजानो हतशिष्टास्त्वां राजन्नभित आसते
धर्माननुयुयुक्षन्तस्तेभ्यः प्रब्रूहि भारत ३३
भवान्हि वयसा वृद्धः श्रुताचारसमन्वितः
कुशलो राजधर्माणां पूर्वेषामपराश्च ये ३४
जन्मप्रभृति ते कश्चिद्वृजिनं न ददर्श ह

ज्ञातारमनुधर्माणां त्वां विदुः सर्वपार्थिवाः ३५
तेभ्यः पितेव पुत्रेभ्यो राजन्ब्रूहि परं नयम्
ऋषयश्च हि देवाश्च त्वया नित्यमुपासिताः ३६
तस्माद्वक्तव्यमेवेह त्वया पश्याम्यशेषतः
धर्माञ्शुश्रूषमाणेभ्यः पृष्टेन च सता पुनः ३७
वक्तव्यं विदुषा चेति धर्ममाहुर्मनीषिणः
अप्रतिब्रुवतः कष्टो दोषो हि भवति प्रभो ३८
तस्मात्पुत्रैश्च पौत्रैश्च धर्मान्पृष्टः सनातनान्
विद्वाञ्जिज्ञासमानैस्त्वं प्रब्रूहि भरतर्षभ ३९
इति श्रीमहाभारते शान्तिपर्वणि चतुःपञ्चाशोऽध्यायः ५४

## पञ्चपञ्चाशोऽध्यायः

वैशम्पायन उवाच
अथाब्रवीन्महातेजा वाक्यं कौरवनन्दनः
हन्त धर्मान्प्रवक्ष्यामि दृढे वाङ्मनसी मम
तव प्रसादाद्गोविन्द भूतात्मा ह्यसि शाश्वतः १
युधिष्ठिरस्तु मां राजा धर्मान्समनुपृच्छतु
एवं प्रीतो भविष्यामि धर्मान्वक्ष्यामि चानघ २
यस्मिन्राजर्षभे जाते धर्मात्मनि महात्मनि
अहृष्यन्नृषयः सर्वे स मां पृच्छतु पाण्डवः ३
सर्वेषां दीप्तयशसां कुरूणां धर्मचारिणाम्
यस्य नास्ति समः कश्चित्स मां पृच्छतु पाण्डवः ४
धृतिर्दमो ब्रह्मचर्यं क्षमा धर्मश्च नित्यदा
यस्मिन्नोजश्च तेजश्च स मां पृच्छतु पाण्डवः ५
सत्यं दानं तपः शौचं शान्तिर्दाक्ष्यमसंभ्रमः
यस्मिन्नेतानि सर्वाणि स मां पृच्छतु पाण्डवः ६
यो न कामान्न संरम्भान्न भयान्नार्थकारणात्
कुर्यादधर्मं धर्मात्मा स मां पृच्छतु पाण्डवः ७
संबन्धिनोऽतिथीन्भृत्यान्संश्रितोपाश्रितांश्च यः
संमानयति सत्कृत्य स मां पृच्छतु पाण्डवः ८

सत्यनित्यः क्षमानित्यो ज्ञाननित्योऽतिथिप्रियः
यो ददाति सतां नित्यं स मां पृच्छतु पाण्डवः ९
इज्याध्ययननित्यश्च धर्मे च निरतः सदा
शान्तः श्रुतरहस्यश्च स मां पृच्छतु पाण्डवः १०
वासुदेव उवाच
लज्जया परयोपेतो धर्मात्मा स युधिष्ठिरः
अभिशापभयाद्भीतो भवन्तं नोपसर्पति ११
लोकस्य कदनं कृत्वा लोकनाथो विशां पते
अभिशापभयाद्भीतो भवन्तं नोपसर्पति १२
पूज्यान्मान्यांश्च भक्तांश्च गुरून्संबन्धिबान्धवान्
अर्घ्यार्हानिषुभिर्हत्वा भवन्तं नोपसर्पति १३
भीष्म उवाच
ब्राह्मणानां यथा धर्मो दानमध्ययनं तपः
क्षत्रियाणां तथा कृष्ण समरे देहपातनम् १४
पितॄन्पितामहान्पुत्रान्गुरून्संबन्धिबान्धवान्
मिथ्याप्रवृत्तान्यः संख्ये निहन्याद्धर्म एव सः १५
समयत्यागिनो लुब्धान्गुरूनपि च केशव
निहन्ति समरे पापान्क्षत्रियो यः स धर्मवित् १६
आहूतेन रणे नित्यं योद्धव्यं क्षत्रबन्धुना
धर्म्यं स्वर्ग्यं च लोक्यं च युद्धं हि मनुरब्रवीत् १७
वैशम्पायन उवाच
एवमुक्तस्तु भीष्मेण धर्मराजो युधिष्ठिरः
विनीतवदुपागम्य तस्थौ संदर्शनेऽग्रतः १८
अथास्य पादौ जग्राह भीष्मश्चाभिननन्द तम्
मूर्ध्नि चैनमुपाघ्राय निषीदेत्यब्रवीत्तदा १९
तमुवाचाथ गाङ्गेय ऋषभः सर्वधन्विनाम्
पृच्छ मां तात विस्रब्धं मा भैस्त्वं कुरुसत्तम २०
इति श्रीमहाभारते शान्तिपर्वणि पञ्चपञ्चाशोऽध्यायः ५५

षट्पञ्चाशोऽध्यायः

वैशम्पायन उवाच
प्रणिपत्य हृषीकेशमभिवाद्य पितामहम्
अनुमान्य गुरून्सर्वान्पर्यपृच्छद्युधिष्ठिरः १
राज्यं वै परमो धर्म इति धर्मविदो विदुः
महान्तमेतं भारं च मन्ये तद्ब्रूहि पार्थिव २
राजधर्मान्विशेषेण कथयस्व पितामह
सर्वस्य जीवलोकस्य राजधर्माः परायणम् ३
त्रिवर्गोऽत्र समासक्तो राजधर्मेषु कौरव
मोक्षधर्मश्च विस्पष्टः सकलोऽत्र समाहितः ४
यथा हि रश्मयोऽश्वस्य द्विरदस्याङ्कुशो यथा
नरेन्द्रधर्मो लोकस्य तथा प्रग्रहणं स्मृतम् ५
अत्र वै संप्रमूढे तु धर्मे राजर्षिसेविते
लोकस्य संस्था न भवेत्सर्वं च व्याकुलं भवेत् ६
उदयन्हि यथा सूर्यो नाशयत्यासुरं तमः
राजधर्मास्तथालोक्यामाक्षिपन्त्यशुभां गतिम् ७
तदग्रे राजधर्माणामर्थतत्त्वं पितामह
प्रब्रूहि भरतश्रेष्ठ त्वं हि बुद्धिमतां वरः ८
आगमश्च परस्त्वत्तः सर्वेषां नः परंतप
भवन्तं हि परं बुद्धौ वासुदेवोऽभिमन्यते ९
भीष्म उवाच
नमो धर्माय महते नमः कृष्णाय वेधसे
ब्राह्मणेभ्यो नमस्कृत्य धर्मान्वक्ष्यामि शाश्वतान् १०
शृणु कार्त्स्न्येन मत्तस्त्वं राजधर्मान्युधिष्ठिर
निरुच्यमानान्नियतो यच्चान्यदभिवाञ्छसि ११
आदावेव कुरुश्रेष्ठ राज्ञा रञ्जनकाम्यया
देवतानां द्विजानां च वर्तितव्यं यथाविधि १२
दैवतान्यर्चयित्वा हि ब्राह्मणांश्च कुरूद्वह
आनृण्यं याति धर्मस्य लोकेन च स मान्यते १३
उत्थाने च सदा पुत्र प्रयतेथा युधिष्ठिर

न ह्युत्थानमृते दैवं राज्ञामर्थप्रसिद्धये १४
साधारणं द्वयं ह्येतद्दैवमुत्थानमेव च
पौरुषं हि परं मन्ये दैवं निश्चित्यमुच्यते १५
विपन्ने च समारम्भे संतापं मा स्म वै कृथाः
घटते विनयस्तात राज्ञामेष नयः परः १६
न हि सत्यादृते किंचिद्राज्ञां वै सिद्धिकारणम्
सत्ये हि राजा निरतः प्रेत्य चेह हि नन्दति १७
ऋषीणामपि राजेन्द्र सत्यमेव परं धनम्
तथा राज्ञः परं सत्यान्नान्यद्विश्वासकारणम् १८
गुणवाञ्शीलवान्दान्तो मृदुर्धर्म्यो जितेन्द्रियः
सुदर्शः स्थूललक्ष्यश्च न भ्रश्येत सदा श्रियः १९
आर्जवं सर्वकार्येषु श्रयेथाः कुरुनन्दन
पुनर्नयविचारेण त्रयीसंवरणेन च २०
मृदुर्हि राजा सततं लङ्घ्यो भवति सर्वशः
तीक्ष्णाच्चोद्विजते लोकस्तस्मादुभयमाचर २१
अदण्ड्याश्चैव ते नित्यं विप्राः स्युर्ददतां वर
भूतमेतत्परं लोके ब्राह्मणा नाम भारत २२
मनुना चापि राजेन्द्र गीतौ श्लोकौ महात्मना
धर्मेषु स्वेषु कौरव्य हृदि तौ कर्तुमर्हसि २३
अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम्
तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति २४
अयो हन्ति यदाश्मानमग्निश्चापोऽभिपद्यते
ब्रह्म च क्षत्रियो द्वेष्टि तदा सीदन्ति ते त्रयः २५
एतज्ज्ञात्वा महाराज नमस्या एव ते द्विजाः
भौमं ब्रह्म द्विजश्रेष्ठा धारयन्ति शमान्विताः २६
एवं चैव नरव्याघ्र लोकतन्त्रविघातकाः
निग्राह्या एव सततं बाहुभ्यां ये स्युरीदृशाः २७
श्लोकौ चोशनसा गीतौ पुरा तात महर्षिणा
तौ निबोध महाप्राज्ञ त्वमेकाग्रमना नृप २८
उद्यम्य शस्त्रमायान्तमपि वेदान्तगं रणे

निगृह्णीयात्स्वधर्मेण धर्मापेक्षी नरेश्वरः २९
विनश्यमानं धर्मं हि यो रक्षति स धर्मवित्
न तेन भ्रूणहा स स्यान्मन्युस्तं मन्युमृच्छति ३०
एवं चैव नरश्रेष्ठ रक्ष्या एव द्विजातयः
स्वपराद्धानपि हि तान्विषयान्ते समुत्सृजेत् ३१
अभिशस्तमपि ह्येषां कृपायीत विशां पते
ब्रह्मघ्ने गुरुतल्पे च भ्रूणहत्ये तथैव च ३२
राजद्विष्टे च विप्रस्य विषयान्ते विसर्जनम्
विधीयते न शारीरं भयमेषां कदाचन ३३
दयिताश्च नरास्ते स्युर्नित्यं पुरुषसत्तम
न कोशः परमो ह्यन्यो राज्ञां पुरुषसंचयात् ३४
दुर्गेषु च महाराज षट्सु ये शास्त्रनिश्चिताः
सर्वेषु तेषु मन्यन्ते नरदुर्गं सुदुस्तरम् ३५
तस्मान्नित्यं दया कार्या चातुर्वर्ण्ये विपश्चिता
धर्मात्मा सत्यवाक्चैव राजा रञ्जयति प्रजाः ३६
न च क्षान्तेन ते भाव्यं नित्यं पुरुषसत्तम
अधर्म्यो हि मृदू राजा क्षमावानिव कुञ्जरः ३७
बार्हस्पत्ये च शास्त्रे वै श्लोका विनियताः पुरा
अस्मिन्नर्थे महाराज तन्मे निगदतः शृणु ३८
क्षममाणं नृपं नित्यं नीचः परिभवेज्जनः
हस्तियन्ता गजस्येव शिर एवारुरुक्षति ३९
तस्मान्नैव मृदुर्नित्यं तीक्ष्णो वापि भवेन्नृपः
वसन्तेऽर्क इव श्रीमान्न शीतो न च घर्मदः ४०
प्रत्यक्षेणानुमानेन तथौपम्योपदेशतः
परीक्ष्यास्ते महाराज स्वे परे चैव सर्वदा ४१
व्यसनानि च सर्वाणि त्यजेथा भूरिदक्षिण
न चैव न प्रयुञ्जीत संङ्गं तु परिवर्जयेत् ४२
नित्यं हि व्यसनी लोके परिभूतो भवत्युत
उद्वेजयति लोकं चाप्यतिद्वेषी महीपतिः ४३
भवितव्यं सदा राज्ञा गर्भिणीसहधर्मिणा

कारणं च महाराज शृणु येनेदमिष्यते ४४
यथा हि गर्भिणी हित्वा स्वं प्रियं मनसोऽनुगम्
गर्भस्य हितमाधत्ते तथा राज्ञाप्यसंशयम् ४५
वर्तितव्यं कुरुश्रेष्ठ नित्यं धर्मानुवर्तिना
स्वं प्रियं समभित्यज्य यद्यल्लोकहितं भवेत् ४६
न संत्याज्यं च ते धैर्यं कदाचिदपि पाण्डव
धीरस्य स्पष्टदण्डस्य न ह्याज्ञा प्रतिहन्यते ४७
परिहासश्च भृत्यैस्ते न नित्यं वदतां वर
कर्तव्यो राजशार्दूल दोषमत्र हि मे शृणु ४८
अवमन्यन्ति भर्तारं संहर्षादुपजीविनः
स्वे स्थाने न च तिष्ठन्ति लङ्घयन्ति हि तद्वचः ४९
प्रेष्यमाणा विकल्पन्ते गुह्यं चाप्यनुयुञ्जते
अयाच्यं चैव याचन्तेऽभोज्यान्याहारयन्ति च ५०
क्रुध्यन्ति परिदीप्यन्ति भूमिमध्यासतेऽस्य च
उत्कोचैर्वञ्चनाभिश्च कार्याण्यनुविहन्ति च ५१
जर्जरं चास्य विषयं कुर्वन्ति प्रतिरूपकैः
स्त्रीरक्षिभिश्च सज्जन्ते तुल्यवेषा भवन्ति च ५२
वातं च ष्ठीवनं चैव कुर्वते चास्य संनिधौ
निर्लज्जा नरशार्दूल व्याहरन्ति च तद्वचः ५३
हयं वा दन्तिनं वापि रथं नृपतिसंमतम्
अधिरोहन्त्यनादृत्य हर्षुले पार्थिवे मृदौ ५४
इदं ते दुष्करं राजन्निदं ते दुर्विचेष्टितम्
इत्येवं सुहृदो नाम ब्रुवन्ति परिषद्गताः ५५
क्रुद्धे चास्मिन्हसन्त्येव न च हृष्यन्ति पूजिताः
संघर्षशीलाश्च सदा भवन्त्यन्योन्यकारणात् ५६
विस्रंसयन्ति मन्त्रं च विवृण्वन्ति च दुष्कृतम्
लीलया चैव कुर्वन्ति सावज्ञास्तस्य शासनम्
अलंकरणभोज्यं च तथा स्नानानुलेपनम् ५७
हेलमाना नरव्याघ्र स्वस्थास्तस्योपशृण्वते
निन्दन्ति स्वानधीकारान्संत्यजन्ति च भारत ५८

न वृत्त्या परितुष्यन्ति राजदेयं हरन्ति च
क्रीडितुं तेन चेच्छन्ति ससूत्रेणेव पक्षिणा
अस्मत्प्रणेयो राजेति लोके चैव वदन्त्युत ५९
एते चैवापरे चैव दोषाः प्रादुर्भवन्त्युत
नृपतौ मार्दवोपेते हर्षुले च युधिष्ठिर ६०
इति श्रीमहाभारते शान्तिपर्वणि षट्पञ्चाशोऽध्यायः ६५

सप्तपञ्चाशोऽध्यायः

भीष्म उवाच
नित्योद्युक्तेन वै राज्ञा भवितव्यं युधिष्ठिर
प्रशाम्यते च राजा हि नारीवोद्यमवर्जितः १
भगवानुशना चाह श्लोकमत्र विशां पते
तमिहैकमना राजन्गदतस्त्वं निबोध मे २
द्वावेतौ ग्रसते भूमिः सर्पो बिलशयानिव
राजानं चाविरोद्धारं ब्राह्मणं चाप्रवासिनम् ३
तदेतन्नरशार्दूल हृदि त्वं कर्तुमर्हसि
संधेयानपि संधत्स्व विरोध्यांश्च विरोधय ४
सप्ताङ्गे यश्च ते राज्ये वैपरीत्यं समाचरेत्
गुरुर्वा यदि वा मित्रं प्रतिहन्तव्य एव सः ५
मरुत्तेन हि राज्ञायं वै गीतः श्लोकः पुरातनः
राज्याधिकारे राजेन्द्र बृहस्पतिमतः पुरा ६
गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः
उत्पथप्रतिपन्नस्य परित्यागो विधीयते ७
बाहोः पुत्रेण राज्ञा च सगरेणेह धीमता
असमञ्जाः सुतो ज्येष्ठस्त्यक्तः पौरहितैषिणा ८
असमञ्जाः सरय्वां प्राक्पौराणां बालकान्नृप
न्यमज्जयदतः पित्रा निर्भर्त्स्य स विवासितः ९
ऋषिणोद्दालकेनापि श्वेतकेतुर्महातपाः
मिथ्या विप्रानुपचरन्संत्यक्तो दयितः सुतः १०
लोकरञ्जनमेवात्र राज्ञां धर्मः सनातनः

सत्यस्य रक्षणं चैव व्यवहारस्य चार्जवम् ११
न हिंस्यात्परवित्तानि देयं काले च दापयेत्
विक्रान्तः सत्यवाक्क्षान्तो नृपो न चलते पथः १२
गुप्तमन्त्रो जितक्रोधो शास्त्रार्थगतनिश्चयः
धर्मे चार्थे च कामे च मोक्षे च सततं रतः १३
त्रय्या संवृतरन्ध्रश्च राजा भवितुमर्हति
वृजिनस्य नरेन्द्राणां नान्यत्संवरणात्परम् १४
चातुर्वर्ण्यस्य धर्माश्च रक्षितव्या महीक्षिता
धर्मसंकररक्षा हि राज्ञां धर्मः सनातनः १५
न विश्वसेच्च नृपतिर्न चात्यर्थं न विश्वसेत्
षाड्गुण्यगुणदोषांश्च नित्यं बुद्ध्यावलोकयेत् १६
द्विडिछद्रदर्शी नृपतिर्नित्यमेव प्रशस्यते
त्रिवर्गविदितार्थश्च युक्तचारोपधिश्च यः १७
कोशस्योपार्जनरतिर्यमवैश्रवणोपमः
वेत्ता च दशवर्गस्य स्थानवृद्धिक्षयात्मनः १८
अभृतानां भवेद्भर्ता भृतानां चान्ववेक्षकः
नृपतिः सुमुखश्च स्यात्स्मितपूर्वाभिभाषिता १९
उपासिता च वृद्धानां जिततन्द्रीरलोलुपः
सतां वृत्ते स्थितमतिः सन्तो ह्याचारदर्शिनः २०
न चाददीत वित्तानि सतां हस्तात्कदाचन
असद्भ्यस्तु समादद्यात्सद्भ्यः संप्रतिपादयेत् २१
स्वयं प्रहर्तादाता च वश्यात्मा वश्यसाधनः
काले दाता च भोक्ता च शुद्धाचारस्तथैव च २२
शूरान्भक्तानसंहार्यान्कुले जातानरोगिणः
शिष्टाञ्शिष्टाभिसंबन्धान्मानिनो नावमानिनः २३
विद्याविदो लोकविदः परलोकान्ववेक्षकान्
धर्मेषु निरतान्साधूनचलानचलानिव २४
सहायान्सततं कुर्याद्राजा भूतिपुरस्कृतः
तैस्तुल्यश्च भवेद्भोगैश्छत्रमात्राज्ञयाधिकः २५
प्रत्यक्षा च परोक्षा च वृत्तिश्चास्य भवेत्सदा

एवं कृत्वा नरेन्द्रो हि न खेदमिह विन्दति २६
सर्वातिशङ्की नृपतिर्यश्च सर्वहरो भवेत्
स क्षिप्रमनृजुर्लुब्धः स्वजनेनैव बाध्यते २७
शुचिस्तु पृथिवीपालो लोकचित्तग्रहे रतः
न पतत्यरिभिर्ग्रस्तः पतितश्चावतिष्ठते २८
अक्रोधनोऽथाव्यसनी मृदुदण्डो जितेन्द्रियः
राजा भवति भूतानां विश्वास्यो हिमवानिव २९
प्राज्ञो न्यायगुणोपेतः पररन्ध्रेषु तत्परः
सुदर्शः सर्ववर्णानां नयापनयवित्तथा ३०
क्षिप्रकारी जितक्रोधः सुप्रसादो महामनाः
अरोगप्रकृतिर्युक्तः क्रियावानविकत्थनः ३१
आरब्धान्येव कार्याणि न पर्यवसितानि च
यस्य राज्ञः प्रदृश्यन्ते स राजा राजसत्तमः ३२
पुत्रा इव पितुर्गेहे विषये यस्य मानवाः
निर्भया विचरिष्यन्ति स राजा राजसत्तमः ३३
अगूढविभवा यस्य पौरा राष्ट्रनिवासिनः
नयापनयवेत्तारः स राजा राजसत्तमः ३४
स्वकर्मनिरता यस्य जना विषयवासिनः
असंघातरता दान्ताः पाल्यमाना यथाविधि ३५
वश्या नेया विनीताश्च न च संघर्षशीलिनः
विषये दानरुचयो नरा यस्य स पार्थिवः ३६
न यस्य कूटकपटं न माया न च मत्सरः
विषये भूमिपालस्य तस्य धर्मः सनातनः ३७
यः सत्करोति ज्ञानानि नेयः पौरहिते रतः
सतां धर्मानुगस्त्यागी स राजा राज्यमर्हति ३८
यस्य चारश्च मन्त्रश्च नित्यं चैव कृताकृते
न ज्ञायते हि रिपुभिः स राजा राज्यमर्हति ३९
श्लोकश्चायं पुरा गीतो भार्गवेण महात्मना
आख्याते रामचरिते नृपतिं प्रति भारत ४०
राजानं प्रथमं विन्देत्ततो भार्यां ततो धनम्

राजन्यसति लोकस्य कुतो भार्या कुतो धनम् ४१
तद्राजन्राजसिंहानां नान्यो धर्मः सनातनः
ऋते रक्षां सुविस्पष्टां रक्षा लोकस्य धारणम् ४२
प्राचेतसेन मनुना श्लोकौ चेमावुदाहृतौ
राजधर्मेषु राजेन्द्र ताविहैकमनाः शृणु ४३
षडेतान्पुरुषो जह्याद्भिन्नां नावमिवार्णवे
अप्रवक्तारमाचार्यमनधीयानमृत्विजम् ४४
अरक्षितारं राजानं भार्यां चाप्रियवादिनीम्
ग्रामकामं च गोपालं वनकामं च नापितम् ४५
इति श्रीमहाभारते शान्तिपर्वणि सप्तपञ्चाशोऽध्यायः ५७

अष्टपञ्चाशोऽध्यायः

भीष्म उवाच
एतत्ते राजधर्माणां नवनीतं युधिष्ठिर
बृहस्पतिर्हि भगवान्नान्यं धर्मं प्रशंसति १
विशालाक्षश्च भगवान्काव्यश्चैव महातपाः
सहस्राक्षो महेन्द्रश्च तथा प्राचेतसो मनुः २
भरद्वाजश्च भगवांस्तथा गौरशिरा मुनिः
राजशास्त्रप्रणेतारो ब्रह्मण्या ब्रह्मवादिनः ३
रक्षामेव प्रशंसन्ति धर्मं धर्मभृतां वर
राज्ञां राजीवताम्राक्ष साधनं चात्र वै शृणु ४
चारश्च प्रणिधिश्चैव काले दानममत्सरः
युक्त्वादानं न चादानमयोगेन युधिष्ठिर ५
सतां संग्रहणं शौर्यं दाक्ष्यं सत्यं प्रजाहितम्
अनार्जवैरार्जवैश्च शत्रुपक्षस्य भेदनम् ६
साधूनामपरित्यागः कुलीनानां च धारणम्
निचयश्च निचेयानां सेवा बुद्धिमतामपि ७
बलानां हर्षणं नित्यं प्रजानामन्ववेक्षणम्
कार्येष्वखेदः कोशस्य तथैव च विवर्धनम् ८
पुरगुप्तिरविश्वासः पौरसंघातभेदनम्

केतनानां च जीर्णानामवेक्षा चैव सीदताम् ९
द्विविधस्य च दण्डस्य प्रयोगः कालचोदितः
अरिमध्यस्थमित्राणां यथावच्चान्ववेक्षणम् १०
उपजापश्च भृत्यानामात्मनः परदर्शनात्
अविश्वासः स्वयं चैव परस्याश्वासनं तथा ११
नीतिधर्मानुसरणं नित्यमुत्थानमेव च
रिपूणामनवज्ञानं नित्यं चानार्यवर्जनम् १२
उत्थानं हि नरेन्द्राणां बृहस्पतिरभाषत
राजधर्मस्य यन्मूलं श्लोकांश्चात्र निबोध मे १३
उत्थानेनामृतं लब्धमुत्थानेनासुरा हताः
उत्थानेन महेन्द्रेण श्रैष्ठ्यं प्राप्तं दिवीह च १४
उत्थानधीरः पुरुषो वाग्धीरानधितिष्ठति
उत्थानधीरं वाग्धीरा रमयन्त उपासते १५
उत्थानहीनो राजा हि बुद्धिमानपि नित्यशः
धर्षणीयो रिपूणां स्याद्भुजंग इव निर्विषः १६
न च शत्रुरवज्ञेयो दुर्बलोऽपि बलीयसा
अल्पोऽपि हि दहत्यग्निर्विषमल्पं हिनस्ति च १७
एकाश्वेनापि संभूतः सत्रुर्दुर्गसमाश्रितः
तं तं तापयते देशमपि राज्ञः समृद्धिनः १८
राज्ञो रहस्यं यद्वाक्यं जयार्थं लोकसंग्रहः
हृदि यच्चास्य जिह्मं स्यात्कारणार्थं च यद्भवेत् १९
यच्चास्य कार्यं वृजिनमार्जवेनैव धार्यते
दम्भनार्थाय लोकस्य धर्मिष्ठामाचरेत्क्रियाम् २०
राज्यं हि सुमहत्तन्त्रं दुर्धार्यमकृतात्मभिः
न शक्यं मृदुना वोढुमाघातस्थानमुत्तमम् २१
राज्यं सर्वामिषं नित्यमार्जवेनेह धार्यते
तस्मान्मिश्रेण सततं वर्तितव्यं युधिष्ठिर २२
यद्यप्यस्य विपत्तिः स्याद्रक्षमाणस्य वै प्रजाः
सोऽप्यस्य विपुलो धर्म एवंवृत्ता हि भूमिपाः २३
एष ते राजधर्माणां लेशः समनुवर्णितः

भूयस्ते यत्र संदेहस्तद्ब्रूहि वदतां वर २४
वैशम्पायन उवाच
ततो व्यासश्च भगवान्देवस्थानोऽश्मना सह
वासुदेवः कृपश्चैव सात्यकिः संजयस्तथा २५
साधु साध्विति संहृष्टाः पुष्यमाणैरिवाननैः
अस्तुवंस्ते नरव्याघ्रं भीष्मं धर्मभृतां वरम् २६
ततो दीनमना भीष्ममुवाच कुरुसत्तमः
नेत्राभ्यामश्रुपूर्णाभ्यां पादौ तस्य शनैः स्पृशन् २७
श्व इदानीं स्वसंदेहं प्रक्ष्यामि त्वा पितामह
उपैति सविताप्यस्तं रसमापीय पार्थिवम् २८
ततो द्विजातीनभिवाद्य केशवः कृपश्च ते चैव युधिष्ठिरादयः
प्रदक्षिणीकृत्य महानदीसुतं ततो रथानारुरुहुर्मुदा युताः २९
दृषद्वतीं चाप्यवगाह्य सुव्रताः कृतोदकार्याः कृतजप्यमङ्गलाः
उपास्य संध्यां विधिवत्परंतपास्ततः पुरं ते विविशुर्गजाह्वयम् ३०
इति श्रीमहाभारते शान्तिपर्वणि अष्टपञ्चाशोऽध्यायः ५८

## एकोनषष्टितमोऽध्यायः

वैशम्पायन उवाच
ततः काल्यं समुत्थाय कृतपौर्वाह्णिकक्रियाः
ययुस्ते नगराकारैः रथैः पाण्डवयादवाः १
प्रपद्य च कुरुक्षेत्रं भीष्ममासाद्य चानघम्
सुखां च रजनीं पृष्ट्वा गाङ्गेयं रथिनां वरम् २
व्यासादीनभिवाद्यर्षीन्सर्वैस्तैश्चाभिनन्दिताः
निषेदुरभितो भीष्मं परिवार्य समन्ततः ३
ततो राजा महातेजा धर्मराजो युधिष्ठिरः
अब्रवीत्प्राञ्जलिर्भीष्मं प्रतिपूज्याभिवाद्य च ४
य एष राजा-राजेति शब्दश्चरति भारत
कथमेष समुत्पन्नस्तन्मे ब्रूहि पितामह ५
तुल्यपाणिशिरोग्रीवस्तुल्यबुद्धीन्द्रियात्मकः
तुल्यदुःखसुखात्मा च तुल्यपृष्ठभुजोदरः ६

तुल्यशुक्रास्थिमज्जश्च तुल्यमांसासृगेव च
निःश्वासोच्छ्वासतुल्यश्च तुल्यप्राणशरीरवान् ७
समानजन्ममरणः समः सर्वगुणैर्नृणाम्
विशिष्टबुद्धीञ्शूरांश्च कथमेकोऽधितिष्ठति ८
कथमेको महीं कृत्स्नां वीरशूरार्यसंकुलाम्
रक्षत्यपि च लोकस्य प्रसादमभिवाञ्छति ९
एकस्य च प्रसादेन कृत्स्नो लोकः प्रसीदति
व्याकुलेनाकुलः सर्वो भवतीति विनिश्चयः १०
एतदिच्छाम्यहं सर्वं तत्त्वेन भरतर्षभ
श्रोतुं तन्मे यथातत्त्वं प्रब्रूहि वदतां वर ११
नैतत्कारणमल्पं हि भविष्यति विशां पते
यदेकस्मिञ्जगत्सर्वं देववद्याति संनतिम् १२
भीष्म उवाच
नियतस्त्वं नरश्रेष्ठ शृणु सर्वमशेषतः
यथा राज्यं समुत्पन्नमादौ कृतयुगेऽभवत् १३
नैव राज्यं न राजासीन्न दण्डो न च दाण्डिकः
धर्मेणैव प्रजाः सर्वा रक्षन्ति च परस्परम् १४
पालयानास्तथान्योन्यं नरा धर्मेण भारत
खेदं परममाजग्मुस्ततस्तान्मोह आविशत् १५
ते मोहवशमापन्ना मानवा मनुजर्षभ
प्रतिपत्तिविमोहाच्च धर्मस्तेषामनीनशत् १६
नष्टायां प्रतिपत्तौ तु मोहवश्या नरास्तदा
लोभस्य वशमापन्नाः सर्वे भारतसत्तम १७
अप्राप्तस्याभिमर्शं तु कुर्वन्तो मनुजास्ततः
कामो नामापरस्तत्र समपद्यत वै प्रभो १८
तांस्तु कामवशं प्राप्तान्रागो नाम समस्पृशत्
रक्ताश्च नाभ्यजानन्त कार्याकार्यं युधिष्ठिर १९
अगम्यागमनं चैव वाच्यावाच्यं तथैव च
भक्ष्याभक्ष्यं च राजेन्द्र दोषादोषं च नात्यजन् २०
विप्लुते नरलोकेऽस्मिंस्ततो ब्रह्म ननाश ह

नाशाच्च ब्रह्मणो राजन्धर्मो नाशमथागमत् २१
नेष्टे ब्रह्मणि धर्मे च देवास्त्रासमथागमन्
ते त्रस्ता नरशार्दूल ब्रह्माणं शरणं ययुः २२
प्रपद्य भगवन्तं ते देवा लोकपितामहम्
ऊचुः प्राञ्जलयः सर्वे दुःखशोकभयार्दिताः २३
भगवन्नरलोकस्थं नष्टं ब्रह्म सनातनम्
लोभमोहादिभिर्भावैस्ततो नो भयमाविशत् २४
ब्रह्मणश्च प्रणाशेन धर्मोऽप्यनशदीश्वर
ततः स्म समतां याता मर्त्यैस्त्रिभुवनेश्वर २५
अधो हि वर्षमस्माकं मर्त्यास्तूर्ध्वप्रवर्षिणः
क्रियाव्युपरमात्तेषां ततोऽगच्छाम संशयम् २६
अत्र निःश्रेयसं यन्नस्तद्ध्यायस्व पितामह
त्वत्प्रभावसमुत्थोऽसौ प्रभावो नो विनश्यति २७
तानुवाच सुरान्सर्वान्स्वयंभूर्भगवांस्ततः
श्रेयोऽहं चिन्तयिष्यामि व्येतु वो भीः सुरर्षभाः २८
ततोऽध्यायसहस्राणां शतं चक्रे स्वबुद्धिजम्
यत्र धर्मस्तथैवार्थः कामश्चैवानुवर्णितः २९
त्रिवर्ग इति विख्यातो गण एष स्वयंभुवा
चतुर्थो मोक्ष इत्येव पृथगर्थः पृथग्गणः ३०
मोक्षस्यापि त्रिवर्गोऽन्य प्रोक्तः सत्त्वं रजस्तमः
स्थानं वृद्धिः क्षयश्चैव त्रिवर्गश्चैव दण्डजः ३१
आत्मा देशश्च कालश्चाप्युपायाः कृत्यमेव च
सहायाः कारणं चैव षड्वर्गो नीतिजः स्मृतः ३२
त्रयी चान्वीक्षिकी चैव वार्ता च भरतर्षभ
दण्डनीतिश्च विपुला विद्यास्तत्र निदर्शिताः ३३
अमात्यरक्षाप्रणिधी राजपुत्रस्य रक्षणम्
चारश्च विविधोपायः प्रणिधिश्च पृथग्विधः ३४
साम चोपप्रदानं च भेदो दण्डश्च पाण्डव
उपेक्षा पञ्चमी चात्र कार्त्स्न्येन समुदाहृता ३५
मन्त्रश्च वर्णितः कृत्स्नस्तथा भेदार्थ एव च

विभ्रंशश्चैव मन्त्रस्य सिद्ध्यसिद्ध्योश्च यत्फलम् ३६
संधिश्च विविधाभिख्यो हीनो मध्यस्तथोत्तमः
भयसत्कारवित्ताख्यः कार्त्स्न्येन परिवर्णितः ३७
यात्राकालाश्च चत्वारस्त्रिवर्गस्य च विस्तरः
विजयो धर्मयुक्तश्च तथार्थविजयश्च ह ३८
आसुरश्चैव विजयस्तथा कार्त्स्न्येन वर्णितः
लक्षणं पञ्चवर्गस्य त्रिविधं चात्र वर्णितम् ३९
प्रकाशश्चाप्रकाशश्च दण्डोऽथ परिशब्दितः
प्रकाशोऽष्टविधस्तत्र गुह्यस्तु बहुविस्तरः ४०
रथा नागा हयाश्चैव पादाताश्चैव पाण्डव
विष्टिर्नावश्चराश्चैव देशिकाः पथि चाष्टकम् ४१
अङ्गान्येतानि कौरव्य प्रकाशानि बलस्य तु
जङ्गमाजङ्गमाश्चोक्ताश्चूर्णयोगा विषादयः ४२
स्पर्शे चाभ्यवहार्ये चाप्युपांशुर्विविधः स्मृतः
अरिर्मित्रमुदासीन इत्येतेऽप्यनुवर्णिताः ४३
कृत्स्ना मार्गगुणाश्चैव तथा भूमिगुणाश्च ह
आत्मरक्षणमाश्वासः स्पशानां चान्ववेक्षणम् ४४
कल्पना विविधाश्चापि नृनागरथवाजिनाम्
व्यूहाश्च विविधाभिख्या विचित्रं युद्धकौशलम् ४५
उत्पाताश्च निपाताश्च सुयुद्धं सुपलायनम्
शस्त्राणां पायनज्ञानं तथैव भरतर्षभ ४६
बलव्यसनमुक्तं च तथैव बलहर्षणम्
पीडनास्कन्दकालश्च भयकालश्च पाण्डव ४७
तथा खातविधानं च योगसंचार एव च
चौराटव्यबलैश्चोग्रैः परराष्ट्रस्य पीडनम् ४८
अग्निदैर्गरदैश्चैव प्रतिरूपकचारकैः
श्रेणिमुख्योपजापेन वीरुधश्छेदनेन च ४९
दूषणेन च नागानामाशङ्काजननेन च
आरोधनेन भक्तस्य पथश्चोपार्जनेन च ५०
सप्ताङ्गस्य च राज्यस्य ह्रासवृद्धिसमञ्जसम्

दूतसामर्थ्ययोगश्च राष्ट्रस्य च विवर्धनम् ५१
अरिमध्यस्थमित्राणां सम्यक्चोक्तं प्रपञ्चनम्
अवमर्दः प्रतीघातस्तथैव च बलीयसाम् ५२
व्यवहारः सुसूक्ष्मश्च तथा कण्टकशोधनम्
शमो व्यायामयोगश्च योगो द्रव्यस्य संचयः ५३
अभृतानां च भरणं भृतानां चान्ववेक्षणम्
अर्थकाले प्रदानं च व्यसनेष्वप्रसङ्गिता ५४
तथा राजगुणाश्चैव सेनापतिगुणाश्च ये
कारणस्य च कर्तुश्च गुणदोषास्तथैव च ५५
दुष्टेङ्गितं च विविधं वृत्तिश्चैवानुजीविनाम्
शङ्कितत्वं च सर्वस्य प्रमादस्य च वर्जनम् ५६
अलब्धलिप्सा लब्धस्य तथैव च विवर्धनम्
प्रदानं च विवृद्धस्य पात्रेभ्यो विधिवत्तथा ५७
विसर्गोऽथस्य धर्मार्थमर्थार्थं कामहेतुना
चतुर्थो व्यसनाघाते तथैवात्रानुवर्णितः ५८
क्रोधजानि तथोग्राणि कामजानि तथैव च
दशोक्तानि कुरुश्रेष्ठ व्यसनान्यत्र चैव ह ५९
मृगयाक्षास्तथा पानं स्त्रियश्च भरतर्षभ
कामजान्याहुराचार्याः प्रोक्तानीह स्वयंभुवा ६०
वाक्पारुष्यं तथोग्रत्वं दण्डपारुष्यमेव च
आत्मनो निग्रहस्त्यागोऽथार्थदूषणमेव च ६१
यन्त्राणि विविधान्येव क्रियास्तेषां च वर्णिताः
अवमर्दः प्रतीघातः केतनानां च भञ्जनम् ६२
चैत्यद्रुमाणामामर्दो रोधःकर्मान्तनाशनम्
अपस्करोऽथ गमनं तथोपास्या च वर्णिता ६३
पणवानकशङ्खानां भेरीणां च युधां वर
उपार्जनं च द्रव्याणां परमर्म च तानि षट् ६४
लब्धस्य च प्रशमनं सतां चैव हि पूजनम्
विद्वद्भिरेकीभावश्च प्रातर्होमविधिज्ञता ६५
मङ्गलालम्भनं चैव शरीरस्य प्रतिक्रिया

आहारयोजनं चैव नित्यमास्तिक्यमेव च ६६
एकेन च यथोत्थेयं सत्यत्वं मधुरा गिरः
उत्सवानां समाजानां क्रियाः केतनजास्तथा ६७
प्रत्यक्षा च परोक्षा च सर्वाधिकरणेषु च
वृत्तिर्भरतशार्दूल नित्यं चैवान्ववेक्षणम् ६८
अदण्डयत्वं च विप्राणां युक्त्या दण्डनिपातनम्
अनुजीविस्वजातिभ्यो गुणेषु परिरक्षणम् ६९
रक्षणं चैव पौराणां स्वराष्ट्रस्य विवर्धनम्
मण्डलस्था च या चिन्ता राजन्द्वादशराजिका ७०
द्वासप्ततिमतिश्चैव प्रोक्ता या च स्वयंभुवा
देशजातिकुलानां च धर्माः समनुवर्णिताः ७१
धर्मश्चार्थश्च कामश्च मोक्षश्चात्रानुवर्णितः
उपायश्चार्थलिप्सा च विविधा भूरिदक्षिणाः ७२
मूलकर्मक्रिया चात्र माया योगश्च वर्णितः
दूषणं स्रोतसामत्र वर्णितं च स्थिराम्भसाम् ७३
यैर्यैरुपायैर्लोकश्च न चलेदार्यवर्त्मनः
तत्सर्वं राजशार्दूल नीतिशास्त्रेऽनुवर्णितम् ७४
एतत्कृत्वा शुभं शास्त्रं ततः स भगवान्प्रभुः
देवानुवाच संहृष्टः सर्वाञ्शक्रपुरोगमान् ७५
उपकाराय लोकस्य त्रिवर्गस्थापनाय च
नवनीतं सरस्वत्या बुद्धिरेषा प्रभाविता ७६
दण्डेन सहिता ह्येषा लोकरक्षणकारिका
निग्रहानुग्रहरता लोकाननु चरिष्यति ७७
दण्डेन नीयते चेयं दण्डं नयति चाप्युत
दण्डनीतिरिति प्रोक्ता त्रीँल्लोकाननुवर्तते ७८
षाड्गुण्यगुणसारैषा स्थास्यत्यग्रे महात्मसु
महत्त्वात्तस्य दण्डस्य नीतिर्विस्पष्टलक्षणा ७९
नयचारश्च विपुलो येन सर्वमिदं ततम्
आगमश्च पुराणानां महर्षीणां च संभवः ८०
तीर्थवंशश्च वंशश्च नक्षत्राणां युधिष्ठिर

सकलं चातुराश्रम्यं चातुर्होत्रं तथैव च ८१
चातुर्वर्ण्यं तथैवात्र चातुर्वेद्यं च वर्णितम्
इतिहासोपवेदाश्च न्यायः कृत्स्नश्च वर्णितः ८२
तपो ज्ञानमहिंसा च सत्यासत्ये नयः परः
वृद्धोपसेवा दानं च शौचमुत्थानमेव च ८३
सर्वभूतानुकम्पा च सर्वमत्रोपवर्णितम्
भुवि वाचोगतं यच्च तच्च सर्वं समर्पितम् ८४
तस्मिन्पैतामहे शास्त्रे पाण्डवैतदसंशयम्
धर्मार्थकाममोक्षाश्च सकला ह्यत्र शब्दिताः ८५
ततस्तां भगवान्नीतिं पूर्वं जग्राह शंकरः
बहुरूपो विशालाक्षः शिवः स्थाणुरुमापतिः ८६
युगानामायुषो ह्रासं विज्ञाय भगवाञ्शिवः
संचिक्षेप ततः शास्त्रं महार्थं ब्रह्मणा कृतम् ८७
वैशालाक्षमिति प्रोक्तं तदिन्द्रः प्रत्यपद्यत
दशाध्यायसहस्राणि सुब्रह्मण्यो महातपाः ८८
भगवानपि तच्छास्त्रं संचिक्षेप पुरंदरः
सहस्रैः पञ्चभिस्तात यदुक्तं बाहुदन्तकम् ८९
अध्यायानां सहस्रैस्तु त्रिभिरेव बृहस्पतिः
संचिक्षेपेश्वरो बुद्ध्या बार्हस्पत्यं तदुच्यते ९०
अध्यायानां सहस्रेण काव्यः संक्षेपमब्रवीत्
तच्छास्त्रममितप्रज्ञो योगाचार्यो महातपाः ९१
एवं लोकानुरोधेन शास्त्रमेतन्महर्षिभिः
संक्षिप्तमायुर्विज्ञाय मर्त्यानां ह्रासि पाण्डव ९२
अथ देवाः समागम्य विष्णुमूचुः प्रजापतिम्
एको योऽहति मर्त्येभ्यः श्रैष्ठ्यं तं वै समादिश ९३
ततः संचिन्त्य भगवान्देवो नारायणः प्रभुः
तैजसं वै विरजसं सोऽसृजन्मानसं सुतम् ९४
विरजास्तु महाभाग विभुत्वं भुवि नैच्छत
न्यासायैवाभवद्बुद्धिः प्रणीता तस्य पाण्डव ९५
कीर्तिमांस्तस्य पुत्रोऽभूत्सोऽपि पञ्चातिगोऽभवत्

कर्दमस्तस्य च सुतः सोऽप्यतप्यन्महत्तपः ९६
प्रजापतेः कर्दमस्य अनङ्गो नाम वै सुतः
प्रजानां रक्षिता साधुर्दण्डनीतिविशारदः ९७
अनङ्गपुत्रोऽतिबलो नीतिमानधिगम्य वै
अभिपेदे महीराज्यमथेन्द्रियवशोऽभवत् ९८
मृत्योस्तु दुहिता राजन्सुनीथा नाम मानसी
प्रख्याता त्रिषु लोकेषु या सा वेनमजीजनत् ९९
तं प्रजासु विधर्माणं रागद्वेषवशानुगम्
मन्त्रपूतैः कुशैर्जघ्नुरृषयो ब्रह्मवादिनः १००
ममन्थुर्दक्षिणं चोरुमृषयस्तस्य मन्त्रतः
ततोऽस्य विकृतो जज्ञे ह्रस्वाङ्गः पुरुषो भुवि १०१
दग्धस्थाणुप्रतीकाशो रक्ताक्षः कृष्णमूर्धजः
निषीदेत्येवमूचुस्तमृषयो ब्रह्मवादिनः १०२
तस्मान्निषादाः संभूताः क्रूराः शैलवनाश्रयाः
ये चान्ये विन्ध्यनिलया म्लेच्छाः शतसहस्रशः १०३
भूयोऽस्य दक्षिणं पाणिं ममन्थुस्ते महर्षयः
ततः पुरुष उत्पन्नो रूपेणेन्द्र इवापरः १०४
कवची बद्धनिस्त्रिंशः सशरः सशरासनः
वेदवेदाङ्गविच्चैव धनुर्वेदे च पारगः १०५
तं दण्डनीतिः सकला श्रिता राजन्नरोत्तमम्
ततः स प्राञ्जलिर्वैन्यो महर्षींस्तानुवाच ह १०६
सुसूक्ष्मा मे समुत्पन्ना बुद्धिर्धर्मार्थदर्शिनी
अनया किं मया कार्यं तन्मे तत्त्वेन शंसत १०७
यन्मां भवन्तो वक्ष्यन्ति कार्यमर्थसमन्वितम्
तदहं वै करिष्यामि नात्र कार्या विचारणा १०८
तमूचुरथ देवास्ते ते चैव परमर्षयः
नियतो यत्र धर्मो वै तमशङ्कः समाचर १०९
प्रियाप्रिये परित्यज्य समः सर्वेषु जन्तुषु
कामक्रोधौ च लोभं च मानं चोत्सृज्य दूरतः ११०
यश्च धर्मात्प्रविचलेल्लोके कश्चन मानवः

निग्राह्यस्ते स बाहुभ्यां शश्वद्धर्ममवेक्षतः १११
प्रतिज्ञां चाधिरोहस्व मनसा कर्मणा गिरा
पालयिष्याम्यहं भौमं ब्रह्म इत्येव चासकृत् ११२
यश्चात्र धर्मनीत्युक्तो दण्डनीतिव्यपाश्रयः
तमशङ्कः करिष्यामि स्ववशो न कदाचन ११३
अदण्ड्या मे द्विजाश्चेति प्रतिजानीष्व चाभिभो
लोकं च संकरात्कृत्स्नात्त्रातास्मीति परंतप ११४
वैन्यस्ततस्तानुवाच देवानृषिपुरोगमान्
ब्राह्मणा मे सहायाश्चेदेवमस्तु सुरर्षभाः ११५
एवमस्त्विति वैन्यस्तु तैरुक्तो ब्रह्मवादिभिः
पुरोधाश्चाभवत्तस्य शुक्रो ब्रह्ममयो निधिः ११६
मन्त्रिणो बालखिल्यास्तु सारस्वत्यो गणो ह्यभूत्
महर्षिर्भगवान्गर्गस्तस्य सांवत्सरोऽभवत् ११७
आत्मनाष्टम इत्येव श्रुतिरेषा परा नृषु
उत्पन्नौ बन्दिनौ चास्य तत्पूर्वौ सूतमागधौ ११८
समतां वसुधायाश्च स सम्यगुपपादयत्
वैषम्यं हि परं भूमेरासीदिति ह नः श्रुतम् ११९
स विष्णुना च देवेन शक्रेण विबुधैः सह
ऋषिभिश्च प्रजापाल्ये ब्रह्मणा चाभिषेचितः १२०
तं साक्षात्पृथिवी भेजे रत्नान्यादाय पाण्डव
सागरः सरितां भर्ता हिमवांश्चाचलोत्तमः १२१
शक्रश्च धनमक्षय्यं प्रादात्तस्य युधिष्ठिर
रुक्मं चापि महामेरुः स्वयं कनकपर्वतः १२२
यक्षराक्षसभर्ता च भगवान्नरवाहनः
धर्मे चार्थे च कामे च समर्थं प्रददौ धनम् १२३
हया रथाश्च नागाश्च कोटिशः पुरुषास्तथा
प्रादुर्बभूवुर्वैन्यस्य चिन्तनादेव पाण्डव
न जरा न च दुर्भिक्षं नाधयो व्याधयस्तथा १२४
सरीसृपेभ्यः स्तेनेभ्यो न चान्योन्यात्कदाचन
भयमुत्पद्यते तत्र तस्य राज्ञोऽभिरक्षणात् १२५

तेनेयं पृथिवी दुग्धा सस्यानि दश सप्त च
यक्षराक्षसनागैश्चापीप्सितं यस्य यस्य यत् १२६
तेन धर्मोत्तरश्चायं कृतो लोको महात्मना
रञ्जिताश्च प्रजाः सर्वास्तेन राजेति शब्द्यते १२७
ब्राह्मणानां क्षतत्राणात्ततः क्षत्रिय उच्यते
प्रथिता धनतश्चेयं पृथिवी साधुभिः स्मृता १२८
स्थापनं चाकरोद्विष्णुः स्वयमेव सनातनः
नातिवर्तिष्यते कश्चिद्राजंस्त्वामिति पार्थिव १२९
तपसा भगवान्विष्णुराविवेश च भूमिपम्
देववन्नरदेवानां नमते यज्जगन्नृप १३०
दण्डनीत्या च सततं रक्षितं तं नरेश्वर
नाधर्षयत्ततः कश्चिच्चारनित्याच्च दर्शनात् १३१
आत्मना करणैश्चैव समस्येह महीक्षितः
को हेतुर्यद्वशे तिष्ठेल्लोको दैवादृते गुणात् १३२
विष्णोर्ललाटात्कमलं सौवर्णमभवत्तदा
श्रीः संभूता यतो देवी पत्नी धर्मस्य धीमतः १३३
श्रियः सकाशादर्थश्च जातो धर्मेण पाण्डव
अथ धर्मस्तथैवार्थः श्रीश्च राज्ये प्रतिष्ठिता १३४
सुकृतस्य क्षयाच्चैव स्वर्लोकादेत्य मेदिनीम्
पार्थिवो जायते तात दण्डनीतिवशानुगः १३५
महत्त्वेन च संयुक्तो वैष्णवेन नरो भुवि
बुद्ध्या भवति संयुक्तो माहात्म्यं चाधिगच्छति १३६
स्थापनामथ देवानां न कश्चिदतिवर्तते
तिष्ठत्येकस्य च वशे तं चेदनुविधीयते १३७
शुभं हि कर्म राजेन्द्र शुभत्वायोपकल्पते
तुल्यस्यैकस्य यस्यायं लोको वचसि तिष्ठति १३८
यो ह्यस्य मुखमद्राक्षीत्सौम्य सोऽस्य वशानुगः
सुभगं चार्थवन्तं च रूपवन्तं च पश्यति १३९
ततो जगति राजेन्द्र सततं शब्दितं बुधैः
देवाश्च नरदेवाश्च तुल्या इति विशां पते १४०

एतत्ते सर्वमाख्यातं महत्त्वं प्रति राजसु
कार्त्स्न्येन भरतश्रेष्ठ किमन्यदिह वर्तताम् १४१
इति श्रीमहाभारते शान्तिपर्वणि एकोनषष्टितमोऽध्यायः ५९

षष्टितमोऽध्यायः

वैशम्पायन उवाच
ततः पुनः स गाङ्गेयमभिवाद्य पितामहम्
प्राञ्जलिर्नियतो भूत्वा पर्यपृच्छद्युधिष्ठिरः १
के धर्माः सर्ववर्णानां चातुर्वर्ण्यस्य के पृथक्
चतुर्णामाश्रमाणां च राजधर्माश्च के मताः २
केन स्विद्वर्धते राष्ट्रं राजा केन विवर्धते
केन पौराश्च भृत्याश्च वर्धन्ते भरतर्षभ ३
कोशं दण्डं च दुर्गं च सहायान्मन्त्रिणस्तथा
ऋत्विक्पुरोहिताचार्यान्कीदृशान्वर्जयेन्नृपः ४
केषु विश्वसितव्यं स्याद्राज्ञां कस्यांचिदापदि
कुतो वात्मा दृढो रक्ष्यस्तन्मे ब्रूहि पितामह ५
भीष्म उवाच
नमो धर्माय महते नमः कृष्णाय वेधसे
ब्राह्मणेभ्यो नमस्कृत्वा धर्मान्वक्ष्यामि शाश्वतान् ६
अक्रोधः सत्यवचनं संविभागः क्षमा तथा
प्रजनः स्वेषु दारेषु शौचमद्रोह एव च ७
आर्जवं भृत्यभरणं नवैते सार्ववर्णिकाः
ब्राह्मणस्य तु यो धर्मस्तं ते वक्ष्यामि केवलम् ८
दममेव महाराज धर्ममाहुः पुरातनम्
स्वाध्यायोऽध्यापनं चैव तत्र कर्म समाप्यते ९
तं चेद्वित्तमुपागच्छेद्वर्तमानं स्वकर्मणि
अकुर्वाणं विकर्माणि शान्तं प्रज्ञानतर्पितम् १०
कुर्वीतापत्यसंतानमथो दद्याद्यजेत च
संविभज्य हि भोक्तव्यं धनं सद्भिरितीष्यते ११
परिनिष्ठितकार्यस्तु स्वाध्यायेनैव ब्राह्मणः

कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते १२
क्षत्रियस्यापि यो धर्मस्तं ते वक्ष्यामि भारत
दद्याद्राजा न याचेत यजेत न तु याजयेत् १३
नाध्यापयेदधीयीत प्रजाश्च परिपालयेत्
नित्योद्युक्तो दस्युवधे रणे कुर्यात्पराक्रमम् १४
ये च क्रतुभिरीजानाः श्रुतवन्तश्च भूमिपाः
य एवाहवजेतारस्त एषां लोकजित्तमाः १५
अविक्षतेन देहेन समराद्यो निवर्तते
क्षत्रियो नास्य तत्कर्म प्रशंसन्ति पुराविदः १६
वधं हि क्षत्रबन्धूनां धर्ममाहुः प्रधानतः
नास्य कृत्यतमं किंचिदन्यद्दस्युनिबर्हणात् १७
दानमध्ययनं यज्ञो योगः क्षेमो विधीयते
तस्माद्राज्ञा विशेषेण योद्धव्यं धर्ममीप्सता १८
स्वेषु धर्मेष्ववस्थाप्य प्रजाः सर्वा महीपतिः
धर्मेण सर्वकृत्यानि समनिष्ठानि कारयेत् १९
परिनिष्ठितकार्य स्यान्नृपतिः परिपालनात्
कुर्यादन्यन्न वा कुर्यादैन्द्रो राजन्य उच्यते २०
वैश्यस्यापीह यो धर्मस्तं ते वक्ष्यामि भारत
दानमध्ययनं यज्ञः शौचेन धनसंचयः २१
पितृवत्पालयेद्वैश्यो युक्तः सर्वपशूनिह
विकर्म तद्भवेदन्यत्कर्म यद्यत्समाचरेत्
रक्षया स हि तेषां वै महत्सुखमवाप्नुयात् २२
प्रजापतिर्हि वैश्याय सृष्ट्वा परिददे पशून्
ब्राह्मणाय च राज्ञे च सर्वाः परिददे प्रजाः २३
तस्य वृत्तिं प्रवक्ष्यामि यच्च तस्योपजीवनम्
षण्णामेकां पिबेद्धेनुं शताच्च मिथुनं हरेत् २४
लये च सप्तमो भागस्तथा शृङ्गे कला खुरे
सस्यस्य सर्वबीजानामेषा सांवत्सरी भृतिः २५
न च वैश्यस्य कामः स्यान्न रक्षेयं पशूनिति
वैश्ये चेच्छति नान्येन रक्षितव्याः कथंचन २६

शूद्रस्यापि हि यो धर्मस्तं ते वक्ष्यामि भारत
प्रजापतिर्हि वर्णानां दासं शूद्रमकल्पयत् २७
तस्माच्छूद्रस्य वर्णानां परिचर्या विधीयते
तेषां शुश्रूषणाच्चैव महत्सुखमवाप्नुयात् २८
शूद्र एतान्परिचरेत्त्रीन्वर्णाननसूयकः
संचयांश्च न कुर्वीत जातु शूद्रः कथंचन २९
पापीयान्हि धनं लब्ध्वा वशे कुर्याद्गरीयसः
राज्ञा वा समनुज्ञातः कामं कुर्वीत धार्मिकः ३०
तस्य वृत्तिं प्रवक्ष्यामि यच्च तस्योपजीवनम्
अवश्यभरणीयो हि वर्णानां शूद्र उच्यते ३१
छत्रं वेष्टनमौशीरमुपानद्व्यजनानि च
यातयामानि देयानि शूद्राय परिचारिणे ३२
अधार्याणि विशीर्णानि वसनानि द्विजातिभिः
शूद्रायैव विधेयानि तस्य धर्मधनं हि तत् ३३
यश्च कश्चिद्द्विजातीनां शूद्रः शुश्रूषुराव्रजेत्
कल्प्यां तस्य तु तेनाहुर्वृत्तिं धर्मविदो जनाः
देयः पिण्डोऽनपेताय भर्तव्यौ वृद्धदुर्बलौ ३४
शूद्रेण च न हातव्यो भर्ता कस्यांचिदापदि
अतिरेकेण भर्तव्यो भर्ता द्रव्यपरिक्षये
न हि स्वमस्ति शूद्रस्य भर्तृहार्यधनो ह्यसौ ३५
उक्तस्त्रयाणां वर्णानां यज्ञस्त्रय्यैव भारत
स्वाहाकारनमस्कारौ मंत्रः शूद्रे विधीयते ३६
ताभ्यां शूद्रः पाकयज्ञैर्यजेत व्रतवान्स्वयम्
पूर्णपात्रमयीमाहुः पाकयज्ञस्य दक्षिणाम् ३७
शूद्रः पैजवनो नाम सहस्राणां शतं ददौ
ऐन्द्राग्नेन विधानेन दक्षिणामिति नः श्रुतम् ३८
अतो हि सर्ववर्णानां श्रद्धायज्ञो विधीयते
दैवतं हि महच्छ्रद्धा पवित्रं यजतां च यत् ३९
दैवतं परमं विप्राः स्वेन स्वेन परस्परम्
अयजन्निह सत्रैस्ते तैस्तैः कामैः सनातनैः ४०

संसृष्टा ब्राह्मणैरेव त्रिषु वर्णेषु सृष्टयः
देवानामपि ये देवा यद्ब्रूयुस्ते परं हि तत्
तस्माद्वर्णैः सर्वयज्ञाः संसृज्यन्ते न काम्यया ४१
ऋग्यजुःसामवित्पूज्यो नित्यं स्याद्देववद्द्विजः
अनृग्यजुरसामा तु प्राजापत्य उपद्रवः ४२
यज्ञो मनीषया तात सर्ववर्णेषु भारत
नास्य यज्ञहनो देवा ईहन्ते नेतरे जनाः
तस्मात्सर्वेषु वर्णेषु श्रद्धायज्ञो विधीयते ४३
स्वं दैवतं ब्राह्मणाः स्वेन नित्यं परान्वर्णानयजन्नेवमासीत्
आरोचिता नः सुमहान्स धर्मः सृष्टो ब्रह्मणा त्रिषु वर्णेषु दृष्टः ४४
तस्माद्वर्णा ऋजवो जातिधर्माः संसृज्यन्ते तस्य विपाक एषः
एकं साम यजुरेकमृगेका विप्रश्चैकोऽनिश्चयस्तेषु दृष्टः ४५
अत्र गाथा यज्ञगीताः कीर्तयन्ति पुराविदः
वैखानसानां राजेन्द्र मुनीनां यष्टुमिच्छताम् ४६
उदितेऽनुदिते वापि श्रद्दधानो जितेन्द्रियः
वह्निं जुहोति धर्मेण श्रद्धा वै कारणं महत् ४७
यत्स्कन्नमस्य तत्पूर्वं यदस्कन्नं तदुत्तरम्
बहूनि यज्ञरूपाणि नानाकर्मफलानि च ४८
तानि यः संविजानाति ज्ञाननिश्चयनिश्चितः
द्विजातिः श्रद्धयोपेतः स यष्टुं पुरुषोऽहति ४९
स्तेनो वा यदि वा पापो यदि वा पापकृत्तमः
यष्टुमिच्छति यज्ञं यः साधुमेव वदन्ति तम् ५०
ऋषयस्तं प्रशंसन्ति साधु चैतदसंशयम्
सर्वथा सर्ववर्णैर्हि यष्टव्यमिति निश्चयः
न हि यज्ञसमं किंचित्त्रिषु लोकेषु विद्यते ५१
तस्माद्यष्टव्यमित्याहुः पुरुषेणानसूयता
श्रद्धापवित्रमाश्रित्य यथाशक्ति प्रयच्छता ५२
इति श्रीमहाभारते शान्तिपर्वणि षष्टितमोऽध्यायः ६०

## एकषष्ठितमोऽध्यायः

भीष्म उवाच
आश्रमाणां महाबाहो शृणु सत्यपराक्रम
चतुर्णामिह वर्णानां कर्माणि च युधिष्ठिर १
वानप्रस्थं भैक्षचर्यां गार्हस्थ्यं च महाश्रमम्
ब्रह्मचर्याश्रमं प्राहुश्चतुर्थं ब्राह्मणैर्वृतम् २
जटाकरणसंस्कारं द्विजातित्वमवाप्य च
आधानादीनि कर्माणि प्राप्य वेदमधीत्य च ३
सदारो वाप्यदारो वा आत्मवान्संयतेन्द्रियः
वानप्रस्थाश्रमं गच्छेत्कृतकृत्यो गृहाश्रमात् ४
तत्रारण्यकशास्त्राणि समधीत्य स धर्मवित्
ऊर्ध्वरेताः प्रजायित्वा गच्छत्यक्षरसात्मताम् ५
एतान्येव निमित्तानि मुनीनामूर्ध्वरेतसाम्
कर्तव्यानीह विप्रेण राजन्नादौ विपश्चिता ६
चरितब्रह्मचर्यस्य ब्राह्मणस्य विशां पते
भैक्षचर्यास्वधीकारः प्रशस्त इह मोक्षिणः ७
यत्रास्तमितशायी स्यान्निरग्निरनिकेतनः
यथोपलब्धजीवी स्यान्मुनिर्दान्तो जितेन्द्रियः ८
निराशीः स्यात्सर्वसमो निर्भोगो निर्विकारवान्
विप्रः क्षेमाश्रमं प्राप्तो गच्छत्यक्षरसात्मताम् ९
अधीत्य वेदान्कृतसर्वकृत्यः संतानमुत्पाद्य सुखानि भुक्त्वा
समाहितः प्रचरेद्दुश्चरं तं गार्हस्थ्यधर्मं मुनिधर्मदृष्टम् १०
स्वदारतुष्ट ऋतुकालगामी नियोगसेवी नशठो नजिह्मः
मिताशनो देवपरः कृतज्ञः सत्यो मृदुश्चानृशंसः क्षमावान् ११
दान्तो विधेयो हव्यकव्येऽप्रमत्तो अन्नस्य दाता सततं द्विजेभ्यः
अमत्सरी सर्वलिङ्गिप्रदाता वैताननित्यश्च गृहाश्रमी स्यात् १२
अथात्र नारायणगीतमाहुर्महर्षयस्तात महानुभावाः
महार्थमत्यर्थतपःप्रयुक्तं तदुच्यमानं हि मया निबोध १३
सत्यार्जवं चातिथिपूजनं च धर्मस्तथार्थश्च रतिश्च दारे
निषेवितव्यानि सुखानि लोके ह्यस्मिन्परे चैव मतं ममैतत् १४

भरणं पुत्रदाराणां वेदानां पारणं तथा
सतां तमाश्रमं श्रेष्ठं वदन्ति परमर्षयः १५
एवं हि यो ब्राह्मणो यज्ञशीलो गार्हस्थ्यमध्यावसते यथावत्
गृहस्थवृत्तिं प्रविशोध्य सम्यक्स्वर्गे विशुद्धं फलमाप्नुते सः १६
तस्य देहपरित्यागादिष्टाः कामाक्षया मताः
आनन्त्यायोपतिष्ठन्ति सर्वतोक्षिशिरोमुखाः १७
खादन्नेको जपन्नेकः सर्पन्नेको युधिष्ठिर
एकस्मिन्नेव आचार्ये शुश्रूषुर्मलपङ्कवान् १८
ब्रह्मचारी व्रती नित्यं नित्यं दीक्षापरो वशी
अविचार्य तथा वेदं कृत्यं कुर्वन्वसेत्सदा १९
शुश्रूषां सततं कुर्वन्गुरोः संप्रणमेत च
षट्कर्मस्वनिवृत्तश्च नप्रवृत्तश्च सर्वशः २०
न चरत्यधिकारेण सेवितं द्विषतो न च
एषोऽश्रमपदस्तात ब्रह्मचारिण इष्यते २१
इति श्रीमहाभारते शान्तिपर्वणि एकषष्टितमोऽध्यायः ६१

## द्विषष्ठितमोऽध्यायः

युधिष्ठिर उवाच
शिवान्सुखान्महोदर्कानहिंस्राँल्लोकसंमतान्
ब्रूहि धर्मान्सुखोपायान्मद्विधानां सुखावहान् १
भीष्म उवाच
ब्राह्मणस्येह चत्वार आश्रमा विहिताः प्रभो
वर्णास्ताननुवर्तन्ते त्रयो भरतसत्तम २
उक्तानि कर्माणि बहूनि राजन्स्वर्ग्याणि राजन्यपरायणानि
नेमानि दृष्टान्तविधौ स्मृतानि क्षात्रे हि सर्वं विहितं यथावत् ३
क्षात्राणि वैश्यानि च सेवमानः शौद्राणि कर्माणि च ब्राह्मणः सन्
अस्मिँल्लोके निन्दितो मन्दचेताः परे च लोके निरयं प्रयाति ४
या संज्ञा विहिता लोके दासे शुनि वृके पशौ
विकर्मणि स्थिते विप्रे तां संज्ञां कुरु पाण्डव ५
षट्कर्मसंप्रवृत्तस्य आश्रमेषु चतुर्ष्वपि

सर्वधर्मोपपन्नस्य संभूतस्य कृतात्मनः ६
ब्राह्मणस्य विशुद्धस्य तपस्यभिरतस्य च
निराशिषो वदान्यस्य लोका ह्यक्षरसंज्ञिताः ७
यो यस्मिन्कुरुते कर्म यादृशं येन यत्र च
तादृशं तादृशेनैव स गुणं प्रतिपद्यते ८
वृद्ध्या कृषिवणिक्त्वेन जीवसंजीवनेन च
वेत्तुमर्हसि राजेन्द्र स्वाध्यायगणितं महत् ९
कालसंचोदितः कालः कालपर्यायनिश्चितः
उत्तमाधममध्यानि कर्माणि कुरुतेऽवशः १०
अन्तवन्ति प्रदानानि पुरा श्रेयस्कराणि च
स्वकर्मनिरतो लोको ह्यक्षरः सर्वतोमुखः ११
इति श्रीमहाभारते शान्तिपर्वणि द्विषष्टितमोऽध्यायः ६२

त्रिषष्टितमोऽध्यायः

भीष्म उवाच
ज्याकर्षणं शत्रुनिबर्हणं च कृषिर्वणिज्या पशुपालनं च
शुश्रूषणं चापि तथार्थहेतोरकार्यमेतत्परमं द्विजस्य १
सेव्यं तु ब्रह्मषट्कर्म गृहस्थेन मनीषिणा
कृतकृत्यस्य चारण्ये वासो विप्रस्य शस्यते २
राजप्रैष्यं कृषिधनं जीवनं च वणिज्यया
कौटिल्यं कौलटेयं च कुसीदं च विवर्जयेत् ३
शूद्रो राजन्भवति ब्रह्मबन्धुर्दुश्चारित्र्यो यश्च धर्मादपेतः
वृषलीपतिः पिशुनो नर्तकश्च ग्रामप्रैष्यो यश्च भवेद्विकर्मा ४
जपन्वेदानजपंश्चापि राजन्समः शूद्रैर्दासवच्चापि भोज्यः
एते सर्वे शूद्रसमा भवन्ति राजन्नेतान्वर्जयेद्देवकृत्ये ५
निर्मर्यादे चाशने क्रूरवृत्तौ हिंसात्मके त्यक्तधर्मस्ववृत्ते
हव्यं कव्यं यानि चान्यानि राजन्देयान्यदेयानि भवन्ति तस्मिन् ६
तस्माद्धर्मो विहितो ब्राह्मणस्य दमः शौचं चार्जवं चापि राजन्
तथा विप्रस्याश्रमाः सर्व एव पुरा राजन्ब्रह्मणा वै निसृष्टाः ७
यः स्याद्दान्तः सोमप आर्यशीलः सानुक्रोशः सर्वसहो निराशीः

ऋजुर्मृदुनृशंसः क्षमावान्स वै विप्रो नेतरः पापकर्मा ८
शूद्रं वैश्यं राजपुत्रं च राजँल्लोकाः सर्वे संश्रिता धर्मकामाः
तस्माद्वर्णाञ्जातिधर्मेषु सक्तान्मत्वा विष्णुर्नेच्छति पाण्डुपुत्र ९
लोके चेदं सर्वलोकस्य न स्याच्चातुर्वर्ण्यं वेदवादाश्च नस्युः
सर्वाश्चेज्याः सर्वलोकक्रियाश्च सद्यः सर्वे चाश्रमस्था न वै स्युः १०
यश्च त्रयाणां वर्णानामिच्छेदाश्रमसेवनम्
कर्तुमाश्रमदृष्टांश्च धर्मास्ताञ्शृणु पाण्डव ११
शुश्रूषाकृतकृत्यस्य कृतसंतानकर्मणः
अभ्यनुज्ञाप्य राजानं शूद्रस्य जगतीपते १२
अल्पान्तरगतस्यापि दशधर्मगतस्य वा
आश्रमा विहिताः सर्वे वर्जयित्वा निराशिषम् १३
भैक्षचर्यां न तु प्राहुस्तस्य तद्धर्मचारिणः
तथा वैश्यस्य राजेन्द्र राजपुत्रस्य चैव हि १४
कृत्यकृत्यो वयोतीतो राज्ञः कृतपरिश्रमः
वैश्यो गच्छेदनुज्ञातो नृपेणाश्रममण्डलम् १५
वेदानधीत्य धर्मेण राजशास्त्राणि चानघ
संतानादीनि कर्माणि कृत्वा सोमं निषेव्य च १६
पालयित्वा प्रजाः सर्वा धर्मेण वदतां वर
राजसूयाश्वमेधादीन्मखानन्यांस्तथैव च १७
समानीय यथापाठं विप्रेभ्यो दत्तदक्षिणः
संग्रामे विजयं प्राप्य तथाल्पं यदि वा बहु १८
स्थापयित्वा प्रजापालं पुत्रं राज्ये च पाण्डव
अन्यगोत्रं प्रशस्तं वा क्षत्रियं क्षत्रियर्षभ १९
अर्चयित्वा पितृन्सम्यक्पितृयज्ञैर्यथाविधि
देवान्यज्ञैर्ऋषीन्वेदैरर्चित्वा चैव यत्नतः २०
अन्तकाले च संप्राप्ते य इच्छेदाश्रमान्तरम्
आनुपूर्व्याश्रमान्राजन्गत्वा सिद्धिमवाप्नुयात् २१
राजर्षित्वेन राजेन्द्र भैक्षचर्याध्वसेवया
अपेतगृहधर्मोऽपि चरेज्जीवितकाम्यया २२
न चैतन्नैष्ठिकं कर्म त्रयाणां भरतर्षभ

चतुर्णां राजशार्दूल प्राहुराश्रमवासिनाम् २३
बह्वायत्तं क्षत्रियैर्मानवानां लोकश्रेष्ठं धर्ममासेवमानैः
सर्वे धर्माः सोपधर्मास्त्रयाणां राज्ञो धर्मादिति वेदाच्छृणोमि २४
यथा राजन्हस्तिपदे पदानि संलीयन्ते सर्वसत्त्वोद्भवानि
एवं धर्मान्राजधर्मेषु सर्वान्सर्वावस्थं सम्प्रलीनान्निबोध २५
अल्पाश्रयानल्पफलान्वदन्ति धर्मानन्यान्धर्मविदो मनुष्याः
महाश्रयं बहुकल्याणरूपं क्षात्रं धर्मं नेतरं प्राहुरार्याः २६
सर्वे धर्मा राजधर्मप्रधानाः सर्वे धर्माः पाल्यमाना भवन्ति
सर्वत्यागो राजधर्मेषु राजंस्त्यागे चाहुर्धर्ममग्र्यं पुराणम् २७
मज्जेत्त्रयी दण्डनीतौ हतायां सर्वे धर्मा न भवेयुर्विरुद्धाः
सर्वे धर्मश्चाश्रमाणां गताः स्युः क्षात्रे त्यक्ते राजधर्मे पुराणे २८
सर्वे त्यागा राजधर्मेषु दृष्टाः सर्वा दीक्षा राजधर्मेषु चोक्ताः
सर्वे योगा राजधर्मेषु चोक्ताः सर्वे लोका राजधर्मान्प्रविष्टाः २९
यथा जीवाः प्रकृतौ वध्यमाना धर्माश्रितानामुपपीडनाय
एवं धर्मा राजधर्मैर्वियुक्ताः सर्वावस्थं नाद्रियन्ते स्वधर्मम् ३०
इति श्रीमहाभारते शान्तिपर्वणि त्रिषष्टितमोऽध्यायः ६३

## चतुः षष्ठितमोऽध्यायः

भीष्म उवाच
चातुराश्रम्यधर्माश्च जातिधर्माश्च पाण्डव
लोकपालोत्तराश्चैव क्षात्रे धर्मे व्यवस्थिताः १
सर्वाण्येतानि धर्माणि क्षात्रे भरतसत्तम
निराशिषो जीवलोके क्षात्रे धर्मे व्यवस्थिताः २
अप्रत्यक्षं बहुद्वारं धर्ममाश्रमवासिनाम्
प्ररूपयन्ति तद्भावमागमैरेव शाश्वतम् ३
अपरे वचनैः पुण्यैर्वादिनो लोकनिश्चयम्
अनिश्चयज्ञा धर्माणामदृष्टान्ते परे रताः ४
प्रत्यक्षसुखभूयिष्ठमात्मसाक्षिकमच्छलम्
सर्वलोकहितं धर्मं क्षत्रियेषु प्रतिष्ठितम् ५
धर्माश्रमव्यवसिनां ब्राह्मणानां युधिष्ठिर

यथा त्रयाणां वर्णानां संख्यातोपश्रुतिः पुरा
राजधर्मेष्वनुपमा लोक्या सुचरितैरिह ६
उदाहृतं ते राजेन्द्र यथा विष्णुं महौजसम्
सर्वभूतेश्वरं देवं प्रभुं नारायणं पुरा
जग्मुः सुबहवः शूरा राजानो दण्डनीतये ७
एकैकमात्मनः कर्म तुलयित्वाश्रमे पुरा
राजानः पर्युपातिष्ठन्दृष्टान्तवचने स्थिताः ८
साध्या देवा वसवश्चाश्विनौ च रुद्राश्च विश्वे मरुतां गणाश्च
सृष्टाः पुरा आदिदेवेन देवा क्षात्रे धर्मे वर्तयन्ते च सिद्धाः ९
अत्र ते वर्तयिष्यामि धर्ममर्थविनिश्चयम्
निर्मर्यादे वर्तमाने दानवैकायने कृते
बभूव राजा राजेन्द्र मान्धाता नाम वीर्यवान् १०
पुरा वसुमतीपालो यज्ञं चक्रे दिदृक्षया
अनादिमध्यनिधनं देवं नारायणं प्रति ११
स राजा राजशार्दूल मान्धाता परमेष्ठिनः
जग्राह शिरसा पादौ यज्ञे विष्णोर्महात्मनः १२
दर्शयामास तं विष्णू रूपमास्थाय वासवम्
स पार्थिवैर्वृतः सद्भिरर्चयामास तं प्रभुम् १३
इन्द्र पार्थिवसंघस्य तस्य चैव महात्मनः
संवादोऽय महानासीद्विष्णुं प्रति महाद्युते १४
इन्द्र उवाच
किमिष्यते धर्मभृतां वरिष्ठ यद्द्रष्टुकामोऽसि तमप्रमेयम्
अनन्तमायामितसत्त्ववीर्यं नारायणं ह्यादिदेवं पुराणम् १५
नासौ देवो विश्वरूपो मयापि शक्यो दृष्टुं ब्रह्मणा वापि साक्षात्
येऽन्ये कामास्तव राजन्हृदिस्था दास्यामि तांस्त्वं हि मर्त्येषु राजा १६
सत्ये स्थितो धर्मपरो जितेन्द्रियः शूरो दृढं प्रीतिरतः सुराणाम्
बुद्ध्या भक्त्या चोत्तमश्रद्धया च ततस्तेऽह दद्मि वरं यथेष्टम् १७
मान्धातोवाच
असंशयं भगवन्नादिदेवं द्रक्ष्याम्यहं शिरसाहं प्रसाद्य
त्यक्त्वा भोगान्धर्मकामो ह्यरण्यमिच्छे गन्तुं सत्पथं लोकजुष्टम् १८

क्षात्राद्धर्माद्विपुलादप्रमेयाल्लोकाः प्राप्ताः स्थापितं स्वं यशश्च
धर्मो योऽसावादिदेवात्प्रवृत्तो लोकज्येष्ठस्तं न जानामि कर्तुम् १९
इन्द्र उवाच
असैनिकोऽधर्मपरश्चरेथाः परां गतिं लप्स्यसे चाप्रमत्तः
क्षात्रो धर्मो ह्यादिदेवात्प्रवृत्तः पश्चादन्ये शेषभूताश्च धर्माः २०
शेषाः सृष्टा ह्यन्तवन्तो ह्यनन्ताः सुप्रस्थानाः क्षत्रधर्माविशिष्टाः
अस्मिन्धर्मे सर्वधर्माः प्रविष्टास्तस्माद्धर्मं श्रेष्ठमिमं वदन्ति २१
कर्मणा वै पुरा देवा ऋषयश्चामितौजसः
त्राताः सर्वे प्रमथ्यारीन्क्षत्रधर्मेण विष्णुना २२
यदि ह्यसौ भगवान्नाहनिष्यद्रिपून्सर्वान्वसुमानप्रमेयः
न ब्राह्मणा न च लोकादिकर्ता न सद्धर्मा नादिधर्मा भवेयुः २३
इमामुर्वीं न जयेद्विक्रमेण देवश्रेष्ठोऽसौ पुरा चेदमेयः
चातुर्वर्ण्यं चातुराश्रम्यधर्माः सर्वे न स्युर्ब्रह्मणो वै विनाशात् २४
दृष्टा धर्माः शतधा शाश्वतेन क्षात्रेण धर्मेण पुनः प्रवृत्ताः
युगे युगे ह्यादिधर्माः प्रवृत्ता लोकज्येष्ठं क्षत्रधर्मं वदन्ति २५
आत्मत्यागः सर्वभूतानुकम्पा लोकज्ञानं मोक्षणं पालनं च
विषण्णानां मोक्षणं पीडितानां क्षात्रे धर्मे विद्यते पार्थिवानाम् २६
निर्मर्यादाः काममन्युप्रवृत्ता भीता राज्ञो नाधिगच्छन्ति पापम्
शिष्टाश्चान्ये सर्वधर्मोपपन्नाः साध्वाचाराः साधु धर्मं चरन्ति २७
पुत्रवत्परिपाल्यानि लिङ्गधर्मेण पार्थिवैः
लोके भूतानि सर्वाणि विचरन्ति न संशयः २८
सर्वधर्मपरं क्षत्रं लोकज्येष्ठं सनातनम्
शश्वदक्षरपर्यन्तमक्षरं सर्वतोमुखम् २९
इति श्रीमहाभारते शान्तिपर्वणि चतुःषष्टितमोऽध्यायः ६४

पञ्चषष्ठितमोऽध्यायः

इन्द्र उवाच
एवंवीर्यः सर्वधर्मोपपन्नः क्षात्रः श्रेष्ठः सर्वधर्मेषु धर्मः
पाल्यो युष्माभिर्लोकसिंहैरुदारैर्विपर्यये स्यादभावः प्रजानाम् १
भुवः संस्कारं राजसंस्कारयोगमभैक्ष्यचर्यां पालनं च प्रजानाम्

विद्याद्राजा सर्वभूतानुकम्पां देहत्यागं चाहवे धर्ममग्र्यम् २
त्यागं श्रेष्ठं मुनयो वै वदन्ति सर्वश्रेष्ठो यः शरीरं त्यजेत
नित्यं त्यक्तं राजधर्मेषु सर्वं प्रत्यक्षं ते भूमिपालाः सदैते ३
बहुश्रुत्या गुरुशुश्रूषया वा परस्य वा संहननाद्वदन्ति
नित्यं धर्मं क्षत्रियो ब्रह्मचारी चरेदेको ह्याश्रमं धर्मकामः ४
सामान्यार्थे व्यवहारे प्रवृत्ते प्रियाप्रिये वर्जयन्नेव यत्नात्
चातुर्वर्ण्यस्थापनात्पालनाच्च तैस्तैर्योगैर्नियमैरौरसैश्च ५
सर्वोद्योगैराश्रमं धर्ममाहुः क्षात्रं ज्येष्ठं सर्वधर्मोपपन्नम्
स्वं स्वं धर्मं ये न चरन्ति वर्णास्तांस्तान्धर्मानयथावद्वदन्ति ६
निर्मर्यादे नित्यमर्थे विनष्टानाहुस्तान्वै पशुभूतान्मनुष्यान्
यथा नीतिं गमयत्यर्थलोभाच्छ्रेयांस्तस्मादाश्रमक्षः क्षत्रधर्मः ७
त्रैविद्यानां या गतिर्ब्राह्मणानां यश्चैवोक्तेऽथाश्रमो ब्राह्मणानाम्
एतत्कर्म ब्राह्मणस्याहुरग्र्यमन्यत्कुर्वञ्शूद्रवच्छस्त्रवध्यः ८
चातुराश्रम्यधर्माश्च वेदधर्माश्च पार्थिव
ब्राह्मणेनानुगन्तव्या नान्यो विद्यात्कथंचन ९
अन्यथा वर्तमानस्य न सा वृत्तिः प्रकल्प्यते
कर्मणा व्यज्यते धर्मो यथैव श्वा तथैव सः १०
यो विकर्मस्थितो विप्रो न स सन्मानमर्हति
कर्मस्वनुपयुञ्जानमविश्वास्यं हि तं विदुः ११
एते धर्माः सर्ववर्णाश्च वीरैरुत्क्रष्टव्याः क्षत्रियैरेष धर्मः
तस्माज्ज्येष्ठा राजधर्मा न चान्ये वीर्यज्येष्ठा वीरधर्मा मता मे १२
मान्धातोवाच
यवनाः किराता गान्धाराश्चीनाः शबरबर्बराः
शकास्तुषाराः कह्वाश्च पह्लवाश्चान्ध्रमद्रकाः १३
ओड्राः पुलिन्दा रमठाः काचा म्लेच्छाश्च सर्वशः
ब्रह्मक्षत्रप्रसूताश्च वैश्याः शूद्राश्च मानवाः १४
कथं धर्मं चरेयुस्ते सर्वे विषयवासिनः
मद्विधैश्च कथं स्थाप्याः सर्वे ते दस्युजीविनः १५
एतदिच्छाम्यहं श्रोतुं भगवंस्तद्ब्रवीहि मे
त्वं बन्धुभूतो ह्यस्माकं क्षत्रियाणां सुरेश्वर १६

इन्द्र उवाच
मातापित्रोर्हि कर्तव्या शुश्रूषा सर्वदस्युभिः
आचार्यगुरुशुश्रूषा तथैवाश्रमवासिनाम् १७
भूमिपालानां च शुश्रूषा कर्तव्या सर्वदस्युभिः
वेदधर्मक्रियाश्चैव तेषां धर्मो विधीयते १८
पितृयज्ञास्तथा कूपाः प्रपाश्च शयनानि च
दानानि च यथाकालं द्विजेषु दद्युरेव ते १९
अहिंसा सत्यमक्रोधो वृत्तिदायानुपालनम्
भरणं पुत्रदाराणां शौचमद्रोह एव च २०
दक्षिणा सर्वयज्ञानां दातव्या भूतिमिच्छता
पाकयज्ञा महार्हाश्च कर्तव्याः सर्वदस्युभिः २१
एतान्येवंप्रकाराणि विहितानि पुरानघ
सर्वलोकस्य कर्माणि कर्तव्यानीह पार्थिव २२
मान्धातोवाच
दृश्यन्ते मानवा लोके सर्ववर्णेषु दस्यवः
लिङ्गान्तरे वर्तमाना आश्रमेषु चतुर्ष्वपि २३
इन्द्र उवाच
विनष्टायां दण्डनीतौ राजधर्मे निराकृते
संप्रमुह्यन्ति भूतानि राजदौरात्म्यतो नृप २४
असंख्याता भविष्यन्ति भिक्षवो लिङ्गिनस्तथा
आश्रमाणां विकल्पाश्च निवृत्तेऽस्मिन्कृते युगे २५
अशृण्वानाः पुराणानां धर्माणां प्रवरा गतीः
उत्पथं प्रतिपत्स्यन्ते काममन्युसमीरिताः २६
यदा निवर्त्यते पापो दण्डनीत्या महात्मभिः
तदा धर्मो न चलते सद्भूतः शाश्वतः परः २७
परलोकगुरुं चैव राजानं योऽवमन्यते
न तस्य दत्तं न हुतं न श्राद्धं फलति क्वचित् २८
मानुषाणामधिपतिं देवभूतं सनातनम्
देवाश्च बहु मन्यन्ते धर्मकामं नरेश्वरम् २९
प्रजापतिर्हि भगवान्यः सर्वमसृजज्जगत्

स प्रवृत्तिनिवृत्त्यर्थं धर्माणां क्षत्रमिच्छति ३०
प्रवृत्तस्य हि धर्मस्य बुद्ध्या यः स्मरते गतिम्
स मे मान्यश्च पूज्यश्च तत्र क्षत्रं प्रतिष्ठितम् ३१
भीष्म उवाच
एवमुक्त्वा स भगवान्मरुद्गणवृतः प्रभुः
जगाम भवनं विष्णुरक्षरं परमं पदम् ३२
एवं प्रवर्तिते धर्मे पुरा सुचरितेऽनघ
कः क्षत्रमवमन्येत चेतनावान्बहुश्रुतः ३३
अन्यायेन प्रवृत्तानि निवृत्तानि तथैव च
अन्तरा विलयं यान्ति यथा पथि विचक्षुषः ३४
आदौ प्रवर्तिते चक्रे तथैवादिपरायणे
वर्तस्व पुरुषव्याघ्र संविजानामि तेऽनघ ३५
इति श्रीमहाभारते शान्तिपर्वणि पञ्चषष्टितमोऽध्यायः ६५

## षट्षष्टितमोऽध्यायः

युधिष्ठिर उवाच
श्रुता मे कथिताः पूर्वैश्चत्वारो मानवाश्रमाः
व्याख्यानमेषामाचक्ष्व पृच्छते मे पितामह १
भीष्म उवाच
विदिताः सर्व एवेह धर्मास्तव युधिष्ठिर
यथा मम महाबाहो विदिताः साधुसंमताः २
यत्तु लिङ्गान्तरगतं पृच्छसे मां युधिष्ठिर
धर्मं धर्मभृतां श्रेष्ठ तन्निबोध नराधिप ३
सर्वाण्येतानि कौन्तेय विद्यन्ते मनुजर्षभ
साध्वाचारप्रवृत्तानां चातुराश्रम्यकर्मणाम् ४
अकामद्वेषयुक्तस्य दण्डनीत्या युधिष्ठिर
समेक्षिणश्च भूतेषु भैक्षाश्रमपदं भवेत् ५
वेत्त्यादानविसर्गं यो निग्रहानुग्रहौ तथा
यथोक्तवृत्तेर्वीरस्य क्षेमाश्रमपदं भवेत् ६
ज्ञातिसंबन्धिमित्राणि व्यापन्नानि युधिष्ठिर

समभ्युद्धरमाणस्य दीक्षाश्रमपदं भवेत् ७
आह्निकं भूतयज्ञांश्च पितृयज्ञांश्च मानुषान्
कुर्वतः पार्थ विपुलान्वन्याश्रमपदं भवेत् ८
पालनात्सर्वभूतानां स्वराष्ट्रपरिपालनात्
दीक्षा बहुविधा राज्ञो वन्याश्रमपदं भवेत् ९
वेदाध्ययननित्यत्वं क्षमाथाचार्यपूजनम्
तथोपाध्यायशुश्रूषा ब्रह्माश्रमपदं भवेत् १०
अजिह्मशठं मार्गं सेवमानस्य भारत
सर्वदा सर्वभूतेषु ब्रह्माश्रमपदं भवेत् ११
वानप्रस्थेषु विप्रेषु त्रैविद्येषु च भारत
प्रयच्छतोऽथान्विपुलान्वन्याश्रमपदं भवेत् १२
सर्वभूतेष्वनुक्रोशं कुर्वतस्तस्य भारत
आनृशंस्यप्रवृत्तस्य सर्वावस्थं पदं भवेत् १३
बालवृद्धेषु कौरब्य सर्वावस्थं युधिष्ठिर
अनुक्रोशं विदधतः सर्वावस्थं पदं भवेत् १४
बलात्कृतेषु भूतेषु परित्राणं कुरूद्वह
शरणागतेषु कौरव्य कुर्वन्गार्हस्थ्यमावसेत् १५
चराचराणां भूतानां रक्षामपि च सर्वशः
यथार्हपूजां च सदा कुर्वन्गार्हस्थ्यमावसेत् १६
ज्येष्ठानुज्येष्ठपत्नीनां भ्रातृणां पुत्रनप्तृणाम्
निग्रहानुग्रहौ पार्थ गार्हस्थ्यमिति तत्तपः १७
साधूनामर्चनीयानां प्रजासु विदितात्मनाम्
पालनं पुरुषव्याघ्र गृहाश्रमपदं भवेत् १८
आश्रमस्थानि सर्वाणि यस्तु वेश्मनि भारत
आददीतेह भोज्येन तद्गार्हस्थ्यं युधिष्ठिर १९
यः स्थितः पुरुषो धर्मे धात्रा सृष्टे यथार्थवत्
आश्रमाणां स सर्वेषां फलं प्राप्नोत्यनुत्तमम् २०
यस्मिन्न नश्यन्ति गुणाः कौन्तेय पुरुषे सदा
आश्रमस्थं तमप्याहुर्नरश्रेष्ठं युधिष्ठिर २१
स्थानमानं वयोमानं कुलमानं तथैव च

कुर्वन्वसति सर्वेषु ह्याश्रमेषु युधिष्ठिर २२
देशधर्मांश्च कौन्तेय कुलधर्मास्तथैव च
पालयन्पुरुषव्याघ्र राजा सर्वाश्रमी भवेत् २३
काले विभूतिं भूतानामुपहारांस्तथैव च
अर्हयन्पुरुषव्याघ्र साधूनामाश्रमे वसेत् २४
दशधर्मगतश्चापि यो धर्मं प्रत्यवेक्षते
सर्वलोकस्य कौन्तेय राजा भवति सोऽश्रमी २५
ये धर्मकुशला लोके धर्मं कुर्वन्ति साधवः
पालिता यस्य विषये पादोंऽशस्तस्य भूपतेः २६
धर्मारामान्धर्मपरान्ये न रक्षन्ति मानवान्
पार्थिवाः पुरुषव्याघ्र तेषां पापं हरन्ति ते २७
ये च रक्षासहायाः स्युः पार्थिवानां युधिष्ठिर
ते चैवांशहराः सर्वे धर्मे परकृतेऽनघ २८
सर्वाश्रमपदे ह्याहुर्गार्हस्थ्यं दीप्तनिर्णयम्
पावनं पुरुषव्याघ्र यं वयं पर्युपास्महे २९
आत्मोपमस्तु भूतेषु यो वै भवति मानवः
न्यस्तदण्डो जितक्रोधः स प्रेत्य लभते सुखम् ३०
धर्मोत्थिता सत्त्ववीर्या धर्मसेतुवटाकरा
त्यागवाताध्वगा शीघ्रा नौस्त्वा संतारयिष्यति ३१
यदा निवृत्तः सर्वस्मात्कामो योऽस्य हृदि स्थितः
तदा भवति सत्त्वस्थस्ततो ब्रह्म समश्नुते ३२
सुप्रसन्नस्तु भावेन योगेन च नराधिप
धर्मं पुरुषशार्दूल प्राप्स्यसे पालने रतः ३३
वेदाध्ययनशीलानां विप्राणां साधुकर्मणाम्
पालने यत्नमातिष्ठ सर्वलोकस्य चानघ ३४
वने चरति यो धर्ममाश्रमेषु च भारत
रक्षया तच्छतगुणं धर्मं प्राप्नोति पार्थिवः ३५
एष ते विविधो धर्मः पाण्डवश्रेष्ठ कीर्तितः
अनुतिष्ठ त्वमेनं वै पूर्वैर्दृष्टं सनातनम् ३६
चातुराश्रम्यमेकाग्रः चातुर्वर्ण्यं च पाण्डव

धर्मं पुरुषशार्दूल प्राप्स्यसे पालने रतः ३७
इति श्रीमहाभारते शान्तिपर्वणि षट्षष्टितमोऽध्यायः ६६

## सप्तषष्टितमोऽध्यायः

युधिष्ठिर उवाच
चातुराश्रम्य उक्तोऽत्र चातुर्वर्ण्यस्तथैव च
राष्ट्रस्य यत्कृत्यतमं तन्मे ब्रूहि पितामह १
भीष्म उवाच
राष्ट्रस्यैतत्कृत्यतमं राज्ञ एवाभिषेचनम्
अनिन्द्रमबलं राष्ट्रं दस्यवोऽभिभवन्ति च २
अराजकेषु राष्ट्रेषु धर्मो न व्यवतिष्ठते
परस्परं च खादन्ति सर्वथा धिगराजकम् ३
इन्द्रमेनं प्रवृणुते यद्राजानमिति श्रुतिः
यथैवेन्द्रस्तथा राजा संपूज्यो भूतिमिच्छता ४
नाराजकेषु राष्ट्रेषु वस्तव्यमिति वैदिकम्
नाराजकेषु राष्ट्रेषु हव्यमग्निर्वहत्यपि ५
अथ चेदभिवर्तेत राज्यार्थी बलवत्तरः
अराजकानि राष्ट्राणि हतराजानि वा पुनः ६
प्रत्युद्गम्याभिपूज्यः स्यादेतदत्र सुमन्त्रितम्
न हि पापात्पापतरमस्ति किंचिदराजकात् ७
स चेत्समनुपश्येत समग्रं कुशलं भवेत्
बलवान्हि प्रकुपितः कुर्यान्निःशेषतामपि ८
भूयांसं लभते क्लेशं या गौर्भवति दुर्दुहा
सुदुहा या तु भवति नैव तां क्लेशयन्त्युत ९
यदतप्तं प्रणमति न तत्संतापयन्त्युत
यच्च स्वयं नतं दारु न तत्संनामयन्त्यपि १०
एतयोपमया धीरः संनमेत बलीयसे
इन्द्राय स प्रणमते नमते यो बलीयसे ११
तस्माद्राजैव कर्तव्यः सततं भूतिमिच्छता
न धनार्थो न दारार्थस्तेषां येषामराजकम् १२

प्रीयते हि हरन्पापः परवित्तमराजके
यदास्य उद्धरन्त्यन्ये तदा राजानमिच्छति १३
पापा अपि तदा क्षेमं न लभन्ते कदाचन
एकस्य हि द्वौ हरतो द्वयोश्च बहवोऽपरे १४
अदासः क्रियते दासो ह्रियन्ते च बलात्स्त्रियः
एतस्मात्कारणाद्देवाः प्रजापालान्प्रचक्रिरे १५
राजा चेन्न भवेल्लोके पृथिव्यां दण्डधारकः
शूले मत्स्यानिवापक्ष्यन्दुर्बलान्बलवत्तराः १६
अराजकाः प्रजाः पूर्वं विनेशुरिति नः श्रुतम्
परस्परं भक्षयन्तो मत्स्या इव जले कृशान् १७
ताः समेत्य ततश्चक्रुः समयानिति नः श्रुतम्
वाक्क्रूरो दण्डपरुषो यश्च स्यात्पारदारिकः
यश्च नस्वमथादद्यात्त्याज्या नस्तादृशा इति १८
विश्वासनार्थं वर्णानां सर्वेषामविशेषतः
तास्तथा समयं कृत्वा समये नावतस्थिरे १९
सहितास्तास्तदा जग्मुरसुखार्ताः पितामहम्
अनीश्वरा विनश्यामो भगवन्नीश्वरं दिश २०
यं पूजयेम संभूय यश्च नः परिपालयेत्
ताभ्यो मनुं व्यादिदेश मनुर्नाभिननन्द ताः २१
मनुरुवाच
बिभेमि कर्मणः क्रूराद्राज्यं हि भृशदुष्करम्
विशेषतो मनुष्येषु मिथ्यावृत्तिषु नित्यदा २२
भीष्म उवाच
तमब्रुवन्प्रजा मा भैः कर्मणैनो गमिष्यति
पशूनामधिपञ्चाशद्धिरण्यस्य तथैव च
धान्यस्य दशमं भागं दास्यामः कोशवर्धनम् २३
मुख्येन शस्त्रपत्रेण ये मनुष्याः प्रधानतः
भवन्तं तेऽनुयास्यन्ति महेन्द्रमिव देवताः २४
स त्वं जातबलो राजन्दुष्प्रधर्षः प्रतापवान्
सुखे धास्यसि नः सर्वान्कुबेर इव नैरृतान् २५

यं च धर्मं चरिष्यन्ति प्रजा राज्ञा सुरक्षिताः
चतुर्थं तस्य धर्मस्य त्वत्संस्थं नो भविष्यति २६
तेन धर्मेण महता सुखलब्धेन भावितः
पाह्यस्मान्सर्वतो राजनदेवानिव शतक्रतुः २७
विजयायाशु निर्याहि प्रतपन्रश्मिमानिव
मानं विधम शत्रूणां धर्मो जयतु नः सदा २८
स निर्ययौ महातेजा बलेन महता वृतः
महाभिजनसंपन्नस्तेजसा प्रज्वलन्निव २९
तस्य तां महिमां दृष्ट्वा महेन्द्रस्येव देवताः
अपतत्रसिरे सर्वे स्वधर्मे च दधुर्मनः ३०
ततो महीं परिययौ पर्जन्य इव वृष्टिमान्
शमयन्सर्वतः पापान्स्वकर्मसु च योजयन् ३१
एवं ये भूतिमिच्छेयुः पृथिव्यां मानवाः क्वचित्
कुर्यू राजानमेवाग्रे प्रजानुग्रहकारणात् ३२
नमस्येयुश्च तं भक्त्या शिष्या इव गुरुं सदा
देवा इव सहस्राक्षं प्रजा राजानमन्तिके ३३
सत्कृतं स्वजनेनेह परोऽपि बहु मन्यते
स्वजनेन त्ववज्ञातं परे परिभवन्त्युत ३४
राज्ञः परैः परिभवः सर्वेषामसुखावहः
तस्माच्छत्रं च पत्रं च वासांस्याभरणानि च ३५
भोजनान्यथ पानानि राज्ञे दद्युर्गृहाणि च
आसनानि च शय्याश्च सर्वोपकरणानि च ३६
गुप्तात्मा स्याद्दुराधर्षः स्मितपूर्वाभिभाषिता
आभाषितश्च मधुरं प्रतिभाषेत मानवान् ३७
कृतज्ञो दृढभक्तिः स्यात्संविभागी जितेन्द्रियः
ईक्षितः प्रतिवीक्षेत मृदु चर्जु च वल्गु च ३८
इति श्रीमहाभारते शान्तिपर्वणि सप्तषष्टितमोऽध्यायः ६७

अष्टषष्टितमोऽध्यायः

युधिष्ठिर उवाच

किमाहुर्दैवतं विप्रा राजानं भरतर्षभ
मनुष्याणामधिपतिं तन्मे ब्रूहि पितामह १
भीष्म उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
बृहस्पतिं वसुमना यथा पप्रच्छ भारत २
राजा वसुमना नाम कौसल्यो धीमतां वरः
महर्षिं परिपप्रच्छ कृतप्रज्ञो बृहस्पतिम् ३
सर्वं वैनयिकं कृत्वा विनयज्ञो बृहस्पतेः
दक्षिणानन्तरो भूत्वा प्रणम्य विधिपूर्वकम् ४
विधिं पप्रच्छ राज्यस्य सर्वभूतहिते रतः
प्रजानां हितमन्विच्छन्धर्ममूलं विशां पते ५
केन भूतानि वर्धन्ते क्षयं गच्छन्ति केन च
कमर्चन्तो महाप्राज्ञ सुखमत्यन्तमाप्नुयुः ६
इति पृष्टो महाराज्ञा कौसल्येनामितौजसा
राजसत्कारमव्यग्रः शशंसास्मै बृहस्पतिः ७
राजमूलो महाराज धर्मो लोकस्य लक्ष्यते
प्रजा राजभयादेव न खादन्ति परस्परम् ८
राजा ह्येवाखिलं लोकं समुदीर्णं समुत्सुकम्
प्रसादयति धर्मेण प्रसाद्य च विराजते ९
यथा ह्यनुदये राजन्भूतानि शशिसूर्ययोः
अन्धे तमसि मज्जेयुरपश्यन्तः परस्परम् १०
यथा ह्यनुदके मत्स्या निराक्रन्दे विहंगमाः
विहरेयुर्यथाकाममभिसृत्य पुनः पुनः ११
विमथ्यातिक्रमेरंश्च विषह्यापि परस्परम्
अभावमचिरेणैव गच्छेयुर्नात्र संशयः १२
एवमेव विना राज्ञा विनश्येयुरिमाः प्रजाः
अन्धे तमसि मज्जेयुरगोपाः पशवो यथा १३
हरेयुर्बलवन्तो हि दुर्बलानां परिग्रहान्
हन्युर्व्यायच्छमानांश्च यदि राजा न पालयेत् १४
यानं वस्त्रमलंकारान्रत्नानि विविधानि च

हरेयुः सहसा पापा यदि राजा न पालयेत् १५
ममेदमिति लोकेऽस्मिन्न भवेत्संपरिग्रहः
विश्वलोपः प्रवर्तेत यदि राजा न पालयेत् १६
मातरं पितरं वृद्धमाचार्यमतिथिं गुरुम्
क्लिश्नीयुरपि हिंस्युर्वा यदि राजा न पालयेत् १७
पतेद्बहुविधं शस्त्रं बहुधा धर्मचारिषु
अधर्मः प्रगृहीतः स्याद्यदि राजा न पालयेत् १८
वधबन्धपरिक्लेशो नित्यमर्थवतां भवेत्
ममत्वं च न विन्देयुर्यदि राजा न पालयेत् १९
अन्तश्चाकाशमेव स्याल्लोकोऽय दस्युसाद्भवेत्
पतेच्च नरकं घोरं यदि राजा न पालयेत् २०
न योनिपोषो वर्तेत न कृषिर्न वणिक्पथः
मज्जेद्धर्मस्त्रयी न स्याद्यदि राजा न पालयेत् २१
न यज्ञाः संप्रवर्तेरन्विधिवत्स्वाप्तदक्षिणाः
न विवाहाः समाजा वा यदि राजा न पालयेत् २२
न वृषाः संप्रवर्तेरन्न मथ्येरंश्च गर्गराः
घोषाः प्रणाशं गच्छेयुर्यदि राजा न पालयेत् २३
त्रस्तमुद्विग्नहृदयं हाहाभूतमचेतनम्
क्षणेन विनशेत्सर्वं यदि राजा न पालयेत् २४
न संवत्सरसत्राणि तिष्ठेयुरकुतोभयाः
विधिवद्दक्षिणावन्ति यदि राजा न पालयेत् २५
ब्राह्मणाश्चतुरो वेदान्नाधीयेरंस्तपस्विनः
विद्यास्नातास्तपःस्नाता यदि राजा न पालयेत् २६
हस्तो हस्तं स मुष्णीयाद्भिद्येरन्सर्वसेतवः
भयार्तं विद्रवेत्सर्वं यदि राजा न पालयेत् २७
न लभेद्धर्मसंश्लेषं हतविप्रहतो जनः
कर्ता स्वेच्छेन्द्रियो गच्छेद्यदि राजा न पालयेत् २८
अनयाः संप्रवर्तेरन्भवेद्वै वर्णसंकरः
दुर्भिक्षमाविशेद्राष्ट्रं यदि राजा न पालयेत् २९
विवृत्य हि यथाकामं गृहद्वाराणि शेरते

मनुष्या रक्षिता राज्ञा समन्तादकुतोभयाः ३०
नाक्रुष्टं सहते कश्चित्कुतो हस्तस्य लङ्घनम्
यदि राजा मनुष्येषु त्राता भवति धार्मिकः ३१
स्त्रियश्चापुरुषा मार्गं सर्वालंकारभूषिताः
निर्भयाः प्रतिपद्यन्ते यदा रक्षति भूमिपः ३२
धर्ममेव प्रपद्यन्ते न हिंसन्ति परस्परम्
अनुगृह्णन्ति चान्योन्यं यदा रक्षति भूमिपः ३३
यजन्ते च त्रयो वर्णा महायज्ञैः पृथग्विधैः
युक्ताश्चाधीयते शास्त्रं यदा रक्षति भूमिपः ३४
वार्तामूलो ह्ययं लोकस्त्रय्या वै धार्यते सदा
तत्सर्वं वर्तते सम्यग्यदा रक्षति भूमिपः ३५
यदा राजा धुरं श्रेष्ठामादाय वहति प्रजाः
महता बलयोगेन तदा लोकः प्रसीदति ३६
यस्याभावे च भूतानामभावः स्यात्समन्ततः
भावे च भावो नित्यः स्यात्कस्तं न प्रतिपूजयेत् ३७
तस्य यो वहते भारं सर्वलोकसुखावहम्
तिष्ठेत्प्रियहिते राज्ञ उभौ लोकौ हि यो जयेत् ३८
यस्तस्य पुरुषः पापं मनसाप्यनुचिन्तयेत्
असंशयमिह क्लिष्टः प्रेत्यापि नरकं पतेत् ३९
न हि जात्ववमन्तव्यो मनुष्य इति भूमिपः
महती देवता ह्येषा नररूपेण तिष्ठति ४०
कुरुते पञ्च रूपाणि कालयुक्तानि यः सदा
भवत्यग्निस्तथादित्यो मृत्युर्वैश्रवणो यमः ४१
यदा ह्यासीदतः पापान्दहत्युग्रेण तेजसा
मिथ्योपचरितो राजा तदा भवति पावकः ४२
यदा पश्यति चारेण सर्वभूतानि भूमिपः
क्षेमं च कृत्वा व्रजति तदा भवति भास्करः ४३
अशुचींश्च यदा क्रुद्धः क्षिणोति शतशो नरान्
सपुत्रपौत्रान्सामात्यांस्तदा भवति सोऽन्तकः ४४
यदा त्वधार्मिकान्सर्वांस्तीक्ष्णैर्दण्डैर्नियच्छति

धार्मिकांश्चानुगृह्णाति भवत्यथ यमस्तदा ४५
यदा तु धनधाराभिस्तर्पयत्युपकारिणः
आच्छिनत्ति च रत्नानि विविधान्यपकारिणाम् ४६
श्रियं ददाति कस्मैचित्कस्माच्चिदपकर्षति
तदा वैश्रवणो राजँल्लोके भवति भूमिपः ४७
नास्यापवादे स्थातव्यं दक्षेणाक्लिष्टकर्मणा
धर्म्यमाकाङ्क्षता लाभमीश्वरस्यानसूयता ४८
न हि राज्ञः प्रतीपानि कुर्वन्सुखमवाप्नुयात्
पुत्रो भ्राता वयस्यो वा यद्यप्यात्मसमो भवेत् ४९
कुर्यात्कृष्णगतिः शेषं ज्वलितोऽनिलसारथिः
न तु राज्ञाभिपन्नस्य शेषं क्वचन विद्यते ५०
तस्य सर्वाणि रक्ष्याणि दूरतः परिवर्जयेत्
मृत्योरिव जुगुप्सेत राजस्वहरणान्नरः ५१
नश्येदभिमृशन्सद्यो मृगः कूटमिव स्पृशन्
आत्मस्वमिव संरक्षेद्राजस्वमिह बुद्धिमान् ५२
महान्तं नरकं घोरमप्रतिष्ठमचेतसः
पतन्ति चिररात्राय राजवित्तापहारिणः ५३
राजा भोजो विराट् सम्राट् क्षत्रियो भूपतिर्नृपः
य एवं स्तूयते शब्दैः कस्तं नार्चितुमिच्छति ५४
तस्माद्बुभूषुर्नियतो जितात्मा संयतेन्द्रियः
मेघावी स्मृतिमान्दक्षः संश्रयेत महीपतिम् ५५
कृतज्ञं प्राज्ञमक्षुद्रं दृढभक्तिं जितेन्द्रियम्
धर्मनित्यं स्थितं स्थित्यां मन्त्रिणं पूजयेन्नृपः ५६
दृढभक्तिं कृतप्रज्ञं धर्मज्ञं संयतेन्द्रियम्
शूरमक्षुद्रकर्माणं निषिद्धजनमाश्रयेत् ५७
राजा प्रगल्भं पुरुषं करोति राजा कृशं बृंहयते मनुष्यम्
राजाभिपन्नस्य कुतः सुखानि राजाभ्युपेतं सुखिनं करोति ५८
राजा प्रजानां हृदयं गरीयो गतिः प्रतिष्ठा सुखमुत्तमं च
यमाश्रिता लोकमिमं परं च जयन्ति सम्यक्पुरुषा नरेन्द्रम् ५९
नराधिपश्चाप्यनुशिष्य मेदिनीं दमेन सत्येन च सौहृदेन

महद्भिरिष्ट्वा क्रतुभिर्महायशास्त्रिविष्टपे स्थानमुपैति सत्कृतम् ६०
स एवमुक्तो गुरुणा कौसल्यो राजसत्तमः
प्रयत्नात्कृतवान्वीरः प्रजानां परिपालनम् ६१
इति श्रीमहाभारते शान्तिपर्वणि अष्टषष्टितमोऽध्यायः ६८

एकोनसप्ततितमोऽध्यायः

युधिष्ठिर उवाच
पार्थिवेन विशेषेण किं कार्यमवशिष्यते
कथं रक्ष्यो जनपदः कथं रक्ष्याश्च शत्रवः १
कथं चारं प्रयुञ्जीत वर्णान्विश्वासयेत्कथम्
कथं भृत्यान्कथं दारान्कथं पुत्रांश्च भारत २
भीष्म उवाच
राजवृत्तं महाराज शृणुष्वावहितोऽखिलम्
यत्कार्यं पार्थिवेनादौ पार्थिवप्रकृतेन वा ३
आत्मा जेयः सदा राज्ञा ततो जेयाश्च शत्रवः
अजितात्मा नरपतिर्विजयेत कथं रिपून् ४
एतावानात्मविजयः पञ्चवर्गविनिग्रहः
जितेन्द्रियो नरपतिर्बाधितुं शक्नुयादरीन् ५
न्यसेत गुल्मान्दुर्गेषु संधौ च कुरुनन्दन
नगरोपवने चैव पुरोद्यानेषु चैव ह ६
संस्थानेषु च सर्वेषु पुरेषु नगरस्य च
मध्ये च नरशार्दूल तथा राजनिवेशने ७
प्रणिधींश्च ततः कुर्याज्जडान्धबधिराकृतीन्
पुंसः परीक्षितान्प्राज्ञान्क्षुत्पिपासातपक्षमान् ८
अमात्येषु च सर्वेषु मित्रेषु त्रिविधेषु च
पुत्रेषु च महाराज प्रणिदध्यात्समाहितः ९
पुरे जनपदे चैव तथा सामन्तराजसु
यथा न विद्युरन्योन्यं प्रणिधेयास्तथा हि ते १०
चारांश्च विद्यात्प्रहितान्परेण भरतर्षभ
आपणेषु विहारेषु समवायेषु भिक्षुषु ११

आरामेषु तथोद्याने पण्डितानां समागमे
वेशेषु चत्वरे चैव सभास्वावसथेषु च १२
एवं विहन्याच्चारेण परचारं विचक्षणः
चारेण विहितं सर्वं हतं भवति पाण्डव १३
यदा तु हीनं नृपतिर्विद्यादात्मानमात्मना
अमात्यैः सह संमन्त्र्य कुर्यात्संधिं बलीयसा १४
अज्ञायमाने हीनत्वे कुर्यात्संधिं परेण वै
लिप्सुर्वा कंचिदेवार्थं त्वरमाणो विचक्षणः १५
गुणवन्तो महोत्साहा धर्मज्ञाः साधवश्च ये
संदधीत नृपस्तैश्च राष्ट्रं धर्मेण पालयन् १६
उच्छिद्यमानमात्मानं ज्ञात्वा राजा महामतिः
पूर्वापकारिणो हन्याल्लोकद्विष्टांश्च सर्वशः १७
यो नोपकर्तुं शक्नोति नापकर्तुं महीपतिः
अशक्यरूपश्चोद्धर्तुमुपेक्ष्यस्तादृशो भवेत् १८
यात्रां यायादविज्ञातमनाक्रन्दमनन्तरम्
व्यासक्तं च प्रमत्तं च दुर्बलं च विचक्षणः १९
यात्रामाज्ञापयेद्वीरः कल्यपुष्टबलः सुखी
पूर्वं कृत्वा विधानं च यात्रायां नगरे तथा २०
न च वश्यो भवेदस्य नृपो यद्यपि वीर्यवान्
हीनश्च बलवीर्याभ्यां कर्शयंस्तं परावसेत् २१
राष्ट्रं च पीडयेत्तस्य शस्त्राग्निविषमूर्छनैः
अमात्यवल्लभानां च विवादांस्तस्य कारयेत्
वर्जनीयं सदा युद्धं राज्यकामेन धीमता २२
उपायैस्त्रिभिरादानमर्थस्याह बृहस्पतिः
सान्त्वेनानुप्रदानेन भेदेन च नराधिप
यमर्थं शक्नुयात्प्राप्तुं तेन तुष्येद्धि पण्डितः २३
आददीत बलिं चैव प्रजाभ्यः कुरुनन्दन
षड्भागममितप्रज्ञस्तासामेवाभिगुप्तये २४
दशधर्मगतेभ्यो यद्वसु बह्वल्पमेव च
तन्नाददीत सहसा पौराणां रक्षणाय वै २५

यथा पुत्रास्तथा पौरा द्रष्टव्यास्ते न संशयः
भक्तिश्चैषां प्रकर्तव्या व्यवहारे प्रदर्शिते २६
सुतं च स्थापयेद्राजा प्राज्ञं सर्वार्थदर्शिनम्
व्यवहारेषु सततं तत्र राज्यं व्यवस्थितम् २७
आकरे लवणे शुल्के तरे नागवने तथा
न्यसेदमात्यान्नृपतिः स्वाप्तान्वा पुरुषान्हितान् २८
सम्यग्दण्डधरो नित्यं राजा धर्ममवाप्नुयात्
नृपस्य सततं दण्डः सम्यग्धर्मे प्रशस्यते २९
वेदवेदाङ्गवित्प्राज्ञः सुतपस्वी नृपो भवेत्
दानशीलश्च सततं यज्ञशीलश्च भारत ३०
एते गुणाः समस्ताः स्युर्नृपस्य सततं स्थिराः
क्रियालोपे तु नृपतेः कुतः स्वर्गः कुतो यशः ३१
यदा तु पीडितो राजा भवेद्राज्ञा बलीयसा
त्रिधा त्वाक्रन्द्य मित्राणि विधानमुपकल्पयेत् ३२
घोषान्न्यसेत मार्गेषु ग्रामानुत्थापयेदपि
प्रवेशयेच्च तान्सर्वाञ्शाखानगरकेष्वपि ३३
ये गुप्ताश्चैव दुर्गाश्च देशास्तेषु प्रवेशयेत्
धनिनो बलमुख्यांश्च सान्त्वयित्वा पुनः पुनः ३४
सस्याभिहारं कुर्याच्च स्वयमेव नराधिपः
असंभवे प्रवेशस्य दाहयेदग्निना भृशम् ३५
क्षेत्रस्थेषु च सस्येषु शत्रोरुपजपेन्नरान्
विनाशयेद्वा सर्वस्वं बलेनाथ स्वकेन वै ३६
नदीषु मार्गेषु सदा संक्रमानवसादयेत्
जलं निस्रावयेत्सर्वमनिस्राव्यं च दूषयेत् ३७
तदात्वेनायतीभिश्च विवदन्भूम्यनन्तरम्
प्रतीघातः परस्याजौ मित्रकालेऽप्युपस्थिते ३८
दुर्गाणां चाभितो राजा मूलच्छेदं प्रकारयेत्
सर्वेषां क्षुद्रवृक्षाणां चैत्यवृक्षान्विवर्जयेत् ३९
प्रवृद्धानां च वृक्षाणां शाखा प्रच्छेदयेत्तथा
चैत्यानां सर्वथा वर्ज्यमपि पत्रस्य पातनम् ४०

प्रकगठीः कारयेत्सम्यगाकाशजननीस्तथा
आपूरयेच्च परिखाः स्थाणुनक्रझषाकुलाः ४१
कडङ्गद्वारकाणि स्युरुच्छ्वासार्थे पुरस्य ह
तेषां च द्वारवद्गुप्तिः कार्या सर्वात्मना भवेत् ४२
द्वारेषु च गुरूणयेव यन्त्राणि स्थापयेत्सदा
आरोपयेच्छतघ्नीश्च स्वाधीनानि च कारयेत् ४३
काष्ठानि चाभिहार्याणि तथा कूपांश्च खानयेत्
संशोधयेत्तथा कूपान्कृतान्पूर्वं पयोर्थिभिः ४४
तृणच्छन्नानि वेश्मानि पङ्केनापि प्रलेपयेत्
निर्हरेच्च तृणे मासं चैत्रे वह्निभयात्पुरः ४५
नक्तमेव च भक्तानि पाचयेत नराधिपः
न दिवाग्निर्ज्वलेद्गेहे वर्जयित्वाग्निहोत्रिकम् ४६
कर्मारारिष्टशालासु ज्वलेदग्निः समाहितः
गृहाणि च प्रविश्याथ विधेयः स्याद्धुताशनः ४७
महादगडश्च तस्य स्याद्यस्याग्निर्वै दिवा भवेत्
प्रघोषयेदथैवं च रक्षणार्थं पुरस्य वै ४८
भिक्षुकांश्चाक्रिकांश्चैव क्षीबोन्मत्तान्कुशीलवान्
बाह्यान्कुर्यान्नरश्रेष्ठ दोषाय स्युर्हि तेऽन्यथा ४९
चत्वरेषु च तीर्थेषु सभास्वावसथेषु च
यथार्हवर्णं प्रणिधिं कुर्यात्सर्वत्र पार्थिवः ५०
विशालान्राजमार्गांश्च कारयेत नराधिपः
प्रपाश्च विपणीश्चैव यथोद्देशं समादिशेत् ५१
भाणडागारायुधागारान्धान्यागारांश्च सर्वशः
अश्वागारान्गजागारान्बलाधिकरणानि च ५२
परिखाश्चैव कौरव्य प्रतोलद्यः संकटानि च
न जातु कश्चित्पश्येत्तु गुह्यमेतद्युधिष्ठिर ५३
अथ संनिचयं कुर्याद्राजा परबलार्दितः
तैलं मधु घृतं सस्यमौषधानि च सर्वशः ५४
अङ्गारकुशमुञ्जानां पलाशशरपर्णिनाम्
यवसेन्धनदिग्धानां कारयेत च संचयान् ५५

आयुधानां च सर्वेषां सक्त्यृष्टिप्रासवर्मणाम्
संचयानेवमादीनां कारयेत नराधिपः ५६
औषधानि च सर्वाणि मूलानि च फलानि च
चतुर्विधांश्च वैद्यान्वै संगृह्णीयाद्विशेषतः ५७
नटाश्च नर्तकाश्चैव मल्ला मायाविनस्तथा
शोभयेयुः पुरवरं मोदयेयुश्च सर्वशः ५८
यतः शङ्का भवेच्चापि भृत्यतो वापि मन्त्रितः
पौरेभ्यो नृपतेर्वापि स्वाधीनान्कारयेत तान् ५९
कृते कर्मणि राजेन्द्र पूजयेद्धनसंचयैः
मानेन च यथार्हेण सान्त्वेन विविधेन च ६०
निर्वेदयित्वा तु परं हत्वा वा कुरुनन्दन
गतानृण्यो भवेद्राजा यथा शास्त्रेषु दर्शितम् ६१
राज्ञा सप्तैव रक्ष्याणि तानि चापि निबोध मे
आत्मामात्यश्च कोशश्च दण्डो मित्राणि चैव हि ६२
तथा जनपदश्चैव पुरं च कुरुनन्दन
एतत्सप्तात्मकं राज्यं परिपाल्यं प्रयत्नतः ६३
षाड्गुण्यं च त्रिवर्गं च त्रिवर्गमपरं तथा
यो वेत्ति पुरुषव्याघ्र स भुनक्ति महीमिमाम् ६४
षाड्गुण्यमिति यत्प्रोक्तं तन्निबोध युधिष्ठिर
संधायासनमित्येव यात्रासंधानमेव च ६५
विगृह्यासनमित्येव यात्रां संपरिगृह्य च
द्वैधीभावस्तथान्येषां संश्रयोऽथ परस्य च ६६
त्रिवर्गश्चापि यः प्रोक्तस्तमिहैकमनाः शृणु
क्षयः स्थानं च वृद्धिश्च त्रिवर्गमपरं तथा ६७
धर्मश्चार्थश्च कामश्च सेवितव्योऽथ कालतः
धर्मेण हि महीपालश्चिरं पालयते महीम् ६८
अस्मिन्नर्थे च यो श्लोकौ गीतावङ्गिरसा स्वयम्
यादवीपुत्र भद्रं ते श्रोतुमर्हसि तावपि ६९
कृत्वा सर्वाणि कार्याणि सम्यक्संपाल्य मेदिनीम्
पालयित्वा तथा पौरान्परत्र सुखमेधते ७०

किं तस्य तपसा राज्ञः किं च तस्याध्वरैरपि
अपालिताः प्रजा यस्य सर्वा धर्मविनाकृताः ७१
इति श्रीमहाभारते शान्तिपर्वणि एकोनसप्ततितमोऽध्यायः ६९

सप्ततितमोऽध्यायः
युधिष्ठिर उवाच
दण्डनीतिश्च राजा च समस्तौ तावुभावपि
कस्य किं कुर्वतः सिद्ध्यै तन्मे ब्रूहि पितामह १
भीष्म उवाच
महाभाग्यं दण्डनीत्याः सिद्धैः शब्दैः सहेतुकैः
शृणु मे शंसतो राजन्यथावदिह भारत २
दण्डनीतिः स्वधर्मेभ्यश्चातुर्वर्ण्यं नियच्छति
प्रयुक्ता स्वामिना सम्यगधर्मेभ्यश्च यच्छति ३
चातुर्वर्ण्ये स्वधर्मस्थे मर्यादानामसंकरे
दण्डनीतिकृते क्षेमे प्रजानामकुतोभये ४
सोमे प्रयत्नं कुर्वन्ति त्रयो वर्णा यथाविधि
तस्माद्देवमनुष्याणां सुखं विद्धि समाहितम् ५
कालो वा कारणं राज्ञो राजा वा कालकारणम्
इति ते संशयो मा भूद्राजा कालस्य कारणम् ६
दण्डनीत्या यदा राजा सम्यक्कात्स्न्येन वर्तते
तदा कृतयुगं नाम कालः श्रेष्ठः प्रवर्तते ७
भवेत्कृतयुगे धर्मो नाधर्मो विद्यते क्वचित्
सर्वेषामेव वर्णानां नाधर्मे रमते मनः ८
योगक्षेमाः प्रवर्तन्ते प्रजानां नात्र संशयः
वैदिकानि च कर्माणि भवन्त्यविगुणान्युत ९
ऋतवश्च सुखाः सर्वे भवन्त्युत निरामयाः
प्रसीदन्ति नराणां च स्वरवर्णमनांसि च १०
व्याधयो न भवन्त्यत्र नाल्पायुर्दृश्यते नरः
विधवा न भवन्त्यत्र नृशंसो नाभिजायते ११
अकृष्टपच्या पृथिवी भवन्त्योषधयस्तथा

त्वक्पत्रफलमूलानि वीर्यवन्ति भवन्ति च १२
नाधर्मो विद्यते तत्र धर्म एव तु केवलः
इति कार्तयुगानेतान्गुणान्विद्धि युधिष्ठिर १३
दण्डनीत्या यदा राजा त्रीनंशाननुवर्तते
चतुर्थमंशमुत्सृज्य तदा त्रेता प्रवर्तते १४
अशुभस्य चतुर्थांशस्त्रीनंशाननुवर्तते
कृष्टपच्यैव पृथिवी भवन्त्योषधयस्तथा १५
अर्धं त्यक्त्वा यदा राजा नीत्यर्धमनुवर्तते
ततस्तु द्वापरं नाम स कालः संप्रवर्तते १६
अशुभस्य तदा अर्धं द्वावंशावनुवर्तते
कृष्टपच्यैव पृथिवी भवत्यल्पफला तथा १७
दण्डनीतिं परित्यज्य यदा कार्त्स्न्येन भूमिपः
प्रजाः क्लिश्नात्ययोगेन प्रविश्यति तदा कलि १८
कलावधर्मो भूयिष्ठं धर्मो भवति तु क्वचित्
सर्वेषामेव वर्णानां स्वधर्माच्च्यवते मनः १९
शूद्रा भैक्षेण जीवन्ति ब्राह्मणाः परिचर्यया
योगक्षेमस्य नाशश्च वर्तते वर्णसंकरः २०
वैदिकानि च कर्माणि भवन्ति विगुणान्युत
ऋतवो नसुखाः सर्वे भवन्त्यामयिनस्तथा २१
ह्रसन्ति च मनुष्याणां स्वरवर्णमनांस्युत
व्याधयश्च भवन्त्यत्र म्रियन्ते चागतायुषः २२
विधवाश्च भवन्त्यत्र नृशंसा जायते प्रजा
क्वचिद्वर्षति पर्जन्यः क्वचित्सस्यं प्ररोहति २३
रसाः सर्वे क्षयं यान्ति यदा नेच्छति भूमिपः
प्रजाः संरक्षितुं सम्यग्दण्डनीतिसमाहितः २४
राजा कृतयुगस्त्रष्टा त्रेताया द्वापरस्य च
युगस्य च चतुर्थस्य राजा भवति कारणम् २५
कृतस्य करणाद्राजा स्वर्गमत्यन्तमश्नुते
त्रेतायाः करणाद्राजा स्वर्गं नात्यन्तमश्नुते २६
प्रवर्तनाद्द्वापरस्य यथाभागमुपाश्नुते

कलेः प्रवर्तनाद्राजा पापमत्यन्तमश्नुते २७
ततो वसति दुष्कर्मा नरके शाश्वतीः समाः
प्रजानां कल्मषे मग्नोऽकीर्तिं पापं च विन्दति २८
दण्डनीतिं पुरस्कृत्य विजानन्क्षत्रियः सदा
अनवाप्तं च लिप्सेत लब्धं च परिपालयेत् २९
लोकस्य सीमन्तकरी मर्यादा लोकभावनी
सम्यङ्नीता दण्डनीतिर्यथा माता यथा पिता ३०
यस्यां भवन्ति भूतानि तद्विद्धि भरतर्षभ
एष एव परो धर्मो यद्राजा दण्डनीतिमान् ३१
तस्मात्कौरव्य धर्मेण प्रजाः पालय नीतिमान्
एवंवृत्तः प्रजा रक्षन्स्वर्गं जेतासि दुर्जयम् ३२
इति श्रीमहाभारते शान्तिपर्वणि सप्ततितमोऽध्यायः ७०

## एक सप्ततितमोऽध्यायः

युधिष्ठिर उवाच
केन वृत्तेन वृत्तज्ञ वर्तमानो महीपतिः
सुखेनार्थान्सुखोदर्कानिह च प्रेत्य चाप्नुयात् १
भीष्म उवाच
इयं गुणानां षट्त्रिंशत्षट्त्रिंशद्गुणसंयुता
यान्गुणांस्तु गुणोपेतः कुर्वन्गुणमवाप्नुयात् २
चरेद्धर्मानकटुको मुञ्चेत्स्नेहं न नास्तिकः
अनृशंसश्चरेदर्थं चरेत्काममनुद्धतः ३
प्रियं ब्रूयादकृपणः शूरः स्यादविकत्थनः
दाता नापात्रवर्षी स्यात्प्रगल्भः स्यादनिष्ठुरः ४
संदधीत न चानार्यैर्विगृह्णीयान्न बन्धुभिः
नानाप्तैः कारयेच्चारं कुर्यात्कार्यमपीडया ५
अर्थान्ब्रूयान्न चासत्सु गुणान्ब्रूयान्न चात्मनः
आदद्यान्न च साधुभ्यो नासत्पुरुषमाश्रयेत् ६
नापरीक्ष्य नयेद्दण्डं न च मन्त्रं प्रकाशयेत्
विसृजेन्न च लुब्धेभ्यो विश्वसेन्नापकारिषु ७

अनीर्षुर्गुप्तदारः स्याच्चोक्षः स्यादघृणी नृपः
स्त्रियं सेवेत नात्यर्थं मृष्टं भुञ्जीत नाहितम् ८
अस्तब्धः पूजयेन्मान्यान्गुरून्सेवेदमायया
अर्चेद्देवान्नदम्भेन श्रियमिच्छेदकुत्सिताम् ९
सेवेत प्रणयं हित्वा दक्षः स्यान्न त्वकालवित्
सान्त्वयेन्न च भोगार्थमनुगृह्णन्न चाक्षिपेत् १०
प्रहरेन्न त्वविज्ञाय हत्वा शत्रून्न शेषयेत्
क्रोधं कुर्यान्न चाकस्मान्मृदुः स्यान्नापकारिषु ११
एवं चरस्व राज्यस्थो यदि श्रेय इहेच्छसि
अतोऽन्यथा नरपतिर्भयमृच्छत्यनुत्तमम् १२
इति सर्वान्गुणानेतान्यथोक्तान्योऽनुवर्तते
अनुभूयेह भद्राणि प्रेत्य स्वर्गे महीयते १३
वैशम्पायन उवाच
इदं वचः शांतनवस्य शुश्रुवान्युधिष्ठिरः पाण्डवमुख्यसंवृतः
तदा ववन्दे च पितामहं नृपो यथोक्तमेतच्च चकार बुद्धिमान् १४
इति श्रीमहाभारते शान्तिपर्वणि एकसप्ततितमोऽध्यायः ७१

## द्विसप्ततितमोऽध्यायः

युधिष्ठिर उवाच
कथं राजा प्रजा रक्षन्नाधिबन्धेन युज्यते
धर्मे च नापराध्नोति तन्मे ब्रूहि पितामह १
भीष्म उवाच
समासेनैव ते तात धर्मान्वक्ष्यामि निश्चितान्
विस्तरेण हि धर्माणां न जात्वन्तमवाप्नुयात् २
धर्मनिष्ठाञ्श्रुतवतो वेदव्रतसमाहितान्
अर्चितान्वासयेथास्त्वं गृहे गुणवतो द्विजान् ३
प्रत्युत्थायोपसंगृह्य चरणावभिवाद्य च
अथ सर्वाणि कुर्वीथाः कार्याणि सपुरोहितः ४
धर्मकार्याणि निर्वर्त्य मङ्गलानि प्रयुज्य च
ब्राह्मणान्वाचयेथास्त्वमर्थसिद्धिजयाशिषः ५

आर्जवेन च संपन्नो धृत्या बुद्ध्या च भारत
अर्थार्थं प्रतिगृह्णीयात्कामक्रोधौ च वर्जयेत् ६
कामक्रोधौ पुरस्कृत्य योऽथ राजानुतिष्ठति
न स धर्मं न चाप्यर्थं परिगृह्णाति बालिशः ७
मा स्म लुब्धांश्च मूर्खांश्च कामे चार्थेषु यूयुजः
अलुब्धान्बुद्धिसंपन्नान्सर्वकर्मसु योजयेत् ८
मूर्खो ह्यधिकृतोऽर्थेषु कार्याणामविशारदः
प्रजाः क्लिश्नात्ययोगेन कामद्वेषसमन्वितः ९
बलिषष्ठेन शुक्लेन दण्डेनाथापराधिनाम्
शास्त्रानीतेन लिप्सेथा वेतनेन धनागमम् १०
दापयित्वा करं धर्म्यं राष्ट्रं नित्यं यथाविधि
अशेषान्कल्पयेद्राजा योगक्षेमानतन्द्रितः ११
गोपायितार दातारं धर्मनित्यमतन्द्रितम्
अकामद्वेषसंयुक्तमनुरज्यन्ति मानवाः १२
मा स्माधर्मेण लाभेन लिप्सेथास्त्वं धनागमम्
धर्मार्थावध्रुवौ तस्य योऽपशास्त्रपरो भवेत् १३
अपशास्त्रपरो राजा संचयान्नाधिगच्छति
अस्थाने चास्य तद्वित्तं सर्वमेव विनश्यति १४
अर्थमूलोऽपहिंसां च कुरुते स्वयमात्मनः
करैरशास्त्रदृष्टैर्हि मोहात्संपीडयन्प्रजाः १५
ऊधश्छिन्द्याद्धि यो धेन्वाः क्षीरार्थी न लभेत्पयः
एवं राष्ट्रमयोगेन पीडितं न विवर्धते १६
यो हि दोग्ध्रीमुपास्ते तु स नित्यं लभते पयः
एवं राष्ट्रमुपायेन भुञ्जानो लभते फलम् १७
अथ राष्ट्रमुपायेन भुज्यमानं सुरक्षितम्
जनयत्यतुलां नित्यं कोशवृद्धिं युधिष्ठिर १८
दोग्धि धान्यं हिरण्यं च प्रजा राज्ञि सुरक्षिता
नित्यं स्वेभ्यः परेभ्यश्च तृप्ता माता यथा पयः १९
मालाकारोपमो राजन्भव माङ्गारिकोपमः
तथा युक्तश्चिरं राष्ट्रं भोक्तुं शक्यसि पालयन् २०

परचक्राभियानेन यदि ते स्याद्धनक्षयः
अथ साम्नैव लिप्सेथा धनमब्राह्मणेषु यत् २१
मा स्म ते ब्राह्मणं दृष्ट्वा धनस्थं प्रचलेन्मनः
अन्त्यायामप्यवस्थायां किमु स्फीतस्य भारत २२
धनानि तेभ्यो दद्यास्त्वं यथाशक्ति यथार्हतः
सान्त्वयन्परिरक्षंश्च स्वर्गमाप्स्यसि दुर्जयम् २३
एवं धर्मेण वृत्तेन प्रजास्त्वं परिपालयन्
स्वन्तं पुण्यं यशोवन्तं प्राप्स्यसे कुरुनन्दन २४
धर्मेण व्यवहारेण प्रजाः पालय पाण्डव
युधिष्ठिर तथा युक्तो नाधिबन्धेन योक्ष्यसे २५
एष एव परो धर्मो यद्राजा रक्षते प्रजाः
भूतानां हि यथा धर्मे रक्षणं च परा दया २६
तस्मादेवं परं धर्मं मन्यन्ते धर्मकोविदाः
यद्राजा रक्षणे युक्तो भूतेषु कुरुते दयाम् २७
यदह्ना कुरुते पापमरक्षन्भयतः प्रजाः
राजा वर्षसहस्रेण तस्यान्तमधिगच्छति २८
यदह्ना कुरुते पुण्यं प्रजा धर्मेण पालयन्
दश वर्षसहस्राणि तस्य भुङ्क्ते फलं दिवि २९
स्विष्टिः स्वधीतिः सुतपा लोकाञ्जयति यावतः
क्षणेन तानवाप्नोति प्रजा धर्मेण पालयन् ३०
एवं धर्मं प्रयत्नेन कौन्तेय परिपालयन्
इह पुण्यफलं लब्ध्वा नाधिबन्धेन योक्ष्यसे ३१
स्वर्गलोके च महतीं श्रियं प्राप्स्यसि पाण्डव
असंभवश्च धर्माणामीदृशानामराजसु
तस्माद्राजैव नान्योऽस्ति यो महत्फलमाप्नुयात् ३२
स राज्यमृद्धिमत्प्राप्य धर्मेण परिपालयन्
इन्द्रं तर्पय सोमेन कामैश्च सुहृदो जनान् ३३
इति श्रीमहाभारते शान्तिपर्वणि द्विसप्ततितमोऽध्यायः ७२

त्रिसप्ततितमोऽध्यायः

भीष्म उवाच
य एव तु सतो रक्षदसतश्च निबर्हयेत्
स एव राज्ञा कर्तव्यो राजन्राजपुरोहितः १
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
पुरूरवस एलस्य संवादं मातरिश्वनः २
एल उवाच
कुतः स्विद्ब्राह्मणो जातो वर्णाश्चापिकुतस्त्रयः
कस्माच्च भवति श्रेयानेतद्वायो विचक्ष्व मे ३
वायुरुवाच
ब्रह्मणो मुखतः सृष्टो ब्राह्मणो राजसत्तम
बाहुभ्यां क्षत्रियः सृष्ट ऊरुभ्यां वैश्य उच्यते ४
वर्णानां परिचर्यार्थं त्रयाणां पुरुषर्षभ
वर्णश्चतुर्थः पश्चात्तु पद्भ्यां शूद्रो विनिर्मितः ५
ब्राह्मणो जातमात्रस्तु पृथिवीमन्वजायत
ईश्वरः सर्वभूतानां धर्मकोशस्य गुप्तये ६
ततः पृथिव्या गोप्तारं क्षत्रियं दण्डधारिणम्
द्वितीयं वर्णमकरोत्प्रजानामनुगुप्तये ७
वैश्यस्तु धनधान्येन त्रीन्वर्णान्बिभृयादिमान्
शूद्रो ह्येनान्परिचरेदिति ब्रह्मानुशासनम् ८
एल उवाच
द्विजस्य क्षत्रबन्धोर्वा कस्येयं पृथिवी भवेत्
धर्मतः सह वित्तेन सम्यग्वायो प्रचक्ष्व मे ९
वायुरुवाच
विप्रस्य सर्वमेवैतद्यत्किंचिज्जगतीगतम्
ज्येष्ठेनाभिजनेनेह तद्धर्मकुशला विदुः १०
स्वमेव ब्राह्मणो भुङ्क्ते स्वं वस्ते स्वं ददाति च
गुरुर्हि सर्ववर्णानां ज्येष्ठः श्रेष्ठश्च वै द्विजः ११
पत्यभावे यथा स्त्री हि देवरं कुरुते पतिम्
आनन्तर्यात्तथा क्षत्रं पृथिवी कुरुते पतिम् १२

एष ते प्रथमः कल्प आपद्यन्यो भवेदतः
यदि स्वर्गे परं स्थानं धर्मतः परिमार्गसि १३
य कश्चिद्विजयेद्भूमिं ब्राह्मणाय निवेदयेत्
श्रुतवृत्तोपपन्नाय धर्मज्ञाय तपस्विने १४
स्वधर्मपरितृप्ताय यो न वित्तपरो भवेत्
यो राजानं नयेद्बुद्ध्या सर्वतः परिपूर्णया १५
ब्राह्मणो हि कुले जातः कृतप्रज्ञो विनीतवाक्
श्रेयो नयति राजानं ब्रुवंश्चित्रां सरस्वतीम् १६
राजा चरति यं धर्मं ब्राह्मणेन निदर्शितम्
शुश्रूषुरनहंवादी क्षत्रधर्मव्रते स्थितः १७
तावता स कृतप्रज्ञश्चिरं यशसि तिष्ठति
तस्य धर्मस्य सर्वस्य भागी राजपुरोहितः १८
एवमेव प्रजाः सर्वा राजानमभिसंश्रिताः
सम्यग्वृत्ताः स्वधर्मस्था न कुतश्चिद्भयान्विताः १९
राष्ट्रे चरन्ति यं धर्मं राज्ञा साध्वभिरक्षिताः
चतुर्थं तस्य धर्मस्य राजा भागं स विन्दति २०
देवा मनुष्याः पितरो गन्धर्वोरगराक्षसाः
यज्ञमेवोपजीवन्ति नास्ति चेष्टमराजके २१
इतो दत्तेन जीवन्ति देवताः पितरस्तथा
राजन्येवास्य धर्मस्य योगक्षेमः प्रतिष्ठितः २२
छायायामप्सु वायौ च सुखमुष्णोऽधिगच्छति
अग्नौ वाससि सूर्ये च सुखं सीतेऽधिगच्छति २३
शब्दे स्पर्शे रसे रूपे गन्धे च रमते मनः
तेषु भोगेषु सर्वेषु नभीतो लभते सुखम् २४
अभयस्यैव यो दाता तस्यैव सुमहत्फलम्
न हि प्राणसमं दानं त्रिषु लोकेषु विद्यते २५
इन्द्रो राजा यमो राजा धर्मो राजा तथैव च
राजा बिभर्ति रूपाणि राज्ञा सर्वमिदं धृतम् २६
इति श्रीमहाभारते शान्तिपर्वणि त्रिसप्ततितमोऽध्यायः ७३

## चतुःसप्ततितमोऽध्यायः

भीष्म उवाच
राज्ञा पुरोहितः कार्यो भवेद्विद्वान्बहुश्रुतः
उभौ समीक्ष्य धर्मार्थावप्रमेयावनन्तरम् १
धर्मात्मा धर्मविद्येषां राज्ञां राजन्पुरोहितः
राजा चैवंगुणो येषां कुशलं तेषु सर्वशः २
उभौ प्रजा वर्धयतो देवान्पूर्वान्परान्पितॄन्
यौ समेयास्थितौ धर्मे श्रद्धेयौ सुतपस्विनौ ३
परस्परस्य सुहृदौ संमतौ समचेतसौ
ब्रह्मक्षत्रस्य संमानात्प्रजाः सुखमवाप्नुयुः ४
विमाननात्तयोरेव प्रजा नश्येयुरेव ह
ब्रह्मक्षत्रं हि सर्वेषां धर्माणां मूलमुच्यते ५
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
एलकश्यपसंवादं तं निबोध युधिष्ठिर ६
एल उवाच
यदा हि ब्रह्म प्रजहाति क्षत्रं क्षत्रं यदा वा प्रजहाति ब्रह्म
अन्वग्बलं कतमेऽस्मिन्भजन्ते तथाबल्यं कतमेऽस्मिन्वियन्ति ७
कश्यप उवाच
व्यृद्धं राष्ट्रं भवति क्षत्रियस्य ब्रह्म क्षत्रं यत्र विरुध्यते ह
अन्वग्बलं दस्यवस्तद्भजन्तेऽबल्यं तथा तत्र वियन्ति सन्तः ८
नैषामुक्षा वर्धते नोत उस्रा न गर्गरो मथ्यते नो यजन्ते
नैषां पुत्रा वेदमधीयते च यदा ब्रह्म क्षत्रियाः संत्यजन्ति ९
नैषामुक्षा वर्धते जातु गेहे नाधीयते सप्रजा नो यजन्ते
अपध्वस्ता दस्युभूता भवन्ति ये ब्राह्मणाः क्षत्रियान्संत्यजन्ति १०
एतौ हि नित्यसंयुक्तावितरेतरधारणे
क्षत्रं हि ब्रह्मणो योनिर्योनिः क्षत्रस्य च द्विजाः ११
उभावेतौ नित्यमभिप्रपन्नौ संप्रापतुर्महतीं श्रीप्रतिष्ठाम्
तयोः संधिर्भिद्यते चेत्पुराणस्ततः सर्वं भवति हि संप्रमूढम् १२
नात्र प्लवं लभते पारगामी महागाधे नौरिव संप्रणुन्ना
चातुर्वर्ण्यं भवति च संप्रमूढं ततः प्रजाः क्षयसंस्था भवन्ति १३

ब्रह्मवृद्धो रक्ष्यमाणो मधु हेम च वर्षति
अरक्ष्यमाणः सततमश्रु पापं च वर्षति १४
अब्रह्मचारी चरणादपेतो यदा ब्रह्मा ब्रह्मणि त्राणमिच्छेत्
आश्चर्यशो वर्षति तत्र देवस्तत्राभीक्ष्णं दुःसहाश्चाविशन्ति १५
स्त्रियं हत्वा ब्राह्मणं वापि पापः सभायां यत्र लभतेऽनुवादम्
राज्ञः सकाशे न बिभेति चापि ततो भयं जायते क्षत्रियस्य १६
पापैः पापे क्रियमाणेऽतिवेलं ततो रुद्रो जायते देव एषः
पापैः पापाः संजनयन्ति रुद्रं ततः सर्वान्साध्वसाधून्हिनस्ति १७
एल उवाच
कुतो रुद्रः कीदृशो वापि रुद्रः सत्त्वैः सत्त्वं दृश्यते वध्यमानम्
एतद्विद्वन्कश्यप मे प्रचक्ष्व यतो रुद्रो जायते देव एषः १८
कश्यप उवाच
आत्मा रुद्रो हृदये मानवानां स्वं स्वं देहं परदेहं च हन्ति
वातोत्पातैः सदृशं रुद्रमाहुर्दोवैर्जीमूतैः सदृशं रूपमस्य १९
एल उवाच
न वै वातं परिवृणोति कश्चिन्न जीमूतो वर्षति नैव दावः
तथायुक्तो दृश्यते मानवेषु कामद्वेषाद्बध्यते मुच्यते च २०
कश्यप उवाच
यथैकगेहे जातवेदाः प्रदीप्तः कृत्स्नं ग्रामं प्रदहेत्स त्वरावान्
विमोहनं कुरुते देव एष ततः सर्वं स्पृश्यते पुण्यपापैः २१
एल उवाच
यदि दण्डः स्पृशते पुण्यभाजं पापैः पापे क्रियमाणेऽविशेषात्
कस्य हेतोः सुकृतं नाम कुर्याद्दुष्कृतं वा कस्य हेतोर्न कुर्यात् २२
कश्यप उवाच
असंत्यागात्पापकृतामपापांस्तुल्यो दण्डः स्पृश्यते मिश्रभावात्
शुष्केणार्द्रं दह्यते मिश्रभावान्न मिश्रः स्यात्पापकृद्भिः कथंचित् २३
एल उवाच
साध्वसाधून्धारयतीह भूमिः साध्वसाधूंस्तापयतीह सूर्यः
साध्वसाधून्वातयतीह वायुरापस्तथा साध्वसाधून्वहन्ति २४
कश्यप उवाच

एवमस्मिन्वर्तते लोक एव नामुत्रैवं वर्तते राजपुत्र
प्रेत्यैतयोरन्तरवान्विशेषो यो वै पुण्यं चरते यश्च पापम् २५
पुण्यस्य लोको मधुमान्घृतार्चिर्हिरण्यज्योतिरमृतस्य नाभिः
तत्र प्रेत्य मोदते ब्रह्मचारी न तत्र मृत्युर्न जरा नोत दुःखम् २६
पापस्य लोको निरयोऽप्रकाशो नित्यं दुःखः शोकभूयिष्ठ एव
तत्रात्मानं शोचते पापकर्मा बह्वीः समाः प्रपतन्नप्रतिष्ठः २७
मिथो भेदाद्ब्राह्मणक्षत्रियाणां प्रजा दुःखं दुःसहं चाविशन्ति
एवं ज्ञात्वा कार्य एवेह विद्वान्पुरोहितो नैकविद्यो नृपेण २८
तं चैवान्वभिषिच्येत तथा धर्मो विधीयते
अग्र्यो हि ब्राह्मणः प्रोक्तः सर्वस्यैवेह धर्मतः २९
पूर्वं हि ब्राह्मणाः सृष्टा इति धर्मविदो विदुः
ज्येष्ठेनाभिजनेनास्य प्राप्तं सर्वं यदुत्तरम् ३०
तस्मान्मान्यश्च पूज्यश्च ब्राह्मणः प्रसृताग्रभुक्
सर्वं श्रेष्ठं वरिष्ठं च निवेद्यं तस्य धर्मतः ३१
अवश्यमेतत्कर्तव्यं राज्ञा बलवतापि हि
ब्रह्म वर्धयति क्षत्रं क्षत्रतो ब्रह्म वर्धते ३२
इति श्रीमहाभारते शान्तिपर्वणि चतुःसप्ततितमोऽध्यायः ७४

## पञ्चसप्ततितमोऽध्यायः

भीष्म उवाच
योगक्षेमो हि राष्ट्रस्य राजन्यायत्त उच्यते
योगक्षेमश्च राज्ञोऽपि समायत्तः पुरोहिते १
यत्रादृष्टं भयं ब्रह्म प्रजानां शमयत्युत
दृष्टं च राजा बाहुभ्यां तद्राष्ट्रं सुखमेधते २
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
मुचुकुन्दस्य संवादं राज्ञो वैश्रवणस्य च ३
मुचुकुन्दो विजित्येमां पृथिवीं पृथिवीपतिः
जिज्ञासमानः स्वबलमभ्ययादलकाधिपम् ४
ततो वैश्रवणो राजा रक्षांसि समवासृजत्
तेबलान्यवमृद्नन्तः प्राचरंस्तस्य नैर्ऋताः ५

स हन्यमाने सैन्ये स्वे मुचुकुन्दो नराधिपः
गर्हयामास विद्वांसं पुरोहितमरिंदमः ६
तत उग्रं तपस्तप्त्वा वसिष्ठो ब्रह्मवित्तमः
रक्षांस्यपावधीत्तत्र पन्थानं चाप्यविन्दत ७
ततो वैश्रवणो राजा मुचुकुन्दमदर्शयत्
वध्यमानेषु सैन्येषु वचनं चेदमब्रवीत् ८
त्वत्तो हि बलिनः पूर्वे राजानः सपुरोहिताः
न चैवं समवर्तंस्ते यथा त्वमिह वर्तसे ९
ते खल्वपि कृतास्त्राश्च बलवन्तश्च भूमिपाः
आगम्य पर्युपासन्ते मामीशं सुखदुःखयोः १०
यद्यस्ति बाहुवीर्यं ते तद्दर्शयितुमर्हसि
किं ब्राह्मणबलेन त्वमतिमात्रं प्रवर्तसे ११
मुचुकुन्दस्ततः क्रुद्धः प्रत्युवाच धनेश्वरम्
न्यायपूर्वमसंरब्धमसंभ्रान्तमिदं वचः १२
ब्रह्मक्षत्रमिदं सृष्टमेकयोनि स्वयंभुवा
पृथग्बलविधानं च तल्लोकं परिरक्षति १३
तपोमन्त्रबलं नित्यं ब्राह्मणेषु प्रतिष्ठितम्
अस्त्रबाहुबलं नित्यं क्षत्रियेषु प्रतिष्ठितम् १४
ताभ्यां संभूय कर्तव्यं प्रजानां परिपालनम्
तथा च मां प्रवर्तन्तं गर्हयस्यलकाधिप १५
ततोऽब्रवीद्वैश्रवणो राजानं सपुरोहितम्
नाहं राज्यमनिर्दिष्टं कस्मैचिद्विदधाम्युत १६
नाच्छिन्दे चापि निर्दिष्टमिति जानीहि पार्थिव
प्रशाधि पृथिवीं वीर मद्दत्तामखिलामिमाम् १७
मुचुकुन्द उवाच
नाहं राज्यं भवद्दत्तं भोक्तुमिच्छामि पार्थिव
बाहुवीर्यार्जितं राज्यमश्नीयामिति कामये १८
भीष्म उवाच
ततो वैश्रवणो राजा विस्मयं परमं ययौ
क्षत्रधर्मे स्थितं दृष्ट्वा मुचुकुन्दमसंभ्रमम् १९

ततो राजा मुचुकुन्दः सोऽन्वशासद्वसुंधराम्
बाहुवीर्यार्जितां सम्यक्क्षत्रधर्ममनुव्रतः २०
एवं यो ब्रह्मविद्राजा ब्रह्मपूर्वं प्रवर्तते
जयत्यविजितामुर्वीं यशश्च महदश्नुते २१
नित्योदको ब्राह्मणः स्यान्नित्यशस्त्रश्च क्षत्रियः
तयोर्हि सर्वमायत्तं यत्किंचिज्जगतीगतम् २२
इति श्रीमहाभारते शान्तिपर्वणि पञ्चसप्ततितमोऽध्यायः ७५

षट्सप्ततितमोऽध्यायः

युधिष्ठिर उवाच
यया वृत्त्या महीपालो विवर्धयति मानवान्
पुण्यांश्च लोकाञ्जयति तन्मे ब्रूहि पितामह १
भीष्म उवाच
दानशीलो भवेद्राजा यज्ञशीलश्च भारत
उपवासतपःशीलः प्रजानां पालने रतः २
सर्वाश्चैव प्रजा नित्यं राजा धर्मेण पालयेत्
उत्थानेनाप्रमादेन पूजयेच्चैव धार्मिकान् ३
राज्ञा हि पूजितो धर्मस्ततः सर्वत्र पूज्यते
यद्यदाचरते राजा तत्प्रजानां हि रोचते ४
नित्यमुद्यतदण्डश्च भवेन्मृत्युरिवारिषु
निहन्यात्सर्वतो दस्यून्न कामात्कस्यचित्क्षमेत् ५
यं हि धर्मं चरन्तीह प्रजा राज्ञा सुरक्षिताः
चतुर्थं तस्य धर्मस्य राजा भारत विन्दति ६
यदधीते यद्यजते यद्ददाति यदर्चति
राजा चतुर्थभाक्तस्य प्रजा धर्मेण पालयन् ७
यद्राष्ट्रेऽकुशलं किंचिद्राज्ञोऽरक्षयतः प्रजाः
चतुर्थं तस्य पापस्य राजा भारत विन्दति
अप्याहुः सर्वमेवेति भूयोऽधमिति निश्चयः ८
कर्मणः पृथिवीपाल नृशंसोऽनृतवागपि
तादृशात्किल्बिषाद्राजा शृणु येन प्रमुच्यते ९

प्रत्याहर्तुमशक्यं स्याद्धनं चोरैर्हृतं यदि
स्वकोशात्तत्प्रदेयं स्यादशक्तेनोपजीवता १०
सर्ववर्णैः सदा रक्ष्यं ब्रह्मस्वं ब्राह्मणास्तथा
न स्थेयं विषये तेषु योऽपकुर्याद्द्विजातिषु ११
ब्रह्मस्वे रक्ष्यमाणे हि सर्वं भवति रक्षितम्
तेषां प्रसादे निवृत्ते कृतकृत्यो भवेन्नृपः १२
पर्जन्यमिव भूतानि महाद्रुममिव द्विजाः
नरास्तमुपजीवन्ति नृपं सर्वार्थसाधकम् १३
न हि कामात्मना राज्ञा सततं शठबुद्धिना
नृशंसेनातिलुब्धेन शक्याः पालयितुं प्रजाः १४
युधिष्ठिर उवाच
नाहं राज्यसुखान्वेषी राज्यमिच्छाम्यपि क्षणम्
धर्मार्थं रोचये राज्यं धर्मश्चात्र न विद्यते १५
तदलं मम राज्येन यत्र धर्मो न विद्यते
वनमेव गमिष्यामि तस्माद्धर्मचिकीर्षया १६
तत्र मेध्येष्वरण्येषु न्यस्तदण्डो जितेन्द्रियः
धर्ममाराधयिष्यामि मुनिर्मूलफलाशनः १७
भीष्म उवाच
वेदाहं तव या बुद्धिरानृशंस्यगुणैव सा
न च शुद्धानृशंस्येन शक्यं महदुपासितुम् १८
अपि तु त्वा मृदुं दान्तमत्यार्यमतिधार्मिकम्
क्लीबं धर्मघृणायुक्तं न लोको बहु मन्यते १९
राजधर्मानवेक्षस्व पितृपैतामहोचितान्
नैतद्राज्ञामथो वृत्तं यथा त्वं स्थातुमिच्छसि २०
न हि वैक्लव्यसंसृष्टमानृशंस्यमिहास्थितः
प्रजापालनसंभूतं प्राप्ता धर्मफलं ह्यसि २१
न ह्येतामाशिषं पाण्डुर्न च कुन्त्यन्वयाचत
न चैतां प्राज्ञतां तात यया चरसि मेधया २२
शौर्यं बलं च सत्त्वं च पिता तव सदाब्रवीत्
माहात्म्यं बलमौदार्यं तव कुन्त्यन्वयाचत २३

नित्यं स्वाहा स्वधा नित्यमुभे मानुषदैवते
पुत्रेष्वाशासते नित्यं पितरो दैवतानि च २४
दानमध्ययनं यज्ञः प्रजानां परिपालनम्
धर्ममेतमधर्मं वा जन्मनैवाभ्यजायिथाः २५
काले धुरि नियुक्तानां वहतां भार आहिते
सीदतामपि कौन्तेय न कीर्तिरवसीदति २६
समन्ततो विनियतो वहत्यस्खलितो हि यः
निर्दोषकर्मवचनात्सिद्धिः कर्मण एव सा २७
नैकान्तविनिपातेन विचचारेह कश्चन
धर्मी गृही वा राजा वा ब्रह्मचार्यथ वा पुनः २८
अल्पं तु साधुभूयिष्ठं यत्कर्मोदारमेव तत्
कृतमेवाकृताच्छ्रेयो न पापीयोऽस्त्यकर्मणः २९
यदा कुलीनो धर्मज्ञः प्राप्नोत्यैश्वर्यमुत्तमम्
योगक्षेमस्तदा राजन्कुशलायैव कल्पते ३०
दानेनान्यं बलेनान्यमन्यं सूनृतया गिरा
सर्वतः परिगृह्णीयाद्राज्यं प्राप्येह धार्मिकः ३१
यं हि वैद्याः कुले जाता अवृत्तिभयपीडिताः
प्राप्य तृप्ताः प्रतिष्ठन्ति धर्मः कोऽभ्यधिकस्ततः ३२
युधिष्ठिर उवाच
किं न्वतः परमं स्वर्ग्यं का न्वतः प्रीतिरुत्तमा
किं न्वतः परमैश्वर्यं ब्रूहि मे यदि मन्यसे ३३
भीष्म उवाच
यस्मिन्प्रतिष्ठिताः सम्यक्क्षेमं विन्दन्ति तत्क्षणम्
स स्वर्गजित्तमोऽस्माकं सत्यमेतद्ब्रवीमि ते ३४
त्वमेव प्रीतिमांस्तस्मात्कुरूणां कुरुसत्तम
भव राजा जय स्वर्गं सतो रक्षासतो जहि ३५
अनु त्वा तात जीवन्तु सुहृदः साधुभिः सह
पर्जन्यमिव भूतानि स्वादुद्रुममिवाण्डजाः ३६
धृष्टं शूरं प्रहर्तारमनृशंसं जितेन्द्रियम्
वत्सलं संविभक्तारमनु जीवन्तु त्वां जनः ३७

इति श्रीमहाभारते शान्तिपर्वणि षट्सप्ततितमोऽध्यायः ७६

सप्तसप्ततितमोऽध्यायः

युधिष्ठिर उवाच
स्वकर्मण्यपरे युक्तास्तथैवान्ये विकर्मणि
तेषां विशेषमाचद्दव ब्राह्मणानां पितामह १
भीष्म उवाच
विद्यालद्दणसंपन्नाः सर्वत्राम्नायदर्शिनः
एते ब्रह्मसमा राजन्ब्राह्मणाः परिकीर्तिताः २
ऋत्विगाचार्यसंपन्नाः स्वेषु कर्मस्ववस्थिताः
एते देवसमा राजन्ब्राह्मणानां भवन्त्युत ३
ऋत्विक्पुरोहितो मन्त्री दूतोऽथार्थानुशासकः
एते द्दत्रसमा राजन्ब्राह्मणानां भवन्त्युत ४
अश्वारोहा गजारोहा रथिनोऽथ पदातयः
एते वैश्यसमा राजन्ब्राह्मणानां भवन्त्युत ५
जन्मकर्मविहीना ये कदर्या ब्रह्मबन्धवः
एते शूद्रसमा राजन्ब्राह्मणानां भवन्त्युत ६
अश्रोत्रियाः सर्व एव सर्वे चानाहिताग्नयः
तान्सर्वान्धार्मिको राजा बलि विष्टिं च कारयेत् ७
आह्वायका देवलका नद्दत्रग्रामयाजकाः
एते ब्राह्मणचण्डाला महापथिकपञ्चमाः ८
एतेभ्यो बलिमादद्याद्धीनकोशो महीपतिः
ऋते ब्रह्मसमेभ्यश्च देवकल्पेभ्य एव च ९
अब्राह्मणानां वित्तस्य स्वामी राजेति वैदिकम्
ब्राह्मणानां च ये केचिद्विकर्मस्था भवन्त्युत १०
विकर्मस्थास्तु नोपेद्दया जातु राज्ञा कथंचन
नियम्याः संविभज्याश्च धर्मानुग्रहकाम्यया ११
यस्य स्म विषये राज्ञः स्तेनो भवति वै द्विजः
राज्ञ एवापराधं तं मन्यन्ते तद्विदो जनाः १२
अवृत्त्या यो भवेत्स्तेनो वेदवित्स्नातकस्तथा

राजन्स राज्ञा भर्तव्य इति धर्मविदो विदुः १३
स चेन्नो परिवर्तेत कृतवृत्तिः परंतप
ततो निर्वासनीयः स्यात्तस्माद्देशात्सबान्धवः १४
इति श्रीमहाभारते शान्तिपर्वणि सप्तसप्ततितमोऽध्यायः ७७

## अष्टसप्ततितमोऽध्यायः

युधिष्ठिर उवाच
केषां राजा प्रभवति वित्तस्य भरतर्षभ
कया च वृत्त्या वर्तेत तन्मे ब्रूहि पितामह १
भीष्म उवाच
अब्राह्मणानां वित्तस्य स्वामी राजेति वैदिकम्
ब्राह्मणानां च ये केचिद्विकर्मस्था भवन्त्युत २
विकर्मस्थाश्च नोपेक्ष्या विप्रा राज्ञा कथंचन
इति राज्ञां पुरावृत्तमभिजल्पन्ति साधवः ३
यस्य स्म विषये राज्ञः स्तेनो भवति वै द्विजः
राज्ञ एवापराधं तं मन्यन्ते किल्बिषं नृप ४
अभिशस्तमिवात्मानं मन्यन्ते तेन कर्मणा
तस्माद्राजर्षयः सर्वे ब्राह्मणानन्वपालयन् ५
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
गीतं केकयराजेन ह्रियमाणेन रक्षसा ६
केकयानामधिपतिं रक्षो जग्राह दारुणम्
स्वाध्यायेनान्वितं राजन्नरण्ये संशितव्रतम् ७
राजोवाच
न मे स्तेनो जनपदे न कदर्यो न मद्यपः
नानाहिताग्निर्नायज्वा मामकान्तरमाविशः ८
न च मे ब्राह्मणोऽविद्वान्नाव्रती नाप्यसोमपः
नानाहिताग्निर्विषये मामकान्तरमाविशः ९
नानाप्तदक्षिणैर्यज्ञैर्यजन्ते विषये मम
अधीते नाव्रती कश्चिन्मामकान्तरमाविशः १०
अधीयतेऽध्यापयन्ति यजन्ते याजयन्ति च

ददति प्रतिगृह्णन्ति षट्सु कर्मस्ववस्थिताः ११
पूजिताः संविभक्ताश्च मृदवः सत्यवादिनः
ब्राह्मणा मे स्वकर्मस्था मामकान्तरमाविशः १२
न याचन्त प्रयच्छन्ति सत्यधर्मविशारदाः
नाध्यापयन्त्यधीयन्ते यजन्ते न च याजकाः १३
ब्राह्मणान्परिरक्षन्ति संग्रामेष्वपलायिनः
क्षत्रिया मे स्वकर्मस्था मामकान्तरमाविशः १४
कृषिगोरक्षवाणिज्यमुपजीवन्त्यमायया
अप्रमत्ताः क्रियावन्तः सुव्रताः सत्यवादिनः १५
संविभागं दमं शौचं सौहृदं च व्यपाश्रिताः
मम वैश्याः स्वकर्मस्था मामकान्तरमाविशः १६
त्रीन्वर्णाननुतिष्ठन्ति यथावदनसूयकाः
मम शूद्राः स्वकर्मस्था मामकान्तरमाविशः १७
कृपणानाथवृद्धानां दुर्बलातुरयोषिताम्
संविभक्तास्मि सर्वेषां मामकान्तरमाविशः १८
कुलदेशादिधर्माणां प्रथितानां यथाविधि
अव्युच्छेत्तास्मि सर्वेषां मामकान्तरमाविशः १९
तपस्विनो मे विषये पूजिताः परिपालिताः
संविभक्ताश्च सत्कृत्य मामकान्तरमाविशः २०
नासंविभज्य भोक्तास्मि न विशामि परस्त्रियम्
स्वतन्त्रो जातु न क्रीडे मामकान्तरमाविशः २१
नाब्रह्मचारी भिक्षावान्भिक्षुर्वाब्रह्मचारिकः
अनृत्विजं हुतं नास्ति मामकान्तरमाविशः २२
नावजानाम्यहं वृद्धान्न वैद्यान्न तपस्विनः
राष्ट्रे स्वपति जागर्मि मामकान्तरमाविशः २३
वेदाध्ययनसंपन्नस्तपस्वी सर्वधर्मवित्
स्वामी सर्वस्य राज्यस्य श्रीमान्मम पुरोहितः २४
दानेन दिव्यानभिवाञ्छामि लोकान्सत्येनाथो ब्राह्मणानां च गुप्त्या
शुश्रूषया चापि गुरूनुपैमि न मे भयं विद्यते राक्षसेभ्यः २५
न मे राष्ट्रे विधवा ब्रह्मबन्धुर्न ब्राह्मणः कृपणो नोत चोरः

न पारजायी न च पापकर्मा न मे भयं विद्यते राक्षसेभ्यः २६
न मे शस्त्रैरनिर्भिन्नमङ्गे द्व्यङ्गुलमन्तरम्
धर्मार्थं युध्यमानस्य मामकान्तरमाविशः २७
गोब्राह्मणे च यज्ञे च नित्यं स्वस्त्ययनं मम
आशासते जना राष्ट्रे मामकान्तरमाविशः २८
राक्षस उवाच
यस्मात्सर्वास्ववस्थासु धर्ममेवान्ववेक्षसे
तस्मात्प्राप्नुहि कैकेय गृहान्स्वस्ति व्रजाम्यहम् २९
येषां गोब्राह्मणा रक्ष्याः प्रजा रक्ष्याश्च केकय
न रक्षोभ्यो भयं तेषां कुत एव तु मानुषात् ३०
येषां पुरोगमा विप्रा येषां ब्रह्मबलं बलम्
प्रियातिथ्यास्तथा दारास्ते वै स्वर्गजितो नराः ३१
भीष्म उवाच
तस्माद्द्विजातीन्रक्षेत ते हि रक्षन्ति रक्षिताः
आशीरेषां भवेद्राज्ञां राष्ट्रं सम्यक्प्रवर्धते ३२
तस्माद्राज्ञा विशेषेण विकर्मस्था द्विजातयः
नियम्याः संविभज्याश्च प्रजानुग्रहकारणात् ३३
य एवं वर्तते राजा पौरजानपदेष्विह
अनुभूयेह भद्राणि प्राप्नोतीन्द्रसलोकताम् ३४
इति श्रीमहाभारते शान्तिपर्वणि अष्टसप्ततितमोऽध्यायः ७८

## एकोनाशीतितमोऽध्यायः

युधिष्ठिर उवाच
व्याख्याता क्षत्रधर्मेण वृत्तिरापत्सु भारत
कथंचिद्वैश्यधर्मेण जीवेद्वा ब्राह्मणो न वा १
भीष्म उवाच
अशक्तः क्षत्रधर्मेण वैश्यधर्मेण वर्तयेत्
कृषिगोरक्षमास्थाय व्यसने वृत्तिसंक्षये २
युधिष्ठिर उवाच
कानि पण्यानि विक्रीणन्स्वर्गलोकान्न हीयते

ब्राह्मणो वैश्यधर्मेण वर्तयन्भरतर्षभ ३
भीष्म उवाच
सुरा लवणमित्येव तिलान्केसरिणः पशून्
ऋषभान्मधु मांसं च कृतान्नं च युधिष्ठिर ४
सर्वास्ववस्थास्वेतानि ब्राह्मणः परिवर्जयेत्
एतेषां विक्रयात्तात ब्राह्मणो नरकं व्रजेत् ५
अजोऽग्निर्वरुणो मेषः सूर्योऽश्व पृथिवी विराट्
धेनुर्यज्ञश्च सोमश्च न विक्रेयाः कथंचन ६
पक्वेनामस्य निमयं न प्रशंसन्ति साधवः
निमयेत्पक्वमामेन भोजनार्थाय भारत ७
वयं सिद्धमशिष्यामो भवान्साधयतामिदम्
एवं समीक्ष्य निमयन्नाधर्मोऽस्ति कदाचन ८
अत्र ते वर्तयिष्यामि यथा धर्मः पुरातनः
व्यवहारप्रवृत्तानां तन्निबोध युधिष्ठिर ९
भवतेऽह ददानीदं भवानेतत्प्रयच्छतु
रुचिते वर्तते धर्मो न बलात्संप्रवर्तते १०
इत्येवं सम्प्रवर्तन्त व्यवहाराः पुरातनाः
ऋषीणामितरेषां च साधु चेदमसंशयम् ११
युधिष्ठिर उवाच
अथ तात यदा सर्वाः शस्त्रमाददते प्रजाः
व्युत्क्रामन्ति स्वधर्मेभ्यः क्षत्रस्य क्षीयते बलम् १२
राजा त्राता न लोके स्यात्किं तदा स्यात्परायणम्
एतन्मे संशयं ब्रूहि विस्तरेण पितामह १३
भीष्म उवाच
दानेन तपसा यज्ञैरद्रोहेण दमेन च
ब्राह्मणप्रमुखा वर्णाः क्षेममिच्छेयुरात्मनः १४
तेषां ये वेदबलिनस्त उत्थाय समन्ततः
राज्ञो बलं वर्धयेयुर्महेन्द्रस्येव देवताः १५
राज्ञो हि क्षीयमाणस्य ब्रह्मैवाहुः परायणम्
तस्माद्ब्रह्मबलेनैव समुत्थेयं विजानता १६

यदा तु विजयी राजा क्षेमं राष्ट्रेऽभिसंदधेत्
तदा वर्णा यथाधर्ममाविशेयुः स्वकर्मसु १७
उन्मर्यादे प्रवृत्ते तु दस्युभिः संकरे कृते
सर्वे वर्णा न दुष्येयुः शस्त्रवन्तो युधिष्ठिर १८
युधिष्ठिर उवाच
अथ चेत्सर्वतः क्षत्रं प्रदुष्येद्ब्राह्मणान्प्रति
कस्तस्य ब्राह्मणस्त्राता को धर्मः किं परायणम् १९
भीष्म उवाच
तपसा ब्रह्मचर्येण शस्त्रेण च बलेन च
अमायया मायया च नियन्तव्यं तदा भवेत् २०
क्षत्रस्याभिप्रवृद्धस्य ब्राह्मणेषु विशेषतः
ब्रह्मैव संनियन्तृ स्यात्क्षत्रं हि ब्रह्मसंभवम् २१
अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम्
तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति २२
यदा छिनत्त्ययोऽश्मानमग्निश्चापोऽभिपद्यते
क्षत्रं च ब्राह्मणं द्वेष्टि तदा शाम्यन्ति ते त्रयः २३
तस्माद्ब्रह्मणि शाम्यन्ति क्षत्रियाणां युधिष्ठिर
समुदीर्णान्यजेयानि तेजांसि च बलानि च २४
ब्रह्मवीर्ये मृदूभूते क्षत्रवीर्ये च दुर्बले
दुष्टेषु सर्ववर्णेषु ब्राह्मणान्प्रति सर्वशः २५
ये तत्र युद्धं कुर्वन्ति त्यक्त्वा जीवितमात्मनः
ब्राह्मणान्परिरक्षन्तो धर्ममात्मानमेव च २६
मनस्विनो मन्युमन्तः पुण्यलोका भवन्ति ते
ब्राह्मणार्थं हि सर्वेषां शस्त्रग्रहणमिष्यते २७
अति स्विष्टस्वधीतानां लोकानति तपस्विनाम्
अनाशकाग्न्योर्विशतां शूरा यान्ति परां गतिम्
एवमेवात्मनस्त्यागान्नान्यं धर्मं विदुर्जनाः २८
तेभ्यो नमश्च भद्रं च ये शरीराणि जुह्वति
ब्रह्मद्विषो नियच्छन्तस्तेषां नोऽस्तु सलोकता
ब्रह्मलोकजितः स्वर्ग्यान्वीरांस्तान्मनुरब्रवीत् २९

यथाश्वमेधावभृथे स्नाताः पूता भवन्त्युत
दुष्कृतः सुकृतश्चैव तथा शस्त्रहता रणे ३०
भवत्यधर्मो धर्मो हि धर्माधर्मावुभावपि
कारणाद्देशकालस्य देशकालः स तादृशः ३१
मैत्राः क्रूराणि कुर्वन्तो जयन्ति स्वर्गमुत्तमम्
धर्म्याः पापानि कुर्वन्तो गच्छन्ति परमां गतिम् ३२
ब्राह्मणस्त्रिषु कालेषु शस्त्रं गृह्णन्न दुष्यति
आत्मत्राणे वर्णदोषे दुर्गस्य नियमेषु च ३३
युधिष्ठिर उवाच
अभ्युत्थिते दस्युबले क्षत्रार्थे वर्णसंकरे
संप्रमूढेषु वर्णेषु यद्यन्योऽभिभवेद्बली ३४
ब्राह्मणो यदि वा वैश्यः शूद्रो वा राजसत्तम
दस्युभ्योऽथ प्रजा रक्षेद्दण्डं धर्मेण धारयन् ३५
कार्यं कुर्यान्न वा कुर्यात्संवार्यो वा भवेन्न वा
न स्म शस्त्रं गृहीतव्यमन्यत्र क्षत्रबन्धुतः ३६
भीष्म उवाच
अपारे यो भवेत्पारमप्लवे यः प्लवो भवेत्
शूद्रो वा यदि वाप्यन्यः सर्वथा मानमर्हति ३७
यमाश्रित्य नरा राजन्वर्तयेयुर्यथासुखम्
अनाथाः पाल्यमाना वै दस्युभिः परिपीडिताः ३८
तमेव पूजयेरंस्ते प्रीत्या स्वमिव बान्धवम्
महद्ध्यभीक्ष्णं कौरव्य कर्ता सन्मानमर्हति ३९
किमुक्षणावहता कृत्यं किं धेन्वा चाप्यदुग्धया
वन्ध्यया भार्यया कोऽथ कोऽथो राज्ञाप्यरक्षता ४०
यथा दारुमयो हस्ती यथा चर्ममयो मृगः
यथा ह्यनेत्रः शकटः पथि क्षेत्रं यथोषरम् ४१
एवं ब्रह्मानधीयानं राजा यश्च न रक्षिता
न वर्षति च यो मेघः सर्व एते निरर्थकाः ४२
नित्यं यस्तु सतो रक्षेदसतश्च निबर्हयेत्
स एव राजा कर्तव्यस्तेन सर्वमिदं धृतम् ४३

इति श्रीमहाभारते शान्तिपर्वणि एकोनाशीतितमोऽध्यायः ७९

अशीतितमोऽध्यायः

युधिष्ठिर उवाच
क्वसमुत्थाः कथंशीला ऋत्विजः स्युः पितामह
कथंविधाश्च राजेन्द्र तद्ब्रूहि वदतां वर १
भीष्म उवाच
प्रतिकर्म पुराचार ऋत्विजां स्म विधीयते
आदौ छन्दांसि विज्ञाय द्विजानां श्रुतमेव च २
ये त्वेकरतयो नित्यं धीरा नाप्रियवादिनः
परस्परस्य सुहृदः संमताः समदर्शिनः ३
येष्वानृशंस्यं सत्यंचाप्यहिंसा तप आर्जवम्
अद्रोहो नाभिमानश्च ह्रीस्तितिक्षा दमः शमः ४
ह्रीमान्सत्यधृतिर्दान्तो भूतानामविहिंसकः
अकामद्वेषसंयुक्तस्त्रिभिः शुक्लैः समन्वितः ५
अहिंसको ज्ञानतृप्तः स ब्रह्मासनमर्हति
एते महर्त्विजस्तात सर्वे मान्या यथातथम् ६
युधिष्ठिर उवाच
यदिदं वेदवचनं दक्षिणासु विधीयते
इदं देयमिदं देयं न क्वचिद्व्यवतिष्ठते ७
नेदं प्रति धनं शास्त्रमापद्धर्ममशास्त्रतः
आज्ञा शास्त्रस्य घोरेयं न शक्तिं समवेक्षते ८
श्रद्धामारभ्य यष्टव्यमित्येषा वैदिकी श्रुतिः
मिथ्योपेतस्य यज्ञस्य किमु श्रद्धा करिष्यति ९
भीष्म उवाच
न वेदानां परिभवान्न शाठ्येन न मायया
कश्चिन्महदवाप्नोति मातेऽभूद्बुद्धिरीदृशी १०
यज्ञाङ्गं दक्षिणास्तात वेदानां परिबृंहणम्
न मन्त्रा दक्षिणाहीनास्तारयन्ति कथंचन ११
शक्तिस्तु पूर्णपात्रेण संमितानवमा भवेत्

अवश्यं तात यष्टव्यं त्रिभिर्वर्णैर्यथाविधि १२
सोमो राजा ब्राह्मणानामित्येषा वैदिकी श्रुतिः
तं च विक्रेतुमिच्छन्ति न वृथा वृत्तिरिष्यते
तेन क्रीतेन धर्मेण ततो यज्ञः प्रतायते १३
इत्येवं धर्मः ख्यातमृषिभिर्धर्मवादिभिः
पुमान्यज्ञश्च सोमश्च न्यायवृत्तो यथा भवेत्
अन्यायवृत्तः पुरुषो न परस्य न चात्मनः १४
शरीरं यज्ञपात्राणि इत्येषा श्रूयते श्रुतिः
तानि सम्यक्प्रणीतानि ब्राह्मणानां महात्मनाम् १५
तपो यज्ञादपि श्रेष्ठमित्येषा परमा श्रुतिः
तत्ते तपः प्रवक्ष्यामि विद्वंस्तदपि मे शृणु १६
अहिंसा सत्यवचनमानृशंस्यं दमो घृणा
एतत्तपो विदुर्धीरा न शरीरस्य शोषणम् १७
अप्रामाण्यं च वेदानां शास्त्राणां चातिलङ्घनम्
अव्यवस्था च सर्वत्र तद्वै नाशनमात्मनः १८
निबोध दशहोतॄणां विधानं पार्थ यादृशम्
चित्तिः स्रुक्चित्तमाज्यं च पवित्रं ज्ञानमुत्तमम् १९
सर्वं जिह्मं मृत्युपदमार्जवं ब्रह्मणः पदम्
एतावाञ्ज्ञानविषयः किं प्रलापः करिष्यति २०
इति श्रीमहाभारते शान्तिपर्वणि अशीतितमोऽध्यायः ८०

## एकाशीतितमोऽध्यायः

युधिष्ठिर उवाच
यदप्यल्पतरं कर्म तदप्येकेन दुष्करम्
पुरुषेणासहायेन किमु राज्यं पितामह १
किंशीलः किंसमाचारो राज्ञोऽथसचिवो भवेत्
कीदृशे विश्वसेद्राजा कीदृशे नापि विश्वसेत् २
भीष्म उवाच
चतुर्विधानि मित्राणि राज्ञां राजन्भवन्त्युत
सहार्थो भजमानश्च सहजः कृत्रिमस्तथा ३

धर्मात्मा पञ्चमं मित्रं स तु नैकस्य न द्वयोः
यतो धर्मस्ततो वा स्यान्मध्यस्थो वा ततो भवेत् ४
यस्तस्यार्थो न रोचेत न तं तस्य प्रकाशयेत्
धर्माधर्मेण राजानश्चरन्ति विजिगीषवः ५
चतुर्णां मध्यमौ श्रेष्ठौ नित्यं शङ्क्यौ तथापरौ
सर्वे नित्यं शङ्कितव्याः प्रत्यक्षं कार्यमात्मनः ६
न हि राज्ञा प्रमादो वै कर्तव्यो मित्ररक्षणे
प्रमादिनं हि राजानं लोकाः परिभवन्त्युत ७
असाधुः साधुतामेति साधुर्भवति दारुणः
अरिश्च मित्रं भवति मित्रं चापि प्रदुष्यति ८
अनित्यचित्तः पुरुषस्तस्मिन्को जातु विश्वसेत्
तस्मात्प्रधानं यत्कार्यं प्रत्यक्षं तत्समाचरेत् ९
एकान्तेन हि विश्वासः कृत्स्नो धर्मार्थनाशकः
अविश्वासश्च सर्वत्र मृत्युना च विशिष्यते १०
अकालमृत्युर्विश्वासो विश्वसन्हि विपद्यते
यस्मिन्करोति विश्वासमिच्छतस्तस्य जीवति ११
तस्माद्विश्वसितव्यं च शङ्कितव्यं च केषुचित्
एषा नीतिगतिस्तात लक्ष्मीश्चैव सनातनी १२
यं मन्येत ममाभावादिममर्थागमः स्पृशेत्
नित्यं तस्माच्छङ्कितव्यममित्रं तं विदुर्बुधाः १३
यस्य क्षेत्रादप्युदकं क्षेत्रमन्यस्य गच्छति
न तत्रानिच्छतस्तस्य भिद्येरन्सर्वसेतवः १४
तथैवात्युदकाद्भीतस्तस्य भेदनमिच्छति
यमेवंलक्षणं विद्यात्तममित्रं विनिर्दिशेत् १५
यः समृद्ध्या न तुष्येत क्षये दीनतरो भवेत्
एतदुत्तममित्रस्य निमित्तमभिचक्षते १६
यं मन्येत ममाभावादस्याभावो भवेदिति
तस्मिन्कुर्वीत विश्वासं यथा पितरि वै तथा १७
तं शक्त्या वर्धमानश्च सर्वतः परिबृंहयेत्
नित्यं क्षताद्वारयति यो धर्मेष्वपि कर्मसु १८

क्षताद्धीतं विजानीयादुत्तमं मित्रलक्षणम्
ये तस्य क्षतमिच्छन्ति ते तस्य रिपवः स्मृताः १९
व्यसनान्नित्यभीतोऽसौ समृद्ध्यामेव तृप्यते
यत्स्यादेवंविधं मित्रं तदात्मसममुच्यते २०
रूपवर्णस्वरोपेतस्तितिक्षुरनसूयकः
कुलीनः शीलसंपन्नः स ते स्यात्प्रत्यनन्तरः २१
मेधावी स्मृतिमान्दक्षः प्रकृत्या चानृशंसवान्
यो मानितोऽमानितो वा न संदूष्येत्कदाचन २२
ऋत्विग्वा यदि वाचार्यः सखा वात्यन्तसंस्तुतः
गृहे वसेदमात्यस्ते यः स्यात्परमपूजितः २३
स ते विद्यात्परं मन्त्रं प्रकृतिं चार्थधर्मयोः
विश्वासस्ते भवेत्तत्र यथा पितरि वै तथा २४
नैव द्वौ न त्रयः कार्या न मृष्येरन्परस्परम्
एकार्थादेव भूतानां भेदो भवति सर्वदा २५
कीर्तिप्रधानो यश्च स्याद्यश्च स्यात्समये स्थितः
समर्थान्यश्च न द्वेष्टि समर्थान्कुरुते च यः २६
यो न कामाद्भयाल्लोभात्क्रोधाद्वा धर्ममुत्सृजेत्
दक्षः पर्याप्तवचनः स ते स्यात्प्रत्यनन्तरः २७
शूरश्चार्यश्च विद्वांश्च प्रतिपत्तिविशारदः
कुलीनः शीलसंपन्नस्तितिक्षुरनसूयकः २८
एते ह्यमात्याः कर्तव्याः सर्वकर्मस्ववस्थिताः
पूजिताः संविभक्ताश्च सुसहायाः स्वनुष्ठिताः २९
कृत्स्नमेते विनिक्षिप्ताः प्रतिरूपेषु कर्मसु
युक्ता महत्सु कार्येषु श्रेयांस्युत्पादयन्ति च ३०
एते कर्माणि कुर्वन्ति स्पर्धमाना मिथः सदा
अनुतिष्ठन्ति चैवार्थानाचक्षाणाः परस्परम् ३१
ज्ञातिभ्यश्चैव बिभ्येथा मृत्योरिव यतः सदा
उपराजेव राजर्धिं ज्ञातिर्न सहते सदा ३२
ऋजोर्मृदोर्वदान्यस्य ह्रीमतः सत्यवादिनः
नान्यो ज्ञातेर्महाबाहो विनाशमभिनन्दति ३३

अज्ञातिता नातिसुखा नावज्ञेयास्त्वतः परम्
अज्ञातिमन्तं पुरुषं परे परिभवन्त्युत ३४
निकृतस्य नरैरन्यैर्ज्ञातिरेव परायणम्
नान्यैर्निकारं सहते ज्ञातेर्ज्ञातिः कदाचन ३५
आत्मानमेव जानाति निकृतं बान्धवैरपि
तेषु सन्ति गुणाश्चैव नैर्गुण्यं तेषु लक्ष्यते ३६
नाज्ञातिरनुगृह्णाति नाज्ञातिर्दिग्धमस्यति
उभयं ज्ञातिलोकेषु दृश्यते साध्वसाधु च ३७
तान्मानयेत्पूजयेच्च नित्यं वाचा च कर्मणा
कुर्याच्च प्रियमेतेभ्यो नाप्रियं किंचिदाचरेत् ३८
विश्वस्तवदविश्वस्तस्तेषु वर्तेत सर्वदा
न हि दोषो गुणो वेति निस्पृक्तस्तेषु दृश्यते ३९
तस्यैवं वर्तमानस्य पुरुषस्याप्रमादिनः
अमित्राः संप्रसीदन्ति तथा मित्रीभवन्त्यपि ४०
य एवं वर्तते नित्यं ज्ञातिसंबन्धिमण्डले
मित्रेष्वमित्रेष्वैश्वर्ये चिरं यशसि तिष्ठति ४१
इति श्रीमहाभारते शान्तिपर्वणि एकाशीतितमोऽध्यायः ८१

## द्व्यशीतितमोऽध्यायः

युधिष्ठिर उवाच
एवमग्राह्यके तस्मिञ्ज्ञातिसंबन्धिमण्डले
मित्रेष्वमित्रेष्वपि च कथं भावो विभाव्यते १
भीष्म उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
वासुदेवस्य संवादं सुरर्षेर्नारदस्य च २
वासुदेव उवाच
नासुहृत्परमं मन्त्रं नारदार्हति वेदितुम्
अपण्डितो वापि सुहृत्पण्डितो वापि नात्मवान् ३
स ते सौहृदमास्थाय किंचिद्वक्ष्यामि नारद
कृत्स्नां च बुद्धिं संप्रेक्ष्य संपृच्छे त्रिदिवंगम ४

दास्यमैश्वर्यवादेन ज्ञातीनां वै करोम्यहम्
अर्धभोक्तास्मि भोगानां वाग्दुरुक्तानि च क्षमे ५
अरणीमग्निकामो वा मथ्नाति हृदयं मम
वाचा दुरुक्तं देवर्षे तन्मे दहति नित्यदा ६
बलं संकर्षणे नित्यं सौकुमार्यं पुनर्गदे
रूपेण मत्तः प्रद्युम्नः सोऽसहायोऽस्मि नारद ७
अन्ये हि सुमहाभागा बलवन्तो दुरासदाः
नित्योत्थानेन संपन्ना नारदान्धकवृष्णयः ८
यस्य न स्युर्न वै स स्याद्यस्य स्युः कृच्छ्रमेव तत्
द्वाभ्यां निवारितो नित्यं वृणोम्येकतरं न च ९
स्यातां यस्याहुकाक्रूरौ किं नु दुःखतरं ततः
यस्य वापि न तौ स्यातां किं नु दुःखतरं ततः १०
सोऽह कितवमातेव द्वयोरपि महामुने
एकस्य जयमाशंसे द्वितीयस्यापराजयम् ११
ममैवं क्लिश्यमानस्य नारदोभयतः सदा
वक्तुमर्हसि यच्छ्रेयो ज्ञातीनामात्मनस्तथा १२
नारद उवाच
आपदो द्विविधाः कृष्ण बाह्याश्चाभ्यन्तराश्च ह
प्रादुर्भवन्ति वार्ष्णेय स्वकृता यदि वान्यतः १३
सेयमाभ्यन्तरा तुभ्यमापत्कृच्छ्रा स्वकर्मजा
अक्रूरभोजप्रभवाः सर्वे ह्येते तदन्वयाः १४
अर्थहेतोर्हि कामाद्वाद्वारा बीभत्सयापि वा
आत्मना प्राप्तमैश्वर्यमन्यत्र प्रतिपादितम् १५
कृतमूलमिदानीं तज्जातशब्दं सहायवत्
न शक्यं पुनरादातुं वान्तमन्नमिव त्वया १६
बभ्रूग्रसेनयो राज्यं नाप्तुं शक्यं कथंचन
ज्ञातिभेदभयात्कृष्ण त्वया चापि विशेषतः १७
तच्चेत्सिध्येत्प्रयत्नेन कृत्वा कर्म सुदुष्करम्
महाक्षयव्ययं वा स्याद्विनाशो वा पुनर्भवेत् १८
अनायसेन शस्त्रेण मृदुना हृदयच्छिदा

जिह्वामुद्धर सर्वेषां परिमृज्यानुमृज्य च १९
वासुदेव उवाच
अनायसं मुने शस्त्रं मृदु विद्यामहं कथम्
येनैषामुद्धरे जिह्वां परिमृज्यानुमृज्य च २०
नारद उवाच
शक्त्यान्नदानं सततं तितिक्षा दम आर्जवम्
यथार्हप्रतिपूजा च शस्त्रमेतदनायसम् २१
ज्ञातीनां वक्तुकामानां कटूनि च लघूनि च
गिरा त्वं हृदयं वाचं शमयस्व मनांसि च २२
नामहापुरुषः कश्चिन्नानात्मा नासहायवान्
महतीं धुरमादत्ते तामुद्यम्योरसा वह २३
सर्व एव गुरुं भारमनड्वान्वहते समे
दुर्गे प्रतीकः सुगवो भारं वहति दुर्वहम् २४
भेदाद्विनाशः संघानां संघमुख्योऽसि केशव
यथा त्वां प्राप्य नोत्सीदेदयं संघस्तथा कुरु २५
नान्यत्र बुद्धिक्षान्तिभ्यां नान्यत्रेन्द्रियनिग्रहात्
नान्यत्र धनसंत्यागाद्गणः प्राज्ञेऽवतिष्ठते २६
धन्यं यशस्यमायुष्यं स्वपक्षोद्भावनं शुभम्
ज्ञातिनामविनाशः स्याद्यथा कृष्ण तथा कुरु २७
आयत्यां च तदात्वे च न तेऽस्त्यविदितं प्रभो
षाड्गुण्यस्य विधानेन यात्रायानविधौ तथा २८
माधवाः कुकुरा भोजाः सर्वे चान्धकवृष्णयः
त्वय्यासक्ता महाबाहो लोका लोकेश्वराश्च ये २९
उपासते हि त्वद्बुद्धिमृषयश्चापि माधव
त्वं गुरुः सर्वभूतानां जानीषे त्वं गतागतम्
त्वामासाद्य यदुश्रेष्ठमेधन्ते ज्ञातिनः सुखम् ३०
इति श्रीमहाभारते शान्तिपर्वणि द्व्यशीतितमोऽध्यायः ८२

त्र्यशीतितमोऽध्यायः

भीष्म उवाच

एषा प्रथमतो वृत्तिर्द्वितीयां शृणु भारत
यः कश्चिज्जनयेदर्थं राज्ञा रक्ष्यः स मानवः १
ह्रियमाणममात्येन भृतो वा यदि वाभृतः
यो राजकोशं नश्यन्तमाचक्षीत युधिष्ठिर २
श्रोतव्यं तस्य च रहो रक्ष्यश्चामात्यतो भवेत्
अमात्या ह्युपहन्तारं भूयिष्ठं घ्नन्ति भारत ३
राजकोशस्य गोप्तारं राजकोशविलोपकाः
समेत्य सर्वे बाधन्ते स विनश्यत्यरक्षितः ४
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
मुनिः कालकवृक्षीयः कौसल्यं यदुवाच ह ५
कोसलानामाधिपत्यं संप्राप्ते क्षेमदर्शिनि
मुनिः कालकवृक्षीय आजगामेति नः श्रुतम् ६
स काकं पञ्जरे बद्ध्वा विषयं क्षेमदर्शिनः
पूर्वं पर्यचरद्युक्तः प्रवृत्त्यर्थी पुनः पुनः ७
अधीये वायसीं विद्यां शंसन्ति मम वायसाः
अनागतमतीतं च यच्च संप्रति वर्तते ८
इति राष्ट्रे परिपतन्बहुशः पुरुषैः सह
सर्वेषां राजयुक्तानां दुष्कृतं परिपृष्टवान् ९
स बुद्ध्वा तस्य राष्ट्रस्य व्यवसायं हि सर्वशः
राजयुक्तापचारांश्च सर्वान्बुद्ध्वा ततस्ततः १०
तमेव काकमादाय राजानं द्रष्टुमागमत्
सर्वज्ञोऽस्मीति वचनं ब्रुवाणः संशितव्रतः ११
स स्म कौसल्यमागम्य राजामात्यमलंकृतम्
प्राह काकस्य वचनादमुत्रेदं त्वया कृतम् १२
असौ चासौ च जानीते राजकोशस्त्वया हृतः
एवमाख्याति काकोऽय तच्छीघ्रमनुगम्यताम् १३
तथान्यानपि स प्राह राजकोशहरान्सदा
न चास्य वचनं किंचिदकृतं श्रूयते क्वचित् १४
तेन विप्रकृताः सर्वे राजयुक्ताः कुरूद्वह
तमतिक्रम्य सुप्तस्य निशि काकमपोथयन् १५

वायसं तु विनिर्भिन्नं दृष्ट्वा बाणेन पञ्जरे
पूर्वाह्णे ब्राह्मणो वाक्यं क्षेमदर्शिनमब्रवीत् १६
राजंस्त्वामभयं याचे प्रभुं प्राणधनेश्वरम्
अनुज्ञातस्त्वया ब्रूयां वचनं त्वत्पुरो हितम् १७
मित्रार्थमभिसंतप्तो भक्त्या सर्वात्मना गतः
अयं तवार्थं हरते यो ब्रूयादक्षमान्वितः १८
संबुबोधयिषुर्मित्रं सदश्वमिव सारथिः
अतिमन्युप्रसक्तो हि प्रसज्य हितकारणम् १९
तथाविधस्य सुहृदः क्षन्तव्यं संविजानता
एश्वर्यमिच्छता नित्यं पुरुषेण बुभूषता २०
तं राजा प्रत्युवाचेदं यन्मा किंचिद्भवान्वदेत्
कस्मादहं न क्षमेयमाकाङ्क्षन्नात्मनो हितम् २१
ब्राह्मण प्रतिजानीहि प्रब्रूहि यदि चेच्छसि
करिष्यामि हि ते वाक्यं यद्यन्मां विप्र वक्ष्यसि २२
मुनिरुवाच
ज्ञात्वा नयानपायांश्च भृत्यतस्ते भयानि च
भक्त्या वृत्तिं समाख्यातुं भवतोऽन्तिकमागमम् २३
प्रागेवोक्तश्च दोषोऽयमाचार्यैर्नृपसेविनाम्
अगतीकगतिर्ह्येषा या राज्ञा सह जीविका २४
आशीविषैश्च तस्याहुः संगतं यस्य राजभिः
बहुमित्राश्च राजानो बह्वमित्रास्तथैव च २५
तेभ्यः सर्वेभ्य एवाहुर्भयं राजोपसेविनाम्
अथैषामेकतो राजन्मुहूर्तादेव भीर्भवेत् २६
नैकान्तेनाप्रमादो हि कर्तुं शक्यो महीपतौ
न तु प्रमादः कर्तव्यः कथंचिद्भूतिमिच्छता २७
प्रमादाद्धि स्खलेद्राजा स्खलिते नास्ति जीवितम्
अग्निं दीप्तमिवासीदेद्राजानमुपशिक्षितः २८
आशीविषमिव क्रुद्धं प्रभुं प्राणधनेश्वरम्
यत्नेनोपचरेन्नित्यं नाहमस्मीति मानवः २९
दुर्व्याहृताच्छङ्कमानो दुष्कृताद्दुरधिष्ठितात्

दुरासिताद्दुर्व्रजितादिङ्गितादङ्गचेष्टितात् ३०
देवतेव हि सर्वार्थान्कुर्याद्राजा प्रसादितः
वैश्वानर इव क्रुद्धः समूलमपि निर्दहेत्
इति राजन्मयः प्राह वर्तते च तथैव तत् ३१
अथ भूयांसमेवार्थं करिष्यामि पुनः पुनः
ददात्यस्मद्विधोऽमात्यो बुद्धिसाहाय्यमापदि ३२
वायसश्चैव मे राजन्नन्तकायाभिसंहितः
न च मेऽत्र भवान्गर्ह्यो न च येषां भवान्प्रियः
हिताहितांस्तु बुध्येथा मा परोक्षमतिर्भव ३३
ये त्वादानपरा एव वसन्ति भवतो गृहे
अभूतिकामा भूतानां तादृशैर्मेऽभिसंहितम् ३४
ये वा भवद्विनाशेन राज्यमिच्छन्त्यनन्तरम्
अन्तरैरभिसंधाय राजन्सिध्यन्ति नान्यथा ३५
तेषामहं भयाद्राजन्गमिष्याम्यन्यमाश्रमम्
तैर्हि मे संधितो बाणः काके निपतितः प्रभो ३६
छद्मना मम काकश्च गमितो यमसादनम्
दृष्टं ह्येतन्मया राजंस्तपोदीर्घेण चक्षुषा ३७
बहुनक्रझषग्राहां तिमिंगलगणायुताम्
काकेन बडिशेनेमामतार्षं त्वामहं नदीम् ३८
स्थाणवश्मकण्टकवतीं व्याघ्रसिंहगजाकुलाम्
दुरासदां दुष्प्रवेशां गुहां हैमवतीमिव ३९
अग्निना तामसं दुर्गं नौभिराप्यं च गम्यते
राजदुर्गावतरणे नोपायं पण्डिता विदुः ४०
गहनं भवतो राज्यमन्धकारतमोवृतम्
नेह विश्वसितुं शक्यं भवतापि कुतो मया ४१
अतो नायं शुभो वासस्तुल्ये सदसती इह
वधो ह्येवात्र सुकृते दुष्कृते न च संशयः ४२
न्यायतो दुष्कृते घातः सुकृते स्यात्कथं वधः
नेह युक्तं चिरं स्थातुं जवेनातो व्रजेद्बुधः ४३
सीता नाम नदी राजन्प्लवो यस्यां निमज्जति

तथोपमामिमां मन्ये वागुरां सर्वघातिनीम् ४४
मधुप्रपातो हि भवान्भोजनं विषसंयुतम्
असतामिव ते भावो वर्तते न सतामिव
आशीविषैः परिवृतः कूपस्त्वमिव पार्थिव ४५
दुर्गतीर्था बृहत्कूला करीरीवेत्रसंयुता
नदी मधुरपानीया यथा राजंस्तथा भवान्
श्वगृध्रगोमायुयुतो राजहंससमो ह्यसि ४६
यथाश्रित्य महावृक्षं कक्षः संवर्धते महान्
ततस्तं संवृणोत्येव तमतीत्य च वर्धते ४७
तेनैवोपेन्धनो नूनं दावो दहति दारुणः
तथोपमा ह्यमात्यास्ते राजंस्तान्परिशोधय ४८
भवतैव कृता राजन्भवता परिपालिताः
भवन्तं पर्यवज्ञाय जिघांसन्ति भवत्प्रियम् ४९
उषितं शङ्कमानेन प्रमादं परिरक्षता
अन्तःसर्प इवागारे वीरपत्न्या इवालये
शीलं जिज्ञासमानेन राज्ञश्च सहजीविना ५०
कच्चिज्जितेन्द्रियो राजा कच्चिदभ्यन्तरा जिताः
कच्चिदेषां प्रियो राजा कच्चिद्राज्ञः प्रियाः प्रजाः ५१
जिज्ञासुरिह संप्राप्तस्तवाहं राजसत्तम
तस्य मे रोचसे राजन्क्षुधितस्येव भोजनम् ५२
अमात्या मे न रोचन्ते वितृष्णस्य यथोदकम्
भवतोऽथकृदित्येव मयि दोषो हि तैः कृतः
विद्यते कारणं नान्यदिति मे नात्र संशयः ५३
न हि तेषामहं द्रुग्धस्तत्तेषां दोषवद्गतम्
अरेर्हि दुर्हताद्भेयं भग्नपृष्ठादिवोरगात् ५४
राजोवाच
भूयसा परिबर्हेण सत्कारेण च भूयसा
पूजितो ब्राह्मणश्रेष्ठ भूयो वस गृहे मम ५५
ये त्वां ब्राह्मण नेच्छन्ति न ते वत्स्यन्ति मे गृहे
भवतैव हि तज्ज्ञेयं यदिदानीमनन्तरम् ५६

यथा स्यद्दुष्कृतो दण्डो यथा च सुकृतं कृतम्
तथा समीक्ष्य भगवञ्श्रेयसे विनियुङ्क्ष्व माम् ५७
मुनिरुवाच
अदर्शयन्निमं दोषमेकैकं दुर्बलं कुरु
ततः कारणमाज्ञाय पुरुषं पुरुषं जहि ५८
एकदोषा हि बहवो मृद्नीयुरपि कण्टकान्
मन्त्रभेदभयाद्राजंस्तस्मादेतद्ब्रवीमि ते ५९
वयं तु ब्राह्मणा नाम मृदुदण्डाः कृपालवः
स्वस्ति चेच्छामि भवतः परेषां च यथात्मनः ६०
राजन्नात्मानमाचक्षे संबन्धी भवतो ह्यहम्
मुनिः कालकवृक्षीय इत्येवमभिसंज्ञितः ६१
पितुः सखा च भवतः संमतः सत्यसंगरः
व्यापन्ने भवतो राज्ये राजन्पितरि संस्थिते ६२
सर्वकामान्परित्यज्य तपस्तप्तं तदा मया
स्नेहात्त्वां प्रब्रवीम्येतन्मा भूयो विभ्रमेदिति ६३
उभे दृष्ट्वा दुःखसुखे राज्यं प्राप्य यदृच्छया
राज्येनामात्यसंस्थेन कथं राजन्प्रमाद्यसि ६४
भीष्म उवाच
ततो राजकुले नान्दी संजज्ञे भूयसा पुनः
पुरोहितकुले चैव संप्राप्ते ब्राह्मणर्षभे ६५
एकच्छत्रां महीं कृत्वा कौसल्याय यशस्विने
मुनिः कालकवृक्षीय ईजे क्रतुभिरुत्तमैः ६६
हितं तद्वचनं श्रुत्वा कौसल्योऽन्वशिषन्महीम्
तथा च कृतवान्राजा यथोक्तं तेन भारत ६७
इति श्रीमहाभारते शान्तिपर्वणि त्र्यशीतितमोऽध्यायः ८३

## चतुरशीतितमोऽध्यायः

भीष्म उवाच
ह्रीनिषेधाः सदा सन्तः सत्यार्जवसमन्विताः
शक्ताः कथयितुं सम्यक्ते तव स्युः सभासदः १

अत्याढ्यांश्चातिशूरांश्च ब्राह्मणांश्च बहुश्रुतान्
सुसंतुष्टांश्च कौन्तेय महोत्साहांश्च कर्मसु २
एतान्सहायाँल्लिप्सेथाः सर्वास्वापत्सु भारत
कुलीनः पूजितो नित्यं न हि शक्तिं निगूहति ३
प्रसन्नं ह्यप्रसन्नं वा पीडितं हृतमेव वा
आवर्तयति भूयिष्ठं तदेको ह्यनुपालितः ४
कुलीना देशजाः प्राज्ञा रूपवन्तो बहुश्रुताः
प्रगल्भाश्चानुरक्ताश्च ते तव स्युः परिच्छदाः ५
दौष्कुलेयाश्च लुब्धाश्च नृशंसा निरपत्रपाः
ते त्वां तात निषेवेयुर्यावदार्द्रकपाणयः ६
अर्थमानार्घ्यसत्कारैर्भोगैरुच्चावचैः प्रियान्
यानर्थभाजो मन्येथास्ते ते स्युः सुखभागिनः ७
अभिन्नवृत्ता विद्वांसः सद्वृत्ताश्चरितव्रताः
न त्वां नित्यार्थिनो जह्युरक्षुद्राः सत्यवादिनः ८
अनार्या ये न जानन्ति समयं मन्दचेतसः
तेभ्यः प्रतिजुगुप्सेथा जानीयाः समयच्युतान् ९
नैकमिच्छेद्गणं हित्वा स्याच्चेदन्यतरग्रहः
यस्त्वेको बहुभिः श्रेयान्कामं तेन गणं त्यजेत् १०
श्रेयसो लक्षणं ह्येतद्विक्रमो यस्य दृश्यते
कीर्तिप्रधानो यश्च स्यात्समये यश्च तिष्ठति ११
समर्थान्पूजयेद्यश्च नास्पर्ध्यैः स्पर्धते च यः
न च कामाद्भयात्क्रोधाल्लोभाद्वा धर्ममुत्सृजेत् १२
अमानी सत्यवाक्शक्तो जितात्मा मान्यमानिता
स ते मन्त्रसहायः स्यात्सर्वावस्थं परीक्षितः १३
कुलीनः सत्यसंपन्नस्तितिक्षुर्दक्ष आत्मवान्
शूरः कृतज्ञः शत्यश्च श्रेयसः पार्थ लक्षणम् १४
तस्यैवं वर्तमानस्य पुरुषस्य विजानतः
अमित्राः संप्रसीदन्ति ततो मित्रीभवन्त्यपि १५
अत ऊर्ध्वममात्यानां परीक्षेत गुणागुणान्
संयतात्मा कृतप्रज्ञो भूतिकामश्च भूमिपः १६

संबद्धाः पुरुषैराप्तैरभिजातैः स्वदेशजैः
अहार्यैरव्यभीचारैः सर्वतः सुपरीक्षितैः १७
योधाः स्त्रौवास्तथा मौलास्तथैवान्येऽप्यवस्कृताः
कर्तव्या भूतिकामेन पुरुषेण बुभूषता १८
येषां वैनयिकी बुद्धिः प्रकृता चैव शोभना
तेजो धैर्यं क्षमा शौचमनुराग स्थितिर्धृतिः १९
परीक्षितगुणान्नित्यं प्रौढभावान्धुरंधरान्
पञ्चोपधाव्यतीतांश्च कुर्याद्राजार्थकारिणः २०
पर्याप्तवचनान्वीरान्प्रतिपत्तिविशारदान्
कुलीनान्सत्यसंपन्नानिङ्गितज्ञाननिष्ठुरान् २१
देशकालविधानज्ञान्भर्तृकार्यहितैषिणः
नित्यमर्थेषु सर्वेषु राजा कुर्वीत मन्त्रिणः २२
हीनतेजा ह्यसंहृष्टो नैव जातु व्यवस्यति
अवश्यं जनयत्येव सर्वकर्मसु संशयान् २३
एवमल्पश्रुतो मन्त्री कल्याणाभिजनोऽप्युत
धर्मार्थकामयुक्तोऽपि नालं मन्त्रं परीक्षितुम् २४
तथैवानभिजातोऽपि काममस्तु बहुश्रुतः
अनायक इवाचक्षुर्मुह्यत्यूह्येषु कर्मसु २५
यो वा ह्यस्थिरसंकल्पो बुद्धिमानागतागमः
उपायज्ञोऽपि नालं स कर्म यापयितुं चिरम् २६
केवलात्पुनराचारात्कर्मणो नोपपद्यते
परिमर्शो विशेषाणामश्रुतस्येह दुर्मतेः २७
मन्त्रिण्यननुरक्ते तु विश्वासो न हि विद्यते
तस्मादननुरक्ताय नैव मन्त्रं प्रकाशयेत् २८
व्यथयेद्धि स राजानं मन्त्रिभिः सहितोऽनृजुः
मारुतोपहतच्छिद्रैः प्रविश्याग्निरिव द्रुमम् २९
संक्रुध्यत्येकदा स्वामी स्थानाच्चैवापकर्षति
वाचा क्षिपति संरब्धस्ततः पश्चात्प्रसीदति ३०
तानि तान्यनुरक्तेन शक्यान्यनुतितिक्षितुम्
मन्त्रिणां च भवेत्क्रोधो विस्फूर्जितमिवाशनेः ३१

यस्तु संहरते तानि भर्तुः प्रियचिकीर्षया
समानसुखदुःखं तं पृच्छेदर्थेषु मानवम् ३२
अनृजुस्त्वनुरक्तोऽपि संपन्नश्चेतरैर्गुणैः
राज्ञः प्रज्ञानयुक्तोऽपि न मन्त्रं श्रोतुमर्हति ३३
योऽमित्रैः सह संबद्धो न पौरान्बहु मन्यते
स सुहृत्तादृशो राज्ञो न मन्त्रं श्रोतुमर्हति ३४
अविद्वानशुचिः स्तब्धः शत्रुसेवी विकत्थनः
स सुहृत्क्रोधनो लुब्धो न मन्त्रं श्रोतुमर्हति ३५
आगन्तुश्चानुरक्तोऽपि काममस्तु बहुश्रुतः
सत्कृतः संविभक्तो वा न मन्त्रं श्रोतुमर्हति ३६
यस्त्वल्पेनापि कार्येण सकृदाक्षारितो भवेत्
पुनरन्यैर्गुणैर्युक्तो न मन्त्रं श्रोतुमर्हति ३७
कृतप्रज्ञश्च मेधावी बुधो जानपदः शुचिः
सर्वकर्मसु यः शुद्धः स मन्त्रं श्रोतुमर्हति ३८
ज्ञानविज्ञानसंपन्नः प्रकृतिज्ञः परात्मनोः
सुहृदात्मसमो राज्ञः स मन्त्रं श्रोतुमर्हति ३९
सत्यवाक्शीलसंपन्नो गम्भीरः सत्रपो मृदुः
पितृपैतामहो यः स्यात्स मन्त्रं श्रोतुमर्हति ४०
संतुष्टः संमतः सत्यः शौटीरो द्वेष्यपापकः
मन्त्रवित्कालविच्छूरः स मन्त्रं श्रोतुमर्हति ४१
सर्वलोकं समं शक्तः सान्त्वेन कुरुते वशे
तस्मै मन्त्रः प्रयोक्तव्यो दण्डमाधित्सता नृप ४२
पौरजानपदा यस्मिन्विश्वासं धर्मतो गताः
योद्धा नयविपश्चिच्च स मन्त्रं श्रोतुमर्हति ४३
तस्मात्सर्वैर्गुणैरेतैरुपपन्नाः सुपूजिताः
मन्त्रिणः प्रकृतिज्ञाः स्युस्त्र्यवरा महदीप्सवः ४४
स्वासु प्रकृतिषु छिद्रं लक्षयेरन्परस्य च
मन्त्रिणो मन्त्रमूलं हि राज्ञो राष्ट्रं विवर्धते ४५
नास्य छिद्रं परः पश्येच्छिद्रेषु परमन्वियात्
गूहेत्कूर्म इवाङ्गानि रक्षेद्विवरमात्मनः ४६

मन्त्रग्राहा हि राज्यस्य मन्त्रिणो ये मनीषिणः
मन्त्रसंहननो राजा मन्त्राङ्गानीतरो जनः ४७
राज्यं प्रणिधिमूलं हि मन्त्रसारं प्रचक्षते
स्वामिनं त्वनुवर्तन्ति वृत्त्यर्थमिह मन्त्रिणः ४८
स विनीय मदक्रोधौ मानमीर्ष्यां च निर्वृतः
नित्यं पञ्चोपधातीतैर्मन्त्रयेत्सह मन्त्रिभिः ४९
तेषां त्रयाणां विविधं विमर्शं बुध्येत चित्तं विनिवेश्य तत्र
स्वनिश्चयं तं परनिश्चयं च निवेदयेदुत्तरमन्त्रकाले ५०
धर्मार्थकामज्ञमुपेत्य पृच्छेद्युक्तो गुरुं ब्राह्मणमुत्तमार्थम्
निष्ठा कृता तेन यदा सह स्यात्तं तत्र मार्गं प्रणयेदसक्तम् ५१
एवं सदा मन्त्रयितव्यमाहुर्ये मन्त्रतत्त्वार्थविनिश्चयज्ञाः
तस्मात्त्वमेवं प्रणयेः सदैव मन्त्रं प्रजासंग्रहणे समर्थम् ५२
न वामनाः कुब्जकृशा न खञ्जा नान्धा जडाः स्त्री न नपुंसकं च
न चात्र तिर्यङ्न पुरो न पश्चान्नोर्ध्वं न चाधः प्रचरेत् कश्चित् ५३
आरुह्य वातायनमेव शून्यं स्थलं प्रकाशं कुशकाशहीनम्
वागङ्गदोषान्परिहृत्य मन्त्रं संमन्त्रयेत्कार्यमहीनकालम् ५४
इति श्रीमहाभारते शान्तिपर्वणि चतुरशीतितमोऽध्यायः ८४

## पञ्चाशीतितमोऽध्यायः

भीष्म उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
बृहस्पतेश्च संवादं शक्रस्य च युधिष्ठिर १
शक्र उवाच
किं स्विदेकपदं ब्रह्मन्पुरुषः सम्यगाचरन्
प्रमाणं सर्वभूतानां यशश्चैवाप्नुयान्महत् २
बृहस्पतिरुवाच
सान्त्वमेकपदं शक्र पुरुषः सम्यगाचरन्
प्रमाणं सर्वभूतानां यशश्चैवाप्नुयान्महत् ३
एतदेकपदं शक्र सर्वलोकसुखावहम्
आचरन्सर्वभूतेषु प्रियो भवति सर्वदा ४

यो हि नाभाषते किंचित्सततं भ्रुकुटीमुखः
द्वेष्यो भवति भूतानां स सान्त्वमिह नाचरन् ५
यस्तु पूर्वमभिप्रेक्ष्य पूर्वमेवाभिभाषते
स्मितपूर्वाभिभाषी च तस्य लोकः प्रसीदति ६
दानमेव हि सर्वत्र सान्त्वेनानभिजल्पितम्
न प्रीणयति भूतानि निर्व्यञ्जनमिवाशनम् ७
अदाता ह्यपि भूतानां मधुरामीरयन्गिरम्
सर्वलोकमिमं शक्र सान्त्वेन कुरुते वशे ८
तस्मात्सान्त्वं प्रकर्तव्यं दण्डमाधित्सतामिह
फलं च जनयत्येवं न चास्योद्विजते जनः ९
सुकृतस्य हि सान्त्वस्य श्लक्ष्णस्य मधुरस्य च
सम्यगासेव्यमानस्य तुल्यं जातु न विद्यते १०
भीष्म उवाच
इत्युक्तः कृतवान्सर्वं तथा शक्रः पुरोधसा
तथा त्वमपि कौन्तेय सम्यगेतत्समाचर ११
इति श्रीमहाभारते शान्तिपर्वणि पञ्चाशीतितमोऽध्यायः ८५

## षडशीतितमोऽध्यायः

युधिष्ठिर उवाच
कथं स्विदिह राजेन्द्र पालयन्पार्थिवः प्रजाः
प्रति धर्मं विशेषेण कीर्तिमाप्नोति शाश्वतीम् १
भीष्म उवाच
व्यवहारेण शुद्धेन प्रजापालनतत्परः
प्राप्य धर्मं च कीर्तिं च लोकावाप्नोत्युभौ शुचिः २
यधिष्ठिर उवाच
कीदृशं व्यवहारं तु कैश्च व्यवहरेन्नृपः
एतत्पृष्टो महाप्राज्ञ यथावद्वक्तुमर्हसि ३
ये चैते पूर्वकथिता गुणास्ते पुरुषं प्रति
नैकस्मिन्पुरुषे ह्येते विद्यन्ते इति मे मतिः ४
भीष्म उवाच

एवमेतन्महाप्राज्ञ यथा वदसि बुद्धिमान्
दुर्लभः पुरुषः कश्चिदेभिर्गुणगणैर्युतः ५
किं तु संक्षेपतः शीलं प्रयत्ने नेह दुर्लभम्
वक्ष्यामि तु यथामात्यान्यादृशांश्च करिष्यसि ६
चतुरो ब्राह्मणान्वैद्यान्प्रगल्भान्सात्त्विकाञ्शुचीन्
त्रींश्च शूद्रान्विनीतांश्च शुचीन्कर्मणि पूर्वके ७
अष्टाभिश्च गुणैर्युक्तं सूतं पौराणिकं चरेत्
पञ्चाशद्वर्षवयसं प्रगल्भमनसूयकम् ८
मतिस्मृतिसमायुक्तं विनीतं समदर्शनम्
कार्ये विवदमानानां शक्तमर्थेष्वलोलुपम् ९
विवर्जितानां व्यसनैः सुघोरैः सप्तभिर्भृशम्
अष्टानां मन्त्रिणां मध्ये मन्त्रं राजोपधारयेत् १०
ततः संप्रेषयेद्राष्ट्रे राष्ट्रायाथ च दर्शयेत्
अनेन व्यवहारेण द्रष्टव्यास्ते प्रजाः सदा ११
न चापि गूढं कार्यं ते ग्राह्यं कार्योपघातकम्
कार्ये खलु विपन्ने त्वां सोऽधर्मस्तांश्च पीडयेत् १२
विद्रवेच्चैव राष्ट्रं ते श्येनात्पक्षिगणा इव
परिस्रवेच्च सततं नौर्विशीर्णेव सागरे १३
प्रजाः पालयतोऽसम्यगधर्मेणेह भूपतेः
हार्दं भयं संभवति स्वर्गश्चास्य विरुध्यते १४
अथ योऽधर्मतः पाति राजामात्योऽथ वात्मजः
धर्मासने नियुक्तः सन्धर्ममूलं नरर्षभ १५
कार्येष्वधिकृताः सम्यगकुर्वन्तो नृपानुगाः
आत्मानं पुरतः कृत्वा यान्त्यधः सहपार्थिवाः १६
बलात्कृतानां बलिभिः कृपणं बहु जल्पताम्
नाथो वै भूमिपो नित्यमनाथानां नृणां भवेत् १७
ततः साक्षिबलं साधु द्वैधे वादकृतं भवेत्
असाक्षिकमनाथं वा परीक्ष्यं तद्विशेषतः १८
अपराधानुरूपं च दण्डं पापेषु पातयेत्
उद्वेजयेद्धनैर्ऋद्धान्दरिद्रान्वधबन्धनैः १९

विनयैरपि दुर्वृत्तान्प्रहारैरपि पार्थिवः
सान्त्वेनोपप्रदानेन शिष्टांश्च परिपालयेत् २०
राज्ञो वधं चिकीर्षेद्यस्तस्य चित्रो वधो भवेत्
आजीवकस्य स्तेनस्य वर्णसंकरकस्य च २१
सम्यक्प्रणयतो दण्डं भूमिपस्य विशां पते
युक्तस्य वा नास्त्यधर्मो धर्म एवेह शाश्वतः २२
कामकारेण दण्डं तु यः कुर्यादविचक्षणः
स इहाकीर्तिसंयुक्तो मृतो नरकमाप्नुयात् २३
न परस्य श्रवादेव परेषां दण्डमर्पयेत्
आगमानुगमं कृत्वा बध्नीयान्मोक्षयेत वा २४
न तु हन्यान्नृपो जातु दूतं कस्यांचिदापदि
दूतस्य हन्ता निरयमाविशेत्सचिवैः सह २५
यथोक्तवादिनं दूतं क्षत्रधर्मरतो नृपः
यो हन्यात्पितरस्तस्य भ्रूणहत्यामवाप्नुयुः २६
कुलीनः शीलसंपन्नो वाग्मी दक्षः प्रियंवदः
यथोक्तवादी स्मृतिमान्दूतः स्यात्सप्तभिर्गुणैः २७
एतैरेव गुणैर्युक्तः प्रतीहारोऽस्य रक्षिता
शिरोरक्षश्च भवति गुणैरेतैः समन्वितः २८
धर्मार्थशास्त्रतत्त्वज्ञः संधिविग्रहको भवेत्
मतिमान्धृतिमान्धीमान्रहस्यविनिगूहिता २९
कुलीनः सत्यसंपन्नः शक्तोऽमात्यः प्रशंसितः
एतैरेव गुणैर्युक्तस्तथा सेनापतिर्भवेत् ३०
व्यूहयन्त्रायुधीयानां तत्त्वज्ञो विक्रमान्वितः
वर्षशीतोष्णवातानां सहिष्णुः पररन्ध्रवित् ३१
विश्वासयेत्परांश्चैव विश्वसेन्न तु कस्यचित्
पुत्रेष्वपि हि राजेन्द्र विश्वासो न प्रशस्यते ३२
एतच्छास्त्रार्थतत्त्वं तु तवाख्यातं मयानघ
अविश्वासो नरेन्द्राणां गुह्यं परममुच्यते ३३

इति श्रीमहाभारते शान्तिपर्वणि षडशीतितमोऽध्यायः ८६

## सप्ताशीतितमोऽध्यायः

युधिष्ठिर उवाच
कथंविधं पुरं राजा स्वयमावस्तुमर्हति
कृतं वा कारयित्वा वा तन्मे ब्रूहि पितामह १
भीष्म उवाच
यत्र कौन्तेय वस्तव्यं सपुत्रभ्रातृबन्धुना
न्याय्यं तत्र परिप्रष्टुं गुप्तिं वृत्तिं च भारत २
तस्मात्ते वर्तयिष्यामि दुर्गकर्म विशेषतः
श्रुत्वा तथा विधातव्यमनुष्ठेयं च यत्नतः ३
षडिवधं दुर्गमास्थाय पुराण्यथ निवेशयेत्
सर्वसंपत्प्रधानं यद्बाहुल्यं वापि संभवेत् ४
धन्वदुर्गं महीदुर्गं गिरिदुर्गं तथैव च
मनुष्यदुर्गमब्दुर्गं वनदुर्गं च तानि षट् ५
यत्पुरं दुर्गसंपन्नं धान्यायुधसमन्वितम्
दृढप्राकारपरिखं हस्त्यश्वरथसंकुलम् ६
विद्वांसः शिल्पिनो यत्र निचयाश्च सुसंचिताः
धार्मिकश्च जनो यत्र दाक्ष्यमुत्तममास्थितः ७
ऊर्जस्विनरनागाश्वं चत्वरापणशोभितम्
प्रसिद्धव्यवहारं च प्रशान्तमकुतोभयम् ८
सुप्रभं सानुनादं च सुप्रशस्तनिवेशनम्
शूराढ्यजनसंपन्नं ब्रह्मघोषानुनादितम् ९
समाजोत्सवसंपन्नं सदापूजितदैवतम्
वश्यामात्यबलो राजा तत्पुरं स्वयमावसेत् १०
तत्र कोशं बलं मित्रं व्यवहारं च वर्धयेत्
पुरे जनपदे चैव सर्वदोषान्निवर्तयेत् ११
भाण्डागारायुधागारं प्रयत्नेनाभिवर्धयेत्
निचयान्वर्धयेत्सर्वांस्तथा यन्त्रगदागदान् १२
काष्ठलोहतुषाङ्गारदारुशृङ्गास्थिवैणवान्
मज्जास्नेहवसाक्षौद्रमौषधग्राममेव च १३
शणं सर्जरसं धान्यमायुधानि शरांस्तथा

चर्म स्नायु तथा वेत्रं मुञ्जबल्बजधन्वनान् १४
आशयाश्चोदपानाश्च प्रभूतसलिला वराः
निरोद्धव्याः सदा राज्ञा क्षीरिणश्च महीरुहाः १५
सत्कृताश्च प्रयत्नेन आचार्यर्त्विक्पुरोहिताः
महेष्वासाः स्थपतयः सांवत्सरचिकित्सकाः १६
प्राज्ञा मेधाविनो दान्ता दक्षाः शूरा बहुश्रुताः
कुलीनाः सत्त्वसंपन्ना युक्ताः सर्वेषु कर्मसु १७
पूजयेद्धार्मिकान्राजा निगृह्णीयादधार्मिकान्
नियुञ्ज्याच्च प्रयत्नेन सर्ववर्णान्स्वकर्मसु १८
बाह्यमाभ्यन्तरं चैव पौरजानपदं जनम्
चारैः सुविदितं कृत्वा ततः कर्म प्रयोजयेत् १९
चारान्मन्त्रं च कोशं च मन्त्रं चैव विशेषतः
अनुतिष्ठेत्स्वयं राजा सर्वं ह्यत्र प्रतिष्ठितम् २०
उदासीनारिमित्राणां सर्वमेव चिकीर्षितम्
पुरे जनपदे चैव ज्ञातव्यं चारचक्षुषा २१
ततस्तथा विधातव्यं सर्वमेवाप्रमादतः
भक्तान्पूजयता नित्यं द्विषतश्च निगृह्णता २२
यष्टव्यं क्रतुभिर्नित्यं दातव्यं चाप्यपीडया
प्रजानां रक्षणं कार्यं न कार्यं कर्म गर्हितम् २३
कृपणानाथवृद्धानां विधवानां च योषिताम्
योगक्षेमं च वृत्तिं च नित्यमेव प्रकल्पयेत् २४
आश्रमेषु यथाकालं चेलभाजनभोजनम्
सदैवोपहरेद्राजा सत्कृत्यानवमन्य च २५
आत्मानं सर्वकार्याणि तापसे राज्यमेव च
निवेदयेत्प्रयत्नेन तिष्ठेत्प्रह्वश्च सर्वदा २६
सर्वार्थत्यागिनं राजा कुले जातं बहुश्रुतम्
पूजतेत्तादृशं दृष्ट्वा शयनासनभोजनैः २७
तस्मिन्कुर्वीत विश्वासं राजा कस्यांचिदापदि
तापसेषु हि विश्वासमपि कुर्वन्ति दस्यवः २८
तस्मिन्निधीनादधीत प्रज्ञां पर्याददीत च

न चाप्यभीक्ष्णं सेवेत भृशं वा प्रतिपूजयेत् २९
अन्यः कार्यः स्वराष्ट्रेषु परराष्ट्रेषु चापरः
अटवीष्वपरः कार्यः सामन्तनगरेषु च ३०
तेषु सत्कारसंस्कारान्संविभागांश्च कारयेत्
परराष्ट्राटवीस्थेषु यथा स्वविषये तथा ३१
ते कस्यांचिदवस्थायां शरणं शरणार्थिने
राज्ञे दद्युर्यथाकामं तापसाः संशितव्रताः ३२
एष ते लक्षणोद्देशः संक्षेपेण प्रकीर्तितः
यादृशं नगरं राजा स्वयमावस्तुमर्हति ३३
इति श्रीमहाभारते शान्तिपर्वणि सप्ताशीतितमोऽध्यायः ८७

## अष्टाशीतितमोऽध्यायः

युधिष्ठिर उवाच
राष्ट्रगुप्तिं च मे राजन्राष्ट्रस्यैव च संग्रहम्
सम्यग्जिज्ञासमानाय प्रब्रूहि भरतर्षभ १
भीष्म उवाच
राष्ट्रगुप्तिं च ते सम्यग्राष्ट्रस्यैव च संग्रहम्
हन्त सर्वं प्रवक्ष्यामि तत्त्वमेकमनाः शृणु २
ग्रामस्याधिपतिः कार्यो दशग्राम्यस्तथापरः
द्विगुणायाः शतस्यैवं सहस्रस्य च कारयेत् ३
ग्रामे यान्ग्रामदोषांश्च ग्रामिकः परिपालयेत्
तान्ब्रूयाद्दशपायासौ स तु विंशतिपाय वै ४
सोऽपि विंशत्यधिपतिर्वृत्तं जानपदे जने
ग्रामाणां शतपालाय सर्वमेव निवेदयेत् ५
यानि ग्रामीणभोज्यानि ग्रामिकस्तान्युपाश्नुयात्
दशपस्तेन भर्तव्यस्तेनापि द्विगुणाधिपः ६
ग्रामं ग्रामशताध्यक्षो भोक्तुमर्हति सत्कृतः
महान्तं भरतश्रेष्ठ सुस्फीतजनसंकुलम्
तत्र ह्यनेकमायत्तं राज्ञो भवति भारत ७
शाखानगरमर्हस्तु सहस्रपतिरुत्तमम्

धान्यहैरगयभोगेन भोक्तुं राष्ट्रिय उद्यतः ८
तथा यद्ग्रामकृत्यं स्याद्ग्रामिकृत्यं च ते स्वयम्
धर्मज्ञः सचिवः कश्चित्तत्प्रपश्येदतन्द्रितः ९
नगरे नगरे च स्यादेकः सर्वार्थचिन्तकः
उच्चैःस्थाने घोररूपो नक्षत्राणामिव ग्रहः
भवेत्स तान्परिक्रामेत्सर्वानेव सदा स्वयम् १०
विक्रयं क्रयमध्वानं भक्तं च सपरिव्ययम्
योगक्षेमं च संप्रेक्ष्य वणिजः कारयेत्करान् ११
उत्पत्तिं दानवृत्तिं च शिल्पं संप्रेक्ष्य चासकृत्
शिल्पप्रतिकरानेव शिल्पिनः प्रति कारयेत् १२
उच्चावचकरा न्याय्याः पूर्वराज्ञां युधिष्ठिर
यथा यथा न हीयेरंस्तथा कुर्यान्महीपतिः १३
फलं कर्म च संप्रेक्ष्य ततः सर्वं प्रकल्पयेत्
फलं कर्म च निर्हेतु न कश्चित्संप्रवर्तयेत् १४
यथा राजा च कर्ता च स्यातां कर्मणि भागिनौ
समवेक्ष्य तथा राज्ञा प्रणेयाः सततं कराः १५
नोच्छिन्द्यादात्मनो मूलं परेषां वापि तृष्णया
ईहाद्वाराणि संरुध्य राजा संप्रीतिदर्शनः १६
प्रद्विषन्ति परिख्यातं राजानमतिखादिनम्
प्रद्विष्टस्य कुतः श्रेयः संप्रियो लभते प्रियम् १७
वत्सौपम्येन दोग्धव्यं राष्ट्रमक्षीणबुद्धिना
भृतो वत्सो जातबलः पीडां सहति भारत १८
न कर्म कुरुते वत्सो भृशं दुग्धो युधिष्ठिर
राष्ट्रमप्यतिदुग्धं हि न कर्म कुरुते महत् १९
यो राष्ट्रमनुगृह्णाति परिगृह्य स्वयं नृपः
संजातमुपजीवन्स लभते सुमहत्फलम् २०
आपदर्थं हि निचयान्राजान इह चिन्वते
राष्ट्रं च कोशभूतं स्यात्कोशो वेश्मगतस्तथा २१
पौरजानपदान्सर्वान्संश्रितोपाश्रितांस्तथा
यथाशक्त्यनुकम्पेत सर्वानभ्यन्तरानपि २२

बाह्यं जनं भेदयित्वा भोक्तव्यो मध्यमः सुखम्
एवं न संप्रकुप्यन्ते जनाः सुखितदुःखिताः २३
प्रागेव तु करादानमनुभाष्य पुनः पुनः
संनिपत्य स्वविषये भयं राष्ट्रे प्रदर्शयेत् २४
इयमापत्समुत्पन्ना परचक्रभयं महत्
अपि नान्ताय कल्पेत वेणोरिव फलागमः २५
अरयो मे समुत्थाय बहुभिर्दस्युभिः सह
इदमात्मवधायैव राष्ट्रमिच्छन्ति बाधितुम् २६
अस्यामापदि घोरायां संप्राप्ते दारुणे भये
परित्राणाय भवतां प्रार्थयिष्ये धनानि वः २७
प्रतिदास्ये च भवतां सर्वं चाहं भयक्षये
नारयः प्रतिदास्यन्ति यद्धरेयुर्बलादितः २८
कलत्रमादितः कृत्वा नश्येस्त्वं स्वयमेव हि
अपि चेत्पुत्रदारार्थमर्थसंचय इष्यते २९
नन्दामि वः प्रभावेन पुत्राणामिव चोदये
यथाशक्त्यनुगृह्णामि राष्ट्रस्यापीडया च वः ३०
आपत्स्वेव च वोढव्यं भवद्भिः सद्गवैरिव
न वः प्रियतरं कार्यं धनं कस्यांचिदापदि ३१
इति वाचा मधुरया श्लक्ष्णया सोपचारया
स्वरश्मीनभ्यवसृजेद्युगमादाय कालवित् ३२
प्रचारं भृत्यभरणं व्ययं गोग्रामतो भयम्
योगक्षेमं च संप्रेक्ष्य गोमिनः कारयेत्करान् ३३
उपेक्षिता हि नश्येयुर्गोमिनोऽरण्यवासिनः
तस्मात्तेषु विशेषेण मृदुपूर्वं समाचरेत् ३४
सान्त्वनं रक्षणं दानमवस्था चाप्यभीक्ष्णशः
गोमिनां पार्थ कर्तव्यं संविभागाः प्रियाणि च ३५
अजस्रमुपयोक्तव्यं फलं गोमिषु सर्वतः
प्रभावयति राष्ट्रं च व्यवहारं कृषिं तथा ३६
तस्माद्गोमिषु यत्नेन प्रीतिं कुर्याद्विचक्षणः
दयावानप्रमत्तश्च करान्संप्रणयन्मृदून् ३७

सर्वत्र क्षेमचरणं सुलभं तात गोमिभिः
न ह्यतः सदृशं किंचिद्धनमस्ति युधिष्ठिर ३८
इति श्रीमहाभारते शान्तिपर्वणि अष्टाशीतितमोऽध्यायः ८८

एकोननवतितमोऽध्यायः

युधिष्ठिर उवाच
यदा राजा समर्थोऽपि कोशार्थी स्यान्महामते
कथं प्रवर्तेत तदा तन्मे ब्रूहि पितामह १
भीष्म उवाच
यथादेशं यथाकालमपि चैव यथाबलम्
अनुशिष्यात्प्रजा राजा धर्मार्थी तद्धिते रतः २
यथा तासां च मन्येत श्रेय आत्मन एव च
तथा धर्म्याणि सर्वाणि राजा राष्ट्रे प्रवर्तयेत् ३
मधुदोहं दुहेद्राष्ट्रं भ्रमरान्न विपातयेत्
वत्सापेक्षी दुहेच्चैव स्तनांश्च न विकुट्टयेत् ४
जलौकावत्पिबेद्राष्ट्रं मृदुनैव नराधिप
व्याघ्रीव च हरेत्पुत्रमदष्ट्वा मा पतेदिति ५
अल्पेनाल्पेन देयेन वर्धमानं प्रदापयेत्
ततो भूयस्ततो भूयः कामं वृद्धिं समाचरेत् ६
दमयन्निव दम्यानां शश्वद्भारं प्रवर्धयेत्
मुदुपूर्वं प्रयत्नेन पाशानभ्यवहारयेत् ७
सकृत्पाशावकीर्णास्ते न भविष्यन्ति दुर्दमाः
उचितेनैव भोक्तव्यास्ते भविष्यन्ति यत्नतः ८
तस्मात्सर्वसमारम्भो दुर्लभः पुरुषव्रजः
यथामुख्यान्सान्त्वयित्वा भोक्तव्य इतरो जनः ९
ततस्तान्भेदयित्वाथ परस्परविवक्षितान्
भुञ्जीत सान्त्वयित्वैव यथासुखमयत्नतः १०
न चास्थाने न चाकाले करानेभ्योऽनुपातयेत्
आनुपूर्व्येण सान्त्वेन यथाकालं यथाविधि ११
उपायान्प्रब्रवीम्येतान्न मे माया विवक्षिता

अनुपायेन दमयन्प्रकोपयति वाजिनः १२
पानागाराणि वेशाश्च वेशप्रापणिकास्तथा
कुशीलवाः सकितवा ये चान्ये केचिदिदृशाः १३
नियम्याः सर्व एवैते ये राष्ट्रस्योपघातकाः
एते राष्ट्रे हि तिष्ठन्तो बाधन्ते भद्रिकाः प्रजाः १४
न केनचिद्याचितव्यः कश्चित्किंचिदनापदि
इति व्यवस्था भूतानां पुरस्तान्मनुना कृता १५
सर्वे तथा न जीवेयुर्न कुर्युः कर्म चेदिह
सर्व एव त्रयो लोका न भवेयुरसंशयम् १६
प्रभुर्नियमने राजा य एतान्न नियच्छति
भुङ्क्ते स तस्य पापस्य चतुर्भागमिति श्रुतिः
तथा कृतस्य धर्मस्य चतुर्भागमुपाश्नुते १७
स्थानान्येतानि संगम्य प्रसङ्गे भूतिनाशनः
कामप्रसक्तः पुरुषः किमकार्यं विवर्जयेत् १८
आपद्येव तु याचेरन्येषां नास्ति परिग्रहः
दातव्यं धर्मतस्तेभ्यस्त्वनुक्रोशाद्दयार्थिना १९
मा ते राष्ट्रे याचनका मा ते भूयुश्च दस्यवः
इष्टादातार एवैते नैते भूतस्य भावकाः २०
ये भूतान्यनुगृह्णन्ति वर्धयन्ति च ये प्रजाः
ते ते राष्ट्रे प्रवर्तन्तां मा भूतानामभावकाः २१
दण्ड्यास्ते च महाराज धनादानप्रयोजनाः
प्रयोगं कारयेयुस्तान्यथा बलिकरांस्तथा २२
कृषिगोरक्ष्यवाणिज्यं यच्चान्यत्किंचिदीदृशम्
पुरुषैः कारयेत्कर्म बहुभिः सह कर्मभिः २३
नरश्चेत्कृषिगोरक्ष्यं वाणिज्यं चाप्यनुष्ठितः
संशयं लभते किंचित्तेन राजा विगर्ह्यते २४
धनिनः पूजयेन्नित्यं यानाच्छादनभोजनैः
वक्तव्याश्चानुगृह्णीध्वं पूजाः सह मयेति ह २५
अङ्गमेतन्महद्राज्ञां धनिनो नाम भारत
ककुदं सर्वभूतानां धनस्थो नात्र संशयः २६

प्राज्ञः शूरो धनस्थश्च स्वामी धार्मिक एव च
तपस्वी सत्यवादी च बुद्धिमांश्चाभिरक्षति २७
तस्मादेतेषु सर्वेषु प्रीतिमान्भव पार्थिव
सत्यमार्जवमक्रोधमानृशंस्यं च पालय २८
एवं दण्डं च कोशं च मित्रं भूमिं च लप्स्यसे
सत्यार्जवपरो राजन्मित्रकोशसमन्वितः २९
इति श्रीमहाभारते शान्तिपर्वणि एकोननवतितमोऽध्यायः ८९

## नवतितमोऽध्यायः

भीष्म उवाच
वनस्पतीन्भक्ष्यफलान्न छिन्द्युर्विषये तव
ब्राह्मणानां मूलफलं धर्म्यमाहुर्मनीषिणः १
ब्राह्मणेभ्योऽतिरिक्तं च भुञ्जीरन्नितरे जनाः
न ब्राह्मणोपरोधेन हरेदन्यः कथंचन २
विप्रश्चेत्त्यागमातिष्ठेदाख्यायावृत्तिकर्शितः
परिकल्प्यास्य वृत्तिः स्यात्सदारस्य नराधिप ३
स चेन्नोपनिवर्तेत वाच्यो ब्राह्मणसंसदि
कस्मिन्निदानीं मर्यादामयं लोकः करिष्यति ४
असंशयं निवर्तेत न चेद्वक्ष्यत्यतः परम्
पूर्वं परोक्षं कर्तव्यमेतत्कौन्तेय शासनम् ५
आहुरेतज्जना ब्रह्मन्न चैतच्छ्रद्दधाम्यहम्
निमन्त्र्यश्च भवेद्भोगैरवृत्त्या चेत्तदाचरेत् ६
कृषिगोरक्ष्यवाणिज्यं लोकानामिह जीवनम्
ऊर्ध्वं चैव त्रयी विद्या सा भूतान्भावयत्युत ७
तस्यां प्रयतमानायां ये स्युस्तत्परिपन्थिनः
दस्यवस्तद्वधायेह ब्रह्मा क्षत्रमथासृजत् ८
शत्रूञ्जहि प्रजा रक्ष यजस्व क्रतुभिर्नृप
युध्यस्व समरे वीरो भूत्वा कौरवनन्दन ९
संरक्ष्यान्पालयेद्राजा यः स राजार्यकृत्तमः
ये केचित्तान्न रक्षन्ति तैरर्थो नास्ति कश्चन १०

सदैव राज्ञा बोद्धव्यं सर्वलोकाद्युधिष्ठिर
तस्माद्धेतोर्हि भुञ्जीत मनुष्यानेव मानवः ११
अन्तरेभ्यः परान्रक्षन्परेभ्यः पुनरन्तरान्
परान्परेभ्यः स्वान्स्वेभ्यः सर्वान्पालय नित्यदा १२
आत्मानं सर्वतो रक्षन्राजा रक्षेत मेदिनीम्
आत्ममूलमिदं सर्वमाहुर्हि विदुषो जनाः १३
किं छिद्रं कोऽनुषङ्गो मे किं वास्त्यविनिपातितम्
कुतो मामास्रवेद्दोष इति नित्यं विचिन्तयेत् १४
गुप्तैश्चारैरनुमतैः पृथिवीमनुचारयेत्
सुनीतं यदि मे वृत्तं प्रशंसन्ति न वा पुनः
कच्चिद्रोचेज्जनपदे कच्चिद्राष्ट्रे च मे यशः १५
धर्मज्ञानां धृतिमतां संग्रामेष्वपलायिनाम्
राष्ट्रं च येऽनुजीवन्ति ये च राज्ञोऽनुजीविनः १६
अमात्यानां च सर्वेषां मध्यस्थानां च सर्वशः
ये च त्वाभिप्रशंसेयुर्निन्देयुरथ वा पुनः
सर्वान्सुपरिणीतांस्तान्कारयेत युधिष्ठिर १७
एकान्तेन हि सर्वेषां न शक्यं तात रोचितुम्
मित्रामित्रमथो मध्यं सर्वभूतेषु भारत १८
तुल्यबाहुबलानां च गुणैरपि निषेविनाम्
कथं स्यादधिकः कश्चित्स तु भुञ्जीत मानवान् १९
ये चरा ह्यचरानद्युरदंष्ट्रान्दंष्ट्रिणस्तथा
आशीविषा इव क्रुद्धा भुजगा भुजगानिव २०
एतेभ्यश्चाप्रमत्तः स्यात्सदा यत्तो युधिष्ठिर
भारुण्डसदृशा ह्येते निपतन्ति प्रमाद्यतः २१
कच्चित्ते वणिजो राष्ट्रे निपतन्ति करार्दिताः
क्रीणन्तो बहु वाल्पेन कान्तारकृतनिश्रमाः २२
कच्चित्कृषिकरा राष्ट्रं न जहत्यतिपीडिताः
ये वहन्ति धुरं राज्ञां संभरन्तीतरानपि २३
इतो दत्तेन जीवन्ति देवाः पितृगणास्तथा
मनुष्योरगरक्षांसि वयांसि पशवस्तथा २४

एषा ते राष्ट्रवृत्तिश्च राष्ट्रगुप्तिश्च भारत
एतमेवार्थमाश्रित्य भूयो वक्ष्यामि पाण्डव २५
इति श्रीमहाभारते शान्तिपर्वणि नवतितमोऽध्यायः ९०

## एकनवतितमोऽध्यायः

भीष्म उवाच
यानङ्गिराः क्षत्रधर्मानुतथ्यो ब्रह्मवित्तमः
मान्धात्रे यौवनाश्वाय प्रीतिमानभ्यभाषत १
स यथानुशशासैनमुतथ्यो ब्रह्मवित्तमः
तत्ते सर्वं प्रवक्ष्यामि निखिलेन युधिष्ठिर २
उतथ्य उवाच
धर्माय राजा भवति न कामकरणाय तु
मान्धातरेवं जानीहि राजा लोकस्य रक्षिता ३
राजा चरति वै धर्मं देवत्वायैव गच्छति
न चेद्धर्मं स चरति नरकायैव गच्छति ४
धर्मे तिष्ठन्ति भूतानि धर्मो राजनि तिष्ठति
तं राजा साधु यः शास्ति स राजा पृथिवीपतिः ५
राजा परमधर्मात्मा लक्ष्मीवान्पाप उच्यते
देवाश्च गर्हां गच्छन्ति धर्मो नास्तीति चोच्यते ६
अधर्मे वर्तमानानामर्थसिद्धिः प्रदृश्यते
तदेव मङ्गलं सर्वं लोकः समनुवर्तते ७
उच्छिद्यते धर्मवृत्तमधर्मो वर्तते महान्
भयमाहुर्दिवारात्रं यदा पापो न वार्यते ८
न वेदाननुवर्तन्ति व्रतवन्तो द्विजातयः
न यज्ञांस्तन्वते विप्रा यदा पापो न वार्यते ९
वध्यानामिव सर्वेषां मनो भवति विह्वलम्
मनुष्याणां महाराज यदा पापो न वार्यते १०
उभौ लोकावभिप्रेक्ष्य राजानमृषयः स्वयम्
असृजन्सुमहद्भूतमयं धर्मो भविष्यति ११
यस्मिन्धर्मो विराजेत तं राजानं प्रचक्षते

यस्मिन्विलीयते धर्मस्तं देवा वृषलं विदुः १२
वृषो हि भगवान्धर्मो यस्तस्य कुरुते ह्यलम्
वृषलं तं विदुर्देवास्तस्माद्धर्मं न लोपयेत् १३
धर्मे वर्धति वर्धन्ति सर्वभूतानि सर्वदा
तस्मिन्ह्रसति हीयन्ते तस्माद्धर्मं प्रवर्धयेत् १४
धनात्स्रवति धर्मो हि धारणाद्वेति निश्चयः
अकार्याणां मनुष्येन्द्र स सीमान्तकरः स्मृतः १५
प्रभवार्थं हि भूतानां धर्मः सृष्टः स्वयंभुवा
तस्मात्प्रवर्धयेद्धर्मं प्रजानुग्रहकारणात् १६
तस्माद्धि राजशार्दूल धर्मः श्रेष्ठ इति स्मृतः
स राजा यः प्रजाः शास्ति साधुकृत्पुरुषर्षभः १७
कामक्रोधावनादृत्य धर्ममेवानुपालयेत्
धर्मः श्रेयस्करतमो राज्ञां भरतसत्तम १८
धर्मस्य ब्राह्मणा योनिस्तस्मात्तान्पूजयेत्सदा
ब्राह्मणानां च मान्धातः कामान्कुर्यादमत्सरी १९
तेषां ह्यकामकरणाद्राज्ञः संजायते भयम्
मित्राणि च न वर्धन्ते तथामित्रीभवन्त्यपि २०
ब्राह्मणान्वै तदासूयाद्यदा वैरोचनो बलि
अथास्माच्छ्रीरपाक्रामद्यास्मिन्नासीत्प्रतापिनी २१
ततस्तस्मादपक्रम्य सागच्छत्पाकशासनम्
अथ सोऽन्वतपत्पश्चाच्छ्रियं दृष्ट्वा पुरंदरे २२
एतत्फलमसूयाया अभिमानस्य चाभिभो
तस्माद्बुध्यस्व मान्धातर्मा त्वा जह्यात्प्रतापिनी २३
दर्पो नाम श्रियः पुत्रो जज्ञेऽधर्मादिति श्रुतिः
तेन देवासुरा राजन्नीताः सुबहुशो वशम् २४
राजर्षयश्च बहवस्तस्माद्बुध्यस्व पार्थिव
राजा भवति तं जित्वा दासस्तेन पराजितः २५
स यथा दर्पसहितमधर्मं नानुसेवसे
तथा वर्तस्व मान्धातश्चिरं चेत्स्थातुमिच्छसि २६
मत्तात्प्रमत्तात्पोगण्डादुन्मत्ताच्च विशेषतः

तदभ्यासादुपावर्तादहितानां च सेवनात् २७
निगृहीतादमात्याच्च स्त्रीभ्यश्चैव विशेषतः
पर्वताद्विषमाद्दुर्गाद्धस्तिनोऽश्वात्सरीसृपात् २८
एतेभ्यो नित्ययत्तः स्यान्नक्तंचर्यां च वर्जयेत्
अत्यायं चातिमानं च दम्भं क्रोधं च वर्जयेत् २९
अविज्ञातासु च स्त्रीषु क्लीबासु स्वैरिणीषु च
परभार्यासु कन्यासु नाचरेन्मैथुनं नृपः ३०
कुलेषु पापरक्षांसि जायन्ते वर्णसंकरात्
अपुमांसोऽङ्गहीनाश्च स्थूलजिह्वा विचेतसः ३१
एते चान्ये च जायन्ते यदा राजा प्रमाद्यति
तस्माद्राज्ञा विशेषेण वर्तितव्यं प्रजाहिते ३२
क्षत्रियस्य प्रमत्तस्य दोषः संजायते महान्
अधर्माः संप्रवर्तन्ते प्रजासंकरकारकाः ३३
अशीते विद्यते शीतं शीते शीतं न विद्यते
अवृष्टिरतिवृष्टिश्च व्याधिश्चाविशति प्रजाः ३४
नक्षत्राण्युपतिष्ठन्ति ग्रहा घोरास्तथापरे
उत्पाताश्चात्र दृश्यन्ते बहवो राजनाशनाः ३५
अरक्षितात्मा यो राजा प्रजाश्चापि न रक्षति
प्रजाश्च तस्य क्षीयन्ते ताश्च सोऽनु विनश्यति ३६
द्वावाददाते ह्येकस्य द्वयोश्च बहवोऽपरे
कुमार्यः संप्रलुप्यन्ते तदाहुर्नृपदूषणम् ३७
ममैतदिति नैकस्य मनुष्येष्ववतिष्ठते
त्यक्त्वा धर्मं यदा राजा प्रमादमनुतिष्ठति ३८
इति श्रीमहाभारते शान्तिपर्वणि एकनवतितमोऽध्यायः ९१

## द्विनवतितमोऽध्यायः

उतथ्य उवाच
कालवर्षी च पर्जन्यो धर्मचारी च पार्थिवः
संपद्यदैषा भवति सा बिभर्ति सुखं प्रजाः १
यो न जानाति निर्हन्तुं वस्त्राणां रजको मलम्

रक्तानि वा शोधयितुं यथा नास्ति तथैव सः २
एवमेव द्विजेन्द्राणां क्षत्रियाणां विशामपि
शूद्राश्चतुर्णां वर्णानां नानाकर्मस्ववस्थिताः ३
कर्म शूद्रे कृषिर्वैश्ये दण्डनीतिश्च राजनि
ब्रह्मचर्यं तपो मन्त्राः सत्यं चापि द्विजातिषु ४
तेषां यः क्षत्रियो वेद वस्त्राणामिव शोधनम्
शीलदोषान्विनिर्हन्तुं स पिता स प्रजापतिः ५
कृतं त्रेता द्वापरश्च कलिश्च भरतर्षभ
राजवृत्तानि सर्वाणि राजैव युगमुच्यते ६
चातुर्वर्ण्यं तथा वेदाश्चातुराश्रम्यमेव च
सर्वं प्रमुह्यते ह्येतद्यदा राजा प्रमाद्यति ७
राजैव कर्ता भूतानां राजैव च विनाशकः
धर्मात्मा यः स कर्ता स्यादधर्मात्मा विनाशकः ८
राज्ञो भार्याश्च पुत्राश्च बान्धवाः सुहृदस्तथा
समेत्य सर्वे शोचन्ति यदा राजा प्रमाद्यति ९
हस्तिनोऽश्वाश्च गावश्चाप्युष्ट्राश्वतरगर्दभाः
अधर्मवृत्ते नृपतौ सर्वे सीदन्ति पार्थिव १०
दुर्बलार्थं बलं सृष्टं धात्रा मान्धातरुच्यते
अबलं तन्महद्भूतं यस्मिन्सर्वं प्रतिष्ठितम् ११
यच्च भूतं स भजते भूता ये च तदन्वयाः
अधर्मस्थे हि नृपतौ सर्वे सीदन्ति पार्थिव १२
दुर्बलस्य हि यच्चक्षुर्मुनेराशीविषस्य च
अविषह्यतमं मन्ये मा स्म दुर्बलमासदः १३
दुर्बलांस्तात बुध्येथा नित्यमेवाविमानितान्
मा त्वां दुर्बलचक्षूंषि प्रदहेयुः सबान्धवम् १४
न हि दुर्बलदग्धस्य कुले किंचित्प्ररोहति
आमूलं निर्दहत्येव मा स्म दुर्बलमासदः १५
अबलं वै बलाच्छ्रेयो यच्चातिबलवद्बलम्
बलस्याबलदग्धस्य न किंचिदवशिष्यते १६
विमानितो हतोत्क्रुष्टस्त्रातारं चेन्न विन्दति

अमानुषकृतस्तत्र दण्डो हन्ति नराधिपम् १७
मा स्म तात बले स्थेया बाधिष्ठा मापि दुर्बलम्
मात्वा दुर्बलचक्षूंषि धक्षयन्त्यग्निरिवाश्रयम् १८
यानि मिथ्याभिशस्तानां पतन्त्यश्रूणि रोदताम्
तानि पुत्रान्पशून्घन्ति तेषां मिथ्याभिशासताम् १९
यदि नात्मनि पुत्रेषु न चेत्पौत्रेषु नप्तृषु
न हि पापं कृतं कर्म सद्यः फलति गौरिव २०
यत्राबलो वध्यमानस्त्रातारं नाधिगच्छति
महान्दैवकृतस्तत्र दण्डः पतति दारुणः २१
युक्ता यदा जानपदा भिक्षन्ते ब्राह्मणा इव
अभीक्ष्णं भिक्षुदोषेण राजानं घ्नन्ति तादृशाः २२
राज्ञो यदा जनपदे बहवो राजपूरुषाः
अनयेनोपवर्तन्ते तद्राज्ञः किल्बिषं महत् २३
यदा युक्ता नयन्त्यर्थान्कामादर्थवशेन वा
कृपणं याचमानानां तद्राज्ञो वैशसं महत् २४
महावृक्षो जायते वर्धते च तं चैव भूतानि समाश्रयन्ति
यदा वृक्षश्छिद्यते दह्यते वा तदाश्रया अनिकेता भवन्ति २५
यदा राष्ट्रे धर्ममग्र्यं चरन्ति संस्कारं वा राजगुणं ब्रुवाणाः
तैरेवाधर्मश्चरितो धर्ममोहात्तूर्णं जह्यात्सुकृतं दुष्कृतं च २६
यत्र पापा ज्ञायमानाश्चरन्ति सतां कलिर्विन्दति तत्र राज्ञः
यदा राजा शास्ति नरान्नशिष्यान्न तद्राज्यं वर्धते भूमिपाल २७
यश्चामात्यं मानयित्वा यथार्हं मन्त्रे च युद्धे च नृपो नियुञ्ज्यात्
प्रवर्धते तस्य राष्ट्रं नृपस्य भुङ्क्ते महीं चाप्यखिलां चिराय २८
अत्रापि सुकृतं कर्म वाचं चैव सुभाषिताम्
समीक्ष्य पूजयन्राजा धर्मं प्राप्नोत्यनुत्तमम् २९
संविभज्य यदा भुङ्क्ते न चान्यानवमन्यते
निहन्ति बलिनं दृप्तं स राज्ञो धर्म उच्यते ३०
त्रायते हि यदा सर्वं वाचा कायेन कर्मणा
पुत्रस्यापि न मृष्येच्च स राज्ञो धर्म उच्यते ३१
यदा शारणिकान्राजा पुत्रवत्परिरक्षति

भिनत्ति न च मर्यादां स राज्ञो धर्म उच्यते ३२
यदाप्तदक्षिणैर्यज्ञैर्यजते श्रद्धयान्वितः
कामद्वेषावनादृत्य स राज्ञो धर्म उच्यते ३३
कृपणानाथवृद्धानां यदाश्रु व्यपमार्ष्टि वै
हर्षं संजनयन्नृणां स राज्ञो धर्म उच्यते ३४
विवर्धयति मित्राणि तथारींश्चापकर्षति
संपूजयति साधूंश्च स राज्ञो धर्म उच्यते ३५
सत्यं पालयति प्राप्त्या नित्यं भूमिं प्रयच्छति
पूजयत्यतिथीन्भृत्यान्स राज्ञो धर्म उच्यते ३६
निग्रहानुग्रहौ चोभौ यत्र स्यातां प्रतिष्ठितौ
अस्मिँल्लोके परे चैव राजा तत्प्राप्नुते फलम् ३७
यमो राजा धार्मिकाणां मान्धातः परमेश्वरः
संयच्छन्भवति प्राणान्नसंयच्छंस्तु पापकः ३८
ऋत्विक्पुरोहिताचार्यान्सत्कृत्यानवमन्य च
यदा सम्यक्प्रगृह्णाति स राज्ञो धर्म उच्यते ३९
यमो यच्छति भूतानि सर्वाण्येवाविशेषतः
तस्य राज्ञानुकर्तव्यं यन्तव्या विधिवत्प्रजाः ४०
सहस्राक्षेण राजा हि सर्व एवोपमीयते
स पश्यति हि यं धर्मं स धर्मः पुरुषर्षभ ४१
अप्रमादेन शिक्षेथाः क्षमां बुद्धिं धृतिं मतिम्
भूतानां सत्त्वजिज्ञासां साध्वसाधु च सर्वदा ४२
संग्रहः सर्वभूतानां दानं च मधुरा च वाक्
पौरजानपदाश्चैव गोप्तव्याः स्वा यथा प्रजाः ४३
न जात्वदक्षो नृपतिः प्रजाः शक्नोति रक्षितुम्
भारो हि सुमहांस्तात राज्यं नाम सुदुष्करम् ४४
तद्दण्डविन्नृपः प्राज्ञः शूरः शक्नोति रक्षितुम्
न हि शक्यमदण्डेन क्लीबेनाबुद्धिनापि वा ४५
अभिरूपैः कुले जातैर्दक्षैर्भक्तैर्बहुश्रुतैः
सर्वा बुद्धीः परीक्षेथास्तापसाश्रमिणामपि ४६
ततस्त्वं सर्वभूतानां धर्मं वेत्स्यसि वै परम्

स्वदेशे परदेशे वा न ते धर्मो विनश्यति ४७
धर्मश्चार्थश्च कामश्च धर्म एवोत्तरो भवेत्
अस्मिँल्लोके परे चैव धर्मवित्सुखमेधते ४८
त्यजन्ति दारान्प्राणांश्च मनुष्याः प्रतिपूजिताः
संग्रहश्चैव भूतानां दानं च मधुरा च वाक् ४९
अप्रमादश्च शौचं च तात भूतिकरं महत्
एतेभ्यश्चैव मान्धातः सततं मा प्रमादिथाः ५०
अप्रमत्तो भवेद्राजा छिद्रदर्शी परात्मनोः
नास्य छिद्रं परः पश्येच्छिद्रेषु परमन्वियात् ५१
एतद्वृत्तं वासवस्य यमस्य वरुणस्य च
राजर्षीणां च सर्वेषां तत्त्वमप्यनुपालय ५२
तत्कुरुष्व महाराज वृत्तं राजर्षिसेवितम्
आतिष्ठ दिव्यं पन्थानमह्नाय भरतर्षभ ५३
धर्मवृत्तं हि राजानं प्रेत्य चेह च भारत
देवर्षिपितृगन्धर्वाः कीर्तयन्त्यमितौजसः ५४
भीष्म उवाच
स एवमुक्तो मान्धाता तेनोतथ्येन भारत
कृतवानविशङ्कस्तदेकः प्राप च मेदिनीम् ५५
भवानपि तथा सम्यङ्मान्धातेव महीपतिः
धर्मं कृत्वा महीं रक्षन्स्वर्गे स्थानमवाप्स्यसि ५६
इति श्रीमहाभारते शान्तिपर्वणि द्विनवतितमोऽध्यायः ९२

## त्रिनवतितमोऽध्यायः

युधिष्ठिर उवाच
कथं धर्मे स्थातुमिच्छन्राजा वर्तेत धार्मिकः
पृच्छामि त्वा कुरुश्रेष्ठ तन्मे ब्रूहि पितामह १
भीष्म उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
गीतं दृष्टार्थतत्त्वेन वामदेवेन धीमता २
राजा वसुमना नाम कौसल्यो बलवाञ्शुचिः

महर्षिं परिपप्रच्छ वामदेवं यशस्विनम् ३
धर्मार्थसहितं वाक्यं भगवन्ननुशाधि माम्
येन वृत्तेन वै तिष्ठन्न च्यवेयं स्वधर्मतः ४
तमब्रवीद्वामदेवस्तपस्वी जपतां वरः
हेमवर्णमुपासीनं ययातिमिव नाहुषम् ५
धर्ममेवानुवर्तस्व न धर्माद्विद्यते परम्
धर्मे स्थिता हि राजानो जयन्ति पृथिवीमिमाम् ६
अर्थसिद्धेः परं धर्मं मन्यते यो महीपतिः
ऋतां च कुरुते बुद्धिं स धर्मेण विरोचते ७
अधर्मदर्शी यो राजा बलादेव प्रवर्तते
क्षिप्रमेवापयातोऽस्मादुभौ प्रथममध्यमौ ८
असत्पापिष्ठसचिवो वध्यो लोकस्य धर्महा
सहैव परिवारेण क्षिप्रमेवावसीदति ९
अर्थानामननुष्ठाता कामचारी विकत्थनः
अपि सर्वां महीं लब्ध्वा क्षिप्रमेव विनश्यति १०
अथाददानः कल्याणमनसूयुर्जितेन्द्रियः
वर्धते मतिमान्राजा स्रोतोभिरिव सागरः ११
न पूर्णोऽस्मीति मन्येत धर्मतः कामतोऽथतः
बुद्धितो मित्रतश्चापि सततं वसुधाधिपः १२
एतेष्वेव हि सर्वेषु लोकयात्रा प्रतिष्ठिता
एतानि शृणवँल्लभते यशः कीर्तिं श्रियः प्रजाः १३
एवं यो धर्मसंरम्भी धर्मार्थपरिचिन्तकः
अर्थान्समीक्ष्यारभते स ध्रुवं महदश्नुते १४
अदाता ह्यनतिस्नेहो दण्डेनावर्तयन्प्रजाः
साहसप्रकृती राजा क्षिप्रमेव विनश्यति १५
अथ पापं कृतं बुद्ध्या न च पश्यत्यबुद्धिमान्
अकीर्त्यापि समायुक्तो मृतो नरकमश्नुते १६
अथ मानयितुर्दातुः शुक्लस्य रसवेदिनः
व्यसनं स्वमिवोत्पन्नं विजिघांसन्ति मानवाः १७
यस्य नास्ति गुरुर्धर्मे न चान्याननुपृच्छति

सुखतन्त्रोऽथलाभेषु न चिरं महदश्नुते १८
गुरुप्रधानो धर्मेषु स्वयमर्थान्ववेक्षिता
धर्मप्रधानो लोकेषु सुचिरं महदश्नुते १९
इति श्रीमहाभारते शान्तिपर्वणि त्रिनवतितमोऽध्यायः ९३

चतुर्नवतितमोऽध्यायः

वामदेव उवाच
यत्राधर्मं प्रणयते दुर्बले बलवत्तरः
तां वृत्तिमुपजीवन्ति ये भवन्ति तदन्वयाः १
राजानमनुवर्तन्ते तं पापाभिप्रवर्तकम्
अविनीतमनुष्यं तत्क्षिप्रं राष्ट्रं विनश्यति २
यद्वृत्तिमुपजीवन्ति प्रकृतिस्थस्य मानवाः
तदेव विषमस्थस्य स्वजनोऽपि न मृष्यते ३
साहसप्रकृतिर्यत्र कुरुते किंचिदुल्बणम्
अशास्त्रलक्षणो राजा क्षिप्रमेव विनश्यति ४
योऽत्यन्ताचरितां वृत्तिं क्षत्रियो नानुवर्तते
जितानामजितानां च क्षत्रधर्मादपैति सः ५
द्विषन्तं कृतकर्माणं गृहीत्वा नृपती रणे
यो न मानयते द्वेषात्क्षत्रधर्मादपैति सः ६
शक्तः स्यात्सुमुखो राजा कुर्यात्कारुण्यमापदि
प्रियो भवति भूतानां न च विभ्रश्यते श्रियः ७
अप्रियं यस्य कुर्वीत भूयस्तस्य प्रियं चरेत्
नचिरेण प्रियः स स्याद्योऽप्रियः प्रियमाचरेत् ८
मृषावादं परिहरेत्कुर्यात्प्रियमयाचितः
न च कामान्न संरम्भान्न द्वेषाद्धर्ममुत्सृजेत् ९
नापत्रपेत प्रश्नेषु नाभिभव्यां गिरं सृजेत्
न त्वरेत न चासूयेत्तथा संगृह्यते परः १०
प्रिये नातिभृशं हृष्येदप्रिये न च संज्वरेत्
न मुह्येदर्थकृच्छ्रेषु प्रजाहितमनुस्मरन् ११
यः प्रियं कुरुते नित्यं गुणतो वसुधाधिपः

तस्य कर्माणि सिध्यन्ति न च संत्यज्यते श्रिया १२
निवृत्तं प्रतिकूलेभ्यो वर्तमानमनुप्रिये
भक्तं भजेत नृपतिस्तद्धि वृत्तं सतामिह १३
अप्रकीर्णेन्द्रियं प्राज्ञमत्यन्तानुगतं शुचिम्
शक्तं चैवानुरक्तं च युञ्ज्यान्महति कर्मणि १४
एवमेव गुणैर्युक्तो यो न रज्यति भूमिपम्
भर्तुरर्थेष्वसूयन्तं न तं युञ्जीत कर्मणि १५
मूढमैन्द्रियकं लुब्धमनार्यचरितं शठम्
अनतीतोपधं हिंस्रं दुर्बुद्धिमबहुश्रुतम् १६
त्यक्तोपात्तं मद्यरतं द्यूतस्त्रीमृगयापरम्
कार्ये महति यो युञ्ज्याद्धीयते स नृपः श्रियः १७
रक्षितात्मा तु यो राजा रक्ष्यान्यश्चानुरक्षति
प्रजाश्च तस्य वर्धन्ते ध्रुवं च महदश्नुते १८
ये केचिद्भूमिपतयस्तान्सर्वानन्ववेक्षयेत्
सुहृद्भिरनभिख्यातैस्तेन राजा न रिष्यते १९
अपकृत्य बकस्थस्य दूरस्थोऽस्मीति नाश्वसेत्
श्येनानुचरितैर्ह्येते निपतन्ति प्रमाद्यतः २०
दृढमूलस्त्वदुष्टात्मा विदित्वा बलमात्मनः
अबलानभियुञ्जीत न तु ये बलवत्तराः २१
विक्रमेण महीं लब्ध्वा प्रजा धर्मेण पालयन्
आहवे निधनं कुर्याद्राजा धर्मपरायणः २२
मरणान्तमिदं सर्वं नेह किंचिदनामयम्
तस्माद्धर्मे स्थितो राजा प्रजा धर्मेण पालयेत् २३
रक्षाधिकरणं युद्धं तथा धर्मानुशासनम्
मन्त्रचिन्त्यं सुखं काले पञ्चभिर्वर्धते मही २४
एतानि यस्य गुप्तानि स राजा राजसत्तम
सततं वर्तमानोऽत्र राजा भुङ्क्ते महीमिमाम् २५
नैतान्येकेन शक्यानि सातत्येनान्ववेक्षितुम्
एतेष्वाप्तान्प्रतिष्ठाप्य राजा भुङ्क्ते महीं चिरम् २६
दातारं संविभक्तारं मार्दवोपगतं शुचिम्

असंत्यक्तमनुष्यं च तं जनाः कुर्वते प्रियम् २७
यस्तु निःश्रेयसं ज्ञात्वा ज्ञानं तत्प्रतिपद्यते
आत्मनो मतमुत्सृज्य तं लोकोऽनुविधीयते २८
योऽथकामस्य वचनं प्रातिकूल्यान्न मृष्यते
शृणोति प्रतिकूलानि विमना नचिरादिव २९
अग्राम्यचरितां बुद्धिमत्यन्तं यो न बुध्यते
जितानामजितानां च क्षत्रधर्मादपैति सः ३०
मुख्यानमात्यान्यो हित्वा निहीनान्कुरुते प्रियान्
स ऽ व्यसनमासाद्य गाधमार्तो न विन्दति ३१
यः कल्याणगुणाञ्ज्ञातीन्द्वेषान्नैवाभिमन्यते
अदृढात्मा दृढक्रोधो नास्यार्थो रमतेऽन्तिके ३२
अथ यो गुणसंपन्नान्हृदयस्याप्रियानपि
प्रियेण कुरुते वश्यांश्चिरं यशसि तिष्ठति ३३
नाकाले प्रणयेदर्थान्नाप्रिये जातु संज्वरेत्
प्रिये नातिभृशं हृष्येद्युज्येतारोग्यकर्मणि ३४
के मानुरक्ता राजानः के भयात्समुपाश्रिताः
मध्यस्थदोषाः के चैषामिति नित्यं विचिन्तयेत् ३५
न जातु बलवान्भूत्वा दुर्बले विश्वसेत्क्वचित्
भारुण्डसदृशा ह्येते निपतन्ति प्रमाद्यतः ३६
अपि सर्वैर्गुणैर्युक्तं भर्तारं प्रियवादिनम्
अभिद्रुह्यति पापात्मा तस्माद्धि विभिषेज्जनात् ३७
एतां राजोपनिषदं ययातिः स्माह नाहुषः
मनुष्यविजये युक्तो हन्ति शत्रूननुत्तमान् ३८
इति श्रीमहाभारते शान्तिपर्वणि चतुर्नवतितमोऽध्यायः ९४

## पञ्चनवतितमोऽध्यायः

वामदेव उवाच
अयुद्धेनैव विजयं वर्धयेद्वसुधाधिपः
जघन्यमाहुर्विजयं यो युद्धेन नराधिप १
न चाप्यलब्धं लिप्सेत मूले नातिदृढे सति

न हि दुर्बलमूलस्य राज्ञो लाभो विधीयते २
यस्य स्फीतो जनपदः संपन्नः प्रियराजकः
संतुष्टपुष्टसचिवो दृढमूलः स पार्थिवः ३
यस्य योधाः सुसंतुष्टाः सान्त्विताः सूपधास्थिताः
अल्पेनापि स दण्डेन महीं जयति भूमिपः ४
पौरजानपदा यस्य स्वनुरक्ताः सुपूजिताः
सधना धान्यवन्तश्च दृढमूलः स पार्थिवः ५
प्रभावकालावधिकौ यदा मन्येत चात्मनः
तदा लिप्सेत मेधावी परभूमिं धनान्युत ६
भोगेष्वदयमानस्य भूतेषु च दयावतः
वर्धते त्वरमाणस्य विषयो रक्षितात्मनः ७
तक्षत्यात्मानमेवैष वनं परशुना यथा
यः सम्यग्वर्तमानेषु स्वेषु मिथ्या प्रवर्तते ८
न वै द्विषन्तः क्षीयन्ते राज्ञो नित्यमपि घ्नतः
क्रोधं नियन्तुं यो वेद तस्य द्वेष्टा न विद्यते ९
यदार्यजनविद्विष्टं कर्म तन्नाचरेद्बुधः
यत्कल्याणमभिध्यायेत्तत्रात्मानं नियोजयेत् १०
नैनमन्येऽवजानन्ति नात्मना परितप्यते
कृत्यशेषेण यो राजा सुखान्यनुबुभूषति ११
इदंवृत्तं मनुष्येषु वर्तते यो महीपतिः
उभौ लोकौ विनिर्जित्य विजये संप्रतिष्ठते १२
भीष्म उवाच
इत्युक्तो वामदेवेन सर्वं तत्कृतवान्नृपः
तथा कुर्वंस्त्वमप्येतौ लोकौ जेता न संशयः १३
इति श्रीमहाभारते शान्तिपर्वणि पञ्चनवतितमोऽध्यायः ९५

## षण्णवतितमोऽध्यायः

युधिष्ठिर उवाच
अथ यो विजिगीषेत क्षत्रियः क्षत्रियं युधि
कस्तस्य धर्मो विजय एतत्पृष्टो ब्रवीहि मे १

भीष्म उवाच
ससहायोऽसहायो वा राष्ट्रमागम्य भूमिपः
ब्रूयादहं वो राजेति रक्षिष्यामि च वः सदा २
मम धर्म्यं बलिं दत्त किं वा मां प्रतिपत्स्यथ
ते चेत्तमागतं तत्र वृणुयुः कुशलं भवेत् ३
ते चेदक्षत्रियाः सन्तो विरुध्येयुः कथंचन
सर्वोपायैर्नियन्तव्या विकर्मस्था नराधिप ४
अशक्तं क्षत्रियं मत्वा शस्त्रं गृह्णात्यथापरः
त्राणायाप्यसमर्थं तं मन्यमानमतीव च ५
युधिष्ठिर उवाच
अथ यः क्षत्रियो राजा क्षत्रियं प्रत्युपाव्रजेत्
कथं स प्रतियोद्धव्यस्तन्मे ब्रूहि पितामह ६
भीष्म उवाच
नासंनद्धो नाकवचो योद्धव्यः क्षत्रियो रणे
एक एकेन वाच्यश्च विसृजस्व क्षिपामि च ७
स चेत्संनद्ध आगच्छेत्संनद्धव्यं ततो भवेत्
स चेत्ससैन्य आगच्छेत्ससैन्यस्तमथाह्वयेत् ८
स चेन्निकृत्या युध्येत निकृत्या तं प्रयोधयेत्
अथ चेद्धर्मतो युध्येद्धर्मेणैव निवारयेत् ९
नाश्वेन रथिनं यायादुदियाद्रथिनं रथी
व्यसने न प्रहर्तव्यं न भीताय जिताय च १०
नेषुर्लिप्तो न कर्णी स्यादसतामेतदायुधम्
जयार्थमेव योद्धव्यं न क्रुध्येदजिघांसतः ११
साधूनां तु मिथोभेदात्साधुश्चेद्व्यसनी भवेत्
सव्रणो नाभिहन्तव्यो नानपत्यः कथंचन १२
भग्नशस्त्रो विपन्नाश्वश्छिन्नज्यो हतवाहनः
चिकित्स्यः स्यात्स्वविषये प्राप्यो वा स्वगृहान्भवेत्
निर्व्रणोऽपि च मोक्तव्य एष धर्मः सनातनः १३
तस्माद्धर्मेण योद्धव्यं मनुः स्वायंभुवोऽब्रवीत्
सत्सु नित्यं सतां धर्मस्तमास्थाय न नाशयेत् १४

यो वै जयत्यधर्मेण क्षत्रियो वर्धमानकः
आत्मानमात्मना हन्ति पापो निकृतिजीवनः १५
कर्म चैतदसाधूनामसाधुं साधुना जयेत्
धर्मेण निधनं श्रेयो न जयः पापकर्मणा १६
नाधर्मश्चरितो राजन्सद्यः फलति गौरिव
मूलान्यस्य प्रशाखाश्च दहन्समनुगच्छति १७
पापेन कर्मणा वित्तं लब्ध्वा पापः प्रहृष्यति
स वर्धमानः स्तेयेन पापः पापे प्रसज्जति १८
न धर्मोऽस्तीति मन्वानः शुचीनवहसन्निव
अश्रद्दधानभावाच्च विनाशमुपगच्छति १९
स बद्धो वारुणैः पाशैरमर्त्य इव मन्यते
महादृतिरिवाध्मातः स्वकृतेन विवर्धते २०
ततः समूलो ह्रियते नदीकूलादिव द्रुमः
अथैनमभिनिन्दन्ति भिन्नं कुम्भमिवाश्मनि
तस्माद्धर्मेण विजयं कामं लिप्सेत भूमिपः २१
इति श्रीमहाभारते शान्तिपर्वणि षण्णवतितमोऽध्यायः ९६

## सप्त नवतितमोऽध्यायः

भीष्म उवाच
नाधर्मेण महीं जेतुं लिप्सेत जगतीपतिः
अधर्मविजयं लब्ध्वा कोऽनुमन्येत भूमिपः १
अधर्मयुक्तो विजयो ह्यध्रुवोऽस्वर्ग्य एव च
सादयत्येष राजानं महीं च भरतर्षभ २
विशीर्णकवचं चैव तवास्मीति च वादिनम्
कृताञ्जलि न्यस्तशस्त्रं गृहीत्वा न विहिंसयेत् ३
बलेनावजितो यश्च न तं युध्येत भूमिपः
संवत्सरं विप्रणयेत्तस्माज्जातः पुनर्भवेत् ४
नार्वाक्संवत्सरात्कन्या स्प्रष्टव्या विक्रमाहृता
एवमेव धनं सर्वं यच्चान्यत्सहसाहृतम् ५
न तु वन्ध्यं धनं तिष्ठेत्पिबेयुर्ब्राह्मणाः पयः

युञ्जीरन्वाप्यनडुहः क्षन्तव्यं वा तदा भवेत् ६
राज्ञा राजैव योद्धव्यस्तथा धर्मो विधीयते
नान्यो राजानमभ्यसेदराजन्यः कथंचन ७
अनीकयोः संहतयोर्यदीयाद्ब्राह्मणोऽन्तरा
शान्तिमिच्छन्नुभयतो न योद्धव्यं तदा भवेत्
मर्यादां शाश्वतीं भिन्द्याद्ब्राह्मणं योऽभिलङ्घयेत् ८
अथ चेल्लङ्घयेदेनां मर्यादां क्षत्रियब्रुवः
अप्रशस्यस्तदूर्ध्वं स्यादनादेयश्च संसदि ९
या तु धर्मविलोपेन मर्यादाभेदनेन च
तां वृत्तिं नानुवर्तेत विजिगीषुर्महीपतिः
धर्मलब्धाद्धि विजयात्को लाभोऽभ्यधिको भवेत् १०
सहसा नाम्य भूतानि क्षिप्रमेव प्रसादयेत्
सान्त्वेन भोगदानेन स राज्ञां परमो नयः ११
भुज्यमाना ह्ययोगेन स्वराष्ट्रादभितापिताः
अमित्रान्पर्युपासीरन्व्यसनौघप्रतीक्षिणः १२
अमित्रोपग्रहं चास्य ते कुर्युः क्षिप्रमापदि
संदुष्टाः सर्वतो राजन्राजव्यसनकाङ्क्षिणः १३
नामित्रो विनिकर्तव्यो नातिच्छेद्यः कथंचन
जीवितं ह्यप्यतिच्छिन्नः संत्यजत्येकदा नरः १४
अल्पेनापि हि संयुक्तस्तुष्यत्येवापराधिकः
शुद्धं जीवितमेवापि तादृशो बहु मन्यते १५
यस्य स्फीतो जनपदः संपन्नः प्रियराजकः
संतुष्टभृत्यसचिवो दृढमूलः स पार्थिवः १६
ऋत्विक्पुरोहिताचार्या ये चान्ये श्रुतसंमताः
पूजार्हाः पूजिता यस्य स वै लोकजिदुच्यते १७
एतेनैव च वृत्तेन महीं प्राप सुरोत्तमः
अन्वेव चैन्द्रं विजयं व्यजिगीषन्त पार्थिवाः १८
भूमिवर्जं पुरं राजा जित्वा राजानमाहवे
अमृताश्चौषधीः शश्वदाजहार प्रतर्दनः १९
अग्निहोत्राण्यग्निशेषं हविर्भाजनमेव च

आजहार दिवोदासस्ततो विप्रकृतोऽभवत् २०
सराजकानि राष्ट्राणि नाभागो दक्षिणां ददौ
अन्यत्र श्रोत्रियस्वाच्च तापसस्वाच्च भारत २१
उच्चावचानि वृत्तानि धर्मज्ञानां युधिष्ठिर
आसन्नाज्ञां पुराणानां सर्वं तन्मम रोचते २२
सर्वविद्यातिरेकाद्वा जयमिच्छेन्महीपतिः
न मायया न दम्भेन य इच्छेद्भूतिमात्मनः २३
इति श्रीमहाभारते शान्तिपर्वणि सप्तनवतितमोऽध्यायः ९७

## अष्टनवतितमोऽध्यायः

युधिष्ठिर उवाच
क्षत्रधर्मान्न पापीयान्धर्मोऽस्ति भरतर्षभ
अभियाने च युद्धे च राजा हन्ति महाजनम् १
अथ स्म कर्मणा येन लोकाञ्जयति पार्थिवः
विद्वञ्जिज्ञासमानाय प्रब्रूहि भरतर्षभ २
भीष्म उवाच
निग्रहेण च पापानां साधूनां प्रग्रहेण च
यज्ञैर्दानैश्च राजानो भवन्ति शुचयोऽमलाः ३
उपरुन्धन्ति राजानो भूतानि विजयार्थिनः
त एव विजयं प्राप्य वर्धयन्ति पुनः प्रजाः ४
अपविध्यन्ति पापानि दानयज्ञतपोबलैः
अनुग्रहेण भूतानां पुण्यमेषां प्रवर्धते ५
यथैव क्षेत्रनिर्दाता निर्दन्वै क्षेत्रमेकदा
हिनस्ति कक्षं धान्यं च न च धान्यं विनश्यति ६
एवं शस्त्राणि मुञ्चन्तो घ्नन्ति वध्यानथैकदा
तस्यैषा निष्कृतिः कृत्स्ना भूतानां भावनं पुनः ७
यो भूतानि धनज्यानाद्वधात्क्लेशाच्च रक्षति
दस्युभ्यः प्राणदानात्स धनदः सुखदो विराट् ८
स सर्वयज्ञैरीजानो राजाथाभयदक्षिणैः
अनुभूयेह भद्राणि प्राप्नोतीन्द्रसलोकताम् ९

ब्राह्मणार्थे समुत्पन्ने योऽभिनिःसृत्य युध्यते
आत्मानं यूपमुच्छ्रित्य स यज्ञोऽनन्तदक्षिणः १०
अभीतो विकिरञ्शत्रून्प्रतिगृह्णञ्शरांस्तथा
न तस्मात्त्रिदशाः श्रेयो भुवि पश्यन्ति किंचन ११
तस्य यावन्ति शस्त्राणि त्वचं भिन्दन्ति संयुगे
तावतः सोऽश्नुते लोकान्सर्वकामदुहोऽक्षयान् १२
न तस्य रुधिरं गात्रादावेधेभ्यः प्रवर्तते
स ह तेनैव रक्तेन सर्वपापैः प्रमुच्यते १३
यानि दुःखानि सहते व्रणानामभितापने
न ततोऽस्ति तपो भूय इति धर्मविदो विदुः १४
पृष्ठतो भीरवः संख्ये वर्तन्तेऽधमपूरुषाः
शूराच्छरणमिच्छन्तः पर्जन्यादिव जीवनम् १५
यदि शूरस्तथा क्षेमे प्रतिरक्षेत्तथा भये
प्रतिरूपं जनाः कुर्युर्न च तद्वर्तते तथा १६
यदि ते कृतमाज्ञाय नमस्कुर्युः सदैव तम्
युक्तं न्याय्यं च कुर्युस्ते न च तद्वर्तते तथा १७
पुरुषाणां समानानां दृश्यते महदन्तरम्
संग्रामेऽनीकवेलायामुत्क्रुष्टेऽभिपतत्सु च १८
पतत्यभिमुखः शूरः परान्भीरुः पलायते
आस्थायास्वर्ग्यमध्वानं सहायान्विषमे त्यजन् १९
मा स्म तांस्तादृशांस्तात जनिष्ठाः पुरुषाधमान्
ये सहायान्रणे हित्वा स्वस्तिमन्तो गृहान्ययुः २०
अस्वस्ति तेभ्यः कुर्वन्ति देवा इन्द्रपुरोगमाः
त्यागेन यः सहायानां स्वान्प्राणांस्त्रातुमिच्छति २१
तं हन्युः काष्ठलोष्टैर्वा दहेयुर्वा कटाग्निना
पशुवन्मारयेयुर्वा क्षत्रिया ये स्युरीदृशाः २२
अधर्मः क्षत्रियस्यैष यच्छय्यामरणं भवेत्
विसृजञ्श्लेष्मपित्तानि कृपणं परिदेवयन् २३
अविक्षतेन देहेन प्रलयं योऽधिगच्छति
क्षत्रियो नास्य तत्कर्म प्रशंसन्ति पुराविदः २४

न गृहे मरणं तात क्षत्रियाणां प्रशस्यते
शौटीराणामशौटीरमधर्म्यं कृपणं च तत् २५
इदं दुःखमहो कष्टं पापीय इति निष्टनन्
प्रतिध्वस्तमुखः पूतिरमात्यान्बहु शोचयन् २६
अरोगाणां स्पृहयते मुहुर्मृत्युमपीच्छति
वीरो दृप्तोऽभिमानी च नेदृशं मृत्युमर्हति २७
रणेषु कदनं कृत्वा ज्ञातिभिः परिवारितः
तीक्ष्णैः शस्त्रैः सुविक्लिष्टः क्षत्रियो मृत्युमर्हति २८
शूरो हि सत्यमन्युभ्यामाविष्टो युध्यते भृशम्
कृत्यमानानि गात्राणि परैर्नैवावबुध्यते २९
स संख्ये निधनं प्राप्य प्रशस्तं लोकपूजितम्
स्वधर्मं विपुलं प्राप्य शक्रस्यैति सलोकताम् ३०
सर्वो योधः परं त्यक्तुमाविष्टस्त्यक्तजीवितः
प्राप्नोतीन्द्रस्य सालोक्यं शूरः पृष्ठमदर्शयन् ३१
इति श्रीमहाभारते शान्तिपर्वणि अष्टनवतितमोऽध्यायः ९८

एकोनशततमोऽध्यायः

युधिष्ठिर उवाच
के लोका युध्यमानानां शूराणामनिवर्तिनाम्
भवन्ति निधनं प्राप्य तन्मे ब्रूहि पितामह १
भीष्म उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
अम्बरीषस्य संवादमिन्द्रस्य च युधिष्ठिर २
अम्बरीषो हि नाभागः स्वर्गं गत्वा सुदुर्लभम्
ददर्श सुरलोकस्थं शक्रेण सचिवं सह ३
सर्वतेजोमयं दिव्यं विमानवरमास्थितम्
उपर्युपरि गच्छन्तं स्वं वै सेनापतिं प्रभुम् ४
स दृष्ट्वोपरि गच्छन्तं सेनापतिमुदारधीः
ऋद्धिं दृष्ट्वा सुदेवस्य विस्मितः प्राह वासवम् ५
सागरान्तां महीं कृत्स्नामनुशिष्य यथाविधि

चातुर्वर्ण्ये यथाशास्त्रं प्रवृत्तो धर्मकाम्यया ६
ब्रह्मचर्येण घोरेण आचार्यकुलसेवया
वेदानधीत्य धर्मेण राजशास्त्रं च केवलम् ७
अतिथीनन्नपानेन पितॄंश्च स्वधया तथा
ऋषीन्स्वाध्यायदीक्षाभिर्देवान्यज्ञैरनुत्तमैः ८
क्षत्रधर्मे स्थितो भूत्वा यथाशास्त्रं यथाविधि
उदीक्षमाणः पृतनां जयामि युधि वासव ९
देवराज सुदेवोऽय मम सेनापतिः पुरा
आसीद्योधः प्रशान्तात्मा सोऽय कस्मादतीव माम् १०
नानेन क्रतुभिर्मुख्यैरिष्टं नैव द्विजातयः
तर्पिता विधिवच्छक्र सोऽय कस्मादतीव माम् ११
इन्द्र उवाच
एतस्य विततस्तात सुदेवस्य बभूव ह
संग्रामयज्ञः सुमहान्यश्चान्यो युद्ध्यते नरः १२
संनद्धो दीक्षितः सर्वो योधः प्राप्य चमूमुखम्
युद्धयज्ञाधिकारस्थो भवतीति विनिश्चयः १३
अम्बरीष उवाच
कानि यज्ञे हवींष्यत्र किमाज्यं का च दक्षिणा
ऋत्विजश्चात्र के प्रोक्तास्तन्मे ब्रूहि शतक्रतो १४
इन्द्र उवाच
ऋत्विजः कुञ्जरास्तत्र वाजिनोऽध्वर्यवस्तथा
हवींषि परमांसानि रुधिरं त्वाज्यमेव च १५
शृगालगृध्रकालोलाः सदस्यास्तत्र सत्रिणः
आज्यशेषं पिबन्त्येते हविः प्राश्नन्ति चाध्वरे १६
प्रासतोमरसंघाताः खड्गशक्तिपरश्वधाः
ज्वलन्तो निशिताः पीताः स्रुचस्तस्याथ सत्रिणः १७
चापवेगायतस्तीक्ष्णः परकायावदारणः
ऋजुः सुनिशितः पीतः सायकोऽस्य स्रुवो महान् १८
द्वीपिचर्मावनद्धश्च नागदन्तकृतत्सरुः
हस्तिहस्तगतः खड्गः स्फ्यो भवेत्तस्य संयुगे १९

ज्वलितैर्निशितैः पीतैः प्रासशक्तिपरश्वधैः
शैक्यायसमयैस्तीक्ष्णैरभिघातो भवेद्वसु २०
आवेगाद्यत्तु रुधिरं संग्रामे स्यन्दते भुवि
सास्य पूर्णाहुतिर्होत्रे समृद्धा सर्वकामधुक् २१
छिन्धि भिन्धीति यस्यैतच्छ्रूयते वाहिनीमुखे
सामानि सामगास्तस्य गायन्ति यमसादने २२
हविर्धानं तु तस्याहुः परेषां वाहिनीमुखम्
कुञ्जराणां हयानां च वर्मिणां च समुच्चयः
अग्निः श्येनचितो नाम तस्य यज्ञे विधीयते २३
उत्तिष्ठति कबन्धोऽत्र सहस्रे निहते तु यः
स यूपस्तस्य शूरस्य खादिरोऽष्टाभिरुच्यते २४
इडोपहूतं क्रोशन्ति कुञ्जरा अङ्कुशेरिताः
व्याघुष्टतलनादेन वषट्कारेण पार्थिव
उद्गाता तत्र संग्रामे त्रिसामा दुन्दुभिः स्मृतः २५
ब्रह्मस्वे ह्रियमाणे यः प्रियां युद्धे तनुं त्यजेत्
आत्मानं यूपमुच्छ्रित्य स यज्ञोऽनन्तदक्षिणः २६
भर्तुरर्थे तु यः शूरो विक्रमेद्वाहिनीमुखे
भयान्न च निवर्तेत तस्य लोका यथा मम २७
नीलचन्द्राकृतैः खड्गैर्बाहुभिः परिघोपमैः
यस्य वेदिरुपस्तीर्णा तस्य लोका यथा मम २८
यस्तु नावेक्षते कंचित्सहायं विजये स्थितः
विगाह्य वाहिनीमध्यं तस्य लोका यथा मम २९
यस्य तोमरसंघाटा भेरीमण्डूककच्छपा
वीरास्थिशर्करा दुर्गा मांसशोणितकर्दमा ३०
असिचर्मप्लवा सिन्धुः केशशैवलशाद्वला
अश्वनागरथैश्चैव संभिन्नैः कृतसंक्रमा ३१
पताकाध्वजवानीरा हतवाहनवाहिनी
शोणितोदा सुसंपूर्णा दुस्तरा पारगैर्नरैः ३२
हतनागमहानक्रा परलोकवहाशिवा
ऋष्टिखड्गध्वजानूका गृध्रकङ्कवडप्लवा ३३

पुरुषादानुचरिता भीरूणां कश्मलावहा
नदी योधमहायज्ञे तदस्यावभृथं स्मृतम् ३४
वेदी यस्य त्वमित्राणां शिरोभिरवकीर्यते
अश्वस्कन्धैर्गजस्कन्धैस्तस्य लोका यथा मम ३५
पत्नीशाला कृता यस्य परेषां वाहिनीमुखम्
हविर्धानं स्ववाहिन्यस्तदस्याहुर्मनीषिणः ३६
सदश्चान्तरयोधाग्निराग्नीध्रश्चोत्तरां दिशम्
शत्रुसेनाकलत्रस्य सर्वलोकानदूरतः ३७
यदा तूभयतो व्यूहो भवत्याकाशमग्रतः
सास्य वेदी तथा यज्ञे नित्यं वेदास्त्रयोऽग्नयः ३८
यस्तु योधः परावृत्तः संत्रस्तो हन्यते परैः
अप्रतिष्ठं स नरकं याति नास्त्यत्र संशयः ३९
यस्य शोणितवेगेन नदी स्यात्समभिप्लुता
केशमांसास्थिसंकीर्णा स गच्छेत्परमां गतिम् ४०
यस्तु सेनापतिं हत्वा तद्यानमधिरोहति
स विष्णुविक्रमक्रामी बृहस्पतिसमः क्रतुः ४१
नायकं वा प्रमाणं वा यो वा स्यात्तत्र पूजितः
जीवग्राहं प्रगृह्णाति तस्य लोका यथा मम ४२
आहवे निहतं शूरं न शोचेत कदाचन
अशोच्यो हि हतः शूरः स्वर्गलोके महीयते ४३
न ह्यन्नं नोदकं तस्य न स्नानं नाप्यशौचकम्
हतस्य कर्तुमिच्छन्ति तस्य लोकाञ्शृणुष्व मे ४४
वराप्सरःसहस्राणि शूरमायोधने हतम्
त्वरमाणा हि धावन्ति मम भर्ता भवेदिति ४५
एतत्तपश्च पुण्यं च धर्मश्चैव सनातनः
चत्वारश्चाश्रमास्तस्य यो युद्धे न पलायते ४६
वृद्धं बलं न हन्तव्यं नैव स्त्री न च वै द्विजः
तृणपूर्णमुखश्चैव तवास्मीति च यो वदेत् ४७
अहं वृत्रं बलं पाकं शतमायं विरोचनम्
दुरावार्यं च नमुचिं नैकमायं च शम्बरम् ४८

विप्रचित्तिं च दैतेयं दनोः पुत्रांश्च सर्वशः
प्रह्रादं च निहत्याजौ ततो देवाधिपोऽभवम् ४९
भीष्म उवाच
इत्येतच्छक्रवचनं निशम्य प्रतिगृह्य च
योधानामात्मनः सिद्धिमम्बरीषोऽभिपन्नवान् ५०
इति श्रीमहाभारते शान्तिपर्वणि एकोनशततमोऽध्यायः ९९

## शततमोऽध्यायः

भीष्म उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
प्रतर्दनो मैथिलश्च संग्रामं यत्र चक्रतुः १
यज्ञोपवीती संग्रामे जनको मैथिलो यथा
योधानुद्धर्षयामास तन्निबोध युधिष्ठिर २
जनको मैथिलो राजा महात्मा सर्वतत्त्ववित्
योधान्स्वान्दर्शयामास स्वर्गं नरकमेव च ३
अभीतानामिमे लोका भास्वन्तो हन्त पश्यत
पूर्णा गन्धर्वकन्याभिः सर्वकामदुहोऽक्षयाः ४
इमे पलायमानानां नरकाः प्रत्युपस्थिताः
अकीर्तिः शाश्वती चैव पतितव्यमनन्तरम् ५
तान्दृष्ट्वारीन्विजयतो भूत्वा संत्यागबुद्धयः
नरकस्याप्रतिष्ठस्य मा भूत वशवर्तिनः ६
त्यागमूलं हि शूराणां स्वर्गद्वारमनुत्तमम्
इत्युक्तास्ते नृपतिना योधाः परपुरंजय ७
व्यजयन्त रणे शत्रून्हर्षयन्तो जनेश्वरम्
तस्मादात्मवता नित्यं स्थातव्यं रणमूर्धनि ८
गजानां रथिनो मध्ये रथानामनु सादिनः
सादिनामन्तरा स्थाप्यं पादातमिह दंशितम् ९
य एवं व्यूहते राजा स नित्यं जयते द्विषः
तस्मादेवं विधातव्यं नित्यमेव युधिष्ठिर १०
सर्वे सुकृतमिच्छन्तः सुयुद्धेनातिमन्यवः

क्षोभयेयुरनीकानि सागरं मकरा इव ११
हर्षयेयुर्विषण्णांश्च व्यवस्थाप्य परस्परम्
जितां च भूमिं रक्षेत भग्नान्नात्यनुसारयेत् १२
पुनरावर्तमानानां निराशानां च जीविते
न वेगः सुसहो राजंस्तस्मान्नात्यनुसारयेत् १३
न हि प्रहर्तुमिच्छन्ति शूराः प्राद्रवतां भयात्
तस्मात्पलायमानानां कुर्यान्नात्यनुसारणम् १४
चराणामचरा ह्यन्नमदंष्ट्रा दंष्ट्रिणामपि
अपाणयः पाणिमतामन्नं शूरस्य कातराः १५
समानपृष्ठोदरपाणिपादाः पश्चाच्छूरं भीरवोऽनुव्रजन्ति
अतो भयार्ताः प्रणिपत्य भूयः कृत्वाञ्जलीनुपतिष्ठन्ति शूरान् १६
शूरबाहुषु लोकोऽय लम्बते पुत्रवत्सदा
तस्मात्सर्वास्ववस्थासु शूरः संमानमर्हति १७
न हि शौर्यात्परं किंचित्त्रिषु लोकेषु विद्यते
शूरः सर्वं पालयति सर्वं शूरे प्रतिष्ठितम् १८
इति श्रीमहाभारते शान्तिपर्वणि शततमोऽध्यायः १००

## एकाधिकशततमोऽध्यायः

युधिष्ठिर उवाच
यथा जयार्थिनः सेनां नयन्ति भरतर्षभ
ईषद्धर्मं प्रपीड्यापि तन्मे ब्रूहि पितामह १
भीष्म उवाच
सत्येन हि स्थिता धर्म उपपत्त्या तथापरे
साध्वाचारतया केचित्तथैवौपयिका अपि
उपायधर्मान्वक्ष्यामि सिद्धार्थानर्थधर्मयोः २
निर्मर्यादा दस्यवस्तु भवन्ति परिपन्थिनः
तेषां प्रतिविघातार्थं प्रवक्ष्याम्यथ नैगमम्
कार्याणां संप्रसिद्ध्यर्थं तानुपायान्निबोध मे ३
उभे प्रज्ञे वेदितव्ये ऋज्वी वक्रा च भारत
जानन्वक्रां न सेवेत प्रतिबाधेत चागताम् ४

अमित्रा एव राजानं भेदेनोपचरन्त्युत
तां राजा निकृतिं जानन्यथामित्रान्प्रबाधते ५
गजानां पार्श्वचर्माणि गोवृषाजगराणि च
शल्यकङ्टकलोहानि तनुत्राणि मतानि च ६
शितपीतानि शस्त्राणि संनाहाः पीतलोहिताः
नानारञ्जनरक्ताः स्युः पताकाः केतवश्च ते ७
ऋष्टयस्तोमराः खड्ग निशिताश्च परश्वधाः
फलकान्यथ चर्माणि प्रतिकल्प्यान्यनेकशः
अभिनीतानि शस्त्राणि योधाश्च कृतनिश्रमाः ८
चैत्र्यां वा मार्गशीर्ष्यां वा सेनायोगः प्रशस्यते
पक्वसस्या हि पृथिवी भवत्यम्बुमती तथा ९
नैवातिशीतो नात्युष्णः कालो भवति भारत
तस्मात्तदा योजयेत परेषां व्यसनेषु वा
एतेषु योगाः सेनायाः प्रशस्ताः परबाधने १०
जलवांस्तृणवान्मार्गः समो गम्यः प्रशस्यते
चारैर्हि विहिताभ्यासः कुशलैर्वनगोचरैः ११
नव्यारण्यैर्न शक्येत गन्तुं मृगगणैरिव
तस्मात्सर्वासु सेनासु योजयन्ति जयार्थिनः १२
आवासस्तोयवान्दुर्गः पर्याकाशः प्रशस्यते
परेषामुपसर्पाणां प्रतिषेधस्तथा भवेत् १३
आकाशं तु वनाभ्यासे मन्यन्ते गुणवत्तरम्
बहुभिर्गुणजातैस्तु ये युद्धकुशला जनाः १४
उपन्यासोऽपसर्पाणां पदातीनां च गूहनम्
अथ शत्रुप्रतीघातमापदर्थं परायणम् १५
सप्तर्षीन्पृष्ठतः कृत्वा युध्येरन्नचला इव
अनेन विधिना राजञ्जिगीषेतापि दुर्जयान् १६
यतो वायुर्यतः सूर्यो यतः शुक्रस्ततो जयः
पूर्वं पूर्वं ज्याय एषां संनिपाते युधिष्ठिर १७
अकर्दमामनुदकाममर्यादामलोष्टकाम्
अश्वभूमिं प्रशंसन्ति ये युद्धकुशला जनाः १८

समा निरुदकाकाशा रथभूमिः प्रशस्यते
नीचद्रुमा महाकक्षा सोदका हस्तियोधिनाम् १९
बहुदुर्गा महावृक्षा वेत्रवेणुभिरास्तृता
पदातीनां क्षमा भूमिः पर्वतोपवनानि च २०
पदातिबहुला सेना दृढा भवति भारत
रथाश्वबहुला सेना सुदिनेषु प्रशस्यते २१
पदातिनागबहुला प्रावृट्काले प्रशस्यते
गुणानेतान्प्रसंख्याय देशकालौ प्रयोजयेत् २२
एवं संचिन्त्य यो याति तिथिनक्षत्रपूजितः
विजयं लभते नित्यं सेनां सम्यक्प्रयोजयन् २३
प्रसुप्तांस्तृषिताञ्श्रान्तान्प्रकीर्णान्नाभिघातयेत्
मोक्षे प्रयाणे चलने पानभोजनकालयोः २४
अतिक्षिप्तान्व्यतिक्षिप्तान्विहतान्प्रतनूकृतान्
सुविस्रम्भान्कृतारम्भानुपन्यासप्रतापितान्
बहिश्चरानुपन्यासान्कृत्वा वेश्मानुसारिणः २५
पारम्पर्यागते द्वारे ये केचिदनुवर्तिनः
परिचर्यावरोद्धारो ये च केचन वल्गिनः २६
अनीकं ये प्रभिन्दन्ति भिन्नं ये स्थगयन्ति च
समानाशनपानास्ते कार्या द्विगुणवेतनाः २७
दशाधिपतयः कार्याः शताधिपतयस्तथा
ततः सहस्राधिपतिं कुर्याच्छूरमतन्द्रितम् २८
यथामुख्यं सन्निपात्य वक्तव्याः स्म शपामहे
यथा जयार्थं संग्रामे न जह्याम परस्परम् २९
इहैव ते निवर्तन्तां ये नः केचन भीरवः
न घातयेयुः प्रदरं कुर्वाणास्तुमुले सति ३०
आत्मानं च स्वपक्षं च पालयन्हन्ति संयुगे
द्रव्यनाशो वधोऽकीर्तिरयशश्च पलायने ३१
अमनोज्ञासुखा वाचः पुरुषस्य पलायतः
प्रतिस्पन्दौष्ठदन्तस्य न्यस्तसर्वायुधस्य च ३२
हित्वा पलायमानस्य सहायान्प्राणसंशये

अमित्रैरनुबद्धस्य द्विषतामस्तु नस्तथा ३३
मनुष्यापसदा ह्येते ये भवन्ति पराङ्मुखाः
राशिवर्धनमात्रास्ते नैव ते प्रेत्य नो इह ३४
अमित्रा हृष्टमनसः प्रत्युद्यान्ति पलायिनम्
जयिनं सुहृदस्तात वन्दनैर्मङ्गलेन च ३५
यस्य स्म व्यसने राजन्ननुमोदन्ति शत्रवः
तदसह्यतरं दुःखमहं मन्ये वधादपि ३६
श्रियं जानीत धर्मस्य मूलं सर्वसुखस्य च
सा भीरूणां परान्याति शूरस्तामधिगच्छति ३७
ते वयं स्वर्गमिच्छन्तः संग्रामे त्यक्तजीविताः
जयन्तो वध्यमाना वा प्राप्तुमर्हाम सद्गतिम् ३८
एवं संशप्तशपथाः समभित्यक्तजीविताः
अमित्रवाहिनीं वीराः संप्रगाहन्त्यभीरवः ३९
अग्रतः पुरुषानीकमसिचर्मवतां भवेत्
पृष्ठतः शकटानीकं कलत्रं मध्यतस्तथा ४०
परेषां प्रतिघातार्थं पदातीनां च गूहनम्
अपि ह्यस्मिन्परे गृद्धा भवेयुर्ये पुरोगमाः ४१
ये पुरस्तादभिमताः सत्त्ववन्तो मनस्विनः
ते पूर्वमभिवर्तेरंस्तानन्वगितरे जनाः ४२
अपि चोद्धर्षणं कार्यं भीरूणामपि यत्नतः
स्कन्धदर्शनमात्रं तु तिष्ठेयुर्वा समीपतः ४३
संहतान्योधयेदल्पान्कामं विस्तारयेद्बहून्
सूचीमुखमनीकं स्यादल्पानां बहुभिः सह ४४
संप्रयुद्धे प्रहृष्टे वा सत्यं वा यदि वानृतम्
प्रगृह्य बाहून्क्रोशेत भग्ना भग्नाः परा इति ४५
आगतं नो मित्रबलं प्रहरध्वमभीतवत्
शब्दवन्तोऽनुधावेयुः कुर्वन्तो भैरवं रवम् ४६
क्ष्वेडाः किलकिलाः शङ्खाः क्रकचा गोविषाणिकान्
भेरीमृदङ्गपणवान्नादयेयुश्च कुञ्जरान् ४७

इति श्रीमहाभारते शान्तिपर्वणि एकाधिकशततमोऽध्यायः १०१

द्व्यधिकशततमोऽध्यायः

युधिष्ठिर उवाच
किंशीलाः किंसमुत्थानाः कथंरूपाश्च भारत
किंसंनाहाः कथंशस्त्रा जनाः स्युः संयुगेनृप १
भीष्म उवाच
यथाचरितमेवात्र शस्त्रपत्रं विधीयते
आचारादेव पुरुषस्तथा कर्मसु वर्तते २
गान्धाराः सिंधुसौवीरा नखरप्रासयोधिनः
आभीरवः सुबलिनस्तद्बलं सर्वपारगम् ३
सर्वशास्त्रेषु कुशलाः सत्त्ववन्तो ह्युशीनराः
प्राच्या मातङ्गयुद्धेषु कुशलाः शठयोधिनः ४
तथा यवनकाम्बोजा मथुरामभितश्च ये
एते नियुद्धकुशला दाक्षिणात्यासिचर्मिणः ५
सर्वत्र शूरा जायन्ते महासत्त्वा महाबलाः
प्राय एष समुद्दिष्टो लक्षणानि तु मे शृणु ६
सिंहशार्दूलवाङ्नेत्राः सिंहशार्दूलगामिनः
पारावतकुलिङ्गाक्षा सर्वे शूराः प्रमाथिनः ७
मृगस्वरा द्वीपिनेत्रा ऋषभाक्षास्तथापरे
प्रवादिनः सुचण्डाश्च क्रोधिनः किंनरीस्वनाः ८
मेघस्वनाः क्रुद्धमुखाः केचित्करभनिस्वनाः
जिह्मनासानुजङ्घाश्च दूरगा दूरपातिनः ९
बिडालकुब्जास्तनवस्तनुकेशास्तनुत्वचः
शूराश्चपलचित्ताश्च ते भवन्ति दुरासदाः १०
गोधानिमीलिताः केचिन्मृदुप्रकृतयोऽपि च
तुरंगगतिनिर्घोषास्ते नराः पारयिष्णवः ११
सुसंहताः प्रतनवो व्यूढोरस्काः सुसंस्थिताः
प्रवादितेन नृत्यन्ति हृष्यन्ति कलहेषु च १२
गम्भीराक्षा निःसृताक्षाः पिङ्गलां भ्रुकुटीमुखाः
नकुलाक्षास्तथा चैव सर्वे शूरास्तनुत्यजः १३
जिह्माक्षाः प्रललाटाश्च निर्मांसहनवोऽपि च

वक्रबाह्वङ्गुलीसक्ताः कृशा धमनिसंतताः १४
प्रविशन्त्यतिवेगेन संपरायेऽभ्युपस्थिते
वारणा इव संमत्तास्ते भवन्ति दुरासदाः १५
दीप्तस्फुटितकेशान्ताः स्थूलपार्श्वहनूमुखाः
उन्नतांसा पृथुग्रीवा विकटाः स्थूलपिण्डिका १६
उद्वृत्ताश्चैव सुग्रीवा विनता विहगा इव
पिण्डशीर्षाहिवक्त्राश्च वृषदंशमुखा इव १७
उग्रस्वना मन्युमन्तो युद्धेष्वारावसारिणः
अधर्मज्ञावलिप्ताश्च घोरा रौद्रप्रदर्शिनः १८
त्यक्तात्मानः सर्व एते अन्त्यजा ह्यनिवर्तिनः
पुरस्कार्याः सदा सैन्ये हन्यन्ते घ्नन्ति चापि ते १९
अधार्मिका भिन्नवृत्ताः साध्वेवैषां पराभवः
एवमेव प्रकुप्यन्ति राज्ञोऽप्येते ह्यभीक्ष्णशः २०
इति श्रीमहाभारते शान्तिपर्वणि द्व्यधिकशततमोऽध्यायः १०२

## त्र्यधिकशततमोऽध्यायः

युधिष्ठिर उवाच
जैत्र्या वा कानि रूपाणि भवन्ति पुरुषर्षभ
पृतनायाः प्रशस्तानि ताविहेच्छामि वेदितुम् १
भीष्म उवाच
जैत्र्या वा यानि रूपाणि भवन्ति पुरुषर्षभ
पृतनायाः प्रशस्तानि तानि वक्ष्यामि सर्वशः २
दैवं पूर्वं विकुरुते मानुषे कालचोदिते
तद्विद्वांसोऽनुपश्यन्ति ज्ञानदीर्घेण चक्षुषा ३
प्रायश्चित्तविधिं चात्र जपहोमांश्च तद्विदः
मङ्गलानि च कुर्वन्तः शमयन्त्यहितान्यपि ४
उदीर्णमनसो योधा वाहनानि च भारत
यस्यां भवन्ति सेनायां ध्रुवं तस्यां जयं वदेत् ५
अन्वेनां वायवो वान्ति तथैवेन्द्रधनूंषि च
अनुप्लवन्ते मेघाश्च तथादित्यस्य रश्मयः ६

गोमायवश्चानुलोमावडा गृध्राश्च सर्वशः
आचरेयुर्यदा सेनां तदा सिद्धिरनुत्तमा ७
प्रसन्नभाः पावक उर्ध्वरश्मिः प्रदक्षिणावर्तशिखो विधूमः
पुण्या गन्धाश्चाहुतीनां प्रवान्ति जयस्यैतद्भाविनो रूपमाहुः ८
गम्भीरशब्दाश्च महास्वनाश्च शंखाश्च भेर्यश्च नदन्ति यत्र
युयुत्सवश्चाप्रतीपा भवन्ति जयस्यैतद्भाविनो रूपमाहुः ९
इष्टा मृगाः पृष्ठतो वामतश्च संप्रस्थितानां च गमिष्यतां च
जिघांसतां दक्षिणाः सिद्धिमाहुर्ये त्वग्रतस्ते प्रतिषेधयन्ति १०
मंगल्यशब्दाः शकुना वदन्ति हंसाः क्रौञ्चाः शतपत्राश्च चाषाः
हृष्टा योधाः सत्त्ववन्तो भवन्ति जयस्यैतद्भाविनो रूपमाहुः ११
शस्त्रैः पत्रैः कवचैः केतुभिश्च सुभानुभिर्मुखवर्णैश्च यूनाम्
भ्राजिष्मती दुष्प्रतिप्रेक्षणीया येषां चमूस्तेऽभि भवन्ति शत्रून् १२
शुश्रूषवश्चानभिमानिनश्च परस्परं सौहृदमास्थिताश्च
येषां योधाः शौचमनुष्ठिताश्च जयस्यैतद्भाविनो रूपमाहुः १३
शब्दाः स्पर्शास्तथा गन्धा विचरन्ति मनःप्रियाः
धैर्यं चाविशते योधान्विजयस्य मुखं तु तत् १४
इष्टो वामः प्रविष्टस्य दक्षिणः प्रविविक्षतः
पश्चात्संसाधयत्यर्थं पुरस्तात्प्रतिषेधति १५
संभृत्य महतीं सेनां चतुरङ्गां युधिष्ठिर
साम्नैवावर्तने पूर्वं प्रयतेथास्ततो युधि १६
जघन्य एष विजयो यद्युद्धं नाम भारत
यादृच्छिको युधि जयो दैवो वेति विचारणम् १७
अपामिव महावेगस्त्रस्ता मृगगणा इव
दुर्निवार्यतमा चैव प्रभग्ना महती चमूः १८
भग्ना इत्येव भज्यन्ते विद्वांसोऽपि नकारणम्
उदारसारा महती रुरुसंघोपमा चमूः १९
परस्परज्ञाः संहृष्टास्त्यक्तप्राणाः सुनिश्चिताः
अपि पञ्चाशतिः शूरा मृद्नन्ति परवाहिनीम् २०
अथ वा पञ्च षट्सप्त सहिताः कृतनिश्चयाः
कुलीनाः पूजिताः सम्यग्विजयन्तीह शात्रवान् २१

संनिपातोः न गन्तव्यः शक्ये सति कथंचन
सान्त्वभेदप्रदानानां युद्धमुत्तरमुच्यते २२
संसर्पणाद्धि सेनाया भयं भीरून्प्रबाधते
वज्रादिव प्रज्वलितादियं क्व नु पतिष्यति २३
अभिप्रयातां समितिं ज्ञात्वा ये प्रतियान्त्यथ
तेषां स्पन्दन्ति गात्राणि योधानां विषयस्य च २४
विषयो व्यथते राजन्सर्वः सस्थाणुजङ्गमः
शस्त्रप्रतापतप्तानां मज्जा सीदति देहिनाम् २५
तेषां सान्त्वं क्रूरमिश्रं प्रणेतव्यं पुनः पुनः
संपीड्यमाना हि परे योगमायान्ति सर्वतः २६
अन्तराणां च भेदार्थं चारानभ्यवचारयेत्
यश्च तस्मात्परो राजा तेन सन्धिः प्रशस्यते २७
न हि तस्यान्यथा पीडा शक्या कर्तुं तथाविधा
यथा सार्धममित्रेण सर्वतः प्रतिबाधनम् २८
क्षमा वै साधुमाया हि न हि साध्वक्षमा सदा
क्षमायाश्चाक्षमायाश्च विद्धि पार्थ प्रयोजनम् २९
विजित्य क्षममाणस्य यशो राज्ञोऽभिवर्धते
महापराधा ह्यप्यस्मिन्विश्वसन्ति हि शत्रवः ३०
मन्यते कर्शयित्वा तु क्षमा साध्विति शम्बरः
असंतप्तं तु यद्दारु प्रत्येति प्रकृतिं पुनः ३१
नैतत्प्रशंसन्त्याचार्या न च साधु निदर्शनम्
अक्लेशेनाविनाशेन नियन्तव्याः स्वपुत्रवत् ३२
द्वेष्यो भवति भूतानामुग्रो राजा युधिष्ठिर
मृदुमप्यवमन्यन्ते तस्मादुभयभाग्भवेत् ३३
प्रहरिष्यन्प्रियं ब्रूयात्प्रहरन्नपि भारत
प्रहृत्य च कृपायेत शोचन्निव रुदन्निव ३४
न मे प्रियं यत्स हतः संप्राहैवं पुरो वचः
न चकर्थ च मे वाक्यमुच्यमानः पुनः पुनः ३५
अहो जीवितमाकाङ्क्षे नेदृशो वधमर्हति
सुदुर्लभाः सुपुरुषाः संग्रामेष्वपलायिनः ३६

कृतं ममाप्रियं तेन येनायं निहतो मृधे
इति वाचा वदन्हन्तॄन्पूजयेत रहोगतः ३७
हन्तॄणां चाहतानां च यत्कुर्युरपराधिनः
क्रोशेद्बाहुं प्रगृह्यापि चिकीर्षञ्जनसंग्रहम् ३८
एवं सर्वास्ववस्थासु सान्त्वपूर्वं समाचरन्
प्रियो भवति भूतानां धर्मज्ञो वीतभीर्नृपः ३९
विश्वासं चात्र गच्छन्ति सर्वभूतानि भारत
विश्वस्तः शक्यते भोक्तुं यथाकाममुपस्थितः ४०
तस्माद्विश्वासयेद्राजा सर्वभूतान्यमायया
सर्वतः परिरक्षेच्च यो महीं भोक्तुमिच्छति ४१
इति श्रीमहाभारते शान्तिपर्वणि त्र्यधिकशततमोऽध्यायः १०३

## चतुरधिक शततमोऽध्यायः

युधिष्ठिर उवाच
कथं मृदौ कथं तीक्ष्णे महापक्षे च पार्थिव
अरौ वर्तेत नृपतिस्तन्मे ब्रूहि पितामह १
भीष्म उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
बृहस्पतेश्च संवादमिन्द्रस्य च युधिष्ठिर २
बृहस्पतिं देवपतिरभिवाद्य कृताञ्जलि
उपसंगम्य पप्रच्छ वासवः परवीरहा ३
अहितेषु कथं ब्रह्मन्वर्तयेयमतन्द्रितः
असमुच्छिद्य चैवेनान्नियच्छेयमुपायतः ४
सेनयोर्व्यतिषङ्गेण जयः साधारणो भवेत्
किं कुर्वाणं न मां जह्याज्ज्वलिता श्रीः प्रतापिनी ५
ततो धर्मार्थकामानां कुशलः प्रतिभानवान्
राजधर्मविधानज्ञः प्रत्युवाच पुरंदरम् ६
न जातु कलहेनेच्छेन्नियन्तुमपकारिणः
बालसंसेवितं ह्येतद्यदमर्षो यदक्षमा
न शत्रुर्विवृतः कार्यो वधमस्याभिकाङ्क्षता ७

क्रोधं बलममर्षं च नियम्यात्मजमात्मनि
अमित्रमुपसेवेत विश्वस्तवदविश्वसन् ८
प्रियमेव वदेन्नित्यं नाप्रियं किंचिदाचरेत्
विरमेच्छुष्कवैरेभ्यः कण्ठायासं च वर्जयेत् ९
यथा वैतंसिको युक्तो द्विजानां सदृशस्वनः
तान्द्विजान्कुरुते वश्यांस्तथा युक्तो महीपतिः
वशं चोपनयेच्छत्रून्निहन्याच्च पुरंदर १०
न नित्यं परिभूयारीन्सुखं स्वपिति वासव
जागर्त्येव च दुष्टात्मा संकरेऽग्निरिवोत्थितः ११
न संनिपातः कर्तव्यः सामान्ये विजये सति
विश्वास्यैवोपसंन्यास्यो वशे कृत्वा रिपुः प्रभो १२
संप्रधार्य सहामात्यैर्मन्त्रविद्भिर्महात्मभिः
उपेक्षमाणोऽवज्ञाते हृदयेनापराजितः १३
अथास्य प्रहरेत्काले किंचिद्विचलिते पदे
दण्डं च दूषयेदस्य पुरुषैराप्तकारिभिः १४
आदिमध्यावसानज्ञः प्रच्छन्नं च विचारयेत्
बलानि दूषयेदस्य जानंश्चैव प्रमाणतः १५
भेदेनोपप्रदानेन संसृजन्नौषधैस्तथा
न त्वेव चेलसंसर्गं रचयेदरिभिः सह १६
दीर्घकालमपि क्षान्त्वा विहन्यादेव शात्रवान्
कालाकाङ्क्षी यामयेच्च यथा विस्रम्भमाप्नुयुः १७
न सद्योऽरीन्विनिर्हन्याद्दृष्टस्य विजयोऽज्वरः
न यः शल्यं घट्टयति नवं च कुरुते व्रणम् १८
प्राप्ते च प्रहरेत्काले न स संवर्तते पुनः
हन्तुकामस्य देवेन्द्र पुरुषस्य रिपुं प्रति १९
यः कालो हि व्यतिक्रामेत्पुरुषं कालकाङ्क्षिणम्
दुर्लभः स पुनः कालः कालधर्मचिकीर्षुणा २०
और्जस्थ्यं विजयेदेवं संगृह्णन्साधुसंमतान्
कालेन साधयेन्नित्यं नाप्राप्तेऽभिनिपीडयेत् २१
विहाय कामं क्रोधं च तथाहंकारमेव च

युक्तो विवरमन्विच्छेदहितानां पुरंदर २२
मार्दवं दण्ड आलस्यं प्रमादश्च सुरोत्तम
मायाश्च विविधाः शक्र साधयन्त्यविचक्षणम् २३
निहत्यैतानि चत्वारि मायां प्रतिविधाय च
ततः शक्नोति शत्रूणां प्रहर्तुमविचारयन् २४
यदैवैकेन शक्येत गुह्यं कर्तुं तदाचरेत्
यच्छन्ति सचिवा गुह्यं मिथो विद्रावयन्त्यपि २५
अशक्यमिति कृत्वा वा ततोऽन्यै संविदं चरेत्
ब्रह्मदण्डमदृष्टेषु दृष्टेषु चतुरङ्गिणीम् २६
भेदं च प्रथमं युञ्ज्यात्तूष्णींदण्डं तथैव च
काले प्रयोजयेद्राजा तस्मिंस्तस्मिंस्तदा तदा २७
प्रणिपातं च गच्छेत काले शत्रोर्बलीयसः
युक्तोऽस्य वधमन्विच्छेदप्रमत्तः प्रमाद्यतः २८
प्रणिपातेन दानेन वाचा मधुरया ब्रुवन्
अमित्रमुपसेवेत न तु जातु विशङ्कयेत् २९
स्थानानि शङ्कितानां च नित्यमेव विवर्जयेत्
न च तेष्वाश्वसेद्द्रुग्ध्वा जाग्रतीह निराकृताः ३०
न ह्यतो दुष्करं कर्म किंचिदस्ति सुरोत्तम
यथा विविधवृत्तानामैश्वर्यममराधिप ३१
तथा विविधशीलानामपि संभव उच्यते
यतेत योगमास्थाय मित्रामित्रानवारयन् ३२
मृदुमप्यवमन्यन्ते तीक्ष्णादुद्विजते जनः
मातीक्ष्णो मामृदुर्भूस्त्वं तीक्ष्णो भव मृदुर्भव ३३
यथा वप्रे वेगवति सर्वतःसंप्लुतोदके
नित्यं विवरणाद्बाधस्तथा राज्यं प्रमाद्यतः ३४
न बहूनभियुञ्जीत यौगपद्येन शात्रवान्
साम्ना दानेन भेदेन दण्डेन च पुरंदर ३५
एकैकमेषां निष्पिंषञ्शिष्टेषु निपुणं चरेत्
न च शक्तोऽपि मेधावी सर्वानिवारभेन्नृपः ३६
यदा स्यान्महती सेना हयनागरथाकुला

पदातियन्त्रबहुला स्वनुरक्ता षडङ्गिनी ३७
यदा बहुविधां वृद्धिं मन्यते प्रतिलोमतः
तदा विवृत्य प्रहरेद्दस्यूनामविचारयन् ३८
न साम दराडोपनिषत्प्रशस्यते न मार्दवं शत्रुषु यात्रिकं सदा
न सस्यघातो न च संकरक्रिया न चापि भूयः प्रकृतेर्विचारणा ३९
मायाविभेदानुपसर्जनानि पापं तथैव स्पशसंप्रयोगात्
आप्तैर्मनुष्यैरुपचारयेत पुरेषु राष्ट्रेषु च संप्रयुक्तः ४०
पुराणि चैषामनुसृत्य भूमिपाः पुरेषु भोगान्निखिलानिहाजयन्
पुरेषु नीतिं विहितां यथाविधि प्रयोजयन्तो बलवृत्रसूदन ४१
प्रदाय गूढानि वसूनि नाम प्रच्छिद्य भोगानवधाय च स्वान्
दुष्टाः स्वदोषैरिति कीर्तयित्वा पुरेषु राष्ट्रेषु च योजयन्ति ४२
तथैव चान्यै रतिशास्त्रवेदिभिः स्वलंकृतैः शास्त्रविधानदृष्टिभिः
सुशिक्षितैर्भाष्यकथाविशारदैः परेषु कृत्यानुपधारयस्व ४३
इन्द्र उवाच
कानि लिङ्गानि दुष्टस्य भवन्ति द्विजसत्तम
कथं दुष्टं विजानीयादेतत्पृष्टो ब्रवीहि मे ४४
बृहस्पतिरुवाच
परोक्षमगुणानाह सद्गुणानभ्यसूयति
परैर्वा कीर्त्यमानेषु तूष्णीमास्ते पराङ्मुखः ४५
तूष्णींभावेऽपि हि ज्ञानं न चेद्भवति कारणम्
विश्वासमोष्ठसंदंशं शिरसश्च प्रकम्पनम् ४६
करोत्यभीक्ष्णं संसृष्टमसंसृष्टश्च भाषते
अदृष्टितो विकुरुते दृष्ट्वा वा नाभिभाषते ४७
पृथगेत्य समश्नाति नेदमद्य यथाविधि
आसने शयने याने भावा लक्ष्या विशेषतः ४८
आर्तिरार्ते प्रिये प्रीतिरेतावन्मित्रलक्षणम्
विपरीतं तु बोद्धव्यमरिलक्षणमेव तत् ४९
एतान्येवं यथोक्तानि बुध्येथास्त्रिदशाधिप
पुरुषाणां प्रदुष्टानां स्वभावो बलवत्तरः ५०
इति दुष्टस्य विज्ञानमुक्तं ते सुरसत्तम

निशाम्य शास्त्रतत्त्वार्थं यथावदमरेश्वर ५१
भीष्म उवाच
स तद्वचः शत्रुनिबर्हणे रतस्तथा चकारावितथं बृहस्पतेः
चचार काले विजयाय चारिहा वशं च शत्रूननयत्पुरंदरः ५२
इति श्रीमहाभारते शान्तिपर्वणि चतुरधिकशततमोऽध्यायः १०४

## पञ्चाधिकशततमोऽध्यायः

युधिष्ठिर उवाच
धार्मिकोऽथानसंप्राप्य राजामात्यैः प्रबाधितः
च्युतः कोशाच्च दण्डाच्च सुखमिच्छन्कथं चरेत् १
भीष्म उवाच
अत्रायं क्षेमदर्शीयमितिहासोऽनुगीयते
तत्तेऽहं संप्रवक्ष्यामि तन्निबोध युधिष्ठिर २
क्षेमदर्शं नृपसुतं यत्र क्षीणबलं पुरा
मुनिः कालकवृक्षीय आजगामेति नः श्रुतम्
तं पप्रच्छोपसंगृह्य कृच्छ्रामापदमास्थितः ३
अर्थेषु भागी पुरुष ईहमानः पुनः पुनः
अलब्ध्वा मद्विधो राज्यं ब्रह्मन्किं कर्तुमर्हति ४
अन्यत्र मरणात्स्तेयादन्यत्र परसंश्रयात्
क्षुद्रादन्यत्र चाचारात्तन्ममाचक्ष्व सत्तम ५
व्याधिना चाभिपन्नस्य मानसेनेतरेण वा
बहुश्रुतः कृतप्रज्ञस्त्वद्विधः शरणं भवेत् ६
निर्विद्य हि नरः कामान्नियम्य सुखमेधते
त्यक्त्वा प्रीतिं च शोकं च लब्ध्वाप्रीतिमयं वसु ७
सुखमर्थाश्रयं येषामनुशोचामि तानहम्
मम ह्यर्थाः सुबहवो नष्टाः स्वप्न इवागताः ८
दुष्करं बत कुर्वन्ति महतोऽर्थास्त्यजन्ति ये
वयं त्वेनान्परित्यक्तुमसतोऽपि न शक्नुमः ९
इमामवस्थां संप्राप्तं दीनमार्तं श्रियश्च्युतम्
यदन्यत्सुखमस्तीह तद्ब्रह्मन्ननुशाधि माम् १०

कौसल्येनैवमुक्तस्तु राजपुत्रेण धीमता
मुनिः कालकवृक्षीयः प्रत्युवाच महाद्युतिः ११
पुरस्तादेव ते बुद्धिरियं कार्या विजानतः
अनित्यं सर्वमेवेदमहं च मम चास्ति यत् १२
यत्किंचिन्मन्यसेऽस्तीति सर्वं नास्तीति विद्धि तत्
एवं न व्यथते प्राज्ञः कृच्छ्रामप्यापदं गतः १३
यद्धि भूतं भविष्यच्च ध्रुवं तन्न भविष्यति
एवं विदितवेद्यस्त्वमधर्मेभ्यः प्रमोक्ष्यसे १४
यच्च पूर्वे समाहारे यच्च पूर्वतरे परे
सर्वं तन्नास्ति तच्चैव तज्ज्ञात्वा कोऽनुसंज्वरेत् १५
भूत्वा च न भवत्येतदभूत्वा च भवत्यपि
शोके न ह्यस्ति सामर्थ्यं शोकं कुर्यात्कथं नरः १६
क्व नु तेऽद्य पिता राजन्क्व नु तेऽद्य पितामहः
न त्वं पश्यसि तानद्य न त्वा पश्यन्ति तेऽपि च १७
आत्मनोऽध्रुवतां पश्यंस्तांस्त्वं किमनुशोचसि
बुद्ध्या चैवानुबुध्यस्व ध्रुवं हि न भविष्यसि १८
अहं च त्वं च नृपते शत्रवः सुहृदश्च ते
अवश्यं न भविष्यामः सर्वं च न भविष्यति १९
ये तु विंशतिवर्षा वै त्रिंशद्वर्षाश्च मानवाः
अर्वागेव हि ते सर्वे मरिष्यन्ति शरच्छतात् २०
अपि चेन्महतो वित्ताद्विप्रमुच्येत पूरुषः
नैतन्ममेति तन्मत्वा कुर्वीत प्रियमात्मनः २१
अनागतं यन्न ममेति विद्यादतिक्रान्तं यन्न ममेति विद्यात्
दिष्टं बलीय इति मन्यमानास्ते पण्डितास्तत्सतां स्थानमाहुः २२
अनाढ्याश्चापि जीवन्ति राज्यं चाप्यनुशासते
बुद्धिपौरुषसंपन्नास्त्वया तुल्याधिका जनाः २३
न च त्वमिव शोचन्ति तस्मात्त्वमपि मा शुचः
किं नु त्वं तैर्न वै श्रेयांस्तुल्यो वा बुद्धिपौरुषैः २४
राजपुत्र उवाच
यादृच्छिकं ममासीत्तद्राज्यमित्येव चिन्तये

ह्रियते सर्वमेवेदं कालेन महता द्विज २५
तस्यैवं ह्रियमाणस्य स्रोतसेव तपोधन
फलमेतत्प्रपश्यामि यथालब्धेन वर्तये २६
मुनिरुवाच
अनागतमतीतं च यथा तथ्यविनिश्चयात्
नानुशोचसि कौसल्य सर्वार्थेषु तथा भव २७
अवाप्यान्कामयस्वार्थान्नानवाप्यान्कदाचन
प्रत्युत्पन्नाननुभवन्मा शुचस्त्वमनागतान् २८
यथा लब्धोपपन्नार्थस्तथा कौसल्य रंस्यसे
कच्चिच्छुद्धस्वभावेन श्रिया हीनो न शोचसि २९
पुरस्ताद्भूतपूर्वत्वाद्धीनभाग्यो हि दुर्मतिः
धातारं गर्हते नित्यं लब्धार्थांश्च न मृष्यते ३०
अनर्हानपि चैवान्यान्मन्यते श्रीमतो जनान्
एतस्मात्कारणादेतद्दुःखं भूयोऽनुवर्तते ३१
ईर्ष्यातिच्छेदसंपन्ना राजन्पुरुषमानिनः
कच्चित्त्वं न तथा प्राज्ञ मत्सरी कोसलाधिप ३२
सहस्व श्रियमन्येषां यद्यपि त्वयि नास्ति सा
अन्यत्रापि सतीं लक्ष्मीं कुशला भुञ्जते जनाः
अभिविष्यन्दते श्रीर्हि सत्यपि द्विषतो जनात् ३३
श्रियं च पुत्रपौत्रं च मनुष्या धर्मचारिणः
त्यागधर्मविदो वीराः स्वयमेव त्यजन्त्युत ३४
बहु संकसुकं दृष्ट्वा विवित्सासाधनेन च
तथान्ये संत्यजन्त्येनं मत्वा परमदुर्लभम् ३५
त्वं पुनः प्राज्ञरूपः सन्कृपणं परितप्यसे
अकाम्यान्कामयानोऽथान्पराचीनानुपद्रुतान् ३६
तां बुद्धिमुपजिज्ञासुस्त्वमेवैनान्परित्यज
अनर्थांश्चार्थरूपेण अर्थांश्चानर्थरूपतः ३७
अर्थायैव हि केषांचिद्धननाशो भवत्युत
अनन्त्यं तं सुखं मत्वा श्रियमन्यः परीक्षते ३८
रममाणः श्रिया कश्चिन्नान्यच्छ्रेयोऽभिमन्यते

तथा तस्येहमानस्य समारम्भो विनश्यति ३९
कृच्छ्राल्लब्धमभिप्रेतं यदा कौसल्य नश्यति
तदा निर्विद्यते सोऽथात्परिभग्नक्रमो नरः ४०
धर्ममेकेऽभिपद्यन्ते कल्याणाभिजना नराः
परत्र सुखमिच्छन्तो निर्विद्येयुश्च लौकिकात् ४१
जीवितं संत्यजन्त्येके धनलोभपरा नराः
न जीवितार्थं मन्यन्ते पुरुषा हि धनादृते ४२
पश्य तेषां कृपणतां पश्य तेषामबुद्धिताम्
अध्रुवे जीविते मोहादर्थतृष्णामुपाश्रिताः ४३
संचये च विनाशान्ते मरणान्ते च जीविते
संयोगे विप्रयोगान्ते को नु विप्रणयेन्मनः ४४
धनं वा पुरुषं राजन्पुरुषो वा पुनर्धनम्
अवश्यं प्रजहात्येतत्तद्विद्वान्कोऽनुसंज्वरेत् ४५
अन्येषामपि नश्यन्ति सुहृदश्च धनानि च
पश्य बुद्ध्या मनुष्याणां राजन्नापदमात्मनः
नियच्छ यच्छ संयच्छ इन्द्रियाणि मनो गिरम् ४६
प्रतिषिद्धानवाप्येषु दुर्लभेष्वहितेषु च
प्रतिकृष्टेषु भावेषु व्यतिकृष्टेष्वसंभवे
प्रज्ञानतृप्तो विक्रान्तस्त्वद्विधो नानुशोचति ४७
अल्पमिच्छन्नचपलो मृदुर्दान्तः सुसंशितः
ब्रह्मचर्योपपन्नश्च त्वद्विधो नैव मुह्यति ४८
न त्वेव जाल्मीं कापालद्यं वृत्तिमेषितुमर्हसि
नृशंसवृत्तिं पापिष्ठां दुःखां कापुरुषोचिताम् ४९
अपि मूलफलाजीवो रमस्वैको महावने
वाग्यतः संगृहीतात्मा सर्वभूतदयान्वितः ५०
सदृशं पण्डितस्यैतदीषादन्तेन दन्तिना
यदेको रमतेऽरण्ये यच्चाप्यल्पेन तुष्यति ५१
महाह्रदः संक्षुभित आत्मनैव प्रसीदति
एतदेवंगतस्याहं सुखं पश्यामि केवलम् ५२
असंभवे श्रियो राजन्हीनस्य सचिवादिभिः

दैवे प्रतिनिविष्टे च किं श्रेयो मन्यते भवान् ५३
इति श्रीमहाभारते शान्तिपर्वणि पञ्चाधिकशततमोऽध्यायः १०५

षडधिकशततमोऽध्यायः

मुनिरुवाच
अथ चेत्पौरुषं किंचित्क्षत्रियात्मनि पश्यसि
ब्रवीमि हन्त ते नीतिं राज्यस्य प्रतिपत्तये १
तां चेच्छक्ष्यस्यनुष्ठातुं कर्म चैव करिष्यसि
शृणु सर्वमशेषेण यत्त्वां वक्ष्यामि तत्त्वतः २
आचरिष्यसि चेत्कर्म महतोऽथानवाप्स्यसि
राज्यं राज्यस्य मन्त्रं वा महतीं वा पुनः श्रियम्
यद्येतद्रोचते राजन्पुनर्ब्रूहि ब्रवीमि ते ३
राजपुत्र उवाच
ब्रवीतु भगवान्नीतिमुपपन्नोऽस्म्यहं प्रभो
अमोघमिदमद्यास्तु त्वया सह समागतम् ४
मुनिरुवाच
हित्वा स्तम्भं च मानं च क्रोधहर्षौ भयं तथा
प्रत्यमित्रं निषेवस्व प्रणिपत्य कृताञ्जलि ५
तमुत्तमेन शौचेन कर्मणा चाभिराधय
दातुमर्हति ते वृत्तिं वैदेहः सत्यसंगरः ६
प्रमाणं सर्वभूतेषु प्रग्रहं च गमिष्यसि
ततः सहायान्सोत्साहाँल्लप्स्यसेऽव्यसनाञ्शुचीन् ७
वर्तमानः स्वशास्त्रे वै संयतात्मा जितेन्द्रियः
अभ्युद्धरति चात्मानं प्रसादयति च प्रजाः ८
तेनैव त्वं धृतिमता श्रीमता चाभिसत्कृतः
प्रमाणं सर्वभूतेषु गत्वा प्रग्रहणं महत् ९
ततः सुहृद्बलं लब्ध्वा मन्त्रयित्वा सुमन्त्रितम्
अन्तरैर्भेदयित्वारीन्बिल्वं बिल्वेन शातय
परैर्वा संविदं कृत्वा बलमप्यस्य घातय १०
अलभ्या ये शुभा भावाः स्त्रियश्चाच्छादनानि च

शय्यासनानि यानानि महार्हाणि गृहाणि च ११
पक्षिणो मृगजातानि रसा गन्धाः फलानि च
तेष्वेव सज्जयेथास्त्वं यथा नश्येत्स्वयं परः १२
यद्येव प्रतिषेद्धव्यो यद्युपेक्षणमर्हति
न जातु विवृतः कार्यः शत्रुर्विनयमिच्छता १३
वसस्व परमामित्रविषये प्राज्ञसंमते
भजस्व श्वेतकाकीयैर्मित्राधममनर्थकैः १४
आरम्भांश्चास्य महतो दुष्करांस्त्वं प्रयोजय
नदीबन्धविरोधांश्च बलवद्भिर्विरुध्यताम् १५
उद्यानानि महार्हाणि शयनान्यासनानि च
प्रतिभोगसुखेनैव कोशमस्य विरेचय १६
यज्ञदानप्रशंसास्मै ब्राह्मणेष्वनुवर्ण्यताम्
ते त्वत्प्रियं करिष्यन्ति तं चेष्यन्ति वृका इव १७
असंशयं पुण्यशीलः प्राप्नोति परमां गतिम्
त्रिविष्टपे पुण्यतमं स्थानं प्राप्नोति पार्थिवः
कोशक्षये त्वमित्राणां वशं कौसल्य गच्छति १८
उभयत्र प्रसक्तस्य धर्मे चाधर्म एव च
बलार्थमूलं व्युच्छिद्येत्तेन नन्दन्ति शत्रवः १९
निन्द्यास्य मानुषं कर्म दैवमस्योपवर्णय
असंशयं दैवपरः क्षिप्रमेव विनश्यति २०
याजयैनं विश्वजिता सर्वस्वेन वियुज्यताम्
ततो गच्छत्वसिद्धार्थः पीड्यमानो महाजनम् २१
त्यागधर्मविदं मुण्डं कंचिदस्योपवर्णय
अपि त्यागं बुभूषेत कच्चिद्गच्छेदनामयम् २२
सिद्धेनौषधयोगेन सर्वशत्रुविनाशिना
नागानश्वान्मनुष्यांश्च कृतकैरुपघातय २३
एते चान्ये च बहवो दम्भयोगाः सुनिश्चिताः
शक्या विषहता कर्तुं नक्लीबेन नृपात्मज २४

इति श्रीमहाभारते शान्तिपर्वणि षडधिकशततमोऽध्यायः १०६

## सप्ताधिकशततमोऽध्यायः

राजपुत्र उवाच
न निकृत्या न दम्भेन ब्रह्मन्निच्छामि जीवितुम्
नाधर्मयुक्तानिच्छेयमर्थान्सुमहतोऽप्यहम् १
पुरस्तादेव भगवन्मयैतदपवर्जितम्
येन मां नाभिशङ्केत यद्वा कृत्स्नं हितं भवेत् २
आनृशंस्येन धर्मेण लोके ह्यस्मिञ्जिजीविषुः
नाहमेतदलं कर्तुं नैतन्मय्युपपद्यते ३
मुनिरुवाच
उपपन्नस्त्वमेतेन यथा क्षत्रिय भाषसे
प्रकृत्या ह्युपपन्नोऽसि बुद्ध्या चाद्भुतदर्शन ४
उभयोरेव वामर्थे यतिष्ये तव तस्य च
संश्लेषं वा करिष्यामि शाश्वतं ह्यनपायिनम् ५
त्वादृशं हि कुले जातमनृशंसं बहुश्रुतम्
अमात्यं को न कुर्वीत राज्यप्रणयकोविदम् ६
यस्त्वं प्रव्रजितो राज्याद्व्यसनं चोत्तमं गतः
आनृशंस्येन वृत्तेन क्षत्रियेच्छसि जीवितुम् ७
आगन्ता मद्गृहं तात वैदेहः सत्यसंगरः
यथाहं तं नियोक्ष्यामि तत्करिष्यत्यसंशयम् ८
भीष्म उवाच
तत आहूय वैदेहं मुनिर्वचनमब्रवीत्
अयं राजकुले जातो विदिताभ्यन्तरो मम ९
आदर्श इव शुद्धात्मा शारदश्चन्द्रमा इव
नास्मिन्पश्यामि वृजिनं सर्वतो मे परीक्षितः १०
तेन ते संधिरेवास्तु विश्वसास्मिन्यथा मयि
न राज्यमनमात्येन शक्यं शास्तुममित्रहन् ११
अमात्यः शूर एव स्याद्बुद्धिसंपन्न एव च
ताभ्यां चैव भयं राज्ञः पश्य राज्यस्य योजनम्
धर्मात्मनां क्वचिल्लोके नान्यास्ति गतिरीदृशी १२
कृतात्मा राजपुत्रोऽय सतां मार्गमनुष्ठितः

सुसंगृहीतस्त्वेवैष त्वया धर्मपुरोगमः
संसेव्यमानः शत्रूंस्ते गृह्णीयान्महतो गणान् १३
यद्ययं प्रतियुध्येत्त्वां स्वकर्म क्षत्रियस्य तत्
जिगीषमाणस्त्वां युद्धे पितृपैतामहे पदे १४
त्वं चापि प्रतियुध्येथा विजिगीषुव्रते स्थितः
अयुद्ध्वैव नियोगान्मे वशे वैदेह ते स्थितः १५
स त्वं धर्ममवेक्षस्व त्यक्त्वाधर्ममसांप्रतम्
न हि कामान्न च द्रोहात्स्वधर्मं हातुमर्हसि १६
नैव नित्यं जयस्तात नैव नित्यं पराजयः
तस्माद्भोजयितव्यश्च भोक्तव्यश्च परो जनः १७
आत्मन्येव हि संदृश्यावुभौ जयपराजयौ
निःशेषकारिणां तात निःशेषकरणाद्भयम् १८
इत्युक्तः प्रत्युवाचेदं वचनं ब्राह्मणर्षभम्
अभिपूज्याभिसत्कृत्य पूजार्हमनुमान्य च १९
यथा ब्रूयान्महाप्राज्ञो यथा ब्रूयाद्बहुश्रुतः
श्रेयस्कामो यथा ब्रूयादुभयोर्यत्क्षमं भवेत् २०
तथा वचनमुक्तोऽस्मि करिष्यामि च तत्तथा
एतद्धि परमं श्रेयो न मेऽत्रास्ति विचारणा २१
ततः कौसल्यमाहूय वैदेहो वाक्यमब्रवीत्
धर्मतो नीतितश्चैव बलेन च जितो मया २२
सोऽह त्वया त्वात्मगुणैर्जितः पार्थिवसत्तम
आत्मानमनवज्ञाय जितवद्वर्ततां भवान् २३
नावमन्ये च ते बुद्धिं नावमन्ये च पौरुषम्
नावमन्ये जयामीति जितवद्वर्ततां भवान् २४
यथावत्पूजितो राजन्गृहं गन्तासि मे गृहात्
ततः संपूज्य तौ विप्रं विश्वस्तौ जग्मतुर्गृहान् २५
वैदेहस्त्वथ कौसल्यं प्रवेश्य गृहमञ्जसा
पाद्यार्घ्यमधुपर्कैस्तं पूजार्हं प्रत्यपूजयत् २६
ददौ दुहितरं चास्मै रत्नानि विविधानि च
एष राज्ञां परो धर्मः सह्यौ जयपराजयौ २७

इति श्रीमहाभारते शान्तिपर्वणि सप्ताधिकशततमोऽध्यायः १०७

अष्टाधिकशततमोऽध्यायः

युधिष्ठिर उवाच
ब्राह्मणक्षत्रियविशां शूद्राणां च परंतप
धर्मो वृत्तं च वृत्तिश्च वृत्युपायफलानि च १
राज्ञां वृत्तं च कोशश्च कोशसंजननं महत्
अमात्यगुणवृद्धिश्च प्रकृतीनां च वर्धनम् २
षाड्गुण्यगुणकल्पश्च सेनानीतिस्तथैव च
दुष्टस्य च परिज्ञानमदुष्टस्य च लक्षणम् ३
समहीनाधिकानां च यथावल्लक्षणोच्चयः
मध्यमस्य च तुष्ट्यर्थं यथा स्थेयं विवर्धता ४
क्षीणसंग्रहवृत्तिश्च यथावत्संप्रकीर्तिता
लघुनादेशरूपेण ग्रन्थयोगेन भारत ५
विजिगीषोस्तथा वृत्तमुक्तं चैव तथैव ते
गणानां वृत्तिमिच्छामि श्रोतुं मतिमतां वर ६
यथा गणाः प्रवर्धन्ते न भिद्यन्ते च भारत
अरीन्हि विजिगीषन्ते सुहृदः प्राप्नुवन्ति च ७
भेदमूलो विनाशो हि गणानामुपलभ्यते
मन्त्रसंवरणं दुःखं बहूनामिति मे मतिः ८
एतदिच्छाम्यहं श्रोतुं निखिलेन परंतप
यथा च ते न भिद्येरंस्तच्च मे ब्रूहि पार्थिव ९
भीष्म उवाच
गणानां च कुलानां च राज्ञां च भरतर्षभ
वैरसंदीपनावेतौ लोभामर्षौ जनाधिप १०
लोभमेको हि वृणुते ततोऽमर्षमनन्तरम्
तौ क्षयव्ययसंयुक्तावन्योन्यजनिताश्रयौ ११
चारमन्त्रबलादानैः सामदानविभेदनैः
क्षयव्ययभयोपायैः कर्शयन्तीतरेतरम् १२
तत्र दानेन भिद्यन्ते गणाः संघातवृत्तयः

भिन्ना विमनसः सर्वे गच्छन्त्यरिवशं भयात् १३
भेदाद्गणा विनश्यन्ति भिन्नाः सूपजपाः परैः
तस्मात्संघातयोगेषु प्रयतेरन्गणाः सदा १४
अर्था ह्येवाधिगम्यन्ते संघातबलपौरुषात्
बाह्याश्च मैत्रीं कुर्वन्ति तेषु संघातवृत्तिषु १५
ज्ञानवृद्धान्प्रशंसन्तः शुश्रूषन्तः परस्परम्
विनिवृत्ताभिसंधानाः सुखमेधन्ति सर्वशः १६
धर्मिष्ठान्व्यवहारांश्च स्थापयन्तश्च शास्त्रतः
यथावत्संप्रवर्तन्तो विवर्धन्ते गणोत्तमाः १७
पुत्रान्भ्रातॄन्निगृह्णन्तो विनये च सदा रताः
विनीतांश्च प्रगृह्णन्तो विवर्धन्ते गणोत्तमाः १८
चारमन्त्रविधानेषु कोशसंनिचयेषु च
नित्ययुक्ता महाबाहो वर्धन्ते सर्वतो गणाः १९
प्राज्ञाञ्शूरान्महेष्वासान्कर्मसु स्थिरपौरुषान्
मानयन्तः सदा युक्ता विवर्धन्ते गणा नृप २०
द्रव्यवन्तश्च शूराश्च शस्त्रज्ञाः शास्त्रपारगाः
कृच्छ्रास्वापत्सु संमूढान्गणानुत्तारयन्ति ते २१
क्रोधो भेदो भयो दण्डः कर्शनं निग्रहो वधः
नयन्त्यरिवशं सद्यो गणान्भरतसत्तम २२
तस्मान्मानयितव्यास्ते गणमुख्याः प्रधानतः
लोकयात्रा समायत्ता भूयसी तेषु पार्थिव २३
मन्त्रगुप्तिः प्रधानेषु चारश्चामित्रकर्शन
न गणाः कृत्स्नशो मन्त्रं श्रोतुमर्हन्ति भारत २४
गणमुख्यैस्तु संभूय कार्यं गणहितं मिथः
पृथग्गणस्य भिन्नस्य विमतस्य ततोऽन्यथा
अर्थाः प्रत्यवसीदन्ति तथानर्था भवन्ति च २५
तेषामन्योन्यभिन्नानां स्वशक्तिमनुष्ठिताम्
निग्रहः पण्डितैः कार्यः क्षिप्रमेव प्रधानतः २६
कुलेषु कलहा जाताः कुलवृद्धैरुपेक्षिताः
गोत्रस्य राजन्कुर्वन्ति गणसंभेदकारिकाम् २७

आभ्यन्तरं भयं रक्ष्यं सुरक्ष्यं बाह्यतो भयम्
आभ्यन्तराद्भयं जातं सद्यो मूलं निकृन्तति २८
अकस्मात्क्रोधलोभाद्वा मोहाद्वापि स्वभावजात्
अन्योन्यं नाभिभाषन्ते तत्पराभवलक्षणम् २९
जात्या च सदृशाः सर्वे कुलेन सदृशास्तथा
न तु शौर्येण बुद्ध्या वा रूपद्रव्येण वा पुनः ३०
भेदाच्चैव प्रमादाच्च नाम्यन्ते रिपुभिर्गणाः
तस्मात्संघातमेवाहुर्गणानां शरणं महत् ३१
इति श्रीमहाभारते शान्तिपर्वणि अष्टाधिकशततमोऽध्यायः १०८

## नवाधिकशततमोऽध्यायः

युधिष्ठिर उवाच
महानयं धर्मपथो बहुशाखश्च भारत
किं स्विदेवेह धर्माणामनुष्ठेयतमं मतम् १
किं कार्यं सर्वधर्माणां गरीयो भवतो मतम्
यथायं पुरुषो धर्ममिह च प्रेत्य चाप्नुयात् २
भीष्म उवाच
मातापित्रोर्गुरूणां च पूजा बहुमता मम
अत्र युक्तो नरो लोकान्यशश्च महदश्नुते ३
यदेते ह्यभिजानीयुः कर्म तात सुपूजिताः
धर्म्यं धर्मविरुद्धं वा तत्कर्तव्यं युधिष्ठिर ४
न तैरनभ्यनुज्ञातो धर्ममन्यं प्रकल्पयेत्
यमेतेऽभ्यनुजानीयुः स धर्म इति निश्चयः ५
एत एव त्रयो लोका एत एवाश्रमास्त्रयः
एत एव त्रयो वेदा एत एव त्रयोऽग्नयः ६
पिता ह्यग्निर्गार्हपत्यो माताग्निर्दक्षिणः स्मृतः
गुरुराहवनीयस्तु साग्नित्रेता गरीयसी ७
त्रिष्वप्रमाद्यन्नेतेषु त्रीँल्लोकानवजेष्यसि
पितृवृत्त्या त्विमं लोकं मातृवृत्त्या तथापरम्
ब्रह्मलोकं गुरोर्वृत्त्या नित्यमेव चरिष्यसि ८

सम्यगेतेषु वर्तस्व त्रिषु लोकेषु भारत
यशः प्राप्स्यसि भद्रं ते धर्मं च सुमहाफलम् ९
नैतानतिशयेज्ञातु नात्यश्नीयान्न दूषयेत्
नित्यं परिचरेच्चैव तद्वै सुकृतमुत्तमम्
कीर्तिं पुरायं यशो लोकान्प्राप्स्यसे च जनाधिप १०
सर्वे तस्यादृता लोका यस्यैते त्रय ग्रादृताः
ग्रनादृतास्तु यस्यैते सर्वास्तस्याफलाः क्रियाः ११
नैवायं न परो लोकस्तस्य चैव परन्तप
ग्रमानिता नित्यमेव यस्यैते गुरवस्त्रयः १२
न चास्मिन्न परे लोके यशस्तस्य प्रकाशते
न चान्यदपि कल्याणं पारत्रं समुदाहृतम् १३
तेभ्य एव तु तत्सर्वं कृत्यया विसृजाम्यहम्
तदासीन्मे शतगुणं सहस्रगुणमेव च
तस्मान्मे संप्रकाशन्ते त्रयो लोका युधिष्ठिर १४
दशैव तु सदाचार्यः श्रोत्रियानतिरिच्यते
दशाचार्यानुपाध्याय उपाध्यायान्पिता दश १५
पितॄन्दश तु मातैका सर्वां वा पृथिवीमपि
गुरुत्वेनाभिभवति नास्ति मातृसमो गुरुः
गुरुर्गरीयान्पितृतो मातृतश्चेति मे मतिः १६
उभौ हि मातापितरौ जन्मनि व्युपयुज्यतः
शरीरमेतौ सृजतः पिता माता च भारत
ग्राचार्यशिष्टा या जातिः सा दिव्या साजरामरा १७
ग्रवध्या हि सदा माता पिता चाप्यपकारिणौ
न संदुष्यति तत्कृत्वा न च ते दूषयन्ति तम्
धर्माय यतमानानां विदुर्देवाः सहर्षिभिः १८
य ग्रावृणोत्यवितथेन कर्णावृतं ब्रुवन्नमृतं संप्रयच्छन्
तं वै मन्ये पितरं मातरं च तस्मै न द्रुह्येत्कृतमस्य जानन् १९
विद्यां श्रुत्वा ये गुरुं नाद्रियन्ते प्रत्यासन्नं मनसा कर्मणा वा
यथैव ते गुरुभिर्भावनीयास्तथा तेषां गुरवोऽप्यर्चनीयाः २०
तस्मात्पूजयितव्याश्च संविभज्याश्च यत्नतः

गुरवोऽचयितव्याश्च पुराणं धर्ममिच्छता २१
येन प्रीताश्च पितरस्तेन प्रीतः पितामहः
प्रीणाति मातरं येन पृथिवी तेन पूजिता २२
येन प्रीणात्युपाध्यायं तेन स्याद्ब्रह्म पूजितम्
मातृतः पितृतश्चैव तस्मात्पूज्यतमो गुरुः
ऋषयश्च हि देवाश्च प्रीयन्ते पितृभिः सह २३
न केनचन वृत्तेन ह्यवज्ञेयो गुरुर्भवेत्
न च माता न पिता तादृशो यादृशो गुरुः २४
न तेऽवमानमर्हन्ति न च ते दूषयन्ति तम्
गुरूणामेव सत्कारं विदुर्देवाः सहर्षिभिः २५
उपाध्यायं पितरं मातरं च येऽभिद्रुह्यन्ति मनसा कर्मणा वा
तेषां पापं भ्रूणहत्याविशिष्टं तस्मान्नान्यः पापकृदस्ति लोके २६
मित्रद्रुहः कृतघ्नस्य स्त्रीघ्नस्य पिशुनस्य च
चतुर्णां वयमेतेषां निष्कृतिं नानुशुश्रुमः २७
एतत्सर्वमतिदेशेन सृष्टं यत्कर्तव्यं पुरुषेणेह लोके
एतच्छ्रेयो नान्यदस्माद्विशिष्टं सर्वान्धर्माननुसृत्यैतदुक्तम् २८
इति श्रीमहाभारते शान्तिपर्वणि नवाधिकशततमोऽध्यायः १०९

## दशाधिक शततमोऽध्यायः

युधिष्ठिर उवाच
कथं धर्मे स्थातुमिच्छन्नरो वर्तेत भारत
विद्वञ्जिज्ञासमानाय प्रब्रूहि भरतर्षभ १
सत्यं चैवानृतं चोभे लोकानावृत्य तिष्ठतः
तयोः किमाचरेद्राजन्पुरुषो धर्मनिश्चितः २
किं स्वित्सत्यं किमनृतं किं स्विद्धर्म्यं सनातनम्
कस्मिन्काले वदेत्सत्यं कस्मिन्कालेऽनृतं वदेत् ३
भीष्म उवाच
सत्यस्य वचनं साधु न सत्याद्विद्यते परम्
यद्भूलोके सुदुर्ज्ञातं तत्ते वक्ष्यामि भारत ४
भवेत्सत्यं न वक्तव्यं वक्तव्यमनृतं भवेत्

यत्रानृतं भवेत्सत्यं सत्यं वाप्यनृतं भवेत् ५
तादृशे मुह्यते बालो यत्र सत्यमनिष्ठितम्
सत्यानृते विनिश्चित्य ततो भवति धर्मवित् ६
अप्यनार्योऽकृतप्रज्ञः पुरुषोऽपि सुदारुणः
सुमहत्प्राप्नुयात्पुण्यं बलाकोऽन्धवधादिव ७
किमाश्चर्यं च यन्मूढो धर्मकामोऽप्यधर्मवित्
सुमहत्प्राप्नुयात्पापं गङ्गायामिव कौशिकः ८
तादृशोऽयमनुप्रश्नो यत्र धर्मः सुदुर्वचः
दुष्करः प्रतिसंख्यातुं तर्केणात्र व्यवस्यति ९
प्रभावार्थाय भूतानां धर्मप्रवचनं कृतम्
यत्स्यादहिंसासंयुक्तं स धर्म इति निश्चयः १०
धारणाद्धर्म इत्याहुर्धर्मेण विधृताः प्रजाः
यत्स्याद्धारणसंयुक्तं स धर्म इति निश्चयः ११
श्रुतिधर्म इति ह्येके नेत्याहुरपरे जनाः
न तु तत्प्रत्यसूयामो न हि सर्वं विधीयते १२
येऽन्यायेन जिहीर्षन्तो धनमिच्छन्ति कर्हिचित्
तेभ्यस्तन्न तदाख्येयं स धर्म इति निश्चयः १३
अकूजनेन चेन्मोक्षो नात्र कूजेत्कथंचन
अवश्यं कूजितव्यं वा शङ्केरन्वाप्यकूजनात् १४
श्रेयस्तत्रानृतं वक्तुं सत्यादिति विचारितम्
यः पापैः सह संबन्धान्मुच्यते शपथादिति १५
न च तेभ्यो धनं देयं शक्ये सति कथंचन
पापेभ्यो हि धनं दत्तं दातारमपि पीडयेत् १६
स्वशरीरोपरोधेन वरमादातुमिच्छतः
सत्यसंप्रतिपत्त्यर्थं ये ब्रूयुः साक्षिणः क्वचित्
अनुक्त्वा तत्र तद्वाच्यं सर्वे तेऽनृतवादिनः १७
प्राणात्यये विवाहे च वक्तव्यमनृतं भवेत्
अर्थस्य रक्षणार्थाय परेषां धर्मकारणात्
परेषां सिद्धिमाकाङ्क्षन्नीचः स्याद्धर्मभिक्षुकः १८
प्रतिश्रुत्य तु दातव्यं श्वःकार्यस्तु बलात्कृतः

यः कश्चिद्धर्मसमयात्प्रच्युतोऽधर्ममास्थितः १९
शठः स्वधर्ममुत्सृज्य तमिच्छेदुपजीवितुम्
सर्वोपायैर्निहन्तव्यः पापो निकृतिजीवनः २०
धनमित्येव पापानां सर्वेषामिह निश्चयः
येऽविषह्या ह्यसंभोज्या निकृत्या पतनं गताः २१
च्युता देवमनुष्येभ्यो यथा प्रेतास्तथैव ते
धनादानाद्दुःखतरं जीविताद्विप्रयोजनम् २२
अयं ते रोचतां धर्म इति वाच्यः प्रयत्नतः
न कश्चिदस्ति पापानां धर्म इत्येष निश्चयः २३
तथागतं च वो हन्यान्नासौ पापेन लिप्यते
स्वकर्मणा हतं हन्ति हत एव स हन्यते
तेषु यः समयं कश्चित्कुर्वीत हतबुद्धिषु २४
यथा काकश्च गृध्रश्च तथैवोपधिजीविनः
उर्ध्वं देहविमोक्षान्ते भवन्त्येतासु योनिषु २५
यस्मिन्यथा वर्तते यो मनुष्यस्तस्मिंस्तथा वर्तितव्यं स धर्मः
मायाचारो मायया वर्तितव्यः साध्वाचारः साधुना प्रत्युदेयः २६
इति श्रीमहाभारते शान्तिपर्वणि दशाधिकशततमोऽध्यायः ११०

## एकादशाधिक शततमोऽध्यायः

युधिष्ठिर उवाच
क्लिश्यमानेषु भूतेषु तैस्तैर्भावैस्ततस्ततः
दुर्गाण्यतितरेद्येन तन्मे ब्रूहि पितामह १
भीष्म उवाच
आश्रमेषु यथोक्तेषु यथोक्तं ये द्विजातयः
वर्तन्ते संयतात्मानो दुर्गाण्यतितरन्ति ते २
ये दम्भान्न जपन्ति स्म येषां वृत्तिश्च संवृता
विषयांश्च निगृह्णन्ति दुर्गाण्यतितरन्ति ते ३
वासयन्त्यतिथीन्नित्यं नित्यं ये चानसूयकाः
नित्यं स्वाध्यायशीलाश्च दुर्गाण्यतितरन्ति ते ४
मातापित्रोश्च ये वृत्तिं वर्तन्ते धर्मकोविदाः

वर्जयन्ति दिवास्वप्नं दुर्गाण्यतितरन्ति ते ५
स्वेषु दारेषु वर्तन्ते न्यायवृत्तेष्वृतावृतौ
अग्निहोत्रपराः सन्तो दुर्गाण्यतितरन्ति ते ६
ये न लोभान्नयन्त्यर्थान्राजानो रजसावृताः
विषयान्परिरक्षन्तो दुर्गाण्यतितरन्ति ते ७
आहवेषु च ये शूरास्त्यक्त्वा मरणजं भयम्
धर्मेण जयमिच्छन्तो दुर्गाण्यतितरन्ति ते ८
ये पापानि न कुर्वन्ति कर्मणा मनसा गिरा
निक्षिप्तदण्डा भूतेषु दुर्गाण्यतितरन्ति ते ९
ये वदन्तीह सत्यानि प्राणत्यागेऽप्युपस्थिते
प्रमाणभूता भूतानां दुर्गाण्यतितरन्ति ते १०
अनध्यायेषु ये विप्राः स्वाध्यायं नैव कुर्वते
तपोनित्याः सुतपसो दुर्गाण्यतितरन्ति ते ११
कर्माण्यकुहकार्थानि येषां वाचश्च सूनृताः
येषामर्थाश्च साध्वर्था दुर्गाण्यतितरन्ति ते १२
ये तपश्च तपस्यन्ति कौमारब्रह्मचारिणः
विद्यावेदव्रतस्नाता दुर्गाण्यतितरन्ति ते १३
ये च संशान्तरजसः संशान्ततमसश्च ये
सत्ये स्थिता महात्मानो दुर्गाण्यतितरन्ति ते १४
येषां न कश्चित्त्रसति त्रसन्ति न च कस्यचित्
येषामात्मसमो लोको दुर्गाण्यतितरन्ति ते १५
परश्रिया न तप्यन्ते ये सन्तः पुरुषर्षभाः
ग्राम्यादन्नान्निवृत्ताश्च दुर्गाण्यतितरन्ति ते १६
सर्वान्देवान्नमस्यन्ति सर्वान्धर्मांश्च शृण्वते
ये श्रद्दधाना दान्ताश्च दुर्गाण्यतितरन्ति ते १७
ये न मानितमिच्छन्ति मानयन्ति च ये परम्
मान्यमाना न मन्यन्ते दुर्गाण्यतितरन्ति ते १८
ये श्राद्धानि च कुर्वन्ति तिथ्यां तिथ्यां प्रजार्थिनः
सुविशुद्धेन मनसा दुर्गाण्यतितरन्ति ते १९
ये क्रोधं नैव कुर्वन्ति क्रुद्धान्संशमयन्ति च

न च कुप्यन्ति भृत्येभ्यो दुर्गाण्यतितरन्ति ते २०
मधु मांसं च ये नित्यं वर्जयन्तीह मानवाः
जन्मप्रभृति मद्यं च दुर्गाण्यतितरन्ति ते २१
यात्रार्थं भोजनं येषां संतानार्थं च मैथुनम्
वाक्सत्यवचनार्थाय दुर्गाण्यतितरन्ति ते २२
ईश्वरं सर्वभूतानां जगतः प्रभवाप्ययम्
भक्ता नारायणं ये च दुर्गाण्यतितरन्ति ते २३
य एष रक्तपद्माक्षः पीतवासा महाभुजः
सुहृद्भ्राता च मित्रं च संबन्धी च तवाच्युतः २४
य इमान्सकलाँल्लोकांश्चर्मवत्परिवेष्टयेत्
इच्छन्प्रभुरचिन्त्यात्मा गोविन्दः पुरुषोत्तमः २५
स्थितः प्रियहिते जिष्णोः स एव पुरुषर्षभ
राजंस्तव च दुर्धर्षो वैकुण्ठः पुरुषोत्तमः २६
य एनं संश्रयन्तीह भक्त्या नारायणं हरिम्
ते तरन्तीह दुर्गाणि न मेऽत्रास्ति विचारणा २७
दुर्गातितरणं ये च पठन्ति श्रावयन्ति च
पाठयन्ति च विप्रेभ्यो दुर्गाण्यतितरन्ति ते २८
इति कृत्यसमुद्देशः कीर्तितस्ते मयानघ
संतरेद्येन दुर्गाणि परत्रेह च मानवः २९
इति श्रीमहाभारते शान्तिपर्वणि एकादशाधिकशततमोऽध्यायः १११

## द्वादशाधिक शततमोऽध्यायः

युधिष्ठिर उवाच
असौम्याः सौम्यरूपेण सौम्याश्चासौम्यदर्शिनः
ईदृशान्पुरुषांस्तात कथं विद्यामहे वयम् १
भीष्म उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
व्याघ्रगोमायुसंवादं तं निबोध युधिष्ठिर २
पुरिकायां पुरि पुरा श्रीमत्यां पौरिको नृपः
परहिंसारुचिः क्रूरो बभूव पुरुषाधमः ३

स त्वायुषि परिक्षीणे जगामानीप्सितां गतिम्
गोमायुत्वं च संप्राप्तो दूषितः पूर्वकर्मणा ४
संस्मृत्य पूर्वजातिं स निर्वेदं परमं गतः
न भक्षयति मांसानि परैरुपहृतान्यपि ५
अहिंस्रः सर्वभूतेषु सत्यवाक्सुदृढव्रतः
चकार च यथाकाममाहारं पतितैः फलैः ६
श्मशाने तस्य चावासो गोमायोः संमतोऽभवत्
जन्मभूम्यनुरोधाच्च नान्यद्वासमरोचयत् ७
तस्य शौचममृष्यन्तः सर्वे ते सहजातयः
चालयन्ति स्म तां बुद्धिं वचनैः प्रश्रयोत्तरैः ८
वसन्पितृवने रौद्रे शौचं लप्सितुमिच्छसि
इयं विप्रतिपत्तिस्ते यदा त्वं पिशिताशनः ९
तत्समो वा भवास्माभिर्भक्ष्यान्दास्यामहे वयम्
भुङ्क्ष्व शौचं परित्यज्य यद्धि भुक्तं तदस्ति ते १०
इति तेषां वचः श्रुत्वा प्रत्युवाच समाहितः
मधुरैः प्रश्रितैर्वाक्यैर्हेतुमद्भिरनिष्ठुरैः ११
अप्रमाणं प्रसूतिर्मे शीलतः क्रियते कुलम्
प्रार्थयिष्ये तु तत्कर्म येन विस्तीर्यते यशः १२
श्मशाने यदि वासो मे समाधिर्मे निशम्यताम्
आत्मा फलति कर्माति नाश्रमो धर्मलक्षणम् १३
आश्रमे यो द्विजं हन्याद्गां वा दद्यादनाश्रमे
किं नु तत्पातकं न स्यात्तद्वा दत्तं वृथा भवेत् १४
भवन्तः सर्वलोभेन केवलं भक्षणे रताः
अनुबन्धे तु ये दोषास्तान्न पश्यन्ति मोहिताः १५
अप्रत्ययकृतां गर्ह्यामर्थापनयदूषिताम्
इह चामुत्र चानिष्टां तस्माद्वृत्तिं न रोचये १६
तं शुचिं पण्डितं मत्वा शार्दूलः ख्यातविक्रमः
कृत्वात्मसदृशां पूजां साचिव्येऽवर्धयत्स्वयम् १७
सौम्य विज्ञातरूपस्त्वं गच्छ यात्रां मया सह
व्रियन्तामीप्सिता भोगाः परिहार्याश्च पुष्कलाः १८

तीक्ष्णा वयमिति ख्याता भवतो ज्ञापयामहे
मृदुपूर्वं घातिनस्ते श्रियश्चाधिगमिष्यति १९
अथ संपूज्य तद्वाक्यं मृगेन्द्रस्य महात्मनः
गोमायुः प्रश्रितं वाक्यं बभाषे किंचिदानतः २०
सदृशं मृगराजैतत्तव वाक्यं मदन्तरे
यत्सहायान्मृगयसे धर्मार्थकुशलाञ्शुचीन् २१
न शक्यमनमात्येन महत्त्वमनुशासितुम्
दुष्टामात्येन वा वीर शरीरपरिपन्थिना २२
सहायाननुरक्तांस्तु यतेतानुपसंहितान्
परस्परमसंघुष्टान्विजिगीषूनलोलुपान् २३
तानतीतोपधान्प्राज्ञान्हिते युक्तान्मनस्विनः
पूजयेथा महाभागान्यथाचार्यान्यथा पितॄन् २४
न त्वेवं मम संतोषाद्रोचतेऽन्यन्मृगाधिप
न कामये सुखान्भोगानैश्वर्यं वा त्वदाश्रयम् २५
न योक्ष्यति हि मे शीलं तव भृत्यै पुरातनैः
ते त्वां विभेदयिष्यन्ति दुःखशीला मदन्तरे २६
संश्रयः श्लाघनीयस्त्वमन्येषामपि भास्वताम्
कृतात्मा सुमहाभागः पापकेष्वप्यदारुणः २७
दीर्घदर्शी महोत्साहः स्थूललक्ष्यो महाबलः
कृती चामोघकर्तासि भाव्यैश्च समलंकृतः २८
किं तु स्वेनास्मि संतुष्टो दुःखा वृत्तिरनुष्ठिता
सेवायाश्चापि नाभिज्ञः स्वच्छन्देन वनेचरः २९
राजोपक्रोशदोषाश्च सर्वे संश्रयवासिनाम्
वनचर्या च निःसङ्गा निर्भया निरवग्रहा ३०
नृपेणाहूयमानस्य यत्तिष्ठति भयं हृदि
न तत्तिष्ठति तुष्टानां वने मूलफलाशिनाम् ३१
पानीयं वा निरायासं स्वाद्वन्नं वा भयोत्तरम्
विचार्य खलु पश्यामि तत्सुखं यत्र निर्वृतिः ३२
अपराधैर्न तावन्तो भृत्याः शिष्टाः नराधिपैः
उपघातैर्यथा भृत्या दूषिता निधनं गताः ३३

यदि त्वेतन्मया कार्यं मृगेन्द्र यदि मन्यते
समयं कृतमिच्छामि वर्तितव्यं यथा मयि ३४
मदीया माननीयास्ते श्रोतव्यं च हितं वचः
कल्पिता या च ते वृत्तिः सा भवेत्तव सुस्थिरा ३५
न मन्त्रयेयमन्यैस्ते सचिवैः सह कर्हिचित्
नीतिमन्तः परीप्सन्तो वृथा ब्रूयुः परे मयि ३६
एक एकेन संगम्य रहो ब्रूयां हितं तव
न च ते ज्ञातिकार्येषु प्रष्टव्योऽह हिताहिते ३७
मया संमन्त्र्य पश्चाच्च न हिंस्याः सचिवास्त्वया
मदीयानां च कुपितो मा त्वं दण्डं निपातयेः ३८
एवमस्त्विति तेनासौ मृगेन्द्रेणाभिपूजितः
प्राप्तवान्मतिसाचिव्यं गोमायुर्व्याघ्रयोनितः ३९
तं तथा सुकृतं दृष्ट्वा युज्यमानं च कर्मणि
प्राद्विषन्कृतसंघाताः पूर्वभृत्या मुहुर्मुहुः ४०
मित्रबुद्ध्या च गोमायुं सान्त्वयित्वा प्रवेश्य च
दोषेषु समतां नेतुमैच्छन्नशुभबुद्धयः ४१
अन्यथा ह्युचिताः पूर्वं परद्रव्यापहारिणः
अशक्ताः किंचिदादातुं द्रव्यं गोमायुयन्त्रिताः ४२
व्युत्थानं चात्र काङ्क्षद्भिः कथाभिः प्रविलोभ्यते
धनेन महता चैव बुद्धिरस्य विलोभ्यते ४३
न चापि स महाप्राज्ञस्तस्माद्धैर्याच्चचाल ह
अथास्य समयं कृत्वा विनाशाय स्थिताः परे ४४
ईप्सितं तु मृगेन्द्रस्य मांसं यत्तत्र संस्कृतम्
अपनीय स्वयं तद्धि तैर्न्यस्तं तस्य वेश्मनि ४५
यदर्थं चाप्यपहृतं येन यच्चैव मन्त्रितम्
तस्य तद्विदितं सर्वं कारणार्थं च मर्षितम् ४६
समयोऽय कृतस्तेन साचिव्यमुपगच्छता
नोपघातस्त्वया ग्राह्यो राजन्मैत्रीमिहेच्छता ४७
भोजने चोपहर्तव्ये तन्मांसं न स्म दृश्यते
मृगराजेन चाज्ञप्तं मृग्यतां चोर इत्युत ४८

कृतकैश्चापि तन्मांसं मृगेन्द्रायोपवर्णितम्
सचिवेनोपनीतं ते विदुषा प्राज्ञमानिना ४९
सरोषस्त्वथ शार्दूलः श्रुत्वा गोमायुचापलम्
बभूवामर्षितो राजा वधं चास्याभ्यरोचयत् ५०
छिद्रं तु तस्य तद्दृष्ट्वा प्रोचुस्ते पूर्वमन्त्रिणः
सर्वेषामेव सोऽस्माकं वृत्तिभङ्गेषु वर्तते ५१
इदं चास्येदृशं कर्म वाल्लभ्येन तु रक्ष्यते
श्रुतश्च स्वामिना पूर्वं यादृशो नैव तादृशः ५२
वाङ्मात्रेणैव धर्मिष्ठः स्वभावेन तु दारुणः
धर्मच्छद्मा ह्ययं पापो वृथाचारपरिग्रहः
कार्यार्थं भोजनार्थेषु व्रतेषु कृतवाञ्श्रमम् ५३
मांसापनयनं ज्ञात्वा व्याघ्रस्तेषां तु तद्वचः
आज्ञापयामास तदा गोमायुर्वध्यतामिति ५४
शार्दूलवचनं श्रुत्वा शार्दूलजननी ततः
मृगराजं हितैर्वाक्यैः संबोधयितुमागमत् ५५
पुत्र नैतत्त्वया ग्राह्यं कपटारम्भसंवृतम्
कर्मसंघर्षजैर्दोषैर्दुष्यत्यशुचिभिः शुचिः ५६
नोच्छ्रितं सहते कश्चित्प्रक्रिया वैरकारिका
शुचेरपि हि युक्तस्य दोष एव निपात्यते ५७
लुब्धानां शुचयो द्वेष्याः कातराणां तरस्विनः
मूर्खाणां पण्डिता द्वेष्या दरिद्राणां महाधनाः
अधार्मिकाणां धर्मिष्ठा विरूपाणां सुरूपकाः ५८
बहवः पण्डिता लुब्धाः सर्वे मायोपजीविनः
कुर्युर्दोषमदोषस्य बृहस्पतिमतेरपि ५९
शून्यात्तच्च गृहान्मांसं यदद्यापहृतं तव
नेच्छते दीयमानं च साधु तावद्विमृश्यताम् ६०
असत्याः सत्यसंकाशाः सत्याश्चासत्यदर्शिनः
दृश्यन्ते विविधा भावास्तेषु युक्तं परीक्षणम् ६१
तलवद्दृश्यते व्योम खद्योतो हव्यवाडिव
न चैवास्ति तलं व्योम्नि न खद्योते हुताशनः ६२

तस्मात्प्रत्यक्षदृष्टोऽपि युक्तमर्थः परीक्षितुम्
परीक्ष्य ज्ञापयन्ह्यर्थान्न पश्चात्परितप्यते ६३
न दुष्करमिदं पुत्र यत्प्रभुर्घातयेत्परम्
श्लाघनीया च वर्या च लोके प्रभवतां क्षमा ६४
स्थापितोऽय पुत्र त्वया सामन्तेष्वधि विश्रुतः
दुःखेनासाद्यते पात्रं धार्यतामेष ते सुहृत् ६५
दूषितं परदोषैर्हि गृह्णीते योऽन्यथा शुचिम्
स्वयं संदूषितामात्यः क्षिप्रमेव विनश्यति ६६
तस्मादथारिसंघाताद्गोमायोः कश्चिदागतः
धर्मात्मा तेन चाख्यातं यथैतत्कपटं कृतम् ६७
ततो विज्ञातचारित्रः सत्कृत्य स विमोक्षितः
परिष्वक्तश्च सस्नेहं मृगेन्द्रेण पुनः पुनः ६८
अनुज्ञाप्य मृगेन्द्रं तु गोमायुर्नीतिशास्त्रवित्
तेनामर्षेण संतप्तः प्रायमासितुमैच्छत ६९
शार्दूलस्तत्र गोमायुं स्नेहात्प्रस्रुतलोचनः
अवारयत्स धर्मिष्ठं पूजया प्रतिपूजयन् ७०
तं स गोमायुरालोक्य स्नेहादागतसंभ्रमम्
बभाषे प्रणतो वाक्यं बाष्पगद्गदया गिरा ७१
पूजितोऽह त्वया पूर्वं पश्चाच्चैव विमानितः
परेषामास्पदं नीतो वस्तुं नार्हाम्यहं त्वयि ७२
स्वसंतुष्टाश्च्युताः स्थानान्मानात्प्रत्यवरोपिताः
स्वयं चोपहृता भृत्या ये चाप्युपहताः परैः ७३
परिक्षीणाश्च लुब्धाश्च क्रूराः काराभितापिताः
हृतस्वा मानिनो ये च त्यक्तोपात्ता महेप्सवः ७४
संतापिताश्च ये केचिद्व्यसनौघप्रतीक्षिणः
अन्तर्हिताः सोपहिताः सर्वे ते परसाधनाः ७५
अवमानेन युक्तस्य स्थापितस्य च मे पुनः
कथं यास्यसि विश्वासमहमेष्यामि वा पुनः ७६
समर्थ इति संगृह्य स्थापयित्वा परीक्ष्य च
कृतं च समयं भित्त्वा त्वयाहमवमानितः ७७

प्रथमं यः समाख्यातः शीलवानिति संसदि
न वाच्यं तस्य वैगुण्यं प्रतिज्ञां परिरक्षता ७८
एवं चावमतस्येह विश्वासं किं प्रयास्यसि
त्वयि चैव ह्यविश्वासे ममोद्वेगो भविष्यति ७९
शङ्कितस्त्वमहं भीतः परे छिद्रानुदर्शिनः
अस्निग्धाश्चैव दुस्तोषाः कर्म चैतद्बहुच्छलम् ८०
दुःखेन श्लेष्यते भिन्नं श्लिष्टं दुःखेन भिद्यते
भिन्नश्लिष्टा तु या प्रीतिर्न सा स्नेहेन वर्तते ८१
कश्चिदेव हि भीतस्तु दृश्यते न परात्मनोः
कार्यापेक्षा हि वर्तन्ते भावां स्निग्धास्तु दुर्लभाः ८२
सुदुःखं पुरुषज्ञानं चित्तं ह्येषां चलाचलम्
समर्थो वाप्यशक्तो वा शतेष्वेकोऽधिगम्यते ८३
अकस्मात्प्रक्रिया नृणामकस्माच्चापकर्षणम्
शुभाशुभे महत्त्वं च प्रकर्तुं बद्धिलाघवात् ८४
एवं बहुविधं सान्त्वमुक्त्वा धर्मार्थहेतुमत्
प्रसादयित्वा राजानं गोमायुर्वनमभ्यगात् ८५
अगृह्यानुनयं तस्य मृगेन्द्रस्य स बुद्धिमान्
गोमायुः प्रायमासीनस्त्यक्त्वा देहं दिवं ययौ ८६
इति श्रीमहाभारते शान्तिपर्वणि द्वादशाधिकशततमोऽध्यायः ११२

## त्रयोदशाधिकशततमोऽध्यायः

युधिष्ठिर उवाच
किं पार्थिवेन कर्तव्यं किं च कृत्वा सुखी भवेत्
तन्ममाचक्ष्व तत्त्वेन सर्वं धर्मभृतां वर १
भीष्म उवाच
हन्त तेऽह प्रवक्ष्यामि शृणु कार्यैकनिश्चयम्
यथा राज्ञेह कर्तव्यं यच्च कृत्वा सुखी भवेत् २
न त्वेवं वर्तितव्यं स्म यथेदमनुशुश्रुमः
उष्ट्रस्य सुमहद्वृत्तं तन्निबोध युधिष्ठिर ३
जातिस्मरो महानुष्ट्रः प्राजापत्ययुगोद्भवः

तपः सुमहदातिष्ठदरण्ये संशितव्रतः ४
तपसस्तस्य चान्ते वै प्रीतिमानभवत्प्रभुः
वरेण छन्दयामास ततश्चैनं पितामहः ५
उष्ट्र उवाच
भगवंस्त्वत्प्रसादान्मे दीर्घा ग्रीवा भवेदियम्
योजनानां शतं साग्रं या गच्छेच्चरितुं विभो ६
भीष्म उवाच
एवमस्त्विति चोक्तः स वरदेन महात्मना
प्रतिलभ्य वरं श्रेष्ठं ययावुष्ट्रः स्वकं वनम् ७
स चकार तदालस्यं वरदानात्स दुर्मतिः
न चैच्छच्चरितुं गन्तुं दुरात्मा कालमोहितः ८
स कदाचित्प्रसार्यैवं तां ग्रीवां शतयोजनाम्
चचाराश्रान्तहृदयो वातश्चागात्ततो महान् ९
स गुहायां शिरोग्रीवं निधाय पशुरात्मनः
आस्ताथ वर्षमभ्यागात्सुमहत्प्लावयञ्जगत् १०
अथ शीतपरीताङ्गो जम्बुकः क्षुच्छ्रमान्वितः
सदारस्तां गुहामाशु प्रविवेश जलार्दितः ११
स दृष्ट्वा मांसजीवी तु सुभृशं क्षुच्छ्रमान्वितः
अभक्षयत्ततो ग्रीवामुष्ट्रस्य भरतर्षभ १२
यदा त्वबुध्यतात्मानं भक्ष्यमाणं स वै पशुः
तदा संकोचने यत्नमकरोद्भृशदुःखितः १३
यावदूर्ध्वमधश्चैव ग्रीवां संक्षिपते पशुः
तावत्तेन सदारेण जम्बुकेन स भक्षितः १४
स हत्वा भक्षयित्वा च जम्बुकोष्ट्रं ततस्तदा
विगते वातवर्षे च निश्चक्राम गुहामुखात् १५
एवं दुर्बुद्धिना प्राप्तमुष्ट्रेण निधनं तदा
आलस्यस्य क्रमात्पश्य महद्दोषमुपागतम् १६
त्वमप्येवं विधिं त्यक्त्वा योगेन नियतेन्द्रियः
वर्तस्व बुद्धिमूलं हि विजयं मनुरब्रवीत् १७
बुद्धिश्रेष्ठानि कर्माणि बाहुमध्यानि भारत

तानि जङ्घाजघन्यानि भारप्रत्यवराणि च १८
राज्यं तिष्ठति दक्षस्य संगृहीतेन्द्रियस्य च
गुप्तमन्त्रश्रुतवतः सुसहायस्य चानघ १९
परीक्ष्यकारिणोऽथाश्च तिष्ठन्तीह युधिष्ठिर
सहाययुक्तेन मही कृत्स्ना शक्या प्रशासितुम् २०
इदं हि सद्भिः कथितं विधिज्ञैः पुरा महेन्द्रप्रतिमप्रभाव
मयापि चोक्तं तव शास्त्रदृष्ट्या त्वमत्र युक्तः प्रचरस्व राजन् २१
इति श्रीमहाभारते शान्तिपर्वणि त्रयोदशाधिकशततमोऽध्यायः ११३

## चतुर्दशाधिक शततमोऽध्यायः

युधिष्ठिर उवाच
राजा राज्यमनुप्राप्य दुर्बलो भरतर्षभ
अमित्रस्यातिवृद्धस्य कथं तिष्ठेदसाधनः १
भीष्म उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
सरितां चैव संवादं सागरस्य च भारत २
सुरारिनिलयः शश्वत्सागरः सरितां पतिः
पप्रच्छ सरितः सर्वाः संशयं जातमात्मनः ३
समूलशाखान्पश्यामि निहतांश्छायिनो द्रुमान्
युष्माभिरिह पूर्णाभिरन्यांस्तत्र न वेतसम् ४
अकायश्चाल्पसारश्च वेतसः कूलजश्च वः
अवज्ञाय नशक्यो वा किंचिद्वा तेन वः कृतम् ५
तदहं श्रोतुमिच्छामि सर्वासामेव वो मतम्
यथा कूलानि चेमानि भित्त्वा नानीयते वशम् ६
ततः प्राह नदी गङ्गा वाक्यमुत्तरमर्थवत्
हेतुमद्ग्राहकं चैव सागरं सरितां पतिम् ७
तिष्ठन्त्येते यथास्थानं नगा ह्येकनिकेतनाः
ततस्त्यजन्ति तत्स्थानं प्रातिलोम्यादचेतसः ८
वेतसो वेगमायान्तं दृष्ट्वा नमति नेतरः
स च वेगेऽभ्यतिक्रान्ते स्थानमासाद्य तिष्ठति ९

कालज्ञः समयज्ञश्च सदा वश्यश्च नोद्रुमः
अनुलोमस्तथास्तब्धस्तेन नाभ्येति वेतसः १०
मारुतोदकवेगेन ये नमन्त्युन्नमन्ति च
ओषध्यः पादपा गुल्मा न ते यान्ति पराभवम् ११
यो हि शत्रोर्विवृद्धस्य प्रभोर्वधविनाशने
पूर्वं न सहते वेगं क्षिप्रमेव स नश्यति १२
सारासारं बलं वीर्यमात्मनो द्विषतश्च यः
जानन्विचरति प्राज्ञो न स याति पराभवम् १३
एवमेव यदा विद्वान्मन्येतातिबलं रिपुम्
संश्रयेद्वैतसीं वृत्तिमेवं प्रज्ञानलक्षणम् १४
इति श्रीमहाभारते शान्तिपर्वणि चतुर्दशाधिकशततमोऽध्यायः ११४

पञ्चदशाधिक शततमोऽध्यायः

युधिष्ठिर उवाच
विद्वान्मूर्खप्रगल्भेन मृदुस्तीक्ष्णेन भारत
आक्रुश्यमानः सदसि कथं कुर्यादरिन्दम १
भीष्म उवाच
श्रूयतां पृथिवीपाल यथैषोऽथोऽनुगीयते
सदा सुचेताः सहते नरस्येहाल्पचेतसः २
अरुष्यन्क्रुश्यमानस्य सुकृतं नाम विन्दति
दुष्कृतं चात्मनो मर्षी रुष्यत्येवापमार्ष्टि वै ३
टिट्टिभं तमुपेक्षेत वाशमानमिवातुरम्
लोकविद्वेषमापन्नो निष्फलं प्रतिपद्यते ४
इति स श्लाघते नित्यं तेन पापेन कर्मणा
इदमुक्तो मया कश्चित्संमतो जनसंसदि
स तत्र व्रीडितः शुष्को मृतकल्पोऽवतिष्ठति ५
श्लाघन्नश्लाघनीयेन कर्मणा निरपत्रपः
उपेक्षितव्यो दान्तेन तादृशः पुरुषाधमः ६
यद्यद्ब्रूयादल्पमतिस्तत्तदस्य सहेत्सदा
प्राकृतो हि प्रशंसन्वा निन्दन्वा किं करिष्यति

वने काक इवाबुद्धिर्वाशमानो निरर्थकम् ७
यदि वाग्भिः प्रयोगाः स्यात्प्रयोगे पापकर्मणः
वागेवार्थो भवेत्तस्य न ह्येवार्थो जिघांसतः ८
निषेकं विपरीतं स आचष्टे वृत्तचेष्टया
मयूर इव कौपीनं नृत्यन्संदर्शयन्निव ९
यस्यावाच्यं न लोकेऽस्ति नाकार्यं वापि किञ्चन
वाचं तेन न संदध्याच्छुचिः संक्लिष्टकर्मणा १०
प्रत्यक्षं गुणवादी यः परोक्षं तु विनिन्दिकः
स मानवः श्ववल्लोके नष्टलोकपरायणः ११
तादृग्जनशतस्यापि यद्ददाति जुहोति च
परोक्षेणापवादेन तन्नाशयति स क्षणात् १२
तस्मात्प्राज्ञो नरः सद्यस्तादृशं पापचेतसम्
वर्जयेत्साधुभिर्वर्ज्यं सारमेयामिषं यथा १३
परिवादं ब्रुवाणो हि दुरात्मा वै महात्मने
प्रकाशयति दोषान्स्वान्सर्पः फणमिवोच्छ्रितम् १४
तं स्वकर्माणि कुर्वाणं प्रतिकर्तुं य इच्छति
भस्मकूट इवाबुद्धिः स्वरो रजसि मज्जति १५
मनुष्यशालावृकमप्रशान्तं जनापवादे सततं निविष्टम्
मातङ्गमुन्मत्तमिवोन्नदन्तं त्यजेत तं श्वानमिवातिरौद्रम् १६
अधीरजुष्टे पथि वर्तमानं दमादपेतं विनयाच्च पापम्
अरिव्रतं नित्यमभूतिकामं धिगस्तु तं पापमतिं मनुष्यम् १७
प्रत्युच्यमानस्तु हि भूय एभिर्निशाम्य मा भूस्त्वमथार्तरूपः
उच्चस्य नीचेन हि संप्रयोगं विगर्हयन्ति स्थिरबुद्धयो ये १८
क्रुद्धो दशार्धेन हि ताडयेद्वा स पांसुभिर्वापकिरेत्तुषैर्वा
विवृत्य दन्तांश्च विभीषयेद्वा सिद्धं हि मूर्खे कुपिते नृशंसे १९
विगर्हणां परमदुरात्मना कृतां सहेत यः संसदि दुर्जनान्नरः
पठेदिदं चापि निदर्शनं सदा न वाङ्मयं स लभति किंचिदप्रियम् २०
इति श्रीमहाभारते शान्तिपर्वणि पञ्चदशाधिकशततमोऽध्यायः ११५

## षोडशाधिक शततमोऽध्यायः

युधिष्ठिर उवाच
पितामह महाप्राज्ञ संशयो मे महानयम्
स च्छेत्तव्यस्त्वया राजन्भवान्कुलकरो हि नः १
पुरुषाणामयं तात दुर्वृत्तानां दुरात्मनाम्
कथितो वाक्यसंचारस्ततो विज्ञापयामि ते २
यद्धितं राज्यतन्त्रस्य कुलस्य च सुखोदयम्
आयत्यां च तदात्वे च क्षेमवृद्धिकरं च यत् ३
पुत्रपौत्राभिरामं च राष्ट्रवृद्धिकरं च यत्
अन्नपाने शरीरे च हितं यत्तद्ब्रवीहि मे ४
अभिषिक्तो हि यो राजा राज्यस्थो मित्रसंवृतः
असुहृत्समुपेतो वा स कथं रञ्जयेत्प्रजाः ५
यो ह्यसत्प्रग्रहरतिः स्नेहरागबलात्कृतः
इन्द्रियाणामनीशत्वादसज्जनबुभूषकः ६
तस्य भृत्या विगुणतां यान्ति सर्वे कुलोद्गताः
न च भृत्यफलैरर्थैः स राजा संप्रयुज्यते ७
एतान्मे संशयस्थस्य राजधर्मान्सुदुर्लभान्
बृहस्पतिसमो बुद्ध्या भवाञ्शंसितुमर्हति ८
शंसिता पुरुषव्याघ्र त्वं नः कुलहिते रतः
क्षत्ता चैव पटुप्रज्ञो यो नः शंसति सर्वदा ९
त्वत्तः कुलहितं वाक्यं श्रुत्वा राज्यहितोदयम्
अमृतस्याव्ययस्येव तृप्तः स्वप्स्याम्यहं सुखम् १०
कीदृशाः संनिकर्षस्था भृत्याः स्युर्वा गुणान्विताः
कीदृशैः किंकुलीनैर्वा सह यात्रा विधीयते ११
न ह्येको भृत्यरहितो राजा भवति रक्षिता
राज्यं चेदं जनः सर्वस्तत्कुलीनोऽभिशंसति १२
न हि प्रशास्तुं राज्यं हि शक्यमेकेन भारत
असहायवता तात नैवार्थाः केचिदप्युत
लब्धुं लब्ध्वा चापि सदा रक्षितुं भरतर्षभ १३
भीष्म उवाच

यस्य भृत्यजनः सर्वो ज्ञानविज्ञानकोविदः
हितैषी कुलजः स्निग्धः स राज्यफलमश्नुते १४
मन्त्रिणो यस्य कुलजा असंहार्याः सहोषिताः
नृपतेर्मतिदाः सन्ति संबन्धज्ञानकोविदाः १५
अनागतविधातारः कालज्ञानविशारदाः
अतिक्रान्तमशोचन्तः स राज्यफलमश्नुते १६
समदुःखसुखा यस्य सहायाः सत्यकारिणः
अर्थचिन्तापरा यस्य स राज्यफलमश्नुते १७
यस्य नार्तो जनपदः संनिकर्षगतः सदा
अक्षुद्रः सत्पथालम्बी स राज्यफलभाग्भवेत् १८
कोशाक्षपटलं यस्य कोशवृद्धिकरैर्जनैः
आप्तैस्तुष्टैश्च सततं धार्यते स नृपोत्तमः १९
कोष्ठागारमसंहार्यैराप्तैः संचयतत्परैः
पात्रभूतैरलुब्धैश्च पाल्यमानं गुणीभवेत् २०
व्यवहारश्च नगरे यस्य कर्मफलोदयः
दृश्यते शङ्खलिखितः स धर्मफलभाग्भवेत् २१
संगृहीतमनुष्यश्च यो राजा राजधर्मवित्
षड्वर्गं प्रतिगृह्णन्स धर्मात्फलमुपाश्नुते २२
इति श्रीमहाभारते शान्तिपर्वणि षोडशाधिकशततमोऽध्यायः ११६

सप्तदशाधिक शततमोऽध्यायः

भीष्म उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
निदर्शनकरं लोके सज्जनाचरितं सदा १
अस्यैवार्थस्य सदृशं यच्छ्रुतं मे तपोवने
जामदग्न्यस्य रामस्य यदुक्तमृषिसत्तमैः २
वने महति कस्मिंश्चिदमनुष्यनिषेविते
ऋषिर्मूलफलाहारो नियतो नियतेन्द्रियः ३
दीक्षादमपरः शान्तः स्वाध्यायपरमः शुचिः
उपवासविशुद्धात्मा सततं सत्पथे स्थितः ४

तस्य संदृश्य सद्भावमुपविष्टस्य धीमतः
सर्वसत्वाः समीपस्था भवन्ति वनचारिणः ५
सिंहव्याघ्राः सशरभा मत्ताश्चैव महागजाः
द्वीपिनः खड्गभल्लूका ये चान्ये भीमदर्शनाः ६
ते सुखप्रश्नदाः सर्वे भवन्ति क्षतजाशनाः
तस्यर्षेः शिष्यवच्चैव न्यग्भूताः प्रियकारिणः ७
दत्त्वा च ते सुखप्रश्नं सर्वे यान्ति यथागतम्
ग्राम्यस्त्वेकः पशुस्तत्र नाजहाच्छ्वा महामुनिम् ८
भक्तोऽनुरक्तः सततमुपवासकृशोऽबलः
फलमूलोत्कराहारः शान्तः शिष्टाकृतिर्यथा ९
तस्यर्षेरुपविष्टस्य पादमूले महामुनेः
मनुष्यवद्गतो भावः स्नेहबद्धोऽभवद्भृशम् १०
ततोऽभ्ययान्महावीर्यो द्वीपी क्षतजभोजनः
श्वार्थमत्यन्तसंदुष्टः क्रूर काल इवान्तकः ११
लेलिह्यमानस्तृषितः पुच्छास्फोटनतत्परः
व्यादितास्यः क्षुधाभग्नः प्रार्थयानस्तदामिषम् १२
तं दृष्ट्वा क्रूरमायान्तं जीवितार्थी नराधिप
प्रोवाच श्वा मुनिं तत्र यत्तच्छृणु महामते १३
श्वशत्रुर्भगवन्नत्र द्वीपी मां हन्तुमिच्छति
त्वत्प्रसादाद्भयं न स्यात्तस्मान्मम महामुने १४
मुनिरुवाच
न भयं द्वीपिनः कार्यं मृत्युतस्ते कथञ्चन
एष श्वरूपरहितो द्वीपी भवसि पुत्रक १५
भीष्म उवाच
ततः श्वा द्वीपितां नीतो जाम्बूनदनिभाकृतिः
चित्राङ्गो विस्फुरन्हृष्टो वने वसति निर्भयः १६
ततोऽभ्ययान्महारौद्रो व्यादितास्यः क्षुधान्वितः
द्वीपिनं लेलिहद्वक्त्रो व्याघ्रो रुधिरलालसः १७
व्याघ्रं दृष्ट्वा क्षुधाभग्नं दंष्ट्रिणं नवगोचरम्
द्वीपी जीवितरक्षार्थमृषिं शरणमेयिवान् १८

ततः संवासजं स्नेहमृषिणा कुर्वता सदा
स द्वीपी व्याघ्रतां नीतो रिपुभिर्बलवत्तरः
ततो दृष्ट्वा स शार्दूलो नाभ्यहंस्तं विशां पते १९
स तु श्वा व्याघ्रतां प्राप्य बलवान्पिशिताशनः
न मूलफलभोगेषु स्पृहामप्यकरोत्तदा २०
यथा मृगपतिर्नित्यं प्रकाङ्क्षति वनौकसः
तथैव स महाराज व्याघ्रः समभवत्तदा २१
व्याघ्रस्तूटजमूलस्थस्तृप्तः सुप्तो हतैर्मृगैः
नागश्चागात्तमुद्देशं मत्तो मेघ इवोत्थितः २२
प्रभिन्नकरटः प्रांशुः पद्मी विततमस्तकः
सुविषाणो महाकायो मेघगम्भीरनिस्वनः २३
तं दृष्ट्वा कुञ्जरं मत्तमायान्तं मदगर्वितम्
व्याघ्रो हस्तिभयात्त्रस्तस्तमृषिं शरणं ययौ २४
ततोऽनयत्कुञ्जरतां तं व्याघ्रमृषिसत्तमः
महामेघोपमं दृष्ट्वा तं स भीतोऽभवद्गजः २५
ततः कमलषण्डानि शल्लकीगहनानि च
व्यचरत्स मुदा युक्तः पद्मरेणुविभूषितः २६
कदाचिद्रममाणस्य हस्तिनः सुमुखं तदा
ऋषेस्तस्योटजस्थस्य कालोऽगच्छन्निशानिशम् २७
अथाजगाम तं देशं केसरी केसरारुणः
गिरिकन्दरजो भीमः सिंहो नागकुलान्तकः २८
तं दृष्ट्वा सिंहमायान्तं नागः सिंहभयाकुलः
ऋषिं शरणमापेदे वेपमानो भयातुरः २९
ततः स सिंहतां नीतो नागेन्द्रो मुनिना तदा
वन्यं नागणयत्सिंहं तुल्यजातिसमन्वयात् ३०
दृष्ट्वा च सोऽनशत्सिंहो वन्यो भीसन्नवाग्बलः
स चाश्रमेऽवसत्सिंहस्तस्मिन्नेव वने सुखी ३१
न त्वन्ये क्षुद्रपशवस्तपोवननिवासिनः
व्यदृश्यन्त भयत्रस्ता जीविताकाङ्क्षिणः सदा ३२
कदाचित्कालयोगेन सर्वप्राणिविहिंसकः

बलवान्क्षतजाहारो नानासत्त्वभयंकरः ३३
अष्टपादूर्ध्वचरणः शरभो वनगोचरः
तं सिहं हन्तुमागच्छन्मुनेस्तस्य निवेशनम् ३४
तं मुनिः शरभं चक्रे बलोत्कटमरिन्दम
ततः स शरभो वन्यो मुनेः शरभमग्रतः
दृष्ट्वा बलिनमत्युग्रं द्रुतं संप्राद्रवद्भयात् ३५
स एवं शरभस्थाने न्यस्तो वै मुनिना तदा
मुनेः पार्श्वगतो नित्यं शारभ्यं सुखमाप्तवान् ३६
ततः शरभसंत्रस्ताः सर्वे मृगगणा वनात्
दिशः संप्राद्रवन्राजन्भयाज्जीवितकाङ्क्षिणः ३७
शरभोऽप्यतिसंदुष्टो नित्यं प्राणिवधे रतः
फलमूलाशनं शान्तं नैच्छत्स पिशिताशनः ३८
ततो रुधिरतर्षेण बलिना शरभोऽन्वितः
इयेष तं मुनिं हन्तुमकृतज्ञः श्वयोनिजः ३९
ततस्तेन तपःशक्त्या विदितो ज्ञानचक्षुषा
विज्ञाय च महाप्राज्ञो मुनिः श्वानं तमुक्तवान् ४०
श्वा त्वं द्वीपित्वमापन्नो द्वीपि व्याघ्रत्वमागतः
व्याघ्रो नागो मदपटुर्नागः सिंहत्वमाप्तवान् ४१
सिंहोऽतिबलसंयुक्तो भूयः शरभतां गतः
मया स्नेहपरीतेन न विमृष्टः कुलान्वयः ४२
यस्मादेवमपापं मां पाप हिंसितुमिच्छसि
तस्मात्स्वयोनिमापन्नः श्वैव त्वं हि भविष्यसि ४३
ततो मुनिजनद्वेषाद्दुष्टात्मा श्वाकृतोऽबुधः
ऋषिणा शरभः शप्तः स्वं रूपं पुनराप्तवान् ४४
इति श्रीमहाभारते शान्तिपर्वणि सप्तदशाधिकशततमोऽध्यायः ११७

अष्टादशाधिक शततमोऽध्यायः

भीष्म उवाच
स श्वा प्रकृतिमापन्नः परं दैन्यमुपागमत्
ऋषिणा हुंकृतः पापस्तपोवनबहिष्कृतः १

एवं राज्ञा मतिमता विदित्वा शीलशौचताम्
आर्जवं प्रकृतिं सत्त्वं कुलं वृत्तं श्रुतं दमम् २
अनुक्रोशं बलं वीर्यं भावं संप्रशमं क्षमाम्
भृत्या ये यत्र योग्याः स्युस्तत्र स्थाप्याः सुशिक्षिताः ३
नापरीक्ष्य महीपालः प्रकर्तुं भृत्यमर्हति
अकुलीननराकीर्णो न राजा सुखमेधते ४
कुलजः प्रकृतो राज्ञा तत्कुलीनतया सदा
न पापे कुरुते बुद्धिं निन्द्यमानोऽप्यनागसि ५
अकुलीनस्तु पुरुषः प्रकृतः साधुसंक्षयात्
दुर्लभैश्वर्यतां प्राप्तो निन्दितः शत्रुतां व्रजेत् ६
कुलीनं शिक्षितं प्राज्ञं ज्ञानविज्ञानकोविदम्
सर्वशास्त्रार्थतत्त्वज्ञं सहिष्णुं देशजं तथा ७
कृतज्ञं बलवन्तं च क्षान्तं दान्तं जितेन्द्रियम्
अलुब्धं लब्धसंतुष्टं स्वामिमित्रबुभूषकम् ८
सचिवं देशकालज्ञं सर्वसंग्रहणे रतम्
सत्कृतं युक्तमनसं हितैषिणमतन्द्रितम् ९
युक्ताचारं स्वविषये संधिविग्रहकोविदम्
राज्ञस्त्रिवर्गवेत्तारं पौरजानपदप्रियम् १०
खातकव्यूहतत्त्वज्ञं बलहर्षणकोविदम्
इङ्गिताकारतत्त्वज्ञं यात्रायानविशारदम् ११
हस्तिशिक्षासु तत्त्वज्ञमहंकारविवर्जितम्
प्रगल्भं दक्षिणं दान्तं बलिनं युक्तकारिणम् १२
चोक्षं चोक्षजनाकीर्णं सुवेषं सुखदर्शनम्
नायकं नीतिकुशलं गुणषष्ट्या समन्वितम् १३
अस्तब्धं प्रश्रितं शक्तं मृदुवादिनमेव च
धीरं श्लक्ष्णं महर्द्धिं च देशकालोपपादकम् १४
सचिवं यः प्रकुरुते न चैनमवमन्यते
तस्य विस्तीर्यते राज्यं ज्योत्स्ना ग्रहपतेरिव १५
एतैरेव गुणैर्युक्तो राजा शास्त्रविशारदः
एष्टव्यो धर्मपरमः प्रजापालनतत्परः १६

धीरो मर्षी शुचिः शीघ्रः काले पुरुषकारवित्
शुश्रूषुः श्रुतवाञ्श्रोता ऊहापोहविशारदः १७
मेधावी धारणायुक्तो यथान्यायोपपादकः
दान्तः सदा प्रियाभाषी क्षमावांश्च विपर्यये १८
दानाच्छेदे स्वयंकारी सुद्वारः सुखदर्शनः
आर्तहस्तप्रदो नित्यमाप्तंमन्यो नये रतः १९
नाहंवादी न निर्द्वंद्वो न यत्किंचनकारकः
कृते कर्मण्यमोघानां कर्ता भृत्यजनप्रियः २०
संगृहीतजनोऽस्तब्धः प्रसन्नवदनः सदा
दाता भृत्यजनावेक्षी न क्रोधी सुमहामनाः २१
युक्तदण्डो न निर्दण्डो धर्मकार्यानुशासकः
चारनेत्रः परावेक्षी धर्मार्थकुशलः सदा २२
राजा गुणशताकीर्ण एष्टव्यस्तादृशो भवेत्
योधाश्चैव मनुष्येन्द्र सर्वैर्गुणगणैर्वृताः २३
अन्वेष्टव्याः सुपुरुषाः सहाया राज्यधारणाः
न विमानयितव्याश्च राज्ञा वृद्धिमभीप्सता २४
योधाः समरशौटीराः कृतज्ञाः शस्त्रकोविदाः
धर्मशास्त्रसमायुक्ताः पदातिजनसंयुताः २५
अर्थमानविवृद्धाश्च रथचर्याविशारदाः
इष्वस्त्रकुशला यस्य तस्येयं नृपतेर्मही २६
सर्वसंग्रहणे युक्तो नृपो भवति यः सदा
उत्थानशीलो मित्राढ्यः स राजा राजसत्तमः २७
शक्या अश्वसहस्रेण वीरारोहेण भारत
संगृहीतमनुष्येण कृत्स्ना जेतुं वसुंधरा २८
इति श्रीमहाभारते शान्तिपर्वणि अष्टादशाधिकशततमोऽध्यायः ११८

## एकोनविंशत्यधिक शततमोऽध्यायः

भीष्म उवाच
एवं शुनासमान्भृत्यान्स्वस्थाने यो नराधिपः
नियोजयति कृत्येषु स राज्यफलमश्नुते १

न श्वा स्वस्थानमुत्क्रम्य प्रमाणमभि सत्कृतः
आरोप्यः श्वा स्वकात्स्थानादुत्क्रम्यान्यत्प्रपद्यते २
स्वजातिकुलसंपन्नाः स्वेषु कर्मस्ववस्थिताः
प्रकर्तव्या बुधा भृत्या नास्थाने प्रक्रिया क्षमा ३
अनुरूपाणि कर्माणि भृत्येभ्यो यः प्रयच्छति
स भृत्यगुणसंपन्नं राजा फलमुपाश्नुते ४
शरभः शरभस्थाने सिंहः सिंह इवोर्जितः
व्याघ्रो व्याघ्र इव स्थाप्यो द्वीपी द्वीपी यथा तथा ५
कर्मस्विहानुरूपेषु न्यस्या भृत्या यथाविधि
प्रतिलोमं न भृत्यास्ते स्थाप्याः कर्मफलैषिणा ६
यः प्रमाणमतिक्रम्य प्रतिलोमं नराधिपः
भृत्यान्स्थापयतेऽबुद्धिर्न स रञ्जयते प्रजाः ७
न बालिशा न च क्षुद्रा न चाप्रतिमितेन्द्रियाः
नाकुलीना नराः पार्श्वे स्थाप्या राज्ञा हितैषिणा ८
साधवः कुशलाः शूरा ज्ञानवन्तोऽनसूयकाः
अक्षुद्राः शुचयो दक्षा नराः स्युः पारिपार्श्वकाः ९
न्यग्भूतास्तत्पराः क्षांताश्चौक्षाः प्रकृतिजाः शुभाः
स्वे स्वे स्थानेऽपरिक्रुष्टास्ते स्यू राज्ञो बहिश्चराः १०
सिंहस्य सततं पार्श्वे सिंह एव जनो भवेत्
असिंहः सिंहसहितः सिंहवल्लभते फलम् ११
यस्तु सिंहः श्वभिः कीर्णः सिंहकर्मफले रतः
न स सिंहफलं भोक्तुं शक्तः श्वभिरुपासितः १२
एवमेतैर्मनुष्येन्द्र शूरैः प्राज्ञैर्बहुश्रुतैः
कुलीनैः सह शक्येत कृत्स्नां जेतुं वसुंधराम् १३
नावैद्यो नानृजुः पार्श्वे नाविद्यो नामहाधनः
संग्राह्यो वसुधापालैर्भृत्यो भृत्यवतां वर १४
बाणवद्विसृता यान्ति स्वामिकार्यपरा जनाः
ये भृत्याः पार्थिवहितास्तेषां सान्त्वं प्रयोजयेत् १५
कोशश्च सततं रक्ष्यो यत्नमास्थाय राजभिः
कोशमूला हि राजानः कोशमूलकरो भव १६

कोष्ठागारं च ते नित्यं स्फीतं धान्यैः सुसंचितम्
सदास्तु सत्सु संन्यस्तं धनधान्यपरो भव १७
नित्ययुक्ताश्च ते भृत्या भवन्तु रणकोविदाः
वाजिनां च प्रयोगेषु वैशारद्यमिहेष्यते १८
ज्ञातिबन्धुजनावेक्षी मित्रसंबन्धिसंवृतः
पौरकार्यहितान्वेषी भव कौरवनन्दन १९
एषा ते नैष्ठिकी बुद्धिः प्रज्ञा चाभिहिता मया
श्वा ते निदर्शनं तात किं भूयः श्रोतुमच्छसि २०
इति श्रीमहाभारते शान्तिपर्वणि एकोनविंशत्यधिकशततमोऽध्यायः ११९

## विंशत्यधिक शततमोऽध्यायः

युधिष्ठिर उवाच
राजवृत्तान्यनेकानि त्वया प्रोक्तानि भारत
पूर्वैः पूर्वनियुक्तानि राजधर्मार्थवेदिभिः १
तदेव विस्तरेणोक्तं पूर्वैर्दृष्टं सतां मतम्
प्रणयं राजधर्माणां प्रब्रूहि भरतर्षभ २
भीष्म उवाच
रक्षणं सर्वभूतानामिति क्षत्रे परं मतम्
तद्यथा रक्षणं कुर्यात्तथा शृणु महीपते ३
यथा बर्हाणि चित्राणि बिभर्ति भुजगाशनः
तथा बहुविधं राजा रूपं कुर्वीत धर्मवित् ४
तैक्ष्ण्यं जिह्मत्वमादान्त्यं सत्यमार्जवमेव च
मध्यस्थः सत्त्वमातिष्ठंस्तथा वै सुखमृच्छति ५
यस्मिन्नर्थे हितं यत्स्यात्तद्वर्णं रूपमाविशेत्
बहुरूपस्य राज्ञो हि सूक्ष्मोऽप्यर्थो न सीदति ६
नित्यं रक्षितमन्त्रः स्याद्यथा मूकः शरच्छिखी
श्लक्ष्णाक्षरतनुः श्रीमान्भवेच्छास्त्रविशारदः ७
आपद्द्वारेषु यत्तः स्याज्जलप्रस्रवणेष्विव
शैलवर्षोदकानीव द्विजान्सिद्धान्समाश्रयेत् ८
अर्थकामः शिखां राजा कुर्याद्धर्मध्वजोपमाम्

नित्यमुद्यतदण्डः स्यादाचरेच्चाप्रमादतः
लोके चायव्ययौ दृष्ट्वा वृक्षाद्वृक्षमिवाप्लवन् ९
मृजावान्स्यात्स्वयूथ्येषु भावानि चरणैः क्षिपेत्
जातपक्षः परिस्पन्देद्रक्षेद्वैकल्यमात्मनः १०
दोषान्विवृणुयाच्छत्रोः परपक्षान्विधूनयेत्
काननेष्विव पुष्पाणि बर्हीवार्थान्समाचरेत् ११
उच्छ्रितानाश्रयेत्स्फीतान्नरेन्द्रानचलोपमान्
श्रयेच्छायामविज्ञातां गुप्तं शरणमाश्रयेत् १२
प्रावृषीवासितग्रीवो मज्जेत निशि निर्जने
मायूरेण गुणेनैव स्त्रीभिश्चालक्षितश्चरेत्
न जह्याच्च तनुत्राणं रक्षेदात्मानमात्मना १३
चारभूमिष्वभिगमान्पाशांश्च परिवर्जयेत्
पीडयेच्चापि तां भूमिं प्रणश्येद्गहने पुनः १४
हन्यात्क्रुद्धानतिविषान्ये जिह्मगतयोऽहितान्
नाश्रयेद्बालबर्हाणि सन्निवासानि वासयेत् १५
सदा बर्हिनिभः कामं प्रसक्तिकृतमाचरेत्
सर्वतश्चाददेत्प्रज्ञां पतंगान्गहनेष्विव
एवं मयूरवद्राजा स्वराष्ट्रं परिपालयेत् १६
आत्मवृद्धिकरीं नीतिं विदधीत विचक्षणः
आत्मसंयमनं बुद्ध्या परबुद्ध्यावतारणम्
बुद्ध्या चात्मगुणप्राप्तिरेतच्छास्त्रनिदर्शनम् १७
परं चाश्वासयेत्साम्ना स्वशक्तिं चोपलक्षयेत्
आत्मनः परिमर्शेन बुद्धिं बुद्ध्या विचारयेत्
सान्त्वयोगमतिः प्राज्ञः कार्याकार्यविचारकः १८
निगूढबुद्धिर्धीरः स्याद्वक्तव्ये वक्ष्यते तथा
संनिकृष्टां कथां प्राज्ञो यदि बुद्ध्या बृहस्पतिः
स्वभावमेष्यते तप्तं कृष्णायसमिवोदके १९
अनुयुञ्जीत कृत्यानि सर्वाण्येव महीपतिः
आगमैरुपदिष्टानि स्वस्य चैव परस्य च २०
क्षुद्रं क्रूरं तथा प्राज्ञं शूरं चार्थविशारदम्

स्वकर्मणि नियुञ्जीत ये चान्ये वचनाधिकाः २१
अप्यदृष्ट्वा नियुक्तानि अनुरूपेषु कर्मसु
सर्वांस्ताननुवर्तेत स्वरांस्तन्त्रीरिवायता २२
धर्माणामविरोधेन सर्वेषां प्रियमाचरेत्
ममायमिति राजा यः स पर्वत इवाचलः २३
व्यवसायं समाधाय सूर्यो रश्मिमिवायताम्
धर्ममेवाभिरक्षेत कृत्वा तुल्ये प्रियाप्रिये २४
कुलप्रकृतिदेशानां धर्मज्ञान्मृदुभाषिणः
मध्ये वयसि निर्दोषान्हिते युक्ताञ्जितेन्द्रियान् २५
अलुब्धाञ्शिक्षितान्दान्तान्धर्मेषु परिनिष्ठितान्
स्थापयेत्सर्वकार्येषु राजा धर्मार्थरक्षिणः २६
एतेनैव प्रकारेण कृत्यानामागतिं गतिम्
युक्तः समनुतिष्ठेत तुष्टश्चारैरुपस्कृतः २७
अमोघक्रोधहर्षस्य स्वयं कृत्यान्ववेक्षिणः
आत्मप्रत्ययकोशस्य वसुधैव वसुंधरा २८
व्यक्तश्चानुग्रहो यस्य यथार्थश्चापि निग्रहः
गुप्तात्मा गुप्तराष्ट्रश्च स राजा राजधर्मवित् २९
नित्यं राष्ट्रमवेक्षेत गोभिः सूर्य इवोत्पतन्
चारांश्च नचरान्विद्यात्तथा बुद्ध्या न संज्वरेत् ३०
कालप्राप्तमुपादद्यान्नार्थं राजा प्रसूचयेत्
अहन्यहनि संदुह्यान्महीं गामिव बुद्धिमान् ३१
यथा क्रमेण पुष्पेभ्यश्चिनोति मधु षट्पदः
तथा द्रव्यमुपादाय राजा कुर्वीत संचयम् ३२
यद्धि गुप्तावशिष्टं स्यात्तद्धितं धर्मकामयोः
संचयानुविसर्गी स्याद्राजा शास्त्रविदात्मवान् ३३
नाल्पमर्थं परिभवेन्नावमन्येत शात्रवान्
बुद्ध्यावबुद्ध्येदात्मानं न चाबुद्धिषु विश्वसेत् ३४
धृतिर्दाक्ष्यं संयमो बुद्धिरग्र्या धैर्यं शौर्यं देशकालोऽप्रमादः
स्वल्पस्य वा महती वापि वृद्धौ धनस्यैतान्यष्ट समिन्धनानि ३५
अग्निस्तोको वर्धते ह्याज्यसिक्तो बीजं चैकं बहुसाहस्रमेति

क्षयोदयौ विपुलौ संनिशाम्य तस्मादल्पं नावमन्येत विद्वान् ३६
बालोऽबालः स्थविरो वा रिपुर्यः सदा प्रमत्तं पुरुषं निहन्यात्
कालेनान्यस्तस्य मूलं हरेत कालज्ञाता पार्थिवानां वरिष्ठः ३७
हरेत्कीर्तिं धर्ममस्योपरुन्ध्यादर्थे दीर्घं वीर्यमस्योपहन्यात्
रिपुर्द्वेष्टा दुर्बलो वा बली वा तस्माच्छत्रौ नैव हेडेद्यतात्मा ३८
क्षयं शत्रोः संचयं पालनं चाप्युभौ चार्थौ सहितौ धर्मकामौ
अतश्चान्यन्मतिमान्संदधीत तस्माद्राजा बुद्धिमन्तं श्रयेत ३९
बुद्धिर्दीप्ता बलवन्तं हिनस्ति बलं बुद्ध्या वर्धते पाल्यमानम्
शत्रुर्बुद्ध्या सीदते वर्धमानो बुद्धेः पश्चात्कर्म यत्तत्प्रशस्तम् ४०
सर्वान्कामान्कामयानो हि धीरः सत्त्वेनाल्पेनाप्लुते हीनदेहः
यथात्मानं प्रार्थयतेऽथ्यमानैः श्रेयःपात्रं पूरयते ह्यनल्पम् ४१
तस्माद्राजा प्रगृहीतः परेषु मूलं लक्ष्म्याः सर्वतोऽभ्याददीत
दीर्घं कालमपि संपीड्यमानो विद्युत्संपातमिव मानोर्जितः स्यात् ४२
विद्या तपो वा विपुलं धनं वा सर्वमेतद्व्यवसायेन शक्यम्
ब्रह्म यत्तं निवसति देहवत्सु तस्माद्विद्याद्व्यवसायं प्रभूतम् ४३
यत्रासते मतिमन्तो मनस्विनः शक्रो विष्णुर्यत्र सरस्वती च
वसन्ति भूतानि च यत्र नित्यं तस्माद्विद्वान्नावमन्येत देहम् ४४
लुब्धं हन्यात्संप्रदानेन नित्यं लुब्धस्तृप्तिं परवित्तस्य नैति
सर्वो लुब्धः कर्मगुणोपभोगे योऽथैर्हीनो धर्मकामौ जहाति ४५
धनं भोज्यं पुत्रदारं समृद्धिं सर्वो लुब्धः प्रार्थयते परेषाम्
लुब्धे दोषाः संभवन्तीह सर्वे तस्माद्राजा न प्रगृह्णीत लुब्धान् ४६
संदर्शने सत्पुरुषं जघन्यमपि चोदयेत्
आरम्भान्द्विषतां प्राज्ञः सर्वानर्थांस्तु सूदयेत् ४७
धर्मान्वितेषु विज्ञातो मन्त्री गुप्तश्च पाण्डव
आप्तो राजन्कुलीनश्च पर्याप्तो राज्यसंग्रहे ४८
विधिप्रवृत्तान्नरदेवधर्मानुक्तान्समासेन निबोध बुद्ध्या
इमान्विदध्याद्व्यनुसृत्य यो वै राजा महीं पालयितुं स शक्तः ४९
अनीतिजं यद्यविधानजं सुखं हठप्रणीतं विविधं प्रदृश्यते
न विद्यते तस्य गतिर्महीपतेर्न विद्यते राष्ट्रजमुत्तमं सुखम् ५०
धनैर्विशिष्टान्मतिशीलपूजितान्गुणोपपन्नान्युधि दृष्टविक्रमान्

गुणेषु दृष्टानचिरादिहात्मवान्सतोऽभिसंधाय निहन्ति शात्रवान् ५१
पश्येदुपायान्विविधैः क्रियापथैर्न चानुपायेन मतिं निवेशयेत्
श्रियं विशिष्टां विपुलं यशो धनं न दोषदर्शी पुरुषः समश्नुते ५२
प्रीतिप्रवृतौ विनिवर्तने तथा सुहृत्सु विज्ञाय निवृत्य चोभयोः
यदेव मित्रं गुरुभारमावहेत्तदेव सुस्निग्धमुदाहरेद्बुधः ५३
एतान्मयोक्तांस्तव राजधर्मान्नृणां च गुप्तौ मतिमादधत्स्व
अवाप्स्यसे पुण्यफलं सुखेन सर्वो हि लोकोत्तमधर्ममूलः ५४
इति श्रीमहाभारते शान्तिपर्वणि विंशत्यधिकशततमोऽध्यायः १२०

## एकविंशत्यधिक शततमोऽध्यायः

युधिष्ठिर उवाच
अयं पितामहेनोक्तो राजधर्मः सनातनः
ईश्वरश्च महादण्डो दण्डे सर्वं प्रतिष्ठितम् १
देवतानामृषीणां च पितॄणां च महात्मनाम्
यक्षरक्षःपिशाचानां मर्त्यानां च विशेषतः २
सर्वेषां प्राणिनां लोके तिर्यक्ष्वपि निवासिनाम्
सर्वव्यापी महातेजा दण्डः श्रेयानिति प्रभो ३
इत्येतदुक्तं भवता सर्वं दण्ड्यं चराचरम्
दृश्यते लोकमासक्तं ससुरासुरमानुषम् ४
एतदिच्छाम्यहं ज्ञातुं तत्त्वेन भरतर्षभ
को दण्डः कीदृशो दण्डः किंरूपः किंपरायणः ५
किमात्मकः कथंभूतः कतिमूर्तिः कथंप्रभुः
जागर्ति स कथं दण्डः प्रजास्ववहितात्मकः ६
कश्च पूर्वापरमिदं जागर्ति प्रतिपालयन्
कश्च विज्ञायते पूर्वं कोऽपरो दण्डसंज्ञितः
किंसंस्थश्च भवेद्दण्डः का चास्य गतिरिष्यते ७
भीष्म उवाच
शृणु कौरव्य यो दण्डो व्यवहार्यो यथा च सः
यस्मिन्हि सर्वमायत्तं स दण्ड इह केवलः ८
धर्मस्याख्या महाराज व्यवहार इतीष्यते

तस्य लोपः कथं न स्याल्लोकेष्ववहितात्मनः
इत्यर्थं व्यवहारस्य व्यवहारत्वमिष्यते ६
अपि चैतत्पुरा राजन्मनुना प्रोक्तमादितः
सुप्रणीतेन दण्डेन प्रियाप्रियसमात्मना
प्रजा रक्षतिः यः सम्यग्धर्म एव स केवलः १०
अथोक्तमेतद्वचनं प्रागेव मनुना पुरा
जन्म चोक्तं वसिष्ठेन ब्रह्मणो वचनं महत् ११
प्रागिदं वचनं प्रोक्तमतः प्राग्वचनं विदुः
व्यवहारस्य चाख्यानाद्व्यवहार इहोच्यते १२
दण्डात्त्रिवर्गः सततं सुप्रणीतात्प्रवर्तते
दैवं हि परमो दण्डो रूपतोऽग्निरिवोच्छिखः १३
नीलोत्पलदलश्यामश्चतुर्दंष्ट्रश्चतुर्भुजः
अष्टपान्नैकनयनः शङ्कुकर्णोर्ध्वरोमवान् १४
जटी द्विजिह्वस्ताम्रास्यो मृगराजतनुच्छदः
एतद्रूपं बिभर्त्युग्रं दण्डो नित्यं दुरावरः १५
असिर्गदा धनुः शक्तिस्त्रिशूलं मुद्गरः शरः
मुसलं परशुश्चक्रं प्रासो दण्डर्ष्टितोमराः १६
सर्वप्रहरणीयानि सन्ति यानीह कानिचित्
दण्ड एव हि सर्वात्मा लोके चरति मूर्तिमान् १७
भिन्दंश्छिन्दन्रुजन्कृन्तन्दारयन्पाटयंस्तथा
घातयन्नभिधावंश्च दण्ड एव चरत्युत १८
असिर्विशसनो धर्मस्तीक्ष्णवर्त्मा दुरासदः
श्रीगर्भो विजयः शास्ता व्यवहारः प्रजागरः १९
शास्त्रं ब्राह्मणमन्त्रश्च शास्ता प्राग्वचनं गतः
धर्मपालोऽक्षरो देवः सत्यगो नित्यगो ग्रहः २०
असङ्गो रुद्रतनयो मनुज्येष्ठः शिवंकरः
नामान्येतानि दण्डस्य कीर्तितानि युधिष्ठिर २१
दण्डो हि भगवान्विष्णुर्यज्ञो नारायणः प्रभुः
शश्वद्रूपं महद्बिभ्रन्महापुरुष उच्यते २२
यथोक्ता ब्रह्मकन्येति लक्ष्मीर्नीतिः सरस्वती

दण्डनीतिर्जगद्धात्री दण्डो हि बहुविग्रहः २३
अर्थानर्थौ सुखं दुःखं धर्माधर्मौ बलाबले
दौर्भाग्यं भागधेयं च पुण्यापुण्ये गुणागुणौ २४
कामाकामावृतुर्मासः शर्वरी दिवसः क्षणः
अप्रसादः प्रसादश्च हर्षः क्रोधः शमो दमः २५
दैवं पुरुषकारश्च मोक्षामोक्षौ भयाभये
हिंसाहिंसे तपो यज्ञः संयमोऽथ विषाविषम् २६
अन्तश्चादिश्च मध्यं च कृत्यानां च प्रपञ्चनम्
मदः प्रमादो दर्पश्च दम्भो धैर्यं नयानयौ २७
अशक्तिः शक्तिरित्येव मानस्तम्भौ व्ययाव्ययौ
विनयश्च विसर्गश्च कालाकालौ च भारत २८
अनृतं ज्ञाज्ञता सत्यं श्रद्धाश्रद्धे तथैव च
क्लीबता व्यवसायश्च लाभालाभौ जयाजयौ २९
तीक्ष्णता मृदुता मृत्युरागमानागमौ तथा
विराद्धिश्चैव राद्धिश्च कार्याकार्ये बलाबले ३०
असूया चानसूया च धर्माधर्मौ तथैव च
अपत्रपानपत्रपे ह्रीश्च संपद्विपच्च ह ३१
तेजः कर्माणि पाण्डित्यं वाक्शक्तिस्तत्त्वबुद्धिता
एवं दण्डस्य कौरव्य लोकेऽस्मिन्बहुरूपता ३२
न स्याद्यदीह दण्डो वै प्रमथेयुः परस्परम्
भयाद्दण्डस्य चान्योन्यं घ्नन्ति नैव युधिष्ठिर ३३
दण्डेन रक्ष्यमाणा हि राजन्नहरहः प्रजाः
राजानं वर्धयन्तीह तस्माद्दण्डः परायणम् ३४
व्यवस्थापयति क्षिप्रमिमं लोकं नरेश्वर
सत्ये व्यवस्थितो धर्मो ब्राह्मणेष्ववतिष्ठते ३५
धर्मयुक्ता द्विजाः श्रेष्ठा वेदयुक्ता भवन्ति च
बभूव यज्ञो वेदेभ्यो यज्ञः प्रीणाति देवताः ३६
प्रीताश्च देवता नित्यमिन्द्रे परिददत्युत
अन्नं ददाति शक्रश्चाप्यनुगृह्णन्निमाः प्रजाः ३७
प्राणाश्च सर्वभूतानां नित्यमन्ने प्रतिष्ठिताः

तस्मात्प्रजाः प्रतिष्ठन्ते दण्डो जागर्ति तासु च ३८
एवंप्रयोजनश्चैव दण्डः क्षत्रियतां गतः
रक्षन्प्रजाः प्रजागर्ति नित्यं सुविहितोऽक्षरः ३९
ईश्वरः पुरुषः प्राणः सत्त्वं वित्तं प्रजापतिः
भूतात्मा जीव इत्येव नामभिः प्रोच्यतेऽष्टभिः ४०
अददद्दण्ड एवास्मै ध्रुवमैश्वर्यमेव च
बले नयश्च संयुक्तः सदा पञ्चविधात्मकः ४१
कुलबाहुधनामात्याः प्रज्ञा चोक्ता बलानि च
आहार्यं चाष्टकैर्द्रव्यैर्बलमन्यद्युधिष्ठिर ४२
हस्तिनोऽश्वा रथाः पत्तिर्नावो विष्टिस्तथैव च
दैशिकाश्चारकाश्चैव तदष्टाङ्गं बलं स्मृतम् ४३
अष्टाङ्गस्य तु युक्तस्य हस्तिनो हस्तियायिनः
अश्वारोहाः पदाताश्च मन्त्रिणो रसदाश्च ये ४४
भिक्षुकाः प्राडिववाकाश्च मौहूर्ता दैवचिन्तकाः
कोशो मित्राणि धान्यं च सर्वोपकरणानि च ४५
सप्तप्रकृति चाष्टाङ्गं शरीरमिह यद्विदुः
राज्यस्य दण्ड एवाङ्गं दण्डः प्रभव एव च ४६
ईश्वरेण प्रयत्नेन धारणे क्षत्रियस्य हि
दण्डो दत्तः समानात्मा दण्डो हीदं सनातनम्
राज्ञां पूज्यतमो नान्यो यथाधर्मप्रदर्शनः ४७
ब्रह्मणा लोकरक्षार्थं स्वधर्मस्थापनाय च
भर्तृप्रत्यय उत्पन्नो व्यवहारस्तथापरः
तस्माद्यः सहितो दृष्टो भर्तृप्रत्ययलक्षणः ४८
व्यवहारस्तु वेदात्मा वेदप्रत्यय उच्यते
मौलश्च नरशार्दूल शास्त्रोक्तश्च तथापरः ४९
उक्तो यश्चापि दण्डोऽसौ भर्तृप्रत्ययलक्षणः
ज्ञेयो न स नरेन्द्रस्थो दण्डप्रत्यय एव च ५०
दण्डप्रत्ययदृष्टोऽपि व्यवहारात्मकः स्मृतः
व्यवहारः स्मृतो यश्च स वेदविषयात्मकः ५१
यश्च वेदप्रसूतात्मा स धर्मो गुणदर्शकः

धर्मप्रत्यय उत्पन्नो यथाधर्मः कृतात्मभिः ५२
व्यवहारः प्रजागोप्ता ब्रह्मदिष्टो युधिष्ठिर
त्रीन्धारयति लोकान्वै सत्यात्मा भूतिवर्धनः ५३
यश्च दण्डः स दृष्टो नो व्यवहारः सनातनः
व्यवहारश्च यो दृष्टः स धर्म इति नः श्रुतः
यश्च वेदः स वै धर्मो यश्च धर्मः स सत्पथः ५४
ब्रह्मा प्रजापतिः पूर्वं बभूवाथ पितामहः
लोकानां स हि सर्वेषां ससुरासुररक्षसाम्
समनुष्योरगवतां कर्ता चैव स भूतकृत् ५५
ततो नो व्यवहारोऽय भर्तृप्रत्ययलक्षणः
तस्मादिदमवोचाम व्यवहारनिदर्शनम् ५६
माता पिता च भ्राता च भार्या चाथ पुरोहितः
नादण्ड्यो विद्यते राज्ञां यः स्वधर्मे न तिष्ठति ५७
इति श्रीमहाभारते शान्तिपर्वणि एकविंशत्यधिकशततमोऽध्यायः १२१

## द्वाविंशत्यधिक शततमोऽध्यायः

भीष्म उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
अङ्गेषु राजा द्युतिमान्वसुहोम इति श्रुतः १
स राजा धर्मनित्यः सन्सह पत्न्या महातपाः
मुञ्जपृष्ठं जगामाथ देवर्षिगणपूजितम् २
तत्र शृङ्गे हिमवतो मेरौ कनकपर्वते
यत्र मुञ्जवटे रामो जटाहरणमादिशत् ३
तदाप्रभृति राजेन्द्र ऋषिभिः संशितव्रतैः
मुञ्जपृष्ठ इति प्रोक्तः स देशो रुद्रसेवितः ४
स तत्र बहुभिर्युक्तः सदा श्रुतिमयैर्गुणैः
ब्राह्मणानामनुमतो देवर्षिसदृशोऽभवत् ५
तं कदाचिददीनात्मा सखा शक्रस्य मानितः
अभ्यगच्छन्महीपालो मान्धाता शत्रुकर्शनः ६
सोऽभिसृत्य तु मान्धाता वसुहोमं नराधिपम्

दृष्ट्वा प्रकृष्टं तपसा विनयेनाभ्यतिष्ठत ७
वसुहोमोऽपि राज्ञो वै गामर्घ्यं च न्यवेदयत्
अष्टाङ्गस्य च राज्यस्य पप्रच्छ कुशलं तदा ८
सद्भिराचरितं पूर्वं यथावदनुयायिनम्
अपृच्छद्वसुहोमस्तं राजन्किं करवाणि ते ९
सोऽब्रवीत्परमप्रीतो मान्धाता राजसत्तमम्
वसुहोमं महाप्राज्ञमासीनं कुरुनन्दन १०
बृहस्पतेर्मतं राजन्नधीतं सकलं त्वया
तथैवौशनसं शास्त्रं विज्ञातं ते नराधिप ११
तदहं श्रोतुमिच्छामि दण्ड उत्पद्यते कथम्
किं वापि पूर्वं जागर्ति किं वा परममुच्यते १२
कथं क्षत्रियसंस्थश्च दण्डः संप्रत्यवस्थितः
ब्रूहि मे सुमहाप्राज्ञ ददाम्याचार्यवेतनम् १३
वसुहोम उवाच
शृणु राजन्यथा दण्डः संभूतो लोकसंग्रहः
प्रजाविनयरक्षार्थं धर्मस्यात्मा सनातनः १४
ब्रह्मा यियक्षुर्भगवान्सर्वलोकपितामहः
ऋत्विजं नात्मना तुल्यं ददर्शेति हि नः श्रुतम् १५
स गर्भं शिरसा देवो वर्षपूगानधारयत्
पूर्णे वर्षसहस्रे तु स गर्भः क्षुवतोऽपतत् १६
स क्षुपो नाम संभूतः प्रजापतिररिंदम
ऋत्विगासीत्तदा राजन्यज्ञे तस्य महात्मनः १७
तस्मिन्प्रवृत्ते सत्रे तु ब्रह्मणः पार्थिवर्षभ
हृष्टरूपप्रचारत्वाद्दण्डः सोऽन्तर्हितोऽभवत् १८
तस्मिन्नन्तर्हिते चाथ प्रजानां संकरोऽभवत्
नैव कार्यं न चाकार्यं भोज्याभोज्यं न विद्यते १९
पेयापेयं कुतः सिद्धिर्हिंसन्ति च परस्परम्
गम्यागम्यं तदा नासीत्परस्वं स्वं च वै समम् २०
परस्परं विलुम्पन्ते सारमेया इवामिषम्
अबलं बलिनो जघ्नुर्निर्मर्यादमवर्तत २१

ततः पितामहो विष्णुं भगवन्तं सनातनम्
संपूज्य वरदं देवं महादेवमथाब्रवीत् २२
अत्र साध्वनुकम्पां वै कर्तुमर्हसि केवलम्
संकरो न भवेदत्र यथा वै तद्विधीयताम् २३
ततः स भगवान्ध्यात्वा चिरं शूलजटाधरः
आत्मानमात्मना दण्डमसृजद्देवसत्तमः २४
तस्माच्च धर्मचरणां नीतिं देवीं सरस्वतीम्
असृजद्दण्डनीतिः सा त्रिषु लोकेषु विश्रुता २५
भूयः स भगवान्ध्यात्वा चिरं शूलवरायुधः
तस्य तस्य निकायस्य चकारैकैकमीश्वरम् २६
देवानामीश्वरं चक्रे देवं दशशतेक्षणम्
यमं वैवस्वतं चापि पितृणामकरोत्पतिम् २७
धनानां रक्षसां चापि कुबेरमपि चेश्वरम्
पर्वतानां पति मेरुं सरितां च महोदधिम् २८
अपां राज्ये सुराणां च विदधे वरुणं प्रभुम्
मृत्युं प्राणेश्वरमथो तेजसां च हुताशनम् २९
रुद्राणामपि चेशानं गोप्तारं विदधे प्रभुः
महात्मानं महादेवं विशालाक्षं सनातनम् ३०
वशिष्ठमीशं विप्राणां वसूनां जातवेदसम्
तेजसां भास्करं चक्रे नक्षत्राणां निशाकरम् ३१
वीरुधामंशुमन्तं च भूतानां च प्रभुं वरम्
कुमारं द्वादशभुजं स्कन्दं राजानमादिशत् ३२
कालं सर्वेशमकरोत्संहारविनयात्मकम्
मृत्योश्चतुर्विभागस्य दुःखस्य च सुखस्य च ३३
ईश्वरः सर्वदेहस्तु राजराजो धनाधिपः
सर्वेषामेव रुद्राणां शूलपाणिरिति श्रुतिः ३४
तमेकं ब्रह्मणः पुत्रमनुजातं क्षुपं ददौ
प्रजानामधिपं श्रेष्ठं सर्वधर्मभृतामपि ३५
महादेवस्ततस्तस्मिन्वृत्ते यज्ञे यथाविधि
दण्डं धर्मस्य गोप्तारं विष्णवे सत्कृतं ददौ ३६

विष्णुरङ्गिरसे प्रादादङ्गिरा मुनिसत्तमः
प्रादादिन्द्रमरीचिभ्यां मरीचिर्भृगवे ददौ ३७
भृगुर्ददावृषिभ्यस्तु तं दण्डं धर्मसंहितम्
ऋषयो लोकपालेभ्यो लोकपालाः क्षुपाय च ३८
क्षुपस्तु मनवे प्रादादादित्यतनयाय च
पुत्रेभ्यः श्राद्धदेवस्तु सूक्ष्मधर्मार्थकारणात्
तं ददौ सूर्यपुत्रस्तु मनुर्वै रक्षणात्मकम् ३९
विभज्य दण्डः कर्तव्यो धर्मेण न यदृच्छया
दुर्वाचा निग्रहो बन्धो हिरण्यं बाह्यतःक्रिया ४०
व्यङ्गत्वं च शरीरस्य वधो वा नाल्पकारणात्
शरीरपीडास्तास्तास्तु देहत्यागो विवासनम् ४१
आनुपूर्व्या च दण्डोऽसौ प्रजा जागर्ति पालयन्
इन्द्रो जागर्ति भगवानिन्द्रादग्निर्विभावसुः ४२
अग्नेर्जागर्ति वरुणो वरुणाच्च प्रजापतिः
प्रजापतेस्ततो धर्मो जागर्ति विनयात्मकः ४३
धर्माच्च ब्रह्मणः पुत्रो व्यवसायः सनातनः
व्यवसायात्ततस्तेजो जागर्ति परिपालयन् ४४
ओषध्यस्तेजसस्तस्मादोषधिभ्यश्च पर्वताः
पर्वतेभ्यश्च जागर्ति रसो रसगुणात्तथा ४५
जागर्ति निर्ऋतिर्देवी ज्योतींषि निर्ऋतेरपि
वेदाः प्रतिष्ठा ज्योतिर्भ्यस्ततो हयशिराः प्रभुः ४६
ब्रह्मा पितामहस्तस्माज्जागर्ति प्रभुरव्ययः
पितामहान्महादेवो जागर्ति भगवाञ्शिवः ४७
विश्वेदेवाः शिवाच्चापि विश्वेभ्यश्च तथर्षयः
ऋषिभ्यो भगवान्सोमः सोमाद्देवाः सनातनाः ४८
देवेभ्यो ब्राह्मणा लोके जाग्रतीत्युपधारय
ब्राह्मणेभ्यश्च राजन्या लोकान्रक्षन्ति धर्मतः
स्थावरं जङ्गमं चैव क्षत्रियेभ्यः सनातनम् ४९
प्रजा जाग्रति लोकेऽस्मिन्दण्डो जागर्ति तासु च
सर्वसंक्षेपको दण्डः पितामहसमः प्रभुः ५०

जागर्ति कालः पूर्वं च मध्ये चान्ते च भारत
ईश्वरः सर्वलोकस्य महादेवः प्रजापतिः ५१
देवदेवः शिवः शर्वो जागर्ति सततं प्रभुः
कपर्दी शंकरो रुद्रो भवः स्थाणुरुमापतिः ५२
इत्येष दण्डो विख्यात आदौ मध्ये तथावरे
भूमिपालो यथान्यायं वर्तेतानेन धर्मवित् ५३
भीष्म उवाच
इतीदं वसुहोमस्य शृणुयाद्यो मतं नरः
श्रुत्वा च सम्यग्वर्तेत स कामानाप्नुयान्नृपः ५४
इति ते सर्वमाख्यातं यो दण्डो मनुजर्षभ
नियन्ता सर्वलोकस्य धर्माक्रान्तस्य भारत ५५
इति श्रीमहाभारते शान्तिपर्वणि द्वाविंशत्यधिकशततमोऽध्यायः १२२

## त्रयोविंशत्यधिक शततमोऽध्यायः

युधिष्ठिर उवाच
तात धर्मार्थकामानां श्रोतुमिच्छामि निश्चयम्
लोकयात्रा हि कार्त्स्न्येन त्रिष्वेतेषु प्रतिष्ठिता १
धर्मार्थकामाः किंमूलास्त्रयाणां प्रभवश्च कः
अन्योन्यं चानुषज्जन्ते वर्तन्ते च पृथक्पृथक् २
भीष्म उवाच
यदा ते स्युः सुमनसो लोकसंस्थार्थनिश्चये
कालप्रभवसंस्थासु सज्जन्ते च त्रयस्तदा ३
धर्ममूलस्तु देहोऽथ कामोऽथफलमुच्यते
संकल्पमूलास्ते सर्वे संकल्पो विषयात्मकः ४
विषयाश्चैव कार्त्स्न्येन सर्व आहारसिद्धये
मूलमेतत्त्रिवर्गस्य निवृत्तिर्मोक्ष उच्यते ५
धर्मः शरीरसंगुप्तिर्धर्मार्थं चार्थ इष्यते
कामो रतिफलश्चात्र सर्वे चैते रजस्वलाः ६
संनिकृष्टांश्चरेदेतान्न चैनान्मनसा त्यजेत्
विमुक्तस्तमसा सर्वान्धर्मादीन्कामनैष्ठिकान् ७

श्रेष्ठबुद्धिस्त्रिवर्गस्य यदयं प्राप्नुयात्क्षणात्
बुद्ध्या बुध्येदिहार्थे न तदह्ला तु निकृष्टया ८
अपध्यानमलो धर्मो मलोऽथस्य निगूहन्
संप्रमोदमलः कामो भूयः स्वगुणवर्तितः ९
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
कामन्दस्य च संवादमङ्गारिष्ठस्य चोभयोः १०
कामन्दमृषिमासीनमभिवाद्य नराधिपः
अङ्गारिष्ठोऽथ पप्रच्छ कृत्वा समयपर्ययम् ११
यः पापं कुरुते राजा काममोहबलात्कृतः
प्रत्यासन्नस्य तस्यर्षे किं स्यात्पापप्रणाशनम् १२
अधर्मो धर्म इति ह योऽज्ञानादाचरेदिह
तं चापि प्रथितं लोके कथं राजा निवर्तयेत् १३
कामन्द उवाच
यो धर्मार्थौ समुत्सृज्य काममेवानुवर्तते
स धर्मार्थपरित्यागात्प्रज्ञानाशमिहार्छति १४
प्रज्ञाप्रणाशको मोहस्तथा धर्मार्थनाशकः
तस्मान्नास्तिकता चैव दुराचारश्च जायते १५
दुराचारान्यदा राजा प्रदुष्टान्न नियच्छति
तस्मादुद्विजते लोकः सर्पाद्वेश्मगतादिव १६
तं प्रजा नानुवर्तन्ते ब्राह्मणा न च साधवः
ततः संक्षयमाप्नोति तथा वध्यत्वमेति च १७
अपध्वस्तस्त्ववमतो दुःखं जीवति जीवितम्
जीवेच्च यदपध्वस्तस्तच्छुद्धं मरणं भवेत् १८
अत्रैतदाहुराचार्याः पापस्य च निबर्हणम्
सेवितव्या त्रयी विद्या सत्कारो ब्राह्मणेषु च १९
महामना भवेद्धर्मे विवहेच्च महाकुले
ब्राह्मणांश्चापि सेवेत क्षमायुक्तान्मनस्विनः २०
जपेदुदकशीलः स्यात्सुमुखो नान्यदास्थितः
धर्मान्वितान्संप्रविशेद्बहिः कृत्वैव दुष्कृतीन् २१
प्रसादयेन्मधुरया वाचाप्यथ च कर्मणा

इत्यस्मीति वदेन्नित्यं परेषां कीर्तयन्गुणान् २२
अपापो ह्येवमाचारः क्षिप्रं बहुमतो भवेत्
पापान्यपि च कृच्छ्राणि शमयेन्नात्र संशयः २३
गुरवोऽपि परं धर्मं यद्ब्रूयुस्तत्तथा कुरु
गुरूणां हि प्रसादाद्धि श्रेयः परमवाप्स्यसि २४
इति श्रीमहाभारते शान्तिपर्वणि त्रयोविंशत्यधिकशततमोऽध्यायः १२३

## चतुर्विंशत्यधिक शततमोऽध्यायः

युधिष्ठिर उवाच
इमे जना नरश्रेष्ठ प्रशंसन्ति सदा भुवि
धर्मस्य शीलमेवादौ ततो मे संशयो महान् १
यदि तच्छक्यमस्माभिर्ज्ञातुं धर्मभृतां वर
श्रोतुमिच्छामि तत्सर्वं यथैतदुपलभ्यते २
कथं नु प्राप्यते शीलं श्रोतुमिच्छामि भारत
किंलक्षणं च तत्प्रोक्तं ब्रूहि मे वदतां वर ३
भीष्म उवाच
पुरा दुर्योधनेनेह धृतराष्ट्राय मानद
आख्यातं तप्यमानेन श्रियं दृष्ट्वा तथागताम् ४
इन्द्रप्रस्थे महाराज तव सभ्रातृकस्य ह
सभायां चावहसनं तत्सर्वं शृणु भारत ५
भवतस्तां सभां दृष्ट्वा समृद्धिं चाप्यनुत्तमाम्
दुर्योधनस्तदासीनः सर्वं पित्रे न्यवेदयत् ६
श्रुत्वा च धृतराष्ट्रोऽपि दुर्योधनवचस्तदा
अब्रवीत्कर्णसहितं दुर्योधनमिदं वचः ७
किमर्थं तप्यसे पुत्रः श्रोतुमिच्छामि तत्त्वतः
श्रुत्वा त्वामनुनेष्यामि यदि सम्यग्भविष्यसि ८
यथा त्वं महदैश्वर्यं प्राप्तः परपुरंजय
किंकरा भ्रातरः सर्वे मित्राः संबन्धिनस्तथा ९
आच्छादयसि प्रावारानश्नासि पिशितोदनम्
आजानेया वहन्ति त्वां कस्माच्छोचसि पुत्रक १०

दुर्योधन उवाच
दश तानि सहस्राणि स्नातकानां महात्मनाम्
भुञ्जते रुक्मपात्रीषु युधिष्ठिरनिवेशने ११
दृष्ट्वा च तां सभां दिव्यां दिव्यपुष्पफलान्विताम्
अश्वांस्तित्तिरकल्माषान्रत्नानि विविधानि च १२
दृष्ट्वा तां पाण्डवेयानामृद्धिमिन्द्रोपमां शुभाम्
अमित्राणां सुमहतीमनुशोचामि मानद १३
धृतराष्ट्र उवाच
यदीच्छसि श्रीयं तात यादृशीं तां युधिष्ठिरे
विशिष्टां वा नरव्याघ्र शीलवान्भव पुत्रक १४
शीलेन हि त्रयो लोकाः शक्या जेतुं न संशयः
न हि किंचिदसाध्यं वै लोके शीलवतां भवेत् १५
एकरात्रेण मान्धाता त्र्यहेण जनमेजयः
सप्तरात्रेण नाभागः पृथिवीं प्रतिपेदिवान् १६
एते हि पार्थिवाः सर्वे शीलवन्तो दमान्विताः
अतस्तेषां गुणक्रीता वसुधा स्वयमागमत् १७
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
नारदेन पुरा प्रोक्तं शीलमाश्रित्य भारत १८
प्रह्लादेन हृतं राज्यं महेन्द्रस्य महात्मनः
शीलमाश्रित्य दैत्येन त्रैलोक्यं च वशीकृतम् १९
ततो बृहस्पतिं शक्रः प्राञ्जलि समुपस्थितः
उवाच च महाप्राज्ञः श्रेय इच्छामि वेदितुम् २०
ततो बृहस्पतिस्तस्मै ज्ञानं नैःश्रेयसं परम्
कथयामास भगवान्देवेन्द्राय कुरूद्वह २१
एतावच्छ्रेय इत्येव बृहस्पतिरभाषत
इन्द्रस्तु भूयः पप्रच्छ क्व विशेषो भवेदिति २२
बृहस्पतिरुवाच
विशेषोऽस्ति महांस्तात भार्गवस्य महात्मनः
तत्रागमय भद्रं ते भूय एव पुरंदर २३
धृतराष्ट्र उवाच

आत्मनस्तु ततः श्रेयो भार्गवात्सुमहायशाः
ज्ञानमागमयत्प्रीत्या पुनः स परमद्युतिः २४
तेनापि समनुज्ञातो भार्गवेण महात्मना
श्रेयोऽस्तीति पुनर्भूयः शुक्रमाह शतक्रतुः २५
भार्गवस्त्वाह धर्मज्ञः प्रह्लादस्य महात्मनः
ज्ञानमस्ति विशेषेण ततो हृष्टश्च सोऽभवत् २६
स ततो ब्राह्मणो भूत्वा प्रह्लादं पाकशासनः
सृत्वा प्रोवाच मेधावी श्रेय इच्छामि वेदितुम् २७
प्रह्लादस्त्वब्रवीद्विप्रं क्षणो नास्ति द्विजर्षभ
त्रैलोक्यराज्ये सक्तस्य ततो नोपदिशामि ते २८
ब्राह्मणस्त्वब्रवीद्वाक्यं कस्मिन्काले क्षणो भवेत्
ततोपदिष्टमिच्छामि यद्यत्कार्यान्तरं भवेत् २९
ततः प्रीतोऽभवद्राजा प्रह्लादो ब्रह्मवादिने
तथेत्युक्त्वा शुभे काले ज्ञानतत्त्वं ददौ तदा ३०
ब्राह्मणोऽपि यथान्यायं गुरुवृत्तिमनुत्तमाम्
चकार सर्वभावेन यद्वत्स मनसेच्छति ३१
पृष्टश्च तेन बहुशः प्राप्तं कथमरिंदम
त्रैलोक्यराज्यं धर्मज्ञ कारणं तद्ब्रवीहि मे ३२
प्रह्लाद उवाच
नासूयामि द्विजश्रेष्ठ राजास्मीति कदाचन
कव्यानि वदतां तात संयच्छामि वहामि च ३३
ते विस्रब्धाः प्रभाषन्ते संयच्छन्ति च मां सदा
ते मा कव्यपदे सक्तं शुश्रूषुमनसूयकम् ३४
धर्मात्मानं जितक्रोधं संयतं संयतेन्द्रियम्
समाचिन्वन्ति शास्तारः क्षौद्रं मध्विव मक्षिकाः ३५
सोऽह वागग्रपिष्टानां रसानामवलेहिता
स्वजात्यानधितिष्ठामि नक्षत्राणीव चन्द्रमाः ३६
एतत्पृथिव्याममृतमेतच्चक्षुरनुत्तमम्
यद्ब्राह्मणमुखे कव्यमेतच्छ्रुत्वा प्रवर्तते ३७
धृतराष्ट्र उवाच

एतावच्छ्रेय इत्याह प्रह्लादो ब्रह्मवादिनम्
शुश्रूषितस्तेन तदा दैत्येन्द्रो वाक्यमब्रवीत् ३८
यथावद्गुरुवृत्त्या ते प्रीतोऽस्मि द्विजसत्तम
वरं वृष्णीष्व भद्रं ते प्रदातास्मि न संशयः ३९
कृतमित्येव दैत्येन्द्रमुवाच स च वै द्विजः
प्रह्लादस्त्वब्रवीत्प्रीतो गृह्यतां वर इत्युत ४०
ब्राह्मण उवाच
यदि राजन्प्रसन्नस्त्वं मम चेच्छसि चेद्धितम्
भवतः शीलमिच्छामि प्राप्तुमेष वरो मम ४१
धृतराष्ट्र उवाच
ततः प्रीतश्च दैत्येन्द्रो भयं चास्याभवन्महत्
वरे प्रदिष्टे विप्रेण नाल्पतेजायमित्युत ४२
एवमस्त्विति तं प्राह प्रह्लादो विस्मितस्तदा
उपाकृत्य तु विप्राय वरं दुःखान्वितोऽभवत् ४३
दत्ते वरे गते विप्रे चिन्तासीन्महती ततः
प्रह्लादस्य महाराज निश्चयं न च जग्मिवान् ४४
तस्य चिन्तयतस्तात छायाभूतं महाद्युते
तेजो विग्रहवत्तात शरीरमजहात्तदा ४५
तमपृच्छन्महाकायं प्रह्लादः को भवानिति
प्रत्याह ननु शीलोऽस्मि त्यक्तो गच्छाम्यहं त्वया ४६
तस्मिन्द्विजवरे राजन्वत्स्याम्यहमनिन्दितम्
योऽसौ शिष्यत्वमागम्य त्वयि नित्यं समाहितः
इत्युक्त्वान्तर्हितं तद्वै शक्रं चान्वविशत्प्रभो ४७
तस्मिंस्तेजसि याते तु तादृग्रूपस्ततोऽपरः
शरीरान्निःसृतस्तस्य को भवानिति चाब्रवीत् ४८
धर्मं प्रह्लाद मां विद्धि यत्रासौ द्विजसत्तमः
तत्र यास्यामि दैत्येन्द्र यतः शीलं ततो ह्यहम् ४९
ततोऽपरो महाराज प्रज्वलन्निव तेजसा
शरीरान्निःसृतस्तस्य प्रह्लादस्य महात्मनः ५०
को भवानिति पृष्टश्च तमाह स महाद्युतिः

सत्यमस्म्यसुरेन्द्राग्र्य यास्येऽह धर्ममन्विह ५१
तस्मिन्ननुगते धर्मं पुरुषे पुरुषोऽपरः
निश्चक्राम ततस्तस्मात्पृष्टश्चाह महात्मना
वृत्तं प्रह्लाद मां विद्धि यतः सत्यं ततो ह्यहम् ५२
तस्मिन्गते महाश्वेतः शरीरात्तस्य निर्ययौ
पृष्टश्चाह बलं विद्धि यतो वृत्तमहं ततः
इत्युक्त्वा च ययौ तत्र यतो वृत्तं नराधिप ५३
ततः प्रभामयी देवी शरीरात्तस्य निर्ययौ
तामपृच्छत्स दैत्येन्द्रः सा श्रीरित्येनमब्रवीत् ५४
उषितास्मि सुखं वीर त्वयि सत्यपराक्रमे
त्वया त्यक्ता गमिष्यामि बलं यत्र ततो ह्यहम् ५५
ततो भयं प्रादुरासीत्प्रह्लादस्य महात्मनः
अपृच्छत च तां भूयः क्व यासि कमलालये ५६
त्वं हि सत्यव्रता देवी लोकस्य परमेश्वरी
कश्चासौ ब्राह्मणश्रेष्ठस्तत्त्वमिच्छामि वेदितुम् ५७
श्रीरुवाच
स शक्रो ब्रह्मचारी च यस्त्वया चोपशिक्षितः
त्रैलोक्ये ते यदैश्वर्यं तत्तेनापहृतं प्रभो ५८
शीलेन हि त्वया लोकाः सर्वे धर्मज्ञ निर्जिताः
तद्विज्ञाय महेन्द्रेण तव शीलं हृतं प्रभो ५९
धर्मः सत्यं तथा वृत्तं बलं चैव तथा ह्यहम्
शीलमूला महाप्राज्ञ सदा नास्त्यत्र संशयः ६०
भीष्म उवाच
एवमुक्त्वा गता तु श्रीस्ते च सर्वे युधिष्ठिर
दुर्योधनस्तु पितरं भूय एवाब्रवीदिदम् ६१
शीलस्य तत्त्वमिच्छामि वेत्तुं कौरवनन्दन
प्राप्यते च यथा शीलं तमुपायं वदस्व मे ६२
धृतराष्ट्र उवाच
सोपायं पूर्वमुद्दिष्टं प्रह्लादेन महात्मना
संक्षेपतस्तु शीलस्य शृणु प्राप्तिं नराधिप ६३

अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा
अनुग्रहश्च दानं च शीलमेतत्प्रशस्यते ६४
यदन्येषां हितं न स्यादात्मनः कर्म पौरुषम्
अपत्रपेत वा येन न तत्कुर्यात्कथंचन ६५
तत्तु कर्म तथा कुर्याद्येन श्लाघेत संसदि
एतच्छीलं समासेन कथितं कुरुसत्तम ६६
यद्यप्यशीला नृपते प्राप्नुवन्ति क्वचिच्छ्रियम्
न भुञ्जते चिरं तात समूलाश्च पतन्ति ते ६७
एतद्विदित्वा तत्त्वेन शीलवान्भव पुत्रक
यदीच्छसि श्रियं तात सुविशिष्टां युधिष्ठिरात् ६८
भीष्म उवाच
एतत्कथितवान्पुत्रे धृतराष्ट्रो नराधिप
एतत्कुरुष्व कौन्तेय ततः प्राप्स्यसि तत्फलम् ६९
इति श्रीमहाभारते शान्तिपर्वणि चतुर्विंशत्यधिकशततमोऽध्यायः १२४

पञ्चविंशत्यधिक शततमोऽध्यायः

युधिष्ठिर उवाच
शीलं प्रधानं पुरुषे कथितं ते पितामह
कथमाशा समुत्पन्ना या च सा तद्वदस्व मे १
संशयो मे महानेष समुत्पन्नः पितामह
छेत्ता च तस्य नान्योऽस्ति त्वत्तः परपुरंजय २
पितामहाशा महती ममासीद्धि सुयोधने
प्राप्ते युद्धे तु यद्युक्तं तत्कर्तायमिति प्रभो ३
सर्वस्याशा सुमहती पुरुषस्योपजायते
तस्यां विहन्यमानायां दुःखो मृत्युरसंशयम् ४
सोऽह हताशो दुर्बुद्धिः कृतस्तेन दुरात्मना
धार्तराष्ट्रेण राजेन्द्र पश्य मन्दात्मतां मम ५
आशां महत्तरां मन्ये पर्वतादपि सद्रुमात्
आकाशादपि वा राजन्नप्रमेयैव वा पुनः ६
एषा चैव कुरुश्रेष्ठ दुर्विचिन्त्या सुदुर्लभा

दुर्लभत्वाच्च पश्यामि किमन्यद्दुर्लभं ततः ७
भीष्म उवाच
अत्र ते वर्तयिष्यामि युधिष्ठिर निबोध तत्
इतिहासं सुमित्रस्य निर्वृत्तमृषभस्य च ८
सुमित्रो नाम राजर्षिर्हैहयो मृगयां गतः
ससार स मृगं विद्ध्वा बाणेन नतपर्वणा ९
स मृगो बाणमादाय ययावमितविक्रमः
स च राजा बली तूर्णं ससार मृगमन्तिकात् १०
ततो निम्नं स्थलं चैव स मृगोऽद्रवदाशुगः
मुहूर्तमेव राजेन्द्र समेन स पथागमत् ११
ततः स राजा तारुण्यादौरसेन बलेन च
ससार बाणासनभृत्सखड्गो हंसवत्तदा १२
तीर्त्वा नदान्नदीश्चैव पल्वलानि वनानि च
अतिक्रम्याभ्यतिक्रम्य ससारैव वने चरन् १३
स तु कामान्मृगो राजन्नासाद्यासाद्य तं नृपम्
पुनरभ्येति जवनो जवेन महता ततः १४
स तस्य बाणैर्बहुभिः समभ्यस्तो वनेचरः
प्रक्रीडन्निव राजेन्द्र पुनरभ्येति चान्तिकम् १५
पुनश्च जवमास्थाय जवनो मृगयूथपः
अतीत्यातीत्य राजेन्द्र पुनरभ्येति चान्तिकम् १६
तस्य मर्मच्छिदं घोरं सुमित्राऽमित्रकर्शनः
समादाय शरश्रेष्ठं कार्मुकान्निरवासृजत् १७
ततो गव्यूतिमात्रेण मृगयूथपयूथपः
तस्य बाणपथं त्यक्त्वा तस्थिवान्प्रहसन्निव १८
तस्मिन्निपतिते बाणे भूमौ प्रज्वलिते ततः
प्रविवेश महारण्यं मृगो राजाप्यथाद्रवत् १९
प्रविश्य तु महारण्यं तापसानामथाश्रमम्
आससाद ततो राजा श्रान्तश्चोपाविशत्पुनः २०
तं कार्मुकधरं दृष्ट्वा श्रमार्तं क्षुधितं तदा
समेत्य ऋषयस्तस्मिन्पूजां चक्रुर्यथाविधि २१

ऋषयो राजशार्दूलमपृच्छन्स्वं प्रयोजनम्
केन भद्रमुखार्थेन संप्राप्तोऽसि तपोवनम् २२
पदातिर्बद्धनिस्त्रिंशो धन्वी बाणी नरेश्वर
एतदिच्छाम विज्ञातुं कुतः प्राप्तोऽसि मानद
कस्मिन्कुले तु जातस्त्वं किं नामासि ब्रवीहि नः २३
ततः स राजा सर्वेभ्यो द्विजेभ्यः पुरुषर्षभ
आचख्यौ तद्यथान्यायं परिचर्यां च भारत २४
हैहयानां कुले जातः सुमित्रो मित्रनन्दनः
चरामि मृगयूथानि निघ्नन्बाणैः सहस्रशः
बलेन महता गुप्तः सामात्यः सावरोधनः २५
मृगस्तु विद्धो बाणेन ममा सरति शल्यवान्
तं द्रवन्तमनु प्राप्तो वनमेतद्यदृच्छया
भवत्सकाशे नष्टश्रीर्हताशः श्रमकर्शितः २६
किं नु दुःखमतोऽन्यद्वै यदहं श्रमकर्शितः
भवतामाश्रमं प्राप्तो हताशो नष्टलक्षणः २७
न राजलक्षणत्यागो न पुरस्य तपोधनाः
दुःखं करोति तत्तीव्रं यथाशा विहता मम २८
हिमवान्वा महाशैलः समुद्रो वा महोदधिः
महत्त्वान्नान्वपद्येतां रोदस्योरन्तरं यथा
आशायास्तपसि श्रेष्ठास्तथा नान्तमहं गतः २९
भवतां विदितं सर्वं सर्वज्ञा हि तपोधनाः
भवन्तः सुमहाभागास्तस्मात्प्रक्ष्यामि संशयम् ३०
आशावान्पुरुषो यः स्यादन्तरिक्षमथापि वा
किं नु ज्यायस्तरं लोके महत्वात्प्रतिभाति वः
एतदिच्छामि तत्त्वेन श्रोतुं किमिह दुर्लभम् ३१
यदि गुह्यं तपोनित्या न वो ब्रूतेह माचिरम्
न हि गुह्यमतः श्रोतुमिच्छामि द्विजपुंगवाः ३२
भवत्तपोविघातो वा येन स्याद्विरमे ततः
यदि वास्ति कथायोगो योऽय प्रश्नो मयेरितः ३३
एतत्कारणसामग्र्यं श्रोतुमिच्छामि तत्त्वतः

भवन्तो हि तपोनित्या ब्रूयुरेतत्समाहिताः ३४
इति श्रीमहाभारते शान्तिपर्वणि पञ्चविंशत्यधिकशततमोऽध्यायः १२५

## षड्विंशत्यधिक शततमोऽध्यायः

भीष्म उवाच
ततस्तेषां समस्तानामृषीणामृषिसत्तमः
ऋषभो नाम विप्रर्षिः स्मयन्निव ततोऽब्रवीत् १
पुराहं राजशार्दूल तीर्थान्यनुचरन्प्रभो
समासादितवान्दिव्यं नरनारायणाश्रमम् २
यत्र सा बदरी रम्या ह्रदो वैहायसस्तथा
यत्र चाश्वशिरा राजन्वेदान्पठति शाश्वतान् ३
तस्मिन्सरसि कृत्वाहं विधिवत्तर्पणं पुरा
पितॄणां देवतानां च ततोऽश्रममियां तदा ४
रेमाते यत्र तौ नित्यं नरनारायणावृषी
अदूरादाश्रमं कञ्चिद्वासार्थमगमं ततः ५
ततश्चीराजिनधरं कृशमुच्चमतीव च
अद्राक्षमृषिमायान्तं तनुं नाम तपोनिधिम् ६
अन्यैर्नरैर्महाबाहो वपुषाष्टगुणान्वितम्
कृशता चापि राजर्षे न दृष्टा तादृशी क्वचित् ७
शरीरमपि राजेन्द्र तस्य कानिष्ठिकासमम्
ग्रीवा बाहू तथा पादौ केशाश्चाद्भुतदर्शनाः ८
शिरः कायानुरूपं च कर्णौ नेत्रे तथैव च
तस्य वाक्चैव चेष्टा च सामान्ये राजसत्तम ९
दृष्ट्वाहं तं कृशं विप्रं भीतः परमदुर्मनाः
पादौ तस्याभिवाद्याथ स्थितः प्राञ्जलिरग्रतः १०
निवेद्य नाम गोत्रं च पितरं च नरर्षभ
प्रदिष्टे चासने तेन शनैरहमुपाविशम् ११
ततः स कथयामास कथा धर्मार्थसंहिताः
ऋषिमध्ये महाराज तत्र धर्मभृतां वरः १२
तस्मिंस्तु कथयत्येव राजा राजीवलोचनः

उपायाज्जवनैरश्वैः सबलः सावरोधनः १३
स्मरन्पुत्रमरण्ये वै नष्टं परमदुर्मनाः
भूरिद्युम्नपिता श्रीमान्रघुश्रेष्ठो महायशाः १४
इह द्रक्ष्यामि तं पुत्रं द्रक्ष्यामीहेति पार्थिवः
एवमाशाकृतो राजंश्चरन्वनमिदं पुरा १५
दुर्लभः स मया द्रष्टुं नूनं परमधार्मिकः
एकः पुत्रो महारण्ये नष्ट इत्यसकृत्तदा १६
दुर्लभः स मया द्रष्टुमाशा च महती मम
तया परीतगात्रोऽहं मुमूर्षुर्नात्र संशयः १७
एतच्छ्रुत्वा स भगवांस्तनुर्मुनिवरोत्तमः
अवाक्शिरा ध्यानपरो मुहूर्तमिव तस्थिवान् १८
तमनुध्यान्तमालक्ष्य राजा परमदुर्मनाः
उवाच वाक्यं दीनात्मा मन्दं मन्दमिवासकृत् १९
दुर्लभं किं नु विप्रर्षे आशायाश्चैव किं भवेत्
ब्रवीतु भगवानेतद्यदि गुह्यं न तन्मयि २०
महर्षिर्भगवांस्तेन पूर्वमासीद्विमानितः
बालिशां बुद्धिमास्थाय मन्दभाग्यतयात्मनः २१
अर्थयन्कलशं राजन्काञ्चनं वल्कलानि च
निर्विण्णः स तु विप्रर्षिर्निराशः समपद्यत २२
एवमुक्त्वाभिवाद्याथ तमृषिं लोकपूजितम्
श्रान्तो न्यषीदद्धर्मात्मा यथा त्वं नरसत्तम २३
अर्घ्यं ततः समानीय पाद्यं चैव महानृषिः
आरण्यकेन विधिना राज्ञे सर्वं न्यवेदयत् २४
ततस्ते मुनयः सर्वे परिवार्य नरर्षभम्
उपाविशन्पुरस्कृत्य सप्तर्षय इव ध्रुवम् २५
अपृच्छंश्चैव तं तत्र राजानमपराजितम्
प्रयोजनमिदं सर्वमाश्रमस्य प्रवेशनम् २६
राजोवाच
वीरद्युम्न इति ख्यातो राजाहं दिक्षु विश्रुतः
भूरिद्युम्नं सुतं नष्टमन्वेष्टुं वनमागतः २७

एकपुत्रः स विप्राग्र्य बाल एव च सोऽनघ
न दृश्यते वने चास्मिंस्तमन्वेष्टुं चराम्यहम् २८
ऋषभ उवाच
एवमुक्ते तु वचने राज्ञा मुनिरधोमुखः
तूष्णीमेवाभवत्तत्र न च प्रत्युक्तवान्नृपम् २९
स हि तेन पुरा विप्रो राज्ञा नात्यर्थमानितः
आशाकृशं च राजेन्द्र तपो दीर्घं समास्थितः ३०
प्रतिग्रहमहं राज्ञां न करिष्ये कथंचन
अन्येषां चैव वर्णानामिति कृत्वा धियं तदा ३१
आशा हि पुरुषं बालं लालापयति तस्थुषी
तामहं व्यपनेष्यामि इति कृत्वा व्यवस्थितः ३२
राजोवाच
आशायाः किं कृशत्वं च किं चेह भुवि दुर्लभम्
ब्रवीतु भगवानेतत्त्वं हि धर्मार्थदर्शिवान् ३३
ऋषभ उवाच
ततः संस्मृत्य तत्सर्वं स्मारयिष्यन्निवाब्रवीत्
राजानं भगवान्विप्रस्ततः कृशतनुस्तनुः ३४
कृशत्वे न समं राजन्नाशाया विद्यते नृप
तस्या वै दुर्लभत्वात्तु प्रार्थिताः पार्थिवा मया ३५
राजोवाच
कृशाकृशे मया ब्रह्मन्गृहीते वचनात्तव
दुर्लभत्वं च तस्यैव वेदवाक्यमिव द्विज ३६
संशयस्तु महाप्राज्ञ संजातो हृदये मम
तन्मे सत्तम तत्त्वेन वक्तुमर्हसि पृच्छतः ३७
त्वत्तः कृशतरं किं नु ब्रवीतु भगवानिदम्
यदि गुह्यं न ते विप्र लोकेऽस्मिन्किं नु दुर्लभम् ३८
कृशतनुरुवाच
दुर्लभोऽप्यथ वा नास्ति योऽर्थी धृतिमवाप्नुयात्
सुदुर्लभतरस्तात योऽर्थिनं नावमन्यते ३९
संश्रुत्य नोपक्रियते परं शक्त्या यथार्हतः

सक्ता या सर्वभूतेषु साशा कृशतरी मया ४०
एकपुत्रः पिता पुत्रे नष्टे वा प्रोषिते तथा
प्रवृत्तिं यो न जानाति साशा कृशतरी मया ४१
प्रसवे चैव नारीणां वृद्धानां पुत्रकारिता
तथा नरेन्द्र धनिनामाशा कृशतरी मया ४२
ऋषभ उवाच
एतच्छ्रुत्वा ततो राजन्स राजा सावरोधनः
संस्पृश्य पादौ शिरसा निपपात द्विजर्षभे ४३
राजोवाच
प्रसादये त्वां भगवन्पुत्रेणेच्छामि संगतिम्
वृणीष्व च वरं विप्र यमिच्छसि यथाविधि ४४
ऋषभ उवाच
अब्रवीच्च हि तं वाक्यं राजा राजीवलोचनः
सत्यमेतद्यथा विप्र त्वयोक्तं नास्त्यतो मृषा ४५
ततः प्रहस्य भगवांस्तनुर्धर्मभृतां वरः
पुत्रमस्यानयत्क्षिप्रं तपसा च श्रुतेन च ४६
तं समानाय्य पुत्रं तु तदोपालभ्य पार्थिवम्
आत्मानं दर्शयामास धर्मं धर्मभृतां वरः ४७
संदर्शयित्वा चात्मानं दिव्यमद्भुतदर्शनम्
विपाप्मा विगतक्रोधश्चचार वनमन्तिकात् ४८
एतद्दृष्टं मया राजंस्ततश्च वचनं श्रुतम्
आशामपनयस्वाशु ततः कृशतरीमिमाम् ४९
भीष्म उवाच
स तत्रोक्तो महाराज ऋषभेण महात्मना
सुमित्रोऽपनयत्क्षिप्रमाशां कृशतरीं तदा ५०
एवं त्वमपि कौन्तेय श्रुत्वा वाणीमिमां मम
स्थिरो भव यथा राजन्हिमवानचलोत्तमः ५१
त्वं हि द्रष्टा च श्रोता च कृच्छ्रेष्वर्थकृतेष्विह
श्रुत्वा मम महाराज न संतप्तुमिहार्हसि ५२
इति श्रीमहाभारते शान्तिपर्वणि षड्विंशत्यधिकशततमोऽध्यायः १२६

सप्तविंशत्यधिकशततमोऽध्यायः

युधिष्ठिर उवाच
नामृतस्येव पर्याप्तिर्ममास्ति ब्रुवति त्वयि
तस्मात्कथय भूयस्त्वं धर्ममेव पितामह १
भीष्म उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
गौतमस्य च संवादं यमस्य च महात्मनः २
पारियात्रगिरिं प्राप्य गौतमस्याश्रमो महान्
उवास गौतमो यत्र कालं तदपि मे शृणु ३
षष्टिं वर्षसहस्राणि सोऽतप्यद्गौतमस्तपः
तमुग्रतपसं युक्तं तपसा भावितं मुनिम् ४
उपयातो नरव्याघ्र लोकपालो यमस्तदा
तमपश्यत्सुतपसमृषिं वै गौतमं मुनिम् ५
स तं विदित्वा ब्रह्मर्षिर्यममागतमोजसा
प्राञ्जलि प्रयतो भूत्वा उपसृप्तस्तपोधनः ६
तं धर्मराजो दृष्ट्वैव नमस्कृत्य नरर्षभम्
न्यमन्त्रयत धर्मेण क्रियतां किमिति ब्रुवन् ७
गौतम उवाच
मातापितृभ्यामानृण्यं किं कृत्वा समवाप्नुयात्
कथं च लोकानश्नाति पुरुषो दुर्लभाञ्शुभान् ८
यम उवाच
तपःशौचवता नित्यं सत्यधर्मरतेन च
मातापित्रोरहरहः पूजनं कार्यमञ्जसा ९
अश्वमेधैश्च यष्टव्यं बहुभिः स्वाप्तदक्षिणैः
तेन लोकानुपाश्नाति पुरुषोऽद्भुतदर्शनान् १०
इति श्रीमहाभारते शान्तिपर्वणि सप्तविंशत्यधिकशततमोऽध्यायः १२७

अष्टाविंशत्यधिक शततमोऽध्यायः

युधिष्ठिर उवाच
मित्रैः प्रहीयमाणस्य बह्वमित्रस्य का गतिः

राज्ञः संक्षीणकोशस्य बलहीनस्य भारत १
दुष्टामात्यसहायस्य सुतमन्त्रस्य सर्वतः
राज्यात्प्रच्यवमानस्य गतिमन्यामपश्यतः २
परचक्राभियातस्य दुर्बलस्य बलीयसा
असंविहितराष्ट्रस्य देशकालावजानतः ३
अप्राप्यं च भवेत्सान्त्वं भेदो वाप्यतिपीडनात्
जीवितं चार्थहेतोर्वा तत्र किं सुकृतं भवेत् ४
भीष्म उवाच
गुह्यं मा धर्ममप्राक्षीरतीव भरतर्षभ
अपृष्टो नोत्सहे वक्तुं धर्ममेनं युधिष्ठिर ५
धर्मो ह्यणीयान्वचनाद्बुद्धेश्च भरतर्षभ
श्रुत्वोपास्य सदाचारैः साधुर्भवति स क्वचित् ६
कर्मणा बुद्धिपूर्वेण भवत्याढ्यो न वा पुनः
तादृशोऽयमनुप्रश्नः स व्यवस्यस्त्वया धिया ७
उपायं धर्मबहुलं यात्रार्थं शृणु भारत
नाहमेतादृशं धर्मं बुभूषे धर्मकारणात्
दुःखादान इहाढ्येषु स्यात्तु पश्चात्क्षमो मतः ८
अनुगम्य गतीनां च सर्वासामेव निश्चयम्
यथा यथा हि पुरुषो नित्यं शास्त्रमवेक्षते
तथा तथा विजानाति विज्ञानं चास्य रोचते ९
अविज्ञानादयोगश्च पुरुषस्योपजायते
अविज्ञानादयोगोहि योगो भूतिकरः पुनः १०
अशङ्कमानो वचनमनसूयुरिदं शृणु
राज्ञः कोशक्षयादेव जायते बलसंक्षयः ११
कोशं संजनयेद्राजा निर्जलेभ्यो यथा जलम्
कालं प्राप्यानुगृह्णीयादेष धर्मोऽत्र सांप्रतम् १२
उपायधर्मं प्राप्यैनं पूर्वैराचरितं जनैः
अन्यो धर्मः समर्थानामापत्स्वन्यश्च भारत १३
प्राक्कोशः प्रोच्यते धर्मो बुद्धिर्धर्माद्गरीयसी
धर्मं प्राप्य न्यायवृत्तिमबलीयान्न विन्दति १४

यस्माद्धनस्योपपत्तिरेकान्तेन न विद्यते
तस्मादापद्यधर्मोऽपि श्रूयते धर्मलक्षणः १५
अधर्मो जायते यस्मिन्निति वै कवयो विदुः
अनन्तरं क्षत्रियस्य इति वै विचिकित्ससे १६
यथास्य धर्मो न ग्लायेन्नेयाच्छत्रुवशं यथा
तत्कर्तव्यमिहेत्याहुर्नात्मानमवसादयेत् १७
सन्नात्मा नैव धर्मस्य न परस्य न चात्मनः
सर्वोपायैरुज्जिहीर्षेदात्मानमिति निश्चयः १८
तत्र धर्मविदां तात निश्चयो धर्मनैपुणे
उद्यमो जीवनं क्षत्रे बाहुवीर्यादिति श्रुतिः १९
क्षत्रियो वृत्तिसंरोधे कस्य नादातुमर्हति
अन्यत्र तापसस्वाच्च ब्राह्मणस्वाच्च भारत २०
यथा वै ब्राह्मणः सीदन्नयाज्यमपि याजयेत्
अभोज्यान्नानि चाश्नीयात्तथेदं नात्र संशयः २१
पीडितस्य किमद्वारमुत्पथो निधृतस्य वा
अद्वारतः प्रद्रवति यदा भवति पीडितः २२
यस्य कोशबलज्यान्या सर्वलोकपराभवः
भैक्षचर्या न विहिता न च विट्शूद्रजीविका २३
स्वधर्मानन्तरा वृत्तिर्यान्याननुपजीवतः
वहतः प्रथमं कल्पमनुकल्पेन जीवनम् २४
आपद्गतेन धर्माणामन्यायेनोपजीवनम्
अपि ह्येतद्ब्राह्मणेषु दृष्टं वृत्तिपरिक्षये २५
क्षत्रिये संशयः कः स्यादित्येतन्निश्चितं सदा
आददीत विशिष्टेभ्यो नावसीदेत्कथंचन २६
हन्तारं रक्षितारं च प्रजानां क्षत्रियं विदुः
तस्मात्संरक्षता कार्यमादानं क्षत्रबन्धुना २७
अन्यत्र राजन्हिंसाया वृत्तिर्नेहास्ति कस्यचित्
अप्यरण्यसमुत्थस्य एकस्य चरतो मुनेः २८
न शङ्खलिखितां वृत्तिं शक्यमास्थाय जीवितुम्
विशेषतः कुरुश्रेष्ठ प्रजापालनमीप्सता २९

परस्पराभिसंरक्षा राज्ञा राष्ट्रेण चापदि
नित्यमेवेह कर्तव्या एष धर्मः सनातनः ३०
राजा राष्ट्रं यथापत्सु द्रव्यौघैः परिरक्षति
राष्ट्रेण राजा व्यसने परिरक्ष्यस्तथा भवेत् ३१
कोशं दण्डं बलं मित्रं यदन्यदपि संचितम्
न कुर्वीतान्तरं राष्ट्रे राजा परिगते क्षुधा ३२
बीजं भक्तेन संपाद्यमिति धर्मविदो विदुः
अत्रैतच्छम्बरस्याहुर्महामायस्य दर्शनम् ३३
धिक्तस्य जीवितं राज्ञो राष्ट्रे यस्यावसीदति
अवृत्त्यान्त्यमनुष्योऽपि यो वै वेद शिबेर्वचः ३४
राज्ञः कोशबलं मूलं कोशमूलं पुनर्बलम्
तन्मूलं सर्वधर्माणां धर्ममूलाः पुनः प्रजाः ३५
नान्यानपीडयित्वेह कोशः शक्यः कुतो बलम्
तदर्थं पीडयित्वा च दोषं न प्राप्तुमर्हति ३६
अकार्यमपि यज्ञार्थं क्रियते यज्ञकर्मसु
एतस्मात्कारणाद्राजा न दोषं प्राप्तुमर्हति ३७
अर्थार्थमन्यद्भवति विपरीतमथापरम्
अनर्थार्थमथाप्यन्यत्तत्सर्वं ह्यर्थलक्षणम्
एवं बुद्ध्या संप्रपश्येन्मेधावी कार्यनिश्चयम् ३८
यज्ञार्थमन्यद्भवति यज्ञे नार्थस्तथापरः
यज्ञस्यार्थार्थमेवान्यत्तत्सर्वं यज्ञसाधनम् ३९
उपमामत्र वक्ष्यामि धर्मतत्त्वप्रकाशिनीम्
यूपं छिन्दन्ति यज्ञार्थं तत्र ये परिपन्थिनः ४०
द्रुमाः केचन सामन्ता ध्रुवं छिन्दन्ति तानपि
ते चापि निपतन्तोऽन्यान्निघ्नन्ति च वनस्पतीन् ४१
एवं कोशस्य महतो ये नराः परिपन्थिनः
तानहत्वा न पश्यामि सिद्धिमत्र परंतप ४२
धनेन जयते लोकावुभौ परमिमं तथा
सत्यं च धर्मवचनं यथा नास्त्यधनस्तथा ४३
सर्वोपायैराददीत धनं यज्ञप्रयोजनम्

न तुल्यदोषः स्यादेवं कार्याकार्येषु भारत ४४
नैतौ संभवतो राजन्कथंचिदपि भारत
न ह्यरण्येषु पश्यामि धनवृद्धानहं क्वचित् ४५
यदिदं दृश्यते वित्तं पृथिव्यामिह किंचन
ममेदं स्यान्ममेदं स्यादित्ययं काङ्क्षते जनः ४६
न च राज्यसमो धर्म कश्चिदस्ति परंतप
धर्मं शंसन्ति ते राज्ञामापदर्थमितोऽन्यथा ४७
दानेन कर्मणा चान्ये तपसान्ये तपस्विनः
बुद्ध्या दाक्ष्येण चाप्यन्ये चिन्वन्ति धनसंचयान् ४८
अधनं दुर्बलं प्राहुर्धनेन बलवान्भवेत्
सर्वं धनवतः प्राप्यं सर्वं तरति कोशवान्
कोशाद्धर्मश्च कामश्च परो लोकस्तथाप्ययम् ४९

इति श्रीमहाभारते शान्तिपर्वणि अष्टाविंशत्यधिकशततमोऽध्यायः १२८

समाप्तं राजधर्मपर्व

## एकोनत्रिंशदधिक शततमोऽध्यायः

## आपद्धर्मपर्व

युधिष्ठिर उवाच
क्षीणस्य दीर्घसूत्रस्य सानुक्रोशस्य बन्धुषु
विरक्तपौरराष्ट्रस्य निर्द्रव्यनिचयस्य च १
परिशङ्कितमुख्यस्य स्रुतमन्त्रस्य भारत
असंभावितमित्रस्य भिन्नामात्यस्य सर्वशः २
परचक्राभियातस्य दुर्बलस्य बलीयसा
आपन्नचेतसो ब्रूहि किं कार्यमवशिष्यते ३
भीष्म उवाच
बाह्यश्चेद्विजिगीषुः स्याद्धर्मार्थकुशलः शुचिः
जवेन संधिं कुर्वीत पूर्वान्पूर्वान्विमोक्षयन् ४
अधर्मविजिगीषुश्चेद्बलवान्पापनिश्चयः
आत्मनः संनिरोधेन संधिं तेनाभियोजयेत् ५
अपास्य राजधानीं वा तरेदन्येन वापदम्

तद्भावभावे द्रव्याणि जीवन्पुनरुपार्जयेत् ६
यास्तु स्युः केवलत्यागाच्छक्यास्तरितुमापदः
कस्तत्राधिकमात्मानं संत्यजेदर्थधर्मवित् ७
अवरोधाज्जुगुप्सेत का सपत्नधने दया
न त्वेवात्मा प्रदातव्यः शक्ये सति कथंचन ८
युधिष्ठिर उवाच
आभ्यन्तरे प्रकुपिते बाह्ये चोपनिपीडिते
क्षीणे कोशे स्रुते मन्त्रे किं कार्यमवशिष्यते ९
भीष्म उवाच
क्षिप्रं वा संधिकामः स्यात्क्षिप्रं वा तीक्ष्णविक्रमः
पदापनयनं क्षिप्रमेतावत्सांपरायिकम् १०
अनुरक्तेन पुष्टेन हृष्टेन जगतीपते
अल्पेनापि हि सैन्येन महीं जयति पार्थिवः ११
हतो वा दिवमारोहेद्विजयी क्षितिमावसेत्
युद्धे तु संत्यजन्प्राणाञ्शक्रस्यैति सलोकताम् १२
सर्वलोकागमं कृत्वा मृदुत्वं गन्तुमेव च
विश्वासाद्विनयं कुर्याद्व्यवस्येद्वाप्युपानहौ १३
अपक्रमितुमिच्छेद्वा यथाकामं तु सान्त्वयेत्
विलङ्घमित्वा मित्रेण ततः स्वयमुपक्रमेत् १४
इति श्रीमहाभारते शान्तिपर्वणि एकोनत्रिंशदधिकशततमोऽध्यायः १२९

## त्रिंशदधिक शततमोऽध्यायः

युधिष्ठिर उवाच
हीने परमके धर्मे सर्वलोकातिलङ्घिनि
सर्वस्मिन्दस्युसाद्भूते पृथिव्यामुपजीवने १
केनास्मिन्ब्राह्मणो जीवेज्जघन्ये काल आगते
असंत्यजन्पुत्रपौत्राननुक्रोशात्पितामह २
भीष्म उवाच
विज्ञानबलमास्थाय जीवितव्यं तथागते
सर्वं साध्वर्थमेवेदमसाध्वर्थं न किंचन ३

असाधुभ्यो निरादाय साधुभ्यो यः प्रयच्छति
आत्मानं संक्रमं कृत्वा कृत्स्नधर्मविदेव सः ४
सुरोषेणात्मनो राजन्राज्ये स्थितिमकोपयन्
अदत्तमप्याददीत दातुर्वित्तं ममेति वा ५
विज्ञानबलपूतो यो वर्तते निन्दितेष्वपि
वृत्तविज्ञानवान्धीरः कस्तं किं वक्तुमर्हति ६
येषां बलकृता वृत्तिर्नैषामन्याभिरोचते
तेजसाभिप्रवर्धन्ते बलवन्तो युधिष्ठिर ७
यदेव प्रकृतं शास्त्रमविशेषेण विन्दति
तदेव मध्याः सेवन्ते मेधावी चाप्यथोत्तरम् ८
ऋत्विक्पुरोहिताचार्यान्सत्कृतैरभिपूजितान्
न ब्राह्मणान्यातयेत दोषान्प्राप्नोति यातयन् ९
एतत्प्रमाणं लोकस्य चक्षुरेतत्सनातनम्
तत्प्रमाणोऽवगाहेत तेन तत्साध्वसाधु वा १०
बहूनि ग्रामवास्तव्या रोषाद्ब्रूयुः परस्परम्
न तेषां वचनाद्राजा सत्कुर्याद्यातयेत वा ११
न वाच्यः परिवादो वै न श्रोतव्यः कथंचन
कर्णाविव पिधातव्यौ प्रस्थेयं वा ततोऽन्यतः १२
न वै सतां वृत्तमेतत्परिवादो न पैशुनम्
गुणानामेव वक्तारः सन्तः सत्सु युधिष्ठिर १३
यथा समधुरौ दम्यौ सुदान्तौ साधुवाहिनौ
धुरमुद्यम्य वहतस्तथा वर्तेत वै नृपः
यथा यथास्य वहतः सहायाः स्युस्तथापरे १४
आचारमेव मन्यन्ते गरीयो धर्मलक्षणम्
अपरे नैवमिच्छन्ति ये शङ्खलिखितप्रियाः
मार्दवादथ लोभाद्वा ते ब्रूयुर्वाक्यमीदृशम् १५
आर्षमप्यत्र पश्यन्ति विकर्मस्थस्य यापनम्
न चार्षात्सदृशं किंचित्प्रमाणं विद्यते क्वचित् १६
देवा अपि विकर्मस्थं यातयन्ति नराधमम्
व्याजेन विन्दन्वित्तं हि धर्मात्तु परिहीयते १७

सर्वतः सत्कृतः सद्भिर्भूतिप्रभवकारणैः
हृदयेनाभ्यनुज्ञातो यो धर्मस्तं व्यवस्यति १८
यश्चतुर्गुणसंपन्नं धर्मं वेद स धर्मवित्
अहेरिव हि धर्मस्य पदं दुःखं गवेषितुम् १९
यथा मृगस्य विद्धस्य मृगव्याधः पदं नयेत्
कक्षे रुधिरपातेन तथा धर्मपदं नयेत् २०
एवं सद्भिर्विनीतेन पथा गन्तव्यमच्युत
राजर्षीणां वृत्तमेतदवगच्छ युधिष्ठिर २१
इति श्रीमहाभारते शान्तिपर्वणि त्रिंशदधिकशततमोऽध्यायः १३०

## एकत्रिंशदधिक शततमोऽध्यायः

भीष्म उवाच
स्वराष्ट्रात्परराष्ट्राच्च कोशं संजनयेन्नृपः
कोशाद्धि धर्मः कौन्तेय राज्यमूलः प्रवर्तते १
तस्मात्संजनयेत्कोशं संहृत्य परिपालयेत्
परिपाल्यानुगृह्णीयादेष धर्मः सनातनः २
न कोशः शुद्धशौचेन न नृशंसेन जायते
पदं मध्यममास्थाय कोशसंग्रहणं चरेत् ३
अबलस्य कुतः कोशो ह्यकोशस्य कुतो बलम्
अबलस्य कुतो राज्यमराज्ञः श्रीः कुतो भवेत् ४
उच्चैर्वृत्तेः श्रियो हानिर्यथैव मरणं तथा
तस्मात्कोशं बलं मित्राण्यथ राजा विवर्धयेत् ५
हीनकोशं हि राजानमवजानन्ति मानवाः
न चास्याल्पेन तुष्यन्ति कार्यमभ्युत्सहन्ति च ६
श्रियो हि कारणाद्राजा सत्क्रियां लभते पराम्
सास्य गूहति पापानि वासो गुह्यमिव स्त्रियाः ७
ऋद्धिमस्यानुवर्तन्ते पुरा विप्रकृता जनाः
शालावृका इवाजस्रं जिघांसूनिव विन्दति
ईदृशस्य कुतो राज्ञः सुखं भरतसत्तम ८
उद्यच्छेदेव न ग्लायेदुद्यमो ह्येव पौरुषम्

अष्यपर्वणि भज्येत न नमेतेह कस्यचित् ९
अप्यरण्यं समाश्रित्य चरेद्दस्युगणैः सह
न त्वेवोद्धृतमर्यादैर्दस्युभिः सहितश्चरेत्
दस्यूनां सुलभा सेना रौद्रकर्मसु भारत १०
एकान्तेन ह्यमर्यादात्सर्वोऽप्युद्विजते जनः
दस्यवोऽप्युपशङ्कन्ते निरनुक्रोशकारिणः ११
स्थापयेदेव मर्यादां जनचित्तप्रसादिनीम्
अल्पाप्यथेह मर्यादा लोके भवति पूजिता १२
नायं लोकोऽस्ति न पर इति व्यवसितो जनः
नालं गन्तुं च विश्वासं नास्तिके भयशङ्किनि १३
यथा सद्भिः परादानमहिंसा दस्युभिस्तथा
अनुरज्यन्ति भूतानि समर्यादेषु दस्युषु १४
अयुध्यमानस्य वधो दारामर्शः कृतघ्नता
ब्रह्मवित्तस्य चादानं निःशेषकरणं तथा
स्त्रिया मोषः पतिस्थानं दस्युष्वेतद्विगर्हितम् १५
स एष एव भवति दस्युरेतानि वर्जयन्
अभिसंदधते ये न विनाशायास्य भारत
न शेषमेवोपलभ्य न कुर्वन्तीति निश्चयः १६
तस्मात्सशेषं कर्तव्यं स्वाधीनमपि दस्युभिः
न बलस्थोऽहमस्मीति नृशंसानि समाचरेत् १७
सशेषकारिणस्तात शेषं पश्यन्ति सर्वतः
निःशेषकारिणो नित्यमशेषकरणाद्भयम् १८
इति श्रीमहाभारते शान्तिपर्वणि एकत्रिंशदधिकशततमोऽध्यायः १३१

## द्वात्रिंशदधिक शततमोऽध्यायः

भीष्म उवाच
अत्र कर्मान्तवचनं कीर्तयन्ति पुराविदः
प्रत्यक्षावेव धर्मार्थौ क्षत्रियस्य विजानतः
तत्र न व्यवधातव्यं परोक्षा धर्मयापना १
अधर्मो धर्म इत्येतद्यथा वृकपदं तथा

धर्माधर्मफले जातु न ददर्शेह कश्चन २
बुभूषेद्बलवानेव सर्वं बलवतो वशे
श्रियं बलममात्यांश्च बलवानिह विन्दति ३
यो ह्यनाढ्यः स पतितस्तदुच्छिष्टं यदल्पकम्
बह्वपथ्यं बलवति न किंचित्त्रायते भयात् ४
उभौ सत्याधिकारौ तौ त्रायेते महतो भयात्
अति धर्माद्बलं मन्ये बलाद्धर्मः प्रवर्तते ५
बले प्रतिष्ठितो धर्मो धरण्यामिव जङ्गमः
धूमो वायोरिव वशं बलं धर्मोऽनुवर्तते ६
अनीश्वरे बलं धर्मो द्रुमं वल्लीव संश्रिता
वश्ये बलवतां धर्मः सुखं भोगवतामिव
नास्त्यसाध्यं बलवतां सर्वं बलवतां शुचि ७
दुराचारः क्षीणबलः परिमाणं नियच्छति
अथ तस्मादुद्विजते सर्वो लोको वृकादिव ८
अपध्वस्तो ह्यवमतो दुःखं जीवति जीवितम्
जीवितं यदवक्षिप्तं यथैव मरणं तथा ९
यदेनमाहुः पापेन चारित्रेण विनिक्षतम्
स भृशं तप्यतेऽनेन वाक्शल्येन परिक्षतः १०
अत्रैतदाहुराचार्याः पापस्य परिमोक्षणे
त्रयीं विद्यां निषेवेत तथोपासीत च द्विजान् ११
प्रसादयेन्मधुरया वाचाप्यथ च कर्मणा
महामनाश्चैव भवेद्विवहेच्च महाकुले १२
इत्यस्मीति वदेदेवं परेषां कीर्तयन्गुणान्
जपेदुदकशीलः स्यात्पेशलो नातिजल्पनः १३
ब्रह्मक्षत्रं संप्रविशेद्बहु कृत्वा सुदुष्करम्
उच्यमानोऽपि लोकेन बहु तत्तदचिन्तयन् १४
अपापो ह्येवमाचारः क्षिप्रं बहुमतो भवेत्
सुखं वित्तं च भुञ्जीत वृत्तेनैतेन गोपयेत्
लोके च लभते पूजां परत्र च महत्फलम् १५

इति श्रीमहाभारते शान्तिपर्वणि द्वात्रिंशदधिकशततमोऽध्यायः १३२

## त्रयस्त्रिंशदधिक शततमोऽध्यायः

भीष्म उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
यथा दस्युः समर्यादः प्रेत्यभावे न नश्यति १
प्रहर्ता मतिमाञ्शूरः श्रुतवाननृशंसवान्
रक्षन्नक्षयिणं धर्मं ब्रह्मण्यो गुरुपूजकः २
निषाद्यां क्षत्रियाज्जातः क्षत्रधर्मानुपालकः
कापव्यो नाम नैषादिर्दस्युत्वात्सिद्धिमाप्तवान् ३
अरण्ये सायंपूर्वाह्णे मृगयूथप्रकोपिता
विधिज्ञो मृगजातीनां निपानानां च कोविदः ४
सर्वकाननदेशज्ञः पारियात्रचरः सदा
धर्मज्ञः सर्वभूतानाममोघेषुर्दृढायुधः ५
अप्यनेकशताः सेना एक एव जिगाय सः
स वृद्धावन्धपितरौ महारण्येऽभ्यपूजयत् ६
मधुमांसैर्मूलफलैरन्नैरुच्चावचैरपि
सत्कृत्य भोजयामास सम्यक्परिचचार च ७
आरण्यकान्प्रव्रजितान्ब्राह्मणान्परिपालयन्
अपि तेभ्यो मृगान्हत्वा निनाय च महावने ८
ये स्म न प्रतिगृह्णन्ति दस्युभोजनशङ्कया
तेषामासज्य गेहेषु काल्य एव स गच्छति ९
तं बहूनि सहस्राणि ग्रामणित्वेऽभिवव्रिरे
निर्मर्यादानि दस्यूनां निरनुक्रोशकारिणाम् १०
दस्यव ऊचुः
मुहूर्तदेशकालज्ञ प्राज्ञ शीलदृढायुध
ग्रामणीर्भव नो मुख्यः सर्वेषामेव संमतः ११
यथा यथा वक्ष्यसि नः करिष्यामस्तथा तथा
पालयास्मान्यथान्यायं यथा माता यथा पिता १२
कापव्य उवाच
मा वधीस्त्वं स्त्रियं भीरुं मा शिशुं मा तपस्विनम्
नायुध्यमानो हन्तव्यो न च ग्राह्या बलात्स्त्रियः १३

सर्वथा स्त्री न हन्तव्या सर्वसत्त्वेषु युध्यता
नित्यं गोब्राह्मणे स्वस्ति योद्धव्यं च तदर्थतः १४
सत्यं च नापहन्तव्यं सीरविघ्नं च मा कृथाः
पूज्यन्ते यत्र देवाश्च पितरोऽतिथयस्तथा १५
सर्वभूतेष्वपि च वै ब्राह्मणो मोक्षमर्हति
कार्या चोपचितिस्तेषां सर्वस्वेनापि या भवेत् १६
यस्य ह्येते संप्ररुष्टा मन्त्रयन्ति पराभवम्
न तस्य त्रिषु लोकेषु त्राता भवति कश्चन १७
यो ब्राह्मणान्परिभवेद्विनाशं वापि रोचयेत्
सूर्योदय इवावश्यं ध्रुवं तस्य पराभवः १८
इहैव फलमासीनः प्रत्याकाङ्क्षति शक्तितः
ये ये नो प्रदास्यन्ति तांस्तान्सेनाभियास्यसि १९
शिष्ट्यर्थं विहितो दण्डो न वधार्थं विनिश्चयः
ये च शिष्टान्प्रबाधन्ते धर्मस्तेषां वधः स्मृतः २०
ये हि राष्ट्रोपरोधेन वृत्तिं कुर्वन्ति केचन
तदेव तेऽनु मीयन्ते कुणपं कृमयो यथा २१
ये पुनर्धर्मशास्त्रेण वर्तेरन्निह दस्यवः
अपि ते दस्यवो भूत्वा क्षिप्रं सिद्धिमवाप्नुयुः २२
भीष्म उवाच
तत्सर्वमुपचक्रुस्ते कापव्यस्यानुशासनम्
वृत्तिं च लेभिरे सर्वे पापेभ्यश्चाप्युपारमन् २३
कापव्यः कर्मणा तेन महतीं सिद्धिमाप्तवान्
साधूनामाचरन्क्षेमं दस्यून्पापान्निवर्तयन् २४
इदं कापव्यचरितं यो नित्यमनुकीर्तयेत्
नारण्येभ्यः हि भूतेभ्यो भयमार्च्छेत्कदाचन २५
भयं तस्य न मर्तेभ्यो नामर्तेभ्यः कथंचन
न सतो नासतो राजन्स ह्यरण्येषु गोपतिः २६
इति श्रीमहाभारते शान्तिपर्वणि त्रयस्त्रिंशदधिकशततमोऽध्यायः १३३

## चतुस्त्रिंशदधिक शततमोऽध्यायः

भीष्म उवाच
अत्र गाथा ब्रह्मगीताः कीर्तयन्ति पुराविदः
येन मार्गेण राजानः कोशं संजनयन्ति च १
न धनं यज्ञशीलानां हार्यं देवस्वमेव तत्
दस्यूनां निष्क्रियाणां च क्षत्रियो हर्तुमर्हति २
इमाः प्रजाः क्षत्रियाणां रक्ष्याश्चाद्याश्च भारत
धनं हि क्षत्रियस्येह द्वितीयस्य न विद्यते ३
तदस्य स्याद्बलार्थं वा धनं यज्ञार्थमेव वा
अभोग्या ह्योषधीश्छित्त्वा भोग्या एव पचन्त्युत ४
यो वै न देवान्न पितॄन्न मर्त्यान्हविषार्चति
आनन्तिकां तां धनितामाहुर्वेदविदो जनाः ५
हरेत्तद्द्रविणं राजन्धार्मिकः पृथिवीपतिः
न हि तत्प्रीणयेल्लोकान्न कोशं तद्विधं नृपः ६
असाधुभ्यो निरादाय साधुभ्यो यः प्रयच्छति
आत्मानं संक्रमं कृत्वा मन्ये धर्मविदेव सः ७
औद्भिज्ञा जन्तवः केचिद्युक्तवाचो यथा तथा
अनिष्टतः संभवन्ति तथायज्ञः प्रतायते ८
यथैव दंशमशकं यथा चाण्डपिपीलिकम्
सैव वृत्तिरयज्ञेषु तथा धर्मो विधीयते ९
यथा ह्यकस्माद्भवति भूमौ पांसुतृणोलपम्
तथैवेह भवेद्धर्मः सूक्ष्मः सूक्ष्मतरोऽपि च १०
इति श्रीमहाभारते शान्तिपर्वणि चतुस्त्रिंशदधिकशततमोऽध्यायः १३४

## पञ्चत्रिंशदधिक शततमोऽध्यायः

भीष्म उवाच
अत्रैव चेदमव्यग्रः शृणवाख्यानमनुत्तमम्
दीर्घसूत्रं समाश्रित्य कार्याकार्यविनिश्चये १
नातिगाधे जलस्थाये सुहृदः शकुलास्त्रयः
प्रभूतमत्स्ये कौन्तेय बभूवुः सहचारिणः २

अत्रैकः प्राप्तकालज्ञो दीर्घदर्शी तथापरः
दीर्घसूत्रश्च तत्रैकस्त्रयाणां जलचारिणाम् ३
कदाचित्तज्जलस्थायं मत्स्यबन्धाः समन्ततः
निःस्रावयामासुरथो निम्नेषु विविधैर्मुखैः ४
प्रक्षीयमाणं तं बुद्ध्वा जलस्थायं भयागमे
अब्रवीद्दीर्घदर्शी तु तावुभौ सुहृदौ तदा ५
इयमापत्समुत्पन्ना सर्वेषां सलिलौकसाम्
शीघ्रमन्यत्र गच्छामः पन्था यावन्न दुष्यति ६
अनागतमनर्थं हि सुनयैर्यः प्रबाधते
न स संशयमाप्नोति रोचतां वां व्रजामहे ७
दीर्घसूत्रस्तु यस्तत्र सोऽब्रवीत्सम्यगुच्यते
न तु कार्या त्वरा यावदिति मे निश्चिता मतिः ८
अथ संप्रतिपत्तिज्ञः प्राब्रवीद्दीर्घदर्शिनम्
प्राप्ते काले न मे किंचिन्न्यायतः परिहास्यते ९
एवमुक्तो निराक्रमद्दीर्घदर्शी महामतिः
जगाम स्रोतसैकेन गम्भीरसलिलाशयम् १०
ततः प्रस्रुततोयं तं समीक्ष्य सलिलाशयम्
बबन्धुर्विविधैर्योगैर्मत्स्यान्मत्स्योपजीविनः ११
विलोड्यमाने तस्मिंस्तु स्रुततोये जलाशये
अगच्छद्ग्रहणं तत्र दीर्घसूत्रः सहापरैः १२
उद्दानं क्रियमाणं च मत्स्यानां वीक्ष्य रज्जुभिः
प्रविश्यान्तरमन्येषामग्रसत्प्रतिपत्तिमान् १३
ग्रस्तमेव तदुद्दानं गृहीत्वास्त तथैव सः
सर्वानेव च तांस्तत्र ते विदुर्ग्रथिता इति १४
ततः प्रक्षाल्यमानेषु मत्स्येषु विमले जले
त्यक्त्वा रज्जुं विमुक्तोऽभूच्छीघ्रं संप्रतिपत्तिमान् १५
दीर्घसूत्रस्तु मन्दात्मा हीनबुद्धिरचेतनः
मरणं प्राप्तवान्मूढो यथैवोपहतेन्द्रियः १६
एवं प्राप्ततमं कालं यो मोहान्नावबुध्यते
स विनश्यति वै क्षिप्रं दीर्घसूत्रो यथा झषः १७

आदौ न कुरुते श्रेयः कुशलोऽस्मीति यः पुमान्
स संशयमवाप्नोति यथा संप्रतिपत्तिमान् १८
अनागतविधानं तु यो नरः कुरुते क्षमम्
श्रेयः प्राप्नोति सोऽत्यर्थं दीर्घदर्शी यथा ह्यसौ १९
कलाः काष्ठा मुहूर्ताश्च दिना नाड्यः क्षणा लवाः
पक्षा मासाश्च ऋतवस्तुल्याः संवत्सराणि च २०
पृथिवी देश इत्युक्तः कालः स च न दृश्यते
अभिप्रेतार्थसिद्ध्यर्थं न्यायतो यच्च तत्तथा २१
एतौ धर्मार्थशास्त्रेषु मोक्षशास्त्रेषु चर्षिभिः
प्रधानाविति निर्दिष्टौ कामेशाभिमतौ नृणाम् २२
परीक्ष्यकारी युक्तस्तु सम्यक्समुपपादयेत्
देशकालावभिप्रेतौ ताभ्यां फलमवाप्नुयात् २३
इति श्रीमहाभारते शान्तिपर्वणि पञ्चत्रिंशदधिकशततमोऽध्यायः १३५

## षट्त्रिंशदधिक शततमोऽध्यायः

युधिष्ठिर उवाच
सर्वत्र बुद्धिः कथिता श्रेष्ठा ते भरतर्षभ
अनागता तथोत्पन्ना दीर्घसूत्रा विनाशिनी १
तदिच्छामि परां बुद्धिं श्रोतुं भरतसत्तम
यथा राजन्न मुह्येत शत्रुभिः परिवारितः २
धर्मार्थकुशल प्राज्ञ सर्वशास्त्रविशारद
पृच्छामि त्वा कुरुश्रेष्ठ तन्मे व्याख्यातुमर्हसि ३
शत्रुभिर्बहुभिर्ग्रस्तो यथा वर्तेत पार्थिवः
एतदिच्छाम्यहं श्रोतुं सर्वमेव यथाविधि ४
विषमस्थं हि राजानं शत्रवः परिपन्थिनः
बहवोऽप्येकमुद्धर्तुं यतन्ते पूर्वतापिताः ५
सर्वतः प्रार्थ्यमानेन दुर्बलेन महाबलैः
एकेनैवासहायेन शक्यं स्थातुं कथं भवेत् ६
कथं मित्रमरिं चैव विन्देत भरतर्षभ
चेष्टितव्यं कथं चात्र शत्रोर्मित्रस्य चान्तरे ७

प्रज्ञातलक्षणे राजन्नमित्रे मित्रतां गते
कथं नु पुरुषः कुर्यात्किं वा कृत्वा सुखी भवेत् ८
विग्रहं केन वा कुर्यात्संधिं वा केन योजयेत्
कथं वा शत्रुमध्यस्थो वर्तेताबलवानिति ९
एतद्वै सर्वकृत्यानां परं कृत्यं परंतप
नैतस्य कश्चिद्वक्तास्ति श्रोता चापि सुदुर्लभः १०
ऋते शांतनवाद्भीष्मात्सत्यसंधाज्जितेन्द्रियात्
तदन्विष्य महाबाहो सर्वमेतद्वदस्व मे ११
भीष्म उवाच
त्वद्युक्तोऽयमनुप्रश्नो युधिष्ठिर गुणोदयः
शृणु मे पुत्र कार्त्स्न्येन गुह्यमापत्सु भारत १२
अमित्रो मित्रतां याति मित्रं चापि प्रदुष्यति
सामर्थ्ययोगात्कार्याणां तद्गत्या हि सदा गतिः १३
तस्माद्विश्वसितव्यं च विग्रहं च समाचरेत्
देशं कालं च विज्ञाय कार्याकार्यविनिश्चये १४
संधातव्यं बुधैर्नित्यं व्यवस्यं च हितार्थिभिः
अमित्रैरपि संधेयं प्राणा रक्ष्याश्च भारत १५
यो ह्यमित्रैर्नरो नित्यं न संदध्यादपण्डितः
न सोऽथमाप्नुयात्किंचित्फलान्यपि च भारत १६
यस्त्वमित्रेण संधत्ते मित्रेण च विरुध्यते
अर्थयुक्तिं समालोक्य सुमहद्विन्दते फलम् १७
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
मार्जारस्य च संवादं न्यग्रोधे मूषकस्य च १८
वने महति कस्मिंश्चिन्न्यग्रोधः सुमहानभूत्
लताजालपरिच्छन्नो नानाद्विजगणायुतः १९
स्कन्धवान्मेघसंकाशः शीतच्छायो मनोरमः
वैरन्त्यमभितो जातस्तरुर्व्यालमृगाकुलः २०
तस्य मूलं समाश्रित्य कृत्वा शतमुखं बिलम्
वसति स्म महाप्राज्ञः पलितो नाम मूषकः २१
शाखाश्च तस्य संश्रित्य वसति स्म सुखं पुरः

लोमशो नाम मार्जारः पक्षिसत्त्वावसादकः २२
तत्र चागत्य चाण्डालो वैरन्त्यकृतकेतनः
अयोजयत्तमुन्माथं नित्यमस्तं गते रवौ २३
तत्र स्नायुमयान्पाशान्यथावत्संनिधाय सः
गृहं गत्वा सुखं शेते प्रभातामेति शर्वरीम् २४
तत्र स्म नित्यं बध्यन्ते नक्तं बहुविधा मृगाः
कदाचित्तत्र मार्जारस्त्वप्रमत्तोऽप्यबध्यत २५
तस्मिन्बद्धे महाप्राज्ञः शत्रौ नित्याततायिनि
तं कालं पलितो ज्ञात्वा विचचार सुनिर्भयः २६
तेनानुचरता तस्मिन्वने विश्वस्तचारिणा
भक्षं विचरमाणेन नचिराद्दृष्टमामिषम् २७
स तमुन्माथमारुह्य तदामिषमभक्षयत्
तस्योपरि सपत्नस्य बद्धस्य मनसा हसन् २८
आमिषे तु प्रसक्तः स कदाचिदवलोकयन्
अपश्यदपरं घोरमात्मनः शत्रुमागतम् २९
शरप्रसूनसंकाशं महीविवरशायिनम्
नकुलं हरिकं नाम चपलं ताम्रलोचनम् ३०
तेन मूषकगन्धेन त्वरमाणमुपागतम्
भक्षार्थं लेलिहद्वक्त्रं भूमावूर्ध्वमुखं स्थितम् ३१
शाखागतमरिं चान्यदपश्यत्कोटरालयम्
उलूकं चन्द्रकं नाम तीक्ष्णतुण्डं क्षपाचरम् ३२
गतस्य विषयं तस्य नकुलोलूकयोस्तदा
अथास्यासीदियं चिन्ता तत्प्राप्य सुमहद्भयम् ३३
आपद्यस्यां सुकष्टायां मरणे समुपस्थिते
समन्ताद्भय उत्पन्ने कथं कार्यं हितैषिणा ३४
स तथा सर्वतो रुद्धः सर्वत्र समदर्शनः
अभवद्भयसंतप्तश्चक्रे चेमां परं गतिम् ३५
आपद्विनाशभूयिष्ठा शतैकीयं च जीवितम्
समन्तसंशया चेयमस्मानापदुपस्थिता ३६
गतं हि सहसा भूमिं नकुलो मां समाप्नुयात्

उलूकश्चेह तिष्ठन्तं मार्जारः पाशसंक्षयात् ३७
न त्वेवास्मद्विधः प्राज्ञः संमोहं गन्तुमर्हति
करिष्ये जीविते यत्नं यावदुच्छ्वासनिग्रहम् ३८
न हि बुद्ध्यान्विताः प्राज्ञा नीतिशास्त्रविशारदाः
संभ्रमन्त्यापदं प्राप्य महतोऽथानवाप्य च ३९
न त्वन्यामिह मार्जाराद्गतिं पश्यामि सांप्रतम्
विषमस्थो ह्ययं जन्तुः कृत्यं चास्य महन्मया ४०
जीवितार्थी कथं त्वद्य प्रार्थितः शत्रुभिस्त्रिभिः
तस्मादिममहं शत्रुं मार्जारं संश्रयामि वै ४१
क्षत्रविद्यां समाश्रित्य हितमस्योपधारये
येनेमं शत्रुसंघातं मतिपूर्वेण वञ्चये ४२
अयमत्यन्तशत्रुर्मे वैषम्यं परमं गतः
मूढो ग्राहयितुं स्वार्थं संगत्या यदि शक्यते ४३
कदाचिद्व्यसनं प्राप्य संधिं कुर्यान्मया सह
बलिना संनिविष्टस्य शत्रोरपि परिग्रहः
कार्य इत्याहुराचार्या विषमे जीवितार्थिना ४४
श्रेयान्हि पण्डितः शत्रुर्न च मित्रमपण्डितम्
मम ह्यमित्रे मार्जारे जीवितं संप्रतिष्ठितम् ४५
हन्तैनं संप्रवक्ष्यामि हेतुमात्माभिरक्षणे
अपीदानीमयं शत्रुः संगत्या पण्डितो भवेत् ४६
ततोऽर्थगतितत्त्वज्ञः संधिविग्रहकालवित्
सान्त्वपूर्वमिदं वाक्यं मार्जारं मूषकोऽब्रवीत् ४७
सौहृदेनाभिभाषे त्वा कच्चिन्मार्जार जीवसि
जीवितं हि तवेच्छामि श्रेयः साधारणं हि नौ ४८
न ते सौम्य विषत्तव्यं जीविष्यसि यथा पुरा
अहं त्वामुद्धरिष्यामि प्राणाञ्जह्यां हि ते कृते ४९
अस्ति कश्चिदुपायोऽत्र पुष्कलः प्रतिभाति माम्
येन शक्यस्त्वया मोक्षः पाप्तुं श्रेये यथा मया ५०
मया ह्युपायो दृष्टोऽय विचार्य मतिमात्मनः
आत्मार्थं च त्वदर्थं च श्रेयः साधारणं हि नौ ५१

इदं हि नकुलोलूकं पापबुद्ध्यभितः स्थितम्
न धर्षयति मार्जार तेन मे स्वस्ति सांप्रतम् ५२
कूजंश्चपलनेत्रोऽय कौशिको मां निरीक्षते
नगशाखाग्रहस्तिष्ठंस्तस्याहं भृशमुद्विजे ५३
सतां साप्तपदं सख्यं सवासो मेऽसि पण्डितः
सांवास्यकं करिष्यामि नास्ति ते मृत्युतो भयम् ५४
न हि शक्नोषि मार्जार पाशं छेत्तुं विना मया
अहं छेत्स्यामि ते पाशं यदि मां त्वं न हिंससि ५५
त्वमाश्रितो नगस्याग्रं मूलं त्वहमुपाश्रितः
चिरोषिताविहावां वै वृक्षेऽस्मिन्विदितं हि ते ५६
यस्मिन्नाश्वसते कश्चिद्यश्च नाश्वसते क्वचित्
न तौ धीराः प्रशंसन्ति नित्यमुद्विग्नचेतसौ ५७
तस्माद्विवर्धतां प्रीतिः सत्या संगतिरस्तु नौ
कालातीतमपार्थं हि नप्रशंसंति पण्डिताः ५८
अर्थयुक्तिमिमां तावद्यथाभूतां निशामय
तव जीवितमिच्छामि त्वं ममेच्छसि जीवितम् ५९
कश्चित्तरति काष्ठेन सुगम्भीरां महानदीम्
स तारयति तत्काष्ठं स च काष्ठेन तार्यते ६०
ईदृशो नौ समायोगो भविष्यति सुनिस्तरः
अहं त्वां तारयिष्यामि त्वं च मां तारयिष्यसि ६१
एवमुक्त्वा तु पलितस्तदर्थमुभयोर्हितम्
हेतुमद्ग्रहणीयं च कालाकाङ्क्षी व्यपैक्षत ६२
अथ सुव्याहृतं तस्य श्रुत्वा शत्रुर्विचक्षणः
हेतुमद्ग्रहणीयार्थं मार्जारो वाक्यमब्रवीत् ६३
बुद्धिमान्वाक्यसंपन्नस्तद्वाक्यमनुवर्णयन्
तामवस्थामवेक्ष्यात्मां साम्नैव प्रत्यपूजयत् ६४
ततस्तीक्ष्णाग्रदशनो वैडूर्यमणिलोचनः
मूषकं मन्दमुद्वीक्ष्य मार्जारो लोमशोऽब्रवीत् ६५
नन्दामि सौम्य भद्रं ते यो मां जीवन्तमिच्छसि
श्रेयश्च यदि जानीषे क्रियतां मा विचारय ६६

अहं हि दृढमापन्नस्त्वमापन्नतरो मया
द्वयोरापन्नयोः संधिः क्रियतां मा विचारय ६७
विधत्स्व प्राप्तकालं यत्कार्यं सिध्यतु चावयोः
मयि कृच्छ्राद्विनिर्मुक्ते न विनङ्क्ष्यति ते कृतम् ६८
न्यस्तमानोऽस्मि भक्तोऽस्मि शिष्यस्त्वद्धितकृत्तथा
निदेशवशवर्ती च भवन्तं शरणं गतः ६९
इत्येवमुक्तः पलितो मार्जारं वशमागतम्
वाक्यं हितमुवाचेदमभिनीतार्थमर्थवत् ७०
उदारं यद्भवानाह नैतच्चित्रं भवद्विधे
विदितो यस्तु मार्गो मे हितार्थं शृणु तं मम ७१
अहं त्वानुप्रवेक्ष्यामि नकुलान्मे महद्भयम्
त्रायस्व मां मा वधीश्च शक्तोऽस्मि तव मोक्षणे ७२
उलूकाच्चैव मां रक्ष क्षुद्रः प्रार्थयते हि माम्
अहं छेत्स्यामि ते पाशान्सखे सत्येन ते शपे ७३
तद्वचः संगतं श्रुत्वा लोमशो युक्तमर्थवत्
हर्षादुद्वीक्ष्य पलितं स्वागतेनाभ्यपूजयत् ७४
स तं संपूज्य पलितं मार्जारः सौहृदे स्थितः
सुविचिन्त्याब्रवीद्धीरः प्रीतस्त्वरित एव हि ७५
क्षिप्रमागच्छ भद्रं ते त्वं मे प्राणसमः सखा
तव प्राज्ञ प्रसादाद्धि क्षिप्रं प्राप्स्यामि जीवितम् ७६
यद्यदेवंगतेनाद्य शक्यं कर्तुं मया तव
तदाज्ञापय कर्ताहं संधिरेवास्तु नौ सखे ७७
अस्मात्ते संशयान्मुक्तः समित्रगणबान्धवः
सर्वकार्याणि कर्ताहं प्रियाणि च हितानि च ७८
मुक्तश्च व्यसनादस्मात्सौम्याहमपि नाम ते
प्रीतिमुत्पादयेयं च प्रतिकर्तुं च शक्नुयाम् ७९
ग्राहयित्वा तु तं स्वार्थं मार्जारं मूषकस्तदा
प्रविवेश सुविस्रब्धः सम्यगर्थांश्चचार ह ८०
एवमाश्वासितो विद्वान्मार्जारेण स मूषकः
मार्जारोरसि विस्रब्धः सुष्वाप पितृमातृवत् ८१

लीनं तु तस्य गात्रेषु मार्जारस्याथ मूषकम्
तौ दृष्ट्वा नकुलोलूकौ निराशौ जग्मतुर्गृहान् ८२
लीनस्तु तस्य गात्रेषु पलितो देशकालवित्
चिच्छेद पाशान्नृपते कालाकाङ्क्षी शनैः शनैः ८३
अथ बन्धपरिक्लिष्टो मार्जारो वीक्ष्य मूषकम्
छिन्दन्तं वै तदा पाशानत्वरन्तं त्वरान्वितः ८४
तमत्वरन्तं पलितं पाशानां छेदने तदा
संचोदयितुमारेभे मार्जारो मूषकं तदा ८५
किं सौम्य नाभित्वरसे किं कृतार्थोऽवमन्यसे
छिन्धि पाशानमित्रघ्न पुरा श्वपच एति सः ८६
इत्युक्तस्त्वरता तेन मतिमान्पलितोऽब्रवीत्
मार्जारमकृतप्रज्ञं वश्यमात्महितं वचः ८७
तूष्णीं भव न ते सौम्य त्वरा कार्या न संभ्रमः
वयमेवात्र कालज्ञा न कालः परिहास्यते ८८
अकाले कृत्यमारब्धं कर्तुं नार्थाय कल्पते
तदेव काल आरब्धं महतेऽथाय कल्पते ८९
अकालविप्रमुक्तान्मे त्वत्त एव भयं भवेत्
तस्मात्कालं प्रतीक्षस्व किमिति त्वरसे सखे ९०
यावत्पश्यामि चाण्डालमायान्तं शस्त्रपाणिनम्
ततश्छेत्स्यामि ते पाशं प्राप्ते साधारणे भये ९१
तस्मिन्काले प्रमुक्तस्त्वं तरुमेवाधिरोहसि
न हि ते जीवितादन्यत्किंचित्कृत्यं भविष्यति ९२
ततो भवत्यतिक्रान्ते त्रस्ते भीते च लोमश
अहं बिलं प्रवेक्ष्यामि भवाञ्शाखां गमिष्यति ९३
एवमुक्तस्तु मार्जारो मूषकेणात्मनो हितम्
वचनं वाक्यतत्त्वज्ञो जीवितार्थी महामतिः ९४
अथात्मकृत्यत्वरितः सम्यक्प्रश्रयमाचरन्
उवाच लोमशो वाक्यं मूषकं चिरकारिणम् ९५
न ह्येवं मित्रकार्याणि प्रीत्या कुर्वन्ति साधवः
यथा त्वं मोक्षितः कृच्छ्रात्त्वरमाणेन वै मया ९६

तथैव त्वरमाणेन त्वया कार्यं हितं मम
यत्नं कुरु महाप्राज्ञ यथा स्वस्त्यावयोर्भवेत् ९७
अथ वा पूर्ववैरं त्वं स्मरन्कालं विकर्षसि
पश्य दुष्कृतकर्मत्वं व्यक्तमायुःक्षयो मम ९८
यच्च किंचिन्मयाज्ञानात्पुरस्ताद्विप्रियं कृतम्
न तन्मनसि कर्तव्यं क्षमये त्वां प्रसीद मे ९९
तमेवंवादिनं प्राज्ञः शास्त्रविद्बुद्धिसंमतः
उवाचेदं वचः श्रेष्ठं मार्जारं मूषकस्तदा १००
श्रुतं मे तव मार्जार स्वमर्थं परिगृह्णतः
ममापि त्वं विजानीहि स्वमर्थं परिगृह्णतः १०१
यन्मित्रं भीतवत्साध्यं यन्मित्रं भयसंहितम्
सुरक्षितं ततः कार्यं पाणिः सर्पमुखादिव १०२
कृत्वा बलवता संधिमात्मानं यो न रक्षति
अपथ्यमिव तद्भुक्तं तस्यानर्थाय कल्पते १०३
न कश्चित्कस्यचिन्मित्रं न कश्चित्कस्यचित्सुहृत्
अर्थैरर्था निबध्यन्ते गजैर्वनगजा इव १०४
न हि कश्चित्कृते कार्ये कर्तारं समवेक्षते
तस्मात्सर्वाणि कार्याणि सावशेषाणि कारयेत् १०५
तस्मिन्कालेऽपि च भवान्दिवाकीर्तिभयान्वितः
मम न ग्रहणे शक्तः पलायनपरायणः १०६
छिन्नं तु तन्तुबाहुल्यं तन्तुरेकोऽवशेषितः
छेत्स्याम्यहं तदप्याशु निर्वृतो भव लोमश १०७
तयोः संवदतोरेवं तथैवापन्नयोर्द्वयोः
क्षयं जगाम सा रात्रिर्लोमशं चाविशद्भयम् १०८
ततः प्रभातसमये विकृतः कृष्णपिङ्गलः
स्थूलस्फिग्विकचो रूक्षः श्वचक्रपरिवारितः १०९
शङ्कुकर्णो महावक्त्रः पलितो घोरदर्शनः
परिघो नाम चण्डालः शस्त्रपाणिरदृश्यत ११०
तं दृष्ट्वा यमदूताभं मार्जारस्त्रस्तचेतनः
उवाच पलितं भीतः किमिदानीं करिष्यसि १११

अथ चापि सुसंत्रस्तौ तं दृष्ट्वा घोरदर्शनम्
क्षणेन नकुलोलूकौ नैराश्यं जग्मतुस्तदा ११२
बलिनौ मतिमन्तौ च संघातं चाप्युपागतौ
अशक्यौ सुनयात्तस्मात्संप्रधर्षयितुं बलात् ११३
कार्यार्थं कृतसंधी तौ दृष्ट्वा मार्जारमूषकौ
उलूकनकुलौ तूर्णं जग्मतुः स्वं स्वमालयम् ११४
ततश्चिच्छेद तं तन्तुं मार्जारस्य स मूषकः
विप्रमुक्तोऽथ मार्जारस्तमेवाभ्यपतद्द्रुमम् ११५
स च तस्मात्भयान्मुक्तो मुक्तो घोरेण शत्रुणा
बिलं विवेश पलितः शाखां भेजे च लोमशः ११६
उन्माथमप्यथादाय चण्डालो वीक्ष्य सर्वशः
विहताशः क्षणेनाथ तस्माद्देशादपाक्रमत्
जगाम च स्वभवनं चण्डालो भरतर्षभ ११७
ततस्तस्माद्भयान्मुक्तो दुर्लभं प्राप्य जीवितम्
बिलस्थं पादपाग्रस्थः पलितं लोमशोऽब्रवीत् ११८
अकृत्वा संविदं कांचित्सहसाहमुपप्लुतः
कृतज्ञं कृतकल्याणं कच्चिन्मां नाभिशङ्कसे ११९
गत्वा च मम विश्वासं दत्वा च मम जीवितम्
मित्रोपभोगसमये किं त्वं नैवोपसर्पसि १२०
कृत्वा हि पूर्वं मित्राणि यः पश्चान्नानुतिष्ठति
न स मित्राणि लभते कृच्छ्रास्वापत्सु दुर्मतिः १२१
तत्कृतोऽह त्वया मित्रं सामर्थ्यादात्मनः सखे
स मां मित्रत्वमापन्नमुपभोक्तुं त्वमर्हसि १२२
यानि मे सन्ति मित्राणि ये च मे सन्ति बान्धवाः
सर्वे त्वां पूजयिष्यन्ति शिष्या गुरुमिव प्रियम् १२३
अहं च पूजयिष्ये त्वां समित्रगणबान्धवम्
जीवितस्य प्रदातारं कृतज्ञः को न पूजयेत् १२४
ईश्वरो मे भवानस्तु शरीरस्य गृहस्य च
अर्थानां चैव सर्वेषामनुशास्ता च मे भव १२५
अमात्यो मे भव प्राज्ञ पितेव हि प्रशाधि माम्

न तेऽस्ति भयमस्मत्तो जीवितेनात्मनः शपे १२६
बुद्ध्या त्वमुशनाः साक्षाद्बले त्वधिकृता वयम्
त्वन्मन्त्रबलयुक्तो हि विन्देत जयमेव ह १२७
एवमुक्तः परं सान्त्वं मार्जारेण स मूषकः
उवाच परमार्थज्ञः श्लक्ष्णमात्महितं वचः १२८
यद्भवानाह तत्सर्वं मया ते लोमश श्रुतम्
ममापि तावद्ब्रुवतः शृणु यत्प्रतिभाति माम् १२९
वेदितव्यानि मित्राणि बोद्धव्याश्चापि शत्रवः
एतत्सुसूक्ष्मं लोकेऽस्मिन्दृश्यते प्राज्ञसंमतम् १३०
शत्रुरूपाश्च सुहृदो मित्ररूपाश्च शत्रवः
सान्त्वितास्ते न बुध्यन्ते रागलोभवशं गताः १३१
नास्ति जात्या रिपुर्नाम मित्रं नाम न विद्यते
सामर्थ्ययोगाज्जायन्ते मित्राणि रिपवस्तथा १३२
यो यस्मिञ्जीवति स्वार्थं पश्येत्तावत्स जीवति
स तस्य तावन्मित्रं स्याद्यावन्न स्याद्विपर्ययः १३३
नास्ति मैत्री स्थिरा नाम न च ध्रुवमसौहृदम्
अर्थयुक्त्या हि जायन्ते मित्राणि रिपवस्तथा १३४
मित्रं च शत्रुतामेति कस्मिंश्चित्कालपर्यये
शत्रुश्च मित्रतामेति स्वार्थो हि बलवत्तरः १३५
यो विश्वसति मित्रेषु न चाश्वसति शत्रुषु
अर्थयुक्तिमविज्ञाय चलितं तस्य जीवितम् १३६
अर्थयुक्तिमविज्ञाय यः शुभे कुरुते मतिम्
मित्रे वा यदि वा शत्रौ तस्यापि चलिता मतिः १३७
न विश्वसेदविश्वस्ते विश्वस्तेऽपि न विश्वसेत्
विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति १३८
अर्थयुक्त्या हि दृश्यन्ते पिता माता सुतास्तथा
मातुला भागिनेयाश्च तथा संबन्धिबान्धवाः १३९
पुत्रं हि मातापितरौ त्यजतः पतितं प्रियम्
लोको रक्षति चात्मानं पश्य स्वार्थस्य सारताम् १४०
तं मन्ये निकृतिप्रज्ञं यो मोक्षं प्रत्यनन्तरम्

कृत्यं मृगयसे कर्तुं सुखोपायमसंशयम् १४१
अस्मिन्निलय एव त्वं न्यग्रोधादवतारितः
पूर्वं निविष्टमुन्माथं चपलत्वान्न बुद्धवान् १४२
आत्मनश्चपलो नास्ति कुतोऽन्येषां भविष्यति
तस्मात्सर्वाणि कार्याणि चपलो हन्त्यसंशयम् १४३
ब्रवीति मधुरं कंचित्प्रियो मे ह भवानिति
तन्मिथ्याकरणं सर्वं विस्तरेणापि मे शृणु १४४
कारणात्प्रियतामेति द्वेष्यो भवति कारणात्
अर्थार्थी जीवलोकोऽय न कश्चित्कस्यचित्प्रियः १४५
सख्यं सोदरयोर्भ्रात्रोर्दम्पत्योर्वा परस्परम्
कस्यचिन्नाभिजानामि प्रीतिं निष्कारणामिह १४६
यद्यपि भ्रातरः क्रुद्धा भार्या वा कारणान्तरे
स्वभावतस्ते प्रीयन्ते नेतरः प्रीयते जनः १४७
प्रियो भवति दानेन प्रियवादेन चापरः
मन्त्रहोमजपैरन्यः कार्यार्थं प्रीयते जनः १४८
उत्पन्ने कारणे प्रीतिर्नास्ति नौ कारणान्तरे
प्रध्वस्ते कारणस्थाने सा प्रीतिर्विनिवर्तते १४९
किं नु तत्कारणं मन्ये येनाहं भवतः प्रियः
अन्यत्राभ्यवहारार्थात्तत्रापि च बुधा वयम् १५०
कालो हेतुं विकुरुते स्वार्थस्तमनुवर्तते
स्वार्थं प्राज्ञोऽभिजानाति प्राज्ञं लोकोऽनुवर्तते १५१
न त्वीदृशं त्वया वाच्यं विदुषि स्वार्थपण्डिते
अकालेऽविषमस्थस्य स्वार्थहेतुरयं तव १५२
तस्मान्नाहं चले स्वार्थात्सुस्थितः संधिविग्रहे
अभ्राणामिव रूपाणि विकुर्वन्ति क्षणे क्षणे १५३
अद्यैव हि रिपुर्भूत्वा पुनरद्यैव सौहृदम्
पुनश्च रिपुरद्यैव युक्तीनां पश्य चापलम् १५४
आसीत्तावतु मैत्री नौ यावद्धेतुरभूत्पुरा
सा गता सह तेनैव कालयुक्तेन हेतुना १५५
त्वं हि मेऽत्यन्ततः शत्रुः सामर्थ्यान्मित्रतां गतः

तत्कृत्यमभिनिर्वृत्तं प्रकृतिः शत्रुतां गता १५६
सोऽहमेवं प्रणीतानि ज्ञात्वा शास्त्राणि तत्त्वतः
प्रविशेयं कथं पाशं त्वत्कृतं तद्वदस्व मे १५७
त्वद्वीर्येण विमुक्तोऽह मद्वीर्येण तथा भवान्
अन्योन्यानुग्रहे वृत्ते नास्ति भूयः समागमः १५८
त्वं हि सौम्य कृतार्थोऽद्य निर्वृत्तार्थास्तथा वयम्
न तेऽस्त्यन्यन्मया कृत्यं किंचिदन्यत्र भक्षणात् १५९
अहमन्नं भवान्भोक्ता दुर्बलोऽह भवान्बली
नावयोर्विद्यते संधिर्नियुक्ते विषमे बले १६०
संमन्येऽह तव प्रज्ञां यन्मोक्षात्प्रत्यनन्तरम्
भक्ष्यं मृगयसे नूनं सुखोपायमसंशयम् १६१
भक्ष्यार्थमेव बद्धस्त्वं स मुक्तः प्रसृतः क्षुधा
शास्त्रज्ञमभिसंधाय नूनं भक्षयिताद्य माम् १६२
जानामि क्षुधितं हि त्वामाहारसमयश्च ते
स त्वं मामभिसंधाय भक्ष्यं मृगयसे पुनः १६३
यच्चापि पुत्रदारं स्वं तत्संनिसृजसे मयि
शुश्रूषां नाम मे कर्तुं सखे मम न तत्क्षमम् १६४
त्वया मां सहितं दृष्ट्वा प्रिया भार्या सुताश्च ये
कस्मान्मां ते न खादेयुर्हृष्टाः प्रणयिनस्त्वयि १६५
नाहं त्वया समेष्यामि वृत्तो हेतुः समागमे
शिवं ध्यायस्व मेऽत्रस्थः सुकृतं स्मर्यते यदि १६६
शत्रोरन्नाद्यभूतः सन्क्लिष्टस्य क्षुधितस्य च
भक्ष्यं मृगयमाणस्य कः प्राज्ञो विषयं व्रजेत् १६७
स्वस्ति तेऽस्तु गमिष्यामि दूरादपि तवोद्विजे
नाहं त्वया समेष्यामि निर्वृतो भव लोमश १६८
बलवत्संनिकर्षो हि न कदाचित्प्रशस्यते
प्रशान्तादपि मे प्राज्ञ भेतव्यं बलिनः सदा १६९
यदि त्वर्थेन मे कार्यं ब्रूहि किं करवाणि ते
कामं सर्वं प्रदास्यामि न त्वात्मानं कदाचन १७०
आत्मार्थे संततिस्त्याज्या राज्यं रत्नं धनं तथा

अपि सर्वस्वमुत्सृज्य रक्षेदात्मानमात्मना १७१
एश्वर्यधनरत्नानां प्रत्यमित्रेऽपि तिष्ठताम्
दृष्टा हि पुनरावृत्तिर्जीवतामिति नः श्रुतम् १७२
न त्वात्मनः संप्रदानं धनरत्नवदिष्यते
आत्मा तु सर्वतो रक्ष्यो दारैरपि धनैरपि १७३
आत्मरक्षिततन्त्राणां सुपरीक्षितकारिणाम्
आपदो नोपपद्यन्ते पुरुषाणां स्वदोषजाः १७४
शत्रून्सम्यग्विजानन्ति दुर्बला ये बलीयसः
तेषां न चाल्यते बुद्धिरात्मार्थं कृतनिश्चया १७५
इत्यभिव्यक्तमेवासौ पलितेनावभर्त्सितः
मार्जारो व्रीडितो भूत्वा मूषकं वाक्यमब्रवीत् १७६
संमन्येऽहं तव प्रज्ञां यस्त्वं मम हिते रतः
उक्तवानर्थतत्त्वेन मया संभिन्नदर्शनः १७७
न तु मामन्यथा साधो त्वं विज्ञातुमिहार्हसि
प्राणप्रदानजं त्वत्तो मम सौहृदमागतम् १७८
धर्मज्ञोऽस्मि गुणज्ञोऽस्मि कृतज्ञोऽस्मि विशेषतः
मित्रेषु वत्सलश्चास्मि त्वद्विधेषु विशेषतः १७९
तन्मामेवंगते साधो न यावयितुमर्हसि
त्वया हि याव्यमानोऽहं प्राणाञ्जह्यां सबान्धवः १८०
धिक्शब्दो हि बुधैर्दृष्टो मद्विधेषु मनस्विषु
मरणं धर्मतत्त्वज्ञ न मां शङ्कितुमर्हसि १८१
इति संस्तूयमानो हि मार्जारेण स मूषकः
मनसा भावगम्भीरं मार्जारं वाक्यमब्रवीत् १८२
साधुर्भवाञ्श्रुतार्थोऽस्मि प्रीयते न च विश्वसे
संस्तवैर्वा धनौघैर्वा नाहं शक्यः पुनस्त्वया १८३
न ह्यमित्रवशं यान्ति प्राज्ञा निष्कारणं सखे
अस्मिन्नर्थे च गाथे द्वे निबोधोशनसा कृते १८४
शत्रुसाधारणे कृत्ये कृत्वा संधिं बलीयसा
समाहितश्चरेद्युक्त्या कृतार्थश्च न विश्वसेत् १८५
तस्मात्सर्वास्ववस्थासु रक्षेज्जीवितमात्मनः

द्रव्याणि संततिश्चैव सर्वं भवति जीवतः १८६
संक्षेपो नीतिशास्त्राणामविश्वासः परो मतः
नृषु तस्मादविश्वासः पुष्कलं हितमात्मनः १८७
वध्यन्ते न ह्यविश्वस्ताः शत्रुभिर्दुर्बला अपि
विश्वस्तास्त्वाशु वध्यन्ते बलवन्तोऽपि दुर्बलैः १८८
त्वद्विधेभ्यो मया ह्यात्मा रक्ष्यो मार्जार सर्वदा
रक्ष त्वमपि चात्मानं चाण्डालाज्जातिकिल्बिषात् १८९
स तस्य ब्रुवतस्त्वेवं संत्रासाज्जातसाध्वसः
स्वबिलं हि जवेनाशु मार्जारः प्रययौ ततः १९०
ततः शास्त्रार्थतत्त्वज्ञो बुद्धिसामर्थ्यमात्मनः
विश्राव्य पलितः प्राज्ञो बिलमन्यज्जगाम ह १९१
एवं प्रज्ञावता बुद्ध्या दुर्बलेन महाबलाः
एकेन बहवोऽमित्राः पलितेनाभिसंधिताः १९२
अरिणापि समर्थेन संधिं कुर्वीत पण्डितः
मूषकश्च बिडालश्च मुक्तावन्योन्यसंश्रयात् १९३
इत्येष क्षत्रधर्मस्य मया मार्गोऽनुदर्शितः
विस्तरेण महीपाल संक्षेपेण पुनः शृणु १९४
अन्योन्यकृतवैरौ तु चक्रतुः प्रीतिमुत्तमाम्
अन्योन्यमभिसंधातुमभूच्चैव तयोर्मतिः १९५
तत्र प्राज्ञोऽभिसंधत्ते सम्यग्बुद्धिबलाश्रयात्
अभिसंधीयते प्राज्ञः प्रमादादपि चाबुधैः १९६
तस्मादभीतवद्भीतो विश्वस्तवदविश्वसन्
न ह्यप्रमत्तश्चलति चलितो वा विनश्यति १९७
कालेन रिपुणा संधिः काले मित्रेण विग्रहः
कार्य इत्येव तत्त्वज्ञाः प्राहुर्नित्यं युधिष्ठिर १९८
एवं मत्वा महाराज शास्त्रार्थमभिगम्य च
अभियुक्तोऽप्रमत्तश्च प्राग्भयाद्भीतवच्चरेत् १९९
भीतवत्संविधिः कार्यः प्रतिसंधिस्तथैव च
भयादुत्पद्यते बुद्धिरप्रमत्ताभियोगजा २००
न भयं विद्यते राजन्भीतस्यानागते भये

अभीतस्य च विस्रम्भात्सुमहज्जायते भयम् २०१
न भीरुरिति चात्यन्तं मन्त्रोऽदेयः कथंचन
अविज्ञानाद्धि विज्ञाते गच्छेदास्पददर्शिषु २०२
तस्मादभीतवद्भीतो विश्वस्तवदविश्वसन्
कार्याणां गुरुतां बुद्ध्वा नानृतं किंचिदाचरेत् २०३
एवमेतन्मया प्रोक्तमितिहासं युधिष्ठिर
श्रुत्वा त्वं सुहृदां मध्ये यथावत्समुपाचर २०४
उपलभ्य मतिं चाग्र्यामरिमित्रान्तरं तथा
संधिविग्रहकालं च मोक्षोपायं तथापदि २०५
शत्रुसाधारणे कृत्ये कृत्वा संधिं बलीयसा
समागमं चरेद्युक्त्या कृतार्थो न च विश्वसेत् २०६
अविरुद्धां त्रिवर्गेण नीतिमेतां युधिष्ठिर
अभ्युत्तिष्ठ श्रुतादस्माद्भूयस्त्वं रञ्जयन्प्रजाः २०७
ब्राह्मणैश्चापि ते सार्धं यात्रा भवतु पाण्डव
ब्राह्मणा हि परं श्रेयो दिवि चेह च भारत २०८
एते धर्मस्य वेत्तारः कृतज्ञाः सततं प्रभो
पूजिताः शुभकर्माणः पूर्वजित्या नराधिप २०९
राज्यं श्रेयः परं राजन्यशः कीर्तिं च लप्स्यसे
कुलस्य संततिं चैव यथान्यायं यथाक्रमम् २१०
द्वयोरिमं भारत संधिविग्रहं सुभाषितं बुद्धिविशेषकारितम्
तथान्ववेक्ष्य क्षितिपेन सर्वदा निषेवितव्यं नृप शत्रुमण्डले २११
इति श्रीमहाभारते शान्तिपर्वणि षट्त्रिंशदधिकशततमोऽध्यायः १३६

## सप्तत्रिंशदधिक शततमोऽध्यायः

युधिष्ठिर उवाच
उक्तो मन्त्रो महाबाहो न विश्वासोऽस्ति शत्रुषु
कथं हि राजा वर्तेत यदि सर्वत्र नाश्वसेत् १
विश्वासाद्धि परं राज्ञो राजन्नुत्पद्यते भयम्
कथं वै नाश्वसन्राजा शत्रूञ्जयति पार्थिव २
एतन्मे संशयं छिन्धि मनो मे संप्रमुह्यति

अविश्वासकथामेतामुपश्रुत्य पितामह ३
भीष्म उवाच
शृणु कौन्तेय यो वृत्तो ब्रह्मदत्तनिवेशने
पूजन्या सह संवादो ब्रह्मदत्तस्य पार्थिव ४
काम्पिल्ये ब्रह्मदत्तस्य अन्तःपुरनिवासिनी
पूजनी नाम शकुनी दीर्घकालं सहोषिता ५
रुतज्ञा सर्वभूतानां यथा वै जीवजीवकः
सर्वज्ञा सर्वधर्मज्ञा तिर्यग्योनिगतापि सा ६
अभिप्रजाता सा तत्र पुत्रमेकं सुवर्चसम्
समकालं च राज्ञोऽपि देव्याः पुत्रो व्यजायत ७
समुद्रतीरं गत्वा सा त्वाजहार फलद्वयम्
पुष्ट्यर्थं च स्वपुत्रस्य राजपुत्रस्य चैव ह ८
फलमेकं सुतायादाद्राजपुत्राय चापरम्
अमृतास्वादसदृशं बलतेजोविवर्धनम्
तत्रागच्छत्परां वृद्धिं राजपुत्रः फलाशनात् ९
धात्र्या हस्तगतश्चापि तेनाक्रीडत पक्षिणा
शून्ये तु तमुपादाय पक्षिणं समजातकम्
हत्वा ततः स राजेन्द्र धात्र्या हस्तमुपागमत् १०
अथ सा शकुनी राजन्नागमत्फलहारिका
अपश्यन्निहतं पुत्रं तेन बालेन भूतले ११
वाष्पपूर्णमुखी दीना दृष्ट्वा सा तु हतं सुतम्
पूजनी दुःखसंतप्ता रुदती वाक्यमब्रवीत् १२
क्षत्रिये संगतं नास्ति न प्रीतिर्न च सौहृदम्
कारणे संभजन्तीह कृतार्थाः संत्यजन्ति च १३
क्षत्रियेषु न विश्वासः कार्यः सर्वापघातिषु
अपकृत्यापि सततं सान्त्वयन्ति निरर्थकम् १४
अहमस्य करोम्यद्य सदृशीं वैरयातनाम्
कृतघ्नस्य नृशंसस्य भृशं विश्वासघातिनः १५
सहसंजातवृद्धस्य तथैव सहभोजिनः
शरणागतस्य च वधस्त्रिविधं ह्यस्य किल्बिषम् १६

इत्युक्त्वा चरणाभ्यां तु नेत्रे नृपसुतस्य सा
भित्त्वा स्वस्था तत इदं पूजनी वाक्यमब्रवीत् १७
इच्छयैव कृतं पापं सद्य एवोपसर्पति
कृतप्रतिक्रियं तेषां न नश्यति शुभाशुभम् १८
पापं कर्म कृतं किंचिन्न तस्मिन्यदि विद्यते
निपात्यतेऽस्य पुत्रेषु न चेत्पौत्रेषु नप्तृषु १९
ब्रह्मदत्त उवाच
अस्ति वै कृतमस्माभिरस्ति प्रतिकृतं त्वया
उभयं तत्समीभूतं वस पूजनि मा गमः २०
पूजन्युवाच
सकृत्कृतापराधस्य तत्रैव परिलम्बतः
न तद्बुधाः प्रशंसन्ति श्रेयस्तत्रापसर्पणम् २१
सान्त्वे प्रयुक्ते नृपते कृतवैरे न विश्वसेत्
क्षिप्रं प्रबध्यते मूढो न हि वैरं प्रशाम्यति २२
अन्योन्यं कृतवैराणां पुत्रपौत्रं निगच्छति
पुत्रपौत्रे विनष्टे तु परलोकं निगच्छति २३
सर्वेषां कृतवैराणामविश्वासः सुखावहः
एकान्ततो न विश्वासः कार्यो विश्वासघातकः २४
न विश्वसेदविश्वस्ते विश्वस्तेऽपि न विश्वसेत्
कामं विश्वासयेदन्यान्परेषां च न विश्वसेत् २५
माता पिता बान्धवानां वरिष्ठौ भार्या जरा बीजमात्रं तु पुत्रः
भ्राता शत्रुः क्लिन्नपाणिर्वयस्य आत्मा ह्येकः सुखदुःखस्य वेत्ता २६
अन्योन्यकृतवैराणां न संधिरुपपद्यते
स च हेतुरतिक्रान्तो यदर्थमहमावसम् २७
पूजितस्यार्थमानाभ्यां जन्तोः पूर्वापकारिणः
चेतो भवत्यविश्वस्तं पूर्वं त्रासयते बलात् २८
पूर्वं संमानना यत्र पश्चाच्चैव विमानना
जह्यात्तं सत्त्ववान्वासं संमानितविमानितः २९
उषितास्मि तवागारे दीर्घकालमहिंसिता
तदिदं वैरमुत्पन्नं सुखमास्स्व व्रजाम्यहम् ३०

ब्रह्मदत्त उवाच
यत्कृते प्रतिकुर्याद्वै न स तत्रापराध्नुयात्
अनृणस्तेन भवति वस पूजनि मा गमः ३१
पूजन्युवाच
न कृतस्य न कर्तुश्च संख्यं संधीयते पुनः
हृदयं तत्र जानाति कर्तुश्चैव कृतस्य च ३२
ब्रह्मदत्त उवाच
कृतस्य चैव कर्तुश्च सख्यं संधीयते पुनः
वैरस्योपशमो दृष्टः पापं नोपाश्नुते पुनः ३३
पूजन्युवाच
नास्ति वैरमुपक्रान्तं सान्त्वितोऽस्मीति नाश्वसेत्
विश्वासाद्बध्यते बालस्तस्माच्छ्रेयो ह्यदर्शनम् ३४
तरसा ये न शक्यन्ते शस्त्रैः सुनिशितैरपि
साम्ना ते विनिगृह्यन्ते गजा इव करेणुभिः ३५
ब्रह्मदत्त उवाच
संवासाज्जायते स्नेहो जीवितान्तकरेष्वपि
अन्योन्यस्य च विश्वासः श्वपचेन शुनो यथा ३६
अन्योन्यकृतवैराणां संवासान्मृदुतां गतम्
नैव तिष्ठति तद्वैरं पुष्करस्थमिवोदकम् ३७
पूजन्युवाच
वैरं पञ्चसमुत्थानं तच्च बुध्यन्ति पण्डिताः
स्त्रीकृतं वास्तुजं वाग्जं ससपत्नापराधजम् ३८
तत्र दाता निहन्तव्यः क्षत्रियेण विशेषतः
प्रकाशं वाप्रकाशं वा बुद्ध्वा देशबलादिकम् ३९
कृतवैरे न विश्वासः कार्यस्त्विह सुहृद्यपि
छन्नं संतिष्ठते वैरं गूढोऽग्निरिव दारुषु ४०
न वित्तेन न पारुष्यैर्न सान्त्वेन न च श्रुतैः
वैराग्निः शाम्यते राजन्नौर्वाग्निरिव सागरे ४१
न हि वैराग्निरुद्भूतः कर्म वाप्यपराधजम्
शाम्यत्यदग्ध्वा नृपते विना ह्येकतरक्षयात् ४२

सत्कृतस्यार्थमानाभ्यां स्यात्तु पूर्वापकारिणः
नैव शान्तिर्न विश्वासः कर्म त्रासयते बलात् ४३
नैवापकारे कस्मिंश्चिदहं त्वयि तथा भवान्
विश्वासादुषिता पूर्वं नेदानीं विश्वसाम्यहम् ४४
ब्रह्मदत्त उवाच
कालेन क्रियते कार्यं तथैव विविधाः क्रियाः
कालेनैव प्रवर्तन्ते कः कस्येहापराध्यति ४५
तुल्यं चोभे प्रवर्तेते मरणं जन्म चैव ह
कार्यते चैव कालेन तन्निमित्तं हि जीवति ४६
बध्यन्ते युगपत्केचिदेकैकस्य न चापरे
कालो दहति भूतानि संप्राप्याग्निरिवेन्धनम् ४७
नाहं प्रमाणं नैव त्वमन्योन्यकरणे शुभे
कालो नित्यमुपाधत्ते सुखं दुःखं च देहिनाम् ४८
एवं वसेह सस्नेहा यथाकाममहिंसिता
यत्कृतं तच्च मे क्षान्तं त्वं चैव क्षम पूजनि ४९
पूजन्युवाच
यदि कालः प्रमाणं ते न वैरं कस्यचिद्भवेत्
कस्मात्त्वपचितिं यान्ति बान्धवा बान्धवे हते ५०
कस्माद्देवासुराः पूर्वमन्योन्यमभिजघ्निरे
यदि कालेन निर्याणं सुखदुःखे भवाभवौ ५१
भिषजो भेषजं कर्तुं कस्मादिच्छन्ति रोगिणे
यदि कालेन पच्यन्ते भेषजैः किं प्रयोजनम् ५२
प्रलापः क्रियते कस्मात् सुमहाञ्शोकमूर्छितैः
यदि कालः प्रमाणं ते कस्माद्धर्मोऽस्ति कर्तृषु ५३
तव पुत्रो ममापत्यं हतवान्हिंसितो मया
अनन्तरं त्वया चाहं बन्धनीया महीपते ५४
अहं हि पुत्रशोकेन कृतपापा तवात्मजे
यथा त्वया प्रहर्तव्यं तथा तत्त्वं च मे शृणु ५५
भक्षार्थं क्रीडनार्थं वा नरा वाञ्छन्ति पक्षिणः
तृतीयो नास्ति संयोगो वधबन्धादृते क्षमः ५६

वधबन्धभयादेके मोक्षतन्त्रमुपागताः
मरणोत्पातजं दुःखमाहुर्धर्मविदो जनाः ५७
सर्वस्य दयिताः प्राणाः सर्वस्य दयिताः सुताः
दुःखादुद्विजते सर्वः सर्वस्य सुखमीप्सितम् ५८
दुःखं जरा ब्रह्मदत्त दुःखमर्थविपर्ययः
दुःखं चानिष्टसंवासो दुःखमिष्टवियोगजम् ५९
वैरबन्धकृतं दुःखं हिंसाजं स्त्रीकृतं तथा
दुःखं सुखेन सततं जनाद्विपरिवर्तते ६०
न दुःखं परदुःखे वै केचिदाहुरबुद्धयः
यो दुःखं नाभिजानाति स जल्पति महाजने ६१
यस्तु शोचति दुःखार्तः स कथं वक्तुमुत्सहेत्
रसज्ञः सर्वदुःखस्य यथात्मनि तथा परे ६२
यत्कृतं ते मया राजंस्त्वया च मम यत्कृतम्
न तद्वर्षशतैः शक्यं व्यपोहितुमरिंदम ६३
आवयोः कृतमन्योन्यं तत्र संधिर्न विद्यते
स्मृत्वा स्मृत्वा हि ते पुत्रं नवं वैरं भविष्यति ६४
वैरमन्तिकमासज्य यः प्रीतिं कर्तुमिच्छति
मृन्मयस्येव भग्नस्य तस्य संधिर्न विद्यते ६५
निश्चितश्चार्थशास्त्रज्ञैरविश्वासः सुखोदयः
उशनाश्चाथ गाथे द्वे प्रह्लादायाब्रवीत्पुरा ६६
ये वैरिणः श्रद्दधते सत्ये सत्येतरेऽपि वा
ते श्रद्दधाना वध्यन्ते मधु शुष्कतृणैर्यथा ६७
न हि वैराणि शाम्यन्ति कुलेष्वा दशमाद्युगात्
आख्यातारश्च विद्यन्ते कुले चेद्विद्यते पुमान् ६८
उपगुह्य हि वैराणि सान्त्वयन्ति नराधिपाः
अथैनं प्रतिपिंषन्ति पूर्णं घटमिवाश्मनि ६९
सदा न विश्वसेद्राजन्पापं कृत्वेह कस्यचित्
अपकृत्य परेषां हि विश्वासाद्दुःखमश्नुते ७०
ब्रह्मदत्त उवाच
नाविश्वासाच्चिन्वतेऽथान्नेहन्ते चापि किंचन

भयादेकतरान्नित्यं मृतकल्पा भवन्ति च ७१
पूजन्युवाच
यस्येह व्रणिनौ पादौ पद्भ्यां च परिसर्पति
क्षण्येते तस्य तौ पादौ सुगुप्तमभिधावतः ७२
नेत्राभ्यां सरुजाभ्यां यः प्रतिवातमुदीक्षते
तस्य वायुरुजात्यर्थं नेत्रयोर्भवति ध्रुवम् ७३
दुष्टं पन्थानमाश्रित्य यो मोहादभिपद्यते
आत्मनो बलमज्ञात्वा तदन्तं तस्य जीवितम् ७४
यस्तु वर्षमविज्ञाय क्षेत्रं कृषति मानवः
हीनं पुरुषकारेण सस्यं नैवाप्नुते पुनः ७५
यश्च तिक्तं कषायं वाप्यास्वादविधुरं हितम्
आहारं कुरुते नित्यं सोऽमृतत्वाय कल्पते ७६
पथ्यं भुक्त्वा नरो लोभाद्योऽन्यदश्नाति भोजनम्
परिणाममविज्ञाय तदन्तं तस्य जीवितम् ७७
दैवं पुरुषकारश्च स्थितावन्योन्यसंश्रयात्
उदात्तानां कर्म तन्त्रं दैवं क्लीबा उपासते ७८
कर्म चात्महितं कार्यं तीक्ष्णं वा यदि वा मृदु
ग्रस्यतेऽकर्मशीलस्तु सदानर्थैरकिंचनः ७९
तस्मात्संशयितेऽप्यर्थे कार्य एव पराक्रमः
सर्वस्वमपि संत्यज्य कार्यमात्महितं नरैः ८०
विद्या शौर्यं च दाक्ष्यं च बलं धैर्यं च पञ्चकम्
मित्राणि सहजान्याहुर्वर्तयन्तीह यैर्बुधाः ८१
निवेशनं च कुप्यं च क्षेत्रं भार्या सुहृज्जनः
एतान्युपचितान्याहुः सर्वत्र लभते पुमान् ८२
सर्वत्र रमते प्राज्ञः सर्वत्र च विरोचते
न विभीषयते कंचिद्भीषितो न बिभेति च ८३
नित्यं बुद्धिमतो ह्यर्थः स्वल्पकोऽपि विवर्धते
दाक्ष्येण कुरुते कर्म संयमात्प्रतितिष्ठति ८४
गृहस्नेहावबद्धानां नराणामल्पमेधसाम्
कुस्त्री खादति मांसानि माघमा सेगवामिव ८५

गृहं क्षेत्राणि मित्राणि स्वदेश इति चापरे
इत्येवमवसीदन्ति नरा बुद्धिविपर्यये ८६
उत्पतेत्सरुजाद्देशाद्व्याधिदुर्भिक्षपीडितात्
अन्यत्र वस्तुं गच्छेद्वा वसेद्वा नित्यमानितः ८७
तस्मादन्यत्र यास्यामि वस्तुं नाहमिहोत्सहे
कृतमेतदनाहार्यं तव पुत्रेण पार्थिव ८८
कुभार्यां च कुपुत्रं च कुराजानं कुसौहृदम्
कुसंबन्धं कुदेशं च दूरतः परिवर्जयेत् ८९
कुमित्रे नास्ति विश्वासः कुभार्यायां कुतो रतिः
कुराज्ये निर्वृतिर्नास्ति कुदेशे न प्रजीव्यते ९०
कुमित्रे संगतं नास्ति नित्यमस्थिरसौहृदे
अवमानः कुसंबन्धे भवत्यर्थविपर्यये ९१
सा भार्या या प्रियं ब्रूते स पुत्रो यत्र निर्वृतिः
तन्मित्रं यत्र विश्वासः स देशो यत्र जीव्यते ९२
यत्र नास्ति बलात्कारः स राजा तीव्रशासनः
न चैव ह्यभिसंबन्धो दरिद्रं यो बुभूषति ९३
भार्या देशोऽथ मित्राणि पुत्रसंबन्धिबान्धवाः
एतत्सर्वं गुणवति धर्मनेत्रे महीपतौ ९४
अधर्मज्ञस्य विलयं प्रजा गच्छन्त्यनिग्रहात्
राजा मूलं त्रिवर्गस्य अप्रमत्तोऽनुपालयन् ९५
बलिषड्भागमुद्धृत्य बलि तमुपयोजयेत्
न रक्षति प्रजाः सम्यग्यः स पार्थिवतस्करः ९६
दत्त्वाभयं यः स्वयमेव राजा न तत्प्रमाणं कुरुते यथावत्
स सर्वलोकादुपलभ्य पापमधर्मबुद्धिर्निरयं प्रयाति ९७
दत्त्वाभयं यः स्म राजा प्रमाणं कुरुते सदा
स सर्वसुखकृज्ज्ञेयः प्रजा धर्मेण पालयन् ९८
पिता माता गुरुर्गोप्ता वह्निर्वैश्रवणो यमः
सप्त राज्ञो गुणानेतान्मनुराह प्रजापतिः ९९
पिता हि राजा राष्ट्रस्य प्रजानां योऽनुकम्पकः
तस्मिन्मिथ्याप्रणीते हि तिर्यग्गच्छति मानवः १००

संभावयति मातेव दीनमभ्यवपद्यते
दहत्यग्निरिवानिष्टान्यमयन्भवते यमः १०१
इष्टेषु विसृजत्यर्थान्कुबेर इव कामदः
गुरुर्धर्मोपदेशेन गोप्ता च परिपालनात् १०२
यस्तु रञ्जयते राजा पौरजानपदान्गुणैः
न तस्य भ्रश्यते राज्यं गुणधर्मानुपालनात् १०३
स्वयं समुपजानन्हि पौरजानपदक्रियाः
स सुखं मोदते भूप इहलोके परत्र च १०४
नित्योद्विग्नाः प्रजा यस्य करभारप्रपीडिताः
अनर्थैर्विप्रलुप्यन्ते स गच्छति पराभवम् १०५
प्रजा यस्य विवर्धन्ते सरसीव महोत्पलम्
स सर्वयज्ञफलभाग्राजा लोके महीयते १०६
बलिना विग्रहो राजन्न कथंचित्प्रशस्यते
बलिना विगृहीतस्य कुतो राज्यं कुतः सुखम् १०७
भीष्म उवाच
सैवमुक्त्वा शकुनिका ब्रह्मदत्तं नराधिपम्
राजानं समनुज्ञाप्य जगामाथेप्सितां दिशम् १०८
एतत्ते ब्रह्मदत्तस्य पूजन्या सह भाषितम्
मयोक्तं भरतश्रेष्ठ किमन्यच्छ्रोतुमिच्छसि १०९
इति श्रीमहाभारते शान्तिपर्वणि सप्तत्रिंशदधिकशततमोऽध्यायः १३७

## अष्टत्रिंशदधिक शततमोऽध्यायः

युधिष्ठिर उवाच
युगक्षयात्परिक्षीणे धर्मे लोके च भारत
दस्युभिः पीड्यमाने च कथं स्थेयं पितामह १
भीष्म उवाच
हन्त ते कथयिष्यामि नीतिमापत्सु भारत
उत्सृज्यापि घृणां काले यथा वर्तेत भूमिपः २
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
भरद्वाजस्य संवादं राज्ञः शत्रुंतपस्य च ३

राजा शत्रुंतपो नाम सौवीराणां महारथः
कणिङ्कमुपसंगम्य पप्रच्छार्थविनिश्चयम् ४
अलब्धस्य कथं लिप्सा लब्धं केन विवर्धते
वर्धितं पालयेत्केन पालितं प्रणयेत्कथम् ५
तस्मै विनिश्चयार्थं स परिपृष्टार्थनिश्चयः
उवाच ब्राह्मणो वाक्यमिदं हेतुमदुत्तरम् ६
नित्यमुद्यतदण्डः स्यान्नित्यं विवृतपौरुषः
अच्छिद्रश्छिद्रदर्शी च परेषां विवरानुगः ७
नित्यमुद्यतदण्डस्य भृशमुद्विजते जनः
तस्मात्सर्वाणि भूतानि दण्डेनैव प्ररोधयेत् ८
एवमेव प्रशंसन्ति पण्डितास्तत्त्वदर्शिनः
तस्माच्चतुष्टये तस्मिन्प्रधानो दण्ड उच्यते ९
छिन्नमूले ह्यधिष्ठाने सर्वे तज्जीविनो हतः
कथं हि शाखास्तिष्ठेयुश्छिन्नमूले वनस्पतौ १०
मूलमेवादितश्छिन्द्यात्परपक्षस्य पण्डितः
ततः सहायान्पक्षं च सर्वमेवानुसारयेत् ११
सुमन्त्रितं सुविक्रान्तं सुयुद्धं सुपलायितम्
आपदां पदकालेषु कुर्वीत न विचारयेत् १२
वाङ्मात्रेण विनीतः स्याद्धृदयेन यथा क्षुरः
श्लक्ष्णपूर्वाभिभाषी च कामक्रोधौ विवर्जयेत् १३
सपत्नसहिते कार्ये कृत्वा संधिं न विश्वसेत्
अपक्रामेत्ततः क्षिप्रं कृतकार्यो विचक्षणः १४
शत्रुं च मित्ररूपेण सान्त्वेनैवाभिसान्त्वयेत्
नित्यशश्चोद्विजेत्तस्मात्सर्पाद्वेश्मगतादिव १५
यस्य बुद्धिं परिभवेत्तमतीतेन सान्त्वयेत्
अनागतेन दुष्प्रज्ञं प्रत्युत्पन्नेन पण्डितम् १६
अञ्जलि शपथं सान्त्वं प्रणम्य शिरसा वदेत्
अश्रुप्रपातनं चैव कर्तव्यं भूतिमिच्छता १७
वहेदमित्रं स्कन्धेन यावत्कालविपर्ययः
अथैनमागते काले भिन्द्याद्घटमिवाश्मनि १८

मुहूर्तमपि राजेन्द्र तिन्दुकालातवज्ज्वलेत्
न तुषाग्निरिवानर्चिर्धूमायेत नरश्चिरम् १९
नानर्थकेनार्थवत्त्वं कृतघ्नेन समाचरेत्
अर्थे तु शक्यते भोक्तुं कृतकार्योऽवमन्यते
तस्मात्सर्वाणि कार्याणि सावशेषाणि कारयेत् २०
कोकिलस्य वराहस्य मेरोः शून्यस्य वेश्मनः
व्याडस्य भक्तिचित्रस्य यच्छ्रेष्ठं तत्समाचरेत् २१
उत्थायोत्थाय गच्छेच्च नित्ययुक्तो रिपोर्गृहान्
कुशलं चापि पृच्छेत यद्यप्यकुशलं भवेत् २२
नालसाः प्राप्नुवन्त्यर्थान्न क्लीबा न च मानिनः
न च लोकरवाद्भीता न च शश्वत्प्रतीक्षिणः २३
नास्य छिद्रं परो विद्याद्विद्याच्छिद्रं परस्य तु
गूहेत्कूर्म इवाङ्गानि रक्षेद्विवरमात्मनः २४
बकवच्चिन्तयेदर्थान्सिंहवच्च पराक्रमेत्
वृकवच्चावलुम्पेत शशवच्च विनिष्पतेत् २५
पानमक्षास्तथा नार्यो मृगया गीतवादितम्
एतानि युक्त्या सेवेत प्रसङ्गो ह्यत्र दोषवान् २६
कुर्यात्तृणमयं चापं शयीत मृगशायिकाम्
अन्धः स्यादन्धवेलायां बाधिर्यमपि संश्रयेत् २७
देशं कालं समासाद्य विक्रमेत विचक्षणः
देशकालाभ्यतीतो हि विक्रमो निष्फलो भवेत् २८
कालाकालौ संप्रधार्य बलाबलमथात्मनः
परस्परबलं ज्ञात्वा तथात्मानं नियोजयेत् २९
दण्डेनोपनतं शत्रुं यो राजा न नियच्छति
स मृत्युमुपगूह्यास्ते गर्भमश्वतरी यथा ३०
सुपुष्पितः स्यादफलः फलवान्स्याद्दुरारुहः
आमः स्यात्पक्वसंकाशो न च शीर्येत कस्यचित् ३१
आशां कालवतीं कुर्यात्तां च विघ्नेन योजयेत्
विघ्नं निमित्ततो ब्रूयान्निमित्तं चापि हेतुतः ३२
भीतवत्संविधातव्यं यावद्भयमनागतम्

आगतं तु भयं दृष्ट्वा प्रहर्तव्यमभीतवत् ३३
न संशयमनारुह्य नरो भद्राणि पश्यति
संशयं पुनरारुह्य यदि जीवति पश्यति ३४
अनागतं विजानीयाद्यच्छेद्भयमुपस्थितम्
पुनर्वृद्धिक्षयात्किंचिदभिवृत्तं निशामयेत् ३५
प्रत्युपस्थितकालस्य सुखस्य परिवर्जनम्
अनागतसुखाशा च नैष बुद्धिमतां नयः ३६
योऽरिणा सह संधाय सुखं स्वपिति विश्वसन्
स वृक्षाग्रप्रसुप्तो वा पतितः प्रतिबुध्यते ३७
कर्मणा येन तेनेह मृदुना दारुणेन वा
उद्धरेद्दीनमात्मानं समर्थो धर्ममाचरेत् ३८
ये सपत्नाः सपत्नानां सर्वांस्तानपवत्सयेत्
आत्मनश्चापि बोद्धव्याश्चाराः प्रणिहिताः परैः ३९
चारः सुविहितः कार्य आत्मनोऽथ परस्य च
पाषण्डांस्तापसादींश्च परराष्ट्रं प्रवेशयेत् ४०
उद्यानेषु विहारेषु प्रपास्वावसथेषु च
पानागारेषु वेशेषु तीर्थेषु च सभासु च ४१
धर्माभिचारिणः पापाश्चारा लोकस्य कण्टकाः
समागच्छन्ति तान्बुद्ध्वा नियच्छेच्छमयेदपि ४२
न विश्वसेदविश्वस्ते विश्वस्ते नापि विश्वसेत्
विश्वस्तं भयमन्वेति नापरीक्ष्य च विश्वसेत् ४३
विश्वासयित्वा तु परं तत्त्वभूतेन हेतुना
अथास्य प्रहरेत्काले किंचिद्विचलिते पदे ४४
अशङ्क्यमपि शङ्केत नित्यं शङ्केत शङ्कितात्
भयं हि शङ्किताज्जातं समूलमपि कृन्तति ४५
अवधानेन मौनेन काषायेण जटाजिनैः
विश्वासयित्वा द्वेष्टारमवलुम्पेद्यथा वृकः ४६
पुत्रो वा यदि वा भ्राता पिता वा यदि वा सुहृत्
अर्थस्य विघ्नं कुर्वाणा हन्तव्या भूतिवर्धनाः ४७
गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः

उत्पथप्रतिपन्नस्य दण्डो भवति शासनम् ४८
प्रत्युत्थानाभिवादाभ्यां संप्रदानेन कस्यचित्
प्रतिपुष्कलघाती स्यात्तीक्ष्णतुण्ड इव द्विजः ४९
नाच्छित्त्वा परमर्माणि नाकृत्वा कर्म दारुणम्
नाहत्वा मत्स्यघातीव प्राप्नोति परमां श्रियम् ५०
नास्ति जात्या रिपुर्नाम मित्रं नाम न विद्यते
सामर्थ्ययोगाज्जायन्ते मित्राणि रिपवस्तथा ५१
अमित्रं नैव मुञ्चेत ब्रुवन्तं करुणान्यपि
दुःखं तत्र न कुर्वीत हन्यात्पूर्वापकारिणम् ५२
संग्रहानुग्रहे यत्नः सदा कार्योऽनसूयता
निग्रहश्चापि यत्नेन कर्तव्यो भूतिमिच्छता ५३
प्रहरिष्यन्प्रियं ब्रूयात्प्रहृत्यापि प्रियोत्तरम्
अपि चास्य शिरश्छित्त्वा रुद्याच्छोचेदथापि वा ५४
निमन्त्रयेत सान्त्वेन संमानेन तितिक्षया
आशाकारणमित्येतत्कर्तव्यं भूतिमिच्छता ५५
न शुष्कवैरं कुर्वीत न बाहुभ्यां नदीं तरेत्
अपार्थकमनायुष्यं गोविषाणस्य भक्षणम्
दन्ताश्च परिघृष्यन्ते रसश्चापि न लभ्यते ५६
त्रिवर्गे त्रिविधा पीडानुबन्धास्त्रय एव च
अनुबन्धवधौ ज्ञात्वा पीडां हि परिवर्जयेत् ५७
ऋणशेषोऽग्निशेषश्च शत्रुशेषस्तथैव च
पुनः पुनर्विवर्धेत स्वल्पोऽप्यनिवारितः ५८
वर्धमानमृणं तिष्ठत्परिभूताश्च शत्रवः
आवहन्त्यनयं तीव्रं व्याधयश्चाप्युपेक्षिताः ५९
नासम्यक्कृतकारी स्यादप्रमत्तः सदा भवेत्
कण्टकोऽपि हि दुश्छिन्नो विकारं कुरुते चिरम् ६०
वधेन च मनुष्याणां मार्गाणां दूषणेन च
आकराणां विनाशैश्च परराष्ट्रं विनाशयेत् ६१
गृध्रदृष्टिर्बकालीनः श्वचेष्टः सिंहविक्रमः
अनुद्विग्नः काकशङ्की भुजंगचरितं चरेत् ६२

श्रेणिमुख्योपजापेषु वल्लभानुनयेषु च
अमात्यान्परिरक्षेत भेदसंघातयोरपि ६३
मृदुरित्यवमन्यन्ते तीक्ष्ण इत्युद्विजन्ति च
तीक्ष्णकाले च तीक्ष्णः स्यान्मृदुकाले मृदुर्भवेत् ६४
मृदुना सुमृदुं हन्ति मृदुना हन्ति दारुणम्
नासाध्यं मृदुना किंचित्तस्मात्तीक्ष्णतरं मृदु ६५
काले मृदुर्यो भवति काले भवति दारुणः
स साधयति कृत्यानि शत्रूंश्चैवाधितिष्ठति ६६
पण्डितेन विरुद्धः सन्दूरेऽस्मीति न विश्वसेत्
दीर्घौ बुद्धिमतो बाहू याभ्यां हिंसति हिंसितः ६७
न तत्तरेद्यस्य न पारमुत्तरेन्न तद्धरेद्यत्पुनराहरेत्परः
न तत्खनेद्यस्य न मूलमुत्खनेन्न तं हन्याद्यस्य शिरो न पातयेत् ६८
इतीदमुक्तं वृजिनाभिसंहितं न चैतदेवं पुरुषः समाचरेत्
परप्रयुक्तं तु कथं निशामयेदतो मयोक्तं भवतो हितार्थिना ६९
यथावदुक्तं वचनं हितं तदा निशम्य विप्रेण सुवीरराष्ट्रियः
तथाकरोद्वाक्यमदीनचेतनः श्रियं च दीप्तां बुभुजे सबान्धवः ७०
इति श्रीमहाभारते शान्तिपर्वणि अष्टत्रिंशदधिकशततमोऽध्यायः १३८

## एकोनचत्वारिंशदधिक शततमोऽध्यायः

युधिष्ठिर उवाच
हीने परमके धर्मे सर्वलोकातिलङ्घिनि
अधर्मे धर्मतां नीते धर्मे चाधर्मतां गते १
मर्यादासु प्रभिन्नासु क्षुभिते धर्मनिश्चये
राजभिः पीडिते लोके चोरैर्वापि विशां पते २
सर्वाश्रमेषु मूढेषु कर्मसूपहतेषु च
कामान्मोहाच्च लोभाच्च भयं पश्यत्सु भारत ३
अविश्वस्तेषु सर्वेषु नित्यभीतेषु पार्थिव
निकृत्या हन्यमानेषु वञ्चयत्सु परस्परम् ४
संप्रदीप्तेषु देशेषु ब्राह्मण्ये चाभिपीडिते
अवर्षति च पर्जन्ये मिथो भेदे समुत्थिते ५

सर्वस्मिन्दस्युसाद्भूते पृथिव्यामुपजीवने
केन स्विद्ब्राह्मणो जीवेज्जघन्ये काल आगते ६
अतित्यक्षुः पुत्रपौत्राननुक्रोशान्नराधिप
कथमापत्सु वर्तेत तन्मे ब्रूहि पितामह ७
कथं च राजा वर्तेत लोके कलुषतां गते
कथमर्थाच्च धर्माच्च न हीयेत परंतप ८
भीष्म उवाच
राजमूला महाराज योगक्षेमसुवृष्टयः
प्रजासु व्याधयश्चैव मरणं च भयानि च ९
कृतं त्रेता द्वापरश्च कलिश्च भरतर्षभ
राजमूलानि सर्वाणि मम नास्त्यत्र संशयः १०
तस्मिंस्त्वभ्यागते काले प्रजानां दोषकारके
विज्ञानबलमास्थाय जीवितव्यं तदा भवेत् ११
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
विश्वामित्रस्य संवादं चण्डालस्य च पक्कणे १२
त्रेताद्वापरयोः संधौ पुरा दैवविधिक्रमात्
अनावृष्टिरभूद्घोरा राजन्द्वादशवार्षिकी १३
प्रजानामभिवृद्धानां युगान्ते पर्युपस्थिते
त्रेतानिर्मोक्षसमये द्वापरप्रतिपादने १४
न ववर्ष सहस्राक्षः प्रतिलोमोऽभवद्गुरुः
जगाम दक्षिणं मार्गं सोमो व्यावृत्तलक्षणः १५
नावश्यायोऽपि रात्र्यन्ते कुत एवाभ्रराजयः
नद्यः संक्षिप्ततोयौघाः क्वचिदन्तर्गताभवन् १६
सरांसि सरितश्चैव कूपाः प्रस्रवणानि च
हतत्विट्कान्यलक्ष्यन्त निसर्गाद्दैवकारितात् १७
उपशुष्कजलस्थाया विनिवृत्तसभाप्रपा
निवृत्तयज्ञस्वाध्याया निर्वषट्कारमङ्गला १८
उत्सन्नकृषिगोरक्ष्या निवृत्तविपणापणा
निवृत्तपूगसमया संप्रनष्टमहोत्सवा १९
अस्थिकङ्कालसंकीर्णा हाहाभूतजनाकुला

शून्यभूयिष्ठनगरा दग्धग्रामनिवेशना २०
क्वचिच्चौरैः क्वचिच्छस्त्रैः क्वचिद्राजभिरातुरैः
परस्परभयाच्चैव शून्यभूयिष्ठनिर्जना २१
गतदैवतसंकल्पा वृद्धबालविनाकृता
गोजाविमहिषैर्हीना परस्परहराहरा २२
हतविप्रा हतारक्षा प्रनष्टौषधिसंचया
श्यावभूतनरप्राया बभूव वसुधा तदा २३
तस्मिन्प्रतिभये काले क्षीणे धर्मे युधिष्ठिर
बभ्रमुः क्षुधिता मर्त्याः खादन्तः स्म परस्परम् २४
ऋषयो नियमांस्त्यक्त्वा परित्यक्ताग्निदैवताः
आश्रमान्संपरित्यज्य पर्यधावन्नितस्ततः २५
विश्वामित्रोऽथ भगवान्महर्षिरनिकेतनः
क्षुधा परिगतो धीमान्समन्तात्पर्यधावत २६
स कदाचित्परिपतञ्श्वपचानां निवेशनम्
हिंस्राणां प्राणिहन्तॄणामाससाद वने क्वचित् २७
विभिन्नकलशाकीर्णं श्वचर्माच्छादनायुतम्
वराहखरभग्नास्थिकपालघटसंकुलम् २८
मृतचेलपरिस्तीर्णं निर्माल्यकृतभूषणम्
सर्पनिर्मोकमालाभिः कृतचिह्नकुटीमठम् २९
उलूकपक्षध्वजिभिर्देवतायतनैर्वृतम्
लोहघण्टापरिष्कारं श्वयूथपरिवारितम् ३०
तत्प्रविश्य क्षुधाविष्टो गाधेः पुत्रो महानृषिः
आहारान्वेषणे युक्तः परं यत्नं समास्थितः ३१
न च क्वचिदविन्दत्स भिक्षमाणोऽपि कौशिकः
मांसमन्नं मूलफलमन्यद्वा तत्र किंचन ३२
अहो कृच्छ्रं मया प्राप्तमिति निश्चित्य कौशिकः
पपात भूमौ दौर्बल्यात्तस्मिंश्चण्डालपक्कणे ३३
चिन्तयामास स मुनिः किं नु मे सुकृतं भवेत्
कथं वृथा न मृत्युः स्यादिति पार्थिवसत्तम ३४
स ददर्श श्वमांसस्य कुतन्तीं विततां मुनिः

चण्डालस्य गृहे राजन्सद्यः शस्त्रहतस्य च ३५
स चिन्तयामास तदा स्तेयं कार्यमितो मया
न हीदानीमुपायोऽन्यो विद्यते प्राणधारणे ३६
आपत्सु विहितं स्तेयं विशिष्टसमहीनतः
परं परं भवेत्पूर्वमस्तेयमिति निश्चयः ३७
हीनादादेयमादौ स्यात्समानात्तदनन्तरम्
असंभवादाददीत विशिष्टादपि धार्मिकात् ३८
सोऽहमन्तावसानानां हरमाणः परिग्रहात्
न स्तेयदोषं पश्यामि हरिष्यामेतदामिषम् ३९
एतां बुद्धिं समास्थाय विश्वामित्रो महामुनिः
तस्मिन्देशे प्रसुष्वाप पतितो यत्र भारत ४०
स विगाढां निशां दृष्ट्वा सुप्ते चण्डालपक्कणे
शनैरुत्थाय भगवान्प्रविवेश कुटीमठम् ४१
स सुप्त एव चण्डालः श्लेष्मापिहितलोचनः
परिभिन्नस्वरो रूक्ष उवाचाप्रियदर्शनः ४२
कः कुतन्तीं घट्टयति सुप्ते चण्डालपक्कणे
जागर्मि नावसुप्तोऽस्मि हतोऽसीति च दारुणः ४३
विश्वामित्रोऽहमित्येव सहसा तमुवाच सः
सहसाभ्यागतभयः सोद्वेगस्तेन कर्मणा ४४
चण्डालस्तद्वचः श्रुत्वा महर्षेर्भावितात्मनः
शयनादुपसंभ्रान्त इयेषोत्पतितुं ततः ४५
स विसृज्याश्रु नेत्राभ्यां बहुमानात्कृताञ्जलि
उवाच कौशिकं रात्रौ ब्रह्मन्किं ते चिकीर्षितम् ४६
विश्वामित्रस्तु मातङ्गमुवाच परिसान्त्वयन्
क्षुधितोऽह गतप्राणो हरिष्यामि श्वजाघनीम् ४७
अवसीदन्ति मे प्राणाः स्मृतिर्मे नश्यति क्षुधा
स्वधर्मं बुध्यमानोऽपि हरिष्यामि श्वजाघनीम् ४८
अटन्भैक्षं न विन्दामि यदा युष्माकमालये
तदा बुद्धिः कृता पापे हरिष्यामि श्वजाघनीम् ४९
तृषितः कलुषं पाता नास्ति ह्रीरशनार्थिनः

क्षुद्धर्मं दूषयत्यत्र हरिष्यामि श्वजाघनीम् ५०
अग्निर्मुखं पुरोधाश्च देवानां शुचिपाड्विभुः
यथा स सर्वभुग्ब्रह्मा तथा मां विद्धि धर्मतः ५१
तमुवाच स चण्डालो महर्षे शृणु मे वचः
श्रुत्वा तथा समातिष्ठ यथा धर्मान्न हीयसे ५२
मृगाणामधमं श्वानं प्रवदन्ति मनीषिणः
तस्याप्यधम उद्देशः शरीरस्योरुजाघनी ५३
नेदं सम्यग्व्यवसितं महर्षे कर्म वैकृतम्
चण्डालस्वस्य हरणमभक्ष्यस्य विशेषतः ५४
साध्वन्यमनुपश्य त्वमुपायं प्राणधारणे
न मांसलोभात्तपसो नाशस्ते स्यान्महामुने ५५
जानतोऽविहितो मार्गो न कार्यो धर्मसंकरः
मा स्म धर्मं परित्याक्षीस्त्वं हि धर्मविदुत्तमः ५६
विश्वामित्रस्ततो राजन्नित्युक्तो भरतर्षभ
क्षुधार्तः प्रत्युवाचेदं पुनरेव महामुनिः ५७
निराहारस्य सुमहान्मम कालोऽभिधावतः
न विद्यतेऽभ्युपायश्च कश्चिन्मे प्राणधारणे ५८
येन तेन विशेषेण कर्मणा येन केनचित्
अभ्युज्जीवेत्सीदमानः समर्थो धर्ममाचरेत् ५९
ऐन्द्रो धर्मः क्षत्रियाणां ब्राह्मणानामथाग्निकः
ब्रह्मवह्निर्मम बलं भक्ष्यामि समयं क्षुधा ६०
यथा यथा वै जीवेद्धि तत्कर्तव्यमपीडया
जीवितं मरणाच्छ्रेयो जीवन्धर्ममवाप्नुयात् ६१
सोऽह जीवितमाकाङ्क्षन्नभक्ष्यस्यापि भक्षणम्
व्यवस्ये बुद्धिपूर्वं वै तद्भवाननुमन्यताम् ६२
जीवन्धर्मं चरिष्यामि प्रणोत्स्याम्यशुभानि च
तपोभिर्विद्यया चैव ज्योतींषीव महत्तमः ६३
श्वपच उवाच
नैतत्खादन्प्राप्स्यसे प्राणमन्यं नायुर्दीर्घं नामृतस्येव तृप्तिम्
भिक्षामन्यां भिक्ष मा ते मनोऽस्तु श्वभक्षणे श्वा ह्यभक्ष्यो द्विजानाम् ६४

विश्वामित्र उवाच
न दुर्भिक्षे सुलभं मांसमन्यच्छ्वपाक नान्नं न च मेऽस्ति वित्तम्
क्षुधार्तश्चाहमगतिर्निराशः श्वमांसे चास्मिन्षड्रसान्साधु मन्ये ६५
श्वपच उवाच
पञ्च पञ्चनखा भक्ष्या ब्रह्मक्षत्रस्य वै द्विज
यदि शास्त्रं प्रमाणं ते माभक्ष्ये मानसं कृथाः ६६
विश्वामित्र उवाच
अगस्त्येनासुरो जग्धो वातापिः क्षुधितेन वै
अहमापद्गतः क्षुब्धो भक्षयिष्ये श्वजाघनीम् ६७
श्वपच उवाच
भिक्षामन्यामाहरेति न चैतत्कर्तुमर्हसि
न नूनं कार्यमेतद्वै हर कामं श्वजाघनीम् ६८
विश्वामित्र उवाच
शिष्टा वै कारणं धर्मे तद्वृत्तमनुवर्तये
परां मेध्याशनादेतां भक्ष्यां मन्ये श्वजाघनीम् ६९
श्वपच उवाच
असता यत्समाचीर्णं न स धर्मः सनातनः
नावृत्तमनुकार्यं वै मा छलेनानृतं कृथाः ७०
विश्वामित्र उवाच
न पातकं नावमतमृषिः सन्कर्तुमर्हति
समौ च श्वमृगौ मन्ये तस्माद्भक्ष्या श्वजाघनी ७१
श्वपच उवाच
यद्ब्राह्मणार्थे कृतमर्थितेन तेनर्षिणा तच्च भक्ष्याधिकारम्
स वै धर्मो यत्र न पापमस्ति सर्वैरुपायैर्हि स रक्षितव्यः ७२
विश्वामित्र उवाच
मित्रं च मे ब्राह्मणश्चायमात्मा प्रियश्च मे पूज्यतमश्च लोके
तं भर्तुकामोऽहमिमां हरिष्ये नृशंसानामीदृशानां न बिभ्ये ७३
श्वपच उवाच
कामं नरा जीवितं संत्यजन्ति न चाभक्ष्यैः प्रतिकुर्वन्ति तत्र
सर्वान्कामान्प्राप्नुवन्तीह विद्वन्प्रियस्व कामं सहितः क्षुधा वै ७४

विश्वामित्र उवाच
स्थाने तावत्संशयः प्रेत्यभावे निःसंशयं कर्मणां वा विनाशः
अहं पुनर्वर्त इत्याशयात्मा मूलं रक्षयन्भक्षयिष्याम्यभक्ष्यम् ७५
बुद्ध्यात्मके व्यस्तमस्तीति तुष्टो मोहादेकत्वं यथा चर्म चक्षुः
यद्यप्येनःसंशयादाचरामि नाहं भविष्यामि यथा त्वमेव ७६
श्वपच उवाच
पतनीयमिदं दुःखमिति मे वर्तते मतिः
दुष्कृती ब्राह्मणं सन्तं यस्त्वामहमुपालभे ७७
विश्वामित्र उवाच
पिबन्त्येवोदकं गावो मण्डूकेषु रुवत्स्वपि
न तेऽधिकारो धर्मेऽस्ति मा भूरात्मप्रशंसकः ७८
श्वपच उवाच
सुहृद्भूत्वानुशास्मि त्वा कृपा हि त्वयि मे द्विज
तदेवं श्रेय आधत्स्व मा लोभाच्छ्वानमादिथाः ७९
विश्वामित्र उवाच
सुहृन्मे त्वं सुखेप्सुश्चेदापदो मां समुद्धर
जानेऽह धर्मतोऽत्मानं श्वानीमुत्सृज जाघनीम् ८०
श्वपच उवाच
नैवोत्सहे भवते दातुमेतां नोपेक्षितुं ह्रियमाणं स्वमन्नम्
उभौ स्यावः स्वमलेनावलिप्तौ दाताहं च त्वं च विप्र प्रतीच्छन् ८१
विश्वामित्र उवाच
अद्याहमेतद्वृजिनं कर्म कृत्वा जीवंश्चरिष्यामि महापवित्रम्
प्रपूतात्मा धर्ममेवाभिपत्स्ये यदेतयोर्गुरु तद्वै ब्रवीहि ८२
श्वपच उवाच
आत्मैव साक्षी किल लोककृत्ये त्वमेव जानासि यदत्र दुष्टम्
यो ह्याद्रियेद्भक्ष्यमिति श्वमांसं मन्ये न तस्यास्ति विवर्जनीयम् ८३
विश्वामित्र उवाच
उपादाने खादने वास्य दोषः कार्यो न्यायैर्नित्यमत्रापवादः
यस्मिन्न हिंसा नानृते वाक्यलेशो भक्ष्यक्रिया तत्र न तद्गरीयः ८४
श्वपच उवाच

यद्येष हेतुस्तव खादनस्य न ते वेदः कारणं नान्यधर्मः
तस्मादभक्ष्ये भक्षणाद्वा द्विजेन्द्र दोषं न पश्यामि यथेदमात्थ ८५
विश्वामित्र उवाच
न पातकं भक्षणमस्य दृष्टं सुरां पीत्वा पततीतीह शब्दः
अन्योन्यकर्माणि तथा तथैव न लेशमात्रेण कृत्यं हिनस्ति ८६
श्वपच उवाच
अस्थानतो हीनतः कुत्सिताद्वा तं विद्वांसं बाधते साधुवृत्तम्
स्थानं पुनर्यो लभते निषङ्गात्तेनापि दण्डः सहितव्य एव ८७
भीष्म उवाच
एवमुक्त्वा निववृते मातङ्गः कौशिकं तदा
विश्वामित्रो जहारैव कृतबुद्धिः श्वजाघनीम् ८८
ततो जग्राह पञ्चाङ्गीं जीवितार्थी महामुनिः
सदारस्तामुपाकृत्य वने यातो महामुनिः ८९
एतस्मिन्नेव काले तु प्रववर्षाथ वासवः
संजीवयन्प्रजाः सर्वा जनयामास चौषधीः ९०
विश्वामित्रोऽपि भगवांस्तपसा दग्धकिल्बिषः
कालेन महता सिद्धिमवाप परमाद्भुताम् ९१
एवं विद्वानदीनात्मा व्यसनस्थो जिजीविषुः
सर्वोपायैरुपायज्ञो दीनमात्मानमुद्धरेत् ९२
एतां बुद्धिं समास्थाय जीवितव्यं सदा भवेत्
जीवन्पुण्यमवाप्नोति नरो भद्राणि पश्यति ९३
तस्मात्कौन्तेय विदुषा धर्माधर्मविनिश्चये
बुद्धिमास्थाय लोकेऽस्मिन्वर्तितव्यं यतात्मना ९४
इति श्रीमहाभारते शान्तिपर्वणि एकोनचत्वारिंशदधिकशततमोऽध्यायः
१३९

## चत्वारिंशदधिक शततमोऽध्यायः

युधिष्ठिर उवाच
यदिदं घोरमुद्दिष्टमश्रद्धेयमिवानृतम्
अस्ति स्विद्दस्युमर्यादा यामहं परिवर्जये १

संमुह्यामि विषीदामि धर्मो मे शिथिलीकृतः
उद्यमं नाधिगच्छामि कुतश्चित्परिचिन्तयन् २
भीष्म उवाच
नैतच्छुद्धागमादेव तव धर्मानुशासनम्
प्रज्ञासमवतारोऽय कविभिः संभृतं मधु ३
बह्व्यः प्रतिविधातव्याः प्रज्ञा राज्ञा ततस्ततः
नैकशाखेन धर्मेण यात्रैषा संप्रवर्तते ४
बुद्धिसंजननं राज्ञां धर्ममाचरतां सदा
जयो भवति कौरव्य तदा तद्विद्धि मे वचः ५
बुद्धिश्रेष्ठा हि राजानो जयन्ति विजयैषिणः
धर्मः प्रतिविधातव्यो बुद्ध्या राज्ञा ततस्ततः ६
नैकशाखेन धर्मेण राज्ञां धर्मो विधीयते
दुर्बलस्य कुतः प्रज्ञा पुरस्तादनुदाहृता ७
अद्वैधज्ञः पथि द्वैधे संशयं प्राप्तुमर्हति
बुद्धिद्वैधं वेदितव्यं पुरस्तादेव भारत ८
पार्श्वतःकरणं प्रज्ञा विषूची त्वापगा इव
जनस्तूच्चारितं धर्मं विजानात्यन्यथान्यथा ९
सम्यग्विज्ञानिनः केचिन्मिथ्याविज्ञानिनोऽपरे
तद्वै यथातथं बुद्ध्वा ज्ञानमाददते सताम् १०
परिमुष्णन्ति शास्त्राणि धर्मस्य परिपन्थिनः
वैषम्यमर्थविद्यानां नैरर्थ्यात्ख्यापयन्ति ते ११
आजिजीविषवो विद्यां यशस्कामाः समन्ततः
ते सर्वे नरपापिष्ठा धर्मस्य परिपन्थिनः १२
अपक्वमतयो मन्दा न जानन्ति यथातथम्
सदा ह्यशास्त्रकुशलाः सर्वत्रापरिनिष्ठिताः १३
परिमुष्णन्ति शास्त्राणि शास्त्रदोषानुदर्शिनः
विज्ञानमथ विद्यानां न सम्यगिति वर्तते १४
निन्दया परविद्यानां स्वां विद्यां ख्यापयन्ति ये
वागस्त्रा वाक्छुरीमत्त्वा दुग्धविद्याफला इव
तान्विद्यावणिजो विद्धि राक्षसानिव भारत १५

व्याजेन कृत्स्नो विदितो धर्मस्ते परिहास्यते
न धर्मवचनं वाचा न बुद्ध्या चेति नः श्रुतम् १६
इति बार्हस्पतं ज्ञानं प्रोवाच मघवा स्वयम्
न त्वेव वचनं किंचिदनिमित्तादिहोच्यते १७
स्वविनीतेन शास्त्रेण व्यवस्यन्ति तथापरे
लोकयात्रामिहैके तु धर्ममाहुर्मनीषिणः १८
समुद्दिष्टं सतां धर्मं स्वयमूहेन्न पण्डितः
अमर्षाच्छास्त्रसंमोहादविज्ञानाच्च भारत १९
शास्त्रं प्राज्ञस्य वदतः समूहे यात्यदर्शनम्
आगतागमया बुद्ध्या वचनेन प्रशस्यते २०
अज्ञानाज्ज्ञानहेतुत्वाद्वचनं साधु मन्यते
अनपाहतमेवेदं नेदं शास्त्रमपार्थकम् २१
दैतेयानुशनाः प्राह संशयच्छेदने पुरा
ज्ञानमव्यपदेश्यं हि यथा नास्ति तथैव तत् २२
तेन त्वं छिन्नमूलेन किं तोषयितुमर्हसि
अतथ्यविहितं यो वा नेदं वाक्यमुपाश्नुयात् २३
उग्रायैव हि सृष्टोऽसि कर्मणे न त्ववेक्षसे
अङ्गेमामन्ववेक्षस्व राजनीतिं बुभूषितुम्
यया प्रमुच्यते त्वन्यो यदर्थं च प्रमोदते २४
अजोऽश्व क्षत्रमित्येतत्सदृशं ब्रह्मणा कृतम्
तस्मादभीक्ष्णभूतानां यात्रा काचित्प्रसिध्यति २५
यस्त्ववध्यवधे दोषः स वध्यस्यावधे स्मृतः
एषैव खलु मर्यादा यामयं परिवर्जयेत् २६
तस्मात्तीक्ष्णः प्रजा राजा स्वधर्मे स्थापयेदुत
अन्योन्यं भक्षयन्तो हि प्रचरेयुर्वृका इव २७
यस्य दस्युगणा राष्ट्रे ध्वाङ्क्षा मत्स्याञ्जलादिव
विहरन्ति परस्वानि स वै क्षत्रियपांसनः २८
कुलीनान्सचिवान्कृत्वा वेदविद्यासमन्वितान्
प्रशाधि पृथिवीं राजन्प्रजा धर्मेण पालयन् २९
विहीनजमकर्माणं यः प्रगृह्णाति भूमिपः

उभयस्याविशेषज्ञस्तद्वै क्षत्रं नपुंसकम् ३०
नैवोग्रं नैव चानुग्रं धर्मेणेह प्रशस्यते
उभयं न व्यतिक्रामेदुग्रो भूत्वा मृदुर्भव ३१
कष्टः क्षत्रियधर्मोऽय सौहृदं त्वयि यत्स्थितम्
उग्रे कर्मणि सृष्टोऽसि तस्माद्राज्यं प्रशाधि वै ३२
अशिष्टनिग्रहो नित्यं शिष्टस्य परिपालनम्
इति शक्रोऽब्रवीद्धीमानापत्सु भरतर्षभ ३३
युधिष्ठिर उवाच
अस्ति स्विद्दस्युमर्यादा यामन्यो नातिलङ्घयेत्
पृच्छामि त्वां सतां श्रेष्ठ तन्मे ब्रूहि पितामह ३४
भीष्म उवाच
ब्राह्मणानेव सेवेत विद्यावृद्धांस्तपस्विनः
श्रुतचारित्रवृत्ताढ्यान्पवित्रं ह्येतदुत्तमम् ३५
या देवतासु वृत्तिस्ते सास्तु विप्रेषु सर्वदा
क्रुद्धैर्हि विप्रैः कर्माणि कृतानि बहुधा नृप ३६
तेषां प्रीत्या यशो मुख्यमप्रीत्या तु विपर्ययः
प्रीत्या ह्यमृतवद्विप्राः क्रुद्धाश्चैव यथा विषम् ३७
इति श्रीमहाभारते शान्तिपर्वणि चत्वारिंशदधिकशततमोऽध्यायः १४०

## एक चत्वारिंशदधिक शततमोऽध्यायः

युधिष्ठिर उवाच
पितामह महाप्राज्ञ सर्वशास्त्रविशारद
शरणं पालयानस्य यो धर्मस्तं वदस्व मे १
भीष्म उवाच
महान्धर्मो महाराज शरणागतपालने
अर्हः प्रष्टुं भवांश्चैव पश्नं भरतसत्तम २
नृगप्रभृतयो राजन्राजानः शरणागतान्
परिपाल्य महाराज संसिद्धिं परमां गताः ३
श्रूयते हि कपोतेन शत्रुः शरणमागतः
पूजितश्च यथान्यायं स्वैश्च मांसैर्निमन्त्रितः ४

युधिष्ठिर उवाच
कथं कपोतेन पुरा शत्रुः शरणमागतः
स्वमांसैर्भोजितः कां च गतिं लेभे स भारत ५
भीष्म उवाच
शृणु राजन्कथां दिव्यां सर्वपापप्रणाशिनीम्
नृपतेर्मुचुकुन्दस्य कथितां भार्गवेण ह ६
इममर्थं पुरा पार्थ मुचुकुन्दो नराधिपः
भार्गवं परिपप्रच्छ प्रणतो भरतर्षभ ७
तस्मै शुश्रूषमाणाय भार्गवोऽकथयत्कथाम्
इयं यथा कपोतेन सिद्धिः प्राप्ता नराधिप ८
धर्मनिश्चयसंयुक्तां कामार्थसहितां कथाम्
शृणुष्वावहितो राजन्गदतो मे महाभुज ९
कश्चित्क्षुद्रसमाचारः पृथिव्यां कालसंमतः
चचार पृथिवीं पापो घोरः शकुनिलुब्धकः १०
काकोल इव कृष्णाङ्गो रूक्षः पापसमाहितः
यवमध्यः कृशग्रीवो ह्रस्वपादो महाहनुः ११
नैव तस्य सुहृत्कश्चिन्न संबन्धी न बान्धवः
स हि तैः संपरित्यक्तस्तेन घोरेण कर्मणा १२
स वै क्षारकमादाय द्विजान्हत्वा वने सदा
चकार विक्रयं तेषां पतंगानां नराधिप १३
एवं तु वर्तमानस्य तस्य वृत्तिं दुरात्मनः
अगमत्सुमहान्कालो न चाधर्ममबुध्यत १४
तस्य भार्यासहायस्य रममाणस्य शाश्वतम्
दैवयोगविमूढस्य नान्या वृत्तिररोचत १५
ततः कदाचित्तस्याथ वनस्थस्य समुद्गतः
पातयन्निव वृक्षांस्तन्सुमहान्वातसंभ्रमः १६
मेघसंकुलमाकाशं विद्युन्मण्डलमण्डितम्
संछन्नं सुमुहूर्तेन नौस्थानेनेव सागरः १७
वारिधारासमूहैश्च संप्रहृष्टः शतक्रतुः
क्षणेन पूरयामास सलिलेन वसुंधराम् १८

ततो धाराकुले लोके संभ्रमन्नष्टचेतनः
शीतार्तस्तद्वनं सर्वमाकुलेनान्तरात्मना १९
नैव निम्नं स्थलं वापि सोऽविन्दत विहंगहा
पूरितो हि जलौघेन मार्गस्तस्य वनस्य वै २०
पक्षिणो वातवेगेन हता लीनास्तदाभवन्
मृगाः सिंहा वराहाश्च स्थलान्याश्रित्य तस्थिरे २१
महता वातवर्षेण त्रासितास्ते वनौकसः
भयार्ताश्च क्षुधार्ताश्च बभ्रमुः सहिता वने २२
स तु शीतहतैर्गात्रैर्जगामैव न तस्थिवान्
सोऽपश्यद्वनषण्डेषु मेघनीलं वनस्पतिम् २३
ताराढ्यं कुमुदाकारमाकाशं निर्मलं च ह
मेघैर्मुक्तं नभो दृष्ट्वा लुब्धकः शीतविह्वलः २४
दिशोऽवलोकयामास वेलां चैव दुरात्मवान्
दूरे ग्रामनिवेशश्च तस्माद्देशादिति प्रभो
कृतबुद्धिर्वने तस्मिन्वस्तुं तां रजनीं तदा २५
सोऽञ्जलि प्रयतः कृत्वा वाक्यमाह वनस्पतिम्
शरणं यामि यान्यस्मिन्दैवतानीह भारत २६
स शिलायां शिरः कृत्वा पर्णान्यास्तीर्य भूतले
दुःखेन महताविष्टस्ततः सुष्वाप पक्षिहा २७
इति श्रीमहाभारते शान्तिपर्वणि एकचत्वारिंशदधिकशततमोऽध्यायः १४१

## द्विचत्वारिंशदधिक शततमोऽध्यायः

भीष्म उवाच
अथ वृक्षस्य शाखायां विहंगः ससुहृज्जनः
दीर्घकालोषितो राजंस्तत्र चित्रतनूरुहः १
तस्य काल्यं गता भार्या चरितुं नाभ्यवर्तत
प्राप्तां च रजनीं दृष्ट्वा स पक्षी पर्यतप्यत २
वातवर्षं महच्चासीन्न चागच्छति मे प्रिया
किं नु तत्कारणं येन साद्यापि न निवर्तते ३
अपि स्वस्ति भवेत्तस्याः प्रियाया मम कानने

तया विरहितं हीदं शून्यमद्य गृहं मम ४
यदि सा रक्तनेत्रान्ता चित्राङ्गी मधुरस्वरा
अद्य नाभ्येति मे कान्ता न कार्यं जीवितेन मे ५
पतिधर्मरता साध्वी प्राणेभ्योऽपि गरीयसी
सा हि श्रान्तं क्षुधार्तं च जानीते मां तपस्विनी ६
अनुरक्ता हिता चैव स्निग्धा चैव पतिव्रता
यस्य वै तादृशी भार्या धन्यः स मनुजो भुवि ७
भार्या हि परमो नाथः पुरुषस्येह पठ्यते
असहायस्य लोकेऽस्मिल्लोकयात्रासहायिनी ८
तथा रोगाभिभूतस्य नित्यं कृच्छ्रगतस्य च
नास्ति भार्यासमं किंचिन्नरस्यार्तस्य भेषजम् ९
नास्ति भार्यासमो बन्धुर्नास्ति भार्यासमा गतिः
नास्ति भार्यासमो लोके सहायो धर्मसाधनः १०
एवं विलपतस्तस्य द्विजस्यार्तस्य तत्र वै
गृहीता शकुनघ्नेन भार्या शुश्राव भारतीम् ११
न सा स्त्रीत्यभिभाषा स्याद्यस्या भर्ता न तुष्यति
अग्निसाक्षिकमप्येतद्भर्ता हि शरणं स्त्रियः १२
इति संचिन्त्य दुःखार्ता भर्तारं दुःखितं तदा
कपोती लुब्धकेनाथ यत्ता वचनमब्रवीत् १३
हन्त वक्ष्यामि ते श्रेयः श्रुत्वा च कुरु तत्तथा
शरणागतसंत्राता भव कान्त विशेषतः १४
एष शाकुनिकः शेते तव वासं समाश्रितः
शीतार्तश्च क्षुधार्तश्च पूजामस्मै प्रयोजय १५
यो हि कश्चिद्द्विजं हन्याद्गां वा लोकस्य मातरम्
शरणागतं च यो हन्यात्तुल्यं तेषां च पातकम् १६
यास्माकं विहिता वृत्तिः कापोती जातिधर्मतः
सा न्याय्यात्मवता नित्यं त्वद्विधेनाभिवर्तितुम् १७
यस्तु धर्मं यथाशक्ति गृहस्थो ह्यनुवर्तते
स प्रेत्य लभते लोकानक्षयानिति शुश्रुम १८
स त्वं संतानवानद्य पुत्रवानपि च द्विज

तत्स्वदेहे दयां त्यक्त्वा धर्मार्थौ परिगृह्य वै
पूजामस्मै प्रयुङ्क्ष्व त्वं प्रीयेतास्य मनो यथा १९
इति सा शकुनी वाक्यं क्षारकस्था तपस्विनी
अतिदुःखान्विता प्रोच्य भर्तारं समुदैक्षत २०
स पत्न्या वचनं श्रुत्वा धर्मयुक्तिसमन्वितम्
हर्षेण महता युक्तो बाष्पव्याकुललोचनः २१
तं वै शाकुनिकं दृष्ट्वा विधिदृष्टेन कर्मणा
पूजयामास यत्नेन स पक्षी पक्षिजीविनम् २२
उवाच च स्वागतं ते ब्रूहि किं करवाण्यहम्
संतापश्च न कर्तव्यः स्वगृहे वर्तते भवान् २३
तद्ब्रवीतु भवान्क्षिप्रं किं करोमि किमिच्छसि
प्रणयेन ब्रवीमि त्वां त्वं हि नः शरणागतः २४
शरणागतस्य कर्तव्यमातिथ्यमिह यत्नतः
पञ्चयज्ञप्रवृत्तेन गृहस्थेन विशेषतः २५
पञ्चयज्ञांस्तु यो मोहान्न करोति गृहाश्रमी
तस्य नायं न च परो लोके भवति धर्मतः २६
तद्ब्रूहि त्वं सुविस्रब्धो यत्त्वं वाचा वदिष्यसि
तत्करिष्याम्यहं सर्वं मा त्वं शोके मनः कृथाः २७
तस्य तद्वचनं श्रुत्वा शकुनेर्लुब्धकोऽब्रवीत्
बाधते खलु मा शीतं हिमत्राणं विधीयताम् २८
एवमुक्तस्ततः पक्षी पर्णान्यास्तीर्य भूतले
यथाशुष्काणि यत्नेन ज्वलनार्थं द्रुतं ययौ २९
स गत्वाङ्गारकर्मान्तं गृहीत्वाग्निमथागमत्
ततः शुष्केषु पर्णेषु पावकं सोऽभ्यदीदिपत् ३०
सुसंदीप्तं महत्कृत्वा तमाह शरणागतम्
प्रतापय सुविस्रब्धं स्वगात्राण्यकुतोभयः ३१
स तथोक्तस्तथेत्युक्त्वा लुब्धो गात्राण्यतापयत्
अग्निप्रत्यागतप्राणस्ततः प्राह विहंगमम् ३२
दत्तमाहारमिच्छामि त्वया क्षुद्बाधते हि माम्
तद्वचः स प्रतिश्रुत्य वाक्यमाह विहंगमः ३३

न मेऽस्ति विभवो येन नाशयामि तव क्षुधाम्
उत्पन्नेन हि जीवामो वयं नित्यं वनौकसः ३४
संचयो नास्ति चास्माकं मुनीनामिव कानने
इत्युक्त्वा स तदा तत्र विवर्णवदनोऽभवत् ३५
कथं नु खलु कर्तव्यमिति चिन्तापरः सदा
बभूव भरतश्रेष्ठ गर्हयन्वृत्तिमात्मनः ३६
मुहूर्ताल्लब्धसंज्ञस्तु स पक्षी पक्षिघातकम्
उवाच तर्पयिष्ये त्वां मुहूर्तं प्रतिपालय ३७
इत्युक्त्वा शुष्कपर्णैः स संप्रज्वाल्य हुताशनम्
हर्षेण महता युक्तः कपोतः पुनरब्रवीत् ३८
देवानां च मुनीनां च पितॄणां च महात्मनाम्
श्रुतपूर्वो मया धर्मो महानतिथिपूजने ३९
कुरुष्वानुग्रहं मेऽद्य सत्यमेतद्ब्रवीमि ते
निश्चिता खलु मे बुद्धिरतिथिप्रतिपूजने ४०
ततः सत्यप्रतिज्ञो वै स पक्षी प्रहसन्निव
तमग्निं त्रिः परिक्रम्य प्रविवेश महीपते ४१
अग्निमध्यं प्रविष्टं तं लुब्धो दृष्ट्वाथ पक्षिणम्
चिन्तयामास मनसा किमिदं नु कृतं मया ४२
अहो मम नृशंसस्य गर्हितस्य स्वकर्मणा
अधर्मः सुमहान्घोरो भविष्यति न संशयः ४३
एवं बहुविधं भूरि विललाप स लुब्धकः
गर्हयन्स्वानि कर्माणि द्विजं दृष्ट्वा तथागतम् ४४
इति श्रीमहाभारते शान्तिपर्वणि द्विचत्वारिंशदधिकशततमोऽध्यायः १४२

## त्रिचत्वारिंशदधिक शततमोऽध्यायः

भीष्म उवाच
ततस्तं लुब्धकः पश्यन्कृपयाभिपरिप्लुतः
कपोतमग्नौ पतितं वाक्यं पुनरुवाच ह १
किमीदृशं नृशंसेन मया कृतमबुद्धिना
भविष्यति हि मे नित्यं पातकं हृदि जीवतः २

स विनिन्दन्नथात्मानं पुनः पुनरुवाच ह
धिङ्मामस्तु सुदुर्बुद्धिं सदा निकृतिनिश्चयम्
शुभं कर्म परित्यज्य योऽह शकुनिलुब्धकः ३
नृशंसस्य ममाद्यायं प्रत्यादेशो न संशयः
दत्तः स्वमांसं ददता कपोतेन महात्मना ४
सोऽह त्यक्ष्ये प्रियान्प्राणान्पुत्रदारं विसृज्य च
उपदिष्टो हि मे धर्मः कपोतेनातिधर्मिणा ५
अद्य प्रभृति देहं स्वं सर्वभोगैर्विवर्जितम्
यथा स्वल्पं जलं ग्रीष्मे शोषयिष्याम्यहं तथा ६
क्षुत्पिपासातपसहः कृशो धमनिसंततः
उपवासैर्बहुविधैश्चरिष्ये पारलौकिकम् ७
अहो देहप्रदानेन दर्शितातिथिपूजना
तस्माद्धर्मं चरिष्यामि धर्मो हि परमा गतिः
दृष्टो हि धर्मो धर्मिष्ठैर्यादृशो विहगोत्तमे ८
एवमुक्त्वा विनिश्चित्य रौद्रकर्मा स लुब्धकः
महाप्रस्थानमाश्रित्य प्रययौ संशितव्रतः ९
ततो यष्टिं शलाकाश्च क्षारकं पञ्जरं तथा
तांश्च बद्धान्कपोतान्स संप्रमुच्योत्ससर्ज ह १०
इति श्रीमहाभारते शान्तिपर्वणि त्रिचत्वारिंशदधिकशततमोऽध्यायः १४३

## चतुश्चत्वारिंशदधिक शततमोऽध्यायः

भीष्म उवाच
ततो गते शाकुनिके कपोती प्राह दुःखिता
संस्मृत्य भर्तारमथो रुदती शोकमूर्छिता १
नाहं ते विप्रियं कान्त कदाचिदपि संस्मरे
सर्वा वै विधवा नारी बहुपुत्रापि खेचर
शोच्या भवति बन्धूनां पतिहीना मनस्विनी २
लालिताहं त्वया नित्यं बहुमानाच्च सान्त्विता
वचनैर्मधुरैः स्निग्धैरसकृत्सुमनोहरैः ३
कन्दरेषु च शैलानां नदीनां निर्झरेषु च

द्रुमाग्रेषु च रम्येषु रमिताहं त्वया प्रिय ४
आकाशगमने चैव सुखिताहं त्वया सुखम्
विहृतास्मि त्वया कान्त तन्मे नाद्यास्ति किंचन ५
मितं ददाति हि पिता मितं माता मितं सुतः
अमितस्य तु दातारं भर्तारं का न पूजयेत् ६
नास्ति भर्तृसमो नाथो न च भर्तृसमं सुखम्
विसृज्य धनसर्वस्वं भर्ता वै शरणं स्त्रियाः ७
न कार्यमिह मे नाथ जीवितेन त्वया विना
पतिहीनापि का नारी सती जीवितुमुत्सहेत् ८
एवं विलप्य बहुधा करुणं सा सुदुःखिता
पतिव्रता संप्रदीप्तं प्रविवेश हुताशनम् ९
ततश्चित्राम्बरधरं भर्तारं सान्वपश्यत
विमानस्थं सुकृतिभिः पूज्यमानं महात्मभिः १०
चित्रमाल्याम्बरधरं सर्वाभरणभूषितम्
विमानशतकोटीभिरावृतं पुण्यकीर्तिभिः ११
ततः स्वर्गगतः पक्षी भार्यया सह संगतः
कर्मणा पूजितस्तेन रेमे तत्र स भार्यया १२
इति श्रीमहाभारते शान्तिपर्वणि चतुश्चत्वारिंशदधिकशततमोऽध्यायः १४४

## पञ्चचत्वारिंशदधिकशततमोऽध्यायः

भीष्म उवाच
विमानस्थौ तु तौ राजँल्लुब्धको वै ददर्श ह
दृष्ट्वा तौ दंपती दुःखादचिन्तयत सद्गतिम् १
कीदृशेनेह तपसा गच्छेयं परमां गतिम्
इति बुद्ध्या विनिश्चित्य गमनायोपचक्रमे २
महाप्रस्थानमाश्रित्य लुब्धकः पक्षिजीवनः
निश्चेष्टो मारुताहारो निर्ममः स्वर्गकाङ्क्षया ३
ततोऽपश्यत्सुविस्तीर्णं हृद्यं पद्मविभूषितम्
नानाद्विजगणाकीर्णं सरः शीतजलं शुभम्
पिपासार्तोऽपि तद्दृष्ट्वा तृप्तः स्यान्नात्र संशयः ४

उपवासकृशोऽत्यर्थं स तु पार्थिव लुब्धकः
उपसर्पत संहृष्टः श्वापदाध्युषितं वनम् ५
महान्तं निश्चयं कृत्वा लुब्धकः प्रविवेश ह
प्रविशन्नेव स वनं निगृहीतः च कराटकैः ६
स कराटकविभुग्नाङ्गो लोहितार्द्रीकृतच्छविः
बभ्राम तस्मिन्विजने नानामृगसमाकुले ७
ततो द्रुमाराां महतां पवनेन वने तदा
उदतिष्ठत संघर्षात्सुमहान्हव्यवाहनः ८
तद्वनं वृत्तसंकीर्णं लताविटपसंकुलम्
ददाह पावकः क्रुद्धो युगान्ताग्निसमप्रभः ९
सज्वालैः पवनोद्धूतैर्विस्फुलिङ्गैः समन्वितः
ददाह तद्वनं घोरं मृगपत्तिसमाकुलम् १०
ततः स देहमोत्तार्थं संप्रहृष्टेन चेतसा
अभ्यधावत संवृद्धं पावकं लुब्धकस्तदा ११
ततस्तेनाग्निना दग्धो लुब्धको नष्टकिल्बिषः
जगाम परमां सिद्धिं तदा भरतसत्तम १२
ततः स्वर्गस्थमात्मानं सोऽपश्यद्विगतज्वरः
यत्तगन्धर्वसिद्धानां मध्ये भ्राजन्तमिन्द्रवत् १३
एवं खलु कपोतश्च कपोती च पतिव्रता
लुब्धकेन सह स्वर्गं गताः पुरायेन कर्मणा १४
यापि चैवंविधा नारी भर्तारमनुवर्तते
विराजते हि सा त्तिप्रं कपोतीव दिवि स्थिता १५
एवमेतत्पुरा वृत्तं लुब्धकस्य महात्मनः
कपोतस्य च धर्मिष्ठा गतिः पुरायेन कर्मणा १६
यश्चेदं शृणुयान्नित्यं यश्चेदं परिकीर्तयेत्
नाशुभं विद्यते तस्य मनसापि प्रमाद्यतः १७
युधिष्ठिर महानेष धर्मो धर्मभृतां वर
गोघ्नेष्वपि भवेदस्मिन्निष्कृतिः पापकर्मणः
निष्कृतिर्न भवेत्तस्मिन्यो हन्याच्छरणागतम् १८
इति श्रीमहाभारते शान्तिपर्वणि पञ्चचत्वारिंशदधिकशततमोऽध्यायः १४५

षट्चत्वारिंशदधिक शततमोऽध्यायः

युधिष्ठिर उवाच
अबुद्धिपूर्वं यः पापं कुर्याद्भरतसत्तम
मुच्यते स कथं तस्मादेनसस्तद्वदस्व मे १
भीष्म उवाच
अत्र ते वर्णयिष्येऽहमितिहासं पुरातनम्
इन्द्रोतः शौनको विप्रो यदाह जनमेजयम् २
आसीद्राजा महावीर्यः परिक्षिज्जनमेजयः
अबुद्धिपूर्वं ब्रह्महत्या तमागच्छन्महीपतिम् ३
तं ब्राह्मणाः सर्व एव तत्यजुः सपुरोहिताः
जगाम स वनं राजा दह्यमानो दिवानिशम् ४
स प्रजाभिः परित्यक्तश्चकार कुशलं महत्
अतिवेलं तपस्तेपे दह्यमानः स मन्युना ५
तत्रेतिहासं वक्ष्यामि धर्मस्यास्योपबृंहणम्
दह्यमानः पापकृत्या जगाम जनमेजयः ६
वरिष्यमाण इन्द्रोतं शौनकं संशितव्रतम्
समासाद्योपजग्राह पादयोः परिपीडयन् ७
ततो भीतो महाप्राज्ञो जगर्हे सुभृशं तदा
कर्ता पापस्य महतो भ्रूणहा किमिहागतः ८
किं तवास्मासु कर्तव्यं मा मा स्प्राक्षीः कथंचन
गच्छ गच्छ न ते स्थानं प्रीणात्यस्मानिह ध्रुवम् ९
रुधिरस्येव ते गन्धः शवस्येव च दर्शनम्
अशिवः शिवसंकाशो मृतो जीवन्निवाटसि १०
अन्तर्मृत्युरशुद्धात्मा पापमेवानुचिन्तयन्
प्रबुध्यसे प्रस्वपिषि वर्तसे चरसे सुखी ११
मोघं ते जीवितं राजन्परिक्लिष्टं च जीवसि
पापायेव च सृष्टोऽसि कर्मणे ह यवीयसे १२
बहु कल्याणमिच्छन्त ईहन्ते पितरः सुतान्
तपसा देवतेज्याभिर्वन्दनेन तितिक्षया १३
पितृवंशमिमं पश्य त्वत्कृते नरकं गतम्

निरर्थाः सर्व एवैषामाशाबन्धास्त्वदाश्रयाः १४
यान्पूजयन्तो विन्दन्ति स्वर्गमायुर्यशः सुखम्
तेषु ते सततं द्वेषो ब्राह्मणेषु निरर्थकः १५
इमं लोकं विमुच्य त्वमवाङ्मूर्धा पतिष्यसि
अशाश्वतीः शाश्वतीश्च समाः पापेन कर्मणा १६
अद्यमानो जन्तुगृध्रैः शितिकण्ठैरयोमुखैः
ततोऽपि पुनरावृत्तः पापयोनिं गमिष्यसि १७
यदिदं मन्यसे राजन्नायमस्ति परः कुतः
प्रतिस्मारयितारस्त्वां यमदूता यमक्षये १८
इति श्रीमहाभारते शान्तिपर्वणि षट्चत्वारिंशदधिकशततमोऽध्यायः १४३

## सप्तचत्वारिंशदधिक शततमोऽध्यायः

भीष्म उवाच
एवमुक्तः प्रत्युवाच तं मुनिं जनमेजयः
गर्ह्यं भवान्गर्हयति निन्द्यं निन्दति मा भवान् १
धिक्कार्यं मा धिक्कुरुते तस्मात्त्वाहं प्रसादये
सर्वं हीदं स्वकृतं मे ज्वलाम्यग्नाविवाहितः २
स्वकर्माण्यभिसंधाय नाभिनन्दति मे मनः
प्राप्तं नूनं मया घोरं भयं वैवस्वतादपि ३
तत्तु शल्यमनिर्हृत्य कथं शक्ष्यामि जीवितुम्
सर्वमन्यून्विनीय त्वमभि मा वद शौनक ४
महानसं ब्राह्मणानां भविष्याम्यर्थवान्पुनः
अस्तु शेषं कुलस्यास्य मा पराभूदिदं कुलम् ५
न हि नो ब्रह्मशप्तानां शेषो भवितुमर्हति
श्रुतीरलभमानानां संविदं वेदनिश्चयात् ६
निर्विद्यमानः सुभृशं भूयो वक्ष्यामि सांप्रतम्
भूयश्चैवाभिनङ्क्षन्ति निर्धर्मा निर्जपा इव ७
अर्वाक्च प्रतितिष्ठन्ति पुलिन्दशबरा इव
न ह्ययज्ञा अमुं लोकं प्राप्नुवन्ति कथंचन ८
अविज्ञायैव मे प्रज्ञां बालस्येव सुपण्डितः

ब्रह्मन्पितेव पुत्रेभ्यः प्रति मां वाञ्छ शौनक ९
शौनक उवाच
किमाश्चर्यं यतः प्राज्ञो बहु कुर्याद्धि सांप्रतम्
इति वै पण्डितो भूत्वा भूतानां नोपतप्यति १०
प्रज्ञाप्रासादमारुह्य अशोच्यः शोचते जनान्
जगतीस्थानिवाद्रिस्थः प्रज्ञया प्रतिपश्यति ११
न चोपलभते तत्र न च कार्याणि पश्यति
निर्विण्णात्मा परोक्षो वा धिक्कृतः सर्वसाधुषु १२
विदित्वोभयतो वीर्यं माहात्म्यं वेद आगमे
कुरुष्वेह महाशान्तिं ब्रह्मा शरणमस्तु ते १३
तद्वै पारत्रिकं चारु ब्राह्मणानामकुप्यताम्
अथ चेत्तप्यसे पापैर्धर्मं चेदनुपश्यसि १४
जनमेजय उवाच
अनुतप्ये च पापेन न चाधर्मं चराम्यहम्
बुभूषुं भजमानं च प्रतिवाञ्छामि शौनक १५
शौनक उवाच
छित्त्वा स्तम्भं च मानं च प्रीतिमिच्छामि ते नृप
सर्वभूतहिते तिष्ठ धर्मं चैव प्रतिस्मर १६
न भयान्न च कार्पण्यान्न लोभात्त्वामुपाह्वये
तां मे देवा गिरं सत्यां शृण्वन्तु ब्राह्मणैः सह १७
सोऽह न केनचिद्धार्थी त्वां च धर्ममुपाह्वये
क्रोशतां सर्वभूतानामहो धिगिति कुर्वताम् १८
वक्ष्यन्ति मामधर्मज्ञा वक्ष्यन्त्यसुहृदो जनाः
वाचस्ताः सुहृदः श्रुत्वा संज्वरिष्यन्ति मे भृशम् १९
केचिदेव महाप्राज्ञाः परिज्ञास्यन्ति कार्यताम्
जानीहि मे कृतं तात ब्राह्मणान्प्रति भारत २०
यथा ते मत्कृते क्षेमं लभेरंस्तत्तथा कुरु
प्रतिजानीहि चाद्रोहं ब्राह्मणानां नराधिप २१
जनमेजय उवाच
नैव वाचा न मनसा न पुनर्जातु कर्मणा

द्रोग्धास्मि ब्राह्मणान्विप्र चरणावेव ते स्पृशे २२
इति श्रीमहाभारते शान्तिपर्वणि सप्तचत्वारिंशदधिकशततमोऽध्यायः १४७

## अष्टचत्वारिंशदधिक शततमोऽध्यायः

शौनक उवाच
तस्मात्तेऽह प्रवक्ष्यामि धर्ममावृत्तचेतसे
श्रीमान्महाबलस्तुष्टो यस्त्वं धर्ममवेक्षसे
पुरस्ताद्दारुणो भूत्वा सुचित्रतरमेव तत् १
अनुगृह्णन्ति भूतानि स्वेन वृत्तेन पार्थिव
कृत्स्ने नूनं सदसती इति लोको व्यवस्यति
यत्र त्वं तादृशो भूत्वा धर्ममद्यानुपश्यसि २
हित्वा सुरुचिरं भक्ष्यं भोगांश्च तप आस्थितः
इत्येतदपि भूतानामद्भुतं जनमेजय ३
यो दुर्बलो भवेद्दाता कृपणो वा तपोधनः
अनाश्चर्यं तदित्याहुर्नातिदूरे हि वर्तते ४
एतदेव हि कार्पण्यं समग्रमसमीक्षितम्
तस्मात्समीक्षयैव स्याद्भवेत्तस्मिंस्ततो गुणः ५
यज्ञो दानं दया वेदाः सत्यं च पृथिवीपते
पञ्चैतानि पवित्राणि षष्ठं सुचरितं तपः ६
तदेव राज्ञां परमं पवित्रं जनमेजय
तेन सम्यग्गृहीतेन श्रेयांसं धर्माप्स्यसि ७
पुण्यदेशाभिगमनं पवित्रं परमं स्मृतम्
अपि ह्युदाहरन्तीमा गाथा गीता ययातिना ८
यो मर्त्यः प्रतिपद्येत आयुर्जीवेत वा पुनः
यज्ञमेकान्ततः कृत्वा तत्संन्यस्य तपश्चरेत् ९
पुण्यमाहुः कुरुक्षेत्रं सरस्वत्यां पृथूदकम्
यत्रावगाह्य पीत्वा वा नैवं श्वोमरणं तपेत् १०
महासरः पुष्कराणि प्रभासोत्तरमानसे
कालोदं त्वेव गन्तासि लब्धायुर्जीविते पुनः ११
सरस्वतीदृषद्वत्यौ सेवमानोऽनुसंचरेः

स्वाध्यायशीलः स्थानेषु सर्वेषु समुपस्पृशेः १२
त्यागधर्मं पवित्राणां संन्यासं परमब्रवीत्
अत्राप्युदाहरन्तीमा गाथाः सत्यवता कृताः १३
यथा कुमारः सत्यो वै न पुण्यो न च पापकृत्
न ह्यस्ति सर्वभूतेषु दुःखमस्मिन्कुतः सुखम् १४
एवं प्रकृतिभूतानां सर्वसंसर्गयायिनाम्
त्यजतां जीवितं प्रायो विवृते पुण्यपातके १५
यत्त्वेव राज्ञो ज्यायो वै कार्याणां तद्वदामि ते
बलेन संविभागैश्च जय स्वर्गं पुनीष्व च १६
यस्यैवं बलमोजश्च स धर्मस्य प्रभुर्नरः
ब्राह्मणार्थं सुखार्थं त्वं पर्येहि पृथिवीमिमाम् १७
यथैवैनान्पुराक्षैप्सीस्तथैवैतान्प्रसादय
अपि धिक्क्रियमाणोऽपि त्यज्यमानोऽप्यनेकधा १८
आत्मनो दर्शनं विद्वन्नाहन्तास्मीति मा क्रुधः
घटमानः स्वकार्येषु कुरु नैःश्रेयसं परम् १९
हिमाग्निघोरसदृशो राजा भवति कश्चन
लाङ्गलाशनिकल्पो वा भवत्यन्यः परन्तप २०
न निःशेषेण मन्तव्यमचिकित्स्येन वा पुनः
न जातु नाहमस्मीति प्रसक्तव्यमसाधुषु २१
विकर्मणा तप्यमानः पादात्पापस्य मुच्यते
नैतत्कार्यं पुनरिति द्वितीयात्परिमुच्यते
चरिष्ये धर्ममेवेति तृतीयात्परिमुच्यते २२
कल्याणमनुमन्तव्यं पुरुषेण बुभूषता
ये सुगन्धीनि सेवन्ते तथागन्धा भवन्ति ते
ये दुर्गन्धीनि सेवन्ते तथागन्धा भवन्ति ते २३
तपश्चर्यापरः सद्यः पापाद्धि परिमुच्यते
संवत्सरमुपास्याग्निमभिशस्तः प्रमुच्यते
त्रीणि वर्षाण्युपास्याग्निं भ्रूणहा विप्रमुच्यते २४
यावतः प्राणिनो हन्यात्तज्जातीयान्स्वभावतः
प्रमीयमाणानुन्मोच्य भ्रूणहा विप्रमुच्यते २५

अपि वाप्सु निमज्जेत त्रिर्जपन्नघमर्षणम्
यथाश्वमेधावभृथस्तथा तन्मनुरब्रवीत् २६
क्षिप्रं प्रणुदते पापं सत्कारं लभते तथा
अपि चैनं प्रसीदन्ति भूतानि जडमूकवत् २७
बृहस्पतिं देवगुरुं सुरासुराः समेत्य सर्वे नृपतेऽन्वयुञ्जन्
धर्मे फलं वेत्थ कृते महर्षे तथेतरस्मिन्नरके पापलोके २८
उभे तु यस्य सुकृते भवेतां किं स्वित्तयोस्तत्र जयोत्तरं स्यात्
आचक्ष्व नः कर्मफलं महर्षे कथं पापं नुदते पुण्यशीलः २९
बृहस्पतिरुवाच
कृत्वा पापं पूर्वमबुद्धिपूर्वं पुण्यानि यः कुरुते बुद्धिपूर्वम्
स तत्पापं नुदते पुण्यशीलो वासो यथा मलिनं क्षारयुक्त्या ३०
पापं कृत्वा न मन्येत नाहमस्मीति पूरुषः
चिकीर्षेदेव कल्याणं श्रद्दधानोऽनसूयकः ३१
छिद्राणि वसनस्येव साधुना विवृणोति यः
यः पापं पुरुषः कृत्वा कल्याणमभिपद्यते ३२
यथादित्यः पुनरुद्यंस्तमः सर्वं व्यपोहति
कल्याणमाचरन्नेवं सर्वं पापं व्यपोहति ३३
भीष्म उवाच
एवमुक्त्वा तु राजानमिन्द्रोतो जनमेजयम्
याजयामास विधिवद्वाजिमेधेन शौनकः ३४
ततः स राजा व्यपनीतकल्मषः श्रिया युतः प्रज्वलिताग्निरूपया
विवेश राज्यं स्वममित्रकर्शनो दिवं यथा पूर्णवपुर्निशाकरः ३५
इति श्रीमहाभारते शान्तिपर्वणि अष्टचत्वारिंशदधिकशततमोऽध्यायः १४८

## एकोनपञ्चाशदधिक शततमोऽध्यायः

भीष्म उवाच
शृणु पार्थ यथावृत्तमितिहासं पुरातनम्
गृध्रजम्बुकसंवादं यो वृत्तो वैदिशे पुरा १
दुःखिताः केचिदादाय बालमप्राप्तयौवनम्
कुलसर्वस्वभूतं वै रुदन्तः शोकविह्वलाः २

बालं मृतं गृहीत्वाथ श्मशानाभिमुखाः स्थिताः
अङ्केनाङ्कं च संक्रम्य रुरुदुर्भूतले तदा ३
तेषां रुदितशब्देन गृध्रोऽभ्येत्य वचोऽब्रवीत्
एकात्मकमिमं लोके त्यक्त्वा गच्छत माचिरम् ४
इह पुंसां सहस्राणि स्त्रीसहस्राणि चैव हि
समानीतानि कालेन किं ते वै जात्वबान्धवाः ५
संपश्यत जगत्सर्वं सुखदुःखैरधिष्ठितम्
संयोगो विप्रयोगश्च पर्यायेणोपलभ्यते ६
गृहीत्वा ये च गच्छन्ति येऽनुयान्ति च तान्मृतान्
तेऽप्यायुषः प्रमाणेन स्वेन गच्छन्ति जन्तवः ७
अलं स्थित्वा श्मशानेऽस्मिन्गृध्रगोमायुसंकुले
कङ्कालबहुले घोरे सर्वप्राणिभयंकरे ८
न पुनर्जीवितः कश्चित्कालधर्ममुपागतः
प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी ९
सर्वेण खलु मर्तव्यं मर्त्यलोके प्रसूयता
कृतान्तविहिते मार्गे को मृतं जीवयिष्यति १०
कर्मान्तविहिते लोके चास्तं गच्छति भास्करे
गम्यतां स्वमधिष्ठानं सुतस्नेहं विसृज्य वै ११
ततो गृध्रवचः श्रुत्वा विक्रोशन्तस्तदा नृप
बान्धवास्तेऽभ्यगच्छन्त पुत्रमुत्सृज्य भूतले १२
विनिश्चित्याथ च ततः संत्यजन्तः स्वमात्मजम्
निराशा जीविते तस्य मार्गमारुह्य धिष्ठिताः १३
ध्वाङ्क्षाभ्रसमवर्णस्तु बिलान्निःसृत्य जम्बुकः
गच्छमानान्स्म तानाह निर्घृणाः खलु मानवाः १४
आदित्योऽय स्थितो मूढाः स्नेहं कुरुत मा भयम्
बहुरूपो मुहूर्तश्च जीवेतापि कदाचन १५
यूयं भूमौ विनिक्षिप्य पुत्रस्नेहविनाकृताः
श्मशाने पुत्रमुत्सृज्य कस्माद्गच्छथ निर्घृणाः १६
न वोऽस्त्यस्मिन्सुते स्नेहो बाले मधुरभाषिणि
यस्य भाषितमात्रेण प्रसादमुपगच्छथ १७

न पश्यथ सुतस्नेहं यादृशः पशुपक्षिणाम्
न येषां धारयित्वा तान्कश्चिदस्ति फलागमः १८
चतुष्पात्पक्षिकीटानां प्राणिनां स्नेहसङ्गिनाम्
परलोकगतिस्थानां मुनियज्ञक्रिया इव १९
तेषां पुत्राभिरामाणामिह लोके परत्र च
न गुणो दृश्यते कश्चित्प्रजाः संधारयन्ति च २०
अपश्यतां प्रियान्पुत्रान्नैषां शोकोऽनुतिष्ठति
न च पुष्णन्ति संवृद्धास्ते मातापितरौ क्वचित् २१
मानुषाणां कुतः स्नेहो येषां शोको भविष्यति
इमं कुलकरं पुत्रं कथं त्यक्त्वा गमिष्यथ २२
चिरं मुञ्चत बाष्पं च चिरं स्नेहेन पश्यत
एवंविधानि हीष्टानि दुस्त्यजानि विशेषतः २३
क्षीणस्याथाभियुक्तस्य श्मशानाभिमुखस्य च
बान्धवा यत्र तिष्ठन्ति तत्रान्यो नावतिष्ठते २४
सर्वस्य दयिताः प्राणाः सर्वः स्नेहं च विन्दति
तिर्यग्योनिष्वपि सतां स्नेहं पश्यत यादृशम् २५
त्यक्त्वा कथं गच्छथेमं पद्मलोलायताक्षकम्
यथा नवोद्वाहकृतं स्नानमाल्यविभूषितम् २६
भीष्म उवाच
जम्बुकस्य वचः श्रुत्वा कृपणं परिदेवतः
न्यवर्तन्त तदा सर्वे शवार्थं ते स्म मानुषाः २७
गृध्र उवाच
अहो धिक्सुनृशंसेन जम्बुकेनाल्पमेधसा
क्षुद्रेणोक्ता हीनसत्त्वा मानुषाः किं निवर्तथ २८
पञ्चभूतपरित्यक्तं शून्यं काष्ठत्वमागतम्
कस्माच्छोचथ निश्चेष्टमात्मानं किं न शोचथ २९
तपः कुरुत वै तीव्रं मुच्यध्वं येन किल्बिषात्
तपसा लभ्यते सर्वं विलापः किं करिष्यति ३०
अनिष्टानि च भाग्यानि जानीत सह मूर्तिभिः
येन गच्छति लोकोऽय दत्त्वा शोकमनन्तकम् ३१

धनं गाश्च सुवर्णं च मणिरत्नमथापि च
अपत्यं च तपोमूलं तपोयोगाच्च लभ्यते ३२
यथाकृता च भूतेषु प्राप्यते सुखदुःखता
गृहीत्वा जायते जन्तुर्दुःखानि च सुखानि च ३३
न कर्मणा पितुः पुत्रः पिता वा पुत्रकर्मणा
मार्गेणान्येन गच्छन्ति त्यक्त्वा सुकृतदुष्कृते ३४
धर्मं चरत यत्नेन तथाधर्मान्निवर्तत
वर्तध्वं च यथाकालं दैवतेषु द्विजेषु च ३५
शोकं त्यजत दैन्यं च सुतस्नेहान्निवर्तत
त्यज्यतामयमाकाशे ततः शीघ्रं निवर्तत ३६
यत्करोति शुभं कर्म तथाधर्मं सुदारुणम्
तत्कर्तैव समश्नाति बान्धवानां किमत्र हि ३७
इह त्यक्त्वा न तिष्ठन्ति बान्धवा बान्धवं प्रियम्
स्नेहमुत्सृज्य गच्छन्ति बाष्पपूर्णाविलेक्षणाः ३८
प्राज्ञो वा यदि वा मूर्खः सधनो निर्धनोऽपि वा
सर्वः कालवशं याति शुभाशुभसमन्वितः ३९
किं करिष्यथ शोचित्वा मृतं किमनुशोचथ
सर्वस्य हि प्रभुः कालो धर्मतः समदर्शनः ४०
यौवनस्थांश्च बालांश्च वृद्धान्गर्भगतानपि
सर्वानाविशते मृत्युरेवंभूतमिदं जगत् ४१
जम्बुक उवाच
अहो मन्दीकृतः स्नेहो गृध्रेणेहाल्पमेधसा
पुत्रस्नेहाभिभूतानां युष्माकं शोचतां भृशम् ४२
समैः सम्यक्प्रयुक्तैश्च वचनैः प्रश्रयोत्तरैः
यद्गच्छथ जतुस्थायं स्नेहमुत्सृज्य दुस्त्यजम् ४३
अहो पुत्रवियोगेन मृतशून्योपसेवनात्
क्रोशतां वै भृशं दुःखं विवत्सानां गवामिव ४४
अद्य शोकं विजानामि मानुषाणां महीतले
स्नेहं हि करुणं दृष्ट्वा ममाप्यश्रूण्यथागमन् ४५
यत्नो हि सततं कार्यः कृतो दैवेन सिध्यति

दैवं पुरुषकारश्च कृतान्तेनोपपद्यते ४६
अनिर्वेदः सदा कार्यो निर्वेदाद्धि कुतः सुखम्
प्रयत्नात्प्राप्यते ह्यर्थः कस्माद्गच्छथ निर्दयाः ४७
आत्ममांसोपवृत्तं च शरीरार्धमयीं तनुम्
पितॄणां वंशकर्तारं वने त्यक्त्वा क्व यास्यथ ४८
अथ वास्तं गते सूर्ये संध्याकाल उपस्थिते
ततो नेष्यथ वा पुत्रमिहस्था वा भविष्यथ ४९
गृध्र उवाच
अद्य वर्षसहस्रं मे साग्रं जातस्य मानुषाः
न च पश्यामि जीवन्तं मृतं स्त्रीपुंनपुंसकम् ५०
मृता गर्भेषु जायन्ते म्रियन्ते जातमात्रकाः
विक्रमन्तो म्रियन्ते च यौवनस्थास्तथापरे ५१
अनित्यानीह भाग्यानि चतुष्पात्पक्षिणामपि
जङ्गमाजङ्गमानां चाप्यायुरग्रेऽवतिष्ठते ५२
इष्टदारवियुक्ताश्च पुत्रशोकान्वितास्तथा
दह्यमानाः स्म शोकेन गृहं गच्छन्ति नित्यदा ५३
अनिष्टानां सहस्राणि तथेष्टानां शतानि च
उत्सृज्येह प्रयाता वै बान्धवा भृशदुःखिताः ५४
त्यज्यतामेष निस्तेजाः शून्यः काष्ठत्वमागतः
अन्यदेहविषक्तो हि शावं काष्ठमुपासते ५५
भ्रान्तजीवस्य वै बाष्पं कस्माद्धित्वा न गच्छथ
निरर्थको ह्ययं स्नेहो निरर्थश्च परिग्रहः ५६
न चक्षुर्भ्यां न कर्णाभ्यां संशृणोति समीक्षते
तस्मादेनं समुत्सृज्य स्वगृहान्गच्छताशु वै ५७
मोक्षधर्माश्रितैर्वाक्यैर्हेतुमद्भिरनिष्ठुरैः
मयोक्ता गच्छत क्षिप्रं स्वं स्वमेव निवेशनम् ५८
प्रज्ञाविज्ञानयुक्तेन बुद्धिसंज्ञाप्रदायिना
वचनं श्राविता रूक्षं मानुषाः संनिवर्तत ५९
जम्बुक उवाच
इमं कनकवर्णाभं भूषणैः समलंकृतम्

गृध्रवाक्यात्कथं पुत्रं त्यजध्वं पितृपिण्डदम् ६०
न स्नेहस्य विरोधोऽस्ति विलापरुदितस्य वै
मृतस्यास्य परित्यागात्तापो वो भविता ध्रुवम् ६१
श्रूयते शम्बुके शूद्रे हते ब्राह्मणदारकः
जीवितो धर्ममासाद्य रामात्सत्यपराक्रमात् ६२
तथा श्वेतस्य राजर्षेर्बालो दिष्टान्तमागतः
श्वोऽभूते धर्मनित्येन मृतः संजीवितः पुनः ६३
तथा कश्चिद्भवेत्सिद्धो मुनिर्वा देवतापि वा
कृपणानामनुक्रोशं कुर्याद्वो रुदतामिह ६४
भीष्म उवाच
इत्युक्ताः संन्यवर्तन्त शोकार्ताः पुत्रवत्सलाः
अङ्के शिरः समाधाय रुरुदुर्बहुविस्तरम् ६५
गृध्र उवाच
अश्रुपातपरिक्लिन्नः पाणिस्पर्शनपीडितः
धर्मराजप्रयोगाच्च दीर्घां निद्रां प्रवेशितः ६६
तपसापि हि संयुक्तो न काले नोपहन्यते
सर्वस्नेहावसानं तदिदं तत्प्रेतपत्तनम् ६७
बालवृद्धसहस्राणि सदा संत्यज्य बान्धवाः
दिनानि चैव रात्रीश्च दुःखं तिष्ठन्ति भूतले ६८
अलं निर्बन्धमागम्य शोकस्य परिवारणम्
अप्रत्ययं कुतो ह्यस्य पुनरद्येह जीवितम् ६९
नैष जम्बुकवाक्येन पुनः प्राप्स्यति जीवितम्
मृतस्योत्सृष्टदेहस्य पुनर्देहो न विद्यते ७०
न वै मूर्तिप्रदानेन न जम्बुकशतैरपि
शक्यो जीवयितुं ह्येष बालो वर्षशतैरपि ७१
अपि रुद्रः कुमारो वा ब्रह्मा वा विष्णुरेव वा
वरमस्मै प्रयच्छेयुस्ततो जीवेदयं शिशुः ७२
न च बाष्पविमोक्षेण न चाश्वासकृतेन वै
न दीर्घरुदितेनेह पुनर्जीवो भविष्यति ७३
अहं च क्रोष्टुकश्चैव यूयं चैवास्य बान्धवाः

धर्माधर्मौ गृहीत्वेह सर्वे वर्तामहेऽध्वनि ७४
अप्रियं परुषं चापि परद्रोहं परस्त्रियम्
अधर्ममनृतं चैव दूरात्प्राज्ञो निवर्तयेत् ७५
सत्यं धर्मं शुभं न्याय्यं प्राणिनां महतीं दयाम्
अजिह्मत्वमशाठ्यं च यत्नतः परिमार्गत ७६
मातरं पितरं चैव बान्धवान्सुहृदस्तथा
जीवतो ये न पश्यन्ति तेषां धर्मविपर्ययः ७७
यो न पश्यति चक्षुर्भ्यां नेङ्गते च कथंचन
तस्य निष्ठावसानान्ते रुदन्तः किं करिष्यथ ७८
भीष्म उवाच
इत्युक्तास्तं सुतं त्यक्त्वा भूमौ शोकपरिप्लुताः
दह्यमानाः सुतस्नेहात्प्रययुर्बान्धवा गृहान् ७९
जम्बुक उवाच
दारुणो मर्त्यलोकोऽय सर्वप्राणिविनाशनः
इष्टबन्धुवियोगश्च तथैवाल्पं च जीवितम् ८०
बह्वलीकमसत्यं च प्रतिवादाप्रियंवदम्
इमं प्रेक्ष्य पुनर्भावं दुःखशोकाभिवर्धनम् ८१
न मे मानुषलोकोऽय मुहूर्तमपि रोचते
अहो धिग्गृध्रवाक्येन संनिवर्तथ मानुषाः ८२
प्रदीप्ताः पुत्रशोकेन यथैवाबुद्धयस्तथा
कथं गच्छथ सस्नेहाः सुतस्नेहं विसृज्य च
श्रुत्वा गृध्रस्य वचनं पापस्येहाकृतात्मनः ८३
सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम्
सुखदुःखान्विते लोके नेहास्त्येकमनन्तकम् ८४
इमं क्षितितले न्यस्य बालं रूपसमन्वितम्
कुलशोकाकरं मूढाः पुत्रं त्यक्त्वा क्व यास्यथ ८५
रूपयौवनसंपन्नं द्योतमानमिव श्रिया
जीवन्तमेनं पश्यामि मनसा नात्र संशयः ८६
विनाशश्चाप्यनर्होऽस्य सुखं प्राप्स्यथ मानुषाः
पुत्रशोकाग्निदग्धानां मृतमप्यद्य वः क्षमम् ८७

दुःखसंभावनां कृत्वा धारयित्वा स्वयं सुखम्
त्यक्त्वा गमिष्यथ क्वाद्य समुत्सृज्याल्पबुद्धिवत् ८८
भीष्म उवाच
तथा धर्मविरोधेन प्रियमिथ्याभिध्यायिना
श्मशानवासिना नित्यं रात्रिं मृगयता तदा ८९
ततो मध्यस्थतां नीता वचनैरमृतोपमैः
जम्बुकेन स्वकार्यार्थं बान्धवास्तस्य धिष्ठिताः ९०
गृध्र उवाच
अयं प्रेतसमाकीर्णो यक्षराक्षससेवितः
दारुणः काननोद्देशः कौशिकैरभिनादितः ९१
भीमः सुघोरश्च तथा नीलमेघसमप्रभः
अस्मिञ्शवं परित्यज्य प्रेतकार्याण्युपासत ९२
भानुर्यावन्न यात्यस्तं यावच्च विमला दिशः
तावदेनं परित्यज्य प्रेतकार्याण्युपासत ९३
नदन्ति परुषं श्येनाः शिवाः क्रोशन्ति दारुणाः
मृगेन्द्राः प्रतिनन्दन्ति रविरस्तं च गच्छति ९४
चिताधूमेन नीलेन संरज्यन्ते च पादपाः
श्मशाने च निराहाराः प्रतिनन्दन्ति देहिनः ९५
सर्वे विक्रान्तवीर्याश्च अस्मिन्देशे सुदारुणाः
युष्मान्प्रधर्षयिष्यन्ति विकृता मांसभोजनाः ९६
दूराच्चायं वनोद्देशो भयमत्र भविष्यति
त्यज्यतां काष्ठभूतोऽय मृष्यतां जाम्बुकं वचः ९७
यदि जम्बुकवाक्यानि निष्फलान्यनृतानि च
श्रोष्यथ भ्रष्टविज्ञानास्ततः सर्वे विनङ्क्ष्यथ ९८
जम्बुक उवाच
स्थीयतां नेह भेतव्यं यावत्तपति भास्करः
तावदस्मिन्सुतस्नेहादनिर्वेदेन वर्तत ९९
स्वैरं रुदत विस्रब्धाः स्वैरं स्नेहेन पश्यत
स्थीयतां यावदादित्यः किं वः क्रव्यादभाषितैः १००
यदि गृध्रस्य वाक्यानि तीव्राणि रभसानि च

गृह्णीत मोहितात्मानः सुतो वो न भविष्यति १०१
भीष्म उवाच
गृध्रोऽनस्तमिते त्वाह गतेऽस्तमिति जम्बुकः
मृतस्य तं परिजनमूचतुस्तौ क्षुधान्वितौ १०२
स्वकार्यदक्षिणौ राजन्गृध्रो जम्बुक एव च
क्षुत्पिपासापरिश्रान्तौ शास्त्रमालम्ब्य जल्पतः १०३
तयोर्विज्ञानविदुषोर्द्वयोर्जम्बुकपत्रिणोः
वाक्यैरमृतकल्पैर्हि प्रातिष्ठन्त व्रजन्ति च १०४
शोकदैन्यसमाविष्टा रुदन्तस्तस्थिरे तदा
स्वकार्यकुशलाभ्यां ते संभ्राम्यन्ते ह नैपुणात् १०५
तथा तयोर्विवदतोर्विज्ञानविदुषोर्द्वयोः
बान्धवानां स्थितानां च उपातिष्ठत शंकरः १०६
ततस्तानाह मनुजान्वरदोऽस्मीति शूलभृत्
ते प्रत्यूचुरिदं वाक्यं दुःखिताः प्रणताः स्थिताः १०७
एकपुत्रविहीनानां सर्वेषां जीवितार्थिनाम्
पुत्रस्य नो जीवदानाज्जीवितं दातुमर्हसि १०८
एवमुक्तः स भगवान्वारिपूर्णेन पाणिना
जीवं तस्मै कुमाराय प्रादाद्वर्षशताय वै १०९
तथा गोमायुगृध्राभ्यामाददत्क्षुद्विनाशनम्
वरं पिनाकी भगवान्सर्वभूतहिते रतः ११०
ततः प्रणम्य तं देवं श्रेयोहर्षसमन्विताः
कृतकृत्याः सुखं हृष्टाः प्रातिष्ठन्त तदा विभो १११
अनिर्वेदेन दीर्घेण निश्चयेन ध्रुवेण च
देवदेवप्रसादाच्च क्षिप्रं फलमवाप्यते ११२
पश्य देवस्य संयोगं बान्धवानां च निश्चयम्
कृपणानां हि रुदतां कृतमश्रुप्रमार्जनम् ११३
पश्य चाल्पेन कालेन निश्चयान्वेषणेन च
प्रसादं शंकरात्प्राप्य दुःखिताः सुखमाप्नुवन् ११४
ते विस्मिताः प्रहृष्टाश्च पुत्रसंजीवनात्पुनः
बभूवुर्भरतश्रेष्ठ प्रसादाच्छंकरस्य वै ११५

ततस्ते त्वरिता राजञ्श्रुत्वा शोकमघोद्भवम्
विविशुः पुत्रमादाय नगरं हृष्टमानसाः
एषा बुद्धिः समस्तानां चातुर्वर्ण्ये निदर्शिता ११६
धर्मार्थमोक्षसंयुक्तमितिहासमिमं शुभम्
श्रुत्वा मनुष्यः सततमिह प्रेत्य च मोदते ११७
इति श्रीमहाभारते शान्तिपर्वणि एकोनपञ्चाशदधिकशततमोऽध्यायः १४९

## पञ्चाशदधिक शततमोऽध्यायः

भीष्म उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
संवादं भरतश्रेष्ठ शल्मलेः पवनस्य च १
हिमवन्तं समासाद्य महानासीद्वनस्पतिः
वर्षपूगाभिसंवृद्धः शाखास्कन्धपलाशवान् २
तत्र स्म मत्ता मातङ्गा घर्मार्ताः श्रमकर्शिताः
विश्रमन्ति महाबाहो तथान्या मृगजातयः ३
नल्वमात्रपरीणाहो घनच्छायो वनस्पतिः
शुकसारिकसंघुष्टः फलवान्पुष्पवानपि ४
सार्थिका वणिजश्चापि तापसाश्च वनौकसः
वसन्ति वासान्मार्गस्थाः सुरम्ये तरुसत्तमे ५
तस्य ता विपुलाः शाखा दृष्ट्वा स्कन्धांश्च सर्वतः
अभिगम्याब्रवीदेनं नारदो भरतर्षभ ६
अहो नु रमणीयस्त्वमहो चासि मनोरमः
प्रीयामहे त्वया नित्यं तरुप्रवर शल्मले ७
सदैव शकुनास्तात मृगाश्चाधस्तथा गजाः
वसन्ति तव संहृष्टा मनोहरतरास्तथा ८
तव शाखा महाशाख स्कन्धं च विपुलं तथा
न वै प्रभग्नान्पश्यामि मारुतेन कथंचन ९
किं नु ते मारुतस्तात प्रीतिमानथ वा सुहृत्
त्वां रक्षति सदा येन वनेऽस्मिन्पवनो ध्रुवम् १०
विवान्हि पवनः स्थानाद्वृक्षानुच्चावचानपि

पर्वतानां च शिखराण्याचालयति वेगवान् ११
शोषयत्येव पातालं विवान्गन्धवहः शुचिः
ह्रदांश्च सरितश्चैव सागरांश्च तथैव ह १२
त्वां संरक्षेत पवनः सखित्वेन न संशयः
तस्माद्बहलशाखोऽसि पर्णवान्पुष्पवानपि १३
इदं च रमणीयं ते प्रतिभाति वनस्पते
यदिमे विहगास्तात रमन्ते मुदितास्त्वयि १४
एषां पृथक्समस्तानां श्रूयते मधुरः स्वरः
पुष्पसंमोदने काले वाशतां सुमनोहरम् १५
तथेमे मुदिता नागाः स्वयूथकुलशोभिनः
घर्मार्तास्त्वां समासाद्य सुखं विन्दन्ति शल्मले १६
तथैव मृगजातीभिरन्याभिरुपशोभसे
तथा सर्थाधिवासैश्च शोभसे मेरुवद्द्रुम १७
ब्राह्मणैश्च तपःसिद्धैस्तापसैः श्रमणैरपि
त्रिविष्टपसमं मन्ये तवायतनमेव ह १८
बन्धुत्वादथ वा सख्याच्छल्मले नात्र संशयः
पालयत्येव सततं भीमः सर्वत्रगोऽनिलः १९
न्यग्भावं परमं वायोः शल्मले त्वमुपागतः
तवाहमस्मीति सदा येन रक्षति मारुतः २०
न तं पश्याम्यहं वृक्षं पर्वतं वापि तं दृढम्
यो न वायुबलाद्भग्नः पृथिव्यामिति मे मतिः २१
त्वं पुनः कारणैर्नूनं शल्मले रक्ष्यसे सदा
वायुना सपरीवारस्तेन तिष्ठस्यसंशयम् २२
शल्मलिरुवाच
न मे वायुः सखा ब्रह्मन्न बन्धुर्न च मे सुहृत्
परमेष्ठी तथा नैव येन रक्षति मानिलः २३
मम तेजोबलं वायोर्भीममपि हि नारद
कलामष्टादशीं प्राणैर्न मे प्राप्नोति मारुतः २४
आगच्छन्परमो वायुर्मया विष्टम्भितो बलात्
रुजन्द्रुमान्पर्वतांश्च यच्चान्यदपि किंचन २५

स मया बहुशो भग्नः प्रभञ्जन्वै प्रभञ्जनः
तस्मान्न बिभ्ये देवर्षे क्रुद्धादपि समीरणात् २६
नारद उवाच
शाल्मले विपरीतं ते दर्शनं नात्र संशयः
न हि वायोर्बलेनास्ति भूतं तुल्यबलं क्वचित् २७
इन्द्रो यमो वैश्रवणो वरुणश्च जलेश्वरः
न तेऽपि तुल्या मरुतः किं पुनस्त्वं वनस्पते २८
यद्धि किंचिदिह प्राणि शल्मले चेष्टते भुवि
सर्वत्र भगवान्वायुश्चेष्टाप्राणकरः प्रभुः २९
एष चेष्टयते सम्यक्प्राणिनः सम्यगायतः
असम्यगायतो भूयश्चेष्टते विकृतो नृषु ३०
स त्वमेवंविधं वायुं सर्वसत्त्वभृतां वरम्
न पूजयसि पूज्यं तं किमन्यद्बुद्धिलाघवात् ३१
असारश्चासि दुर्बुद्धे केवलं बहु भाषसे
क्रोधादिभिरवच्छन्नो मिथ्या वदसि शल्मले ३२
मम रोषः समुत्पन्नस्त्वय्येवं संप्रभाषति
ब्रवीम्येष स्वयं वायोस्तव दुर्भाषितं बहु ३३
चन्दनैः स्पन्दनैः शालैः सरलैर्देवदारुभिः
वेतसैर्बन्धनैश्चापि ये चान्ये बलवत्तराः ३४
तैश्चापि नैवं दुर्बुद्धे क्षिप्तो वायुः कृतात्मभिः
ते हि जानन्ति वायोश्च बलमात्मन एव च ३५
तस्मात्ते वै नमस्यन्ति श्वसनं द्रुमसत्तमाः
त्वं तु मोहान्न जानीषे वायोर्बलमनन्तकम् ३६
इति श्रीमहाभारते शान्तिपर्वणि पञ्चाशदधिकशततमोऽध्यायः १५०

## एक पञ्चाशदधिक शततमोऽध्यायः

भीष्म उवाच
एवमुक्त्वा तु राजेन्द्र शल्मलि ब्रह्मवित्तमः
नारदः पवने सर्वं शल्मलेर्वाक्यमब्रवीत् १
हिमवत्पृष्ठजः कश्चिच्छल्मलि परिवारवान्

बृहन्मूलो बृहच्छाखः स त्वां वायोऽवमन्यते २
बहून्याक्षेपयुक्तानि त्वामाह वचनानि सः
न युक्तानि मया वायो तानि वक्तुं त्वयि प्रभो ३
जानामि त्वामहं वायो सर्वप्राणभृतां वरम्
वरिष्ठं च गरिष्ठं च क्रोधे वैवस्वतं यथा ४
एवं तु वचनं श्रुत्वा नारदस्य समीरणः
शल्मलि तमुपागम्य क्रुद्धो वचनमब्रवीत् ५
शल्मले नारदे यत्तत्त्वयोक्तं मद्विगर्हणम्
अहं वायुः प्रभावं ते दर्शयाम्यात्मनो बलम् ६
नाहं त्वा नाभिजानामि विदितश्चासि मे द्रुम
पितामहः प्रजासर्गे त्वयि विश्रान्तवान्प्रभुः ७
तस्य विश्रमणादेव प्रसादे यः कृतस्तव
रक्षयसे तेन दुर्बुद्धे नात्मवीर्याद्द्रुमाधम ८
यन्मा त्वमवजानीषे यथान्यं प्राकृतं तथा
दर्शयाम्येष आत्मानं यथा मामवभोत्स्यसे ९
एवमुक्तस्ततः प्राह शल्मलि प्रहसन्निव
पवन त्वं वने क्रुद्धो दर्शयात्मानमात्मना १०
मयि वै त्यज्यतां क्रोधः किं मे क्रुद्धः करिष्यसि
न ते बिभेमि पवन यद्यपि त्वं स्वयंप्रभुः ११
इत्येवमुक्तः पवनः श्व इत्येवाब्रवीद्वचः
दर्शयिष्यामि ते तेजस्ततो रात्रिरुपागमत् १२
अथ निश्चित्य मनसा शल्मलिर्वातकारितम्
पश्यमानस्तदात्मानमसमं मातरिश्वनः १३
नारदे यन्मया प्रोक्तं पवनं प्रति तन्मृषा
असमर्थो ह्यहं वायोर्बलेन बलवान्हि सः १४
मारुतो बलवान्नित्यं यथैनं नारदोऽब्रवीत्
अहं हि दुर्बलोऽन्येभ्यो वृक्षेभ्यो नात्र संशयः १५
किं तु बुद्ध्या समो नास्ति मम कश्चिद्वनस्पतिः
तदहं बुद्धिमास्थाय भयं मोक्ष्ये समीरणात् १६
यदि तां बुद्धिमास्थाय चरेयुः पर्णिनो वने

अरिष्टाः स्युः सदा क्रुद्धात्पवनान्नात्र संशयः १७
तेऽत्र बाला न जानन्ति यथा नैनान्समीरणः
समीरयेत संक्रुद्धो यथा जानाम्यहं तथा १८
ततो निश्चित्य मनसा शल्मलि क्षुभितस्तदा
शाखाः स्कन्धान्प्रशाखाश्च स्वयमेव व्यशातयत् १९
स परित्यज्य शाखाश्च पत्राणि कुसुमानि च
प्रभाते वायुमायान्तं प्रत्यैक्षत वनस्पतिः २०
ततः क्रुद्धः श्वसन्वायुः पातयन्वै महाद्रुमान्
आजगामाथ तं देशं स्थितो यत्र स शल्मलि २१
तं हीनपर्णं पतिताग्रशाखं विशीर्णपुष्पं प्रसमीक्ष्य वायुः
उवाच वाक्यं स्मयमान एनं मुदा युतं शल्मलि रुग्णशाखम् २२
अहमप्येवमेव त्वां कुर्वाणः शल्मले रुषा
आत्मना यत्कृतं कृत्स्नं शाखानामपकर्षणम् २३
हीनपुष्पाग्रशाखस्त्वं शीर्णाङ्कुरपलाशवान्
आत्मदुर्मन्त्रितेनेह मद्वीर्यवशगोऽभवः २४
एतच्छ्रुत्वा वचो वायोः शल्मलिर्व्रीडितस्तदा
अतप्यत वचः स्मृत्वा नारदो यत्तदाब्रवीत् २५
एवं यो राजशार्दूल दुर्बलः सन्बलीयसा
वैरमासज्जते बालस्तप्यते शल्मलिर्यथा २६
तस्माद्वैरं न कुर्वीत दुर्बलो बलवत्तरैः
शोचेद्धि वैरं कुर्वाणो यथा वै शल्मलिस्तथा २७
न हि वैरं महात्मानो विवृण्वन्त्यपकारिषु
शनैः शनैर्महाराज दर्शयन्ति स्म ते बलम् २८
वैरं न कुर्वीत नरो दुर्बुद्धिर्बुद्धिजीविना
बुद्धिर्बुद्धिमतो याति तूलेष्विव हुताशनः २९
न हि बुद्ध्या समं किंचिद्विद्यते पुरुषे नृप
तथा बलेन राजेन्द्र न समोऽस्तीति चिन्तयेत् ३०
तस्मात्क्षमेत बालाय जडाय बधिराय च
बलाधिकाय राजेन्द्र तद्दृष्टं त्वयि शत्रुहन् ३१
अक्षौहिण्यो दशैका च सप्त चैव महाद्युते

बलेन न समा राजन्नर्जुनस्य महात्मनः ३२
हतास्ताश्चैव भग्नाश्च पाण्डवेन यशस्विना
चरता बलमास्थाय पाकशासनिना मृधे ३३
उक्तास्ते राजधर्माश्च आपद्धर्माश्च भारत
विस्तरेण महाराज किं भूयः प्रब्रवीमि ते ३४
इति श्रीमहाभारते शान्तिपर्वणि एकपञ्चाशदधिकशततमोऽध्यायः १५१

## द्विपञ्चाशदधिक शततमोऽध्यायः

युधिष्ठिर उवाच
पापस्य यदधिष्ठानं यतः पापं प्रवर्तते
एतदिच्छाम्यहं ज्ञातुं तत्त्वेन भरतर्षभ १
भीष्म उवाच
पापस्य यदधिष्ठानं तच्छृणुष्व नराधिप
एको लोभो महाग्राहो लोभात्पापं प्रवर्तते २
अतः पापमधर्मश्च तथा दुःखमनुत्तमम्
निकृत्या मूलमेतद्धि येन पापकृतो जनाः ३
लोभात्क्रोधः प्रभवति लोभात्कामः प्रवर्तते
लोभान्मोहश्च माया च मानस्तम्भः परासुता ४
अक्षमा ह्रीपरित्यागः श्रीनाशो धर्मसंक्षयः
अभिध्याप्रज्ञता चैव सर्वं लोभात्प्रवर्तते ५
अन्यायश्चावितर्कश्च विकर्मसु च याः क्रियाः
कूटविद्यादयश्चैव रूपैश्वर्यमदस्तथा ६
सर्वभूतेष्वविश्वासः सर्वभूतेष्वनार्जवम्
सर्वभूतेष्वभिद्रोहः सर्वभूतेष्वयुक्तता
हरणं परवित्तानां परदाराभिमर्शनम् ७
वाग्वेगो मानसो वेगो निन्दावेगस्तथैव च
उपस्थोदरयोर्वेगो मृत्युवेगश्च दारुणः ८
ईर्ष्यावेगश्च बलवान्मिथ्यावेगश्च दुस्त्यजः
रसवेगश्च दुर्वारः श्रोत्रवेगश्च दुःसहः ९
कुत्सा विकत्था मात्सर्यं पापं दुष्करकारिता

साहसानां च सर्वेषामकार्याणां क्रियास्तथा १०
जातौ बाल्येऽथ कौमारे यौवने चापि मानवः
न संत्यजत्यात्मकर्म यन्न जीर्यति जीर्यतः ११
यो न पूरयितुं शक्यो लोभः प्राप्त्या कुरूद्वह
नित्यं गम्भीरतोयाभिरापगाभिरिवोदधिः
न प्रहृष्यति लाभैर्यो यश्च कामैर्न तृप्यति १२
यो न देवैर्न गन्धर्वैर्नासुरैर्न महोरगैः
ज्ञायते नृप तत्त्वेन सर्वैर्भूतगणैस्तथा
स लोभः सह मोहेन विजेतव्यो जितात्मना १३
दम्भो द्रोहश्च निन्दा च पैशुन्यं मत्सरस्तथा
भवन्त्येतानि कौरव्य लुब्धानामकृतात्मनाम् १४
सुमहान्त्यपि शास्त्राणि धारयन्ति बहुश्रुताः
छेत्तारः संशयानां च क्लिश्यन्तीहाल्पबुद्धयः १५
द्वेषक्रोधप्रसक्ताश्च शिष्टाचारबहिष्कृताः
अन्तःक्षुरा वाङ्मधुराः कूपाश्छन्नास्तृणैरिव
घर्मवैतंसिकाः क्षुद्रा मुष्णन्ति ध्वजिनो जगत् १६
कुर्वते च बहून्मार्गांस्तांस्तान्हेतुबलाश्रिताः
सर्वं मार्गं विलुम्पन्ति लोभाज्ञानेषु निष्ठिताः १७
धर्मस्याह्रियमाणस्य लोभग्रस्तैर्दुरात्मभिः
या या विक्रियते संस्था ततः साभिप्रपद्यते १८
दर्पः क्रोधो मदः स्वप्नो हर्षः शोकोऽतिमानिता
तत एव हि कौरव्य दृश्यन्ते लुब्धबुद्धिषु
एतानशिष्टान्बुध्यस्व नित्यं लोभसमन्वितान् १९
शिष्टांस्तु परिपृच्छेथा यान्वक्ष्यामि शुचिव्रतान्
येषु वृत्तिभयं नास्ति परलोकभयं न च २०
नामिषेषु प्रसङ्गोऽस्ति न प्रियेष्वप्रियेषु च
शिष्टाचारः प्रियो येषु दमो येषु प्रतिष्ठितः २१
सुखं दुःखं परं येषां सत्यं येषां परायणम्
दातारो न ग्रहीतारो दयावन्तस्तथैव च २२
पितृदेवातिथेयाश्च नित्योद्युक्तास्तथैव च

सर्वोपकारिणो धीराः सर्वधर्मानुपालकाः २३
सर्वभूतहिताश्चैव सर्वदेयाश्च भारत
न ते चालयितुं शक्या धर्मव्यापारपारगाः २४
न तेषां भिद्यते वृत्तं यत्पुरा साधुभिः कृतम्
न त्रासिनो न चपला न रौद्राः सत्पथे स्थिताः २५
ते सेव्याः साधुभिर्नित्यं येष्वहिंसा प्रतिष्ठिता
कामक्रोधव्यपेता ये निर्ममा निरहंकृताः
सुव्रताः स्थिरमर्यादास्तानुपास्स्व च पृच्छ च २६
न गवार्थं यशोऽथ वा धर्मस्तेषां युधिष्ठिर
अवश्यकार्य इत्येव शरीरस्य क्रियास्तथा २७
न भयं क्रोधचापल्यं न शोकस्तेषु विद्यते
न धर्मध्वजिनश्चैव न गुह्यं किंचिदास्थिताः २८
येष्वलोभस्तथामोहो ये च सत्यार्जवे रताः
तेषु कौन्तेय रज्येथा येष्वतन्द्रीकृतं मनः २९
ये न हृष्यन्ति लाभेषु नालाभेषु व्यथन्ति च
निर्ममा निरहंकाराः सत्त्वस्थाः समदर्शिनः ३०
लाभालाभौ सुखदुःखे च तात प्रियाप्रिये मरणं जीवितं च
समानि येषां स्थिरविक्रमाणां बुद्धात्मनां सत्त्वमवस्थितानाम् ३१
सुखप्रियैस्तान्सुमहाप्रतापान्यत्तोऽप्रमत्तश्च समर्थयेथाः
दैवात्सर्वे गुणवन्तो भवन्ति शुभाशुभा वाक्प्रलापा यथैव ३२
इति श्रीमहाभारते शान्तिपर्वणि द्विपञ्चाशदधिकशततमोऽध्यायः १५२

## त्रिपञ्चाशदधिक शततमोऽध्यायः

युधिष्ठिर उवाच
अनर्थानामधिष्ठानमुक्तो लोभः पितामह
अज्ञानमपि वै तात श्रोतुमिच्छामि तत्त्वतः १
भीष्म उवाच
करोति पापं योऽज्ञानान्नात्मनो वेत्ति च क्षमम्
प्रद्वेष्टि साधुवृत्तांश्च स लोकस्यैति वाच्यताम् २
अज्ञानान्निरयं याति तथाज्ञानेन दुर्गतिम्

अज्ञानात्क्लेशमाप्नोति तथापत्सु निमज्जति ३
युधिष्ठिर उवाच
अज्ञानस्य प्रवृत्तिं च स्थानं वृद्धिं क्षयोदयौ
मूलं योगं गतिं कालं कारणं हेतुमेव च ४
श्रोतुमिच्छामि तत्त्वेन यथावदिह पार्थिव
अज्ञानप्रभवं हीदं यद्दुःखमुपलभ्यते ५
भीष्म उवाच
रागो द्वेषस्तथा मोहो हर्षः शोकोऽभिमानिता
कामः क्रोधश्च दर्पश्च तन्द्रीरालस्यमेव च ६
इच्छा द्वेषस्तथा तापः परवृद्ध्युपतापिता
अज्ञानमेतन्निर्दिष्टं पापानां चैव याः क्रियाः ७
एतया या प्रवृत्तिश्च वृद्ध्यादीन्यांश्च पृच्छसि
विस्तरेण महाबाहो शृणु तच्च विशां पते ८
उभावेतौ समफलौ समदोषौ च भारत
अज्ञानं चातिलोभश्चाप्येकं जानीहि पार्थिव ९
लोभप्रभवमज्ञानं वृद्धं भूयः प्रवर्धते
स्थाने स्थानं क्षये क्षैण्यमुपैति विविधां गतिम् १०
मूलं लोभस्य महतः कालात्मगतिरेव च
छिन्नेऽच्छिन्ने तथा लोभे कारणं काल एव हि ११
तस्याज्ञानात्तु लोभो हि लोभादज्ञानमेव च
सर्वे दोषास्तथा लोभात्तस्माल्लोभं विवर्जयेत् १२
जनको युवनाश्वश्च वृषादर्भिः प्रसेनजित्
लोभक्षयाद्दिवं प्राप्तास्तथैवान्ये जनाधिपाः १३
प्रत्यक्षं तु कुरुश्रेष्ठ त्यज लोभमिहात्मना
त्यक्त्वा लोभं सुखं लोके प्रेत्य चानुचरिष्यसि १४
इति श्रीमहाभारते शान्तिपर्वणि त्रिपञ्चाशदधिकशततमोऽध्यायः १५३

## चतुः पञ्चाशदधिक शततमोऽध्यायः

युधिष्ठिर उवाच
स्वाध्यायकृतयत्नस्य ब्राह्मणस्य पितामह

धर्मकामस्य धर्मात्मन्किं नु श्रेय इहोच्यते १
बहुधा दर्शने लोके श्रेयो यदिह मन्यसे
अस्मिँल्लोके परे चैव तन्मे ब्रूहि पितामह २
महानयं धर्मपथो बहुशाखश्च भारत
किं स्विदेवेह धर्माणामनुष्ठेयतमं मतम् ३
धर्मस्य महतो राजन्बहुशाखस्य तत्त्वतः
यन्मूलं परमं तात तत्सर्वं ब्रूह्यतन्द्रितः ४
भीष्म उवाच
हन्त ते कथयिष्यामि येन श्रेयः प्रपत्स्यसे
पीत्वामृतमिव प्राज्ञो ज्ञानतृप्तो भविष्यसि ५
धर्मस्य विधयो नैके ते ते प्रोक्ता महर्षिभिः
स्वं स्वं विज्ञानमाश्रित्य दमस्तेषां परायणम् ६
दमं निःश्रेयसं प्राहुर्वृद्धा निश्चयदर्शिनः
ब्राह्मणस्य विशेषेण दमो धर्मः सनातनः ७
नादान्तस्य क्रियासिद्धिर्यथावदुपलभ्यते
दमो दानं तथा यज्ञानधीतं चातिवर्तते ८
दमस्तेजो वर्धयति पवित्रं च दमः परम्
विपाप्मा तेजसा युक्तः पुरुषो विन्दते महत् ९
दमेन सदृशं धर्मं नान्यं लोकेषु शुश्रुम
दमो हि परमो लोके प्रशस्तः सर्वधर्मिणाम् १०
प्रेत्य चापि मनुष्येन्द्र परमं विन्दते सुखम्
दमेन हि समायुक्तो महान्तं धर्ममश्नुते ११
सुखं दान्तः प्रस्वपिति सुखं च प्रतिबुध्यते
सुखं पर्येति लोकांश्च मनश्चास्य प्रसीदति १२
अदान्तः पुरुषः क्लेशमभीक्ष्णं प्रतिपद्यते
अनर्थांश्च बहूनन्यान्प्रसृजत्यात्मदोषजान् १३
आश्रमेषु चतुर्ष्वाहुर्दममेवोत्तमं व्रतम्
तस्य लिङ्गानि वक्ष्यामि येषां समुदयो दमः १४
क्षमा धृतिरहिंसा च समता सत्यमार्जवम्
इन्द्रियावजयो दाक्ष्यं मार्दवं ह्रीरचापलम् १५

अकार्पण्यमसंरम्भः संतोषः प्रियवादिता
अविवित्सानसूया चाप्येषां समुदयो दमः १६
गुरुपूजा च कौरव्य दया भूतेष्वपैशुनम्
जनवादोऽमृषावादः स्तुतिनिन्दाविवर्जनम् १७
कामः क्रोधश्च लोभश्च दर्पः स्तम्भो विकत्थनम्
मोह ईर्ष्यावमानश्चेत्येतद्दान्तो न सेवते १८
अनिन्दितो ह्यकामात्माथाल्पेच्छोऽथानसूयकः
समुद्रकल्पः स नरो न कदाचन पूर्यते १९
अहं त्वयि मम त्वं च मयि ते तेषु चाप्यहम्
पूर्वसंबन्धिसंयोगान्नैतद्दान्तो निषेवते २०
सर्वा ग्राम्यास्तथारण्या याश्च लोके प्रवृत्तयः
निन्दां चैव प्रशंसां च यो नाश्रयति मुच्यते २१
मैत्रोऽथ शीलसंपन्नः सुसहायपरश्च यः
मुक्तश्च विविधैः सङ्गैस्तस्य प्रेत्य महत्फलम् २२
सुवृत्तः शीलसंपन्नः प्रसन्नात्मात्मविद्बुधः
प्राप्येह लोके सत्कारं सुगतिं प्रतिपद्यते २३
कर्म यच्छुभमेवेह सद्भिराचरितं च यत्
तदेव ज्ञानयुक्तस्य मुनेर्धर्मो न हीयते २४
निष्क्रम्य वनमास्थाय ज्ञानयुक्तो जितेन्द्रियः
कालाकाङ्क्षी चरन्नेवं ब्रह्मभूयाय कल्पते २५
अभयं यस्य भूतेभ्यो भूतानामभयं यतः
तस्य देहाद्विमुक्तस्य भयं नास्ति कुतश्चन २६
अवाचिनोति कर्माणि न च संप्रचिनोति ह
समः सर्वेषु भूतेषु मैत्रायणगतिश्चरेत् २७
शकुनीनामिवाकाशे जले वारिचरस्य वा
यथा गतिर्न दृश्यते तथा तस्य न संशयः २८
गृहानुत्सृज्य यो राजन्मोक्षमेवाभिपद्यते
लोकास्तेजोमयास्तस्य कल्पन्ते शाश्वतीः समाः २९
संन्यस्य सर्वकर्माणि संन्यस्य विधिवत्तपः
संन्यस्य विविधा विद्याः सर्वं संन्यस्य चैव ह ३०

कामेषु चाप्यनावृत्तः प्रसन्नात्मात्मविच्छुचिः
प्राप्येह लोके सत्कारं स्वर्गं समभिपद्यते ३१
यच्च पैतामहं स्थानं ब्रह्मराशिसमुद्भवम्
गुहायां पिहितं नित्यं तद्दमेनाभिपद्यते ३२
ज्ञानारामस्य बुद्धस्य सर्वभूताविरोधिनः
नावृत्तिभयमस्तीह परलोके भयं कुतः ३३
एक एव दमे दोषो द्वितीयो नोपपद्यते
यदेनं क्षमया युक्तमशक्तं मन्यते जनः ३४
एतस्य तु महाप्राज्ञ दोषस्य सुमहान्गुणः
क्षमायां विपुला लोकाः सुलभा हि सहिष्णुना ३५
दान्तस्य किमरण्येन तथादान्तस्य भारत
यत्रैव हि वसेद्दान्तस्तदरण्यं स आश्रमः ३६
वैशम्पायन उवाच
एतद्भीष्मस्य वचनं श्रुत्वा राजा युधिष्ठिरः
अमृतेनेव संतृप्तः प्रहृष्टः समपद्यत ३७
पुनश्च परिपप्रच्छ भीष्मं धर्मभृतां वरम्
ततः प्रति स चोवाच तस्मै सर्वं कुरूद्वह ३८
इति श्रीमहाभारते शान्तिपर्वणि चतुःपञ्चाशदधिकशततमोऽध्यायः १५४

## पञ्चपञ्चाशदधिक शततमोऽध्यायः

भीष्म उवाच
सर्वमेतत्तपोमूलं कवयः परिचक्षते
न ह्यतप्ततपा मूढः क्रियाफलमवाप्यते १
प्रजापतिरिदं सर्वं तपसैवासृजत्प्रभुः
तथैव वेदानृषयस्तपसा प्रतिपेदिरे २
तपसो ह्यानुपूर्व्येण फलमूलानिलाशनाः
त्रीँल्लोकांस्तपसा सिद्धाः पश्यन्ति सुसमाहिताः ३
औषधान्यगदादीनि तिस्रो विद्याश्च संस्कृतः
तपसैव हि सिध्यन्ति तपो मूलं हि साधनम् ४
यद्दुरापं दुराम्नायं दुराधर्षं दुरुत्सहम्

सर्वं तत्तपसा शक्यं तपो हि दुरतिक्रमम् ५
सुरापोऽसमतादायी भ्रूणहा गुरुतल्पगः
तपसैव सुतप्तेन नरः पापाद्विमुच्यते ६
तपसो बहुरूपस्य तैस्तैर्द्वारैः प्रवर्ततः
निवृत्त्या वर्तमानस्य तपो नानशनात्परम् ७
अहिंसा सत्यवचनं दानमिन्द्रियनिग्रहः
एतेभ्यो हि महाराज तपो नानशनात्परम् ८
न दुष्करतरं दानान्नातिमातरमाश्रमः
त्रैविद्येभ्यः परं नास्ति संन्यासः परमं तपः ९
इन्द्रियाणीह रक्षन्ति धनधान्याभिगुप्तये
तस्मादर्थे च धर्मे च तपो नानशनात्परम् १०
ऋषयः पितरो देवा मनुष्या मृगसत्तमाः
यानि चान्यानि भूतानि स्थावराणि चराणि च ११
तपःपरायणाः सर्वे सिध्यन्ति तपसा च ते
इत्येवं तपसा देवा महत्त्वं चाप्यवाप्नुवन् १२
इमानीष्टविभागानि फलानि तपसा सदा
तपसा शक्यते प्राप्तुं देवत्वमपि निश्चयात् १३
इति श्रीमहाभारते शान्तिपर्वणि पञ्चपञ्चाशदधिकशततमोऽध्यायः १५५

## षट्पञ्चाशदधिक शततमोऽध्यायः

युधिष्ठिर उवाच
सत्यं धर्मे प्रशंसन्ति विप्रर्षिपितृदेवताः
सत्यमिच्छाम्यहं श्रोतुं तन्मे ब्रूहि पितामह १
सत्यं किंलक्षणं राजन्कथं वा तदवाप्यते
सत्यं प्राप्य भवेत्किं च कथं चैव तदुच्यते २
भीष्म उवाच
चातुर्वर्ण्यस्य धर्माणां संकरो न प्रशस्यते
अविकारितमं सत्यं सर्ववर्णेषु भारत ३
सत्यं सत्सु सदा धर्मः सत्यं धर्मः सनातनः
सत्यमेव नमस्येत सत्यं हि परमा गतिः ४

सत्यं धर्मस्तपो योगः सत्यं ब्रह्म सनातनम्
सत्यं यज्ञः परः प्रोक्तः सत्ये सर्वं प्रतिष्ठितम् ५
आचारानिह सत्यस्य यथावदनुपूर्वशः
लक्षणं च प्रवक्ष्यामि सत्यस्येह यथाक्रमम् ६
प्राप्यते ह यथा सत्यं तच्च श्रोतुं त्वमर्हसि
सत्यं त्रयोदशविधं सर्वलोकेषु भारत ७
सत्यं च समता चैव दमश्चैव न संशयः
अमात्सर्यं क्षमा चैव ह्रीस्तितिक्षानसूयता ८
त्यागो ध्यानमथार्यत्वं धृतिश्च सततं स्थिरा
अहिंसा चैव राजेन्द्र सत्याकारास्त्रयोदश ९
सत्यं नामाव्ययं नित्यमविकारि तथैव च
सर्वधर्माविरुद्धं च योगेनैतदवाप्यते १०
आत्मनीष्टे तथानिष्टे रिपौ च समता तथा
इच्छाद्वेषक्षयं प्राप्य कामक्रोधक्षयं तथा ११
दमो नान्यस्पृहा नित्यं धैर्यं गाम्भीर्यमेव च
अभयं क्रोधशमनं ज्ञानेनैतदवाप्यते १२
अमात्सर्यं बुधाः प्राहुर्दानं धर्मे च संयमम्
अवस्थितेन नित्यं च सत्येनामत्सरी भवेत् १३
अक्षमायाः क्षमायाश्च प्रियाणीहाप्रियाणि च
क्षमते सर्वतः साधुः साध्वाप्नोति च सत्यवान् १४
कल्याणं कुरुते गाढं ह्रीमान्न श्लाघते क्वचित्
प्रशान्तवाङ्मना नित्यं ह्रीस्तु धर्मादवाप्यते १५
धर्मार्थहेतोः क्षमते तितिक्षा क्षान्तिरुच्यते
लोकसंग्रहणार्थं तु सा तु धैर्येण लभ्यते १६
त्यागः स्नेहस्य यस्त्यागो विषयाणां तथैव च
रागद्वेषप्रहीणस्य त्यागो भवति नान्यथा १७
आर्यता नाम भूतानां यः करोति प्रयत्नतः
शुभं कर्म निराकारो वीतरागत्वमेव च १८
धृतिर्नाम सुखे दुःखे यथा नाप्नोति विक्रियाम्
तां भजेत सदा प्राज्ञो य इच्छेद्भूतिमात्मनः १९

सर्वथा क्षमिणा भाव्यं तथा सत्यपरेण च
वीतहर्षभयक्रोधो धृतिमाप्नोति पण्डितः २०
अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा
अनुग्रहश्च दानं च सतां धर्मः सनातनः २१
एते त्रयोदशाकाराः पृथक्सत्यैकलक्षणाः
भजन्ते सत्यमेवेह बृंहयन्ति च भारत २२
नान्तः शक्यो गुणानां हि वक्तुं सत्यस्य भारत
अतः सत्यं प्रशंसन्ति विप्राः सपितृदेवताः २३
नास्ति सत्यात्परो धर्मो नानृतात्पातकं परम्
स्थितिर्हि सत्यं धर्मस्य तस्मात्सत्यं न लोपयेत् २४
उपैति सत्याद्दानं हि तथा यज्ञाः सदक्षिणाः
व्रताग्निहोत्रं वेदाश्च ये चान्ये धर्मनिश्चयाः २५
अश्वमेधसहस्रं च सत्यं च तुलया धृतम्
अश्वमेधसहस्राद्धि सत्यमेवातिरिच्यते २६
इति श्रीमहाभारते शान्तिपर्वणि षट्पञ्चाशदधिकशततमोऽध्यायः १५६

## सप्तपञ्चाशदधिक शततमोऽध्यायः

युधिष्ठिर उवाच
यतः प्रभवति क्रोधः कामश्च भरतर्षभ
शोकमोहौ विवित्सा च परासुत्वं तथा मदः १
लोभो मात्सर्यमीर्ष्या च कुत्सासूया कृपा तथा
एतत्सर्वं महाप्राज्ञ याथातथ्येन मे वद २
भीष्म उवाच
त्रयोदशैतेऽतिबलाः शत्रवः प्राणिनां स्मृताः
उपासते महाराज समस्ताः पुरुषानिह ३
एते प्रमत्तं पुरुषमप्रमत्ता नुदन्ति हि
वृका इव विलुम्पन्ति दृष्ट्वैव पुरुषेतरान् ४
एभ्यः प्रवर्तते दुःखमेभ्यः पापं प्रवर्तते
इति मर्त्यो विजानीयात्सततं भरतर्षभ ५
एतेषामुदयं स्थानं क्षयं च पुरुषोत्तम

हन्त ते वर्तयिष्यामि तन्मे निगदतः शृणु ६
लोभात्क्रोधः प्रभवति परदोषैरुदीर्यते
क्षमया तिष्ठते राजञ्श्रीमांश्च विनिवर्तते ७
संकल्पाज्जायते कामः सेव्यमानो विवर्धते
अवद्यदर्शनाद्व्येति तत्त्वज्ञानाच्च धीमताम् ८
विरुद्धानि हि शास्त्राणि पश्यन्तीहाल्पबुद्धयः
विवित्सा जायते तत्र तत्त्वज्ञानान्निवर्तते ९
प्रीतेः शोकः प्रभवति वियोगात्तस्य देहिनः
यदा निरर्थकं वेत्ति तदा सद्यः प्रणश्यति १०
परासुता क्रोधलोभादभ्यासाच्च प्रवर्तते
दयया सर्वभूतानां निर्वेदात्सा निवर्तते ११
सत्त्वत्यागात्तु मात्सर्यमहितानि च सेवते
एतत्तु क्षीयते तात साधूनामुपसेवनात् १२
कुलाज्ज्ञानात्तथैश्वर्यान्मदो भवति देहिनाम्
एभिरेव तु विज्ञातैर्मदः सद्यः प्रणश्यति १३
ईर्ष्या कामात्प्रभवति संघर्षाच्चैव भारत
इतरेषां तु मर्त्यानां प्रज्ञया सा प्रणश्यति १४
विभ्रमाल्लोकबाह्यानां द्वेष्यैर्वाक्यैरसंगतैः
कुत्सा संजायते राजन्नुपेक्षाभिः प्रशाम्यति १५
प्रतिकर्तुमशक्याय बलस्थायापकारिणे
असूया जायते तीव्रा कारुण्याद्विनिवर्तते १६
कृपणान्सततं दृष्ट्वा ततः संजायते कृपा
धर्मनिष्ठां यदा वेत्ति तदा शाम्यति सा कृपा १७
एतान्येव जितान्याहुः प्रशमाच्च त्रयोदश
एते हि धार्तराष्ट्राणां सर्वे दोषास्त्रयोदश
त्वया सर्वात्मना नित्यं विजिता जेष्यसे च तान् १८
इति श्रीमहाभारते शान्तिपर्वणि सप्तपञ्चाशदधिकशततमोऽध्यायः १५७

अष्टपञ्चाशदधिक शततमोऽध्यायः

युधिष्ठिर उवाच

आनृशंस्यं विजानामि दर्शनेन सतां सदा
नृशंसान्न विजानामि तेषां कर्म च भारत १
कण्टकान्कूपमग्निं च वर्जयन्ति यथा नराः
तथा नृशंसकर्माणं वर्जयन्ति नरा नरम् २
नृशंसो ह्यधमो नित्यं प्रेत्य चेह च भारत
तस्माद्ब्रवीहि कौरव्य तस्य धर्मविनिश्चयम् ३
भीष्म उवाच
स्पृहास्यान्तर्हिता चैव विदितार्था च कर्मणा
आक्रोष्टा क्रुश्यते चैव बन्धिता बध्यते च यः ४
दत्तानुकीर्तिर्विषमः क्षुद्रो नैकृतिकः शठः
असंभोगी च मानी च तथा सङ्गी विकत्थनः ५
सर्वातिशङ्की पुरुषो बालिशः कृपणस्तथा
वर्गप्रशंसी सततमाश्रमद्वेषसंकरी ६
हिंसाविहारी सततमविशेषगुणागुणः
बह्वलीको मनस्वी च लुब्धोऽत्यर्थं नृशंसकृत् ७
धर्मशीलं गुणोपेतं पाप इत्यवगच्छति
आत्मशीलानुमानेन न विश्वसिति कस्यचित् ८
परेषां यत्र दोषः स्यात्तद्गुह्यं संप्रकाशयेत्
समानेष्वेव दोषेषु वृत्त्यर्थमुपघातयेत् ९
तथोपकारिणं चैव मन्यते वञ्चितं परम्
दत्त्वापि च धनं काले संतपत्युपकारिणे १०
भक्ष्यं भोज्यमथो लेह्यं यच्चान्यत्साधु भोजनम्
प्रेक्षमाणेषु योऽश्नीयान्नृशंस इति तं विदुः ११
ब्राह्मणेभ्यः प्रदायाग्रं यः सुहृद्भिः सहाश्नुते
स प्रेत्य लभते स्वर्गमिह चानन्त्यमश्नुते १२
एष ते भरतश्रेष्ठ नृशंसः परिकीर्तितः
सदा विवर्जनीयो वै पुरुषेण बुभूषता १३
इति श्रीमहाभारते शान्तिपर्वणि अष्टपञ्चाशदधिकशततमोऽध्यायः १५८

## एकोनषष्ट्यधिक शततमोऽध्यायः

भीष्म उवाच
कृतार्थो यक्ष्यमाणश्च सर्ववेदान्तगश्च यः
आचार्यपितृभार्यार्थं स्वाध्यायार्थमथापि वा १
एते वै साधवो दृष्टा ब्राह्मणा धर्मभिक्षवः
अस्वेभ्यो देयमेतेभ्यो दानं विद्याविशेषतः २
अन्यत्र दक्षिणा या तु देया भरतसत्तम
अन्येभ्यो हि बहिर्वेद्यां नाकृतान्नं विधीयते ३
सर्वरत्नानि राजा च यथार्हं प्रतिपादयेत्
ब्राह्मणाश्चैव यज्ञाश्च सहान्नाः सहदक्षिणाः ४
यस्य त्रैवार्षिकं भक्तं पर्याप्तं भृत्यवृत्तये
अधिकं वापि विद्येत सा सोमं पातुमर्हति ५
यज्ञश्चेत्प्रतिविद्धः स्यादङ्गेनैकेन यज्वनः
ब्राह्मणस्य विशेषेण धार्मिके सति राजनि ६
यो वैश्यः स्याद्बहुपशुर्हीनक्रतुरसोमपः
कुटुम्बात्तस्य तद्द्रव्यं यज्ञार्थं पार्थिवो हरेत् ७
आहरेद्वेश्मतः किंचित्कामं शूद्रस्य द्रव्यतः
न हि वेश्मानि शूद्रस्य कश्चिदस्ति परिग्रहः ८
योऽनाहिताग्निः शतगुरयज्वा च सहस्रगुः
तयोरपि कुटुम्बाभ्यामाहरेदविचारयन् ९
अदातृभ्यो हरेन्नित्यं व्याख्याप्य नृपतिः प्रभो
तथा ह्याचरतो धर्मो नृपतेः स्यादथाखिलः १०
तथैव सप्तमे भक्ते भक्तानि षडनश्नता
अश्वस्तनविधानेन हर्तव्यं हीनकर्मणः
खलात्क्षेत्रात्तथागाराद्यतो वाप्युपपद्यते ११
आख्यातव्यं नृपस्यैतत्पृच्छतोऽपृच्छतोऽपि वा
न तस्मै धारयेद्दण्डं राजा धर्मेण धर्मवित् १२
क्षत्रियस्य हि बालिश्याद्ब्राह्मणः क्लिश्यते क्षुधा
श्रुतशीले समाज्ञाय वृत्तिमस्य प्रकल्पयेत्
अथैनंपरिरक्षेत पिता पुत्रमिवौरसम् १३

इष्टिं वैश्वानरीं नित्यं निर्वपेदब्दपर्यये
अविकल्पः पुराधर्मो धर्मवादैस्तु केवलम् १४
विश्वैस्तु देवैः साध्यैश्च ब्राह्मणैश्च महर्षिभिः
आपत्सु मरणाद्भीतैर्लिङ्गप्रतिनिधिः कृतः १५
प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते
न सांपरायिकं तस्य दुर्मतेर्विद्यते फलम् १६
न ब्राह्मणान्वेदयेत कश्चिद्राजनि मानवः
अवीर्यो वेदनाद्विद्यात्सुवीर्यो वीर्यवत्तरम् १७
तस्माद्राज्ञा सदा तेजो दुःसहं ब्रह्मवादिनाम्
मन्ता शास्ता विधाता च ब्राह्मणो देव उच्यते
तस्मिन्नाकुशलं ब्रूयान्न शुक्तामीरयोद्गिरम् १८
क्षत्रियो बाहुवीर्येण तरत्यापदमात्मनः
धनेन वैश्यः शूद्रश्च मन्त्रैर्होमैश्च वै द्विजः १९
न वै कन्या न युवतिर्नामन्त्रो न च बालिशः
परिवेष्टाग्निहोत्रस्य भवेन्नासंस्कृतस्तथा
नरके निपतन्त्येते जुह्वानाः स च यस्य तत् २०
प्राजापत्यमदत्त्वाश्वमग्न्याधेयस्य दक्षिणाम्
अनाहिताग्निरिति स प्रोच्यते धर्मदर्शिभिः २१
पुण्यान्यन्यानि कुर्वीत श्रद्दधानो जितेन्द्रियः
अनाप्तदक्षिणैर्यज्ञैर्न यजेत कथंचन २२
प्रजाः पशूंश्च स्वर्गं च हन्ति यज्ञो ह्यदक्षिणः
इन्द्रियाणि यशः कीर्तिमायुश्चास्योपकृन्तति २३
उदक्या ह्यासते ये च ये च केचिदनग्नयः
कुलं चाश्रोत्रियं येषां सर्वे ते शूद्रधर्मिणः २४
उदपानोदके ग्रामे ब्राह्मणो वृषलीपतिः
उषित्वा द्वादश समाः शुद्रकर्मेह गच्छति २५
अनार्यां शयने बिभ्रदुज्झन्बिभ्रच्च यो द्विजाम्
अब्राह्मणो मन्यमानस्तृणेष्वासीत पृष्ठतः
तथा स शुध्यते राजञ्शृणु चात्र वचो मम २६
यदेकरात्रेण करोति पापं कृष्णं वर्णं ब्राह्मणः सेवमानः

स्थानासनाभ्यां विचरन्व्रती संस्त्रिभिर्वर्षैः शमयेदात्मपापम् २७
न नर्मयुक्तं वचनं हिनस्ति न स्त्रीषु राजन्न विवाहकाले
न गुर्वर्थे नात्मनो जीवितार्थे पञ्चानृतान्याहुरपातकानि २८
श्रद्दधानः शुभां विद्यां हीनादपि समाचरेत्
सुवर्णमपि चामेध्यादाददीतेति धारणा २९
स्त्रीरत्नं दुष्कुलाच्चापि विषादप्यमृतं पिबेत्
अदुष्टा हि स्त्रियो रत्नमाप इत्येव धर्मतः ३०
गोब्राह्मणहितार्थं च वर्णानां संकरेषु च
गृह्णीयात्तु धनुर्वैश्यः परित्राणाय चात्मनः ३१
सुरापानं ब्रह्महत्या गुरुतल्पमथापि वा
अनिर्देश्यानि मन्यन्ते प्राणान्तानीति धारणा ३२
सुवर्णहरणं स्तैन्यं विप्रासङ्गश्च पातकम्
विहरन्मद्यपानं चाप्यगम्यागमनं तथा ३३
पतितैः संप्रयोगाच्च ब्राह्मणैर्योनितस्तथा
अचिरेण महाराज तादृशो वै भवत्युत ३४
संवत्सरेण पतति पतितेन सहाचरन्
याजनाध्यापनाद्यौनान्न तु यानासनाशनात् ३५
एतानि च ततोऽन्यानि निर्देश्यानीति धारणा
निर्देश्यकेन विधिना कालेनाव्यसनी भवेत् ३६
अन्नं तिर्यङ्न होतव्यं प्रेतकर्मण्यपातिते
त्रिषु त्वेतेषु पूर्वेषु न कुर्वीत विचारणाम् ३७
अमात्यान्वा गुरून्वापि जह्याद्धर्मेण धार्मिकः
प्रायश्चित्तमकुर्वाणैर्नैतैरर्हति संविदम् ३८
अधर्मकारी धर्मेण तपसा हन्ति किल्बिषम्
ब्रुवन्स्तेन इति स्तेनं तावत्प्राप्नोति किल्बिषम्
अस्तेनं स्तेन इत्युक्त्वा द्विगुणं पापमाप्नुयात् ३९
त्रिभागं ब्रह्महत्यायाः कन्या प्राप्नोति दुष्यती
यस्तु दूषयिता तस्याः शेषं प्राप्नोति किल्बिषम् ४०
ब्राह्मणायावगूर्येह स्पृष्ट्वा गुरुतरं भवेत्
वर्षाणां हि शतं पापः प्रतिष्ठां नाधिगच्छति ४१

सहस्रं त्वेव वर्षाणां निपात्य नरके वसेत्
तस्मान्नैवावगूर्याद्धि नैव जातु निपातयेत् ४२
शोणितं यावतः पांसून्संगृह्णीयाद्द्विजक्षतात्
तावतीः स समा राजन्नरके परिवर्तते ४३
भ्रूणहाहवमध्ये तु शुध्यते शस्त्रपातितः
आत्मानं जुहुयाद्वह्नौ समिद्धे तेन शुध्यति ४४
सुरापो वारुणीमुष्णां पीत्वा पापाद्विमुच्यते
तया स काये निर्दग्धे मृत्युना प्रेत्य शुध्यति
लोकांश्च लभते विप्रो नान्यथा लभते हि सः ४५
गुरुतल्पमधिष्ठाय दुरात्मा पापचेतनः
सूर्मीं ज्वलन्तीमाश्लिष्य मृत्युना स विशुद्ध्यति ४६
अथ वा शिश्नवृषणावादायाञ्जलिना स्वयम्
नैर्ऋतीं दिशमास्थाय निपतेत्स त्वजिह्मगः ४७
ब्राह्मणार्थेऽपि वा प्राणान्संत्यजेत्तेन शुध्यति
अश्वमेधेन वापीष्ट्वा गोमेधेनापि वा पुनः
अग्निष्टोमेन वा सम्यगिह प्रेत्य च पूयते ४८
तथैव द्वादश समाः कपाली ब्रह्महा भवेत्
ब्रह्मचारी चरेद्भैक्षं स्वकर्मोदाहरन्मुनिः ४९
एवं वा तपसा युक्तो ब्रह्महा सवनी भवेत्
एवं वा गर्भमज्ञाता चात्रेयीं योऽभिगच्छति
द्विगुणा ब्रह्महत्या वै आत्रेयीव्यसने भवेत् ५०
सुरापो नियताहारो ब्रह्मचारी क्षमाचरः
ऊर्ध्वं त्रिभ्योऽथ वर्षेभ्यो यजेताग्निष्टुता परम्
ऋषभैकसहस्रं गा दत्त्वा शुभमवाप्नुयात् ५१
वैश्यं हत्वा तु वर्षे द्वे ऋषभैकशताश्च गाः
शूद्रं हत्वाब्दमेवैकमृषभैकादशाश्च गाः ५२
श्वबर्बरखरान्हत्वा शौद्रमेव व्रतं चरेत्
मार्जारचाषमण्डूकान्काकं भासं च मूषकम् ५३
उक्तः पशुसमो धर्मो राजन्प्राणिनिपातनात्
प्रायश्चित्तान्यथान्यानि प्रवक्ष्याम्यनुपूर्वशः ५४

तल्पे चान्यस्य चौर्ये च पृथक्संवत्सरं चरेत्
त्रीणि श्रोत्रियभार्यायां परदारे तु द्वे स्मृते ५५
काले चतुर्थे भुञ्जानो ब्रह्मचारी व्रती भवेत्
स्थानासनाभ्यां विहरेत्त्रिरह्नोऽभ्युदियादपः
एवमेव निराचान्तो यश्चाग्नीनपविध्यति ५६
त्यजत्यकारणे यश्च पितरं मातरं तथा
पतितः स्यात्स कौरव्य तथा धर्मेषु निश्चयः ५७
ग्रासाच्छादनमत्यर्थं दद्यादिति निदर्शनम्
भार्यायां व्यभिचारिण्यां निरुद्धायां विशेषतः
यत्पुंसां परदारेषु तच्चैनां चारयेद्व्रतम् ५८
श्रेयांसं शयने हित्वा या पापीयांसमृच्छति
श्वभिस्तां खादयेद्राजा संस्थाने बहुसंवृते ५९
पुमांसं बन्धयेत्प्राज्ञः शयने तप्त आयसे
अप्यादधीत दारूणि तत्र दह्येत पापकृत् ६०
एष दण्डो महाराज स्त्रीणां भर्तृव्यतिक्रमे
संवत्सराभिशस्तस्य दुष्टस्य द्विगुणो भवेत् ६१
द्वे तस्य त्रीणि वर्षाणि चत्वारि सहसेविनः
कुचरः पञ्च वर्षाणि चरेद्भैक्षं मुनिव्रतः ६२
परिवित्तिः परिवेत्ता यया च परिविद्यते
पाणिग्राहश्च धर्मेण सर्वे ते पतिताः स्मृताः ६३
चरेयुः सर्व एवैते वीरहा यद्व्रतं चरेत्
चान्द्रायणं चरेन्मासं कृच्छ्रं वा पापशुद्धये ६४
परिवेत्ता प्रयच्छेत परिवित्ताय तां स्नुषाम्
ज्येष्ठेन त्वभ्यनुज्ञातो यवीयान्प्रत्यनन्तरम्
एनसो मोक्षमाप्नोति सा च तौ चैव धर्मतः ६५
अमानुषीषु गोवर्जमनावृष्टिर्न दुष्यति
अधिष्ठातारमत्तारं पशूनां पुरुषं विदुः ६६
परिधायोर्ध्ववालं तु पात्रमादाय मृन्मयम्
चरेत्सप्त गृहान्भैक्षं स्वकर्म परिकीर्तयन् ६७
तत्रैव लब्धभोजी स्याद्द्वादशाहात्स शुध्यति

चरेत्संवत्सरं चापि तद्व्रतं यन्निराकृति ६८
भवेत्तु मानुषेष्वेवं प्रायश्चित्तमनुत्तमम्
दातं वादानसक्तेषु सर्वमेव प्रकल्पयेत्
अनास्तिकेषु गोमात्रं प्राणमेकं प्रचक्षते ६९
श्ववराहमनुष्याणां कुक्कुटस्य खरस्य च
मांसं मूत्रपुरीषं च प्राश्य संस्कारमर्हति ७०
ब्राह्मणस्य सुरापस्य गन्धमाघ्राय सोमपः
अपस्त्र्यहं पिबेदुष्णास्त्र्यहमुष्णं पयः पिबेत्
त्र्यहमुष्णं घृतं पीत्वा वायुभक्षो भवेत्र्यहम् ७१
एवमेतत्समुद्दिष्टं प्रायश्चित्तं सनातनम्
ब्राह्मणस्य विशेषेण तत्त्वज्ञानेन जायते ७२
इति श्रीमहाभारते शान्तिपर्वणि एकोनषष्टयधिकशततमोऽध्यायः १५९

## षष्टयधिक शततमोऽध्यायः

वैशम्पायन उवाच
कथान्तरमथासाद्य खड्गयुद्धविशारदः
नकुलः शरतल्पस्थमिदमाह पितामहम् १
धनुः प्रहरणं श्रेष्ठमिति वादः पितामह
मतस्तु मम धर्मज्ञ खड्ग एव सुसंशितः २
विशीर्णे कार्मुके राजन्प्रक्षीणेषु च वाजिषु
खड्गेन शक्यते युद्धे साध्वात्मा परिरक्षितुम् ३
शरासनधरांश्चैव गदाशक्तिधरांस्तथा
एकः खड्गधरो वीरः समर्थः प्रतिबाधितुम् ४
अत्र मे संशयश्चैव कौतूहलमतीव च
किं स्वित्प्रहरणं श्रेष्ठं सर्वयुद्धेषु पार्थिव ५
कथं चोत्पादितः खड्गः कस्यार्थाय च केन वा
पूर्वाचार्यं च खड्गस्य प्रब्रूहि प्रपितामह ६
तस्य तद्वचनं श्रुत्वा माद्रीपुत्रस्य धीमतः
सर्व कौशलसंयुक्तं सूक्ष्मचित्रार्थवच्छुभम् ७
ततस्तस्योत्तरं वाक्यं स्वरवर्णोपपादितम्

शिक्षान्यायोपसंपन्नं द्रोणशिष्याय पृच्छते ८
उवाच सर्वधर्मज्ञो धनुर्वेदस्य पारगः
शरतल्पगतो भीष्मो नकुलाय महात्मने ९
तत्त्वं शृणुष्व माद्रेय यदेतत्परिपृच्छसि
प्रबोधितोऽस्मि भवता धातुमानिव पर्वतः १०
सलिलैकार्णवं तात पुरा सर्वमभूदिदम्
निष्प्रकम्पमनाकाशमनिर्देश्यमहीतलम् ११
तमःसंवृतमस्पर्शमतिगम्भीरदर्शनम्
निःशब्दं चाप्रमेयं च तत्र जज्ञे पितामहः १२
सोऽसृजद्वायुमग्निं च भास्करं चापि वीर्यवान्
आकाशमसृजच्चोर्ध्वमधो भूमिं च नैर्ऋतिम् १३
नभः सचन्द्रतारं च नक्षत्राणि ग्रहांस्तथा
संवत्सरानहोरात्रानृतूनथ लवान्क्षणान् १४
ततः शरीरं लोकस्थं स्थापयित्वा पितामहः
जनयामास भगवान्पुत्रानुत्तमतेजसः १५
मरीचिमृषिमत्रिं च पुलस्त्यं पुलहं क्रतुम्
वसिष्ठाङ्गिरसौ चोभौ रुद्रं च प्रभुमीश्वरम् १६
प्राचेतसस्तथा दक्षः कन्याः षष्टिमजीजनत्
ता वै ब्रह्मर्षयः सर्वाः प्रजार्थं प्रतिपेदिरे १७
ताभ्यो विश्वानि भूतानि देवाः पितृगणास्तथा
गन्धर्वाप्सरसश्चैव रक्षांसि विविधानि च १८
पतत्रिमृगमीनाश्च प्लवंगाश्च महोरगाः
नानाकृतिबलाश्चान्ये जलक्षितिविचारिणः १९
औद्भिदाः स्वेदजाश्चैव अण्डजाश्च जरायुजाः
जज्ञे तात तथा सर्वं जगत्स्थावरजङ्गमम् २०
भूतसर्गमिमं कृत्वा सर्वलोकपितामहः
शाश्वतं वेदपठितं धर्मं च युयुजे पुनः २१
तस्मिन्धर्मे स्थिता देवाः सहाचार्यपुरोहिताः
आदित्यावसवोरुद्राः ससाध्या मरुदश्विनः २२
भृग्वत्र्यङ्गिरसः सिद्धाः काश्यपश्च तपोधनः

वसिष्ठगौतमागस्त्यास्तथा नारदपर्वतौ २३
ऋषयो बालखिल्याश्च प्रभासाः सिकतास्तथा
घृतचाः सोमवायव्या वैखानसमरीचिपाः २४
अकृष्टाश्चैव हंसाश्च ऋषयोऽथाग्नियोनिजाः
वानप्रस्था पृश्नयश्च स्थिता ब्रह्मानुशासने २५
दानवेन्द्रास्त्वतिक्रम्य तत्पितामहशासनम्
धर्मस्यापचयं चक्रुः क्रोधलोभसमन्विताः २६
हिरण्यकशिपुश्चैव हिरण्याक्षो विरोचनः
शम्बरो विप्रचित्तिश्च प्रह्लादो नमुचिर्बलि २७
एते चान्ये च बहवः सगणा दैत्यदानवाः
धर्मसेतुमतिक्रम्य रेमिरेऽधर्मनिश्चयाः २८
सर्वे स्म तुल्यजातीया यथा देवास्तथा वयम्
इत्येवं हेतुमास्थाय स्पर्धमानाः सुरर्षिभिः २९
न प्रियं नाप्यनुक्रोशं चक्रुर्भूतेषु भारत
त्रीनुपायानतिक्रम्य दण्डेन रुरुधुः प्रजाः
न जग्मुः संविदं तैश्च दर्पादसुरसत्तमाः ३०
अथ वै भगवान्ब्रह्मा ब्रह्मर्षिभिरुपस्थितः
तदा हिमवतः पृष्ठे सुरम्ये पद्मतारके ३१
शतयोजनविस्तारे मणिमुक्ताचयाचिते
तस्मिन्गिरिवरे पुत्र पुष्पितद्रुमकानने
तस्थौ स विबुधश्रेष्ठो ब्रह्मा लोकार्थसिद्धये ३२
ततो वर्षसहस्रान्ते वितानमकरोत्प्रभुः
विधिना कल्पदृष्टेन यथोक्तेनोपपादितम् ३३
ऋषिभिर्यज्ञपटुभिर्यथावत्कर्मकर्तृभिः
मरुद्भिः परिसंस्तीर्णं दीप्यमानैश्च पावकैः ३४
काञ्चनैर्यज्ञभाण्डैश्च भ्राजिष्णुभिरलंकृतम्
वृतं देवगणैश्चैव प्रबभौ यज्ञमण्डलम् ३५
तथा ब्रह्मर्षिभिश्चैव सदस्यैरुपशोभितम्
तत्र घोरतमं वृत्तमृषीणां मे परिश्रुतम् ३६
चन्द्रमा विमलं व्योम यथाभ्युदिततारकम्

विदार्याग्निं तथा भूतमुत्थितं श्रूयते ततः ३७
नीलोत्पलसवर्णाभं तीक्ष्णदंष्ट्रं कृशोदरम्
प्रांशु दुर्दर्शनं चैवाप्यतितेजस्तथैव च ३८
तस्मिन्नुत्पतमाने च प्रचचाल वसुंधरा
तत्रोर्मिकलिलावर्तश्चुक्षुभे च महार्णवः ३९
पेतुरुल्का महोत्पाताः शाखाश्च मुमुचुर्द्रुमाः
अप्रसन्ना दिशः सर्वाः पवनश्चाशिवो ववौ
मुहुर्मुहुश्च भूतानि प्राव्यथन्त भयात्तथा ४०
ततः सुतुमुलं दृष्ट्वा तदद्भुतमुपस्थितम्
महर्षिसुरगन्धर्वानुवाचेदं पितामहः ४१
मयैतच्चिन्तितं भूतमसिर्नामैष वीर्यवान्
रक्षणार्थाय लोकस्य वधाय च सुरद्विषाम् ४२
ततस्तद्रूपमुत्सृज्य बभौ निस्त्रिंश एव सः
विमलस्तीक्ष्णधारश्च कालान्तक इवोद्यतः ४३
ततस्तं शितिकण्ठाय रुद्रायार्षभकेतवे
ब्रह्मा ददावसिं दीप्तमधर्मप्रतिवारणम् ४४
ततः स भगवान्रुद्रो ब्रह्मर्षिगणसंस्तुतः
प्रगृह्यासिममेयात्मा रूपमन्यच्चकार ह ४५
चतुर्बाहुः स्पृशन्मूर्ध्ना भूस्थितोऽपि नभस्तलम्
ऊर्ध्वदृष्टिर्महालिङ्गो मुखाज्ज्वालाः समुत्सृजन्
विकुर्वन्बहुधा वर्णान्नीलपाण्डुरलोहितान् ४६
बिभ्रत्कृष्णाजिनं वासो हेमप्रवरतारकम्
नेत्रं चैकं ललाटेन भास्करप्रतिमं महत्
शुशुभाते च विमले द्वे नेत्रे कृष्णपिङ्गले ४७
ततो देवो महादेवः शूलपाणिर्भगाक्षिहा
संप्रगृह्य तु निस्त्रिंशं कालार्कानलसंनिभम् ४८
त्रिकूटं चर्म चोद्यम्य सविद्युतमिवाम्बुदम्
चचार विविधान्मार्गान्महाबलपराक्रमः
विधुन्वन्नसिमाकाशे दानवान्तचिकीर्षया ४९
तस्य नादं विनदतो महाहासं च मुञ्चतः

बभौ प्रतिभयं रूपं तदा रुद्रस्य भारत ५०
तद्रूपधारिणं रुद्रं रौद्रकर्म चिकीर्षवः
निशम्य दानवाः सर्वे हृष्टाः समभिदुद्रुवुः ५१
अश्मभिश्चाप्यवर्षन्त प्रदीप्तैश्च तथोल्मुकैः
घोरैः प्रहरणैश्चान्यैः शितधारैरयोमुखैः ५२
ततस्तद्दानवानीकं संप्रणेतारमच्युतम्
रुद्रखड्गबलोद्धूतं प्रचचाल मुमोह च ५३
चित्रं शीघ्रतरत्वाच्च चरन्तमसिधारिणम्
तमेकमसुराः सर्वे सहस्रमिति मेनिरे ५४
छिन्दन्भिन्दन्रुजन्कृन्तन्दारयन्प्रमथन्नपि
अचरद्दैत्यसंघेषु रुद्रोऽग्निरिव कक्षगः ५५
असिवेगप्ररुग्णास्ते छिन्नबाहूरुवक्षसः
संप्रकृत्तोत्तमाङ्गाश्च पेतुरुर्व्यां महासुराः ५६
अपरे दानवा भग्ना रुद्रघातावपीडिताः
अन्योन्यमभिनर्दन्तो दिशः संप्रतिपेदिरे ५७
भूमिं केचित्प्रविविशुः पर्वतानपरे तथा
अपरे जग्मुराकाशमपरेऽम्भ समाविशन् ५८
तस्मिन्महति संवृत्ते समरे भृशदारुणे
बभौ भूमिः प्रतिभया तदा रुधिरकर्दमा ५९
दानवानां शरीरैश्च महद्भिः शोणितोक्षितैः
समाकीर्णा महाबाहो शैलैरिव सकिंशुकैः ६०
रुधिरेण परिक्लिन्ना प्रबभौ वसुधा तदा
रक्तार्द्रवसना श्यामा नारीव मदविह्वला ६१
स रुद्रो दानवान्हत्वा कृत्वा धर्मोत्तरं जगत्
रौद्रं रूपं विहायाशु चक्रे रूपं शिवं शिवः ६२
ततो महर्षयः सर्वे सर्वे देवगणास्तथा
जयेनाद्भुतकल्पेन देवदेवमथार्चयन् ६३
ततः स भवगान्रुद्रो दानवक्षतजोक्षितम्
असिं धर्मस्य गोप्तारं ददौ सत्कृत्य विष्णवे ६४
विष्णुर्मरीचये प्रादान्मरीचिर्भगवांश्च तम्

महर्षिभ्यो ददौ खड्गमृषयो वासवाय तु ६५
महेन्द्रो लोकपालेभ्यो लोकपालास्तु पुत्रक
मनवे सूर्यपुत्राय ददुः खड्गं सुविस्तरम् ६६
ऊचुश्चैनं तथैवाद्यं मानुषाणां त्वमीश्वरः
असिना धर्मगर्भेण पालयस्व प्रजा इति ६७
धर्मसेतुमतिक्रान्ताः सूक्ष्मस्थूलार्थकारणात्
विभज्य दण्डं रक्ष्याः स्युर्धर्मतो न यदृच्छया ६८
दुर्वाचा निग्रहो दण्डो हिरण्यबहुलस्तथा
व्यङ्गनं च शरीरस्य वधो वानल्पकारणात् ६९
असेरेतानि रूपाणि दुर्वाचादीनि निर्दिशेत्
असेरेव प्रमाणानि परिमाणव्यतिक्रमात् ७०
अधिसृज्याथ पुत्रं स्वं प्रजानामधिपं ततः
मनुः प्रजानां रक्षार्थं क्षुपाय प्रददावसिम् ७१
क्षुपाज्जग्राह चेक्ष्वाकुरिक्ष्वाकोश्च पुरूरवाः
आयुश्च तस्माल्लेभे तं नहुषश्च ततो भुवि ७२
ययातिर्नहुषाच्चापि पूरुस्तस्माच्च लब्धवान्
आमूर्तरयसस्तस्मात्ततो भूमिशयो नृपः ७३
भरतश्चापि दौःषन्तिर्लेभे भूमिशयादसिम्
तस्माच्च लेभे धर्मज्ञो राजन्नैडबिडस्तथा ७४
ततश्चैडबिडाल्लेभे धुन्धुमारो जनेश्वरः
धुन्धुमाराच्च काम्बोजो मुचुकुन्दस्ततोऽलभत् ७५
मुचुकुन्दान्मरुत्तश्च मरुत्तादपि रैवतः
रैवताद्युवनाश्वश्च युवनाश्वात्ततो रघुः ७६
इक्ष्वाकुवंशजस्तस्माद्धरिणाश्वः प्रतापवान्
हरिणाश्वादसिं लेभे शुनकः शुनकादपि ७७
उशीनरो वै धर्मात्मा तस्माद्भोजाः सयादवाः
यदुभ्यश्च शिबिर्लेभे शिबेश्चापि प्रतर्दनः ७८
प्रतर्दनादष्टकश्च रुशदश्वोऽष्टकादपि
रुशदश्वाद्भरद्वाजो द्रोणस्तस्मात्कृपस्ततः
ततस्त्वं भ्रातृभिः सार्धं परमासिमवाप्तवान् ७९

कृत्तिकाश्चास्य नक्षत्रमसेरग्निश्च दैवतम्
रोहिण्यो गोत्रमस्याथ रुद्रश्च गुरुरुत्तमः ८०
असेरष्टौ च नामानि रहस्यानि निबोध मे
पाण्डवेय सदा यानि कीर्तयँल्लभते जयम् ८१
असिर्विशसनः खड्गस्तीक्ष्णवर्त्मा दुरासदः
श्रीगर्भो विजयश्चैव धर्मपालस्तथैव च ८२
अग्र्यः प्रहरणानां च खड्गो माद्रवतीसुत
महेश्वरप्रणीतश्च पुराणो निश्चयं गतः ८३
पृथुस्तूत्पादयामास धनुराद्यमरिंदम
तेनेयं पृथिवी पूर्वं वैन्येन परिरक्षिता ८४
तदेतदार्षं माद्रेय प्रमाणं कर्तुमर्हसि
असेश्च पूजा कर्तव्या सदा युद्धविशारदैः ८५
इत्येष प्रथमः कल्पो व्याख्यातस्ते सुविस्तरः
असेरुत्पत्तिसंसर्गो यथावद्भरतर्षभ ८६
सर्वथैतदिह श्रुत्वा खड्गसाधनमुत्तमम्
लभते पुरुषः कीर्तिं प्रेत्य चानन्त्यमश्नुते ८७
इति श्रीमहाभारते शान्तिपर्वणि षष्ट्यधिकशततमोऽध्यायः १६०

## एक षष्ट्यधिक शततमोऽध्यायः

वैशम्पायन उवाच
इत्युक्तवति भीष्मे तु तूष्णींभूते युधिष्ठिरः
पप्रच्छावसरं गत्वा भ्रातृन्विदुरपञ्चमान् १
धर्मे चार्थे च कामे च लोकवृत्तिः समाहिता
तेषां गरीयान्कतमो मध्यमः को लघुश्च कः २
कस्मिंश्चात्मा नियन्तव्यस्त्रिवर्गविजयाय वै
संतुष्टा नैष्ठिकं वाक्यं यथावद्वक्तुमर्हथ ३
ततोऽथगतितत्त्वज्ञः प्रथमं प्रतिभानवान्
जगाद विदुरो वाक्यं धर्मशास्त्रमनुस्मरन् ४
बाहुश्रुत्यं तपस्त्यागः श्रद्धा यज्ञक्रिया क्षमा
भावशुद्धिर्दया सत्यं संयमश्चात्मसंपदः ५

एतदेवाभिपद्यस्व मा ते भूच्चलितं मनः
एतन्मूलौ हि धर्मार्थावेतदेकपदं हितम् ६
धर्मेणैवर्षयस्तीर्णा धर्मे लोकाः प्रतिष्ठिताः
धर्मेण देवा दिविगा धर्मे चार्थः समाहितः ७
धर्मो राजन्गुणश्रेष्ठो मध्यमो ह्यर्थ उच्यते
कामो यवीयानिति च प्रवदन्ति मनीषिणः
तस्माद्धर्मप्रधानेन भवितव्यं यतात्मना ८
समाप्तवचने तस्मिन्नर्थशास्त्रविशारदः
पार्थो वाक्यार्थतत्त्वज्ञो जगौ वाक्यमतन्द्रितः ९
कर्मभूमिरियं राजन्निह वार्त्ता प्रशस्यते
कृषिवाणिज्यगोरक्ष्यं शिल्पानि विविधानि च १०
अर्थ इत्येव सर्वेषां कर्मणामव्यतिक्रमः
न ऋतेऽर्थेन वर्तेते धर्मकामाविति श्रुतिः ११
विजयी ह्यर्थवान्धर्ममाराधयितुमुत्तमम्
कामं च चरितुं शक्तो दुष्प्रापमकृतात्मभिः १२
अर्थस्यावयवावेतौ धर्मकामाविति श्रुतिः
अर्थसिद्ध्या हि निर्वृत्तावुभावेतौ भविष्यतः १३
तद्भूतार्थं हि पुरुषं विशिष्टतरयोनयः
ब्रह्माणमिव भूतानि सततं पर्युपासते १४
जटाजिनधरा दान्ताः पङ्कदिग्धा जितेन्द्रियाः
मुण्डा निस्तन्तवश्चापि वसन्त्यर्थार्थिनः पृथक् १५
काषायवसनाश्चान्ये श्मश्रुला ह्रीसुसंवृताः
विद्वांसश्चैव शान्ताश्च मुक्ताः सर्वपरिग्रहैः १६
अर्थार्थिनः सन्ति केचिदपरे स्वर्गकाङ्क्षिणः
कुलप्रत्यागमाश्चैके स्वं स्वं मार्गमनुष्ठिताः १७
आस्तिका नास्तिकाश्चैव नियताः संयमे परे
अप्रज्ञानं तमोभूतं प्रज्ञानं तु प्रकाशता १८
भृत्यान्भोगैर्द्विषो दण्डैर्यो योजयति सोऽर्थवान्
एतन्मतिमतां श्रेष्ठ मतं मम यथातथम्
अनयोस्तु निबोध त्वं वचनं वाक्यकण्ठयोः १९

ततो धर्मार्थकुशलौ माद्रीपुत्रावनन्तरम्
नकुलः सहदेवश्च वाक्यं जगदतुः परम् २०
आसीनश्च शयानश्च विचरन्नपि च स्थितः
अर्थयोगं दृढं कुर्याद्योगैरुच्चावचैरपि २१
अस्मिंस्तु वै सुसंवृत्ते दुर्लभे परमप्रिये
इह कामानवाप्नोति प्रत्यक्षं नात्र संशयः २२
योऽथो धर्मेण संयुक्तो धर्मो यश्चार्थसंयुतः
मध्विवामृतसंयुक्तं तस्मादेतौ मताविह २३
अनर्थस्य न कामोऽस्ति तथार्थोऽधर्मिणः कुतः
तस्मादुद्विजते लोको धर्मार्थाद्यो बहिष्कृतः २४
तस्माद्धर्मप्रदानेन साध्योऽथ संयतात्मना
विश्वस्तेषु हि भूतेषु कल्पते सर्व एव हि २५
धर्मं समाचरेत्पूर्वं तथार्थं धर्मसंयुतम्
ततः कामं चरेत्पश्चात्सिद्धार्थस्य हि तत्फलम् २६
विरेमतुस्तु तद्वाक्यमुक्त्वा तावश्विनोः सुतौ
भीमसेनस्तदा वाक्यमिदं वक्तुं प्रचक्रमे २७
नाकामः कामयत्यर्थं नाकामो धर्ममिच्छति
नाकामः कामयानोऽस्ति तस्मात्कामो विशिष्यते २८
कामेन युक्ता ऋषयस्तपस्येव समाहिताः
पलाशफलमूलाशा वायुभक्षाः सुसंयताः २९
वेदोपवादेष्वपरे युक्ताः स्वाध्यायपारगाः
श्राद्धयज्ञक्रियायां च तथा दानप्रतिग्रहे ३०
वणिजः कर्षका गोपाः कारवः शिल्पिनस्तथा
देवकर्मकृतश्चैव युक्ताः कामेन कर्मसु ३१
समुद्रं चाविशन्त्यन्ये नराः कामेन संयुताः
कामो हि विविधाकारः सर्वं कामेन संततम् ३२
नास्ति नासीन्नाभविष्यद्भूतं कामात्मकात्परम्
एतत्सारं महाराज धर्मार्थावत्र संश्रितौ ३३
नवनीतं यथा दध्नस्तथा कामोऽथधर्मतः
श्रेयस्तैलं च पिण्याकाद्घृतं श्रेय उदश्वितः ३४

श्रेयः पुष्पफलं काष्ठात्कामो धर्मार्थयोर्वरः
पुष्पतो मध्विव रसः कामात्संजायते सुखम् ३५
सुचारुवेषाभिरलंकृताभिर्मदोत्कटाभिः प्रियवादिनीभिः
रमस्व योषाभिरुपेत्य कामं कामो हि राजंस्तरसाभिपाती ३६
बुद्धिर्ममैषा परिषत्स्थितस्य मा भूद्विचारस्तव धर्मपुत्र
स्यात्संहितं सद्भिरफल्गुसारं समेत्य वाक्यं परमानृशंस्यम् ३७
धर्मार्थकामाः सममेव सेव्या यस्त्वेकसेवी स नरो जघन्यः
द्वयोस्तु दक्षं प्रवदन्ति मध्यं स उत्तमो यो निरतस्त्रिवर्गे ३८
प्राज्ञः सुहृच्चन्दनसारलिप्तो विचित्रमाल्याभरणैरुपेतः
ततो वचः संग्रहविग्रहेण प्रोक्त्वा यवीयान्विरराम भीमः ३९
ततो मुहूर्तादथ धर्मराजो वाक्यानि तेषामनुचिन्त्य सम्यक्
उवाच वाचावितथं स्मयन्वै बहुश्रुतो धर्मभृतां वरिष्ठः ४०
निःसंशयं निश्चितधर्मशास्त्राः सर्वे भवन्तो विदितप्रमाणाः
विज्ञातुकामस्य ममेह वाक्यमुक्तं यद्वै नैष्ठिकं तच्छ्रुतं मे
इह त्ववश्यं गदतो ममापि वाक्यं निबोधध्वमनन्यभावाः ४१
यो वै न पापे निरतो न पुण्ये नार्थे न धर्मे मनुजो न कामे
विमुक्तदोषः समलोष्टकाञ्चनः स मुच्यते दुःखसुखार्थसिद्धेः ४२
भूतानि जातीमरणान्वितानि जराविकारैश्च समन्वितानि
भूयश्च तैस्तैः प्रतिबोधितानि मोक्षं प्रशंसन्ति न तं च विद्मः ४३
स्नेहे न बद्धस्यन सन्ति तानीत्येवं स्वयंभूर्भगवानुवाच
बुधाश्च निर्वाणपरा वदन्ति तस्मान्न कुर्यात्प्रियमप्रियं च ४४
एतत्प्रधानं न तु कामकारो यथा नियुक्तोऽस्मि तथा चरामि
भूतानि सर्वाणि विधिर्नियुङ्क्ते विधिर्बलीयानिति वित्त सर्वे ४५
न कर्मणाप्नोत्यनवाप्यमर्थं यद्भावि सर्वं भवतीति वित्त
त्रिवर्गहीनोऽपि हि विन्दतेऽथ तस्मादिदं लोकहिताय गुह्यम् ४६
ततस्तदग्र्यं वचनं मनोनुगं समस्तमाज्ञाय ततोऽतिहेतुमत्
तदा प्रणेदुश्च जहर्षिरे च ते कुरुप्रवीराय च चक्रुरञ्जलीन् ४७
सुचारुवर्णाक्षरशब्दभूषितां मनोनुगां निर्धुतवाक्यकण्टकाम्
निशम्य तां पार्थिव पार्थभाषितां गिरं नरेन्द्राः प्रशशंसुरेव ते
पुनश्च पप्रच्छ सरिद्वरासुतं ततः परं धर्ममहीनसत्त्वः ४८

इति श्रीमहाभारते शान्तिपर्वणि एकषष्ट्यधिकशततमोऽध्यायः १६१

द्विषष्ट्यधिक शततमोऽध्यायः

युधिष्ठिर उवाच
पितामह महाप्राज्ञ कुरूणां कीर्तिवर्धन
प्रश्नं कंचित्प्रवक्ष्यामि तन्मे व्याख्यातुमर्हसि १
कीदृशा मानवाः सौम्याः कैः प्रीतिः परमा भवेत्
आयत्यां च तदात्वे च के क्षमास्तान्वदस्व मे २
न हि तत्र धनं स्फीतं न च संबन्धिबान्धवाः
तिष्ठन्ति यत्र सुहृदस्तिष्ठन्तीति मतिर्मम ३
दुर्लभो हि सुहृच्छ्रोता दुर्लभश्च हितः सुहृत्
एतद्धर्मभृतां श्रेष्ठ सर्वं व्याख्यातुमर्हसि ४
भीष्म उवाच
संधेयान्पुरुषान्राजन्नसंधेयांश्च तत्त्वतः
वदतो मे निबोध त्वं निखिलेन युधिष्ठिर ५
लुब्धः क्रूरस्त्यक्तधर्मा निकृतः शठ एव च
क्षुद्रः पापसमाचारः सर्वशङ्की तथालसः ६
दीर्घसूत्रोऽनृजुः कष्टो गुरुदारप्रधर्षकः
व्यसने यः परित्यागी दुरात्मा निरपत्रपः ७
सर्वतः पापदर्शी च नास्तिको वेदनिन्दकः
संप्रकीर्णेन्द्रियो लोके यः कामनिरतश्चरेत् ८
असत्यो लोकविद्विष्टः समये चानवस्थितः
पिशुनोऽथा कृतप्रज्ञोमत्सरी पापनिश्चयः ९
दुःशीलोऽथाकृतात्मा च नृशंसः कितवस्तथा
मित्रैरर्थकृती नित्यमिच्छत्यर्थपरश्च यः १०
वहतश्च यथाशक्ति यो न तुष्यति मन्दधीः
अमित्रमिव यो भुङ्क्ते सदा मित्रं नरर्षभ ११
अस्थानक्रोधनो यश्च अकस्माच्च विरज्यते
सुहृदश्चैव कल्याणानाशु त्यजति किल्बिषी १२
अल्पेऽप्यपकृते मूढस्तथाज्ञानात्कृतेऽपि च

कार्योपसेवी मित्रेषु मित्रद्वेषी नराधिप १३
शत्रुर्मित्रमुखो यश्च जिह्मप्रेक्षी विलोभनः
न रज्यति च कल्याणे यस्त्यजेत्तादृशं नरम् १४
पानपो द्वेषणः क्रूरो निर्घृणः परुषस्तथा
परोपतापी मित्रध्रुक्तथा प्राणिवधे रतः १५
कृतघ्नश्चाधमो लोके न संधेयः कथंचन
छिद्रान्वेषी न संधेयः संधेयानपि मे शृणु १६
कुलीना वाक्यसंपन्ना ज्ञानविज्ञानकोविदाः
मित्रज्ञाश्च कृतज्ञाश्च सर्वज्ञाः शोकवर्जिताः १७
माधुर्यगुणसंपन्नाः सत्यसंधा जितेन्द्रियाः
व्यायामशीलाः सततं भृतपुत्राः कुलोद्गताः १८
रूपवन्तो गुणोपेतास्तथालुब्धा जितश्रमाः
दोषैर्वियुक्ताः प्रथितैस्ते ग्राह्याः पार्थिवेन ह १९
यथाशक्तिसमाचाराः सन्तस्तुष्यन्ति हि प्रभो
नास्थाने क्रोधवन्तश्च न चाकस्माद्विरागिणः २०
विरक्ताश्च न रुष्यन्ति मनसाप्यर्थकोविदाः
आत्मानं पीडयित्वापि सुहृत्कार्यपरायणाः
न विरज्यन्ति मित्रेभ्यो वासो रक्तमिवाविकम् २१
दोषांश्च लोभमोहादीनर्थेषु युवतिष्वथ
न दर्शयन्ति सुहृदां विश्वस्ता बन्धुवत्सलाः २२
लोष्टकाञ्चनतुल्यार्थाः सुहृत्स्वशठबुद्धयः
ये चरन्त्यनभीमाना निसृष्टार्थविभूषणाः
संगृह्णन्तः परिजनं स्वाम्यर्थपरमाः सदा २३
ईदृशैः पुरुषश्रेष्ठैः संधिं यः कुरुते नृपः
तस्य विस्तीर्यते राष्ट्रं ज्योत्स्ना ग्रहपतेरिव २४
शास्त्रनित्या जितक्रोधा बलवन्तो रणप्रियाः
क्षान्ताः शीलगुणोपेताः संधेयाः पुरुषोत्तमाः २५
ये च दोषसमायुक्ता नराः प्रोक्ता मयानघ
तेषामप्यधमो राजन्कृतघ्नो मित्रघातकः
त्यक्तव्यः स दुराचारः सर्वेषामिति निश्चयः २६

युधिष्ठिर उवाच
विस्तरेणार्थसंबन्धं श्रोतुमिच्छामि पार्थिव
मित्रद्रोही कृतघ्नश्च यः प्रोक्तस्तं च मे वद २७
भीष्म उवाच
हन्त ते वर्तयिष्येऽहमितिहासं पुरातनम्
उदीच्यां दिशि यद्वृत्तं म्लेच्छेषु मनुजाधिप २८
ब्राह्मणो मध्यदेशीयः कृष्णाङ्गो ब्रह्मवर्जितः
ग्रामं प्रेक्ष्य जनाकीर्णं प्राविशद्भैक्षकाङ्क्षया २९
तत्र दस्युर्धनयुतः सर्ववर्णविशेषवित्
ब्रह्मण्यः सत्यसंधश्च दाने च निरतोऽभवत् ३०
तस्य क्षयमुपागम्य ततो भिक्षामयाचत
प्रतिश्रयं च वासार्थं भिक्षां चैवाथ वार्षिकीम् ३१
प्रादात्तस्मै स विप्राय वस्त्रं च सदृशं नवम्
नारीं चापि वयोपेतां भर्त्रा विरहितां तदा ३२
एतत्संप्राप्य हृष्टात्मा दस्योः सर्वं द्विजस्तदा
तस्मिन्गृहवरे राजंस्तया रेमे स गौतमः ३३
कुटुम्बार्थेषु दस्योः स साहाय्यं चाप्यथाकरोत्
तत्रावसत्सोऽथ वर्षाः समृद्धे शबरालये
बाणवेध्ये परं यत्नमकरोच्चैव गौतमः ३४
वक्राङ्गांस्तु स नित्यं वै सर्वतो बाणगोचरे
जघान गौतमो राजन्यथा दस्युगणस्तथा ३५
हिंसापरो घृणाहीनः सदा प्राणिवधे रतः
गौतमः संनिकर्षेण दस्युभिः समतामियात् ३६
तथा तु वसतस्तस्य दस्युग्रामे सुखं तदा
अगच्छन्बहवो मासा निघ्नतः पक्षिणो बहून् ३७
ततः कदाचिदपरो द्विजस्तं देशमागमत्
जटी चीराजिनधरः स्वाध्यायपरमः शुचिः ३८
विनीतो नियताहारो ब्रह्मण्यो वेदपारगः
सब्रह्मचारी तद्देश्यः सखा तस्यैव सुप्रियम्
तं दस्युग्राममगमद्यत्रासौ गौतमोऽभवत् ३९

स तु विप्रगृहान्वेषी शूद्रान्नपरिवर्जकः
ग्रामे दस्युजनाकीर्णे व्यचरत्सर्वतोदिशम् ४०
ततः स गौतमगृहं प्रविवेश द्विजोत्तमः
गौतमश्चापि संप्राप्तस्तावन्योन्येन संगतौ ४१
वक्राङ्गभारहस्तं तं धनुष्पाणिं कृतागसम्
रुधिरेणावसिक्ताङ्गं गृहद्वारमुपागतम् ४२
तं दृष्ट्वा पुरुषादाभमपध्वस्तं क्षयागतम्
अभिज्ञाय द्विजो व्रीडामगमद्वाक्यमाह च ४३
किमिदं कुरुषे मौढ्याद्विप्रस्त्वं हि कुलोद्गतः
मध्यदेशपरिज्ञातो दस्युभावं गतः कथम् ४४
पूर्वान्स्मर द्विजाग्र्यांस्तान्प्रख्यातान्वेदपारगान्
येषां वंशेऽभिजातस्त्वमीदृशः कुलपांसनः ४५
अवबुध्यात्मनात्मानं सत्यं शीलं श्रुतं दमम्
अनुक्रोशं च संस्मृत्य त्यज वासमिमं द्विज ४६
एवमुक्तः स सुहृदा तदा तेन हितैषिणा
प्रत्युवाच ततो राजन्विनिश्चित्य तदार्तवत् ४७
अधनोऽस्मि द्विजश्रेष्ठ न च वेदविदप्यहम्
वृत्त्यर्थमिह संप्राप्तं विद्धि मां द्विजसत्तम ४८
त्वद्दर्शनात्तु विप्रर्षे कृतार्थं वेद्म्यहं द्विज
आत्मानं सह यास्यावः श्वो वसाद्येह शर्वरीम् ४९
इति श्रीमहाभारते शान्तिपर्वणि द्विषष्ट्यधिकशततमोऽध्यायः १६२

## त्रिषष्ट्यधिक शततमोऽध्यायः

भीष्म उवाच
तस्यां निशायां व्युष्टायां गते तस्मिन्द्विजोत्तमे
निष्क्रम्य गौतमोऽगच्छत्समुद्रं प्रति भारत १
सामुद्रकान्स वणिजस्ततोऽपश्यत्स्थितान्पथि
स तेन सार्थेन सह प्रययौ सागरं प्रति २
स तु सार्थो महाराज कस्मिंश्चिद्गिरिगह्वरे
मत्तेन द्विरदेनाथ निहतः प्रायशोऽभवत् ३

स कथंचित्ततस्तस्मात्सार्थान्मुक्तो द्विजस्तदा
कांदिग्भूतो जीवितार्थी प्रदुद्रावोत्तरां दिशम् ४
स सर्वतः परिभ्रष्टः सार्थाद्देशात्तथार्थतः
एकाकी व्यद्रवत्तत्र वने किंपुरुषो यथा ५
स पन्थानमथासाद्य समुद्राभिसरं तदा
आससाद वनं रम्यं महत्पुष्पितपादपम् ६
सर्वर्तुकैराम्रवनैः पुष्पितैरुपशोभितम्
नन्दनोद्देशसदृशं यक्षकिंनरसेवितम् ७
शालतालधवाश्वत्थत्वचागुरुवनैस्तथा
चन्दनस्य च मुख्यस्य पादपैरुपशोभितम्
गिरिप्रस्थेषु रम्येषु शुभेषु सुसुगन्धिषु ८
समन्ततो द्विजश्रेष्ठा वल्गु कूजन्ति तत्र वै
मनुष्यवदनास्त्वन्ये भारुण्डा इति विश्रुताः
भूलिङ्गशकुनाश्चान्ये समुद्रं सर्वतोऽभवन् ९
स तान्यतिमनोज्ञानि विहंगाभिरुतानि वै
शृण्वन्सुरमणीयानि विप्रोऽगच्छत गौतमः १०
ततोऽपश्यत्सुरम्ये स सुवर्णसिकताचिते
देशभागे समे चित्रे स्वर्गोद्देशसमप्रभे ११
श्रिया जुष्टं महावृक्षं न्यग्रोधं परिमण्डलम्
शाखाभिरनुरूपाभिर्भूषितं छत्रसंनिभम् १२
तस्य मूलं सुसंसिक्तं वरचन्दनवारिणा
दिव्यपुष्पान्वितं श्रीमत्पितामहसदोपमम् १३
तं दृष्ट्वा गौतमः प्रीतो मुनिकान्तमनुत्तमम्
मेध्यं सुरगृहप्रख्यं पुष्पितैः पादपैर्वृतम्
तमागम्यमुदा युक्तस्तस्याधस्तादुपाविशत् १४
तत्रासीनस्य कौरव्य गौतमस्य सुखः शिवः
पुष्पाणि समुपस्पृश्य प्रववावनिलः शुचिः
ह्लादयन्सर्वगात्राणि गौतमस्य तदा नृप १५
स तु विप्रः परिश्रान्तः स्पृष्टः पुण्येन वायुना
सुखमासाद्य सुष्वाप भास्करश्चास्तमभ्यगात् १६

ततोऽस्त भास्करे याते संध्याकाल उपस्थिते
आजगाम स्वभवनं ब्रह्मलोकात्खगोत्तमः १७
नाडीजङ्घ इति ख्यातो दयितो ब्रह्मणः सखा
बकराजो महाप्राज्ञः कश्यपस्यात्मसंभवः १८
राजधर्मेति विख्यातो बभूवाप्रतिमो भुवि
देवकन्यासुतः श्रीमान्विद्वान्देवपतिप्रभः १९
मृष्टहाटकसंछन्नो भूषणैरर्कसंनिभैः
भूषितः सर्वगात्रेषु देवगर्भः श्रिया ज्वलन् २०
तमागतं द्विजं दृष्ट्वा विस्मितो गौतमोऽभवत्
क्षुत्पिपासापरीतात्मा हिंसार्थी चाप्यवैक्षत २१
राजधर्मोवाच
स्वागतं भवते विप्र दिष्ट्या प्राप्तोऽसि मे गृहम्
अस्तं च सविता यातः संध्येयं समुपस्थिता २२
मम त्वं निलयं प्राप्तः प्रियातिथिरनिन्दितः
पूजितो यास्यसि प्रातर्विधिदृष्टेन कर्मणा २३
इति श्रीमहाभारते शान्तिपर्वणि त्रिषष्ट्यधिकशततमोऽध्यायः १६३

## चतुःषष्ट्यधिक शततमोऽध्यायः

भीष्म उवाच
गिरं तां मधुरां श्रुत्वा गौतमो विस्मितस्तदा
कौतूहलान्वितो राजन्राजधर्माणमैक्षत १
राजधर्मोवाच
भोः कश्यपस्य पुत्रोऽह माता दाक्षायणी च मे
अतिथिस्त्वं गुणोपेतः स्वागतं ते द्विजर्षभ २
भीष्म उवाच
तस्मै दत्त्वा स सत्कारं विधिदृष्टेन कर्मणा
शालपुष्पमयीं दिव्यां बृसीं समुपकल्पयत् ३
भगीरथरथाक्रान्तान्देशान्गङ्गानिषेवितान्
ये चरन्ति महामीनास्तांश्च तस्यान्वकल्पयत् ४
वह्निं चापि सुसंदीप्तं मीनांश्चैव सुपीवरान्

स गौतमायातिथये न्यवेदयत काश्यपः ५
भुक्तवन्तं च तं विप्रं प्रीतात्मानं महामनाः
क्लमापनयनार्थं स पक्षाभ्यामभ्यवीजयत् ६
ततो विश्रान्तमासीनं गोत्रप्रश्नमपृच्छत
सोऽब्रवीद्गौतमोऽस्मीति ब्राह्म नान्यदुदाहरत् ७
तस्मै पर्णमयं दिव्यं दिव्यपुष्पाधिवासितम्
गन्धाढ्यं शयनं प्रादात्स शिश्ये तत्र वै सुखम् ८
अथोपविष्टं शयने गौतमं बकराट् तदा
पप्रच्छ काश्यपो वाग्मी किमागमनकारणम् ९
ततोऽब्रवीद्गौतमस्तं दरिद्रोऽहं महामते
समुद्रगमनाकाङ्क्षी द्रव्यार्थमिति भारत १०
तं काश्यपोऽब्रवीत्प्रीतो नोत्कण्ठां कर्तुमर्हसि
कृतकार्यो द्विजश्रेष्ठ सद्रव्यो यास्यसे गृहान् ११
चतुर्विधा ह्यर्थगतिर्बृहस्पतिमतं यथा
पारंपर्यं तथा दैवं कर्म मित्रमिति प्रभो १२
प्रादुर्भूतोऽस्मि ते मित्रं सुहृत्त्वं च मम त्वयि
सोऽहं तथा यतिष्यामि भविष्यसि यथार्थवान् १३
ततः प्रभातसमये सुखं पृष्ट्वाब्रवीदिदम्
गच्छ सौम्य पथानेन कृतकृत्यो भविष्यसि १४
इतस्त्रियोजनं गत्वा राक्षसाधिपतिर्महान्
विरूपाक्ष इति ख्यातः सखा मम महाबलः १५
तं गच्छ द्विजमुख्यं त्वं मम वाक्यप्रचोदितः
कामानभीप्सितांस्तुभ्यं दाता नास्त्यत्र संशयः १६
इत्युक्तः प्रययौ राजन्गौतमो विगतक्लमः
फलान्यमृतकल्पानि भक्षयन्स्म यथेष्टतः १७
चन्दनागुरुमुख्यानि त्वक्पत्राणां वनानि च
तस्मिन्पथि महाराज सेवमानो द्रुतं ययौ १८
ततो मेरुव्रजं नाम नगरं शैलतोरणम्
शैलप्राकारवप्रं च शैलयन्त्रार्गलं तथा १९
विदितश्चाभवत्तस्य राक्षसेन्द्रस्य धीमतः

प्रहितः सुहृदा राजन्प्रीयता वै प्रियातिथिः २०
ततः स रात्तसेन्द्रः स्वान्प्रेष्यानाह युधिष्ठिर
गौतमो नगरद्वाराच्छीघ्रमानीयतामिति २१
ततः पुरवरात्तस्मात्पुरुषाः श्वेतवेष्टनाः
गौतमेत्यभिभाषन्तः पुरद्वारमुपागमन् २२
ते तमूचुर्महाराज प्रेष्या रत्तःपतेर्द्विजम्
त्वरस्व तूर्णमागच्छ राजा त्वां द्रष्टुमिच्छति २३
रात्तसाधिपतिर्वीरो विरूपात्त इति श्रुतः
स त्वां त्वरति वै द्रष्टुं तत्त्तिप्रं संविधीयताम् २४
ततः स प्राद्रवद्विप्रो विस्मयाद्विगतक्लमः
गौतमो नगरर्द्धिं तां पश्यन्परमविस्मितः २५
तैरेव सहितो राज्ञो वेश्म तूर्णमुपाद्रवत्
दर्शनं रात्तसेन्द्रस्य काङ्क्षमाणो द्विजस्तदा २६
इति श्रीमहाभारते शान्तिपर्वणि चतुःषष्ट्यधिकशततमोऽध्यायः १६४

पञ्चषष्ट्यधिक शततमोऽध्यायः

भीष्म उवाच
ततः स विदितो राज्ञः प्रविश्य गृहमुत्तमम्
पूजितो रात्तसेन्द्रेण निषसादासनोत्तमे १
पृष्टश्च गोत्रचरणं स्वाध्यायं ब्रह्मचारिकम्
न तत्र व्याजहारान्यद्गोत्रमात्रादृते द्विजः २
ब्रह्मवर्चसहीनस्य स्वाध्यायविरतस्य च
गोत्रमात्रविदो राजा निवासं समपृच्छत ३
क्व ते निवासः कल्याण किंगोत्रा ब्राह्मणी च ते
तत्त्वं ब्रूहि न भीः कार्या विश्रमस्व यथासुखम् ४
गौतम उवाच
मध्यदेशप्रसूतोऽह वासो मे शबरालये
शूद्रा पुनर्भूर्भार्या मे सत्यमेतद्ब्रवीमि ते ५
भीष्म उवाच
ततो राजा विममृशे कथं कार्यमिदं भवेत्

कथं वा सुकृतं मे स्यादिति बुद्ध्यान्वचिन्तयत् ६
अयं वै जननाद्विप्रः सुहृत्तस्य महात्मनः
संप्रेषितश्च तेनायं काश्यपेन ममान्तिकम् ७
तस्य प्रियं करिष्यामि स हि मामाश्रितः सदा
भ्राता मे बान्धवश्चासौ सखा च हृदयंगमः ८
कार्त्तिक्यामद्य भोक्तारः सहस्रं मे द्विजोत्तमाः
तत्रायमपि भोक्ता वै देयमस्मै च मे धनम् ९
ततः सहस्रं विप्राणां विदुषां समलंकृतम्
स्नातानामनुसंप्राप्तमहतक्षौमवाससाम् १०
तानागतान्द्विजश्रेष्ठान्विरूपाक्षो विशां पते
यथार्हं प्रतिजग्राह विधिदृष्टेन कर्मणा ११
बृस्यस्तेषां तु संन्यस्ता राक्षसेन्द्रस्य शासनात्
भूमौ वरकुथास्तीर्णाः प्रेष्यैर्भरतसत्तम १२
तासु ते पूजिता राज्ञा निषण्णा द्विजसत्तमाः
व्यराजन्त महाराज नक्षत्रपतयो यथा १३
ततो जाम्बूनदाः पात्रीर्वज्राङ्का विमलाः शुभाः
वरान्नपूर्णा विप्रेभ्यः प्रादान्मधुघृताप्लुताः १४
तस्य नित्यं तथाषाढ्यां माघ्यां च बहवो द्विजाः
ईप्सितं भोजनवरं लभन्ते सत्कृतं सदा १५
विशेषतस्तु कार्त्तिक्यां द्विजेभ्यः संप्रयच्छति
शरद्व्यपाये रत्नानि पौर्णमास्यामिति श्रुतिः १६
सुवर्णं रजतं चैव मणीनथ च मौक्तिकम्
वज्रान्महाधनांश्चैव वैडूर्याजिनराङ्कवान् १७
रत्नराशीन्विनिक्षिप्य दक्षिणार्थे स भारत
ततः प्राह द्विजश्रेष्ठान्विरूपाक्षो महायशाः १८
गृह्णीत रत्नान्येतानि यथोत्साहं यथेष्टतः
येषु येषु च भाण्डेषु भुक्तं वो द्विजसत्तमाः
तान्येवादाय गच्छध्वं स्ववेश्मानीति भारत १९
इत्युक्तवचने तस्मिन्राक्षसेन्द्रे महात्मनि
यथेष्टं तानि रत्नानि जगृहुर्ब्राह्मणर्षभाः २०

ततो महार्हैस्ते सर्वे रत्नैरभ्यर्चिताः शुभैः
ब्राह्मणा मृष्टवसनाः सुप्रीताः स्म तदाभवन् २१
ततस्तान्राक्षसेन्द्रश्च द्विजानाह पुनर्वचः
नानादिगागतान्राजन्राक्षसान्प्रतिषिध्य वै २२
अद्यैकदिवसं विप्रा न वोऽस्तीह भयं क्वचित्
राक्षसेभ्यः प्रमोदध्वमिष्टतो यात माचिरम् २३
ततः प्रदुद्रुवुः सर्वे विप्रसंघाः समन्ततः
गौतमोऽपि सुवर्णस्य भारमादाय सत्वरः २४
कृच्छ्रात्समुद्वहन्वीर न्यग्रोधं समुपागमत्
न्यषीदच्च परिश्रान्तः क्लान्तश्च क्षुधितश्च ह २५
ततस्तमभ्यगाद्राजन्राजधर्मा खगोत्तमः
स्वागतेनाभ्यनन्दच्च गौतमं मित्रवत्सलः २६
तस्य पक्षाग्रविक्षेपैः क्लमं व्यपनयत्खगः
पूजां चाप्यकरोद्धीमान्भोजनं चाप्यकल्पयत् २७
स भुक्तवान्सुविश्रान्तो गौतमोऽचिन्तयत्तदा
हाटकस्याभिरूपस्य भारोऽय सुमहान्मया
गृहीतो लोभमोहाद्वै दूरं च गमनं मम २८
न चास्ति पथि भोक्तव्यं प्राणसंधारणं मम
किं कृत्वा धारयेयं वै प्राणानित्यभ्यचिन्तयत् २९
ततः स पथि भोक्तव्यं प्रेक्षमाणो न किंचन
कृतघ्नः पुरुषव्याघ्र मनसेदमचिन्तयत् ३०
अयं बकपतिः पार्श्वे मांसराशिः स्थितो मम
इमं हत्वा गृहीत्वा च यास्येऽह समभिद्रुतम् ३१
इति श्रीमहाभारते शान्तिपर्वणि पञ्चषष्ट्यधिकशततमोऽध्यायः १६५

## षट्षष्ट्यधिक शततमोऽध्यायः

भीष्म उवाच
अथ तत्र महार्चिष्माननलो वातसारथिः
तस्याविदूरे रक्षार्थं खगेन्द्रेण कृतोऽभवत् १
स चापि पार्श्वे सुष्वाप विश्वस्तो बकराट् तदा

कृतघ्नस्तु स दुष्टात्मा तं जिघांसुरजागरत् २
ततोऽलातेन दीप्तेन विश्वस्तं निजघान तम्
निहत्य च मुदा युक्तः सोऽनुबन्धं न दृष्टवान् ३
स तं विपक्षरोमाणं कृत्वाग्नावपचत्तदा
तं गृहीत्वा सुवर्णं च ययौ द्रुततरं द्विजः ४
ततोऽन्यस्मिन्गते चाह्नि विरूपाक्षोऽब्रवीत्सुतम्
न प्रेक्षे राजधर्माणमद्य पुत्र खगोत्तमम् ५
स पूर्वसंध्यां ब्रह्माणं वन्दितुं याति सर्वदा
मां चादृष्ट्वा कदाचित्स न गच्छति गृहान्खगः ६
उभे द्विरात्रं सन्ध्ये वै नाभ्यगात्स ममालयम्
तस्मान्न शुध्यते भावो मम स ज्ञायतां सुहृत् ७
स्वाध्यायेन वियुक्तो हि ब्रह्मवर्चसवर्जितः
तं गतस्तत्र मे शङ्का हन्यात्तं स द्विजाधमः ८
दुराचारस्तु दुर्बुद्धिरिङ्गितैर्लक्षितो मया
निष्क्रियो दारुणाकारः कृष्णो दस्युरिवाधमः ९
गौतमः स गतस्तत्र तेनोद्विग्नं मनो मम
पुत्र शीघ्रमितो गत्वा राजधर्मनिवेशनम्
ज्ञायतां स विशुद्धात्मा यदि जीवति माचिरम् १०
स एवमुक्तस्त्वरितो रक्षोभिः सहितो ययौ
न्यग्रोधं तत्र चापश्यत्कङ्कालं राजधर्मणः ११
स रुदन्नगमत्पुत्रो राक्षसेन्द्रस्य धीमतः
त्वरमाणः परं शक्त्या गौतमग्रहणाय वै १२
ततोऽविदूरे जगृहुर्गौतमं राक्षसास्तदा
राजधर्मशरीरं च पक्षास्थिचरणोज्झितम् १३
तमादायाथ रक्षांसि द्रुतं मेरुव्रजं ययुः
राज्ञश्च दर्शयामासुः शरीरं राजधर्मणः
कृतघ्नं पुरुषं तं च गौतमं पापचेतसम् १४
रुरोद राजा तं दृष्ट्वा सामात्यः सपुरोहितः
आर्तनादश्च सुमहानभूत्तस्य निवेशने १५
सस्त्रीकुमारं च पुरं बभूवास्वस्थमानसम्

अथाब्रवीन्नृपः पुत्रं पापोऽय वध्यतामिति १६
अस्य मांसैरिमे सर्वे विहरन्तु यथेष्टतः
पापाचारः पापकर्मा पापात्मा पापनिश्चयः
हन्तव्योऽय मम मतिर्भवद्भिरिति राक्षसाः १७
इत्युक्ता राक्षसेन्द्रेण राक्षसा घोरविक्रमाः
नैच्छन्त तं भक्षयितुं पापकर्मायमित्युत १८
दस्यूनां दीयतामेष साध्वद्य पुरुषाधमः
इत्यूचुस्तं महाराज राक्षसेन्द्रं निशाचराः १९
शिरोभिश्च गता भूमिमूचू रक्षोगणाधिपम्
न दातुमर्हसि त्वं नो भक्षणायास्य किल्बिषम् २०
एवमस्त्विति तानाह राक्षसेन्द्रो निशाचरान्
दस्यूनां दीयतामेष कृतघ्नोऽद्यैव राक्षसाः २१
इत्युक्ते तस्य ते दासाः शूलमुद्गरपाणयः
छित्त्वा तं खण्डशः पापं दस्युभ्यः प्रददुस्तदा २२
दस्यवश्चापि नैच्छन्त तमत्तुं पापकारिणम्
क्रव्यादा अपि राजेन्द्र कृतघ्नं नोपभुञ्जते २३
ब्रह्मघ्ने च सुरापे च चोर भग्नव्रते तथा
निष्कृतिर्विहिता राजन्कृतघ्ने नास्ति निष्कृतिः २४
मित्रद्रोही नृशंसश्च कृतघ्नश्च नराधमः
क्रव्यादैः कृमिभिश्चान्यैर्न भुज्यन्ते हि तादृशाः २५

इति श्रीमहाभारते शान्तिपर्वणि षट्षष्ट्यधिकशततमोऽध्यायः १६६

## सप्तषष्ट्यधिक शततमोऽध्यायः

भीष्म उवाच
ततश्चितां बकपतेः कारयामास राक्षसः
रत्नैर्गन्धैश्च बहुभिर्वस्त्रैश्च समलंकृताम् १
तत्र प्रज्वाल्य नृपते बकराजं प्रतापवान्
प्रेतकार्याणि विधिवद्राक्षसेन्द्रश्चकार ह २
तस्मिन्कालेऽथ सुरभिर्देवी दाक्षायणी शुभा
उपरिष्टात्ततस्तस्य सा बभूव पयस्विनी ३

तस्या वक्त्राच्च्युतः फेनः क्षीरमिश्रस्तदानघ
सोऽपतद्वै ततस्तस्यां चितायां राजधर्मणः ४
ततः संजीवितस्तेन बकराजस्तदानघ
उत्पत्य च समेयाय विरूपाक्षं बकाधिपः ५
ततोऽभ्ययाद्देवराजो विरूपाक्षपुरं तदा
प्राह चेदं विरूपाक्षं दिष्ट्यायं जीवतीत्युत ६
श्रावयामास चेन्द्रस्तं विरूपाक्षं पुरातनम्
यथा शापः पुरा दत्तो ब्रह्मणा राजधर्मणः ७
यदा बकपती राजन्ब्रह्माणं नोपसर्पति
ततो रोषादिदं प्राह बकेन्द्राय पितामहः ८
यस्मान्मूढो मम सदो नागतोऽसौ बकाधमः
तस्माद्वधं स दुष्टात्मा नचिरात्समवाप्स्यति ९
तदायं तस्य वचनान्निहतो गौतमेन वै
तेनैवामृतसिक्तश्च पुनः संजीवितो बकः १०
राजधर्मा ततः प्राह प्रणिपत्य पुरंदरम्
यदि तेऽनुग्रहकृता मयि बुद्धिः पुरंदर
सखायं मे सुदयितं गौतमं जीवयेत्युत ११
तस्य वाक्यं समाज्ञाय वासवः पुरुषर्षभ
संजीवयित्वा सख्ये वै प्रादात्तं गौतमं तदा १२
सभाण्डोपस्करं राजंस्तमासाद्य बकाधिपः
संपरिष्वज्य सुहृदं प्रीत्या परमया युतः १३
अथ तं पापकर्माणं राजधर्मा बकाधिपः
विसर्जयित्वा सधनं प्रविवेश स्वमालयम् १४
यथोचितं च स बको ययौ ब्रह्मसदस्तदा
ब्रह्मा च तं महात्मानमातिथ्येनाभ्यपूजयत् १५
गौतमश्चापि संप्राप्य पुनस्तं शबरालयम्
शूद्रायां जनयामास पुत्रान्दुष्कृतकारिणः १६
शापश्च सुमहांस्तस्य दत्तः सुरगणैस्तदा
कुक्षौ पुनर्भ्वां भार्यायां जनयित्वा चिरात्सुतान्
निरयं प्राप्स्यति महत्कृतघ्नोऽयमिति प्रभो १७

एतत्प्राह पुरा सर्वं नारदो मम भारत
संस्मृत्य चापि सुमहदाख्यानं पुरुषर्षभ
मयापि भवते सर्वं यथावदुपवर्णितम् १८
कुतः कृतघ्नस्य यशः कुतः स्थानं कुतः सुखम्
अश्रद्धेयः कृतघ्नो हि कृतघ्ने नास्ति निष्कृतिः १९
मित्रद्रोहो न कर्तव्यः पुरुषेण विशेषतः
मित्रध्रुङ्निरयं घोरमनन्तं प्रतिपद्यते २०
कृतज्ञेन सदा भाव्यं मित्रकामेन चानघ
मित्रात्प्रभवते सत्यं मित्रात्प्रभवते बलम्
सत्कारैरुत्तमैर्मित्रं पूजयेत विचक्षणः २१
परित्याज्यो बुधैः पापः कृतघ्नो निरपत्रपः
मित्रद्रोही कुलाङ्गारः पापकर्मा नराधमः २२
एष धर्मभृतां श्रेष्ठ प्रोक्तः पापो मया तव
मित्रद्रोही कृतघ्नो वै किं भूयः श्रोतुमिच्छसि २३
वैशम्पायन उवाच
एतच्छ्रुत्वा तदा वाक्यं भीष्मेणोक्तं महात्मना
युधिष्ठिरः प्रीतमना बभूव जनमेजय २४
इति श्रीमहाभारते शान्तिपर्वणि सप्तषष्ट्यधिकशततमोऽध्यायः १६७
समाप्तमापद्धर्मपर्व

## मोक्षधर्मपर्व

### अष्टषष्ट्यधिकशततमोऽध्यायः

युधिष्ठिर उवाच
धर्माः पितामहेनोक्ता राजधर्माश्रिताः शुभाः
धर्ममाश्रमिणां श्रेष्ठं वक्तुमर्हसि पार्थिव १
भीष्म उवाच
सर्वत्र विहितो धर्मः स्वर्ग्यः सत्यफलं तपः
बहुद्वारस्य धर्मस्य नेहास्ति विफला क्रिया २
यस्मिन्यस्मिंस्तु विनये यो यो याति विनिश्चयम्
स तमेवाभिजानाति नान्यं भरतसत्तम ३

यथा यथा च पर्येति लोकतन्त्रमसारवत्
तथा तथा विरागोऽत्र जायते नात्र संशयः ४
एवं व्यवसिते लोके बहुदोषे युधिष्ठिर
आत्ममोक्षनिमित्तं वै यतेत मतिमान्नरः ५
युधिष्ठिर उवाच
नष्टे धने वा दारे वा पुत्रे पितरि वा मृते
यया बुद्ध्या नुदेच्छोकं तन्मे ब्रूहि पितामह ६
भीष्म उवाच
नष्टे धने वा दारे वा पुत्रे पितरि वा मृते
अहो दुःखमिति ध्यायञ्शोकस्यापचितिं चरेत् ७
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
यथा सेनजितं विप्रः कश्चिदित्यब्रवीद्वचः ८
पुत्रशोकाभिसंतप्तं राजानं शोकविह्वलम्
विषण्णवदनं दृष्ट्वा विप्रो वचनमब्रवीत् ९
किं नु खल्वसि मूढस्त्वं शोच्यः किमनुशोचसि
यदा त्वामपि शोचन्तः शोच्या यास्यन्ति तां गतिम् १०
त्वं चैवाहं च ये चान्ये त्वां राजन्पर्युपासते
सर्वे तत्र गमिष्यामो यत एवागता वयम् ११
सेनजिदुवाच
का बुद्धिः किं तपो विप्र कः समाधिस्तपोधन
किं ज्ञानं किं श्रुतं वा ते यत्प्राप्य न विषीदसि १२
ब्राह्मण उवाच
पश्य भूतानि दुःखेन व्यतिषिक्तानि सर्वशः
आत्मापि चायं न मम सर्वा वा पृथिवी मम १३
यथा मम तथान्येषामिति बुद्ध्या न मे व्यथा
एतां बुद्धिमहं प्राप्य न प्रहृष्ये न च व्यथे १४
यथा काष्ठं च काष्ठं च समेयातां महोदधौ
समेत्य च व्यपेयातां तद्वद्भूतसमागमः १५
एवं पुत्राश्च पौत्राश्च ज्ञातयो बान्धवास्तथा
तेषु स्नेहो न कर्तव्यो विप्रयोगो हि तैर्ध्रुवम् १६

अदर्शनादापतितः पुनश्चादर्शनं गतः
न त्वासौ वेद न त्वं तं कः सन्कमनुशोचसि १७
तृष्णार्तिप्रभवं दुःखं दुःखार्तिप्रभवं सुखम्
सुखात्संजायते दुःखमेवमेतत्पुनः पुनः
सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् १८
सुखात्त्वं दुःखमापन्नः पुनरापत्स्यसे सुखम्
न नित्यं लभते दुःखं न नित्यं लभते सुखम् १९
नालं सुखाय सुहृदो नालं दुःखाय शत्रवः
न च प्रज्ञालमर्थानां न सुखानामलं धनम् २०
न बुद्धिर्धनलाभाय न जाड्यमसमृद्धये
लोकपर्यायवृत्तान्तं प्राज्ञो जानाति नेतरः २१
बुद्धिमन्तं च मूढं च शूरं भीरुं जडं कविम्
दुर्बलं बलवन्तं च भागिनं भजते सुखम् २२
धेनुर्वत्सस्य गोपस्य स्वामिनस्तस्करस्य च
पयः पिबति यस्तस्या धेनुस्तस्येति निश्चयः २३
ये च मूढतमा लोके ये च बुद्धेः परं गताः
ते नराः सुखमेधन्ते क्लिश्यत्यन्तरितो जनः २४
अन्त्येषु रेमिरे धीरा न ते मध्येषु रेमिरे
अन्त्यप्राप्तिं सुखामाहुर्दुःखमन्तरमन्तयोः २५
ये तु बुद्धिसुखं प्राप्ता द्वंद्वातीता विमत्सराः
तान्नैवार्था न चानर्था व्यथयन्ति कदाचन २६
अथ ये बुद्धिमप्राप्ता व्यतिक्रान्ताश्च मूढताम्
तेऽतिवेलं प्रहृष्यन्ति संतापमुपयान्ति च २७
नित्यप्रमुदिता मूढा दिवि देवगणा इव
अवलेपेन महता परिदृब्धा विचेतसः २८
सुखं दुःखान्तमालस्यं दुःखं दाक्ष्यं सुखोदयम्
भूतिश्चैव श्रिया सार्धं दक्षे वसति नालसे २९
सुखं वा यदि वा दुःखं द्वेष्यं वा यदि वा प्रियम्
प्राप्तं प्राप्तमुपासीत हृदयेनापराजितः ३०
शोकस्थानसहस्राणि हर्षस्थानशतानि च

दिवसे दिवसे मूढमाविशन्ति न पण्डितम् ३१
बुद्धिमन्तं कृतप्रज्ञं शुश्रूषुमनसूयकम्
दान्तं जितेन्द्रियं चापि शोको न स्पृशते नरम् ३२
एतां बुद्धिं समास्थाय गुप्तचित्तश्चरेद्बुधः
उदयास्तमयज्ञं हि न शोकः स्प्रष्टुमर्हति ३३
यन्निमित्तं भवेच्छोकस्त्रासो वा दुःखमेव वा
आयासो वा यतोमूलस्तदेकाङ्गमपि त्यजेत् ३४
यद्यत्त्यजति कामानां तत्सुखस्याभिपूर्यते
कामानुसारी पुरुषः कामाननु विनश्यति ३५
यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम्
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ३६
पूर्वदेहकृतं कर्म शुभं वा यदि वाशुभम्
प्राज्ञं मूढं तथा शूरं भजते यादृशं कृतम् ३७
एवमेव किलैतानि प्रियाण्येवाप्रियाणि च
जीवेषु परिवर्तन्ते दुःखानि च सुखानि च ३८
तदेवं बुद्धिमास्थाय सुखं जीवेद्गुणान्वितः
सर्वान्कामाञ्जुगुप्सेत सङ्गान्कुर्वीत पृष्ठतः
वृत्त एष हृदि प्रौढो मृत्युरेष मनोमयः ३९
यदा संहरते कामान्कूर्मोऽङ्गानीव सर्वशः
तदात्मज्योतिरात्मा च आत्मन्येव प्रसीदति ४०
किंचिदेव ममत्वेन यदा भवति कल्पितम्
तदेव परितापार्थं सर्वं संपद्यते तदा ४१
न बिभेति यदा चायं यदा चास्मान्न बिभ्यति
यदा नेच्छति न द्वेष्टि ब्रह्म संपद्यते तदा ४२
उभे सत्यानृते त्यक्त्वा शोकानन्दौ भयाभये
प्रियाप्रिये परित्यज्य प्रशान्तात्मा भविष्यसि ४३
यदा न कुरुते धीरः सर्वभूतेषु पापकम्
कर्मणा मनसा वाचा ब्रह्म संपद्यते तदा ४४
या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः
योऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखम् ४५

अत्र पिङ्गलया गीता गाथाः श्रूयन्ति पार्थिव
यथा सा कृच्छ्रकालेऽपि लेभे धर्मं सनातनम् ४६
संकेते पिङ्गला वेश्या कान्तेनासीद्विनाकृता
अथ कृच्छ्रगता शान्तां बुद्धिमास्थापयत्तदा ४७
पिङ्गलोवाच
उन्मत्ताहमनुन्मत्तं कान्तमन्ववसं चिरम्
अन्तिके रमणं सन्तं नैनमध्यगमं पुरा ४८
एकस्थूणं नवद्वारमपिधास्याम्यगारकम्
का हि कान्तमिहायान्तमयं कान्तेति मंस्यते ४९
अकामाः कामरूपेण धूर्ता नरकरूपिणः
न पुनर्वञ्चयिष्यन्ति प्रतिबुद्धास्मि जागृमि ५०
अनर्थोऽपि भवत्यर्थो दैवात्पूर्वकृतेन वा
संबुद्धाहं निराकारा नाहमद्याजितेन्द्रिया ५१
सुखं निराशः स्वपिति नैराश्यं परमं सुखम्
आशामनाशां कृत्वा हि सुखं स्वपिति पिङ्गला ५२
भीष्म उवाच
एतैश्चान्यैश्च विप्रस्य हेतुमद्भिः प्रभाषितैः
पर्यवस्थापितो राजा सेनजिन्मुमुदे सुखम् ५३
इति श्रीमहाभारते शान्तिपर्वणि अष्टषष्ट्यधिकशततमोऽध्यायः १६८

## एकोनसप्तत्यधिकशततमोऽध्यायः

युधिष्ठिर उवाच
अतिक्रामति कालेऽस्मिन्सर्वभूतक्षयावहे
किं श्रेयः प्रतिपद्येत तन्मे ब्रूहि पितामह १
भीष्म उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
पितुः पुत्रेण संवादं तन्निबोध युधिष्ठिर २
द्विजातेः कस्यचित्पार्थ स्वाध्यायनिरतस्य वै
बभूव पुत्रो मेधावी मेधावी नाम नामतः ३
सोऽब्रवीत्पितरं पुत्रः स्वाध्यायकरणे रतम्

मोक्षधर्मार्थकुशलो लोकतत्त्वविचक्षणः ४
धीरः किं स्वित्तात कुर्यात्प्रजानन्क्षिप्रं ह्यायुर्भ्रश्यते मानवानाम्
पितस्तदाचक्ष्व यथार्थयोगं ममानुपूर्व्या येन धर्मं चरेयम् ५
पितोवाच
वेदानधीत्य ब्रह्मचर्येण पुत्र पुत्रानिच्छेत्पावनार्थं पितॄणाम्
अग्नीनाधाय विधिवच्चेष्टयज्ञो वनं प्रविश्याथ मुनिर्बुभूषेत् ६
पुत्र उवाच
एवमभ्याहते लोके समन्तात्परिवारिते
अमोघासु पतन्तीषु किं धीर इव भाषसे ७
पितोवाच
कथमभ्याहतो लोकः केन वा परिवारितः
अमोघाः काः पतन्तीह किं नु भीषयसीव माम् ८
पुत्र उवाच
मृत्युनाभ्याहतो लोको जरया परिवारितः
अहोरात्राः पतन्त्येते ननु कस्मान्न बुध्यसे ९
यदाहमेतज्जानामि न मृत्युस्तिष्ठतीति ह
सोऽह कथं प्रतीक्षिष्ये जालेनापिहितश्चरन् १०
रात्र्यां रात्र्यां व्यतीतायामायुरल्पतरं यदा
गाधोदके मत्स्य इव सुखं विन्देत कस्तदा
तदेव वन्ध्यं दिवसमिति विद्याद्विचक्षणः ११
अनवाप्तेषु कामेषु मृत्युरभ्येति मानवम्
शष्पाणीव विचिन्वन्तमन्यत्रगतमानसम्
वृकीवोरणमासाद्य मृत्युरादाय गच्छति १२
अद्यैव कुरु यच्छ्रेयो मा त्वा कालोऽत्यगादयम्
अकृतेष्वेव कार्येषु मृत्युर्वै संप्रकर्षति १३
श्वःकार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम्
न हि प्रतीक्षते मृत्युः कृतं वास्य न वा कृतम्
को हि जानाति कस्याद्य मृत्युसेना निवेक्ष्यते १४
युवैव धर्मशीलः स्यादनिमित्तं हि जीवितम्
कृते धर्मे भवेत्कीर्तिरिह प्रेत्य च वै सुखम् १५

मोहेन हि समाविष्टः पुत्रदारार्थमुद्यतः
कृत्वा कार्यमकार्यं वा पुष्टिमेषां प्रयच्छति १६
तं पुत्रपशुसंमत्तं व्यासक्तमनसं नरम्
सुप्तं व्याघ्रं महोघो वा मृत्युरादाय गच्छति १७
संचिन्वानकमेवैकं कामानामवितृप्तकम्
व्याघ्रः पशुमिवादाय मृत्युरादाय गच्छति १८
इदं कृतमिदं कार्यमिदमन्यत्कृताकृतम्
एवमीहासुखासक्तं कृतान्तः कुरुते वशे १९
कृतानां फलमप्राप्तं कर्मणां फलसङ्गिनम्
क्षेत्रापणगृहासक्तं मृत्युरादाय गच्छति २०
मृत्युर्जरा च व्याधिश्च दुःखं चानेककारणम्
अनुषक्तं यदा देहे किं स्वस्थ इव तिष्ठसि २१
जातमेवान्तकोऽन्ताय जरा चान्वेति देहिनम्
अनुषक्ता द्वयेनैते भावाः स्थावरजङ्गमाः २२
मृत्योर्वा गृहमेवैतद्या ग्रामे वसतो रतिः
देवानामेष वै गोष्ठो यदरण्यमिति श्रुतिः २३
निबन्धनी रज्जुरेषा या ग्रामे वसतो रतिः
छित्त्वैनां सुकृतो यान्ति नैनां छिन्दन्ति दुष्कृतः २४
न हिंसयति यः प्राणान्मनोवाक्कायहेतुभिः
जीवितार्थापनयनैः कर्मभिर्न स बध्यते २५
न मृत्युसेनामायान्तीं जातु कश्चित्प्रबाधते
ऋते सत्यमसंत्याज्यं सत्ये ह्यमृतमाश्रितम् २६
तस्मात्सत्यव्रताचारः सत्ययोगपरायणः
सत्यारामः समो दान्तः सत्येनैवान्तकं जयेत् २७
अमृतं चैव मृत्युश्च द्वयं देहे प्रतिष्ठितम्
मृत्युमापद्यते मोहात्सत्येनापद्यतेऽमृतम् २८
सोऽह ह्यहिंस्रः सत्यार्थी कामक्रोधबहिष्कृतः
समदुःखसुखः क्षेमी मृत्युं हास्याम्यमर्त्यवत् २९
शान्तियज्ञरतो दान्तो ब्रह्मयज्ञे स्थितो मुनिः
वाङ्मनःकर्मयज्ञश्च भविष्याम्युदगायने ३०

पशुयज्ञैः कथं हिंस्रैर्मादृशो यष्टुमर्हति
अन्तवद्भिरुत प्राज्ञः क्षत्रयज्ञैः पिशाचवत् ३१
यस्य वाङ्मनसी स्यातां सम्यक्प्रणिहिते सदा
तपस्त्यागश्च योगश्च स वै सर्वमवाप्नुयात् ३२
नास्ति विद्यासमं चक्षुर्नास्ति विद्यासमं बलम्
नास्ति रागसमं दुःखं नास्ति त्यागसमं सुखम् ३३
आत्मन्येवात्मना जात आत्मनिष्ठोऽप्रजोऽपि वा
आत्मन्येव भविष्यामि न मां तारयति प्रजा ३४
नैतादृशं ब्राह्मणस्यास्ति वित्तं यथैकता समता सत्यता च
शीले स्थितिर्दण्डनिधानमार्जवं ततस्ततश्चोपरमः क्रियाभ्यः ३५
किं ते धनैर्बान्धवैर्वापि किं ते किं ते दारैर्ब्राह्मण यो मरिष्यसि
आत्मानमन्विच्छ गुहां प्रविष्टं पितामहस्ते क्व गतः पिता च ३६
भीष्म उवाच
पुत्रस्यैतद्वचः श्रुत्वा तथाकार्षीत्पिता नृप
तथा त्वमपि वर्तस्व सत्यधर्मपरायणः ३७
इति श्रीमहाभारते शान्तिपर्वणि एकोनसप्तत्यधिकशततमोऽध्यायः १६९

## सप्तत्यधिकशततमोऽध्यायः

युधिष्ठिर उवाच
धनिनो वाधना ये च वर्तयन्ति स्वतन्त्रिणः
सुखदुःखागमस्तेषां कः कथं वा पितामह १
भीष्म उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
शम्याकेन विमुक्तेन गीतं शान्तिगतेन ह २
अब्रवीन्मां पुरा कश्चिद्ब्राह्मणस्त्यागमास्थितः
क्लिश्यमानः कुदारेण कुचैलेन बुभुक्षया ३
उत्पन्नमिह लोके वै जन्मप्रभृति मानवम्
विविधान्युपवर्तन्ते दुःखानि च सुखानि च ४
तयोरेकतरे मार्गे यद्येनमभिसंनयेत्
न सुखं प्राप्य संहृष्येन्न दुःखं प्राप्य संज्वरेत् ५

न वै चरसि यच्छ्रेय आत्मानो वा यदीहसे
अकामात्मापि हि सदा धुरमुद्यम्य चैव हि ६
अकिंचनः परिपतन्सुखमास्वादयिष्यसि
अकिंचनः सुखं शेते समुत्तिष्ठति चैव हि ७
आकिंचन्यं सुखं लोके पथ्यं शिवमनामयम्
अनमित्रमथो ह्येतद्दुर्लभं सुलभं सताम् ८
अकिंचनस्य शुद्धस्य उपपन्नस्य सर्वशः
अवेक्षमाणस्त्रीँल्लोकान्न तुल्यमुपलक्षये ९
आकिंचन्यं च राज्यं च तुलया समतोलयम्
अत्यरिच्यत दारिद्र्यं राज्यादपि गुणाधिकम् १०
आकिंचन्ये च राज्ये च विशेषः सुमहानयम्
नित्योद्विग्नो हि धनवान्मृत्योरास्यगतो यथा ११
नैवास्याग्निर्न चादित्यो न मृत्युर्न च दस्यवः
प्रभवन्ति धनज्यानिनिर्मुक्तस्य निराशिषः १२
तं वै सदा कामचरमनुपस्तीर्णशायिनम्
बाहूपधानं शाम्यन्तं प्रशंसन्ति दिवौकसः १३
धनवान्क्रोधलोभाभ्यामाविष्टो नष्टचेतनः
तिर्यगीक्षः शुष्कमुखः पापको भ्रुकुटीमुखः १४
निर्दशंश्चाधरोष्ठं च क्रुद्धो दारुणभाषिता
कस्तमिच्छेत्परिद्रष्टुं दातुमिच्छति चेन्महीम् १५
श्रिया ह्यभीक्ष्णं संवासो मोहयत्यविचक्षणम्
सा तस्य चित्तं हरति शारदाभ्रमिवानिलः १६
अथैनं रूपमानश्च धनमानश्च विन्दति
अभिजातोऽस्मि सिद्धोऽस्मि नास्मि केवलमानुषः
इत्येभिः कारणैस्तस्य त्रिभिश्चित्तं प्रसिच्यते १७
स प्रसिक्तमना भोगान्विसृज्य पितृसंचितान्
परिक्षीणः परस्वानामादानं साधु मन्यते १८
तमतिक्रान्तमर्यादमाददानं ततस्ततः
प्रतिषेधन्ति राजानो लुब्धा मृगमिवेषुभिः १९
एवमेतानि दुःखानि तानि तानीह मानवम्

विविधान्युपवर्तन्ते गात्रसंस्पर्शजानि च २०
तेषां परमदुःखानां बुद्ध्या भैषज्यमाचरेत्
लोकधर्मं समाज्ञाय ध्रुवाणामध्रुवैः सह २१
नात्यक्त्वा सुखमाप्नोति नात्यक्त्वा विन्दते परम्
नात्यक्त्वा चाभयः शेते त्यक्त्वा सर्वं सुखी भव २२
इत्येतद्धास्तिनपुरे ब्राह्मणेनोपवर्णितम्
शम्याकेन पुरा मह्यं तस्मात्त्यागः परो मतः २३
इति श्रीमहाभारते शान्तिपर्वणि सप्तत्यधिकशततमोऽध्यायः १७०

## एकसप्तत्यधिकशततमोऽध्यायः

युधिष्ठिर उवाच
ईहमानः समारम्भान्यदि नासादयेद्धनम्
धनतृष्णाभिभूतश्च किं कुर्वन्सुखमाप्नुयात् १
भीष्म उवाच
सर्वसाम्यमनायासः सत्यवाक्यं च भारत
निर्वेदश्चाविवित्सा च यस्य स्यात्स सुखी नरः २
एतान्येव पदान्याहुः पञ्च वृद्धाः प्रशान्तये
एष स्वर्गश्च धर्मश्च सुखं चानुत्तमं सताम् ३
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
निर्वेदान्मङ्किना गीतं तन्निबोध युधिष्ठिर ४
ईहमानो धनं मङ्किर्भग्नेहश्च पुनः पुनः
केनचिद्धनशेषेण क्रीतवान्दम्यगोयुगम् ५
सुसंबद्धौ तु तौ दम्यौ दमनायाभिनिःसृतौ
आसीनमुष्ट्रं मध्येन सहसैवाभ्यधावताम् ६
तयोः संप्राप्तयोरुष्ट्रः स्कन्धदेशममर्षणः
उत्थायोत्क्षिप्य तौ दम्यौ प्रससार महाजवः ७
ह्रियमाणौ तु तौ दम्यौ तेनोष्ट्रेण प्रमाथिना
म्रियमाणौ च संप्रेक्ष्य मङ्किस्तत्राब्रवीदिदम् ८
न चैवाविहितं शक्यं दक्षेणापीहितुं धनम्
युक्तेन श्रद्धया सम्यगीहां समनुतिष्ठता ९

कृतस्य पूर्वं चानर्थैर्युक्तस्याप्यनुतिष्ठतः
इमं पश्यत संगत्या मम दैवमुपप्लवम् १०
उद्यम्योद्यम्य मे दम्यौ विषमेणेव गच्छति
उत्क्षिप्य काकतालीयमुन्माथेनेव जम्बुकः ११
मणी वोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम
शुद्धं हि दैवमेवेदमतो नैवास्ति पौरुषम् १२
यदि वाप्युपपद्येत पौरुषं नाम कर्हिचित्
अन्विष्यमाणं तदपि दैवमेवावतिष्ठते १३
तस्मान्निर्वेद एवेह गन्तव्यः सुखमीप्सता
सुखं स्वपिति निर्विण्णो निराशश्चार्थसाधने १४
अहो सम्यक्शुकेनोक्तं सर्वतः परिमुच्यता
प्रतिष्ठता महारण्यं जनकस्य निवेशनात् १५
यः कामान्प्राप्नुयात्सर्वान्यश्चैनान्केवलांस्त्यजेत्
प्रापणात्सर्वकामानां परित्यागो विशिष्यते १६
नान्तं सर्वविवित्सानां गतपूर्वोऽस्ति कश्चन
शरीरे जीविते चैव तृष्णा मन्दस्य वर्धते १७
निवर्तत्व विवित्साभ्यः शाम्य निर्विद्य मामक
असकृच्चासि निकृतो न च निर्विद्यसे तनो १८
यदि नाहं विनाश्यस्ते यद्येवं रमसे मया
मा मां योजय लोभेन वृथा त्वं वित्तकामुक १९
संचितं संचितं द्रव्यं नष्टं तव पुनः पुनः
कदा विमोक्ष्यसे मूढ धनेहां धनकामुक २०
अहो नु मम बालिश्यं योऽहं क्रीडनकस्तव
किं नैव जातु पुरुषः परेषां प्रेष्यतामियात् २१
न पूर्वे नापरे जातु कामानामन्तमाप्नुवन्
त्यक्त्वा सर्वसमारम्भान्प्रतिबुद्धोऽस्मि जागृमि २२
नूनं ते हृदयं काम वज्रसारमयं दृढम्
यदनर्थशताविष्टं शतधा न विदीर्यते २३
त्यजामि काम त्वां चैव यच्च किंचित्प्रियं तव
तवाहं सुखमन्विच्छन्नात्मन्युपलभे सुखम् २४

काम जानामि ते मूलं संकल्पात्किल जायसे
न त्वां संकल्पयिष्यामि समूलो न भविष्यसि २५
ईहा धनस्य न सुखा लब्ध्वा चिन्ता च भूयसी
लब्धनाशो यथा मृत्युर्लब्धं भवति वा न वा २६
परेत्य यो न लभते ततो दुःखतरं नु किम्
न च तुष्यति लब्धेन भूय एव च मार्गति २७
अनुतर्षुल एवार्थः स्वादु गाङ्गमिवोदकम्
मद्विलापनमेतत्तु प्रतिबुद्धोऽस्मि संत्यज २८
य इमं मामकं देहं भूतग्रामः समाश्रितः
स यात्वितो यथाकामं वसतां वा यथासुखम् २९
न युष्मास्विह मे प्रीतिः कामलोभानुसारिषु
तस्मादुत्सृज्य सर्वान्वः सत्यमेवाश्रयाम्यहम् ३०
सर्वभूतान्यहं देहे पश्यन्मनसि चात्मनः
योगे बुद्धिं श्रुते सत्त्वं मनो ब्रह्मणि धारयन् ३१
विहरिष्याम्यनासक्तः सुखी लोकान्निरामयः
यथा मा त्वं पुनर्नैवं दुःखेषु प्रणिधास्यसि ३२
त्वया हि मे प्रणुन्नस्य गतिरन्या न विद्यते
तृष्णाशोकश्रमाणां हि त्वं काम प्रभवः सदा ३३
धननाशोऽधिकं दुःखं मन्ये सर्वमहत्तरम्
ज्ञातयो ह्यवमन्यन्ते मित्राणि च धनच्युतम् ३४
अवज्ञानसहस्रैस्तु दोषाः कष्टतराधने
धने सुखकला या च सापि दुःखैर्विधीयते ३५
धनमस्येति पुरुषं पुरो निघ्नन्ति दस्यवः
क्लिश्यन्ति विविधैर्दण्डैर्नित्यमुद्वेजयन्ति च ३६
मन्दलोलुपता दुःखमिति बुद्धं चिरान्मया
यद्यदालम्बसे काम तत्तदेवानुरुध्यसे ३७
अतत्त्वज्ञोऽसि बालश्च दुस्तोषोऽपूरणोऽनलः
नैव त्वं वेत्थ सुलभं नैव त्वं वेत्थ दुर्लभम् ३८
पातालमिव दुष्पूरो मां दुःखैर्योक्तुमिच्छसि
नाहमद्य समावेष्टुं शक्यः काम पुनस्त्वया ३९

निर्वेदमहमासाद्य द्रव्यनाशाद्यदृच्छया
निर्वृत्तिं परमां प्राप्य नाद्य कामान्विचिन्तये ४०
अतिक्लेशान्सहामीह नाहं बुध्याम्यबुद्धिमान्
निकृतो धननाशेन शये सर्वाङ्गविज्वरः ४१
परित्यजामि काम त्वां हित्वा सर्वमनोगतीः
न त्वं मया पुनः काम नस्योतेनेव रंस्यसे ४२
क्षमिष्येऽक्षममाणानां न हिंसिष्ये च हिंसितः
द्वेष्यमुक्तः प्रियं वक्ष्याम्यनादृत्य तदप्रियम् ४३
तृप्तः स्वस्थेन्द्रियो नित्यं यथालब्धेन वर्तयन्
न सकामं करिष्यामि त्वामहं शत्रुमात्मनः ४४
निर्वेदं निर्वृतिं तृप्तिं शान्तिं सत्यं दमं क्षमाम्
सर्वभूतदयां चैव विद्धि मां शरणागतम् ४५
तस्मात्कामश्च लोभश्च तृष्णा कार्पण्यमेव च
त्यजन्तु मां प्रतिष्ठन्तं सत्त्वस्थो ह्यस्मि सांप्रतम् ४६
प्रहाय कामं लोभं च क्रोधं पारुष्यमेव च
नाद्य लोभवशं प्राप्तो दुःखं प्राप्स्याम्यनात्मवान् ४७
यद्यत्त्यजति कामानां तत्सुखस्याभिपूर्यते
कामस्य वशगो नित्यं दुःखमेव प्रपद्यते ४८
कामान्व्युदस्य धुनुते यत्किंचित्पुरुषो रजः
कामक्रोधोद्भवं दुःखमह्रीररतिरेव च ४९
एष ब्रह्मप्रविष्टोऽह ग्रीष्मे शीतमिव ह्रदम्
शाम्यामि परिनिर्वामि सुखमासे च केवलम् ५०
यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम्
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ५१
आत्मना सप्तमं कामं हत्वा शत्रुमिवोत्तमम्
प्राप्यावध्यं ब्रह्मपुरं राजेव स्यामहं सुखी ५२
एतां बुद्धिं समास्थाय मङ्किर्निर्वेदमागतः
सर्वान्कामान्परित्यज्य प्राप्य ब्रह्म महत्सुखम् ५३
दम्यनाशकृते मङ्किरमरत्वं किलागमत्
अच्छिनत्काममूलं स तेन प्राप महत्सुखम् ५४

अत्राप्युदाहरन्तीममितिहासं पुरातनम्
गीतं विदेहराजेन जनकेन प्रशाम्यता ५५
अनन्तं बत मे वित्तं यस्य मे नास्ति किंचन
मिथिलायां प्रदीप्तायां न मे दह्यति किंचन ५६
अत्रैवोदाहरन्तीमं बोध्यस्य पदसंचयम्
निर्वेदं प्रति विन्यस्तं प्रतिबोध युधिष्ठिर ५७
बोध्यं दान्तमृषिं राजा नहुषः पर्यपृच्छत
निर्वेदाच्छान्तिमापन्नं शान्तं प्रज्ञानतर्पितम् ५८
उपदेशं महाप्राज्ञ शमस्योपदिशस्व मे
कां बुद्धिं समनुध्याय शान्तश्चरसि निर्वृतः ५९
बोध्य उवाच
उपदेशेन वर्तामि नानुशास्मीह कंचन
लक्षणं तस्य वक्ष्येऽह तत्स्वयं प्रविमृश्यताम् ६०
पिङ्गला कुररः सर्पः सारङ्गान्वेषणं वने
इषुकारः कुमारी च षडेते गुरवो मम ६१
इति श्रीमहाभारते शान्तिपर्वणि एकसप्तत्यधिकशततमोऽध्यायः १७१

## द्विसप्तत्यधिकशततमोऽध्यायः

युधिष्ठिर उवाच
केन वृत्तेन वृत्तज्ञ वीतशोकश्चरेन्महीम्
किं च कुर्वन्नरो लोके प्राप्नोति परमां गतिम् १
भीष्म उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
प्रह्रादस्य च संवादं मुनेराजगरस्य च २
चरन्तं ब्राह्मणं कंचित्कल्पचित्तमनामयम्
पप्रच्छ राजन्प्रह्रादो बुद्धिमान्प्राज्ञसंमतः ३
स्वस्थः शक्तो मृदुर्दान्तो निर्विवित्सोऽनसूयकः
सुवाग्बहुमतो लोके प्राज्ञश्चरसि बालवत् ४
नैव प्रार्थयसे लाभं नालाभेष्वनुशोचसि
नित्यतृप्त इव ब्रह्मन्न किंचिदवमन्यसे ५

स्रोतसा ह्रियमाणासु प्रजास्वविमना इव
धर्मकामार्थकार्येषु कूटस्थ इव लक्ष्यसे ६
नानुतिष्ठसि धर्मार्थौ न कामे चापि वर्तसे
इन्द्रियार्थाननादृत्य मुक्तश्चरसि साक्षिवत् ७
का नु प्रज्ञा श्रुतं वा किं वृत्तिर्वा का नु ते मुने
क्षिप्रमाचक्ष्व मे ब्रह्मञ्श्रेयो यदिह मन्यसे ८
अनुयुक्तः स मेधावी लोकधर्मविधानवित्
उवाच श्लक्ष्णया वाचा प्रह्रादमनपार्थया ९
पश्यन्प्रह्राद भूतानामुत्पत्तिमनिमित्ततः
ह्रासं वृद्धिं विनाशं च न प्रहृष्ये न च व्यथे १०
स्वभावादेव संदृश्य वर्तमानाः प्रवृत्तयः
स्वभावनिरताः सर्वाः परितप्ये न केनचित् ११
पश्यन्प्रह्राद संयोगान्विप्रयोगपरायणान्
संचयांश्च विनाशान्तान्न क्वचिद्विदधे मनः १२
अन्तवन्ति च भूतानि गुणयुक्तानि पश्यतः
उत्पत्तिनिधनज्ञस्य किं कार्यमवशिष्यते १३
जलजानामपि ह्यन्तं पर्यायेणोपलक्षये
महतामपि कायानां सूक्ष्माणां च महोदधौ १४
जङ्गमस्थावराणां च भूतानामसुराधिप
पार्थिवानामपि व्यक्तं मृत्युं पश्यामि सर्वशः १५
अन्तरिक्षचराणां च दानवोत्तम पक्षिणाम्
उत्तिष्ठति यथाकालं मृत्युर्बलवतामपि १६
दिवि संचरमाणानि ह्रस्वानि च महान्ति च
ज्योतींषि च यथाकालं पतमानानि लक्षये १७
इति भूतानि संपश्यन्ननुषक्तानि मृत्युना
सर्वसामान्यतो विद्वान्कृतकृत्यः सुखं स्वपे १८
सुमहान्तमपि ग्रासं ग्रसे लब्धं यदृच्छया
शये पुनरभुञ्जानो दिवसानि बहून्यपि १९
आस्रवन्त्यपि मामन्नं पुनर्बहुगुणं बहु
पुनरल्पगुणं स्तोकं पुनर्नैवोपपद्यते २०

कणान्कदाचित्खादामि पिण्याकमपि च ग्रसे
भक्षये शालिमांसानि भक्षांश्चोच्चावचान्पुनः २१
शये कदाचित्पर्यङ्के भूमावपि पुनः शये
प्रासादेऽपि च मे शय्या कदाचिदुपपद्यते २२
धारयामि च चीराणि शाणीं क्षौमाजिनानि च
महार्हाणि च वासांसि धारयाम्यहमेकदा २३
न संनिपतितं धर्म्यमुपभोगं यदृच्छया
प्रत्याचक्षे न चाप्येनमनुरुध्ये सुदुर्लभम् २४
अचलमनिधनं शिवं विशोकं शुचिमतुलं विदुषां मते निविष्टम्
अनभिमतमसेवितं च मूढैर्व्रतमिदमाजगरं शुचिश्चरामि २५
अचलितमतिरच्युतः स्वधर्मात्परिमितसंसरणः परावरज्ञः
विगतभयकषायलोभमोहो व्रतमिदमाजगरं शुचिश्चरामि २६
अनियतफलभक्ष्यभोज्यपेयं विधिपरिणामविभक्तदेशकालम्
हृदयसुखमसेवितं कदर्यैर्व्रतमिदमाजगरं शुचिश्चरामि २७
इदमिदमिति तृष्णयाभिभूतं जनमनवाप्तधनं विषीदमानम्
निपुणमनुनिशाम्य तत्त्वबुद्ध्या व्रतमिदमाजगरं शुचिश्चरामि २८
बहुविधमनुदृश्य चार्थहेतोः कृपणमिहार्यमनार्यमाश्रयन्तम्
उपशमरुचिरात्मवान्प्रशान्तो व्रतमिदमाजगरं शुचिश्चरामि २९
सुखमसुखमनर्थमर्थलाभं रतिमरतिं मरणं च जीवितं च
विधिनियतमवेक्ष्य तत्त्वतोऽह व्रतमिदमाजगरं शुचिश्चरामि ३०
अपगतभयरागमोहदर्पो धृतिमतिबुद्धिसमन्वितः प्रशान्तः
उपगतफलभोगिनो निशाम्य व्रतमिदमाजगरं शुचिश्चरामि ३१
अनियतशयनासनः प्रकृत्या दमनियमव्रतसत्यशौचयुक्तः
अपगतफलसंचयः प्रहृष्टो व्रतमिदमाजगरं शुचिश्चरामि ३२
अभिगतमसुखार्थमीहनार्थैरुपगतबुद्धिरवेक्ष्य चात्मसंस्थः
तृषितमनियतं मनो नियन्तुं व्रतमिदमाजगरं शुचिश्चरामि ३३
न हृदयमनुरुध्यते मनो वा प्रियसुखदुर्लभतामनित्यतां च
तदुभयमुपलक्षयन्निवाहं व्रतमिदमाजगरं शुचिश्चरामि ३४
बहु कथितमिदं हि बुद्धिमद्भिः कविभिरभिप्रथयद्भिरात्मकीर्तिम्
इदमिदमिति तत्र तत्र तत्तत्स्वपरमतैर्गहनं प्रतर्कयद्भिः ३५

तदहमनुनिशाम्य विप्रयातं पृथगभिपन्नमिहाबुधैर्मनुष्यैः
अनवसितमनन्तदोषपारं नृषु विहरामि विनीतरोषतृष्णः ३६
भीष्म उवाच
अजगरचरितं व्रतं महात्मा य इह नरोऽनुचरेद्विनीतरागः
अपगतभयमन्युलोभमोहः स खलु सुखी विहरेदिमं विहारम् ३७
इति श्रीमहाभारते शान्तिपर्वणि द्विसप्तत्यधिकशततमोऽध्यायः १७२

## त्रिसप्तत्यधिकशततमोऽध्यायः

युधिष्ठिर उवाच
बान्धवाः कर्म वित्तं वा प्रज्ञा वेह पितामह
नरस्य का प्रतिष्ठा स्यादेतत्पृष्टो वदस्व मे १
भीष्म उवाच
प्रज्ञा प्रतिष्ठा भूतानां प्रज्ञा लाभः परो मतः
प्रज्ञा नैःश्रेयसी लोके प्रज्ञा स्वर्गो मतः सताम् २
प्रज्ञया प्रापितार्थो हि बलिरैश्वर्यसंक्षये
प्रह्लादो नमुचिर्मङ्किस्तस्याः किं विद्यते परम् ३
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
इन्द्रकाश्यपसंवादं तन्निबोध युधिष्ठिर ४
वैश्यः कश्चिदृषिं तात काश्यपं संशितव्रतम्
रथेन पातयामास श्रीमान्दृप्तस्तपस्विनम् ५
आर्तः स पतितः क्रुद्धस्त्यक्त्वात्मानमथाब्रवीत्
मरिष्याम्यधनस्येह जीवितार्थो न विद्यते ६
तथा मुमूर्षमासीनमकूजन्तमचेतसम्
इन्द्रः शृगालरूपेण बभाषे क्रुद्धमानसम् ७
मनुष्ययोनिमिच्छन्ति सर्वभूतानि सर्वशः
मनुष्यत्वे च विप्रत्वं सर्व एवाभिनन्दति ८
मनुष्यो ब्राह्मणश्चासि श्रोत्रियश्चासि काश्यप
सुदुर्लभमवाप्यैतददोषान्मर्तुमिच्छसि ९
सर्वे लाभाः साभिमाना इति सत्या बत श्रुतिः
संतोषणीयरूपोऽसि लोभाद्यदभिमन्यसे १०

अहो सिद्धार्थता तेषां येषां सन्तीह पाणयः
पाणिमद्भ्यः स्पृहास्माकं यथा तव धनस्य वै ११
न पाणिलाभादधिको लाभः कश्चन विद्यते
अपाणित्वाद्वयं ब्रह्मन्कण्टकान्नोद्धरामहे १२
अथ येषां पुनः पाणी देवदत्तौ दशाङ्गुली
उद्धरन्ति कृमीनङ्गाद्दशमानान्कषन्ति च १३
हिमवर्षातपानां च परित्राणानि कुर्वते
चेलमन्नं सुखं शय्यां निवातं चोपभुञ्जते १४
अधिष्ठाय च गां लोके भुञ्जते वाहयन्ति च
उपायैर्बहुभिश्चैव वश्यानात्मनि कुर्वते १५
ये खल्वजिह्वाः कृपणा अल्पप्राणा अपाणयः
सहन्ते तानि दुःखानि दिष्ट्या त्वं न तथा मुने १६
दिष्ट्या त्वं न शृगालो वै न कृमिर्न च मूषकः
न सर्पो न च मण्डूको न चान्यः पापयोनिजः १७
एतावतापि लाभेन तोष्टुमर्हसि काश्यप
किं पुनर्योऽसि सत्त्वानां सर्वेषां ब्राह्मणोत्तमः १८
इमे मां कृमयोऽदन्ति तेषामुद्धरणाय मे
नास्ति शक्तिरपाणित्वात्पश्यावस्थामिमां मम १९
अकार्यमिति चैवेमं नात्मानं संत्यजाम्यहम्
नेतः पापीयसीं योनिं पतेयमपरामिति २०
मध्ये वै पापयोनीनां शार्गाली यामहं गतः
पापीयस्यो बहुतरा इतोऽन्या पापयोनयः २१
जात्यैवैके सुखतराः सन्त्यन्ये भृशदुःखिताः
नैकान्तसुखमेवेह क्वचित्पश्यामि कस्यचित् २२
मनुष्या ह्याढ्यतां प्राप्य राज्यमिच्छन्त्यनन्तरम्
राज्याद्देवत्वमिच्छन्ति देवत्वादिन्द्रतामपि २३
भवेस्त्वं यद्यपि त्वाढ्यो न राजा न च दैवतम्
देवत्वं प्राप्य चेन्द्रत्वं नैव तुष्येस्तथा सति २४
न तृप्तिः प्रियलाभेऽस्मि तृष्णा नाद्भिः प्रशाम्यति
संप्रज्वलति सा भूयः समिद्भिरिव पावकः २५

अस्त्येव त्वयि शोको वै हर्षश्चास्ति तथा त्वयि
सुखदुःखे तथा चोभे तत्र का परिदेवना २६
परिच्छिद्यैव कामानां सर्वेषां चैव कर्मणाम्
मूलं रुन्धीन्द्रियग्रामं शकुन्तानिव पञ्जरे २७
न खल्वप्यरसज्ञस्य कामः क्वचन जायते
संस्पर्शाद्दर्शनाद्वापि श्रवणाद्वापि जायते २८
न त्वं स्मरसि वारुण्या लट्वाकानां च पक्षिणाम्
ताभ्यां चाभ्यधिको भक्ष्यो न कश्चिद्विद्यते क्वचित् २९
यानि चान्यानि दूरेषु भक्ष्यभोज्यानि काश्यप
येषामभुक्तपूर्वं ते तेषामस्मृतिरेव च ३०
अप्राशनमसंस्पर्शमसंदर्शनमेव च
पुरुषस्यैष नियमो मन्ये श्रेयो न संशयः ३१
पाणिमन्तो धनैर्युक्ता बलवन्तो न संशयः
मनुष्या मानुषैरेव दासत्वमुपपादिताः ३२
वधबन्धपरिक्लेशैः क्लिश्यन्ते च पुनः पुनः
ते खल्वपि रमन्ते च मोदन्ते च हसन्ति च ३३
अपरे बाहुबलिनः कृतविद्या मनस्विनः
जुगुप्सितां सुकृपणां पापां वृत्तिमुपासते ३४
उत्सहन्ते च ते वृत्तिमन्यामप्युपसेवितुम्
स्वकर्मणा तु नियतं भवितव्यं तु तत्तथा ३५
न पुल्कसो न चण्डाल आत्मानं त्यक्तुमिच्छति
असंतुष्टः स्वया योन्या मायां पश्यस्व यादृशीम् ३६
दृष्ट्वा कुणीन्पक्षहतान्मनुष्यानामयाविनः
सुसंपूर्णः स्वया योन्या लब्धलाभोऽसि काश्यप ३७
यदि ब्राह्मण देहस्ते निरातङ्को निरामयः
अङ्गानि च समग्राणि न च लोकेषु धिक्कृतः ३८
न केनचित्प्रवादेन सत्येनैवापहारिणा
धर्मायोत्तिष्ठ विप्रर्षे नात्मानं त्यक्तुमर्हसि ३९
यदि ब्रह्मञ्शृणोष्येतच्छ्रद्दधासि च मे वचः
वेदोक्तस्य च धर्मस्य फलं मुख्यमवाप्स्यसि ४०

स्वाध्यायमग्निसंस्कारमप्रमत्तोऽनुपालय
सत्यं दमं च दानं च स्पर्धिष्ठा मा च केनचित् ४१
ये केचन स्वध्ययनाः प्राप्ता यजनयाजनम्
कथं ते जातु शोचेयुर्ध्यायेयुर्वाप्यशोभनम् ४२
इच्छन्तस्ते विहाराय सुखं महदवाप्नुयुः
उत जाताः सुनक्षत्रे सुतीर्थाः सुमुहूर्तजाः ४३
नक्षत्रेष्वासुरेष्वन्ये दुस्तीर्था दुर्मुहूर्तजाः
संपतन्त्यासुरीं योनिं यज्ञप्रसववर्जिताम् ४४
अहमासं पण्डितको हैतुको वेदनिन्दकः
आन्वीक्षिकीं तर्कविद्यामनुरक्तो निरर्थिकाम् ४५
हेतुवादान्प्रवदिता वक्ता संसत्सु हेतुमत्
आक्रोष्टा चाभिवक्ता च ब्रह्मयज्ञेषु वै द्विजान् ४६
नास्तिकः सर्वशङ्की च मूर्खः पण्डितमानिकः
तस्येयं फलनिर्वृत्तिः शृगालत्वं मम द्विज ४७
अपि जातु तथा तत्स्यादहोरात्रशतैरपि
यदहं मानुषीं योनिं शृगालः प्राप्नुयां पुनः ४८
संतुष्टश्चाप्रमत्तश्च यज्ञदानतपोरतिः
ज्ञेयज्ञाता भवेयं वै वर्ज्यवर्जयिता तथा ४९
ततः स मुनिरुत्थाय काश्यपस्तमुवाच ह
अहो बतासि कुशलो बुद्धिमानिति विस्मितः ५०
समवैक्षत तं विप्रो ज्ञानदीर्घेण चक्षुषा
ददर्श चैनं देवानामिन्द्रं देवं शचीपतिम् ५१
ततः संपूजयामास काश्यपो हरिवाहनम्
अनुज्ञातश्च तेनाथ प्रविवेश स्वमाश्रमम् ५२
इति श्रीमहाभारते शान्तिपर्वणि त्रिसप्तत्यधिकशततमोऽध्यायः १७३

## चतुःसप्तत्यधिकशततमोऽध्यायः

युधिष्ठिर उवाच
यद्यस्ति दत्तमिष्टं वा तपस्तप्तं तथैव च
गुरूणां चापि शुश्रूषा तन्मे ब्रूहि पितामह १

भीष्म उवाच
आत्मनानर्थयुक्तेन पापे निविशते मनः
स्व कर्म कलुषं कृत्वा क्लेशे महति धीयते २
दुर्भिक्षादेव दुर्भिक्षं क्लेशात्क्लेशं भयाद्भयम्
मृतेभ्यः प्रमृतं यान्ति दरिद्राः पापकारिणः ३
उत्सवादुत्सवं यान्ति स्वर्गात्स्वर्गं सुखात्सुखम्
श्रद्दधानाश्च दान्ताश्च धनाढ्याः शुभकारिणः ४
व्यालकुञ्जरदुर्गेषु सर्पचोरभयेषु च
हस्तावापेन गच्छन्ति नास्तिकाः किमतः परम् ५
प्रियदेवातिथेयाश्च वदान्याः प्रियसाधवः
क्षेम्यमात्मवतां मार्गमास्थिता हस्तदक्षिणम् ६
पुलाका इव धान्येषु पुत्तिका इव पक्षिषु
तद्विधास्ते मनुष्येषु येषां धर्मो न कारणम् ७
सुशीघ्रमपि धावन्तं विधानमनुधावति
शेते सह शयानेन येन येन यथा कृतम् ८
उपतिष्ठति तिष्ठन्तं गच्छन्तमनुगच्छति
करोति कुर्वतः कर्म छायेवानुविधीयते ९
येन येन यथा यद्यत्पुरा कर्म समाचितम्
तत्तदेव नरो भुङ्क्ते नित्यं विहितमात्मना १०
स्वकर्मफलविक्षिप्तं विधानपरिरक्षितम्
भूतग्राममिमं कालः समन्तात्परिकर्षति ११
अचोद्यमानानि यथा पुष्पाणि च फलानि च
स्वकालं नातिवर्तन्ते तथा कर्म पुराकृतम् १२
संमानश्चावमानश्च लाभालाभौ क्षयोदयौ
प्रवृत्ता विनिवर्तन्ते विधानान्ते पुनः पुनः १३
आत्मना विहितं दुःखमात्मना विहितं सुखम्
गर्भशय्यामुपादाय भुज्यते पौर्वदेहिकम् १४
बालो युवा च वृद्धश्च यत्करोति शुभाशुभम्
तस्यां तस्यामवस्थायां भुङ्क्ते जन्मनि जन्मनि १५
यथा धेनुसहस्रेषु वत्सो विन्दति मातरम्

तथा पूर्वकृतं कर्म कर्तारमनुगच्छति १६
समुन्नमग्रतो वस्त्रं पश्चाच्छुध्यति कर्मणा
उपवासैः प्रतप्तानां दीर्घं सुखमनन्तकम् १७
दीर्घकालेन तपसा सेवितेन तपोवने
धर्मनिर्धूतपापानां संसिध्यन्ते मनोरथाः १८
शकुनीनामिवाकाशे मत्स्यानामिव चोदके
पदं यथा न दृश्येत तथा ज्ञानविदां गतिः १९
अलमन्यैरुपालम्भैः कीर्तितैश्च व्यतिक्रमैः
पेशलं चानुरूपं च कर्तव्यं हितमात्मनः २०
इति श्रीमहाभारते शान्तिपर्वणि चतुःसप्तत्यधिकशततमोऽध्यायः १७४

## पञ्चसप्तत्यधिकशततमोऽध्यायः

युधिष्ठिर उवाच
कुतः सृष्टमिदं विश्वं जगत्स्थावरजङ्गमम्
प्रलये च कमभ्येति तन्मे ब्रूहि पितामह १
ससागरः सगगनः सशैलः सबलाहकः
सभूमिः साग्निपवनो लोकोऽय केन निर्मितः २
कथं सृष्टानि भूतानि कथं वर्णविभक्तयः
शौचाशौचं कथं तेषां धर्माधर्मावथो कथम् ३
कीदृशो जीवतां जीवः क्व वा गच्छन्ति ये मृताः
अस्माल्लोकादमुं लोकं सर्वं शंसतु नो भवान् ४
भीष्म उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
भृगुणाभिहितं श्रेष्ठं भरद्वाजाय पृच्छते ५
कैलासशिखरे दृष्ट्वा दीप्यमानमिवौजसा
भृगुं महर्षिमासीनं भरद्वाजोऽन्वपृच्छत ६
ससागरः सगगनः सशैलः सबलाहकः
सभूमिः साग्निपवनो लोकोऽय केन निर्मितः ७
कथं सृष्टानि भूतानि कथं वर्णविभक्तयः
शौचाशौचं कथं तेषां धर्माधर्मावथो कथम् ८

कीदृशो जीवतां जीवः क्व वा गच्छन्ति ये मृताः
परलोकमिमं चापि सर्वं शंसतु नो भवान् ९
एवं स भगवान्पृष्टो भरद्वाजेन संशयम्
महर्षिर्ब्रह्मसंकाशः सर्वं तस्मै ततोऽब्रवीत् १०
मानसो नाम विख्यातः श्रुतपूर्वो महर्षिभिः
अनादिनिधनो देवस्तथाभेद्योऽजरामरः ११
अव्यक्त इति विख्यातः शाश्वतोऽथाक्षरोऽव्ययः
यतः सृष्टानि भूतानि जायन्ते च म्रियन्ति च १२
सोऽसृजत्प्रथमं देवो महान्तं नाम नामतः
आकाशमिति विख्यातं सर्वभूतधरः प्रभुः १३
आकाशादभवद्वारि सलिलादग्निमारुतौ
अग्निमारुतसंयोगात्ततः समभवन्मही १४
ततस्तेजोमयं दिव्यं पद्मं सृष्टं स्वयंभुवा
तस्मात्पद्मात्समभवद्ब्रह्मा वेदमयो निधिः १५
अहंकार इति ख्यातः सर्वभूतात्मभूतकृत्
ब्रह्मा वै सुमहातेजा य एते पञ्च धातवः १६
शैलास्तस्यास्थिसंज्ञास्तु मेदो मांसं च मेदिनी
समुद्रास्तस्य रुधिरमाकाशमुदरं तथा १७
पवनश्चैव निःश्वासस्तेजोऽग्निर्निम्नगाः सिराः
अग्नीषोमौ तु चन्द्रार्कौ नयने तस्य विश्रुते १८
नभश्चोर्ध्वं शिरस्तस्य क्षितिः पादौ दिशो भुजौ
दुर्विज्ञेयो ह्यनन्तत्वात्सिद्धैरपि न संशयः १९
स एव भगवान्विष्णुरनन्त इति विश्रुतः
सर्वभूतात्मभूतस्थो दुर्विज्ञेयोऽकृतात्मभिः २०
अहंकारस्य यः स्रष्टा सर्वभूतभवाय वै
यतः समभवद्विश्वं पृष्टोऽह यदिह त्वया २१
भरद्वाज उवाच
गगनस्य दिशां चैव भूतलस्यानिलस्य च
कान्यत्र परिमाणानि संशयं छिन्धि मेऽथतः २२
भृगुरुवाच

अनन्तमेतदाकाशं सिद्धचारणसेवितम्
रम्यं नानाश्रयाकीर्णं यस्यान्तो नाधिगम्यते २३
उर्ध्वं गतेरधस्तात्तु चन्द्रादित्यौ न दृश्यतः
तत्र देवाः स्वयं दीप्ता भास्वराश्चाग्निवर्चसः २४
ते चाप्यन्तं न पश्यन्ति नभसः प्रथितौजसः
दुर्गमत्वादनन्तत्वादिति मे विद्धि मानद २५
उपरिष्टोपरिष्टात्तु प्रज्वलद्भिः स्वयंप्रभैः
निरुद्धमेतदाकाशमप्रमेयं सुरैरपि २६
पृथिव्यन्ते समुद्रास्तु समुद्रान्ते तमः स्मृतम्
तमसोऽन्ते जलं प्राहुर्जलस्यान्तेऽग्निरेव च २७
रसातलान्ते सलिलं जलान्ते पन्नगाधिपः
तदन्ते पुनराकाशमाकाशान्ते पुनर्जलम् २८
एवमन्तं भगवतः प्रमाणं सलिलस्य च
अग्निमारुततोयेभ्यो दुर्ज्ञेयं दैवतैरपि २९
अग्निमारुततोयानां वर्णाः क्षितितलस्य च
आकाशसदृशा ह्येते भिद्यन्ते तत्त्वदर्शनात् ३०
पठन्ति चैव मुनयः शास्त्रेषु विविधेषु च
त्रैलोक्ये सागरे चैव प्रमाणं विहितं यथा
अदृश्याय त्वगम्याय कः प्रमाणमुदाहरेत् ३१
सिद्धानां देवतानां च यदा परिमिता गतिः
तदा गौणमनन्तस्य नामानन्तेति विश्रुतम्
नामधेयानुरूपस्य मानसस्य महात्मनः ३२
यदा तु दिव्यं तद्रूपं ह्रसते वर्धते पुनः
कोऽन्यस्तद्वेदितुं शक्यो योऽपि स्यात्तद्विधोऽपरः ३३
ततः पुष्करतः सृष्टः सर्वज्ञो मूर्तिमान्प्रभुः
ब्रह्मा धर्ममयः पूर्वः प्रजापतिरनुत्तमः ३४
भरद्वाज उवाच
पुष्कराद्यदि संभूतो ज्येष्ठं भवति पुष्करम्
ब्रह्माणं पूर्वजं चाह भवान्संदेह एव मे ३५
भृगुरुवाच

मानसस्येह या मूर्तिर्ब्रह्मत्वं समुपागता
तस्यासनविधानार्थं पृथिवी पद्ममुच्यते ३६
कर्णिका तस्य पद्मस्य मेरुर्गगनमुच्छ्रितः
तस्य मध्ये स्थितो लोकान्सृजते जगतः प्रभुः ३७
इति श्रीमहाभारते शान्तिपर्वणि पञ्चसप्तत्यधिकशततमोऽध्यायः १७५

## षट्सप्तत्यधिकशततमोऽध्यायः

भरद्वाज उवाच
प्रजाविसर्गं विविधं कथं स सृजते प्रभुः
मेरुमध्ये स्थितो ब्रह्मा तद्ब्रूहि द्विजसत्तम १
भृगुरुवाच
प्रजाविसर्गं विविधं मानसो मनसासृजत्
संधुक्षणार्थं भूतानां सृष्टं प्रथमतो जलम् २
यत्प्राणाः सर्वभूतानां वर्धन्ते येन च प्रजाः
परित्यक्ताश्च नश्यन्ति तेनेदं सर्वमावृतम् ३
पृथिवी पर्वता मेघा मूर्तिमन्तश्च ये परे
सर्वं तद्वारुणं ज्ञेयमापस्तस्तम्भिरे पुनः ४
भरद्वाज उवाच
कथं सलिलमुत्पन्नं कथं चैवाग्निमारुतौ
कथं च मेदिनी सृष्टेत्यत्र मे संशयो महान् ५
भृगुरुवाच
ब्रह्मकल्पे पुरा ब्रह्मन्ब्रह्मर्षीणां समागमे
लोकसंभवसंदेहः समुत्पन्नो महात्मनाम् ६
तेऽतिष्ठन्ध्यानमालम्ब्य मौनमास्थाय निश्चलाः
त्यक्ताहाराः पवनपा दिव्यं वर्षशतं द्विजाः ७
तेषां धर्ममयी वाणी सर्वेषां श्रोत्रमागमत्
दिव्या सरस्वती तत्र संबभूव नभस्तलात् ८
पुरा स्तिमितनिःशब्दमाकाशमचलोपमम्
नष्टचन्द्रार्कपवनं प्रसुप्तमिव संबभौ ९
ततः सलिलमुत्पन्नं तमसीवापरं तमः

तस्माच्च सलिलोत्पीडादुदतिष्ठत मारुतः १०
यथा भाजनमच्छिद्रं निःशब्दमिव लक्ष्यते
तच्चाम्भसा पूर्यमाणं सशब्दं कुरुतेऽनिलः ११
तथा सलिलसंरुद्धे नभसोऽन्ते निरन्तरे
भित्त्वार्णवतलं वायुः समुत्पतति घोषवान् १२
स एष चरते वायुरर्णवोत्पीडसंभवः
आकाशस्थानमासाद्य प्रशान्तिं नाधिगच्छति १३
तस्मिन्वाय्वम्बुसंघर्षे दीप्ततेजा महाबलः
प्रादुर्भवत्यूर्ध्वशिखः कृत्वा वितिमिरं नभः १४
अग्निः पवनसंयुक्तः खात्समुत्पतते जलम्
सोऽग्निर्मारुतसंयोगाद्घनत्वमुपपद्यते १५
तस्याकाशे निपतितः स्नेहस्तिष्ठति योऽपरः
स संघातत्वमापन्नो भूमित्वमुपगच्छति १६
रसानां सर्वगन्धानां स्नेहानां प्राणिनां तथा
भूमिर्योनिरिह ज्ञेया यस्यां सर्वं प्रसूयते १७
इति श्रीमहाभारते शान्तिपर्वणि षट्सप्तत्यधिकशततमोऽध्यायः १७६

## सप्तसप्तत्यधिकशततमोऽध्यायः

भरद्वाज उवाच
एते ते धातवः पञ्च ब्रह्मा यानसृजत्पुरा
आवृता यैरिमे लोका महाभूताभिसंज्ञितैः १
यदासृजत्सहस्राणि भूतानां स महामतिः
पञ्चानामेव भूतत्वं कथं समुपपद्यते २
भगुरुवाच
अमितानां महाशब्दो यान्ति भूतानि संभवम्
ततस्तेषां महाभूतशब्दोऽयमुपपद्यते ३
चेष्टा वायुः खमाकाशमूष्माग्निः सलिलं द्रवः
पृथिवी चात्र संघातः शरीरं पाञ्चभौतिकम् ४
इत्येतैः पञ्चभिर्भूतैर्युक्तं स्थावरजङ्गमम्
श्रोत्रं घ्राणं रसः स्पर्शो दृष्टिश्चेन्द्रियसंज्ञिताः ५

भरद्वाज उवाच
पञ्चभिर्यदि भूतैस्तु युक्ताः स्थावरजङ्गमाः
स्थावराणां न दृश्यन्ते शरीरे पञ्च धातवः ६
अनूष्मणामचेष्टानां घनानां चैव तत्त्वतः
वृक्षाणां नोपलभ्यन्ते शरीरे पञ्च धातवः ७
न शृणवन्ति न पश्यन्ति न गन्धरसवेदिनः
न च स्पर्शं विजानन्ति ते कथं पाञ्चभौतिकाः ८
अद्रवत्वादनग्नित्वादभौमत्वादवायुतः
आकाशस्याप्रमेयत्वाद्वृक्षाणां नास्ति भौतिकम् ९
भृगुरुवाच
घनानामपि वृक्षाणामाकाशोऽस्ति न संशयः
तेषां पुष्पफले व्यक्तिर्नित्यं समुपलभ्यते १०
ऊष्मतो ग्लानपर्णानां त्वक्फलं पुष्पमेव च
म्लायते चैव शीतेन स्पर्शस्तेनात्र विद्यते ११
वाय्वग्न्यशनिनिष्पेषैः फलपुष्पं विशीर्यते
श्रोत्रेण गृह्यते शब्दस्तस्माच्छृणवन्ति पादपाः १२
वल्ली वेष्टयते वृक्षं सर्वतश्चैव गच्छति
न ह्यदृष्टेश्च मार्गोऽस्ति तस्मात्पश्यन्ति पादपाः १३
पुण्यापुण्यैस्तथा गन्धैर्धूपैश्च विविधैरपि
अरोगाः पुष्पिताः सन्ति तस्माज्जिघ्रन्ति पादपाः १४
पादैः सलिलपानं च व्याधीनामपि दर्शनम्
व्याधिप्रतिक्रियत्वाच्च विद्यते रसनं द्रुमे १५
वक्त्रेणोत्पलनालेन यथोर्ध्वं जलमाददेत्
तथा पवनसंयुक्तः पादैः पिबति पादपः १६
ग्रहणात्सुखदुःखस्य छिन्नस्य च विरोहणात्
जीवं पश्यामि वृक्षाणामचैतन्यं न विद्यते १७
तेन तज्जलमादत्तं जरयत्यग्निमारुतौ
आहारपरिणामाच्च स्नेहो वृद्धिश्च जायते १८
जङ्गमानां च सर्वेषां शरीरे पञ्च धातवः
प्रत्येकशः प्रभिद्यन्ते यैः शरीरं विचेष्टते १९

त्वक्च मांसं तथास्थीनि मज्जा स्नायु च पञ्चमम्
इत्येतदिह संख्यातं शरीरे पृथिवीमयम् २०
तेजोऽग्निश्च तथा क्रोधश्चक्षुरूष्मा तथैव च
अग्निर्जरयते चापि पञ्चाग्नेयाः शरीरिणः २१
श्रोत्रं घ्राणमथास्यं च हृदयं कोष्ठमेव च
आकाशात्प्राणिनामेते शरीरे पञ्च धातवः २२
श्लेष्मा पित्तमथ स्वेदो वसा शोणितमेव च
इत्यापः पञ्चधा देहे भवन्ति प्राणिनां सदा २३
प्राणात्प्रणीयते प्राणी व्यानाद्व्यायच्छते तथा
गच्छत्यपानोऽवाक्चैव समानो हृद्यवस्थितः २४
उदानादुच्छ्वसिति च प्रतिभेदाच्च भाषते
इत्येते वायवः पञ्च चेष्टयन्तीह देहिनम् २५
भूमेर्गन्धगुणान्वेत्ति रसं चाद्भ्यः शरीरवान्
ज्योतिः पश्यति चक्षुर्भ्यां स्पर्शं वेत्ति च वायुना २६
तस्य गन्धस्य वक्ष्यामि विस्तराभिहितान्गुणान्
इष्टश्चानिष्टगन्धश्च मधुरः कटुरेव च २७
निर्हारी संहतः स्निग्धो रूक्षो विशद एव च
एवं नवविधो ज्ञेयः पार्थिवो गन्धविस्तरः २८
शब्दः स्पर्शश्च रूपं च रसश्चापां गुणाः स्मृताः
रसज्ञानं तु वक्ष्यामि तन्मे निगदतः शृणु २९
रसो बहुविधः प्रोक्तः सूरिभिः प्रथितात्मभिः
मधुरो लवणस्तिक्तः कषायोऽम्ल कटुस्तथा
एष षडिवधविस्तारो रसो वारिमयः स्मृतः ३०
शब्दः स्पर्शश्च रूपं च त्रिगुणं ज्योतिरुच्यते
ज्योतिः पश्यति रूपाणि रूपं च बहुधा स्मृतम् ३१
ह्रस्वो दीर्घस्तथा स्थूलश्चतुरस्रोऽणु वृत्तवान्
शुक्लः कृष्णस्तथा रक्तो नीलः पीतोऽरुणस्तथा
एवं द्वादशविस्तारो ज्योतीरूपगुणः स्मृतः ३२
शब्दस्पर्शौ तु विज्ञेयौ द्विगुणो वायुरुच्यते
वायव्यस्तु गुणः स्पर्शः स्पर्शश्च बहुधा स्मृतः ३३

कठिनश्चिक्कणः श्लक्ष्णः पिच्छलो मृदुदारुणः
उष्णः शीतः सुखो दुःखः स्निग्धो विशद एव च
एवं द्वादशविस्तारो वायव्यो गुण उच्यते ३४
तत्रैकगुणमाकाशं शब्द इत्येव तत्स्मृतम्
तस्य शब्दस्य वक्ष्यामि विस्तरं विविधात्मकम् ३५
षड्ज ऋृषभगान्धारौ मध्यमः पञ्चमस्तथा
धैवतश्चापि विज्ञेयस्तथा चापि निषादकः ३६
एष सप्तविधः प्रोक्तो गुण आकाशलक्षणः
त्रैस्वर्येण तु सर्वत्र स्थितोऽपि पटहादिषु ३७
आकाशजं शब्दमाहुरेभिर्वायुगुणैः सह
अव्याहतैश्चेतयते न वेत्ति विषमागतैः ३८
आप्यायन्ते च ते नित्यं धातवस्तैस्तु धातुभिः
आपोऽग्निर्मारुतश्चैव नित्यं जाग्रति देहिषु ३९
इति श्रीमहाभारते शान्तिपर्वणि सप्तसप्तत्यधिकशततमोऽध्यायः १७७

## अष्टसप्तत्यधिकशततमोऽध्यायः

भरद्वाज उवाच
पार्थिवं धातुमाश्रित्य शारीरोऽग्नि कथं भवेत्
अवकाशविशेषेण कथं वर्तयतेऽनिलः १
भृगुरुवाच
वायोर्गतिमहं ब्रह्मन्कीर्तयिष्यामि तेऽनघ
प्राणिनामनिलो देहान्यथा चेष्टयते बली २
श्रितो मूर्धानमग्निस्तु शरीरं परिपालयन्
प्राणो मूर्धनि चाग्नौ च वर्तमानो विचेष्टते ३
स जन्तुः सर्वभूतात्मा पुरुषः स सनातनः
मनो बुद्धिरहंकारो भूतानि विषयाश्च सः ४
एवं त्विह स सर्वत्र प्राणेन परिपाल्यते
पृष्ठतश्च समानेन स्वां स्वां गतिमुपाश्रितः ५
वस्तिमूलं गुदं चैव पावकं च समाश्रितः
वहन्मूत्रं पुरीषं चाप्यपानः परिवर्तते ६

प्रयत्ने कर्मणि बले य एकस्त्रिषु वर्तते
उदान इति तं प्राहुरध्यात्मविदुषो जनाः ७
संधिष्वपि च सर्वेषु संनिविष्टस्तथानिलः
शरीरेषु मनुष्याणां व्यान इत्युपदिश्यते ८
धातुष्वग्निस्तु विततः समानेन समीरितः
रसान्धातूंश्च दोषांश्च वर्तयन्नवतिष्ठति ९
अपानप्राणयोर्मध्ये प्राणापानसमाहितः
समन्वितः स्वधिष्ठानः सम्यक्पचति पावकः १०
आस्यं हि पायुसंयुक्तमन्ते स्याद्गुदसंज्ञितम्
स्रोतस्तस्मात्प्रजायन्ते सर्वस्रोतांसि देहिनाम् ११
प्राणानां संनिपाताच्च संनिपातः प्रजायते
ऊष्मा चाग्निरिति ज्ञेयो योऽन्नं पचति देहिनाम् १२
अग्निवेगवहः प्राणो गुदान्ते प्रतिहन्यते
स ऊर्ध्वमागम्य पुनः समुत्क्षिपति पावकम् १३
पक्वाशयस्त्वधो नाभेरूर्ध्वमामाशयः स्थितः
नाभिमध्ये शरीरस्य सर्वे प्राणाः समाहिताः १४
प्रसृता हृदयात्सर्वे तिर्यगूर्ध्वमधस्तथा
वहन्त्यन्नरसान्नाड्यो दश प्राणप्रचोदिताः १५
एष मार्गोऽथ योगानां येन गच्छन्ति तत्पदम्
जितक्लमासना धीरा मूर्धन्यात्मानमादधुः १६
एवं सर्वेषु विहितः प्राणापानेषु देहिनाम्
तस्मिन्स्थितो नित्यमग्निः स्थाल्यामिव समाहितः १७
इति श्रीमहाभारते शान्तिपर्वणि अष्टसप्तत्यधिकशततमोऽध्यायः १७८

## एकोनाशीत्यधिकशततमोऽध्यायः

भरद्वाज उवाच
यदि प्राणायते वायुर्वायुरेव विचेष्टते
श्वसित्याभाषते चैव तस्माज्जीवो निरर्थकः १
यद्यूष्मभाव आग्नेयो वह्निना पच्यते यदि
अग्निर्जरयते चैव तस्माज्जीवो निरर्थकः २

जन्तोः प्रमीयमाणस्य जीवो नैवोपलभ्यते
वायुरेव जहात्येनमूष्मभावश्च नश्यति ३
यदि वातोपमो जीवः संश्लेषो यदि वायुना
वायुमण्डलवद्दृश्यो गच्छेत्सह मरुद्गणैः ४
श्लेषो यदि च वातेन यदि तस्मात्प्रणश्यति
महार्णवविमुक्तत्वादन्यत्सलिलभाजनम् ५
कूपे वा सलिलं दद्यात्प्रदीपं वा हुताशने
प्रक्षिप्तं नश्यति क्षिप्रं यथा नश्यत्यसौ तथा ६
पञ्चसाधारणे ह्यस्मिञ्शरीरे जीवितं कुतः
येषामन्यतरत्यागाच्चतुर्णां नास्ति संग्रहः ७
नश्यन्त्यापो ह्यनाहाराद्वायुरुच्छ्वासनिग्रहात्
नश्यते कोष्ठभेदात्खमग्निर्नश्यत्यभोजनात् ८
व्याधिव्रणपरिक्लेशैर्मेदिनी चैव शीर्यते
पीडितेऽन्यतरे ह्येषां संघातो याति पञ्चधा ९
तस्मिन्पञ्चत्वमापन्ने जीवः किमनुधावति
किं वेदयति वा जीवः किं शृणोति ब्रवीति वा १०
एषा गौः परलोकस्थं तारयिष्यति मामिति
यो दत्त्वा म्रियते जन्तुः सा गौः कं तारयिष्यति ११
गौश्च प्रतिग्रहीता च दाता चैव समं यदा
इहैव विलयं यान्ति कुतस्तेषां समागमः १२
विहगैरुपयुक्तस्य शैलाग्रात्पतितस्य वा
अग्निना चोपयुक्तस्य कुतः संजीवनं पुनः १३
छिन्नस्य यदि वृक्षस्य न मूलं प्रतिरोहति
बीजान्यस्य प्रवर्तन्ते मृतः क्व पुनरेष्यति १४
बीजमात्रं पुरा सृष्टं यदेतत्परिवर्तते
मृता मृताः प्रणश्यन्ति बीजाद्बीजं प्रवर्तते १५
इति श्रीमहाभारते शान्तिपर्वणि एकोनाशीत्यधिकशततमोऽध्यायः १७९

## अशीत्यधिकशततमोऽध्यायः

भृगुरुवाच

न प्रणाशोऽस्ति जीवानां दत्तस्य च कृतस्य च
याति देहान्तरं प्राणी शरीरं तु विशीर्यते १
न शरीराश्रितो जीवस्तस्मिन्नष्टे प्रणश्यति
यथा समित्सु दग्धासु न प्रणश्यति पावकः २
भरद्वाज उवाच
अग्नेर्यथा तथा तस्य यदि नाशो न विद्यते
इन्धनस्योपयोगान्ते स चाग्निर्नोपलभ्यते ३
नश्यतीत्येव जानामि शान्तमग्निमनिन्धनम्
गतिर्यस्य प्रमाणं वा संस्थानं वा न दृश्यते ४
भृगुरुवाच
समिधामुपयोगान्ते सन्नेवाग्निर्न दृश्यते
आकाशानुगतत्वाद्धि दुर्ग्रहः स निराश्रयः ५
तथा शरीरसंत्यागे जीवो ह्याकाशवत्स्थितः
न गृह्यते सुसूक्ष्मत्वाद्यथा ज्योतिर्न संशयः ६
प्राणान्धारयते ह्यग्निः स जीव उपधार्यताम्
वायुसंधारणो ह्यग्निर्नश्यत्युच्छ्वासनिग्रहात् ७
तस्मिन्नष्टे शरीराग्नौ शरीरं तदचेतनम्
पतितं याति भूमित्वमयनं तस्य हि क्षितिः ८
जङ्गमानां हि सर्वेषां स्थावराणां तथैव च
आकाशं पवनोऽभ्येति ज्योतिस्तमनुगच्छति
तत्र त्रयाणामेकत्वं द्वयं भूमौ प्रतिष्ठितम् ९
यत्र खं तत्र पवनस्तत्राग्निर्यत्र मारुतः
अमूर्तयस्ते विज्ञेया आपो मूर्तास्तथा क्षितिः १०
भरद्वाज उवाच
यद्यग्निमारुतौ भूमिः खमापश्च शरीरिषु
जीवः किंलक्षणस्तत्रेत्येतदाचक्ष्व मेऽनघ ११
पञ्चात्मके पञ्चरतौ पञ्चविज्ञानसंयुते
शरीरे प्राणिनां जीवं ज्ञातुमिच्छामि यादृशम् १२
मांसशोणितसंघाते मेदःस्नाय्वस्थिसंचये
भिद्यमाने शरीरे तु जीवो नैवोपलभ्यते १३

यद्यजीवं शरीरं तु पञ्चभूतसमन्वितम्
शारीरे मानसे दुःखे कस्तां वेदयते रुजम् १४
शृणोति कथितं जीवः कर्णाभ्यां न शृणोति तत्
महर्षे मनसि व्यग्रे तस्माज्जीवो निरर्थकः १५
सर्वं पश्यति यद्दृश्यं मनोयुक्तेन चक्षुषा
मनसि व्याकुले तद्धि पश्यन्नपि न पश्यति १६
न पश्यति न च ब्रूते न शृणोति न जिघ्रति
न च स्पर्शरसौ वेत्ति निद्रावशगतः पुनः १७
हृष्यति क्रुध्यति च कः शोचत्युद्विजते च कः
इच्छति ध्यायति द्वेष्टि वाचमीरयते च कः १८
भृगुरुवाच
न पञ्चसाधारणमत्र किंचिच्छरीरमेको वहतेऽन्तरात्मा
स वेत्ति गन्धांश्च रसाञ्श्रुतिं च स्पर्शं च रूपं च गुणाश्च येऽन्ये १९
पञ्चात्मके पञ्चगुणप्रदर्शी स सर्वगात्रानुगतोऽन्तरात्मा
स वेत्ति दुःखानि सुखानि चात्र तद्विप्रयोगात्तु न वेत्ति देहः २०
यदा न रूपं न स्पर्शो नोष्मभावश्च पावके
तदा शान्ते शरीराग्नौ देहं त्यक्त्वा स नश्यति २१
अम्मयं सर्वमेवेदमापो मूर्तिः शरीरिणाम्
तत्रात्मा मानसो ब्रह्मा सर्वभूतेषु लोककृत् २२
आत्मानं तं विजानीहि सर्वलोकहितात्मकम्
तस्मिन्यः संश्रितो देहे ह्यब्बिन्दुरिव पुष्करे २३
क्षेत्रज्ञं तं विजानीहि नित्यं लोकहितात्मकम्
तमो रजश्च सत्त्वं च विद्धि जीवगुणानिमान् २४
सचेतनं जीवगुणं वदन्ति स चेष्टते चेष्टयते च सर्वम्
ततः परं क्षेत्रविदं वदन्ति प्रावर्तयद्यो भुवनानि सप्त २५
न जीवनाशोऽस्ति हि देहभेदे मिथ्यैतदाहुर्मृत इत्यबुद्धाः
जीवस्तु देहान्तरितः प्रयाति दशार्धतैवास्य शरीरभेदः २६
एवं सर्वेषु भूतेषु गूढश्चरति संवृतः
दृश्यते त्वग्र्या बुद्ध्या सूक्ष्मया तत्त्वदर्शिभिः २७
तं पूर्वापररात्रेषु युञ्जानः सततं बुधः

लघ्वाहारो विशुद्धात्मा पश्यत्यात्मानमात्मनि २८
चित्तस्य हि प्रसादेन हित्वा कर्म शुभाशुभम्
प्रसन्नात्मात्मनि स्थित्वा सुखमक्षयमश्नुते २९
मानसोऽग्नि शरीरेषु जीव इत्यभिधीयते
सृष्टिः प्रजापतेरेषा भूताध्यात्मविनिश्चये ३०
इति श्रीमहाभारते शान्तिपर्वणि अशीत्यधिकशततमोऽध्यायः १८०

## एकाशीत्यधिकशततमोऽध्यायः

भृगुरुवाच
असृजद्ब्राह्मणानेव पूर्वं ब्रह्मा प्रजापतिः
आत्मतेजोभिनिर्वृत्तान्भास्कराग्निसमप्रभान् १
ततः सत्यं च धर्मं च तपो ब्रह्म च शाश्वतम्
आचारं चैव शौचं च स्वर्गाय विदधे प्रभुः २
देवदानवगन्धर्वदैत्यासुरमहोरगाः
यक्षराक्षसनागाश्च पिशाचा मनुजास्तथा ३
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च द्विजसत्तम
ये चान्ये भूतसंघानां संघास्तांश्चापि निर्ममे ४
ब्राह्मणानां सितो वर्णः क्षत्रियाणां तु लोहितः
वैश्यानां पीतको वर्णः शूद्राणामसितस्तथा ५
भरद्वाज उवाच
चातुर्वर्ण्यस्य वर्णेन यदि वर्णो विभज्यते
सर्वेषां खलु वर्णानां दृश्यते वर्णसंकरः ६
कामः क्रोधो भयं लोभः शोकश्चिन्ता क्षुधा श्रमः
सर्वेषां नः प्रभवति कस्माद्वर्णो विभज्यते ७
स्वेदमूत्रपुरीषाणि श्लेष्मा पित्तं सशोणितम्
तनुः क्षरति सर्वेषां कस्माद्वर्णो विभज्यते ८
जङ्गमानामसंख्येयाः स्थावराणां च जातयः
तेषां विविधवर्णानां कुतो वर्णविनिश्चयः ९
भृगुरुवाच
न विशेषोऽस्ति वर्णानां सर्वं ब्राह्ममिदं जगत्

ब्रह्मणा पूर्वसृष्टं हि कर्मभिर्वर्णतां गतम् १०
कामभोगप्रियास्तीक्ष्णाः क्रोधनाः प्रियसाहसाः
त्यक्तस्वधर्मा रक्ताङ्गास्ते द्विजाः क्षत्रतां गताः ११
गोषु वृत्तिं समाधाय पीताः कृष्युपजीविनः
स्वधर्मं नानुतिष्ठन्ति ते द्विजा वैश्यतां गताः १२
हिंसानृतप्रिया लुब्धाः सर्वकर्मोपजीविनः
कृष्णाः शौचपरिभ्रष्टास्ते द्विजाः शूद्रतां गताः १३
इत्येतैः कर्मभिर्व्यस्ता द्विजा वर्णान्तरं गताः
धर्मो यज्ञक्रिया चैषां नित्यं न प्रतिषिध्यते १४
वर्णाश्चत्वार एते हि येषां ब्राह्मी सरस्वती
विहिता ब्रह्मणा पूर्वं लोभात्त्वज्ञानतां गताः १५
ब्राह्मणा धर्मतन्त्रस्थास्तपस्तेषां न नश्यति
ब्रह्म धारयतां नित्यं व्रतानि नियमांस्तथा १६
ब्रह्म चैतत्पुरा सृष्टं ये न जानन्त्यतद्विदः
तेषां बहुविधास्त्वन्यास्तत्र तत्र हि जातयः १७
पिशाचा राक्षसाः प्रेता बहुधा म्लेच्छजातयः
प्रनष्टज्ञानविज्ञानाः स्वच्छन्दाचारचेष्टिताः १८
प्रजा ब्राह्मणसंस्काराः स्वधर्मकृतनिश्चयाः
ऋषिभिः स्वेन तपसा सृज्यन्ते चापरे परैः १९
आदिदेवसमुद्भूता ब्रह्ममूलाक्षयाव्यया
सा सृष्टिर्मानसी नाम धर्मतन्त्रपरायणा २०
इति श्रीमहाभारते शान्तिपर्वणि एकाशीत्यधिकशततमोऽध्यायः १८१

## द्व्यशीत्यधिकशततमोऽध्यायः

भरद्वाज उवाच
ब्राह्मणः केन भवति क्षत्रियो वा द्विजोत्तम
वैश्यः शूद्रश्च विप्रर्षे तद्ब्रूहि वदतां वर १
भृगुरुवाच
जातकर्मादिभिर्यस्तु संस्कारैः संस्कृतः शुचिः
वेदाध्ययनसंपन्नः षट्सु कर्मस्ववस्थितः २

शौचाचारस्थितः सम्यग्विघसाशी गुरुप्रियः
नित्यव्रती सत्यपरः स वै ब्राह्मण उच्यते ३
सत्यं दानं दमोऽद्रोह आनृशंस्यं क्षमा घृणा
तपश्च दृश्यते यत्र स ब्राह्मण इति स्मृतः ४
क्षत्रजं सेवते कर्म वेदाध्ययनसंमतः
दानादानरतिर्यश्च स वै क्षत्रिय उच्यते ५
कृषिगोरक्ष्यवाणिज्यं यो विशत्यनिशं शुचिः
वेदाध्ययनसंपन्नः स वैश्य इति संज्ञितः ६
सर्वभक्षरतिर्नित्यं सर्वकर्मकरोऽशुचिः
त्यक्तवेदस्त्वनाचारः स वै शूद्र इति स्मृतः ७
शूद्रे चैतद्भवेल्लक्ष्यं द्विजे चैतन्न विद्यते
न वै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः ८
सर्वोपायैस्तु लोभस्य क्रोधस्य च विनिग्रहः
एतत्पवित्रं ज्ञातव्यं तथा चैवात्मसंयमः ९
नित्यं क्रोधात्तपो रक्षेच्छ्रियं रक्षेत मत्सरात्
विद्यां मानावमानाभ्यामात्मानं तु प्रमादतः १०
यस्य सर्वे समारम्भा निराशीर्बन्धनास्त्विह
त्यागे यस्य हुतं सर्वं स त्यागी स च बुद्धिमान् ११
अहिंस्रः सर्वभूतानां मैत्रायणगतश्चरेत्
अविस्रम्भे न गन्तव्यं विस्रम्भे धारयेन्मनः १२
परिग्रहान्परित्यज्य भवेद्बुद्ध्या जितेन्द्रियः
अशोकं स्थानमातिष्ठेदिह चामुत्र चाभयम् १३
तपोनित्येन दान्तेन मुनिना संयतात्मना
अजितं जेतुकामेन भाव्यं सङ्गेष्वसङ्गिना १४
इन्द्रियैर्गृह्यते यद्यत्तत्तद्व्यक्तमिति स्थितिः
अव्यक्तमिति विज्ञेयं लिङ्गग्राह्यमतीन्द्रियम् १५
मनः प्राणे निगृह्णीयात्प्राणं ब्रह्मणि धारयेत्
निर्वाणादेव निर्वाणो न च किंचिद्विचिन्तयेत्
सुखं वै ब्राह्मणो ब्रह्म स वै तेनाधिगच्छति १६
शौचेन सततं युक्तस्तथाचारसमन्वितः

सानुक्रोशश्च भूतेषु तद्द्विजातिषु लक्षणम् १७
इति श्रीमहाभारते शान्तिपर्वणि द्व्यशीत्यधिकशततमोऽध्यायः १८२

## त्र्यशीत्यधिकशततमोऽध्यायः

भृगुरुवाच
सत्यं ब्रह्म तपः सत्यं सत्यं सृजति च प्रजाः
सत्येन धार्यते लोकः स्वर्गं सत्येन गच्छति १
अनृतं तपसो रूपं तमसा नीयते ह्यधः
तमोग्रस्ता न पश्यन्ति प्रकाशं तमसावृतम् २
स्वर्गः प्रकाश इत्याहुर्नरकं तम एव च
सत्यानृतात्तदुभयं प्राप्यते जगतीचरैः ३
तत्र त्वेवंविधा वृत्तिर्लोके सत्यानृता भवेत्
धर्माधर्मौ प्रकाशश्च तमो दुःखं सुखं तथा ४
तत्र यत्सत्यं स धर्मो यो धर्मः स प्रकाशो यः प्रकाशस्तत्सुखमिति १
तत्र यदनृतं सोऽधर्मो योऽधर्मस्तत्तमो यत्तमस्तद्दुःखमिति २५
अत्रोच्यते
शारीरैर्मानसैर्दुःखैः सुखैश्चाप्यसुखोदयैः
लोकसृष्टिं प्रपश्यन्तो न मुह्यन्ति विचक्षणाः ६
तत्र दुःखविमोक्षार्थं प्रयतेत विचक्षणः
सुखं ह्यनित्यं भूतानामिहलोके परत्र च ७
राहुग्रस्तस्य सोमस्य यथा ज्योत्स्ना न भासते
तथा तमोभिभूतानां भूतानां भ्रश्यते सुखम् ८
तत्खलु द्विविधं सुखमुच्यते शारीरं मानसं च १
इह खल्वमुष्मिंश्च लोके सर्वारम्भप्रवृत्तयः सुखार्था अभिधीयन्ते २
न ह्यतस्त्रिवर्गफलं विशिष्टतरमस्ति ३
स एष काम्यो गुणविशेषो धर्मार्थयोरारम्भस्तद्धेतुरस्योत्पत्तिः सुखप्रयोजना ४९
भरद्वाज उवाच
यदेतद्भवताभिहितं सुखानां परमाः स्त्रिय इति तन्न गृह्णीमः १
न ह्येषामृषीणां महति स्थितानामप्राप्य एष गुणविशेषो न चैनमभिलषन्ति २

श्रूयते च भगवांस्त्रिलोककृद्ब्रह्मा प्रभुरेकाकी तिष्ठति ३
ब्रह्मचारी न कामसुखेष्वात्मानमवदधाति ४
अपि च भगवान्विश्वेश्वर उमापतिः काममभिवर्तमानमनङ्गत्वेन शममनयत्
५
तस्माद्ब्रूमो न महात्मभिरयं प्रतिगृहीतो न त्वेष तावद्विशिष्टो गुण
इति नैतद्भगवतः प्रत्येमि ६
भगवता तूक्तं सुखानां परमाः स्त्रिय इति ७
लोकप्रवादोऽपि च भवति द्विविधः फलोदयः
सुकृतात्सुखमवाप्यते दुष्कृताद्दुःखमिति ८
अत्रोच्यताम् ९१०
भृगुरुवाच
अनृतात्खलु तमः प्रादुर्भूतं तमोग्रस्ता अधर्ममेवानुवर्तन्ते न धर्मम् १
क्रोधलोभमोहमानानृतादिभिरवच्छन्ना न खल्वस्मिँल्लोके
न चामुत्र सुखमाप्नुवन्ति २
विविधव्याधिगणोपतापैरवकीर्यन्ते ३
वधबन्धरोगपरिक्लेशादिभिश्च क्षुत्पिपासाश्रमकृतैरुपतापैरुपतप्यन्ते ४
चण्डवातात्युष्णातिशीतकृतैश्च प्रतिभयैः शारीरैर्दुःखैरुपतप्यन्ते ५
बन्धुधनविनाशविप्रयोगकृतैश्च मानसैः शोकैरभिभूयन्ते
जरामृत्युकृतैश्चान्यैरिति ६११
यस्त्वेतैः शारीरैर्मानसैर्दुःखैर्न स्पृश्यते स सुखं वेद १
न चैते दोषाः स्वर्गे प्रादुर्भवन्ति २
तत्र भवति खलु ३१२
सुसुखः पवनः स्वर्गे गन्धश्च सुरभिस्तथा
क्षुत्पिपासाश्रमो नास्ति न जरा न च पापकम् १३
नित्यमेव सुखं स्वर्गे सुखं दुःखमिहोभयम्
नरके दुःखमेवाहुः समं तु परमं पदम् १४
पृथिवी सर्वभूतानां जनित्री तद्विधाः स्त्रियः
पुमान्प्रजापतिस्तत्र शुक्रं तेजोमयं विदुः १५
इत्येतल्लोकनिर्माणं ब्रह्मणा विहितं पुरा
प्रजाः विपरिवर्तन्ते स्वैः स्वैः कर्मभिरावृताः १६

इति श्रीमहाभारते शान्तिपर्वणि त्र्यशीत्यधिकशततमोऽध्यायः १८३

चतुरशीत्यधिकशततमोऽध्यायः

भरद्वाज उवाच
दानस्य किं फलं प्राहुर्धर्मस्य चरितस्य च
तपसश्च सुतप्तस्य स्वाध्यायस्य हुतस्य च १
भृगुरुवाच
हुतेन शाम्यते पापं स्वाध्याये शान्तिरुत्तमा
दानेन भोग इत्याहुस्तपसा सर्वमाप्नुयात् २
दानं तु द्विविधं प्राहुः परत्रार्थमिहैव च
सद्भ्यो यद्दीयते किंचित्तत्परत्रोपतिष्ठति ३
असत्सु दीयते यत्तु तद्दानमिह भुज्यते
यादृशं दीयते दानं तादृशं फलमाप्यते ४
भरद्वाज उवाच
किं कस्य धर्मचरणं किं वा धर्मस्य लक्षणम्
धर्मः कतिविधो वापि तद्भवान्वक्तुमर्हति ५
भृगुरुवाच
स्वधर्मचरणे युक्ता ये भवन्ति मनीषिणः
तेषां धर्मफलावाप्तिर्योऽन्यथा स विमुह्यति ६
भरद्वाज उवाच
यदेतच्चातुराश्रम्यं ब्रह्मर्षिविहितं पुरा
तेषां स्वे स्वे य आचारास्तान्मे वक्तुमिहार्हसि ७
भृगुरुवाच
पूर्वमेव भगवता लोकहितमनुतिष्ठता
धर्मसंरक्षणार्थमाश्रमाश्चत्वारोऽभिनिर्दिष्टाः १
तत्र गुरुकुलवासमेव तावत्प्रथममाश्रममुदाहरन्ति २ सम्यगत्र
शौचसंस्कारविनयनियमप्रणीतो विनीतात्मा उभे
संध्ये भास्कराग्निदैवतान्युपस्थाय विहाय तन्द्रालस्ये
गुरोरभिवादनवेदाभ्यास श्रवणपवित्रीकृतान्तरात्मा त्रिषवणमुपस्पृश्य
ब्रह्मचर्याग्निपरिचरणगुरुशुश्रूषानित्यो भैक्षादिसर्वनिवेदितान्तरात्मा

गुरुवचननिर्देशानुष्ठानाप्रतिकूलो गुरुप्रसादलब्धस्वाध्यायतत्परः स्यात् ३८
भवति चात्र श्लोकः
गुरुं यस्तु समाराध्य द्विजो वेदमवाप्नुयात्
तस्य स्वर्गफलावाप्तिः सिध्यते चास्य मानसम् ९
गार्हस्थ्यं खलु द्वितीयमाश्रमं वदन्ति १
तस्य समुदाचारलक्षणं सर्वमनुव्याख्यास्यामः २
समावृत्तानां सदाराणां सहधर्मचर्याफलार्थिनां
गृहाश्रमो विधीयते ३
धर्मार्थकामावाप्तिर्ह्यत्र त्रिवर्गसाधनमवेक्ष्यागर्हितेन कर्मणा
धनान्यादाय स्वाध्यायप्रकर्षोपलब्धेन ब्रह्मर्षिनिर्मितेन वा अद्रिसारगतेन वा
हव्यनियमाभ्यासदैवतप्रसादोपलब्धेन वा धनेन गृहस्थो गार्हस्थ्यं प्रवर्तयेत्
४
तद्धि सर्वाश्रमाणां मूलमुदाहरन्ति ५
गुरुकुलवासिनः परिव्राजका ये चान्ये संकल्पितव्रतनियम-
धर्मानुष्ठायिनस्तेषामप्यत एव भिक्षाबलिसंविभागाः प्रवर्तन्ते ६१०
वानप्रस्थानां द्रव्योपस्कार इति प्रायशः खल्वेते साधवः साधुपथ्यदर्शनाः
स्वाध्यायप्रसङ्गिनस्तीर्थाभिगमनदेशदर्शनार्थं पृथिवीं पर्यटन्ति १
तेषां प्रत्युत्थानाभिवादनानसूयावाक्प्रदान
सौमुख्यशक्त्यासनशयनाभ्यवहारसत्क्रियाश्चेति २११
भवति चात्र श्लोकः
अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्तते
स दत्वा दुष्कृतं तस्मै पुण्यमादाय गच्छति १२
अपि चात्र यज्ञक्रियाभिर्देवताः प्रीयन्ते निवापेन पितरो
वेदाभ्यासश्रवणधारणेन ऋषयः १
अपत्योत्पादनेन प्रजापतिरिति २१३
श्लोकौ चात्र भवतः
वत्सलाः सर्वभूतानां वाच्याः श्रोत्रसुखा गिरः
परिवादोपघातौ च पारुष्यं चात्र गर्हितम् १४
अवज्ञानमहंकारो दम्भश्चैव विगर्हितः
अहिंसा सत्यमक्रोधः सर्वाश्रमगतं तपः १५

अपि चात्र माल्याभरणवस्त्राभ्यङ्गगन्धोपभोगनृत्त-
गीतवादित्रश्रुतिसुखनयनाभिरामसंदर्शनानां प्राप्तिर्भक्ष्य-
भोज्यपेयलेह्यचोष्याणामभ्यवहार्याणां विविधानामुपभोगः
स्वदारविहारसंतोषः कामसुखावाप्तिरिति १६
त्रिवर्गगुणनिर्वृत्तिर्यस्य नित्यं गृहाश्रमे
स सुखान्यनुभूयेह शिष्टानां गतिमाप्नुयात् १७
उञ्छवृत्तिर्गृहस्थो यः स्वधर्मचरणे रतः
त्यक्तकामसुखारम्भस्तस्य स्वर्गो न दुर्लभः १८
इति श्रीमहाभारते शान्तिपर्वणि चतुरशीत्यधिकशततमोऽध्यायः १८४

## पञ्चाशीत्यधिकशततमोऽध्यायः

भृगुरुवाच
वानप्रस्थाः खलु ऋषिधर्ममनुसरन्तः पुण्यानि तीर्थानि नदीप्रस्रवणानि
सुविविक्तेष्वरण्येषु मृगमहिषवराहसृमरगजाकीर्णेषु तपस्यन्तोऽनुसंचरन्ति १
त्यक्तग्राम्यवस्त्राहारोपभोगा
वन्यौषधिमूलफलपर्णपरिमितविचित्रनियताहाराः
स्थानासनिनो भूमिपाषाणसिकताशर्करावालुकाभस्मशायिनः
काशकुशचर्म- वल्कलसंवृताङ्गाः केशश्मश्रुनखरोमधारिणो
नियतकालोपस्पर्शना अस्कन्नहोम- बलिकालानुष्ठायिनः
समित्कुशकुसुमोपहारहोमार्जनलब्धविश्रामाः शीतोष्ण-
पवननिष्टप्तविभिन्नसर्वत्वचो
विविधनियमयोगचर्याविहितधर्मानुष्ठानहृतमांस- शोणितास्त्वगस्थिभूता
धृतिपराः सत्त्वयोगाच्छरीराण्युद्वहन्ति २१
यस्त्वेतां नियतश्चर्यां ब्रह्मर्षिविहितां चरेत्
स दहेदग्निवद्दोषाञ्जयेल्लोकांश्च दुर्जयान् २
परिव्राजकानां पुनराचारस्तद्यथा १
विमुच्याग्निधनकलत्रपरिबर्हसङ्गानात्मनः स्नेहपाशानवधूय परिव्रजन्ति
समलोष्टाश्मकाञ्चनास्त्रिवर्गप्रवृत्तेष्वारम्भेष्वसक्तबुद्धयोऽरिमित्रोदासीनेषु
तुल्यवृत्तयः स्थावरजरायुजाण्डजस्वेदजोद्भिज्जानां भूतानां
वाङ्मनःकर्मभिरनभिद्रोहिणोऽनिकेताः पर्वतपुलिनवृक्षमूलदेवतायतनान्यनु-

चरन्तो वासार्थमुपेयुर्नगरं ग्रामं वा नगरे पञ्चरात्रिका ग्रामैकरात्रिकाः २
प्रविश्य च प्राणधारणमात्रार्थं द्विजातीनां
भवनान्यसंकीर्णकर्मणामुपतिष्ठेयुः पात्रपतितायाचितभैक्षाः
कामक्रोधदर्पमोहलोभकार्पण्यदम्भपरिवादाभिमानहिंसानिवृत्ता इति ३३
भवति चात्र श्लोकः
अभयं सर्वभूतेभ्यो दत्त्वा चरति यो मुनिः
न तस्य सर्वभूतेभ्यो भयमुत्पद्यते क्वचित् ४
कृत्वाग्निहोत्रं स्वशरीरसंस्थं शारीरमग्निं स्वमुखे जुहोति
यो भैक्षचर्योपगतैर्हविर्भिश्चिताग्निनां स व्यतियाति लोकान् ५
मोक्षाश्रमं यःकुरुते यथोक्तं शुचिः सुसंकल्पितबुद्धियुक्तः
अनिन्धनं ज्योतिरिव प्रशान्तं स ब्रह्मलोकं श्रयते द्विजातिः ६
भरद्वाज उवाच
अस्माल्लोकात्परो लोकः श्रूयते नोपलभ्यते
तमहं ज्ञातुमिच्छामि तद्भवान्वक्तुमर्हति ७
भृगुरुवाच
उत्तरे हिमवत्पार्श्वे पुण्ये सर्वगुणान्विते
पुण्यः क्षेम्यश्च काम्यश्च स वरो लोक उच्यते ८
तत्र ह्यपापकर्माणः शुचयोऽत्यन्तनिर्मलाः
लोभमोहपरित्यक्ता मानवा निरुपद्रवाः ९
स स्वर्गसदृशो देशस्तत्र ह्युक्ताः शुभा गुणाः
काले मृत्युः प्रभवति स्पृशन्ति व्याधयो न च १०
न लोभः परदारेषु स्वदारनिरतो जनः
न चान्योन्यवधस्तत्र द्रव्येषु न च विस्मयः
परोक्षधर्मो नैवास्ति संदेहो नापि जायते ११
कृतस्य तु फलं तत्र प्रत्यक्षमुपलभ्यते
शय्यायानासनोपेताः प्रासादभवनाश्रयाः
सर्वकामैर्वृताः केचिद्धेमाभरणभूषिताः १२
प्राणधारणमात्रं तु केषांचिदुपपद्यते
श्रमेण महता केचित्कुर्वन्ति प्राणधारणम् १३
इह धर्मपराः केचित्केचिन्नैकृतिका नराः

सुखिता दुःखिताः केचिन्निर्धना धनिनोऽपरे १४
इह श्रमो भयं मोहः क्षुधा तीव्रा च जायते
लोभश्चार्थकृतो नृणां येन मुह्यन्ति पण्डिताः १५
इह चिन्ता बहुविधा धर्माधर्मस्य कर्मणः
यस्तद्वेदोभयं प्राज्ञः पाप्मना न स लिप्यते १६
सोपधं निकृतिः स्तेयं परिवादोऽभ्यसूयता
परोपघातो हिंसा च पैशुन्यमनृतं तथा १७
एतानासेवते यस्तु तपस्तस्य प्रहीयते
यस्त्वेतान्नाचरेद्विद्वांस्तपस्तस्याभिवर्धते १८
कर्मभूमिरियं लोक इह कृत्वा शुभाशुभम्
शुभैः शुभमवाप्नोति कृत्वाशुभमतोऽन्यथा १९
इह प्रजापतिः पूर्वं देवाः सर्षिगणास्तथा
इष्ट्वेष्टतपसः पूता ब्रह्मलोकमुपाश्रिताः २०
उत्तरः पृथिवीभागः सर्वपुण्यतमः शुभः
इहत्यास्तत्र जायन्ते ये वै पुण्यकृतो जनाः २१
असत्कर्माणि कुर्वन्तस्तिर्यग्योनिषु चापरे
क्षीणायुषस्तथैवान्ये नश्यन्ति पृथिवीतले २२
अन्योन्यभक्षणे सक्ता लोभमोहसमन्विताः
इहैव परिवर्तन्ते न ते यान्त्युत्तरां दिशम् २३
ये गुरूनुपसेवन्ते नियता ब्रह्मचारिणः
पन्थानं सर्वलोकानां ते जानन्ति मनीषिणः २४
इत्युक्तोऽय मया धर्मः संक्षेपाद्ब्रह्मनिर्मितः
धर्माधर्मौ हि लोकस्य यो वै वेत्ति स बुद्धिमान् २५
भीष्म उवाच
इत्युक्तो भृगुणा राजन्भरद्वाजः प्रतापवान्
भृगुं परमधर्मात्मा विस्मितः प्रत्यपूजयत् २६
एष ते प्रभवो राजञ्जगतः संप्रकीर्तितः
निखिलेन महाप्राज्ञ किं भूयः श्रोतुमिच्छसि २७

इति श्रीमहाभारते शान्तिपर्वणि पञ्चाशीत्यधिकशततमोऽध्यायः १८५

## षडशीत्यधिकशततमोऽध्यायः

युधिष्ठिर उवाच
आचारस्य विधिं तात प्रोच्यमानं त्वयानघ
श्रोतुमिच्छामि धर्मज्ञ सर्वज्ञो ह्यसि मे मतः १
भीष्म उवाच
दुराचारा दुर्विचेष्टा दुष्प्रज्ञाः प्रियसाहसाः
असन्तो ह्यभिविख्याताः सन्तश्चाचारलक्षणाः २
पुरीषं यदि वा मूत्रं ये न कुर्वन्ति मानवाः
राजमार्गे गवां मध्ये धान्यमन्ये च ते शुभाः ३
शौचमावश्यकं कृत्वा देवतानां च तर्पणम्
धर्ममाहुर्मनुष्याणामुपस्पृश्य नदीं तरेत् ४
सूर्यं सदोपतिष्ठेत न स्वप्याद्भास्करोदये
सायं प्रातर्जपन्संध्यां तिष्ठेत्पूर्वां तथापराम् ५
पञ्चार्द्रो भोजनं कुर्यात्प्राङ्मुखो मौनमास्थितः
न निन्देदन्नभक्ष्यांश्च स्वाद्वस्वादु च भक्षयेत् ६
नार्द्रपाणिः समुत्तिष्ठेन्नार्द्रपादः स्वपेन्निशि
देवर्षिनारदप्रोक्तमेतदाचारलक्षणम् ७
शुचिकाममनड्वाहं देवगोष्ठं चतुष्पथम्
ब्राह्मणं धार्मिकं चैव नित्यं कुर्यात्प्रदक्षिणम् ८
अतिथीनां च सर्वेषां प्रेष्याणां स्वजनस्य च
सामान्यं भोजनं भृत्यैः पुरुषस्य प्रशस्यते ९
सायं प्रातर्मनुष्याणामशनं देवनिर्मितम्
नान्तरा भोजनं दृष्टमुपवासी तथा भवेत् १०
होमकाले तथा जुह्वनृतुकाले तथा व्रजन्
अनन्यस्त्रीजनः प्राज्ञो ब्रह्मचारी तथा भवेत् ११
अमृतं ब्राह्मणोच्छिष्टं जनन्या हृदयं कृतम्
उपासीत जनः सत्यं सत्यं सन्त उपासते १२
यजुषा संस्कृतं मांसं निवृत्तो मांसभक्षणात्
न भक्षयेद्वृथामांसं पृष्ठमांसं च वर्जयेत् १३
स्वदेशे परदेशे वा अतिथिं नोपवासयेत्

काम्यं कर्मफलं लब्ध्वा गुरूणामुपपादयेत् १४
गुरुभ्य आसनं देयं कर्तव्यं चाभिवादनम्
गुरूनभ्यर्च्य युज्यन्ते आयुषा यशसा श्रिया १५
नेक्षेतादित्यमुद्यन्तं न च नग्नां परस्त्रियम्
मैथुनं समये धर्म्यं गुह्यं चैव समाचरेत् १६
तीर्थानां हृदयं तीर्थं शुचीनां हृदयं शुचिः
सर्वमार्यकृतं शौचं वालसंस्पर्शनानि च १७
दर्शने दर्शने नित्यं सुखप्रश्नमुदाहरेत्
सायं प्रातश्च विप्राणां प्रदिष्टमभिवादनम् १८
देवगोष्ठे गवां मध्ये ब्राह्मणानां क्रियापथे
स्वाध्याये भोजने चैव दक्षिणं पाणिमुद्धरेत् १९
पणयानां शोभनं पणयं कृषीणां बाद्यते कृषिः
बहुकारं च सस्यानां वाह्ये वाह्यं तथा गवां २०
संपन्नं भोजने नित्यं पानीये तर्पणं तथा
सुशृतं पायसे ब्रूयाद्यवाग्वां कृसरे तथा २१
श्मश्रुकर्मणि संप्राप्ते क्षुते स्नानेऽथ भोजने
व्याधितानां च सर्वेषामायुष्यमभिनन्दनम् २२
प्रत्यादित्यं न मेहेत न पश्येदात्मनः शकृत्
सुतस्त्रिया च शयनं सहभोज्यं च वर्जयेत् २३
त्वंकारं नामधेयं च ज्येष्ठानां परिवर्जयेत्
अवराणां समानानामुभयेषां न दुष्यति २४
हृदयं पापवृत्तानां पापमाख्याति वैकृतम्
ज्ञानपूर्वं विनश्यन्ति गूहमाना महाजने २५
ज्ञानपूर्वं कृतं पापं छादयन्त्यबहुश्रुताः
नैनं मनुष्याः पश्यन्ति पश्यन्ति त्रिदिवौकसः २६
पापेन हि कृतं पापं पापमेवानुवर्तते
धार्मिकेण कृतो धर्मः कर्तारमनुवर्तते २७
पापं कृतं न स्मरतीह मूढो विवर्तमानस्य तदेति कर्तुः
राहुर्यथा चन्द्रमुपैति चापि तथाबुधं पापमुपैति कर्म २८
आशया संचितं द्रव्यं यत्काले नेह भुज्यते

तद्बुधा न प्रशंसन्ति मरणं न प्रतीक्षते २९
मानसं सर्वभूतानां धर्ममाहुर्मनीषिणः
तस्मात्सर्वेषु भूतेषु मनसा शिवमाचरेत् ३०
एक एव चरेद्धर्मं नास्ति धर्मे सहायता
केवलं विधिमासाद्य सहायः किं करिष्यति ३१
देवा योनिर्मनुष्याणां देवानाममृतं दिवि
प्रेत्यभावे सुखं धर्माच्छश्वत्तैरुपभुज्यते ३२
इति श्रीमहाभारते शान्तिपर्वणि षडशीत्यधिकशततमोऽध्यायः १८६

## सप्ताशीत्यधिकशततमोऽध्यायः

युधिष्ठिर उवाच
अध्यात्मं नाम यदिदं पुरुषस्येह चिन्त्यते
यदध्यात्मं यथाचैतत्तन्मे ब्रूहि पितामह १
भीष्म उवाच
अध्यात्ममिति मां पार्थ यदेतदनुपृच्छसि
तद्व्याख्यास्यामि ते तात श्रेयस्करतरं सुखम् २
यज्ज्ञात्वा पुरुषो लोके प्रीतिं सौख्यं च विन्दति
फललाभश्च सद्यः स्यात्सर्वभूतहितं च तत् ३
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम्
महाभूतानि भूतानां सर्वेषां प्रभवाप्ययौ ४
ततः सृष्टानि तत्रैव तानि यान्ति पुनः पुनः
महाभूतानि भूतेषु सागरस्योर्मयो यथा ५
प्रसार्य च यथाङ्गानि कूर्मः संहरते पुनः
तद्वद्भूतानि भूतात्मा सृष्ट्वा संहरते पुनः ६
महाभूतानि पञ्चैव सर्वभूतेषु सूतकृत्
अकरोत्तेषु वैषम्यं तत्तु जीवोऽनु पश्यति ७
शब्दं श्रोत्रं तथा खानि त्रयमाकाशयोनिजम्
वायोस्त्वक्स्पर्शचेष्टाश्च वागित्यैतच्चतुष्टयम् ८
रूपं चक्षुस्तथा पक्तिस्त्रिविधं तेज उच्यते
रसः क्लेदश्च जिह्वा च त्रयो जलगुणाः स्मृताः ९

घ्रेयं घ्राणं शरीरं च ते तु भूमिगुणास्त्रयः
महाभूतानि पञ्चैव षष्ठं च मन उच्यते १०
इन्द्रियाणि मनश्चैव विज्ञानान्यस्य भारत
सप्तमी बुद्धिरित्याहुः क्षेत्रज्ञः पुनरष्टमः ११
चक्षुरालोकनायैव संशयं कुरुते मनः
बुद्धिरध्यवसायाय क्षेत्रज्ञः साक्षिवत्स्थितः १२
ऊर्ध्वं पादतलाभ्यां यदर्वागूर्ध्वं च पश्यति
एतेन सर्वमेवेदं विद्ध्यभिव्याप्तमन्तरम् १३
पुरुषे चेन्द्रियाणीह वेदितव्यानि कृत्स्नशः
तमो रजश्च सत्त्वं च विद्धि भावांस्तदाश्रयान् १४
एतां बुद्ध्वा नरो बुद्ध्या भूतानामागतिं गतिम्
समवेक्ष्य शनैश्चैव लभते शममुत्तमम् १५
गुणान्नेनीयते बुद्धिर्बुद्धिरेवेन्द्रियाण्यपि
मनःषष्ठानि सर्वाणि बुद्ध्यभावे कृतो गुणाः १६
इति तन्मयमेवैतत्सर्वं स्थावरजङ्गमम्
प्रलीयते चोद्भवति तस्मान्निर्दिश्यते तथा १७
येन पश्यति तच्चक्षुः शृणोति श्रोत्रमुच्यते
जिघ्रति घ्राणमित्याहू रसं जानाति जिह्वया १८
त्वचा स्पृशति च स्पर्शान्बुद्धिर्विक्रियतेऽसकृत्
येन संकल्पयत्यर्थं किंचिद्भवति तन्मनः १९
अधिष्ठानानि बुद्धेर्हि पृथगर्थानि पञ्चधा
पञ्चेन्द्रियाणि यान्याहुस्तान्यदृश्योऽधितिष्ठति २०
पुरुषाधिष्ठिता बुद्धिस्त्रिषु भावेषु वर्तते
कदाचिल्लभते प्रीतिं कदाचिदनुशोचति २१
न सुखेन न दुःखेन कदाचिदपि वर्तते
एवं नराणां मनसि त्रिषु भावेष्ववस्थिता २२
सेयं भावात्मिका भावांस्त्रीनेतान्नातिवर्तते
सरितां सागरो भर्ता महावेलामिवोर्मिमान् २३
अतिभावगता बुद्धिर्भावे मनसि वर्तते
प्रवर्तमानं हि रजस्तद्भावमनुवर्तते २४

इन्द्रियाणि हि सर्वाणि प्रदर्शयति सा सदा
प्रीतिः सत्त्वं रजः शोकस्तमो मोहश्च ते त्रयः २५
ये ये च भावा लोकेऽस्मिन्सर्वेष्वेतेषु ते त्रिषु
इति बुद्धिगतिः सर्वा व्याख्याता तव भारत २६
इन्द्रियाणि च सर्वाणि विजेतव्यानि धीमता
सत्त्वं रजस्तमश्चैव प्राणिनां संश्रिताः सदा २७
त्रिविधा वेदना चैव सर्वसत्त्वेषु दृश्यते
सात्त्विकी राजसी चैव तामसी चेति भारत २८
सुखस्पर्शः सत्त्वगुणो दुःखस्पर्शो रजोगुणः
तमोगुणेन संयुक्तौ भवतोऽव्यावहारिकौ २९
तत्र यत्प्रीतिसंयुक्तं काये मनसि वा भवेत्
वर्तते सात्त्विको भाव इत्यवेक्षेत तत्तदा ३०
अथ यद्दुःखसंयुक्तमतुष्टिकरमात्मनः
प्रवृत्तं रज इत्येव तन्न संरभ्य चिन्तयेत् ३१
अथ यन्मोहसंयुक्तमव्यक्तमिव यद्भवेत्
अप्रतर्क्यमविज्ञेयं तमस्तदुपधारयेत् ३२
प्रहर्षः प्रीतिरानन्दः सुखं संशान्तचित्तता
कथंचिदभिवर्तन्त इत्येते सात्त्विका गुणाः ३३
अतुष्टिः परितापश्च शोको लोभस्तथाक्षमा
लिङ्गानि रजसस्तानि दृश्यन्ते हेत्वहेतुभिः ३४
अभिमानस्तथा मोहः प्रमादः स्वप्नतन्द्रिता
कथंचिदभिवर्तन्ते विविधास्तामसा गुणाः ३५
दूरगं बहुधागामि प्रार्थनासंशयात्मकम्
मनः सुनियतं यस्य स सुखी प्रेत्य चेह च ३६
सत्त्वक्षेत्रज्ञयोरेतदन्तरं पश्य सूक्ष्मयोः
सृजते तु गुणानेक एको न सृजते गुणान् ३७
मशकोदुम्बरौ चापि संप्रयुक्तौ यथा सदा
अन्योन्यमन्यौ च यथा संप्रयोगस्तथा तयोः ३८
पृथग्भूतौ प्रकृत्या तौ संप्रयुक्तौ च सर्वदा
यथा मत्स्यो जलं चैव संप्रयुक्तौ तथैव तौ ३९

न गुणा विदुरात्मानं स गुणान्वेत्ति सर्वशः
परिद्रष्टा गुणानां च संस्रष्टा मन्यते सदा ४०
इन्द्रियैस्तु प्रदीपार्थं कुरुते बुद्धिसप्तमैः
निर्विचेष्टैरजानद्भिः परमात्मा प्रदीपवत् ४१
सृजते हि गुणान्सत्त्वं क्षेत्रज्ञः परिपश्यति
संप्रयोगस्तयोरेष सत्त्वक्षेत्रज्ञयोर्ध्रुवः ४२
आश्रयो नास्ति सत्वस्य क्षेत्रज्ञस्य च कश्चन
सत्त्वं मनः संसृजति न गुणान्वै कदाचन ४३
रश्मींस्तेषां स मनसा यदा सम्यङ्नियच्छति
तदा प्रकाशतेऽस्यात्मा घटे दीपो ज्वलन्निव ४४
त्यक्त्वा यः प्राकृतं कर्म नित्यमात्मरतिर्मुनिः
सर्वभूतात्मभूतः स्यात्स गच्छेत्परमां गतिम् ४५
यथा वारिचरः पक्षी लिप्यमानो न लिप्यते
एवमेव कृतप्रज्ञो भूतेषु परिवर्तते ४६
एवंस्वभावमेवैतत्स्वबुद्ध्या विहरेन्नरः
अशोचन्नप्रहृष्यंश्च चरेद्विगतमत्सरः ४७
स्वभावसिद्ध्या संसिद्धान्स नित्यं सृजते गुणान्
ऊर्णनाभिर्यथा स्रष्टा विज्ञेयास्तन्तुवद्गुणाः ४८
प्रध्वस्ता न निवर्तन्ते निवृत्तिर्नोपलभ्यते
प्रत्यक्षेण परोक्षं तदनुमानेन सिध्यति ४९
एवमेके व्यवस्यन्ति निवृत्तिरिति चापरे
उभयं संप्रधार्यैतदध्यवस्येद्यथामति ५०
इतीमं हृदयग्रन्थिं बुद्धिभेदमयं दृढम्
विमुच्य सुखमासीत न शोचेच्छिन्नसंशयः ५१
मलिनाः प्राप्नुयुः शुद्धिं यथा पूर्णां नदीं नराः
अवगाह्य सुविद्वांसो विद्धि ज्ञानमिदं तथा ५२
महानदीं हि पारज्ञस्तप्यते न तरन्यथा
एवं ये विदुरध्यात्मं कैवल्यं ज्ञानमुत्तमम् ५३
एतां बुद्ध्वा नरः सर्वां भूतानामागतिं गतिम्
अवेक्ष्य च शनैर्बुद्ध्या लभते शं परं ततः ५४

त्रिवर्गो यस्य विदितः प्राग्ज्योतिः स विमुच्यते
अन्विष्य मनसा युक्तस्तत्त्वदर्शी निरुत्सुकः ५५
न चात्मा शक्यते द्रष्टुमिन्द्रियेषु विभागशः
तत्र तत्र विसृष्टेषु दुर्जयेष्वकृतात्मभिः ५६
एतद्बुद्ध्वा भवेद्बुद्धः किमन्यद्बुद्धलक्षणम्
विज्ञाय तद्धि मन्यन्ते कृतकृत्या मनीषिणः ५७
न भवति विदुषां ततो भयं यदविदुषां सुमहद्भयं भवेत्
न हि गतिरधिकास्ति कस्यचित्सति हि गुणे प्रवदन्त्यतुल्यताम् ५८
यत्करोत्यनभिसन्धिपूर्वकं तच्च निर्णुदति यत्पुरा कृतम्
नाप्रियं तदुभयं कुतः प्रियं तस्य तज्जनयतीह कुर्वतः ५९
लोक आतुरजनान्विराविणस्तत्तदेव बहु पश्य शोचतः
तत्र पश्य कुशलानशोचतो ये विदुस्तदुभयं पदं सदा ६०
इति श्रीमहाभारते शान्तिपर्वणि सप्ताशीत्यधिकशततमोऽध्यायः १८७

## अष्टाशीत्यधिकशततमोऽध्यायः

भीष्म उवाच
हन्त वक्ष्यामि ते पार्थ ध्यानयोगं चतुर्विधम्
यं ज्ञात्वा शाश्वतीं सिद्धिं गच्छन्ति परमर्षयः १
यथा स्वनुष्ठितं ध्यानं तथा कुर्वन्ति योगिनः
महर्षयो ज्ञानतृप्ता निर्वाणगतमानसाः २
नावर्तन्ते पुनः पार्थ मुक्ताः संसारदोषतः
जन्मदोषपरिक्षीणाः स्वभावे पर्यवस्थिताः ३
निर्द्वन्द्वा नित्यसत्त्वस्था विमुक्ता नित्यमाश्रिताः
असङ्गीन्यविवादीनि मनःशान्तिकराणि च ४
तत्र स्वाध्यायसंश्लिष्टमेकाग्रं धारयेन्मनः
पिण्डीकृत्येन्द्रियग्राममासीनः काष्ठवन्मुनिः ५
शब्दं न विन्देच्छ्रोत्रेण स्पर्शं त्वचा न वेदयेत्
रूपं न चक्षुषा विद्याज्जिह्वया न रसांस्तथा ६
घ्रेयाण्यपि च सर्वाणि जह्याद्ध्यानेन योगवित्
पञ्चवर्गप्रमाथीनि नेच्छेच्चैतानि वीर्यवान् ७

ततो मनसि संसज्य पञ्चवर्गं विचक्षणः
समादध्यान्मनो भ्रान्तमिन्द्रियैः सह पञ्चभिः ८
विसंचारि निरालम्बं पञ्चद्वारं चलाचलम्
पूर्वे ध्यानपथे धीरः समादध्यान्मनोऽन्तरम् ९
इन्द्रियाणि मनश्चैव यदा पिण्डीकरोत्ययम्
एष ध्यानपथः पूर्वो मया समनुवर्णितः १०
तस्य तत्पूर्वसंरुद्धं मनःषष्ठमनन्तरम्
स्फुरिष्यति समुद्भ्रान्तं विद्युदम्बुधरे यथा ११
जलबिन्दुर्यथा लोलः पर्णस्थः सर्वतश्चलः
एवमेवास्य तच्चित्तं भवति ध्यानवर्त्मनि १२
समाहितं क्षणं किंचिद्ध्यानवर्त्मनि तिष्ठति
पुनर्वायुपथं भ्रान्तं मनो भवति वायुवत् १३
अनिर्वेदो गतक्लेशो गततन्द्रीरमत्सरः
समादध्यात्पुनश्चेतो ध्यानेन ध्यानयोगवित् १४
विचारश्च वितर्कश्च विवेकश्चोपजायते
मुनेः समादधानस्य प्रथमं ध्यानमादितः १५
मनसा क्लिश्यमानस्तु समाधानं च कारयेत्
न निर्वेदं मुनिर्गच्छेत्कुर्यादेवात्मनो हितम् १६
पांसुभस्मकरीषाणां यथा वै राशयश्चिताः
सहसा वारिणा सिक्ता न यान्ति परिभावनाम् १७
किंचित्स्निग्धं यथा च स्याच्छुष्कचूर्णमभावितम्
क्रमशस्तु शनैर्गच्छेत्सर्वं तत्परिभावनम् १८
एवमेवेन्द्रियग्रामं शनैः संपरिभावयेत्
संहरेत्क्रमशश्चैव स सम्यक्प्रशमिष्यति १९
स्वयमेव मनश्चैव पञ्चवर्गश्च भारत
पूर्वं ध्यानपथं प्राप्य नित्ययोगेन शाम्यति २०
न तत्पुरुषकारेण न च दैवेन केनचित्
सुखमेष्यति तत्तस्य यदेवं संयतात्मनः २१
सुखेन तेन संयुक्तो रंस्यते ध्यानकर्मणि
गच्छन्ति योगिनो ह्येवं निर्वाणं तन्निरामयम् २२

इति श्रीमहाभारते शान्तिपर्वणि अष्टाशीत्यधिकशततमोऽध्यायः १८८

एकोननवत्यधिकशततमोऽध्यायः

युधिष्ठिर उवाच
चातुराश्रम्यमुक्तं ते राजधर्मास्तथैव च
नानाश्रयाश्च बहव इतिहासाः पृथग्विधाः १
श्रुतास्त्वत्तः कथाश्चैव धर्मयुक्ता महामते
सन्देहोऽस्ति तु कश्चिन्मे तद्भवान्वक्तुमर्हति २
जापकानां फलावाप्तिं श्रोतुमिच्छामि भारत
किं फलं जपतामुक्तं क्व वा तिष्ठन्ति जापकाः ३
जप्यस्य च विधिं कृत्स्नं वक्तुमर्हसि मेऽनघ
जापका इति किं चैतत्साङ्ख्ययोगक्रियाविधिः ४
किं यज्ञविधिरेवैष किमेतज्जप्यमुच्यते
एतन्मे सर्वमाचक्ष्व सर्वज्ञो ह्यसि मे मतः ५
भीष्म उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
यमस्य यत्पुरा वृत्तं कालस्य ब्राह्मणस्य च ६
संन्यास एव वेदान्ते वर्तते जपनं प्रति
वेदवादाभिनिर्वृत्ता शान्तिर्ब्रह्मण्यवस्थितौ
मार्गौ तावप्युभावेतौ संश्रितौ न च संश्रितौ ७
यथा संश्रूयते राजन्कारणं चात्र वक्ष्यते
मनःसमाधिरत्रापि तथेन्द्रियजयः स्मृतः ८
सत्यमग्निपरीचारो विविक्तानां च सेवनम्
ध्यानं तपो दमः क्षान्तिरनसूया मिताशनम् ९
विषयप्रतिसंहारो मितजल्पस्तथा शमः
एष प्रवृत्तको धर्मो निवृत्तकमथो शृणु १०
यथा निवर्तते कर्म जपतो ब्रह्मचारिणः
एतत्सर्वमशेषेण यथोक्तं परिवर्जयेत्
त्रिविधं मार्गमासाद्य व्यक्ताव्यक्तमनाश्रयम् ११
कुशोच्चयनिषण्णः सन्कुशहस्तः कुशैः शिखी

चीरैः परिवृतस्तस्मिन्मध्ये छन्नः कुशैस्तथा १२
विषयेभ्यो नमस्कुर्याद्विषयान्न च भावयेत्
साम्यमुत्पाद्य मनसो मनस्येव मनो दधत् १३
तद्धिया ध्यायति ब्रह्म जपन्वै संहितां हिताम्
संन्यस्यत्यथ वा तां वै समाधौ पर्यवस्थितः १४
ध्यानमुत्पादयत्यत्र संहिताबलसंश्रयात्
शुद्धात्मा तपसा दान्तो निवृत्तद्वेषकामवान् १५
अरागमोहो निर्द्वन्द्वो न शोचति न सज्जते
न कर्ता करणीयानां न कार्याणामिति स्थितिः १६
न चाहंकारयोगेन मनः प्रस्थापयेत्क्वचित्
न चात्मग्रहणे युक्तो नावमानी न चाक्रियः १७
ध्यानक्रियापरो युक्तो ध्यानवान्ध्याननिश्चयः
ध्याने समाधिमुत्पाद्य तदपि त्यजति क्रमात् १८
स वै तस्यामवस्थायां सर्वत्यागकृतः सुखी
निरीहस्त्यजति प्राणान्ब्राह्मीं संश्रयते तनुम् १९
अथ वा नेच्छते तत्र ब्रह्मकायनिषेवणम्
उत्क्रामति च मार्गस्थो नैव क्वचन जायते २०
आत्मबुद्धिं समास्थाय शान्तीभूतो निरामयः
अमृतं विरजःशुद्धमात्मानं प्रतिपद्यते २१
इति श्रीमहाभारते शान्तिपर्वणि एकोननवत्यधिकशततमोऽध्यायः १८९

## नवत्यधिकशततमोऽध्यायः

युधिष्ठिर उवाच
गतीनामुत्तमा प्राप्तिः कथिता जापकेष्विह
एकैवैषा गतिस्तेषामुत यान्त्यपरामपि १
भीष्म उवाच
शृणुष्वावहितो राजञ्जापकानां गतिं विभो
यथा गच्छन्ति निरयमनेकं पुरुषर्षभ २
यथोक्तमेतत्पूर्वं यो नानुतिष्ठति जापकः
एकदेशक्रियश्चात्र निरयं स निगच्छति ३

अवज्ञानेन कुरुते न तुष्यति न शोचति
ईदृशो जापको याति निरयं नात्र संशयः ४
अहंकारकृतश्चैव सर्वे निरयगामिनः
परावमानी पुरुषो भविता निरयोपगः ५
अभिध्यापूर्वकं जप्यं कुरुते यश्च मोहितः
यत्राभिध्यां स कुरुते तं वै निरयमृच्छति ६
अथैश्वर्यप्रवृत्तः सञ्जापकस्तत्र रज्यते
स एव निरयस्तस्य नासौ तस्मात्प्रमुच्यते ७
रागेण जापको जप्यं कुरुते तत्र मोहितः
यत्रास्य रागः पतति तत्र तत्रोपजायते ८
दुर्बुद्धिरकृतप्रज्ञश्चले मनसि तिष्ठति
चलामेव गतिं याति निरयं वाधिगच्छति ९
अकृतप्रज्ञको बालो मोहं गच्छति जापकः
स मोहान्निरयं याति तत्र गत्वानुशोचति १०
दृढग्राही करोमीति जप्यं जपति जापकः
न संपूर्णो न वा युक्तो निरयं सोऽधिगच्छति ११
युधिष्ठिर उवाच
अनिमित्तं परं यत्तदव्यक्तं ब्रह्मणि स्थितम्
सद्भूतो जापकः कस्मात्स शरीरमथाविशेत् १२
भीष्म उवाच
दुष्प्रज्ञानेन निरया बहवः समुदाहृताः
प्रशस्तं जापकत्वं च दोषाश्चैते तदात्मकाः १३
इति श्रीमहाभारते शान्तिपर्वणि नवत्यधिकशततमोऽध्यायः १९०

## एकनवत्यधिकशततमोऽध्यायः

युधिष्ठिर उवाच
कीदृशो जापको याति निरयं वर्णयस्व मे
कौतूहलं हि मे जातं तद्भवान्वक्तुमर्हति १
भीष्म उवाच
धर्मस्यांशः प्रसूतोऽसि धर्मिष्ठोऽसि स्वभावतः

धर्ममूलाश्रयं वाक्यं शृणुष्वावहितोऽनघ २
अमूनि यानि स्थानानि देवानां परमात्मनाम्
नानासंस्थानवर्णानि नानारूपफलानि च ३
दिव्यानि कामचारीणि विमानानि सभास्तथा
आक्रीडा विविधा राजन्पद्मिन्यश्चामलोदकाः ४
चतुर्णां लोकपालानां शुक्रस्याथ बृहस्पतेः
मरुतां विश्वदेवानां साध्यानामश्विनोरपि ५
रुद्रादित्यवसूनां च तथान्येषां दिवौकसाम्
एते वै निरयास्तात स्थानस्य परमात्मनः ६
अभयं चानिमित्तं च न च क्लेशभयावृतम्
द्वाभ्यां मुक्तं त्रिभिर्मुक्तमष्टाभिस्त्रिभिरेव च ७
चतुर्लक्षणवर्जं तु चतुष्कारणवर्जितम्
अप्रहर्षमनानन्दमशोकं विगतक्लमम् ८
कालः संपच्यते तत्र न कालस्तत्र वै प्रभुः
स कालस्य प्रभू राजन्स्वर्गस्यापि तथेश्वरः ९
आत्मकेवलतां प्राप्तस्तत्र गत्वा न शोचति
ईदृशं परमं स्थानं निरयास्ते च तादृशाः १०
एते ते निरयाः प्रोक्ताः सर्व एव यथातथम्
तस्य स्थानवरस्येह सर्वे निरयसंज्ञिताः ११
इति श्रीमहाभारते शान्तिपर्वणि एकनवत्यधिकशततमोऽध्यायः १९१

## द्विनवत्यधिकशततमोऽध्यायः

युधिष्ठिर उवाच
कालमृत्युयमानां च ब्राह्मणस्य च सत्तम
विवादो व्याहृतः पूर्वं तद्भवान्वक्तुमर्हति १
भीष्म उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
इक्ष्वाकोः सूर्यपुत्रस्य यद्वृत्तं ब्राह्मणस्य च २
कालस्य मृत्योश्च तथा यद्वृत्तं तन्निबोध मे
यथा स तेषां संवादो यस्मिन्स्थानेऽपि चाभवत् ३

ब्राह्मणो जापकः कश्चिद्धर्मवृत्तो महायशाः
षडङ्गविन्महाप्राज्ञः पैप्पलादिः स कौशिकः ४
तस्यापरोक्षं विज्ञानं षडङ्गेषु तथैव च
वेदेषु चैव निष्णातो हिमवत्पादसंश्रयः ५
सोऽन्त्य ब्राह्मं तपस्तेपे संहितां संयतो जपन्
तस्य वर्षसहस्रं तु नियमेन तथा गतम् ६
स देव्या दर्शितः साक्षात्प्रीतास्मीति तदा किल
जप्यमावर्तयंस्तूष्णीं न च तां किंचिदब्रवीत् ७
तस्यानुकम्पया देवी प्रीता समभवत्तदा
वेदमाता ततस्तस्य तज्जप्यं समपूजयत् ८
समाप्तजप्यस्तूत्थाय शिरसा पादयोस्तथा
पपात देव्या धर्मात्मा वचनं चेदमब्रवीत् ९
दिष्ट्या देवि प्रसन्ना त्वं दर्शनं चागता मम
यदि वापि प्रसन्नासि जप्ये मे रमतां मनः १०
सावित्र्युवाच
किं प्रार्थयसि विप्रर्षे किं चेष्टं करवाणि ते
प्रब्रूहि जपतां श्रेष्ठ सर्वं तत्ते भविष्यति ११
भीष्म उवाच
इत्युक्तः स तदा देव्या विप्रः प्रोवाच धर्मवित्
जप्यं प्रति ममेच्छेयं वर्धत्विति पुनः पुनः १२
मनसश्च समाधिर्मे वर्धेताहरहः शुभे
तत्तथेति ततो देवी मधुरं प्रत्यभाषत १३
इदं चैवापरं प्राह देवी तत्प्रियकाम्यया
निरयं नैव यातासि यत्र याता द्विजर्षभाः १४
यास्यसि ब्रह्मणः स्थानमनिमित्तमनिन्दितम्
साधये भविता चैतद्यत्त्वयाहमिहार्थिता १५
नियतो जप चैकाग्रो धर्मस्त्वां समुपैष्यति
कालो मृत्युर्यमश्चैव समायास्यन्ति तेऽन्तिकम्
भविता च विवादोऽत्र तव तेषां च धर्मतः १६
एवमुक्त्वा भगवती जगाम भवनं स्वकम्

ब्राह्मणोऽपि जपन्नास्ते दिव्यं वर्षशतं तदा १७
समाप्ते नियमे तस्मिन्नथ विप्रस्य धीमतः
साक्षात्प्रीतस्तदा धर्मो दर्शयामास तं द्विजम् १८
धर्म उवाच
द्विजाते पश्य मां धर्ममहं त्वां द्रष्टुमागतः
जप्यस्य च फलं यत्ते संप्राप्तं तच्च मे शृणु १९
जिता लोकास्त्वया सर्वे ये दिव्या ये च मानुषाः
देवानां निरयान्साधो सर्वानुत्क्रम्य यास्यसि २०
प्राणत्यागं कुरु मुने गच्छ लोकान्यथेप्सितान्
त्यक्त्वात्मनः शरीरं च ततो लोकानवाप्स्यसि २१
ब्राह्मण उवाच
कृतं लोकैर्हि मे धर्म गच्छ च त्वं यथासुखम्
बहुदुःखसुखं देहं नोत्सृजेयमहं विभो २२
धर्म उवाच
अवश्यं भोः शरीरं ते त्यक्तव्यं मुनिपुंगव
स्वर्ग आरोह्यतां विप्र किं वा ते रोचतेऽनघ २३
ब्राह्मण उवाच
न रोचये स्वर्गवासं विना देहादहं विभो
गच्छ धर्म न मे श्रद्धा स्वर्गं गन्तुं विनात्मना २४
धर्म उवाच
अलं देहे मनः कृत्वा त्यक्त्वा देहं सुखी भव
गच्छ लोकानरजसो यत्र गत्वा न शोचसि २५
ब्राह्मण उवाच
रमे जपन्महाभाग कृतं लोकैः सनातनैः
सशरीरेण गन्तव्यो मया स्वर्गो न वा विभो २६
धर्म उवाच
यदि त्वं नेच्छसि त्यक्तुं शरीरं पश्य वै द्विज
एष कालस्तथा मृत्युर्यमश्च त्वामुपागताः २७
भीष्म उवाच
अथ वैवस्वतः कालो मृत्युश्च त्रितयं विभो

ब्राह्मणं तं महाभागमुपागम्येदमब्रुवन् २८
तपसोऽस्य सुतप्तस्य तथा सुचरितस्य च
फलप्राप्तिस्तव श्रेष्ठा यमोऽह त्वामुपब्रुवे २९
यथावदस्य जप्यस्य फलं प्राप्तस्त्वमुत्तमम्
कालस्ते स्वर्गमारोढुं कालोऽह त्वामुपागतः ३०
मृत्युं मा विद्धि धर्मज्ञ रूपिणं स्वयमागतम्
कालेन चोदितं विप्र त्वामितो नेतुमद्य वै ३१
ब्राह्मण उवाच
स्वागतं सूर्यपुत्राय कालाय च महात्मने
मृत्यवे चाथ धर्माय किं कार्यं करवाणि वः ३२
अर्घ्यं पाद्यं च दत्त्वा स तेभ्यस्तत्र समागमे
अब्रवीत्परमप्रीतः स्वशक्त्या किं करोमि वः ३३
तस्मिन्नेवाथ काले तु तीर्थयात्रामुपागतः
इक्ष्वाकुरगमत्तत्र समेता यत्र ते विभो ३४
सर्वानेव तु राजर्षिः संपूज्याभिप्रणम्य च
कुशलप्रश्नमकरोत्सर्वेषां राजसत्तमः ३५
तस्मै सोऽथासनं दत्त्वा पाद्यमर्घ्यं तथैव च
अब्रवीद्ब्राह्मणो वाक्यं कृत्वा कुशलसंविदम् ३६
स्वागतं ते महाराज ब्रूहि यद्यदिहेच्छसि
स्वशक्त्या किं करोमीह तद्भवान्प्रब्रवीतु मे ३७
राजोवाच
राजाहं ब्राह्मणश्च त्वं यदि षट्कर्मसंस्थितः
ददामि वसु किंचित्ते प्रार्थितं तद्वदस्व मे ३८
ब्राह्मण उवाच
द्विविधा ब्राह्मणा राजन्धर्मश्च द्विविधः स्मृतः
प्रवृत्तश्च निवृत्तश्च निवृत्तोऽस्मि प्रतिग्रहात् ३९
तेभ्यः प्रयच्छ दानानि ये प्रवृत्ता नराधिप
अहं न प्रतिगृह्णामि किमिष्टं किं ददानि ते
ब्रूहि त्वं नृपतिश्रेष्ठ तपसा साधयामि किम् ४०
राजोवाच

क्षत्रियोऽह न जानामि देहीति वचनं क्वचित्
प्रयच्छ युद्धमित्येवं वादिनः स्मो द्विजोत्तम ४१
ब्राह्मण उवाच
तुष्यसि त्वं स्वधर्मेण तथा तुष्टा वयं नृप
अन्योन्यस्योत्तरं नास्ति यदिष्टं तत्समाचर ४२
राजोवाच
स्वशक्त्याहं ददानीति त्वया पूर्वं प्रभाषितम्
याचे त्वां दीयतां मह्यं जप्यस्यास्य फलं द्विज ४३
ब्राह्मण उवाच
युद्धं मम सदा वाणी याचतीति विकत्थसे
न च युद्धं मया सार्धं किमर्थं याचसे पुनः ४४
राजोवाच
वाग्वज्रा ब्राह्मणाः प्रोक्ताः क्षत्रिया बाहुजीविनः
वाग्युद्धं तदिदं तीव्रं मम विप्र त्वया सह ४५
ब्राह्मण उवाच
सैवाद्यापि प्रतिज्ञा मे स्वशक्त्या किं प्रदीयताम्
ब्रूहि दास्यामि राजेन्द्र विभवे सति मा चिरम् ४६
राजोवाच
यत्तद्वर्षशतं पूर्णं जप्यं वै जपता त्वया
फलं प्राप्तं तत्प्रयच्छ मम दित्सुर्भवान्यदि ४७
ब्राह्मण उवाच
परमं गृह्यतां तस्य फलं यज्जपितं मया
अर्धं त्वमविचारेण फलं तस्य समाप्नुहि ४८
अथ वा सर्वमेवेह जप्यकं मामकं फलम्
राजन्प्राप्नुहि कामं त्वं यदि सर्वमिहेच्छसि ४९
राजोवाच
कृतं सर्वेण भद्रं ते जप्यं यद्याचितं मया
स्वस्ति तेऽस्तु गमिष्यामि किं च तस्य फलं वद ५०
ब्राह्मण उवाच
फलप्राप्तिं न जानामि दत्तं यज्जपितं मया

अयं धर्मश्च कालश्च यमो मृत्युश्च साक्षिणः ५१
राजोवाच
अज्ञातमस्य धर्मस्य फलं मे किं करिष्यति
प्राप्नोतु तत्फलं विप्रो नाहमिच्छे ससंशयम् ५२
ब्राह्मण उवाच
नाददेऽपरवक्तव्यं दत्तं वाचा फलं मया
वाक्यं प्रमाणं राजर्षे ममापि तव चैव हि ५३
नाभिसंधिर्मया जप्ये कृतपूर्वः कथंचन
जप्यस्य राजशार्दूल कथं ज्ञास्याम्यहं फलम् ५४
ददस्वेति त्वया चोक्तं ददामीति तथा मया
न वाचं दूषयिष्यामि सत्यं रक्ष स्थिरो भव ५५
अथैवं वदतो मेऽद्य वचनं न करिष्यसि
महानधर्मो भविता तव राजन्मृषाकृतः ५६
न युक्तं तु मृषा वाणी त्वया वक्तुमरिंदम
तथा मयाप्यभ्यधिकं मृषा वक्तुं न शक्यते ५७
संश्रुतं च मया पूर्वं ददानीत्यविचारितम्
तद्गृह्णीष्वाविचारेण यदि सत्ये स्थितो भवान् ५८
इहागम्य हि मां राजञ्जाप्यं फलमयाचिथाः
तन्मन्निसृष्टं गृह्णीष्व भव सत्ये स्थिरोऽपि च ५९
नायं लोकोऽस्ति न परो न च पूर्वान्स तारयेत्
कुत एवावरान्राजन्मृषावादपरायणः ६०
न यज्ञाध्ययने दानं नियमास्तारयन्ति हि
यथा सत्यं परे लोके यथा वै पुरुषर्षभ ६१
तपांसि यानि चीर्णानि चरिष्यसि च यत्तपः
समाः शतैः सहस्रैश्च तत्सत्यान्न विशिष्यते ६२
सत्यमेकाक्षरं ब्रह्म सत्यमेकाक्षरं तपः
सत्यमेकाक्षरो यज्ञः सत्यमेकाक्षरं श्रुतम् ६३
सत्यं वेदेषु जागर्ति फलं सत्ये परं स्मृतम्
सत्याद्धर्मो दमश्चैव सर्वं सत्ये प्रतिष्ठितम् ६४
सत्यं वेदास्तथाङ्गानि सत्यं यज्ञस्तथा विधिः

व्रतचर्यास्तथा सत्यमोंकारः सत्यमेव च ६५
प्राणिनां जननं सत्यं सत्यं संततिरेव च
सत्येन वायुरभ्येति सत्येन तपते रविः ६६
सत्येन चाग्निर्दहति स्वर्गः सत्ये प्रतिष्ठितः
सत्यं यज्ञस्तपो वेदाः स्तोभा मन्त्राः सरस्वती ६७
तुलामारोपितो धर्मः सत्यं चैवेति नः श्रुतम्
समां कक्षां धारयतो यतः सत्यं ततोऽधिकम् ६८
यतो धर्मस्ततः सत्यं सर्वं सत्येन वर्धते
किमर्थमनृतं कर्म कर्तुं राजंस्त्वमिच्छसि ६९
सत्ये कुरु स्थिरं भावं मा राजन्ननृतं कृथाः
कस्मात्त्वमनृतं वाक्यं देहीति कुरुषेऽशुभम् ७०
यदि जप्यफलं दत्तं मया नेषिष्यसे नृप
स्वधर्मेभ्यः परिभ्रष्टो लोकाननुचरिष्यसि ७१
संश्रुत्य यो न दित्सेत याचित्वा यश्च नेच्छति
उभावानृतिकावेतौ न मृषा कर्तुमर्हसि ७२
राजोवाच
योद्धव्यं रक्षितव्यं च क्षत्रधर्मः किल द्विज
दातारः क्षत्रियाः प्रोक्ता गृह्णीयां भवतः कथम् ७३
ब्राह्मण उवाच
न छन्दयामि ते राजन्नापि ते गृहमाव्रजम्
इहागम्य तु याचित्वा न गृह्णीषे पुनः कथम् ७४
धर्म उवाच
अविवादोऽस्तु युवयोर्वित्तं मां धर्ममागतम्
द्विजो दानफलैर्युक्तो राजा सत्यफलेन च ७५
स्वर्ग उवाच
स्वर्गं मां विद्धि राजेन्द्र रूपिणं स्वयमागतम्
अविवादोऽस्तु युवयोरुभौ तुल्यफलौ युवाम् ७६
राजोवाच
कृतं स्वर्गेण मे कार्यं गच्छ स्वर्ग यथासुखम्
विप्रो यदीच्छते दातुं प्रतीच्छतु च मे धनम् ७७

ब्राह्मण उवाच
बाल्ये यदि स्यादज्ञानान्मया हस्तः प्रसारितः
निवृत्तिलक्षणं धर्ममुपासे संहितां जपन् ७८
निवृत्तं मां चिरं राजन्विप्रं लोभयसे कथम्
स्वेन कार्यं करिष्यामि त्वत्तो नेच्छे फलं नृप
तपःस्वाध्यायशीलोऽह निवृत्तश्च प्रतिग्रहात् ७९
राजोवाच
यदि विप्र निसृष्टं ते जप्यस्य फलमुत्तमम्
आवयोर्यत्फलं किंचित्सहितं नौ तदस्त्विह ८०
द्विजाः प्रतिग्रहे युक्ता दातारो राजवंशजाः
यदि धर्मः श्रुतो विप्र सहैव फलमस्तु नौ ८१
मा वा भूत्सहभोज्यं नौ मदीयं फलमाप्नुहि
प्रतीच्छ मत्कृतं धर्मं यदि ते मय्यनुग्रहः ८२
भीष्म उवाच
ततो विकृतचेष्टौ द्वौ पुरुषौ समुपस्थितौ
गृहीत्वान्योन्यमावेष्ट्य कुचेलावूचतुर्वचः ८३
न मे धारयसीत्येको धारयामीति चापरः
इहास्ति नौ विवादोऽयमयं राजानुशासकः ८४
सत्यं ब्रवीम्यहमिदं न मे धारयते भवान्
अनृतं वदसीह त्वमृणं ते धारयाम्यहम् ८५
तावुभौ भृशसंतप्तौ राजानमिदमूचतुः
परीक्ष्यतां यथा स्याव नावामिह विगर्हितौ ८६
विरूप उवाच
धारयामि नरव्याघ्र विकृतस्येह गोः फलम्
ददतश्च न गृह्णाति विकृतो मे महीपते ८७
विकृत उवाच
न मे धारयते किंचिद्विरूपोऽय नराधिप
मिथ्या ब्रवीत्यहं हि त्वां मिथ्याभासं नराधिप ८८
राजोवाच
विरूप किं धारयते भवानस्य वदस्व मे

श्रुत्वा तथा करिष्यामीत्येवं मे धीयते मतिः ८९
विरूप उवाच
शृणुष्वावहितो राजन्यथैतद्धारयाम्यहम्
विकृतस्यास्य राजर्षे निखिलेन नरर्षभ ९०
अनेन धर्मप्राप्त्यर्थं शुभा दत्ता पुरानघ
धेनुर्विप्राय राजर्षे तपःस्वाध्यायशीलिने ९१
तस्याश्चायं मया राजन्फलमभ्येत्य याचितः
विकृतेन च मे दत्तं विशुद्धेनान्तरात्मना ९२
ततो मे सुकृतं कर्म कृतमात्मविशुद्धये
गावौ हि कपिले क्रीत्वा वत्सले बहुदोहने ९३
ते चोञ्छवृत्तये राजन्मया समपवर्जिते
यथाविधि यथाश्रद्धं तदस्याहं पुनः प्रभो ९४
इहाद्य वै गृहीत्वा तत्प्रयच्छे द्विगुणं फलम्
एकस्याः पुरुषव्याघ्र कः शुद्धः कोऽत्र दोषवान् ९५
एवं विवदमानौ स्वस्त्वामिहाभ्यागतौ नृप
कुरु धर्ममधर्मं वा विनये नौ समाधय ९६
यदि नेच्छति मे दानं यथा दत्तमनेन वै
भवानत्र स्थिरो भूत्वा मार्गे स्थापयतु प्रभुः ९७
राजोवाच
दीयमानं न गृह्णासि ऋणं कस्मात्त्वमद्य वै
यथैव तेऽभ्यनुज्ञातं तथा गृह्णीष्व माचिरम् ९८
विकृत उवाच
दीयतामित्यनेनोक्तं ददानीति तथा मया
नायं मे धारयत्यत्र गम्यतां यत्र वाञ्छति ९९
राजोवाच
ददतोऽस्य न गृह्णासि विषमं प्रतिभाति मे
दण्ड्यो हि त्वं मम मतो नास्त्यत्र खलु संशयः १००
विकृत उवाच
मयास्य दत्तं राजर्षे गृह्णीयां तत्कथं पुनः
काममत्रापराधो मे दण्डमाज्ञापय प्रभो १०१

विरूप उवाच
दीयमानं यदि मया नेषिष्यसि कथंचन
नियंस्यति त्वां नृपतिरयं धर्मानुशासकः १०२
विकृत उवाच
स्वं मया याचितेनेह दत्तं कथमिहाद्य तत्
गृह्णीयां गच्छतु भवानभ्यनुज्ञां ददानि ते १०३
ब्राह्मण उवाच
श्रुतमेतत्त्वया राजन्ननयोः कथितं द्वयोः
प्रतिज्ञातं मया यत्ते तद्गृहाणाविचारितम् १०४
राजोवाच
प्रस्तुतं सुमहत्कार्यमावयोर्गह्वरं यथा
जापकस्य दृढीकारः कथमेतद्भविष्यति १०५
यदि तावन्न गृह्णामि ब्राह्मणेनापवर्जितम्
कथं न लिप्येयमहं दोषेण महताद्य वै १०६
भीष्म उवाच
तौ चोवाच स राजर्षिः कृतकार्यौ गमिष्यथः
नेदानीं मामिहासाद्य राजधर्मो भवेन्मृषा १०७
स्वधर्मः परिपाल्यश्च राज्ञामेष विनिश्चयः
विप्रधर्मश्च सुगुरुर्मामनात्मानमाविशत् १०८
ब्राह्मण उवाच
गृहाण धारयेऽहं ते याचितं ते श्रुतं मया
न चेद्ग्रहीष्यसे राजञ्शपिष्ये त्वां न संशयः १०९
राजोवाच
धिग्राजधर्मं यस्यायं कार्यस्येह विनिश्चयः
इत्यर्थं मे ग्रहीतव्यं कथं तुल्यं भवेदिति ११०
एष पाणिरपूर्वं भो निक्षेपार्थं प्रसारितः
यन्मे धारयसे विप्र तदिदानीं प्रदीयताम् १११
ब्राह्मण उवाच
संहितां जपता यावान्मया कश्चिद्गुणः कृतः
तत्सर्वं प्रतिगृह्णीष्व यदि किंचिदिहास्ति मे ११२

राजोवाच
जलमेतन्निपतितं मम पाणौ द्विजोत्तम
सममस्तु सहैवास्तु प्रतिगृह्णातु वै भवान् ११३
विरूप उवाच
कामक्रोधौ विद्धि नौ त्वमावाभ्यां कारितो भवान्
समेति च यदुक्तं ते समा लोकास्तवास्य च ११४
नायं धारयते किंचिज्जिज्ञासा त्वत्कृते कृता
कालो धर्मस्तथा मृत्युः कामक्रोधौ तथा युवाम् ११५
सर्वमन्योन्यनिकषे निघृष्टं पश्यतस्तव
गच्छ लोकाञ्जितान्स्वेन कर्मणा यत्र वाञ्छसि ११६
भीष्म उवाच
जापकानां फलावाप्तिर्मया ते संप्रकीर्तिता
गतिः स्थानं च लोकाश्च जापकेन यथा जिताः ११७
प्रयाति संहिताध्यायी ब्रह्माणं परमेष्ठिनम्
अथ वाग्निं समायाति सूर्यमाविशतेऽपि वा ११८
स तैजसेन भावेन यदि तत्राश्नुते रतिम्
गुणांस्तेषां समादत्ते रागेण प्रतिमोहितः ११९
एवं सोमे तथा वायौ भूम्याकाशशरीरगः
सरागस्तत्र वसति गुणांस्तेषां समाचरन् १२०
अथ तत्र विरागी स गच्छति त्वथ संशयम्
परमव्ययमिच्छन्स तमेवाविशते पुनः १२१
अमृताच्चामृतं प्राप्तः शीतीभूतो निरात्मवान्
ब्रह्मभूतः स निर्द्वंद्वः सुखी शान्तो निरामयः १२२
ब्रह्मस्थानमनावर्तमेकमक्षरसंज्ञकम्
अदुःखमजरं शान्तं स्थानं तत्प्रतिपद्यते १२३
चतुर्भिर्लक्षणैर्हीनं तथा षडिभः सषोडशैः
पुरुषं समतिक्रम्य आकाशं प्रतिपद्यते १२४
अथ वेच्छति रागात्मा सर्वं तदधितिष्ठति
यच्च प्रार्थयते तच्च मनसा प्रतिपद्यते १२५
अथ वा वीक्षते लोकान्सर्वान्निरयसंस्थितान्

निःस्पृहः सर्वतो मुक्तस्तत्रैव रमते सुखी १२६
एवमेषा महाराज जापकस्य गतिर्यथा
एतत्ते सर्वमाख्यातं किं भूयः श्रोतुमिच्छसि १२७
इति श्रीमहाभारते शान्तिपर्वणि द्विनवत्यधिकशततमोऽध्यायः १९२

त्रिनवत्यधिकशततमोऽध्यायः

युधिष्ठिर उवाच
किमुत्तरं तदा तौ स्म चक्रतुस्तेन भाषिते
ब्राह्मणो वाथ वा राजा तन्मे ब्रूहि पितामह १
अथ वा तौ गतौ तत्र यदेतत्कीर्तितं त्वया
संवादो वा तयोः कोऽभूत्किं वा तौ तत्र चक्रतुः २
भीष्म उवाच
तथेत्येवं प्रतिश्रुत्य धर्मं संपूज्य चाभिभो
यमं कालं च मृत्युं च स्वर्गं संपूज्य चार्हतः ३
पूर्वं ये चापरे तत्र समेता ब्राह्मणर्षभाः
सर्वान्संपूज्य शिरसा राजानं सोऽब्रवीद्वचः ४
फलेनानेन संयुक्तो राजर्षे गच्छ पुण्यताम्
भवता चाभ्यनुज्ञातो जपेयं भूय एव हि ५
वरश्च मम पूर्वं हि देव्या दत्तो महाबल
श्रद्धा ते जपतो नित्यं भवितेति विशां पते ६
राजोवाच
यद्येवमफला सिद्धिः श्रद्धा च जपितुं तव
गच्छ विप्र मया सार्धं जापकं फलमाप्नुहि ७
ब्राह्मण उवाच
कृतः प्रयत्नः सुमहान्सर्वेषां संनिधाविह
सह तुल्यफलौ चावां गच्छावो यत्र नौ गतिः ८
भीष्म उवाच
व्यवसायं तयोस्तत्र विदित्वा त्रिदशेश्वरः
सह देवैरुपययौ लोकपालैस्तथैव च ९
साध्या विश्वेऽथ मरुतो ज्योतींषि सुमहान्ति च

नद्यः शैलाः समुद्राश्च तीर्थानि विविधानि च १०
तपांसि संयोगविधिर्वेदाः स्तोभाः सरस्वती
नारदः पर्वतश्चैव विश्वावसुर्हहा हुहूः ११
गन्धर्वश्चित्रसेनश्च परिवारगुणैर्युतः
नागाः सिद्धाश्च मुनयो देवदेवः प्रजापतिः
विष्णुः सहस्रशीर्षश्च देवोऽचिन्त्यः समागमत् १२
अवाद्यन्तान्तरिक्षे च भेर्यस्तूर्याणि चाभिभो
पुष्पवर्षाणि दिव्यानि तत्र तेषां महात्मनाम्
ननृतुश्चाप्सरःसंघास्तत्र तत्र समन्ततः १३
अथ स्वर्गस्तथा रूपी ब्राह्मणं वाक्यमब्रवीत्
संसिद्धस्त्वं महाभाग त्वं च सिद्धस्तथा नृप १४
अथ तौ सहितौ राजन्नन्योन्येन विधानतः
विषयप्रतिसंहारमुभावेव प्रचक्रतुः १५
प्राणापानौ तथोदानं समानं व्यानमेव च
एवं तान्मनसि स्थाप्य दधतुः प्राणयोर्मनः १६
उपस्थितकृतौ तत्र नासिकाग्रमधो भ्रुवौ
कुङ्कुण्यां चैव मनसा शनैर्धारयतः स्म तौ १७
निश्चेष्टाभ्यां शरीराभ्यां स्थिरदृष्टी समाहितौ
जितासनौ तथाधाय मूर्धन्यात्मानमेव च १८
तालुदेशमथोद्दाल्य ब्राह्मणस्य महात्मनः
ज्योतिर्ज्वाला सुमहती जगाम त्रिदिवं तदा १९
हाहाकारस्ततो दिक्षु सर्वासु सुमहानभूत्
तज्ज्योतिः स्तूयमानं स्म ब्रह्माणं प्राविशत्तदा २०
ततः स्वागतमित्याह तत्तेजः स पितामहः
प्रादेशमात्रं पुरुषं प्रत्युद्गम्य विशां पते २१
भूयश्चैवापरं प्राह वचनं मधुरं स्म सः
जापकैस्तुल्यफलता योगानां नात्र संशयः २२
योगस्य तावदेतेभ्यः फलं प्रत्यक्षदर्शनम्
जापकानां विशिष्टं तु प्रत्युत्थानं समाधिकम् २३
उष्यतां मयि चेत्युक्त्वाचेतयत्स ततः पुनः

अथास्य प्रविवेशास्यं ब्राह्मणो विगतज्वरः २४
राजाप्येतेन विधिना भगवन्तं पितामहम्
यथैव द्विजशार्दूलस्तथैव प्राविशत्तदा २५
स्वयंभुवमथो देवा अभिवाद्य ततोऽब्रुवन्
जापकार्थमयं यत्नस्तदर्थं वयमागताः २६
कृतपूजाविमौ तुल्यं त्वया तुल्यफलाविमौ
योगजापकयोर्दृष्टं फलं सुमहदद्य वै
सर्वाल्लोँकानतीत्यैतौ गच्छेतां यत्र वाञ्छितम् २७
ब्रह्मोवाच
महास्मृतिं पठेद्यस्तु तथैवानुस्मृतिं शुभाम्
तावप्येतेन विधिना गच्छेतां मत्सलोकताम् २८
यश्च योगे भवेद्भक्तः सोऽपि नास्त्यत्र संशयः
विधिनानेन देहान्ते मम लोकानवाप्नुयात्
गम्यतां साधयिष्यामि यथास्थानानि सिद्धये २९
भीष्म उवाच
इत्युक्त्वा स तदा देवस्तत्रैवान्तरधीयत
आमन्त्र्य तं ततो देवा ययुः स्वं स्वं निवेशनम् ३०
ते च सर्वे महात्मानो धर्मं सत्कृत्य तत्र वै
पृष्ठतोऽनुययू राजन्सर्वे सुप्रीतमानसाः ३१
एतत्फलं जापकानां गतिश्चैव प्रकीर्तिता
यथाश्रुतं महाराज किं भूयः श्रोतुमिच्छसि ३२
इति श्रीमहाभारते शान्तिपर्वणि त्रिनवत्यधिकशततमोऽध्यायः १९३

## चतुर्नवत्यधिकशततमोऽध्यायः

युधिष्ठिर उवाच
किं फलं ज्ञानयोगस्य वेदानां नियमस्य च
भूतात्मा वा कथं ज्ञेयस्तन्मे ब्रूहि पितामह १
भीष्म उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
मनोः प्रजापतेर्वादं महर्षेश्च बृहस्पतेः २

प्रजापतिं श्रेष्ठतमं पृथिव्यां देवर्षिसंघप्रवरो महर्षिः
बृहस्पतिः प्रश्नमिमं पुराणं पप्रच्छ शिष्योऽथ गुरुं प्रणम्य ३
यत्कारणं मन्त्रविधिः प्रवृत्तो ज्ञाने फलं यत्प्रवदन्ति विप्राः
यन्मन्त्रशब्दैरकृतप्रकाशं तदुच्यतां मे भगवन्यथावत् ४
यदर्थशास्त्रागममन्त्रविद्भिर्यज्ञैरनेकैर्वरगोप्रदानैः
फलं महद्भिर्यदुपास्यते च तत्किं कथं वा भविता क्व वा तत् ५
मही महीजाः पवनोऽन्तरिक्षं जलौकसश्चैव जलं दिवं च
दिवौकसश्चैव यतः प्रसूतास्तदुच्यतां मे भगवन्पुराणम् ६

ज्ञानं यतः प्रार्थयते नरो वै ततस्तदर्था भवति प्रवृत्तिः
न चाप्यहं वेद परं पुराणं मिथ्याप्रवृतिं च कथं नु कुर्याम् ७
ऋक्सामसंघांश्च यजूंषि चाहं छन्दांसि नक्षत्रगतिं निरुक्तम्
अधीत्य च व्याकरणं सकल्पं शिक्षां च भूतप्रकृतिं न वेद्मि ८
स मे भवाञ्शंसतु सर्वमेतज्ज्ञाने फलं कर्मणि वा यदस्ति
यथा च देहाच्च्यवते शरीरी पुनः शरीरं च यथाऽभ्युपैति ९
मनुरुवाच
यद्यत्प्रियं यस्य सुखं तदाहुस्तदेव दुःखं प्रवदन्त्यनिष्टम्
इष्टं च मे स्यादितरच्च न स्यादेतत्कृते कर्मविधिः प्रवृत्तः
इष्टं त्वनिष्टं च न मां भजेतेत्येतत्कृते ज्ञानविधिः प्रवृत्तः १०
कामात्मकाश्छन्दसि कर्मयोगा एभिर्विमुक्तः परमश्नुवीत
नानाविधे कर्मपथे सुखार्थी नरः प्रवृत्तो न परं प्रयाति
परं हि तत्कर्मपथादपेतं निराशिषं ब्रह्मपरं ह्यवश्यम् ११
प्रजाः सृष्टा मनसा कर्मणा च द्वावप्येतौ सत्पथौ लोकजुष्टौ
दृष्ट्वा कर्म शाश्वतं चान्तवच्च मनस्त्यागः कारणं नान्यदस्ति १२
स्वेनात्मना चक्षुरिव प्रणेता निशात्यये तमसा संवृतात्मा
ज्ञानं तु विज्ञानगुणेन युक्तं कर्माशुभं पश्यति वर्जनीयम् १३
सर्पान्कुशाग्राणि तथोदपानं ज्ञात्वा मनुष्याः परिवर्जयन्ति
अज्ञानतस्तत्र पतन्ति मूढा ज्ञाने फलं पश्य यथा विशिष्टम् १४
कृत्स्नस्तु मन्त्रो विधिवत्प्रयुक्तो यज्ञा यथोक्तास्त्वथ दक्षिणाश्च
अन्नप्रदानं मनसः समाधिः पञ्चात्मकं कर्मफलं वदन्ति १५

गुणात्मकं कर्म वदन्ति वेदास्तस्मान्मन्त्रा मन्त्रमूलं हि कर्म
विधिर्विधेयं मनसोपपत्तिः फलस्य भोक्ता तु तथा शरीरी १६
शब्दाश्च रूपाणि रसाश्च पुण्याः स्पर्शाश्च गन्धाश्च शुभास्तथैव
नरो न संस्थानगतः प्रभुः स्यादेतत्फलं सिध्यति कर्मलोके १७
यद्यच्छरीरेण करोति कर्म शरीरयुक्तः समुपाश्नुते तत्
शरीरमेवायतनं सुखस्य दुःखस्य चाप्यायतनं शरीरम् १८
वाचा तु यत्कर्म करोति किंचिद्वाचैव सर्वं समुपाश्नुते तत्
मनस्तु यत्कर्म करोति किंचिन्मनःस्थ एवायमुपाश्नुते तत् १९
यथागुणं कर्मगणं फलार्थी करोत्ययं कर्मफले निविष्टः
तथा तथायं गुणसंप्रयुक्तः शुभाशुभं कर्मफलं भुनक्ति २०
मत्स्यो यथा स्रोत इवाभिपाती तथा कृतं पूर्वमुपैति कर्म
शुभे त्वसौ तुष्यति दुष्कृते तु न तुष्यते वै परमः शरीरी २१
यतो जगत्सर्वमिदं प्रसूतं ज्ञात्वात्मवन्तो व्यतियान्ति यत्तत्
यन्मन्त्रशब्दैरकृतप्रकाशं तदुच्यमानं शृणु मे परं यत् २२
रसैर्वियुक्तं विविधैश्च गन्धैरशब्दमस्पर्शमरूपवच्च
अग्राह्यमव्यक्तमवर्णमेकं पञ्चप्रकारं ससृजे प्रजानाम् २३
न स्त्री पुमान्वापि नपुंसकं च न सन्न चासत्सदसच्च तन्न
पश्यन्ति यद्ब्रह्मविदो मनुष्यास्तदक्षरं न क्षरतीति विद्धि २४
इति श्रीमहाभारते शान्तिपर्वणि चतुर्नवत्यधिकशततमोऽध्यायः १९४

## पञ्चनवत्यधिकशततमोऽध्यायः

मनुरुवाच
अक्षरात्खं ततो वायुर्वायोर्ज्योतिस्ततो जलम्
जलात्प्रसूता जगती जगत्यां जायते जगत् १
इमे शरीरैर्जलमेव गत्वा जलाच्च तेजः पवनोऽन्तरिक्षम्
खाद्वै निवर्तन्ति नभाविनस्ते ये भाविनस्ते परमाप्नुवन्ति २
नोष्णं न शीतं मृदु नापि तीक्ष्णं नाम्लं कषायं मधुरं न तिक्तम्
न शब्दवन्नापि च गन्धवत्तन्न रूपवत्तत्परमस्वभावम् ३
स्पर्शं तनुर्वेद रसं तु जिह्वा घ्राणं च गन्धाञ्श्रवणे च शब्दान्
रूपाणि चक्षुर्न च तत्परं यद्गृह्णन्त्यनध्यात्मविदो मनुष्याः ४

निवर्तयित्वा रसनां रसेभ्यो घ्राणं च गन्धाच्छ्रवणे च शब्दात्
स्पर्शात्तनुं रूपगुणात्तु चक्षुस्ततः परं पश्यति स्वं स्वभावम् ५
यतो गृहीत्वा हि करोति यच्च यस्मिंश्च तामारभते प्रवृत्तिम्
यस्मिंश्च यद्येन च यश्च कर्ता तत्कारणं तं समुपायमाहुः ६
यच्चाभिभूः साधकं व्यापकं च यन्मन्त्रवच्छंस्यते चैव लोके
यः सर्वहेतुः परमार्थकारी तत्कारणं कार्यमतो यदन्यत् ७
यथा च कश्चित्सुकृतैर्मनुष्यः शुभाशुभं प्राप्नुतेऽथाविरोधात्
एवं शरीरेषु शुभाशुभेषु स्वकर्मजैर्ज्ञानमिदं निबद्धम् ८
यथा प्रदीपः पुरतः प्रदीप्तः प्रकाशमन्यस्य करोति दीप्यन्
तथेह पञ्चेन्द्रियदीपवृक्षा ज्ञानप्रदीप्ताः परवन्त एव ९
यथा हि राज्ञो बहवो ह्यमात्याः पृथक्प्रमाणं प्रवदन्ति युक्ताः
तद्वच्छरीरेषु भवन्ति पञ्च ज्ञानैकदेशः परमः स तेभ्यः १०
यथार्चिषोऽग्ने पवनस्य वेगा मरीचयोऽकस्य नदीषु चापः
गच्छन्ति चायान्ति च तन्यमानास्तद्वच्छरीराणि शरीरिणां तु ११
यथा च कश्चित्परशुं गृहीत्वा धूमं न पश्येज्ज्वलनं च काष्ठे
तद्वच्छरीरोदरपाणिपादं छित्त्वा न पश्यन्ति ततो यदन्यत् १२
तान्येव काष्ठानि यथा विमथ्य धूमं च पश्येज्ज्वलनं च योगात्
तद्वत्सुबुद्धिः सममिन्द्रियत्वाद्बुधः परं पश्यति स्वं स्वभावम् १३
यथात्मनोऽङ्गं पतितं पृथिव्यां स्वप्नान्तरे पश्यति चात्मनोऽन्यत्
श्रोत्रादियुक्तः सुमनाः सबुद्धिर्लिङ्गात्तथा गच्छति लिङ्गमन्यत् १४
उत्पत्तिवृद्धिक्षयसंनिपातैर्न युज्यतेऽसौ परमः शरीरी
अनेन लिङ्गेन तु लिङ्गमन्यद्गच्छत्यदृष्टः प्रतिसंधियोगात् १५
न चक्षुषा पश्यति रूपमात्मनो न चापि संस्पर्शमुपैति किंचित्
न चापि तैः साधयतेऽथ कार्यं ते तं न पश्यन्ति स पश्यते तान् १६
यथा प्रदीपे ज्वलतोऽनलस्य संतापजं रूपमुपैति किंचित्
न चान्तरं रूपगुणं बिभर्ति तथैव तद्दृश्यते रूपमस्य १७
यथा मनुष्यः परिमुच्य कायमदृश्यमन्यद्विशते शरीरम्
विसृज्य भूतेषु महत्सु देहं तदाश्रयं चैव बिभर्ति रूपम् १८
खं वायुमग्निं सलिलं तथोर्वीं समन्ततोऽभ्याविशते शरीरी
नानाश्रयाः कर्मसु वर्तमानाः श्रोत्रादयः पञ्च गुणाञ्श्रयन्ते १९

श्रोत्रं खतो घ्राणमथो पृथिव्यास्तेजोमयं रूपमथो विपाकः
जलाश्रयः स्वेद उक्तो रसश्च वाय्वात्मकः स्पर्शकृतो गुणश्च २०
महत्सु भूतेषु वसन्ति पञ्च पञ्चेन्द्रियार्थाश्च तथेन्द्रियेषु
सर्वाणि चैतानि मनोनुगानि बुद्धिं मनोऽन्वेति मनः स्वभावम् २१
शुभाशुभं कर्म कृतं यदस्य तदेव प्रत्याददते स्वदेहे
मनोऽनुवर्तन्ति परावराणि जलौकसः स्रोत इवानुकूलम् २२
चलं यथा दृष्टिपथं परैति सूक्ष्मं महद्रूपमिवाभिपाति
स्वरूपमालोचयते च रूपं परं तथा बुद्धिपथं परैति २३
इति श्रीमहाभारते शान्तिपर्वणि पञ्चनवत्यधिकशततमोऽध्यायः १९५

## षण्णवत्यधिकशततमोऽध्यायः

मनुरुवाच
यदिन्द्रियैस्तूपकृतान्पुरस्तात्प्राप्तान्गुणान्संस्मरते चिराय
तेष्विन्द्रियेषूपहतेषु पश्चात्स बुद्धिरूपः परमः स्वभावः १
यथेन्द्रियार्थान्युगपत्समस्तान्नावेक्षते कृत्स्नमतुल्यकालम्
यथाबलं संचरते स विद्वांस्तस्मात्स एकः परमः शरीरी २
रजस्तमः सत्त्वमथो तृतीयं गच्छत्यसौ ज्ञानगुणान्विरूपान्
तथेन्द्रियाण्याविशते शरीरी हुताशनं वायुरिवेन्धनस्थम् ३
न चक्षुषा पश्यति रूपमात्मनो न पश्यति स्पर्शनमिन्द्रियेन्द्रियम्
न श्रोत्रलिङ्गं श्रवणे निदर्शनं तथागतं पश्यति तद्विनश्यति ४
श्रोत्रादीनि न पश्यन्ति स्वं स्वमात्मानमात्मना
सर्वज्ञः सर्वदर्शी च क्षेत्रज्ञस्तानि पश्यति ५
यथा हिमवतः पार्श्वं पृष्ठं चन्द्रमसो यथा
न दृष्टपूर्वं मनुजैर्न च तन्नास्ति तावता ६
तद्वद्भूतेषु भूतात्मा सूक्ष्मो ज्ञानात्मवानसौ
अदृष्टपूर्वश्चक्षुर्भ्यां न चासौ नास्तिं तावता ७
पश्यन्नपि यथा लक्ष्म जगत्सोमे न विन्दति
एवमस्ति न वेत्येतन्न च तन्न परायणम् ८
रूपवन्तमरूपत्वादुदयास्तमये बुधाः
धिया समनुपश्यन्ति तद्गताः सवितुर्गतिम् ९

तथा बुद्धिप्रदीपेन दूरस्थं सुविपश्चितः
प्रत्यासन्नं निनीषन्ति ज्ञेयं ज्ञानाभिसंहितम् १०
न हि खल्वनुपायेन कश्चिदर्थोऽभिसिध्यति
सूत्रजालैर्यथा मत्स्यान्बध्नन्ति जलजीविनः ११
मृगैर्मृगाणां ग्रहणं पक्षिणां पक्षिभिर्यथा
गजानां च गजैरेवं ज्ञेयं ज्ञानेन गृह्यते १२
अहिरेव ह्यहेः पादान्पश्यतीति निदर्शनम्
तद्वन्मूर्तिषु मूर्तिस्थं ज्ञेयं ज्ञानेन पश्यति १३
नोत्सहन्ते यथा वेत्तुमिन्द्रियैरिन्द्रियाण्यपि
तथैवेह परा बुद्धिः परं बुद्ध्या न पश्यति १४
यथा चन्द्रो ह्यमावास्यामलिङ्गत्वान्न दृश्यते
न च नाशोऽस्य भवति तथा विद्धि शरीरिणम् १५
क्षीणकोशो ह्यमावास्यां चन्द्रमा न प्रकाशते
तद्वन्मूर्तिवियुक्तः सञ्शरीरी नोपलभ्यते १६
यथा कोशान्तरं प्राप्य चन्द्रमा भ्राजते पुनः
तद्वल्लिङ्गान्तरं प्राप्य शरीरी भ्राजते पुनः १७
जन्मवृद्धिक्षयश्चास्य प्रत्यक्षेणोपलभ्यते
सा तु चान्द्रमसो व्यक्तिर्न तु तस्य शरीरिणः १८
उत्पत्तिवृद्धिव्ययतो यथा स इति गृह्यते
चन्द्र एव त्वमावास्यां तथा भवति मूर्तिमान् १९
नाभिसर्पद्विमुञ्चद्वा शशिनं दृश्यते तमः
विसृजंश्चोपसर्पंश्च तद्वत्पश्य शरीरिणम् २०
यथा चन्द्रार्कसंयुक्तं तमस्तदुपलभ्यते
तद्वच्छरीरसंयुक्तः शरीरीत्युपलभ्यते २१
यथा चन्द्रार्कनिर्मुक्तः स राहुर्नोपलभ्यते
तद्वच्छरीरनिर्मुक्तः शरीरी नोपलभ्यते २२
यथा चन्द्रो ह्यमावास्यां नक्षत्रैर्युज्यते गतः
तद्वच्छरीरनिर्मुक्तः फलैर्युज्यति कर्मणः २३

इति श्रीमहाभारते शान्तिपर्वणि षण्णवत्यधिकशततमोऽध्यायः १९६

सप्तनवत्यधिकशततमोऽध्यायः

मनुरुवाच
यथा व्यक्तमिदं शेते स्वप्ने चरति चेतनम्
ज्ञानमिन्द्रियसंयुक्तं तद्वत्प्रेत्य भवाभवौ १
यथाम्भसि प्रसन्ने तु रूपं पश्यति चक्षुषा
तद्वत्प्रसन्नेन्द्रियवाञ्ज्ञेयं ज्ञानेन पश्यति २
स एव लुलिते तस्मिन्यथा रूपं न पश्यति
तथेन्द्रियाकुलीभावे ज्ञेयं ज्ञाने न पश्यति ३
अबुद्धिरज्ञानकृता अबुद्ध्या दुष्यते मनः
दुष्टस्य मनसः पञ्च संप्रदुष्यन्ति मानसाः ४
अज्ञानतृप्तो विषयेष्ववगाढो न दृश्यते
अदृष्ट्वैव तु पूतात्मा विषयेभ्यो निवर्तते ५
तर्षच्छेदो न भवति पुरुषस्येह कल्मषात्
निवर्तते तथा तर्षः पापमन्तं गतं यथा ६
विषयेषु च संसर्गाच्छाश्वतस्य न संश्रयात्
मनसा चान्यदाकाङ्क्षन्परं न प्रतिपद्यते ७
ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः
अथादर्शतलप्रख्ये पश्यत्यात्मानमात्मनि ८
प्रसृतैरिन्द्रियैर्दुःखी तैरेव नियतैः सुखी
तस्मादिन्द्रियरूपेभ्यो यच्छेदात्मानमात्मना ९
इन्द्रियेभ्यो मनः पूर्वं बुद्धिः परतरा ततः
बुद्धेः परतरं ज्ञानं ज्ञानात्परतरं परम् १०
अव्यक्तात्प्रसृतं ज्ञानं ततो बुद्धिस्ततो मनः
मनः श्रोत्रादिभिर्युक्तं शब्दादीन्साधु पश्यति ११
यस्तांस्त्यजति शब्दादीन्सर्वाश्च व्यक्तयस्तथा
विमुञ्चत्याकृतिग्रामांस्तान्मुक्त्वामृतमश्नुते १२
उद्यन्हि सविता यद्वत्सृजते रश्मिमण्डलम्
स एवास्तमपागच्छंस्तदेवात्मनि यच्छति १३
अन्तरात्मा तथा देहमाविश्येन्द्रियरश्मिभिः
प्राप्येन्द्रियगुणान्पञ्च सोऽस्तमावृत्य गच्छति १४

प्रणीतं कर्मणा मार्गं नीयमानः पुनः पुनः
प्राप्नोत्ययं कर्मफलं प्रवृद्धं धर्ममात्मवान् १५
विषया विनिवर्तन्ते निराहारस्य देहिनः
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते १६
बुद्धिः कर्मगुणैर्हीना यदा मनसि वर्तते
तदा संपद्यते ब्रह्म तत्रैव प्रलयं गतम् १७
अस्पर्शनमशृण्वानमनास्वादमदर्शनम्
अघ्राणमवितर्कं च सत्त्वं प्रविशते परम् १८
मनस्याकृतयो मग्ना मनस्त्वतिगतं मतिम्
मतिस्त्वतिगता ज्ञानं ज्ञानं त्वभिगतं परम् १९
इन्द्रियैर्मनसः सिद्धिर्न बुद्धिं बुध्यते मनः
न बुद्धिर्बुध्यतेऽव्यक्तं सूक्ष्मस्त्वेतानि पश्यति २०
इति श्रीमहाभारते शान्तिपर्वणि सप्तनवत्यधिकशततमोऽध्यायः १९७

## अष्टनवत्यधिकशततमोऽध्यायः

मनुरुवाच
ज्ञानं ज्ञेयाभिनिर्वृत्तं विद्धि ज्ञानगुणं मनः
प्रज्ञाकरणसंयुक्तं ततो बुद्धिः प्रवर्तते १
यदा कर्मगुणोपेता बुद्धिर्मनसि वर्तते
तदा प्रज्ञायते ब्रह्म ध्यानयोगसमाधिना २
सेयं गुणवती बुद्धिर्गुणेष्वेवाभिवर्तते
अवताराभिनिःस्रोतं गिरेः शृङ्गादिवोदकम् ३
यदा निर्गुणमाप्नोति ध्यानं मनसि पूर्वजम्
तदा प्रज्ञायते ब्रह्म निकष्यं निकषे यथा ४
मनस्त्वपहृतं बुद्धिमिन्द्रियार्थनिदर्शनम्
न समक्षं गुणावेक्षि निर्गुणस्य निदर्शनम् ५
सर्वाण्येतानि संवार्य द्वाराणि मनसि स्थितः
मनस्येकाग्रतां कृत्वा तत्परं प्रतिपद्यते ६
यथा महान्ति भूतानि निवर्तन्ते गुणक्षये
तथेन्द्रियाण्युपादाय बुद्धिर्मनसि वर्तते ७

यदा मनसि सा बुद्धिर्वर्ततेऽन्तरचारिणी
व्यवसायगुणोपेता तदा संपद्यते मनः ८
गुणवद्भिर्गुणोपेतं यदा ध्यानगुणं मनः
तदा सर्वगुणान्हित्वा निर्गुणं प्रतिपद्यते ९
अव्यक्तस्येह विज्ञाने नास्ति तुल्यं निदर्शनम्
यत्र नास्ति पदन्यासः कस्तं विषयमाप्नुयात् १०
तपसा चानुमानेन गुणैर्जात्या श्रुतेन च
निनीषेत्तत्परं ब्रह्म विशुद्धेनान्तरात्मना ११
गुणहीनो हि तं मार्गं बहिः समनुवर्तते
गुणाभावात्प्रकृत्या च निस्तर्क्यं ज्ञेयसंमितम् १२
नैर्गुण्याद्ब्रह्म चाप्नोति सगुणत्वान्निवर्तते
गुणप्रसारिणी बुद्धिर्हुताशन इवेन्धने १३
यथा पञ्च विमुक्तानि इन्द्रियाणि स्वकर्मभिः
तथा तत्परमं ब्रह्म विमुक्तं प्रकृतेः परम् १४
एवं प्रकृतितः सर्वे प्रभवन्ति शरीरिणः
निवर्तन्ते निवृत्तौ च सर्गं नैवोपयान्ति च १५
पुरुषः प्रकृतिर्बुद्धिर्विशेषाश्चेन्द्रियाणि च
अहंकारोऽभिमानश्च संभूतो भूतसंज्ञकः १६
एकस्याद्या प्रवृत्तिस्तु प्रधानात्संप्रवर्तते
द्वितीया मिथुनव्यक्तिमविशेषान्नियच्छति १७
धर्मादुत्कृष्यते श्रेयस्तथाश्रेयोऽप्यधर्मतः
रागवान्प्रकृतिं ह्येति विरक्तो ज्ञानवान्भवेत् १८
इति श्रीमहाभारते शान्तिपर्वणि अष्टनवत्यधिकशततमोऽध्यायः १९८

## एकोनद्विशततमोऽध्यायः

मनुरुवाच
यदा ते पञ्चभिः पञ्च विमुक्ता मनसा सह
अथ तद्द्रक्ष्यते ब्रह्म मणौ सूत्रमिवार्पितम् १
तदेव च यथा सूत्रं सुवर्णे वर्तते पुनः
मुक्तास्वथ प्रवालेषु मृन्मये राजते तथा २

तद्वद्गोषु मनुष्येषु तद्वद्धस्तिमृगादिषु
तद्वत्कीटपतङ्गेषु प्रसक्तात्मा स्वकर्मभिः ३
येन येन शरीरेण यद्यत्कर्म करोत्ययम्
तेन तेन शरीरेण तत्तत्फलमुपाश्नुते ४
यथा ह्येकरसा भूमिरोषध्यात्मानुसारिणी
तथा कर्मानुगा बुद्धिरन्तरात्मानुदर्शिनी ५
ज्ञानपूर्वोद्भवा लिप्सा लिप्सापूर्वाभिसंधिता
अभिसंधिपूर्वकं कर्म कर्ममूलं ततः फलम् ६
फलं कर्मात्मकं विद्यात्कर्म ज्ञेयात्मकं तथा
ज्ञेयं ज्ञानात्मकं विद्याज्ज्ञानं सदसदात्मकम् ७
ज्ञानानां च फलानां च ज्ञेयानां कर्मणां तथा
क्षयान्ते तत्फलं दिव्यं ज्ञानं ज्ञेयप्रतिष्ठितम् ८
महद्धि परमं भूतं युक्ताः पश्यन्ति योगिनः
अबुधास्तं न पश्यन्ति ह्यात्मस्था गुणबुद्धयः ९
पृथिवीरूपतो रूपमपामिह महत्तरम्
अद्भ्यो महत्तरं तेजस्तेजसः पवनो महान् १०
पवनाच्च महद्व्योम तस्मात्परतरं मनः
मनसो महती बुद्धिर्बुद्धेः कालो महान्स्मृतः ११
कालात्स भगवान्विष्णुर्यस्य सर्वमिदं जगत्
नादिर्न मध्यं नैवान्तस्तस्य देवस्य विद्यते १२
अनादित्वादमध्यत्वादनन्तत्वाच्च सोऽव्ययः
अत्येति सर्वदुःखानि दुःखं ह्यन्तवदुच्यते १३
तद्ब्रह्म परमं प्रोक्तं तद्धाम परमं स्मृतम्
तद्गत्वा कालविषयाद्विमुक्ता मोक्षमाश्रिताः १४
गुणैस्त्वेतैः प्रकाशन्ते निर्गुणत्वात्ततः परम्
निवृत्तिलक्षणो धर्मस्तथानन्त्याय कल्पते १५
ऋचो यजूंषि सामानि शरीराणि व्यपाश्रिताः
जिह्वाग्रेषु प्रवर्तन्ते यत्नसाध्या विनाशिनः १६
न चैवमिष्यते ब्रह्म शरीराश्रयसंभवम्
न यत्नसाध्यं तद्ब्रह्म नादिमध्यं न चान्तवत् १७

ऋचामादिस्तथा साम्नां यजुषामादिरुच्यते
अन्तश्चादिमतां दृष्टो न चादिर्ब्रह्मणः स्मृतः १८
अनादित्वादनन्तत्वात्तदनन्तमथाव्ययम्
अव्ययत्वाच्च निर्द्वंद्वं द्वंद्वाभावात्ततः परम् १९
अदृष्टतोऽनुपायाच्चाप्यभिसंधेश्च कर्मणः
न तेन मर्त्याः पश्यन्ति येन गच्छन्ति तत्परम् २०
विषयेषु च संसर्गाच्छाश्वतस्य च दर्शनात्
मनसा चान्यदाकाङ्क्षन्परं न प्रतिपद्यते २१
गुणान्यदिह पश्यन्ति तदिच्छन्त्यपरे जनाः
परं नैवाभिकाङ्क्षन्ति निर्गुणत्वाद्गुणार्थिनः २२
गुणैर्यस्त्ववरैर्युक्तः कथं विद्याद्गुणानिमान्
अनुमानाद्धि गन्तव्यं गुणैरवयवैः सह २३
सूक्ष्मेण मनसा विद्मो वाचा वक्तुं न शक्नुमः
मनो हि मनसा ग्राह्यं दर्शनेन च दर्शनम् २४
ज्ञानेन निर्मलीकृत्य बुद्धिं बुद्ध्या तथा मनः
मनसा चेन्द्रियग्राममनन्तं प्रतिपद्यते २५
बुद्धिप्रहीणो मनसासमृद्धस्तथा निराशीर्गुणतामुपैति
परं त्यजन्तीह विलोभ्यमाना हुताशनं वायुरिवेन्धनस्थम् २६
गुणादाने विप्रयोगे च तेषां मनः सदा बुद्धिपरावराभ्याम्
अनेनैव विधिना संप्रवृत्तो गुणादाने ब्रह्मशरीरमेति २७
अव्यक्तात्मा पुरुषोऽव्यक्तकर्मा सोऽव्यक्तत्वं गच्छति ह्यन्तकाले
तैरेवायं चेन्द्रियैर्वर्धमानैर्ग्लायद्भिर्वा वर्तते कर्मरूपः २८
सर्वैरयं चेन्द्रियैः संप्रयुक्तो देहः प्राप्तः पञ्चभूताश्रयः स्यात्
नासामर्थ्याद्गच्छति कर्मणेह हीनस्तेन परमेणाव्ययेन २९
पृथ्व्या नरः पश्यति नान्तमस्या ह्यन्तश्चास्या भविता चेति विद्धि
परं नयन्तीह विलोभ्यमानं यथा प्लवं वायुरिवार्णवस्थम् ३०
दिवाकरो गुणमुपलभ्य निर्गुणो यथा भवेद्व्यपगतरश्मिमण्डलः
तथा ह्यसौ मुनिरिह निर्विशेषवान्स निर्गुणं प्रविशति ब्रह्म चाव्ययम् ३१
अनागतिं सुकृतिमतां परां गतिं स्वयंभुवं प्रभवनिधानमव्ययम्
सनातनं यदमृतमव्ययं पदं विचार्य तं शमममृतत्वमश्नुते ३२

इति श्रीमहाभारते शान्तिपर्वणि एकोनद्विशततमोऽध्यायः १९९

द्विशततमोऽध्यायः

युधिष्ठिर उवाच
पितामह महाप्राज्ञ पुण्डरीकाक्षमच्युतम्
कर्तारमकृतं विष्णुं भूतानां प्रभवाप्ययम् १
नारायणं हृषीकेशं गोविन्दमपराजितम्
तत्त्वेन भरतश्रेष्ठ श्रोतुमिच्छामि केशवम् २
भीष्म उवाच
श्रुतोऽयमर्थो रामस्य जामदग्न्यस्य जल्पतः
नारदस्य च देवर्षेः कृष्णद्वैपायनस्य च ३
असितो देवलस्तात वाल्मीकिश्च महातपाः
मार्कण्डेयश्च गोविन्दे कथयत्यद्भुतं महत् ४
केशवो भरतश्रेष्ठ भगवानीश्वरः प्रभुः
पुरुषः सर्वमित्येव श्रूयते बहुधा विभुः ५
किं तु यानि विदुर्लोके ब्राह्मणाः शार्ङ्गधन्वनः
माहात्म्यानि महाबाहो शृणु तानि युधिष्ठिर ६
यानि चाहुर्मनुष्येन्द्र ये पुराणविदो जनाः
अशेषेण हि गोविन्दे कीर्तयिष्यामि तान्यहम् ७
महाभूतानि भूतात्मा महात्मा पुरुषोत्तमः
वायुर्ज्योतिस्तथा चापः खं गां चैवान्वकल्पयत् ८
स दृष्ट्वा पृथिवीं चैव सर्वभूतेश्वरः प्रभुः
अप्स्वेव शयनं चक्रे महात्मा पुरुषोत्तमः ९
सर्वतेजोमयस्तस्मिञ्शयानः शयने शुभे
सोऽग्रजं सर्वभूतानां संकर्षणमचिन्तयत् १०
आश्रयं सर्वभूतानां मनसेति विशुश्रुम
स धारयति भूतात्मा उभे भूतभविष्यती ११
ततस्तस्मिन्महाबाहो प्रादुर्भूते महात्मनि
भास्करप्रतिमं दिव्यं नाभ्यां पद्ममजायत १२
स तत्र भगवान्देवः पुष्करे भासयन्दिशः

ब्रह्मा समभवत्तात सर्वभूतपितामहः १३
तस्मिन्नपि महाबाहो प्रादुर्भूते महात्मनि
तमसः पूर्वजो जज्ञे मधुर्नाम महासुरः १४
तमुग्रमुग्रकर्माणमुग्रां बुद्धिं समास्थितम्
ब्रह्मणोपचितिं कुर्वञ्जघान पुरुषोत्तमः १५
तस्य तात वधात्सर्वे देवदानवमानवाः
मधुसूदनमित्याहुर्वृषभं सर्वसात्वताम् १६
ब्रह्मा तु ससृजे पुत्रान्मानसान्दक्षसप्तमान्
मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम् १७
मरीचिः कश्यपं तात पुत्रं चासृजदग्रजम्
मानसं जनयामास तैजसं ब्रह्मसत्तमम् १८
अङ्गुष्ठादसृजद्ब्रह्मा मरीचेरपि पूर्वजम्
सोऽभवद्भरतश्रेष्ठ दक्षो नाम प्रजापतिः १९
तस्य पूर्वमजायन्त दश तिस्रश्च भारत
प्रजापतेर्दुहितरस्तासां ज्येष्ठाभवद्दितिः २०
सर्वधर्मविशेषज्ञः पुण्यकीर्तिर्महायशाः
मारीचः कश्यपस्तात सर्वासामभवत्पतिः २१
उत्पाद्य तु महाभागस्तासामवरजा दश
ददौ धर्माय धर्मज्ञो दक्ष एव प्रजापतिः २२
धर्मस्य वसवः पुत्रा रुद्राश्चामिततेजसः
विश्वेदेवाश्च साध्याश्च मरुत्वन्तश्च भारत २३
अपरास्तु यवीयस्यस्ताभ्योऽन्या सप्तविंशतिः
सोमस्तासां महाभागः सर्वासामभवत्पतिः २४
इतरास्तु व्यजायन्त गन्धर्वांस्तुरगान्द्विजान्
गाश्च किंपुरुषान्मत्स्यानौद्भिदांश्च वनस्पतीन् २५
आदित्यानदितिर्जज्ञे देवश्रेष्ठान्महाबलान्
तेषां विष्णुर्वामनोऽभूद्गोविन्दश्चाभवत्प्रभुः २६
तस्य विक्रमणादेव देवानां श्रीर्व्यवर्धत
दानवाश्च पराभूता दैतेयी चासुरी प्रजा २७
विप्रचित्तिप्रधानांश्च दानवानसृजद्दनुः

दितिस्तु सर्वानसुरान्महासत्त्वान्व्यजायत २८
अहोरात्रं च कालं च यथर्तु मधुसूदनः
पूर्वाह्णं चापराह्णं च सर्वमेवान्वकल्पयत् २९
बुद्ध्यापः सोऽसृजन्मेघांस्तथा स्थावरजङ्गमान्
पृथिवीं सोऽसृजद्विश्वां सहितां भूरितेजसा ३०
ततः कृष्णो महाबाहुः पुनरेव युधिष्ठिर
ब्राह्मणानां शतं श्रेष्ठं मुखादसृजत प्रभुः ३१
बाहुभ्यां क्षत्रियशतं वैश्यानामूरुतः शतम्
पद्भ्यां शूद्रशतं चैव केशवो भरतर्षभ ३२
स एवं चतुरो वर्णान्समुत्पाद्य महायशाः
अध्यक्षं सर्वभूतानां धातारमकरोत्प्रभुः ३३
यावद्यावदभूच्छ्रद्धा देहं धारयितुं नृणाम्
तावत्तावदजीवंस्ते नासीद्यमकृतं भयम् ३४
न चैषां मैथुनो धर्मो बभूव भरतर्षभ
संकल्पादेव चैतेषामपत्यमुदपद्यत ३५
तत्र त्रेतायुगे काले संकल्पाज्जायते प्रजा
न ह्यभून्मैथुनो धर्मस्तेषामपि जनाधिप ३६
द्वापरे मैथुनो धर्मः प्रजानामभवन्नृप
तथा कलियुगे राजन्द्वंद्वमापेदिरे जनाः ३७
एष भूतपतिस्तात स्वध्यक्षश्च प्रकीर्तितः
निरध्यक्षांस्तु कौन्तेय कीर्तयिष्यामि तानपि ३८
दक्षिणापथजन्मानः सर्वे तलवरान्ध्रकाः
उत्साः पुलिन्दाः शबराश्चूचुपा मण्डपैः सह ३९
उत्तरापथजन्मानः कीर्तयिष्यामि तानपि
यौनकाम्बोजगान्धाराः किराता बर्बरैः सह ४०
एते पापकृतस्तात चरन्ति पृथिवीमिमाम्
श्वकाकबलगृध्राणां सधर्माणो नराधिप ४१
नैते कृतयुगे तात चरन्ति पृथिवीमिमाम्
त्रेताप्रभृति वर्तन्ते ते जना भरतर्षभ ४२
ततस्तस्मिन्महाघोरे संध्याकाले युगान्तिके

राजानः समसज्जन्त समासाद्येतरेतरम् ४३
एवमेष कुरुश्रेष्ठ प्रादुर्भावो महात्मनः
देवदेवर्षिराचष्ट नारदः सर्वलोकदृक् ४४
नारदोऽप्यथ कृष्णस्य परं मेने नराधिप
शाश्वतत्वं महाबाहो यथावद्भरतर्षभ ४५
एवमेष महाबाहुः केशवः सत्यविक्रमः
अचिन्त्यः पुण्डरीकाक्षो नैष केवलमानुषः ४६
इति श्रीमहाभारते शान्तिपर्वणि द्विशततमोऽध्यायः २००

## एकाधिकद्विशततमोऽध्यायः

युधिष्ठिर उवाच
के पूर्वमासन्पतयः प्रजानां भरतर्षभ
के चर्षयो महाभागा दिक्षु प्रत्येकशः स्मृताः १
भीष्म उवाच
श्रूयतां भरतश्रेष्ठ यन्मा त्वं परिपृच्छसि
प्रजानां पतयो ये स्म दिक्षु प्रत्येकशः स्मृताः २
एकः स्वयंभूर्भगवानाद्यो ब्रह्मा सनातनः
ब्रह्मणः सप्त पुत्रा वै महात्मानः स्वयंभुवः ३
मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः
वसिष्ठश्च महाभागः सदृशा वै स्वयंभुवा ४
सप्त ब्रह्माण इत्येष पुराणे निश्चयो गतः
अत ऊर्ध्वं प्रवक्ष्यामि सर्वानेव प्रजापतीन् ५
अत्रिवंशसमुत्पन्नो ब्रह्मयोनिः सनातनः
प्राचीनबर्हिर्भगवांस्तस्मात्प्राचेतसो दश ६
दशानां तनयस्त्वेको दक्षो नाम प्रजापतिः
तस्य द्वे नामनी लोके दक्षः क इति चोच्यते ७
मरीचेः कश्यपः पुत्रस्तस्य द्वे नामनी श्रुते
अरिष्टनेमिरित्येकं कश्यपेत्यपरं विदुः ८
अङ्गश्चैवौरसः श्रीमान्राजा भौमश्च वीर्यवान्
सहस्रं यश्च दिव्यानां युगानां पर्युपासिता ९

अर्यमा चैव भगवान्ये चान्ये तनया विभो
एते प्रदेशाः कथिता भुवनानां प्रभावनाः १०
शशबिन्दोश्च भार्याणां सहस्राणि दशाच्युत
एकैकस्यां सहस्रं तु तनयानामभूत्तदा ११
एवं शतसहस्राणां शतं तस्य महात्मनः
पुत्राणां न च ते कंचिदिच्छन्त्यन्यं प्रजापतिम् १२
प्रजामाचक्षते विप्राः पौराणीं शाशबिन्दवीम्
स वृष्णिवंशप्रभवो महान्वंशः प्रजापतेः १३
एते प्रजानां पतयः समुद्दिष्टा यशस्विनः
अतः परं प्रवक्ष्यामि देवांस्त्रिभुवनेश्वरान् १४
भगोंऽशश्चार्यमा चैव मित्रोऽथ वरुणस्तथा
सविता चैव धाता च विवस्वांश्च महाबलः १५
पूषा त्वष्टा तथैवेन्द्रो द्वादशो विष्णुरुच्यते
त एते द्वादशादित्याः कश्यपस्यात्मसंभवाः १६
नासत्यश्चैव दस्रश्च स्मृतौ द्वावश्विनावपि
मार्तण्डस्यात्मजावेतावष्टमस्य प्रजापतेः १७
त्वष्टुश्चैवात्मजः श्रीमान्विश्वरूपो महायशाः
अजैकपादहिर्बुध्न्यो विरूपाक्षोऽथ रैवतः १८
हरश्च बहुरूपश्च त्र्यम्बकश्च सुरेश्वरः
सावित्रश्च जयन्तश्च पिनाकी चापराजितः
पूर्वमेव महाभागा वसवोऽष्टौ प्रकीर्तिताः १९
एत एवंविधा देवा मनोरेव प्रजापतेः
ते च पूर्वे सुराश्चेति द्विविधाः पितरः स्मृताः २०
शीलरूपरतास्त्वन्ये तथान्ये सिद्धसाध्ययोः
ऋभवो मरुतश्चैव देवानां चोदिता गणाः २१
एवमेते समाम्नाता विश्वेदेवास्तथाश्विनौ
आदित्याः क्षत्रियास्तेषां विशस्तु मरुतस्तथा २२
अश्विनौ तु मतौ शूद्रौ तपस्युग्रे समाहितौ
स्मृतास्त्वङ्गिरसो देवा ब्राह्मणा इति निश्चयः
इत्येतत्सर्वदेवानां चातुर्वर्ण्यं प्रकीर्तितम् २३

एतान्वै प्रातरुत्थाय देवान्यस्तु प्रकीर्तयेत्
स्वजादन्यकृताच्चैव सर्वपापात्प्रमुच्यते २४
यवक्रीतोऽथ रैभ्यश्च अर्वावसुपरावसू
औशिजश्चैव कक्षीवान्नलश्चाङ्गिरसः सुताः २५
ऋषेर्मेधातिथेः पुत्रः कण्वो बर्हिषदस्तथा
त्रैलोक्यभावनास्तात प्राच्यां सप्तर्षयस्तथा २६
उन्मुचो विमुचश्चैव स्वस्त्यात्रेयश्च वीर्यवान्
प्रमुचश्चेध्मवाहश्च भगवांश्च दृढव्रतः २७
मित्रावरुणयोः पुत्रस्तथागस्त्यः प्रतापवान्
एते ब्रह्मर्षयो नित्यमाश्रिता दक्षिणां दिशम् २८
रुषद्गुः कवषो धौम्यः परिव्याधश्च वीर्यवान्
एकतश्च द्वितश्चैव त्रितश्चैव महर्षयः २९
अत्रेः पुत्रश्च भगवांस्तथा सारस्वतं प्रभुः
एते नव महात्मानः पश्चिमामाश्रिता दिशम् ३०
आत्रेयश्च वसिष्ठश्च काश्यपश्च महानृषिः
गौतमः सभरद्वाजो विश्वामित्रोऽथ कौशिकः ३१
तथैव पुत्रो भगवानृचीकस्य महात्मनः
जमदग्निश्च सप्तैते उदीचीं दिशमाश्रिताः ३२
एते प्रतिदिशं सर्वे कीर्तितास्तिग्मतेजसः
साक्षिभूता महात्मानो भुवनानां प्रभावनाः ३३
एवमेते महात्मानः स्थिताः प्रत्येकशो दिशः
एतेषां कीर्तनं कृत्वा सर्वपापैः प्रमुच्यते ३४
यस्यां यस्यां दिशि ह्येते तां दिशं शरणं गतः
मुच्यते सर्वपापेभ्यः स्वस्तिमांश्च गृहान्व्रजेत् ३५
इति श्रीमहाभारते शान्तिपर्वणि एकाधिकद्विशततमोऽध्यायः २०१

## द्व्यधिकद्विशततमोऽध्यायः

युधिष्ठिर उवाच
पितामह महाप्राज्ञ युधि सत्यपराक्रम
श्रोतुमिच्छामि कार्त्स्न्येन कृष्णमव्ययमीश्वरम् १

यच्चास्य तेजः सुमहद्यच्च कर्म पुरातनम्
तन्मे सर्वं यथातत्त्वं प्रब्रूहि भरतर्षभ २
तिर्यग्योनिगतं रूपं कथं धारितवान्हरिः
केन कार्यविसर्गेण तन्मे ब्रूहि पितामह ३
भीष्म उवाच
पुराहं मृगयां यातो मार्कण्डेयाश्रमे स्थितः
तत्रापश्यं मुनिगणान्समासीनान्सहस्रशः ४
ततस्ते मधुपर्केण पूजां चक्रुरथो मयि
प्रतिगृह्य च तां पूजां प्रत्यनन्दमृषीनहम् ५
कथैषा कथिता तत्र कश्यपेन महर्षिणा
मनःप्रह्लादिनीं दिव्यां तामिहैकमनाः शृणु ६
पुरा दानवमुख्या हि क्रोधलोभसमन्विताः
बलेन मत्ताः शतशो नरकाद्या महासुराः ७
तथैव चान्ये बहवो दानवा युद्धदुर्मदाः
न सहन्ते स्म देवानां समृद्धिं तामनुत्तमाम् ८
दानवैरर्द्यमानास्तु देवा देवर्षयस्तथा
न शर्म लेभिरे राजन्विशमानास्ततस्ततः ९
पृथिवीं चार्तरूपां ते समपश्यन्दिवौकसः
दानवैरभिसंकीर्णां घोररूपैर्महाबलैः
भारार्तामपकृष्टां च दुःखितां संनिमज्जतीम् १०
अथादितेयाः संत्रस्ता ब्रह्माणमिदमब्रुवन्
कथं शक्यामहे ब्रह्मन्दानवैरपमर्दनम् ११
स्वयंभूस्तानुवाचेदं निसृष्टोऽत्र विधिर्मया
ते वरेणाभिसंमत्ता वलेन च मदेन च १२
नावभोत्स्यन्ति संमूढा विष्णुमव्यक्तदर्शनम्
वराहरूपिणं देवमधृष्यममरैरपि १३
एष वेगेन गत्वा हि यत्र ते दानवाधमाः
अन्तर्भूमिगता घोरा निवसन्ति सहस्रशः
शमयिष्यति श्रुत्वा ते जहृषुः सुरसत्तमाः १४
ततो विष्णुर्महातेजा वाराहं रूपमाश्रितः

अन्तर्भूमिं संप्रविश्य जगाम दितिजान्प्रति १५
दृष्ट्वा च सहिताः सर्वे दैत्याः सत्त्वममानुषम्
प्रसह्य सहसा सर्वे संतस्थुः कालमोहिताः १६
सर्वे च समभिद्रुत्य वराहं जगृहुः समम्
संक्रुद्धाश्च वराहं तं व्यकर्षन्त समन्ततः १७
दानवेन्द्रा महाकाया महावीर्या बलोच्छ्रिताः
नाशक्नुवंश्च किंचित्ते तस्य कर्तुं तदा विभो १८
ततोऽगमन्विस्मयं ते दानवेन्द्रा भयात्तदा
संशयं गतमात्मानं मेनिरे च सहस्रशः १९
ततो देवादिदेवः स योगात्मा योगसारथिः
योगमास्थाय भगवांस्तदा भरतसत्तम २०
विननाद महानादं क्षोभयन्दैत्यदानवान्
संनादिता येन लोकाः सर्वाश्चैव दिशो दश २१
तेन संनादशब्देन लोकाः संक्षोभमागमन्
संभ्रान्ताश्च दिशः सर्वा देवाः शक्रपुरोगमाः २२
निर्विचेष्टं जगच्चापि बभूवातिभृशं तदा
स्थावरं जङ्गमं चैव तेन नादेन मोहितम् २३
ततस्ते दानवाः सर्वे तेन शब्देन भीषिताः
पेतुर्गतासवश्चैव विष्णुतेजोविमोहिताः २४
रसातलगतांश्चैव वराहस्त्रिदशद्विषः
खुरैः संदारयामास मांसमेदोस्थिसंचयम् २५
नादेन तेन महता सनातन इति स्मृतः
पद्मनाभो महायोगी भूताचार्यः स भूतराट् २६
ततो देवगणाः सर्वे पितामहमुपाब्रुवन्
नादोऽय कीदृशो देव नैनं विद्म वयं विभो
कोऽसौ हि कस्य वा नादो येन विह्वलितं जगत् २७
एतस्मिन्नन्तरे विष्णुर्वाराहं रूपमास्थितः
उदतिष्ठन्महादेवः स्तूयमानो महर्षिभिः २८
पितामह उवाच
निहत्य दानवपतीन्महावर्ष्मा महाबलः

एष देवो महायोगी भूतात्मा भूतभावनः २९
सर्वभूतेश्वरो योगी योनिरात्मा तथात्मनः
स्थिरीभवत कृष्णोऽय सर्वपापप्रणाशनः ३०
कृत्वा कर्मातिसाध्वेतदशक्यममितप्रभः
समायातः स्वमात्मानं महाभागो महाद्युतिः
पद्मनाभो महायोगी भूतात्मा भूतभावनः ३१
न संतापो न भीः कार्या शोको वा सुरसत्तमाः
विधिरेष प्रभावश्च कालः संक्षयकारकः
लोकान्धारयतानेन नादो मुक्तो महात्मना ३२
स एव हि महाभागः सर्वलोकनमस्कृतः
अच्युतः पुण्डरीकाक्षः सर्वभूतसमुद्भवः ३३
इति श्रीमहाभारते शान्तिपर्वणि द्व्यधिकद्विशततमोऽध्यायः २०२

त्र्यधिकद्विशततमोऽध्यायः

युधिष्ठिर उवाच
योगं मे परमं तात मोक्षस्य वद भारत
तमहं तत्त्वतो ज्ञातुमिच्छामि वदतां वर १
भीष्म उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
संवादं मोक्षसंयुक्तं शिष्यस्य गुरुणा सह २
कश्चिद्ब्राह्मणमासीनमाचार्यमृषिसत्तमम्
शिष्यः परममेधावी श्रेयोर्थी सुसमाहितः
चरणावुपसंगृह्य स्थितः प्राञ्जलिरब्रवीत् ३
उपासनात्प्रसन्नोऽसि यदि वै भगवन्मम
संशयो मे महान्कश्चित्तन्मे व्याख्यातुमर्हसि ४
कुतश्चाहं कुतश्च त्वं तत्सम्यग्ब्रूहि यत्परम्
कथं च सर्वभूतेषु समेषु द्विजसत्तम
सम्यग्वृत्ता निवर्तन्ते विपरीताः क्षयोदयाः ५
वेदेषु चापि यद्वाक्यं लौकिकं व्यापकं च यत्
एतद्विद्वन्यथातत्त्वं सर्वं व्याख्यातुमर्हसि ६

गुरुरुवाच
शृणु शिष्य महाप्राज्ञ ब्रह्मगुह्यमिदं परम्
अध्यात्मं सर्वभूतानामागमानां च यद्वसु ७
वासुदेवः सर्वमिदं विश्वस्य ब्रह्मणो मुखम्
सत्यं दानमथो यज्ञस्तितिक्षा दम आर्जवम् ८
पुरुषं सनातनं विष्णुं यत्तद्वेदविदो विदुः
सर्गप्रलयकर्तारमव्यक्तं ब्रह्म शाश्वतम्
तदिदं ब्रह्म वार्ष्णेयमितिहासं शृणुष्व मे ९
ब्राह्मणो ब्राह्मणैः श्राव्यो राजन्यः क्षत्रियैस्तथा
माहात्म्यं देवदेवस्य विष्णोरमिततेजसः
अर्हस्त्वमसि कल्याण वार्ष्णेयं शृणु यत्परम् १०
कालचक्रमनाद्यन्तं भावाभावस्वलक्षणम्
त्रैलोक्यं सर्वभूतेषु चक्रवत्परिवर्तते ११
यत्तदक्षरमव्यक्तममृतं ब्रह्म शाश्वतम्
वदन्ति पुरुषव्याघ्रं केशवं पुरुषर्षभम् १२
पितॄन्देवानृषींश्चैव तथा वै यक्षदानवान्
नागासुरमनुष्यांश्च सृजते परमोऽव्ययः १३
तथैव वेदशास्त्राणि लोकधर्मांश्च शाश्वतान्
प्रलये प्रकृतिं प्राप्य युगादौ सृजते प्रभुः १४
यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये
दृश्यन्ते तानि तान्येव तथा ब्रह्माहरात्रिषु १५
अथ यद्यद्यदा भावि कालयोगाद्युगादिषु
तत्तदुत्पद्यते ज्ञानं लोकयात्राविधानजम् १६
युगान्तेऽन्तर्हितान्वेदान्सेतिहासान्महर्षयः
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा १७
वेदविद्वेद भगवान्वेदाङ्गानि बृहस्पतिः
भार्गवो नीतिशास्त्रं च जगाद जगतो हितम् १८
गान्धर्वं नारदो वेदं भरद्वाजो धनुर्ग्रहम्
देवर्षिचरितं गार्ग्यः कृष्णात्रेयश्चिकित्सितम् १९
न्यायतन्त्राण्यनेकानि तैस्तैरुक्तानि वादिभिः

हेत्वागमसदाचारैर्यदुक्तं तदुपास्यते २०
अनाद्यं यत्परं ब्रह्म न देवा नर्षयो विदुः
एकस्तद्वेद भगवान्धाता नारायणः प्रभुः २१
नारायणादृषिगणास्तथा मुख्याः सुरासुराः
राजर्षयः पुराणाश्च परमं दुःखभेषजम् २२
पुरुषाधिष्ठितं भावं प्रकृतिः सूयते सदा
हेतुयुक्तमतः सर्वं जगत्संपरिवर्तते २३
दीपादन्ये यथा दीपाः प्रवर्तन्ते सहस्रशः
प्रकृतिः सृजते तद्वदानन्त्यान्नापचीयते २४
अव्यक्तकर्मजा बुद्धिरहंकारं प्रसूयते
आकाशं चाप्यहंकाराद्वायुराकाशसंभवः २५
वायोस्तेजस्ततश्चापस्त्वद्भ्यो हि वसुधोद्गता
मूलप्रकृतयोऽष्टौ ता जगदेतास्ववस्थितम् २६
ज्ञानेन्द्रियाण्यतः पञ्च पञ्च कर्मेन्द्रियाण्यपि
विषयाः पञ्च चैकं च विकारे षोडशं मनः २७
श्रोत्रं त्वक्चक्षुषी जिह्वा घ्राणं पञ्चेन्द्रियाण्यपि
पादौ पायुरुपस्थश्च हस्तौ वाक्कर्मणामपि २८
शब्दः स्पर्शोऽथ रूपं च रसो गन्धस्तथैव च
विज्ञेयं व्यापकं चित्तं तेषु सर्वगतं मनः २९
रसज्ञाने तु जिह्वेयं व्याहृते वाक्तथैव च
इन्द्रियैर्विविधैर्युक्तं सर्वं व्यस्तं मनस्तथा ३०
विद्यात्तु षोडशैतानि दैवतानि विभागशः
देहेषु ज्ञानकर्तारमुपासीनमुपासते ३१
तद्वत्सोमगुणा जिह्वा गन्धस्तु पृथिवीगुणः
श्रोत्रं शब्दगुणं चैव चक्षुरग्नेर्गुणस्तथा
स्पर्शं वायुगुणं विद्यात्सर्वभूतेषु सर्वदा ३२
मनः सत्त्वगुणं प्राहुः सत्त्वमव्यक्तजं तथा
सर्वभूतात्मभूतस्थं तस्माद्बुध्येत बुद्धिमान् ३३
एते भावा जगत्सर्वं वहन्ति सचराचरम्
श्रिता विरजसं देवं यमाहुः परमं पदम् ३४

नवद्वारं पुरं पुरायमेतैर्भावैः समन्वितम्
व्याप्य शेते महानात्मा तस्मात्पुरुष उच्यते ३५
अजरः सोऽमरश्चैव व्यक्ताव्यक्तोपदेशवान्
व्यापकः सगुणः सूक्ष्मः सर्वभूतगुणाश्रयः ३६
यथा दीपः प्रकाशात्मा ह्रस्वो वा यदि वा महान्
ज्ञानात्मानं तथा विद्यात्पुरुषं सर्वजन्तुषु ३७
सोऽत्र वेदयते वेद्यं स शृणोति स पश्यति
कारणं तस्य देहोऽय स कर्ता सर्वकर्मणाम् ३८
अग्निर्दारुगतो यद्वच्छिन्ने दारौ न दृश्यते
तथैवात्मा शरीरस्थो योगेनैवात्र दृश्यते ३९
नदीष्वापो यथा युक्ता यथा सूर्ये मरीचयः
संतन्वाना यथा यान्ति तथा देहाः शरीरिणाम् ४०
स्वप्नयोगे यथैवात्मा पञ्चेन्द्रियसमागतः
देहमुत्सृज्य वै याति तथैवात्रोपलभ्यते ४१
कर्मणा व्याप्यते पूर्वं कर्मणा चोपपद्यते
कर्मणा नीयतेऽन्यत्र स्वकृतेन बलीयसा ४२
स तु देहाद्यथा देहं त्यक्त्वान्यं प्रतिपद्यते
तथा तं संप्रवक्ष्यामि भूतग्रामं स्वकर्मजम् ४३
इति श्रीमहाभारते शान्तिपर्वणि त्र्यधिकद्विशततमोऽध्यायः २०३

## चतुरधिकद्विशततमोऽध्यायः

गुरुरुवाच
चतुर्विधानि भूतानि स्थावराणि चराणि च
अव्यक्तप्रभवान्याहुरव्यक्तनिधनानि च
अव्यक्तनिधनं विद्यादव्यक्तात्मात्मकं मनः १
यथाश्वत्थकणीकायामन्तर्भूतो महाद्रुमः
निष्पन्नो दृश्यते व्यक्तमव्यक्तात्संभवस्तथा २
अभिद्रवत्ययस्कान्तमयो निश्चेतनावुभौ
स्वभावहेतुजा भावा यद्वदन्यदपीदृशम् ३
तद्वदव्यक्तजा भावाः कर्तुः कारणलक्षणाः

अचेतनाश्चेतयितुः कारणादभिसंहिताः ४
न भूः खं द्यौर्न भूतानि नर्षयो न सुरासुराः
नान्यदासीदृते जीवमासेदुर्न तु संहितम् ५
सर्वनीत्या सर्वगतं मनोहेतु सलक्षणम्
अज्ञानकर्म निर्दिष्टमेतत्कारणलक्षणम् ६
तत्कारणैर्हि संयुक्तं कार्यसंग्रहकारकम्
येनैतद्वर्तते चक्रमनादिनिधनं महत् ७
अव्यक्तनाभं व्यक्तारं विकारपरिमण्डलम्
क्षेत्रज्ञाधिष्ठितं चक्रं स्निग्धाक्षं वर्तते ध्रुवम् ८
स्निग्धत्वात्तिलवत्सर्वं चक्रेऽस्मिन्पीड्यते जगत्
तिलपीडैरिवाक्रम्य भोगैरज्ञानसंभवैः ९
कर्म तत्कुरुते तर्षादहंकारपरिग्रहम्
कार्यकारणसंयोगे स हेतुरुपपादितः १०
नात्येति कारणं कार्यं न कार्यं कारणं तथा
कार्याणां तूपकरणे कालो भवति हेतुमान् ११
हेतुयुक्ताः प्रकृतयो विकाराश्च परस्परम्
अन्योन्यमभिवर्तन्ते पुरुषाधिष्ठिताः सदा १२
सरजस्तामसैर्भावैश्च्युतो हेतुबलान्वितः
क्षेत्रज्ञमेवानुयाति पांसुर्वातेरितो यथा
न च तैः स्पृश्यते भावो न ते तेन महात्मना १३
सरजस्कोऽरजस्कश्च स वै वायुर्यथा भवेत्
तथैतदन्तरं विद्यात्क्षेत्रक्षेत्रज्ञयोर्बुधः
अभ्यासात्स तथा युक्तो न गच्छेत्प्रकृतिं पुनः १४
संदेहमेतमुत्पन्नमच्छिनद्भगवानृषिः
तथा वार्तां समीक्षेत कृतलक्षणसंमिताम् १५
बीजान्यग्न्युपदग्धानि न रोहन्ति यथा पुनः
ज्ञानदग्धैस्तथा क्लेशैर्नात्मा संबध्यते पुनः १६
इति श्रीमहाभारते शान्तिपर्वणि चतुरधिकद्विशततमोऽध्यायः २०४

पञ्चाधिकद्विशततमोऽध्यायः

गुरुरुवाच
प्रवृत्तिलक्षणो धर्मो यथायमुपपद्यते
तेषां विज्ञाननिष्ठानामन्यत्तत्त्वं न रोचते १
दुर्लभा वेदविद्वांसो वेदोक्तेषु व्यवस्थिताः
प्रयोजनमतस्त्वत्र मार्गमिच्छन्ति संस्तुतम् २
सद्भिराचरितत्वात्तु वृत्तमेतदगर्हितम्
इयं सा बुद्धिरन्येयं यया याति परां गतिम् ३
शरीरवानुपादत्ते मोहात्सर्वपरिग्रहान्
कामक्रोधादिभिर्भावैर्युक्तो राजसतामसैः ४
नाशुद्धमाचरेत्तस्मादभीप्सन्देहयापनम्
कर्मणो विवरं कुर्वन्न लोकानाप्नुयाच्छुभान् ५
लोहयुक्तं यथा हेम विपक्वं न विराजते
तथापक्वकषायाख्यं विज्ञानं न प्रकाशते ६
यश्चाधर्मं चरेन्मोहात्कामलोभावनु प्लवन्
धर्म्यं पन्थानमाक्रम्य सानुबन्धो विनश्यति ७
शब्दादीन्विषयांस्तस्मादसंरागादनुप्लवेत्
क्रोधहर्षौ विषादश्च जायन्ते हि परस्परम् ८
पञ्चभूतात्मके देहे सत्त्वराजसतामसे
कमभिष्टुवते चायं कं वा क्रोशति किं वदेत् ९
स्पर्शरूपरसाद्येषु सङ्गं गच्छन्ति बालिशाः
नावगच्छन्त्यविज्ञानादात्मजं पार्थिवं गुणम् १०
मृन्मयं शरणं यद्वन्मृदैव परिलिप्यते
पार्थिवोऽय तथा देहो मृद्विकारैर्विलिप्यते ११
मधु तैलं पयः सर्पिर्मांसानि लवणं गुडः
धान्यानि फलमूलानि मृद्विकाराः सहाम्भसा १२
यद्वत्कान्तारमातिष्ठन्नौत्सुक्यं समनुव्रजेत्
श्रमादाहारमादद्यादस्वाद्वपि हि यापनम् १३
तद्वत्संसारकान्तारमातिष्ठञ्श्रमतत्परः
यात्रार्थमद्यादाहारं व्याधितो भेषजं यथा १४
सत्यशौचार्जवत्यागैर्यशसा विक्रमेण च

क्षान्त्या धृत्या च बुद्ध्या च मनसा तपसैव च १५
भावान्सर्वान्यथावृत्तान्संवसेत यथाक्रमम्
शान्तिमिच्छन्नदीनात्मा संयच्छेदिन्द्रियाणि च १६
सत्त्वेन रजसा चैव तमसा चैव मोहिताः
चक्रवत्परिवर्तन्ते ह्यज्ञानाज्जन्तवो भृशम् १७
तस्मात्सम्यक्परीक्षेत दोषानज्ञानसंभवान्
अज्ञानप्रभवं नित्यमहंकारं परित्यजेत् १८
महाभूतानीन्द्रियाणि गुणाः सत्त्वं रजस्तमः
त्रैलोक्यं सेश्वरं सर्वमहंकारे प्रतिष्ठितम् १९
यथेह नियतं कालो दर्शयत्यार्तवान्गुणान्
तद्वद्भूतेष्वहंकारं विद्याद्भूतप्रवर्तकम् २०
संमोहकं तमो विद्यात्कृष्णमज्ञानसम्भवम्
प्रीतिदुःखनिबद्धांश्च समस्तांस्त्रीनथो गुणान्
सत्त्वस्य रजसश्चैव तमसश्च निबोध तान् २१
प्रमोहो हर्षजः प्रीतिरसंदेहो धृतिः स्मृतिः
एतान्सत्त्वगुणान्विद्यादिमान्राजसतामसान् २२
कामक्रोधौ प्रमादश्च लोभमोहौ भयं क्लमः
विषादशोकावरतिर्मानदर्पावनार्यता २३
दोषाणामेवमादीनां परीक्ष्य गुरुलाघवम्
विमृशेदात्मसंस्थानामेकैकमनुसंततम् २४
शिष्य उवाच
के दोषा मनसा त्यक्ताः के बुद्ध्या शिथिलीकृताः
के पुनः पुनरायान्ति के मोहादफला इव २५
केषां बलाबलं बुद्ध्या हेतुभिर्विमृशेद्बुधः
एतत्सर्वं समाचक्ष्व यथा विद्यामहं प्रभो २६
गुरुरुवाच
दोषैर्मूलादवच्छिन्नैर्विशुद्धात्मा विमुच्यते
विनाशयति संभूतमयस्मयमयो यथा
तथाकृतात्मा सहजैर्दोषैर्नश्यति राजसैः २७
राजसं तामसं चैव शुद्धात्माकर्मसंभवम्

तत्सर्वं देहिनां बीजं सर्वमात्मवतः समम् २८
तस्मादात्मवता वर्ज्यं रजश्च तम एव च
रजस्तमोभ्यां निर्मुक्तं सत्त्वं निर्मलतामियात् २९
अथ वा मन्त्रवद्ब्रूयुर्मांसादानां यजुष्कृतम्
हेतुः स एवानादाने शुद्धधर्मानुपालने ३०
रजसा धर्मयुक्तानि कार्याण्यपि समाप्नुयात्
अर्थयुक्तानि चात्यर्थं कामान्सर्वांश्च सेवते ३१
तमसा लोभयुक्तानि क्रोधजानि च सेवते
हिंसाविहाराभिरतस्तन्द्रीनिद्रासमन्वितः ३२
सत्त्वस्थः सात्त्विकान्भावाञ्शुद्धान्पश्यति संश्रितः
स देही विमलः श्रीमाञ्शुद्धो विद्यासमन्वितः ३३
इति श्रीमहाभारते शान्तिपर्वणि पञ्चाधिकद्विशततमोऽध्यायः २०५

## षडधिकद्विशततमोऽध्यायः

गुरुरुवाच
रजसा साध्यते मोहस्तमसा च नरर्षभ
क्रोधलोभौ भयं दर्प एतेषां सादनाच्छुचिः १
परमं परमात्मानं देवमक्षयमव्ययम्
विष्णुमव्यक्तसंस्थानं विशन्ते देवसत्तमम् २
तस्य मायाविदग्धाङ्गा ज्ञानभ्रष्टा निराशिषः
मानवाः ज्ञानसंमोहात्ततः कामं प्रयान्ति वै ३
कामात्क्रोधमवाप्याथ लोभमोहौ च मानवाः
मानदर्पादहंकारमहंकारात्ततः क्रियाः ४
क्रियाभिः स्नेहसंबन्धः स्नेहाच्छोकमनन्तरम्
सुखदुःखसमारम्भाज्जन्माजन्मकृतक्षणाः ५
जन्मतो गर्भवासं तु शुक्रशोणितसंभवम्
पुरीषमूत्रविक्लेदशोणितप्रभवाविलम् ६
तृष्णाभिभूतस्तैर्बद्धस्तानेवाभिपरिप्लवन्
संसारतन्त्रवाहिन्यस्तत्र बुध्येत योषितः ७
प्रकृत्या क्षेत्रभूतास्ता नराः क्षेत्रज्ञलक्षणाः

तस्मादेता विशेषेण नरोऽतीयुर्विपश्चितः ८
कृत्या ह्येता घोररूपा मोहयन्त्यविचक्षणान्
रजस्यन्तर्हिता मूर्तिरिन्द्रियाणां सनातनी ९
तस्मात्तर्षात्मकाद्रागाद्बीजाज्जायन्ति जन्तवः
स्वदेहजानस्वसंज्ञान्यद्वदङ्गात्कृमींस्त्यजेत्
स्वसंज्ञानस्वजांस्तद्वत्सुतसंज्ञान्कृमींस्त्यजेत् १०
शुक्रतो रसतश्चैव स्नेहाज्जायन्ति जन्तवः
स्वभावात्कर्मयोगाद्वा तानुपेक्षेत बुद्धिमान् ११
रजस्तमसि पर्यस्तं सत्त्वं तमसि संस्थितम्
ज्ञानाधिष्ठानमज्ञानं बुद्ध्यहंकारलक्षणम् १२
तद्बीजं देहिनामाहुस्तद्बीजं जीवसंज्ञितम्
कर्मणा कालयुक्तेन संसारपरिवर्तकम् १३
रमत्ययं यथा स्वप्ने मनसा देहवानिव
कर्मगर्भैर्गुणैर्देही गर्भे तदुपपद्यते १४
कर्मणा बीजभूतेन चोद्यते यद्यदिन्द्रियम्
जायते तदहंकाराद्रागयुक्तेन चेतसा १५
शब्दरागाच्छ्रोत्रमस्य जायते भावितात्मनः
रूपरागात्तथा चक्षुर्घ्राणं गन्धचिकीर्षया १६
स्पर्शनेभ्यस्तथा वायुः प्राणापानव्यपाश्रयः
व्यानोदानौ समानश्च पञ्चधा देहयापना १७
संजातैर्जायते गात्रैः कर्मजैर्ब्रह्मणा वृतः
दुःखाद्यन्तैर्दुःखमध्यैर्नरः शारीरमानसैः १८
दुःखं विद्यादुपादानादभिमानाच्च वर्धते
त्यागात्तेभ्यो निरोधः स्यान्निरोधज्ञो विमुच्यते १९
इन्द्रियाणां रजस्येव प्रभवप्रलयावुभौ
परीक्ष्य संचरेद्विद्वान्यथावच्छास्त्रचक्षुषा २०
ज्ञानेन्द्रियाणीन्द्रियार्थान्नोपसर्पन्त्यतर्षुलम्
ज्ञातैश्च कारणैर्देही न देहं पुनरर्हति २१

इति श्रीमहाभारते शान्तिपर्वणि षडधिकद्विशततमोऽध्यायः २०६

## सप्ताधिकद्विशततमोऽध्यायः

गुरुरुवाच
अत्रोपायं प्रवक्ष्यामि यथावच्छास्त्रचक्षुषा
तद्विज्ञानाच्चरन्प्राज्ञः प्राप्नुयात्परमां गतिम् १
सर्वेषामेव भूतानां पुरुषः श्रेष्ठ उच्यते
पुरुषेभ्यो द्विजानाहुर्द्विजेभ्यो मन्त्रवादिनः २
सर्वभूतविशिष्टास्ते सर्वज्ञाः सर्वदर्शिनः
ब्राह्मणा वेदतत्त्वज्ञास्तत्त्वार्थगतिनिश्चयाः ३
नेत्रहीनो यथा ह्येकः कृच्छ्राणि लभतेऽध्वनि
ज्ञानहीनस्तथा लोके तस्माज्ज्ञानविदोऽधिकाः ४
तांस्तानुपासते धर्मान्धर्मकामा यथागमम्
न त्वेषामर्थसामान्यमन्तरेण गुणानिमान् ५
वाग्देहमनसां शौचं क्षमा सत्यं धृतिः स्मृतिः
सर्वधर्मेषु धर्मज्ञा ज्ञापयन्ति गुणानिमान् ६
यदिदं ब्रह्मणो रूपं ब्रह्मचर्यमिति स्मृतम्
परं तत्सर्वभूतेभ्यस्तेन यान्ति परां गतिम् ७
लिङ्गसंयोगहीनं यच्छरीरस्पर्शवर्जितम्
श्रोत्रेण श्रवणं चैव चक्षुषा चैव दर्शनम् ८
जिह्वया रसनं यच्च तदेव परिवर्जितम्
बुद्ध्या च व्यवसायेन ब्रह्मचर्यमकल्मषम् ९
सम्यग्वृत्तिर्ब्रह्मलोकं प्राप्नुयान्मध्यमः सुरान्
द्विजाग्र्यो जायते विद्वान्कन्यसीं वृत्तिमास्थितः १०
सुदुष्करं ब्रह्मचर्यमुपायं तत्र मे शृणु
संप्रदीवृत्तमुदीर्णं च निगृह्णीयाद्द्विजो मनः ११
योषितां न कथाः श्राव्या न निरीक्ष्या निरम्बराः
कदाचिद्दर्शनादासां दुर्बलानाविशेद्रजः १२
रागोत्पत्तौ चरेत्कृच्छ्रमह्नस्त्रिः प्रविशेदपः
मग्नः स्वप्ने च मनसा त्रिर्जपेदघमर्षणम् १३
पाप्मानं निर्दहेदेवमन्तर्भूतं रजोमयम्
ज्ञानयुक्तेन मनसा संततेन विचक्षणः १४

कुणपामेध्यसंयुक्तं यद्वदच्छिद्रबन्धनम्
तद्वद्देहगतं विद्यादात्मानं देहबन्धनम् १५
वातपित्तकफान्रक्तं त्वङ्मांसं स्नायुमस्थि च
मज्जां चैव सिराजालैस्तर्पयन्ति रसा नृणाम् १६
दश विद्याद्धमन्योऽत्र पञ्चेन्द्रियगुणावहाः
याभिः सूक्ष्माः प्रतायन्ते धमन्योऽन्या सहस्रशः १७
एवमेताः सिरानद्यो रसोदा देहसागरम्
तर्पयन्ति यथाकालमापगा इव सागरम् १८
मध्ये च हृदयस्यैका सिरा तत्र मनोवहा
शुक्रं संकल्पजं नृणां सर्वगात्रैर्विमुञ्चति १९
सर्वगात्रप्रतायिन्यस्तस्या ह्यनुगताः सिराः
नेत्रयोः प्रतिपद्यन्ते वहन्त्यस्तैजसं गुणम् २०
पयस्यन्तर्हितं सर्पिर्यद्वन्निर्मथ्यते खजैः
शुक्रं निर्मथ्यते तद्वद्देहसंकल्पजैः खजैः २१
स्वप्नेऽप्येवं यथाभ्येति मनःसंकल्पजं रजः
शुक्रमस्पर्शजं देहात्सृजन्त्यस्य मनोवहा २२
महर्षिर्भगवानत्रिर्वेद तच्छुक्रसंभवम्
त्रिबीजमिन्द्रदैवत्यं तस्मादिन्द्रियमुच्यते २३
ये वै शुक्रगतिं विद्युर्भूतसंकरकारिकाम्
विरागा दग्धदोषास्ते नाप्नुयुर्देहसंभवम् २४
गुणानां साम्यमागम्य मनसैव मनोवहम्
देहकर्म नुदन्प्राणानन्तकाले विमुच्यते २५
भविता मनसो ज्ञानं मन एव प्रतायते
ज्योतिष्मद्विरजो दिव्यमत्र सिद्धं महात्मनाम् २६
तस्मात्तदविघाताय कर्म कुर्यादकल्मषम्
रजस्तमश्च हित्वेह न तिर्यग्गतिमाप्नुयात् २७
तरुणाधिगतं ज्ञानं जरादुर्बलतां गतम्
परिपक्वबुद्धिः कालेन आदत्ते मानसं बलम् २८
सुदुर्गमिव पन्थानमतीत्य गुणबन्धनम्
यदा पश्येत्तदा दोषानतीत्यामृतमश्नुते २९

इति श्रीमहाभारते शान्तिपर्वणि सप्ताधिकद्विशततमोऽध्यायः २०७

## अष्टाधिकद्विशततमोऽध्यायः

गुरुरुवाच
दुरन्तेष्विन्द्रियार्थेषु सक्ताः सीदन्ति जन्तवः
ये त्वसक्ता महात्मानस्ते यान्ति परमां गतिम् १
जन्ममृत्युजरादुःखैर्व्याधिभिर्मनसः क्लमैः
दृष्ट्वेमं संततं लोकं घटेन्मोक्षाय बुद्धिमान् २
वाङ्मनोभ्यां शरीरेण शुचिः स्यादनहंकृतः
प्रशान्तो ज्ञानवान्भिक्षुर्निरपेक्षश्चरेत्सुखम् ३
अथ वा मनसः सङ्गं पश्येद्भूतानुकम्पया
अत्राप्युपेक्षां कुर्वीत ज्ञात्वा कर्मफलं जगत् ४
यत्कृतं प्राक्शुभं कर्म पापं वा तदुपाश्नुते
तस्माच्छुभानि कर्माणि कुर्याद्वाग्बुद्धिकर्मभिः ५
अहिंसा सत्यवचनं सर्वभूतेषु चार्जवम्
क्षमा चैवाप्रमादश्च यस्यैते स सुखी भवेत् ६
यश्चैनं परमं धर्मं सर्वभूतसुखावहम्
दुःखान्निःसरणं वेद स तत्त्वज्ञः सुखी भवेत् ७
तस्मात्समाहितं बुद्ध्या मनो भूतेषु धारयेत्
नापध्यायेन्न स्पृहयेन्नाबद्धं चिन्तयेदसत् ८
अवाग्योगप्रयोगेण मनोज्ञं संप्रवर्तते
विवक्षता वा सद्वाक्यं धर्मं सूक्ष्ममवेक्षता
सत्यां वाचमहिंस्रां च वदेदनपवादिनीम् ९
कल्कापेतामपरुषामनृशंसामपैशुनाम्
ईदृगल्पं च वक्तव्यमविक्षिप्तेन चेतसा १०
वाक्प्रबुद्धो हि संरागाद्विरागाद्व्याहरेद्यदि
बुद्ध्या ह्यनिगृहीतेन मनसा कर्म तामसम्
रजोभूतैर्हि करणैः कर्मणा प्रतिपद्यते ११
स दुःखं प्राप्य लोकेऽस्मिन्नरकायोपपद्यते
तस्मान्मनोवाक्शरीरैराचरेद्धैर्यमात्मनः १२

प्रकीर्णमेषभारो हि यद्वद्धार्येत दस्युभिः
प्रतिलोमां दिशं बुद्ध्वा संसारमबुधास्तथा १३
तानेव च यथा दस्यून्क्षिप्त्वा गच्छेच्छिवां दिशम्
तथा रजस्तमःकर्माण्युत्सृज्य प्राप्नुयात्सुखम् १४
निःसंदिग्धमनीहो वै मुक्तः सर्वपरिग्रहैः
विविक्तचारी लघ्वाशी तपस्वी नियतेन्द्रियः १५
ज्ञानदग्धपरिक्लेशः प्रयोगरतिरात्मवान्
निष्प्रचारेण मनसा परं तदधिगच्छति १६
धृतिमानात्मवान्बुद्धिं निगृह्णीयादसंशयम्
मनो बुद्ध्या निगृह्णीयाद्विषयान्मनसात्मनः १७
निगृहीतेन्द्रियस्यास्य कुर्वाणस्य मनो वशे
देवतास्ताः प्रकाशन्ते हृष्टा यान्ति तमीश्वरम् १८
ताभिः संसक्तमनसो ब्रह्मवत्संप्रकाशते
एतैश्चापगतैः सर्वैर्ब्रह्मभूयाय कल्पते १९
अथ वा न प्रवर्तेत योगतन्त्रैरुपक्रमेत्
येन तन्त्रमयं तन्त्रं वृत्तिः स्यात्तत्तदाचरेत् २०
कणपिण्याककुल्माषशाकयावकसक्तवः
तथा मूलफलं भैक्षं पर्यायेणोपयोजयेत् २१
आहारं नियतं चैव देशे काले च सात्त्विकम्
तत्परीक्ष्यानुवर्तेत यत्प्रवृत्त्यनुवर्तकम् २२
प्रवृत्तं नोपरुन्धेत शनैरग्निमिवेन्धयेत्
ज्ञानेन्धितं ततो ज्ञानकर्मवत्संप्रकाशते २३
ज्ञानाधिष्ठानमज्ञानं त्रीँल्लोकानधितिष्ठति
विज्ञानानुगतं ज्ञानमज्ञानादपकृष्यते २४
पृथक्त्वात्संप्रयोगाच्च नासूयुर्वेद शाश्वतम्
स तयोरपवर्गज्ञो वीतरागो विमुच्यते २५
वयोतीतो जरामृत्यू जित्वा ब्रह्म सनातनम्
अमृतं तदवाप्नोति यत्तदक्षरमव्ययम् २६

इति श्रीमहाभारते शान्तिपर्वणि अष्टाधिकद्विशततमोऽध्यायः २०८

## नवाधिकद्विशततमोऽध्यायः

गुरुरुवाच
निष्कल्मषं ब्रह्मचर्यमिच्छता चरितुं सदा
निद्रा सर्वात्मना त्याज्या स्वप्नदोषानवेक्षता १
स्वप्ने हि रजसा देही तमसा चाभिभूयते
देहान्तरमिवापन्नश्चरत्यपगतस्मृतिः २
ज्ञानाभ्यासाज्जागरतो जिज्ञासार्थमनन्तरम्
विज्ञानाभिनिवेशात्तु जागरत्यनिशं सदा ३
अत्राह को न्वयं भावः स्वप्ने विषयवानिव
प्रलीनैरिन्द्रियैर्देही वर्तते देहवानिव ४
अत्रोच्यते यथा ह्येतद्वेद योगेश्वरो हरिः
तथैतदुपपन्नार्थं वर्णयन्ति महर्षयः ५
इन्द्रियाणां श्रमात्स्वप्नमाहुः सर्वगतं बुधाः
मनसस्तु प्रलीनत्वात्तत्तदाहुर्निदर्शनम् ६
कार्यव्यासक्तमनसः संकल्पो जाग्रतो ह्यपि
यद्वन्मनोरथैश्वर्यं स्वप्ने तद्वन्मनोगतम् ७
संसाराणामसंख्यानां कामात्मा तदवाप्नुयात्
मनस्यन्तर्हितं सर्वं वेद सोत्तमपूरुषः ८
गुणानामपि यद्यत्तत्कर्म जानात्युपस्थितम्
तत्तच्छंसन्ति भूतानि मनो यद्भावितं यथा ९
ततस्तमुपवर्तन्ते गुणा राजसतामसाः
सात्त्विको वा यथायोगमानन्तर्यफलोदयः १०
ततः पश्यत्यसंबद्धान्वातपित्तकफोत्तरान्
रजस्तमोभवैर्भावैस्तदप्याहुर्दुरन्वयम् ११
प्रसन्नैरिन्द्रियैर्यद्यत्संकल्पयति मानसम्
तत्तत्स्वप्नेऽप्युपरते मनोदृष्टिर्निरीक्षते १२
व्यापकं सर्वभूतेषु वर्ततेऽप्रतिघं मनः
मनस्यन्तर्हितं द्वारं देहमास्थाय मानसम् १३
यत्तत्सदसदव्यक्तं स्वपित्यस्मिन्निदर्शनम्
सर्वभूतात्मभूतस्थं तदध्यात्मगुणं विदुः १४

लिप्सेत मनसा यश्च संकल्पादैश्वरं गुणम्
आत्मप्रभावात्तं विद्यात्सर्वा ह्यात्मनि देवताः १५
एवं हि तपसा युक्तमर्कवत्तमसः परम्
त्रैलोक्यप्रकृतिर्देही तमसा तं महेश्वरम् १६
तपो ह्यधिष्ठितं देवैस्तपोघ्नमसुरैस्तमः
एतद्देवासुरैर्गुप्तं तदाहुर्ज्ञानलक्षणम् १७
सत्त्वं रजस्तमश्चेति देवासुरगुणान्विदुः
सत्त्वं देवगुणं विद्यादितरावासुरौ गुणौ १८
ब्रह्म तत्परमं वेद्यममृतं ज्योतिरक्षरम्
ये विदुर्भावितात्मानस्ते यान्ति परमां गतिम् १९
हेतुमच्छक्यमाख्यातुमेतावज्ज्ञानचक्षुषा
प्रत्याहारेण वा शक्यमव्यक्तं ब्रह्म वेदितुम् २०
इति श्रीमहाभारते शान्तिपर्वणि नवाधिकद्विशततमोऽध्यायः २०९

## दशाधिकद्विशततमोऽध्यायः

गुरुरुवाच
न स वेद परं धर्मं यो न वेद चतुष्टयम्
व्यक्ताव्यक्ते च यत्तत्त्वं संप्राप्तं परमर्षिणा १
व्यक्तं मृत्युमुखं विद्यादव्यक्तममृतं पदम्
प्रवृत्तिलक्षणं धर्ममृषिनारायणोऽब्रवीत् २
अत्रैवावस्थितं सर्वं त्रैलोक्यं सचराचरम्
निवृत्तिलक्षणं धर्ममव्यक्तं ब्रह्म शाश्वतम् ३
प्रवृत्तिलक्षणं धर्मं प्रजापतिरथाब्रवीत्
प्रवृत्तिः पुनरावृत्तिर्निवृत्तिः परमा गतिः ४
तां गतिं परमामेति निवृत्तिपरमो मुनिः
ज्ञानतत्त्वपरो नित्यं शुभाशुभनिदर्शकः ५
तदेवमेतौ विज्ञेयावव्यक्तपुरुषावुभौ
अव्यक्तपुरुषाभ्यां तु यत्स्यादन्यन्महत्तरम् ६
तं विशेषमवेक्षेत विशेषेण विचक्षणः
अनाद्यन्तावुभावेतावलिङ्गौ चाप्युभावपि ७

उभौ नित्यौ सूक्ष्मतरौ महद्भ्यश्च महत्तरौ
सामान्यमेतदुभयोरेवं ह्यन्यद्विशेषणम् ८
प्रकृत्या सर्गधर्मिण्या तथा त्रिविधसत्त्वया
विपरीतमतो विद्यात्क्षेत्रज्ञस्य च लक्षणम् ९
प्रकृतेश्च विकाराणां द्रष्टारमगुणान्वितम्
अग्राह्यौ पुरुषावेतावलिङ्गत्वादसंहितौ १०
संयोगलक्षणोत्पत्तिः कर्मजा गृह्यते यया
करणैः कर्मनिर्वृत्तैः कर्ता यद्यद्विचेष्टते
कीर्त्यते शब्दसंज्ञाभिः कोऽहमेषोऽप्यसाविति ११
उष्णीषवान्यथा वस्त्रैस्त्रिभिर्भवति संवृतः
संवृतोऽय तथा देही सत्त्वराजसतामसैः १२
तस्माच्चतुष्टयं वेद्यमेतैर्हेतुभिराचितम्
यथासंज्ञो ह्ययं सम्यगन्तकाले न मुह्यति १३
श्रियं दिव्यामभिप्रेप्सुर्ब्रह्मा वाङ्मनसा शुचिः
शारीरैर्नियमैरुग्रैश्चरेन्निष्कल्मषं तपः १४
त्रैलोक्यं तपसा व्याप्तमन्तर्भूतेन भास्वता
सूर्यश्च चन्द्रमाश्चैव भासतस्तपसा दिवि १५
प्रतापस्तपसो ज्ञानं लोके संशब्दितं तपः
रजस्तमोघ्नं यत्कर्म तपसस्तत्स्वलक्षणम् १६
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते
वाङ्मनोनियमः साम्यं मानसं तप उच्यते १७
विधिज्ञेभ्यो द्विजातिभ्यो ग्राह्यमन्नं विशिष्यते
आहारनियमेनास्य पाप्मा नश्यति राजसः १८
वैमनस्यं च विषये यान्त्यस्य करणानि च
तस्मात्तन्मात्रमादद्याद्यावदत्र प्रयोजनम् १९
अन्तकाले वयोत्कर्षाच्छनैः कुर्यादनातुरः
एवं युक्तेन मनसा ज्ञानं यदुपपद्यते २०
रजसा चाप्ययं देही देहवाञ्शब्दवच्चरेत्
कार्यैरव्याहतमतिर्वैराग्यात्प्रकृतौ स्थितः
आ देहादप्रमादाच्च देहान्ताद्विप्रमुच्यते २१

हेतुयुक्तः सदोत्सर्गो भूतानां प्रलयस्तथा
परप्रत्ययसर्गे तु नियतं नातिवर्तते २२
भवान्तप्रभवप्रज्ञा आसते ये विपर्ययम्
धृत्या देहान्धारयन्तो बुद्धिसंक्षिप्तमानसाः
स्थानेभ्यो ध्वंसमानाश्च सूक्ष्मत्वात्तानुपासते २३
यथागमं च तत्सर्वं बुद्ध्या तेनैव बुद्ध्यते
देहान्तं कश्चिदन्वास्ते भावितात्मा निराश्रयः
युक्तो धारणया कश्चित्सत्तां केचिदुपासते २४
अभ्यस्यन्ति परं देवं विद्युत्संशब्दिताक्षरम्
अन्तकाले ह्युपासन्नास्तपसा दग्धकिल्बिषाः २५
सर्व एते महात्मानो गच्छन्ति परमां गतिम्
सूक्ष्मं विशेषणं तेषामवेक्षेच्छास्त्रचक्षुषा २६
देहं तु परमं विद्याद्विमुक्तमपरिग्रहम्
अन्तरिक्षादन्यतरं धारणासक्तमानसम् २७
मर्त्यलोकाद्विमुच्यन्ते विद्यासंयुक्तमानसाः
ब्रह्मभूता विरजसस्ततो यान्ति परां गतिम् २८
कषायवर्जितं ज्ञानं येषामुत्पद्यतेऽचलम्
ते यान्ति परमाल्लोँकान्विशुध्यन्तो यथाबलम् २९
भगवन्तमजं दिव्यं विष्णुमव्यक्तसंज्ञितम्
भावेन यान्ति शुद्धा ये ज्ञानतृप्ता निराशिषः ३०
ज्ञात्वात्मस्थं हरिं चैव निवर्तन्ते न तेऽव्ययाः
प्राप्य तत्परमं स्थानं मोदन्तेऽक्षरमव्ययम् ३१
एतावदेतद्विज्ञानमेतदस्ति च नास्ति च
तृष्णाबद्धं जगत्सर्वं चक्रवत्परिवर्तते ३२
बिसतन्तुर्यथैवायमन्तस्थः सर्वतो बिसे
तृष्णातन्तुरनाद्यन्तस्तथा देहगतः सदा ३३
सूच्या सूत्रं यथा वस्त्रे संसारयति वायकः
तद्वत्संसारसूत्रं हि तृष्णासूच्या निबध्यते ३४
विकारं प्रकृतिं चैव पुरुषं च सनातनम्
यो यथावद्विजानाति स वितृष्णो विमुच्यते ३५

प्रकाशं भगवानेतदृषिर्नारायणोऽमृतम्
भूतानामनुकम्पार्थं जगाद जगतो हितम् ३६
इति श्रीमहाभारते शान्तिपर्वणि दशाधिकद्विशततमोऽध्यायः २१०

## एकादशाधिकद्विशततमोऽध्यायः

युधिष्ठिर उवाच
केन वृत्तेन वृत्तज्ञो जनको मिथिलाधिपः
जगाम मोक्षं धर्मज्ञो भोगानुत्सृज्य मानुषान् १
भीष्म उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
येन वृत्तेन वृत्तज्ञः स जगाम महत्सुखम् २
जनको जनदेवस्तु मिथिलायां जनाधिपः
और्ध्वदेहिकधर्माणामासीद्युक्तो विचिन्तने ३
तस्य स्म शतमाचार्या वसन्ति सततं गृहे
दर्शयन्तः पृथग्धर्मान्नानापाषण्डवादिनः ४
स तेषां प्रेत्यभावे च प्रेत्यजातौ विनिश्चये
आगमस्थः स भूयिष्ठमात्मतत्त्वे न तुष्यति ५
तत्र पञ्चशिखो नाम कापिलेयो महामुनिः
परिधावन्महीं कृत्स्नां जगाम मिथिलामपि ६
सर्वसंन्यासधर्माणां तत्त्वज्ञानविनिश्चये
सुपर्यवसितार्थश्च निर्द्वंद्वो नष्टसंशयः ७
ऋषीणामाहुरेकं यं कामादवसितं नृषु
शाश्वतं सुखमत्यन्तमन्विच्छन्स सुदुर्लभम् ८
यमाहुः कपिलं सांख्याः परमर्षिं प्रजापतिम्
स मन्ये तेन रूपेण विस्मापयति हि स्वयम् ९
आसुरेः प्रथमं शिष्यं यमाहुश्चिरजीविनम्
पञ्चस्रोतसि यः सत्रमास्ते वर्षसहस्रिकम् १०
तं समासीनमागम्य मण्डलं कापिलं महत्
पुरुषावस्थमव्यक्तं परमार्थं निबोधयत् ११
इष्टिसत्रेण संसिद्धो भूयश्च तपसा मुनिः

क्षेत्रक्षेत्रज्ञयोर्व्यक्तिं बुबुधे देवदर्शनः १२
यत्तदेकाक्षरं ब्रह्म नानारूपं प्रदृश्यते
आसुरिर्मण्डले तस्मिन्प्रतिपेदे तदव्ययम् १३
तस्य पञ्चशिखः शिष्यो मानुष्या पयसा भृतः
ब्राह्मणी कपिला नाम काचिदासीत्कुटुम्बिनी १४
तस्याः पुत्रत्वमागम्य स्त्रियाः स पिबति स्तनौ
ततः स कापिलेयत्वं लेभे बुद्धिं च नैष्ठिकीम् १५
एतन्मे भगवानाह कापिलेयाय संभवम्
तस्य तत्कापिलेयत्वं सर्ववित्त्वमनुत्तमम् १६
सामान्यं कपिलो ज्ञात्वा धर्मज्ञानामनुत्तमम्
उपेत्य शतमाचार्यान्मोहयामास हेतुभिः १७
जनकस्त्वभिसंरक्तः कापिलेयानुदर्शनात्
उत्सृज्य शतमाचार्यान्पृष्ठतोऽनुजगाम तम् १८
तस्मै परमकल्याय प्रणताय च धर्मतः
अब्रवीत्परमं मोक्षं यत्तत्सांख्यं विधीयते १९
जातिनिर्वेदमुक्त्वा हि कर्मनिर्वेदमब्रवीत्
कर्मनिर्वेदमुक्त्वा च सर्वनिर्वेदमब्रवीत् २०
यदर्थं कर्मसंसर्गः कर्मणां च फलोदयः
तदनाश्वासिकं मोघं विनाशि चलमध्रुवम् २१
दृश्यमाने विनाशे च प्रत्यक्षे लोकसाक्षिके
आगमात्परमस्तीति ब्रुवन्नपि पराजितः २२
अनात्मा ह्यात्मनो मृत्युः क्लेशो मृत्युर्जरामयः
आत्मानं मन्यते मोहात्तदसम्यक्परं मतम् २३
अथ चेदेवमप्यस्ति यल्लोके नोपपद्यते
अजरोऽयममृत्युश्च राजासौ मन्यते तथा २४
अस्ति नास्तीति चाप्येतत्तस्मिन्नसति लक्षणे
किमधिष्ठाय तद्ब्रूयाल्लोकयात्राविनिश्चयम् २५
प्रत्यक्षं ह्येतयोर्मूलं कृतान्तैतिह्ययोरपि
प्रत्यक्षो ह्यागमोऽभिन्नः कृतान्तो वा न किंचन २६
यत्र तत्रानुमानेऽस्ति कृतं भावयतेऽपि वा

अन्यो जीवः शरीरस्य नास्तिकानां मते स्मृतः २७
रेतो वटकणीकायां घृतपाकाधिवासनम्
जातिस्मृतिरयस्कान्तः सूर्यकान्तोऽम्बुभक्षणम् २८
प्रेत्य भूतात्ययश्चैव देवताभ्युपयाचनम्
मृते कर्मनिवृत्तिश्च प्रमाणमिति निश्चयः २९
न त्वेते हेतवः सन्ति ये केचिन्मूर्तिसंस्थिताः
अमर्त्यस्य हि मर्त्येन सामान्यं नोपपद्यते ३०
अविद्याकर्मचेष्टानां केचिदाहुः पुनर्भवम्
कारणं लोभमोहौ तु दोषाणां च निषेवणम् ३१
अविद्यां क्षेत्रमाहुर्हि कर्म बीजं तथा कृतम्
तृष्णासंजननं स्नेह एष तेषां पुनर्भवः ३२
तस्मिन्व्यूढे च दग्धे च चित्ते मरणधर्मिणि
अन्योऽन्याज्जायते देहस्तमाहुः सत्त्वसंक्षयम् ३३
यदा स रूपतश्चान्यो जातितः श्रुतितोऽथतः
कथमस्मिन्स इत्येव संबन्धः स्यादसंहितः ३४
एवं सति च का प्रीतिर्दानविद्यातपोबलैः
यदन्याचरितं कर्म सर्वमन्यः प्रपद्यते ३५
यदा ह्ययमिहैवान्यैः प्राकृतैर्दुःखितो भवेत्
सुखितैर्दुःखितैर्वापि दृश्योऽप्यस्य विनिर्णयः ३६
तथा हि मुसलैर्हन्युः शरीरं तत्पुनर्भवेत्
पृथग्ज्ञानं यदन्यच्च येनैतन्नोपलभ्यते ३७
ऋतुः संवत्सरस्तिथ्यः शीतोष्णे च प्रियाप्रिये
यथातीतानि पश्यन्ति तादृशः सत्त्वसंक्षयः ३८
जरया हि परीतस्य मृत्युना वा विनाशिना
दुर्बलं दुर्बलं पूर्वं गृहस्येव विनश्यति ३९
इन्द्रियाणि मनो वायुः शोणितं मांसमस्थि च
आनुपूर्व्या विनश्यन्ति स्वं धातुमुपयान्ति च ४०
लोकयात्राविधानं च दानधर्मफलागमः
यदर्थं वेदशब्दाश्च व्यवहाराश्च लौकिकाः ४१
इति सम्यङ्मनस्येते बहवः सन्ति हेतवः

एतदस्तीदमस्तीति न किंचित्प्रतिपद्यते ४२
तेषां विमृशतामेवं तत्तत्समभिधावताम्
क्वचिन्निविशते बुद्धिस्तत्र जीर्यति वृक्षवत् ४३
एवमर्थैरनर्थैश्च दुःखिताः सर्वजन्तवः
आगमैरपकृष्यन्ते हस्तिपैर्हस्तिनो यथा ४४
अर्थांस्तथात्यन्तसुखावहांश्च लिप्सन्त एते बहवो विशुल्काः
महत्तरं दुःखमभिप्रपन्ना हित्वामिषं मृत्युवशं प्रयान्ति ४५
विनाशिनो ह्यध्रुवजीवितस्य किं बन्धुभिर्मित्रपरिग्रहैश्च
विहाय यो गच्छति सर्वमेव क्षणेन गत्वा न निवर्तते च ४६
भूव्योमतोयानलवायवो हि सदा शरीरं परिपालयन्ति
इतीदमालक्ष्य कुतो रतिर्भवेद्विनाशिनो ह्यस्य न शर्म विद्यते ४७
इदमनुपधि वाक्यमच्छलं परमनिरामयमात्मसाक्षिकम्
नरपतिरभिवीक्ष्य विस्मितः पुनरनुयोक्तुमिदं प्रचक्रमे ४८
इति श्रीमहाभारते शान्तिपर्वणि एकादशाधिकद्विशततमोऽध्यायः २११

## द्वादशाधिकद्विशततमोऽध्यायः

भीष्म उवाच
जनको जनदेवस्तु ज्ञापितः परमर्षिणा
पुनरेवानुपप्रच्छ साम्पराये भवाभवौ १
भगवन्यदिदं प्रेत्य संज्ञा भवति कस्यचित्
एवं सति किमज्ञानं ज्ञानं वा किं करिष्यति २
सर्वमुच्छेदनिष्ठं स्यात्पश्य चैतद्द्विजोत्तम
अप्रमत्तः प्रमत्तो वा किं विशेषं करिष्यति ३
असंसर्गो हि भूतेषु संसर्गो वा विनाशिषु
कस्मै क्रियेत कल्पेन निश्चयः कोऽत्र तत्त्वतः ४
तमसा हि प्रतिच्छन्नं विभ्रान्तमिव चातुरम्
पुनः प्रशमयन्वाक्यैः कविः पञ्चशिखोऽब्रवीत् ५
उच्छेदनिष्ठा नेहास्ति भावनिष्ठा न विद्यते
अयं ह्यपि समाहारः शरीरेन्द्रियचेतसाम्
वर्तते पृथगन्योन्यमप्यपाश्रित्य कर्मसु ६

धातवः पञ्चशाखोऽय खं वायुर्ज्योतिरम्बु भूः
ते स्वभावेन तिष्ठन्ति वियुज्यन्ते स्वभावतः ७
आकाशं वायुरूष्मा च स्नेहो यच्चापि पार्थिवम्
एष पञ्चसमाहारः शरीरमिति नैकधा
ज्ञानमूष्मा च वायुश्च त्रिविधः कर्मसंग्रहः ८
इन्द्रियाणीन्द्रियार्थाश्च स्वभावश्चेतना मनः
प्राणापानौ विकारश्च धातवश्चात्र निःसृताः ९
श्रवणं स्पर्शनं जिह्वा दृष्टिर्नासा तथैव च
इन्द्रियाणीति पञ्चैते चित्तपूर्वंगमा गुणाः १०
तत्र विज्ञानसंयुक्ता त्रिविधा वेदना ध्रुवा
सुखदुःखेति यामाहुरदुःखेत्यसुखेति च ११
शब्दः स्पर्शश्च रूपं च रसो गन्धश्च मूर्त्यथ
एते ह्यामरणात्पञ्च षड्गुणा ज्ञानसिद्धये १२
तेषु कर्मनिसर्गश्च सर्वतत्त्वार्थनिश्चयः
तमाहुः परमं शुक्रं बुद्धिरित्यव्ययं महत् १३
इमं गुणसमाहारमात्मभावेन पश्यतः
असम्यग्दर्शनैर्दुःखमनन्तं नोपशाम्यति १४
अनात्मेति च यद्दृष्टं तेनाहं न ममेत्यपि
वर्तते किमधिष्ठाना प्रसक्ता दुःखसंततिः १५
तत्र सम्यङ्मनो नाम त्यागशास्त्रमनुत्तमम्
शृणु यत्तव मोक्षाय भाष्यमाणं भविष्यति १६
त्याग एव हि सर्वेषामुक्तानामपि कर्मणाम्
नित्यं मिथ्याविनीतानां क्लेशो दुःखावहो मतः १७
द्रव्यत्यागे तु कर्माणि भोगत्यागे व्रतान्यपि
सुखत्यागे तपोयोगः सर्वत्यागे समापना १८
तस्य मार्गोऽयमद्वैधः सर्वत्यागस्य दर्शितः
विप्रहाणाय दुःखस्य दुर्गतिर्ह्यन्यथा भवेत् १९
पञ्च ज्ञानेन्द्रियाण्युक्त्वा मनःषष्ठानि चेतसि
मनःषष्ठानि वक्ष्यामि पञ्च कर्मेन्द्रियाणि तु २०
हस्तौ कर्मेन्द्रियं ज्ञेयमथ पादौ गतीन्द्रियम्

प्रजनानन्दयोः शेफो विसर्गे पायुरिन्द्रियम् २१
वाक्तु शब्दविशेषार्थं गतिं पञ्चान्वितां विदुः
एवमेकादशैतानि बुद्ध्या त्ववसृजेन्मनः २२
कर्णौ शब्दश्च चित्तं च त्रयः श्रवणसंग्रहे
तथा स्पर्शे तथा रूपे तथैव रसगन्धयोः २३
एवं पञ्चत्रिका ह्येते गुणास्तदुपलब्धये
येन यस्त्रिविधो भावः पर्यायात्समुपस्थितः २४
सात्त्विको राजसश्चैव तामसश्चैव ते त्रयः
त्रिविधा वेदना येषु प्रसूता सर्वसाधना २५
प्रहर्षः प्रीतिरानन्दः सुखं संशान्तचित्तता
अकुतश्चित्कुतश्चिद्वा चित्ततः सात्त्विको गुणः २६
अतुष्टिः परितापश्च शोको लोभस्तथाक्षमा
लिङ्गानि रजसस्तानि दृश्यन्ते हेत्वहेतुतः २७
अविवेकस्तथा मोहः प्रमादः स्वप्नतन्द्रिता
कथंचिदपि वर्तन्ते विविधास्तामसा गुणाः २८
तत्र यत्प्रीतिसंयुक्तं काये मनसि वा भवेत्
वर्तते सात्त्विको भाव इत्यपेक्षेत तत्तथा २९
यत्तु संतापसंयुक्तमप्रीतिकरमात्मनः
प्रवृत्तं रज इत्येव ततस्तदभिचिन्तयेत् ३०
अथ यन्मोहसंयुक्तं काये मनसि वा भवेत्
अप्रतर्क्यमविज्ञेयं तमस्तदुपधारयेत् ३१
तद्धि श्रोत्राश्रयं भूतं शब्दः श्रोत्रं समाश्रितः
नोभयं शब्दविज्ञाने विज्ञानस्येतरस्य वा ३२
एवं त्वक्चक्षुषी जिह्वा नासिका चैव पञ्चमी
स्पर्शे रूपे रसे गन्धे तानि चेतो मनश्च तत् ३३
स्वकर्मयुगपद्भावो दशस्वेतेषु तिष्ठति
चित्तमेकादशं विद्धि बुद्धिर्द्वादशमी भवेत् ३४
तेषामयुगपद्भावे उच्छेदो नास्ति तामसः
आस्थितो युगपद्भावे व्यवहारः स लौकिकः ३५
इन्द्रियाण्यवसृज्यापि दृष्ट्वा पूर्वं श्रुतागमम्

चिन्तयन्नानुपर्यैति त्रिभिरेवान्वितो गुणैः ३६
यत्तमोपहतं चित्तमाशु संचारमध्रुवम्
करोत्युपरमं काले तदाहुस्तामसं सुखम् ३७
यद्यदागमसंयुक्तं न कृत्स्नमुपशाम्यति
अथ तत्राप्युपादत्ते तमो व्यक्तमिवानृतम् ३८
एवमेष प्रसंख्यातः स्वकर्मप्रत्ययी गुणः
कथंचिद्वर्तते सम्यक्केषांचिद्वा न वर्तते ३९
एवमाहुः समाहारं क्षेत्रमध्यात्मचिन्तकाः
स्थितो मनसि यो भावः स वै क्षेत्रज्ञ उच्यते ४०
एवं सति क उच्छेदः शाश्वतो वा कथं भवेत्
स्वभावाद्वर्तमानेषु सर्वभूतेषु हेतुतः ४१
यथार्णवगता नद्यो व्यक्तीर्जहति नाम च
न च स्वतां नियच्छन्ति तादृशः सत्त्वसंक्षयः ४२
एवं सति कुतः संज्ञा प्रेत्यभावे पुनर्भवेत्
प्रतिसंमिश्रिते जीवे गृह्यमाणे च मध्यतः ४३
इमां तु यो वेद विमोक्षबुद्धिमात्मानमन्विच्छति चाप्रमत्तः
न लिप्यते कर्मफलैरनिष्टैः पत्रं बिसस्येव जलेन सिक्तम् ४४
दृढैश्च पाशैर्बहुभिर्विमुक्तः प्रजानिमित्तैरपि दैवतैश्च
यदा ह्यसौ सुखदुःखे जहाति मुक्तस्तदाग्र्यां गतिमेत्यलिङ्गः
श्रुतिप्रमाणागममङ्गलैश्च शेते जरामृत्युभयादतीतः ४५
क्षीणे च पुण्ये विगते च पापे ततो निमित्ते च फले विनष्टे
अलेपमाकाशमलिङ्गमेवमास्थाय पश्यन्ति महद्ध्यसक्ताः ४६
यथोर्णनाभिः परिवर्तमानस्तन्तुक्षये तिष्ठति पात्यमानः
तथा विमुक्तः प्रजहाति दुःखं विध्वंसते लोष्ट इवाद्रिमर्च्छन् ४७
यथा रुरुः शृङ्गमथो पुराणं हित्वा त्वचं वाप्युरगो यथावत्
विहाय गच्छत्यनवेक्षमाणस्तथा विमुक्तो विजहाति दुःखम् ४८
द्रुमं यथा वाप्युदके पतन्तमुत्सृज्य पक्षी प्रपतत्यसक्तः
तथा ह्यसौ सुखदुःखे विहाय मुक्तः परार्द्ध्यां गतिमेत्यलिङ्गः ४९
अपि च भवति मैथिलेन गीतं नगरमुपाहितमग्निनाभिवीक्ष्य
न खलु मम हि तु षोऽपि दह्यतेऽत्र स्वयमिदमाह किल स्म भूमिपालः ५०

इदममृतपदं विदेहराजः स्वयमिह पञ्चशिखेन भाष्यमाणः
निखिलमभिसमीक्ष्य निश्चितार्थं परमसुखी विजहार वीतशोकः ५१
इमं हि यः पठति विमोक्षनिश्चयं न हीयते सततमवेक्षते तथा
उपद्रवान्नानुभवत्यदुःखितः प्रमुच्यते कपिलमिवैत्य मैथिलः ५२
इति श्रीमहाभारते शान्तिपर्वणि द्वादशाधिकद्विशततमोऽध्यायः २१२

## त्रयोदशाधिकद्विशततमोऽध्यायः

युधिष्ठिर उवाच
किं कुर्वन्सुखमाप्नोति किं कुर्वन्दुःखमाप्नुते
किं कुर्वन्निर्भयो लोके सिद्धश्चरति भारत १
भीष्म उवाच
दममेव प्रशंसन्ति वृद्धाः श्रुतिसमाधयः
सर्वेषामेव वर्णानां ब्राह्मणस्य विशेषतः २
नादान्तस्य क्रियासिद्धिर्यथावदुपलभ्यते
क्रिया तपश्च वेदाश्च दमे सर्वं प्रतिष्ठितम् ३
दमस्तेजो वर्धयति पवित्रं दम उच्यते
विपाप्मा निर्भयो दान्तः पुरुषो विन्दते महत् ४
सुखं दान्तः प्रस्वपिति सुखं च प्रतिबुध्यते
सुखं लोके विपर्येति मनश्चास्य प्रसीदति ५
तेजो दमेन ध्रियते न तत्तीक्ष्णोऽधिगच्छति
अमित्रांश्च बहून्नित्यं पृथगात्मनि पश्यति ६
क्रव्याद्भ्य इव भूतानामदान्तेभ्यः सदा भयम्
तेषां विप्रतिषेधार्थं राजा सृष्टः स्वयंभुवा ७
आश्रमेषु च सर्वेषु दम एव विशिष्यते
यच्च तेषु फलं धर्मे भूयो दान्ते तदुच्यते ८
तेषां लिङ्गानि वक्ष्यामि येषां समुदयो दमः
अकार्पण्यमसंरम्भः संतोषः श्रद्दधानता ९
अक्रोध आर्जवं नित्यं नातिवादो न मानिता
गुरुपूजानसूया च दया भूतेष्वपैशुनम् १०
जनवादमृषावादस्तुतिनिन्दाविवर्जनम्

साधुकामश्चास्पृहयन्नायाति प्रत्ययं नृषु ११
अवैरकृत्सूपचारः समो निन्दाप्रशंसयोः
सुवृत्तः शीलसंपन्नः प्रसन्नात्मात्मवान्बुधः
प्राप्य लोके च सत्कारं स्वर्गं वै प्रेत्य गच्छति १२
सर्वभूतहिते युक्तो न स्मयाद्द्वेष्टि वै जनम्
महाह्रद इवाक्षोभ्य प्रज्ञातृप्तः प्रसीदति १३
अभयं सर्व भूतेभ्यः सर्वेषामभयं यतः
नमस्यः सर्वभूतानां दान्तो भवति ज्ञानवान् १४
न हृष्यति महत्यर्थे व्यसने च न शोचति
स वै परिमितप्रज्ञः स दान्तो द्विज उच्यते १५
कर्मभिः श्रुतसंपन्नः सद्भिराचरितैः शुभैः
सदैव दमसंयुक्तस्तस्य भुङ्क्ते महत्फलम् १६
अनसूया क्षमा शान्तिः संतोषः प्रियवादिता
सत्यं दानमनायासो नैष मार्गो दुरात्मनाम् १७
कामक्रोधौ वशे कृत्वा ब्रह्मचारी जितेन्द्रियः
विक्रम्य घोरे तपसि ब्राह्मणः संशितव्रतः
कालाकाङ्क्षी चरेल्लोकान्निरपाय इवात्मवान् १८
इति श्रीमहाभारते शान्तिपर्वणि त्रयोदशाधिकद्विशततमोऽध्यायः २१३

## चतुर्दशाधिकद्विशततमोऽध्यायः

युधिष्ठिर उवाच
द्विजातयो व्रतोपेता यदिदं भुञ्जते हविः
अन्नं ब्राह्मणकामाय कथमेतत्पितामह १
भीष्म उवाच
अवेदोक्तव्रतोपेता भुञ्जानाः कार्यकारिणः
वेदोक्तेषु च भुञ्जाना व्रतलुप्ता युधिष्ठिर २
युधिष्ठिर उवाच
यदिदं तप इत्याहुरुपवासं पृथग्जनाः
एतत्तपो महाराज उताहो किं तपो भवेत् ३
भीष्म उवाच

मासपक्षोपवासेन मन्यन्ते यत्तपो जनाः
आत्मतन्त्रोपघातः स न तपस्तत्सतां मतम्
त्यागश्च सन्नतिश्चैव शिष्यते तप उत्तमम् ४
सदोपवासी च भवेद्ब्रह्मचारी सदैव च
मुनिश्च स्यात्सदा विप्रो दैवतं च सदा भजेत् ५
कुटुम्बिको धर्मकामः सदास्वप्नश्च भारत
अमांसाशी सदा च स्यात्पवित्रं च सदा जपेत् ६
अमृताशी सदा च स्यान्न च स्याद्विषभोजनः
विघसाशी सदा च स्यात्सदा चैवातिथिप्रियः ७
युधिष्ठिर उवाच
कथं सदोपवासी स्याद्ब्रह्मचारी कथं भवेत्
विघसाशी कथं च स्यात्सदा चैवातिथिप्रियः ८
भीष्म उवाच
अन्तरा प्रातराशं च सायमाशं तथैव च
सदोपवासी च भवेद्यो न भुङ्क्ते कथंचन ९
भार्यां गच्छन्ब्रह्मचारी ऋतौ भवति ब्राह्मणः
ऋतवादी सदा च स्याज्ज्ञाननित्यश्च यो नरः १०
अभक्षयन्वृथामांसममांसाशी भवत्युत
दाननित्यः पवित्रश्च अस्वप्नश्च दिवास्वपन् ११
भृत्यातिथिषु यो भुङ्क्ते भुक्तवत्सु सदा स ह
अमृतं सकलं भुङ्क्त इति विद्धि युधिष्ठिर १२
अभुक्तवत्सु नाश्नानः सततं यस्तु वै द्विजः
अभोजनेन तेनास्य जितः स्वर्गो भवत्युत १३
देवताभ्यः पितृभ्यश्च भृत्येभ्योऽतिथिभिः सह
अवशिष्टं तु योऽश्नाति तमाहुर्विघसाशिनम् १४
तेषां लोका ह्यपर्यन्ताः सदने ब्रह्मणा सह
उपस्थिताश्चाप्सरोभिः परियान्ति दिवौकसः १५
देवताभिश्च ये सार्धं पितृभिश्चोपभुञ्जते
रमन्ते पुत्रपौत्रैश्च तेषां गतिरनुत्तमा १६

इति श्रीमहाभारते शान्तिपर्वणि चतुर्दशाधिकद्विशततमोऽध्यायः २१४

## पञ्चदशाधिकद्विशततमोऽध्यायः

युधिष्ठिर उवाच
यदिदं कर्म लोकेऽस्मिञ्शुभं वा यदि वाशुभम्
पुरुषं योजयत्येव फलयोगेन भारत १
कर्ता स्वित्तस्य पुरुष उताहो नेति संशयः
एतदिच्छामि तत्त्वेन त्वत्तः श्रोतुं पितामह २
भीष्म उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
प्रह्लादस्य च संवादमिन्द्रस्य च युधिष्ठिर ३
असक्तं धूतपाप्मानं कुले जातं बहुश्रुतम्
अस्तम्भमनहंकारं सत्त्वस्थं समये रतम् ४
तुल्यनिन्दास्तुतिं दान्तं शून्यागारनिवेशनम्
चराचराणां भूतानां विदितप्रभवाप्ययम् ५
अक्रुध्यन्तमहृष्यन्तमप्रियेषु प्रियेषु च
काञ्चने वाथ लोष्टे वा उभयोः समदर्शनम् ६
आत्मनिःश्रेयसज्ञाने धीरं निश्चितनिश्चयम्
परावरज्ञं भूतानां सर्वज्ञं समदर्शनम् ७
शक्रः प्रह्लादमासीनमेकान्ते संयतेन्द्रियम्
बुभुत्समानस्तत्प्रज्ञामभिगम्येदमब्रवीत् ८
यैः कैश्चित्संमतो लोके गुणैः स्यात्पुरुषो नृषु
भवत्यनपगान्सर्वांस्तान्गुणाँल्लक्षयामहे ९
अथ ते लक्ष्यते बुद्धिः समा बालजनैरिह
आत्मानं मन्यमानः सञ्श्रेयः किमिह मन्यसे १०
बद्धः पाशैश्च्युतः स्थानाद्द्विषतां वशमागतः
श्रिया विहीनः प्रह्लाद शोचितव्ये न शोचसि ११
प्रज्ञालाभात्तु दैतेय उताहो धृतिमत्तया
प्रह्लाद स्वस्थरूपोऽसि पश्यन्व्यसनमात्मनः १२
इति संचोदितस्तेन धीरो निश्चितनिश्चयः
उवाच श्लक्ष्णया वाचा स्वां प्रज्ञामनुवर्णयन् १३
प्रवृत्तिं च निवृत्तिं च भूतानां यो न बुध्यते

तस्य स्तम्भो भवेद्बाल्यान्नास्ति स्तम्भोऽनुपश्यतः १४
स्वभावात्संप्रवर्तन्ते निवर्तन्ते तथैव च
सर्वे भावास्तथाभावाः पुरुषार्थो न विद्यते १५
पुरुषार्थस्य चाभावे नास्ति कश्चित्स्वकारकः
स्वयं न कुर्वतस्तस्य जातु मानो भवेदिह १६
यस्तु कर्तारमात्मानं मन्यते साध्वसाधुनोः
तस्य दोषवती प्रज्ञा स्वमूर्त्यज्ञेति मे मतिः १७
यदि स्यात्पुरुषः कर्ता शक्रात्मश्रेयसे ध्रुवम्
आरम्भास्तस्य सिध्येरन्न च जातु पराभवेत् १८
अनिष्टस्य हि निर्वृत्तिरनिवृत्तिः प्रियस्य च
लक्ष्यते यतमानानां पुरुषार्थस्ततः कुतः १९
अनिष्टस्याभिनिर्वृत्तिमिष्टसंवृत्तिमेव च
अप्रयत्नेन पश्यामः केषांचित्तत्स्वभावतः २०
प्रतिरूपधराः केचिद्दृश्यन्ते बुद्धिसत्तमाः
विरूपेभ्योऽल्पबुद्धिभ्यो लिप्समाना धनागमम् २१
स्वभावप्रेरिताः सर्वे निविशन्ते गुणा यदा
शुभाशुभास्तदा तत्र तस्य किं मानकारणम् २२
स्वभावादेव तत्सर्वमिति मे निश्चिता मतिः
आत्मप्रतिष्ठिता प्रज्ञा मम नास्ति ततोऽन्यथा २३
कर्मजं त्विह मन्येऽह फलयोगं शुभाशुभम्
कर्मणां विषयं कृत्स्नमहं वक्ष्यामि तच्छृणु २४
यथा वेदयते कश्चिदोदनं वायसो वदन्
एवं सर्वाणि कर्माणि स्वभावस्यैव लक्षणम् २५
विकारानेव यो वेद न वेद प्रकृतिं पराम्
तस्य स्तम्भो भवेद्बाल्यान्नास्ति स्तम्भोऽनुपश्यतः २६
स्वभावभाविनो भावान्सर्वानेवेह निश्चये
बुध्यमानस्य दर्पो वा मानो वा किं करिष्यति २७
वेद धर्मविधिं कृत्स्नं भूतानां चाप्यनित्यताम्
तस्माच्छक्र न शोचामि सर्वं ह्येवेदमन्तवत् २८
निर्ममो निरहंकारो निरीहो मुक्तबन्धनः

स्वस्थोऽव्यपेतः पश्यामि भूतानां प्रभवाप्ययौ २९
कृतप्रज्ञस्य दान्तस्य वितृष्णस्य निराशिषः
नायासो विद्यते शक्र पश्यतो लोकविद्यया ३०
प्रकृतौ च विकारे च न मे प्रीतिर्न च द्विषे
द्वेष्टारं न च पश्यामि यो ममाद्य ममायते ३१
नोर्ध्वं नावाङ्न तिर्यक्च न क्वचिच्छक्र कामये
न विज्ञाने न विज्ञेये नाज्ञाने शर्म विद्यते ३२
शक्र उवाच
येनैषा लभ्यते प्रज्ञा येन शान्तिरवाप्यते
प्रब्रूहि तमुपायं मे सम्यक्प्रह्लाद पृच्छते ३३
प्रह्लाद उवाच
आर्जवेनाप्रमादेन प्रसादेनात्मवत्तया
वृद्धशुश्रूषया शक्र पुरुषो लभते महत् ३४
स्वभावाल्लभते प्रज्ञां शान्तिमेति स्वभावतः
स्वभावादेव तत्सर्वं यत्किंचिदनुपश्यसि ३५
भीष्म उवाच
इत्युक्तो दैत्यपतिना शक्रो विस्मयमागमत्
प्रीतिमांश्च तदा राजंस्तद्वाक्यं प्रत्यपूजयत् ३६
स तदाभ्यर्च्य दैत्येन्द्रं त्रैलोक्यपतिरीश्वरः
असुरेन्द्रमुपामन्त्र्य जगाम स्वं निवेशनम् ३७
इति श्रीमहाभारते शान्तिपर्वणि पञ्चदशाधिकद्विशततमोऽध्यायः २१५

## द्विशततमोऽध्यायः

युधिष्ठिर उवाच
पितामह महाप्राज्ञ पुण्डरीकाक्षमच्युतम्
कर्तारमकृतं विष्णुं भूतानां प्रभवाप्ययम् १
नारायणं हृषीकेशं गोविन्दमपराजितम्
तत्त्वेन भरतश्रेष्ठ श्रोतुमिच्छामि केशवम् २
भीष्म उवाच
श्रुतोऽयमर्थो रामस्य जामदग्न्यस्य जल्पतः

नारदस्य च देवर्षेः कृष्णद्वैपायनस्य च ३
असितो देवलस्तात वाल्मीकिश्च महातपाः
मार्कण्डेयश्च गोविन्दे कथयत्यद्भुतं महत् ४
केशवो भरतश्रेष्ठ भगवानीश्वरः प्रभुः
पुरुषः सर्वमित्येव श्रूयते बहुधा विभुः ५
किं तु यानि विदुर्लोके ब्राह्मणाः शार्ङ्गधन्वनः
माहात्म्यानि महाबाहो शृणु तानि युधिष्ठिर ६
यानि चाहुर्मनुष्येन्द्र ये पुराणविदो जनाः
अशेषेण हि गोविन्दे कीर्तयिष्यामि तान्यहम् ७
महाभूतानि भूतात्मा महात्मा पुरुषोत्तमः
वायुर्ज्योतिस्तथा चापः खं गां चैवान्वकल्पयत् ८
स दृष्ट्वा पृथिवीं चैव सर्वभूतेश्वरः प्रभुः
अप्स्वेव शयनं चक्रे महात्मा पुरुषोत्तमः ९
सर्वतेजोमयस्तस्मिञ्शयानः शयने शुभे
सोऽग्रजं सर्वभूतानां संकर्षणमचिन्तयत् १०
आश्रयं सर्वभूतानां मनसेति विशुश्रुम
स धारयति भूतात्मा उभे भूतभविष्यती ११
ततस्तस्मिन्महाबाहो प्रादुर्भूते महात्मनि
भास्करप्रतिमं दिव्यं नाभ्यां पद्ममजायत १२
स तत्र भगवान्देवः पुष्करे भासयन्दिशः
ब्रह्मा समभवत्तात सर्वभूतपितामहः १३
तस्मिन्नपि महाबाहो प्रादुर्भूते महात्मनि
तमसः पूर्वजो जज्ञे मधुर्नाम महासुरः १४
तमुग्रमुग्रकर्माणमुग्रां बुद्धिं समास्थितम्
ब्रह्मणोपचितिं कुर्वञ्जघान पुरुषोत्तमः १५
तस्य तात वधात्सर्वे देवदानवमानवाः
मधुसूदनमित्याहुर्वृषभं सर्वसात्वताम् १६
ब्रह्मा तु ससृजे पुत्रान्मानसान्दक्षसप्तमान्
मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम् १७
मरीचिः कश्यपं तात पुत्रं चासृजदग्रजम्

मानसं जनयामास तैजसं ब्रह्मसत्तमम् १८
अङ्गुष्ठादसृजद्ब्रह्मा मरीचेरपि पूर्वजम्
सोऽभवद्भरतश्रेष्ठ दक्षो नाम प्रजापतिः १९
तस्य पूर्वमजायन्त दश तिस्रश्च भारत
प्रजापतेर्दुहितरस्तासां ज्येष्ठाभवद्दितिः २०
सर्वधर्मविशेषज्ञः पुण्यकीर्तिर्महायशाः
मारीचः कश्यपस्तात सर्वासामभवत्पतिः २१
उत्पाद्य तु महाभागस्तासामवरजा दश
ददौ धर्माय धर्मज्ञो दक्ष एव प्रजापतिः २२
धर्मस्य वसवः पुत्रा रुद्राश्चामिततेजसः
विश्वेदेवाश्च साध्याश्च मरुत्वन्तश्च भारत २३
अपरास्तु यवीयस्यस्ताभ्योऽन्या सप्तविंशतिः
सोमस्तासां महाभागः सर्वासामभवत्पतिः २४
इतरास्तु व्यजायन्त गन्धर्वांस्तुरगान्द्विजान्
गाश्च किंपुरुषान्मत्स्यानौद्भिदांश्च वनस्पतीन् २५
आदित्यानदितिर्जज्ञे देवश्रेष्ठान्महाबलान्
तेषां विष्णुर्वामनोऽभूद्गोविन्दश्चाभवत्प्रभुः २६
तस्य विक्रमणादेव देवानां श्रीर्व्यवर्धत
दानवाश्च पराभूता दैतेयी चासुरी प्रजा २७
विप्रचित्तिप्रधानांश्च दानवानसृजद्दनुः
दितिस्तु सर्वानसुरान्महासत्त्वान्व्यजायत २८
अहोरात्रं च कालं च यथर्तु मधुसूदनः
पूर्वाह्णं चापराह्णं च सर्वमेवान्वकल्पयत् २९
बुद्ध्यापः सोऽसृजन्मेघांस्तथा स्थावरजङ्गमान्
पृथिवीं सोऽसृजद्विश्वां सहितां भूरितेजसा ३०
ततः कृष्णो महाबाहुः पुनरेव युधिष्ठिर
ब्राह्मणानां शतं श्रेष्ठं मुखादसृजत प्रभुः ३१
बाहुभ्यां क्षत्रियशतं वैश्यानामूरुतः शतम्
पद्भ्यां शूद्रशतं चैव केशवो भरतर्षभ ३२
स एवं चतुरो वर्णान्समुत्पाद्य महायशाः

अध्यक्षं सर्वभूतानां धातारमकरोत्प्रभुः ३३
यावद्यावदभूच्छ्रद्धा देहं धारयितुं नृणाम्
तावत्तावदजीवंस्ते नासीद्यमकृतं भयम् ३४
न चैषां मैथुनो धर्मो बभूव भरतर्षभ
संकल्पादेव चैतेषामपत्यमुदपद्यत ३५
तत्र त्रेतायुगे काले संकल्पाज्जायते प्रजा
न ह्यभून्मैथुनो धर्मस्तेषामपि जनाधिप ३६
द्वापरे मैथुनो धर्मः प्रजानामभवन्नृप
तथा कलियुगे राजन्द्वंद्वमापेदिरे जनाः ३७
एष भूतपतिस्तात स्वध्यक्षश्च प्रकीर्तितः
निरध्यक्षांस्तु कौन्तेय कीर्तयिष्यामि तानपि ३८
दक्षिणापथजन्मानः सर्वे तलवरान्ध्रकाः
उत्साः पुलिन्दाः शबराश्चूचुपा मण्डपैः सह ३९
उत्तरापथजन्मानः कीर्तयिष्यामि तानपि
यौनकाम्बोजगान्धाराः किराता बर्बरैः सह ४०
एते पापकृतस्तात चरन्ति पृथिवीमिमाम्
श्वकाकबलगृध्राणां सधर्माणो नराधिप ४१
नैते कृतयुगे तात चरन्ति पृथिवीमिमाम्
त्रेताप्रभृति वर्तन्ते ते जना भरतर्षभ ४२
ततस्तस्मिन्महाघोरे संध्याकाले युगान्तिके
राजानः समसज्जन्त समासाद्येतरेतरम् ४३
एवमेष कुरुश्रेष्ठ प्रादुर्भावो महात्मनः
देवदेवर्षिराचष्ट नारदः सर्वलोकदृक् ४४
नारदोऽप्यथ कृष्णस्य परं मेने नराधिप
शाश्वतत्वं महाबाहो यथावद्भरतर्षभ ४५
एवमेष महाबाहुः केशवः सत्यविक्रमः
अचिन्त्यः पुण्डरीकाक्षो नैष केवलमानुषः ४६
इति श्रीमहाभारते शान्तिपर्वणि द्विशततमोऽध्यायः २००

## एकाधिकद्विशततमोऽध्यायः

युधिष्ठिर उवाच
के पूर्वमासन्पतयः प्रजानां भरतर्षभ
के चर्षयो महाभागा दिक्षु प्रत्येकशः स्मृताः १
भीष्म उवाच
श्रूयतां भरतश्रेष्ठ यन्मा त्वं परिपृच्छसि
प्रजानां पतयो ये स्म दिक्षु प्रत्येकशः स्मृताः २
एकः स्वयंभूर्भगवानाद्यो ब्रह्मा सनातनः
ब्रह्मणः सप्त पुत्रा वै महात्मानः स्वयंभुवः ३
मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः
वसिष्ठश्च महाभागः सदृशा वै स्वयंभुवा ४
सप्त ब्रह्माण इत्येष पुराणे निश्चयो गतः
अत ऊर्ध्वं प्रवक्ष्यामि सर्वानेव प्रजापतीन् ५
अत्रिवंशसमुत्पन्नो ब्रह्मयोनिः सनातनः
प्राचीनबर्हिर्भगवांस्तस्मात्प्राचेतसो दश ६
दशानां तनयस्त्वेको दक्षो नाम प्रजापतिः
तस्य द्वे नामनी लोके दक्षः क इति चोच्यते ७
मरीचेः कश्यपः पुत्रस्तस्य द्वे नामनी श्रुते
अरिष्टनेमिरित्येकं कश्यपेत्यपरं विदुः ८
अङ्गश्चैवौरसः श्रीमान्राजा भौमश्च वीर्यवान्
सहस्रं यश्च दिव्यानां युगानां पर्युपासिता ९
अर्यमा चैव भगवान्ये चान्ये तनया विभो
एते प्रदेशाः कथिता भुवनानां प्रभावनाः १०
शशबिन्दोश्च भार्याणां सहस्राणि दशाच्युत
एकैकस्यां सहस्रं तु तनयानामभूत्तदा ११
एवं शतसहस्राणां शतं तस्य महात्मनः
पुत्राणां न च ते कंचिदिच्छन्त्यन्यं प्रजापतिम् १२
प्रजामाचक्षते विप्राः पौराणीं शाशबिन्दवीम्
स वृष्णिवंशप्रभवो महान्वंशः प्रजापतेः १३
एते प्रजानां पतयः समुद्दिष्टा यशस्विनः

अतः परं प्रवक्ष्यामि देवांस्त्रिभुवनेश्वरान् १४
भगोंऽशश्चार्यमा चैव मित्रोऽथ वरुणस्तथा
सविता चैव धाता च विवस्वांश्च महाबलः १५
पूषा त्वष्टा तथैवेन्द्रो द्वादशो विष्णुरुच्यते
त एते द्वादशादित्याः कश्यपस्यात्मसंभवाः १६
नासत्यश्चैव दस्रश्च स्मृतौ द्वावश्विनावपि
मार्तण्डस्यात्मजावेतावष्टमस्य प्रजापतेः १७
त्वष्टुश्चैवात्मजः श्रीमान्विश्वरूपो महायशाः
अजैकपादहिर्बुध्न्यो विरूपाक्षोऽथ रैवतः १८
हरश्च बहुरूपश्च त्र्यम्बकश्च सुरेश्वरः
सावित्रश्च जयन्तश्च पिनाकी चापराजितः
पूर्वमेव महाभागा वसवोऽष्टौ प्रकीर्तिताः १९
एत एवंविधा देवा मनोरेव प्रजापतेः
ते च पूर्वे सुराश्चेति द्विविधाः पितरः स्मृताः २०
शीलरूपरतास्त्वन्ये तथान्ये सिद्धसाध्ययोः
ऋभवो मरुतश्चैव देवानां चोदिता गणाः २१
एवमेते समाम्नाता विश्वेदेवास्तथाश्विनौ
आदित्याः क्षत्रियास्तेषां विशस्तु मरुतस्तथा २२
अश्विनौ तु मतौ शूद्रौ तपस्युग्रे समाहितौ
स्मृतास्त्वङ्गिरसो देवा ब्राह्मणा इति निश्चयः
इत्येतत्सर्वदेवानां चातुर्वर्ण्यं प्रकीर्तितम् २३
एतान्वै प्रातरुत्थाय देवान्यस्तु प्रकीर्तयेत्
स्वजादन्यकृताच्चैव सर्वपापात्प्रमुच्यते २४
यवक्रीतोऽथ रैभ्यश्च अर्वावसुपरावसू
औशिजश्चैव कक्षीवान्नलश्चाङ्गिरसः सुताः २५
ऋषेर्मेधातिथेः पुत्रः कण्वो बर्हिषदस्तथा
त्रैलोक्यभावनास्तात प्राच्यां सप्तर्षयस्तथा २६
उन्मुचो विमुचश्चैव स्वस्त्यात्रेयश्च वीर्यवान्
प्रमुचश्चेध्मवाहश्च भगवांश्च दृढव्रतः २७
मित्रावरुणयोः पुत्रस्तथागस्त्यः प्रतापवान्

एते ब्रह्मर्षयो नित्यमाश्रिता दक्षिणां दिशम् २८
रुषद्गुः कवषो धौम्यः परिव्याधश्च वीर्यवान्
एकतश्च द्वितश्चैव त्रितश्चैव महर्षयः २९
अत्रेः पुत्रश्च भगवांस्तथा सारस्वतं प्रभुः
एते नव महात्मानः पश्चिमामाश्रिता दिशम् ३०
आत्रेयश्च वसिष्ठश्च काश्यपश्च महानृषिः
गौतमः सभरद्वाजो विश्वामित्रोऽथ कौशिकः ३१
तथैव पुत्रो भगवानृचीकस्य महात्मनः
जमदग्निश्च सप्तैते उदीचीं दिशमाश्रिताः ३२
एते प्रतिदिशं सर्वे कीर्तितास्तिग्मतेजसः
साक्षिभूता महात्मानो भुवनानां प्रभावनाः ३३
एवमेते महात्मानः स्थिताः प्रत्येकशो दिशः
एतेषां कीर्तनं कृत्वा सर्वपापैः प्रमुच्यते ३४
यस्यां यस्यां दिशि ह्येते तां दिशं शरणं गतः
मुच्यते सर्वपापेभ्यः स्वस्तिमांश्च गृहान्व्रजेत् ३५
इति श्रीमहाभारते शान्तिपर्वणि एकाधिकद्विशततमोऽध्यायः २०१

द्व्यधिकद्विशततमोऽध्यायः

युधिष्ठिर उवाच
पितामह महाप्राज्ञ युधि सत्यपराक्रम
श्रोतुमिच्छामि कार्त्स्न्येन कृष्णमव्ययमीश्वरम् १
यच्चास्य तेजः सुमहद्यच्च कर्म पुरातनम्
तन्मे सर्वं यथातत्त्वं प्रब्रूहि भरतर्षभ २
तिर्यग्योनिगतं रूपं कथं धारितवान्हरिः
केन कार्यविसर्गेण तन्मे ब्रूहि पितामह ३
भीष्म उवाच
पुराहं मृगयां यातो मार्कण्डेयाश्रमे स्थितः
तत्रापश्यं मुनिगणान्समासीनान्सहस्रशः ४
ततस्ते मधुपर्केण पूजां चक्रुरथो मयि
प्रतिगृह्य च तां पूजां प्रत्यनन्दमृषीनहम् ५

कथैषा कथिता तत्र कश्यपेन महर्षिणा
मनःप्रह्लादिनीं दिव्यां तामिहैकमनाः शृणु ६
पुरा दानवमुख्या हि क्रोधलोभसमन्विताः
बलेन मत्ताः शतशो नरकाद्या महासुराः ७
तथैव चान्ये बहवो दानवा युद्धदुर्मदाः
न सहन्ते स्म देवानां समृद्धिं तामनुत्तमाम् ८
दानवैरर्द्यमानास्तु देवा देवर्षयस्तथा
न शर्म लेभिरे राजन्विशमानास्ततस्ततः ९
पृथिवीं चार्तरूपां ते समपश्यन्दिवौकसः
दानवैरभिसंकीर्णां घोररूपैर्महाबलैः
भारार्तामपकृष्टां च दुःखितां संनिमज्जतीम् १०
अथादितेयाः संत्रस्ता ब्रह्माणमिदमब्रुवन्
कथं शक्यामहे ब्रह्मन्दानवैरपमर्दनम् ११
स्वयंभूस्तानुवाचेदं निसृष्टोऽत्र विधिर्मया
ते वरेणाभिसंमत्ता वलेन च मदेन च १२
नावभोत्स्यन्ति संमूढा विष्णुमव्यक्तदर्शनम्
वराहरूपिणं देवमधृष्यममरैरपि १३
एष वेगेन गत्वा हि यत्र ते दानवाधमाः
अन्तर्भूमिगता घोरा निवसन्ति सहस्रशः
शमयिष्यति श्रुत्वा ते जहृषुः सुरसत्तमाः १४
ततो विष्णुर्महातेजा वाराहं रूपमाश्रितः
अन्तर्भूमिं संप्रविश्य जगाम दितिजान्प्रति १५
दृष्ट्वा च सहिताः सर्वे दैत्याः सत्त्वममानुषम्
प्रसह्य सहसा सर्वे संतस्थुः कालमोहिताः १६
सर्वे च समभिद्रुत्य वराहं जगृहुः समम्
संक्रुद्धाश्च वराहं तं व्यकर्षन्त समन्ततः १७
दानवेन्द्रा महाकाया महावीर्या बलोच्छ्रिताः
नाशक्नुवंश्च किंचित्ते तस्य कर्तुं तदा विभो १८
ततोऽगमन्विस्मयं ते दानवेन्द्रा भयात्तदा
संशयं गतमात्मानं मेनिरे च सहस्रशः १९

ततो देवाददिदेवः स योगात्मा योगसारथिः
योगमास्थाय भगवांस्तदा भरतसत्तम २०
विननाद महानादं क्षोभयन्दैत्यदानवान्
संनादिता येन लोकाः सर्वाश्चैव दिशो दश २१
तेन संनादशब्देन लोकाः संक्षोभमागमन्
संभ्रान्ताश्च दिशः सर्वा देवाः शक्रपुरोगमाः २२
निर्विचेष्टं जगच्चापि बभूवातिभृशं तदा
स्थावरं जङ्गमं चैव तेन नादेन मोहितम् २३
ततस्ते दानवाः सर्वे तेन शब्देन भीषिताः
पेतुर्गतासवश्चैव विष्णुतेजोविमोहिताः २४
रसातलगतांश्चैव वराहस्त्रिदशद्विषः
खुरैः संदारयामास मांसमेदोस्थिसंचयम् २५
नादेन तेन महता सनातन इति स्मृतः
पद्मनाभो महायोगी भूताचार्यः स भूतराट् २६
ततो देवगणाः सर्वे पितामहमुपाब्रुवन्
नादोऽय कीदृशो देव नैनं विद्म वयं विभो
कोऽसौ हि कस्य वा नादो येन विह्वलितं जगत् २७
एतस्मिन्नन्तरे विष्णुर्वाराहं रूपमास्थितः
उदतिष्ठन्महादेवः स्तूयमानो महर्षिभिः २८
पितामह उवाच
निहत्य दानवपतीन्महावर्ष्मा महाबलः
एष देवो महायोगी भूतात्मा भूतभावनः २९
सर्वभूतेश्वरो योगी योनिरात्मा तथात्मनः
स्थिरीभवत कृष्णोऽय सर्वपापप्रणाशनः ३०
कृत्वा कर्मातिसाध्वेतदशक्यममितप्रभः
समायातः स्वमात्मानं महाभागो महाद्युतिः
पद्मनाभो महायोगी भूतात्मा भूतभावनः ३१
न संतापो न भीः कार्या शोको वा सुरसत्तमाः
विधिरेष प्रभावश्च कालः संक्षयकारकः
लोकान्धारयतानेन नादो मुक्तो महात्मना ३२

स एव हि महाभागः सर्वलोकनमस्कृतः
अच्युतः पुण्डरीकाक्षः सर्वभूतसमुद्भवः ३३
इति श्रीमहाभारते शान्तिपर्वणि द्व्यधिकद्विशततमोऽध्यायः २०२

त्र्यधिकद्विशततमोऽध्यायः

युधिष्ठिर उवाच
योगं मे परमं तात मोक्षस्य वद भारत
तमहं तत्त्वतो ज्ञातुमिच्छामि वदतां वर १
भीष्म उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
संवादं मोक्षसंयुक्तं शिष्यस्य गुरुणा सह २
कश्चिद्ब्राह्मणमासीनमाचार्यमृषिसत्तमम्
शिष्यः परममेधावी श्रेयोर्थी सुसमाहितः
चरणावुपसंगृह्य स्थितः प्राञ्जलिरब्रवीत् ३
उपासनात्प्रसन्नोऽसि यदि वै भगवन्मम
संशयो मे महान्कश्चित्तन्मे व्याख्यातुमर्हसि ४
कुतश्चाहं कुतश्च त्वं तत्सम्यग्ब्रूहि यत्परम्
कथं च सर्वभूतेषु समेषु द्विजसत्तम
सम्यग्वृत्ता निवर्तन्ते विपरीताः क्षयोदयाः ५
वेदेषु चापि यद्वाक्यं लौकिकं व्यापकं च यत्
एतद्विद्वन्यथातत्त्वं सर्वं व्याख्यातुमर्हसि ६
गुरुरुवाच
शृणु शिष्य महाप्राज्ञ ब्रह्मगुह्यमिदं परम्
अध्यात्मं सर्वभूतानामागमानां च यद्वसु ७
वासुदेवः सर्वमिदं विश्वस्य ब्रह्मणो मुखम्
सत्यं दानमथो यज्ञस्तितिक्षा दम आर्जवम् ८
पुरुषं सनातनं विष्णुं यत्तद्वेदविदो विदुः
सर्गप्रलयकर्तारमव्यक्तं ब्रह्म शाश्वतम्
तदिदं ब्रह्म वार्ष्णेयमितिहासं शृणुष्व मे ९
ब्राह्मणो ब्राह्मणैः श्राव्यो राजन्यः क्षत्रियैस्तथा

माहात्म्यं देवदेवस्य विष्णोरमिततेजसः
अर्हस्त्वमसि कल्याण वार्ष्णेयं शृणु यत्परम् १०
कालचक्रमनाद्यन्तं भावाभावस्वलक्षणम्
त्रैलोक्यं सर्वभूतेषु चक्रवत्परिवर्तते ११
यत्तदक्षरमव्यक्तममृतं ब्रह्म शाश्वतम्
वदन्ति पुरुषव्याघ्रं केशवं पुरुषर्षभम् १२
पितॄन्देवानृषींश्चैव तथा वै यक्षदानवान्
नागासुरमनुष्यांश्च सृजते परमोऽव्ययः १३
तथैव वेदशास्त्राणि लोकधर्मांश्च शाश्वतान्
प्रलये प्रकृतिं प्राप्य युगादौ सृजते प्रभुः १४
यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये
दृश्यन्ते तानि तान्येव तथा ब्रह्माहरात्रिषु १५
अथ यद्यद्यदा भावि कालयोगाद्युगादिषु
तत्तदुत्पद्यते ज्ञानं लोकयात्राविधानजम् १६
युगान्तेऽन्तर्हितान्वेदान्सेतिहासान्महर्षयः
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा १७
वेदविद्वेद भगवान्वेदाङ्गानि बृहस्पतिः
भार्गवो नीतिशास्त्रं च जगाद जगतो हितम् १८
गान्धर्वं नारदो वेदं भरद्वाजो धनुर्ग्रहम्
देवर्षिचरितं गार्ग्यः कृष्णात्रेयश्चिकित्सितम् १९
न्यायतन्त्राण्यनेकानि तैस्तैरुक्तानि वादिभिः
हेत्वागमसदाचारैर्यदुक्तं तदुपास्यते २०
अनाद्यं यत्परं ब्रह्म न देवा नर्षयो विदुः
एकस्तद्वेद भगवान्धाता नारायणः प्रभुः २१
नारायणादृषिगणास्तथा मुख्याः सुरासुराः
राजर्षयः पुराणाश्च परमं दुःखभेषजम् २२
पुरुषाधिष्ठितं भावं प्रकृतिः सूयते सदा
हेतुयुक्तमतः सर्वं जगत्संपरिवर्तते २३
दीपादन्ये यथा दीपाः प्रवर्तन्ते सहस्रशः
प्रकृतिः सृजते तद्वदानन्त्यान्नापचीयते २४

अव्यक्तकर्मजा बुद्धिरहंकारं प्रसूयते
आकाशं चाप्यहंकाराद्वायुराकाशसंभवः २५
वायोस्तेजस्ततश्चापस्त्वद्भ्यो हि वसुधोद्गता
मूलप्रकृतयोऽष्टौ ता जगदेतास्ववस्थितम् २६
ज्ञानेन्द्रियाण्यतः पञ्च पञ्च कर्मेन्द्रियाण्यपि
विषयाः पञ्च चैकं च विकारे षोडशं मनः २७
श्रोत्रं त्वक्चक्षुषी जिह्वा घ्राणं पञ्चेन्द्रियाण्यपि
पादौ पायुरुपस्थश्च हस्तौ वाक्कर्मणामपि २८
शब्दः स्पर्शोऽथ रूपं च रसो गन्धस्तथैव च
विज्ञेयं व्यापकं चित्तं तेषु सर्वगतं मनः २९
रसज्ञाने तु जिह्वेयं व्याहृते वाक्तथैव च
इन्द्रियैर्विविधैर्युक्तं सर्वं व्यस्तं मनस्तथा ३०
विद्यात्तु षोडशैतानि दैवतानि विभागशः
देहेषु ज्ञानकर्तारमुपासीनमुपासते ३१
तद्वत्सोमगुणा जिह्वा गन्धस्तु पृथिवीगुणः
श्रोत्रं शब्दगुणं चैव चक्षुरग्नेर्गुणस्तथा
स्पर्शं वायुगुणं विद्यात्सर्वभूतेषु सर्वदा ३२
मनः सत्त्वगुणं प्राहुः सत्त्वमव्यक्तजं तथा
सर्वभूतात्मभूतस्थं तस्माद्बुध्येत बुद्धिमान् ३३
एते भावा जगत्सर्वं वहन्ति सचराचरम्
श्रिता विरजसं देवं यमाहुः परमं पदम् ३४
नवद्वारं पुरं पुण्यमेतैर्भावैः समन्वितम्
व्याप्य शेते महानात्मा तस्मात्पुरुष उच्यते ३५
अजरः सोऽमरश्चैव व्यक्ताव्यक्तोपदेशवान्
व्यापकः सगुणः सूक्ष्मः सर्वभूतगुणाश्रयः ३६
यथा दीपः प्रकाशात्मा ह्रस्वो वा यदि वा महान्
ज्ञानात्मानं तथा विद्यात्पुरुषं सर्वजन्तुषु ३७
सोऽत्र वेदयते वेद्यं स शृणोति स पश्यति
कारणं तस्य देहोऽय स कर्ता सर्वकर्मणाम् ३८
अग्निर्दारुगतो यद्वद्भिन्ने दारौ न दृश्यते

तथैवात्मा शरीरस्थो योगेनैवात्र दृश्यते ३९
नदीष्वापो यथा युक्ता यथा सूर्ये मरीचयः
संतन्वाना यथा यान्ति तथा देहाः शरीरिणाम् ४०
स्वप्नयोगे यथैवात्मा पञ्चेन्द्रियसमागतः
देहमुत्सृज्य वै याति तथैवात्रोपलभ्यते ४१
कर्मणा व्याप्यते पूर्वं कर्मणा चोपपद्यते
कर्मणा नीयतेऽन्यत्र स्वकृतेन बलीयसा ४२
स तु देहाद्यथा देहं त्यक्त्वान्यं प्रतिपद्यते
तथा तं संप्रवक्ष्यामि भूतग्रामं स्वकर्मजम् ४३
इति श्रीमहाभारते शान्तिपर्वणि त्र्यधिकद्विशततमोऽध्यायः २०३

## चतुरधिकद्विशततमोऽध्यायः

गुरुरुवाच
चतुर्विधानि भूतानि स्थावराणि चराणि च
अव्यक्तप्रभवान्याहुरव्यक्तनिधनानि च
अव्यक्तनिधनं विद्यादव्यक्तात्मात्मकं मनः १
यथाश्वत्थकणीकायामन्तर्भूतो महाद्रुमः
निष्पन्नो दृश्यते व्यक्तमव्यक्तात्संभवस्तथा २
अभिद्रवत्ययस्कान्तमयो निश्चेतनावुभौ
स्वभावहेतुजा भावा यद्वदन्यदपीदृशम् ३
तद्वदव्यक्तजा भावाः कर्तुः कारणलक्षणाः
अचेतनाश्चेतयितुः काराणादभिसंहिताः ४
न भूः खं द्यौर्न भूतानि नर्षयो न सुरासुराः
नान्यदासीदृते जीवमासेदुर्न तु संहितम् ५
सर्वनीत्या सर्वगतं मनोहेतु सलक्षणम्
अज्ञानकर्म निर्दिष्टमेतत्कारणलक्षणम् ६
तत्कारणैर्हि संयुक्तं कार्यसंग्रहकारकम्
येनैतद्वर्तते चक्रमनादिनिधनं महत् ७
अव्यक्तनाभं व्यक्तारं विकारपरिमण्डलम्
क्षेत्रज्ञाधिष्ठितं चक्रं स्निग्धाक्षं वर्तते ध्रुवम् ८

स्निग्धत्वात्तिलवत्सर्वं चक्रेऽस्मिन्पीड्यते जगत्
तिलपीडैरिवाक्रम्य भोगैरज्ञानसंभवैः ९
कर्म तत्कुरुते तर्षादहंकारपरिग्रहम्
कार्यकारणसंयोगे स हेतुरुपपादितः १०
नात्येति कारणं कार्यं न कार्यं कारणं तथा
कार्याणां तूपकरणे कालो भवति हेतुमान् ११
हेतुयुक्ताः प्रकृतयो विकाराश्च परस्परम्
अन्योन्यमभिवर्तन्ते पुरुषाधिष्ठिताः सदा १२
सरजस्तामसैर्भावैश्च्युतो हेतुबलान्वितः
क्षेत्रज्ञमेवानुयाति पांसुर्वातेरितो यथा
न च तैः स्पृश्यते भावो न ते तेन महात्मना १३
सरजस्कोऽरजस्कश्च स वै वायुर्यथा भवेत्
तथैतदन्तरं विद्यात्क्षेत्रक्षेत्रज्ञयोर्बुधः
अभ्यासात्स तथा युक्तो न गच्छेत्प्रकृतिं पुनः १४
संदेहमेतमुत्पन्नमच्छिनद्भगवानृषिः
तथा वार्तां समीक्षेत कृतलक्षणसंमिताम् १५
बीजान्यग्न्युपदग्धानि न रोहन्ति यथा पुनः
ज्ञानदग्धैस्तथा क्लेशैर्नात्मा संबध्यते पुनः १६
इति श्रीमहाभारते शान्तिपर्वणि चतुरधिकद्विशततमोऽध्यायः २०४

पञ्चाधिकद्विशततमोऽध्यायः

गुरुरुवाच
प्रवृत्तिलक्षणो धर्मो यथायमुपपद्यते
तेषां विज्ञाननिष्ठानामन्यत्तत्त्वं न रोचते १
दुर्लभा वेदविद्वांसो वेदोक्तेषु व्यवस्थिताः
प्रयोजनमतस्त्वत्र मार्गमिच्छन्ति संस्तुतम् २
सद्भिराचरितत्वात्तु वृत्तमेतदगर्हितम्
इयं सा बुद्धिरन्येयं यया याति परां गतिम् ३
शरीरवानुपादत्ते मोहात्सर्वपरिग्रहान्
कामक्रोधादिभिर्भावैर्युक्तो राजसतामसैः ४

नाशुद्धमाचरेत्तस्मादभीप्सन्देहयापनम्
कर्मणो विवरं कुर्वन्न लोकानाप्नुयाच्छुभान् ५
लोहयुक्तं यथा हेम विपक्वं न विराजते
तथापक्वकषायाख्यं विज्ञानं न प्रकाशते ६
यश्चाधर्मं चरेन्मोहात्कामलोभावनु प्लवन्
धर्म्यं पन्थानमाक्रम्य सानुबन्धो विनश्यति ७
शब्दादीन्विषयांस्तस्मादसंरागादनुप्लवेत्
क्रोधहर्षौ विषादश्च जायन्ते हि परस्परम् ८
पञ्चभूतात्मके देहे सत्त्वराजसतामसे
कमभिष्टुवते चायं कं वा क्रोशति किं वदेत् ९
स्पर्शरूपरसाद्येषु सङ्गं गच्छन्ति बालिशाः
नावगच्छन्त्यविज्ञानादात्मजं पार्थिवं गुणम् १०
मृन्मयं शरणं यद्वन्मृदैव परिलिप्यते
पार्थिवोऽय तथा देहो मृद्विकारैर्विलिप्यते ११
मधु तैलं पयः सर्पिर्मांसानि लवणं गुडः
धान्यानि फलमूलानि मृद्विकाराः सहाम्भसा १२
यद्वत्कान्तारमातिष्ठन्नौत्सुक्यं समनुव्रजेत्
श्रमादाहारमादद्यादस्वाद्वपि हि यापनम् १३
तद्वत्संसारकान्तारमातिष्ठञ्श्रमतत्परः
यात्रार्थमद्यादाहारं व्याधितो भेषजं यथा १४
सत्यशौचार्जवत्यागैर्यशसा विक्रमेण च
क्षान्त्या धृत्या च बुद्ध्या च मनसा तपसैव च १५
भावान्सर्वान्यथावृत्तान्संवसेत यथाक्रमम्
शान्तिमिच्छन्नदीनात्मा संयच्छेदिन्द्रियाणि च १६
सत्त्वेन रजसा चैव तमसा चैव मोहिताः
चक्रवत्परिवर्तन्ते ह्यज्ञानाज्जन्तवो भृशम् १७
तस्मात्सम्यक्परीक्षेत दोषानज्ञानसंभवान्
अज्ञानप्रभवं नित्यमहंकारं परित्यजेत् १८
महाभूतानीन्द्रियाणि गुणाः सत्त्वं रजस्तमः
त्रैलोक्यं सेश्वरं सर्वमहंकारे प्रतिष्ठितम् १९

यथेह नियतं कालो दर्शयत्यार्तवान्गुणान्
तद्वद्भूतेष्वहंकारं विद्याद्भूतप्रवर्तकम् २०
संमोहकं तमो विद्यात्कृष्णमज्ञानसम्भवम्
प्रीतिदुःखनिबद्धांश्च समस्तांस्त्रीनथो गुणान्
सत्त्वस्य रजसश्चैव तमसश्च निबोध तान् २१
प्रमोहो हर्षजः प्रीतिरसंदेहो धृतिः स्मृतिः
एतान्सत्त्वगुणान्विद्यादिमान्राजसतामसान् २२
कामक्रोधौ प्रमादश्च लोभमोहौ भयं क्लमः
विषादशोकावरतिर्मानदर्पावनार्यता २३
दोषाणामेवमादीनां परीक्ष्य गुरुलाघवम्
विमृशेदात्मसंस्थानामेकैकमनुसंततम् २४
शिष्य उवाच
के दोषा मनसा त्यक्ताः के बुद्ध्या शिथिलीकृताः
के पुनः पुनरायान्ति के मोहादफला इव २५
केषां बलाबलं बुद्ध्या हेतुभिर्विमृशेद्बुधः
एतत्सर्वं समाचक्ष्व यथा विद्यामहं प्रभो २६
गुरुरुवाच
दोषैर्मूलादवच्छिन्नैर्विशुद्धात्मा विमुच्यते
विनाशयति संभूतमयस्मयमयो यथा
तथाकृतात्मा सहजैर्दोषैर्नश्यति राजसैः २७
राजसं तामसं चैव शुद्धात्माकर्मसंभवम्
तत्सर्वं देहिनां बीजं सर्वमात्मवतः समम् २८
तस्मादात्मवता वर्ज्यं रजश्च तम एव च
रजस्तमोभ्यां निर्मुक्तं सत्त्वं निर्मलतामियात् २९
अथ वा मन्त्रवद्ब्रूयुर्मांसादानां यजुष्कृतम्
हेतुः स एवानादाने शुद्धधर्मानुपालने ३०
रजसा धर्मयुक्तानि कार्याण्यपि समाप्नुयात्
अर्थयुक्तानि चात्यर्थं कामान्सर्वांश्च सेवते ३१
तमसा लोभयुक्तानि क्रोधजानि च सेवते
हिंसाविहाराभिरतस्तन्द्रीनिद्रासमन्वितः ३२

सत्त्वस्थः सात्त्विकान्भावाञ्शुद्धान्पश्यति संश्रितः
स देही विमलः श्रीमाञ्शुद्धो विद्यासमन्वितः ३३
इति श्रीमहाभारते शान्तिपर्वणि पञ्चाधिकद्विशततमोऽध्यायः २०५

## षडधिकद्विशततमोऽध्यायः

गुरुरुवाच
रजसा साध्यते मोहस्तमसा च नरर्षभ
क्रोधलोभौ भयं दर्प एतेषां सादनाच्छुचिः १
परमं परमात्मानं देवमक्षयमव्ययम्
विष्णुमव्यक्तसंस्थानं विशन्ते देवसत्तमम् २
तस्य मायाविदग्धाङ्गा ज्ञानभ्रष्टा निराशिषः
मानवाः ज्ञानसंमोहात्ततः कामं प्रयान्ति वै ३
कामात्क्रोधमवाप्याथ लोभमोहौ च मानवाः
मानदर्पादहंकारमहंकारात्ततः क्रियाः ४
क्रियाभिः स्नेहसंबन्धः स्नेहाच्छोकमनन्तरम्
सुखदुःखसमारम्भाज्जन्माजन्मकृतक्षणाः ५
जन्मतो गर्भवासं तु शुक्रशोणितसंभवम्
पुरीषमूत्रविक्लेदशोणितप्रभवाविलम् ६
तृष्णाभिभूतस्तैर्बद्धस्तानेवाभिपरिप्लवन्
संसारतन्त्रवाहिन्यस्तत्र बुध्येत योषितः ७
प्रकृत्या क्षेत्रभूतास्ता नराः क्षेत्रज्ञलक्षणाः
तस्मादेता विशेषेण नरोऽतीयुर्विपश्चितः ८
कृत्या ह्येता घोररूपा मोहयन्त्यविचक्षणान्
रजस्यन्तर्हिता मूर्तिरिन्द्रियाणां सनातनी ९
तस्मात्तर्षात्मकाद्रागाद्बीजाज्जायन्ति जन्तवः
स्वदेहजानस्वसंज्ञान्यद्वदङ्गात्कृमींस्त्यजेत्
स्वसंज्ञानस्वजांस्तद्वत्सुतसंज्ञान्कृमींस्त्यजेत् १०
शुक्रतो रसतश्चैव स्नेहाज्जायन्ति जन्तवः
स्वभावात्कर्मयोगाद्वा तानुपेक्षेत बुद्धिमान् ११
रजस्तमसि पर्यस्तं सत्त्वं तमसि संस्थितम्

ज्ञानाधिष्ठानमज्ञानं बुद्ध्यहंकारलक्षणम् १२
तद्बीजं देहिनामाहुस्तद्बीजं जीवसंज्ञितम्
कर्मणा कालयुक्तेन संसारपरिवर्तकम् १३
रमत्ययं यथा स्वप्ने मनसा देहवानिव
कर्मगर्भैर्गुणैर्देही गर्भे तदुपपद्यते १४
कर्मणा बीजभूतेन चोद्यते यद्यदिन्द्रियम्
जायते तदहंकाराद्रागयुक्तेन चेतसा १५
शब्दरागाच्छ्रोत्रमस्य जायते भावितात्मनः
रूपरागात्तथा चक्षुर्घ्राणं गन्धचिकीर्षया १६
स्पर्शनेभ्यस्तथा वायुः प्राणापानव्यपाश्रयः
व्यानोदानौ समानश्च पञ्चधा देहयापना १७
संजातैर्जायते गात्रैः कर्मजैर्ब्रह्मणा वृतः
दुःखाद्यन्तैर्दुःखमध्यैर्नरः शारीरमानसैः १८
दुःखं विद्यादुपादानादभिमानाच्च वर्धते
त्यागात्तेभ्यो निरोधः स्यान्निरोधज्ञो विमुच्यते १९
इन्द्रियाणां रजस्येव प्रभवप्रलयावुभौ
परीक्ष्य संचरेद्विद्वान्यथावच्छास्त्रचक्षुषा २०
ज्ञानेन्द्रियाणीन्द्रियार्थान्नोपसर्पन्त्यतर्षुलम्
ज्ञातैश्च कारणैर्देही न देहं पुनरर्हति २१
इति श्रीमहाभारते शान्तिपर्वणि षडधिकद्विशततमोऽध्यायः २०६

## सप्ताधिकद्विशततमोऽध्यायः

गुरुरुवाच
अत्रोपायं प्रवक्ष्यामि यथावच्छास्त्रचक्षुषा
तद्विज्ञानाच्चरन्प्राज्ञः प्राप्नुयात्परमां गतिम् १
सर्वेषामेव भूतानां पुरुषः श्रेष्ठ उच्यते
पुरुषेभ्यो द्विजानाहुर्द्विजेभ्यो मन्त्रवादिनः २
सर्वभूतविशिष्टास्ते सर्वज्ञाः सर्वदर्शिनः
ब्राह्मणा वेदतत्त्वज्ञास्तत्त्वार्थगतिनिश्चयाः ३
नेत्रहीनो यथा ह्येकः कृच्छ्राणि लभतेऽध्वनि

ज्ञानहीनस्तथा लोके तस्माज्ज्ञानविदोऽधिकाः ४
तांस्तानुपासते धर्मान्धर्मकामा यथागमम्
न त्वेषामर्थसामान्यमन्तरेण गुणानिमान् ५
वाग्देहमनसां शौचं क्षमा सत्यं धृतिः स्मृतिः
सर्वधर्मेषु धर्मज्ञा ज्ञापयन्ति गुणानिमान् ६
यदिदं ब्रह्मणो रूपं ब्रह्मचर्यमिति स्मृतम्
परं तत्सर्वभूतेभ्यस्तेन यान्ति परां गतिम् ७
लिङ्गसंयोगहीनं यच्छरीरस्पर्शवर्जितम्
श्रोत्रेण श्रवणं चैव चक्षुषा चैव दर्शनम् ८
जिह्वया रसनं यच्च तदेव परिवर्जितम्
बुद्ध्या च व्यवसायेन ब्रह्मचर्यमकल्मषम् ९
सम्यग्वृत्तिर्ब्रह्मलोकं प्राप्नुयान्मध्यमः सुरान्
द्विजाग्र्यो जायते विद्वान्कन्यसीं वृत्तिमास्थितः १०
सुदुष्करं ब्रह्मचर्यमुपायं तत्र मे शृणु
संप्रदीवृत्तमुदीर्णं च निगृह्णीयाद्द्विजो मनः ११
योषितां न कथाः श्राव्या न निरीक्ष्या निरम्बराः
कदाचिद्दर्शनादासां दुर्बलानाविशेद्रजः १२
रागोत्पत्तौ चरेत्कृच्छ्रमह्नस्त्रिः प्रविशेदपः
मग्नः स्वप्ने च मनसा त्रिर्जपेदघमर्षणम् १३
पाप्मानं निर्दहेदेवमन्तर्भूतं रजोमयम्
ज्ञानयुक्तेन मनसा संततेन विचक्षणः १४
कुणपामेध्यसंयुक्तं यद्वदच्छिद्रबन्धनम्
तद्वद्देहगतं विद्यादात्मानं देहबन्धनम् १५
वातपित्तकफान्रक्तं त्वङ्मांसं स्नायुमस्थि च
मज्जां चैव सिराजालैस्तर्पयन्ति रसा नृणाम् १६
दश विद्याद्धमन्योऽत्र पञ्चेन्द्रियगुणावहाः
याभिः सूक्ष्माः प्रतायन्ते धमन्योऽन्या सहस्रशः १७
एवमेताः सिरानद्यो रसोदा देहसागरम्
तर्पयन्ति यथाकालमापगा इव सागरम् १८
मध्ये च हृदयस्यैका सिरा तत्र मनोवहा

शुक्रं संकल्पजं नृणां सर्वगात्रैर्विमुञ्चति १९
सर्वगात्रप्रतायिन्यस्तस्या ह्यनुगताः सिराः
नेत्रयोः प्रतिपद्यन्ते वहन्त्यस्तैजसं गुणम् २०
पयस्यन्तर्हितं सर्पिर्यद्वन्निर्मथ्यते खजैः
शुक्रं निर्मथ्यते तद्वद्देहसंकल्पजैः खजैः २१
स्वप्नेऽप्येवं यथाभ्येति मनःसंकल्पजं रजः
शुक्रमस्पर्शजं देहात्सृजन्त्यस्य मनोवहा २२
महर्षिर्भगवानत्रिर्वेद तच्छुक्रसंभवम्
त्रिबीजमिन्द्रदैवत्यं तस्मादिन्द्रियमुच्यते २३
ये वै शुक्रगतिं विद्युर्भूतसंकरकारिकाम्
विरागा दग्धदोषास्ते नाप्नुयुर्देहसंभवम् २४
गुणानां साम्यमागम्य मनसैव मनोवहम्
देहकर्म नुदन्प्राणानन्तकाले विमुच्यते २५
भविता मनसो ज्ञानं मन एव प्रतायते
ज्योतिष्मद्विरजो दिव्यमत्र सिद्धं महात्मनाम् २६
तस्मात्तदविघाताय कर्म कुर्यादकल्मषम्
रजस्तमश्च हित्वेह न तिर्यग्गतिमाप्नुयात् २७
तरुणाधिगतं ज्ञानं जरादुर्बलतां गतम्
परिपक्वबुद्धिः कालेन आदत्ते मानसं बलम् २८
सुदुर्गमिव पन्थानमतीत्य गुणबन्धनम्
यदा पश्येत्तदा दोषानतीत्यामृतमश्नुते २९
इति श्रीमहाभारते शान्तिपर्वणि सप्ताधिकद्विशततमोऽध्यायः २०७

## अष्टाधिकद्विशततमोऽध्यायः

गुरुरुवाच
दुरन्तेष्विन्द्रियार्थेषु सक्ताः सीदन्ति जन्तवः
ये त्वसक्ता महात्मानस्ते यान्ति परमां गतिम् १
जन्ममृत्युजरादुःखैर्व्याधिभिर्मनसः क्लमैः
दृष्ट्वेमं संततं लोकं घटेन्मोक्षाय बुद्धिमान् २
वाङ्मनोभ्यां शरीरेण शुचिः स्यादनहंकृतः

प्रशान्तो ज्ञानवान्भिक्षुर्निरपेक्षश्चरेत्सुखम् ३
अथ वा मनसः सङ्गं पश्येद्भूतानुकम्पया
अत्राप्युपेक्षां कुर्वीत ज्ञात्वा कर्मफलं जगत् ४
यत्कृतं प्राक्शुभं कर्म पापं वा तदुपाश्नुते
तस्माच्छुभानि कर्माणि कुर्याद्वाग्बुद्धिकर्मभिः ५
अहिंसा सत्यवचनं सर्वभूतेषु चार्जवम्
क्षमा चैवाप्रमादश्च यस्यैते स सुखी भवेत् ६
यश्चैनं परमं धर्मं सर्वभूतसुखावहम्
दुःखान्निःसरणं वेद स तत्त्वज्ञः सुखी भवेत् ७
तस्मात्समाहितं बुद्ध्या मनो भूतेषु धारयेत्
नापध्यायेन्न स्पृहयेन्नाबद्धं चिन्तयेदसत् ८
अवाग्योगप्रयोगेण मनोज्ञं संप्रवर्तते
विवक्षता वा सद्वाक्यं धर्मं सूक्ष्ममवेक्षता
सत्यां वाचमहिंस्रां च वदेदनपवादिनीम् ९
कल्कापेतामपरुषामनृशंसामपैशुनाम्
ईदृगल्पं च वक्तव्यमविक्षिप्तेन चेतसा १०
वाक्प्रबुद्धो हि संरागाद्विरागाद्व्याहरेद्यदि
बुद्ध्या ह्यनिगृहीतेन मनसा कर्म तामसम्
रजोभूतैर्हि करणैः कर्मणा प्रतिपद्यते ११
स दुःखं प्राप्य लोकेऽस्मिन्नरकायोपपद्यते
तस्मान्मनोवाक्शरीरैराचरेद्धैर्यमात्मनः १२
प्रकीर्णमेषभारो हि यद्वद्धार्येत दस्युभिः
प्रतिलोमां दिशं बुद्ध्वा संसारमबुधास्तथा १३
तानेव च यथा दस्यून्क्षिप्त्वा गच्छेच्छिवां दिशम्
तथा रजस्तमःकर्माण्युत्सृज्य प्राप्नुयात्सुखम् १४
निःसंदिग्धमनीहो वै मुक्तः सर्वपरिग्रहैः
विविक्तचारी लघ्वाशी तपस्वी नियतेन्द्रियः १५
ज्ञानदग्धपरिक्लेशः प्रयोगरतिरात्मवान्
निष्प्रचारेण मनसा परं तदधिगच्छति १६
धृतिमानात्मवान्बुद्धिं निगृह्णीयादसंशयम्

मनो बुद्ध्या निगृह्णीयाद्विषयान्मनसात्मनः १७
निगृहीतेन्द्रियस्यास्य कुर्वाणस्य मनो वशे
देवतास्ताः प्रकाशन्ते हृष्टा यान्ति तमीश्वरम् १८
ताभिः संसक्तमनसो ब्रह्मवत्संप्रकाशते
एतैश्चापगतैः सर्वैर्ब्रह्मभूयाय कल्पते १९
अथ वा न प्रवर्तेत योगतन्त्रैरुपक्रमेत्
येन तन्त्रमयं तन्त्रं वृत्तिः स्यात्तत्तदाचरेत् २०
कणपिण्याककुल्माषशाकयावकसक्तवः
तथा मूलफलं भैक्षं पर्यायेणोपयोजयेत् २१
आहारं नियतं चैव देशे काले च सात्त्विकम्
तत्परीक्ष्यानुवर्तेत यत्प्रवृत्त्यनुवर्तकम् २२
प्रवृत्तं नोपरुन्धेत शनैरग्निमिवेन्धयेत्
ज्ञानेन्धितं ततो ज्ञानकर्मवत्संप्रकाशते २३
ज्ञानाधिष्ठानमज्ञानं त्रीँल्लोकानधितिष्ठति
विज्ञानानुगतं ज्ञानमज्ञानादपकृष्यते २४
पृथक्त्वात्संप्रयोगाच्च नासूयुर्वेद शाश्वतम्
स तयोरपवर्गज्ञो वीतरागो विमुच्यते २५
वयोतीतो जरामृत्यू जित्वा ब्रह्म सनातनम्
अमृतं तदवाप्नोति यत्तदक्षरमव्ययम् २६
इति श्रीमहाभारते शान्तिपर्वणि अष्टाधिकद्विशततमोऽध्यायः २०८

## नवाधिकद्विशततमोऽध्यायः

गुरुरुवाच
निष्कल्मषं ब्रह्मचर्यमिच्छता चरितुं सदा
निद्रा सर्वात्मना त्याज्या स्वप्नदोषानवेक्षता १
स्वप्ने हि रजसा देही तमसा चाभिभूयते
देहान्तरमिवापन्नश्चरत्यपगतस्मृतिः २
ज्ञानाभ्यासाज्जागरतो जिज्ञासार्थमनन्तरम्
विज्ञानाभिनिवेशात्तु जागरत्यनिशं सदा ३
अत्राह को न्वयं भावः स्वप्ने विषयवानिव

प्रलीनैरिन्द्रियैर्देही वर्तते देहवानिव ४
अत्रोच्यते यथा ह्येतद्वेद योगेश्वरो हरिः
तथैतदुपपन्नार्थं वर्णयन्ति महर्षयः ५
इन्द्रियाणां श्रमात्स्वप्नमाहुः सर्वगतं बुधाः
मनसस्तु प्रलीनत्वात्तत्तदाहुर्निदर्शनम् ६
कार्यव्यासक्तमनसः संकल्पो जाग्रतो ह्यपि
यद्वन्मनोरथैश्वर्यं स्वप्ने तद्वन्मनोगतम् ७
संसाराणामसंख्यानां कामात्मा तदवाप्नुयात्
मनस्यन्तर्हितं सर्वं वेद सोत्तमपूरुषः ८
गुणानामपि यद्यत्तत्कर्म जानात्युपस्थितम्
तत्तच्छंसन्ति भूतानि मनो यद्भावितं यथा ९
ततस्तमुपवर्तन्ते गुणा राजसतामसाः
सात्त्विको वा यथायोगमानन्तर्यफलोदयः १०
ततः पश्यत्यसंबद्धान्वातपित्तकफोत्तरान्
रजस्तमोभवैर्भावैस्तदप्याहुर्दुरन्वयम् ११
प्रसन्नैरिन्द्रियैर्यद्यत्संकल्पयति मानसम्
तत्तत्स्वप्नेऽप्युपरते मनोदृष्टिर्निरीक्षते १२
व्यापकं सर्वभूतेषु वर्ततेऽप्रतिघं मनः
मनस्यन्तर्हितं द्वारं देहमास्थाय मानसम् १३
यत्तत्सदसदव्यक्तं स्वपित्यस्मिन्निदर्शनम्
सर्वभूतात्मभूतस्थं तदध्यात्मगुणं विदुः १४
लिप्सेत मनसा यश्च संकल्पादैश्वरं गुणम्
आत्मप्रभावात्तं विद्यात्सर्वा ह्यात्मनि देवताः १५
एवं हि तपसा युक्तमर्कवत्तमसः परम्
त्रैलोक्यप्रकृतिर्देही तमसा तं महेश्वरम् १६
तपो ह्यधिष्ठितं देवैस्तपोघ्नमसुरैस्तमः
एतद्देवासुरैर्गुप्तं तदाहुर्ज्ञानलक्षणम् १७
सत्त्वं रजस्तमश्चेति देवासुरगुणान्विदुः
सत्त्वं देवगुणं विद्यादितरावासुरौ गुणौ १८
ब्रह्म तत्परमं वेद्यममृतं ज्योतिरक्षरम्

ये विदुर्भावितात्मानस्ते यान्ति परमां गतिम् १९
हेतुमच्छक्यमाख्यातुमेतावज्ज्ञानचक्षुषा
प्रत्याहारेण वा शक्यमव्यक्तं ब्रह्म वेदितुम् २०
इति श्रीमहाभारते शान्तिपर्वणि नवाधिकद्विशततमोऽध्यायः २०९

## दशाधिकद्विशततमोऽध्यायः

गुरुरुवाच
न स वेद परं धर्मं यो न वेद चतुष्टयम्
व्यक्ताव्यक्ते च यत्तत्त्वं संप्राप्तं परमर्षिणा १
व्यक्तं मृत्युमुखं विद्यादव्यक्तममृतं पदम्
प्रवृत्तिलक्षणं धर्ममृषिनारायणोऽब्रवीत् २
अत्रैवावस्थितं सर्वं त्रैलोक्यं सचराचरम्
निवृत्तिलक्षणं धर्ममव्यक्तं ब्रह्म शाश्वतम् ३
प्रवृत्तिलक्षणं धर्मं प्रजापतिरथाब्रवीत्
प्रवृत्तिः पुनरावृत्तिर्निवृत्तिः परमा गतिः ४
तां गतिं परमामेति निवृत्तिपरमो मुनिः
ज्ञानतत्त्वपरो नित्यं शुभाशुभनिदर्शकः ५
तदेवमेतौ विज्ञेयावव्यक्तपुरुषावुभौ
अव्यक्तपुरुषाभ्यां तु यत्स्यादन्यन्महत्तरम् ६
तं विशेषमवेक्षेत विशेषेण विचक्षणः
अनाद्यन्तावुभावेतावलिङ्गौ चाप्युभावपि ७
उभौ नित्यौ सूक्ष्मतरौ महद्भ्यश्च महत्तरौ
सामान्यमेतदुभयोरेवं ह्यन्यद्विशेषणम् ८
प्रकृत्या सर्गधर्मिण्या तथा त्रिविधसत्त्वया
विपरीतमतो विद्यात्क्षेत्रज्ञस्य च लक्षणम् ९
प्रकृतेश्च विकाराणां द्रष्टारमगुणान्वितम्
अग्राह्यौ पुरुषावेतावलिङ्गत्वादसंहितौ १०
संयोगलक्षणोत्पत्तिः कर्मजा गृह्यते यया
करणैः कर्मनिर्वृत्तैः कर्ता यद्यद्विचेष्टते
कीर्त्यते शब्दसंज्ञाभिः कोऽहमेषोऽप्यसाविति ११

उष्णीषवान्यथा वस्त्रैस्त्रिभिर्भवति संवृतः
संवृतोऽय तथा देही सत्त्वराजसतामसैः १२
तस्माच्चतुष्टयं वेद्यमेतैर्हेतुभिराचितम्
यथासंज्ञो ह्ययं सम्यगन्तकाले न मुह्यति १३
श्रियं दिव्यामभिप्रेप्सुर्ब्रह्मा वाङ्मनसा शुचिः
शारीरैर्नियमैरुग्रैश्चरेन्निष्कल्मषं तपः १४
त्रैलोक्यं तपसा व्याप्तमन्तर्भूतेन भास्वता
सूर्यश्च चन्द्रमाश्चैव भासतस्तपसा दिवि १५
प्रतापस्तपसो ज्ञानं लोके संशब्दितं तपः
रजस्तमोघ्नं यत्कर्म तपसस्तत्स्वलक्षणम् १६
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते
वाङ्मनोनियमः साम्यं मानसं तप उच्यते १७
विधिज्ञेभ्यो द्विजातिभ्यो ग्राह्यमन्नं विशिष्यते
आहारनियमेनास्य पाप्मा नश्यति राजसः १८
वैमनस्यं च विषये यान्त्यस्य करणानि च
तस्मात्तन्मात्रमादद्याद्यावदत्र प्रयोजनम् १९
अन्तकाले वयोत्कर्षाच्छनैः कुर्यादनातुरः
एवं युक्तेन मनसा ज्ञानं यदुपपद्यते २०
रजसा चाप्ययं देही देहवाञ्शब्दवच्चरेत्
कार्यैरव्याहतमतिर्वैराग्यात्प्रकृतौ स्थितः
आ देहादप्रमादाच्च देहान्ताद्विप्रमुच्यते २१
हेतुयुक्तः सदोत्सर्गो भूतानां प्रलयस्तथा
परप्रत्ययसर्गे तु नियतं नातिवर्तते २२
भवान्तप्रभवप्रज्ञा आसते ये विपर्ययम्
धृत्या देहान्धारयन्तो बुद्धिसंक्षिप्तमानसाः
स्थानेभ्यो ध्वंसमानाश्च सूक्ष्मत्वात्तानुपासते २३
यथागमं च तत्सर्वं बुद्ध्या तेनैव बुद्ध्यते
देहान्तं कश्चिदन्वास्ते भावितात्मा निराश्रयः
युक्तो धारणया कश्चित्सत्तां केचिदुपासते २४
अभ्यस्यन्ति परं देवं विद्युत्संशब्दिताक्षरम्

अन्तकाले ह्युपासन्नास्तपसा दग्धकिल्बिषाः २५
सर्व एते महात्मानो गच्छन्ति परमां गतिम्
सूक्ष्मं विशेषणं तेषामवेक्षेच्छास्त्रचक्षुषा २६
देहं तु परमं विद्याद्विमुक्तमपरिग्रहम्
अन्तरिक्षादन्यतरं धारणासक्तमानसम् २७
मर्त्यलोकाद्विमुच्यन्ते विद्यासंयुक्तमानसाः
ब्रह्मभूता विरजसस्ततो यान्ति परां गतिम् २८
कषायवर्जितं ज्ञानं येषामुत्पद्यतेऽचलम्
ते यान्ति परामाल्लोँकान्विशुध्यन्तो यथाबलम् २९
भगवन्तमजं दिव्यं विष्णुमव्यक्तसंज्ञितम्
भावेन यान्ति शुद्धा ये ज्ञानतृप्ता निराशिषः ३०
ज्ञात्वात्मस्थं हरिं चैव निवर्तन्ते न तेऽव्ययाः
प्राप्य तत्परमं स्थानं मोदन्तेऽक्षरमव्ययम् ३१
एतावदेतद्विज्ञानमेतदस्ति च नास्ति च
तृष्णाबद्धं जगत्सर्वं चक्रवत्परिवर्तते ३२
बिसतन्तुर्यथैवायमन्तस्थः सर्वतो बिसे
तृष्णातन्तुरनाद्यन्तस्तथा देहगतः सदा ३३
सूच्या सूत्रं यथा वस्त्रे संसारयति वायकः
तद्वत्संसारसूत्रं हि तृष्णासूच्या निबध्यते ३४
विकारं प्रकृतिं चैव पुरुषं च सनातनम्
यो यथावद्विजानाति स वितृष्णो विमुच्यते ३५
प्रकाशं भगवानेतदृषिर्नारायणोऽमृतम्
भूतानामनुकम्पार्थं जगाद जगतो हितम् ३६
इति श्रीमहाभारते शान्तिपर्वणि दशाधिकद्विशततमोऽध्यायः २१०

एकादशाधिकद्विशततमोऽध्यायः

युधिष्ठिर उवाच
केन वृत्तेन वृत्तज्ञो जनको मिथिलाधिपः
जगाम मोक्षं धर्मज्ञो भोगानुत्सृज्य मानुषान् १
भीष्म उवाच

अत्राप्युदाहरन्तीममितिहासं पुरातनम्
येन वृत्तेन वृत्तज्ञः स जगाम महत्सुखम् २
जनको जनदेवस्तु मिथिलायां जनाधिपः
और्ध्वदेहिकधर्माणामासीद्युक्तो विचिन्तने ३
तस्य स्म शतमाचार्या वसन्ति सततं गृहे
दर्शयन्तः पृथग्धर्मान्नानापाषण्डवादिनः ४
स तेषां प्रेत्यभावे च प्रेत्यजातौ विनिश्चये
आगमस्थः स भूयिष्ठमात्मतत्त्वे न तुष्यति ५
तत्र पञ्चशिखो नाम कापिलेयो महामुनिः
परिधावन्महीं कृत्स्नां जगाम मिथिलामपि ६
सर्वसंन्यासधर्माणां तत्त्वज्ञानविनिश्चये
सुपर्यवसितार्थश्च निर्द्वंद्वो नष्टसंशयः ७
ऋषीणामाहुरेकं यं कामादवसितं नृषु
शाश्वतं सुखमत्यन्तमन्विच्छन्स सुदुर्लभम् ८
यमाहुः कपिलं सांख्याः परमर्षिं प्रजापतिम्
स मन्ये तेन रूपेण विस्मापयति हि स्वयम् ९
आसुरेः प्रथमं शिष्यं यमाहुश्चिरजीविनम्
पञ्चस्रोतसि यः सत्रमास्ते वर्षसहस्रिकम् १०
तं समासीनमागम्य मण्डलं कापिलं महत्
पुरुषावस्थमव्यक्तं परमार्थं निबोधयत् ११
इष्टिसत्रेण संसिद्धो भूयश्च तपसा मुनिः
क्षेत्रक्षेत्रज्ञयोर्व्यक्तिं बुबुधे देवदर्शनः १२
यत्तदेकाक्षरं ब्रह्म नानारूपं प्रदृश्यते
आसुरिर्मण्डले तस्मिन्प्रतिपेदे तदव्ययम् १३
तस्य पञ्चशिखः शिष्यो मानुष्या पयसा भृतः
ब्राह्मणी कपिला नाम काचिदासीत्कुटुम्बिनी १४
तस्याः पुत्रत्वमागम्य स्त्रियाः स पिबति स्तनौ
ततः स कापिलेयत्वं लेभे बुद्धिं च नैष्ठिकीम् १५
एतन्मे भगवानाह कापिलेयाय संभवम्
तस्य तत्कापिलेयत्वं सर्ववित्त्वमनुत्तमम् १६

सामान्यं कपिलो ज्ञात्वा धर्मज्ञानामनुत्तमम्
उपेत्य शतमाचार्यान्मोहयामास हेतुभिः १७
जनकस्त्वभिसंरक्तः कापिलेयानुदर्शनात्
उत्सृज्य शतमाचार्यान्पृष्ठतोऽनुजगाम तम् १८
तस्मै परमकल्याय प्रणताय च धर्मतः
अब्रवीत्परमं मोक्षं यत्तत्सांख्यं विधीयते १९
जातिनिर्वेदमुक्त्वा हि कर्मनिर्वेदमब्रवीत्
कर्मनिर्वेदमुक्त्वा च सर्वनिर्वेदमब्रवीत् २०
यदर्थं कर्मसंसर्गः कर्मणां च फलोदयः
तदनाश्वासिकं मोघं विनाशि चलमध्रुवम् २१
दृश्यमाने विनाशे च प्रत्यक्षे लोकसाक्षिके
आगमात्परमस्तीति ब्रुवन्नपि पराजितः २२
अनात्मा ह्यात्मनो मृत्युः क्लेशो मृत्युर्जरामयः
आत्मानं मन्यते मोहात्तदसम्यक्परं मतम् २३
अथ चेदेवमप्यस्ति यल्लोके नोपपद्यते
अजरोऽयममृत्युश्च राजासौ मन्यते तथा २४
अस्ति नास्तीति चाप्येतत्तस्मिन्नसति लक्षणे
किमधिष्ठाय तद्ब्रूयाल्लोकयात्राविनिश्चयम् २५
प्रत्यक्षं ह्येतयोर्मूलं कृतान्तैतिह्ययोरपि
प्रत्यक्षो ह्यागमोऽभिन्नः कृतान्तो वा न किंचन २६
यत्र तत्रानुमानेऽस्ति कृतं भावयतेऽपि वा
अन्यो जीवः शरीरस्य नास्तिकानां मते स्मृतः २७
रेतो वटकणीकायां घृतपाकाधिवासनम्
जातिस्मृतिरयस्कान्तः सूर्यकान्तोऽम्बुभक्षणम् २८
प्रेत्य भूतात्ययश्चैव देवताभ्युपयाचनम्
मृते कर्मनिवृत्तिश्च प्रमाणमिति निश्चयः २९
न त्वेते हेतवः सन्ति ये केचिन्मूर्तिसंस्थिताः
अमर्त्यस्य हि मर्त्येन सामान्यं नोपपद्यते ३०
अविद्याकर्मचेष्टानां केचिदाहुः पुनर्भवम्
कारणं लोभमोहौ तु दोषाणां च निषेवणम् ३१

अविद्यां क्षेत्रमाहुर्हि कर्म बीजं तथा कृतम्
तृष्णासंजननं स्नेह एष तेषां पुनर्भवः ३२
तस्मिन्व्यूढे च दग्धे च चित्ते मरणधर्मिणि
अन्योऽन्याज्जायते देहस्तमाहुः सत्त्वसंक्षयम् ३३
यदा स रूपतश्चान्यो जातितः श्रुतितोऽथतः
कथमस्मिन्स इत्येव संबन्धः स्यादसंहितः ३४
एवं सति च का प्रीतिर्दानविद्यातपोबलैः
यदन्याचरितं कर्म सर्वमन्यः प्रपद्यते ३५
यदा ह्ययमिहैवान्यैः प्राकृतैर्दुःखितो भवेत्
सुखितैर्दुःखितैर्वापि दृश्योऽप्यस्य विनिर्णयः ३६
तथा हि मुसलैर्हन्युः शरीरं तत्पुनर्भवेत्
पृथग्ज्ञानं यदन्यच्च येनैतन्नोपलभ्यते ३७
ऋतुः संवत्सरस्तिथ्यः शीतोष्णे च प्रियाप्रिये
यथातीतानि पश्यन्ति तादृशः सत्त्वसंक्षयः ३८
जरया हि परीतस्य मृत्युना वा विनाशिना
दुर्बलं दुर्बलं पूर्वं गृहस्येव विनश्यति ३९
इन्द्रियाणि मनो वायुः शोणितं मांसमस्थि च
आनुपूर्व्या विनश्यन्ति स्वं धातुमुपयान्ति च ४०
लोकयात्राविधानं च दानधर्मफलागमः
यदर्थं वेदशब्दाश्च व्यवहाराश्च लौकिकाः ४१
इति सम्यङ्मनस्येते बहवः सन्ति हेतवः
एतदस्तीदमस्तीति न किंचित्प्रतिपद्यते ४२
तेषां विमृशतामेवं तत्तत्समभिधावताम्
क्वचिन्निविशते बुद्धिस्तत्र जीर्यति वृक्षवत् ४३
एवमर्थैरनर्थैश्च दुःखिताः सर्वजन्तवः
आगमैरपकृष्यन्ते हस्तिपैर्हस्तिनो यथा ४४
अर्थांस्तथात्यन्तसुखावहांश्च लिप्सन्त एते बहवो विशुल्काः
महत्तरं दुःखमभिप्रपन्ना हित्वामिषं मृत्युवशं प्रयान्ति ४५
विनाशिनो ह्यध्रुवजीवितस्य किं बन्धुभिर्मित्रपरिग्रहैश्च
विहाय यो गच्छति सर्वमेव क्षणेन गत्वा न निवर्तते च ४६

भूव्योमतोयानलवायवो हि सदा शरीरं परिपालयन्ति
इतीदमालक्ष्य कुतो रतिर्भवेद्विनाशिनो ह्यस्य न शर्म विद्यते ४७
इदमनुपधि वाक्यमच्छलं परमनिरामयमात्मसाक्षिकम्
नरपतिरभिवीक्ष्य विस्मितः पुनरनुयोक्तुमिदं प्रचक्रमे ४८
इति श्रीमहाभारते शान्तिपर्वणि एकादशाधिकद्विशततमोऽध्यायः २११

## द्वादशाधिकद्विशततमोऽध्यायः

भीष्म उवाच
जनको जनदेवस्तु ज्ञापितः परमर्षिणा
पुनरेवानुपप्रच्छ साम्पराये भवाभवौ १
भगवन्यदिदं प्रेत्य संज्ञा भवति कस्यचित्
एवं सति किमज्ञानं ज्ञानं वा किं करिष्यति २
सर्वमुच्छेदनिष्ठं स्यात्पश्य चैतद्द्विजोत्तम
अप्रमत्तः प्रमत्तो वा किं विशेषं करिष्यति ३
असंसर्गो हि भूतेषु संसर्गो वा विनाशिषु
कस्मै क्रियेत कल्पेन निश्चयः कोऽत्र तत्त्वतः ४
तमसा हि प्रतिच्छन्नं विभ्रान्तमिव चातुरम्
पुनः प्रशमयन्वाक्यैः कविः पञ्चशिखोऽब्रवीत् ५
उच्छेदनिष्ठा नेहास्ति भावनिष्ठा न विद्यते
अयं ह्यपि समाहारः शरीरेन्द्रियचेतसाम्
वर्तते पृथगन्योन्यमप्यपाश्रित्य कर्मसु ६
धातवः पञ्चशाखोऽय खं वायुर्ज्योतिरम्बु भूः
ते स्वभावेन तिष्ठन्ति वियुज्यन्ते स्वभावतः ७
आकाशं वायुरूष्मा च स्नेहो यच्चापि पार्थिवम्
एष पञ्चसमाहारः शरीरमिति नैकधा
ज्ञानमूष्मा च वायुश्च त्रिविधः कर्मसंग्रहः ८
इन्द्रियाणीन्द्रियार्थाश्च स्वभावश्चेतना मनः
प्राणापानौ विकारश्च धातवश्चात्र निःसृताः ९
श्रवणं स्पर्शनं जिह्वा दृष्टिर्नासा तथैव च
इन्द्रियाणीति पञ्चैते चित्तपूर्वंगमा गुणाः १०

तत्र विज्ञानसंयुक्ता त्रिविधा वेदना ध्रुवा
सुखदुःखेति यामाहुरदुःखेत्यसुखेति च ११
शब्दः स्पर्शश्च रूपं च रसो गन्धश्च मूर्त्यथ
एते ह्यामरणात्पञ्च षड्गुणा ज्ञानसिद्धये १२
तेषु कर्मनिसर्गश्च सर्वतत्त्वार्थनिश्चयः
तमाहुः परमं शुक्रं बुद्धिरित्यव्ययं महत् १३
इमं गुणसमाहारमात्मभावेन पश्यतः
असम्यग्दर्शनैर्दुःखमनन्तं नोपशाम्यति १४
अनात्मेति च यद्दृष्टं तेनाहं न ममेत्यपि
वर्तते किमधिष्ठाना प्रसक्ता दुःखसंततिः १५
तत्र सम्यङ्मनो नाम त्यागशास्त्रमनुत्तमम्
शृणु यत्तव मोक्षाय भाष्यमाणं भविष्यति १६
त्याग एव हि सर्वेषामुक्तानामपि कर्मणाम्
नित्यं मिथ्याविनीतानां क्लेशो दुःखावहो मतः १७
द्रव्यत्यागे तु कर्माणि भोगत्यागे व्रतान्यपि
सुखत्यागे तपोयोगः सर्वत्यागे समापना १८
तस्य मार्गोऽयमद्वैधः सर्वत्यागस्य दर्शितः
विप्रहाणाय दुःखस्य दुर्गतिर्ह्यन्यथा भवेत् १९
पञ्च ज्ञानेन्द्रियाण्युक्त्वा मनःषष्ठानि चेतसि
मनःषष्ठानि वक्ष्यामि पञ्च कर्मेन्द्रियाणि तु २०
हस्तौ कर्मेन्द्रियं ज्ञेयमथ पादौ गतीन्द्रियम्
प्रजनानन्दयोः शेफो विसर्गे पायुरिन्द्रियम् २१
वाक्तु शब्दविशेषार्थं गतिं पञ्चान्वितां विदुः
एवमेकादशैतानि बुद्ध्या त्ववसृजेन्मनः २२
कर्णौ शब्दश्च चित्तं च त्रयः श्रवणसंग्रहे
तथा स्पर्शे तथा रूपे तथैव रसगन्धयोः २३
एवं पञ्चत्रिका ह्येते गुणास्तदुपलब्धये
येन यस्त्रिविधो भावः पर्यायात्समुपस्थितः २४
सात्त्विको राजसश्चैव तामसश्चैव ते त्रयः
त्रिविधा वेदना येषु प्रसूता सर्वसाधना २५

प्रहर्षः प्रीतिरानन्दः सुखं संशान्तचित्तता
अकुतश्चित्कुतश्चिद्वा चित्ततः सात्त्विको गुणः २६
अतुष्टिः परितापश्च शोको लोभस्तथाक्षमा
लिङ्गानि रजसस्तानि दृश्यन्ते हेत्वहेतुतः २७
अविवेकस्तथा मोहः प्रमादः स्वप्नतन्द्रिता
कथंचिदपि वर्तन्ते विविधास्तामसा गुणाः २८
तत्र यत्प्रीतिसंयुक्तं काये मनसि वा भवेत्
वर्तते सात्त्विको भाव इत्यपेक्षेत तत्तथा २९
यत्तु संतापसंयुक्तमप्रीतिकरमात्मनः
प्रवृत्तं रज इत्येव ततस्तदभिचिन्तयेत् ३०
अथ यन्मोहसंयुक्तं काये मनसि वा भवेत्
अप्रतर्क्यमविज्ञेयं तमस्तदुपधारयेत् ३१
तद्धि श्रोत्राश्रयं भूतं शब्दः श्रोत्रं समाश्रितः
नोभयं शब्दविज्ञाने विज्ञानस्येतरस्य वा ३२
एवं त्वक्चक्षुषी जिह्वा नासिका चैव पञ्चमी
स्पर्शे रूपे रसे गन्धे तानि चेतो मनश्च तत् ३३
स्वकर्मयुगपद्भावो दशस्वेतेषु तिष्ठति
चित्तमेकादशं विद्धि बुद्धिर्द्वादशमी भवेत् ३४
तेषामयुगपद्भावे उच्छेदो नास्ति तामसः
आस्थितो युगपद्भावे व्यवहारः स लौकिकः ३५
इन्द्रियाण्यवसृज्यापि दृष्ट्वा पूर्वं श्रुतागमम्
चिन्तयन्नानुपर्येति त्रिभिरेवान्वितो गुणैः ३६
यत्तमोपहतं चित्तमाशु संचारमध्रुवम्
करोत्युपरमं काले तदाहुस्तामसं सुखम् ३७
यद्यदागमसंयुक्तं न कृत्स्नमुपशाम्यति
अथ तत्राप्युपादत्ते तमो व्यक्तमिवानृतम् ३८
एवमेष प्रसंख्यातः स्वकर्मप्रत्ययी गुणः
कथंचिद्वर्तते सम्यक्केषांचिद्वा न वर्तते ३९
एवमाहुः समाहारं क्षेत्रमध्यात्मचिन्तकाः
स्थितो मनसि यो भावः स वै क्षेत्रज्ञ उच्यते ४०

एवं सति क उच्छेदः शाश्वतो वा कथं भवेत्
स्वभावाद्वर्तमानेषु सर्वभूतेषु हेतुतः ४१
यथार्णवगता नद्यो व्यक्तीर्जहति नाम च
न च स्वतां नियच्छन्ति तादृशः सत्त्वसंक्षयः ४२
एवं सति कुतः संज्ञा प्रेत्यभावे पुनर्भवेत्
प्रतिसंमिश्रिते जीवे गृह्यमाणे च मध्यतः ४३
इमां तु यो वेद विमोक्षबुद्धिमात्मानमन्विच्छति चाप्रमत्तः
न लिप्यते कर्मफलैरनिष्टैः पत्रं बिसस्येव जलेन सिक्तम् ४४
दृढैश्च पाशैर्बहुभिर्विमुक्तः प्रजानिमित्तैरपि दैवतैश्च
यदा ह्यसौ सुखदुःखे जहाति मुक्तस्तदाग्र्यां गतिमेत्यलिङ्गः
श्रुतिप्रमाणागममङ्गलैश्च शेते जरामृत्युभयादतीतः ४५
क्षीणे च पुण्ये विगते च पापे ततो निमित्ते च फले विनष्टे
अलेपमाकाशमलिङ्गमेवमास्थाय पश्यन्ति महद्ध्यसक्ताः ४६
यथोर्णनाभिः परिवर्तमानस्तन्तुक्षये तिष्ठति पात्यमानः
तथा विमुक्तः प्रजहाति दुःखं विध्वंसते लोष्ट इवाद्रिमर्च्छन् ४७
यथा रुरुः शृङ्गमथो पुराणं हित्वा त्वचं वाप्युरगो यथावत्
विहाय गच्छत्यनवेक्षमाणस्तथा विमुक्तो विजहाति दुःखम् ४८
द्रुमं यथा वाप्युदके पतन्तमुत्सृज्य पक्षी प्रपतत्यसक्तः
तथा ह्यसौ सुखदुःखे विहाय मुक्तः पराद्ध्यां गतिमेत्यलिङ्गः ४९
अपि च भवति मैथिलेन गीतं नगरमुपाहितमग्निनाभिवीक्ष्य
न खलु मम हि तु षोऽपि दह्यतेऽत्र स्वयमिदमाह किल स्म भूमिपालः ५०
इदममृतपदं विदेहराजः स्वयमिह पञ्चशिखेन भाष्यमाणः
निखिलमभिसमीक्ष्य निश्चितार्थं परमसुखी विजहार वीतशोकः ५१
इमं हि यः पठति विमोक्षनिश्चयं न हीयते सततमवेक्षते तथा
उपद्रवान्नानुभवत्यदुःखितः प्रमुच्यते कपिलमिवैत्य मैथिलः ५२
इति श्रीमहाभारते शान्तिपर्वणि द्वादशाधिकद्विशततमोऽध्यायः २१२

## त्रयोदशाधिकद्विशततमोऽध्यायः

युधिष्ठिर उवाच
किं कुर्वन्सुखमाप्नोति किं कुर्वन्दुःखमाप्नुते

किं कुर्वन्निर्भयो लोके सिद्धश्चरति भारत १
भीष्म उवाच
दममेव प्रशंसन्ति वृद्धाः श्रुतिसमाधयः
सर्वेषामेव वर्णानां ब्राह्मणस्य विशेषतः २
नादान्तस्य क्रियासिद्धिर्यथावदुपलभ्यते
क्रिया तपश्च वेदाश्च दमे सर्वं प्रतिष्ठितम् ३
दमस्तेजो वर्धयति पवित्रं दम उच्यते
विपाप्मा निर्भयो दान्तः पुरुषो विन्दते महत् ४
सुखं दान्तः प्रस्वपिति सुखं च प्रतिबुध्यते
सुखं लोके विपर्येति मनश्चास्य प्रसीदति ५
तेजो दमेन ध्रियते न तत्तीक्ष्णोऽधिगच्छति
अमित्रांश्च बहून्नित्यं पृथगात्मनि पश्यति ६
क्रव्याद्भ्य इव भूतानामदान्तेभ्यः सदा भयम्
तेषां विप्रतिषेधार्थं राजा सृष्टः स्वयंभुवा ७
आश्रमेषु च सर्वेषु दम एव विशिष्यते
यच्च तेषु फलं धर्मे भूयो दान्ते तदुच्यते ८
तेषां लिङ्गानि वक्ष्यामि येषां समुदयो दमः
अकार्पण्यमसंरम्भः संतोषः श्रद्दधानता ९
अक्रोध आर्जवं नित्यं नातिवादो न मानिता
गुरुपूजानसूया च दया भूतेष्वपैशुनम् १०
जनवादमृषावादस्तुतिनिन्दाविवर्जनम्
साधुकामश्चास्पृहयन्नायाति प्रत्ययं नृषु ११
अवैरकृत्सूपचारः समो निन्दाप्रशंसयोः
सुवृत्तः शीलसंपन्नः प्रसन्नात्मात्मवान्बुधः
प्राप्य लोके च सत्कारं स्वर्गं वै प्रेत्य गच्छति १२
सर्वभूतहिते युक्तो न स्मयाद्द्वेष्टि वै जनम्
महाह्रद इवाक्षोभ्य प्रज्ञातृप्तः प्रसीदति १३
अभयं सर्व भूतेभ्यः सर्वेषामभयं यतः
नमस्यः सर्वभूतानां दान्तो भवति ज्ञानवान् १४
न हृष्यति महत्यर्थे व्यसने च न शोचति

स वै परिमितप्रज्ञः स दान्तो द्विज उच्यते १५
कर्मभिः श्रुतसंपन्नः सद्भिराचरितैः शुभैः
सदैव दमसंयुक्तस्तस्य भुङ्क्ते महत्फलम् १६
अनसूया क्षमा शान्तिः संतोषः प्रियवादिता
सत्यं दानमनायासो नैष मार्गो दुरात्मनाम् १७
कामक्रोधौ वशे कृत्वा ब्रह्मचारी जितेन्द्रियः
विक्रम्य घोरे तपसि ब्राह्मणः संशितव्रतः
कालाकाङ्क्षी चरेल्लोकान्निरपाय इवात्मवान् १८
इति श्रीमहाभारते शान्तिपर्वणि त्रयोदशाधिकद्विशततमोऽध्यायः २१३

## चतुर्दशाधिकद्विशततमोऽध्यायः

युधिष्ठिर उवाच
द्विजातयो व्रतोपेता यदिदं भुञ्जते हविः
अन्नं ब्राह्मणकामाय कथमेतत्पितामह १
भीष्म उवाच
अवेदोक्तव्रतोपेता भुञ्जानाः कार्यकारिणः
वेदोक्तेषु च भुञ्जाना व्रतलुप्ता युधिष्ठिर २
युधिष्ठिर उवाच
यदिदं तप इत्याहुरुपवासं पृथग्जनाः
एतत्तपो महाराज उताहो किं तपो भवेत् ३
भीष्म उवाच
मासपक्षोपवासेन मन्यन्ते यत्तपो जनाः
आत्मतन्त्रोपघातः स न तपस्तत्सतां मतम्
त्यागश्च सन्नतिश्चैव शिष्यते तप उत्तमम् ४
सदोपवासी च भवेद्ब्रह्मचारी सदैव च
मुनिश्च स्यात्सदा विप्रो दैवतं च सदा भजेत् ५
कुटुम्बिको धर्मकामः सदास्वप्नश्च भारत
अमांसाशी सदा च स्यात्पवित्रं च सदा जपेत् ६
अमृताशी सदा च स्यान्न च स्याद्विषभोजनः
विघसाशी सदा च स्यात्सदा चैवातिथिप्रियः ७

युधिष्ठिर उवाच
कथं सदोपवासी स्याद्ब्रह्मचारी कथं भवेत्
विघसाशी कथं च स्यात्सदा चैवातिथिप्रियः ८
भीष्म उवाच
अन्तरा प्रातराशं च सायमाशं तथैव च
सदोपवासी च भवेद्यो न भुङ्क्ते कथंचन ९
भार्यां गच्छन्ब्रह्मचारी ऋतौ भवति ब्राह्मणः
ऋतवादी सदा च स्याज्ज्ञाननित्यश्च यो नरः १०
अभक्षयन्वृथामांसममांसाशी भवत्युत
दाननित्यः पवित्रश्च अस्वप्नश्च दिवास्वपन् ११
भृत्यातिथिषु यो भुङ्क्ते भुक्तवत्सु सदा स ह
अमृतं सकलं भुङ्क्त इति विद्धि युधिष्ठिर १२
अभुक्तवत्सु नाश्नानः सततं यस्तु वै द्विजः
अभोजनेन तेनास्य जितः स्वर्गो भवत्युत १३
देवताभ्यः पितृभ्यश्च भृत्येभ्योऽतिथिभिः सह
अवशिष्टं तु योऽश्नाति तमाहुर्विघसाशिनम् १४
तेषां लोका ह्यपर्यन्ताः सदने ब्रह्मणा सह
उपस्थिताश्चाप्सरोभिः परियान्ति दिवौकसः १५
देवताभिश्च ये सार्धं पितृभिश्चोपभुञ्जते
रमन्ते पुत्रपौत्रैश्च तेषां गतिरनुत्तमा १६
इति श्रीमहाभारते शान्तिपर्वणि चतुर्दशाधिकद्विशततमोऽध्यायः २१४

## पञ्चदशाधिकद्विशततमोऽध्यायः

युधिष्ठिर उवाच
यदिदं कर्म लोकेऽस्मिञ्शुभं वा यदि वाशुभम्
पुरुषं योजयत्येव फलयोगेन भारत १
कर्ता स्वित्तस्य पुरुष उताहो नेति संशयः
एतदिच्छामि तत्त्वेन त्वत्तः श्रोतुं पितामह २
भीष्म उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्

प्रह्लादस्य च संवादमिन्द्रस्य च युधिष्ठिर ३
असक्तं धूतपाप्मानं कुले जातं बहुश्रुतम्
अस्तम्भमनहंकारं सत्त्वस्थं समये रतम् ४
तुल्यनिन्दास्तुतिं दान्तं शून्यागारनिवेशनम्
चराचराणां भूतानां विदितप्रभवाप्ययम् ५
अक्रुध्यन्तमहृष्यन्तमप्रियेषु प्रियेषु च
काञ्चने वाथ लोष्टे वा उभयोः समदर्शनम् ६
आत्मनिःश्रेयसज्ञाने धीरं निश्चितनिश्चयम्
परावरज्ञं भूतानां सर्वज्ञं समदर्शनम् ७
शक्रः प्रह्लादमासीनमेकान्ते संयतेन्द्रियम्
बुभुत्समानस्तत्प्रज्ञामभिगम्येदमब्रवीत् ८
यैः कैश्चित्संमतो लोके गुणैः स्यात्पुरुषो नृषु
भवत्यनपगान्सर्वांस्तान्गुणाँल्लक्षयामहे ९
अथ ते लक्ष्यते बुद्धिः समा बालजनैरिह
आत्मानं मन्यमानः सञ्श्रेयः किमिह मन्यसे १०
बद्धः पाशैश्च्युतः स्थानाद्द्विषतां वशमागतः
श्रिया विहीनः प्रह्लाद शोचितव्ये न शोचसि ११
प्रज्ञालाभात्तु दैतेय उताहो धृतिमत्तया
प्रह्लाद स्वस्थरूपोऽसि पश्यन्व्यसनमात्मनः १२
इति संचोदितस्तेन धीरो निश्चितनिश्चयः
उवाच श्लक्ष्णया वाचा स्वां प्रज्ञामनुवर्णयन् १३
प्रवृत्तिं च निवृत्तिं च भूतानां यो न बुध्यते
तस्य स्तम्भो भवेद्बाल्यान्नास्ति स्तम्भोऽनुपश्यतः १४
स्वभावात्संप्रवर्तन्ते निवर्तन्ते तथैव च
सर्वे भावास्तथाभावाः पुरुषार्थो न विद्यते १५
पुरुषार्थस्य चाभावे नास्ति कश्चित्स्वकारकः
स्वयं न कुर्वतस्तस्य जातु मानो भवेदिह १६
यस्तु कर्तारमात्मानं मन्यते साध्वसाधुनोः
तस्य दोषवती प्रज्ञा स्वमूर्त्यज्ञेति मे मतिः १७
यदि स्यात्पुरुषः कर्ता शक्रात्मश्रेयसे ध्रुवम्

आरम्भास्तस्य सिध्येरन्न च जातु पराभवेत् १८
अनिष्टस्य हि निर्वृत्तिरनिवृत्तिः प्रियस्य च
लक्ष्यते यतमानानां पुरुषार्थस्ततः कुतः १९
अनिष्टस्याभिनिर्वृत्तिमिष्टसंवृत्तिमेव च
अप्रयत्नेन पश्यामः केषांचित्तत्स्वभावतः २०
प्रतिरूपधराः केचिद्दृश्यन्ते बुद्धिसत्तमाः
विरूपेभ्योऽल्पबुद्धिभ्यो लिप्समाना धनागमम् २१
स्वभावप्रेरिताः सर्वे निविशन्ते गुणा यदा
शुभाशुभास्तदा तत्र तस्य किं मानकारणम् २२
स्वभावादेव तत्सर्वमिति मे निश्चिता मतिः
आत्मप्रतिष्ठिता प्रज्ञा मम नास्ति ततोऽन्यथा २३
कर्मजं त्विह मन्येऽह फलयोगं शुभाशुभम्
कर्मणां विषयं कृत्स्नमहं वक्ष्यामि तच्छृणु २४
यथा वेदयते कश्चिदोदनं वायसो वदन्
एवं सर्वाणि कर्माणि स्वभावस्यैव लक्षणम् २५
विकारानेव यो वेद न वेद प्रकृतिं पराम्
तस्य स्तम्भो भवेद्बाल्यान्नास्ति स्तम्भोऽनुपश्यतः २६
स्वभावभाविनो भावान्सर्वानिवेह निश्चये
बुध्यमानस्य दर्पो वा मानो वा किं करिष्यति २७
वेद धर्मविधिं कृत्स्नं भूतानां चाप्यनित्यताम्
तस्माच्छक्र न शोचामि सर्वं ह्येवेदमन्तवत् २८
निर्ममो निरहंकारो निरीहो मुक्तबन्धनः
स्वस्थोऽव्यपेतः पश्यामि भूतानां प्रभवाप्ययौ २९
कृतप्रज्ञस्य दान्तस्य वितृष्णस्य निराशिषः
नायासो विद्यते शक्र पश्यतो लोकविद्यया ३०
प्रकृतौ च विकारे च न मे प्रीतिर्न च द्विषे
द्वेष्टारं न च पश्यामि यो ममाद्य ममायते ३१
नोर्ध्वं नावाङ्न तिर्यक्च न क्वचिच्छक्र कामये
न विज्ञाने न विज्ञेये नाज्ञाने शर्म विद्यते ३२
शक्र उवाच

येनैषा लभ्यते प्रज्ञा येन शान्तिरवाप्यते
प्रब्रूहि तमुपायं मे सम्यक्प्रह्लाद पृच्छते ३३
प्रह्लाद उवाच
आर्जवेनाप्रमादेन प्रसादेनात्मवत्तया
वृद्धशुश्रूषया शक्र पुरुषो लभते महत् ३४
स्वभावाल्लभते प्रज्ञां शान्तिमेति स्वभावतः
स्वभावादेव तत्सर्वं यत्किंचिदनुपश्यसि ३५
भीष्म उवाच
इत्युक्तो दैत्यपतिना शक्रो विस्मयमागमत्
प्रीतिमांश्च तदा राजंस्तद्वाक्यं प्रत्यपूजयत् ३६
स तदाभ्यर्च्य दैत्येन्द्रं त्रैलोक्यपतिरीश्वरः
असुरेन्द्रमुपामन्त्र्य जगाम स्वं निवेशनम् ३७
इति श्रीमहाभारते शान्तिपर्वणि पञ्चदशाधिकद्विशततमोऽध्यायः २१५

## षडिंवशत्यधिकद्विशततमोऽध्यायः

व्यास उवाच
भूतग्रामे नियुक्तं यत्तदेतत्कीर्तितं मया
ब्राह्मणस्य तु यत्कृत्यं तत्ते वक्ष्यामि पृच्छते १
जातकर्मप्रभृत्यस्य कर्मणां दक्षिणावताम्
क्रिया स्यादासमावृत्तेराचार्ये वेदपारगे २
अधीत्य वेदानखिलान्गुरुशुश्रूषणे रतः
गुरूणामनृणो भूत्वा समावर्तेत यज्ञवित् ३
आचार्येणाभ्यनुज्ञातश्चतुर्णामेकमाश्रमम्
आविमोक्षाच्छरीरस्य सोऽनुतिष्ठेद्यथाविधि ४
प्रजासर्गेण दारैश्च ब्रह्मचर्येण वा पुनः
वने गुरुसकाशे वा यतिधर्मेण वा पुनः ५
गृहस्थस्त्वेव सर्वेषां चतुर्णां मूलमुच्यते
तत्र पक्वकषायो हि दान्तः सर्वत्र सिध्यति ६
प्रजावाञ्श्रोत्रियो यज्वा मुक्तो दिव्यैस्त्रिभिरृणैः
अथान्यानाश्रमान्पश्चात्पूतो गच्छति कर्मभिः ७

यत्पृथिव्यां पुरायतमं विद्यास्थानं तदावसेत्
यतेत तस्मिन्प्रामारायं गन्तुं यशसि चोत्तमे ८
तपसा वा सुमहता विद्यानां पाररोन वा
इज्यया वा प्रदानैर्वा विप्रारणां वर्धते यशः ९
यावदस्य भवत्यस्मिल्लोँके कीर्तिर्यशस्करी
तावत्पुरायकृताल्लोँकाननन्तान्पुरुषोऽश्नुते १०
अध्यापयेदधीयीत याजयेत यजेत च
न वृथा प्रतिगृह्णीयान्न च दद्यात्कथंचन ११
याज्यतः शिष्यतो वापि कन्यया वा धनं महत्
यद्यागच्छेद्यजेद्दद्यान्नैकोऽश्नीयात्कथंचन १२
गृहमावसतो ह्यस्य नान्यत्तीर्थं प्रतिग्रहात्
देवर्षिपितृगुर्वर्थं वृद्धातुरबुभुक्षताम् १३
अन्तर्हिताभितप्तानां यथाशक्ति बुभूषताम्
द्रव्यारणामतिशक्त्यापि देयमेषां कृतादपि १४
अर्हतामनुरूपारणां नादेयं ह्यस्ति किंचन
उच्चैःश्रवसमप्यश्वं प्रापणीयं सतां विदुः १५
अनुनीय तथा काव्यः सत्यसंधो महाव्रतः
स्वैः प्रारौर्ब्राह्मरणप्रारणान्परित्राय दिवं गतः १६
रन्तिदेवश्च सांकृत्यो वसिष्ठाय महात्मने
अपः प्रदाय शीतोष्णा नाकपृष्ठे महीयते १७
आत्रेयश्चन्द्रदमयोरर्हतोर्विविधं धनम्
दत्त्वा लोकान्ययौ धीमाननन्तान्स महीपतिः १८
शिबिरौशीनरोऽङ्गानि सुतं च प्रियमौरसम्
ब्राह्मरणार्थमुपाकृत्य नाकपृष्ठमितो गतः १९
प्रतर्दनः काशिपतिः प्रदाय नयने स्वके
ब्राह्मरणायातुलां कीर्तिमिह चामुत्र चाश्नुते २०
दिव्यं मृष्टशलाकं तु सौवर्णं परमर्द्धिमत्
छत्रं देवावृधो दत्त्वा सराष्ट्रोऽभ्यपतद्दिवम् २१
सांकृतिश्च तथात्रेयः शिष्येभ्यो ब्रह्म निर्गुरणम्
उपदिश्य महातेजा गतो लोकाननुत्तमान् २२

अम्बरीषो गवां दत्त्वा ब्राह्मणेभ्यः प्रतापवान्
अर्बुदानि दशैकं च सराष्ट्रोऽभ्यपतद्दिवम् २३
सावित्री कुण्डले दिव्ये शरीरं जनमेजयः
ब्राह्मणार्थे परित्यज्य जग्मतुर्लोकमुत्तमम् २४
सर्वरत्नं वृषादर्भो युवनाश्वः प्रियाः स्त्रियः
रम्यमावसथं चैव दत्त्वामुं लोकमास्थितः २५
निमी राष्ट्रं च वैदेहो जामदग्न्यो वसुंधराम्
ब्राह्मणेभ्यो ददौ चापि गयश्चोर्वीं सपत्तनाम् २६
अवर्षति च पर्जन्ये सर्वभूतानि चासकृत्
वसिष्ठो जीवयामास प्रजापतिरिव प्रजाः २७
करंधमस्य पुत्रस्तु मरुतो नृपतिस्तथा
कन्यामङ्गिरसे दत्त्वा दिवमाशु जगाम ह २८
ब्रह्मदत्तश्च पाञ्चाल्यो राजा बुद्धिमतां वरः
निधिं शङ्खं द्विजाग्र्येभ्यो दत्त्वा लोकानवाप्तवान् २९
राजा मित्रसहश्चापि वसिष्ठाय महात्मने
मदयन्तीं प्रियां दत्त्वा तया सह दिवं गतः ३०
सहस्रजिच्च राजर्षिः प्राणानिष्टान्महायशाः
ब्राह्मणार्थे परित्यज्य गतो लोकाननुत्तमान् ३१
सर्वकामैश्च संपूर्णं दत्त्वा वेश्म हिरण्मयम्
मुद्गलाय गतः स्वर्गं शतद्युम्नो महीपतिः ३२
नाम्ना च द्युतिमान्नाम शाल्वराजः प्रतापवान्
दत्त्वा राज्यमृचीकाय गतो लोकाननुत्तमान् ३३
मदिराश्वश्च राजर्षिर्दत्त्वा कन्यां सुमध्यमाम्
हिरण्यहस्ताय गतो लोकान्देवैरभिष्टुतान् ३४
लोमपादश्च राजर्षिः शान्तां दत्वा सुतां प्रभुः
ऋश्यशृङ्गाय विपुलैः सर्वकामैरयुज्यत ३५
दत्त्वा शतसहस्रं तु गवां राजा प्रसेनजित्
सवत्सानां महातेजा गतो लोकाननुत्तमान् ३६
एते चान्ये च बहवो दानेन तपसा च ह
महात्मानो गताः स्वर्गं शिष्टात्मानो जितेन्द्रियाः ३७

तेषां प्रतिष्ठिता कीर्तिर्यावत्स्थास्यति मेदिनी
दानयज्ञप्रजासर्गैरेते हि दिवमाप्नुवन् ३८
इति श्रीमहाभारते शान्तिपर्वणि षडिंवशत्यधिकद्विशततमोऽध्यायः २२६

सप्तविंशत्यधिकद्विशततमोऽध्यायः

व्यास उवाच
त्रयीविद्यामवेक्षेत वेदेषूक्तामथाङ्गतः
ऋक्सामवर्णाक्षरतो यजुषोऽथर्वणस्तथा १
वेदवादेषु कुशला ह्यध्यात्मकुशलाश्च ये
सत्त्ववन्तो महाभागाः पश्यन्ति प्रभवाप्ययौ २
एवं धर्मेण वर्तेत क्रियाः शिष्टवदाचरेत्
असंरोधेन भूतानां वृत्तिं लिप्सेत वै द्विजः ३
सद्भ्य आगतविज्ञानः शिष्टः शास्त्रविचक्षणः
स्वधर्मेण क्रिया लोके कुर्वाणः सत्यसंगरः ४
तिष्ठत्येतेषु गृहवान्षट्सु कर्मसु स द्विजः
पञ्चभिः सततं यज्ञैः श्रद्दधानो यजेत च ५
धृतिमानप्रमत्तश्च दान्तो धर्मविदात्मवान्
वीतहर्षभयक्रोधो ब्राह्मणो नावसीदति ६
दानमध्ययनं यज्ञस्तपो ह्रीरार्जवं दमः
एतैर्वर्धयते तेजः पाप्मानं चापकर्षति ७
धूतपाप्मा तु मेधावी लघ्वाहारो जितेन्द्रियः
कामक्रोधौ वशे कृत्वा निनीषेद्ब्रह्मणः पदम् ८
अग्नींश्च ब्राह्मणांश्चार्चेद्देवताः प्रणमेत च
वर्जयेद्रुषतीं वाचं हिंसां चाधर्मसंहिताम् ९
एषा पूर्वतरा वृत्तिर्ब्राह्मणस्य विधीयते
दानागमेन कर्माणि कुर्वन्कर्मसु सिध्यति १०
पञ्चेन्द्रियजलां घोरां लोभकूलां सुदुस्तराम्
मन्युपङ्कामनाधृष्यां नदीं तरति बुद्धिमान् ११
काममन्युद्धतं यत्स्यान्नित्यमत्यन्तमोहितम्
महता विधिदृष्टेन बलेनाप्रतिघातिना

स्वभावस्रोतसा वृत्तमुह्यते सततं जगत् १२
कालोदकेन महता वर्षावर्तेन संततम्
मासोर्मिणर्तुवेगेन पक्षोलपतृणेन च १३
निमेषोन्मेषफेनेन अहोरात्रजवेन च
कामग्राहेण घोरेण वेदयज्ञप्लवेन च १४
धर्मद्वीपेन भूतानां चार्थकामरवेण च
ऋतसोपानतीरेण विहिंसातरुवाहिना १५
युगह्रदौघमध्येन ब्रह्मप्रायभवेन च
धात्रा सृष्टानि भूतानि कृष्यन्ते यमसादनम् १६
एतत्प्रज्ञामयैर्धीरा निस्तरन्ति मनीषिणः
प्लवैरप्लववन्तो हि किं करिष्यन्त्यचेतसः १७
उपपन्नं हि यत्प्राज्ञो निस्तरेन्नेतरो जनः
दूरतो गुणदोषौ हि प्राज्ञः सर्वत्र पश्यति १८
संशयात्मा स कामात्मा चलचित्तोऽल्पचेतनः
अप्राज्ञो न तरत्येव यो ह्यास्ते न स गच्छति १९
अप्लवो हि महादोषमुह्यमानोऽधिगच्छति
कामग्राहगृहीतस्य ज्ञानमप्यस्य न प्लवः २०
तस्मादुन्मज्जनस्यार्थे प्रयतेत विचक्षणः
एतदुन्मज्जनं तस्य यदयं ब्राह्मणो भवेत् २१
त्र्यवदाते कुले जातस्त्रिसंदेहस्त्रिकर्मकृत्
तस्मादुन्मज्जनस्तिष्ठेन्निस्तरेत्प्रज्ञया यथा २२
संस्कृतस्य हि दान्तस्य नियतस्य कृतात्मनः
प्राज्ञस्यानन्तरा सिद्धिरिह लोके परत्र च २३
वर्तते तेषु गृहवानक्रुध्यन्ननसूयकः
पञ्चभिः सततं यज्ञैर्विघसाशी यजेत च २४
सतां वृत्तेन वर्तेत क्रियाः शिष्टवदाचरेत्
असंरोधेन धर्मस्य वृत्तिं लिप्सेदगर्हिताम् २५
श्रुतिविज्ञानतत्त्वज्ञः शिष्टाचारो विचक्षणः
स्वधर्मेण क्रियावांश्च कर्मणा सोऽप्यसंकरः २६
क्रियावाञ्श्रद्दधानश्च दाता प्राज्ञोऽनसूयकः

धर्माधर्मविशेषज्ञः सर्वं तरति दुस्तरम् २७
धृतिमानप्रमत्तश्च दान्तो धर्मविदात्मवान्
वीतहर्षभयक्रोधो ब्राह्मणो नावसीदति २८
एषा पूर्णतरा वृत्तिर्ब्राह्मणस्य विधीयते
ज्ञानवित्त्वेन कर्माणि कुर्वन्सर्वत्र सिध्यति २९
अधर्मं धर्मकामो हि करोतीहाविचक्षणः
धर्मं चाधर्मसंकाशं शोचन्निव करोति सः ३०
धर्मं करोमीति करोत्यधर्ममधर्मकामश्च करोति धर्मम्
उभे बालः कर्मणी न प्रजानन्स जायते म्रियते चापि देही ३१
इति श्रीमहाभारते शान्तिपर्वणि सप्तविंशत्यधिकद्विशततमोऽध्यायः २२७

## अष्टाविंशत्यधिकद्विशततमोऽध्यायः

व्यास उवाच
अथ चेद्रोचयेदेतद्द्रुह्येत मनसा तथा
उन्मज्जंश्च निमज्जंश्च ज्ञानवान्प्लववान्भवेत् १
प्रज्ञया निर्मितैर्धीरास्तारयन्त्यबुधान्प्लवैः
नाबुधास्तारयन्त्यन्यानात्मानं वा कथंचन २
छिन्नदोषो मुनिर्योगान्युक्तो युञ्जीत द्वादश
दश कर्मसुखानर्थानुपायापायनिर्भयः ३
चक्षुराचारवित्प्राज्ञो मनसा दर्शनेन च
यच्छेद्वाङ्मनसी बुद्ध्या य इच्छेज्ज्ञानमुत्तमम्
ज्ञानेन यच्छेदात्मानं य इच्छेच्छान्तिमात्मनः ४
एतेषां चेदनुद्रष्टा पुरुषोऽपि सुदारुणः
यदि वा सर्ववेदज्ञो यदि वाप्यनृचोऽजपः ५
यदि वा धार्मिको यज्वा यदि वा पापकृत्तमः
यदि वा पुरुषव्याघ्रो यदि वा क्लैब्यधारिता ६
तरत्येव महादुर्गं जरामरणसागरम्
एवं ह्येतेन योगेन युञ्जानोऽप्येकमन्ततः
अपि जिज्ञासमानो हि शब्दब्रह्मातिवर्तते ७
धर्मोपस्थो ह्रीवरूथ उपायापायकूबरः

अपानाक्षः प्राणयुगः प्रज्ञायुर्जीवबन्धनः ८
चेतनाबन्धुरश्चारुराचारग्रहनेमिवान्
दर्शनस्पर्शनवहो घ्राणश्रवणवाहनः ९
प्रज्ञानाभिः सर्वतन्त्रप्रतोदो ज्ञानसारथिः
क्षेत्रज्ञाधिष्ठितो धीरः श्रद्धादमपुरःसरः १०
त्यागवर्त्मानुगः क्षेम्यः शौचगो ध्यानगोचरः
जीवयुक्तो रथो दिव्यो ब्रह्मलोके विराजते ११
अथ संत्वरमाणस्य रथमेतं युयुक्षतः
अक्षरं गन्तुमनसो विधिं वक्ष्यामि शीघ्रगम् १२
सप्त यो धारणाः कृत्स्ना वाग्यतः प्रतिपद्यते
पृष्ठतः पार्श्वतश्चान्या यावत्यस्ताः प्रधारणाः १३
क्रमशः पार्थिवं यच्च वायव्यं खं तथा पयः
ज्योतिषो यत्तदैश्वर्यमहंकारस्य बुद्धितः १४
अव्यक्तस्य तथैश्वर्यं क्रमशः प्रतिपद्यते
विक्रमाश्चापि यस्यैते तथा युङ्क्ते स योगतः १५
अथास्य योगयुक्तस्य सिद्धिमात्मनि पश्यतः
निर्मथ्यमानः सूक्ष्मत्वाद्रूपाणीमानि दर्शयेत् १६
शैशिरस्तु यथा धूमः सूक्ष्मः संश्रयते नभः
तथा देहाद्विमुक्तस्य पूर्वरूपं भवत्युत १७
अथ धूमस्य विरमे द्वितीयं रूपदर्शनम्
जलरूपमिवाकाशे तत्रैवात्मनि पश्यति १८
अपां व्यतिक्रमे चापि वह्निरूपं प्रकाशते
तस्मिन्नुपरते चास्य पीतवस्त्रवदिष्यते
ऊर्णारूपसवर्णं च तस्य रूपं प्रकाशते १९
अथ श्वेतां गतिं गत्वा वायव्यं सूक्ष्ममप्यजः
अशुक्लं चेतसः सौक्ष्म्यमव्यक्तं ब्रह्मणोऽस्य वै २०
एतेष्वपि हि जातेषु फलजातानि मे शृणु
जातस्य पार्थिवैश्वर्ये सृष्टिरिष्टा विधीयते २१
प्रजापतिरिवाक्षोभ्यः शरीरात्सृजति प्रजाः
अङ्गुल्यङ्गुष्ठमात्रेण हस्तपादेन वा तथा २२

पृथिवीं कम्पयत्येको गुणो वायोरिति स्मृतः
आकाशभूतश्चाकाशे सवर्णत्वात्प्रणश्यति २३
वर्णतो गृह्यते चापि कामात्पिबति चाशयान्
न चास्य तेजसा रूपं दृश्यते शाम्यते तथा २४
अहंकारस्य विजितेः पञ्चैते स्युर्वशानुगाः
षण्णामात्मनि बुद्धौ च जितायां प्रभवत्यथ २५
निर्दोषा प्रतिभा ह्येनं कृत्स्ना समभिवर्तते
तथैव व्यक्तमात्मानमव्यक्तं प्रतिपद्यते २६
यतो निःसरते लोको भवति व्यक्तसंज्ञकः
तत्राव्यक्तमयीं चैव संख्या पूर्वं निबोध मे २७
पञ्चविंशतितत्त्वानि तुल्यान्युभयतः समम्
योगे सांख्येऽपि च तथा विशेषांस्तत्र मे शृणु २८
प्रोक्तं तद्व्यक्तमित्येव जायते वर्धते च यत्
जीर्यते म्रियते चैव चतुर्भिर्लक्षणैर्युतम् २९
विपरीतमतो यत्तु तदव्यक्तमुदाहृतम्
द्वावात्मानौ च वेदेषु सिद्धान्तेष्वप्युदाहृतौ ३०
चतुर्लक्षणजं त्वन्यं चतुर्वर्गं प्रचक्षते
व्यक्तमव्यक्तजं चैव तथा बुद्धमथेतरत्
सत्त्वं क्षेत्रज्ञ इत्येतद्द्वयमप्यनुदर्शितम् ३१
द्वावात्मानौ च वेदेषु विषयेषु च रज्यतः
विषयात्प्रतिसंहारः सांख्यानां सिद्धिलक्षणम् ३२
निर्ममश्चानहंकारो निर्द्वंद्वश्छिन्नसंशयः
नैव क्रुध्यति न द्वेष्टि नानृता भाषते गिरः ३३
आक्रुष्टस्ताडितश्चैव मैत्रेण ध्याति नाशुभम्
वाग्दण्डकर्ममनसां त्रयाणां च निवर्तकः ३४
समः सर्वेषु भूतेषु ब्रह्माणमभिवर्तते
नैवेच्छति न चानिच्छो यात्रामात्रव्यवस्थितः ३५
अलोलुपोऽव्यथो दान्तो न कृती न निराकृतिः
नास्येन्द्रियमनेकाग्रं नातिक्षिप्तमनोरथः
अहिंस्रः सर्वभूतानामीदृक्सांख्यो विमुच्यते ३६

अथ योगाद्विमुच्यन्ते कारणैर्यैर्निबोध मे
योगैश्वर्यमतिक्रान्तो योऽतिक्रामति मुच्यते ३७
इत्येषा भावजा बुद्धिः कथिता ते न संशयः
एवं भवति निर्द्वंद्वो ब्रह्माणं चाधिगच्छति ३८
इति श्रीमहाभारते शान्तिपर्वणि अष्टाविंशत्यधिकद्विशततमोऽध्यायः २२८

## एकोनत्रिंशदधिकद्विशततमोऽध्यायः

व्यास उवाच
अथ ज्ञानप्लवं धीरो गृहीत्वा शान्तिमास्थितः
उन्मज्जंश्च निमज्जंश्च ज्ञानमेवाभिसंश्रयेत् १
शुक उवाच
किं तज्ज्ञानमथो विद्या यया निस्तरति द्वयम्
प्रवृत्तिलक्षणो धर्मो निवृत्तिरिति चैव हि २
व्यास उवाच
यस्तु पश्येत्स्वभावेन विना भावमचेतनः
पुष्यते च पुनः सर्वान्प्रज्ञया मुक्तहेतुकः ३
येषां चैकान्तभावेन स्वभावः कारणं मतम्
पूत्वा तृणबूसीकां वै ते लभन्ते न किंचन ४
ये चैनं पक्षमाश्रित्य वर्तयन्त्यल्पचेतसः
स्वभावं कारणं ज्ञात्वा न श्रेयः प्राप्नुवन्ति ते ५
स्वभावो हि विनाशाय मोहकर्ममनोभवः
निरुक्तमेतयोरेतत्स्वभावपरभावयोः ६
कृष्यादीनि हि कर्माणि सस्यसंहरणानि च
प्रज्ञावद्भिः प्रक्लृप्तानि यानासनगृहाणि च ७
आक्रीडानां गृहाणां च गदानामगदस्य च
प्रज्ञावन्तः प्रवक्तारो ज्ञानवद्भिरनुष्ठिताः ८
प्रज्ञा संयोजयत्यर्थैः प्रज्ञा श्रेयोऽधिगच्छति
राजानो भुञ्जते राज्यं प्रज्ञया तुल्यलक्षणाः ९
पारावर्यं तु भूतानां ज्ञानेनैवोपलभ्यते
विद्यया तात सृष्टानां विद्यैव परमा गतिः १०

भूतानां जन्म सर्वेषां विविधानां चतुर्विधम्
जराय्वण्डमथोद्भेदं स्वेदं चाप्युपलक्षयेत् ११
स्थावरेभ्यो विशिष्टानि जङ्गमान्युपलक्षयेत्
उपपन्नं हि यच्चेष्टा विशिष्येत विशेष्ययोः १२
आहुर्द्विबहुपादानि जङ्गमानि द्वयानि च
बहुपाद्भ्यो विशिष्टानि द्विपादानि बहून्यपि १३
द्विपदानि द्वयान्याहुः पार्थिवानीतराणि च
पार्थिवानि विशिष्टानि तानि ह्यन्नानि भुञ्जते १४
पार्थिवानि द्वयान्याहुर्मध्यमान्युत्तमानि च
मध्यमानि विशिष्टानि जातिधर्मोपधारणात् १५
मध्यमानि द्वयान्याहुर्धर्मज्ञानीतराणि च
धर्मज्ञानि विशिष्टानि कार्याकार्योपधारणात् १६
धर्मज्ञानि द्वयान्याहुर्वेदज्ञानीतराणि च
वेदज्ञानि विशिष्टानि वेदो ह्येषु प्रतिष्ठितः १७
वेदज्ञानि द्वयान्याहुः प्रवक्तृणीतराणि च
प्रवक्तृणि विशिष्टानि सर्वधर्मोपधारणात् १८
विज्ञायन्ते हि यैर्वेदाः सर्वधर्मक्रियाफलाः
सयज्ञाः सखिला वेदाः प्रवक्तृभ्यो विनिःसृताः १९
प्रवक्तृणि द्वयान्याहुरात्मज्ञानीतराणि च
आत्मज्ञानि विशिष्टानि जन्माजन्मोपधारणात् २०
धर्मद्वयं हि यो वेद स सर्वः सर्वधर्मविद्
स त्यागी सत्यसंकल्पः स तु क्षान्तः स ईश्वरः २१
धर्मज्ञानप्रतिष्ठं हि तं देवा ब्राह्मणं विदुः
शब्दब्रह्मणि निष्णातं परे च कृतनिश्चयम् २२
अन्तःस्थं च बहिष्ठं च ये ऽधियज्ञाधिदैवतम्
जानन्ति तान्नमस्यामस्ते देवास्तात ते द्विजाः २३
तेषु विश्वमिदं भूतं साग्रं च जगदाहितम्
तेषां माहात्म्यभावस्य सदृशं नास्ति किंचन २४
आदिं ते निधनं चैव कर्म चातीत्य सर्वशः
चतुर्विधस्य भूतस्य सर्वस्येशाः स्वयंभुवः २५

इति श्रीमहाभारते शान्तिपर्वणि एकोनत्रिंशदधिकद्विशततमोऽध्यायः २२९

## त्रिंशदधिकद्विशततमोऽध्यायः

व्यास उवाच
एषा पूर्वतरा वृत्तिर्ब्राह्मणस्य विधीयते
ज्ञानवानेव कर्माणि कुर्वन्सर्वत्र सिध्यति १
तत्र चेन्न भवेदेवं संशयः कर्मनिश्चये
किं नु कर्म स्वभावोऽय ज्ञानं कर्मेति वा पुनः २
तत्र चेह विवित्सा स्याज्ज्ञानं चेत्पुरुषं प्रति
उपपत्त्युपलब्धिभ्यां वर्णयिष्यामि तच्छृणु ३
पौरुषं कारणं केचिदाहुः कर्मसु मानवाः
दैवमेके प्रशंसन्ति स्वभावं चापरे जनाः ४
पौरुषं कर्म दैवं च फलवृत्तिस्वभावतः
त्रयमेतत्पृथग्भूतमविवेकं तु केचन ५
एवमेतन्न चाप्येवमुभे चापि न चाप्युभे
कर्मस्था विषयं ब्रूयुः सत्त्वस्थाः समदर्शिनः ६
त्रेतायां द्वापरे चैव कलिजाश्च ससंशयाः
तपस्विनः प्रशान्ताश्च सत्त्वस्थाश्च कृते युगे ७
अपृथग्दर्शिनः सर्वे ऋक्सामसु यजुःषु च
कामद्वेषौ पृथग्दृष्ट्वा तपः कृत उपासते ८
तपोधर्मेण संयुक्तस्तपोनित्यः सुसंशितः
तेन सर्वानवाप्नोति कामान्यान्मनसेच्छति ९
तपसा तदवाप्नोति यद्भूत्वा सृजते जगत्
तद्भूतश्च ततः सर्वो भूतानां भवति प्रभुः १०
तदुक्तं वेदवादेषु गहनं वेददर्शिभिः
वेदान्तेषु पुनर्व्यक्तं क्रमयोगेन लक्ष्यते ११
आरम्भयज्ञाः क्षत्रस्य हविर्यज्ञा विशः स्मृताः
परिचारयज्ञाः शूद्राश्च जपयज्ञा द्विजातयः १२
परिनिष्ठितकार्यो हि स्वाध्यायेन द्विजो भवेत्
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते १३

त्रेतादौ सकला वेदा यज्ञा वर्णाश्रमास्तथा
संरोधादायुषस्त्वेते व्यस्यन्ते द्वापरे युगे १४
द्वापरे विप्लवं यान्ति वेदाः कलियुगे तथा
दृश्यन्ते नापि दृश्यन्ते कलेरन्ते पुनः पुनः १५
उत्सीदन्ति स्वधर्माश्च तत्राधर्मेण पीडिताः
गवां भूमेश्च ये चापामोषधीनां च ये रसाः १६
अधर्मान्तर्हिता वेदा वेदधर्मास्तथाश्रमाः
विक्रियन्ते स्वधर्मस्थाः स्थावराणि चराणि च १७
यथा सर्वाणि भूतानि वृष्टिर्भौमानि वर्षति
सृजते सर्वतोऽङ्गानि तथा वेदा युगे युगे १८
विसृतं कालनानात्वमनादिनिधनं च यत्
कीर्तितं तत्पुरस्तान्मे यतः संयान्ति यान्ति च १९
धातेदं प्रभवस्थानं भूतानां संयमो यमः
स्वभावेन प्रवर्तन्ते द्वंद्वसृष्टानि भूरिशः २०
सर्गः कालो धृतिर्वेदाः कर्ता कार्यं क्रियाफलम्
एतत्ते कथितं तात यन्मां त्वं परिपृच्छसि २१
इति श्रीमहाभारते शान्तिपर्वणि त्रिंशदधिकद्विशततमोऽध्यायः २३०

## एकत्रिंशदधिकद्विशततमोऽध्यायः

भीष्म उवाच
इत्युक्तोऽभिप्रशस्यैतत्परमर्षेस्तु शासनम्
मोक्षधर्मार्थसंयुक्तमिदं प्रष्टुं प्रचक्रमे १
शुक उवाच
प्रजावाञ्श्रोत्रियो यज्वा वृद्धः प्रज्ञोऽनसूयकः
अनागतमनैतिह्यं कथं ब्रह्माधिगच्छति २
तपसा ब्रह्मचर्येण सर्वत्यागेन मेधया
सांख्ये वा यदि वा योगे एतत्पृष्टोऽभिधत्स्व मे ३
मनसश्चेन्द्रियाणां चाप्यैकाग्र्यं समवाप्यते
येनोपायेन पुरुषैस्तच्च व्याख्यातुमर्हसि ४
व्यास उवाच

नान्यत्र विद्यातपसोर्नान्यत्रेन्द्रियनिग्रहात्
नान्यत्र सर्वसंत्यागात्सिद्धिं विन्दति कश्चन ५
महाभूतानि सर्वाणि पूर्वसृष्टिः स्वयंभुवः
भूयिष्ठं प्राणभृद्ग्रामे निविष्टानि शरीरिषु ६
भूमेर्देहो जलात्सारो ज्योतिषश्चक्षुषी स्मृते
प्राणापानाश्रयो वायुः खेष्वाकाशं शरीरिणाम् ७
क्रान्ते विष्णुर्बले शक्रः कोष्ठेऽग्निर्भुक्तमर्छति
कर्णयोः प्रदिशः श्रोत्रे जिह्वायां वाक्सरस्वती ८
कर्णौ त्वक्चक्षुषी जिह्वा नासिका चैव पञ्चमी
दर्शनानीन्द्रियोक्तानि द्वाराण्याहारसिद्धये ९
शब्दं स्पर्शं तथा रूपं रसं गन्धं च पञ्चमम्
इन्द्रियाणि पृथक्त्वर्थान्मनसो दर्शयन्त्युत १०
इन्द्रियाणि मनो युङ्क्ते वश्यान्यन्तेव वाजिनः
मनश्चापि सदा युङ्क्ते भूतात्मा हृदयाश्रितः ११
इन्द्रियाणां तथैवेषां सर्वेषामीश्वरं मनः
नियमे च विसर्गे च भूतात्मा मानसस्तथा १२
इन्द्रियाणीन्द्रियार्थाश्च स्वभावश्चेतना मनः
प्राणापानौ च जीवश्च नित्यं देहेषु देहिनाम् १३
आश्रयो नास्ति सत्त्वस्य गुणशब्दो न चेतना
सत्त्वं हि तेजः सृजति न गुणान्वै कदाचन १४
एवं सप्तदशं देहे वृतं षोडशभिर्गुणैः
मनीषी मनसा विप्रः पश्यत्यात्मानमात्मनि १५
न ह्ययं चक्षुषा दृश्यो न च सर्वैरपीन्द्रियैः
मनसा संप्रदीप्तेन महानात्मा प्रकाशते १६
अशब्दस्पर्शरूपं तदरसागन्धमव्ययम्
अशरीरं शरीरे स्वे निरीक्षेत निरिन्द्रियम् १७
अव्यक्तं व्यक्तदेहेषु मर्त्येष्वमरमाश्रितम्
योऽनुपश्यति स प्रेत्य कल्पते ब्रह्मभूयसे १८
विद्याभिजनसंपन्ने ब्राह्मणे गवि हस्तिनि
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः १९

स हि सर्वेषु भूतेषु जङ्गमेषु ध्रुवेषु च
वसत्येको महानात्मा येन सर्वमिदं ततम् २०
सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि
यदा पश्यति भूतात्मा ब्रह्म संपद्यते तदा २१
यावानात्मनि वेदात्मा तावानात्मा परात्मनि
य एवं सततं वेद सोऽमृतत्वाय कल्पते २२
सर्वभूतात्मभूतस्य सर्वभूतहितस्य च
देवापि मार्गे मुह्यन्ति अपदस्य पदैषिणः २३
शकुनीनामिवाकाशे जले वारिचरस्य वा
यथा गतिर्न दृश्यते तथैव सुमहात्मनः २४
कालः पचति भूतानि सर्वाण्येवात्मनात्मनि
यस्मिंस्तु पच्यते कालस्तं न वेदेह कश्चन २५
न तदूर्ध्वं न तिर्यक्च नाधो न च तिरः पुनः
न मध्ये प्रतिगृह्णीते नैव कश्चित्कुतश्चन २६
सर्वेऽन्तस्था इमे लोका बाह्यमेषां न किंचन
यः सहस्रं समागच्छेद्यथा बाणो गुणच्युतः २७
नैवान्तं कारणस्येयाद्यद्यपि स्यान्मनोजवः
तस्मात्सूक्ष्मात्सूक्ष्मतरं नास्ति स्थूलतरं ततः २८
सर्वतःपाणिपादान्तं सर्वतोक्षिशिरोमुखम्
सर्वतःश्रुतिमल्लोके सर्वमावृत्य तिष्ठति २९
तदेवाणोरणुतरं तन्महद्भ्यो महत्तरम्
तदन्तः सर्वभूतानां ध्रुवं तिष्ठन्न दृश्यते ३०
अक्षरं च क्षरं चैव द्वैधीभावोऽयमात्मनः
क्षरः सर्वेषु भूतेषु दिव्यं ह्यमृतमक्षरम् ३१
नवद्वारं पुरं गत्वा हंसो हि नियतो वशी
ईशः सर्वस्य भूतस्य स्थावरस्य चरस्य च ३२
हानिभङ्गविकल्पानां नवानां संश्रयेण च
शरीराणामजस्याहुर्हंसत्वं पारदर्शिनः ३३
हंसोक्तं चाक्षरं चैव कूटस्थं यत्तदक्षरम्
तद्विद्वानक्षरं प्राप्य जहाति प्राणजन्मनी ३४

इति श्रीमहाभारते शान्तिपर्वणि एकत्रिंशदधिकद्विशततमोऽध्यायः २३१

द्वात्रिंशदधिकद्विशततमोऽध्यायः

व्यास उवाच
पृच्छतस्तव सत्पुत्र यथावदिह तत्त्वतः
सांख्यन्यायेन संयुक्तं यदेतत्कीर्तितं मया १
योगकृत्यं तु ते कृत्स्नं वर्तयिष्यामि तच्छृणु
एकत्वं बुद्धिमनसोरिन्द्रियाणां च सर्वशः
आत्मनो ध्यायिनस्तात ज्ञानमेतदनुत्तमम् २
तदेतदुपशान्तेन दान्तेनाध्यात्मशीलिना
आत्मारामेण बुद्धेन बोद्धव्यं शुचिकर्मणा ३
योगदोषान्समुच्छिद्य पञ्च यान्कवयो विदुः
कामं क्रोधं च लोभं च भयं स्वप्नं च पञ्चमम् ४
क्रोधं शमेन जयति कामं संकल्पवर्जनात्
सत्त्वसंसेवनाद्धीरो निद्रामुच्छेत्तुमर्हति ५
धृत्या शिश्नोदरं रक्षेत्पाणिपादं च चक्षुषा
चक्षुः श्रोत्रे च मनसा मनो वाचं च कर्मणा ६
अप्रमादाद्भयं जह्याल्लोभं प्राज्ञोपसेवनात्
एवमेतान्योगदोषाञ्जयेन्नित्यमतन्द्रितः ७
अग्नींश्च ब्राह्मणांश्चार्चेद्देवताः प्रणमेत च
वर्जयेद्रुषितां वाचं हिंसायुक्तां मनोनुगाम् ८
ब्रह्म तेजोमयं शुक्रं यस्य सर्वमिदं रसः
एकस्य भूतं भूतस्य द्वयं स्थावरजङ्गमम् ९
ध्यानमध्ययनं दानं सत्यं ह्रीरार्जवं क्षमा
शौचमाहारसंशुद्धिरिन्द्रियाणां च निग्रहः १०
एतैर्विवर्धते तेजः पाप्मानं चापकर्षति
सिध्यन्ति चास्य सर्वार्था विज्ञानं च प्रवर्तते ११
समः सर्वेषु भूतेषु लब्धालब्धेन वर्तयन्
धुतपाप्मा तु तेजस्वी लघ्वाहारो जितेन्द्रियः
कामक्रोधौ वशे कृत्वा निनीषेद्ब्रह्मणः पदम् १२

मनसश्चेन्द्रियाणां च कृत्वैकाग्र्यं समाहितः
प्राग्रात्रापररात्रेषु धारयेन्मन आत्मना १३
जन्तोः पञ्चेन्द्रियस्यास्य यदेकं छिद्रमिन्द्रियम्
ततोऽस्य स्रवति प्रज्ञा दृतेः पादादिवोदकम् १४
मनस्तु पूर्वमादद्यात्कुमीनानिव मत्स्यहा
ततः श्रोत्रं ततश्चक्षुर्जिह्वां घ्राणं च योगवित् १५
तत एतानि संयम्य मनसि स्थापयेद्यतिः
तथैवापोह्य संकल्पान्मनो ह्यात्मनि धारयेत् १६
पञ्च ज्ञानेन संधाय मनसि स्थापयेद्यतिः
येदैतान्यवतिष्ठन्ते मनःषष्ठानि चात्मनि
प्रसीदन्ति च संस्थाय तदा ब्रह्म प्रकाशते १७
विधूम इव दीप्तार्चिरादित्य इव दीप्तिमान्
वैद्युतोऽग्निरिवाकाशे पश्यत्यात्मानमात्मना
सर्वं च तत्र सर्वत्र व्यापकत्वाच्च दृश्यते १८
तं पश्यन्ति महात्मानो ब्राह्मणा ये मनीषिणः
धृतिमन्तो महाप्राज्ञाः सर्वभूतहिते रताः १९
एवं परिमितं कालमाचरन्संशितव्रतः
आसीनो हि रहस्येको गच्छेदक्षरसात्म्यताम् २०
प्रमोहो भ्रम आवर्तो घ्राणश्रवणदर्शने
अद्भुतानि रसस्पर्शे शीतोष्णे मारुताकृतिः २१
प्रतिभामुपसर्गांश्चाप्युपसंगृह्य योगतः
तांस्तत्त्वविदनादृत्य स्वात्मनैव निवर्तयेत् २२
कुर्यात्परिचयं योगे त्रैकाल्यं नियतो मुनिः
गिरिशृङ्गे तथा चैत्ये वृक्षाग्रेषु च योजयेत् २३
संनियम्येन्द्रियग्रामं गोष्ठे भाण्डमना इव
एकाग्रश्चिन्तयेन्नित्यं योगान्नोद्विजयेन्मनः २४
येनोपायेन शक्येत संनियन्तुं चलं मनः
तं तं युक्तो निषेवेत न चैव विचलेत्ततः २५
शून्या गिरिगुहाश्चैव देवतायतनानि च
शून्यागाराणि चैकाग्रो निवासार्थमुपक्रमेत् २६

नाभिष्वजेत्परं वाचा कर्मणा मनसापि वा
उपेक्षको यताहारो लब्धालब्धे समो भवेत् २७
यश्चैनमभिनन्देत यश्चैनमपवादयेत्
समस्तयोश्चाप्युभयोर्नाभिध्यायेच्छुभाशुभम् २८
न प्रहृष्येत लाभेषु नालाभेषु च चिन्तयेत्
समः सर्वेषु भूतेषु सधर्मा मातरिश्वनः २९
एवं सर्वात्मनः साधोः सर्वत्र समदर्शिनः
षण्मासान्नित्ययुक्तस्य शब्दब्रह्मातिवर्तते ३०
वेदनार्ताः प्रजा दृष्ट्वा समलोष्टाश्मकाञ्चनः
एतस्मिन्निरतो मार्गे विरमेन्न विमोहितः ३१
अपि वर्णावकृष्टस्तु नारी वा धर्मकाङ्क्षिणी
तावप्येतेन मार्गेण गच्छेतां परमां गतिम् ३२
अजं पुराणमजरं सनातनं यदिन्द्रियैरुपलभते नरोऽचलः
अणोरणीयो महतो महत्तरं तदात्मना पश्यति युक्त आत्मवान् ३३
इदं महर्षेर्वचनं महात्मनो यथावदुक्तं मनसानुदृश्य च
अवेक्ष्य चेयात्परमेष्ठिसात्म्यतां प्रयान्ति यां भूतगतिं मनीषिणः ३४
इति श्रीमहाभारते शान्तिपर्वणि द्वात्रिंशदधिकद्विशततमोऽध्यायः २३२

## त्रयस्त्रिंशदधिकद्विशततमोऽध्यायः

शुक उवाच
यदिदं वेदवचनं कुरु कर्म त्यजेति च
कां दिशं विद्यया यान्ति कां च गच्छन्ति कर्मणा १
एतद्वै श्रोतुमिच्छामि तद्भवान्प्रब्रवीतु मे
एतत्त्वन्योन्यवैरूप्ये वर्तते प्रतिकूलतः २
भीष्म उवाच
इत्युक्तः प्रत्युवाचेदं पराशरसुतः सुतम्
कर्मविद्यामयावेतौ व्याख्यास्यामि क्षराक्षरौ ३
यां दिशं विद्यया यान्ति यां च गच्छन्ति कर्मणा
शृणुष्वेकमनाः पुत्र गह्वरं ह्येतदन्तरम् ४
अस्ति धर्म इति प्रोक्तं नास्तीत्यत्रैव यो वदेत्

तस्य पच्चस्य सदृशमिदं मम भवेदथ ५
द्वाविमावथ पन्थानौ यत्र वेदाः प्रतिष्ठिताः
प्रवृत्तिलच्चणो धर्मो निवृत्तौ च सुभाषितः ६
कर्मणा बध्यते जन्तुर्विद्यया तु प्रमुच्यते
तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः ७
कर्मणा जायते प्रेत्य मूर्तिमान्षोडशात्मकः
विद्यया जायते नित्यमव्ययो ह्यव्ययात्मकः ८
कर्म त्वेके प्रशंसन्ति स्वल्पबुद्धितरा नराः
तेन ते देहजालानि रमयन्त उपासते ९
ये तु बुद्धिं परां प्राप्ता धर्मनैपुण्यदर्शिनः
न ते कर्म प्रशंसन्ति कूपं नद्यां पिबन्निव १०
कर्मणः फलमाप्नोति सुखदुःखे भवाभवौ
विद्यया तदवाप्नोति यत्र गत्वा न शोचति ११
यत्र गत्वा न म्रियते यत्र गत्वा न जायते
न जीर्यते यत्र गत्वा यत्र गत्वा न वर्धते १२
यत्र तद्ब्रह्म परममव्यक्तमजरं ध्रुवम्
अव्याहतमनायासममृतं चावियोगि च १३
द्वन्द्वैर्यत्र न बाध्यन्ते मानसेन च कर्मणा
समाः सर्वत्र मैत्राश्च सर्वभूतहिते रताः १४
विद्यामयोऽन्य पुरुषस्तात कर्ममयोऽपरः
विद्धि चन्द्रमसं दर्शे सूच्मया कलया स्थितम् १५
तदेतदृषिणा प्रोक्तं विस्तरेणानुमीयते
नवजं शशिनं दृष्ट्वा वक्रं तन्तुमिवाम्बरे १६
एकादशविकारात्मा कलासंभारसंभृतः
मूर्तिमानिति तं विद्धि तात कर्मगुणात्मकम् १७
देवो यः संश्रितस्तस्मिन्नब्बिन्दुरिव पुष्करे
च्चेत्रज्ञं तं विजानीयान्नित्यं त्यागजितात्मकम् १८
तमो रजश्च सत्त्वं च विद्धि जीवगुणानिमान्
जीवमात्मगुणं विद्यादात्मानं परमात्मनः १९
सचेतनं जीवगुणं वदन्ति स चेष्टते चेष्टयते च सर्वम्

ततः परं क्षेत्रविदो वदन्ति प्रावर्तयद्यो भुवनानि सप्त २०
इति श्रीमहाभारते शान्तिपर्वणि त्रयस्त्रिंशदधिकद्विशततमोऽध्यायः २३३

## चतुस्त्रिंशदधिकद्विशततमोऽध्यायः

शुक उवाच
क्षरात्प्रभृति यः सर्गः सगुणानीन्द्रियाणि च
बुद्ध्यैश्वर्याभिसर्गार्थं यद्ध्यानं चात्मनः शुभम् १
भूय एव तु लोकेऽस्मिन्सद्वृत्तिं वृत्तिहैतुकीम्
यया सन्तः प्रवर्तन्ते तदिच्छाम्यनुवर्णितम् २
वेदे वचनमुक्तं तु कुरु कर्म त्यजेति च
कथमेतद्विजानीयां तच्च व्याख्यातुमर्हसि ३
लोकवृत्तान्ततत्त्वज्ञः पूतोऽह गुरुशासनात्
कृत्वा बुद्धिं वियुक्तात्मा त्यक्ष्याम्यात्मानमव्यथः ४
व्यास उवाच
यैषा वै विहिता वृत्तिः पुरस्ताद्ब्रह्मणा स्वयम्
एषा पूर्वतरैः सद्भिराचीर्णा परमर्षिभिः ५
ब्रह्मचर्येण वै लोकाञ्जयन्ति परमर्षयः
आत्मनश्च हृदि श्रेयस्त्वन्विच्छ मनसात्मनि ६
वने मूलफलाशी च तप्यन्सुविपुलं तपः
पुण्यायतनचारी च भूतानामविहिंसकः ७
विधूमे सन्नमुसले वानप्रस्थप्रतिश्रये
काले प्राप्ते चरन्भैक्षं कल्पते ब्रह्मभूयसे ८
निःस्तुतिर्निर्नमस्कारः परित्यज्य शुभाशुभे
अरण्ये विचरैकाकी येन केनचिदाशितः ९
शुक उवाच
यदिदं वेदवचनं लोकवादे विरुध्यते
प्रमाणे चाप्रमाणे च विरुद्धे शास्त्रता कुतः १०
इत्येतच्छ्रोतुमिच्छामि भगवान्प्रब्रवीतु मे
कर्मणामविरोधेन कथमेतत्प्रवर्तते ११
भीष्म उवाच

इत्युक्तः प्रत्युवाचेदं गन्धवत्याः सुतः सुतम्
ऋषिस्तत्पूजयन्वाक्यं पुत्रस्यामिततेजसः १२
गृहस्थो ब्रह्मचारी च वानप्रस्थोऽथ भिक्षुकः
यथोक्तकारिणः सर्वे गच्छन्ति परमां गतिम् १३
एको य आश्रमानेताननुतिष्ठेद्यथाविधि
अकामद्वेषसंयुक्तः स परत्र महीयते १४
चतुष्पदी हि निःश्रेणी ब्रह्मण्येषा प्रतिष्ठिता
एतामाश्रित्य निःश्रेणीं ब्रह्मलोके महीयते १५
आयुषस्तु चतुर्भागं ब्रह्मचार्यनसूयकः
गुरौ वा गुरुपुत्रे वा वसेद्धर्मार्थकोविदः १६
कर्मातिरेकेण गुरोरध्येतव्यं बुभूषता
दक्षिणो नापवादी स्यादाहूतो गुरुमाश्रयेत् १७
जघन्यशायी पूर्वं स्यादुत्थायी गुरुवेश्मनि
यच्च शिष्येण कर्तव्यं कार्यं दासेन वा पुनः १८
कृतमित्येव तत्सर्वं कृत्वा तिष्ठेत पार्श्वतः
किंकरः सर्वकारी च सर्वकर्मसु कोविदः १९
शुचिर्दक्षो गुणोपेतो ब्रूयादिषुरिवात्वरः
चक्षुषा गुरुमव्यग्रो निरीक्षेत जितेन्द्रियः २०
नाभुक्तवति चाश्नीयादपीतवति नो पिबेत्
न तिष्ठति तथासीत नासुप्ते प्रस्वपेत च २१
उत्तानाभ्यां च पाणिभ्यां पादावस्य मृदु स्पृशेत्
दक्षिणं दक्षिणेनैव सव्यं सव्येन पीडयेत् २२
अभिवाद्य गुरुं ब्रूयादधीष्व भगवन्निति
इदं करिष्ये भगवन्निदं चापि कृतं मया २३
इति सर्वमनुज्ञाप्य निवेद्य गुरवे धनम्
कुर्यात्कृत्वा च तत्सर्वमाख्येयं गुरवे पुनः २४
यांस्तु गन्धान्रसान्वापि ब्रह्मचारी न सेवते
सेवेत तान्समावृत्त इति धर्मेषु निश्चयः २५
ये केचिद्विस्तरेणोक्ता नियमा ब्रह्मचारिणः
तान्सर्वाननुगृह्णीयाद्भवेच्चानपगो गुरोः २६

स एवं गुरवे प्रीतिमुपहृत्य यथाबलम्
आश्रमेष्वाश्रमेष्वेवं शिष्यो वर्तेत कर्मणा २७
वेदव्रतोपवासेन चतुर्थे चायुषो गते
गुरवे दक्षिणां दत्त्वा समावर्तेद्यथाविधि २८
धर्मलब्धैर्युतो दारैरग्नीनुत्पाद्य धर्मतः
द्वितीयमायुषो भागं गृहमेधिव्रती भवेत् २९
इति श्रीमहाभारते शान्तिपर्वणि चतुस्त्रिंशदधिकद्विशततमोऽध्यायः २३४

पञ्चत्रिंशदधिकद्विशततमोऽध्यायः

व्यास उवाच
द्वितीयमायुषो भागं गृहमेधी गृहे वसेत्
धर्मलब्धैर्युतो दारैरग्नीनुत्पाद्य सुव्रतः १
गृहस्थवृत्तयश्चैव चतस्रः कविभिः स्मृताः
कुसूलधान्यः प्रथमः कुम्भीधान्यस्त्वनन्तरम् २
अश्वस्तनोऽथ कापोतीमाश्रितो वृत्तिमाहरेत्
तेषां परः परो ज्यायान्धर्मतो लोकजित्तमः ३
षट्कर्मा वर्तयत्येकस्त्रिभिरन्यः प्रवर्तते
द्वाभ्यामेकश्चतुर्थस्तु ब्रह्मसत्रे व्यवस्थितः
गृहमेधिव्रतान्यत्र महान्तीह प्रचक्षते ४
नात्मार्थं पाचयेदन्नं न वृथा घातयेत्पशून्
प्राणी वा यदि वाप्राणी संस्कारं यजुषार्हति ५
न दिवा प्रस्वपेज्जातु न पूर्वापररात्रयोः
न भूञ्जीतान्तराकाले नानृतावाह्वयेत्स्त्रियम् ६
नास्यानश्नन्वसेद्विप्रो गृहे कश्चिदपूजितः
तथास्यातिथयः पूज्या हव्यकव्यवहाः सदा ७
वेदविद्याव्रतस्नाताः श्रोत्रिया वेदपारगाः
स्वधर्मजीविनो दान्ताः क्रियावन्तस्तपस्विनः
तेषां हव्यं च कव्यं चाप्यर्हणार्थं विधीयते ८
न खरैः संप्रयातस्य स्वधर्माज्ञानकस्य च
अपविद्धाग्निहोत्रस्य गुरोर्वालीककारिणः ९

संविभागोऽत्र भूतानां सर्वेषामेव शिष्यते
तथैवापचमानेभ्यः प्रदेयं गृहमेधिना १०
विघसाशी भवेन्नित्यं नित्यं चामृतभोजनः
अमृतं यज्ञशेषं स्याद्भोजनं हविषा समम्
भृत्यशेषं तु योऽश्नाति तमाहुर्विघसाशिनम् ११
स्वदारनिरतो दान्तो ह्यनसूयुर्जितेन्द्रियः
ऋत्विक्पुरोहिताचार्यैर्मातुलातिथिसंश्रितैः १२
वृद्धबालातुरैर्वैद्यैर्ज्ञातिसंबन्धिबान्धवैः
मातापितृभ्यां जामीभिर्भ्रात्रा पुत्रेण भार्यया १३
दुहित्रा दासवर्गेण विवादं न समाचरेत्
एतान्विमुच्य संवादान्सर्वपापैः प्रमुच्यते १४
एतैर्जितैस्तु जयति सर्वाल्लोँकान्न संशयः
आचार्यो ब्रह्मलोकेशः प्राजापत्ये पिता प्रभुः १५
अतिथिस्त्विन्द्रलोकेशो देवलोकस्य चर्त्विजः
जामयोऽप्सरसां लोके वैश्वदेवे तु ज्ञातयः १६
संबन्धिबान्धवा दिक्षु पृथिव्यां मातृमातुलौ
वृद्धबालातुरकृशास्त्वाकाशे प्रभविष्णवः १७
भ्राता ज्येष्ठः समः पित्रा भार्या पुत्रः स्वका तनुः
छाया स्वा दासवर्गस्तु दुहिता कृपणं परम् १८
तस्मादेतैरधिक्षिप्तः सहेन्नित्यमसंज्वरः
गृहधर्मरतो विद्वान्धर्मनित्यो जितक्लमः १९
न चार्थबद्धः कर्माणि धर्मं वा कंचिदाचरेत्
गृहस्थवृत्तयस्तिस्रस्तासां निःश्रेयसं परम् २०
परस्परं तथैवाहुश्चातुराश्रम्यमेव तत्
ये चोक्ता नियमास्तेषां सर्वं कार्यं बुभूषता २१
कुम्भीधान्यैरुञ्छशिलैः कापोतीं चास्थितैस्तथा
यस्मिंश्चैते वसन्त्यर्हास्तद्राष्ट्रमभिवर्धते २२
दश पूर्वान्दश परान्पुनाति च पितामहान्
गृहस्थवृत्तयस्त्वेता वर्तयेद्यो गतव्यथः २३
स चक्रचरलोकानां सदृशीं प्राप्नुयाद्गतिम्

यतेन्द्रियाणामथ वा गतिरेषा विधीयते २४
स्वर्गलोको गृहस्थानामुदारमनसां हितः
स्वर्गो विमानसंयुक्तो वेददृष्टः सुपुष्पितः २५
स्वर्गलोके गृहस्थानां प्रतिष्ठा नियतात्मनाम्
ब्रह्मणा विहिता श्रेणिरेषा यस्मात्प्रमुच्यते
द्वितीयं क्रमशः प्राप्य स्वर्गलोके महीयते २६
अतः परं परममुदारमाश्रमं तृतीयमाहुस्त्यजतां कलेवरम्
वनौकसां गृहपतिनामनुत्तमं शृणुष्वैतत्क्लिष्टशरीरकारिणाम् २७
इति श्रीमहाभारते शान्तिपर्वणि पञ्चत्रिंशदधिकद्विशततमोऽध्यायः २३५

## षट्त्रिंशदधिकद्विशततमोऽध्यायः

भीष्म उवाच
प्रोक्ता गृहस्थवृत्तिस्ते विहिता या मनीषिणाम्
तदनन्तरमुक्तं यत्तन्निबोध युधिष्ठिर १
क्रमशस्त्ववधूयैनां तृतीयां वृत्तिमुत्तमाम्
संयोगव्रतखिन्नानां वानप्रस्थाश्रमौकसाम् २
श्रूयतां पार्थ भद्रं ते सर्वलोकाश्रयात्मनाम्
प्रेक्षापूर्वं प्रवृत्तानां पुण्यदेशनिवासिनाम् ३
व्यास उवाच
गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः
अपत्यस्यैव चापत्यं वनमेव तदाश्रयेत् ४
तृतीयमायुषो भागं वानप्रस्थाश्रमे वसेत्
तानेवाग्नीन्परिचरेद्यजमानो दिवौकसः ५
नियतो नियताहारः षष्ठभुक्तोऽप्रमादवान्
तदग्निहोत्रं ता गावो यज्ञाङ्गानि च सर्वशः ६
अकृष्टं वै व्रीहियवं नीवारं विघसानि च
हवींषि संप्रयच्छेत मखेष्वत्रापि पञ्चसु ७
वानप्रस्थाश्रमेऽप्येताश्चतस्रो वृत्तयः स्मृताः
सद्यःप्रक्षालकाः केचित्केचिन्मासिकसंचयाः ८
वार्षिकं संचयं केचित्केचिद्द्वादशवार्षिकम्

कुर्वन्त्यतिथिपूजार्थं यज्ञतन्त्रार्थसिद्धये ९
अभ्रावकाशा वर्षासु हेमन्ते जलसंश्रयाः
ग्रीष्मे च पञ्चतपसः शश्वच्च मितभोजनाः १०
भूमौ विपरिवर्तन्ते तिष्ठेद्वा प्रपदैरपि
स्थानासनैर्वर्तयन्ति सवनेष्वभिषिञ्चते ११
दन्तोलूखलिनः केचिदश्मकुट्टास्तथापरे
शुक्लपक्षे पिबन्त्येके यवागूं क्वथितां सकृत् १२
कृष्णपक्षे पिबन्त्येके भुञ्जते च यथाक्रमम्
मूलैरेके फलैरेके पुष्पैरेके दृढव्रताः १३
वर्तयन्ति यथान्यायं वैखानसमतं श्रिताः
एताश्चान्याश्च विविधा दीक्षास्तेषां मनीषिणाम् १४
चतुर्थश्चौपनिषदो धर्मः साधारणः स्मृतः
वानप्रस्थो गृहस्थश्च ततोऽन्य संप्रवर्तते १५
अस्मिन्नेव युगे तात विप्रैः सर्वार्थदर्शिभिः
अगस्त्यः सप्त ऋषयो मधुच्छन्दोऽघमर्षणः १६
सांकृतिः सुदिवा तण्डिर्यवान्नोऽथ कृतश्रमः
अहोवीर्यस्तथा काव्यस्ताण्ड्यो मेधातिथिर्बुधः १७
शलो वाकश्च निर्वाकः शून्यपालः कृतश्रमः
एवंधर्मसु विद्वांसस्ततः स्वर्गमुपागमन् १८
तात प्रत्यक्षधर्माणस्तथा यायावरा गणाः
ऋषीणामुग्रतपसां धर्मनैपुणदर्शिनाम् १९
अवाच्यापरिमेयाश्च ब्राह्मणा वनमाश्रिताः
वैखानसा वालखिल्याः सिकताश्च तथापरे २०
कर्मभिस्ते निरानन्दा धर्मनित्या जितेन्द्रियाः
गताः प्रत्यक्षधर्माणस्ते सर्वे वनमाश्रिताः
अनक्षत्रा अनाधृष्या दृश्यन्ते ज्योतिषां गणाः २१
नरया च परिद्यूनो व्याधिना च प्रपीडितः
चतुर्थे चायुषः शेषे वानप्रस्थाश्रमं त्यजेत्
सद्यस्कारां निरूप्येष्टिं सर्ववेदसदक्षिणाम् २२
आत्मयाजी सोऽत्मरतिरात्मक्रीडात्मसंश्रयः

आत्मन्यग्नीन्समारोप्य त्यक्त्वा सर्वपरिग्रहान् २३
सद्यस्कांश्च यजेद्यज्ञानिष्टीश्चैवेह सर्वदा
सदैव याजिनां यज्ञादात्मनीज्या निवर्तते २४
त्रींश्चैवाग्नीन्यजेत्सम्यगात्मन्येवात्ममोक्षणात्
प्राणेभ्यो यजुषा पञ्च षट् प्राश्नीयादकुत्सयन् २५
केशलोमनखान्वाप्य वानप्रस्थो मुनिस्ततः
आश्रमादाश्रमं सद्यः पूतो गच्छति कर्मभिः २६
अभयं सर्वभूतेभ्यो यो दत्त्वा प्रव्रजेद्द्विजः
लोकास्तेजोमयास्तस्य प्रेत्य चानन्त्यमश्नुते २७
सुशीलवृत्तो व्यपनीतकल्मषो न चेह नामुत्र च कर्तुमीहते
अरोषमोहो गतसंधिविग्रहो भवेदुदासीनवदात्मविन्नरः २८
यमेषु चैवात्मगतेषु न व्यथेत्स्वशास्त्रसूत्राहुतिमन्त्रविक्रमः
भवेद्यथेष्टा गतिरात्मयाजिनो न संशयो धर्मपरे जितेन्द्रिये २९
ततः परं श्रेष्ठमतीव सद्गुणैरधिष्ठितं त्रीनधिवृत्तमुत्तमम्
चतुर्थमुक्तं परमाश्रमं शृणु प्रकीर्त्यमानं परमं परायणम् ३०
इति श्रीमहाभारते शान्तिपर्वणि षट्त्रिंशदधिकद्विशततमोऽध्यायः २३६

## सप्तत्रिंशदधिकद्विशततमोऽध्यायः

शुक उवाच
वर्तमानस्तथैवात्र वानप्रस्थाश्रमे यथा
योक्तव्योऽत्मा यथा शक्त्या परं वै काङ्क्षता पदम् १
व्यास उवाच
प्राप्य संस्कारमेताभ्यामाश्रमाभ्यां ततः परम्
यत्कार्यं परमार्थार्थं तदिहैकमनाः शृणु २
कषायं पाचयित्वा तु श्रेणिस्थानेषु च त्रिषु
प्रव्रजेच्च परं स्थानं पारिव्रज्यामनुत्तमाम् ३
तद्भवानेवमभ्यस्य वर्ततां श्रूयतां तथा
एक एव चरेन्नित्यं सिद्ध्यर्थमसहायवान् ४
एकश्चरति यः पश्यन्न जहाति न हीयते
अनग्निरनिकेतः स्याद्ग्राममन्नार्थमाश्रयेत् ५

अश्वस्तनविधानः स्यान्मुनिर्भावसमन्वितः
लघ्वाशी नियताहारः सकृदन्ननिषेविता ६
कपालं वृक्षमूलानि कुचेलमसहायता
उपेक्षा सर्वभूतानामेतावद्भिक्षुलक्षणम् ७
यस्मिन्वाचः प्रविशन्ति कूपे प्राप्ताः शिला इव
न वक्तारं पुनर्यान्ति स कैवल्याश्रमे वसेत् ८
नैव पश्येन्न शृणुयादवाच्यं जातु कस्यचित्
ब्राह्मणानां विशेषेण नैव ब्रूयात्कथंचन ९
यद्ब्राह्मणस्य कुशलं तदेव सततं वदेत्
तूष्णीमासीत निन्दायां कुर्वन्भेषजमातमनः १०
येन पूर्णमिवाकाशं भवत्येकेन सर्वदा
शून्यं येन जनाकीर्णं तं देवा ब्राह्मणं विदुः ११
येन केनचिदाच्छन्नो येन केनचिदाशितः
यत्रक्वचनशायी च तं देवा ब्राह्मणं विदुः १२
अहेरिव गणाद्भीतः सौहित्यान्नरकादिव
कुणपादिव च स्त्रीभ्यस्तं देवा ब्राह्मणं विदुः १३
न क्रुध्येन्न प्रहृष्येच्च मानितोऽमानितश्च यः
सर्वभूतेष्वभयदस्तं देवा ब्राह्मणं विदुः १४
नाभिनन्देत मरणं नाभिनन्देत जीवितम्
कालमेव प्रतीक्षेत निदेशं भृतको यथा १५
अनभ्याहतचित्तः स्यादनभ्याहतवाक्तथा
निर्मुक्तः सर्वपापेभ्यो निरमित्रस्य किं भयम् १६
अभयं सर्वभूतेभ्यो भूतानामभयं यतः
तस्य देहाद्विमुक्तस्य भयं नास्ति कुतश्चन १७
यथा नागपदेऽन्यानि पदानि पदगामिनाम्
सर्वाण्येवापिधीयन्ते पदजातानि कौञ्जरे १८
एवं सर्वमहिंसायां धर्मार्थमपिधीयते
अमृतः स नित्यं वसति योऽहिसां प्रतिपद्यते १९
अहिंसकः समः सत्यो धृतिमान्नियतेन्द्रियः
शरण्यः सर्वभूतानां गतिमाप्नोत्यनुत्तमाम् २०

एवं प्रज्ञानतृप्तस्य निर्भयस्य मनीषिणः
न मृत्युरतिगो भावः स मृत्युमधिगच्छति २१
विमुक्तं सर्वसङ्गेभ्यो मुनिमाकाशवत्स्थितम्
अस्वमेकचरं शान्तं तं देवा ब्राह्मणं विदुः २२
जीवितं यस्य धर्मार्थं धर्मोऽरत्यर्थमेव च
अहोरात्राश्च पुण्यार्थं तं देवा ब्राह्मणं विदुः २३
निराशिषमनारम्भं निर्नमस्कारमस्तुतिम्
अक्षीणं क्षीणकर्माणं तं देवा ब्राह्मणं विदुः २४
सर्वाणि भूतानि सुखे रमन्ते सर्वाणि दुःखस्य भृशं त्रसन्ति
तेषां भयोत्पादनजातखेदः कुर्यान्न कर्माणि हि श्रद्दधानः २५
दानं हि भूताभयदक्षिणायाः सर्वाणि दानान्यधितिष्ठतीह
तीक्ष्णां तनुं यः प्रथमं जहाति सोऽनन्तमाप्नोत्यभयं प्रजाभ्यः २६
उत्तान आस्येन हविर्जुहोति लोकस्य नाभिर्जगतः प्रतिष्ठा
तस्याङ्गमङ्गानि कृताकृतं च वैश्वानरः सर्वमेव प्रपेदे २७
प्रादेशमात्रे हृदि निश्रितं यत्तस्मिन्प्राणानात्मयाजी जुहोति
तस्याग्निहोत्रं हुतमात्मसंस्थं सर्वेषु लोकेषु सदैवतेषु २८
दैवं त्रिधातुं त्रिवृतं सुपर्णं ये विद्युरग्र्यं परमार्थतां च
ते सर्वलोकेषु महीयमाना देवाः समर्थाः सुकृतं व्रजन्ति २९
वेदांश्च वेद्यं तु विधिं च कृत्स्नमथो निरुक्तं परमार्थतां च
सर्वं शरीरात्मनि यः प्रवेद तस्मै स्म देवाः स्पृहयन्ति नित्यम् ३०
भूमावसक्तं दिवि चाप्रमेयं हिरण्मयं योऽण्डजमण्डमध्ये
पतत्रिणं पक्षिणमन्तरिक्षे यो वेद भोग्यात्मनि दीप्तरश्मिः ३१
आवर्तमानमजरं विवर्तनं षण्णेमिकं द्वादशारं सुपर्व
यस्येदमास्ये परियाति विश्वं तत्कालचक्रं निहितं गुहायाम् ३२
यः संप्रसादं जगतः शरीरं सर्वान्स लोकानधिगच्छतीह
तस्मिन्हुतं तर्पयतीह देवांस्ते वै तृप्तास्तर्पयन्त्यास्यमस्य ३३
तेजोमयो नित्यतनुः पुराणो लोकाननन्तानभयानुपैति
भूतानि यस्मान्न त्रसन्ते कदाचित्स भूतेभ्यो न त्रसते कदाचित् ३४
अगर्हणीयो न च गर्हतेऽन्यान्स वै विप्रः परमात्मानमीक्षेत्
विनीतमोहो व्यपनीतकल्मषो न चेह नामुत्र च योऽथमृच्छति ३५

अरोषमोहः समलोष्टकाञ्चनः प्रहीणशोको गतसंधिविग्रहः
अपेतनिन्दास्तुतिरप्रियाप्रियश्चरन्नुदासीनवदेष भिक्षुकः ३६
इति श्रीमहाभारते शान्तिपर्वणि सप्तत्रिंशदधिकद्विशततमोऽध्यायः २३७

अष्टात्रिंशदधिकद्विशततमोऽध्यायः

व्यास उवाच
प्रकृतेस्तु विकारा ये क्षेत्रज्ञस्तैः परिश्रितः
ते चैनं न प्रजानन्ति स तु जानाति तानपि १
तैश्चैष कुरुते कार्यं मनःषष्ठैरिहेन्द्रियैः
सुदान्तैरिव संयन्ता दृढैः परमवाजिभिः २
इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यः परमं मनः
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ३
महतः परमव्यक्तमव्यक्तात्परतोऽमृतम्
अमृतान्न परं किंचित्सा काष्ठा सा परा गतिः ४
एवं सर्वेषु भूतेषु गूढोऽत्मा न प्रकाशते
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया तत्त्वदर्शिभिः ५
अन्तरात्मनि संलीय मनःषष्ठानि मेधया
इन्द्रियाणीन्द्रियार्थांश्च बहु चिन्त्यमचिन्तयन् ६
ध्यानोपरमणं कृत्वा विद्यासंपादितं मनः
अनीश्वरं प्रशान्तात्मा ततोऽछत्यमृतं पदम् ७
इन्द्रियाणां तु सर्वेषां वश्यात्मा चलितस्मृतिः
आत्मनः संप्रदानेन मर्त्यो मृत्युमुपाश्नुते ८
हित्वा तु सर्वसंकल्पान्सत्त्वे चित्तं निवेशयेत्
सत्त्वे चित्तं समावेश्य ततः कालंजरो भवेत् ९
चित्तप्रसादेन यतिर्जहाति हि शुभाशुभम्
प्रसन्नात्मात्मनि स्थित्वा सुखमानन्त्यमश्नुते १०
लक्षणं तु प्रसादस्य यथा तृप्तः सुखं स्वपेत्
निवाते वा यथा दीपो दीप्यमानो न कम्पते ११
एवं पूर्वापरे रात्रे युञ्जन्नात्मानमात्मना
सत्त्वाहारविशुद्धात्मा पश्यत्यात्मानमात्मनि १२

रहस्यं सर्ववेदानामनैतिह्यमनागमम्
आत्मप्रत्ययिकं शास्त्रमिदं पुत्रानुशासनम् १३
धर्माख्यानेषु सर्वेषु सत्याख्यानेषु यद्वसु
दशेदमृक्सहस्राणि निर्मथ्यामृतमुद्धृतम् १४
नवनीतं यथा दध्नः काष्ठादग्निर्यथैव च
तथैव विदुषां ज्ञानं पुत्रहेतोः समुद्धृतम्
स्नातकानामिदं शास्त्रं वाच्यं पुत्रानुशासनम् १५
तदिदं नाप्रशान्ताय नादान्तायातपस्विने
नावेदविदुषे वाच्यं तथा नानुगताय च १६
नासूयकायानृजवे न चानिर्दिष्टकारिणे
न तर्कशास्त्रदग्धाय तथैव पिशुनाय च १७
श्लाघते श्लाघनीयाय प्रशान्ताय तपस्विने
इदं प्रियाय पुत्राय शिष्यायानुगताय च
रहस्यधर्मं वक्तव्यं नान्यस्मै तु कथंचन १८
यद्यप्यस्य महीं दद्याद्रत्नपूर्णामिमां नरः
इदमेव ततः श्रेय इति मन्येत तत्त्ववित् १९
अतो गुह्यतरार्थं तदध्यात्ममतिमानुषम्
यत्तन्महर्षिभिर्दृष्टं वेदान्तेषु च गीयते
तत्तेऽहं संप्रवक्ष्यामि यन्मां त्वं परिपृच्छसि २०
इति श्रीमहाभारते शान्तिपर्वणि अष्टात्रिंशदधिकद्विशततमोऽध्यायः २३८

## एकोनचत्वारिंशदधिकद्विशततमोऽध्यायः

शुक उवाच
अध्यात्मं विस्तरेणेह पुनरेव वदस्व मे
यदध्यात्मं यथा चेदं भगवन्नृषिसत्तम १
व्यास उवाच
अध्यात्मं यदिदं तात पुरुषस्येह विद्यते
तत्तेऽहं संप्रवक्ष्यामि तस्य व्याख्यामिमां शृणु २
भूमिरापस्तथा ज्योतिर्वायुराकाशमेव च
महाभूतानि भूतानां सागरस्योर्मयो यथा ३

प्रसार्येह यथाङ्गानि कूर्मः संहरते पुनः
तद्वन्महान्ति भूतानि यवीयःसु विकुर्वते ४
इति तन्मयमेवेदं सर्वं स्थावरजङ्गमम्
सर्गे च प्रलये चैव तस्मान्निर्दिश्यते तथा ५
महाभूतानि पञ्चैव सर्वभूतेषु भूतकृत्
अकरोत्तात वैषम्यं यस्मिन्यदनुपश्यति ६
शुक उवाच
अकरोद्यच्छरीरेषु कथं तदुपलक्षयेत्
इन्द्रियाणि गुणाः केचित्कथं तानुपलक्षयेत् ७
व्यास उवाच
एतत्ते वर्तयिष्यामि यथावदिह दर्शनम्
शृणु तत्त्वमिहैकाग्रो यथातत्त्वं यथा च तत् ८
शब्दः श्रोत्रं तथा खानि त्रयमाकाशसंभवम्
प्राणश्चेष्टा तथा स्पर्श एते वायुगुणास्त्रयः ९
रूपं चक्षुर्विपाकश्च त्रिधा ज्योतिर्विधीयते
रसोऽथ रसनं स्नेहो गुणास्त्वेते त्रयोऽम्भसाम् १०
घ्रेयं घ्राणं शरीरं च भूमेरेते गुणास्त्रयः
एतावानिन्द्रियग्रामो व्याख्यातः पाञ्चभौतिकः ११
वायोः स्पर्शो रसोऽदभ्य ज्योतिषो रूपमुच्यते
आकाशप्रभवः शब्दो गन्धो भूमिगुणः स्मृतः १२
मनो बुद्धिश्च भावश्च त्रय एतेऽत्मयोनिजाः
न गुणानतिवर्तन्ते गुणेभ्यः परमा मताः १३
इन्द्रियाणि नरे पञ्च षष्ठं तु मन उच्यते
सप्तमीं बुद्धिमेवाहुः क्षेत्रज्ञं पुनरष्टमम् १४
चक्षुरालोचनायैव संशयं कुरुते मनः
बुद्धिरध्यवसानाय साक्षी क्षेत्रज्ञ उच्यते १५
रजस्तमश्च सत्त्वं च त्रय एते स्वयोनिजाः
समाः सर्वेषु भूतेषु तद्गुणेषूपलक्षयेत् १६
यथा कूर्म इहाङ्गानि प्रसार्य विनियच्छति
एवमेवेन्द्रियग्रामं बुद्धिः सृष्ट्वा नियच्छति १७

यदूर्ध्वं पादतलयोरवाङ्मूर्ध्नश्च पश्यति
एतस्मिन्नेव कृत्ये वै वर्तते बुद्धिरुत्तमा १८
गुणान्नेनीयते बुद्धिर्बुद्धिरेवेन्द्रियाण्यपि
मनःषष्ठानि सर्वाणि बुद्ध्यभावे कुतो गुणाः १९
तत्र यत्प्रीतिसंयुक्तं किंचिदात्मनि लक्षयेत्
प्रशान्तमिव संशुद्धं सत्त्वं तदुपधारयेत् २०
यत्तु संतापसंयुक्तं काये मनसि वा भवेत्
रजः प्रवर्तकं तत्स्यात्सततं हारि देहिनाम् २१
यत्तु संमोहसंयुक्तमव्यक्तविषयं भवेत्
अप्रतर्क्यमविज्ञेयं तमस्तदुपधार्यताम् २२
प्रहर्षः प्रीतिरानन्दः साम्यं स्वस्थात्मचित्तता
अकस्माद्यदि वा कस्माद्वर्तते सात्त्विको गुणः २३
अभिमानो मृषावादो लोभो मोहस्तथाक्षमा
लिङ्गानि रजसस्तानि वर्तन्ते हेत्वहेतुतः २४
तथा मोहः प्रमादश्च तन्द्री निद्राप्रबोधिता
कथंचिदभिवर्तन्ते विज्ञेयास्तामसा गुणाः २५
इति श्रीमहाभारते शान्तिपर्वणि एकोनचत्वारिंशदधिकद्विशततमोऽध्यायः
२३९

## चत्वारिंशदधिकद्विशततमोऽध्यायः

व्यास उवाच
मनः प्रसृजते भावं बुद्धिरध्यवसायिनी
हृदयं प्रियाप्रिये वेद त्रिविधा कर्मचोदना १
इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यः परमं मनः
मनसस्तु परा बुद्धिर्बुद्धेरात्मा परो मतः २
बुद्धिरात्मा मनुष्यस्य बुद्धिरेवात्मनोऽत्मिका
यदा विकुरुते भावं तदा भवति सा मनः ३
इन्द्रियाणां पृथग्भावाद्बुद्धिर्विक्रियते ह्यणु
शृण्वती भवति श्रोत्रं स्पृशती स्पर्श उच्यते ४
पश्यन्ती भवते दृष्टी रसती रसनं भवेत्

जिघ्रती भवति घ्राणं बुद्धिर्विक्रियते पृथक् ५
इन्द्रियाणीति तान्याहुस्तेष्वदृश्याधितिष्ठति
तिष्ठती पुरुषे बुद्धिस्त्रिषु भावेषु वर्तते ६
कदाचिल्लभते प्रीतिं कदाचिदपि शोचते
न सुखेन न दुःखेन कदाचिदिह युज्यते ७
सेयं भावात्मिका भावांस्त्रीनेतानतिवर्तते
सरितां सागरो भर्ता महावेलामिवोर्मिमान् ८
यदा प्रार्थयते किंचित्तदा भवति सा मनः
अधिष्ठानानि वै बुद्ध्या पृथगेतानि संस्मरेत्
इन्द्रियाण्येव मेध्यानि विजेतव्यानि कृत्स्नशः ९
सर्वाण्येवानुपूर्व्येण यद्यन्नानुविधीयते
अविभागगता बुद्धिर्भावे मनसि वर्तते
प्रवर्तमानं तु रजः सत्त्वमप्यनुवर्तते १०
ये चैव भावा वर्तन्ते सर्व एष्वेव ते त्रिषु
अन्वर्थाः संप्रवर्तन्ते रथनेमिमरा इव ११
प्रदीपार्थं नरः कुर्यादिन्द्रियैर्बुद्धिसत्तमैः
निश्चरद्भिर्यथायोगमुदासीनैर्यदृच्छया १२
एवंस्वभावमेवेदमिति विद्वान्न मुह्यति
अशोचन्नप्रहृष्यंश्च नित्यं विगतमत्सरः १३
न ह्यात्मा शक्यते द्रष्टुमिन्द्रियैः कामगोचरैः
प्रवर्तमानैरनये दुर्धरैरकृतात्मभिः १४
तेषां तु मनसा रश्मीन्यदा सम्यङ्नियच्छति
तदा प्रकाशते ह्यात्मा घटे दीप इव ज्वलन्
सर्वेषामेव भूतानां तमस्यपगते यथा १५
यथा वारिचरः पक्षी न लिप्यति जले चरन्
एवमेव कृतप्रज्ञो न दोषैर्विषयांश्चरन्
असज्जमानः सर्वेषु न कथंचन लिप्यते १६
त्यक्त्वा पूर्वकृतं कर्म रतिर्यस्य सदात्मनि
सर्वभूतात्मभूतस्य गुणमार्गेष्वसज्जतः १७
सत्त्वमात्मा प्रसवति गुणान्वापि कदाचन

न गुणा विदुरात्मानं गुणान्वेद स सर्वदा १८
परिद्रष्टा गुणानां स स्रष्टा चैव यथातथम्
सत्त्वक्षेत्रज्ञयोरेतदन्तरं विद्धि सूक्ष्मयोः १९
सृजते तु गुणानेक एको न सृजते गुणान्
पृथग्भूतौ प्रकृत्या तौ संप्रयुक्तौ च सर्वदा २०
यथा मत्स्योऽद्भिरन्यः सन्संप्रयुक्तौ तथैव तौ
मशकोदुम्बरौ चापि संप्रयुक्तौ यथा सह २१
इषीका वा यथा मुञ्जे पृथक्च सह चैव च
तथैव सहितावेतावन्योन्यस्मिन्प्रतिष्ठितौ २२
इति श्रीमहाभारते शान्तिपर्वणि चत्वारिंशदधिकद्विशततमोऽध्यायः २४०

## एकचत्वारिंशदधिकद्विशततमोऽध्यायः

व्यास उवाच
सृजते तु गुणान्सत्त्वं क्षेत्रज्ञस्त्वनुतिष्ठति
गुणान्विक्रियतः सर्वानुदासीनवदीश्वरः १
स्वभावयुक्तं तत्सर्वं यदिमान्सृजते गुणान्
ऊर्णनाभिर्यथा सूत्रं सृजते तन्तुवद्गुणान् २
प्रध्वस्ता न निवर्तन्ते प्रवृत्तिर्नोपलभ्यते
एवमेके व्यवस्यन्ति निवृत्तिरिति चापरे ३
उभयं संप्रधार्यैतदध्यवस्येद्यथामति
अनेनैव विधानेन भवेद्गर्भशयो महान् ४
अनादिनिधनं नित्यमासाद्य विचरेन्नरः
अक्रुध्यन्नप्रहृष्यंश्च नित्यं विगतमत्सरः ५
इत्येवं हृदयग्रन्थिं बुद्धिचिन्तामयं दृढम्
अतीत्य सुखमासीत अशोचंश्छिन्नसंशयः ६
तप्येयुः प्रच्युताः पृथ्व्या यथा पूर्णां नदीं नराः
अवगाढा ह्यविद्वांसो विद्धि लोकमिमं तथा ७
न तु ताम्यति वै विद्वान्स्थले चरति तत्त्ववित्
एवं यो विन्दतेऽत्मानं केवलं ज्ञानमात्मनः ८
एवं बुद्ध्वा नरः सर्वां भूतानामागतिं गतिम्

समवेन्द्य शनैः सम्यग्लभते शममुत्तमम् ९
एतद्वै जन्मसामर्थ्यं ब्राह्मणस्य विशेषतः
आत्मज्ञानं शमश्चैव पर्याप्तं तत्परायणम् १०
एतद्बुद्ध्वा भवेद्बुद्धः किमन्यद्बुद्धलक्षणम्
विज्ञायैतद्विमुच्यन्ते कृतकृत्या मनीषिणः ११
न भवति विदुषां महद्भयं यदविदुषां सुमहद्भयं भवेत्
न हि गतिरधिकास्ति कस्यचिद्भवति हि या विदुषः सनातनी १२
लोकमातुरमसूयते जनस्तत्तदेव च निरीक्ष्य शोचते
तत्र पश्य कुशलानशोचतो ये विदुस्तदुभयं कृताकृतम् १३
यत्करोत्यनभिसंधिपूर्वकं तच्च निर्णुदति यत्पुरा कृतम्
न प्रियं तदुभयं न चाप्रियं तस्य तज्जनयतीह कुर्वतः १४
इति श्रीमहाभारते शान्तिपर्वणि एकचत्वारिंशदधिकद्विशततमोऽध्यायः
२४१

द्विचत्वारिंशदधिकद्विशततमोऽध्यायः

शुक उवाच
यस्माद्धर्मात्परो धर्मो विद्यते नेह कश्चन
यो विशिष्टश्च धर्मेभ्यस्तं भवान्प्रब्रवीतु मे १
व्यास उवाच
धर्मं ते संप्रवक्ष्यामि पुराणमृषिसंस्तुतम्
विशिष्टं सर्वधर्मेभ्यस्तमिहैकमनाः शृणु २
इन्द्रियाणि प्रमाथीनि बुद्ध्या संयम्य यत्नतः
सर्वतो निष्पतिष्णूनि पिता बालानिवात्मजान् ३
मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तपः
तज्ज्यायः सर्वधर्मेभ्यः स धर्मः पर उच्यते ४
तानि सर्वाणि संधाय मनःषष्ठानि मेधया
आत्मतृप्त इवासीत बहु चिन्त्यमचिन्तयन् ५
गोचरेभ्यो निवृत्तानि यदा स्थास्यन्ति वेश्मनि
तदा त्वमात्मनात्मानं परं द्रक्ष्यसि शाश्वतम् ६
सर्वात्मानं महात्मानं विधूममिव पावकम्

तं पश्यन्ति महात्मानो ब्राह्मणा ये मनीषिणः ७
यथा पुष्पफलोपेतो बहुशाखो महाद्रुमः
आत्मनो नाभिजानीते क्व मे पुष्पं क्व मे फलम् ८
एवमात्मा न जानीते क्व गमिष्ये कुतो न्वहम्
अन्यो ह्यत्रान्तरात्मास्ति यः सर्वमनुपश्यति ९
ज्ञानदीपेन दीप्तेन पश्यत्यात्मानमात्मना
दृष्ट्वा त्वमात्मनात्मानं निरात्मा भव सर्ववित् १०
विमुक्तः सर्वपापेभ्यो मुक्तत्वच इवोरगः
परां बुद्धिमवाप्येह विपाप्मा विगतज्वरः ११
सर्वतःस्रोतसं घोरां नदीं लोकप्रवाहिनीम्
पञ्चेन्द्रियग्राहवतीं मनःसंकल्परोधसम् १२
लोभमोहतृणच्छन्नां कामक्रोधसरीसृपाम्
सत्यतीर्थानृतक्षोभां क्रोधपङ्कां सरिद्वराम् १३
अव्यक्तप्रभवां शीघ्रां दुस्तरामकृतात्मभिः
प्रतरस्व नदीं बुद्ध्या कामग्राहसमाकुलाम् १४
संसारसागरगमां योनिपातालदुस्तराम्
आत्मजन्मोद्भवां तात जिह्वावर्तां दुरासदाम् १५
यां तरन्ति कृतप्रज्ञा धृतिमन्तो मनीषिणः
तां तीर्णः सर्वतोमुक्तो विपूतात्मात्मविच्छुचिः १६
उत्तमां बुद्धिमास्थाय ब्रह्मभूयं गमिष्यसि
संतीर्णः सर्वसंक्लेशान्प्रसन्नात्मा विकल्मषः १७
भूमिष्ठानीव भूतानि पर्वतस्थो निशामय
अक्रुध्यन्नप्रहृष्यंश्च ननृशंसमतिस्तथा
ततो द्रक्ष्यसि भूतानां सर्वेषां प्रभवाप्ययौ १८
एवं वै सर्वधर्मेभ्यो विशिष्टं मेनिरे बुधाः
धर्मं धर्मभृतां श्रेष्ठो मुनयस्तत्त्वदर्शिनः १९
आत्मनोऽव्ययिनो ज्ञात्वा इदं पुत्रानुशासनम्
प्रयताय प्रवक्तव्यं हितायानुगताय च २०
आत्मज्ञानमिदं गुह्यं सर्वगुह्यतमं महत्
अब्रुवं यदहं तात आत्मसाक्षिकमञ्जसा २१

नैव स्त्री न पुमानेतन्नैव चेदं नपुंसकम्
अदुःखमसुखं ब्रह्म भूतभव्यभवात्मकम् २२
नैतज्ज्ञात्वा पुमान्स्त्री वा पुनर्भवमवाप्नुयात्
अभवप्रतिपत्त्यर्थमेतद्वर्त्म विधीयते २३
यथा मतानि सर्वाणि न चैतानि यथा तथा
कथितानि मया पुत्र भवन्ति न भवन्ति च २४
तत्प्रीतियुक्तेन गुणान्वितेन पुत्रेण सत्पुत्रगुणान्वितेन
पृष्टो हीदं प्रीतिमता हितार्थं ब्रूयात्सुतस्येह यदुक्तमेतत् २५
इति श्रीमहाभारते शान्तिपर्वणि द्विचत्वारिंशदधिकद्विशततमोऽध्यायः २४२

त्रिचत्वारिंशदधिकद्विशततमोऽध्यायः

व्यास उवाच
गन्धान्नरसान्नानुरुन्ध्यात्सुखं वा नालंकारांश्चाप्नुयात्तस्य तस्य
मानं च कीर्तिं च यशश्च नेच्छेत्स वै प्रचारः पश्यतो ब्राह्मणस्य १
सर्वान्वेदानधीयीत शुश्रूषुर्ब्रह्मचर्यवान्
ऋचो यजूंषि सामानि न तेन न स ब्राह्मणः २
ज्ञातिवत्सर्वभूतानां सर्ववित्सर्ववेदवित्
नाकामो म्रियते जातु न तेन न च ब्राह्मणः ३
इष्टीश्च विविधाः प्राप्य क्रतूंश्चैवाप्तदक्षिणान्
नैव प्राप्नोति ब्राह्मण्यमभिध्यानात्कथंचन ४
यदा चायं न बिभेति यदा चास्मान्न बिभ्यति
यदा नेच्छति न द्वेष्टि ब्रह्म संपद्यते तदा ५
यदा न कुरुते भावं सर्वभूतेषु पापकम्
कर्मणा मनसा वाचा ब्रह्म संपद्यते तदा ६
कामबन्धनमेवैकं नान्यदस्तीह बन्धनम्
कामबन्धनमुक्तो हि ब्रह्मभूयाय कल्पते ७
कामतो मुच्यमानस्तु धूम्राभ्रादिव चन्द्रमाः
विरजाः कालमाकाङ्क्षन्धीरो धैर्येण वर्तते ८
आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत्
स कामकान्तो न तु कामकामः स वै लोकात्स्वर्गमुपैति देही ९

वेदस्योपनिषत्सत्यं सत्यस्योपनिषद्दमः
दमस्योपनिषद्दानं दानस्योपनिषत्तपः १०
तपसोपनिषत्त्यागस्त्यागस्योपनिषत्सुखम्
सुखस्योपनिषत्स्वर्गः स्वर्गस्योपनिषच्छमः ११
क्लेदनं शोकमनसोः संतापं तृष्णया सह
सत्त्वमिच्छसि सन्तोषाच्छान्तिलक्षणमुत्तमम् १२
विशोको निर्ममः शान्तः प्रसन्नात्मात्मवित्तमः
षड्भिर्लक्षणवानेतैः समग्रः पुनरेष्यति १३
षड्भिः सत्त्वगुणोपेतैः प्राज्ञैरधिकमन्त्रिभिः
ये विदुः प्रेत्य चात्मानमिहस्थांस्तांस्तथा विदुः १४
अकृत्रिममसंहार्यं प्राकृतं निरुपस्कृतम्
अध्यात्मं सुकृतप्रज्ञः सुखमव्ययमश्नुते १५
निष्प्रचारं मनः कृत्वा प्रतिष्ठाप्य च सर्वतः
यामयं लभते तुष्टिं सा न शक्यमतोऽन्यथा १६
येन तृप्यत्यभुञ्जानो येन तृष्यत्यवित्तवान्
येनास्नेहो बलं धत्ते यस्तं वेद स वेदवित् १७
संगोप्य ह्यात्मनो द्वाराण्यपिधाय विचिन्तयन्
यो ह्यास्ते ब्राह्मणः शिष्टः स आत्मरतिरुच्यते १८
समाहितं पर तत्त्वे क्षीणकाममवस्थितम्
सर्वतः सुखमन्वेति वपुश्चान्द्रमसं यथा १९
सविशेषाणि भूतानि गुणांश्चाभजतो मुनेः
सुखेनापोह्यते दुःखं भास्करेण तमो यथा २०
तमतिक्रान्तकर्माणमतिक्रान्तगुणक्षयम्
ब्राह्मणं विषयाश्लिष्टं जरामृत्यू न विन्दतः २१
स यदा सर्वतो मुक्तः समः पर्यवतिष्ठते
इन्द्रियाणीन्द्रियार्थांश्च शरीरस्थोऽतिवर्तते २२
कारणं परमं प्राप्य अतिक्रान्तस्य कार्यताम्
पुनरावर्तनं नास्ति संप्राप्तस्य परात्परम् २३
इति श्रीमहाभारते शान्तिपर्वणि त्रिचत्वारिंशदधिकद्विशततमोऽध्यायः २४३

## चतुश्चत्वारिंशदधिकद्विशततमोऽध्यायः

व्यास उवाच
द्वंद्वानि मोक्षजिज्ञासुरर्थधर्मावनुष्ठितः
वक्त्रा गुणवता शिष्यः श्राव्यः पूर्वमिदं महत् १
आकाशं मारुतो ज्योतिरापः पृथ्वी च पञ्चमी
भावाभावौ च कालश्च सर्वभूतेषु पञ्चसु २
अन्तरात्मकमाकाशं तन्मयं श्रोत्रमिन्द्रियम्
तस्य शब्दं गुणं विद्यान्मूर्तिशास्त्रविधानवित् ३
चरणं मारुतात्मेति प्राणापानौ च तन्मयौ
स्पर्शनं चेन्द्रियं विद्यात्तथा स्पर्शं च तन्मयम् ४
ततः पाकः प्रकाशश्च ज्योतिश्चक्षुश्च तन्मयम्
तस्य रूपं गुणं विद्यात्तमोऽन्ववसितात्मकम् ५
प्रक्लेदः क्षुद्रता स्नेह इत्यापो ह्युपदश्यिते
रसनं चेन्द्रियं जिह्वा रसश्चापां गुणो मतः ६
संघातः पार्थिवो धातुरस्थिदन्तनखानि च
श्मश्रु लोम च केशाश्च सिराः स्नायु च चर्म च ७
इन्द्रियं घ्राणसंज्ञानं नासिकेत्यभिधीयते
गन्धश्चैवेन्द्रियार्थोऽय विज्ञेयः पृथिवीमयः ८
उत्तरेषु गुणाः सन्ति सर्वे सर्वेषु चोत्तराः
पञ्चानां भूतसंघानां संततिं मुनयो विदुः ९
मनो नवममेषां तु बुद्धिस्तु दशमी स्मृता
एकादशोऽन्तरात्मा च सर्वतः पर उच्यते १०
व्यवसायात्मिका बुद्धिर्मनोव्याकरणात्मकम्
कर्मानुमानाद्विज्ञेयः स जीवः क्षेत्रसंज्ञकः ११
एभिः कालाष्टमैर्भावैर्यः सर्वैः सर्वमन्वितम्
पश्यत्यकलुषं प्राज्ञः स मोहं नानुवर्तते १२
इति श्रीमहाभारते शान्तिपर्वणि चतुश्चत्वारिंशदधिकद्विशततमोऽध्यायः २४४

## पञ्चचत्वारिंशदधिकद्विशततमोऽध्यायः

व्यास उवाच

शरीराद्विप्रमुक्तं हि सूक्ष्मभूतं शरीरिणम्
कर्मभिः परिपश्यन्ति शास्त्रोक्तैः शास्त्रचेतसः १
यथा मरीच्यः सहिताश्चरन्ति गच्छन्ति तिष्ठन्ति च दृश्यमानाः
देहैर्विमुक्ता विचरन्ति लोकांस्तथैव सत्त्वान्यतिमानुषाणि २
प्रतिरूपं यथैवाप्सु तापः सूर्यस्य लक्ष्यते
सत्त्ववांस्तु तथा सत्त्वं प्रतिरूपं प्रपश्यति ३
तानि सूक्ष्माणि सत्त्वस्था विमुक्तानि शरीरतः
स्वेन तत्त्वेन तत्त्वज्ञाः पश्यन्ति नियतेन्द्रियाः ४
स्वपतां जाग्रतां चैव सर्वेषामात्मचिन्तितम्
प्रधानाद्वैधयुक्तानां जहतां कर्मजं रजः ५
यथाहनि तथा रात्रौ यथा रात्रौ तथाहनि
वशे तिष्ठति सत्त्वात्मा सततं योगयोगिनाम् ६
तेषां नित्यं सदानित्यो भूतात्मा सततं गुणैः
सप्तभिस्त्वन्वितः सूक्ष्मैश्चरिष्णुरजरामरः ७
मनोबुद्धिपराभूतः स्वदेहपरदेहवित्
स्वप्नेष्वपि भवत्येष विज्ञाता सुखदुःखयोः ८
तत्रापि लभते दुःखं तत्रापि लभते सुखम्
क्रोधलोभौ तु तत्रापि कृत्वा व्यसनमर्छति ९
प्रीणितश्चापि भवति महतोऽथानवाप्य च
करोति पुण्यं तत्रापि जाग्रन्निव च पश्यति १०
तमेवमतितेजोंशं भूतात्मानं हृदि स्थितम्
तमोरजोभ्यामाविष्टा नानुपश्यन्ति मूर्तिषु ११
शास्त्रयोगपरा भूत्वा स्वमात्मानं परीप्सवः
अनुच्छ्वासान्यमूर्तीनि यानि वज्रोपमान्यपि १२
पृथग्भूतेषु सृष्टेषु चतुर्ष्वाश्रमकर्मसु
समाधौ योगमेवैतच्छाण्डिल्यः शममब्रवीत् १३
विदित्वा सप्त सूक्ष्माणि षडङ्गं च महेश्वरम्
प्रधानविनियोगस्थः परं ब्रह्माधिगच्छति १४

इति श्रीमहाभारते शान्तिपर्वणि पञ्चचत्वारिंशदधिकद्विशततमोऽध्यायः

२४५

## षट्चत्वारिंशदधिकद्विशततमोऽध्यायः

व्यास उवाच
हृदि कामद्रुमश्चित्रो मोहसंचयसंभवः
क्रोधमानमहास्कन्धो विवित्सापरिमोचनः १
तस्य चाज्ञानमाधारः प्रमादः परिषेचनम्
सोऽभ्यसूयापलाशो हि पुरादुष्कृतसारवान् २
संमोहचिन्ताविटपः शोकशाखो भयंकरः
मोहनीभिः पिपासाभिर्लताभिः परिवेष्टितः ३
उपासते महावृक्षं सुलुब्धास्तं फलेप्सवः
आयासैः संयतः पाशैः फलानि परिवेष्टयन् ४
यस्तान्पाशान्वशे कृत्वा तं वृक्षमपकर्षति
गतः स दुःखयोरन्तं यतमानस्तयोर्द्वयोः ५
संरोहत्यकृतप्रज्ञः संतापेन हि पादपम्
स तमेव ततो हन्ति विषं ग्रस्तमिवातुरम् ६
तस्यानुशयमूलस्य मूलमुद्ध्रियते बलात्
त्यागाप्रमादाकृतिना साम्येन परमासिना ७
एवं यो वेद कामस्य केवलं परिकर्षणम्
वंधं वै कामशास्त्रस्य स दुःखान्यतिवर्तते ८
शरीरं पुरमित्याहुः स्वामिनी बुद्धिरिष्यते
तत्र बुद्धेः शरीरस्थं मनो नामार्थचिन्तकम् ९
इन्द्रियाणि जनाः पौरास्तदर्थं तु परा कृतिः
तत्र द्वौ दारुणौ दोषौ तमो नाम रजस्तथा १०
यदर्थमुपजीवन्ति पौराः सहपुरेश्वराः
अद्वारेण तमेवार्थं द्वौ दोषावुपजीवतः ११
तत्र बुद्धिर्हि दुर्धर्षा मनः साधर्म्यमुच्यते
पौराश्चापि मनस्त्रस्तास्तेषामपि चला स्थितिः १२
यदर्थं बुद्धिरध्यास्ते न सोऽथ परिषीदति
यदर्थं पृथगध्यास्ते मनस्तत्परिषीदति १३
पृथग्भूतं यदा बुद्ध्या मनो भवति केवलम्
तत्रैनं विवृतं शून्यं रजः पर्यवतिष्ठते १४

तन्मनः कुरुते सख्यं रजसा सह संगतम्
तं चादाय जनं पौरं रजसे संप्रयच्छति १५
इति श्रीमहाभारते शान्तिपर्वणि षट्चत्वारिंशदधिकद्विशततमोऽध्यायः
२४६

## सप्तचत्वारिंशदधिकद्विशततमोऽध्यायः

भीष्म उवाच
भूतानां गुणसंख्यानं भूयः पुत्र निशामय
द्वैपायनमुखाद्भ्रष्टं श्लाघया परयानघ १
दीप्तानलनिभः प्राह भगवान्धूम्रवर्चसे
ततोऽहमपि वक्ष्यामि भूयः पुत्र निदर्शनम् २
भूमेः स्थैर्यं पृथुत्वं च काठिन्यं प्रसवात्मता
गन्धो गुरुत्वं शक्तिश्च संघातः स्थापना धृतिः ३
अपां शैत्यं रसः क्लेदो द्रवत्वं स्नेहसौम्यता
जिह्वा विष्यन्दिनी चैव भौमाप्यास्रवणं तथा ४
अग्नेर्दुर्धषता तेजस्तापः पाकः प्रकाशनम्
शौचं रागो लघुस्तैक्ष्ण्यं दशमं चोर्ध्वभागिता ५
वायोरनियमः स्पर्शो वादस्थानं स्वतन्त्रता
बलं शैघ्र्यं च मोहश्च चेष्टा कर्मकृता भवः ६
आकाशस्य गुणः शब्दो व्यापित्वं छिद्रतापि च
अनाश्रयमनालम्बमव्यक्तमविकारिता ७
अप्रतीघातता चैव भूतत्वं विकृतानि च
गुणाः पञ्चाशतं प्रोक्ताः पञ्चभूतात्मभाविताः ८
चलोपपत्तिर्व्यक्तिश्च विसर्गः कल्पना क्षमा
सदसच्चाशुता चैव मनसो नव वै गुणाः ९
इष्टानिष्टविकल्पश्च व्यवसायः समाधिता
संशयः प्रतिपत्तिश्च बुद्धौ पञ्चेह ये गुणाः १०
युधिष्ठिर उवाच
कथं पञ्चगुणा बुद्धिः कथं पञ्चेद्रिया गुणाः
एतन्मे सर्वमाचक्ष्व सूक्ष्मज्ञानं पितामह ११

भीष्म उवाच
आहुः षष्टिं भूतगुणान्वै भूतविशिष्टा नित्यविषक्ताः
भूतविषक्ताश्चाक्षरसृष्टाः पुत्र न नित्यं तदिह वदन्ति १२
तत्पुत्र चिन्ताकलितं यदुक्तमनागतं वै तव संप्रतीह
भूतार्थतत्त्वं तदवाप्य सर्वं भूतप्रभावाद्भव शान्तबुद्धिः १३
इति श्रीमहाभारते शान्तिपर्वणि सप्तचत्वारिंशदधिकद्विशततमोऽध्यायः
२४७

अष्टचत्वारिंशदधिकद्विशततमोऽध्यायः

युधिष्ठिर उवाच
य इमे पृथिवीपालाः शेरते पृथिवीतले
पृतनामध्य एते हि गतसत्त्वा महाबलाः १
एकैकशो भीमबला नागायुतबलास्तथा
एते हि निहताः संख्ये तुल्यतेजोबलैर्नरैः २
नैषां पश्यामि हन्तारं प्राणिनां संयुगे पुरा
विक्रमेणोपसंपन्नास्तेजोबलसमन्विताः ३
अथ चेमे महाप्राज्ञ शेरते हि गतासवः
मृता इति च शब्दोऽय वर्तत्येषु गतासुषु ४
इमे मृता नृपतयः प्रायशो भीमविक्रमाः
तत्र मे संशयो जातः कुतः संज्ञा मृता इति ५
कस्य मृत्युः कुतो मृत्युः केन मृत्युरिह प्रजाः
हरत्यमरसंकाश तन्मे ब्रूहि पितामह ६
भीष्म उवाच
पुरा कृतयुगे तात राजासीदविकम्पकः
स शत्रुवशमापन्नः संग्रामे क्षीणवाहनः ७
तस्य पुत्रो हरिर्नाम नारायणसमो बले
स शत्रुभिर्हतः संख्ये सबलः सपदानुगः ८
स राजा शत्रुवशगः पुत्रशोकसमन्वितः
यदृच्छयाशान्तिपरो ददर्श भुवि नारदम् ९
स तस्मै सर्वमाचष्ट यथा वृत्तं जनेश्वरः

शत्रुभिर्ग्रहणं संख्ये पुत्रस्य मरणं तथा १०
तस्य तद्वचनं श्रुत्वा नारदोऽथ तपोधनः
आख्यानमिदमाचष्ट पुत्रशोकापहं तदा ११
राजञ्शृणु समाख्यानमद्येदं बहुविस्तरम्
यथा वृत्तं श्रुतं चैव मयापि वसुधाधिप १२
प्रजाः सृष्ट्वा महातेजाः प्रजासर्गे पितामहः
अतीव वृद्धा बहुला नामृष्यत पुनः प्रजाः १३
न ह्यन्तरमभूत्किंचित्क्वचिज्जन्तुभिरच्युत
निरुच्छ्वासमिवोन्नद्धः त्रैलोक्यमभवन्नृप १४
तस्य चिन्ता समुत्पन्ना संहारं प्रति भूपते
चिन्तयन्नाध्यगच्छच्च संहारे हेतुकारणम् १५
तस्य रोषान्महाराज खेभ्योऽग्निरुदतिष्ठत
तेन सर्वा दिशो राजन्ददाह स पितामहः १६
ततो दिवं भुवं खं च जगच्च सचराचरम्
ददाह पावको राजन्भगवत्कोपसंभवः १७
तत्रादह्यन्त भूतानि जङ्गमानि ध्रुवाणि च
महता कोपवेगेन कुपिते प्रपितामहे १८
ततो हरिजटः स्थाणुर्वेदाध्वरपतिः शिवः
जगाद शरणं देवो ब्रह्माणं परवीरहा १९
तस्मिन्नभिगते स्थाणौ प्रजानां हितकाम्यया
अब्रवीद्वरदो देवो ज्वलन्निव तदा शिवम् २०
करवाण्यद्य कं कामं वरार्होऽसि मतो मम
कर्ता ह्यस्मि प्रियं शंभो तव यद्धृदि वर्तते २१

इति श्रीमहाभारते शान्तिपर्वणि अष्टचत्वारिंशदधिकद्विशततमोऽध्यायः
२४८

## एकोनपञ्चाशदधिकद्विशततमोऽध्यायः

स्थाणुरुवाच
प्रजासर्गनिमित्तं मे कार्यवत्तामिमां प्रभो
विद्धि सृष्टास्त्वया हीमा मा कुप्यासां पितामह १

तव तेजोऽग्निना देव प्रजा दह्यन्ति सर्वशः
ता दृष्ट्वा मम कारुण्यं मा कुप्यासां जगत्प्रभो २
प्रजापतिरुवाच
न कुप्ये न च मे कामो न भवेरन्प्रजा इति
लाघवार्थं धरण्यास्तु ततः संहार इष्यते ३
इयं हि मां सदा देवी भारार्ता समचोदयत्
संहारार्थं महादेव भारेणाप्सु निमज्जति ४
यदाहं नाधिगच्छामि बुद्ध्या बहु विचारयन्
संहारमासां वृद्धानां ततो मां क्रोध आविशत् ५
स्थाणुरुवाच
संहारान्तं प्रसीदस्व मा क्रुधस्त्रिदशेश्वर
मा प्रजाः स्थावरं चैव जङ्गमं च विनीनशः ६
पल्वलानि च सर्वाणि सर्वं चैव तृणोलपम्
स्थावरं जङ्गमं चैव भूतग्रामं चतुर्विधम् ७
तदेतद्भस्मसाद्भूतं जगत्सर्वमुपप्लुतम्
प्रसीद भगवन्साधो वर एष वृतो मया ८
नष्टा न पुनरेष्यन्ति प्रजा ह्येताः कथंचन
तस्मान्निवर्त्यतामेतत्तेजः स्वेनैव तेजसा ९
उपायमन्यं संपश्य प्रजानां हितकाम्यया
यथेमे जन्तवः सर्वे निवर्तेरन्परंतप १०
अभावमभिगच्छेयुरुत्सिन्नप्रजनाः प्रजाः
अधिदैवनियुक्तोऽस्मि त्वया लोकेष्विहेश्वर ११
त्वद्भवं हि जगन्नाथ जगत्स्थावरजङ्गमम्
प्रसाद्य त्वां महादेव याचाम्यावृत्तिजाः प्रजाः १२
नारद उवाच
श्रुत्वा तु वचनं देवः स्थाणोर्नियतवाङ्मनाः
तेजस्तत्स्वं निजग्राह पुनरेवान्तरात्मना १३
ततोऽग्निमुपसंगृह्य भगवाँल्लोकपूजितः
प्रवृत्तिं च निवृत्तिं च कल्पयामास वै प्रभुः १४
उपसंहरतस्तस्य तमग्निं रोषजं तदा

प्रादुर्बभूव विश्वेभ्यः खेभ्यो नारी महात्मनः १५
कृष्णा रक्ताम्बरधरा रक्तनेत्रतलान्तरा
दिव्यकुण्डलसंपन्ना दिव्याभरणभूषिता १६
सा विनिःसृत्य वै खेभ्यो दक्षिणामाश्रिता दिशम्
ददृशातेऽथ तौ कन्यां देवौ विश्वेश्वरावुभौ १७
तामाहूय तदा देवो लोकानामादिरीश्वरः
मृत्यो इति महीपाल जहि चेमाः प्रजा इति १८
त्वं हि संहारबुद्ध्या मे चिन्तिता रुषितेन च
तस्मात्संहर सर्वास्त्वं प्रजाः सजडपण्डिताः १९
अविशेषेण चैव त्वं प्रजाः संहर भामिनि
मम त्वं हि नियोगेन श्रेयः परमवाप्स्यसि २०
एवमुक्ता तु सा देवी मृत्युः कमलमालिनी
प्रदध्यौ दुःखिता बाला साश्रुपातमतीव हि २१
पाणिभ्यां चैव जग्राह तान्यश्रूणि जनेश्वरः
मानवानां हितार्थाय ययाचे पुनरेव च २२
इति श्रीमहाभारते शान्तिपर्वणि एकोनपञ्चाशदधिकद्विशततमोऽध्यायः २४९

## पञ्चाशदधिकद्विशततमोऽध्यायः

नारद उवाच
विनीय दुःखमबला सा त्वतीवायतेक्षणा
उवाच प्राञ्जलिर्भूत्वा लतेवावर्जिता तदा १
त्वया सृष्टा कथं नारी मादृशी वदतां वर
रौद्रकर्माभिजायेत सर्वप्राणिभयंकरी २
बिभेम्यहमधर्मस्य धर्म्यमादिश कर्म मे
त्वं मां भीतामवेक्षस्व शिवेनेश्वर चक्षुषा ३
बालान्वृद्धान्वयस्यांश्च न हरेयमनागसः
प्राणिनः प्राणिनामीश नमस्तेऽभिप्रसीद मे ४
प्रियान्पुत्रान्वयस्यांश्च भ्रातॄन्मातॄः पितॄनपि
अपध्यास्यन्ति यद्देव मृतांस्तेषां बिभेम्यहम् ५
कृपणाश्रुपरिक्लेदो दहेन्मां शाश्वतीः समाः

तेभ्योऽह बलवद्भीता शरणं त्वामुपागता ६
यमस्य भवने देव यात्यन्ते पापकर्मिणः
प्रसादये त्वा वरद प्रसादं कुरु मे प्रभो ७
एतमिच्छाम्यहं कामं त्वत्तो लोकपितामह
इच्छेयं त्वत्प्रसादाच्च तपस्तप्तुं सुरेश्वर ८
पितामह उवाच
मृत्यो संकल्पिता मे त्वं प्रजासंहारहेतुना
गच्छ संहर सर्वास्त्वं प्रजा मा च विचारय ९
एतदेवमवश्यं हि भविता नैतदन्यथा
क्रियतामनवद्याङ्गि यथोक्तं मद्वचोऽनघे १०
नारद उवाच
एवमुक्ता महाबाहो मृत्युः परपुरंजय
न व्याजहार तस्थौ च प्रह्वा भगवदुन्मुखी ११
पुनः पुनरथोक्ता सा गतसत्त्वेव भामिनी
तूष्णीमासीत्ततो देवो देवानामीश्वरेश्वरः १२
प्रससाद किल ब्रह्मा स्वयमेवात्मनात्मवान्
स्मयमानश्च लोकेशो लोकान्सर्वानवैक्षत १३
निवृत्तरोषे तस्मिंस्तु भगवत्यपराजिते
सा कन्यापजगामास्य समीपादिति नः श्रुतम् १४
अपसृत्याप्रतिश्रुत्य प्रजासंहरणं तदा
त्वरमाणेव राजेन्द्र मृत्युर्धेनुकमभ्ययात् १५
सा तत्र परमं देवी तपोऽचरत दुश्चरम्
समा ह्येकपदे तस्थौ दश पद्मानि पञ्च च १६
तां तथा कुर्वतीं तत्र तपः परमदुश्चरम्
पुनरेव महातेजा ब्रह्मा वचनमब्रवीत् १७
कुरुष्व मे वचो मृत्यो तदनादृत्य सत्वरा
तथैवैकपदे तात पुनरन्यानि सप्त सा १८
तस्थौ पद्मानि षट्चैव पञ्च द्वे चैव मानद
भूयः पद्मायुतं तात मृगैः सह चचार सा १९
पुनर्गत्वा ततो राजन्मौनमातिष्ठदुत्तमम्

अप्सु वर्षसहस्राणि सप्त चैकं च पार्थिव २०
ततो जगाम सा कन्या कौशिकीं भरतर्षभ
तत्र वायुजलाहारा चचार नियमं पुनः २१
ततो ययौ महाभागा गङ्गां मेरुं च केवलम्
तस्थौ दार्विव निश्चेष्टा भूतानां हितकाम्यया २२
ततो हिमवतो मूर्ध्नि यत्र देवाः समीजिरे
तत्राङ्गुष्ठेन राजेन्द्र निखर्वमपरं ततः
तस्थौ पितामहं चैव तोषयामास यत्नतः २३
ततस्तामब्रवीत्तत्र लोकानां प्रभवाप्ययः
किमिदं वर्तते पुत्रि क्रियतां तद्वचो मम २४
ततोऽब्रवीत्पुनर्मृत्युर्भगवन्तं पितामहम्
न हरेयं प्रजा देव पुनस्त्वाहं प्रसादये २५
तातधर्मभयत्रस्तां पुनरेव च याचतीम्
तदाब्रवीद्देवदेवो निगृह्येदं वचस्ततः २६
अधर्मो नास्ति ते मृत्यो संयच्छेमाः प्रजाः शुभे
मया ह्युक्तं मृषा भद्रे भविता नेह किंचन २७
धर्मः सनातनश्च त्वामिहैवानुप्रवेक्ष्यते
अहं च विबुधाश्चैव त्वद्धिते निरताः सदा २८
इममन्यं च ते कामं ददानि मनसेप्सितम्
न त्वा दोषेण यास्यन्ति व्याधिसंपीडिताः प्रजाः २९
पुरुषेषु च रूपेण पुरुषस्त्वं भविष्यसि
स्त्रीषु स्त्रीरूपिणी चैव तृतीयेषु नपुंसकम् ३०
सैवमुक्ता महाराज कृताञ्जलिरुवाच ह
पुनरेव महात्मानं नेति देवेशमव्ययम् ३१
तामब्रवीत्तदा देवो मृत्यो संहर मानवान्
अधर्मस्ते न भविता तथा ध्यास्याम्यहं शुभे ३२
यानश्रुबिन्दून्पतितानपश्यं ये पाणिभ्यां धारितास्ते पुरस्तात्
ते व्याधयो मानवान्घोररूपाः प्राप्ते काले पीडयिष्यन्ति मृत्यो ३३
सर्वेषां त्वं प्राणिनामन्तकाले कामक्रोधौ सहितौ योजयेथाः
एवं धर्मस्त्वामुपैष्यत्यमेयो न चाधर्मं लप्स्यसे तुल्यवृत्तिः ३४

एवं धर्मं पालयिष्यस्यथोक्तं न चात्मानं मज्जयिष्यस्यधर्मे
तस्मात्कामं रोचयाभ्यागतं त्वं संयोज्याथो संहरस्वेह जन्तून् ३५
सा वै तदा मृत्युसंज्ञापदेशाच्छापाद्भीता बाढमित्यब्रवीत्तम्
अथो प्राणान्प्राणिनामन्तकाले कामक्रोधौ प्राप्य निर्मोह्य हन्ति ३६
मृत्योर्ये ते व्याधयश्चाश्रुपाता मनुष्याणां रुज्यते यैः शरीरम्
सर्वेषां वै प्राणिनां प्राणनान्ते तस्माच्छोकं मा कृथा बुध्य बुद्ध्या ३७
सर्वे देवाः प्राणिनां प्राणनान्ते गत्वा वृत्ताः संनिवृत्तास्तथैव
एवं सर्वे मानवाः प्राणनान्ते गत्वा वृत्ता देववद्राजसिंह ३८
वायुर्भीमो भीमनादो महौजाः सर्वेषां च प्राणिनां प्राणभूतः
नानावृत्तिर्देहिनां देहभेदे तस्माद्वायुर्देवदेवो विशिष्टाः ३९
सर्वे देवा मर्त्यसंज्ञाविशिष्टाः सर्वे मर्त्या देवसंज्ञाविशिष्टाः
तस्मात्पुत्रं मा शुचो राजसिंह पुत्रः स्वर्गं प्राप्य ते मोदते ह ४०
एवं मृत्युर्देवसृष्टा प्रजानां प्राप्ते काले संहरन्ती यथावत्
तस्याश्चैव व्याधयस्तेऽश्रुपाताः प्राप्ते काले संहरन्तीह जन्तून् ४१
इति श्रीमहाभारते शान्तिपर्वणि पञ्चाशदधिकद्विशततमोऽध्यायः २५०

## एकपञ्चाशदधिकद्विशततमोऽध्यायः

युधिष्ठिर उवाच
इमे वै मानवाः सर्वे धर्मं प्रति विशङ्किताः
कोऽय धर्मः कुतो धर्मस्तन्मे ब्रूहि पितामह १
धर्मो न्वयमिहार्थः किममुत्रार्थोऽपि वा भवेत्
उभयार्थोऽपि वा धर्मस्तन्मे ब्रूहि पितामह २
भीष्म उवाच
सदाचारः स्मृतिर्वेदास्त्रिविधं धर्मलक्षणम्
चतुर्थमर्थमित्याहुः कवयो धर्मलक्षणम् ३
अपि ह्युक्तानि कर्माणि व्यवस्यन्त्युत्तरावरे
लोकयात्रार्थमेवेह धर्मस्य नियमः कृतः
उभयत्र सुखोदर्क इह चैव परत्र च ४
अलब्ध्वा निपुणं धर्मं पापः पापे प्रसज्जति
न च पापकृतः पापान्मुच्यन्ते केचिदापदि ५

अपापवादी भवति यदा भवति धर्मवित्
धर्मस्य निष्ठा स्वाचारस्तमेवाश्रित्य भोत्स्यसे ६
यदाधर्मसमाविष्टो धनं गृह्णाति तस्करः
रमते निर्हरन्स्तेनः परवित्तमराजके ७
यदास्य तद्धरन्त्यन्ये तदा राजानमिच्छति
तदा तेषां स्पृहयते ये वै तुष्टाः स्वकैर्धनैः ८
अभीतः शुचिरभ्येति राजद्वारमशङ्कितः
न हि दुश्चरितं किंचिदन्तरात्मनि पश्यति ९
सत्यस्य वचनं साधु न सत्याद्विद्यते परम्
सत्येन विधृतं सर्वं सर्वं सत्ये प्रतिष्ठितम् १०
अपि पापकृतो रौद्राः सत्यं कृत्वा पृथक्पृथक्
अद्रोहमविसंवादं प्रवर्तन्ते तदाश्रयाः
ते चेन्मिथोऽधृतिं कुर्युर्विनश्येयुरसंशयम् ११
न हर्तव्यं परधनमिति धर्मः सनातनः
मन्यन्ते बलवन्तस्तं दुर्बलैः संप्रवर्तितम्
यदा नियतिदौर्बल्यमथैषामेव रोचते १२
न ह्यत्यन्तं बलयुता भवन्ति सुखिनोऽपि वा
तस्मादनार्जवे बुद्धिर्न कार्या ते कथंचन १३
असाधुभ्योऽस्य न भयं न चोरेभ्यो न राजतः
न किंचित्कस्यचित्कुर्वन्निर्भयः शुचिरावसेत् १४
सर्वतः शङ्कते स्तेनो मृगो ग्राममिवेयिवान्
बहुधाचरितं पापमन्यत्रैवानुपश्यति १५
मुदितः शुचिरभ्येति सर्वतो निर्भयः सदा
न हि दुश्चरितं किंचिदात्मनोऽन्येषु पश्यति १६
दातव्यमित्ययं धर्म उक्तो भूतहिते रतैः
तं मन्यन्ते धनयुताः कृपणैः संप्रवर्तितम् १७
यदा नियतिकार्पण्यमथैषामेव रोचते
न ह्यत्यन्तं धनवन्तो भवन्ति सुखिनोऽपि वा १८
यदन्यैर्विहितं नेच्छेदात्मनः कर्म पूरुषः
न तत्परेषु कुर्वीत जानन्नप्रियमात्मनः १९

योऽन्यस्य स्यादुपपतिः स कं किं वक्तुमर्हति
यदन्यस्तस्य तत्कुर्यान्न मृष्येदिति मे मतिः २०
जीवितुं यः स्वयं चेच्छेत्कथं सोऽन्य प्रघातयेत्
यद्यदात्मनि इच्छेत तत्परस्यापि चिन्तयेत् २१
अतिरिक्तैः संविभजेद्भोगैरन्यानकिंचनान्
एतस्मात्कारणाद्धात्रा कुसीदं संप्रवर्तितम् २२
यस्मिंस्तु देवाः समये संतिष्ठेरंस्तथा भवेत्
अथ चेल्लाभसमये स्थितिर्धर्मेऽपि शोभना २३
सर्वं प्रियाभ्युपगतं धर्ममाहुर्मनीषिणः
पश्यैतं लक्षणोद्देशं धर्माधर्मे युधिष्ठिर २४
लोकसंग्रहसंयुक्तं विधात्रा विहितं पुरा
सूक्ष्मधर्मार्थनियतं सतां चरितमुत्तमम् २५
धर्मलक्षणमाख्यातमेतत्ते कुरुसत्तम
तस्मादनार्जवे बुद्धिर्न कार्या ते कथंचन २६
इति श्रीमहाभारते शान्तिपर्वणि एकपञ्चाशदधिकद्विशततमोऽध्यायः २५१

## द्विपञ्चाशदधिकद्विशततमोऽध्यायः

युधिष्ठिर उवाच
सूक्ष्मं साधु समादिष्टं भवता धर्मलक्षणम्
प्रतिभा त्वस्ति मे काचित्तां ब्रूयामनुमानतः १
भूयांसो हृदये ये मे प्रश्नास्ते व्याहृतास्त्वया
इममन्यं प्रवक्ष्यामि न राजन्विग्रहादिव २
इमानि हि प्रापयन्ति सृजन्त्युत्तारयन्ति च
न धर्मः परिपाठेन शक्यो भारत वेदितुम् ३
अन्यो धर्मः समस्थस्य विषमस्थस्य चापरः
आपदस्तु कथं शक्याः परिपाठेन वेदितुम् ४
सदाचारो मतो धर्मः सन्तस्त्वाचारलक्षणाः
साध्यासाध्यं कथं शक्यं सदाचारो ह्यलक्षणम् ५
दृश्यते धर्मरूपेण अधर्मं प्राकृतश्चरन्
धर्मं चाधर्मरूपेण कश्चिदप्राकृतश्चरन् ६

पुनरस्य प्रमाणं हि निर्दिष्टं शास्त्रकोविदैः
वेदवादाश्चानुयुगं ह्रसन्तीति ह नः श्रुतम् ७
अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरेऽपरे
अन्ये कलियुगे धर्मा यथाशक्तिकृता इव ८
आम्नायवचनं सत्यमित्ययं लोकसंग्रहः
आम्नायेभ्यः परं वेदाः प्रसृता विश्वतोमुखाः ९
ते चेत्सर्वे प्रमाणं वै प्रमाणं तन्न विद्यते
प्रमाणे चाप्रमाणे च विरुद्धे शास्त्रता कुतः १०
धर्मस्य ह्रियमाणस्य बलवद्भिर्दुरात्मभिः
या या विक्रियते संस्था ततः सापि प्रणश्यति ११
विद्म चैवं न वा विद्म शक्यं वा वेदितुं न वा
अणीयान्क्षुरधाराया गरीयान्पर्वतादपि १२
गन्धर्वनगराकारः प्रथमं संप्रदृश्यते
अन्वीक्ष्यमाणः कविभिः पुनर्गच्छत्यदर्शनम् १३
निपानानीव गोभ्याशे क्षेत्रे कुल्येव भारत
स्मृतोऽपि शाश्वतो धर्मो विपहीणो न दृश्यते १४
कामादन्ये क्षयादन्ये कारणैरपरैस्तथा
असन्तो हि वृथाचारं भजन्ते बहवोऽपरे १५
धर्मो भवति स क्षिप्रं विलीनस्त्वेव साधुषु
अन्ये तानाहुरुन्मत्तानपि चावहसन्त्युत १६
महाजना ह्युपावृत्ता राजधर्मं समाश्रिताः
न हि सर्वहितः कश्चिदाचारः संप्रदृश्यते १७
तेनैवान्यः प्रभवति सोऽपरं बाधते पुनः
दृश्यते चैव स पुनस्तुल्यरूपो यदृच्छया १८
येनैवान्यः प्रभवति सोऽपरानपि बाधते
आचाराणामनैकाग्र्यं सर्वेषामेव लक्षयेत् १९
चिराभिपन्नः कविभिः पूर्वं धर्म उदाहृतः
तेनाचारेण पूर्वेण संस्था भवति शाश्वती २०
इति श्रीमहाभारते शान्तिपर्वणि द्विपञ्चाशदधिकद्विशततमोऽध्यायः २५२

## त्रिपञ्चाशदधिकद्विशततमोऽध्यायः

भीष्म उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
तुलाधारस्य वाक्यानि धर्मे जाजलिना सह १
वने वनचरः कश्चिज्जाजलिर्नाम वै द्विजः
सागरोद्देशमागम्य तपस्तेपे महातपाः २
नियतो नियताहारश्चीराजिनजटाधरः
मलपङ्कधरो धीमान्बहून्वर्षगणान्मुनिः ३
स कदाचिन्महातेजा जलवासो महीपते
चचार लोकान्विप्रर्षिः प्रेक्षमाणो मनोजवः ४
स चिन्तयामास मुनिर्जलमध्ये कदाचन
विप्रेक्ष्य सागरान्तां वै महीं सवनकाननाम् ५
न मया सदृशोऽस्तीह लोके स्थावरजङ्गमे
अप्सु वैहायसं गच्छेन्मया योऽन्य सहेति वै ६
स दृश्यमानो रक्षोभिर्जलमध्येऽवदत्ततः
अब्रुवंश्च पिशाचास्तं नैवं त्वं वक्तुमर्हसि ७
तुलाधारो वणिग्धर्मा वाराणस्यां महायशाः
सोऽप्येवं नार्हते वक्तुं यथा त्वं द्विजसत्तम ८
इत्युक्तो जाजलिर्भूतैः प्रत्युवाच महातपाः
पश्येयं तमहं प्राज्ञं तुलाधारं यशस्विनम् ९
इति ब्रुवाणं तमृषिं रक्षांस्युद्धृत्य सागरात्
अब्रुवन्गच्छ पन्थानमास्थायेमं द्विजोत्तम १०
इत्युक्तो जाजलिर्भूतैर्जगाम विमनास्तदा
वाराणस्यां तुलाधारं समासाद्याब्रवीद्वचः ११
युधिष्ठिर उवाच
किं कृतं सुकृतं कर्म तात जाजलिना पुरा
येन सिद्धिं परां प्राप्तस्तन्नो व्याख्यातुमर्हसि १२
भीष्म उवाच
अतीव तपसा युक्तो घोरेण स बभूव ह
नद्युपस्पर्शनरतः सायं प्रातर्महातपाः १३

अग्नीन्परिचरन्सम्यक्स्वाध्यायपरमो द्विजः
वानप्रस्थविधानज्ञो जाजलिर्ज्वलितः श्रिया १४
सत्ये तपसि तिष्ठन्स न च धर्ममवैक्षत
वर्षास्वाकाशशायी च हेमन्ते जलसंश्रयः १५
वातातपसहो ग्रीष्मे न च धर्ममविन्दत
दुःखशय्याश्च विविधा भूमौ च परिवर्तनम् १६
ततः कदाचित्स मुनिर्वर्षास्वाकाशमास्थितः
अन्तरिक्षाज्जलं मूर्ध्ना प्रत्यगृह्णान्मुहुर्मुहुः १७
अथ तस्य जटाः क्लिन्ना बभूवुर्ग्रथिताः प्रभो
अरण्यगमनान्नित्यं मलिनो मलसंयुताः १८
स कदाचिन्निराहारो वायुभक्षो महातपाः
तस्थौ काष्ठवदव्यग्रो न चचाल च कर्हिचित् १९
तस्य स्म स्थाणुभूतस्य निर्विचेष्टस्य भारत
कुलिङ्गशकुनौ राजन्नीडं शिरसि चक्रतुः २०
स तौ दयावान्विप्रर्षिरुपप्रैक्षत दंपती
कुर्वाणं नीडकं तत्र जटासु तृणतन्तुभिः २१
यदा स न चलत्येव स्थाणुभूतो महातपाः
ततस्तौ परिविश्वस्तौ सुखं तत्रोषतुस्तदा २२
अतीतास्वथ वर्षासु शरत्काल उपस्थिते
प्राजापत्येन विधिना विश्वासात्काममोहितौ २३
तत्रापातयतां राजञ्शिरस्यण्डानि खेचरौ
तान्यबुध्यत तेजस्वी स विप्रः संशितव्रतः २४
बुद्ध्वा च स महातेजा न चचालैव जाजलि
धर्मे धृतमना नित्यं नाधर्मं स त्वरोचयत् २५
अहन्यहनि चागम्य ततस्तौ तस्य मूर्धनि
आश्वासितौ वै वसतः संप्रहृष्टौ तदा विभो २६
अण्डेभ्यस्त्वथ पुष्टेभ्यः प्राजायन्त शकुन्तकाः
व्यवर्धन्त च तत्रैव न चाकम्पत जाजलि २७
स रक्षमाणस्त्वण्डानि कुलिङ्गानां यतव्रतः
तथैव तस्थौ धर्मात्मा निर्विचेष्टः समाहितः २८

ततस्तु कालसमये बभूवुस्तेऽथ पक्षिणः
बुबुधे तांश्च स मुनिर्जातपक्षाञ्शकुन्तकान् २९
ततः कदाचित्तांस्तत्र पश्यन्पक्षीन्यतव्रतः
बभूव परमप्रीतस्तदा मतिमतां वरः ३०
तथा तानभिसंवृद्धान्दृष्ट्वा चाप्नुवतां मुदम्
शकुनौ निर्भयौ तत्र ऊषतुश्चात्मजैः सह ३१
जातपक्षांश्च सोऽपश्यदुड्डीनान्पुनरागतान्
सायं सायं द्विजान्विप्रो न चाकम्पत जाजलि ३२
कदाचित्पुनरभ्येत्य पुनर्गच्छन्ति संततम्
त्यक्ता मातृपितृभ्यां ते न चाकम्पत जाजलि ३३
अथ ते दिवसं चारीं गत्वा सायं पुनर्नृप
उपावर्तन्त तत्रैव निवासार्थं शकुन्तकाः ३४
कदाचिद्दिवसान्पञ्च समुत्पत्य विहंगमाः
षष्ठेऽहनि समाजग्मुर्न चाकम्पत जाजलि ३५
क्रमेण च पुनः सर्वे दिवसानि बहून्यपि
नोपावर्तन्त शकुना जातप्राणाः स्म ते यदा ३६
कदाचिन्मासमात्रेण समुत्पत्य विहंगमाः
नैवागच्छंस्ततो राजन्प्रातिष्ठत स जाजलि ३७
ततस्तेषु प्रलीनेषु जाजलिर्जातविस्मयः
सिद्धोऽस्मीति मतिं चक्रे ततस्तं मान आविशत् ३८
स तथा निर्गतान्दृष्ट्वा शकुन्तान्नियतव्रतः
संभावितात्मा संभाव्य भृशं प्रीतस्तदाभवत् ३९
स नद्यां समुपस्पृश्य तर्पयित्वा हुताशनम्
उदयन्तमथादित्यमभ्यगच्छन्महातपाः ४०
संभाव्य चटकान्मूर्ध्नि जाजलिर्जपतां वरः
आस्फोटयत्तदाकाशे धर्मः प्राप्तो मयेति वै ४१
अथान्तरिक्षे वागासीत्तां स शुश्राव जाजलि
धर्मेण न समस्त्वं वै तुलाधारस्य जाजले ४२
वाराणस्यां महाप्राज्ञस्तुलाधारः प्रतिष्ठितः
सोऽप्येवं नार्हते वक्तुं यथा त्वं भाषसे द्विज ४३

सोऽमर्षवशमापन्नस्तुलाधारदिदृक्षया
पृथिवीमचरद्राजन्यत्रसायंगृहो मुनिः ४४
कालेन महतागच्छत्स तु वाराणसीं पुरीम्
विक्रीणन्तं च पण्यानि तुलाधारं ददर्श सः ४५
सोऽपि दृष्ट्वैव तं विप्रमायान्तं भाण्डजीवनः
समुत्थाय सुसंहृष्टः स्वागतेनाभ्यपूजयत् ४६
तुलाधार उवाच
आयानेवासि विदितो मम ब्रह्मन्न संशयः
ब्रवीमि यत्तु वचनं तच्छृणुष्व द्विजोत्तम ४७
सागरानूपमाश्रित्य तपस्तप्तं त्वया महत्
न च धर्मस्य संज्ञां त्वं पुरा वेत्थ कथंचन ४८
ततः सिद्धस्य तपसा तव विप्र शकुन्तकाः
क्षिप्रं शिरस्यजायन्त ते च संभावितास्त्वया ४९
जातपक्षा यदा ते च गताश्चारीमितस्ततः
मन्यमानस्ततो धर्मं चटकप्रभवं द्विज
खे वाचं त्वमथाश्रौषीर्मां प्रति द्विजसत्तम ५०
अमर्षवशमापन्नस्ततः प्राप्तो भवानिह
करवाणि प्रियं किं ते तद्ब्रूहि द्विजसत्तम ५१
इति श्रीमहाभारते शान्तिपर्वणि त्रिपञ्चाशदधिकद्विशततमोऽध्यायः २५३

## चतुःपञ्चाशदधिकद्विशततमोऽध्यायः

भीष्म उवाच
इत्युक्तः स तदा तेन तुलाधारेण धीमता
प्रोवाच वचनं धीमाञ्जाजलिर्जपतां वरः १
विक्रीणानः सर्वरसान्सर्वगन्धांश्च वाणिज
वनस्पतीनोषधीश्च तेषां मूलफलानि च २
अध्यगा नैष्ठिकीं बुद्धिं कुतस्त्वामिदमागतम्
एतदाचक्ष्व मे सर्वं निखिलेन महामते ३
एवमुक्तस्तुलाधारो ब्राह्मणेन यशस्विना
उवाच धर्मसूक्ष्माणि वैश्यो धर्मार्थतत्त्ववित्

जाजलि कष्टतपसं ज्ञानतृप्तस्तदा नृप ४
वेदाहं जाजले धर्मं स रहस्यं सनातनम्
सर्वभूतहितं मैत्रं पुराणं यं जना विदुः ५
अद्रोहेणैव भूतानामल्पद्रोहेण वा पुनः
या वृत्तिः स परो धर्मस्तेन जीवामि जाजले ६
परिच्छिन्नैः काष्ठतृणैर्मयेदं शरणं कृतम्
अलक्तं पद्मकं तुङ्गं गन्धांश्चोच्चावचांस्तथा ७
रसांश्च तांस्तान्विप्रर्षे मद्यवर्ज्यानहं बहून्
क्रीत्वा वै प्रतिविक्रीणे परहस्तादमायया ८
सर्वेषां यः सुहृन्नित्यं सर्वेषां च हिते रतः
कर्मणा मनसा वाचा स धर्मं वेद जाजले ९
नाहं परेषां कर्माणि प्रशंसामि शपामि वा
आकाशस्येव विप्रर्षे पश्यँल्लोकस्य चित्रताम् १०
नानुरुध्ये विरुध्ये वा न द्वेष्मि न च कामये
समोऽस्मि सर्वभूतेषु पश्य मे जाजले व्रतम् ११
इष्टानिष्टविमुक्तस्य प्रीतिरागबहिष्कृतः
तुला मे सर्वभूतेषु समा तिष्ठति जाजले १२
इति मां त्वं विजानीहि सर्वलोकस्य जाजले
समं मतिमतां श्रेष्ठ समलोष्टाश्मकाञ्चनम् १३
यथान्धबधिरोन्मत्ता उच्छ्वासपरमाः सदा
देवैरपिहितद्वाराः सोपमा पश्यतो मम १४
यथा वृद्धातुरकृशा निःस्पृहा विषयान्प्रति
तथार्थकामभोगेषु ममापि विगता स्पृहा १५
यदा चायं न बिभेति यदा चास्मान्न बिभ्यति
यदा नेच्छति न द्वेष्टि तदा सिध्यति वै द्विजः १६
यदा न कुरुते भावं सर्वभूतेषु पापकम्
कर्मणा मनसा वाचा ब्रह्म संपद्यते तदा १७
न भूतो न भविष्यश्च न च धर्मोऽस्ति कश्चन
योऽभयः सर्वभूतानां स प्राप्नोत्यभयं पदम् १८
यस्मादुद्विजते लोकः सर्वो मृत्युमुखादिव

वाक्क्रूराद्दण्डपारुष्यात्स प्राप्नोति महद्भयम् १९
यथावद्वर्तमानानां वृद्धानां पुत्रपौत्रिणाम्
अनुवर्तामहे वृत्तमहिंस्राणां महात्मनाम् २०
प्रणष्टः शाश्वतो धर्मः सदाचारेण मोहितः
तेन वैद्यस्तपस्वी वा बलवान्वा विमोह्यते २१
आचाराज्ञाजले प्राज्ञः क्षिप्रं धर्ममवाप्नुयात्
एवं यः साधुभिर्दान्तश्चरेदद्रोहचेतसा २२
नद्यां यथा चेह काष्ठमुह्यमानं यदृच्छया
यदृच्छयैव काष्ठेन संधिं गच्छेत केनचित् २३
तत्रापराणि दारूणि संसृज्यन्ते ततस्ततः
तृणकाष्ठकरीषाणि कदाचिन्नसमीक्षया
एवमेवायमाचारः प्रादुर्भूतो यतस्ततः २४
यस्मान्नोद्विजते भूतं जातु किंचित्कथंचन
अभयं सर्वभूतेभ्यः स प्राप्नोति सदा मुने २५
यस्मादुद्विजते विद्वन्सर्वलोको वृकादिव
क्रोशतस्तीरमासाद्य यथा सर्वे जलेचराः २६
सहायवान्द्रव्यवान्यः सुभगोऽन्योऽपरस्तथा
ततस्तानेव कवयः शास्त्रेषु प्रवदन्त्युत
कीर्त्यर्थमल्पहृल्लेखाः पटवः कृत्स्ननिर्णयाः २७
तपोभिर्यज्ञदानैश्च वाक्यैः प्रज्ञाश्रितैस्तथा
प्राप्नोत्यभयदानस्य यद्यत्फलमिहाश्नुते २८
लोके यः सर्वभूतेभ्यो ददात्यभयदक्षिणाम्
स सर्वयज्ञैरीजानः प्राप्नोत्यभयदक्षिणाम्
न भूतानामहिंसाया ज्यायान्धर्मोऽस्ति कश्चन २९
यस्मान्नोद्विजते भूतं जातु किंचित्कथंचन
सोऽभयं सर्वभूतेभ्यः संप्राप्नोति महामुने ३०
यस्मादुद्विजते लोकः सर्पाद्वेश्मगतादिव
न स धर्ममवाप्नोति इह लोके परत्र च ३१
सर्वभूतात्मभूतस्य सम्यग्भूतानि पश्यतः
देवापि मार्गे मुह्यन्ति अपदस्य पदैषिणः ३२

दानं भूताभयस्याहुः सर्वदानेभ्य उत्तमम्
ब्रवीमि ते सत्यमिदं श्रद्दधस्व च जाजले ३३
स एव सुभगो भूत्वा पुनर्भवति दुर्भगः
व्यापत्तिं कर्मणां दृष्ट्वा जुगुप्सन्ति जनाः सदा ३४
अकारणो हि नेहास्ति धर्मः सूक्ष्मोऽपि जाजले
भूतभव्यार्थमेवेह धर्मप्रवचनं कृतम् ३५
सूक्ष्मत्वान्न स विज्ञातुं शक्यते बहुनिह्नवः
उपलभ्यान्तरा चान्यानाचारानवबुध्यते ३६
ये च छिन्दन्ति वृषणान्ये च भिन्दन्ति नस्तकान्
वहन्ति महतो भारान्बध्नन्ति दमयन्ति च ३७
हत्वा सत्त्वानि खादन्ति तान्कथं न विगर्हसे
मानुषा मानुषानेव दासभोगेन भुञ्जते ३८
वधबन्धविरोधेन कारयन्ति दिवानिशम्
आत्मना चापि जानासि यद्दुःखं वधताडने ३९
पञ्चेन्द्रियेषु भूतेषु सर्वं वसति दैवतम्
आदित्यश्चन्द्रमा वायुर्ब्रह्मा प्राणः क्रतुर्यमः ४०
तानि जीवानि विक्रीय का मृतेषु विचारणा
का तैले का घृते ब्रह्मन्मधुन्यप्स्वौषधेषु वा ४१
अदंशमशके देशे सुखं संवर्धितान्पशून्
तांश्च मातुः प्रियाञ्जानन्नाक्रम्य बहुधा नराः
बहुदंशकुलशान्देशान्नयन्ति बहुकर्दमान् ४२
वाहसंपीडिता धुर्याः सीदन्त्यविधिनापरे
न मन्ये भ्रूणहत्यापि विशिष्टा तेन कर्मणा ४३
कृषिं साध्विति मन्यन्ते सा च वृत्तिः सुदारुणा
भूमिं भूमिशयांश्चैव हन्ति काष्ठमयोमुखम्
तथैवानडुहो युक्तान्समवेक्षस्व जाजले ४४
अघ्न्या इति गवां नाम क एनान्हन्तुमर्हति
महच्चकाराकुशलं पृषध्रो गालभन्निव ४५
ऋषयो यतयो ह्येतन्नहुषे प्रत्यवेदयन्
गां मातरं चाप्यवधीर्वृषभं च प्रजापतिम्

अकार्यं नहुषाकार्षीर्लप्स्यामस्त्वत्कृते भयम् ४६
शतं चैकं च रोगाणां सर्वभूतेष्वपातयन्
ऋषयस्ते महाभागाः प्रजास्वेव हि जाजले
भ्रूणहं नहुषं त्वाहुर्न ते होष्यामहे हविः ४७
इत्युक्त्वा ते महात्मानः सर्वे तत्त्वार्थदर्शिनः
ऋषयो यतयः शान्तास्तरसा प्रत्यवेदयन् ४८
ईदृशानशिवान्घोरानाचारानिह जाजले
केवलाचरितत्वात्तु निपुणान्नावबुध्यसे ४९
कारणाद्धर्ममन्विच्छेन्न लोकचरितं चरेत्
यो हन्याद्यश्च मां स्तौति तत्रापि शृणु जाजले ५०
समौ तावपि मे स्यातां न हि मे स्तः प्रियाप्रिये
एतदीदृशकं धर्मं प्रशंसन्ति मनीषिणः ५१
उपपत्त्या हि संपन्नो यतिभिश्चैव सेव्यते
सततं धर्मशीलैश्च नैपुण्येनोपलक्षितः ५२
इति श्रीमहाभारते शान्तिपर्वणि चतुःपञ्चाशदधिकद्विशततमोऽध्यायः २५४

पञ्चपञ्चाशदधिकद्विशततमोऽध्यायः

जाजलिरुवाच
यथा प्रवर्तितो धर्मस्तुलां धारयता त्वया
स्वर्गद्वारं च वृत्तिं च भूतानामवरोत्स्यते १
कृष्या ह्यन्नं प्रभवति ततस्त्वमपि जीवसि
पशुभिश्चौषधीभिश्च मर्त्या जीवन्ति वाणिज २
यतो यज्ञः प्रभवति नास्तिक्यमपि जल्पसि
न हि वर्तेदयं लोको वार्तामुत्सृज्य केवलम् ३
तुलाधार उवाच
वक्ष्यामि जाजले वृत्तिं नास्मि ब्राह्मण नास्तिकः
न च यज्ञं विनिन्दामि यज्ञवित्तु सुदुर्लभः ४
नमो ब्राह्मणयज्ञाय ये च यज्ञविदो जनाः
स्वयज्ञं ब्राह्मणा हित्वा क्षात्रं यज्ञमिहास्थिताः ५
लुब्धैर्वित्तपरैर्ब्रह्मन्नास्तिकैः संप्रवर्तितम्

वेदवादानविज्ञाय सत्याभासमिवानृतम् ६
इदं देयमिदं देयमिति नान्तं चिकीर्षति
अतः स्तैन्यं प्रभवति विकर्माणि च जाजले
तदेव सुकृतं हव्यं येन तुष्यन्ति देवताः ७
नमस्कारेण हविषा स्वाध्यायैरौषधैस्तथा
पूजा स्याद्देवतानां हि यथा शास्त्रनिदर्शनम् ८
इष्टापूर्तादसाधूनां विषमा जायते प्रजा
लुब्धेभ्यो जायते लुब्धः समेभ्यो जायते समः ९
यजमानो यथात्मानमृत्विजश्च तथा प्रजाः
यज्ञात्प्रजा प्रभवति नभसोऽम्भ इवामलम् १०
अग्नौ प्रास्ताहुतिर्ब्रह्मन्नादित्यमुपतिष्ठति
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ११
तस्मात्स्वनुष्ठितात्पूर्वे सर्वान्कामांश्च लेभिरे
अकृष्टपच्या पृथिवी आशीर्भिर्वीरुधोऽभवन्
न ते यज्ञेष्वात्मसु वा फलं पश्यन्ति किंचन १२
शङ्कमानाः फलं यज्ञे ये यजेरन्कथंचन
जायन्तेऽसाधवो धूर्ता लुब्धा वित्तप्रयोजनाः १३
स स्म पापकृतां लोकान्गच्छेदशुभकर्मणा
प्रमाणमप्रमाणेन यः कुर्यादशुभं नरः
पापात्मा सोऽकृतप्रज्ञः सदैवेह द्विजोत्तम १४
कर्तव्यमितिकर्तव्यं वेत्ति यो ब्राह्मणोभयम्
ब्रह्मैव वर्तते लोके नैति कर्तव्यतां पुनः १५
विगुणं च पुनः कर्म ज्याय इत्यनुशुश्रुम
सर्वभूतोपघातश्च फलभावे च संयमः १६
सत्ययज्ञा दमयज्ञा अलुब्धाश्चात्मतृप्तयः
उत्पन्नत्यागिनः सर्वे जना आसन्नमत्सराः १७
क्षेत्रक्षेत्रज्ञतत्त्वज्ञाः स्वयज्ञपरिनिष्ठिताः
ब्राह्मं वेदमधीयन्तस्तोषयन्त्यमरानपि १८
अखिलं दैवतं सर्वं ब्रह्म ब्राह्मणसंश्रितम्
तृप्यन्ति तृप्यतो देवास्तृप्तास्तृप्तस्य जाजले १९

यथा सर्वरसैस्तृप्तो नाभिनन्दति किंचन
तथा प्रज्ञानतृप्तस्य नित्यं तृप्तिः सुखोदया २०
धर्मारामा धर्मसुखाः कृत्स्नव्यवसितास्तथा
अस्ति नस्तत्त्वतो भूय इति प्रज्ञागवेषिणः २१
ज्ञानविज्ञानिनः केचित्परं पारं तितीर्षवः
अतीव तत्सदा पुण्यं पुण्याभिजनसंहितम् २२
यत्र गत्वा न शोचन्ति न च्यवन्ति व्यथन्ति च
ते तु तद्ब्रह्मणः स्थानं प्राप्नुवन्तीह सात्त्विकाः २३
नैव ते स्वर्गमिच्छन्ति न यजन्ति यशोधनैः
सतां वर्त्मानुवर्तन्ते यथाबलमहिंसया २४
वनस्पतीनोषधीश्च फलमूलं च ते विदुः
न चैतानृत्विजो लुब्धा याजयन्ति धनार्थिनः २५
स्वमेव चार्थं कुर्वाणा यज्ञं चक्रुः पुनर्द्विजाः
परिनिष्ठितकर्माणः प्रजानुग्रहकाम्यया २६
प्रापयेयुः प्रजाः स्वर्गं स्वधर्माचरणेन वै
इति मे वर्तते बुद्धिः समा सर्वत्र जाजले २७
प्रयुञ्जते यानि यज्ञे सदा प्राज्ञा द्विजर्षभ
तेन ते देवयानेन पथा यान्ति महामुने २८
आवृत्तिस्तत्र चैकस्य नास्त्यावृत्तिर्मनीषिणाम्
उभौ तौ देवयानेन गच्छतो जाजले पथा २९
स्वयं चैषामनडुहो युज्यन्ति च वहन्ति च
स्वयमुस्राश्च दुह्यन्ते मनःसंकल्पसिद्धिभिः ३०
स्वयं यूपानुपादाय यजन्ते स्वाप्तदक्षिणैः
यस्तथाभावितात्मा स्यात्स गामालब्धुमर्हति ३१
ओषधीभिस्तथा ब्रह्मन्यजेरंस्ते न तादृशाः
बुद्धित्यागं पुरस्कृत्य तादृशं प्रब्रवीमि ते ३२
निराशिषमनारम्भं निर्नमस्कारमस्तुतिम्
अक्षीणं क्षीणकर्माणं तं देवा ब्राह्मणं विदुः ३३
नाश्रावयन्न च यजन्न ददद्ब्राह्मणेषु च
ग्राम्यां वृत्तिं लिप्समानः कां गतिं याति जाजले

इदं तु दैवतं कृत्वा यथा यज्ञमवाप्नुयात् ३४
जाजलिरुवाच
न वै मुनीनां शृणुमः स्म तत्त्वं पृच्छामि त्वा वाणिज कष्टमेतत्
पूर्वे पूर्वे चास्य नावेक्षमाणा नातः परं तमृषयः स्थापयन्ति ३५
अस्मिन्नैवात्मतीर्थे न पशवः प्राप्नुयुः सुखम्
अथ स्वकर्मणा केन वाणिज प्राप्नुयात्सुखम्
शंस मे तन्महाप्राज्ञ भृशं वै श्रद्दधामि ते ३६
तुलाधार उवाच
उत यज्ञा उतायज्ञा मखं नार्हन्ति ते क्वचित्
आज्येन पयसा दध्ना पूर्णाहुत्या विशेषतः
वालैः शृङ्गेण पादेन संभवत्येव गौर्मखम् ३७
पत्नीं चानेन विधिना प्रकरोति नियोजयन्
पुरोडाशो हि सर्वेषां पशूनां मेध्य उच्यते ३८
सर्वा नद्यः सरस्वत्यः सर्वे पुण्याः शिलोच्चयाः
जाजले तीर्थमात्मैव मा स्म देशातिथिर्भव ३९
एतानीदृशकान्धर्मानाचरन्निह जाजले
कारणैर्धर्ममन्विच्छन्स लोकानाप्नुते शुभान् ४०
भीष्म उवाच
एतानीदृशकान्धर्मांस्तुलाधारः प्रशंसति
उपपत्त्या हि संपन्नान्नित्यं सद्भिर्निषेवितान् ४१
इति श्रीमहाभारते शान्तिपर्वणि पञ्चपञ्चाशदधिकद्विशततमोऽध्यायः २५५

## षट्पञ्चाशदधिकद्विशततमोऽध्यायः

तुलाधार उवाच
सद्भिर्वा यदि वासद्भिरयं पन्थाः समाश्रितः
प्रत्यक्षं क्रियतां साधु ततो ज्ञास्यसि तद्यथा १
एते शकुन्ता बहवः समन्ताद्विचरन्ति हि
तवोत्तमाङ्गे संभूताः श्येनाश्चान्याश्च जातयः २
आह्वयैनान्महाब्रह्मन्विशमानांस्ततस्ततः
पश्येमान्हस्तपादेषु श्लिष्टान्देहे च सर्वशः ३

संभावयन्ति पितरं त्वया संभाविताः खगाः
असंशयं पिता च त्वं पुत्रानाह्वय जाजले ४
भीष्म उवाच
ततो जाजलिना तेन समाहूताः पतत्रिणः
वाचमुच्चारयन्दिव्यां धर्मस्य वचनात्किल ५
अहिंसादिकृतं कर्म इह चैव परत्र च
स्पर्धा निहन्ति वै ब्रह्मन्सा हता हन्ति तं नरम् ६
श्रद्धावृद्धं वाङ्मनसी न यज्ञस्त्रातुमर्हति
अत्र गाथा ब्रह्मगीताः कीर्तयन्ति पुराविदः ७
शुचेरश्रद्दधानस्य श्रद्दधानस्य चाशुचेः
देवाश्चित्तममन्यन्त सदृशं यज्ञकर्मणि ८
श्रोत्रियस्य कदर्यस्य वदान्यस्य च वार्धुषेः
मीमांसित्वोभयं देवाः सममन्नमकल्पयन् ९
प्रजापतिस्तानुवाच विषमं कृतमित्युत
श्रद्धापूतं वदान्यस्य हतमश्रद्धयेतरत्
भोज्यमन्नं वदान्यस्य कदर्यस्य न वार्धुषेः १०
अश्रद्दधान एवैको देवानां नार्हते हविः
तस्यैवान्नं न भोक्तव्यमिति धर्मविदो विदुः ११
अश्रद्धा परमं पापं श्रद्धा पापप्रमोचनी
जहाति पापं श्रद्धावान्सर्पो जीर्णामिव त्वचम् १२
ज्यायसी या पवित्राणां निवृत्तिः श्रद्धया सह
निवृत्तशीलदोषो यः श्रद्धावान्पूत एव सः १३
किं तस्य तपसा कार्यं किं वृत्तेन किमात्मना
श्रद्धामयोऽय पुरुषो यो यच्छ्रद्धः स एव सः १४
इति धर्मः समाख्यातं सद्भिर्धर्मार्थदर्शिभिः
वयं जिज्ञासमानास्त्वा संप्राप्ता धर्मदर्शनात् १५
स्पर्धां जहि महाप्राज्ञ ततः प्राप्स्यसि यत्परम्
श्रद्धावाञ्श्रद्दधानश्च धर्मांश्चैवेह वाणिजः
स्ववर्त्मनि स्थितश्चैव गरीयानेष जाजले १६
एवं बहुमतार्थं च तुलाधारेण भाषितम्

सम्यक्चैवमुपालब्धो धर्मश्चोक्तः सनातनः १७
तस्य विख्यातवीर्यस्य श्रुत्वा वाक्यानि स द्विजः
तुलाधारस्य कौन्तेय शान्तिमेवान्वपद्यत १८
ततोऽचिरेण कालेन तुलाधारः स एव च
दिवं गत्वा महाप्राज्ञौ विहरेतां यथासुखम्
स्वं स्वं स्थानमुपागम्य स्वकर्मफलनिर्जितम् १९
समानां श्रद्दधानानां संयतानां सुचेतसाम्
कुर्वतां यज्ञ इत्येव न यज्ञो जातु नेष्यते २०
श्रद्धा वै सात्त्विकी देवी सूर्यस्य दुहिता नृप
सावित्री प्रसवित्री च जीवविश्वासिनी तथा २१
वाग्वृद्धं त्रायते श्रद्धा मनोवृद्धं च भारत
यथोपम्योपदेशेन किं भूयः श्रोतुमिच्छसि २२
इति श्रीमहाभारते शान्तिपर्वणि षट्पञ्चाशदधिकद्विशततमोऽध्यायः २५६

## सप्तपञ्चाशदधिकद्विशततमोऽध्यायः

भीष्म उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
प्रजानामनुकम्पार्थं गीतं राज्ञा विचख्नुना १
छिन्नस्थूणं वृषं दृष्ट्वा विरावं च गवां भृशम्
गोग्रहे यज्ञवाटस्य प्रेक्षमाणः स पार्थिवः २
स्वस्ति गोभ्योऽस्तु लोकेषु ततो निर्वचनं कृतम्
हिंसायां हि प्रवृत्तायामाशीरेषानुकल्पिता ३
अव्यवस्थितमर्यादैर्विमूढैर्नास्तिकैर्नरैः
संशयात्मभिरव्यक्तैर्हिंसा समनुकीर्तिता ४
सर्वकर्मस्वहिंसा हि धर्मात्मा मनुरब्रवीत्
कामरागाद्विहिंसन्ति बहिर्वेद्यां पशून्नराः ५
तस्मात्प्रमाणतः कार्यो धर्मः सूक्ष्मो विजानता
अहिंसैव हि सर्वेभ्यो धर्मेभ्यो ज्यायसी मता ६
उपोष्य संशितो भूत्वा हित्वा वेदकृताः श्रुतीः
आचार इत्यनाचाराः कृपणाः फलहेतवः ७

यदि यज्ञांश्च वृक्षांश्च यूपांश्चोद्दिश्य मानवाः
वृथा मांसानि खादन्ति नैष धर्मः प्रशस्यते ८
मांसं मधु सुरा मत्स्या आसवं कृसरौदनम्
धूर्तैः प्रवर्तितं ह्येतन्नैतद्वेदेषु कल्पितम् ९
कामान्मोहाच्च लोभाच्च लौल्यमेतत्प्रवर्तितम्
विष्णुमेवाभिजानन्ति सर्वयज्ञेषु ब्राह्मणाः
पायसैः सुमनोभिश्च तस्यापि यजनं स्मृतम् १०
यज्ञियाश्चैव ये वृक्षा वेदेषु परिकल्पिताः
यच्चापि किंचित्कर्तव्यमन्यच्चोक्षैः सुसंस्कृतम्
महासत्त्वैः शुद्धभावैः सर्वं देवार्हमेव तत् ११
युधिष्ठिर उवाच
शरीरमापदश्चापि विवदन्त्यविहिंसतः
कथं यात्रा शरीरस्य निरारम्भस्य सेत्स्यति १२
भीष्म उवाच
यथा शरीरं न ग्लायेन्नेयान्मृत्युवशं यथा
तथा कर्मसु वर्तेत समर्थो धर्ममाचरेत् १३
इति श्रीमहाभारते शान्तिपर्वणि सप्तपञ्चाशदधिकद्विशततमोऽध्यायः २५७

## अष्टपञ्चाशदधिकद्विशततमोऽध्यायः

युधिष्ठिर उवाच
कथं कार्यं परीक्षेत शीघ्रं वाथ चिरेण वा
सर्वथा कार्यदुर्गेऽस्मिन्भवान्नः परमो गुरुः १
भीष्म उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
चिरकारेस्तु यत्पूर्वं वृत्तमाङ्गिरसे कुले २
चिरकारिक भद्रं ते भद्रं ते चिरकारिक
चिरकारी हि मेधावी नापराध्यति कर्मसु ३
चिरकारी महाप्राज्ञो गौतमस्याभवत्सुतः
चिरं हि सर्वकार्याणि समेक्षावान्प्रपद्यते ४
चिरं संचिन्तयन्नर्थांश्चिरं जाग्रच्चिरं स्वपन्

चिरकार्याभिसंपत्तेश्चिरकारी तथोच्यते ५
अलसग्रहणं प्राप्तो दुर्मेधावी तथोच्यते
बुद्धिलाघवयुक्तेन जनेनादीर्घदर्शिना ६
व्यभिचारे तु कस्मिंश्चिद्व्यतिक्रम्यापरान्सुतान्
पित्रोक्तः कुपितेनाथ जहीमां जननीमिति ७
स तथेति चिरेणोक्त्वा स्वभावाच्चिरकारिकः
विमृश्य चिरकारित्वाच्चिन्तयामास वै चिरम् ८
पितुराज्ञां कथं कुर्यां न हन्यां मातरं कथम्
कथं धर्मच्छले नास्मिन्निमज्जेयमसाधुवत् ९
पितुराज्ञा परो धर्मः स्वधर्मो मातृरक्षणम्
अस्वतन्त्रं च पुत्रत्वं किं नु मां नात्र पीडयेत् १०
स्त्रियं हत्वा मातरं च को हि जातु सुखी भवेत्
पितरं चाप्यवज्ञाय कः प्रतिष्ठामवाप्नुयात् ११
अनवज्ञा पितुर्युक्ता धारणं मातृरक्षणम्
युक्तक्षमावुभावेतौ नातिवर्तेत मां कथम् १२
पिता ह्यात्मानमाधत्ते जायायां जज्ञियामिति
शीलचारित्रगोत्रस्य धारणार्थं कुलस्य च १३
सोऽहमात्मा स्वयं पित्रा पुत्रत्वे प्रकृतः पुनः
विज्ञानं मे कथं न स्याद्बुबुधे चात्मसंभवम् १४
जातकर्मणि यत्प्राह पिता यच्चोपकर्मणि
पर्याप्तः स दृढीकारः पितुर्गौरवनिश्चये १५
गुरुरग्र्यः परो धर्मः पोषणाध्ययनाद्धितः
पिता यदाह धर्मः स वेदेष्वपि सुनिश्चितः १६
प्रीतिपात्रं पितुः पुत्रः सर्वं पुत्रस्य वै पिता
शरीरादीनि देयानि पिता त्वेकः प्रयच्छति १७
तस्मात्पितुर्वचः कार्यं न विचार्यं कथंचन
पातकान्यपि पूयन्ते पितुर्वचनकारिणः १८
भोगे भाग्ये प्रसवने सर्वलोकनिदर्शने
भर्त्रा चैव समायोगे सीमन्तोन्नयने तथा १९
पिता स्वर्गः पिता धर्मः पिता परमकं तपः

पितरि प्रीतिमापन्ने सर्वाः प्रीयन्ति देवताः २०
आशिषस्ता भजन्त्येनं पुरुषं प्राह याः पिता
निष्कृतिः सर्वपापानां पिता यदभिनन्दति २१
मुच्यते बन्धनात्पुष्पं फलं वृन्तात्प्रमुच्यते
क्लिश्यन्नपि सुतस्नेहैः पिता स्नेहं न मुञ्चति २२
एतद्विचिन्तितं तावत्पुत्रस्य पितृगौरवम्
पिता ह्यल्पतरं स्थानं चिन्तयिष्यामि मातरम् २३
यो ह्ययं मयि संघातो मर्त्यत्वे पाञ्चभौतिकः
अस्य मे जननी हेतुः पावकस्य यथारणिः
माता देहारणिः पुंसां सर्वस्यार्तस्य निर्वृतिः २४
न च शोचति नाप्येनं स्थाविर्यमपकर्षति
श्रिया हीनोऽपि यो गेहे अम्बेति प्रतिपद्यते २५
पुत्रपौत्रसमाकीर्णो जननीं यः समाश्रितः
अपि वर्षशतस्यान्ते स द्विहायनवच्चरेत् २६
समर्थं वासमर्थं वा कृशं वाप्यकृशं तथा
रक्षत्येव सुतं माता नान्यः पोष्टा विधानतः २७
तदा स वृद्धो भवति यदा भवति दुःखितः
तदा शून्यं जगत्तस्य यदा मात्रा वियुज्यते २८
नास्ति मातृसमा छाया नास्ति मातृसमा गतिः
नास्ति मातृसमं त्राणं नास्ति मातृसमा प्रपा २९
कुक्षिसंधारणाद्धात्री जननाज्जननी स्मृता
अङ्गानां वर्धनादम्बा वीरसूत्वेन वीरसूः ३०
शिशोः शुश्रूषणाच्छुश्रूर्माता देहमनन्तरम्
चेतनावान्नरो हन्याद्यस्य नासुषिरं शिरः ३१
दंपत्योः प्राणसंश्लेषे योऽभिसंधिः कृतः किल
तं माता वा पिता वेद भूतार्थो मातरि स्थितः ३२
माता जानाति यद्गोत्रं माता जानाति यस्य सः
मातुर्भरणमात्रेण प्रीतिः स्नेहः पितुः प्रजाः ३३
पाणिबन्धं स्वयं कृत्वा सहधर्ममुपेत्य च
यदि याप्यन्ति पुरुषाः स्त्रियो नार्हन्ति याप्यताम् ३४

भरणाद्धि स्त्रियो भर्ता पात्याच्चैव स्त्रियाः पतिः
गुणस्यास्य निवृत्तौ तु न भर्ता न पतिः पतिः ३५
एवं स्त्री नापराध्नोति नर एवापराध्यति
व्युच्चरंश्च महादोषं नर एवापराध्यति ३६
स्त्रिया हि परमो भर्ता दैवतं परमं स्मृतम्
तस्यात्मना तु सदृशमात्मानं परमं ददौ
सर्वकार्यापराध्यत्वान्नापराध्यन्ति चाङ्गनाः ३७
यश्च नोक्तो हि निर्देशः स्त्रिया मैथुनतृप्तये
तस्य स्मारयतो व्यक्तमधर्मो नात्र संशयः ३८
यावन्नारीं मातरं च गौरवे चाधिके स्थिताम्
अवध्यां तु विजानीयुः पशवोऽप्यविचक्षणाः ३९
देवतानां समावायमेकस्थं पितरं विदुः
मर्त्यानां देवतानां च स्नेहादभ्येति मातरम् ४०
एवं विमृशतस्तस्य चिरकारितया बहु
दीर्घः कालो व्यतिक्रान्तस्ततस्तस्यागमत्पिता ४१
मेधातिथिर्महाप्राज्ञो गौतमस्तपसि स्थितः
विमृश्य तेन कालेन पत्न्याः संस्थाव्यतिक्रमम् ४२
सोऽब्रवीदुःखसंतप्तो भृशमश्रूणि वर्तयन्
श्रुतधैर्यप्रसादेन पश्चात्तापमुपागतः ४३
आश्रमं मम संप्राप्तस्त्रिलोकेशः पुरंदरः
अतिथिव्रतमास्थाय ब्राह्मणं रूपमास्थितः ४४
समया सान्त्वितो वाग्भिः स्वागतेनाभिपूजितः
अर्घ्यं पाद्यं च न्यायेन तयाभिप्रतिपादितः ४५
परवत्यस्मि चाप्युक्तः प्रणयिष्ये नयेन च
अत्र चाकुशले जाते स्त्रियो नास्ति व्यतिक्रमः ४६
एवं न स्त्री न चैवाहं नाध्वगस्त्रिदशेश्वरः
अपराध्यति धर्मस्य प्रमादस्त्वपराध्यति ४७
ईर्ष्याजं व्यसनं प्राहुस्तेन चैवोर्ध्वरेतसः
ईर्ष्यया त्वहमाक्षिप्तो मग्नो दुष्कृतसागरे ४८
हत्वा साध्वीं च नारीं च व्यसनित्वाच्च शासिताम्

भर्तव्यत्वेन भार्या च को नु मां तारयिष्यति ४९
अन्तरेण मयाज्ञप्तश्चिरकारी ह्युदारधीः
यद्यद्य चिरकारी स्यात्स मां त्रायेत पातकात् ५०
चिरकारिक भद्रं ते भद्रं ते चिरकारिक
यद्यद्य चिरकारी त्वं ततोऽसि चिरकारिकः ५१
त्राहि मां मातरं चैव तपो यच्चार्जितं मया
आत्मानं पातकेभ्यश्च भवाद्य चिरकारिकः ५२
सहजं चिरकारित्वं चिरप्राज्ञतया तव
सफलं तत्तवाद्यास्तु भवाद्य चिरकारिकः ५३
चिरमाशंसितो मात्रा चिरं गर्भेण धारितः
सफलं चिरकारित्वं कुरु त्वं चिरकारिक ५४
चिरायते च संतापाच्चिरं स्वपिति वारितः
आवयोश्चिरसंतापादवेक्ष्य चिरकारिक ५५
एवं स दुःखितो राजन्महर्षिर्गौतमस्तदा
चिरकारिं ददर्शाथ पुत्रं स्थितमथान्तिके ५६
चिरकारी तु पितरं दृष्ट्वा परमदुःखितः
शस्त्रं त्यक्त्वा ततो मूर्ध्ना प्रसादायोपचक्रमे ५७
गौतमस्तु सुतं दृष्ट्वा शिरसा पतितं भुवि
पत्नीं चैव निराकारां परामभ्यगमन्मुदम् ५८
न हि सा तेन संभेदं पत्नी नीता महात्मना
विजने चाश्रमस्थेन पुत्रश्चापि समाहितः ५९
हन्यात्त्वनपवादेन शस्त्रपाणौ सुते स्थिते
विनीतं प्रश्नयित्वा च व्यवस्येदात्मकर्मसु ६०
बुद्धिश्चासीत्सुतं दृष्ट्वा पितुश्चरणयोर्नतम्
शस्त्रग्रहणचापल्यं संवृणोति भयादिति ६१
ततः पित्रा चिरं स्तुत्वा चिरं चाघ्राय मूर्धनि
चिरं दोर्भ्यां परिष्वज्य चिरं जीवेत्युदाहृतः ६२
एवं स गौतमः पुत्रं प्रीतिहर्षसमन्वितः
अभिनन्द्य महाप्राज्ञ इदं वचनमब्रवीत् ६३
चिरकारिक भद्रं ते चिरकारी चिरं भव

चिरायमाणे त्वयि न चिरमस्मि सुदुःखितः ६४
गाथाश्चाप्यब्रवीद्विद्वान्गौतमो मुनिसत्तमः
चिरकारिषु धीरेषु गुणोद्देशसमाश्रयात् ६५
चिरेण मित्रं बध्नीयाच्चिरेण च कृतं त्यजेत्
चिरेण हि कृतं मित्रं चिरं धारणमर्हति ६६
रागे दर्पे च माने च द्रोहे पापे च कर्मणि
अप्रिये चैव कर्तव्ये चिरकारी प्रशस्यते ६७
बन्धूनां सुहृदां चैव भृत्यानां स्त्रीजनस्य च
अव्यक्तेष्वपराधेषु चिरकारी प्रशस्यते ६८
एवं स गौतमस्तस्य प्रीतः पुत्रस्य भारत
कर्मणा तेन कौरव्य चिरकारितया तया ६९
एवं सर्वेषु कार्येषु विमृश्य पुरुषस्ततः
चिरेण निश्चयं कृत्वा चिरं न परितप्यते ७०
चिरं धारयते रोषं चिरं कर्म नियच्छति
पश्चात्तापकरं कर्म न किंचिदुपपद्यते ७१
चिरं वृद्धानुपासीत चिरमन्वास्य पूजयेत्
चिरं धर्मान्निषेवेत कुर्याच्चान्वेषणं चिरम् ७२
चिरमन्वास्य विदुषश्चिरं शिष्टान्निषेव्य च
चिरं विनीय चात्मानं चिरं यात्यनवज्ञताम् ७३
ब्रुवतश्च परस्यापि वाक्यं धर्मोपसंहितम्
चिरं पृच्छेच्चिरं ब्रूयाच्चिरं न परिभूयते ७४
उपास्य बहुलास्तस्मिन्नाश्रमे सुमहातपाः
समाः स्वर्गं गतो विप्रः पुत्रेण सहितस्तदा ७५
इति श्रीमहाभारते शान्तिपर्वणि अष्टपञ्चाशदधिकद्विशततमोऽध्यायः २५८

## एकोनषष्ट्यधिकद्विशततमोऽध्यायः

युधिष्ठिर उवाच
कथं राजा प्रजा रक्षेन्न च किंचित्प्रतापयेत्
पृच्छामि त्वां सतां श्रेष्ठ तन्मे ब्रूहि पितामह १
भीष्म उवाच

अत्राप्युदाहरन्तीममितिहासं पुरातनम्
द्युमत्सेनस्य संवादं राज्ञा सत्यवता सह २
अव्याहृतं व्याजहार सत्यवानिति नः श्रुतम्
वधाय नीयमानेषु पितुरेवानुशासनात् ३
अधर्मतां याति धर्मो यात्यधर्मश्च धर्मताम्
वधो नाम भवेद्धर्मो नैतद्भवितुमर्हति ४
द्युमत्सेन उवाच
अथ चेदवधो धर्मो धर्मः को जातुचिद्भवेत्
दस्यवश्चेन्न हन्येरन्सत्यवन्संकरो भवेत् ५
ममेदमिति नास्यैतत्प्रवर्तेत कलौ युगे
लोकयात्रा न चैव स्यादथ चेद्वेत्थ शंस नः ६
सत्यवानुवाच
सर्व एव त्रयो वर्णाः कार्या ब्राह्मणबन्धनाः
धर्मपाशनिबद्धानामल्पो व्यपचरिष्यति ७
यो यस्तेषामपचरेत्तमाचक्षीत वै द्विजः
अयं मे न शृणोतीति तस्मिन्राजा प्रधारयेत् ८
तत्त्वाभेदेन यच्छास्त्रं तत्कार्यं नान्यथा वधः
असमीक्ष्यैव कर्माणि नीतिशास्त्रं यथाविधि ९
दस्यून्हिनस्ति वै राजा भूयसो वाप्यनागसः
भार्या माता पिता पुत्रो हन्यते पुरुषे हते
परेणापकृते राजा तस्मात्सम्यक्प्रधारयेत् १०
असाधुश्चैव पुरुषो लभते शीलमेकदा
साधोश्चापि ह्यसाधुभ्यो जायतेऽशोभना प्रजा ११
न मूलघातः कर्तव्यो नैष धर्मः सनातनः
अपि खल्ववधेनैव प्रायश्चित्तं विधीयते १२
उद्वेजनेन बन्धेन विरूपकरणेन च
वधदण्डेन न क्लेश्या न पुरोऽहितसंपदा १३
यदा पुरोहितं वा ते पर्येयुः शरणैषिणः
करिष्यामः पुनर्ब्रह्मन्न पापमिति वादिनः १४
तदा विसर्गमर्हाः स्युरितीदं नृपशासनम्

बिभ्रद्दण्डाजिनं मुण्डो ब्राह्मणोऽहति वासनम् १५
गरीयांसो गरीयांसमपराधे पुनः पुनः
तथा विसर्गमर्हन्ति न यथा प्रथमे तथा १६
द्युमत्सेन उवाच
यत्र यत्रैव शक्येरन्संयन्तुं समये प्रजाः
स तावत्प्रोच्यते धर्मो यावन्न प्रतिलङ्घ्यते १७
अहन्यमानेषु पुनः सर्वमेव पराभवेत्
पूर्वे पूर्वतरे चैव सुशास्या अभवञ्जनाः १८
मृदवः सत्यभूयिष्ठा अल्पद्रोहाल्पमन्यवः
पुरा धिग्दण्ड एवासीद्वाग्दण्डस्तदनन्तरम् १९
आसीदादानदण्डोऽपि वधदण्डोऽद्य वर्तते
वधेनापि न शक्यन्ते नियन्तुमपरे जनाः २०
नैव दस्युर्मनुष्याणां न देवानामिति श्रुतिः
न गन्धर्वपितॄणां च कः कस्येह न कश्चन २१
पद्मं श्मशानादादत्ते पिशाचाच्चापि दैवतम्
तेषु यः समयं कुर्यादज्ञेषु हतबुद्धिषु २२
सत्यवानुवाच
तान्न शक्नोषि चेत्साधून्परित्रातुमहिंसया
कस्यचिद्भूतभव्यस्य लाभेनान्तं तथा कुरु २३
द्युमत्सेन उवाच
राजानो लोकयात्रार्थं तप्यन्ते परमं तपः
अपत्रपन्ति तादृग्भ्यस्तथावृत्ता भवन्ति च २४
वित्रास्यमानाः सुकृतो न कामाद्घ्नन्ति दुष्कृतीन्
सुकृतेनैव राजानो भूयिष्ठं शासते प्रजाः २५
श्रेयसः श्रेयसीमेवं वृत्तिं लोकोऽनुवर्तते
सदैव हि गुरोर्वृत्तमनुवर्तन्ति मानवाः २६
आत्मानमसमाधाय समाधित्सति यः परान्
विषयेष्विन्द्रियवशं मानवाः प्रहसन्ति तम् २७
यो राज्ञो दम्भमोहेन किंचित्कुर्यादसांप्रतम्
सर्वोपायैर्नियम्यः स तथा पापान्निवर्तते २८

आत्मैवादौ नियन्तव्यो दुष्कृतं संनियच्छता
दण्डयेच्च महादण्डैरपि बन्धूननन्तरान् २९
यत्र वै पापकृत्क्लेभ्यो न महद्दुःखमर्छति
वर्धन्ते तत्र पापानि धर्मो ह्रसति च ध्रुवम्
इति कारुण्यशीलस्तु विद्वान्वै ब्राह्मणोऽन्वशात् ३०
इति चैवानुशिष्टोऽस्मि पूर्वैस्तात पितामहैः
आश्वासयद्भिः सुभृशमनुक्रोशात्तथैव च ३१
एतत्प्रथमकल्पेन राजा कृतयुगेऽभजत्
पादोनेनापि धर्मेण गच्छेत्त्रेतायुगे तथा
द्वापरे तु द्विपादेन पादेन त्वपरे युगे ३२
तथा कलियुगे प्राप्ते राज्ञां दुश्चरितेन ह
भवेत्कालविशेषेण कला धर्मस्य षोडशी ३३
अथ प्रथमकल्पेन सत्यवन्संकरो भवेत्
आयुः शक्तिं च कालं च निर्दिश्य तप आदिशेत् ३४
सत्याय हि यथा नेह जह्याद्धर्मफलं महत्
भूतानामनुकम्पार्थं मनुः स्वायंभुवोऽब्रवीत् ३५
इति श्रीमहाभारते शान्तिपर्वणि एकोनषष्ट्यधिकद्विशततमोऽध्यायः २५९

## षष्ट्यधिकद्विशततमोऽध्यायः

युधिष्ठिर उवाच
अविरोधेन भूतानां त्यागः षाड्गुण्यकारकः
यः स्यादुभयभाग्धर्मस्तन्मे ब्रूहि पितामह १
गार्हस्थ्यस्य च धर्मस्य त्यागधर्मस्य चोभयोः
अदूरसंप्रस्थितयोः किं स्विच्छ्रेयः पितामह २
भीष्म उवाच
उभौ धर्मौ महाभागावुभौ परमदुश्चरौ
उभौ महाफलौ तात सद्भिराचरितावुभौ ३
अत्र ते वर्तयिष्यामि प्रामाण्यमुभयोस्तयोः
शृणुष्वैकमनाः पार्थ छिन्नधर्मार्थसंशयम् ४
अत्राप्युदाहरन्तीममितिहासं पुरातनम्

कपिलस्य गोश्च संवादं तन्निबोध युधिष्ठिर ५
आम्नायमनुपश्यन्हि पुराणं शाश्वतं ध्रुवम्
नहुषः पूर्वमालेभे त्वष्टुर्गामिति नः श्रुतम् ६
तां नियुक्तामदीनात्मा सत्त्वस्थः समये रतः
ज्ञानवान्नियताहारो ददर्श कपिलस्तदा ७
स बुद्धिमुत्तमां प्राप्तो नैष्ठिकीमकुतोभयाम्
स्मरानि शिथिलं सत्यं वेदा इत्यब्रवीत्सकृत् ८
तां गामृषिः स्यूमरश्मिः प्रविश्य यतिमब्रवीत्
हंहो वेदा यदि मता धर्माः केनापरे मताः ९
तपस्विनो धृतिमतः श्रुतिविज्ञानचक्षुषः
सर्वमार्षं हि मन्यन्ते व्याहृतं विदितात्मनः १०
तस्यैवं गततृष्णस्य विज्वरस्य निराशिषः
का विवक्षास्ति वेदेषु निरारम्भस्य सर्वशः ११
कपिल उवाच
नाहं वेदान्विनिन्दामि न विवक्षामि कर्हिचित्
पृथगाश्रमिणां कर्माण्येकार्थानीति नः श्रुतम् १२
गच्छत्येव परित्यागी वानप्रस्थश्च गच्छति
गृहस्थो ब्रह्मचारी च उभौ तावपि गच्छतः १३
देवयाना हि पन्थानश्चत्वारः शाश्वता मताः
तेषां ज्यायःकनीयस्त्वं फलेषूक्तं बलाबलम् १४
एवं विदित्वा सर्वार्थानारभेदिति वैदिकम्
नारभेदिति चान्यत्र नैष्ठिकी श्रूयते श्रुतिः १५
अनारम्भे ह्यदोषः स्यादारम्भेदोष उत्तमः
एवं स्थितस्य शास्त्रस्य दुर्विज्ञेयं बलाबलम् १६
यद्यत्र किंचित्प्रत्यक्षमहिंसायाः परं मतम्
ऋते त्वागमशास्त्रेभ्यो ब्रूहि तद्यदि पश्यसि १७
स्यूमरश्मिरुवाच
स्वर्गकामो यजेतेति सततं श्रूयते श्रुतिः
फलं प्रकल्प्य पूर्वं हि ततो यज्ञः प्रतायते १८
अजश्चाश्वश्च मेषश्च गौश्च पक्षिगणाश्च ये

ग्राम्यारण्या ओषधयः प्राणस्यान्नमिति श्रुतिः १९
तथैवान्नं ह्यहरहः सायं प्रातर्निरुप्यते
पशवश्चाथ धान्यं च यज्ञस्याङ्गमिति श्रुतिः २०
एतानि सह यज्ञेन प्रजापतिरकल्पयत्
तेन प्रजापतिर्देवान्यज्ञेनायजत प्रभुः २१
ते स्मान्योन्यंचराः सर्वे प्राणिनः सप्त सप्त च
यज्ञेषूपाकृतं विश्वं प्राहुरुत्तमसंज्ञितम् २२
एतच्चैवाभ्यनुज्ञातं पूर्वैः पूर्वतरैस्तथा
को जातु न विचिन्वीत विद्वान्स्वां शक्तिमात्मनः २३
पशवश्च मनुष्याश्च द्रुमाश्चौषधिभिः सह
स्वर्गमेवाभिकाङ्क्षन्ते न च स्वर्गस्त्वृते मखम् २४
ओषध्यः पशवो वृक्षा वीरुदाज्यं पयो दधि
हविर्भूमिर्दिशः श्रद्धा कालश्चैतानि द्वादश २५
ऋचो यजूंषि सामानि यजमानश्च षोडशः
अग्निर्ज्ञेयो गृहपतिः स सप्तदश उच्यते
अङ्गान्येतानि यज्ञस्य यज्ञो मूलमिति श्रुतिः २६
आज्येन पयसा दध्ना शकृतामिक्षया त्वचा
वालैः शृङ्गेण पादेन संभवत्येव गौर्मखम्
एवं प्रत्येकशः सर्वं यद्यदस्य विधीयते २७
यज्ञं वहन्ति संभूय सहर्त्विग्भिः सदक्षिणैः
संहत्यैतानि सर्वाणि यज्ञं निर्वर्तयन्त्युत २८
यज्ञार्थानि हि सृष्टानि यथा वै श्रूयते श्रुतिः
एवं पूर्वे पूर्वतराः प्रवृत्ताश्चैव मानवाः २९
न हिनस्ति ह्यारभते नाभिद्रुह्यति किंचन
यज्ञो यष्टव्य इत्येव यो यजत्यफलेप्सया ३०
यज्ञाङ्गान्यपि चैतानि यथोक्तानि न संशयः
विधिना विधियुक्तानि तारयन्ति परस्परम् ३१
आम्नायमार्षं पश्यामि यस्मिन्वेदाः प्रतिष्ठिताः
तं विद्वांसोऽनुपश्यन्ति ब्राह्मणस्यानुदर्शनात् ३२
ब्राह्मणप्रभवो यज्ञो ब्राह्मणार्पण एव च

अनु यज्ञं जगत्सर्वं यज्ञश्चानु जगत्सदा ३३
ओमिति ब्रह्मणो योनिर्नमः स्वाहा स्वधा वषट्
यस्यैतानि प्रयुज्यन्ते यथाशक्ति कृतान्यपि ३४
न तस्य त्रिषु लोकेषु परलोकभयं विदुः
इति वेदा वदन्तीह सिद्धाश्च परमर्षयः ३५
ऋचो यजूंषि सामानि स्तोभाश्च विधिचोदिताः
यस्मिन्नेतानि सर्वाणि बहिरेव स वै द्विजः ३६
अग्न्याधेये यद्भवति यच्च सोमे सुते द्विज
यच्चेतरैर्महायज्ञैर्वेद तद्भगवान्स्वतः ३७
तस्माद्ब्रह्मन्यजेतैव याजयेच्चाविचारयन्
यजतः स्वर्गविधिना प्रेत्य स्वर्गफलं महत् ३८
नायं लोकोऽस्त्ययज्ञानां परश्चेति विनिश्चयः
वेदवादविदश्चैव प्रमाणमुभयं तदा ३९
इति श्रीमहाभारते शान्तिपर्वणि षष्ट्यधिकद्विशततमोऽध्यायः २६०

## एकषष्ट्यधिकद्विशततमोऽध्यायः

कपिल उवाच
एतावदनुपश्यन्तो यतयो यान्ति मार्गगाः
नैषां सर्वेषु लोकेषु कश्चिदस्ति व्यतिक्रमः १
निर्द्वंद्वा निर्नमस्कारा निराशीर्बन्धना बुधाः
विमुक्ताः सर्वपापेभ्यश्चरन्ति शुचयोऽमलाः २
अपवर्गेऽथ संत्यागे बुद्धौ च कृतनिश्चयाः
ब्रह्मिष्ठा ब्रह्मभूताश्च ब्रह्मण्येव कृतालयाः ३
विशोका नष्टरजसस्तेषां लोकाः सनातनाः
तेषां गतिं परां प्राप्य गार्हस्थ्ये किं प्रयोजनम् ४
स्यूमरश्मिरुवाच
यद्येषा परमा निष्ठा यद्येषा परमा गतिः
गृहस्थानव्यपाश्रित्य नाश्रमोऽन्य प्रवर्तते ५
यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः
एवं गृहस्थमाश्रित्य वर्तन्त इतरेऽश्रमाः ६

गृहस्थ एव यजते गृहस्थस्तप्यते तपः
गार्हस्थ्यमस्य धर्मस्य मूलं यत्किंचिदेजते ७
प्रजनाद्ध्यभिनिर्वृत्ताः सर्वे प्राणभृतो मुने
प्रजनं चाप्युतान्यत्र न कथंचन विद्यते ८
यास्ताः स्युर्बहिरोषध्यो बह्वरण्यास्तथा द्विज
ओषधिभ्यो बहिर्यस्मात्प्राणी कश्चिन्न विद्यते
कस्यैषा वाग्भवेत्सत्या मोक्षो नास्ति गृहादिति ९
अश्रद्दधानैरप्राज्ञैः सूक्ष्मदर्शनवर्जितैः
निराशैरलसैः श्रान्तैस्तप्यमानैः स्वकर्मभिः
श्रमस्योपरमो दृष्टः प्रव्रज्या नाम पण्डितैः १०
त्रैलोक्यस्यैव हेतुर्हि मर्यादा शाश्वती ध्रुवा
ब्राह्मणो नाम भगवाञ्जन्मप्रभृति पूज्यते ११
प्राग्गर्भाधानान्मन्त्रा हि प्रवर्तन्ते द्विजातिषु
अविश्रम्भेषु वर्तन्ते विश्रम्भेष्वप्यसंशयम् १२
दाहः पुनः संश्रयणे संस्थिते पात्रभोजनम्
दानं गवां पशूनां वा पिण्डानां चाप्सु मज्जनम् १३
अर्चिष्मन्तो बर्हिषदः क्रव्यादाः पितरः स्मृताः
मृतस्याप्यनुमन्यन्ते मन्त्रा मन्त्राश्च कारणम् १४
एवं क्रोशत्सु वेदेषु कुतो मोक्षोऽस्ति कस्यचित्
ऋणवन्तो यदा मर्त्याः पितृदेवद्विजातिषु १५
श्रिया विहीनैरलसैः पण्डितैरपलापितम्
वेदावादापरिज्ञानं सत्याभासमिवानृतम् १६
न वै पापैर्ह्रियते कृष्यते वा यो ब्राह्मणो यजते वेदशास्त्रैः
उर्ध्वं यज्ञः पशुभिः सार्धमेति संतर्पितस्तर्पयते च कामैः १७
न वेदानां परिभवान्न शाठ्येन न मायया
महत्प्राप्नोति पुरुषो ब्रह्म ब्रह्मणि विन्दति १८
कपिल उवाच
दर्शं च पौर्णमासं च अग्निहोत्रं च धीमताम्
चातुर्मास्यानि चैवासंस्तेषु यज्ञः सनातनः १९
अनारम्भाः सुधृतयः शुचयो ब्रह्मसंश्रिताः

ब्रह्मणैव स्म ते देवांस्तर्पयन्त्यमृतैषिणः २०
सर्वभूतात्मभूतस्य सर्वभूतानि पश्यतः
देवापि मार्गे मुह्यन्ति अपदस्य पदैषिणः २१
चतुर्द्वारं पुरुषं चतुर्मुखं चतुर्धा चैनमुपयाति निन्दा
बाहुभ्यां वाच उदरादुपस्थात्तेषां द्वारं द्वारपालो बुभूषेत् २२
नाक्षैर्दीव्येन्नाददीतान्यवित्तं न वायोनीचस्य शृतं प्रगृह्णेत्
क्रुद्धो न चैव प्रहरेत धीमांस्तथास्य तत्पाणिपादं सुगुप्तम् २३
नाक्रोशमर्छेन्न मृषा वदेच्च न पैशुनं जनवादं च कुर्यात्
सत्यव्रतो मितभाषोऽप्रमत्तस्तथास्य वाग्द्वारमथो सुगुप्तम् २४
नानाशनः स्यान्न महाशनः स्यादलोलुपः साधुभिरागतः स्यात्
यात्रार्थमाहारमिहाददीत तथास्य स्याज्जाठरी द्वारगुप्तिः २५
न वीरपत्नीं विहरेत नारीं न चापि नारीमनृतावाह्वयीत
भार्याव्रतं ह्यात्मनि धारयीत तथास्योपस्थद्वारगुप्तिर्भवेत २६
द्वाराणि यस्य सर्वाणि सुगुप्तानि मनीषिणः
उपस्थमुदरं बाहू वाक्चतुर्थी स वै द्विजः २७
मोघान्यगुप्तद्वारस्य सर्वाण्येव भवन्त्युत
किं तस्य तपसा कार्यं किं यज्ञेन किमात्मना २८
अनुत्तरीयवसनमनुपस्तीर्णशायिनम्
बाहूपधानं शाम्यन्तं तं देवा ब्राह्मणं विदुः २९
द्वंद्वारामेषु सर्वेषु य एको रमते मुनिः
परेषामननुध्यायंस्तं देवा ब्राह्मणं विदुः ३०
येन सर्वमिदं बुद्धं प्रकृतिर्विकृतिश्च या
गतिज्ञः सर्वभूतानां तं देवा ब्राह्मणं विदुः ३१
अभयं सर्वभूतेभ्यः सर्वेषामभयं यतः
सर्वभूतात्मभूतो यस्तं देवा ब्राह्मणं विदुः ३२
नान्तरेणानुजानन्ति वेदानां यत्क्रियाफलम्
अनुज्ञाय च तत्सर्वमन्यद्रोचयतेऽफलम् ३३
फलवन्ति च कर्माणि व्युष्टिमन्ति ध्रुवाणि च
विगुणानि च पश्यन्ति तथानैकान्तिकानि च ३४
गुणाश्चात्र सुदुर्ज्ञेया ज्ञाताश्चापि सुदुष्कराः

अनुष्ठिताश्चान्तवन्त इति त्वमनुपश्यसि ३५
स्यूमरश्मिरुवाच
यथा च वेदप्रामाण्यं त्यागश्च सफलो यथा
तौ पान्थानावुभौ व्यक्तौ भगवंस्तद्ब्रवीहि मे ३६
कपिल उवाच
प्रत्यक्षमिह पश्यन्ति भवन्तः सत्पथे स्थिताः
प्रत्यक्षं तु किमत्रास्ति यद्भवन्त उपासते ३७
स्यूमरश्मिरुवाच
स्यूमरश्मिरहं ब्रह्मञ्जिज्ञासार्थमिहागतः
श्रेयस्कामः प्रत्यवोचमार्जवान्न विवक्षया
इमं च संशयं घोरं भगवान्प्रबवीतु मे ३८
प्रत्यक्षमिह पश्यन्तो भवन्तः सत्पथे स्थिताः
किमत्र प्रत्यक्षतमं भवन्तो यदुपासते
अन्यत्र तर्कशास्त्रेभ्य आगमाच्च यथागमम् ३९
आगमो वेदवादस्तु तर्कशास्त्राणि चागमः
यथागममुपासीत आगमस्तत्र सिध्यति
सिद्धिः प्रत्यक्षरूपा च दृश्यत्यागमनिश्चयात् ४०
नौर्नावीव निबद्धा हि स्रोतसा सनिबन्धना
ह्रियमाणा कथं विप्र कुबुद्धींस्तारयिष्यति
एतद्ब्रवीतु भगवानुपपन्नोऽस्म्यधीहि भोः ४१
नैव त्यागी न संतुष्टो नाशोको न निरामयः
न निर्विवित्सो नावृत्तो नापवृत्तोऽस्ति कश्चन ४२
भवन्तोऽपि च हृष्यन्ति शोचन्ति च यथा वयम्
इन्द्रियार्थाश्च भवतां समानाः सर्वजन्तुषु ४३
एवं चतुर्णां वर्णानामाश्रमाणां प्रवृत्तिषु
एकमालम्बमानानां निर्णये किं निरामयम् ४४
कपिल उवाच
यद्यदाचरते शास्त्रमथ सर्वप्रवृत्तिषु
यस्य यत्र ह्यनुष्ठानं तत्र तत्र निरामयम् ४५
सर्वं पावयते ज्ञानं यो ज्ञानं ह्यनुवर्तते

ज्ञानादपेत्य या वृत्तिः सा विनाशयति प्रजाः ४६
भवन्तो ज्ञानिनो व्यक्तं सर्वतश्च निरागमाः
एकात्म्यं नाम कश्चिद्धि कदाचिदभिपद्यते ४७
शास्त्रं ह्यबुद्ध्वा तत्त्वेन केचिद्वादबला मनाः
कामद्वेषाभिभूतत्वादहंकारवशं गताः ४८
याथातथ्यमविज्ञाय शास्त्राणां शास्त्रदस्यवः
ब्रह्मस्तेना निरारम्भा अपक्वमतयोऽशिवाः ४९
वैगुण्यमेव पश्यन्ति न गुणाननुयुञ्जते
तेषां तमःशरीराणां तम एव परायणम् ५०
यो यथाप्रकृतिर्जन्तुः प्रकृतेः स्याद्वशानुगः
तस्य द्वेषश्च कामश्च क्रोधो दम्भोऽनृतं मदः
नित्यमेवाभिवर्तन्ते गुणाः प्रकृतिसंभवाः ५१
एतद्बुद्ध्यानुपश्यन्तः संत्यजेयुः शुभाशुभम्
परां गतिमभीप्सन्तो यतयः संयमे रताः ५२
स्यूमरश्मिरुवाच
सर्वमेतन्मया ब्रह्मञ्शास्त्रतः परिकीर्तितम्
न ह्यविज्ञाय शास्त्रार्थं प्रवर्तन्ते प्रवृत्तयः ५३
यः कश्चिन्न्याय्य आचारः सर्वं शास्त्रमिति श्रुतिः
यदन्याय्यमशास्त्रं तदित्येषा श्रूयते श्रुतिः ५४
न प्रवृत्तिर्ऋते शास्त्रात्काचिदस्तीति निश्चयः
यदन्यद्वेदवादेभ्यस्तदशास्त्रमिति श्रुतिः ५५
शास्त्रादपेतं पश्यन्ति बहवो व्यक्तमानिनः
शास्त्रदोषान्न पश्यन्ति इह चामुत्र चापरे
अविज्ञानहतप्रज्ञा हीनप्रज्ञास्तमोवृताः ५६
शक्यं त्वेकेन मुक्तेन कृतकृत्येन सर्वशः
पिण्डमात्रं व्यपाश्रित्य चरितुं सर्वतोदिशम्
वेदवादं व्यपाश्रित्य मोक्षोऽस्तीति प्रभाषितुम् ५७
इदं तु दुष्करं कर्म कुटुम्बमभिसंश्रितम्
दानमध्ययनं यज्ञः प्रजासंतानमार्जवम् ५८
यद्येतदेवं कृत्वापि न विमोक्षोऽस्ति कस्यचित्

धिक्कर्तारं च कार्यं च श्रमश्चायं निरर्थकः ५९
नास्तिक्यमन्यथा च स्याद्वेदानां पृष्ठतःक्रिया
एतस्यानन्त्यमिच्छामि भगवञ्श्रोतुमञ्जसा ६०
तत्त्वं वदस्व मे ब्रह्मन्नुपसन्नोऽस्म्यधीहि भोः
यथा ते विदितो मोक्षस्तथेच्छाम्युपशिक्षितुम् ६१
इति श्रीमहाभारते शान्तिपर्वणि एकषष्ट्यधिकद्विशततमोऽध्यायः २६१

## द्विषष्ट्यधिकद्विशततमोऽध्यायः

कपिल उवाच
वेदाः प्रमाणं लोकानां न वेदाः पृष्ठतःकृताः
द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत्
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति १
शरीरमेतत्कुरुते यद्वेदे कुरुते तनुम्
कृतशुद्धशरीरो हि पात्रं भवति ब्राह्मणः २
आनन्त्यमनुयुङ्क्ते यः कर्मणा तद्ब्रवीमि ते
निरागममनैतिह्यं प्रत्यक्षं लोकसाक्षिकम् ३
धर्म इत्येव ये यज्ञान्वितन्वन्ति निराशिषः
उत्पन्नत्यागिनोऽलुब्धाः कृपासूयाविवर्जिताः
धनानामेष वै पन्थास्तीर्थेषु प्रतिपादनम् ४
अनाश्रिताः पापकृत्याः कदाचित्कर्मयोनितः
मनःसंकल्पसंसिद्धा विशुद्धज्ञाननिश्चयाः ५
अक्रुध्यन्तोऽनसूयन्तो निरहंकारमत्सराः
ज्ञाननिष्ठास्त्रिशुक्लाश्च सर्वभूतहिते रताः ६
आसन्गृहस्था भूयिष्ठमव्युत्क्रान्ताः स्वकर्मसु
राजानश्च तथा युक्ता ब्राह्मणाश्च यथाविधि ७
समा ह्यार्जवसंपन्नाः संतुष्टा ज्ञाननिश्चयाः
प्रत्यक्षधर्माः शुचयः श्रद्दधानाः परावरे ८
पुरस्ताद्भावितात्मानो यथावच्चरितव्रताः
चरन्ति धर्मं कृच्छ्रेऽपि दुर्गे चैवाधिसंहताः ९
संहत्य धर्मं चरतां पुरासीत्सुखमेव तत्

तेषां नासीद्विधातव्यं प्रायश्चित्तं कदाचन १०
सत्यं हि धर्ममास्थाय दुराधर्षतमा मताः
न मात्रामनुरुध्यन्ते न धर्मच्छलमन्ततः ११
य एव प्रथमः कल्पस्तमेवाभ्याचरन्सह
अस्यां स्थितौ स्थितानां हि प्रायश्चित्तं न विद्यते
दुर्बलात्मन उत्पन्नं प्रायश्चित्तमिति श्रुतिः १२
यत एवंविधा विप्राः पुराणा यज्ञवाहनाः
त्रैविद्यवृद्धाः शुचयो वृत्तवन्तो यशस्विनः
यजन्तोऽहरहर्यज्ञैर्निराशीर्बन्धना बुधाः १३
तेषां यज्ञाश्च वेदाश्च कर्माणि च यथागमम्
आगमाश्च यथाकालं संकल्पाश्च यथाव्रतम् १४
अपेतकामक्रोधानां प्रकृत्या संशितात्मनाम्
ऋजूनां शमनित्यानां स्थितानां स्वेषु कर्मसु
सर्वमानन्त्यमेवासीदिति नः शाश्वती श्रुतिः १५
तेषामदीनसत्त्वानां दुश्चराचारकर्मणाम्
स्वकर्मभिः संवृतानां तपो घोरत्वमागतम् १६
तं सदाचारमाश्चर्यं पुराणं शाश्वतं ध्रुवम्
अशक्नुवद्भिश्चरितुं किंचिद्धर्मेषु सूचितम् १७
निरापद्धर्म आचारस्त्वप्रमादोऽपराभवः
सर्ववर्णेषु यत्तेषु नासीत्कश्चिद्व्यतिक्रमः १८
धर्ममेकं चतुष्पादमाश्रितास्ते नरर्षभाः
तं सन्तो विधिवत्प्राप्य गच्छन्ति परमां गतिम् १९
गृहेभ्य एव निष्क्रम्य वनमन्ये समाश्रिताः
गृहमेवाभिसंश्रित्य ततोऽन्ये ब्रह्मचारिणः २०
धर्ममेतं चतुष्पादमाश्रमं ब्राह्मणा विदुः
आनन्त्यं ब्रह्मणः स्थानं ब्राह्मणा नाम निश्चयः २१
अत एवंविधा विप्राः पुराणा धर्मचारिणः
त एते दिवि दृश्यन्ते ज्योतिर्भूता द्विजातयः २२
नक्षत्राणीव धिष्ण्येषु बहवस्तारकागणाः
आनन्त्यमुपसंप्राप्ताः संतोषादिति वैदिकम् २३

यद्यागच्छन्ति संसारं पुनर्योनिषु तादृशाः
न लिप्यन्ते पापकृत्यैः कदाचित्कर्मयोनितः २४
एवं युक्तो ब्राह्मणः स्यादन्यो ब्राह्मणको भवेत्
कर्मैव पुरुषस्याह शुभं वा यदि वाशुभम् २५
एवं पक्वकषायाणामानन्त्येन श्रुतेन च
सर्वमानन्त्यमेवासीदेवं नः शाश्वती श्रुतिः २६
तेषामपेततृष्णानां निर्णिक्तानां शुभात्मनाम्
चतुर्थ औपनिषदो धर्मः साधारणः स्मृतः २७
स सिद्धैः साध्यते नित्यं ब्राह्मणैर्नियतात्मभिः
संतोषमूलस्त्यागात्मा ज्ञानाधिष्ठानमुच्यते २८
अपवर्गगतिर्नित्यो यतिधर्मः सनातनः
साधारणः केवलो वा यथाबलमुपास्यते २९
गच्छतो गच्छतः क्षेमं दुर्बलोऽत्रावसीदति
ब्रह्मणः पदमन्विच्छन्संसारान्मुच्यते शुचिः ३०
स्यूमरश्मिरुवाच
ये भुञ्जते ये ददते यजन्तेऽधीयते च ये
मात्राभिर्धर्मलब्धाभिर्ये वा त्यागं समाश्रिताः ३१
एतेषां प्रेत्यभावे तु कतमः स्वर्गजित्तमः
एतदाचक्ष्व मे ब्रह्मन्यथा तथ्येन पृच्छतः ३२
कपिल उवाच
परिग्रहाः शुभाः सर्वे गुणतोऽभ्युदयाश्च ये
न तु त्यागसुखं प्राप्ता एतत्त्वमपि पश्यसि ३३
स्यूमरश्मिरुवाच
भवन्तो ज्ञाननिष्ठा वै गृहस्थाः कर्मनिश्चयाः
आश्रमाणां च सर्वेषां निष्ठायामैक्यमुच्यते ३४
एकत्वे च पृथक्त्वे च विशेषो नान्य उच्यते
तद्यथावद्यथान्यायं भगवान्प्रब्रवीतु मे ३५
कपिल उवाच
शरीरपक्तिः कर्माणि ज्ञानं तु परमा गतिः
पक्वे कषाये वमनै रसज्ञाने न तिष्ठति ३६

आनृशंस्यं क्षमा शान्तिरहिंसा सत्यमार्जवम्
अद्रोहो नाभिमानश्च ह्रीस्तितिक्षा शमस्तथा ३७
पन्थानो ब्रह्मणस्त्वेते एतैः प्राप्नोति यत्परम्
तद्विद्वाननुबुध्येत मनसा कर्मनिश्चयम् ३८
यां विप्राः सर्वतः शान्ता विशुद्धा ज्ञाननिश्चयाः
गतिं गच्छन्ति संतुष्टास्तामाहुः परमां गतिम् ३९
वेदांश्च वेदितव्यं च विदित्वा च यथास्थिति
एवं वेदविदित्याहुरतोऽन्यो वातरेटकः ४०
सर्वं विदुर्वेदविदो वेदे सर्वं प्रतिष्ठितम्
वेदे हि निष्ठा सर्वस्य यद्यदस्ति च नास्ति च ४१
एषैव निष्ठा सर्वस्य यद्यदस्ति च नास्ति च
एतदन्तं च मध्यं च सच्चासच्च विजानतः ४२
समस्तत्याग इत्येव शम इत्येव निष्ठितः
संतोष इत्यत्र शुभमपवर्गे प्रतिष्ठितम् ४३
ऋतं सत्यं विदितं वेदितव्यं सर्वस्यात्मा जङ्गमं स्थावरं च
सर्वं सुखं यच्छिवमुत्तमं च ब्रह्माव्यक्तं प्रभवश्चाव्ययश्च ४४
तेजः क्षमा शान्तिरनामयं शुभं तथाविधं व्योम सनातनं ध्रुवम्
एतैः शब्दैर्गम्यते बुद्धिनेत्रैस्तस्मै नमो ब्रह्मणे ब्राह्मणाय ४५
इति श्रीमहाभारते शान्तिपर्वणि द्विषष्ट्यधिकद्विशततमोऽध्यायः २६२

## त्रिषष्ट्यधिकद्विशततमोऽध्यायः

युधिष्ठिर उवाच
धर्ममर्थं च कामं च वेदाः शंसन्ति भारत
कस्य लाभो विशिष्टोऽत्र तन्मे ब्रूहि पितामह १
भीष्म उवाच
अत्र ते वर्तयिष्यामि इतिहासं पुरातनम्
कुण्डधारेण यत्प्रीत्या भक्तायोपकृतं पुरा २
अधनो ब्राह्मणः कश्चित्कामाद्धर्ममवैक्षत
यज्ञार्थं स ततोऽथार्थी तपोऽतप्यत दारुणम् ३
स निश्चयमथो कृत्वा पूजयामास देवताः

भक्त्या न चैवाध्यगच्छद्धनं संपूज्य देवताः ४
ततश्चिन्तां पुनः प्राप्तः कतमद्दैवतं नु तत्
यन्मे द्रुतं प्रसीदेत मानुषैरजडीकृतम् ५
अथ सौम्येन वपुषा देवानुचरमन्तिके
प्रत्यपश्यज्जलधरं कुण्डधारमवस्थितम् ६
दृष्ट्वैव तं महात्मानं तस्य भक्तिरजायत
अयं मे धास्यति श्रेयो वपुरेतद्धि तादृशम् ७
संनिकृष्टश्च देवस्य न चान्यैर्मानुषैर्वृतः
एष मे दास्यति धनं प्रभूतं शीघ्रमेव च ८
ततो धूपैश्च गन्धैश्च माल्यैरुच्चावचैरपि
बलिभिर्विविधैश्चापि पूजयामास तं द्विजः ९
ततः स्वल्पेन कालेन तुष्टो जलधरस्तदा
तस्योपकारे नियतामिमां वाचमुवाच ह १०
ब्रह्मघ्ने च सुरापे च चोरे भग्नव्रते तथा
निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः ११
आशायास्तनयोऽधर्मः क्रोधोऽसूयासुतः स्मृतः
पुत्रो लोभो निकृत्यास्तु कृतघ्नो नार्हति प्रजाम् १२
ततः स ब्राह्मणः स्वप्ने कुण्डधारस्य तेजसा
अपश्यत्सर्वभूतानि कुशेषु शयितस्तदा १३
शमेन तपसा चैव भक्त्या च निरुपस्कृतः
शुद्धात्मा ब्राह्मणो रात्रौ निदर्शनमपश्यत १४
मणिभद्रं स तत्रस्थं देवतानां महाद्युतिम्
अपश्यत महात्मानं व्यादिशन्तं युधिष्ठिर १५
तत्र देवाः प्रयच्छन्ति राज्यानि च धनानि च
शुभैः कर्मभिरारब्धाः प्रच्छिदन्त्यशुभेषु च १६
पश्यतामथ यक्षाणां कुण्डधारो महाद्युतिः
निष्पत्य पतितो भूमौ देवानां भरतर्षभ १७
ततस्तु देववचनान्मणिभद्रो महायशाः
उवाच पतितं भूमौ कुण्डधार किमिष्यते १८
कुण्डधार उवाच

यदि प्रसन्ना देवा मे भक्तोऽय ब्राह्मणो मम
अस्यानुग्रहमिच्छामि कृतं किंचित्सुखोदयम् १९
भीष्म उवाच
ततस्तं मणिभद्रस्तु पुनर्वचनमब्रवीत्
देवानामेव वचनात्कुण्डधारं महाद्युतिम् २०
उत्तिष्ठोत्तिष्ठ भद्रं ते कृतकार्यः सुखी भव
यावद्धनं प्रार्थयते ब्राह्मणोऽय सखा तव
देवानां शासनात्तावदसंख्येयं ददाम्यहम् २१
विचार्य कुण्डधारस्तु मानुष्यं चलमध्रुवम्
तपसे मतिमाधत्त ब्राह्मणस्य यशस्विनः २२
कुण्डधार उवाच
नाहं धनानि याचामि ब्राह्मणाय धनप्रद
अन्यमेवाहमिच्छामि भक्तायानुग्रहं कृतम् २३
पृथिवीं रत्नपूर्णां वा महद्वा धनसंचयम्
भक्ताय नाहमिच्छामि भवेदेष तु धार्मिकः २४
धर्मेऽस्य रमतां बुद्धिर्धर्मं चैवोपजीवतु
धर्मप्रधानो भवतु ममैषोऽनुग्रहो मतः २५
मणिभद्र उवाच
यदा धर्मफलं राज्यं सुखानि विविधानि च
फलान्येवायमश्नातु कायक्लेशविवर्जितः २६
भीष्म उवाच
ततस्तदेव बहुशः कुण्डधारो महायशाः
अभ्यासमकरोद्धर्मे ततस्तुष्टास्य देवताः २७
मणिभद्र उवाच
प्रीतास्ते देवताः सर्वा द्विजस्यास्य तथैव च
भविष्यत्येष धर्मात्मा धर्मे चाधास्यते मतिः २८
भीष्म उवाच
ततः प्रीतो जलधरः कृतकार्यो युधिष्ठिर
ईप्सितं मनसो लब्ध्वा वरमन्यैः सुदुर्लभम् २९
ततोऽपश्यत चीराणि सूक्ष्माणि द्विजसत्तमः

पार्श्वतोऽभ्यागतो न्यस्तान्यथ निर्वेदमागतः ३०
ब्राह्मण उवाच
अयं न सुकृतं वेत्ति को न्वन्यो वेत्स्यते कृतम्
गच्छामि वनमेवाहं वरं धर्मेण जीवितुम् ३१
भीष्म उवाच
निर्वेदाद्देवतानां च प्रसादात्स द्विजोत्तमः
वनं प्रविश्य सुमहत्तप आरब्धवांस्तदा ३२
देवतातिथिशेषेण फलमूलाशनो द्विजः
धर्मे चापि महाराज रतिरस्याभ्यजायत ३३
त्यक्त्वा मूलफलं सर्वं पर्णाहारोऽभवद्द्विजः
पर्णं त्यक्त्वा जलाहारस्तदासीद्द्विजसत्तमः ३४
वायुभक्षस्ततः पश्चाद्बहून्वर्षगणानभूत्
न चास्य क्षीयते प्राणस्तदद्भुतमिवाभवत् ३५
धर्मे च श्रद्दधानस्य तपस्युग्रे च वर्ततः
कालेन महता तस्य दिव्या दृष्टिरजायत ३६
तस्य बुद्धिः प्रादुरासीद्यदि दद्यां महद्धनम्
तुष्टः कस्मैचिदेवाहं न मिथ्या वाग्भवेन्मम ३७
ततः प्रहृष्टवदनो भूय आरब्धवांस्तपः
भूयश्चाचिन्तयत्सिद्धो यत्परं सोऽभ्यपद्यत ३८
यदि दद्यामहं राज्यं तुष्टो वै यस्य कस्यचित्
स भवेदचिराद्राजा न मिथ्या वाग्भवेन्मम ३९
तस्य साक्षात्कुण्डधारो दर्शयामास भारत
ब्राह्मणस्य तपोयोगात्सौहृदेनाभिचोदितः ४०
समागम्य स तेनाथ पूजां चक्रे यथाविधि
ब्राह्मणः कुण्डधारस्य विस्मितश्चाभवन्नृप ४१
ततोऽब्रवीत्कुण्डधारो दिव्यं ते चक्षुरुत्तमम्
पश्य राज्ञां गतिं विप्र लोकांश्चावेक्ष चक्षुषा ४२
ततो राज्ञां सहस्राणि मग्नानि निरये तदा
दूरादपश्यद्विप्रः स दिव्ययुक्तेन चक्षुषा ४३
कुण्डधार उवाच

मां पूजयित्वा भावेन यदि त्वं दुःखमाप्नुयाः
कृतं मया भवेत्किं ते कश्च तेऽनुग्रहो भवेत् ४४
पश्य पश्य च भूयस्त्वं कामानिच्छेत्कथं नरः
स्वर्गद्वारं हि संरुद्धं मानुषेषु विशेषतः ४५
भीष्म उवाच
ततोऽपश्यत्स कामं च क्रोधं लोभं भयं मदम्
निद्रां तन्द्रीं तथालस्यमावृत्य पुरुषान्स्थितान् ४६
कुण्डधार उवाच
एतैर्लोकाः सुसंरुद्धा देवानां मानुषाद्भयम्
तथैव देववचनाद्विघ्नं कुर्वन्ति सर्वशः ४७
न देवैरननुज्ञातः कश्चिद्भवति धार्मिकः
एष शक्तोऽपि तपसा राज्यं दातुं धनानि च ४८
भीष्म उवाच
ततः पपात शिरसा ब्राह्मणस्तोयधारिणे
उवाच चैनं धर्मात्मा महान्मेऽनुग्रहः कृतः ४९
कामलोभानुबन्धेन पुरा ते यदसूयितम्
मया स्नेहमविज्ञाय तत्र मे क्षन्तुमर्हसि ५०
क्षान्तमेव मयेत्युक्त्वा कुण्डधारो द्विजर्षभम्
संपरिष्वज्य बाहुभ्यां तत्रैवान्तरधीयत ५१
ततः सर्वानिमाँल्लोकान्ब्राह्मणोऽनुचचार ह
कुण्डधारप्रसादेन तपसा योजितः पुरा ५२
विहायसा च गमनं तथा संकल्पितार्थता
धर्माच्छक्त्या तथा योगाद्या चैव परमा गतिः ५३
देवता ब्राह्मणाः सन्तो यक्षा मानुषचारणाः
धार्मिकान्पूजयन्तीह न धनाढ्यान्न कामिनः ५४
सुप्रसन्ना हि ते देवा यत्ते धर्मे रता मतिः
धर्मे सुखकला काचिद्धर्मे तु परमं सुखम् ५५

इति श्रीमहाभारते शान्तिपर्वणि त्रिषष्ट्यधिकद्विशततमोऽध्यायः २६३

## चतुःषष्ट्यधिकद्विशततमोऽध्यायः

युधिष्ठिर उवाच
बहूनां यज्ञतपसामेकार्थानां पितामह
धर्मार्थं न सुखार्थार्थं कथं यज्ञः समाहितः १
भीष्म उवाच
अत्र ते वर्तयिष्यामि नारदेनानुकीर्तितम्
उञ्छवृत्तेः पुरावृत्तं यज्ञार्थे ब्राह्मणस्य ह २
राष्ट्रे धर्मोत्तरे श्रेष्ठे विदर्भेष्वभवद्द्विजः
उञ्छवृत्तिरृषिः कश्चिद्यज्ञे यज्ञं समादधे ३
श्यामाकमशनं तत्र सूर्यपत्नी सुवर्चला
तिक्तं च विरसं शाकं तपसा स्वादुतां गतम् ४
उपगम्य वने पृथ्वद्यं सर्वभूताविहिंसया
अपि मूलफलैरिज्यो यज्ञः स्वर्ग्यः परंतपः ५
तस्य भार्या व्रतकृशा शुचिः पुष्करचारिणी
यज्ञपत्नीत्वमानीता सत्येनानुविधीयते
सा तु शापपरित्रस्ता न स्वभावानुवर्तिनी ६
मयूरजीर्णपर्णानां वस्त्रं तस्याश्च पर्णिनाम्
अकामायाः कृतं तत्र यज्ञे होत्रनुमार्गतः ७
शुक्रस्य पुनराजातिरपध्यानादधर्मवित्
तस्मिन्वने समीपस्थो मृगोऽभूत्सहचारिकः
वचोभिरब्रवीत्सत्यं त्वया दुष्कृतकं कृतम् ८
यदि मन्त्राङ्गहीनोऽय यज्ञो भवति वैकृतः
मां भोः प्रक्षिप होत्रे त्वं गच्छ स्वर्गमतन्द्रितः ९
ततस्तु यज्ञे सावित्री साक्षात्तं संन्यमन्त्रयत्
निमन्त्रयन्ती प्रत्युक्ता न हन्यां सहवासिनम् १०
एवमुक्ता निवृत्ता सा प्रविष्टा यज्ञपावकम्
किं नु दुश्चरितं यज्ञे दिदृक्षुः सा रसातलम् ११
सा तु बद्धाञ्जलि सत्यमयाचद्धरिणं पुनः
सत्येन संपरिष्वज्य संदिष्टो गम्यतामिति १२
ततः स हरिणो गत्वा पदान्यष्टौ न्यवर्तत

साधु हिंसय मां सत्य हतो यास्यामि सद्गतिम् १३
पश्य ह्यप्सरसो दिव्या मया दत्तेन चक्षुषा
विमानानि विचित्राणि गन्धर्वाणां महात्मनाम् १४
ततः सुरुचिरं दृष्ट्वा स्पृहालग्नेन चक्षुषा
मृगमालोक्य हिंसायां स्वर्गवासं समर्थयत् १५
स तु धर्मो मृगो भूत्वा बहुवर्षोषितो वने
तस्य निष्कृतिमाधत्त न ह्यसौ यज्ञसंविधिः १६
तस्य तेन तु भावेन मृगहिंसात्मनस्तदा
तपो महत्समुच्छिन्नं तस्माद्धिंसा न यज्ञिया १७
ततस्तं भगवान्धर्मो यज्ञं याजयत स्वयम्
समाधानं च भार्याया लेभे स तपसा परम् १८
अहिंसा सकलो धर्मो हिंसा यज्ञेऽसमाहिता
सत्यं तेऽह प्रवक्ष्यामि यो धर्मः सत्यवादिनाम् १९
इति श्रीमहाभारते शान्तिपर्वणि चतुःषष्ट्यधिकद्विशततमोऽध्यायः २६४

## पञ्चषष्ट्यधिकद्विशततमोऽध्यायः

युधिष्ठिर उवाच
कथं भवति पापात्मा कथं धर्मं करोति वा
केन निर्वेदमादत्ते मोक्षं वा केन गच्छति १
भीष्म उवाच
विदिताः सर्वधर्मास्ते स्थित्यर्थमनुपृच्छसि
शृणु मोक्षं सनिर्वेदं पापं धर्मं च मूलतः २
विज्ञानार्थं हि पञ्चानामिच्छा पूर्वं प्रवर्तते
प्राप्य ताञ्जायते कामो द्वेषो वा भरतर्षभ ३
ततस्तदर्थं यतते कर्म चारभते पुनः
इष्टानां रूपगन्धानामभ्यासं च चिकीर्षति ४
ततो रागः प्रभवति द्वेषश्च तदनन्तरम्
ततो लोभः प्रभवति मोहश्च तदनन्तरम् ५
लोभमोहाभिभूतस्य रागद्वेषान्वितस्य च
न धर्मे जायते बुद्धिर्व्याजाद्धर्मं करोति च ६

व्याजेन चरतो धर्ममर्थव्याजोऽपि रोचते
व्याजेन सिध्यमानेषु धनेषु कुरुनन्दन ७
तत्रैव कुरुते बुद्धिं ततः पापं चिकीर्षति
सुहृद्भिर्वार्यमाणोऽपि पण्डितैश्चापि भारत ८
उत्तरं न्यायसंबद्धं ब्रवीति विधियोजितम्
अधर्मस्त्रिविधस्तस्य वर्धते रागमोहजः ९
पापं चिन्तयते चैव प्रब्रवीति करोति च
तस्याधर्मप्रवृत्तस्य दोषान्पश्यन्ति साधवः १०
एकशीलाश्च मित्रत्वं भजन्ते पापकर्मिणः
स नेह सुखमाप्नोति कुत एव परत्र वै ११
एवं भवति पापात्मा धर्मात्मानं तु मे शृणु
यथा कुशलधर्मा स कुशलं प्रतिपद्यते १२
य एतान्प्रज्ञया दोषान्पूर्वमेवानुपश्यति
कुशलः सुखदुःखानां साधूंश्चाप्युपसेवते १३
तस्य साधुसमाचारादभ्यासाच्चैव वर्धते
प्रज्ञा धर्मे च रमते धर्मं चैवोपजीवति १४
सोऽथ धर्मादवाप्तेषु धनेषु कुरुते मनः
तस्यैव सिञ्चते मूलं गुणान्पश्यति यत्र वै १५
धर्मात्मा भवति ह्येवं मित्रं च लभते शुभम्
स मित्रधनलाभात्तु प्रेत्य चेह च नन्दति १६
शब्दे स्पर्शे तथा रूपे रसे गन्धे च भारत
प्रभुत्वं लभते जन्तुर्धर्मस्यैतत्फलं विदुः १७
स धर्मस्य फलं लब्ध्वा न तृप्यति युधिष्ठिर
अतृप्यमाणो निर्वेदमादत्ते ज्ञानचक्षुषा १८
प्रज्ञाचक्षुर्यदा कामे दोषमेवानुपश्यति
विरज्यते तदा कामान्न च धर्मं विमुञ्चति १९
सर्वत्यागे च यतते दृष्ट्वा लोकं क्षयात्मकम्
ततो मोक्षाय यतते नानुपायादुपायतः २०
शनैर्निर्वेदमादत्ते पापं कर्म जहाति च
धर्मात्मा चैव भवति मोक्षं च लभते परम् २१

एतत्ते कथितं तात यन्मां त्वं परिपृच्छसि
पापं धर्मं तथा मोक्षं निर्वेदं चैव भारत २२
तस्माद्धर्मे प्रवर्तेथाः सर्वावस्थं युधिष्ठिर
धर्मे स्थितानां कौन्तेय सिद्धिर्भवति शाश्वती २३
इति श्रीमहाभारते शान्तिपर्वणि पञ्चषष्ट्यधिकद्विशततमोऽध्यायः २६५

षट्षष्ट्यधिकद्विशततमोऽध्यायः

युधिष्ठिर उवाच
मोक्षः पितामहेनोक्त उपायान्नानुपायतः
तमुपायं यथान्यायं श्रोतुमिच्छामि भारत १
भीष्म उवाच
त्वय्येवैतन्महाप्राज्ञ युक्तं निपुणदर्शनम्
यदुपायेन सर्वार्थान्नित्यं मृगयसेऽनघ २
करणे घटस्य या बुद्धिर्घटोत्पत्तौ न सानघ
एवं धर्माभ्युपायेषु नान्यद्धर्मेषु कारणम् ३
पूर्वे समुद्रे यः पन्था न स गच्छति पश्चिमम्
एकः पन्था हि मोक्षस्य तन्मे विस्तरतः शृणु ४
क्षमया क्रोधमुच्छिन्द्यात्कामं संकल्पवर्जनात्
सत्त्वसंसेवनाद्धीरो निद्रामुच्छेत्तुमर्हति ५
अप्रमादाद्भयं रक्षेच्छ्वासं क्षेत्रज्ञशीलनात्
इच्छां द्वेषं च कामं च धैर्येण विनिवर्तयेत् ६
भ्रमं प्रमोहमावर्तमभ्यासाद्विनिवर्तयेत्
निद्रां च प्रतिभां चैव ज्ञानाभ्यासेन तत्त्ववित् ७
उपद्रवांस्तथा रोगान्हितजीर्णमिताशनात्
लोभं मोहं च संतोषाद्विषयांस्तत्त्वदर्शनात् ८
अनुक्रोशादधर्मं च जयेद्धर्ममुपेक्षया
आयत्या च जयेदाशामर्थं सङ्गविवर्जनात् ९
अनित्यत्वेन च स्नेहं क्षुधं योगेन पण्डितः
कारुण्येनात्मनो मानं तृष्णां च परितोषतः १०
उत्थानेन जयेत्तन्द्रीं वितर्कं निश्चयाज्जयेत्

मौनेन बहुभाष्यं च शौर्येण च भयं जयेत् ११
यच्छेद्वाङ्मनसी बुद्ध्या तां यच्छेज्ज्ञानचक्षुषा
ज्ञानमात्मा महान्यच्छेत्तं यच्छेच्छान्तिरात्मनः १२
तदेतदुपशान्तेन बोद्धव्यं शुचिकर्मणा
योगदोषान्समुच्छिद्य पञ्च यान्कवयो विदुः १३
कामं क्रोधं च लोभं च भयं स्वप्नं च पञ्चमम्
परित्यज्य निषेवेत तथेमान्योगसाधनान् १४
ध्यानमध्ययनं दानं सत्यं ह्रीरार्जवं क्षमा
शौचमाहारतः शुद्धिरिन्द्रियाणां च संयमः १५
एतैर्विवर्धते तेजः पाप्मानमपहन्ति च
सिध्यन्ति चास्य संकल्पा विज्ञानं च प्रवर्तते १६
धूतपापः स तेजस्वी लघ्वाहारो जितेन्द्रियः
कामक्रोधौ वशे कृत्वा निनीषेद्ब्रह्मणः पदम् १७
अमूढत्वमसङ्गित्वं कामक्रोधविवर्जनम्
अदैन्यमनुदीर्णत्वमनुद्वेगो व्यवस्थितिः १८
एष मार्गो हि मोक्षस्य प्रसन्नो विमलः शुचिः
तथा वाक्कायमनसां नियमः कामतोऽन्यथा १९
इति श्रीमहाभारते शान्तिपर्वणि षट्षष्ट्यधिकद्विशततमोऽध्यायः २६६

## सप्तषष्ट्यधिकद्विशततमोऽध्यायः

भीष्म उवाच
अत्रैवोदाहरन्तीममितिहासं पुरातनम्
नारदस्य च संवादं देवलस्यासितस्य च १
आसीनं देवलं वृद्धं बुद्ध्वा बुद्धिमतां वरः
नारदः परिपप्रच्छ भूतानां प्रभवाप्ययम् २
कुतः सृष्टमिदं विश्वं ब्रह्मन्स्थावरजङ्गमम्
प्रलये च कमभ्येति तद्भवान्प्रब्रवीतु मे ३
असित उवाच
येभ्यः सृजति भूतानि कालो भावप्रचोदितः
महाभूतानि पञ्चेति तान्याहुर्भूतचिन्तकाः ४

तेभ्यः सृजति भूतानि काल ग्रात्मप्रचोदितः
एतेभ्यो यः परं ब्रूयादसद्ब्रूयादसंशयम् ५
विद्धि नारद पञ्चैताञ्शाश्वतानचलान्ध्रुवान्
महतस्तेजसो राशीन्कालषष्ठान्स्वभावतः ६
ग्रापश्चैवान्तरित्तं च पृथिवी वायुपावकौ
ग्रसिद्धिः परमेतेभ्यो भूतेभ्यो मुक्तसंशयम् ७
नोपपत्त्या न वा युक्त्या त्वसद्ब्रूयादसंशयम्
वेत्थ तानभिनिर्वृत्तान्षडेते यस्य राशयः ८
पञ्चैव तानि कालश्च भावाभावौ च केवलौ
ग्रष्टौ भूतानि भूतानां शाश्वतानि भवाप्ययौ ९
ग्रभावाद्भावितेष्वेव तेभ्यश्च प्रभवन्त्यपि
विनष्टोऽपि च तान्येव जन्तुर्भवति पञ्चधा १०
तस्य भूमिमयो देहः श्रोत्रमाकाशसंभवम्
सूर्यश्चत्तुरसुर्वायुरद्भ्यस्तु खलु शोणितम् ११
चत्तुषी नासिकाकर्णौ त्वग्जिह्वेति च पञ्चमी
इन्द्रियाणीन्द्रियार्थानां ज्ञानानि कवयो विदुः १२
दर्शनं श्रवणं घ्राणं स्पर्शनं रसनं तथा
उपपत्त्या गुणान्विद्धि पञ्च पञ्चसु पञ्चधा १३
रूपं गन्धो रसः स्पर्शः शब्दश्चैवाथ तद्गुणाः
इन्द्रियैरुपलभ्यन्ते पञ्चधा पञ्च पञ्चभिः १४
रूपं गन्धं रसं स्पर्शं शब्दं चैतांस्तु तद्गुणान्
इन्द्रियाणि च बुध्यन्ते त्तेत्रज्ञस्तैस्तु बुध्यते १५
चित्तमिन्द्रियसंघातात्परं तस्मात्परं मनः
मनसस्तु परा बुद्धिः त्तेत्रज्ञो बुद्धितः परः १६
पूर्वं चेतयते जन्तुरिन्द्रियैर्विषयान्पृथक्
विचार्य मनसा पश्चादथ बुद्ध्या व्यवस्यति १७
चित्तमिन्द्रियसंघातं मनो बुद्धिं तथाष्टमीम्
ग्रष्टौ ज्ञानेन्द्रियाण्याहुरेतान्यध्यात्मचिन्तकाः १८
पाणिपादं च पायुश्च मेहनं पञ्चमं मुखम्
इति संशब्द्यमानानि शृणु कर्मेन्द्रियाण्यपि १९

जल्पनाभ्यवहारार्थं मुखमिन्द्रियमुच्यते
गमनेन्द्रियं तथा पादौ कर्मणः करणे करौ २०
पायूपस्थौ विसर्गार्थमिन्द्रिये तुल्यकर्मणी
विसर्गे च पुरीषस्य विसर्गे चाभिकामिके २१
बलं षष्ठं षडेतानि वाचा सम्यग्यथागमम्
ज्ञानचेष्टेन्द्रियगुणाः सर्वे संशब्दिता मया २२
इन्द्रियाणां स्वकर्मभ्यः श्रमादुपरमो यदा
भवतीन्द्रियसंन्यासादथ स्वपिति वै नरः २३
इन्द्रियाणां व्युपरमे मनोऽनुपरतं यदि
सेवते विषयानेव तद्विद्यात्स्वप्नदर्शनम् २४
सात्त्विकाश्चैव ये भावास्तथा राजसतामसाः
कर्मयुक्तान्प्रशंसन्ति सात्त्विकानितरांस्तथा २५
आनन्दः कर्मणां सिद्धिः प्रतिपत्तिः परा गतिः
सात्त्विकस्य निमित्तानि भावान्संश्रयते स्मृतिः २६
जन्तुष्वेकतमेष्वेवं भावा ये विधिमास्थिताः
भावयोरीप्सितं नित्यं प्रत्यक्षगमनं द्वयोः २७
इन्द्रियाणि च भावाश्च गुणाः सप्तदश स्मृताः
तेषामष्टादशो देही यः शरीरे स शाश्वतः २८
अथ वा सशरीरास्ते गुणाः सर्वे शरीरिणाम्
संश्रितास्तद्वियोगे हि सशरीरा न सन्ति ते २९
अथ वा संनिपातोऽय शरीरं पाञ्चभौतिकम्
एकश्च दश चाष्टौ च गुणाः सह शरीरिणाम्
ऊष्मणा सह विंशो वा संघातः पाञ्चभौतिकः ३०
महान्संधारयत्येतच्छरीरं वायुना सह
तस्यास्य भावयुक्तस्य निमित्तं देहभेदने ३१
यथैवोत्पद्यते किंचित्पञ्चत्वं गच्छते तथा
पुण्यपापविनाशान्ते पुण्यपापसमीरितम्
देहं विशति कालेन ततोऽय कर्मसंभवम् ३२
हित्वा हित्वा ह्ययं प्रैति देहाद्देहं कृताश्रयः
कालसंचोदितः क्षेत्री विशीर्णाद्वा गृहाद्गृहम् ३३

तत्र नैवानुतप्यन्ते प्राज्ञा निश्चितनिश्चयाः
कृपणास्त्वनुतप्यन्ते जनाः संबन्धिमानिनः ३४
न ह्ययं कस्यचित्कश्चिन्नास्य कश्चन विद्यते
भवत्येको ह्ययं नित्यं शरीरे सुखदुःखभाक् ३५
नैव संजायते जन्तुर्न च जातु विपद्यते
याति देहमयं भुक्त्वा कदाचित्परमां गतिम् ३६
पुण्यपापमयं देहं क्षपयन्कर्मसंचयात्
क्षीणदेहः पुनर्देही ब्रह्मत्वमुपगच्छति ३७
पुण्यपापक्षयार्थं च सांख्यं ज्ञानं विधीयते
तत्क्षये ह्यस्य पश्यन्ति ब्रह्मभावे परां गतिम् ३८
इति श्रीमहाभारते शान्तिपर्वणि सप्तषष्ट्यधिकद्विशततमोऽध्यायः २६७

अष्टषष्ट्यधिकद्विशततमोऽध्यायः

युधिष्ठिर उवाच
भ्रातरः पितरः पुत्रा ज्ञातयः सुहृदस्तथा
अर्थहेतोर्हताः क्रूरैरस्माभिः पापबुद्धिभिः १
येयमर्थोद्भवा तृष्णा कथमेतां पितामह
निवर्तयेम पापं हि तृष्णया कारिता वयम् २
भीष्म उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
गीतं विदेहराजेन माण्डव्यायानुपृच्छते ३
सुसुखं बत जीवामि यस्य मे नास्ति किंचन
मिथिलायां प्रदीप्तायां न मे दह्यति किंचन ४
अर्थाः खलु समृद्धा हि बाढं दुःखं विजानताम्
असमृद्धास्त्वपि सदा मोहयन्त्यविचक्षणान् ५
यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम्
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ६
यथैव शृङ्गं गोः काले वर्धमानस्य वर्धते
तथैव तृष्णा वित्तेन वर्धमानेन वर्धते ७
किंचिदेव ममत्वेन यदा भवति कल्पितम्

तदेव परितापाय नाशे संपद्यते पुनः ८
न कामाननुरुध्येत दुःखं कामेषु वै रतिः
प्राप्यार्थमुपयुञ्जीत धर्मे कामं विवर्जयेत् ९
विद्वान्सर्वेषु भूतेषु व्याघ्रमांसोपमो भवेत्
कृतकृत्यो विशुद्धात्मा सर्वं त्यजति वै सह १०
उभे सत्यानृते त्यक्त्वा शोकानन्दौ प्रियाप्रिये
भयाभये च संत्यज्य संप्रशान्तो निरामयः ११
या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः
योऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखम् १२
चारित्रमात्मनः पश्यंश्चन्द्रशुद्धमनामयम्
धर्मात्मा लभते कीर्तिं प्रेत्य चेह यथासुखम् १३
राज्ञस्तद्वचनं श्रुत्वा प्रीतिमानभवद्द्विजः
पूजयित्वा च तद्वाक्यं माण्डव्यो मोक्षमाश्रितः १४
इति श्रीमहाभारते शान्तिपर्वणि अष्टषष्ट्यधिकद्विशततमोऽध्यायः २६८

## एकोनसप्तत्यधिकद्विशततमोऽध्यायः

युधिष्ठिर उवाच
किंशीलः किंसमाचारः किंविद्यः किंपरायणः
प्राप्नोति ब्रह्मणः स्थानं यत्परं प्रकृतेर्ध्रुवम् १
भीष्म उवाच
मोक्षधर्मेषु निरतो लघ्वाहारो जितेन्द्रियः
प्राप्नोति परमं स्थानं यत्परं प्रकृतेर्ध्रुवम् २
स्वगृहादभिनिःसृत्य लाभालाभे समो मुनिः
समुपोढेषु कामेषु निरपेक्षः परिव्रजेत् ३
न चक्षुषा न मनसा न वाचा दूषयेदपि
न प्रत्यक्षं परोक्षं वा दूषणं व्याहरेत्क्वचित् ४
न हिंस्यात्सर्वभूतानि मैत्रायणगतिश्चरेत्
नेदं जीवितमासाद्य वैरं कुर्वीत केनचित् ५
अतिवादांस्तितिक्षेत नाभिमन्येत्कथंचन
क्रोध्यमानः प्रियं ब्रूयादाक्रुष्टः कुशलं वदेत् ६

प्रदक्षिणं प्रसव्यं च ग्राममध्ये न चाचरेत्
भैक्षचर्यामनापन्नो न गच्छेत्पूर्वकेतितः ७
अवकीर्णः सुगुप्तश्च न वाचा ह्यप्रियं वदेत्
मृदुः स्यादप्रतिक्रूरो विस्रब्धः स्यादरोषणः ८
विधूमे न्यस्तमुसले व्यङ्गारे भुक्तवज्जने
अतीते पात्रसंचारे भिक्षां लिप्सेत वै मुनिः ९
अनुयात्रिकमर्थस्य मात्रालाभेष्वनादृतः
अलाभे न विहन्येत लाभश्चैनं न हर्षयेत् १०
लाभं साधारणं नेच्छेन्न भुञ्जीताभिपूजितः
अभिपूजितलाभं हि जुगुप्सेतैव तादृशः ११
न चान्नदोषान्निन्देत न गुणानभिपूजयेत्
शय्यासने विविक्ते च नित्यमेवाभिपूजयेत् १२
शून्यागारं वृक्षमूलमरण्यमथ वा गुहाम्
अज्ञातचर्यां गत्वान्यां ततोऽन्यत्रैव संविशेत् १३
अनुरोधविरोधाभ्यां समः स्यादचलो ध्रुवः
सुकृतं दुष्कृतं चोभे नानुरुध्येत कर्मणि १४
वाचो वेगं मनसः क्रोधवेगं विवित्सावेगमुदरोपस्थवेगम्
एतान्वेगान्विनयेद्वै तपस्वी निन्दा चास्य हृदयं नोपहन्यात् १५
मध्यस्थ एव तिष्ठेत प्रशंसानिन्दयोः समः
एतत्पवित्रं परमं परिव्राजक आश्रमे १६
महात्मा सुव्रतो दान्तः सर्वत्रैवानपाश्रितः
अपूर्वचारकः सौम्यो अनिकेतः समाहितः १७
वानप्रस्थगृहस्थाभ्यां न संसृज्येत कर्हिचित्
अज्ञातलिप्सां लिप्सेत न चैनं हर्ष आविशेत् १८
विजानतां मोक्ष एष श्रमः स्यादविजानताम्
मोक्षयानमिदं कृत्स्नं विदुषां हारितोऽब्रवीत् १९
अभयं सर्वभूतेभ्यो दत्त्वा यः प्रव्रजेद्गृहात्
लोकास्तेजोमयास्तस्य तथानन्त्याय कल्पते २०
इति श्रीमहाभारते शान्तिपर्वणि एकोनसप्तत्यधिकद्विशततमोऽध्यायः २६९

सप्तत्यधिकद्विशततमोऽध्यायः

युधिष्ठिर उवाच
धन्या धन्या इति जनाः सर्वेऽस्मान्प्रवदन्त्युत
न दुःखिततरः कश्चित्पुमानस्माभिरस्ति ह १
लोकसंभावितैर्दुःखं यत्प्राप्तं कुरुसत्तम
प्राप्य जातिं मनुष्येषु देवैरपि पितामह २
कदा वयं करिष्यामः संन्यासं दुःखसंज्ञकम्
दुःखमेतच्छरीराणां धारणं कुरुसत्तम ३
विमुक्ताः सप्तदशभिर्हेतुभूतैश्च पञ्चभिः
इन्द्रियार्थैर्गुणैश्चैव अष्टाभिः प्रपितामह ४
न गच्छन्ति पुनर्भावं मुनयः संशितव्रताः
कदा वयं गमिष्यामो राज्यं हित्वा परंतप ५
भीष्म उवाच
नास्त्यनन्तं महाराज सर्वं संख्यानगोचरम्
पुनर्भावोऽपि संख्यातो नास्ति किंचिदिहाचलम् ६
न चापि गम्यते राजन्नैष दोषः प्रसङ्गतः
उद्योगादेव धर्मज्ञ कालेनैव गमिष्यथ ७
ईशोऽय सततं देही नृपते पुण्यपापयोः
तत एव समुत्थेन तमसा रुध्यतेऽपि च ८
यथाञ्जनमयो वायुः पुनर्मानःशिलं रजः
अनुप्रविश्य तद्वर्णो दृश्यते रञ्जयन्दिशः ९
तथा कर्मफलैर्देही रञ्जितस्तमसावृतः
विवर्णो वर्णमाश्रित्य देहेषु परिवर्तते १०
ज्ञानेन हि यदा जन्तुरज्ञानप्रभवं तमः
व्यपोहति तदा ब्रह्म प्रकाशेत सनातनम् ११
अयत्नसाध्यं मुनयो वदन्ति ये चापि मुक्तास्त उपासितव्याः
त्वया च लोकेन च सामरेण तस्मान्न शाम्यन्ति महर्षिसंघाः १२
अस्मिन्नर्थे पुरा गीतं शृणुष्वैकमना नृप
यथा दैत्येन वृत्रेण भ्रष्टैश्वर्येण चेष्टितम् १३
निर्जितेनासहायेन हृतराज्येन भारत

अशोचता शत्रुमध्ये बुद्धिमास्थाय केवलाम् १४
भ्रष्टैश्वर्यं पुरा वृत्रमुशना वाक्यमब्रवीत्
कच्चित्पराजितस्याद्य न व्यथा तेऽस्ति दानव १५
वृत्र उवाच
सत्येन तपसा चैव विदित्वा संक्षयं ह्यहम्
न शोचामि न हृष्यामि भूतानामागतिं गतिम् १६
कालसंचोदिता जीवा मज्जन्ति नरकेऽवशाः
परिदृष्टानि सर्वाणि दिव्यान्याहुर्मनीषिणः १७
क्षपयित्वा तु तं कालं गणितं कालचोदिताः
सावशेषेण कालेन संभवन्ति पुनः पुनः १८
तिर्यग्योनिसहस्राणि गत्वा नरकमेव च
निर्गच्छन्त्यवशा जीवाः कालबन्धनबन्धनाः १९
एवं संसरमाणानि जीवान्यहमदृष्टवान्
यथा कर्म तथा लाभ इति शास्त्रनिदर्शनम् २०
तिर्यग्गच्छन्ति नरकं मानुष्यं दैवमेव च
सुखदुःखे प्रियद्वेष्ये चरित्वा पूर्वमेव च २१
कृतान्तविधिसंयुक्तं सर्वलोकः प्रपद्यते
गतं गच्छन्ति चाध्वानं सर्वभूतानि सर्वदा २२
भीष्म उवाच
कालसंख्यानसंख्यातं सृष्टिस्थितिपरायणम्
तं भाषमाणं भगवानुशना प्रत्यभाषत
भीमान्दुष्टप्रलापांस्त्वं तात कस्मात्प्रभाषसे २३
वृत्र उवाच
प्रत्यक्षमेतद्भवतस्तथान्येषां मनीषिणाम्
मया यज्ञयलुब्धेन पुरा तप्तं महत्तपः २४
गन्धानादाय भूतानां रसांश्च विविधानपि
अवर्धं त्रीन्समाक्रम्य लोकान्वै स्वेन तेजसा २५
ज्वालामालापरिक्षिप्तो वैहायसचरस्तथा
अजेयः सर्वभूतानामासं नित्यमपेतभीः २६
एश्वर्यं तपसा प्राप्तं भ्रष्टं तच्च स्वकर्मभिः

धृतिमास्थाय भगवन्न शोचामि ततस्त्वहम् २७
युयुत्सता महेन्द्रेण पुरा सार्धं महात्मना
ततो मे भगवान्दृष्टो हरिर्नारायणः प्रभुः २८
वैकुण्ठः पुरुषो विष्णुः शुक्लोऽनन्तः सनातनः
मुञ्जकेशो हरिश्मश्रुः सर्वभूतपितामहः २९
नूनं तु तस्य तपसः सावशेषं ममास्ति वै
यदहं प्रष्टुमिच्छामि भवन्तं कर्मणः फलम् ३०
ऐश्वर्यं वै महद्ब्रह्मन्कस्मिन्वर्णे प्रतिष्ठितम्
निवर्तते चापि पुनः कथमैश्वर्यमुत्तमम् ३१
कस्माद्भूतानि जीवन्ति प्रवर्तन्तेऽथ वा पुनः
किं वा फलं परं प्राप्य जीवस्तिष्ठति शाश्वतः ३२
केन वा कर्मणा शक्यमथ ज्ञानेन केन वा
ब्रह्मर्षे तत्फलं प्राप्तुं तन्मे व्याख्यातुमर्हसि ३३
इतीदमुक्तः स मुनिस्तदानीं प्रत्याह यत्तच्छृणु राजसिंह
मयोच्यमानं पुरुषर्षभ त्वमनन्यचित्तः सह सोदरीयैः ३४
इति श्रीमहाभारते शान्तिपर्वणि सप्तत्यधिकद्विशततमोऽध्यायः २७०

## एकसप्तत्यधिकद्विशततमोऽध्यायः

उशनोवाच
नमस्तस्मै भगवते देवाय प्रभविष्णवे
यस्य पृथ्वीतलं तात साकाशं बाहुगोचरम् १
मूर्धा यस्य त्वनन्तं च स्थानं दानवसत्तम
तस्याहं ते प्रवक्ष्यामि विष्णोर्माहात्म्यमुत्तमम् २
भीष्म उवाच
तयोः संवदतोरेवमाजगाम महामुनिः
सनत्कुमारो धर्मात्मा संशयच्छेदनाय वै ३
स पूजितोऽसुरेन्द्रेण मुनिनोशनसा तथा
निषसादासने राजन्महार्हे मुनिपुंगवः ४
तमासीनं महाप्राज्ञमुशना वाक्यमब्रवीत्
ब्रूह्यस्मै दानवेन्द्राय विष्णोर्माहात्म्यमुत्तमम् ५

सनत्कुमारस्तु ततः श्रुत्वा प्राह वचोऽथवत्
विष्णोर्माहात्म्यसंयुक्तं दानवेन्द्राय धीमते ६
शृणु सर्वमिदं दैत्य विष्णोर्माहात्म्यमुत्तमम्
विष्णौ जगत्स्थितं सर्वमिति विद्धि परंतप ७
सृजत्येष महाबाहो भूतग्रामं चराचरम्
एष चाक्षिपते काले काले विसृजते पुनः
अस्मिन्गच्छन्ति विलयमस्माच्च प्रभवन्त्युत ८
नैष दानवता शक्यस्तपसा नैव चेज्यया
संप्राप्तुमिन्द्रियाणां तु संयमेनैव शक्यते ९
बाह्ये चाभ्यन्तरे चैव कर्मणा मनसि स्थितः
निर्मलीकुरुते बुद्ध्या सोऽमुत्रानन्त्यमश्नुते १०
यथा हिरण्यकर्ता वै रूप्यमग्नौ विशोधयेत्
बहुशोऽतिप्रयत्नेन महतात्मकृतेन ह ११
तद्वज्जातिशतैर्जीवः शुद्ध्यतेऽल्पेन कर्मणा
यत्नेन महता चैवाप्येकजातौ विशुध्यते १२
लीलयाल्पं यथा गात्रात्प्रमृज्यादात्मनो रजः
बहु यत्नेन महता दोषनिर्हरणं तथा १३
यथा चाल्पेन माल्येन वासितः तिलसर्षपम्
न मुञ्चति स्वकं गन्धं तद्वत्सूक्ष्मस्य दर्शनम् १४
तदेव बहुभिर्माल्यैर्वास्यमानं पुनः पुनः
विमुञ्चति स्वकं गन्धं माल्यगन्धेऽवतिष्ठति १५
एवं जातिशतैर्युक्तो गुणैरेव प्रसङ्गिषु
बुद्ध्या निवर्तते दोषो यत्नेनाभ्यासजेन वै १६
कर्मणा स्वेन रक्तानि विरक्तानि च दानव
यथा कर्मविशेषांश्च प्राप्नुवन्ति तथा शृणु १७
यथा च संप्रवर्तन्ते यस्मिंस्तिष्ठन्ति वा विभो
तत्तेऽनुपूर्व्या व्याख्यास्ये तदिहैकमनाः शृणु १८
अनादिनिधनः श्रीमान्हरिर्नारायणः प्रभुः
स वै सृजति भूतानि स्थावराणि चराणि च १९
एष सर्वेषु भूतेषु क्षरश्चाक्षर एव च

एकादशविकारात्मा जगत्पिबति रश्मिभिः २०
पादौ तस्य महीं विद्धि मूर्धानं दिवमेव च
बाहवस्तु दिशो दैत्य श्रोत्रमाकाशमेव च २१
तस्य तेजोमयः सूर्यो मनश्चन्द्रमसि स्थितम्
बुद्धिर्ज्ञानगता नित्यं रसस्त्वप्सु प्रवर्तते २२
भ्रुवोरनन्तरास्तस्य ग्रहा दानवसत्तम
नक्षत्रचक्रं नेत्राभ्यां पादयोर्भूश्च दानव २३
रजस्तमश्च सत्त्वं च विद्धि नारायणात्मकम्
सोऽश्रमाणां मुखं तात कर्मणस्तत्फलं विदुः २४
अकर्मणः फलं चैव स एव परमव्ययः
छन्दांसि तस्य रोमाणि अक्षरं च सरस्वती २५
बह्वाश्रयो बहुमुखो धर्मो हृदि समाश्रितः
स ब्रह्मपरमो धर्मस्तपश्च सदसच्च सः २६
श्रुतिशास्त्रग्रहोपेतः षोडशर्त्विक्क्रतुश्च सः
पितामहश्च विष्णुश्च सोऽश्विनौ स पुरंदरः २७
मित्रश्च वरुणश्चैव यमोऽथ धनदस्तथा
ते पृथग्दर्शनास्तस्य संविदन्ति तथैकताम्
एकस्य विद्धि देवस्य सर्वं जगदिदं वशे २८
नानाभूतस्य दैत्येन्द्र तस्यैकत्वं वदत्ययम्
जन्तुः पश्यति ज्ञानेन ततः सत्त्वं प्रकाशते २९
संहारविक्षेपसहस्रकोटीस्तिष्ठन्ति जीवाः प्रचरन्ति चान्ये
प्रजाविसर्गस्य च पारिमाण्यं वापीसहस्राणि बहूनि दैत्य ३०
वाप्यः पुनर्योजनविस्तृतास्ताः क्रोशं च गम्भीरतयावगाढाः
आयामतः पञ्चशताश्च सर्वाः प्रत्येकशो योजनतः प्रवृद्धाः ३१
वाप्या जलं क्षिप्यति वालकोट्या त्वह्ना सकृच्चाप्यथ न द्वितीयम्
तासां क्षये विद्धि कृतं विसर्गं संहारमेकं च तथा प्रजानाम् ३२
षड्जीववर्णाः परमं प्रमाणं कृष्णो धूम्रो नीलमथास्य मध्यम्
रक्तं पुनः सह्यतरं सुखं तु हारिद्रवर्णं सुसुखं च शुक्लम् ३३
परं तु शुक्लं विमलं विशोकं गतक्लमं सिध्यति दानवेन्द्र
गत्वा तु योनिप्रभवानि दैत्य सहस्रशः सिद्धिमुपैति जीवः ३४

गतिं च या दर्शनमाह देवो गत्वा शुभं दर्शनमेव चाह
गतिः पुनर्वर्णकृता प्रजानां वर्णस्तथा कालकृतोऽसुरेन्द्र ३५
शतं सहस्राणि चतुर्दशेह परा गतिर्जीवगुणस्य दैत्य
आरोहणं तत्कृतमेव विद्धि स्थानं तथा निःसरणं च तेषाम् ३६
कृष्णस्य वर्णस्य गतिर्निकृष्टा स मज्जते नरके पच्यमानः
स्थानं तथा दुर्गतिभिस्तु तस्य प्रजाविसर्गान्सुबहून्वदन्ति ३७
शतं सहस्राणि ततश्चरित्वा प्राप्नोति वर्णं हरितं तु पश्चात्
स चैव तस्मिन्निवसत्यनीशो युगक्षये तमसा संवृतात्मा ३८
स वै यदा सत्त्वगुणेन युक्तस्तमो व्यपोहन्घटते स्वबुद्ध्या
स लोहितं वर्णमुपैति नीलो मनुष्यलोके परिवर्तते च ३९
स तत्र संहारविसर्गमेव स्वकर्मजैर्बन्धनैः क्लिश्यमानः
ततः स हारिद्रमुपैति वर्णं संहारविक्षेपशते व्यतीते ४०
हारिद्रवर्णस्तु प्रजाविसर्गान्सहस्रशस्तिष्ठति संचरन्वै
अविप्रमुक्तो निरये च दैत्य ततः सहस्राणि दशापराणि ४१
गतीः सहस्राणि च पञ्च तस्य चत्वारि संवर्तकृतानि चैव
विमुक्तमेवं निरयाच्च विद्धि सर्वेषु चान्येषु च संभवेषु ४२
स देवलोके विहरत्यभीक्ष्णं ततश्च्युतो मानुषतामुपैति
संहारविक्षेपशतानि चाष्टौ मर्त्येषु तिष्ठन्नमृतत्वमेति ४३
सोऽस्मादथ भ्रश्यति कालयोगात्कृष्णे तले तिष्ठति सर्वकष्टे
यथा त्वयं सिध्यति जीवलोकस्तत्तेऽभिधास्याम्यसुरप्रवीर ४४
दैवानि स व्यूहशतानि सप्त रक्तो हरिद्रोऽथ तथैव शुक्लः
संश्रित्य संधावति शुक्लमेतमष्टापरानर्च्यतमान्स लोकान् ४५
अष्टौ च षष्टिं च शतानि यानि मनोविरुद्धानि महाद्युतीनाम्
शुक्लस्य वर्णस्य परा गतिर्या त्रीण्येव रुद्धानि महानुभाव ४६
संहारविक्षेपमनिष्टमेकं चत्वारि चान्यानि वसत्यनीशः
षष्ठस्य वर्णस्य परा गतिर्या सिद्धा विशिष्टस्य गतक्लमस्य ४७
सप्तोत्तरं तेषु वसत्यनीशः संहारविक्षेपशतं सशेषम्
तस्मादुपावृत्य मनुष्यलोके ततो महान्मानुषतामुपैति ४८
तस्मादुपावृत्य ततः क्रमेण सोऽग्रे स्म संतिष्ठति भूतसर्गम्
स सप्तकृत्वश्च परैति लोकान्संहारविक्षेपकृतप्रवासः ४९

सप्तैव संहारमुपप्लवानि संभाव्य संतिष्ठति सिद्धलोके
ततोऽव्ययं स्थानमनन्तमेति देवस्य विष्णोरथ ब्रह्मणश्च
शेषस्य चैवाथ नरस्य चैव देवस्य विष्णोः परमस्य चैव ५०
संहारकाले परिदग्धकाया ब्रह्माणमायान्ति सदा प्रजा हि
चेष्टात्मनो देवगणाश्च सर्वे ये ब्रह्मलोकादमराः स्म तेऽपि ५१
प्रजाविसर्गं तु सशेषकालं स्थानानि स्वान्येव सरन्ति जीवाः
निःशेषाणां तत्पदं यान्ति चान्ते सर्वापदा ये सदृशा मनुष्याः ५२
ये तु च्युताः सिद्धलोकात्क्रमेण तेषां गतिं यान्ति तथानुपूर्व्या
जीवाः परे तद्बलवेषरूपा विधिं स्वकं यान्ति विपर्ययेण ५३
स यावदेवास्ति सशेषभुक्ते प्रजाश्च देव्यौ च तथैव शुक्ले
तावत्तदा तेषु विशुद्धभावः संयम्य पञ्चेन्द्रियरूपमेतत् ५४
शुद्धां गतिं तां परमां परैति शुद्धेन नित्यं मनसा विचिन्वन्
ततोऽव्ययं स्थानमुपैति ब्रह्म दुष्प्रापमभ्येति स शाश्वतं वै
इत्येतदाख्यातमहीनसत्त्व नारायणस्येह बलं मया ते ५५
वृत्र उवाच
एवं गते मे न विषादोऽस्ति कश्चित्सम्यक्च पश्यामि वचस्तवैतत्
श्रुत्वा च ते वाचमदीनसत्त्व विकल्मषोऽस्म्यद्य तथा विपाप्मा ५६
प्रवृत्तमेतद्भगवन्महर्षे महाद्युतेश्चक्रमनन्तवीर्यम्
विष्णोरनन्तस्य सनातनं तत्स्थानं सर्गा यत्र सर्वे प्रवृत्ताः
स वै महात्मा पुरुषोत्तमो वै तस्मिञ्जगत्सर्वमिदं प्रतिष्ठितम् ५७
भीष्म उवाच
एवमुक्त्वा स कौन्तेय वृत्रः प्राणानवासृजत्
योजयित्वा तथात्मानं परं स्थानमवाप्तवान् ५८
युधिष्ठिर उवाच
अयं स भगवान्देवः पितामह जनार्दनः
सनत्कुमारो वृत्राय यत्तदाख्यातवान्पुरा ५९
भीष्म उवाच
मूलस्थायी स भगवान्स्वेनानन्तेन तेजसा
तत्स्थः सृजति तान्भावान्नानारूपान्महातपाः ६०
तुरीयार्धेन तस्येमं विद्धि केशवमच्युतम्

तुरीयार्धेन लोकांस्त्रीन्भावयत्येष बुद्धिमान् ६१
अर्वाक्स्थितस्तु यः स्थायी कल्पान्ते परिवर्तते
स शेते भगवानप्सु योऽसावतिबलः प्रभुः
तान्विधाता प्रसन्नात्मा लोकांश्चरति शाश्वतान् ६२
सर्वाण्यशून्यानि करोत्यनन्तः सनत्कुमारः संचरते च लोकान्
स चानिरुद्धः सृजते महात्मा तत्स्थं जगत्सर्वमिदं विचित्रम् ६३
युधिष्ठिर उवाच
वृत्रेण परमार्थज्ञ दृष्ट्वा मन्येऽत्मनो गतिः
शुभा तस्मात्स सुखितो न शोचति पितामह ६४
शुक्लः शुक्लाभिजातीयः साध्यो नावर्ततेऽनघ
तिर्यग्गतेश्च निर्मुक्तो निरयाच्च पितामह ६५
हारिद्रवर्णे रक्ते वा वर्तमानस्तु पार्थिव
तिर्यगेवानुपश्येत कर्मभिस्तामसैर्वृतः ६६
वयं तु भृशमापन्ना रक्ताः कष्टमुखेऽसुखे
कां गतिं प्रतिपत्स्यामो नीलां कृष्णाधमामथ ६७
भीष्म उवाच
शुद्धाभिजनसंपन्नाः पाण्डवाः संशितव्रताः
विहृत्य देवलोकेषु पुनर्मानुष्यमेष्यथ ६८
प्रजाविसर्गं च सुखेन काले प्रत्येत्य देवेषु सुखानि भुक्त्वा
सुखेन संयास्यथ सिद्धसंख्यां मा वो भयं भूद्विमलाः स्थ सर्वे ६९
इति श्रीमहाभारते शान्तिपर्वणि एकसप्तत्यधिकद्विशततमोऽध्यायः २७१

## द्विसप्तत्यधिकद्विशततमोऽध्यायः

युधिष्ठिर उवाच
अहो धर्मिष्ठता तात वृत्रस्यामिततेजसः
यस्य विज्ञानमतुलं विष्णोर्भक्तिश्च तादृशी १
दुर्विज्ञेयमिदं तात विष्णोरमिततेजसः
कथं वा राजशार्दूल पदं तज्ज्ञातवानसौ २
भवता कथितं ह्येतच्छ्रद्दधे चाहमच्युत
भूयस्तु मे समुत्पन्ना बुद्धिरव्यक्तदर्शनात् ३

कथं विनिहतो वृत्रः शक्रेण भरतर्षभ
धर्मिष्ठो विष्णुभक्तश्च तत्त्वज्ञश्च पदान्वये ४
एतन्मे संशयं ब्रूहि पृच्छतो भरतर्षभ
वृत्रस्तु राजशार्दूल यथा शक्रेण निर्जितः ५
यथा चैवाभवद्युद्धं तच्चाचक्ष्व पितामह
विस्तरेण महाबाहो परं कौतूहलं हि मे ६
भीष्म उवाच
रथेनेन्द्रः प्रयातो वै सार्धं देवगणैः पुरा
ददर्शाथाग्रतो वृत्रं विष्ठितं पर्वतोपमम् ७
योजनानां शतान्यूर्ध्वं पञ्चोच्छ्रितमरिंदम
शतानि विस्तरेणाथ त्रीण्येवाभ्यधिकानि तु ८
तत्प्रेक्ष्य तादृशं रूपं त्रैलोक्येनापि दुर्जयम्
वृत्रस्य देवाः संत्रस्ता न शान्तिमुपलेभिरे ९
शक्रस्य तु तदा राजन्नूरुस्तम्भो व्यजायत
भयाद्वृत्रस्य सहसा दृष्ट्वा तद्रूपमुत्तमम् १०
ततो नादः समभवद्वादित्राणां च निस्वनः
देवासुराणां सर्वेषां तस्मिन्युद्ध उपस्थिते ११
अथ वृत्रस्य कौरव्य दृष्ट्वा शक्रमुपस्थितम्
न संभ्रमो न भीः काचिदास्था वा समजायत १२
ततः समभवद्युद्धं त्रैलोक्यस्य भयंकरम्
शक्रस्य च सुरेन्द्रस्य वृत्रस्य च महात्मनः १३
असिभिः पट्टिशैः शूलैः शक्तितोमरमुद्गरैः
शिलाभिर्विविधाभिश्च कार्मुकैश्च महास्वनैः १४
अस्त्रैश्च विविधैर्दिव्यैः पावकोल्काभिरेव च
देवासुरैस्ततः सैन्यैः सर्वमासीत्समाकुलम् १५
पितामहपुरोगाश्च सर्वे देवगणास्तथा
ऋषयश्च महाभागास्तद्युद्धं द्रष्टुमागमन् १६
विमानाग्र्यैर्महाराज सिद्धाश्च भरतर्षभ
गन्धर्वाश्च विमानाग्र्यैरप्सरोभिः समागमन् १७
ततोऽन्तरिक्षमावृत्य वृत्रो धर्मभृतां वरः

अश्मवर्षेण देवेन्द्रं पर्वतात्समवाकिरत् १८
ततो देवगणाः क्रुद्धाः सर्वतः शस्त्रवृष्टिभिः
अश्मवर्षमपोहन्त वृत्रप्रेरितमाहवे १९
वृत्रश्च कुरुशार्दूल महामायो महाबलः
मोहयामास देवेन्द्रं मायायुद्धेन सर्वतः २०
तस्य वृत्रार्दितस्याथ मोह आसीच्छतक्रतोः
रथंतरेण तं तत्र वसिष्ठः समबोधयत् २१
वसिष्ठ उवाच
देवश्रेष्ठोऽसि देवेन्द्र सुरारिविनिबर्हण
त्रैलोक्यबलसंयुक्तः कस्माच्छक्र विषीदसि २२
एष ब्रह्मा च विष्णुश्च शिवश्चैव जगत्प्रभुः
सोमश्च भगवान्देवः सर्वे च परमर्षयः २३
मा कार्षीः कश्मलं शक्र कश्चिदेवेतरो यथा
आर्यां युद्धे मतिं कृत्वा जहि शत्रुं सुरेश्वर २४
एष लोकगुरुस्त्र्यक्षः सर्वलोकनमस्कृतः
निरीक्षते त्वां भगवांस्त्यज मोहं सुरेश्वर २५
एते ब्रह्मर्षयश्चैव बृहस्पतिपुरोगमाः
स्तवेन शक्र दिव्येन स्तुवन्ति त्वां जयाय वै २६
भीष्म उवाच
एवं संबोध्यमानस्य वसिष्ठेन महात्मना
अतीव वासवस्यासीद्बलमुत्तमतेजसः २७
ततो बुद्धिमुपागम्य भगवान्पाकशासनः
योगेन महता युक्तस्तां मायां व्यपकर्षत २८
ततोऽङ्गिरःसुतः श्रीमांस्ते चैव परमर्षयः
दृष्ट्वा वृत्रस्य विक्रान्तमुपगम्य महेश्वरम्
ऊचुर्वृत्रविनाशार्थं लोकानां हितकाम्यया २९
ततो भगवतस्तेजो ज्वरो भूत्वा जगत्पतेः
समाविशन्महारौद्रं वृत्रं दैत्यवरं तदा ३०
विष्णुश्च भगवान्देवः सर्वलोकाभिपूजितः
ऐन्द्रं समाविशद्वज्रं लोकसंरक्षणे रतः ३१

ततो बृहस्पतिर्धीमानुपागम्य शतक्रतुम्
वसिष्ठश्च महातेजाः सर्वे च परमर्षयः ३२
ते समासाद्य वरदं वासवं लोकपूजितम्
ऊचुरेकाग्रमनसो जहि वृत्रमिति प्रभो ३३
महेश्वर उवाच
एष वृत्रो महाञ्शक्र बलेन महता वृतः
विश्वात्मा सर्वगश्चैव बहुमायश्च विश्रुतः ३४
तदेनमसुरश्रेष्ठं त्रैलोक्येनापि दुर्जयम्
जहि त्वं योगमास्थाय मावमंस्थाः सुरेश्वर ३५
अनेन हि तपस्तप्तं बलार्थममराधिप
षष्टिं वर्षसहस्राणि ब्रह्मा चास्मै वरं ददौ ३६
महत्त्वं योगिनां चैव महामायत्वमेव च
महाबलत्वं च तथा तेजश्चाग्र्यं सुरेश्वर ३७
एतद्वै मामकं तेजः समाविशति वासव
वृत्रमेनं त्वमप्येवं जहि वज्रेण दानवम् ३८
शक्र उवाच
भगवंस्त्वत्प्रसादेन दितिजं सुदुरासदम्
वज्रेण निहनिष्यामि पश्यतस्ते सुरर्षभ ३९
भीष्म उवाच
आविश्यमाने दैत्ये तु ज्वरेणाथ महासुरे
देवतानामृषीणां च हर्षान्नादो महानभूत् ४०
ततो दुन्दुभयश्चैव शङ्खाश्च सुमहास्वनाः
मुरजा डिण्डिमाश्चैव प्रावाद्यन्त सहस्रशः ४१
असुराणां तु सर्वेषां स्मृतिलोपोऽभवन्महान्
प्रज्ञानाशश्च बलवान्क्षणेन समपद्यत ४२
तमाविष्टमथो ज्ञात्वा ऋषयो देवतास्तथा
स्तुवन्तः शक्रमीशानं तथा प्राचोदयन्नपि ४३
रथस्थस्य हि शक्रस्य युद्धकाले महात्मनः
ऋषिभिः स्तूयमानस्य रूपमासीत्सुदुर्दृशम् ४४
इति श्रीमहाभारते शान्तिपर्वणि द्विसप्तत्यधिकद्विशततमोऽध्यायः २७२

# त्रिसप्तत्यधिकद्विशततमोऽध्यायः

भीष्म उवाच
वृत्रस्य तु महाराज ज्वराविष्टस्य सर्वशः
अभवन्यानि लिङ्गानि शरीरे तानि मे शृणु १
ज्वलितास्योऽभवद्घोरो वैवर्ण्यं चागमत्परम्
गात्रकम्पश्च सुमहाञ्श्वासश्चाप्यभवन्महान्
रोमहर्षश्च तीव्रोऽभून्निःश्वासश्च महान्नृप २
शिवा चाशिवसंकाशा तस्य वक्त्रात्सुदारुणा
निष्पपात महाघोरा स्मृतिः सा तस्य भारत
उल्काश्च ज्वलितास्तस्य दीप्ताः पार्श्वे प्रपेदिरे ३
गृध्रकङ्कवडाश्चैव वाचोऽमुञ्चन्सुदारुणाः
वृत्रस्योपरि संहृष्टाश्चक्रवत्परिबभ्रमुः ४
ततस्तं रथमास्थाय देवाप्यायितमाहवे
वज्रोद्यतकरः शक्रस्तं दैत्यं प्रत्यवैक्षत ५
अमानुषमथो नादं स मुमोच महासुरः
व्यजृम्भत च राजेन्द्र तीव्रज्वरसमन्वितः
अथास्य जृम्भतः शक्रस्ततो वज्रमवासृजत् ६
स वज्रः सुमहातेजाः कालाग्निसदृशोपमः
क्षिप्रमेव महाकायं वृत्रं दैत्यमपातयत् ७
ततो नादः समभवत्पुनरेव समन्ततः
वृत्रं विनिहतं दृष्ट्वा देवानां भरतर्षभ ८
वृत्रं तु हत्वा भगवान्दानवारिर्महायशाः
वज्रेण विष्णुयुक्तेन दिवमेव समाविशत् ९
अथ वृत्रस्य कौरव्य शरीरादभिनिःसृता
ब्रह्महत्या महाघोरा रौद्रा लोकभयावहा १०
करालदशना भीमा विकृता कृष्णपिङ्गला
प्रकीर्णमूर्धजा चैव घोरनेत्रा च भारत ११
कपालमालिनी चैव कृशा च भरतर्षभ
रुधिरार्द्रा च धर्मज्ञ चीरवस्त्रनिवासिनी १२
साभिनिष्क्रम्य राजेन्द्र तादृग्रूपा भयावहा

वज्रिणं मृगयामास तदा भरतसत्तम १३
कस्यचित्त्वथ कालस्य वृत्रहा कुरुनन्दन
स्वर्गायाभिमुखः प्रायाल्लोकानां हितकाम्यया १४
बिसान्निःसरमाणं तु दृष्ट्वा शक्रं महौजसम्
कण्ठे जग्राह देवेन्द्रं सुलग्ना चाभवत्तदा १५
स हि तस्मिन्समुत्पन्ने ब्रह्महत्याकृते भये
नलिन्यां बिसमध्यस्थो बभूवाब्दगणान्बहून् १६
अनुसृत्य तु यत्नात्स तया वै ब्रह्महत्यया
तदा गृहीतः कौरव्य निश्चेष्टः समपद्यत १७
तस्या व्यपोहने शक्रः परं यत्नं चकार ह
न चाशकत्तां देवेन्द्रो ब्रह्महत्यां व्यपोहितुम् १८
गृहीत एव तु तया देवेन्द्रो भरतर्षभ
पितामहमुपागम्य शिरसा प्रत्यपूजयत् १९
ज्ञात्वा गृहीतं शक्रं तु द्विजप्रवरहत्यया
ब्रह्मा संचिन्तयामास तदा भरतसत्तम २०
तामुवाच महाबाहो ब्रह्महत्यां पितामहः
स्वरेण मधुरेणाथ सान्त्वयन्निव भारत २१
मुच्यतां त्रिदशेन्द्रोऽय मत्प्रियं कुरु भामिनि
ब्रूहि किं ते करोम्यद्य कामं कं त्वमिहेच्छसि २२
ब्रह्महत्योवाच
त्रिलोकपूजिते देवे प्रीते त्रैलोक्यकर्तरि
कृतमेवेह मन्येऽह निवासं तु विधत्स्व मे २३
त्वया कृतेयं मर्यादा लोकसंरक्षणार्थिना
स्थापना वै सुमहती त्वया देव प्रवर्तिता २४
प्रीते तु त्वयि धर्मज्ञ सर्वलोकेश्वरे प्रभो
शक्रादपगमिष्यामि निवासं तु विधत्स्व मे २५
भीष्म उवाच
तथेति तां प्राह तदा ब्रह्महत्यां पितामहः
उपायतः स शक्रस्य ब्रह्महत्यां व्यपोहत २६
ततः स्वयंभुवा ध्यातस्तत्र वह्निर्महात्मना

ब्रह्माणमुपसंगम्य ततो वचनमब्रवीत् २७
प्राप्तोऽस्मि भगवन्देव त्वत्सकाशमरिंदम
यत्कर्तव्यं मया देव तद्भवान्वक्तुमर्हति २८
ब्रह्मोवाच
बहुधा विभजिष्यामि ब्रह्महत्यामिमामहम्
शक्रस्याद्य विमोक्षार्थं चतुर्भागं प्रतीच्छ मे २९
अग्निरुवाच
मम मोक्षस्य कोऽन्तो वै ब्रह्मन्ध्यायस्व वै प्रभो
एतदिच्छामि विज्ञातुं तत्त्वतो लोकपूजित ३०
ब्रह्मोवाच
यस्त्वां ज्वलन्तमासाद्य स्वयं वै मानवः क्वचित्
बीजौषधिरसैर्वह्ने न यक्ष्यति तमोवृतः ३१
तमेषा यास्यति क्षिप्रं तत्रैव च निवत्स्यति
ब्रह्महत्या हव्यवाह व्येतु ते मानसो ज्वरः ३२
भीष्म उवाच
इत्युक्तः प्रतिजग्राह तद्वचो हव्यकव्यभुक्
पितामहस्य भगवांस्तथा च तदभूत्प्रभो ३३
ततो वृक्षौषधितृणं समाहूय पितामहः
इममर्थं महाराज वक्तुं समुपचक्रमे ३४
ततो वृक्षौषधितृणं तथैवोक्तं यथातथम्
व्यथितं वह्निवद्राजन्ब्रह्माणमिदमब्रवीत् ३५
अस्माकं ब्रह्महत्यातो कोऽन्तो लोकपितामह
स्वभावनिहतानस्मान्न पुनर्हन्तुमर्हसि ३६
वयमग्निं तथा शीतं वर्षं च पवनेरितम्
सहामः सततं देव तथा छेदनभेदनम् ३७
ब्रह्महत्यामिमामद्य भवतः शासनाद्वयम्
ग्रहीष्यामस्त्रिलोकेश मोक्षं चिन्तयतां भवान् ३८
ब्रह्मोवाच
पर्वकाले तु संप्राप्ते यो वै छेदनभेदनम्
करिष्यति नरो मोहात्तमेषानुगमिष्यति ३९

भीष्म उवाच
ततो वृक्षौषधितृणमेवमुक्तं महात्मना
ब्रह्माणमभिसंपूज्य जगामाशु यथागतम् ४०
आहूयाप्सरसो देवस्ततो लोकपितामहः
वाचा मधुरया प्राह सान्त्वयन्निव भारत ४१
इयमिन्द्रादनुप्राप्ता ब्रह्महत्या वराङ्गनाः
चतुर्थमस्या भागं हि मयोक्ताः संप्रतीच्छत ४२
अप्सरस ऊचुः
ग्रहणे कृतबुद्धीनां देवेश तव शासनात्
मोक्षं समयतोऽस्माकं चिन्तयस्व पितामह ४३
ब्रह्मोवाच
रजस्वलासु नारीषु यो वै मैथुनमाचरेत्
तमेषा यास्यति क्षिप्रं व्येतु वो मानसो ज्वरः ४४
भीष्म उवाच
तथेति हृष्टमनस उक्त्वाथाप्सरसां गणाः
स्वानि स्थानानि संप्राप्य रेमिरे भरतर्षभ ४५
ततस्त्रिलोककृद्देवः पुनरेव महातपाः
अपः संचिन्तयामास ध्यातास्ताश्चाप्यथागमन् ४६
तास्तुः सर्वाः समागम्य ब्रह्माणममितौजसम्
इदमूचुर्वचो राजन्प्रणिपत्य पितामहम् ४७
इमाः स्म देव संप्राप्तास्त्वत्सकाशमरिंदम
शासनात्तव देवेश समाज्ञापय नो विभो ४८
ब्रह्मोवाच
इयं वृत्रादनुप्राप्ता पुरुहूतं महाभया
ब्रह्महत्या चतुर्थांशमस्या यूयं प्रतीच्छत ४९
आप ऊचुः
एवं भवतु लोकेश यथा वदसि नः प्रभो
मोक्षं समयतोऽस्माकं संचिन्तयितुमर्हसि ५०
त्वं हि देवेश सर्वस्य जगतः परमो गुरुः
कोऽन्य प्रसादो हि भवेद्यः कृच्छ्रान्नः समुद्धरेत् ५१

ब्रह्मोवाच
अल्पा इति मतिं कृत्वा यो नरो बुद्धिमोहितः
श्लेष्ममूत्रपुरीषाणि युष्मासु प्रतिमोक्ष्यति ५२
तमेषा यास्यति क्षिप्रं तत्रैव च निवत्स्यति
तथा वो भविता मोक्ष इति सत्यं ब्रवीमि वः ५३
भीष्म उवाच
ततो विमुच्य देवेन्द्रं ब्रह्महत्या युधिष्ठिर
यथानिसृष्टं तं देशमगच्छद्देवशासनात् ५४
एवं शक्रेण संप्राप्ता ब्रह्महत्या जनाधिप
पितामहमनुज्ञाप्य सोऽश्वमेधमकल्पयत् ५५
श्रूयते हि महाराज संप्राप्ता वासवेन वै
ब्रह्महत्या ततः शुद्धिं हयमेधेन लब्धवान् ५६
समवाप्य श्रियं देवो हत्वारींश्च सहस्रशः
प्रहर्षमतुलं लेभे वासवः पृथिवीपते ५७
वृत्रस्य रुधिराच्चैव खुखुण्डाः पार्थ जज्ञिरे
द्विजातिभिरभक्ष्यास्ते दीक्षितैश्च तपोधनैः ५८
सर्वावस्थं त्वमप्येषां द्विजातीनां प्रियं कुरु
इमे हि भूतले देवाः प्रथिताः कुरुनन्दन ५९
एवं शक्रेण कौरव्य बुद्धिसौक्ष्म्यान्महासुरः
उपायपूर्वं निहतो वृत्रोऽथामिततेजसा ६०
एवं त्वमपि कौरव्य पृथिव्यामपराजितः
भविष्यसि यथा देवः शतक्रतुरमित्रहा ६१
ये तु शक्रकथां दिव्यामिमां पर्वसु पर्वसु
विप्रमध्ये पठिष्यन्ति न ते प्राप्स्यन्ति किल्बिषम् ६२
इत्येतद्वृत्रमाश्रित्य शक्रस्यात्यद्भुतं महत्
कथितं कर्म ते तात किं भूयः श्रोतुमिच्छसि ६३
इति श्रीमहाभारते शान्तिपर्वणि त्रिसप्तत्यधिकद्विशततमोऽध्यायः २७३

## चतुःसप्तत्यधिकद्विशततमोऽध्यायः

युधिष्ठिर उवाच

पितामह महाप्राज्ञ सर्वशास्त्रविशारद
अस्ति वृत्रवधादेव विवक्षा मम जायते १
ज्वरेण मोहितो वृत्रः कथितस्ते जनाधिप
निहतो वासवेनेह वज्रेणेति ममानघ २
कथमेष महाप्राज्ञ ज्वरः प्रादुरभूत्कुतः
ज्वरोत्पत्तिं निपुणतः श्रोतुमिच्छाम्यहं प्रभो ३
भीष्म उवाच
शृणु राजञ्ज्वरस्येह संभवं लोकविश्रुतम्
विस्तरं चास्य वक्ष्यामि यादृशं चैव भारत ४
पुरा मेरोर्महाराज शृङ्गं त्रैलोक्यविश्रुतम्
ज्योतिष्कं नाम सावित्रं सर्वरत्नविभूषितम्
अप्रमेयमनाधृष्यं सर्वलोकेषु भारत ५
तत्र देवो गिरितटे हेमधातुविभूषिते
पर्यङ्क इव विभ्राजन्नुपविष्टो बभूव ह ६
शैलराजसुता चास्य नित्यं पार्श्वे स्थिता बभौ
तथा देवा महात्मानो वसवश्च महौजसः ७
तथैव च महात्मानावश्विनौ भिषजां वरौ
तथा वैश्रवणो राजा गुह्यकैरभिसंवृतः ८
यक्षाणामधिपः श्रीमान्कैलासनिलयः प्रभुः
अङ्गिरःप्रमुखाश्चैव तथा देवर्षयोऽपरे ९
विश्वावसुश्च गन्धर्वस्तथा नारदपर्वतौ
अप्सरोगणसंघाश्च समाजग्मुरनेकशः १०
ववौ शिवः सुखो वायुर्नानागन्धवहः शुचिः
सर्वर्तुकुसुमोपेताः पुष्पवन्तो महाद्रुमाः ११
तथा विद्याधराश्चैव सिद्धाश्चैव तपोधनाः
महादेवं पशुपतिं पर्युपासन्त भारत १२
भूतानि च महाराज नानारूपधराण्यथ
राक्षसाश्च महारौद्राः पिशाचाश्च महाबलाः १३
बहुरूपधरा हृष्टा नानाप्रहरणोद्यताः
देवस्यानुचरास्तत्र तस्थिरे चानलोपमाः १४

नन्दी च भगवांस्तत्र देवस्यानुमते स्थितः
प्रगृह्य ज्वलितं शूलं दीप्यमानं स्वतेजसा १५
गङ्गा च सरितां श्रेष्ठा सर्वतीर्थजलोद्भवा
पर्युपासत तं देवं रूपिणी कुरुनन्दन १६
एवं स भगवांस्तत्र पूज्यमानः सुरर्षिभिः
देवैश्च सुमहाभागैर्महादेवो व्यतिष्ठत १७
कस्यचित्त्वथ कालस्य दक्षो नाम प्रजापतिः
पूर्वोक्तेन विधानेन यक्ष्यमाणोऽन्वपद्यत १८
ततस्तस्य मखं देवाः सर्वे शक्रपुरोगमाः
गमनाय समागम्य बुद्धिमापेदिरे तदा १९
ते विमानैर्महात्मानो ज्वलितैर्ज्वलनप्रभाः
देवस्यानुमतेऽगच्छन्गङ्गाद्वारमिति श्रुतिः २०
प्रस्थिता देवता दृष्ट्वा शैलराजसुता तदा
उवाच वचनं साध्वी देवं पशुपतिं पतिम् २१
भगवन्क्व नु यान्त्येते देवाः शक्रपुरोगमाः
ब्रूहि तत्त्वेन तत्त्वज्ञ संशयो मे महानयम् २२
महेश्वर उवाच
दक्षो नाम महाभागे प्रजानां पतिरुत्तमः
हयमेधेन यजते तत्र यान्ति दिवौकसः २३
उमा उवाच
यज्ञमेतं महाभाग किमर्थं नाभिगच्छसि
केन वा प्रतिषेधेन गमनं ते न विद्यते २४
महेश्वर उवाच
सुरैरेव महाभागे सर्वमेतदनुष्ठितम्
यज्ञेषु सर्वेषु मम न भाग उपकल्पितः २५
पूर्वोपायोपपन्नेन मार्गेण वरवर्णिनि
न मे सुराः प्रयच्छन्ति भागं यज्ञस्य धर्मतः २६
उमा उवाच
भगवन्सर्वभूतेषु प्रभावाभ्यधिको गुणैः
अजेयश्चाप्रधृष्यश्च तेजसा यशसा श्रिया २७

अनेन ते महाभाग प्रतिषेधेन भागतः
अतीव दुःखमुत्पन्नं वेपथुश्च ममानघ २८
भीष्म उवाच
एवमुक्त्वा तु सा देवी देवं पशुपतिं पतिम्
तुष्णींभूताभवद्राजन्दह्यमानेन चेतसा २९
अथ देव्या मतं ज्ञात्वा हृद्गतं यच्चिकीर्षितम्
स समाज्ञापयामास तिष्ठ त्वमिति नन्दिनम् ३०
ततो योगबलं कृत्वा सर्वयोगेश्वरेश्वरः
तं यज्ञं सुमहातेजा भीमैरनुचरैस्तदा
सहसा घातयामास देवदेवः पिनाकधृक् ३१
केचिन्नादानमुञ्चन्त केचिद्धासांश्च चक्रिरे
रुधिरेणापरे राजंस्तत्राग्निं समवाकिरन् ३२
केचिद्यूपान्समुत्पाट्य बभ्रमुर्विकृताननाः
आस्यैरन्ये चाग्रसन्त तथैव परिचारकान् ३३
ततः स यज्ञो नृपते वध्यमानः समन्ततः
आस्थाय मृगरूपं वै खमेवाभ्यपतत्तदा ३४
तं तु यज्ञं तथारूपं गच्छन्तमुपलभ्य सः
धनुरादाय बाणं च तदान्वसरत प्रभुः ३५
ततस्तस्य सुरेशस्य क्रोधादमिततेजसः
ललाटात्प्रसृतो घोरः स्वेदबिन्दुर्बभूव ह ३६
तस्मिन्पतितमात्रे तु स्वेदबिन्दौ तथा भुवि
प्रादुर्बभूव सुमहानग्निः कालानलोपमः ३७
तत्र चाजायत तदा पुरुषः पुरुषर्षभ
ह्रस्वोऽतिमात्ररक्ताक्षो हरिश्मश्रुर्विभीषणः ३८
ऊर्ध्वकेशोऽतिलोमाङ्गः श्येनोलूकस्तथैव च
करालः कृष्णवर्णश्च रक्तवासास्तथैव च ३९
तं यज्ञं स महासत्त्वोऽदहत्कक्षमिवानलः
देवाश्चाप्यद्रवन्सर्वे ततो भीता दिशो दश ४०
तेन तस्मिन्विचरता पुरुषेण विशां पते
पृथिवी व्यचलद्राजन्नतीव भरतर्षभ ४१

हाहाभूते प्रवृत्ते तु नादे लोकभयंकरे
पितामहो महादेवं दर्शयन्प्रत्यभाषत ४२
भवतोऽपि सुराः सर्वे भागं दास्यन्ति वै प्रभो
क्रियतां प्रतिसंहारः सर्वदेवेश्वर त्वया ४३
इमा हि देवताः सर्वा ऋषयश्च परंतप
तव क्रोधान्महादेव न शान्तिमुपलेभिरे ४४
यश्चैष पुरुषो जातः स्वेदात्ते विबुधोत्तम
ज्वरो नामैष धर्मज्ञ लोकेषु प्रचरिष्यति ४५
एकीभूतस्य न ह्यस्य धारणे तेजसः प्रभो
समर्था सकला पृथ्वी बहुधा सृज्यतामयम् ४६
इत्युक्तो ब्रह्मणा देवो भागे चापि प्रकल्पिते
भगवन्तं तथेत्याह ब्रह्माणममितौजसम् ४७
परां च प्रीतिमगमदुत्स्मयंश्च पिनाकधृक्
अवाप च तदा भागं यथोक्तं ब्रह्मणा भवः ४८
ज्वरं च सर्वधर्मज्ञो बहुधा व्यसृजत्तदा
शान्त्यर्थं सर्वभूतानां शृणु तच्चापि पुत्रक ४९
शीर्षाभितापो नागानां पर्वतानां शिलाजतुः
अपां तु नीलिकां विद्यान्निर्मोकं भुजगेषु च ५०
खोरकः सौरभेयाणामूषरं पृथिवीतले
पशूनामपि धर्मज्ञ दृष्टिप्रत्यवरोधनम् ५१
रन्ध्रागतमथाश्वानां शिखोद्भेदश्च बर्हिणाम्
नेत्ररोगः कोकिलानां ज्वरः प्रोक्तो महात्मना ५२
अब्जानां पित्तभेदश्च सर्वेषामिति नः श्रुतम्
शुकानामपि सर्वेषां हिक्किका प्रोच्यते ज्वरः ५३
शार्दूलेष्वथ धर्मज्ञ श्रमो ज्वर इहोच्यते
मानुषेषु तु धर्मज्ञ ज्वरो नामैष विश्रुतः
मरणे जन्मनि तथा मध्ये चाविशते नरम् ५४
एतन्माहेश्वरं तेजो ज्वरो नाम सुदारुणः
नमस्यश्चैव मान्यश्च सर्वप्राणिभिरीश्वरः ५५
अनेन हि समाविष्टो वृत्रो धर्मभृतां वरः

व्यजृम्भत ततः शक्रस्तस्मै वज्रमवासृजत् ५६
प्रविश्य वज्रो वृत्रं तु दारयामास भारत
दारितश्च स वज्रेण महायोगी महासुरः
जगाम परमं स्थानं विष्णोरमिततेजसः ५७
विष्णुभक्त्या हि तेनेदं जगद्व्याप्तमभूत्पुरा
तस्माच्च निहतो युद्धे विष्णोः स्थानमवाप्तवान् ५८
इत्येष वृत्रमाश्रित्य ज्वरस्य महतो मया
विस्तरः कथितः पुत्र किमन्यत्प्रब्रवीमि ते ५९
इमां ज्वरोत्पत्तिमदीनमानसः पठेत्सदा यः सुसमाहितो नरः
विमुक्तरोगः स सुखी मुदा युतो लभेत कामान्स यथामनीषितान् ६०
इति श्रीमहाभारते शान्तिपर्वणि चतुःसप्तत्यधिकद्विशततमोऽध्यायः २७४

## पञ्चसप्तत्यधिकद्विशततमोऽध्यायः

युधिष्ठिर उवाच
शोकाद्दुःखाच्च मृत्योश्च त्रस्यन्ति प्राणिनः सदा
उभयं मे यथा न स्यात्तन्मे ब्रूहि पितामह १
भीष्म उवाच
अत्रैवोदाहरन्तीममितिहासं पुरातनम्
नारदस्य च संवादं समङ्गस्य च भारत २
नारद उवाच
उरसेव प्रणमसे बाहुभ्यां तरसीव च
संप्रहृष्टमना नित्यं विशोक इव लक्ष्यसे ३
उद्वेगं नेह ते किंचित्सुसूक्ष्ममपि लक्षये
नित्यतृप्त इव स्वस्थो बालवच्च विचेष्टसे ४
समङ्ग उवाच
भूतं भव्यं भविष्यच्च सर्वं सत्त्वेषु मानद
तेषां तत्त्वानि जानामि ततो न विमना ह्यहम् ५
उपक्रमानहं वेद पुनरेव फलोदयान्
लोके फलानि चित्राणि ततो न विमना ह्यहम् ६
अगाधाश्चाप्रतिष्ठाश्च गतिमन्तश्च नारद

अन्धा जडाश्च जीवन्ति पश्यास्मानपि जीवतः ७
विहितेनैव जीवन्ति अरोगाङ्गा दिवौकसः
बलवन्तोऽबलाश्चैव तद्वदस्मान्सभाजय ८
सहस्रिणश्च जीवन्ति जीवन्ति शतिनस्तथा
शाकेन चान्ये जीवन्ति पश्यास्मानपि जीवतः ९
यदा न शोचेमहि किं नु न स्याद्धर्मेण वा नारद कर्मणा वा
कृतान्तवश्यानि यदा सुखानि दुःखानि वा यन्न विधर्षयन्ति १०
यस्मै प्रज्ञां कथयन्ते मनुष्याः प्रज्ञामूलो हीन्द्रियाणां प्रसादः
मुह्यन्ति शोचन्ति यदेन्द्रियाणि प्रज्ञालाभो नास्ति मूढेन्द्रियस्य ११
मूढस्य दर्पः स पुनर्मोह एव मूढस्य नायं न परोऽस्ति लोकः
न ह्येव दुःखानि सदा भवन्ति सुखस्य वा नित्यशो लाभ एव १२
भावात्मकं संपरिवर्तमानं न मादृशः संज्वरं जातु कुर्यात्
इष्टान्भोगान्नानुरुध्येत्सुखं वा न चिन्तयेद्दुःखमभ्यागतं वा १३
समाहितो न स्पृहयेत्परेषां नानागतं नाभिनन्देत लाभम्
न चापि हृष्येद्विपुलेऽथलाभे तथार्थनाशे च न वै विषीदेत् १४
न बान्धवा न च वित्तं न कौली न च श्रुतं न च मन्त्रा न वीर्यम्
दुःखात्त्रातुं सर्व एवोत्सहन्ते परत्र शीले न तु यान्ति शान्तिम् १५
नास्ति बुद्धिरयुक्तस्य नायोगाद्विद्यते सुखम्
धृतिश्च दुःखत्यागश्चाप्युभयं नः सुखोदयम् १६
प्रियं हि हर्षजननं हर्ष उत्सेकवर्धनः
उत्सेको नरकायैव तस्मात्तं संत्यजाम्यहम् १७
एताञ्शोकभयोत्सेकान्मोहनान्सुखदुःखयोः
पश्यामि साक्षिवल्लोके देहस्यास्य विचेष्टनात् १८
अर्थकामौ परित्यज्य विशोको विगतज्वरः
तृष्णामोहौ तु संत्यज्य चरामि पृथिवीमिमाम् १९
न मृत्युतो न चाधर्मान्न लोभान्न कुतश्चन
पीतामृतस्येवात्यन्तमिह चामुत्र वाभयम् २०
एतद्ब्रह्मन्विजानामि महत्कृत्वा तपोऽव्ययम्
तेन नारद संप्राप्तो न मां शोकः प्रबाधते २१
इति श्रीमहाभारते शान्तिपर्वणि पञ्चसप्तत्यधिकद्विशततमोऽध्यायः २७५

## षट्सप्तत्यधिकद्विशततमोऽध्यायः

युधिष्ठिर उवाच
अतत्त्वज्ञस्य शास्त्राणां सततं संशयात्मनः
अकृतव्यवसायस्य श्रेयो ब्रूहि पितामह १
भीष्म उवाच
गुरुपूजा च सततं वृद्धानां पर्युपासनम्
श्रवणं चैव विद्यानां कूटस्थं श्रेय उच्यते २
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
गालवस्य च संवादं देवर्षेर्नारदस्य च ३
वीतमोहक्लमं विप्रं ज्ञानतृप्तं जितेन्द्रियम्
श्रेयस्कामं जितात्मानं नारदं गालवोऽब्रवीत् ४
यैः कैश्चित्संमतो लोके गुणैस्तु पुरुषो नृषु
भवत्यनपगान्सर्वांस्तान्गुणाँल्लक्षयाम्यहम् ५
भवानेवंविधोऽस्माकं संशयं छेत्तुमर्हति
अमूढश्चिरमूढानां लोकतत्त्वमजानताम् ६
ज्ञाने ह्येवं प्रवृत्तिः स्यात्कार्याकार्ये विजानतः
यत्कार्यं न व्यवस्यामस्तद्भवान्वक्तुमर्हति ७
भगवन्नाश्रमाः सर्वे पृथगाचारदर्शिनः
इदं श्रेय इदं श्रेय इति नानाप्रधाविताः ८
तांस्तु विप्रस्थितान्दृष्ट्वा शास्त्रैः शास्त्राभिनन्दिनः
स्वशास्त्रैः परितुष्टांश्च श्रेयो नोपलभामहे ९
शास्त्रं यदि भवेदेकं व्यक्तं श्रेयो भवेत्तदा
शास्त्रैश्च बहुभिर्भूयः श्रेयो गुह्यं प्रवेशितम् १०
एतस्मात्कारणाच्छ्रेयः कलिलं प्रतिभाति माम्
ब्रवीतु भगवांस्तन्मे उपसन्नोऽस्म्यधीहि भोः ११
नारद उवाच
आश्रमास्तात चत्वारो यथासंकल्पिताः पृथक्
तान्सर्वाननुपश्य त्वं समाश्रित्यैव गालव १२
तेषां तेषां तथा हि त्वमाश्रमाणां ततस्ततः
नानारूपगुणोद्देशं पश्य विप्रस्थितं पृथक् १३

ऋजु पश्यंस्तथा सम्यगाश्रमाणां परां गतिम्
यत्तु निःश्रेयसं सम्यक्तच्चैवासंशयात्मकम् १४
अनुग्रहं च मित्राणाममित्राणां च निग्रहम्
संग्रहं च त्रिवर्गस्य श्रेय आहुर्मनीषिणः १५
निवृत्तिः कर्मणः पापात्सततं पुण्यशीलता
सद्भिश्च समुदाचारः श्रेय एतदसंशयम् १६
मार्दवं सर्वभूतेषु व्यवहारेषु चार्जवम्
वाक्चैव मधुरा प्रोक्ता श्रेय एतदसंशयम् १७
देवताभ्यः पितृभ्यश्च संविभागोऽतिथिष्वपि
असंत्यागश्च भृत्यानां श्रेय एतदसंशयम् १८
सत्यस्य वचनं श्रेयः सत्यज्ञानं तु दुष्करम्
यद्भूतहितमत्यन्तमेतत्सत्यं ब्रवीम्यहम् १९
अहंकारस्य च त्यागः प्रणयस्य च निग्रहः
संतोषश्चैकचर्या च कूटस्थं श्रेय उच्यते २०
धर्मेण वेदाध्ययनं वेदाङ्गानां तथैव च
विद्यार्थानां च जिज्ञासा श्रेय एतदसंशयम् २१
शब्दरूपरसस्पर्शान्सह गन्धेन केवलान्
नात्यर्थमुपसेवेत श्रेयसोऽर्थी परंतप २२
नक्तंचर्यां दिवास्वप्नमालस्यं पैशुनं मदम्
अतियोगमयोगं च श्रेयसोऽर्थी परित्यजेत् २३
कर्मोत्कर्षं न मार्गेत परेषां परिनिन्दया
स्वगुणैरेव मार्गेत विप्रकर्षं पृथग्जनात् २४
निर्गुणास्त्वेव भूयिष्ठमात्मसंभाविनो नराः
दोषैरन्यान्गुणवतः क्षिपन्त्यात्मगुणक्षयात् २५
अनूच्यमानाश्च पुनस्ते मन्यन्ते महाजनात्
गुणवत्तरमात्मानं स्वेन मानेन दर्पिताः २६
अब्रुवन्कस्यचिन्निन्दामात्मपूजामवर्णयन्
विपश्चिद्गुणसंपन्नः प्राप्नोत्येव महद्यशः २७
अब्रुवन्वाति सुरभिर्गन्धः सुमनसां शुचिः
तथैवाव्याहरन्भाति विमलो भानुरम्बरे २८

एवमादीनि चान्यानि परित्यक्तानि मेधया
ज्वलन्ति यशसा लोके यानि न व्याहरन्ति च २९
न लोके दीप्यते मूर्खः केवलात्मप्रशंसया
अपि चापिहितः श्वभ्रे कृतविद्यः प्रकाशते ३०
असन्नुच्चैरपि प्रोक्तः शब्दः समुपशाम्यति
दीप्यते त्वेव लोकेषु शनैरपि सुभाषितम् ३१
मूढानामवलिप्तानामसारं भाषितं बहु
दर्शयत्यन्तरात्मानं दिवा रूपमिवांशुमान् ३२
एतस्मात्कारणात्प्रज्ञां मृगयन्ते पृथग्विधाम्
प्रज्ञालाभो हि भूतानामुत्तमः प्रतिभाति माम् ३३
नापृष्टः कस्यचिद्ब्रूयान्न चान्यायेन पृच्छतः
ज्ञानवानपि मेधावी जडवल्लोकमाचरेत् ३४
ततो वासं परीक्षेत धर्मनित्येषु साधुषु
मनुष्येषु वदान्येषु स्वधर्मनिरतेषु च ३५
चतुर्णां यत्र वर्णानां धर्मव्यतिकरो भवेत्
न तत्र वासं कुर्वीत श्रेयोर्थी वै कथंचन ३६
निरारम्भोऽप्ययमिह यथालब्धोपजीवनः
पुण्यं पुण्येषु विमलं पापं पापेषु चाप्नुयात् ३७
अपामग्नेस्तथेन्दोश्च स्पर्शं वेदयते यथा
तथा पश्यामहे स्पर्शमुभयोः पापपुण्ययोः ३८
अपश्यन्तोऽन्नविषयं भुञ्जते विघसाशिनः
भुञ्जानं चान्नविषयान्विषयं विद्धि कर्मणाम् ३९
यत्रागमयमानानामसत्कारेण पृच्छताम्
प्रब्रूयाद्ब्राह्मणो धर्मं त्यजेत्तं देशमात्मवान् ४०
शिष्योपाध्यायिका वृत्तिर्यत्र स्यात्सुसमाहिता
यथावच्छास्त्रसंपन्ना कस्तं देशं परित्यजेत् ४१
आकाशस्था ध्रुवं यत्र दोषं ब्रूयुर्विपश्चिताम्
आत्मपूजाभिकामा वै को वसेत्तत्र पण्डितः ४२
यत्र संलोडिता लुब्धैः प्रायशो धर्मसेतवः
प्रदीप्तमिव शैलान्तं कस्तं देशं न संत्यजेत् ४३

यत्र धर्ममनाशङ्काश्चरेयुर्वीतमत्सराः
चरेत्तत्र वसेच्चैव पुरायशीलेषु साधुषु ४४
धर्ममर्थनिमित्तं तु चरेयुर्यत्र मानवाः
नताननुवसेज्जातु ते हि पापकृतो जनाः ४५
कर्मणा यत्र पापेन वर्तन्ते जीवितेप्सवः
व्यवधावेत्ततस्तूर्णं ससर्पाच्छरणादिव ४६
येन खट्वां समारूढः कर्मणानुशयी भवेत्
आदितस्तन्न कर्तव्यमिच्छता भवमात्मनः ४७
यत्र राजा च राज्ञश्च पुरुषाः प्रत्यनन्तराः
कुटुम्बिनामग्रभुजस्त्यजेत्तद्राष्ट्रमात्मवान् ४८
श्रोत्रियास्त्वग्रभोक्तारो धर्मनित्याः सनातनाः
याजनाध्यापने युक्ता यत्र तद्राष्ट्रमावसेत् ४९
स्वाहास्वधावषट्कारा यत्र सम्यगनुष्ठिताः
अजस्रं चैव वर्तन्ते वसेत्तत्राविचारयन् ५०
अशुचीन्यत्र पश्येत ब्राह्मणान्वृत्तिकर्शितान्
त्यजेत्तद्राष्ट्रमासन्नमुपसृष्टमिवामिषम् ५१
प्रीयमाणा नरा यत्र प्रयच्छेयुरयाचिताः
स्वस्थचित्तो वसेत्तत्र कृतकृत्य इवात्मवान् ५२
दराडो यत्राविनीतेषु सत्कारश्च कृतात्मसु
चरेत्तत्र वसेच्चैव पुरायशीलेषु साधुषु ५३
उपसृष्टेष्वदान्तेषु दुराचारेष्वसाधुषु
अविनीतेषु लुब्धेषु सुमहद्दराडधारणम् ५४
यत्र राजा धर्मनित्यो राज्यं वै पर्युपासिता
अपास्य कामान्कामेशो वसेत्तत्राविचारयन् ५५
तथाशीला हि राजानः सर्वान्विषयवासिनः
श्रेयसा योजयन्त्याशु श्रेयसि प्रत्युपस्थिते ५६
पृच्छतस्ते मया तात श्रेय एतदुदाहृतम्
न हि शक्यं प्रधानेन श्रेयः संख्यातुमात्मनः ५७
एवं प्रवर्तमानस्य वृत्तिं प्रणिहितात्मनः
तपसैवेह बहुलं श्रेयो व्यक्तं भविष्यति ५८

इति श्रीमहाभारते शान्तिपर्वणि षट्सप्तत्यधिकद्विशततमोऽध्यायः २७६

## सप्तसप्तत्यधिकद्विशततमोऽध्यायः

युधिष्ठिर उवाच
कथं नु मुक्तः पृथिवीं चरेदस्मद्विधो नृपः
नित्यं कैश्च गुणैर्युक्तः सङ्गपाशाद्विमुच्यते १
भीष्म उवाच
अत्र ते वर्तयिष्यामि इतिहासं पुरातनम्
अरिष्टनेमिना प्रोक्तं सगरायानुपृच्छते २
सगर उवाच
किं श्रेयः परमं ब्रह्मन्कृत्वेह सुखमश्नुते
कथं न शोचेन्न क्षुभ्येदेतदिच्छामि वेदितुम् ३
भीष्म उवाच
एवमुक्तस्तदा तार्क्ष्यः सर्वशास्त्रविशारदः
विबुध्य संपदं चाग्र्यां सद्वाक्यमिदमब्रवीत् ४
सुखं मोक्षसुखं लोके न च लोकोऽवगच्छति
प्रसक्तः पुत्रपशुषु धनधान्यसमाकुलः ५
सक्तबुद्धिरशान्तात्मा न स शक्यश्चिकित्सितुम्
स्नेहपाशसितो मूढो न स मोक्षाय कल्पते ६
स्नेहजानिह ते पाशान्वक्ष्यामि शृणु तान्मम
सकर्णकेन शिरसा शक्याश्छेत्तुं विजानता ७
संभाव्य पुत्रान्कालेन यौवनस्थान्निवेश्य च
समर्थाञ्जीवने ज्ञात्वा मुक्तश्चर यथासुखम् ८
भार्यां पुत्रवतीं वृद्धां लालितां पुत्रवत्सलाम्
ज्ञात्वा प्रजहि काले त्वं परार्थमनुदृश्य च ९
सापत्यो निरपत्यो वा मुक्तश्चर यथासुखम्
इन्द्रियैरिन्द्रियार्थांस्त्वमनुभूय यथाविधि १०
कृतकौतूहलस्तेषु मुक्तश्चर यथासुखम्
उपपत्त्योपलब्धेषु लाभेषु च समो भव ११
एष तावत्समासेन तव संकीर्तितो मया

मोक्षार्थो विस्तरेणापि भूयो वक्ष्यामि तच्छृणु १२
मुक्ता वीतभया लोके चरन्ति सुखिनो नराः
सक्तभावा विनश्यन्ति नरास्तत्र न संशयः १३
आहारसंचयाश्चैव तथा कीटपिपीलिकाः
असक्ताः सुखिनो लोके सक्ताश्चैव विनाशिनः १४
स्वजने न च ते चिन्ता कर्तव्या मोक्षबुद्धिना
इमे मया विनाभूता भविष्यन्ति कथं त्विति १५
स्वयमुत्पद्यते जन्तुः स्वयमेव विवर्धते
सुखदुःखे तथा मृत्युं स्वयमेवाधिगच्छति १६
भोजनाच्छादने चैव मात्रा पित्रा च संग्रहम्
स्वकृतेनाधिगच्छन्ति लोके नास्त्यकृतं पुरा १७
धात्रा विहितभक्ष्याणि सर्वभूतानि मेदिनीम्
लोके विपरिधावन्ति रक्षितानि स्वकर्मभिः १८
स्वयं मृत्पिण्डभूतस्य परतन्त्रस्य सर्वदा
को हेतुः स्वजनं पोष्टुं रक्षितुं वादृढात्मनः १९
स्वजनं हि यदा मृत्युर्हन्त्येव तव पश्यतः
कृतेऽपि यत्ने महति तत्र बोद्धव्यमात्मना २०
जीवन्तमपि चैवेनं भरणे रक्षणे तथा
असमाप्ते परित्यज्य पश्चादपि मरिष्यसि २१
यदा मृतश्च स्वजनं न ज्ञास्यसि कथंचन
सुखितं दुःखितं वापि ननु बोद्धव्यमात्मना २२
मृते वा त्वयि जीवे वा यदि भोक्ष्यति वै जनः
स्वकृतं ननु बुद्ध्वैवं कर्तव्यं हितमात्मनः २३
एवं विजानल्लोँकेऽस्मिन्कः कस्येत्यभिनिश्चितः
मोक्षे निवेशय मनो भूयश्चाप्युपधारय २४
क्षुत्पिपासादयो भावा जिता यस्येह देहिनः
क्रोधो लोभस्तथा मोहः सत्त्ववान्मुक्त एव सः २५
द्यूते पाने तथा स्त्रीषु मृगयायां च यो नरः
न प्रमाद्यति संमोहात्सततं मुक्त एव सः २६
दिवसे दिवसे नाम रात्रौ रात्रौ सदा सदा

भोक्तव्यमिति यः खिन्नो दोषबुद्धिः स उच्यते २७
आत्मभावं तथा स्त्रीषु मुक्तमेव पुनः पुनः
यः पश्यति सदा युक्तो यथावन्मुक्त एव सः २८
संभवं च विनाशं च भूतानां चेष्टितं तथा
यस्तत्त्वतो विजानाति लोकेऽस्मिन्मुक्त एव सः २९
प्रस्थं वाहसहस्रेषु यात्रार्थं चैव कोटिषु
प्रासादे मञ्चकस्थानं यः पश्यति स मुच्यते ३०
मृत्युनाभ्याहतं लोकं व्याधिभिश्चोपपीडितम्
अवृत्तिकर्शितं चैव यः पश्यति स मुच्यते ३१
यः पश्यति सुखी तुष्टो न पश्यंश्च विहन्यते
यश्चाप्यल्पेन संतुष्टो लोकेऽस्मिन्मुक्त एव सः ३२
अग्नीषोमाविदं सर्वमिति यश्चानुपश्यति
न च संस्पृश्यते भावैरद्भुतैर्मुक्त एव सः ३३
पर्यङ्कशय्या भूमिश्च समाने यस्य देहिनः
शालयश्च कदन्नं च यस्य स्यान्मुक्त एव सः ३४
क्षौमं च कुशचीरं च कौशेयं वल्कलानि च
आविकं चर्म च समं यस्य स्यान्मुक्त एव सः ३५
पञ्चभूतसमुद्भूतं लोकं यश्चानुपश्यति
तथा च वर्तते दृष्ट्वा लोकेऽस्मिन्मुक्त एव सः ३६
सुखदुःखे समे यस्य लाभालाभौ जयाजयौ
इच्छाद्वेषौ भयोद्वेगौ सर्वथा मुक्त एव सः ३७
रक्तमूत्रपुरीषाणां दोषाणां संचयं तथा
शरीरं दोषबहुलं दृष्ट्वा चेदं विमुच्यते ३८
वलीपलितसंयोगं कार्श्यं वैवर्ण्यमेव च
कुब्जभावं च जरया यः पश्यति स मुच्यते ३९
पुंस्त्वोपघातं कालेन दर्शनोपरमं तथा
बाधिर्यं प्राणमन्दत्वं यः पश्यति स मुच्यते ४०
गतानृषींस्तथा देवानसुरांश्च तथा गतान्
लोकादस्मात्परं लोकं यः पश्यति स मुच्यते ४१
प्रभावैरन्वितास्तैस्तैः पार्थिवेन्द्राः सहस्रशः

ये गताः पृथिवीं त्यक्त्वा इति ज्ञात्वा विमुच्यते ४२
अर्थांश्च दुर्लभाँल्लोके क्लेशांश्च सुलभांस्तथा
दुःखं चैव कुटुम्बार्थे यः पश्यति स मुच्यते ४३
अपत्यानां च वैगुण्यं जनं विगुणमेव च
पश्यन्भूयिष्ठशो लोके को मोक्षं नाभिपूजयेत् ४४
शास्त्राल्लोकाच्च यो बुद्धः सर्वं पश्यति मानवः
असारमिव मानुष्यं सर्वथा मुक्त एव सः ४५
एतच्छ्रुत्वा मम वचो भवांश्चरतु मुक्तवत्
गार्हस्थ्ये यदि ते मोक्षे कृता बुद्धिरविक्लवा ४६
तत्तस्य वचनं श्रुत्वा सम्यक्स पृथिवीपतिः
मोक्षजैश्च गुणैर्युक्तः पालयामास च प्रजाः ४७
इति श्रीमहाभारते शान्तिपर्वणि सप्तसप्तत्यधिकद्विशततमोऽध्यायः २७७

## अष्टसप्तत्यधिकद्विशततमोऽध्यायः

युधिष्ठिर उवाच
तिष्ठते मे सदा तात कौतूहलमिदं हृदि
तदहं श्रोतुमिच्छामि त्वत्तः कुरुपितामह १
कथं देवर्षिरुशना सदा काव्यो महामतिः
असुराणां प्रियकरः सुराणामप्रिये रतः २
वर्धयामास तेजश्च किमर्थममितौजसाम्
नित्यं वैरनिबद्धाश्च दानवाः सुरसत्तमैः ३
कथं चाप्युशना प्राप शुक्रत्वममरद्युतिः
ऋद्धिं च स कथं प्राप्तः सर्वमेतद्ब्रवीहि मे ४
न याति च स तेजस्वी मध्येन नभसः कथम्
एतदिच्छामि विज्ञातुं निखिलेन पितामह ५
भीष्म उवाच
शृणु राजन्नवहितः सर्वमेतद्यथातथम्
यथामति यथा चैतच्छ्रुतपूर्वं मयानघ ६
एष भार्गवदायादो मुनिः सत्यो दृढव्रतः
असुराणां प्रियकरो निमित्ते करुणात्मके ७

इन्द्रोऽथ धनदो राजा यक्षरक्षोधिपः स च
प्रभविष्णुश्च कोशस्य जगतश्च तथा प्रभुः ८
तस्यात्मानमथाविश्य योगसिद्धो महामुनिः
रुद्ध्वा धनपतिं देवं योगेन हृतवान्वसु ९
हृते धने ततः शर्म न लेभे धनदस्तथा
आपन्नमन्युः संविग्नः सोऽभ्यगात्सुरसत्तमम् १०
निवेदयामास तदा शिवायामिततेजसे
देवश्रेष्ठाय रुद्राय सौम्याय बहुरूपिणे ११
कुबेर उवाच
योगात्मकेनोशनसा रुद्ध्वा मम हृतं वसु
योगेनात्मगतिं कृत्वा निःसृतश्च महातपाः १२
भीष्म उवाच
एतच्छ्रुत्वा ततः क्रुद्धो महायोगी महेश्वरः
संरक्तनयनो राजञ्शूलमादाय तस्थिवान् १३
क्वासौ क्वासाविति प्राह गृहीत्वा परमायुधम्
उशना दूरतस्तस्य बभौ ज्ञात्वा चिकीर्षितम् १४
स महायोगिनो बुद्ध्वा तं रोषं वै महात्मनः
गतिमागमनं वेत्ति स्थानं वेत्ति ततः प्रभुः १५
संचिन्त्योग्रेण तपसा महात्मानं महेश्वरम्
उशना योगसिद्धात्मा शूलाग्रे प्रत्यदृश्यत १६
विज्ञातरूपः स तदा तपःसिद्धेन धन्विना
ज्ञात्वा शूलं च देवेशः पाणिना समनामयत् १७
आनतेनाथ शूलेन पाणिनामिततेजसा
पिनाकमिति चोवाच शूलमुग्रायुधः प्रभुः १८
पाणिमध्यगतं दृष्ट्वा भार्गवं तमुमापतिः
आस्यं विवृत्य ककुदी पाणिं संप्राक्षिपच्छनैः १९
स तु प्रविष्ट उशना कोष्ठं माहेश्वरं प्रभुः
व्यचरच्चापि तत्रासौ महात्मा भृगुनन्दनः २०
युधिष्ठिर उवाच
किमर्थं व्यचरद्राजन्नुशना तस्य धीमतः

जठरे देवदेवस्य किं चाकार्षीन्महाद्युतिः २१
भीष्म उवाच
पुरा सोऽन्तर्जलगतः स्थाणुभूतो महाव्रतः
वर्षाणामभवद्राजन्प्रयुतान्यर्बुदानि च २२
उदतिष्ठत्तपस्तप्त्वा दुश्चरं च महाह्रदात्
ततो देवातिदेवस्तं ब्रह्मा समुपसर्पत २३
तपोवृद्धिमपृच्छच्च कुशलं चैनमव्ययम्
तपः सुचीर्णमिति च प्रोवाच वृषभध्वजः २४
तत्संयोगेन वृद्धिं चाप्यपश्यत्स तु शंकरः
महामतिरचिन्त्यात्मा सत्यधर्मरतः सदा २५
स तेनाढ्यो महायोगी तपसा च धनेन च
व्यराजत महाराज त्रिषु लोकेषु वीर्यवान् २६
ततः पिनाकी योगात्मा ध्यानयोगं समाविशत्
उशना तु समुद्विग्नो निलिल्ये जठरे ततः २७
तुष्टाव च महायोगी देवं तत्रस्थ एव च
निःसारं काङ्क्षमाणस्तु तेजसा प्रत्यहन्यत २८
उशना तु तदोवाच जठरस्थो महामुनिः
प्रसादं मे कुरुष्वेति पुनः पुनररिंदम २९
तमुवाच महादेवो गच्छ शिश्नेन मोक्षणम्
इति स्रोतांसि सर्वाणि रुद्ध्वा त्रिदशपुंगवः ३०
अपश्यमानः स द्वारं सर्वतःपिहितो मुनिः
पर्यक्रामद्दह्यमान इतश्चेतश्च तेजसा ३१
स विनिष्क्रम्य शिश्नेन शुक्रत्वमभिपेदिवान्
कार्येण तेन नभसो नागच्छत च मध्यतः ३२
निष्क्रान्तमथ तं दृष्ट्वा ज्वलन्तमिव तेजसा
भवो रोषसमाविष्टः शूलोद्यतकरः स्थितः ३३
न्यवारयत तं देवी क्रुद्धं पशुपतिं पतिम्
पुत्रत्वमगमद्देव्या वारिते शंकरे च सः ३४
देव्युवाच
हिंसनीयस्त्वया नैष मम पुत्रत्वमागतः

न हि देवोदरात्कश्चिन्निःसृतो नाशमर्छति ३५
भीष्म उवाच
ततः प्रीतोऽभवद्देव्याः प्रहसंश्चेदमब्रवीत्
गच्छत्वेष यथाकाममिति राजन्पुनः पुनः ३६
ततः प्रणम्य वरदं देवं देवीमुमां तथा
उशना प्राप तद्धीमान्गतिमिष्टां महामुनिः ३७
एतत्ते कथितं तात भार्गवस्य महात्मनः
चरितं भरतश्रेष्ठ यन्मां त्वं परिपृच्छसि ३८
इति श्रीमहाभारते शान्तिपर्वणि अष्टसप्तत्यधिकद्विशततमोऽध्यायः २७८

## एकोनाशीत्यधिकद्विशततमोऽध्यायः

युधिष्ठिर उवाच
अतः परं महाबाहो यच्छ्रेयस्तद्वदस्व मे
न तृप्याम्यमृतस्येव वचसस्ते पितामह १
किं कर्म पुरुषः कृत्वा शुभं पुरुषसत्तम
श्रेयः परमवाप्नोति प्रेत्य चेह च तद्वद २
भीष्म उवाच
अत्र ते वर्तयिष्यामि यथा पूर्वं महायशाः
पराशरं महात्मानं पप्रच्छ जनको नृपः ३
किं श्रेयः सर्वभूतानामस्मिँल्लोके परत्र च
यद्भवेत्प्रतिपत्तव्यं तद्भवान्प्रब्रवीतु मे ४
ततः स तपसा युक्तः सर्वधर्मविधानवित्
नृपायानुग्रहमना मुनिर्वाक्यमथाब्रवीत् ५
धर्म एव कृतः श्रेयानिहलोके परत्र च
तस्माद्धि परमं नास्ति यथा प्राहुर्मनीषिणः ६
प्रतिपद्य नरो धर्मं स्वर्गलोके महीयते
धर्मात्मकः कर्मविधिर्देहिनां नृपसत्तम
तस्मिन्नाश्रमिणः सन्तः स्वकर्माणीह कुर्वते ७
चतुर्विधा हि लोकस्य यात्रा तात विधीयते
मर्त्या यत्रावतिष्ठन्ते सा च कामात्प्रवर्तते ८

सुकृतासुकृतं कर्म निषेव्य विविधैः क्रमैः
दशार्धप्रविभक्तानां भूतानां बहुधा गतिः ९
सौवर्णं राजतं वापि यथा भाण्डं निषिच्यते
तथा निषिच्यते जन्तुः पूर्वकर्मवशानुगः १०
नाबीजाज्जायते किंचिन्नाकृत्वा सुखमेधते
सुकृती विन्दति प्राप्य देहं देहक्षयं नरः ११
दैवं तात न पश्यामि नास्ति दैवस्य साधनम्
स्वभावतो हि संसिद्धा देवगन्धर्वदानवाः १२
प्रेत्य जातिकृतं कर्म न स्मरन्ति सदा जनाः
ते वै तस्य फलप्राप्तौ कर्म चापि चतुर्विधम् १३
लोकयात्राश्रयश्चैव शब्दो वेदाश्रयः कृतः
शान्त्यर्थं मनसस्तात नैतद्वृद्धानुशासनम् १४
चक्षुषा मनसा वाचा कर्मणा च चतुर्विधम्
कुरुते यादृशं कर्म तादृशं प्रतिपद्यते १५
निरन्तरं च मिश्रं च फलते कर्म पार्थिव
कल्याणं यदि वा पापं न तु नाशोऽस्य विद्यते १६
कदाचित्सुकृतं तात कूटस्थमिव तिष्ठति
मज्जमानस्य संसारे यावद्दुःखाद्विमुच्यते १७
ततो दुःखक्षयं कृत्वा सुकृतं कर्म सेवते
सुकृतक्षयाद्दुष्कृतं च तद्विद्धि मनुजाधिप १८
दमः क्षमा धृतिस्तेजः संतोषः सत्यवादिता
ह्रीरहिंसाव्यसनिता दाक्ष्यं चेति सुखावहाः १९
दुष्कृते सुकृते वापि न जन्तुरयतो भवेत्
नित्यं मनःसमाधाने प्रयतेत विचक्षणः २०
नायं परस्य सुकृतं दुष्कृतं वापि सेवते
करोति यादृशं कर्म तादृशं प्रतिपद्यते २१
सुखदुःखे समाधाय पुमानन्येन गच्छति
अन्येनैव जनः सर्वः संगतो यश्च पार्थिव २२
परेषां यदसूयेत न तत्कुर्यात्स्वयं नरः
यो ह्यसूयुस्तथायुक्तः सोऽवहासं नियच्छति २३

भीरू राजन्यो ब्राह्मणः सर्वभक्षो वैश्योऽनीहावान्हीनवर्णोऽलसश्च
विद्वांश्चाशीलो वृत्तहीनः कुलीनः सत्याद्भ्रष्टो ब्राह्मणः स्त्री च दुष्टा २४
रागी मुक्तः पचमानोऽत्महेतोर्मूर्खो वक्ता नृपहीनं च राष्ट्रम्
एते सर्वे शोच्यतां यान्ति राजन्यश्चायुक्तः स्नेहहीनः प्रजासु २५
इति श्रीमहाभारते शान्तिपर्वणि एकोनाशीत्यधिकद्विशततमोऽध्यायः २७९

## अशीत्यधिकद्विशततमोऽध्यायः

पराशर उवाच
मनोरथरथं प्राप्य इन्द्रियार्थहयं नरः
रश्मिभिर्ज्ञानसंभूतैर्यो गच्छति स बुद्धिमान् १
सेवाश्रितेन मनसा वृत्तिहीनस्य शस्यते
द्विजातिहस्तान्निर्वृत्ता न तु तुल्यात्परस्परम् २
आयुर्नसुलभं लब्ध्वा नावकर्षेद्विशां पते
उत्कर्षार्थं प्रयतते नरः पुण्येन कर्मणा ३
वर्णेभ्योऽपि परिभ्रष्टः स वै संमानमर्हति
न तु यः सत्क्रियां प्राप्य राजसं कर्म सेवते ४
वर्णोत्कर्षमवाप्नोति नरः पुण्येन कर्मणा
दुर्लभं तमलब्ध्वा हि हन्यात्पापेन कर्मणा ५
अज्ञानाद्धि कृतं पापं तपसैवाभिनिर्णुदेत्
पापं हि कर्म फलति पापमेव स्वयं कृतम्
तस्मात्पापं न सेवेत कर्म दुःखफलोदयम् ६
पापानुबन्धं यत्कर्म यद्यपि स्यान्महाफलम्
न तत्सेवेत मेधावी शुचिः कुसलिलं यथा ७
किंकष्टमनुपश्यामि फलं पापस्य कर्मणः
प्रत्यापन्नस्य हि सतो नात्मा तावद्विरोचते ८
प्रत्यापत्तिश्च यस्येह बालिशस्य न जायते
तस्यापि सुमहांस्तापः प्रस्थितस्योपजायते ९
विरक्तं शोध्यते वस्त्रं न तु कृष्णोपसंहितम्
प्रयत्नेन मनुष्येन्द्र पापमेवं निबोध मे १०
स्वयं कृत्वा तु यः पापं शुभमेवानुतिष्ठति

प्रायश्चित्तं नरः कर्तुमुभयं सोऽश्नुते पृथक् ११
अज्ञानात्तु कृतां हिंसामहिंसा व्यपकर्षति
ब्राह्मणाः शास्त्रनिर्देशादित्याहुर्ब्रह्मवादिनः १२
तथा कामकृतं चास्य विहिंसैवापकर्षति
इत्याहुर्धर्मशास्त्रज्ञा ब्राह्मणा वेदपारगाः १३
अहं तु तावत्पश्यामि कर्म यद्वर्तते कृतम्
गुणयुक्तं प्रकाशं च पापेनानुपसंहितम् १४
यथा सूक्ष्माणि कर्माणि फलन्तीह यथातथम्
बुद्धियुक्तानि तानीह कृतानि मनसा सह १५
भवत्यल्पफलं कर्म सेवितं नित्यमुल्बणम्
अबुद्धिपूर्वं धर्मज्ञ कृतमुग्रेण कर्मणा १६
कृतानि यानि कर्माणि दैवतैर्मुनिभिस्तथा
नाचरेत्तानि धर्मात्मा श्रुत्वा चापि न कुत्सयेत् १७
संचिन्त्य मनसा राजन्विदित्वा शक्तिमात्मनः
करोति यः शुभं कर्म स वै भद्राणि पश्यति १८
नवे कपाले सलिलं संन्यस्तं हीयते यथा
नवेतरे तथाभावं प्राप्नोति सुखभावितम् १९
सतोयेऽन्यत्तु यत्तोयं तस्मिन्नेव प्रसिच्यते
वृद्धे वृद्धिमवाप्नोति सलिले सलिलं यथा २०
एवं कर्माणि यानीह बुद्धियुक्तानि भूपते
न समानीह हीनानि तानि पुण्यतमान्यपि २१
राज्ञा जेतव्याः सायुधाश्चोन्नताश्च सम्यक्कर्तव्यं पालनं च प्रजानाम्
अग्निश्चेयो बहुभिश्चापि यज्ञैरन्ते मध्ये वा वनमाश्रित्य स्थेयम् २२
दमान्वितः पुरुषो धर्मशीलो भूतानि चात्मानमिवानुपश्येत्
गरीयसः पूजयेदात्मशक्त्या सत्येन शीलेन सुखं नरेन्द्र २३
इति श्रीमहाभारते शान्तिपर्वणि अशीत्यधिकद्विशततमोऽध्यायः २८०

## एकाशीत्यधिकद्विशततमोऽध्यायः

पराशर उवाच
कः कस्य चोपकुरुते कश्च कस्मै प्रयच्छति

प्राणी करोत्ययं कर्म सर्वमात्मार्थमात्मना १
गौरवेण परित्यक्तं निःस्नेहं परिवर्जयेत्
सोदर्यं भ्रातरमपि किमुतान्यं पृथग्जनम् २
विशिष्टस्य विशिष्टाच्च तुल्यौ दानप्रतिग्रहौ
तयोः पुण्यतरं दानं तद्द्विजस्य प्रयच्छतः ३
न्यायागतं धनं वर्णैर्न्यायेनैव विवर्धितम्
संरक्ष्यं यत्नमास्थाय धर्मार्थमिति निश्चयः ४
न धर्मार्थी नृशंसेन कर्मणा धनमर्जयेत्
शक्तितः सर्वकार्याणि कुर्यान्नर्द्धिमनुस्मरेत् ५
अपो हि प्रयतः शीतास्तापिता ज्वलनेन वा
शक्तितोऽतिथये दत्त्वा क्षुधार्तायाश्नुते फलम् ६
रन्तिदेवेन लोकेष्टा सिद्धिः प्राप्ता महात्मना
फलपत्रैरथो मूलैर्मुनीनर्चितवानसौ ७
तैरेव फलपत्रैश्च स माठरमतोषयत्
तस्माल्लेभे परं स्थानं शैब्योऽपि पृथिवीपतिः ८
देवतातिथिभृत्येभ्यः पितृभ्योऽथात्मनस्तथा
ऋणवाञ्जायते मर्त्यस्तस्मादनृणतां व्रजेत् ९
स्वाध्यायेन महर्षिभ्यो देवेभ्यो यज्ञकर्मणा
पितृभ्यः श्राद्धदानेन नृणामभ्यर्चनेन च १०
वाचः शेषावहार्येण पालनेनात्मनोऽपि च
यथावद्भृत्यवर्गस्य चिकीर्षेद्धर्ममादितः ११
प्रयत्नेन च संसिद्धा धनैरपि विवर्जिताः
सम्यग्घुत्वा हुतवहं मुनयः सिद्धिमागताः १२
विश्वामित्रस्य पुत्रत्वमृचीकतनयोऽगमत्
ऋग्भिः स्तुत्वा महाभागो देवान्वै यज्ञभागिनः १३
गतः शुक्रत्वमुशना देवदेवप्रसादनात्
देवीं स्तुत्वा तु गगने मोदते तेजसा वृतः १४
असितो देवलश्चैव तथा नारदपर्वतौ
कक्षीवाञ्जामदग्न्यश्च रामस्ताण्ड्यस्तथांशुमान् १५
वसिष्ठो जमदग्निश्च विश्वामित्रोऽत्रिरेव च

भरद्वाजो हरिश्मश्रुः कुराडधारः श्रुतश्रवाः १६
एते महर्षयः स्तुत्वा विष्णुमृग्भिः समाहिताः
लेभिरे तपसा सिद्धिं प्रसादात्तस्य धीमतः १७
अनर्हाश्चार्हतां प्राप्ताः सन्तः स्तुत्वा तमेव ह
न तु वृद्धिमिहान्विच्छेत्कर्म कृत्वा जुगुप्सितम् १८
येऽथा धर्मेण ते सत्या येऽधर्मेण धिगस्तु तान्
धर्मं वै शाश्वतं लोके न जह्याद्धनकाङ्क्षया १९
आहिताग्निर्हि धर्मात्मा यः स पुरायकृदुत्तमः
वेदा हि सर्वे राजेन्द्र स्थितास्त्रिष्वग्निषु प्रभो २०
स चाप्यग्न्याहितो विप्रः क्रिया यस्य न हीयते
श्रेयो ह्यनाहिताग्नित्वमग्निहोत्रं न निष्क्रियम् २१
अग्निरात्मा च माता च पिता जनयिता तथा
गुरुश्च नरशार्दूल परिचर्या यथातथम् २२
मानं त्यक्त्वा यो नरो वृद्धसेवी विद्वान्क्लीबः पश्यति प्रीतियोगात्
दाक्ष्येणाहीनो धर्मयुक्तो नदान्तो लोकेऽस्मिन्वै पूज्यते सद्भिरार्यः २३
इति श्रीमहाभारते शान्तिपर्वणि एकाशीत्यधिकद्विशततमोऽध्यायः २८१

## द्व्यशीत्यधिकद्विशततमोऽध्यायः

पराशर उवाच
वृत्तिः सकाशाद्वर्णेभ्यस्त्रिभ्यो हीनस्य शोभना
प्रीत्योपनीता निर्दिष्टा धर्मिष्ठान्कुरुते सदा १
वृत्तिश्चेन्नास्ति शूद्रस्य पितृपैतामही ध्रुवा
न वृत्तिं परतो मार्गेच्छुश्रूषां तु प्रयोजयेत् २
सद्भिस्तु सह संसर्गः शोभते धर्मदर्शिभिः
नित्यं सर्वास्ववस्थासु नासद्भिरिति मे मतिः ३
यथोदयगिरौ द्रव्यं संनिकर्षेण दीप्यते
तथा सत्संनिकर्षेण हीनवर्णोऽपि दीप्यते ४
यादृशेन हि वर्णेन भाव्यते शुक्लमम्बरम्
तादृशं कुरुते रूपमेतदेवमवैहि मे ५
तस्माद्गुणेषु रज्येथा मा दोषेषु कदाचन

अनित्यमिह मर्त्यानां जीवितं हि चलाचलम् ६
सुखे वा यदि वा दुःखे वर्तमानो विचक्षणः
यश्चिनोति शुभान्येव स भद्राणीह पश्यति ७
धर्मादपेतं यत्कर्म यद्यपि स्यान्महाफलम्
न तत्सेवेत मेधावी न तद्धितमिहोच्यते ८
यो हृत्वा गोसहस्राणि नृपो दद्यादरक्षिता
स शब्दमात्रफलभाग्राजा भवति तस्करः ९
स्वयंभूरसृजच्चाग्रे धातारं लोकपूजितम्
धातासृजत्पुत्रमेकं प्रजानां धारणे रतम् १०
तमर्चयित्वा वैश्यस्तु कुर्यादत्यर्थमृद्धिमत्
रक्षितव्यं तु राजन्यैरुपयोज्यं द्विजातिभिः ११
अजिह्मैरशठक्रोधैर्हव्यकव्यप्रयोक्तृभिः
शूद्रैर्निर्मार्जनं कार्यमेवं धर्मो न नश्यति १२
अप्रणष्टे ततो धर्मे भवन्ति सुखिताः प्रजाः
सुखेन तासां राजेन्द्र मोदन्ते दिवि देवताः १३
तस्माद्यो रक्षति नृपः स धर्मेणाभिपूज्यते
अधीते चापि यो विप्रो वैश्यो यश्चार्जने रतः १४
यश्च शुश्रूषते शूद्रः सततं नियतेन्द्रियः
अतोऽन्यथा मनुष्येन्द्र स्वधर्मात्परिहीयते १५
प्राणसंतापनिर्दिष्टाः काकिण्योऽपि महाफलाः
न्यायेनोपार्जिता दत्ताः किमुतान्याः सहस्रशः १६
सत्कृत्य तु द्विजातिभ्यो यो ददाति नराधिप
यादृशं तादृशं नित्यमश्नाति फलमूर्जितम् १७
अभिगम्य दत्तं तुष्ट्या यद्धन्यमाहुरभिष्टुतम्
याचितेन तु यद्दत्तं तदाहुर्मध्यमं बुधाः १८
अवज्ञया दीयते यत्तथैवाश्रद्धयापि च
तदाहुरधमं दानं मुनयः सत्यवादिनः १९
अतिक्रमे मज्जमानो विविधेन नरः सदा
तथा प्रयत्नं कुर्वीत यथा मुच्येत संशयात् २०
दमेन शोभते विप्रः क्षत्रियो विजयेन तु

धनेन वैश्यः शूद्रस्तु नित्यं दाक्ष्येण शोभते २१
इति श्रीमहाभारते शान्तिपर्वणि द्व्यशीत्यधिकद्विशततमोऽध्यायः २८२

त्र्यशीत्यधिकद्विशततमोऽध्यायः

पराशर उवाच
प्रतिग्रहागता विप्रे क्षत्रिये शस्त्रनिर्जिताः
वैश्ये न्यायार्जिताश्चैव शूद्रे शूश्रूषयार्जिताः
स्वल्पाप्यर्थाः प्रशस्यन्ते धर्मस्यार्थे महाफलाः १
नित्यं त्रयाणां वर्णानां शूद्रः शुश्रूषुरुच्यते
क्षत्रधर्मा वैश्यधर्मा नावृत्तिः पतति द्विजः
शूद्रकर्मा यदा तु स्यात्तदा पतति वै द्विजः २
वाणिज्यं पाशुपाल्यं च तथा शिल्पोपजीवनम्
शूद्रस्यापि विधीयन्ते यदा वृत्तिर्न जायते ३
रङ्गावतरणं चैव तथा रूपोपजीवनम्
मद्यमांसोपजीव्यं च विक्रयो लोहचर्मणोः ४
अपूर्विणा न कर्तव्यं कर्म लोके विगर्हितम्
कृतपूर्विणस्तु त्यजतो महान्धर्म इति श्रुतिः ५
संसिद्धः पुरुषो लोके यदाचरति पापकम्
मदेनाभिप्लुतमनास्तच्च न ग्राह्यमुच्यते ६
श्रूयन्ते हि पुराणे वै प्रजा धिग्दण्डशासनाः
दान्ता धर्मप्रधानाश्च न्यायधर्मानुवर्तकाः ७
धर्म एव सदा नृणामिह राजन्प्रशस्यते
धर्मवृद्धा गुणानेव सेवन्ते हि नरा भुवि ८
तं धर्ममसुरास्तात नामृष्यन्त जनाधिप
विवर्धमानाः क्रमशस्तत्र तेऽन्वाविशन्प्रजाः ९
तेषां दर्पः समभवत्प्रजानां धर्मनाशनः
दर्पात्मनां ततः क्रोधः पुनस्तेषामजायत १०
ततः क्रोधाभिभूतानां वृत्तं लज्जासमन्वितम्
ह्रीश्चैवाप्यनशद्राजंस्ततो मोहो व्यजायत ११
ततो मोहपरीतास्ते नापश्यन्त यथा पुरा

परस्परावमर्दैन वर्तयन्ति यथासुखम् १२
तान्प्राप्य तु स धिग्दराडो न काररामतोऽभवत्
ततोऽभ्यगच्छन्देवांश्च ब्राह्मणांश्चावमन्य ह १३
एतस्मिन्नेव काले तु देवा देववरं शिवम्
अगच्छञ्शरणं वीरं बहुरूपं गणाधिपम् १४
तेन स्म ते गगनगाः सपुराः पातिताः क्षितौ
तिस्रोऽप्येकेन बाणेन देवाप्यायिततेजसा १५
तेषामधिपतिस्त्वासीद्भीमो भीमपराक्रमः
देवतानां भयकरः स हतः शूलपाणिना १६
तस्मिन्हतेऽथ स्वं भावं प्रत्यपद्यन्त मानवाः
प्रावर्तन्त च वेदा वै शास्त्राणि च यथा पुरा १७
ततोऽभ्यषिञ्चन्राज्येन देवानां दिवि वासवम्
सप्तर्षयश्चान्वयुञ्जन्नराणां दराडधाररो १८
सप्तर्षीणामथोर्ध्वं च विपृथुर्नाम पार्थिवः
राजानः क्षत्रियाश्चैव मराडलेषु पृथक्पृथक् १९
महाकुलेषु ये जाता वृत्ताः पूर्वतराश्च ये
तेषामथासुरो भावो हृदयान्नापसर्पति २०
तस्मात्तेनैव भावेन सानुषङ्गेन पार्थिवाः
आसुरारायेव कर्माणि न्यषेवन्भीमविक्रमाः २१
प्रत्यतिष्ठंश्च तेष्वेव तान्येव स्थापयन्ति च
भजन्ते तानि चाद्यापि ये बालिशतमा नराः २२
तस्मादहं ब्रवीमि त्वां राजन्संचिन्त्य शास्त्रतः
संसिद्धाधिगमं कुर्यात्कर्म हिंसात्मकं त्यजेत् २३
न संकररो द्रविणं विचिन्वीत विचक्षणः
धर्मार्थं न्यायमुत्सृज्य न तत्कल्याणमुच्यते २४
स त्वमेवंविधो दान्तः क्षत्रियः प्रियबान्धवः
प्रजा भृत्यांश्च पुत्रांश्च स्वधर्मेणानुपालय २५
इष्टानिष्टसमायोगो वैरं सौहार्दमेव च
अथ जातिसहस्राणि बहूनि परिवर्तते २६
तस्माद्गुणेषु रज्येथा मा दोषेषु कदाचन

निर्गुणो यो हि दुर्बुद्धिरात्मनः सोऽरिरुच्यते २७
मानुषेषु महाराज धर्माधर्मौ प्रवर्ततः
न तथान्येषु भूतेषु मनुष्यरहितेष्विह २८
धर्मशीलो नरो विद्वानीहकोऽनीहकोऽपि वा
आत्मभूतः सदा लोके चरेद्भूतान्यहिंसयन् २९
यदा व्यपेतहृल्लेखं मनो भवति तस्य वै
नानृतं चैव भवति तदा कल्याणमृच्छति ३०
इति श्रीमहाभारते शान्तिपर्वणि त्र्यशीत्यधिकद्विशततमोऽध्यायः २८३

## चतुरशीत्यधिकद्विशततमोऽध्यायः

पराशर उवाच
एष धर्मविधिस्तात गृहस्थस्य प्रकीर्तितः
तपोविधिं तु वक्ष्यामि तन्मे निगदतः शृणु १
प्रायेण हि गृहस्थस्य ममत्वं नाम जायते
सङ्गागतं नरश्रेष्ठ भावैस्तामसराजसैः २
गृहाण्याश्रित्य गावश्च क्षेत्राणि च धनानि च
दाराः पुत्राश्च भृत्याश्च भवन्तीह नरस्य वै ३
एवं तस्य प्रवृत्तस्य नित्यमेवानुपश्यतः
रागद्वेषौ विवर्धेते ह्यनित्यत्वमपश्यतः ४
रागद्वेषाभिभूतं च नरं द्रव्यवशानुगम्
मोहजाता रतिर्नाम समुपैति नराधिप ५
कृतार्थो भोगतो भूत्वा स वै रतिपरायणः
लाभं ग्राम्यसुखादन्यं रतितो नानुपश्यति ६
ततो लोभाभिभूतात्मा सङ्गाद्वर्धयते जनम्
पुष्ट्यर्थं चैव तस्येह जनस्यार्थं चिकीर्षति ७
स जानन्नपि चाकार्यमर्थार्थं सेवते नरः
बालस्नेहपरीतात्मा तत्क्षयाच्चानुतप्यते ८
ततो मानेन संपन्नो रक्षन्नात्मपराजयम्
करोति येन भोगी स्यामिति तस्माद्विनश्यति ९
तपो हि बुद्धियुक्तानां शाश्वतं ब्रह्मदर्शनम्

अन्विच्छतां शुभं कर्म नराणां त्यजतां सुखम् १०
स्नेहायतननाशाच्च धननाशाच्च पार्थिव
आधिव्याधिप्रतापाच्च निर्वेदमुपगच्छति ११
निर्वेदादात्मसंबोधः संबोधाच्छास्त्रदर्शनम्
शास्त्रार्थदर्शनाद्राजंस्तप एवानुपश्यति १२
दुर्लभो हि मनुष्येन्द्र नरः प्रत्यवमर्शवान्
यो वै प्रियसुखे क्षीणे तपः कर्तुं व्यवस्यति १३
तपः सर्वगतं तात हीनस्यापि विधीयते
जितेन्द्रियस्य दान्तस्य स्वर्गमार्गप्रदेशकम् १४
प्रजापतिः प्रजाः पूर्वमसृजत्तपसा विभुः
क्वचित्क्वचिद्व्रतपरो व्रतान्यास्थाय पार्थिव १५
आदित्या वसवो रुद्रास्तथैवाग्न्यश्विमारुताः
विश्वेदेवास्तथा साध्याः पितरोऽथ मरुद्गणाः १६
यक्षराक्षसगन्धर्वाः सिद्धाश्चान्ये दिवौकसः
संसिद्धास्तपसा तात ये चान्ये स्वर्गवासिनः १७
ये चादौ ब्रह्मणा सृष्टा ब्राह्मणास्तपसा पुरा
ते भावयन्तः पृथिवीं विचरन्ति दिवं तथा १८
मर्त्यलोके च राजानो ये चान्ये गृहमेधिनः
महाकुलेषु दृश्यन्ते तत्सर्वं तपसः फलम् १९
कौशिकानि च वस्त्राणि शुभान्याभरणानि च
वाहनासनयानानि सर्वं तत्तपसः फलम् २०
मनोनुकूलाः प्रमदा रूपवत्यः सहस्रशः
वासः प्रासादपृष्ठे च तत्सर्वं तपसः फलम् २१
शयनानि च मुख्यानि भोज्यानि विविधानि च
अभिप्रेतानि सर्वाणि भवन्ति कृतकर्मणाम् २२
नाप्राप्यं तपसः किंचित्त्रैलोक्येऽस्मिन्परंतप
उपभोगपरित्यागः फलान्यकृतकर्मणाम् २३
सुखितो दुःखितो वापि नरो लोभं परित्यजेत्
अवेक्ष्य मनसा शास्त्रं बुद्ध्या च नृपसत्तम २४
असंतोषोऽसुखायैव लोभादिन्द्रियविभ्रमः

ततोऽस्य नश्यति प्रज्ञा विद्येवाभ्यासवर्जिता २५
नष्टप्रज्ञो यदा भवति तदा न्यायं न पश्यति
तस्मात्सुखक्षये प्राप्ते पुमानुग्रं तपश्चरेत् २६
यदिष्टं तत्सुखं प्राहुर्द्वेष्यं दुःखमिहोच्यते
कृताकृतस्य तपसः फलं पश्यस्व यादृशम् २७
नित्यं भद्राणि पश्यन्ति विषयांश्चोपभुञ्जते
प्राकाश्यं चैव गच्छन्ति कृत्वा निष्कल्मषं तपः २८
अप्रियाण्यवमानांश्च दुःखं बहुविधात्मकम्
फलार्थी सत्पथत्यक्तः प्राप्नोति विषयात्मकम् २९
धर्मे तपसि दाने च विचिकित्सास्य जायते
स कृत्वा पापकान्येव निरयं प्रतिपद्यते ३०
सुखे तु वर्तमानो वै दुःखे वापि नरोत्तम
स्ववृत्ताद्यो न चलति शास्त्रचक्षुः स मानवः ३१
इषुप्रपातमात्रं हि स्पर्शयोगे रतिः स्मृता
रसने दर्शने घ्राणे श्रवणे च विशां पते ३२
ततोऽस्य जायते तीव्रा वेदना तत्क्षयात्पुनः
बुधा येन प्रशंसन्ति मोक्षं सुखमनुत्तमम् ३३
ततः फलार्थं चरति भवन्ति ज्यायसो गुणाः
धर्मवृत्त्या च सततं कामार्थाभ्यां न हीयते ३४
अप्रयत्नागताः सेव्या गृहस्थैर्विषयाः सदा
प्रयत्नेनोपगम्यश्च स्वधर्म इति मे मतिः ३५
मानिनां कुलजातानां नित्यं शास्त्रार्थचक्षुषाम्
धर्मक्रियावियुक्तानामशक्त्या संवृतात्मनाम् ३६
क्रियमाणं यदा कर्म नाशं गच्छति मानुषम्
तेषां नान्यदृते लोके तपसः कर्म विद्यते ३७
सर्वात्मना तु कुर्वीत गृहस्थः कर्मनिश्चयम्
दाक्ष्येण हव्यकव्यार्थं स्वधर्मं विचरेन्नृप ३८
यथा नदीनदाः सर्वे सागरे यान्ति संस्थितिम्
एवमाश्रमिणः सर्वे गृहस्थे यान्ति संस्थितिम् ३९
इति श्रीमहाभारते शान्तिपर्वणि चतुरशीत्यधिकद्विशततमोऽध्यायः २८४

## पञ्चाशीत्यधिकद्विशततमोऽध्यायः

जनक उवाच
वर्णो विशेषवर्णानां महर्षे केन जायते
एतदिच्छाम्यहं श्रोतुं तद्ब्रूहि वदतां वर १
यदेतज्जायतेऽपत्यं स एवायमिति श्रुतिः
कथं ब्राह्मणतो जातो विशेषग्रहणं गतः २
पराशर उवाच
एवमेतन्महाराज येन जातः स एव सः
तपसस्त्वपकर्षेण जातिग्रहणतां गतः ३
सुक्षेत्राच्च सुबीजाच्च पुण्यो भवति संभवः
अतोऽन्यतरतो हीनादवरो नाम जायते ४
वक्त्राद्भुजाभ्यामूरुभ्यां पद्भ्यां चैवाथ जज्ञिरे
सृजतः प्रजापतेर्लोकानिति धर्मविदो विदुः ५
मुखजा ब्राह्मणास्तात बाहुजाः क्षत्रबन्धवः
ऊरुजा धनिनो राजन्पादजाः परिचारकाः ६
चतुर्णामेव वर्णानामागमः पुरुषर्षभ
अतोऽन्ये त्वतिरिक्ता ये ते वै संकरजाः स्मृताः ७
क्षत्रजातिरथाम्बष्ठा उग्रा वैदेहकास्तथा
श्वपाकाः पुल्कसाः स्तेना निषादाः सूतमागधाः ८
आयोगाः करणा व्रात्याश्चण्डालाश्च नराधिप
एते चतुर्भ्यो वर्णेभ्यो जायन्ते वै परस्परम् ९
जनक उवाच
ब्रह्मणैकेन जातानां नानात्वं गोत्रतः कथम्
बहूनीह हि लोके वै गोत्राणि मुनिसत्तम १०
यत्र तत्र कथं जाताः स्वयोनिं मुनयो गताः
शुद्रयोनौ समुत्पन्ना वियोनौ च तथापरे ११
पराशर उवाच
राजन्नैतद्भवेद्ग्राह्यमपकृष्टेन जन्मना
महात्मनां समुत्पत्तिस्तपसा भावितात्मनाम् १२
उत्पाद्य पुत्रान्मुनयो नृपते यत्र तत्र ह

स्वेनैव तपसा तेषामृषित्वं विदधुः पुनः १३
पितामहश्च मे पूर्वमृश्यशृङ्गश्च काश्यपः
वटस्ताराड्यः कृपश्चैव कक्षीवान्कमठादयः १४
यवक्रीतश्च नृपते द्रोणश्च वदतां वरः
आयुर्मतङ्गो दत्तश्च द्रुमदो मत्स्य एव च १५
एते स्वां प्रकृतिं प्राप्ता वैदेह तपसोऽश्रयात्
प्रतिष्ठिता वेदविदो दमे तपसि चैव हि १६
मूलगोत्राणि चत्वारि समुत्पन्नानि पार्थिव
अङ्गिराः कश्यपश्चैव वसिष्ठो भृगुरेव च १७
कर्मतोऽन्यानि गोत्राणि समुत्पन्नानि पार्थिव
नामधेयानि तपसा तानि च ग्रहणं सताम् १८
जनक उवाच
विशेषधर्मान्वर्णानां प्रब्रूहि भगवन्मम
तथा सामान्यधर्मांश्च सर्वत्र कुशलो ह्यसि १९
पराशर उवाच
प्रतिग्रहो याजनं च तथैवाध्यापनं नृप
विशेषधर्मो विप्राणां रक्षा क्षत्रस्य शोभना २०
कृषिश्च पाशुपाल्यं च वाणिज्यं च विशामपि
द्विजानां परिचर्या च शूद्रकर्म नराधिप २१
विशेषधर्मा नृपते वर्णानां परिकीर्तिताः
धर्मान्साधारणांस्तात विस्तरेण शृणुष्व मे २२
आनृशंस्यमहिंसा चाप्रमादः संविभागिता
श्राद्धकर्मातिथेयं च सत्यमक्रोध एव च २३
स्वेषु दारेषु संतोषः शौचं नित्यानसूयता
आत्मज्ञानं तितिक्षा च धर्माः साधारणा नृप २४
ब्राह्मणाः क्षत्रिया वैश्यास्त्रयो वर्णा द्विजातयः
अत्र तेषामधीकारो धर्मेषु द्विपदां वर २५
विकर्मावस्थिता वर्णाः पतन्ति नृपते त्रयः
उन्नमन्ति यथासन्तमाश्रित्येह स्वकर्मसु २६
न चापि शूद्रः पततीति निश्चयो न चापि संस्कारमिहार्हतीति वा

श्रुतिप्रवृत्तं न च धर्ममाप्नुते न चास्य धर्मे प्रतिषेधनं कृतम् २७
वैदेहकं शूद्रमुदाहरन्ति द्विजा महाराज श्रुतोपपन्नाः
अहं हि पश्यामि नरेन्द्र देवं विश्वस्य विष्णुं जगतः प्रधानम् २८
सतां वृत्तमनुष्ठाय निहीना उज्जिहीर्षवः
मन्त्रवर्जं न दुष्यन्ति कुर्वाणाः पौष्टिकीः क्रियाः २९
यथा यथा हि सद्वृत्तमालम्बन्तीतरे जनाः
तथा तथा सुखं प्राप्य प्रेत्य चेह च शेरते ३०
जनक उवाच
किं कर्म दूषयत्येनमथ जातिर्महामुने
संदेहो मे समुत्पन्नस्तन्मे व्याख्यातुमर्हसि ३१
पराशर उवाच
असंशयं महाराज उभयं दोषकारकम्
कर्म चैव हि जातिश्च विशेषं तु निशामय ३२
जात्या च कर्मणा चैव दुष्टं कर्म निषेवते
जात्या दुष्टश्च यः पापं न करोति स पूरुषः ३३
जात्या प्रधानं पुरुषं कुर्वाणं कर्म धिक्कृतम्
कर्म तद्दूषयत्येनं तस्मात्कर्म न शोभनम् ३४
जनक उवाच
कानि कर्माणि धर्म्याणि लोकेऽस्मिन्द्विजसत्तम
न हिंसन्तीह भूतानि क्रियमाणानि सर्वदा ३५
पराशर उवाच
शृणु मेऽत्र महाराज यन्मां त्वं परिपृच्छसि
यानि कर्माण्यहिंस्राणि नरं त्रायन्ति सर्वदा ३६
संन्यस्याग्नीनुपासीनाः पश्यन्ति विगतज्वराः
नैःश्रेयसं धर्मपथं समारुह्य यथाक्रमम् ३७
प्रश्रिता विनयोपेता दमनित्याः सुसांशताः
प्रयान्ति स्थानमजरं सर्वकर्मविवर्जिताः ३८
सर्वे वर्णा धर्मकार्याणि सम्यक्कृत्वा राजन्सत्यवाक्यानि चोक्त्वा
त्यक्त्वाधर्मं दारुणं जीवलोके यान्ति स्वर्गं नात्र कार्यो विचारः ३९

इति श्रीमहाभारते शान्तिपर्वणि पञ्चाशीत्यधिकद्विशततमोऽध्यायः २८५

षडशीत्यधिकद्विशततमोऽध्यायः

पराशर उवाच

पिता सखायो गुरवः स्त्रियश्च न निर्गुणा नाम भवन्ति लोके
अनन्यभक्ताः प्रियवादिनश्च हिताश्च वश्याश्च तथैव राजन् १
पिता परं दैवतं मानवानां मातुर्विशिष्टं पितरं वदन्ति
ज्ञानस्य लाभं परमं वदन्ति जितेन्द्रियार्थाः परमाप्नुवन्ति २
रणाजिरे यत्र शराग्निसंस्तरे नृपात्मजो घातमवाप्य दह्यते
प्रयाति लोकानमरैः सुदुर्लभान्निषेवते स्वर्गफलं यथासुखम् ३
श्रान्तं भीतं भ्रष्टशस्त्रं रुदन्तं पराङ्मुखं परिबर्हैश्च हीनम्
अनुद्यतं रोगिणं याचमानं न वै हिंस्याद्बालवृद्धौ च राजन् ४
परिबर्हैः सुसंपन्नमुद्यतं तुल्यतां गतम्
अतिक्रमेत नृपतिः संग्रामे क्षत्रियात्मजम् ५
तुल्यादिह वधः श्रेयान्विशिष्टाच्चेति निश्चयः
निहीनात्कातराच्चैव नृपाणां गर्हितो वधः ६
पापात्पापसमाचारान्निहीनाच्च नराधिप
पाप एव वधः प्रोक्तो नरकायेति निश्चयः ७
न कश्चित्त्राति वै राजन्दिष्टान्तवशमागतम्
सावशेषायुषं चापि कश्चिदेवापकर्षति ८
स्निग्धैश्च क्रियमाणानि कर्माणीह निवर्तयेत्
हिंसात्मकानि कर्माणि नायुरिच्छेत्परायुषा ९
गृहस्थानां तु सर्वेषां विनाशमभिकाङ्क्षताम्
निधनं शोभनं तात पुलिनेषु क्रियावताम् १०
आयुषि क्षयमापन्ने पञ्चत्वमुपगच्छति
नाकारणात्तद्भवति कारणैरुपपादितम् ११
तथा शरीरं भवति देहाद्येनोपपादितम्
अध्वानं गतकश्चायं प्राप्तश्चायं गृहाद्गृहम् १२
द्वितीयं कारणं तत्र नान्यत्किंचन विद्यते
तद्देहं देहिनां युक्तं मोक्षभूतेषु वर्तते १३
सिरास्नाय्वस्थिसंघातं बीभत्सामेध्यसंकुलम्
भूतानामिन्द्रियाणां च गुणानां च समागमम् १४

त्वगन्तं देहमित्याहुर्विद्वांसोऽध्यात्मचिन्तकाः
गुणैरपि परिक्षीणं शरीरं मर्त्यतां गतम् १५
शरीरिणा परित्यक्तं निश्चेष्टं गतचेतनम्
भूतैः प्रकृतिमापन्नैस्ततो भूमौ निमज्जति १६
भावितं कर्मयोगेन जायते तत्र तत्र ह
इदं शरीरं वैदेह म्रियते यत्र तत्र ह
तत्स्वभावोऽपरो दृष्टो विसर्गः कर्मणस्तथा १७
न जायते तु नृपते कंचित्कालमयं पुनः
परिभ्रमति भूतात्मा द्यामिवाम्बुधरो महान् १८
स पुनर्जायते राजन्प्राप्येहायतनं नृप
मनसः परमो ह्यात्मा इन्द्रियेभ्यः परं मनः १९
द्विविधानां च भूतानां जङ्गमाः परमा नृप
जङ्गमानामपि तथा द्विपदाः परमा मताः
द्विपदानामपि तथा द्विजा वै परमाः स्मृताः २०
द्विजानामपि राजेन्द्र प्रज्ञावन्तः परा मताः
प्राज्ञानामात्मसंबुद्धाः संबुद्धानाममानिनः २१
जातमन्वेति मरणं नृणामिति विनिश्चयः
अन्तवन्ति हि कर्माणि सेवन्ते गुणतः प्रजाः २२
आपन्ने तूत्तरां काष्ठां सूर्ये यो निधनं व्रजेत्
नक्षत्रे च मुहूर्ते च पुण्ये राजन्स पुण्यकृत् २३
अयोजयित्वा क्लेशेन जनं प्लाव्य च दुष्कृतम्
मृत्युनाप्राकृतेनेह कर्म कृत्वात्मशक्तितः २४
विषमुद्बन्धनं दाहो दस्युहस्तात्तथा वधः
दंष्ट्रिभ्यश्च पशुभ्यश्च प्राकृतो वध उच्यते २५
न चैभिः पुण्यकर्माणो युज्यन्ते नाभिसंधिजैः
एवंविधैश्च बहुभिरपरैः प्राकृतैरपि २६
ऊर्ध्वं हित्वा प्रतिष्ठन्ते प्राणाः पुण्यकृतां नृप
मध्यतो मध्यपुण्यानामधो दुष्कृतकर्मणाम् २७
एकः शत्रुर्न द्वितीयोऽस्ति शत्रुरज्ञानतुल्यः पुरुषस्य राजन्
येनावृतः कुरुते संप्रयुक्तो घोराणि कर्माणि सुदारुणानि २८

प्रबोधनार्थं श्रुतिधर्मयुक्तं वृद्धानुपास्यं च भवेत यस्य
प्रयत्नसाध्यो हि स राजपुत्र प्रज्ञाशरेणोन्मथितः परैति २९
अधीत्य वेदांस्तपसा ब्रह्मचारी यज्ञाञ्शक्त्या संनिसृज्येत पञ्च
वनं गच्छेत्पुरुषो धर्मकामः श्रेयश्चित्वा स्थापयित्वा स्ववंशम् ३०
उपभोगैरपि त्यक्तं नात्मानमवसादयेत्
चण्डालत्वेऽपि मानुष्यं सर्वथा तात दुर्लभम् ३१
इयं हि योनिः प्रथमा यां प्राप्य जगतीपते
आत्मा वै शक्यते त्रातुं कर्मभिः शुभलक्षणैः ३२
कथं न विप्रणश्येम योनितोऽस्या इति प्रभो
कुर्वन्ति धर्मं मनुजाः श्रुतिप्रामाण्यदर्शनात् ३३
यो दुर्लभतरं प्राप्य मानुष्यमिह वै नरः
धर्मावमन्ता कामात्मा भवेत्स खलु वञ्च्यते ३४
यस्तु प्रीतिपुरोगेण चक्षुषा तात पश्यति
दीपोपमानि भूतानि यावदर्चिर्न नश्यति ३५
सान्त्वेनानुप्रदानेन प्रियवादेन चाप्युत
समदुःखसुखो भूत्वा स परत्र महीयते ३६
दानं त्यागः शोभना मूर्तिरद्भ्यो भूयः प्लाव्यं तपसा वै शरीरम्
सरस्वतीनैमिषपुष्करेषु ये चाप्यन्ये पुण्यदेशाः पृथिव्याम् ३७
गृहेषु येषामसवः पतन्ति तेषामथो निर्हरणं प्रशस्तम्
यानेन वै प्रापणं च श्मशाने शौचेन नूनं विधिना चैव दाहः ३८
इष्टिः पुष्टिर्यजनं याजनं च दानं पुण्यानां कर्मणां च प्रयोगः
शक्त्या पित्र्यं यच्च किंचित्प्रशस्तं सर्वाण्यात्मार्थे मानवो यः करोति ३९
धर्मशास्त्राणि वेदाश्च षडङ्गानि नराधिप
श्रेयसोऽर्थे विधीयन्ते नरस्याक्लिष्टकर्मणः ४०
भीष्म उवाच
एतद्वै सर्वमाख्यातं मुनिना सुमहात्मना
विदेहराजाय पुरा श्रेयसोऽर्थे नराधिप ४१
इति श्रीमहाभारते शान्तिपर्वणि षडशीत्यधिकद्विशततमोऽध्यायः २८६१

## सप्ताशीत्यधिकद्विशततमोऽध्यायः

भीष्म उवाच
पुनरेव तु पप्रच्छ जनको मिथिलाधिपः
पराशरं महात्मानं धर्मे परमनिश्चयम् १
किं श्रेयः का गतिर्ब्रह्मन्किं कृतं न विनश्यति
क्व गतो न निवर्तेत तन्मे ब्रूहि महामुने २
पराशर उवाच
असङ्गः श्रेयसो मूलं ज्ञानं ज्ञानगतिः परा
चीर्णं तपो न प्रणश्येद्वापः क्षेत्रे न नश्यति ३
छित्त्वाधर्ममयं पाशं यदा धर्मेऽभिरज्यते
दत्त्वाभयकृतं दानं तदा सिद्धिमवाप्नुयात् ४
यो ददाति सहस्राणि गवामश्वशतानि च
अभयं सर्वभूतेभ्यस्तद्दानमतिवर्तते ५
वसन्विषयमध्येऽपि न वसत्येव बुद्धिमान्
संवसत्येव दुर्बुद्धिरसत्सु विषयेष्वपि ६
नाधर्मः श्लिष्यते प्राज्ञमापः पुष्करपर्णवत्
अप्राज्ञमधिकं पापं श्लिष्यते जतु काष्ठवत् ७
नाधर्मः कारणापेक्षी कर्तारमभिमुञ्चति
कर्ता खलु यथाकालं तत्सर्वमभिपद्यते
न भिद्यन्ते कृतात्मान आत्मप्रत्ययदर्शिनः ८
बुद्धिकर्मेन्द्रियाणां हि प्रमत्तो यो न बुध्यते
शुभाशुभेषु सक्तात्मा प्राप्नोति सुमहद्भयम् ९
वीतरागो जितक्रोधः सम्यग्भवति यः सदा
विषये वर्तमानोऽपि न स पापेन युज्यते १०
मर्यादायां धर्मसेतुर्निबद्धो नैव सीदति
पुष्टस्रोत इवायत्तः स्फीतो भवति संचयः ११
यथा भानुगतं तेजो मणिः शुद्धः समाधिना
आदत्ते राजशार्दूल तथा योगः प्रवर्तते १२
यथा तिलानामिह पुष्पसंश्रयात्पृथक्पृथग्याति गुणोऽतिसौम्यताम्
तथा नराणां भुवि भावितात्मनां यथाश्रयं सत्त्वगुणः प्रवर्तते १३

जहाति दारानिहते न संपदः सदश्वयानं विविधाश्च याः क्रियाः
त्रिविष्टपे जातमतिर्यदा नरस्तदास्य बुद्धिर्विषयेषु भिद्यते १४
प्रसक्तबुद्धिर्विषयेषु यो नरो यो बुध्यते ह्यात्महितं कदाचन
स सर्वभावानुगतेन चेतना नृपामिषेणेव झषो विकृष्यते १५
संघातवान्मर्त्यलोकः परस्परमपाश्रितः
कदलीगर्भनिःसारो नौरिवाप्सु निमज्जति १६
न धर्मकालः पुरुषस्य निश्चितो न चापि मृत्युः पुरुषं प्रतीक्षते
क्रिया हि धर्मस्य सदैव शोभना यदा नरो मृत्युमुखेऽभिवर्तते १७
यथान्धः स्वगृहे युक्तो ह्यभ्यासादेव गच्छति
तथा युक्तेन मनसा प्राज्ञो गच्छति तां गतिम् १८
मरणं जन्मनि प्रोक्तं जन्म वै मरणाश्रितम्
अविद्वान्मोक्षधर्मेषु बद्धो भ्रमति चक्रवत् १९
यथा मृणालोऽनुगतमाशु मुञ्चति कर्दमम्
तथात्मा पुरुषस्येह मनसा परिमुच्यते
मनः प्रणयतेऽत्मानं स एनमभियुञ्जति २०
परार्थे वर्तमानस्तु स्वकार्यं योऽभिमन्यते
इन्द्रियार्थेषु सक्तः सन्स्वकार्यात्परिहीयते २१
अधस्तिर्यग्गतिं चैव स्वर्गे चैव परां गतिम्
प्राप्नोति स्वकृतैरात्मा प्राज्ञस्येहेतरस्य च २२
मृन्मये भाजने पक्वे यथा वै न्यस्यते द्रवः
तथा शरीरं तपसा तप्तं विषयमश्नुते २३
विषयानश्नुते यस्तु न स भोक्ष्यत्यसंशयम्
यस्तु भोगांस्त्यजेदात्मा स वै भोक्तुं व्यवस्यति २४
नीहारेण हि संवीतः शिश्नोदरपरायणः
जात्यन्ध इव पन्थानमावृतात्मा न बुध्यते २५
वणिग्यथासमुद्राद्वै यथार्थं लभते धनम्
तथा मर्त्यार्णवे जन्तोः कर्मविज्ञानतो गतिः २६
अहोरात्रमये लोके जरारूपेण संचरन्
मृत्युर्ग्रसति भूतानि पवनं पन्नगो यथा २७
स्वयं कृतानि कर्माणि जातो जन्तुः प्रपद्यते

नाकृतं लभते कश्चित्किंचिदत्र प्रियाप्रियम् २८
शयानं यान्तमासीनं प्रवृत्तं विषयेषु च
शुभाशुभानि कर्माणि प्रपद्यन्ते नरं सदा २९
न ह्यन्यत्तीरमासाद्य पुनस्तर्तुं व्यवस्यति
दुर्लभो दृश्यते ह्यस्य विनिपातो महार्णवे ३०
यथा भारावसक्ता हि नौर्महाम्भसि तन्तुना
तथा मनोऽभियोगाद्वै शरीरं प्रतिकर्षति ३१
यथा समुद्रमभितः संस्यूताः सरितोऽपराः
तथाद्या प्रकृतिर्योगादभिसंस्यूयते सदा ३२
स्नेहपाशैर्बहुविधैरासक्तमनसो नराः
प्रकृतिस्था विषीदन्ति जले सैकतवेश्मवत् ३३
शरीरगृहसंस्थस्य शौचतीर्थस्य देहिनः
बुद्धिमार्गप्रयातस्य सुखं त्विह परत्र च ३४
विस्तराः क्लेशसंयुक्ताः संक्षेपास्तु सुखावहाः
परार्थं विस्तराः सर्वे त्यागमात्महितं विदुः ३५
संकल्पजो मित्रवर्गो ज्ञातयः कारणात्मकाः
भार्या दासाश्च पुत्राश्च स्वमर्थमनुयुञ्जते ३६
न माता न पिता किंचित्कस्यचित्प्रतिपद्यते
दानपथ्योदनो जन्तुः स्वकर्मफलमश्नुते ३७
माता पुत्रः पिता भ्राता भार्या मित्रजनस्तथा
अष्टापदपदस्थाने त्वक्षमुद्रेव न्यस्यते ३८
सर्वाणि कर्माणि पुरा कृतानि शुभाशुभान्यात्मनो यान्ति जन्तोः
उपस्थितं कर्मफलं विदित्वा बुद्धिं तथा चोदयतेऽन्तरात्मा ३९
व्यवसायं समाश्रित्य सहायान्योऽधिगच्छति
न तस्य कश्चिदारम्भः कदाचिदवसीदति ४०
अद्वैधमनसं युक्तं शूरं धीरं विपश्चितम्
न श्रीः संत्यजते नित्यमादित्यमिव रश्मयः ४१
आस्तिक्यव्यवसायाभ्यामुपायाद्विस्मयाद्धिया
यमारभत्यनिन्द्यात्मा न सोऽथ परिसीदति ४२
सर्वः स्वानि शुभाशुभानि नियतं कर्माणि जन्तुः स्वयं

गर्भात्संप्रतिपद्यते तदुभयं यत्तेन पूर्वं कृतम्
मृत्युश्चापरिहारवान्समगतिः कालेन विच्छेदिता
दारोश्चूर्णमिवाश्मसारविहितं कर्मान्तिकं प्रापयेत् ४३
स्वरूपतामात्मकृतं च विस्तरं कुलान्वयं द्रव्यसमृद्धिसंचयम्
नरो हि सर्वो लभते यथाकृतं शुभाशुभेनात्मकृतेन कर्मणा ४४
भीष्म उवाच
इत्युक्तो जनको राजन्यथातथ्यं मनीषिणा
श्रुत्वा धर्मविदां श्रेष्ठः परां मुदमवाप ह ४५
इति श्रीमहाभारते शान्तिपर्वणि सप्ताशीत्यधिकद्विशततमोऽध्यायः २८७

## अष्टाशीत्यधिकद्विशततमोऽध्यायः

युधिष्ठिर उवाच
सत्यं क्षमां दमं प्रज्ञां प्रशंसन्ति पितामह
विद्वांसो मनुजा लोके कथमेतन्मतं तव १
भीष्म उवाच
अत्र ते वर्तयिष्येऽहमितिहासं पुरातनम्
साध्यानामिह संवादं हंसस्य च युधिष्ठिर २
हंसो भूत्वाथ सौवर्णस्त्वजो नित्यः प्रजापतिः
स वै पर्येति लोकांस्त्रीनथ साध्यानुपागमत् ३
साध्या ऊचुः
शकुने वयं स्म देवा वै साध्यास्त्वामनुयुज्महे
पृच्छामस्त्वां मोक्षधर्मं भवांश्च किल मोक्षवित् ४
श्रुतोऽसि न पण्डितो धीरवादी साधुशब्दः पतते ते पतत्रिन्
किं मन्यसे श्रेष्ठतमं द्विज त्वं कस्मिन्मनस्ते रमते महात्मन् ५
तन्नः कार्यं पक्षिवर प्रशाधि यत्कार्याणां मन्यसे श्रेष्ठमेकम्
यत्कृत्वा वै पुरुषः सर्वबन्धैर्विमुच्यते विहगेन्द्रेह शीघ्रम् ६
हंस उवाच
इदं कार्यममृताशाः शृणोमि तपो दमः सत्यमात्माभिगुप्तिः
ग्रन्थीन्विमुच्य हृदयस्य सर्वान्प्रियाप्रिये स्वं वशमानयीत ७
नारुंतुदः स्यान्न नृशंसवादी न हीनतः परमभ्याददीत

ययास्य वाचा पर उद्विजेत न तां वदेद्रुशतीं पापलोक्याम् ८
वाक्सायका वदनान्निष्पतन्ति यैराहतः शोचति रात्र्यहानि
परस्य नामर्मसु ते पतन्ति तान्पण्डितो नावसृजेत्परेषु ९
परश्चेदेनमतिवादबाणैर्भृशं विध्येच्छम एवेह कार्यः
संरोष्यमाणः प्रतिमृष्यते यः स आदत्ते सुकृतं वै परस्य १०
क्षेपाभिमानादभिषङ्गव्यलीकं निगृह्णाति ज्वलितं यश्च मन्युम्
अदुष्टचेता मुदितोऽनसूयुः स आदत्ते सुकृतं वै परेषाम् ११
आक्रुश्यमानो न वदामि किंचित्क्षमाम्यहं ताड्यमानश्च नित्यम्
श्रेष्ठं ह्येतत्क्षममप्याहुरार्याः सत्यं तथैवार्जवमानृशंस्यम् १२
वेदस्योपनिषत्सत्यं सत्यस्योपनिषद्दमः
दमस्योपनिषन्मोक्ष एतत्सर्वानुशासनम् १३
वाचो वेगं मनसः क्रोधवेगं विवित्सावेगमुदरोपस्थवेगम्
एतान्वेगान्यो विषहत्युदीर्णांस्तं मन्येऽह ब्राह्मणं वै मुनिं च १४
अक्रोधनः क्रुध्यतां वै विशिष्टस्तथा तितिक्षुरतितिक्षोर्विशिष्टः
अमानुषान्मानुषो वै विशिष्टस्तथाज्ञानाज्ज्ञानवान्वै प्रधानः १५
आक्रुश्यमानो नाक्रोशेन्मन्युरेव तितिक्षतः
आक्रोष्टारं निर्दहति सुकृतं चास्य विन्दति १६
यो नात्युक्तः प्राह रूक्षं प्रियं वा यो वा हतो न प्रतिहन्ति धैर्यात्
पापं च यो नेच्छति तस्य हन्तुस्तस्मै देवाः स्पृहयन्ते सदैव १७
पापीयसः क्षमेतैव श्रेयसः सदृशस्य च
विमानितो हतोऽक्रुष्ट एवं सिद्धिं गमिष्यति १८
सदाहमार्यान्निभृतोऽप्युपासे न मे विवित्सा न च मेऽस्ति रोषः
न चाप्यहं लिप्समानः परैमि न चैव किंचिद्विषमेण यामि १९
नाहं शप्तः प्रतिशपामि किंचिद्दमं द्वारं ह्यमृतस्येह वेद्मि
गुह्यं ब्रह्म तदिदं वो ब्रवीमि न मानुषाच्छ्रेष्ठतरं हि किंचित् २०
विमुच्यमानः पापेभ्यो घनेभ्य इव चन्द्रमाः
विरजाः कालमाकाङ्क्षन्धीरो धैर्येण सिध्यति २१
यः सर्वेषां भवति ह्यर्चनीय उत्सेचने स्तम्भ इवाभिजातः
यस्मै वाचं सुप्रशस्तां वदन्ति स वै देवान्गच्छति संयतात्मा २२
न तथा वक्तुमिच्छन्ति कल्याणान्पुरुषे गुणान्

यथैषां वक्तुमिच्छन्ति नैर्गुण्यमनुयुञ्जकाः २३
यस्य वाङ्मनसी गुप्ते सम्यक्प्रणिहिते सदा
वेदास्तपश्च त्यागश्च स इदं सर्वमाप्नुयात् २४
आक्रोशनावमानाभ्यामबुधाद्वर्धते बुधः
तस्मान्न वर्धयेदन्यं न चात्मानं विहिंसयेत् २५
अमृतस्येव संतृप्येदवमानस्य वै द्विजः
सुखं ह्यवमतः शेते योऽवमन्ता स नश्यति २६
यत्क्रोधनो यजते यद्ददाति यद्वा तपस्तप्यति यज्जुहोति
वैवस्वतस्तद्धरतेऽस्य सर्वं मोघः श्रमो भवति क्रोधनस्य २७
चत्वारि यस्य द्वाराणि सुगुप्तान्यमरोत्तमाः
उपस्थमुदरं हस्तौ वाक्चतुर्थी स धर्मवित् २८
सत्यं दमं ह्यार्जवमानृशंस्यं धृतिं तितिक्षामभिसेवमानः
स्वाध्यायनित्योऽस्पृहयन्परेषामेकान्तशील्यूर्ध्वगतिर्भवेत्सः २९
सर्वां नेताननुचरन्वत्सवच्चतुरः स्तनान्
न पावनतमं किंचित्सत्यादध्यगमं क्वचित् ३०
आचक्षेऽहं मनुष्येभ्यो देवेभ्यः प्रतिसंचरन्
सत्यं स्वर्गस्य सोपानं पारावारस्य नौरिव ३१
यादृशैः संनिवसति यादृशांश्चोपसेवते
यादृगिच्छेच्च भवितुं तादृग्भवति पूरुषः ३२
यदि सन्तं सेवते यद्यसन्तं तपस्विनं यदि वा स्तेनमेव
वासो यथा रङ्गवशं प्रयाति तथा स तेषां वशमभ्युपैति ३३
सदा देवाः साधुभिः संवदन्ते न मानुषं विषयं यान्ति द्रष्टुम्
नेन्दुः समः स्यादसमो हि वायुरुच्चावचं विषयं यः स वेद ३४
अदुष्टं वर्तमाने तु हृदयान्तरपूरुषे
तेनैव देवाः प्रीयन्ते सतां मार्गस्थितेन वै ३५
शिश्नोदरे येऽभिरताः सदैव स्तेना नरा वाक्परुषाश्च नित्यम्
अपेतदोषानिति तान्विदित्वा दूराद्देवाः संपरिवर्जयन्ति ३६
न वै देवा हीनसत्त्वेन तोष्याः सर्वाशिना दुष्कृतकर्मणा वा
सत्यव्रता ये तु नराः कृतज्ञा धर्मे रतास्तैः सह संभजन्ते ३७
अव्याहृतं व्याहृताच्छ्रेय आहुः सत्यं वदेद्व्याहृतं तद्द्वितीयम्

धर्मं वदेद्व्याहृतं तत्तृतीयं प्रियं वदेद्व्याहृतं तच्चतुर्थम् ३८
साध्या ऊचुः
केनायमावृतो लोकः केन वा न प्रकाशते
केन त्यजति मित्राणि केन स्वर्गं न गच्छति ३९
हंस उवाच
अज्ञानेनावृतो लोको मात्सर्यान्न प्रकाशते
लोभात्त्यजति मित्राणि सङ्गात्स्वर्गं न गच्छति ४०
साध्या ऊचुः
कः स्विदेको रमते ब्राह्मणानां कः स्विदेको बहुभिर्जोषमास्ते
कः स्विदेको बलवान्दुर्बलोऽपि कः स्विदेषां कलहं नान्ववैति ४१
हंस उवाच
प्राज्ञ एको रमते ब्राह्मणानां प्राज्ञ एको बहुभिर्जोषमास्ते
प्राज्ञ एको बलवान्दुर्बलोऽपि प्राज्ञ एषां कलहं नान्ववैति ४२
साध्या ऊचुः
किं ब्राह्मणानां देवत्वं किं च साधुत्वमुच्यते
असाधुत्वं च किं तेषां किमेषां मानुषं मतम् ४३
हंस उवाच
स्वाध्याय एषां देवत्वं व्रतं साधुत्वमुच्यते
असाधुत्वं परीवादो मृत्युर्मानुषमुच्यते ४४
भीष्म उवाच
संवाद इत्ययं श्रेष्ठः साध्यानां परिकीर्तितः
क्षेत्रं वै कर्मणां योनिः सद्भावः सत्यमुच्यते ४५
इति श्रीमहाभारते शान्तिपर्वणि अष्टाशीत्यधिकद्विशततमोऽध्यायः २८८

## एकोननवत्यधिकद्विशततमोऽध्यायः

युधिष्ठिर उवाच
सांख्ये योगे च मे तात विशेषं वक्तुमर्हसि
तव सर्वज्ञ सर्वं हि विदितं कुरुसत्तम १
भीष्म उवाच
सांख्याः सांख्यं प्रशंसन्ति योगा योगं द्विजातयः

वदन्ति कारणैः श्रेष्ठ्यं स्वपक्षोद्भावनाय वै २
अनीश्वरः कथं मुच्येदित्येवं शत्रुकर्शन
वदन्ति कारणैः श्रैष्ठ्यं योगाः सम्यङ्मनीषिणः ३
वदन्ति कारणं चेदं सांख्याः सम्यग्द्विजातयः
विज्ञायेह गतीः सर्वा विरक्तो विषयेषु यः ४
ऊर्ध्वं स देहात्सुव्यक्तं विमुच्येदिति नान्यथा
एतदाहुर्महाप्राज्ञाः सांख्यं वै मोक्षदर्शनम् ५
स्वपक्षे कारणं ग्राह्यं समर्थं वचनं हितम्
शिष्टानां हि मतं ग्राह्यं त्वद्विधैः शिष्टसंमतैः ६
प्रत्यक्षहेतवो योगाः सांख्याः शास्त्रविनिश्चयाः
उभे चैते मते तत्त्वे मम तात युधिष्ठिर ७
उभे चैते मते ज्ञाने नृपते शिष्टसंमते
अनुष्ठिते यथाशास्त्रं नयेतां परमां गतिम् ८
तुल्यं शौचं तपोयुक्तं दया भूतेषु चानघ
व्रतानां धारणं तुल्यं दर्शनं न समं तयोः ९
युधिष्ठिर उवाच
यदि तुल्यं व्रतं शौचं दया चात्र पितामह
तुल्यं न दर्शनं कस्मात्तन्मे ब्रूहि पितामह १०
भीष्म उवाच
रागं मोहं तथा स्नेहं कामं क्रोधं च केवलम्
योगाच्छित्त्वादितो दोषान्पञ्चैतान्प्राप्नुवन्ति तत् ११
यथा चानिमिषां स्थूला जालं छित्त्वा पुनर्जलम्
प्राप्नुवन्ति तथा योगास्तत्पदं वीतकल्मषाः १२
तथैव वागुरां छित्त्वा बलवन्तो यथा मृगाः
प्राप्नुयुर्विमलं मार्गं विमुक्ताः सर्वबन्धनैः १३
लोभजानि तथा राजन्बन्धनानि बलान्विताः
छित्त्वा योगाः परं मार्गं गच्छन्ति विमलाः शिवम् १४
अबलाश्च मृगा राजन्वागुरासु तथापरे
विनश्यन्ति न संदेहस्तद्वद्योगबलादृते १५
बलहीनाश्च कौन्तेय यथा जालगता झषाः

अन्तं गच्छन्ति राजेन्द्र तथा योगाः सुदुर्बलाः १६
यथा च शकुनाः सूक्ष्मं प्राप्य जालमरिंदम
तत्र सक्ता विपद्यन्ते मुच्यन्ते च बलान्विताः १७
कर्मजैर्बन्धनैर्बद्धास्तद्वद्योगाः परंतप
अबला वै विनश्यन्ति मुच्यन्ते च बलान्विताः १८
अल्पकश्च यथा राजन्वह्निः शाम्यति दुर्बलः
आक्रान्त इन्धनैः स्थूलैस्तद्वद्योगोऽबलः प्रभो १९
स एव च यदा राजन्वह्निर्जातबलः पुनः
समीरणयुतः कृत्स्नां दहेत्क्षिप्रं महीमपि २०
तद्वज्जातबलो योगी दीप्ततेजा महाबलः
अन्तकाल इवादित्यः कृत्स्नं संशोषयेज्जगत् २१
दुर्बलाश्च यथा राजन्स्रोतसा ह्रियते नरः
बलहीनस्तथा योगो विषयैर्ह्रियतेऽवशः २२
तदेव च यथा स्रोतो विष्टम्भयति वारणः
तद्वद्योगबलं लब्ध्वा व्यूहते विषयान्बहून् २३
विशन्ति चावशाः पार्थ योगा योगबलान्विताः
प्रजापतीनृषीन्देवान्महाभूतानि चेश्वराः २४
न यमो नान्तकः क्रुद्धो न मृत्युर्भीमविक्रमः
ईशते नृपते सर्वे योगस्यामिततेजसः २५
आत्मनां च सहस्राणि बहूनि भरतर्षभ
योगः कुर्याद्बलं प्राप्य तैश्च सर्वैर्महीं चरेत् २६
प्राप्नुयाद्विषयांश्चैव पुनश्चोग्रं तपश्चरेत्
संक्षिपेच्च पुनः पार्थ सूर्यस्तेजोगुणानिव २७
बलस्थस्य हि योगस्य बन्धनेशस्य पार्थिव
विमोक्षप्रभविष्णुत्वमुपपन्नमसंशयम् २८
बलानि योगे प्रोक्तानि मयैतानि विशां पते
निदर्शनार्थं सूक्ष्माणि वक्ष्यामि च पुनस्तव २९
आत्मनश्च समाधाने धारणां प्रति चाभिभो
निदर्शनानि सूक्ष्माणि शृणु मे भरतर्षभ ३०
अप्रमत्तो यथा धन्वी लक्ष्यं हन्ति समाहितः

युक्तः सम्यक्तथा योगी मोक्षं प्राप्नोत्यसंशयम् ३१
स्नेहपूर्णे यथा पात्रे मन आधाय निश्चलम्
पुरुषो यत्त आरोहेत्सोपानं युक्तमानसः ३२
युक्त्वा यथायमात्मानं योगः पार्थिव निश्चलम्
करोत्यमलमात्मानं भास्करोपमदर्शनम् ३३
यथा च नावं कौन्तेय कर्णधारः समाहितः
महार्णवगतां शीघ्रं नयेत्पार्थिव पत्तनम् ३४
तद्वदात्मसमाधानं युक्त्वा योगेन तत्त्ववित्
दुर्गमं स्थानमाप्नोति हित्वा देहमिमं नृप ३५
सारथिश्च यथा युक्त्वा सदश्वान्सुसमाहितः
देशमिष्टं नयत्याशु धन्विनं पुरुषर्षभ ३६
तथैव नृपते योगी धारणासु समाहितः
प्राप्नोत्याशु परं स्थानं लक्षं मुक्त इवाशुगः ३७
आवेश्यात्मनि चात्मानं योगी तिष्ठति योऽचलः
पापं हन्तेव मीनानां पदमाप्नोति सोऽजरम् ३८
नाभ्यां कण्ठे च शीर्षे च हृदि वक्षसि पार्श्वयोः
दर्शने स्पर्शने चापि घ्राणे चामितविक्रम ३९
स्थानेष्वेतेषु यो योगी महाव्रतसमाहितः
आत्मना सूक्ष्ममात्मानं युङ्क्ते सम्यग्विशां पते ४०
स शीघ्रममलप्रज्ञः कर्म दग्ध्वा शुभाशुभम्
उत्तमं योगमास्थाय यदीच्छति विमुच्यते ४१
युधिष्ठिर उवाच
आहारान्कीदृशान्कृत्वा कानि जित्वा च भारत
योगी बलमवाप्नोति तद्भवान्वक्तुमर्हति ४२
भीष्म उवाच
कणानां भक्षणे युक्तः पिण्याकस्य च भक्षणे
स्नेहानां वर्जने युक्तो योगी बलमवाप्नुयात् ४३
भुञ्जानो यावकं रूक्षं दीर्घकालमरिंदम
एकारामो विशुद्धात्मा योगी बलमवाप्नुयात् ४४
पक्षान्मासानृतूंश्चित्रान्संचरंश्च गुहास्तथा

अपः पीत्वा पयोमिश्रा योगी बलमवाप्नुयात् ४५
अखण्डमपि वा मासं सततं मनुजेश्वर
उपोष्य सम्यक्शुद्धात्मा योगी बलमवाप्नुयात् ४६
कामं जित्वा तथा क्रोधं शीतोष्णे वर्षमेव च
भयं निद्रां तथा श्वासं पौरुषं विषयांस्तथा ४७
अरतिं दुर्जयां चैव घोरां तृष्णां च पार्थिव
स्पर्शान्सर्वांस्तथा तन्द्रीं दुर्जयां नृपसत्तम ४८
दीपयन्ति महात्मानः सूक्ष्ममात्मानमात्मना
वीतरागा महाप्राज्ञा ध्यानाध्ययनसंपदा ४९
दुर्गस्त्वेष मतः पन्था ब्राह्मणानां विपश्चिताम्
नः कश्चिद्व्रजति ह्यस्मिन्क्षेमेण भरतर्षभ ५०
यथा कश्चिद्वनं घोरं बहुसर्पसरीसृपम्
श्वभ्रवत्तोयहीनं च दुर्गमं बहुकण्टकम् ५१
अभक्तमटवीप्रायं दावदग्धमहीरुहम्
पन्थानं तस्कराकीर्णं क्षेमेणाभिपतेद्युवा ५२
योगमार्गं तथासाद्य यः कश्चिद्भजते द्विजः
क्षेमेणोपरमेन्मार्गाद्बहुदोषो हि स स्मृतः ५३
सुस्थेयं क्षुरधारासु निशितासु महीपते
धारणासु तु योगस्य दुःस्थेयमकृतात्मभिः ५४
विपन्ना धारणास्तात नयन्ति न शुभां गतिम्
नेतृहीना यथा नावः पुरुषानर्णवे नृप ५५
यस्तु तिष्ठति कौन्तेय धारणासु यथाविधि
मरणं जन्म दुःखं च सुखं च स विमुञ्चति ५६
नानाशास्त्रेषु निष्पन्नं योगेष्विदमुदाहृतम्
परं योगं तु यत्कृत्स्नं निश्चितं तद्द्विजातिषु ५७
परं हि तद्ब्रह्म महन्महात्मन्ब्रह्माणमीशं वरदं च विष्णुम्
भवं च धर्मं च षडाननं च षड्ब्रह्मपुत्रांश्च महानुभावान् ५८
तमश्च कष्टं सुमहद्रजश्च सत्त्वं च शुद्धं प्रकृतिं परां च
सिद्धिं च देवीं वरुणस्य पत्नीं तेजश्च कृत्स्नं सुमहच्च धैर्यम् ५९
नराधिपं वै विमलं सतारं विश्वांश्च देवानुरगान्पितॄंश्च

शैलांश्च कृत्स्नानुदधींश्च घोरान्नदीश्च सर्वाः सवनान्घनांश्च ६०
नागान्नगान्यक्षगणान्दिशश्च गन्धर्वसंघान्पुरुषान्स्त्रियश्च
परस्परं प्राप्य महान्महात्मा विशेत योगी नचिराद्विमुक्तः ६१
कथा च येयं नृपते प्रसक्ता देवे महावीर्यमतौ शुभेयम्
योगान्स सर्वानभिभूय मर्त्यान्नारायणात्मा कुरुते महात्मा ६२
इति श्रीमहाभारते शान्तिपर्वणि एकोननवत्यधिकद्विशततमोऽध्यायः २८९

नवत्यधिकद्विशततमोऽध्यायः

युधिष्ठिर उवाच
सम्यक्त्वयायं नृपते वर्णितः शिष्टसंमतः
योगमार्गो यथान्यायं शिष्यायेह हितैषिणा १
सांख्ये त्विदानीं कार्त्स्न्येन विधिं प्रब्रूहि पृच्छते
त्रिषु लोकेषु यज्ज्ञानं सर्वं तद्विदितं हि ते २
भीष्म उवाच
शृणु मे त्वमिदं शुद्धं सांख्यानां विदितात्मनाम्
विहितं यतिभिर्बुद्धैः कपिलादिभिरीश्वरैः ३
यस्मिन्न विभ्रमाः केचिद्दृश्यन्ते मनुजर्षभ
गुणाश्च यस्मिन्बहवो दोषहानिश्च केवला ४
ज्ञानेन परिसंख्याय सदोषान्विषयान्नृप
मानुषान्दुर्जयान्कृत्स्नान्पैशाचान्विषयांस्तथा ५
राक्षसान्विषयाञ्ज्ञात्वा यक्षाणां विषयांस्तथा
विषयानौरगाञ्ज्ञात्वा गान्धर्वविषयांस्तथा ६
पितृणां विषयाञ्ज्ञात्वा तिर्यक्षु चरतां नृप
सुपर्णविषयाञ्ज्ञात्वा मरुतां विषयांस्तथा ७
राजर्षिविषयाञ्ज्ञात्वा ब्रह्मर्षिविषयांस्तथा
आसुरान्विषयाञ्ज्ञात्वा वैश्वदेवांस्तथैव च ८
देवर्षिविषयाञ्ज्ञात्वा योगानामपि चेश्वरान्
विषयांश्च प्रजेशानां ब्रह्मणो विषयांस्तथा ९
आयुषश्च परं कालं लोके विज्ञाय तत्त्वतः
सुखस्य च परं तत्त्वं विज्ञाय वदतां वर १०

प्राप्ते काले च यद्दुःखं पततां विषयैषिणाम्
तिर्यक्च पततां दुःखं पततां नरके च यत् ११
स्वर्गस्य च गुणान्कृत्स्नान्दोषान्सर्वांश्च भारत
वेदवादे च ये दोषा गुणा ये चापि वैदिकाः १२
ज्ञानयोगे च ये दोषा गुणा योगे च ये नृप
सांख्यज्ञाने च ये दोषास्तथैव च गुणा नृप १३
सत्त्वं दशगुणं ज्ञात्वा रजो नवगुणं तथा
तमश्चाष्टगुणं ज्ञात्वा बुद्धिं सप्तगुणां तथा १४
षड्गुणं च नभो ज्ञात्वा मनः पञ्चगुणं तथा
बुद्धिं चतुर्गुणां ज्ञात्वा तमश्च त्रिगुणं महत् १५
द्विगुणं च रजो ज्ञात्वा सत्त्वमेकगुणं पुनः
मार्गं विज्ञाय तत्त्वेन प्रलये प्रेक्षणं तथा १६
ज्ञानविज्ञानसंपन्नाः कारणैर्भाविताः शुभैः
प्राप्नुवन्ति शुभं मोक्षं सूक्ष्मा इव नभः परम् १७
रूपेण दृष्टिं संयुक्तां घ्राणं गन्धगुणेन च
शब्दे सक्तं तथा श्रोत्रं जिह्वां रसगुणेषु च १८
तनुं स्पर्शे तथा सक्तां वायुं नभसि चाश्रितम्
मोहं तमसि संसक्तं लोभमर्थेषु संश्रितम् १९
विष्णुं क्रान्ते बले शक्रं कोष्ठे सक्तं तथानलम्
अप्सु देवीं तथा सक्तामपस्तेजसि चाश्रिताः २०
तेजो वायौ तु संसक्तं वायुं नभसि चाश्रितम्
नभो महति संयुक्तं महद्बुद्धौ च संश्रितम् २१
बुद्धिं तमसि संसक्तां तमो रजसि चाश्रितम्
रजः सत्त्वे तथा सक्तं सत्त्वं सक्तं तथात्मनि २२
सक्तमात्मानमीशे च देवे नारायणे तथा
देवं मोक्षे च संसक्तं मोक्षं सक्तं तु न क्वचित् २३
ज्ञात्वा सत्त्वयुतं देहं वृतं षोडशभिर्गुणैः
स्वभावं चेतनां चैव ज्ञात्वा वै देहमाश्रिते २४
मध्यस्थमेकमात्मानं पापं यस्मिन्न विद्यते
द्वितीयं कर्म विज्ञाय नृपते विषयैषिणाम् २५

इन्द्रियाणीन्द्रियार्थांश्च सर्वानात्मनि संश्रितान्
प्राणापानौ समानं च व्यानोदानौ च तत्त्वतः २६
अवाक्चैवानिलं ज्ञात्वा प्रवहं चानिलं पुनः
सप्त वातांस्तथा शेषान्सप्तधा विधिवत्पुनः २७
प्रजापतीनृषींश्चैव मार्गांश्च सुबहून्वरान्
सप्तर्षींश्च बहूञ्ज्ञात्वा राजर्षींश्च परंतप २८
सुरर्षीन्महतश्चान्यान्महर्षीन्सूर्यसंनिभान्
ऐश्वर्याच्च्यावितान्ज्ञात्वा कालेन महता नृप २९
महतां भूतसंघानां श्रुत्वा नाशं च पार्थिव
गतिं चाप्यशुभां ज्ञात्वा नृपते पापकर्मणाम् ३०
वैतरण्यां च यद्दुःखं पतितानां यमक्षये
योनीषु च विचित्रासु संसारानशुभांस्तथा ३१
जठरे चाशुभे वासं शोणितोदकभाजने
श्लेष्ममूत्रपुरीषे च तीव्रगन्धसमन्विते ३२
शुक्रशोणितसंघाते मज्जास्नायुपरिग्रहे
सिराशतसमाकीर्णे नवद्वारे पुरेऽशुचौ ३३
विज्ञायाहितमात्मानं योगांश्च विविधान्नृप
तामसानां च जन्तूनां रमणीयावृतात्मनाम् ३४
सात्त्विकानां च जन्तूनां कुत्सितं भरतर्षभ
गर्हितं महतामर्थे सांख्यानां विदितात्मनाम् ३५
उपप्लवांस्तथा घोराञ्शशिनस्तेजसस्तथा
ताराणां पतनं दृष्ट्वा नक्षत्राणां च पर्ययम् ३६
द्वंद्वानां विप्रयोगं च विज्ञाय कृपणं नृप
अन्योन्यभक्षणं दृष्ट्वा भूतानामपि चाशुभम् ३७
बाल्ये मोहं च विज्ञाय क्षयं देहस्य चाशुभम्
रागे मोहे च संप्राप्ते क्वचित्सत्त्वं समाश्रितम् ३८
सहस्रेषु नरः कश्चिन्मोक्षबुद्धिं समाश्रितः
दुर्लभत्वं च मोक्षस्य विज्ञाय श्रुतिपूर्वकम् ३९
बहुमानमलब्धेषु लब्धे मध्यस्थतां पुनः
विषयाणां च दौरात्म्यं विज्ञाय नृपते पुनः ४०

गतासूनां च कौन्तेय देहान्दृष्ट्वा तथाशुभान्
वासं कुलेषु जन्तूनां दुःखं विज्ञाय भारत ४१
ब्रह्मघ्नानां गतिं ज्ञात्वा पतितानां सुदारुणाम्
सुरापाने च सक्तानां ब्राह्मणानां दुरात्मनाम्
गुरुदारप्रसक्तानां गतिं विज्ञाय चाशुभाम् ४२
जननीषु च वर्तन्ते ये न सम्यग्युधिष्ठिर
सदेवकेषु लोकेषु ये न वर्तन्ति मानवाः ४३
तेन ज्ञानेन विज्ञाय गतिं चाशुभकर्मणाम्
तिर्यग्योनिगतानां च विज्ञाय गतयः पृथक् ४४
वेदवादांस्तथा चित्रानृतूनां पर्ययांस्तथा
क्षयं संवत्सराणां च मासानां प्रक्षयं तथा ४५
पक्षक्षयं तथा दृष्ट्वा दिवसानां च संक्षयम्
क्षयं वृद्धिं च चन्द्रस्य दृष्ट्वा प्रत्यक्षतस्तथा ४६
वृद्धिं दृष्ट्वा समुद्राणां क्षयं तेषां तथा पुनः
क्षयं धनानां च तथा पुनर्वृद्धिं तथैव च ४७
संयोगानां क्षयं दृष्ट्वा युगानां च विशेषतः
क्षयं च दृष्ट्वा शैलानां क्षयं च सरितां तथा ४८
वर्णानां च क्षयं दृष्ट्वा क्षयान्तं च पुनः पुनः
जरामृत्युं तथा जन्म दृष्ट्वा दुःखानि चैव ह ४९
देहदोषांस्तथा ज्ञात्वा तेषां दुःखं च तत्त्वतः
देहविक्लवतां चैव सम्यग्विज्ञाय भारत ५०
आत्मदोषांश्च विज्ञाय सर्वानात्मनि संश्रितान्
स्वदेहादुत्थितान्गन्धांस्तथा विज्ञाय चाशुभान् ५१
युधिष्ठिर उवाच
कान्स्वगात्रोद्भवान्दोषान्पश्यस्यमितविक्रम
एतन्मे संशयं कृत्स्नं वक्तुमर्हसि तत्त्वतः ५२
भीष्म उवाच
पञ्च दोषान्प्रभो देहे प्रवदन्ति मनीषिणः
मार्गज्ञाः कापिलाः सांख्याः शृणु तानरिसूदन ५३
कामक्रोधौ भयं निद्रा पञ्चमः श्वास उच्यते

एते दोषाः शरीरेषु दृश्यन्ते सर्वदेहिनाम् ५४
छिन्दन्ति क्षमया क्रोधं कामं संकल्पवर्जनात्
सत्त्वसंशीलनान्निद्रामप्रमादाद्भयं तथा
छिन्दन्ति पञ्चमं श्वासं लघ्वाहारतया नृप ५५
गुणान्गुणशतैर्ज्ञात्वा दोषान्दोषशतैरपि
हेतून्हेतुशतैश्चित्रैश्चित्रान्विज्ञाय तत्त्वतः ५६
अपां फेनोपमं लोकं विष्णोर्मायाशतैर्वृतम्
चित्तभित्तिप्रतीकाशं नलसारमनर्थकम् ५७
तमः श्वभ्रनिभं दृष्ट्वा वर्षबुद्बुदसंनिभम्
नाशप्रायं सुखाद्धीनं नाशोत्तरमभावगम्
रजस्तमसि संमग्नं पङ्के द्विपमिवावशम् ५८
सांख्या राजन्महाप्राज्ञास्त्यक्त्वा देहं प्रजाकृतम्
ज्ञानज्ञेयेन सांख्येन व्यापिना महता नृप ५९
राजसानशुभान्गन्धांस्तामसांश्च तथाविधान्
पुण्यांश्च सात्त्विकान्गन्धान्स्पर्शजान्देहसंश्रितान्
छित्त्वाशु ज्ञानशस्त्रेण तपोदण्डेन भारत ६०
ततो दुःखोदकं घोरं चिन्ताशोकमहाह्रदम्
व्याधिमृत्युमहाग्राहं महाभयमहोरगम् ६१
तमःकूर्मं रजोमीनं प्रज्ञया संतरन्त्युत
स्नेहपङ्कं जरादुर्गं स्पर्शद्वीपमरिंदम ६२
कर्मागाधं सत्यतीरं स्थितव्रतमिदं नृप
हिंसाशीघ्रमहावेगं नानारसमहाकरम् ६३
नानाप्रीतिमहारत्नं दुःखज्वरसमीरणम्
शोकतृष्णामहावर्तं तीक्ष्णव्याधिमहागजम् ६४
अस्थिसंघातसंघाटं श्लेष्मफेनमरिंदम
दानमुक्ताकरं भीमं शोणितह्रदविद्रुमम् ६५
हसितोत्क्रुष्टनिर्घोषं नानाज्ञानसुदुस्तरम्
रोदनाश्रुमलक्षारं सङ्गत्यागपरायणम् ६६
पुनराजन्मलोकौघं पुत्रबान्धवपत्तनम्
अहिंसासत्यमर्यादं प्राणत्यागमहोर्मिणम् ६७

वेदान्तगमनद्वीपं सर्वभूतदयोदधिम्
मोक्षदुष्प्रापविषयं वडवामुखसागरम् ६८
तरन्ति मुनयः सिद्धा ज्ञानयोगेन भारत
तीर्त्वा च दुस्तरं जन्म विशन्ति विमलं नभः ६९
ततस्तान्सुकृतीन्सांख्यान्सूर्यो वहति रश्मिभिः
पद्मतन्तुवदाविश्य प्रवहन्विषयान्नृप ७०
तत्र तान्प्रवहो वायुः प्रतिगृह्णाति भारत
वीतरागान्यतीन्सिद्धान्वीर्ययुक्तांस्तपोधनान् ७१
सूक्ष्मः शीतः सुगन्धी च सुखस्पर्शश्च भारत
सप्तानां मरुतां श्रेष्ठो लोकान्गच्छति यः शुभान्
स तान्वहति कौन्तेय नभसः परमां गतिम् ७२
नभो वहति लोकेश रजसः परमां गतिम्
रजो वहति राजेन्द्र सत्त्वस्य परमां गतिम् ७३
सत्त्वं वहति शुद्धात्मन्परं नारायणं प्रभुम्
प्रभुर्वहति शुद्धात्मा परमात्मानमात्मना ७४
परमात्मानमासाद्य तद्भूतायतनामलाः
अमृतत्वाय कल्पन्ते न निवर्तन्ति चाभिभो
परमा स गतिः पार्थ निर्द्वंद्वानां महात्मनाम् ७५
युधिष्ठिर उवाच
स्थानमुत्तममासाद्य भगवन्तं स्थिरव्रताः
आजन्ममरणं वा ते स्मरन्त्युत न वानघ ७६
यदत्र तथ्यं तन्मे त्वं यथावद्वक्तुमर्हसि
त्वदृते मानवं नान्यं प्रष्टुमर्हामि कौरव ७७
मोक्षदोषो महानेष प्राप्य सिद्धिं गतानृषीन्
यदि तत्रैव विज्ञाने वर्तन्ते यतयः परे ७८
प्रवृत्तिलक्षणं धर्मं पश्यामि परमं नृप
मग्नस्य हि परे ज्ञाने किं न दुःखतरं भवेत् ७९
भीष्म उवाच
यथान्यायं त्वया तात प्रश्नः पृष्टः सुसंकटः
बुद्धानामपि संमोहः प्रश्नेऽस्मिन्भरतर्षभ

अत्रापि तत्त्वं परमं शृणु सम्यङ्मयेरितम् ८०
बुद्धिश्च परमा यत्र कापिलानां महात्मनाम्
इन्द्रियाण्यपि बुध्यन्ते स्वदेहं देहिनो नृप
कारणान्यात्मनस्तानि सूक्ष्मः पश्यति तैस्तु सः ८१
आत्मना विप्रहीणानि काष्ठकुड्यसमानि तु
विनश्यन्ति न संदेहः फेना इव महार्णवे ८२
इन्द्रियैः सह सुप्तस्य देहिनः शत्रुतापन
सूक्ष्मश्चरति सर्वत्र नभसीव समीरणः ८३
स पश्यन्ति यथान्यायं स्पर्शान्स्पृशति चाभिभो
बुध्यमानो यथापूर्वमखिलेनेह भारत ८४
इन्द्रियाणीह सर्वाणि स्वे स्वे स्थाने यथाविधि
अनीशत्वात्प्रलीयन्ते सर्पा हतविषा इव ८५
इन्द्रियाणां तु सर्वेषां स्वस्थानेष्वेव सर्वशः
आक्रम्य गतयः सूक्ष्माश्चरत्यात्मा न संशयः ८६
सत्त्वस्य च गुणान्कृत्स्नान्रजसश्च गुणान्पुनः
गुणांश्च तमसः सर्वान्गुणान्बुद्धेश्च भारत ८७
गुणांश्च मनसस्तद्वन्नभसश्च गुणांस्तथा
गुणान्वायोश्च धर्मात्मंस्तेजसश्च गुणान्पुनः ८८
अपां गुणांस्तथा पार्थ पार्थिवांश्च गुणानपि
सर्वात्मना गुणैर्व्याप्य क्षेत्रज्ञः स युधिष्ठिर ८९
आत्मा च याति क्षेत्रज्ञं कर्मणी च शुभाशुभे
शिष्या इव महात्मानमिन्द्रियाणि च तं प्रभो ९०
प्रकृतिं चाप्यतिक्रम्य गच्छत्यात्मानमव्ययम्
परं नारायणात्मानं निर्द्वन्द्वं प्रकृतेः परम् ९१
विमुक्तः पुण्यपापेभ्यः प्रविष्टस्तमनामयम्
परमात्मानमगुणं न निवर्तति भारत ९२
शिष्टं त्वत्र मनस्तात इन्द्रियाणि च भारत
आगच्छन्ति यथाकालं गुरोः संदेशकारिणः ९३
शक्यं चाल्पेन कालेन शान्तिं प्राप्तुं गुणार्थिना
एवं युक्तेन कौन्तेय युक्तज्ञानेन मोक्षिणा ९४

सांख्या राजन्महाप्राज्ञा गच्छन्ति परमां गतिम्
ज्ञानेनानेन कौन्तेय तुल्यं ज्ञानं न विद्यते ९५
अत्र ते संशयो मा भूज्ज्ञानं सांख्यं परं मतम्
अक्षरं ध्रुवमव्यक्तं पूर्वं ब्रह्म सनातनम् ९६
अनादिमध्यनिधनं निर्द्वन्द्वं कर्तृ शाश्वतम्
कूटस्थं चैव नित्यं च यद्वदन्ति शमात्मकाः ९७
यतः सर्वाः प्रवर्तन्ते सर्गप्रलयविक्रियाः
यच्च शंसन्ति शास्त्रेषु वदन्ति परमर्षयः ९८
सर्वे विप्राश्च देवाश्च तथागमविदो जनाः
ब्रह्मण्यं परमं देवमनन्तं परतोऽच्युतम् ९९
प्रार्थयन्तश्च तं विप्रा वदन्ति गुणबुद्धयः
सम्यग्युक्तास्तथा योगाः सांख्याश्चामितदर्शनाः १००
अमूर्तेस्तस्य कौन्तेय सांख्यं मूर्तिरिति श्रुतिः
अभिज्ञानानि तस्याहुर्मतं हि भरतर्षभ १०१
द्विविधानीह भूतानि पृथिव्यां पृथिवीपते
जङ्गमागमसंज्ञानि जङ्गमं तु विशिष्यते १०२
ज्ञानं महद्यद्धि महत्सु राजन्वेदेषु सांख्येषु तथैव योगे
यच्चापि दृष्टं विविधं पुराणं सांख्यागतं तन्निखिलं नरेन्द्र १०३
यच्चेतिहासेषु महत्सु दृष्टं यच्चार्थशास्त्रे नृप शिष्टजुष्टे
ज्ञानं च लोके यदिहास्ति किंचित्सांख्यागतं तच्च महन्महात्मन् १०४
शमश्च दृष्टः परमं बलं च ज्ञानं च सूक्ष्मं च यथावदुक्तम्
तपांसि सूक्ष्माणि सुखानि चैव सांख्ये यथावद्विहितानि राजन् १०५
विपर्यये तस्य हि पार्थ देवान्गच्छन्ति सांख्याः सततं सुखेन
तांश्चानुसंचार्य ततः कृतार्थाः पतन्ति विप्रेषु यतेषु भूयः १०६
हित्वा च देहं प्रविशन्ति मोक्षं दिवौकसो द्यामिव पार्थ सांख्याः
ततोऽधिकं तेऽभिरता महार्हे सांख्ये द्विजाः पार्थिव शिष्टजुष्टे १०७
तेषां न तिर्यग्गमनं हि दृष्टं नावाग्गतिः पापकृतं निवासः
न चाबुधानामपि ते द्विजातयो ये ज्ञानमेतन्नृपतेऽनुरक्ताः १०८
सांख्यं विशालं परमं पुराणं महार्णवं विमलमुदारकान्तम्
कृत्स्नं च सांख्यं नृपते महात्मा नारायणो धारयतेऽप्रमेयम् १०९

एतन्मयोक्तं नरदेव तत्त्वं नारायणो विश्वमिदं पुराणम्
स सर्गकाले च करोति सर्गं संहारकाले च तदत्ति भूयः ११०
इति श्रीमहाभारते शान्तिपर्वणि नवत्यधिकद्विशततमोऽध्यायः २९०

एकनवत्यधिकद्विशततमोऽध्यायः

युधिष्ठिर उवाच
किं तदक्षरमित्युक्तं यस्मान्नावर्तते पुनः
किं च तत्क्षरमित्युक्तं यस्मादावर्तते पुनः १
अक्षरक्षरयोर्व्यक्तिमिच्छाम्यरिनिषूदन
उपलब्धुं महाबाहो तत्त्वेन कुरुनन्दन २
त्वं हि ज्ञाननिधिर्विप्रैरुच्यसे वेदपारगैः
ऋषिभिश्च महाभागैर्यतिभिश्च महात्मभिः ३
शेषमल्पं दिनानां ते दक्षिणायनभास्करे
आवृत्ते भगवत्यर्के गन्तासि परमां गतिम् ४
त्वयि प्रतिगते श्रेयः कुतः श्रोष्यामहे वयम्
कुरुवंशप्रदीपस्त्वं ज्ञानद्रव्येण दीप्यसे ५
तदेतच्छ्रोतुमिच्छामि त्वत्तः कुरुकुलोद्वह
न तृप्यामीह राजेन्द्र शृण्वन्नमृतमीदृशम् ६
भीष्म उवाच
अत्र ते वर्तयिष्येऽहमितिहासं पुरातनम्
वसिष्ठस्य च संवादं करालजनकस्य च ७
वसिष्ठं श्रेष्ठमासीनमृषीणां भास्करद्युतिम्
पप्रच्छ जनको राजा ज्ञानं नैःश्रेयसं परम् ८
परमध्यात्मकुशलमध्यात्मगतिनिश्चयम्
मैत्रावरुणिमासीनमभिवाद्य कृताञ्जलि ९
स्वक्षरं प्रश्रितं वाक्यं मधुरं चाप्यनुल्बणम्
पप्रच्छर्षिवरं राजा करालजनकः पुरा १०
भगवञ्श्रोतुमिच्छामि परं ब्रह्म सनातनम्
यस्मान्न पुनरावृत्तिमाप्नुवन्ति मनीषिणः ११
यच्च तत्क्षरमित्युक्तं यत्रेदं क्षरते जगत्

यच्चाक्षरमिति प्रोक्तं शिवं क्षेम्यमनामयम् १२
वसिष्ठ उवाच
श्रूयतां पृथिवीपाल क्षरतीदं यथा जगत्
यन्न क्षरति पूर्वेण यावत्कालेन चाप्यथ १३
युगं द्वादशसाहस्रं कल्पं विद्धि चतुर्गुणम्
दशकल्पशतावृत्तं तदहर्ब्राह्ममुच्यते
रात्रिश्चैतावती राजन्यस्यान्ते प्रतिबुध्यते १४
सृजत्यनन्तकर्माणं महान्तं भूतमग्रजम्
मूर्तिमन्तममूर्तात्मा विश्वं शम्भुः स्वयम्भुवः
अणिमा लघिमा प्राप्तिरीशानं ज्योतिरव्ययम् १५
सर्वतःपाणिपादान्तं सर्वतोक्षिशिरोमुखम्
सर्वतःश्रुतिमल्लोके सर्वमावृत्य तिष्ठति १६
हिरण्यगर्भो भगवानेष बुद्धिरिति स्मृतः
महानिति च योगेषु विरिञ्चि इति चाप्युत १७
सांख्ये च पठ्यते शास्त्रे नामभिर्बहुधात्मकः
विचित्ररूपो विश्वात्मा एकाक्षर इति स्मृतः १८
वृतं नैकात्मकं येन कृत्स्नं त्रैलोक्यमात्मना
तथैव बहुरूपत्वाद्विश्वरूप इति स्मृतः १९
एष वै विक्रियापन्नः सृजत्यात्मानमात्मना
अहंकारं महातेजाः प्रजापतिमहंकृतम् २०
अव्यक्ताद्व्यक्तमुत्पन्नं विद्यासर्गं वदन्ति तम्
महान्तं चाप्यहंकारमविद्यासर्गमेव च २१
अविधिश्च विधिश्चैव समुत्पन्नौ तथैकतः
विद्याविद्येति विख्याते श्रुतिशास्त्रार्थचिन्तकैः २२
भूतसर्गमहंकारात्तृतीयं विद्धि पार्थिव
अहंकारेषु भूतेषु चतुर्थं विद्धि वैकृतम् २३
वायुर्ज्योतिरथाकाशमापोऽथ पृथिवी तथा
शब्दः स्पर्शश्च रूपं च रसो गन्धस्तथैव च २४
एवं युगपदुत्पन्नं दशवर्गमसंशयम्
पञ्चमं विद्धि राजेन्द्र भौतिकं सर्गमर्थवत् २५

श्रोत्रं त्वक्चक्षुषी जिह्वा घ्राणमेव च पञ्चमम्
वाक्च हस्तौ च पादौ च पायुर्मेढ्रं तथैव च २६
बुद्धीन्द्रियाणि चैतानि तथा कर्मेन्द्रियाणि च
संभूतानीह युगपन्मनसा सह पार्थिव २७
एषा तत्त्वचतुर्विंशा सर्वाकृतिषु वर्तते
यां ज्ञात्वा नाभिशोचन्ति ब्राह्मणास्तत्त्वदर्शिनः २८
एतद्देहं समाख्यातं त्रैलोक्ये सर्वदेहिषु
वेदितव्यं नरश्रेष्ठ सदेवनरदानवे २९
सयक्षभूतगन्धर्वे सकिंनरमहोरगे
सचारणपिशाचे वै सदेवर्षिनिशाचरे ३०
सदंशकीटमशके सपूतिकृमिमूषके
शुनि श्वपाके वैणेये सचाण्डाले सपुल्कसे ३१
हस्त्यश्वखरशार्दूले सवृक्षे गवि चैव ह
यच्च मूर्तिमयं किंचित्सर्वत्रैतन्निदर्शनम् ३२
जले भुवि तथाकाशे नान्यत्रेति विनिश्चयः
स्थानं देहवतामस्ति इत्येवमनुशुश्रुम ३३
कृत्स्नमेतावतस्तात क्षरते व्यक्तसंज्ञकम्
अहन्यहनि भूतात्मा ततः क्षर इति स्मृतः ३४
एतदक्षरमित्युक्तं क्षरतीदं यथा जगत्
जगन्मोहात्मकं प्राहुरव्यक्तं व्यक्तसंज्ञकम् ३५
महांश्चैवाग्रजो नित्यमेतत्क्षरनिदर्शनम्
कथितं ते महाराज यस्मान्नावर्तते पुनः ३६
पञ्चविंशतिमो विष्णुर्निस्तत्त्वस्तत्त्वसंज्ञकः
तत्त्वसंश्रयणादेतत्तत्त्वमाहुर्मनीषिणः ३७
यदमूर्त्यसृजद्व्यक्तं तत्तन्मूर्त्यधितिष्ठति
चतुर्विंशतिमो व्यक्तो ह्यमूर्तः पञ्चविंशकः ३८
स एव हृदि सर्वासु मूर्तिष्वातिष्ठतेऽत्मवान्
चेतयंश्चेतनो नित्यः सर्वमूर्तिरमूर्तिमान् ३९
सर्गप्रलयधर्मिण्या असर्गप्रलयात्मकः
गोचरे वर्तते नित्यं निर्गुणो गुणसंज्ञकः ४०

एवमेष महानात्मा सर्गप्रलयकोविदः
विकुर्वाणः प्रकृतिमानभिमन्यत्यबुद्धिमान् ४१
तमःसत्त्वरजोयुक्तस्तासु तास्विह योनिषु
लीयतेऽप्रतिबुद्धत्वादबुद्धजनसेवनात् ४२
सहवासो निवासात्मा नान्योऽहमिति मन्यते
योऽह सोहऽमिति ह्युक्त्वा गुणाननु निवर्तते ४३
तमसा तामसान्भावान्विविधान्प्रतिपद्यते
रजसा राजसांश्चैव सात्त्विकान्सत्त्वसंश्रयात् ४४
शुक्ललोहितकृष्णानि रूपाण्येतानि त्रीणि तु
सर्वाण्येतानि रूपाणि जानीहि प्राकृतानि वै ४५
तामसा निरयं यान्ति राजसा मानुषांस्तथा
सात्त्विका देवलोकाय गच्छन्ति सुखभागिनः ४६
निष्कैवल्येन पापेन तिर्यग्योनिमवाप्नुयात्
पुण्यपापेन मानुष्यं पुण्येनैकेन देवताः ४७
एवमव्यक्तविषयं क्षरमाहुर्मनीषिणः
पञ्चविंशतिमो योऽय ज्ञानादेव प्रवर्तते ४८
इति श्रीमहाभारते शान्तिपर्वणि एकनवत्यधिकद्विशततमोऽध्यायः २९१

## द्विनवत्यधिकद्विशततमोऽध्यायः

वसिष्ठ उवाच
एवमप्रतिबुद्धत्वादबुद्धमनुवर्तते
देहाद्देहसहस्राणि तथा समभिपद्यते १
तिर्यग्योनिसहस्रेषु कदाचिद्देवतास्वपि
उपपद्यति संयोगाद्गुणैः सह गुणक्षयात् २
मानुषत्वाद्दिवं याति देवो मानुष्यमेव च
मानुष्यान्निरयस्थानमानन्त्यं प्रतिपद्यते ३
कोशकारो यथात्मानं कीटः समनुरुन्धति
सूत्रतन्तुगुणैर्नित्यं तथायमगुणो गुणैः ४
द्वंद्वमेति च निर्द्वंद्वस्तासु तास्विह योनिषु
शीर्षरोगेऽक्षिरोगे च दन्तशूले गलग्रहे ५

जलोदरेऽशसां रोगे ज्वरगराडविषूचिके
श्वित्रे कुष्ठेऽग्निदाहे च सिध्मापस्मारयोरपि ६
यानि चान्यानि द्वंद्वानि प्राकृतानि शरीरिषु
उत्पद्यन्ते विचित्राणि तान्येषोऽप्यभिमन्यते
अभिमन्यत्यभीमानात्तथैव सुकृतान्यपि ७
एकवासाश्च दुर्वासाः शायी नित्यमधस्तथा
मराडूकशायी च तथा वीरासनगतस्तथा ८
चीरधारणमाकाशे शयनं स्थानमेव च
इष्टकाप्रस्तरे चैव कराटकप्रस्तरे तथा ९
भस्मप्रस्तरशायी च भूमिशय्यानुलेपनः
वीरस्थानाम्बुपङ्के च शयनं फलकेषु च १०
विविधासु च शय्यासु फलगृद्ध्यान्वितोऽफलः
मुञ्जमेखलनग्नत्वं क्षौमकृष्णाजिनानि च ११
शाणीवालपरीधानो व्याघ्रचर्मपरिच्छदः
सिंहचर्मपरीधानः पट्टवासास्तथैव च १२
कीटकावसनश्चैव चीरवासास्तथैव च
वस्त्राणि चान्यानि बहून्यभिमन्यत्यबुद्धिमान् १३
भोजनानि विचित्राणि रत्नानि विविधानि च
एकवस्त्रान्तराशित्वमेककालिकभोजनम् १४
चतुर्थाष्टमकालश्च षष्ठकालिक एव च
षड्रात्रभोजनश्चैव तथैवाष्टाहभोजनः १५
सप्तरात्रदशाहारो द्वादशाहार एव च
मासोपवासी मूलाशी फलाहारस्तथैव च १६
वायुभक्षोऽम्बुपिरायाकगोमयादन एव च
गोमूत्रभोजनश्चैव शाकपुष्पाद एव च १७
शैवालभोजनश्चैव तथाचामेन वर्तयन्
वर्तयञ्शीर्णपर्णैश्च प्रकीर्णफलभोजनः १८
विविधानि च कृच्छ्राणि सेवते सुखकाङ्क्षया
चान्द्रायणानि विधिवल्लिङ्गानि विविधानि च १९
चातुराश्रम्यपन्थानमाश्रयत्याश्रमानपि

उपासीनश्च पाषण्डान्गुहाः शैलांस्तथैव च २०
विविक्ताश्च शिलाछायास्तथा प्रस्रवणानि च
विविधानि च जप्यानि विविधानि व्रतानि च २१
नियमान्सुविचित्रांश्च विविधानि तपांसि च
यज्ञांश्च विविधाकारान्विधींश्च विविधांस्तथा २२
वणिक्पथं द्विजक्षत्रं वैश्यशूद्रं तथैव च
दानं च विविधाकारं दीनान्धकृपणेष्वपि २३
अभिमन्यत्यसंबोधात्तथैव त्रिविधान्गुणान्
सत्त्वं रजस्तमश्चैव धर्मार्थौ काम एव च
प्रकृत्यात्मानमेवात्मा एवं प्रविभजत्युत २४
स्वधाकारवषट्कारौ स्वाहाकारनमस्क्रियाः
याजनाध्यापनं दानं तथैवाहुः प्रतिग्रहम्
यजनाध्ययने चैव यच्चान्यदपि किंचन २५
जन्ममृत्युविवादे च तथा विशसनेऽपि च
शुभाशुभमयं सर्वमेतदाहुः क्रियापथम् २६
प्रकृतिः कुरुते देवी महाप्रलयमेव च
दिवसान्ते गुणानेतानभ्यैत्येकोवतिष्ठति २७
रश्मिजालमिवादित्यस्तत्कालेन नियच्छति
एवमेषोऽसकृत्सर्वं क्रीडार्थमभिमन्यते २८
आत्मरूपगुणानेतान्विविधान्हृदयप्रियान्
एवमेव विकुर्वाणः सर्गप्रलयकर्मणी २९
क्रियाक्रियापथे रक्तस्त्रिगुणस्त्रिगुणातिगः
क्रियाक्रियापथोपेतस्तथा तदिति मन्यते ३०
एवं द्वंद्वान्यथैतानि वर्तन्ते मम नित्यशः
ममैवैतानि जायन्ते बाधन्ते तानि मामिति ३१
निस्तर्तव्यान्यथैतानि सर्वाणीति नराधिप
मन्यतेऽय ह्यबुद्धित्वात्तथैव सुकृतान्यपि ३२
भोक्तव्यानि मयैतानि देवलोकगतेन वै
इहैव चैनं भोक्ष्यामि शुभाशुभफलोदयम् ३३
सुखमेव च कर्तव्यं सकृत्कृत्वा सुखं मम

यावदन्तं च मे सौख्यं जात्यां जात्यां भविष्यति ३४
भविष्यति च मे दुःखं कृतेनेहाप्यनन्तकम्
महद्दुःखं हि मानुष्यं निरये चापि मज्जनम् ३५
निरयाच्चापि मानुष्यं कालेनैष्याम्यहं पुनः
मनुष्यत्वाच्च देवत्वं देवत्वात्पौरुषं पुनः
मनुष्यत्वाच्च निरयं पर्यायेणोपगच्छति ३६
य एवं वेत्ति वै नित्यं निरात्मात्मगुणैर्वृतः
तेन देवमनुष्येषु निरये चोपपद्यते ३७
ममत्वेनावृतो नित्यं तत्रैव परिवर्तते
सर्गकोटिसहस्राणि मरणान्तासु मूर्तिषु ३८
य एवं कुरुते कर्म शुभाशुभफलात्मकम्
स एव फलमश्नाति त्रिषु लोकेषु मूर्तिमान् ३९
प्रकृतिः कुरुते कर्म शुभाशुभफलात्मकम्
प्रकृतिश्च तदश्नाति त्रिषु लोकेषु कामगा ४०
तिर्यग्योनौ मनुष्यत्वे देवलोके तथैव च
त्रीणि स्थानानि चैतानि जानीयात्प्राकृतानि ह ४१
अलिङ्गां प्रकृतिं त्वाहुर्लिङ्गैरनुमिमीमहे
तथैव पौरुषं लिङ्गमनुमानाद्धि पश्यति ४२
स लिङ्गान्तरमासाद्य प्राकृतं लिङ्गमव्रणम्
व्रणद्वाराण्यधिष्ठाय कर्माण्यात्मनि मन्यते ४३
श्रोत्रादीनि तु सर्वाणि पञ्च कर्मेन्द्रियाणि च
वागादीनि प्रवर्तन्ते गुणेष्वेव गुणैः सह
अहमेतानि वै कुर्वन्ममैतानीन्द्रियाणि च ४४
निरिन्द्रियोऽभिमन्येत व्रणवानस्मि निर्व्रणः
अलिङ्गो लिङ्गमात्मानमकालः कालमात्मनः ४५
असत्त्वं सत्त्वमात्मानमतत्त्वं तत्त्वमात्मनः
अमृत्युर्मृत्युमात्मानमचरश्चरमात्मनः ४६
अक्षेत्रः क्षेत्रमात्मानमसर्गः सर्गमात्मनः ४७
अभवो भवमात्मानमभयो भयमात्मनः
अक्षरः क्षरमात्मानमबुद्धिस्त्वभिमन्यते ४८

इति श्रीमहाभारते शान्तिपर्वणि द्विनवत्यधिकद्विशततमोऽध्यायः २९२

त्रिनवत्यधिकद्विशततमोऽध्यायः

वसिष्ठ उवाच
एवमप्रतिबुद्धत्वादबुद्धजनसेवनात्
सर्गकोटिसहस्राणि पतनान्तानि गच्छति १
धाम्ना धामसहस्राणि मरणान्तानि गच्छति
तिर्यग्योनौ मनुष्यत्वे देवलोके तथैव च २
चन्द्रमा इव कोशानां पुनस्तत्र सहस्रशः
लीयतेऽप्रतिबुद्धत्वादेवमेष ह्यबुद्धिमान् ३
कलाः पञ्चदशा योनिस्तद्धाम इति पठ्यते
नित्यमेतद्विजानीहि सोमः षोडशमी कला ४
कलायां जायतेऽजस्रं पुनः पुनरबुद्धिमान्
धाम तस्योपयुञ्जन्ति भूय एव तु जायते ५
षोडशी तु कला सूक्ष्मा स सोम उपधार्यताम्
न तूपयुज्यते देवैर्देवानुपयुनक्ति सा ६
एवं तां क्षपयित्वा हि जायते नृपसत्तम
सा ह्यस्य प्रकृतिर्दृष्टा तत्क्षयान्मोक्ष उच्यते ७
तदेवं षोडशकलं देहमव्यक्तसंज्ञकम्
ममायमिति मन्वानस्तत्रैव परिवर्तते ८
पञ्चविंशस्तथैवात्मा तस्यैवाप्रतिबोधनात्
विमलस्य विशुद्धस्य शुद्धानिलनिषेवणात् ९
अशुद्ध एव शुद्धात्मा तादृग्भवति पार्थिव
अबुद्धसेवनाच्चापि बुद्धोऽप्यबुधतां व्रजेत् १०
तथैवाप्रतिबुद्धोऽपि ज्ञेयो नृपतिसत्तम
प्रकृतेस्त्रिगुणायास्तु सेवनात्प्राकृतो भवेत् ११
करालजनक उवाच
अक्षरक्षरयोरेष द्वयोः संबन्ध इष्यते
स्त्रीपुंसोर्वापि भगवन्संबन्धस्तद्वदुच्यते १२
ऋते न पुरुषेणेह स्त्री गर्भं धारयत्युत

ऋते स्त्रियं न पुरुषो रूपं निर्वर्तयेत्तथा १३
अन्योन्यस्याभिसंबन्धादन्योन्यगुणसंश्रयात्
रूपं निर्वर्तयत्येतदेवं सर्वासु योनिषु १४
रत्यर्थमभिसंरोधादन्योन्यगुणसंश्रयात्
ऋतौ निर्वर्तते रूपं तद्वक्ष्यामि निदर्शनम् १५
ये गुणाः पुरुषस्येह ये च मातृगुणास्तथा
अस्थि स्नायु च मज्जा च जानीमः पितृतो द्विज १६
त्वङ्मांसं शोणितं चैव मातृजान्यपि शुश्रुम
एवमेतद्द्विजश्रेष्ठ वेदशास्त्रेषु पठ्यते १७
प्रमाणं यच्च वेदोक्तं शास्त्रोक्तं यच्च पठ्यते
वेदशास्त्रप्रमाणं च प्रमाणं तत्सनातनम् १८
एवमेवाभिसंबद्धौ नित्यं प्रकृतिपूरुषौ
पश्यामि भगवंस्तस्मान्मोक्षधर्मो न विद्यते १९
अथ वानन्तरकृतं किंचिदेव निदर्शनम्
तन्ममाचक्ष्व तत्त्वेन प्रत्यक्षो ह्यसि सर्वथा २०
मोक्षकामा वयं चापि काङ्क्षामो यदनामयम्
अदेहमजरं दिव्यमतीन्द्रियमनीश्वरम् २१
वसिष्ठ उवाच
यदेतदुक्तं भवता वेदशास्त्रनिदर्शनम्
एवमेतद्यथा चैतन्न गृह्णाति तथा भवान् २२
धार्यते हि त्वया ग्रन्थ उभयोर्वेदशास्त्रयोः
न तु ग्रन्थस्य तत्त्वज्ञो यथावत्त्वं नरेश्वर २३
यो हि वेदे च शास्त्रे च ग्रन्थधारणतत्परः
न च ग्रन्थार्थतत्त्वज्ञस्तस्य तद्धारणं वृथा २४
भारं स वहते तस्य ग्रन्थस्यार्थं न वेत्ति यः
यस्तु ग्रन्थार्थतत्त्वज्ञो नास्य ग्रन्थागमो वृथा २५
ग्रन्थस्यार्थं च पृष्टः संस्तादृशो वक्तुमर्हति
यथा तत्त्वाभिगमनादर्थं तस्य स विन्दति २६
यस्तु संसत्सु कथयेद्ग्रन्थार्थं स्थूलबुद्धिमान्
स कथं मन्दविज्ञानो ग्रन्थं वक्ष्यति निर्णयात् २७

निर्णयं चापि छिद्रात्मा न तं वन्दयति तत्त्वतः
सोपहासात्मतामेति यस्माच्चैवात्मवानपि २८
तस्मात्त्वं शृणु राजेन्द्र यथैतदनुदृश्यते
याथातथ्येन साङ्ख्येषु योगेषु च महात्मसु २९
यदेव योगाः पश्यन्ति सांख्यैस्तदनुगम्यते
एकं सांख्यं च योगं च यः पश्यति स बुद्धिमान् ३०
त्वङ्मांसं रुधिरं मेदः पित्तं मज्जास्थि स्नायु च
एतदैन्द्रियकं तात यद्भवानिदमाह वै ३१
द्रव्याद्द्रव्यस्य निष्पत्तिरिन्द्रियादिन्द्रियं तथा
देहाद्देहमवाप्नोति बीजाद्बीजं तथैव च ३२
निरिन्द्रियस्याबीजस्य निर्द्रव्यस्यास्य देहिनः
कथं गुणा भविष्यन्ति निर्गुणत्वान्महात्मनः ३३
गुणा गुणेषु जायन्ते तत्रैव निविशन्ति च
एवं गुणाः प्रकृतितो जायन्ते च न सन्ति च ३४
त्वङ्मांसं रुधिरं मेदः पित्तं मज्जास्थि स्नायु च
अष्टौ तान्यथ शुक्रेण जानीहि प्राकृतानि वै ३५
पुमांश्चैवापुमांश्चैव त्रैलिङ्ग्यं प्राकृतं स्मृतम्
नैव पुमान्पुमांश्चैव स लिङ्गीत्यभिधीयते ३६
अलिङ्गा प्रकृतिर्लिङ्गैरुपलभ्यति सात्मजैः
यथा पुष्पफलैर्नित्यमृतवो मूर्तयस्तथा ३७
एवमप्यनुमानेन ह्यलिङ्गमुपलभ्यते
पञ्चविंशतिमस्तात लिङ्गेष्वनियतात्मकः ३८
अनादिनिधनोऽनन्तः सर्वदर्शी निरामयः
केवलं त्वभिमानित्वाद्गुणेष्वगुण उच्यते ३९
गुणा गुणवतः सन्ति निर्गुणस्य कुतो गुणाः
तस्मादेवं विजानन्ति ये जना गुणदर्शिनः ४०
यदा त्वेष गुणान्सर्वान्प्राकृतानभिमन्यते
तदा स गुणवानेव परमेणानुपश्यति ४१
यत्तद्बुद्धेः परं प्राहुः सांख्या योगाश्च सर्वशः
बुध्यमानं महाप्राज्ञमबुद्धपरिवर्जनात् ४२

अप्रबुद्धमथाव्यक्तं सगुणं प्राहुरीश्वरम्
निर्गुणं चेश्वरं नित्यमधिष्ठातारमेव च ४३
प्रकृतेश्च गुणानां च पञ्चविंशतिकं बुधाः
सांख्ययोगे च कुशला बुध्यन्ते परमैषिणः ४४
यदा प्रबुद्धास्त्वव्यक्तमवस्थाजन्मभीरवः
बुध्यमानं प्रबुध्यन्ति गमयन्ति समं तदा ४५
एतन्निदर्शनं सम्यगसम्यगनुदर्शनम्
बुध्यमानाप्रबुद्धाभ्यां पृथक्पृथगरिंदम ४६
परस्परेणैतदुक्तं क्षराक्षरनिदर्शनम्
एकत्वमक्षरं प्राहुर्नानात्वं क्षरमुच्यते ४७
पञ्चविंशतिनिष्ठोऽय यदा सम्यक्प्रवर्तते
एकत्वं दर्शनं चास्य नानात्वं चाप्यदर्शनम् ४८
तत्त्वनिस्तत्त्वयोरेतत्पृथगेव निदर्शनम्
पञ्चविंशतिसर्गं तु तत्त्वमाहुर्मनीषिणः ४९
निस्तत्त्वं पञ्चविंशस्य परमाहुर्निदर्शनम्
वर्गस्य वर्गमाचारं तत्त्वं तत्त्वात्सनातनम् ५०
इति श्रीमहाभारते शान्तिपर्वणि त्रिनवत्यधिकद्विशततमोऽध्यायः २९३

## चतुर्नवत्यधिकद्विशततमोऽध्यायः

करालजनक उवाच
नानात्वैकत्वमित्युक्तं त्वयैतदृषिसत्तम
पश्यामि चाभिसंदिग्धमेतयोर्वै निदर्शनम् १
तथाप्रबुद्धबुद्धाभ्यां बुध्यमानस्य चानघ
स्थूलबुद्ध्या न पश्यामि तत्त्वमेतन्न संशयः २
अक्षरक्षरयोरुक्तं त्वया यदपि कारणम्
तदप्यस्थिरबुद्धित्वात्प्रनष्टमिव मेऽनघ ३
तदेतच्छ्रोतुमिच्छामि नानात्वैकत्वदर्शनम्
बुद्धमप्रतिबुद्धं च बुध्यमानं च तत्त्वतः ४
विद्याविद्ये च भगवन्नक्षरं क्षरमेव च
सांख्यं योगं च कात्स्न्र्येन पृथक्चैवापृथक्च ह ५

वसिष्ठ उवाच
हन्त ते संप्रवक्ष्यामि यदेतदनुपृच्छसि
योगकृत्यं महाराज पृथगेव शृणुष्व मे ६
योगकृत्यं तु योगानां ध्यानमेव परं बलम्
तच्चापि द्विविधं ध्यानमाहुर्वेदविदो जनाः ७
एकाग्रता च मनसः प्राणायामस्तथैव च
प्राणायामस्तु सगुणो निर्गुणो मनसस्तथा ८
मूत्रोत्सर्गे पुरीषे च भोजने च नराधिप
त्रिकालं नाभियुञ्जीत शेषं युञ्जीत तत्परः ९
इन्द्रियाणीन्द्रियार्थेभ्यो निवर्त्य मनसा मुनिः
दशद्वादशभिर्वापि चतुर्विंशात्परं ततः १०
तं चोदनाभिर्मतिमानात्मानं चोदयेदथ
तिष्ठन्तमजरं तं तु यत्तदुक्तं मनीषिभिः ११
तैश्चात्मा सततं ज्ञेय इत्येवमनुशुश्रुम
द्रव्यं ह्यहीनमनसो नान्यथेति विनिश्चयः १२
विमुक्तः सर्वसङ्गेभ्यो लघ्वाहारो जितेन्द्रियः
पूर्वरात्रे परे चैव धारयेत मनोऽत्मनि १३
स्थिरीकृत्येन्द्रियग्रामं मनसा मिथिलेश्वर
मनो बुद्ध्या स्थिरं कृत्वा पाषाण इव निश्चलः १४
स्थाणुवच्चाप्यकम्पः स्याद्गिरिवच्चापि निश्चलः
बुधा विधिविधानज्ञास्तदा युक्तं प्रचक्षते १५
न शृणोति न चाघ्राति न रस्यति न पश्यति
न च स्पर्शं विजानाति न संकल्पयते मनः १६
न चाभिमन्यते किंचिन्न च बुध्यति काष्ठवत्
तदा प्रकृतिमापन्ने युक्तमाहुर्मनीषिणः १७
निवाते च यथा दीप्यन्दीपस्तद्वत्स दृश्यते
निरिङ्गश्चोचलश्चोर्ध्वं न तिर्यग्गतिमाप्नुयात् १८
तदा तमनुपश्येत यस्मिन्दृष्टे तु कथ्यते
हृदयस्थोऽन्तरात्मेति ज्ञेयो ज्ञस्तात मद्विधैः १९
विधूम इव सप्तार्चिरादित्य इव रश्मिमान्

वैद्युतोऽग्निरिवाकाशे दृश्यतेऽत्मा तथात्मनि २०
यं पश्यन्ति महात्मानो धृतिमन्तो मनीषिणः
ब्राह्मणा ब्रह्मयोनिस्था ह्ययोनिममृतात्मकम् २१
तदेवाहुरणुभ्योऽणु तन्महद्भ्यो महत्तरम्
तदन्तः सर्वभूतेषु ध्रुवं तिष्ठन्न दृश्यते २२
बुद्धिद्रव्येण दृश्येत मनोदीपेन लोककृत्
महतस्तमसस्तात पारे तिष्ठन्नतामसः २३
स तमोनुद इत्युक्तस्तत्त्वज्ञैर्वेदपारगैः
विमलो वितमस्कश्च निर्लिङ्गोऽलिङ्गसंज्ञितः २४
योगमेतद्धि योगानां मन्ये योगस्य लक्षणम्
एवं पश्यं प्रपश्यन्ति आत्मानमजरं परम् २५
योगदर्शनमेतावदुक्तं ते तत्त्वतो मया
सांख्यज्ञानं प्रवक्ष्यामि परिसंख्यानिदर्शनम् २६
अव्यक्तमाहुः प्रकृतिं परां प्रकृतिवादिनः
तस्मान्महत्समुत्पन्नं द्वितीयं राजसत्तम २७
अहंकारस्तु महतस्तृतीयमिति नः श्रुतम्
पञ्च भूतान्यहंकारादाहुः सांख्यानुदर्शिनः २८
एताः प्रकृतयस्त्वष्टौ विकाराश्चापि षोडश
पञ्च चैव विशेषा वै तथा पञ्चेन्द्रियाणि च २९
एतावदेव तत्त्वानां सांख्यमाहुर्मनीषिणः
सांख्ये विधिविधानज्ञा नित्यं सांख्यपथे रताः ३०
यस्माद्यदभिजायेत तत्तत्रैव प्रलीयते
लीयन्ते प्रतिलोमानि सृज्यन्ते चान्तरात्मना ३१
अनुलोमेन जायन्ते लीयन्ते प्रतिलोमतः
गुणा गुणेषु सततं सागरस्योर्मयो यथा ३२
सर्गप्रलय एतावान्प्रकृतेर्नृपसत्तम
एकत्वं प्रलये चास्य बहुत्वं च यदासृजत्
एवमेव च राजेन्द्र विज्ञेयं ज्ञेयचिन्तकैः ३३
अधिष्ठातारमव्यक्तमस्याप्येतन्निदर्शनम्
एकत्वं च बहुत्वं च प्रकृतेरनु तत्त्ववान्

एकत्वं प्रलये चास्य बहुत्वं च प्रवर्तनात् ३४
बहुधात्मा प्रकुर्वीत प्रकृतिं प्रसवात्मिकाम्
तच्च क्षेत्रं महानात्मा पञ्चविंशोऽधितिष्ठति ३५
अधिष्ठातेति राजेन्द्र प्रोच्यते यतिसत्तमैः
अधिष्ठानादधिष्ठाता क्षेत्राणामिति नः श्रुतम् ३६
क्षेत्रं जानाति चाव्यक्तं क्षेत्रज्ञ इति चोच्यते
अव्यक्तिके पुरे शेते पुरुषश्चेति कथ्यते ३७
अन्यदेव च क्षेत्रं स्यादन्यः क्षेत्रज्ञ उच्यते
क्षेत्रमव्यक्तमित्युक्तं ज्ञाता वै पञ्चविंशकः ३८
अन्यदेव च ज्ञानं स्यादन्यज्ज्ञेयं तदुच्यते
ज्ञानमव्यक्तमित्युक्तं ज्ञेयो वै पञ्चविंशकः ३९
अव्यक्तं क्षेत्रमित्युक्तं तथा सत्त्वं तथेश्वरम्
अनीश्वरमतत्त्वं च तत्त्वं तत्पञ्चविंशकम् ४०
सांख्यदर्शनमेतावत्परिसंख्यानुदर्शनम्
सांख्यं प्रकुरुते चैव प्रकृतिं च प्रचक्षते ४१
तत्त्वानि च चतुर्विंशत्परिसंख्याय तत्त्वतः
सांख्याः सह प्रकृत्या तु निस्तत्त्वः पञ्चविंशकः ४२
पञ्चविंशोऽप्रबुद्धात्मा बुध्यमान इति स्मृतः
यदा तु बुध्यतेऽत्मानं तदा भवति केवलः ४३
सम्यग्दर्शनमेतावद्भाषितं तव तत्त्वतः
एवमेतद्विजानन्तः साम्यतां प्रतियान्त्युत ४४
सम्यङ्निदर्शनं नाम प्रत्यक्षं प्रकृतेस्तथा
गुणतत्त्वान्यथैतानि निर्गुणोऽन्यस्तथा भवेत् ४५
न त्वेवं वर्तमानानामावृत्तिर्विद्यते पुनः
विद्यतेऽक्षरभावत्वादपरस्परमव्ययम् ४६
पश्येरन्नेकमतयो न सम्यक्तेषु दर्शनम्
तेऽव्यक्तं प्रतिपद्यन्ते पुनः पुनररिंदम ४७
सर्वमेतद्विजानन्तो न सर्वस्य प्रबोधनात्
व्यक्तीभूता भविष्यन्ति व्यक्तस्य वशवर्तिनः ४८
सर्वमव्यक्तमित्युक्तमसर्वः पञ्चविंशकः

य एनमभिजानन्ति न भयं तेषु विद्यते ४६
इति श्रीमहाभारते शान्तिपर्वणि चतुर्नवत्यधिकद्विशततमोऽध्यायः २९४

## पञ्चनवत्यधिकद्विशततमोऽध्यायः

वसिष्ठ उवाच
सांख्यदर्शनमेतावदुक्तं ते नृपसत्तम
विद्याविद्ये त्विदानीं मे त्वं निबोधानुपूर्वशः १
अविद्यामाहुरव्यक्तं सर्गप्रलयधर्मि वै
सर्गप्रलयनिर्मुक्तं विद्यां वै पञ्चविंशकम् २
परस्परमविद्यां वै तन्निबोधानुपूर्वशः
यथोक्तमृषिभिस्तात सांख्यस्यास्य निदर्शनम् ३
कर्मेन्द्रियाणां सर्वेषां विद्या बुद्धीन्द्रियं स्मृतम्
बुद्धीन्द्रियाणां च तथा विशेषा इति नः श्रुतम् ४
विशेषाणां मनस्तेषां विद्यामाहुर्मनीषिणः
मनसः पञ्चभूतानि विद्या इत्यभिचक्षते ५
अहंकारस्तु भूतानां पञ्चानां नात्र संशयः
अहंकारस्य च तथा बुद्धिर्विद्या नरेश्वर ६
बुद्धेः प्रकृतिरव्यक्तं तत्त्वानां परमेश्वरम्
विद्या ज्ञेया नरश्रेष्ठ विधिश्च परमः स्मृतः ७
अव्यक्तस्य परं प्राहुर्विद्यां वै पञ्चविंशकम्
सर्वस्य सर्वमित्युक्तं ज्ञेयं ज्ञानस्य पार्थिव ८
ज्ञानमव्यक्तमित्युक्तं ज्ञेयं वै पञ्चविंशकम्
तथैव ज्ञानमव्यक्तं विज्ञाता पञ्चविंशकः ९
विद्याविद्यार्थतत्त्वेन मयोक्तं ते विशेषतः
अक्षरं च क्षरं चैव यदुक्तं तन्निबोध मे १०
उभावेतौ क्षरावुक्तावुभावेतौ च न क्षरौ
कारणं तु प्रवक्ष्यामि यथा ख्यातौ तु तत्त्वतः ११
अनादिनिधनावेतावुभावेवेश्वरौ मतौ
तत्त्वसंज्ञावुभावेतौ प्रोच्येते ज्ञानचिन्तकैः १२
सर्गप्रलयधर्मित्वादव्यक्तं प्राहुरक्षरम्

तदेतद्गुणसर्गाय विकुर्वाणं पुनः पुनः १३
गुणानां महदादीनामुत्पद्यति परस्परम्
अधिष्ठानात्क्षेत्रमाहुरेतत्तत्पञ्चविंशकम् १४
यदा तु गुणजालं तदव्यक्तात्मनि संक्षिपेत्
तदा सह गुणैस्तैस्तु पञ्चविंशो विलीयते १५
गुणा गुणेषु लीयन्ते तदैका प्रकृतिर्भवेत्
क्षेत्रज्ञोऽपि यदा तात तत्क्षेत्रे संप्रलीयते १६
तदा क्षरत्वं प्रकृतिर्गच्छते गुणसंज्ञिता
निर्गुणत्वं च वैदेह गुणेषु प्रतिवर्तनात् १७
एवमेव च क्षेत्रज्ञः क्षेत्रज्ञानपरिक्षये
प्रकृत्या निर्गुणस्त्वेष इत्येवमनुशुश्रुम १८
क्षरो भवत्येष यदा तदा गुणवतीमथ
प्रकृतिं त्वभिजानाति निर्गुणत्वं तथात्मनः १९
तदा विशुद्धो भवति प्रकृतेः परिवर्जनात्
अन्योऽहमन्येयमिति यदा बुध्यति बुद्धिमान् २०
तदैषोऽन्यत्वतामेति न च मिश्रत्वमाव्रजेत्
प्रकृत्या चैव राजेन्द्र नमिश्रोऽन्यश्च दृश्यते २१
यदा तु गुणजालं तत्प्राकृतं विजुगुप्सते
पश्यते चापरं पश्यं तदा पश्यन्न संज्वरेत् २२
किं मया कृतमेतावद्योऽह कालमिमं जनम्
मत्स्यो जालं ह्यविज्ञानादनुवर्तितवांस्तथा २३
अहमेव हि संमोहादन्यमन्यं जनाज्जनम्
मत्स्यो यथोदकज्ञानादनुवर्तितवानिह २४
मत्स्योऽन्यत्वं यथाज्ञानादुदकान्नाभिमन्यते
आत्मानं तद्वदज्ञानादन्यत्वं नैव वेद्म्यहम् २५
ममास्तु धिगबुद्धस्य योऽह मग्नमिमं पुनः
अनुवर्तितवान्मोहादन्यमन्यं जनाज्जनम् २६
अयमत्र भवेद्बन्धुरनेन सह मोक्षणम्
साम्यमेकत्वमायातो यादृशस्तादृशस्त्वहम् २७
तुल्यतामिह पश्यामि सदृशोऽहमनेन वै

अयं हि विमलो व्यक्तमहमीदृशकस्तथा २८
योऽहमज्ञानसंमोहादज्ञया संप्रवृत्तवान्
ससङ्गयाहं निःसङ्गः स्थितः कालमिमं त्वहम् २९
अनयाहं वशीभूतः कालमेतं न बुद्धवान्
उच्चमध्यमनीचानां तामहं कथमावसे ३०
समानयानया चेह सहवासमहं कथम्
गच्छाम्यबुद्धभावत्वादेषेदानीं स्थिरो भवे ३१
सहवासं न यास्यामि कालमेतद्धि वञ्चनात्
वञ्चितोऽस्म्यनया यद्धि निर्विकारो विकारया ३२
न चायमपराधोऽस्या अपराधो ह्ययं मम
योऽहमत्राभवं सक्तः पराङ्मुखमुपस्थितः ३३
ततोऽस्मि बहुरूपासु स्थितो मूर्तिष्वमूर्तिमान्
अमूर्तश्चापि मूर्तात्मा ममत्वेन प्रधर्षितः ३४
प्रकृतेरनयत्वेन तासु तास्विह योनिषु
निर्ममस्य ममत्वेन किं कृतं तासु तासु च
योनीषु वर्तमानेन नष्टसंज्ञेन चेतसा ३५
न ममात्रानया कार्यमहंकारकृतात्मया
आत्मानं बहुधा कृत्वा येयं भूयो युनक्ति माम्
इदानीमेष बुद्धोऽस्मि निर्ममो निरहंकृतः ३६
ममत्वमनया नित्यमहंकारकृतात्मकम्
अपेत्याहमिमां हित्वा संश्रयिष्ये निरामयम् ३७
अनेन साम्यं यास्यामि नानयाहमचेतसा
क्षेमं मम सहानेन नैकत्वमनया सह
एवं परमसंबोधात्पञ्चविंशोऽनुबुद्धवान् ३८
अक्षरत्वं नियच्छेत त्यक्त्वा क्षरमनामयम्
अव्यक्तं व्यक्तधर्माणं सगुणं निर्गुणं तथा
निर्गुणं प्रथमं दृष्ट्वा तादृग्भवति मैथिल ३९
अक्षरक्षरयोरेतदुक्तं तव निदर्शनम्
मयेह ज्ञानसंपन्नं यथाश्रुतिनिदर्शनात् ४०
निःसंदिग्धं च सूक्ष्मं च विबुद्धं विमलं तथा

प्रवक्ष्यामि तु ते भूयस्तन्निबोध यथाश्रुतम् ४१
सांख्ययोगौ मया प्रोक्तौ शास्त्रद्वयनिदर्शनात्
यदेव शास्त्रं सांख्योक्तं योगदर्शनमेव तत् ४२
प्रबोधनकरं ज्ञानं सांख्यानामवनीपते
विस्पष्टं प्रोच्यते तत्र शिष्याणां हितकाम्यया ४३
बृहच्चैव हि तच्छास्त्रमित्याहुः कुशला जनाः
अस्मिंश्च शास्त्रे योगानां पुनर्दधि पुनः शरः ४४
पञ्चविंशात्परं तत्त्वं न पश्यति नराधिप
सांख्यानां तु परं तत्र यथावदनुवर्णितम् ४५
बुद्धमप्रतिबुद्धं च बुध्यमानं च तत्त्वतः
बुध्यमानं च बुद्धं च प्राहुर्योगनिदर्शनम् ४६
इति श्रीमहाभारते शान्तिपर्वणि पञ्चनवत्यधिकद्विशततमोऽध्यायः २९५

## षण्णवत्यधिकद्विशततमोऽध्यायः

वसिष्ठ उवाच
अप्रबुद्धमथाव्यक्तमिमं गुणविधिं शृणु
गुणान्धारयते ह्येषा सृजत्याक्षिपते तथा १
अजस्रं त्विह क्रीडार्थं विकुर्वन्ति नराधिप
आत्मानं बहुधा कृत्वा तान्येव च विचक्षते २
एतदेवं विकुर्वाणं बुध्यमानो न बुध्यते
अव्यक्तबोधनाच्चैव बुध्यमानं वदन्त्यपि ३
न त्वेव बुध्यतेऽव्यक्तं सगुणं वाथ निर्गुणम्
कदाचित्त्वेव खल्वेतदाहुरप्रतिबुद्धकम् ४
बुध्यते यदि वाव्यक्तमेतद्वै पञ्चविंशकम्
बुध्यमानो भवत्येष सङ्गात्मक इति श्रुतिः ५
अनेनाप्रतिबुद्धेति वदन्त्यव्यक्तमच्युतम्
अव्यक्तबोधनाच्चैव बुध्यमानं वदन्त्युत ६
पञ्चविंशं महात्मानं न चासावपि बुध्यते
षड्विंशं विमलं बुद्धमप्रमेयं सनातनम् ७
सततं पञ्चविंशं च चतुर्विंशं च बुध्यते

दृश्यादृश्ये ह्यनुगतमुभावेव महाद्युती ८
अव्यक्तं न तु तद्ब्रह्म बुध्यते तात केवलम्
केवलं पञ्चविंशं च चतुर्विंशं न पश्यति ९
बुध्यमानो यदात्मानमन्योऽहमिति मन्यते
तदा प्रकृतिमानेष भवत्यव्यक्तलोचनः १०
बुध्यते च परां बुद्धिं विशुद्धाममलां यदा
षड्विंशो राजशार्दूल तथा बुद्धत्वमाव्रजेत् ११
ततस्त्यजति सोऽव्यक्तं सर्गप्रलयधर्मिणम्
निर्गुणः प्रकृतिं वेद गुणयुक्तामचेतनाम् १२
ततः केवलधर्मासौ भवत्यव्यक्तदर्शनात्
केवलेन समागम्य विमुक्तोऽत्मानमाप्नुयात् १३
एतत्तत्त्वमित्याहुर्निस्तत्त्वमजरामरम्
तत्त्वसंश्रयणादेतत्तत्त्ववन्न च मानद
पञ्चविंशतितत्त्वानि प्रवदन्ति मनीषिणः १४
न चैष तत्त्ववांस्तात निस्तत्त्वस्त्वेष बुद्धिमान्
एष मुञ्चति तत्त्वं हि क्षिप्रं बुद्धस्य लक्षणम् १५
षड्विंशोऽहमिति प्राज्ञो गृह्यमाणोऽजरामरः
केवलेन बलेनैव समतां यात्यसंशयम् १६
षड्विंशेन प्रबुद्धेन बुध्यमानोऽप्यबुद्धिमान्
एतान्नानात्वमित्युक्तं सांख्यश्रुतिनिदर्शनात् १७
चेतनेन समेतस्य पञ्चविंशतिकस्य च
एकत्वं वै भवत्यस्य यदा बुद्ध्या न बुध्यते १८
बुध्यमानोऽप्रबुद्धेन समतां याति मैथिल
सङ्गधर्मा भवत्येष निःसङ्गात्मा नराधिप १९
निःसङ्गात्मानमासाद्य षड्विंशकमजं विदुः
विभुस्त्यजति चाव्यक्तं यदा त्वेतद्विबुध्यते
चतुर्विंशमगाधं च षड्विंशस्य प्रबोधनात् २०
एष ह्यप्रतिबुद्धश्च बुध्यमानश्च तेऽनघ
प्रोक्तो बुद्धश्च तत्त्वेन यथाश्रुतिनिदर्शनात्
नानात्वैकत्वमेतावद्द्रष्टव्यं शास्त्रदृष्टिभिः २१

मशकोदुम्बरे यद्वदन्यत्वं तद्वदेतयोः
मत्स्योऽम्भसि यथा तद्वदन्यत्वमुपलभ्यते २२
एवमेवावगन्तव्यं नानात्वैकत्वमेतयोः
एतद्धि मोक्ष इत्युक्तमव्यक्तज्ञानसंहितम् २३
पञ्चविंशतिकस्यास्य योऽय देहेषु वर्तते
एष मोक्षयितव्येति प्राहुरव्यक्तगोचरात् २४
सोऽयमेवं विमुच्येत नान्यथेति विनिश्चयः
परेण परधर्मा च भवत्येष समेत्य वै २५
विशुद्धधर्मा शुद्धेन बुद्धेन च स बुद्धिमान्
विमुक्तधर्मा मुक्तेन समेत्य पुरुषर्षभ २६
वियोगधर्मिणा चैव नियोगात्मा भवत्यपि
विमोक्षिणा विमोक्षश्च समेत्येह तथा भवेत् २७
शुचिकर्मा शुचिश्चैव भवत्यमितदीप्तिमान्
विमलात्मा च भवति समेत्य विमलात्मना २८
केवलात्मा तथा चैव केवलेन समेत्य वै
स्वतन्त्रश्च स्वतन्त्रेण स्वतन्त्रत्वमवाप्नुते २९
एतावदेतत्कथितं मया ते तथ्यं महाराज यथार्थतत्त्वम्
अमत्सरत्वं परिगृह्य चार्थं सनातनं ब्रह्म विशुद्धमाद्यम् ३०
न वेदनिष्ठस्य जनस्य राजन्प्रदेयमेतत्परमं त्वया भवेत्
विवित्समानाय विबोधकारकं प्रबोधहेतोः प्रणतस्य शासनम् ३१
न देयमेतच्च तथानृतात्मने शठाय क्लीबाय न जिह्मबुद्धये
न पण्डितज्ञानपरोपतापिने देयं त्वयेदं विनिबोध यादृशे ३२
श्रद्धान्वितायाथ गुणान्विताय परापवादाद्विरताय नित्यम्
विशुद्धयोगाय बुधाय चैव क्रियावतेऽथ क्षमिणे हिताय ३३
विविक्तशीलाय विधिप्रियाय विवादहीनाय बहुश्रुताय
विजानते चैव न चाहितक्षमे दमे च शक्ताय शमे च देहिनाम् ३४
एतैर्गुणैर्हीनतमे न देयमेतत्परं ब्रह्म विशुद्धमाहुः
न श्रेयसा योक्ष्यति तादृशे कृतं धर्मप्रवक्तारमपात्रदानात् ३५
पृथ्वीमिमां यद्यपि रत्नपूर्णां दद्यान्नदेयं त्विदमव्रताय
जितेन्द्रियायैतदसंशयं ते भवेत्प्रदेयं परमं नरेन्द्र ३६

कराल मा ते भयमस्तु किंचिदेतच्छ्रुतं ब्रह्म परं त्वयाद्य
यथावदुक्तं परमं पवित्रं निःशोकमत्यन्तमनादिमध्यम् ३७
अगाधजन्मामरणं च राजन्निरामयं वीतभयं शिवं च
समीक्ष्य मोहं त्यज चाद्य सर्वं ज्ञानस्य तत्त्वार्थमिदं विदित्वा ३८
अवाप्तमेतद्धि मया सनातनाद्धिरण्यगर्भाद्गदतो नराधिप
प्रसाद्य यत्नेन तमुग्रतेजसं सनातनं ब्रह्म यथाद्य वै त्वया ३९
पृष्टस्त्वया चास्मि यथा नरेन्द्र यथा मयेदं त्वयि चोक्तमद्य
तथावाप्तं ब्रह्मणो मे नरेन्द्र महज्ज्ञानं मोक्षविदां पुराणम् ४०
भीष्म उवाच
एतदुक्तं परं ब्रह्म यस्मान्नावर्तते पुनः
पञ्चविंशो महाराज परमर्षिनिदर्शनात् ४१
पुनरावृत्तिमाप्नोति परं ज्ञानमवाप्य च
नावबुध्यति तत्त्वेन बुध्यमानोऽजरामरः ४२
एतन्निःश्रेयसकरं ज्ञानानां ते परं मया
कथितं तत्त्वतस्तात श्रुत्वा देवर्षितो नृप ४३
हिरण्यगर्भादृषिणा वसिष्ठेन महात्मना
वसिष्ठादृषिशार्दूलान्नारदोऽवाप्तवानिदम् ४४
नारदाद्विदितं मह्यमेतद्ब्रह्म सनातनम्
मा शुचः कौरवेन्द्र त्वं श्रुत्वैतत्परमं पदम् ४५
येन क्षराक्षरे वित्ते न भयं तस्य विद्यते
विद्यते तु भयं तस्य यो नैतद्वेत्ति पार्थिव ४६
अविज्ञानाच्च मूढात्मा पुनः पुनरुपद्रवन्
प्रेत्य जातिसहस्राणि मरणान्तान्युपाश्नुते ४७
देवलोकं तथा तिर्यङ्मनुष्यमपि चाश्नुते
यदि शुध्यति कालेन तस्मादज्ञानसागरात् ४८
अज्ञानसागरो घोरो ह्यव्यक्तोऽगाध उच्यते
अहन्यहनि मज्जन्ति यत्र भूतानि भारत ४९
यस्मादगाधादव्यक्तादुत्तीर्णस्त्वं सनातनात्
तस्मात्त्वं विरजाश्चैव वितमस्कश्च पार्थिव ५०
इति श्रीमहाभारते शान्तिपर्वणि षण्णवत्यधिकद्विशततमोऽध्यायः २९६

## सप्तनवत्यधिकद्विशततमोऽध्यायः

भीष्म उवाच
मृगयां विचरन्कश्चिद्विजने जनकात्मजः
वने ददर्श विप्रेन्द्रमृषिं वंशधरं भृगोः १
तमासीनमुपासीनः प्रणम्य शिरसा मुनिम्
पश्चादनुमतस्तेन पप्रच्छ वसुमानिदम् २
भगवन्किमिदं श्रेयः प्रेत्य वापीह वा भवेत्
पुरुषस्याध्रुवे देहे कामस्य वशवर्तिनः ३
सत्कृत्य परिपृष्टः सन्सुमहात्मा महातपाः
निजगाद ततस्तस्मै श्रेयस्करमिदं वचः ४
मनसोऽप्रतिकूलानि प्रेत्य चेह च वाञ्छसि
भूतानां प्रतिकूलेभ्यो निवर्तस्व यतेन्द्रियः ५
धर्मः सतां हितः पुंसां धर्मश्चैवाश्रयः सताम्
धर्माल्लोकास्त्रयस्तात प्रवृत्ताः सचराचराः ६
स्वादुकामुक कामानां वैतृष्ण्यं किं न गच्छसि
मधु पश्यसि दुर्बुद्धे प्रपातं नानुपश्यसि ७
यथा ज्ञाने परिचयः कर्तव्यस्तत्फलार्थिना
तथा धर्मे परिचयः कर्तव्यस्तत्फलार्थिना ८
असता धर्मकामेन विशुद्धं कर्म दुष्करम्
सता तु धर्मकामेन सुकरं कर्म दुष्करम् ९
वने ग्राम्यसुखाचारो यथा ग्राम्यस्तथैव सः
ग्रामे वनसुखाचारो यथा वनचरस्तथा १०
मनोवाक्कर्मके धर्मे कुरु श्रद्धां समाहितः
निवृत्तौ वा प्रवृत्तौ वा संप्रधार्य गुणागुणान् ११
नित्यं च बहु दातव्यं साधुभ्यश्चानसूयता
प्रार्थितं व्रतशौचाभ्यां सत्कृतं देशकालयोः १२
शुभेन विधिना लब्धमर्हाय प्रतिपादयेत्
क्रोधमुत्सृज्य दत्त्वा च नानुतप्येन्न कीर्तयेत् १३
अनृशंसः शुचिर्दान्तः सत्यवागार्जवे स्थितः
योनिकर्मविशुद्धश्च पात्रं स्याद्वेदविद्द्विजः १४

सत्कृता चैकपत्नी च जात्या योनिरिहेष्यते
ऋग्यजुःसामगो विद्वान्षट्कर्मा पात्रमुच्यते १५
स एव धर्मः सोऽधर्मस्तं तं प्रतिनरं भवेत्
पात्रकर्मविशेषेण देशकालाववेक्ष्य च १६
लीलयाल्पं यथा गात्रात्प्रमृज्याद्रजसः पुमान्
बहुयत्नेन महता पापनिर्हरणं तथा १७
विरिक्तस्य यथा सम्यग्घृतं भवति भेषजम्
तथा निर्हृतदोषस्य प्रेत्यधर्मः सुखावहः १८
मानसं सर्वभूतेषु वर्तते वै शुभाशुभे
अशुभेभ्यः समाक्षिप्य शुभेष्वेवावतारयेत् १९
सर्वं सर्वेण सर्वत्र क्रियमाणं च पूजय
स्वधर्मे यत्र रागस्ते कामं धर्मो विधीयताम् २०
अधृतात्मन्धृतौ तिष्ठ दुर्बुद्धे बुद्धिमान्भव
अप्रशान्त प्रशाम्य त्वमप्राज्ञ प्राज्ञवच्चर २१
तेजसा शक्यते प्राप्तुमुपायसहचारिणा
इह च प्रेत्य च श्रेयस्तस्य मूलं धृतिः परा २२
राजर्षिरधृतिः स्वर्गात्पतितो हि महाभिषः
ययातिः क्षीणपुण्यश्च धृत्या लोकानवाप्तवान् २३
तपस्विनां धर्मवतां विदुषां चोपसेवनात्
प्राप्स्यसे विपुलां बुद्धिं तथा श्रेयोऽभिपत्स्यसे २४
स तु स्वभावसंपन्नस्तच्छ्रुत्वा मुनिभाषितम्
विनिवर्त्य मनः कामाद्धर्मे बुद्धिं चकार ह २५
इति श्रीमहाभारते शान्तिपर्वणि सप्तनवत्यधिकद्विशततमोऽध्यायः २९७

## अष्टनवत्यधिकद्विशततमोऽध्यायः

युधिष्ठिर उवाच
धर्माधर्मविमुक्तं यद्विमुक्तं सर्वसंश्रयात्
जन्ममृत्युविमुक्तं च विमुक्तं पुण्यपापयोः १
यच्छिवं नित्यमभयं नित्यं चाक्षरमव्ययम्
शुचि नित्यमनायासं तद्भवान्वक्तुमर्हति २

भीष्म उवाच
अत्र ते वर्तयिष्येऽहमितिहासं पुरातनम्
याज्ञवल्क्यस्य संवादं जनकस्य च भारत ३
याज्ञवल्क्यमृषिश्रेष्ठं दैवरातिर्महायशाः
पप्रच्छ जनको राजा प्रश्नं प्रश्नविदां वरः ४
कतीन्द्रियाणि विप्रर्षे कति प्रकृतयः स्मृताः
किमव्यक्तं परं ब्रह्म तस्माच्च परतस्तु किम् ५
प्रभवं चाप्ययं चैव कालसंख्यां तथैव च
वक्तुमर्हसि विप्रेन्द्र त्वदनुग्रहकाङ्क्षिणः ६
अज्ञानात्परिपृच्छामि त्वं हि ज्ञानमयो निधिः
तदहं श्रोतुमिच्छामि सर्वमेतदसंशयम् ७
याज्ञवल्क्य उवाच
श्रूयतामवनीपाल यदेतदनुपृच्छसि
योगानां परमं ज्ञानं सांख्यानां च विशेषतः ८
न तवाविदितं किंचिन्मां तु जिज्ञासते भवान्
पृष्टेन चापि वक्तव्यमेष धर्मः सनातनः ९
अष्टौ प्रकृतयः प्रोक्ता विकाराश्चापि षोडश
अथ सप्त तु व्यक्तानि प्राहुरध्यात्मचिन्तकाः १०
अव्यक्तं च महांश्चैव तथाहंकार एव च
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ११
एताः प्रकृतयस्त्वष्टौ विकारानपि मे शृणु
श्रोत्रं त्वक्चैव चक्षुश्च जिह्वा घ्राणं च पञ्चमम् १२
शब्दस्पर्शौ च रूपं च रसो गन्धस्तथैव च
वाक्च हस्तौ च पादौ च पायुर्मेढ्रं तथैव च १३
एते विशेषा राजेन्द्र महाभूतेषु पञ्चसु
बुद्धीन्द्रियाण्यथैतानि सविशेषाणि मैथिल १४
मनः षोडशकं प्राहुरध्यात्मगतिचिन्तकाः
त्वं चैवान्ये च विद्वांसस्तत्त्वबुद्धिविशारदाः १५
अव्यक्ताच्च महानात्मा समुत्पद्यति पार्थिव
प्रथमं सर्गमित्येतदाहुः प्राधानिकं बुधाः १६

महतश्चाप्यहंकार उत्पद्यति नराधिप
द्वितीयं सर्गमित्याहुरेतद्बुद्ध्यात्मकं स्मृतम् १७
अहंकाराच्च संभूतं मनो भूतगुणात्मकम्
तृतीयः सर्ग इत्येष आहंकारिक उच्यते १८
मनसस्तु समुद्भूता महाभूता नराधिप
चतुर्थं सर्गमित्येतन्मानसं परिचक्षते १९
शब्दः स्पर्शश्च रूपं च रसो गन्धस्तथैव च
पञ्चमं सर्गमित्याहुर्भौतिकं भूतचिन्तकाः २०
श्रोत्रं त्वक्चैव चक्षुश्च जिह्वा घ्राणं च पञ्चमम्
सर्गं तु षष्ठमित्याहुर्बहुचिन्तात्मकं स्मृतम् २१
अधः श्रोत्रेन्द्रियग्राम उत्पद्यति नराधिप
सप्तमं सर्गमित्याहुरेतदैन्द्रियकं स्मृतम् २२
ऊर्ध्वस्रोतस्तथा तिर्यगुत्पद्यति नराधिप
अष्टमं सर्गमित्याहुरेतदार्जवकं बुधाः २३
तिर्यक्स्रोतस्त्वधःस्रोत उत्पद्यति नराधिप
नवमं सर्गमित्याहुरेतदार्जवकं बुधाः २४
एतानि नव सर्गाणि तत्त्वानि च नराधिप
चतुर्विंशतिरुक्तानि यथाश्रुतिनिदर्शनात् २५
अत ऊर्ध्वं महाराज गुणस्यैतस्य तत्त्वतः
महात्मभिरनुप्रोक्तां कालसंख्यां निबोध मे २६
इति श्रीमहाभारते शान्तिपर्वणि अष्टनवत्यधिकद्विशततमोऽध्यायः २९८

## नवनवत्यधिकद्विशततमोऽध्यायः

याज्ञवल्क्य उवाच
अव्यक्तस्य नरश्रेष्ठ कालसंख्यां निबोध मे
पञ्च कल्पसहस्राणि द्विगुणान्यहरुच्यते १
रात्रिरेतावती चास्य प्रतिबुद्धो नराधिप
सृजत्योषधिमेवाग्रे जीवनं सर्वदेहिनाम् २
ततो ब्रह्माणमसृजद्धैरण्याण्डसमुद्भवम्
सा मूर्तिः सर्वभूतानामित्येवमनुशुश्रुम ३

संवत्सरमुषित्वाण्डे निष्क्रम्य च महामुनिः
संदधेऽध महीं कृत्स्नां दिवमर्धं प्रजापतिः ४
द्यावापृथिव्योरित्येष राजन्वेदेषु पठ्यते
तयोः शकलयोर्मध्यमाकाशमकरोत्प्रभुः ५
एतस्यापि च संख्यानं वेदवेदाङ्गपारगैः
दश कल्पसहस्राणि पादोनान्यहरुच्यते
रात्रिमेतावतीं चास्य प्राहुरध्यात्मचिन्तकाः ६
सृजत्यहंकारमृषिर्भूतं दिव्यात्मकं तथा
चतुरश्चापरान्पुत्रान्देहात्पूर्वं महानृषिः
ते वै पितृभ्यः पितरः श्रूयन्ते राजसत्तम ७
देवाः पितृणां च सुता देवैर्लोकाः समावृताः
चराचरा नरश्रेष्ठ इत्येवमनुशुश्रुम ८
परमेष्ठी त्वहंकारोऽसृजद्भूतानि पञ्चधा
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ९
एतस्यापि निशामाहुस्तृतीयमिह कुर्वतः
पञ्च कल्पसहस्राणि तावदेवाहरुच्यते १०
शब्दः स्पर्शश्च रूपं च रसो गन्धश्च पञ्चमः
एते विशेषा राजेन्द्र महाभूतेषु पञ्चसु
यैराविष्टानि भूतानि अहन्यहनि पार्थिव ११
अन्योन्यं स्पृहयन्त्येते अन्योन्यस्य हिते रताः
अन्योन्यमभिमन्यन्ते अन्योन्यस्पर्धिनस्तथा १२
ते वध्यमाना अन्योन्यं गुणैर्हारिभिरव्ययाः
इहैव परिवर्तन्ते तिर्यग्योनिप्रवेशिनः १३
त्रीणि कल्पसहस्राणि एतेषामहरुच्यते
रात्रिरेतावती चैव मनसश्च नराधिप १४
मनश्चरति राजेन्द्र चरितं सर्वमिन्द्रियैः
न चेन्द्रियाणि पश्यन्ति मन एवात्र पश्यति १५
चक्षुः पश्यति रूपाणि मनसा तु न चक्षुषा
मनसि व्याकुले चक्षुः पश्यन्नपि न पश्यति
तथेन्द्रियाणि सर्वाणि पश्यन्तीत्यभिचक्षते १६

मनस्युपरते राजन्निन्द्रियोपरमो भवेत्
न चेन्द्रियव्युपरमे मनस्युपरमो भवेत्
एवं मनःप्रधानानि इन्द्रियाणि विभावयेत् १७
इन्द्रियाणां हि सर्वेषामीश्वरं मन उच्यते
एतद्विशन्ति भूतानि सर्वाणीह महायशाः १८
इति श्रीमहाभारते शान्तिपर्वणि नवनवत्यधिकद्विशततमोऽध्यायः २९९

## त्रिशततमोऽध्यायः

याज्ञवल्क्य उवाच
तत्त्वानां सर्वसंख्या च कालसंख्या तथैव च
मया प्रोक्तानुपूर्व्येण संहारमपि मे शृणु १
यथा संहरते जन्तून्ससर्ज च पुनः पुनः
अनादिनिधनो ब्रह्मा नित्यश्चाक्षर एव च २
अहःक्षयमथो बुद्ध्वा निशि स्वप्नमनास्तथा
चोदयामास भगवानव्यक्तोऽहकृतं नरम् ३
ततः शतसहस्रांशुरव्यक्तेनाभिचोदितः
कृत्वा द्वादशधात्मानमादित्यो ज्वलदग्निवत् ४
चतुर्विधं प्रजाजालं निर्दहत्याशु तेजसा
जराय्वण्डस्वेदजातमुद्भिज्जं च नराधिप ५
एतदुन्मेषमात्रेण विनष्टं स्थाणुजङ्गमम्
कूर्मपृष्ठसमा भूमिर्भवत्यथ समन्ततः ६
जगद्दग्ध्वामितबलः केवलं जगतीं ततः
अम्भसा बलिना क्षिप्रमापूर्यत समन्ततः ७
ततः कालाग्निमासाद्य तदम्भो याति संक्षयम्
विनष्टेऽम्भसि राजेन्द्र जाज्वलीत्यनलो महान् ८
तमप्रमेयोऽतिबलं ज्वलमानं विभावसुम्
ऊष्माणं सर्वभूतानां सप्तार्चिषमथाञ्जसा ९
भक्षयामास बलवान्वायुरष्टात्मको बली
विचरन्नमितप्राणस्तिर्यगूर्ध्वमधस्तथा १०
तमप्रतिबलं भीममाकाशं ग्रासतेऽत्मना

आकाशमप्यतिनदन्मनो ग्रसति चारिकम् ११
मनो ग्रसति सर्वात्मा सोऽहकारः प्रजापतिः
अहंकारं महानात्मा भूतभव्यभविष्यवित् १२
तमप्यनुपमात्मानं विश्वं शंभुः प्रजापतिः
अणिमा लघिमा प्राप्तिरीशानो ज्योतिरव्ययः १३
सर्वतःपाणिपादान्तः सर्वतोक्षिशिरोमुखः
सर्वतःश्रुतिमाँल्लोके सर्वमावृत्य तिष्ठति १४
हृदयं सर्वभूतानां पर्वणोऽङ्गुष्ठमात्रकः
अनुग्रसत्यनन्तं हि महात्मा विश्वमीश्वरः १५
ततः समभवत्सर्वमक्षयाव्ययमव्रणम्
भूतभव्यमनुष्याणां स्रष्टारमनघं तथा १६
एषोऽप्ययस्ते राजेन्द्र यथावत्परिभाषितः
अध्यात्ममधिभूतं च अधिदैवं च श्रूयताम् १७
इति श्रीमहाभारते शान्तिपर्वणि त्रिशततमोऽध्यायः ३००

## एकाधिकत्रिशततमोऽध्यायः

याज्ञवल्क्य उवाच
पादावध्यात्ममित्याहुर्ब्राह्मणास्तत्त्वदर्शिनः
गन्तव्यमधिभूतं च विष्णुस्तत्राधिदैवतम् १
पायुरध्यात्ममित्याहुर्यथातत्त्वार्थदर्शिनः
विसर्गमधिभूतं च मित्रस्तत्राधिदैवतम् २
उपस्थोऽध्यात्ममित्याहुर्यथायोगनिदर्शनम्
अधिभूतं तथानन्दो दैवतं च प्रजापतिः ३
हस्तावध्यात्ममित्याहुर्यथासंख्यनिदर्शनम्
कर्तव्यमधिभूतं तु इन्द्रस्तत्राधिदैवतम् ४
वागध्यात्ममिति प्राहुर्यथाश्रुतिनिदर्शनम्
वक्तव्यमधिभूतं तु वह्निस्तत्राधिदैवतम् ५
चक्षुरध्यात्ममित्याहुर्यथाश्रुतिनिदर्शनम्
रूपमत्राधिभूतं तु सूर्यस्तत्राधिदैवतम् ६
श्रोत्रमध्यात्ममित्याहुर्यथाश्रुतिनिदर्शनम्

शब्दस्तत्राधिभूतं तु दिशस्तत्राधिदैवतम् ७
जिह्वामध्यात्ममित्याहुर्यथातत्त्वनिदर्शनम्
रस एवाधिभूतं तु आपस्तत्राधिदैवतम् ८
घ्राणमध्यात्ममित्याहुर्यथाश्रुतिनिदर्शनम्
गन्ध एवाधिभूतं तु पृथिवी चाधिदैवतम् ९
त्वगध्यात्ममिति प्राहुस्तत्त्वबुद्धिविशारदाः
स्पर्श एवाधिभूतं तु पवनश्चाधिदैवतम् १०
मनोऽध्यात्ममिति प्राहुर्यथाश्रुतिनिदर्शनम्
मन्तव्यमधिभूतं तु चन्द्रमाश्चाधिदैवतम् ११
अहंकारिकमध्यात्ममाहुस्तत्त्वनिदर्शनम्
अभिमानोऽधिभूतं तु भवस्तत्राधिदैवतम् १२
बुद्धिरध्यात्ममित्याहुर्यथावेदनिदर्शनम्
बोद्धव्यमधिभूतं तु क्षेत्रज्ञोऽत्राधिदैवतम् १३
एषा ते व्यक्ततो राजन्विभूतिरनुवर्णिता
आदौ मध्ये तथा चान्ते यथातत्त्वेन तत्त्ववित् १४
प्रकृतिर्गुणान्विकुरुते स्वच्छन्देनात्मकाम्यया
क्रीडार्थं तु महाराज शतशोऽथ सहस्रशः १५
यथा दीपसहस्राणि दीपान्मर्त्याः प्रकुर्वते
प्रकृतिस्तथा विकुरुते पुरुषस्य गुणान्बहून् १६
सत्त्वमानन्द उद्रेकः प्रीतिः प्राकाश्यमेव च
सुखं शुद्धित्वमारोग्यं सन्तोषः श्रद्दधानता १७
अकार्पण्यमसंरम्भः क्षमा धृतिरहिंसता
समता सत्यमानृण्यं मार्दवं ह्रीरचापलम् १८
शौचमार्जवमाचारमलौल्यं हृद्यसंभ्रमः
इष्टानिष्टवियोगानां कृतानामविकत्थनम् १९
दानेन चानुग्रहणमस्पृहार्थे परार्थता
सर्वभूतदया चैव सत्त्वस्यैते गुणाः स्मृताः २०
रजोगुणानां संघातो रूपमैश्वर्यविग्रहे
अत्याशित्वमकारुण्यं सुखदुःखोपसेवनम् २१
परापवादेषु रतिर्विवादानां च सेवनम्

अहंकारस्त्वसत्कारश्चिन्ता वैरोपसेवनम् २२
परितापोऽपहरणं ह्रीनाशोऽनार्जवं तथा
भेदः परुषता चैव कामक्रोधौ मदस्तथा
दर्पो द्वेषोऽतिवादश्च एते प्रोक्ता रजोगुणाः २३
तामसानां तु संघातं प्रवक्ष्याम्युपधार्यताम्
मोहोऽप्रकाशस्तामिस्रमन्धतामिस्रसंज्ञितम् २४
मरणं चान्धतामिस्रं तामिस्रं क्रोध उच्यते
तमसो लक्षणानीह भक्षाणामभिरोचनम् २५
भोजनानामपर्याप्तिस्तथा पेयेष्वतृप्तता
गन्धवासो विहारेषु शयनेष्वासनेषु च २६
दिवास्वप्ने विवादे च प्रमादेषु च वै रतिः
नृत्यवादित्रगीतानामज्ञानाच्छ्रद्दधानता
द्वेषो धर्मविशेषाणामेते वै तामसा गुणाः २७
इति श्रीमहाभारते शान्तिपर्वणि एकाधिकत्रिशततमोऽध्यायः ३०१

## द्व्यधिकत्रिशततमोऽध्यायः

याज्ञवल्क्य उवाच
एते प्रधानस्य गुणास्त्रयः पुरुषसत्तम
कृत्स्नस्य चैव जगतस्तिष्ठन्त्यनपगाः सदा १
शतधा सहस्रधा चैव तथा शतसहस्रधा
कोटिशश्च करोत्येष प्रत्यगात्मानमात्मना २
सात्त्विकस्योत्तमं स्थानं राजसस्येह मध्यमम्
तामसस्याधमं स्थानं प्राहुरध्यात्मचिन्तकाः ३
केवलेनेह पुण्येन गतिमूर्ध्वामवाप्नुयात्
पुण्यपापेन मानुष्यमधर्मेणाप्यधोगतिम् ४
द्वन्द्वमेषां त्रयाणां तु संनिपातं च तत्त्वतः
सत्त्वस्य रजसश्चैव तमसश्च शृणुष्व मे ५
सत्त्वस्य तु रजो दृष्टं रजसश्च तमस्तथा
तमसश्च तथा सत्त्वं सत्त्वस्याव्यक्तमेव च ६
अव्यक्तः सत्त्वसंयुक्तो देवलोकमवाप्नुयात्

रजःसत्त्वसमायुक्तो मनुष्येषूपपद्यते ७
रजस्तमोभ्यां संयुक्तस्तिर्यग्योनिषु जायते
रजस्तामससत्त्वैश्च युक्तो मानुष्यमाप्नुयात् ८
पुण्यपापवियुक्तानां स्थानमाहुर्मनीषिणाम्
शाश्वतं चाव्ययं चैव अक्षरं चाभयं च यत् ९
ज्ञानिनां संभवं श्रेष्ठं स्थानमव्रणमच्युतम्
अतीन्द्रियमबीजं च जन्ममृत्युतमोनुदम् १०
अव्यक्तस्थं परं यत्तत्पृष्टस्तेऽह नराधिप
स एष प्रकृतिस्थो हि तस्थुरित्यभिधीयते ११
अचेतनश्चैष मतः प्रकृतिस्थश्च पार्थिव
एतेनाधिष्ठितश्चैव सृजते संहरत्यपि १२
जनक उवाच
अनादिनिधनावेतावुभावेव महामुने
अमूर्तिमन्तावचलावप्रकम्प्यौ च निर्व्रणौ १३
अग्राह्यावृषिशार्दूल कथमेको ह्यचेतनः
चेतनावांस्तथा चैकः क्षेत्रज्ञ इति भाषितः १४
त्वं हि विप्रेन्द्र कार्त्स्न्येन मोक्षधर्ममुपाससे
साकल्यं मोक्षधर्मस्य श्रोतुमिच्छामि तत्त्वतः १५
अस्तित्वं केवलत्वं च विनाभावं तथैव च
तथैवोत्क्रमणस्थानं देहिनोऽपि वियुज्यतः १६
कालेन यद्धि प्राप्नोति स्थानं तद्ब्रूहि मे द्विज
सांख्यज्ञानं च तत्त्वेन पृथग्योगं तथैव च १७
अरिष्टानि च तत्त्वेन वक्तुमर्हसि सत्तम
विदितं सर्वमेतत्ते पाणावामलकं यथा १८
इति श्रीमहाभारते शान्तिपर्वणि द्व्यधिकत्रिशततमोऽध्यायः ३०२

त्र्यधिकत्रिशततमोऽध्यायः

याज्ञवल्क्य उवाच
न शक्यो निर्गुणस्तात गुणीकर्तुं विशां पते
गुणवांश्चाप्यगुणवान्यथातत्त्वं निबोध मे १

गुणैर्हि गुणवानेव निर्गुणश्चागुणस्तथा
प्राहुरेवं महात्मानो मुनयस्तत्त्वदर्शिनः २
गुणस्वभावस्त्वव्यक्तो गुणानेवाभिवर्तते
उपयुङ्क्ते च तानेव स चैवाज्ञः स्वभावतः ३
अव्यक्तस्तु न जानीते पुरुषो ज्ञः स्वभावतः
न मत्तः परमस्तीति नित्यमेवाभिमन्यते ४
अनेन कारणेनैतदव्यक्तं स्यादचेतनम्
नित्यत्वादक्षरत्वाच्च क्षराणां तत्त्वतोऽन्यथा ५
यदाज्ञानेन कुर्वीत गुणसर्गं पुनः पुनः
यदात्मानं न जानीते तदाव्यक्तमिहोच्यते ६
कर्तृत्वाच्चापि तत्त्वानां तत्त्वधर्मी तथोच्यते
कर्तृत्वाच्चैव योनीनां योनिधर्मा तथोच्यते ७
कर्तृत्वात्प्रकृतीनां तु तथा प्रकृतिधर्मिता
कर्तृत्वाच्चापि बीजानां बीजधर्मी तथोच्यते ८
गुणानां प्रसवत्वाच्च तथा प्रसवधर्मवान्
कर्तृत्वात्प्रलयानां च तथा प्रलयधर्मिता ९
बीजत्वात्प्रकृतित्वाच्च प्रलयत्वात्तथैव च
उपेक्षकत्वादनन्यत्वादभिमानाच्च केवलम् १०
मन्यन्ते यतयः शुद्धा अध्यात्मविगतज्वराः
अनित्यं नित्यमव्यक्तमेवमेतद्धि शुश्रुम ११
अव्यक्तैकत्वमित्याहुर्नानात्वं पुरुषस्तथा
सर्वभूतदयावन्तः केवलं ज्ञानमास्थिताः १२
अन्यः स पुरुषोऽव्यक्तस्त्वध्रुवो ध्रुवसंज्ञकः
यथा मुञ्ज इषीकायास्तथैवैतद्धि जायते १३
अन्यं च मशकं विद्यादन्यच्चोदुम्बरं तथा
न चोदुम्बरसंयोगैर्मशकस्तत्र लिप्यते १४
अन्य एव तथा मत्स्यस्तथान्यदुदकं स्मृतम्
न चोदकस्य स्पर्शेन मत्स्यो लिप्यति सर्वशः १५
अन्यो ह्यग्निरुखाप्यन्या नित्यमेवमवैहि भोः
न चोपलिप्यते सोऽग्निरुखासंस्पर्शनेन वै १६

पुष्करं त्वन्यदेवात्र तथा न्यदुदकं स्मृतम्
न चोदकस्य स्पर्शेन लिप्यते तत्र पुष्करम् १७
एतेषां सह संवासं विवासं चैव नित्यशः
तथा तथैनं पश्यन्ति न नित्यं प्राकृता जनाः १८
ये त्वन्यथैव पश्यन्ति न सम्यक्तेषु दर्शनम्
ते व्यक्तं निरयं घोरं प्रविशन्ति पुनः पुनः १९
सांख्यदर्शनमेतत्ते परिसंख्यातमुत्तमम्
एवं हि परिसंख्याय सांख्याः केवलतां गताः २०
ये त्वन्ये तत्त्वकुशलास्तेषामेतन्निदर्शनम्
अतः परं प्रवक्ष्यामि योगानामपि दर्शनम् २१
इति श्रीमहाभारते शान्तिपर्वणि त्र्यधिकत्रिशततमोऽध्यायः ३०३

## चतुरधिकत्रिशततमोऽध्यायः

याज्ञवल्क्य उवाच
सांख्यज्ञानं मया प्रोक्तं योगज्ञानं निबोध मे
यथाश्रुतं यथादृष्टं तत्त्वेन नृपसत्तम १
नास्ति सांख्यसमं ज्ञानं नास्ति योगसमं बलम्
तावुभावेकचर्यौ तु उभावनिधनौ स्मृतौ २
पृथक्पृथक्तु पश्यन्ति येऽप्यबुद्धिरता नराः
वयं तु राजन्पश्याम एकमेव तु निश्चयात् ३
यदेव योगाः पश्यन्ति तत्सांख्यैरपि दृश्यते
एकं सांख्यं च योगं च यः पश्यति स तत्त्ववित् ४
रुद्रप्रधानानपरान्विद्धि योगान्परंतम
तेनैव चाथ देहेन विचरन्ति दिशो दश ५
यावद्धि प्रलयस्तात सूक्ष्मेणाष्टगुणेन वै
योगेन लोकान्विचरन्सुखं संन्यस्य चानघ ६
वेदेषु चाष्टगुणितं योगमाहुर्मनीषिणः
सूक्ष्ममष्टगुणं प्राहुर्नेतरं नृपसत्तम ७
द्विगुणं योगकृत्यं तु योगानां प्राहुरुत्तमम्
सगुणं निर्गुणं चैव यथाशास्त्रनिदर्शनम् ८

धारणा चैव मनसा प्राणायामश्च पार्थिव
प्राणायामो हि सगुणो निर्गुणं धारणं मनः ९
यत्र दृश्येत मुञ्चन्वै प्राणान्मैथिलसत्तम
वाताधिक्यं भवत्येव तस्माद्धि न समाचरेत् १०
निशायाः प्रथमे यामे चोदना द्वादश स्मृताः
मध्ये सुप्त्वा परे यामे द्वादशैव तु चोदनाः ११
तदेवमुपशान्तेन दान्तेनैकान्तशीलिना
आत्मारामेण बुद्धेन योक्तव्योऽत्मा न संशयः १२
पञ्चानामिन्द्रियाणां तु दोषानाक्षिप्य पञ्चधा
शब्दं स्पर्शं तथा रूपं रसं गन्धं तथैव च १३
प्रतिभामपवर्गं च प्रतिसंहृत्य मैथिल
इन्द्रियग्राममखिलं मनस्यभिनिवेश्य ह १४
मनस्तथैवाहंकारे प्रतिष्ठाप्य नराधिप
अहंकारं तथा बुद्धौ बुद्धिं च प्रकृतावपि १५
एवं हि परिसंख्याय ततो ध्यायेत केवलम्
विरजस्कमलं नित्यमनन्तं शुद्धमव्रणम् १६
तस्थुषं पुरुषं सत्त्वमभेद्यमजरामरम्
शाश्वतं चाव्ययं चैव ईशानं ब्रह्म चाव्ययम् १७
युक्तस्य तु महाराज लक्षणान्युपधारयेत्
लक्षणं तु प्रसादस्य यथा तृप्तः सुखं स्वपेत् १८
निर्वाते तु यथा दीपो ज्वलेत्स्नेहसमन्वितः
निश्चलोर्ध्वशिखस्तद्वद्युक्तमाहुर्मनीषिणः १९
पाषाण इव मेघोत्थैर्यथा बिन्दुभिराहतः
नालं चालयितुं शक्यस्तथा युक्तस्य लक्षणम् २०
शङ्खदुन्दुभिनिर्घोषैर्विविधैर्गीतवादितैः
क्रियमाणैर्न कम्पेत युक्तस्यैतन्निदर्शनम् २१
तैलपात्रं यथा पूर्णं कराभ्यां गृह्य पूरुषः
सोपानमारुहेद्भीतस्तर्ज्यमानोऽसिपाणिभिः २२
संयतात्मा भयात्तेषां न पात्राद्बिन्दुमुत्सृजेत्
तथैवोत्तरमाणस्य एकाग्रमनसस्तथा २३

स्थिरत्वादिन्द्रियाणां तु निश्चलत्वात्तथैव च
एवं युक्तस्य तु मुनेर्लक्षणान्युपधारयेत् २४
स युक्तः पश्यति ब्रह्म यत्तत्परममव्ययम्
महतस्तमसो मध्ये स्थितं ज्वलनसंनिभम् २५
एतेन केवलं याति त्यक्त्वा देहमसाक्षिकम्
कालेन महता राजन्श्रुतिरेषा सनातनी २६
एतद्धि योगं योगानां किमन्यद्योगलक्षणम्
विज्ञाय तद्धि मन्यन्ते कृतकृत्या मनीषिणः २७
इति श्रीमहाभारते शान्तिपर्वणि चतुरधिकत्रिशततमोऽध्यायः ३०४

## पञ्चाधिकत्रिशततमोऽध्यायः

याज्ञवल्क्य उवाच
तथैवोत्क्रममाणं तु शृणुष्वावहितो नृप
पद्भ्यामुत्क्रममाणस्य वैष्णवं स्थानमुच्यते १
जङ्घाभ्यां तु वसून्देवानाप्नुयादिति नः श्रुतम्
जानुभ्यां च महाभागान्देवान्साध्यानवाप्नुयात् २
पायुनोत्क्रममाणस्तु मैत्रं स्थानमवाप्नुयात्
पृथिवीं जघनेनाथ ऊरुभ्यां च प्रजापतिम् ३
पार्श्वाभ्यां मरुतो देवान्नासाभ्यामिन्दुमेव च
बाहुभ्यामिन्द्रमित्याहुरुरसा रुद्रमेव च ४
ग्रीवयास्तमृषिश्रेष्ठं नरमाप्नोत्यनुत्तमम्
विश्वेदेवान्मुखेनाथ दिशः श्रोत्रेण चाप्नुयात् ५
घ्राणेन गन्धवहनं नेत्राभ्यां सूर्यमेव च
भ्रूभ्यां चैवाश्विनौ देवौ ललाटेन पितॄनथ ६
ब्रह्माणमाप्नोति विभुं मूर्ध्ना देवाग्रजं तथा
एतान्युत्क्रमणस्थानान्युक्तानि मिथिलेश्वर ७
अरिष्टानि तु वक्ष्यामि विहितानि मनीषिभिः
संवत्सरवियोगस्य संभवेयुः शरीरिणः ८
योऽरुन्धतीं न पश्येत दृष्टपूर्वां कदाचन
तथैव ध्रुवमित्याहुः पूर्णेन्दुं दीपमेव च

खरडाभासं दक्षिणतस्तेऽपि संवत्सरायुषः ९
परचक्षुषि चात्मानं ये न पश्यन्ति पार्थिव
आत्मच्छायाकृतीभूतं तेऽपि संवत्सरायुषः १०
अतिद्युतिरतिप्रज्ञा अप्रज्ञा चाद्युतिस्तथा
प्रकृतेर्विक्रियापत्तिः षरमासान्मृत्युलक्षणम् ११
दैवतान्यवजानाति ब्राह्मणैश्च विरुध्यते
कृष्णश्यावच्छविच्छायः षरमासान्मृत्युलक्षणम् १२
शीर्णनाभि यथा चक्रं छिद्रं सोमं प्रपश्यति
तथैव च सहस्रांशुं सप्तरात्रेण मृत्युभाक् १३
शवगन्धमुपाघ्राति सुरभिं प्राप्य यो नरः
देवतायतनस्थस्तु षड्रात्रेण मृत्युभाक् १४
कर्णनासावनमनं दन्तदृष्टिविरागिता
संज्ञालोपो निरूष्मत्वं सद्योमृत्युनिदर्शनम् १५
अकस्माच्च स्रवेद्यस्य वाममक्षि नराधिप
मूर्धतश्चोत्पतेद्धूमः सद्योमृत्युनिदर्शनम् १६
एतावन्ति त्वरिष्टानि विदित्वा मानवोऽत्मवान्
निशि चाहनि चात्मानं योजयेत्परमात्मनि १७
प्रतीक्षमाणस्तत्कालं यत्कालं प्रति तद्भवेत्
अथास्य नेष्टं मरणं स्थातुमिच्छेदिमां क्रियाम् १८
सर्वगन्धान्रसांश्चैव धारयेत समाहितः
तथा हि मृत्युं जयति तत्परेणान्तरात्मना १९
ससांख्यधारणं चैव विदित्वा मनुजर्षभ
जयेच्च मृत्युं योगेन तत्परेणान्तरात्मना २०
गच्छेत्प्राप्याक्षयं कृत्स्नमजन्म शिवमव्ययम्
शाश्वतं स्थानमचलं दुष्प्रापमकृतात्मभिः २१
इति श्रीमहाभारते शान्तिपर्वणि पञ्चाधिकत्रिशततमोऽध्यायः ३०५

## षडधिकत्रिशततमोऽध्यायः

याज्ञवल्क्य उवाच
अव्यक्तस्थं परं यत्तत्पृष्टस्तेऽह नराधिप

परं गुह्यमिमं प्रश्नं शृणुष्वावहितो नृप १
यथार्षेणेह विधिना चरतावमतेन ह
मयादित्यादवाप्तानि यजूंषि मिथिलाधिप २
महता तपसा देवस्तपिष्ठः सेवितो मया
प्रीतेन चाहं विभुना सूर्येणोक्तस्तदानघ ३
वरं वृणीष्व विप्रर्षे यदिष्टं ते सुदुर्लभम्
तत्ते दास्यामि प्रीतात्मा मत्प्रसादो हि दुर्लभः ४
ततः प्रणम्य शिरसा मयोक्तस्तपतां वरः
यजूंषि नोपयुक्तानि क्षिप्रमिच्छामि वेदितुम् ५
ततो मां भगवानाह वितरिष्यामि ते द्विज
सरस्वतीह वाग्भूता शरीरं ते प्रवेक्ष्यति ६
ततो मामाह भगवानास्यं स्वं विवृतं कुरु
विवृतं च ततो मेऽस्य प्रविष्टा च सरस्वती ७
ततो विदह्यमानोऽह प्रविष्टोऽम्भस्तदानघ
अविज्ञानादमर्षाच्च भास्करस्य महात्मनः ८
ततो विदह्यमानं मामुवाच भगवान्रविः
मुहूर्तं सह्यतां दाहस्ततः शीतीभविष्यति ९
शीतीभूतं च मां दृष्ट्वा भगवानाह भास्करः
प्रतिष्ठास्यति ते वेदः सोत्तरः सखिलो द्विज १०
कृत्स्नं शतपथं चैव प्रणेष्यसि द्विजर्षभ
तस्यान्ते चापुनर्भावे बुद्धिस्तव भविष्यति ११
प्राप्स्यसे च यदिष्टं तत्सांख्ययोगेप्सितं पदम्
एतावदुक्त्वा भगवानस्तमेवाभ्यवर्तत १२
ततोऽनुव्याहृतं श्रुत्वा गते देवे विभावसौ
गृहमागत्य संहृष्टोऽचिन्तयं वै सरस्वतीम् १३
ततः प्रवृत्तातिशुभा स्वरव्यञ्जनभूषिता
ॐकारमादितः कृत्वा मम देवी सरस्वती १४
ततोऽहमर्घ्यं विधिवत्सरस्वत्यै न्यवेदयम्
तपतां च वरिष्ठाय निषण्णस्तत्परायणः १५
ततः शतपथं कृत्स्नं सरहस्यं ससंग्रहम्

चक्रे सपरिशेषं च हर्षेण परमेण ह १६
कृत्वा चाध्ययनं तेषां शिष्याणां शतमुत्तमम्
विप्रियार्थं सशिष्यस्य मातुलस्य महात्मनः १७
ततः सशिष्येण मया सूर्येणेव गभस्तिभिः
व्याप्तो यज्ञो महाराज पितुस्तव महात्मनः १८
मिषतो देवलस्यापि ततोऽध हृतवानहम्
स्ववेददक्षिणायाथ विमर्दे मातुलेन ह १९
सुमन्तुनाथ पैलेन तथा जैमिनिना च वै
पित्रा ते मुनिभिश्चैव ततोऽहमनुमानितः २०
दश पञ्च च प्राप्तानि यजूंष्यर्कान्मयानघ
तथैव लोमहर्षाच्च पुराणमवधारितम् २१
बीजमेतत्पुरस्कृत्य देवीं चैव सरस्वतीम्
सूर्यस्य चानुभावेन प्रवृत्तोऽह नराधिप २२
कर्तुं शतपथं वेदमपूर्वं कारितं च मे
यथाभिलषितं मार्गं तथा तच्चोपपादितम् २३
शिष्याणामखिलं कृत्स्नमनुज्ञातं ससंग्रहम्
सर्वे च शिष्याः शुचयो गताः परमहर्षिताः २४
शाखाः पञ्चदशेमास्तु विद्या भास्करदर्शिताः
प्रतिष्ठाप्य यथाकामं वेद्यं तदनुचिन्तयम् २५
किमत्र ब्रह्मण्यमृतं किं च वेद्यमनुत्तमम्
चिन्तये तत्र चागत्य गन्धर्वो मामपृच्छत २६
विश्वावसुस्ततो राजन्वेदान्तज्ञानकोविदः
चतुर्विंशतिकान्प्रश्नान्पृष्ट्वा वेदस्य पार्थिव
पञ्चविंशतिमं प्रश्नं पप्रच्छान्वीक्षिकीं तथा २७
विश्वाविश्वं तथाश्वाश्वं मित्रं वरुणमेव च
ज्ञानं ज्ञेयं तथाज्ञोऽज्ञ कस्तपा अतपास्तथा
सूर्यादः सूर्य इति च विद्याविद्ये तथैव च २८
वेद्यावेद्यं तथा राजन्नचलं चलमेव च
अपूर्वमक्षयं क्षय्यमेतत्प्रश्नमनुत्तमम् २९
अथोक्तश्च मया राजन्राजा गन्धर्वसत्तमः

पृष्टवाननुपूर्वेण प्रश्नमुत्तममर्थवत् ३०
मुहूर्तं मृष्यतां तावद्यावदेनं विचिन्तये
बाढमित्येव कृत्वा च तूष्णीं गन्धर्व आस्थितः ३१
ततोऽन्वचिन्तयमहं भूयो देवीं सरस्वतीम्
मनसा स च मे प्रश्नो दध्नो घृतमिवोद्धृतम् ३२
तत्रोपनिषदं चैव परिशेषं च पार्थिव
मथ्नामि मनसा तात दृष्ट्वा चान्वीक्षिकीं पराम् ३३
चतुर्थी राजशार्दूल विद्यैषा सांपरायिकी
उदीरिता मया तुभ्यं पञ्चविंशे ह्यधिष्ठिता ३४
अथोक्तस्तु मया राजन्राजा विश्वावसुस्तदा
श्रूयतां यद्भवानस्मान्प्रश्नं संपृष्टवानिह ३५
विश्वाविश्वेति यदिदं गन्धर्वेन्द्रानुपृच्छसि
विश्वाव्यक्तं परं विद्याद्भूतभव्यभयंकरम् ३६
त्रिगुणं गुणकर्तृत्वादविश्वे निष्कलस्तथा
अश्वस्तथैव मिथुनमेवमेवानुदृश्यते ३७
अव्यक्तं प्रकृतिं प्राहुः पुरुषेति च निर्गुणम्
तथैव मित्रं पुरुषं वरुणं प्रकृतिं तथा ३८
ज्ञानं तु प्रकृतिं प्राहुर्ज्ञेयं निष्कलमेव च
अज्ञश्च ज्ञश्च पुरुषस्तस्मान्निष्कल उच्यते ३९
कस्तपा अतपाः प्रोक्तः कोऽसौ पुरुष उच्यते
तपाः प्रकृतिरित्याहुरतपा निष्कलः स्मृतः ४०
तथैवावेद्यमव्यक्तं वेद्यः पुरुष उच्यते
चलाचलमिति प्रोक्तं त्वया तदपि मे शृणु ४१
चलां तु प्रकृतिं प्राहुः कारणं क्षेपसर्गयोः
अक्षेपसर्गयोःकर्ता निश्चलः पुरुषः स्मृतः ४२
अजावुभावप्रजौ अक्षयौ चाप्युभावपि
अजौ नित्यावुभौ प्राहुरध्यात्मगतिनिश्चयाः ४३
अक्षयत्वात्प्रजनने अजमत्राहुरव्ययम्
अक्षयं पुरुषं प्राहुः क्षयो ह्यस्य न विद्यते ४४
गुणक्षयत्वात्प्रकृतिः कर्तृत्वादक्षयं बुधाः

एषा तेऽन्वीक्षिकी विद्या चतुर्थी सांपरायिकी ४५
विद्योपेतं धनं कृत्वा कर्मणा नित्यकर्मणि
एकान्तदर्शना वेदाः सर्वे विश्वावसो स्मृताः ४६
जायन्ते च म्रियन्ते च यस्मिन्नेते यतश्च्युताः
वेदार्थं ये न जानन्ति वेद्यं गन्धर्वसत्तम ४७
साङ्गोपाङ्गानपि यदि पञ्च वेदानधीयते
वेदवेद्यं न जानीते वेदभारवहो हि सः ४८
यो घृतार्थी खरीक्षीरं मथेद्गन्धर्वसत्तम
विष्ठां तत्रानुपश्येत न मण्डं नापि वा घृतम् ४९
तथा वेद्यमवेद्यं च वेदविद्यो न विन्दति
स केवलं मूढमतिर्ज्ञानभारवहः स्मृतः ५०
द्रष्टव्यौ नित्यमेवैतौ तत्परेणान्तरात्मना
यथास्य जन्मनिधने न भवेतां पुनः पुनः ५१
अजस्रं जन्मनिधनं चिन्तयित्वा त्रयीमिमाम्
परित्यज्य क्षयमिह अक्षयं धर्ममास्थितः ५२
यदा तु पश्यतेऽत्यन्तमहन्यहनि काश्यप
तदा स केवलीभूतः षड्विंशमनुपश्यति ५३
अन्यश्च शश्वदव्यक्तस्तथान्यः पञ्चविंशकः
तस्य द्वावनुपश्येत तमेकमिति साधवः ५४
तेनैतन्नाभिजानन्ति पञ्चविंशकमच्युतम्
जन्ममृत्युभयाद्योगाः सांख्याश्च परमैषिणः ५५
विश्वावसुरुवाच
पञ्चविंशं यदेतत्ते प्रोक्तं ब्राह्मणसत्तम
तथा तन्न तथा वेति तद्भवान्वक्तुमर्हति ५६
जैगीषव्यस्यासितस्य देवलस्य च मे श्रुतम्
पराशरस्य विप्रर्षेर्वार्षगण्यस्य धीमतः ५७
भिक्षोः पञ्चशिखस्याथ कपिलस्य शुकस्य च
गौतमस्यार्ष्टिषेणस्य गर्गस्य च महात्मनः ५८
नारदस्यासुरेश्चैव पुलस्त्यस्य च धीमतः
सनत्कुमारस्य ततः शुक्रस्य च महात्मनः ५९

कश्यपश्च पितुश्चैव पूर्वमेव मया श्रुतम्
तदनन्तरं च रुद्रस्य विश्वरूपस्य धीमतः ६०
दैवतेभ्यः पितृभ्यश्च दैत्येभ्यश्च ततस्ततः
प्राप्तमेतन्मया कृत्स्नं वेद्यं नित्यं वदन्त्युत ६१
तस्मात्तद्वै भवद्बुद्ध्या श्रोतुमिच्छामि ब्राह्मण
भगवान्प्रबर्हः शास्त्राणां प्रगल्भश्चातिबुद्धिमान् ६२
न तवाविदितं किञ्चिद्भवान्श्रुतिनिधिः स्मृतः
कथ्यते देवलोके च पितृलोके च ब्राह्मण ६३
ब्रह्मलोकगताश्चैव कथयन्ति महर्षयः
पतिश्च तपतां शश्वदादित्यस्तव भाषते ६४
सांख्यज्ञानं त्वया ब्रह्मन्नवाप्तं कृत्स्नमेव च
तथैव योगज्ञानं च याज्ञवल्क्य विशेषतः ६५
निःसन्दिग्धं प्रबुद्धस्त्वं बुध्यमानश्चराचरम्
श्रोतुमिच्छामि तज्ज्ञानं घृतं मण्डमयं यथा ६६
याज्ञवल्क्य उवाच
कृत्स्नधारिणमेव त्वां मन्ये गन्धर्वसत्तम
जिज्ञाससि च मां राजंस्तन्निबोध यथाश्रुतम् ६७
अबुध्यमानां प्रकृतिं बुध्यते पञ्चविंशकः
न तु बुध्यति गन्धर्व प्रकृतिः पञ्चविंशकम् ६८
अनेनाप्रतिबोधेन प्रधानं प्रवदन्ति तम्
सांख्ययोगाश्च तत्त्वज्ञा यथाश्रुतिनिदर्शनात् ६९
पश्यंस्तथैवापश्यंश्च पश्यत्यन्यस्तथानघ
षड्विंशः पञ्चविंशं च चतुर्विंशं च पश्यति
न तु पश्यति पश्यंस्तु यश्चैनमनुपश्यति ७०
पञ्चविंशोऽभिमन्येत नान्योऽस्ति परमो मम
न चतुर्विंशकोऽग्राह्यो मनुजैर्ज्ञानदर्शिभिः ७१
मत्स्येवोदकमन्वेति प्रवर्तति प्रवर्तनात्
यथैव बुध्यते मत्स्यस्तथैषोऽप्यनुबुध्यते
सस्नेहः सहवासाच्च साभिमानश्च नित्यशः ७२
स निमज्जति कालस्य यदैकत्वं न बुध्यते

उन्मज्जति हि कालस्य ममत्वेनाभिसंवृतः ७३
यदा तु मन्यतेऽन्योऽहमन्य एष इति द्विजः
तदा स केवलीभूतः षड्विंशमनुपश्यति ७४
अन्यश्च राजन्नवरस्तथान्यः पञ्चविंशकः
तत्स्थत्वादनुपश्यन्ति एक एवेति साधवः ७५
तेनैतन्नाभिनन्दन्ति पञ्चविंशकमच्युतम्
जन्ममृत्युभयाद्भीता योगाः सांख्याश्च काश्यप
षड्विंशमनुपश्यन्ति शुचयस्तत्परायणाः ७६
यदा स केवलीभूतः षड्विंशमनुपश्यति
तदा स सर्वविद्विद्वान्न पुनर्जन्म विन्दति ७७
एवमप्रतिबुद्धश्च बुध्यमानश्च तेऽनघ
बुद्धश्चोक्तो यथातत्त्वं मया श्रुतिनिदर्शनात् ७८
पश्यापश्यं योऽनुपश्येत्क्षेमं तत्त्वं च काश्यप
केवलाकेवलं चाद्यं पञ्चविंशात्परं च यत् ७९
विश्वावसुरुवाच
तथ्यं शुभं चैतदुक्तं त्वया भोः सम्यक्क्षेम्यं देवताद्यं यथावत्
स्वस्त्यक्षयं भवतश्चास्तु नित्यं बुद्ध्या सदा बुद्धियुक्तं नमस्ते ८०
याज्ञवल्क्य उवाच
एवमुक्त्वा संप्रयातो दिवं स विभ्राजन्वै श्रीमता दर्शनेन
तुष्टश्च तुष्ट्या परयाभिनन्द्य प्रदक्षिणं मम कृत्वा महात्मा ८१
ब्रह्मादीनां खेचराणां क्षितौ च ये चाधस्तात्संवसन्ते नरेन्द्र
तत्रैव तद्दर्शनं दर्शयन्वै सम्यक्क्षेम्यं ये पथं संश्रिता वै ८२
सांख्याः सर्वे सांख्यधर्मे रताश्च तद्वद्योगा योगधर्मे रताश्च
ये चाप्यन्ये मोक्षकामा मनुष्यास्तेषामेतद्दर्शनं ज्ञानदृष्टम् ८३
ज्ञानान्मोक्षो जायते पूरुषाणां नास्त्यज्ञानादेवमाहुर्नरेन्द्र
तस्माज्ज्ञानं तत्त्वतोऽन्वेषितव्यं येनात्मानं मोक्षयेज्जन्ममृत्योः ८४
प्राप्य ज्ञानं ब्राह्मणात्क्षत्रियाद्वा वैश्याच्छूद्रादपि नीचादभीक्ष्णम्
श्रद्धातव्यं श्रद्दधानेन नित्यं न श्रद्धिनं जन्ममृत्यू विशेताम् ८५
सर्वे वर्णा ब्राह्मणा ब्रह्मजाश्च सर्वे नित्यं व्याहरन्ते च ब्रह्म
तत्त्वं शास्त्रं ब्रह्मबुद्ध्या ब्रवीमि सर्वं विश्वं ब्रह्म चैतत्समस्तम् ८६

ब्रह्मास्यतो ब्राह्मणाः संप्रसूता बाहुभ्यां वै क्षत्रियाः संप्रसूताः
नाभ्यां वैश्याः पादतश्चापि शूद्राः सर्वे वर्णा नान्यथा वेदितव्याः ८७
अज्ञानतः कर्मयोनिं भजन्ते तां तां राजंस्ते यथा यान्त्यभावम्
तथा वर्णा ज्ञानहीनाः पतन्ते घोरादज्ञानात्प्राकृतं योनिजालम् ८८
तस्माज्ज्ञानं सर्वतो मार्गितव्यं सर्वत्रस्थं चैतदुक्तं मया ते
तस्थौ ब्रह्मा तस्थिवांश्चापरो यस्तस्मै नित्यं मोक्षमाहुर्द्विजेन्द्राः ८९
यत्ते पृष्टं तन्मया चोपदिष्टं याथातथ्यं तद्विशोको भवस्व
राजन्गच्छस्वैतदर्थस्य पारं सम्यक्प्रोक्तं स्वस्ति तेऽस्त्वत्र नित्यम् ९०
भीष्म उवाच
स एवमनुशास्तस्तु याज्ञवल्क्येन धीमता
प्रीतिमानभवद्राजा मिथिलाधिपतिस्तदा ९१
गते मुनिवरे तस्मिन्कृते चापि प्रदक्षिणे
दैवरातिर्नरपतिरासीनस्तत्र मोक्षवित् ९२
गोकोटिं स्पर्शयामास हिरण्यस्य तथैव च
रत्नाञ्जलिमथैकं च ब्राह्मणेभ्यो ददौ तदा ९३
विदेहराज्यं च तथा प्रतिष्ठाप्य सुतस्य वै
यतिधर्ममुपासंश्चाप्यवसन्मिथिलाधिपः ९४
सांख्यज्ञानमधीयानो योगशास्त्रं च कृत्स्नशः
धर्माधर्मौ च राजेन्द्र प्राकृतं परिगर्हयन् ९५
अनन्तमिति कृत्वा स नित्यं केवलमेव च
धर्माधर्मौ पुण्यपापे सत्यासत्ये तथैव च ९६
जन्ममृत्यू च राजेन्द्र प्राकृतं तदचिन्तयत्
ब्रह्माव्यक्तस्य कर्मेदमिति नित्यं नराधिप ९७
पश्यन्ति योगाः सांख्याश्च स्वशास्त्रकृतलक्षणाः
इष्टानिष्टवियुक्तं हि तस्थौ ब्रह्म परात्परम्
नित्यं तमाहुर्विद्वांसः शुचिस्तस्माच्छुचिर्भव ९८
दीयते यच्च लभते दत्तं यच्चानुमन्यते
ददाति च नरश्रेष्ठ प्रतिगृह्णाति यच्च ह
ददात्यव्यक्तमेवैतत्प्रतिगृह्णाति तच्च वै ९९
आत्मा ह्येवात्मनो ह्येकः कोऽन्यस्त्वत्तोऽधिको भवेत्

एवं मन्यस्व सततमन्यथा मा विचिन्तय १००
यस्याव्यक्तं न विदितं सगुणं निर्गुणं पुनः
तेन तीर्थानि यज्ञाश्च सेवितव्याविपश्चिता १०१
न स्वाध्यायैस्तपोभिर्वा यज्ञैर्वा कुरुनन्दन
लभतेऽव्यक्तसंस्थानं ज्ञात्वाव्यक्तं महीपते १०२
तथैव महतः स्थानमाहंकारिकमेव च
अहंकारात्परं चापि स्थानानि समवाप्नुयात् १०३
ये त्वव्यक्तात्परं नित्यं जानते शास्त्रतत्पराः
जन्ममृत्युवियुक्तं च वियुक्तं सदसच्च यत् १०४
एतन्मयाप्तं जनकात्पुरस्तात्तेनापि चाप्तं नृप याज्ञवल्क्यात्
ज्ञानं विशिष्टं न तथा हि यज्ञा ज्ञानेन दुर्गं तरते न यज्ञैः १०५
दुर्गं जन्म निधनं चापि राजन्न भूतिकं ज्ञानविदो वदन्ति
यज्ञैस्तपोभिर्नियमैर्व्रतैश्च दिवं समासाद्य पतन्ति भूमौ १०६
तस्मादुपासस्व परं महच्छुचिं शिवं विमोक्षं विमलं पवित्रम्
क्षेत्रज्ञवित्पार्थिव ज्ञानयज्ञमुपास्य वै तत्त्वमृषिर्भविष्यसि १०७
उपनिषदमुपाकरोत्तदा वै जनकनृपस्य पुरा हि याज्ञवल्क्यः
यदुपगणितशाश्वताव्ययं तच्छुभममृतत्वमशोकमृच्छतीति १०८
इति श्रीमहाभारते शान्तिपर्वणि षडधिकत्रिशततमोऽध्यायः ३०६

## सप्ताधिकत्रिशततमोऽध्यायः

युधिष्ठिर उवाच
ऐश्वर्यं वा महत्प्राप्य धनं वा भरतर्षभ
दीर्घमायुरवाप्याथ कथं मृत्युमतिक्रमेत् १
तपसा वा सुमहता कर्मणा वा श्रुतेन वा
रसायनप्रयोगैर्वा कैर्नोपैति जरान्तकौ २
भीष्म उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
भिक्षोः पञ्चशिखस्येह संवादं जनकस्य च ३
वैदेहो जनको राजा महर्षिं वेदवित्तमम्
पर्यपृच्छत्पञ्चशिखं छिन्नधर्मार्थसंशयम् ४

केन वृत्तेन भगवन्नतिक्रामेज्जरान्तकौ
तपसा वाथ बुद्ध्या वा कर्मणा वा श्रुतेन वा ५
एवमुक्तः स वैदेहं प्रत्युवाच परोक्षवित्
निवृत्तिर्नैतयोरस्ति नानिवृत्तिः कथंचन ६
न ह्यहानि निवर्तन्ते न मासा न पुनः क्षपाः
सोऽय प्रपद्यतेऽध्वानं चिराय ध्रुवमध्रुवः ७
सर्वभूतसमुच्छेदः स्त्रोतसेवोह्यते सदा
उह्यमानं निमज्जन्तमप्लवे कालसागरे
जरामृत्युमहाग्राहे न कश्चिदभिपद्यते ८
नैवास्य भविता कश्चिन्नासौ भवति कस्यचित्
पथि संगतमेवेदं दारैरन्यैश्च बन्धुभिः
नायमत्यन्तसंवासो लब्धपूर्वो हि केनचित् ९
क्षिप्यन्ते तेन तेनैव निष्टनन्तः पुनः पुनः
कालेन जाता जाता हि वायुनेवाभ्रसंचयाः १०
जरामृत्यू हि भूतानां खादितारौ वृकाविव
बलिनां दुर्बलानां च ह्रस्वानां महतामपि ११
एवंभूतेषु भूतेषु नित्यभूताध्रुवेषु च
कथं हृष्येत जातेषु मृतेषु च कथं ज्वरेत् १२
कुतोऽहमागतः कोऽस्मि क्व गमिष्यामि कस्य वा
कस्मिन्स्थितः क्व भविता कस्मात्किमनुशोचसि १३
द्रष्टा स्वर्गस्य न ह्यस्ति तथैव नरकस्य च
आगमांस्त्वनतिक्रम्य दद्याच्चैव यजेत च १४
इति श्रीमहाभारते शान्तिपर्वणि सप्ताधिकत्रिशततमोऽध्यायः ३०७

अष्टाधिकत्रिशततमोऽध्यायः

युधिष्ठिर उवाच
अपरित्यज्य गार्हस्थ्यं कुरुराजर्षिसत्तम
कः प्राप्तो विनयं बुद्ध्या मोक्षतत्त्वं वदस्व मे १
संन्यस्यते यथात्मायं संन्यस्तात्मा यथा च यः
परं मोक्षस्य यच्चापि तन्मे ब्रूहि पितामह २

भीष्म उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
जनकस्य च संवादं सुलभायाश्च भारत ३
संन्यासफलिकः कश्चिद्बभूव नृपतिः पुरा
मैथिलो जनको नाम धर्मध्वज इति श्रुतः ४
स वेदे मोक्षशास्त्रे च स्वे च शास्त्रे कृतागमः
इन्द्रियाणि समाधाय शशास वसुधामिमाम् ५
तस्य वेदविदः प्राज्ञाः श्रुत्वा तां साधुवृत्तताम्
लोकेषु स्पृहयन्त्यन्ये पुरुषाः पुरुषेश्वर ६
अथ धर्मयुगे तस्मिन्योगधर्ममनुष्ठिता
महीमनुचचारैका सुलभा नाम भिक्षुकी ७
तया जगदिदं सर्वमटन्त्या मिथिलेश्वरः
तत्र तत्र श्रुतो मोक्षे कथ्यमानस्त्रिदण्डिभिः ८
सा सुसूक्ष्मां कथां श्रुत्वा तथ्यं नेति ससंशया
दर्शने जातसंकल्पा जनकस्य बभूव ह ९
ततः सा विप्रहायाथ पूर्वरूपं हि योगतः
अबिभ्रदनवद्याङ्गी रूपमन्यदनुत्तमम् १०
चक्षुर्निमेषमात्रेण लघ्वस्त्रगतिगामिनी
विदेहानां पुरीं सुभ्रूर्जगाम कमलेक्षणा ११
सा प्राप्य मिथिलां रम्यां समृद्धजनसंकुलाम्
भैक्षचर्यापदेशेन ददर्श मिथिलेश्वरम् १२
राजा तस्याः परं दृष्ट्वा सौकुमार्यं वपुस्तथा
केयं कस्य कुतो वेति बभूवागतविस्मयः १३
ततोऽस्या स्वागतं कृत्वा व्यादिश्य च वरासनम्
पूजितां पादशौचेन वरान्नेनाप्यतर्पयत् १४
अथ भुक्तवती प्रीता राजानं मन्त्रिभिर्वृतम्
सर्वभाष्यविदां मध्ये चोदयामास भिक्षुकी १५
सुलभा त्वस्य धर्मेषु मुक्तो नेति ससंशया
सत्त्वं सत्त्वेन योगज्ञा प्रविवेश महीपते १६
नेत्राभ्यां नेत्रयोरस्य रश्मीन्संयोज्य रश्मिभिः

सा स्म संचोदयिष्यन्तं योगबन्धैर्बबन्ध ह १७
जनकोऽप्युत्स्मयन्राजा भावमस्या विशेषयन्
प्रतिजग्राह भावेन भावमस्या नृपोत्तमः १८
तदेकस्मिन्नधिष्ठाने संवादः श्रूयतामयम्
छत्रादिषु विमुक्तस्य मुक्तायाश्च त्रिदण्डके १९
भगवत्याः क्व चर्येयं कृता क्व च गमिष्यसि
कस्य च त्वं कुतो वेति पप्रच्छैनां महीपतिः २०
श्रुते वयसि जातौ च सद्भावो नाधिगम्यते
एष्वर्थेषूत्तरं तस्मात्प्रवेद्यं सत्समागमे २१
छत्रादिषु विशेषेषु मुक्तं मां विद्धि सर्वशः
स त्वां संमन्तुमिच्छामि मानार्हासि मता हि मे २२
यस्माच्चैतन्मया प्राप्तं ज्ञानं वैशेषिकं पुरा
यस्य नान्यं प्रवक्तास्ति मोक्षे तमपि मे शृणु २३
पाराशर्यसगोत्रस्य वृद्धस्य सुमहात्मनः
भिक्षोः पञ्चशिखस्याहं शिष्यः परमसंमतः २४
सांख्यज्ञाने तथा योगे महीपालविधौ तथा
त्रिविधे मोक्षधर्मेऽस्मिन्गताध्वा छिन्नसंशयः २५
स यथाशास्त्रदृष्टेन मार्गेणेह परिव्रजन्
वार्षिकांश्चतुरो मासान्पुरा मयि सुखोषितः २६
तेनाहं सांख्यमुख्येन सुदृष्टार्थेन तत्त्वतः
श्रावितस्त्रिविधं मोक्षं न च राज्याद्विचालितः २७
सोऽह तामखिलां वृत्तिं त्रिविधां मोक्षसंहिताम्
मुक्तरागश्चराम्येकः पदे परमके स्थितः २८
वैराग्यं पुनरेतस्य मोक्षस्य परमो विधिः
ज्ञानादेव च वैराग्यं जायते येन मुच्यते २९
ज्ञानेन कुरुते यत्नं यत्नेन प्राप्यते महत्
महद्द्वंद्वप्रमोक्षाय सा सिद्धिर्या वयोतिगा ३०
सेयं परमिका बुद्धिः प्राप्ता निर्द्वंद्वता मया
इहैव गतमोहेन चरता मुक्तसङ्गिना ३१
यथा क्षेत्रं मृदूभूतमद्भिराप्लावितं तथा

जनयत्यङ्कुरं कर्म नृणां तद्वत्पुनर्भवम् ३२
यथा चोत्तापितं बीजं कपाले यत्र तत्र वा
प्राप्याप्यङ्कुरहेतुत्वमबीजत्वान्न जायते ३३
तद्वद्भगवता तेन शिखाप्रोक्तेन भिक्षुणा
ज्ञानं कृतमबीजं मे विषयेषु न जायते ३४
नाभिषज्जति कस्मिंश्चिन्नानर्थे न परिग्रहे
नाभिरज्यति चैतेषु व्यर्थत्वाद्रागदोषयोः ३५
यश्च मे दक्षिणं बाहुं चन्दनेन समुक्षयेत्
सव्यं वास्या च यस्तक्षेत्समावेतावुभौ मम ३६
सुखी सोऽहमवाप्तार्थः समलोष्टाश्मकाञ्चनः
मुक्तसङ्गः स्थितो राज्ये विशिष्टोऽन्यैस्त्रिदण्डिभिः ३७
मोक्षे हि त्रिविधा निष्ठा दृष्टा पूर्वैर्महर्षिभिः
ज्ञानं लोकोत्तरं यच्च सर्वत्यागश्च कर्मणाम् ३८
ज्ञाननिष्ठां वदन्त्येके मोक्षशास्त्रविदो जनाः
कर्मनिष्ठां तथैवान्ये यतयः सूक्ष्मदर्शिनः ३९
प्रहायोभयमप्येतज्ज्ञानं कर्म च केवलम्
तृतीयेयं समाख्याता निष्ठा तेन महात्मना ४०
यमे च नियमे चैव द्वेषे कामे परिग्रहे
माने दम्भे तथा स्नेहे सदृशास्ते कुटुम्बिभिः ४१
त्रिदण्डादिषु यद्यस्ति मोक्षो ज्ञानेन केनचित्
छत्रादिषु कथं न स्यात्तुल्यहेतौ परिग्रहे ४२
येन येन हि यस्यार्थः कारणेनेह कस्यचित्
तत्तदालम्बते द्रव्यं सर्वः स्वे स्वे परिग्रहे ४३
दोषदर्शी तु गार्हस्थ्ये यो व्रजत्याश्रमान्तरम्
उत्सृजन्परिगृह्णंश्च सोऽपि सङ्गान्न मुच्यते ४४
आधिपत्ये तथा तुल्ये निग्रहानुग्रहात्मनि
राजर्षिभिक्षुकाचार्या मुच्यन्ते केन हेतुना ४५
अथ सत्याधिपत्येऽपि ज्ञानेनैवेह केवलम्
मुच्यन्ते किं न मुच्यन्ते पदे परमके स्थिताः ४६
काषायधारणं मौण्ड्यं त्रिविष्टब्धः कमण्डलुः

लिङ्गान्यत्यर्थमेतानि न मोक्षायेति मे मतिः ४७
यदि सत्यपि लिङ्गेऽस्मिञ्ज्ञानमेवात्र कारणम्
निर्मोक्षायेह दुःखस्य लिङ्गमात्रं निरर्थकम् ४८
अथ वा दुःखशैथिल्यं वीक्ष्य लिङ्गे कृता मतिः
किं तदेवार्थसामान्यं छत्रादिषु न लक्ष्यते ४९
आकिंचन्ये न मोक्षोऽस्ति कैंचन्ये नास्ति बन्धनम्
कैंचन्ये चेतरे चैव जन्तुर्ज्ञानेन मुच्यते ५०
तस्माद्धर्मार्थकामेषु तथा राज्यपरिग्रहे
बन्धनायतनेष्वेषु विद्ध्यबन्धे पदे स्थितम् ५१
राज्यैश्वर्यमयः पाशः स्नेहायतनबन्धनः
मोक्षाश्मनिशितेनेह छिन्नस्त्यागासिना मया ५२
सोऽहमेवंगतो मुक्तो जातास्थस्त्वयि भिक्षुकि
अयथार्थो हि ते वर्णो वक्ष्यामि शृणु तन्मम ५३
सौकुमार्यं तथा रूपं वपुरग्र्यं तथा वयः
तवैतानि समस्तानि नियमश्चेति संशयः ५४
यच्चाप्यननुरूपं ते लिङ्गस्यास्य विचेष्टितम्
मुक्तोऽय स्यान्न वेत्यस्माद्धर्षितो मत्परिग्रहः ५५
न च कामसमायुक्ते मुक्तेऽप्यस्ति त्रिदण्डकम्
न रक्ष्यते त्वया चेदं न मुक्तस्यास्ति गोपना ५६
मत्पक्षसंश्रयाच्चायं शृणु यस्ते व्यतिक्रमः
आश्रयन्त्याः स्वभावेन मम पूर्वपरिग्रहम् ५७
प्रवेशस्ते कृतः केन मम राष्ट्रे पुरे तथा
कस्य वा संनिसर्गात्त्वं प्रविष्टा हृदयं मम ५८
वर्णप्रवरमुख्यासि ब्राह्मणी क्षत्रियो ह्यहम्
नावयोरेकयोगोऽस्ति मा कृथा वर्णसंकरम् ५९
वर्तसे मोक्षधर्मेषु गार्हस्थ्ये त्वहमाश्रमे
अयं चापि सुकष्टस्ते द्वितीयोऽश्रमसंकरः ६०
सगोत्रां वासगोत्रां वा न वेद त्वां न वेत्थ माम्
सगोत्रमाविशन्त्यास्ते तृतीयो गोत्रसंकरः ६१
अथ जीवति ते भर्ता प्रोषितोऽप्यथ वा क्वचित्

अगम्या परभार्येति चतुर्थो धर्मसंकरः ६२
सा त्वमेतान्यकार्याणि कार्यापेक्षा व्यवस्यसि
अविज्ञानेन वा युक्ता मिथ्याज्ञानेन वा पुनः ६३
अथ वापि स्वतन्त्रासि स्वदोषेणेह केनचित्
यदि किंचिच्छ्रुतं तेऽस्ति सर्वं कृतमनर्थकम् ६४
इदमन्यत्तृतीयं ते भावस्पर्शविघातकम्
दुष्टाया लक्ष्यते लिङ्गं प्रवक्तव्यं प्रकाशितम् ६५
न मय्येवाभिसंधिस्ते जयैषिण्या जये कृतः
येयं मत्परिषत्कृत्स्ना जेतुमिच्छसि तामपि ६६
तथा ह्येवं पुनश्च त्वं दृष्टिं स्वां प्रतिमुञ्चसि
मत्पक्षप्रतिघाताय स्वपक्षोद्भावनाय च ६७
सा स्वेनामर्षजेन त्वमृद्धिमोहेन मोहिता
भूयः सृजसि योगास्त्रं विषामृतमिवैकधा ६८
इच्छतोर्हि द्वयोर्लाभः स्त्रीपुंसोरमृतोपमः
अलाभश्चाप्यरक्तस्य सोऽत्र दोषो विषोपमः ६९
मा स्प्राक्षीः साधु जानीष्व स्वशास्त्रमनुपालय
कृतेयं हि विजिज्ञासा मुक्तो नेति त्वया मम
एतत्सर्वं प्रतिच्छन्नं मयि नार्हसि गूहितुम् ७०
सा यदि त्वं स्वकार्येण यद्यन्यस्य महीपतेः
तत्त्वं सत्रप्रतिच्छन्ना मयि नार्हसि गूहितुम् ७१
न राजानं मृषा गच्छेन्न द्विजातिं कथंचन
न स्त्रियं स्त्रीगुणोपेतां हन्युर्ह्येते मृषागताः ७२
राज्ञां हि बलमैश्वर्यं ब्रह्म ब्रह्मविदां बलम्
रूपयौवनसौभाग्यं स्त्रीणां बलमनुत्तमम् ७३
अत एतैर्बलैरेते बलिनः स्वार्थमिच्छता
आर्जवेनाभिगन्तव्या विनाशाय ह्यनार्जवम् ७४
सा त्वं जातिं श्रुतं वृत्तं भावं प्रकृतिमात्मनः
कृत्यमागमने चैव वक्तुमर्हसि तत्त्वतः ७५
इत्येतैरसुखैर्वाक्यैरयुक्तैरसमञ्जसैः
प्रत्यादिष्टा नरेन्द्रेण सुलभा न व्यकम्पत ७६

उक्तवाक्ये तु नृपतौ सुलभा चारुदर्शना
ततश्चारुतरं वाक्यं प्रचक्रामाथ भाषितुम् ७७
नवभिर्नवभिश्चैव दोषैर्वाग्बुद्धिदूषणैः
अपेतमुपपन्नार्थमष्टादशगुणान्वितम् ७८
सौक्ष्म्यं सांख्यक्रमौ चोभौ निर्णयः सप्रयोजनः
पञ्चैतान्यर्थजातानि वाक्यमित्युच्यते नृप ७९
एषामेकैकशोऽर्थानां सौक्ष्म्यादीनां सुलक्षणम्
शृणु संसार्यमाणानां पदार्थैः पदवाक्यतः ८०
ज्ञानं ज्ञेयेषु भिन्नेषु यथाभेदेन वर्तते
तत्रातिशयिनी बुद्धिस्तत्सौक्ष्म्यमिति वर्तते ८१
दोषाणां च गुणानां च प्रमाणं प्रविभागशः
कंचिदर्थमभिप्रेत्य सा संख्येत्युपधार्यताम् ८२
इदं पूर्वमिदं पश्चाद्वक्तव्यं यद्विवक्षितम्
क्रमयोगं तमप्याहुर्वाक्यं वाक्यविदो जनाः ८३
धर्मार्थकाममोक्षेषु प्रतिज्ञाय विशेषतः
इदं तदिति वाक्यान्ते प्रोच्यते स विनिर्णयः ८४
इच्छाद्वेषभवैर्दुःखैः प्रकर्षो यत्र जायते
तत्र या नृपते वृत्तिस्तत्प्रयोजनमिष्यते ८५
तान्येतानि यथोक्तानि सौक्ष्म्यादीनि जनाधिप
एकार्थसमवेतानि वाक्यं मम निशामय ८६
उपेतार्थमभिन्नार्थं नापवृत्तं न चाधिंकम्
नाश्लक्ष्णं न च संदिग्धं वक्ष्यामि परमं तव ८७
न गुर्वक्षरसंबद्धं पराङ्मुखमुखं न च
नानृतं न त्रिवर्गेण विरुद्धं नाप्यसंस्कृतम् ८८
न न्यूनं कष्टशब्दं वा व्युत्क्रमाभिहितं न च
न शेषं नानुकल्पेन निष्कारणमहेतुकम् ८९
कामात्क्रोधाद्भयाल्लोभाद्दैन्यादानार्यकात्तथा
ह्रीतोऽनुक्रोशतो मानान्न वक्ष्यामि कथंचन ९०
वक्ता श्रोता च वाक्यं च यदा त्वविकलं नृप
सममेति विवक्षायां तदा सोऽथ प्रकाशते ९१

वक्तव्ये तु यदा वक्ता श्रोतारमवमन्यते
स्वार्थमाह परार्थं वा तदा वाक्यं न रोहति ९२
अथ यः स्वार्थमुत्सृज्य परार्थं प्राह मानवः
विशङ्का जायते तस्मिन्वाक्यं तदपि दोषवत् ९३
यस्तु वक्ता द्वयोरर्थमविरुद्धं प्रभाषते
श्रोतुश्चैवात्मनश्चैव स वक्ता नेतरो नृप ९४
तदर्थवदिदं वाक्यमुपेतं वाक्यसंपदा
अविक्षिप्तमना राजन्नेकाग्रः श्रोतुमर्हसि ९५
कासि कस्य कुतो वेति त्वयाहमभिचोदिता
तत्रोत्तरमिदं वाक्यं राजन्नेकमनाः शृणु ९६
यथा जतु च काष्ठं च पांसवश्चोदबिन्दुभिः
सुश्लिष्टानि तथा राजन्प्राणिनामिह संभवः ९७
शब्दः स्पर्शो रसो रूपं गन्धः पञ्चेन्द्रियाणि च
पृथगात्मा दशात्मानः संश्लिष्टा जतुकाष्ठवत् ९८
न चैषां चोदना काचिदस्तीत्येष विनिश्चयः
एकैकस्येह विज्ञानं नास्त्यात्मनि तथा परे ९९
न वेद चक्षुश्चक्षुष्ट्वं श्रोत्रं नात्मनि वर्तते
तथैव व्यभिचारेण न वर्तन्ते परस्परम्
संश्लिष्टा नाभिजायन्ते यथाप इह पांसवः १००
बाह्यानन्यानपेक्षन्ते गुणांस्तानपि मे शृणु
रूपं चक्षुः प्रकाशश्च दर्शने हेतवस्त्रयः
यथैवात्र तथान्येषु ज्ञानज्ञेयेषु हेतवः १०१
ज्ञानज्ञेयान्तरे तस्मिन्मनो नामापरो गुणः
विचारयति येनायं निश्चये साध्वसाधुनी १०२
द्वादशस्त्वपरस्तत्र बुद्धिर्नाम गुणः स्मृतः
येन संशयपूर्वेषु बोद्धव्येषु व्यवस्यति १०३
अथ द्वादशके तस्मिन्सत्त्वं नामापरो गुणः
महासत्त्वोऽल्पसत्त्वो वा जन्तुर्येनानुमीयते १०४
क्षेत्रज्ञ इति चाप्यन्यो गुणस्तत्र चतुर्दशः
ममायमिति येनायं मन्यते न च मन्यते १०५

अथ पञ्चदशो राजन्गुणस्तत्रापरः स्मृतः
पृथक्कलासमूहस्य सामग्र्यं तदिहोच्यते १०६
गुणस्त्वेवापरस्तत्र संघात इति षोडशः
आकृतिर्व्यक्तिरित्येतौ गुणौ यस्मिन्समाश्रितौ १०७
सुखदुःखे जरामृत्यू लाभालाभौ प्रियाप्रिये
इति चैकोनविंशोऽय द्वंद्वयोग इति स्मृतः १०८
ऊर्ध्वमेकोनविंशत्याः कालो नामापरो गुणः
इतीमं विद्धि विंशत्या भूतानां प्रभवाप्ययम् १०९
विंशकश्चैष संघातो महाभूतानि पञ्च च
सदसद्भावयोगौ च गुणावन्यौ प्रकाशकौ ११०
इत्येवं विंशतिश्चैव गुणाः सप्त च ये स्मृताः
विधिः शुक्रं बलं चेति त्रय एते गुणाः परे १११
एकविंशश्च दश च कलाः संख्यानतः स्मृताः
समग्रा यत्र वर्तन्ते तच्छरीरमिति स्मृतम् ११२
अव्यक्तं प्रकृतिं त्वासां कलानां कश्चिदिच्छति
व्यक्तं चासां तथैवान्यः स्थूलदर्शी प्रपश्यति ११३
अव्यक्तं यदि वा व्यक्तं द्वयीमथ चतुष्टयीम्
प्रकृतिं सर्वभूतानां पश्यन्त्यध्यात्मचिन्तकाः ११४
सेयं प्रकृतिरव्यक्ता कलाभिर्व्यक्ततां गता
अहं च त्वं च राजेन्द्र ये चाप्यन्ये शरीरिणः ११५
बिन्दुन्यासादयोऽवस्थाः शुक्रशोणितसंभवाः
यासामेव निपातेन कललं नाम जायते ११६
कललादर्बुदोत्पत्तिः पेशी चाप्यर्बुदोद्भवा
पेश्यास्त्वङ्गाभिनिर्वृत्तिर्नखरोमाणि चाङ्गतः ११७
संपूर्णे नवमे मासे जन्तोर्जातस्य मैथिल
जायते नामरूपत्वं स्त्री पुमान्वेति लिङ्गतः ११८
जातमात्रं तु तद्रूपं दृष्ट्वा ताम्रनखाङ्गुलि
कौमाररूपमापन्नं रूपतो नोपलभ्यते ११९
कौमाराद्यौवनं चापि स्थाविर्यं चापि यौवनात्
अनेन क्रमयोगेन पूर्वं पूर्वं न लभ्यते १२०

कलानां पृथगर्थानां प्रतिभेदः क्षणे क्षणे
वर्तते सर्वभूतेषु सौक्ष्म्यात्तु न विभाव्यते १२१
न चैषामप्ययो राजँल्लक्ष्यते प्रभवो न च
अवस्थायामवस्थायां दीपस्येवार्चिषो गतिः १२२
तस्याप्येवंप्रभावस्य सदश्वस्येव धावतः
अजस्रं सर्वलोकस्य कः कुतो वा न वा कुतः १२३
कस्येदं कस्य वा नेदं कुतो वेदं न वा कुतः
संबन्धः कोऽस्ति भूतानां स्वैरप्यवयवैरिह १२४
यथादित्यान्मणेश्चैव वीरुद्भ्यश्चैव पावकः
भवत्येवं समुदयात्कलानामपि जन्तवः १२५
आत्मन्येवात्मनात्मानं यथा त्वमनुपश्यसि
एवमेवात्मनात्मानमन्यस्मिन्किं न पश्यसि
यद्यात्मनि परस्मिंश्च समतामध्यवस्यसि १२६
अथ मां कासि कस्येति किमर्थमनुपृच्छसि
इदं मे स्यादिदं नेति द्वन्द्वैर्मुक्तस्य मैथिल
कासि कस्य कुतो वेति वचने किं प्रयोजनम् १२७
रिपौ मित्रेऽथ मध्यस्थे विजये संधिविग्रहे
कृतवान्यो महीपाल किं तस्मिन्मुक्तलक्षणम् १२८
त्रिवर्गे सप्तधा व्यक्तं यो न वेदेह कर्मसु
सङ्गवान्यस्त्रिवर्गे च किं तस्मिन्मुक्तलक्षणम् १२९
प्रिये चैवाप्रिये चैव दुर्बले बलवत्यपि
यस्य नास्ति समं चक्षुः किं तस्मिन्मुक्तलक्षणम् १३०
तदमुक्तस्य ते मोक्षे योऽभिमानो भवेन्नृप
सुहृद्भिः स निवार्यस्ते विचित्तस्येव भेषजैः १३१
तानि तान्यनुसंदृश्य सङ्गस्थानान्यरिंदम
आत्मनात्मनि संपश्येत्किं तस्मिन्मुक्तलक्षणम् १३२
इमान्यन्यानि सूक्ष्माणि मोक्षमाश्रित्य कानिचित्
चतुरङ्गप्रवृत्तानि सङ्गस्थानानि मे शृणु १३३
य इमां पृथिवीं कृत्स्नामेकच्छत्त्रां प्रशास्ति ह
एकमेव स वै राजा पुरमध्यावसत्युत १३४

तत्पुरे चैकमेवास्य गृहं यदधितिष्ठति
गृहे शयनमप्येकं निशायां यत्र लीयते १३५
शय्यार्धं तस्य चाप्यत्र स्त्रीपूर्वमधितिष्ठति
तदनेन प्रसङ्गेन फलेनैवेह युज्यते १३६
एवमेवोपभोगेषु भोजनाच्छादनेषु च
गुणेषु परिमेयेषु निग्रहानुग्रहौ प्रति १३७
परतन्त्रः सदा राजा स्वल्पे सोऽपि प्रसज्जते
संधिविग्रहयोगे च कुतो राज्ञः स्वतन्त्रता १३८
स्त्रीषु क्रीडाविहारेषु नित्यमस्यास्वतन्त्रता
मन्त्रे चामात्यसमितौ कुत एव स्वतन्त्रता १३९
यदा त्वाज्ञापयत्यन्यांस्तदास्योक्ता स्वतन्त्रता
अवशः कार्यते तत्र तस्मिंस्तस्मिन्गुणे स्थितः १४०
स्वप्तुकामो न लभते स्वप्तुं कार्यार्थिभिर्जनैः
शयने चाप्यनुज्ञातः सुप्त उत्थाप्यतेऽवशः १४१
स्नाह्यालभ पिब प्राश जुहुध्यग्नीन्यजेति च
वदस्व शृणु चापीति विवशः कार्यते परैः १४२
अभिगम्याभिगम्यैनं याचन्ते सततं नराः
न चाप्युत्सहते दातुं वित्तरक्षी महाजनात् १४३
दाने कोशक्षयो ह्यस्य वैरं चास्य प्रयच्छतः
क्षणेनास्योपवर्तन्ते दोषा वैराग्यकारकाः १४४
प्राज्ञाञ्शूरांस्तथैवाढ्यानेकस्थानेऽपि शङ्कते
भयमप्यभये राज्ञो यैश्च नित्यमुपास्यते १४५
यदा चैते प्रदुष्यन्ति राजन्ये कीर्तिता मया
तदैवास्य भयं तेभ्यो जायते पश्य यादृशम् १४६
सर्वः स्वे स्वे गृहे राजा सर्वः स्वे स्वे गृहे गृही
निग्रहानुग्रहौ कुर्वंस्तुल्यो जनक राजभिः १४७
पुत्रा दारास्तथैवात्मा कोशो मित्राणि संचयः
परैः साधारणा ह्येते तैस्तैरेवास्य हेतुभिः १४८
हतो देशः पुरं दग्धं प्रधानः कुञ्जरो मृतः
लोकसाधारणेष्वेषु मिथ्याज्ञानेन तप्यते १४९

अमुक्तो मानसैर्दुःखैरिच्छाद्वेषप्रियोद्भवैः
शिरोरोगादिभी रोगैस्तथैव विनिपातिभिः १५०
द्वन्द्वैस्तैस्तैरुपहतः सर्वतः परिशङ्कितः
बहुप्रत्यर्थिकं राज्यमुपास्ते गणयन्निशाः १५१
तदल्पसुखमत्यर्थं बहुदुःखमसारवत्
को राज्यमभिपद्येत प्राप्य चोपशमं लभेत् १५२
ममेदमिति यच्चेदं पुरं राष्ट्रं च मन्यसे
बलं कोशममात्यांश्च कस्यैतानि न वा नृप १५३
मित्रामात्यं पुरं राष्ट्रं दण्डः कोशो महीपतिः
सप्ताङ्गश्चक्रसंघातो राज्यमित्युच्यते नृप १५४
सप्ताङ्गस्यास्य राज्यस्य त्रिदण्डस्येव तिष्ठतः
अन्योन्यगुणयुक्तस्य कः केन गुणतोऽधिकः १५५
तेषु तेषु हि कालेषु तत्तदङ्गं विशिष्यते
येन यत्सिध्यते कार्यं तत्प्राधान्याय कल्पते १५६
सप्ताङ्गश्चापि संघातस्त्रयश्चान्ये नृपोत्तम
संभूय दशवर्गोऽय भुङ्क्ते राज्यं हि राजवत् १५७
यश्च राजा महोत्साहः क्षत्रधर्मरतो भवेत्
स तुष्येद्दशभागेन ततस्त्वन्यो दशावरैः १५८
नास्त्यसाधारणो राजा नास्ति राज्यमराजकम्
राज्येऽसति कुतो धर्मो धर्मेऽसति कुतः परम् १५९
योऽप्यत्र परमो धर्मः पवित्रं राजराज्ययोः
पृथिवी दक्षिणा यस्य सोऽश्वमेधो न विद्यते १६०
साहमेतानि कर्माणि राजदुःखानि मैथिल
समर्था शतशो वक्तुमथ वापि सहस्रशः १६१
स्वदेहे नाभिषङ्गो मे कुतः परपरिग्रहे
न मामेवंविधां मुक्तामीदृशं वक्तुमर्हसि १६२
ननु नाम त्वया मोक्षः कृत्स्नः पञ्चशिखाच्छ्रुतः
सोपायः सोपनिषदः सोपासङ्गः सनिश्चयः १६३
तस्य ते मुक्तसङ्गस्य पाशानाक्रम्य तिष्ठतः
छत्रादिषु विशेषेषु कथं सङ्गः पुनर्नृप १६४

श्रुतं ते न श्रुतं मन्ये मिथ्या वापि श्रुतं श्रुतम्
अथ वा श्रुतसंकाशं श्रुतमन्यच्छ्रुतं त्वया १६५
अथापीमासु संज्ञासु लौकिकीषु प्रतिष्ठसि
अभिषङ्गावरोधाभ्यां बद्धस्त्वं प्राकृतो यथा १६६
सत्त्वेनानुप्रवेशो हि योऽय त्वयि कृतो मया
किं तवापकृतं तत्र यदि मुक्तोऽसि सर्वतः १६७
नियमो ह्येष धर्मेषु यतीनां शून्यवासिता
शून्यमावासयन्त्या च मया किं कस्य दूषितम् १६८
न पाणिभ्यां न बाहुभ्यां पादोरुभ्यां न चानघ
न गात्रावयवैरन्यैः स्पृशामि त्वा नराधिप १६९
कुले महति जातेन ह्रीमता दीर्घदर्शिना
नैतत्सदसि वक्तव्यं सद्वासद्वा मिथः कृतम् १७०
ब्राह्मणा गुरवश्चेमे तथामात्या गुरूत्तमाः
त्वं चाथ गुरुरप्येषामेवमन्योन्यगौरवम् १७१
तदेवमनुसंदृश्य वाच्यावाच्यं परीक्षता
स्त्रीपुंसोः समवायोऽय त्वया वाच्यो न संसदि १७२
यथा पुष्करपर्णस्थं जलं तत्पर्णसंस्थितम्
तिष्ठत्यस्पृशती तद्वत्त्वयि वत्स्यामि मैथिल १७३
यदि चाप्यस्पृशन्त्या मे स्पर्शं जानासि कंचन
ज्ञानं कृतमबीजं ते कथं तेनेह भिक्षुणा १७४
स गार्हस्थ्याच्च्युतश्च त्वं मोक्षं नावाप्य दुर्विदम्
उभयोरन्तराले च वर्तसे मोक्षवातिकः १७५
न हि मुक्तस्य मुक्तेन ज्ञस्यैकत्वपृथक्त्वयोः
भावाभावसमायोगे जायते वर्णसंकरः १७६
वर्णाश्रमपृथक्त्वे च दृष्टार्थस्यापृथक्त्विनः
नान्यदन्यदिति ज्ञात्वा नान्यदन्यत्प्रवर्तते १७७
पाणौ कुण्डं तथा कुण्डे पयः पयसि मक्षिकाः
आश्रिताश्रययोगेन पृथक्त्वेनाश्रया वयम् १७८
न तु कुण्डे पयोभावः पयश्चापि न मक्षिकाः
स्वयमेवाश्रयन्त्येते भावा न तु पराश्रयम् १७९

पृथक्त्वादाश्रमाणां च वर्णान्यत्वे तथैव च
परस्परपृथक्त्वाच्च कथं ते वर्णसंकरः १८०
नास्मि वर्णोत्तमा जात्या न वैश्या नावरा तथा
तव राजन्सवर्णास्मि शुद्धयोनिरविप्लुता १८१
प्रधानो नाम राजर्षिर्व्यक्तं ते श्रोत्रमागतः
कुले तस्य समुत्पन्नां सुलभां नाम विद्धि माम् १८२
द्रोणश्च शतशृङ्गश्च वक्रद्वारश्च पर्वतः
मम सत्रेषु पूर्वेषां चिता मघवता सह १८३
साहं तस्मिन्कुले जाता भर्तर्यसति मद्विधे
विनीता मोक्षधर्मेषु चराम्येका मुनिव्रतम् १८४
नास्मि सत्रप्रतिच्छन्ना न परस्वाभिमानिनी
न धर्मसंकरकरी स्वधर्मेऽस्मि धृतव्रता १८५
नास्थिरा स्वप्रतिज्ञायां नासमीक्ष्यप्रवादिनी
नासमीक्ष्यागता चाहं त्वत्सकाशं जनाधिप १८६
मोक्षे ते भावितां बुद्धिं श्रुत्वाहं कुशलैषिणी
तव मोक्षस्य चाप्यस्य जिज्ञासार्थमिहागता १८७
न वर्गस्था ब्रवीम्येतत्स्वपक्षपरपक्षयोः
मुक्तो न मुच्यते यश्च शान्तो यश्च न शाम्यति १८८
यथा शून्ये पुरागारे भिक्षुरेकां निशां वसेत्
तथा हि त्वच्छरीरेऽस्मिन्निमां वत्स्यामि शर्वरीम् १८९
साहमासनदानेन वागातिथ्येन चार्चिता
सुप्ता सुशरणा प्रीता श्वो गमिष्यामि मैथिल १९०
इत्येतानि स वाक्यानि हेतुमन्त्यर्थवन्ति च
श्रुत्वा नाधिजगौ राजा किंचिदन्यदतः परम् १९१
इति श्रीमहाभारते शान्तिपर्वणि अष्टाधिकत्रिशततमोऽध्यायः ३०८

## नवाधिकत्रिशततमोऽध्यायः

युधिष्ठिर उवाच
कथं निर्वेदमापन्नः शुको वैयासकिः पुरा
एतदिच्छामि कौरव्य श्रोतुं कौतूहलं हि मे १

भीष्म उवाच
प्राकृतेन सुवृत्तेन चरन्तमकुतोभयम्
अध्याप्य कृत्स्नं स्वाध्यायमन्वशाद्वै पिता सुतम् २
धर्मं पुत्र निषेवस्व सुतीक्ष्णौ हि हिमातपौ
क्षुत्पिपासे च वायुं च जय नित्यं जितेन्द्रियः ३
सत्यमार्जवमक्रोधमनसूयां दमं तपः
अहिंसां चानृशंस्यं च विधिवत्परिपालय ४
सत्ये तिष्ठ रतो धर्मे हित्वा सर्वमनार्जवम्
देवतातिथिशेषेण यात्रां प्राणस्य संश्रय ५
फेनमात्रोपमे देहे जीवे शकुनिवत्स्थिते
अनित्ये प्रियसंवासे कथं स्वपिषि पुत्रक ६
अप्रमत्तेषु जाग्रत्सु नित्ययुक्तेषु शत्रुषु
अन्तरं लिप्समानेषु बालस्त्वं नावबुध्यसे ७
गरायमानेषु वर्षेषु क्षीयमाणे तथायुषि
जीविते शिष्यमाणे च किमुत्थाय न धावसि ८
एहलौकिकमीहन्ते मांसशोणितवर्धनम्
पारलौकिककार्येषु प्रसुप्ता भृशनास्तिकाः ९
धर्माय येऽभ्यसूयन्ति बुद्धिमोहान्विता नराः
अपथा गच्छतां तेषामनुयातापि पीड्यते १०
ये तु तुष्टाः सनियताः सत्यागमपरायणाः
धर्म्यं पन्थानमारूढास्तानुपास्स्व च पृच्छ च ११
उपधार्य मतं तेषां वृद्धानां धर्मदर्शिनाम्
नियच्छ परया बुद्ध्या चित्तमुत्पथगामि वै १२
अद्यकालिकया बुद्ध्या दूरे श्व इति निर्भयाः
सर्वभक्षा न पश्यन्ति कर्मभूमिं विचेतसः १३
धर्मनिःश्रेणिमास्थाय किंचित्किंचित्समारुह
कोशकारवदात्मानं वेष्टयन्नावबुध्यसे १४
नास्तिकं भिन्नमर्यादं कूलपातमिवास्थिरम्
वामतः कुरु विस्रब्धो नरं वेणुमिवोद्धतम् १५
कामं क्रोधं च मृत्युं च पञ्चेन्द्रियजलां नदीम्

नावं धृतिमयीं कृत्वा जन्मदुर्गाणि संतर १६
मृत्युनाभ्याहते लोके जरया परिपीडिते
अमोघासु पतन्तीषु धर्मयानेन संतर १७
तिष्ठन्तं च शयानं च मृत्युरन्वेषते यदा
निर्वृतिं लभते कस्मादकस्मान्मृत्युनाशितः १८
संचिन्वानकमेवैनं कामानामवितृप्तकम्
वृकीवोरणमासाद्य मृत्युरादाय गच्छति १९
क्रमशः संचितशिखो धर्मबुद्धिमयो महान्
अन्धकारे प्रवेष्टव्ये दीपो यत्नेन धार्यताम् २०
संपतन्देहजालानि कदाचिदिह मानुषे
ब्राह्मण्यं लभते जन्तुस्तत्पुत्र परिपालय २१
ब्राह्मणस्य हि देहोऽय न कामार्थाय जायते
इह क्लेशाय तपसे प्रेत्य त्वनुपमं सुखम् २२
ब्राह्मण्यं बहुभिरवाप्यते तपोभिस्तल्लब्ध्वा न परिपणेन हेडितव्यम्
स्वाध्याये तपसि दमे च नित्ययुक्तः क्षेमार्थी कुशलपरः सदा यतस्व २३
अव्यक्तप्रकृतिरयं कलाशरीरः सूक्ष्मात्मा क्षणत्रुटिशो निमेषरोमा
ऋृत्वास्यः समबलशुक्लकृष्णनेत्रो मांसाङ्गो द्रवति वयोहयो नराणाम् २४
तं दृष्ट्वा प्रसृतमजस्रमुग्रवेगं गच्छन्तं सततमिहाव्यपेक्षमाणम्
चक्षुस्ते यदि न परप्रणेतृनेयं धर्मे ते भवतु मनः परं निशम्य २५
येऽमी तु प्रचलितधर्मकामवृत्ताः क्रोशन्तः सततमनिष्टसंप्रयोगाः
क्लिश्यन्ते परिगतवेदनाशरीरा बह्वीभिः सुभृशमधर्मवासनाभिः २६
राजा धर्मपरः सदा शुभगोप्ता समीक्ष्य सुकृतिनां दधाति लोकान्
बहुविधमपि चरतः प्रदिशति सुखमनुपगतं निरवद्यम् २७
श्वानो भीषणायोमुखानि वयांसि वडगृध्रकुलपक्षिणां च संघाः
नरां कदने रुधिरपा गुरुवचननुदमुपरतं विशसन्ति २८
मर्यादा नियताः स्वयंभुवा य इहेमाः प्रभिनत्ति दशगुणा मनोनुगत्वात्
निवसति भृशमसुखं पितृविषयविपिनमवगाह्य स पापः २९
यो लुब्धः सुभृशं प्रियानृतश्च मनुष्यः सततनिकृतिवञ्चनारतिः स्यात्
उपनिधिभिरसुखकृत्स परमनिरयगो भृशमसुखमनुभवति दुष्कृतकर्मा ३०
उष्णां वैतरणीं महानदीमवगाढोऽसिपत्रवनभिन्नगात्रः

परशुवनशयो निपतितो वसति च महानिरये भृशार्तः ३१
महापदानि कत्थसे न चाप्यवेक्षसे परम्
चिरस्य मृत्युकारिकामनागतां न बुध्यसे ३२
प्रयास्यतां किमास्यते समुत्थितं महद्भयम्
अतिप्रमाथि दारुणं सुखस्य संविधीयताम् ३३
पुरा मृतः प्रणीयसे यमस्य मृत्युशासनात्
तदन्तिकाय दारुणैः प्रयत्नमार्जवे कुरु ३४
पुरा समूलबान्धवं प्रभुर्हरत्यदुःखवित्
तवेह जीवितं यमो न चास्ति तस्य वारकः ३५
पुरा विवाति मारुतो यमस्य यः पुरःसरः
पुरैक एव नीयसे कुरुष्व सांपरायिकम् ३६
पुरा सहिक्क एव ते प्रवाति मारुतोऽन्तकः
पुरा च विभ्रमन्ति ते दिशो महाभयागमे ३७
स्मृतिश्च संनिरुध्यते पुरा तवेह पुत्रक
समाकुलस्य गच्छतः समाधिमुत्तमं कुरु ३८
कृताकृते शुभाशुभे प्रमादकर्मविप्लुते
स्मरन्पुरा न तप्यसे निधत्स्व केवलं निधिम् ३९
पुरा जरा कलेवरं विजर्जरीकरोति ते
बलाङ्गरूपहारिणी निधत्स्व केवलं निधिम् ४०
पुरा शरीरमन्तको भिनत्ति रोगसायकैः
प्रसह्य जीवितक्षये तपो महत्समाचर ४१
पुरा वृका भयंकरा मनुष्यदेहगोचराः
अभिद्रवन्ति सर्वतो यतस्व पुण्यशीलने ४२
पुरान्धकारमेककोऽनुपश्यसि त्वरस्व वै
पुरा हिरण्मयान्नगान्निरीक्षसेऽद्रिमूर्धनि ४३
पुरा कुसंगतानि ते सुहृन्मुखाश्च शत्रवः
विचालयन्ति दर्शनाद्घटस्व पुत्र यत्परम् ४४
धनस्य यस्य राजतो भयं न चास्ति चौरतः
मृतं च यन्न मुञ्चति समर्जयस्व तद्धनम् ४५
न तत्र संविभज्यते स्वकर्मभिः परस्परम्

यदेव यस्य यौतकं तदेव तत्र सोऽश्नुते ४६
परत्र येन जीव्यते तदेव पुत्र दीयताम्
धनं यदक्षयं ध्रुवं समर्जयस्व तत्स्वयम् ४७
न यावदेव पच्यते महाजनस्य यावकम्
अपक्व एव यावके पुरा प्रणीयसे त्वर ४८
न मातृपितृबान्धवा न संस्तुतः प्रियो जनः
अनुव्रजन्ति संकटे व्रजन्तमेकपातिनम् ४९
यदेव कर्म केवलं स्वयं कृतं शुभाशुभम्
तदेव तस्य यौतकं भवत्यमुत्र गच्छतः ५०
हिरण्यरत्नसंचयाः शुभाशुभेन संचिताः
न तस्य देहसंक्षये भवन्ति कार्यसाधकाः ५१
परत्रगामिकस्य ते कृताकृतस्य कर्मणः
न साक्षिरात्मना समो नृणामिहास्ति कश्चन ५२
मनुष्यदेहशून्यकं भवत्यमुत्र गच्छतः
प्रविश्य बुद्धिचक्षुषा प्रदृश्यते हि सर्वशः ५३
इहाग्निसूर्यवायवः शरीरमाश्रितास्त्रयः
त एव तस्य साक्षिणो भवन्ति धर्मदर्शिनः ५४
यथानिशेषु सर्वतःस्पृशत्सु सर्वदारिषु
प्रकाशगूढवृत्तिषु स्वधर्ममेव पालय ५५
अनेकपारिपन्थिके विरूपरौद्ररक्षिते
स्वमेव कर्म रक्ष्यतां स्वकर्म तत्र गच्छति ५६
न तत्र संविभज्यते स्वकर्मणा परस्परम्
यथाकृतं स्वकर्मजं तदेव भुज्यते फलम् ५७
यथाप्सरोगणाः फलं सुखं महर्षिभिः सह
तथाप्नुवन्ति कर्मतो विमानकामगामिनः ५८
यथेह यत्कृतं शुभं विपाप्मभिः कृतात्मभिः
तदाप्नुवन्ति मानवास्तथा विशुद्धयोनयः ५९
प्रजापतेः सलोकतां बृहस्पतेः शतक्रतोः
व्रजन्ति ते परां गतिं गृहस्थधर्मसेतुभिः ६०
सहस्रशोऽप्यनेकशः प्रवक्तुमुत्सहामहे

अबुद्धिमोहनं पुनः प्रभुर्विना न यावकम् ६१
गता द्विरष्टवर्षता ध्रुवोऽसि पञ्चविंशकः
कुरुष्व धर्मसंचयं वयो हि तेऽतिवर्तते ६२
पुरा करोति सोऽन्तकः प्रमादगोमुखं दमम्
यथागृहीतमुत्थितं त्वरस्व धर्मपालने ६३
यथा त्वमेव पृष्ठतस्त्वमग्रतो गमिष्यसि
तथा गतिं गमिष्यतः किमात्मना परेण वा ६४
यदेकपातिनां सतां भवत्यमुत्र गच्छताम्
भयेषु सांपरायिकं निधत्स्व तं महानिधिम् ६५
सकूलमूलबान्धवं प्रभुर्हरत्यसङ्गवान्
न सन्ति यस्य वारकाः कुरुष्व धर्मसंनिधिम् ६६
इदं निदर्शनं मया तवेह पुत्र संमतम्
स्वदर्शनानुमानतः प्रवर्णितं कुरुष्व तत् ६७
दधाति यः स्वकर्मणा धनानि यस्य कस्यचित्
अबुद्धिमोहजैर्गुणैः शतैक एव युज्यते ६८
श्रुतं समर्थमस्तु ते प्रकुर्वतः शुभाः क्रियाः
तदेव तत्र दर्शनं कृतज्ञमर्थसंहितम् ६९
निबन्धनी रज्जुरेषा या ग्रामे वसतो रतिः
छित्त्वैनां सुकृतो यान्ति नैनां छिन्दन्ति दुष्कृतः ७०
किं ते धनेन किं बन्धुभिस्ते किं ते पुत्रैः पुत्रक यो मरिष्यसि
आत्मानमन्विच्छ गुहां प्रविष्टं पितामहास्ते क्व गताश्च सर्वे ७१
श्वःकार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम्
को हि तद्वेद कस्याद्य मृत्युसेना निवेक्ष्यते ७२
अनुगम्य स्मशानान्तं निवर्तन्तीह बान्धवाः
अग्नौ प्रक्षिप्य पुरुषं ज्ञातयः सुहृदस्तथा ७३
नास्तिकान्निरनुक्रोशान्नरान्पापमतौ स्थितान्
वामतः कुरु विश्रब्धं परं प्रेप्सुरतन्द्रितः ७४
एवमभ्याहते लोके कालेनोपनिपीडिते
सुमहद्धैर्यमालम्ब्य धर्मं सर्वात्मना कुरु ७५
अथेमं दर्शनोपायं सम्यग्यो वेत्ति मानवः

सम्यक्स धर्मं कृत्वेह परत्र सुखमेधते ७६
न देहभेदे मरणं विजानतां न च प्रणाशः स्वनुपालिते पथि
धर्मं हि यो वर्धयते स पण्डितो य एव धर्माच्च्यवते स मुह्यति ७७
प्रयुक्तयोः कर्मपथि स्वकर्मणोः फलं प्रयोक्ता लभते यथाविधि
निहीनकर्मा निरयं प्रपद्यते त्रिविष्टपं गच्छति धर्मपारगः ७८
सोपानभूतं स्वर्गस्य मानुष्यं प्राप्य दुर्लभम्
तथात्मानं समादध्याद्भ्रश्येत न पुनर्यथा ७९
यस्य नोत्क्रामति मतिः स्वर्गमार्गानुसारिणी
तमाहुः पुण्यकर्माणमशोच्यं पुत्रबान्धवैः ८०
यस्य नोपहता बुद्धिर्निश्चयेष्ववलम्बते
स्वर्गे कृतावकाशस्य तस्य नास्ति महद्भयम् ८१
तपोवनेषु ये जातास्तत्रैव निधनं गताः
तेषामल्पतरो धर्मः कामभोगमजानताम् ८२
यस्तु भोगान्परित्यज्य शरीरेण तपश्चरेत्
न तेन किंचिन्नाप्राप्तं तन्मे बहुमतं फलम् ८३
मातापितृसहस्राणि पुत्रदारशतानि च
अनागतान्यतीतानि कस्य ते कस्य वा वयम् ८४
न तेषां भवता कार्यं न कार्यं तव तैरपि
स्वकृतैस्तानि जातानि भवांश्चैवं गमिष्यति ८५
इह लोके हि धनिनः परोऽपि स्वजनायते
स्वजनस्तु दरिद्राणां जीवतामेव नश्यति ८६
संचिनोत्यशुभं कर्म कमत्रापेक्षया नरः
ततः क्लेशमवाप्नोति परत्रेह तथैव च ८७
पश्य त्वं छिन्नभूतं हि जीवलोकं स्वकर्मणा
तत्कुरुष्व तथा पुत्र कृत्स्नं यत्समुदाहृतम् ८८
तदेतत्संप्रदृश्यैव कर्मभूमिं प्रविश्य ताम्
शुभान्याचरितव्यानि परलोकमभीप्सता ८९
मासर्तुसंज्ञापरिवर्तकेन सूर्याग्निना रात्रिदिवेन्धनेन
स्वकर्मनिष्ठाफलसाक्षिकेण भूतानि कालः पचति प्रसह्य ९०
धनेन किं यन्न ददाति नाश्नुते बलेन किं येन रिपून्न बाधते

श्रुतेन किं येन न धर्ममाचरेत्किमात्मना यो न जितेन्द्रियो वशी ९१
इदं द्वैपायनवचो हितमुक्तं निशम्य तु
शुको गतः परित्यज्य पितरं मोक्षदेशिकम् ९२
इति श्रीमहाभारते शान्तिपर्वणि नवाधिकत्रिशततमोऽध्यायः ३०९

## दशाधिकत्रिशततमोऽध्यायः

युधिष्ठिर उवाच
कथं व्यासस्य धर्मात्मा शुको जज्ञे महातपाः
सिद्धिं च परमां प्राप्तस्तन्मे ब्रूहि पितामह १
कस्यां चोत्पादयामास शुकं व्यासस्तपोधनः
न ह्यस्य जननीं विद्म जन्म चाग्र्यं महात्मनः २
कथं च बालस्य सतः सूक्ष्मज्ञाने गता मतिः
यथा नान्यस्य लोकेऽस्मिन्द्वितीयस्येह कस्यचित् ३
एतदिच्छाम्यहं श्रोतुं विस्तरेण महाद्युते
न हि मे तृप्तिरस्तीह शृण्वतोऽमृतमुत्तमम् ४
माहात्म्यमात्मयोगं च विज्ञानं च शुकस्य ह
यथावदानुपूर्व्येण तन्मे ब्रूहि पितामह ५
भीष्म उवाच
न हायनैर्न पलितैर्न वित्तेन न बन्धुभिः
ऋषयश्चक्रिरे धर्मं योऽनूचानः स नो महान् ६
तपोमूलमिदं सर्वं यन्मां पृच्छसि पाण्डव
तदिन्द्रियाणि संयम्य तपो भवति नान्यथा ७
इन्द्रियाणां प्रसङ्गेन दोषमृच्छत्यसंशयम्
संनियम्य तु तान्येव सिद्धिं प्राप्नोति मानवः ८
अश्वमेधसहस्रस्य वाजपेयशतस्य च
योगस्य कलया तात न तुल्यं विद्यते फलम् ९
अत्र ते वर्तयिष्यामि जन्मयोगफलं यथा
शुकस्याग्र्यां गतिं चैव दुर्विदामकृतात्मभिः १०
मेरुशृङ्गे किल पुरा कर्णिकारवनायुते
विजहार महादेवो भीमैर्भूतगणैर्वृतः ११

शैलराजसुता चैव देवी तत्राभवत्पुरा
तत्र दिव्यं तपस्तेपे कृष्णद्वैपानयनः प्रभुः १२
योगेनात्मानमाविश्य योगधर्मपरायणः
धारयन्स तपस्तेपे पुत्रार्थं कुरुसत्तम १३
अग्नेर्भूमेरपां वायोरन्तरिक्षस्य चाभिभो
वीर्येण संमितः पुत्रो मम भूयादिति स्म ह १४
संकल्पेनाथ सोऽनेन दुष्प्रापेणाकृतात्मभिः
वरयामास देवेशमास्थितस्तप उत्तमम् १५
अतिष्ठन्मारुताहारः शतं किल समाः प्रभुः
आराधयन्महादेवं बहुरूपमुमापतिम् १६
तत्र ब्रह्मर्षयश्चैव सर्वे देवर्षयस्तथा
लोकपालाश्च लोकेशं साध्याश्च वसुभिः सह १७
आदित्याश्चैव रुद्राश्च दिवाकरनिशाकरौ
मरुतो मारुतश्चैव सागराः सरितस्तथा १८
अश्विनौ देवगन्धर्वास्तथा नारदपर्वतौ
विश्वावसुश्च गन्धर्वः सिद्धाश्चाप्सरसां गणाः १९
तत्र रुद्रो महादेवः कर्णिकारमयीं शुभाम्
धारयाणः स्रजं भाति ज्योत्स्नामिव निशाकरः २०
तस्मिन्दिव्ये वने रम्ये देवदेवर्षिसंकुले
आस्थितः परमं योगमृषिः पुत्रार्थमुद्यतः २१
न चास्य हीयते प्राणो न ग्लानिरुपजायते
त्रयाणामपि लोकानां तदद्भुतमिवाभवत् २२
जटाश्च तेजसा तस्य वैश्वानरशिखोपमाः
प्रज्वलन्त्यः स्म दृश्यन्ते युक्तस्यामिततेजसः २३
मार्कण्डेयो हि भगवानेतदाख्यातवान्मम
स देवचरितानीह कथयामास मे सदा २४
ता एताद्यापि कृष्णस्य तपसा तेन दीपिताः
अग्निवर्णा जटास्तात प्रकाशन्ते महात्मनः २५
एवंविधेन तपसा तस्य भक्त्या च भारत
महेश्वरः प्रसन्नात्मा चकार मनसा मतिम् २६

उवाच चैनं भगवांस्त्र्यम्बकः प्रहसन्निव
एवंविधस्ते तनयो द्वैपायन भविष्यति २७
यथा ह्यग्निर्यथा वायुर्यथा भूमिर्यथा जलम्
यथा च खं तथा शुद्धो भविष्यति सुतो महान् २८
तद्भावभावी तद्बुद्धिस्तदात्मा तदपाश्रयः
तेजसावृत्य लोकांस्त्रीन्यशः प्राप्स्यति केवलम् २९
इति श्रीमहाभारते शान्तिपर्वणि दशाधिकत्रिशततमोऽध्यायः ३१०

एकादशाधिकत्रिशततमोऽध्यायः
भीष्म उवाच
स लब्ध्वा परमं देवाद्वरं सत्यवतीसुतः
अरणीं त्वथ संगृह्य ममन्थाग्निचिकीर्षया १
अथ रूपं परं राजन्बिभ्रतीं स्वेन तेजसा
घृताचीं नामाप्सरसमपश्यद्भगवानृषिः २
ऋषिरप्सरसं दृष्ट्वा सहसा काममोहितः
अभवद्भगवान्व्यासो वने तस्मिन्युधिष्ठिर ३
सा च कृत्वा तदा व्यासं कामसंविग्नमानसम्
शुकी भूत्वा महाराज घृताची समुपागमत् ४
स तामप्सरसं दृष्ट्वा रूपेणान्येन संवृताम्
शरीरजेनानुगतः सर्वगात्रातिगेन ह ५
स तु धैर्येण महता निगृह्णन्हृच्छयं मुनिः
न शशाक नियन्तुं तद्व्यासः प्रविसृतं मनः
भावित्वाच्चैव भावस्य घृताच्या वपुषा हृतः ६
यत्नान्नियच्छतस्तस्य मुनेरग्निचिकीर्षया
अरण्यामेव सहसा तस्य शुक्रमवापतत् ७
सोऽविशङ्केन मनसा तथैव द्विजसत्तमः
अरणीं ममन्थ ब्रह्मर्षिस्तस्यां जज्ञे शुको नृप ८
शुक्रे निर्मथ्यमाने तु शुको जज्ञे महातपाः
परमर्षिर्महायोगी अरणीगर्भसंभवः ९
यथाध्वरे समिद्धोऽग्निर्भाति हव्यमुपात्तवान्

तथारूपः शुको जज्ञे प्रज्वलन्निव तेजसा १०
बिभ्रत्पितुश्च कौरव्य रूपवर्णमनुत्तमम्
बभौ तदा भावितात्मा विधूमोऽग्निरिव ज्वलन् ११
तं गङ्गा सरितां श्रेष्ठा मेरुपृष्ठे जनेश्वर
स्वरूपिणी तदाभ्येत्य स्नापयामास वारिणा १२
अन्तरिक्षाच्च कौरव्य दण्डः कृष्णाजिनं च ह
पपात भुवि राजेन्द्र शुकस्यार्थे महात्मनः १३
जेगीयन्ते स्म गन्धर्वा ननृतुश्चाप्सरोगणाः
देवदुन्दुभयश्चैव प्रावाद्यन्त महास्वनाः १४
विश्वावसुश्च गन्धर्वस्तथा तुम्बुरुनारदौ
हाहाहूहू च गन्धर्वौ तुष्टुवुः शुकसंभवम् १५
तत्र शक्रपुरोगाश्च लोकपालाः समागताः
देवा देवर्षयश्चैव तथा ब्रह्मर्षयोऽपि च १६
दिव्यानि सर्वपुष्पाणि प्रववर्षात्र मारुतः
जङ्गमं स्थावरं चैव प्रहृष्टमभवज्जगत् १७
तं महात्मा स्वयं प्रीत्या देव्या सह महाद्युतिः
जातमात्रं मुनेः पुत्रं विधिनोपानयत्तदा १८
तस्य देवेश्वरः शक्रो दिव्यमद्भुतदर्शनम्
ददौ कमण्डलुं प्रीत्या देववासांसि चाभिभो १९
हंसाश्च शतपत्राश्च सारसाश्च सहस्रशः
प्रदक्षिणमवर्तन्त शुकाश्चाषाश्च भारत २०
आरणेयस्तथा दिव्यं प्राप्य जन्म महाद्युतिः
तत्रैवोवास मेधावी व्रतचारी समाहितः २१
उत्पन्नमात्रं तं वेदाः सरहस्याः ससंग्रहाः
उपतस्थुर्महाराज यथास्य पितरं तथा २२
बृहस्पतिं तु वव्रे स वेदवेदाङ्गभाष्यवित्
उपाध्यायं महाराज धर्ममेवानुचिन्तयन् २३
सोऽधीत्य वेदानखिलान्सरहस्यान्ससंग्रहान्
इतिहासं च कार्त्स्न्येन राजशास्त्राणि चाभिभो २४
गुरवे दक्षिणां दत्त्वा समावृत्तो महामुनिः

उग्रं तपः समारेभे ब्रह्मचारी समाहितः २५
देवतानामृषीणां च बाल्येऽपि स महातपाः
संमन्त्रणीयो मान्यश्च ज्ञानेन तपसा तथा २६
न त्वस्य रमते बुद्धिराश्रमेषु नराधिप
त्रिषु गार्हस्थ्यमूलेषु मोक्षधर्मानुदर्शिनः २७
इति श्रीमहाभारते शान्तिपर्वणि एकादशाधिकत्रिशततमोऽध्यायः ३११

द्वादशाधिकत्रिशततमोऽध्यायः

भीष्म उवाच
स मोक्षमनुचिन्त्यैव शुकः पितरमभ्यगात्
प्राहाभिवाद्य च गुरुं श्रेयोर्थी विनयान्वितः १
मोक्षधर्मेषु कुशलो भगवान्प्रब्रवीतु मे
यथा मे मनसः शान्तिः परमा संभवेत्प्रभो २
श्रुत्वा पुत्रस्य वचनं परमर्षिरुवाच तम्
अधीष्व पुत्र मोक्षं वै धर्मांश्च विविधानपि ३
पितुर्नियोगाज्जग्राह शुको ब्रह्मविदां वरः
योगशास्त्रं च निखिलं कापिलं चैव भारत ४
स तं ब्राह्म्या श्रिया युक्तं ब्रह्मतुल्यपराक्रमम्
मेने पुत्रं यदा व्यासो मोक्षविद्याविशारदम् ५
उवाच गच्छेति तदा जनकं मिथिलेश्वरम्
स ते वक्ष्यति मोक्षार्थं निखिलेन विशेषतः ६
पितुर्नियोगादगमन्मैथिलं जनकं नृपम्
प्रष्टुं धर्मस्य निष्ठां वै मोक्षस्य च परायणम् ७
उक्तश्च मानुषेण त्वं पथा गच्छेत्यविस्मितः
न प्रभावेण गन्तव्यमन्तरिक्षचरेण वै ८
आर्जवेणैव गन्तव्यं न सुखान्वेषिणा पथा
नान्वेष्टव्या विशेषास्तु विशेषा हि प्रसङ्गिनः ९
अहंकारो न कर्तव्यो याज्ये तस्मिन्नराधिपे
स्थातव्यं च वशे तस्य स ते छेत्स्यति संशयम् १०
स धर्मकुशलो राजा मोक्षशास्त्रविशारदः

याज्यो मम स यद्ब्रूयात्तत्कार्यमविशङ्कया ११
एवमुक्तः स धर्मात्मा जगाम मिथिलां मुनिः
पद्भ्यां शक्तोऽन्तरिक्षेण क्रान्तुं भूमिं ससागराम् १२
स गिरींश्चाप्यतिक्रम्य नदीस्तीर्त्वा सरांसि च
बहुव्यालमृगाकीर्णा विविधाश्चाटवीस्तथा १३
मेरोर्हरेश्च द्वे वर्षे वर्षं हैमवतं तथा
क्रमेणैव व्यतिक्रम्य भारतं वर्षमासदत् १४
स देशान्विविधान्पश्यंश्चीनहूणनिषेवितान्
आर्यावर्तमिमं देशमाजगाम महामुनिः १५
पितुर्वचनमाज्ञाय तमेवार्थं विचिन्तयन्
अध्वानं सोऽतिचक्राम खेऽचरः खे चरन्निव १६
पत्तनानि च रम्याणि स्फीतानि नगराणि च
रत्नानि च विचित्राणि शुकः पश्यन्न पश्यति १७
उद्यानानि च रम्याणि तथैवायतनानि च
पुण्यानि चैव तीर्थानि सोऽतिक्रम्य तथाध्वनः १८
सोऽचिरेणैव कालेन विदेहानाससाद ह
रक्षितान्धर्मराजेन जनकेन महात्मना १९
तत्र ग्रामान्बहून्पश्यन्बह्वन्नरसभोजनान्
पल्लीघोषान्समृद्धांश्च बहुगोकुलसंकुलान् २०
स्फीतांश्च शालियवसैर्हंससारससेवितान्
पद्मिनीभिश्च शतशः श्रीमतीभिरलंकृतान् २१
स विदेहानतिक्रम्य समृद्धजनसेवितान्
मिथिलोपवनं रम्यमाससाद महर्द्धिमत् २२
हस्त्यश्वरथसंकीर्णं नरनारीसमाकुलम्
पश्यन्नपश्यन्निव तत्समतिक्रामदच्युतः २३
मनसा तं वहन्भारं तमेवार्थं विचिन्तयन्
आत्मारामः प्रसन्नात्मा मिथिलामाससाद ह २४
तस्य द्वारं समासाद्य द्वारपालैर्निवारितः
स्थितो ध्यानपरो मुक्तो विदितः प्रविवेश ह २५
स राजमार्गमासाद्य समृद्धजनसंकुलम्

पार्थिवक्षयमासाद्य निःशङ्कः प्रविवेश ह २६
तत्रापि द्वारपालास्तमुग्रवाचो न्यषेधयन्
तथैव च शुकस्तत्र निर्मन्युः समतिष्ठत २७
न चातपाध्वसंतप्तः क्षुत्पिपासाश्रमान्वितः
प्रताम्यति ग्लायति वा नापैति च तथातपात् २८
तेषां तु द्वारपालानामेकः शोकसमन्वितः
मध्यंगतमिवादित्यं दृष्ट्वा शुकमवस्थितम् २९
पूजयित्वा यथान्यायमभिवाद्य कृताञ्जलि
प्रावेशयत्ततः कक्ष्यां द्वितीयां राजवेश्मनः ३०
तत्रासीनः शुकस्तात मोक्षमेवानुचिन्तयन्
छायायामातपे चैव समदर्शी महाद्युतिः ३१
तं मुहूर्तादिवागम्य राज्ञो मन्त्री कृताञ्जलि
प्रावेशयत्ततः कक्ष्यां तृतीयां राजवेश्मनः ३२
तत्रान्तःपुरसंबद्धं महच्चैत्ररथोपमम्
सुविभक्तजलाक्रीडं रम्यं पुष्पितपादपम् ३३
तद्दर्शयित्वा स शुकं मन्त्री काननमुत्तमम्
अर्हमासनमादिश्य निश्चक्राम ततः पुनः ३४
तं चारुवेषाः सुश्रोण्यस्तरुण्यः प्रियदर्शनाः
सूक्ष्मरक्ताम्बरधरास्तप्तकाञ्चनभूषणाः ३५
संलापोल्लापकुशला नृत्तगीतविशारदाः
स्मितपूर्वाभिभाषिण्यो रूपेणाप्सरसां समाः ३६
कामोपचारकुशला भावज्ञाः सर्वकोविदाः
परं पञ्चाशतो नार्यो वारमुख्याः समाद्रवन् ३७
पाद्यादीनि प्रतिग्राह्य पूजया परयार्च्य च
देशकालोपपन्नेन स्वाध्वन्नेनाप्यतर्पयन् ३८
तस्य भुक्तवतस्तात तदन्तःपुरकाननम्
सुरम्यं दर्शयामासुरेकैकश्येन भारत ३९
क्रीडन्त्यश्च हसन्त्यश्च गायन्त्यश्चैव ताः शुकम्
उदारसत्त्वं सत्त्वज्ञाः स्त्रियः पर्यचरंस्तदा ४०
आरणेयस्तु शुद्धात्मा त्रिसंदेहस्त्रिकर्मकृत्

वश्येन्द्रियो जितक्रोधो न हृष्यति न कुप्यति ४१
तस्मै शय्यासनं दिव्यं वरार्हं रत्नभूषितम्
स्पर्ध्यास्तरणसंस्तीर्णं ददुस्ताः परमस्त्रियः ४२
पादशौचं तु कृत्वैव शुकः संध्यामुपास्य च
निषसादासने पुण्ये तमेवार्थं विचिन्तयन् ४३
पूर्वरात्रे तु तत्रासौ भूत्वा ध्यानपरायणः
मध्यरात्रे यथान्यायं निद्रामाहारयत्प्रभुः ४४
ततो मुहूर्तादुत्थाय कृत्वा शौचमनन्तरम्
स्त्रीभिः परिवृतो धीमान्ध्यानमेवान्वपद्यत ४५
अनेन विधिना कार्ष्णिस्तदहःशेषमच्युतः
तां च रात्रिं नृपकुले वर्तयामास भारत ४६
इति श्रीमहाभारते शान्तिपर्वणि द्वादशाधिकत्रिशततमोऽध्यायः ३१२

## त्रयोदशाधिकत्रिशततमोऽध्यायः

भीष्म उवाच
ततः स राजा जनको मन्त्रिभिः सह भारत
पुरः पुरोहितं कृत्वा सर्वाण्यन्तःपुराणि च १
आसनं च पुरस्कृत्य रत्नानि विविधानि च
शिरसा चार्घ्यमादाय गुरुपुत्रं समभ्यगात् २
स तदासनमादाय बहुरत्नविभूषितम्
स्पर्ध्यास्तरणसंस्तीर्णं सर्वतोभद्रमृद्धिमत् ३
पुरोधसा संगृहीतं हस्तेनालभ्य पार्थिवः
प्रददौ गुरुपुत्राय शुकाय परमार्चितम् ४
तत्रोपविष्टं तं कार्ष्णिं शास्त्रतः प्रत्यपूजयत्
पाद्यं निवेद्य प्रथममर्घ्यं गां च न्यवेदयत्
स च तां मन्त्रवत्पूजां प्रत्यगृह्णाद्यथाविधि ५
प्रतिगृह्य च तां पूजां जनकाद्द्विजसत्तमः
गां चैव समनुज्ञाय राजानमनुमान्य च ६
पर्यपृच्छन्महातेजा राज्ञः कुशलमव्ययम्
अनामयं च राजेन्द्रः शुकः सानुचरस्य ह ७

अनुज्ञातः स तेनाथ निषसाद सहानुगः
उदारसत्त्वाभिजनो भूमौ राजा कृताञ्जलि ८
कुशलं चाव्ययं चैव पृष्ट्वा वैयासकिं नृपः
किमागमनमित्येव पर्यपृच्छत पार्थिवः ९
शुक उवाच
पित्राहमुक्तो भद्रं ते मोक्षधर्मार्थकोविदः
विदेहराजो याज्यो मे जनको नाम विश्रुतः १०
तत्र गच्छस्व वै तूर्णं यदि ते हृदि संशयः
प्रवृत्तौ वा निवृत्तौ वा स ते छेत्स्यति संशयम् ११
सोऽह पितुर्नियोगात्त्वामुपप्रष्टुमिहागतः
तन्मे धर्मभृतां श्रेष्ठ यथावद्वक्तुमर्हसि १२
किं कार्यं ब्राह्मणेनेह मोक्षार्थश्च किमात्मकः
कथं च मोक्षः कर्तव्यो ज्ञानेन तपसापि वा १३
जनक उवाच
यत्कार्यं ब्राह्मणेनेह जन्मप्रभृति तच्छृणु
कृतोपनयनस्तात भवेद्वेदपरायणः १४
तपसा गुरुवृत्त्या च ब्रह्मचर्येण चाभिभो
देवतानां पितृणां चाप्यनृणश्चानसूयकः १५
वेदानधीत्य नियतो दक्षिणामपवर्ज्य च
अभ्यनुज्ञामथ प्राप्य समावर्तेत वै द्विजः १६
समावृत्तस्तु गार्हस्थ्ये स्वदारो नियतो वसेत्
अनसूयुर्यथान्यायमाहिताग्निस्तथैव च १७
उत्पाद्य पुत्रपौत्रं तु वन्याश्रमपदे वसेत्
तान्येवाग्नीन्यथाशास्त्रमर्चयन्नतिथिप्रियः १८
स वनेऽग्नीन्यथान्यायमात्मन्यारोप्य धर्मवित्
निर्द्वन्द्वो वीतरागात्मा ब्रह्माश्रमपदे वसेत् १९
शुक उवाच
उत्पन्ने ज्ञानविज्ञाने प्रत्यक्षे हृदि शाश्वते
किमवश्यं निवस्तव्यमाश्रमेषु वनेषु च २०
एतद्भवन्तं पृच्छामि तद्भवान्वक्तुमर्हति

यथावेदार्थतत्त्वेन ब्रूहि मे त्वं जनाधिप २१
जनक उवाच
न विना ज्ञानविज्ञानं मोक्षस्याधिगमो भवेत्
न विना गुरुसंबन्धं ज्ञानस्याधिगमः स्मृतः २२
आचार्यः प्लाविता तस्य ज्ञानं प्लव इहोच्यते
विज्ञानकृतकृत्यस्तु तीर्णस्तदुभयं त्यजेत् २३
अनुच्छेदाय लोकानामनुच्छेदाय कर्मणाम्
पूर्वैराचरितो धर्मश्चातुराश्रम्यसंकथः २४
अनेन क्रमयोगेन बहुजातिषु कर्मणा
कृत्वा शुभाशुभं कर्म मोक्षो नामेह लभ्यते २५
भावितैः कारणैश्चायं बहुसंसारयोनिषु
आसादयति शुद्धात्मा मोक्षं वै प्रथमाश्रमे २६
तमासाद्य तु मुक्तस्य दृष्टार्थस्य विपश्चितः
त्रिष्वाश्रमेषु को न्वर्थो भवेत्परमभीप्सतः २७
राजसांस्तामसांश्चैव नित्यं दोषान्विवर्जयेत्
सात्त्विकं मार्गमास्थाय पश्येदात्मानमात्मना २८
सर्वभूतषु चात्मानं सर्वभूतानि चात्मनि
संपश्यन्नोपलिप्येत जले वारिचरो यथा २९
पक्षीव प्लवनादूर्ध्वममुत्रानन्त्यमश्नुते
विहाय देहं निर्मुक्तो निर्द्वन्द्वः प्रशमं गतः ३०
अत्र गाथाः पुरा गीताः शृणु राज्ञा ययातिना
धार्यन्ते या द्विजैस्तात मोक्षशास्त्रविशारदैः ३१
ज्योतिरात्मनि नान्यत्र रतं तत्रैव चैव तत्
स्वयं च शक्यं तद्द्रष्टुं सुसमाहितचेतसा ३२
न बिभेति परो यस्मान्न बिभेति पराच्च यः
यश्च नेच्छति न द्वेष्टि ब्रह्म संपद्यते तदा ३३
यदा भावं न कुरुते सर्वभूतेषु पातकम्
कर्मणा मनसा वाचा ब्रह्म संपद्यते तदा ३४
संयोज्य तपसात्मानमीर्ष्यामुत्सृज्य मोहिनीम्
त्यक्त्वा कामं च लोभं च ततो ब्रह्मत्वमश्नुते ३५

यदा श्रव्ये च दृश्ये च सर्वभूतेषु चाप्ययम्
समो भवति निर्द्वन्द्वो ब्रह्म संपद्यते तदा ३६
यदा स्तुतिं च निन्दां च समत्वेनैव पश्यति
काञ्चनं चायसं चैव सुखदुःखे तथैव च ३७
शीतमुष्णं तथैवार्थमनर्थं प्रियमप्रियम्
जीवितं मरणं चैव ब्रह्म संपद्यते तदा ३८
प्रसार्येह यथाङ्गानि कूर्मः संहरते पुनः
तथेन्द्रियाणि मनसा संयन्तव्यानि भिक्षुणा ३९
तमःपरिगतं वेश्म यथा दीपेन दृश्यते
तथा बुद्धिप्रदीपेन शक्य आत्मा निरीक्षितुम् ४०
एतत्सर्वं च पश्यामि त्वयि बुद्धिमतां वर
यच्चान्यदपि वेत्तव्यं तत्त्वतो वेद तद्भवान् ४१
ब्रह्मर्षे विदितश्चासि विषयान्तमुपागतः
गुरोस्तव प्रसादेन तव चैवोपशिक्षया ४२
तस्यैव च प्रसादेन प्रादुर्भूतं महामुने
ज्ञानं दिव्यं ममापीदं तेनासि विदितो मम ४३
अधिकं तव विज्ञानमधिका च गतिस्तव
अधिकं च तवैश्वर्यं तच्च त्वं नावबुध्यसे ४४
बाल्याद्वा संशयाद्वापि भयाद्वाप्यविमोक्षजात्
उत्पन्ने चापि विज्ञाने नाधिगच्छति तां गतिम् ४५
व्यवसायेन शुद्धेन मद्विधैश्छिन्नसंशयः
विमुच्य हृदयग्रन्थीनासादयति तां गतिम् ४६
भवांश्चोत्पन्नविज्ञानः स्थिरबुद्धिरलोलुपः
व्यवसायादृते ब्रह्मन्नासादयति तत्परम् ४७
नास्ति ते सुखदुःखेषु विशेषो नासि लोलुपा
नौत्सुक्यं नृत्यगीतेषु न राग उपजायते ४८
न बन्धुषु निबन्धस्ते न भयेष्वस्ति ते भयम्
पश्यामि त्वां महाभाग तुल्यलोष्टाश्मकाञ्चनम् ४९
अहं च त्वानुपश्यामि ये चाप्यन्ये मनीषिणः
आस्थितं परमं मार्गमक्षयं तमनामयम् ५०

यत्फलं ब्राह्मणस्येह मोक्षार्थश्च यदात्मकः
तस्मिन्वै वर्तसे विप्र किमन्यत्परिपृच्छसि ५१
इति श्रीमहाभारते शान्तिपर्वणि त्रयोदशाधिकत्रिशततमोऽध्यायः ३१३

## चतुर्दशाधिकत्रिशततमोऽध्यायः

भीष्म उवाच
एतच्छ्रुत्वा तु वचनं कृतात्मा कृतनिश्चयः
आत्मनात्मानमास्थाय दृष्ट्वा चात्मानमात्मना १
कृतकार्यः सुखी शान्तस्तूष्णीं प्रायादुदङ्मुखः
शैशिरं गिरिमुद्दिश्य सधर्मा मातरिश्वनः २
एतस्मिन्नेव काले तु देवर्षिर्नारदस्तदा
हिमवन्तमियाद्द्रष्टुं सिद्धचारणसेवितम् ३
तमप्सरोगणाकीर्णं गीतस्वननिनादितम्
किंनराणां समूहैश्च भृङ्गराजैस्तथैव च ४
मद्गुभिः खञ्जरीटैश्च विचित्रैर्जीवजीवकैः
चित्रवर्णैर्मयूरैश्च केकाशतविराजितैः
राजहंससमूहैश्च हृष्टैः परभृतैस्तथा ५
पक्षिराजो गरुत्मांश्च यं नित्यमधिगच्छति
चत्वारो लोकपालाश्च देवाः सर्षिगणास्तथा
यत्र नित्यं समायान्ति लोकस्य हितकाम्यया ६
विष्णुना यत्र पुत्रार्थे तपस्तप्तं महात्मना
यत्रैव च कुमारेण बाल्ये क्षिप्ता दिवौकसः ७
शक्तिर्न्यस्ता क्षितितले त्रैलोक्यमवमन्य वै
यत्रोवाच जगत्स्कन्दः क्षिपन्वाक्यमिदं तदा ८
योऽन्योऽस्ति मत्तोऽभ्यधिको विप्रा यस्याधिकं प्रियाः
यो ब्रह्मण्यो द्वितीयोऽस्ति त्रिषु लोकेषु वीर्यवान् ९
सोऽभ्युद्धरत्विमां शक्तिमथ वा कम्पयत्विति
तच्छ्रुत्वा व्यथिता लोकाः कः इमामुद्धरेदिति १०
अथ देवगणं सर्वं संभ्रान्तेन्द्रियमानसम्
अपश्यद्भगवान्विष्णुः क्षिप्तं सासुरराक्षसम्

किं न्वत्र सुकृतं कार्यं भवेदिति विचिन्तयन् ११
स नामृष्यत तं क्षेपमवैक्षत च पावकिम्
स प्रहस्य विशुद्धात्मा शक्तिं प्रज्वलितां तदा
कम्पयामास सव्येन पाणिना पुरुषोत्तमः १२
शक्त्यां तु कम्पमानायां विष्णुना बलिना तदा
मेदिनी कम्पिता सर्वा सशैलवनकानना १३
शक्तेनापि समुद्धर्तुं कम्पिता सा न तूद्धृता
रक्षता स्कन्दराजस्य धर्षणां प्रभविष्णुना १४
तां कम्पयित्वा भगवान्प्रह्लादमिदमब्रवीत्
पश्य वीर्यं कुमारस्य नैतदन्यः करिष्यति १५
सोऽमृष्यमाणस्तद्वाक्यं समुद्धरणनिश्चितः
जग्राह तां तस्य शक्तिं न चैनामप्यकम्पयत् १६
नादं महान्तं मुक्त्वा स मूर्छितो गिरिमूर्धनि
विह्वलः प्रापतद्भूमौ हिरण्यकशिपोः सुतः १७
यत्रोत्तरां दिशं गत्वा शैलराजस्य पार्श्वतः
तपोऽतप्यत दुर्धर्षस्तात नित्यं वृषध्वजः १८
पावकेन परिक्षिप्तो दीप्यता तस्य चाश्रमः
आदित्यबन्धनं नाम दुर्धर्षमकृतात्मभिः १९
न तत्र शक्यते गन्तुं यक्षराक्षसदानवैः
दशयोजनविस्तारमग्निज्वालासमावृतम् २०
भगवान्पावकस्तत्र स्वयं तिष्ठति वीर्यवान्
सर्वविघ्नान्प्रशमयन्महादेवस्य धीमतः २१
दिव्यं वर्षसहस्रं हि पादेनैकेन तिष्ठतः
देवान्संतापयंस्तत्र महादेवो धृतव्रतः २२
एन्द्रीं तु दिशमास्थाय शैलराजस्य धीमतः
विविक्ते पर्वततटे पाराशर्यो महातपाः
वेदानध्यापयामास व्यासः शिष्यान्महातपाः २३
सुमन्तुं च महाभागं वैशम्पायनमेव च
जैमिनिं च महाप्राज्ञं पैलं चापि तपस्विनम् २४
एभिः शिष्यैः परिवृतो व्यास आस्ते महातपाः

तत्राश्रमपदं पुरायं ददर्श पितुरुत्तमम्
आरणेयो विशुद्धात्मा नभसीव दिवाकरः २५
अथ व्यासः परिक्षिप्तं ज्वलन्तमिव पावकम्
ददृशे सुतमायान्तं दिवाकरसमप्रभम् २६
असज्जमानं वृक्षेषु शैलेषु विषयेषु च
योगयुक्तं महात्मानं यथा बाणं गुणाच्च्युतम् २७
सोऽभिगम्य पितुः पादावगृह्णादरणीसुतः
यथोपजोषं तैश्चापि समागच्छन्महामुनिः २८
ततो निवेदयामास पित्रे सर्वमशेषतः
शुको जनकराजेन संवादं प्रीतमानसः २९
एवमध्यापयञ्शिष्यान्व्यासः पुत्रं च वीर्यवान्
उवास हिमवत्पृष्ठे पाराशर्यो महामुनिः ३०
ततः कदाचिच्छिष्यास्तं परिवार्यावतस्थिरे
वेदाध्ययनसंपन्नाः शान्तात्मानो जितेन्द्रियाः ३१
वेदेषु निष्ठां संप्राप्य साङ्गेष्वतितपस्विनः
अथोचुस्ते तदा व्यासं शिष्याः प्राञ्जलयो गुरुम् ३२
महता श्रेयसा युक्ता यशसा च स्म वर्धिताः
एकं त्विदानीमिच्छामो गुरुणानुग्रहं कृतम् ३३
इति तेषां वचः श्रुत्वा ब्रह्मर्षिस्तानुवाच ह
उच्यतामिति तद्वत्सा यद्वः कार्यं प्रियं मया ३४
एतद्वाक्यं गुरोः श्रुत्वा शिष्यास्ते हृष्टमानसाः
पुनः प्राञ्जलयो भूत्वा प्रणम्य शिरसा गुरुम् ३५
ऊचुस्ते सहिता राजन्निदं वचनमुत्तमम्
यदि प्रीत उपाध्यायो धन्याः स्मो मुनिसत्तम ३६
काङ्क्षामस्तु वयं सर्वे वरं दातुं महर्षिणा
षष्ठः शिष्यो न ते ख्यातिं गच्छेदत्र प्रसीदः नः ३७
चत्वारस्ते वयं शिष्या गुरुपुत्रश्च पञ्चमः
इह वेदाः प्रतिष्ठेरन्नेष नः काङ्क्षितो वरः ३८
शिष्याणां वचनं श्रुत्वा व्यासो वेदार्थतत्त्ववित्
पराशरात्मजो धीमान्परलोकार्थचिन्तकः

उवाच शिष्यान्धर्मात्मा धर्म्यं नैःश्रेयसं वचः ३९
ब्राह्मणाय सदा देयं ब्रह्म शुश्रूषवे भवेत्
ब्रह्मलोके निवासं यो ध्रुवं समभिकाङ्क्षति ४०
भवन्तो बहुलाः सन्तु वेदो विस्तार्यतामयम्
नाशिष्ये संप्रदातव्यो नाव्रते नाकृतात्मनि ४१
एते शिष्यगुणाः सर्वे विज्ञातव्या यथार्थतः
नापरीक्षितचारित्रे विद्या देया कथंचन ४२
यथा हि कनकं शुद्धं तापच्छेदनिघर्षणैः
परीक्षेत तथा शिष्यानीक्षेत्कुलगुणादिभिः ४३
न नियोज्याश्च वः शिष्या अनियोगे महाभये
यथामति यथापाठं तथा विद्या फलिष्यति ४४
सर्वस्तरतु दुर्गाणि सर्वो भद्राणि पश्यतु
श्रावयेच्चतुरो वर्णान्कृत्वा ब्राह्मणमग्रतः ४५
वेदस्याध्ययनं हीदं तच्च कार्यं महत्स्मृतम्
स्तुत्यर्थमिह देवानां वेदाः सृष्टाः स्वयंभुवा ४६
यो निर्वदेत संमोहाद्ब्राह्मणं वेदपारगम्
सोऽपध्यानाद्ब्राह्मणस्य पराभूयादसंशयम् ४७
यश्चाधर्मेण विब्रूयाद्यश्चाधर्मेण पृच्छति
तयोरन्यतरः प्रैति विद्वेषं वाधिगच्छति ४८
एतद्वः सर्वमाख्यातं स्वाध्यायस्य विधिं प्रति
उपकुर्याच्च शिष्याणामेतच्च हृदि वो भवेत् ४९
इति श्रीमहाभारते शान्तिपर्वणि चतुर्दशाधिकत्रिशततमोऽध्यायः ३१४

## पञ्चदशाधिकत्रिशततमोऽध्यायः

भीष्म उवाच
एतच्छ्रुत्वा गुरोर्वाक्यं व्यासशिष्या महौजसः
अन्योऽन्य हृष्टमनसः परिषस्वजिरे तदा १
उक्ताः स्मो यद्भगवता तदात्वायतिसंहितम्
तन्नो मनसि संरूढं करिष्यामस्तथा च तत् २
अन्योन्यं च सभाज्यैवं सुप्रीतमनसः पुनः

विज्ञापयन्ति स्म गुरुं पुनर्वाक्यविशारदाः ३
शैलादस्मान्महीं गन्तुं काङ्क्षितं नो महामुने
वेदाननेकधा कर्तुं यदि ते रुचितं प्रभो ४
शिष्याणां वचनं श्रुत्वा पराशरसुतः प्रभुः
प्रत्युवाच ततो वाक्यं धर्मार्थसहितं हितम् ५
क्षितिं वा देवलोकं वा गम्यतां यदि रोचते
अप्रमादश्च वः कार्यो ब्रह्म हि प्रचुरच्छलम् ६
तेऽनुज्ञातास्ततः सर्वे गुरुणा सत्यवादिना
जग्मुः प्रदक्षिणं कृत्वा व्यासं मूर्ध्नाभिवाद्य च ७
अवतीर्य महीं तेऽथ चातुर्होत्रमकल्पयन्
संयाजयन्तो विप्रांश्च राजन्यांश्च विशस्तथा ८
पूज्यमाना द्विजैर्नित्यं मोदमाना गृहे रताः
याजनाध्यापनरताः श्रीमन्तो लोकविश्रुताः ९
अवतीर्णेषु शिष्येषु व्यासः पुत्रसहायवान्
तूष्णीं ध्यानपरो धीमानेकान्ते समुपाविशत् १०
तं ददर्शाश्रमपदे नारदः सुमहातपाः
अथैनमब्रवीत्काले मधुराक्षरया गिरा ११
भो भो महर्षे वासिष्ठ ब्रह्मघोषो न वर्तते
एको ध्यानपरस्तूष्णीं किमास्से चिन्तयन्निव १२
ब्रह्मघोषैर्विरहितः पर्वतोऽय न शोभते
रजसा तमसा चैव सोमः सोमप्लवो यथा १३
न भ्राजते यथापूर्वं निषादानामिवालयः
देवर्षिगणजुष्टोऽपि वेदध्वनिनिराकृतः १४
ऋषयश्च हि देवाश्च गन्धर्वाश्च महौजसः
विमुक्ता ब्रह्मघोषेण न भ्राजन्ते यथा पुरा १५
नारदस्य वचः श्रुत्वा कृष्णद्वैपायनोऽब्रवीत्
महर्षे यत्त्वया प्रोक्तं वेदवादविचक्षण १६
एतन्मनोनुकूलं मे भवानर्हति भाषितुम्
सर्वज्ञः सर्वदर्शी च सर्वत्र च कुतूहली १७
त्रिषु लोकेषु यद्वृत्तं सर्वं तव मते स्थितम्

तदाज्ञापय विप्रर्षे ब्रूहि किं करवाणि ते १८
यन्मया समनुष्ठेयं ब्रह्मर्षे तदुदाहर
वियुक्तस्येह शिष्यैर्मे नातिहृष्टमिदं मनः १९
नारद उवाच
अनाम्नायमला वेदा ब्राह्मणस्याव्रतं मलम्
मलं पृथिव्या वाहीकाः स्त्रीणां कौतूहलं मलम् २०
अधीयतां भवान्वेदान्सार्धं पुत्रेण धीमता
विधुन्वन्ब्रह्मघोषेण रक्षोभयकृतं तमः २१
भीष्म उवाच
नारदस्य वचः श्रुत्वा व्यासः परमधर्मवित्
तथेत्युवाच संहृष्टो वेदाभ्यासे दृढव्रतः २२
शुकेन सह पुत्रेण वेदाभ्यासमथाकरोत्
स्वरेणोच्चैः स शैक्षेण लोकानापूरयन्निव २३
तयोरभ्यसतोरेवं नानाधर्मप्रवादिनोः
वातोऽतिमात्रं प्रववौ समुद्रानिलवेजितः २४
ततोऽनध्याय इति तं व्यासः पुत्रमवारयत्
शुको वारितमात्रस्तु कौतूहलसमन्वितः २५
अपृच्छत्पितरं ब्रह्मन्कुतो वायुरभूदयम्
आख्यातुमर्हति भवान्वायोः सर्वं विचेष्टितम् २६
शुकस्यैतद्वचः श्रुत्वा व्यासः परमविस्मितः
अनध्यायनिमित्तेऽस्मिन्निदं वचनमब्रवीत् २७
दिव्यं ते चक्षुरुत्पन्नं स्वयं ते निर्मलं मनः
तमसा रजसा चापि त्यक्तः सत्त्वे व्यवस्थितः २८
आदर्शे स्वामिव छायां पश्यस्यात्मानमात्मना
न्यस्यात्मनि स्वयं वेदान्बुद्ध्या समनुचिन्तय २९
देवयानचरो विष्णोः पितृयानश्च तामसः
द्वावेतौ प्रेत्य पन्थानौ दिवं चाधश्च गच्छतः ३०
पृथिव्यामन्तरिक्षे च यत्र संवान्ति वायवः
सप्तैते वायुमार्गा वै तान्निबोधानुपूर्वशः ३१
तत्र देवगणाः साध्याः समभूवन्महाबलाः

तेषामप्यभवत्पुत्रः समानो नाम दुर्जयः ३२
उदानस्तस्य पुत्रोऽभूद्व्यानस्तस्याभवत्सुतः
अपानश्च ततो ज्ञेयः प्राणश्चापि ततः परम् ३३
अनपत्योऽभवत्प्राणो दुर्धर्षः शत्रुतापनः
पृथक्कर्माणि तेषां तु प्रवक्ष्यामि यथातथम् ३४
प्राणिनां सर्वतो वायुश्चेष्टा वर्तयते पृथक्
प्राणनाच्चैव भूतानां प्राण इत्यभिधीयते ३५
प्रेरयत्यभ्रसंघातान्धूमजांश्चोष्मजांश्च यः
प्रथमः प्रथमे मार्गे प्रवहो नाम सोऽनिलः ३६
अम्बरे स्नेहमभ्रेभ्यस्तडिद्भ्यश्चोत्तमद्युतिः
आवहो नाम संवाति द्वितीयः श्वसनो नदन् ३७
उदयं ज्योतिषां शश्वत्सोमादीनां करोति यः
अन्तर्देहेषु चोदानं ये वदन्ति महर्षयः ३८
यश्चतुर्भ्यः समुद्रेभ्यो वायुर्धारयते जलम्
उद्धृत्याददते चापो जीमूतेभ्योऽम्बरेऽनिलः ३९
योऽद्भि संयोज्य जीमूतान्पर्जन्याय प्रयच्छति
उद्वहो नाम वर्षिष्ठस्तृतीयः स सदागतिः ४०
समुह्यमाना बहुधा येन नीताः पृथग्घनाः
वर्षमोक्षकृतारम्भास्ते भवन्ति घनाघनाः ४१
संहता येन चाविद्धा भवन्ति नदतां नदाः
रक्षणार्थाय संभूता मेघत्वमुपयान्ति च ४२
योऽसौ वहति भूतानां विमानानि विहायसा
चतुर्थः संवहो नाम वायुः स गिरिमर्दनः ४३
येन वेगवता रुग्णा रूक्षेणारुजता रसान्
वायुना विहता मेघा न भवन्ति बलाहकाः ४४
दारुणोत्पातसंचारो नभसः स्तनयित्नुमान्
पञ्चमः स महावेगो विवहो नाम मारुतः ४५
यस्मिन्पारिप्लवे दिव्या वहन्त्यापो विहायसा
पुण्यं चाकाशगङ्गायास्तोयं विष्टभ्य तिष्ठति ४६
दूरात्प्रतिहतो यस्मिन्नेकरश्मिर्दिवाकरः

योनिरंशुसहस्रस्य येन भाति वसुंधरा ४७
यस्मादाप्यायते सोमो निधिर्दिव्योऽमृतस्य च
षष्ठः परिवहो नाम स वायुर्जवतां वरः ४८
सर्वप्राणभृतां प्राणान्योऽन्तकाले निरस्यति
यस्य वर्त्मानुवर्तेते मृत्युवैवस्वतावुभौ ४९
सम्यगन्वीक्षतां बुद्ध्या शान्तयाध्यात्मनित्यया
ध्यानाभ्यासाभिरामाणां योऽमृतत्वाय कल्पते ५०
यं समासाद्य वेगेन दिशामन्तं प्रपेदिरे
दक्षस्य दश पुत्राणां सहस्राणि प्रजापतेः ५१
येन सृष्टः पराभूतो यात्येव न निवर्तते
परावहो नाम परो वायुः स दुरतिक्रमः ५२
एवमेतेऽदितेः पुत्रा मारुताः परमाद्भुताः
अनारमन्तः संवान्ति सर्वगाः सर्वधारिणः ५३
एतत्तु महदाश्चर्यं यदयं पर्वतोत्तमः
कम्पितः सहसा तेन वायुनाभिप्रवायता ५४
विष्णोर्निःश्वासवातोऽय यदा वेगसमीरितः
सहसोदीर्यते तात जगत्प्रव्यथते तदा ५५
तस्माद्ब्रह्मविदो ब्रह्म वाधीयन्तेऽतिवायति
वायोर्वायुभयं ह्युक्तं ब्रह्म तत्पीडितं भवेत् ५६
एतावदुक्त्वा वचनं पराशरसुतः प्रभुः
उक्त्वा पुत्रमधीष्वेति व्योमगङ्गामगात्तदा ५७
इति श्रीमहाभारते शान्तिपर्वणि पञ्चदशाधिकत्रिशततमोऽध्यायः ३१५

## षोडशाधिकत्रिशततमोऽध्यायः

भीष्म उवाच
एतस्मिन्नन्तरे शून्ये नारदः समुपागमत्
शुकं स्वाध्यायनिरतं वेदार्थान्वक्तुमीप्सितान् १
देवर्षिं तु शुको दृष्ट्वा नारदं समुपस्थितम्
अर्घ्यपूर्वेण विधिना वेदोक्तेनाभ्यपूजयत् २
नारदोऽथाब्रवीत्प्रीतो ब्रूहि ब्रह्मविदां वर

केन त्वां श्रेयसा तात योजयामीति हृष्टवत् ३
नारदस्य वचः श्रुत्वा शुकः प्रोवाच भारत
अस्मिँल्लोके हितं यत्स्यात्तेन मां योक्तुमर्हसि ४
नारद उवाच
तत्त्वं जिज्ञासतां पूर्वमृषीणां भावितात्मनाम्
सनत्कुमारो भगवानिदं वचनमब्रवीत् ५
नास्ति विद्यासमं चक्षुर्नास्ति विद्यासमं तपः
नास्ति रागसमं दुःखं नास्ति त्यागसमं सुखम् ६
निवृत्तिः कर्मणः पापात्सततं पुण्यशीलता
सद्वृत्तिः समुदाचारः श्रेय एतदनुत्तमम् ७
मानुष्यमसुखं प्राप्य यः सज्जति स मुह्यति
नालं स दुःखमोक्षाय सङ्गो वै दुःखलक्षणम् ८
सक्तस्य बुद्धिश्चलति मोहजालविवर्धिनी
मोहजालावृतो दुःखमिह चामुत्र चाश्नुते ९
सर्वोपायेन कामस्य क्रोधस्य च विनिग्रहः
कार्यः श्रेयोर्थिना तौ हि श्रेयोघातार्थमुद्यतौ १०
नित्यं क्रोधात्तपो रक्षेच्छ्रियं रक्षेत मत्सरात्
विद्यां मानावमानाभ्यामात्मानं तु प्रमादतः ११
आनृशंस्यं परो धर्मः क्षमा च परमं बलम्
आत्मज्ञानं परं ज्ञानं न सत्याद्विद्यते परम् १२
सत्यस्य वचनं श्रेयः सत्यादपि हितं भवेत्
यद्भूतहितमत्यन्तमेतत्सत्यं मतं मम १३
सर्वारम्भफलत्यागी निराशीर्निष्परिग्रहः
येन सर्वं परित्यक्तं स विद्वान्स च पण्डितः १४
इन्द्रियैरिन्द्रियार्थेभ्यश्चरत्यात्मवशैरिह
असज्जमानः शान्तात्मा निर्विकारः समाहितः १५
आत्मभूतैरतद्भूतः सह चैव विनैव च
स विमुक्तः परं श्रेयो नचिरेणाधिगच्छति १६
अदर्शनमसंस्पर्शस्तथासंभाषणं सदा
यस्य भूतैः सह मुने स श्रेयो विन्दते परम् १७

न हिंस्यात्सर्वभूतानि मैत्रायणगतश्चरेत्
नेदं जन्म समासाद्य वैरं कुर्वीत केनचित् १८
आकिंचन्यं सुसंतोषो निराशीष्ट्वमचापलम्
एतदाहुः परं श्रेय आत्मज्ञस्य जितात्मनः १९
परिग्रहं परित्यज्य भव तात जितेन्द्रियः
अशोकं स्थानमातिष्ठ इह चामुत्र चाभयम् २०
निरामिषा न शोचन्ति त्यजेहामिषमात्मनः
परित्यज्यामिषं सौम्य दुःखतापाद्विमोक्ष्यसे २१
तपोनित्येन दान्तेन मुनिना संयतात्मना
अजितं जेतुकामेन भाव्यं सङ्गेष्वसङ्गिना २२
गुणसङ्गेष्वनासक्त एकचर्यारतः सदा
ब्राह्मणो नचिरादेव सुखमायात्यनुत्तमम् २३
द्वंद्वारामेषु भूतेषु य एको रमते मुनिः
विद्धि प्रज्ञानतृप्तं तं ज्ञानतृप्तो न शोचति २४
शुभैर्लभति देवत्वं व्यामिश्रैर्जन्म मानुषम्
अशुभैश्चाप्यधोजन्म कर्मभिर्लभतेऽवशः २५
तत्र मृत्युजरादुःखैः सततं समभिद्रुतः
संसारे पच्यते जन्तुस्तत्कथं नावबुध्यसे २६
अहिते हितसंज्ञस्त्वमध्रुवे ध्रुवसंज्ञकः
अनर्थे चार्थसंज्ञस्त्वं किमर्थं नावबुध्यसे २७
संवेष्ट्यमानं बहुभिर्मोहतन्तुभिरात्मजैः
कोशकारवदात्मानं वेष्टयन्नावबुध्यसे २८
अलं परिग्रहेणेह दोषवान्हि परिग्रहः
कृमिर्हि कोषकारस्तु बध्यते स्वपरिग्रहात् २९
पुत्रदारकुटुम्बेषु सक्ताः सीदन्ति जन्तवः
सरःपङ्कार्णवे मग्ना जीर्णा वनगजा इव ३०
महाजालसमाकृष्टान्स्थले मत्स्यानिवोद्धृतान्
स्नेहजालसमाकृष्टान्स्थले जन्तून्सुदुःखितान् ३१
कुटुम्बं पुत्रदारं च शरीरं द्रव्यसंचयाः
पारक्यमध्रुवं सर्वं किं स्वं सुकृतदुष्कृतम् ३२

यदा सर्वं परित्यज्य गन्तव्यमवशेन ते
अनर्थे किं प्रसक्तस्त्वं स्वमर्थं नानुतिष्ठसि ३३
अविश्रान्तमनालम्बमपाथेयमदैशिकम्
तमःकान्तारमध्वानं कथमेको गमिष्यसि ३४
न हि त्वा प्रस्थितं कश्चित्पृष्ठतोऽनुगमिष्यति
सुकृतं दुष्कृतं च त्वा यास्यन्तमनुयास्यति ३५
विद्या कर्म च शौर्यं च ज्ञानं च बहुविस्तरम्
अर्थार्थमनुसार्यन्ते सिद्धार्थस्तु विमुच्यते ३६
निबन्धनी रज्जुरेषा या ग्रामे वसतो रतिः
छित्त्वैनां सुकृतो यान्ति नैनां छिन्दन्ति दुष्कृतः ३७
रूपकूलां मनःस्रोतां स्पर्शद्वीपां रसावहाम्
गन्धपङ्कां शब्दजलां स्वर्गमार्गदुरावहाम् ३८
क्षमारित्रां सत्यमयीं धर्मस्थैर्यवटाकराम्
त्यागवाताध्वगां शीघ्रां बुद्धिनावा नदीं तरेत् ३९
त्यज धर्ममधर्मं च उभे सत्यानृते त्यज
उभे सत्यानृते त्यक्त्वा येन त्यजसि तं त्यज ४०
त्यज धर्ममसंकल्पादधर्मं चाप्यहिंसया
उभे सत्यानृते बुद्ध्या बुद्धिं परमनिश्चयात् ४१
अस्थिस्थूणं स्नायुयुतं मांसशोणितलेपनम्
चर्मावनद्धं दुर्गन्धिं पूर्णं मूत्रपुरीषयोः ४२
जराशोकसमाविष्टं रोगायतनमातुरम्
रजस्वलमनित्यं च भूतावासं समुत्सृज ४३
इदं विश्वं जगत्सर्वमजगच्चापि यद्भवेत्
महाभूतात्मकं सर्वं महद्यत्परमाणु यत् ४४
इन्द्रियाणि च पञ्चैव तमः सत्त्वं रजस्तथा
इत्येष सप्तदशको राशिरव्यक्तसंज्ञकः ४५
सर्वैरिहेन्द्रियार्थैश्च व्यक्ताव्यक्तैर्हि संहितः
पञ्चविंशक इत्येष व्यक्ताव्यक्तमयो गुणः ४६
एतैः सर्वैः समायुक्तः पुमानित्यभिधीयते
त्रिवर्गोऽत्र सुखं दुःखं जीवितं मरणं तथा ४७

य इदं वेद तत्त्वेन स वेद प्रभवाप्ययौ
पाराशर्येह बोद्धव्यं ज्ञानानां यच्च किंचन ४८
इन्द्रियैर्गृह्यते यद्यत्तत्तद्व्यक्तमिति स्थितिः
अव्यक्तमिति विज्ञेयं लिङ्गग्राह्यमतीन्द्रियम् ४९
इन्द्रियैर्नियतैर्देही धाराभिरिव तर्प्यते
लोके विततमात्मानं लोकं चात्मनि पश्यति ५०
परावरदृशः शक्तिर्ज्ञानवेलां न पश्यति
पश्यतः सर्वभूतानि सर्वावस्थासु सर्वदा ५१
ब्रह्मभूतस्य संयोगो नाशुभेनोपपद्यते
ज्ञानेन विविधान्क्लेशानतिवृत्तस्य मोहजान्
लोके बुद्धिप्रकाशेन लोकमार्गो न रिष्यते ५२
अनादिनिधनं जन्तुमात्मनि स्थितमव्ययम्
अकर्तारममूर्तं च भगवानाह तीर्थवित् ५३
यो जन्तुः स्वकृतैस्तैस्तैः कर्मभिर्नित्यदुःखितः
स दुःखप्रतिघातार्थं हन्ति जन्तूननेकधा ५४
ततः कर्म समादत्ते पुनरन्यन्नवं बहु
तप्यतेऽथ पुनस्तेन भुक्त्वापथ्यमिवातुरः ५५
अजस्रमेव मोहार्तो दुःखेषु सुखसंज्ञितः
बध्यते मथ्यते चैव कर्मभिर्मन्थवत्सदा ५६
ततो निवृत्ता बन्धात्स्वात्कर्मणामुदयादिह
परिभ्रमति संसारं चक्रवद्बहुवेदनः ५७
स त्वं निवृत्तबन्धस्तु निवृत्तश्चापि कर्मतः
सर्ववित्सर्वजित्सिद्धो भव भावविवर्जितः ५८
संयमेन नवं बन्धं निवर्त्य तपसो बलात्
संप्राप्ता बहवः सिद्धिमप्यबाधां सुखोदयाम् ५९
इति श्रीमहाभारते शान्तिपर्वणि षोडशाधिकत्रिशततमोऽध्यायः ३१६

सप्तदशाधिकत्रिशततमोऽध्यायः

नारद उवाच
अशोकं शोकनाशार्थं शास्त्रं शान्तिकरं शिवम्

निशम्य लभते बुद्धिं तां लब्ध्वा सुखमेधते १
शोकस्थानसहस्राणि भयस्थानशतानि च
दिवसे दिवसे मूढमाविशन्ति न पण्डितम् २
तस्मादनिष्टनाशार्थमितिहासं निबोध मे
तिष्ठते चेद्वशे बुद्धिर्लभते शोकनाशनम् ३
अनिष्टसंप्रयोगाच्च विप्रयोगात्प्रियस्य च
मनुष्या मानसैर्दुःखैर्युज्यन्ते अल्पबुद्धयः ४
द्रव्येषु समतीतेषु ये गुणास्तान्न चिन्तयेत्
ताननाद्रियमाणस्य स्नेहबन्धः प्रमुच्यते ५
दोषदर्शी भवेत्तत्र यत्र रागः प्रवर्तते
अनिष्टवद्धितं पश्येत्तथा क्षिप्रं विरज्यते ६
नार्थो न धर्मो न यशो योऽतीतमनुशोचति
अप्यभावेन युज्येत तच्चास्य न निवर्तते ७
गुणैर्भूतानि युज्यन्ते वियुज्यन्ते तथैव च
सर्वाणि नैतदेकस्य शोकस्थानं हि विद्यते ८
मृतं वा यदि वा नष्टं योऽतीतमनुशोचति
दुःखेन लभते दुःखं द्वावनर्थौ प्रपद्यते ९
नाश्रु कुर्वन्ति ये बुद्ध्या दृष्ट्वा लोकेषु संततिम्
सम्यक्प्रपश्यतः सर्वं नाश्रुकर्मोपपद्यते १०
दुःखोपघाते शारीरे मानसे वाप्युपस्थिते
यस्मिन्न शक्यते कर्तुं यत्नस्तन्नानुचिन्तयेत् ११
भैषज्यमेतद्दुःखस्य यदेतन्नानुचिन्तयेत्
चिन्त्यमानं हि न व्येति भूयश्चापि प्रवर्धते १२
प्रज्ञया मानसं दुःखं हन्याच्छारीरमौषधैः
एतद्विज्ञानसामर्थ्यं न बालैः समतामियात् १३
अनित्यं यौवनं रूपं जीवितं द्रव्यसंचयः
आरोग्यं प्रियसंवासो गृध्येत्तत्र न पण्डितः १४
न जानपदिकं दुःखमेकः शोचितुमर्हति
अशोचन्प्रतिकुर्वीत यदि पश्येदुपक्रमम् १५
सुखाद्बहुतरं दुःखं जीविते नात्र संशयः

स्निग्धत्वं चेन्द्रियार्थेषु मोहान्मरणमप्रियम् १६
परित्यजति यो दुखं सुखं वाप्युभयं नरः
अभ्येति ब्रह्म सोऽत्यन्तं न तं शोचन्ति पण्डिताः १७
दुःखमर्था हि त्यज्यन्ते पालने न च ते सुखाः
दुःखेन चाधिगम्यन्ते नाशमेषां न चिन्तयेत् १८
अन्यामन्यां धनावस्थां प्राप्य वैशेषिकीं नराः
अतृप्ता यान्ति विध्वंसं संतोषं यान्ति पण्डिताः १९
सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः
संयोगा विप्रयोगान्ता मरणान्तं हि जीवितम् २०
अन्तो नास्ति पिपासायास्तुष्टिस्तु परमं सुखम्
तस्मात्संतोषमेवेह धनं पश्यन्ति पण्डिताः २१
निमेषमात्रमपि हि वयो गच्छन्न तिष्ठति
स्वशरीरेष्वनित्येषु नित्यं किमनुचिन्तयेत् २२
भूतेष्वभावं संचिन्त्य ये बुद्ध्वा तमसः परम्
न शोचन्ति गताध्वानः पश्यन्तः परमां गतिम् २३
संचिन्वानकमेवैनं कामानामवितृप्तकम्
व्याघ्रः पशुमिवासाद्य मृत्युरादाय गच्छति २४
अथाप्युपायं संपश्येद्दुःखस्य परिमोक्षणे
अशोचन्नारभेतैव युक्तश्चाव्यसनी भवेत् २५
शब्दे स्पर्शे च रूपे च गन्धेषु च रसेषु च
नोपभोगात्परं किंचिद्धनिनो वाधनस्य वा २६
प्राक्संप्रयोगाद्भूतानां नास्ति दुःखमनामयम्
विप्रयोगात्तु सर्वस्य न शोचेत्प्रकृतिस्थितः २७
धृत्या शिश्नोदरं रक्षेत्पाणिपादं च चक्षुषा
चक्षुःश्रोत्रे च मनसा मनो वाचं च विद्यया २८
प्रणयं प्रतिसंहृत्य संस्तुतेष्वितरेषु च
विचरेदसमुन्नद्धः स सुखी स च पण्डितः २९
अध्यात्मरतिरासीनो निरपेक्षो निरामिषः
आत्मनैव सहायेन यश्चरेत्स सुखी भवेत् ३०

इति श्रीमहाभारते शान्तिपर्वणि सप्तदशाधिकत्रिशततमोऽध्यायः ३१७

## अष्टादशाधिकत्रिशततमोऽध्यायः

नारद उवाच
सुखदुःखविपर्यासो यदा समुपपद्यते
नैनं प्रज्ञा सुनीतं वा त्रायते नापि पौरुषम् १
स्वभावाद्यत्नमातिष्ठेद्यत्नवान्नावसीदति
जरामरणरोगेभ्यः प्रियमात्मानमुद्धरेत् २
रुजन्ति हि शरीराणि रोगाः शारीरमानसाः
सायका इव तीक्ष्णाग्राः प्रयुक्ता दृढधन्विभिः ३
व्याधितस्य विवित्साभिस्त्रस्यतो जीवितैषिणः
अवशस्य विनाशाय शरीरमपकृष्यते ४
स्रवन्ति न निवर्तन्ते स्रोतांसि सरितामिव
आयुरादाय मर्त्यानां रात्र्यहानि पुनः पुनः ५
व्यत्ययो ह्ययमत्यन्तं पक्षयोः शुक्लकृष्णयोः
जातं मर्त्यं जरयति निमेषं नावतिष्ठते ६
सुखदुःखानि भूतानामजरो जरयन्नसौ
आदित्यो ह्यस्तमभ्येति पुनः पुनरुदेति च ७
अदृष्टपूर्वानादाय भावानपरिशङ्कितान्
इष्टानिष्टान्मनुष्याणामस्तं गच्छन्ति रात्रयः ८
यो यमिच्छेद्यथाकामं कामानां तत्तदाप्नुयात्
यदि स्यान्न पराधीनं पुरुषस्य क्रियाफलम् ९
संयताश्च हि दक्षाश्च मतिमन्तश्च मानवाः
दृश्यन्ते निष्फलाः सन्तः प्रहीणाश्च स्वकर्मभिः १०
अपरे बालिशाः सन्तो निर्गुणाः पुरुषाधमाः
आशीर्भिरप्यसंयुक्ता दृश्यन्ते सर्वकामिनः ११
भूतानामपरः कश्चिद्धिंसायां सततोत्थितः
वञ्चनायां च लोकस्य स सुखेष्वेव जीर्यते १२
अचेष्टमानमासीनं श्रीः कंचिदुपतिष्ठति
कश्चित्कर्मानुसृत्यान्यो न प्राप्यमधिगच्छति १३
अपराधं समाचक्ष्व पुरुषस्य स्वभावतः
शुक्रमन्यत्र संभूतं पुनरन्यत्र गच्छति १४

तस्य योनौ प्रयुक्तस्य गर्भो भवति वा न वा
आम्रपुष्पोपमा यस्य निर्वृत्तिरुपलभ्यते १५
केषांचित्पुत्रकामानामनुसंतानमिच्छताम्
सिद्धौ प्रयतमानानां नैवाण्डमुपजायते १६
गर्भाच्चोद्विजमानानां क्रुद्धादाशीविषादिव
आयुष्माञ्जायते पुत्रः कथं प्रेतः पितेव सः १७
देवानिष्ट्वा तपस्तप्त्वा कृपणैः पुत्रगृद्धिभिः
दश मासान्परिधृता जायन्ते कुलपांसनाः १८
अपरे धनधान्यानि भोगांश्च पितृसंचितान्
विपुलानभिजायन्ते लब्धास्तैरेव मङ्गलैः १९
अन्योन्यं समभिप्रेत्य मैथुनस्य समागमे
उपद्रव इवाविष्टो योनिं गर्भः प्रपद्यते २०
शीर्णं परशरीरेण निच्छवीकं शरीरिणाम्
प्राणिनां प्राणसंरोधे मांसश्लेष्मविचेष्टितम् २१
निर्दग्धं परदेहेन परदेहं चलाचलम्
विनश्यन्तं विनाशान्ते नावि नावमिवाहितम् २२
संगत्या जठरे न्यस्तं रेतोबिन्दुमचेतनम्
केन यत्नेन जीवन्तं गर्भं त्वमिह पश्यसि २३
अन्नपानानि जीर्यन्ते यत्र भक्षाश्च भक्षिताः
तस्मिन्नेवोदरे गर्भः किं नान्नमिव जीर्यते २४
गर्भमूत्रपुरीषाणां स्वभावनियता गतिः
धारणे वा विसर्गे वा न कर्तुर्विद्यते वशः २५
स्रवन्ति ह्युदराद्गर्भा जायमानास्तथापरे
आगमेन सहान्येषां विनाश उपपद्यते २६
एतस्माद्योनिसंबन्धाद्यो जीवन्परिमुच्यते
प्रजां च लभते कांचित्पुनर्द्वन्द्वेषु मज्जति २७
शतस्य सहजातस्य सप्तमीं दशमीं दशाम्
प्राप्नुवन्ति ततः पञ्च न भवन्ति शतायुषः २८
नाभ्युत्थाने मनुष्याणां योगाः स्युर्नात्र संशयः
व्याधिभिश्च विमथ्यन्ते व्यालैः क्षुद्रमृगा इव २९

व्याधिभिर्भद्यमाणानां त्यजतां विपुलं धनम्
वेदनां नापकर्षन्ति यतमानाश्चिकित्सकाः ३०
ते चातिनिपुणा वैद्याः कुशलाः संभृतौषधाः
व्याधिभिः परिकृष्यन्ते मृगा व्याधैरिवार्दिताः ३१
ते पिबन्तः कषायांश्च सर्पींषि विविधानि च
दृश्यन्ते जरया भग्ना नागा नागैरिवोत्तमैः ३२
के वा भुवि चिकित्सन्ते रोगार्तान्मृगपक्षिणः
श्वापदानि दरिद्रांश्च प्रायो नार्ता भवन्ति ते ३३
घोरानपि दुराधर्षान्नृपतीनुग्रतेजसः
आक्रम्य रोग आदत्ते पशून्पशुपचो यथा ३४
इति लोकमनाक्रन्दं मोहशोकपरिप्लुतम्
स्रोतसा सहसा क्षिप्तं ह्रियमाणं बलीयसा ३५
न धनेन न राज्येन नोग्रेण तपसा तथा
स्वभावा नातिवर्तन्ते ये नियुक्ताः शरीरिषु ३६
न म्रियेरन्न जीर्येरन्सर्वे स्युः सर्वकामिकाः
नाप्रियं प्रतिपश्येयुरुत्थानस्य फलं प्रति ३७
उपर्युपरि लोकस्य सर्वो भवितुमिच्छति
यतते च यथाशक्ति न च तद्वर्तते तथा ३८
ऐश्वर्यमदमत्तांश्च मत्तान्मद्यमदेन च
अप्रमत्ताः शठाः शूरा विक्रान्ताः पर्युपासते ३९
क्लेशाः परिनिवर्तन्ते केषांचिदसमीक्षिताः
स्वं स्वं च पुनरन्येषां न किंचिदभिगम्यते ४०
महच्च फलवैषम्यं दृश्यते कर्मसंधिषु
वहन्ति शिबिकामन्ये यान्त्यन्ये शिबिकागताः ४१
सर्वेषामृद्धिकामानामन्ये रथपुरःसराः
मनुजाश्च शतस्त्रीकाः शतशो विधवाः स्त्रियः ४२
द्वंद्वारामेषु भूतेषु गच्छन्त्येकैकशो नराः
इदमन्यत्परं पश्य मात्र मोहं करिष्यसि ४३
त्यज धर्ममधर्मं च उभे सत्यानृते त्यज
उभे सत्यानृते त्यक्त्वा येन त्यजसि तं त्यज ४४

एतत्ते परमं गुह्यमाख्यातमृषिसत्तम
येन देवाः परित्यज्य मर्त्यलोकं दिवं गताः ४५
भीष्म उवाच
नारदस्य वचः श्रुत्वा शुकः परमबुद्धिमान्
संचिन्त्य मनसा धीरो निश्चयं नाध्यगच्छत ४६
पुत्रदारैर्महान्क्लेशो विद्याम्नाये महाञ्श्रमः
किं नु स्याच्छाश्वतं स्थानमल्पक्लेशं महोदयम् ४७
ततो मुहूर्तं संचिन्त्य निश्चितां गतिमात्मनः
परावरज्ञो धर्मस्य परां नैःश्रेयसीं गतिम् ४८
कथं त्वहमसंक्लिष्टो गच्छेयं परमां गतिम्
नावर्तेयं यथा भूयो योनिसंसारसागरे ४९
परं भावं हि काङ्क्षामि यत्र नावर्तते पुनः
सर्वसङ्गान्परित्यज्य निश्चितां मनसो गतिम् ५०
तत्र यास्यामि यत्रात्मा शमं मेऽधिगमिष्यति
अक्षयश्चाव्ययश्चैव यत्र स्थास्यामि शाश्वतः ५१
न तु योगमृते शक्या प्राप्तुं सा परमा गतिः
अवबन्धो हि मुक्तस्य कर्मभिर्नोपपद्यते ५२
तस्माद्योगं समास्थाय त्यक्त्वा गृहकलेवरम्
वायुभूतः प्रवेक्ष्यामि तेजोराशिं दिवाकरम् ५३
न ह्येष क्षयमाप्नोति सोमः सुरगणैर्यथा
कम्पितः पतते भूमिं पुनश्चैवाधिरोहति
क्षीयते हि सदा सोमः पुनश्चैवाभिपूर्यते ५४
रविस्तु संतापयति लोकान्रश्मिभिरुल्बणैः
सर्वतस्तेज आदत्ते नित्यमक्षयमण्डलः ५५
अतो मे रोचते गन्तुमादित्यं दीप्ततेजसम्
अत्र वत्स्यामि दुर्धर्षो निःसङ्गेनान्तरात्मना ५६
सूर्यस्य सदने चाहं निक्षिप्येदं कलेवरम्
ऋषिभिः सह यास्यामि सौरं तेजोऽतिदुःसहम् ५७
आपृच्छामि नगान्नागान्गिरीनुर्वीं दिशो दिवम्
देवदानवगन्धर्वान्पिशाचोरगराक्षसान् ५८

लोकेषु सर्वभूतानि प्रवेक्ष्यामि न संशयः
पश्यन्तु योगवीर्यं मे सर्वे देवाः सहर्षिभिः ५९
अथानुज्ञाप्य तमृषिं नारदं लोकविश्रुतम्
तस्मादनुज्ञां संप्राप्य जगाम पितरं प्रति ६०
सोऽभिवाद्य महात्मानमृषिं द्वैपायनं मुनिम्
शुकः प्रदक्षिणीकृत्य कृष्णमापृष्टवान्मुनिः ६१
श्रुत्वा ऋषिस्तद्वचनं शुकस्य प्रीतो महात्मा पुनराह चैनम्
भो भोः पुत्र स्थीयतां तावदद्य यावच्चक्षुः प्रीणयामि त्वदर्थम् ६२
निरपेक्षः शुको भूत्वा निःस्नेहो मुक्तबन्धनः
मोक्षमेवानुसंचिन्त्य गमनाय मनो दधे
पितरं संपरित्यज्य जगाम द्विजसत्तमः ६३
इति श्रीमहाभारते शान्तिपर्वणि अष्टादशाधिकत्रिशततमोऽध्यायः ३१८

## एकोनविंशत्यधिकत्रिशततमोऽध्यायः

भीष्म उवाच
गिरिपृष्ठं समारुह्य सुतो व्यासस्य भारत
समे देशे विविक्ते स निःशलाक उपाविशत् १
धारयामास चात्मानं यथाशास्त्रं महामुनिः
पादप्रभृतिगात्रेषु क्रमेण क्रमयोगवित् २
ततः स प्राङ्मुखो विद्वानादित्ये नचिरोदिते
पाणिपादं समाधाय विनीतवदुपाविशत् ३
न तत्र पक्षिसंघातो न शब्दो नापि दर्शनम्
यत्र वैयासकिर्धीमान्योक्तुं समुपचक्रमे ४
स ददर्श तदात्मानं सर्वसङ्गविनिःसृतम्
प्रजहास ततो हासं शुकः संप्रेक्ष्य भास्करम् ५
स पुनर्योगमास्थाय मोक्षमार्गोपलब्धये
महायोगीश्वरो भूत्वा सोऽत्यक्रामद्विहायसम् ६
ततः प्रदक्षिणं कृत्वा देवर्षिं नारदं तदा
निवेदयामास तदा स्वं योगं परमर्षये ७
दृष्टो मार्गः प्रवृत्तोऽस्मि स्वस्ति तेऽस्तु तपोधन

त्वत्प्रसादाद्गमिष्यामि गतिमिष्टां महाद्युते ८
नारदेनाभ्यनुज्ञातस्ततो द्वैपायनात्मजः
अभिवाद्य पुनर्योगमास्थायाकाशमाविशत् ९
कैलासपृष्ठादुत्पत्य स पपात दिवं तदा
अन्तरिक्षचरः श्रीमान्व्यासपुत्रः सुनिश्चितः १०
तमुद्यन्तं द्विजश्रेष्ठं वैनतेयसमद्युतिम्
ददृशुः सर्वभूतानि मनोमारुतरंहसम् ११
व्यवसायेन लोकांस्त्रीन्सर्वान्सोऽथ विचिन्तयन्
आस्थितो दीर्घमध्वानं पावकार्कसमप्रभः १२
तमेकमनसं यान्तमव्यग्रमकुतोभयम्
ददृशुः सर्वभूतानि जङ्गमानीतराणि च १३
यथाशक्ति यथान्यायं पूजयांचक्रिरे तदा
पुष्पवर्षैश्च दिव्यैस्तमवचक्रुर्दिवौकसः १४
तं दृष्ट्वा विस्मिताः सर्वे गन्धर्वाप्सरसां गणाः
ऋषयश्चैव संसिद्धाः परं विस्मयमागताः १५
अन्तरिक्षचरः कोऽय तपसा सिद्धिमागतः
अधःकायोर्ध्ववक्त्रश्च नेत्रैः समभिवाह्यते १६
ततः परमधीरात्मा त्रिषु लोकेषु विश्रुतः
भास्करं समुदीक्षन्स प्राङ्मुखो वाग्यतोऽगमत्
शब्देनाकाशमखिलं पूरयन्निव सर्वतः १७
तमापतन्तं सहसा दृष्ट्वा सर्वाप्सरोगणाः
संभ्रान्तमनसो राजन्नासन्परमविस्मिताः
पञ्चचूडाप्रभृतयो भृशमुत्फुल्ललोचनाः १८
दैवतं कतमं ह्येतदुत्तमां गतिमास्थितम्
सुनिश्चितमिहायाति विमुक्तमिव निःस्पृहम् १९
ततः समतिचक्राम मलयं नाम पर्वतम्
उर्वशी पूर्वचित्तिश्च यं नित्यमुपसेवते
ते स्म ब्रह्मर्षिपुत्रस्य विस्मयं ययतुः परम् २०
अहो बुद्धिसमाधानं वेदाभ्यासरते द्विजे
अचिरेणैव कालेन नभश्चरति चन्द्रवत्

पितृशुश्रूषया बुद्धिं संप्राप्तोऽयमनुत्तमाम् २१
पितृभक्तो दृढतपाः पितुः सुदयितः सुतः
अनन्यमनसा तेन कथं पित्रा विवर्जितः २२
उर्वश्या वचनं श्रुत्वा शुकः परमधर्मवित्
उदैक्षत दिशः सर्वा वचने गतमानसः २३
सोऽन्तरिक्षं महीं चैव सशैलवनकाननाम्
आलोकयामास तदा सरांसि सरितस्तथा २४
ततो द्वैपायनसुतं बहुमानपुरःसरम्
कृताञ्जलिपुटाः सर्वा निरीक्षन्ते स्म देवताः २५
अब्रवीत्तास्तदा वाक्यं शुकः परमधर्मवित्
पिता यद्यनुगच्छेन्मां क्रोशमानः शुकेति वै २६
ततः प्रतिवचो देयं सर्वैरेव समाहितैः
एतन्मे स्नेहतः सर्वे वचनं कर्तुमर्हथ २७
शुकस्य वचनं श्रुत्वा दिशः सवनकाननाः
समुद्राः सरितः शैलाः प्रत्यूचुस्तं समन्ततः २८
यथाज्ञापयसे विप्र बाढमेवं भविष्यति
ऋषेर्व्याहरतो वाक्यं प्रतिवक्ष्यामहे वयम् २९
इति श्रीमहाभारते शान्तिपर्वणि एकोनविंशत्यधिकत्रिशततमोऽध्यायः ३१९

## विंशत्यधिकत्रिशततमोऽध्यायः

भीष्म उवाच
इत्येवमुक्त्वा वचनं ब्रह्मर्षिः सुमहातपाः
प्रातिष्ठत शुकः सिद्धिं हित्वा श्लोकांश्चतुर्विधान् १
तमो ह्यष्टविधं हित्वा जहौ पञ्चविधं रजः
ततः सत्त्वं जहौ धीमांस्तदद्भुतमिवाभवत् २
ततस्तस्मिन्पदे नित्ये निर्गुणे लिङ्गवर्जिते
ब्रह्मणि प्रत्यतिष्ठत्स विधूमोऽग्निरिव ज्वलन् ३
उल्कापाता दिशां दाहा भूमिकम्पास्तथैव च
प्रादुर्भूताः क्षणे तस्मिंस्तदद्भुतमिवाभवत् ४
द्रुमाः शाखाश्च मुमुचुः शिखराणि च पर्वताः

निर्घातशब्दैश्च गिरिर्हिमवान्दीर्यतीव ह ५
न बभासे सहस्रांशुर्न जज्वाल च पावकः
ह्रदाश्च सरितश्चैव चुक्षुभुः सागरास्तथा ६
ववर्ष वासवस्तोयं रसवच्च सुगन्धि च
ववौ समीरणश्चापि दिव्यगन्धवहः शुचिः ७
स शृङ्गेऽप्रतिमे दिव्ये हिमवन्मेरुसंभवे
संश्लिष्टे श्वेतपीते द्वे रुक्मरूप्यमये शुभे ८
शतयोजनविस्तारे तिर्यगूर्ध्वं च भारत
उदीचीं दिशमाश्रित्य रुचिरे संददर्श ह ९
सोऽविशङ्केन मनसा तथैवाभ्यपतच्छुकः
ततः पर्वतशृङ्गे द्वे सहसैव द्विधाकृते
अदृश्येतां महाराज तदद्भुतमिवाभवत् १०
ततः पर्वतशृङ्गाभ्यां सहसैव विनिःसृतः
न च प्रतिजघानास्य स गतिं पर्वतोत्तमः ११
ततो महानभूच्छब्दो दिवि सर्वदिवौकसाम्
गन्धर्वाणामृषीनां च ये च शैलनिवासिनः १२
दृष्ट्वा शुकमतिक्रान्तं पर्वतं च द्विधाकृतम्
साधु साध्विति तत्रासीन्नादः सर्वत्र भारत १३
स पूज्यमानो देवैश्च गन्धर्वैर्ऋषिभिस्तथा
यक्षराक्षससंघैश्च विद्याधरगणैस्तथा १४
दिव्यैः पुष्पैः समाकीर्णमन्तरिक्षं समन्ततः
आसीत्किल महाराज शुकाभिपतने तदा १५
ततो मन्दाकिनीं रम्यामुपरिष्टादभिव्रजन्
शुको ददर्श धर्मात्मा पुष्पितद्रुमकाननाम् १६
तस्यां क्रीडन्त्यभिरताः स्नान्ति चैवाप्सरोगणाः
शून्याकारं निराकाराः शुकं दृष्ट्वा विवाससः १७
तं प्रक्रमन्तमाज्ञाय पिता स्नेहसमन्वितः
उत्तमां गतिमास्थाय पृष्ठतोऽनुससार ह १८
शुकस्तु मारुतादूर्ध्वं गतिं कृत्वान्तरिक्षगाम्
दर्शयित्वा प्रभावं स्वं सर्वभूतोऽभवत्तदा १९

महायोगगतिं त्वग्र्यां व्यासोत्थाय महातपाः
निमेषान्तरमात्रेण शुकाभिपतनं ययौ २०
स ददर्श द्विधा कृत्वा पर्वताग्रं शुकं गतम्
शशंसुर्ऋषयस्तस्मै कर्म पुत्रस्य तत्तदा २१
ततः शुकेति दीर्घेण शैक्षेणाक्रन्दितस्तदा
स्वयं पित्रा स्वरेणोच्चैस्त्रीँल्लोँकाननुनाद्य वै २२
शुकः सर्वगतो भूत्वा सर्वात्मा सर्वतोमुखः
प्रत्यभाषत धर्मात्मा भोःशब्देनानुनादयन् २३
तत एकाक्षरं नादं भो इत्येव समीरयन्
प्रत्याहरज्जगत्सर्वमुच्चैः स्थावरजङ्गमम् २४
ततः प्रभृति चाद्यापि शब्दानुच्चारितान्पृथक्
गिरिगह्वरपृष्ठेषु व्याजहार शुकं प्रति २५
अन्तर्हितः प्रभावं तु दर्शयित्वा शुकस्तदा
गुणान्संत्यज्य शब्दादीन्पदमध्यगमत्परम् २६
महिमानं तु तं दृष्ट्वा पुत्रस्यामिततेजसः
निषसाद गिरिप्रस्थे पुत्रमेवानुचिन्तयन् २७
ततो मन्दाकिनीतीरे क्रीडन्तोऽप्सरसां गणाः
आसाद्य तमृषिं सर्वाः संभ्रान्ता गतचेतसः २८
जले निलिल्यिरे काश्चित्काश्चिद्गुल्मान्प्रपेदिरे
वसनान्याददुः काश्चिद्दृष्ट्वा तं मुनिसत्तमम् २९
तां मुक्ततां तु विज्ञाय मुनिः पुत्रस्य वै तदा
सक्ततामात्मनश्चैव प्रीतोऽभूद्व्रीडितश्च ह ३०
तं देवगन्धर्ववृतो महर्षिगणपूजितः
पिनाकहस्तो भगवानभ्यागच्छत शंकरः ३१
तमुवाच महादेवः सान्त्वपूर्वमिदं वचः
पुत्रशोकाभिसंतप्तं कृष्णद्वैपायनं तदा ३२
अग्नेर्भूमेरपां वायोरन्तरिक्षस्य चैव ह
वीर्येण सदृशः पुत्रस्त्वया मत्तः पुरा वृतः ३३
स तथालक्षणो जातस्तपसा तव संभृतः
मम चैव प्रभावेन ब्रह्मतेजोमयः शुचिः ३४

स गतिं परमां प्राप्तो दुष्प्रापामजितेन्द्रियैः
दैवतैरपि विप्रर्षे तं त्वं किमनुशोचसि ३५
यावत्स्थास्यन्ति गिरयो यावत्स्थास्यन्ति सागराः
तावत्तवाक्षया कीर्तिः सपुत्रस्य भविष्यति ३६
छायां स्वपुत्रसदृशीं सर्वतोऽनपगां सदा
द्रक्ष्यसे त्वं च लोकेऽस्मिन्मत्प्रसादान्महामुने ३७
सोऽनुनीतो भगवता स्वयं रुद्रेण भारत
छायां पश्यन्समावृत्तः स मुनिः परया मुदा ३८
इति जन्म गतिश्चैव शुकस्य भरतर्षभ
विस्तरेण मयाख्यातं यन्मां त्वं परिपृच्छसि ३९
एतदाचष्ट मे राजन्देवर्षिर्नारदः पुरा
व्यासश्चैव महायोगी संजल्पेषु पदे पदे ४०
इतिहासमिमं पुण्यं मोक्षधर्मार्थसंहितम्
धारयेद्यः शमपरः स गच्छेत्परमां गतिम् ४१
इति श्रीमहाभारते शान्तिपर्वणि विंशत्यधिकत्रिशततमोऽध्यायः ३२०

## एकविंशत्यधिकत्रिशततमोऽध्यायः

युधिष्ठिर उवाच
गृहस्थो ब्रह्मचारी वा वानप्रस्थोऽथ भिक्षुकः
य इच्छेत्सिद्धिमास्थातुं देवतां कां यजेत सः १
कुतो ह्यस्य ध्रुवः स्वर्गः कुतो निःश्रेयसं परम्
विधिना केन जुहुयाद्दैवं पित्र्यं तथैव च २
मुक्तश्च कां गतिं गच्छेन्मोक्षश्चैव किमात्मकः
स्वर्गतश्चैव किं कुर्याद्येन न च्यवते दिवः ३
देवतानां च को देवः पितॄणां च तथा पिता
तस्मात्परतरं यच्च तन्मे ब्रूहि पितामह ४
भीष्म उवाच
गूढं मां प्रश्नवित्प्रश्नं पृच्छसे त्वमिहानघ
न ह्येष तर्कया शक्यो वक्तुं वर्षशतैरपि ५
ऋते देवप्रसादाद्वा राजञ्ज्ञानागमेन वा

गहनं ह्येतदाख्यानं व्याख्यातव्यं तवारिहन् ६
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
नारदस्य च संवादमृषेर्नारायणस्य च ७
नारायणो हि विश्वात्मा चतुर्मूर्तिः सनातनः
धर्मात्मजः संबभूव पितैवं मेऽभ्यभाषत ८
कृते युगे महाराज पुरा स्वायंभुवेऽन्तरे
नरो नारायणश्चैव हरिः कृष्णस्तथैव च ९
तेभ्यो नारायणनरौ तपस्तेपतुरव्ययौ
बदर्याश्रममासाद्य शकटे कनकामये १०
अष्टचक्रं हि तद्यानं भूतयुक्तं मनोरमम्
तत्राद्यौ लोकनाथौ तौ कृशौ धमनिसंततौ ११
तपसा तेजसा चैव दुर्निरीक्ष्यौ सुरैरपि
यस्य प्रसादं कुर्वाते स देवौ द्रष्टुमर्हति १२
नूनं तयोरनुमते हृदि हृच्छयचोदितः
महामेरोर्गिरेः शृङ्गात्प्रच्युतो गन्धमादनम् १३
नारदः सुमहद्भूतं लोकान्सर्वानचीचरत्
तं देशमगमद्राजन्बदर्याश्रममाशुगः १४
तयोराह्निकवेलायां तस्य कौतूहलं त्वभूत्
इदं तदास्पदं कृत्स्नं यस्मिँल्लोकाः प्रतिष्ठिताः १५
सदेवासुरगन्धर्वाः सर्षिकिंनरलेलिहाः
एका मूर्तिरियं पूर्वं जाता भूयश्चतुर्विधा १६
धर्मस्य कुलसंतानो महानेभिर्विवर्धितः
अहो ह्यनुगृहीतोऽद्य धर्म एभिः सुरैरिह
नरनारायणाभ्यां च कृष्णेन हरिणा तथा १७
तत्र कृष्णो हरिश्चैव कस्मिंश्चित्कारणान्तरे
स्थितौ धर्मोत्तरौ ह्येतौ तथा तपसि धिष्ठितौ १८
एतौ हि परमं धाम कानयोराह्निकक्रिया
पितरौ सर्वभूतानां दैवतं च यशस्विनौ
कां देवतां नु यजतः पितॄन्वा कान्महामती १९
इति संचिन्त्य मनसा भक्त्या नारायणस्य ह

सहसा प्रादुरभवत्समीपे देवयोस्तदा २०
कृते दैवे च पित्र्ये च ततस्ताभ्यां निरीक्षितः
पूजितश्चैव विधिना यथाप्रोक्तेन शास्त्रतः २१
तं दृष्ट्वा महदाश्चर्यमपूर्वं विधिविस्तरम्
उपोपविष्टः सुप्रीतो नारदो भगवानृषिः २२
नारायणं संनिरीक्ष्य प्रसन्नेनान्तरात्मना
नमस्कृत्वा महादेवमिदं वचनमब्रवीत् २३
वेदेषु सपुराणेषु साङ्गोपाङ्गेषु गीयसे
त्वमजः शाश्वतो धाता मतोऽमृतमनुत्तमम्
प्रतिष्ठितं भूतभव्यं त्वयि सर्वमिदं जगत् २४
चत्वारो ह्याश्रमा देव सर्वे गार्हस्थ्यमूलकाः
यजन्ते त्वामहरहर्नानामूर्तिसमास्थितम् २५
पिता माता च सर्वस्य जगतः शाश्वतो गुरुः
कं त्वद्य यजसे देवं पितरं कं न विद्महे २६
श्रीभगवानुवाच
अवाच्यमेतद्वक्तव्यमात्मगुह्यं सनातनम्
तव भक्तिमतो ब्रह्मन्वक्ष्यामि तु यथातथम् २७
यत्तत्सूक्ष्ममविज्ञेयमव्यक्तमचलं ध्रुवम्
इन्द्रियैरिन्द्रियार्थैश्च सर्वभूतैश्च वर्जितम् २८
स ह्यन्तरात्मा भूतानां क्षेत्रज्ञश्चेति कथ्यते
त्रिगुणव्यतिरिक्तोऽसौ पुरुषश्चेति कल्पितः
तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम २९
अव्यक्ता व्यक्तभावस्था या सा प्रकृतिरव्यया
तां योनिमावयोर्विद्धि योऽसौ सदसदात्मकः
आवाभ्यां पूज्यतेऽसौ हि दैवे पित्र्ये च कल्पिते ३०
नास्ति तस्मात्परोऽन्यो हि पिता देवोऽथ वा द्विजः
आत्मा हि नौ स विज्ञेयस्ततस्तं पूजयावहे ३१
तेनैषा प्रथिता ब्रह्मन्मर्यादा लोकभाविनी
दैवं पित्र्यं च कर्तव्यमिति तस्यानुशासनम् ३२
ब्रह्मा स्थाणुर्मनुर्दक्षो भृगुर्धर्मस्तपो दमः

मरीचिरङ्गिरात्रिश्च पुलस्त्यः पुलहः क्रतुः ३३
वसिष्ठः परमेष्ठी च विवस्वान्सोम एव च
कर्दमश्चापि यः प्रोक्तः क्रोधो विक्रीत एव च ३४
एकविंशतिरुत्पन्नास्ते प्रजापतयः स्मृताः
तस्य देवस्य मर्यादां पूजयन्ति सनातनीम् ३५
दैवं पित्र्यं च सततं तस्य विज्ञाय तत्त्वतः
आत्मप्राप्तानि च ततो जानन्ति द्विजसत्तमाः ३६
स्वर्गस्था अपि ये केचित्तं नमस्यन्ति देहिनः
ते तत्प्रसादाद्गच्छन्ति तेनादिष्टफलां गतिम् ३७
ये हीनाः सप्तदशभिर्गुणैः कर्मभिरेव च
कलाः पञ्चदश त्यक्त्वा ते मुक्ता इति निश्चयः ३८
मुक्तानां तु गतिर्ब्रह्मन्क्षेत्रज्ञ इति कल्पितः
स हि सर्वगतश्चैव निर्गुणश्चैव कथ्यते ३९
दृश्यते ज्ञानयोगेन आवां च प्रसृतौ ततः
एवं ज्ञात्वा तमात्मानं पूजयावः सनातनम् ४०
तं वेदाश्चाश्रमाश्चैव नानातनुसमास्थिताः
भक्त्या संपूजयन्त्याद्यं गतिं चैषां ददाति सः ४१
ये तु तद्भाविता लोके एकान्तित्वं समास्थिताः
एतदभ्यधिकं तेषां यत्ते तं प्रविशन्त्युत ४२
इति गुह्यसमुद्देशस्तव नारद कीर्तितः
भक्त्या प्रेम्णा च विप्रर्षे अस्मद्भक्त्या च ते श्रुतः ४३
इति श्रीमहाभारते शान्तिपर्वणि एकविंशत्यधिकत्रिशततमोऽध्यायः ३२१

## द्वाविंशत्यधिकत्रिशततमोऽध्यायः

भीष्म उवाच
स एवमुक्तो द्विपदां वरिष्ठो नारायणेनोत्तमपूरुषेण
जगाद वाक्यं द्विपदां वरिष्ठं नारायणं लोकहिताधिवासम् १
यदर्थमात्मप्रभवेह जन्म तवोत्तमं धर्मगृहे चतुर्धा
तत्साध्यतां लोकहितार्थमद्य गच्छामि द्रष्टुं प्रकृतिं तवाद्याम् २
वेदाः स्वधीता मम लोकनाथ तप्तं तपो नानृतमुक्तपूर्वम्

पूजां गुरूणां सततं करोमि परस्य गुह्यं न च भिन्नपूर्वम् ३
गुप्तानि चत्वारि यथागमं मे शत्रौ च मित्रे च समोऽस्मि नित्यम्
तं चादिदेवं सततं प्रपन्न एकान्तभावेन वृणोम्यजस्त्रम्
एभिर्विशेषैः परिशुद्धसत्त्वः कस्मान्न पश्येयमनन्तमीशम् ४
तत्पारमेष्ठ्यस्य वचो निशम्य नारायणः सात्वतधर्मगोप्ता
गच्छेति तं नारदमुक्तवान्स संपूजयित्वात्मविधिक्रियाभिः ५
ततो विसृष्टः परमेष्ठिपुत्रः सोऽभ्यर्चयित्वा तमृषिं पुराणम्
खमुत्पपातोत्तमवेगयुक्तस्ततोऽधिमेरौ सहसा निलिल्ये ६
तत्रावतस्थे च मुनिर्मुहूर्तमेकान्तमासाद्य गिरेः स शृङ्गे
आलोकयन्नुत्तरपश्चिमेन ददर्श चात्यद्भुतरूपयुक्तम् ७
क्षीरोदधेरुत्तरतो हि द्वीपः श्वेतः स नाम्ना प्रथितो विशालः
मेरोः सहस्त्रैः स हि योजनानां द्वात्रिंशतोर्ध्वं कविभिर्निरुक्तः ८
अतीन्द्रियाश्चानशनाश्च तत्र निष्पन्दहीनाः सुसुगन्धिनश्च
श्वेताः पुमांसो गतसर्वपापाश्चक्षुर्मुषः पापकृतां नराणाम् ९
वज्रास्थिकायाः सममानोन्माना दिव्यान्वयरूपाः शुभसारोपेताः
छत्राकृतिशीर्षा मेघौघनिनादाः सत्पुष्करचतुष्का राजीवशतपादाः १०
षष्ट्या दन्तैर्युक्ताः शुक्लैरष्टाभिर्दंष्ट्राभिर्ये
जिह्वाभिर्ये विष्वग्वक्त्रं लेलिह्यन्ते सूर्यप्रख्यम् ११
भक्त्या देवं विश्वोत्पन्नं यस्मात्सर्वे लोकाः सूताः
वेदा धर्मा मुनयः शान्ता देवाः सर्वे तस्य विसर्गाः १२
युधिष्ठिर उवाच
अतीन्द्रिया निराहारा अनिष्पन्दाः सुगन्धिनः
कथं ते पुरुषा जाताः का तेषां गतिरुत्तमा १३
ये विमुक्ता भवन्तीह नरा भरतसत्तम
तेषां लक्षणमेतद्धि यच्छ्वेतद्वीपवासिनाम् १४
तस्मान्मे संशयं छिन्धि परं कौतूहलं हि मे
त्वं हि सर्वकथारामस्त्वां चैवोपाश्रिता वयम् १५
भीष्म उवाच
विस्तीर्णैषा कथा राजञ्श्रुता मे पितृसंनिधौ
सैषा तव हि वक्तव्या कथासारो हि स स्मृतः १६

राजोपरिचरो नाम बभूवाधिपतिर्भुवः
आखण्डलसखः ख्यातो भक्तो नारायणं हरिम् १७
धार्मिको नित्यभक्तश्च पितॄन्नित्यमतन्द्रितः
साम्राज्यं तेन संप्राप्तं नारायणवरात्पुरा १८
सात्वतं विधिमास्थाय प्राक्सूर्यमुखनिःसृतम्
पूजयामास देवेशं तच्छेषेण पितामहान् १९
पितृशेषेण विप्रांश्च संविभज्याश्रितांश्च सः
शेषान्नभुक्सत्यपरः सर्वभूतेष्वहिंसकः
सर्वभावेन भक्तः स देवदेवं जनार्दनम् २०
तस्य नारायणे भक्तिं वहतोऽमित्रकर्शन
एकशय्यासनं शक्रो दत्तवान्देवराट्स्वयम् २१
आत्मा राज्यं धनं चैव कलत्रं वाहनानि च
एतद्भगवते सर्वमिति तत्प्रेक्षितं सदा २२
काम्यनैमित्तिकाजस्रं यज्ञियाः परमक्रियाः
सर्वाः सात्वतमास्थाय विधिं चक्रे समाहितः २३
पञ्चरात्रविदो मुख्यास्तस्य गेहे महात्मनः
प्रायणं भगवत्प्रोक्तं भुञ्जते चाग्रभोजनम् २४
तस्य प्रशासतो राज्यं धर्मेणामित्रघातिनः
नानृता वाक्समभवन्मनो दुष्टं न चाभवत्
न च कायेन कृतवान्स पापं परमण्वपि २५
ये हि ते मुनयः ख्याताः सप्त चित्रशिखण्डिनः
तैरेकमतिभिर्भूत्वा यत्प्रोक्तं शास्त्रमुत्तमम् २६
मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः
वसिष्ठश्च महातेजा एते चित्रशिखण्डिनः २७
सप्त प्रकृतयो ह्येतास्तथा स्वायंभुवोऽष्टमः
एताभिर्धार्यते लोकस्ताभ्यः शास्त्रं विनिःसृतम् २८
एकाग्रमनसो दान्ता मुनयः संयमे रताः
इदं श्रेय इदं ब्रह्म इदं हितमनुत्तमम्
लोकान्संचिन्त्य मनसा ततः शास्त्रं प्रचक्रिरे २९
तत्र धर्मार्थकामा हि मोक्षः पश्चाच्च कीर्तितः

मर्यादा विविधाश्चैव दिवि भूमौ च संस्थिताः ३०
आराध्य तपसा देवं हरिं नारायणं प्रभुम्
दिव्यं वर्षसहस्रं वै सर्वे ते ऋषिभिः सह ३१
नारायणानुशास्ता हि तदा देवी सरस्वती
विवेश तानृषीन्सर्वाल्लोँकानां हितकाम्यया ३२
ततः प्रवर्तिता सम्यक्तपोविद्भिर्द्विजातिभिः
शब्दे चार्थे च हेतौ च एषा प्रथमसर्गजा ३३
आदावेव हि तच्छास्त्रमोंकारस्वरभूषितम्
ऋषिभिर्भावितं तत्र यत्र कारुणिको ह्यसौ ३४
ततः प्रसन्नो भगवाननिर्दिष्टशरीरगः
ऋषीनुवाच तान्सर्वानदृश्यः पुरुषोत्तमः ३५
कृतं शतसहस्रं हि लोकानामिदमुत्तमम्
लोकतन्त्रस्य कृत्स्नस्य यस्माद्धर्मः प्रवर्तते ३६
प्रवृत्तौ च निवृत्तौ च योनिरेतद्भविष्यति
ऋग्यजुःसामभिर्जुष्टमथर्वाङ्गिरसैस्तथा ३७
तथा प्रमाणं हि मया कृतो ब्रह्मा प्रसादजः
रुद्रश्च क्रोधजो विप्रा यूयं प्रकृतयस्तथा ३८
सूर्याचन्द्रमसौ वायुर्भूमिरापोऽग्निरेव च
सर्वे च नक्षत्रगणा यच्च भूताभिशब्दितम् ३९
अधिकारेषु वर्तन्ते यथास्वं ब्रह्मवादिनः
सर्वे प्रमाणं हि यथा तथैतच्छास्त्रमुत्तमम् ४०
भविष्यति प्रमाणं वै एतन्मदनुशासनम्
अस्मात्प्रवक्ष्यते धर्मान्मनुः स्वायंभुवः स्वयम् ४१
उशना बृहस्पतिश्चैव यदोत्पन्नौ भविष्यतः
तदा प्रवक्ष्यतः शास्त्रं युष्मन्मतिभिरुद्धृतम् ४२
स्वायंभुवेषु धर्मेषु शास्त्रे चोशनसा कृते
बृहस्पतिमते चैव लोकेषु प्रविचारिते ४३
युष्मत्कृतमिदं शास्त्रं प्रजापालो वसुस्ततः
बृहस्पतिसकाशाद्वै प्राप्स्यते द्विजसत्तमाः ४४
स हि मद्भावितो राजा मद्भक्तश्च भविष्यति

तेन शास्त्रेण लोकेषु क्रियाः सर्वाः करिष्यति ४५
एतद्धि सर्वशास्त्राणां शास्त्रमुत्तमसंज्ञितम्
एतदर्थ्यं च धर्म्यं च यशस्यं चैतदुत्तमम् ४६
अस्य प्रवर्तनाच्चैव प्रजावन्तो भविष्यथ
स च राजा श्रिया युक्तो भविष्यति महान्वसुः ४७
संस्थिते तु नृपे तस्मिञ्शास्त्रमेतत्सनातनम्
अन्तर्धास्यति तत्सत्यमेतद्वः कथितं मया ४८
एतावदुक्त्वा वचनमदृश्यः पुरुषोत्तमः
विसृज्य तानृषीन्सर्वान्कामपि प्रस्थितो दिशम् ४९
ततस्ते लोकपितरः सर्वलोकार्थचिन्तकाः
प्रावर्तयन्त तच्छास्त्रं धर्मयोनिं सनातनम् ५०
उत्पन्नेऽङ्गिरसे चैव युगे प्रथमकल्पिते
साङ्गोपनिषदं शास्त्रं स्थापयित्वा बृहस्पतौ ५१
जग्मुर्यथेप्सितं देशं तपसे कृतनिश्चयाः
धारणात्सर्वलोकानां सर्वधर्मप्रवर्तकाः ५२
इति श्रीमहाभारते शान्तिपर्वणि द्वाविंशत्यधिकत्रिशततमोऽध्यायः ३२२

## त्रयोविंशत्यधिकत्रिशततमोऽध्यायः

भीष्म उवाच
ततोऽतीते महाकल्पे उत्पन्नेऽङ्गिरसः सुते
बभूवुर्निर्वृता देवा जाते देवपुरोहिते १
बृहद्ब्रह्म महच्चेति शब्दाः पर्यायवाचकाः
एभिः समन्वितो राजन्गुणैर्विद्वान्बृहस्पतिः २
तस्य शिष्यो बभूवाग्र्यो राजोपरिचरो वसुः
अधीतवांस्तदा शास्त्रं सम्यक्चित्रशिखण्डजम् ३
स राजा भावितः पूर्वं दैवेन विधिना वसुः
पालयामास पृथिवीं दिवमाखण्डलो यथा ४
तस्य यज्ञो महानासीदश्वमेधो महात्मनः
बृहस्पतिरुपाध्यायस्तत्र होता बभूव ह ५
प्रजापतिसुताश्चात्र सदस्यास्त्वभवंस्त्रयः

एकतश्च द्वितश्चैव त्रितश्चैव महर्षयः ६
धनुषाक्षोऽथ रैभ्यश्च अर्वावसुपरावसू
ऋषिर्मेधातिथिश्चैव ताण्ड्यश्चैव महानृषिः ७
ऋषिः शक्तिर्महाभागस्तथा वेदशिराश्च यः
कपिलश्च ऋषिश्रेष्ठः शालिहोत्रपितामहः ८
आद्यः कठस्तैत्तिरिश्च वैशम्पायनपूर्वजः
कण्वोऽथ देवहोत्रश्च एते षोडश कीर्तिताः
संभृताः सर्वसंभारास्तस्मिन्राजन्महाक्रतौ ९
न तत्र पशुघातोऽभूत्स राजैवं स्थितोऽभवत्
अहिंस्रः शुचिरक्षुद्रो निराशीः कर्मसंस्तुतः
आरण्यकपदोद्गीता भागास्तत्रोपकल्पिताः १०
प्रीतस्ततोऽस्य भगवान्देवदेवः पुरातनः
साक्षात्तं दर्शयामास सोऽदृश्योऽन्येन केनचित् ११
स्वयं भागमुपाघ्राय पुरोडाशं गृहीतवान्
अदृश्येन हृतो भागो देवेन हरिमेधसा १२
बृहस्पतिस्ततः क्रुद्धः स्रुवमुद्यम्य वेगितः
आकाशं घ्नन्स्रुवः पातैः रोषादश्रूण्यवर्तयत् १३
उवाच चोपरिचरं मया भागोऽयमुद्यतः
ग्राह्यः स्वयं हि देवेन मत्प्रत्यक्षं न संशयः १४
उद्यता यज्ञभागा हि साक्षात्प्राप्ताः सुरैरिह
किमर्थमिह न प्राप्तो दर्शनं स हरिर्विभुः १५
ततः स तं समुद्धूतं भूमिपालो महान्वसुः
प्रसादयामास मुनिः सदस्यास्ते च सर्वशः १६
ऊचुश्चैनमसंभ्रान्ता न रोषं कर्तुमर्हसि
नैष धर्मः कृतयुगे यस्त्वं रोषमचीकृथाः १७
अरोषणो ह्यसौ देवो यस्य भागोऽयमुद्यतः
न स शक्यस्त्वया द्रष्टुमस्माभिर्वा बृहस्पते
यस्य प्रसादं कुरुते स वै तं द्रष्टुमर्हति १८
एकतद्वितत्रिता ऊचुः
वयं हि ब्रह्मणः पुत्रा मानसाः परिकीर्तिताः

गता निःश्रेयसार्थं हि कदाचिद्दिशमुत्तराम् १९
तप्त्वा वर्षसहस्राणि चरित्वा तप उत्तमम्
एकपादस्थिताः सम्यक्काष्ठभूताः समाहिताः २०
मेरोरुत्तरभागे तु क्षीरोदस्यानुकूलतः
स देशो यत्र नस्तप्तं तपः परमदारुणम्
कथं पश्येमहि वयं देवं नारायणं त्विति २१
ततो व्रतस्यावभृथे वागुवाचाशरीरिणी
सुतप्तं वस्तपो विप्राः प्रसन्नेनान्तरात्मना २२
यूयं जिज्ञासवो भक्ताः कथं द्रक्ष्यथ तं प्रभुम्
क्षीरोदधेरुत्तरतः श्वेतद्वीपो महाप्रभः २३
तत्र नारायणपरा मानवाश्चन्द्रवर्चसः
एकान्तभावोपगतास्ते भक्ताः पुरुषोत्तमम् २४
ते सहस्रार्चिषं देवं प्रविशन्ति सनातनम्
अतीन्द्रिया निराहारा अनिष्पन्दाः सुगन्धिनः २५
एकान्तिनस्ते पुरुषाः श्वेतद्वीपनिवासिनः
गच्छध्वं तत्र मुनयस्तत्रात्मा मे प्रकाशितः २६
अथ श्रुत्वा वयं सर्वे वाचं तामशरीरिणीम्
यथाख्यातेन मार्गेण तं देशं प्रतिपेदिरे २७
प्राप्य श्वेतं महाद्वीपं तच्चित्तास्तद्दिदृक्षवः
ततो नो दृष्टिविषयस्तदा प्रतिहतोऽभवत् २८
न च पश्याम पुरुषं तत्तेजोहृतदर्शनाः
ततो नः प्रादुरभवद्विज्ञानं देवयोगजम् २९
न किलातप्ततपसा शक्यते द्रष्टुमञ्जसा
ततः पुनर्वर्षशतं तप्त्वा तात्कालिकं महत् ३०
व्रतावसाने शुशुभान्नरान्ददृशिरे वयम्
श्वेतांश्चन्द्रप्रतीकाशान्सर्वलक्षणलक्षितान् ३१
नित्याञ्जलिकृतान्ब्रह्म जपतः प्रागुदङ्मुखान्
मानसो नाम स जपो जप्यते तैर्महात्मभिः
तेनैकाग्रमनस्त्वेन प्रीतो भवति वै हरिः ३२
या भवेन्मुनिशार्दूल भाः सूर्यस्य युगक्षये

एकैकस्य प्रभा तादृक्साभवन्मानवस्य ह ३३
तेजोनिवासः स द्वीप इति वै मेनिरे वयम्
न तत्राभ्यधिकः कश्चित्सर्वे ते समतेजसः ३४
अथ सूर्यसहस्रस्य प्रभां युगपदुत्थिताम्
सहसा दृष्टवन्तः स्म पुनरेव बृहस्पते ३५
सहिताश्चाभ्यधावन्त ततस्ते मानवा द्रुतम्
कृताञ्जलिपुटाः हृष्टा नम इत्येव वादिनः ३६
ततोऽभिवदतां तेषामश्रौष्म विपुलं ध्वनिम्
बलि किलोपह्रियते तस्य देवस्य तैर्नरैः ३७
वयं तु तेजसा तस्य सहसा हृतचेतसः
न किंचिदपि पश्यामो हतदृष्टिबलेन्द्रियाः ३८
एकस्तु शब्दोऽविरतः श्रुतोऽस्माभिरुदीरितः
जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन ३९
नमस्तेऽस्तु हृषीकेश महापुरुषपूर्वज
इति शब्दः श्रुतोऽस्माभिः शिक्षाक्षरसमीरितः ४०
एतस्मिन्नन्तरे वायुः सर्वगन्धवहः शुचिः
दिव्यान्युवाह पुष्पाणि कर्मण्याश्चौषधीस्तथा ४१
तैरिष्टः पञ्चकालज्ञैर्हरिरेकान्तिभिर्नरैः
नूनं तत्रागतो देवो यथा तैर्वागुदीरिता
वयं त्वेनं न पश्यामो मोहितास्तस्य मायया ४२
मारुते संनिवृत्ते च बलौ च प्रतिपादिते
चिन्ताव्याकुलितात्मानो जाताः स्मोऽङ्गिरसां वर ४३
मानवानां सहस्रेषु तेषु वै शुद्धयोनिषु
अस्मान्न कश्चिन्मनसा चक्षुषा वाप्यपूजयत् ४४
तेऽपि स्वस्था मुनिगणा एकभावमनुव्रताः
नास्मासु दधिरे भावं ब्रह्मभावमनुष्ठिताः ४५
ततोऽस्मान्सुपरिश्रान्तांस्तपसा चापि कर्शितान्
उवाच खस्थं किमपि भूतं तत्राशरीरकम् ४६
दृष्टा वः पुरुषाः श्वेताः सर्वेन्द्रियविवर्जिताः
दृष्टो भवति देवेश एभिर्दृष्टैर्द्विजोत्तमाः ४७

गच्छध्वं मुनयः सर्वे यथागतमितोऽचिरात्
न स शक्यो अभक्तेन द्रष्टुं देवः कथंचन ४८
कामं कालेन महता एकान्तित्वं समागतैः
शक्यो द्रष्टुं स भगवान्प्रभामण्डलदुर्दृशः ४९
महत्कार्यं तु कर्तव्यं युष्माभिर्द्विजसत्तमाः
इतः कृतयुगेऽतीते विपर्यासं गतेऽपि च ५०
वैवस्वतेऽन्तरे विप्राः प्राप्ते त्रेतायुगे ततः
सुराणां कार्यसिद्ध्यर्थं सहाया वै भविष्यथ ५१
ततस्तदद्भुतं वाक्यं निशम्यैवं स्म सोमप
तस्य प्रसादात्प्राप्ताः स्मो देशमीप्सितमञ्जसा ५२
एवं सुतपसा चैव हव्यकव्यैस्तथैव च
देवोऽस्माभिर्न दृष्टः स कथं त्वं द्रष्टुमर्हसि
नारायणो महद्भूतं विश्वसृग्घव्यकव्यभुक् ५३
भीष्म उवाच
एवमेकतवाक्येन द्वितत्रितमतेन च
अनुनीतः सदस्यैश्च बृहस्पतिरुदारधीः
समानीय ततो यज्ञं दैवतं समपूजयत् ५४
समाप्तयज्ञो राजापि प्रजाः पालितवान्वसुः
ब्रह्मशापाद्दिवो भ्रष्टः प्रविवेश महीं ततः ५५
अन्तर्भूमिगतश्चैव सततं धर्मवत्सलः
नारायणपरो भूत्वा नारायणपदं जगौ ५६
तस्यैव च प्रसादेन पुनरेवोत्थितस्तु सः
महीतलाद्गतः स्थानं ब्रह्मणः समनन्तरम्
परां गतिमनुप्राप्त इति नैष्ठिकमञ्जसा ५७
इति श्रीमहाभारते शान्तिपर्वणि त्रयोविंशत्यधिकत्रिशततमोऽध्यायः ३२३

## चतुर्विंशत्यधिकत्रिशततमोऽध्यायः

युधिष्ठिर उवाच
यदा भक्तो भगवत आसीद्राजा महावसुः
किमर्थं स परिभ्रष्टो विवेश विवरं भुवः १

भीष्म उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
ऋषीणां चैव संवादं त्रिदशानां च भारत २
अजेन यष्टव्यमिति देवाः प्राहुर्द्विजोत्तमान्
स च छागो ह्यजो ज्ञेयो नान्यः पशुरिति स्थितिः ३
ऋषय ऊचुः
बीजैर्यज्ञेषु यष्टव्यमिति वै वैदिकी श्रुतिः
अजसंज्ञानि बीजानि छागं न घ्नन्तुमर्हथ ४
नैष धर्मः सतां देवा यत्र वध्येत वै पशुः
इदं कृतयुगं श्रेष्ठं कथं वध्येत वै पशुः ५
श्रीभगवानुवाच
तेषां संवदतामेवमृषीणां विबुधैः सह
मार्गागतो नृपश्रेष्ठस्तं देशं प्राप्तवान्वसुः
अन्तरिक्षचरः श्रीमान्समग्रबलवाहनः ६
तं दृष्ट्वा सहसायान्तं वसुं ते त्वन्तरिक्षगम्
ऊचुर्द्विजातयो देवानेष छेत्स्यति संशयम् ७
यज्वा दानपतिः श्रेष्ठः सर्वभूतहितप्रियः
कथं स्विदन्यथा ब्रूयाद्वाक्यमेष महान्वसुः ८
एवं ते संविदं कृत्वा विबुधा ऋषयस्तथा
अपृच्छन्सहसाभ्येत्य वसुं राजानमन्तिकात् ९
भो राजन्केन यष्टव्यमजेनाहो स्विदौषधैः
एतन्नः संशयं छिन्धि प्रमाणं नो भवान्मतः १०
स तान्कृताञ्जलिर्भूत्वा परिपप्रच्छ वै वसुः
कस्य वः को मतः पक्षो ब्रूत सत्यं समागताः ११
ऋषय ऊचुः
धान्यैर्यष्टव्यमित्येष पक्षोऽस्माकं नराधिप
देवानां तु पशुः पक्षो मतो राजन्वदस्व नः १२
भीष्म उवाच
देवानां तु मतं ज्ञात्वा वसुना पक्षसंश्रयात्
छागेनाजेन यष्टव्यमेवमुक्तं वचस्तदा १३

कुपितास्ते ततः सर्वे मुनयः सूर्यवर्चसः
ऊचुर्वसुं विमानस्थं देवपक्षार्थवादिनम् १४
सुरपक्षो गृहीतस्ते यस्मात्तस्माद्दिवः पत
अद्य प्रभृति ते राजन्नाकाशे विहता गतिः
अस्मच्छापाभिघातेन महीं भित्त्वा प्रवेक्ष्यसि १५
ततस्तस्मिन्मुहूर्तेऽथ राजोपरिचरस्तदा
अधो वै संबभूवाशु भूमेर्विवरगो नृपः
स्मृतिस्त्वेनं न प्रजहौ तदा नारायणाज्ञया १६
देवास्तु सहिताः सर्वे वसोः शापविमोक्षणम्
चिन्तयामासुरव्यग्राः सुकृतं हि नृपस्य तत् १७
अनेनास्मत्कृते राज्ञा शापः प्राप्तो महात्मना
अस्य प्रति प्रियं कार्यं सहितैर्नो दिवौकसः १८
इति बुद्ध्या व्यवस्याशु गत्वा निश्चयमीश्वराः
ऊचुस्तं हृष्टमनसो राजोपरिचरं तदा १९
ब्रह्मण्यदेवं त्वं भक्तः सुरासुरगुरुं हरिम्
कामं स तव तुष्टात्मा कुर्याच्छापविमोक्षणम् २०
मानना तु द्विजातीनां कर्तव्या वै महात्मनाम्
अवश्यं तपसा तेषां फलितव्यं नृपोत्तम २१
यतस्त्वं सहसा भ्रष्ट आकाशान्मेदिनीतलम्
एकं त्वनुग्रहं तुभ्यं दद्मो वै नृपसत्तम २२
यावत्त्वं शापदोषेण कालमासिष्यसेऽनघ
भूमेर्विवरगो भूत्वा तावन्तं कालमाप्स्यसि
यज्ञेषु सुहुतां विप्रैर्वसोर्धारां महात्मभिः २३
प्राप्स्यसेऽस्मदनुध्यानान्मा च त्वां ग्लानिरास्पृशेत्
न क्षुत्पिपासे राजेन्द्र भूमेश्छिद्रे भविष्यतः २४
वसोर्धारानुपीतत्वात्तेजसाप्यायितेन च
स देवोऽस्मद्वरात्प्रीतो ब्रह्मलोकं हि नेष्यति २५
एवं दत्त्वा वरं राज्ञे सर्वे तत्र दिवौकसः
गताः स्वभवनं देवा ऋषयश्च तपोधनाः २६
चक्रे च सततं पूजां विष्वक्सेनाय भारत

जप्यं जगौ च सततं नारायणमुखोद्गतम् २७
तत्रापि पञ्चभिर्यज्ञैः पञ्चकालानरिन्दम
अजयद्धरिं सुरपतिं भूमेर्विवरगोऽपि सन् २८
ततोऽस्य तुष्टो भगवान्भक्त्या नारयणो हरिः
अनन्यभक्तस्य सतस्तत्परस्य जितात्मनः २९
वरदो भगवान्विष्णुः समीपस्थं द्विजोत्तमम्
गरुत्मन्तं महावेगमाबभाषे स्मयन्निव ३०
द्विजोत्तम महाभाग गम्यतां वचनान्मम
सम्राड्राजा वसुर्नाम धर्मात्मा मां समाश्रितः ३१
ब्राह्मणानां प्रकोपेन प्रविष्टो वसुधातलम्
मानितास्ते तु विप्रेन्द्रास्त्वं तु गच्छ द्विजोत्तम ३२
भूमेर्विवरसंगुप्तं गरुडेह ममाज्ञया
अधश्चरं नृपश्रेष्ठं खेचरं कुरु माचिरम् ३३
गरुत्मानथ विक्षिप्य पक्षौ मारुतवेगवान्
विवेश विवरं भूमेर्यत्रास्ते वाग्यतो वसुः ३४
तत एनं समुत्क्षिप्य सहसा विनतासुतः
उत्पपात नभस्तूर्णं तत्र चैनममुञ्चत ३५
तस्मिन्मुहूर्ते संजज्ञे राजोपरिचरः पुनः
सशरीरो गतश्चैव ब्रह्मलोकं नृपोत्तमः ३६
एवं तेनापि कौन्तेय वाग्दोषाद्देवताज्ञया
प्राप्ता गतिरयज्वार्हा द्विजशापान्महात्मना ३७
केवलं पुरुषस्तेन सेवितो हरिरीश्वरः
ततः शीघ्रं जहौ शापं ब्रह्मलोकमवाप च ३८
एतत्ते सर्वमाख्यातं ते भूता मानवा यथा
नारदोऽपि यथा श्वेतं द्वीपं स गतवानृषिः
तत्ते सर्वं प्रवक्ष्यामि शृणुष्वैकमना नृप ३९
इति श्रीमहाभारते शान्तिपर्वणि चतुर्विंशत्यधिकत्रिशततमोऽध्यायः ३२४

## पञ्चविंशत्यधिकत्रिशततमोऽध्यायः

भीष्म उवाच

प्राप्य श्वेतं महाद्वीपं नारदो भगवानृषिः
ददर्श तानेव नराञ्श्वेतांश्चन्द्रप्रभाञ्शुभान् १
पूजयामास शिरसा मनसा तैश्च पूजितः
दिदृक्षुर्जप्यपरमः सर्वकृच्छ्रधरः स्थितः २
भूत्वैकाग्रमना विप्र ऊर्ध्वबाहुर्महामुनिः
स्तोत्रं जगौ स विश्वाय निर्गुणाय महात्मने ३
नारद उवाच
नमस्ते देवदेव १ निष्क्रिय २ निर्गुण ३ लोकसाक्षिन् ४ क्षेत्रज्ञ ५ अनन्त ६ पुरुष ७ महापुरुष ८ त्रिगुण ९
प्रधान १० अमृत ११ व्योम १२ सनातन १३ सदसद्व्यक्ताव्यक्त १४
ऋतधामन् १५ पूर्वादिदेव १६
वसुप्रद १७ प्रजापते १८ सुप्रजापते १९ वनस्पते २०
महाप्रजापते २१ ऊर्जस्पते २२ वाचस्पते २३ मनस्पते २४ जगत्पते २५
दिवस्पते २६ मरुत्पते २७ सलिलपते २८ पृथिवीपते २९ दिक्पते ३०
पूर्वनिवास ३१ ब्रह्मपुरोहित ३२ ब्रह्मकायिक ३३ महाकायिक ३४
महाराजिक ३५ चतुर्महाराजिक ३६ आभासुर ३७ महाभासुर ३८
सप्तमहाभासुर ३९ याम्य ४० महायाम्य ४१ संज्ञासंज्ञ ४२ तुषित ४३
महातुषित ४४ प्रतर्दन ४५ परिनिर्मित ४६ वशवर्तिन् ४७ अपरिनिर्मित ४८ यज्ञ ४९ महायज्ञ ५०
यज्ञसंभव ५१ यज्ञयोने ५२ यज्ञगर्भ ५३ यज्ञहृदय ५४ यज्ञस्तुत ५५
यज्ञभागहर ५६ पञ्चयज्ञधर ५७
पञ्चकालकर्तृगते ५८ पञ्चरात्रिक ५९ वैकुण्ठ ६०
अपराजित ६१ मानसिक ६२ परमस्वामिन् ६३ सुस्नात ६४ हंस ६५
परमहंस ६६ परमयाज्ञिक ६७ सांख्ययोग ६८ अमृतेशय ६९ हिरण्येशय ७० वेदेशय ७१ कुशेशय ७२ ब्रह्मेशय ७३ पद्मेशय ७४ विश्वेश्वर ७५
त्वं जगदन्वयः ७६ त्वं जगत्प्रकृतिः ७७ तवाग्निरास्यम् ७८
वडवामुखोऽग्नि ७९ त्वमाहुतिः ८० त्वं सारथिः ८१ त्वं वषट्कारः ८२
त्वमोंकारः ८३ त्वं मनः ८४ त्वं चन्द्रमाः ८५
त्वं चक्षुराद्यम् ८६ त्वं सूर्यः ८७ त्वं दिशां गजः ८८
दिग्भानो ८९ हयशिरः ९० प्रथमत्रिसौपर्ण ९१ पञ्चाग्ने ९२ त्रिणाचिकेत ९३

षडङ्गनिधान ९४  प्राग्ज्योतिष ९५
ज्येष्ठसामग ९६  सामिकव्रतधर ९७  अथर्वशिरः ९८  पञ्चमहाकल्प ९९
फेनपाचार्य १००  वालखिल्य १०१
वैखानस १०२  अभग्नयोग १०३  अभग्नपरिसंख्यान १०४
युगादे १०५  युगमध्य १०६  युगनिधन १०७  आखण्डल १०८  प्राचीनगर्भ १०९  कौशिक ११०  पुरुष्टुत १११  पुरुहूत ११२  विश्वरूप ११३  अनन्तगते ११४  अनन्तभोग ११५  अनन्त ११६  अनादे ११७  अमध्य ११८
अव्यक्तमध्य ११९
अव्यक्तनिधन १२०  व्रतावास १२१  समुद्राधिवास १२२  यशोवास १२३
तपोवास १२४  लक्ष्म्यावास १२५
विद्यावास १२६  कीर्त्यावास १२७  श्रीवास १२८
सर्वावास १२९  वासुदेव १३०  सर्वच्छन्दक १३१  हरिहय १३२  हरिमेध १३३  महायज्ञभागहर १३४  वरप्रद १३५
यम-नियम-महानियम-कृच्छ्रातिकृच्छ्र-महाकृच्छ्र-सर्वकृच्छ्र-नियमधर १३६  निवृत्तधर्मप्रवचनगते १३७  प्रवृत्तवेदक्रिय १३८  अज १३९  सर्वगते १४०  सर्वदर्शिन् १४१  अग्राह्य १४२  अचल १४३  महाविभूते १४४
माहात्म्यशरीर १४५  पवित्र १४६  महापवित्र १४७  हिरण्मय १४८  बृहत् १४९  अप्रतर्क्य १५०
अविज्ञेय १५१  ब्रह्माग्र्य १५२  प्रजासर्गकर १५३
प्रजानिधनकर १५४  महामायाधर १५५  चित्रशिखण्डिन् १५६  वरप्रद १५७  पुरोडाशभागहर १५८  गताध्वन् १५९
छिन्नतृष्ण १६०  छिन्नसंशय १६१  सर्वतोनिवृत्त १६२
ब्राह्मणरूप १६३  ब्राह्मणप्रिय १६४  विश्वमूर्ते १६५  महामूर्ते १६६  बान्धव १६७  भक्तवत्सल १६८  ब्रह्मण्यदेव १६९
भक्तोऽहं त्वां दिदृक्षुः  १७०  एकान्तदर्शनाय नमो नमः १७१४

इति श्रीमहाभारते शान्तिपर्वणि पञ्चविंशत्यधिकत्रिशततमोऽध्यायः ३२५

## षड्विंशत्यधिकत्रिशततमोऽध्यायः

भीष्म उवाच
एवं स्तुतः स भगवान्गुह्यैस्तथ्यैश्च नामभिः

तं मुनिं दर्शयामास नारदं विश्वरूपधृक् १
किंचिच्चन्द्रविशुद्धात्मा किंचिच्चन्द्राद्विशेषवान्
कृशानुवर्णः किंचिच्च किंचिद्धिष्ण्याकृतिः प्रभुः २
शुकपत्रवर्णः किंचिच्च किंचित्स्फटिकसप्रभः
नीलाञ्जनचयप्रख्यो जातरूपप्रभः क्वचित् ३
प्रवालाङ्कुरवर्णश्च श्वेतवर्णः क्वचिद्बभौ
क्वचित्सुवर्णवर्णाभो वैडूर्यसदृशः क्वचित् ४
नीलवैडूर्यसदृश इन्द्रनीलनिभः क्वचित्
मयूरग्रीववर्णाभो मुक्ताहारनिभः क्वचित् ५
एतान्वर्णान्बहुविधान्रूपे बिभ्रत्सनातनः
सहस्रनयनः श्रीमाञ्शतशीर्षः सहस्रपात् ६
सहस्रोदरबाहुश्च अव्यक्त इति च क्वचित्
ॐकारमुद्गिरन्वक्त्रात्सावित्रीं च तदन्वयाम् ७
शेषेभ्यश्चैव वक्त्रेभ्यश्चतुर्वेदोद्गतं वसु
आरण्यकं जगौ देवो हरिर्नारायणो वशी ८
वेदीं कमण्डलुं दर्भान्मणिरूपानथोपलान्
अजिनं दण्डकाष्ठं च ज्वलितं च हुताशनम्
धारयामास देवेशो हस्तैर्यज्ञपतिस्तदा ९
तं प्रसन्नं प्रसन्नात्मा नारदो द्विजसत्तमः
वाग्यतः प्रयतो भूत्वा ववन्दे परमेश्वरम्
तमुवाच नतं मूर्ध्ना देवानामादिरव्ययः १०
एकतश्च द्वितश्चैव त्रितश्चैव महर्षयः
इमं देशमनुप्राप्ता मम दर्शनलालसाः ११
न च मां ते ददृशिरे न च द्रक्ष्यति कश्चन
ऋते ह्यैकान्तिकश्रेष्ठात्त्वं चैवैकान्तिको मतः १२
ममैतास्तनवः श्रेष्ठा जाता धर्मगृहे द्विज
तास्त्वं भजस्व सततं साधयस्व यथागतम् १३
वृणीष्व च वरं विप्र मत्तस्त्वं यमिहेच्छसि
प्रसन्नोऽहं तवाद्येह विश्वमूर्तिरिहाव्ययः १४
नारद उवाच

अद्य मे तपसो देव यमस्य नियमस्य च
सद्यः फलमवाप्तं वै दृष्टो यद्भगवान्मया १५
वर एष ममात्यन्तं दृष्टस्त्वं यत्सनातनः
भगवान्विश्वदृक्सिंहः सर्वमूर्तिर्महाप्रभुः १६
भीष्म उवाच
एवं संदर्शयित्वा तु नारदं परमेष्ठिजम्
उवाच वचनं भूयो गच्छ नारद माचिरम् १७
इमे ह्यनिन्द्रियाहारा मद्भक्ताश्चन्द्रवर्चसः
एकाग्राश्चिन्तयेयुर्मां नैषां विघ्नो भवेदिति १८
सिद्धाश्चैते महाभागाः पुरा ह्येकान्तिनोऽभवन्
तमोरजोविनिर्मुक्ता मां प्रवेक्ष्यन्त्यसंशयम् १९
न दृश्यश्चक्षुषा योऽसौ न स्पृश्यः स्पर्शनेन च
न घ्रेयश्चैव गन्धेन रसेन च विवर्जितः २०
सत्त्वं रजस्तमश्चैव न गुणास्तं भजन्ति वै
यश्च सर्वगतः साक्षी लोकस्यात्मेति कथ्यते २१
भूतग्रामशरीरेषु नश्यत्सु न विनश्यति
अजो नित्यः शाश्वतश्च निर्गुणो निष्कलस्तथा २२
द्विर्द्वादशेभ्यस्तत्त्वेभ्यः ख्यातो यः पञ्चविंशकः
पुरुषो निष्क्रियश्चैव ज्ञानदृश्यश्च कथ्यते २३
यं प्रविश्य भवन्तीह मुक्ता वै द्विजसत्तम
स वासुदेवो विज्ञेयः परमात्मा सनातनः २४
पश्य देवस्य माहात्म्यं महिमानं च नारद
शुभाशुभैः कर्मभिर्यो न लिप्यति कदाचन २५
सत्त्वं रजस्तमश्चैव गुणानेतान्प्रचक्षते
एते सर्वशरीरेषु तिष्ठन्ति विचरन्ति च २६
एतान्गुणांस्तु क्षेत्रज्ञो भुङ्क्ते नैभिः स भुज्यते
निर्गुणो गुणभुक्चैव गुणस्रष्टा गुणाधिकः २७
जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते
ज्योतिष्यापः प्रलीयन्ते ज्योतिर्वायौ प्रलीयते २८
खे वायुः प्रलयं याति मनस्याकाशमेव च

मनो हि परमं भूतं तदव्यक्ते प्रलीयते २९
अव्यक्तं पुरुषे ब्रह्मन्निष्क्रिये संप्रलीयते
नास्ति तस्मात्परतरं पुरुषाद्वै सनातनात् ३०
नित्यं हि नास्ति जगति भूतं स्थावरजङ्गमम्
ऋते तमेकं पुरुषं वासुदेवं सनातनम्
सर्वभूतात्मभूतो हि वासुदेवो महाबलः ३१
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम्
ते समेता महात्मानः शरीरमिति संज्ञितम् ३२
तदाविशति यो ब्रह्मन्नदृश्यो लघुविक्रमः
उत्पन्न एव भवति शरीरं चेष्टयन्प्रभुः ३३
न विना धातुसंघातं शरीरं भवति क्वचित्
न च जीवं विना ब्रह्मन्धातवश्चेष्टयन्त्युत ३४
स जीवः परिसंख्यातः शेषः संकर्षणः प्रभुः
तस्मात्सनत्कुमारत्वं यो लभेत स्वकर्मणा ३५
यस्मिंश्च सर्वभूतानि प्रलयं यान्ति संक्षये
स मनः सर्वभूतानां प्रद्युम्नः परिपठ्यते ३६
तस्मात्प्रसूतो यः कर्ता कार्यं कारणमेव च
यस्मात्सर्वं प्रभवति जगत्स्थावरजङ्गमम्
सोऽनिरुद्धः स ईशानो व्यक्तिः सा सर्वकर्मसु ३७
यो वासुदेवो भगवान्क्षेत्रज्ञो निर्गुणात्मकः
ज्ञेयः स एव भगवाञ्जीवः संकर्षणः प्रभुः ३८
संकर्षणाच्च प्रद्युम्नो मनोभूतः स उच्यते
प्रद्युम्नाद्योऽनिरुद्धस्तु सोऽहकारो महेश्वरः ३९
मत्तः सर्वं संभवति जगत्स्थावरजङ्गमम्
अक्षरं च क्षरं चैव सच्चासच्चैव नारद ४०
मां प्रविश्य भवन्तीह मुक्ता भक्तास्तु ये मम
अहं हि पुरुषो ज्ञेयो निष्क्रियः पञ्चविंशकः ४१
निर्गुणो निष्कलश्चैव निर्द्वंद्वो निष्परिग्रहः
एतत्त्वया न विज्ञेयं रूपवानिति दृश्यते
इच्छन्मुहूर्तान्नश्येयमीशोऽह जगतो गुरुः ४२

माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद
सर्वभूतगुणैर्युक्तं नैवं त्वं ज्ञातुमर्हसि
मयैतत्कथितं सम्यक्तव मूर्तिचतुष्टयम् ४३
सिद्धा ह्येते महाभागा नरा ह्येकान्तिनोऽभवन्
तमोरजोभ्यां निर्मुक्ताः प्रवेक्ष्यन्ति च मां मुने ४४
अहं कर्ता च कार्यं च कारणं चापि नारद
अहं हि जीवसंज्ञो वै मयि जीवः समाहितः
मैवं ते बुद्धिरत्राभूद्दृष्टो जीवो मयेति च ४५
अहं सर्वत्रगो ब्रह्मन्भूतग्रामान्तरात्मकः
भूतग्रामशरीरेषु नश्यत्सु न नशाम्यहम् ४६
हिरण्यगर्भो लोकादिश्चतुर्वक्त्रो निरुक्तगः
ब्रह्मा सनातनो देवो मम बह्वर्थचिन्तकः ४७
पश्यैकादश मे रुद्रान्दक्षिणं पार्श्वमास्थितान्
द्वादशैव तथादित्यान्वामं पार्श्वं समास्थितान् ४८
अग्रतश्चैव मे पश्य वसूनष्टौ सुरोत्तमान्
नासत्यं चैव दस्रं च भिषजौ पश्य पृष्ठतः ४९
सर्वान्प्रजापतीन्पश्य पश्य सप्त ऋषीनपि
वेदान्यज्ञांश्च शतशः पश्यामृतमथौषधीः ५०
तपांसि नियमांश्चैव यमानपि पृथग्विधान्
तथाष्टगुणमैश्वर्यमेकस्थं पश्य मूर्तिमत् ५१
श्रियं लक्ष्मीं च कीर्तिं च पृथिवीं च ककुद्मिनीम्
वेदानां मातरं पश्य मत्स्थां देवीं सरस्वतीम् ५२
ध्रुवं च ज्योतिषां श्रेष्ठं पश्य नारद खेचरम्
अम्भोधरान्समुद्रांश्च सरांसि सरितस्तथा ५३
मूर्तिमन्तः पितृगणांश्चतुरः पश्य सत्तम
त्रींश्चैवेमान्गुणान्पश्य मत्स्थान्मूर्तिविवर्जितान् ५४
देवकार्यादपि मुने पितृकार्यं विशिष्यते
देवानां च पितृणां च पिता ह्येकोऽहमादितः ५५
अहं हयशिरो भूत्वा समुद्रे पश्चिमोत्तरे
पिबामि सुहुतं हव्यं कव्यं च श्रद्धयान्वितम् ५६

मया सृष्टः पुरा ब्रह्मा मद्यज्ञमयजत्स्वयम्
ततस्तस्मै वरान्प्रीतो ददावहमनुत्तमान् ५७
मत्पुत्रत्वं च कल्पादौ लोकाध्यक्षत्वमेव च
अहंकारकृतं चैव नाम पर्यायवाचकम् ५८
त्वया कृतां च मर्यादां नातिक्राम्यति कश्चन
त्वं चैव वरदो ब्रह्मन्वरेप्सूनां भविष्यसि ५९
सुरासुरगणानां च ऋषीणां च तपोधन
पितॄणां च महाभाग सततं संशितव्रत
विविधानां च भूतानां त्वमुपास्यो भविष्यसि ६०
प्रादुर्भावगतश्चाहं सुरकार्येषु नित्यदा
अनुशास्यस्त्वया ब्रह्मन्नियोज्यश्च सुतो यथा ६१
एतांश्चान्यांश्च रुचिरान्ब्रह्मणेऽमिततेजसे
अहं दत्त्वा वरान्प्रीतो निवृत्तिपरमोऽभवम् ६२
निर्वाणं सर्वधर्माणां निवृत्तिः परमा स्मृता
तस्मान्निवृत्तिमापन्नश्चरेत्सर्वाङ्गनिर्वृतः ६३
विद्यासहायवन्तं मामादित्यस्थं सनातनम्
कपिलं प्राहुराचार्याः सांख्यनिश्चितनिश्चयाः ६४
हिरण्यगर्भो भगवानेष छन्दसि सुष्टुतः
सोऽह योगगतिर्ब्रह्मन्योगशास्त्रेषु शब्दितः ६५
एषोऽह व्यक्तिमागम्य तिष्ठामि दिवि शाश्वतः
ततो युगसहस्रान्ते संहरिष्ये जगत्पुनः
कृत्वात्मस्थानि भूतानि स्थावराणि चराणि च ६६
एकाकी विद्यया सार्धं विहरिष्ये द्विजोत्तम
ततो भूयो जगत्सर्वं करिष्यामीह विद्यया ६७
अस्मन्मूर्तिश्चतुर्थी या सासृजच्छेषमव्ययम्
स हि संकर्षणः प्रोक्तः प्रद्युम्नं सोऽप्यजीजनत् ६८
प्रद्युम्नादनिरुद्धोऽह सर्गो मम पुनः पुनः
अनिरुद्धात्तथा ब्रह्मा तत्रादिकमलोद्भवः ६९
ब्रह्मणः सर्वभूतानि चराणि स्थावराणि च
एतां सृष्टिं विजानीहि कल्पादिषु पुनः पुनः ७०

यथा सूर्यस्य गगनादुदयास्तमयाविहा
नष्टौ पुनर्बलात्काल स्रानयत्यमितद्युतिः
तथा बलादहं पृथ्वद्यं सर्वभूतहिताय वै ७१
सत्त्वैराक्रान्तसर्वाङ्गां नष्टां सागरमेखलाम्
स्रानयिष्यामि स्वं स्थानं वाराहं रूपमास्थितः ७२
हिरण्याद्यं हनिष्यामि दैतेयं बलगर्वितम्
नारसिंहं वपुः कृत्वा हिरण्यकशिपुं पुनः
सुरकार्ये हनिष्यामि यज्ञघ्नं दितिनन्दनम् ७३
विरोचनस्य बलवान्बलि पुत्रो महासुरः
भविष्यति स शक्रं च स्वराज्याच्च्यावयिष्यति ७४
त्रैलोक्येऽपहृते तेन विमुखे च शचीपतौ
स्रदित्यां द्वादशः पुत्रः संभविष्यामि कश्यपात् ७५
ततो राज्यं प्रदास्यामि शक्रायामिततेजसे
देवताः स्थापयिष्यामि स्वेषु स्थानेषु नारद
बलि चैव करिष्यामि पातालतलवासिनम् ७६
त्रेतायुगे भविष्यामि रामो भृगुकुलोद्वहः
द्यत्रं चोत्सादयिष्यामि समृद्धबलवाहनम् ७७
संधौ तु समनुप्राप्ते त्रेतायां द्वापरस्य च
रामो दाशरथिर्भूत्वा भविष्यामि जगत्पतिः ७८
त्रितोपघाताद्वैरूप्यमेकतोऽथ द्वितस्तथा
प्राप्स्यतो वानरत्वं हि प्रजापतिसुतावृषी ७९
तयोर्ये त्वन्वये जाता भविष्यन्ति वनौकसः
ते सहाया भविष्यन्ति सुरकार्ये मम द्विज ८०
ततो रद्यःपतिं घोरं पुलस्त्यकुलपांसनम्
हनिष्ये रावणं संख्ये सगणं लोककण्टकम् ८१
द्वापरस्य कलेश्चैव संधौ पर्यवसानिके
प्रादुर्भावः कंसहेतोर्मथुरायां भविष्यति ८२
तत्राहं दानवान्हत्वा सुबहून्देवकण्टकान्
कुशस्थलद्यं करिष्यामि निवासं द्वारकां पुरीम् ८३
वसानस्तत्र वै पुर्यामदितेर्विप्रियंकरम्

हनिष्ये नरकं भौमं मुरं पीठं च दानवम् ८४
प्राग्ज्योतिषपुरं रम्यं नानाधनसमन्वितम्
कुशस्थलद्यं नयिष्यामि हत्वा वै दानवोत्तमान् ८५
शंकरं च महासेनं बाणप्रियहितैषिणम्
पराजेष्याम्यथोद्युक्तौ देवलोकनमस्कृतौ ८६
ततः सुतं बलेर्जित्वा बाणं बाहुसहस्रिणम्
विनाशयिष्यामि ततः सर्वान्सौभनिवासिनः ८७
यः कालयवनः ख्यातो गर्गतेजोभिसंवृतः
भविष्यति वधस्तस्य मत्त एव द्विजोत्तम ८८
जरासंधश्च बलवान्सर्वराजविरोधकः
भविष्यत्यसुरः स्फीतो भूमिपालो गिरिव्रजे
मम बुद्धिपरिस्पन्दाद्वधस्तस्य भविष्यति ८९
समागतेषु बलिषु पृथिव्यां सर्वराजसु
वासविः सुसहायो वै मम ह्येको भविष्यति ९०
एवं लोका वदिष्यन्ति नरनारायणावृषी
उद्युक्तौ दहतः क्षत्रं लोककार्यार्थमीश्वरौ ९१
कृत्वा भारावतरणं वसुधाया यथेप्सितम्
सर्वसात्वतमुख्यानां द्वारकायाश्च सत्तम
करिष्ये प्रलयं घोरमात्मज्ञातिविनाशनम् ९२
कर्माण्यपरिमेयानि चतुर्मूर्तिधरो ह्यहम्
कृत्वा लोकान्गमिष्यामि स्वानहं ब्रह्मसत्कृतान् ९३
हंसो हयशिराश्चैव प्रादुर्भावा द्विजोत्तम
यदा वेदश्रुतिर्नष्टा मया प्रत्याहृता तदा
सवेदाः सश्रुतीकाश्च कृताः पूर्वं कृते युगे ९४
अतिक्रान्ताः पुराणेषु श्रुतास्ते यदि वा क्वचित्
अतिक्रान्ताश्च बहवः प्रादुर्भावा ममोत्तमाः
लोककार्याणि कृत्वा च पुनः स्वां प्रकृतिं गताः ९५
न ह्येतद्ब्रह्मणा प्राप्तमीदृशं मम दर्शनम्
यत्त्वया प्राप्तमद्येह एकान्तगतबुद्धिना ९६
एतत्ते सर्वमाख्यातं ब्रह्मन्भक्तिमतो मया

पुराणं च भविष्यं च सरहस्यं च सत्तम ९७
एवं च भगवान्देवो विश्वमूर्तिधरोऽव्ययः
एतावदुक्त्वा वचनं तत्रैवान्तरधीयत ९८
नारदोऽपि महातेजाः प्राप्यानुग्रहमीप्सितम्
नरनारायणौ द्रष्टुं प्राद्रवद्बदराश्रमम् ९९
इदं महोपनिषदं चतुर्वेदसमन्वितम्
सांख्ययोगकृतं तेन पञ्चरात्रानुशब्दितम् १००
नारायणमुखोद्गीतं नारदोऽश्रावयत्पुनः
ब्रह्मणः सदने तात यथा दृष्टं यथा श्रुतम् १०१
युधिष्ठिर उवाच
एतदाश्चर्यभूतं हि माहात्म्यं तस्य धीमतः
किं ब्रह्मा न विजानीते यतः शुश्राव नारदात् १०२
पितामहो हि भगवांस्तस्माद्देवादनन्तरः
कथं स न विजानीयात्प्रभावममितौजसः १०३
भीष्म उवाच
महाकल्पसहस्राणि महाकल्पशतानि च
समतीतानि राजेन्द्र सर्गाश्च प्रलयाश्च ह १०४
सर्गस्यादौ स्मृतो ब्रह्मा प्रजासर्गकरः प्रभुः
जानाति देवप्रवरं भूयश्चातोऽधिकं नृप
परमात्मानमीशानमात्मनः प्रभवं तथा १०५
ये त्वन्ये ब्रह्मसदने सिद्धसंघाः समागताः
तेभ्यस्तच्छ्रावयामास पुराणं वेदसंमितम् १०६
तेषां सकाशात्सूर्यश्च श्रुत्वा वै भावितात्मनाम्
आत्मानुगामिनां ब्रह्म श्रावयामास भारत १०७
षट्षष्टिर्हि सहस्राणि ऋषीणां भावितात्मनाम्
सूर्यस्य तपतो लोकान्निर्मिता ये पुरःसराः
तेषामकथयत्सूर्यः सर्वेषां भावितात्मनाम् १०८
सूर्यानुगामिभिस्तात ऋषिभिस्तैर्महात्मभिः
मेरौ समागता देवाः श्राविताश्चेदमुत्तमम् १०९
देवानां तु सकाशाद्वै ततः श्रुत्वासितो द्विजः

श्रावयामास राजेन्द्र पितॄणां मुनिसत्तमः ११०
मम चापि पिता तात कथयामास शंतनुः
ततो मयैतच्छ्रुत्वा च कीर्तितं तव भारत १११
सुरैर्वा मुनिभिर्वापि पुराणं यैरिदं श्रुतम्
सर्वे ते परमात्मानं पूजयन्ति पुनः पुनः ११२
इदमाख्यानमार्षेयं पारंपर्यागतं नृप
नावासुदेवभक्ताय त्वया देयं कथंचन ११३
मत्तोऽन्यानि च ते राजन्नुपाख्यानशतानि वै
यानि श्रुतानि धर्म्याणि तेषां सारोऽयमुद्धृतः ११४
सुरासुरैर्यथा राजन्निर्मथ्यामृतमुद्धृतम्
एवमेतत्पुरा विप्रैः कथामृतमिहोद्धृतम् ११५
यश्चेदं पठते नित्यं यश्चेदं शृणुयान्नरः
एकान्तभावोपगत एकान्ते सुसमाहितः ११६
प्राप्य श्वेतं महाद्वीपं भूत्वा चन्द्रप्रभो नरः
स सहस्रार्चिषं देवं प्रविशेन्नात्र संशयः ११७
मुच्येदार्तस्तथा रोगाच्छ्रुत्वेमामादितः कथाम्
जिज्ञासुर्लभते कामान्भक्तो भक्तगतिं व्रजेत् ११८
त्वयापि सततं राजन्नभ्यर्च्यः पुरुषोत्तमः
स हि माता पिता चैव कृत्स्नस्य जगतो गुरुः ११९
ब्रह्मण्यदेवो भगवान्प्रीयतां ते सनातनः
युधिष्ठिर महाबाहो महाबाहुर्जनार्दनः १२०
वैशम्पायन उवाच
श्रुत्वैतदाख्यानवरं धर्मराड्जनमेजय
भ्रातरश्चास्य ते सर्वे नारायणपराभवन् १२१
जितं भगवता तेन पुरुषेणेति भारत
नित्यं जप्यपरा भूत्वा सरस्वतीमुदीरयन् १२२
यो ह्यस्माकं गुरुः श्रेष्ठः कृष्णद्वैपायनो मुनिः
स जगौ परमं जप्यं नारायणमुदीरयन् १२३
गत्वान्तरिक्षात्सततं क्षीरोदममृताशयम्
पूजयित्वा च देवेशं पुनरायात्स्वमाश्रमम् १२४

इति श्रीमहाभारते शान्तिपर्वणि षडिंवशत्यधिकत्रिशततमोऽध्यायः ३२६

## सप्तविंशत्यधिकत्रिशततमोऽध्यायः

जनमेजय उवाच
कथं स भगवान्देवो यज्ञेष्वग्रहरः प्रभुः
यज्ञधारी च सततं वेदवेदाङ्गवित्तथा १
निवृत्तं चास्थितो धर्मं क्षेमी भागवतप्रियः
प्रवृत्तिधर्मान्विदधे स एव भगवान्प्रभुः २
कथं प्रवृत्तिधर्मेषु भागार्हा देवताः कृताः
कथं निवृत्तिधर्माश्च कृता व्यावृत्तबुद्धयः ३
एतं नः संशयं विप्र छिन्धि गुह्यं सनातनम्
त्वया नारायणकथा श्रुता वै धर्मसंहिता ४
इमे सब्रह्मका लोकाः ससुरासुरमानवाः
क्रियास्वभ्युदयोक्तासु सक्ता दृश्यन्ति सर्वशः
मोक्षश्चोक्तस्त्वया ब्रह्मन्निर्वाणं परमं सुखम् ५
ये च मुक्ता भवन्तीह पुण्यपापविवर्जिताः
ते सहस्रार्चिषं देवं प्रविशन्तीति शुश्रुमः ६
अहो हि दुरनुष्ठेयो मोक्षधर्मः सनातनः
यं हित्वा देवताः सर्वा हव्यकव्यभुजोऽभवन् ७
किं नु ब्रह्मा च रुद्रश्च शक्रश्च बलभित्प्रभुः
सूर्यस्ताराधिपो वायुरग्निर्वरुण एव च
आकाशं जगती चैव ये च शेषा दिवौकसः ८
प्रलयं न विजानन्ति आत्मनः परिनिर्मितम्
ततस्तेनास्थिता मार्गं ध्रुवमक्षयमव्ययम् ९
स्मृत्वा कालपरीमाणं प्रवृत्तिं ये समास्थिताः
दोषः कालपरीमाणे महानेष क्रियावताम् १०
एतन्मे संशयं विप्र हृदि शल्यमिवार्पितम्
छिन्धीतिहासकथनात्परं कौतूहलं हि मे ११
कथं भागहराः प्रोक्ता देवताः क्रतुषु द्विज
किमर्थं चाध्वरे ब्रह्मन्निज्यन्ते त्रिदिवौकसः १२

ये च भागं प्रगृह्णन्ति यज्ञेषु द्विजसत्तम
ते यजन्तो महायज्ञैः कस्य भागं ददन्ति वै १३
वैशम्पायन उवाच
अहो गूढतमः प्रश्नस्त्वया पृष्टो जनेश्वर
नातप्ततपसा ह्येष नावेदविदुषा तथा
नापुराणविदा चापि शक्यो व्याहर्तुमञ्जसा १४
हन्त ते कथयिष्यामि यन्मे पृष्टः पुरा गुरु
कृष्णद्वैपायनो व्यासो वेदव्यासो महानृषिः १५
सुमन्तुर्जैमिनिश्चैव पैलश्च सुदृढव्रतः
अहं चतुर्थः शिष्यो वै पञ्चमश्च शुकः स्मृतः १६
एतान्समागतान्सर्वान्पञ्च शिष्यान्दमान्वितान्
शौचाचारसमायुक्ताञ्जितक्रोधाञ्जितेन्द्रियान् १७
वेदानध्यापयामास महाभारतपञ्चमान्
मेरौ गिरिवरे रम्ये सिद्धचारणसेविते १८
तेषामभ्यस्यतां वेदान्कदाचित्संशयोऽभवत्
एष वै यस्त्वया पृष्टस्तेन तेषां प्रकीर्तितः
ततः श्रुतो मया चापि तवाख्येयोऽद्य भारत १९
शिष्याणां वचनं श्रुत्वा सर्वाज्ञानतमोनुदः
पराशरसुतः श्रीमान्व्यासो वाक्यमुवाच ह २०
मया हि सुमहत्तप्तं तपः परमदारुणम्
भूतं भव्यं भविष्यच्च जानीयामिति सत्तमाः २१
तस्य मे तप्ततपसो निगृहीतेन्द्रियस्य च
नारायणप्रसादेन क्षीरोदस्यानुकूलतः २२
त्रैकालिकमिदं ज्ञानं प्रादुर्भूतं यथेप्सितम्
तच्छृणुध्वं यथाज्ञानं वक्ष्ये संशयमुत्तमम्
यथा वृत्तं हि कल्पादौ दृष्टं मे ज्ञानचक्षुषा २३
परमात्मेति यं प्राहुः सांख्ययोगविदो जनाः
महापुरुषसंज्ञां स लभते स्वेन कर्मणा २४
तस्मात्प्रसूतमव्यक्तं प्रधानं तद्विदुर्बुधाः
अव्यक्ताद्व्यक्तमुत्पन्नं लोकसृष्ट्यर्थमीश्वरात् २५

अनिरुद्धो हि लोकेषु महानात्मेति कथ्यते
योऽसौ व्यक्तत्वमापन्नो निर्ममे च पितामहम्
सोऽहकार इति प्रोक्तः सर्वतेजोमयो हि सः २६
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम्
अहंकारप्रसूतानि महाभूतानि भारत २७
महाभूतानि सृष्ट्वाथ तद्गुणान्निर्ममे पुनः
भूतेभ्यश्चैव निष्पन्ना मूर्तिमन्तोऽष्ट ताञ्शृणु २८
मरीचिरङ्गिराश्चात्रिः पुलस्त्यः पुलहः क्रतुः
वसिष्ठश्च महात्मा वै मनुः स्वायंभुवस्तथा
ज्ञेयाः प्रकृतयोऽष्टौ ता यासु लोकाः प्रतिष्ठिताः २९
वेदान्वेदाङ्गसंयुक्तान्यज्ञान्यज्ञाङ्गसंयुतान्
निर्ममे लोकसिद्ध्यर्थं ब्रह्मा लोकपितामहः
अष्टाभ्यः प्रकृतिभ्यश्च जातं विश्वमिदं जगत् ३०
रुद्रो रोषात्मको जातो दशान्यान्सोऽसृजत्स्वयम्
एकादशैते रुद्रास्तु विकाराः पुरुषाः स्मृताः ३१
ते रुद्राः प्रकृतिश्चैव सर्वे चैव सुरर्षयः
उत्पन्ना लोकसिद्ध्यर्थं ब्रह्माणं समुपस्थिताः ३२
वयं हि सृष्टा भगवंस्त्वया वै प्रभविष्णुना
येन यस्मिन्नधीकारे वर्तितव्यं पितामह ३३
योऽसौ त्वया विनिर्दिष्टो अधिकारोऽथचिन्तकः
परिपाल्यः कथं तेन सोऽधिकारोऽधिकारिणा ३४
प्रदिशस्व बलं तस्य योऽधिकारार्थचिन्तकः
एवमुक्तो महादेवो देवांस्तानिदमब्रवीत् ३५
साध्वहं ज्ञापितो देवा युष्माभिर्भद्रमस्तु वः
ममाप्येषा समुत्पन्ना चिन्ता या भवतां मता ३६
लोकतन्त्रस्य कृत्स्नस्य कथं कार्यः परिग्रहः
कथं बलक्षयो न स्याद्युष्माकं ह्यात्मनश्च मे ३७
इतः सर्वेऽपि गच्छामः शरणं लोकसाक्षिणम्
महापुरुषमव्यक्तं स नो वक्ष्यति यद्धितम् ३८
ततस्ते ब्रह्मणा सार्धमृषयो विबुधास्तथा

क्षीरोदस्योत्तरं कूलं जग्मुर्लोकहितार्थिनः ३९
ते तपः समुपातिष्ठन्ब्रह्मोक्तं वेदकल्पितम्
स महानियमो नाम तपश्चर्या सुदारुणा ४०
ऊर्ध्वं दृष्टिर्बाहवश्च एकाग्रं च मनोऽभवत्
एकपादस्थिताः सम्यक्काष्ठभूताः समाहिताः ४१
दिव्यं वर्षसहस्रं ते तपस्तप्त्वा तदुत्तमम्
शुश्रुवुर्मधुरां वाणीं वेदवेदाङ्गभूषिताम् ४२
भो भोः सब्रह्मका देवा ऋषयश्च तपोधनाः
स्वागतेनार्च्य वः सर्वाञ्श्रावये वाक्यमुत्तमम् ४३
विज्ञातं वो मया कार्यं तच्च लोकहितं महत्
प्रवृत्तियुक्तं कर्तव्यं युष्मत्प्राणोपबृंहणम् ४४
सुतप्तं वस्तपो देवा ममाराधनकाम्यया
भोक्ष्यथास्य महासत्त्वास्तपसः फलमुत्तमम् ४५
एष ब्रह्मा लोकगुरुः सर्वलोकपितामहः
यूयं च विबुधश्रेष्ठा मां यजध्वं समाहिताः ४६
सर्वे भागान्कल्पयध्वं यज्ञेषु मम नित्यशः
तथा श्रेयो विधास्यामि यथाधीकारमीश्वराः ४७
श्रुत्वैतद्देवदेवस्य वाक्यं हृष्टतनूरुहाः
ततस्ते विबुधाः सर्वे ब्रह्मा ते च महर्षयः ४८
वेददृष्टेन विधिना वैष्णवं क्रतुमाहरन्
तस्मिन्सत्रे तदा ब्रह्मा स्वयं भागमकल्पयत्
देवा देवर्षयश्चैव सर्वे भागानकल्पयन् ४९
ते कार्तयुगधर्माणो भागाः परमसत्कृताः
प्रापुरादित्यवर्णं तं पुरुषं तमसः परम्
बृहन्तं सर्वगं देवमीशानं वरदं प्रभुम् ५०
ततोऽथ वरदो देवस्तान्सर्वानमरान्स्थितान्
अशरीरो बभाषेदं वाक्यं खस्थो महेश्वरः ५१
येन यः कल्पितो भागः स तथा समुपागतः
प्रीतोऽह प्रदिशाम्यद्य फलमावृत्तिलक्षणम् ५२
एतद्वो लक्षणं देवा मत्प्रसादसमुद्भवम्

यूयं यज्ञैरिज्यमानाः समाप्तवरदक्षिणैः
युगे युगे भविष्यध्वं प्रवृत्तिफलभोगिनः ५३
यज्ञैर्ये चापि यक्ष्यन्ति सर्वलोकेषु वै सुराः
कल्पयिष्यन्ति वो भागांस्ते नरा वेदकल्पितान् ५४
यो मे यथा कल्पितवान्भागमस्मिन्महाक्रतौ
स तथा यज्ञभागार्हो वेदसूत्रे मया कृतः ५५
यूयं लोकान्धारयध्वं यज्ञभागफलोदिताः
सर्वार्थचिन्तका लोके यथाधीकारनिर्मिताः ५६
याः क्रियाः प्रचरिष्यन्ति प्रवृत्तिफलसत्कृताः
ताभिराप्यायितबला लोकान्वै धारयिष्यथ ५७
यूयं हि भाविता लोके सर्वयज्ञेषु मानवैः
मां ततो भावयिष्यध्वमेषा वो भावना मम ५८
इत्यर्थं निर्मिता वेदा यज्ञाश्चौषधिभिः सह
एभिः सम्यक्प्रयुक्तैर्हि प्रीयन्ते देवताः क्षितौ ५९
निर्माणमेतद्युष्माकं प्रवृत्तिगुणकल्पितम्
मया कृतं सुरश्रेष्ठा यावत्कल्पक्षयादिति
चिन्तयध्वं लोकहितं यथाधीकारमीश्वराः ६०
मरीचिरङ्गिराश्चात्रिः पुलस्त्यः पुलहः क्रतुः
वसिष्ठ इति सप्तैते मानसा निर्मिता हि वै ६१
एते वेदविदो मुख्या वेदाचार्याश्च कल्पिताः
प्रवृत्तिधर्मिणश्चैव प्राजापत्येन कल्पिताः ६२
अयं क्रियावतां पन्था व्यक्तीभूतः सनातनः
अनिरुद्ध इति प्रोक्तो लोकसर्गकरः प्रभुः ६३
सनः सनत्सुजातश्च सनकः ससनन्दनः
सनत्कुमारः कपिलः सप्तमश्च सनातनः ६४
सप्तैते मानसाः प्रोक्ता ऋषयो ब्रह्मणः सुताः
स्वयमागतविज्ञाना निवृत्तिं धर्ममास्थिताः ६५
एते योगविदो मुख्याः सांख्यधर्मविदस्तथा
आचार्या मोक्षशास्त्रे च मोक्षधर्मप्रवर्तकाः ६६
यतोऽहं प्रसृतः पूर्वमव्यक्तात्त्रिगुणो महान्

तस्मात्परतरो योऽसौ क्षेत्रज्ञ इति कल्पितः
सोऽह क्रियावतां पन्थाः पुनरावृत्तिदुर्लभः ६७
यो यथा निर्मितो जन्तुर्यस्मिन्यस्मिंश्च कर्मणि
प्रवृत्तौ वा निवृत्तौ वा तत्फलं सोऽश्नुतेऽवशः ६८
एष लोकगुरुर्ब्रह्मा जगदादिकरः प्रभुः
एष माता पिता चैव युष्माकं च पितामहः
मयानुशिष्टो भविता सर्वभूतवरप्रदः ६९
अस्य चैवानुजो रुद्रो ललाटाद्यः समुत्थितः
ब्रह्मानुशिष्टो भविता सर्वत्रसवरप्रदः ७०
गच्छध्वं स्वानधीकारांश्चिन्तयध्वं यथाविधि
प्रवर्तन्तां क्रियाः सर्वाः सर्वलोकेषु माचिरम् ७१
प्रदृश्यन्तां च कर्माणि प्राणिनां गतयस्तथा
परिनिर्मितकालानि आयूंषि च सुरोत्तमाः ७२
इदं कृतयुगं नाम कालः श्रेष्ठः प्रवर्तते
अहिंस्या यज्ञपशवो युगेऽस्मिन्नैतदन्यथा
चतुष्पात्सकलो धर्मो भविष्यत्यत्र वै सुराः ७३
ततस्त्रेतायुगं नाम त्रयी यत्र भविष्यति
प्रोक्षिता यत्र पशवो वधं प्राप्स्यन्ति वै मखे
तत्र पादचतुर्थो वै धर्मस्य न भविष्यति ७४
ततो वै द्वापरं नाम मिश्रः कालो भविष्यति
द्विपादहीनो धर्मश्च युगे तस्मिन्भविष्यति ७५
ततस्तिष्येऽथ संप्राप्ते युगे कलिपुरस्कृते
एकपादस्थितो धर्मो यत्र तत्र भविष्यति ७६
देवा ऊचुः
एकपादस्थिते धर्मे यत्रक्वचनगामिनि
कथं कर्तव्यमस्माभिर्भगवंस्तद्वदस्व नः ७७
श्री भगवानुवाच
यत्र वेदाश्च यज्ञाश्च तपः सत्यं दमस्तथा
अहिंसाधर्मसंयुक्ताः प्रचरेयुः सुरोत्तमाः
स वै देशः सेवितव्यो मा वोऽधर्मः पदा स्पृशेत् ७८

व्यास उवाच
तेऽनुशिष्टा भगवता देवाः सर्षिगणास्तथा
नमस्कृत्वा भगवते जग्मुर्देशान्यथेप्सितान् ७९
गतेषु त्रिदिवौकःसु ब्रह्मैकः पर्यवस्थितः
दिदृक्षुर्भगवन्तं तमनिरुद्धतनौ स्थितम् ८०
तं देवो दर्शयामास कृत्वा हयशिरो महत्
साङ्गानावर्तयन्वेदान्कमण्डलुगणित्रधृक् ८१
ततोऽश्वशिरसं दृष्ट्वा तं देवममितौजसम्
लोककर्ता प्रभुर्ब्रह्मा लोकानां हितकाम्यया ८२
मूर्ध्ना प्रणम्य वरदं तस्थौ प्राञ्जलिरग्रतः
स परिष्वज्य देवेन वचनं श्रावितस्तदा ८३
लोककार्यगतीः सर्वास्त्वं चिन्तय यथाविधि
धाता त्वं सर्वभूतानां त्वं प्रभुर्जगतो गुरुः
त्वय्यावेशितभारोऽह धृतिं प्राप्स्याम्यथाञ्जसा ८४
यदा च सुरकार्यं ते अविषह्यं भविष्यति
प्रादुर्भावं गमिष्यामि तदात्मज्ञानदेशिकः ८५
एवमुक्त्वा हयशिरास्तत्रैवान्तरधीयत
तेनानुशिष्टो ब्रह्मापि स्वं लोकमचिराद्गतः ८६
एवमेष महाभागः पद्मनाभः सनातनः
यज्ञेष्वग्रहरः प्रोक्तो यज्ञधारी च नित्यदा ८७
निवृत्तिं चास्थितो धर्मं गतिमक्षयधर्मिणाम्
प्रवृत्तिधर्मान्विदधे कृत्वा लोकस्य चित्रताम् ८८
स आदिः स मध्यः स चान्तः प्रजानां स धाता स धेयः स कर्ता स कार्यम्
युगान्ते स सुप्तः सुसंक्षिप्य लोकान्युगादौ प्रबुद्धो जगद्ध्युत्ससर्ज ८९
तस्मै नमध्वं देवाय निर्गुणाय गुणात्मने
अजाय विश्वरूपाय धाम्ने सर्वदिवौकसाम् ९०
महाभूताधिपतये रुद्राणां पतये तथा
आदित्यपतये चैव वसूनां पतये तथा ९१
अश्विभ्यां पतये चैव मरुतां पतये तथा
वेदयज्ञाधिपतये वेदाङ्गपतयेऽपि च ९२

समुद्रवासिने नित्यं हरये मुञ्जकेशिने
शान्तये सर्वभूतानां मोक्षधर्मानुभाषिणे ९३
तपसां तेजसां चैव पतये यशसोऽपि च
वाचश्च पतये नित्यं सरितां पतये तथा ९४
कपर्दिने वराहाय एकशृङ्गाय धीमते
विवस्वतेऽश्वशिरसे चतुर्मूर्तिधृते सदा ९५
गुह्याय ज्ञानदृश्याय अक्षराय क्षराय च
एष देवः संचरति सर्वत्रगतिरव्ययः ९६
एवमेतत्पुरा दृष्टं मया वै ज्ञानचक्षुषा
कथितं तच्च वः सर्वं मया पृष्टेन तत्त्वतः ९७
क्रियतां मद्वचः शिष्याः सेव्यतां हरिरीश्वरः
गीयतां वेदशब्दैश्च पूज्यतां च यथाविधि ९८
वैशम्पायन उवाच
इत्युक्तास्तु वयं तेन वेदव्यासेन धीमता
सर्वे शिष्याः सुतश्चास्य शुकः परमधर्मवित् ९९
स चास्माकमुपाध्यायः सहास्माभिर्विशां पते
चतुर्वेदोद्गताभिश्च ऋग्भिस्तमभितुष्टुवे १००
एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि
एवं मेऽकथयद्राजन्पुरा द्वैपायनो गुरुः १०१
यश्चेदं शृणुयान्नित्यं यश्चेदं परिकीर्तयेत्
नमो भगवते कृत्वा समाहितमना नरः १०२
भवत्यरोगो द्युतिमान्बलरूपसमन्वितः
आतुरो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् १०३
कामकामी लभेत्कामं दीर्घमायुरवाप्नुयात्
ब्राह्मणः सर्ववेदी स्यात्क्षत्रियो विजयी भवेत्
वैश्यो विपुललाभः स्याच्छूद्रः सुखमवाप्नुयात् १०४
अपुत्रो लभते पुत्रं कन्या चैवेप्सितं पतिम्
लग्नगर्भा विमुच्येत गर्भिणी जनयेत्सुतम्
वन्ध्या प्रसवमाप्नोति पुत्रपौत्रसमृद्धिमत् १०५
क्षेमेण गच्छेदध्वानमिदं यः पठते पथि

यो यं कामं कामयते स तमाप्नोति च ध्रुवम् १०६
इदं महर्षेर्वचनं विनिश्चितं महात्मनः पुरुषवरस्य कीर्तिनम्
समागमं चर्षिदिवौकसामिमं निशम्य भक्ताः सुसुखं लभन्ते १०७
इति श्रीमहाभारते शान्तिपर्वणि सप्तविंशत्यधिकत्रिशततमोऽध्यायः ३२७

## अष्टाविंशत्यधिकत्रिशततमोऽध्यायः

जनमेजय उवाच
अस्तौषीद्यैरिमं व्यासः सशिष्यो मधुसूदनम्
नामभिर्विविधैरेषां निरुक्तं भगवन्मम १
वक्तुमर्हसि शुश्रूषोः प्रजापतिपतेर्हरेः
श्रुत्वा भवेयं यत्पूतः शरच्चन्द्र इवामलः २
वैशम्पायन उवाच
शृणु राजन्यथाचष्ट फल्गुनस्य हरिर्विभुः
प्रसन्नात्मात्मनो नाम्नां निरुक्तं गुणकर्मजम् ३
नामभिः कीर्तितैस्तस्य केशवस्य महात्मनः
पृष्टवान्केशवं राजन्फल्गुनः परवीरहा ४
अर्जुन उवाच
भगवन्भूतभव्येश सर्वभूतसृगव्यय
लोकधाम जगन्नाथ लोकानामभयप्रद ५
यानि नामानि ते देव कीर्तितानि महर्षिभिः
वेदेषु सपुराणेषु यानि गुह्यानि कर्मभिः ६
तेषां निरुक्तं त्वत्तोऽह श्रोतुमिच्छामि केशव
न ह्यन्यो वर्तयेन्नाम्नां निरुक्तं त्वामृते प्रभो ७
श्रीभगवानुवाच
ऋग्वेदे सयजुर्वेदे तथैवाथर्वसामसु
पुराणे सोपनिषदे तथैव ज्योतिषेऽजुन ८
सांख्ये च योगशास्त्रे च आयुर्वेदे तथैव च
बहूनि मम नामानि कीर्तितानि महर्षिभिः ९
गौणानि तत्र नामानि कर्मजानि च कानिचित्
निरुक्तं कर्मजानां च शृणुष्व प्रयतोऽनघ

कथ्यमानं मया तात त्वं हि मेऽध स्मृतः पुरा १०
नमोऽतियशसे तस्मै देहिनां परमात्मने
नारायणाय विश्वाय निर्गुणाय गुणात्मने ११
यस्य प्रसादजो ब्रह्मा रुद्रश्च क्रोधसंभवः
योऽसौ योनिर्हि सर्वस्य स्थावरस्य चरस्य च १२
अष्टादशगुणं यत्तत्सत्त्वं सत्त्ववतां वर
प्रकृतिः सा परा मह्यं रोदसी योगधारिणी
ऋता सत्यामराजय्या लोकानामात्मसंहिता १३
तस्मात्सर्वाः प्रवर्तन्ते सर्गप्रलयविक्रियाः
ततो यज्ञश्च यष्टा च पुराणः पुरुषो विराट्
अनिरुद्ध इति प्रोक्तो लोकानां प्रभवाप्ययः १४
ब्राह्मे रात्रिक्षये प्राप्ते तस्य ह्यमिततेजसः
प्रसादात्प्रादुरभवत्पद्मं पद्मनिभेक्षण
तत्र ब्रह्मा समभवत्स तस्यैव प्रसादजः १५
अह्नः क्षये ललाटाच्च सुतो देवस्य वै तथा
क्रोधाविष्टस्य संजज्ञे रुद्रः संहारकारकः १६
एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजौ स्मृतौ
तदादेशितपन्थानौ सृष्टिसंहारकारकौ
निमित्तमात्रं तावत्र सर्वप्राणिवरप्रदौ १७
कपर्दी जटिलो मुण्डः श्मशानगृहसेवकः
उग्रव्रतधरो रुद्रो योगी त्रिपुरदारुणः १८
दक्षक्रतुहरश्चैव भगनेत्रहरस्तथा
नारायणात्मको ज्ञेयः पाण्डवेय युगे युगे १९
तस्मिन्हि पूज्यमाने वै देवदेवे महेश्वरे
संपूजितो भवेत्पार्थ देवो नारायणः प्रभुः २०
अहमात्मा हि लोकानां विश्वानां पाण्डुनन्दन
तस्मादात्मानमेवाग्रे रुद्रं संपूजयाम्यहम् २१
यद्यहं नार्चयेयं वै ईशानं वरदं शिवम्
आत्मानं नार्चयेत्कश्चिदिति मे भावितं मनः
मया प्रमाणं हि कृतं लोकः समनुवर्तते २२

प्रमाणानि हि पूज्यानि ततस्तं पूजयाम्यहम्
यस्तं वेत्ति स मां वेत्ति योऽनु तं स हि मामनु २३
रुद्रो नारायणश्चैव सत्त्वमेकं द्विधाकृतम्
लोके चरति कौन्तेय व्यक्तिस्थं सर्वकर्मसु २४
न हि मे केनचिद्देयो वरः पाण्डवनन्दन
इति संचिन्त्य मनसा पुराणं विश्वमीश्वरम्
पुत्रार्थमाराधितवानात्मानमहमात्मना २५
न हि विष्णुः प्रणमति कस्मैचिद्विबुधाय तु
ऋत आत्मानमेवेति ततो रुद्रं भजाम्यहम् २६
सब्रह्मकाः सरुद्राश्च सेन्द्रा देवाः सहर्षिभिः
अर्चयन्ति सुरश्रेष्ठं देवं नारायणं हरिम् २७
भविष्यतां वर्ततां च भूतानां चैव भारत
सर्वेषामग्रणीर्विष्णुः सेव्यः पूज्यश्च नित्यशः २८
नमस्व हव्यदं विष्णुं तथा शरणदं नम
वरदं नमस्व कौन्तेय हव्यकव्यभुजं नम २९
चतुर्विधा मम जना भक्ता एवं हि ते श्रुतम्
तेषामेकान्तिनः श्रेष्ठास्ते चैवानन्यदेवताः
अहमेव गतिस्तेषां निराशीःकर्मकारिणाम् ३०
ये च शिष्टास्त्रयो भक्ताः फलकामा हि ते मताः
सर्वे च्यवनधर्माणः प्रतिबुद्धस्तु श्रेष्ठभाक् ३१
ब्रह्माणं शितिकण्ठं च याश्चान्या देवताः स्मृताः
प्रबुद्धवर्याः सेवन्ते मामेवैष्यन्ति यत्परम्
भक्तं प्रति विशेषस्ते एष पार्थानुकीर्तितः ३२
त्वं चैवाहं च कौन्तेय नरनारायणौ स्मृतौ
भारावतरणार्थं हि प्रविष्टौ मानुषीं तनुम् ३३
जानाम्यध्यात्मयोगांश्च योऽह यस्माच्च भारत
निवृत्तिलक्षणो धर्मस्तथाभ्युदयिकोऽपि च ३४
नराणामयनं ख्यातमहमेकः सनातनः
आपो नारा इति प्रोक्ता आपो वै नरसूनवः
अयनं मम तत्पूर्वमतो नारायणो ह्यहम् ३५

छादयामि जगद्विश्वं भूत्वा सूर्य इवांशुभिः
सर्वभूताधिवासश्च वासुदेवस्ततो ह्यहम् ३६
गतिश्च सर्वभूतानां प्रजानां चापि भारत
व्याप्ता मे रोदसी पार्थ कान्तिश्चाभ्यधिका मम ३७
अधिभूतानि चान्तेऽह तदिच्छंश्चास्मि भारत
क्रमणाच्चाप्यहं पार्थ विष्णुरित्यभिसंज्ञितः ३८
दमात्सिद्धिं परीप्सन्तो मां जनाः कामयन्ति हि
दिवं चोर्वीं च मध्यं च तस्माद्दामोदरो ह्यहम् ३९
पृश्निरित्युच्यते चान्नं वेदा आपोऽमृतं तथा
ममैतानि सदा गर्भे पृश्निगर्भस्ततो ह्यहम् ४०
ऋषयः प्राहुरेवं मां त्रितकूपाभिपातितम्
पृश्निगर्भ त्रितं पाहीत्येकतद्वितपातितम् ४१
ततः स ब्रह्मणः पुत्र आद्यो ऋषिवरस्त्रितः
उत्ततारोदपानाद्वै पृश्निगर्भानुकीर्तनात् ४२
सूर्यस्य तपतो लोकानग्नेः सोमस्य चाप्युत
अंशवो ये प्रकाशन्ते मम ते केशसंज्ञिताः
सर्वज्ञां केशवं तस्मान्मामाहुर्द्विजसत्तमाः ४३
स्वपत्न्यामाहितो गर्भ उतथ्येन महात्मना
उतथ्येऽन्तर्हिते चैव कदाचिद्देवमायया
बृहस्पतिरथाविन्दत्तां पत्नीं तस्य भारत ४४
ततो वै तमृषिश्रेष्ठं मैथुनोपगतं तथा
उवाच गर्भः कौन्तेय पञ्चभूतसमन्वितः ४५
पूर्वागतोऽह वरद नार्हस्यम्बां प्रबाधितुम्
एतद्बृहस्पतिः श्रुत्वा चुक्रोध च शशाप च ४६
मैथुनोपगतो यस्मात्त्वयाहं विनिवारितः
तस्मादन्धो जास्यसि त्वं मच्छापान्नात्र संशयः ४७
स शापादृषिमुख्यस्य दीर्घं तम उपेयिवान्
स हि दीर्घतमा नाम नाम्ना ह्यासीदृषिः पुरा ४८
वेदानवाप्य चतुरः सांगोपांगान्सनातनान्
प्रयोजयामास तदा नाम गुह्यमिदं मम ४९

आनुपूर्व्येण विधिना केशवेति पुनः पुनः
स चक्षुष्मान्समभवद्गौतमश्चाभवत्पुनः ५०
एवं हि वरदं नाम केशवेति ममार्जुन
देवानामथ सर्वेषामृषीणां च महात्मनाम् ५१
अग्निः सोमेन संयुक्त एकयोनि मुखं कृतम्
अग्नीषोमात्मकं तस्माज्जगत्कृत्स्नं चराचरम् ५२
अपि हि पुराणे भवति १ एकयोन्यात्मकावग्नीषोमौ २ देवाश्चाग्निमुखा इति ३ एकयोनित्वाच्च परस्परं महयन्तो लोकान्धारयन्त इति ४ ५३
इति श्रीमहाभारते शान्तिपर्वणि अष्टाविंशत्यधिकत्रिशततमोऽध्यायः ३२८

## एकोनत्रिंशदधिकत्रिशततमोऽध्यायः

अर्जुन उवाच
अग्नीषोमौ कथं पूर्वमेकयोनी प्रवर्तितौ
एष मे संशयो जातस्तं छिन्धि मधुसूदन १
श्रीभगवानुवाच
हन्त ते वर्तयिष्यामि पुराणं पाण्डुनन्दन
आत्मतेजोद्भवं पार्थ शृणुष्वैकमना मम २
संप्रक्षालनकालेऽतिक्रान्ते चतुर्थे युगसहस्रान्ते १
अव्यक्ते सर्वभूतप्रलये स्थावरजङ्गमे २
ज्योतिर्धरणिवायुरहितेऽन्धे तमसि जलैकार्णवे लोके ३
तम इत्येवाभिभूतेऽसञ्ज्ञकेऽद्वितीये प्रतिष्ठिते ४
नैव रात्र्यां न दिवसे न सति नासति न व्यक्ते नाव्यक्ते व्यवस्थिते ५ एतस्यामवस्थायां नारायणगुणाश्रयादक्षयादजरादनिन्द्रियादग्राह्यादसंभवात्सत्यादहिंस्राल्ललामाद्विविधप्रवृत्तिविशेषात् ६ अक्षयादजरामरादमूर्तितः सर्वव्यापिनः सर्वकर्तुः शाश्वतात्तमसः पुरुषः प्रादुर्भूतो हरिरव्ययः ७ ३
निदर्शनमपि ह्यत्र भवति १ नासीदहो न रात्रिरासीत् २
न सदासीन्नासदासीत् ३ तम एव पुरस्तादभवद्विश्वरूपम् ४ सा विश्वस्य जननीत्येवमस्यार्थोऽनुभाष्यते ५ ४
तस्येदानीं तमःसंभवस्य पुरुषस्य पद्मयोनेर्ब्रह्मणः प्रादुर्भावे स पुरुषः प्रजाः

सिसृक्षमाणो नेत्राभ्यामग्नीषोमौ ससर्ज १
ततो भूतसर्गे प्रवृत्ते प्रजाक्रमवशाद्ब्रह्मक्षत्रमुपातिष्ठत् २
यः सोमस्तद्ब्रह्म यद्ब्रह्म ते ब्राह्मणाः ३  योऽग्निस्तत्क्षत्रं क्षत्राद्ब्रह्म
बलवत्तरम् ४  कस्मादिति लोकप्रत्यक्षगुणमेतत्तद्यथा ५  ब्राह्मणेभ्यः परं भूतं
नोत्पन्नपूर्वम् ६
दीप्यमानेऽग्नौ जुहोतीति कृत्वा ब्रवीमि ७  भूतसर्गः कृतो ब्रह्मणा भूतानि च
प्रतिष्ठाप्य त्रैलोक्यं धार्यत इति ८ ५
मन्त्रवादोऽपि हि भवति १  त्वमग्ने यज्ञानां होता विश्वेषाम् २
हितोदेवेभिर्मानुषे जने इति ३  निदर्शनं चात्र भवति ४  विश्वेषामग्ने यज्ञानां
होतेति ४  हितो दैवैर्मानुषैर्जगत इति ६  अग्निर्हि यज्ञानां होता कर्ता ७  स
चाग्निर्ब्रह्म ८ ६
न ह्यृते मन्त्राद्धवनमस्ति १  न विना पुरुषं तपः संभवति २  हविर्मन्त्राणां
संपूजा विद्यते देवमनुष्याणामनेन त्वं होतेति नियुक्तः ३  ये च मानुषा
होत्राधिकारास्ते च ४
ब्राह्मणस्य हि याजनं विधीयते न क्षत्रवैश्ययोर्द्विजात्योः ५  तस्माद्ब्राह्मणा
ह्यग्निभूता यज्ञानुद्वहन्ति ६
यज्ञा देवांस्तर्पयन्ति देवाः पृथिवीं भावयन्ति ७ ७
शतपथे हि ब्राह्मणं भवति १  अग्नौ समिद्धे स
जुहोति यो विद्वान्ब्राह्मणमुखे दानाहुतिं जुहोति २
एवमप्यग्निभूता ब्राह्मणा विद्वांसोऽग्निं भावयन्ति ३  अग्निर्विष्णुः
सर्वभूतान्यनुप्रविश्य प्राणान्धारयति ४
अपि चात्र सनत्कुमारगीताः श्लोका भवन्ति ५ ८
विश्वं ब्रह्मासृजत्पूर्वं सर्वादिर्निरवस्करम्
ब्रह्मघोषैर्दिवं तिष्ठन्त्यमरा ब्रह्मयोनयः ९
ब्राह्मणानां मतिर्वाक्यं कर्म श्रद्धा तपांसि च
धारयन्ति महीं द्यां च शैत्याद्वार्यमृतं यथा १०
नास्ति सत्यात्परो धर्मो नास्ति मातृसमो गुरुः
ब्राह्मणेभ्यः परं नास्ति प्रेत्य चेह च भूतये ११
नैषामुक्षा वर्धते नोत वाहा न गर्गरो मथ्यते संप्रदाने
अपध्वस्ता दस्युभूता भवन्ति येषां राष्ट्रे ब्राह्मणा वृत्तिहीनाः १२

वेदपुराणेतिहासप्रामाण्यान्नारायणमुखोद्गताः सर्वात्मानः सर्वकर्तारः
सर्वभावनाश्च ब्राह्मणाः १ वाक्समकालं हि
तस्य देवस्य वरप्रदस्य ब्राह्मणाः प्रथमं प्रादुर्भूता ब्राह्मणेभ्यश्च शेषा वर्णाः
प्रादुर्भूताः २ इत्थं च सुरासुरविशिष्टा
ब्राह्मणा यदा मया ब्रह्मभूतेन पुरा स्वयमेवोत्पादिताः
सुरासुरमहर्षयो भूतविशेषाः स्थापिता निगृहीताश्च ३ १३
अहल्याधर्षणनिमित्तं हि गौतमाद्धरिश्मश्रुतामिन्द्रः प्राप्तः १ कौशिकनिमित्तं
चेन्द्रो मुष्कवियोगं मेषवृषणत्वं चावाप २ अश्विनोर्ग्रहप्रतिषेधोद्यतवज्रस्य
पुरंदरस्य च्यवनेन स्तम्भितो बाहुः ३ क्रतुवधप्राप्तमन्युना च दक्षेण
भूयस्तपसा चात्मानं संयोज्य नेत्राकृतिरन्या ललाटे रुद्रस्योत्पादिता ४ १४
त्रिपुरवधार्थं दीक्षामभ्युपगतस्य रुद्रस्योशनसा शिरसो
जटा उत्कृत्य प्रयुक्ताः १ ततः प्रादुर्भूता भुजगाः २
तैरस्य भुजगैः पीड्यमानः कण्ठो नीलतामुपनीतः ३
पूर्वे च मन्वन्तरे स्वायंभुवे नारायणहस्तबन्धग्रहणान्नीलकण्ठत्वमेव वा ४
१५
अमृतोत्पादने पुरश्चरणतामुपगतस्याङ्गिरसो बृहस्पतेरुपस्पृशतो न प्रसादं
गतवत्यः किलापः १ अथ बृहस्पतिरपां चुक्रोध २ यस्मान्ममोपस्पृशतः
कलुषीभूता न प्रसादमुपगतास्तस्मादद्यप्रभृति
झषमकरमत्स्यकच्छपजन्तुसंकीर्णाः कलुषीभवतेति ३ तदाप्रभृत्यापो
यादोभिः संकीर्णाः संवृत्तआः ४ १६
विश्वरूपो वै त्वाष्ट्रः पुरोहितो देवानामासीत्स्वस्त्रीयोऽसुराणाम् १ स प्रत्यक्षं
देवेभ्यो भागमददत्परोक्षमसुरेभ्यः २ १७
अथ हिरण्यकशिपुं पुरस्कृत्य विश्वरूपमातरं स्वसारमसुरा वरमयाचन्त १
हे स्वसरयं ते पुत्रस्त्वाष्ट्रो विश्वरूपस्त्रिशिरा देवानां पुरोहितः प्रत्यक्षं देवेभ्यो
भागमददत्परोक्षमस्माकम् २ ततो देवा वर्धन्ते वयं क्षीयामः ३ तदेनं त्वं
वारयितुमर्हसि तथा यथास्मान्भजेदिति ४ १८
अथ विश्वरूपं नन्दनवनमुपगतं मातोवाच १
पुत्र किं परपक्षवर्धनस्त्वं मातुलपक्षं नाशयसि २
नार्हस्येवं कर्तुमिति ३ स विश्वरूपो मातुर्वाक्यमनतिक्रमणीयमिति मत्वा
संपूज्य हिरण्यकशिपुमगात् ४ १९

हैरण्यगर्भाच्च वसिष्ठाद्धिरण्यकशिपुः शापं प्राप्तवान् १ यस्मात्त्वयान्यो वृतो होता तस्मादसमाप्तयज्ञस्त्वम पूर्वात्सत्त्वजाताद्वधं प्राप्स्यसीति २
तच्छापदानाद्धिरण्यकशिपुः प्राप्तवान्वधम् ३ २०
विश्वरूपो मातृपक्षवर्धनोऽत्यर्थं तपस्यभवत् १
तस्य व्रतभङ्गार्थमिन्द्रो बह्वीः श्रीमत्योऽप्सरसो नियुयोज २ ताश्च दृष्ट्वा मनः क्षुभितं तस्याभवत्तासु चाप्सरःसु
नचिरादेव सक्तोऽभवत् ३ सक्तं चैनं ज्ञात्वाप्सरस ऊचुर्गच्छामहे वयं यथागतमिति ४ २१
तास्त्वाष्ट्र उवाच १ क्व गमिष्यथ आस्यतां तावन्मया सह श्रेयो भविष्यतीति २ तास्तमब्रुवन् ३ वयं देवस्त्रि योऽप्सरस इन्द्रं वरदं पुरा प्रभविष्णुं वृणीमह इति ४ २२
अथ ता विश्वरूपोऽब्रवीदद्यैव सेन्द्रा देवा न भविष्यन्तीति १ ततो मन्त्राञ्जजाप २ तैर्मन्त्रैः प्रावर्धत त्रिशिराः ३ एकेनास्येन सर्वलोकेषु द्विजैः क्रियावद्भिर्यज्ञेषु सुहुतं सोमं पपावेकेनाप एकेन सेन्द्रान्देवान् ४ अथेन्द्रस्तं विवर्धमानं सोमपानाप्यायितसर्वगात्रं दृष्ट्वा चिन्तामापेदे ५ २३
देवाश्च ते सहेन्द्रेण ब्रह्माणमभिजग्मुरूचुश्च १
विश्वरूपेण सर्वयज्ञेषु सुहुतः सोमः पीयते २
वयमभागाः संवृत्ताः ३ असुरपक्षो वर्धते वयं क्षीयामः ४ तदर्हसि नो विधातुं श्रेयो यदनन्तरमिति ५ २४
तान्ब्रह्मोवाच ऋषिर्भार्गवस्तपस्तप्यते दधीचः १
स याच्यतां वरं यथा कलेवरं जह्यात् २
तस्यास्थिभिर्वज्रं क्रियतामिति ३ २५
देवास्तत्रागच्छन्यत्र दधीचो भगवानृषिस्तपस्तेपे १
सेन्द्रा देवास्तमभिगम्योचुर्भगवंस्तपसः कुशलमविघ्नं चेति २ तान्दधीच उवाच स्वागतं भवद्भ्यः किं क्रियताम् ३ यद्वक्ष्यथ तत्करिष्यामीति ४ ते तमब्रुवञ्शरीरपरित्यागं
लोकहितार्थं भगवान्कर्तुमर्हतीति ५ अथ दधीचस्तथैवाविमनाः सुखदुःखसमो महायोगी आत्मानं समाधाय शरीरपरित्यागं चकार ६ २६
तस्य परमात्मन्यवसृते तान्यस्थीनि धाता संगृह्य

वज्रमकरोत् १ तेन वज्रेणाभेद्येनाप्रधृष्येण ब्रह्मास्थिसंभूतेन विष्णुप्रविष्टेनेन्द्रो विश्वरूपं जघान २ शिरसां चास्य छेदनमकरोत् ३ तस्मादनन्तरं विश्व रूपगात्रमथनसंभवं त्वष्ट्रोत्पादितमेवारिं वृत्रमिन्द्रो जघान ४ २७
तस्यां द्वैधीभूतायां ब्रह्मवध्यायां भयादिन्द्रो देवराज्यं परित्यज्य अप्सु संभवां शीतलां मानससरोगतां नलिनीं प्रपेदे १
तत्र चैश्वर्ययोगादणुमात्रो भूत्वा बिसग्रन्थिं प्रविवेश २ २८
अथ ब्रह्मवध्याभयप्रनष्टे त्रैलोक्यनाथे शचीपतौ जगदनीश्वरं बभूव १ देवान्रजस्तमश्चाविवेश २ मन्त्रा न प्रावर्तन्त ३ महर्षीणां रक्षांसि प्रादुरभवन् ४ ब्रह्म चोत्सादनं जगाम ५ अनिन्द्राश्चाबला लोकाः सुप्रधृष्या बभूवुः ६ २९
अथ देवा ऋषयश्चायुषः पुत्रं नहुषं नाम देवराजत्वेऽभिषिषिचुः १ नहुषः पञ्चभिः शतैर्ज्योतिषां ललाटे ज्वलद्भिः सर्वतेजोहरैस्त्रिविष्टपं पालयांबभूव २
अथ लोकाः प्रकृतिमापेदिरे स्वस्थाश्च बभूवुः ३ ३०
अथोवाच नहुषः १ सर्वं मां शक्रोपभुक्तमुपस्थितमृते शचीमिति २ स एवमुक्त्वा शचीसमीपमगमदुवाच
चैनाम् ३ सुभगेऽहमिन्द्रो देवानां भजस्व मामिति ४
तं शची प्रत्युवाच ५ प्रकृत्या त्वं धर्मवत्सलः सोमवंशोद्भवश्च ६ नार्हसि परपत्नीधर्षणं कर्तुमिति ७ ३१
तामथोवाच नहुषः १ एन्द्रं पदमध्यास्यते मया २ अहमिन्द्रस्य राज्यरत्नहरो नात्राधर्मः कश्चित्त्वमिन्द्रभुक्तेति ३ सा तमुवाच ४ अस्ति मम किंचिद्व्रतमपर्यवसितम् ५ तस्यावभृथे त्वामुपगमिष्यामि कैश्चिदेवाहोभिरिति ६
स शच्यैवमभिहितो नहुषो जगाम ७ ३२
अथ शची दुःखशोकार्ता भर्तृदर्शनलालसा नहुषभयगृहीता बृहस्पतिमुपागच्छत् १ स च तामभिगतां दृष्ट्वैव ध्यानं प्रविश्य भर्तृकार्यतत्परां ज्ञात्वा बृहस्पतिरुवाच २
अनेनैव व्रतेन तपसा चान्विता देवीं वरदामुपश्रुतिमाह्वय ३ सा तवेन्द्रं दर्शयिष्यतीति ४ ३३
साथ महानियममास्थिता देवीं वरदामुपश्रुतिं मन्त्रैराह्वयत् १ सोपश्रुतिः

शचीसमीपमगात् २ उवाच चैनामियमस्मि त्वयोपहूतोपस्थिता ३ किं ते
प्रियं करवाणीति ४
तां मूर्ध्ना प्रणम्योवाच शची भगवत्यर्हसि मे भर्तारं
दर्शयितुं त्वं सत्या मता चेति ५ सैनां मानसं
सरोऽनयत् ६ तत्रेन्द्रं बिसग्रन्थिगतमदर्शयत् ७ ३४
तामिन्द्रः पत्नीं कृशां ग्लानां च दृष्ट्वा चिन्तयांबभूव १
अहो मम महददुःखमिदमद्योपगतम् २ नष्टं हि
मामियमन्विष्योपागमद्दुःखार्तेति ३ तामिन्द्र उवाच कथं वर्तयसीति ४
सा तमुवाच ५ नहुषो मामाह्वयति ६ कालश्चास्य मया कृत इति ७ ३५
तामिन्द्र उवाच १ गच्छ २ नहुषस्त्वया वाच्योऽपूर्वेण मामृषियुक्तेन यानेन
त्वमधिरूढ उद्वहस्व ३ इन्द्रस्य हि महान्ति वाहनानि मनसः
प्रियाण्यधिरूढानि मया ४ त्वमन्येनोपयातुमर्हसीति ५ सैवमुक्ता हृष्टा
जगाम ६ इन्द्रोपि बिसग्रन्थिमेवाविवेश भूयः ७ ३६
अथेन्द्राणीमभ्यागतां दृष्ट्वोवाच नहुषः पूर्णः स काल इति १ तं
शच्यब्रवीच्छक्रेण यथोक्तम् २ समहर्षियुक्तं
वाहनमधिरूढः शचीसमीपमुपागच्छत् ३ ३७
अथ मैत्रावरुणिः कुम्भयोनिरगस्त्यो महर्षीन्विक्रियमाणां स्तान्नहुषेणापश्यत्
१ पद्भ्यां च तेनास्पृश्यत २
ततः स नहुषमब्रवीदकार्यप्रवृत्त पाप पतस्व महीम् ३
सर्पो भव यावद्भूमिर्गिरयश्च तिष्ठेयुस्तावदिति ४
स महर्षिवाक्यसमकालमेव तस्माद्यानादवापतत् ५ ३८
अथानिन्द्रं पुनस्त्रैलोक्यमभवत् १ ततो देवा ऋषयश्च
भगवन्तं विष्णुं शरणमिन्द्रार्थेऽभिजग्मुः २ ऊचुश्चैनं भगवन्निन्द्रं
ब्रह्मवध्याभिभूतं त्रातुमर्हसीति ३ ततः स
वरदस्तानब्रवीदश्वमेधं यज्ञं वैष्णवं शक्रोऽभियजतु ४
ततः स्वं स्थानं प्राप्स्यतीति ५ ३९
ततो देवा ऋषयश्चेन्द्रं नापश्यन्यदा तदा शचीमूचुर्गच्छ
सुभगे इन्द्रमानयस्वेति १ सा पुनस्तत्सरः समभ्यगच्छत् २ इन्द्रश्च
तस्मात्सरसः समुत्थाय बृहस्पतिमभिजगाम ३
बृहस्पतिश्चाश्वमेधं महाक्रतुं शक्रायाहरत् ४

ततः कृष्णसारङ्गं मेध्यमश्वमुत्सृज्य वाहनं तमेव कृत्वा
इन्द्रं मरुत्पतिं बृहस्पतिः स्वस्थानं प्रापयामास ५ ४०
ततः स देवराड्देवैर्ऋषिभिः स्तूयमानस्त्रिविष्टपस्थो निष्कल्मषो बभूव १
ब्रह्मवध्यां चतुर्षु स्थानेषु वनिताग्निवनस्पतिगोषु व्यभजत् २ एवमिन्द्रो
ब्रह्मतेजःप्रभावोपबृंहितः शत्रुवधं कृत्वा स्वस्थानं प्रापितः ३ ४१
आकाशगङ्गागतश्च पुरा भरद्वाजो महर्षिरुपास्पृशंस्त्री-
न्क्रमान्क्रमता विष्णुनाभ्यासादितः १ स भरद्वाजेन ससलिलेन पाणिनोरसि
ताडितः सलक्षणोरस्कः संवृत्तः २ ४२
भृगुणा महर्षिणा शप्तोऽग्नि सर्वभक्षत्वमुपनीतः १ ४३
अदितिर्वै देवानामन्नमपचदेतद्भुक्त्वासुरान्हनिष्यतीति १
तत्र बुधो व्रतचर्यासमाप्तावागच्छत् २ अदितिं चावोचद्भिक्षां देहीति ३ तत्र
देवैः पूर्वमेतत्प्राश्यं नान्येनेत्यदितिर्भिक्षां नादात् ४ अथ
भिक्षाप्रत्याख्यानरुषितेन बुधेन ब्रह्मभूतेन विवस्वतो द्वितीये
जन्मन्यण्डसंज्ञितस्याण्डं मारितमदित्याः ५ स मार्तण्डो
विवस्वानभवच्छ्राद्धदेवः ६ ४४
दक्षस्य वै दुहितरः षष्टिरासन् १ ताभ्यः कश्यपाय त्रयोदश प्रादाद्दश
धर्माय दश मनवे सप्तविंशतिमिन्दवे २ तासु तुल्यासु नक्षत्राख्यां गतासु
सोमो रोहिण्यामभ्यधिकां प्रीतिमकरोत् ३ ततस्ताः शेषाः पत्न्य ईर्ष्यावत्यः
पितुः समीपं गत्वेममर्थं शशंसुः ४ भगवन्नस्मासु तुल्यप्रभावासु सोमो
रोहिणीमधिकं भजतीति ५ सोऽब्रवीद्यक्ष्मैनमावेक्ष्यतीति ६ ४५
दक्षशापात्सोमं राजानं यक्ष्माविवेश १ स यक्ष्मणाविष्टो दक्षमगमत् २
दक्षश्चैनमब्रवीन्न समं वर्तस इति ३ तत्रर्षयः सोममब्रुवन्क्षीयसे यक्ष्मणा ४
पश्चिमस्यां दिशि समुद्रे हिरण्यसरस्तीर्थम् ५ तत्र गत्वात्मानभिषेचयस्वेति
६ अथागच्छत्सोमस्तत्र हिरण्यसरस्तीर्थम् ७ गत्वा चात्मनः स्नपनमकरोत्
८ स्नात्वा चात्मानं पाप्मनो मोक्षयामास ९ तत्र चावभासितस्तीर्थे यदा
सोमस्तदाप्रभृति तीर्थं
तत्प्रभासमिति नाम्ना ख्यातं बभूव १० तच्छापादद्यापि
क्षीयते सोमोऽमावास्यान्तरस्थः ११ पौर्णमासीमात्रेऽधिष्ठितो
मेघलेखाप्रतिच्छन्नं वपुर्दर्शयति १२ मेघसदृशं वर्णमगमत्तदस्य शशलक्ष्म
विमलमभवत् १३ ४६

स्थूलशिरा महर्षिर्मेरोः प्रागुत्तरे दिग्भावे तपस्तेपे १
तस्य तपस्तप्यमानस्य सर्वगन्धवहः शुचिर्वायुर्विवायमानः शरीरमस्पृशत् २
स तपसा तापितशरीरः
कृशो वायुनोपवीज्यमानो हृदयपरितोषमगमत् ३
तत्र तस्यानिलव्यजनकृतपरितोषस्य सद्यो वनस्पतयः
पुष्पशोभां न दर्शितवन्त इति स एताञ्शशाप
न सर्वकालं पुष्पवन्तो भविष्यथेति ४ ४७
नारयणो लोकहितार्थं वडवामुखो नाम महर्षिः पुराभवत् १  तस्य मेरौ
तपस्तप्यतः समुद्र आहूतो नागतः २  तेनामर्षितेनात्मगात्रोष्मणा समुद्रः
स्तिमितजलः कृतः ३  स्वेदप्रस्यन्दनसदृशश्चास्य लवणभावो जनितः ४
उक्तश्चापेयोभविष्यसि ५  एतच्च ते तोयं वडवामुखसंज्ञितेन पीयमानं मधुरं
भविष्यति ६  तदेतदद्यापि वडवामुखसंज्ञितेनानुवर्तिना तोयं सामुद्रं पीयते
७ ४८
हिमवतो गिरेर्दुहितरमुमां रुद्रश्चकमे १  भृगुरपि च
महर्षिर्हिमवन्तमागम्याब्रवीत्कन्यामुमां मे देहीति २
तमब्रवीद्धिमवानभिलषितो वरो रुद्र इति ३
तमब्रवीद्भृगुर्यस्मात्त्वयाहं कन्यावरणकृतभावः प्रत्याख्यातस्तस्मान्न रत्नानां
भवान्भाजनं भविष्यतीति ४  अद्यप्रभृत्येतदवस्थितमृषिवचनम् ५ ४९
तदेवंविधं माहात्म्यं ब्राह्मणानाम् १  क्षत्रमपि
शाश्वतीमव्ययां पृथिवीं पत्नीमभिगम्य बुभुजे २
तदेतद्ब्रह्माग्नीषोमीयम् ३  तेन जगद्धार्यते ४ ५०
इति श्रीमहाभारते शान्तिपर्वणि एकोनत्रिंशदधिकत्रिशततमोऽध्यायः ३२९

## त्रिंशदधिकत्रिशततमोऽध्यायः

श्रीभगवानुवाच
सूर्याचन्द्रमसौ शश्वत्केशैर्मे अंशुसंज्ञितैः
बोधयंस्तापयंश्चैव जगदुत्तिष्ठतः पृथक् १
बोधनात्तापनाच्चैव जगतो हर्षणं भवेत्
अग्नीषोमकृतैरेभिः कर्मभिः पाण्डुनन्दन
हृषीकेशोऽहमीशानो वरदो लोकभावनः २

इडोपहूतयोगेन हरे भागं क्रतुष्वहम्
वर्णश्च मे हरिश्रेष्ठस्तस्माद्धरिरहं स्मृतः ३
धाम सारो हि लोकानामृतं चैव विचारितम्
ऋतधामा ततो विप्रैः सत्यश्चाहं प्रकीर्तितः ४
नष्टां च धरणीं पूर्वमविन्दं वै गुहागताम्
गोविन्द इति मां देवा वाग्भिः समभितुष्टुकः ५
शिपिविष्टेति चाख्यायां हीनरोमा च यो भवेत्
तेनाविष्टं हि यत्किंचिच्छिपिविष्टं हि तत्स्मृतम् ६
यास्को मामृषिरव्यग्रो नैकयज्ञेषु गीतवान्
शिपिविष्ट इति ह्यस्माद्गुह्यनामधरो ह्यहम् ७
स्तुत्वा मां शिपिविष्टेति यास्को ऋषिरुदारधीः
मत्प्रसादादधो नष्टं निरुक्तमभिजग्मिवान् ८
न हि जातो न जायेऽह न जनिष्ये कदाचन
क्षेत्रज्ञः सर्वभूतानां तस्मादहमजः स्मृतः ९
नोक्तपूर्वं मया क्षुद्रमश्लीलं वा कदाचन
ऋता ब्रह्मसुता सा मे सत्या देवी सरस्वती १०
सच्चासच्चैव कौन्तेय मयावेशितमात्मनि
पौष्करे ब्रह्मसदने सत्यं मामृषयो विदुः ११
सत्त्वान्न च्युतपूर्वोऽह सत्त्वं वै विद्धि मत्कृतम्
जन्मनीहाभवत्सत्त्वं पौर्विकं मे धनंजय १२
निराशीः कर्मसंयुक्तं सात्वतं मां प्रकल्पय
सात्वतज्ञानदृष्टोऽह सात्वतः सात्वतां पतिः १३
कृषामि मेदिनीं पार्थ भूत्वा कार्ष्णायसो महान्
कृष्णो वर्णश्च मे यस्मात्तस्मात्कृष्णोऽहमर्जुन १४
मया संश्लेषिता भूमिरद्भिर्व्योम च वायुना
वायुश्च तेजसा सार्धं वैकुण्ठत्वं ततो मम १५
निर्वाणं परमं सौख्यं धर्मोऽसौ पर उच्यते
तस्मान्न च्युतपूर्वोऽहमच्युतस्तेन कर्मणा १६
पृथिवीनभसी चोभे विश्रुते विश्वलौकिके
तयोः संधारणार्थं हि मामधोक्षजमञ्जसा १७

निरुक्तं वेदविदुषो ये च शब्दार्थचिन्तकाः
ते मां गायन्ति प्राग्वंशे अधोक्षज इति स्थितिः १८
शब्द एकमतैरेष व्याहृतः परमर्षिभिः
नान्यो ह्यधोक्षजो लोके ऋते नारायणं प्रभुम् १९
घृतं ममार्चिषो लोके जन्तूनां प्राणधारणम्
घृतार्चिरहमव्यग्रैर्वेदज्ञैः परिकीर्तितः २०
त्रयो हि धातवः ख्याताः कर्मजा इति च स्मृताः
पित्तं श्लेष्मा च वायुश्च एष संघात उच्यते २१
एतैश्च धार्यते जन्तुरेतैः क्षीणैश्च क्षीयते
आयुर्वेदविदस्तस्मात्त्रिधातुं मां प्रचक्षते २२
वृषो हि भगवान्धर्मः ख्यातो लोकेषु भारत
नैघण्टुकपदाख्यातं विद्धि मां वृषमुत्तमम् २३
कपिर्वराहः श्रेष्ठश्च धर्मश्च वृष उच्यते
तस्माद्वृषाकपिं प्राह कश्यपो मां प्रजापतिः २४
न चादिं न मध्यं तथा नैव चान्तं कदाचिद्विदन्ते सुराश्चासुराश्च
अनाद्यो ह्यमध्यस्तथा चाप्यनन्तः प्रगीतोऽहमीशो विभुर्लोकसाक्षी २५
शुचीनि श्रवणीयानि शृणोमीह धनंजय
न च पापानि गृह्णामि ततोऽह वै शुचिश्रवाः २६
एकशृङ्गः पुरा भूत्वा वराहो दिव्यदर्शनः
इमामुद्धृतवान्भूमिमेकशृङ्गस्ततो ह्यहम् २७
तथैवासं त्रिककुदो वाराहं रूपमास्थितः
त्रिककुत्तेन विख्यातः शरीरस्य तु मापनात् २८
विरिञ्च इति यः प्रोक्तः कपिलज्ञानचिन्तकैः
स प्रजापतिरेवाहं चेतनात्सर्वलोककृत् २९
विद्यासहायवन्तं मामादित्यस्थं सनातनम्
कपिलं प्राहुराचार्याः सांख्या निश्चितनिश्चयाः ३०
हिरण्यगर्भो द्युतिमानेष यश्छन्दति स्तुतः
योगैः संपूज्यते नित्यं स एवाहं विभुः स्मृतः ३१
एकविंशतिशाखं च ऋग्वेदं मां प्रचक्षते
सहस्रशाखं यत्साम ये वै वेदविदो जनाः

गायन्त्यारण्यके विप्रा मद्भक्तास्तेऽपि दुर्लभाः ३२
षट्पञ्चाशतमष्टौ च सप्तत्रिंशतमित्युत
यस्मिञ्शाखां यजुर्वेदे सोऽहमाध्वर्यवे स्मृतः ३३
पञ्चकल्पमथर्वाणं कृत्याभिः परिबृंहितम्
कल्पयन्ति हि मां विप्रा अथर्वाणविदस्तथा ३४
शाखाभेदाश्च ये केचिद्याश्च शाखासु गीतयः
स्वरवर्णसमुच्चाराः सर्वांस्तान्विद्धि मत्कृतान् ३५
यत्तद्धयशिरः पार्थ समुदेति वरप्रदम्
सोऽहमेवोत्तरे भागे क्रमाक्षरविभागवित् ३६
रामादेशितमार्गेण मत्प्रसादान्महात्मना
पाञ्चालेन क्रमः प्राप्तस्तस्माद्भूतात्सनातनात्
बाभ्रव्यगोत्रः स बभौ प्रथमः क्रमपारगः ३७
नारायणाद्वरं लब्ध्वा प्राप्य योगमनुत्तमम्
क्रमं प्रणीय शिक्षां च प्रणयित्वा स गालवः ३८
कण्डरीकोऽथ राजा च ब्रह्मदत्तः प्रतापवान्
जातीमरणजं दुःखं स्मृत्वा स्मृत्वा पुनः पुनः
सप्तजातिषु मुख्यत्वाद्योगानां संपदं गतः ३९
पुराहमात्मजः पार्थ प्रथितः कारणान्तरे
धर्मस्य कुरुशार्दूल ततोऽह धर्मजः स्मृतः ४०
नरनारायणौ पूर्वं तपस्तेपतुरव्ययम्
धर्मयानं समारूढौ पर्वते गन्धमादने ४१
तत्कालसमयं चैव दक्षयज्ञो बभूव ह
न चैवाकल्पयद्भागं दक्षो रुद्रस्य भारत ४२
ततो दधीचिवचनाद्दक्षयज्ञमपाहरत्
ससर्ज शूलं क्रोधेन प्रज्वलन्तं मुहुर्मुहुः ४३
तच्छूलं भस्मसात्कृत्वा दक्षयज्ञं सविस्तरम्
आवयोः सहसागच्छद्बदर्याश्रममन्तिकात्
वेगेन महता पार्थ पतन्नारायणोरसि ४४
ततः स्वतेजसाविष्टाः केशा नारायणस्य ह
बभूवुर्मुञ्जवर्णास्तु ततोऽह मुञ्जकेशवान् ४५

तच्च शूलं विनिर्धूतं हुंकारेण महात्मना
जगाम शंकरकरं नारायणसमाहतम् ४६
अथ रुद्र उपाधावत्तावृषी तपसान्वितौ
तत एनं समुद्धूतं कण्ठे जग्राह पाणिना
नारायणः स विश्वात्मा तेनास्य शितिकण्ठता ४७
अथ रुद्रविघातार्थमिषीकां जगृहे नरः
मन्त्रैश्च संयुयोजाशु सोऽभवत्परशुर्महान् ४८
क्षिप्तश्च सहसा रुद्रे खण्डनं प्राप्तवांस्तदा
ततोऽहं खण्डपरशुः स्मृतः परशुखण्डनात् ४९
अर्जुन उवाच
अस्मिन्युद्धे तु वार्ष्णेय त्रैलोक्यमथने तदा
जयं कः प्राप्तवांस्तत्र शंसैतन्मे जनार्दन ५०
श्रीभगवानुवाच
तयोः संलग्नयोर्युद्धे रुद्रनारायणात्मनोः
उद्विग्नाः सहसा कृत्स्ना लोकाः सर्वेऽभवंस्तदा ५१
नागृह्णात्पावकः शुभ्रं मखेषु सुहुतं हविः
वेदा न प्रतिभान्ति स्म ऋषीणां भावितात्मनाम् ५२
देवान्रजस्तमश्चैव समाविविशतुस्तदा
वसुधा संचकम्पेऽथ नभश्च विपफाल ह ५३
निष्प्रभाणि च तेजांसि ब्रह्मा चैवासनाच्च्युतः
अगाच्छोषं समुद्रश्च हिमवांश्च व्यशीर्यत ५४
तस्मिन्नेवं समुत्पन्ने निमित्ते पाण्डुनन्दन
ब्रह्मा वृतो देवगणैर्ऋषिभिश्च महात्मभिः
आजगामाशु तं देशं यत्र युद्धमवर्तत ५५
साञ्जलिप्रग्रहो भूत्वा चतुर्वक्त्रो निरुक्तगः
उवाच वचनं रुद्रं लोकानामस्तु वै शिवम्
न्यस्यायुधानि विश्वेश जगतो हितकाम्यया ५६
यदक्षरमथाव्यक्तमीशं लोकस्य भावनम्
कूटस्थं कर्तृनिर्द्वंद्वमकर्तेति च यं विदुः ५७
व्यक्तिभावगतस्यास्य एका मूर्तिरियं शिवा

नरो नारायणश्चैव जातौ धर्मकुलोद्वहौ ५८
तपसा महता युक्तौ देवश्रेष्ठौ महाव्रतौ
अहं प्रसादजस्तस्य कस्मिंश्चित्कारणान्तरे
त्वं चैव क्रोधजस्तात पूर्वसर्गे सनातनः ५९
मया च सार्धं वरदं विबुधैश्च महर्षिभिः
प्रसादयाशु लोकानां शान्तिर्भवतु माचिरम् ६०
ब्रह्मणा त्वेवमुक्तस्तु रुद्रः क्रोधाग्निमुत्सृजन्
प्रसादयामास ततो देवं नारायणं प्रभुम्
शरणं च जगामाद्यं वरेण्यं वरदं हरिम् ६१
ततोऽथ वरदो देवो जितक्रोधो जितेन्द्रियः
प्रीतिमानभवत्तत्र रुद्रेण सह संगतः ६२
ऋषिभिर्ब्रह्मणा चैव विबुधैश्च सुपूजितः
उवाच देवमीशानमीशः स जगतो हरिः ६३
यस्त्वां वेत्ति स मां वेत्ति यस्त्वामनु स मामनु
नावयोरन्तरं किंचिन्मा ते भूद्बुद्धिरन्यथा ६४
अद्य प्रभृति श्रीवत्सः शूलाङ्कोऽय भवत्वयम्
मम पाण्यङ्कितश्चापि श्रीकण्ठस्त्वं भविष्यसि ६५
एवं लक्षणमुत्पाद्य परस्परकृतं तदा
सख्यं चैवातुलं कृत्वा रुद्रेण सहितावृषी
तपस्तेपतुरव्यग्रौ विसृज्य त्रिदिवौकसः ६६
एष ते कथितः पार्थ नारायणजयो मृधे
नामानि चैव गुह्यानि निरुक्तानि च भारत
ऋषिभिः कथितानीह यानि संकीर्तितानि ते ६७
एवं बहुविधै रूपैश्चरामीह वसुंधराम्
ब्रह्मलोकं च कौन्तेय गोलोकं च सनातनम्
मया त्वं रक्षितो युद्धे महान्तं प्राप्तवाञ्जयम् ६८
यस्तु ते सोऽग्रतो याति युद्धे संप्रत्युपस्थिते
तं विद्धि रुद्रं कौन्तेय देवदेवं कपर्दिनम् ६९
कालः स एव कथितः क्रोधजेति मया तव
निहतांस्तेन वै पूर्वं हतवानसि वै रिपून् ७०

अप्रमेयप्रभावं तं देवदेवमुमापतिम्
नमस्व देवं प्रयतो विश्वेशं हरमव्ययम् ७१
इति श्रीमहाभारते शान्तिपर्वणि त्रिंशदधिकत्रिशततमोऽध्यायः ३३०

## एकत्रिंशदधिकत्रिशततमोऽध्यायः

जनमेजय उवाच
ब्रह्मन्सुमहदाख्यानं भवता परिकीर्तितम्
यच्छ्रुत्वा मुनयः सर्वे विस्मयं परमं गताः १
इदं शतसहस्राद्धि भारताख्यानविस्तरात्
आमथ्य मतिमन्थेन ज्ञानोदधिमनुत्तमम् २
नवनीतं यथा दध्नो मलयाच्चन्दनं यथा
आरण्यकं च वेदेभ्य ओषधिभ्योऽमृतं यथा ३
समुद्धृतमिदं ब्रह्मन्कथामृतमनुत्तमम्
तपोनिधे त्वयोक्तं हि नारायणकथाश्रयम् ४
स हीशो भगवान्देवः सर्वभूतात्मभावनः
अहो नारायणं तेजो दुर्दर्शं द्विजसत्तम ५
यत्राविशन्ति कल्पान्ते सर्वे ब्रह्मादयः सुराः
ऋषयश्च सगन्धर्वा यच्च किंचिच्चराचरम्
न ततोऽस्ति परं मन्ये पावनं दिवि चेह च ६
सर्वाश्रमाभिगमनं सर्वतीर्थावगाहनम्
न तथा फलदं चापि नारायणकथा यथा ७
सर्वथा पाविताः स्मेह श्रुत्वेमामादितः कथाम्
हरेर्विश्वेश्वरस्येह सर्वपापप्रणाशनीम् ८
न चित्रं कृतवांस्तत्र यदार्यो मे धनंजयः
वासुदेवसहायो यः प्राप्तवाञ्जयमुत्तमम् ९
न चास्य किंचिदप्राप्यं मन्ये लोकेष्वपि त्रिषु
त्रैलोक्यनाथो विष्णुः स यस्यासीत्साह्यकृत्सखा १०
धन्याश्च सर्व एवासन्ब्रह्मंस्ते मम पूर्वकाः
हिताय श्रेयसे चैव येषामासीज्जनार्दनः ११
तपसापि न दृश्यो हि भगवाँल्लोकपूजितः

यं दृष्टवन्तस्ते साक्षाच्छ्रीवत्साङ्कविभूषणम् १२
तेभ्यो धन्यतरश्चैव नारदः परमेष्ठिजः
न चाल्पतेजसमृषिं वेद्मि नारदमव्ययम्
श्वेतद्वीपं समासाद्य येन दृष्टः स्वयं हरिः १३
देवप्रसादानुगतं व्यक्तं तत्तस्य दर्शनम्
यद्दृष्टवांस्तदा देवमनिरुद्धतनौ स्थितम् १४
बदरीमाश्रमं यत्तु नारदः प्राद्रवत्पुनः
नरनारायणौ द्रष्टुं किं नु तत्कारणं मुने १५
श्वेतद्वीपान्निवृत्तश्च नारदः परमेष्ठिजः
बदरीमाश्रमं प्राप्य समागम्य च तावृषी १६
कियन्तं कालमवसत्काः कथाः पृष्टवांश्च सः
श्वेतद्वीपादुपावृत्ते तस्मिन्वा सुमहात्मनि १७
किमब्रूतां महात्मानौ नरनारायणावृषी
तदेतन्मे यथातत्त्वं सर्वमाख्यातुमर्हसि १८
वैशम्पायन उवाच
नमो भगवते तस्मै व्यासायामिततेजसे
यस्य प्रसादाद्वक्ष्यामि नारायणकथामिमाम् १९
प्राप्य श्वेतं महाद्वीपं दृष्ट्वा च हरिमव्ययम्
विवृत्तो नारदो राजंस्तरसा मेरुमागमत्
हृदयेनोद्वहन्भारं यदुक्तं परमात्मना २०
पश्चादस्याभवद्राजन्नात्मनः साध्वसं महत्
यद्गत्वा दूरमध्वानं क्षेमी पुनरिहागतः २१
ततो मेरोः प्रचक्राम पर्वतं गन्धमादनम्
निपपात च खात्तूर्णं विशालां बदरीमनु २२
ततः स ददृशे देवौ पुराणावृषिसत्तमौ
तपश्चरन्तौ सुमहदात्मनिष्ठौ महाव्रतौ २३
तेजसाभ्यधिकौ सूर्यात्सर्वलोकविरोचनात्
श्रीवत्सलक्षणौ पूज्यौ जटामण्डलधारिणौ २४
जालपादभुजौ तौ तु पादयोश्चक्रलक्षणौ
व्यूढोरस्कौ दीर्घभुजौ तथा मुष्कचतुष्किणौ २५

षष्टिदन्तावष्टदंष्ट्रौ मेघौघसदृशस्वनौ
स्वास्यौ पृथूललाटौ च सुहनु सुभ्रुनासिकौ २६
आतपत्रेण सदृशे शिरसी देवयोस्तयोः
एवं लक्षणसंपन्नौ महापुरुषसंज्ञितौ २७
तौ दृष्ट्वा नारदो हृष्टस्ताभ्यां च प्रतिपूजितः
स्वागतेनाभिभाष्याथ पृष्टश्चानामयं तदा २८
बभूवान्तर्गतमतिर्निरीक्ष्य पुरुषोत्तमौ
सदोगतास्तत्र ये वै सर्वभूतनमस्कृताः २९
श्वेतदीपे मया दृष्टास्तादृशावृषिसत्तमौ
इति संचिन्त्य मनसा कृत्वा चाभिप्रदक्षिणम्
उपोपविविशे तत्र पीठे कुशमये शुभे ३०
ततस्तौ तपसां वासौ यशसां तेजसामपि
ऋषी शमदमोपेतौ कृत्वा पूर्वाह्णिकं विधिम् ३१
पश्चान्नारदमव्यग्रौ पाद्यार्घ्याभ्यां प्रपूज्य च
पीठयोश्चोपविष्टौ तौ कृतातिथ्याह्निकौ नृप ३२
तेषु तत्रोपविष्टेषु स देशोऽभिव्यराजत
आज्याहुतिमहाज्वालैर्यज्ञवाटोऽग्निभिर्यथा ३३
अथ नारायणस्तत्र नारदं वाक्यमब्रवीत्
सुखोपविष्टं विश्रान्तं कृतातिथ्यं सुखस्थितम् ३४
अपीदानीं स भगवान्परमात्मा सनातनः
श्वेतद्वीपे त्वया दृष्ट आवयोः प्रकृतिः परा ३५
नारद उवाच
दृष्टो मे पुरुषः श्रीमान्विश्वरूपधरोऽव्ययः
सर्वे हि लोकास्तत्रस्थास्तथा देवाः सहर्षिभिः
अद्यापि चैनं पश्यामि युवां पश्यन्सनातनौ ३६
यैर्लक्षणैरुपेतः स हरिरव्यक्तरूपधृक्
तैर्लक्षणैरुपेतौ हि व्यक्तरूपधरौ युवाम् ३७
दृष्टौ मया युवां तत्र तस्य देवस्य पार्श्वतः
इह चैवागतोऽस्म्यद्य विसृष्टः परमात्मना ३८
को हि नाम भवेत्तस्य तेजसा यशसा श्रिया

सदृशस्त्रिषु लोकेषु ऋृते धर्मात्मजौ युवाम् ३९
तेन मे कथितं पूर्वं नाम क्षेत्रज्ञसंज्ञितम्
प्रादुर्भावाश्च कथिता भविष्यन्ति हि ये यथा ४०
तत्र ये पुरुषाः श्वेताः पञ्चेन्द्रियविवर्जिताः
प्रतिबुद्धाश्च ते सर्वे भक्ताश्च पुरुषोत्तमम् ४१
तेऽचयन्ति सदा देवं तैः सार्धं रमते च सः
प्रियभक्तो हि भगवान्परमात्मा द्विजप्रियः ४२
रमते सोऽच्यमानो हि सदा भागवतप्रियः
विश्वभुक्सर्वगो देवो बान्धवो भक्तवत्सलः
स कर्ता कारणं चैव कार्यं चातिबलद्युतिः ४३
तपसा योज्य सोऽत्मानं श्वेतद्वीपात्परं हि यत्
तेज इत्यभिविख्यातं स्वयंभासावभासितम् ४४
शान्तिः सा त्रिषु लोकेषु सिद्धानां भावितात्मनाम्
एतया शुभया बुद्ध्या नैष्ठिकं व्रतमास्थितः ४५
न तत्र सूर्यस्तपति न सोमोऽभिविराजते
न वायुर्वाति देवेशे तपश्चरति दुश्चरम् ४६
वेदीमष्टतलोत्सेधां भूमावास्थाय विश्वभुक्
एकपादस्थितो देव ऊर्ध्वबाहुरुदङ्मुखः
साङ्गानावर्तयन्वेदांस्तपस्तेपे सुदुश्चरम् ४७
यद्ब्रह्मा ऋृषयश्चैव स्वयं पशुपतिश्च यत्
शेषाश्च विबुधश्रेष्ठा दैत्यदानवराक्षसाः ४८
नागाः सुपर्णा गन्धर्वाः सिद्धा राजर्षयश्च ये
हव्यं कव्यं च सततं विधिपूर्वं प्रयुञ्जते
कृत्स्नं तत्तस्य देवस्य चरणावुपतिष्ठति ४९
याः क्रियाः संप्रयुक्तास्तु एकान्तगतबुद्धिभिः
ताः सर्वाः शिरसा देवः प्रतिगृह्णाति वै स्वयम् ५०
न तस्यान्यः प्रियतरः प्रतिबुद्धैर्महात्मभिः
विद्यते त्रिषु लोकेषु ततोऽस्म्यैकान्तिकं गतः
इह चैवागतस्तेन विसृष्टः परमात्मना ५१
एवं मे भगवान्देवः स्वयमाख्यातवान्हरिः

आसिष्ये तत्परो भूत्वा युवाभ्यां सह नित्यशः ५२
इति श्रीमहाभारते शान्तिपर्वणि एकत्रिंशदधिकत्रिशततमोऽध्यायः ३३१

## द्वात्रिंशदधिकत्रिशततमोऽध्यायः

नरनारायणावूचतुः
धन्योऽस्यनुगृहीतोऽसि यत्ते दृष्टः स्वयं प्रभुः
न हि तं दृष्टवान्कश्चित्पद्मयोनिरपि स्वयम् १
अव्यक्तयोनिर्भगवान्दुर्दर्शः पुरुषोत्तमः
नारदैतद्धि ते सत्यं वचनं समुदाहृतम् २
नास्य भक्तैः प्रियतरो लोके कश्चन विद्यते
ततः स्वयं दर्शितवान्स्वमात्मानं द्विजोत्तम ३
तपो हि तप्यतस्तस्य यत्स्थानं परमात्मनः
न तत्संप्राप्नुते कश्चिदृते ह्यावां द्विजोत्तम ४
या हि सूर्यसहस्रस्य समस्तस्य भवेद्द्युतिः
स्थानस्य सा भवेत्तस्य स्वयं तेन विराजता ५
तस्मादुत्तिष्ठते विप्र देवाद्विश्वभुवः पतेः
क्षमा क्षमावतां श्रेष्ठ यया भूमिस्तु युज्यते ६
तस्माच्चोत्तिष्ठते देवात्सर्वभूतहितो रसः
आपो येन हि युज्यन्ते द्रवत्वं प्राप्नुवन्ति च ७
तस्मादेव समुद्भूतं तेजो रूपगुणात्मकम्
येन स्म युज्यते सूर्यस्ततो लोकान्विराजते ८
तस्माद्देवात्समुद्भूतः स्पर्शस्तु पुरुषोत्तमात्
येन स्म युज्यते वायुस्ततो लोकान्विवात्यसौ ९
तस्माच्चोत्तिष्ठते शब्दः सर्वलोकेश्वरात्प्रभोः
आकाशं युज्यते येन ततस्तिष्ठत्यसंवृतम् १०
तस्माच्चोतिष्ठते देवात्सर्वभूतगतं मनः
चन्द्रमा येन संयुक्तः प्रकाशगुणधारणः ११
षड्भूतोत्पादकं नाम तत्स्थानं देवसंज्ञितम्
विद्यासहायो यत्रास्ते भगवान्हव्यकव्यभुक् १२
ये हि निष्कल्मषा लोके पुण्यपापविवर्जिताः

तेषां वै क्षेममध्वानं गच्छतां द्विजसत्तम
सर्वलोकतमोहन्ता आदित्यो द्वारमुच्यते १३
आदित्यदग्धसर्वाङ्गा अदृश्याः केनचित्क्वचित्
परमाणुभूता भूत्वा तु तं देवं प्रविशन्त्युत १४
तस्मादपि विनिर्मुक्ता अनिरुद्धतनौ स्थिताः
मनोभूतास्ततो भूयः प्रद्युम्नं प्रविशन्त्युत १५
प्रद्युम्नाच्चापि निर्मुक्ता जीवं संकर्षणं तथा
विशन्ति विप्रप्रवराः सांख्या भागवतैः सह १६
ततस्त्रैगुण्यहीनास्ते परमात्मानमञ्जसा
प्रविशन्ति द्विजश्रेष्ठ क्षेत्रज्ञं निर्गुणात्मकम्
सर्वावासं वासुदेवं क्षेत्रज्ञं विद्धि तत्त्वतः १७
समाहितमनस्काश्च नियताः संयतेन्द्रियाः
एकान्तभावोपगता वासुदेवं विशन्ति ते १८
आवामपि च धर्मस्य गृहे जातौ द्विजोत्तम
रम्यां विशालामाश्रित्य तप उग्रं समास्थितौ १९
ये तु तस्यैव देवस्य प्रादुर्भावाः सुरप्रियाः
भविष्यन्ति त्रिलोकस्थास्तेषां स्वस्तीत्यतो द्विज २०
विधिना स्वेन युक्ताभ्यां यथापूर्वं द्विजोत्तम
आस्थिताभ्यां सर्वकृच्छ्रं व्रतं सम्यक्तदुत्तमम् २१
आवाभ्यामपि दृष्टस्त्वं श्वेतद्वीपे तपोधन
समागतो भगवता संजल्पं कृतवान्यथा २२
सर्वं हि नौ संविदितं त्रैलोक्ये सचराचरे
यद्भविष्यति वृत्तं वा वर्तते वा शुभाशुभम् २३
वैशम्पायन उवाच
एतच्छ्रुत्वा तयोर्वाक्यं तपस्युग्रेऽभ्यवर्तत
नारदः प्राञ्जलिर्भूत्वा नारायणपरायणः २४
जजाप विधिवन्मन्त्रान्नारायणगतान्बहून्
दिव्यं वर्षसहस्रं हि नरनारायणाश्रमे २५
अवसत्स महातेजा नारदो भगवानृषिः
तमेवाभ्यर्चयन्देवं नरनारायणौ च तौ २६

इति श्रीमहाभारते शान्तिपर्वणि द्वात्रिंशदधिकत्रिशततमोऽध्यायः ३३२

## त्रयस्त्रिंशदधिकत्रिशततमोऽध्यायः

वैशम्पायन उवाच
कस्यचित्त्वथ कालस्य नारदः परमेष्ठिजः
दैवं कृत्वा यथान्यायं पित्र्यं चक्रे ततः परम् १
ततस्तं वचनं प्राह ज्येष्ठो धर्मात्मजः प्रभुः
क इज्यते द्विजश्रेष्ठ दैवे पित्र्ये च कल्पिते २
त्वया मतिमतां श्रेष्ठ तन्मे शंस यथागमम्
किमेतत्क्रियते कर्म फलं चास्य किमिष्यते ३
नारद उवाच
त्वयैतत्कथितं पूर्वं दैवं कर्तव्यमित्यपि
दैवतं च परो यज्ञः परमात्मा सनातनः ४
ततस्तद्भावितो नित्यं यजे वैकुण्ठमव्ययम्
तस्माच्च प्रसृतः पूर्वं ब्रह्मा लोकपितामहः ५
मम वै पितरं प्रीतः परमेष्ठ्यप्यजीजनत्
अहं संकल्पजस्तस्य पुत्रः प्रथमकल्पितः ६
यजाम्यहं पितॄन्साधो नारायणविधौ कृते
एवं स एव भगवान्पिता माता पितामहः
इज्यते पितृयज्ञेषु मया नित्यं जगत्पतिः ७
श्रुतिश्चाप्यपरा देव पुत्रान्हि पितरोऽयजन्
वेदश्रुतिः प्रणष्टा च पुनरध्यापिता सुतैः
ततस्ते मन्त्रदाः पुत्राः पितृत्वमुपपेदिरे ८
नूनं पुरैतद्विदितं युवयोर्भावितात्मनोः
पुत्राश्च पितरश्चैव परस्परमपूजयन् ९
त्रीन्पिण्डान्न्यस्य वै पृथ्व्यां पूर्वं दत्त्वा कुशानिति
कथं तु पिण्डसंज्ञां ते पितरो लेभिरे पुरा १०
नरनारायणावूचतुः
इमां हि धरणीं पूर्वं नष्टां सागरमेखलाम्
गोविन्द उज्जहाराशु वाराहं रूपमाश्रितः ११

स्थापयित्वा तु धरणीं स्वे स्थाने पुरुषोत्तमः
जलकर्दमलिप्ताङ्गो लोककार्यार्थमुद्यतः १२
प्राप्ते चाह्निककाले तु मध्यंदिनगते रवौ
दंष्ट्राविलग्नान्मृत्पिण्डान्विधूय सहसा प्रभुः
स्थापयामास वै पृथ्व्यां कुशानास्तीर्य नारद १३
स तेष्वात्मानमुद्दिश्य पित्र्यं चक्रे यथाविधि
संकल्पयित्वा त्रीन्पिण्डान्स्वेनैव विधिना प्रभुः १४
आत्मगात्रोष्मसंभूतैः स्नेहगर्भैस्तिलैरपि
प्रोक्ष्यापवर्गं देवेशः प्राङ्मुखः कृतवान्स्वयम् १५
मर्यादास्थापनार्थं च ततो वचनमुक्तवान्
अहं हि पितरः स्रष्टुमुद्यतो लोककृत्स्वयम् १६
तस्य चिन्तयतः सद्यः पितृकार्यविधिं परम्
दंष्ट्राभ्यां प्रविनिर्धूता ममैते दक्षिणां दिशम्
आश्रिता धरणीं पिण्डास्तस्मात्पितर एव ते १७
त्रयो मूर्तिविहीना वै पिण्डमूर्तिधरास्त्विमे
भवन्तु पितरो लोके मया सृष्टाः सनातनाः १८
पिता पितामहश्चैव तथैव प्रपितामहः
अहमेवात्र विज्ञेयस्त्रिषु पिण्डेषु संस्थितः १९
नास्ति मत्तोऽधिकः कश्चित्को वाभ्यर्च्यो मया स्वयम्
को वा मम पिता लोके अहमेव पितामहः २०
पितामहपिता चैव अहमेवात्र कारणम्
इत्येवमुक्त्वा वचनं देवदेवो वृषाकपिः २१
वराहपर्वते विप्र दत्त्वा पिण्डान्सविस्तरान्
आत्मानं पूजयित्वैव तत्रैवादर्शनं गतः २२
एतदर्थं शुभमते पितरः पिण्डसंज्ञिताः
लभन्ते सततं पूजां वृषाकपिवचो यथा २३
ये यजन्ति पितृन्देवान्गुरूंश्चैवातिथींस्तथा
गाश्चैव द्विजमुख्यांश्च पृथिवीं मातरं तथा
कर्मणा मनसा वाचा विष्णुमेव यजन्ति ते २४
अन्तर्गतः स भगवान्सर्वसत्त्वशरीरगः

समः सर्वेषु भूतेषु ईश्वरः सुखदुःखयोः
महान्महात्मा सर्वात्मा नारायण इति श्रुतिः २५
इति श्रीमहाभारते शान्तिपर्वणि त्रयस्त्रिंशदधिकत्रिशततमोऽध्यायः ३३३

चतुस्त्रिंशदधिकत्रिशततमोऽध्यायः

वैशम्पायन उवाच
श्रुत्वैतन्नारदो वाक्यं नरनारायणेरितम्
अत्यन्तभक्तिमान्देवे एकान्तित्वमुपेयिवान् १
प्रोष्य वर्षसहस्रं तु नरनारायणाश्रमे
श्रुत्वा भगवदाख्यानं दृष्ट्वा च हरिमव्ययम्
हिमवन्तं जगामाशु यत्रास्य स्वक आश्रमः २
तावपि ख्याततपसौ नरनारायणावृषी
तस्मिन्नेवाश्रमे रम्ये तेपतुस्तप उत्तमम् ३
त्वमप्यमितविक्रान्तः पाण्डवानां कुलोद्वहः
पावितात्माद्य संवृत्तः श्रुत्वेमामादितः कथाम् ४
नैव तस्य परो लोको नायं पार्थिवसत्तम
कर्मणा मनसा वाचा यो द्विष्याद्विष्णुमव्ययम् ५
मज्जन्ति पितरस्तस्य नरके शाश्वतीः समाः
यो द्विष्याद्विबुधश्रेष्ठं देवं नारायणं हरिम् ६
कथं नाम भवेद्द्वेष्य आत्मा लोकस्य कस्यचित्
आत्मा हि पुरुषव्याघ्र ज्ञेयो विष्णुरिति स्थितिः ७
य एष गुरुरस्माकमृषिर्गन्धवतीसुतः
तेनैतत्कथितं तात माहात्म्यं परमात्मनः
तस्माच्छ्रुतं मया चेदं कथितं च तवानघ ८
कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम्
को ह्यन्यः पुरुषव्याघ्र महाभारतकृद्भवेत्
धर्मान्नानाविधांश्चैव को ब्रूयात्तमृते प्रभुम् ९
वर्ततां ते महायज्ञो यथा संकल्पितस्त्वया
संकल्पिताश्वमेधस्त्वं श्रुतधर्मश्च तत्त्वतः १०
एतत्तु महदाख्यानं श्रुत्वा पारिक्षितो नृपः

ततो यज्ञसमाप्त्यर्थं क्रियाः सर्वाः समारभत् ११
नारायणीयमाख्यानमेतत्ते कथितं मया
नारदेन पुरा राजन्गुरवे मे निवेदितम्
ऋषीणां पाण्डवानां च शृण्वतोः कृष्णभीष्मयोः १२
स हि परमगुरुर्भुवनपतिर्धरणिधरः शमनियमनिधिः
श्रुतिविनयनिधिर्द्विजपरमहितस्तव भवतु गतिर्हरिरमरहितः १३
तपसां निधिः सुमहतां महतो यशसश्च भाजनमरिष्टकहा
एकान्तिनां शरणदोऽभयदो गतिदोऽस्तु वः स मखभागहरस्त्रिगुणातिगः १४
चतुष्पञ्चधरः पूर्तेष्टयोश्च फलभागहरः
विदधाति नित्यमजितोऽतिबलो गतिमात्मगां सुकृतिनामृषिणाम् १५
तं लोकसाक्षिणमजं पुरुषं रविवर्णमीश्वरगतिं बहुशः
प्रणमध्वमेकमतयो यतयः सलिलोद्भवोऽपि तमृषिं प्रणतः १६
स हि लोकयोनिरमृतस्य पदं सूक्ष्मं पुराणमचलं परमम्
तत्सांख्ययोगिभिरुदारधृतं बुद्ध्या यतात्मभिर्विदितं सततम् १७
इति श्रीमहाभारते शान्तिपर्वणि चतुस्त्रिंशदधिकत्रिशततमोऽध्यायः ३३४

## पञ्चत्रिंशदधिकत्रिशततमोऽध्यायः

जनमेजय उवाच
श्रुतं भगवतस्तस्य माहात्म्यं परमात्मनः
जन्म धर्मगृहे चैव नरनारायणात्मकम्
महावराहसृष्टा च पिण्डोत्पत्तिः पुरातनी १
प्रवृत्तौ च निवृत्तौ च यो यथा परिकल्पितः
स तथा नः श्रुतो ब्रह्मन्कथ्यमानस्त्वयानघ २
यच्च तत्कथितं पूर्वं त्वया हयशिरो महत्
हव्यकव्यभुजो विष्णोरुदक्पूर्वे महोदधौ
तच्च दृष्टं भगवता ब्रह्मणा परमेष्ठिना ३
किं तदुत्पादितं पूर्वं हरिणा लोकधारिणा
रूपं प्रभावमहतामपूर्वं धीमतां वर ४
दृष्ट्वा हि विबुधश्रेष्ठमपूर्वममितौजसम्
तदश्वशिरसं पुण्यं ब्रह्मा किमकरोन्मुने ५

एतन्नः संशयं ब्रह्मन्पुराणज्ञानसंभवम्
कथयस्वोत्तममते महापुरुषनिर्मितम्
पाविताः स्म त्वया ब्रह्मन्पुण्यां कथयता कथाम् ६
वैशम्पायन उवाच
कथयिष्यामि ते सर्वं पुराणं वेदसंमितम्
जगौ यद्भगवान्व्यासो राज्ञो धर्मसुतस्य वै ७
श्रुत्वाश्वशिरसो मूर्तिं देवस्य हरिमेधसः
उत्पन्नसंशयो राजा तमेव समचोदयत् ८
युधिष्ठिर उवाच
यत्तद्दर्शितवान्ब्रह्मा देवं हयशिरोधरम्
किमर्थं तत्समभवद्वपुर्देवोपकल्पितम् ९
व्यास उवाच
यत्किंचिदिह लोके वै देहबद्धं विशां पते
सर्वं पञ्चभिराविष्टं भूतैरीश्वरबुद्धिजैः १०
ईश्वरो हि जगत्स्रष्टा प्रभुर्नारायणो विराट्
भूतान्तरात्मा वरदः सगुणो निर्गुणोऽपि च
भूतप्रलयमव्यक्तं शृणुष्व नृपसत्तम ११
धरण्यामथ लीनायामप्सु चैकार्णवे पुरा
ज्योतिर्भूते जले चापि लीने ज्योतिषि चानिले १२
वायौ चाकाशसंलीने आकाशे च मनोनुगे
व्यक्ते मनसि संलीने व्यक्ते चाव्यक्ततां गते १३
अव्यक्ते पुरुषं याते पुंसि सर्वगतेऽपि च
तम एवाभवत्सर्वं न प्राज्ञायत किंचन १४
तमसो ब्रह्म संभूतं तमोमूलमृतात्मकम्
तद्विश्वभावसंज्ञान्तं पौरुषीं तनुमास्थितम् १५
सोऽनिरुद्ध इति प्रोक्तस्तत्प्रधानं प्रचक्षते
तदव्यक्तमिति ज्ञेयं त्रिगुणं नृपसत्तम १६
विद्यासहायवान्देवो विष्वक्सेनो हरिः प्रभुः
अप्स्वेव शयनं चक्रे निद्रायोगमुपागतः
जगतश्चिन्तयन्सृष्टिं चित्रां बहुगुणोद्भवाम् १७

तस्य चिन्तयतः सृष्टिं महानात्मगुणः स्मृतः
अहंकारस्ततो जातो ब्रह्मा शुभचतुर्मुखः
हिरण्यगर्भो भगवान्सर्वलोकपितामहः १८
पद्मेऽनिरुद्धात्संभूतस्तदा पद्मनिभेक्षणः
सहस्रपत्रे द्युतिमानुपविष्टः सनातनः १९
ददृशेऽद्भुतसंकाशे लोकानापोमयान्प्रभुः
सत्त्वस्थः परमेष्ठी स ततो भूतगणान्सृजत् २०
पूर्वमेव च पद्मस्य पत्रे सूर्यांशुसप्रभे
नारायणकृतौ बिन्दू अपामास्तां गुणोत्तरौ २१
तावपश्यत्स भगवाननादिनिधनोऽच्युतः
एकस्तत्राभवद्बिन्दुर्मध्वाभो रुचिरप्रभः २२
स तामसो मधुर्जातस्तदा नारायणाज्ञया
कठिनस्त्वपरो बिन्दुः कैटभो राजसस्तु सः २३
तावभ्यधावतां श्रेष्ठौ तमोरजगुणान्वितौ
बलवन्तौ गदाहस्तौ पद्मनालानुसारिणौ २४
ददृशातेऽरविन्दस्थं ब्रह्माणममितप्रभम्
सृजन्तं प्रथमं वेदांश्चतुरश्चारुविग्रहान् २५
ततो विग्रहवन्तौ तौ वेदान्दृष्ट्वासुरोत्तमौ
सहसा जगृहतुर्वेदान्ब्रह्मणः पश्यतस्तदा २६
अथ तौ दानवश्रेष्ठौ वेदान्गृह्य सनातनान्
रसां विविशतुस्तूर्णमुदक्पूर्वे महोदधौ २७
ततो हृतेषु वेदेषु ब्रह्मा कश्मलमाविशत्
ततो वचनमीशानं प्राह वेदैर्विनाकृतः २८
वेदा मे परमं चक्षुर्वेदा मे परमं बलम्
वेदा मे परमं धाम वेदा मे ब्रह्म चोत्तमम् २९
मम वेदा हृताः सर्वे दानवाभ्यां बलादितः
अन्धकारा हि मे लोका जाता वेदैर्विनाकृताः
वेदानृते हि किं कुर्यां लोकान्वै स्रष्टुमुद्यतः ३०
अहो बत महद्दुःखं वेदनाशनजं मम
प्राप्तं दुनोति हृदयं तीव्रशोकाय रन्धयन् ३१

को हि शोकार्णवे मग्नं मामितोऽद्य समुद्धरेत्
वेदांस्तानानयेन्नष्टान्कस्य चाहं प्रियो भवे ३२
इत्येवं भाषमाणस्य ब्रह्मणो नृपसत्तम
हरेः स्तोत्रार्थमुद्भूता बुद्धिर्बुद्धिमतां वर
ततो जगौ परं जप्यं साञ्जलिप्रग्रहः प्रभुः ३३
नमस्ते ब्रह्महृदय नमस्ते मम पूर्वज
लोकाद्य भुवनश्रेष्ठ सांख्ययोगनिधे विभो ३४
व्यक्ताव्यक्तकराचिन्त्य क्षेमं पन्थानमास्थित
विश्वभुक्सर्वभूतानामन्तरात्मन्नयोनिज ३५
अहं प्रसादजस्तुभ्यं लोकधाम्ने स्वयंभुवे
त्वत्तो मे मानसं जन्म प्रथमं द्विजपूजितम् ३६
चाक्षुषं वै द्वितीयं मे जन्म चासीत्पुरातनम्
त्वत्प्रसादाच्च मे जन्म तृतीयं वाचिकं महत् ३७
त्वत्तः श्रवणजं चापि चतुर्थं जन्म मे विभो
नासिक्यं चापि मे जन्म त्वत्तः पञ्चममुच्यते ३८
अण्डजं चापि मे जन्म त्वत्तः षष्ठं विनिर्मितम्
इदं च सप्तमं जन्म पद्मजं मेऽमितप्रभ ३९
सर्गे सर्गे ह्यहं पुत्रस्तव त्रिगुणवर्जितः
प्रथितः पुण्डरीकाक्ष प्रधानगुणकल्पितः ४०
त्वमीश्वरस्वभावश्च स्वयंभूः पुरुषोत्तमः
त्वया विनिर्मितोऽह वै वेदचक्षुर्वयोतिगः ४१
ते मे वेदा हृताश्चक्षुरन्धो जातोऽस्मि जागृहि
ददस्व चक्षुषी मह्यं प्रियोऽह ते प्रियोऽसि मे ४२
एवं स्तुतः स भगवान्पुरुषः सर्वतोमुखः
जहौ निद्रामथ तदा वेदकार्यार्थमुद्यतः
एश्वरेण प्रयोगेण द्वितीयां तनुमास्थितः ४३
सुनासिकेन कायेन भूत्वा चन्द्रप्रभस्तदा
कृत्वा हयशिरः शुभ्रं वेदानामालयं प्रभुः ४४
तस्य मूर्धा समभवद्द्यौः सनक्षत्रतारका
केशाश्चास्याभवन्दीर्घा रवेरंशुसमप्रभाः ४५

कर्णावाकाशपाताले ललाटं भूतधारिणी
गङ्गा सरस्वती पुण्या भ्रूवावास्तां महानदी ४६
चक्षुषी सोमसूर्यौ ते नासा संध्या पुनः स्मृता
ॐकारस्त्वथ संस्कारो विद्युज्जिह्वा च निर्मिता ४७
दन्ताश्च पितरो राजन्सोमपा इति विश्रुताः
गोलोको ब्रह्मलोकश्च ओष्ठावास्तां महात्मनः
ग्रीवा चास्याभवद्राजन्कालरात्रिर्गुणोत्तरा ४८
एतद्धयशिरः कृत्वा नानामूर्तिभिरावृतम्
अन्तर्दधे स विश्वेशो विवेश च रसां प्रभुः ४९
रसां पुनः प्रविष्टश्च योगं परममास्थितः
शैक्षं स्वरं समास्थाय ओमिति प्रासृजत्स्वरम् ५०
स स्वरः सानुनादी च सर्वगः स्निग्ध एव च
बभूवान्तर्महीभूतः सर्वभूतगुणोदितः ५१
ततस्तावसुरौ कृत्वा वेदान्समयबन्धनान्
रसातले विनिक्षिप्य यतः शब्दस्ततो द्रुतौ ५२
एतस्मिन्नन्तरे राजन्देवो हयशिरोधरः
जग्राह वेदानखिलान्रसातलगतान्हरिः
प्रादाच्च ब्रह्मणे भूयस्ततः स्वां प्रकृतिं गतः ५३
स्थापयित्वा हयशिर उदक्पूर्वे महोदधौ
वेदानामालयश्चापि बभूवाश्वशिरास्ततः ५४
अथ किंचिदपश्यन्तौ दानवौ मधुकैटभौ
पुनराजग्मतुस्तत्र वेगितौ पश्यतां च तौ
यत्र वेदा विनिक्षिप्तास्तत्स्थानं शून्यमेव च ५५
तत उत्तममास्थाय वेगं बलवतां वरौ
पुनरुत्तस्थतुः शीघ्रं रसानामालयात्तदा
ददृशाते च पुरुषं तमेवादिकरं प्रभुम् ५६
श्वेतं चन्द्रविशुद्धाभमनिरुद्धतनौ स्थितम्
भूयोऽप्यमितविक्रान्तं निद्रायोगमुपागतम् ५७
आत्मप्रमाणरचिते अपामुपरि कल्पिते
शयने नागभोगाढ्ये ज्वालामालासमावृते ५८

निष्कल्मषेण सत्त्वेन संपन्नं रुचिरप्रभम्
तं दृष्ट्वा दानवेन्द्रौ तौ महाहासममुञ्चताम् ५९
ऊचतुश्च समाविष्टौ रजसा तमसा च तौ
अयं स पुरुषः श्वेतः शेते निद्रामुपागतः ६०
अनेन नूनं वेदानां कृतमाहरणं रसात्
कस्यैष को नु खल्वेष किं च स्वपिति भोगवान् ६१
इत्युच्चारितवाक्यौ तौ बोधयामासतुर्हरिम्
युद्धार्थिनौ तु विज्ञाय विबुद्धः पुरुषोत्तमः ६२
निरीक्ष्य चासुरेन्द्रौ तौ ततो युद्धे मनो दधे
अथ युद्धं समभवत्तयोर्नारायणस्य च ६३
रजस्तमोविष्टतनू तावुभौ मधुकैटभौ
ब्रह्मणोपचितिं कुर्वञ्जघान मधुसूदनः ६४
ततस्तयोर्वधेनाशु वेदापहरणेन च
शोकापनयनं चक्रे ब्रह्मणः पुरुषोत्तमः ६५
ततः परिवृतो ब्रह्मा हतारिर्वेदसत्कृतः
निर्ममे स तदा लोकान्कृत्स्नान्स्थावरजङ्गमान् ६६
दत्त्वा पितामहायाग्र्यां बुद्धिं लोकविसर्गिकीम्
तत्रैवान्तर्दधे देवो यत एवागतो हरिः ६७
तौ दानवौ हरिर्हत्वा कृत्वा हयशिरस्तनुम्
पुनः प्रवृत्तिधर्मार्थं तामेव विदधे तनुम् ६८
एवमेष महाभागो बभूवाश्वशिरा हरिः
पौराणमेतदाख्यातं रूपं वरदमैश्वरम् ६९
यो ह्येतद्ब्राह्मणो नित्यं शृणुयाद्धारयेत वा
न तस्याध्ययनं नाशमुपगच्छेत्कदाचन ७०
आराध्य तपसोग्रेण देवं हयशिरोधरम्
पञ्चालेन क्रमः प्राप्तो रामेण पथि देशिते ७१
एतद्धयशिरो राजन्नाख्यानं तव कीर्तितम्
पुराणं वेदसमितं यन्मां त्वं परिपृच्छसि ७२
यां यामिच्छेत्तनुं देवः कर्तुं कार्यविधौ क्वचित्
तां तां कुर्याद्विकुर्वाणः स्वयमात्मानमात्मना ७३

एष वेदनिधिः श्रीमानेष वै तपसो निधिः
एष योगश्च सांख्यं च ब्रह्म चाग्र्यं हरिर्विभुः ७४
नारायणपरा वेदा यज्ञा नारायणात्मकाः
तपो नारायणपरं नारायणपरा गतिः ७५
नारायणपरं सत्यमृतं नारायणात्मकम्
नारायणपरो धर्मः पुनरावृत्तिदुर्लभः ७६
प्रवृत्तिलक्षणश्चैव धर्मो नारायणात्मकः
नारायणात्मको गन्धो भूमौ श्रेष्ठतमः स्मृतः ७७
अपां चैव गुणो राजन्रसो नारायणात्मकः
ज्योतिषां च गुणो रूपं स्मृतं नारायणात्मकम् ७८
नारायणात्मकश्चापि स्पर्शो वायुगुणः स्मृतः
नारायणात्मकश्चापि शब्द आकाशसंभवः ७९
मनश्चापि ततो भूतमव्यक्तगुणलक्षणम्
नारायणपरः कालो ज्योतिषामयनं च यत् ८०
नारायणपरा कीर्तिः श्रीश्च लक्ष्मीश्च देवताः
नारायणपरं सांख्यं योगो नारायणात्मकः ८१
कारणं पुरुषो येषां प्रधानं चापि कारणम्
स्वभावश्चैव कर्माणि दैवं येषां च कारणम् ८२
पञ्चकारणसंख्यातो निष्ठा सर्वत्र वै हरिः
तत्त्वं जिज्ञासमानानां हेतुभिः सर्वतोमुखैः ८३
तत्त्वमेको महायोगी हरिर्नारायणः प्रभुः
सब्रह्मकानां लोकानामृषीणां च महात्मनाम् ८४
सांख्यानां योगिनां चापि यतीनामात्मवेदिनाम्
मनीषितं विजानाति केशवो न तु तस्य ते ८५
ये केचित्सर्वलोकेषु दैवं पित्र्यं च कुर्वते
दानानि च प्रयच्छन्ति तप्यन्ति च तपो महत् ८६
सर्वेषामाश्रयो विष्णुरैश्वरं विधिमास्थितः
सर्वभूतकृतावासो वासुदेवेति चोच्यते ८७
अयं हि नित्यः परमो महर्षिर्महाविभूतिर्गुणवान्निर्गुणाख्यः
गुणैश्च संयोगमुपैति शीघ्रं कालो यथर्तावृतुसंप्रयुक्तः ८८

नैवास्य विन्दन्ति गतिं महात्मनो न चागतिं कश्चिदिहानुपश्यति
ज्ञानात्मकाः संयमिनो महर्षयः पश्यन्ति नित्यं पुरुषं गुणाधिकम् ८९
इति श्रीमहाभारते शान्तिपर्वणि पञ्चत्रिंशदधिकत्रिशततमोऽध्यायः ३३५

## षट्त्रिंशदधिकत्रिशततमोऽध्यायः

जनमेजय उवाच
अहो ह्येकान्तिनः सर्वान्प्रीणाति भगवान्हरिः
विधिप्रयुक्तां पूजां च गृह्णाति भगवान्स्वयम् १
ये तु दग्धेन्धना लोके पुण्यपापविवर्जिताः
तेषां त्वयाभिनिर्दिष्टा पारंपर्यागता गतिः २
चतुर्थ्यां चैव ते गत्यां गच्छन्ति पुरुषोत्तमम्
एकान्तिनस्तु पुरुषा गच्छन्ति परमं पदम् ३
नूनमेकान्तधर्मोऽय श्रेष्ठो नारायणप्रियः
अगत्वा गतयस्तिस्रो यद्गच्छत्यव्ययं हरिम् ४
सहोपनिषदान्वेदान्ये विप्राः सम्यगास्थिताः
पठन्ति विधिमास्थाय ये चापि यतिधर्मिणः ५
तेभ्यो विशिष्टां जानामि गतिमेकान्तिनां नृणाम्
केनैष धर्मः कथितो देवेन ऋषिणापि वा ६
एकान्तिनां च का चर्या कदा चोत्पादिता विभो
एतन्मे संशयं छिन्धि परं कौतूहलं हि मे ७
वैशम्पायन उवाच
समुपोढेष्वनीकेषु कुरुपाण्डवयोर्मृधे
अर्जुने विमनस्के च गीता भगवता स्वयम् ८
आगतिश्च गतिश्चैव पूर्वं ते कथिता मया
गहनो ह्येष धर्मो वै दुर्विज्ञेयोऽकृतात्मभिः ९
संमितः सामवेदेन पुरैवादियुगे कृतः
धार्यते स्वयमीशेन राजन्नारायणेन ह १०
एतमर्थं महाराज पृष्टः पार्थेन नारदः
ऋषिमध्ये महाभागः शृण्वतोः कृष्णभीष्मयोः ११
गुरुणा च ममाप्येष कथितो नृपसत्तम

यथा तु कथितस्तत्र नारदेन तथा शृणु १२
यदासीन्मानसं जन्म नारायणमुखोद्गतम्
ब्रह्मणः पृथिवीपाल तदा नारायणः स्वयम्
तेन धर्मेण कृतवान्दैवं पित्र्यं च भारत १३
फेनपा ऋषयश्चैव तं धर्मं प्रतिपेदिरे
वैखानसाः फेनपेभ्यो धर्ममेतं प्रपेदिरे
वैखानसेभ्यः सोमस्तु ततः सोऽन्तर्दधे पुनः १४
यदासीच्चाक्षुषं जन्म द्वितीयं ब्रह्मणो नृप
तदा पितामहात्सोमादेतं धर्ममजानत
नारायणात्मकं राजन्रुद्राय प्रददौ च सः १५
ततो योगस्थितो रुद्रः पुरा कृतयुगे नृप
वालखिल्यानृषीन्सर्वान्धर्ममेतमपाठयत्
अन्तर्दधे ततो भूयस्तस्य देवस्य मायया १६
तृतीयं ब्रह्मणो जन्म यदासीद्वाचिकं महत्
तत्रैष धर्मः संभूतः स्वयं नारायणान्नृप १७
सुपर्णो नाम तमृषिः प्राप्तवान्पुरुषोत्तमात्
तपसा वै सुतप्तेन दमेन नियमेन च १८
त्रिः परिक्रान्तवानेतत्सुपर्णो धर्ममुत्तमम्
यस्मात्तस्माद्व्रतं ह्येतत्त्रिसौपर्णमिहोच्यते १९
ऋग्वेदपाठपठितं व्रतमेतद्धि दुश्चरम्
सुपर्णाच्चाप्यधिगतो धर्म एष सनातनः २०
वायुना द्विपदां श्रेष्ठ प्रथितो जगदायुषा
वायोः सकाशात्प्राप्तश्च ऋषिभिर्विघसाशिभिः २१
तेभ्यो महोदधिश्चैनं प्राप्तवान्धर्ममुत्तमम्
ततो सोऽन्तर्दधे भूयो नारायणसमाहितः २२
यदा भूयः श्रवणजा सृष्टिरासीन्महात्मनः
ब्रह्मणः पुरुषव्याघ्र तत्र कीर्तयतः शृणु २३
जगत्स्रष्टुमना देवो हरिर्नारायणः स्वयम्
चिन्तयामास पुरुषं जगत्सर्गकरं प्रभुः २४
अथ चिन्तयतस्तस्य कर्णाभ्यां पुरुषं सृतः

प्रजासर्गकरो ब्रह्मा तमुवाच जगत्पतिः २५
सृज प्रजाः पुत्र सर्वा मुखतः पादतस्तथा
श्रेयस्तव विधास्यामि बलं तेजश्च सुव्रत २६
धर्मं च मत्तो गृह्णीष्व सात्वतं नाम नामतः
तेन सर्वं कृतयुगं स्थापयस्व यथाविधि २७
ततो ब्रह्मा नमश्चक्रे देवाय हरिमेधसे
धर्मं चाग्र्यं स जग्राह सरहस्यं ससंग्रहम्
आरण्यकेन सहितं नारायणमुखोद्गतम् २८
उपदिश्य ततो धर्मं ब्रह्मणेऽमिततेजसे
तं कार्तयुगधर्माणं निराशीःकर्मसंज्ञितम्
जगाम तमसः पारं यत्राव्यक्तं व्यवस्थितम् २९
ततोऽथ वरदो देवो ब्रह्मालोकपितामहः
असृजत्स तदा लोकान्कृत्स्नान्स्थावरजङ्गमान् ३०
ततः प्रावर्तत तदा आदौ कृतयुगं शुभम्
ततो हि सात्वतो धर्मो व्याप्य लोकानवस्थितः ३१
तेनैवाद्येन धर्मेण ब्रह्मा लोकविसर्गकृत्
पूजयामास देवेशं हरिं नारायणं प्रभुम् ३२
धर्मप्रतिष्ठाहेतोश्च मनुं स्वारोचिषं ततः
अध्यापयामास तदा लोकानां हितकाम्यया ३३
ततः स्वारोचिषः पुत्रं स्वयं शङ्खपदं नृप
अध्यापयत्पुराव्यग्रः सर्वलोकपतिर्विभुः ३४
ततः शङ्खपदश्चापि पुत्रमात्मजमौरसम्
दिशापालं सुधर्माणमध्यापयत भारत
ततः सोऽन्तर्दधे भूयः प्राप्ते त्रेतायुगे पुनः ३५
नासिक्यजन्मनि पुरा ब्रह्मणः पार्थिवोत्तम
धर्ममेतं स्वयं देवो हरिर्नारायणः प्रभुः
उज्जगारारविन्दाक्षो ब्रह्मणः पश्यतस्तदा ३६
सनत्कुमारो भगवांस्ततः प्राधीतवान्नृप
सनत्कुमारादपि च वीरणो वै प्रजापतिः
कृतादौ कुरुशार्दूल धर्ममेतमधीतवान् ३७

वीरणश्चाप्यधीत्यैनं रौच्याय मनवे ददौ
रौच्यः पुत्राय शुद्धाय सुव्रताय सुमेधसे ३८
कुक्षिनाम्नेऽथ प्रददौ दिशां पालाय धर्मिणे
ततः सोऽन्तर्दधे भूयो नारायणमुखोद्गतः ३९
अण्डजे जन्मनि पुनर्ब्रह्मणे हरियोनये
एष धर्मः समुद्भूतो नारायणमुखात्पुनः ४०
गृहीतो ब्रह्मणा राजन्प्रयुक्तश्च यथाविधि
अध्यापिताश्च मुनयो नाम्ना बर्हिषदो नृप ४१
बर्हिषद्भ्यश्च संक्रान्तः सामवेदान्तगं द्विजम्
ज्येष्ठं नाम्नाभिविख्यातं ज्येष्ठसामव्रतो हरिः ४२
ज्येष्ठाच्चाप्यनुसंक्रान्तो राजानमविकम्पनम्
अन्तर्दधे ततो राजन्नेष धर्मः प्रभोर्हरेः ४३
यदिदं सप्तमं जन्म पद्मजं ब्रह्मणो नृप
तत्रैष धर्मः कथितः स्वयं नारायणेन हि ४४
पितामहाय शुद्धाय युगादौ लोकधारिणे
पितामहश्च दक्षाय धर्ममेतं पुरा ददौ ४५
ततो ज्येष्ठे तु दौहित्रे प्रादाद्दक्षो नृपोत्तम
आदित्ये सवितुर्ज्येष्ठे विवस्वाञ्जगृहे ततः ४६
त्रेतायुगादौ च पुनर्विवस्वान्मनवे ददौ
मनुश्च लोकभूत्यर्थं सुतायेक्ष्वाकवे ददौ ४७
इक्ष्वाकुणा च कथितो व्याप्य लोकानवस्थितः
गमिष्यति क्षयान्ते च पुनर्नारायणं नृप ४८
व्रतिनां चापि यो धर्मः स ते पूर्वं नृपोत्तम
कथितो हरिगीतासु समासविधिकल्पितः ४९
नारदेन तु संप्राप्तः सरहस्यः ससंग्रहः
एष धर्मो जगन्नाथात्साक्षान्नारायणान्नृप ५०
एवमेष महान्धर्म आद्यो राजन्सनातनः
दुर्विज्ञेयो दुष्करश्च सात्वतैर्धार्यते सदा ५१
धर्मज्ञानेन चैतेन सुप्रयुक्तेन कर्मणा
अहिंसाधर्मयुक्तेन प्रीयते हरिरीश्वरः ५२

एकव्यूहविभागो वा क्वचिद्द्विव्यूहसंज्ञितः
त्रिव्यूहश्चापि संख्यातश्चतुर्व्यूहश्च दृश्यते ५३
हरिरेव हि क्षेत्रज्ञो निर्ममो निष्कलस्तथा
जीवश्च सर्वभूतेषु पञ्चभूतगुणातिगः ५४
मनश्च प्रथितं राजन्पञ्चेन्द्रियसमीरणम्
एष लोकनिधिर्धीमानेष लोकविसर्गकृत् ५५
अकर्ता चैव कर्ता च कार्यं कारणमेव च
यथेच्छति तथा राजन्क्रीडते पुरुषोऽव्ययः ५६
एष एकान्तिधर्मस्ते कीर्तितो नृपसत्तम
मया गुरुप्रसादेन दुर्विज्ञेयोऽकृतात्मभिः
एकान्तिनो हि पुरुषा दुर्लभा बहवो नृप ५७
यद्येकान्तिभिराकीर्णं जगत्स्यात्कुरुनन्दन
अहिंसकैरात्मविद्भिः सर्वभूतहिते रतैः
भवेत्कृतयुगप्राप्तिराशीःकर्मविवर्जितैः ५८
एवं स भगवान्व्यासो गुरुर्मम विशां पते
कथयामास धर्मज्ञो धर्मराज्ञे द्विजोत्तमः ५९
ऋषीणां संनिधौ राजञ्शृण्वतोः कृष्णभीष्मयोः
तस्याप्यकथयत्पूर्वं नारदः सुमहातपाः ६०
देवं परमकं ब्रह्म श्वेतं चन्द्राभमच्युतम्
यत्र चैकान्तिनो यान्ति नारायणपरायणाः ६१
जनमेजय उवाच
एवं बहुविधं धर्मं प्रतिबुद्धैर्निषेवितम्
न कुर्वन्ति कथं विप्रा अन्ये नानाव्रते स्थिताः ६२
वैशम्पायन उवाच
तिस्रः प्रकृतयो राजन्देहबन्धेषु निर्मिताः
सात्त्विकी राजसी चैव तामसी चेति भारत ६३
देहबन्धेषु पुरुषः श्रेष्ठः कुरुकुलोद्वह
सात्त्विकः पुरुषव्याघ्र भवेन्मोक्षार्थनिश्चितः ६४
अत्रापि स विजानाति पुरुषं ब्रह्मवर्तिनम्
नारायणपरो मोक्षस्ततो वै सात्त्विकः स्मृतः ६५

मनीषितं च प्राप्नोति चिन्तयन्पुरुषोत्तमम्
एकान्तभक्तिः सततं नारायणपरायणः ६६
मनीषिणो हि ये केचिद्यतयो मोक्षकाङ्क्षिणः
तेषां वै छिन्नतृष्णानां योगक्षेमवहो हरिः ६७
जायमानं हि पुरुषं यं पश्येन्मधुसूदनः
सात्त्विकस्तु स विज्ञेयो भवेन्मोक्षे च निश्चितः ६८
सांख्ययोगेन तुल्यो हि धर्म एकान्तसेवितः
नारायणात्मके मोक्षे ततो यान्ति परां गतिम् ६९
नारायणेन दृष्टश्च प्रतिबुद्धो भवेत्पुमान्
एवमात्मेच्छया राजन्प्रतिबुद्धो न जायते ७०
राजसी तामसी चैव व्यामिश्रे प्रकृती स्मृते
तदात्मकं हि पुरुषं जायमानं विशां पते
प्रवृत्तिलक्षणैर्युक्तं नावेक्षति हरिः स्वयम् ७१
पश्यत्येनं जायमानं ब्रह्मा लोकपितामहः
रजसा तमसा चैव मानुषं समभिप्लुतम् ७२
कामं देवाश्च ऋषयः सत्त्वस्था नृपसत्तम
हीनाः सत्त्वेन सूक्ष्मेण ततो वैकारिकाः स्मृताः ७३
जनमेजय उवाच
कथं वैकारिको गच्छेत्पुरुषः पुरुषोत्तमम् ७४
वैशम्पायन उवाच
सुसूक्ष्मसत्त्वसंयुक्तं संयुक्तं त्रिभिरक्षरैः
पुरुषः पुरुषं गच्छेन्निष्क्रियः पञ्चविंशकम् ७५
एवमेकं सांख्ययोगं वेदारण्यकमेव च
परस्पराङ्गान्येतानि पञ्चरात्रं च कथ्यते
एष एकान्तिनां धर्मो नारायणपरात्मकः ७६
यथा समुद्रात्प्रसृता जलौघास्तमेव राजन्पुनराविशन्ति
इमे तथा ज्ञानमहाजलौघा नारायणं वै पुनराविशन्ति ७७
एष ते कथितो धर्मः सात्वतो यदुबान्धव
कुरुष्वैनं यथान्यायं यदि शक्नोषि भारत ७८
एवं हि सुमहाभागो नारदो गुरवे मम

श्वेतानां यतिनामाह एकान्तगतिमव्ययाम् ७९
व्यासश्चाकथयत्प्रीत्या धर्मपुत्राय धीमते
स एवायं मया तुभ्यमाख्यातः प्रसृतो गुरोः ८०
इत्थं हि दुश्चरो धर्म एष पार्थिवसत्तम
यथैव त्वं तथैवान्ये न भजन्ति विमोहिताः ८१
कृष्ण एव हि लोकानां भावनो मोहनस्तथा
संहारकारकश्चैव कारणं च विशां पते ८२
इति श्रीमहाभारते शान्तिपर्वणि षट्त्रिंशदधिकत्रिशततमोऽध्यायः ३३६

## सप्तत्रिंशदधिकत्रिशततमोऽध्यायः

जनमेजय उवाच
सांख्यं योगं पञ्चरात्रं वेदारण्यकमेव च
ज्ञानान्येतानि ब्रह्मर्षे लोकेषु प्रचरन्ति ह १
किमेतान्येकनिष्ठानि पृथङ्निष्ठानि वा मुने
प्रब्रूहि वै मया पृष्टः प्रवृत्तिं च यथाक्रमम् २
वैशम्पायन उवाच
जज्ञे बहुज्ञं परमत्युदारं यं द्वीपमध्ये सुतमात्मवन्तम्
पराशराद्गन्धवती महर्षिं तस्मै नमोऽज्ञानतमोनुदाय ३
पितामहाद्यं प्रवदन्ति षष्ठं महर्षिमार्षेयविभूतियुक्तम्
नारायणस्यांशजमेकपुत्रं द्वैपायनं वेदमहानिधानम् ४
तमादिकालेषु महाविभूतिर्नारायणो ब्रह्ममहानिधानम्
ससर्ज पुत्रार्थमुदारतेजा व्यासं महात्मानमजः पुराणः ५
जनमेजय उवाच
त्वयैव कथितं पूर्वं संभवो द्विजसत्तम
वसिष्ठस्य सुतः शक्तिः शक्तेः पुत्रः पराशरः ६
पराशरस्य दायादः कृष्णद्वैपायनो मुनिः
भूयो नारायणसुतं त्वमेवैनं प्रभाषसे ७
किमतः पूर्वजं जन्म व्यासस्यामिततेजसः
कथयस्वोत्तममते जन्म नारायणोद्भवम् ८
वैशम्पायन उवाच

वेदार्थान्वेत्तुकामस्य धर्मिष्ठस्य तपोनिधेः
गुरोर्मे ज्ञाननिष्ठस्य हिमवत्पाद आसतः ९
कृत्वा भारतमाख्यानं तपःश्रान्तस्य धीमतः
शुश्रूषां तत्परा राजन्कृतवन्तो वयं तदा १०
सुमन्तुर्जैमिनिश्चैव पैलश्च सुदृढव्रतः
अहं चतुर्थः शिष्यो वै शुको व्यासात्मजस्तथा ११
एभिः परिवृतो व्यासः शिष्यैः पञ्चभिरुत्तमैः
शुशुभे हिमवत्पादे भूतैर्भूतपतिर्यथा १२
वेदानावर्तयन्साङ्गान्भारतार्थांश्च सर्वशः
तमेकमनसं दान्तं युक्ता वयमुपास्महे १३
कथान्तरेऽथ कस्मिंश्चित्पृष्टोऽस्माभिर्द्विजोत्तमः
वेदार्थान्भारतार्थांश्च जन्म नारायणात्तथा १४
स पूर्वमुक्त्वा वेदार्थान्भारतार्थांश्च तत्त्ववित्
नारायणादिदं जन्म व्याहर्तुमुपचक्रमे १५
शृणुध्वमाख्यानवरमेतदार्षेयमुत्तमम्
आदिकालोद्भवं विप्रास्तपसाधिगतं मया १६
प्राप्ते प्रजाविसर्गे वै सप्तमे पद्मसंभवे
नारायणो महायोगी शुभाशुभविवर्जितः १७
ससृजे नाभितः पुत्रं ब्रह्माणममितप्रभम्
ततः स प्रादुरभवदथैनं वाक्यमब्रवीत् १८
मम त्वं नाभितो जातः प्रजासर्गकरः प्रभुः
सृज प्रजास्त्वं विविधा ब्रह्मन्सजडपण्डिताः १९
स एवमुक्तो विमुखश्चिन्ताव्याकुलमानसः
प्रणम्य वरदं देवमुवाच हरिमीश्वरम् २०
का शक्तिर्मम देवेश प्रजाः स्रष्टुं नमोऽस्तु ते
अप्रज्ञावानहं देव विधत्स्व यदनन्तरम् २१
स एवमुक्तो भगवान्भूत्वाथान्तर्हितस्ततः
चिन्तयामास देवेशो बुद्धिं बुद्धिमतां वरः २२
स्वरूपिणी ततो बुद्धिरुपतस्थे हरिं प्रभुम्
योगेन चैनां निर्योगः स्वयं नियुयुजे तदा २३

स तामैश्वर्ययोगस्थां बुद्धिं शक्तिमतीं सतीम्
उवाच वचनं देवो बुद्धिं वै प्रभुरव्ययः २४
ब्रह्माणं प्रविशस्वेति लोकसृष्ट्यर्थसिद्धये
ततस्तमीश्वरादिष्टा बुद्धिः क्षिप्रं विवेश सा २५
अथैनं बुद्धिसंयुक्तं पुनः स ददृशे हरिः
भूयश्चैनं वचः प्राह सृजेमा विविधाः प्रजाः २६
एवमुक्त्वा स भगवांस्तत्रैवान्तरधीयत
प्राप चैवं मुहूर्तेन स्वस्थानं देवसंज्ञितम् २७
तां चैव प्रकृतिं प्राप्य एकीभावगतोऽभवत्
अथास्य बुद्धिरभवत्पुनरन्या तदा किल २८
सृष्टा इमाः प्रजाः सर्वा ब्रह्मणा परमेष्ठिना
दैत्यदानवगन्धर्वरक्षोगणसमाकुलाः
जाता हीयं वसुमती भाराक्रान्ता तपस्विनी २९
बहवो बलिनः पृथ्व्यां दैत्यदानवराक्षसाः
भविष्यन्ति तपोयुक्ता वरान्प्राप्स्यन्ति चोत्तमान् ३०
अवश्यमेव तैः सर्वैर्वरदानेन दर्पितैः
बाधितव्याः सुरगणा ऋषयश्च तपोधनाः
तत्र न्याय्यमिदं कर्तुं भारावतरणं मया ३१
अथ नानासमुद्भूतैर्वसुधायां यथाक्रमम्
निग्रहेण च पापानां साधूनां प्रग्रहेण च ३२
इमां तपस्विनीं सत्यां धारयिष्यामि मेदिनीम्
मया ह्येषा हि ध्रियते पातालस्थेन भोगिना ३३
मया धृता धारयति जगद्धि सचराचरम्
तस्मात्पृथ्व्याः परित्राणं करिष्ये संभवं गतः ३४
एवं स चिन्तयित्वा तु भगवान्मधुसूदनः
रूपाण्यनेकान्यसृजत्प्रादुर्भावभवाय सः ३५
वाराहं नारसिंहं च वामनं मानुषं तथा
एभिर्मया निहन्तव्या दुर्विनीताः सुरारयः ३६
अथ भूयो जगत्स्रष्टा भोःशब्देनानुनादयन्
सरस्वतीमुच्चचार तत्र सारस्वतोऽभवत् ३७

अपान्तरतमा नाम सुतो वाक्संभवो विभोः
भूतभव्यभविष्यज्ञः सत्यवादी दृढव्रतः ३८
तमुवाच नतं मूर्ध्ना देवानामादिरव्ययः
वेदाख्याने श्रुतिः कार्या त्वया मतिमतां वर
तस्मात्कुरु यथाज्ञप्तं मयैतद्वचनं मुने ३९
तेन भिन्नास्तदा वेदा मनोः स्वायंभुवेऽन्तरे
ततस्तुतोष भगवान्हरिस्तेनास्य कर्मणा
तपसा च सुतप्तेन यमेन नियमेन च ४०
श्रीभगवानुवाच
मन्वन्तरेषु पुत्र त्वमेवं लोकप्रवर्तकः
भविष्यस्यचलो ब्रह्मन्नप्रधृष्यश्च नित्यशः ४१
पुनस्तिष्ये च संप्राप्ते कुरवो नाम भारताः
भविष्यन्ति महात्मानो राजानः प्रथिता भुवि ४२
तेषां त्वत्तः प्रसूतानां कुलभेदो भविष्यति
परस्परविनाशार्थं त्वामृते द्विजसत्तम ४३
तत्राप्यनेकधा वेदान्भेत्स्यसे तपसान्वितः
कृष्णे युगे च संप्राप्ते कृष्णवर्णो भविष्यसि ४४
धर्माणां विविधानां च कर्ता ज्ञानकरस्तथा
भविष्यसि तपोयुक्तो न च रागाद्विमोक्ष्यसे ४५
वीतरागश्च पुत्रस्ते परमात्मा भविष्यति
महेश्वरप्रसादेन नैतद्वचनमन्यथा ४६
यं मानसं वै प्रवदन्ति पुत्रं पितामहस्योत्तमबुद्धियुक्तम्
वसिष्ठमग्र्यं तपसो निधानं यश्चापि सूर्यं व्यतिरिच्य भाति ४७
तस्यान्वये चापि ततो महर्षिः पराशरो नाम महाप्रभावः
पिता स ते वेदनिधिर्वरिष्ठो महातपा वै तपसो निवासः
कानीनगर्भः पितृकन्यकायां तस्मादृषेस्त्वं भविता च पुत्रः ४८
भूतभव्यभविष्याणां छिन्नसर्वार्थसंशयः
ये ह्यतिक्रान्तकाः पूर्वं सहस्रयुगपर्ययाः ४९
तांश्च सर्वान्मयोद्दिष्टान्द्रक्ष्यसे तपसान्वितः
पुनर्द्रक्ष्यसि चानेकसहस्रयुगपर्ययान् ५०

अनादिनिधनं लोके चक्रहस्तं च मां मुने
अनुध्यानान्मम मुने नैतद्वचनमन्यथा ५१
शनैश्चरः सूर्यपुत्रो भविष्यति मनुर्महान्
तस्मिन्मन्वन्तरे चैव सप्तर्षिगणपूर्वकः
त्वमेव भविता वत्स मत्प्रसादान्न संशयः ५२
व्यास उवाच
एवं सारस्वतमृषिमपान्तरतमं तदा
उक्त्वा वचनमीशानः साधयस्वेत्यथाब्रवीत् ५३
सोऽह तस्य प्रसादेन देवस्य हरिमेधसः
अपान्तरतमा नाम ततो जातोऽज्ञया हरेः
पुनश्च जातो विख्यातो वसिष्ठकुलनन्दनः ५४
तदेतत्कथितं जन्म मया पूर्वकमात्मनः
नारायणप्रसादेन तथा नारायणांशजम् ५५
मया हि सुमहत्तप्तं तपः परमदारुणम्
पुरा मतिमतां श्रेष्ठाः परमेण समाधिना ५६
एतद्वः कथितं सर्वं यन्मां पृच्छथ पुत्रकाः
पूर्वजन्म भविष्यं च भक्तानां स्नेहतो मया ५७
वैशम्पायन उवाच
एष ते कथितः पूर्वं संभवोऽस्मद्गुरोर्नृप
व्यासस्याक्लिष्टमनसो यथा पृष्टः पुनः शृणु ५८
सांख्यं योगं पञ्चरात्रं वेदाः पाशुपतं तथा
ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै ५९
सांख्यस्य वक्ता कपिलः परमर्षिः स उच्यते
हिरण्यगर्भो योगस्य वेत्ता नान्यः पुरातनः ६०
अपान्तरतमाश्चैव वेदाचार्यः स उच्यते
प्राचीनगर्भं तमृषिं प्रवदन्तीह केचन ६१
उमापतिर्भूतपतिः श्रीकण्ठो ब्रह्मणः सुतः
उक्तवानिदमव्यग्रो ज्ञानं पाशुपतं शिवः ६२
पञ्चरात्रस्य कृत्स्नस्य वेत्ता तु भगवान्स्वयम्
सर्वेषु च नृपश्रेष्ठ ज्ञानेष्वेतेषु दृश्यते ६३

यथागमं यथाज्ञानं निष्ठा नारायणः प्रभुः
न चैनमेवं जानन्ति तमोभूता विशां पते ६४
तमेव शास्त्रकर्तारं प्रवदन्ति मनीषिणः
निष्ठां नारायणमृषिं नान्योऽस्तीति च वादिनः ६५
निःसंशयेषु सर्वेषु नित्यं वसति वै हरिः
ससंशयान्हेतुबलान्नाध्यावसति माधवः ६६
पञ्चरात्रविदो ये तु यथाक्रमपरा नृप
एकान्तभावोपगतास्ते हरिं प्रविशन्ति वै ६७
सांख्यं च योगं च सनातने द्वे वेदाश्च सर्वे निखिलेन राजन्
सर्वैः समस्तैर्ऋषिभिर्निरुक्तो नारायणो विश्वमिदं पुराणम् ६८
शुभाशुभं कर्म समीरितं यत्प्रवर्तते सर्वलोकेषु किंचित्
तस्मादृषेस्तद्भवतीति विद्याद्दिव्यन्तरिक्षे भुवि चाप्सु चापि ६९
इति श्रीमहाभारते शान्तिपर्वणि सप्तत्रिंशदधिकत्रिशततमोऽध्यायः ३३७

## अष्टात्रिंशदधिकत्रिशततमोऽध्यायः

जनमेजय उवाच
बहवः पुरुषा ब्रह्मन्नुताहो एक एव तु
को ह्यत्र पुरुषः श्रेष्ठः को वा योनिरिहोच्यते १
वैशम्पायन उवाच
बहवः पुरुषा लोके सांख्ययोगविचारिणाम्
नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह २
बहूनां पुरुषाणां च यथैका योनिरुच्यते
तथा तं पुरुषं विश्वं व्याख्यास्यामि गुणाधिकम् ३
नमस्कृत्वा तु गुरवे व्यासायामिततेजसे
तपोयुक्ताय दान्ताय वन्द्याय परमर्षये ४
इदं पुरुषसूक्तं हि सर्ववेदेषु पार्थिव
ऋतं सत्यं च विख्यातमृषिसिंहेन चिन्तितम् ५
उत्सर्गेणापवादेन ऋषिभिः कपिलादिभिः
अध्यात्मचिन्तामाश्रित्य शास्त्राण्युक्तानि भारत ६
समासतस्तु यद्व्यासः पुरुषैकत्वमुक्तवान्

तत्तेऽह संप्रवक्ष्यामि प्रसादादमितौजसः ७
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
ब्रह्मणा सह संवादं त्र्यम्बकस्य विशां पते ८
क्षीरोदस्य समुद्रस्य मध्ये हाटकसप्रभः
वैजयन्त इति ख्यातः पर्वतप्रवरो नृप ९
तत्राध्यात्मगतिं देव एकाकी प्रविचिन्तयन्
वैराजसदने नित्यं वैजयन्तं निषेवते १०
अथ तत्रासतस्तस्य चतुर्वक्त्रस्य धीमतः
ललाटप्रभवः पुत्रः शिव आगाद्यदृच्छया
आकाशेनैव योगीशः पुरा त्रिनयनः प्रभुः ११
ततः खान्निपपाताशु धरणीधरमूर्धनि
अग्रतश्चाभवत्प्रीतो ववन्दे चापि पादयोः १२
तं पादयोर्निपतितं दृष्ट्वा सव्येन पाणिना
उत्थापयामास तदा प्रभुरेकः प्रजापतिः १३
उवाच चैनं भगवांश्चिरस्यागतमात्मजम्
स्वागतं ते महाबाहो दिष्ट्या प्राप्तोऽसि मेऽन्तिकम् १४
कच्चिते कुशलं पुत्र स्वाध्यायतपसोः सदा
नित्यमुग्रतपास्त्वं हि ततः पृच्छामि ते पुनः १५
रुद्र उवाच
त्वत्प्रसादेन भगवन्स्वाध्यायतपसोर्मम
कुशलं चाव्ययं चैव सर्वस्य जगतस्तथा १६
चिरदृष्टो हि भगवान्वैराजसदने मया
ततोऽह पर्वतं प्राप्तस्त्विमं त्वत्पादसेवितम् १७
कौतूहलं चापि हि मे एकान्तगमनेन ते
नैतत्कारणमल्पं हि भविष्यति पितामह १८
किं नु तत्सदनं श्रेष्ठं क्षुत्पिपासाविवर्जितम्
सुरासुरैरध्युषितमृषिभिश्चामितप्रभैः १९
गन्धर्वैरप्सरोभिश्च सततं संनिषेवितम्
उत्सृज्येमं गिरिवरमेकाकी प्राप्तवानसि २०
ब्रह्मोवाच

वैजयन्तो गिरिवरः सततं सेव्यते मया
अत्रैकाग्रेण मनसा पुरुषश्चिन्त्यते विराट् २१
रुद्र उवाच
बहवः पुरुषा ब्रह्मंस्त्वया सृष्टाः स्वयंभुवा
सृज्यन्ते चापरे ब्रह्मन्स चैकः पुरुषो विराट् २२
को ह्यसौ चिन्त्यते ब्रह्मंस्त्वया वै पुरुषोत्तमः
एतन्मे संशयं ब्रूहि महत्कौतूहलं हि मे २३
ब्रह्मोवाच
बहवः पुरुषाः पुत्र ये त्वया समुदाहृताः
एवमेतदतिक्रान्तं द्रष्टव्यं नैवमित्यपि
आधारं तु प्रवक्ष्यामि एकस्य पुरुषस्य ते २४
बहूनां पुरुषाणां स यथैका योनिरुच्यते
तथा तं पुरुषं विश्वं परमं सुमहत्तमम्
निर्गुणं निर्गुणा भूत्वा प्रविशन्ति सनातनम् २५
इति श्रीमहाभारते शान्तिपर्वणि अष्टात्रिंशदधिकत्रिशततमोऽध्यायः ३३८

## एकोनचत्वारिंशदधिकत्रिशततमोऽध्यायः

ब्रह्मोवाच
शृणु पुत्र यथा ह्येष पुरुषः शाश्वतोऽव्ययः
अक्षयश्चाप्रमेयश्च सर्वगश्च निरुच्यते १
न स शक्यस्त्वया द्रष्टुं मयान्यैर्वापि सत्तम
सगुणो निर्गुणो विश्वो ज्ञानदृश्यो ह्यसौ स्मृतः २
अशरीरः शरीरेषु सर्वेषु निवसत्यसौ
वसन्नपि शरीरेषु न स लिप्यति कर्मभिः ३
ममान्तरात्मा तव च ये चान्ये देहसंज्ञिताः
सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित्क्वचित् ४
विश्वमूर्धा विश्वभुजो विश्वपादाक्षिनासिकः
एकश्चरति क्षेत्रेषु स्वैरचारी यथासुखम् ५
क्षेत्राणि हि शरीराणि बीजानि च शुभाशुभे
तानि वेत्ति स योगात्मा ततः क्षेत्रज्ञ उच्यते ६

नागतिर्न गतिस्तस्य ज्ञेया भूतेन केनचित्
सांख्येन विधिना चैव योगेन च यथाक्रमम् ७
चिन्तयामि गतिं चास्य न गतिं वेद्मि चोत्तमाम्
यथाज्ञानं तु वक्ष्यामि पुरुषं तं सनातनम् ८
तस्यैकत्वं महत्त्वं हि स चैकः पुरुषः स्मृतः
महापुरुषशब्दं स बिभर्त्येकः सनातनः ९
एको हुताशो बहुधा समिध्यते एकः सूर्यस्तपसां योनिरेका
एको वायुर्बहुधा वाति लोके महोदधिश्चाम्भसां योनिरेकः
पुरुषश्चैको निर्गुणो विश्वरूपस्तं निर्गुणं पुरुषं चाविशन्ति १०
हित्वा गुणमयं सर्वं कर्म हित्वा शुभाशुभम्
उभे सत्यानृते त्यक्त्वा एवं भवति निर्गुणः ११
अचिन्त्यं चापि तं ज्ञात्वा भावसूक्ष्मं चतुष्टयम्
विचरेद्यो यतिर्यत्तः स गच्छेत्पुरुषं प्रभुम् १२
एवं हि परमात्मानं केचिदिच्छन्ति पण्डिताः
एकात्मानं तथात्मानमपरेऽध्यात्मचिन्तकाः १३
तत्र यः परमात्मा हि स नित्यं निर्गुणः स्मृतः
स हि नारायणो ज्ञेयः सर्वात्मा पुरुषो हि सः
न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा १४
कर्मात्मा त्वपरो योऽसौ मोक्षबन्धैः स युज्यते
ससप्तदशकेनापि राशिना युज्यते हि सः
एवं बहुविधः प्रोक्तः पुरुषस्ते यथाक्रमम् १५
यत्तत्कृत्स्नं लोकतन्त्रस्य धाम वेद्यं परं बोधनीयं सबोद्धृ
मन्ता मन्तव्यं प्राशिता प्राशितव्यं घ्राता घ्रेयं स्पर्शिता स्पर्शनीयम् १६
द्रष्टा द्रष्टव्यं श्राविता श्रावणीयं ज्ञाता ज्ञेयं सगुणं निर्गुणं च
यद्वै प्रोक्तं गुणसाम्यं प्रधानं नित्यं चैतच्छाश्वतं चाव्ययं च १७
यद्वै सूते धातुराद्यं निधानं तद्वै विप्राः प्रवदन्तेऽनिरुद्धम्
यद्वै लोके वैदिकं कर्म साधु आशीर्युक्तं तद्धि तस्योपभोज्यम् १८
देवाः सर्वे मुनयः साधु दान्तास्तं प्राग्यज्ञैर्यज्ञभागं यजन्ते
अहं ब्रह्मा आद्य ईशः प्रजानां तस्माज्जातस्त्वं च मत्तः प्रसूतः
मत्तो जगज्जङ्गमं स्थावरं च सर्वे वेदाः सरहस्या हि पुत्र १९

चतुर्विभक्तः पुरुषः स क्रीडति यथेच्छति
एवं स एव भगवाञ्ज्ञानेन प्रतिबोधितः २०
एतत्ते कथितं पुत्र यथावदनुपृच्छतः
सांख्यज्ञाने तथा योगे यथावदनुवर्णितम् २१
इति श्रीमहाभारते शान्तिपर्वणि एकोन चत्वारिंशदधिक त्रिशततमोऽध्यायः
३३९

## चत्वारिंशदधिकत्रिशततमोऽध्यायः

युधिष्ठिर उवाच
धर्माः पितामहेनोक्ता मोक्षधर्माश्रिताः शुभाः
धर्ममाश्रमिणां श्रेष्ठं वक्तुमर्हसि मे भवान् १
भीष्म उवाच
सर्वत्र विहितो धर्मः स्वर्ग्यः सत्यफलोदयः
बहुद्वारस्य धर्मस्य नेहास्ति विफला क्रिया २
यस्मिन्यस्मिंस्तु विषये यो यो याति विनिश्चयम्
स तमेवाभिजानाति नान्यं भरतसत्तम ३
अपि च त्वं नरव्याघ्र श्रोतुमर्हसि मे कथाम्
पुरा शक्रस्य कथितां नारदेन सुरर्षिणा ४
सुरर्षिर्नारदो राजन्सिद्धस्त्रैलोक्यसंमतः
पर्येति क्रमशो लोकान्वायुरव्याहतो यथा ५
स कदाचिन्महेष्वास देवराजालयं गतः
सत्कृतश्च महेन्द्रेण प्रत्यासन्नगतोऽभवत् ६
तं कृतक्षणमासीनं पर्यपृच्छच्छचीपतिः
ब्रह्मर्षे किंचिदाश्चर्यमस्ति दृष्टं त्वयानघ ७
यथा त्वमपि विप्रर्षे त्रैलोक्यं सचराचरम्
जातकौतूहलो नित्यं सिद्धश्चरसि साक्षिवत् ८
न ह्यस्त्यविदितं लोके देवर्षे तव किंचन
श्रुतं वाप्यनुभूतं वा दृष्टं वा कथयस्व मे ९
तस्मै राजन्सुरेन्द्राय नारदो वदतां वरः
आसीनायोपपन्नाय प्रोक्तवान्विपुलां कथाम् १०

यथा येन च कल्पेन स तस्मै द्विजसत्तमः
कथां कथितवान्पृष्टस्तथा त्वमपि मे शृणु ११
इति श्रीमहाभारते शान्तिपर्वणि चत्वारिंशदधिक त्रिशततमोऽध्यायः ३४०

## एकचत्वारिंशदधिकत्रिशततमोऽध्यायः

भीष्म उवाच
आसीत्किल कुरुश्रेष्ठ महापद्मे पुरोत्तमे
गङ्गाया दक्षिणे तीरे कश्चिद्विप्रः समाहितः १
सौम्यः सोमान्वये वेदे गताध्वा छिन्नसंशयः
धर्मनित्यो जितक्रोधो नित्यतृप्तो जितेन्द्रियः २
अहिंसानिरतो नित्यं सत्यः सज्जनसंमतः
न्यायप्राप्तेन वित्तेन स्वेन शीलेन चान्वितः ३
ज्ञातिसंबन्धिविपुले मित्रापाश्रयसंमते
कुले महति विख्याते विशिष्टां वृत्तिमास्थितः ४
स पुत्रान्बहुलान्दृष्ट्वा विपुले कर्मणि स्थितः
कुलधर्माश्रितो राजन्धर्मचर्यापरोऽभवत् ५
ततः स धर्मं वेदोक्तं यथाशास्त्रोक्तमेव च
शिष्टाचीर्णं च धर्मं च त्रिविधं चिन्त्य चेतसा ६
किं नु मे स्याच्छुभं कृत्वा किं क्षमं किं परायणम्
इत्येवं खिद्यते नित्यं न च याति विनिश्चयम् ७
तस्यैवं खिद्यमानस्य धर्मं परममास्थितः
कदाचिदतिथिः प्राप्तो ब्राह्मणः सुसमाहितः ८
स तस्मै सत्क्रियां चक्रे क्रियायुक्तेन हेतुना
विश्रान्तं चैनमासीनमिदं वचनमब्रवीत् ९
इति श्रीमहाभारते शान्तिपर्वणि एकचत्वारिंशदधिक त्रिशततमोऽध्यायः
३४१

## द्विचत्वारिंशदधिकत्रिशततमोऽध्यायः

ब्राह्मण उवाच
समुत्पन्नाभिधानोऽस्मि वाङ्माधुर्येण तेऽनघ

मित्रतामभिपन्नस्त्वां किंचिद्वक्ष्यामि तच्छृणु १
गृहस्थधर्मं विप्रेन्द्र कृत्वा पुत्रगतं त्वहम्
धर्मं परमकं कुर्यां को हि मार्गो भवेद्द्विज २
अहमात्मानमात्मस्थमेक एवात्मनि स्थितः
कर्तुं काङ्क्षामि नेच्छामि बद्धः साधारणैर्गुणैः ३
यावदेवानतीतं मे वयः पुत्रफलाश्रितम्
तावदिच्छामि पाथेयमादातुं पारलौकिकम् ४
अस्मिन्हि लोकसंताने परं पारमभीप्सतः
उत्पन्ना मे मतिरियं कुतो धर्ममयः प्लवः ५
समुह्यमानानि निशम्य लोके निर्यात्यमानानि च सात्त्विकानि
दृष्ट्वा च धर्मध्वजकेतुमालां प्रकीर्यमाणामुपरि प्रजानाम् ६
न मे मनो रज्यति भोगकाले दृष्ट्वा यतीन्प्रार्थयतः परत्र
तेनातिथे बुद्धिबलाश्रयेण धर्मार्थतत्त्वे विनियुङ्क्ष्व मां त्वम् ७
भीष्म उवाच
सोऽतिथिर्वचनं तस्य श्रुत्वा धर्माभिलाषिणः
प्रोवाच वचनं श्लक्ष्णं प्राज्ञो मधुरया गिरा ८
अहमप्यत्र मुह्यामि ममाप्येष मनोरथः
न च संनिश्चयं यामि बहुद्वारे त्रिविष्टपे ९
केचिन्मोक्षं प्रशंसन्ति केचिद्यज्ञफलं द्विजाः
वानप्रस्थाश्रमं केचिद्गार्हस्थ्यं केचिदाश्रिताः १०
राजधर्माश्रयं केचित्केचिदात्मफलाश्रयम्
गुरुचर्याश्रयं केचित्केचिद्वाक्यं यमाश्रयम् ११
मातरं पितरं केचिच्छुश्रूषन्तो दिवं गताः
अहिंसया परे स्वर्गं सत्येन च तथा परे १२
आहवेऽभिमुखाः केचिन्निहताः स्विद्दिवं गताः
केचिदुञ्छव्रतैः सिद्धाः स्वर्गमार्गसमाश्रिताः १३
केचिदध्ययने युक्ता वेदव्रतपराः शुभाः
बुद्धिमन्तो गताः स्वर्गं तुष्टात्मानो जितेन्द्रियाः १४
आर्जवेनापरे युक्ता निहतानार्जवैर्जनैः
ऋजवो नाकपृष्ठे वै शुद्धात्मानः प्रतिष्ठिताः १५

एवं बहुविधैर्लोके धर्मद्वारैरनावृतैः
ममापि मतिराविग्ना मेघलेखेव वायुना १६
इति श्रीमहाभारते शान्तिपर्वणि द्विचत्वारिंशदधिक त्रिशततमोऽध्यायः
३४२

## त्रिचत्वारिंशदधिकत्रिशततमोऽध्यायः

अतिथिरुवाच
उपदेशं तु ते विप्र करिष्येऽह यथागमम्
गुरुणा मे यथाख्यातमर्थतस्तच्च मे शृणु १
यत्र पूर्वाभिसर्गेण धर्मचक्रं प्रवर्तितम्
नैमिषे गोमतीतीरे तत्र नागाह्वयं पुरम् २
समग्रैस्त्रिदशैस्तत्र इष्टमासीद्द्विजर्षभ
यत्रेन्द्रातिक्रमं चक्रे मान्धाता राजसत्तमः ३
कृताधिवासो धर्मात्मा तत्र चक्षुःश्रवा महान्
पद्मनाभो महानागः पद्म इत्येव विश्रुतः ४
स वाचा कर्मणा चैव मनसा च द्विजर्षभ
प्रसादयति भूतानि त्रिविधे वर्त्मनि स्थितः ५
साम्ना दानेन भेदेन दण्डेनेति चतुर्विधम्
विषमस्थं जनं स्वं च चक्षुर्ध्यानेन रक्षति ६
तमभिक्रम्य विधिना प्रष्टुमर्हसि काङ्क्षितम्
स ते परमकं धर्मं नमिथ्या दर्शयिष्यति ७
स हि सर्वातिथिर्नागो बुद्धिशास्त्रविशारदः
गुणैरनवमैर्युक्तः समस्तैराभिकामिकैः ८
प्रकृत्या नित्यसलिलो नित्यमध्ययने रतः
तपोदमाभ्यां संयुक्तो वृत्तेनानवरेण च ९
यज्वा दानरुचिः क्षान्तो वृत्ते च परमे स्थितः
सत्यवागनसूयुश्च शीलवानभिसंश्रितः १०
शेषान्नभोक्ता वचनानुकूलो हितार्जवोत्कृष्टकृताकृतज्ञः
अवैरकृद्भूतहिते नियुक्तो गङ्गाह्रदाम्भोऽभिजनोपपन्नः ११
इति श्रीमहाभारते शान्तिपर्वणि त्रिचत्वारिंशदधिक त्रिशततमोऽध्यायः

३३४

चतुश्चत्वारिंशदधिकत्रिशततमोऽध्यायः

ब्राह्मण उवाच
अतिभारोद्यतस्यैव भारापनयनं महत्
पराश्वासकरं वाक्यमिदं मे भवतः श्रुतम् १
अध्वक्लान्तस्य शयनं स्थानक्लान्तस्य चासनम्
तृषितस्य च पानीयं क्षुधार्त्तस्य च भोजनम् २
ईप्सितस्येव संप्राप्तिरन्नस्य समयेऽतिथेः
एषितस्यात्मनः काले वृद्धस्येव सुतो यथा ३
मनसा चिन्तितस्येव प्रीतिस्निग्धस्य दर्शनम्
प्रह्लादयति मां वाक्यं भवता यदुदीरितम् ४
दत्तचक्षुरिवाकाशे पश्यामि विमृशामि च
प्रज्ञानवचनाद्योऽयमुपदेशो हि मे कृतः
बाढमेवं करिष्यामि यथा मां भाषते भवान् ५
इहेमां रजनीं साधो निवसस्व मया सह
प्रभाते यास्यति भवान्पर्याश्वस्तः सुखोषितः
असौ हि भगवान्सूर्यो मन्दरश्मिरवाङ्मुखः ६
भीष्म उवाच
ततस्तेन कृतातिथ्यः सोऽतिथिः शत्रुसूदन
उवास किल तां रात्रिं सह तेन द्विजेन वै ७
तत्तच्च धर्मसंयुक्तं तयोः कथयतोस्तदा
व्यतीता सा निशा कृत्स्ना सुखेन दिवसोपमा ८
ततः प्रभातसमये सोऽतिथिस्तेन पूजितः
ब्राह्मणेन यथाशक्त्या स्वकार्यमभिकाङ्क्षता ९
ततः स विप्रः कृतधर्मनिश्चयः कृताभ्यनुज्ञः स्वजनेन धर्मवित्
यथोपदिष्टं भुजगेन्द्रसंश्रयं जगाम काले सुकृतैकनिश्चयः १०
इति श्रीमहाभारते शान्तिपर्वणि चतुश्चत्वारिंशदधिक त्रिशततमोऽध्यायः
३४४

## पञ्चचत्वारिंशदधिकत्रिशततमोऽध्यायः

भीष्म उवाच
स वनानि विचित्राणि तीर्थानि च सरांसि च
अभिगच्छन्क्रमेण स्म कंचिन्मुनिमुपस्थितः १
तं स तेन यथोद्दिष्टं नागं विप्रेण ब्राह्मणः
पर्यपृच्छद्यथान्यायं श्रुत्वैव च जगाम सः २
सोऽभिगम्य यथाख्यायं नागायतनमर्थवित्
प्रोक्तवानहमस्मीति भोःशब्दालंकृतं वचः ३
ततस्तस्य वचः श्रुत्वा रूपिणी धर्मवत्सला
दर्शयामास तं विप्रं नागपत्नी पतिव्रता ४
सा तस्मै विधिवत्पूजां चक्रे धर्मपरायणा
स्वागतेनागतं कृत्वा किं करोमीति चाब्रवीत् ५
ब्राह्मण उवाच
विश्रान्तोऽभ्यर्चितश्चास्मि भवत्या श्लक्ष्णया गिरा
द्रष्टुमिच्छामि भवति तं देवं नागमुत्तमम् ६
एतद्धि परमं कार्यमेतन्मे फलमीप्सितम्
अनेनार्थेन चास्म्यद्य संप्राप्तं पन्नगालयम् ७
नागभार्योवाच
आर्य सूर्यरथं वोढुं गतोऽसौ मासचारिकः
सप्ताष्टभिर्दिनैर्विप्र दर्शयिष्यत्यसंशयम् ८
एतद्विदितमार्यस्य विवासकरणं मम
भर्तुर्भवतु किं चान्यत्क्रियतां तद्वदस्व मे ९
ब्राह्मण उवाच
अनेन निश्चयेनाहं साध्वि संप्राप्तवानिह
प्रतीक्षन्नागमं देवि वत्स्याम्यस्मिन्महावने १०
संप्राप्तस्यैव चाव्यग्रमावेद्योऽहमिहागतः
ममाभिगमनं प्राप्तो वाच्यश्च वचनं त्वया ११
अहमप्यत्र वत्स्यामि गोमत्याः पुलिने शुभे
कालं परिमिताहारो यथोक्तं परिपालयन् १२
भीष्म उवाच

ततः स विप्रस्तां नागीं समाधाय पुनः पुनः
तदेव पुलिनं नद्याः प्रययौ ब्राह्मणर्षभः १३
इति श्रीमहाभारते शान्तिपर्वणि पञ्चचत्वारिंशदधिक त्रिशततमोऽध्यायः
३४५

## षट्चत्वारिंशदधिकत्रिशततमोऽध्यायः

भीष्म उवाच
अथ तेन नरश्रेष्ठ ब्राह्मणेन तपस्विना
निराहारेण वसता दुःखितास्ते भुजंगमाः १
सर्वे संभूय सहितास्तस्य नागस्य बान्धवाः
भ्रातरस्तनया भार्या ययुस्तं ब्राह्मणं प्रति २
तेऽपश्यन्पुलिने तं वै विविक्ते नियतव्रतम्
समासीनं निराहारं द्विजं जप्यपरायणम् ३
ते सर्वे समभिक्रम्य विप्रमभ्यर्च्य चासकृत्
उचुर्वाक्यमसंदिग्धमातिथेयस्य बान्धवाः ४
षष्ठो हि दिवसस्तेऽद्य प्राप्तस्येह तपोधन
न चाभिलषसे किंचिदाहारं धर्मवत्सल ५
अस्मानभिगतश्चासि वयं च त्वामुपस्थिताः
कार्यं चातिथ्यमस्माभिर्वयं सर्वे कुटुम्बिनः ६
मूलं फलं वा पर्णं वा पयो वा द्विजसत्तम
आहारहेतोरन्नं वा भोक्तुमर्हसि ब्राह्मण ७
त्यक्ताहारेण भवता वने निवसता सता
बालवृद्धमिदं सर्वं पीडयते धर्मसंकटात् ८
न हि नो भ्रूणहा कश्चिद्राजापथ्योऽनृतोऽपि वा
पूर्वाशी वा कुले ह्यस्मिन्देवतातिथिबन्धुषु ९
ब्राह्मण उवाच
उपदेशेन युष्माकमाहारोऽय मया वृतः
द्विरूनं दशरात्रं वै नागस्यागमनं प्रति १०
यद्यष्टरात्रे नियति नागमिष्यति पन्नगः
तदाहारं करिष्यामि तन्निमित्तमिदं व्रतम् ११

कर्तव्यो न च संतापो गम्यतां च यथागतम्
तन्निमित्तं व्रतं मह्यं नैतद्भेत्तुमिहार्हथ १२
तेन ते समनुज्ञाता ब्राह्मणेन भुजंगमाः
भवनं स्वमेव जग्मुरकृतार्था नरर्षभ १३

इति श्रीमहाभारते शान्तिपर्वणि षट्चत्वारिंशदधिक त्रिशततमोऽध्यायः
३४६

## सप्तचत्वारिंशदधिकत्रिशततमोऽध्यायः

भीष्म उवाच
अथ काले बहुतिथे पूर्णे प्राप्तो भुजंगमः
दत्ताभ्यनुज्ञः स्वं वेश्म कृतकर्मा विवस्वतः १
तं भार्या समभिक्रामत्पादशौचादिभिर्गुणैः
उपपन्नां च तां साध्वीं पन्नगः पर्यपृच्छत २
अपि त्वमसि कल्याणि देवतातिथिपूजने
पूर्वमुक्तेन विधिना युक्ता युक्तेन मत्समम् ३
न खल्वस्यकृतार्थेन स्त्रीबुद्ध्या मार्दवीकृता
मद्वियोगेन सुश्रोणि विमुक्ता धर्मसेतुना ४
नागभार्योवाच
शिष्याणां गुरुशुश्रूषा विप्राणां वेदपारणम्
भृत्यानां स्वामिवचनं राज्ञो लोकानुपालनम् ५
सर्वभूतपरित्राणं क्षत्रधर्म इहोच्यते
वैश्यानां यज्ञसंवृत्तिरातिथेयसमन्विता ६
विप्रक्षत्रियवैश्यानां शुश्रूषा शूद्रकर्म तत्
गृहस्थधर्मो नागेन्द्र सर्वभूतहितैषिता ७
नियताहारता नित्यं व्रतचर्या यथाक्रमम्
धर्मो हि धर्मसंबन्धादिन्द्रियाणां विशेषणम् ८
अहं कस्य कुतो वाहं कः को मे ह भवेदिति
प्रयोजनमतिर्नित्यमेवं मोक्षाश्रमी भवेत् ९
पतिव्रतात्वं भार्यायां परमो धर्म उच्यते
तवोपदेशान्नागेन्द्र तच्च तत्त्वेन वेद्मि वै १०

साहं धर्मं विजानन्ती धर्मनित्ये त्वयि स्थिते
सत्पथं कथमुत्सृज्य यास्यामि विषमे पथि ११
देवतानां महाभाग धर्मचर्या न हीयते
अतिथीनां च सत्कारे नित्ययुक्तास्म्यतन्द्रिता १२
सप्ताष्टदिवसास्त्वद्य विप्रस्येहागतस्य वै
स च कार्यं न मे ख्याति दर्शनं तव काङ्क्षति १३
गोमत्यास्त्वेष पुलिने त्वद्दर्शनसमुत्सुकः
आसीनोऽवर्तयन्ब्रह्म ब्राह्मणः संशितव्रतः १४
अहं त्वनेन नागेन्द्र सामपूर्वं समाहिता
प्रस्थाप्यो मत्सकाशं स संप्राप्तो भुजगोत्तमः १५
एतच्छ्रुत्वा महाप्राज्ञ तत्र गन्तुं त्वमर्हसि
दातुमर्हसि वा तस्य दर्शनं दर्शनश्रवः १६
इति श्रीमहाभारते शान्तिपर्वणि सप्तचत्वारिंशदधिक त्रिशततमोऽध्यायः
३४७

अष्टचत्वारिंशदधिकत्रिशततमोऽध्यायः

नाग उवाच
अथ ब्राह्मणरूपेण कं तं समनुपश्यसि
मानुषं केवलं विप्रं देवं वाथ शुचिस्मिते १
को हि मां मानुषः शक्तो द्रष्टुकामो यशस्विनि
संदर्शनरुचिर्वाक्यमाज्ञापूर्वं वदिष्यति २
सुरासुरगणानां च देवर्षीणां च भामिनि
ननु नागा महावीर्याः सौरसेयास्तरस्विनः ३
वन्दनीयाश्च वरदा वयमप्यनुयायिनः
मनुष्याणां विशेषेण धनाध्यक्षा इति श्रुतिः ४
नागभार्योवाच
आर्जवेनाभिजानामि नासौ देवोऽनिलाशन
एकं त्वस्य विजानामि भक्तिमानतिरोषणः ५
स हि कार्यान्तराकाङ्क्षी जलेप्सुः स्तोकको यथा
वर्षं वर्षप्रियः पक्षी दर्शनं तव काङ्क्षति ६

न हि त्वा दैवतं किंचिद्विविग्नं प्रतिपालयेत्
तुल्ये ह्यभिजने जातो न कश्चित्पर्युपासते ७
तद्रोषं सहजं त्यक्त्वा त्वमेनं द्रष्टुमर्हसि
आशाछेदेन तस्याद्य नात्मानं दग्धुमर्हसि ८
आशया त्वभिपन्नानामकृत्वाश्रुप्रमार्जनम्
राजा वा राजपुत्रो वा भ्रूणहत्यैव युज्यते ९
मौनाज्ज्ञानफलावाप्तिर्दानेन च यशो महत्
वाग्मित्वं सत्यवाक्येन परत्र च महीयते १०
भूमिप्रदानेन च गतिं लभत्याश्रमसंमिताम्
नष्टस्यार्थस्य संप्राप्तिं कृत्वा फलमुपाश्नुते ११
अभिप्रेतामसंक्लिष्टां कृत्वाकामवतीं क्रियाम्
न याति निरयं कश्चिदिति धर्मविदो विदुः १२
नाग उवाच
अभिमानेन मानो मे जातिदोषेण वै महान्
रोषः संकल्पजः साध्वि दग्धो वाचाग्निना त्वया १३
न च रोषादहं साध्वि पश्येयमधिकं तमः
तस्य वक्तव्यतां याति विशेषेण भुजंगमाः १४
दोषस्य हि वशं गत्वा दशग्रीवः प्रतापवान्
तथा शक्रप्रतिस्पर्धी हतो रामेण संयुगे १५
अन्तःपुरगतं वत्सं श्रुत्वा रामेण निर्हृतम्
धर्षणाद्रोषसंविग्नाः कार्तवीर्यसुता हताः १६
जामदग्न्येन रामेण सहस्रनयनोपमः
संयुगे निहतो रोषात्कार्तवीर्यो महाबलः १७
तदेष तपसां शत्रुः श्रेयसश्च निपातनः
निगृहीतो मया रोषः श्रुत्वैवं वचनं तव १८
आत्मानं च विशेषेण प्रशंसाम्यनपायिनि
यस्य मे त्वं विशालाक्षि भार्या सर्व गुणान्विता १९
एष तत्रैव गच्छामि यत्र तिष्ठत्यसौ द्विजः
सर्वथा चोक्तवान्वाक्यं नाकृतार्थः प्रयास्यति २०
इति श्रीमहाभारते शान्तिपर्वणि अष्टचत्वारिंशदधिक

एकोनपञ्चाशदधिकत्रिशततमोऽध्यायः
भीष्म उवाच
स पन्नगपतिस्तत्र प्रययौ ब्राह्मणं प्रति
तमेव मनसा ध्यायन्कार्यवत्तां विचारयन् १
तमभिक्रम्य नागेन्द्रो मतिमान्स नरेश्वर
प्रोवाच मधुरं वाक्यं प्रकृत्या धर्मवत्सल २
भो भो च्चाम्याभिभाषे त्वां न रोषं कर्तुमर्हसि
इह त्वमभिसंप्राप्तः कस्यार्थे किं प्रयोजनम् ३
आभिमुख्यादभिक्रम्य स्नेहात्पृच्छामि ते द्विज
विविक्ते गोमतीतीरे कं वा त्वं पर्युपाससे ४
ब्राह्मण उवाच
धर्मारगयं हि मां विद्धि नागं द्रष्टुमिहागतम्
पद्मनाभं द्विजश्रेष्ठं तत्र मे कार्यमाहितम् ५
तस्य चाहमसान्निध्यं श्रुतवानस्मि तं गतम्
स्वजनं तं प्रतीच्चामि पर्जन्यमिव कर्षकः ६
तस्य चाक्लेशकरणं स्वस्तिकारसमाहितम्
वर्तयाम्ययुतं ब्रह्म योगयुक्तो निरामयः ७
नाग उवाच
अहो कल्याणवृत्तस्त्वं साधु सज्जनवत्सलः
अवाढ्यस्त्वं महाभाग परं स्नेहेन पश्यसि ८
अहं स नागो विप्रर्षे यथा मां विन्दते भवान्
आज्ञापय यथा स्वैरं किं करोमि प्रियं तव ९
भवन्तं स्वजनादस्मि संप्राप्तं श्रुतवानिह
अतस्त्वां स्वयमेवाहं द्रष्टमभ्यागतो द्विज १०
संप्राप्तश्च भवानद्य कृतार्थः प्रतियास्यति
विस्त्रब्धो मां द्विजश्रेष्ठ विषये योक्तुमर्हसि ११
वयं हि भवता सर्वे गुणाक्रीता विशेषतः
यस्त्वमात्महितं त्यक्त्वा मामेवेहानुरुध्यसे १२

ब्राह्मण उवाच
आगतोऽहं महाभाग तव दर्शनलालसः
कंचिदर्थमनर्थज्ञः प्रष्टुकामो भुजंगम १३
अहमात्मानमात्मस्थो मार्गमाणोऽत्मनो हितम्
वासार्थिनं महाप्राज्ञ बलवन्तमुपास्मि ह १४
प्रकाशितस्त्वं स्वगुणैर्यशोगर्भगभस्तिभिः
शशाङ्ककरसंस्पर्शैर्हृद्यैरात्मप्रकाशितैः १५
तस्य मे प्रश्नमुत्पन्नं छिन्धि त्वमनिलाशन
पश्चात्कार्यं वदिष्यामि श्रोतुमर्हति मे भवान् १६
इति श्रीमहाभारते शान्तिपर्वणि एकोनपञ्चाशदधिक त्रिशततमोऽध्यायः
३४९

पञ्चाशदधिकत्रिशततमोऽध्यायः

ब्राह्मण उवाच
विवस्वतो गच्छति पर्ययेण वोढुं भवांस्तं रथमेकचक्रम्
आश्चर्यभूतं यदि तत्र किञ्चिद्दृष्टं त्वया शंसितुमर्हसि त्वम् १
नाग उवाच
यस्य रश्मिसहस्रेषु शाखास्विव विहङ्गमाः
वसन्त्याश्रित्य मुनयः संसिद्धा दैवतैः सह २
यतो वायुर्विनिःसृत्य सूर्यरश्म्याश्रितो महान्
विजृम्भत्यम्बरे विप्र किमाश्चर्यतरं ततः ३
शुक्रो नामासितः पादो यस्य वारिधरोऽम्बरे
तोयं सृजति वर्षासु किमाश्चर्यमतः परम् ४
योऽष्टमासांस्तु शुचिना किरणेनोज्झितं पयः
पर्यादत्ते पुनः काले किमाश्चर्यमतः परम् ५
यस्य तेजोविशेषेषु नित्यमात्मा प्रतिष्ठितः
यतो बीजं मही चेयं धार्यते सचराचरम् ६
यत्र देवो महाबाहुः शाश्वतः परमोऽक्षरः
अनादिनिधनो विप्र किमाश्चर्यमतः परम् ७
आश्चर्याणामिवाश्चर्यमिदमेकं तु मे शृणु

विमले यन्मया दृष्टमम्बरे सूर्यसंश्रयात् ८
पुरा मध्याह्नसमये लोकांस्तपति भास्करे
प्रत्यादित्यप्रतीकाशः सर्वतः प्रत्यदृश्यत ९
स लोकांस्तेजसा सर्वान्स्वभासा निर्विभासयन्
आदित्याभिमुखोऽभ्येति गगनं पाटयन्निव १०
हुताहुतिरिव ज्योतिर्व्याप्य तेजोमरीचिभिः
अनिर्देश्येन रूपेण द्वितीय इव भास्करः ११
तस्याभिगमनप्राप्तौ हस्तो दत्तो विवस्वता
तेनापि दक्षिणो हस्तो दत्तः प्रत्यर्चनार्थिना १२
ततो भित्त्वैव गगनं प्रविष्टो रविमण्डलम्
एकीभूतं च तत्तेजः क्षणेनादित्यतां गतम् १३
तत्र नः संशयो जातस्तयोस्तेजःसमागमे
अनयोः को भवेत्सूर्यो रथस्थो योऽयमागतः १४
ते वयं जातसंदेहाः पर्यपृच्छामहे रविम्
क एष दिवमाक्रम्य गतः सूर्य इवापरः १५
इति श्रीमहाभारते शान्तिपर्वणि पञ्चाशदधिकत्रिशततमोऽध्यायः ३५०

## एकपञ्चाशदधिकत्रिशततमोऽध्यायः

सूर्य उवाच
नैष देवोऽनिलसखो नासुरो न च पन्नगः
उञ्छवृत्तिव्रते सिद्धो मुनिरेष दिवं गतः १
एष मूलफलाहारः शीर्णपर्णाशनस्तथा
अब्भक्षो वायुभक्षश्च आसीद्विप्रः समाहितः २
ऋचश्चानेन विप्रेण संहितान्तरभिष्टुताः
स्वर्गद्वारकृतोद्योगो येनासौ त्रिदिवं गतः ३
असन्नधीरनाकाङ्क्षी नित्यमुञ्छशिलाशनः
सर्वभूतहिते युक्त एष विप्रो भुजंगम ४
न हि देवा न गन्धर्वा नासुरा न च पन्नगाः
प्रभवन्तीह भूतानां प्राप्तानां परमां गतिम् ५
नाग उवाच

एतदेवंविधं दृष्टमाश्चर्यं तत्र मे द्विज
संसिद्धो मानुषः कायो योऽसौ सिद्धगतिं गतः
सूर्येण सहितो ब्रह्मन्पृथिवीं परिवर्तते ६
इति श्रीमहाभारते शान्तिपर्वणि एकपञ्चाशदधिकत्रिशततमोऽध्यायः ३५१

## द्विपञ्चाशदधिकत्रिशततमोऽध्यायः

ब्राह्मण उवाच
आश्चर्यं नात्र संदेहः सुप्रीतोऽस्मि भुजंगम
अन्वर्थोपगतैर्वाक्यैः पन्थानं चास्मि दर्शितः १
स्वस्ति तेऽस्तु गमिष्यामि साधो भुजगसत्तम
स्मरणीयोऽस्मि भवता संप्रेषणनियोजनैः २
नाग उवाच
अनुक्त्वा मद्गतं कार्यं क्वेदानीं प्रस्थितो भवान्
उच्यतां द्विज यत्कार्यं यदर्थं त्वमिहागतः ३
उक्तानुक्ते कृते कार्ये मामामन्त्र्य द्विजर्षभ
मया प्रत्यभ्यनुज्ञातस्ततो यास्यसि ब्राह्मण ४
न हि मां केवलं दृष्ट्वा त्यक्त्वा प्रणयवानिह
गन्तुमर्हसि विप्रर्षे वृक्षमूलगतो यथा ५
त्वयि चाहं द्विजश्रेष्ठ भवान्मयि न संशयः
लोकोऽय भवतः सर्वः का चिन्ता मयि तेऽनघ ६
ब्राह्मण उवाच
एवमेतन्महाप्राज्ञ विज्ञातार्थ भुजंगम
नातिरिक्तास्त्वया देवाः सर्वथैव यथातथम् ७
य एवाहं स एव त्वमेवमेतद्भुजंगम
अहं भवांश्च भूतानि सर्वे सर्वत्रगाः सदा ८
आसीत्तु मे भोगपते संशयः पुण्यसंचये
सोऽहमुञ्छव्रतं साधो चरिष्याम्यर्थदर्शनम् ९
एष मे निश्चयः साधो कृतं कारणवत्तरः
आमन्त्रयामि भद्रं ते कृतार्थोऽस्मि भुजंगम १०
इति श्रीमहाभारते शान्तिपर्वणि द्विपञ्चाशदधिकत्रिशततमोऽध्यायः ३५२

त्रिपञ्चाशदधिकत्रिशततमोऽध्यायः

भीष्म उवाच

स चामन्त्र्योरगश्रेष्ठं ब्राह्मणः कृतनिश्चयः
दीक्षाकाङ्क्षी तदा राजंश्च्यवनं भार्गवं श्रितः १
स तेन कृतसंस्कारो धर्ममेवोपतस्थिवान्
तथैव च कथामेतां राजन्कथितवांस्तदा २
भार्गवेणापि राजेन्द्र जनकस्य निवेशने
कथैषा कथिता पुण्या नारदाय महात्मने ३
नारदेनापि राजेन्द्र देवेन्द्रस्य निवेशने
कथिता भरतश्रेष्ठ पृष्टेनाक्लिष्टकर्मणा ४
देवराजेन च पुरा कथैषा कथिता शुभा
समस्तेभ्यः प्रशस्तेभ्यो वसुभ्यो वसुधाधिप ५
यदा च मम रामेण युद्धमासीत्सुदारुणम्
वसुभिश्च तदा राजन्कथेयं कथिता मम ६
पृच्छमानाय तत्त्वेन मया तुभ्यं विशां पते
कथेयं कथिता पुण्या धर्म्या धर्मभृतां वर ७
तदेष परमो धर्मो यन्मां पृच्छसि भारत
असन्नधीरनाकाङ्क्षी धर्मार्थकरणे नृप ८
स च किल कृतनिश्चयो द्विजाग्र्यो भुजगपतिप्रतिदेशितार्थकृत्यः
यमनियमसमाहितो वनान्तं परिगणितोञ्छशिलाशनः प्रविष्टः ९

इति श्रीमहाभारते शान्तिपर्वणि द्विपञ्चाशदधिकत्रिशततमोऽध्यायः ३५३

समाप्तं मोक्षधर्मपर्व

समाप्तं शान्तिपर्व

श्रीगणेशाय नमः
ॐ नारायणं नमस्कृत्य नरं चैव नरोत्तमम्
देवीं सरस्वतीं चैव ततो जयमुदीरयेत्

## अथ प्रथमोऽध्यायः

युधिष्ठिर उवाच
शमो बहुविधाकारः सूक्ष्म उक्तः पितामह
न च मे हृदये शान्तिरस्ति कृत्वेदमीदृशम् १
अस्मिन्नर्थे बहुविधा शान्तिरुक्ता त्वयानघ
स्वकृते का नु शान्तिः स्याच्छमाद्बहुविधादपि २
शराचितशरीरं हि तीव्रव्रणमुदीक्ष्य च
शमं नोपलभे वीर दुष्कृतान्येव चिन्तयन् ३
रुधिरेणावसिक्ताङ्गं प्रस्रवन्तं यथाचलम्
त्वां दृष्ट्वा पुरुषव्याघ्र सीदे वर्षास्विवाम्बुजम् ४
अतः कष्टतरं किं नु मत्कृते यत्पितामहः
इमामवस्थां गमितः प्रत्यमित्रै रणाजिरे
तथैवान्ये नृपतयः सहपुत्राः सबान्धवाः ५
वयं हि धार्तराष्ट्राश्च कालमन्युवशानुगाः
कृत्वेदं निन्दितं कर्म प्राप्स्यामः कां गतिं नृप ६
अहं तव ह्यन्तकरः सुहृद्वधकरस्तथा
न शान्तिमधिगच्छामि पश्यंस्त्वां दुःखितं क्षितौ ७
भीष्म उवाच
परतन्त्रं कथं हेतुमात्मानमनुपश्यसि
कर्मण्यस्मिन्महाभाग सूक्ष्मं ह्येतदतीन्द्रियम् ८
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
संवादं मृत्युगौतम्योः काललुब्धकपन्नगैः ९
गौतमी नाम कौन्तेय स्थविरा शमसंयुता
सर्पेण दष्टं स्वं पुत्रमपश्यद्गतचेतनम् १०
अथ तं स्नायुपाशेन बद्ध्वा सर्पममर्षितः
लुब्धकोऽर्जुनको नाम गौतम्याः समुपानयत् ११

तां चाब्रवीदयं ते स पुत्रहा पन्नगाधमः
ब्रूहि क्षिप्रं महाभागे वध्यतां केन हेतुना १२
अग्नौ प्रक्षिप्यतामेष च्छिद्यतां खण्डशोऽपि वा
न ह्ययं बालहा पापश्चिरं जीवितुमर्हति १३
गौतम्युवाच
विसृजैनमबुद्धिस्त्वं न वध्योऽर्जुनक त्वया
को ह्यात्मानं गुरुं कुर्यात्प्राप्तव्ये सति चिन्तयन् १४
प्लवन्ते धर्मलघवो लोकेऽम्भसि यथा प्लवाः
मज्जन्ति पापगुरवः शस्त्रं स्कन्नमिवोदके १५
न चामृत्युर्भविता वै हतेऽस्मिन्को वात्ययः स्यादहतेऽस्मिञ्जनस्य
अस्योत्सर्गे प्राणयुक्तस्य जन्तोर्मृत्योर्लोकं को नु गच्छेदनन्तम् १६
लुब्धक उवाच
जानाम्येवं नेह गुणागुणज्ञाः सर्वे नियुक्ता गुरवो वै भवन्ति
स्वस्थस्यैते तूपदेशा भवन्ति तस्मात्क्षुद्रं सर्पमेनं हनिष्ये १७
समीप्सन्तः कालयोगं त्यजन्ति सद्यः शुचं त्वर्थविदस्त्यजन्ति
श्रेयः क्षयः शोचतां नित्यशो हि तस्मात्त्याज्यं जहि शोकं हतेऽस्मिन् १८
गौतम्युवाच
न चैवार्तिर्विद्यतेऽस्मद्विधानां धर्मारामः सततं सज्जनो हि
नित्यायस्तो बालजनो न चास्ति धर्मो ह्येष प्रभवाम्यस्य नाहम् १९
न ब्राह्मणानां कोपोऽस्ति कुतः कोपाच्च यातना
मार्दवात्क्षम्यतां साधो मुच्यतामेष पन्नगः २०
लुब्धक उवाच
हत्वा लाभः श्रेय एवाव्ययं स्यात्सद्यो लाभो बलवद्भिः प्रशस्तः
कालाल्लाभो यस्तु सद्यो भवेत हते श्रेयः कुत्सिते त्वीदृशे स्यात् २१
गौतम्युवाच
कार्थप्राप्तिर्गृह्य शत्रुं निहत्य का वा शान्तिः प्राप्य शत्रुं न मुक्त्वा
कस्मात्सौम्य भुजगे न क्षमेयं मोक्षं वा किं कारणं नास्य कुर्याम् २२
लुब्धक उवाच
अस्मादेकस्माद्बहवो रक्षितव्या नैको बहुभ्यो गौतमि रक्षितव्यः
कृतागसं धर्मविदस्त्यजन्ति सरीसृपं पापमिमं जहि त्वम् २३

गौतम्युवाच
नास्मिन्हते पन्नगे पुत्रको मे संप्राप्स्यते लुब्धक जीवितं वै
गुणं चान्यं नास्य वधे प्रपश्ये तस्मात्सर्पं लुब्धक मुञ्च जीवम् २४
लुब्धक उवाच
वृत्रं हत्वा देवराट् श्रेष्ठभाग्वै यज्ञं हत्वा भागमवाप चैव
शूली देवो देववृत्तं कुरु त्वं क्षिप्रं सर्पं जहि मा भूद्विशङ्का २५
भीष्म उवाच
असकृत्प्रोच्यमानापि गौतमी भुजगं प्रति
लुब्धकेन महाभागा पापे नैवाकरोन्मतिम् २६
ईषदुच्छ्वसमानस्तु कृच्छ्रात्संस्तभ्य पन्नगः
उत्ससर्ज गिरं मन्दां मानुषीं पाशपीडितः २७
को न्वर्जुनक दोषोऽत्र विद्यते मम बालिश
अस्वतन्त्रं हि मां मृत्युर्विवशं यदचूचुदत् २८
तस्यायं वचनाद्दष्टो न कोपेन न काम्यया
तस्य तत्किल्बिषं लुब्ध विद्यते यदि किल्बिषम् २९
लुब्धक उवाच
यद्यन्यवशगेनेदं कृतं ते पन्नगाशुभम्
कारणं वै त्वमप्यत्र तस्मात्त्वमपि किल्बिषी ३०
मृत्पात्रस्य क्रियायां हि दण्डचक्रादयो यथा
कारणत्वे प्रकल्प्यन्ते तथा त्वमपि पन्नग ३१
किल्बिषी चापि मे वध्यः किल्बिषी चासि पन्नग
आत्मानं कारणं ह्यत्र त्वमाख्यासि भुजंगम ३२
सर्प उवाच
सर्व एते ह्यस्ववशा दण्डचक्रादयो यथा
तथाहमपि तस्मान्मे नैष हेतुर्मतस्तव ३३
अथ वा मतमेतत्ते तेऽप्यन्योन्यप्रयोजकाः
कार्यकारणसंदेहो भवत्यन्योन्यचोदनात् ३४
एवं सति न दोषो मे नास्मि वध्यो न किल्बिषी
किल्बिषं समवाये स्यान्मन्यसे यदि किल्बिषम् ३५
लुब्धक उवाच

कारणं यदि न स्याद्वै न कर्ता स्यास्त्वमप्युत
विनाशे कारणं त्वं च तस्माद्वध्योऽसि मे मतः ३६
असत्यपि कृते कार्ये नेह पन्नग लिप्यते
तस्माभात्रैव हेतुः स्याद्वध्यः किं बहु भाषसे ३७
सर्प उवाच
कार्याभावे क्रिया न स्यात्सत्यसत्यपि कारणे
तस्मात्त्वमस्मिन्हेतौ मे वाच्यो हेतुर्विशेषतः ३८
यद्यहं कारणत्वेन मतो लुब्धक तत्त्वतः
अन्यः प्रयोगे स्यादत्र किल्बिषी जन्तुनाशने ३९
लुब्धक उवाच
वध्यस्त्वं मम दुर्बुद्धे बालघाती नृशंसकृत्
भाषसे किं बहु पुनर्वध्यः सन्पन्नगाधम ४०
सर्प उवाच
यथा हवींषि जुह्वाना मखे वै लुब्धकर्त्विजः
न फलं प्राप्नुवन्त्यत्र परलोके तथा ह्यहम् ४१
भीष्म उवाच
तथा ब्रुवति तस्मिंस्तु पन्नगे मृत्युचोदिते
आजगाम ततो मृत्युः पन्नगं चाब्रवीदिदम् ४२
कालेनाहं प्रणुदितः पन्नग त्वामचूचुदम्
विनाशहेतुर्नास्य त्वमहं वा प्राणिनः शिशोः ४३
यथा वायुर्जलधरान्विकर्षति ततस्ततः
तद्वज्जलदवत्सर्प कालस्याहं वशानुगः ४४
सात्त्विका राजसाश्चैव तामसा ये च केचन
भावाः कालात्मकाः सर्वे प्रवर्तन्ते हि जन्तुषु ४५
जङ्गमाः स्थावराश्चैव दिवि वा यदि वा भुवि
सर्वे कालात्मकाः सर्प कालात्मकमिदं जगत् ४६
प्रवृत्तयश्च या लोके तथैव च निवृत्तयः
तासां विकृतयो याश्च सर्वं कालात्मकं स्मृतम् ४७
आदित्यश्चन्द्रमा विष्णुरापो वायुः शतक्रतुः
अग्निः खं पृथिवी मित्र ओषध्यो वसवस्तथा ४८

सरितः सागराश्चैव भावाभावौ च पन्नग
सर्वे कालेन सृज्यन्ते ह्रियन्ते च तथा पुनः ४९
एवं ज्ञात्वा कथं मां त्वं सदोषं सर्प मन्यसे
अथ चैवंगते दोषो मयि त्वमपि दोषवान् ५०
सर्प उवाच
निर्दोषं दोषवन्तं वा न त्वा मृत्यो ब्रवीम्यहम्
त्वयाहं चोदित इति ब्रवीम्येतावदेव तु ५१
यदि काले तु दोषोऽस्ति यदि तत्रापि नेष्यते
दोषो नैव परीक्ष्यो मे न ह्यत्राधिकृता वयम् ५२
निर्मोक्षस्त्वस्य दोषस्य मया कार्यो यथा तथा
मृत्यो विदोषः स्यामेव यथा तन्मे प्रयोजनम् ५३
भीष्म उवाच
सर्पोऽथार्जुनकं प्राह श्रुतं ते मृत्युभाषितम्
नानागसं मां पाशेन संतापयितुमर्हसि ५४
लुब्धक उवाच
मृत्योः श्रुतं मे वचनं तव चैव भुजंगम
नैव तावद्विदोषत्वं भवति त्वयि पन्नग ५५
मृत्युस्त्वं चैव हेतुर्हि जन्तोरस्य विनाशने
उभयं कारणं मन्ये न कारणमकारणम् ५६
धिङ्मृत्युं च दुरात्मानं क्रूरं दुःखकरं सताम्
त्वां चैवाहं वधिष्यामि पापं पापस्य कारणम् ५७
मृत्युरुवाच
विवशौ कालवशगावावां तद्दिष्टकारिणौ
नावां दोषेण गन्तव्यौ यदि सम्यक्प्रपश्यसि ५८
लुब्धक उवाच
युवामुभौ कालवशौ यदि वै मृत्युपन्नगौ
हर्षक्रोधौ कथं स्यातामेतदिच्छामि वेदितुम् ५९
मृत्युरुवाच
याः काश्चिदिह चेष्टाः स्युः सर्वाः कालप्रचोदिताः
पूर्वमेवैतदुक्तं हि मया लुब्धक कालतः ६०

तस्मादुभौ कालवशावावां तद्दिष्टकारिणौ
नावां दोषेण गन्तव्यौ त्वया लुब्धक कर्हिचित् ६१
भीष्म उवाच
अथोपगम्य कालस्तु तस्मिन्धर्मार्थसंशये
अब्रवीत्पन्नगं मृत्युं लुब्धमर्जुनकं च तम् ६२
काल उवाच
नैवाहं नाप्ययं मृत्युर्नायं लुब्धक पन्नगः
किल्बिषी जन्तुमरणे न वयं हि प्रयोजकाः ६३
अकरोद्यदयं कर्म तन्नोऽर्जुनक चोदकम्
प्रणाशहेतुर्नान्योऽस्य वध्यतेऽय स्वकर्मणा ६४
यदनेन कृतं कर्म तेनायं निधनं गतः
विनाशहेतुः कर्मास्य सर्वे कर्मवशा वयम् ६५
कर्मदायादवाँल्लोकः कर्मसंबन्धलक्षणः
कर्माणि चोदयन्तीह यथान्योन्यं तथा वयम् ६६
यथा मृत्पिण्डतः कर्ता कुरुते यद्यदिच्छति
एवमात्मकृतं कर्म मानवः प्रतिपद्यते ६७
यथा छायातपौ नित्यं सुसंबद्धौ निरन्तरम्
तथा कर्म च कर्ता च संबद्धावात्मकर्मभिः ६८
एवं नाहं न वै मृत्युर्न सर्पो न तथा भवान्
न चेयं ब्राह्मणी वृद्धा शिशुरेवात्र कारणम् ६९
तस्मिंस्तथा ब्रुवाणे तु ब्राह्मणी गौतमी नृप
स्वकर्मप्रत्ययाँल्लोकान्मत्वार्जुनकमब्रवीत् ७०
नैव कालो न भुजगो न मृत्युरिह कारणम्
स्वकर्मभिरयं बालः कालेन निधनं गतः ७१
मया च तत्कृतं कर्म येनायं मे मृतः सुतः
यातु कालस्तथा मृत्युर्मुञ्चार्जुनक पन्नगम् ७२
भीष्म उवाच
ततो यथागतं जग्मुर्मृत्युः कालोऽथ पन्नगः
अभूद्विरोषोऽर्जुनको विशोका चैव गौतमी ७३
एतच्छ्रुत्वा शमं गच्छ मा भूश्चिन्तापरो नृप

स्वकर्मप्रत्ययाँल्लोकांस्त्रीन्विद्धि मनुजर्षभ ७४
न तु त्वया कृतं पार्थ नापि दुर्योधनेन वै
कालेन तत्कृतं विद्धि विहता येन पार्थिवाः ७५
वैशम्पायन उवाच
इत्येतद्वचनं श्रुत्वा बभूव विगतज्वरः
युधिष्ठिरो महातेजाः पप्रच्छेदं च धर्मवित् ७६
इति श्रीमहाभारते अनुशासनपर्वणि प्रथमोऽध्यायः १

द्वितीयोऽध्यायः

युधिष्ठिर उवाच
पितामह महाप्राज्ञ सर्वशास्त्रविशारद
श्रुतं मे महदाख्यानमिदं मतिमतां वर १
भूयस्तु श्रोतुमिच्छामि धर्मार्थसहितं नृप
कथ्यमानं त्वया किंचित्तन्मे व्याख्यातुमर्हसि २
केन मृत्युर्गृहस्थेन धर्ममाश्रित्य निर्जितः
इत्येतत्सर्वमाचक्ष्व तत्त्वेन मम पार्थिव ३
भीष्म उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
यथा मृत्युर्गृहस्थेन धर्ममाश्रित्य निर्जितः ४
मनोः प्रजापते राजन्निक्ष्वाकुरभवत्सुतः
तस्य पुत्रशतं जज्ञे नृपतेः सूर्यवर्चसः ५
दशमस्तस्य पुत्रस्तु दशाश्वो नाम भारत
माहिष्मत्यामभूद्राजा धर्मात्मा सत्यविक्रमः ६
दशाश्वस्य सुतस्त्वासीद्राजा परमधार्मिकः
सत्ये तपसि दाने च यस्य नित्यं रतं मनः ७
मदिराश्व इति ख्यातः पृथिव्यां पृथिवीपतिः
धनुर्वे दे च वेदे च निरतो योऽभवत्सदा ८
मदिराश्वस्य पुत्रस्तु द्युतिमान्नाम पार्थिवः
महाभागो महातेजा महासत्त्वो महाबलः ९
पुत्रो द्युतिमतस्त्वासीत्सुवीरो नाम पार्थिवः

धर्मात्मा कोशवांश्चापि देवराज इवापरः १०
सुवीरस्य तु पुत्रोऽभूत्सर्वसंग्रामदुर्जयः
दुर्जयेत्यभिविख्यातः सर्वशास्त्रविशारदः ११
दुर्जयस्येन्द्रवपुषः पुत्रोऽग्निसदृशद्युतिः
दुर्योधनो नाम महान्राजासीद्राजसत्तम १२
तस्येन्द्रसमवीर्यस्य संग्रामेष्वनिवर्तिनः
विषयश्च प्रभावश्च तुल्यमेवाभ्यवर्तत १३
रत्नैर्धनैश्च पशुभिः सस्यैश्चापि पृथग्विधैः
नगरं विषयश्चास्य प्रतिपूर्णं तदाभवत् १४
न तस्य विषये चाभूत्कृपणो नापि दुर्गतः
व्याधितो वा कृशो वापि तस्मिन्नाभून्नरः क्वचित् १५
सुदक्षिणो मधुरवागनसूयुर्जितेन्द्रियः
धर्मात्मा चानृशंसश्च विक्रान्तोऽथाविकत्थनः १६
यज्वा वदान्यो मेधावी ब्रह्मण्यः सत्यसंगरः
न चावमन्ता दाता च वेदवेदाङ्गपारगः १७
तं नर्मदा देवनदी पुण्या शीतजला शिवा
चकमे पुरुषश्रेष्ठं स्वेन भावेन भारत १८
तस्य जज्ञे तदा नद्यां कन्या राजीवलोचना
नाम्ना सुदर्शना राजन्रूपेण च सुदर्शना १९
तादृग्रूपा न नारीषु भूतपूर्वा युधिष्ठिर
दुर्योधनसुता यादृगभवद्वरवर्णिनी २०
तामग्निश्चकमे साक्षाद्राजकन्यां सुदर्शनाम्
भूत्वा च ब्राह्मणः साक्षाद्वरयामास तं नृपम् २१
दरिद्रश्चासवर्णश्च ममायमिति पार्थिवः
न दित्सति सुतां तस्मै तां विप्राय सुदर्शनाम् २२
ततोऽस्य वितते यज्ञे नष्टोऽभूद्धव्यवाहनः
ततो दुर्योधनो राजा वाक्यमाहर्त्विजस्तदा २३
दुष्कृतं मम किं नु स्याद्भवतां वा द्विजर्षभाः
येन नाशं जगामाग्निः कृतं कुपुरुषेष्विव २४
न ह्यल्पं दुष्कृतं नोऽस्ति येनाग्निर्नाशमागतः

भवतां वाथ वा मह्यं तत्त्वेनैतद्विमृश्यताम् २५
एतद्राज्ञो वचः श्रुत्वा विप्रास्ते भरतर्षभ
नियता वाग्यताश्चैव पावकं शरणं ययुः २६
तान्दर्शयामास तदा भगवान्हव्यवाहनः
स्वं रूपं दीप्तिमत्कृत्वा शरदर्कसमद्युतिः २७
ततो महात्मा तानाह दहनो ब्राह्मणर्षभान्
वरयाम्यात्मनोऽथाय दुर्योधनसुतामिति २८
ततस्ते काल्यमुत्थाय तस्मै राज्ञे न्यवेदयन्
ब्राह्मणा विस्मिताः सर्वे यदुक्तं चित्रभानुना २९
ततः स राजा तच्छ्रुत्वा वचनं ब्रह्मवादिनाम्
अवाप्य परमं हर्षं तथेति प्राह बुद्धिमान् ३०
प्रायाचत नृपः शुल्कं भगवन्तं विभावसुम्
नित्यं सांनिध्यमिह ते चित्रभानो भवेदिति
तमाह भगवानग्निरेवमस्त्विति पार्थिवम् ३१
ततः सांनिध्यमद्यापि माहिष्मत्यां विभावसोः
दृष्टं हि सहदेवेन दिशो विजयता तदा ३२
ततस्तां समलंकृत्य कन्यामहतवाससम्
ददौ दुर्योधनो राजा पावकाय महात्मने ३३
प्रतिजग्राह चाग्निस्तां राजपुत्रीं सुदर्शनाम्
विधिना वेददृष्टेन वसोर्धारामिवाध्वरे ३४
तस्या रूपेण शीलेन कुलेन वपुषा श्रिया
अभवत्प्रीतिमानग्निर्गर्भं तास्यां समादधे ३५
तस्यां समभवत्पुत्रो नामाग्नेयः सुदर्शनः
शिशुरेवाध्यगात्सर्वं स च ब्रह्म सनातनम् ३६
अथौघवान्नाम नृपो नृगस्यासीत्पितामहः
तस्याप्योघवती कन्या पुत्रश्चौघरथोऽभवत् ३७
तामोघवान्ददौ तस्मै स्वयमोघवतीं सुताम्
सुदर्शनाय विदुषे भार्यार्थे देवरूपिणीम् ३८
स गृहस्थाश्रमरतस्तया सह सुदर्शनः
कुरुक्षेत्रेऽवसद्राजन्नोघवत्या समन्वितः ३९

गृहस्थश्चावजेष्याभि मृत्युमित्येव स प्रभो
प्रतिज्ञामकरोद्धीमान्दीप्ततेजा विशां पते ४०
तामथौघवतीं राजन्स पावकसुतोऽब्रवीत्
अतिथेः प्रतिकूलं ते न कर्तव्यं कथंचन ४१
येन येन च तुष्येत नित्यमेव त्वयातिथिः
अप्यात्मनः प्रदानेन न ते कार्या विचारणा ४२
एतद्व्रतं मम सदा हृदि संपरिवर्तते
गृहस्थानां हि सुश्रोणि नातिथेर्विद्यते परम् ४३
प्रमाणं यदि वामोरु वचस्ते मम शोभने
इदं वचनमव्यग्रा हृदि त्वं धारयेः सदा ४४
निष्क्रान्ते मयि कल्याणि तथा संनिहितेऽनघे
नातिथिस्तेऽवमन्तव्यः प्रमाणं यद्यहं तव ४५
तमब्रवीदोघवती यता मूर्ध्नि कृताञ्जलि
न मे त्वद्वचनात्किंचिदकर्तव्यं कथंचन ४६
जिगीषमाणं तु गृहे तदा मृत्युः सुदर्शनम्
पृष्ठतोऽन्वगमद्राजन्रन्ध्रान्वेषी तदा सदा ४७
इध्मार्थं तु गते तस्मिन्नग्निपुत्रे सुदर्शने
अतिथिर्ब्राह्मणः श्रीमांस्तामाहौघवतीं तदा ४८
आतिथ्यं दत्तमिच्छामि त्वयाद्य वरवर्णिनि
प्रमाणं यदि धर्मस्ते गृहस्थाश्रमसंमतः ४९
इत्युक्ता तेन विप्रेण राजपुत्री यशस्विनी
विधिना प्रतिजग्राह वेदोक्तेन विशां पते ५०
आसनं चैव पाद्यं च तस्मै दत्त्वा द्विजातये
प्रोवाचौघवती विप्रं केनार्थः किं ददामि ते ५१
तामब्रवीत्ततो विप्रो राजपुत्रीं सुदर्शनाम्
त्वया ममार्थः कल्याणि निर्विशङ्के तदाचर ५२
यदि प्रमाणं धर्मस्ते गृहस्थाश्रमसंमतः
प्रदानेनात्मनो राज्ञि कर्तुमर्हसि मे प्रियम् ५३
तथा संछन्द्यमानोऽन्यैरीप्सितैर्नृपकन्यया
नान्यमात्मप्रदानात्स तस्या वव्रे वरं द्विजः ५४

सा तु राजसुता स्मृत्वा भर्तुर्वचनमादितः
तथेति लज्जमाना सा तमुवाच द्विजर्षभम् ५५
ततो रहः स विप्रर्षिः सा चैवोपविवेश ह
संस्मृत्य भर्तुर्वचनं गृहस्थाश्रमकाङ्क्षिणः ५६
अथेध्मान्समुपादाय स पावकिरुपागमत्
मृत्युना रौद्रभावेन नित्यं बन्धुरिवान्वितः ५७
ततस्त्वाश्रममागम्य स पावकसुतस्तदा
तामाजुहावौघवतीं क्वासि यातेति चासकृत् ५८
तस्मै प्रतिवचः सा तु भर्त्रे न प्रददौ तदा
कराभ्यां तेन विप्रेण स्पृष्टा भर्तृव्रता सती ५९
उच्छिष्टास्मीति मन्वाना लज्जिता भर्तुरेव च
तूष्णींभूताभवत्साध्वी न चोवाचाथ किंचन ६०
अथ तां पुनरेवेदं प्रोवाच स सुदर्शनः
क्व सा साध्वी क्व सा याता गरीयः किमतो मम ६१
पतिव्रता सत्यशीला नित्यं चैवार्जवे रता
कथं न प्रत्युदेत्यद्य स्मयमाना यथा पुरा ६२
उटजस्थस्तु तं विप्रः प्रत्युवाच सुदर्शनम्
अतिथिं विद्धि संप्राप्तं पावके ब्राह्मणं च माम् ६३
अनया छन्द्यमानोऽह भार्यया तव सत्तम
तैस्तैरतिथिसत्कारैरार्जवेऽस्या दृढं मनः ६४
अनेन विधिना सेयं मामर्चति शुभानना
अनुरूपं यदत्राद्य तद्भवान्वक्तुमर्हति ६५
कूटमुद्गरहस्तस्तु मृत्युस्तं वै समन्वयात्
हीनप्रतिज्ञमत्रैनं वधिष्यामीति चिन्तयन् ६६
सुदर्शनस्तु मनसा कर्मणा चक्षुषा गिरा
त्यक्तेर्ष्यस्त्यक्तमन्युश्च स्मयमानोऽब्रवीदिदम् ६७
सुरतं तेऽस्तु विप्राग्र्य प्रीतिर्हि परमा मम
गृहस्थस्य हि धर्मोऽग्र्य संप्राप्तातिथिपूजनम् ६८
अतिथिः पूजितो यस्य गृहस्थस्य तु गच्छति
नान्यस्तस्मात्परो धर्म इति प्राहुर्मनीषिणः ६९

प्राणा हि मम दाराश्च यच्चान्यद्विद्यते वसु
अतिथिभ्यो मया देयमिति मे व्रतमाहितम् ७०
निःसंदिग्धं मया वाक्यमेतत्ते समुदाहृतम्
तेनाहं विप्र सत्येन स्वयमात्मानमालभे ७१
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम्
बुद्धिरात्मा मनः कालो दिशश्चैव गुणा दश ७२
नित्यमेते हि पश्यन्ति देहिनां देहसंश्रिताः
सुकृतं दुष्कृतं चापि कर्म धर्मभृतां वर ७३
यथैषा नानृता वाणी मयाद्य समुदाहृता
तेन सत्येन मां देवाः पालयन्तु दहन्तु वा ७४
ततो नादः समभवद्दिक्षु सर्वासु भारत
असकृत्सत्यमित्येव नैतन्मिथ्येति सर्वशः ७५
उटजात्तु ततस्तस्मान्निश्चक्राम स वै द्विजः
वपुषा खं च भूमिं च व्याप्य वायुरिवोद्यतः ७६
स्वरेण विप्रः शैक्षेण त्रील्लोँकाननुनादयन्
उवाच चैनं धर्मज्ञं पूर्वमामन्त्र्य नामतः ७७
धर्मोऽहमस्मि भद्रं ते जिज्ञासार्थं तवानघ
प्राप्तः सत्यं च ते ज्ञात्वा प्रीतिर्मे परमा त्वयि ७८
विजितश्च त्वया मृत्युर्योऽय त्वामनुगच्छति
रन्ध्रान्वेषी तव सदा त्वया धृत्या वशीकृतः ७९
न चास्ति शक्तिस्त्रैलोक्ये कस्यचित्पुरुषोत्तम
पतिव्रतामिमां साध्वीं तवोद्वीक्षितुमप्युत ८०
रक्षिता त्वद्गुणैरेषा पतिव्रतगुणैस्तथा
अधृष्या यदियं ब्रूयात्तथा तन्नान्यथा भवेत् ८१
एषा हि तपसा स्वेन संयुक्ता ब्रह्मवादिनी
पावनार्थं च लोकस्य सरिच्छ्रेष्ठा भविष्यति ८२
अर्धेनौघवती नाम त्वामर्धेनानुयास्यति
शरीरेण महाभागा योगो ह्यस्या वशे स्थितः ८३
अनया सह लोकांश्च गन्तासि तपसार्जितान्
यत्र नावृत्तिमभ्येति शाश्वतांस्तान्सनातनान् ८४

अनेन चैव देहेन लोकांस्त्वमभिपत्स्यसे
निर्जितश्च त्वया मृत्युरैश्वर्यं च तवोत्तमम् ८५
पञ्च भूतान्यतिक्रान्तः स्ववीर्याच्च मनोभवः
गृहस्थधर्मेणानेन कामक्रोधौ च ते जितौ ८६
स्नेहो रागश्च तन्द्री च मोहो द्रोहश्च केवलः
तव शुश्रूषया राजन्राजपुत्र्या विनिर्जिताः ८७
भीष्म उवाच
शुक्लानां तु सहस्रेण वाजिनां रथमुत्तमम्
युक्तं प्रगृह्य भगवान्व्यवसायो जगाम तम् ८८
मृत्युरात्मा च लोकाश्च जिता भूतानि पञ्च च
बुद्धिः कालो मनो व्योम कामक्रोधौ तथैव च ८९
तस्माद्गृहाश्रमस्थस्य नान्यद्दैवत मस्तिवै
ऋतेऽतिथिं नर व्याघ्र मनसैतद् विचारय ९०
अतिथिः पूजितो यस्य ध्यायते मनसा शुभम्
न तत्क्रतुशतेनापि तुल्यमाहुर्मनीषिणः ९१
पात्रं त्वतिथिमासाद्य शीलाढ्यं यो न पूजयेत्
स दत्त्वा सुकृतं तस्य क्षपयेत ह्यनर्चितः ९२
एतत्ते कथितं पुत्र मयाख्यानमनुत्तमम्
यथा हि विजितो मृत्युर्गृहस्थेन पुराभवत् ९३
धन्यं यशस्यमायुष्यमिदमाख्यानमुत्तमम्
बुभूषताभिमन्तव्यं सर्वदुश्चरितापहम् ९४
य इदं कथयेद्विद्वानहन्यहनि भारत
सुदर्शनस्य चरितं पुण्याँल्लोकानवाप्नुयात् ९५
इति श्रीमहाभारते अनुशासनपर्वणि द्वितीयोऽध्यायः २

## तृतीयोऽध्यायः

युधिष्ठिर उवाच
ब्राह्मण्यं यदि दुष्प्रापं त्रिभिर्वर्णैर्नराधिप
कथं प्राप्तं महाराज क्षत्रियेण महात्मना १
विश्वामित्रेण धर्मात्मन्ब्राह्मणत्वं नरर्षभ

श्रोतुमिच्छामि तत्त्वेन तन्मे ब्रूहि पितामह २
तेन ह्यमितवीर्येण वसिष्ठस्य महात्मनः
हतं पुत्रशतं सद्यस्तपसा प्रपितामह ३
यातुधानाश्च बहवो राक्षसास्तिग्मतेजसः
मन्युनाविष्टदेहेन सृष्टाः कालान्तकोपमाः ४
महान्कुशिकवंशश्च ब्रह्मर्षिशतसंकुलः
स्थापितो नरलोकेऽस्मिन्विद्वान्ब्राह्मणसंस्तुतः ५
ऋचीकस्यात्मजश्चैव शुनःशेपो महातपाः
विमोक्षितो महासत्रात्पशुतामभ्युपागतः ६
हरिश्चन्द्रक्रतौ देवांस्तोषयित्वात्मतेजसा
पुत्रतामनुसंप्राप्तो विश्वामित्रस्य धीमतः ७
नाभिवादयते ज्येष्ठं देवरातं नराधिप
पुत्राः पञ्चशताश्चापि शप्ताः श्वपचतां गताः ८
त्रिशङ्कुर्बन्धुसंत्यक्त इक्ष्वाकुः प्रीतिपूर्वकम्
अवाक्शिरा दिवं नीतो दक्षिणामाश्रितो दिशम् ९
विश्वामित्रस्य विपुला नदी राजर्षिसेविता
कौशिकीति शिवा पुण्या ब्रह्मर्षिगणसेविता १०
तपोविघ्नकरी चैव पञ्चचूडा सुसंमता
रम्भा नामाप्सराः शापाद्यस्य शैलत्वमागता ११
तथैवास्य भयाद्बद्ध्वा वसिष्ठः सलिले पुरा
आत्मानं मज्जयामास विपाशः पुनरुत्थितः १२
तदाप्रभृति पुण्या हि विपाशाभून्महानदी
विख्याता कर्मणा तेन वसिष्ठस्य महात्मनः १३
वाग्भिश्च भगवान्येन देवसेनाग्रगः प्रभुः
स्तुतः प्रीतमनाश्चासीच्छापाच्चैनममोचयत् १४
ध्रुवस्यौत्तानपादस्य ब्रह्मर्षीणां तथैव च
मध्ये ज्वलति यो नित्यमुदीचीमाश्रितो दिशम् १५
तस्यैतानि च कर्माणि तथान्यानि च कौरव
क्षत्रियस्येत्यतो जातमिदं कौतूहलं मम १६
किमेतदिति तत्त्वेन प्रब्रूहि भरतर्षभ

देहान्तरमनासाद्य कथं स ब्राह्मणोऽभवत् १७
एतत्तत्त्वेन मे राजन्सर्वमाख्यातुमर्हसि
मतंगस्य यथातत्त्वं तथैवैतद्ब्रवीहि मे १८
स्थाने मतंगो ब्राह्मण्यं नालभद्भरतर्षभ
चण्डालयोनौ जातो हि कथं ब्राह्मण्यमाप्नुयात् १९
इति श्रीमहाभारते अनुशासनपर्वणि तृतीयोऽध्यायः ३

## चतुर्थोऽध्यायः

भीष्म उवाच
श्रूयतां पार्थ तत्त्वेन विश्वामित्रो यथा पुरा
ब्राह्मणत्वं गतस्तात ब्रह्मर्षित्वं तथैव च १
भरतस्यान्वये चैवाजमीढो नाम पार्थिवः
बभूव भरतश्रेष्ठ यज्वा धर्मभृतां वरः २
तस्य पुत्रो महानासीज्जह्नुर्नाम नरेश्वरः
दुहितृत्वमनुप्राप्ता गङ्गा यस्य महात्मनः ३
तस्यात्मजस्तुल्यगुणः सिन्धुद्वीपो महायशाः
सिन्धुद्वीपाच्च राजर्षिर्बलाकाश्वो महाबलः ४
वल्लभस्तस्य तनयः साक्षाद्धर्म इवापरः
कुशिकस्तस्य तनयः सहस्राक्षसमद्युतिः ५
कुशिकस्यात्मजः श्रीमान्गाधिर्नाम जनेश्वरः
अपुत्रः स महाबाहुर्वनवासमुदावसत् ६
कन्या जज्ञे सुता तस्य वने निवसतः सतः
नाम्ना सत्यवती नाम रूपेणाप्रतिमा भुवि ७
तां वव्रे भार्गवः श्रीमांश्च्यवनस्यात्मजः प्रभुः
ऋचीक इति विख्यातो विपुले तपसि स्थितः ८
स तां न प्रददौ तस्मै ऋचीकाय महात्मने
दरिद्र इति मत्वा वै गाधिः शत्रुनिबर्हणः ९
प्रत्याख्याय पुनर्यान्तमब्रवीद्राज सत्तमः
शुल्कं प्रदीयतां मह्यं ततो वेत्स्यसि मे सुताम् १०
ऋचीक उवाच

किं प्रयच्छामि राजेन्द्र तुभ्यं शुल्कमहं नृप
दुहितुर्ब्रूह्यसंसक्तो मात्राभूत्ते विचारणा ११
गाधिरुवाच
चन्द्ररश्मिप्रकाशानां हयानां वातरंहसाम्
एकतः श्यामकर्णानां सहस्रं देहि भार्गव १२
भीष्म उवाच
ततः स भृगुशार्दूलश्च्यवनस्यात्मजः प्रभुः
अब्रवीद्वरुणं देवमादित्यं पतिमम्भसाम् १३
एकतः श्यामकर्णानां हयानां चन्द्रवर्चसाम्
सहस्रं वातवेगानां भिक्षे त्वां देवसत्तम १४
तथेति वरुणो देव आदित्यो भृगुसत्तमम्
उवाच यत्र ते छन्दस्तत्रोत्थास्यन्ति वाजिनः १५
ध्यातमात्रे ऋचीकेन हयानां चन्द्रवर्चसाम्
गङ्गाजलात्समुत्तस्थौ सहस्रं विपुलौजसाम् १६
अदूरे कान्यकुब्जस्य गङ्गायास्तीरमुत्तमम्
अश्वतीर्थं तदद्यापि मानवाः परिचक्षते १७
तत्तदा गाधये तात सहस्रं वाजिनां शुभम्
ऋचीकः प्रददौ प्रीतः शुल्कार्थं जपतां वरः १८
ततः स विस्मितो राजा गाधिः शापभयेन च
ददौ तां समलंकृत्य कन्यां भृगुसुताय वै १९
जग्राह पाणिं विधिना तस्या ब्रह्मर्षिसत्तमः
सा च तं पतिमासाद्य परं हर्षमवाप ह २०
स तुतोष च विप्रर्षिस्तस्या वृत्तेन भारत
छन्दयामास चैवैनां वरेण वरवर्णिनीम् २१
मात्रे तत्सर्वमाचख्यौ सा कन्या राजसत्तमम्
अथ तामब्रवीन्माता सुतां किंचिदवाङ्मुखीम् २२
ममापि पुत्रि भर्ता ते प्रसादं कर्तुमर्हति
अपत्यस्य प्रदानेन समर्थः स महातपाः २३
ततः सा त्वरितं गत्वा तत्सर्वं प्रत्यवेदयत्
मातुश्चिकीर्षितं राजन्नृचीकस्तामथाब्रवीत् २४

गुणवन्तमपत्यं वै त्वं च सा जनयिष्यथः
जनन्यास्तव कल्याणि मा भूद्वै प्रणयोऽन्यथा २५
तव चैव गुणश्लाघी पुत्र उत्पत्स्यते शुभे
अस्मद्वंशकरः श्रीमांस्तव भ्राता च वंशकृत् २६
ऋतुस्नाता च साश्वत्थं त्वं च वृक्षमुदुम्बरम्
परिष्वजेथाः कल्याणि तत इष्टमवाप्स्यथः २७
चरुद्वयमिदं चैव मन्त्रपूतं शुचिस्मिते
त्वं च सा चोपयुञ्जीथां ततः पुत्राववाप्स्यथः २८
ततः सत्यवती हृष्टा मातरं प्रत्यभाषत
यदृचीकेन कथितं तच्चाचख्यौ चरुद्वयम् २९
तामुवाच ततो माता सुतां सत्यवतीं तदा
पुत्रि मूर्ध्ना प्रपन्नायाः कुरुष्व वचनं मम ३०
भर्त्रा य एष दत्तस्ते चरुर्मन्त्रपुरस्कृतः
एतं प्रयच्छ मह्यं त्वं मदीयं त्वं गृहाण च ३१
व्यत्यासं वृक्षयोश्चापि करवाव शुचिस्मिते
यदि प्रमाणं वचनं मम मातुरनिन्दिते ३२
व्यक्तं भगवता चात्र कृतमेतं भविष्यति
ततो मे त्वच्चरौ भावः पादपे च सुमध्यमे
कथं विशिष्टो भ्राता ते भवेदित्येव चिन्तय ३३
तथा च कृतवत्यौ ते माता सत्यवती च सा
अथ गर्भावनुप्राप्ते उभे ते वै युधिष्ठिर ३४
दृष्ट्वा गर्भमनुप्राप्तां भार्यां स च महानृषिः
उवाच तां सत्यवतीं दुर्मना भृगुसत्तमः ३५
व्यत्यासेनोपयुक्तस्ते चरुर्व्यक्तं भविष्यति
व्यत्यासः पादपे चापि सुव्यक्तं ते कृतः शुभे ३६
मया हि विश्वं यद्ब्रह्म त्वच्चरौ संनिवेशितम्
क्षत्रवीर्यं च सकलं चरौ तस्या निवेशितम् ३७
त्रिलोकविख्यातगुणं त्वं विप्रं जनयिष्यसि
सा च क्षत्रं विशिष्टं वै तत एतत्कृतं मया ३८
व्यत्यासस्तु कृतो यस्मात्त्वया मात्रा तथैव च

तस्मात्सा ब्राह्मणश्रेष्ठं माता ते जनयिष्यति ३९
क्षत्रियं तूग्रकर्माणं त्वं भद्रे जनयिष्यसि
न हि ते तत्कृतं साधु मातृस्नेहेन भामिनि ४०
सा श्रुत्वा शोकसंतप्ता पपात वरवर्णिनी
भूमौ सत्यवती राजंश्छिन्नेव रुचिरा लता ४१
प्रतिलभ्य च सा संज्ञां शिरसा प्रणिपत्य च
उवाच भार्या भर्तारं गाधेयी ब्राह्मणर्षभम् ४२
प्रसादयन्त्यां भार्यायां मयि ब्रह्मविदां वर
प्रसादं कुरु विप्रर्षे न मे स्यात्क्षत्रियः सुतः ४३
कामं ममोग्रकर्मा वै पौत्रो भवितुमर्हति
न तु मे स्यात्सुतो ब्रह्मन्नेष मे दीयतां वरः ४४
एवमस्त्विति होवाच स्वां भार्यां सुमहातपाः
ततः सा जनयामास जमदग्निं सुतं शुभम् ४५
विश्वामित्रं चाजनयद्गाधेर्भार्या यशस्विनी
ऋषेः प्रभावाद्राजेन्द्र ब्रह्मर्षिं ब्रह्मवादिनम् ४६
ततो ब्राह्मणतां यातो विश्वामित्रो महातपाः
क्षत्रियः सोऽप्यथ तथा ब्रह्मवंशस्य कारकः ४७
तस्य पुत्रा महात्मानो ब्रह्मवंशविवर्धनाः
तपस्विनो ब्रह्मविदो गोत्रकर्तार एव च ४८
मधुच्छन्दश्च भगवान्देवरातश्च वीर्यवान्
अक्षीणश्च शकुन्तश्च बभ्रुः कालपथस्तथा ४९
याज्ञवल्क्यश्च विख्यातस्तथा स्थूणो महाव्रतः
उलूको यमदूतश्च तथर्षिः सैन्धवायनः ५०
कर्णजङ्घश्च भगवान्गालवश्च महानृषिः
ऋषिर्वज्रस्तथाख्यातः शालङ्कायन एव च ५१
लालाट्यो नारदश्चैव तथा कूर्चमुखः स्मृतः
वादुलिर्मुसलश्चैव रक्षोग्रीवस्तथैव च ५२
अङ्घ्रिको नैकभृच्चैव शिलायूपः सितः शुचिः
चक्रको मारुतन्तव्यो वातघ्नोऽथाश्वलायनः ५३
श्यामायनोऽथ गार्ग्यश्च जाबालि सुश्रुतस्तथा

कारीषिरथ संश्रुत्यः परपौरवतन्तवः ५४
महानृषिश्च कपिलस्तथर्षिस्तारकायनः
तथैव चोपगहनस्तथर्षिश्चार्जुनायनः ५५
मार्गमित्रिर्हिरण्याक्षो जंघारिर्बभ्रुवाहनः
सूतिर्विभूतिः सूतश्च सुरङ्गश्च तथैव हि ५६
आराद्धिर्नामयश्चैव चाम्पेयोज्जयनौ तथा
नवतन्तुर्बकनखः शयोनरतिरेव च ५७
शयोरुहश्चारुमत्स्यः शिरीषी चाथ गार्दभिः
उज्जयोनिरदापेक्षी नारदी च महानृषिः
विश्वामित्रात्मजाः सर्वे मुनयो ब्रह्मवादिनः ५८
तन्नैव क्षत्रियो राजन्विश्वामित्रो महातपाः
ऋचीकेनाहितं ब्रह्म परमेतद्युधिष्ठिर ५९
एतत्ते सर्वमाख्यातं तत्त्वेन भरतर्षभ
विश्वामित्रस्य वै जन्म सोमसूर्याग्नितेजसः ६०
यत्र यत्र च संदेहो भूयस्ते राजसत्तम
तत्र तत्र च मां ब्रूहि च्छेत्तास्मि तव संशयान् ६१
इति श्रीमहाभारते अनुशासनपर्वणि चतुर्थोऽध्यायः ४

पञ्चमोऽध्यायः

युधिष्ठिर उवाच
आनृशंस्यस्य धर्मस्य गुणान्भक्तजनस्य च
श्रोतुमिच्छामि कार्त्स्न्येन तन्मे ब्रूहि पितामह १
भीष्म उवाच
विषये काशिराजस्य ग्रामान्निष्क्रम्य लुब्धकः
सविषं काण्डमादाय मृगयामास वै मृगम् २
तत्र चामिषलुब्धेन लुब्धकेन महावने
अविदूरे मृगं दृष्ट्वा बाणः प्रतिसमाहितः ३
तेन दुर्वारितास्त्रेण निमित्तचपलेषुणा
महान्वनतरुर्विद्धो मृगं तत्र जिघांसता ४
स तीक्ष्णविषदिग्धेन शरेणातिबलात्कृतः

उत्सृज्य फलपत्राणि पादपः शोषमागतः ५
तस्मिन्वृक्षे तथाभूते कोटरेषु चिरोषितः
न जहाति शुको वासं तस्य भक्त्या वनस्पतेः ६
निष्प्रचारो निराहारो ग्लानः शिथिलवागपि
कृतज्ञः सह वृक्षेण धर्मात्मा स व्यशुष्यत ७
तमुदारं महासत्त्वमतिमानुषचेष्टितम्
समदुःखसुखं ज्ञात्वा विस्मितः पाकशासनः ८
ततश्चिन्तामुपगतः शक्रः कथमयं द्विजः
तिर्यग्योनावसंभाव्यमानृशंस्यं समास्थितः ९
अथ वा नात्र चित्रं हीत्यभवद्वासवस्य तु
प्राणिनामिह सर्वेषां सर्वं सर्वत्र दृश्यते १०
ततो ब्राह्मणवेषेण मानुषं रूपमास्थितः
अवतीर्य महीं शक्रस्तं पक्षिणमुवाच ह ११
शुक भोः पक्षिणां श्रेष्ठ दाक्षेयी सुप्रजास्त्वया
पृच्छे त्वा शुष्कमेतं वै कस्मान्न त्यजसि द्रुमम् १२
अथ पृष्टः शुकः प्राह मूर्ध्ना समभिवाद्य तम्
स्वागतं देवराजाय विज्ञातस्तपसा मया १३
ततो दशशताक्षेण साधु साध्विति भाषितम्
अहो विज्ञानमित्येवं तपसा पूजितस्ततः १४
तमेवं शुभकर्माणं शुकं परमधार्मिकम्
विजानन्नपि तां प्राप्तिं पप्रच्छ बलसूदनः १५
निष्पत्रमफलं शुष्कमशरण्यं पतत्रिणाम्
किमर्थं सेवसे वृक्षं यदा महदिदं वनम् १६
अन्येऽपि बहवो वृक्षाः पत्रसंछन्नकोटराः
शुभाः पर्याप्तसंचारा विद्यन्तेऽस्मिन्महावने १७
गतायुषमसामर्थ्यं क्षीणसारं हतश्रियम्
विमृश्य प्रज्ञया धीर जहीमं ह्यस्थिरं द्रुमम् १८
तदुपश्रुत्य धर्मात्मा शुकः शक्रेण भाषितम्
सुदीर्घमभिनिःश्वस्य दीनो वाक्यमुवाच ह १९
अनतिक्रमणीयानि दैवतानि शचीपते

यत्राभवस्तत्र भवस्तन्निबोध सुराधिप २०
अस्मिन्नहं द्रुमे जातः साधुभिश्च गुणैर्युतः
बालभावे च संगुप्तः शत्रुभिश्च न धर्षितः २१
किमनुक्रोशवैफल्यमुत्पादयसि मेऽनघ
आनृशंस्येऽनुरक्तस्य भक्तस्यानुगतस्य च २२
अनुक्रोशो हि साधूनां सुमहद्धर्मलक्षणम्
अनुक्रोशश्च साधूनां सदा प्रीतिं प्रयच्छति २३
त्वमेव दैवतैः सर्वैः पृच्छ्यसे धर्मसंशयान्
अतस्त्वं देव देवानामाधिपत्ये प्रतिष्ठितः २४
नार्हसि त्वं सहस्राक्ष त्याजयित्वेह भक्तितः
समर्थमुपजीव्येमं त्यजेयं कथमद्य वै २५
तस्य वाक्येन सौम्येन हर्षितः पाकशासनः
शुकं प्रोवाच धर्मज्ञमानृशंस्येन तोषितः २६
वरं वृणीष्वेति तदा स च वव्रे वरं शुकः
आनृशंस्यपरो नित्यं तस्य वृक्षस्य संभवम् २७
विदित्वा च दृढां शक्रस्तां शुके शीलसंपदम्
प्रीतः क्षिप्रमथो वृक्षममृतेनावसिक्तवान् २८
ततः फलानि पत्राणि शाखाश्चापि मनोरमाः
शुकस्य दृढभक्तित्वाच्छ्रीमत्त्वं चाप स द्रुमः २९
शुकश्च कर्मणा तेन आनृशंस्यकृतेन ह
आयुषोऽन्ते महाराज प्राप शक्रसलोकताम् ३०
एवमेव मनुष्येन्द्र भक्तिमन्तं समाश्रितः
सर्वार्थसिद्धिं लभते शुकं प्राप्य यथा द्रुमः ३१
इति श्रीमहाभारते अनुशासनपर्वणि पञ्चमोऽध्यायः ५

## षष्ठोऽध्यायः

युधिष्ठिर उवाच
पितामह महाप्राज्ञ सर्वशास्त्रविशारद
दैवे पुरुषकारे च किंस्विच्छ्रेष्ठतरं भवेत् १
भीष्म उवाच

अत्राप्युदाहरन्तीममितिहासं पुरातनम्
वसिष्ठस्य च संवादं ब्रह्मणश्च युधिष्ठिर २
दैवमानुषयोः किंस्वित्कर्मणोः श्रेष्ठमित्युत
पुरा वसिष्ठो भगवान्पितामहमपृच्छत ३
ततः पद्मोद्भवो राजन्देवदेवः पितामहः
उवाच मधुरं वाक्यमर्थवद्धेतुभूषितम् ४
नाबीजं जायते किंचिन्न बीजेन विना फलम्
बीजाद्बीजं प्रभवति बीजादेव फलं स्मृतम् ५
यादृशं वपते बीजं क्षेत्रमासाद्य कर्षकः
सुकृते दुष्कृते वापि तादृशं लभते फलम् ६
यथा बीजं विना क्षेत्रमुप्तं भवति निष्फलम्
तथा पुरुषकारेण विना दैवं न सिध्यति ७
क्षेत्रं पुरुषकारस्तु दैवं बीजमुदाहृतम्
क्षेत्रबीजसमायोगात्ततः सस्यं समृध्यते ८
कर्मणः फलनिर्वृत्तिं स्वयमश्नाति कारकः
प्रत्यक्षं दृश्यते लोके कृतस्याप्यकृतस्य च ९
शुभेन कर्मणा सौख्यं दुःखं पापेन कर्मणा
कृतं सर्वत्र लभते नाकृतं भुज्यते क्वचित् १०
कृती सर्वत्र लभते प्रतिष्ठां भाग्यविक्षतः
अकृती लभते भ्रष्टः क्षते क्षारावसेचनम् ११
तपसा रूपसौभाग्यं रत्नानि विविधानि च
प्राप्यते कर्मणा सर्वं न दैवादकृतात्मना १२
तथा स्वर्गश्च भोगश्च निष्ठा या च मनीषिता
सर्वं पुरुषकारेण कृतेनेहोपपद्यते १३
ज्योतींषि त्रिदशा नागा यक्षाश्चन्द्रार्कमारुताः
सर्वे पुरुषकारेण मानुष्याद्देवतां गताः १४
अर्थो वा मित्रवर्गो वा एश्वर्यं वा कुलान्वितम्
श्रीश्चापि दुर्लभा भोक्तुं तथैवाकृतकर्मभिः १५
शौचेन लभते विप्रः क्षत्रियो विक्रमेण च
वैश्यः पुरुषकारेण शूद्रः शुश्रूषया श्रियम् १६

नादातारं भजन्त्यर्था न क्लीबं नापि निष्क्रियम्
नाकर्मशीलं नाशूरं तथा नैवातपस्विनम् १७
येन लोकास्त्रयः सृष्टा दैत्याः सर्वाश्च देवताः
स एष भगवान्विष्णुः समुद्रे तप्यते तपः १८
स्वं चेत्कर्मफलं न स्यात्सर्वमेवाफलं भवेत्
लोको दैवं समालम्ब्य उदासीनो भवेन्न तु १९
अकृत्वा मानुषं कर्म यो दैवमनुवर्तते
वृथा श्राम्यति संप्राप्य पतिं क्लीबमिवाङ्गना २०
न तथा मानुषे लोके भयमस्ति शुभाशुभे
यथा त्रिदशलोके हि भयमल्पेन जायते २१
कृतः पुरुषकारस्तु दैवमेवानुवर्तते
न दैवमकृते किंचित्कस्यचिद्दातुमर्हति २२
यदा स्थानान्यनित्यानि दृश्यन्ते दैवतेष्वपि
कथं कर्म विना दैवं स्थास्यते स्थापयिष्यति २३
न दैवतानि लोकेऽस्मिन्व्यापारं यान्ति कस्यचित्
व्यासङ्गं जनयन्त्युग्रमात्माभिभवशङ्कया २४
ऋषीणां देवतानां च सदा भवति विग्रहः
कस्य वाचा ह्यदैवं स्याद्यतो दैवं प्रवर्तते २५
कथं चास्य समुत्पत्तिर्यथा दैवं प्रवर्तते
एवं त्रिदशलोकेऽपि प्राप्यन्ते बहवश्छलाः २६
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः
आत्मैव चात्मनः साक्षी कृतस्याप्यकृतस्य च २७
कृतं च विकृतं किंचित्कृते कर्मणि सिध्यति
सुकृते दुष्कृतं कर्म न यथार्थं प्रपद्यते २८
देवानां शरणं पुण्यं सर्वं पुण्यैरवाप्यते
पुण्यशीलं नरं प्राप्य किं दैवं प्रकरिष्यति २९
पुरा ययातिर्विभ्रष्टश्च्यावितः पतितः क्षितौ
पुनरारोपितः स्वर्गं दौहित्रैः पुण्यकर्मभिः ३०
पुरूरवाश्च राजर्षिर्द्विजैरभिहितः पुरा
एल इत्यभिविख्यातः स्वर्गं प्राप्तो महीपतिः ३१

अश्वमेधादिभिर्यज्ञैः सत्कृतः कोसलाधिपः
महर्षिशापात्सौदासः पुरुषादत्वमागतः ३२
अश्वत्थामा च रामश्च मुनिपुत्रौ धनुर्धरौ
न गच्छतः स्वर्गलोकं सुकृतेनेह कर्मणा ३३
वसुर्यज्ञशतैरिष्ट्वा द्वितीय इव वासवः
मिथ्याभिधानेनैकेन रसातलतलं गतः ३४
बलिर्वैरोचनिर्बद्धो धर्मपाशेन दैवतैः
विष्णोः पुरुषकारेण पातालशयनः कृतः ३५
शक्रस्योदस्य चरणं प्रस्थितो जनमेजयः
द्विजस्त्रीणां वधं कृत्वा किं दैवेन न वारितः ३६
अज्ञानाद्ब्राह्मणं हत्वा स्पृष्टो बालवधेन च
वैशम्पायनविप्रर्षिः किं दैवेन निवारितः ३७
गोप्रदानेन मिथ्या च ब्राह्मणेभ्यो महामखे
पुरा नृगश्च राजर्षिः कृकलासत्वमागतः ३८
धुन्धुमारश्च राजर्षिः सत्रेष्वेव जरां गतः
प्रीतिदायं परित्यज्य सुष्वाप स गिरिव्रजे ३९
पाण्डवानां हृतं राज्यं धार्तराष्ट्रैर्महाबलैः
पुनः प्रत्याहृतं चैव न दैवाद्भुजसंश्रयात् ४०
तपोनियमसंयुक्ता मुनयः संशितव्रताः
किं ते दैवबलाच्छापमुत्सृजन्ते न कर्मणा ४१
पापमुत्सृजते लोके सर्वं प्राप्य सुदुर्लभम्
लोभमोहसमापन्नं न दैवं त्रायते नरम् ४२
यथाग्निः पवनोद्धूतः सूक्ष्मोऽपि भवते महान्
तथा कर्मसमायुक्तं दैवं साधु विवर्धते ४३
यथा तैलक्षयाद्दीपः प्रम्लानिमुपगच्छति
तथा कर्मक्षयाद्दैवं प्रम्लानिमुपगच्छति ४४
विपुलमपि धनौघं प्राप्य भोगान्स्त्रियो वा पुरुष इह न शक्तः कर्महीनोऽपि भोक्तुम्
सुनिहितमपि चार्थं दैवतै रक्ष्यमाणं व्ययगुणमपि साधुं कर्मणा संश्रयन्ते ४५
भवति मनुजलोकाद्देवलोको विशिष्टो बहुतरसुसमृद्ध्या मानुषाणां गृहाणि

पितृवनभवनाभं दृश्यते चामराणां न च फलति विकर्मा जीवलोकेन दैवम्
४६
व्यपनयति विमार्गं नास्ति दैवे प्रभुत्वं गुरुमिव कृतमग्र्यं कर्म संयाति
दैवम्
अनुपहतमदीनं कामकारेण दैवं नयति पुरुषकारः संचितस्तत्र तत्र ४७
एतत्ते सर्वमाख्यातं मया वै मुनिसत्तम
फलं पुरुषकारस्य सदा संदृश्य तत्त्वतः ४८
अभ्युत्थानेन दैवस्य समारब्धेन कर्मणा
विधिना कर्मणा चैव स्वर्गमार्गमवाप्नुयात् ४९
इति श्रीमहाभारते अनुशासनपर्वणि षष्ठोऽध्यायः ६

## सप्तमोऽध्यायः

युधिष्ठिर उवाच
कर्मणां मे समस्तानां शुभानां भरतर्षभ
फलानि महतां श्रेष्ठ प्रब्रूहि परिपृच्छतः १
भीष्म उवाच
रहस्यं यदृषीणां तु तच्छृणुष्व युधिष्ठिर
या गतिः प्राप्यते येन प्रेत्यभावे चिरेप्सिता २
येन येन शरीरेण यद्यत्कर्म करोति यः
तेन तेन शरीरेण तत्तत्फलमुपाश्नुते ३
यस्यां यस्यामवस्थायां यत्करोति शुभाशुभम्
तस्यां तस्यामवस्थायां भुङ्क्ते जन्मनि जन्मनि ४
न नश्यति कृतं कर्म सदा पञ्चेन्द्रियैरिह
ते ह्यस्य साक्षिणो नित्यं षष्ठ आत्मा तथैव च ५
चक्षुर्दद्यान्मनो दद्याद्वाचं दद्याच्च सूनृताम्
अनुव्रजेदुपासीत स यज्ञः पञ्चदक्षिणः ६
यो दद्यादपरिक्लिष्टमन्नमध्वनि वर्तते
श्रान्तायादृष्टपूर्वाय तस्य पुण्यफलं महत् ७
स्थण्डिले शयमानानां गृहाणिशयनानिच
चीर वल्कल संवीते वासांस्याभरणानि च ८

वाहनासनयानानि योगात्मनि तपोधने
अग्नीनुपशयानस्य राजपौरुषमुच्यते ९
रसानां प्रतिसंहारे सौभाग्यमनुगच्छति
आमिषप्रतिसंहारे पशून्पुत्रांश्च विन्दति १०
अवाक्शिरास्तु यो लम्बेदुदवासं च यो वसेत्
सततं चैकशायी यः स लभेतेप्सितां गतिम् ११
पाद्यमासनमेवाथ दीपमन्नं प्रतिश्रयम्
दद्यादतिथिपूजार्थं स यज्ञः पञ्चदक्षिणः १२
वीरासनं वीरशय्यां वीरस्थानमुपासतः
अक्षयास्तस्य वै लोकाः सर्वकामगमास्तथा १३
धनं लभेत दानेन मौनेनाज्ञां विशां पते
उपभोगांश्च तपसा ब्रह्मचर्येण जीवितम् १४
रूपमैश्वर्यमारोग्यमहिंसाफलमश्नुते
फलमूलाशिनां राज्यं स्वर्गः पर्णाशिनां तथा १५
प्रायोपवेशनाद्राज्यं सर्वत्र सुखमुच्यते
स्वर्गं सत्येन लभते दीक्षया कुलमुत्तमम् १६
गवाढ्यः शाकदीक्षायां स्वर्गगामी तृणाशनः
स्त्रियस्त्रिषवणं स्नात्वा वायुं पीत्वा क्रतुं लभेत् १७
सलिलाशी भवेद्यश्च सदाग्निः संस्कृतो द्विजः
मरुं साधयतो राज्यं नाकपृष्ठमनाशके १८
उपवासं च दीक्षां च अभिषेकं च पार्थिव
कृत्वा द्वादशवर्षाणि वीरस्थानाद्विशिष्यते १९
अधीत्य सर्ववेदान्वै सद्यो दुःखात्प्रमुच्यते
मानसं हि चरन्धर्मं स्वर्गलोकमवाप्नुयात् २०
या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः
योऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखम् २१
यथा धेनुसहस्रेषु वत्सो विन्दति मातरम्
एवं पूर्वकृतं कर्म कर्तारमनुगच्छति २२
अचोद्यमानानि यथा पुष्पाणि च फलानि च
स्वकालं नातिवर्तन्ते तथा कर्म पुराकृतम् २३

जीर्यन्ति जीर्यतः केशा दन्ता जीर्यन्ति जीर्यतः
चक्षुःश्रोत्रे च जीर्येते तृष्णैका तु न जीर्यते २४
येन प्रीणाति पितरं तेन प्रीतः प्रजापतिः
प्रीणाति मातरं येन पृथिवी तेन पूजिता
येन प्रीणात्युपाध्यायं तेन स्याद्ब्रह्म पूजितम् २५
सर्वे तस्यादृता धर्मा यस्यैते त्रय आदृताः
अनादृतास्तु यस्यैते सर्वास्तस्याफलाः क्रियाः २६
वैशम्पायन उवाच
भीष्मस्य तद्वचः श्रुत्वा विस्मिताः कुरुपुंगवाः
आसन्प्रहृष्टमनसः प्रीतिमन्तोऽभवंस्तदा २७
यन्मन्त्रे भवति वृथा प्रयुज्यमाने यत्सोमे भवति वृथाभिषूयमाणे
यच्चाग्नौ भवति वृथाभिहूयमाने तत्सर्वं भवति वृथाभिधीयमाने २८
इत्येतदृषिणा प्रोक्तमुक्तवानस्मि यद्विभो
शुभाशुभफलप्राप्तौ किमतः श्रोतुमिच्छसि २९
इति श्रीमहाभारते अनुशासनपर्वणि सप्तमोऽध्यायः ७

## अष्टमोऽध्यायः

युधिष्ठिर उवाच
के पूज्याः के नमस्कार्याः कान्नमस्यसि भारत
एतन्मे सर्वमाचक्ष्व येषां स्पृहयसे नृप १
उत्तमापद्गतस्यापि यत्र ते वर्तते मनः
मनुष्यलोके सर्वस्मिन्यदमुत्रेह चाप्युत २
भीष्म उवाच
स्पृहयामि द्विजातीनां येषां ब्रह्म परं धनम्
येषां स्वप्रत्ययः स्वर्गस्तपःस्वाध्यायसाधनः ३
येषां वृद्धाश्च बालाश्च पितृपैतामहीं धुरम्
उद्वहन्ति न सीदन्ति तेषां वै स्पृहयाम्यहम् ४
विद्यास्वभिविनीतानां दान्तानां मृदुभाषिणाम्
श्रुतवृत्तोपपन्नानां सदाक्षरविदां सताम् ५
संसत्सु वदतां येषां हंसानामिव संघशः

मङ्गल्यरूपा रुचिरा दिव्यजीमूतनिःस्वनाः ६
सम्यगुच्चरिता वाचः श्रूयन्ते हि युधिष्ठिर
शुश्रूषमाणे नृपतौ प्रेत्य चेह सुखावहाः ७
ये चापि तेषां श्रोतारः सदा सदसि संमताः
विज्ञानगुणसंपन्नास्तेषां च स्पृहयाम्यहम् ८
सुसंस्कृतानि प्रयताः शुचीनि गुणवन्ति च
ददत्यन्नानि तृप्त्यर्थं ब्राह्मणेभ्यो युधिष्ठिर
ये चापि सततं राजंस्तेषां स्पृहयाम्यहम् ९
शक्यं ह्येवाहवे योद्धुं न दातुमनसूयितम्
शूरा वीराश्च शतशः सन्ति लोके युधिष्ठिर
तेषां संख्यायमानानां दानशूरो विशिष्यते १०
धन्यः स्यां यद्यहं भूयः सौम्य ब्राह्मणकोऽपि वा
कुले जातो धर्मगतिस्तपोविद्यापरायणः ११
न मे त्वत्तः प्रियतरो लोकेऽस्मिन्पाण्डुनन्दन
त्वत्तश्च मे प्रियतरा ब्राह्मणा भरतर्षभ १२
यथा मम प्रियतरास्त्वत्तो विप्राः कुरूद्वह
तेन सत्येन गच्छेयं लोकान्यत्र स शंतनुः १३
न मे पिता प्रियतरो ब्राह्मणेभ्यस्तथाभवत्
न मे पितुः पिता वापि ये चान्येऽपि सुहृज्जनाः १४
न हि मे वृजिनं किंचिद्विद्यते ब्राह्मणेष्विह
अणु वा यदि वा स्थूलं विदितं साधुकर्मभिः १५
कर्मणा मनसा वापि वाचा वापि परंतप
यन्मे कृतं ब्राह्मणेषु तेनाद्य न तपाम्यहम् १६
ब्रह्मण्य इति मामाहुस्तया वाचास्मि तोषितः
एतदेव पवित्रेभ्यः सर्वेभ्यः परमं स्मृतम् १७
पश्यामि लोकानमलाञ्छुचीन्ब्राह्मणयायिनः
तेषु मे तात गन्तव्यमह्नाय च चिराय च १८
यथा पत्याश्रयो धर्मः स्त्रीणां लोके युधिष्ठिर
स देवः सा गतिर्नान्या क्षत्रियस्य तथा द्विजाः १९
क्षत्रियः शतवर्षी च दशवर्षी च ब्राह्मणः

पितापुत्रौ च विज्ञेयौ तयोर्हि ब्राह्मणः पिता २०
नारी तु पत्यभावे वै देवरं कुरुते पतिम्
पृथिवी ब्राह्मणालाभे क्षत्रियं कुरुते पतिम् २१
पुत्रवच्च ततो रक्ष्या उपास्या गुरुवच्च ते
अग्निवच्चोपचर्या वै ब्राह्मणाः कुरुसत्तम २२
ऋजून्सतः सत्यशीलान्सर्वभूतहिते रतान्
आशीविषानिव क्रुद्धान्द्विजानुपचरेत्सदा २३
तेजसस्तपसश्चैव नित्यं बिभ्येद्युधिष्ठिर
उभे चैते परित्याज्ये तेजश्चैव तपस्तथा २४
व्यवसायस्तयोः शीघ्रमुभयोरेव विद्यते
हन्युः क्रुद्धा महाराज ब्राह्मणा ये तपस्विनः २५
भूयः स्यादुभयं दत्तं ब्राह्मणाद्यदकोपनात्
कुर्यादुभयतःशेषं दत्तशेषं न शेषयेत् २६
दण्डपाणिर्यथा गोषु पालो नित्यं स्थिरो भवेत्
ब्राह्मणान्ब्रह्म च तथा क्षत्रियः परिपालयेत् २७
पितेव पुत्रान्रक्षेथा ब्राह्मणान्ब्रह्मतेजसः
गृहे चैषामवेक्षेथाः कच्चिदस्तीह जीवनम् २८
इति श्रीमहाभारते अनुशासनपर्वणि अष्टमोऽध्यायः ८

## नवमोऽध्यायः

युधिष्ठिर उवाच
ब्राह्मणानां तु ये लोके प्रतिश्रुत्य पितामह
न प्रयच्छन्ति मोहात्ते के भवन्ति महामते १
एतन्मे तत्त्वतो ब्रूहि धर्मं धर्मभृतां वर
प्रतिश्रुत्य दुरात्मानो न प्रयच्छन्ति ये नराः २
भीष्म उवाच
यो न दद्यात्प्रतिश्रुत्य स्वल्पं वा यदि वा बहु
आशास्तस्य हताः सर्वाः क्लीबस्येव प्रजाफलम् ३
यां रात्रिं जायते पापो यां च रात्रिं विनश्यति
एतस्मिन्नन्तरे यद्यत्सुकृतं तस्य भारत

यच्च तस्य हुतं किंचित्सर्वं तस्योपहन्यते ४
अत्रैतद्वचनं प्राहुर्धर्मशास्त्रविदो जनाः
निशम्य भरतश्रेष्ठ बुद्ध्या परमयुक्तया ५
अपि चोदाहरन्तीमं धर्मशास्त्रविदो जनाः
अश्वानां श्यामकर्णानां सहस्रेण स मुच्यते ६
अत्रैवोदाहरन्तीममितिहासं पुरातनम्
सृगालस्य च संवादं वानरस्य च भारत ७
तौ सखायौ पुरा ह्यास्तां मानुषत्वे परंतप
अन्यां योनिं समापन्नौ सार्गालद्यं वानरीं तथा ८
ततः परासून्खादन्तं सृगालं वानरोऽब्रवीत्
श्मशानमध्ये संप्रेक्ष्य पूर्वजातिमनुस्मरन् ९
किं त्वया पापकं कर्म कृतं पूर्वं सुदारुणम्
यस्त्वं श्मशाने मृतकान्पूतिकानत्सि कुत्सितान् १०
एवमुक्तः प्रत्युवाच सृगालो वानरं तदा
ब्राह्मणस्य प्रतिश्रुत्य न मया तदुपाकृतम् ११
तत्कृते पापिकां योनिमापन्नोऽस्मि प्लवंगम
तस्मादेवंविधं भक्ष्यं भक्षयामि बुभुक्षितः १२
इत्येतद्ब्रुवतो राजन्ब्राह्मणस्य मया श्रुतम्
कथां कथयतः पुण्यां धर्मज्ञस्य पुरातनीम् १३
श्रुतं चापि मया भूयः कृष्णस्यापि विशां पते
कथां कथयतः पूर्वं ब्राह्मणं प्रति पाण्डव १४
एवमेव च मां नित्यं ब्राह्मणाः संदिशन्ति वै
प्रतिश्रुत्य भवेद्देयं नाशा कार्या हि ब्राह्मणैः १५
ब्राह्मणो ह्याशया पूर्वं कृतया पृथिवीपते
सुसमिद्धो यथा दीप्तः पावकस्तद्विधः स्मृतः १६
यं निरीक्षेत संक्रुद्ध आशया पूर्वजातया
प्रदहेत हि तं राजन्कक्षमक्षय्यभुग्यथा १७
स एव हि यदा तुष्टो वचसा प्रतिनन्दति
भवत्यगदसंकाशो विषये तस्य भारत १८
पुत्रान्पौत्रान्पशूंश्चैव बान्धवान्सचिवांस्तथा

पुरं जनपदं चैव शान्तिरिष्टेव पुष्यति १९
एतद्धि परमं तेजो ब्राह्मणस्येह दृश्यते
सहस्रकिरणस्येव सवितुर्धरणीतले २०
तस्माद्दातव्यमेवेह प्रतिश्रुत्य युधिष्ठिर
यदीच्छेच्छोभनां जातिं प्राप्तुं भरतसत्तम २१
ब्राह्मणस्य हि दत्तेन ध्रुवं स्वर्गो ह्यनुत्तमः
शक्यं प्राप्तुं विशेषेण दानं हि महती क्रिया २२
इतो दत्तेन जीवन्ति देवताः पितरस्तथा
तस्माद्दानानि देयानि ब्राह्मणेभ्यो विजानता २३
महद्धि भरतश्रेष्ठ ब्राह्मणस्तीर्थमुच्यते
वेलायां न तु कस्यांचिद्गच्छेद्विप्रो ह्यपूजितः २४
इति श्रीमहाभारते अनुशासनपर्वणि नवमोऽध्यायः ९

## दशमोऽध्यायः

युधिष्ठिर उवाच
मित्रसौहृदभावेन उपदेशं करोति यः
जात्यावरस्य राजर्षे दोषस्तस्य भवेन्न वा १
एतदिच्छामि तत्त्वेन व्याख्यातुं वै पितामह
सूक्ष्मा गतिर्हि धर्मस्य यत्र मुह्यन्ति मानवाः २
भीष्म उवाच
अत्र ते वर्तयिष्यामि शृणु राजन्यथागमम्
ऋषीणां वदतां पूर्वं श्रुतमासीद्यथा मया ३
उपदेशो न कर्तव्यो जातिहीनस्य कस्यचित्
उपदेशे महान्दोष उपाध्यायस्य भाष्यते ४
निदर्शनमिदं राजञ्शृणु मे भरतर्षभ
दुरुक्तवचने राजन्यथा पूर्वं युधिष्ठिर
ब्रह्माश्रमपदे वृत्तं पार्श्वे हिमवतः शुभे ५
तत्राश्रमपदं पुण्यं नानावृक्षगणायुतम्
बहुगुल्मलताकीर्णं मृगद्विजनिषेवितम् ६
सिद्धचारणसंघुष्टं रम्यं पुष्पितकाननम्

व्रतिभिर्बहुभिः कीर्णं तापसैरुपशोभितम् ७
ब्राह्मणैश्च महाभागैः सूर्यज्वलनसंनिभैः
नियमव्रतसंपन्नैः समाकीर्णं तपस्विभिः
दीक्षितैर्भरतश्रेष्ठ यताहारैः कृतात्मभिः ८
वेदाध्ययनघोषैश्च नादितं भरतर्षभ
वालखिल्यैश्च बहुभिर्यतिभिश्च निषेवितम् ९
तत्र कश्चित्समुत्साहं कृत्वा शूद्रो दयान्वितः
आगतो ह्याश्रमपदं पूजितश्च तपस्विभिः १०
तांस्तु दृष्ट्वा मुनिगणान्देवकल्पान्महौजसः
वहतो विविधा दीक्षाः संप्रहृष्यत भारत ११
अथास्य बुद्धिरभवत्तपस्ये भरतर्षभ
ततोऽब्रवीत्कुलपतिं पादौ संगृह्य भारत १२
भवत्प्रसादादिच्छामि धर्मं चर्तुं द्विजर्षभ
तन्मां त्वं भगवन्वक्तुं प्रव्राजयितुमर्हसि १३
वर्णावरोऽह भगवञ्शूद्रो जात्यास्मि सत्तम
शुश्रूषां कर्तुमिच्छामि प्रपन्नाय प्रसीद मे १४
कुलपतिरुवाच
न शक्यमिह शूद्रेण लिङ्गमाश्रित्य वर्तितुम्
आस्यतां यदि ते बुद्धिः शुश्रूषानिरतो भव १५
भीष्म उवाच
एवमुक्तस्तु मुनिना स शूद्रोऽचिन्तयन्नृप
कथमत्र मया कार्यं श्रद्धा धर्म परा च मे
विज्ञातमेवं भवतु करिष्ये प्रियमात्मनः १६
गत्वाश्रमपदाद्दूरमुटजं कृतवांस्तु सः
तत्र वेदिं च भूमिं च देवतायतनानि च
निवेश्य भरतश्रेष्ठ नियमस्थोऽभवत्सुखम् १७
अभिषेकांश्च नियमान्देवतायतनेषु च
बलि च कृत्वा हुत्वा च देवतां चाप्यपूजयत् १८
संकल्पनियमोपेतः फलाहारो जितेन्द्रियः
नित्यं संनिहिताभिश्च ओषधीभिः फलैस्तथा १९

अतिथीन्पूजयामास यथावत्समुपागतान्
एवं हि सुमहान्कालो व्यत्यक्रामत्स तस्य वै २०
अथास्य मुनिरागच्छत्संगत्या वै तमाश्रमम्
संपूज्य स्वागतेनर्षिं विधिवत्पर्यतोषयत् २१
अनुकूलाः कथाः कृत्वा यथावत्पर्यपृच्छत
ऋषिः परमतेजस्वी धर्मात्मा संयतेन्द्रियः २२
एवं स बहुशस्तस्य शूद्रस्य भरतर्षभ
सोऽगच्छदाश्रममृषिः शूद्रं द्रष्टुं नरर्षभ २३
अथ तं तापसं शूद्रः सोऽब्रवीद्भरतर्षभ
पितृकार्यं करिष्यामि तत्र मेऽनुग्रहं कुरु २४
बाढमित्येव तं विप्र उवाच भरतर्षभ
शुचिर्भूत्वा स शूद्रस्तु तस्यर्षेः पाद्यमानयत् २५
अथ दर्भांश्च वन्याश्च ओषधीर्भरतर्षभ
पवित्रमासनं चैव बृसीं च समुपानयत् २६
अथ दक्षिणामावृत्य बृसीं परमशीर्षिकाम्
कृतामन्यायतो दृष्ट्वा ततस्तमृषिरब्रवीत् २७
कुरुष्वैतां पूर्वशीर्षां भव चोदङ्मुखः शुचिः
स च तत्कृतवाञ्शूद्रः सर्वं यदृषिरब्रवीत् २८
यथोपदिष्टं मेधावी दर्भादींस्तान्यथातथम्
हव्यकव्यविधिं कृत्स्नमुक्तं तेन तपस्विना २९
ऋषिणा पितृकार्ये च स च धर्मपथे स्थितः
पितृकार्ये कृते चापि विसृष्टः स जगाम ह ३०
अथ दीर्घस्य कालस्य स तप्यञ्शूद्रतापसः
वने पञ्चत्वमगमत्सुकृतेन च तेन वै
अजायत महाराजराजवंशे महाद्युतिः ३१
तथैव स ऋषिस्तात कालधर्ममवाप्य ह
पुरोहितकुले विप्र आजातो भरतर्षभ ३२
एवं तौ तत्र संभूतावुभौ शूद्रमुनी तदा
क्रमेण वर्धितौ चापि विद्यासु कुशलावुभौ ३३
अथर्ववेदे वेदे च बभूवर्षिः सुनिश्चितः

कल्पप्रयोगे चोत्पन्ने ज्योतिषे च परं गतः
सख्ये चापि परा प्रीतिस्तयोश्चापि व्यवर्धत ३४
पितर्युपरते चापि कृतशौचः स भारत
अभिषिक्तः प्रकृतिभी राजपुत्रः स पार्थिवः
अभिषिक्तेन स ऋषिरभिषिक्तः पुरोहितः ३५
स तं पुरोधाय सुखमवसद्भरतर्षभ
राज्यं शशास धर्मेण प्रजाश्च परिपालयन् ३६
पुण्याहवाचने नित्यं धर्मकार्येषु चासकृत्
उत्स्मयन्प्राहसच्चापि दृष्ट्वा राजा पुरोहितम्
एवं स बहुशो राजन्पुरोधसमुपाहसत् ३७
लक्षयित्वा पुरोधास्तु बहुशस्तं नराधिपम्
उत्स्मयन्तं च सततं दृष्ट्वासौ मन्युमानभूत् ३८
अथ शून्ये पुरोधास्तु सह राज्ञा समागतः
कथाभिरनुकूलाभी राजानमभिरामयत् ३९
ततोऽब्रवीन्नरेन्द्रं स पुरोधा भरतर्षभ
वरमिच्छाम्यहं त्वेकं त्वया दत्तं महाद्युते ४०
राजोवाच
वराणां ते शतं दद्यां किमुतैकं द्विजोत्तम
स्नेहाच्च बहुमानाच्च नास्त्यदेयं हि मे तव ४१
पुरोहित उवाच
एकं वै वरमिच्छामि यदि तुष्टोऽसि पार्थिव
यद्ददासि महाराज सत्यं तद्वद मानृतम् ४२
भीष्म उवाच
बाढमित्येव तं राजा प्रत्युवाच युधिष्ठिर
यदि ज्ञास्यामि वक्ष्यामि अजानन्न तु संवदे ४३
पुरोहित उवाच
पुण्याहवाचने नित्यं धर्मकृत्येषु चासकृत्
शान्तिहोमेषु च सदा किं त्वं हससि वीक्ष्य माम् ४४
सव्रीडं वै भवति हि मनो मे हसता त्वया
कामया शापितो राजन्नान्यथा वक्तुमर्हसि ४५

भाव्यं हि कारणेनात्र न ते हास्यमकारणम्
कौतूहलं मे सुभृशं तत्त्वेन कथयस्व मे ४६
राजोवाच
एवमुक्ते त्वया विप्र यदवाच्यं भवेदपि
अवश्यमेव वक्तव्यं शृणुष्वैकमना द्विज ४७
पूर्वदेहे यथा वृत्तं तन्निबोध द्विजोत्तम
जातिं स्मराम्यहं ब्रह्मन्नवधानेन मे शृणु ४८
शूद्रोऽहमभवं पूर्वं तापसो भृशसंयुतः
ऋषिरुग्रतपास्त्वं च तदाभूर्द्विजसत्तम ४९
प्रीयता हि तदा ब्रह्मन्ममानुग्रहबुद्धिना
पितृकार्ये त्वया पूर्वमुपदेशः कृतोऽनघ
बृस्यां दर्भेषु हव्ये च कव्ये च मुनिसत्तम ५०
एतेन कर्मदोषेण पुरोधास्त्वमजायथाः
अहं राजा च विप्रेन्द्र पश्य कालस्य पर्ययम्
मत्कृते ह्युपदेशेन त्वया प्राप्तमिदं फलम् ५१
एतस्मात्कारणाद्ब्रह्मन्प्रहसे त्वां द्विजोत्तम
न त्वां परिभवन्ब्रह्मन्प्रहसामि गुरुर्भवान् ५२
विपर्ययेण मे मन्युस्तेन संतप्यते मनः
जातिं स्मराम्यहं तुभ्यमतस्त्वां प्रहसामि वै ५३
एवं तवोग्रं हि तप उपदेशेन नाशितम्
पुरोहितत्वमुत्सृज्य यतस्व त्वं पुनर्भवे ५४
इतस्त्वमधमामन्यां मा योनिं प्राप्स्यसे द्विज
गृह्यतां द्रविणं विप्र पूतात्मा भव सत्तम ५५
भीष्म उवाच
ततो विसृष्टो राज्ञा तु विप्रो दानान्यनेकशः
ब्राह्मणेभ्यो ददौ वित्तं भूमिं ग्रामांश्च सर्वशः ५६
कृच्छ्राणि चीर्त्वा च ततो यथोक्तानि द्विजोत्तमः
तीर्थानि चाभिगत्वा वै दानानि विविधानि च ५७
दत्त्वा गाश्चैव विप्राणां पूतात्मा सोऽभवद्द्विजः
तमेव चाश्रमं गत्वा चचार विपुलं तपः ५८

ततः सिद्धिं परां प्राप्तो ब्राह्मणो राजसत्तम
संमतश्चाभवत्तेषामाश्रमेऽश्रमवासिनाम् ५९
एवं प्राप्तो महत्कृच्छ्रमृषिः स नृपसत्तम
ब्राह्मणेन न वक्तव्यं तस्माद्वर्णावरे जने ६०
वर्जयेदुपदेशं च सदैव ब्राह्मणो नृप
उपदेशं हि कुर्वाणो द्विजः कृच्छ्रमवाप्नुयात् ६१
एषितव्यं सदा वाचा नृपेण द्विजसत्तमात्
न प्रवक्तव्यमिह हि किंचिद्वर्णावरे जने ६२
ब्राह्मणाः क्षत्रिया वैश्यास्त्रयो वर्णा द्विजातयः
एतेषु कथयन्राजन्ब्राह्मणो न प्रदुष्यति ६३
तस्मात्सद्भिर्न वक्तव्यं कस्यचित्किंचिदग्रतः
सूक्ष्मा गतिर्हि धर्मस्य दुर्ज्ञेया ह्यकृतात्मभिः ६४
तस्मान्मौनानि मुनयो दीक्षां कुर्वन्ति चादृताः
दुरुक्तस्य भयाद्राजन्नानुभाषन्ति किंचन ६५
धार्मिका गुणसंपन्नाः सत्यार्जवपरायणाः
दुरुक्तवाचाभिहताः प्राप्नुवन्तीह दुष्कृतम् ६६
उपदेशो न कर्तव्यः कदाचिदपि कस्यचित्
उपदेशाद्धि तत्पापं ब्राह्मणः समवाप्नुयात् ६७
विमृश्य तस्मात्प्राज्ञेन वक्तव्यं धर्ममिच्छता
सत्यानृतेन हि कृत उपदेशो हिनस्ति वै ६८
वक्तव्यमिह पृष्टेन विनिश्चित्य विपर्ययम्
स चोपदेशः कर्तव्यो येन धर्ममवाप्नुयात् ६९
एतत्ते सर्वमाख्यातमुपदेशे कृते सति
महान्क्लेशो हि भवति तस्मान्नोपदिशेत्क्वचित् ७०
इति श्रीमहाभारते अनुशासनपर्वणि दशमोऽध्यायः १०

एकादशोऽध्यायः

युधिष्ठिर उवाच
कीदृशे पुरुषे तात स्त्रीषु वा भरतर्षभ
श्रीः पद्मा वसते नित्यं तन्मे ब्रूहि पितामह १

भीष्म उवाच
अत्र ते वर्तयिष्यामि यथादृष्टं यथाश्रुतम्
रुक्मिणी देवकीपुत्रसंनिधौ पर्यपृच्छत २
नारायणस्याङ्कगतां ज्वलन्तीं दृष्ट्वा श्रियं पद्मसमानवक्त्राम्
कौतूहलाद्विस्मितचारुनेत्रा पप्रच्छ माता मकरध्वजस्य ३
कानीह भूतान्युपसेवसे त्वं संतिष्ठती कानि न सेवसे त्वम्
तानि त्रिलोकेश्वरभूतकान्ते तत्त्वेन मे ब्रूहि महर्षिकन्ये ४
एवं तदा श्रीरभिभाष्यमाणा देव्या समक्षं गरुडध्वजस्य
उवाच वाक्यं मधुराभिधानं मनोहरं चन्द्रमुखी प्रसन्ना ५
वसामि सत्ये सुभगे प्रगल्भे दक्षे नरे कर्मणि वर्तमाने
नाकर्मशीले पुरुषे वसामि न नास्तिके सांकरिके कृतघ्ने
न भिन्नवृत्ते न नृशंसवृत्ते न चापि चौरे न गुरुष्वसूये ६
ये चाल्पतेजोबलसत्त्वसारा हृष्यन्ति कुप्यन्ति च यत्र तत्र
न देवि तिष्ठामि तथाविधेषु नरेषु संसुप्तमनोरथेषु ७
यश्चात्मनि प्रार्थयते न किंचिद्यश्च स्वभावोपहतान्तरात्मा
तेष्वल्पसंतोषरतेषु नित्यं नरेषु नाहं निवसामि देवि ८
वसामि धर्मशीलेषु धर्मज्ञेषु महात्मसु
वृद्धसेविषु दान्तेषु सत्त्वज्ञेषु महात्मसु ९
स्त्रीषु क्षान्तासु दान्तासु देवद्विजपरासु च
वसामि सत्यशीलासु स्वभावनिरतासु च १०
प्रकीर्णभाण्डामनपेक्ष्यकारिणीं सदा च भर्तुः प्रतिकूलवादिनीम्
परस्य वेश्माभिरतामलज्जामेवंविधां स्त्रीं परिवर्जयामि ११
लोलामचोक्षामवलेहिनीं च व्यपेतधैर्यां कलहप्रियां च
निद्राभिभूतां सततं शयानामेवंविधां स्त्रीं परिवर्जयामि १२
सत्यासु नित्यं प्रियदर्शनासु सौभाग्ययुक्तासु गुणान्वितासु
वसामि नारीषु पतिव्रतासु कल्याणशीलासु विभूषितासु १३
यानेषु कन्यासु विभूषणेषु यज्ञेषु मेघेषु च वृष्टिमत्सु
वसामि फुल्लासु च पद्मिनीषु नक्षत्रवीथीषु च शारदीषु १४
शैलेषु गोष्ठेषु तथा वनेषु सरःसु फुल्लोत्पलपङ्कजेषु
नदीषु हंसस्वननादितासु क्रौञ्चावघुष्टस्वरशोभितासु १५

विस्तीर्णकूलह्रदशोभितासु तपस्विसिद्धद्विजसेवितासु
वसामि नित्यं सुबहूदकासु सिंहैर्गजैश्चाकुलितोदकासु
मत्ते गजे गोवृषभे नरेन्द्रे सिंहासने सत्पुरुषे च नित्यम् १६
यस्मिन्गृहे हूयते हव्यवाहो गोब्राह्मणश्चार्च्यते देवताश्च
काले च पुष्पैर्वलयः क्रियन्ते तस्मिन्गृहे नित्यमुपैमि वासम् १७
स्वाध्यायनित्येषु द्विजेषु नित्यं क्षत्रे च धर्माभिरते सदैव
वैश्ये च कृष्याभिरते वसामि शूद्रे च शुश्रूषणनित्ययुक्ते १८
नारायणे त्वेकमना वसामि सर्वेण भावेन शरीरभूता
तस्मिन्हि धर्मः सुमहान्निविष्टो ब्रह्मण्यता चात्र तथा प्रियत्वम् १९
नाहं शरीरेण वसामि देवि नैवं मया शक्यमिहाभिधातुम्
यस्मिंस्तु भावेन वसामि पुंसि स वर्धते धर्मयशोऽथकामैः २०
इति श्रीमहाभारते अनुशासनपर्वणि एकादशोऽध्यायः ११

## द्वादशोऽध्यायः

युधिष्ठिर उवाच
स्त्रीपुंसयोः संप्रयोगे स्पर्शः कस्याधिको भवेत्
एतन्मे संशयं राजन्यथावद्वक्तुमर्हसि १
भीष्म उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
भङ्गाश्वनेन शक्रस्य यथा वैरमभूत्पुरा २
पुरा भङ्गाश्वनो नाम राजर्षिरतिधार्मिकः
अपुत्रः स नरव्याघ्र पुत्रार्थं यज्ञमाहरत् ३
अग्निष्टुं नाम राजर्षिरिन्द्रद्विष्टं महाबलः
प्रायश्चित्तेषु मर्त्यानां पुत्रकामस्य चेष्यते ४
इन्द्रो ज्ञात्वा तु तं यज्ञं महाभागः सुरेश्वरः
अन्तरं तस्य राजर्षेरन्विच्छन्नियतात्मनः ५
कस्यचित्त्वथ कालस्य मृगयामटतो नृप
इदमन्तरमित्येव शक्रो नृपममोहयत् ६
एकाश्वेन च राजर्षिर्भ्रान्त इन्द्रेण मोहितः
न दिशोऽविन्दत नृपः क्षुत्पिपासार्दितस्तदा ७

इतश्चेतश्च वै धावञ्श्रमतृष्णार्दितो नृपः
सरोऽपश्यत्सुरुचिरं पूर्णं परमवारिणा
सोऽवगाह्य सरस्तात पाययामास वाजिनम् ८
अथ पीतोदकं सोऽश्वं वृक्षे बद्ध्वा नृपोत्तमः
अवगाह्य ततः स्नातो राजा स्त्रीत्वमवाप ह ९
आत्मानं स्त्रीकृतं दृष्ट्वा व्रीडितो नृपसत्तमः
चिन्तानुगतसर्वात्मा व्याकुलेन्द्रियचेतनः १०
आरोहिष्ये कथं त्वश्वं कथं यास्यामि वै पुरम्
अग्निष्टुं नाम इष्टं मे पुत्राणां शतमौरसम् ११
जातं महाबलानां वै तान्प्रवक्ष्यामि किं त्वहम्
दारेषु चास्मदीयेषु पौरजानपदेषु च १२
मृदुत्वं च तनुत्वं च विक्लवत्वं तथैव च
स्त्रीगुणा ऋषिभिः प्रोक्ता धर्मतत्त्वार्थदर्शिभिः
व्यायामः कर्कशत्वं च वीर्यं च पुरुषे गुणाः १३
पौरुषं विप्रनष्टं मे स्त्रीत्वं केनापि मेऽभवत्
स्त्रीभावात्कथमश्वं तु पुनरारोढुमुत्सहे १४
महता त्वथ खेदेन आरुह्याश्वं नराधिपः
पुनरायात्पुरं तात स्त्रीभूतो नृपसत्तम १५
पुत्रा दाराश्च भृत्याश्च पौरजानपदाश्च ते
किं न्विदं त्विति विज्ञाय विस्मयं परमं गताः १६
अथोवाच स राजर्षिः स्त्रीभूतो वदतां वरः
मृगयामस्मि निर्यातो बलैः परिवृतो दृढम्
उद्भ्रान्तः प्राविशं घोरामटवीं दैवमोहितः १७
अटव्यां च सुघोरायां तृष्णार्तो नष्टचेतनः
सरः सुरुचिरप्रख्यमपश्यं पक्षिभिर्वृतम् १८
तत्रावगाढः स्त्रीभूतो व्यक्तं दैवान्न संशयः
अतृप्त इव पुत्राणां दाराणां च धनस्य च १९
उवाच पुत्रांश्च ततः स्त्रीभूतः पार्थिवोत्तमः
संप्रीत्या भुज्यतां राज्यं वनं यास्यामि पुत्रकाः
अभिषिच्य स पुत्राणां शतं राजा वनं गतः २०

तामाश्रमे स्त्रियं तात तापसोऽभ्यवपद्यत
तापसेनास्य पुत्राणामाश्रमेऽप्यभवच्छतम् २१
अथ सा तान्सुतान्गृह्य पूर्वपुत्रानभाषत
पुरुषत्वे सुता यूयं स्त्रीत्वे चेमे शतं सुताः २२
एकत्र भुज्यतां राज्यं भ्रातृभावेन पुत्रकाः
सहिता भ्रातरस्तेऽथ राज्यं बुभुजिरे तदा २३
तान्दृष्ट्वा भ्रातृभावेन भुञ्जानान्राज्यमुत्तमम्
चिन्तयामास देवेन्द्रो मन्युनाभिपरिप्लुतः
उपकारोऽस्य राजर्षेः कृतो नापकृतं मया २४
ततो ब्राह्मणरूपेण देवराजः शतक्रतुः
भेदयामास तान्गत्वा नगरं वै नृपात्मजान् २५
भ्रातृणां नास्ति सौभ्रात्रं येऽप्येकस्य पितुः सुताः
राज्यहेतोर्विवदिताः कश्यपस्य सुरासुराः २६
यूयं भङ्गाश्वनापत्यास्तापसस्येतरे सुताः
कश्यपस्य सुराश्चैव असुराश्च सुतास्तथा
युष्माकं पैतृकं राज्यं भुज्यते तापसात्मजैः २७
इन्द्रेण भेदितास्ते तु युद्धेऽन्योन्यमपातयन्
तच्छ्रुत्वा तापसी चापि संतप्ता प्ररुरोद ह २८
ब्राह्मणच्छद्मनाभ्येत्य तामिन्द्रोऽथान्वपृच्छत
केन दुःखेन संतप्ता रोदिषि त्वं वरानने २९
ब्राह्मणं तु ततो दृष्ट्वा सा स्त्री करुणमब्रवीत्
पुत्राणां द्वे शते ब्रह्मन्कालेन विनिपातिते ३०
अहं राजाभवं विप्र तत्र पुत्रशतं मया
समुत्पन्नं सरूपाणां विक्रान्तानां द्विजोत्तम ३१
कदाचिन्मृगयां यात उद्भ्रान्तो गहने वने
अवगाढश्च सरसि स्त्रीभूतो ब्राह्मणोत्तम
पुत्रान्राज्ये प्रतिष्ठाप्य वनमस्मि ततो गतः ३२
स्त्रियाश्च मे पुत्रशतं तापसेन महात्मना
आश्रमे जनितं ब्रह्मन्नीतास्ते नगरं मया ३३
तेषां च वैरमुत्पन्नं कालयोगेन वै द्विज

एतच्छोचामि विप्रेन्द्र दैवेनाभिपरिप्लुता ३४
इन्द्रस्तां दुःखितां दृष्ट्वा अब्रवीत्परुषं वचः
पुरा सुदुःसहं भद्रे मम दुःखं त्वया कृतम् ३५
इन्द्रद्विष्टेन यजता मामनादृत्य दुर्मते
इन्द्रोऽहमस्मि दुर्बुद्धे वैरं ते यातितं मया ३६
इन्द्रं तु दृष्ट्वा राजर्षिः पादयोः शिरसा गतः
प्रसीद त्रिदशश्रेष्ठ पुत्रकामेन स क्रतुः
इष्टस्त्रिदशशार्दूल तत्र मे क्षन्तुमर्हसि ३७
प्रणिपातेन तस्येन्द्रः परितुष्टो वरं ददौ
पुत्रा वै कतमे राजञ्जीवन्तु तव शंस मे
स्त्रीभूतस्य हि ये जाताः पुरुषस्याथ येऽभवन् ३८
तापसी तु ततः शक्रमुवाच प्रयताञ्जलि
स्त्रीभूतस्य हि ये जातास्ते मे जीवन्तु वासव ३९
इन्द्रस्तु विस्मितो हृष्टः स्त्रियं पप्रच्छ तां पुनः
पुरुषोत्पादिता ये ते कथं द्वेष्याः सुतास्तव ४०
स्त्रीभूतस्य हि ये जाताः स्नेहस्तेभ्योऽधिकः कथम्
कारणं श्रोतुमिच्छामि तन्मे वक्तुमिहार्हसि ४१
स्त्र्युवाच
स्त्रियास्त्वभ्यधिकः स्नेहो न तथा पुरुषस्य वै
तस्मात्ते शक्र जीवन्तु ये जाताः स्त्रीकृतस्य वै ४२
भीष्म उवाच
एवमुक्ते ततस्त्विन्द्रः प्रीतो वाक्यमुवाच ह
सर्व एवेह जीवन्तु पुत्रास्ते सत्यवादिनि ४३
वरं च वृणु राजेन्द्र यं त्वमिच्छसि सुव्रत
पुरुषत्वमथ स्त्रीत्वं मत्तो यदभिकाङ्क्षसि ४४
स्त्र्युवाच
स्त्रीत्वमेव वृणे शक्र प्रसन्ने त्वयि वासव ४५
एवमुक्तस्तु देवेन्द्रस्तां स्त्रियं प्रत्युवाच ह
पुरुषत्वं कथं त्यक्त्वा स्त्रीत्वं रोचयसे विभो ४६
एवमुक्तः प्रत्युवाच स्त्रीभूतो राजसत्तमः

स्त्रियाः पुरुषसंयोगे प्रीतिरभ्यधिका सदा
एतस्मात्कारणाच्छक्र स्त्रीत्वमेव वृणोम्यहम् ४७
रमे चैवाधिकं स्त्रीत्वे सत्यं वै देवसत्तम
स्त्रीभावेन हि तुष्टोऽस्मि गम्यतां त्रिदशाधिप ४८
एवमस्त्विति चोक्त्वा तामापृच्छ्य त्रिदिवं गतः
एवं स्त्रिया महाराज अधिक प्रीतिरुच्यते ४९
इति श्रीमहाभारते अनुशासनपर्वणि द्वादशोऽध्यायः १२

## त्रयोदशोऽध्यायः

युधिष्ठिर उवाच
किं कर्तव्यं मनुष्येण लोकयात्राहितार्थिना
कथं वै लोकयात्रां तु किंशीलश्च समाचरेत् १
भीष्म उवाच
कायेन त्रिविधं कर्म वाचा चापि चतुर्विधम्
मनसा त्रिविधं चैव दश कर्मपथांस्त्यजेत् २
प्राणातिपातं स्तैन्यं च परदारमथापि च
त्रीणि पापानि कायेन सर्वतः परिवर्जयेत् ३
असत्प्रलापं पारुष्यं पैशुन्यमनृतं तथा
चत्वारि वाचा राजेन्द्र न जल्पेन्नानुचिन्तयेत् ४
अनभिध्या परस्वेषु सर्वसत्त्वेषु सौहृदम्
कर्मणां फलमस्तीति त्रिविधं मनसा चरेत् ५
तस्माद्वाक्कायमनसा नाचरेदशुभं नरः
शुभाशुभान्याचरन्हि तस्य तस्याश्नुते फलम् ६
इति श्रीमहाभारते अनुशासनपर्वणि त्रयोदशोऽध्यायः १३

## चतुर्दशोऽध्यायः

युधिष्ठिर उवाच
पितामहेशाय विभो नामान्याचक्ष्व शंभवे
बभ्रवे विश्वमायाय महाभाग्यं च तत्त्वतः १
भीष्म उवाच

सुरासुरगुरो देव विष्णो त्वं वक्तुमर्हसि
शिवाय विश्वरूपाय यन्मां पृच्छद्युधिष्ठिरः २
नाम्नां सहस्रं देवस्य तण्डिना ब्रह्मयोनिना
निवेदितं ब्रह्मलोके ब्रह्मणो यत्पुराभवत् ३
द्वैपायनप्रभृतयस्तथैवेमे तपोधनाः
ऋषयः सुव्रता दान्ताः शृण्वन्तु गदतस्तव ४
ध्रुवाय नन्दिने होत्रे गोप्त्रे विश्वसृजेऽग्नये
महाभाग्यं विभो ब्रूहि मुण्डनेऽथ कपर्दिने ५
वासुदेव उवाच
न गतिः कर्मणां शक्या वेत्तुमीशस्य तत्त्वतः ६
हिरण्यगर्भप्रमुखा देवाः सेन्द्रा महर्षयः
न विदुर्यस्य निधनमादिं वा सूक्ष्मदर्शिनः
स कथं नरमात्रेण शक्यो ज्ञातुं सतां गतिः ७
तस्याहमसुरघ्नस्य कांश्चिद्भगवतो गुणान्
भवतां कीर्तयिष्यामि व्रतेशाय यथातथम् ८
वैशम्पायन उवाच
एवमुक्त्वा तु भगवान्गुणांस्तस्य महात्मनः
उपस्पृश्य शुचिर्भूत्वा कथयामास धीमतः ९
वासुदेव उवाच
शुश्रूषध्वं ब्राह्मणेन्द्रास्त्वं च तात युधिष्ठिर
त्वं चापगेय नामानि निशामय जगत्पतेः १०
यदवाप्तं च मे पूर्वं साम्बहेतोः सुदुष्करम्
यथा च भगवान्दृष्टो मया पूर्वं समाधिना ११
शम्बरे निहते पूर्वं रौक्मिणेयेन धीमता
अतीते द्वादशे वर्षे जाम्बवत्यब्रवीद्धि माम् १२
प्रद्युम्नचारुदेष्णादीन्रुक्मिण्या वीक्ष्य पुत्रकान्
पुत्रार्थिनी मामुपेत्य वाक्यमाह युधिष्ठिर १३
शूरं बलवतां श्रेष्ठं कान्तरूपमकल्मषम्
आत्मतुल्यं मम सुतं प्रयच्छाच्युत माचिरम् १४
न हि तेऽप्राप्यमस्तीह त्रिषु लोकेषु किंचन

लोकान्सृजेस्त्वमपरानिच्छन्यदुकुलोद्वह १५
त्वया द्वादश वर्षाणि वायुभूतेन शुष्यता
आराध्य पशुभर्तारं रुक्मिण्या जनिताः सुताः १६
चारुदेष्णः सुचारुश्च चारुवेषो यशोधरः
चारुश्रवाश्चारुयशाः प्रद्युम्नः शंभुरेव च १७
यथा ते जनिताः पुत्रा रुक्मिण्याश्चारुविक्रमाः
तथा ममापि तनयं प्रयच्छ बलशालिनम् १८
इत्येवं चोदितो देव्या तामवोचं सुमध्यमाम्
अनुजानीहि मां राज्ञि करिष्ये वचनं तव
सा च मामब्रवीद्गच्छ विजयाय शिवाय च १९
ब्रह्मा शिवः काश्यपश्च नद्यो देवा मनोनुगाः
क्षेत्रौषध्यो यज्ञवाहाच्छन्दांस्यृषिगणा धरा २०
समुद्रा दक्षिणा स्तोभा ऋक्षाणि पितरो ग्रहाः
देवपत्न्यो देवकन्या देवमातर एव च २१
मन्वन्तराणि गावश्च चन्द्रमाः सविता हरिः
सावित्री ब्रह्मविद्या च ऋतवो वत्सराः क्षपाः २२
क्षणा लवा मुहूर्ताश्च निमेषा युगपर्ययाः
रक्षन्तु सर्वत्र गतं त्वां यादव सुखावहम्
अरिष्टं गच्छ पन्थानमप्रमत्तो भवानघ २३
एवं कृतस्वस्त्ययनस्तयाहं तामभ्यनुज्ञाय कपीन्द्रपुत्रीम्
पितुः समीपे नरसत्तमस्य मातुश्च राज्ञश्च तथाहुकस्य २४
तमर्थमावेद्य यदब्रवीन्मां विद्याधरेन्द्रस्य सुता भृशार्ता
तानभ्यनुज्ञाय तदातिदुःखाद्गदं तथैवातिबलं च रामम् २५
प्राप्यानुज्ञां गुरुजनादहं तार्क्ष्यमचिन्तयम्
सोऽवहद्धिमवन्तं मां प्राप्य चैनं व्यसर्जयम् २६
तत्राहमद्भुतान्भावानपश्यं गिरिसत्तमे
क्षेत्रं च तपसां श्रेष्ठं पश्याम्याश्रममुत्तमम् २७
दिव्यं वैयाघ्रपद्यस्य उपमन्योर्महात्मनः
पूजितं देवगन्धर्वैर्ब्राह्मया लक्ष्म्या समन्वितम् २८
धवककुभकदम्बनारिकेलैःकुरबककेतकजम्बुपाटलाभिः

वटवरुणकवत्सनाभबिल्वैः सरलकपित्थप्रियालसालतालैः २९
बदरीकुन्दपुन्नागैर शोकाम्रातिमुक्तकैः
भल्लातकैर्मधूकैश्च चम्पकैः पनसैस्तथा ३०
वन्यैर्बहुविधैर्वृक्षैः फलपुष्पप्रदैर्युतम्
पुष्पगुल्मलताकीर्णं कदलीषण्डशोभितम् ३१
नानाशकुनिसंभोज्यैः फलैर्वृक्षैरलंकृतम्
यथास्थानविनिक्षिप्तैर्भूषितं वनराजिभिः ३२
रुरुवारणशार्दूल सिंहद्वीपिसमाकुलम्
कुरङ्गबर्हिणाकीर्णं मार्जारभुजगावृतम्
पूगैश्च मृगजातीनां महिषर्क्षनिषेवितम् ३३
नानापुष्परजोमिश्रो गजदानाधिवासितः
दिव्यस्त्रीगीतबहुलो मारुतोऽत्र सुखो ववौ ३४
धारानिनादैर्विहगप्रणादैः शुभैस्तथा बृंहितैः कुञ्जराणाम्
गीतैस्तथा किंनराणामुदारैः शुभैः स्वनैः सामगानां च वीर ३५
अचिन्त्यं मनसाप्यन्यैः सरोभिः समलंकृतम्
विशालैश्चाग्निशरणैर्भूषितं कुशसंवृतम् ३६
विभूषितं पुण्यपवित्रतोयया सदा च जुष्टं नृप जह्नुकन्यया
महात्मभिर्धर्मभृतां वरिष्ठैर्महर्षिभिर्भूषितमग्निकल्पैः ३७
वाय्वाहारैरम्बुपैर्जप्यनित्यैः संप्रक्षालैर्यतिभिर्ध्याननित्यैः
धूमाशनैरूष्मपैः क्षीरपैश्च विभूषितं ब्राह्मणेन्द्रैः समन्तात् ३८
गोचारिणोऽथाश्मकुट्टा दन्तोलूखलिनस्तथा
मरीचिपाः फेनपाश्च तथैव मृगचारिणः ३९
सुदुःखान्नियमांस्तांस्तान्वहतः सुतपोन्वितान्
पश्यन्नुत्फुल्लनयनः प्रवेष्टुमुपचक्रमे ४०
सुपूजितं देवगणैर्महात्मभिः शिवादिभिर्भारत पुण्यकर्मभिः
रराज तच्चाश्रममण्डलं सदा दिवीव राजन्रविमण्डलं यथा ४१
क्रीडन्ति सर्पैर्नकुला मृगैर्व्याघ्राश्च मित्रवत्
प्रभावाद्दीप्ततपसः संनिकर्षगुणान्विताः ४२
तत्राश्रमपदे श्रेष्ठे सर्वभूतमनोरमे
सेविते द्विजशार्दूलैर्वेदवेदाङ्गपारगैः ४३

नानानियमविख्यातैर्ऋषिभिश्च महात्मभिः
प्रविशन्नेव चापश्यं जटाचीरधरं प्रभुम् ४४
तेजसा तपसा चैव दीप्यमानं यथानलम्
शिष्यमध्यगतं शान्तं युवानं ब्राह्मणर्षभम्
शिरसा वन्दमानं मामुपमन्युरभाषत ४५
स्वागतं पुण्डरीकाक्ष सफलानि तपांसि नः
यत्पूज्यः पूजयसि नो द्रष्टव्यो द्रष्टुमिच्छसि ४६
तमहं प्राञ्जलिर्भूत्वा मृगपक्षिष्वथाग्निषु
धर्मे च शिष्यवर्गे च समपृच्छमनामयम् ४७
ततो मां भगवानाह साम्ना परमवल्गुना
लप्स्यसे तनयं कृष्ण आत्मतुल्यमसंशयम् ४८
तपः सुमहदास्थाय तोषयेशानमीश्वरम्
इह देवः सपत्नीकः समाक्रीडत्यधोक्षज ४९
इहैव देवताश्रेष्ठं देवाः सर्षिगणाः पुरा
तपसा ब्रह्मचर्येण सत्येन च दमेन च
तोषयित्वा शुभान्कामान्प्राप्नुवंस्ते जनार्दन ५०
तेजसां तपसां चैव निधिः स भगवानिह
शुभाशुभान्वितान्भावान्विसृजन्संक्षिपन्नपि
आस्ते देव्या सहाचिन्त्यो यं प्रार्थयसि शत्रुहन् ५१
हिरण्यकशिपुर्योऽभूद्दानवो मेरुकम्पनः
तेन सर्वामरैश्वर्यं शर्वात्प्राप्तं समार्बुदम् ५२
तस्यैव पुत्रप्रवरो मन्दरो नाम विश्रुतः
महादेववराच्छक्रं वर्षार्बुदमयोधयत् ५३
विष्णोश्चक्रं च तद्घोरं वज्रमाखण्डलस्य च
शीर्णं पुराभवत्तात ग्रहस्याङ्गेषु केशव ५४
अर्द्यमानाश्च विबुधा ग्रहेण सुबलीयसा
शिवदत्तवराञ्जघ्नुरसुरेन्द्रान्सुरा भृशम् ५५
तुष्टो विद्युत्प्रभस्यापि त्रिलोकेश्वरतामदात्
शतं वर्षसहस्राणां सर्वलोकेश्वरोऽभवत्
ममैवानुचरो नित्यं भवितासीति चाब्रवीत् ५६

तथा पुत्रसहस्राणामयुतं च ददौ प्रभुः
कुशद्वीपं च स ददौ राज्येन भगवानजः ५७
तथा शतमुखो नाम धात्रा सृष्टो महासुरः
येन वर्षशतं साग्रमात्ममांसैर्हुतोऽनलः
तं प्राह भगवांस्तुष्टः किं करोमीति शंकरः ५८
तं वै शतमुखः प्राह योगो भवतु मेऽदभुतः
बलं च दैवतश्रेष्ठ शाश्वतं संप्रयच्छ मे ५९
स्वायंभुवः क्रतुश्चापि पुत्रार्थमभवत्पुरा
आविश्य योगेनात्मानं त्रीणि वर्षशतान्यपि ६०
तस्य देवोऽददत्पुत्रान्सहस्रं क्रतुसंमितान्
योगेश्वरं देवगीतं वेत्थ कृष्ण न संशयः ६१
वालखिल्या मघवता अवज्ञाताः पुरा किल
तैः क्रुद्धैर्भगवान्रुद्रस्तपसा तोषितो ह्यभूत् ६२
तांश्चापि दैवतश्रेष्ठः प्राह प्रीतो जगत्पतिः
सुपर्णं सोमहर्तारं तपसोत्पादयिष्यथ ६३
महादेवस्य रोषाच्च आपो नष्टाः पुराभवन्
ताश्च सप्तकपालेन देवैरन्याः प्रवर्तिताः ६४
अत्रेर्भार्यापि भर्तारं संत्यज्य ब्रह्मवादिनी
नाहं तस्य मुनेर्भूयो वशगा स्यां कथंचन
इत्युक्त्वा सा महादेवमगच्छच्छरणं किल ६५
निराहारा भयादत्रेस्त्रीणि वर्षशतान्यपि
अशेत मुसलेष्वेव प्रसादार्थं भवस्य सा ६६
तामब्रवीद्धसन्देवो भविता वै सुतस्तव
वंशे तवैव नाम्ना तु ख्यातिं यास्यति चेप्सिताम् ६७
शाकल्यः संशितात्मा वै नव वर्षशतान्यपि
आराधयामास भवं मनोयज्ञेन केशव ६८
तं चाह भगवांस्तुष्टो ग्रन्थकारो भविष्यसि
वत्साक्षया च ते कीर्तिस्त्रैलोक्ये वै भविष्यति
अक्षयं च कुलं तेऽस्तु महर्षिभिरलंकृतम् ६९
सावर्णिश्चापि विख्यात ऋषिरासीत्कृते युगे

इह तेन तपस्तप्तं षष्टिं वर्षशतान्यथ ७०
तमाह भगवान्रुद्रः साक्षात्तुष्टोऽस्मि तेऽनघ
ग्रन्थकृल्लोकविख्यातो भवितास्यजरामरः ७१
मयापि च यथा दृष्टो देवदेवः पुरा विभुः
साक्षात्पशुपतिस्तात तच्चापि शृणु माधव ७२
यदर्थं च महादेवः प्रयतेन मया पुरा
आराधितो महातेजास्तच्चापि शृणु विस्तरम् ७३
यदवाप्तं च मे पूर्वं देवदेवान्महेश्वरात्
तत्सर्वमखिलेनाद्य कथयिष्यामि तेऽनघ ७४
पुरा कृतयुगे तात ऋषिरासीन्महायशाः
व्याघ्रपाद इति ख्यातो वेदवेदाङ्गपारगः
तस्याहमभवं पुत्रो धौम्यश्चापि ममानुजः ७५
कस्यचित्त्वथ कालस्य धौम्येन सह माधव
आगच्छमाश्रमं क्रीडन्मुनीनां भावितात्मनाम् ७६
तत्रापि च मया दृष्टा दुह्यमाना पयस्विनी
लक्षितं च मया क्षीरं स्वादुतो ह्यमृतोपमम् ७७
ततः पिष्टं समालोड्य तोयेन सह माधव
आवयोः क्षीरमित्येव पानार्थमुपनीयते ७८
अथ गव्यं पयस्तात कदाचित्प्राशितं मया
ततः पिष्टरसं तात न मे प्रीतिमुदावहत् ७९
ततोऽहमब्रुवं बाल्याज्जननीमात्मनस्तदा
क्षीरोदनसमायुक्तं भोजनं च प्रयच्छ मे ८०
ततो मामब्रवीन्माता दुःखशोकसमन्विता
पुत्रस्नेहात्परिष्वज्य मूर्ध्नि चाघ्राय माधव ८१
कुतः क्षीरोदनं वत्स मुनीनां भावितात्मनाम्
वने निवसतां नित्यं कन्दमूलफलाशिनाम् ८२
अप्रसाद्य विरूपाक्षं वरदं स्थाणुमव्ययम्
कुतः क्षीरोदनं वत्स सुखानि वसनानि च ८३
तं प्रपद्य सदा वत्स सर्वभावेन शंकरम्
तत्प्रसादाच्च कामेभ्यः फलं प्राप्स्यसि पुत्रक ८४

जनन्यास्तद्वचः श्रुत्वा तदाप्रभृति शत्रुहन्
मम भक्तिर्महादेवे नैष्ठिकी समपद्यत ८५
ततोऽह तप आस्थाय तोषयामास शंकरम्
दिव्यं वर्षसहस्रं तु पादाङ्गुष्ठाग्रविष्ठितः ८६
एकं वर्षशतं चैव फलाहारस्तदाभवम्
द्वितीयं शीर्णपर्णाशी तृतीयं चाम्बुभोजनः
शतानि सप्त चैवाहं वायुभक्षस्तदाभवम् ८७
ततः प्रीतो महादेवः सर्वलोकेश्वरः प्रभुः
शक्ररूपं स कृत्वा तु सर्वैसर्देवगणैर्वृतः
सहस्राक्षस्तदा भूत्वा वज्रपाणिर्महायशाः ८८
सुधावदातं रक्ताक्षं स्तब्धकर्णं मदोत्कटम्
आवेष्टितकरं रौद्रं चतुर्दंष्ट्रं महागजम् ८९
समास्थितश्च भगवान्दीप्यमानः स्वतेजसा
आजगाम किरीटी तु हारकेयूरभूषितः ९०
पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्धनि
सेव्यमानोऽप्सरोभिश्च दिव्यगन्धर्वनादितः ९१
ततो मामाह देवेन्द्रः प्रीतस्तेऽह द्विजोत्तम
वरं वृणीष्व मत्तस्त्वं यत्ते मनसि वर्तते ९२
शक्रस्य तु वचः श्रुत्वा नाहं प्रीतमनाभवम्
अब्रुवं च तदा कृष्ण देवराजमिदं वचः ९३
नाहं त्वत्तो वरं काङ्क्षे नान्यस्मादपि दैवतात्
महादेवादृते सौम्य सत्यमेतद्ब्रवीमि ते ९४
पशुपतिवचनाद्भवामि सद्यः कृमिरथ वा तरुरप्यनेकशाखः
अपशुपतिवरप्रसादजा मे त्रिभुवनराज्यविभूतिरप्यनिष्टा ९५
अपि कीटः पतंगो वा भवेयं शंकराज्ञया
न तु शक्र त्वया दत्तं त्रैलोक्यमपि कामये ९६
यावच्छशाङ्कशकलामलबद्धमौलिर्न प्रीयते पशुपतिर्भगवान्ममेशः
तावज्जरामरणजन्मशताभिघातैर्दुःखानि देहविहितानि समुद्वहामि ९७
दिवसकरशशाङ्कवह्निदीप्तं त्रिभुवनसारमपारमाद्यमेकम्
अजरममरमप्रसाद्य रुद्रं जगति पुमानिह को लभेत शान्तिम् ९८

शक्र उवाच
कः पुनस्तव हेतुर्वै ईशे कारणकारणे
येन देवादृतेऽन्यस्मात्प्रसादं नाभिकाङ्क्षसि ९९
उपमन्युरुवाच
हेतुभिर्वा किमन्यैस्ते ईशः कारणकारणम्
न शुश्रुम यदन्यस्य लिङ्गमभ्यर्च्यते सुरैः १००
कस्यान्यस्य सुरैः सर्वैर्लिङ्गं मुक्त्वा महेश्वरम्
अर्च्यतेऽर्चितपूर्वं वा ब्रूहि यद्यस्ति ते श्रुतिः १०१
यस्य ब्रह्मा च विष्णुश्च त्वं चापि सह दैवतैः
अर्चयध्वं सदा लिङ्गं तस्माच्छ्रेष्ठतमो हि सः १०२
तस्माद्वरमहं काङ्क्षे निधनं वापि कौशिक
गच्छ वा तिष्ठ वा शक्र यथेष्टं बलसूदन १०३
काममेष वरो मेऽस्तु शापो वापि महेश्वरात्
न चान्यां देवतां काङ्क्षे सर्वकामफलान्यपि १०४
एवमुक्त्वा तु देवेन्द्रं दुःखादाकुलितेन्द्रियः
न प्रसीदति मे रुद्रः किमेतदिति चिन्तयन्
अथापश्यं क्षणेनैव तमेवैरावतं पुनः १०५
हंसकुन्देन्दुसदृशं मृणालकुमुदप्रभम्
वृषरूपधरं साक्षात्क्षीरोदमिव सागरम् १०६
कृष्णपुच्छं महाकायं मधुपिङ्गललोचनम्
जाम्बूनदेन दाम्ना च सर्वतः समलंकृतम् १०७
रक्ताक्षं सुमहानासं सुकर्णं सुकटीतटम्
सुपार्श्वं विपुलस्कन्धं सुरूपं चारुदर्शनम् १०८
ककुदं तस्य चाभाति स्कन्धमापूर्य विष्ठितम्
तुषारगिरिकूटाभं सिताभ्रशिखरोपमम् १०९
तमास्थितश्च भगवान्देवदेवः सहोमया
अशोभत महादेवः पौर्णमास्यामिवोडुराट् ११०
तस्य तेजोभवो वह्निः समेघः स्तनयित्नुमान्
सहस्रमिव सूर्याणां सर्वमावृत्य तिष्ठति १११
ईश्वरः सुमहातेजाः संवर्तक इवानलः

युगान्ते सर्वभूतानि दिधक्षुरिव चोद्यतः ११२
तेजसा तु तदा व्याप्ते दुर्निरीक्ष्ये समन्ततः
पुनरुद्विग्नहृदयः किमेतदिति चिन्तयम् ११३
मुहूर्तमिव तत्तेजो व्याप्य सर्वा दिशो दश
प्रशान्तं च क्षणेनैव देवदेवस्य मायया ११४
अथापश्यं स्थितं स्थाणुं भगवन्तं महेश्वरम्
सौरभेयगतं सौम्यं विधूममिव पावकम्
सहितं चारुसर्वाङ्ग्या पार्वत्या परमेश्वरम् ११५
नीलकण्ठं महात्मानमसक्तं तेजसां निधिम्
अष्टादशभुजं स्थाणुं सर्वाभरणभूषितम् ११६
शुक्लाम्बरधरं देवं शुक्लमाल्यानुलेपनम्
शुक्लध्वजमनाधृष्यं शुक्लयज्ञोपवीतिनम् ११७
गायद्भिर्नृत्यमानैश्च उत्पतद्भिरितस्ततः
वृतं पारिषदैर्दिव्यैरात्मतुल्यपराक्रमैः ११८
बालेन्दुमुकुटं पाण्डुं शरच्चन्द्रमिवोदितम्
त्रिभिर्नेत्रैः कृतोद्द्योतं त्रिभिः सूर्यैरिवोदितैः ११९
अशोभत च देवस्य माला गात्रे सितप्रभे
जातरूपमयैः पद्मैर्ग्रथिता रत्नभूषिता १२०
मूर्तिमन्ति यथास्त्राणि सर्वतेजोमयानि च
मया दृष्टानि गोविन्द भवस्यामिततेजसः १२१
इन्द्रायुधसहस्राभं धनुस्तस्य महात्मनः
पिनाकमिति विख्यातं स च वै पन्नगो महान् १२२
सप्तशीर्षो महाकायस्तीक्ष्णदंष्ट्रो विषोल्बणः
ज्यावेष्टितमहाग्रीवः स्थितः पुरुषविग्रहः १२३
शरश्च सूर्यसंकाशः कालानलसमद्युतिः
यत्तदस्त्रं महाघोरं दिव्यं पाशुपतं महत् १२४
अद्वितीयमनिर्देश्यं सर्वभूतभयावहम्
सस्फुलिङ्गं महाकायं विसृजन्तमिवानलम् १२५
एकपादं महादंष्ट्रं सहस्रशिरसोदरम्
सहस्रभुजजिह्वाक्षमुद्गिरन्तमिवानलम् १२६

ब्राह्मान्नारायणादैन्द्रादाग्नेयादपि वारुणात्
यद्विशिष्टं महाबाहो सर्वशस्त्रविघातनम् १२७
येन तत्त्रिपुरं दग्ध्वा क्षणाद्भस्मीकृतं पुरा
शरेणैकेन गोविन्द महादेवेन लीलया १२८
निर्ददाह जगत्कृत्स्नं त्रैलोक्यं सचराचरम्
महेश्वरभुजोत्सृष्टं निमेषार्धान्न संशयः १२९
नावध्यो यस्य लोकेऽस्मिन्ब्रह्मविष्णुसुरेष्वपि
तदहं दृष्टवांस्तात आश्चर्याद्भुतमुत्तमम् १३०
गुह्यमस्त्रं परं चापि तत्तुल्याधिकमेव वा
यत्तच्छूलमिति ख्यातं सर्वलोकेषु शूलिनः १३१
दारयेद्यन्महीं कृत्स्नां शोषयेद्वा महोदधिम्
संहरेद्वा जगत्कृत्स्नं विसृष्टं शूलपाणिना १३२
यौवनाश्वो हतो येन मांधाता सबलः पुरा
चक्रवर्ती महातेजास्त्रिलोकविजयी नृपः १३३
महाबलो महावीर्यः शक्रतुल्यपराक्रमः
करस्थेनैव गोविन्द लवणस्येह रक्षसः १३४
तच्छूलमतितीक्ष्णाग्रं सुभीमं लोमहर्षणम्
त्रिशिखां भ्रुकुटीं कृत्वा तर्जमानमिव स्थितम् १३५
विधूमं सार्चिषं कृष्णं कालसूर्यमिवोदितम्
सर्पहस्तमनिर्देश्यं पाशहस्तमिवान्तकम्
दृष्टवानस्मि गोविन्द तदस्त्रं रुद्रसंनिधौ १३६
परशुस्तीक्ष्णधारश्च दत्तो रामस्य यः पुरा
महादेवेन तुष्टेन क्षत्रियाणां क्षयंकरः
कार्तवीर्यो हतो येन चक्रवर्ती महामृधे १३७
त्रिःसप्तकृत्वः पृथिवी येन निःक्षत्रिया कृता
जामदग्न्येन गोविन्द रामेणाक्लिष्टकर्मणा १३८
दीप्तधारः सुरौद्रास्यः सर्पकण्ठाग्रवेष्टितः
अभवच्छूलिनोऽभ्याशे दीप्तवह्निशिखोपमः १३९
असंख्येयानि चास्त्राणि तस्य दिव्यानि धीमतः
प्राधान्यतो मयैतानि कीर्तितानि तवानघ १४०

सव्यदेशे तु देवस्य ब्रह्मा लोकपितामहः
दिव्यं विमानमास्थाय हंसयुक्तं मनोजवम् १४१
वामपार्श्वगतश्चैव तथा नारायणः स्थितः
वैनतेयं समास्थाय शङ्खचक्रगदाधरः १४२
स्कन्दो मयूरमास्थाय स्थितो देव्याः समीपतः
शक्तिं कण्ठे समादाय द्वितीय इव पावकः १४३
पुरस्ताच्चैव देवस्य नन्दिं पश्याम्यवस्थितम्
शूलं विष्टभ्य तिष्ठन्तं द्वितीयमिव शंकरम् १४४
स्वायंभुवाद्या मनवो भृग्वाद्या ऋषयस्तथा
शक्राद्या देवताश्चैव सर्व एव समभ्ययुः १४५
तेऽभिवाद्य महात्मानं परिवार्य समन्ततः
अस्तुवन्विविधैः स्तोत्रैर्महादेवं सुरास्तदा १४६
ब्रह्मा भवं तदा स्तुन्वन्रथन्तरमुदीरयन्
ज्येष्ठसाम्ना च देवेशं जगौ नारायणस्तदा
गृणञ्शक्रः परं ब्रह्म शतरुद्रीयमुत्तमम् १४७
ब्रह्मा नारायणश्चैव देवराजश्च कौशिकः
अशोभन्त महात्मानस्त्रयस्त्रय इवाग्नयः १४८
तेषां मध्यगतो देवो रराज भगवाञ्शिवः
शरद्घनविनिर्मुक्तः परिविष्ट इवांशुमान्
ततोऽहमस्तुवं देवं स्तवेनानेन सुव्रतम् १४९
नमो देवाधिदेवाय महादेवाय वै नमः
शक्राय शक्ररूपाय शक्रवेषधराय च १५०
नमस्ते वज्रहस्ताय पिङ्गलायारुणाय च
पिनाकपाणये नित्यं खड्गशूलधराय च १५१
नमस्ते कृष्णवासाय कृष्णकुञ्चितमूर्धजे
कृष्णाजिनोत्तरीयाय कृष्णाष्टमिरताय च १५२
शुक्लवर्णाय शुक्लाय शुक्लाम्बरधराय च
शुक्लभस्मावलिप्ताय शुक्लकर्मरताय च १५३
त्वं ब्रह्मा सर्वदेवानां रुद्राणां नीललोहितः
आत्मा च सर्वभूतानां सांख्ये पुरुष उच्यसे १५४

ऋषभस्त्वं पवित्राणां योगिनां निष्कलः शिवः
आश्रमाणां गृहस्थस्त्वमीश्वराणां महेश्वरः
कुबेरः सर्वयक्षाणां क्रतूनां विष्णुरुच्यसे १५५
पर्वतानां महामेरुर्नक्षत्राणां च चन्द्रमाः
वसिष्ठस्त्वमृषीणां च ग्रहाणां सूर्य उच्यसे १५६
आरण्यानां पशूनां च सिंहस्त्वं परमेश्वरः
ग्राम्याणां गोवृषश्चासि भगवाँल्लोकपूजितः १५७
आदित्यानां भवान्विष्णुर्वसूनां चैव पावकः
पक्षिणां वैनतेयश्च अनन्तो भुजगेषु च १५८
सामवेदश्च वेदानां यजुषां शतरुद्रियम्
सनत्कुमारो योगीनां सांख्यानां कपिलो ह्यसि १५९
शक्रोऽसि मरुतां देव पितॄणां धर्मराडसि
ब्रह्मलोकश्च लोकानां गतीनां मोक्ष उच्यसे १६०
क्षीरोदः सागराणां च शैलानां हिमवान्गिरिः
वर्णानां ब्राह्मणश्चापि विप्राणां दीक्षितो द्विजः
आदिस्त्वमसि लोकानां संहर्ता काल एव च १६१
यच्चान्यदसि लोकेषु सत्त्वं तेजोऽधिकं स्मृतम्
तत्सर्वं भगवानेव इति मे निश्चिता मतिः १६२
नमस्ते भगवन्देव नमस्ते भक्तवत्सल
योगेश्वर नमस्तेऽस्तु नमस्ते विश्वसंभव १६३
प्रसीद मम भक्तस्य दीनस्य कृपणस्य च
अनैश्वर्येण युक्तस्य गतिर्भव सनातन १६४
यं चापराधं कृतवानज्ञानात्परमेश्वर
मद्भक्त इति देवेश तत्सर्वं क्षन्तुमर्हसि १६५
मोहितश्चास्मि देवेश तुभ्यं रूपविपर्ययात्
तेन नार्घ्यं मया दत्तं पाद्यं चापि सुरेश्वर १६६
एवं स्तुत्वाहमीशानं पाद्यमर्घ्यं च भक्तितः
कृताञ्जलिपुटो भूत्वा सर्वं तस्मै न्यवेदयम् १६७
ततः शीताम्बुसंयुक्ता दिव्यगन्धसमन्विता
पुष्पवृष्टिः शुभा तात पपात मम मूर्धनि १६८

दुन्दुभिश्च ततो दिव्यस्ताडितो देवकिंकरैः
ववौ च मारुतः पुण्यः शुचिगन्धः सुखावहः १६९
ततः प्रीतो महादेवः सपत्नीको वृषध्वजः
अब्रवीत्त्रिदशांस्तत्र हर्षयन्निव मां तदा १७०
पश्यध्वं त्रिदशाः सर्वे उपमन्योर्महात्मनः
मयि भक्तिं परां दिव्यामेकभावादवस्थिताम् १७१
एवमुक्तास्ततः कृष्ण सुरास्ते शूलपाणिना
ऊचुः प्राञ्जलयः सर्वे नमस्कृत्वा वृषध्वजम् १७२
भगवन्देवदेवेश लोकनाथ जगत्पते
लभतां सर्वकामेभ्यः फलं त्वत्तो द्विजोत्तमः १७३
एवमुक्तस्ततः शर्वः सुरैर्ब्रह्मादिभिस्तथा
आह मां भगवानीशः प्रहसन्निव शंकरः १७४
वत्सोपमन्यो प्रीतोऽस्मि पश्य मां मुनिपुंगव
दृढभक्तोऽसि विप्रर्षे मया जिज्ञासितो ह्यसि १७५
अनया चैव भक्त्या ते अत्यर्थं प्रीतिमानहम्
तस्मात्सर्वान्ददाम्यद्य कामांस्तव यथेप्सितान् १७६
एवमुक्तस्य चैवाथ महादेवेन मे विभो
हर्षादश्रूण्यवर्तन्त लोमहर्षश्च जायते १७७
अब्रुवं च तदा देवं हर्षगद्गदया गिरा
जानुभ्यामवनिं गत्वा प्रणम्य च पुनः पुनः १७८
अद्य जातो ह्यहं देव अद्य मे सफलं तपः
यन्मे साक्षान्महादेवः प्रसन्नस्तिष्ठतेऽग्रतः १७९
यं न पश्यन्ति चाराध्य देवा ह्यमितविक्रमम्
तमहं दृष्टवान्देवं कोऽन्यो धन्यतरो मया १८०
एवं ध्यायन्ति विद्वांसः परं तत्त्वं सनातनम्
षड्विंशकमिति ख्यातं यत्परात्परमक्षरम् १८१
स एष भगवान्देवः सर्वतत्त्वादिरव्ययः
सर्वतत्त्वविधानज्ञः प्रधानपुरुषेश्वरः १८२
योऽसृजद्दक्षिणादङ्गाद्ब्रह्माणं लोकसंभवम्
वामपार्श्वात्तथा विष्णुं लोकरक्षार्थमीश्वरः

युगान्ते चैव संप्राप्ते रुद्रमङ्गात्सृजत्प्रभुः १८३
स रुद्रः संहरन्कृत्स्नं जगत्स्थावरजङ्गमम्
कालो भूत्वा महातेजाः संवर्तक इवानलः १८४
एष देवो महादेवो जगत्सृष्ट्वा चराचरम्
कल्पान्ते चैव सर्वेषां स्मृतिमाक्षिप्य तिष्ठति १८५
सर्वगः सर्वभूतात्मा सर्वभूतभवोद्भवः
आस्ते सर्वगतो नित्यमदृश्यः सर्वदैवतैः १८६
यदि देयो वरो मह्यं यदि तुष्टश्च मे प्रभुः
भक्तिर्भवतु मे नित्यं शाश्वती त्वयि शंकर १८७
अतीतानागतं चैव वर्तमानं च यद्विभो
जानीयामिति मे बुद्धिस्त्वत्प्रसादात्सुरोत्तम १८८
क्षीरोदनं च भुञ्जीयामक्षयं सह बान्धवैः
आश्रमे च सदा मह्यं सांनिध्यं परमस्तु ते १८९
एवमुक्तः स मां प्राह भगवाँल्लोकपूजितः
महेश्वरो महातेजाश्चराचरगुरुः प्रभुः १९०
अजरश्चामरश्चैव भव दुःखविवर्जितः
शीलवान्गुणसंपन्नः सर्वज्ञः प्रियदर्शनः १९१
अक्षयं यौवनं तेऽस्तु तेजश्चैवानलोपमम्
क्षीरोदः सागरश्चैव यत्र यत्रेच्छसे मुने १९२
तत्र ते भविता कामं सांनिध्यं पयसो निधेः
क्षीरोदनं च भुङ्क्ष्व त्वममृतेन समन्वितम् १९३
बन्धुभिः सहितः कल्पं ततो मामुपयास्यसि
सांनिध्यमाश्रमे नित्यं करिष्यामि द्विजोत्तम १९४
तिष्ठ वत्स यथाकामं नोत्कण्ठां कर्तुमर्हसि
स्मृतः स्मृतश्च ते विप्र सदा दास्यामि दर्शनम् १९५
एवमुक्त्वा स भगवान्सूर्यकोटिसमप्रभः
ममेशानो वरं दत्त्वा तत्रैवान्तरधीयत १९६
एवं दृष्टो मया कृष्ण देवदेवः समाधिना
तदवाप्तं च मे सर्वं यदुक्तं तेन धीमता १९७
प्रत्यक्षं चैव ते कृष्ण पश्य सिद्धान्व्यवस्थितान्

ऋषीन्विद्याधरान्यक्षान्गन्धर्वाप्सरसस्तथा १९८
पश्य वृक्षान्मनोरम्यान्सदा पुष्पफलान्वितान्
सर्वर्तुकुसुमैर्युक्तान्स्निग्धपत्रान्सुशाखिनः
सर्वमेतन्महाबाहो दिव्यभावसमन्वितम् १९९
इति श्रीमहाभारते अनुशासनपर्वणि चतुर्दशोऽध्यायः १४

## पञ्चदशोऽध्यायः

उपमन्युरुवाच
एतान्सहस्रशश्चान्यान्समनुध्यातवान्हरः
कस्मात्प्रसादं भगवान्न कुर्यात्तव माधव १
त्वादृशेन हि देवानां श्लाघनीयः समागमः
ब्रह्मण्येनानृशंसेन श्रद्दधानेन चाप्युत
जप्यं च ते प्रदास्यामि येन द्रक्ष्यसि शंकरम् २
कृष्ण उवाच
अब्रुवं तमहं ब्रह्मंस्त्वत्प्रसादान्महामुने
द्रक्ष्य दितिजसंघानां मर्दनं त्रिदशेश्वरम् ३
दिनेऽष्टमे च विप्रेण दीक्षितोऽह यथाविधि
दण्डी मुण्डी कुशी चीरी घृताक्तो मेखली तथा ४
मासमेकं फलाहारो द्वितीयं सलिलाशनः
तृतीयं च चतुर्थं च पञ्चमं चानिलाशनः ५
एकपादेन तिष्ठंश्च ऊर्ध्वबाहुरतन्द्रितः
तेजः सूर्यसहस्रस्य अपश्यं दिवि भारत ६
तस्य मध्यगतं चापि तेजसः पाण्डुनन्दन
इन्द्रायुधपिनद्धाङ्गं विद्युन्मालागवाक्षकम्
नीलशैलचयप्रख्यं बलाकाभूषितं घनम् ७
तमास्थितश्च भगवान्देव्या सह महाद्युतिः
तपसा तेजसा कान्त्या दीप्तया सह भार्यया ८
रराज भगवांस्तत्र देव्या सह महेश्वरः
सोमेन सहितः सूर्यो यथा मेघस्थितस्तथा ९
संहृष्टरोमा कौन्तेय विस्मयोत्फुल्ललोचनः

अपश्यं देवसंघानां गतिमार्तिहरं हरम् १०
किरीटिनं गदिनं शूलपाणिं व्याघ्राजिनं जटिलं दण्डपाणिम्
पिनाकिनं वज्रिणं तीक्ष्णदंष्ट्रं शुभाङ्गदं व्यालयज्ञोपवीतम् ११
दिव्यां मालामुरसानेकवर्णां समुद्वहन्तं गुल्फदेशावलम्बाम्
चन्द्रं यथा परिविष्टं ससंध्यं वर्षात्यये तद्वदपश्यमेनम् १२
प्रमथानां गणैश्चैव समन्तात्परिवारितम्
शरदीव सुदुष्प्रेक्ष्यं परिविष्टं दिवाकरम् १३
एकादश तथा चैनं रुद्राणां वृषवाहनम्
अस्तुवन्नियतात्मानः कर्मभिः शुभकर्मिणम् १४
आदित्या वसवः साध्या विश्वेदेवास्तथाश्विनौ
विश्वाभिः स्तुतिभिर्देवं विश्वदेवं समस्तुवन् १५
शतक्रतुश्च भगवान्विष्णुश्चादितिनन्दनौ
ब्रह्मा रथन्तरं साम ईरयन्ति भवान्तिके १६
योगीश्वराः सुबहवो योगदं पितरं गुरुम्
ब्रह्मर्षयश्च ससुतास्तथा देवर्षयश्च वै १७
पृथिवी चान्तरिक्षं च नक्षत्राणि ग्रहास्तथा
मासार्धमासा ऋतवो रात्र्यः संवत्सराः क्षणाः १८
मुहूर्ताश्च निमेषाश्च तथैव युगपर्ययाः
दिव्या राजन्नमस्यन्ति विद्याः सर्वा दिशस्तथा १९
सनत्कुमारो वेदाश्च इतिहासास्तथैव च
मरीचिरङ्गिरा अत्रिः पुलस्त्यः पुलहः क्रतुः २०
मनवः सप्तसोमश्च अथर्वा सबृहस्पतिः
भृगुर्दक्षः कश्यपश्च वसिष्ठः काश्य एव च २१
छन्दांसि दीक्षा यज्ञाश्च दक्षिणाः पावको हविः
यज्ञोपगानि द्रव्याणि मूर्तिमन्ति युधिष्ठिर २२
प्रजानां पतयः सर्वे सरितः पन्नगा नगाः
देवानां मातरः सर्वा देवपत्न्यः सकन्यकाः २३
सहस्राणि मुनीनां च अयुतान्यर्बुदानि च
नमस्यन्ति प्रभुं शान्तं पर्वताः सागरा दिशः २४
गन्धर्वाप्सरसश्चैव गीतवादित्रकोविदाः

दिव्यतानेन गायन्तः स्तुवन्ति भवमद्भुतम्
विद्याधरा दानवाश्च गुह्यका राक्षसास्तथा २५
सर्वाणि चैव भूतानि स्थावराणि चराणि च
नमस्यन्ति महाराज वाङ्मनःकर्मभिर्विभुम्
पुरस्ताद्विष्ठितः शर्वो ममासीत्त्रिदशेश्वरः २६
पुरस्ताद्विष्ठितं दृष्ट्वा ममेशानं च भारत
सप्रजापतिशक्रान्तं जगन्मामभ्युदैक्षत २७
ईक्षितुं च महादेवं न मे शक्तिरभूत्तदा
ततो मामब्रवीद्देवः पश्य कृष्ण वदस्व च २८
शिरसा वन्दिते देवे देवी प्रीता उमाभवत्
ततोऽहमस्तुवं स्थाणुं स्तुतं ब्रह्मादिभिः सुरैः २९
नमोऽस्तु ते शाश्वत सर्वयोने ब्रह्माधिपं त्वामृषयो वदन्ति
तपश्च सत्त्वं च रजस्तमश्च त्वामेव सत्यं च वदन्ति सन्तः ३०
त्वं वै ब्रह्मा च रुद्रश्च वरुणोऽग्निर्मनुर्भवः
धाता त्वष्टा विधाता च त्वं प्रभुः सर्वतोमुखः ३१
त्वत्तो जातानि भूतानि स्थावराणि चराणि च
त्वमादिः सर्वभूतानां संहारश्च त्वमेव हि ३२
ये चेन्द्रियार्थाश्च मनश्च कृत्स्नं ये वायवः सप्त तथैव चाग्निः
ये वा दिविस्था देवताश्चापि पुंसां तस्मात्परं त्वामृषयो वदन्ति ३३
वेदा यज्ञाश्च सोमश्च दक्षिणा पावको हविः
यज्ञोपगं च यत्किंचिद्भगवांस्तदसंशयम् ३४
इष्टं दत्तमधीतं च व्रतानि नियमाश्च ये
ह्रीः कीर्तिः श्रीर्द्युतिस्तुष्टिः सिद्धिश्चैव त्वदर्पणा ३५
कामः क्रोधो भयं लोभो मदः स्तम्भोऽथ मत्सरः
आधयो व्याधयश्चैव भगवंस्तनयास्तव ३६
कृतिर्विकारः प्रलयः प्रधानं प्रभवोऽव्ययः
मनसः परमा योनिः स्वाभावश्चापि शाश्वतः
अव्यक्तः पावन विभो सहस्रांशो हिरण्मयः ३७
आदिर्गुणानां सर्वेषां भवान्वै जीवनाश्रयः
महानात्मा मतिर्ब्रह्मा विश्वः शंभुः स्वयंभुवः ३८

बुद्धिः प्रज्ञोपलब्धिश्च संवित्ख्यातिर्धृतिः स्मृतिः
पर्यायवाचकैः शब्दैर्महानात्मा विभाव्यसे ३९
त्वां बुद्ध्वा ब्राह्मणो विद्वान्न प्रमोहं निगच्छति
हृदयं सर्वभूतानां क्षेत्रज्ञस्त्वमृषिष्टुतः ४०
सर्वतःपाणिपादस्त्वं सर्वतोक्षिशिरोमुखः
सर्वतःश्रुतिमाँल्लोके सर्वमावृत्य तिष्ठसि ४१
फलं त्वमसि तिग्मांशो निमेषादिषु कर्मसु
त्वं वै प्रभार्चिः पुरुषः सर्वस्य हृदि संस्थितः
अणिमा लाघिमा प्राप्तिरीशानो ज्योतिरव्ययः ४२
त्वयि बुद्धिर्मतिर्लोकाः प्रपन्नाः संश्रिताश्च ये
ध्यानिनो नित्ययोगाश्च सत्यसंधा जितेन्द्रियाः ४३
यस्त्वां ध्रुवं वेदयते गुहाशयं प्रभुं पुराणं पुरुषं च विश्वरूपम्
हिरण्मयं बुद्धिमतां परां गतिं स बुद्धिमान्बुद्धिमतीत्य तिष्ठति ४४
विदित्वा सप्त सूक्ष्माणि षडङ्गं त्वां च मूर्तितः
प्रधानविधियोगस्थस्त्वामेव विशते बुधः ४५
एवमुक्ते मया पार्थ भवे चार्तिविनाशने
चराचरं जगत्सर्वं सिंहनादमथाकरोत् ४६
सविप्रसंघाश्च सुरासुराश्च नागाः पिशाचाः पितरो वयांसि
रक्षोगणा भूतगणाश्च सर्वे महर्ष्यश्चैव तथा प्रणेमुः ४७
मम मूर्ध्नि च दिव्यानां कुसुमानां सुगन्धिनाम्
राशयो निपतन्ति स्म वायुश्च सुसुखो ववौ ४८
निरीक्ष्य भगवान्देवीमुमां मां च जगद्धितः
शतक्रतुं चाभिवीक्ष्य स्वयं मामाह शंकरः ४९
विद्मः कृष्ण परां भक्तिमस्मासु तव शत्रुहन्
क्रियतामात्मनः श्रेयः प्रीतिर्हि परमा त्वयि ५०
वृणीष्वाष्टौ वरान्कृष्ण दातास्मि तव सत्तम
ब्रूहि यादवशार्दूल यानिच्छसि सुदुर्लभान् ५१
इति श्रीमहाभारते अनुशासनपर्वणि पञ्चदशोऽध्यायः १५

षोडशोऽध्यायः

कृष्ण उवाच
मूर्ध्ना निपत्य नियतस्तेजःसंनिचये ततः
परमं हर्षमागम्य भगवन्तमथाब्रुवम् १
धर्मे दृढत्वं युधि शत्रुघातं यशस्तथाग्र्यं परमं बलं च
योगप्रियत्वं तव संनिकर्षं वृणे सुतानां च शतं शतानि २
एवमस्त्विति तद्वाक्यं मयोक्तः प्राह शंकरः ३
ततो मां जगतो माता धरणी सर्व पावनी
उवाचोमा प्रणिहिता शर्वाणी तपसां निधिः ४
दत्तो भगवता पुत्रः साम्बो नाम तवानघ
मत्तोऽप्यष्टौ वरानिष्टान्गृहाण त्वं ददामि ते
प्रणम्य शिरसा सा च मयोक्ता पाण्डुनन्दन ५
द्विजेष्वकोपं पितृतः प्रसादं शतं सुतानामुपभोगं परं च
कुले प्रीतिं मातृतश्च प्रसादं शमप्राप्तिं प्रवृणे चापि दाक्ष्यम् ६
देव्युवाच
एवं भविष्यत्यमरप्रभाव नाहं मृषा जातु वदे कदाचित्
भार्यासहस्राणि च षोडशैव तासु प्रियत्वं च तथाक्षयत्वम् ७
प्रीतिं चाग्र्यां बान्धवानां सकाशाद्ददामि ते वपुषः काम्यतां च
भोक्ष्यन्ते वै सप्ततिर्वै शतानि गृहे तुभ्यमतिथीनां च नित्यम् ८

वासुदेव उवाच
एवं दत्त्वा वरान्देवो मम देवी च भारत
अन्तर्हितः क्षणे तस्मिन्सगणो भीमपूर्वज ९
एतदत्यद्भुतं सर्वं ब्राह्मणायातितेजसे
उपमन्यवे मया कृत्स्नमाख्यातं कौरवोत्तम १०
नमस्कृत्वा तु स प्राह देवदेवाय सुव्रत
नास्ति शर्वसमो दाने नास्ति शर्वसमो रणे
नास्ति शर्वसमो देवो नास्ति शर्वसमा गतिः ११
ऋषिरासीत्कृते तात तण्डिरित्येव विश्रुतः
दश वर्षसहस्राणि तेन देवः समाधिना

आराधितोऽभूद्भक्तेन तस्योदर्कं निशामय १२
स दृष्टवान्महादेवमस्तौषीच्च स्तवैर्विभुम्
पवित्राणां पवित्रस्त्वं गतिर्गतिमतां वर
अत्युग्रं तेजसां तेजस्तपसां परमं तपः १३
विश्वावसुहिरण्याक्ष पुरुहूतनमस्कृत
भूरिकल्याणद विभो पुरुसत्य नमोऽस्तु ते १४
जातीमरणभीरूणां यतीनां यततां विभो
निर्वाणद सहस्रांशो नमस्तेऽस्तु सुखाश्रय १५
ब्रह्मा शतक्रतुर्विष्णुर्विश्वेदेवा महर्षयः
न विदुस्त्वां तु तत्त्वेन कुतो वेत्स्यामहे वयम् १६
त्वत्तः प्रवर्तते कालस्त्वयि कालश्च लीयते
कालाख्यः पुरुषाख्यश्च ब्रह्माख्यश्च त्वमेव हि १७
तनवस्ते स्मृतास्तिस्रः पुराणज्ञैः सुरर्षिभिः
अधिपौरुषमध्यात्ममधिभूताधिदैवतम्
अधिलोक्याधिविज्ञानमधियज्ञस्त्वमेव हि १८
त्वां विदित्वात्मदेहस्थं दुर्विदं दैवतैरपि
विद्वांसो यान्ति निर्मुक्ताः परं भावमनामयम् १९
अनिच्छतस्तव विभो जन्ममृत्युरनेकतः
द्वारं त्वं स्वर्गमोक्षाणामाक्षेप्ता त्वं ददासि च २०
त्वमेव मोक्षः स्वर्गश्च कामः क्रोधस्त्वमेव हि
सत्त्वं रजस्तमश्चैव अधश्चोर्ध्वं त्वमेव हि २१
ब्रह्मा विष्णुश्च रुद्रश्च स्कन्देन्द्रौ सविता यमः
वरुणेन्दू मनुर्धाता विधाता त्वं धनेश्वरः २२
भूर्वायुर्ज्योतिरापश्च वाग्बुद्धिस्त्वं मतिर्मनः
कर्म सत्यानृते चोभे त्वमेवास्ति च नास्ति च २३
इन्द्रियाणीन्द्रियार्थाश्च तत्परं प्रकृतेर्ध्रुवम्
विश्वाविश्वपरो भावश्चिन्त्याचिन्त्यस्त्वमेव हि २४
यच्चैतत्परमं ब्रह्म यच्च तत्परमं पदम्
या गतिः सांख्ययोगानां स भवान्नात्र संशयः २५
नूनमद्य कृतार्थाः स्म नूनं प्राप्ताः सतां गतिम्

यां गतिं प्राप्नुवन्तीह ज्ञाननिर्मलबुद्धयः २६
अहो मूढाः स्म सुचिरमिमं कालमचेतसः
यन्न विद्मः परं देवं शाश्वतं यं विदुर्बुधाः २७
सोऽयमासादितः साक्षाद्बहुभिर्जन्मभिर्मया
भक्तानुग्रहकृद्देवो यं ज्ञात्वामृतमश्नुते २८
देवासुरमनुष्याणां यच्च गुह्यं सनातनम्
गुहायां निहितं ब्रह्म दुर्विज्ञेयं सुरैरपि २९
स एष भगवान्देवः सर्वकृत्सर्वतोमुखः
सर्वात्मा सर्वदर्शी च सर्वगः सर्ववेदिता ३०
प्राणकृत्प्राणभृत्प्राणी प्राणदः प्राणिनां गतिः
देहकृद्देहभृद्देही देहभुग्देहिनां गतिः ३१
अध्यात्मगतिनिष्ठानां ध्यानिनामात्मवेदिनाम्
अपुनर्मारकामानां या गतिः सोऽयमीश्वरः ३२
अयं च सर्वभूतानां शुभाशुभगतिप्रदः
अयं च जन्ममरणे विदध्यात्सर्वजन्तुषु ३३
अयं च सिद्धिकामानामृषीणां सिद्धिदः प्रभुः
अयं च मोक्षकामानां द्विजानां मोक्षदः प्रभुः ३४
भूराद्यान्सर्वभुवनानुत्पाद्य सदिवौकसः
बिभर्ति देवस्तनुभिरष्टाभिश्च ददाति च ३५
अतः प्रवर्तते सर्वमस्मिन्सर्वं प्रतिष्ठितम्
अस्मिंश्च प्रलयं याति अयमेकः सनातनः ३६
अयं स सत्यकामानां सत्यलोकः परः सताम्
अपवर्गश्च मुक्तानां कैवल्यं चात्मवादिनाम् ३७
अयं ब्रह्मादिभिः सिद्धैर्गुहायां गोपितः प्रभुः
देवासुरमनुष्याणां न प्रकाशो भवेदिति ३८
तं त्वां देवासुरनरास्तत्त्वेन न विदुर्भवम्
मोहिताः खल्वनेनैव हृच्छयेन प्रवेशिताः ३९
ये चैनं संप्रपद्यन्ते भक्तियोगेन भारत
तेषामेवात्मनात्मानं दर्शयत्येष हृच्छयः ४०
यं ज्ञात्वा न पुनर्जन्म मरणं चापि विद्यते

यं विदित्वा परं वेद्यं वेदितव्यं न विद्यते ४१
यं लब्ध्वा परमं लाभं मन्यते नाधिकं पुनः
प्राणसूक्ष्मां परां प्राप्तिमागच्छत्यक्षयावहाम् ४२
यं सांख्या गुणतत्त्वज्ञाः सांख्यशास्त्रविशारदाः
सूक्ष्मज्ञानरताः पूर्वं ज्ञात्वा मुच्यन्ति बन्धनैः ४३
यं च वेदविदो वेद्यं वेदान्तेषु प्रतिष्ठितम्
प्राणायामपरा नित्यं यं विशन्ति जपन्ति च ४४
अयं स देवयानानामादित्यो द्वारमुच्यते
अयं च पितृयानानां चन्द्रमा द्वारमुच्यते ४५
एष कालगतिश्चित्रा संवत्सरयुगादिषु
भावाभावौ तदात्वे च अयने दक्षिणोत्तरे ४६
एवं प्रजापतिः पूर्वमाराध्य बहुभिः स्तवैः
वरयामास पुत्रत्वे नीललोहितसंज्ञितम् ४७
ऋग्भिर्यमनुशंसन्ति तन्त्रे कर्मणि बह्वृचः
यजुर्भिर्यं त्रिधा वेद्यं जुह्वत्यध्वर्यवोऽध्वरे ४८
सामभिर्यं च गायन्ति सामगाः शुद्धबुद्धयः
यज्ञस्य परमा योनिः पतिश्चायं परः स्मृतः ४९
रात्र्यहःश्रोत्रनयनः पक्षमासशिरोभुजः
ऋतुवीर्यस्तपोधैर्यो ह्यब्दगुह्योरुपादवान् ५०
मृत्युर्यमो हुताशश्च कालः संहारवेगवान्
कालस्य परमा योनिः कालश्चायं सनातनः ५१
चन्द्रादित्यौ सनक्षत्रौ सग्रहौ सह वायुना
ध्रुवः सप्तर्षयश्चैव भुवनाः सप्त एव च ५२
प्रधानं महदव्यक्तं विशेषान्तं सवैकृतम्
ब्रह्मादि स्तम्बपर्यन्तं भूतादि सदसच्च यत् ५३
अष्टौ प्रकृतयश्चैव प्रकृतिभ्यश्च यत्परम्
अस्य देवस्य यद्भागं कृत्स्नं संपरिवर्तते ५४
एतत्परममानन्दं यत्तच्छाश्वतमेव च
एषा गतिर्विरक्तानामेष भावः परः सताम् ५५
एतत्पदमनुद्विग्नमेतद्ब्रह्म सनातनम्

शास्त्रवेदाङ्गविदुषामेतद्ध्यानं परं पदम् ५६
इयं सा परमा काष्ठा इयं सा परमा कला
इयं सा परमा सिद्धिरियं सा परमा गतिः ५७
इयं सा परमा शान्तिरियं सा निर्वृतिः परा
यं प्राप्य कृतकृत्याः स्म इत्यमन्यन्त वेधसः ५८
इयं तुष्टिरियं सिद्धिरियं श्रुतिरियं स्मृतिः
अध्यात्मगतिनिष्ठानां विदुषां प्राप्तिरव्यया ५९
यजतां यज्ञकामानां यज्ञैर्विपुलदक्षिणैः
या गतिर्दैवतैर्दिव्या सा गतिस्त्वं सनातन ६०
जप्यहोमव्रतैः कृच्छ्रैर्नियमैर्देहपातनैः
तप्यतां या गतिर्देव वैराजे सा गतिर्भवान् ६१
कर्मन्यासकृतानां च विरक्तानां ततस्ततः
या गतिर्ब्रह्मभवने सा गतिस्त्वं सनातन ६२
अपुनर्मारकामानां वैराग्ये वर्ततां परे
विकृतीनां लयानां च सा गतिस्त्वं सनातन ६३
ज्ञानविज्ञाननिष्ठानां निरुपाख्या निरञ्जना
कैवल्या या गतिर्देव परमा सा गतिर्भवान् ६४
वेदशास्त्रपुराणोक्ताः पञ्चैता गतयः स्मृताः
त्वत्प्रसादाद्धि लभ्यन्ते न लभ्यन्तेऽन्यथा विभो ६५
इति तण्डिस्तपोयोगात्तुष्टावेशानमव्ययम्
जगौ च परमं ब्रह्म यत्पुरा लोककृज्जगौ ६६
ब्रह्मा शतक्रतुर्विष्णुर्विश्वेदेवा महर्षयः
न विदुस्त्वामिति ततस्तुष्टः प्रोवाच तं शिवः ६७
अक्षयश्चाव्ययश्चैव भविता दुःखवर्जितः
यशस्वी तेजसा युक्तो दिव्यज्ञानसमन्वितः ६८
ऋषीणामभिगम्यश्च सूत्रकर्ता सुतस्तव
मत्प्रसादाद्द्विजश्रेष्ठ भविष्यति न संशयः ६९
कं वा कामं ददाम्यद्य ब्रूहि यद्वत्स काङ्क्षसे
प्राञ्जलि स उवाचेदं त्वयि भक्तिर्दृढास्तु मे ७०
एवं दत्त्वा वरं देवो वन्द्यमानः सुरर्षिभिः

स्तूयमानश्च विबुधैस्तत्रैवान्तरधीयत ७१
अन्तर्हिते भगवति सानुगे यादवेश्वर
ऋषिराश्रममागम्य ममैतत्प्रोक्तवानिह ७२
यानि च प्रथितान्यादौ तरिडराख्यातवान्मम
नामानि मानवश्रेष्ठ तानि त्वं शृणु सिद्धये ७३
दश नामसहस्राणि वेदेष्वाह पितामहः
शर्वस्य शास्त्रेषु तथा दश नामशतानि वै ७४
गुह्यानीमानि नामानि तरिडर्भगवतोऽच्युत
देवप्रसादाद्देवेश पुरा प्राह महात्मने ७५
इति श्रीमहाभारते अनुशासनपर्वणि षोडशोऽध्यायः १६

सप्तदशोऽध्यायः

वासुदेव उवाच
ततः स प्रयतो भूत्वा मम तात युधिष्ठिर
प्राञ्जलि प्राह विप्रर्षिर्नामसंहारमादितः १
उपमन्युरुवाच
ब्रह्मप्रोक्तैरृषिप्रोक्तैर्वेद वेदाङ्गसंभवैः
सर्वलोकेषु विख्यातैः स्थाणुं स्तोष्यामि नामभिः २
महद्भिर्विहितैः सत्यैः सिद्धैः सर्वार्थसाधकैः
ऋषिणा तरिडना भक्त्या कृतैर्देवकृतात्मना ३
यथोक्तैर्लोकविख्यातैर्मुनिभिस्तत्त्वदर्शिभिः
प्रवरं प्रथमं स्वर्ग्यं सर्वभूतहितं शुभम्
श्रुतैः सर्वत्र जगति ब्रह्मलोकावतारितैः ४
यत्तद्रहस्यं परमं ब्रह्मप्रोक्तं सनातनम्
वक्ष्ये यदुकुलश्रेष्ठ शृणुष्वावहितो मम ५
परत्वेन भवं देवं भक्तस्त्वं परमेश्वरम्
तेन ते श्रावयिष्यामि यत्तद्ब्रह्म सनातनम् ६
न शक्यं विस्तरात्कृत्स्नं वक्तुं शर्वस्य केनचित्
युक्तेनापि विभूतीनामपि वर्षशतैरपि ७
यस्यादिर्मध्यमन्तश्च सुरैरपि न गम्यते

कस्तस्य शक्नुयाद्वक्तुं गुणान्कात्स्न्र्येन माधव ८
किं तु देवस्य महतः संक्षिप्तार्थपदाक्षरम्
शक्तितश्चरितं वक्ष्ये प्रसादात्तस्य चैव हि ९
अप्राप्येह ततोऽनुज्ञां न शक्यः स्तोतुमीश्वरः
यदा तेनाभ्यनुज्ञातः स्तुवत्येव सदा भवम् १०
अनादिनिधनस्याहं सर्वयोनेर्महात्मनः
नाम्नां कंचित्समुद्देशं वक्ष्ये ह्यव्यक्तयोनिनः ११
वरदस्य वरेण्यस्य विश्वरूपस्य धीमतः
शृणु नामसमुद्देशं यदुक्तं पद्मयोनिना १२
दश नामसहस्राणि यान्याह प्रपितामहः
तानि निर्मथ्य मनसा दध्नो घृतमिवोद्धृतम् १३
गिरेः सारं यथा हेम पुष्पात्सारं यथा मधु
घृतात्सारं यथा मण्डस्तथैतत्सारमुद्धृतम् १४
सर्वपाप्मापहमिदं चतुर्वेदसमन्वितम्
प्रयत्नेनाधिगन्तव्यं धार्यं च प्रयतात्मना
शान्तिकं पौष्टिकं चैव रक्षोघ्नं पावनं महत् १५
इदं भक्ताय दातव्यं श्रद्दधानास्तिकाय च
नाश्रद्दधानरूपाय नास्तिकायाजितात्मने १६
यश्चाभ्यसूयते देवं भूतात्मानं पिनाकिनम्
स कृष्ण नरकं याति सह पूर्वैः सहानुगैः १७
इदं ध्यानमिदं योगमिदं ध्येयमनुत्तमम्
इदं जप्यमिदं ज्ञानं रहस्यमिदमुत्तमम्
इदं ज्ञात्वान्तकालेऽपि गच्छेद्धि परमां गतिम् १८
पवित्रं मङ्गलं पुण्यं कल्याणमिदमुत्तमम्
निगदिष्ये महाबाहो स्तवानामुत्तमं स्तवम् १९
इदं ब्रह्मा पुरा कृत्वा सर्वलोकपितामहः
सर्वस्तवानां दिव्यानां राजत्वे समकल्पयत् २०
तदाप्रभृति चैवायमीश्वरस्य महात्मनः
स्तवराजेति विख्यातो जगत्यमरपूजितः
ब्रह्मलोकादयं चैव स्तवराजोऽवतारितः २१

यस्मात्तण्डिः पुरा प्राह तेन तण्डिकृतोऽभवत्
स्वर्गाच्चैवात्र भूलोकं तण्डिना ह्यवतारितः २२
सर्वमङ्गलमङ्गल्यं सर्वपापप्रणाशनम्
निगदिष्ये महाबाहो स्तवानामुत्तमं स्तवम् २३
ब्रह्मणामपि यद्ब्रह्म पराणामपि यत्परम्
तेजसामपि यत्तेजस्तपसामपि यत्तपः २४
शान्तीनामपि या शान्तिर्द्युतीनामपि या द्युतिः
दान्तानामपि यो दान्तो धीमतामपि या च धीः २५
देवानामपि यो देवो मुनीनामपि यो मुनिः
यज्ञानामपि यो यज्ञः शिवानामपि यः शिवः २६
रुद्राणामपि यो रुद्रः प्रभुः प्रभवतामपि
योगिनामपि यो योगी कारणानां च कारणम् २७
यतो लोकाः संभवन्ति न भवन्ति यतः पुनः
सर्वभूतात्मभूतस्य हरस्यामिततेजसः २८
अष्टोत्तरसहस्रं तु नाम्नां सर्वस्य मे शृणु
यच्छ्रुत्वा मनुजश्रेष्ठ सर्वान्कामानवाप्स्यसि २९
स्थिरः स्थाणुः प्रभुर्भानुः प्रवरो वरदो वरः
सर्वात्मा सर्वविख्यातः सर्वः सर्वकरो भवः ३०
जटी चर्मी शिखण्डी च सर्वाङ्गः सर्वभावनः
हरिश्च हरिणाक्षश्च सर्वभूतहरः प्रभुः ३१
प्रवृत्तिश्च निवृत्तिश्च नियतः शाश्वतो ध्रुवः
श्मशानचारी भगवान्खचरो गोचरोऽदनः ३२
अभिवाद्यो महाकर्मा तपस्वी भूतभावनः
उन्मत्तवेशप्रच्छन्नः सर्वलोकप्रजापतिः ३३
महारूपो महाकायः सर्वरूपो महायशाः
महात्मा सर्वभूतश्च विरूपो वामनो मनुः ३४
लोकपालोऽन्तर्हितात्मा प्रसादो हयगर्दभिः
पवित्रश्च महांश्चैव नियमो नियमाश्रयः ३५
सर्वकर्मा स्वयंभूश्च आदिरादिकरो निधिः
सहस्राक्षो विरूपाक्षः सोमो नक्षत्रसाधकः ३६

चन्द्रसूर्यगतिः केतुर्ग्रहो ग्रहपतिर्वरः
अद्रिरद्र्यालयः कर्ता मृगबाणार्पणोऽनघः ३७
महातपा घोरतपा अदीनो दीनसाधकः
संवत्सरकरो मन्त्रः प्रमाणं परमं तपः ३८
योगी योज्यो महाबीजो महारेता महातपाः
सुवर्णरेताः सर्वज्ञः सुबीजो वृषवाहनः ३९
दशबाहुस्त्वनिमिषो नीलकण्ठ उमापतिः
विश्वरूपः स्वयंश्रेष्ठो बलवीरो बलो गणः ४०
गणकर्ता गणपतिर्दिग्वासाः काम्य एव च
पवित्रं परमं मन्त्रः सर्वभावकरो हरः ४१
कमण्डलुधरो धन्वी बाणहस्तः कपालवान्
अशनी शतघ्नी खड्गी पट्टिशी चायुधी महान् ४२
स्रुवहस्तः सुरूपश्च तेजस्तेजस्करो निधिः
उष्णीषी च सुवक्त्रश्च उदग्रो विनतस्तथा ४३
दीर्घश्च हरिकेशश्च सुतीर्थः कृष्ण एव च
सृगालरूपः सर्वार्थो मुण्डः कुण्डी कमण्डलुः ४४
अजश्च मृगरूपश्च गन्धधारी कपर्द्यपि
ऊर्ध्वरेता ऊर्ध्वलिङ्ग ऊर्ध्वशायी नभस्तलः ४५
त्रिजटश्चीरवासाश्च रुद्रः सेनापतिर्विभुः
अहश्चरोऽथ नक्तं च तिग्ममन्युः सुवर्चसः ४६
गजहा दैत्यहा लोको लोकधाता गुणाकरः
सिंहशार्दूलरूपश्च आर्द्रचर्माम्बरावृतः ४७
कालयोगी महानादः सर्ववासश्चतुष्पथः
निशाचरः प्रेतचारी भूतचारी महेश्वरः ४८
बहुभूतो बहुधनः सर्वाधारोऽमितो गतिः
नृत्यप्रियो नित्यनर्तो नर्तकः सर्वलासकः ४९
घोरो महातपाः पाशो नित्यो गिरिचरो नभः
सहस्रहस्तो विजयो व्यवसायो ह्यनिन्दितः ५०
अमर्षणो मर्षणात्मा यज्ञहा कामनाशनः
दक्षयज्ञापहारी च सुसहो मध्यमस्तथा ५१

तेजोपहारी बलहा मुदितोऽथो जितो वरः
गम्भीरघोषो गम्भीरो गम्भीरबलवाहनः ५२
न्यग्रोधरूपो न्यग्रोधो वृक्षकर्णस्थितिर्विभुः
तीक्ष्णतापश्च हर्यश्वः सहायः कर्मकालवित् ५३
विष्णुप्रसादितो यज्ञः समुद्रो वडवामुखः
हुताशनसहायश्च प्रशान्तात्मा हुताशनः ५४
उग्रतेजा महातेजा जयो विजयकालवित्
ज्योतिषामयनं सिद्धिः संधिर्विग्रह एव च ५५
शिखी दण्डी जटी ज्वाली मूर्तिजो मूर्धगो बली
वैणवी पणवी ताली कालः कालकटंकटः ५६
नक्षत्रविग्रहविधिर्गुणवृद्धिर्लयोऽगमः
प्रजापतिर्दिशाबाहुर्विभागः सर्वतोमुखः ५७
विमोचनः सुरगणो हिरण्यकवचोद्भवः
मेढ्रजो बलचारी च महाचारी स्तुतस्तथा ५८
सर्वतूर्यनिनादी च सर्ववाद्यपरिग्रहः
व्यालरूपो बिलावासी हेममाली तरंगवित् ५९
त्रिदशस्त्रिकालधृक्कर्म सर्वबन्धविमोचनः
बन्धनस्त्वसुरेन्द्राणां युधि शत्रुविनाशनः ६०
सांख्यप्रसादो दुर्वासाः सर्वसाधुनिषेवितः
प्रस्कन्दनो विभागश्च अतुल्यो यज्ञभागवित् ६१
सर्वावासः सर्वचारी दुर्वासा वासवोऽमरः
हेमो हेमकरो यज्ञः सर्वधारी धरोत्तमः ६२
लोहिताक्षो महाक्षश्च विजयाक्षो विशारदः
संग्रहो निग्रहः कर्ता सर्पचीरनिवासनः ६३
मुख्योऽमुख्यश्च देहश्च देहर्द्धिः सर्वकामदः
सर्वकालप्रसादश्च सुबलो बलरूपधृक् ६४
आकाशनिधिरूपश्च निपाती उरगः खगः
रौद्ररूपोंऽशुरादित्यो वसुरश्मिः सुवर्चसी ६५
वसुवेगो महावेगो मनोवेगो निशाचरः
सर्वावासी श्रियावासी उपदेशकरो हरः ६६

मुनिरात्मपतिर्लोके संभोज्यश्च सहस्रदः
पक्षी च पक्षिरूपी च अतिदीप्तो विशां पतिः ६७
उन्मादो मदनाकारो अर्थार्थकररोमशः
वामदेवश्च वामश्च प्राग्दक्षिणश्च वामनः ६८
सिद्धयोगापहारी च सिद्धः सर्वार्थसाधकः
भिक्षुश्च भिक्षुरूपश्च विषाणी मृदुरव्ययः ६९
महासेनो विशाखश्च षष्टिभागो गवां पतिः
वज्रहस्तश्च विष्कम्भी चमूस्तम्भन एव च ७०
ऋतुर्ऋतुकरः कालो मधुर्मधुकरोऽचलः
वानस्पत्यो वाजसेनो नित्यमाश्रमपूजितः ७१
ब्रह्मचारी लोकचारी सर्वचारी सुचारवित्
ईशान ईश्वरः कालो निशाचारी पिनाकधृक् ७२
नन्दीश्वरश्च नन्दी च नन्दनो नन्दिवर्धनः
भगस्याक्षिनिहन्ता च कालो ब्रह्मविदां वरः ७३
चतुर्मुखो महालिङ्गश्चारुलिङ्गस्तथैव च
लिङ्गाध्यक्षः सुराध्यक्षो लोकाध्यक्षो युगावहः ७४
बीजाध्यक्षो बीजकर्ता अध्यात्मानुगतो बलः
इतिहासकरः कल्पो गौतमोऽथ जलेश्वरः ७५
दम्भो ह्यदम्भो वैदम्भो वश्यो वश्यकरः कविः
लोककर्ता पशुपतिर्महाकर्ता महौषधिः ७६
अक्षरं परमं ब्रह्म बलवाञ्शक्र एव च
नीतिर्ह्यनीतिः शुद्धात्मा शुद्धो मान्यो मनोगतिः ७७
बहुप्रसादः स्वपनो दर्पणोऽथ त्वमित्रजित्
वेदकारः सूत्रकारो विद्वान्समरमर्दनः ७८
महामेघनिवासी च महाघोरो वशीकरः
अग्निज्वालो महाज्वालो अतिधूम्रो हुतो हविः ७९
वृषणः शंकरो नित्यो वर्चस्वी धूमकेतनः
नीलस्तथाङ्गलुब्धश्च शोभनो निरवग्रहः ८०
स्वस्तिदः स्वस्तिभावश्च भागी भागकरो लघुः
उत्सङ्गश्च महाङ्गश्च महागर्भः परो युवा ८१

कृष्णावर्णः सुवर्णश्च इन्द्रियः सर्वदेहिनाम्
महापादो महाहस्तो महाकायो महायशाः ८२
महामूर्धा महामात्रो महानेत्रो दिगालयः
महादन्तो महाकर्णो महामेढ्रो महाहनुः ८३
महानासो महाकम्बुर्महाग्रीवः श्मशानधृक्
महावक्षा महोरस्को अन्तरात्मा मृगालयः ८४
लम्बनो लम्बितोष्ठश्च महामायः पयोनिधिः
महादन्तो महादंष्ट्रो महाजिह्वो महामुखः ८५
महानखो महारोमा महाकेशो महाजटः
असपत्नः प्रसादश्च प्रत्ययो गिरिसाधनः ८६
स्नेहनोऽस्नेहनश्चैव अजितश्च महामुनिः
वृक्षाकारो वृक्षकेतुरनलो वायुवाहनः ८७
मण्डली मेरुधामा च देवदानवदर्पहा
अथर्वशीर्षः सामास्य ऋक्सहस्रामितेक्षणः ८८
यजुःपादभुजो गुह्यः प्रकाशो जङ्गमस्तथा
अमोघार्थः प्रसादश्च अभिगम्यः सुदर्शनः ८९
उपहारप्रियः शर्वः कनकः काञ्चनः स्थिरः
नाभिर्नन्दिकरो भाव्यः पुष्करस्थपतिः स्थिरः ९०
द्वादशस्त्रासनश्चाद्यो यज्ञो यज्ञसमाहितः
नक्तं कलिश्च कालश्च मकरः कालपूजितः ९१
सगणो गणकारश्च भूतभावनसारथिः
भस्मशायी भस्मगोप्ता भस्मभूतस्तरुर्गणः ९२
अगणश्चैव लोपश्च महात्मा सर्वपूजितः
शङ्कुस्त्रिशङ्कुः संपन्नः शुचिर्भूतनिषेवितः ९३
आश्रमस्थः कपोतस्थो विश्वकर्मा पतिर्वरः
शाखो विशाखस्ताम्रोष्ठो ह्यम्बुजालः सुनिश्चयः ९४
कपिलोऽकपिलः शूर आयुश्चैव परोऽपरः
गन्धर्वो ह्यदितिस्तार्क्ष्यः सुविज्ञेयः सुसारथिः ९५
परश्वधायुधो देव अर्थकारी सुबान्धवः
तुम्बवीणी महाकोप ऊर्ध्वरेताजलेशयः ९६

उग्रो वंशकरो वंशो वंशनादो ह्यनिन्दितः
सर्वाङ्गरूपो मायावी सुहृदो ह्यनिलोऽनलः ९७
बन्धनो बन्धकर्ता च सुबन्धनविमोचनः
स यज्ञारिः स कामारिर्महादंष्ट्रो महायुधः ९८
बाहुस्त्वनिन्दितः शर्वः शंकरः शंकरोऽधनः
अमरेशो महादेवो विश्वदेवः सुरारिहा ९९
अहिर्बुध्नो निर्ऋतिश्च चेकितानो हरिस्तथा
अजैकपाच्च कापाली त्रिशङ्कुरजितः शिवः १००
धन्वन्तरिर्धूमकेतुः स्कन्दो वैश्रवणस्तथा
धाता शक्रश्च विष्णुश्च मित्रस्त्वष्टा ध्रुवो धरः १०१
प्रभावः सर्वगो वायुरर्यमा सविता रविः
उदग्रश्च विधाता च मान्धाता भूतभावनः १०२
रतितीर्थश्च वाग्मी च सर्वकामगुणावहः
पद्मगर्भो महागर्भश्चन्द्रवक्त्रो मनोरमः १०३
बलवांश्चोपशान्तश्च पुराणः पुण्यचञ्चुरी
कुरुकर्ता कालरूपी कुरुभूतो महेश्वरः १०४
सर्वाशयो दर्भशायी सर्वेषां प्राणिनां पतिः
देवदेवमुखोऽसक्तः सदसत्सर्वरत्नवित् १०५
कैलासशिखरावासी हिमवद्गिरिसंश्रयः
कूलहारी कूलकर्ता बहुविद्यो बहुप्रदः १०६
वणिजो वर्धनो वृद्धो नकुलश्चन्दनश्छदः
सारग्रीवो महाजत्रुरलोलश्च महौषधः १०७
सिद्धार्थकारी सिद्धार्थश्छन्दोव्याकरणोत्तरः
सिंहनादः सिंहदंष्ट्रः सिंहगः सिंहवाहनः १०८
प्रभावात्मा जगत्कालस्तालो लोकहितस्तरुः
सारङ्गो नवचक्राङ्गः केतुमाली सभावनः १०९
भूतालयो भूतपतिरहोरात्रमनिन्दितः
वाहिता सर्वभूतानां निलयश्च विभुर्भवः ११०
अमोघः संयतो ह्यश्वो भोजनः प्राणधारणः
धृतिमान्मतिमान्दक्षः सत्कृतश्च युगाधिपः १११

गोपालिर्गोपतिर्ग्रामो गोचर्मवसनो हरः
हिरण्यबाहुश्च तथा गुहापालः प्रवेशिनाम् ११२
प्रतिष्ठायी महाहर्षो जितकामो जितेन्द्रियः
गन्धारश्च सुरालश्च तपःकर्मरतिर्धनुः ११३
महागीतो महानृत्तो ह्यप्सरोगणसेवितः
महाकेतुर्धनुर्धातुर्नैकसानुचरश्चलः ११४
आवेदनीय आवेशः सर्वगन्धसुखावहः
तोरणस्तारणो वायुः परिधावति चैकतः ११५
संयोगो वर्धनो वृद्धो महावृद्धो गणाधिपः
नित्य आत्मसहायश्च देवासुरपतिः पतिः ११६
युक्तश्च युक्तबाहुश्च द्विविधश्च सुपर्वणः
आषाढश्च सुषाढश्च ध्रुवो हरिहणो हरः ११७
वपुरावर्तमानेभ्यो वसुश्रेष्ठो महापथः
शिरोहारी विमर्षश्च सर्वलक्षणभूषितः ११८
अक्षश्च रथयोगी च सर्वयोगी महाबलः
समाम्नायोऽसमाम्नायस्तीर्थदेवो महारथः ११९
निर्जीवो जीवनो मन्त्रः शुभाक्षो बहुकर्कशः
रत्नप्रभूतो रक्ताङ्गो महार्णवनिपानवित् १२०
मूलो निशालो ह्यमृतो व्यक्ताव्यक्तस्तपोनिधिः
आरोहणो निरोहश्च शैलहारी महातपाः १२१
सेनाकल्पो महाकल्पो युगायुगकरो हरिः
युगरूपो महारूपः पवनो गहनो नगः १२२
न्यायनिर्वापणः पादः पण्डितो ह्यचलोपमः
बहुमालो महामालः सुमालो बहुलोचनः १२३
विस्तारो लवणः कूपः कुसुमः सफलोदयः
वृषभो वृषभाङ्काङ्गो मणिबिल्वो जटाधरः १२४
इन्दुर्विसर्गः सुमुखः सुरः सर्वायुधः सहः
निवेदनः सुधाजातः  सुगन्धारो महाधनुः १२५
गन्धमाली च भगवानुत्थानः सर्वकर्मणाम्
मन्थानो बहुलो बाहुः सकलः सर्वलोचनः १२६

तरस्ताली करस्ताली ऊर्ध्वसंहननो वहः
छत्रं सुच्छत्रो विख्यातः सर्वलोकाश्रयो महान् १२७
मुण्डो विरूपो विकृतो दण्डिमुण्डो विकुर्वणः
हर्यक्षः ककुभो वज्री दीप्तजिह्वः सहस्रपात् १२८
सहस्रमूर्धा देवेन्द्रः सर्वदेवमयो गुरुः
सहस्रबाहुः सर्वाङ्गः शरण्यः सर्वलोककृत् १२९
पवित्रं त्रिमधुर्मन्त्रः कनिष्ठः कृष्णपिङ्गलः
ब्रह्मदण्डविनिर्माता शतघ्नी शतपाशधृक् १३०
पद्मगर्भो महागर्भो ब्रह्मगर्भो जलोद्भवः
गभस्तिर्ब्रह्मकृद्ब्रह्मा ब्रह्मविद्ब्राह्मणो गतिः १३१
अनन्तरूपो नैकात्मा तिग्मतेजा स्वयंभुवः
ऊर्ध्वगात्मा पशुपतिर्वातरंहा मनोजवः १३२
चन्दनी पद्ममालाग्र्यः सुरभ्युत्तरणो नरः
कर्णिकारमहास्रग्वी नीलमौलि पिनाकधृक् १३३
उमापतिरुमाकान्तो जाह्नवीधृगुमाधवः
वरो वराहो वरदो वरेशः सुमहास्वनः १३४
महाप्रसादो दमनः शत्रुहा श्वेतपिङ्गलः
प्रीतात्मा प्रयतात्मा च संयतात्मा प्रधानधृक् १३५
सर्वपार्श्वसुतस्तार्क्ष्यो धर्मसाधारणो वरः
चराचरात्मा सूक्ष्मात्मा सुवृषो गोवृषेश्वरः १३६
साध्यर्षिर्वसुरादित्यो विवस्वान्सविता मृडः
व्यासः सर्वस्य संक्षेपो विस्तरः पर्ययो नयः १३७
ऋतुः संवत्सरो मासः पक्षः संख्यासमापनः
कला काष्ठा लवो मात्रा मुहूर्तोऽह क्षपाः क्षणाः १३८
विश्वक्षेत्रं प्रजाबीजं लिङ्गमाद्यस्त्वनिन्दितः
सदसद्व्यक्तमव्यक्तं पिता माता पितामहः १३९
स्वर्गद्वारं प्रजाद्वारं मोक्षद्वारं त्रिविष्टपम्
निर्वाणं ह्लादनं चैव ब्रह्मलोकः परा गतिः १४०
देवासुरविनिर्माता देवासुरपरायणः
देवासुरगुरुर्देवो देवासुरनमस्कृतः १४१

देवासुरमहामात्रो देवासुरगणाश्रयः
देवासुरगणाध्यक्षो देवासुरगणाग्रणीः १४२
देवातिदेवो देवर्षिर्देवासुरवरप्रदः
देवासुरेश्वरो देवो देवासुरमहेश्वरः १४३
सर्वदेवमयोऽचिन्त्यो देवतात्मात्मसंभवः
उद्भिदस्त्रिक्रमो वैद्यो विरजो विरजोम्बरः १४४
ईड्यो हस्ती सुरव्याघ्रो देवसिंहो नरर्षभः
विबुधाग्रवरः श्रेष्ठः सर्वदेवोत्तमोत्तमः १४५
प्रयुक्तः शोभनो वज्र ईशानः प्रभुरव्ययः
गुरुः कान्तो निजः सर्गः पवित्रः सर्ववाहनः १४६
शृङ्गी शृङ्गप्रियो बभ्रू राजराजो निरामयः
अभिरामः सुरगणो विरामः सर्वसाधनः १४७
ललाटाक्षो विश्वदेहो हरिणो ब्रह्मवर्चसः
स्थावराणां पतिश्चैव नियमेन्द्रियवर्धनः १४८
सिद्धार्थः सर्वभूतार्थोऽचिन्त्यः सत्यव्रतः शुचिः
व्रताधिपः परं ब्रह्म मुक्तानां परमा गतिः १४९
विमुक्तो मुक्ततेजाश्च श्रीमाञ्श्रीवर्धनो जगत्
यथाप्रधानं भगवानिति भक्त्या स्तुतो मया १५०
यं न ब्रह्मादयो देवा विदुर्यं न महर्षयः
तं स्तव्यमर्च्यं वन्द्यं च कः स्तोष्यति जगत्पतिम् १५१
भक्तिमेव पुरस्कृत्य मया यज्ञपतिर्वसुः
ततोऽभ्यनुज्ञां प्राप्यैव स्तुतो मतिमतां वरः १५२
शिवमेभिः स्तुवन्देवं नामभिः पुष्टिवर्धनैः
नित्ययुक्तः शुचिर्भूत्वा प्राप्नोत्यात्मानमात्मना १५३
एतद्धि परमं ब्रह्म स्वयं गीतं स्वयंभुवा
ऋषयश्चैव देवाश्च स्तुवन्त्येतेन तत्परम् १५४
स्तूयमानो महादेवः प्रीयते चात्मनामभिः
भक्तानुकम्पी भगवानात्मसंस्थान्करोति तान् १५५
तथैव च मनुष्येषु ये मनुष्याः प्रधानतः
आस्तिकाः श्रद्दधानाश्च बहुभिर्जन्मभिः स्तवैः १५६

जाग्रतश्च स्वपन्तश्च व्रजन्तः पथि संस्थिताः
स्तुवन्ति स्तूयमानाश्च तुष्यन्ति च रमन्ति च
जन्मकोटिसहस्रेषु नानासंसारयोनिषु १५७
जन्तोर्विशुद्धपापस्य भवे भक्तिः प्रजायते
उत्पन्ना च भवे भक्तिरनन्या सर्वभावतः १५८
कारणं भावितं तस्य सर्वमुक्तस्य सर्वतः
एतद्देवेषु दुष्प्रापं मनुष्येषु न लभ्यते १५९
निर्विघ्ना निश्चला रुद्रे भक्तिरव्यभिचारिणी
तस्यैव च प्रसादेन भक्तिरुत्पद्यते नृणाम्
यया यान्ति परां सिद्धिं तद्भावगतचेतसः १६०
ये सर्वभावोपगताः परत्वेनाभवन्नराः
प्रपन्नवत्सलो देवः संसारात्तान्समुद्धरेत् १६१
एवमन्ये न कुर्वन्ति देवाः संसारमोचनम्
मनुष्याणां महादेवादन्यत्रापि तपोबलात् १६२
इति तेनेन्द्रकल्पेन भगवान्सदसत्पतिः
कृत्तिवासाः स्तुतः कृष्ण तण्डिना शुद्धबुद्धिना १६३
स्तवमेतं भगवतो ब्रह्मा स्वयमधारयत्
ब्रह्मा प्रोवाच शक्राय शक्रः प्रोवाच मृत्यवे १६४
मृत्युः प्रोवाच रुद्राणां रुद्रेभ्यस्तण्डिमागमत्
महता तपसा प्राप्तस्तण्डिना ब्रह्मसद्मनि १६५
तण्डिः प्रोवाच शुक्राय गौतमायाह भार्गवः
वैवस्वताय मनवे गौतमः प्राह माधव १६६
नारायणाय साध्याय मनुरिष्टाय धीमते
यमाय प्राह भगवान्साध्यो नारायणोऽच्युतः १६७
नाचिकेताय भगवानाह वैवस्वतो यमः
मार्कण्डेयाय वार्ष्णेय नाचिकेतोऽभ्यभाषत १६८
मार्कण्डेयान्मया प्राप्तं नियमेन जनार्दन
तवाप्यहममित्रघ्न स्तवं दद्म्यद्य विश्रुतम्
स्वर्ग्यमारोग्यमायुष्यं धन्यं बल्यं तथैव च १६९
न तस्य विघ्नं कुर्वन्ति दानवा यक्षराक्षसाः

पिशाचा यातुधानाश्च गुह्यका भुजगा अपि १७०
यः पठेत शुचिर्भूत्वा ब्रह्मचारी जितेन्द्रियः
अभग्नयोगो वर्षं तु सोऽश्वमेधफलं लभेत् १७१
इति श्रीमहाभारते अनुशासनपर्वणि सप्तदशोऽध्यायः १७

## अष्टादशोऽध्यायः

वैशम्पायन उवाच
महायोगी ततः प्राह कृष्णद्वैपायनो मुनिः
पठस्व पुत्र भद्रं ते प्रीयतां ते महेश्वरः १
पुरा पुत्र मया मेरौ तप्यता परमं तपः
पुत्रहेतोर्महाराज स्तव एषोऽनुकीर्तितः २
लब्धवानस्मि तान्कामानहं वै पाण्डुनन्दन
तथा त्वमपि शर्वाद्धि सर्वान्कामानवाप्स्यसि ३
चतुःशीर्षस्ततः प्राह शक्रस्य दयितः सखा
आलम्बायन इत्येव विश्रुतः करुणात्मकः ४
मया गोकर्णमासाद्य तपस्तप्त्वा शतं समाः
अयोनिजानां दान्तानां धर्मज्ञानां सुवर्चसाम् ५
अजराणामदुःखानां शतवर्षसहस्रिणाम्
लब्धं पुत्रशतं शर्वात्पुरा पाण्डुनृपात्मज ६
वाल्मीकिश्चापि भगवान्युधिष्ठिरमभाषत
विवादे साम्नि मुनिभिर्ब्रह्मघ्नो वै भवानिति
उक्तः क्षणेन चाविष्टस्तेनाधर्मेण भारत ७
सोऽहमीशानमनघमस्तौषं शरणं गतः
मुक्तश्चास्म्यवशः पापात्ततो दुःखविनाशनः
आह मां त्रिपुरघ्नो वै यशस्तेऽग्र्य भविष्यति ८
जामदग्न्यश्च कौन्तेयमाह धर्मभृतां वरः
ऋषिमध्ये स्थितस्तात तपन्निव विभावसुः ९
पितृविप्रवधेनाहमार्तो वै पाण्डवाग्रज
शुचिर्भूत्वा महादेवं गतवाञ्शरणं नृप १०
नामभिश्चास्तुवं देवं ततस्तुष्टोऽभवद्भवः

परशुं च ददौ देवो दिव्यान्यस्त्राणि चैव मे ११
पापं न भविता तेऽद्य अजेयश्च भविष्यसि
न ते प्रभविता मृत्युर्यशस्वी च भविष्यसि १२
आह मां भगवानेवं शिखण्डी शिवविग्रहः
यदवाप्तं च मे सर्वं प्रसादात्तस्य धीमतः १३
असितो देवलश्चैव प्राह पाण्डुसुतं नृपम्
शापाच्छक्रस्य कौन्तेय चितो धर्मोऽनशन्मम
तन्मे धर्मं यशश्चाग्र्यमायुश्चैवाददद्भवः १४
ऋषिर्गृत्समदो नाम शक्रस्य दयितः सखा
प्राहाजमीढं भगवान्बृहस्पतिसमद्युतिः १५
वसिष्ठो नाम भगवांश्चाक्षुषस्य मनोः सुतः
शतक्रतोरचिन्त्यस्य सत्रे वर्षसहस्रिके
वर्तमानेऽब्रवीद्वाक्यं साम्नि ह्युच्चारिते मया १६
रथन्तरं द्विजश्रेष्ठ न सम्यगिति वर्तते
समीक्षस्व पुनर्बुद्ध्या हर्षं त्यक्त्वा द्विजोत्तम
अयज्ञवाहिनं पापमकार्षीस्त्वं सुदुर्मते १७
एवमुक्त्वा महाक्रोधात्प्राह रुष्टः पुनर्वचः
प्रज्ञया रहितो दुःखी नित्यं भीतो वनेचरः
दश वर्षसहस्राणि दशाष्टौ च शतानि च १८
नष्टपानीययवसे मृगैरन्यैश्च वर्जिते
अयज्ञीयद्रुमे देशे रुरुसिंहनिषेविते
भविता त्वं मृगः क्रूरो महादुःखसमन्वितः १९
तस्य वाक्यस्य निधने पार्थ जातो ह्यहं मृगः
ततो मां शरणं प्राप्तं प्राह योगी महेश्वरः २०
अजरश्चामरश्चैव भविता दुःखवर्जितः
साम्यं समस्तु ते सौख्यं युवयोर्वर्धतां क्रतुः २१
अनुग्रहानेवमेष करोति भगवान्विभुः
परं धाता विधाता च सुखदुःखे च सर्वदा २२
अचिन्त्य एष भगवान्कर्मणा मनसा गिरा
न मे तात युधि श्रेष्ठ विद्यया पण्डितः समः २३

जैगीषब्य उवाच
ममाष्टगुणमैश्वर्यं दत्तं भगवता पुरा
यत्नेनाल्पेन बलिना वाराणस्यां युधिष्ठिर २४
गार्ग्य उवाच
चतुःषष्टयङ्गमददात्कालज्ञानं ममाद्भुतम्
सरस्वत्यास्तटे तुष्टो मनोयज्ञेन पाण्डव २५
तुल्यं मम सहस्रं तु सुतानां ब्रह्मवादिनाम्
आयुश्चैव सपुत्रस्य संवत्सरशतायुतम् २६
पराशर उवाच
प्रसाद्याहं पुरा शर्वं मनसाचिन्तयं नृप
महातपा महातेजा महायोगी महायशाः
वेदव्यासः श्रियावासो ब्रह्मणः करुणात्मकः २७
अपि नामेप्सितः पुत्रो मम स्याद्वै महेश्वरात्
इति मत्वा हृदि मतं प्राह मां सुरसत्तमः २८
मयि संभवतस्तस्य फलात्कृष्णो भविष्यति
सावर्णस्य मनोः सर्गे सप्तर्षिश्च भविष्यति २९
वेदानां च स वै व्यस्ता कुरुवंशकरस्तथा
इतिहासस्य कर्ता च पुत्रस्ते जगतो हितः ३०
भविष्यति महेन्द्रस्य दयितः स महामुनिः
अजरश्चामरश्चैव पराशर सुतस्तव ३१
एवमुक्त्वा स भगवांस्तत्रैवान्तरधीयत
युधिष्ठिर महायोगी वीर्यवानक्षयोऽव्ययः ३२
माण्डव्य उवाच
अचौरश्चौरशङ्कायां शूले भिन्नो ह्यहं यदा
तत्रस्थेन स्तुतो देवः प्राह मां वै महेश्वरः ३३
मोक्षं प्राप्स्यसि शूलाच्च जीविष्यसि समार्बुदम्
रुजा शूलकृता चैव न ते विप्र भविष्यति
आधिभिर्व्याधिभिश्चैव वर्जितस्त्वं भविष्यसि ३४
पादाच्चतुर्थात्संभूत आत्मा यस्मान्मुने तव
त्वं भविष्यस्यनुपमो जन्म वै सफलं कुरु ३५

तीर्थाभिषेकं सफलं त्वमविघ्नेन चाप्स्यसि
स्वर्गं चैवाक्षयं विप्र विदधामि तवोर्जितम् ३६
एवमुक्त्वा तु भगवान्वरेण्यो वृषवाहनः
महेश्वरो महाराज कृत्तिवासा महाद्युतिः
सगणो दैवतश्रेष्ठस्तत्रैवान्तरधीयत ३७
गालव उवाच
विश्वामित्राभ्यनुज्ञातो ह्यहं पितरमागतः
अब्रवीन्मां ततो माता दुःखिता रुदती भृशम् ३८
कौशिकेनाभ्यनुज्ञातं पुत्रं वेदविभूषितम्
न तात तरुणं दान्तं पिता त्वां पश्यतेऽनघ ३९
श्रुत्वा जनन्या वचनं निराशो गुरुदर्शने
नियतात्मा महादेवमपश्यं सोऽब्रवीच्च माम् ४०
पिता माता च ते त्वं च पुत्र मृत्युविवर्जिताः
भविष्यथ विश क्षिप्रं द्रष्टासि पितरं क्षये ४१
अनुज्ञातो भगवता गृहं गत्वा युधिष्ठिर
अपश्यं पितरं तात इष्टिं कृत्वा विनिःसृतम् ४२
उपस्पृश्य गृहीत्वेध्मं कुशांश्च शरणाद्गुरून्
तान्विसृज्य च मां प्राह पिता सास्राविलेक्षणः ४३
प्रणमन्तं परिष्वज्य मूर्ध्नि चाघ्राय पाण्डव
दिष्ट्या दृष्टोऽसि मे पुत्र कृतविद्य इहागतः ४४
वैशम्पायन उवाच
एतान्यत्यद्भुतान्येव कर्माण्यथ महात्मनः
प्रोक्तानि मुनिभिः श्रुत्वा विस्मयामास पाण्डवः ४५
ततः कृष्णोऽब्रवीद्वाक्यं पुनर्मतिमतां वरः
युधिष्ठिरं धर्मनित्यं पुरुहूतमिवेश्वरः ४६
आदित्यचन्द्रावनिलानलौ च द्यौर्भूमिरापो वसवोऽथ विश्वे
धातार्यमा शुक्रबृहस्पती च रुद्राः ससाध्या वरुणो वित्तगोपः ४७
ब्रह्मा शक्रो मारुतो ब्रह्म सत्यं वेदा यज्ञा दक्षिणा वेदवाहाः
सोमो यष्टा यच्च हव्यं हविश्च रक्षा दीक्षा नियमा ये च केचित् ४८
स्वाहा वषड्ब्राह्मणाः सौरभेया धर्मं चक्रं कालचक्रं चरं च

यशो दमो बुद्धिमती स्थितिश्च शुभाशुभं मुनयश्चैव सप्त ४९
अग्र्या बुद्धिर्मनसा दर्शने च स्पर्शे सिद्धिः कर्मणां या च सिद्धिः
गणा देवानामूष्मपाः सोमपाश्च लेखाः सुयामास्तुषिता ब्रह्मकायाः ५०
आभास्वरा गन्धपा दृष्टिपाश्च वाचा विरुद्धाश्च मनोविरुद्धाः
शुद्धाश्च निर्माणरताश्च देवाः स्पर्शाशना दर्शपा आज्यपाश्च ५१
चिन्तागता ये च देवेषु मुख्या ये चाप्यन्ये देवताश्चाजमीढ
सुपर्णगन्धर्वपिशाचदानवा यक्षास्तथा पन्नगाश्चारणाश्च ५२
सूक्ष्मं स्थूलं मृदु यच्चाप्यसूक्ष्मं सुखं दुःखं सुखदुःखान्तरं च
सांख्यं योगं यत्पराणां परं च शर्वाज्ज्ञातं विद्धि यत्कीर्तितं मे ५३
तत्संभूता भूतकृतो वरेण्याः सर्वे देवा भुवनस्यास्य गोपाः
आविश्येमां धरणीं येऽभ्यरक्षन्पुरातनीं तस्य देवस्य सृष्टिम् ५४
विचिन्वन्तं मनसा तोष्टुवीमि किंचित्तत्त्वं प्राणहेतोर्नतोऽस्मि
ददातु देवः स वरानिहेष्टानभिष्टुतो नः प्रभुरव्ययः सदा ५५
इमं स्तवं संनियम्येन्द्रियाणि शुचिर्भूत्वा यः पुरुषः पठेत
अभग्नयोगो नियतोऽब्दमेकं स प्राप्नुयादश्वमेधे फलं यत् ५६
वेदान्कृत्स्नान्ब्राह्मणः प्राप्नुयाच्च जयेद्राजा पृथिवीं चापि कृत्स्नाम्
वैश्यो लाभं प्राप्नुयान्नैपुणं च शूद्रो गतिं प्रेत्य तथा सुखं च ५७
स्तवराजमिमं कृत्वा रुद्राय दधिरे मनः
सर्वदोषापहं पुण्यं पवित्रं च यशस्विनम् ५८
यावन्त्यस्य शरीरेषु रोमकूपाणि भारत
तावद्वर्षसहस्राणि स्वर्गे वसति मानवः ५९
इति श्रीमहाभारते अनुशासनपर्वणि अष्टादशोऽध्यायः १८

## एकोनविंशोऽध्यायः

युधिष्ठिर उवाच
यदिदं सहधर्मेति प्रोच्यते भरतर्षभ
पाणिग्रहणकाले तु स्त्रीणामेतत्कथं स्मृतम् १
आर्ष एष भवेद्धर्मः प्राजापत्योऽथ वासुरः
यदेतत्सहधर्मेति पूर्वमुक्तं महर्षिभिः २
संदेहः सुमहानेष विरुद्ध इति मे मतिः

इह यः सहधर्मो वै प्रेत्यायं विहितः क्व नु ३
स्वर्गे मृतानां भवति सहधर्मः पितामह
पूर्वमेकस्तु म्रियते क्व चैकस्तिष्ठते वद ४
नानाकर्मफलोपेता नानाकर्मनिवासिनः
नानानिरयनिष्ठान्ता मानुषा बहवो यदा ५
अनृताः स्त्रिय इत्येवं सूत्रकारो व्यवस्यति
यदानृताः स्त्रियस्तात सहधर्मः कुतः स्मृतः ६
अनृताः स्त्रिय इत्येवं वेदेष्वपि हि पठ्यते
धर्मोऽय पौर्विकी संज्ञा उपचारः क्रियाविधिः ७
गह्वरं प्रतिभात्येतन्मम चिन्तयतोऽनिशम्
निःसंदेहमिदं सर्वं पितामह यथा श्रुतिः ८
यदेतद्यादृशं चैतद्यथा चैतत्प्रवर्तितम्
निखिलेन महाप्राज्ञ भवानेतद्ब्रवीतु मे ९
भीष्म उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
अष्टावक्रस्य संवादं दिशया सह भारत १०
निवेष्टुकामस्तु पुरा अष्टावक्रो महातपाः
ऋषेरथ वदान्यस्य कन्यां वव्रे महात्मनः ११
सुप्रभां नाम वै नाम्ना रूपेणाप्रतिमां भुवि
गुणप्रबर्हां शीलेन साध्वीं चारित्रशोभनाम् १२
सा तस्य दृष्ट्वैव मनो जहार शुभलोचना
वनराजी यथा चित्रा वसन्ते कुसुमाचिता १३
ऋषिस्तमाह देया मे सुता तुभ्यं शृणुष्व मे
गच्छ तावद्दिशं पुण्यामुत्तरां द्रक्ष्यसे ततः १४
अष्टावक्र उवाच
किं द्रष्टव्यं मया तत्र वक्तुमर्हसि मे भवान्
तथेदानीं मया कार्यं यथा वक्ष्यति मां भवान् १५
वदान्य उवाच
धनदं समतिक्रम्य हिमवन्तं तथैव च
रुद्रस्यायतनं दृष्ट्वा सिद्धचारणसेवितम् १६

प्रहृष्टैः पार्षदैर्जुष्टं नृत्यद्भिर्विविधाननैः
दिव्याङ्गरागैः पैशाचैर्वन्यैर्नानाविधैस्तथा १७
पाणितालसतालैश्च शम्यातालैः समैस्तथा
संप्रहृष्टैः प्रनृत्यद्भिः शर्वस्तत्र निषेव्यते १८
इष्टं किल गिरौ स्थानं तद्दिव्यमनुशुश्रुम
नित्यं संनिहितो देवस्तथा पारिषदाः शुभाः १९
तत्र देव्या तपस्तप्तं शंकरार्थं सुदुश्चरम्
अतस्तदिष्टं देवस्य तथोमाया इति श्रुतिः २०
तत्र कूपो महान्पार्श्वे देवस्योत्तरतस्तथा
ऋतवः कालरात्रिश्च ये दिव्या ये च मानुषाः २१
सर्वे देवमुपासन्ते रूपिणः किल तत्र ह
तदतिक्रम्य भवनं त्वया यातव्यमेव हि २२
ततो नीलं वनोद्देशं द्रक्ष्यसे मेघसंनिभम्
रमणीयं मनोग्राहि तत्र द्रक्ष्यसि वै स्त्रियम् २३
तपस्विनीं महाभागां वृद्धां दीक्षामनुष्ठिताम्
द्रष्टव्या सा त्वया तत्र संपूज्या चैव यत्नतः २४
तां दृष्ट्वा विनिवृत्तस्त्वं ततः पाणिं ग्रहीष्यसि
यद्येष समयः सत्यः साध्यतां तत्र गम्यताम् २५
इति श्रीमहाभारते अनुशासनपर्वणि एकोनविंशोऽध्यायः १९

## विंशोऽध्यायः

अष्टावक्र उवाच
तथास्तु साधयिष्यामि तत्र यास्याम्यसंशयम्
यत्र त्वं वदसे साधो भवान्भवतु सत्यवाक् १
भीष्म उवाच
ततोऽगच्छत्स भगवानुत्तरामुत्तमां दिशम्
हिमवन्तं गिरिश्रेष्ठं सिद्धचारणसेवितम् २
स गत्वा द्विजशार्दूलो हिमवन्तं महागिरिम्
अभ्यगच्छन्नदीं पुण्यां बाहुदां धर्मदायिनीम् ३
अशोके विमले तीर्थे स्नात्वा तर्प्य च देवताः

तत्र वासाय शयने कौश्ये सुखमुवास ह ४
ततो रात्र्यां व्यतीतायां प्रातरुत्थाय स द्विजः
स्नात्वा प्रादुश्चकाराग्निं हुत्वा चैव विधानतः ५
रुद्राणीकूपमासाद्य ह्रदे तत्र समाश्वसत्
विश्रान्तश्च समुत्थाय कैलासमभितो ययौ ६
सोऽपश्यत्काञ्चनद्वारं दीप्यमानमिव श्रिया
मन्दाकिनीं च नलिनीं धनदस्य महात्मनः ७
अथ ते राक्षसाः सर्वे येऽभिरक्षन्ति पद्मिनीम्
प्रत्युत्थिता भगवन्तं मणिभद्रपुरोगमाः ८
स तान्प्रत्यर्चयामास राक्षसान्भीमविक्रमान्
निवेदयत मां क्षिप्रं धनदायेति चाब्रवीत् ९
ते राक्षसास्तदा राजन्भगवन्तमथाब्रुवन्
असौ वैश्रवणो राजा स्वयमायाति तेऽन्तिकम् १०
विदितो भगवानस्य कार्यमागमने च यत्
पश्यैनं त्वं महाभागं ज्वलन्तमिव तेजसा ११
ततो वैश्रवणोऽभ्येत्य अष्टावक्रमनिन्दितम्
विधिवत्कुशलं पृष्ट्वा ततो ब्रह्मर्षिमब्रवीत् १२
सुखं प्राप्तो भवान्कच्चित्किं वा मत्तश्चिकीर्षसि
ब्रूहि सर्वं करिष्यामि यन्मां त्वं वक्ष्यसि द्विज १३
भवनं प्रविश त्वं मे यथाकामं द्विजोत्तम
सत्कृतः कृतकार्यश्च भवान्यास्यत्यविघ्नतः १४
प्राविशद्भवनं स्वं वै गृहीत्वा तं द्विजोत्तमम्
आसनं स्वं ददौ चैव पाद्यमर्घ्यं तथैव च १५
अथोपविष्टयोस्तत्र मणिभद्रपुरोगमाः
निषेदुस्तत्र कौबेरा यक्षगन्धर्वराक्षसाः १६
ततस्तेषां निषण्णानां धनदो वाक्यमब्रवीत्
भवच्छन्दं समाज्ञाय नृत्येरन्नप्सरोगणाः १७
आतिथ्यं परमं कार्यं शुश्रूषा भवतस्तथा
संवर्ततामित्युवाच मुनिर्मधुरया गिरा १८
अथोर्वरा मिश्रकेशी रम्भा चैवोर्वशी तथा

अलम्बुसा घृताची च चित्रा चित्राङ्गदा रुचिः १९
मनोहरा सुकेशी च सुमुखी हासिनी प्रभा
विद्युता प्रशमा दान्ता विद्योता रतिरेव च २०
एताश्चान्याश्च वै बह्व्यः प्रनृत्ताप्सरसः शुभाः
अवादयंश्च गन्धर्वा वाद्यानि विविधानि च २१
अथ प्रवृत्ते गान्धर्वे दिव्ये ऋषिरुपावसत्
दिव्यं संवत्सरं तत्र रमन्वै सुमहातपाः २२
ततो वैश्रवणो राजा भगवन्तमुवाच ह
साग्रः संवत्सरो यातस्तव विप्रेह पश्यतः २३
हार्योऽय विषयो ब्रह्मन्गान्धर्वो नाम नामतः
छन्दतो वर्ततां विप्र यथा वदति वा भवान् २४
अतिथिः पूजनीयस्त्वमिदं च भवतो गृहम्
सर्वमाज्ञाप्यतामाशु परवन्तो वयं त्वयि २५
अथ वैश्रवणं प्रीतो भगवान्प्रत्यभाषत
अर्चितोऽस्मि यथान्यायं गमिष्यामि धनेश्वर २६
प्रीतोऽस्मि सदृशं चैव तव सर्वं धनाधिप
तव प्रसादाद्भगवन्महर्षेश्च महात्मनः
नियोगादद्य यास्यामि वृद्धिमानृद्धिमान्भव २७
अथ निष्क्रम्य भगवान्प्रययावुत्तरामुखः
कैलासं मन्दरं हैमं सर्वाननुचचार ह २८
तानतीत्य महाशैलान्कैरातं स्थानमुत्तमम्
प्रदक्षिणं ततश्चक्रे प्रयतः शिरसा नमन्
धरणीमवतीर्याथ पूतात्मासौ तदाभवत् २९
स तं प्रदक्षिणं कृत्वा त्रिः शैलं चोत्तरामुखः
समेन भूमिभागेन ययौ प्रीतिपुरस्कृतः ३०
ततोऽपरं वनोद्देशं रमणीयमपश्यत
सर्वर्तुभिर्मूलफलैः पक्षिभिश्च समन्वितम्
रमणीयैर्वनोद्देशैस्तत्र तत्र विभूषितम् ३१
तत्राश्रमपदं दिव्यं ददर्श भगवानथ
शैलांश्च विविधाकारान्काञ्चनान्रत्नभूषितान्

मणिभूमौ निविष्टाश्च पुष्करिण्यस्तथैव च ३२
अन्यान्यपि सुरम्याणि ददर्श सुबहून्यथ
भृशं तस्य मनो रेमे महर्षेर्भावितात्मनः ३३
स तत्र काञ्चनं दिव्यं सर्व रत्नमयं गृहम्
ददर्शाद्भुत संकाशं धनदस्य गृहाद्वरम् ३४
महान्तो यत्र विविधाः प्रासादाः पर्वतोपमाः
विमानानि च रम्याणि रत्नानि विविधानि च ३५
मन्दारपुष्पैः संकीर्णा तथा मन्दाकिनी नदी
स्वयंप्रभाश्च मणयो वज्रैर्भूमिश्च भूषिता ३६
नानाविधैश्च भवनैर्विचित्रमणितोरणैः
मुक्ताजालपरिक्षिप्तैर्मणिरत्नविभूषितैः
मनोदृष्टिहरै रम्यैः सर्वतः संवृतं शुभैः ३७
ऋषिः समन्ततोऽपश्यत्तत्र तत्र मनोरमम्
ततोऽभवत्तस्य चिन्ता क्व मे वासो भवेदिति ३८
अथ द्वारं समभितो गत्वा स्थित्वा ततोऽब्रवीत्
अतिथिं मामनुप्राप्तमनुजानन्तु येऽत्र वै ३९
अथ कन्यापरिवृता गृहात्तस्माद्विनिःसृताः
नानारूपाः सप्त विभो कन्याः सर्वा मनोहराः ४०
यां यामपश्यत्कन्यां स सा सा तस्य मनोऽहरत्
नाशक्नुवद्धारयितुं मनोऽथास्यावसीदति ४१
ततो धृतिः समुत्पन्ना तस्य विप्रस्य धीमतः
अथ तं प्रमदाः प्राहुर्भगवान्प्रविशत्विति ४२
स च तासां सुरूपाणां तस्यैव भवनस्य च
कौतूहलसमाविष्टः प्रविवेश गृहं द्विजः ४३
तत्रापश्यज्जरा युक्तामरजोम्बरधारिणीम्
वृद्धां पर्यङ्कमासीनां सर्वाभरणभूषिताम् ४४
स्वस्तीति चाथ तेनोक्ता सा स्त्री प्रत्यवदत्तदा
प्रत्युत्थाय च तं विप्रमास्यतामित्युवाच ह ४५
अष्टावक्र उवाच
सर्वाः स्वानालयान्यान्तु एका मामुपतिष्ठतु

सुप्रज्ञाता सुप्रशान्ता शेषा गच्छन्तु च्छन्दतः ४६
ततः प्रदक्षिणीकृत्य कन्यास्तास्तमृषिं तदा
निराक्रामन्गृहात्तस्मात्सा वृद्धाथ व्यतिष्ठत ४७
अथ तां संविशन्प्राह शयने भास्वरे तदा
त्वयापि सुप्यतां भद्रे रजनी ह्यतिवर्तते ४८
संलापात्तेन विप्रेण तथा सा तत्र भाषिता
द्वितीये शयने दिव्ये संविवेश महाप्रभे ४९
अथ सा वेपमानाङ्गी निमित्तं शीतजं तदा
व्यपदिश्य महर्षेर्वै शयनं चाध्यरोहत ५०
स्वागतं स्वागतेनास्तु भगवांस्तामभाषत
सोपागूहद्भुजाभ्यां तु ऋषिं प्रीत्या नरर्षभ ५१
निर्विकारमृषिं चापि काष्ठकुड्योपमं तदा
दुःखिता प्रेक्ष्य संजल्पमकार्षीदृषिणा सह ५२
ब्रह्मन्न कामकारोऽस्ति स्त्रीणां पुरुषतो धृतिः
कामेन मोहिता चाहं त्वां भजन्तीं भजस्व माम् ५३
प्रहृष्टो भव विप्रर्षे समागच्छ मया सह
उपगूह च मां विप्र कामार्ताहं भृशं त्वयि ५४
एतद्धि तव धर्मात्मंस्तपसः पूज्यते फलम्
प्रार्थितं दर्शनादेव भजमानां भजस्व माम् ५५
सद्म चेदं धनं चेदं यच्चान्यदपि पश्यसि
प्रभुत्वं तव सर्वत्र मयि चैव न संशयः ५६
सर्वान्कामान्विधास्यामि रमस्व सहितो मया
रमणीये वने विप्र सर्वकामफलप्रदे ५७
त्वद्वशाहं भविष्यामि रंस्यसे च मया सह
सर्वान्कामानुपाश्नानो ये दिव्या ये च मानुषाः ५८
नातः परं हि नारीणां कार्यं किंचन विद्यते
यथा पुरुषसंसर्गः परमेतद्धि नः फलम् ५९
आत्मच्छन्देन वर्तन्ते नार्यो मन्मथचोदिताः
न च दह्यन्ति गच्छन्त्यः सुतप्तैरपि पांसुभिः ६०
अष्टावक्र उवाच

परदारानहं भद्रे न गच्छेयं कथंचन
दूषितं धर्मशास्त्रेषु परदाराभिमर्शनम् ६१
भद्रे निवेष्टुकामं मां विद्धि सत्येन वै शपे
विषयेष्वनभिज्ञोऽह धर्मार्थं किल संततिः ६२
एवं लोकान्गमिष्यामि पुत्रैरिति न संशयः
भद्रे धर्मं विजानीष्व ज्ञात्वा चोपरमस्व ह ६३
स्त्र्युवाच
नानिलोऽग्निर्न वरुणो न चान्ये त्रिदशा द्विज
प्रियाः स्त्रीणां यथा कामो रतिशीला हि योषितः ६४
सहस्रैका यता नारी प्राप्नोतीह कदाचन
तथा शतसहस्रेषु यदि काचित्पतिव्रता ६५
नैता जानन्ति पितरं न कुलं न च मातरम्
न भ्रातॄन्न च भर्तारं न पुत्रान्न च देवरान् ६६
लीलायन्त्यः कुलं घ्नन्ति कूलानीव सरिद्वराः
दोषांश्च मन्दान्मन्दासु प्रजापतिरभाषत ६७
भीष्म उवाच
ततः स ऋषिरेकाग्रस्तां स्त्रियं प्रत्यभाषत
आस्यतां रुचिरं छन्दः किं वा कार्यं ब्रवीहि मे ६८
सा स्त्री प्रोवाच भगवन्द्रक्ष्यसे देशकालतः
वस तावन्महाप्राज्ञ कृतकृत्यो गमिष्यसि ६९
ब्रह्मर्षिस्तामथोवाच स तथेति युधिष्ठिर
वत्स्येऽह यावदुत्साहो भवत्या नात्र संशयः ७०
अथर्षिरभिसंप्रेक्ष्य स्त्रियं तां जरयान्विताम्
चिन्तां परमिकां भेजे संतप्त इव चाभवत् ७१
यद्यदङ्गं हि सोऽपश्यत्तस्या विप्रर्षभस्तदा
नारमत्तत्र तत्रास्य दृष्टी रूपपराजिता ७२
देवतेयं गृहस्यास्य शापान्नूनं विरूपिता
अस्याश्च कारणं वेत्तुं न युक्तं सहसा मया ७३
इति चिन्ताविषिक्तस्य तमर्थं ज्ञातुमिच्छतः
व्यगमत्तदहःशेषं मनसा व्याकुलेन तु ७४

अथ सा स्त्री तदोवाच भगवन्पश्य वै रवेः
रूपं संध्याभ्रसंयुक्तं किमुपास्थाप्यतां तव ७५
स उवाच तदा तां स्त्रीं स्नानोदकमिहानय
उपासिष्य ततः संध्यां वाग्यतो नियतेन्द्रियः ७६
इति श्रीमहाभारते अनुशासनपर्वणि विंशतितमोऽध्यायः २०

## एकविंशतितमोऽध्यायः

भीष्म उवाच
अथ सा स्त्री तमुक्त्वा तु विप्रमेवं भवत्विति
तैलं दिव्यमुपादाय स्नानशाटीमुपानयत् १
अनुज्ञाता च मुनिना सा स्त्री तेन महात्मना
अथास्य तैलेनाङ्गानि सर्वाण्येवाभ्यमृक्षयत् २
शनैश्चोत्सादितस्तत्र स्नानशालामुपागमत्
भद्रासनं ततश्चित्रं ऋषिरन्वाविशन्नवम् ३
अथोपविष्टश्च यदा तस्मिन्भद्रासने तदा
स्नापयामास शनकैस्तमृषिं सुखहस्तवत्
दिव्यं च विधिवच्चक्रे सोपचारं मुनेस्तदा ४
स तेन सुसुखोष्णेन तस्या हस्तसुखेन च
व्यतीतां रजनीं कृत्स्नां नाजानात्स महाव्रतः ५
तत उत्थाय स मुनिस्तदा परमविस्मितः
पूर्वस्यां दिशि सूर्यं च सोऽपश्यदुदितं दिवि ६
तस्य बुद्धिरियं किं नु मोहस्तत्त्वमिदं भवेत्
अथोपास्य सहस्रांशुं किं करोमीत्युवाच ताम् ७
सा चामृतरसप्रख्यमृषेरन्नमुपाहरत्
तस्य स्वादुतयान्नस्य न प्रभूतं चकार सः
व्यगमच्चाप्यहःशेषं ततः संध्यागमत्पुनः ८
अथ स्त्री भगवन्तं सा सुप्यतामित्यचोदयत्
तत्र वै शयने दिव्ये तस्य तस्याश्च कल्पिते ९
अष्टावक्र उवाच
न भद्रे परदारेषु मनो मे संप्रसज्जति

उत्तिष्ठ भद्रे भद्रं ते स्वप वै विरमस्व च १०
भीष्म उवाच
सा तदा तेन विप्रेण तथा धृत्या निवर्तिता
स्वतन्त्रास्मीत्युवाचैनं न धर्मच्छलमस्ति ते ११
अष्टावक्र उवाच
नास्ति स्वतन्त्रता स्त्रीणामस्वतन्त्रा हि योषितः
प्रजापतिमतं ह्येतन्न स्त्री स्वातन्त्र्यमर्हति १२
स्त्र्युवाच
बाधते मैथुनं विप्र मम भक्तिं च पश्य वै
अधर्मं प्राप्स्यसे विप्र यन्मां त्वं नाभिनन्दसि १३
अष्टावक्र उवाच
हरन्ति दोषजातानि वरं जातं यथेच्छकम्
प्रभवामि सदा धृत्या भद्रे स्वं शयनं व्रज १४
स्त्र्युवाच
शिरसा प्रणमे विप्र प्रसादं कर्तुमर्हसि
भूमौ निपतमानायाः शरणं भव मेऽनघ १५
यदि वा दोषजातं त्वं परदारेषु पश्यसि
आत्मानं स्पर्शयाम्यद्य पाणिं गृह्णीष्व मे द्विज १६
न दोषो भविता चैव सत्येनैतद्ब्रवीम्यहम्
स्वतन्त्रां मां विजानीहि योऽधर्मः सोऽस्तु वै मयि १७
अष्टावक्र उवाच
स्वतन्त्रा त्वं कथं भद्रे ब्रूहि कारणमत्र वै
नास्ति लोके हि काचित्स्त्री या वै स्वातन्त्र्यमर्हति १८
पिता रक्षति कौमारे भर्ता रक्षति यौवने
पुत्राश्च स्थविरीभावे न स्त्री स्वातन्त्र्यमर्हति १९
स्त्र्युवाच
कौमारं ब्रह्मचर्यं मे कन्यैवास्मि न संशयः
कुरु मा विमतिं विप्र श्रद्धां विजहि मा मम २०
अष्टावक्र उवाच
यथा मम तथा तुभ्यं यथा तव तथा मम

जिज्ञासेयमृषेस्तस्य विघ्नः सत्यं नु किं भवेत् २१
आश्चर्यं परमं हीदं किं नु श्रेयो हि मे भवेत्
दिव्याभरणवस्त्रा हि कन्येयं मामुपस्थिता २२
किं त्वस्याः परमं रूपं जीर्णमासीत्कथं पुनः
कन्यारूपमिहाद्यैव किमिहात्रोत्तरं भवेत् २३
यथा परं शक्तिधृतेर्न व्युत्थास्ये कथंचन
न रोचये हि व्युत्थानं धृत्यैवं साधयाम्यहम् २४
इति श्रीमहाभारते अनुशासनपर्वणि एकविंशतितमोऽध्यायः २१

द्वाविंशतितमोऽध्यायः

युधिष्ठिर उवाच
न बिभेति कथं सा स्त्री शापस्य परमद्युतेः
कथं निवृत्तो भगवांस्तद्भवान्प्रब्रवीतु मे १
भीष्म उवाच
अष्टावक्रोऽन्वपृच्छत्तां रूपं विकुरुषे कथम्
न चानृतं ते वक्तव्यं ब्रूहि ब्राह्मणकाम्यया २
स्त्र्युवाच
द्यावापृथिवीमात्रैषा काम्या ब्राह्मणसत्तम
शृणुष्वावहितः सर्वं यदिदं सत्यविक्रम ३
उत्तरां मां दिशं विद्धि दृष्टं स्त्रीचापलं च ते
अव्युत्थानेन ते लोका जिताः सत्यपराक्रम ४
जिज्ञासेयं प्रयुक्ता मे स्थिरीकर्तुं तवानघ
स्थविराणामपि स्त्रीणां बाधते मैथुनज्वरः ५
तुष्टः पितामहस्तेऽद्य तथा देवाः सवासवाः
स त्वं येन च कार्येण संप्राप्तो भगवानिह ६
प्रेषितस्तेन विप्रेण कन्यापित्रा द्विजर्षभ
तवोपदेशं कर्तुं वै तच्च सर्वं कृतं मया ७
क्षेमी गमिष्यसि गृहाञ्श्रमश्च न भविष्यति
कन्यां प्राप्स्यसि तां विप्र पुत्रिणी च भविष्यति ८
काम्यया पृष्टवांस्त्वं मां ततो व्याहृतमुत्तरम्

अनतिक्रमणीयैषा कृत्स्नैर्लोकैस्त्रिभिः सदा ९
गच्छस्व सुकृतं कृत्वा किं वान्यच्छ्रोतुमिच्छसि
यावद्ब्रवीमि विप्रर्षे अष्टावक्र यथातथम् १०
ऋषिणा प्रसादिता चास्मि तव हेतोर्द्विजर्षभ
तस्य संमाननार्थं मे त्वयि वाक्यं प्रभाषितम् ११
श्रुत्वा तु वचनं तस्याः स विप्रः प्राञ्जलि स्थितः
अनुज्ञातस्तया चापि स्वगृहं पुनराव्रजत् १२
गृहमागम्य विश्रान्तः स्वजनं प्रतिपूज्य च
अभ्यगच्छत तं विप्रं न्यायतः कुरुनन्दन १३
पृष्टश्च तेन विप्रेण दृष्टं त्वेतन्निदर्शनम्
प्राह विप्रं तदा विप्रः सुप्रीतेनान्तरात्मना १४
भवताहमनुज्ञातः प्रस्थितो गन्धमादनम्
तस्य चोत्तरतो देशे दृष्टं तद्दैवतं महत् १५
तया चाहमनुज्ञातो भवांश्चापि प्रकीर्तितः
श्रावितश्चापि तद्वाक्यं गृहमभ्यागतः प्रभो १६
तमुवाच ततो विप्रः प्रतिगृह्णीष्व मे सुताम्
नक्षत्रतिथिसंयोगे पात्रं हि परमं भवान् १७
भीष्म उवाच
अष्टावक्रस्तथेत्युक्त्वा प्रतिगृह्य च तां प्रभो
कन्यां परमधर्मात्मा प्रीतिमांश्चाभवत्तदा १८
कन्यां तां प्रतिगृह्यैव भार्यां परमशोभनाम्
उवास मुदितस्तत्र आश्रमे स्वे गतज्वरः १९
इति श्रीमहाभारते अनुशासनपर्वणि द्वाविंशतितमोऽध्यायः २२

## त्रयोविंशोऽध्यायः

युधिष्ठिर उवाच
किमाहुर्भरतश्रेष्ठ पात्रं विप्राः सनातनम्
ब्राह्मणं लिङ्गिनं चैव ब्राह्मणं वाप्यलिङ्गिनम् १
भीष्म उवाच
स्ववृत्तिमभिपन्नाय लिङ्गिने वेतराय वा

देयमाहुर्महाराज उभावेतौ तपस्विनौ २
युधिष्ठिर उवाच
श्रद्धया परया पूतो यः प्रयच्छेद्द्विजातये
हव्यं कव्यं तथा दानं को दोषः स्यात्पितामह ३
भीष्म उवाच
श्रद्धापूतो नरस्तात दुर्दान्तोऽपि न संशयः
पूतो भवति सर्वत्र किं पुनस्त्वं महीपते ४
युधिष्ठिर उवाच
न ब्राह्मणं परीक्षेत दैवेषु सततं नरः
कव्यप्रदाने तु बुधाः परीक्ष्यं ब्राह्मणं विदुः ५
भीष्म उवाच
न ब्राह्मणः साधयते हव्यं दैवात्प्रसिद्ध्यति
देवप्रसादादिज्यन्ते यजमाना न संशयः ६
ब्राह्मणा भरतश्रेष्ठ सततं ब्रह्मवादिनः
मार्कण्डेयः पुरा प्राह इह लोकेषु बुद्धिमान् ७
युधिष्ठिर उवाच
अपूर्वोऽप्यथ वा विद्वान्संबन्धी वाथ यो भवेत्
तपस्वी यज्ञशीलो वा कथं पात्रं भवेत्तु सः ८
भीष्म उवाच
कुलीनः कर्मकृद्वैद्यस्तथा चाप्यानृशंस्यवान्
ह्रीमानृजुः सत्यवादी पात्रं पूर्वे च ते त्रयः ९
तत्रेदं शृणु मे पार्थ चतुर्णां तेजसां मतम्
पृथिव्याः काश्यपस्याग्नेर्मार्कण्डेयस्य चैव हि १०
पृथिव्युवाच
यथा महार्णवे क्षिप्तः क्षिप्रं लोष्टो विनश्यति
तथा दुश्चरितं सर्वं त्रय्यावृत्त्या विनश्यति ११
काश्यप उवाच
सर्वे च वेदाः सह षड्भिरङ्गैः सांख्यं पुराणं च कुले च जन्म
नैतानि सर्वाणि गतिर्भवन्ति शीलव्यपेतस्य नरस्य राजन् १२
अग्निरुवाच

अधीयानः पण्डितं मन्यमानो यो विद्यया हन्ति यशः परेषाम्
ब्रह्मन्स तेनाचरते न ब्रह्महत्यां लोकास्तस्य ह्यन्तवन्तो भवन्ति १३
मार्कण्डेय उवाच
अश्वमेधसहस्रं च सत्यं च तुलया धृतम्
नाभिजानामि यद्यस्य सत्यस्यार्धमवाप्नुयात् १४
भीष्म उवाच
इत्युक्त्वा ते जग्मुराशु चत्वारोऽमिततेजसः
पृथिवी काश्यपोऽग्निश्च प्रकृष्टायुश्च भार्गवः १५
युधिष्ठिर उवाच
यदिदं ब्राह्मणा लोके व्रतिनो भुञ्जते हविः
भुक्तं ब्राह्मणकामाय कथं तत्सुकृतं भवेत् १६
भीष्म उवाच
आदिष्टिनो ये राजेन्द्र ब्राह्मणा वेदपारगाः
भुञ्जते ब्रह्मकामाय व्रतलुप्ता भवन्ति ते १७
युधिष्ठिर उवाच
अनेकान्तं बहुद्वरं धर्ममाहुर्मनीषिणः
किं निश्चितं भवत्तेत्र तन्मे ब्रूहि पितामह १८
भीष्म उवाच
अहिंसा सत्यमक्रोध आनृशंस्यं दमस्तथा
आर्जवं चैव राजेन्द्र निश्चितं धर्मलक्षणम् १९
ये तु धर्मं प्रशंसन्तश्चरन्ति पृथिवीमिमाम्
अनाचरन्तस्तद्धर्मं संकरे निरताः प्रभो २०
तेभ्यो रत्नं हिरण्यं वा गामश्वान्वा ददाति यः
दश वर्षाणि विष्ठां स भुङ्क्ते निरयमाश्रितः २१
मेदानां पुल्कसानां च तथैवान्तवसायिनाम्
कृतं कर्माकृतं चापि रागमोहेन जल्पताम् २२
वैश्वदेवं च ये मूढा विप्राय ब्रह्मचारिणे
ददतीह न राजेन्द्र ते लोकान्भुञ्जतेऽशुभान् २३
युधिष्ठिर उवाच
किं परं ब्रह्मचर्यस्य किं परं धर्मलक्षणम्

किं च श्रेष्ठतमं शौचं तन्मे ब्रूहि पितामह २४
भीष्म उवाच
ब्रह्मचर्यं परं तात मधुमांसस्य वर्जनम्
मर्यादायां स्थितो धर्मः शमः शौचस्य लक्षणम् २५
युधिष्ठिर उवाच
कस्मिन्काले चरेद्धर्मं कस्मिन्कालेऽथमाचरेत्
कस्मिन्काले सुखी च स्यात्तन्मे ब्रूहि पितामह २६
भीष्म उवाच
काल्यमर्थं निषेवेत ततो धर्ममनन्तरम्
पश्चात्कामं निषेवेत न च गच्छेत्प्रसङ्गिताम् २७
ब्राह्मणांश्चाभिमन्येत गुरूंश्चाप्यभिपूजयेत्
सर्वभूतानुलोमश्च मृदुशीलः प्रियंवदः २८
अधिकारे यदनृतं राजगामि च पैशुनम्
गुरोश्चालीककरणं समं तद्ब्रह्महत्यया २९
प्रहरेन्ननरेन्द्रेषु न गां हन्यात्तथैव च
भ्रूणहत्यासमं चैतदुभयं यो निषेवते ३०
नाग्निं परित्यजेज्जातु न च वेदान्परित्यजेत्
न च ब्राह्मणमाक्रोशेत्समं तद्ब्रह्महत्यया ३१
युधिष्ठिर उवाच
कीदृशाः साधवो विप्राः केभ्यो दत्तं महाफलम्
कीदृशानां च भोक्तव्यं तन्मे ब्रूहि पितामह ३२
भीष्म उवाच
अक्रोधना धर्मपराः सत्यनित्या दमे रताः
तादृशाः साधवो विप्रास्तेभ्यो दत्तं महाफलम् ३३
अमानिनः सर्वसहा दृष्टार्था विजितेन्द्रियाः
सर्वभूतहिता मैत्रास्तेभ्यो दत्तं महाफलम् ३४
अलुब्धाः शुचयो वैद्या ह्रीमन्तः सत्यवादिनः
स्वकर्मनिरता ये च तेभ्यो दत्तं महाफलम् ३५
साङ्गांश्च चतुरो वेदान्योऽधीयीत द्विजर्षभः
षड्भ्यो निवृत्तः कर्मभ्यस्तं पात्रमृषयो विदुः ३६

ये त्वेवंगुणजातीयास्तेभ्यो दत्तं महाफलम्
सहस्रगुणमाप्नोति गुणार्हाय प्रदायकः ३७
प्रज्ञाश्रुताभ्यां वृत्तेन शीलेन च समन्वितः
तारयेत कुलं कृत्स्नमेकोऽपीह द्विजर्षभः ३८
गामश्वं वित्तमन्नं वा तद्विधे प्रतिपादयेत्
द्रव्याणि चान्यानि तथा प्रेत्यभावे न शोचति ३९
तारयेत कुलं कृत्स्नमेकोऽपीह द्विजोत्तमः
किमङ्ग पुनरेकं वै तस्मात्पात्रं समाचरेत् ४०
निशम्य च गुणोपेतं ब्राह्मणं साधुसंमतम्
दूरादानाययेत्कृत्ये सर्वतश्चाभिपूजयेत् ४१
इति श्रीमहाभारते अनुशासनपर्वणि त्रयोविंशोऽध्यायः २३

## चतुर्विंशोऽध्यायः

युधिष्ठिर उवाच
श्राद्धकाले च दैवे च धर्मे चापि पितामह
इच्छामीह त्वयाख्यातं विहितं यत्सुरर्षिभिः १
भीष्म उवाच
दैवं पूर्वाह्णिके कुर्यादपराह्णे तु पैतृकम्
मङ्गलाचारसंपन्नः कृतशौचः प्रयत्नवान् २
मनुष्याणां तु मध्याह्ने प्रदद्यादुपपत्तितः
कालहीनं तु यद्दानं तं भागं रक्षसां विदुः ३
लङ्घितं चावलीढं च कलिपूर्वं च यत्कृतम्
रजस्वलाभिर्दृष्टं च तं भागं रक्षसां विदुः ४
अवघुष्टं च यद्भुक्तमव्रतेन च भारत
परामृष्टं शुना चैव तं भागं रक्षसां विदुः ५
केशकीटावपतितं क्षुतं श्वभिरवेक्षितम्
रुदितं चावधूतं च तं भागं रक्षसां विदुः ६
निरोंकारेण यद्भुक्तं सशस्त्रेण च भारत
दुरात्मना च यद्भुक्तं तं भागं रक्षसां विदुः ७
परोच्छिष्टं च यद्भुक्तं परिभुक्तं च यद्भवेत्

दैवे पित्र्ये च सततं तं भागं रक्षसां विदुः ८
गर्हितं निन्दितं चैव परिविष्टं समन्युना
दैवं वाप्यथ वा पैत्र्यं तं भागं रक्षसां विदुः ९
मन्त्रहीनं क्रियाहीनं यच्छ्राद्धं परिविष्यते
त्रिभिर्वर्णैर्नरश्रेष्ठ तं भागं रक्षसां विदुः १०
आज्याहुतिं विना चैव यत्किंचित्परिविष्यते
दुराचारैश्च यद्भुक्तं तं भागं रक्षसां विदुः ११
ये भागा रक्षसां प्रोक्तास्त उक्ता भरतर्षभ
अत ऊर्ध्वं विसर्गस्य परीक्षां ब्राह्मणे शृणु १२
यावन्तः पतिता विप्रा जडोन्मत्तास्तथैव च
दैवे वाप्यथ वा पित्र्ये राजन्नार्हन्ति केतनम् १३
श्वित्री कुष्ठी च क्लीबश्च तथा यक्ष्महतश्च यः
अपस्मारी च यश्चान्धो राजन्नार्हन्ति सत्कृतिम् १४
चिकित्सका देवलका वृथानियमधारिणः
सोमविक्रयिणश्चैव श्राद्धे नार्हन्ति केतनम् १५
गायना नर्तकाश्चैव प्लवका वादकास्तथा
कथका योधकाश्चैव राजन्नार्हन्ति केतनम् १६
होतारो वृषलानां च वृषलाध्यापकास्तथा
तथा वृषलशिष्याश्च राजन्नार्हन्ति केतनम् १७
अनुयोक्ता च यो विप्रो अनुयुक्तश्च भारत
नार्हतस्तावपि श्राद्धं ब्रह्मविक्रयिणौ हि तौ १८
अग्रणीर्यः कृतः पूर्वं वर्णावरपरिग्रहः
ब्राह्मणः सर्वविद्योऽपि राजन्नार्हति केतनम् १९
अनग्नयश्च ये विप्रा मृगनिर्यातकाश्च ये
स्तेनाश्च पतिताश्चैव राजन्नार्हन्ति केतनम् २०
अपरिज्ञातपूर्वाश्च गणपूर्वाश्च भारत
पुत्रिकापूर्वपुत्राश्च श्राद्धे नार्हन्ति केतनम् २१
ऋणकर्ता च यो राजन्यश्च वार्धुषिको द्विजः
प्राणिविक्रयवृत्तिश्च राजन्नार्हन्ति केतनम् २२
स्त्रीपूर्वाः काण्डपृष्ठाश्च यावन्तो भरतर्षभ

अजपा ब्राह्मणाश्चैव श्राद्धे नार्हन्ति केतनम् २३
श्राद्धे दैवे च निर्दिष्टा ब्राह्मणा भरतर्षभ
दातुः प्रतिग्रहीतुश्च शृणुष्वानुग्रहं पुनः २४
चीर्णव्रता गुणैर्युक्ता भवेयुर्येऽपि कर्षकाः
सावित्रीज्ञाः क्रियावन्तस्ते राजन्केतनक्षमाः २५
क्षात्रधर्मिणमप्याजौ केतयेत्कुलजं द्विजम्
न त्वेव वणिजं तात श्राद्धेषु परिकल्पयेत् २६
अग्निहोत्री च यो विप्रो ग्रामवासी च यो भवेत्
अस्तेनश्चातिथिज्ञश्च स राजन्केतनक्षमः २७
सावित्रीं जपते यस्तु त्रिकालं भरतर्षभ
भिक्षावृत्तिः क्रियावांश्च स राजन्केतनक्षमः २८
उदितास्तमितो यश्च तथैवास्तमितोदितः
अहिंस्रश्चाल्पदोषश्च स राजन्केतनक्षमः २९
अकल्कको ह्यतर्कश्च ब्राह्मणो भरतर्षभ
ससंज्ञो भैक्ष्यवृत्तिश्च स राजन्केतनक्षमः ३०
अव्रती कितवः स्तेनः प्राणिविक्रय्यथो वणिक्
पश्चाच्च पीतवान्सोमं स राजन्केतनक्षमः ३१
अर्जयित्वा धनं पूर्वं दारुणैः कृषिकर्मभिः
भवेत्सर्वातिथिः पश्चात्स राजन्केतनक्षमः ३२
ब्रह्मविक्रयनिर्दिष्टं स्त्रिया यच्चार्जितं धनम्
अदेयं पितृदेवेभ्यो यच्च क्लैब्यादुपार्जितम् ३३
क्रियमाणेऽपवर्गे तु यो द्विजो भरतर्षभ
न व्याहरति यद्युक्तं तस्याधर्मो गवानृतम् ३४
श्राद्धस्य ब्राह्मणः कालः प्राप्तं दधि घृतं तथा
सोमक्षयश्च मांसं च यदारण्यं युधिष्ठिर ३५
श्राद्धापवर्गे विप्रस्य स्वधा वै स्वदिता भवेत्
क्षत्रियस्याप्यथो ब्रूयात्प्रीयन्तां पितरस्त्विति ३६
अपवर्गे तु वैश्यस्य श्राद्धकर्मणि भारत
अक्षय्यमभिधातव्यं स्वस्ति शूद्रस्य भारत ३७
पुण्याहवाचनं दैवे ब्राह्मणस्य विधीयते

एतदेव निरोंकारं क्षत्रियस्य विधीयते
वैश्यस्य चैव वक्तव्यं प्रीयन्तां देवता इति ३८
कर्मणामानुपूर्वीं च विधिपूर्वकृतं शृणु
जातकर्मादिकान्सर्वांस्त्रिषु वर्णेषु भारत
ब्रह्मक्षत्रे हि मन्त्रोक्ता वैश्यस्य च युधिष्ठिर ३९
विप्रस्य रशना मौञ्जी मौर्वी राजन्यगामिनी
बाल्वजीत्येव वैश्यस्य धर्म एष युधिष्ठिर ४०
दातुः प्रतिग्रहीतुश्च धर्माधर्माविमौ शृणु
ब्राह्मणस्यानृतेऽधर्मः प्रोक्तः पातकसंज्ञितः
चतुर्गुणः क्षत्रियस्य वैश्यस्याष्टगुणः स्मृतः ४१
नान्यत्र ब्राह्मणोऽश्नीयात्पूर्वं विप्रेण केतितः
यवीयान्पशुहिंसायां तुल्यधर्मो भवेत्स हि ४२
अथ राजन्यवैश्याभ्यां यद्यश्नीयात्तु केतितः
यवीयान्पशुहिंसायां भागार्धं समवाप्नुयात् ४३
दैवं वाप्यथ वा पित्र्यं योऽश्नीयाद्ब्राह्मणादिषु
अस्नातो ब्राह्मणो राजंस्तस्याधर्मो गवानृतम् ४४
आशौचो ब्राह्मणो राजन्योऽश्नीयाद्ब्राह्मणादिषु
ज्ञानपूर्वमथो लोभात्तस्याधर्मो गवानृतम् ४५
अन्नेनान्नं च यो लिप्सेत्कर्मार्थं चैव भारत
आमन्त्रयति राजेन्द्र तस्याधर्मोऽनृतं स्मृतम् ४६
अवेदव्रतचारित्रास्त्रिभिर्वर्णैर्युधिष्ठिर
मन्त्रवत्परिविष्यन्ते तेष्वधर्मो गवानृतम् ४७
युधिष्ठिर उवाच
पित्र्यं वाप्यथ वा दैवं दीयते यत्पितामह
एतदिच्छाम्यहं श्रोतुं दत्तं येषु महाफलम् ४८
भीष्म उवाच
येषां दाराः प्रतीक्षन्ते सुवृष्टिमिव कर्षकाः
उच्छेषपरिशेषं हि तान्भोजय युधिष्ठिर ४९
चारित्रनियता राजन्ये कृशाः कृशवृत्तयः
अर्थिनश्चोपगच्छन्ति तेषु दत्तं महाफलम् ५०

तद्भक्तास्तद्गृहा राजंस्तद्धनास्तदपाश्रयाः
अर्थिनश्च भवन्त्यर्थे तेषु दत्तं महाफलम् ५१
तस्करेभ्यः परेभ्यो वा ये भयार्ता युधिष्ठिर
अर्थिनो भोक्तुमिच्छन्ति तेषु दत्तं महाफलम् ५२
अकल्ककस्य विप्रस्य भैक्षोत्करकृतात्मनः
बटवो यस्य भिक्षन्ति तेभ्यो दत्तं महाफलम् ५३
हृतस्वा हृतदाराश्च ये विप्रा देशसंप्लवे
अर्थार्थमभिगच्छन्ति तेभ्यो दत्तं महाफलम् ५४
व्रतिनो नियमस्थाश्च ये विप्राः श्रुतसंमताः
तत्समाप्त्यर्थमिच्छन्ति तेषु दत्तं महाफलम् ५५
अव्युत्क्रान्ताश्च धर्मेषु पाषण्डसमयेषु च
कृशप्राणाः कृशधनास्तेषु दत्तं महाफलम् ५६
कृतसर्वस्वहरणा निर्दोषाः प्रभविष्णुभिः
स्पृहयन्ति च भुक्तान्नं तेषु दत्तं महाफलम् ५७
तपस्विनस्तपोनिष्ठास्तेषां भैक्षचराश्च ये
अर्थिनः किंचिदिच्छन्ति तेषु दत्तं महाफलम् ५८
महाफलविधिर्दाने श्रुतस्ते भरतर्षभ
निरयं येन गच्छन्ति स्वर्गं चैव हि तच्छृणु ५९
गुर्वर्थं वाभयार्थं वा वर्जयित्वा युधिष्ठिर
येऽनृतं कथयन्ति स्म ते वै निरयगामिनः ६०
परदाराभिहर्तारः परदाराभिमर्शिनः
परदारप्रयोक्तारस्ते वै निरयगामिनः ६१
ये परस्वापहर्तारः परस्वानां च नाशकाः
सूचकाश्च परेषां ये ते वै निरयगामिनः ६२
प्रपाणां च सभानां च संक्रमाणां च भारत
अगाराणां च भेत्तारो नरा निरयगामिनः ६३
अनाथां प्रमदां बालां वृद्धां भीतां तपस्विनीम्
वञ्चयन्ति नरा ये च ते वै निरयगामिनः ६४
वृत्तिच्छेदं गृहच्छेदं दारच्छेदं च भारत
मित्रच्छेदं तथाशायास्ते वै निरयगामिनः ६५

सूचकाः संधिभेत्तारः परवृत्त्युपजीवकाः
अकृतज्ञाश्च मित्राणां ते वै निरयगामिनः ६६
पाषण्डा दूषकाश्चैव समयानां च दूषकाः
ये प्रत्यवसिताश्चैव ते वै निरयगामिनः ६७
कृताशं कृतनिर्देशं कृतभक्तं कृतश्रमम्
भेदैर्ये व्यपकर्षन्ति ते वै निरयगामिनः ६८
पर्यश्नन्ति च ये दारानग्निभृत्यातिथींस्तथा
उत्सन्नपितृदेवेज्यास्ते वै निरयगामिनः ६९
वेदविक्रयिणश्चैव वेदानां चैव दूषकाः
वेदानां लेखकाश्चैव ते वै निरयगामिनः ७०
चातुराश्रम्यबाह्याश्च श्रुतिबाह्याश्च ये नराः
विकर्मभिश्च जीवन्ति ते वै निरयगामिनः ७१
केशविक्रयिका राजन्विषविक्रयिकाश्च ये
क्षीरविक्रयिकाश्चैव ते वै निरयगामिनः ७२
ब्राह्मणानां गवां चैव कन्यानां च युधिष्ठिर
येऽन्तरं यान्ति कार्येषु ते वै निरयगामिनः ७३
शस्त्रविक्रयकाश्चैव कर्तारश्च युधिष्ठिर
शल्यानां धनुषां चैव ते वै निरयगामिनः ७४
शल्यैर्वा शङ्कुभिर्वापि श्वभ्रैर्वा भरतर्षभ
ये मार्गमनुरुन्धन्ति ते वै निरयगामिनः ७५
उपाध्यायांश्च भृत्यांश्च भक्तांश्च भरतर्षभ
ये त्यजन्त्यसमर्थांस्तांस्ते वै निरयगामिनः ७६
अप्राप्तदमकाश्चैव नासानां वेधकास्तथा
बन्धकाश्च पशूनां ये ते वै निरयगामिनः ७७
अगोप्तारश्छलद्रव्या बलिषड्भागतत्पराः
समर्थाश्चाप्यदातारस्ते वै निरयगामिनः ७८
क्षान्तान्दान्तांस्तथा प्राज्ञान्दीर्घकालं सहोषितान्
त्यजन्ति कृतकृत्या ये ते वै निरयगामिनः ७९
बालानामथ वृद्धानां दासानां चैव ये नराः
अदत्त्वा भक्षयन्त्यग्रे ते वै निरयगामिनः ८०

एते पूर्वर्षिभिर्दृष्टाः प्रोक्ता निरयगामिनः
भागिनः स्वर्गलोकस्य वक्ष्यामि भरतर्षभ ८१
सर्वेष्वेव तु कार्येषु दैवपूर्वेषु भारत
हन्ति पुत्रान्पशून्कृत्स्नान्ब्राह्मणातिक्रमः कृतः ८२
दानेन तपसा चैव सत्येन च युधिष्ठिर
ये धर्ममनुवर्तन्ते ते नराः स्वर्गगामिनः ८३
शुश्रूषाभिस्तपोभिश्च श्रुतमादाय भारत
ये प्रतिग्रहनिःस्नेहास्ते नराः स्वर्गगामिनः ८४
भयात्पापात्तथाबाधाद्दारिद्र्याद्व्याधिधर्षणात्
यत्कृते प्रतिमुच्यन्ते ते नराः स्वर्गगामिनः ८५
क्षमावन्तश्च धीराश्च धर्मकार्येषु चोत्थिताः
मङ्गलाचारयुक्ताश्च ते नराः स्वर्गगामिनः ८६
निवृत्ता मधुमांसेभ्यः परदारेभ्य एव च
निवृत्ताश्चैव मद्येभ्यस्ते नराः स्वर्गगामिनः ८७
आश्रमाणां च कर्तारः कुलानां चैव भारत
देशानां नगराणां च ते नराः स्वर्गगामिनः ८८
वस्त्राभरणदातारो भक्षपानान्नदास्तथा
कुटुम्बानां च दातारस्ते नराः स्वर्गगामिनः ८९
सर्वहिंसानिवृत्ताश्च नराः सर्वसहाश्च ये
सर्वस्याश्रयभूताश्च ते नराः स्वर्गगामिनः ९०
मातरं पितरं चैव शुश्रूषन्ति जितेन्द्रियाः
भ्रातॄणां चैव सस्नेहास्ते नराः स्वर्गगामिनः ९१
आढ्याश्च बलवन्तश्च यौवनस्थाश्च भारत
ये वै जितेन्द्रिया धीरास्ते नराः स्वर्गगामिनः ९२
अपराद्धेषु सस्नेहा मृदवो मित्रवत्सलाः
आराधनसुखाश्चापि ते नराः स्वर्गगामिनः ९३
सहस्रपरिवेष्टारस्तथैव च सहस्रदाः
त्रातारश्च सहस्राणां पुरुषाः स्वर्गगामिनः ९४
सुवर्णस्य च दातारो गवां च भरतर्षभ
यानानां वाहनानां च ते नराः स्वर्गगामिनः ९५

वैवाहिकानां कन्यानां प्रेष्याणां च युधिष्ठिर
दातारो वाससां चैव ते नराः स्वर्गगामिनः ९६
विहारावसथोद्यानकूपाराम सभाप्रदाः
वप्राणां चैव कर्तारस्ते नराः स्वर्गगामिनः ९७
निवेशनानां क्षेत्राणां वसतीनां च भारत
दातारः प्रार्थितानां च ते नराः स्वर्गगामिनः ९८
रसानामथ बीजानां धान्यानां च युधिष्ठिर
स्वयमुत्पाद्य दातारः पुरुषाः स्वर्गगामिनः ९९
यस्मिन्कस्मिन्कुले जाता बहुपुत्राः शतायुषः
सानुक्रोशा जितक्रोधाः पुरुषाः स्वर्गगामिनः १००
एतदुक्तममुत्रार्थं दैवं पित्र्यं च भारत
धर्माधर्मौ च दानस्य यथा पूर्वर्षिभिः कृतौ १०१
इति श्रीमहाभारते अनुशासनपर्वणि चतुर्विंशतितमोऽध्यायः २४

## पञ्चविंशतितमोऽध्यायः

युधिष्ठिर उवाच
इदं मे तत्त्वतो राजन्वक्तुमर्हसि भारत
अहिंसयित्वा केनेह ब्रह्महत्या विधीयते १
भीष्म उवाच
व्यासमामन्त्र्य राजेन्द्र पुरा यत्पृष्टवानहम्
तत्तेऽहं संप्रवक्ष्यामि तदिहैकमनाः शृणु २
चतुर्थस्त्वं वसिष्ठस्य तत्त्वमाख्याहि मे मुने
अहिंसयित्वा केनेह ब्रह्महत्या विधीयते ३
इति पृष्टो महाराज पराशरशरीरजः
अब्रवीन्निपुणो धर्मे निःसंशयमनुत्तमम् ४
ब्राह्मणं स्वयमाहूय भिक्षार्थे कृशवृत्तिनम्
ब्रूयान्नास्तीति यः पश्चात्तं विद्याद्ब्रह्मघातिनम् ५
मध्यस्थस्येह विप्रस्य योऽनूचानस्य भारत
वृत्तिं हरति दुर्बुद्धिस्तं विद्याद्ब्रह्मघातिनम् ६
गोकुलस्य तृषार्तस्य जलार्थे वसुधाधिप

उत्पादयति यो विघ्नं तं विद्याद्ब्रह्मघातिनम् ७
यः प्रवृत्तां श्रुतिं सम्यक्शास्त्रं वा मुनिभिः कृतम्
दूषयत्यनभिज्ञाय तं विद्याद्ब्रह्मघातिनम् ८
आत्मजां रूपसंपन्नां महतीं सदृशे वरे
न प्रयच्छति यः कन्यां तं विद्याद्ब्रह्मघातिनम् ९
अधर्मनिरतो मूढो मिथ्या यो वै द्विजातिषु
दद्यान्मर्मातिगं शोकं तं विद्याद्ब्रह्मघातिनम् १०
चक्षुषा विप्रहीनस्य पङ्गुलस्य जडस्य वा
हरेत यो वै सर्वस्वं तं विद्याद्ब्रह्मघातिनम् ११
आश्रमे वा वने वा यो ग्रामे वा यदि वा पुरे
अग्निं समुत्सृजेन्मोहात्तं विद्याद्ब्रह्मघातिनम् १२
इति श्रीमहाभारते अनुशासनपर्वणि पञ्चविंशतितमोऽध्यायः २५

## षड्विंशतितमोऽध्यायः

युधिष्ठिर उवाच
तीर्थानां दर्शनं श्रेयः स्नानं च भरतर्षभ
श्रवणं च महाप्राज्ञ श्रोतुमिच्छामि तत्त्वतः १
पृथिव्यां यानि तीर्थानि पुण्यानि भरतर्षभ
वक्तुमर्हसि मे तानि श्रोतास्मि नियतः प्रभो २
भीष्म उवाच
इममङ्गिरसा प्रोक्तं तीर्थवंशं महाद्युते
श्रोतुमर्हसि भद्रं ते प्राप्स्यसे धर्ममुत्तमम् ३
तपोवनगतं विप्रमभिगम्य महामुनिम्
पप्रच्छाङ्गिरसं वीर गौतमः संशितव्रतः ४
अस्ति मे भगवन्कश्चित्तीर्थेभ्यो धर्मसंशयः
तत्सर्वं श्रोतुमिच्छामि तन्मे शंस महामुने ५
उपस्पृश्य फलं किं स्यात्तेषु तीर्थेषु वै मुने
प्रेत्यभावे महाप्राज्ञ तद्यथास्ति तथा वद ६
अङ्गिरा उवाच
सप्ताहं चन्द्रभागां वै वितस्तामूर्मिमालिनीम्

विगाह्य वै निराहारो निर्ममो मुनिवद्भवेत् ७
काश्मीरमण्डले नद्यो याः पतन्ति महानदम्
ता नदीः सिन्धुमासाद्य शीलवान्स्वर्गमाप्नुयात् ८
पुष्करं च प्रभासं च नैमिषं सागरोदकम्
देविकामिन्द्रमार्गं च स्वर्णबिन्दुं विगाह्य च
विबोध्यते विमानस्थः सोऽप्सरोभिरभिष्टुतः ९
हिरण्यबिन्दुं विक्षोभ्य प्रयतश्चाभिवाद्य तम्
कुशेशयं च देवत्वं पूयते तस्य किल्बिषम् १०
इन्द्रतोयां समासाद्य गन्धमादनसंनिधौ
करतोयां कुरङ्गेषु त्रिरात्रोपोषितो नरः
अश्वमेधमवाप्नोति विगाह्य नियतः शुचिः ११
गङ्गाद्वारे कुशावर्ते बिल्वके नेमिपर्वते
तथा कनखले स्नात्वा धूतपाप्मा दिवं व्रजेत् १२
अपां ह्रद उपस्पृश्य वाजपेयफलं लभेत्
ब्रह्मचारी जितक्रोधः सत्यसंधस्त्वहिंसकः १३
यत्र भागीरथी गङ्गा भजते दिशमुत्तराम्
महेश्वरस्य निष्ठाने यो नरस्त्वभिषिच्यते
एकमासं निराहारः स्वयं पश्यति देवताः १४
सप्तगङ्गे त्रिगङ्गे च इन्द्रमार्गे च तर्पयन्
सुधां वै लभते भोक्तुं यो नरो जायते पुनः १५
महाश्रम उपस्पृश्य योऽग्निहोत्रपरः शुचिः
एकमासं निराहारः सिद्धिं मासेन स व्रजेत् १६
महाह्रद उपस्पृश्य भृगुतुङ्गे त्वलोलुपः
त्रिरात्रोपोषितो भूत्वा मुच्यते ब्रह्महत्यया १७
कन्याकूप उपस्पृश्य बलाकायां कृतोदकः
देवेषु कीर्तिं लभते यशसा च विराजते १८
देशकाल उपस्पृश्य तथा सुन्दरिकाह्रदे
अश्विभ्यां रूपवर्चस्यं प्रेत्य वै लभते नरः १९
महागङ्गामुपस्पृश्य कृत्तिकाङ्गारके तथा
पक्षमेकं निराहारः स्वर्गमाप्नोति निर्मलः २०

वैमानिक उपस्पृश्य किङ्किणीकाश्रमे तथा
निवासेऽप्सरसां दिव्ये कामचारी महीयते २१
कालिकाश्रममासाद्य विपाशायां कृतोदकः
ब्रह्मचारी जितक्रोधस्त्रिरात्रान्मुच्यते भवात् २२
आश्रमे कृत्तिकानां तु स्नात्वा यस्तर्पयेत्पितॄन्
तोषयित्वा महादेवं निर्मलः स्वर्गमाप्नुयात् २३
महापुर उपस्पृश्य त्रिरात्रोपोषितो नरः
त्रसानां स्थावराणां च द्विपदानां भयं त्यजेत् २४
देवदारुवने स्नात्वा धूतपाप्मा कृतोदकः
देवलोकमवाप्नोति सप्तरात्रोषितः शुचिः २५
कौशन्ते च कुशस्तम्बे द्रोणशर्मपदे तथा
आपःप्रपतने स्नातः सेव्यते सोऽप्सरोगणैः २६
चित्रकूटे जनस्थाने तथा मन्दाकिनीजले
विगाह्य वै निराहारो राजलक्ष्मीं निगच्छति २७
श्यामायास्त्वाश्रमं गत्वा उष्य चैवाभिषिच्य च
त्रींस्त्रिरात्रान्स संधाय गन्धर्वनगरे वसेत् २८
रमण्यां च उपस्पृश्य तथा वै गन्धतारिके
एकमासं निराहारस्त्वन्तर्धानफलं लभेत् २९
कौशिकीद्वारमासाद्य वायुभक्षस्त्वलोलुपः
एकविंशतिरात्रेण स्वर्गमारोहते नरः ३०
मतङ्गवाप्यां यः स्नायादेकरात्रेण सिध्यति
विगाहति ह्यनालम्बमन्धकं वै सनातनम् ३१
नैमिषे स्वर्गतीर्थे च उपस्पृश्य जितेन्द्रियः
फलं पुरुषमेधस्य लभेन्मासं कृतोदकः ३२
गंगाह्रद उपस्पृश्य तथा चैवोत्पलावने
अश्वमेधमवाप्नोति तत्र मासं कृतोदकः ३३
गंगायमुनयोस्तीर्थे तथा कालंजरे गिरौ
षष्टिह्रद उपस्पृश्य दानं नान्यद्विशिष्यते ३४
दश तीर्थसहस्राणि तिस्रः कोटयस्तथापराः
समागच्छन्ति माघ्यां तु प्रयागे भरतर्षभ ३५

माघमासं प्रयागे तु नियतः संशितव्रतः
स्नात्वा तु भरतश्रेष्ठ निर्मलः स्वर्गमाप्नुयात् ३६
मरुद्गण उपस्पृश्य पितॄणामाश्रमे शुचिः
वैवस्वतस्य तीर्थे च तीर्थभूतो भवेन्नरः ३७
तथा ब्रह्मशिरो गत्वा भागीरथ्यां कृतोदकः
एकमासं निराहारः सोमलोकमवाप्नुयात् ३८
कपोतके नरः स्नात्वा अष्टावक्रे कृतोदकः
द्वादशाहं निराहारो नरमेधफलं लभेत् ३९
मुञ्जपृष्ठं गयां चैव निरृर्तिं देवपर्वतम्
तृतीयां क्रौञ्चपादीं च ब्रह्महत्या विशुध्यति ४०
कलश्यां वाप्युपस्पृश्य वेद्यां च बहुशोजलाम्
अग्नेः पुरे नरः स्नात्वा विशालायां कृतोदकः
देवह्रद उपस्पृश्य ब्रह्मभूतो विराजते ४१
पुरापवर्तनं नन्दां महानन्दां च सेव्य वै
नन्दने सेव्यते दान्तस्त्वप्सरोभिरहिंसकः ४२
उर्वशीकृत्तिकायोगे गत्वा यः सुसमाहितः
लौहित्ये विधिवत्स्नात्वा पुण्डरीकफलं लभेत् ४३
रामह्रद उपस्पृश्य विशालायां कृतोदकः
द्वादशाहं निराहारः कल्मषाद्विप्रमुच्यते ४४
महाह्रद उपस्पृश्य शुद्धेन मनसा नरः
एकमासं निराहारो जमदग्निगतिं लभेत् ४५
विन्ध्ये संताप्य चात्मानं सत्यसंधस्त्वहिंसकः
षण्मासं पदमास्थाय मासेनैकेन शुध्यति ४६
नर्मदायामुपस्पृश्य तथा सूर्पारकोदके
एकपक्षं निराहारो राजपुत्रो विधीयते ४७
जम्बूमार्गे त्रिभिर्मासैः संयतः सुसमाहितः
अहोरात्रेण चैकेन सिद्धिं समधिगच्छति ४८
कोकामुखे विगाह्यापो गत्वा चण्डालिकाश्रमम्
शाकभक्षश्चीरवासाः कुमारीर्विन्दते दश ४९
वैवस्वतस्य सदनं न स गच्छेत्कदाचन

यस्य कन्याह्रदे वासो देवलोकं स गच्छति ५०
प्रभासे त्वेकरात्रेण अमावास्यां समाहितः
सिध्यतेऽत्र महाबाहो यो नरो जायते पुनः ५१
उज्ञानक उपस्पृश्य आर्ष्टिषेणस्य चाश्रमे
पिङ्गायाश्चाश्रमे स्नात्वा सर्वपापैः प्रमुच्यते ५२
कुल्यायां समुपस्पृश्य जप्त्वा चैवाघमर्षणम्
अश्वमेधमवाप्नोति त्रिरात्रोपोषितः शुचिः ५३
पिण्डारक उपस्पृश्य एकरात्रोषितो नरः
अग्निष्टोममवाप्नोति प्रभातां शर्वरीं शुचिः ५४
तथा ब्रह्मसरो गत्वा धर्मारण्योपशोभितम्
पुण्डरीकमवाप्नोति प्रभातां शर्वरीं शुचिः ५५
मैनाके पर्वते स्नात्वा तथा संध्यामुपास्य च
कामं जित्वा च वै मासं सर्वमेधफलं लभेत् ५६
विख्यातो हिमवान्पुण्यः शंकरश्वशुरो गिरिः
आकरः सर्वरत्नानां सिद्धचारणसेवितः ५७
शरीरमुत्सृजेत्तत्र विधिपूर्वमनाशके
अध्रुवं जीवितं ज्ञात्वा यो वै वेदान्तगो द्विजः ५८
अभ्यर्च्य देवतास्तत्र नमस्कृत्य मुनींस्तथा
ततः सिद्धो दिवं गच्छेद्ब्रह्मलोकं सनातनम् ५९
कामं क्रोधं च लोभं च यो जित्वा तीर्थमावसेत्
न तेन किंचिन्न प्राप्तं तीर्थाभिगमनाद्भवेत् ६०
यान्यगम्यानि तीर्थानि दुर्गाणि विषमाणि च
मनसा तानि गम्यानि सर्वतीर्थसमासतः ६१
इदं मेध्यमिदं धन्यमिदं स्वर्ग्यमिदं सुखम्
इदं रहस्यं देवानामाप्लाव्यानां च पावनम् ६२
इदं दद्याद्द्विजातीनां साधूनामात्मजस्य वा
सुहृदां च जपेत्कर्णे शिष्यस्यानुगतस्य वा ६३
दत्तवान्गौतमस्येदमङ्गिरा वै महातपाः
गुरुभिः समनुज्ञातः काश्यपेन च धीमता ६४
महर्षीणामिदं जप्यं पावनानां तथोत्तमम्

जपंश्चाभ्युत्थितः शश्वन्निर्मलः स्वर्गमाप्नुयात् ६५
इदं यश्चापि शृणुयाद्रहस्यं त्वङ्गिरोमतम्
उत्तमे च कुले जन्म लभेज्जातिं च संस्मरेत् ६६
इति श्रीमहाभारते अनुशासनपर्वणि षड्विंशोऽध्यायः २६

## सप्तविंशोऽध्यायः

वैशम्पायन उवाच
बृहस्पतिसमं बुद्ध्या क्षमया ब्रह्मणः समम्
पराक्रमे शक्रसममादित्यसमतेजसम् १
गाङ्गेयमर्जुनेनाजौ निहतं भूरिवर्चसम्
भ्रातृभिः सहितोऽन्यैश्च पर्युपास्ते युधिष्ठिरः २
शयानं वीरशयने कालाकाङ्क्षिणमच्युतम्
आजग्मुर्भरतश्रेष्ठं द्रष्टुकामा महर्षयः ३
अत्रिर्वसिष्ठोऽथ भृगुः पुलस्त्यः पुलहः क्रतुः
अङ्गिरा गौतमोऽगस्त्यः सुमतिः स्वायुरात्मवान् ४
विश्वामित्रः स्थूलशिराः संवर्तः प्रमतिर्दमः
उशना बृहस्पतिर्व्यासश्च्यवनः काश्यपो ध्रुवः ५
दुर्वासा जमदग्निश्च मार्कण्डेयोऽथ गालवः
भरद्वाजश्च रैभ्यश्च यवक्रीतस्त्रितस्तथा ६
स्थूलाक्षः शकलाक्षश्च कण्वो मेधातिथिः कृशः
नारदः पर्वतश्चैव सुधन्वाथैकतो द्वितः ७
नितंभूर्भुवनो धौम्यः शतानन्दोऽकृतव्रणः
जामदग्न्यस्तथा रामः काम्यश्चेत्येवमादयः
समागता महात्मानो भीष्मं द्रष्टुं महर्षयः ८
तेषां महात्मनां पूजामागतानां युधिष्ठिरः
भ्रातृभिः सहितश्चक्रे यथावदनुपूर्वशः ९
ते पूजिताः सुखासीनाः कथाश्चक्रुर्महर्षयः
भीष्माश्रिताः सुमधुराः सर्वेन्द्रियमनोहराः १०
भीष्मस्तेषां कथाः श्रुत्वा ऋषीणां भावितात्मनाम्
मेने दिविस्थमात्मानं तुष्ट्या परमया युतः ११

ततस्ते भीष्ममामन्त्र्य पाण्डवांश्च महर्षयः
अन्तर्धानं गताः सर्वे सर्वेषामेव पश्यताम् १२
तानृषीन्सुमहाभागानन्तर्धानगतानपि
पाण्डवास्तुष्टुवुः सर्वे प्रणेमुश्च मुहुर्मुहुः १३
प्रसन्नमनसः सर्वे गाङ्गेयं कुरुसत्तमाः
उपतस्थुर्यथोद्यन्तमादित्यं मन्त्रकोविदाः १४
प्रभावात्तपसस्तेषामृषीणां वीक्ष्य पाण्डवाः
प्रकाशन्तो दिशः सर्वा विस्मयं परमं ययुः १५
महाभाग्यं परं तेषामृषीणामनुचिन्त्य ते
पाण्डवाः सह भीष्मेण कथाश्चक्रुस्तदाश्रयाः १६
कथान्ते शिरसा पादौ स्पृष्ट्वा भीष्मस्य पाण्डवः
धर्म्यं धर्मसुतः प्रश्नं पर्यपृच्छद्युधिष्ठिरः १७
के देशाः के जनपदा आश्रमाः के च पर्वताः
प्रकृष्टाः पुण्यतः काश्च ज्ञेया नद्यः पितामह १८
भीष्म उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
शिलोञ्छवृत्तेः संवादं सिद्धस्य च युधिष्ठिर १९
इमां कश्चित्परिक्रम्य पृथिवीं शैलभूषिताम्
असकृद्द्विपदां श्रेष्ठः श्रेष्ठस्य गृहमेधिनः २०
शिलवृत्तेर्गृहं प्राप्तः स तेन विधिनार्चितः
कृतकृत्य उपातिष्ठत्सिद्धं तमतिथिं तदा २१
तौ समेत्य महात्मानौ सुखासीनौ कथाः शुभाः
चक्रतुर्वेदसंबद्धास्तच्छेषकृतलक्षणाः २२
शिलवृत्तिः कथान्ते तु सिद्धमामन्त्र्य यत्नतः
प्रश्नं पप्रच्छ मेधावी यन्मां त्वं परिपृच्छसि २३
शिलवृत्तिरुवाच
के देशाः के जनपदाः केऽश्रमाः के च पर्वताः
प्रकृष्टाः पुण्यतः काश्च ज्ञेया नद्यस्तदुच्यताम् २४
सिद्ध उवाच
ते देशास्ते जनपदास्तेऽश्रमास्ते च पर्वताः

येषां भागीरथी गङ्गा मध्येनैति सरिद्वरा २५
तपसा ब्रह्मचर्येण यज्ञैस्त्यागेन वा पुनः
गतिं तां न लभेज्जन्तुर्गङ्गां संसेव्य यां लभेत् २६
स्पृष्टानि येषां गाङ्गेयैस्तोयैर्गात्राणि देहिनाम्
न्यस्तानि न पुनस्तेषां त्यागः स्वर्गाद्विधीयते २७
सर्वाणि येषां गाङ्गेयैस्तोयैः कृत्यानि देहिनाम्
गां त्यक्त्वा मानवा विप्र दिवि तिष्ठन्ति तेऽचलाः २८
पूर्वे वयसि कर्माणि कृत्वा पापानि ये नराः
पश्चाद्गङ्गां निषेवन्ते तेऽपि यान्त्युत्तमां गतिम् २९
स्नातानां शुचिभिस्तोयैर्गाङ्गेयैः प्रयतात्मनाम्
व्युष्टिर्भवति या पुंसां न सा क्रतुशतैरपि ३०
यावदस्थि मनुष्यस्य गङ्गातोयेषु तिष्ठति
तावद्वर्षसहस्राणि स्वर्गं प्राप्य महीयते ३१
अपहत्य तमस्तीव्रं यथा भात्युदये रविः
तथापहत्य पाप्मानं भाति गङ्गाजलोक्षितः ३२
विसोमा इव शर्वर्यो विपुष्पास्तरवो यथा
तद्वद्देशा दिशश्चैव हीना गङ्गाजलैः शुभैः ३३
वर्णाश्रमा यथा सर्वे स्वधर्मज्ञानवर्जिताः
क्रतवश्च यथासोमास्तथा गङ्गां विना जगत् ३४
यथा हीनं नभोऽर्केण भूः शैलैः खं च वायुना
तथा देशा दिशश्चैव गङ्गाहीना न संशयः ३५
त्रिषु लोकेषु ये केचित्प्राणिनः सर्व एव ते
तर्प्यमाणाः परां तृप्तिं यान्ति गङ्गाजलैः शुभैः ३६
यस्तु सूर्येण निष्टप्तं गाङ्गेयं पिबते जलम्
गवां निर्हारनिर्मुक्ताद्यावकात्तद्विशिष्यते ३७
इन्दुव्रतसहस्रं तु चरेद्यः कायशोधनम्
पिबेद्यश्चापि गङ्गाम्भः समौ स्यातां न वा समौ ३८
तिष्ठेद्युगसहस्रं तु पादेनैकेन यः पुमान्
मासमेकं तु गङ्गायां समौ स्यातां न वा समौ ३९
लम्बेतावाक्शिरा यस्तु युगानामयुतं पुमान्

तिष्ठेद्यथेष्टं यश्चापि गङ्गायां स विशिष्यते ४०
अग्नौ प्राप्तं प्रधूयेत यथातूलं द्विजोत्तम
तथा गङ्गावगाढस्य सर्वं पापं प्रधूयते ४१
भूतानामिह सर्वेषां दुःखोपहतचेतसाम्
गतिमन्वेषमाणानां न गङ्गासदृशी गतिः ४२
भवन्ति निर्विषाः सर्पा यथा तार्क्ष्यस्य दर्शनात्
गङ्गाया दर्शनात्तद्वत्सर्वपापैः प्रमुच्यते ४३
अप्रतिष्ठाश्च ये केचिदधर्मशरणाश्च ये
तेषां प्रतिष्ठा गङ्गेह शरणं शर्म वर्म च ४४
प्रकृष्टैरशुभैर्ग्रस्ताननेकैः पुरुषाधमान्
पततो नरके गङ्गा संश्रितान्प्रेत्य तारयेत् ४५
ते संविभक्ता मुनिभिर्नूनं देवैः सवासवैः
येऽभिगच्छन्ति सततं गङ्गामभिगतां सुरैः ४६
विनयाचारहीनाश्च अशिवाश्च नराधमाः
ते भवन्ति शिवा विप्र ये वै गङ्गां समाश्रिताः ४७
यथा सुराणाममृतं पितृणां च यथा स्वधा
सुधा यथा च नागानां तथा गङ्गाजलं नृणाम् ४८
उपासते यथा बाला मातरं क्षुधयार्दिताः
श्रेयस्कामास्तथा गङ्गामुपासन्तीह देहिनः ४९
स्वायंभुवं यथा स्थानं सर्वेषां श्रेष्ठमुच्यते
स्नातानां सरितां श्रेष्ठा गङ्गा तद्वदिहोच्यते ५०
यथोपजीविनां धेनुर्देवादीनां धरा स्मृता
तथोपजीविनां गङ्गा सर्वप्राणभृतामिह ५१
देवाः सोमार्कसंस्थानि यथा सत्रादिभिर्मखैः
अमृतान्युपजीवन्ति तथा गङ्गाजलं नराः ५२
जाह्नवीपुलिनोत्थाभिः सिकताभिः समुक्षितः
मन्यते पुरुषोऽत्मानं दिविष्ठमिव शोभितम् ५३
जाह्नवीतीरसंभूतां मृदं मूर्ध्ना बिभर्ति यः
बिभर्ति रूपं सोऽकस्य तमोनाशात्सुनिर्मलम् ५४
गङ्गोर्मिभिरथो दिग्धः पुरुषं पवनो यदा

स्पृशते सोऽपि पाप्मानं सद्य एवापमार्जति ५५
व्यसनैरभितप्तस्य नरस्य विनशिष्यतः
गङ्गादर्शनजा प्रीतिर्व्यसनान्यपकर्षति ५६
हंसारावैः कोकरवै रवैरन्यैश्च पक्षिणाम्
पस्पर्ध गङ्गा गन्धर्वान्पुलिनैश्च शिलोच्चयान् ५७
हंसादिभिः सुबहुभिर्विविधैः पक्षिभिर्वृताम्
गङ्गां गोकुलसंबाधां दृष्ट्वा स्वर्गोऽपि विस्मृतः ५८
न सा प्रीतिर्दिविष्ठस्य सर्वकामानुपाश्नतः
अभवद्या परा प्रीतिर्गङ्गायाः पुलिने नृणाम् ५९
वाङ्मनःकर्मजैर्ग्रस्तः पापैरपि पुमानिह
वीक्ष्य गङ्गां भवेत्पूतस्तत्र मे नास्ति संशयः ६०
सप्तावरान्सप्त परान्पितॄंस्तेभ्यश्च ये परे
पुमांस्तारयते गङ्गां वीक्ष्य स्पृष्ट्वावगाह्य च ६१
श्रुताभिलषिता दृष्टा स्पृष्टा पीतावगाहिता
गङ्गा तारयते नृणामुभौ वंशौ विशेषतः ६२
दर्शनात्स्पर्शनात्पानात्तथा गङ्गेति कीर्तनात्
पुनात्यपुण्यान्पुरुषाञ्शतशोऽथ सहस्रशः ६३
य इच्छेत्सफलं जन्म जीवितं श्रुतमेव च
स पितॄंस्तर्पयेद्गङ्गामभिगम्य सुरांस्तथा ६४
न सुतैर्न च वित्तेन कर्मणा न च तत्फलम्
प्राप्नुयात्पुरुषोऽत्यन्तं गङ्गां प्राप्य यदाप्नुयात् ६५
जात्यन्धैरिह तुल्यास्ते मृतैः पङ्गुभिरेव च
समर्था ये न पश्यन्ति गङ्गां पुण्यजलां शिवाम् ६६
भूतभव्यभविष्यज्ञैर्महर्षिभिरुपस्थिताम्
देवैः सेन्द्रैश्च को गङ्गां नोपसेवेत मानवः ६७
वानप्रस्थैर्गृहस्थैश्च यतिभिर्ब्रह्मचारिभिः
विद्यावद्भिः श्रितां गङ्गां पुमान्को नाम नाश्रयेत् ६८
उत्क्रामद्भिश्च यः प्राणैः प्रयतः शिष्टसंमतः
चिन्तयेन्मनसा गङ्गां स गतिं परमां लभेत् ६९
न भयेभ्यो भयं तस्य न पापेभ्यो न राजतः

आ देहपतनाद्गङ्गामुपास्ते यः पुमानिह ७०
गगनाद्यां महापुण्यां पतन्तीं वै महेश्वरः
दधार शिरसा देवीं तामेव दिवि सेवते ७१
अलंकृतास्त्रयो लोकाः पथिभिर्विमलैस्त्रिभिः
यस्तु तस्या जलं सेवेत्कृतकृत्यः पुमान्भवेत् ७२
दिवि ज्योतिर्यथादित्यः पितॄणां चैव चन्द्रमाः
देवेशश्च यथा नृणां गङ्गेह सरितां तथा ७३
मात्रा पित्रा सुतैर्दारैर्वियुक्तस्य धनेन वा
न भवेद्धि तथा दुःखं यथा गङ्गावियोगजम् ७४
नारण्यैर्नेष्टविषयैर्न सुतैर्न धनागमैः
तथा प्रसादो भवति गङ्गां वीक्ष्य यथा नृणाम् ७५
पूर्णमिन्दुं यथा दृष्ट्वा नृणां दृष्टिः प्रसीदति
गङ्गां त्रिपथगां दृष्ट्वा तथा दृष्टिः प्रसीदति ७६
तद्भावस्तद्गतमनास्तन्निष्ठस्तत्परायणः
गङ्गां योऽनुगतो भक्त्या स तस्याः प्रियतां व्रजेत् ७७
भूःस्थैः खस्थैर्दिविष्ठैश्च भूतैरुच्चावचैरपि
गङ्गा विगाह्या सततमेतत्कार्यतमं सताम् ७८
त्रिषु लोकेषु पुण्यत्वाद्गङ्गायाः प्रथितं यशः
यत्पुत्रान्सगरस्यैषा भस्माख्याननयद्दिवम् ७९
वाय्वीरिताभिः सुमहास्वनाभिर्द्रुताभिरत्यर्थसमुच्छ्रिताभिः
गङ्गोर्मिभिर्भानुमतीभिरिद्धः सहस्त्ररश्मिप्रतिमो विभाति ८०
पयस्विनीं घृतिनीमत्युदारां समृद्धिनीं वेगिनीं दुर्विगाह्याम्
गङ्गां गत्वा यैः शरीरं विसृष्टं गता धीरास्ते विबुधैः समत्वम् ८१
अन्धाञ्जडान्द्रव्यहीनांश्च गङ्गा यशस्विनी बृहती विश्वरूपा
देवैः सेन्द्रैर्मुनिभिर्मानवैश्च निषेविता सर्वकामैर्युनक्ति ८२
ऊर्जावतीं मधुमतीं महापुण्यां त्रिवर्त्मगाम्
त्रिलोकगोप्त्रद्यं ये गङ्गां संश्रितास्ते दिवं गताः ८३
यो वत्स्यति द्रक्ष्यति वापि मर्त्यस्तस्मै प्रयच्छन्ति सुखानि देवाः
तद्भाविताः स्पर्शने दर्शने यस्तस्मै देवा गतिमिष्टां दिशन्ति ८४
दक्षां पृथ्वद्यं बृहतीं विप्रकृष्टां शिवामृतां सुरसां सुप्रसन्नाम्

विभावरीं सर्वभूतप्रतिष्ठां गङ्गां गता ये त्रिदिवं गतास्ते ८५
ख्यातिर्यस्याः खं दिवं गां च नित्यं पुरा दिशो विदिशश्चावतस्थे
तस्या जलं सेव्य सरिद्वराया मर्त्याः सर्वे कृतकृत्या भवन्ति ८६
इयं गङ्गेति नियतं प्रतिष्ठा गुहस्य रुक्मस्य च गर्भयोषा
प्रातस्त्रिमार्गा घृतवहा विपाप्मा गङ्गावतीर्णा वियतो विश्वतोया ८७
सुतावनीध्रस्य हरस्य भार्या दिवो भुवश्चापि कक्ष्यानुरूपा
भव्या पृथिव्या भाविनी भाति राजन्गङ्गा लोकानां पुण्यदा वै त्रयाणाम्
८८
मधुप्रवाहा घृतरागोद्धृताभिर्महोर्मिभिः शोभिता ब्राह्मणैश्च
दिवश्च्युता शिरसात्ता भवेन गङ्गावनीध्रात्त्रिदिवस्य माला ८९
योनिर्वरिष्ठा विरजा वितन्वी शुष्मा इरा वारिवहा यशोदा
विश्वावती चाकृतिरिष्टिरिद्धा गङ्गोक्षितानां भुवनस्य पन्थाः ९०
क्षान्त्या मह्या गोपने धारणे च दीप्त्या कृशानोस्तपनस्य चैव
तुल्या गङ्गा संमता ब्राह्मणानां गुहस्य ब्रह्मण्यतया च नित्यम् ९१
ऋषिष्टुतां विष्णुपदीं पुराणीं सुपुण्यतोयां मनसापि लोके
सर्वात्मना जाह्नवीं ये प्रपन्नास्ते ब्रह्मणः सदनं स्त्रंपयाताः ९२
लोकानिमान्नयति या जननीव पुत्रान्सर्वात्मना सर्वगुणोपपन्ना
स्वस्थानमिष्टमिह ब्राह्ममभीप्समानैर्गङ्गा सदैवात्मवशैरुपास्या ९३
उस्रां जुष्टां मिषतीं विश्वतोयामिरां वज्रीं रेवतीं भूधराणाम्
शिष्टाश्रयाममृतां ब्रह्मकान्तां गङ्गां श्रयेदात्मवान्सिद्धिकामः ९४
प्रसाद्य देवान्सविभून्समस्तान्भगीरथस्तपसोग्रेण गङ्गाम्
गामानयत्तामभिगम्य शश्वन्पुमान्भयं नेह नामुत्र विद्यात् ९५
उदाहृतः सर्वथा ते गुणानां मयैकदेशः प्रसमीक्ष्य बुद्ध्या
शक्तिर्न मे काचिदिहास्ति वक्तुं गुणान्सर्वान्परिमातुं तथैव ९६
मेरोः समुद्रस्य च सर्वरत्नैः संख्योपलानामुदकस्य वापि
वक्तुं शक्यं नेह गङ्गाजलानां गुणाख्यानं परिमातुं तथैव ९७
तस्मादिमान्परया श्रद्धयोक्तान्गुणान्सर्वाञ्जाह्नवीजांस्तथैव
भजेद्वाचा मनसा कर्मणा च भक्त्या युक्तः परया श्रद्धधानः ९८
लोकानिमांस्त्रीन्यशसा वितत्य सिद्धिं प्राप्य महतीं तां दुरापाम्
गङ्गाकृतानचिरेणैव लोकान्यथेष्टमिष्टान्विचरिष्यसि त्वम् ९९

तव मम च गुणैर्महानुभावा जुषतु मतिं सततं स्वधर्मयुक्तैः
अभिगतजनवत्सला हि गङ्गा भजति युनक्ति सुखैश्च भक्तिमन्तम् १००
भीष्म उवाच
इति परममतिर्गुणाननेकाञ्शिलरतये त्रिपथानुयोगरूपान्
बहुविधमनुशास्य तथ्यरूपान्गगनतलं द्युतिमान्विवेश सिद्धः १०१
शिलवृत्तिस्तु सिद्धस्य वाक्यैः संबोधितस्तदा
गङ्गामुपास्य विधिवत्सिद्धिं प्राप्तः सुदुर्लभाम् १०२
तस्मात्त्वमपि कौन्तेय भक्त्या परमया युतः
गङ्गामभ्येहि सततं प्राप्स्यसे सिद्धिमुत्तमाम् १०३
वैशम्पायन उवाच
श्रुत्वेतिहासं भीष्मोक्तं गङ्गायाः स्तवसंयुतम्
युधिष्ठिरः परां प्रीतिमगच्छद्भ्रातृभिः सह १०४
इतिहासमिमं पुण्यं शृणुयाद्यः पठेत वा
गङ्गायाः स्तवसंयुक्तं स मुच्येत्सर्वकिल्बिषैः १०५
इति श्रीमहाभारते अनुशासनपर्वणि सप्तविंशतितमोऽध्यायः २७

## अष्टाविंशतितमोऽध्यायः

युधिष्ठिर उवाच
प्रज्ञाश्रुताभ्यां वृत्तेन शीलेन च यथा भवान्
गुणैः समुदितः सर्वैर्वयसा च समन्वितः
तस्माद्भवन्तं पृच्छामि धर्मं धर्मभृतां वर १
क्षत्रियो यदि वा वैश्यः शूद्रो वा राजसत्तम
ब्राह्मण्यं प्राप्नुयात्केन तन्मे व्याख्यातुमर्हसि २
तपसा वा सुमहता कर्मणा वा श्रुतेन वा
ब्राह्मण्यमथ चेदिच्छेत्तन्मे ब्रूहि पितामह ३
भीष्म उवाच
ब्राह्मण्यं तात दुष्प्रापं वर्णैः क्षत्रादिभिस्त्रिभिः
परं हि सर्वभूतानां स्थानमेतद्युधिष्ठिर ४
बह्वीस्तु संसरन्योनीर्जायमानः पुनः पुनः
पर्याये तात कस्मिंश्चिद्ब्राह्मणो नाम जायते ५

अत्राप्युदाहरन्तीममितिहासं पुरातनम्
मतङ्गस्य च संवादं गर्दभ्याश्च युधिष्ठिर ६
द्विजातेः कस्यचित्तात तुल्यवर्णः सुतः प्रभुः
मतङ्गो नाम नाम्नाभूत्सर्वैः समुदितो गुणैः ७
स यज्ञकारः कौन्तेय पित्रा सृष्टः परंतप
प्रायाद्गर्दभयुक्तेन रथेनेहाशुगामिना ८
स बालं गर्दभं राजन्वहन्तं मातुरन्तिके
निरविध्यत्प्रतोदेन नासिकायां पुनः पुनः ९
तं तु तीव्रव्रणं दृष्ट्वा गर्दभी पुत्रगृद्धिनी
उवाच मा शुचः पुत्र चण्डालस्त्वाधितिष्ठति १०
ब्राह्मणे दारुणं नास्ति मैत्रो ब्राह्मण उच्यते
आचार्यः सर्वभूतानां शास्ता किं प्रहरिष्यति ११
अयं तु पापप्रकृतिर्बाले न कुरुते दयाम्
स्वयोनिं मानयत्येष भावो भावं निगच्छति १२
एतच्छ्रुत्वा मतङ्गस्तु दारुणं रासभीवचः
अवतीर्य रथात्तूर्णं रासभीं प्रत्यभाषत १३
ब्रूहि रासभि कल्याणि माता मे येन दूषिता
कथं मां वेत्सि चण्डालं क्षिप्रं रासभि शंस मे १४
केन जातोऽस्मि चण्डालो ब्राह्मण्यं येन मेऽनशत्
तत्त्वेनैतन्महाप्राज्ञे ब्रूहि सर्वमशेषतः १५
गर्दभ्युवाच
ब्राह्मण्यां वृषलेन त्वं मत्तायां नापितेन ह
जातस्त्वमसि चण्डालो ब्राह्मण्यं तेन तेऽनशत् १६
एवमुक्तो मतङ्गस्तु प्रत्युपायाद्गृहं प्रति
तमागतमभिप्रेक्ष्य पिता वाक्यमथाब्रवीत् १७
मया त्वं यज्ञसंसिद्धौ नियुक्तो गुरुकर्मणि
कस्मात्प्रतिनिवृत्तोऽसि कच्चिन्न कुशलं तव १८
मतङ्ग उवाच
अयोनिरग्र्ययोनिर्वा यः स्यात्स कुशली भवेत्
कुशलं तु कुतस्तस्य यस्येयं जननी पितः १९

ब्राह्मण्यां वृषलाज्जातं पितर्वेदयतीह माम्
अमानुषी गर्दभीयं तस्मात्तप्स्ये तपो महत् २०
एवमुक्त्वा स पितरं प्रतस्थे कृतनिश्चयः
ततो गत्वा महारण्यमतप्यत महत्तपः २१
ततः संतापयामास बिबुधांस्तपसान्वितः
मतङ्गः सुसुखं प्रेप्सुः स्थानं सुचरितादपि २२
तं तथा तपसा युक्तमुवाच हरिवाहनः
मतङ्ग तप्यसे किं त्वं भोगानुत्सृज्य मानुषान् २३
वरं ददानि ते हन्त वृणीष्व त्वं यदिच्छसि
यच्चाप्यवाप्यमन्यत्ते सर्वं प्रब्रूहि माचिरम् २४
मतङ्ग उवाच
ब्राह्मण्यं कामयानोऽहमिदमारब्धवांस्तपः
गच्छेयं तदवाप्येह वर एष वृतो मया २५
एतच्छ्रुत्वा तु वचनं तमुवाच पुरंदरः
ब्राह्मण्यं प्रार्थयानस्त्वमप्राप्यमकृतात्मभिः २६
श्रेष्ठं यत्सर्वभूतेषु तपो यन्नातिवर्तते
तदग्र्यं प्रार्थयानस्त्वमचिराद्विनशिष्यसि २७
देवतासुरमर्त्येषु यत्पवित्रं परं स्मृतम्
चण्डालयोनौ जातेन न तत्प्राप्यं कथंचन २८

इति श्रीमहाभारते अनुशासनपर्वणि अष्टाविंशोऽध्यायः २८

## एकोनत्रिंशोऽध्यायः

भीष्म उवाच
एवमुक्तो मतङ्गस्तु संशितात्मा यतव्रतः
अतिष्ठदेकपादेन वर्षाणां शतमच्युत १
तमुवाच ततः शक्रः पुनरेव महायशाः
मतङ्ग परमं स्थानं प्रार्थयन्नतिदुर्लभम् २
मा कृथाः साहसं पुत्र नैष धर्मपथस्तव
अप्राप्यं प्रार्थयानो हि नचिराद्विनशिष्यसि ३
मतङ्ग परमं स्थानं वार्यमाणो मया सकृत्

चिकीर्षस्येव तपसा सर्वथा न भविष्यसि ४
तिर्यग्योनिगतः सर्वो मानुष्यं यदि गच्छति
स जायते पुल्कसो वा चण्डालो वा कदाचन ५
पुंश्चलः पापयोनिर्वा यः कश्चिदिह लक्ष्यते
स तस्यामेव सुचिरं मतङ्ग परिवर्तते ६
ततो दशगुणे काले लभते शूद्रतामपि
शूद्रयोनावपि ततो बहुशः परिवर्तते ७
ततस्त्रिंशद्गुणे काले लभते वैश्यतामपि
वैश्यतायां चिरं कालं तत्रैव परिवर्तते ८
ततः षष्टिगुणे काले राजन्यो नाम जायते
राजन्यत्वे चिरं कालं तत्रैव परिवर्तते ९
ततः षष्टिगुणे काले लभते ब्रह्मबन्धुताम्
ब्रह्मबन्धुश्चिरं कालं तत्रैव परिवर्तते १०
ततस्तु द्विशते काले लभते काण्डपृष्ठताम्
काण्डपृष्ठश्चिरं कालं तत्रैव परिवर्तते ११
ततस्तु त्रिशते काले लभते द्विजतामपि
तां च प्राप्य चिरं कालं तत्रैव परिवर्तते १२
ततश्चतुःशते काले श्रोत्रियो नाम जायते
श्रोत्रियत्वे चिरं कालं तत्रैव परिवर्तते १३
तदैव क्रोधहर्षौ च कामद्वेषौ च पुत्रक
अतिमानातिवादौ तमाविशन्ति द्विजाधमम् १४
तांश्चेज्जयति शत्रून्स तदा प्राप्नोति सद्गतिम्
अथ ते वै जयन्त्येनं तालाग्रादिव पात्यते १५
मतङ्ग संप्रधार्यैतद्यदहं त्वामचूचुदम्
वृणीष्व काममन्यं त्वं ब्राह्मण्यं हि सुदुर्लभम् १६
इति श्रीमहाभारते अनुशासनपर्वणि एकोनत्रिंशोऽध्यायः २९

त्रिंशोऽध्यायः

भीष्म उवाच
एवमुक्तो मतङ्गस्तु भृशं शोकपरायणः

अतिष्ठत गयां गत्वा सोऽङ्गुष्ठेन शतं समाः १
सुदुष्करं वहन्योगं कृशो धमनिसंततः
त्वगस्थिभूतो धर्मात्मा स पपातेति नः श्रुतम् २
तं पतन्तमभिद्रुत्य परिजग्राह वासवः
वराणामीश्वरो दाता सर्वभूतहिते रतः ३
शक्र उवाच
मतङ्ग ब्राह्मणत्वं ते संवृतं परिपन्थिमिः
पूजयन्सुखमाप्नोति दुःखमाप्नोत्यपूजयन् ४
ब्राह्मणे सर्वभूतानां योगक्षेमः समाहितः
ब्राह्मणेभ्योऽनुतृप्यन्ति पितरो देवतास्तथा ५
ब्राह्मणः सर्वभूतानां मतङ्ग पर उच्यते
ब्राह्मणः कुरुते तद्धि यथा यद्यच्च वाञ्छति ६
बह्वीस्तु संसरन्योनीर्जायमानः पुनः पुनः
पर्याये तात कस्मिंश्चिद्ब्राह्मण्यमिह विन्दति ७
मतङ्ग उवाच
किं मां तुदसि दुःखार्तं मृतं मारयसे च माम्
तं तु शोचामि यो लब्ध्वा ब्राह्मण्यं न बुभूषते ८
ब्राह्मण्यं यदि दुष्प्रापं त्रिभिर्वर्णैः शतक्रतो
सुदुर्लभं तदावाप्य नानुतिष्ठन्ति मानवाः ९
यः पापेभ्यः पापतमस्तेषामधम एव सः
ब्राह्मण्यं योऽवजानीते धनं लब्ध्वेव दुर्लभम् १०
दुष्प्रापं खलु विप्रत्वं प्राप्तं दुरनुपालनम्
दुरवापमवाप्यैतन्नानुतिष्ठन्ति मानवाः ११
एकारामो ह्यहं शक्र निर्द्वंद्वो निष्परिग्रहः
अहिंसादमदानस्थः कथं नार्हामि विप्रताम् १२
यथाकामविहारी स्यां कामरूपी विहङ्गमः
ब्रह्मक्षत्राविरोधेन पूजां च प्राप्नुयामहम्
यथा ममाक्षया कीर्तिर्भवेच्चापि पुरन्दर १३
इन्द्र उवाच
छन्दोदेव इति ख्यातः स्त्रीणां पूज्यो भविष्यसि १४

भीष्म उवाच
एवं तस्मै वरं दत्त्वा वासवोऽन्तरधीयत
प्राणांस्त्यक्त्वा मतङ्गोऽपि प्राप तत्स्थानमुत्तमम् १५
एवमेतत्परं स्थानं ब्राह्मण्यं नाम भारत
तच्च दुष्प्रापमिह वै महेन्द्रवचनं यथा १६
इति श्रीमहाभारते अनुशासनपर्वणि त्रिंशोऽध्यायः ३०

एकत्रिंशोऽध्यायः
युधिष्ठिर उवाच
श्रुतं मे महदाख्यानमेतत्कुरुकुलोद्वह
सुदुष्प्रापं ब्रवीषि त्वं ब्राह्मण्यं वदतां वर १
विश्वामित्रेण च पुरा ब्राह्मण्यं प्राप्तमित्युत
श्रूयते वदसे तच्च दुष्प्रापमिति सत्तम २
वीतहव्यश्च राजर्षिः श्रुतो मे विप्रतां गतः
तदेव तावद्गाङ्गेय श्रोतुमिच्छाम्यहं विभो ३
स केन कर्मणा प्राप्तो ब्राह्मण्यं राजसत्तम
वरेण तपसा वापि तन्मे व्याख्यातुमर्हति ४
भीष्म उवाच
शृणु राजन्यथा राजा वीतहव्यो महायशाः
क्षत्रियः सन्पुनः प्राप्तो ब्राह्मण्यं लोकसत्कृतम् ५
मनोर्महात्मनस्तात प्रजाधर्मेण शासतः
बभूव पुत्रो धर्मात्मा शर्यातिरिति विश्रुतः ६
तस्यान्ववाये द्वौ राजन्राजानौ संबभूवतुः
हेहयस्तालजङ्घश्च वत्सेषु जयतां वर ७
हेहयस्य तु पुत्राणां दशसु स्त्रीषु भारत
शतं बभूव प्रख्यातं शूराणामनिवर्तिनाम् ८
तुल्यरूपप्रभावाणां विदुषां युद्धशालिनाम्
धनुर्वेदे च वेदे च सर्वत्रैव कृतश्रमाः ९
काशिष्वपि नृपो राजन्दिवोदासपितामहः
हर्यश्च इति विख्यातो बभूव जयतां वरः १०

स वीतहव्यदायादैरागत्य पुरुषर्षभ
गङ्गायमुनयोर्मध्ये संग्रामे विनिपातितः ११
तं तु हत्वा नरवरं हेहयास्ते महारथाः
प्रतिजग्मुः पुरीं रम्यां वत्सानामकुतोभयाः १२
हर्यश्वस्य तु दायादः काशिराजोऽभ्यषिच्यत
सुदेवो देवसंकाशः साक्षाद्धर्म इवापरः १३
स पालयन्नेव महीं धर्मात्मा काशिनन्दनः
तैर्वीतहव्यैरागत्य युधि सर्वैर्विनिर्जितः १४
तमप्याजौ विनिर्जित्य प्रतिजग्मुर्यथागतम्
सौदेविस्त्वथ काशीशो दिवोदासोऽभ्यषिच्यत १५
दिवोदासस्तु विज्ञाय वीर्यं तेषां महात्मनाम्
वाराणसीं महातेजा निर्ममे शक्रशासनात् १६
विप्रक्षत्रियसंबाधां वैश्यशूद्रसमाकुलाम्
नैकद्रव्योच्चयवतीं समृद्धविपणापणाम् १७
गङ्गाया उत्तरे कूले वप्रान्ते राजसत्तम
गोमत्या दक्षिणे चैव शक्रस्येवामरावतीम् १८
तत्र तं राजशार्दूलं निवसन्तं महीपतिम्
आगत्य हेहया भूयः पर्यधावन्त भारत १९
स निष्पत्य ददौ युद्धं तेभ्यो राजा महाबलः
देवासुरसमं घोरं दिवोदासो महाद्युतिः २०
स तु युद्धे महाराज दिनानां दशतीर्दश
हतवाहनभूयिष्ठस्ततो दैन्यमुपागमत् २१
हतयोधस्ततो राजन्क्षीणकोशश्च भूमिपः
दिवोदासः पुरीं हित्वा पलायनपरोऽभवत् २२
स त्वाश्रममुपागम्य भरद्वाजस्य धीमतः
जगाम शरणं राजा कृताञ्जलिररिंदम २३
राजोवाच
भगवन्वैतहव्यैर्मे युद्धे वंशः प्रणाशितः
अहमेकः परिद्यूनो भवन्तः शरणं गतः २४
शिष्यस्नेहेन भगवन्स मां रक्षितुमर्हसि

निःशेषो हि कृतो वंशो मम तैः पापकर्मभिः २५
तमुवाच महाभागो भरद्वाजः प्रतापवान्
न भेतव्यं न भेतव्यं सौदेव व्येतु ते भयम् २६
अहमिष्टिं करोम्यद्य पुत्रार्थं ते विशां पते
वैतहव्यसहस्राणि यथा त्वं प्रसहिष्यसि २७
तत इष्टिं चकारर्षिस्तस्य वै पुत्रकामिकीम्
अथास्य तनयो यज्ञे प्रतर्दन इति श्रुतः २८
स जातमात्रो ववृधे समाः सद्यस्त्रयोदश
वेदं चाधिजगे कृत्स्नं धनुर्वेदं च भारत २९
योगेन च समाविष्टो भरद्वाजेन धीमता
तेजो लौक्यं स संगृह्य तस्मिन्देशे समाविशत् ३०
ततः स कवची धन्वी बाणी दीप्त इवानलः
प्रययौ स धनुर्धुन्वन्विवर्षुरिव तोयदः ३१
तं दृष्ट्वा परमं हर्षं सुदेवतनयो ययौ
मेने च मनसा दग्धान्वैतहव्यान्स पार्थिवः ३२
ततस्तं यौवराज्येन स्थापयित्वा प्रतर्दनम्
कृतकृत्यं तदात्मानं स राजा अभ्यनन्दत ३३
ततस्तु वैतहव्यानां वधाय स महीपतिः
पुत्रः प्रस्थापयामास प्रतर्दनमरिंदमम् ३४
सरथः स तु संतीर्य गङ्गामाशु पराक्रमी
प्रययौ वीतहव्यानां पुरीं परपुरंजयः ३५
वैतहव्यास्तु संश्रुत्य रथघोषं समुद्धतम्
निर्ययुर्नगराकारै रथैः पररथारुजैः ३६
निष्क्रम्य ते नरव्याघ्रा दंशिताश्चित्रयोधिनः
प्रतर्दनं समाजघ्नुः शरवर्षैरुदायुधाः ३७
अस्त्रैश्च विविधाकारै रथौघैश्च युधिष्ठिर
अभ्यवर्षन्त राजानं हिमवन्तमिवाम्बुदाः ३८
अस्त्रैरस्त्राणि संवार्य तेषां राजा प्रतर्दनः
जघान तान्महातेजा वज्रानलसमैः शरैः ३९
कृत्तोत्तमाङ्गास्ते राजन्भल्लैः शतसहस्रशः

अपतन्रुधिरार्द्राङ्गा निकृत्ता इव किंशुकाः ४०
हतेषु तेषु सर्वेषु वीतहव्यः सुतेष्वथ
प्राद्रवन्नगरं हित्वा भृगोराश्रममप्युत ४१
ययौ भृगुं च शरणं वीतहव्यो नराधिपः
अभयं च ददौ तस्मै राज्ञे राजन्भृगुस्तथा
ततो ददावासनं च तस्मै शिष्यो भृगोस्तदा ४२
अथानुपदमेवाशु तत्रागच्छत्प्रतर्दनः
स प्राप्य चाश्रमपदं दिवोदासात्मजोऽब्रवीत् ४३
भो भोः केऽत्राश्रमे सन्ति भृगोः शिष्या महात्मनः
द्रष्टुमिच्छे मुनिमहं तस्याचक्षत मामिति ४४
स तं विदित्वा तु भृगुर्निश्चक्रामाश्रमात्तदा
पूजयामास च ततो विधिना परमेण ह ४५
उवाच चैनं राजेन्द्र किं कार्यमिति पार्थिवम्
स चोवाच नृपस्तस्मै यदागमनकारणम् ४६
अयं ब्रह्मन्नितो राजा वीतहव्यो विसर्ज्यताम्
अस्य पुत्रैर्हि मे ब्रह्मन्कृत्स्नो वंशः प्रणाशितः
उत्सादितश्च विषयः काशीनां रत्नसंचयः ४७
एतस्य वीर्यदृप्तस्य हतं पुत्रशतं मया
अस्येदानीं वधाद्ब्रह्मन्भविष्याम्यनृतः पितुः ४८
तमुवाच कृपाविष्टो भृगुर्धर्मभृतां वरः
नेहास्ति क्षत्रियः कश्चित्सर्वे हीमे द्विजातयः ४९
एवं तु वचनं श्रुत्वा भृगोस्तथ्यं प्रतर्दनः
पादावुपस्पृश्य शनैः प्रहसन्वाक्यमब्रवीत् ५०
एवमप्यस्मि भगवन्कृतकृत्यो न संशयः
यदेष राजा वीर्येण स्वजातिं त्याजितो मया ५१
अनुजानीहि मां ब्रह्मन्ध्यायस्व च शिवेन माम्
त्याजितो हि मया जातिमेष राजा भृगूद्वह ५२
ततस्तेनाभ्यनुज्ञातो ययौ राजा प्रतर्दनः
यथागतं महाराज मुक्त्वा विषमिवोरगः ५३
भृगोर्वचनमात्रेण स च ब्रह्मर्षितां गतः

वीतहव्यो महाराज ब्रह्मवादित्वमेव च ५४
तस्य गृत्समदः पुत्रो रूपेणेन्द्र इवापरः
शक्रस्त्वमिति यो दैत्यैर्निगृहीतः किलाभवत् ५५
ऋग्वेदे वर्तते चाग्र्या श्रुतिरत्र विशां पते
यत्र गृत्समदो ब्रह्मन्ब्राह्मणैः स महीयते ५६
स ब्रह्मचारी विप्रर्षिः श्रीमान्गृत्समदोऽभवत्
पुत्रो गृत्समदस्यापि सुचेता अभवद्द्विजः ५७
वर्चाः सुतेजसः पुत्रो विहव्यस्तस्य चात्मजः
विहव्यस्य तु पुत्रस्तु वितत्यस्तस्य चात्मजः ५८
वितत्यस्य सुतः सत्यः सन्तः सत्यस्य चात्मजः
श्रवास्तस्य सुतश्चर्षिः श्रवसश्चाभवत्तमः ५९
तमसश्च प्रकाशोऽभूत्तनयो द्विजसत्तमः
प्रकाशस्य च वागिन्द्रो बभूव जयतां वरः ६०
तस्यात्मजश्च प्रमतिर्वेदवेदाङ्गपारगः
घृताच्यां तस्य पुत्रस्तु रुरुर्नामोदपद्यत ६१
प्रमद्वरायां तु रुरोः पुत्रः समुदपद्यत
शुनको नाम विप्रर्षिर्यस्य पुत्रोऽथ शौनकः ६२
एवं विप्रत्वमगमद्वीतहव्यो नराधिपः
भृगोः प्रसादाद्राजेन्द्र क्षत्रियः क्षत्रियर्षभ ६३
तथैव कथितो वंशो मया गार्त्समदस्तव
विस्तरेण महाराज किमन्यदनुपृच्छसि ६४
इति श्रीमहाभारते अनुशासनपर्वणि एकत्रिंशत्तमोऽध्यायः ३१

## द्वात्रिंशत्तमोऽध्यायः

युधिष्ठिर उवाच
के पूज्याः के नमस्कार्या मानवैर्भरतर्षभ
विस्तरेण तदाचक्ष्व न हि तृप्यामि कथ्यताम् १
भीष्म उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
नारदस्य च संवादं वासुदेवस्य चोभयोः २

नारदं प्राञ्जलिं दृष्ट्वा पूजयानं द्विजर्षभान्
केशवः परिपप्रच्छ भगवन्कान्नमस्यसि ३
बहुमानः परः केषु भवतो यान्नमस्यसि
शक्यं चेच्छ्रोतुमिच्छामि ब्रूह्येतद्धर्मवित्तम ४
नारद उवाच
शृणु गोविन्द यानेतान्पूजयाम्यरिमर्दन
त्वत्तोऽन्य कः पुमाँल्लोके श्रोतुमेतदिहार्हति ५
वरुणं वायुमादित्यं पर्जन्यं जातवेदसम्
स्थाणुं स्कन्दं तथा लक्ष्मीं विष्णुं ब्रह्माणमेव च ६
वाचस्पतिं चन्द्रमसमपः पृथ्वद्यं सरस्वतीम्
सततं ये नमस्यन्ति तान्नमस्याम्यहं विभो ७
तपोधनान्वेदविदो नित्यं वेदपरायणान्
महार्हान्वृष्णिशार्दूल सदा संपूजयाम्यहम् ८
अभुक्त्वा देवकार्याणि कुर्वते येऽविकत्थनाः
संतुष्टाश्च क्षमायुक्तास्तान्नमस्याम्यहं विभो ९
सम्यग्ददति ये चेष्टान्क्षान्ता दान्ता जितेन्द्रियाः
सत्यं धनं क्षितिं गाश्च तान्नमस्यामि यादव १०
ये ते तपसि वर्तन्ते वने मूलफलाशनाः
असंचयाः क्रियावन्तस्तान्नमस्यामि यादव ११
ये भृत्यभरणे सक्ताः सततं चातिथिप्रियाः
भुञ्जते देवशेषाणि तान्नमस्यामि यादव १२
ये वेदं प्राप्य दुर्धर्षा वाग्मिनो ब्रह्मवादिनः
याजनाध्यापने युक्ता नित्यं तान्पूजयाम्यहम् १३
प्रसन्नहृदयाश्चैव सर्वसत्वेषु नित्यशः
आ पृष्ठतापात्स्वाध्याये युक्तास्तान्पूजयाम्यहम् १४
गुरुप्रसादे स्वाध्याये यतन्ते ये स्थिरव्रताः
शुश्रूषवोऽनसूयन्तस्तान्नमस्यामि यादव १५
सुव्रता मुनयो ये च ब्रह्मण्याः सत्यसंगराः
वोढारो हव्यकव्यानां तान्नमस्यामि यादव १६
भैक्ष्यचर्यासु निरताः कृशा गुरुकुलाश्रयाः

निःसुखा निर्धना ये च तान्नमस्यामि यादव १७
निर्ममा निष्प्रतिद्वंद्वा निर्ह्रीका निष्प्रयोजनाः
अहिंसानिरता ये च ये च सत्यव्रता नराः
दान्ताः शमपराश्चैव तान्नमस्यामि केशव १८
देवतातिथिपूजायां प्रसक्ता गृहमेधिनः
कपोतवृत्तयो नित्यं तान्नमस्यामि यादव १९
येषां त्रिवर्गः कृत्येषु वर्तते नोपहीयते
शिष्टाचारप्रवृत्ताश्च तान्नमस्याम्यहं सदा २०
ब्राह्मणास्त्रिषु लोकेषु ये त्रिवर्गमनुष्ठिताः
अलोलुपाः पुण्यशीलास्तान्नमस्यामि केशव २१
अब्भक्षा वायुभक्षाश्च सुधाभक्षाश्च ये सदा
व्रतैश्च विविधैर्युक्तास्तान्नमस्यामि माधव २२
अयोनीनग्नियोनींश्च ब्रह्मयोनींस्तथैव च
सर्वभूतात्मयोनींश्च तान्नमस्याम्यहं द्विजान् २३
नित्यमेतान्नमस्यामि कृष्ण लोककरानृषीन्
लोकज्येष्ठाञ्ज्ञाननिष्ठांस्तमोघ्नाँल्लोकभास्करान् २४
तस्मात्त्वमपि वार्ष्णेय द्विजान्पूजय नित्यदा
पूजिताः पूजनार्हा हि सुखं दास्यन्ति तेऽनघ २५
अस्मिँल्लोके सदा ह्येते परत्र च सुखप्रदाः
त एते मान्यमाना वै प्रदास्यन्ति सुखं तव २६
ये सर्वातिथयो नित्यं गोषु च ब्राह्मणेषु च
नित्यं सत्ये च निरता दुर्गाण्यतितरन्ति ते २७
नित्यं शमपरा ये च तथा ये चानसूयकाः
नित्यं स्वाध्यायिनो ये च दुर्गाण्यतितरन्ति ते २८
सर्वान्देवान्नमस्यन्ति ये  चैकं देवमाश्रिताः
श्रद्दधानाश्च दान्ताश्च दुर्गाण्यतितरन्ति ते २९
तथैव विप्रप्रवरान्नमस्कृत्य यतव्रतान्
भवन्ति ये दानरता दुर्गाण्यतितरन्ति ते ३०
अग्नीनाधाय विधिवत्प्रयता धारयन्ति ये
प्राप्ताः सोमाहुतिं चैव दुर्गाण्यतितरन्ति ते ३१

मातापित्रोर्गुरुषु च सम्यग्वर्तन्ति ये सदा
यथा त्वं वृष्णिशार्दूलेत्युक्त्वैवं विरराम सः ३२
तस्मात्त्वमपि कौन्तेय पितृदेवद्विजातिथीन्
सम्यक्पूजय येन त्वं गतिमिष्टामवाप्स्यसि ३३
इति श्रीमहाभारते अनुशासनपर्वणि द्वात्रिंशत्तमोऽध्यायः ३२

## त्रयस्त्रिंशत्तमोऽध्यायः

युधिष्ठिर उवाच
किं राज्ञः सर्वकृत्यानां गरीयः स्यात्पितामह
किं कुर्वन्कर्म नृपतिरुभौ लोकौ समश्नुते १
भीष्म उवाच
एतद्राज्ञः कृत्यतममभिषिक्तस्य भारत
ब्राह्मणानामनुष्ठानमत्यन्तं सुखमिच्छता
श्रोत्रियान्ब्राह्मणान्वृद्धान्नित्यमेवाभिपूजयेत् २
पौरजानपदांश्चापि ब्राह्मणांश्च बहुश्रुतान्
सान्त्वेन भोगदानेन नमस्कारैस्तथार्चयेत् ३
एतत्कृत्यतमं राज्ञो नित्यमेवेति लक्षयेत्
यथात्मानं यथा पुत्रांस्तथैतान्परिपालयेत् ४
ये चाप्येषां पूज्यतमास्तान्दृढं प्रतिपूजयेत्
तेषु शान्तेषु तद्राष्ट्रं सर्वमेव विराजते ५
ते पूज्यास्ते नमस्कार्यास्ते रक्ष्याः पितरो यथा
तेष्वेव यात्रा लोकस्य भूतानामिव वासवे ६
अभिचारैरुपायैश्च दहेयुरपि तेजसा
निःशेषं कुपिताः कुर्युरुग्राः सत्यपराक्रमाः ७
नान्तमेषां प्रपश्यामि न दिशश्चाप्यपावृताः
कुपिताः समुदीक्षन्ते दावेष्वग्निशिखा इव ८
विद्यन्तेषां साहसिका गुणास्तेषामतीव हि
कूपा इव तृणच्छन्ना विशुद्धा द्यौरिवापरे ९
प्रसह्यकारिणः केचित्कार्पासमृदवोऽपरे
सन्ति चैषामतिशठास्तथान्येऽतितपस्विनः १०

कृषिगोरक्ष्यमप्यन्ये भैक्षमन्येऽप्यनुष्ठिताः
चोराश्चान्येऽनृताश्चान्ये तथान्ये नटनर्तकाः ११
सर्वकर्मसु दृश्यन्ते प्रशान्तेष्वितरेषु च
विविधाचारयुक्ताश्च ब्राह्मणा भरतर्षभ १२
नानाकर्मसु युक्तानां बहुकर्मोपजीविनाम्
धर्मज्ञानां सतां तेषां नित्यमेवानुकीर्तयेत् १३
पितॄणां देवतानां च मनुष्योरगरक्षसाम्
पुरोहिता महाभागा ब्राह्मणा वै नराधिप १४
नैते देवैर्न पितृभिर्न गन्धर्वैर्न राक्षसैः
नासुरैर्न पिशाचैश्च शक्या जेतुं द्विजातयः १५
अदैवं दैवतं कुर्युर्दैवतं चाप्यदैवतम्
यमिच्छेयुः स राजा स्याद्यं द्विष्युः स पराभवेत् १६
परिवादं च ये कुर्युर्ब्राह्मणानामचेतसः
निन्दाप्रशंसाकुशलाः कीर्त्यकीर्तिपरावराः
परिकुप्यन्ति ते राजन्सततं द्विषतां द्विजाः १७
ब्राह्मणा यं प्रशंसन्ति पुरुषः स प्रवर्धते
ब्राह्मणैर्यः पराक्रुष्टः पराभूयात्क्षणाद्धि सः १८
शका यवनकाम्बोजास्तास्ताः क्षत्रियजातयः
वृषलत्वं परिगता ब्राह्मणानामदर्शनात् १९
द्रमिलाश्च कलिङ्गाश्च पुलिन्दाश्चाप्युशीनराः
कौलाः सर्पा माहिषकास्तास्ताः क्षत्रियजातयः २०
वृषलत्वं परिगता ब्राह्मणानामदर्शनात्
श्रेयान्पराजयास्तेभ्यो न जयो जयतां वर २१
यस्तु सर्वमिदं हन्याद्ब्राह्मणं च न तत्समम्
ब्रह्मवध्या महान्दोष इत्याहुः परमर्षयः २२
परिवादो द्विजातीनां न श्रोतव्यः कथंचन
आसीताधोमुखस्तूष्णीं समुत्थाय व्रजेत वा २३
न स जातो जनिष्यो वा पृथिव्यामिह कश्चन
यो ब्राह्मणविरोधेन सुखं जीवितुमुत्सहेत् २४
दुर्ग्रहो मुष्टिना वायुर्दुःस्पर्शः पाणिना शशी

दुर्धरा पृथिवी मूर्ध्ना दुर्जया ब्राह्मणा भुवि २५
इति श्रीमहाभारते अनुशासनपर्वणि त्रयस्त्रिंशत्तमोऽध्यायः ३३

## चतुस्त्रिंशत्तमोऽध्यायः

भीष्म उवाच
ब्राह्मणानेव सततं भृशं संप्रतिपूजयेत्
एते हि सोमराजान ईश्वराः सुखदुःखयोः १
एते भोगैरलंकारैरन्यैश्चैव किमिच्छकैः
सदा पूज्या नमस्कार्या रक्ष्याश्च पितृवन्नृपैः
अतो राष्ट्रस्य शान्तिर्हि भूतानामिव वासवात् २
जायतां ब्रह्मवर्चस्वी राष्ट्रे वै ब्राह्मणः शुचिः
महारथश्च राजन्य एष्टव्यः शत्रुतापनः ३
ब्राह्मणं जातिसंपन्नं धर्मज्ञं संशितव्रतम्
वासयेत गृहे राजन्न तस्मात्परमस्ति वै ४
ब्राह्मणेभ्यो हविर्दत्तं प्रतिगृह्णन्ति देवताः
पितरः सर्वभूतानां नैतेभ्यो विद्यते परम् ५
आदित्यश्चन्द्रमा वायुर्भूमिरापोऽम्बरं दिशः
सर्वे ब्राह्मणमाविश्य सदान्नमुपभुञ्जते ६
न तस्याश्नन्ति पितरो यस्य विप्रा न भुञ्जते
देवाश्चाप्यस्य नाश्नन्ति पापस्य ब्राह्मणद्विषः ७
ब्राह्मणेषु तु तुष्टेषु प्रीयन्ते पितरः सदा
तथैव देवता राजन्नात्र कार्या विचारणा ८
तथैव तेऽपि प्रीयन्ते येषां भवति तद्धविः
न च प्रेत्य विनश्यन्ति गच्छन्ति परमां गतिम् ९
येन येनैव हविषा ब्राह्मणांस्तर्पयेन्नरः
तेन तेनैव प्रीयन्ते पितरो देवतास्तथा १०
ब्राह्मणादेव तद्भूतं प्रभवन्ति यतः प्रजाः
यतश्चायं प्रभवति प्रेत्य यत्र च गच्छति ११
वेदैष मार्गं स्वर्गस्य तथैव नरकस्य च
आगतानागते चोभे ब्राह्मणो द्विपदां वरः

ब्राह्मणो भरतश्रेष्ठ स्वधर्मं वेद मेधया १२
ये चैनमनुवर्तन्ते ते न यान्ति पराभवम्
न ते प्रेत्य विनश्यन्ति गच्छन्ति न पराभवम् १३
ये ब्राह्मणमुखात्प्राप्तं प्रतिगृह्णन्ति वै वचः
कृतात्मानो महात्मानस्ते न यान्ति पराभवम् १४
क्षत्रियाणां प्रतपतां तेजसा च बलेन च
ब्राह्मणेष्वेव शाम्यन्ति तेजांसि च बलानि च १५
भृगवोऽजयंस्तालजङ्घान्नीपानङ्गिरसोऽजयन्
भरद्वाजो वैतहव्यानैलांश्च भरतर्षभ १६
चित्रायुधांश्चाप्यजयन्नेते कृष्णाजिनध्वजाः
प्रक्षिप्याथ च कुम्भान्वै पारगामिनमारभेत् १७
यत्किंचित्कथ्यते लोके श्रूयते पश्यतेऽपि वा
सर्वं तद्ब्राह्मणेष्वेव गूढोऽग्निरिव दारुषु १८
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
संवादं वासुदेवस्य पृथ्व्याश्च भरतर्षभ १९
वासुदेव उवाच
मातरं सर्वभूतानां पृच्छे त्वा संशयं शुभे
केनस्वित्कर्मणा पापं व्यपोहति नरो गृही २०
पृथिव्युवाच
ब्राह्मणानेव सेवेत पवित्रं ह्येतदुत्तमम्
ब्राह्मणान्सेवमानस्य रजः सर्वं प्रणश्यति २१
अतो भूतिरतः कीर्तिरतो बुद्धिः प्रजायते
अपरेषां परेषां च परेभ्यश्चैव ये परे २२
ब्राह्मणा यं प्रशंसन्ति पुरुषः स प्रवर्धते
अथ यो ब्राह्मणाक्रुष्टः पराभवति सोऽचिरात् २३
यथा महार्णवे क्षिप्त आमलोष्टो विनश्यति
तथा दुश्चरितं कर्म पराभावाय कल्पते २४
पश्य चन्द्रे कृतं लक्ष्म समुद्रे लवणोदकम्
तथा भगसहस्रेण महेन्द्रं परिचिह्नितम् २५
तेषामेव प्रभावेन सहस्रनयनो ह्यसौ

शतक्रतुः समभवत्पश्य माधव यादृशम् २६
इच्छन्भूतिं च कीर्तिं च लोकांश्च मधुसूदन
ब्राह्मणानुमते तिष्ठेत्पुरुषः शुचिरात्मवान् २७
इत्येतद्वचनं श्रुत्वा मेदिन्या मधुसूदनः
साधु साध्वित्यथेत्युक्त्वा मेदिनीं प्रत्यपूजयत् २८
एतां श्रुत्वोपमां पार्थ प्रयतो ब्राह्मणर्षभान्
सततं पूजयेथास्त्वं ततः श्रेयोऽभिपत्स्यसे २९
इति श्रीमहाभारते अनुशासनपर्वणि चतुस्त्रिंशत्तमोऽध्यायः ३४

पञ्चत्रिंशत्तमोऽध्यायः

भीष्म उवाच
जन्मनैव महाभागो ब्राह्मणो नाम जायते
नमस्यः सर्वभूतानामतिथिः प्रसृताग्रभुक् १
सर्वान्नः सुहृदस्तात ब्राह्मणाः सुमनोमुखाः
गीर्भिर्मङ्गलयुक्ताभिरनुध्यायन्ति पूजिताः २
सर्वान्नो द्विषतस्तात ब्राह्मणा जातमन्यवः
गीर्भिर्दारुणयुक्ताभिरभिहन्युरपूजिताः ३
अत्र गाथा ब्रह्मगीताः कीर्तयन्ति पुराविदः
सृष्ट्वा द्विजातीन्धाता हि यथापूर्वं समादधत् ४
न वोऽन्यदिह कर्तव्यं किंचिदूर्ध्वं यथाविधि
गुप्ता गोपायत ब्रह्म श्रेयो वस्तेन शोभनम् ५
स्वमेव कुर्वतां कर्म श्रीर्वो ब्राह्मी भविष्यति
प्रमाणं सर्वभूतानां प्रग्रहं च गमिष्यथ ६
न शौद्रं कर्म कर्तव्यं ब्राह्मणेन विपश्चिता
शौद्रं हि कुर्वतः कर्म धर्मः समुपरुध्यते ७
श्रीश्च बुद्धिश्च तेजश्च विभूतिश्च प्रतापिनी
स्वाध्यायेनैव माहात्म्यं विमलं प्रतिपत्स्यथ ८
हुत्वा चाहवनीयस्थं महाभाग्ये प्रतिष्ठिताः
अग्रभोज्याः प्रसूतीनां श्रिया ब्राह्म्यनुकल्पिताः ९
श्रद्धया परया युक्ता ह्यनभिद्रोहलब्धया

दमस्वाध्यायनिरताः सर्वान्कामानवाप्स्यथ १०
यच्चैव मानुषे लोके यच्च देवेषु किंचन
सर्वं तत्तपसा साध्यं ज्ञानेन विनयेन च ११
इत्येता ब्रह्मगीतास्ते समाख्याता मयानघ
विप्रानुकम्पार्थमिदं तेन प्रोक्तं हि धीमता १२
भूयस्तेषां बलं मन्ये यथा राज्ञस्तपस्विनः
दुरासदाश्च चण्डाश्च रभसाः क्षिप्रकारिणः १३
सन्त्येषां सिंहसत्त्वाश्च व्याघ्रसत्त्वास्तथापरे
वराहमृगसत्त्वाश्च गजसत्त्वास्तथापरे १४
कर्पासमृदवः केचित्तथान्ये मकरस्पृशः
विभाष्यघातिनः केचित्तथा चक्षुर्हणोऽपरे १५
सन्ति चाशीविषनिभाः सन्ति मन्दास्तथापरे
विविधानीह वृत्तानि ब्राह्मणानां युधिष्ठिर १६
मेकला द्रमिडाः काशाः पौण्ड्राः कोल्लगिरास्तथा
शौण्डिका दरदा दर्वाश्चौराः शबरबर्बराः १७
किराता यवनाश्चैव तास्ताः क्षत्रियजातयः
वृषलत्वमनुप्राप्ता ब्राह्मणानामदर्शनात् १८
ब्राह्मणानां परिभवादसुराः सलिलेशयाः
ब्राह्मणानां प्रसादाच्च देवाः स्वर्गनिवासिनः १९
अशक्यं स्प्रष्टुमाकाशमचाल्यो हिमवान्गिरिः
अवार्या सेतुना गङ्गा दुर्जया ब्राह्मणा भुवि २०
न ब्राह्मणविरोधेन शक्या शास्तुं वसुंधरा
ब्राह्मणा हि महात्मानो देवानामपि देवताः २१
तान्पूजयस्व सततं दानेन परिचर्यया
यदीच्छसि महीं भोक्तुमिमां सागरमेखलाम् २२
प्रतिग्रहेण तेजो हि विप्राणां शाम्यतेऽनघ
प्रतिग्रहं ये नेच्छेयुस्तेऽपि रक्ष्यास्त्वयानघ २३
इति श्रीमहाभारते अनुशासनपर्वणि पञ्चत्रिंशत्तमोऽध्यायः ३५

षट्त्रिंशत्तमोऽध्यायः

भीष्म उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
शक्रशम्बरसंवादं तन्निबोध युधिष्ठिर १
शक्रो ह्यज्ञातरूपेण जटी भूत्वा रजोरुणः
विरूपं रूपमास्थाय प्रश्नं पप्रच्छ शम्बरम् २
केन शम्बर वृत्तेन स्वजात्यानधितिष्ठसि
श्रेष्ठं त्वां केन मन्यन्ते तन्मे प्रब्रूहि पृच्छतः ३
शम्बर उवाच
नासूयामि सदा विप्रान्ब्रह्माणं च पितामहम्
शास्त्राणि वदतो विप्रान्संमन्यामि यथासुखम् ४
श्रुत्वा च नावजानामि नापराध्यामि कर्हिचित्
अभ्यर्च्याननुपृच्छामि पादौ गृह्णामि धीमताम् ५
ते विश्रब्धाः प्रभाषन्ते संयच्छन्ति च मां सदा
प्रमत्तेष्वप्रमत्तोऽस्मि सदा सुप्तेषु जागृमि ६
ते मा शास्त्रपथे युक्तं ब्रह्मण्यमनसूयकम्
समासिञ्चन्ति शास्तारः क्षौद्रं मध्विव मक्षिकाः ७
यच्च भाषन्ति ते तुष्टास्तत्तद्गृह्णामि मेधया
समाधिमात्मनो नित्यमनुलोममचिन्तयन् ८
सोऽह वागग्रसृष्टानां रसानामवलेहकः
स्वजात्यानधितिष्ठामि नक्षत्राणीव चन्द्रमाः ९
एतत्पृथिव्याममृतमेतच्चक्षुरनुत्तमम्
यद्ब्राह्मणमुखाच्छास्त्रमिह श्रुत्वा प्रवर्तते १०
एतत्कारणमाज्ञाय दृष्ट्वा देवासुरं पुरा
युद्धं पिता मे हृष्टात्मा विस्मिताः प्रत्यपद्यत ११
दृष्ट्वा च ब्राह्मणानां तु महिमानं महात्मनाम्
पर्यपृच्छत्कथमिमे सिद्धा इति निशाकरम् १२
सोम उवाच
ब्राह्मणास्तपसा सर्वे सिध्यन्ते वाग्बलाः सदा
भुजवीर्या हि राजानो वागस्त्राश्च द्विजातयः १३

प्रवसन्वाप्यधीयीत बह्वीर्दुर्वसतीर्वसन्
निर्मन्युरपि निर्मानो यतिः स्यात्समदर्शनः १४
अपि चेज्ज्ञातिसंपन्नः सर्वान्वेदान्पितुर्गृहे
श्लाघमान इवाधीयेद्ग्राम्य इत्येव तं विदुः १५
भूमिरेतौ निगिरति सर्पो बिलशयानिव
राजानं चाप्ययोद्धारं ब्राह्मणं चाप्रवासिनम् १६
अतिमानः श्रियं हन्ति पुरुषस्याल्पमेधसः
गर्भेण दुष्यते कन्या गृहवासेन च द्विजः १७
इत्येतन्मे पिता श्रुत्वा सोमाददद्भुतदर्शनात्
ब्राह्मणान्पूजयामास तथैवाहं महाव्रतान् १८
भीष्म उवाच
श्रुत्वैतद्वचनं शक्रो दानवेन्द्रमुखाच्च्युतम्
द्विजान्संपूजयामास महेन्द्रत्वमवाप च १९
इति श्रीमहाभारते अनुशासनपर्वणि षट्त्रिंशोऽध्यायः ३६

सप्तत्रिंशोऽध्यायः

युधिष्ठिर उवाच
अपूर्वं वा भवेत्पात्रमथ वापि चिरोषितम्
दूरादभ्यागतं वापि किं पात्रं स्यात्पितामह १
भीष्म उवाच
क्रिया भवति केषांचिदुपांशुव्रतमुत्तमम्
यो यो याचेत यत्किंचित्सर्वं दद्याम इत्युत २
अपीडयन्भृत्यवर्गमित्येवमनुशुश्रुम
पीडयन्भृत्यवर्गं हि आत्मानमपकर्षति ३
अपूर्वं वापि यत्पात्रं यच्चापि स्याच्चिरोषितम्
दूरादभ्यागतं चापि तत्पात्रं च विदुर्बुधाः ४
युधिष्ठिर उवाच
अपीडया च भृत्यानां धर्मस्याहिंसया तथा
पात्रं विद्याम तत्त्वेन यस्मै दत्तं न संतपेत् ५
भीष्म उवाच

ऋत्विक्पुरोहिताचार्याः शिष्याः संबन्धिबान्धवाः
सर्वे पूज्याश्च मान्याश्च श्रुतवृत्तोपसंहिताः ६
अतोऽन्यथा वर्तमानाः सर्वे नार्हन्ति सत्क्रियाम्
तस्मान्नित्यं परीक्षेत पुरुषान्प्रणिधाय वै ७
अक्रोधः सत्यवचनमहिंसा दम आर्जवम्
अद्रोहो नातिमानश्च ह्रीस्तितिक्षा तपः शमः ८
यस्मिन्नेतानि दृश्यन्ते न चाकार्याणि भारत
भावतो विनिविष्टानि तत्पात्रं मानमर्हति ९
तथा चिरोषितं चापि संप्रत्यागतमेव च
अपूर्वं चैव पूर्वं च तत्पात्रं मानमर्हति १०
अप्रामाण्यं च वेदानां शास्त्राणां चातिलङ्घनम्
सर्वत्र चानवस्थानमेतन्नाशनमात्मनः ११
भवेत्पण्डितमानी यो ब्राह्मणो वेदनिन्दकः
आन्वीक्षिकीं तर्कविद्यामनुरक्तो निरर्थिकाम् १२
हेतुवादान्ब्रुवन्सत्सु विजेताहेतुवादिकः
आक्रोष्टा चातिवक्ता च ब्राह्मणानां सदैव हि १३
सर्वाभिशङ्की मूढश्च बालः कटुकवागपि
बोद्धव्यस्तादृशस्तात नरश्वानं हि तं विदुः १४
यथा श्वा भषितुं चैव हन्तुं चैवावसृज्यते
एवं संभाषणार्थाय सर्वशास्त्रवधाय च
अल्पश्रुताः कुतर्काश्च दृष्टाः स्पृष्टाः कुपण्डिताः १५
श्रुतिस्मृतीतिहासादि पुराणारण्यवेदिनः
अनुरुन्ध्याद्बहुज्ञांश्च सारज्ञांश्चैव पण्डितान् १६
लोकयात्रा च द्रष्टव्या धर्मश्चात्महितानि च
एवं नरो वर्तमानः शाश्वतीरेधते समाः १७
ऋणमुन्मुच्य देवानामृषीणां च तथैव च
पितॄणामथ विप्राणामतिथीनां च पञ्चमम् १८
पर्यायेण विशुद्धेन सुनिर्णिक्तेन कर्मणा
एवं गृहस्थः कर्माणि कुर्वन्धर्मान्न हीयते १९
इति श्रीमहाभारते अनुशासनपर्वणि सप्तत्रिंशत्तमोऽध्यायः ३७

## अ्रष्टत्रिंशत्तमोऽध्यायः

युधिष्ठिर उवाच
स्त्रीणां स्वभावमिच्छामि श्रोतुं भरतसत्तम
स्त्रियो हि मूलं दोषाणां लघुचित्ताः पितामह १
भीष्म उवाच
अ्रत्राप्युदाहरन्तीममितिहासं पुरातनम्
नारदस्य च संवादं पुंश्चल्या पञ्चचूडया २
लोकाननुचरन्धीमान्देवर्षिर्नारदः पुरा
ददर्शाप्सरसं ब्राह्मीं पञ्चचूडामनिन्दिताम् ३
तां दृष्ट्वा चारुसर्वाङ्गीं पप्रच्छाप्सरसं मुनिः
संशयो हृदि मे कश्चित्तन्मे ब्रूहि सुमध्यमे ४
एवमुक्ता तु सा विप्रं प्रत्युवाचाथ नारदम्
विषये सति वक्ष्यामि समर्थां मन्यसे तु माम् ५
नारद उवाच
न त्वामविषये भद्रे नियोक्ष्यामि कथंचन
स्त्रीणां स्वभावमिच्छामि त्वत्तः श्रोतुं वरानने ६
भीष्म उवाच
एतच्छ्रुत्वा वचस्तस्य देवर्षेरप्सरोत्तमा
प्रत्युवाच न शक्ष्यामि स्त्री सती निन्दितुं स्त्रियः ७
विदितास्ते स्त्रियो याश्च यादृशाश्च स्वभावतः
न मामर्हसि देवर्षे नियोक्तुं प्रश्न ईदृशे ८
तामुवाच स देवर्षिः सत्यं वद सुमध्यमे
मृषावादे भवेद्दोषः सत्ये दोषो न विद्यते ९
इत्युक्ता सा कृतमतिरभवच्चारुहासिनी
स्त्रीदोषाञ्शाश्वतान्सत्यान्भाषितुं संप्रचक्रमे १०
पञ्चचूडोवाच
कुलीना रूपवत्यश्च नाथवत्यश्च योषितः
मर्यादासु न तिष्ठन्ति स दोषः स्त्रीषु नारद ११
न स्त्रीभ्यः किंचिदन्यद्वै पापीयस्तरमस्ति वै
स्त्रियो हि मूलं दोषाणां तथा त्वमपि वेत्थ ह १२

समाज्ञातानृद्धिमतः प्रतिरूपान्वशे स्थितान्
पतीनन्तरमासाद्य नालं नार्यः प्रतीक्षितुम् १३
असद्धर्मस्त्वयं स्त्रीणामस्माकं भवति प्रभो
पापीयसो नरान्यद्वै लज्जां त्यक्त्वा भजामहे १४
स्त्रियं हि यः प्रार्थयते संनिकर्षं च गच्छति
ईषच्च कुरुते सेवां तमेवेच्छन्ति योषितः १५
अनर्थित्वान्मनुष्याणां भयात्परिजनस्य च
मर्यादायाममर्यादाः स्त्रियस्तिष्ठन्ति भर्तृषु १६
नासां कश्चिदगम्योऽस्ति नासां वयसि संस्थितिः
विरूपं रूपवन्तं वा पुमानित्येव भुञ्जते १७
न भयान्नाप्यनुक्रोशान्नार्थहेतोः कथंचन
न ज्ञातिकुलसंबन्धात्स्त्रियस्तिष्ठन्ति भर्तृषु १८
यौवने वर्तमानानां मृष्टाभरणवाससाम्
नारीणां स्वैरवृत्तानां स्पृहयन्ति कुलस्त्रियः १९
याश्च शश्वद्बहुमता रक्ष्यन्ते दयिताः स्त्रियः
अपि ताः संप्रसज्जन्ते कुब्जान्धजडवामनैः २०
पङ्गुष्वपि च देवर्षे ये चान्ये कुत्सिता नराः
स्त्रीणामगम्यो लोकेऽस्मिन्नास्ति कश्चिन्महामुने २१
यदि पुंसां गतिर्ब्रह्मन् कथंचिन्नोपपद्यते
अप्यन्योन्यं प्रवर्तन्ते न हि तिष्ठन्ति भर्तृषु २२
अलाभात्पुरुषाणां हि भयात्परिजनस्य च
वधबन्धभयाच्चापि स्वयं गुप्ता भवन्ति ताः २३
चलस्वभावा दुःसेव्या दुर्ग्राह्या भावतस्तथा
प्राज्ञस्य पुरुषस्येह यथा वाचस्तथा स्त्रियः २४
नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः
नान्तकः सर्वभूतानां न पुंसां वामलोचनाः २५
इदमन्यच्च देवर्षे रहस्यं सर्वयोषिताम्
दृष्ट्वैव पुरुषं हृद्यं योनिः प्रक्लिद्यते स्त्रियः २६
कामानामपि दातारं कर्तारं मानसान्त्वयोः
रक्षितारं न मृष्यन्ति भर्तारं परमं स्त्रियः २७

न कामभोगान्बहुलान्नालंकारार्थसंचयान्
तथैव बहु मन्यन्ते यथा रत्यामनुग्रहम् २८
अन्तकः शमनो मृत्युः पातालं वडवामुखम्
क्षुरधारा विषं सर्पो वह्निरित्येकतः स्त्रियः २९
यतश्च भूतानि महान्ति पञ्च यतश्च लोका विहिता विधात्रा
यतः पुमांसः प्रमदाश्च निर्मितास्तदैव दोषाः प्रमदासु नारद ३०
इति श्रीमहाभारते अनुशासनपर्वणि अष्टत्रिंशत्तमोऽध्यायः ३८

## एकोनचत्वारिंशत्तमोऽध्यायः

युधिष्ठिर उवाच
इमे वै मानवा लोके स्त्रीषु सज्जन्त्यभीक्ष्णशः
मोहेन परमाविष्टा दैवादिष्टेन पार्थिव
स्त्रियश्च पुरुषेष्वेव प्रत्यक्षं लोकसाक्षिकम् १
अत्र मे संशयस्तीव्रो हृदि संपरिवर्तते
कथमासां नराः सङ्गं कुर्वते कुरुनन्दन
स्त्रियो वा तेषु रज्यन्ते विरज्यन्तेऽथ वा पुनः २
इति ताः पुरुषव्याघ्र कथं शक्याः स्म रक्षितुम्
प्रमदाः पुरुषेणेह तन्मे व्याख्यातुमर्हसि ३
एता हि मयमायाभिर्वञ्चयन्तीह मानवान्
न चासां मुच्यते कश्चित्पुरुषो हस्तमागतः
गावो नवतृणानीव गृह्णन्त्येता नवान्नवान् ४
शम्बरस्य च या माया या माया नमुचेरपि
बलेः कुम्भीनसेश्चैव सर्वास्ता योषितो विदुः ५
हसन्तं प्रहसन्त्येता रुदन्तं प्ररुदन्ति च
अप्रियं प्रियवाक्यैश्च गृह्णते कालयोगतः ६
उशना वेद यच्छास्त्रं यच्च वेद बृहस्पतिः
स्त्रीबुद्ध्या न विशिष्येते ताः स्म रक्ष्याः कथं नरैः ७
अनृतं सत्यमित्याहुः सत्यं चापि तथानृतम्
इति यास्ताः कथं वीर संरक्ष्याः पुरुषैरिह ८
स्त्रीणां बुद्ध्युपनिष्कर्षादर्थशास्त्राणि शत्रुहन्

बृहस्पतिप्रभृतिभिर्मन्ये सद्भिः कृतानि वै ९
संपूज्यमानाः पुरुषैर्विकुर्वन्ति मनो नृषु
अपास्ताश्च तथा राजन्विकुर्वन्ति मनः स्त्रियः १०
कस्ताः शक्तो रक्षितुं स्यादिति मे संशयो महान्
तन्मे ब्रूहि महाबाहो कुरूणां वंशवर्धन ११
यदि शक्या कुरुश्रेष्ठ रक्षा तासां कथंचन
कर्तुं वा कृतपूर्वा वा तन्मे व्याख्यातुमर्हसि १२
इति श्रीमहाभारते अनुशासनपर्वणि एकोनचत्वारिंशत्तमोऽध्यायः ३९

## चत्वारिंशत्तमोऽध्यायः

भीष्म उवाच
एतमेतन्महाबाहो नात्र मिथ्यास्ति किंचन
यथा ब्रवीषि कौरव्य नारीं प्रति जनाधिप १
अत्र ते वर्तयिष्यामि इतिहासं पुरातनम्
यथा रक्षा कृता पूर्वं विपुलेन महात्मना २
प्रमदाश्च यथा सृष्टा ब्रह्मणा भरतर्षभ
यदर्थं तच्च ते तात प्रवक्ष्ये वसुधाधिप ३
न हि स्त्रीभ्य परं पुत्र पापीयः किंचिदस्ति वै
अग्निर्हि प्रमदा दीप्तो मायाश्च मयजा विभो
क्षुरधारा विषं सर्पो मृत्युरित्येकतः स्त्रियः ४
इमाः प्रजा महाबाहो धार्मिका इति नः श्रुतम्
स्वयं गच्छन्ति देवत्वं ततो देवानियाद्भयम् ५
अथाभ्यगच्छन्देवास्ते पितामहमरिंदम
निवेद्य मानसं चापि तूष्णीमासन्नवाङ्मुखाः ६
तेषामन्तर्गतं ज्ञात्वा देवानां स पितामहः
मानवानां प्रमोहार्थं कृत्या नार्योऽसृजत्प्रभुः ७
पूर्वसर्गे तु कौन्तेय साध्व्यो नार्य इहाभवन्
असाध्व्यस्तु समुत्पन्ना कृत्या सर्गात्प्रजापतेः ८
ताभ्यः कामान्यथाकामं प्रादाद्धि स पितामहः
ताः कामलुब्धाः प्रमदाः प्रामथ्नन्त नंस्तदा ९

क्रोधं कामस्य देवेशः सहायं चासृजत्प्रभुः
असज्जन्त प्रजाः सर्वाः कामक्रोधवशं गताः १०
न च स्त्रीणां क्रिया काचिदिति धर्मो व्यवस्थितः
निरिन्द्रिया अमन्त्राश्च स्त्रियोऽनृतमिति श्रुतिः ११
शय्यासनमलंकारमन्नपानमनार्यताम्
दुर्वाग्भावं रतिं चैव ददौ स्त्रीभ्यः प्रजापतिः १२
न तासां रक्षणं कर्तुं शक्यं पुंसा कथंचन
अपि विश्वकृता तात कुतस्तु पुरुषैरिह १३
वाचा वा वधबन्धैर्वा क्लेशैर्वा विविधैस्तथा
न शक्या रक्षितुं नार्यस्ता हि नित्यमसंयताः १४
इदं तु पुरुषव्याघ्र पुरस्ताच्छ्रुतवानहम्
यथा रक्षा कृता पूर्वं विपुलेन गुरुस्त्रियः १५
ऋषिरासीन्महाभागो देवशर्मेति विश्रुतः
तस्य भार्या रुचिर्नाम रूपेणासदृशी भुवि १६
तस्या रूपेण संमत्ता देवगन्धर्वदानवाः
विशेषतस्तु राजेन्द्र वृत्रहा पाकशासनः १७
नारीणां चरितज्ञश्च देवशर्मा महामुनिः
यथाशक्ति यथोत्साहं भार्यां तामभ्यरक्षत १८
पुरंदरं च जानीते परस्त्रीकामचारिणम्
तस्माद्यत्नेन भार्याया रक्षणं स चकार ह १९
स कदाचिदृषिस्तात यज्ञं कर्तुमनास्तदा
भार्यासंरक्षणं कार्यं कथं स्यादित्यचिन्तयत् २०
रक्षाविधानं मनसा स विचिन्त्य महातपाः
आहूय दयितं शिष्यं विपुलं प्राह भार्गवम् २१
यज्ञकारो गमिष्यामि रुचिं चेमां सुरेश्वरः
पुत्र प्रार्थयते नित्यं तां रक्षस्व यथाबलम् २२
अप्रमत्तेन ते भाव्यं सदा प्रति पुरंदरम्
स हि रूपाणि कुरुते विविधानि भृगूद्वह २३
इत्युक्तो विपुलस्तेन तपस्वी नियतेन्द्रियः
सदैवोग्रतपा राजन्नग्न्यर्कसदृशद्युतिः २४

धर्मज्ञः सत्यवादी च तथेति प्रत्यभाषत
पुनश्चेदं महाराज पप्रच्छ प्रस्थितं गुरुम् २५
कानि रूपाणि शक्रस्य भवन्त्यागच्छतो मुने
वपुस्तेजश्च कीदृग्वै तन्मे व्याख्यातुमर्हसि २६
ततः स भगवांस्तस्मै विपुलाय महात्मने
आचचक्षे यथातत्त्वं मायां शक्रस्य भारत २७
बहुमायः स विप्रर्षे बलहा पाकशासनः
तांस्तान्विकुरुते भावान्बहूनथ मुहुर्मुहुः २८
किरीटी वज्रभृद्धन्वी मुकुटी बद्धकुण्डलः
भवत्यथ मुहूर्तेन चण्डालसमदर्शनः २९
शिखी जटी चीरवासाः पुनर्भवति पुत्रक
बृहच्छरीरश्च पुनः पीवरोऽथ पुनः कृशः ३०
गौरं श्यामं च कृष्णं च वर्णं विकुरुते पुनः
विरूपो रूपवांश्चैव युवा वृद्धस्तथैव च ३१
प्राज्ञो जडश्च मूकश्च ह्रस्वो दीर्घस्तथैव च
ब्राह्मणः क्षत्रियश्चैव वैश्यः शूद्रस्तथैव च
प्रतिलोमानुलोमश्च भवत्यथ शतक्रतुः ३२
शुकवायसरूपी च हंसकोकिलरूपवान्
सिंहव्याघ्रगजानां च रूपं धायरते पुनः ३३
दैवं दैत्यमथो राज्ञां वपुर्धारयतेऽपि च
सुकृशो वायुभग्नाङ्गः शकुनिर्विकृतस्तथा ३४
चतुष्पाद्बहुरूपश्च पुनर्भवति बालिशः
मक्षिकामशकादीनां वपुर्धारयतेऽपि च ३५
न शक्यमस्य ग्रहणं कर्तुं विपुल केनचित्
अपि विश्वकृता तात येन सृष्टमिदं जगत् ३६
पुनरन्तर्हितः शक्रो दृश्यते ज्ञानचक्षुषा
वायुभूतश्च स पुनर्देवराजो भवत्युत ३७
एवं रूपाणि सततं कुरुते पाकशासनः
तस्माद्विपुल यत्नेन रक्षेमां तनुमध्यमाम् ३८
यथा रुचिं नावलिहेद्देवेन्द्रो भृगुसत्तम

क्रतावुपहितं न्यस्तं हविः श्वेव दुरात्मवान् ३९
एवमाख्याय स मुनिर्यज्ञकारोऽगमत्तदा
देवशर्मा महाभागस्ततो भरतसत्तम ४०
विपुलस्तु वचः श्रुत्वा गुरोश्चिन्तापरोऽभवत्
रक्षां च परमां चक्रे देवराजान्महाबलात् ४१
किं नु शक्यं मया कर्तुं गुरुदाराभिरक्षणे
मायावी हि सुरेन्द्रोऽसौ दुर्धर्षश्चापि वीर्यवान् ४२
नापिधायाश्रमं शक्यो रक्षितुं पाकशासनः
उटजं वा तथा ह्यस्य नानाविधसरूपता ४३
वायुरूपेण वा शक्रो गुरुपत्नीं प्रधर्षयेत्
तस्मादिमां संप्रविश्य रुचिं स्थास्येऽहमद्य वै ४४
अथ वा पौरुषेणेयमशक्या रक्षितुं मया
बहुरूपो हि भगवाञ्छ्रूयते हरिवाहनः ४५
सोऽह योगबलादेनां रक्षिष्ये पाकशासनात्
गात्राणि गात्रैरस्याहं संप्रवेक्ष्येऽभिरक्षितुम् ४६
यद्युच्छिष्टामिमां पत्नीं रुचिं पश्येत मे गुरुः
शप्स्यत्यसंशयं कोपाद्दिव्यज्ञानो महातपाः ४७
न चेयं रक्षितुं शक्या यथान्या प्रमदा नृभिः
मायावी हि सुरेन्द्रोऽसावहो प्राप्तोऽस्मि संशयम् ४८
अवश्यकरणीयं हि गुरोरिह हि शासनम्
यदि त्वेतदहं कुर्यामाश्चर्यं स्यात्कृतं मया ४९
योगेनानुप्रविश्येह गुरुपत्न्याः कलेवरम्
निर्मुक्तस्य रजोरूपान्नापराधो भवेन्मम ५०
यथा हि शून्यां पथिकः सभामध्यावसेत्पथि
तथाद्यावासयिष्यामि गुरुपत्न्याः कलेवरम् ५१
असक्तः पद्मपत्रस्थो जलबिन्दुर्यथा चलः
एवमेव शरीरेऽस्या निवत्स्यामि समाहितः ५२
इत्येवं धर्ममालोक्य वेदवेदांश्च सर्वशः
तपश्च विपुलं दृष्ट्वा गुरोरात्मन एव च ५३
इति निश्चित्य मनसा रक्षां प्रति स भार्गवः

आतिष्ठत्परमं यत्नं यथा तच्छृणु पार्थिव ५४
गुरुपत्नीमुपासीनो विपुलः स महातपाः
उपासीनामनिन्द्याङ्गीं कथाभिः समलोभयत् ५५
नेत्राभ्यां नेत्रयोरस्या रश्मीन्संयोज्य रश्मिभिः
विवेश विपुलः कायमाकाशं पवनो यथा ५६
लक्षणं लक्षणेनैव वदनं वदनेन च
अविचेष्टन्नतिष्ठद्वै छायेवान्तर्गतो मुनिः ५७
ततो विष्टभ्य विपुलो गुरुपत्न्याः कलेवरम्
उवास रक्षणे युक्तो न च सा तमबुध्यत ५८
यं कालं नागतो राजन्गुरुस्तस्य महात्मनः
क्रतुं समाप्य स्वगृहं तं कालं सोऽभ्यरक्षत ५९
इति श्रीमहाभारते अनुशासनपर्वणि चत्वारिंशोऽध्यायः ४०

## एकचत्वारिंशोऽध्यायः

भीष्म उवाच
ततः कदाचिद्देवेन्द्रो दिव्यरूपवपुर्धरः
इदमन्तरमित्येवं ततोऽभ्यागादथाश्रमम् १
रूपमप्रतिमं कृत्वा लोभनीयं जनाधिप
दर्शनीयतमो भूत्वा प्रविवेश तमाश्रमम् २
स ददर्श तमासीनं विपुलस्य कलेवरम्
निश्चेष्टं स्तब्धनयनं यथालेख्यगतं तथा ३
रुचिं च रुचिरापाङ्गीं पीनश्रोणिपयोधराम्
पद्मपत्रविशालाक्षीं संपूर्णेन्दुनिभाननाम् ४
सा तमालोक्य सहसा प्रत्युत्थातुमियेष ह
रूपेण विस्मिता कोऽसीत्यथ वक्तुमिहेच्छती ५
उत्थातुकामापि सती व्यतिष्ठद्विपुलेन सा
निगृहीता मनुष्येन्द्र न शशाक विचेष्टितुम् ६
तामाबभाषे देवेन्द्रः साम्ना परमवल्गुना
त्वदर्थमागतं विद्धि देवेन्द्रं मां शुचिस्मिते ७
क्लिश्यमानमनङ्गेन त्वत्संकल्पोद्भवेन वै

तत्पर्याप्नुहि मां सुभ्रु पुरा कालोऽतिवर्तते ८
तमेवंवादिनं शक्रं शुश्राव विपुलो मुनिः
गुरुपत्न्याः शरीरस्थो ददर्श च सुराधिपम् ९
न शशाक च सा राजन्प्रत्युत्थातुमनिन्दिता
वक्तुं च नाशकद्राजन्विष्टब्धा विपुलेन सा १०
आकारं गुरुपत्न्यास्तु विज्ञाय स भृगूद्वहः
निजग्राह महातेजा योगेन बलवत्प्रभो
बबन्ध योगबन्धैश्च तस्याः सर्वेन्द्रियाणि सः ११
तां निर्विकारां दृष्ट्वा तु पुनरेव शचीपतिः
उवाच व्रीडितो राजंस्तां योगबलमोहिताम् १२
एह्येहीति ततः सा तं प्रतिवक्तुमियेष च
स तां वाचं गुरोः पत्न्या विपुलः पर्यवर्तयत् १३
भोः किमागमने कृत्यमिति तस्याश्च निःसृता
वक्त्राच्छशाङ्कप्रतिमाद्वाणी संस्कारभूषिता १४
व्रीडिता सा तु तद्वाक्यमुक्त्वा परवशा तदा
पुरंदरश्च संत्रस्तो बभूव विमनास्तदा १५
स तद्वैकृतमालक्ष्य देवराजो विशां पते
अवैक्षत सहस्राक्षस्तदा दिव्येन चक्षुषा १६
ददर्श च मुनिं तस्याः शरीरान्तरगोचरम्
प्रतिबिम्बमिवादर्शे गुरुपत्न्याः शरीरगम् १७
स तं घोरेण तपसा युक्तं दृष्ट्वा पुरंदरः
प्रावेपत सुसंत्रस्तः शापभीतस्तदा विभो १८
विमुच्य गुरुपत्नीं तु विपुलः सुमहातपाः
स्वं कलेवरमाविश्य शक्रं भीतमथाब्रवीत् १९
अजितेन्द्रिय पापात्मन्कामात्मक पुरंदर
न चिरं पूजयिष्यन्ति देवास्त्वां मानुषास्तथा २०
किं नु तद्विस्मृतं शक्र न तन्मनसि ते स्थितम्
गौतमेनासि यन्मुक्तो भगाङ्कपरिचिह्नितः २१
जाने त्वां बालिशमतिमकृतात्मानमस्थिरम्
मयेयं रक्ष्यते मूढ गच्छ पाप यथागतम् २२

नाहं त्वामद्य मूढात्मन्दहेयं हि स्वतेजसा
कृपायमाणस्तु न ते दग्धुमिच्छामि वासव २३
स च घोरतपा धीमान्गुरुर्मे पापचेतसम्
दृष्ट्वा त्वां निर्दहेदद्य क्रोधदीप्तेन चक्षुषा २४
नैवं तु शक्र कर्तव्यं पुनर्मान्याश्च ते द्विजाः
मा गमः ससुतामात्योऽत्ययं ब्रह्मबलार्दितः २५
अमरोऽस्मीति यद्बुद्धिमेतामास्थाय वर्तसे
मावमंस्था न तपसामसाध्यं नाम किंचन २६
तच्छ्रुत्वा वचनं शक्रो विपुलस्य महात्मनः
अकिंचिदुक्त्वा व्रीडितस्तत्रैवान्तरधीयत २७
मुहूर्तयाते शक्रे तु देवशर्मा महातपाः
कृत्वा यज्ञं यथाकाममाजगाम स्वमाश्रमम् २८
आगतेऽथ गुरौ राजन्विपुलः प्रियकर्मकृत्
रक्षितां गुरवे भार्यां न्यवेदयदनिन्दिताम् २९
अभिवाद्य च शान्तात्मा स गुरुं गुरुवत्सलः
विपुलः पर्युपातिष्ठद्यथापूर्वमशङ्कितः ३०
विश्रान्ताय ततस्तस्मै सहासीनाय भार्यया
निवेदयामास तदा विपुलः शक्रकर्म तत् ३१
तच्छ्रुत्वा स मुनिस्तुष्टो विपुलस्य प्रतापवान्
बभूव शीलवृत्ताभ्यां तपसा नियमेन च ३२
विपुलस्य गुरौ वृत्तिं भक्तिमात्मनि च प्रभुः
धर्मे च स्थिरतां दृष्ट्वा साधु साध्वित्युवाच ह ३३
प्रतिनन्द्य च धर्मात्मा शिष्यं धर्मपरायणम्
वरेण च्छन्दयामास स तस्माद्गुरुवत्सलः
अनुज्ञातश्च गुरुणा चचारानुत्तमं तपः ३४
तथैव देवशर्मापि सभार्यः स महातपाः
निर्भयो बलवृत्रघ्नाच्चचार विजने वने ३५
इति श्रीमहाभारते अनुशासनपर्वणि एकचत्वारिंशोऽध्यायः ४१

## द्विचत्वारिंशोऽध्यायः

भीष्म उवाच
विपुलस्त्वकरोत्तीव्रं तपः कृत्वा गुरोर्वचः
तपोयुक्तमथात्मानममन्यत च वीर्यवान् १
स तेन कर्मणा स्पर्धन्पृथिवीं पृथिवीपते
चचार गतभीः प्रीतो लब्धकीर्तिर्वरो नृषु २
उभौ लोकौ जितौ चापि तथैवामन्यत प्रभुः
कर्मणा तेन कौरव्य तपसा विपुलेन च ३
अथ काले व्यतिक्रान्ते कस्मिंश्चित्कुरुनन्दन
रुच्या भगिन्या दानं वै बभूव धनधान्यवत् ४
एतस्मिन्नेव काले तु दिव्या काचिद्वराङ्गना
बिभ्रती परमं रूपं जगामाथ विहायसा ५
तस्याः शरीरात्पुष्पाणि पतितानि महीतले
तस्याश्रमस्याविदुरे दिव्यगन्धानि भारत ६
तान्यगृह्णात्ततो राजन्रुचिर्नलिनलोचना
तदा निमन्त्रकस्तस्या अङ्गेभ्यः क्षिप्रमागमत् ७
तस्या हि भगिनी तात ज्येष्ठा नाम्ना प्रभावती
भार्या चित्ररथस्याथ बभूवाङ्गेश्वरस्य वै ८
पिनह्य तानि पुष्पाणि केशेषु वरवर्णिनी
आमन्त्रिता ततोऽगच्छद्रुचिरङ्गपतेर्गृहान् ९
पुष्पाणि तानि दृष्ट्वाथ तदाङ्गेन्द्रवराङ्गना
भगिनीं चोदयामास पुष्पार्थे चारुलोचना १०
सा भर्त्रे सर्वमाचष्ट रुचिः सुरुचिरानना
भगिन्या भाषितं सर्वमृषिस्तच्चाभ्यनन्दत ११
ततो विपुलमानाय्य देवशर्मा महातपाः
पुष्पार्थे चोदयामास गच्छ गच्छेति भारत १२
विपुलस्तु गुरोर्वाक्यमविचार्य महातपाः
स तथेत्यब्रवीद्राजंस्तं च देशं जगाम ह १३
यस्मिन्देशे तु तान्यासन्पतितानि नभस्तलात्
अम्लानान्यपि तत्रासन्कुसुमान्यपराण्यपि १४

ततः स तानि जग्राह दिव्यानि रुचिराणि च
प्राप्तानि स्वेन तपसा दिव्यगन्धानि भारत १५
संप्राप्य तानि प्रीतात्मा गुरोर्वचनकारकः
ततो जगाम तूर्णं च चम्पां चम्पकमालिनीम् १६
स वने विजने तात ददर्श मिथुनं नृणाम्
चक्रवत्परिवर्तन्तं गृहीत्वा पाणिना करम् १७
तत्रैकस्तूर्णमगमत्तत्पदे परिवर्तयन्
एकस्तु न तथा राजंश्चक्रतुः कलहं ततः १८
त्वं शीघ्रं गच्छसीत्येकोऽब्रवीन्नेति तथापरः
नेति नेति च तौ तात परस्परमथोचतुः १९
तयोर्विस्पर्धतोरेवं शपथोऽयमभूत्तदा
मनसोद्दिश्य विपुलं ततो वाक्यमथोचतुः २०
आवयोरनृतं प्राह यस्तस्याथ द्विजस्य वै
विपुलस्य परे लोके या गतिः सा भवेदिति २१
एतच्छ्रुत्वा तु विपुलो विषण्णवदनोऽभवत्
एवं तीव्रतपाश्चाहं कष्टश्चायं परिग्रहः २२
मिथुनस्यास्य किं मे स्यात्कृतं पापं यतो गतिः
अनिष्टा सर्वभूतानां कीर्तितानेन मेऽद्य वै २३
एवं संचिन्तयन्नेव विपुलो राजसत्तम
अवाङ्मुखो न्यस्तशिरा दध्यौ दुष्कृतमात्मनः २४
ततः षडन्यान्पुरुषानक्षैः काञ्चनराजतैः
अपश्यद्दीव्यमानान्वै लोभहर्षान्वितांस्तथा २५
कुर्वतः शपथं तं वै यः कृतो मिथुनेन वै
विपुलं वै समुद्दिश्य तेऽपि वाक्यमथाब्रुवन् २६
यो लोभमास्थायास्माकं विषमं कर्तुमुत्सहेत्
विपुलस्य परे लोके या गतिस्तामवाप्नुयात् २७
एतच्छ्रुत्वा तु विपुलो नापश्यद्धर्मसंकरम्
जन्मप्रभृति कौरव्य कृतपूर्वमथात्मनः २८
स प्रदध्यौ तदा राजन्नग्नावग्निरिवाहितः
दह्यमानेन मनसा शापं श्रुत्वा तथाविधम् २९

तस्य चिन्तयतस्तात बह्व्यो दिननिशा ययुः
इदमासीन्मनसि च रुच्या रक्षणकारितम् ३०
लक्षणं लक्षणेनैव वदनं वदनेन च
विधाय न मया चोक्तं सत्यमेतद्गुरोस्तदा ३१
एतदात्मनि कौरव्य दुष्कृतं विपुलस्तदा
अमन्यत महाभाग तथा तच्च न संशयः ३२
स चम्पां नगरीमेत्य पुष्पाणि गुरवे ददौ
पूजयामास च गुरुं विधिवत्स गुरुप्रियः ३३
इति श्रीमहाभारते अनुशासनपर्वणि द्विचत्वारिंशोऽध्यायः ४२

## त्रिचत्वारिंशोऽध्यायः

भीष्म उवाच
तमागतमभिप्रेक्ष्य शिष्यं वाक्यमथाब्रवीत्
देवशर्मा महातेजा यत्तच्छृणु नराधिप १
देवशर्मोवाच
किं ते विपुल दृष्टं वै तस्मिन्नद्य महावने
ते त्वा जानन्ति निपुण आत्मा च रुचिरेव च २
विपुल उवाच
ब्रह्मर्षे मिथुनं किं तत्के च ते पुरुषा विभो
ये मां जानन्ति तत्त्वेन तांश्च मे वक्तुमर्हसि ३
देवशर्मोवाच
यद्वै तन्मिथुनं ब्रह्मन्नहोरात्रं हि विद्धि तत्
चक्रवत्परिवर्तेत तत्ते जानाति दुष्कृतम् ४
ये च ते पुरुषा विप्र अक्षैर्दीव्यन्ति हृष्टवत्
ऋतूंस्तानभिजानीहि ते ते जानन्ति दुष्कृतम् ५
न मां कश्चिद्विजानीत इति कृत्वा न विश्वसेत्
नरो रहसि पापात्मा पापकं कर्म वै द्विज ६
कुर्वाणं हि नरं कर्म पापं रहसि सर्वदा
पश्यन्ति ऋतवश्चापि तथा दिननिशेऽप्युत ७
ते त्वां हर्षस्मितं दृष्ट्वा गुरोः कर्मानिवेदकम्

स्मारयन्तस्तथा प्राहुस्ते यथा श्रुतवान्भवान् ८
अहोरात्रं विजानाति ऋतवश्चापि नित्यशः
पुरुषे पापकं कर्म शुभं वा शुभकर्मणः ९
तत्त्वया मम यत्कर्म व्यभिचाराद्भयात्मकम्
नाख्यातमिति जानन्तस्ते त्वामाहुस्तथा द्विज १०
ते चैव हि भवेयुस्ते लोकाः पापकृतो यथा
कृत्वा नाचक्षतः कर्म मम यच्च त्वया कृतम् ११
तथा शक्या च दुर्वृत्ता रक्षितुं प्रमदा द्विज
न च त्वं कृतवान्किंचिदागः प्रीतोऽस्मि तेन ते १२
यदि त्वहं त्वा दुर्वृत्तमद्राक्षं द्विजसत्तम
शपेयं त्वामहं क्रोधान्न मेऽत्रास्ति विचारणा १३
सज्जन्ति पुरुषे नार्यः पुंसां सोऽथश्च पुष्कलः
अन्यथा रक्षतः शापोऽभविष्यत्ते गतिश्च सा १४
रक्षिता सा त्वया पुत्र मम चापि निवेदिता
अहं ते प्रीतिमांस्तात स्वस्ति स्वर्गं गमिष्यसि १५
भीष्म उवाच
इत्युक्त्वा विपुलं प्रीतो देवशर्मा महानृषिः
मुमोद स्वर्गमास्थाय सहभार्यः सशिष्यकः १६
इदमाख्यातवांश्चापि ममाख्यानं महामुनिः
मार्कण्डेयः पुरा राजन्गङ्गाकूले कथान्तरे १७
तस्माद्ब्रवीमि पार्थ त्वा स्त्रियः सर्वाः सदैव च
उभयं दृश्यते तासु सततं साध्वसाधु च १८
स्त्रियः साध्व्यो महाभागाः संमता लोकमातरः
धारयन्ति महीं राजन्निमां सवनकाननाम् १९
असाध्व्यश्चापि दुर्वृत्ताः कुलघ्न्यः पापनिश्चयाः
विज्ञेया लक्षणैर्दुष्टैः स्वगात्रसहजैर्नृप २०
एवमेतासु रक्षा वै शक्या कर्तुं महात्मभिः
अन्यथा राजशार्दूल न शक्या रक्षितुं स्त्रियः २१
एता हि मनुजव्याघ्र तीक्ष्णास्तीक्ष्णपराक्रमाः
नासामस्ति प्रियो नाम मैथुने संगमे नृभिः २२

एताः कृत्याश्च कार्याश्च कृताश्च भरतर्षभ
न चैकस्मिन्नमन्त्येताः पुरुषे पाण्डुनन्दन २३
नासु स्नेहो नृभिः कार्यस्तथैवेर्ष्या जनेश्वर
खेदमास्थाय भुञ्जीत धर्ममास्थाय चैव हि २४
विहन्येतान्यथा कुर्वन्नरः कौरवनन्दन
सर्वथा राजशार्दूल युक्तिः सर्वत्र पूज्यते २५
तेनैकेन तु रक्षा वै विपुलेन कृता स्त्रियाः
नान्यः शक्तो नृलोकेऽस्मिन्रक्षितुं नृप योषितः २६
इति श्रीमहाभारते अनुशासनपर्वणि त्रिचत्वारिंशोऽध्यायः ४३

## चतुश्चत्वारिंशोऽध्यायः

युधिष्ठिर उवाच
यन्मूलं सर्वधर्माणां प्रजनस्य गृहस्य च
पितृदेवातिथीनां च तन्मे ब्रूहि पितामह १
भीष्म उवाच
अयं हि सर्वधर्माणां धर्मश्चिन्त्यतमो मतः
कीदृशाय प्रदेया स्यात्कन्येति वसुधाधिप २
शीलवृत्ते समाज्ञाय विद्यां योनिं च कर्म च
सद्भिरेव प्रदातव्या कन्या गुणवते वरे
ब्राह्मणानां सतामेष धर्मो नित्यं युधिष्ठिर ३
आवाह्यमावहेदेवं यो दद्यादनुकूलतः
शिष्टानां क्षत्रियाणां च धर्म एष सनातनः ४
आत्माभिप्रेतमुत्सृज्य कन्याभिप्रेत एव यः
अभिप्रेता च या यस्य तस्मै देया युधिष्ठिर
गान्धर्वमिति तं धर्मं प्राहुर्धर्मविदो जनाः ५
धनेन बहुना क्रीत्वा संप्रलोभ्य च बान्धवान्
असुराणां नृपैतं वै धर्ममाहुर्मनीषिणः ६
हित्वा छित्त्वा च शीर्षाणि रुदतां रुदतीं गृहात्
प्रसह्य हरणं तात राक्षसं धर्मलक्षणम् ७
पञ्चानां तु त्रयो धर्म्या द्वावधर्म्यौ युधिष्ठिर

पैशाच आसुरश्चैव न कर्तव्यौ कथंचन ८
ब्राह्मः क्षात्रोऽथ गान्धर्व एते धर्म्या नरर्षभ
पृथग्वा यदि वा मिश्राः कर्तव्या नात्र संशयः ९
तिस्रो भार्या ब्राह्मणस्य द्वे भार्ये क्षत्रियस्य तु
वैश्यः स्वजातिं विन्देत तास्वपत्यं समं भवेत् १०
ब्राह्मणी तु भवेज्ज्येष्ठा क्षत्रिया क्षत्रियस्य तु
रत्यर्थमपि शूद्रा स्यान्नेत्याहुरपरे जनाः ११
अपत्यजन्म शूद्रायां न प्रशंसन्ति साधवः
शूद्रायां जनयन्विप्रः प्रायश्चित्ती विधीयते १२
त्रिंशद्वर्षो दशवर्षां भार्यां विन्देत नग्निकाम्
एकविंशतिवर्षो वा सप्तवर्षामवाप्नुयात् १३
यस्यास्तु न भवेद्भ्राता पिता वा भरतर्षभ
नोपयच्छेत तां जातु पुत्रिकाधर्मिणी हि सा १४
त्रीणि वर्षाण्युदीक्षेत कन्या ऋतुमती सती
चतुर्थे त्वथ संप्राप्ते स्वयं भर्तारमर्जयेत् १५
प्रजनो हीयते तस्या रतिश्च भरतर्षभ
अतोऽन्यथा वर्तमाना भवेद्वाच्या प्रजापतेः १६
असपिण्डा च या मातुरसगोत्रा च या पितुः
इत्येतामनुगच्छेत तं धर्मं मनुरब्रवीत् १७
युधिष्ठिर उवाच
शुल्कमन्येन दत्तं स्याद्ददानीत्याह चापरः
बलादन्यः प्रभाषेत धनमन्यः प्रदर्शयेत् १८
पाणिग्रहीता त्वन्यः स्यात्कस्य कन्या पितामह
तत्वं जिज्ञासमानानां चक्षुर्भवतु नो भवान् १९
भीष्म उवाच
यत्किंचित्कर्म मानुष्यं संस्थानाय प्रकृष्यते
मन्त्रवन्मन्त्रितं तस्य मृषावादस्तु पातकः २०
भार्यापत्यृत्विगाचार्याः शिष्योपाध्याय एव च
मृषोक्ते दण्डमर्हन्ति नेत्याहुरपरे जनाः २१
न ह्यकामेन संवादं मनुरेवं प्रशंसति

अयशस्यमधर्म्यं च यन्मृषा धर्मकोपनम् २२
नैकान्तदोष एकस्मिंस्तद्दानं नोपलभ्यते
धर्मतो यां प्रयच्छन्ति यां च क्रीणन्ति भारत २३
बन्धुभिः समनुज्ञातो मन्त्रहोमौ प्रयोजयेत्
तथा सिध्यन्ति ते मन्त्रा नादत्तायाः कथंचन २४
यस्त्वत्र मन्त्रसमयो भार्यापत्योर्मिथः कृतः
तमेवाहुर्गरीयांसं यश्चासौ ज्ञातिभिः कृतः २५
देवदत्तां पतिर्भार्यां वेत्ति धर्मस्य शासनात्
सा दैवीं मानुषीं वाचमनृतां पर्युदस्यति २६
युधिष्ठिर उवाच
कन्यायां प्राप्तशुल्कायां ज्यायांश्चेदाव्रजेद्वरः
धर्मकामार्थसंपन्नो वाच्यमत्रानृतं न वा २७
तस्मिन्नुभयतो दोषे कुर्वञ्छ्रेयः समाचरेत्
अयं नः सर्वधर्माणां धर्मश्चिन्त्यतमो मतः २८
तत्त्वं जिज्ञासमानानां चक्षुर्भवतु नो भवान्
तदेतत्सर्वमाचक्ष्व न हि तृप्यामि कथ्यताम् २९
भीष्म उवाच
न वै निष्ठाकरं शुल्कं ज्ञात्वासीत्तेन नाहृतम्
न हि शुल्कपराः सन्तः कन्यां ददति कर्हिचित् ३०
अन्यैर्गुणैरुपेतं तु शुल्कं याचन्ति बान्धवाः
अलंकृत्वा वहस्वेति यो दद्यादनुकूलतः ३१
तच्च तां च ददात्येव न शुल्कं विक्रयो न सः
प्रतिगृह्य भवेद्देयमेष धर्मः सनातनः ३२
दास्यामि भवते कन्यामिति पूर्वं नभाषितम्
ये चैवाहुर्ये च नाहुर्ये चावश्यं वदन्त्युत ३३
तस्मादा ग्रहणात्पाणेर्याचयन्ति परस्परम्
कन्यावरः पुरा दत्तो मरुद्भिरिति नः श्रुतम् ३४
नानिष्टाय प्रदातव्या कन्या इत्यृषिचोदितम्
तन्मूलं काममूलस्य प्रजनस्येति मे मतिः ३५
समीक्ष्य च बहून्दोषान्संवासाद्विद्विषाणयोः

यथा निष्ठाकरं शुल्कं न जात्वासीत्तथा शृणु ३६
अहं विचित्रवीर्याय द्वे कन्ये समुदावहम्
जित्वा च मागधान्सर्वान्काशीनथ च कोसलान्
गृहीतपाणिरेकासीत्प्राप्तशुल्कापराभवत् ३७
पाणौ गृहीता तत्रैव विसृज्या इति मे पिता
अब्रवीदितरां कन्यामावहत्स तु कौरवः ३८
अप्यन्यामनुपप्रच्छ शङ्कमानः पितुर्वचः
अतीव ह्यस्य धर्मेप्सा पितुर्मेऽभ्यधिकाभवत् ३९
ततोऽहमब्रुवं राजन्नाचारेप्सुरिदं वचः
आचारं तत्त्वतो वेत्तुमिच्छामिति पुनः पुनः ४०
ततो मयैवमुक्ते तु वाक्ये धर्मभृतां वरः
पिता मम महाराज बाह्लीको वाक्यमब्रवीत् ४१
यदि वः शुल्कतो निष्ठा न पाणिग्रहणं तथा
लाजान्तरमुपासीत प्राप्तशुल्का पतिं वृतम् ४२
न हि धर्मविदः प्राहुः प्रमाणं वाक्यतः स्मृतम्
येषां वै शुल्कतो निष्ठा न पाणिग्रहणात्तथा ४३
प्रसिद्धं भाषितं दाने तेषां प्रत्ययसनं पुनः
ये मन्यन्ते क्रयं शुल्कं न ते धर्मविदो जनाः ४४
न चैतेभ्यः प्रदातव्या न वोढव्या तथाविधा
न ह्येव भार्या क्रेतव्या न विक्रेया कथंचन ४५
ये च क्रीणन्ति दासीवद्ये च विक्रीणते जनाः
भवेत्तेषां तथा निष्ठा लुब्धानां पापचेतसाम् ४६
अस्मिन्धर्मे सत्यवन्तं पर्यपृच्छन्त वै जनाः
कन्यायाः प्राप्तशुल्कायाः शुल्कदः प्रशमं गतः ४७
पाणिग्रहीता चान्यः स्यादत्र नो धर्मसंशयः
तन्नश्छिन्धि महाप्राज्ञ त्वं हि वै प्राज्ञसंमतः
तत्त्वं जिज्ञासमानानां चक्षुर्भवतु नो भवान् ४८
तानेवं ब्रुवतः सर्वान्सत्यवान्वाक्यमब्रवीत्
यत्रेष्टं तत्र देया स्यान्नात्र कार्या विचारणा
कुर्वते जीवतोऽप्येवं मृते नैवास्ति संशयः ४९

देवरं प्रविशेत्कन्या तप्येद्वापि महत्तपः
तमेवानुव्रता भूत्वा पाणिग्राहस्य नाम सा ५०
लिखन्त्येव तु केषांचिदपरेषां शनैरपि
इति ये संवदन्त्यत्र त एतं निश्चयं विदुः ५१
तत्पाणिग्रहणात्पूर्वमुत्तरं यत्र वर्तते
सर्वमङ्गलमन्त्रं वै मृषावादस्तु पातकः ५२
पाणिग्रहणमन्त्राणां निष्ठा स्यात्सप्तमे पदे
पाणिग्राहस्य भार्या स्याद्यस्य चाद्भिः प्रदीयते ५३
अनुकूलामनुवंशां भ्रात्रा दत्तामुपाग्निकाम्
परिक्रम्य यथान्यायं भार्यां विन्देद्द्विजोत्तमः ५४
इति श्रीमहाभारते अनुशासनपर्वणि चतुश्चत्वारिंशत्तमोऽध्यायः ४४

## पञ्चचत्वारिंशोऽध्यायः

युधिष्ठिर उवाच
कन्यायाः प्राप्तशुल्कायाः पतिश्चेन्नास्ति कश्चन
तत्र का प्रतिपत्तिः स्यात्तन्मे ब्रूहि पितामह १
भीष्म उवाच
या पुत्रकस्याप्यरिक्थस्य प्रतिपत्सा तदा भवेत् २
अथ चेत्साहरेच्छुल्कं क्रीता शुल्कप्रदस्य सा
तस्यार्थेऽपत्यमीहेत येन न्यायेन शक्नुयात् ३
न तस्या मन्त्रवत्कार्यं कश्चित्कुर्वीत किंचन ४
स्वयं वृतेति सावित्री पित्रा वै प्रत्यपद्यत
तत्तस्यान्ये प्रशंसन्ति धर्मज्ञा नेतरे जनाः ५
एतत्तु नापरे चक्रुर्न परे जातु साधवः
साधूनां पुनराचारो गरीयो धर्मलक्षणम् ६
अस्मिन्नेव प्रकरणे सुक्रतुर्वाक्यमब्रवीत्
नप्ता विदेहराजस्य जनकस्य महात्मनः ७
असदाचरिते मार्गे कथं स्यादनुकीर्तनम्
अनुप्रश्नः संशयो वा सतामेतदुपालभेत् ८
असदेव हि धर्मस्य प्रमादो धर्म आसुरः

नानुशुश्रुम जात्वेतामिमां पूर्वेषु जन्मसु ९
भार्यापत्योर्हि संबन्धः स्त्रीपुंसोस्तुल्य एव सः
रतिः साधारणो धर्म इति चाह स पार्थिवः १०
युधिष्ठिर उवाच
अथ केन प्रमाणेन पुंसामादीयते धनम्
पुत्रवद्धि पितुस्तस्य कन्या भवितुमर्हति ११
भीष्म उवाच
यथैवात्मा तथा पुत्रः पुत्रेण दुहिता समा
तस्यामात्मनि तिष्ठन्त्यां कथमन्यो धनं हरेत् १२
मातुश्च यौतकं यत्स्यात्कुमारीभाग एव सः
दौहित्र एव वा रिक्थमपुत्रस्य पितुर्हरेत् १३
ददाति हि स पिण्डं वै पितुर्मातामहस्य च
पुत्रदौहित्रयोर्नेह विशेषो धर्मतः स्मृतः १४
अन्यत्र जातया सा हि प्रजया पुत्र ईहते
दुहितान्यत्र जातेन पुत्रेणापि विशिष्यते १५
दौहित्रकेण धर्मेण नात्र पश्यामि कारणम्
विक्रीतासु च ये पुत्रा भवन्ति पितुरेव ते १६
असूयवस्त्वधर्मिष्ठाः परस्वादायिनः शठाः
आसुरादधिसंभूता धर्माद्विषमवृत्तयः १७
अत्र गाथा यमोद्गीताः कीर्तयन्ति पुराविदः
धर्मज्ञा धर्मशास्त्रेषु निबद्धा धर्मसेतुषु १८
यो मनुष्यः स्वकं पुत्रं विक्रीय धनमिच्छति
कन्यां वा जीवितार्थाय यः शुल्केन प्रयच्छति १९
सप्तावरे महाघोरे निरये कालसाह्वये
स्वेदं मूत्रं पुरीषं च तस्मिन्प्रेत उपाश्नुते २०
आर्षे गोमिथुनं शुल्कं केचिदाहुर्मृषैव तत्
अल्पं वा बहु वा राजन्विक्रयस्तावदेव सः २१
यद्यप्याचरितः कैश्चिन्नैष धर्मः कथंचन
अन्येषामपि दृश्यन्ते लोभतः संप्रवृत्तयः २२
वश्यां कुमारीं विहितां ये च तामुपभुञ्जते

एते पापस्य कर्तारस्तमस्यन्धेऽथ शेरते २३
अन्योऽप्यथ न विक्रेयो मनुष्यः किं पुनः प्रजाः
अधर्ममूलैर्हि धनैर्न तैरर्थोऽस्ति कश्चन २४
इति श्रीमहाभारते अनुशासनपर्वणि पञ्चचत्वारिंशोऽध्यायः ४५

## षट्चत्वारिंशोऽध्यायः

भीष्म उवाच
प्राचेतसस्य वचनं कीर्तयन्ति पुराविदः
यस्याः किंचिन्नाददते ज्ञातयो न स विक्रयः १
अर्हणं तत्कुमारीणामानृशंस्यतमं च तत्
सर्वं च प्रतिदेयं स्यात्कन्यायै तदशेषतः २
पितृभिर्भ्रातृभिश्चैव श्वशुरैरथ देवरैः
पूज्या लालयितव्याश्च बहुकल्याणमीप्सुभिः ३
यदि वै स्त्री न रोचेत पुमांसं न प्रमोदयेत्
अमोदनात्पुनः पुंसः प्रजनं न प्रवर्धते ४
पूज्या लालयितव्याश्च स्त्रियो नित्यं जनाधिप
अपूजिताश्च यत्रैताः सर्वास्तत्राफलाः क्रियाः
तदैव तत्कुलं नास्ति यदा शोचन्ति जामयः ५
जामीशप्तानि गेहानि निकृत्तानीव कृत्यया
नैव भान्ति न वर्धन्ते श्रिया हीनानि पार्थिव ६
स्त्रियः पुंसां परिददे मनुर्जिगमिषुर्दिवम्
अबलाः स्वल्पकौपीनाः सुहृदः सत्यजिष्णवः ७
ईर्ष्यवो मानकामाश्च चण्डा असुहृदोऽबुधाः
स्त्रियो माननमर्हन्ति ता मानयत मानवाः ८
स्त्रीप्रत्ययो हि वो धर्मो रतिभोगाश्च केवलाः
परिचर्यान्नसंस्कारास्तदायत्ता भवन्तु वः ९
उत्पादनमपत्यस्य जातस्य परिपालनम्
प्रीत्यर्थं लोकयात्रा च पश्यत स्त्रीनिबन्धनम् १०
संमान्यमानाश्चैताभिः सर्वकार्याण्यवाप्स्यथ
विदेहराजदुहिता चात्र श्लोकमगायत ११

नास्ति यज्ञः स्त्रियः कश्चिन्न श्राद्धं नोपवासकम्
धर्मस्तु भर्तृशुश्रूषा तया स्वर्गं जयत्युत १२
पिता रक्षति कौमारे भर्ता रक्षति यौवने
पुत्रास्तु स्थविरीभावे न स्त्री स्वातन्त्र्यमर्हति १३
श्रिय एताः स्त्रियो नाम सत्कार्या भूतिमिच्छता
लालीता निगृहीता च स्त्री श्रीर्भवति भारत १४
इति श्रीमहाभारते अनुशासनपर्वणि षट्चत्वारिंशत्तमोऽध्यायः ४६

## सप्तचत्वारिंशत्तमोऽध्यायः

युधिष्ठिर उवाच
सर्वशास्त्रविधानज्ञ राजधर्मार्थवित्तम
अतीव संशयच्छेत्ता भवान्वै प्रथितः क्षितौ १
कश्चित्तु संशयो मेऽस्ति तन्मे ब्रूहि पितामह
अस्यामापदि काष्टायामन्यं पृच्छाम कं वयम् २
यथा नरेण कर्तव्यं यश्च धर्मः सनातनः
एतत्सर्वं महाबाहो भवान्व्याख्यातुमर्हति ३
चतस्रो विहिता भार्या ब्राह्मणस्य पितामह
ब्राह्मणी क्षत्रिया वैश्या शूद्रा च रतिमिच्छतः ४
तत्र जातेषु पुत्रेषु सर्वासां कुरुसत्तम
आनुपूर्व्येण कस्तेषां पित्र्यं दायाद्यमर्हति ५
केन वा किं ततो हार्यं पितृवित्तात्पितामह
एतदिच्छामि कथितं विभागस्तेषु यः स्मृतः ६
भीष्म उवाच
ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः
एतेषु विहितो धर्मो ब्राह्मणस्य युधिष्ठिर ७
वैषम्यादथ वा लोभात्कामाद्वापि परंतप
ब्राह्मणस्य भवेच्छूद्रा न तु  दृष्टान्ततः  न्ततः स्मृता ८
शूद्रां शयनमारोप्य ब्राह्मणः पीडितो भवेत्
प्रायश्चित्तीयते चापि विधिदृष्टेन हेतुना ९
तत्र जातेष्वपत्येषु द्विगुणं स्याद्युधिष्ठिर

अतस्ते नियमं वित्ते संप्रवक्ष्यामि भारत १०
लक्षण्यो गोवृषो यानं यत्प्रधानतमं भवेत्
ब्राह्मण्यास्तद्धरेत्पुत्र एकांशं वै पितुर्धनात् ११
शेषं तु दशधा कार्यं ब्राह्मणस्वं युधिष्ठिर
तत्र तेनैव हर्तव्याश्चत्वारोंऽशा पितुर्धनात् १२
क्षत्रियायास्तु यः पुत्रो ब्राह्मणः सोऽप्यसंशयः
स तु मातृविशेषेण त्रीनंशान्हर्तुमर्हति १३
वर्णे तृतीये जातस्तु वैश्यायां ब्राह्मणादपि
द्विरंशस्तेन हर्तव्यो ब्राह्मणस्वाद्युधिष्ठिर १४
शूद्रायां ब्राह्मणाज्जातो नित्यादेयधनः स्मृतः
अल्पं वापि प्रदातव्यं शूद्रापुत्राय भारत १५
दशधा प्रविभक्तस्य धनस्यैष भवेत्क्रमः
सवर्णासु तु जातानां समान्भागान्प्रकल्पयेत् १६
अब्राह्मणं तु मन्यन्ते शूद्रापुत्रमनैपुणात्
त्रिषु वर्णेषु जातो हि ब्राह्मणाद्ब्राह्मणो भवेत् १७
स्मृता वर्णाश्च चत्वारः पञ्चमो नाधिगम्यते
हरेत्तु दशमं भागं शूद्रापुत्रः पितुर्धनात् १८
तत्तुदत्तं हरेत्पित्रा नादत्तं हर्तुमर्हति
अवश्यं हि धनं देयं शूद्रापुत्राय भारत १९
आनृशंस्यं परो धर्म इति तस्मै प्रदीयते
यत्र तत्र समुत्पन्नो गुणायैवोपकल्पते २०
यदि वाप्येकपुत्रः स्यादपुत्रो यदि वा भवेत्
नाधिकं दशमाद्दद्याच्छूद्रापुत्राय भारत २१
त्रैवार्षिकाद्यदा भक्तादधिकं स्याद्द्विजस्य तु
यजेत तेन द्रव्येण न वृथा साधयेद्धनम् २२
त्रिसाहस्रपरो दायः स्त्रियो देयो धनस्य वै
तच्च भर्ता धनं दत्तं नादत्तं भोक्तुमर्हति २३
स्त्रीणां तु पतिदायाद्यमुपभोगफलं स्मृतम्
नापहारं स्त्रियः कुर्युः पतिवित्तात्कथंचन २४
स्त्रियास्तु यद्भवेद्वित्तं पित्रा दत्तं युधिष्ठिर

ब्राह्मण्यास्तद्धरेत्कन्या यथा पुत्रस्तथा हि सा
सा हि पुत्रसमा राजन्विहिता कुरुनन्दन २५
एवमेतत्समुद्दिष्टं धर्मेषु भरतर्षभ
एतद्धर्ममनुस्मृत्य न वृथा साधयेद्धनम् २६
युधिष्ठिर उवाच
शूद्रायां ब्राह्मणाज्जातो यद्यदेयधनः स्मृतः
केन प्रतिविशेषेण दशमोऽप्यस्य दीयते २७
ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः स्यान्न संशयः
क्षत्रियायां तथैव स्याद्वैश्यायामपि चैव हि २८
कस्मात्ते विषमं भागं भजेरन्नृपसत्तम
यदा सर्वे त्रयो वर्णास्त्वयोक्ता ब्राह्मणा इति २९
भीष्म उवाच
दारा इत्युच्यते लोके नाम्नैकेन परंतप
प्रोक्तेन चैकनाम्नायं विशेषः सुमहान्भवेत् ३०
तिस्रः कृत्वा पुरो भार्याः पश्चाद्विन्देत ब्राह्मणीम्
सा ज्येष्ठा सा च पूज्या स्यात्सा च ताभ्यो गरीयसी ३१
स्नानं प्रसाधनं भर्तुर्दन्तधावनमञ्जनम्
हव्यं कव्यं च यच्चान्यद्धर्मयुक्तं भवेद्गृहे ३२
न तस्यां जातु तिष्ठन्त्यामन्या तत्कर्तुमर्हति
ब्राह्मणी त्वेव तत्कुर्याद्ब्राह्मणस्य युधिष्ठिर ३३
अन्नं पानं च माल्यं च वासांस्याभरणानि च
ब्राह्मण्यै तानि देयानि भर्तुः सा हि गरीयसी ३४
मनुनाभिहितं शास्त्रं यच्चापि कुरुनन्दन
तत्राप्येष महाराज दृष्टो धर्मः सनातनः ३५
अथ चेदन्यथा कुर्याद्यदि कामाद्युधिष्ठिर
यथा ब्राह्मणचण्डालः पूर्वदृष्टस्तथैव सः ३६
ब्राह्मण्याः सदृशः पुत्रः क्षत्रियायाश्च यो भवेत्
राजन्विशेषो नास्त्यत्र वर्णयोरुभयोरपि ३७
न तु जात्या समा लोके ब्राह्मण्याः क्षत्रिया भवेत्
ब्राह्मण्याः प्रथमः पुत्रो भूयान्स्याद्राजसत्तम

भूयोऽपि भूयसा हार्यं पितृवित्ताद्युधिष्ठिर ३८
यथा न सदृशी जातु ब्राह्मरायाः क्षत्रिया भवेत्
क्षत्रियायास्तथा वैश्या न जातु सदृशी भवेत् ३९
श्रीश्च राज्यं च कोशश्च क्षत्रियाणां युधिष्ठिर
विहितं दृश्यते राजन्सागरान्ता च मेदिनी ४०
क्षत्रियो हि स्वधर्मेण श्रियं प्राप्नोति भूयसीम्
राजा दण्डधरो राजन्रक्षा नान्यत्र क्षत्रियात् ४१
ब्राह्मणा हि महाभागा देवानामपि देवताः
तेषु राजा प्रवर्तेत पूजया विधिपूर्वकम् ४२
प्रणीतमृषिभिर्ज्ञात्वा धर्मं शाश्वतमव्ययम्
लुप्यमानाः स्वधर्मेण क्षत्रियो रक्षति प्रजाः ४३
दस्युभिर्ह्रियमाणं च धनं दाराश्च सर्वशः
सर्वेषामेव वर्णानां त्राता भवति पार्थिवः ४४
भूयान्स्यात्क्षत्रियापुत्रो वैश्यापुत्रान्न संशयः
भूयस्तेनापि हर्तव्यं पितृवित्ताद्युधिष्ठिर ४५
युधिष्ठिर उवाच
उक्तं ते विधिवद्राजन्ब्राह्मणस्वे पितामह
इतरेषां तु वार्णानां कथं विनियमो भवेत् ४६
भीष्म उवाच
क्षत्रियस्यापि भार्ये द्वे विहिते कुरुनन्दन
तृतीया च भवेच्छूद्रा न तु दृष्टान्ततः स्मृता ४७
एष एव क्रमो हि स्यात्क्षत्रियाणां युधिष्ठिर
अष्टधा तु भवेत्कार्यं क्षत्रियस्वं युधिष्ठिर ४८
क्षत्रियाया हरेत्पुत्रश्चतुरोंऽशान्पितुर्धनात्
युद्धावहारिकं यच्च पितुः स्यात्स हरेच्च तत् ४९
वैश्यापुत्रस्तु भागांस्त्रीन्शूद्रापुत्रस्तथाष्टमम्
सोऽपि दत्तं हरेत्पित्रा नादत्तं हर्तुमर्हति ५०
एकैव हि भवेद्भार्या वैश्यस्य कुरुनन्दन
द्वितीया वा भवेच्छूद्रा न तु दृष्टान्ततः स्मृता ५१
वैश्यस्य वर्तमानस्य वैश्यायां भरतर्षभ

शूद्रायां चैव कौन्तेय तयोर्विनियमः स्मृतः ५२
पञ्चधा तु भवेत्कार्यं वैश्यस्वं भरतर्षभ
तयोरपत्ये वक्ष्यामि विभागं च जनाधिप ५३
वैश्यापुत्रेण हर्तव्याश्चत्वारोंऽशा पितुर्धनात्
पञ्चमस्तु भवेद्भागः शूद्रापुत्राय भारत ५४
सोऽपि दत्तं हरेत्पित्रा नादत्तं हर्तुमर्हति
त्रिभिर्वर्णैस्तथा जातः शूद्रो देयधनो भवेत् ५५
शूद्रस्य स्यात्सवर्णैव भार्या नान्या कथंचन
शूद्रस्य समभागाः स्याद्यदि पुत्रशतं भवेत् ५६
जातानां समवर्णासु पुत्राणामविशेषतः
सर्वेषामेव वर्णानां समभागो धने स्मृतः ५७
ज्येष्ठस्य भागो ज्येष्ठः स्यादेकांशो यः प्रधानतः
एष दायविधिः पार्थ पूर्वमुक्तः स्वयंभुवा ५८
समवर्णासु जातानां विशेषोऽस्त्यपरो नृप
विवाहवैशेष्यकृतः पूर्वः पूर्वो विशिष्यते ५९
हरेज्ज्येष्ठः प्रधानांशमेकं तुल्यासुतेष्वपि
मध्यमो मध्यमं चैव कनीयांस्तु कनीयसम् ६०
एवं जातिषु सर्वासु सवर्णाः श्रेष्ठतां गताः
महर्षिरपि चैतद्वै मारीचः काश्यपोऽब्रवीत् ६१
इति श्रीमहाभारते अनुशासनपर्वणि सप्तचत्वारिंशोऽध्यायः ४७

## अष्टचत्वारिंशोऽध्यायः

युधिष्ठिर उवाच
अर्थाश्रयाद्वा कामाद्वा वर्णानां वाप्यनिश्चयात्
अज्ञानाद्वापि वर्णानां जायते वर्णसंकरः १
तेषामेतेन विधिना जातानां वर्णसंकरे
को धर्मः कानि कर्माणि तन्मे ब्रूहि पितामह २
भीष्म उवाच
चातुर्वर्ण्यस्य कर्माणि चातुर्वर्ण्यं च केवलम्
असृजत्स ह यज्ञार्थे पूर्वमेव प्रजापतिः ३

भार्याश्चतस्रो विप्रस्य द्वयोरात्मास्य जायते
आनुपूर्व्याद्द्वयोर्हीनौ मातृजात्यौ प्रसूयतः ४
परं शवाद्ब्राह्मणस्यैष पुत्रः शूद्रापुत्रं पारशवं तमाहुः
शुश्रूषकः स्वस्य कुलस्य स स्यात्स्वं चारित्रं नित्यमथो न जह्यात् ५
सर्वानुपायानपि संप्रधार्य समुद्धरेत्स्वस्य कुलस्य तन्तुम्
ज्येष्ठो यवीयानपि यो द्विजस्य शुश्रूषवान्दानपरायणः स्यात् ६
तिस्रः क्षत्रियसंबन्धाद्द्वयोरात्मास्य जायते
हीनवर्णस्तृतीयायां शूद्र उग्र इति स्मृतः ७
द्वे चापि भार्ये वैश्यस्य द्वयोरात्मास्य जायते
शूद्रा शूद्रस्य चाप्येका शूद्रमेव प्रजायते ८
अतो विशिष्टस्त्वधमो गुरुदारप्रधर्षकः
बाह्यं वर्णं जनयति चातुर्वर्ण्यविगर्हितम् ९
अयाज्यं क्षत्रियो व्रात्यं सूतं स्तोमक्रियापरम्
वैश्यो वैदेहकं चापि मौद्गल्यमपवर्जितम् १०
शूद्रश्चण्डालमत्युग्रं वध्यघ्नं बाह्यवासिनम्
ब्राह्मण्यां संप्रजायन्त इत्येते कुलपांसनाः
एते मतिमतां श्रेष्ठ वर्णसंकरजाः प्रभो ११
बन्दी तु जायते वैश्यान्मागधो वाक्यजीवनः
शूद्रान्निषादो मत्स्यघ्नः क्षत्रियायां व्यतिक्रमात् १२
शूद्रादायोगवश्चापि वैश्यायां ग्रामधर्मिणः
ब्राह्मणैरप्रतिग्राह्यस्तक्षा स वनजीवनः १३
एतेऽपि सदृशं वर्णं जनयन्ति स्वयोनिषु
मातृजात्यां प्रसूयन्ते प्रवरा हीनयोनिषु १४
यथा चतुर्षु वर्णेषु द्वयोरात्मास्य जायते
आनन्तर्यात्तु जायन्ते तथा बाह्याः प्रधानतः १५
ते चापि सदृशं वर्णं जनयन्ति स्वयोनिषु
परस्परस्य वर्तन्तो जनयन्ति विगर्हितान् १६
यथा च शूद्रो ब्राह्मण्यां जन्तुं बाह्यं प्रसूयते
एवं बाह्यतराद्बाह्यश्चातुर्वर्ण्यात्प्रसूयते १७
प्रतिलोमं तु वर्तन्तो बाह्याद्बाह्यतरं पुनः

हीना हीनात्प्रसूयन्ते वर्णाः पञ्चदशैव ते १८
अगम्यागमनाच्चैव वर्तते वर्णसंकरः
व्रात्यानामत्र जायन्ते सैरन्ध्रा मागधेषु च
प्रसाधनोपचारज्ञमदासं दासजीवनम् १९
अतश्चायोगवं सूते वागुरावनजीवनम्
मैरेयकं च वैदेहः संप्रसूतेऽथ माधुकम् २०
निषादो मुद्गरं सूते दाशं नावोपजीविनम्
मृतपं चापि चण्डालः श्वपाकमतिकुत्सितम् २१
चतुरो मागधी सूते क्रूरान्मायोपजीविनः
मांसस्वादुकरं सूदं सौगन्धमिति संज्ञितम् २२
वैदेहकाच्च पापिष्ठं क्रूरं भार्योपजीविनम्
निषादान्मद्रनाभं च खरयानप्रयायिनम् २३
चण्डालात्पुल्कसं चापि खराश्वगजभोजिनम्
मृतचेलप्रतिच्छन्नं भिन्नभाजनभोजिनम् २४
आयोगवीषु जायन्ते हीनवर्णासु ते त्रयः
क्षुद्रो वैदेहकादन्ध्रो बहिर्ग्रामप्रतिश्रयः २५
कारावरो निषाद्यां तु चर्मकारात्प्रजायते
चण्डालात्पाण्डुसौपाकस्त्वक्सारव्यवहारवान् २६
आहिण्डिको निषादेन वैदेह्यां संप्रजायते
चण्डालेन तु सौपाको मौद्गल्यसमवृत्तिमान् २७
निषादी चापि चण्डालात्पुत्रमन्तावसायिनम्
श्मशानगोचरं सूते बाह्यैरपि बहिष्कृतम् २८
इत्येताः संकरे जात्यः पितृमातृव्यतिक्रमात्
प्रच्छन्ना वा प्रकाशा वा वेदितव्याः स्वकर्मभिः २९
चतुर्णामेव वर्णानां धर्मो नान्यस्य विद्यते
वर्णानां धर्महीनेषु संज्ञा नास्तीह कस्यचित् ३०
यदृच्छयोपसंपन्नैर्यज्ञ साधुबहिष्कृतैः
बाह्या बाह्यैस्तु जायन्ते यथावृत्ति यथाश्रयम् ३१
चतुष्पथश्मशानानि शैलांश्चान्यान्वनस्पतीन्
युञ्जन्ते चाप्यलंकारांस्तथोपकरणानि च ३२

गोब्राह्मणार्थे साहाय्यं कुर्वाणा वै न संशयः
आनृशंस्यमनुक्रोशः सत्यवाक्यमथ क्षमा ३३
स्वशरीरैः परित्राणं बाह्यानां सिद्धिकारकम्
मनुजव्याघ्र भवति तत्र मे नास्ति संशयः ३४
यथोपदेशं परिकीर्तितासु नरः प्रजायेत विचार्य बुद्धिमान्
विहीनयोनिर्हि सुरोऽवसादयेत्तितीर्षमाणं सलिले यथोपलम् ३५
अविद्वांसमलं लोके विद्वांसमपि वा पुनः
नयन्ते ह्युत्पथं नार्यः कामक्रोधवशानुगम् ३६
स्वभावश्चैव नारीणां नराणामिह दूषणम्
इत्यर्थं न प्रसज्जन्ते प्रमदासु विपश्चितः ३७
युधिष्ठिर उवाच
वर्णापेतमविज्ञातं नरं कलुषयोनिजम्
आर्यरूपमिवानार्यं कथं विद्यामहे नृप ३८
भीष्म उवाच
योनिसंकलुषे जातं नानाचारसमाहितम्
कर्मभिः सज्जनाचीर्णैर्विज्ञेया योनिशुद्धता ३९
अनार्यत्वमनाचारः क्रूरत्वं निष्क्रियात्मता
पुरुषं व्यञ्जयन्तीह लोके कलुषयोनिजम् ४०
पित्र्यं वा भजते शीलं मातृजं वा तथोभयम्
न कथंचन संकीर्णः प्रकृतिं स्वां नियच्छति ४१
यथैव सदृशो रूपे मातापित्रोर्हि जायते
व्याघ्रश्चित्रैस्तथा योनिं पुरुषः स्वां नियच्छति ४२
कुलस्रोतसि संछन्ने यस्य स्याद्योनिसंकरः
संश्रयत्येव तच्छीलं नरोऽल्पमपि वा बहु ४३
आर्यरूपसमाचारं चरन्तं कृतके पथि
स्ववर्णमन्यवर्णं वा स्वशीलं शास्ति निश्चये ४४
नानावृत्तेषु भूतेषु नानाकर्मरतेषु च
जन्मवृत्तसमं लोके सुश्लिष्टं न विरज्यते ४५
शरीरमिह सत्त्वेन नरस्य परिकृष्यते
ज्येष्ठमध्यावरं सत्त्वं तुल्यसत्त्वं प्रमोदते ४६

ज्यायांसमपि शीलेन विहीनं नैव पूजयेत्
अपि शूद्रं तु सद्वृतं धर्मज्ञमभिपूजयेत् ४७
आत्मानमाख्याति हि कर्मभिर्नरः स्वशीलचारित्रकृतैः शुभाशुभैः
प्रनष्टमप्यात्मकुलं तथा नरः पुनः प्रकाशं कुरुते स्वकर्मभिः ४८
योनिष्वेतासु सर्वासु सङ्कीर्णास्वितरासु च
यत्रात्मानं न जनयेद्बुधस्ताः परिवर्जयेत् ४९
इति श्रीमहाभारते अनुशासनपर्वणि अष्टचत्वारिंशत्तमोऽध्यायः ४८

## एकोनपञ्चाशत्तमोऽध्यायः

युधिष्ठिर उवाच
ब्रूहि पुत्रान्कुरुश्रेष्ठ वर्णानां त्वं पृथक्पृथक्
कीदृश्यां कीदृशाश्चापि पुत्राः कस्य च के च ते १
विप्रवादाः सुबहुशः श्रूयन्ते पुत्रकारिताः
अत्र नो मुह्यतां राजन्संशयं छेत्तुमर्हसि २
भीष्म उवाच
आत्मा पुत्रस्तु विज्ञेयस्तस्यानन्तरजश्च यः
नियुक्तजश्च विज्ञेयः सुतः प्रसृतजस्तथा ३
पतितस्य तु भार्यायां भर्त्रा सुसमवेतया
तथा दत्तकृतौ पुत्रावध्यूढश्च तथापरः ४
षडपध्वंसजाश्चापि कानीनापसदास्तथा
इत्येते ते समाख्यातास्तान्विजानीहि भारत ५
युधिष्ठिर उवाच
षडपध्वंसजाः के स्युः के वाप्यपसदास्तथा
एतत्सर्वं यथातत्त्वं व्याख्यातुं मे त्वमर्हसि ६
भीष्म उवाच
त्रिषु वर्णेषु ये पुत्रा ब्राह्मणस्य युधिष्ठिर
वर्णयोश्च द्वयोः स्यातां यौ राजन्यस्य भारत ७
एको द्विवर्ण एवाथ तथात्रैवोपलक्षितः
षडपध्वंसजास्ते हि तथैवापसदाञ्शृणु ८
चण्डालो व्रात्यवेनौ च ब्राह्मण्यां क्षत्रियासु च

वैश्यायां चैव शूद्रस्य लक्ष्यन्तेऽपसदास्त्रयः ९
मागधो वामकश्चैव द्वौ वैश्यस्योपलक्षितौ
ब्राह्मण्यां क्षत्रियायां च क्षत्रियस्यैक एव तु १०
ब्राह्मण्यां लक्ष्यते सूत इत्येतेऽपसदाः स्मृताः
पुत्ररेतो न शक्यंहि मिथ्या कर्तुं नराधिप ११
युधिष्ठिर उवाच
क्षेत्रजं केचिदेवाहुः सुतं केचित्तु शुक्रजम्
तुल्यावेतौ सुतौ कस्य तन्मे ब्रूहि पितामह १२
भीष्म उवाच
रेतजो वा भवेत्पुत्रस्त्यक्तो वा क्षेत्रजो भवेत्
अध्यूढः समयं भित्त्वेत्येतदेव निबोध मे १३
युधिष्ठिर उवाच
रेतोजं विद्म वै पुत्रं क्षेत्रजस्यागमः कथम्
अध्यूढं विद्म वै पुत्रं हित्वा च समयं कथम् १४
भीष्म उवाच
आत्मजं पुत्रमुत्पाद्य यस्त्यजेत्कारणान्तरे
न तत्र कारणं रेतः स क्षेत्रस्वामिनो भवेत् १५
पुत्रकामो हि पुत्रार्थे यां वृणीते विशां पते
तत्र क्षेत्रं प्रमाणं स्यान्न वै तत्रात्मजः सुतः १६
अन्यत्र क्षेत्रजः पुत्रो लक्ष्यते भरतर्षभ
न ह्यात्मा शक्यते हन्तुं दृष्टान्तोपगतो ह्यसौ १७
क्वचिच्च कृतकः पुत्रः संग्रहादेव लक्ष्यते
न तत्र रेतः क्षेत्रं वा प्रमाणं स्याद्युधिष्ठिर १८
युधिष्ठिर उवाच
कीदृशः कृतकः पुत्रः संग्रहादेव लक्ष्यते
शुक्रं क्षेत्रं प्रमाणं वा यत्र लक्ष्येत भारत १९
भीष्म उवाच
मातापितृभ्यां संत्यक्तं पथि यं तु प्रलक्षयेत्
न चास्य मातापितरौ ज्ञायेते स हि कृत्रिमः २०
अस्वामिकस्य स्वामित्वं यस्मिन्संप्रतिलक्षयेत्

सवर्णस्तं च पोषेत सवर्णस्तस्य जायते २१
युधिष्ठिर उवाच
कथमस्य प्रयोक्तव्यः संस्कारः कस्य वा कथम्
देया कन्या कथं चेति तन्मे ब्रूहि पितामह २२
भीष्म उवाच
आत्मवत्तस्य कुर्वीत संस्कारं स्वामिवत्तथा २३
त्यक्तो मातापितृभ्यां यः सवर्णं प्रतिपद्यते
तद्गोत्रवर्णतस्तस्य कुर्यात्संस्कारमच्युत २४
अथ देया तु कन्या स्यात्तद्वर्णेन युधिष्ठिर
संस्कर्तुं मातृगोत्रं च मातृवर्णाविनिश्चये २५
कानीनाध्यूढजौ चापि विज्ञेयौ पुत्रकिल्बिषौ
तावपि स्वाविव सुतौ संस्कार्याविति निश्चयः २६
क्षेत्रजो वाप्यपसदो येऽध्यूढास्तेषु चाप्यथ
आत्मवद्वै प्रयुञ्जीरन्संस्कारं ब्राह्मणादयः २७
धर्मशास्त्रेषु वर्णानां निश्चयोऽय प्रदृश्यते
एतत्ते सर्वमाख्यातं किं भूयः श्रोतुमिछसि २८
इति श्रीमहाभारते अनुशासनपर्वणि एकोनपञ्चाशत्तमोऽध्यायः ४९

## पञ्चाशत्तमोऽध्यायः

युधिष्ठिर उवाच
दर्शने कीदृशः स्नेहः संवासे च पितामह
महाभाग्यं गवां चैव तन्मे ब्रूहि पितामह १
भीष्म उवाच
हन्त ते कथयिष्यामि पुरावृत्तं महाद्युते
नहुषस्य च संवादं महर्षेश्च्यवनस्य च २
पुरा महर्षिश्च्यवनो भार्गवो भरतर्षभ
उदवासकृतारम्भो बभूव सुमहाव्रतः ३
निहत्य मानं क्रोधं च प्रहर्षं शोकमेव च
वर्षाणि द्वादश मुनिर्जलवासे धृतव्रतः ४
आदधत्सर्वभूतेषु विस्रम्भं परमं शुभम्

जलेचरेषु सत्त्वेषु शीतरश्मिरिव प्रभुः ५
स्थाणुभूतः शुचिर्भूत्वा दैवतेभ्यः प्रणम्य च
गङ्गायमुनयोर्मध्ये जलं संप्रविवेश ह ६
गङ्गायमुनयोर्वेगं सुभीमं भीमनिःस्वनम्
प्रतिजग्राह शिरसा वातवेगसमं जवे ७
गङ्गा च यमुना चैव सरितश्चानुगास्तयोः
प्रदक्षिणमृषिं चक्रुर्न चैनं पर्यपीडयन् ८
अन्तर्जले स सुष्वाप काष्ठभूतो महामुनिः
ततश्चोर्ध्वस्थितो धीमानभवद्भरतर्षभ ९
जलौकसां स सत्त्वानां बभूव प्रियदर्शनः
उपाजिघ्रन्त च तदा मत्स्यास्तं हृष्टमानसाः
तत्र तस्यासतः कालः समतीतोऽभवन्महान् १०
ततः कदाचित्समये कस्मिंश्चिन्मत्स्यजीविनः
तं देशं समुपाजग्मुर्जालहस्ता महाद्युते ११
निषादा बहवस्तत्र मत्स्योद्धरणनिश्चिताः
व्यायता बलिनः शूराः सलिलेष्वनिवर्तिनः
अभ्याययुश्च तं देशं निश्चिता जालकर्मणि १२
जालं च योजयामासुर्विशेषेण जनाधिप
मत्स्योदकं समासाद्य तदा भरतसत्तम १३
ततस्ते बहुभिर्योगैः कैवर्ता मत्स्यकाङ्क्षिणः
गङ्गायमुनयोर्वारि जालैरभ्यकिरंस्ततः १४
जालं सुविततं तेषां नवसूत्रकृतं तथा
विस्तारायामसंपन्नं यत्तत्र सलिले क्षमम् १५
ततस्ते सुमहच्चैव बलवच्च सुवर्तितम्
प्रकीर्य सर्वतः सर्वे जालं चकृषिरे तदा १६
अभीतरूपाः संहृष्टास्तेऽन्योऽन्यवशवर्तिनः
बबन्धुस्तत्र मत्स्यांश्च तथान्यान्जलचारिणः १७
तथा मत्स्यैः परिवृतं च्यवनं भृगुनन्दनम्
आकर्षन्त महाराज जालेनाथ यदृच्छया १८
नदीशैवलदिग्धाङ्गं हरिश्मश्रुजटाधरम्

लग्नैः शङ्खगणैर्गात्रैः कोष्ठैश्चित्रैरिवावृतम् १९
तं जालेनोद्धृतं दृष्ट्वा ते तदा वेदपारगम्
सर्वे प्राञ्जलयो दाशाः शिरोभिः प्रापतन्भुवि २०
परिखेदपरित्रासाज्जालस्याकर्षणेन च
मत्स्या बभूवुर्व्यापन्नाः स्थलसंकर्षणेन च २१
स मुनिस्तत्तदा दृष्ट्वा मत्स्यानां कदनं कृतम्
बभूव कृपयाविष्टो निःश्वसंश्च पुनः पुनः २२
निषादा ऊचुः
अज्ञानाद्यत्कृतं पापं प्रसादं तत्र नः कुरु
करवाम प्रियं किं ते तन्नो ब्रूहि महामुने २३
भीष्म उवाच
इत्युक्तो मत्स्यमध्यस्थश्च्यवनो वाक्यमब्रवीत्
यो मेऽद्य परमः कामस्तं शृणुध्वं समाहिताः २४
प्राणोत्सर्गं विक्रयं वा मत्स्यैर्यास्याम्यहं सह
संवासान्नोत्सहे त्यक्तुं सलिलाध्युषितानिमान् २५
इत्युक्तास्ते निषादास्तु सुभृशं भयकम्पिताः
सर्वे विषण्णवदना नहुषाय न्यवेदयन् २६
इति श्रीमहाभारते अनुशासनपर्वणि पञ्चाशत्तमोध्यायः ५०

## एक पञ्चाशत्तमोऽध्यायः

भीष्म उवाच
नहुषस्तु ततः श्रुत्वा च्यवनं तं तथागतम्
त्वरितः प्रययौ तत्र सहामात्यपुरोहितः १
शौचं कृत्वा यथान्यायं प्राञ्जलि प्रयतो नृपः
आत्मानमाचचक्षे च च्यवनाय महात्मने २
अर्चयामास तं चापि तस्य राज्ञः पुरोहितः
सत्यव्रतं महाभागं देवकल्पं विशां पते ३
नहुष उवाच
करवाणि प्रियं किं ते तन्मे व्याख्यातुमर्हसि
सर्वं कर्तास्मि भगवन्यद्यपि स्यात्सुदुष्करम् ४

च्यवन उवाच
श्रमेण महता युक्ताः कैवर्ता मत्स्यजीविनः
मम मूल्यं प्रयच्छैभ्यो मत्स्यानां विक्रयैः सह ५
नहुष उवाच
सहस्रं दीयतां मूल्यं निषादेभ्यः पुरोहित
निष्क्रयार्थं भगवतो यथाह भृगुनन्दनः ६
च्यवन उवाच
सहस्रं नाहमर्हामि किं वा त्वं मन्यसे नृप
सदृशं दीयतां मूल्यं स्वबुद्ध्या निश्चयं कुरु ७
नहुष उवाच
सहस्राणां शतं क्षिप्रं निषादेभ्यः प्रदीयताम्
स्यादेतत्तु भवेन्मूल्यं किं वान्यन्मन्यते भवान् ८
च्यवन उवाच
नाहं शतसहस्रेण निमेयः पार्थिवर्षभ
दीयतां सदृशं मूल्यममात्यैः सह चिन्तय ९
नहुष उवाच
कोटिः प्रदीयतां मूल्यं निषादेभ्यः पुरोहित
यदेतदपि नौपम्यमतो भूयः प्रदीयताम् १०
च्यवन उवाच
राजन्नार्हाम्यहं कोटिं भूयो वापि महाद्युते
सदृशं दीयतां मूल्यं ब्राह्मणैः सह चिन्तय ११
नहुष उवाच
अर्धराज्यं समग्रं वा निषादेभ्यः प्रदीयताम्
एतन्मूल्यमहं मन्ये किं वान्यन्मन्यसे द्विज १२
च्यवन उवाच
अर्धराज्यं समग्रं वा नाहमर्हामि पार्थिव
सदृशं दीयतां मूल्यमृषिभिः सह चिन्त्यताम् १३
भीष्म उवाच
महर्षेर्वचनं श्रुत्वा नहुषो दुःखकर्शितः
स चिन्तयामास तदा सहामात्यपुरोहितः १४

तत्र त्वन्यो वनचरः कश्चिन्मूलफलाशनः
नहुषस्य समीपस्थो गविजातोऽभवन्मुनिः १५
स समाभाष्य राजानमब्रवीद्द्विजसत्तमः
तोषयिष्याम्यहं विप्रं यथा तुष्टो भविष्यति १६
नाहं मिथ्यावचो ब्रूयां स्वैरेष्वपि कुतोऽन्यथा
भवतो यदहं ब्रूयां तत्कार्यमविशङ्कया १७
नहुष उवाच
ब्रवीतु भगवान्मूल्यं महर्षेः सदृशं भृगोः
परित्रायस्व मामस्माद्विषयं च कुलं च मे १८
हन्याद्धि भगवान्क्रुद्धस्त्रैलोक्यमपि केवलम्
किं पुनर्मां तपोहीनं बाहुवीर्यपरायणम् १९
अगाधेऽम्भसि मग्नस्य सामात्यस्य सहर्त्विजः
प्लवो भव महर्षे त्वं कुरु मूल्यविनिश्चयम् २०
भीष्म उवाच
नहुषस्य वचः श्रुत्वा गविजातः प्रतापवान्
उवाच हर्षयन्सर्वानमात्यान्पार्थिवं च तम् २१
अनर्घेया महाराज द्विजा वर्णमहत्तमाः
गावश्च पृथिवीपाल गौर्मूल्यं परिकल्प्यताम् २२
नहुषस्तु ततः श्रुत्वा महर्षेर्वचनं नृप
हर्षेणमहता युक्तः सहामात्यपुरोहितः २३
अभिगम्य भृगोः पुत्रं च्यवनं संशितव्रतम्
इदं प्रोवाच नृपते वाचा संतर्पयन्निव २४
उत्तिष्ठोत्तिष्ठ विप्रर्षे गवा क्रीतोऽसि भार्गव
एतन्मूल्यमहं मन्ये तव धर्मभृतां वर २५
च्यवन उवाच
उत्तिष्ठाम्येष राजेन्द्र सम्यक्क्रीतोऽस्मि तेऽनघ
गोभिस्तुल्यं न पश्यामि धनं किंचिदिहाच्युत २६
कीर्तनं श्रवणं दानं दर्शनं चापि पार्थिव
गवां प्रशस्यते वीर सर्वपापहरं शिवम् २७
गावो लक्ष्म्याः सदा मूलं गोषु पाप्मा न विद्यते

अन्नमेव सदा गावो देवानां परमं हविः २८
स्वाहाकारवषट्कारौ गोषु नित्यं प्रतिष्ठितौ
गावो यज्ञप्रणेत्र्यो वै तथा यज्ञस्य ता मुखम् २९
अमृतं ह्यक्षयं दिव्यं क्षरन्ति च वहन्ति च
अमृतायतनं चैताः सर्वलोकनमस्कृताः ३०
तेजसा वपुषा चैव गावो वह्निसमा भुवि
गावो हि सुमहत्तेजः प्राणिनां च सुखप्रदाः ३१
निविष्टं गोकुलं यत्र श्वासं मुञ्चति निर्भयम्
विराजयति तं देशं पाप्मानं चापकर्षति ३२
गावः स्वर्गस्य सोपानं गावः स्वर्गेऽपि पूजिताः
गावः कामदुघा देव्यो नान्यत्किंचित्परं स्मृतम् ३३
इत्येतद्गोषु मे प्रोक्तं माहात्म्यं पार्थिवर्षभ
गुणैकदेशवचनं शक्यं पारायणं न तु ३४
निषादा ऊचुः
दर्शनं कथनं चैव सहास्माभिः कृतं मुने
सतां सप्तपदं मित्रं प्रसादं नः कुरु प्रभो ३५
हवींषि सर्वाणि यथा ह्युपभुङ्क्ते हुताशनः
एवं त्वमपि धर्मात्मन्पुरुषाग्निः प्रतापवान् ३६
प्रसादयामहे विद्वन्भवन्तं प्रणता वयम्
अनुग्रहार्थमस्माकमियं गौः प्रतिगृह्यताम् ३७
च्यवन उवाच
कृपणस्य च यच्चक्षुर्मुनेराशीविषस्य च
नरं समूलं दहति कक्षमग्निरिव ज्वलन् ३८
प्रतिगृह्णामि वो धेनुं कैवर्ता मुक्तकिल्विषाः
दिवं गच्छत वै क्षिप्रं मत्स्यैर्जालोद्धृतैः सह ३९
भीष्म उवाच
ततस्तस्य प्रसादात्ते महर्षेर्भावितात्मनः
निषादास्तेन वाक्येन सह मत्स्यैर्दिवं ययुः ४०
ततः स राजा नहुषो विस्मितः प्रेक्ष्य धीवरान्
आरोहमाणांस्त्रिदिवं मत्स्यांश्च भरतर्षभ ४१

ततस्तौ गविजश्चैव च्यवनश्च भृगूद्वहः
वराभ्यामनुरूपाभ्यां छन्दयामासतुर्नृपम् ४२
ततो राजा महावीर्यो नहुषः पृथिवीपतिः
परमित्यब्रवीत्प्रीतस्तदा भरतसत्तम ४३
ततो जग्राह धर्मे स स्थितिमिन्द्रनिभो नृपः
तथेति चोदितः प्रीतस्तावृषी प्रत्यपूजयत् ४४
समाप्तदीक्षश्च्यवनस्ततोऽगच्छत्स्वमाश्रमम्
गविजश्च महातेजाः स्वमाश्रमपदं ययौ ४५
निषादाश्च दिवं जग्मुस्ते च मत्स्या जनाधिप
नहुषोऽपि वरं लब्ध्वा प्रविवेश पुरं स्वकम् ४६
एतत्ते कथितं तात यन्मां त्वं परिपृच्छसि
दर्शने यादृशः स्नेहः संवासे वा युधिष्ठिर ४७
महाभाग्यं गवां चैव तथा धर्मविनिश्चयम्
किं भूयः कथ्यतां वीर किं ते हृदि विवक्षितम् ४८
इति श्रीमहाभारते अनुशासनपर्वणि एकपञ्चाशत्तमोऽध्यायः ५१

## द्विपञ्चाशत्तमोऽध्यायः

युधिष्ठिर उवाच
संशयो मे महाप्राज्ञ सुमहान्सागरोपमः
तन्मे शृणु महाबाहो श्रुत्वा चाख्यातुमर्हसि १
कौतूहलं मे सुमहज्जामदग्न्यं प्रति प्रभो
रामं धर्मभृतां श्रेष्ठं तन्मे व्याख्यातुमर्हसि २
कथमेष समुत्पन्नो रामः सत्यपराक्रमः
कथं ब्रह्मर्षिवंशे च क्षत्रधर्मा व्यजायत ३
तदस्य संभवं राजन्निखिलेनानुकीर्तय
कौशिकाच्च कथं वंशात्क्षत्राद्वै ब्राह्मणोऽभवत् ४
अहो प्रभावः सुमहानासीद्वै सुमहात्मनोः
रामस्य च नरव्याघ्र विश्वामित्रस्य चैव ह ५
कथं पुत्रानतिक्रम्य तेषां नप्तृष्वथाभवत्
एष दोषः सुतान्हित्वा तन्मे व्याख्यातुमर्हसि ६

भीष्म उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
च्यवनस्य च संवादं कुशिकस्य च भारत ७
एतं दोषं पुरा दृष्ट्वा भार्गवश्च्यवनस्तदा
आगामिनं महाबुद्धिः स्ववंशे मुनिपुंगवः ८
संचिन्त्य मनसा सर्वं गुणदोषबलाबलम्
दग्धुकामः कुलं सर्वं कुशिकानां तपोधनः ९
च्यवनस्तमनुप्राप्य कुशिकं वाक्यमब्रवीत्
वस्तुमिच्छा समुत्पन्ना त्वया सह ममानघ १०
कुशिक उवाच
भगवन्सहधर्मोऽय पण्डितैरिह धार्यते
प्रदानकाले कन्यानामुच्यते च सदा बुधैः ११
यत्तु तावदतिक्रान्तं धर्मद्वारं तपोधन
तत्कार्यं प्रकरिष्यामि तदनुज्ञातुमर्हसि १२
भीष्म उवाच
अथासनमुपादाय च्यवनस्य महामुनेः
कुशिको भार्यया सार्धमाजगाम यतो मुनिः १३
प्रगृह्य राजा भृङ्गारं पाद्यमस्मै न्यवेदयत्
कारयामास सर्वाश्च क्रियास्तस्य महात्मनः १४
ततः स राजा च्यवनं मधुपर्कं यथाविधि
प्रत्यग्राहयदव्यग्रो महात्मा नियतव्रतः १५
सत्कृत्य स तथा विप्रमिदं वचनमब्रवीत्
भगवन्परवन्तौ स्वो ब्रूहि किं करवावहे १६
यदि राज्यं यदि धनं यदि गाः संशितव्रत
यज्ञदानानि च तथा ब्रूहि सर्वं ददामि ते १७
इदं गृहमिदं राज्यमिदं धर्मासनं च ते
राजा त्वमसि शाध्युर्वीं भृत्योऽह परवांस्त्वयि १८
एवमुक्ते ततो वाक्ये च्यवनो भार्गवस्तदा
कुशिकं प्रत्युवाचेदं मुदा परमया युतः १९
न राज्यं कामये राजन्न धनं न च योषितः

न च गा न च ते देशान्न यज्ञाञ्श्रूयतामिदम् २०
नियमं किंचिदारप्स्ये युवयोर्यदि रोचते
परिचर्योऽस्मि यत्ताभ्यां युवाभ्यामविशङ्कया २१
एवमुक्ते तदा तेन दंपती तौ जहर्षतुः
प्रत्यब्रूतां च तमृषिमेवमस्त्विति भारत २२
अथ तं कुशिको हृष्टः प्रावेशयदनुत्तमम्
गृहोद्देशं ततस्तत्र दर्शनीयमदर्शयत् २३
इयं शय्या भगवतो यथाकाममिहोष्यताम्
प्रयतिष्यावहे प्रीतिमाहर्तुं ते तपोधन २४
अथ सूर्योऽतिचक्राम तेषां संवदतां तथा
अथर्षिश्चोदयामास पानमन्नं तथैव च २५
तमपृच्छत्ततो राजा कुशिकः प्रणतस्तदा
किमन्नजातमिष्टं ते किमुपस्थापयाम्यहम् २६
ततः स परया प्रीत्या प्रत्युवाच जनाधिपम्
औपपत्तिकमाहारं प्रयच्छस्वेति भारत २७
तद्वचः पूजयित्वा तु तथेत्याह स पार्थिवः
यथोपपन्नं चाहारं तस्मै प्रादाज्जनाधिपः २८
ततः स भगवान्भुक्त्वा दंपती प्राह धर्मवित्
स्वप्तुमिच्छाम्यहं निद्रा बाधते मामिति प्रभो २९
ततः शय्यागृहं प्राप्य भगवानृषिसत्तमः
संविवेश नरेन्द्रस्तु सपत्नीकः स्थितोऽभवत् ३०
न प्रबोध्योऽस्मि संसुप्त इत्युवाचाथ भार्गवः
संवाहितव्यौ पादौ मे जागर्तव्यं च वां निशि ३१
अविशङ्कश्च कुशिकस्तथेत्याह स धर्मवित्
न प्रबोधयतां तं च तौ तदा रजनीक्षये ३२
यथादेशं महर्षेस्तु शुश्रूषापरमौ तदा
बभूवतुर्महाराज प्रयतावथ दंपती ३३
ततः स भगवान्विप्रः समादिश्य नराधिपम्
सुष्वापैकेन पार्श्वेन दिवसानेकविंशतिम् ३४
स तु राजा निराहारः सभार्यः कुरुनन्दन

पर्युपासत तं हृष्टश्च्यवनाराधने रतः ३५
भार्गवस्तु समुत्तस्थौ स्वयमेव तपोधनः
अकिंचिदुक्त्वा तु गृहान्निश्चक्राम महातपाः ३६
तमन्वगच्छतां तौ तु क्षुधितौ श्रमकर्शितौ
भार्यापती मुनिश्रेष्ठो न च ताववलोकयत् ३७
तयोस्तु प्रेक्षतोरेव भार्गवाणां कुलोद्वहः
अन्तर्हितोऽभूद्राजेन्द्र ततो राजापतत्क्षितौ ३८
स मुहूर्तं समाश्वस्य सह देव्या महाद्युतिः
पुनरन्वेषणे यत्नमकरोत्परमं तदा ३९
इति श्रीमहाभारते अनुशासनपर्वणि द्विपञ्चाशत्तमोऽध्यायः ५२

## त्रिपञ्चाशत्तमोऽध्यायः

युधिष्ठिर उवाच
तस्मिन्नन्तर्हिते विप्रे राजा किमकरोत्तदा
भार्या चास्य महाभागा तन्मे ब्रूहि पितामह १
भीष्म उवाच
अदृष्ट्वा स महीपालस्तमृषिं सह भार्यया
परिश्रान्तो निववृते व्रीडितो नष्टचेतनः २
स प्रविश्य पुरीं दीनो नाभ्यभाषत किंचन
तदेव चिन्तयामास च्यवनस्य विचेष्टितम् ३
अथ शून्येन मनसा प्रविवेश गृहं नृपः
ददर्श शयने तस्मिञ्शयानं भृगुनन्दनम् ४
विस्मितौ तौ तु दृष्ट्वा तं तदाश्चर्यं विचिन्त्य च
दर्शनात्तस्य च मुनेर्विश्रान्तौ संबभूवतुः ५
यथास्थानं तु तौ स्थित्वा भूयस्तं संबवाहतुः
अथापरेण पार्श्वेन सुष्वाप स महामुनिः ६
तेनैव च स कालेन प्रत्यबुध्यत वीर्यवान्
न च तौ चक्रतुः किंचिद्विकारं भयशङ्कितौ ७
प्रतिबुद्धस्तु स मुनिस्तौ प्रोवाच विशां पते
तैलाभ्यङ्गो दीयतां मे स्नास्येऽहमिति भारत ८

तथेति तौ प्रतिश्रुत्य क्षुधितौ श्रमकर्शितौ
शतपाकेन तैलेन महार्हेणोपतस्थतुः ९
ततः सुखासीनमृषिं वाग्यतौ संववाहतुः
न च पर्याप्तमित्याह भार्गवः सुमहातपाः १०
यदा तौ निर्विकारौ तु लक्षयामास भार्गवः
तत उत्थाय सहसा स्नानशालां विवेश ह
क्लृप्तमेव तु तत्रासीत्स्नानीयं पार्थिवोचितम् ११
असत्कृत्य तु तत्सर्वं तत्रैवान्तरधीयत
स मुनिः पुनरेवाथ नृपतेः पश्यतस्तदा
नासूयां चक्रतुस्तौ च दंपती भरतर्षभ १२
अथ स्नातः स भगवान्सिंहासनगतः प्रभुः
दर्शयामास कुशिकं सभार्यं भृगुनन्दनः १३
संहृष्टवदनो राजा सभार्यः कुशिको मुनिम्
सिद्धमन्नमिति प्रह्वो निर्विकारो न्यवेदयत् १४
आनीयतामिति मुनिस्तं चोवाच नराधिपम्
राजा च समुपाजह्रे तदन्नं सह भार्यया १५
मांसप्रकारान्विविधाञ्शाकानि विविधानि च
वेसवारविकारांश्च पानकानि लघूनि च १६
रसालापूपकांश्चित्रान्मोदकानथ षाडवान्
रसान्नानाप्रकारांश्च वन्यं च मुनिभोजनम् १७
फलानि च विचित्राणि तथा भोज्यानि भूरिशः
बदरेङ्गुदकाश्मर्यभल्लातकवटानि च १८
गृहस्थानां च यद्भोज्यं यच्चापि वनवासिनाम्
सर्वमाहारयामास राजा शापभयान्मुनेः १९
अथ सर्वमुपन्यस्तमग्रतश्च्यवनस्य तत्
ततः सर्वं समानीय तच्च शय्यासनं मुनिः २०
वस्त्रैः शुभैरवच्छाद्य भोजनोपस्करैः सह
सर्वमादीपयामास च्यवनो भृगुनन्दनः २१
न च तौ चक्रतुः कोपं दंपती सुमहाव्रतौ
तयोः संप्रेक्षतोरेव पुनरन्तर्हितोऽभवत् २२

तत्रैव च स राजर्षिस्तस्थौ तां रजनीं तदा
सभार्यो वाग्यतः श्रीमान्न च तं कोप आविशत् २३
नित्यं संस्कृतमन्नं तु विविधं राजवेश्मनि
शयनानि च मुख्यानि परिषेकाश्च पुष्कलाः २४
वस्त्रं च विविधाकारमभवत्समुपार्जितम्
न शशाक ततो द्रष्टुमन्तरं च्यवनस्तदा २५
पुनरेव च विप्रर्षिः प्रोवाच कुशिकं नृपम्
सभार्यो मां रथेनाशु वह यत्र ब्रवीम्यहम् २६
तथेति च प्राह नृपो निर्विशङ्कस्तपोधनम्
क्रीडारथोऽस्तु भगवन्नुत सांग्रामिको रथः २७
इत्युक्तः स मुनिस्तेन राज्ञा हृष्टेन तद्वचः
च्यवनः प्रत्युवाचेदं हृष्टः परपुरंजयम् २८
सज्जीकुरु रथं क्षिप्रं यस्ते सांग्रामिको मतः
सायुधः सपताकश्च सशक्तिः कणयष्टिमान् २९
किङ्किणीशतनिर्घोषो युक्तस्तोमरकल्पनैः
गदाखड्गनिबद्धश्च परमेषुशतान्वितः ३०
ततः स तं तथेत्युक्त्वा कल्पयित्वा महारथम्
भार्यां वामे धुरि तदा चात्मानं दक्षिणे तथा ३१
त्रिदंष्ट्रं वज्रसूच्यग्रं प्रतोदं तत्र चादधत्
सर्वमेतत्ततो दत्त्वा नृपो वाक्यमथाब्रवीत् ३२
भगवन्क्व रथो यातु ब्रवीतु भृगुनन्दनः
यत्र वक्ष्यसि विप्रर्षे तत्र यास्यति ते रथः ३३
एवमुक्तस्तु भगवान्प्रत्युवाचाथ तं नृपम्
इतः प्रभृति यातव्यं पदकं पदकं शनैः ३४
श्रमो मम यथा न स्यात्तथा मे छन्दचारिणौ
सुखं चैवास्मि वोढव्यो जनः सर्वश्च पश्यतु ३५
नोत्सार्यः पथिकः कश्चित्तेभ्यो दास्याम्यहं वसु
ब्राह्मणेभ्यश्च ये कामानर्थयिष्यन्ति मां पथि ३६
सर्वं दास्याम्यशेषेण धनं रत्नानि चैव हि
क्रियतां निखिलेनैतन्मा विचारय पार्थिव ३७

तस्य तद्वचनं श्रुत्वा राजा भृत्यानथाब्रवीत्
यद्यद्ब्रूयान्मुनिस्तत्तत्सर्वं देयमशङ्कितैः ३८
ततो रत्नान्यनेकानि स्त्रियो युग्यमजाविकम्
कृताकृतं च कनकं गजेन्द्राश्चाचलोपमाः ३९
अन्वगच्छन्त तमृषिं राजामात्याश्च सर्वशः
हाहाभूतं च तत्सर्वमासीन्नगरमार्तिमत् ४०
तौ तीक्ष्णाग्रेण सहसा प्रतोदेन प्रचोदितौ
पृष्ठे विद्धौ कटे चैव निर्विकारौ तमूहतुः ४१
वेपमानौ निराहारौ पञ्चाशद्रात्रकर्शितौ
कथंचिदूहतुर्वीरौ दंपती तं रथोत्तमम् ४२
बहुशो भृशविद्धौ तौ क्षरमाणौ क्षतोद्भवम्
ददृशाते महाराज पुष्पिताविव किंशुकौ ४३
तौ दृष्ट्वा पौरवर्गस्तु भृशं शोकपरायणः
अभिशापभयात्त्रस्तो न च किंचिदुवाच ह ४४
द्वन्द्वशश्चाब्रुवन्सर्वे पश्यध्वं तपसो बलम्
क्रुद्धा अपि मुनिश्रेष्ठं वीक्षितुं नैव शक्नुमः ४५
अहो भगवतो वीर्यं महर्षेर्भावितात्मनः
राज्ञश्चापि सभार्यस्य धैर्यं पश्यत यादृशम् ४६
श्रान्तावपि हि कृच्छ्रेण रथमेतं समूहतुः
न चैतयोर्विकारं वै ददर्श भृगुनन्दनः ४७
भीष्म उवाच
ततः स निर्विकारौ तौ दृष्ट्वा भृगुकुलोद्वहः
वसु विश्राणयामास यथा वैश्रवणस्तथा ४८
तत्रापि राजा प्रीतात्मा यथाज्ञप्तमथाकरोत्
ततोऽस्य भगवान्प्रीतो बभूव मुनिसत्तमः ४९
अवतीर्य रथश्रेष्ठाद्दंपती तौ मुमोच ह
विमोच्य चैतौ विधिवत्ततो वाक्यमुवाच ह ५०
स्निग्धगम्भीरया वाचा भार्गवः सुप्रसन्नया
ददानि वां वरं श्रेष्ठं तद्ब्रूतामिति भारत ५१
सुकुमारौ च तौ विद्वान्कराभ्यां मुनिसत्तमः

पस्पर्शामृतकल्पाभ्यां स्नेहाद्भरतसत्तम ५२
अथाब्रवीन्नृपो वाक्यं श्रमो नास्त्यावयोरिह
विश्रान्तौ स्वः प्रभावात्ते ध्यानेनैवेति भार्गव ५३
अथ तौ भगवान्प्राह प्रहृष्टश्च्यवनस्तदा
न वृथा व्याहृतं पूर्वं यन्मया तद्भविष्यति ५४
रमणीयः समुद्देशो गङ्गातीरमिदं शुभम्
कंचित्कालं व्रतपरो निवत्स्यामीह पार्थिव ५५
गम्यतां स्वपुरं पुत्र विश्रान्तः पुनरेष्यसि
इहस्थं मां सभार्यस्त्वं द्रष्टासि श्वो नराधिप ५६
न च मन्युस्त्वया कार्यः श्रेयस्ते समुपस्थितम्
यत्काङ्क्षितं हृदिस्थं ते तत्सर्वं संभविष्यति ५७
इत्येवमुक्तः कुशिकः प्रहृष्टेनान्तरात्मना
प्रोवाच मुनिशार्दूलमिदं वचनमर्थवत् ५८
न मे मन्युर्महाभाग पूतोऽस्मि भगवंस्त्वया
संवृत्तौ यौवनस्थौ स्वो वपुष्मन्तौ बलान्वितौ ५९
प्रतोदेन व्रणा ये मे सभार्यस्य कृतास्त्वया
तान्न पश्यामि गात्रेषु स्वस्थोऽस्मि सह भार्यया ६०
इमां च देवीं पश्यामि मुने दिव्याप्सरोपमाम्
श्रिया परमया युक्तां यथादृष्टां मया पुरा ६१
तव प्रसादात्संवृत्तमिदं सर्वं महामुने
नैतच्चित्रं तु भगवंस्त्वयि सत्यपराक्रम ६२
इत्युक्तः प्रत्युवाचेदं च्यवनः कुशिकं तदा
आगच्छेथाः सभार्यश्च त्वमिहेति नराधिप ६३
इत्युक्तः समनुज्ञातो राजर्षिरभिवाद्य तम्
प्रययौ वपुषा युक्तो नगरं देवराजवत् ६४
तत एनमुपाजग्मुरमात्याः सपुरोहिताः
बलस्था गणिकायुक्ताः सर्वाः प्रकृतयस्तथा ६५
तैर्वृतः कुशिको राजा श्रिया परमया ज्वलन्
प्रविवेश पुरं हृष्टः पूज्यमानोऽथ बन्दिभिः ६६
ततः प्रविश्य नगरं कृत्वा सर्वाह्णिकक्रियाः

भुक्त्वा सभार्यो रजनीमुवास स महीपतिः ६७
ततस्तु तौ नवमभिवीक्ष्य यौवनं परस्परं विगतजराविवामरौ
ननन्दतुः शयनगतौ वपुर्धरौ श्रिया युतौ द्विजवरदत्तया तया ६८
स चाप्यृषिर्भृगुकुलकीर्तिवर्धनस्तपोधनो वनमभिराममृद्धिमत्
मनीषया बहुविधरत्नभूषितं ससर्ज यन्नास्ति शतक्रतोरपि ६९
इति श्रीमहाभारते अनुशासनपर्वणि त्रिपञ्चाशत्तमोऽध्यायः ५३

## चतुः पञ्चाशत्तमोऽध्यायः

भीष्म उवाच
ततः स राजा रात्र्यन्ते प्रतिबुद्धो महामनाः
कृतपूर्वाह्णिकः प्रायात्सभार्यस्तद्वनं प्रति १
ततो ददर्श नृपतिः प्रासादं सर्वकाञ्चनम्
मणिस्तम्भसहस्राढ्यं गन्धर्वनगरोपमम्
तत्र दिव्यानभिप्रायान्ददर्श कुशिकस्तदा २
पर्वतान्रम्यसानूंश्च नलिनीश्च सपङ्कजाः
चित्रशालाश्च विविधास्तोरणानि च भारत
शाद्वलोपचितां भूमिं तथा काञ्चन कुट्टिमाम् ३
सहकारान्प्रफुल्लांश्च केतकोद्दालकान्धवान्
अशोकान्मुचुकुन्दांश्च फुल्लांश्चैवातिमुक्तकान् ४
चम्पकांस्तिलकान्भव्यान्पनसान्वञ्जुलानपि
पुष्पितान्कर्णिकारांश्च तत्र तत्र ददर्श ह ५
श्यामां वारणपुष्पीं च तथाष्टापदिकां लताम्
तत्र तत्र परिक्लृप्ता ददर्श स महीपतिः ६
वृक्षान्पद्मोत्पलधरान्सर्वर्तुकुसुमांस्तथा
विमानच्छन्दकांश्चापि प्रासादान्पद्मसंनिभान् ७
शीतलानि च तोयानि क्वचिदुष्णानि भारत
आसनानि विचित्राणि शयनप्रवराणि च ८
पर्यङ्कान्सर्वसौवर्णान्पराध्यास्तरणास्तृतान्
भक्ष्यभोज्यमनन्तं च तत्र तत्रोपकल्पितम् ९
वाणीवादाञ्छुकांश्चापि शारिकाभृङ्गराजकान्

कोकिलाञ्छतपत्रांश्च कोयष्टिमककुक्कुटान् १०
मयूरान्कुक्कुटांश्चापि पुत्रकाञ्जीवजीवकान्
चकोरान्वानरान्हंसान्सारसांश्चक्रसाह्वयान् ११
समन्ततः प्रणदितान्ददर्श सुमनोहरान्
क्वचिदप्सरसां संघान्गन्धर्वाणां च पार्थिव १२
कान्ताभिरपरांस्तत्र परिष्वक्तान्ददर्श ह
न ददर्श च तान्भूयो ददर्श च पुनर्नृपः १३
गीतध्वनिं सुमधुरं तथैवाध्ययनध्वनिम्
हंसान्सुमधुरांश्चापि तत्र शुश्राव पार्थिवः १४
तं दृष्ट्वात्यद्भुतं राजा मनसाचिन्तयत्तदा
स्वप्नोऽय चित्तविभ्रंश उताहो सत्यमेव तु १५
अहो सह शरीरेण प्राप्तोऽस्मि परमां गतिम्
उत्तरान्वा कुरून्पुण्यानथ वाप्यमरावतीम् १६
किं त्विदं महदाश्चर्यं संपश्यामीत्यचिन्तयत्
एवं संचिन्तयन्नेव ददर्श मुनिपुंगवम् १७
तस्मिन्विमाने सौवर्णे मणिस्तम्भसमाकुले
महार्हे शयने दिव्ये शयानं भृगुनन्दनम् १८
तमभ्ययात्प्रहर्षेण नरेन्द्रः सह भार्यया
अन्तर्हितस्ततो भूयश्च्यवनः शयनं च तत् १९
ततोऽन्यस्मिन्वनोद्देशे पुनरेव ददर्श तम्
कौश्यां बृस्यां समासीनं जपमानं महाव्रतम्
एवं योगबलाद्विप्रो मोहयामास पार्थिवम् २०
क्षणेन तद्वनं चैव ते चैवाप्सरसां गणाः
गन्धर्वाः पादपाश्चैव सर्वमन्तरधीयत २१
निःशब्दमभवच्चापि गङ्गाकूलं पुनर्नृप
कुशवल्मीकभूयिष्ठं बभूव च यथा पुरा २२
ततः स राजा कुशिकः सभार्यस्तेन कर्मणा
विस्मयं परमं प्राप्तस्तद्दृष्ट्वा महदद्भुतम् २३
ततः प्रोवाच कुशिको भार्यां हर्षसमन्वितः
पश्य भद्रे यथा भावाश्चित्रा दृष्टाः सुदुर्लभाः २४

प्रसादाद्भृगुमुख्यस्य किमन्यत्र तपोबलात्
तपसा तदवाप्यं हि यन्न शक्यं मनोरथैः २५
त्रैलोक्यराज्यादपि हि तप एव विशिष्यते
तपसा हि सुतप्तेन क्रीडत्येष तपोधनः २६
अहो प्रभावो ब्रह्मर्षेश्च्यवनस्य महात्मनः
इच्छन्नेष तपोवीर्यादन्याँल्लोकान्सृजेदपि २७
ब्राह्मणा एव जायेरन्पुण्यवाग्बुद्धिकर्मणः
उत्सहेदिह कर्तुं हि कोऽन्यो वै च्यवनादृते २८
ब्राह्मण्यं दुर्लभं लोके राज्यं हि सुलभं नरैः
ब्राह्मण्यस्य प्रभावाद्धि रथे युक्तौ स्वधुर्यवत् २९
इत्येवं चिन्तयानः स विदितश्च्यवनस्य वै
संप्रेक्ष्योवाच स नृपं क्षिप्रमागम्यतामिति ३०
इत्युक्तः सहभार्यस्तमभ्यगच्छन्महामुनिम्
शिरसा वन्दनीयं तमवन्दत स पार्थिवः ३१
तस्याशिषः प्रयुज्याथ स मुनिस्तं नराधिपम्
निषीदेत्यब्रवीद्धीमान्सान्त्वयन्पुरुषर्षभ ३२
ततः प्रकृतिमापन्नो भार्गवो नृपते नृपम्
उवाच श्लक्ष्णया वाचा तर्पयन्निव भारत ३३
राजन्सम्यग्जितानीह पञ्च पञ्चसु यत्त्वया
मनःषष्ठानीन्द्रियाणि कृच्छ्रान्मुक्तोऽसि तेन वै ३४
सम्यगाराधितः पुत्र त्वयाहं वदतां वर
न हि ते वृजिनं किंचित्सुसूक्ष्ममपि विद्यते ३५
अनुजानीहि मां राजन्गमिष्यामि यथागतम्
प्रीतोऽस्मि तव राजेन्द्र वरश्च प्रतिगृह्यताम् ३६
कुशिक उवाच
अग्निमध्यगतेनेदं भगवन्संनिधौ मया
वर्तितं भृगुशार्दूल यन्न दग्धोऽस्मि तद्बहु ३७
एष एव वरो मुख्यः प्राप्तो मे भृगुनन्दन
यत्प्रीतोऽसि समाचारात्कुलं पूतं ममानघ ३८
एष मेऽनुग्रहो विप्र जीविते च प्रयोजनम्

एतद्राज्यफलं चैव तपश्चैतत्परं मम ३९
यदि तु प्रीतिमान्विप्र मयि त्वं भृगुनन्दन
अस्ति मे संशयः कश्चित्तन्मे व्याख्यातुमर्हसि ४०
इति श्रीमहाभारते अनुशासनपर्वणि चतुष्पञ्चाशत्तमोऽध्यायः ५४

## पञ्चपञ्चाशत्तमोऽध्यायः

च्यवन उवाच
वरश्च गृह्यतां मत्तो यश्च ते संशयो हृदि
तं च ब्रूहि नरश्रेष्ठ सर्वं संपादयामि ते १
कुशिक उवाच
यदि प्रीतोऽसि भगवंस्ततो मे वद भार्गव
कारणं श्रोतुमिच्छामि मद्गृहे वासकारितम् २
शयनं चैकपार्श्वेन दिवसानेकविंशतिम्
अकिंचिदुक्त्वा गमनं बहिश्च मुनिपुंगव ३
अन्तर्धानमकस्माच्च पुनरेव च दर्शनम्
पुनश्च शयनं विप्र दिवसानेकविंशतिम् ४
तैलाभ्यक्तस्य गमनं भोजनं च गृहे मम
समुपानीय विविधं यद्दग्धं जातवेदसा
निर्याणं च रथेनाशु सहसा यत्कृतं त्वया ५
धनानां च विसर्गस्य वनस्यापि च दर्शनम्
प्रासादानां बहूनां च काञ्चनानां महामुने ६
मणिविद्रुमपादानां पर्यङ्कानां च दर्शनम्
पुनश्चादर्शनं तस्य श्रोतुमिच्छामि कारणम् ७
अतीव ह्यत्र मुह्यामि चिन्तयानो दिवानिशम्
न चैवात्राधिगच्छामि सर्वस्यास्य विनिश्चयम्
एतदिच्छामि कार्त्स्न्येन सत्यं श्रोतुं तपोधन ८
च्यवन उवाच
शृणु सर्वमशेषेण यदिदं येन हेतुना
न हि शक्यमनाख्यातुमेवं पृष्टेन पार्थिव ९
पितामहस्य वदतः पुरा देवसमागमे

श्रुतवानस्मि यद्राजंस्तन्मेनिगदतः शृणु १०
ब्रह्मक्षत्रविरोधेन भविता कुलसंकरः
पौत्रस्ते भविता राजंस्तेजोवीर्यसमन्वितः ११
ततः स्वकुलरक्षार्थमहं त्वा समुपागमम्
चिकीर्षन्कुशिकोच्छेदं संदिधक्षुः कुलं तव १२
ततोऽहमागम्य पुरा त्वामवोचं महीपते
नियमं कंचिदारप्स्ये शुश्रूषा क्रियतामिति १३
न च ते दुष्कृतं किंचिदहमासादयं गृहे
तेन जीवसि राजर्षे न भवेथास्ततोऽन्यथा १४
एतां बुद्धिं समास्थाय दिवसानेकविंशतिम्
सुप्तोऽस्मि यदि मां कश्चिद्बोधयेदिति पार्थिव १५
यदा त्वया सभार्येण संसुप्तो न प्रबोधितः
अहं तदैव ते प्रीतो मनसा राजसत्तम १६
उत्थाय चास्मि निष्क्रान्तो यदि मां त्वं महीपते
पृच्छेः क्व यास्यसीत्येवं शपेयं त्वामिति प्रभो १७
अन्तर्हितश्चास्मि पुनः पुनरेव च ते गृहे
योगमास्थाय संविष्टो दिवसानेकविंशतिम् १८
क्षुधितो मामसूयेथाः श्रमाद्वेति नराधिप
एतां बुद्धिं समास्थाय कर्शितौ वां मया क्षुधा १९
न च तेऽभूत्सुसूक्ष्मोऽपि मन्युर्मनसि पार्थिव
सभार्यस्य नरश्रेष्ठ तेन ते प्रीतिमानहम् २०
भोजनं च समानाय्य यत्तदादीपितं मया
क्रुध्येथा यदि मात्सर्यादिति तन्मर्षितं च ते २१
ततोऽह रथमारुह्य त्वामवोचं नराधिप
सभार्यो मां वहस्वेति तच्च त्वं कृतवांस्तथा २२
अविशङ्को नरपते प्रीतोऽह चापि तेन ते
धनोत्सर्गेऽपि च कृते न त्वां क्रोधः प्रधर्षयत् २३
ततः प्रीतेन ते राजन्पुनरेतत्कृतं तव
सभार्यस्य वनं भूयस्तद्विद्धि मनुजाधिप २४
प्रीत्यर्थं तव चैतन्मे स्वर्गसंदर्शनं कृतम्

यत्ते वनेऽस्मिन्नृपते दृष्टं दिव्यं निदर्शनम् २५
स्वर्गोद्देशस्त्वया राजन्सशरीरेण पार्थिव
मुहूर्तमनुभूतोऽसौ सभार्येण नृपोत्तम २६
निदर्शनार्थं तपसो धर्मस्य च नराधिप
तत्र यासीत्स्पृहा राजंस्तच्चापि विदितं मम २७
ब्राह्मण्यं काङ्क्षसे हि त्वं तपश्च पृथिवीपते
अवमन्य नरेन्द्रत्वं देवेन्द्रत्वं च पार्थिव २८
एवमेतद्यथात्थ त्वं ब्राह्मण्यं तात दुर्लभम्
ब्राह्मण्ये सति चर्षित्वमृषित्वे च तपस्विता २९
भविष्यत्येष ते कामः कुशिकात्कौशिको द्विजः
तृतीयं पुरुषं प्राप्य ब्राह्मणत्वं गमिष्यति ३०
वंशस्ते पार्थिवश्रेष्ठ भृगूणामेव तेजसा
पौत्रस्ते भविता विप्र तपस्वी पावकद्युतिः ३१
यः स देवमनुष्याणां भयमुत्पादयिष्यति
त्रयाणां चैव लोकानां सत्यमेतद्ब्रवीमि ते ३२
वरं गृहाण राजर्षे यस्ते मनसि वर्तते
तीर्थयात्रां गमिष्यामि पुरा कालोऽतिवर्तते ३३
कुशिक उवाच
एष एव वरो मेऽद्य यत्त्वं प्रीतो महामुने
भवत्वेतद्यथात्थ त्वं तपः पौत्रे ममानघ
ब्राह्मण्यं मे कुलस्यास्तु भगवन्नेष मे वरः ३४
पुनश्चाख्यातुमिच्छामि भगवन्विस्तरेण वै
कथमेष्यति विप्रत्वं कुलं मे भृगुनन्दन
कश्चासौ भविता बन्धुर्मम कश्चापि संमतः ३५
इति श्रीमहाभारते अनुशासनपर्वणि पञ्चपञ्चाशत्तमोऽध्यायः ५५

## षट्पञ्चाशत्तमोऽध्यायः

च्यवन उवाच
अवश्यं कथनीयं मे तवैतन्नरपुंगव
यदर्थं त्वाहमुच्छेत्तुं संप्राप्तो मनुजाधिप १

भृगूणां क्षत्रिया याज्या नित्यमेव जनाधिप
ते च भेदं गमिष्यन्ति दैवयुक्तेन हेतुना २
क्षत्रियाश्च भृगून्सर्वान्वधिष्यन्ति नराधिप
आ गर्भादनुकृन्तन्तो दैवदण्डनिपीडिताः ३
तत उत्पत्स्यतेऽस्माकं कुले गोत्रविवर्धनः
और्वो नाम महातेजा ज्वलनार्कसमद्युतिः ४
स त्रैलोक्यविनाशाय कोपाग्निं जनयिष्यति
महीं सपर्वतवनां यः करिष्यति भस्मसात् ५
कंचित्कालं तु तं वह्निं स एव शमयिष्यति
समुद्रे वडवावक्त्रे प्रक्षिप्य मुनिसत्तमः ६
पुत्रं तस्य महाभागमृचीकं भृगुनन्दनम्
साक्षात्कृत्स्नो धनुर्वेदः समुपस्थास्यतेऽनघ ७
क्षत्रियाणामभावाय दैवयुक्तेन हेतुना
स तु तं प्रतिगृह्यैव पुत्रे संक्रामयिष्यति ८
जमदग्नौ महाभागे तपसा भावितात्मनि
स चापि भृगुशार्दूलस्तं वेदं धारयिष्यति ९
कुलात्तु तव धर्मात्मन्कन्यां सोऽधिगमिष्यति
उद्भावनार्थं भवतो वंशस्य नृपसत्तम १०
गाधेर्दुहितरं प्राप्य पौत्रीं तव महातपाः
ब्राह्मणं क्षत्रधर्माणं राममुत्पादयिष्यति ११
क्षत्रियं विप्रकर्माणं बृहस्पतिमिवौजसा
विश्वामित्रं तव कुले गाधेः पुत्रं सुधार्मिकम्
तपसा महता युक्तं प्रदास्यति महाद्युते १२
स्त्रियौ तु कारणं तत्र परिवर्ते भविष्यतः
पितामहनियोगाद्वै नान्यथैतद्भविष्यति १३
तृतीये पुरुषे तुभ्यं ब्राह्मणत्वमुपैष्यति
भविता त्वं च संबन्धी भृगूणां भावितात्मनाम् १४
भीष्म उवाच
कुशिकस्तु मुनेर्वाक्यं च्यवनस्य महात्मनः
श्रुत्वा हृष्टोऽभवद्राजा वाक्यं चेदमुवाच ह

एवमस्त्विति धर्मात्मा तदा भरतसत्तम १५
च्यवनस्तु महातेजाः पुनरेव नराधिपम्
वरार्थं चोदयामास तमुवाच स पार्थिवः १६
बाढमेवं ग्रहीष्यामि कामं त्वत्तो महामुने
ब्रह्मभूतं कुलं मेऽस्तु धर्मे चास्य मनो भवेत् १७
एवमुक्तस्तथेत्येवं प्रत्युक्त्वा च्यवनो मुनिः
अभ्यनुज्ञाय नृपतिं तीर्थयात्रां ययौ तदा १८
एतत्ते कथितं सर्वमशेषेण मया नृप
भृगूणां कुशिकानां च प्रति संबन्धकारणम् १९
यथोक्तं मुनिना चापि तथा तदभवन्नृप
जन्म रामस्य च मुनेर्विश्वामित्रस्य चैव ह २०
इति श्रीमहाभारते अनुशासनपर्वणि षट्पञ्चाशत्तमोऽध्यायः ५६

सप्तपञ्चाशत्तमोऽध्यायः

युधिष्ठिर उवाच
मुह्यामीव निशम्याद्य चिन्तयानः पुनः पुनः
हीनां पार्थिवसंघातैः श्रीमद्भिः पृथिवीमिमाम् १
प्राप्य राज्यानि शतशो महीं जित्वापि भारत
कोटिशः पुरुषान्हत्वा परितप्ये पितामह २
का नु तासां वरस्त्रीणामवस्थाद्य भविष्यति
या हीनाः पतिभिः पुत्रैर्मातुलैर्भ्रातृभिस्तथा ३
वयं हि तान्गुरून्हत्वा ज्ञातींश्च सुहृदोऽपि च
अवाक्शीर्षाः पतिष्यामो नरके नात्र संशयः ४
शरीरं योक्तुमिच्छामि तपसोग्रेण भारत
उपदिष्टमिहेच्छामि तत्त्वतोऽह विशां पते ५
वैशम्पायन उवाच
युधिष्ठिरस्य तद्वाक्यं श्रुत्वा भीष्मो महामनाः
परीक्ष्य निपुणं बुद्ध्या युधिष्ठिरमभाषत ६
रहस्यमद्भुतं चैव शृणु वक्ष्यामि यत्त्वयि
या गतिः प्राप्यते येन प्रेत्यभावेषु भारत ७

तपसा प्राप्यते स्वर्गस्तपसा प्राप्यते यशः
आयुःप्रकर्षो भोगाश्च लभ्यन्ते तपसा विभो ८
ज्ञानं विज्ञानमारोग्यं रूपं संपत्तथैव च
सौभाग्यं चैव तपसा प्राप्यते भरतर्षभ ९
धनं प्राप्नोति तपसा मौनं ज्ञानं प्रयच्छति
उपभोगांस्तु दानेन ब्रह्मचर्येण जीवितम् १०
अहिंसायाः फलं रूपं दीक्षाया जन्म वै कुले
फलमूलाशिनां राज्यं स्वर्गः पर्णाशिनां भवेत् ११
पयोभक्षो दिवं याति स्नानेन द्रविणाधिकः
गुरुशुश्रूषया विद्या नित्यश्राद्धेन संततिः १२
गवाढ्यः शाकदीक्षाभिः स्वर्गमाहुस्तृणाशनात्
स्त्रियस्त्रिषवणस्नानाद्वायुं पीत्वा क्रतुं लभेत् १३
नित्यस्नायी भवेद्दक्षः संध्ये तु द्वे जपन्द्विजः
मरुं साधयतो राज्यं नाकपृष्ठमनाशके १४
स्थण्डिले शयमानानां गृहाणि शयनानि च
चीरवल्कलवासोभिर्वासांस्याभरणानि च १५
शय्यासनानि यानानि योगयुक्ते तपोधने
अग्निप्रवेशे नियतं ब्रह्मलोको विधीयते १६
रसानां प्रतिसंहारात्सौभाग्यमिह विन्दति
आमिषप्रतिसंहारात्प्रजास्यायुष्मती भवेत् १७
उदवासं वसेद्यस्तु स नराधिपतिर्भवेत्
सत्यवादी नरश्रेष्ठ दैवतैः सह मोदते १८
कीर्तिर्भवति दानेन तथारोग्यमहिंसया
द्विजशुश्रूषया राज्यं द्विजत्वं वापि पुष्कलम् १९
पानीयस्य प्रदानेन कीर्तिर्भवति शाश्वती
अन्नपानप्रदानेन तृप्यते कामभोगतः २०
सान्त्वदः सर्वभूतानां सर्वशोकैर्विमुच्यते
देवशुश्रूषया राज्यं दिव्यं रूपं नियच्छति २१
दीपालोकप्रदानेन चक्षुष्मान्भवते नरः
प्रेक्षणीयप्रदानेन स्मृतिं मेधां च विन्दति २२

गन्धमाल्यनिवृत्त्या तु कीर्तिर्भवति पुष्कला
केशश्म्धारयतामग्र्या भवति संततिः २३
उपवासं च दीक्षां च अभिषेकं च पार्थिव
कृत्वा द्वादश वर्षाणि वीरस्थानाद्विशिष्यते २४
दासीदासमलंकारान्क्षेत्राणि च गृहाणि च
ब्रह्मदेयां सुतां दत्त्वा प्राप्नोति मनुजर्षभ २५
क्रतुभिश्चोपवासैश्च त्रिदिवं याति भारत
लभते च चिरं स्थानं बलिपुष्पप्रदो नरः २६
सुवर्णशृङ्गैस्तु विभूषितानां गवां सहस्रस्य नरः प्रदाता
प्राप्नोति पुण्यं दिवि देवलोकमित्येवमाहुर्मुनिदेवसंघाः २७
प्रयच्छते यः कपिलां सचैलां कांस्योपदोहां कनकाग्रशृङ्गीम्
तैस्तैर्गुणैः कामदुघास्य भूत्वा नरं प्रदातारमुपैति सा गौः २८
यावन्ति लोमानि भवन्ति धेन्वास्तावत्फलं प्राप्नुते गोप्रदाता
पुत्रांश्च पौत्रांश्च कुलं च सर्वमासप्तमं तारयते परत्र २९
सदक्षिणां काञ्चनचारुशृङ्गीं कांस्योपदोहां द्रविणोत्तरीयाम्
धेनुं तिलानां ददतो द्विजाय लोका वसूनां सुलभा भवन्ति ३०
स्वकर्मभिर्मानवं संनिबद्धं तीव्रान्धकारे नरके पतन्तम्
महार्णवे नौरिव वायुयुक्ता दानं गवां तारयते परत्र ३१
यो ब्रह्मदेयां तु ददाति कन्यां भूमिप्रदानं च करोति विप्रे
ददाति चान्नं विधिवच्च यश्च स लोकमाप्नोति पुरंदरस्य ३२
नैवेशिकं सर्वगुणोपपन्नं ददाति वै यस्तु नरो द्विजाय
स्वाध्यायचारित्रगुणान्विताय तस्यापि लोकाः कुरुषूत्तरेषु ३३
धुर्यप्रदानेन गवां तथाश्वैर्लोकानवाप्नोति नरो वसूनाम्
स्वर्गाय चाहुर्हि हिरण्यदानं ततो विशिष्टं कनकप्रदानम् ३४
छत्रप्रदानेन गृहं वरिष्ठं यानं तथोपानहसंप्रदाने
वस्त्रप्रदानेन फलं सुरूपं गन्धप्रदाने सुरभिर्नरः स्यात् ३५
पुष्पोपगं वाथ फलोपगं वा यः पादपं स्पर्शयते द्विजाय
स स्त्रीसमृद्धं बहुरत्नपूर्णं लभत्ययत्नोपगतं गृहं वै ३६
भक्ष्यान्नपानीयरसप्रदाता सर्वानवाप्नोति रसान्प्रकामम्
प्रतिश्रयाच्छादनसंप्रदाता प्राप्नोति तानेव न संशयोऽत्र ३७

स्रग्धूपगन्धान्यनुलेपनानि स्नानानि माल्यानि च मानवो यः
दद्याद्द्विजेभ्यः स भवेदरोगस्तथाभिरूपश्च नरेन्द्रलोके ३८
बीजैरशून्यं शयनैरुपेतं दद्याद्गृहं यः पुरुषो द्विजाय
पुण्याभिरामं बहुरत्नपूर्णं लभत्यधिष्ठानवरं स राजन् ३९
सुगन्धचित्रास्तरणोपपन्नं दद्यान्नरो यः शयनं द्विजाय
रूपान्वितां पक्षवतीं मनोज्ञां भार्यामयत्नोपगतां लभेत्सः ४०
पितामहस्यानुचरो वीरशायी भवेन्नरः
नाधिकं विद्यते तस्मादित्याहुः परमर्षयः ४१
वैशम्पायन उवाच
तस्य तद्वचनं श्रुत्वा प्रीतात्मा कुरुनन्दनः
नाश्रमेऽरोचयद्वासं वीरमार्गाभिकाङ्क्षया ४२
ततो युधिष्ठिरः प्राह पाण्डवान्भरतर्षभ
पितामहस्य यद्वाक्यं तद्वो रोचत्विति प्रभुः ४३
ततस्तु पाण्डवाः सर्वे द्रौपदी च यशस्विनी
युधिष्ठिरस्य तद्वाक्यं बाढमित्यभ्यपूजयन् ४४
इति श्रीमहाभारते अनुशासनपर्वणि सप्तपञ्चाशत्तमोऽध्यायः ५७

## अष्टपञ्चाशत्तमोऽध्यायः

युधिष्ठिर उवाच
यानीमानि बहिर्वेद्यां दानानि परिचक्षते
तेभ्यो विशिष्टं किं दानं मतं ते कुरुपुङ्गव १
कौतूहलं हि परमं तत्र मे वर्तते प्रभो
दातारं दत्तमन्वेति यद्दानं तत्प्रचक्ष्व मे २
भीष्म उवाच
अभयं सर्वभूतेभ्यो व्यसने चाप्यनुग्रहम्
यच्चाभिलषितं दद्यात्तृषितायाभियाचते ३
दत्तं मन्येत यद्दत्त्वा तद्दानं श्रेष्ठमुच्यते
दत्तं दातारमन्वेति यद्दानं भरतर्षभ ४
हिरण्यदानं गोदानं पृथिवीदानमेव च
एतानि वै पवित्राणि तारयन्त्यपि दुष्कृतम् ५

एतानि पुरुषव्याघ्र साधुभ्यो देहि नित्यदा
दानानि हि नरं पापान्मोक्षयन्ति न संशयः ६
यद्यदिष्टतमं लोके यच्चास्य दयितं गृहे
तत्तद्गुणवते देयं तदेवाक्षयमिच्छता ७
प्रियाणि लभते लोके प्रियदः प्रियकृत्तथा
प्रियो भवति भूतानामिह चैव परत्र च ८
याचमानमभीमानादाशावन्तमकिंचनम्
यो नार्चति यथाशक्ति स नृशंसो युधिष्ठिर ९
अमित्रमपि चेद्दीनं शरणैषिणमागतम्
व्यसने योऽनुगृह्णाति स वै पुरुषसत्तमः १०
कृशाय ह्रीमते तात वृत्तिक्षीणाय सीदते
अपहन्यात्क्षुधां यस्तु न तेन पुरुषः समः ११
ह्रिया तु नियतान्साधून्पुत्रदारैश्च कर्शितान्
अयाचमानान्कौन्तेय सर्वोपायैर्निमन्त्रय १२
आशिषं ये न देवेषु न मर्त्येषु च कुर्वते
अर्हन्तो नित्यसत्त्वस्था यथालब्धोपजीविनः १३
आशीविषसमेभ्यश्च तेभ्यो रक्षस्व भारत
तान्युक्तैरुपजिज्ञास्य तथा द्विजवरोत्तमान् १४
कृतैरावसथैर्नित्यं सप्रेष्यैः सपरिच्छदैः
निमन्त्रयेथाः कौरव्य सर्वकामसुखावहैः १५
यदि ते प्रतिगृह्णीयुः श्रद्धापूतं युधिष्ठिर
कार्यमित्येव मन्वाना धार्मिकाः पुण्यकर्मिणः १६
विद्यास्नाता व्रतस्नाता ये व्यपाश्रित्यजीविनः
गूढस्वाध्यायतपसो ब्राह्मणाः संशितव्रताः १७
तेषु शुद्धेषु दान्तेषु स्वदारनिरतेषु च
यत्करिष्यसि कल्याणं तत्त्वा लोकेषु धास्यति १८
यथाग्निहोत्रं सुहुतं सायं प्रातर्द्विजातिना
तथा भवति दत्तं वै द्विजेभ्योऽथ कृतात्मना १९
एष ते विततो यज्ञः श्रद्धापूतः सदक्षिणः
विशिष्टः सर्वयज्ञेभ्यो ददतस्तात वर्तताम् २०

निवापो दानसदृशस्तादृशेषु युधिष्ठिर
निवपन्पूजयंश्चैव तेष्वानृणयं निगच्छति २१
य एव नो न कुप्यन्ति न लुभ्यन्ति तृणेष्वपि
त एव नः पूज्यतमा ये चान्ये प्रियवादिनः २२
ये नो न बहु मन्यन्ते न प्रवर्तन्ति चापरे
पुत्रवत्परिपाल्यास्ते नमस्तेभ्यस्तथाभयम् २३
ऋत्विक्पुरोहिताचार्या मृदुब्रह्मधरा हि ते
क्षत्रेणापि हि संसृष्टं तेजः शाम्यति वै द्विजे २४
अस्ति मे बलवानस्मि राजास्मीति युधिष्ठिर
ब्राह्मणान्मा स्म पर्यश्नीर्वासोभिरशनेन च २५
यच्छोभार्थं बलार्थं वा वित्तमस्ति तवानघ
तेन ते ब्राह्मणाः पूज्याः स्वधर्ममनुतिष्ठता २६
नमस्कार्यास्त्वया विप्रा वर्तमाना यथातथम्
यथासुखं यथोत्साहं ललन्तु त्वयि पुत्रवत् २७
को ह्यन्यः सुप्रसादानां सुहृदामल्पतोषिणाम्
वृत्तिमर्हत्युपक्षेप्तुं त्वदन्यः कुरुसत्तम २८
यथा पत्याश्रयो धर्मः स्त्रीणां लोके सनातनः
स देवः सा गतिर्नान्या तथास्माकं द्विजातयः २९
यदि नो ब्राह्मणास्तात संत्यजेयुरपूजिताः
पश्यन्तो दारुणं कर्म सततं क्षत्रिये स्थितम् ३०
अवेदानामकीर्तीनामलोकानामयज्वनाम्
कोऽस्माकं जीवितेनार्थस्तद्धि नो ब्राह्मणाश्रयम् ३१
अत्र ते वर्तयिष्यामि यथा धर्मः सनातनः
राजन्यो ब्राह्मणं राजन्पुरा परिचचार ह
वैश्यो राजन्यमित्येव शूद्रो वैश्यमिति श्रुतिः ३२
दूराच्छूद्रेणोपचर्यो ब्राह्मणोऽग्निरिव ज्वलन्
संस्पृश्य परिचर्यस्तु वैश्येन क्षत्रियेण च ३३
मृदुभावान्सत्यशीलान्सत्यधर्मानुपालकान्
आशीविषानिव क्रुद्धांस्तानुपाचरत द्विजान् ३४
अपरेषां परेषां च परेभ्यश्चैव ये परे

क्षत्रियाणां प्रतपतां तेजसा च बलेन च
ब्राह्मणेष्वेव शाम्यन्ति तेजांसि च तपांसि च ३५
न मे पिता प्रियतरो न त्वं तात तथा प्रियः
न मे पितुः पिता राजन्न चात्मा न च जीवितम् ३६
त्वत्तश्च मे प्रियतरः पृथिव्यां नास्ति कश्चन
त्वत्तोऽपि मे प्रियतरा ब्राह्मणा भरतर्षभ ३७
ब्रवीमि सत्यमेतच्च यथाहं पाण्डुनन्दन
तेन सत्येन गच्छेयं लोकान्यत्र स शंतनुः ३८
पश्येयं च सतां लोकाञ्छुचीन्ब्रह्मपुरस्कृतान्
तत्र मे तात गन्तव्यमह्नाय च चिराय च ३९
सोऽहमेतादृशाँल्लोकान्दृष्ट्वा भरतसत्तम
यन्मे कृतं ब्राह्मणेषु न तप्ये तेन पार्थिव ४०
इति श्रीमहाभारते अनुशासनपर्वणि अष्टपञ्चाशत्तमोऽध्यायः ५८

## एकोनषष्टितमोऽध्यायः

युधिष्ठिर उवाच
यौ तु स्यातां चरणेनोपपन्नौ यौ विद्यया सदृशौ जन्मना च
ताभ्यां दानं कतरस्मै विशिष्टमयाचमानाय च याचते च १
भीष्म उवाच
श्रेयो वै याचतः पार्थ दत्तमाहुरयाचते
अर्हत्तमो वै धृतिमान्कृपणादधृतात्मनः २
क्षत्रियो रक्षणधृतिर्ब्राह्मणोऽनर्थनाधृतिः
ब्राह्मणो धृतिमान्विद्वान्देवान्प्रीणाति तुष्टिमान् ३
याच्ञामाहुरनीशस्य अभिहारं च भारत
उद्वेजयति याचन्हि सदा भूतानि दस्युवत् ४
म्रियते याचमानो वै तमनु म्रियते ददत्
ददत्संजीवयत्येनमात्मानं च युधिष्ठिर ५
आनृशंस्यं परो धर्मो याचते यत्प्रदीयते
अयाचतः सीदमानान्सर्वोपायैर्निमन्त्रय ६
यदि वै तादृशा राष्ट्रे वसेयुस्ते द्विजोत्तमाः

भस्मच्छन्नानिवाग्नींस्तान्बुध्येथास्त्वं प्रयत्नतः ७
तपसा दीप्यमानास्ते दहेयुः पृथिवीमपि
पूज्या हि ज्ञानविज्ञानतपोयोगसमन्विताः ८
तेभ्यः पूजां प्रयुञ्जीथा ब्राह्मणेभ्यः परंतप
ददद्बहुविधान्दायानुपगच्छन्दानयाचताम् ९
यदग्निहोत्रे सुहुते सायंप्रातर्भवेत्फलम्
विद्यावेदव्रतवति तद्दानफलमुच्यते १०
विद्यावेदव्रत स्नातानव्यपाश्रयजीविनः
गूढस्वाध्यायतपसोब्राह्मणान्संशितव्रतान् ११
कृतैरावसथैर्हृद्यैः सप्रेष्यैः सपरिच्छदैः
निमन्त्रयेथाः कौन्तेय कामैश्चान्यैर्द्विजोत्तमान् १२
अपि ते प्रतिगृह्णीयुः श्रद्धापूतं युधिष्ठिर
कार्यमित्येव मन्वाना धर्मज्ञाः सूक्ष्मदर्शिनः १३
अपि ते ब्राह्मणा भुक्त्वा गताः सोद्धरणान्गृहान्
येषां दाराः प्रतीक्षन्ते पर्जन्यमिव कर्षकाः १४
अन्नानि प्रातःसवने नियता ब्रह्मचारिणः
ब्राह्मणास्तात भुञ्जानास्त्रेताग्नीन्प्रीणयन्तु ते १५
माध्यंदिनं ते सवनं ददतस्तात वर्तताम्
गा हिरण्यानि वासांसि तेनेन्द्रः प्रीयतां तव १६
तृतीयं सवनं तत्ते वैश्वदेवं युधिष्ठिर
यद्देवेभ्यः पितृभ्यश्च विप्रेभ्यश्च प्रयच्छसि १७
अहिंसा सर्वभूतेभ्यः संविभागश्च सर्वशः
दमस्त्यागो धृतिः सत्यं भवत्ववभृथाय ते १८
एष ते विततो यज्ञः श्रद्धापूतः सदक्षिणः
विशिष्टः सर्वयज्ञेभ्यो नित्यं तात प्रवर्तताम् १९
इति श्रीमहाभारते अनुशासनपर्वणि एकोनषष्टितमोऽध्यायः ५९

## षष्टितमोऽध्यायः

युधिष्ठिर उवाच
दानं यज्ञक्रिया चेह किंस्वित्प्रेत्य महाफलम्

कस्य ज्यायः फलं प्रोक्तं कीदृशेभ्यः कथं कदा १
एतदिच्छामि विज्ञातुं याथातथ्येन भारत
विद्वञ्जिज्ञासमानाय दानधर्मान्प्रचक्ष्व मे २
अन्तर्वेद्यां च यद्दत्तं श्रद्धया चानृशंस्यतः
किंस्विन्निःश्रेयसं तात तन्मे ब्रूहि पितामह ३
भीष्म उवाच
रौद्रं कर्म क्षत्रियस्य सततं तात वर्तते
तस्य वैतानिकं कर्म दानं चैवेह पावनम् ४
न तु पापकृतां राज्ञां प्रतिगृह्णन्ति साधवः
एतस्मात्कारणाद्यज्ञैर्यजेद्राजाप्तदक्षिणैः ५
अथ चेत्प्रतिगृह्णीयुर्दद्यादहरहर्नृपः
श्रद्धामास्थाय परमां पावनं ह्येतदुत्तमम् ६
ब्राह्मणांस्तर्पयेद्द्रव्यैस्ततो यज्ञे यतव्रतः
मैत्रान्साधून्वेदविदः शीलवृत्ततपोन्वितान् ७
यत्ते तेन करिष्यन्ति कृतं तेन भविष्यति
यज्ञान्साधय साधुभ्यः स्वाद्वन्नान्दक्षिणावतः ८
इष्टं दत्तं च मन्येथा आत्मानं दानकर्मणा
पूजयेथा यायजूकांस्तवाप्यंशो भवेद्यथा ९
प्रजावतो भरेथाश्च ब्राह्मणान्बहुभारिणः
प्रजावांस्तेन भवति यथा जनयिता तथा १०
यावतो वै साधुधर्मान्सन्तः संवर्तयन्त्युत
सर्वे ते चापि भर्तव्या नरा ये बहुभारिणः ११
समृद्धः संप्रयच्छस्व ब्राह्मणेभ्यो युधिष्ठिर
धेनूरनडुहोऽन्नानि च्छत्रं वासांस्युपानहौ १२
आज्यानि यजमानेभ्यस्तथान्नाद्यानि भारत
अश्ववन्ति च यानानि वेश्मानि शयनानि च १३
एते देया व्युष्टिमन्तो लघूपायाश्च भारत
अजुगुप्सांश्च विज्ञाय ब्राह्मणान्वृत्तिकर्शितान् १४
उपच्छन्नं प्रकाशं वा वृत्त्या तान्प्रतिपादय
राजसूयाश्वमेधाभ्यां श्रेयस्तत्क्षत्रियान्प्रति १५

एवं पापैर्विमुक्तस्त्वं पूतः स्वर्गमवाप्स्यसि
स्रंसयित्वा पुनः कोशं यद्राष्ट्रं पालयिष्यसि १६
ततश्च ब्रह्मभूयस्त्वमवाप्स्यसि धनानि च
आत्मनश्च परेषां च वृत्तिं संरक्ष भारत १७
पुत्रवच्चापि भृत्यान्स्वान्प्रजाश्च परिपालय
योगक्षेमश्च ते नित्यं ब्राह्मणेष्वस्तु भारत १८
अरक्षितारं हर्तारं विलोप्तारमदायकम्
तं स्म राजकलि हन्युः प्रजाः संभूत निर्घृणम् १९
अहं वो रक्षितेत्युक्त्वा यो न रक्षति भूमिपः
स संहत्य निहन्तव्यः श्वेव सोन्माद आतुरः २०
पापं कुर्वन्ति यत्किंचित्प्रजा राज्ञा ह्यरक्षिताः
चतुर्थं तस्य पापस्य राजा भारत विन्दति २१
अप्याहुः सर्वमेवेति भूयोऽधमिति निश्चयः
चतुर्थं मतमस्माकं मनोः श्रुत्वानुशासनम् २२
शुभं वा यत्प्रकुर्वन्ति प्रजा राज्ञा सुरक्षिताः
चतुर्थं तस्य पुण्यस्य राजा चाप्नोति भारत २३
जीवन्तं त्वानुजीवन्तु प्रजाः सर्वा युधिष्ठिर
पर्जन्यमिव भूतानि महाद्रुममिव द्विजाः २४
कुबेरमिव रक्षांसि शतक्रतुमिवामराः
ज्ञातयस्त्वानुजीवन्तु सुहृदश्च परंतप २५
इति श्रीमहाभारते अनुशासनपर्वणि षष्टितमोऽध्यायः ६०

## एक षष्टितमोऽध्यायः

युधिष्ठिर उवाच
इदं देयमिदं देयमितीयं श्रुतिचोदना
बहुदेयाश्च राजानः किंस्विद्देयमनुत्तमम् १
भीष्म उवाच
सति दानानि सर्वाणि पृथिवीदानमुच्यते
अचला ह्यक्षया भूमिर्दोग्ध्री कामाननुत्तमान् २
दोग्ध्री वासांसि रत्नानि पशून्व्रीहियवांस्तथा

भूमिदः सर्वभूतेषु शाश्वतीरेधते समाः ३
यावद्भूमेरायुरिह तावद्भूमिद एधते
न भूमिदानादस्तीह परं किंचिद्युधिष्ठिर ४
अप्यल्पं प्रददुः पूर्वे पृथिव्या इति नः श्रुतम्
भूमिमेते ददुः सर्वे ये भूमिं भुञ्जते जनाः ५
स्वकर्मैवोपजीवन्ति नरा इह परत्र च
भूमिर्भूतिर्महादेवी दातारं कुरुते प्रियम् ६
य एतां दक्षिणां दद्यादक्षयां पृथिवीपतिः
पुनर्नरत्वं संप्राप्य भवेत्स पृथिवीपतिः ७
यथा दानं तथा भोग इति धर्मेषु निश्चयः
संग्रामे वा तनुं जह्याद्दद्याद्वा पृथिवीमिमाम् ८
इत्येतां क्षत्रबन्धूनां वदन्ति परमाशिषम्
पुनाति दत्ता पृथिवी दातारमिति शुश्रुम ९
अपि पापसमाचारं ब्रह्मघ्नमपि वानृतम्
सैव पापं पावयति सैव पापात्प्रमोचयेत् १०
अपि पापकृतां राज्ञां प्रतिगृह्णन्ति साधवः
पृथिवीं नान्यदिच्छन्ति पावनं जननी यथा ११
नामास्याः प्रियदत्तेति गुह्यं देव्याः सनातनम्
दानं वाप्यथ वा ज्ञानं नाम्नोऽस्या परमं प्रियम्
तस्मात्प्राप्यैव पृथिवीं दद्याद्विप्राय पार्थिवः १२
नाभूमिपतिना भूमिरधिष्ठेया कथंचन
न वा पात्रेण वा गूहेदन्तर्धानेन वा चरेत्
ये चान्ये भूमिमिच्छेयुः कुर्युरेवमसंशयम् १३
यः साधोर्भूमिमादत्ते न भूमिं विन्दते तु सः
भूमिं तु दत्त्वा साधुभ्यो विन्दते भूमिमेव हि
प्रेत्येह च स धर्मात्मा संप्राप्नोति महद्यशः १४
यस्य विप्रानुशासन्ति साधोर्भूमिं सदैव हि
न तस्य शत्रवो राजन्प्रशासन्ति वसुंधराम् १५
यत्किंचित्पुरुषः पापं कुरुते वृत्तिकर्शितः
अपि गोचर्ममात्रेण भूमिदानेन पूयते १६

येऽपि संकीर्णकर्माणो राजानो रौद्रकर्मिणः
तेभ्यः पवित्रमाख्येयं भूमिदानमनुत्तमम् १७
अल्पान्तरमिदं शश्वत्पुराणा मेनिरे जनाः
यो यजेदश्वमेधेन दद्याद्वा साधवे महीम् १८
अपि चेत्सुकृतं कृत्वा शङ्केरन्नपि पण्डिताः
अशक्यमेकमेवैतद्भूमिदानमनुत्तमम् १९
सुवर्णं रजतं वस्त्रं मणिमुक्तावसूनि च
सर्वमेतन्महाप्राज्ञ ददाति वसुधां ददत् २०
तपो यज्ञः श्रुतं शीलमलोभः सत्यसंधता
गुरुदैवतपूजा च नातिवर्तन्ति भूमिदम् २१
भर्तृर्निःश्रेयसे युक्तास्त्यक्तात्मानो रणे हताः
ब्रह्मलोकगताः सिद्धा नातिक्रामन्ति भूमिदम् २२
यथा जनित्री क्षीरेण स्वपुत्रं भरते सदा
अनुगृह्णाति दातारं तथा सर्वरसैर्मही २३
मृत्योर्वै किंकरो दण्डस्तापो वह्नेः सुदारुणः
घोराश्च वारुणाः पाशा नोपसर्पन्ति भूमिदम् २४
पितृंश्च पितृलोकस्थान्देवलोके च देवताः
संतर्पयति शान्तात्मा यो ददाति वसुंधराम् २५
कृशाय म्रियमाणाय वृत्तिम्लानाय सीदते
भूमिं वृत्तिकरीं दत्त्वा सत्री भवति मानवः २६
यथा धावति गौर्वत्सं क्षीरमभ्युत्सृजन्त्युत
एवमेव महाभाग भूमिर्भवति भूमिदम् २७
हलकृष्टां महीं दत्त्वा सबीजां सफलामपि
उदीर्णं वापि शरणं तथा भवति कामदः २८
ब्राह्मणं वृत्तसंपन्नमाहिताग्निं शुचिव्रतम्
नरः प्रतिग्राह्य महीं न याति यमसादनम् २९
यथा चन्द्रमसो वृद्धिरहन्यहनि जायते
तथा भूमिकृतं दानं सस्ये सस्ये विवर्धते ३०
अत्र गाथा भूमिगीताः कीर्तयन्ति पुराविदः
याः श्रुत्वा जामदग्न्येन दत्ता भूः काश्यपाय वै ३१

मामेवादत्त मां दत्त मां दत्त्वा मामवाप्स्यथ
अस्मिँल्लोके परे चैव ततश्चाजनने पुनः ३२
य इमां व्याहृतिं वेद ब्राह्मणो ब्रह्मसंश्रितः
श्राद्धस्य हूयमानस्य ब्रह्मभूयं स गच्छति ३३
कृत्यानामभिशस्तानां दुरिष्टशमनं महत्
प्रायश्चित्तमहं कृत्वा पुनात्युभयतो दश ३४
पुनाति य इदं वेद वेद चाहं तथैव च
प्रकृतिः सर्वभूतानां भूमिर्वै शाश्वती मता ३५
अभिषिच्यैव नृपतिं श्रावयेदिममागमम्
यथा श्रुत्वा महीं दद्यान्नादद्यात्साधुतश्च ताम् ३६
सोऽय कृत्स्नो ब्राह्मणार्थो राजार्थश्चाप्यसंशयम्
राजा हि धर्मकुशलः प्रथमं भूतिलक्षणम् ३७
अथ येषामधर्मज्ञो राजा भवति नास्तिकः
न ते सुखं प्रबुध्यन्ते न सुखं प्रस्वपन्ति च ३८
सदा भवन्ति चोद्विग्नास्तस्य दुश्चरितैर्नराः
योगक्षेमा हि बहवो राष्ट्रं नास्याविशन्ति तत् ३९
अथ येषां पुनः प्राज्ञो राजा भवति धार्मिकः
सुखं ते प्रतिबुध्यन्ते सुसुखं प्रस्वपन्ति च ४०
तस्य राज्ञः शुभैरार्यैः कर्मभिर्निर्वृताः प्रजाः
योगक्षेमेण वृष्ट्या च विवर्धन्ते स्वकर्मभिः ४१
स कुलीनः स पुरुषः स बन्धुः स च पुण्यकृत्
स दाता स च विक्रान्तो यो ददाति वसुंधराम् ४२
आदित्या इव दीप्यन्ते तेजसा भुवि मानवाः
ददन्ति वसुधां स्फीतां ये वेदविदुषि द्विजे ४३
यथा बीजानि रोहन्ति प्रकीर्णानि महीतले
तथा कामाः प्ररोहन्ति भूमिदानसमार्जिताः ४४
आदित्यो वरुणो विष्णुर्ब्रह्मा सोमो हुताशनः
शूलपाणिश्च भगवान्प्रतिनन्दन्ति भूमिदम् ४५
भूमौ जायन्ति पुरुषा भूमौ निष्ठां व्रजन्ति च
चतुर्विधो हि लोकोऽय योऽय भूमिगुणात्मकः ४६

एषा माता पिता चैव जगतः पृथिवीपते
नानया सदृशं भूतं किंचिदस्ति जनाधिप ४७
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
बृहस्पतेश्च संवादमिन्द्रस्य च युधिष्ठिर ४८
इष्ट्वा क्रतुशतेनाथ महता दक्षिणावता
मघवा वाग्विदां श्रेष्ठं पप्रच्छेदं बृहस्पतिम् ४९
भगवन्केन दानेन स्वर्गतः सुखमेधते
यदक्षयं महार्घं च तद्ब्रूहि वदतां वर ५०
इत्युक्तः स सुरेन्द्रेण ततो देवपुरोहितः
बृहस्पतिर्महातेजाः प्रत्युवाच शतक्रतुम् ५१
सुवर्णदानं गोदानं भूमिदानं च वृत्रहन्
दददेतान्महाप्राज्ञः सर्वपापैः प्रमुच्यते ५२
न भूमिदानाद्देवेन्द्र परं किंचिदिति प्रभो
विशिष्टमिति मन्यामि यथा प्राहुर्मनीषिणः ५३
ये शूरा निहता युद्धे स्वर्याता दानगृद्धिनः
सर्वे ते विबुधश्रेष्ठ नातिक्रामन्ति भूमिदम् ५४
भर्तुर्निःश्रेयसे युक्तास्त्यक्तात्मानो रणे हताः
ब्रह्मलोकगताः शूरा नातिक्रामन्ति भूमिदम् ५५
पञ्च पूर्वादिपुरुषाः षट् च ये वसुधां गताः
एकादश ददद्भूमिं परित्रातीह मानवः ५६
रत्नोपकीर्णां वसुधां यो ददाति पुरंदर
स मुक्तः सर्वकलुषैः स्वर्गलोके महीयते ५७
महीं स्फीतां ददद्राजा सर्वकामगुणान्विताम्
राजाधिराजो भवति तद्धि दानमनुत्तमम् ५८
सर्वकामसमायुक्तां काश्यपीं यः प्रयच्छति
सर्वभूतानि मन्यन्ते मां ददातीति वासव ५९
सर्वकामदुघां धेनुं सर्वकामपुरोगमाम्
ददाति यः सहस्राक्ष स स्वर्गं याति मानवः ६०
मधुसर्पिःप्रवाहिन्यः पयोदधिवहास्तथा
सरितस्तर्पयन्तीह सुरेन्द्र वसुधाप्रदम् ६१

भूमिप्रदानान्नृपतिर्मुच्यते राजकिल्बिषात्
न हि भूमिप्रदानेन दानमन्यद्विशिष्यते ६२
ददाति यः समुद्रान्तां पृथिवीं शस्त्रनिर्जिताम्
तं जनाः कथयन्तीह यावद्धरति गौरियम् ६३
पुण्यामृद्धरसां भूमिं यो ददाति पुरंदर
न तस्य लोकाः क्षीयन्ते भूमिदानगुणार्जिताः ६४
सर्वथा पार्थिवेनेह सततं भूतिमिच्छता
भूर्देया विधिवच्छक्र पात्रे सुखमभीप्सता ६५
अपि कृत्वा नरः पापं भूमिं दत्त्वा द्विजातये
समुत्सृजति तत्पापं जीर्णां त्वचमिवोरगः ६६
सागरान्सरितः शैलान्काननानि च सर्वशः
सर्वमेतन्नरः शक्र ददाति वसुधां ददत् ६७
तडागान्युदपानानि स्रोतांसि च सरांसि च
स्नेहान्सर्वरसांश्चैव ददाति वसुधां ददत् ६८
ओषधीः क्षीरसंपन्ना नगान्पुष्पफलान्वितान्
काननोपलशैलांश्च ददाति वसुधां ददत् ६९
अग्निष्टोमप्रभृतिभिरिष्ट्वा च स्वाप्तदक्षिणैः
न तत्फलमवाप्नोति भूमिदानाद्यदश्नुते ७०
दाता दशानुगृह्णाति दश हन्ति तथा क्षिपन्
पूर्वदत्तां हरन्भूमिं नरकायोपगच्छति ७१
न ददाति प्रतिश्रुत्य दत्त्वा वा हरते तु यः
स बद्धो वारुणैः पाशैस्तप्यते मृत्युशासनात् ७२
आहिताग्निं सदायज्ञं कृशभृत्यं प्रियातिथिम्
ये भरन्ति द्विजश्रेष्ठं नोपसर्पन्ति ते यमम् ७३
ब्राह्मणेष्वृणभूतं स्यात्पार्थिवस्य पुरंदर
इतरेषां तु वर्णानां तारयेत्कृशदुर्बलान् ७४
नाच्छिन्द्यात्स्पर्शितां भूमिं परेण त्रिदशाधिप
ब्राह्मणाय सुरश्रेष्ठ कृशभृत्याय कश्चन ७५
अथाश्रु पतितं तेषां दीनानामवसीदताम्
ब्राह्मणानां हृते क्षेत्रे हन्यात्त्रिपुरुषं कुलम् ७६

भूमिपालं च्युतं राष्ट्राद्यस्तु संस्थापयेत्पुनः
तस्य वासः सहस्राक्ष नाकपृष्ठे महीयते ७७
इक्षुभिः संततां भूमिं यवगोधूमसंकुलाम्
गोऽश्ववाहनसंपूर्णां बाहुवीर्यसमार्जिताम् ७८
निधिगर्भां ददद्भूमिं सर्वरत्नपरिच्छदाम्
अक्षयाँल्लभते लोकान्भूमिसत्रं हि तस्य तत् ७९
विधूय कलुषं सर्वं विरजाः संमतः सताम्
लोके महीयते सद्भिर्यो ददाति वसुंधराम् ८०
यथाप्सु पतितः शक्र तैलबिन्दुर्विसर्पति
तथा भूमिकृतं दानं सस्ये सस्ये विसर्पति ८१
ये रणाग्रे महीपालाः शूराः समितिशोभनाः
वध्यन्तेऽभिमुखाः शक्र ब्रह्मलोकं व्रजन्ति ते ८२
नृत्यगीतपरा नार्यो दिव्यमाल्यविभूषिताः
उपतिष्ठन्ति देवेन्द्र सदा भूमिप्रदं दिवि ८३
मोदते च सुखं स्वर्गे देवगन्धर्वपूजितः
यो ददाति महीं सम्यग्विधिनेह द्विजातये ८४
शतमप्सरसश्चैव दिव्यमाल्यविभूषिताः
उपतिष्ठन्ति देवेन्द्र सदा भूमिप्रदं नरम् ८५
शङ्खं भद्रासनं छत्रं वराश्वा वरवारणाः
भूमिप्रदानात्पुष्पाणि हिरण्यनिचयास्तथा ८६
आज्ञा सदाप्रतिहता जयशब्दो भवत्यथ
भूमिदानस्य पुष्पाणि फलं स्वर्गः पुरंदर ८७
हिरण्यपुष्पाश्चौषध्यः कुशकाञ्चनशाड्वलाः
अमृतप्रसवां भूमिं प्राप्नोति पुरुषो ददत् ८८
नास्ति भूमिसमं दानं नास्ति मातृसमो गुरुः
नास्ति सत्यसमो धर्मो नास्ति दानसमो निधिः ८९
एतदाङ्गिरसाच्छ्रुत्वा वासवो वसुधामिमाम्
वसुरत्नसमाकीर्णां ददावाङ्गिरसे तदा ९०
य इमं श्रावयेच्छ्राद्धे भूमिदानस्य संस्तवम्
न तस्य रक्षसां भागो नासुराणां भवत्युत ९१

अक्षयं च भवेद्दत्तं पितृभ्यस्तन्न संशयः
तस्माच्छ्राद्धेष्विदं विप्रो भुञ्जतः श्रावयेद्द्विजान् ६२
इत्येतत्सर्वदानानां श्रेष्ठमुक्तं तवानघ
मया भरतशार्दूल किं भूयः श्रोतुमिच्छसि ६३
इति श्रीमहाभारते अनुशासनपर्वणि एकषष्टितमोऽध्यायः ६१

## द्विषष्टितमोऽध्यायः

युधिष्ठिर उवाच
कानि दानानि लोकेऽस्मिन्दातुकामो महीपतिः
गुणाधिकेभ्यो विप्रेभ्यो दद्याद्भरतसत्तम १
केन तुष्यन्ति ते सद्यस्तुष्टाः किं प्रदिशन्त्युत
शंस मे तन्महाबाहो फलं पुण्यकृतं महत् २
दत्तं किं फलवद्राजन्निह लोके परत्र च
भवतः श्रोतुमिच्छामि तन्मे विस्तरतो वद ३
भीष्म उवाच
इममर्थं पुरा पृष्ठो नारदो देवदर्शनः
यदुक्तवानसौ तन्मे गदतः शृणु भारत ४
नारद उवाच
अन्नमेव प्रशंसन्ति देवाः सर्षिगणाः पुरा
लोकतन्त्रं हि यज्ञाश्च सर्वमन्ने प्रतिष्ठितम् ५
अन्नेन सदृशं दानं न भूतं न भविष्यति
तस्मादन्नं विशेषेण दातुमिच्छन्ति मानवाः ६
अन्नमूर्जस्करं लोके प्राणाश्चान्ने प्रतिष्ठिताः
अन्नेन धार्यते सर्वं विश्वं जगदिदं प्रभो ७
अन्नाद्गृहस्था लोकेऽस्मिन्भिक्षवस्तत एव च
अन्नात्प्रभवति प्राणः प्रत्यक्षं नात्र संशयः ८
कुटुम्बं पीडयित्वापि ब्राह्मणाय महात्मने
दातव्यं भिक्षवे चान्नमात्मनो भूतिमिच्छता ९
ब्राह्मणायाभिरूपाय यो दद्यादन्नमर्थिने
निदधाति निधिं श्रेष्ठं पारलौकिकमात्मनः १०

श्रान्तमध्वनि वर्तन्तं वृद्धमर्हमुपस्थितम्
अर्चयेद्भूतिमन्विच्छन्गृहस्थो गृहमागतम् ११
क्रोधमुत्पतितं हित्वा सुशीलो वीतमत्सरः
अन्नदः प्राप्नुते राजन्दिवि चेह च यत्सुखम् १२
नावमन्येदभिगतं न प्रणुद्यात्कथंचन
अपि श्वपाके शुनि वा न दानं विप्रणश्यति १३
यो दद्यादपरिक्लिष्टमन्नमध्वनि वर्तते
श्रान्तायादृष्टपूर्वाय स महद्धर्ममाप्नुयात् १४
पितृन्देवानृषीन्विप्रानतिथींश्च जनाधिप
यो नरः प्रीणयत्यन्नैस्तस्य पुण्यफलं महत् १५
कृत्वापि पापकं कर्म यो दद्यादन्नमर्थिने
ब्राह्मणाय विशेषेण न स पापेन युज्यते १६
ब्राह्मणेष्वक्षयं दानमन्नं शूद्रे महाफलम्
अन्नदानं च शूद्रे च ब्राह्मणे च विशिष्यते १७
न पृच्छेद्गोत्रचरणं स्वाध्यायं देशमेव वा
भिक्षितो ब्राह्मणेनेह जन्म वान्नं प्रयाचितः १८
अन्नदस्यान्नवृक्षाश्च सर्वकामफलान्विताः
भवन्तीहाथ वामुत्र नृपते नात्र संशयः १९
आशंसन्ते हि पितरः सुवृष्टिमिव कर्षकाः
अस्माकमपि पुत्रो वा पौत्रो वान्नं प्रदास्यति २०
ब्राह्मणो हि महद्भूतं स्वयं देहीति याचते
अकामो वा सकामो वा दत्त्वा पुण्यमवाप्नुयात् २१
ब्राह्मणः सर्वभूतानामतिथिः प्रसृताग्रभुक्
विप्रा यमभिगच्छन्ति भिक्षमाणा गृहं सदा २२
सत्कृताश्च निवर्तन्ते तदतीव प्रवर्धते
महाभागे कुले जन्म प्रेत्य प्राप्नोति भारत २३
दत्त्वा त्वन्नं नरो लोके तथा स्थानमनुत्तमम्
मृष्टमृष्टान्नदायी तु स्वर्गे वसति सत्कृतः २४
अन्नं प्राणा नराणां हि सर्वमन्ने प्रतिष्ठितम्
अन्नदः पशुमान्पुत्री धनवान्भोगवानपि २५

प्राणवांश्चापि भवति रूपवांश्च तथा नृप
अन्नदः प्राणदो लोके सर्वदः प्रोच्यते तु सः २६
अन्नं हि दत्त्वातिथये ब्राह्मणाय यथाविधि
प्रदाता सुखमाप्नोति देवैश्चाप्यभिपूज्यते २७
ब्राह्मणो हि महद्भूतं क्षेत्रं चरति पादवत्
उप्यते तत्र यद्बीजं तद्धि पुण्यफलं महत् २८
प्रत्यक्षं प्रीतिजननं भोक्तृदात्रोर्भवत्युत
सर्वाण्यन्यानि दानानि परोक्षफलवन्त्युत २९
अन्नाद्धि प्रसवं विद्धि रतिमन्नाद्धि भारत
धर्मार्थावन्नतो विद्धि रोगनाशं तथान्नतः ३०
अन्नं ह्यमृतमित्याह पुराकल्पे प्रजापतिः
अन्नं भुवं दिवं खं च सर्वमन्ने प्रतिष्ठितम् ३१
अन्नप्रणाशे भिद्यन्ते शरीरे पञ्च धातवः
बलं बलवतोऽपीह प्रणश्यत्यन्नहानितः ३२
आवाहाश्च विवाहाश्च यज्ञाश्चान्नमृते तथा
न वर्तन्ते नरश्रेष्ठ ब्रह्म चात्र प्रलीयते ३३
अन्नतः सर्वमेतद्धि यत्किंचित्स्थाणु जङ्गमम्
त्रिषु लोकेषु धर्मार्थमन्नं देयमतो बुधैः ३४
अन्नदस्य मनुष्यस्य बलमोजो यशः सुखम्
कीर्तिश्च वर्धते शश्वत्त्रिषु लोकेषु पार्थिव ३५
मेघेष्वम्भः संनिधत्ते प्राणानां पवनः शिवः
तच्च मेघगतं वारि शक्रो वर्षति भारत ३६
आदत्ते च रसं भौममादित्यः स्वगभस्तिभिः
वायुरादित्यतस्तांश्च रसान्देवः प्रजापतिः ३७
तद्यदा मेघतो वारि पतितं भवति क्षितौ
तदा वसुमती देवी स्निग्धा भवति भारत ३८
ततः सस्यानि रोहन्ति येन वर्तयते जगत्
मांसमेदोस्थिशुक्राणां प्रादुर्भावस्ततः पुनः ३९
संभवन्ति ततः शुक्रात्प्राणिनः पृथिवीपते
अग्नीषोमौ हि तच्छुक्रं प्रजनः पुष्यतश्च ह ४०

एवमन्नं च सूर्यश्च पवनः शुक्रमेव च
एक एव स्मृतो राशिर्यतो भूतानि जज्ञिरे ४१
प्राणान्ददाति भूतानां तेजश्च भरतर्षभ
गृहमभ्यागतायाशु यो दद्यादन्नमर्थिने ४२
भीष्म उवाच
नारदेनैवमुक्तोऽहमदामन्नं सदा नृप
अनसूयुस्त्वमप्यन्नं तस्माद्देहि गतज्वरः ४३
दत्त्वान्नं विधिवद्राजन्विप्रेभ्यस्त्वमपि प्रभो
यथावदनुरूपेभ्यस्ततः स्वर्गमवाप्स्यसि ४४
अन्नदानां हि ये लोकास्तास्त्वं शृणु नराधिप
भवनानि प्रकाशन्ते दिवि तेषां महात्मनाम्
नानासंस्थानरूपाणि नानास्तम्भान्वितानि च ४५
चन्द्रमण्डलशुभ्राणि किङ्किणीजालवन्ति च
तरुणादित्यवर्णानि स्थावराणि चराणि च ४६
अनेकशतभौमानि सान्तर्जलवनानि च
वैडूर्यार्कप्रकाशानि रौप्यरुक्ममयानि च ४७
सर्वकामफलाश्चापि वृक्षा भवनसंस्थिताः
वाप्यो वीथ्यः सभाः कूपा दीर्घिकाश्चैव सर्वशः ४८
घोषवन्ति च यानानि युक्तान्यथ सहस्रशः
भक्ष्यभोज्यमयाः शैला वासांस्याभरणानि च ४९
क्षीरं स्रवन्त्यः सरितस्तथा चैवान्नपर्वताः
प्रासादाः पाण्डुराभ्राभाः शय्याश्च कनकोज्ज्वलाः
तानन्नदाः प्रपद्यन्ते तस्मादन्नप्रदो भव ५०
एते लोकाः पुण्यकृतामन्नदानां महात्मनाम्
तस्मादन्नं विशेषेण दातव्यं मानवैर्भुवि ५१
इति श्रीमहाभारते अनुशासनपर्वणि द्विषष्टितमोऽध्यायः ६२

## त्रिषष्टितमोऽध्यायः

युधिष्ठिर उवाच
श्रुतं मे भवतो वाक्यमन्नदानस्य यो विधिः

नक्षत्रयोगस्येदानीं दानकल्पं ब्रवीहि मे १
भीष्म उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
देवक्याश्चैव संवादं देवर्षेर्नारदस्य च २
द्वारकामनुसंप्राप्तं नारदं देवदर्शनम्
प्रपच्छैनं ततः प्रश्नं देवकी धर्मदर्शिनी ३
तस्याः संपृच्छमानाया देवर्षिर्नारदस्तदा
आचष्ट विधिवत्सर्वं यत्तच्छृणु विशां पते ४
नारद उवाच
कृत्तिकासु महाभागे पायसेन ससर्पिषा
संतर्प्य ब्राह्मणान्साधूँल्लोकानाप्नोत्यनुत्तमान् ५
रोहिण्यां प्रथितैर्मांसैर्माषैरन्नेन सर्पिषा
पयोऽनुपानं दातव्यमानृण्यार्थं द्विजातये ६
दोग्ध्रीं दत्त्वा सवत्सां तु नक्षत्रे सोमदैवते
गच्छन्ति मानुषाल्लोकात्स्वर्गलोकमनुत्तमम् ७
आर्द्रायां कृसरं दत्वा तैलमिश्रमुपोषितः
नरस्तरति दुर्गाणि क्षुरधारांश्च पर्वतान् ८
अपूपान्पुनर्वसौ दत्त्वा तथैवान्नानि शोभने
यशस्वी रूपसंपन्नो बह्वन्ने जायते कुले ९
पुष्ये तु कनकं दत्त्वा कृतं चाकृतमेव च
अनालोकेषु लोकेषु सोमवत्स विराजते १०
आश्लेषायां तु यो रूप्यमृषभं वा प्रयच्छति
स सर्वभयनिर्मुक्तः शात्रवानधितिष्ठति ११
मघासु तिलपूर्णानि वर्धमानानि मानवः
प्रदाय पुत्रपशुमानिह प्रेत्य च मोदते १२
फल्गुनीपूर्वसमये ब्राह्मणानामुपोषितः
भक्षान्फाणितसंयुक्तान्दत्त्वा सौभाग्यमृच्छति १३
घृतक्षीरसमायुक्तं विधिवत्षष्टिकौदनम्
उत्तराविषये दत्त्वा स्वर्गलोके महीयते १४
यद्यत्प्रदीयते दानमुत्तराविषये नरैः

महाफलमनन्तं च भवतीति विनिश्चयः १५
हस्ते हस्तिरथं दत्त्वा चतुर्युक्तमुपोषितः
प्राप्नोति परमाँल्लोकान्पुण्यकामसमन्वितान् १६
चित्रायामृषभं दत्त्वा पुण्यान्गन्धांश्च भारत
चरत्यप्सरसां लोके रमते नन्दने तथा १७
स्वात्यामथ धनं दत्त्वा यदिष्टतममात्मनः
प्राप्नोति लोकान्स शुभानिह चैव महद्यशः १८
विशाखायामनड्वाहं धेनुं दत्त्वा च दुग्धदाम्
सप्रासङ्गं च शकटं सधान्यं वस्त्रसंयुतम् १९
पितॄन्देवांश्च प्रीणाति प्रेत्य चानन्त्यमश्नुते
न च दुर्गाण्यवाप्नोति स्वर्गलोकं च गच्छति २०
दत्त्वा यथोक्तं विप्रेभ्यो वृत्तिमिष्टां स विन्दति
नरकादींश्च संक्लेशान्नाप्नोतीति विनिश्चयः २१
अनुराधासु प्रावारं वस्त्रान्तरमुपोषितः
दत्वा युगशतं चापि नरः स्वर्गे महीयते २२
कालशाकं तु विप्रेभ्यो दत्त्वा मर्त्यः समूलकम्
ज्येष्ठायामृद्धिमिष्टां वै गतिमिष्टां च विन्दति २३
मूले मूलफलं दत्त्वा ब्राह्मणेभ्यः समाहितः
पितॄन्प्रीणयते चापि गतिमिष्टां च गच्छति २४
अथ पूर्वास्वषाढासु दधिपात्राण्युपोषितः
कुलवृत्तोपसंपन्ने ब्राह्मणे वेदपारगे
प्रदाय जायते प्रेत्य कुले सुबहुगोकुले २५
उदमन्थं ससर्पिष्कं प्रभूतमधुफाणितम्
दत्त्वोत्तरास्वषाढासु सर्वकामानवाप्नुयात् २६
दुग्धं त्वभिजिते योगे दत्त्वा मधुघृताप्लुतम्
धर्मनित्यो मनीषिभ्यः स्वर्गलोके महीयते २७
श्रवणे कम्बलं दत्त्वा वस्त्रान्तरितमेव च
श्वेतेन याति यानेन सर्व लोकानसंवृतान् २८
गोप्रयुक्तं धनिष्ठासु यानं दत्त्वा समाहितः
वस्त्ररश्मिधनं सद्यः प्रेत्य राज्यं प्रपद्यते २९

गन्धाञ्शतभिषग्योगे दत्त्वा सागुरुचन्दनान्
प्राप्नोत्यप्सरसां लोकान्प्रेत्य गन्धांश्च शाश्वतान् ३०
पूर्वभाद्रपदायोगे राजमाषान्प्रदाय तु
सर्वभक्षफलोपेतः स वै प्रेत्य सुखी भवेत् ३१
औरभ्रमुत्तरायोगे यस्तु मांसं प्रयच्छति
स पितॄन्प्रीणयति वै प्रेत्य चानन्त्यमश्नुते ३२
कांस्योपदोहनां धेनुं रेवत्यां यः प्रयच्छति
सा प्रेत्य कामानादाय दातारमुपतिष्ठति ३३
रथमश्वसमायुक्तं दत्त्वाश्विन्यां नरोत्तमः
हस्त्यश्वरथसंपन्ने वर्चस्वी जायते कुले ३४
भरणीषु द्विजातीभ्यस्तिलधेनुं प्रदाय वै
गाः सुप्रभूताः प्राप्नोति नरः प्रेत्य यशस्तथा ३५
भीष्म उवाच
इत्येष लक्षणोद्देशः प्रोक्तो नक्षत्रयोगतः
देवक्या नारदेनेह सा स्नुषाभ्योऽब्रवीदिदम् ३६
इति श्रीमहाभारते अनुशासनपर्वणि त्रिषष्टितमोऽध्यायः ६३

## चतुःषष्टितमोऽध्यायः

भीष्म उवाच
सर्वान्कामान्प्रयच्छन्ति ये प्रयच्छन्ति काञ्चनम्
इत्येवं भगवानत्रिः पितामहसुतोऽब्रवीत् १
पवित्रं शुच्यथायुष्यं पितॄणामक्षयं च तत्
सुवर्णं मनुजेन्द्रेण हरिश्चन्द्रेण कीर्तितम् २
पानीयदानं परमं दानानां मनुरब्रवीत्
तस्माद्वापीश्च कूपांश्च तडागानि च खानयेत् ३
अर्धं पापस्य हरति पुरुषस्येह कर्मणः
कूपः प्रवृत्तपानीयः सुप्रवृत्तश्च नित्यशः ४
सर्वं तारयते वंशं यस्य खाते जलाशये
गावः पिबन्ति विप्राश्च साधवश्च नराः सदा ५
निदाघकाले पानीयं यस्य तिष्ठत्यवारितम्

स दुर्गं विषमं कृच्छ्रं न कदाचिदवाप्नुते ६
बृहस्पतेर्भगवतः पूष्णश्चैव भगस्य च
अश्विनोश्चैव वह्नेश्च प्रीतिर्भवति सर्पिषा ७
परमं भेषजं ह्येतद्यज्ञानामेतदुत्तमम्
रसानामुत्तमं चैतत्फलानां चैतदुत्तमम् ८
फलकामो यशस्कामः पुष्टिकामश्च नित्यदा
घृतं दद्याद्द्विजातिभ्यः पुरुषः शुचि रात्मवान् ९
घृतं मासे आश्वयुजि विप्रेभ्यो यः प्रयच्छति
तस्मै प्रयच्छतो रूपं प्रीतौ देवाविहाश्विनौ १०
पायसं सर्पिषा मिश्रं द्विजेभ्यो यः प्रयच्छति
गृहं तस्य न रक्षांसि धर्षयन्ति कदाचन ११
पिपासया न म्रियते सोदच्छन्दश्च दृश्यते
न प्राप्नुयाच्च व्यसनं करकान्यः प्रयच्छति १२
प्रयतो ब्राह्मणाग्रेभ्यः श्रद्धया परया युतः
उपस्पर्शनषड्भागं लभते पुरुषः सदा १३
यः साधनार्थं काष्ठानि ब्राह्मणेभ्यः प्रयच्छति
प्रतापार्थं च राजेन्द्र वृत्तवद्भ्यः सदा नरः १४
सिध्यन्त्यर्थाः सदा तस्य कार्याणि विविधानि च
उपर्युपरि शत्रूणां वपुषा दीप्यते च सः १५
भगवांश्चास्य सुप्रीतो वह्निर्भवति नित्यशः
न तं त्यजन्ते पशवः संग्रामे च जयत्यपि १६
पुत्राञ्छ्रियं च लभते यश्छत्रं संप्रयच्छति
चक्षुर्व्याधिं न लभते यज्ञभागमथाश्नुते १७
निदाघकाले वर्षे वा यश्छत्रं संप्रयच्छति
नास्य कश्चिन्मनोदाहः कदाचिदपि जायते
कृच्छ्रात्स विषमाच्चैव विप्र मोक्षमवाप्नुते १८
प्रदानं सर्वदानानां शकटस्य विशिष्यते
एवमाह महाभागः शाण्डिल्यो भगवानृषिः १९
इति श्रीमहाभारते अनुशासनपर्वणि चतुःषष्टितमोऽध्यायः ६४

## पञ्चषष्टितमोऽध्यायः

युधिष्ठिर उवाच
दह्यमानाय विप्राय यः प्रयच्छत्युपानहौ
यत्फलं तस्य भवति तन्मे ब्रूहि पितामह १
भीष्म उवाच
उपानहौ प्रयच्छेद्यो ब्राह्मणेभ्यः समाहितः
मर्दते कण्टकान्सर्वान्विषमान्निस्तरत्यपि
स शत्रूणामुपरि च संतिष्ठति युधिष्ठिर २
यानं चाश्वतरीयुक्तं तस्य शुभ्रं विशां पते
उपतिष्ठति कौन्तेय रूप्यकाञ्चनभूषणम्
शकटं दम्यसंयुक्तं दत्तं भवति चैव हि ३
युधिष्ठिर उवाच
यत्फलं तिलदाने च भूमिदाने च कीर्तितम्
गोप्रदानेऽन्नदाने च भूयस्तद्ब्रूहि कौरव ४
भीष्म उवाच
शृणुष्व मम कौन्तेय तिलदानस्य यत्फलम्
निशम्य च यथान्यायं प्रयच्छ कुरुसत्तम ५
पितृणां प्रथमं भोज्यं तिलाः सृष्टाः स्वयंभुवा
तिलदानेन वै तस्मात्पितृपक्षः प्रमोदते ६
माघमासे तिलान्यस्तु ब्राह्मणेभ्यः प्रयच्छति
सर्वसत्त्वसमाकीर्णं नरकं स न पश्यति ७
सर्वकामैः स यजते यस्तिलैर्यजते पितॄन्
न चाकामेन दातव्यं तिलश्राद्धं कथंचन ८
महर्षेः कश्यपस्यैते गात्रेभ्यः प्रसृतास्तिलाः
ततो दिव्यं गता भावं प्रदानेषु तिलाः प्रभो ९
पौष्टिका रूपदाश्चैव तथा पापविनाशनाः
तस्मात्सर्वप्रदानेभ्यस्तिलदानं विशिष्यते १०
आपस्तम्बश्च मेधावी शङ्खश्च लिखितस्तथा
महर्षिर्गौतमश्चापि तिलदानैर्दिवं गताः ११
तिलहोमपरा विप्राः सर्वे संयतमैथुनाः

समा गव्येन हविषा प्रवृत्तिषु च संस्थिताः १२
सर्वेषामेव दानानां तिलदानं परं स्मृतम्
अक्षयं सर्वदानानां तिलदानमिहोच्यते १३
उत्पन्ने च पुरा हव्ये कुशिकर्षिः परंतप
तिलैरग्नित्रयं हुत्वा प्राप्तवान्गतिमुत्तमाम् १४
इति प्रोक्तं कुरुश्रेष्ठ तिलदानमनुत्तमम्
विधानं येन विधिना तिलानामिह शस्यते १५
अत ऊर्ध्वं निबोधेदं देवानां यष्टुमिच्छताम्
समागमं महाराज ब्राह्मणा वै स्वयंभुवा १६
देवाः समेत्य ब्रह्माणं भूमिभागं यियक्षवः
शुभं देशमयाचन्त यजेम इति पार्थिव १७
देवा ऊचुः
भगवंस्त्वं प्रभुर्भूमेः सर्वस्य त्रिदिवस्य च
यजेमहि महाभाग यज्ञं भवदनुज्ञया
नाननुज्ञातभूमिर्हि यज्ञस्य फलमश्नुते १८
त्वं हि सर्वस्य जगतः स्थावरस्य चरस्य च
प्रभुर्भवसि तस्मात्त्वं समनुज्ञातुमर्हसि १९
ब्रह्मोवाच
ददामि मेदिनीभागं भवद्भ्योऽहं सुरर्षभाः
यस्मिन्देशे करिष्यध्वं यज्ञं काश्यपनन्दनाः २०
देवा ऊचुः
भगवन्कृतकामाः स्मो यक्ष्यामस्त्वाप्तदक्षिणैः
इमं तु देशं मुनयः पर्युपासन्त नित्यदा २१
भीष्म उवाच
ततोऽगस्त्यश्च कण्वश्च भृगुरत्रिर्वृषाकपिः
असितो देवलश्चैव देवयज्ञमुपागमन् २२
ततो देवा महात्मान ईजिरे यज्ञमच्युत
तथा समापयामासुर्यथाकालं सुरर्षभाः २३
त इष्टयज्ञास्त्रिदशा हिमवत्यचलोत्तमे
षष्ठमंशं क्रतोस्तस्य भूमिदानं प्रचक्रिरे २४

प्रादेशमात्रं भूमेस्तु यो दद्यादनुपस्कृतम्
न सीदति स कृच्छ्रेषु न च दुर्गाण्यवाप्नुते २५
शीतवातातपसहां गृहभूमिं सुसंस्कृताम्
प्रदाय सुरलोकस्थः पुण्यान्तेऽपि न चाल्यते २६
मुदितो वसते प्राज्ञः शक्रेण सह पार्थिव
प्रतिश्रयप्रदाता च सोऽपि स्वर्गे महीयते २७
अध्यापककुले जातः श्रोत्रियो नियतेन्द्रियः
गृहे यस्य वसेत्तुष्टः प्रधानं लोकमश्नुते २८
तथा गवार्थे शरणं शीतवर्षसहं महत्
आसप्तमं तारयति कुलं भरतसत्तम २९
क्षेत्रभूमिं ददल्लोके पुत्र श्रियमवाप्नुयात्
रत्नभूमिं प्रदत्त्वा तु कुलवंशं विवर्धयेत् ३०
न चोषरां न निर्दग्धां महीं दद्यात्कथंचन
न श्मशानपरीतां च न च पापनिषेविताम् ३१
पारक्ये भूमिदेशे तु पितॄणां निर्वपेत्तु यः
तद्भूमिस्वामिपितृभिः श्राद्धकर्म विहन्यते ३२
तस्मात्क्रीत्वा महीं दद्यात्स्वल्पामपि विचक्षणः
पिण्डः पितृभ्यो दत्तो वै तस्यां भवति शाश्वतः ३३
अटवीपर्वताश्चैव नदीतीर्थानि यानि च
सर्वाण्यस्वामिकान्याहुर्न हि तत्र परिग्रहः ३४
इत्येतद्भूमिदानस्य फलमुक्तं विशां पते
अतः परं तु गोदानं कीर्तयिष्यामि तेऽनघ ३५
गावोऽधिकास्तपस्विभ्यो यस्मात्सर्वेभ्य एव च
तस्मान्महेश्वरो देवस्तपस्ताभिः समास्थितः ३६
ब्राह्मलोके वसन्त्येताः सोमेन सह भारत
आसां ब्रह्मर्षयः सिद्धाः प्रार्थयन्ति परां गतिम् ३७
पयसा हविषा दध्ना शकृताप्यथ चर्मणा
अस्थिभिश्चोपकुर्वन्ति शृङ्गैर्वालैश्च भारत ३८
नासां शीतातपौ स्यातां सदैताः कर्म कुर्वते
न वर्षं विषमं वापि दुःखमासां भवत्युत ३९

ब्राह्मणैः सहिता यान्ति तस्मात्परतरं पदम्
एकं गोब्राह्मणं तस्मात्प्रवदन्ति मनीषिणः ४०
रन्तिदेवस्य यज्ञे ताः पशुत्वेनोपकल्पिताः
ततश्चर्मण्वती राजन्गोचर्मभ्यः प्रवर्तिता ४१
पशुत्वाच्च विनिर्मुक्ताः प्रदानायोपकल्पिताः
ता इमा विप्रमुख्येभ्यो यो ददाति महीपते
निस्तरेदापदं कृच्छ्रां विषमस्थोऽपि पार्थिव ४२
गवां सहस्रदः प्रेत्य नरकं न प्रपश्यति
सर्वत्र विजयं चापि लभते मनुजाधिप ४३
अमृतं वै गवां क्षीरमित्याह त्रिदशाधिपः
तस्माद्ददाति यो धेनुममृतं स प्रयच्छति ४४
अग्नीनामव्ययं ह्येतद्धौम्यं वेदविदो विदुः
तस्माद्ददाति यो धेनुं स हौम्यं संप्रयच्छति ४५
स्वर्गो वै मूर्तिमानेष वृषभं यो गवां पतिम्
विप्रे गुणयुते दद्यात्स वै स्वर्गे महीयते ४६
प्राणा वै प्राणिनामेते प्रोच्यन्ते भरतर्षभ
तस्माद्ददाति यो धेनुं प्राणान्वै स प्रयच्छति ४७
गावः शरण्या भूतानामिति वेदविदो विदुः
तस्माद्ददाति यो धेनुं शरणं संप्रयच्छति ४८
न वधार्थं प्रदातव्या न कीनाशे न नास्तिके
गोजीविने न दातव्या तथा गौः पुरुषर्षभ ४९
ददाति तादृशानां वै नरो गाः पापकर्मणाम्
अक्षयं नरकं यातीत्येवमाहुर्मनीषिणः ५०
न कृशां पापवत्सां वा वन्ध्यां रोगान्वितां तथा
न व्यङ्गां न परिश्रान्तां दद्याद्गां ब्राह्मणाय वै ५१
दशगोसहस्रदः सम्यक्शक्रेण सह मोदते
अक्षयाँल्लभते लोकान्नरः शतसहस्रदः ५२
इत्येतद्गोप्रदानं च तिलदानं च कीर्तितम्
तथा भूमिप्रदानं च शृणुष्वान्ने च भारत ५३
अन्नदानं प्रधानं हि कौन्तेय परिचक्षते

अन्नस्य हि प्रदानेन रन्तिदेवो दिवं गतः ५४
श्रान्ताय क्षुधितायान्नं यः प्रयच्छति भूमिप
स्वायंभुवं महाभागं स पश्यति नराधिप ५५
न हिरण्यैर्न वासोभिर्नाश्वदानेन भारत
प्राप्नुवन्ति नराः श्रेयो यथेहान्नप्रदाः प्रभो ५६
अन्नं वै परमं द्रव्यमन्नं श्रीश्च परा मता
अन्नात्प्राणः प्रभवति तेजो वीर्यं बलं तथा ५७
सद्यो ददाति यश्चान्नं सदैकाग्रमना नरः
न स दुर्गाण्यवाप्नोतीत्येवमाह पराशरः ५८
अर्चयित्वा यथान्यायं देवेभ्योऽन्न निवेदयेत्
यदन्नो हि नरो राजंस्तदन्नास्तस्य देवताः ५९
कौमुद्यां शुक्लपक्षे तु योऽन्नदानं करोत्युत
स संतरति दुर्गाणि प्रेत्य चानन्त्यमश्नुते ६०
अभुक्त्वातिथये चान्नं प्रयच्छेद्यः समाहितः
स वै ब्रह्मविदां लोकान्प्राप्नुयाद्भरतर्षभ ६१
सुकृच्छ्रामापदं प्राप्तश्चान्नदः पुरुषस्तरेत्
पापं तरति चैवेह दुष्कृतं चापकर्षति ६२
इत्येतदन्नदानस्य तिलदानस्य चैव ह
भूमिदानस्य च फलं गोदानस्य च कीर्तितम् ६३
इति श्रीमहाभारते अनुशासनपर्वणि पञ्चषष्टितमोऽध्यायः ६५

## षट्षष्टितमोऽध्यायः

युधिष्ठिर उवाच
श्रुतं दानफलं तात यत्त्वया परिकीर्तितम्
अन्नं तु ते विशेषेण प्रशस्तमिह भारत १
पानीयदानं परमं कथं चेह महाफलम्
इत्येतच्छ्रोतुमिच्छामि विस्तरेण पितामह २
भीष्म उवाच
हन्त ते वर्तयिष्यामि यथावद्भरतर्षभ
गदतस्तन्ममाद्येह शृणु सत्यपराक्रम

पानीयदानात्प्रभृति सर्वं वक्ष्यामि तेऽनघ ३
यदन्नं यच्च पानीयं संप्रदायाश्नुते नरः
न तस्मात्परमं दानं किंचिदस्तीति मे मतिः ४
अन्नात्प्राणभृतस्तात प्रवर्तन्ते हि सर्वशः
तस्मादन्नं परं लोके सर्वदानेषु कथ्यते ५
अन्नाद्बलं च तेजश्च प्राणिनां वर्धते सदा
अन्नदानमतस्तस्माच्छ्रेष्ठमाह प्रजापतिः ६
सावित्र्या ह्यपि कौन्तेय श्रुतं ते वचनं शुभम्
यतश्चैतद्यथा चैतद्देवसत्रे महामते ७
अन्ने दत्ते नरेणेह प्राणा दत्ता भवन्त्युत
प्राणदानाद्धि परमं न दानमिह विद्यते ८
श्रुतं हि ते महाबाहो लोमशस्यापि तद्वचः
प्राणान्दत्त्वा कपोताय यत्प्राप्तं शिबिना पुरा ९
तां गतिं लभते दत्त्वा द्विजस्यान्नं विशां पते
गतिं विशिष्टां गच्छन्ति प्राणदा इति नः श्रुतम् १०
अन्नं चापि प्रभवति पानीयात्कुरुसत्तम
नीरजातेन हि विना न किंचित्संप्रवर्तते ११
नीरजातश्च भगवान्सोमो ग्रहगणेश्वरः
अमृतं च सुधा चैव स्वाहा चैव वषट् तथा १२
अन्नौषध्यो महाराज वीरुधश्च जलोद्भवाः
यतः प्राणभृतां प्राणाः संभवन्ति विशां पते १३
देवानाममृतं चान्नं नागानां च सुधा तथा
पितॄणां च स्वधा प्रोक्ता पशूनां चापि वीरुधः १४
अन्नमेव मनुष्याणां प्राणानाहुर्मनीषिणः
तच्च सर्वं नरव्याघ्र पानीयात्संप्रवर्तते १५
तस्मात्पानीयदानाद्वै न परं विद्यते क्वचित्
तच्च दद्यान्नरो नित्यं य इच्छेद्भूतिमात्मनः १६
धन्यं यशस्यमायुष्यं जलदानं विशां पते
शत्रूंश्चाप्यधि कौन्तेय सदा तिष्ठति तोयदः १७
सर्वकामानवाप्नोति कीर्तिं चैवेह शाश्वतीम्

प्रेत्य चानन्त्यमाप्नोति पापेभ्यश्च प्रमुच्यते १८
तोयदो मनुजव्याघ्र स्वर्गं गत्वा महाद्युते
अक्षयान्समवाप्नोति लोकानित्यब्रवीन्मनुः १९
इति श्रीमहाभारते अनुशासनपर्वणि षट्षष्टितमोऽध्यायः ६६

सप्तषष्टितमोऽध्यायः

युधिष्ठिर उवाच
तिलानां कीदृशं दानमथ दीपस्य चैव ह
अन्नानां वाससां चैव भूय एव ब्रवीहि मे १
भीष्म उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
ब्राह्मणस्य च संवादं यमस्य च युधिष्ठिर २
मध्यदेशे महान्ग्रामो ब्राह्मणानां बभूव ह
गङ्गायमुनयोर्मध्ये यामुनस्य गिरेरधः ३
पर्णशालेति विख्यातो रमणीयो नराधिप
विद्वांसस्तत्र भूयिष्ठा ब्राह्मणाश्चावसंस्तदा ४
अथ प्राह यमः कंचित्पुरुषं कृष्णवाससम्
रक्ताक्षमूर्ध्वरोमाणं काकजङ्घाक्षिनासिकम् ५
गच्छ त्वं ब्राह्मणग्रामं ततो गत्वा तमानय
अगस्त्यं गोत्रतश्चापि नामतश्चापि शर्मिणम् ६
शमे निविष्टं विद्वांसमध्यापकमनादृतम्
मा चान्यमानयेथास्त्वं सगोत्रं तस्य पार्श्वतः ७
स हि तादृग्गुणस्तेन तुल्योऽध्ययनजन्मना
अपत्येषु तथा वृत्ते समस्तेनैव धीमता
तमानय यथोद्दिष्टं पूजा कार्या हि तस्य मे ८
स गत्वा प्रतिकूलं तच्चकार यमशासनम्
तमाक्रम्यानयामास प्रतिषिद्धो यमेन यः ९
तस्मै यमः समुत्थाय पूजां कृत्वा च वीर्यवान्
प्रोवाच नीयतामेष सोऽन्य आनीयतामिति १०
एवमुक्ते तु वचने धर्मराजेन स द्विजः

उवाच धर्मराजानं निर्विण्णोऽध्ययनेन वै
यो मे कालो भवेच्छेषस्तं वसेयमिहाच्युत ११
यम उवाच
नाहं कालस्य विहितं प्राप्नोमीह कथंचन
यो हि धर्मं चरति वै तं तु जानामि केवलम् १२
गच्छ विप्र त्वमद्यैव आलयं स्वं महाद्युते
ब्रूहि वा त्वं यथा स्वैरं करवाणि किमित्युत १३
ब्राह्मण उवाच
यत्तत्र कृत्वा सुमहत्पुण्यं स्यात्तद्ब्रवीहि मे
सर्वस्य हि प्रमाणं त्वं त्रैलोक्यस्यापि सत्तम १४
यम उवाच
शृणु तत्त्वेन विप्रर्षे प्रदानविधिमुत्तमम्
तिलाः परमकं दानं पुण्यं चैवेह शाश्वतम् १५
तिलाश्च संप्रदातव्या यथाशक्ति द्विजर्षभ
नित्यदानात्सर्वकामांस्तिला निर्वर्तयन्त्युत १६
तिलाञ्श्राद्धे प्रशंसन्ति दानमेतद्ध्यनुत्तमम्
तान्प्रयच्छस्व विप्रेभ्यो विधिदृष्टेन कर्मणा १७
तिला भक्षयितव्याश्च सदा त्वालभनं च तैः
कार्यं सततमिच्छद्भिः श्रेयः सर्वात्मना गृहे १८
तथापः सर्वदा देयाः पेयाश्चैव न संशयः
पुष्करिण्यस्तडागानि कूपांश्चैवात्र खानयेत् १९
एतत्सुदुर्लभतरमिह लोके द्विजोत्तम
आपो नित्यं प्रदेयास्ते पुण्यं ह्येतदनुत्तमम् २०
प्रपाश्च कार्याः पानार्थं नित्यं ते द्विजसत्तम
भुक्तेऽप्यथ प्रदेयं ते पानीयं वै विशेषतः २१
इत्युक्ते स तदा तेन यमदूतेन वै गृहान्
नीतश्चकार च तथा सर्वं तद्यमशासनम् २२
नीत्वा तं यमदूतोऽपि गृहीत्वा शर्मिणं तदा
ययौ स धर्मराजाय न्यवेदयत चापि तम् २३
तं धर्मराजो धर्मज्ञं पूजयित्वा प्रतापवान्

कृत्वा च संविदं तेन विससर्ज यथागतम् २४
तस्यापि च यमः सर्वमुपदेशं चकार ह
प्रत्येत्य च स तत्सर्वं चकारोक्तं यमेन तत् २५
तथा प्रशंसते दीपान्यमः पितृहितेप्सया
तस्माद्दीपप्रदो नित्यं संतारयति वै पितॄन् २६
दातव्याः सततं दीपास्तस्माद्भरतसत्तम
देवानां च पितॄणां च चक्षुष्यास्ते मताः प्रभो २७
रत्नदानं च सुमहत्पुण्यमुक्तं जनाधिप
तानि विक्रीय यजते ब्राह्मणो ह्यभयंकरः २८
यद्वै ददाति विप्रेभ्यो ब्राह्मणः प्रतिगृह्य वै
उभयोः स्यात्तदक्षय्यं दातुरादातुरेव च २९
यो ददाति स्थितः स्थित्यां तादृशाय प्रतिग्रहम्
उभयोरक्षयं धर्मं तं मनुः प्राह धर्मवित् ३०
वाससां तु प्रदानेन स्वदारनिरतो नरः
सुवस्त्रश्च सुवेषश्च भवतीत्यनुशुश्रुम ३१
गावः सुवर्णं च तथा तिलाश्चैवानुवर्णिताः
बहुशः पुरुषव्याघ्र वेदप्रामाण्यदर्शनात् ३२
विवाहांश्चैव कुर्वीत पुत्रानुत्पादयेत च
पुत्रलाभो हि कौरव्य सर्वलाभाद्विशिष्यते ३३
इति श्रीमहाभारते अनुशासनपर्वणि सप्तषष्टितमोऽध्यायः ६७

## अष्टषष्टितमोऽध्यायः

युधिष्ठिर उवाच
भूय एव कुरुश्रेष्ठ दानानां विधिमुत्तमम्
कथयस्व महाप्राज्ञ भूमिदानं विशेषतः १
पृथिवीं क्षत्रियो दद्याद्ब्राह्मणस्तां स्वकर्मणा
विधिवत्प्रतिगृह्णीयान्न त्वन्यो दातुमर्हति २
सर्ववर्णैस्तु यच्छक्यं प्रदातुं फलकाङ्क्षिभिः
वेदे वा यत्समाम्नातं तन्मे व्याख्यातुमर्हसि ३
भीष्म उवाच

तुल्यनामानि देयानि त्रीणि तुल्यफलानि च
सर्वकामफलानीह गावः पृथ्वी सरस्वती ४
यो ब्रूयाच्चापि शिष्याय धर्म्यां ब्राह्मीं सरस्वतीम्
पृथिवीगोप्रदानाभ्यां स तुल्यं फलमश्नुते ५
तथैव गाः प्रशंसन्ति न च देयं ततः परम्
संनिकृष्टफलास्ता हि लघ्वर्थाश्च युधिष्ठिर
मातरः सर्वभूतानां गावः सर्वसुखप्रदाः ६
वृद्धिमाकाङ्क्षता नित्यं गावः कार्या प्रदक्षिणाः
मङ्गलायतनं देव्यस्तस्मात्पूज्याः सदैव हि ७
प्रचोदनं देवकृतं गवां कर्मसु वर्तताम्
पूर्वमेवाक्षरं नान्यदभिधेयं कथंचन ८
प्रचारे वा निपाने वा बुधो नोद्वेजयेत गाः
तृषिता ह्यभिवीक्षन्त्यो नरं हन्युः सबान्धवम् ९
पितृसद्मानि सततं देवतायतनानि च
पूयन्ते शकृता यासां पूतं किमधिकं ततः १०
ग्रासमुष्टिं परगवे दद्यात्संवत्सरं तु यः
अकृत्वा स्वयमाहारं व्रतं तत्सार्वकामिकम् ११
स हि पुत्रान्यशोऽथ च श्रियं चाप्यधिगच्छति
नाशयत्यशुभं चैव दुःस्वप्नं च व्यपोहति १२
युधिष्ठिर उवाच
देयाः किंलक्षणा गावः काश्चापि परिवर्जयेत्
कीदृशाय प्रदातव्या न देयाः कीदृशाय च १३
भीष्म उवाच
असद्वृत्ताय पापाय लुब्धायानृतवादिने
हव्यकव्यव्यपेताय न देया गौः कथंचन १४
भिक्षवे बहुपुत्राय श्रोत्रियायाहिताग्नये
दत्त्वा दशगवां दाता लोकानाप्नोत्यनुत्तमान् १५
यं चैव धर्मं कुरुते तस्य पुण्यफलं च यत्
सर्वस्यैवांशभाग्दाता तन्निमित्तं प्रवृत्तयः १६
यश्चैनमुत्पादयति यश्चैनं त्रायते भयात्

यश्चास्य कुरुते वृत्तिं सर्वे ते पितरस्त्रयः १७
कल्मषं गुरुशुश्रूषा हन्ति मानो महद्यशः
अपुत्रतां त्रयः पुत्रा अवृत्तिं दश धेनवः १८
वेदान्तनिष्ठस्य बहुश्रुतस्य प्रज्ञानतृप्तस्य जितेन्द्रियस्य
शिष्टस्य दान्तस्य यतस्य चैव भूतेषु नित्यं प्रियवादिनश्च १९
यः क्षुद्भयाद्वै न विकर्म कुर्यान्मृदुर्दान्तश्चातिथेयश्च नित्यम्
वृत्तिं विप्रायातिसृजेत तस्मै यस्तुल्यशीलश्च सपुत्रदारः २०
शुभे पात्रे ये गुणा गोप्रदाने तावान्दोषो ब्राह्मणस्वापहारे
सर्वावस्थं ब्राह्मणस्वापहारो दाराश्चैषां दूरतो वर्जनीयाः २१
इति श्रीमहाभारते अनुशासनपर्वणि अष्टषष्टितमोऽध्यायः ६८

## एकोनसप्ततितमोऽध्यायः

भीष्म उवाच
अत्रैव कीर्त्यते सद्भिर्ब्राह्मणस्वाभिमर्शने
नृगेण सुमहत्कृच्छ्रं यदवाप्तं कुरूद्वह १
निविशन्त्यां पुरा पार्थ द्वारवत्यामिति श्रुतिः
अदृश्यत महाकूपस्तृणवीरुत्समावृतः २
प्रयत्नं तत्र कुर्वाणास्तस्मात्कूपाज्जलार्थिनः
श्रमेण महता युक्तास्तस्मिंस्तोये सुसंवृते ३
ददृशुस्ते महाकायं कृकलासमवस्थितम्
तस्य चोद्धरणे यत्नमकुर्वंस्ते सहस्रशः ४
प्रग्रहैश्चर्मपट्टैश्च तं बध्वा पर्वतोपमम्
नाशक्नुवन्समुद्धर्तुं ततो जग्मुर्जनार्दनम् ५
खमावृत्योदपानस्य कृकलासः स्थितो महान्
तस्य नास्ति समुद्धर्तेत्यथ कृष्णे न्यवेदयन् ६
स वासुदेवेन समुद्धृतश्च पृष्टश्च कामान्निजगाद राजा
नृगस्तदात्मानमथो न्यवेदयत्पुरातनं यज्ञसहस्रयाजिनम् ७
तथा ब्रुवाणं तु तमाह माधवः शुभं त्वया कर्म कृतं न पापकम्
कथं भवान्दुर्गतिमीदृशीं गतो नरेन्द्र तद्ब्रूहि किमेतदीदृशम् ८
शतं सहस्राणि शतं गवां पुनः पुनः शतान्यष्ट शतायुतानि

त्वया पुरा दत्तमितीह शुश्रुम नृप द्विजेभ्यः क्व नु तद्गतं तव ९
नृगस्ततोऽब्रवीत्कृष्णं ब्राह्मणस्याग्निहोत्रिणः
प्रोषितस्य परिभ्रष्टा गौरेका मम गोधने १०
गवां सहस्रे संख्याता तदा सा पशुपैर्मम
सा ब्राह्मणाय मे दत्ता प्रेत्यार्थमभिकाङ्क्षता ११
अपश्यत्परिमार्गंश्च तां यां परगृहे द्विजः
ममेयमिति चोवाच ब्राह्मणो यस्य साभवत् १२
तावुभौ समनुप्राप्तौ विवदन्तौ भृशज्वरौ
भवान्दाता भवान्हर्तेत्यथ तौ मां तदोचतुः १३
शतेन शतसंख्येन गवां विनिमयेन वै
याचे प्रतिग्रहीतारं स तु मामब्रवीदिदम् १४
देशकालोपसंपन्ना दोग्ध्री क्षान्तातिवत्सला
स्वादुक्षीरप्रदा धन्या मम नित्यं निवेशने १५
कृशं च भरते या गौर्मम पुत्रमपस्तनम्
न सा शक्या मया हातुमित्युक्त्वा स जगाम ह १६
ततस्तमपरं विप्रं याचे विनिमयेन वै
गवां शतसहस्रं वै तत्कृते गृह्यतामिति १७
ब्राह्मण उवाच
न राज्ञां प्रतिगृह्णामि शक्तोऽहं स्वस्य मार्गणे
सैव गौर्दीयतां शीघ्रं ममेति मधुसूदन १८
रुक्ममश्वांश्च ददतो रजतं स्यन्दनांस्तथा
न जग्राह ययौ चापि तदा स ब्राह्मणर्षभः १९
एतस्मिन्नेव काले तु चोदितः कालधर्मणा
पितृलोकमहं प्राप्य धर्मराजमुपागमम् २०
यमस्तु पूजयित्वा मां ततो वचनमब्रवीत्
नान्तः संख्यायते राजंस्तव पुण्यस्य कर्मणः २१
अस्ति चैव कृतं पापमज्ञानात्तदपि त्वया
चरस्व पापं पश्चाद्वा पूर्वं वा त्वं यथेच्छसि २२
रक्षितास्मीति चोक्तं ते प्रतिज्ञा चानृता तव
ब्राह्मणस्वस्य चादानं त्रिविधस्ते व्यतिक्रमः २३

पूर्वं कृच्छ्रं चरिष्येऽह पश्चाच्छुभमिति प्रभो
धर्मराजं ब्रुवन्नेवं पतितोऽस्मि महीतले २४
अश्रौषं प्रच्युतश्चाहं यमस्योच्चैः प्रभाषतः
वासुदेवः समुद्धर्ता भविता ते जनार्दनः २५
पूर्णे वर्षसहस्रान्ते क्षीणे कर्मणि दुष्कृते
प्राप्स्यसे साश्वताँल्लोकाञ्जितान्स्वेनैव कर्मणा २६
कूपेऽत्मानमधःशीर्षमपश्यं पतितं च ह
तिर्यग्योनिमनुप्राप्तं न तु मामजहात्स्मृतिः २७
त्वया तु तारितोऽस्म्यद्य किमन्यत्र तपोबलात्
अनुजानीहि मां कृष्ण गच्छेयं दिवमद्य वै २८
अनुज्ञातः स कृष्णेन नमस्कृत्य जनार्दनम्
विमानं दिव्यमास्थाय ययौ दिवमरिंदम २९
ततस्तस्मिन्दिवं प्राप्ते नृगे भरतसत्तम
वासुदेव इमं श्लोकं जगाद कुरुनन्दन ३०
ब्राह्मणस्वं न हर्तव्यं पुरुषेण विजानता
ब्राह्मणस्वं हृतं हन्ति नृगं ब्राह्मणगौरिव ३१
सतां समागमः सद्भिर्नाफलः पार्थ विद्यते
विमुक्तं नरकात्पश्य नृगं साधुसमागमात् ३२
प्रदानं फलवत्तत्र द्रोहस्तत्र तथाफलः
अपचारं गवां तस्माद्वर्जयेत युधिष्ठिर ३३
इति श्रीमहाभारते अनुशासनपर्वणि एकोनसप्ततितमोऽध्यायः ६९

## सप्ततितमोऽध्यायः

युधिष्ठिर उवाच
दत्तानां फलसंप्राप्तिं गवां प्रब्रूहि मेऽनघ
विस्तरेण महाबाहो न हि तृप्यामि कथ्यताम् १
भीष्म उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
ऋषेरुद्दालकेर्वाक्यं नाचिकेतस्य चोभयोः २
ऋषिरुद्दालकिर्दीक्षामुपगम्य ततः सुतम्

त्वं मामुपचरस्वेति नाचिकेतमभाषत
समाप्ते नियमे तस्मिन्महर्षिः पुत्रमब्रवीत् ३
उपस्पर्शनसक्तस्य स्वाध्यायनिरतस्य च
इध्मा दर्भाः सुमनसः कलशश्चाभितो जलम्
विस्मृतं मे तदादाय नदीतीरादिहाव्रज ४
गत्वानवाप्य तत्सर्वं नदीवेगसमाप्लुतम्
न पश्यामि तदित्येवं पितरं सोऽब्रवीन्मुनिः ५
क्षुत्पिपासाश्रमाविष्टो मुनिरुद्दालकिस्तदा
यमं पश्येति तं पुत्रमशपत्स महातपाः ६
तथा स पित्राभिहतो वाग्वज्रेण कृताञ्जलि
प्रसीदेति ब्रुवन्नेव गतसत्त्वोऽपतद्भुवि ७
नाचिकेतं पिता दृष्ट्वा पतितं दुःखमूर्छितः
किं मया कृतमित्युक्त्वा निपपात महीतले ८
तस्य दुःखपरीतस्य स्वं पुत्रमुपगूहतः
व्यतीतं तदहःशेषं सा चोग्रा तत्र शर्वरी ९
पित्र्येणाश्रुप्रपातेन नाचिकेतः कुरूद्वह
प्रास्पन्दच्छयने कौश्ये वृष्ट्या सस्यमिवाप्लुतम् १०
स पर्यपृच्छत्तं पुत्रं श्लाघ्यं प्रत्यागतं पुनः
दिव्यैर्गन्धैः समादिग्धं क्षीणस्वप्नमिवोत्थितम् ११
अपि पुत्र जिता लोकाः शुभास्ते स्वेन कर्मणा
दिष्ट्या चासि पुनः प्राप्तो न हि ते मानुषं वपुः १२
प्रत्यक्षदर्शी सर्वस्य पित्रा पृष्टो महात्मना
अन्वर्थं तं पितुर्मध्ये महर्षीणां न्यवेदयत् १३
कुर्वन्भवच्छासनमाशु यातो ह्यहं विशालां रुचिरप्रभावाम्
वैवस्वतीं प्राप्य सभामपश्यं सहस्रशो योजनहैमभौमाम् १४
दृष्ट्वैव मामभिमुखमापतन्तं गृहं निवेद्यासनमादिदेश
वैवस्वतोऽर्घ्यादिभिरर्हणैश्च भवत्कृते पूजयामास मां सः १५
ततस्त्वहं तं शनकैरवोचं वृतं सदस्यैरभिपूज्यमानम्
प्राप्तोऽस्मि ते विषयं धर्मराज लोकानर्हे यान्स्म तान्मे विधत्स्व १६
यमोऽब्रवीन्मां न मृतोऽसि सौम्य यमं पश्येत्याह तु त्वां तपस्वी

पिता प्रदीप्ताग्निसमानतेजा न तच्छक्यमनृतं विप्र कर्तुम् १७
दृष्टस्तेऽह प्रतिगच्छस्व तात शोचत्यसौ तव देहस्य कर्ता
ददामि किं चापि मनःप्रणीतं प्रियातिथे तव कामान्वृणीष्व १८
तेनैवमुक्तस्तमहं प्रत्यवोचं प्राप्तोऽस्मि ते विषयं दुर्निवर्त्यम्
इच्छाम्यहं पुण्यकृतां समृद्धाँलोकान्द्रष्टुं यदि तेऽह वरार्हः १९
यानं समारोप्य तु मां स देवो वाहैर्युक्तं सुप्रभं भानुमन्तम्
संदर्शयामास तदा स्म लोकान्सर्वांस्तदा पुण्यकृतां द्विजेन्द्र २०
अपश्यं तत्र वेश्मानि तैजसानि कृतात्मनाम्
नानासंस्थानरूपाणि सर्वरत्नमयानि च २१
चन्द्रमण्डलशुभ्राणि किङ्किणीजालवन्ति च
अनेकशतभौमानि सान्तर्जलवनानि च २२
वैडूर्यार्कप्रकाशानि रूप्यरुक्ममयानि च
तरुणादित्यवर्णानि स्थावराणि चराणि च २३
भक्ष्यभोज्यमयाञ्शैलान्वासांसि शयनानि च
सर्वकामफलांश्चैव वृक्षान्भवनसंस्थितान् २४
नद्यो वीथ्यः सभा वापी दीर्घिकाश्चैव सर्वशः
घोषवन्ति च यानानि युक्तान्येव सहस्रशः २५
क्षीरस्रवा वै सरितो गिरींश्च सर्पिस्तथा विमलं चापि तोयम्
वैवस्वतस्यानुमतांश्च देशानदृष्टपूर्वान्सुबहूनपश्यम् २६
सर्वं दृष्ट्वा तदहं धर्मराजमवोचं वै प्रभविष्णुं पुराणम्
क्षीरस्यैताः सर्पिषश्चैव नद्यः शश्वत्स्रोताः कस्य भोज्याः प्रदिष्टाः २७
यमोऽब्रवीद्विद्धि भोज्यास्त्वमेता ये दातारः साधवो गोरसानाम्
अन्ये लोकाः शाश्वता वीतशोकाः समाकीर्णा गोप्रदाने रतानाम् २८
न त्वेवासां दानमात्रं प्रशस्तं पात्रं कालो गोविशेषो विधिश्च
ज्ञात्वा देया विप्र गवान्तरं हि दुःखं ज्ञातुं पावकादित्यभूतम् २९
स्वाध्यायाढ्यो योऽतिमात्रं तपस्वी वैतानस्थो ब्राह्मणः पात्रमासाम्
कृच्छ्रोत्सृष्टाः पोषणाभ्यागताश्च द्वारैरेतैर्गोविशेषाः प्रशस्ताः ३०
तिस्रो रात्रीरद्भिरुपोष्य भूमौ तृप्ता गावस्तर्पितेभ्यः प्रदेयाः
वत्सैः प्रीताः सुप्रजाः सोपचारास्त्र्यहं दत्त्वा गोरसैर्वर्तितव्यम् ३१
दत्त्वा धेनुं सुव्रतां कांस्यदोहां कल्याणवत्सामपलायिनीं च

यावन्ति लोमानि भवन्ति तस्यास्तावद्वर्षाण्यश्नुते स्वर्गलोकम् ३२
तथानड्वाहं ब्राह्मणाय प्रदाय दान्तं धुर्यं बलवन्तं युवानम्
कुलानुजीवं वीर्यवन्तं बृहन्तं भुङ्क्ते लोकान्संमितान्धेनुदस्य ३३
गोषु क्षान्तं गोशरण्यं कृतज्ञं वृत्तिग्लानं तादृशं पात्रमाहुः
वृत्तिग्लाने संभ्रमे वा महार्थे कृष्यर्थे वा होमहेतोः प्रसूत्याम् ३४
गुर्वर्थे वा बालपुष्ट्याभिषङ्गाद्गावो दातुं देशकालोऽविशिष्टः
अन्तर्जाताः सक्रयज्ञानलब्धाः प्राणक्रीता निर्जिताश्चौदकाश्च ३५
नाचिकेत उवाच
श्रुत्वा वैवस्वतवचस्तमहं पुनरब्रुवम्
अगोमी गोप्रदातॄणां कथं लोकान्निगच्छति ३६
ततो यमाऽब्रवीद्धीमान्गोप्रदाने परां गतिम्
गोप्रदानानुकल्पं तु गामृते सन्ति गोप्रदाः ३७
अलाभे यो गवां दद्याद्घृतधेनुं यतव्रतः
तस्यैता घृतवाहिन्यः क्षरन्ते वत्सला इव ३८
घृतालाभे च यो दद्यात्तिलधेनुं यतव्रतः
स दुर्गात्तारितो धेन्वा क्षीरनद्यां प्रमोदते ३९
तिलालाभे च यो दद्याज्जलधेनुं यतव्रतः
स कामप्रवहां शीतां नदीमेतामुपाश्नुते ४०
एवमादीनि मे तत्र धर्मराजो न्यदर्शयत्
दृष्ट्वा च परमं हर्षमवापमहमच्युत ४१
निवेदये चापि प्रियं भवत्सु क्रतुर्महानल्पधनप्रचारः
प्राप्तो मया तात स मत्प्रसूतः प्रपत्स्यते वेदविधिप्रवृत्तः ४२
शापो ह्ययं भवतोऽनुग्रहाय प्राप्तो मया यत्र दृष्टो यमो मे
दानव्युष्टिं तत्र दृष्ट्वा महार्थां निःसंदिग्धं दानधर्मांश्चरिष्ये ४३
इदं च मामब्रवीद्धर्मराजः पुनः पुनः संप्रहृष्टो द्विजर्षे
दानेन तात प्रयतोऽभू सदैव विशेषतो गोप्रदानं च कुर्याः ४४
शुद्धो ह्यर्थो नावमन्यः स्वधर्मात्पात्रे देयं देशकालोपपन्ने
तस्माद्गावस्ते नित्यमेव प्रदेया मा भूच्च ते संशयः कश्चिदत्र ४५
एताः पुरा अददन्नित्यमेव शान्तात्मानो दानपथे निविष्टाः
तपांस्युग्राण्यप्रतिशङ्कमानास्ते वै दानं प्रददुश्चापि शक्त्या ४६

काले शक्त्या मत्सरं वर्जयित्वा शुद्धात्मानः श्रद्धिनः पुरायशीलाः
दत्त्वा तप्त्वा लोकममुं प्रपन्ना देदीप्यन्ते पुरायशीलाश्च नाके ४७
एतद्दानं न्यायलब्धं द्विजेभ्यः पात्रे दत्तं प्रापणीयं परीक्त्य
काम्याष्टम्यां वर्तितव्यं दशाहं रसैर्गवां शकृता प्रस्नवैर्वा ४८
वेदव्रती स्याद्वृषभप्रदाता वेदावाप्तिर्गोयुगस्य प्रदाने
तीर्थावाप्तिर्गोप्रयुक्तप्रदाने पापोत्सर्गः कपिलायाः प्रदाने ४९
गामप्येकां कपिलां संप्रदाय न्यायोपेतां कल्मषाद्विप्रमुच्येत्
गवां रसात्परमं नास्ति किंचिद्गवां दानं सुमहत्तद्वदन्ति ५०
गावो लोकान्धारयन्ति क्तरन्त्यो गावश्चान्नं संजनयन्ति लोके
यस्तज्जानन्न गवां हार्दमेति स वै गन्ता निरयं पापचेताः ५१
यत्ते दातुं गोसहस्रं शतं वा शतार्धं वा दश वा साधुवत्साः
अप्येकां वा साधवे ब्राह्मणाय सास्यामुष्मिन्पुरायतीर्था नदी वै ५२
प्राप्त्या पुष्ट्या लोकसंरक्तणेन गावस्तुल्याः सूर्यपादैः पृथिव्याम्
शब्दश्चैकः संततिश्चोपभोगस्तस्माद्गोदः सूर्य इवाभिभाति ५३
गुरुं शिष्यो वरयेद्गोप्रदाने स वै वक्ता नियतं स्वर्गदाता
विधिज्ञानां सुमहानेष धर्मो विधिं ह्याद्यं विधयः संश्रयन्ति ५४
एतद्दानं न्यायलब्धं द्विजेभ्यः पात्रे दत्त्वा प्रापयेथाः परीक्त्य
त्वय्याशंसन्त्यमरा मानवाश्च वयं चापि प्रसृते पुरायशीलाः ५५
इत्युक्तोऽहं धर्मराज्ञा महर्षे धर्मात्मानं शिरसाभिप्रणम्य
अनुज्ञातस्तेन वैवस्वतेन प्रत्यागमं भगवत्पादमूलम् ५६

इति श्रीमहाभारते अनुशासनपर्वणि सप्ततितमोऽध्यायः ७०

## एक सप्ततितमोऽध्यायः

युधिष्ठिर उवाच
उक्तं वै गोप्रदानं ते नाचिकेतमृषिं प्रति
माहात्म्यमपि चैवोक्तमुद्देशेन गवां प्रभो १
नृगेण च यथा दुःखमनुभूतं महात्मना
एकापराधादज्ञानात्पितामह महामते २
द्वारवत्यां यथा चासौ निविशन्त्यां समुद्धृतः
मोक्तहेतुरभूत्कृष्णस्तदप्यवधृतं मया ३

किं त्वस्ति मम संदेहो गवां लोकं प्रति प्रभो
तत्त्वतः श्रोतुमिच्छामि गोदा यत्र विशन्त्युत ४
भीष्म उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
यथापृच्छत्पद्मयोनिमेतदेव शतक्रतुः ५
शक्र उवाच
स्वर्लोकवासिनां लक्ष्मीमभिभूय स्वया त्विषा
गोलोकवासिनः पश्ये व्रजतः संशयोऽत्र मे ६
कीदृशा भगवँल्लोका गवां तद्ब्रूहि मेऽनघ
यानावसन्ति दातार एतदिच्छामि वेदितुम् ७
कीदृशाः किंफलाः कःस्वित्परमस्तत्र वै गुणः
कथं च पुरुषास्तत्र गच्छन्ति विगतज्वराः ८
कियत्कालं प्रदानस्य दाता च फलमश्नुते
कथं बहुविधं दानं स्यादल्पमपि वा कथम् ९
बह्वीनां कीदृशं दानमल्पानां वापि कीदृशम्
अदत्त्वा गोप्रदाः सन्ति केन वा तच्च शंस मे १०
कथं च बहुदाता स्यादल्पदात्रा समः प्रभो
अल्पप्रदाता बहुदः कथं च स्यादिहेश्वर ११
कीदृशी दक्षिणा चैव गोप्रदाने विशिष्यते
एतत्तथ्येन भगवन्मम शंसितुमर्हसि १२
इति श्रीमहाभारते अनुशासनपर्वणि एकसप्ततितमोऽध्यायः ७१

## द्विसप्ततितमोऽध्यायः

ब्रह्मोवाच
योऽय प्रश्नस्त्वया पृष्ठो गोप्रदानाधिकारवान्
नास्य प्रष्टास्ति लोकेऽस्मिस्त्वत्तोऽन्यो हि शतक्रतो १
सन्ति नानाविधा लोका यांस्त्वं शक्र न पश्यसि
पश्यामि यानहं लोकानेकपत्न्यश्च याः स्त्रियः २
कर्मभिश्चापि सुशुभैः सुव्रता ऋषयस्तथा
सशरीरा हि तान्यान्ति ब्राह्मणाः शुभवृत्तयः ३

शरीरन्यासमोक्षेण मनसा निर्मलेन च
स्वप्नभूतांश्च ताँल्लोकान्पश्यन्तीहापि सुव्रताः ४
ते तु लोकाः सहस्राक्ष शृणु यादृग्गुणान्विताः
न तत्र क्रमते कालो न जरा न च पापकम्
तथान्यन्नाशुभं किंचिन्न व्याधिस्तत्र न क्लमः ५
यद्यच्च गावो मनसा तस्मिन्वाञ्छन्ति वासव
तत्सर्वं प्रापयन्ति स्म मम प्रत्यक्षदर्शनात्
कामगाः कामचारिण्यः कामात्कामांश्च भुञ्जते ६
वाप्यः सरांसि सरितो विविधानि वनानि च
गृहाणि पर्वताश्चैव यावद्द्रव्यं च किंचन ७
मनोज्ञं सर्वभूतेभ्यः सर्वं तत्र प्रदृश्यते
ईदृशान्विद्धि ताँल्लोकान्नास्ति लोकस्ततोऽधिकः ८
तत्र सर्वसहाः क्षान्ता वत्सला गुरुवर्तिनः
अहंकारैर्विरहिता यान्ति शक्र नरोत्तमाः ९
यः सर्वमांसानि न भक्षयीत पुमान्सदा यावदन्ताय युक्तः
मातापित्रोरर्चिता सत्ययुक्तः शुश्रूषिता ब्राह्मणानामनिन्द्यः १०
अक्रोधनो गोषु तथा द्विजेषु धर्मे रतो गुरुशुश्रूषकश्च
यावज्जीवं सत्यवृत्ते रतश्च दाने रतो यः क्षमी चापराधे ११
मृदुर्दान्तो देवपरायणश्च सर्वातिथिश्चापि तथा दयावान्
ईदृग्गुणो मानवः संप्रयाति लोकं गवां शाश्वतं चाव्ययं च १२
न पारदारी पश्यति लोकमेनं न वै गुरुघ्नो न मृषाप्रलापी
सदापवादी ब्राह्मणः शान्तवेदो दोषैरन्यैर्यश्च युक्तो दुरात्मा १३
न मित्रध्रुङ्नैकृतिकः कृतघ्नः शठोऽनृजुर्धर्मविद्वेषकश्च
न ब्रह्महा मनसापि प्रपश्येद्गवां लोकं पुण्यकृतां निवासम् १४
एतत्ते सर्वमाख्यातं नैपुणेन सुरेश्वर
गोप्रदानरतानां तु फलं शृणु शतक्रतो १५
दायाद्यलब्धैरर्थैर्यो गाः क्रीत्वा संप्रयच्छति
धर्मार्जितधनक्रीतान्स लोकानश्नुतेऽक्षयान् १६
यो वै द्यूते धनं जित्वा गाः क्रीत्वा संप्रयच्छति
स दिव्यमयुतं शक्र वर्षाणां फलमश्नुते १७

दायाद्या यस्य वै गावो न्यायपूर्वैरुपार्जिताः
प्रदत्तास्ता प्रदातॄणां संभवन्त्यक्षया ध्रुवाः १८
प्रतिगृह्य च यो दद्याद्गाः सुशुद्धेन चेतसा
तस्यापीहाक्षयाँल्लोकान्ध्रुवान्विद्धि शचीपते १९
जन्मप्रभृति सत्यं च यो ब्रूयान्नियतेन्द्रियः
गुरुद्विजसहः क्षान्तस्तस्य गोभिः समा गतिः २०
न जातु ब्राह्मणो वाच्यो यदवाच्यं शचीपते
मनसा गोषु न द्रुह्येद्गो वृत्तिर्गोऽनुकम्पकः २१
सत्ये धर्मे च निरतस्तस्य शक्र फलं शृणु
गोसहस्रेण समिता तस्य धेनुर्भवत्युत २२
क्षत्रियस्य गुणैरेभिरन्वितस्य फलं शृणु
तस्यापि शततुल्या गौर्भवतीति विनिश्चयः २३
वैश्यस्यैते यदि गुणास्तस्य पञ्चाशतं भवेत्
शूद्रस्यापि विनीतस्य चतुर्भागफलं स्मृतम् २४
एतच्चैवं योऽनुतिष्ठेत युक्तः सत्येन युक्तो गुरुशुश्रूषया च
दान्तः क्षान्तो देवतार्ची प्रशान्तः शुचिर्बुद्धो धर्मशीलोऽनहंवाक् २५
महत्फलं प्राप्नुते स द्विजाय दत्त्वा दोग्ध्रद्यं विधिनानेन धेनुम्
नित्यं दद्यादेकभक्तः सदा च सत्ये स्थितो गुरुशुश्रूषिता च २६
वेदाध्यायी गोषु यो भक्तिमांश्च नित्यं दृष्ट्वा योऽभिनन्देत गाश्च
आ जातितो यश्च गवां नमेत इदं फलं शक्र निबोध तस्य २७
यत्स्यादिष्ट्वा राजसूये फलं तु यत्स्यादिष्ट्वा बहुना काञ्चनेन
एतत्तुल्यं फलमस्याहुरग्र्यं सर्वे सन्तस्त्वृषयो ये च सिद्धाः २८
योऽग्र भक्तान्किंचिदप्राश्य दद्याद्गोभ्यो नित्यं गोव्रती सत्यवादी
शान्तो बुद्धो गोसहस्रस्य पुण्यं संवत्सरेणाप्नुयात्पुण्यशीलः २९
य एकं भक्तमश्नीयाद्दद्यादेकं गवां च यत्
दश वर्षाण्यनन्तानि गोव्रती गोनुऽकम्पकः ३०
एकेनैव च भक्तेन यः क्रीत्वा गां प्रयच्छति
यावन्ति तस्या प्रोक्तानि दिवसानि शतक्रतो
तावच्छतानां स गवां फलमाप्नोति शाश्वतम् ३१
ब्राह्मणस्य फलं हीदं क्षत्रियेऽभिहितं शृणु

पञ्चवार्षिकमेतत्तु क्षत्रियस्य फलं स्मृतम्
ततोऽर्धेन तु वैश्यस्य शूद्रो वैश्यार्धतः स्मृतः ३२
यश्चात्मविक्रयं कृत्वा गाः क्रीत्वा संप्रयच्छति
यावतीः स्पर्शयेद्गा वै तावत्तु फलमश्नुते
लोम्नि लोम्नि महाभाग लोकाश्चास्याक्षयाः स्मृताः ३३
संग्रामेष्वर्जयित्वा तु यो वै गाः संप्रयच्छति
आत्मविक्रयतुल्यास्ताः शाश्वता विद्धि कौशिक ३४
अलाभे यो गवां दद्यात्तिलधेनुं यतव्रतः
दुर्गात्स तारितो धेन्वा क्षीरनद्यां प्रमोदते ३५
न त्वेवासां दानमात्रं प्रशस्तं पात्रं कालो गोविशेषो विधिश्च
कालज्ञानं विप्र गवान्तरं हि दुःखं ज्ञातुं पावकादित्यभूतम् ३६
स्वाध्यायाढ्यं शुद्धयोनिं प्रशान्तं वैतानस्थं पापभीरुं कृतज्ञम्
गोषु क्षान्तं नातितीक्ष्णं शरण्यं वृत्तिग्लानं तादृशं पात्रमाहुः ३७
वृत्तिग्लाने सीदति चातिमात्रं कृष्यर्थं वा होमहेतोः प्रसूत्याम्
गुर्वर्थं वा बालसंवृद्धये वा धेनुं दद्याद्देशकाले विशिष्टे ३८
अन्तर्जाताः सुक्रयज्ञानलब्धाः प्राणक्रीता निर्जिताश्चौकजाश्च
कृच्छ्रोत्सृष्टाः पोषणाभ्यागताश्च द्वारैरेतैर्गोविशेषाः प्रशस्ताः ३९
बलान्विताः शीलवयोपपन्नाः सर्वाः प्रशंसन्ति सुगन्धवत्यः
यथा हि गङ्गा सरितां वरिष्ठा तथार्जुनीनां कपिला वरिष्ठा ४०
तिस्रो रात्रीस्त्वद्भिरुपोष्य भूमौ तृप्ता गावस्तर्पितेभ्यः प्रदेयाः
वत्सैः पुष्टैः क्षीरपैः सुप्रचारास्त्र्यहं दत्त्वा गोरसैर्वर्तितव्यम् ४१
दत्त्वा धेनुं सुव्रतां साधुवत्सां कल्याणवृत्तामपलायिनीं च
यावन्ति लोमानि भवन्ति तस्यास्तावन्ति वर्षाणि वसत्यमुत्र ४२
तथानड्वाहं ब्राह्मणायाथ धुर्यं दत्त्वा युवानं बलिनं विनीतम्
हलस्य वोढारमनन्तवीर्यं प्राप्नोति लोकान्दशधेनुदस्य ४३
कान्तारे ब्राह्मणान्गाश्च यः परित्राति कौशिक
क्षेमेण च विमुच्येत तस्य पुण्यफलं शृणु
अश्वमेधक्रतोस्तुल्यं फलं भवति शाश्वतम् ४४
मृत्युकाले सहस्राक्ष यां वृत्तिमनुकाङ्क्षते
लोकान्बहुविधान्दिव्यान्यद्वास्य हृदि वर्तते ४५

तत्सर्वं समवाप्नोति कर्मणा तेन मानवः
गोभिश्च समनुज्ञातः सर्वत्र स महीयते ४६
यस्त्वेतेनैव विधिना गां वनेष्वनुगच्छति
तृणगोमयपर्णाशी निःस्पृहो नियतः शुचिः ४७
अकामं तेन वस्तव्यं मुदितेन शतक्रतो
मम लोके सुरैः सार्धं लोके यत्रापि चेच्छति ४८
इति श्रीमहाभारते अनुशासनपर्वणि द्वासप्ततितमोऽध्यायः ७२

## त्रिसप्ततितमोऽध्यायः

इन्द्र उवाच
जानन्यो गामपहरेद्विक्रीयाद्वार्थकारणात्
एतद्विज्ञातुमिच्छामि का नु तस्य गतिर्भवेत् १
ब्रह्मोवाच
भक्षार्थं विक्रयार्थं वा येऽपहारं हि कुर्वते
दानार्थं वा ब्राह्मणाय तत्रेदं श्रूयतां फलम् २
विक्रयार्थं हि यो हिंस्याद्भक्षयेद्वा निरङ्कुशः
घातयानं हि पुरुषं येऽनुमन्येयुरर्थिनः ३
घातकः खादको वापि तथा यश्चानुमन्यते
यावन्ति तस्या लोमानि तावद्वर्षाणि मज्जति ४
ये दोषा यादृशाश्चैव द्विजयज्ञोपघातके
विक्रये चापहारे च ते दोषा वै स्मृताः प्रभो ५
अपहृत्य तु यो गां वै ब्राह्मणाय प्रयच्छति
यावद्दाने फलं तस्यास्तावन्निरयमृच्छति ६
सुवर्णं दक्षिणामाहुर्गोप्रदाने महाद्युते
सुवर्णं परमं ह्युक्तं दक्षिणार्थमसंशयम् ७
गोप्रदानं तारयते सप्त पूर्वांस्तथा परान्
सुवर्णं दक्षिणां दत्त्वा तावद्द्विगुणमुच्यते ८
सुवर्णं परमं दानं सुवर्णं दक्षिणा परा
सुवर्णं पावनं शक्र पावनानां परं स्मृतम् ९
कुलानां पावनं प्राहुर्जातरूपं शतक्रतो

एषा मे दक्षिणा प्रोक्ता समासेन महाद्युते १०
भीष्म उवाच
एतत्पितामहेनोक्तमिन्द्राय भरतर्षभ
इन्द्रो दशरथायाह रामायाह पिता तथा ११
राघवोऽपि प्रियभ्रात्रे लक्ष्मणाय यशस्विने
ऋषिभ्यो लक्ष्मणेनोक्तमरण्ये वसता विभो १२
पारंपर्यागतं चेदमृषयः संशितव्रताः
दुर्धरं धारयामासू राजानश्चैव धार्मिकाः
उपाध्यायेन गदितं मम चेदं युधिष्ठिर १३
य इदं ब्राह्मणो नित्यं वदेद्ब्राह्मणसंसदि
यज्ञेषु गोप्रदानेषु द्वयोरपि समागमे १४
तस्य लोकाः किलाक्षय्या दैवतैः सह नित्यदा
इति ब्रह्मा स भगवानुवाच परमेश्वरः १५
इति श्रीमहाभारते अनुशासनपर्वणि त्रिसप्ततितमोऽध्यायः ७३

चतुः सप्ततितमोऽध्यायः

युधिष्ठिर उवाच
विस्रम्भितोऽह भवता धर्मान्प्रवदता विभो
प्रवक्ष्यामि तु संदेहं तन्मे ब्रूहि पितामह १
व्रतानां किं फलं प्रोक्तं कीदृशं वा महाद्युते
नियमानां फलं किं च स्वधीतस्य च किं फलम् २
दमस्येह फलं किं च वेदानां धारणे च किम्
अध्यापने फलं किं च सर्वमिच्छामि वेदितुम् ३
अप्रतिग्राहके किं च फलं लोके पितामह
तस्य किं च फलं दृष्टं श्रुतं यः संप्रयच्छति ४
स्वकर्मनिरतानां च शूराणां चापि किं फलम्
सत्ये च किं फलं प्रोक्तं ब्रह्मचर्ये च किं फलम् ५
पितृशुश्रूषणे किं च मातृशुश्रूषणे तथा
आचार्यगुरुशुश्रूषास्वनुक्रोशानुकम्पने ६
एतत्सर्वमशेषेण पितामह यथातथम्

वेत्तुमिच्छामि धर्मज्ञ परं कौतूहलं हि मे ७
भीष्म उवाच
यो व्रतं वै यथोद्दिष्टं तथा संप्रतिपद्यते
अखण्डं सम्यगारब्धं तस्य लोकाः सनातनाः ८
नियमानां फलं राजन्प्रत्यक्षमिह दृश्यते
नियमानां क्रतूनां च त्वयावाप्तमिदं फलम् ९
स्वधीतस्यापि च फलं दृश्यतेऽमुत्र चेह च
इहलोकेऽथवान्नित्यं ब्रह्मलोके च मोदते १०
दमस्य तु फलं राजञ्शृणु त्वं विस्तरेण मे
दान्ताः सर्वत्र सुखिनो दान्ताः सर्वत्र निर्वृताः ११
यत्रेच्छागामिनो दान्ताः सर्वशत्रुनिषूदनाः
प्रार्थयन्ति च यद्दान्ता लभन्ते तन्न संशयः १२
युज्यन्ते सर्वकामैर्हि दान्ताः सर्वत्र पाण्डव
स्वर्गे तथा प्रमोदन्ते तपसा विक्रमेण च १३
दानैर्यज्ञैश्च विविधैर्यथा दान्ताः क्षमान्विताः
दाता कुप्यति नो दान्तस्तस्माद्दानात्परो दमः १४
यस्तु दद्यादकुप्यन्हि तस्य लोकाः सनातनाः
क्रोधो हन्ति हि यद्दानं तस्माद्दानात्परो दमः १५
अदृश्यानि महाराज स्थानान्ययुतशो दिवि
ऋषीणां सर्वलोकेषु यानीतो यान्ति देवताः १६
दमेन यानि नृपते गच्छन्ति परमर्षयः
कामयाना महत्स्थानं तस्माद्दानात्परो दमः १७
अध्यापकः परिक्लेशादक्षयं फलमश्नुते
विधिवत्पावकं हुत्वा ब्रह्मलोके नराधिप १८
अधीत्यापि हि यो वेदान्न्यायविद्भ्यः प्रयच्छति
गुरुकर्मप्रशंसी च सोऽपि स्वर्गे महीयते १९
क्षत्रियोऽध्ययने युक्तो यजने दानकर्मणि
युद्धे यश्च परित्राता सोऽपि स्वर्गे महीयते २०
वैश्यः स्वकर्मनिरतः प्रदानाल्लभते महत्
शूद्रः स्वकर्मनिरतः स्वर्गं शुश्रूषयार्च्छति २१

शूरा बहुविधाः प्रोक्तास्तेषामर्थांश्च मे शृणु
शूरान्वयानां निर्दिष्टं फलं शूरस्य चैव ह २२
यज्ञशूरा दमे शूराः सत्यशूरास्तथापरे
युद्धशूरास्तथैवोक्ता दानशूराश्च मानवाः २३
बुद्धिशूरास्तथैवान्ये क्षमाशूरास्तथापरे
आर्जवे च तथा शूराः शमे वर्तन्ति मानवाः २४
तैस्तैस्तु नियमैः शूरा बहवः सन्ति चापरे
वेदाध्ययनशूराश्च शूराश्चाध्यापने रताः २५
गुरुशुश्रूषया शूराः पितृशुश्रूषयापरे
मातृशुश्रूषया शूरा भैक्ष्यशूरास्तथापरे २६
सांख्यशूराश्च बहवो योगशूरास्तथापरे
अरण्ये गृहवासे च शूराश्चातिथिपूजने
सर्वे यान्ति पराँल्लोकान्स्वकर्मफलनिर्जितान् २७
धारणं सर्ववेदानां सर्वतीर्थावगाहनम्
सत्यं च ब्रुवतो नित्यं समं वा स्यान्न वा समम् २८
अश्वमेधसहस्रं च सत्यं च तुलया धृतम्
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते २९
सत्येन सूर्यस्तपति सत्येनाग्निः प्रदीप्यते
सत्येन मारुतो वाति सर्वं सत्ये प्रतिष्ठितम् ३०
सत्येन देवान्प्रीणाति पितॄन्वै ब्राह्मणांस्तथा
सत्यमाहुः परं धर्मं तस्मात्सत्यं न लङ्घयेत् ३१
मुनयः सत्यनिरता मुनयः सत्यविक्रमाः
मुनयः सत्यशपथास्तस्मात्सत्यं विशिष्यते
सत्यवन्तः स्वर्गलोके मोदन्ते भरतर्षभ ३२
दमः सत्यफलावाप्तिरुक्ता सर्वात्मना मया
असंशयं विनीतात्मा सर्वः स्वर्गे महीयते ३३
ब्रह्मचर्यस्य तु गुणाञ्शृणु मे वसुधाधिप
आ जन्ममरणाद्यस्तु ब्रह्मचारी भवेदिह
न तस्य किंचिदप्राप्यमिति विद्धि जनाधिप ३४
बह्व्यः कोटयस्त्वृषीणां तु ब्रह्मलोके वसन्त्युत

सत्ये रतानां सततं दान्तानामूर्ध्वरेतसाम् ३५
ब्रह्मचर्यं दहेद्राजन्सर्वपापान्युपासितम्
ब्राह्मणेन विशेषेण ब्राह्मणो ह्यग्निरुच्यते ३६
प्रत्यक्षं च तवाप्येतद्ब्राह्मणेषु तपस्विषु
बिभेति हि यथा शक्रो ब्रह्मचारिप्रधर्षितः
तद्ब्रह्मचर्यस्य फलमृषीणामिह दृश्यते ३७
मातापित्रोः पूजने यो धर्मस्तमपि मे शृणु
शुश्रूषते यः पितरं न चासूयेत्कथंचन
मातरं वानहंवादी गुरुमाचार्यमेव च ३८
तस्य राजन्फलं विद्धि स्वर्लोके स्थानमुत्तमम्
न च पश्येत नरकं गुरुशुश्रूषुरात्मवान् ३९
इति श्रीमहाभारते अनुशासनपर्वणि चतुःसप्ततितमोऽध्यायः ७४

पञ्चसप्ततितमोऽध्यायः

युधिष्ठिर उवाच
विधिं गवां परमहं श्रोतुमिच्छामि तत्त्वतः
येन ताञ्शाश्वताँल्लोकानखिलानश्नुवीमहि १
भीष्म उवाच
न गोदानात्परं किंचिद्विद्यते वसुधाधिप
गौर्हि न्यायागता दत्ता सद्यस्तारयते कुलम् २
सतामर्थे सम्यगुत्पादितो यः स वै क्लृप्तः सम्यगिष्टः प्रजाभ्यः
तस्मात्पूर्वं ह्यादिकाले प्रवृत्तं गवां दाने शृणु राजन्विधिं मे ३
पुरा गोषूपनीतासु गोषु संदिग्धदर्शिना
मान्धात्रा प्रकृतं प्रश्नं बृहस्पतिरभाषत ४
द्विजातिमभिसत्कृत्य श्वः कालमभिवेद्य च
प्रदानार्थे नियुञ्जीत रोहिणीं नियतव्रतः ५
आह्वानं च प्रयुञ्जीत समङ्गे बहुलेति च
प्रविश्य च गवां मध्यमिमां श्रुतिमुदाहरेत् ६
गौर्मे माता गोवृषभः पिता मे दिवं शर्म जगती मे प्रतिष्ठा
प्रपद्यैवं शर्वरीमुष्य गोषु मुनिर्वाणीमुत्सृजेद्गोप्रदाने ७

स तामेकां निशां गोभिः समसख्यः समव्रतः
एकात्म्यगमनात्सद्यः कल्मषाद्विप्रमुच्यते ८
उत्सृष्टवृषवत्सा हि प्रदेया सूर्यदर्शने
त्रिविधं प्रतिपत्तव्यमर्थवादाशिषः स्तवाः ९
ऊर्जस्विन्य ऊर्जमेधाश्च यज्ञो गर्भोऽमृतस्य जगतश्च प्रतिष्ठा
क्षितौ राधःप्रभवः शश्वदेव प्राजापत्याः सर्वमित्यर्थवादः १०
गावो ममैनः प्रणुदन्तु सौर्यास्तथा सौम्याः स्वर्गयानाय सन्तु
आम्नाता मे ददतीराश्रयं तु तथानुक्ताः सन्तु सर्वाशिषो मे ११
शेषोत्सर्गे कर्मभिर्देहमोक्षे सरस्वत्यः श्रेयसि संप्रवृत्ताः
यूयं नित्यं पुण्यकर्मोपवाह्या दिशध्वं मे गतिमिष्टां प्रपन्नाः १२
या वै यूयं सोऽहमद्यैकभावो युष्मान्दत्त्वा चाहमात्मप्रदाता
मनश्च्युता मनएवोपपन्नाः सधुक्षध्वं सौम्यरूपोग्ररूपाः १३
एवं तस्याग्रे पूर्वमर्धं वदेत गवां दाता विधिवत्पूर्वदृष्टम्
प्रतिब्रूयाच्छेषमर्धं द्विजातिः प्रतिगृह्णन्वै गोप्रदाने विधिज्ञः १४
गां ददानीति वक्तव्यमर्घ्यवस्त्रवसुप्रदः
ऊधस्या भरितव्या च वैष्णवीति च चोदयेत् १५
नाम संकीर्तयेत्तस्या यथासंख्योत्तरं स वै
फलं षड्विंशदष्टौ च सहस्राणि च विंशतिः १६
एवमेतान्गुणान्वृद्धान्गवादीनां यथाक्रमम्
गोप्रदाता समाप्नोति समस्तानष्टमे क्रमे १७
गोदः शीली निर्भयश्चार्घदाता न स्याद्दुःखी वसुदाता च कामी
ऊधस्योढा भारत यश्च विद्वान्व्याख्यातास्ते वैष्णवाश्चन्द्रलोकाः १८
गा वै दत्त्वा गोव्रती स्यात्त्रिरात्रं निशां चैकां संवसेतेह ताभिः
काम्याष्टम्यां वर्तितव्यं त्रिरात्रं रसैर्वा गोः शकृता प्रस्नवैर्वा १९
वेदव्रती स्याद्वृषभप्रदाता वेदावाप्तिर्गोयुगस्य प्रदाने
तथा गवां विधिमासाद्य यज्वा लोकानग्र्यान्विन्दते नाविधिज्ञः २०
कामान्सर्वान्पार्थिवानेकसंस्थान्यो वै दद्यात्कामदुघां च धेनुम्
सम्यक्ताः स्युर्हव्यकव्यौघवत्यस्तासामुक्ष्णां ज्यायसां संप्रदानम् २१
न चाशिष्यायाव्रतायोपकुर्यान्नाश्रद्धधानाय न वक्रबुद्धये
गुह्यो ह्ययं सर्वलोकस्य धर्मो नेमं धर्मं यत्र तत्र प्रजल्पेत् २२

सन्ति लोके श्रद्धधाना मनुष्याः सन्ति क्षुद्रा राक्षसा मानुषेषु
येषां दानं दीयमानं ह्यनिष्टं नास्तिक्यं चाप्याश्रयन्ते ह्यपुण्याः २३
बार्हस्पत्यं वाक्यमेतन्निशम्य ये राजानो गोप्रदानानि कृत्वा
लोकान्प्राप्ताः पुण्यशीलाः सुवृत्तास्तान्मे राजन्कीर्त्यमानान्निबोध २४
उशीनरो विष्वगश्वो नृगश्च भगीरथो विश्रुतो यौवनाश्वः
मान्धाता वै मुचुकुन्दश्च राजा भूरिद्युम्नो नैषधः सोमकश्च २५
पुरूरवा भरतश्चक्रवर्ती यस्यान्वये भारताः सर्व एव
तथा वीरो दाशरथिश्च रामो ये चाप्यन्ये विश्रुताः कीर्तिमन्तः २६
तथा राजा पृथुकर्मा दिलीपो दिवं प्राप्तो गोप्रदाने विधिज्ञः
यज्ञैर्दानैस्तपसा राजधर्मैर्मान्धाताभूद्गोप्रदानैश्च युक्तः २७
तस्मात्पार्थ त्वमपीमां मयोक्तां बार्हस्पतीं भारतीं धारयस्व
द्विजाग्र्येभ्यः संप्रयच्छ प्रतीतो गाः पुण्या वै प्राप्य राज्यं कुरूणाम् २८
वैशम्पायन उवाच
तथा सर्वं कृतवान्धर्मराजो भीष्मेणोक्तो विधिवद्गोप्रदाने
स मान्धातुर्देवदेवोपदिष्टं सम्यग्धर्मं धारयामास राजा २९
इति नृप सततं गवां प्रदाने यवशकलान्सह गोमयैः पिबानः
क्षितितलशयनः शिखी यतात्मा वृष इव राजवृषस्तदा बभूव ३०
स नृपतिरभवत्सदैव ताभ्यः प्रयतमना ह्यभिसंस्तुवंश्च गा वै
नृपधुरि च न गामयुङ्क्त भूयस्तुरगवरैरगमच्च यत्र तत्र ३१
इति श्रीमहाभारते अनुशासनपर्वणि पञ्चसप्ततितमोऽध्यायः ७५

## षट् सप्ततितमोऽध्यायः

वैशम्पायन उवाच
ततो युधिष्ठिरो राजा भूयः शांतनवं नृप
गोदाने विस्तरं धीमान्पप्रच्छ विनयान्वितः १
युधिष्ठिर उवाच
गोप्रदाने गुणान्सम्यक्पुनः प्रब्रूहि भारत
न हि तृप्याम्यहं वीर शृण्वानोऽमृतमीदृशम् २
इत्युक्तो धर्मराजेन तदा शांतनवो नृप
सम्यगाह गुणांस्तस्मै गोप्रदानस्य केवलान् ३

भीष्म उवाच
वत्सलां गुणसंपन्नां तरुणीं वस्त्रसंवृताम्
दत्त्वेदृशीं गां विप्राय सर्वपापैः प्रमुच्यते ४
असुर्या नाम ते लोका गां दत्त्वा तत्र गच्छति
पीतोदकां जग्धतृणां नष्टदुग्धां निरिन्द्रियाम् ५
जरोग्रामुपयुक्तार्थां जीर्णां कूपमिवाजलम्
दत्त्वा तमः प्रविशति द्विजं क्लेशेन योजयेत् ६
दुष्टा रुष्टा व्याधिता दुर्बला वा न दातव्या याश्च मूल्यैरदत्तैः
क्लेशैर्विप्रं योऽफलैः संयुनक्ति तस्यावीर्याश्चाफलाश्चैव लोकाः ७
बलान्विताः शीलवयोपपन्नाः सर्वाः प्रशंसन्ति सुगन्धवत्यः
यथा हि गङ्गा सरितां वरिष्ठा तथार्जुनीनां कपिला वरिष्ठा ८
युधिष्ठिर उवाच
कस्मात्समाने बहुलाप्रदाने सद्भिः प्रशस्तं कपिलाप्रदानम्
विशेषमिच्छामि महानुभाव श्रोतुं समर्थो हि भवान्प्रवक्तुम् ९
भीष्म उवाच
वृद्धानां ब्रुवतां तात श्रुतं मे यत्प्रभाषसे
वक्ष्यामि तदशेषेण रोहिण्यो निर्मिता यथा १०
प्रजाः सृजेति व्यादिष्टः पूर्वं दक्षः स्वयंभुवा
असृजद्वृत्तिमेवाग्रे प्रजानां हितकाम्यया ११
यथा ह्यमृतमाश्रित्य वर्तयन्ति दिवौकसः
तथा वृत्तिं समाश्रित्य वर्तयन्ति प्रजा विभो १२
अचरेभ्यश्च भूतेभ्यश्चराः श्रेष्ठस्ततो नराः
ब्राह्मणाश्च ततः श्रेष्ठास्तेषु यज्ञाः प्रतिष्ठिताः १३
यज्ञैराप्यायते सोमः स च गोषु प्रतिष्ठितः
सर्वे देवाः प्रमोदन्ते पूर्ववृत्तास्ततः प्रजाः १४
एतान्येव तु भूतानि प्राक्रोशन्वृत्तिकाङ्क्षया
वृत्तिदं चान्वपद्यन्त तृषिताः पितृमातृवत् १५
इतीदं मनसा गत्वा प्रजासर्वार्थमात्मनः
प्रजापतिर्बलाधानममृतं प्रापिबत्तदा १६
स गतस्तस्य तृप्तिं तु गन्धं सुरभिमुद्गिरन्

ददर्शोद्गारसंवृत्तां सुरभिं मुखजां सुताम् १७
सासृजत्सौरभेयीस्तु सुरभिर्लोकमातरः
सुवर्णवर्णाः कपिलाः प्रजानां वृत्तिधेनवः १८
तासाममृतवर्णानां क्षरन्तीनां समन्ततः
बभूवामृतजः फेनः स्रवन्तीनामिवोर्मिजः १९
स वत्समुखविभ्रष्टो भवस्य भुवि तिष्ठतः
शिरस्यवाप तत्क्रुद्धः स तदोदैक्षत प्रभुः
ललाटप्रभवेनाक्ष्णा रोहिणीः प्रदहन्निव २०
तत्तेजस्तु ततो रौद्रं कपिला गा विशां पते
नानावर्णत्वमनयन्मेघानिव दिवाकरः २१
यास्तु तस्मादपक्रम्य सोममेवाभिसंश्रिताः
यथोत्पन्नाः स्ववर्णस्थास्ता नीता नान्यवर्णताम् २२
अथ क्रुद्धं महादेवं प्रजापतिरभाषत
अमृतेनावसिक्तस्त्वं नोच्छिष्टं विद्यतेगवाम् २३
यथा ह्यमृतमादाय सोमो विष्यन्दते पुनः
तथा क्षीरं क्षरन्त्येता रोहिण्योऽमृतसंभवाः २४
न दुष्यत्यनिलो नाग्निर्न सुवर्णं च चोदधिः
नामृतेनामृतं पीतं वत्सपीता न वत्सला २५
इमाँल्लोकान्भरिष्यन्ति हविषा प्रस्नवेन च
आसामैश्वर्यमश्नीहि सर्वामृतमयं शुभम् २६
वृषभं च ददौ तस्मै सह ताभिः प्रजापतिः
प्रसादयामास मनस्तेन रुद्रस्य भारत २७
प्रीतश्चापि महादेवश्चकार वृषभं तदा
ध्वजं च वाहनं चैव तस्मात्स वृषभध्वजः २८
ततो देवैर्महादेवस्तदा पशुपतिः कृतः
ईश्वरः स गवां मध्ये वृषाङ्क इति चोच्यते २९
एवमव्यग्रवर्णानां कपिलानां महौजसाम्
प्रदाने प्रथमः कल्पः सर्वासामेव कीर्तितः ३०
लोकज्येष्ठा लोकवृत्तिप्रवृत्ता रुद्रोपेताः सोमविष्यन्दभूताः
सौम्याः पुण्याः कामदाः प्राणदाश्च गा वै दत्त्वा सर्वकामप्रदः स्यात् ३१

इदं गवां प्रभवविधानमुत्तमं पठन्सदा शुचिरतिमङ्गलप्रियः
विमुच्यते कलिकलुषेण मानवः प्रियं सुतान्पशुधनमाप्नुयात्तथा ३२
हव्यं कव्यं तर्पणं शान्तिकर्म यानं वासो वृद्धबालस्य पुष्टिम्
एतान्सर्वान्गोप्रदाने गुणान्वै दाता राजन्नाप्नुयाद्वै सदैव ३३
वैशम्पायन उवाच
पितामहस्याथ निशम्य वाक्यं राजा सह भ्रातृभिराजमीढः
सौवर्णकांस्योपदुहास्ततो गाः पार्थो ददौ ब्राह्मणसत्तमेभ्यः ३४
तथैव तेभ्योऽभिददौ द्विजेभ्यो गवां सहस्राणि शतानि चैव
यज्ञान्समुद्दिश्य च दक्षिणार्थे लोकान्विजेतुं परमां च कीर्तिम् ३५
इति श्रीमहाभारते अनुशासनपर्वणि षट्सप्ततितमोऽध्यायः ७६

## सप्तसप्ततितमोऽध्यायः

भीष्म उवाच
एतस्मिन्नेव काले तु वसिष्ठमृषिसत्तमम्
इक्ष्वाकुवंशजो राजा सौदासो ददतां वरः १
सर्वलोकचरं सिद्धं ब्रह्मकोशं सनातनम्
पुरोहितमिदं प्रष्टुमभिवाद्योपचक्रमे २
सौदास उवाच
त्रैलोक्ये भगवन्किंस्वित्पवित्रं कथ्यतेऽनघ
यत्कीर्तयन्सदा मर्त्यः प्राप्नुयात्पुण्यमुत्तमम् ३
भीष्म उवाच
तस्मै प्रोवाच वचनं प्रणताय हितं तदा
गवामुपनिषद्विद्वान्नमस्कृत्य गवां शुचिः ४
गावः सुरभिगन्धिन्यस्तथा गुग्गुलुगन्धिकाः
गावः प्रतिष्ठा भूतानां गावः स्वस्त्ययनं महत् ५
गावो भूतं  भविष्यच्च गावः पुष्टिः सनातनी
गावो लक्ष्म्यास्तथा मूलं गोषु दत्तं न नश्यति
अन्नं हि सततं गावो देवानां परमं हविः ६
स्वाहाकारवषट्कारौ गोषु नित्यं प्रतिष्ठितौ
गावो यज्ञस्य हि फलं गोषु यज्ञाः प्रतिष्ठिताः ७

सायं प्रातश्च सततं होमकाले महामते
गावो ददति वै होम्यमृषिभ्यः पुरुषर्षभ ८
कानिचिद्यानि दुर्गाणि दुष्कृतानि कृतानि च
तरन्ति चैव पाप्मानं धेनुं ये ददति प्रभो ९
एकां च दशगुर्दद्याद्दश दद्याच्च गोशती
शतं सहस्रगुर्दद्यात्सर्वे तुल्यफला हि ते १०
अनाहिताग्निः शतगुरयज्वा च सहस्रगुः
समृद्धो यश्च कीनाशो नार्घ्यमर्हन्ति ते त्रयः ११
कपिलां ये प्रयच्छन्ति सवत्सां कांस्यदोहनाम्
सुव्रतां वस्त्रसंवीतामुभौ लोकौ जयन्ति ते १२
युवानमिन्द्रियोपेतं शतेन सह यूथपम्
गवेन्द्रं ब्राह्मणेन्द्राय भूरिशृङ्गमलंकृतम् १३
वृषभं ये प्रयच्छन्ति श्रोत्रियाय परंतप
ऐश्वर्यं तेऽभिजायन्ते जायमानाः पुनः पुनः १४
नाकीर्तयित्वा गाः सुप्यान्नास्मृत्य पुनरुत्पतेत्
सायं प्रातर्नमस्येच्च गास्ततः पुष्टिमाप्नुयात् १५
गवां मूत्रपुरीषस्य नोद्विजेत कदाचन
न चासां मांसमश्नीयाद्गवां व्युष्टिं तथाश्नुते १६
गाश्च संकीर्तयेन्नित्यं नावमन्येत गास्तथा
अनिष्टं स्वप्नमालक्ष्य गां नरः संप्रकीर्तयेत् १७
गोमयेन सदा स्नायाद्गोकरीषे च संविशेत्
श्लेष्ममूत्रपुरीषाणि प्रतिघातं च वर्जयेत् १८
सार्द्रचर्मणि भुञ्जीत निरीक्षन्वारुणीं दिशम्
वाग्यतः सर्पिषा भूमौ गवां व्युष्टिं तथाश्नुते १९
घृतेन जुहुयादग्निं घृतेन स्वस्ति वाचयेत्
घृतं दद्याद्घृतं प्राशेद्गवां व्युष्टिं तथाश्नुते २०
गोमत्या विद्यया धेनुं तिलानामभिमन्त्र्य यः
रसरत्नमयीं दद्यान्न स शोचेत्कृताकृते २१
गावो मामुपतिष्ठन्तु हेमशृङ्गाः पयोमुचः
सुरभ्यः सौरभेयाश्च सरितः सागरं यथा २२

गावः पश्यन्तु मां नित्यं गावः पश्याम्यहं सदा
गावोऽस्माकं वयं तासां यतो गावस्ततो वयम् २३
एवं रात्रौ दिवा चैव समेषु विषमेषु च
महाभयेषु च नरः कीर्तयन्मुच्यते भयात् २४
इति श्रीमहाभारते अनुशासनपर्वणि सप्तसप्ततितमोऽध्यायः७७

## अष्टसप्ततितमोऽध्यायः

वसिष्ठ उवाच
शतं वर्षसहस्राणां तपस्तप्तं सुदुश्चरम्
गोभिः पूर्वविसृष्टाभिर्गच्छेम श्रेष्ठतामिति १
लोकेऽस्मिन्दक्षिणानां च सर्वासां वयमुत्तमाः
भवेम न च लिप्येम दोषेणेति परंतप २
स एव चेतसा तेन हतो लिप्येत सर्वदा
शकृता च पवित्रार्थं कुर्वीरन्देवमानुषाः ३
तथा सर्वाणि भूतानि स्थावराणि चराणि च
प्रदातारश्च गोलोकान्गच्छेयुरिति मानद ४
ताभ्यो वरं ददौ ब्रह्मा तपसोऽन्ते स्वयं प्रभुः
एवं भवत्विति विभुर्लोकांस्तारयतेति च ५
उत्तस्थुः सिद्धिकामास्ता भूतभव्यस्य मातरः
तपसोऽन्ते महाराज गावो लोकपरायणाः ६
तस्माद्गावो महाभागाः पवित्रं परमुच्यते
तथैव सर्वभूतानां गावस्तिष्ठन्ति मूर्धनि ७
समानवत्सां कपिलां धेनुं दत्त्वा पयस्विनीम्
सुव्रतां वस्त्रसंवीतां ब्रह्मलोके महीयते ८
रोहिणीं तुल्यवत्सां तु धेनुं दत्त्वा पयस्विनीम्
सुव्रतां वस्त्रसंवीतां सूर्यलोके महीयते ९
समानवत्सां शबलां धेनुं दत्त्वा पयस्विनीम्
सुव्रतां वस्त्रसंवीतां सोमलोके महीयते १०
समानवत्सां श्वेतां तु धेनुं दत्त्वा पयस्विनीम्
सुव्रतां वस्त्रसंवीतामिन्द्रलोके महीयते ११

समानवत्सां कृष्णां तु धेनुं दत्त्वा पयस्विनीम्
सुव्रतां वस्त्रसंवीतामग्निलोके महीयते १२
समानवत्सां धूम्रां तु धेनुं दत्त्वा पयस्विनीम्
सुव्रतां वस्त्रसंवीतां याम्यलोके महीयते १३
अपां फेनसवर्णां तु सवत्सां कांस्यदोहनाम्
प्रदाय वस्त्रसंवीतां वारुणं लोकमश्नुते १४
वातरेणुसवर्णां तु सवत्सां कांस्यदोहनाम्
प्रदाय वस्त्रसंवीतां वायुलोके महीयते १५
हिरण्यवर्णां पिङ्गाक्षीं सवत्सां कांस्यदोहनाम्
प्रदाय वस्त्रसंवीतां कौबेरं लोकमश्नुते १६
पलालधूम्रवर्णां तु सवत्सां कांस्यदोहनाम्
प्रदाय वस्त्रसंवीतां पितृलोके महीयते १७
सवत्सां पीवरीं दत्त्वा शितिकण्ठामलंकृताम्
वैश्वदेवमसंबाधं स्थानं श्रेष्ठं प्रपद्यते १८
समानवत्सां गौरीं तु धेनुं दत्त्वा पयस्विनीम्
सुव्रतां वस्त्रसंवीतां वसूनां लोकमश्नुते १९
पाण्डुकम्बलवर्णां तु सवत्सां कांस्यदोहनाम्
प्रदाय वस्त्रसंवीतां साध्यानां लोकमश्नुते २०
वैराटपृष्ठमुक्षाणं सर्वरत्नैरलंकृतम्
प्रदाय मरुतां लोकानजरान्प्रतिपद्यते २१
वत्सोपपन्नां नीलाङ्गां सर्वरत्नसमन्विताम्
गन्धर्वाप्सरसां लोकान्दत्त्वा प्राप्नोति मानवः २२
शितिकण्ठमनड्वाहं सर्वरत्नैरलंकृतम्
दत्त्वा प्रजापतेर्लोकान्विशोकः प्रतिपद्यते २३
गोप्रदानरतो याति भित्त्वा जलदसंचयान्
विमानेनार्कवर्णेन दिवि राजन्विराजता २४
तं चारुवेषः सुश्रोण्यः सहस्रं वरयोषितः
रमयन्ति नरश्रेष्ठ गोप्रदानरतं नरम् २५
वीणानां वल्लकीनां च नूपुराणां च शिञ्जितैः
हासैश्च हरिणाक्षीणां प्रसुप्तः प्रतिबोध्यते २६

यावन्ति लोमानि भवन्ति धेन्वास्तावन्ति वर्षाणि महीयते सः
स्वर्गाच्च्युतश्चापि ततो नृलोके कुले समुत्पत्स्यति गोमिनां सः २७
इति श्रीमहाभारते अनुशासनपर्वणि अष्टसप्ततितमोऽध्यायः ७८

## एकोनाशीतितमोऽध्यायः

वसिष्ठ उवाच
घृतक्षीरप्रदा गावो घृतयोन्यो घृतोद्भवाः
घृतनद्यो घृतावर्तास्ता मे सन्तु सदा गृहे १
घृतं मे हृदये नित्यं घृतं नाभ्यां प्रतिष्ठितम्
घृतं सर्वेषु गात्रेषु घृतं मे मनसि स्थितम् २
गावो ममाग्रतो नित्यं गावः पृष्ठत एव च
गावो मे सर्वतश्चैव गवां मध्ये वसाम्यहम् ३
इत्याचम्य जपेत्सायं प्रातश्च पुरुषः सदा
यदह्ना कुरुते पापं तस्मात्स परिमुच्यते ४
प्रासादा यत्र सौवर्णा वसोर्धारा च यत्र सा
गन्धर्वाप्सरसो यत्र तत्र यान्ति सहस्रदाः ५
नवनीतपङ्काः क्षीरोदा दधिशैवलसंकुलाः
वहन्ति यत्र नद्यो वै तत्र यान्ति सहस्रदाः ६
गवां शतसहस्रं तु यः प्रयच्छेद्यथाविधि
परामृद्धिमवाप्याथ स गोलोकं महीयते ७
दश चोभयतः प्रेत्य मातापित्रोः पितामहान्
दधाति सुकृताँल्लोकान्पुनाति च कुलं नरः ८
धेन्वाः प्रमाणेन समप्रमाणां धेनुं तिलानामपि च प्रदाय
पानीयदाता च यमस्य लोके न यातनां कांचिदुपैति तत्र ९
पवित्रमग्र्यं जगतः प्रतिष्ठा दिवौकसां मातरोऽथाप्रमेयाः
अन्वालभेद्दक्षिणतो व्रजेच्च दद्याच्च पात्रे प्रसमीक्ष्य कालम् १०
धेनुं सवत्सां कपिलां भूरिशृङ्गां कांस्योपदोहां वसनोत्तरीयाम्
प्रदाय तां गाहति दुर्विगाह्यां याम्यां सभां वीतभयो मनुष्यः ११
सुरूपा बहुरूपाश्च विश्वरूपाश्च मातरः
गावो मामुपतिष्ठन्तामिति नित्यं प्रकीर्तयेत् १२

नातः पुण्यतरं दानं नातः पुण्यतरं फलम्
नातो विशिष्टं लोकेषु भूतं भवितुमर्हति १३
त्वचा लोम्नाऽथ शृङ्गैश्च वालैः क्षीरेण मेदसा
यज्ञं वहन्ति संभूय किमस्त्यभ्यधिकं ततः १४
यया सर्वमिदं व्याप्तं जगत्स्थावरजङ्गमम्
तां धेनुं शिरसा वन्दे भूतभव्यस्य मातरम् १५
गुणवचनसमुच्चयैकदेशो नृवर मयैष गवां प्रकीर्तितस्ते
न हि परमिह दानमस्ति गोभ्यो भवति न चापि परायणं तथान्यत् १६
भीष्म उवाच
परमिदमिति भूमिपो विचिन्त्य प्रवरमृषेर्वचनं ततो महात्मा
व्यसृजत नियतात्मवान्द्विजेभ्यः सुबहु च गोधनमाप्तवांश्च लोकान् १७
इति श्रीमहाभारते अनुशासनपर्वणि एकोनाशीतितमोऽध्यायः ७९

## अशीतितमोऽध्यायः

युधिष्ठिर उवाच
पवित्राणां पवित्रं यच्छ्रेष्ठं लोके च यद्भवेत्
पावनं परमं चैव तन्मे ब्रूहि पितामह १
भीष्म उवाच
गावो महार्थाः पुण्याश्च तारयन्ति च मानवान्
धारयन्ति प्रजाश्चेमाः पयसा हविषा तथा २
न हि पुण्यतमं किंचिद्गोभ्यो भरतसत्तम
एताः पवित्राः पुण्याश्च त्रिषु लोकेष्वनुत्तमाः ३
देवानामुपरिष्टाच्च गावः प्रतिवसन्ति वै
दत्त्वा चैता नरपते यान्ति स्वर्गं मनीषिणः ४
मान्धाता यौवनाश्वश्च ययातिर्नहुषस्तथा
गावो ददन्तः सततं सहस्रशतसंमिताः
गताः परमकं स्थानं देवैरपि सुदुर्लभम् ५
अपि चात्र पुरावृत्तं कथयिष्यामि तेऽनघ ६
ऋषीणामुत्तमं धीमान्कृष्णद्वैपायनं शुकः
अभिवाद्याह्निकं कृत्वा शुचिः प्रयतमानसः

पितरं परिपप्रच्छ दृष्टलोकपरावरम् ७
को यज्ञः सर्वयज्ञानां वरिष्ठ उपलक्ष्यते
किं च कृत्वा परं स्वर्गं प्राप्नुवन्ति मनीषिणः ८
केन देवाः पवित्रेण स्वर्गमश्नन्ति वा विभो
किं च यज्ञस्य यज्ञत्वं क्व च यज्ञः प्रतिष्ठितः ९
दानानामुत्तमं किं च किं च सत्रमतः परम्
पवित्राणां पवित्रं च यत्तद्ब्रूहि ममानघ १०
एतच्छ्रुत्वा तु वचनं व्यासः परमधर्मवित्
पुत्रायाकथयत्सर्वं तत्त्वेन भरतर्षभ ११
व्यास उवाच
गावः प्रतिष्ठा भूतानां तथा गावः परायणम्
गावः पुण्याः पवित्राश्च पावनं धर्म एव च १२
पूर्वमासन्नशृङ्गा वै गाव इत्यनुशुश्रुमः
शृङ्गार्थे समुपासन्त ताः किल प्रभुमव्ययम् १३
ततो ब्रह्मा तु गाः प्रायमुपविष्टाः समीक्ष्य ह
ईप्सितं प्रददौ ताभ्यो गोभ्यः प्रत्येकशः प्रभुः १४
तासां शृङ्गाण्यजायन्त यस्या यादृङ्मनोगतम्
नानावर्णाः शृङ्गवन्त्यस्ता व्यरोचन्त पुत्रक १५
ब्रह्मणा वरदत्तास्ता हव्यकव्यप्रदाः शुभाः
पुण्याः पवित्राः सुभगा दिव्यसंस्थानलक्षणाः
गावस्तेजो महद्दिव्यं गवां दानं प्रशस्यते १६
ये चैताः संप्रयच्छन्ति साधवो वीतमत्सराः
ते वै सुकृतिनः प्रोक्ताः सर्वदानप्रदाश्च ते
गवां लोकं तथा पुण्यमाप्नुवन्ति च तेऽनघ १७
यत्र वृक्षा मधुफला दिव्यपुष्पफलोपगाः
पुष्पाणि च सुगन्धीनि दिव्यानि द्विजसत्तम १८
सर्वा मणिमयी भूमिः सूक्ष्मकाञ्चनवालुका
सर्वत्र सुखसंस्पर्शा निष्पङ्का नीरजा शुभा १९
रक्तोत्पलवनैश्चैव मणिदण्डैर्हिरण्मयैः
तरुणादित्यसंकाशैर्भान्ति तत्र जलाशयाः २०

महार्हमणिपत्रैश्च काञ्चनप्रभकेसरैः
नीलोत्पलविमिश्रैश्च सरोभिर्बहुपङ्कजैः २१
करवीरवनैः फुल्लैः सहस्रावर्तसंवृतैः
संतानकवनैः फुल्लैर्वृक्षैश्च समलंकृताः २२
निर्मलाभिश्च मुक्ताभिर्मणिभिश्च महाधनैः
उद्धूतपुलिनास्तत्र जातरूपैश्च निम्नगाः २३
सर्वरत्नमयैश्चित्रैरवगाढा नगोत्तमैः
जातरूपमयैश्चान्यैर्हुताशन समप्रभैः २४
सौवर्णगिरयस्तत्र मणिरत्नशिलोच्चयाः
सर्वरत्नमयैर्भान्ति शृङ्गैश्चारुभिरुच्छ्रितैः २५
नित्यपुष्पफलास्तत्र नगाः पत्ररथाकुलाः
दिव्यगन्धरसैः पुष्पैः फलैश्च भरतर्षभ २६
रमन्ते पुण्यकर्माणस्तत्र नित्यं युधिष्ठिर
सर्वकामसमृद्धार्था निःशोका गतमन्यवः २७
विमानेषु विचित्रेषु रमणीयेषु भारत
मोदन्ते पुण्यकर्माणो विहरन्तो यशस्विनः २८
उपक्रीडन्ति तान्राजञ्शुभाश्चाप्सरसां गणाः
एताँल्लोकानवाप्नोति गां दत्त्वा वै युधिष्ठिर २९
यासामधिपतिः पूषा मारुतो बलवान्बली
ऐश्वर्ये वरुणो राजा ता मां पान्तु युगंधराः ३०
सुरूपा बहुरूपाश्च विश्वरूपाश्च मातरः
प्राजापत्या इति ब्रह्मञ्जपेन्नित्यं यतव्रतः ३१
गास्तु शुश्रूषते यश्च समन्वेति च सर्वशः
तस्मै तुष्टाः प्रयच्छन्ति वरानपि सुदुर्लभान् ३२
न द्रुह्येन्मनसा चापि गोषु ता हि सुखप्रदाः
अर्चयेत सदा चैव नमस्कारैश्च पूजयेत्
दान्तः प्रीतमना नित्यं गवां व्युष्टिं तथाश्नुते ३३
येन देवाः पवित्रेण भुञ्जते लोकमुत्तमम्
यत्पवित्रं पवित्राणां तद्घृतं शिरसा वहेत् ३४
घृतेन जुहुयादग्निं घृतेन स्वस्ति वाचयेत्

घृतं प्राशेद्घृतं दद्याद्गवां व्युष्टिं तथाश्नुते ३५
त्र्यहमुष्णं पिबेन्मूत्रं त्र्यहमुष्णं पिबेत्पयः
गवामुष्णं पयः पीत्वा त्र्यहमुष्णं घृतं पिबेत्
त्र्यहमुष्णं घृतं पीत्वा वायु भक्षो भवेत्त्र्यहम् ३६
निर्हृतैश्च यवैर्गोभिर्मासं प्रसृतयावकः
ब्रह्महत्यासमं पापं सर्वमेतेन शुध्यति ३७
पराभवार्थं दैत्यानां देवैः शौचमिदं कृतम्
देवत्वमपि च प्राप्ताः संसिद्धाश्च महाबलाः ३८
गावः पवित्राः पुण्याश्च पावनं परमं महत्
ताश्च दत्त्वा द्विजातिभ्यो नरः स्वर्गमुपाश्नुते ३९
गवां मध्ये शुचिर्भूत्वा गोमतीं मनसा जपेत्
पूताभिरद्भिराचम्य शुचिर्भवति निर्मलः ४०
अग्निमध्ये गवां मध्ये ब्राह्मणानां च संसदि
विद्यावेदव्रतस्नाता ब्राह्मणाः पुण्यकर्मिणः ४१
अध्यापयेरञ्शिष्यान्वै गोमतीं यज्ञसंमिताम्
त्रिरात्रोपोषितः श्रुत्वा गोमतीं लभते वरम् ४२
पुत्रकामश्च लभते पुत्रं धनमथापि च
पतिकामा च भर्तारं सर्वकामांश्च मानवः
गावस्तुष्टाः प्रयच्छन्ति सेविता वै न संशयः ४३
एवमेता महाभागा यज्ञियाः सर्वकामदाः
रोहिण्य इति जानीहि नैताभ्यो विद्यते परम् ४४
इत्युक्तः स महातेजाः शुकः पित्रा महात्मना
पूजयामास गा नित्यं तस्मात्त्वमपि पूजय ४५
इति श्रीमहाभारते अनुशासनपर्वणि अशीतितमोऽध्यायः ८०

## एकाशीतितमोऽध्यायः

युधिष्ठिर उवाच
मया गवां पुरीषं वै श्रिया जुष्टमिति श्रुतम्
एतदिच्छाम्यहं श्रोतुं संशयोऽत्र हि मे महान् १
भीष्म उवाच

अत्राप्युदाहरन्तीममितिहासं पुरातनम्
गोभिर्नृपेह संवादं श्रिया भरतसत्तम २
श्रीः कृत्वेह वपुः कान्तं गोमध्यं प्रविवेश ह
गावोऽथ विस्मितास्तस्या दृष्ट्वा रूपस्य संपदम् ३
गाव ऊचुः
कासि देवि कुतो वा त्वं रूपेणाप्रतिमा भुवि
विस्मिताः स्म महाभागे तव रूपस्य संपदा ४
इच्छामस्त्वां वयं ज्ञातुं का त्वं क्व च गमिष्यसि
तत्त्वेन च सुवर्णाभे सर्वमेतद्ब्रवीहि नः ५
श्रीरुवाच
लोककान्तास्मि भद्रं वः श्रीर्नाम्नेह परिश्रुता
मया दैत्याः परित्यक्ता विनष्टाः शाश्वतीः समाः ६
इन्द्रो विवस्वान्सोमश्च विष्णुरापोऽग्निरेव च
मयाभिपन्ना ऋध्यन्ते ऋषयो देवतास्तथा ७
यांश्च द्विषाम्यहं गावस्ते विनश्यन्ति सर्वशः
धर्मार्थकामहीनाश्च ते भवन्त्यसुखान्विताः ८
एवंप्रभावां मां गावो विजानीत सुखप्रदाम्
इच्छामि चापि युष्मासु वस्तुं सर्वासु नित्यदा
आगता प्रार्थयानाहं श्रीजुष्टा भवतानघाः ९
गाव ऊचुः
अध्रुवां चञ्चलां च त्वां सामान्यां बहुभिः सह
न त्वामिच्छाम भद्रं ते गम्यतां यत्र रोचते १०
वपुष्मन्त्यो वयं सर्वाः किमस्माकं त्वयाद्य वै
यत्रेष्टं गम्यतां तत्र कृतकार्या वयं त्वया ११
श्रीरुवाच
किमेतद्वः क्षमं गावो यन्मां नेहाभ्यनन्दथ
न मां संप्रति गृह्णीथ कस्माद्वै दुर्लभां सतीम् १२
सत्यश्च लोकवादोऽय लोके चरति सुव्रताः
स्वयं प्राप्ते परिभवो भवतीति विनिश्चयः १३
महदुग्रं तपः कृत्वा मां निषेवन्ति मानवाः

देवदानवगन्धर्वाः पिशाचोरगराक्षसाः १४
क्षममेतद्धि वो गावः प्रतिगृह्णीत मामिह
नावमन्या ह्यहं सौम्यास्त्रैलोक्ये सचराचरे १५
गाव ऊचुः
नावमन्यामहे देवि न त्वां परिभवामहे
अध्रुवा चलचित्तासि ततस्त्वां वर्जयामहे १६
बहुनात्र किमुक्तेन गम्यतां यत्र वाञ्छसि
वपुष्मत्यो वयं सर्वाः किमस्माकं त्वयानघे १७
श्रीरुवाच
अवज्ञाता भविष्यामि सर्वलोकेषु मानदाः
प्रत्याख्यानेन युष्माभिः प्रसादः क्रियतामिति १८
महाभागा भवत्यो वै शरण्याः शरणागताम्
परित्रायन्तु मां नित्यं भजमानामनिन्दिताम्
माननां त्वहमिच्छामि भवत्यः सततं शुभाः १९
अप्येकाङ्गे तु वो वस्तुमिच्छामि च सुकुत्सिते
न वोऽस्ति कुत्सितं किंचिदङ्गेष्वालक्ष्यतेऽनघाः २०
पुण्याः पवित्राः सुभगा ममादेशं प्रयच्छत
वसेयं यत्र चाङ्गेऽह तन्मे व्याख्यातुमर्हथ २१
भीष्म उवाच
एवमुक्तास्तु ता गावः शुभाः करुणवत्सलाः
संमन्त्र्य सहिताः सर्वाः श्रियमूचुर्नराधिप २२
अवश्यं मानना कार्या तवास्माभिर्यशस्विनि
शकृन्मूत्रे निवस नः पुण्यमेतद्धि नः शुभे २३
श्रीरुवाच
दिष्ट्या प्रसादो युष्माभिः कृतो मेऽनुग्रहात्मकः
एवं भवतु भद्रं वः पूजितास्मि सुखप्रदाः २४
भीष्म उवाच
एवं कृत्वा तु समयं श्रीर्गोभिः सह भारत
पश्यन्तीनां ततस्तासां तत्रैवान्तरधीयत २५
एतद्गोशकृतः पुत्र माहात्म्यं तेऽनुवर्णितम्

माहात्म्यं च गवां भूयः श्रूयतां गदतो मम २६
इति श्रीमहाभारते अनुशासनपर्वणि एकाशीतितमोऽध्यायः ८१

## द्व्शीतितमोऽध्यायः

भीष्म उवाच
ये च गाः संप्रयच्छन्ति हुतशिष्टाशिनश्च ये
तेषां सत्राणि यज्ञाश्च नित्यमेव युधिष्ठिर १
ऋते दधिघृतेनेह न यज्ञः संप्रवर्तते
तेन यज्ञस्य यज्ञत्वमतोमूलं च लक्ष्यते २
दानानामपि सर्वेषां गवां दानं प्रशस्यते
गावः श्रेष्ठाः पतित्राश्च पावनं ह्येतदुत्तमम् ३
पुष्ट्यर्थमेताः सेवेवि शान्त्यर्थमपि चैव ह
पयो दधि घृतं यासां सर्वपापप्रमोचनम् ४
गावस्तेजः परं प्रोक्तमिह लोके परत्र च
न गोभ्यः परमं किंचित्पवित्रं पुरुषर्षभ ५
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
पितामहस्य संवादमिन्द्रस्य च युधिष्ठिर ६
पराभूतेषु दैत्येषु शक्रे त्रिभुवनेश्वरे
प्रजाः समुदिताः सर्वाः सत्यधर्मपरायणाः ७
अथर्षयः सगन्धर्वाः किंनरोरगराक्षसाः
देवासुरसुपर्णाश्च प्रजानां पतयस्तथा
पर्युपासन्त कौरव्य कदाचिद्वै पितामहम् ८
नारदः पर्वतश्चैव विश्वावसुहहाहुहू
दिव्यतानेषु गायन्तः पर्युपासन्त तं प्रभुम् ९
तत्र दिव्यानि पुष्पाणि प्रावहत्पवनस्तथा
आजह्रुर्ऋतवश्चापि सुगन्धीनि पृथक्पृथक् १०
तस्मिन्देवसमावाये सर्वभूतसमागमे
दिव्यवादित्रसंघुष्टे दिव्यस्त्रीचारणावृते
इन्द्रः पप्रच्छ देवेशमभिवाद्य प्रणम्य च ११
देवानां भगवन्कस्माल्लोकेशानां पितामह

उपरिष्टाद्गवां लोक एतदिच्छामि वेदितुम् १२
किं तपो ब्रह्मचर्यं वा गोभिः कृतमिहेश्वर
देवानामुपरिष्टाद्यद्वसन्त्यरजसः सुखम् १३
ततः प्रोवाच तं ब्रह्मा शक्रं बलनिसूदनम्
अवज्ञातास्त्वया नित्यं गावो बलनिसूदन १४
तेन त्वमासां माहात्म्यं न वेत्थ शृणु तत्प्रभो
गवां प्रभावं परमं माहात्म्यं च सुरर्षभ १५
यज्ञाङ्गं कथिता गावो यज्ञ एव च वासव
एताभिश्चाप्यृते यज्ञो न प्रवर्तेत्कथंचन १६
धारयन्ति प्रजाश्चैव पयसा हविषा तथा
एतासां तनयाश्चापि कृषियोगमुपासते १७
जनयन्ति च धान्यानि बीजानि विविधानि च
ततो यज्ञाः प्रवर्तन्ते हव्यं कव्यं च सर्वशः १८
पयो दधि घृतं चैव पुण्याश्चैताः सुराधिप
वहन्ति विविधान्भारान्क्षुत्तृष्णापरिपीडिताः १९
मुनींश्च धारयन्तीह प्रजाश्चैवापि कर्मणा
वासवाकूटवाहिन्यः कर्मणा सुकृतेन च
उपरिष्टात्ततोऽस्माकं वसन्त्येताः सदैव हि २०
एतत्ते कारणं शक्र निवासकृतमद्य वै
गवां देवोपरिष्टाद्धि समाख्यातं शतक्रतो २१
एता हि वरदत्ताश्च वरदाश्चैव वासव
सौरभ्यः पुण्यकर्मिण्यः पावनाः शुभलक्षणाः २२
यदर्थं गा गताश्चैव सौरभ्यः सुरसत्तम
तच्च मे शृणु कार्त्स्न्येन वदतो बलसूदन २३
पुरा देवयुगे तात दैत्येन्द्रेषु महात्मसु
त्रींल्लोकाननुशासत्सु विष्णौ गर्भत्वमागते २४
अदित्यास्तप्यमानायास्तपो घोरं सुदुश्चरम्
पुत्रार्थममरश्रेष्ठ पादेनैकेन नित्यदा २५
तां तु दृष्ट्वा महादेवीं तप्यमानां महत्तपः
दक्षस्य दुहिता देवी सुरभिर्नाम नामतः २६

अतप्यत तपो घोरं हृष्टा धर्मपरायणा
कैलासशिखरे रम्ये देवगन्धर्वसेविते २७
व्यतिष्ठदेकपादेन परमं योगमास्थिता
दश वर्षसहस्राणि दश वर्षशतानि च २८
संतप्तास्तपसा तस्या देवाः सर्षिमहोरगाः
तत्र गत्वा मया सार्धं पर्युपासन्त तां शुभाम् २९
अथाहमब्रुवं तत्र देवीं तां तपसान्विताम्
किमर्थं तप्यसे देवि तपो घोरमनिन्दिते ३०
प्रीतस्तेऽहं महाभागे तपसानेन शोभने
वरयस्व वरं देवि दातास्मीति पुरंदर ३१
सुरभ्युवाच
वरेण भगवन्मह्यं कृतं लोकपितामह
एष एव वरो मेऽद्य यत्प्रीतोऽसि ममानघ ३२
ब्रह्मोवाच
तामेवं ब्रुवतीं देवीं सुरभीं त्रिदशेश्वर
प्रत्यब्रुवं यद्देवेन्द्र तन्निबोध शचीपते ३३
अलोभकाम्यया देवि तपसा च शुभेन ते
प्रसन्नोऽहं वरं तस्मादमरत्वं ददानि ते ३४
त्रयाणामपि लोकानामुपरिष्टान्निवत्स्यसि
मत्प्रसादाच्च विख्यातो गोलोकः स भविष्यति ३५
मानुषेषु च कुर्वाणाः प्रजाः कर्म सुतास्तव
निवत्स्यन्ति महाभागे सर्वा दुहितरश्च ते ३६
मनसा चिन्तिता भोगास्त्वया वै दिव्य मानुषाः
यच्च स्वर्गसुखं देवि तत्ते संपत्स्यते शुभे ३७
तस्या लोकाः सहस्राक्ष सर्वकामसमन्विताः
न तत्र क्रमते मृत्युर्न जरा न च पावकः
न दैन्यं नाशुभं किंचिद्विद्यते तत्र वासव ३८
तत्र दिव्यान्यरण्यानि दिव्यानि भवनानि च
विमानानि च युक्तानि कामगानि च वासव ३९
व्रतैश्च विविधैः पुण्यैस्तथा तीर्थानुसेवनात्

तपसा महता चैव सुकृतेन च कर्मणा
शक्यः समासादयितुं गोलोकः पुष्करेक्षण ४०
एतत्ते सर्वमाख्यातं मया शक्रानुपृच्छते
न ते परिभवः कार्यो गवामरिनिसूदन ४१
भीष्म उवाच
एतच्छ्रुत्वा सहस्राक्षः पूजयामास नित्यदा
गाश्चक्रे बहुमानं च तासु नित्यं युधिष्ठिर ४२
एतत्ते सर्वमाख्यातं पावनं च महाद्युते
पवित्रं परमं चापि गवां माहात्म्यमुत्तमम्
कीर्तितं पुरुषव्याघ्र सर्वपापविनाशनम् ४३
य इदं कथयेन्नित्यं ब्राह्मणेभ्यः समाहितः
हव्यकव्येषु यज्ञेषु पितृकार्येषु चैव ह
सार्वकामिकमक्षय्यं पितॄंस्तस्योपतिष्ठति ४४
गोषु भक्तश्च लभते यद्यदिच्छति मानवः
स्त्रियोऽपि भक्ता या गोषु ताश्च कामानवाप्नुयुः ४५
पुत्रार्थी लभते पुत्रं कन्या पतिमवाप्नुयात्
धनार्थी लभते वित्तं धर्मार्थी धर्ममाप्नुयात् ४६
विद्यार्थी प्राप्नुयाद्विद्यां सुखार्थी प्राप्नुयात्सुखम्
न किंचिद्दुर्लभं चैव गवां भक्तस्य भारत ४७

इति श्रीमहाभारते अनुशासनपर्वणि द्व्यशीतितमोऽध्यायः ८२

## त्र्यशीतितमोऽध्यायः

युधिष्ठिर उवाच
उक्तं पितामहेनेदं गवां दानमनुत्तमम्
विशेषेण नरेन्द्राणामिति धर्ममवेक्षताम् १
राज्यं हि सततं दुःखमाश्रमाश्च सुदुर्विदाः
परिवारेण वै दुःखं दुर्धरं चाकृतात्मभिः
भूयिष्ठं च नरेन्द्राणां विद्यते न शुभा गतिः २
पूयन्ते तेऽत्र नियतं प्रयच्छन्तो वसुंधराम्
पूर्वे च कथिता धर्मास्त्वया मे कुरुनन्दन ३

एवमेव गवामुक्तं प्रदानं ते नृगेण ह
ऋषिणा नाचिकेतेन पूर्वमेव निदर्शितम् ४
वेदोपनिषदे चैव सर्वकर्मसु दक्षिणा
सर्वक्रतुषु चोद्दिष्टं भूमिर्गावोऽथ काञ्चनम् ५
तत्र श्रुतिस्तु परमा सुवर्णं दक्षिणेति वै
एतदिच्छाम्यहं श्रोतुं पितामह यथातथम् ६
किं सुवर्णं कथं जातं कस्मिन्काले किमात्मकम्
किं दानं किं फलं चैव कस्माच्च परमुच्यते ७
कस्माद्दानं सुवर्णस्य पूजयन्ति मनीषिणः
कस्माच्च दक्षिणार्थं तद्यज्ञकर्मसु शस्यते ८
कस्माच्च पावनं श्रेष्ठं भूमेर्गोभ्यश्च काञ्चनम्
परमं दक्षिणार्थे च तद्ब्रवीहि पितामह ९
भीष्म उवाच
शृणु राजन्नवहितो बहुकारणविस्तरम्
जातरूपसमुत्पत्तिमनुभूतं च यन्मया १०
पिता मम महातेजाः शांतनुर्निधनं गतः
तस्य दित्सुरहं श्राद्धं गङ्गाद्वारमुपागमम् ११
तत्रागम्य पितुः पुत्र श्राद्धकर्म समारभम्
माता मे जाह्नवी चैव साहाय्यमकरोत्तदा १२
ततोऽग्रतस्तपःसिद्धानुपवेश्य बहूनृषीन्
तोयप्रदानात्प्रभृति कार्याण्यहमथारभम् १३
तत्समाप्य यथोद्दिष्टं पूर्वकर्म समाहितः
दातुं निर्वपणं सम्यग्यथावदहमारभम् १४
ततस्तं दर्भविन्यासं भित्त्वा सुरुचिराङ्गदः
प्रलम्बाभरणो बाहुरुदतिष्ठद्विशां पते १५
तमुत्थितमहं दृष्ट्वा परं विस्मयमागमम्
प्रतिग्रहीता साक्षान्मे पितेति भरतर्षभ १६
ततो मे पुनरेवासीत्संज्ञा संचिन्त्य शास्त्रतः
नायं वेदेषु विहितो विधिर्हस्त इति प्रभो
पिण्डो देयो नरेणेह ततो मतिरभून्मम १७

साक्षान्नेह मनुष्यस्य पितरोऽन्तर्हिताः क्वचित्
गृह्णन्ति विहितं त्वेवं पिण्डो देयः कुशेष्विति १८
ततोऽह तदनादृत्य पितुर्हस्तनिदर्शनम्
शास्त्रप्रमाणात्सूक्ष्मं तु विधिं पार्थिव संस्मरन् १९
ततो दर्भेषु तत्सर्वमददं भरतर्षभ
शास्त्रमार्गानुसारेण तद्विद्धि मनुजर्षभ २०
ततः सोऽन्तर्हितो बाहुः पितुर्मम नराधिप
ततो मां दर्शयामासुः स्वप्नान्ते पितरस्तदा २१
प्रीयमाणास्तु मामूचुः प्रीताः स्म भरतर्षभ
विज्ञानेन तवानेन यन्न मुह्यसि धर्मतः २२
त्वया हि कुर्वता शास्त्रं प्रमाणमिह पार्थिव
आत्मा धर्मः श्रुतं वेदाः पितरश्च महर्षिभिः २३
साक्षात्पितामहो ब्रह्मा गुरवोऽथ प्रजापतिः
प्रमाणमुपनीता वै स्थितिश्च न विचालिता २४
तदिदं सम्यगारब्धं त्वयाद्य भरतर्षभ
किं तु भूमेर्गवां चार्थे सुवर्णं दीयतामिति २५
एवं वयं च धर्मश्च सर्वे चास्मत्पितामहाः
पाविता वै भविष्यन्ति पावनं परमं हि तत् २६
दश पूर्वान्दश परांस्तथा संतारयन्ति ते
सुवर्णं ये प्रयच्छन्ति एवं मे पितरोऽब्रुवन् २७
ततोऽह विस्मितो राजन्प्रतिबुद्धो विशां पते
सुवर्णदानेऽकरवं मतिं भरतसत्तम २८
इतिहासमिमं चापि शृणु राजन्पुरातनम्
जामदग्न्यं प्रति विभो धन्यमायुष्यमेव च २९
जामदग्न्येन रामेण तीव्ररोषान्वितेन वै
त्रिःसप्तकृत्वः पृथिवी कृता निःक्षत्रिया पुरा ३०
ततो जित्वा महीं कृत्स्नां रामो राजीवलोचनः
आजहार क्रतुं वीरो ब्रह्मक्षत्रेण पूजितम् ३१
वाजिमेधं महाराज सर्वकामसमन्वितम्
पावनं सर्वभूतानां तेजोद्युतिविवर्धनम् ३२

विपाप्मापि स तेजस्वी तेन क्रतुफलेन वै
नैवात्मनोऽथ लघुतां जामदग्न्योऽभ्यगच्छत ३३
स तु क्रतुवरेणेष्ट्वा महात्मा दक्षिणावता
पप्रच्छागमसंपन्नानृषीन्देवांश्च भार्गवः ३४
पावनं यत्परं नृणामुग्रे कर्मणि वर्तताम्
तदुच्यतां महाभागा इति जातघृणोऽब्रवीत्
इत्युक्ता वेदशास्त्रज्ञास्ते तमूचुर्महर्षयः ३५
देवतास्ते प्रयच्छन्ति सुवर्णं ये ददत्युत
अग्निर्हि देवताः सर्वाः सुवर्णं च तदात्मकम् ३६
तस्मात्सुवर्णं ददता दत्ताः सर्वाश्च देवताः
भवन्ति पुरुषव्याघ्र न ह्यतः परमं विदुः ३७
भूय एव च माहात्म्यं सुवर्णस्य निबोध मे
गदतो मम विप्रर्षे सर्वशस्त्रभृतां वर ३८
मया श्रुतमिदं पूर्वं पुराणे भृगुनन्दन
प्रजापतेः कथयतो मनोः स्वायंभुवस्य वै ३९
शूलपाणेर्भगवतो रुद्रस्य च महात्मनः
गिरौ हिमवति श्रेष्ठे तदा भृगुकुलोद्वह ४०
देव्या विवाहे निवृत्ते रुद्राण्या भृगुनन्दन
समागमे भगवतो देव्या सह महात्मनः
ततः सर्वे समुद्विग्ना भगवन्तमुपागमन् ४१
ते महादेवमासीनं देवीं च वरदामुमाम्
प्रसाद्य शिरसा सर्वे रुद्रमुचुर्भृगूद्वह ४२
अयं समागमो देव देव्या सह तवानघ
तपस्विनस्तपस्विन्या तेजस्विन्यातितेजसः
अमोघतेजास्त्वं देव देवी चेयमुमा तथा ४३
अपत्यं युवयोर्देव बलवद्भविता प्रभो
तन्नूनं त्रिषु लोकेषु न किंचिच्छेषयिष्यति ४४
तदेभ्यः प्रणतेभ्यस्त्वं देवेभ्यः पृथुलोचन
वरं प्रयच्छ लोकेश त्रैलोक्यहितकाम्यया
अपत्यार्थं निगृह्णीष्व तेजो ज्वलितमुत्तमम् ४५

इति तेषां कथयतां भगवान्गोवृषध्वजः
एवमस्त्विति देवांस्तान्विप्रर्षे प्रत्यभाषत ४६
इत्युक्त्वा चोर्ध्वमनयत्तद्रेतो वृषवाहनः
उर्ध्वरेताः समभवत्ततःप्रभृति चापि सः ४७
रुद्राणीतु ततः क्रुद्धा प्रजोच्छेदे तथा कृते
देवानथाब्रवीत्तत्र स्त्रीभावात्परुषं वचः ४८
यस्मादपत्यकामो वै भर्ता मे विनिवर्तितः
तस्मात्सर्वे सुरा यूयमनपत्या भविष्यथ ४९
प्रजोच्छेदो मम कृतो यस्माद्युष्माभिरद्य वै
तस्मात्प्रजा वः खगमाः सर्वेषां न भविष्यति ५०
पावकस्तु न तत्रासीच्छापकाले भृगूद्वह
देवा देव्यास्तथा शापादनपत्यास्तदाभवन् ५१
रुद्रस्तु तेजोऽप्रतिमं धारयामास तत्तदा
प्रस्कन्नं तु ततस्तस्मात्किंचित्तत्रापतद्भुवि ५२
तत्पपात तदा चाग्नौ ववृधे चाद्भुतोपमम्
तेजस्तेजसि संपृक्तमेकयोनित्वमागतम् ५३
एतस्मिन्नेव काले तु देवाः शक्रपुरोगमाः
असुरस्तारको नाम तेन संतापिता भृशम् ५४
आदित्या वसवो रुद्रा मरुतोऽथाश्विनावपि
साध्याश्च सर्वे संत्रस्ता दैतेयस्य पराक्रमात् ५५
स्थानानि देवतानां हि विमानानि पुराणि च
ऋषीणामाश्रमाश्चैव बभूवुरसुरैर्हृताः ५६
ते दीनमनसः सर्वे देवाश्च ऋषयश्च ह
प्रजग्मुः शरणं देवं ब्रह्माणमजरं प्रभुम् ५७
इति श्रीमहाभारते अनुशासनपर्वणि त्र्यशीतितमोऽध्यायः ८३

## चतुरशीतितमोऽध्यायः

देवा ऊचुः
असुरस्तारको नाम त्वया दत्तवरः प्रभो
सुरानृषींश्च क्लिश्नाति वधस्तस्य विधीयताम् १

तस्माद्भयं समुत्पन्नामस्माकं वै पितामह
परित्रायस्व नो देव न ह्यन्या गतिरस्ति नः २
ब्रह्मोवाच
समोऽह सर्वभूतानामधर्मं नेह रोचये
हन्यतां तारकः क्षिप्रं सुरर्षिगणबाधकः ३
वेदा धर्माश्च नोत्सादं गच्छेयुः सुरसत्तमाः
विहितं पूर्वमेवात्र मया वै व्येतु वो ज्वरः ४
देवा ऊचुः
वरदानाद्भगवतो दैतेयो बलगर्वितः
देवैर्न शक्यते हन्तुं स कथं प्रशमं व्रजेत् ५
स हि नैव स्म देवानां नासुराणां न रक्षसाम्
वध्यः स्यामिति जग्राह वरं त्वत्तः पितामह ६
देवाश्च शप्ता रुद्राण्या प्रजोच्छेदे पुरा कृते
न भविष्यति वोऽपत्यमिति सर्वजगत्पते ७
ब्रह्मोवाच
हुताशनो न तत्रासीच्छापकाले सुरोत्तमाः
स उत्पादयितापत्यं वधार्थं त्रिदशद्विषाम् ८
तद्वै सर्वानतिक्रम्य देवदानवराक्षसान्
मानुषानथ गन्धर्वान्नागानथ च पक्षिणः ९
अस्त्रेणामोघपातेन शक्त्या तं घातयिष्यति
यतो वो भयमुत्पन्नं ये चान्ये सुरशत्रवः १०
सनातनो हि सङ्कल्पः काम इत्यभिधीयते
रुद्रस्य तेजः प्रस्कन्नमग्नौ निपतितं च तत् ११
तत्तेजोऽग्निर्महद्भूतं द्वितीयमिव पावकम्
वधार्थं देवशत्रूणां गङ्गायां जनयिष्यति १२
स तु नावाप तं शापं नष्टः स हुतभुक्तदा
तस्माद्वो भयहृद्देवाः समुत्पत्स्यति पावकिः १३
अन्विष्यतां वै ज्वलनस्तथा चाद्य नियुज्यताम्
तारकस्य वधोपायः कथितो वै मयानघाः १४
न हि तेजस्विनां शापास्तेजःसु प्रभवन्ति वै

बलान्यतिबलं प्राप्य नबलानि भवन्ति वै १५
हन्यादवध्यान्वरदानपि चैव तपस्विनः
सङ्कल्पाभिरुचिः कामः सनातनतमोऽनलः १६
जगत्पतिरनिर्देश्यः सर्वगः सर्वभावनः
हृच्छयः सर्वभूतानां ज्येष्ठो रुद्रादपि प्रभुः १७
अन्विष्यतां स तु क्षिप्रं तेजोराशिर्हुताशनः
स वो मनोगतं कामं देवः संपादयिष्यति १८
एतद्वाक्यमुपश्रुत्य ततो देवा महात्मनः
जग्मुः संसिद्धसङ्कल्पाः पर्येषन्तो विभावसुम् १९
ततस्त्रैलोक्यमृषयो व्यचिन्वन्त सुरैः सह
काङ्क्षन्तो दर्शनं वह्नेः सर्वे तद्गतमानसाः २०
परेण तपसा युक्ताः श्रीमन्तो लोकविश्रुताः
लोकानन्वचरन्सिद्धाः सर्व एव भृगूद्वह
नष्टमात्मनि संलीनं नाधिजग्मुर्हुताशनम् २१
ततः संजातसंत्रासानग्नेर्दर्शनलालसान्
जलेचरः क्लान्तमनास्तेजसाग्नेः प्रदीपितः
उवाच देवान्मण्डूको रसातलतलोत्थितः २२
रसातलतले देवा वसत्यग्निरिति प्रभो
संतपादिह संप्राप्तः पावकप्रभवादहम् २३
स संसुप्तो जले देवा भगवान्हव्यवाहनः
अपः संसृज्य तेजोभिस्तेन संतापिता वयम् २४
तस्य दर्शनमिष्टं वो यदि देवा विभावसोः
तत्रैनमधिगच्छध्वं कार्यं वो यदि वह्निना २५
गम्यतां साधयिष्यामो वयं ह्यग्निभयात्सुराः
एतावदुक्त्वा मण्डूकस्त्वरितो जलमाविशत् २६
हुताशनस्तु बुबुधे मण्डूकस्याथ पैशुनम्
शशाप स तमासाद्य न रसान्वेत्स्यसीति वै २७
तं स संयुज्य शापेन मण्डूकं पावको ययौ
अन्यत्र वासाय विभुर्न च देवानदर्शयत् २८
देवास्त्वनुग्रहं चक्रुर्मण्डूकानां भृगूद्वह

यत्तच्छृणु महाबाहो गदतो मम सर्वशः २९
देवा ऊचुः
अग्निशापादजिह्वापि रसज्ञानबहिष्कृताः
सरस्वतीं बहुविधां यूयमुच्चारयिष्यथ ३०
बिलवासगतांश्चैव निरादानानचेतसः
गतासूनपि वः शुष्कान्भूमिं संधारयिष्यति
तमोगतायामपि च निशायां विचरिष्यथ ३१
इत्युक्त्वा तांस्ततो देवाः पुनरेव महीमिमाम्
परीयुर्ज्वलनस्यार्थे न चाविन्दन्हुताशनम् ३२
अथ तान्द्विरदः कश्चित्सुरेन्द्रद्विरदोपमः
अश्वत्थस्थोऽग्निरित्येवं प्राह देवान्भृगूद्वह ३३
शशाप ज्वलनः सर्वान्द्विरदान्क्रोधमूर्छितः
प्रतीपा भवतां जिह्वा भवित्रीति भृगूद्वह ३४
इत्युक्त्वा निःसृतोऽश्वत्थादग्निर्वारणसूचितः
प्रविवेश शमीगर्भमथ वह्निः सुषुप्सया ३५
अनुग्रहं तु नागानां यं चक्रुः शृणु तं प्रभो
देवा भृगुकुलश्रेष्ठ प्रीताः सत्यपराक्रमाः ३६
देवा ऊचुः
प्रतीपया जिह्वयापि सर्वाहारान्करिष्यथ
वाचं चोच्चारयिष्यध्वमुच्चैरव्यञ्जिताक्षरम्
इत्युक्त्वा पुनरेवाग्निमनुसस्रुर्दिवौकसः ३७
अश्वत्थान्निःसृतश्चाग्निः शमीगर्भगतस्तदा
शुकेन ख्यापितो विप्र तं देवाः समुपाद्रवन् ३८
शशाप शुकमग्निस्तु वाग्विहीनो भविष्यसि
जिह्वां चावर्तयामास तस्यापि हुतभुक्तदा ३९
दृष्ट्वा तु ज्वलनं देवाः शुकमूचुर्दयान्विताः
भविता न त्वमत्यन्तं शकुने नष्टवागिति ४०
आवृत्तजिह्वस्य सतो वाक्यं कान्तं भविष्यति
बालस्येव प्रवृद्धस्य कलमव्यक्तमद्भुतम् ४१
इत्युक्त्वा तं शमीगर्भे वह्निमालक्ष्य देवताः

तदेवायतनं चक्रुः पुरायं सर्वक्रियास्वपि ४२
ततःप्रभृति चाप्यग्निः शमीगर्भेषु दृश्यते
उत्पादने तथोपायमनुजग्मुश्च मानवाः ४३
आपो रसातले यास्तु संसृष्टाश्चित्रभानुना
ताः पर्वतप्रस्रवणैरूष्मां मुञ्चन्ति भार्गव
पावकेनाधिशयता संतप्तास्तस्य तेजसा ४४
ततोऽग्निर्देवता दृष्ट्वा बभूव व्यथितस्तदा
किमागमनमित्येवं तानपृच्छत पावकः ४५
तमूचुर्विबुधाः सर्वे ते चैव परमर्षयः
त्वां नियोद्त्यामहे कार्ये तद्भवान्कर्तुमर्हति
कृते च तस्मिन्भविता तवापि सुमहान्गुणः ४६
अग्निरुवाच
ब्रूत यद्भवतां कार्यं सर्वं कर्तास्मि तत्सुराः
भवतां हि नियोज्योऽह मा वोऽत्रास्तु विचारणा ४७
देवा ऊचुः
असुरस्तारको नाम ब्रह्मणो वरदर्पितः
अस्मान्प्रबाधते वीर्याद्वधस्तस्य विधीयताम् ४८
इमान्देवगणांस्तात प्रजापतिगणांस्तथा
ऋषींश्चापि महाभागान्परित्रायस्व पावक ४९
अपत्यं तेजसा युक्तं प्रवीरं जनय प्रभो
यद्भयं नोऽसुरात्तस्मान्नाशयेद्धव्यवाहन ५०
शप्तानां नो महादेव्या नान्यदस्ति परायणम्
अन्यत्र भवतो वीर्यं तस्मात्त्रायस्व नस्ततः ५१
इत्युक्तः स तथेत्युक्त्वा भगवान्हव्यकव्यभुक्
जगामाथ दुराधर्षो गङ्गां भागीरथीं प्रति ५२
तया चाप्यभवन्मिश्रो गर्भश्चास्याभवत्तदा
ववृधे स तदा गर्भः कक्षे कृष्णगतिर्यथा ५३
तेजसा तस्य गर्भस्य गङ्गा विह्वलचेतना
संतापमगमत्तीव्रं सा सोढुं न शशाक ह ५४
आहिते ज्वलनेनाथ गर्भे तेजःसमन्विते

गङ्गायामसुरः कश्चिद्भैरवं नादमुत्सृजत् ५५
अबुद्धापपितेनाथ नादेन विपुलेन सा
वित्रस्तोद्भ्रान्तनयना गङ्गा विप्लुतलोचना
विसंज्ञा नाशकद्गर्भं संधारयितुमात्मना ५६
सा तु तेजःपरीताङ्गी कम्पमाना च जाह्नवी
उवाच वचनं विप्र तदा गर्भबलोद्धता
न ते शक्तास्मि भगवंस्तेजसोऽस्य विधारणे ५७
विमूढास्मि कृतानेन तथास्वास्थ्यं कृतं परम्
विह्वला चास्मि भगवंस्तेजो नष्टं च मेऽनघ ५८
धारणे नास्य शक्ताहं गर्भस्य तपतां वर
उत्स्रक्ष्येऽहमिमं दुःखान्न तु कामात्कथंचन ५९
न चेतसोऽस्ति संस्पर्शो मम देव विभावसो
आपदर्थे हि संबन्धः सुसूक्ष्मोऽपि महाद्युते ६०
यदत्र गुणसंपन्नमितरं वा हुताशन
त्वय्येव तदहं मन्ये धर्माधर्मौ च केवलौ ६१
तामुवाच ततो वह्निर्धार्यतां धार्यतामयम्
गर्भो मत्तेजसा युक्तो महागुणफलोदयः ६२
शक्ता ह्यसि महीं कृत्स्नां वोढुं धारयितुं तथा
न हि ते किंचिदप्राप्यं मद्रेतोधारणादृते ६३
सा वह्निना वार्यमाणा देवैश्चापि सरिद्वरा
समुत्ससर्ज तं गर्भं मेरौ गिरिवरे तदा ६४
समर्था धारणे चापि रुद्रतेजःप्रधर्षिता
नाशकत्तं तदा गर्भं संधारयितुमोजसा ६५
सा समुत्सृज्य तं दुःखाद्दीप्तवैश्वानरप्रभम्
दर्शयामास चाग्निस्तां तदा गङ्गां भृगूद्वह
पप्रच्छ सरितां श्रेष्ठां कच्चिद्गर्भः सुखोदयः ६६
कीदृग्वर्णोऽपि वा देवि कीदृग्रूपश्च दृश्यते
तेजसा केन वा युक्तः सर्वमेतद्ब्रवीहि मे ६७
गङ्गोवाच
जातरूपः स गर्भो वै तेजसा त्वमिवानल

सुवर्णो विमलो दीप्तः पर्वतं चावभासयत् ६८
पद्मोत्पलमिश्राणां ह्रदानामिव शीतलः
गन्धोऽस्य स कदम्बानां तुल्यो वै तपतां वर ६९
तेजसा तस्य गर्भस्य भास्करस्येव रश्मिभिः
यद्द्रव्यं परिसंसृष्टं पृथिव्यां पर्वतेषु वा
तत्सर्वं काञ्चनीभूतं समन्तात्प्रत्यदृश्यत ७०
पर्यधावत शैलांश्च नदीः प्रस्रवणानि च
व्यदीपयत्तेजसा च त्रैलोक्यं सचराचरम् ७१
एवंरूपः स भगवान्पुत्रस्ते हव्यवाहन
सूर्यवैश्वानरसमः कान्त्या सोम इवापरः
एवमुक्त्वा तु सा देवी तत्रैवान्तरधीयत ७२
पावकश्चापि तेजस्वी कृत्वा कार्यं दिवौकसाम्
जगामेष्टं ततो देशं तदा भार्गवनन्दन ७३
एतैः कर्मगुणैर्लोके नामाग्नेः परिगीयते
हिरण्यरेता इति वै ऋषिभिर्विबुधैस्तथा
पृथिवी च तदा देवी ख्याता वसुमतीति वै ७४
स तु गर्भो महातेजा गाङ्गेयः पावकोद्भवः
दिव्यं शरवणं प्राप्य ववृधेऽदभुतदर्शनः ७५
ददृशुः कृत्तिकास्तं तु बालार्कसदृशद्युतिम्
जातस्नेहाश्च तं बालं पुपुषुः स्तन्यविस्रवैः ७६
ततः स कार्त्तिकेयत्वमवाप परमद्युतिः
स्कन्नत्वात्स्कन्दतां चापि गुहावासाद्गुहोऽभवत् ७७
एवं सुवर्णमुत्पन्नमपत्यं जातवेदसः
तत्र जाम्बूनदं श्रेष्ठं देवानामपि भूषणम् ७८
ततःप्रभृति चाप्येतज्जातरूपमुदाहृतम्
यत्सुवर्णं स भगवानग्निरीशः प्रजापतिः ७९
पवित्राणां पवित्रं हि कनकं द्विजसत्तम
अग्नीषोमात्मकं चैव जातरूपमुदाहृतम् ८०
रत्नानामुत्तमं रत्नं भूषणानां तथोत्तमम्
पवित्रं च पवित्राणां मङ्गलानां च मङ्गलम् ८१

इति श्रीमहाभारते अनुशासनपर्वणि चतुरशीतितमोऽध्यायः ८४

## पञ्चाशीतितमोऽध्यायः

वसिष्ठ उवाच
अपि चेदं पुरा राम श्रुतं मे ब्रह्मदर्शनम्
पितामहस्य यद्वृत्तं ब्रह्मणः परमात्मनः १
देवस्य महतस्तात वारुणीं बिभ्रतस्तनुम्
ऐश्वर्ये वारुणे राम रुद्रस्येशस्य वै प्रभो २
आजग्मुर्मुनयः सर्वे देवाश्चाग्निपुरोगमाः
यज्ञाङ्गानि च सर्वाणि वषट्कारश्च मूर्तिमान् ३
मूर्तिमन्ति च सामानि यजूंषि च सहस्रशः
ऋग्वेदश्चागमत्तत्र पदक्रमविभूषितः ४
लक्षणानि स्वराः स्तोभा निरुक्तं स्वरभक्तयः
ओङ्काराश्चावसन्नेत्रे निग्रहप्रग्रहौ तथा ५
वेदाश्च सोपनिषदो विद्या सावित्र्यथापि च
भूतं भव्यं भविष्यच्च दधार भगवाञ्शिवः
जुह्वच्चात्मन्यथात्मानं स्वयमेव तदा प्रभो ६
देवपत्न्यश्च कन्याश्च देवानां चैव मातरः
आजग्मुः सहितास्तत्र तदाभृगुकुलोद्वह ७
यज्ञं पशुपतेः प्रीता वरुणस्य महात्मनः
स्वयंभुवस्तु ता दृष्ट्वा रेतः समपतद्भुवि ८
तस्य शुक्रस्य निष्पन्दात्पांसून्संगृह्य भूमितः
प्रास्यत्पूषा कराभ्यां वै तस्मिन्नेव हुताशने ९
ततस्तस्मिन्संप्रवृत्ते सत्रे ज्वलितपावके
ब्रह्मणो जुह्वतस्तत्र प्रादुर्भावो बभूव ह १०
स्कन्नमात्रं च तच्छुक्रं स्रुवेण प्रतिगृह्य सः
आज्यवन्मन्त्रवच्चापि सोऽजुहोद्भृगुनन्दन ११
ततः संजनयामास भूतग्रामं स वीर्यवान्
ततस्तु तेजसस्तस्माज्जज्ञे लोकेषु तैजसम् १२
तमसस्तामसा भावा व्यापि सत्त्वं तथोभयम्

सगुणस्तेजसो नित्यं तमस्याकाशमेव च १३
सर्वभूतेष्वथ तथा सत्त्वं तेजस्तथा तमः
शुक्रे हुतेऽग्नौ तस्मिंस्तु प्रादुरासंस्त्रयः प्रभो १४
पुरुषा वपुषा युक्ता युक्ताः प्रसवजैर्गुणैः
भृगित्येव भृगुः पूर्वमङ्गारेभ्योऽङ्गिराभवत् १५
अङ्गारसंश्रयाच्चैव कविरित्यपरोऽभवत्
सह ज्वालाभिरुत्पन्नो भृगुस्तस्माद्भृगुः स्मृतः १६
मरीचिभ्यो मरीचिस्तु मारीचः कश्यपो ह्यभूत
अङ्गारेभ्योऽङ्गिरास्तात बालखिल्याः शिलोच्चयात्
अत्रैवात्रेति च बिभो जातमत्रिं वदन्त्यपि १७
तथा भस्मव्यपोहेभ्यो ब्रह्मर्षिगणसंमिताः
वैखानसः समुत्पन्नास्तपः श्रुतगुणेप्सवः
अश्रुतोऽस्य समुत्पन्नावश्विनौ रूपसंमतौ १८
शेषाः प्रजानां पतयः स्त्रोतोभ्यस्तस्य जज्ञिरे
ऋषयो लोमकूपेभ्यः स्वेदाच्छन्दो मलात्मकम् १९
एतस्मात्कारणादाहुरग्निं सर्वास्तु देवताः
ऋषयः श्रुतसंपन्ना वेदप्रामाण्यदर्शनात् २०
यानि दारूणि ते मासा निर्यासाः पक्षसंज्ञिताः
अहोरात्रा मुहूर्तास्तु पित्तं ज्योतिश्च वारुणम् २१
रौद्रं लोहितमित्याहुर्लोहितात्कनकं स्मृतम्
तन्मैत्रमिति विज्ञेयं धूमाच्च वसवः स्मृताः २२
अर्चिषो याश्च ते रुद्रास्तथादित्या महाप्रभाः
उद्दिष्टास्ते तथाङ्गारा ये धिष्ण्येषु दिवि स्थिताः २३
आदिनाथश्च लोकस्य तत्परं ब्रह्म तद्ध्रुवम्
सर्वकामदमित्याहुस्तत्र हव्यमुदावहत् २४
ततोऽब्रवीन्महादेवो वरुणः परमात्मकः
मम सत्रमिदं दिव्यमहं गृहपतिस्त्विह २५
त्रीणि पूर्वाण्यपत्यानि मम तानि न संशयः
इति जानीत खगमा मम यज्ञफलं हि तत् २६
अग्निरुवाच

मदङ्गेभ्यः प्रसूतानि मदाश्रयकृतानि च
ममैव तान्यपत्यानि वरुणो ह्यवशात्मकः २७
अथाब्रवील्लोकगुरुर्ब्रह्मा लोकपितामहः
ममैव तान्यपत्यानि मम शुक्रं हुतं हि तत् २८
अहं वक्ता च मन्त्रस्य होता शुक्रस्य चैव ह
यस्य बीजं फलं तस्य शुक्रं चेत्कारणं मतम् २९
ततोऽब्रुवन्देवगणाः पितामहमुपेत्य वै
कृताञ्जलिपुटाः सर्वे शिरोभिरभिवन्द्य च ३०
वयं च भगवन्सर्वे जगच्च सचराचरम्
तवैव प्रसवाः सर्वे तस्मादग्निर्विभावसुः
वरुणश्चेश्वरो देवो लभतां काममीप्सितम् ३१
निसर्गाद्वरुणश्चापि ब्रह्मणो यादसां पतिः
जग्राह वै भृगुं पूर्वमपत्यं सूर्यवर्चसम् ३२
ईश्वरोऽङ्गिरसं चाग्नेरपत्यार्थेऽभ्यकल्पयत्
पितामहस्त्वपत्यं वै कविं जग्राह तत्त्ववित् ३३
तदा स वारुणः ख्यातो भृगुः प्रसवकर्मकृत्
आग्नेयस्त्वङ्गिराः श्रीमान्कविर्ब्राह्मो महायशाः
भार्गवाङ्गिरसौ लोके लोकसंतानलक्षणौ ३४
एते विप्रवराः सर्वे प्रजानां पतयस्त्रयः
सर्वं संतानमेतेषामिदमित्युपधारय ३५
भृगोस्तु पुत्रास्तत्रासन्सप्त तुल्या भृगोर्गुणैः
च्यवनो वज्रशीर्षश्च शुचिरौर्वस्तथैव च ३६
शुक्रो वरेण्यश्च विभुः सवनश्चेति सप्त ते
भार्गवा वारुणाः सर्वे येषां वंशे भवानपि ३७
अष्टौ चाङ्गिरसः पुत्रा वारुणास्तेऽप्युदाहृताः
बृहस्पतिरुतथ्यश्च वयस्यः शान्तिरेव च ३८
घोरो विरूपः संवर्तः सुधन्वा चाष्टमः स्मृतः
एतेऽष्टावग्निजाः सर्वे ज्ञाननिष्ठा निरामयाः ३९
ब्राह्मणस्य कवेः पुत्रा वारुणास्तेऽप्युदाहृताः
अष्टौ प्रसवजैर्युक्ता गुणैर्ब्रह्मविदः शुभाः ४०

कविः काव्यश्च विष्णुश्च बुद्धिमानुशनास्तथा
भृगुश्च विरजाश्चैव काशी चोग्रश्च धर्मवित् ४१
अष्टौ कविसुता ह्येते सर्वमेभिर्जगत्ततम्
प्रजापतय एते हि प्रजानां यैरिमाः प्रजाः ४२
एवमङ्गिरसश्चैव कवेश्च प्रसवान्वयैः
भृगोश्च भृगुशार्दूल वंशजैः सततं जगत् ४३
वरुणश्चादितो विप्र जग्राह प्रभुरीश्वरः
कविं तात भृगुं चैव तस्मात्तौ वारुणौ स्मृतौ ४४
जग्राहाङ्गिरसं देवः शिखी तस्माद्धुताशनः
तस्मादङ्गिरसा ज्ञेयाः सर्व एव तदन्वयाः ४५
ब्रह्मा पितामहः पूर्वं देवताभिः प्रसादितः
इमे नः संतरिष्यन्ति प्रजाभिर्जगदीश्वराः ४६
सर्वे प्रजानां पतयः सर्वे चातितपस्विनः
त्वत्प्रसादादिमं लोकं तारयिष्यन्ति शाश्वतम् ४७
तथैव वंशकर्तारस्तव तेजोविवर्धनाः
भवेयुर्वेदविदुषः सर्वे वाक्पतयस्तथा ४८
देवपक्षधराः सौम्याः प्रजापत्या महर्षयः
आप्नुवन्ति तपश्चैव ब्रह्मचर्यं परं तथा ४९
सर्वे हि वयमेते च तवैव प्रसवः प्रभो
देवानां ब्राह्मणानां च त्वं हि कर्ता पितामह ५०
मरीचिमादितः कृत्वा सर्वे चैवाथ भार्गवाः
अपत्यानीति संप्रेक्ष्य क्षमयाम पितामह ५१
ते त्वनेनैव रूपेण प्रजनिष्यन्ति वै प्रजाः
स्थापयिष्यन्ति चात्मानं युगादिनिधने तथा ५२
एवमेतत्पुरा वृत्तं तस्य यज्ञे महात्मनः
देवश्रेष्ठस्य लोकादौ वारुणीं बिभ्रतस्तनुम् ५३
अग्निर्ब्रह्मा पशुपतिः शर्वो रुद्रः प्रजापतिः
अग्नेरपत्यमेतद्वै सुवर्णमिति धारणा ५४
अग्न्यभावे च कुर्वन्ति वह्निस्थानेषु काञ्चनम्
जामदग्न्य प्रमाणज्ञा वेदश्रुतिनिदर्शनात् ५५

कुशस्तम्बे जुहोत्यग्निं सुवर्णं तत्र संस्थितम्
हुते प्रीतिकरीमृद्धिं भगवांस्तत्र मन्यते ५६
तस्मादग्नि पराः सर्वा देवता इति शुश्रुम
ब्रह्मणो हि प्रसूतोऽग्निरग्नेरपि च काञ्चनम् ५७
तस्माद्ये वै प्रयच्छन्ति सुवर्णं धर्मदर्शिनः
देवतास्ते प्रयच्छन्ति समस्ता इति नः श्रुतम् ५८
तस्य चातमसो लोका गच्छतः परमां गतिम्
स्वर्लोके राजराज्येन सोऽभिषिच्येत भार्गव ५९
आदित्योदयने प्राप्ते विधिमन्त्रपुरस्कृतम्
ददाति काञ्चनं यो वै दुःस्वप्नं प्रतिहन्ति सः ६०
ददात्युदितमात्रे यस्तस्य पाप्मा विधूयते
मध्याह्ने ददतो रुक्मं हन्ति पापमनागतम् ६१
ददाति पश्चिमां संध्यां यः सुवर्णं धृतव्रतः
ब्रह्मवाय्वग्निसोमानां सालोक्यमुपयाति सः ६२
सेन्द्रेषु चैव लोकेषु प्रतिष्ठां प्राप्नुते शुभाम्
इह लोके यशः प्राप्य शान्तपाप्मा प्रमोदते ६३
ततः संपद्यतेऽन्येषु लोकेष्वप्रतिमः सदा
अनावृतगतिश्चैव कामचारी भवत्युत ६४
न च क्षरति तेभ्यः स शश्वच्चैवाप्नुते महत्
सुवर्णमक्षयं दत्त्वा लोकानाप्नोति पुष्कलान् ६५
यस्तु संजनयित्वाग्निमादित्योदयनं प्रति
दद्याद्वै व्रतमुद्दिश्य सर्वान्कामान्समश्नुते ६६
अग्निरित्येव तत्प्राहुः प्रदानं वै सुखावहम्
यथेष्टगुणसंपन्नं प्रवर्तकमिति स्मृतम् ६७
भीष्म उवाच
इत्युक्तः स वसिष्ठेन जामदग्न्यः प्रतापवान्
ददौ सुवर्णं विप्रेभ्यो व्यमुच्यत च किल्बिषात् ६८
एतत्ते सर्वमाख्यातं सुवर्णस्य महीपते
प्रदानस्य फलं चैव जन्म चाग्न्यमनुत्तमम् ६९
तस्मात्त्वमपि विप्रेभ्यः प्रयच्छ कनकं बहु

ददत्सुवर्णं नृपते किल्बिषाद्विप्रमोक्ष्यसि ७०
इति श्रीमहाभारते अनुशासनपर्वणि पञ्चाशीतितमोऽध्यायः ८५

षडशीतितमोऽध्यायः

युधिष्ठिर उवाच
उक्ताः पितामहेनेह सुवर्णस्य विधानतः
विस्तरेण प्रदानस्य ये गुणाः श्रुतिलक्षणाः १
यत्तु कारणमुत्पत्तेः सुवर्णस्येह कीर्तितम्
स कथं तारकः प्राप्तो निधनं तद्ब्रवीहि मे २
उक्तः स देवतानां हि अवध्य इति पार्थिव
न च तस्येह ते मृत्युर्विस्तरेण प्रकीर्तितः ३
एतदिच्छाम्यहं श्रोतुं त्वत्तः कुरुकुलोद्वह
कार्त्स्न्येन तारकवधं परं कौतूहलं हि मे ४
भीष्म उवाच
विपन्नकृत्या राजेन्द्र देवता ऋषयस्तथा
कृत्तिकाश्चोदयामासुरपत्यभरणाय वै ५
न देवतानां काचिद्धि समर्था जातवेदसः
एकापि शक्ता तं गर्भं संधारयितुमोजसा ६
षण्णां तासां ततः प्रीतः पावको गर्भधारणात्
स्वेन तेजोविसर्गेण वीर्येण परमेण च ७
तास्तु षट्कृत्तिका गर्भं पुपुषुर्जातवेदसः
षट्सु वर्त्मसु तेजोऽग्ने सकलं निहितं प्रभो ८
ततस्ता वर्धमानस्य कुमारस्य महात्मनः
तेजसाभिपरीताङ्ग्यो न क्वचिच्छर्म लेभिरे ९
ततस्तेजःपरीताङ्ग्यः सर्वाः काल उपस्थिते
समं गर्भं सुषुविरे कृत्तिकास्ता नरर्षभ १०
ततस्तं षडधिष्ठानं गर्भमेकत्वमागतम्
पृथिवी प्रतिजग्राह कान्तीपुरसमीपतः ११
स गर्भो दिव्यसंस्थानो दीप्तिमान्पावकप्रभः
दिव्यं शरवणं प्राप्य ववृधे प्रियदर्शनः १२

ददृशुः कृत्तिकास्तं तु बालं वह्निसमद्युतिम्
जातस्नेहाश्च सौहार्दात्पुपुषुः स्तन्यविस्रवैः १३
अभवत्कार्त्तिकेयः स त्रैलोक्ये सचराचरे
स्कन्नत्वात्स्कन्दतां चाप गुहावासाद्गुहोऽभवत् १४
ततो देवास्त्रयस्त्रिंशद्दिशश्च सदिगीश्वराः
रुद्रो धाता च विष्णुश्च यज्ञः पूषार्यमा भगः १५
अंशो मित्रश्च साध्याश्च वसवो वासवोऽश्विनौ
आपो वायुर्नभश्चन्द्रो नक्षत्राणि ग्रहा रविः १६
पृथग्भूतानि चान्यानि यानि देवार्पणानि वै
आजग्मुस्तत्र तं द्रष्टुं कुमारं ज्वलनात्मजम्
ऋषयस्तुष्टुवुश्चैव गन्धर्वाश्च जगुस्तथा १७
षडाननं कुमारं तं द्विषडक्षं द्विजप्रियम्
पीनांसं द्वादशभुजं पावकादित्यवर्चसम् १८
शयानं शरगुल्मस्थं दृष्ट्वा देवाः सहर्षिभिः
लेभिरे परमं हर्षं मेनिरे चासुरं हतम् १९
ततो देवाः प्रियाण्यस्य सर्व एव समाचरन्
क्रीडतः क्रीडनीयानि ददुः पक्षिगणांश्च ह २०
सुपर्णोऽस्य ददौ पत्रं मयूरं चित्रबर्हिणम्
राक्षसाश्च ददुस्तस्मै वराहमहिषावुभौ २१
कुक्कुटं चाग्निसंकाशं प्रददौ वरुणः स्वयम्
चन्द्रमाः प्रददौ मेषमादित्यो रुचिरां प्रभाम् २२
गवां माता च गा देवी ददौ शतसहस्रशः
छागमग्निर्गुणोपेतमिला पुष्पफलं बहु २३
सुधन्वा शकटं चैव रथं चामितकूबरम्
वरुणो वारुणान्दिव्यान्भुजंगान्प्रददौ शुभान्
सिंहान्सुरेन्द्रो व्याघ्रांश्च द्वीपिनोऽन्याश्च दंष्ट्रिणः २४
श्वापदांश्च बहून्घोरांश्छत्राणि विविधानि च
राक्षसासुरसंघाश्च येऽनुजग्मुस्तमीश्वरम् २५
वर्धमानं तु तं दृष्ट्वा प्रार्थयामास तारकः
उपायैर्बहुभिर्हन्तुं नाशकच्चापि तं विभुम् २६

सेनापत्येन तं देवाः पूजयित्वा गुहालयम्
शशंसुर्विप्रकारं तं तस्मै तारककारितम् २७
स विवृद्धो महावीर्यो देवसेनापतिः प्रभुः
जघानामोघया शक्त्या दानवं तारकं गुहः २८
तेन तस्मिन्कुमारेण क्रीडता निहतेऽसुरे
सुरेन्द्रः स्थापितो राज्ये देवानां पुनरीश्वरः २९
स सेनापतिरेवाथ बभौ स्कन्दः प्रतापवान्
ईशो गोप्ता च देवानां प्रियकृच्छंकरस्य च ३०
हिरण्यमूर्तिर्भगवानेष एव च पावकिः
सदा कुमारो देवानां सेनापत्यमवाप्तवान् ३१
तस्मात्सुवर्णं मङ्गल्यं रत्नमक्षय्यमुत्तमम्
सहजं कार्त्तिकेयस्य वह्नेस्तेजः परं मतम् ३२
एवं रामाय कौरव्यै वसिष्ठोऽकथयत्पुरा
तस्मात्सुवर्णदानाय प्रयतस्व नराधिप ३३
रामः सुवर्णं दत्त्वा हि विमुक्तः सर्वकिल्बिषैः
त्रिविष्टपे महत्स्थानमवापासुलभं नरैः ३४
इति श्रीमहाभारते अनुशासनपर्वणि षडशीतितमोऽध्यायः ८६

## सप्ताशीतितमोऽध्यायः

युधिष्ठिर उवाच
चातुर्वर्ण्यस्य धर्मात्मन्धर्मः प्रोक्तस्त्वयानघ
तथैव मे श्राद्धविधिं कृत्स्नं प्रब्रूहि पार्थिव १
वैशम्पायन उवाच
युधिष्ठिरेणैवमुक्तो भीष्मः शांतनवस्तदा
इमं श्राद्धविधिं कृत्स्नं प्रवक्तुमुपचक्रमे २
भीष्म उवाच
शृणुष्वावहितो राजञ्श्राद्धकल्पमिमं शुभम्
धन्यं यशस्यं पुत्रीयं पितृयज्ञं परंतप ३
देवासुरमनुष्याणां गन्धर्वोरगरक्षसाम्
पिशाचकिंनराणां च पूज्या वै पितरः सदा ४

पितॄपूज्यादितः पश्चाद्देवान्संतर्पयन्ति वै
तस्मात्सर्वप्रयत्नेन पुरुषः पूजयेत्सदा ५
अन्वाहार्यं महाराज पितॄणां श्राद्धमुच्यते
तच्चामिषेण विधिना विधिः प्रथमकल्पितः ६
सर्वेष्वहःसु प्रीयन्ते कृतैः श्राद्धैः पितामहाः
प्रवक्ष्यामि तु ते सर्वांस्तिथ्यां तिथ्यां गुणागुणान् ७
येष्वहःसु कृतैः श्राद्धैर्यत्फलं प्राप्यतेऽनघ
तत्सर्वं कीर्तयिष्यामि यथावत्तन्निबोध मे ८
पितॄनर्च्य प्रतिपदि प्राप्नुयात्स्वगृहे स्त्रियः
अभिरूपप्रजायिन्यो दर्शनीया बहुप्रजाः ९
स्त्रियो द्वितीयां जायन्ते तृतीयायां तु वन्दिनः
चतुर्थ्यां क्षुद्रपशवो भवन्ति बहवो गृहे १०
पञ्चम्यां बहवः पुत्रा जायन्ते कुर्वतां नृप
कुर्वाणास्तु नराः षष्ठ्यां भवन्ति द्युतिभागिनः ११
कृषिभागी भवेच्छ्राद्धं कुर्वाणः सप्तमी नृप
अष्टम्यां तु प्रकुर्वाणो वाणिज्ये लाभमाप्नुयात् १२
नवम्यां कुर्वतः श्राद्धं भवत्येकशफं बहु
विवर्धन्ते तु दशमीं गावः श्राद्धानि कुर्वतः १३
कुप्यभागी भवेन्मर्त्यः कुर्वन्नेकादशीं नृप
ब्रह्मवर्चस्विनः पुत्रा जायन्ते तस्य वेश्मनि १४
द्वादश्यामीहमानस्य नित्यमेव प्रदृश्यते
रजतं बहु चित्रं च सुवर्णं च मनोरमम् १५
ज्ञातीनां तु भवेच्छ्रेष्ठः कुर्वञ्श्राद्धं त्रयोदशीम्
अवश्यं तु युवानोऽस्य प्रमीयन्ते नरा गृहे १६
युद्धभागी भवेन्मर्त्यः श्राद्धं कुर्वंश्चतुर्दशीम्
अमावास्यां तु निवपन्सर्वान्कामानवाप्नुयात् १७
कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीम्
श्राद्धकर्मणि तिथ्यः स्युः प्रशस्ता न तथेतराः १८
यथा चैवापरः पक्षः पूर्वपक्षाद्विशिष्यते
तथा श्राद्धस्य पूर्वाह्णादपराह्णो विशिष्यते १९

इति श्रीमहाभारते अनुशासनपर्वणि सप्ताशीतितमोऽध्यायः ८७

अष्टाशीतितमोऽध्यायः

युधिष्ठिर उवाच
किंस्विद्दत्तं  पितृभ्यो वै भवत्यक्षयमीश्वर
किं हविश्चिररात्राय किमानन्त्याय कल्पते १
भीष्म उवाच
हवींषि श्राद्धकल्पे तु यानि श्राद्धविदो विदुः
तानि मे शृणु काम्यानि फलं चैषां युधिष्ठिर २
तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलैस्तथा
दत्तेन मासं प्रीयन्ते श्राद्धेन पितरो नृप ३
वर्धमानतिलं श्राद्धमक्षयं मनुरब्रवीत्
सर्वेष्वेव तु भोज्येषु तिलाः प्राधान्यतः स्मृताः ४
द्वौ मासौ तु भवेत्तृप्तिर्मत्स्यैः पितृगणस्य ह
त्रीन्मासानाविकेनाहुश्चातुर्मास्यं शशेन तु ५
आजेन मासान्प्रीयन्ते पञ्चैव पितरो नृप
वाराहेण तु षण्मासान्सप्त वै शाकुनेन तु ६
मासानष्टौ पार्षतेन रौरवेण नवैव तु
गवयस्य तु मांसेन तृप्तिः स्याद्दशमासिकी ७
मासानेकादश प्रीतिः पितृणां माहिषेण तु
गव्येन दत्ते श्राद्धे तु संवत्सरमिहोच्यते ८
यथा गव्यं तथा युक्तं पायसं सर्पिषा सह
वाध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी ९
आनन्त्याय भवेद्दतं खड्गमांसं पितृक्षये
कालशाकं च लौहं चाप्यानन्त्यं छाग उच्यते १०
गाथाश्चाप्यत्र गायन्ति पितृगीता युधिष्ठिर
सनत्कुमारो भगवान्पुरा मय्यभ्यभाषत ११
अपि किंनः कुले जायाद्यो नो दद्यात्त्रयोदशीम्
मघासु सर्पिषा युक्तं पायसं दक्षिणायने १२
आजेन वापि लौहेन मघास्वेव यतव्रतः

हस्तिच्छायासु विधिवत्कर्णव्यजनवीजितम् १३
एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत्
यत्रासौ प्रथितोलोकेष्वक्षय्य करणो वटः १४
आपो मूलं फलं मांसमन्नं वापि पितृक्षये
यत्किंचिन्मधुसंमिश्रं तदानन्त्याय कल्पते १५
इति श्रीमहाभारते अनुशासनपर्वणि अष्टाशीतितमोऽध्यायः ८८

एकोन नवतिमोऽध्यायः

भीष्म उवाच
यमस्तु यानि श्राद्धानि प्रोवाच शशबिन्दवे
तानि मे शृणु काम्यानि नक्षत्रेषु पृथक्पृथक् १
श्राद्धं यः कृत्तिकायोगे कुर्वीत सततं नरः
अग्नीनाधाय सापत्यो यजेत विगतज्वरः २
अपत्यकामो रोहिण्यामोजस्कामो मृगोत्तमे
क्रूरकर्मा ददच्छ्राद्धमार्द्रायां मानवो भवेत् ३
कृषिभागी भवेन्मर्त्यः कुर्वञ्श्राद्धं पुनर्वसौ
पुष्टिकामोऽथ पुष्येण श्राद्धमीहेत मानवः ४
आश्लेषायां ददच्छ्राद्धं वीरान्पुत्रान्प्रजायते
ज्ञातीनां तु भवेच्छ्रेष्ठो मघासु श्राद्धमावपन् ५
फल्गुनीषु ददच्छ्राद्धं सुभगः श्राद्धदो भवेत्
अपत्यभागुत्तरासु हस्तेन फलभाग्भवेत् ६
चित्रायां तु ददच्छ्राद्धं लभेद्रूपवतः सुतान्
स्वातियोगे पितृनर्च्य वाणिज्यमुपजीवति ७
बहुपुत्रो विशाखासु पित्र्यमीहन्भवेन्नरः
अनुराधासु कुर्वाणो राजचक्रं प्रवर्तयेत् ८
आधिपत्यं व्रजेन्मर्त्यो ज्येष्ठायामपवर्जयन्
नरः कुरुकुलश्रेष्ठ श्रद्धादमपुरः सरः ९
मूले त्वारोग्यमर्च्छेत यशोऽषाढास्वनुत्तमम्
उत्तरासु त्वषाढासु वीतशोकश्चरेन्महीम् १०
श्राद्धं त्वभिजिता कुर्वन्विद्यां श्रेष्ठामवाप्नुयात्

श्रवणे तु ददच्छ्राद्धं प्रेत्य गच्छेत्परां गतिम् ११
राज्यभागी धनिष्ठायां प्राप्नुयान्नापदं नरः
नक्षत्रे वारुणे कुर्वन्भिषक्सिद्धिमवाप्नुयात् १२
पूर्वप्रोष्ठपदाः कुर्वन्बहु विन्देदजाविकम्
उत्तरास्वथ कुर्वाणो विन्दते गाः सहस्रशः १३
बहुरूप्यकृतं वित्तं विन्दते रेवतीं श्रितः
अश्वाश्चाश्वयुजे वेत्ति भरणीष्वायुरुत्तमम् १४
इमं श्राद्धविधिं श्रुत्वा शशबिन्दुस्तथाकरोत्
अक्लेशेनाजयच्चापि महीं सोऽनुशशास ह १५
इति श्रीमहाभारते अनुशासनपर्वणि एकोननवतितमोऽध्यायः ८९

## नवतितमोऽध्यायः

युधिष्ठिर उवाच
कीदृशेभ्यः प्रदातव्यं भवेच्छ्राद्धं पितामह
द्विजेभ्यः कुरुशार्दूल तन्मे व्याख्यातुमर्हसि १
भीष्म उवाच
ब्राह्मणान्न परीक्षेत क्षत्रियो दानधर्मवित्
दैवे कर्मणि पित्र्ये तु न्याय्यमाहुः परीक्षणम् २
देवताः पूजयन्तीह दैवेनैवेह तेजसा
उपेत्य तस्माद्देवेभ्यः सर्वेभ्यो दापयेन्नरः ३
श्राद्धे त्वथ महाराज परीक्षेद्ब्राह्मणान्बुधः
कुलशीलवयोरूपैर्विद्ययाभिजनेन च ४
एषामन्ये पङ्क्तिदूषास्तथान्ये पङ्क्तिपावनाः
अपाङ्क्तेयास्तु ये राजन्कीर्तयिष्यामि ताञ्शृणु ५
कितवो भ्रूणहा यक्ष्मी पशुपालो निराकृतिः
ग्रामप्रेष्यो वार्धुषिको गायनः सर्वविक्रयी ६
अगारदाही गरदः कुण्डाशी सोमविक्रयी
सामुद्रिको राजभृत्यस्तैलिकः कूटकारकः ७
पित्रा विवदमानश्च यस्य चोपपतिर्गृहे
अभिशस्तस्तथा स्तेनः शिल्पं यश्चोपजीवति ८

पर्वकारश्च सूची च मित्रध्रुक्पारदारिकः
अव्रतानामुपाध्यायः काण्डपृष्ठस्तथैव च ९
श्वभिर्यश्च परिक्रामेद्यः शुना दष्ट एव च
परिवित्तिश्च यश्च स्याद्दुश्चर्मा गुरुतल्पगः
कुशीलवो देवलको नक्षत्रैर्यश्च जीवति १०
एतानिह विजानीयादपाङ्क्तेयान्द्विजाधमान्
शूद्राणामुपदेशं च ये कुर्वन्त्यल्पचेतसः ११
षष्टिं काणः शतं षण्ढः श्वित्री यावत्प्रपश्यति
पङ्क्त्यां समुपविष्टायां तावद्दूषयते नृप १२
यद्वेष्टितशिरा भुङ्क्ते यद्भुङ्क्ते दक्षिणामुखः
सोपानत्कश्च यद्भुङ्क्ते सर्वं विद्यात्तदासुरम् १३
असूयता च यद्दत्तं यच्च श्रद्धाविवर्जितम्
सर्वं तदसुरेन्द्राय ब्रह्मा भागमकल्पयत् १४
श्वानश्च पङ्क्तिदूषाश्च नावेक्षेरन्कथंचन
तस्मात्परिवृते दद्यात्तिलांश्चान्ववकीरयेत् १५
तिलादाने च क्रव्यादा ये च क्रोधवशा गणाः
यातुधानाः पिशाचाश्च विप्रलुम्पन्ति तद्धविः १६
यावद्ध्यपङ्क्त्यः पङ्क्त्यां वै भुञ्जानाननुपश्यति
तावत्फलाद्भ्रंशयति दातारं तस्य बालिशम् १७
इमे तु भरतश्रेष्ठ विज्ञेयाः पङ्क्तिपावनाः
ये त्वतस्तान्प्रवक्ष्यामि परीक्षस्वेह तान्द्विजान् १८
वेदविद्याव्रतस्नाता ब्राह्मणाः सर्व एव हि
पाङ्क्तेयान्यांस्तु वक्ष्यामि ज्ञेयास्ते पङ्क्तिपावनाः १९
त्रिणाचिकेतः पञ्चाग्निस्त्रिसुपर्णः षडङ्गवित्
ब्रह्मदेयानुसंतानश्छन्दोगो ज्येष्ठसामगः २०
मातापित्रोर्यश्च वश्यः श्रोत्रियो दशपूरुषः
ऋतुकालाभिगामी च धर्मपत्नीषु यः सदा
वेदविद्याव्रतस्नातो विप्रः पङ्क्तिं पुनात्युत २१
अथर्वशिरसोऽध्येता ब्रह्मचारी यतव्रतः
सत्यवादी धर्मशीलः स्वकर्मनिरतश्च यः २२

ये च पुरायेषु तीर्थेषु अभिषेककृतश्रमाः
मखेषु च समन्त्रेषु भवन्त्यवभृथाप्लुताः २३
अक्रोधना अचपलाः क्षान्ता दान्ता जितेन्द्रियाः
सर्वभूतहिता ये च श्राद्धेष्वेतान्निमन्त्रयेत्
एतेषु दत्तमक्षय्यमेते वै पङ्क्तिपावनाः २४
इमे परे महाराज विज्ञेयाः पङ्क्तिपावनाः
यतयो मोक्षधर्मज्ञा योगाः सुचरितव्रताः २५
ये चेतिहासं प्रयताः श्रावयन्ति द्विजोत्तमान्
ये च भाष्यविदः केचिद्ये च व्याकरणे रताः २६
अधीयते पुराणं ये धर्मशास्त्रारायथापि च
अधीत्य च यथान्यायं विधिवत्तस्य कारिणः २७
उपपन्नो गुरुकुले सत्यवादी सहस्रदः
अग्र्यः सर्वेषु वेदेषु सर्वप्रवचनेषु च २८
यावदेते प्रपश्यन्ति पङ्क्त्यास्तावत्पुनन्त्युत
ततो हि पावनात्पङ्क्त्याः पङ्क्तिपावन उच्यते २९
क्रोशादर्धतृतीयात्तु पावयेदेक एव हि
ब्रह्मदेयानुसंतान इति ब्रह्मविदो विदुः ३०
अनृत्विगनुपाध्यायः स चेदग्रासनं व्रजेत्
ऋत्विग्भिरननुज्ञातः पङ्क्त्या हरति दुष्कृतम् ३१
अथ चेद्वेदवित्सर्वैः पङ्क्तिदोषैर्विवर्जितः
न च स्यात्पतितो राजन्पङ्क्तिपावन एव सः ३२
तस्मात्सर्वप्रयत्नेन परीक्ष्यामन्त्रयेद्द्विजान्
स्वकर्मनिरतान्दान्तान्कुले जातान्बहुश्रुतान् ३३
यस्य मित्रप्रधानानि श्राद्धानि च हवींषि च
न प्रीणाति पितॄन्देवान्स्वर्गं च न स गच्छति ३४
यश्च श्राद्धे कुरुते संगतानि न देवयानेन पथा स याति
स वै मुक्तः पिप्पलं बन्धनाद्वा स्वर्गाल्लोकाच्च्यवते श्राद्धमित्रः ३५
तस्मान्मित्रं श्राद्धकृन्नाद्रियेत दद्यान्मित्रेभ्यः संग्रहार्थं धनानि
यं मन्यते नैव शत्रुं न मित्रं तं मध्यस्थं भोजयेद्धव्यकव्ये ३६
यथोषरे बीजमुप्तं न रोहेन्न चास्योप्ता प्राप्नुयाद्बीजभागम्

एवं श्राद्धं भुक्तमनर्हमार्गैर्न चेह नामुत्र फलं ददाति ३७
ब्राह्मणो ह्यनधीयानस्तृणाग्निरिव शाम्यति
तस्मै श्राद्धं न दातव्यं न हि भस्मनि हूयते ३८
संभोजनी नाम पिशाचदक्षिणा सा नैव देवान्न पितॄनुपैति
इहैव सा भ्राम्यति क्षीणपुण्या शालान्तरे गौरिव नष्टवत्सा ३९
यथाग्नौ शान्ते घृतमाजुहोति तन्नैव देवान्न पितॄनुपैति
तथा दत्तं नर्तने गायने च यां चानृचे दक्षिणामावृणोति ४०
उभौ हिनस्ति न भुनक्ति चैषा या चानृचे दक्षिणा दीयते वै
आघातनी गर्हितैषा पतन्ती तेषां प्रेतान्पातयेद्देवयानात् ४१
ऋषीणां समयं नित्यं ये चरन्ति युधिष्ठिर
निश्चिताः सर्वधर्मज्ञास्तान्देवा ब्राह्मणान्विदुः ४२
स्वाध्यायनिष्ठा ऋषयो ज्ञाननिष्ठास्तथैव च
तपोनिष्ठाश्च बोद्धव्याः कर्मनिष्ठाश्च भारत ४३
कव्यानि ज्ञाननिष्ठेभ्यः प्रतिष्ठाप्यानि भारत
तत्र ये ब्राह्मणाः केचिन्न निन्दति हि ते वराः ४४
ये तु निन्दन्ति जल्पेषु न ताञ्श्राद्धेषु भोजयेत्
ब्राह्मणा निन्दिता राजन्हन्युस्त्रिपुरुषं कुलम् ४५
वैखानसानां वचनमृषीणां श्रूयते नृप
दूरादेव परीक्षेत ब्राह्मणान्वेदपारगान्
प्रियान्वा यदि वा द्वेष्यांस्तेषु तच्छ्राद्धमावपेत् ४६
यः सहस्रं सहस्राणां भोजयेदनृचां नरः
एकस्तान्मन्त्रवित्प्रीतः सर्वानर्हति भारत ४७
इति श्रीमहाभारते अनुशासनपर्वणि नवतितमोऽध्यायः ९०

## एक नवतितमोऽध्यायः

युधिष्ठिर उवाच
केन संकल्पितं श्राद्धं कस्मिन्काले किमात्मकम्
भृग्वङ्गिरसके काले मुनिना कतरेण वा १
कानि श्राद्धेषु वर्ज्यानि तथा मूलफलानि च
धान्यजातिश्च का वर्ज्या तन्मे ब्रूहि पितामह २

भीष्म उवाच
यथा श्राद्धं संप्रवृत्तं यस्मिन्काले यदात्मकम्
येन संकल्पितं चैव तन्मे शृणु जनाधिप ३
स्वायंभुवोऽत्रि कौरव्य परमर्षिः प्रतापवान्
तस्य वंशे महाराज दत्तात्रेय इति स्मृतः ४
दत्तात्रेयस्य पुत्रोऽभून्निमिर्नाम तपोधनः
निमेश्चाप्यभवत्पुत्रः श्रीमान्नाम श्रिया वृतः ५
पूर्णे वर्षसहस्रान्ते स कृत्वा दुष्करं तपः
कालधर्मपरीतात्मा निधनं समुपागतः ६
निमिस्तु कृत्वा शौचानि विधिदृष्टेन कर्मणा
संतापमगमत्तीव्रं पुत्रशोकपरायणः ७
अथ कृत्वोपहार्याणि चतुर्दश्यां महामतिः
तमेव गणयञ्शोकं विरात्रे प्रत्यबुध्यत ८
तस्यासीत्प्रतिबुद्धस्य शोकेन पिहितात्मनः
मनः संहृत्य विषये बुद्धिर्विस्तरगामिनी ९
ततः संचिन्तयामास श्राद्धकल्पं समाहितः
यानि तस्यैव भोज्यानि मूलानि च फलानि च १०
उक्तानि यानि चान्यानि यानि चेष्टानि तस्य ह
तानि सर्वाणि मनसा विनिश्चित्य तपोधनः ११
अमावास्यां महाप्राज्ञ विप्रानानाय्य पूजितान्
दक्षिणावर्तिकाः सर्वा बृसीः स्वयमथाकरोत् १२
सप्त विप्रांस्ततो भोज्ये युगपत्समुपानयत्
ऋते च लवणं भोज्यं श्यामाकान्नं ददौ प्रभुः १३
दक्षिणाग्रास्ततो दर्भा विष्टरेषु निवेशिताः
पादयोश्चैव विप्राणां ये त्वन्नमुपभुञ्जते १४
कृत्वा च दक्षिणाग्रान्वै दर्भान्सुप्रयतः शुचिः
प्रददौ श्रीमते पिण्डं नामगोत्रमुदाहरन् १५
तत्कृत्वा स मुनिश्रेष्ठो धर्मसंकरमात्मनः
पश्चात्तापेन महता तप्यमानोऽभ्यचिन्तयत् १६
अकृतं मुनिभिः पूर्वं किं मयैतदनुष्ठितम्

कथं नु शापेन न मां दहेयुर्ब्राह्मणा इति १७
ततः संचिन्तयामास वंशकर्तारमात्मनः
ध्यातमात्रस्तथा चात्रिराजगाम तपोधनः १८
अथात्रिस्तं तथा दृष्ट्वा पुत्रशोकेन कर्शितम्
भृशमाश्वासयामास वाग्भिरिष्टाभिरव्ययः १९
निमे संकल्पितस्तेऽय पितृयज्ञस्तपोधनः
मा ते भूद्भीः पूर्वदृष्टो धर्मोऽय ब्रह्मणा स्वयम् २०
सोऽय स्वयंभुविहितो धर्मः संकल्पितस्त्वया
ऋते स्वयंभुवः कोऽन्य श्राद्धेयं विधिमाहरेत् २१
आख्यास्यामि च ते भूयः श्राद्धेयं विधिमुत्तमम्
स्वयंभुविहितं पुत्र तत्कुरुष्व निबोध मे २२
कृत्वाग्निकरणं पूर्वं मन्त्रपूर्वं तपोधन
ततोऽयम्णे च सोमाय वरुणाय च नित्यशः २३
विश्वेदेवाश्च ये नित्यं पितृभिः सह गोचराः
तेभ्यः संकल्पिता भागाः स्वयमेव स्वयंभुवा २४
स्तोतव्या चेह पृथिवी निवापस्येह धारिणी
वैष्णवी काश्यपी चेति तथैवेहाक्षयेति च २५
उदकानयने चैव स्तोतव्यो वरुणो विभुः
ततोऽग्निश्चैव सोमश्च आप्याय्याविह तेऽनघ २६
देवास्तु पितरो नाम निर्मिता वै स्वयंभुवा
ऊष्मपाः सुमहाभागास्तेषां भागाः प्रकल्पिताः २७
ते श्राद्धेनार्च्यमाना वै विमुच्यन्ते ह किल्बिषात्
सप्तकः पितृवंशस्तु पूर्वदृष्टः स्वयंभुवा २८
विश्वे चाग्निमुखा देवाः संख्याताः पूर्वमेव ते
तेषां नामानि वक्ष्यामि भागार्हाणां महात्मनाम् २९
सहः कृतिर्विपाप्मा च पुण्यकृत्पावनस्तथा
ग्राम्निः क्षेमः समूहश्च दिव्यसानुस्तथैव च ३०
विवस्वान्वीर्यवान्ह्रीमान्कीर्तिमान्कृत एव च
विपूर्वः सोमपूर्वश्च सूर्यश्रीश्चेति नामतः ३१
सोमपः सूर्यसावित्रो दत्तात्मा पुष्करीयकः

उष्णीनाभो नभोदश्च विश्वायुर्दीप्तिरेव च ३२
चमूहरः सुवेषश्च व्योमारिः शंकरो भवः
ईशः कर्ता कृतिर्दक्षो भुवनो दिव्यकर्मकृत् ३३
गणितः पञ्चवीर्यश्च आदित्यो रश्मिमांस्तथा
सप्तकृत्सोमवर्चाश्च विश्वकृत्कविरेव च ३४
अनुगोप्ता सुगोप्ता च नप्ता चेश्वर एव च
जितात्मा मुनिवीर्यश्च दीप्तलोमा भयंकरः ३५
अतिकर्मा प्रतीतश्च प्रदाता चांशुमांस्तथा
शैलाभः परमक्रोधी धीरोष्णी भूपतिस्तथा ३६
स्रजी वज्री वरी चैव विश्वेदेवाः सनातनाः
कीर्तितास्ते महाभागाः कालस्य गतिगोचराः ३७
अश्राद्धेयानि धान्यानि कोद्रवाः पुलकास्तथा
हिङ्गु द्रव्येषु शाकेषु पलाण्डुं लशुनं तथा ३८
पलाण्डुः सौभञ्जनकस्तथा गृञ्जनकादयः
कूष्माण्डजात्यलाबुं च कृष्णं लवणमेव च ३९
ग्राम्यं वाराहमांसं च यच्चैवाप्रोक्षितं भवेत्
कृष्णाजाजी विडश्चैव शीतपाकी तथैव च
अङ्कुराद्यास्तथा वर्ज्या इह शृङ्गाटकानि च ४०
वर्जयेल्लवणं सर्वं तथा जम्बुफलानि च
अवक्षुतावरुदितं तथा श्राद्धेषु वर्जयेत् ४१
निवापे हव्यकव्ये वा गर्हितं च श्वदर्शनम्
पितरश्चैव देवाश्च नाभिनन्दन्ति तद्धविः ४२
चण्डालश्वपचौ वर्ज्यौ निवापे समुपस्थिते
काषायवासी कुष्ठी वा पतितो ब्रह्महापि वा ४३
संकीर्णयोनिर्विप्रश्च संबन्धी पतितश्च यः
वर्जनीया बुधैरेते निवापे समुपस्थिते ४४
इत्येवमुक्त्वा भगवान्स्ववंशजमृषिं पुरा
पितामहसभां दिव्यां जगामात्रिस्तपोधनः ४५

इति श्रीमहाभारते अनुशासनपर्वणि एकनवतितमोऽध्यायः ९१

द्विनवतितमोऽध्यायः

भीष्म उवाच
तथा विधौ प्रवृत्ते तु सर्व एव महर्षयः
पितृयज्ञानकुर्वन्त विधिदृष्टेन कर्मणा १
ऋषयो धर्मनित्यास्तु कृत्वा निवपनान्युत
तर्पणं चाप्यकुर्वन्त तीर्थाम्भोभिर्यतव्रताः २
निवापैर्दीयमानैश्च चातुर्वर्ण्येन भारत
तर्पिताः पितरो देवास्ते नान्नं जरयन्ति वै ३
अजीर्णेनाभिहन्यन्ते ते देवाः पितृभिः सह
सोममेवाभ्यपद्यन्त निवापान्नाभिपीडिताः ४
तेऽब्रुवन्सोममासाद्य पितरोऽजीर्णपीडिताः
निवापान्नेन पीड्यामः श्रेयो नोऽत्र विधीयताम् ५
तान्सोमः प्रत्युवाचाथ श्रेयश्चेदीप्सितं सुराः
स्वयंभूसदनं यात स वः श्रेयो विधास्यति ६
ते सोमवचनाद्देवाः पितृभिः सह भारत
मेरुशृङ्गे समासीनं पितामहमुपागमन् ७
पितर ऊचुः
निवापान्नेन भगवन्भृशं पीड्यामहे वयम्
प्रसादं कुरु नो देव श्रेयो नः संविधीयताम् ८
इति तेषां वचः श्रुत्वा स्वयंभूरिदमब्रवीत्
एष मे पार्श्वतो वह्निर्युष्मच्छ्रेयो विधास्यति ९
अग्निरुवाच
सहितास्तात भोक्ष्यामो निवापे समुपस्थिते
जरयिष्यथ चाप्यन्नं मया सार्धं न संशयः १०
एतच्छ्रुत्वा तु पितरस्ततस्ते विज्वराभवन्
एतस्मात्कारणाच्चाग्नेः प्राक्तनं दीयते नृप ११
निवप्ते चाग्निपूर्वे वै निवापे पुरुषर्षभ
न ब्रह्मराक्षसास्तं वै निवापं धर्षयन्त्युत
रक्षांसि चापवर्तन्ते स्थिते देवे विभावसौ १२
पूर्वंपिण्डं पितुर्दद्यात्ततो दद्यात्पितामहे

प्रपितामहाय च तत एष श्राद्धविधिः स्मृतः १३
ब्रूयाच्छ्राद्धे च सावित्रीं पिराडे पिराडे समाहितः
सोमायेति च वक्तव्यं तथा पितृमतेति च १४
रजस्वला च या नारी व्यङ्गिता कर्णयोश्च या
निवापे नोपतिष्ठेत संग्राह्या नान्यवंशजाः १५
जलं प्रतरमाणश्च कीर्तयेत पितामहान्
नदीमासाद्य कुर्वीत पितृणां पिराडतर्पणम् १६
पूर्वं स्ववंशजानां तु कृत्वाद्भिस्तर्पणं पुनः
सुहृत्संबन्धिवर्गाणां ततो दद्याज्जलाञ्जलिम् १७
कल्माषगोयुगेनाथ युक्तेन तरतो जलम्
पितरोऽभिलषन्ते वै नावं चाप्यधिरोहतः
सदा नावि जलं तज्ज्ञाः प्रयच्छन्ति समाहिताः १८
मासार्धे कृष्णपक्षस्य कुर्यान्निवपनानि वै
पुष्टिरायुस्तथा वीर्यं श्रीश्चैव पितृवर्तिनः १९
पितामहः पुलस्त्यश्च वसिष्ठः पुलहस्तथा
अङ्गिराश्च क्रतुश्चैव कश्यपश्च महानृषिः
एते कुरुकुलश्रेष्ठ महायोगेश्वराः स्मृताः २०
एते च पितरो राजन्नेष श्राद्धविधिः परः
प्रेतास्तु पिराडसंबन्धान्मुच्यन्ते तेन कर्मणा २१
इत्येषा पुरुषश्रेष्ठ श्राद्धोत्पत्तिर्यथागमम्
ख्यापिता पूर्वनिर्दिष्टा दानं वक्ष्याम्यतः परम् २२
इति श्रीमहाभारते अनुशासनपर्वणि द्विनवतितमोऽध्यायः ९२

## त्रिनवतितमोऽध्यायः

युधिष्ठिर उवाच
द्विजातयो व्रतोपेता हविस्ते यदि भुञ्जते
अन्नं ब्राह्मणकामाय कथमेतत्पितामह १
भीष्म उवाच
अवेदोक्तव्रताश्चैव भुञ्जानाः कार्यकारिणः
वेदोक्तेषु तु भुञ्जाना व्रतलुप्ता युधिष्ठिर २

युधिष्ठिर उवाच
यदिदं तप इत्याहुरुपवासं पृथग्जनाः
तपः स्यादेतदिह वै तपोऽन्यद्वापि किं भवेत् ३
भीष्म उवाच
मासार्धमासौ नोपवसेद्यत्तपो मन्यते जनः
आत्मतन्त्रोपघाती यो न तपस्वी न धर्मवित् ४
त्यागस्यापि च संपत्तिः शिष्यते तप उत्तमम्
सदोपवासी च भवेद्ब्रह्मचारी तथैव च ५
मुनिश्च स्यात्सदा विप्रो देवांश्चैव सदा यजेत्
कुटुम्बिको धर्मकामः सदास्वप्नश्च भारत ६
अमृताशी सदा च स्यात्पवित्री च सदा भवेत्
ऋतवादी सदा च स्यान्नियतश्च सदा भवेत् ७
विघसाशी सदा च स्यात्सदा चैवातिथिप्रियः
अमांसाशी सदा च स्यात्पवित्री च सदा भवेत् ८
युधिष्ठिर उवाच
कथं सदोपवासी स्याद्ब्रह्मचारी च पार्थिव
विघसाशी कथं च स्यात्कथं चैवातिथिप्रियः ९
भीष्म उवाच
अन्तरा सायमाशं च प्रातराशं तथैव च
सदोपवासी भवति यो न भुङ्क्तेऽन्तरा पुनः १०
भार्यां गच्छन्ब्रह्मचारी सदा भवति चैव ह
ऋतवादी सदा च स्याद्दानशीलश्च मानवः ११
अभक्षयन्वृथा मांसममांसाशी भवत्युत
दानं ददत्पवित्री स्यादस्वप्नश्च दिवास्वपन् १२
भृत्यातिथिषु यो भुङ्क्ते भुक्तवत्सु नरः सदा
अमृतं केवलं भुङ्क्ते इति विद्धि युधिष्ठिर १३
अभुक्तवत्सु नाश्नाति ब्राह्मणेषु तु यो नरः
अभोजनेन तेनास्य जितः स्वर्गो भवत्युत १४
देवेभ्यश्च पितृभ्यश्च भृत्येभ्योऽतिथिभिः सह
अवशिष्टानि यो भुङ्क्ते तमाहुर्विघसाशिनम् १५

तेषां लोका ह्यपर्यन्ताः सदने ब्रह्मणः स्मृताः
उपस्थिता ह्यप्सरोभिर्गन्धर्वैश्च जनाधिप १६
देवतातिथिभिः सार्धं पितृभिश्चोपभुञ्जते
रमन्ते पुत्रपौत्रैश्च तेषां गतिरनुत्तमा १७
इति श्रीमहाभारते अनुशासनपर्वणि त्रिनवतितमोऽध्यायः ९३

## चतुर्नवतितमोऽध्यायः

युधिष्ठिर उवाच
ब्राह्मणेभ्यः प्रयच्छन्ति दानानि विविधानि च
दातृप्रतिग्रहीत्रोर्वा को विशेषः पितामह १
भीष्म उवाच
साधोर्यः प्रतिगृह्णीयात्तथैवासाधुतो द्विजः
गुणवत्यल्पदोषः स्यान्निर्गुणे तु निमज्जति २
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
वृषादर्भेश्च संवादं सप्तर्षीणां च भारत ३
कश्यपोऽत्रिर्वसिष्ठश्च भरद्वाजोऽथ गौतमः
विश्वामित्रो जमदग्निः साध्वी चैवाप्यरुन्धती ४
सर्वेषामथ तेषां तु गण्डाभूत्कर्मकारिका
शूद्रः पशुसखश्चैव भर्ता चास्या बभूव ह ५
ते वै सर्वे तपस्यन्तः पुरा चेरुर्महीमिमाम्
समाधिनोपशिक्षन्तो ब्रह्मलोकं सनातनम् ६
अथाभवदनावृष्टिर्महती कुरुनन्दन
कृच्छ्रप्राणोऽभवद्यत्र लोकोऽय वै क्षुधान्वितः ७
कस्मिंश्चिच्च पुरा यज्ञे याज्येन शिबिसूनुना
दक्षिणार्थेऽथ ऋत्विग्भ्यो दत्तः पुत्रो निजः किल ८
तस्मिन्कालेऽथ सोऽल्पायुर्दिष्टान्तमगमत्प्रभो
ते तं क्षुधाभिसंतप्ताः परिवार्योपतस्थिरे ९
याज्यात्मजमथो दृष्ट्वा गतासुमृषिसत्तमाः
अपचन्त तदा स्थाल्यां क्षुधार्ताः किल भारत १०
निराद्ये मर्त्यलोकेऽस्मिन्नात्मानं ते परीप्सवः

कृच्छ्रामापेदिरे वृत्तिमन्नहेतोस्तपस्विनः ११
अटमानोऽथ तान्मार्गे पचमानान्महीपतिः
राजा शैब्यो वृषादर्भिः क्लिश्यमानान्ददर्श ह १२
वृषादर्भिरुवाच
प्रतिग्रहस्तारयति पुष्टिर्वै प्रतिगृह्णताम्
मयि यद्विद्यते वित्तं तच्छृणुध्वं तपोधनाः १३
प्रियो हि मे ब्राह्मणो याचमानो दद्यामहं वोऽश्वतरीसहस्रम्
एकैकशः सवृषाः संप्रसूताः सर्वेषां वै शीघ्रगाः श्वेतलोमाः १४
कुलंभराननडुहः शतंशतान्धुर्याञ्शुभान्सर्वशोऽह ददानि
पृथ्वीवाहान्पीवरांश्चैव तावदग्र्या गृष्ट्यो धेनवः सुव्रताश्च १५
वरान्ग्रामान्व्रीहियवं रसांश्च रत्नं चान्यद्दुर्लभं किं ददानि
मा स्माभक्ष्ये भावमेवं कुरुध्वं पुष्ट्यर्थं वै किं प्रयच्छाम्यहं वः १६
ऋषय ऊचुः
राजन्प्रतिग्रहो राज्ञो मध्वास्वादो विषोपमः
तज्जानमानः कस्मात्त्वं कुरुषे नः प्रलोभनम् १७
क्षत्रं हि दैवतमिव ब्राह्मणं समुपाश्रितम्
अमलो ह्येष तपसा प्रीतः प्रीणाति देवताः १८
अह्नापीह तपो जातु ब्राह्मणस्योपजायते
तद्दाव इव निर्दह्यात्प्राप्तो राजप्रतिग्रहः १९
कुशलं सह दानेन राजन्नस्तु सदा तव
अर्थिभ्यो दीयतां सर्वमित्युक्त्वा ते ततो ययुः २०
अपक्वमेव तन्मांसमभूत्तेषां च धीमताम्
अथ हित्वा ययुः सर्वे वनमाहारकाङ्क्षिणः २१
ततः प्रचोदिता राज्ञा वनं गत्वास्य मन्त्रिणः
प्रचीयोदुम्बराणि स्म दानं दातुं प्रचक्रमुः २२
उदुम्बराण्यथान्यानि हेमगर्भाण्युपाहरन्
भृत्यास्तेषां ततस्तानि प्राग्रहितुमुपाद्रवन् २३
गुरूणीति विदित्वाथ न ग्राह्याण्यत्रिरब्रवीत्
न स्म हे मूढविज्ञाना न स्म हे मन्दबुद्धयः
हैमानीमानि जानीमः प्रतिबुद्धाः स्म जागृमः २४

इह ह्येतदुपादत्तं प्रेत्य स्यात्कटुकोदयम्
अप्रतिग्राह्यमेवैतत्प्रेत्य चेह सुखेप्सुना २५
वसिष्ठ उवाच
शतेन निष्कं गणितं सहस्रेण च संमितम्
यथा बहु प्रतीच्छन्हि पापिष्ठां लभते गतिम् २६
कश्यप उवाच
यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः
सर्वं तन्नालमेकस्य तस्माद्विद्वाञ्शमं व्रजेत् २७
भरद्वाज उवाच
उत्पन्नस्य रुरोः शृङ्गं वर्धमानस्य वर्धते
प्रार्थना पुरुषस्येव तस्य मात्रा न विद्यते २८
गौतम उवाच
न तल्लोके द्रव्यमस्ति यल्लोकं प्रतिपूरयेत्
समुद्रकल्पः पुरुषो न कदाचन पूर्यते २९
विश्वामित्र उवाच
कामं कामयमानस्य यदा कामः समृध्यते
अथैनमपरः कामस्तृष्णा विध्यति बाणवत् ३०
जमदग्निरुवाच
प्रतिग्रहे संयमो वै तपो धारयते ध्रुवम्
तद्धनं ब्राह्मणस्येह लुभ्यमानस्य विस्रवेत् ३१
अरुन्धत्युवाच
धर्मार्थं संचयो यो वै द्रव्याणां पक्षसंमतः
तपःसंचय एवेह विशिष्टो द्रव्यसंचयात् ३२
गण्डोवाच
उग्रादितो भयाद्यस्माद्बिभ्यतीमे ममेश्वराः
बलीयांसो दुर्बलवद्बिभेम्यहमतः परम् ३३
पशुसख उवाच
यद्वै धर्मे परं नास्ति ब्राह्मणास्तद्धनं विदुः
विनयार्थं सुविद्वांसमुपासेयं यथातथम् ३४
ऋषय ऊचुः

कुशलं सह दानाय तस्मै यस्य प्रजा इमाः
फलान्युपधियुक्तानि य एवं नः प्रयच्छसि ३५
भीष्म उवाच
इत्युक्त्वा हेमगर्भाणि हित्वा तानि फलानि ते
ऋषयो जग्मुरन्यत्र सर्व एव धृतव्रताः ३६
मन्त्रिणः ऊचुः
उपधिं शङ्कमानास्ते हित्वेमानि फलानि वै
ततोऽन्येनैव गच्छन्ति विदितं तेऽस्तु पार्थिव ३७
इत्युक्तः स तु भृत्यैस्तैर्वृषादर्भिश्चुकोप ह
तेषां संप्रतिकर्तुंच सर्वेषामगमद्गृहम् ३८
स गत्वाहवनीयेऽग्नौ तीव्रं नियममास्थितः
जुहाव संस्कृतां मन्त्रैरेकैकामाहुतिं नृपः ३९
तस्मादग्नेः समुत्तस्थौ कृत्या लोकभयंकरी
तस्या नाम वृषादर्भिर्यातुधानीत्यथाकरोत् ४०
सा कृत्या कालरात्रीव कृताञ्जलिरुपस्थिता
वृषादर्भिं नरपतिं किं करोमीति चाब्रवीत् ४१
वृषादर्भिरुवाच
ऋषीणां गच्छ सप्तानामरुन्धत्यास्तथैव च
दासीभर्तुश्च दास्याश्च मनसा नाम धारय ४२
ज्ञात्वा नामानि चैतेषां सर्वानेतान्विनाशय
विनष्टेषु यथा स्वैरं गच्छ यत्रेप्सितं तव ४३
सा तथेति प्रतिश्रुत्य यातुधानी स्वरूपिणी
जगाम तद्वनं यत्र विचेरुस्ते महर्षयः ४४

इति श्रीमहाभारते अनुशासनपर्वणि चतुर्नवतितमोऽध्यायः ९४

## पञ्चनवतितमोऽध्यायः

भीष्म उवाच
अथात्रिप्रमुखा राजन्वने तस्मिन्महर्षयः
व्यचरन्भक्षयन्तो वै मूलानि च फलानि च १
अथापश्यन्सुपीनांसपाणिपादमुखोदरम्

परिव्रजन्तं स्थूलाङ्गं परिव्राजं शुनः सखम् २
अरुन्धती तु तं दृष्ट्वा सर्वाङ्गोपचितं शुभा
भवितारो भवन्तो वै नैवमित्यब्रवीदृषीन् ३
वसिष्ठ उवाच
नैतस्येह यथास्माकमग्निहोत्रमनिर्हुतम्
सायं प्रातश्च होतव्यं तेन पीवाञ्शुनःसखः ४
अत्रिरुवाच
नैतस्येह यथास्माकं क्षुधा वीर्यं समाहतम्
कृच्छ्राधीतं प्रनष्टं च तेन पीवाञ्शुनःसखः ५
विश्वामित्र उवाच
नैतस्येह यथास्माकं शश्वच्छास्त्रं जरद्गवः
अलसः क्षुत्परो मूर्खस्तेन पीवाञ्शुनःसखः ६
जमदग्निरुवाच
नैतस्येह यथास्माकं भक्तमिन्धनमेव च
संचिन्त्य वार्षिकं किंचित्तेन पीवाञ्शुनःसखः ७
कश्यप उवाच
नैतस्येह यथास्माकं चत्वारश्च सहोदराः
देहि देहीति भिक्षन्ति तेन पीवाञ्शुनःसखः ८
भरद्वाज उवाच
नैतस्येह यथास्माकं ब्रह्मबन्धोरचेतसः
शोको भार्यापवादेन तेन पीवाञ्शुनःसखः ९
गौतम उवाच
नैतस्येह यथास्माकं त्रिकौशेयं हि राङ्कवम्
एकैकं वै त्रिवार्षीयं तेन पीवाञ्शुनःसखः १०
भीष्म उवाच
अथ दृष्ट्वा परिव्राट्स तान्महर्षीञ्शुनःसखः
अभिगम्य यथान्यायं पाणिस्पर्शमथाचरत् ११
परिचर्यां वने तां तु क्षुत्प्रतीघातकारिकाम्
अन्योन्येन निवेद्याथ प्रातिष्ठन्त सहैव ते १२
एकनिश्चयकार्याश्च व्यचरन्त वनानि ते

आददानाः समुद्धृत्य मूलानि च फलानि च १३
कदाचिद्विचरन्तस्ते वृक्षैरविरलैर्वृताम्
शुचिवारिप्रसन्नोदां ददृशुः पद्मिनीं शुभाम् १४
बालादित्यवपुः प्रख्यैः पुष्करैरुपशोभिताम्
वैदूर्यवर्णसदृशैः पद्मपत्रैरथावृताम् १५
नानाविधैश्च विहगैर्जलप्रकरसेविभिः
एकद्वारामनादेयां सूपतीर्थामकर्दमाम् १६
वृषादर्भिप्रयुक्ता तु कृत्या विकृतदर्शना
यातुधानीति विख्याता पद्मिनीं तामरक्षत १७
शुनःसखसहायास्तु बिसार्थं ते महर्षयः
पद्मिनीमभिजग्मुस्ते सर्वे कृत्याभिरक्षिताम् १८
ततस्ते यातुधानीं तां दृष्ट्वा विकृतदर्शनाम्
स्थितां कमलिनीतीरे कृत्यामूचुर्महर्षयः १९
एका तिष्ठसि का नु त्वं कस्यार्थे किं प्रयोजनम्
पद्मिनीतीरमाश्रित्य ब्रूहि त्वं किं चिकीर्षसि २०
यातुधान्युवाच
यास्मि सास्म्यनुयोगो मे न कर्तव्यः कथंचन
आरक्षिणीं मां पद्मिन्या वित्त सर्वे तपोधनाः २१
ऋषय ऊचुः
सर्व एव क्षुधार्ताः स्म न चान्यत्किंचिदस्ति नः
भवत्याः संमते सर्वे गृह्णीमहि बिसान्युत २२
यातुधान्युवाच
समयेन बिसानीतो गृह्णीध्वं कामकारतः
एकैको नाम मे प्रोक्त्वा ततो गृह्णीत माचिरम् २३
भीष्म उवाच
विज्ञाय यातुधानीं तां कृत्यामृषिवधैषिणीम्
अत्रिः क्षुधापरीतात्मा ततो वचनमब्रवीत् २४
अरात्रिरत्रेः सा रात्रिर्यां नाधीते त्रिरद्य वै
अरात्रिरत्रिरित्येव नाम मे विद्धि शोभने २५
यातुधान्युवाच

यथोदाहृतमेतत्ते मयि नाम महामुने
दुर्धार्यमेतन्मनसा गच्छावतर पद्मिनीम् २६
वसिष्ठ उवाच
वसिष्ठोऽस्मि वरिष्ठोऽस्मि वसे वासं गृहेष्वपि
वरिष्ठत्वाच्च वासाच्च वसिष्ठ इति विद्धि माम् २७
यातुधान्युवाच
नामनैरुक्तमेतत्ते दुःखव्याभाषिताक्षरम्
नैतद्धारयितुं शक्यं गच्छावतर पद्मिनीम् २८
कश्यप उवाच
कुलं कुलं च कुपपः कुपयः कश्यपो द्विजः
काश्यः काशनिकाशत्वादेतन्मे नाम धारय २९
यातुधान्युवाच
यथोदाहृतमेतत्ते मयि नाम महामुने
दुर्धार्यमेतन्मनसा गच्छावतर पद्मिनीम् ३०
भरद्वाज उवाच
भरे सुतान्भरे शिष्यान्भरे देवान्भरे द्विजान्
भरे भार्यामनव्याजो भरद्वाजोऽस्मि शोभने ३१
यातुधान्युवाच
नामनैरुक्तमेतत्ते दुःखव्याभाषिताक्षरम्
नैतद्धारयितुं शक्यं गच्छावतर पद्मिनीम् ३२
गौतम उवाच
गोदमो दमगोऽधूमो दमो दुर्दर्शनश्च ते
विद्धि मां गौतमं कृत्ये यातुधानि निबोध मे ३३
यातुधान्युवाच
यथोदाहृतमेतत्ते मयि नाम महामुने
नैतद्धारयितुं शक्यं गच्छावतर पद्मिनीम् ३४
विश्वामित्र उवाच
विश्वेदेवाश्च मे मित्रं मित्रमस्मि गवां तथा
विश्वामित्रमिति ख्यातं यातुधानि निबोध मे ३५
यातुधान्युवाच

नामनैरुक्तमेतत्ते दुःखव्याभाषिताक्षरम्
नैतद्धारयितुं शक्यं गच्छावतर पद्मिनीम् ३६
जमदग्निरुवाच
जाजमद्यजजा नाम मृजा माह जिजायिषे
जमदग्निरिति ख्यातमतो मां विद्धि शोभने ३७
यातुधान्युवाच
यथोदाहृतमेतत्ते मयि नाम महामुने
नैतद्धारयितुं शक्यं गच्छावतर पद्मिनीम् ३८
अरुन्धत्युवाच
धरां धरित्रीं वसुधां भर्तुस्तिष्ठाम्यनन्तरम्
मनोऽनुरुन्धती भर्तुरिति मां विद्ध्यरुन्धतीम् ३९
यातुधान्युवाच
नाम नैरुक्तमेतत्ते दुःख व्याभाषिताक्षरम्
नैतद्धारयितुं शक्यं गच्छावतर पद्मिनीम् ४०
गण्डोवाच
गण्डं गण्डं गतवती गण्डगण्डेति संज्ञिता
गण्डगण्डेव गण्डेति विद्धि मानलसंभवे ४१
यातुधान्युवाच
नाम नैरुक्तमेतत्ते दुःख व्याभाषिताक्षरम्
नैतद्धारयितुं शक्यं गच्छावतर पद्मिनीम् ४२
पशुसख उवाच
सखा सखे यः सख्येयः पशूनां च सखा सदा
गौणं पशुसखेत्येवं विद्धि मामग्निसंभवे ४३
यातुधान्युवाच
नाम नैरुक्तमेतत्ते दुःख व्याभाषिताक्षरम्
नैतद्धारयितुं शक्यं गच्छावतर पद्मिनीम् ४४
शुनःसख उवाच
एभिरुक्तं यथा नाम नाहं वक्तुमिहोत्सहे
शुनःसखसखायं मां यातुधान्युपधारय ४५
यातुधान्युवाच

नाम तेऽव्यक्तमुक्तं वै वाक्यं संदिग्धया गिरा
तस्मात्सकृदिदानीं त्वं ब्रूहि यन्नाम ते द्विज ४६

शुनःसख उवाच
सकृदुक्तं मया नाम न गृहीतं यदा त्वया
तस्मात्त्रिदण्डाभिहता गच्छ भस्मेति माचिरम् ४७
भीष्म उवाच
सा ब्रह्मदण्डकल्पेन तेन मूर्ध्नि हता तदा
कृत्या पपात मेदिन्यां भस्मसाच्च जगाम ह ४८
शुनःसखश्च हत्वा तां यातुधानीं महाबलाम्
भुवि त्रिदण्डं विष्टभ्य शाद्वले समुपाविशत् ४९
ततस्ते मुनयः सर्वे पुष्कराणि बिसानि च
यथाकाममुपादाय समुत्तस्थुर्मुदान्विताः ५०
श्रमेण महता युक्तास्ते बिसानि कलापशः
तीरे निक्षिप्य पद्मिन्यास्तर्पणं चक्रुरम्भसा ५१
अथोत्थाय जलात्तस्मात्सर्वे ते समुमागमन्
नापश्यंश्चापि ते तानि बिसानि पुरुषर्षभ ५२
ऋषय ऊचुः
केन क्षुधाभिभूतानामस्माकं पापकर्मणा
नृशंसेनापनीतानि बिसान्याहारकाङ्क्षिणाम् ५३
ते शङ्कमानास्त्वन्योन्यं पप्रच्छुर्द्विजसत्तमाः
ते ऊचुः शपथं सर्वे कुर्म इत्यरिकर्शन ५४
त उक्त्वा बाढमित्येव सर्व एव शुनःसखम्
क्षुधार्ताः सुपरिश्रान्ताः शपथायोपचक्रमुः ५५
अत्रिरुवाच
स गां स्पृशतु पादेन सूर्यं च प्रतिमेहतु
अनध्यायेष्वधीयीत बिसस्तैन्यं करोति यः ५६
वसिष्ठ उवाच
अनध्यायपरो लोके शुनः स परिकर्षतु
परिव्राट्कामवृत्तोऽस्तु बिसस्तैन्यं करोति यः ५७

शरणागतं हन्तु मित्रं स्वसुतां चोपजीवतु
अर्थान्काङ्क्षतु कीनाशाद्बिसस्तैन्यं करोति यः ५८
कश्यप उवाच
सर्वत्र सर्वं पणतु न्यासलोपं करोतु च
कूटसाक्षित्वमभ्येतु बिसस्तैन्यं करोति यः ५९
वृथामांसं समश्नातु वृथादानं करोतु च
यातु स्त्रियं दिवा चैव बिसस्तैन्यं करोति यः ६०
भरद्वाज उवाच
नृशंसस्त्यक्तधर्मास्तु स्त्रीषु ज्ञातिषु गोषु च
ब्राह्मणं चापि जयतां बिसस्तैन्यं करोति यः ६१
उपाध्यायमधः कृत्वा ऋचोऽध्येतु यजूंषि च
जुहोतु च स कक्षाग्नौ बिसस्तैन्यं करोति यः ६२
जमदग्निरुवाच
पुरीषमुत्सृजत्वप्सु हन्तु गां चापि दोहिनीम्
अनृतौ मैथुनं यातु बिसस्तैन्यं करोति यः ६३
द्वेष्यो भार्योपजीवी स्याद्दूरबन्धुश्च वैरवान्
अन्योन्यस्यातिथिश्चास्तु बिसस्तैन्यं करोति यः ६४
गौतम उवाच
अधीत्य वेदांस्त्यजतु त्रीनग्नीनपविध्यतु
विक्रीणातु तथा सोमं बिसस्तैन्यं करोति यः ६५
उदपानप्लवे ग्रामे ब्राह्मणो वृषलीपतिः
तस्य सालोक्यतां यातु बिसस्तैन्यं करोति यः ६६
विश्वामित्र उवाच
जीवतो वै गुरूनृत्यान्भरन्त्वस्य परे जनाः
अगतिर्बहुपुत्रः स्याद्बिसस्तैन्यं करोति यः ६७
अशुचिर्ब्रह्मकूटोऽस्तु ऋद्ध्या चैवाप्यहंकृतः
कर्षको मत्सरी चास्तु बिसस्तैन्यं करोति यः ६८
वर्षान्करोतुभृतको राज्ञश्चास्तु पुरोहितः
अयाज्यस्य भवेदृत्विग्बिसस्तैन्यं करोति यः ६९
अरुन्धत्युवाच

नित्यं परिवदेच्छ्वश्रूं भर्तुर्भवतु दुर्मनाः
एका स्वादु समश्नातु बिसस्तैन्यं करोति या ७०
ज्ञातीनां गृहमध्यस्था सक्तूनत्तु दिनक्षये
अभाग्यावीरसूरस्तु बिसस्तैन्यं करोति या ७१
गण्डोवाच
अनृतं भाषतु सदा साधुभिश्च विरुध्यतु
ददातु कन्यां शुल्केन बिसस्तैन्यं करोति या ७२
साधयित्वा स्वयं प्राशेद्दास्ये जीवतु चैव ह
विकर्मणा प्रमीयेत बिसस्तैन्यं करोति या ७३
पशुसख उवाच
दास्य एव प्रजायेत सोऽप्रसूतिरकिंचनः
दैवतेष्वनमस्कारो बिसस्तैन्यं करोति यः ७४
शुनःसख उवाच
अध्वर्यवे दुहितरं ददातु च्छन्दोगे वा चरितब्रह्मचर्ये
आथर्वणं वेदमधीत्य विप्रः स्नायीत यो वै हरते बिसानि ७५
ऋषयः ऊचुः
इष्टमेतद्द्विजातीनां योऽय ते शपथः कृतः
त्वया कृतं बिसस्तैन्यं सर्वेषां नः शुनःसख ७६
शुनःसख उवाच
न्यस्तमाद्यमपश्यद्भिर्दुक्तं कृतकर्मभिः
सत्यमेतन्न मिथ्यैतद्बिसस्तैन्यं कृतं मया ७७
मया ह्यन्तर्हितानीह बिसानीमानि पश्यत
परीक्षार्थं भगवतां कृतमेतन्मयानघाः
रक्षणार्थं च सर्वेषां भवतामहमागतः ७८
यातुधानी ह्यतिक्रुद्धा कृत्यैषा वो वधैषिणी
वृषादर्भिप्रयुक्तैषा निहता मे तपोधनाः ७९
दुष्टा हिंस्यादियं पापा युष्मान्प्रत्यग्निसंभवा
तस्मादस्म्यागतो विप्रा वासवं मां निबोधत ८०
अलोभादक्षया लोकाः प्राप्ता वः सार्वकामिकाः
उत्तिष्ठध्वमितः क्षिप्रं तानवाप्नुत वै द्विजाः ८१

भीष्म उवाच
ततो महर्षयः प्रीतास्तथेत्युक्त्वा पुरंदरम्
सहैव त्रिदशेन्द्रेण सर्वे जग्मुस्त्रिविष्टपम् ८२
एवमेते महात्मानो भोगैर्बहुविधैरपि
क्षुधा परमया युक्ताश्छन्द्यमाना महात्मभिः
नैव लोभं तदा चक्रुस्ततः स्वर्गमवाप्नुवन् ८३
तस्मात्सर्वास्ववस्थासु नरो लोभं विवर्जयेत्
एष धर्मः परो राजन्नलोभ इति विश्रुतः ८४
इदं नरः सच्चरितं समवायेषु कीर्तयेत्
सुखभागी च भवति न च दुर्गाण्यवाप्नुते ८५
प्रीयन्ते पितरश्चास्य ऋषयो देवतास्तथा
यशोधर्मार्थभागी च भवति प्रेत्य मानवः ८६

इति श्रीमहाभारते अनुशासनपर्वणि पञ्चनवतितमोऽध्यायः ९५

## षण्णवतितमोऽध्यायः

भीष्म उवाच
अत्रैवोदाहरन्तीममितिहासं पुरातनम्
यद्वृत्तं तीर्थयात्रायां शपथं प्रति तच्छृणु १
पुष्करार्थं कृतं स्तैन्यं पुरा भरतसत्तम
राजर्षिभिर्महाराज तथैव च द्विजर्षिभिः २
ऋषयः समेताः पश्चिमे वै प्रभासे समागता मन्त्रममन्त्रयन्त
चराम सर्वे पृथिवीं पुण्यतीर्थां तन्नः कार्यं हन्त गच्छाम सर्वे ३
शुक्रोऽङ्गिराश्चैव कविश्च विद्वांस्तथागस्त्यो नारदपर्वतौ च
भृगुर्वसिष्ठः कश्यपो गौतमश्च विश्वामित्रो जमदग्निश्च राजन् ४
ऋषिस्तथा गालवोऽथाष्टकश्च भरद्वाजोऽरुन्धती वालखिल्याः
शिबिर्दिलीपो नहुषोऽम्बरीषो राजा ययातिर्धुन्धुमारोऽथ पूरुः ५
जग्मुः पुरस्कृत्य महानुभावं शतक्रतुं वृत्रहणं नरेन्द्र
तीर्थानि सर्वाणि परिक्रमन्तो माघ्यां ययुः कौशिकीं पुण्यतीर्थाम् ६
सर्वेषु तीर्थेष्वथ धूतपापा जग्मुस्ततो ब्रह्मसरः सुपुण्यम्
देवस्य तीर्थे जलमग्निकल्पा विगाह्य ते भुक्तबिसप्रसूनाः ७

केचिद्बिसान्यखनंस्तत्र राजन्नन्ये मृणालान्यखनंस्तत्र विप्राः
अथापश्यन्पुष्करं ते ह्रियन्तं ह्रदादगस्त्येन समुद्धृतं वै ८
तानाह सर्वानृषिमुख्यानगस्त्यः केनादत्तं पुष्करं मे सुजातम्
युष्माञ्शङ्के दीयतां पुष्करं मे न वै भवन्तो हर्तुमर्हन्ति पद्मम् ९
शृणोमि कालो हिंसते धर्मवीर्यं सेयं प्राप्ता वर्धते धर्मपीडा
पुराधर्मो वर्धते नेह यावत्तावद्गच्छामि परलोकं चिराय १०
पुरा वेदान्ब्राह्मणा ग्राममध्ये घुष्टस्वरा वृषलाञ्श्रावयन्ति
पुरा राजा व्यवहारानधर्म्यान्पश्यत्यहं परलोकं व्रजामि ११
पुरावरान्प्रत्यवरान्गरीयसो यावन्नरा नावमंस्यन्ति सर्वे
तमोत्तरं यावदिदं न वर्तते तावद्व्रजामि परलोकं चिराय १२
पुरा प्रपश्यामि परेण मर्त्यान्बलीयसा दुर्बलान्भुज्यमानान्
तस्माद्यास्यामि परलोकं चिराय न ह्युत्सहे द्रष्टुमीदृङ्नृलोके १३
तमाहुरार्ता ऋषयो महर्षिं न ते वयं पुष्करं चोरयामः
मिथ्याभिषङ्गो भवता न कार्यः शपाम तीक्ष्णाञ्शपथान्महर्षे १४
ते निश्चितास्तत्र महर्षयस्तु संमन्यन्तो धर्ममेवं नरेन्द्र
ततोऽशपञ्शपथान्पर्ययेण सहैव ते पार्थिव पुत्रपौत्रैः १५
भृगुरुवाच
प्रत्याक्रोशेदिहाक्रुष्टस्ताडितः प्रतिताडयेत्
खादेच्च पृष्ठमांसानि यस्ते हरति पुष्करम् १६
वसिष्ठ उवाच
अस्वाध्यायपरो लोके श्वानं च परिकर्षतु
पुरे च भिक्षुर्भवतु यस्ते हरति पुष्करम् १७
कश्यप उवाच
सर्वत्र सर्वं पणतु न्यासे लोभं करोतु च
कूटसाक्षित्वमभ्येतु यस्ते हरति पुष्करम् १८
गौतम उवाच
जीवत्वहंकृतो बुद्ध्या विपणत्वधमेन सः
कर्षको मत्सरी चास्तु यस्ते हरति पुष्करम् १९
अङ्गिरा उवाच
अशुचिर्ब्रह्मकूटोऽस्तु श्वानं च परिकर्षतु

ब्रह्महानिकृतिश्चास्तु यस्ते हरति पुष्करम् २०
धुन्धुमार उवाच
अकृतज्ञोऽस्तु मित्राणां शूद्रायां तु प्रजायतु
एकः संपन्नमश्नातु यस्ते हरति पुष्करम् २१
पूरुरुवाच
चिकित्सायां  प्रचरतु भार्यया चैव पुष्यतु
श्वशुरात्तस्य वृत्तिः स्याद्यस्ते हरति पुष्करम् २२
दिलीप उवाच
उदपानप्लवे ग्रामे ब्राह्मणो वृषलीपतिः
तस्य लोकान्स व्रजतु यस्ते हरति पुष्करम् २३
शुक्र उवाच
पृष्ठमांसं समश्नातु दिवा गच्छतु मैथुनम्
प्रेष्यो भवतु राज्ञश्च यस्ते हरति पुष्करम् २४
जमदग्निरुवाच
अनध्यायेष्वधीयीत मित्रं श्राद्धे च भोजयेत्
श्राद्धे शूद्रस्य चाश्नीयाद्यस्ते हरति पुष्करम् २५
शिबिरुवाच
अनाहिताग्निर्म्रियतां यज्ञे विघ्नं करोतु च
तपस्विभिर्विरुध्येत यस्ते हरति पुष्करम् २६
ययातिरुवाच
अनृतौ जटी व्रतिन्यां वै भार्यायां संप्रजायतु
निराकरोतु वेदांश्च यस्ते हरति पुष्करम् २७
नहुष उवाच
अतिथिं गृहस्थो नुदतु कामवृत्तोऽस्तु दीक्षितः
विद्यां प्रयच्छतु भृतो यस्ते हरति पुष्करम् २८
अम्बरीष उवाच
नृशंसस्त्यक्तधर्मोऽस्तु स्त्रीषु ज्ञातिषु गोषु च
ब्राह्मणं चापि जहतु यस्ते हरति पुष्करम् २९
नारद उवाच
गूढोऽज्ञानी बहिः शास्त्रं पठतां विस्वरं पदम्

गरीयसोऽवजानातु यस्ते हरति पुष्करम् ३०
नाभाग उवाच
अनृतं भाषतु सदा सद्भिश्चैव विरुध्यतु
शुल्केन कन्यां ददतु यस्ते हरति पुष्करम् ३१
कविरुवाच
पदा स गां ताडयतु सूर्यं च प्रति मेहतु
शरणागतं च त्यजतु यस्ते हरति पुष्करम् ३२
विश्वामित्र उवाच
करोतु भृतकोऽवर्षां राज्ञश्चास्तु पुरोहितः
ऋत्विगस्तु ह्ययाज्यस्य यस्ते हरति पुष्करम् ३३
पर्वत उवाच
ग्रामे चाधिकृतः सोऽस्तु खरयानेन गच्छतु
शुनः कर्षतु वृत्त्यर्थे यस्ते हरति पुष्करम् ३४
भरद्वाज उवाच
सर्वपापसमादानं नृशंसे चानृते च यत्
तत्तस्यास्तु सदा पापं यस्ते हरति पुष्करम् ३५
अष्टक उवाच
स राजास्त्वकृतप्रज्ञः कामवृत्तिश्च पापकृत्
अधर्मेणानुशास्तूर्वीं यस्ते हरति पुष्करम् ३६
गालव उवाच
पापिष्ठेभ्यस्त्वनर्घार्हः स नरोऽस्तु श्वपापकृत्
दत्त्वा दानं कीर्तयतु यस्ते हरति पुष्करम् ३७
अरुन्धत्युवाच
श्वश्र्वापवादं वदतु भर्तुर्भवतु दुर्मनाः
एका स्वादु समश्नातु या ते हरति पुष्करम् ३८
वालखिल्या ऊचुः
एकपादेन वृत्त्यर्थं ग्रामद्वारे स तिष्ठतु
धर्मज्ञस्त्यक्तधर्मोऽस्तु यस्ते हरति पुष्करम् ३९
पशुसख उवाच
अग्निहोत्रमनादृत्य सुखं स्वपतु स द्विजः

परिव्राट्कामवृत्तोऽस्तु यस्ते हरति पुष्करम् ४०
सुरभ्युवाच
बाल्वजेन निदानेन कांस्यं भवतु दोहनम्
दुह्येत परवत्सेन या ते हरति पुष्करम् ४१
भीष्म उवाच
ततस्तु तैः शपथैः शप्यमानैर्नानाविधैर्बहुभिः कौरवेन्द्र
सहस्राक्षो देवराट् संप्रहृष्टः समीक्ष्य तं कोपनं विप्रमुख्यम् ४२
अथाब्रवीन्मघवा प्रत्ययं स्वं समाभाष्य तमृषिं जातरोषम्
ब्रह्मर्षिदेवर्षिनृपर्षिमध्ये यत्तन्निबोधेह ममाद्य राजन् ४३
शक्र उवाच
अध्वर्यवे दुहितरं ददातु च्छन्दोगे वा चरितब्रह्मचर्ये
आथर्वणं वेदमधीत्य विप्रः स्नायेत यः पुष्करमाददाति ४४
सर्वान्वेदानधीयीत पुण्यशीलोऽस्तु धार्मिकः
ब्रह्मणः सदनं यातु यस्ते हरति पुष्करम् ४५
अगस्त्य उवाच
आशीर्वादस्त्वया प्रोक्तः शपथो बलसूदन
दीयतां पुष्करं मह्यमेषः धर्मः सनातनः ४६
इन्द्र उवाच
न मया भगवँल्लोभाद्धृतं पुष्करमद्य वै
धर्मं तु श्रोतुकामेन हृतं न क्रोद्धुमर्हसि ४७
धर्मः श्रुतः समुत्कर्षो धर्मसेतुरनामयः
आर्षो वै शाश्वतो नित्यमव्ययोऽय मया श्रुतः ४८
तदिदं गृह्यतां विद्वन्पुष्करं मुनिसत्तम
अतिक्रमं मे भगवन्क्षन्तुमर्हस्यनिन्दित ४९
इत्युक्तः स महेन्द्रेण तपस्वी कोपनो भृशम्
जग्राह पुष्करं धीमान्प्रसन्नश्चाभवन्मुनिः ५०
प्रययुस्ते ततो भूयस्तीर्थानि वनगोचराः
पुण्यतीर्थेषु च तथा गात्राण्याप्लावयन्ति ते ५१
आख्यानं य इदं युक्तः पठेत्पर्वणि पर्वणि
न मूर्खं जनयेत्पुत्रं न भवेच्च निराकृतिः ५२

न तमापत्स्पृशेत्काचिन्न ज्वरो न रुजश्च ह
विरजाः श्रेयसा युक्तः प्रेत्य स्वर्गमवाप्नुयात् ५३
यश्च शास्त्रमनुध्यायेदृषिभिः परिपालितम्
स गच्छेद्ब्रह्मणो लोकमव्ययं च नरोत्तम ५४
इति श्रीमहाभारते अनुशासनपर्वणि षण्णवतितमोऽध्यायः ९६

सप्तनवतितमोऽध्यायः

युधिष्ठिर उवाच
यदिदं श्राद्धधर्मेषु दीयते भरतर्षभ
छत्रं चोपानहौ चैव केनैतत्संप्रवर्तितम्
कथं चैतत्समुत्पन्नं किमर्थं च प्रदीयते १
न केवलं श्राद्धधर्मे पुण्यकेष्वपि दीयते
एतद्विस्तरतो राजञ्श्रोतुमिच्छामि तत्त्वतः २
भीष्म उवाच
शृणु राजन्नवहितश्छत्रोपानहविस्तरम्
यथैतत्प्रथितं लोके येन चैतत्प्रवर्तितम् ३
यथा चाक्षय्यतां प्राप्तं पुण्यतां च यथा गतम्
सर्वमेतदशेषेण प्रवक्ष्यामि जनाधिप ४
इतिहासं पुरावृत्तमिमं शृणु नराधिप
जमदग्नेश्च संवादं सूर्यस्य च महात्मनः ५
पुरा स भगवान्साक्षाद्धनुषाक्रीडत प्रभो
संधाय संधाय शरांश्चिक्षेप किल भार्गवः ६
तान्क्षिप्तान्रेणुका सर्वांस्तस्येषून्दीप्ततेजसः
आनाय्य सा तदा तस्मै प्रादादसकृदच्युत ७
अथ तेन स शब्देन ज्यातलस्य शरस्य च
प्रहृष्टः संप्रचिक्षेप सा च प्रत्याजहार तान् ८
ततो मध्याह्नमारूढे ज्येष्ठामूले दिवाकरे
स सायकान्द्विजो विद्ध्वा रेणुकामिदमब्रवीत् ९
गच्छानय विशालाक्षि शरानेतान्धनुश्च्युतान्
यावदेतान्पुनः सुभ्रु क्षिपामीति जनाधिप १०

सा गच्छत्यन्तरा छायां वृक्षमाश्रित्य भामिनी
तस्थौ तस्या हि संतप्तं शिरः पादौ तथैव च ११
स्थिता सा तु मुहूर्तं वै भर्तुः शापभयाच्छुभा
ययावानयितुं भूयः सायकानसितेक्षणा
प्रत्याजगाम च शरांस्तानादाय यशस्विनी १२
सा प्रस्विन्ना सुचार्वङ्गी पद्भ्यां दुःखं नियच्छती
उपाजगाम भर्तारं भयाद्भर्तुः प्रवेपती १३
स तामृषिस्ततः क्रुद्धो वाक्यमाह शुभाननाम्
रेणुके किं चिरेण त्वमागतेति पुनः पुनः १४
रेणुकोवाच
शिरस्तावत्प्रदीप्तं मे पादौ चैव तपोधन
सूर्यतेजोनिरुद्धाहं वृक्षच्छायामुपाश्रिता १५
एतस्मात्कारणाद्ब्रह्मंश्चिरमेतत्कृतं मया
एतज्ज्ञात्वा मम विभो मा क्रुधस्त्वं तपोधन १६
जमदग्निरुवाच
अद्यैनं दीप्तकिरणं रेणुके तव दुःखदम्
शरैर्निपातयिष्यामि सूर्यमस्त्राग्नितेजसा १७
भीष्म उवाच
स विस्फार्य धनुर्दिव्यं गृहीत्वा च बहूञ्शरान्
अतिष्ठत्सूर्यमभितो यतो याति ततोमुखः १८
अथ तं प्रहरिष्यन्तं सूर्योऽभ्येत्य वचोऽब्रवीत्
द्विजरूपेण कौन्तेय किं ते सूर्योऽपराध्यते १९
आदत्ते रश्मिभिः सूर्यो दिवि विद्वंस्ततस्ततः
रसं स तं वै वर्षासु प्रवर्षति दिवाकरः २०
ततोऽन्न जायते विप्र मनुष्याणां सुखावहम्
अन्नं प्राणा इति यथा वेदेषु परिपठ्यते २१
अथाभ्रेषु निगूढश्च रश्मिभिः परिवारितः
सप्त द्वीपानिमान्ब्रह्मन्वर्षेणाभिप्रवर्षति २२
ततस्तदौषधीनां च वीरुधां पत्रपुष्पजम्
सर्वं वर्षाभिनिर्वृत्तमन्नं संभवति प्रभो २३

जातकर्माणि सर्वाणि व्रतोपनयनानि च
गोदानानि विवाहाश्च तथा यज्ञसमृद्धयः २४
सत्राणि दानानि तथा संयोगा वित्तसंचयाः
अन्नतः संप्रवर्तन्ते यथा त्वं वेत्थ भार्गव २५
रमणीयानि यावन्ति यावदारम्भकाणि च
सर्वमन्नात्प्रभवति विदितं कीर्तयामि ते २६
सर्वं हि वेत्थ विप्र त्वं यदेतत्कीर्तितं मया
प्रसादये त्वा विप्रर्षे किं ते सूर्यो निपात्यते २७
इति श्रीमहाभारते अनुशासनपर्वणि सप्तनवतितमोऽध्यायः ९७

अष्टनवतितमोऽध्यायः

युधिष्ठिर उवाच
एवं तदा प्रयाचन्तं भास्करं मुनिसत्तमः
जमदग्निर्महातेजाः किं कार्यं प्रत्यपद्यत १
भीष्म उवाच
तथा प्रयाचमानस्य मुनिरग्निसमप्रभः
जमदग्निः शमं नैव जगाम कुरुनन्दन २
ततः सूर्यो मधुरया वाचा तमिदमब्रवीत्
कृताञ्जलिर्विप्ररूपी प्रणम्येदं विशां पते ३
चलं निमित्तं विप्रर्षे सदा सूर्यस्यगच्छतः
कथं चलं वेत्स्यसि त्वं सदा यान्तं दिवाकरम् ४
जमदग्निरुवाच
स्थिरं वापि चलं वापि जाने त्वां ज्ञानचक्षुषा
अवश्यं विनयाधानं कार्यमद्य मया तव ५
अपराह्णे निमेषार्धं तिष्ठसि त्वं दिवाकर
तत्र भेत्स्यामि सूर्य त्वां न मेऽत्रास्ति विचारणा ६
सूर्य उवाच
असंशयं मां विप्रर्षे भेत्स्यसे धन्विनां वर
अपकारिणं तु मां विद्धि भगवञ्शरणागतम् ७
भीष्म उवाच

ततः प्रहस्य भगवाञ्जमदग्निरुवाच तम्
न भीः सूर्य त्वया कार्या प्रणिपातगतो ह्यसि ८
ब्राह्मणेष्वार्जवं यच्च स्थैर्यं च धरणीतले
सौम्यतां चैव सोमस्य गाम्भीर्यं वरुणस्य च ९
दीप्तिमग्नेः प्रभां मेरोः प्रतापं तपनस्य च
एतान्यतिक्रमेद्यो वै स हन्याच्छरणागतम् १०
भवेत्स गुरुतल्पी च ब्रह्महा च तथा भवेत्
सुरापानं च कुर्यात्स यो हन्याच्छरणागतम् ११
एतस्य त्वपनीतस्य समाधिं तात चिन्तय
यथा सुखगमः पन्था भवेत्त्वद्रश्मितापितः १२
भीष्म उवाच
एतावदुक्त्वा स तदा तूष्णीमासीद्भृगूद्वहः
अथ सूर्यो ददौ तस्मै छत्रोपानहमाशु वै १३
सूर्य उवाच
महर्षे शिरसस्त्राणं छत्रं मद्रश्मिवारणम्
प्रतिगृह्णीष्व पद्भ्यां च त्राणार्थं चर्मपादुके १४
अद्यप्रभृति चैवैतल्लोके संप्रचरिष्यति
पुण्यदानेषु सर्वेषु परमक्षय्यमेव च १५
भीष्म उवाच
उपानच्छत्रमेतद्वै सूर्येणेह प्रवर्तितम्
पुण्यमेतदभिख्यातं त्रिषु लोकेषु भारत १६
तस्मात्प्रयच्छ विप्रेभ्यश्छत्रोपानहमुत्तमम्
धर्मस्ते सुमहान्भावी न मेऽत्रास्ति विचारणा १७
छत्रं हि भरतश्रेष्ठ यः प्रदद्याद्द्विजातये
शुभ्रं शतशलाकं वै स प्रेत्य सुखमेधते १८
स शक्रलोके वसति पूज्यमानो द्विजातिभिः
अप्सरोभिश्च सततं देवैश्च भरतर्षभ १९
दह्यमानाय विप्राय यः प्रयच्छत्युपानहौ
स्नातकाय महाबाहो संशिताय द्विजातये २०
सोऽपि लोकानवाप्नोति दैवतैरभिपूजितान्

गोलोके स मुदा युक्तो वसति प्रेत्य भारत २१
एतत्ते भरतश्रेष्ठ मया कार्त्स्न्येन कीर्तितम्
छत्रोपानहदानस्य फलं भरतसत्तम २२
इति श्रीमहाभारते अनुशासनपर्वणि अष्टनवतितमोऽध्यायः ९८

## एकोन शततमोऽध्यायः

युधिष्ठिर उवाच
आरामाणां तडागानां यत्फलं कुरुनन्दन
तदहं श्रोतुमिच्छामि त्वत्तोऽद्य भरतर्षभ १
भीष्म उवाच
सुप्रदर्शा वनवती चित्रधातुविभूषिता
उपेता सर्वबीजैश्च श्रेष्ठा भूमिरिहोच्यते २
तस्याः क्षेत्रविशेषं च तडागानां निवेशनम्
औदकानि च सर्वाणि प्रवक्ष्याम्यनुपूर्वशः ३
तडागानां च वक्ष्यामि कृतानां चापि ये गुणाः
त्रिषु लोकेषु सर्वत्र पूजितो यस्तडागवान् ४
अथ वा मित्रसदनं मैत्रं मित्रविवर्धनम्
कीर्तिसंजननं श्रेष्ठं तडागानां निवेशनम् ५
धर्मस्यार्थस्य कामस्य फलमाहुर्मनीषिणः
तडागं सुकृतं देशे क्षेत्रमेव महाश्रयम् ६
चतुर्विधानां भूतानां तडागमुपलक्षयेत्
तडागानि च सर्वाणि दिशन्ति श्रियमुत्तमाम् ७
देवा मनुष्या गन्धर्वाः पितरोरगराक्षसाः
स्थावराणि च भूतानि संश्रयन्ति जलाशयम् ८
तस्मात्तांस्ते प्रवक्ष्यामि तडागे ये गुणाः स्मृताः
या च तत्र फलावाप्तिर्ऋषिभिः समुदाहृता ९
वर्षमात्रे तडागे तु सलिलं यस्य तिष्ठति
अग्निहोत्रफलं तस्य फलमाहुर्मनीषिणः १०
शरत्कालेतु सलिलं तडागे यस्य तिष्ठति
गो सहस्रस्य स प्रेत्य लभते फलमुत्तमम् ११

हेमन्तकाले सलिलं तडागे यस्य तिष्ठति
स वै बहुसुवर्णस्य यज्ञस्य लभते फलम् १२
यस्य वै  शैशिरे काले तडागे सलिलं भवेत्
अग्निष्टोमस्य यज्ञस्य फलमाहुर्मनीषिणः १३
तडागं सुकृतं यस्य वसन्ते तु महाश्रयम्
अतिरात्रस्य यज्ञस्य फलं स समुपाश्नुते १४
निदाघकाले पानीयं तडागे यस्य तिष्ठति
वाजपेयसमं तस्य फलं वै मुनयो विदुः १५
स कुलं तारयेत्सर्वं यस्य खाते जलाशये
गावः पिबन्ति पानीयं साधवश्च नराः सदा १६
तडागे यस्य गावस्तु पिबन्ति तृषिता जलम्
मृगपक्षिमनुष्याश्च सोऽश्वमेधफलं लभेत् १७
यत्पिबन्ति जलं तत्र स्नायन्ते विश्रमन्ति च
तडागदस्य तत्सर्वं प्रेत्यानन्त्याय कल्पते १८
दुर्लभं सलिलं तात विशेषेण परत्र वै
पानीयस्य प्रदानेन प्रीतिर्भवति शाश्वती १९
तिलान्ददत पानीयं दीपान्ददत जाग्रत
ज्ञातिभिः सह मोदध्वमेतत्प्रेतेषु दुर्लभम् २०
सर्वदानैर्गुरुतरं सर्वदानैर्विशिष्यते
पानीयं नरशार्दूल तस्माद्दातव्यमेव हि २१
एवमेतत्तडागेषु कीर्तितं फलमुत्तमम्
अत ऊर्ध्वं प्रवक्ष्यामि वृक्षाणामपि रोपणे २२
स्थावराणां च भूतानां जातयः षट् प्रकीर्तिताः
वृक्षगुल्मलतवल्ल्यस्त्वक्सारास्तृणजातयः २३
एता जात्यस्तु वृक्षाणां तेषां रोपे गुणास्त्विमे
कीर्तिश्च मानुषे लोके प्रेत्य चैव फलं शुभम् २४
लभते नाम लोके च पितृभिश्च  महीयते
देवलोकगतस्यापि नाम तस्य न नश्यति २५
अतीतानागते चोभे पितृवंशं च भारत
तारयेद्वृक्षरोपी च तस्माद्वृक्षान्प्ररोपयेत् २६

तस्य पुत्रा भवन्त्येते पादपा नात्र संशयः
परलोकगतः स्वर्गं लोकांश्चाप्नोति सोऽव्ययान् २७
पुष्पैः सुरगणान्वृक्षाः फलैश्चापि तथा पितॄन्
छायया चातिथींस्तात पूजयन्ति महीरुहाः २८
किंनरोरगरक्षांसि देवगन्धर्वमानवाः
तथा ऋषिगणाश्चैव संश्रयन्ति महीरुहान् २९
पुष्पिताः फलवन्तश्च तर्पयन्तीह मानवान्
वृक्षदं पुत्रवद्वृक्षास्तारयन्ति परत्र च ३०
तस्मात्तडागे वृक्षा वै रोप्याः श्रेयोर्थिना सदा
पुत्रवत्परिपाल्याश्च पुत्रास्ते धर्मतः स्मृताः ३१
तडागकृद्वृक्षरोपी इष्टयज्ञश्च यो द्विजः
एते स्वर्गे महीयन्ते ये चान्ये सत्यवादिनः ३२
तस्मात्तडागं कुर्वीत आरामांश्चैव रोपयेत्
यजेच्च विविधैर्यज्ञैः सत्यं च सततं वदेत् ३३
इति श्रीमहाभारते अनुशासनपर्वणि एकोनशततमोऽध्यायः ९९

## शततमोऽध्यायः

युधिष्ठिर उवाच
गार्हस्थ्यं धर्ममखिलं प्रब्रूहि भरतर्षभ
ऋद्धिमाप्नोति किं कृत्वा मनुष्य इह पार्थिव १
भीष्म उवाच
अत्र ते वर्तयिष्यामि पुरावृत्तं जनाधिप
वासुदेवस्य संवादं पृथिव्याश्चैव भारत २
संस्तूय पृथिवीं देवीं वासुदेवः प्रतापवान्
पप्रच्छ भरतश्रेष्ठ यदेतत्पृच्छसेऽद्य माम् ३
वासुदेव उवाच
गार्हस्थ्यं धर्ममाश्रित्य मया वा मद्विधेन वा
किमवश्यं धरे कार्यं किं वा कृत्वा सुखी भवेत् ४
पृथिव्युवाच
ऋषयः पितरो देवा मनुष्याश्चैव माधव

इज्याश्चैवार्चनीयाश्च यथा चैवं निबोध मे ५
सदा यज्ञेन देवांश्च आतिथ्येन च मानवान्
छन्दतश्च यथानित्यमर्हान्युञ्जीत नित्यशः
तेन ह्यृषिगणाः प्रीता भवन्ति मधुसूदन ६
नित्यमग्निं परिचरेदभुक्त्वा बलिकर्म च
कुर्यात्तथैव देवा वै प्रीयन्ते मधुसूदन ७
कुर्यादहरहः श्राद्धमन्नाद्येनोदकेन वा
पयोमूलफलैर्वापि पितृणां प्रीतिमाहरन् ८
सिद्धान्नाद्वैश्वदेवं वै कुर्यादग्नौ यथाविधि
अग्नीषोमं वैश्वदेवं धान्वन्तर्यमनन्तरम् ९
प्रजानां पतये चैव पृथग्घोमो विधीयते
तथैव चानुपूर्व्येण बलिकर्म प्रयोजयेत् १०
दक्षिणायां यमायेह प्रतीच्यां वरुणाय च
सोमाय चाप्युदीच्यां वै वास्तुमध्ये द्विजातये ११
धन्वन्तरेः प्रागुदीच्यां प्राच्यां शक्राय माधव
मनोर्वै इति च प्राहुर्बलिं द्वारे गृहस्य वै
मरुद्भ्यो दैवताभ्यश्च बलिमन्तर्गृहे हरेत् १२
तथैव विश्वेदेवेभ्यो बलिमाकाशतो हरेत्
निशाचरेभ्यो भूतेभ्यो बलिं नक्तं तथा हरेत् १३
एवं कृत्वा बलिसम्यग्दद्याद्भिक्षां द्विजातये
अलाभे ब्राह्मणस्याग्नावग्रमुत्क्षिप्य निक्षिपेत् १४
यदा श्राद्धं पितृभ्यश्च दातुमिच्छेत मानवः
तदा पश्चात्प्रकुर्वीत निवृत्ते श्राद्धकर्मणि १५
पितृन्संतर्पयित्वा तु बलिं कुर्याद्विधानतः
वैश्वदेवं ततः कुर्यात्पश्चाद्ब्राह्मणवाचनम् १६
ततोऽन्नेनावशेषेण भोजयेदतिथीनपि
अर्चापूर्वं महाराज ततः प्रीणाति मानुषान् १७
अनित्यं हि स्थितो यस्मात्तस्मादतिथिरुच्यते १८
आचार्यस्य पितुश्चैव सख्युराप्तस्य चातिथेः
इदमस्ति गृहे मह्यमिति नित्यं निवेदयेत् १९

ते यद्वदेयुस्तत्कुर्यादिति धर्मो विधीयते
गृहस्थः पुरुषः कृष्ण शिष्टाशी च सदा भवेत् २०
राजर्त्विजं स्नातकं च गुरुं श्वशुरमेव च
अर्चयेन्मधुपर्केण परिसंवत्सरोषितान् २१
श्वभ्यश्च श्वपचेभ्यश्च वयोभ्यश्चावपेद्भुवि
वैश्वदेवं हि नामैतत्सायंप्रातर्विधीयते २२
एतांस्तु धर्मान्गार्हस्थान्यः कुर्यादनसूयकः
स इहर्द्धिं परां प्राप्य प्रेत्य नाके महीयते २३
भीष्म उवाच
इति भूमेर्वचः श्रुत्वा  वासुदेवः प्रतापवान्
तथा चकार सततं त्वमप्येवं समाचर २४
एवं गृहस्थधर्मं त्वं चेतयानो नराधिप
इहलोके यशः प्राप्य प्रेत्य स्वर्गमवाप्स्यसि २५
इति श्रीमहाभारते अनुशासनपर्वणि शततमोऽध्यायः १००

एकाधिकशततमोऽध्यायः

युधिष्ठिर उवाच
आलोकदानं नामैतत्कीदृशं भरतर्षभ
कथमेतत्समुत्पन्नं फलं चात्र ब्रवीहि मे १
भीष्म उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
मनोः प्रजापतेर्वादं सुवर्णस्य च भारत २
तपस्वी कश्चिदभवत्सुवर्णो नाम नामतः
वर्णतो हेमवर्णः स सुवर्ण इति पप्रथे ३
कुलशीलगुणोपेतः स्वाध्याये च परं गतः
बहून्स्ववंशप्रभवान्समतीतः स्वकैर्गुणैः ४
स कदाचिन्मनुं विप्रो ददर्शोपससर्प च
कुशलप्रश्नमन्योन्यं तौ च तत्र प्रचक्रतुः ५
ततस्तौ सिद्धसंकल्पौ मेरौ काञ्चनपर्वते
रमणीये शिलापृष्ठे सहितौ संन्यषीदताम् ६

तत्र तौ कथयामास्तां कथा नानाविधाश्रयाः
ब्रह्मर्षिदेवदैत्यानां पुराणानां महात्मनाम् ७
सुवर्णस्त्वब्रवीद्वाक्यं मनुं स्वायंभुवं प्रभुम्
हितार्थं सर्वभूतानां प्रश्नं मे वक्तुमर्हसि ८
सुमनोभिर्यदिज्यन्ते दैवतानि प्रजेश्वर
किमेतत्कथमुत्पन्नं फलयोगं च शंस मे ९
मनुरुवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
शुक्रस्य च बलेश्चैव संवादं वै समागमे १०
बलेर्वैरोचनस्येह त्रैलोक्यमनुशासतः
समीपमाजगामाशु शुक्रो भृगुकुलोद्वहः ११
तमर्घ्यादिभिरभ्यर्च्य भार्गवं सोऽसुराधिपः
निषसादासने पश्चाद्विधिवद्भूरिदक्षिणः १२
कथेयमभवत्तत्र या त्वया परिकीर्तिता
सुमनोधूपदीपानां संप्रदाने फलं प्रति १३
ततः पप्रच्छ दैत्येन्द्रः कवीन्द्रं प्रश्नमुत्तमम्
सुमनोधूपदीपानां किं फलं ब्रह्मवित्तम
प्रदानस्य द्विजश्रेष्ठ तद्भवान्वक्तुमर्हति १४
शुक्र उवाच
तपः पूर्वं समुत्पन्नं धर्मस्तस्मादनन्तरम्
एतस्मिन्नन्तरे चैव वीरुदोषध्य एव च १५
सोमस्यात्मा च बहुधा संभूतः पृथिवीतले
अमृतं च विषं चैव याश्चान्यास्तुल्यजातयः १६
अमृतं मनसः प्रीतिं सद्यः पुष्टिं ददाति च
मनो ग्लपयते तीव्रं विषं गन्धेन सर्वशः १७
अमृतं मङ्गलं विद्धि महद्विषममङ्गलम्
ओषध्यो ह्यमृतं सर्वं विषं तेजोऽग्निसंभवम् १८
मनो ह्लादयते यस्माच्छ्रियं चापि दधाति ह
तस्मात्सुमनसः प्रोक्ता नरैः सुकृतकर्मभिः १९
देवताभ्यः सुमनसो यो ददाति नरः शुचिः

तस्मात्सुमनसः प्रोक्ता यस्मात्तुष्यन्ति देवताः २०
यं यमुद्दिश्य दीयेरन्देवं सुमनसः प्रभो
मङ्गलार्थं स तेनास्य प्रीतो भवति दैत्यप २१
ज्ञेयास्तूग्राश्च सौम्याश्च तेजस्विन्यश्च ताः पृथक्
ओषध्यो बहुवीर्याश्च बहुरूपास्तथैव च २२
यज्ञियानां च वृक्षाणामयज्ञियान्निबोध मे
आसुराणि च माल्यानि दैवतेभ्यो हितानि च २३
राक्षसानां सुराणां च यक्षाणां च तथा प्रियाः
पितृणां मानुषाणां च कान्तायास्त्वनुपूर्वशः २४
वन्या ग्राम्याश्चेह तथा कृष्टोप्ताः पर्वताश्रयाः
अकण्टकाः कण्टकिन्यो गन्धरूपरसान्विताः २५
द्विविधो हि स्मृतो गन्ध इष्टोऽनिष्टश्च पुष्पजः
इष्टगन्धानि देवानां पुष्पाणीति विभावयेत् २६
अकण्टकानां वृक्षाणां श्वेतप्रायाश्च वर्णतः
तेषां पुष्पाणि देवानामिष्टानि सततं प्रभो २७
जलजानि च माल्यानि पद्मादीनि च यानि च
गन्धर्वनागयक्षेभ्यस्तानि दद्याद्विचक्षणः २८
ओषध्यो रक्तपुष्पाश्च कटुकाः कण्टकान्विताः
शत्रूणामभिचारार्थमथर्वसु निदर्शिताः २९
तीक्ष्णवीर्यास्तु भूतानां दुरालम्भाः सकण्टकाः
रक्तभूयिष्ठवर्णाश्च कृष्णाश्चैवोपहारयेत् ३०
मनोहृदयनन्दिन्यो विमर्दे मधुराश्च याः
चारुरूपाः सुमनसो मानुषाणां स्मृता विभो ३१
न तु श्मशानसंभूता न देवायतनोद्भवाः
संनयेत्पुष्टियुक्तेषु विवाहेषु रहःसु च ३२
गिरिसानुरुहाः सौम्या देवानामुपपादयेत्
प्रोक्षिताभ्युक्षिताः सौम्या यथायोगं यथास्मृति ३३
गन्धेन देवास्तुष्यन्ति दर्शनाद्यक्षराक्षसाः
नागाः समुपभोगेन त्रिभिरेतैस्तु मानुषाः ३४
सद्यः प्रीणाति देवान्वै ते प्रीता भावयन्त्युत

संकल्पसिद्धा मर्त्यानामीप्सितैश्च मनोरथैः ३५
देवाः प्रीणन्ति सततं मानिता मानयन्ति च
अवज्ञातावधूताश्च निर्दहन्त्यधमान्नरान् ३६
अतऊर्ध्वं प्रवक्ष्यामि धूपदानविधौ फलम्
धूपांश्च विविधान्साधूनसाधूंश्च निबोध मे ३७
निर्यासः सरलश्चैव कृत्रिमश्चैव ते त्रयः
इष्टानिष्टो भवेद्गन्धस्तन्मे विस्तरतः शृणु ३८
निर्यासाः सल्लकीवर्ज्या देवानां दयितास्तु ते
गुग्गुलुः प्रवरस्तेषां सर्वेषामिति निश्चयः ३९
अगुरुः सारिणां श्रेष्ठो यक्षराक्षसभोगिनाम्
दैत्यानां सल्लकीजश्च काङ्क्षितो यश्च तद्विधः ४०
अथ सर्जरसादीनां गन्धैः पार्थिवदारवैः
फाणितासवसंयुक्तैर्मनुष्याणां विधीयते ४१
देवदानवभूतानां सद्यस्तुष्टिकरः स्मृतः
येऽन्ये वैहारिकास्ते तु मानुषाणामिति स्मृताः ४२
य एवोक्ताः सुमनसां प्रदाने गुणहेतवः
धूपेष्वपि परिज्ञेयास्त एव प्रीतिवर्धनाः ४३
दीपदाने प्रवक्ष्यामि फलयोगमनुत्तमम्
यथा येन यदा चैव प्रदेया यादृशाश्च ते ४४
ज्योतिस्तेजः प्रकाशश्चाप्यूर्ध्वगं चापि वर्ण्यते
प्रदानं तेजसां तस्मात्तेजो वर्धयते नृणाम् ४५
अन्धं तमस्तमिस्त्रं च दक्षिणायनमेव च
उत्तरायणमेतस्माज्ज्योतिर्दानं प्रशस्यते ४६
यस्मादूर्ध्वगमेतत्तु तमसश्चैव भेषजम्
तस्मादूर्ध्वगतेर्दाता भवेदिति विनिश्चयः ४७
देवास्तेजस्विनो यस्मात्प्रभावन्तः प्रकाशकाः
तामसा राक्षसाश्चेति तस्माद्दीपः प्रदीयते ४८
आलोकदानाच्चक्षुष्मान्प्रभायुक्तो भवेन्नरः
तान्दत्त्वा नोपहिंसेत न हरेन्नोपनाशयेत् ४९
दीपहर्ता भवेदन्धस्तमोगतिरसुप्रभः

दीपप्रदः स्वर्गलोके दीपमाली विराजते ५०
हविषा प्रथमः कल्पो द्वितीयस्त्वौषधीरसैः
वसामेदोस्थिनिर्यासैर्न कार्यः पुष्टिमिच्छता ५१
गिरिप्रपाते गहने चैत्यस्थाने चतुष्पथे
दीपदाता भवेन्नित्यं य इच्छेद्भूतिमात्मनः ५२
कुलोद्द्योतो विशुद्धात्मा प्रकाशत्वं च गच्छति
ज्योतिषां चैव सालोक्यं दीपदाता नरः सदा ५३
बलिकर्मसु वक्ष्यामि गुणान्कर्मफलोदयान्
देवयक्षोरगनृणां भूतानामथ रक्षसाम् ५४
येषां नाग्रभुजो विप्रा देवतातिथिबालकाः
राक्षसानेव तान्विद्धि निर्वषट्कारमङ्गलान् ५५
तस्मादग्रं प्रयच्छेत देवेभ्यः प्रतिपूजितम्
शिरसा प्रणतश्चापि हरेद्बलिमतन्द्रितः ५६
गृह्या हि देवता नित्यमाशंसन्ति गृहात्सदा
बाह्याश्चागन्तवो येऽन्ये यक्षराक्षसपन्नगाः ५७
इतो दत्तेन जीवन्ति देवताः पितरस्तथा
ते प्रीताः प्रीणयन्त्येतानायुषा यशसा धनैः ५८
बलयः सह पुष्पैस्तु देवानामुपहारयेत्
दधिद्रप्सयुताः पुण्याः सुगन्धाः प्रियदर्शनाः ५९
कार्या रुधिरमांसाढ्या बलयो यक्षरक्षसाम्
सुरासवपुरस्कारा लाजोल्लेपनभूषिताः ६०
नागानां दयिता नित्यं पद्मोत्पलविमिश्रिताः
तिलान्गुडसुसंपन्नान्भूतानामुपहारयेत् ६१
अग्रदाताग्रभोगी स्याद्बलवर्णसमन्वितः
तस्मादग्रं प्रयच्छेत देवेभ्यः प्रतिपूजितम् ६२
ज्वलत्यहरहो वेश्म याश्चास्य गृहदेवताः
ताः पूज्या भूतिकामेन प्रसृताग्रप्रदायिना ६३
इत्येतदसुरेन्द्राय काव्यः प्रोवाच भार्गवः
सुवर्णाय मनुः प्राह सुवर्णो नारदाय च ६४
नारदोऽपि मयि प्राह गुणानेतान्महाद्युते

त्वमप्येतद्विदित्वेह सर्वमाचर पुत्रक ६५
इति श्रीमहाभारते अनुशासनपर्वणि एकोत्तरशततमोऽध्यायः १०१

द्व्यधिकशततमोऽध्यायः

युधिष्ठिर उवाच
श्रुतं मे भरतश्रेष्ठ पुष्पधूपप्रदायिनाम्
फलं बलिविधाने च तद्भूयो वक्तुमर्हसि १
धूपप्रदानस्य फलं प्रदीपस्य तथैव च
बलयश्च किमर्थं वै क्षिप्यन्ते गृहमेधिभिः २
भीष्म उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
नहुषं प्रति संवादमगस्त्यस्य भृगोस्तथा ३
नहुषो हि महाराज राजर्षिः सुमहातपाः
देवराज्यमनुप्राप्तः सुकृतेनेह कर्मणा ४
तत्रापि प्रयतो राजन्नहुषस्त्रिदिवे वसन्
मानुषीश्चैव दिव्याश्च कुर्वाणो विविधाः क्रियाः ५
मानुष्यस्तत्र सर्वाः स्म क्रियास्तस्य महात्मनः
प्रवृत्तास्त्रिदिवे राजन्दिव्याश्चैव सनातनाः ६
अग्निकार्याणि समिधः कुशाः सुमनसस्तथा
बलयश्चान्नलाजाभिर्धूपनं दीपकर्म च ७
सर्वं तस्य गृहे राज्ञः प्रावर्तत महात्मनः
जपयज्ञान्मनोयज्ञांस्त्रिदिवेऽपि चकार सः ८
दैवतान्यर्चयंश्चापि विधिवत्स सुरेश्वरः
सर्वाण्येव यथान्यायं यथापूर्वमरिंदम ९
अथेन्द्रस्य भविष्यत्वादहंकारस्तमाविशत्
सर्वाश्चैव क्रियास्तस्य पर्यहीयन्त भूपते १०
स ऋषीन्वाहयामास वरदानमदान्वितः
परिहीनक्रियश्चापि दुर्बलत्वमुपेयिवान् ११
तस्य वाहयतः कालो मुनिमुख्यांस्तपोधनान्
अहंकाराभिभूतस्य सुमहानत्यवर्तत १२

अथ पर्यायश ऋृषीन्वाहनायोपचक्रमे
पर्यायश्चाप्यगस्त्यस्य समपद्यत भारत १३
अथागम्य महातेजा भृगुर्ब्रह्मविदां वरः
अगस्त्यमाश्रमस्थं वै समुपेत्येदमब्रवीत् १४
एवं वयमसत्कारं देवेन्द्रस्यास्य दुर्मतेः
नहुषस्य किमर्थं वै मर्षयाम महामुने १५
अगस्त्य उवाच
कथमेष मया शक्यः शप्तुं यस्य महामुने
वरदेन वरो दत्तो भवतो विदितश्च सः १६
यो मे दृष्टिपथं गच्छेत्स मे वश्यो भवेदिति
इत्यनेन वरो देवाद्याचितो गच्छता दिवम् १७
एवं न दग्धः स मया भवता च न संशयः
अन्येनाप्यृषिमुख्येन न शप्तो न च पातितः १८
अमृतं चैव पानाय दत्तमस्मै पुरा विभो
महात्मने तदर्थं च नास्माभिर्विनिपात्यते १९
प्रायच्छत वरं देवः प्रजानां दुःखकारकम्
द्विजेष्वधर्मयुक्तानि स करोति नराधमः २०
अत्र यत्प्राप्तकालं नस्तद्ब्रूहि वदतां वर
भवांश्चापि यथा ब्रूयात्कुर्वीमहि तथा वयम् २१
भृगुरूवाच
पितामहनियोगेन भवन्तमहमागतः
प्रतिकर्तुं बलवति नहुषे दर्पमास्थिते २२
अद्य हि त्वा सुदुर्बुद्धी रथे योक्ष्यति देवराट्
अद्यैनमहमुद्वृत्तं करिष्येऽनिन्द्रमोजसा २३
अद्येन्द्रं स्थापयिष्यामि पश्यतस्ते शतक्रतुम्
संचाल्य पापकर्माणमिन्द्रस्थानात्सुदुर्मतिम् २४
अद्य चासौ कुदेवेन्द्रस्त्वां पदा धर्षयिष्यति
दैवोपहतचित्तत्वादात्मनाशाय मन्दधीः २५
व्युत्क्रान्तधर्मं तमहं धर्षणामर्षितो भृशम्
अहिर्भवस्वेति रुषा शप्स्ये पापं द्विजद्रुहम् २६

तत एनं सुदुर्बुद्धिं धिक्शब्दाभिहतत्विषम्
धरण्यां पातयिष्यामि प्रेक्षतस्ते महामुने २७
नहुषं पापकर्माणमैश्वर्यबलमोहितम्
यथा च रोचते तुभ्यं तथा कर्तास्म्यहं मुने २८
एवमुक्तस्तु भृगुणा मैत्रावरुणिरव्ययः
अगस्त्यः परमप्रीतो बभूव विगतज्वरः २९
इति श्रीमहाभारते अनुशासनपर्वणि द्व्यधिकशततमोऽध्यायः १०२

## त्र्यधिकशततमोऽध्यायः

युधिष्ठिर उवाच
कथं स वै विपन्नश्च कथं वै पातितो भुवि
कथं चानिन्द्रतां प्राप्तस्तद्भवान्वक्तुमर्हति १
भीष्म उवाच
एवं तयोः संवदतोः क्रियास्तस्य महात्मनः
सर्वा एवाभ्यवर्तन्त या दिव्या याश्च मानुषाः २
तथैव दीपदानानि सर्वोपकरणानि च
बलिकर्म च यच्चान्यदुत्सेकाश्च पृथग्विधाः
सर्वास्तस्य समुत्पन्ना देवराज्ञो महात्मनः ३
देवलोके नृलोके च सदाचारा बुधैः स्मृताः
ते चेद्भवन्ति राजेन्द्र ऋध्यन्ते गृहमेधिनः
धूपप्रदानैर्दीपैश्च नमस्कारैस्तथैव च ४
यथा सिद्धस्य चान्नस्य द्विजायाग्रं प्रदीयते
बलयश्च गृहोद्देशे अतः प्रीयन्ति देवताः ५
यथा च गृहिणस्तोषो भवेद्वै बलिकर्मणा
तथा शतगुणा प्रीतिर्देवतानां स्म जायते ६
एवं धूपप्रदानं च दीपदानं च साधवः
प्रशंसन्ति नमस्कारैर्युक्तमात्मगुणावहम् ७
स्नानेनाद्भिश्च यत्कर्म क्रियते वै विपश्चिता
नमस्कारप्रयुक्तेन तेन प्रीयन्ति देवताः
गृह्याश्च देवताः सर्वाः प्रीयन्ते विधिनार्चिताः ८

इत्येतां बुद्धिमास्थाय नहुषः स नरेश्वरः
सुरेन्द्रत्वं महत्प्राप्य कृतवानेतदद्भुतम् ९
कस्यचित्त्वथ कालस्य भाग्यक्षय उपस्थिते
सर्वमेतदवज्ञाय न चकारैतदीदृशम् १०
ततः स परिहीणोऽभूत्सुरेन्द्रो बलिकर्मतः
धूपदीपोदकविधिं न यथावच्चकार ह
ततोऽस्ययज्ञविषयो रक्षोभिः पर्यबाध्यत ११
अथागस्त्यमृषिश्रेष्ठं वाहनायाजुहाव ह
द्रुतं सरस्वतीकूलात्स्मयन्निव महाबलः १२
ततो भृगुर्महातेजा मैत्रावरुणिमब्रवीत्
निमीलयस्व नयने जटा यावद्विशामि ते १३
स्थाणुभूतस्य तस्याथ जटाः प्राविशदच्युतः
भृगुः स सुमहातेजाः पातनाय नृपस्य ह १४
ततः स देवराट् प्राप्तस्तमृषिं वाहनाय वै
ततोऽगस्त्यः सुरपतिं वाक्यमाह विशां पते १५
योजयस्वेन्द्र मां क्षिप्रं कं च देशं वहामि ते
यत्र वक्ष्यसि तत्र त्वां नयिष्यामि सुराधिप १६
इत्युक्तो नहुषस्तेन योजयामास तं मुनिम्
भृगुस्तस्य जटासंस्थो बभूव हृषितो भृशम् १७
न चापि दर्शनं तस्य चकार स भृगुस्तदा
वरदानप्रभावज्ञो नहुषस्य महात्मनः १८
न चुकोप स चागस्त्यो युक्तोऽपि नहुषेण वै
तं तु राजा प्रतोदेन चोदयामास भारत १९
न चुकोप स धर्मात्मा ततः पादेन देवराट्
अगस्त्यस्य तदा क्रुद्धो वामेनाभ्यहनच्छिरः २०
तस्मिञ्शिरस्यभिहते स जटान्तर्गतो भृगुः
शशाप बलवत्क्रुद्धो नहुषं पापचेतसम् २१
भृगुरुवाच
यस्मात्पदाहनः क्रोधाच्छिरसीमं महामुनिम्
तस्मादाशु महीं गच्छ सर्पो भूत्वा सुदुर्मते २२

इत्युक्तः स तदा तेन सर्पो भूत्वा पपात ह
अदृष्टेनाथ भृगुणा भूतले भरतर्षभ २३
भृगुं हि यदि सोऽद्राक्षीन्नहुषः पृथिवीपते
न स शक्तोऽभविष्यद्वै पातने तस्य तेजसा २४
स तु तैस्तैः प्रदानैश्च तपोभिर्नियमैस्तथा
पतितोऽपि महाराज भूतले स्मृतिमान भूत्
प्रसादयामास भृगुं शापान्तो मे भवेदिति २५
ततोऽगस्त्यः कृपाविष्टः प्रासादयत तं भृगुम्
शापान्तार्थं महाराज स च प्रादात्कृपान्वितः २६
भृगुरुवाच
राजा युधिष्ठिरो नाम भविष्यति कुरूद्वहः
स त्वां मोक्षयिता शापादित्युक्त्वान्तरधीयत २७
अगस्त्योऽपि महातेजाः कृत्वा कार्यं शतक्रतोः
स्वमाश्रमपदं प्रायात्पूज्यमानो द्विजातिभिः २८
नहुषोऽपि त्वया राजंस्तस्माच्छापात्समुद्धृतः
जगाम ब्रह्मसदनं पश्यतस्ते जनाधिप २९
तदा तु पातयित्वा तं नहुषं भूतले भृगुः
जगाम ब्रह्मसदनं ब्रह्मणे च न्यवेदयत् ३०
ततः शक्रं समानाय्य देवानाह पितामहः
वरदानान्मम सुरा नहुषो राज्यमाप्तवान्
स चागस्त्येन क्रुद्धेन भ्रंशितो भूतलं गतः ३१
न च शक्यं विना राज्ञा सुरा वर्तयितुं क्वचित्
तस्मादयं पुनः शक्रो देवराज्येऽभिषिच्यताम् ३२
एवं संभाषमाणं तु देवाः पार्थ पितामहम्
एवमस्त्विति संहृष्टाः प्रत्यूचुस्ते पितामहम् ३३
सोऽभिषिक्तो भगवता देवराज्येन वासवः
ब्रह्मणा राजशार्दूल यथापूर्वं व्यरोचत ३४
एवमेतत्पुरावृत्तं नहुषस्य व्यतिक्रमात्
स च तैरेव संसिद्धो नहुषः कर्मभिः पुनः ३५
तस्माद्दीपाः प्रदातव्याः सायं वै गृहमेधिभिः

दिव्यं चक्षुरवाप्नोति प्रेत्य दीपप्रदायकः
पूर्णचन्द्रप्रतीकाशा दीपदाश्च भवन्त्युत ३६
यावदक्षिनिमेषाणि ज्वलते तावतीः समाः
रूपवान्धनवांश्चापि नरो भवति दीपदः ३७
इति श्रीमहाभारते अनुशासनपर्वणि त्र्यधिकशततमोऽध्यायः १०३

चतुरधिक शततमोऽध्यायः

युधिष्ठिर उवाच
ब्राह्मणस्वानि ये मन्दा हरन्ति भरतर्षभ
नृशंसकारिणो मूढाः क्व ते गच्छन्ति मानवाः १
भीष्म उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
चण्डालस्य च संवादं क्षत्रबन्धोश्च भारत २
राजन्य उवाच
वृद्धरूपोऽसि चण्डाल बालवच्च विचेष्टसे
श्वखराणां रजःसेवी कस्मादुद्विजसे गवाम् ३
साधुभिर्गर्हितं कर्म चण्डालस्य विधीयते
कस्माद्गोरजसा ध्वस्तमपां कुण्डे निषिञ्चसि ४
चण्डाल उवाच
ब्राह्मणस्य गवां राजन्ह्रियतीनां रजः पुरा
सोममुद्ध्वंसयामास तं सोमं येऽपिबन्द्विजाः ५
दीक्षितश्च स राजापि क्षिप्रं नरकमाविशत्
सह तैर्याजकैः सर्वैर्ब्रह्मस्वमुपजीव्य तत् ६
येऽपि तत्रापिबन्क्षीरं घृतं दधि च मानवाः
ब्राह्मणाः सहराजन्याः सर्वे नरकमाविशन् ७
जघ्नुस्ताः पयसा पुत्रांस्तथा पौत्रान्विधुन्वतीः
पशूनवेक्षमाणाश्च साधुवृत्तेन दंपती ८
अहं तत्रावसं राजन्ब्रह्मचारी जितेन्द्रियः
तासां मे रजसा ध्वस्तं भैक्षमासीन्नराधिप ९
चण्डालोऽह ततो राजन्भुक्त्वा तदभवं मृतः

ब्रह्मस्वहारी च नृपः सोऽप्रतिष्ठां गतिं ययौ १०
तस्माद्धरेन्न विप्रस्वं कदाचिदपि किंचन
ब्रह्मस्वरजसा ध्वस्तं भुक्त्वा मां पश्य यादृशम् ११
तस्मात्सोमोऽप्यविक्रेयः पुरुषेण विपश्चिता
विक्रयं हीह सोमस्य गर्हयन्ति मनीषिणः १२
ये चैनं क्रीणते राजन्ये च विक्रीणते जनाः
ते तु वैवस्वतं प्राप्य रौरवं यान्ति सर्वशः १३
सोमं तु रजसा ध्वस्तं विक्रीयाद्बुद्धिपूर्वकम्
श्रोत्रियो वार्धुषी भूत्वा चिररात्राय नश्यति
नरकं त्रिंशतं प्राप्य श्वविष्ठामुपजीवति १४
श्वचर्यामतिमानं च सखिदारेषु विप्लवम्
तुलयाधारयद्धर्मो ह्यतिमानोऽतिरिच्यते १५
श्वानं वै पापिनं पश्य विवर्णं हरिणं कृशम्
अतिमानेन भूतानामिमां गतिमुपागतम् १६
अहं वै विपुले जातः कुले धनसमन्विते
अन्यस्मिञ्जन्मनि विभो ज्ञानविज्ञानपारगः १७
अभवं तत्र जानानो ह्येतान्दोषान्मदात्तदा
संरब्ध एव भूतानां पृष्ठमांसान्यभक्षयम् १८
सोऽह तेन च वृत्तेन भोजनेन च तेन वै
इमामवस्थां संप्राप्तः पश्य कालस्य पर्ययम् १९
आदीप्तमिव चैलान्तं भ्रमरैरिव चार्दितम्
धावमानं सुसंरब्धं पश्य मां रजसान्वितम् २०
स्वाध्यायैस्तु महत्पापं तरन्ति गृहमेधिनः
दानैः पृथग्विधैश्चापि यथा प्राहुर्मनीषिणः २१
तथा पापकृतं विप्रमाश्रमस्थं महीपते
सर्वसङ्गविनिर्मुक्तं छन्दांस्युत्तारयन्त्युत २२
अहं तु पापयोन्यां वै प्रसूतः क्षत्रियर्षभ
निश्चयं नाधिगच्छामि कथं मुच्येयमित्युत २३
जातिस्मरत्वं तु मम केनचित्पूर्वकर्मणा
शुभेन येन मोक्षं वै प्राप्तुमिच्छाम्यहं नृप २४

त्वमिमं मे प्रपन्नाय संशयं ब्रूहि पृच्छते
चराडालत्वात्कथमहं मुच्येयमिति सत्तम २५
राजन्य उवाच
चराडाल प्रतिजानीहि येन मोक्षमवाप्स्यसि
ब्राह्मणार्थे त्यजन्प्राणान्गतिमिष्टामवाप्स्यसि २६
दत्त्वा शरीरं क्रव्याद्भ्यो रणाग्नौ द्विजहेतुकम्
हुत्वा प्राणान्प्रमोक्षस्ते नान्यथा मोक्षमर्हसि २७
भीष्म उवाच
इत्युक्तः स तद्वाराजन्ब्रह्मस्वार्थे परंतप
हुत्वा रणमुखे प्राणान्गतिमिष्टामवाप ह २८
तस्माद्रक्ष्यं त्वया पुत्र ब्रह्मस्वं भरतर्षभ
यदीच्छसि महाबाहो शाश्वतीं गतिमुत्तमाम् २९
इति श्रीमहाभारते अनुशासनपर्वणि चतुरधिकशततमोऽध्यायः १०४

## पञ्चाधिक शततमोऽध्यायः

युधिष्ठिर उवाच
एको लोकः सुकृतिनां सर्वे त्वाहो पितामह
उत तत्रापि नानात्वं तन्मे ब्रूहि पितामह १
भीष्म उवाच
कर्मभिः पार्थ नानात्वं लोकानां यान्ति मानवाः
पुरायान्पुरायकृतो यान्ति पापान्पापकृतो जनाः २
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
गौतमस्य मुनेस्तात संवादं वासवस्य च ३
ब्राह्मणो गौतमः कश्चिन्मृदुर्दान्तो जितेन्द्रियः
महावने हस्तिशिशुं परिद्यूनममातृकम् ४
तं दृष्ट्वा जीवयामास सानुक्रोशो धृतव्रतः
स तु दीर्घेण कालेन बभूवातिबलो महान् ५
तं प्रभिन्नं महानागं प्रस्रुतं सर्वतो मदम्
धृतराष्ट्रस्य रूपेण शक्रो जग्राह हस्तिनम् ६
ह्रियमाणं तु तं दृष्ट्वा गौतमः संशितव्रतः

अभ्यभाषत राजानं धृतराष्ट्रं महातपाः ७
मा मे हार्षीर्हस्तिनं पुत्रमेनं दुःखात्पुष्टं धृतराष्ट्राकृतज्ञ
मित्रं सतां सप्तपदं वदन्ति मित्रद्रोहो नैव राजन्स्पृशेत्त्वाम् ८
इध्मोदकप्रदातारं शून्यपालकमाश्रमे
विनीतमाचार्यकुले सुयुक्तं गुरुकर्मणि ९
शिष्टं दान्तं कृतज्ञं च प्रियं च सततं मम
न मे विक्रोशतो राजन्हर्तुमर्हसि कुञ्जरम् १०
धृतराष्ट्र उवाच
गवां सहस्त्रं भवते ददामि दासीशतं निष्कशतानि पञ्च
अन्यच्च वित्तं विविधं महर्षे किं ब्राह्मणस्येह गजेन कृत्यम् ११
गौतम उवाच
त्वामेव गावोऽभि भवन्तु राजन्दास्यः सनिष्का विविधं च रत्नम्
अन्यच्च वित्तं विविधं नरेन्द्र किं ब्राह्मणस्येह धनेन कृत्यम् १२
धृतराष्ट्र उवाच
ब्राह्मणानां हस्तिभिर्नास्ति कृत्यं राजन्यानां नागकुलानि विप्र
स्वं वाहनं नयतो नास्त्यधर्मो नागश्रेष्ठाद्गौतमास्मान्निवर्त १३
गौतम उवाच
यत्र प्रेतो नन्दति पुण्यकर्मा यत्र प्रेतः शोचति पापकर्मा
वैवस्वतस्य सदने महात्मनस्तत्र त्वाहं हस्तिनं यातयिष्ये १४
धृतराष्ट्र उवाच
ये निष्क्रिया नास्तिकाः श्रद्दधानाः पापात्मान इन्द्रियार्थे निविष्टाः
यमस्य ते यातनां प्राप्नुवन्ति परं गन्ता धृतराष्ट्रो न तत्र १५
गौतम उवाच
वैवस्वती संयमनी जनानां यत्रानृतं नोच्यते यत्र सत्यम्
यत्राबला बलिनं यातयन्ति तत्र त्वाहं हस्तिनं यातयिष्ये १६
धृतराष्ट्र उवाच
ज्येष्ठां स्वसारं पितरं मातरं च गुरुं यथा मानयन्तश्चरन्ति
तथाविधानामेष लोको महर्षे परं गन्ता धृतराष्ट्रो न तत्र १७
गौतम उवाच
मन्दाकिनी वैश्रवणस्य राज्ञो महाभोगा भोगिजनप्रवेश्या

गन्धर्वयक्षैरप्सरोभिश्च जुष्टा तत्र त्वाहं हस्तिनं यातयिष्ये १८
धृतराष्ट्र उवाच
अतिथिव्रताः सुव्रता ये जना वै प्रतिश्रयं ददति ब्राह्मणेभ्यः
शिष्टाशिनः संविभज्याश्रितांश्च मन्दाकिनीं तेऽपि विभूषयन्ति १९
गौतम उवाच
मेरोरग्रे यद्वनं भाति रम्यं सुपुष्पितं किंनरगीतजुष्टम्
सुदर्शना यत्र जम्बूर्विशाला तत्र त्वाहं हस्तिनं यातयिष्ये २०
धृतराष्ट्र उवाच
ये ब्राह्मणा मृदवः सत्यशीला बहुश्रुताः सर्वभूताभिरामाः
येऽधीयन्ते सेतिहासं पुराणं मध्वाहुत्या जुह्वति च द्विजेभ्यः २१
तथाविधानामेष लोको महर्षे परं गन्ता धृतराष्ट्रो न तत्र
यद्विद्यते विदितं स्थानमस्ति तद्ब्रूहि त्वं त्वरितो ह्येष यामि २२
गौतम उवाच
सुपुष्पितं किंनरराजजुष्टं प्रियं वनं नन्दनं नारदस्य
गन्धर्वाणामप्सरसां च सद्म तत्र त्वाहं हस्तिनं यातयिष्ये २३
धृतराष्ट्र उवाच
ये नृत्तगीतकुशला जनाः सदा ह्ययाचमानाः सहिताश्चरन्ति
तथाविधानामेष लोको महर्षे परं गन्ता धृतराष्ट्रो न तत्र २४
गौतम उवाच
यत्रोत्तराः कुरवो भान्ति रम्या देवैः सार्धं मोदमाना नरेन्द्र
यत्राग्नियौनाश्च वसन्ति विप्रा ह्ययोनयः पर्वतयोनयश्च २५
यत्र शक्रो वर्षति सर्वकामान्यत्र स्त्रियः कामचाराश्चरन्ति
यत्र चेर्ष्या नास्ति नारीनराणां तत्र त्वाहं हस्तिनं यातयिष्ये २६
धृतराष्ट्र उवाच
ये सर्वभूतेषु निवृत्तकामा अमांसादा न्यस्तदण्डाश्चरन्ति
न हिंसन्ति स्थावरं जङ्गमं च भूतानां ये सर्वभूतात्मभूताः २७
निराशिषो निर्ममा वीतरागा लाभालाभे तुल्यनिन्दाप्रशंसाः
तथाविधानामेष लोको महर्षे परं गन्ता धृतराष्ट्रो न तत्र २८
गौतम उवाच
ततः परं भान्ति लोकाः सनातनाः सुपुण्यगन्धा निर्मला वीतशोकाः

सोमस्य राज्ञः सदने महात्मनस्तत्र त्वाहं हस्तिनं यातयिष्ये २९
धृतराष्ट्र उवाच
ये दानशीला न प्रतिगृह्णते सदा न चाप्यर्थानाददते परेभ्यः
येषामदेयमर्हते नास्ति किंचित्सर्वातिथ्याः सुप्रसादा जनाश्च ३०
ये क्षन्तारो नाभिजल्पन्ति चान्याञ्शक्ता भूत्वा सततं पुण्यशीलाः
तथाविधानामेष लोको महर्षे परं गन्ता धृतराष्ट्रो न तत्र ३१
गौतम उवाच
ततः परं भान्ति लोकाः सनातना विरजसो वितमस्का विशोकाः
आदित्यस्य सुमहान्तः सुवृत्तास्तत्र त्वाहं हस्तिनं यातयिष्ये ३२
धृतराष्ट्र उवाच
स्वाध्यायशीला गुरुशुश्रूषणे रतास्तपस्विनः सुव्रताः सत्यसंधाः
आचार्याणामप्रतिकूलभाषिणो नित्योत्थिता गुरुकर्मस्वचोद्याः ३३
तथाविधानामेष लोको महर्षे विशुद्धानां भावितवाङ्मतीनाम्
सत्ये स्थितानां वेदविदां महात्मनां परं गन्ता धृतराष्ट्रो न तत्र ३४
गौतम उवाच
ततः परे भान्ति लोकाः सनातनाः सुपुण्यगन्धा विरजा विशोकाः
वरुणस्य राज्ञः सदने महात्मनस्तत्र त्वाहं हस्तिनं यातयिष्ये ३५
धृतराष्ट्र उवाच
चातुर्मास्यैर्ये यजन्ते जनाः सदा तथेष्टीनां दशशतं प्राप्नुवन्ति
ये चाग्निहोत्रं जुह्वति श्रद्दधाना यथान्यायं त्रीणि वर्षाणि विप्राः ३६
स्वदारिणां धर्मधुरे महात्मनां यथोचिते वर्त्मनि सुस्थितानाम्
धर्मात्मनामुद्वहतां गतिं तां परं गन्ता धृतराष्ट्रो न तत्र ३७
गौतम उवाच
इन्द्रस्य लोका विरजा विशोका दुरन्वयाः काङ्क्षिता मानवानाम्
तस्याहं ते भवने भूरितेजसो राजन्निमं हस्तिनं यातयिष्ये ३८
शतवर्षजीवी यश्च शूरो मनुष्यो वेदाध्यायी यश्च यज्वाप्रमत्तः
एते सर्वे शक्रलोकं व्रजन्ति परं गन्ता धृतराष्ट्रो न तत्र ३९
गौतम उवाच
प्राजापत्याः सन्ति लोका महान्तो नाकस्य पृष्ठे पुष्कला वीतशोकाः
मनीषिताः सर्वलोकोद्भवानां तत्र त्वाहं हस्तिनं यातयिष्ये ४०

धृतराष्ट्र उवाच
ये राजानो राजसूयाभिषिक्ता धर्मात्मानो रक्षितारः प्रजानाम्
ये चाश्वमेधावभृथाप्लुताङ्गास्तेषां लोका धृतराष्ट्रो न तत्र ४१
गौतम उवाच
ततः परं भान्ति लोकाः सनातनाः सुपुण्यगन्धा विरजा वीतशोकाः
तस्मिन्नहं दुर्लभे त्वाप्रधृष्ये गवां लोके हस्तिनं यातयिष्ये ४२
धृतराष्ट्र उवाच
यो गोसहस्री शतदः समां समां यो गोशती दश दद्याच्च शक्त्या
तथा दशभ्यो यश्च दद्यादिहैकां पञ्चभ्यो वा दानशीलस्तथैकाम् ४३
ये जीर्यन्ते ब्रह्मचर्येण विप्रा ब्राह्मीं वाचं परिरक्षन्ति चैव
मनस्विनस्तीर्थयात्रापरायणास्ते तत्र मोदन्ति गवां विमाने ४४
प्रभासं मानसं पुण्यं पुष्कराणि महत्सरः
पुण्यं च नैमिषं तीर्थं बाहुदां करतोयिनीम् ४५
गयां गयशिरश्चैव विपाशां स्थूलवालुकाम्
तूष्णींगङ्गां दशगङ्गां महाह्रदमथापि च ४६
गोमतीं कौशिकीं पाकां महात्मानो धृतव्रताः
सरस्वतीदृषद्वत्यौ यमुनां ये प्रयान्ति च ४७
तत्र ते दिव्यसंस्थाना दिव्यमाल्यधराः शिवाः
प्रयान्ति पुण्यगन्धाढ्या धृतराष्ट्रो न तत्र वै ४८
गौतम उवाच
यत्र शीतभयं नास्ति न चोष्णभयमण्वपि
न क्षुत्पिपासे न ग्लानिर्न दुःखं न सुखं तथा ४९
न द्वेष्यो न प्रियः कश्चिन्न बन्धुर्न रिपुस्तथा
न जरामरणे वापि न पुण्यं न च पातकम् ५०
तस्मिन्विरजसि स्फीते प्रज्ञासत्त्वव्यवस्थिते
स्वयंभु भवने पुण्ये हस्तिनं मे यतिष्यति ५१
धृतराष्ट्र उवाच
निर्मुक्ताः सर्वसङ्गेभ्यो कृतात्मानो यतव्रताः
अध्यात्मयोगसंस्थाने युक्ताः स्वर्गगतिं गताः ५२
ते ब्रह्मभवनं पुण्यं प्राप्नुवन्तीह सात्त्विकाः

न तत्र धृतराष्ट्रस्ते शक्यो द्रष्टुं महामुने ५३
गौतम उवाच
रथन्तरं यत्र बृहच्च गीतये यत्र वेदी पुण्डरीकैः स्तृणोति
यत्रोपयाति हरिभिः सोमपीथी तत्र त्वाहं हस्तिनं यातयिष्ये ५४
बुध्यामि त्वां वृत्रहणं शतक्रतुं व्यतिक्रमन्तं भुवनानि विश्वा
कच्चिन्न वाचा वृजिनं कदाचिदकार्षं ते मनसोऽभिषङ्गात् ५५
शक्र उवाच
यस्मादिमं लोकपथं प्रजानामन्वागमं पदवादे गजस्य
तस्माद्भवान्प्रणतं मानुशास्तु ब्रवीषि यत्तत्करवाणि सर्वम् ५६
गौतम उवाच
श्वेतं करेणुं मम पुत्रनागं यं मेऽहार्षीर्दशवर्षाणि बालम्
यो मे वने वसतोऽभूद्द्वितीयस्तमेव मे देहि सुरेन्द्र नागम् ५७
शक्र उवाच
अयं सुतस्ते द्विजमुख्य नागश्चाघ्रायते त्वामभिवीक्षमाणः
पादौ च ते नासिकयोपजिघ्रते श्रेयो मम ध्याहि नमश्च तेऽस्तु ५८
गौतम उवाच
शिवं सदैवेह सुरेन्द्र तुभ्यं ध्यायामि पूजां च सदा प्रयुञ्जे
ममापि त्वं शक्र शिवं ददस्व त्वया दत्तं प्रतिगृह्णामि नागम् ५९
शक्र उवाच
येषां वेदा निहिता वै गुहायां मनीषिणां सत्त्ववतां महात्मनाम्
तेषां त्वयैकेन महात्मनास्मि बुद्धस्तस्मात्प्रीतिमांस्तेऽहमद्य ६०
हन्तैहि ब्राह्मण क्षिप्रं सह पुत्रेण हस्तिना
प्राप्नुहि त्वं शुभाँल्लोकानह्नाय च चिराय च ६१
भीष्म उवाच
स गौतमं पुरस्कृत्य सह पुत्रेण हस्तिना
दिवमाचक्रमे वज्री सद्भिः सह दुरासदम् ६२
इति श्रीमहाभारते अनुशासनपर्वणि पञ्चाधिकशततमोऽध्यायः १०५

षडधिक शततमोऽध्यायः

युधिष्ठिर उवाच

दानं बहुविधाकारं शान्तिः सत्यमहिंसता
स्वदारतुष्टिश्चोक्ता ते फलं दानस्य चैव यत् १
पितामहस्य विदितं किमन्यत्र तपोबलात्
तपसो यत्परं तेऽद्य तन्मे व्याख्यातुमर्हसि २
भीष्म उवाच
तपः प्रचक्षते यावत्तावल्लोका युधिष्ठिर
मतं मम तु कौन्तेय तपो नानशनात्परम् ३
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
भगीरथस्य संवादं ब्रह्मणश्च महात्मनः ४
अतीत्य सुरलोकं च गवां लोकं च भारत
ऋषिलोकं च सोऽगच्छद्भगीरथ इति श्रुतिः ५
तं दृष्ट्वा स वचः प्राह ब्रह्मा राजन्भगीरथम्
कथं भगीरथागास्त्वमिमं देशं दुरासदम् ६
न हि देवा न गन्धर्वा न मनुष्या भगीरथ
आयान्त्यतप्ततपसः कथं वै त्वमिहागतः ७
भगीरथ उवाच
निः शङ्कमन्नमददं ब्राह्मणेभ्यः शतं सहस्राणि सदैव दानम्
ब्राह्मं व्रतं नित्यमास्थाय विद्धि न त्वेवाहं तस्य फलादिहागाम् ८
दशैकरात्रान्दश पञ्चरात्रानेकादशैकादशकान्क्रतूंश्च
ज्योतिष्टोमानां च शतं यदिष्टं फलेन तेनापि च नागतोऽहम् ९
यच्चावसं जाह्नवीतीरनित्यः शतं शमास्तप्यमानस्तपोऽहम्
अदां च तत्राश्वतरीसहस्रं नारीपुरं न च तेनाहमागाम् १०
दशायुतानि चाश्वानामयुतानि च विंशतिम्
पुष्करेषु द्विजातिभ्यः प्रादां गाश्च सहस्रशः ११
सुवर्णचन्द्रोडुपधारिणीनां कन्योत्तमानामददं स्रग्विणीनाम्
षष्टिं सहस्राणि विभूषितानां जाम्बूनदैराभरणैर्न तेन १२
दशार्बुदान्यददं गोसवेज्यास्वेकैकशो दश गा लोकनाथ
समानवत्साः पयसा समन्विताः सुवर्णकांस्योपदुहा न तेन १३
आप्तोर्यामेषु नियतमेकैकस्मिन्दशाददम्
गृष्टीनां क्षीरदात्रीणां रोहिणीनां न तेन च १४

दोग्ध्रीणां वै गवां चैव प्रयुतानि दशैव ह
प्रादां दशगुणं ब्रह्मन्न च तेनाहमागतः १५
वाजिनां बाह्लिजातानामयुतान्यददं दश
कर्काणां हेममालानां न च तेनाहमागतः १६
कोटीश्च काञ्चनस्याष्टौ प्रादां ब्रह्मन्दश त्वहम्
एकैकस्मिन्क्रतौ तेन फलेनाहं न चागतः १७
वाजिनां श्यामकर्णानां हरितानां पितामह
प्रादां हेमस्रजां ब्रह्मन्कोटीर्दश च सप्त च १८
ईषादन्तान्महाकायान्काञ्चनस्रग्विभूषितान्
पद्मीमतः सहस्राणि प्रायच्छं दश सप्त च १९
अलंकृतानां देवेश दिव्यैः कनकभूषणैः
रथानां काञ्चनाङ्गानां सहस्राण्यददं दश
सप्त चान्यानि युक्तानि वाजिभिः समलंकृतैः २०
दक्षिणावयवाः केचिद्वेदैर्ये संप्रकीर्तिताः
वाजपेयेषु दशसु प्रादां तेनापि नाप्यहम् २१
शक्रतुल्यप्रभावानामिज्यया विक्रमेण च
सहस्रं निष्ककण्ठानामददं दक्षिणामहम् २२
विजित्य नृपतीन्सर्वान्मखैरिष्ट्वा पितामह
अष्टभ्यो राजसूयेभ्यो न च तेनाहमागतः २३
स्रोतश्च यावद्गङ्गायाश्छन्नमासीज्जगत्पते
दक्षिणाभिः प्रवृत्ताभिर्मम नागां च तत्कृते २४
वाजिनां च सहस्रे द्वे सुवर्णशतभूषिते
वरं ग्रामशतं चाहमेकैकस्य त्रिधाददम्
तपस्वी नियताहारः शममास्थाय वाग्यतः २५
दीर्घकालं हिमवति गङ्गायाश्च दुरुत्सहाम्
मूर्ध्ना धारां महादेवः शिरसा यामधारयत्
न तेनाप्यहमागच्छं फलेनेह पितामह २६
शम्याक्षेपैरयजं यच्च देवान्सद्यस्कानामयुतैश्चापि यत्तत्
त्रयोदशद्वादशाहांश्च देव सपौण्डरीकान्न च तेषां फलेन २७
अष्टौ सहस्राणि ककुद्मिनामहं शुक्लर्षभाणामददं ब्राह्मणेभ्यः

एकैकं वै काञ्चनं शृङ्गमेभ्यः पत्नीश्चैषामददं निष्ककराठीः २८
हिररायरत्ननिचितानददं रत्नपर्वतान्
धनधान्यसमृद्धांश्च ग्रामाञ्शतसहस्रशः २९
शतं शतानां गृष्टीनामददं चाप्यतन्द्रितः
इष्ट्वानेकैर्महायज्ञैर्ब्राह्मरोभ्यो न तेन च ३०
एकादशाहैरयजं सदक्षिरौर्द्विद्वादशाहैरश्वमेधैश्च देव
आर्कायरौः षोडशभिश्च ब्रह्मंस्तेषां फलेनेह न चागतोऽस्मि ३१
निष्कैककराठमददं योजनायतं तद्विस्तीर्णं काञ्चनपादपानाम्
वनं चूतानां रत्नविभूषितानां न चैव तेषामागतोऽह फलेन ३२
तुरायरां हि व्रतमप्रधृष्यमक्रोधनोऽकरवं त्रिंशतोऽब्दान्
शतं गवामष्ट शतानि चैव दिने दिने ह्यददं ब्राह्मरोभ्यः ३३
पयस्विनीनामथ रोहिरणीनां तथैव चाप्यनडुहां लोकनाथ
प्रादां नित्यं ब्राह्मरोभ्यः सुरेश नेहागतस्तेन फलेन चाहम् ३४
त्रिंशदग्निमहं ब्रह्मन्नयजं यच्च नित्यदा
अष्टाभिः सर्वमेधैश्च नरमेधैश्च सप्तभिः ३५
दशभिर्विश्वजिद्भिश्च शतैरष्टादशोत्तरैः
न चैव तेषां देवेश फलेनाहमिहागतः ३६
सरय्वां बाहुदायां च गङ्गायामथ नैमिषे
गवां शतानामयुतमददं न च तेन वै ३७
इन्द्रेरा गुह्यं निहितं वै गुहायां यद्भार्गवस्तपसेहाभ्यविन्दत्
जाज्वल्यमानमुशनस्तेजसेह तत्साधयामासमहं वरेरायम् ३८
ततो मे ब्राह्मरणास्तुष्टास्तस्मिन्कर्मरिण साधिते
सहस्रमृषयश्चासन्ये वै तत्र समागताः
उक्तस्तैरस्मि गच्छ त्वं ब्रह्मलोकमिति प्रभो ३९
प्रीतेनोक्तः सहस्रेरा ब्राह्मरणानामहं प्रभो
इमं लोकमनुप्राप्तो मा भूत्तेऽत्र विचाररणा ४०
कामं यथावद्विहितं विधात्रा पृष्टेन वाच्यं तु मया यथावत्
तपो हि नान्यच्चानशनान्मतं मे नमोऽस्तु ते देववर प्रसीद ४१
भीष्म उवाच
इत्युक्तवन्तं तं ब्रह्मा राजानं स्म भगीरथम्

पूजयामास पूजार्हं विधिदृष्टेन कर्मणा ४२
इति श्रीमहाभारते अनुशासनपर्वणि षडधिकशततमोऽध्यायः १०६

## सप्ताधिक शततमोऽध्यायः

युधिष्ठिर उवाच
शतायुरुक्तः पुरुषः शतवीर्यश्च वैदिके
कस्मान्म्रियन्ते पुरुषा बाला अपि पितामह १
आयुष्मान्केन भवति स्वल्पायुर्वापि मानवः
केन वा लभते कीर्तिं केन वा लभते श्रियम् २
तपसा ब्रह्मचर्येण जपैर्होमैस्तथौषधैः
जन्मना यदि वाचारात्तन्मे ब्रूहि पितामह ३
भीष्म उवाच
अत्र ते वर्तयिष्यामि यन्मां त्वमनुपृच्छसि
अल्पायुर्येन भवति दीर्घायुर्वापि मानवः ४
येन वा लभते कीर्तिं येन वा लभते श्रियम्
यथा च वर्तन्पुरुषः श्रेयसा संप्रयुज्यते ५
आचाराल्लभते ह्यायुराचारल्लभते श्रियम्
आचारात्कीर्तिमाप्नोति पुरुषः प्रेत्य चेह च ६
दुराचारो हि पुरुषो नेहायुर्विन्दते महत्
त्रसन्ति यस्माद्भूतानि तथा परिभवन्ति च ७
तस्मात्कुर्यादिहाचारं य इच्छेद्भूतिमात्मनः
अपि पापशरीरस्य आचारो हन्त्यलक्षणम् ८
आचारलक्षणो धर्मः सन्तश्चाचारलक्षणाः
साधूनां च यथा वृत्तमेतदाचारलक्षणम् ९
अप्यदृष्टं श्रुतं वापि पुरुषं धर्मचारिणम्
भूतिकर्माणि कुर्वाणं तं जनाः कुर्वते प्रियम् १०
ये नास्तिका निष्क्रियाश्च गुरुशास्त्रातिलङ्घिनः
अधर्मज्ञा दुराचारास्ते भवन्ति गतायुषः ११
विशीला भिन्नमर्यादा नित्यं संकीर्णमैथुनाः
अल्पायुषो भवन्तीह नरा निरयगामिनः १२

सर्वलक्षणहीनोऽपि समुदाचारवान्नरः
श्रद्धधानोऽनसूयश्च शतं वर्षाणि जीवति १३
अक्रोधनः सत्यवादी भूतानामविहिंसकः
अनसूयुरजिह्मश्च शतं वर्षाणि जीवति १४
लोष्टमर्दी तृणच्छेदी नखखादी च यो नरः
नित्योच्छिष्टः संकुसुको नेहायुर्विन्दते महत् १५
ब्राह्मे मुहूर्ते बुध्येत धर्मार्थौ चानुचिन्तयेत्
उत्थायाचम्य तिष्ठेत पूर्वां संध्यां कृताञ्जलि १६
एवमेवापरां संध्यां समुपासीत वाग्यतः
नेक्षेतादित्यमुद्यन्तं नास्तं यान्तं कदाचन १७
ऋषयो दीर्घसंध्यत्वाद्दीर्घमायुरवाप्नुवन्
तस्मात्तिष्ठेत्सदा पूर्वां पश्चिमां चैव वाग्यतः १८
ये न पूर्वामुपासन्ते द्विजाः संध्यां न पश्चिमाम्
सर्वांस्तान्धार्मिको राजा शूद्रकर्माणि कारयेत् १९
परदारा न गन्तव्याः सर्ववर्णेषु कर्हिचित्
न हीदृशमनायुष्यं लोके किंचन विद्यते
यादृशं पुरुषस्येह परदारोपसेवनम् २०
प्रसाधनं च केशानामञ्जनं दन्तधावनम्
पूर्वाह्ण एव कुर्वीत देवतानां च पूजनम् २१
पुरीषमूत्रे नोदीक्षेन्नाधितिष्ठेत्कदाचन
उदक्यया च संभाषां न कुर्वीत कदाचन २२
नोत्सृजेत पुरीषं च क्षेत्रे ग्रामस्य चान्तिके
उभे मूत्रपुरीषे तु नाप्सु कुर्यात्कदाचन २३
प्राङ्मुखो नित्यमश्नीयाद्वाग्यतोऽन्नमकुत्सयन्
प्रस्कन्दयेच्च मनसा भुक्त्वा चाग्निमुपस्पृशेत् २४
आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः
धन्यं पश्चान्मुखो भुङ्क्ते ऋतं भुङ्क्ते उदङ्मुखः २५
नाधितिष्ठेत्तुषाञ्जातु केशभस्मकपालिकाः
अन्यस्य चाप्युपस्थानं दूरतः परिवर्जयेत् २६
शान्तिहोमांश्च कुर्वीत सावित्राणि च कारयेत्

निषण्णश्चापि खादेत न तु गच्छन्कथंचन २७
मूत्रं न तिष्ठता कार्यं न भस्मनि न गोव्रजे २८
आर्द्रपादस्तु भुञ्जीत नार्द्रपादस्तु संविशेत्
आर्द्रपादस्तु भुञ्जानो वर्षाणां जीवते शतम् २९
त्रीणि तेजांसि नोच्छिष्ट आलभेत कदाचन
अग्निं गां ब्राह्मणं चैव तथास्यायुर्न रिष्यते ३०
त्रीणि तेजांसि नोच्छिष्ट उदीक्षेत कदाचन
सूर्याचन्द्रमसौ चैव नक्षत्राणि च सर्वशः ३१
ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति
प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते ३२
अभिवादयेत वृद्धांश्च आसनं चैव दापयेत्
कृताञ्जलिरुपासीत गच्छन्तं पृष्ठतोऽन्वियात् ३३
न चासीतासने भिन्ने भिन्नं कांस्यं च वर्जयेत्
नैकवस्त्रेण भोक्तव्यं न नग्नः स्नातुमर्हति
स्वप्तव्यं नैव नग्नेन न चोच्छिष्टोऽपि संविशेत् ३४
उच्छिष्टो न स्पृशेच्छीर्षं सर्वे प्राणास्तदाश्रयाः
केशग्रहान्प्रहारांश्च शिरस्येतान्विवर्जयेत् ३५
न पाणिभ्यामुभाभ्यां च कण्डूयेज्जातु वै शिरः
न चाभीक्ष्णं शिरः स्नायात्तथास्यायुर्न रिष्यते ३६
शिरःस्नातश्च तैलेन नाङ्गं किंचिदुपस्पृशेत्
तिलपिष्टं न चाश्नीयात्तथायुर्विन्दते महत् ३७
नाध्यापयेत्तथोच्छिष्टो नाधीयीत कदाचन
वाते च पूतिगन्धे च मनसापि न चिन्तयेत् ३८
अत्र गाथा यमोद्गीताः कीर्तयन्ति पुराविदः
आयुरस्य निकृन्तामि प्रजामस्याददे तथा ३९
य उच्छिष्टः प्रवदति स्वाध्यायं चाधिगच्छति
यश्चानध्यायकालेऽपि मोहादभ्यस्यति द्विजः
तस्माद्युक्तोऽप्यनध्याये नाधीयीत कदाचन ४०
प्रत्यादित्यं प्रत्यनिलं प्रति गां च प्रति द्विजान्
ये मेहन्ति च पन्थानं ते भवन्ति गतायुषः ४१

उभे मूत्रपुरीषे तु दिवा कुर्यादुदङ्मुखः
दक्षिणाभिमुखो रात्रौ तथास्यायुर्न रिष्यते ४२
त्रीन्कृशान्नावजानीयाद्दीर्घमायुर्जिजीविषुः
ब्राह्मणं क्षत्रियं सर्पं सर्वे ह्याशीविषास्त्रयः ४३
दहत्याशीविषः क्रुद्धो यावत्पश्यति चक्षुषा
क्षत्रियोऽपि दहेत्क्रुद्धो यावत्स्पृशति तेजसा ४४
ब्राह्मणस्तु कुलं हन्याद्ध्यानेनावेक्षितेन च
तस्मादेतत्त्रयं यत्नादुपसेवेत पण्डितः ४५
गुरुणा वैरनिर्बन्धो न कर्तव्यः कदाचन
अनुमान्यः प्रसाद्यश्च गुरुः क्रुद्धो युधिष्ठिर ४६
सम्यङ्मिथ्याप्रवृत्तेऽपि वर्तितव्यं गुराविह
गुरुनिन्दा दहत्यायुर्मनुष्याणां न संशयः ४७
दूरादावसथान्मूत्रं दुरात्पादावसेचनम्
उच्छिष्टोत्सर्जनं चैव दूरे कार्यं हितैषिणा ४८
नातिकल्यं नातिसायं न च मध्यंदिने स्थिते
नाज्ञातैः सह गच्छेत नैको न वृषलैः सह ४९
पन्था देयो ब्राह्मणाय गोभ्यो राजभ्य एव च
वृद्धाय भारतप्ताय गर्भिण्यै दुर्बलाय च ५०
प्रदक्षिणं च कुर्वीत परिज्ञातान्वनस्पतीन्
चतुष्पथान्प्रकुर्वीत सर्वानेव प्रदक्षिणान् ५१
मध्यंदिने निशाकाले मध्यरात्रे च सर्वदा
चतुष्पथान्न सेवेत उभे संध्ये तथैव च ५२
उपानहौ च वस्त्रं च धृतमन्यैर्न धारयेत्
ब्रह्मचारी च नित्यं स्यात्पादं पादेन नाक्रमेत् ५३
अमावास्यां पौर्णमास्यां चतुर्दश्यां च सर्वशः
अष्टम्यां सर्वपक्षाणां ब्रह्मचारी सदा भवेत् ५४
वृथा मांसं न खादेत पृष्ठमांसं तथैव च
आक्रोशं परिवादं च पैशुन्यं च विवर्जयेत् ५५
नारुंतुदः स्यान्न नृशंसवादी न हीनतः परमभ्याददीत
ययास्य वाचा पर उद्विजेत न तां वदेद्रुशतीं पापलोक्याम् ५६

वाक्सायका वदनान्निष्पतन्ति यैराहतः शोचति रात्र्यहानि
परस्य नामर्मसु ते पतन्ति तान्पण्डितो नावसृजेत्परेषु ५७
रोहते सायकैर्विद्धं वनं परशुना हतम्
वाचा दुरुक्तं बीभत्सं न संरोहति वाक्क्षतम् ५८
हीनाङ्गानतिरिक्ताङ्गान्विद्याहीनान्वयोधिकान्
रूपद्रविणहीनांश्च सत्त्वहीनांश्च नाक्षिपेत् ५९
नास्तिक्यं वेदनिन्दां च देवतानां च कुत्सनम्
द्वेषस्तम्भाभिमानांश्च तैक्ष्ण्यं च परिवर्जयेत् ६०
परस्य दण्डं नोद्यच्छेत्क्रुद्धो नैनं निपातयेत्
अन्यत्र पुत्राच्छिष्याद्वा शिक्षार्थं ताडनं स्मृतम् ६१
न ब्राह्मणान्परिवदेन्नक्षत्राणि न निर्दिशेत्
तिथिं पक्षस्य न ब्रूयात्तथास्यायुर्न रिष्यते ६२
कृत्वा मूत्रपुरीषे तु रथ्यामाक्रम्य वा पुनः
पादप्रक्षालनं कुर्यात्स्वाध्याये भोजने तथा ६३
त्रीणि देवाः पवित्राणि ब्राह्मणानामकल्पयन्
अदृष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते ६४
संयावं कृसरं मांसं शष्कुली पायसं तथा
आत्मार्थं न प्रकर्तव्यं देवार्थं तु प्रकल्पयेत् ६५
नित्यमग्निं परिचरेद्भिक्षां दद्याच्च नित्यदा
वाग्यतो दन्तकाष्ठं च नित्यमेव समाचरेत्
न चाभ्युदितशायी स्यात्प्रायश्चित्ती तथा भवेत् ६६
मातापितरमुत्थाय पूर्वमेवाभिवादयेत्
आचार्यमथ वाप्येनं तथायुर्विन्दते महत् ६७
वर्जयेद्दन्तकाष्ठानि वर्जनीयानि नित्यशः
भक्षयेच्छास्त्रदृष्टानि पर्वस्वपि तु वर्जयेत् ६८
उदङ्मुखश्च सततं शौचं कुर्यात्समाहितः ६९
अकृत्वा देवतापूजां नान्यं गच्छेत्कदाचन
अन्यत्र तु गुरुं वृद्धं धार्मिकं वा विचक्षणम् ७०
अवलोक्यो न चादर्शो मलिनो बुद्धिमत्तरैः
न चाज्ञातां स्त्रियं गच्छेद्गर्भिणीं वा कदाचन ७१

उदक्शिरा न स्वपेत तथा प्रत्यक्शिरा न च
प्राक्शिरास्तु स्वपेद्विद्वानथ वा दक्षिणाशिराः ७२
न भग्ने नावदीर्णे वा शयने प्रस्वपेत च
नान्तर्धाने न संयुक्ते न च तिर्यक्कदाचन ७३
न नग्नः कर्हिचित्स्नायान्न निशायां कदाचन
स्नात्वा च नावमृज्येत गात्राणि सुविचक्षणः ७४
न चानुलिम्पेदस्नात्वा स्नात्वा वासो न निर्धुनेत्
आर्द्र एव तु वासांसि नित्यं सेवेत मानवः
स्रजश्च नावकर्षेत न बहिर्धारयेत च ७५
रक्तमाल्यं न धार्यं स्याच्छुक्लं धार्यं तु पण्डितैः
वर्जयित्वा तु कमलं तथा कुवलयं विभो ७६
रक्तं शिरसि धार्यं तु तथा वानेयमित्यपि
काञ्चनी चैव या माला न सा दुष्यति कर्हिचित्
स्नातस्य वर्णकं नित्यमार्द्रं दद्याद्विशां पते ७७
विपर्ययं न कुर्वीत वाससो बुद्धिमान्नरः
तथा नान्यधृतं धार्यं न चापदशमेव च ७८
अन्यदेव भवेद्वासः शयनीये नरोत्तम
अन्यद्रथ्यासु देवानामर्चायामन्यदेव हि ७९
प्रियङ्गुचन्दनाभ्यां च बिल्वेन तगरेण च
पृथगेवानुलिम्पेत केसरेण च बुद्धिमान् ८०
उपवासं च कुर्वीत स्नातः शुचिरलंकृतः
पर्वकालेषु सर्वेषु ब्रह्मचारी सदा भवेत् ८१
नालीढया परिहतं भक्षयीत कदाचन
तथा नोद्धृतसाराणि प्रेक्षतां नाप्रदाय च ८२
न संनिकृष्टो मेधावी नाशुचिर्न च सत्सु च
प्रतिषिद्धान्न धर्मेषु भक्षान्भुञ्जीत पृष्ठतः ८३
पिप्पलं च वटं चैव शणशाकं तथैव च
उदुम्बरं न खादेच्च भवार्थी पुरुषोत्तमः ८४
आजं गव्यं च यन्मांसं मायूरं चैव वर्जयेत्
वर्जयेच्छुष्कमांसं च तथा पर्युषितं च यत् ८५

न पाणौ लवणं विद्वान्प्राश्नीयान्न च रात्रिषु
दधिसक्तून्न भुञ्जीत वृथामांसं च वर्जयेत् ८६
वालेन तु न भुञ्जीत परश्राद्धं तथैव च
सायं प्रातश्च भुञ्जीत नान्तराले समाहितः ८७
वाग्यतो नैकवस्त्रश्च नासंविष्टः कदाचन
भूमौ सदैव नाश्नीयान्नानासीनो न शब्दवत् ८८
तोयपूर्वं प्रदायान्नमतिथिभ्यो विशां पते
पश्चाद्भुञ्जीत मेधावी न चाप्यन्यमना नरः ८९
समानमेकपङ्क्त्यां तु भोज्यमन्नं नरेश्वर
विषं हालाहलं भुङ्क्ते योऽप्रदाय सुहृज्जने ९०
पानीयं पायसं सर्पिर्दधिसक्तुमधून्यपि
निरस्य शेषमेतेषां न प्रदेयं तु कस्यचित् ९१
भुञ्जानो मनुजव्याघ्र नैव शङ्कां समाचरेत्
दधि चाप्यनुपानं वै न कर्तव्यं भवार्थिना ९२
आचम्य चैव हस्तेन परिस्राव्य तथोदकम्
अङ्गुष्ठं चरणस्याथ दक्षिणस्यावसेचयेत् ९३
पाणिं मूर्ध्नि समाधाय स्पृष्ट्वा चाग्निं समाहितः
ज्ञातिश्रैष्ठ्यमवाप्नोति प्रयोगकुशलो नरः ९४
अद्भिः प्राणान्समालभ्य नाभिं पाणितलेन च
स्पृशंश्चैव प्रतिष्ठेत न चाप्यार्द्रेण पाणिना ९५
अङ्गुष्ठस्यान्तराले च ब्राह्मं तीर्थमुदाहृतम्
कनिष्ठिकायाः पश्चात्तु देवतीर्थमिहोच्यते ९६
अङ्गुष्ठस्य च यन्मध्यं प्रदेशिन्याश्च भारत
तेन पित्र्याणि कुर्वीत स्पृष्ट्वापो न्यायतस्तथा ९७
परापवादं न ब्रूयान्नाप्रियं च कदाचन
न मन्युः कश्चिदुत्पाद्यः पुरुषेण भवार्थिना ९८
पतितैस्तु कथां नेच्छेद्दर्शनं चापि वर्जयेत्
संसर्गं च न गच्छेत तथायुर्विन्दते महत् ९९
न दिवा मैथुनं गच्छेन्न कन्यां न च बन्धकीम्
न चास्नातां स्त्रियं गच्छेत्तथायुर्विन्दते महत् १००

स्वे स्वे तीर्थे समाचम्य कार्ये समुपकल्पिते
त्रिः पीत्वापो द्विः प्रमृज्य कृतशौचो भवेन्नरः १०१
इन्द्रियाणि सकृत्स्पृश्य त्रिरभ्युक्ष्य च मानवः
कुर्वीत पित्र्यं दैवं च वेददृष्टेन कर्मणा १०२
ब्राह्मणार्थे च यच्छौचं तच्च मे शृणु कौरव
प्रवृत्तं च हितं चोक्त्वा भोजनाद्यन्तयोस्तथा १०३
सर्वशौचेषु ब्राह्मेण तीर्थेन समुपस्पृशेत्
निष्ठीव्य तु तथा क्षुत्वा स्पृश्यापो हि शुचिर्भवेत् १०४
वृद्धो ज्ञातिस्तथा मित्रं दरिद्रो यो भवेदपि
गृहे वासयितव्यास्ते धन्यमायुष्यमेव च १०५
गृहे पारावता धन्याः शुकाश्च सहसारिकाः
गृहेष्वेते न पापाय तथा वै तैलपायिकाः १०६
उद्दीपकाश्च गृध्राश्च कपोता भ्रमरास्तथा
निविशेयुर्यदा तत्र शान्तिमेव तदाचरेत् १०७
अमङ्गल्यानि चैतानि तथाक्रोशो महात्मनाम्
महात्मनां च गुह्यानि न वक्तव्यानि कर्हिचित् १०८
अगम्याश्च न गच्छेत राजपत्नीः सखीस्तथा
वैद्यानां बालवृद्धानां भृत्यानां च युधिष्ठिर १०९
बन्धूनां ब्राह्मणानां च तथा शारणिकस्य च
संबन्धिनां च राजेन्द्र तथायुर्विन्दते महत् ११०
ब्राह्मणस्थपतिभ्यां च निर्मितं यन्निवेशनम्
तदावसेत्सदा प्राज्ञो भवार्थी मनुजेश्वर १११
संध्यायां न स्वपेद्राजन्विद्यां न च समाचरेत्
न भुञ्जीत च मेधावी तथायुर्विन्दते महत् ११२
नक्तं न कुर्यात्पित्र्याणि भुक्त्वा चैव प्रसाधनम्
पानीयस्य क्रिया नक्तं न कार्या भूतिमिच्छता ११३
वर्जनीयाश्च वै नित्यं सक्तवो निशि भारत
शेषाणि चावदातानि पानीयं चैव भोजने ११४
सौहित्यं च न कर्तव्यं रात्रौ नैव समाचरेत्
द्विजच्छेदं न कुर्वीत भुक्त्वा न च समाचरेत् ११५

महाकुलप्रसूतां च प्रशस्तां लक्षणैस्तथा
वयस्थां च महाप्राज्ञ कन्यामावोढुमर्हति ११६
अपत्यमुत्पाद्य ततः प्रतिष्ठाप्य कुलं तथा
पुत्राः प्रदेया ज्ञानेषु कुलधर्मेषु भारत ११७
कन्या चोत्पाद्य दातव्या कुलपुत्राय धीमते
पुत्रा निवेश्याश्च कुलाद्भृत्या लभ्याश्च भारत ११८
शिरःस्नातोऽथ कुर्वीत दैवं पित्र्यमथापि च
नक्षत्रे न च कुर्वीत यस्मिञ्जातो भवेन्नरः
न प्रोष्ठपदयोः कार्यं तथाग्नेये च भारत ११९
दारुणेषु च सर्वेषु प्रत्यहं च विवर्जयेत्
ज्योतिषे यानि चोक्तानि तानि सर्वाणि वर्जयेत् १२०
प्राङ्मुखः श्मश्रुकर्माणि कारयेत समाहितः
उदङ्मुखो वा राजेन्द्र तथायुर्विन्दते महत् १२१
परिवादं न च ब्रूयात्परेषामात्मनस्तथा
परिवादो न धर्माय प्रोच्यते भरतर्षभ १२२
वर्जयेद्व्यङ्गिनीं नारीं तथा कन्यां नरोत्तम
समार्षां व्यङ्गितां चैव मातुः स्वकुलजां तथा १२३
वृद्धां प्रव्रजितां चैव तथैव च पतिव्रताम्
तथातिकृष्णवर्णां च वर्णोत्कृष्टां च वर्जयेत् १२४
अयोनिं च वियोनिं च न गच्छेत विचक्षणः
पिङ्गलां कुष्ठिनिं नारीं न त्वमावोढुमर्हसि १२५
अपस्मारिकुले जातां निहीनां चैव वर्जयेत्
श्वित्रिणां च कुले जातां त्रयाणां मनुजेश्वर १२६
लक्षणैरन्विता या च प्रशस्ता या च लक्षणैः
मनोज्ञा दर्शनीया च तां भवान्वोढुमर्हति १२७
महाकुले निवेष्टव्यं सदृशे वा युधिष्ठिर
अवरा पतिता चैव न ग्राह्या भूतिमिच्छता १२८
अग्नीनुत्पाद्य यत्नेन क्रियाः सुविहिताश्च याः
वेदेषु ब्राह्मणैः प्रोक्तास्ताश्च सर्वाः समाचरेत् १२९
न चेर्ष्या स्त्रीषु कर्तव्या दारा रक्ष्याश्च सर्वशः

अनायुष्या भवेदीर्ष्या तस्मादीर्ष्यां विवर्जयेत् १३०
अनायुष्यो दिवास्वप्नस्तथाभ्युदितशायिता
प्रातर्निशायां च तथा ये चोच्छिष्टाः स्वपन्ति वै १३१
पारदार्यमनायुष्यं नापितोच्छिष्टता तथा
यत्नतो वै न कर्तव्यमभ्यासश्चैव भारत १३२
संध्यां न भुञ्जेन्न स्नायान्न पुरीषं समुत्सृजेत्
प्रयतश्च भवेत्तस्यां न च किंचित्समाचरेत् १३३
ब्राह्मणान्पूजयेच्चापि तथा स्नात्वा नराधिप
देवांश्च प्रणमेत्स्नातो गुरूंश्चाप्यभिवादयेत् १३४
अनिमन्त्रितो न गच्छेत यज्ञं गच्छेत्तु दर्शकः
अनिमन्त्रिते ह्यनायुष्यं गमनं तत्र भारत १३५
न चैकेन परिव्राज्यं न गन्तव्यं तथा निशि
अनागतायां संध्यायां पश्चिमायां गृहे वसेत् १३६
मातुः पितुर्गुरूणां च कार्यमेवानुशासनम्
हितं वाप्यहितं वापि न विचार्यं नरर्षभ १३७
धनुर्वेदे च वेदे च यत्नः कार्यो नराधिप
हस्तिपृष्ठेऽश्वपृष्ठे च रथचर्यासु चैव ह
यत्नवान्भव राजेन्द्र यत्नवान्सुखमेधते १३८
अप्रधृष्यश्च शत्रूणां भृत्यानां स्वजनस्य च
प्रजापालनयुक्तश्च न क्षतिं लभते क्वचित् १३९
युक्तिशास्त्रं च ते ज्ञेयं शब्दशास्त्रं च भारत
गन्धर्वशास्त्रं च कलाः परिज्ञेया नराधिप १४०
पुराणमितिहासाश्च तथाख्यानानि यानि च
महात्मनां च चरितं श्रोतव्यं नित्यमेव ते १४१
पत्नीं रजस्वलां चैव नाभिगच्छेन्न चाह्वयेत्
स्नातां चतुर्थे दिवसे रात्रौ गच्छेद्विचक्षणः १४२
पञ्चमे दिवसे नारी षष्ठेऽहनि पुमान्भवेत्
एतेन विधिना पत्नीमुपगच्छेत पण्डितः १४३
ज्ञातिसंबन्धिमित्राणि पूजनीयानि नित्यशः
यष्टव्यं च यथाशक्ति यज्ञैर्विविधदक्षिणैः

अतऊर्ध्वमरण्यं च सेवितव्यं नराधिप १४४
एष ते लक्षणोद्देश आयुष्याणां प्रकीर्तितः
शेषस्त्रैविद्यवृद्धेभ्यः प्रत्याहार्यो युधिष्ठिर १४५
आचारो भूतिजनन आचारः कीर्तिवर्धनः
आचाराद्वर्धते ह्यायुराचारो हन्त्यलक्षणम् १४६
आगमानां हि सर्वेषामाचारः श्रेष्ठ उच्यते
आचारप्रभवो धर्मो धर्मादायुर्विवर्धते १४७
एतद्यशस्यमायुष्यं स्वर्ग्यं स्वस्त्ययनं महत्
अनुकम्पता सर्ववर्णान्ब्रह्मणा समुदाहृतम् १४८
इति श्रीमहाभारते अनुशासनपर्वणि सप्ताधिकशततमोऽध्यायः १०७

## अष्टोत्तर शततमोऽध्यायः

युधिष्ठिर उवाच
यथा ज्येष्ठः कनिष्ठेषु वर्तते भरतर्षभ
कनिष्ठाश्च यथा ज्येष्ठे वर्तेरंस्तद्ब्रवीहि मे १
भीष्म उवाच
ज्येष्ठवत्तात वर्तस्व ज्येष्ठो हि सततं भवान्
गुरोर्गरीयसी वृत्तिर्या चेच्छिष्यस्य भारत २
न गुरावकृतप्रज्ञे शक्यं शिष्येण वर्तितुम्
गुरोर्हि दीर्घदर्शित्वं यत्तच्छिष्यस्य भारत ३
अन्धः स्यादन्धवेलायां जडः स्यादपि वा बुधः
परिहारेण तद्ब्रूयाद्यस्तेषां स्याद्व्यतिक्रमः ४
प्रत्यक्षं भिन्नहृदया भेदयेयुः कृतं नराः
श्रियाभितप्ताः कौन्तेय भेदकामास्तथारयः ५
ज्येष्ठः कुलं वर्धयति विनाशयति वा पुनः
हन्ति सर्वमपि ज्येष्ठः कुलं यत्रावजायते ६
अथ यो विनिकुर्वीत ज्येष्ठो भ्राता यवीयसः
अज्येष्ठः स्यादभागश्च नियम्यो राजभिश्च सः ७
निकृती हि नरो लोकान्पापान्गच्छत्यसंशयम्
विदुलस्येव तत्पुष्पं मोघं जनयितुः स्मृतम् ८

सर्वानर्थः कुले यत्र जायते पापपूरुषः
अकीर्तिं जनयत्येव कीर्तिमन्तर्दधाति च ९
सर्वे चापि विकर्मस्था भागं नार्हन्ति सोदराः
नाप्रदाय कनिष्ठेभ्यो ज्येष्ठः कुर्वीत यौतकम् १०
अनुजं हि पितुर्दायो जङ्घाश्रमफलोऽध्वगः
स्वयमीहितलब्धं तु नाकामो दातुमर्हति ११
भ्रातॄणामविभक्तानामुत्थानमपि चेत्सह
न पुत्रभागं विषमं पिता दद्यात्कथंचन १२
न ज्येष्ठानवमन्येत दुष्कृतः सुकृतोऽपि वा
यदि स्त्री यद्यवरजः श्रेयः पश्येत्तथाचरेत्
धर्मं ह श्रेय इत्याहुरिति धर्मविदो विदुः १३
दशाचार्यानुपाध्याय उपाध्यायान्पिता दश
दश चैव पितॄन्माता सर्वां वा पृथिवीमपि १४
गौरवेणाभिभवति नास्ति मातृसमो गुरुः
माता गरीयसी यच्च तेनैतां मन्यते जनः १५
ज्येष्ठो भ्राता पितृसमो मृते पितरि भारत
स ह्येषां वृत्तिदाता स्यात्स चैतान्परिपालयेत् १६
कष्ठिस्तं नमस्येरन्सर्वे छन्दानुवर्तिनः
तमेव चोपजीवेरन्यथैव पितरं तथा १७
शरीरमेतौ सृजतः पिता माता च भारत
आचार्यशास्ता या जातिः सा सत्या साजरामरा १८
ज्येष्ठा मातृसमा चापि भगिनी भरतर्षभ
भ्रातुर्भार्या च तद्वत्स्याद्यस्या बाल्ये स्तनं पिबेत् १९
इति श्रीमहाभारते अनुशासनपर्वणि अष्टोत्तरशततमोऽध्यायः १०८

## नवाधिक शततमोऽध्यायः

युधिष्ठिर उवाच
सर्वेषामेव वर्णानां म्लेच्छानां च पितामह
उपवासे मतिरियं कारणं च न विद्महे १
ब्रह्मक्षत्रेण नियमाश्चर्तव्या इति नः श्रुतम्

उपवासे कथं तेषां कृत्यमस्ति पितामह २
नियमं चोपवासानां सर्वेषां ब्रूहि पार्थिव
अवाप्नोति गतिं कां च उपवासपरायणः ३
उपवासः परं पुण्यमुपवासः परायणम्
उपोष्येह नरश्रेष्ठ किं फलं प्रतिपद्यते ४
अधर्मान्मुच्यते केन धर्ममाप्नोति वै कथम्
स्वर्गं पुण्यं च लभते कथं भरतसत्त ५
उपोष्य चापि किं तेन प्रदेयं स्यान्नराधिप
धर्मेण च सुखानर्थाल्लँभेद्येन ब्रवीहि तम् ६
वैशम्पायन उवाच
एवं ब्रुवाणं कौन्तेयं धर्मज्ञं धर्मतत्त्ववित्
धर्मपुत्रमिदं वाक्यं भीष्मः शांतनवोऽब्रवीत् ७
इदं खलु महाराज श्रुतमासीत्पुरातनम्
उपवासविधौ श्रेष्ठा ये गुणा भरतर्षभ ८
प्राजापत्यं ह्यङ्गिरसं पृष्टवानस्मि भारत
यथा मां त्वं तथैवाहं पृष्टवांस्तं तपोधनम् ९
प्रश्नमेतं मया पृष्टो भगवानग्निसंभवः
उपवासविधिं पुण्यमाचष्ट भरतर्षभ १०
अङ्गिरा उवाच
ब्रह्मक्षत्रे त्रिरात्रं तु विहितं कुरुनन्दन
द्विस्त्रिरात्रमथैवात्र निर्दिष्टं पुरुषर्षभ ११
वैश्यशूद्रौ तु यौ मोहादुपवासं प्रकुर्वते
त्रिरात्रं द्विस्त्रिरात्रं वा तयोः पुष्टिर्न विद्यते १२
चतुर्थ भक्त क्षपणं वैश्यशूद्रे विधीयते
त्रिरात्रं न तु धर्मज्ञैर्विहितं ब्रह्मवादिभिः १३
पञ्चम्यां चैव षष्ठ्यां च पौर्णमास्यां च भारत
क्षमावान्रूपसंपन्नः श्रुतवांश्चैव जायते १४
नानपत्यो भवेत्प्राज्ञो दरिद्रो वा कदाचन
यजिष्णुः पञ्चमीं षष्ठीं क्षपेद्यो भोजयेद्द्विजान् १५
अष्टमीमथ कौन्तेय शुक्लपक्षे चतुर्दशीम्

उपोष्य व्याधिरहितो वीर्यवानभिजायते १६
मार्गशीर्षं तु यो मासमेकभक्तेन संक्षिपेत्
भोजयेच्च द्विजान्भक्त्या स मुच्येद्व्याधिकिल्विषैः १७
सर्वकल्याणसंपूर्णः सर्वौषधिसमन्वितः
कृषिभागी बहुधनो बहुपुत्रश्च जायते १८
पौषमासं तु कौन्तेय भक्तेनैकेन यः क्षपेत्
सुभगो दर्शनीयश्च यशोभागी च जायते १९
पितृभक्तो माघमासमेकभक्तेन यः क्षपेत्
श्रीमत्कुले ज्ञातिमध्ये स महत्त्वं प्रपद्यते २०
भगदैवं तु यो मासमेकभक्तेन यः क्षपेत्
स्त्रीषु वल्लभतां याति वश्याश्चास्य भवन्ति ताः २१
चैत्रं तु नियतो मासमेकभक्तेन यः क्षपेत्
सुवर्णमणिमुक्ताढ्ये कुले महति जायते २२
निस्तरेदेकभक्तेन वैशाखं यो जितेन्द्रियः
नरो वा यदि वा नारी ज्ञातीनां श्रेष्ठतां व्रजेत् २३
ज्येष्ठामूलं तु यो मासमेकभक्तेन संक्षपेत्
एश्वर्यमतुलं श्रेष्ठं पुमान्स्त्री वाभिजायते २४
आषाढमेकभक्तेन स्थित्वा मासमतन्द्रितः
बहुधान्यो बहुधनो बहुपुत्रश्च जायते २५
श्रावणं नियतो मासमेकभक्तेन यः क्षपेत्
यत्र तत्राभिषेकेण युज्यते ज्ञातिवर्धनः २६
प्रौष्ठपदं तु यो मासमेकाहारो भवेन्नरः
धनाढ्यं स्फीतमचलमैश्वर्यं प्रतिपद्यते २७
तथैवाश्वयुजं मासमेकभक्तेन यः क्षपेत्
प्रजावान्वाहनाढ्यश्च बहुपुत्रश्च जायते २८
कार्त्तिकं तु नरो मासं यः कुर्यादेकभोजनम्
शूरश्च बहुभार्यश्च कीर्तिमांश्चैव जायते २९
इति मासा नरव्याघ्र क्षपतां परिकीर्तिताः
तिथीनां नियमा ये तु शृणु तानपि पार्थिव ३०
पक्षे पक्षे गते यस्तु भक्तमश्नाति भारत

गवाढ्यो बहुपुत्रश्च दीर्घायुश्च स जायते ३१
मासि मासि त्रिरात्राणि कृत्वा वर्षाणि द्वादश
गणाधिपत्यं प्राप्नोति निःसपत्नमनाविलम् ३२
एते तु नियमाः सर्वे कर्तव्याः शरदो दश
द्वे चान्ये भरतश्रेष्ठ प्रवृत्तिमनुवर्तता ३३
यस्तु प्रातस्तथा सायं भुञ्जानो नान्तरा पिबेत्
अहिंसानिरतो नित्यं जुह्वानो जातवेदसम् ३४
षड्भिः स वर्षैर्नृपते सिध्यते नात्र संशयः
अग्निष्टोमस्य यज्ञस्य फलं प्राप्नोति मानवः ३५
अधिवासे सोऽप्सरसां नृत्यगीतविनादिते
तप्तकाञ्चनवर्णाभं विमानमधिरोहति ३६
पूर्णं वर्षसहस्रं तु ब्रह्मलोके महीयते
तत्क्षयादिह चागम्य माहात्म्यं प्रतिपद्यते ३७
यस्तु संवत्सरं पूर्णमेकाहारो भवेन्नरः
अतिरात्रस्य यज्ञस्य स फलं समुपाश्नुते ३८
दशवर्षसहस्राणि स्वर्गे च स महीयते
तत्क्षयादिह चागम्य माहात्म्यं प्रतिपद्यते ३९
यस्तु संवत्सरं पूर्णं चतुर्थं भक्तमश्नुते
अहिंसानिरतो नित्यं सत्यवाङ्नियतेन्द्रियः ४०
वाजपेयस्य यज्ञस्य फलं वै समुपाश्नुते
त्रिंशद्वर्षसहस्राणि स्वर्गे च स महीयते ४१
षष्ठे काले तु कौन्तेय नरः संवत्सरं क्षपेत्
अश्वमेधस्य यज्ञस्य फलं प्राप्नोति मानवः ४२
चक्रवाकप्रयुक्तेन विमानेन स गच्छति
चत्वारिंशत्सहस्राणि वर्षाणां दिवि मोदते ४३
अष्टमेन तु भक्तेन जीवन्संवत्सरं नृप
गवामयस्य यज्ञस्य फलं प्राप्नोति मानवः ४४
हंससारसयुक्तेन विमानेन स गच्छति
पञ्चाशतं सहस्राणि वर्षाणां दिवि मोदते ४५
पक्षे पक्षे गते राजन्योऽश्नीयाद्वर्षमेव तु

षरामासानशनं तस्य भगवानङ्गिराब्रवीत्
षष्टिं वर्षसहस्राणि दिवमावसते च सः ४६
वीणानां वल्लकीनां च वेणूनां च विशां पते
सुघोषैर्मधुरैः शब्दैः सुप्तः स प्रतिबोध्यते ४७
संवत्सरमिहैकं तु मासि मासि पिबेत्पयः
फलं विश्वजितस्तात प्राप्नोति स नरो नृप ४८
सिंहव्याघ्रप्रयुक्तेन विमानेन स गच्छति
सप्ततिं च सहस्राणि वर्षाणां दिवि मोदते ४९
मासादूर्ध्वं नरव्याघ्र नोपवासो विधीयते
विधिं त्वनशनस्याहुः पार्थ धर्मविदो जनाः ५०
अनार्तो व्याधिरहितो गच्छेदनशनं तु यः
पदे पदे यज्ञफलं स प्राप्नोति न संशयः ५१
दिवं हंसप्रयुक्तेन विमानेन स गच्छति
शतं चाप्सरसः कन्या रमयन्त्यपि तं नरम् ५२
आर्तो वा व्याधितो वापि गच्छेदनशनं तु यः
शतं वर्षसहस्राणां मोदते दिवि स प्रभो
काञ्चीनूपुरशब्देन सुप्तश्चैव प्रबोध्यते ५३
सहस्रहंससंयुक्ते विमाने सोमवर्चसि
स गत्वा स्त्रीशताकीर्णे रमते भरतर्षभ ५४
क्षीणस्याप्यायनं दृष्टं क्षतस्य क्षतरोहणम्
व्याधितस्यौषधग्रामः क्रुद्धस्य च प्रसादनम् ५५
दुःखितस्यार्थमानाभ्यां द्रव्याणां प्रतिपादनम्
न चैते स्वर्गकामस्य रोचन्ते सुखमेधसः ५६
अतः स कामसंयुक्तो विमाने हेमसंनिभे
रमते स्त्रीशताकीर्णे पुरुषोऽलकृतः शुभे ५७
स्वस्थः सफलसंकल्पः सुखी विगतकल्मषः
अनश्नन्देहमुत्सृज्य फलं प्राप्नोति मानवः ५८
बालसूर्यप्रतीकाशे विमाने हेमवर्चसि
वैडूर्यमुक्ताखचिते वीणामुरजनादिते ५९
पताकादीपिकाकीर्णे दिव्यघराटानिनादिते

स्त्रीसहस्रानुचरिते स नरः सुखमेधते ६०
यावन्ति रोमकूपाणि तस्य गात्रेषु पाण्डव
तावन्त्येव सहस्राणि वर्षाणां दिवि मोदते ६१
नास्ति वेदात्परं शास्त्रं नास्ति मातृसमो गुरुः
न धर्मात्परमो लाभस्तपो नानशनात्परम् ६२
ब्राह्मणेभ्यः परं नास्ति पावनं दिवि चेह च
उपवासैस्तथा तुल्यं तपःकर्म न विद्यते ६३
उपोष्य विधिवद्देवास्त्रिदिवं प्रतिपेदिरे
ऋषयश्च परां सिद्धिमुपवासैरवाप्नुवन् ६४
दिव्यं वर्षसहस्रं हि विश्वामित्रेण धीमता
क्षान्तमेकेन भक्तेन तेन विप्रत्वमागतः ६५
च्यवनो जमदग्निश्च वशिष्ठो गौतमो भृगुः
सर्व एव दिवं प्राप्ताः क्षमावन्तो महर्षयः ६६
इदमङ्गिरसा पूर्वं महर्षिभ्यः प्रदर्शितम्
यः प्रदर्शयते नित्यं न स दुःखमवाप्नुते ६७
इमं तु कौन्तेय यथाक्रमं विधिं प्रवर्तितं ह्यङ्गिरसा महर्षिणा
पठेत यो वै शृणुयाच्च नित्यदा न विद्यते तस्य नरस्य किल्बिषम् ६८
विमुच्यते चापि स सर्वसंकरैर्न चास्य दोषैरभिभूयते मनः
वियोनिजानां च विजानते रुतं ध्रुवां च कीर्तिं लभते नरोत्तमः ६९
इति श्रीमहाभारते अनुशासनपर्वणि नवाधिकशततमोऽध्यायः१०९

## दशाधिकशततमोऽध्यायः

युधिष्ठिर उवाच
पितामहेन विधिवद्यज्ञाः प्रोक्ता महात्मना
गुणाश्चैषां यथातत्त्वं प्रेत्य चेह च सर्वशः १
न ते शक्या दरिद्रेण यज्ञाः प्राप्तुं पितामह
बहूपकरणा यज्ञा नानासंभारविस्तराः २
पार्थिवै राजपुत्रैर्वा शक्याः प्राप्तुं पितामह
नार्थन्यूनैरवगुणैरेकात्मभिरसंहतैः ३
यो दरिद्रैरपि विधिः शक्यः प्राप्तुं सदा भवेत्

तुल्यो यज्ञफलैरेतैस्तन्मे ब्रूहि पितामह ४
भीष्म उवाच
इदमङ्गिरसा प्रोक्तमुपवासफलात्मकम्
विधिं यज्ञफलैस्तुल्यं तन्निबोध युधिष्ठिर ५
यस्तु कल्यं तथा सायं भुञ्जानो नान्तरा पिबेत्
अहिंसानिरतो नित्यं जुह्वानो जातवेदसम् ६
षडिभरेव तु वर्षैः स सिध्यते नात्र संशयः
तप्तकाञ्चनवर्णं च विमानं लभते नरः ७
देवस्त्रीणामधीवासे नृत्यगीतनिनादिते
प्राजापत्ये वसेत्पद्मं वर्षाणामग्निसंनिभे ८
त्रीणि वर्षाणि यः प्राशेत्सततं त्वेकभोजनम्
धर्मपत्नीरतो नित्यमग्निष्टोमफलं लभेत् ९
द्वितीये दिवसे यस्तु प्राश्नीयादेकभोजनम्
सदा द्वादशमासांस्तु जुह्वानो जातवेदसम्
यज्ञं बहुसुवर्णं वा वासवप्रियमाहरेत् १०
सत्यवाग्दानशीलश्च ब्रह्मण्यश्चानसूयकः
क्षान्तो दान्तो जितक्रोधः स गच्छति परां गतिम् ११
पाण्डुराभ्रप्रतीकाशे विमाने हंसलक्षणे
द्वे समाप्ते ततः पद्मे सोऽप्सरोभिर्वसेत्सह १२
तृतीये दिवसे यस्तु प्राश्नीयादेकभोजनम्
सदा द्वादशमासांस्तु जुह्वानो जातवेदसम् १३
अतिरात्रस्य यज्ञस्य फलं प्राप्नोत्यनुत्तमम्
मयूरहंससंयुक्तं विमानं लभते नरः १४
सप्तर्षीणां सदा लोके सोऽप्सरोभिर्वसेत्सह
निवर्तनं च तत्रास्य त्रीणि पद्मानि वै विदुः १५
दिवसे यश्चतुर्थे तु प्राश्नीयादेकभोजनम्
सदा द्वादशमासान्वै जुह्वानो जातवेदसम् १६
वाजपेयस्य यज्ञस्य फलं प्राप्नोत्यनुत्तमम्
इन्द्रकन्याभिरूढं च विमानं लभते नरः १७
सागरस्य च पर्यन्ते वासवं लोकमावसेत्

देवराजस्य च क्रीडां नित्यकालमवेक्षते १८
दिवसे पञ्चमे यस्तु प्राश्नीयादेकभोजनम्
सदा द्वादशमासांस्तु जुह्वानो जातवेदसम् १९
अलुब्धः सत्यवादी च ब्रह्मण्यश्चाविहिंसकः
अनसूयुरपापस्थो द्वादशाहफलं लभेत् २०
जाम्बूनदमयं दिव्यं विमानं हंसलक्षणम्
सूर्यमालासमाभासमारोहेत्पाण्डुरं गृहम् २१
आवर्तनानि चत्वारि तथा पद्मानि द्वादश
शराग्निपरिमाणं च तत्रासौ वसते सुखम् २२
दिवसे यस्तु षष्ठे वै मुनिः प्राशेत भोजनम्
सदा द्वादशमासान्वै जुह्वानो जातवेदसम् २३
सदा त्रिषवणस्नायी ब्रह्मचार्यनसूयकः
गवामयस्य यज्ञस्य फलं प्राप्नोत्यनुत्तमम् २४
अग्निज्वालासमाभासं हंसबर्हिणसेवितम्
शातकुम्भमयं युक्तं साधयेद्यानमुत्तमम् २५
तथैवाप्सरसामङ्के प्रसुप्तः प्रतिबुध्यते
नूपुराणां निनादेन मेखलानां च निस्वनैः २६
कोटीसहस्रं वर्षाणां त्रीणि कोटिशतानि च
पद्मान्यष्टादश तथा पताके द्वे तथैव च २७
अयुतानि च पञ्चाशदृक्षचर्मशतस्य च
लोम्नां प्रमाणेन समं ब्रह्मलोके महीयते २८
दिवसे सप्तमे यस्तु प्राश्नीयादेकभोजनम्
सदा द्वादशमासान्वै जुह्वानो जातवेदसम् २९
सरस्वतीं गोपयानो ब्रह्मचर्यं समाचरन्
सुमनोवर्णकं चैव मधुमांसं च वर्जयेत् ३०
पुरुषो मरुतां लोकमिन्द्रलोकं च गच्छति
तत्र तत्र च सिद्धार्थो देवकन्याभिरुह्यते ३१
फलं बहुसुवर्णस्य यज्ञस्य लभते नरः
संख्यामतिगुणां चापि तेषु लोकेषु मोदते ३२
यस्तु संवत्सरं क्षान्तो भुङ्क्तेऽहन्यष्टमे नरः

देवकार्यपरो नित्यं जुह्वानो जातवेदसम् ३३
पौण्डरीकस्य यज्ञस्य फलं प्राप्नोत्यनुत्तमम्
पद्मवर्णनिभं चैव विमानमधिरोहति ३४
कृष्णाः कनकगौर्यश्च नार्यः श्यामास्तथापराः
वयोरूपविलासिन्यो लभते नात्र संशयः ३५
यस्तु संवत्सरं भुङ्क्ते नवमे नवमेऽहनि
सदा द्वादशमासान्वै जुह्वानो जातवेदसम् ३६
अश्वमेधस्य यज्ञस्य फलं प्राप्नोति मानवः
पुण्डरीकप्रकाशं च विमानं लभते नरः ३७
दीप्तसूर्याग्नितेजोभिर्दिव्यमालाभिरेव च
नियते रुद्रकन्याभिः सोऽन्तरिक्षं सनातनम् ३८
अष्टादशसहस्राणि वर्षाणां कल्पमेव च
कोटीशतसहस्रं च तेषु लोकेषु मोदते ३९
यस्तु संवत्सरं भुङ्क्ते दशाहे वै गते गते
सदा द्वादशमासान्वै जुह्वानो जातवेदसम् ४०
ब्रह्मकन्यानिवेशे च सर्वभूतमनोहरे
अश्वमेधसहस्रस्य फलं प्राप्नोत्यनुत्तमम् ४१
रूपवत्यश्च तं कन्या रमयन्ति सदा नरम्
नीलोत्पलनिभैर्वर्णै रक्तोत्पलनिभैस्तथा ४२
विमानं मण्डलावर्तमावर्तगहनावृतम्
सागरोर्मिप्रतीकाशं साधयेद्यानमुत्तमम् ४३
विचित्रमणिमालाभिर्नादितं शङ्खपुष्करैः
स्फाटिकैर्वज्रसारैश्च स्तम्भैः सुकृतवेदिकम्
आरोहति महद्यानं हंससारसवाहनम् ४४
एकादशे तु दिवसे यः प्राप्ते प्राशते हविः
सदा द्वादशमासान्वै जुह्वानो जातवेदसम् ४५
परस्त्रियो नाभिलषेद्वाचाथ मनसापि वा
अनृतं च न भाषेत मातापित्रोः कृतेऽपि वा ४६
अभिगच्छेन्महादेवं विमानस्थं महाबलम्
स्वयंभुवं च पश्येत विमानं समुपस्थितम् ४७

कुमार्यः काञ्चनाभासा रूपवत्यो नयन्ति तम्
रुद्राणां तमधीवासं दिवि दिव्यं मनोहरम् ४८
वर्षाण्यपरिमेयानि युगान्तमपि चावसेत्
कोटीशतसहस्रं च दश कोटिशतानि च ४९
रुद्रं नित्यं प्रणमते देवदानवसंमतम्
स तस्मै दर्शनं प्राप्तो दिवसे दिवसे भवेत् ५०
दिवसे द्वादशे यस्तु प्राप्ते वै प्राशते हविः
सदा द्वादशमासान्वै सर्वमेधफलं लभेत् ५१
आदित्यैर्द्वादशैस्तस्य विमानं संविधीयते
मणिमुक्ताप्रवालैश्च महार्हैरुपशोभितम् ५२
हंसमालापरिक्षिप्तं नागवीथीसमाकुलम्
मयूरैश्चक्रवाकैश्च कूजद्भिरुपशोभितम् ५३
अट्टैर्महद्भिः संयुक्तं ब्रह्मलोके प्रतिष्ठितम्
नित्यमावसते राजन्नरनारीसमावृतम्
ऋषिरेवं महाभागस्त्वङ्गिरा प्राह धर्मवित् ५४
त्रयोदशे तु दिवसे यः प्राप्ते प्राशते हविः
सदा द्वादश मासान्वै देवसत्रफलं लभेत् ५५
रक्तपद्मोदयं नाम विमानं साधयेन्नरः
जातरूपप्रयुक्तं च रत्नसंचयभूषितम् ५६
देवकन्याभिराकीर्णं दिव्याभरणभूषितम्
पुण्यगन्धोदयं दिव्यं वायव्यैरुपशोभितम् ५७
तत्र शङ्कुपताकं च युगान्तं कल्पमेव च
अयुतायुतं तथा पद्मं समुद्रं च तथा वसेत् ५८
गीतगन्धर्वघोषैश्च भेरीपणवनिस्वनैः
सदा प्रमुदितस्ताभिर्देवकन्याभिरिड्यते ५९
चतुर्दशे तु दिवसे यः पूर्णे प्राशते हविः
सदा द्वादश मासान्वै महामेधफलं लभेत् ६०
अनिर्देश्यवयोरूपा देवकन्याः स्वलंकृताः
मृष्टतप्ताङ्गदधरा विमानैरनुयान्ति तम् ६१
कलहंसविनिर्घोषैर्नूपुराणां च निस्वनैः

काञ्चीनां च समुत्कर्षैस्तत्र तत्र विबोध्यते ६२
देवकन्यानिवासे च तस्मिन्वसति मानवः
जाह्नवीवालुकाकीर्णे पूर्णं संवत्सरं नरः ६३
यस्तु पक्षे गते भुङ्क्ते एकभक्तं जितेन्द्रियः
सदा द्वादश मासांस्तु जुह्वानो जातवेदसम्
राजसूयसहस्रस्य फलं प्राप्नोत्यनुत्तमम् ६४
यानमारोहते नित्यं हंसबर्हिणसेवितम्
मणिमण्डलकैश्चित्रं जातरूपसमावृतम् ६५
दिव्याभरणशोभाभिर्वरस्त्रीभिरलंकृतम्
एकस्तम्भं चतुर्द्वारं सप्तभौमं सुमङ्गलम्
वैजयन्तीसहस्रैश्च शोभितं गीतनिस्वनैः ६६
दिव्यं दिव्यगुणोपेतं विमानमधिरोहति
मणिमुक्ताप्रवालैश्च भूषितं वैद्युतप्रभम्
वसेद्युगसहस्रं च खड्गकुञ्जरवाहनः ६७
षोडशे दिवसे यस्तु संप्राप्ते प्राशते हविः
सदा द्वादश मासान्वै सोमयज्ञफल लभेत् ६८
सोमकन्यानिवासेषु सोऽध्यावसति नित्यदा
सौम्यगन्धानुलिप्तश्च कामचारगतिर्भवेत् ६९
सुदर्शनाभिर्नारीभिर्मधुराभिस्तथैव च
अर्च्यते वै विमानस्थः कामभोगैश्च सेव्यते ७०
फलं पद्मशतप्रख्यं महाकल्पं दशाधिकम्
आवर्तनानि चत्वारि सागरे यात्यसौ नरः ७१
दिवसे सप्तदशमे यः प्राप्ते प्राशते हविः
सदा द्वादश मासान्वै जुह्वानो जातवेदसम् ७२
स्थानं वारुणमैन्द्रं च रौद्रं चैवाधिगच्छति
मारुतौशनसे चैव ब्रह्मलोकं च गच्छति ७३
तत्र दैवतकन्याभिरासनेनोपचर्यते
भूर्भुवं चापि देवर्षिं विश्वरूपमवेक्षते ७४
तत्र देवाधिदेवस्य कुमार्यो रमयन्ति तम्
द्वात्रिंशद्रूपधारिण्यो मधुराः समलंकृताः ७५

चन्द्रादित्यावुभौ यावद्गगने चरतः प्रभो
तावच्चरत्यसौ वीरः सुधामृतरसाशनः ७६
अष्टादशे तु दिवसे प्राश्नीयादेकभोजनम्
सदा द्वादश मासान्वै सप्त लोकान्स पश्यति ७७
रथैः सनन्दिघोषैश्च पृष्ठतः सोऽनुगम्यते
देवकन्याधिरूढैस्तु भ्राजमानैः स्वलंकृतैः ७८
व्याघ्रसिंहप्रयुक्तं च मेघस्वननिनादितम्
विमानमुत्तमं दिव्यं सुसुखी ह्यधिरोहति ७९
तत्र कल्पसहस्रं स कन्याभिः सह मोदते
सुधारसं च भुञ्जीत अमृतोपममुत्तमम् ८०
एकोनविंशे दिवसे यो भुङ्क्ते एकभोजनम्
सदा द्वादश मासान्वै सप्त लोकान्स पश्यति ८१
उत्तमं लभते स्थानमप्सरोगणसेवितम्
गन्धर्वैरुपगीतं च विमानं सूर्यवर्चसम् ८२
तत्रामरवरस्त्रीभिर्मोदते विगतज्वरः
दिव्याम्बरधरः श्रीमानयुतानां शतं समाः ८३
पूर्णेऽथ दिवसे विंशे यो भुङ्क्ते ह्येकभोजनम्
सदा द्वादश मासांस्तु सत्यवादी धृतव्रतः ८४
अमांसाशी ब्रह्मचारी सर्वभूतहिते रतः
स लोकान्विपुलान्दिव्यानादित्यानामुपाश्नुते ८५
गन्धर्वैरप्सरोभिश्च दिव्यमाल्यानुलेपनैः
विमानैः काञ्चनैर्दिव्यैः पृष्ठतश्चानुगम्यते ८६
एकविंशे तु दिवसे यो भुङ्क्ते ह्येकभोजनम्
सदा द्वादश मासान्वै जुह्वानो जातवेदसम् ८७
लोकमौशनसं दिव्यं शक्रलोकं च गच्छति
अश्विनोर्मरुतां चैव सुखेष्वभिरतः सदा ८८
अनभिज्ञश्च दुःखानां विमानवरमास्थितः
सेव्यमानो वरस्त्रीभिः क्रीडत्यमरवत्प्रभुः ८९
द्वाविंशे दिवसे प्राप्ते यो भुङ्क्ते ह्येकभोजनम्
सदा द्वादश मासान्वै जुह्वानो जातवेदसम् ९०

धृतिमानहिंसानिरतः सत्यवागनसूयकः
लोकान्वसूनामाप्नोति दिवाकरसमप्रभः ९१
कामचारी सुधाहारो विमानवरमास्थितः
रमते देवकन्याभिर्दिव्याभरणभूषितः ९२
त्रयोविंशे तु दिवसे प्राशेद्यस्त्वेकभोजनम्
सदा द्वादश मासांस्तु मिताहारो जितेन्द्रियः ९३
वायोरुशनसश्चैव रुद्रलोकं च गच्छति
कामचारी कामगमः पूज्यमानोऽप्सरोगणैः ९४
अनेकगुणपर्यन्तं विमानवरमास्थितः
रमते देवकन्याभिर्दिव्याभरणभूषितः ९५
चतुर्विंशे तु दिवसे यः प्राशेदेकभोजनम्
सदा द्वादश मासान्वै जुह्वानो जातवेदसम् ९६
आदित्यानामधीवासे मोदमानो वसेच्चिरम्
दिव्यमाल्याम्बरधरो दिव्यगन्धानुलेपनः ९७
विमाने काञ्चने दिव्ये हंसयुक्ते मनोरमे
रमते देवकन्यानां सहस्रैरयुतैस्तथा ९८
पञ्चविंशे तु दिवसे यः प्राशेदेकभोजनम्
सदा द्वादश मासांस्तु पुष्कलं यानमारुहेत् ९९
सिंहव्याघ्रप्रयुक्तैश्च मेघस्वननिनादितैः
रथैः सनन्दिघोषैश्च पृष्ठतः साऽनुगम्यते १००
देवकन्यासमारूढै राजतैर्विमलैः शुभैः
विमानमुत्तमं दिव्यमास्थाय सुमनोहरम् १०१
तत्र कल्पसहस्रं वै वसते स्त्रीशतावृते
सुधारसं चोपजीवन्नमृतोपममुत्तमम् १०२
षड्विंशे दिवसे यस्तु प्राश्नीयादेकभोजनम्
सदा द्वादश मासांस्तु नियतो नियताशनः १०३
जितेन्द्रियो वीतरागो जुह्वानो जातवेदसम्
स प्राप्नोति महाभागः पूज्यमानोऽप्सरोगणैः १०४
सप्तानां मरुतां लोकान्वसूनां चापि सोऽश्नुते
विमाने स्फाटिके दिव्ये सर्वरत्नैरलंकृते १०५

गन्धर्वैरप्सरोभिश्च पूज्यमानः प्रमोदते
द्वे युगानां सहस्रे तु दिव्ये दिव्येन तेजसा १०६
सप्तविंशे तु दिवसे यः प्राशेदेकभोजनम्
सदा द्वादश मासांस्तु जुह्वानो जातवेदसम् १०७
फलं प्राप्नोति विपुलं देवलोके च पूज्यते
अमृताशी वसंस्तत्र स वितृप्तः प्रमोदते १०८
देवर्षिचरितं राजन्राजर्षिभिरधिष्ठितम्
अध्यावसति दिव्यात्मा विमानवरमास्थितः १०९
स्त्रीभिर्मनोभिरामाभी रममाणो मदोत्कटः
युगकल्पसहस्राणि त्रीण्यावसति वै सुखम् ११०
योऽष्टाविंशे तु दिवसे प्राश्नीयादेकभोजनम्
सदा द्वादश मासांस्तु जितात्मा विजितेन्द्रियः १११
फलं देवर्षिचरितं विपुलं समुपाश्नुते
भोगवांस्तेजसा भाति सहस्रांशुरिवामलः ११२
सुकुमार्यश्च नार्यस्तं रममाणाः सुवर्चसः
पीनस्तनोरुजघना दिव्याभरणभूषिताः ११३
रमयन्ति मनः कान्ता विमाने सूर्यसंनिभे
सर्वकामगमे दिव्ये कल्पायुतशतं समाः ११४
एकोनत्रिंशे दिवसे यः प्राशेदेकभोजनम्
सदा द्वादश मासान्वै सत्यव्रतपरायणः ११५
तस्य लोकाः शुभा दिव्या देवराजर्षिपूजिताः
विमानं चन्द्रशुभ्राभं दिव्यं समधिगच्छति ११६
जातरूपमयं युक्तं सर्वरत्नविभूषितम्
अप्सरोगणसंपूर्णं गन्धर्वैरभिनादितम् ११७
तत्र चैनं शुभा नार्यो दिव्याभरणभूषिताः
मनोभिरामा मधुरा रमयन्ति मदोत्कटाः ११८
भोगवांस्तेजसा युक्तो वैश्वानरसमप्रभः
दिव्यो दिव्येन वपुषा भ्राजमान इवामरः ११९
वसूनां मरुतां चैव साध्यानामश्विनोस्तथा
रुद्राणां च तथा लोकान्ब्रह्मलोकं च गच्छति १२०

यस्तु मासे गते भुङ्क्ते एकभक्तं शमात्मकः
सदा द्वादश मासान्वै ब्रह्मलोकमवाप्नुयात् १२१
सुधारसकृताहारः श्रीमान्सर्वमनोहरः
तेजसा वपुषा लक्ष्म्या भ्राजते रश्मिवानिव १२२
दिव्यमाल्याम्बरधरो दिव्यगन्धानुलेपनः
सुखेष्वभिरतो योगी दुःखानामविजानकः १२३
स्वयंप्रभाभिर्नारीभिर्विमानस्थो महीयते
रुद्रदेवर्षिकन्याभिः सततं चाभिपूज्यते १२४
नानाविधसुरूपाभिर्नानारागाभिरेव च
नानामधुरभाषाभिर्नानारातिभिरेव च १२५
विमाने नगराकारे सूर्यवत्सूर्यसंनिभे
पृष्ठतः सोमसंकाशे उदक्चैवाभ्रसंनिभे १२६
दक्षिणायां तु रक्ताभे अधस्तान्नीलमण्डले
उर्ध्वं चित्राभिसङ्काशे नैको वसति पूजितः १२७
यादद्वर्षसहस्त्रं तु जम्बूद्वीपे प्रवर्षति
तावत्संवत्सराः प्रोक्ता ब्रह्मलोकस्य धीमतः १२८
विप्रुषश्चैव यावन्त्यो निपतन्ति नभस्तलात्
वर्षासु वर्षतस्तावन्निवसत्यमरप्रभः १२९
मासोपवासी वर्षैस्तु दशभिः स्वर्गमुत्तमम्
महर्षित्वमथासाद्य सशरीरगतिर्भवेत् १३०
मुनिर्दान्तो जितक्रोधो जितशिश्नोदरः सदा
जुह्वन्नग्नींश्च नियतः सन्ध्योपासनसेविता १३१
बहुभिर्नियमैरेवं मासानश्नाति यो नरः
अभ्रावकाशशीलश्च तस्य वासो निरुच्यते १३२
दिवं गत्वा शरीरेण स्वेन राजन्यथामरः
स्वर्गं पुण्यं यथाकाममुपभुङ्क्ते यथाविधि १३३
एष ते भरतश्रेष्ठ यज्ञानां विधिरुत्तमः
व्याख्यातो ह्यानुपूर्व्येण उपवासफलात्मकः १३४
दरिद्रैर्मनुजैः पार्थ प्राप्यं यज्ञफलं यथा
उपवासमिमं कृत्वा गच्छेच्च परमां गतिम्

देवद्विजातिपूजायां रता भरतसत्तम १३५
उपवासविधिस्त्वेष विस्तरेण प्रकीर्तितः
नियतेष्वप्रमत्तेषु शौचवत्सु महात्मसु १३६
दम्भद्रोहनिवृत्तेषु कृतबुद्धिषु भारत
अचलेष्वप्रकम्पेषु मा ते भूदत्र संशयः १३७
इति श्रीमहाभारते अनुशासनपर्वणि दशाधिकशततमोऽध्यायः ११०

## एकादशाधिकशततमोऽध्यायः

युधिष्ठिर उवाच
यद्वरं सर्वतीर्थानां तद्ब्रवीहि पितामह
यत्र वै परमं शौचं तन्मे व्याख्यातुमर्हसि १
भीष्म उवाच
सर्वाणि खलु तीर्थानि गुणवन्ति मनीषिणाम्
यत्तु तीर्थं च शौचं च तन्मे शृणु समाहितः २
अगाधे विमले शुद्धे सत्यतोये धृतिह्रदे
स्नातव्यं मानसे तीर्थे सत्त्वमालम्ब्य शाश्वतम् ३
तीर्थशौचमनर्थित्वमार्दवं सत्यमार्जवम्
अहिंसा सर्वभूतानामानृशंस्यं दमः शमः ४
निर्ममा निरहङ्कारा निर्द्वंद्वा निष्परिग्रहाः
शुचयस्तीर्थभूतास्ते ये भैक्षमुपभुञ्जते ५
तत्त्ववित्त्वनहंबुद्धिस्तीर्थं परममुच्यते
शौचलक्षणमेतत्ते सर्वत्रैवान्ववेक्षणम् ६
रजस्तमः सत्त्वमथो येषां निर्धौतमात्मनः
शौचाशौचे न ते सक्ताः स्वकार्यपरिमार्गिणः ७
सर्वत्यागेष्वभिरताः सर्वज्ञाः सर्वदर्शिनः
शौचेन वृत्तशौचार्थास्ते तीर्थाः शुचयश्च ते ८
नोदकक्लिन्नगात्रस्तु स्नात इत्यभिधीयते
स स्नातो यो दमस्नातः सबाह्याभ्यन्तरः शुचिः ९
अतीतेष्वनपेक्षा ये प्राप्तेष्वर्थेषु निर्ममाः
शौचमेव परं तेषां येषां नोत्पद्यते स्पृहा १०

प्रज्ञानं शौचमेवेह शरीरस्य विशेषतः
तथा निष्किंचनत्वं च मनसश्च प्रसन्नता ११
वृत्तशौचं मनःशौचं तीर्थशौचं परं हितम्
ज्ञानोत्पन्नं च यच्छौचं तच्छौचं परमं मतम् १२
मनसाथ प्रदीपेन ब्रह्मज्ञानबलेन च
स्नाता ये मानसे तीर्थे तज्ज्ञाः क्षेत्रज्ञदर्शिनः १३
समारोपितशौचस्तु नित्यं भावसमन्वितः
केवलं गुणसंपन्नः शुचिरेव नरः सदा १४
शरीरस्थानि तीर्थानि प्रोक्तान्येतानि भारत
पृथिव्यां यानि तीर्थानि पुण्यानि शृणु तान्यपि १५
यथा शरीरस्योद्देशाः शुचयः परिनिर्मिताः
तथा पृथिव्या भागाश्च पुण्यानि सलिलानि च १६
प्रार्थनाच्चैव तीर्थस्य स्नानाच्च पितृतर्पणात्
धुनन्ति पापं तीर्थेषु पूता यान्ति दिवं सुखम् १७
परिग्रहाच्च साधूनां पृथिव्याश्चैव तेजसा
अतीव पुण्यास्ते भागाः सलिलस्य च तेजसा १८
मनसश्च पृथिव्याश्च पुण्यतीर्थास्तथापरे
उभयोरेव यः स्नातः स सिद्धिं शीघ्रमाप्नुयात् १९
यथा बलं क्रियाहीनं क्रिया वा बलवर्जिता
नेह साधयते कार्यं समायुक्तस्तु सिध्यति २०
एवं शरीरशौचेन तीर्थशौचेन चान्वितः
ततः सिद्धिमवाप्नोति द्विविधं शौचमुत्तमम् २१
इति श्रीमहाभारते अनुशासनपर्वणि एकादशाधिकशततमोऽध्यायः १११

## द्वादशाधिक शततमोऽध्यायः

युधिष्ठिर उवाच
पितामह महाबाहो सर्वशास्त्रविशारद
श्रोतुमिच्छामि मर्त्यानां संसारविधिमुत्तमम् १
केन वृत्तेन राजेन्द्र वर्तमाना नरा युधि
प्राप्नुवन्त्युत्तमं स्वर्गं कथं च नरकं नृप २

मृतं शरीरमुत्सृज्य काष्ठलोष्टसमं जनाः
प्रयान्त्यमुं लोकमितः को वैताननुगच्छति ३
भीष्म उवाच
असावायाति भगवान्बृहस्पतिरुदारधीः
पृच्छैनं सुमहाभागमेतद्गुह्यं सनातनम् ४
नैतदन्येन शक्यं हि वक्तुं केनचिदद्य वै
वक्ता बृहस्पतिसमो न ह्यन्यो विद्यते क्वचित् ५
वैशम्पायन उवाच
तयोः संवदतोरेवं पार्थगाङ्गेययोस्तदा
आजगाम विशुद्धात्मा भगवान्स बृहस्पतिः ६
ततो राजा समुत्थाय धृतराष्ट्रपुरोगमः
पूजामनुपमां चक्रे सर्वे ते च सभासदः ७
ततो धर्मसुतो राजा भगवन्तं बृहस्पतिम्
उपगम्य यथान्यायं प्रश्नं पप्रच्छ सुव्रतः ८
युधिष्ठिर उवाच
भगवन्सर्वधर्मज्ञ सर्वशास्त्रविशारद
मर्त्यस्य कः सहायो वै पिता माता सुतो गुरुः ९
मृतं शरीरमुत्सृज्य काष्ठलोष्टसमं जनाः
गच्छन्त्यमुत्रलोकं वै क एनमनुगच्छति १०
बृहस्पति उवाच
एकः प्रसूतो राजेन्द्र जन्तुरेकोविनश्यति
एकस्तरति दुर्गाणि गच्छत्येकश्च दुर्गतिम् ११
असहायः पिता माता तथा भ्राता सुतो गुरुः
ज्ञातिसंबन्धिवर्गश्च मित्रवर्गस्तथैव च १२
मृतं शरीरमुत्सृज्य काष्ठलोष्टसमं जनाः
मुहूर्तमुपतिष्ठन्ति ततो यान्ति पराङ्मुखाः
तैस्तच्छरीरमुत्सृष्टं धर्म एकोऽनुगच्छति १३
तस्माद्धर्मः सहायार्थे सेवितव्यः सदा नृभिः
प्राणी धर्मसमायुक्तो गच्छते स्वर्गतिं पराम्
तथैवाधर्मसंयुक्तो नरकायोपपद्यते १४

तस्मान्न्यायागतैरर्थैर्धर्मं सेवेत पण्डितः
धर्म एको मनुष्याणां सहायः पारलौकिकः १५
लोभान्मोहादनुक्रोशाद्भयाद्वाप्यबहुश्रुतः
नरः करोत्यकार्याणि परार्थे लोभमोहितः १६
धर्मश्चार्थश्च कामश्च त्रितयं जीविते फलम्
एतत्त्रयमवाप्तव्यमधर्मपरिवर्जितम् १७
युधिष्ठिर उवाच
श्रुतं भगवतो वाक्यं धर्मयुक्तं परं हितम्
शरीरविचयं ज्ञातुं बुद्धिस्तु मम जायते १८
मृतं शरीररहितं सूक्ष्ममव्यक्ततां गतम्
अचक्षुर्विषयं प्राप्तं कथं धर्मोऽनुगच्छति १९
बृहस्पति उवाच
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम्
बुद्धिरात्मा च सहिता धर्मं पश्यन्ति नित्यदा २०
प्राणिनामिह सर्वेषां साक्षिभूतानि चानिशम्
एतैश्च स ह धर्मोऽपि तं जीवमनुगच्छति २१
त्वगस्थिमांसं शुक्रं च शोणितं च महामते
शरीरं वर्जयन्त्येते जीवितेन विवर्जितम् २२
ततो धर्मसमायुक्तः स जीवः सुखमेधते
इह लोके परे चैव किं भूयः कथयामि ते २३
युधिष्ठिर उवाच
अनुदर्शितं भगवता यथा धर्मोऽनुगच्छति
एतत्तु ज्ञातुमिच्छामि कथं रेतः प्रवर्तते २४
बृहस्पति उवाच
अन्नमश्नन्ति ये देवाः शरीरस्था नरेश्वर
पृथिवी वायुराकाशमापो ज्योतिर्मनस्तथा २५
ततस्तृप्तेषु राजेन्द्र तेषु भूतेषु पञ्चसु
मनः षष्ठेषु शुद्धात्मन्रेतः संपद्यते महत् २६
ततो गर्भः सम्भवति स्त्रीपुंसोः पार्थ संगमे
एतत्ते सर्वमाख्यातं किं भूयः श्रोतुमिच्छसि २७

युधिष्ठिर उवाच
आख्यातमेतद्भवता गर्भः संजायते यथा
यथा जातस्तु पुरुषः प्रपद्यति तदुच्यताम् २८
बृहस्पति उवाच
आसन्नमात्रः सततं तैर्भूतैरभिभूयते
विप्रमुक्तश्च तैर्भूतैः पुनर्यात्यपरां गतिम्
स तु भूतसमायुक्तः प्राप्नुते जीव एव ह २९
ततोऽस्य कर्म पश्यन्ति शुभं वा यदि वाशुभम्
देवताः पञ्चभूतस्थाः किं भूयः श्रोतुमिच्छसि ३०
युधिष्ठिर उवाच
त्वगस्थिमांसमुत्सृज्य तैश्च भूतैर्विवर्जितः
जीवः स भगवन्क्वस्थः सुखदुःखे समश्नुते ३१
बृहस्पति उवाच
जीवो धर्मसमायुक्तः शीघ्रं रेतत्वमागतः
स्त्रीणां पुष्पं समासाद्य सूते कालेन भारत ३२
यमस्य पुरुषैः क्लेशं यमस्य पुरुषैर्वधम्
दुःखं संसारचक्रं च नरः क्लेशं च विन्दति ३३
इहलोके च स प्राणी जन्मप्रभृति पार्थिव
स्वकृतं कर्म वै भुङ्क्ते धर्मस्य फलमाश्रितः ३४
यदि धर्मं यथाशक्ति जन्मप्रभृति सेवते
ततः स पुरुषो भूत्वा सेवते नित्यदा सुखम् ३५
अथान्तरा तु धर्मस्य अधर्ममुपसेवते
सुखस्यानन्तरं दुःखं स जीवोऽप्यधिगच्छति ३६
अधर्मेण समायुक्तो यमस्य विषयं गतः
महद्दुःखं समासाद्य तिर्यग्योनौ प्रजायते ३७
कर्मणा येन येनेह यस्यां योनौ प्रजायते
जीवो मोहसमायुक्तस्तन्मे निगदतः शृणु ३८
यदेतदुच्यते शास्त्रे सेतिहासे सच्छन्दसि
यमस्य विषयं घोरं मर्त्यो लोकः प्रपद्यते ३९
अधीत्य चतुरो वेदान्द्विजो मोहसमन्वितः

पतितात्प्रतिगृह्याथ खरयोनौ प्रजायते ४०
खरो जीवति वर्षाणि दश पञ्च च भारत
खरो मृतो बलीवर्दः सप्त वर्षाणि जीवति ४१
बलीवर्दो मृतश्चापि जायते ब्रह्मराक्षसः
ब्रह्मरक्षस्तु त्रीन्मासांस्ततो जायति ब्राह्मणः ४२
पतितं याजयित्वा तु कृमियोनौ प्रजायते
तत्र जीवति वर्षाणि दश पञ्च च भारत ४३
कृमिभावात्प्रमुक्तस्तु ततो जायति गर्दभः
गर्दभः पञ्च वर्षाणि पञ्च वर्षाणि सूकरः
श्वा वर्षमेकं भवति ततो जायति मानवः ४४
उपाध्यायस्य यः पापं शिष्यः कुर्यादबुद्धिमान्
स जीव इह संसारांस्त्रीनाप्नोति न संशयः ४५
प्राक्श्वा भवति राजेन्द्र ततः क्रव्यात्ततः खरः
ततः प्रेतः परिक्लिष्टः पश्चाज्जायति ब्राह्मणः ४६
मनसापि गुरोर्भार्यां यः शिष्यो याति पापकृत्
सोऽधमान्याति संसारानधर्मेणहि चेतसा ४७
श्वयोनौ तु स संभूतस्त्रीणि वर्षाणि जीवति
तत्रापि निधनं प्राप्तः कृमियोनौ प्रजायते ४८
कृमिभावमनुप्राप्तो वर्षमेकं स जीवति
ततस्तु निधनं प्राप्य ब्रह्मयोनौ प्रजायते ४९
यदि पुत्रसमं शिष्यं गुरुर्हन्यादकारणे
आत्मनः कामकारेण सोऽपि हंसः प्रजायते ५०
पितरं मातरं वापि यस्तु पुत्रोऽवमन्यते
सोऽपि राजन्मृतो जन्तुः पूर्वं जायति गर्दभः ५१
खरो जीवति मासांस्तु दश श्वा च चतुर्दश
बिडालः सप्त मासांस्तु ततो जायति मानवः ५२
मातापितरमाक्रुश्य सारिकः संप्रजायते
ताडयित्वा तु तावेव जायते कच्छपो नृप ५३
कच्छपो दश वर्षाणि त्रीणि वर्षाणि शल्यकः
व्यालो भूत्वा च षण्मासांस्ततो जायति मानुषः ५४

भर्तृपिण्डमुपाश्नन्यो राजद्विष्टानि सेवते
सोऽपि मोहसमापन्नो मृतो जायति वानरः ५५
वानरो दश वर्षाणि त्रीणि वर्षाणि मूषकः
श्वा भूत्वा चाथ षण्मासांस्ततो जायति मानुषः ५६
न्यासापहर्ता तु नरो यमस्य विषयं गतः
संसाराणां शतं गत्वा कृमियोनौ प्रजायते ५७
तत्र जीवति वर्षाणि दश पञ्च च भारत
दुष्कृतस्य क्षयं गत्वा ततो जायति मानुषः ५८
असूयको नरश्चापि मृतो जायति शार्ङ्गकः
विश्वासहर्ता तु नरो मीनो जायति दुर्मतिः ५९
भूत्वा मीनोऽष्ट वर्षाणि मृगो जायति भारत
मृगस्तु चतुरो मासांस्ततश्छागः प्रजायते ६०
छागस्तु निधनं प्राप्य पूर्णे संवत्सरे ततः
कीटः संजायते जन्तुस्ततो जायति मानुषः ६१
धान्यान्यवांस्तिलान्माषाकुलत्थान्सर्षपांश्चणान्
कलायानथ मुद्गांश्च गोधूमानतसीस्तथा ६२
सस्यस्यान्यस्य हर्ता च मोहाज्जन्तुरचेतनः
स जायते महाराज मूषको निरपत्रपः ६३
ततः प्रेत्य महाराज पुनर्जायति सूकरः
सूकरो जातमात्रस्तु रोगेण म्रियते नृप ६४
श्वा ततो जायते मूढः कर्मणा तेन पार्थिव
श्वा भूत्वा पञ्च वर्षाणि ततो जायति मानुषः ६५
परदाराभिमर्शं तु कृत्वा जायति वै वृकः
श्वा सृगालस्ततो गृध्रो व्यालः कङ्को बकस्तथा ६६
भ्रातुर्भार्यां तु दुर्बुद्धिर्यो धर्षयति मोहितः
पुंस्कोकिलत्वमाप्नोति सोऽपि संवत्सरं नृप ६७
सखिभार्यां गुरोर्भार्यां राजभार्यां तथैव च
प्रधर्षयित्वा कामाद्यो मृतो जायति सूकरः ६८
सूकरः पञ्च वर्षाणि पञ्च वर्षाणि श्वाविधः
पिपीलकस्तु षण्मासान्कीटः स्यान्मासमेव च

एतानासाद्य संसारान्कृमियोनौ प्रजायते ६९
तत्र जीवति मासांस्तु कृमियोनौ त्रयोदश
ततोऽधर्मक्षयं कृत्वा पुनर्जायति मानुषः ७०
उपस्थिते विवाहे तु दाने यज्ञेऽपि वाभिभो
मोहात्करोति यो विघ्नं स मृतो जायते कृमिः ७१
कृमिर्जीवति वर्षाणि दश पञ्च च भारत
अधर्मस्य क्षयं कृत्वा ततो जायति मानुषः ७२
पूर्वं दत्त्वा तु यः कन्यां द्वितीये संप्रयच्छति
सोऽपि राजन्मृतो जन्तुः कृमियोनौ प्रजायते ७३
तत्र जीवति वर्षाणि त्रयोदश युधिष्ठिर
अधर्मसंक्षये युक्तस्ततो जायति मानुषः ७४
देवकार्यमुपाकृत्य पितृकार्यमथापि च
अनिर्वाप्य समश्नन्वै ततो जायति वायसः ७५
वायसोदशवर्षाणि ततोजायति कुक्कुटः
जायते लवकश्चापि मासं तस्मात्तु मानुषः ७६
ज्येष्ठं पितृसमं चापि भ्रातरं योऽवमन्यते
सोऽपि मृत्युमुपागम्य क्रौञ्चयोनौ प्रजायते ७७
क्रौञ्चो जीवति मासांस्तु दश द्वौ सप्त पञ्च च
ततो निधनमापन्नो मानुषत्वमुपाश्नुते ७८
वृषलो ब्राह्मणीं गत्वा कृमियोनौ प्रजायते
तत्रापत्यं समुत्पाद्य ततो जायति मूषकः ७९
कृतघ्नस्तु मृतो राजन्यमस्य विषयं गतः
यमस्य विषये क्रुद्धैर्वधं प्राप्नोति दारुणम् ८०
पट्टिसं मुद्गरं शूलमग्निकुम्भं च दारुणम्
असिपत्रवनं घोरं वालुकां कूटशाल्मलीम् ८१
एताश्चान्याश्च बह्वीः स यमस्य विषयं गतः
यातनाः प्राप्य तत्रोग्रास्ततो वध्यति भारत ८२
संसारचक्रमासाद्य कृमियोनौ प्रजायते
कृमिर्भवति वर्षाणि दश पञ्च च भारत
ततो गर्भं समासाद्य तत्रैव म्रियते शिशुः ८३

ततो गर्भशतैर्जन्तुर्बहुभिः संप्रजायते
संसारांश्च बहून्गत्वा ततस्तिर्यक्प्रजायते ८४
मृतोदुःखमनुप्राप्य बहुवर्ष गणानिह
अपुनर्भाव संयुक्तस्ततः कूर्मः प्रजायते ८५
अशस्त्रं पुरुषं हत्वा सशस्त्रः पुरुषाधमः
अर्थार्थी यदि वा वैरी स मृतो जायते खरः ८६
खरो जीवति वर्षे द्वे ततः शस्त्रेण वध्यते
स मृतो मृगयोनौ तु नित्योद्विग्नोऽभिजायते ८७
मृगो वध्यति शस्त्रेण गते संवत्सरे तु सः
हतो मृगस्ततो मीनः सोऽपि जालेन बध्यते ८८
मासे चतुर्थे संप्राप्ते श्वापदः संप्रजायते
श्वापदो दश वर्षाणि द्वीपी वर्षाणि पञ्च च ८९
ततस्तु निधनं प्राप्तः कालपर्यायचोदितः
अधर्मस्य क्षयं कृत्वा ततो जायति मानुषः ९०
स्त्रियं हत्वा तु दुर्बुद्धिर्यमस्य विषयं गतः
बहून्क्लेशान्समासाद्य संसारांश्चैव विंशतिम् ९१
ततः पश्चान्महाराज कृमियोनौ प्रजायते
कृमिर्विंशतिवर्षाणि भूत्वा जायति मानुषः ९२
भोजनं चोरयित्वा तु मक्षिका जायते नरः
मक्षिकासंघवशगो बहून्मासान्भवत्युत
ततः पापक्षयं कृत्वा मानुषत्वमवाप्नुते ९३
वाद्यं हृत्वा तु पुरुषो मशकः संप्रजायते
तथा पिण्याकसंमिश्रमशनं चोरयेन्नरः
स जायते बभ्रुसमो दारुणो मूषको नरः ९४
लवणं चोरयित्वा तु चीरीवाकः प्रजायते
दधि हृत्वा बकश्चापि प्लवो मत्स्यानसंस्कृतान् ९५
चोरयित्वा पयश्चापि बलाका संप्रजायते
यस्तु चोरयते तैलं तैलपायी प्रजायते
चोरयित्वा तु दुर्बुद्धिर्मधुदंशः प्रजायते ९६
अयो हृत्वा तु दुर्बुद्धिर्वायसो जायते नरः

पायसं चोरयित्वा तु तित्तिरित्वमवाप्नुते ९७
हृत्वा पैष्टमपूपं च कुम्भोलूकः प्रजायते
फलं वा मूलकं हृत्वा अपूपं वा पिपीलिकः ९८
कांस्यं हृत्वा तु दुर्बुद्धिर्हारीतो जायते नरः
राजतं भाजनं हृत्वा कपोतः संप्रजायते ९९
हृत्वा तु काञ्चनं भाण्डं कृमियोनौ प्रजायते
क्रौञ्चः कार्पासिकं हृत्वा मृतो जायति मानवः १००
चोरयित्वा नरः पट्टं त्वाविकं वापि भारत
क्षौमं च वस्त्रमादाय शशो जन्तुः प्रजायते १०१
वर्णान्हृत्वा तु पुरुषो मृतो जायति बर्हिणः
हृत्वा रक्तानि वस्त्राणि जायते जीवजीवकः १०२
वर्णकादींस्तथा गन्धांश्चोरयित्वा तु मानवः
छुच्छुन्दरित्वमाप्नोति राजँल्लोभपरायणः १०३
विश्वासेन तु निक्षिप्तं यो निह्नवति मानवः
स गतायुर्नरस्तादृङ्मत्स्ययोनौ प्रजायते १०४
मत्स्ययोनिमनुप्राप्य मृतो जायति मानुषः
मानुषत्वमनुप्राप्य क्षीणायुरुपपद्यते १०५
पापानि तु नरः कृत्वा तिर्यग्जायति भारत
न चात्मनः प्रमाणं ते धर्मं जानन्ति किंचन १०६
ये पापानि नराः कृत्वा निरस्यन्ति व्रतैः सदा
सुखदुःखसमायुक्ता व्याधितास्ते भवन्त्युत १०७
असंवासाः प्रजायन्ते म्लेच्छाश्चापि न संशयः
नराः पापसमाचारा लोभमोहसमन्विताः १०८
वर्जयन्ति च पापानि जन्मप्रभृति ये नराः
अरोगा रूपवन्तस्ते धनिनश्च भवन्त्युत १०९
स्त्रियोऽप्येतेन कल्पेन कृत्वा पापमवाप्नुयुः
एतेषामेव जन्तूनां पत्नीत्वमुपयान्ति ताः ११०
परस्वहरणे दोषाः सर्व एव प्रकीर्तिताः
एतद्धि लेशमात्रेण कथितं ते मयानघ
अपरस्मिन्कथायोगे भूयः श्रोष्यसि भारत १११

एतन्मया महाराज ब्रह्मणो वदतः पुरा
सुरर्षीणां श्रुतं मध्ये पृष्टश्चापि यथातथम् ११२
मयापि तव कार्त्स्न्येन यथावदनुवर्णितम्
एतच्छ्रुत्वा महाराज धर्मे कुरु मनः सदा ११३
इति श्रीमहाभारते अनुशासनपर्वणि द्वादशाधिकशततमोऽध्यायः ११२

## त्रयोदशाधिक शततमोऽध्यायः

युधिष्ठिर उवाच
अधर्मस्य गतिर्ब्रह्मन्कथिता मे त्वयानघ
धर्मस्य तु गतिं श्रोतुमिच्छामि वदतां वर
कृत्वा कर्माणि पापानि कथं यान्ति शुभां गतिम् १
बृहस्पति उवाच
कृत्वा पापानि कर्माणि अधर्मवशमागतः
मनसा विपरीतेन निरयं प्रतिपद्यते २
मोहादधर्मं यः कृत्वा पुनः समनुतप्यते
मनःसमाधिसंयुक्तो न स सेवेत दुष्कृतम् ३
यथा यथा नरः सम्यगधर्ममनुभाषते
समाहितेन मनसा विमुच्यति तथा तथा
भुजंग इव निर्मोकात्पूर्वभुक्ताज्जरान्वितात् ४
अदत्त्वापि प्रदानानि विविधानि समाहितः
मनःसमाधिसंयुक्तः सुगतिं प्रतिपद्यते ५
प्रदानानि तु वक्ष्यामि यानि दत्त्वा युधिष्ठिर
नरः कृत्वाप्यकार्याणि तदा धर्मेण युज्यते ६
सर्वेषामेव दानानामन्नं श्रेष्ठमुदाहृतम्
पूर्वमन्नं प्रदातव्यमृजुना धर्ममिच्छता ७
प्राणा ह्यन्नं मनुष्याणां तस्माज्जन्तुश्च जायते
अन्ने प्रतिष्ठिता लोकास्तस्मादन्नं प्रकाशते ८
अन्नमेव प्रशंसन्ति देवर्षिपितृमानवाः
अन्नस्य हि प्रदानेन स्वर्गमाप्नोति कौशिकः ९
न्यायलब्धं प्रदातव्यं द्विजेभ्यो ह्यन्नमुत्तमम्

स्वाध्यायसमुपेतेभ्यः प्रहृष्टेनान्तरात्मना १०
यस्य ह्यन्नमुपाश्नन्ति ब्राह्मणानां शता दश
हृष्टेन मनसा दत्तं न स तिर्यग्गतिर्भवेत् ११
ब्राह्मणानां सहस्राणि दश भोज्य नरर्षभ
नरोऽधर्मात्प्रमुच्येत पापेष्वभिरतः सदा १२
भैक्षेणान्नं समाहृत्य विप्रो वेदपुरस्कृतः
स्वाध्यायनिरते विप्रे दत्त्वेह सुखमेधते १३
अहिंसन्ब्राह्मणं नित्यं न्यायेन परिपाल्य च
क्षत्रियस्तरसा प्राप्तमन्नं यो वै प्रयच्छति १४
द्विजेभ्यो वेदवृद्धेभ्यः प्रयतः सुसमाहितः
तेनापोहति धर्मात्मा दुष्कृतं कर्म पाण्डव १५
षड्भागपरिशुद्धं च कृषेर्भागमुपार्जितम्
वैश्यो ददद्द्विजातिभ्यः पापेभ्यः परिमुच्यते १६
अवाप्य प्राणसंदेहं कार्कश्येन समार्जितम्
अन्नं दत्त्वा द्विजातिभ्यः शूद्रः पापात्प्रमुच्यते १७
औरसेन बलेनान्नमर्जयित्वाविहिंसकः
यः प्रयच्छति विप्रेभ्यो न स दुर्गाणि सेवते १८
न्यायेनावाप्तमन्नं तु नरो लोभविवर्जितः
द्विजेभ्यो वेदवृद्धेभ्यो दत्त्वा पापात्प्रमुच्यते १९
अन्नमूर्जस्करं लोके दत्त्वोर्जस्वी भवेन्नरः
सतां पन्थानमाश्रित्य सर्वपापात्प्रमुच्यते २०
दानकृद्भिः कृतः पन्था येन यान्ति मनीषिणः
ते स्म प्राणस्य दातारस्तेभ्यो धर्मः सनातनः २१
सर्वावस्थं मनुष्येण न्यायेनान्नमुपार्जितम्
कार्यं पात्रगतं नित्यमन्नं हि परमा गतिः २२
अन्नस्य हि प्रदानेन नरो दुर्गं न सेवते
तस्मादन्नं प्रदातव्यमन्यायपरिवर्जितम् २३
यतेद्ब्राह्मणपूर्वं हि भोक्तुमन्नं गृही सदा
अवन्ध्यं दिवसं कुर्यादन्नदानेन मानवः २४
भोजयित्वा दशशतं नरो वेदविदां नृप

न्यायविद्धर्मविदुषामितिहासविदां तथा २५
न याति नरकं घोरं संसारांश्च न सेवते
सर्वकामसमायुक्तः प्रेत्य चाप्यश्नुते सुखम् २६
एवं सुखसमायुक्तो रमते विगतज्वरः
रूपवान्कीर्तिमांश्चैव धनवांश्चोपपद्यते २७
एतत्ते सर्वमाख्यातमन्नदानफलं महत्
मूलमेतद्धि धर्माणां प्रदानस्य च भारत २८
इति श्रीमहाभारते अनुशासनपर्वणि त्रयोदशाधिकशततमोऽध्यायः ११३

## चतुर्दशाधिक शततमोऽध्यायः

युधिष्ठिर उवाच
अहिंसा वैदिकं कर्म ध्यानमिन्द्रियसंयमः
तपोऽथ गुरुशुश्रूषा किं श्रेयः पुरुषं प्रति १
बृहस्पति उवाच
सर्वाण्येतानि धर्मस्य पृथग्द्वाराणि सर्वशः
शृणु संकीर्त्यमानानि षडेव भरतर्षभ २
हन्त निःश्रेयसं जन्तोरहं वक्ष्याम्यनुत्तमम्
अहिंसापाश्रयं धर्मं यः साधयति वै नरः ३
त्रीन्दोषान्सर्वभूतेषु निधाय पुरुषः सदा
कामक्रोधौ च संयम्य ततः सिद्धिमवाप्नुते ४
अहिंसकानि भूतानि दण्डेन विनिहन्ति यः
आत्मनः सुखमन्विच्छन्न स प्रेत्य सुखी भवेत् ५
आत्मोपमश्च भूतेषु यो वै भवति पूरुषः
न्यस्तदण्डो जितक्रोधः स प्रेत्य सुखमेधते ६
सर्वभूतात्मभूतस्य सर्वभूतानि पश्यतः
देवापि मार्गे मुह्यन्ति अपदस्य पदैषिणः ७
न तत्परस्य संदद्यात्प्रतिकूलं यदात्मनः
एष संक्षेपतो धर्मः कामादन्यः प्रवर्तते ८
प्रत्याख्याने च दाने च सुखदुःखे प्रियाप्रिये
आत्मौपम्येन पुरुषः समाधिमधिगच्छति ९

यथा परः प्रक्रमतेऽपरेषु तथापरः प्रक्रमते परस्मिन्
एषैव तेऽस्तूपमा जीवलोके यथा धर्मो नैपुणेनोपदिष्टः १०
वैशम्पायन उवाच
इत्युक्त्वा तं सुरगुरुर्धर्मराजं युधिष्ठिरम्
दिवमाचक्रमे धीमान्पश्यतामेव नस्तदा ११
इति श्रीमहाभारते अनुशासनपर्वणि चतुर्दशाधिकशततमोऽध्यायः ११४

पञ्चदशाधिकशततमोऽध्यायः

वैशम्पायन उवाच
ततो युधिष्ठिरो राजा शरतल्पे पितामहम्
पुनरेवमहातेजाः पप्रच्छ वदतां वरम् १
ऋषयो ब्राह्मणा देवाः प्रशंसन्ति महामते
अहिंसालक्षणं धर्मं वेदप्रामाण्यदर्शनात् २
कर्मणा मनुजः कुर्वन्हिंसां पार्थिवसत्तम
वाचा च मनसा चैव कथं दुःखात्प्रमुच्यते ३
भीष्म उवाच
चतुर्विधेयं निर्दिष्टा अहिंसा ब्रह्मवादिभिः
एषैकतोऽपि विभ्रष्टा न भवत्यरिसूदन ४
यथा सर्वश्चतुष्पादस्त्रिभिः पादैर्न तिष्ठति
तथैवेयं महीपाल प्रोच्यते कारणैस्त्रिभिः ५
यथा नागपदेऽन्यानि पदानि पदगामिनाम्
सर्वाण्येवापिधीयन्ते पदजातानि कौञ्जरे ६
एवं लोकेष्वहिंसा तु निर्दिष्टा धर्मतः परा
कर्मणा लिप्यते जन्तुर्वाचा च मनसैव च ७
पूर्वं तु मनसा त्यक्त्वा तथा वाचाथ कर्मणा
त्रिकारणं तु निर्दिष्टं श्रूयते ब्रह्मवादिभिः ८
मनोवाचि तथास्वादे दोषा ह्येषु प्रतिष्ठिताः
न भक्षयन्त्यतो मांसं तपोयुक्ता मनीषिणः ९
दोषांस्तु भक्षणे राजन्मांसस्येह निबोध मे
पुत्रमांसोपमं जानन्खादते यो विचेतनः १०

मातृपितृसमायोगे पुत्रत्वं जायते यथा
रसं च प्रति जिह्वायाः प्रज्ञानं जायते तथा
तथा शास्त्रेषु नियतं रागो ह्यास्वादिताद्भवेत् ११
असंस्कृताः संस्कृताश्च लवणालवणास्तथा
प्रज्ञायन्ते यथा भावास्तथा चित्तं निरुध्यते १२
भेरीशङ्खमृदङ्गाद्यांस्तन्त्रीशब्दांश्च पुष्कलान्
निषेविष्यन्ति वै मन्दा मांसभक्षाः कथं नराः १३
अचिन्तितमनुद्दिष्टमसंकल्पितमेव च
रसं गृद्ध्याभिभूता वै प्रशंसन्ति फलार्थिनः
प्रशंसा ह्येव मांसस्य दोषकर्मफलान्विता १४
जीवितं हि परित्यज्य बहवः साधवो जनाः
स्वमांसैः परमांसानि परिपाल्य दिवं गताः १५
एवमेषा महाराज चतुर्भिः कारणैर्वृता
अहिंसा तव निर्दिष्टा सर्वधर्मार्थसंहिता १६
इति श्रीमहाभारते अनुशासनपर्वणि पञ्चदशाधिकशततमोऽध्यायः ११५

## षोडशाधिक शततमोऽध्यायः

युधिष्ठिर उवाच
अहिंसा परमो धर्म इत्युक्तं बहुशस्त्वया
श्राद्धेषु च भवानाह पितृनामिषकाङ्क्षिणः १
मांसैर्बहुविधैः प्रोक्तस्त्वया श्राद्धविधिः पुरा
अहत्वा च कुतो मांसमेवमेतद्विरुध्यते २
जातो नः संशयो धर्मे मांसस्य परिवर्जने
दोषो भक्षयतः कः स्यात्कश्चाभक्षयतो गुणः ३
हत्वा भक्षयतो वापि परेणोपहृतस्य वा
हन्याद्वा यः परस्यार्थे क्रीत्वा वा भक्षयेन्नरः ४
एतदिच्छामि तत्त्वेन कथ्यमानं त्वयानघ
निश्चयेन चिकीर्षामि धर्ममेतं सनातनम् ५
कथमायुरवाप्नोति कथं भवति सत्त्ववान्
कथमव्यङ्गतामेति लक्षण्यो जायते कथम् ६

भीष्म उवाच
मांसस्य भक्षणे राजन्योऽधर्मः कुरुपुंगव
तं मे शृणु यथातत्त्वं यश्चास्य विधिरुत्तमः ७
रूपमव्यङ्गतामायुर्बुद्धिं सत्त्वं बलं स्मृतिम्
प्राप्तुकामैर्नरैर्हिंसा वर्जिता वै कृतात्मभिः ८
ऋषीणामत्र संवादो बहुशः कुरुपुंगव
बभूव तेषां तु मतं यत्तच्छृणु युधिष्ठिर ९
यो यजेताश्वमेधेन मासि मासि यतव्रतः
वर्जयेन्मधु मांसं च सममेतद्युधिष्ठिर १०
सप्तर्षयो वालखिल्यास्तथैव च मरीचिपाः
अमांसभक्षणं राजन्प्रशंसन्ति मनीषिणः ११
न भक्षयति यो मांसं न हन्यान्न च घातयेत्
तं मित्रं सर्वभूतानां मनुः स्वायंभुवोऽब्रवीत् १२
अधृष्यः सर्वभूतानां विश्वास्यः सर्वजन्तुषु
साधूनां संमतो नित्यं भवेन्मांसस्य वर्जनात् १३
स्वमांसं परमांसेन यो वर्धयितुमिच्छति
नारदः प्राह धर्मात्मा नियतं सोऽवसीदति १४
ददाति यजते चापि तपस्वी च भवत्यपि
मधुमांसनिवृत्त्येति प्राहैवं स बृहस्पतिः १५
मासि मास्यश्वमेधेन यो यजेत शतं समाः
न खादति च यो मांसं सममेतन्मतं मम १६
सदा यजति सत्रेण सदा दानं प्रयच्छति
सदा तपस्वी भवति मधुमांसस्य वर्जनात् १७
सर्वे वेदा न तत्कुर्युः सर्वयज्ञाश्च भारत
यो भक्षयित्वा मांसानि पश्चादपि निवर्तते १८
दुष्करं च रसज्ञेन मांसस्य परिवर्जनम्
चर्तुं व्रतमिदं श्रेष्ठं सर्वप्राण्यभयप्रदम् १९
सर्वभूतेषु यो विद्वान्ददात्यभयदक्षिणाम्
दाता भवति लोके स प्राणानां नात्र संशयः २०
एवं वै परमं धर्मं प्रशंसन्ति मनीषिणः

प्राणा यथात्मनोऽभीष्टा भूतानामपि ते तथा २१
आत्मौपम्येन गन्तव्यं बुद्धिमद्भिर्महात्मभिः
मृत्युतो भयमस्तीति विदुषां भूतिमिच्छताम् २२
किं पुनर्हन्यमानानां तरसा जीवितार्थिनाम्
अरोगाणामपापानां पापैर्मांसोपजीविभिः २३
तस्माद्विद्धि महाराज मांसस्य परिवर्जनम्
धर्मस्यायतनं श्रेष्ठं स्वर्गस्य च सुखस्य च २४
अहिंसा परमो धर्मस्तथाहिंसा परं तपः
अहिंसा परमं सत्यं यतो धर्मः प्रवर्तते २५
न हि मांसं तृणात्काष्ठादुपलाद्वापि जायते
हत्वा जन्तुं ततो मांसं तस्माद्दोषेऽस्य भक्षणे २६
स्वाहास्वधामृतभुजो देवाः सत्यार्जवप्रियाः
क्रव्यादान्राक्षसान्विद्धि जिह्मानृतपरायणान् २७
कान्तारेष्वथ घोरेषु दुर्गेषु गहनेषु च
रात्रावहनि संध्यासु चत्वरेषु सभासु च
अमांसभक्षणे राजन्भयमन्ते न गच्छति २८
यदि चेत्खादको न स्यान्न तदा घातको भवेत्
घातकः खादकार्थाय तं घातयति वै नरः २९
अभक्ष्यमेतदिति वा इति हिंसा निवर्तते
खादकार्थमतो हिंसा मृगादीनां प्रवर्तते ३०
यस्माद्ग्रसति चैवायुर्हिंसकानां महाद्युते
तस्माद्विवर्जयेन्मांसं य इच्छेद्भूतिमात्मनः ३१
त्रातारं नाधिगच्छन्ति रौद्राः प्राणिविहिंसकाः
उद्वेजनीया भूतानां यथा व्यालमृगास्तथा ३२
लोभाद्वा बुद्धिमोहाद्वा बलवीर्यार्थमेव च
संसर्गाद्वाथ पापानामधर्मरुचिता नृणाम् ३३
स्वमांसं परमांसेन यो वर्धयितुमिच्छति
उद्विग्नवासे वसति यत्रतत्राभिजायते ३४
धन्यं यशस्यमायुष्यं स्वर्ग्यं स्वस्त्ययनं महत्
मांसस्याभक्षणं प्राहुर्नियताः परमर्षयः ३५

इदं तु खलु कौन्तेय श्रुतमासीत्पुरा मया
मार्कण्डेयस्य वदतो ये दोषा मांसभक्षणे ३६
यो हि खादति मांसानि प्राणिनां जीवितार्थिनाम्
हतानां वा मृतानां वा यथा हन्ता तथैव सः ३७
धनेन क्रायको हन्ति खादकश्चोपभोगतः
घातको वधबन्धाभ्यामित्येष त्रिविधो वधः ३८
अखादन्ननुमोदंश्च भावदोषेण मानवः
योऽनुमन्येत हन्तव्यं सोऽपि दोषेण लिप्यते ३९
अधृष्यः सर्वभूतानामायुष्मान्नीरुजः सुखी
भवत्यभक्षयन्मांसं दयावान्प्राणिनामिह ४०
हिरण्यदानैर्गोदानैर्भूमिदानैश्च सर्वशः
मांसस्याभक्षणे धर्मो विशिष्टः स्यादिति श्रुतिः ४१
अप्रोक्षितं वृथामांसं विधिहीनं न भक्षयेत्
भक्षयन्निरयं याति नरो नास्त्यत्र संशयः ४२
प्रोक्षिताभ्युक्षितं मांसं तथा ब्राह्मणकाम्यया
अल्पदोषमिह ज्ञेयं विपरीते तु लिप्यते ४३
खादकस्य कृते जन्तुं यो हन्यात्पुरुषाधमः
महादोषकरस्तत्र खादको न तु घातकः ४४
इज्यायज्ञश्रुतिकृतैर्यो मार्गैरबुधो जनः
हन्याज्जन्तुं मांसगृद्ध्री स वै नरकभाङ्नरः ४५
भक्षयित्वा तु यो मांसं पश्चादपि निवर्तते
तस्यापि सुमहान्धर्मो यः पापाद्विनिवर्तते ४६
आहर्ता चानुमन्ता च विशस्ता क्रयविक्रयी
संस्कर्ता चोपभोक्ता च घातकाः सर्व एव ते ४७
इदमन्यत्तु वक्ष्यामि प्रमाणं विधिनिर्मितम्
पुराणमृषिभिर्जुष्टं वेदेषु परिनिश्चितम् ४८
प्रवृत्तिलक्षणे धर्मे फलार्थिभिरभिद्रुते
यथोक्तं राजशार्दूल न तु तन्मोक्षकाङ्क्षिणाम् ४९
हविर्यत्संस्कृतं मन्त्रैः प्रोक्षिताभ्युक्षितं शुचि
वेदोक्तेन प्रमाणेन पितृणां प्रक्रियासु च

अतोऽन्यथा वृथामांसमभक्ष्यं मनुरब्रवीत् ५०
अस्वर्ग्यमयशस्यं च रक्षोवद्भरतर्षभ
विधिना हि नराः पूर्वं मांसं राजन्नभक्षयन् ५१
य इच्छेत्पुरुषोऽत्यन्तमात्मानं निरुपद्रवम्
स वर्जयेत मांसानि प्राणिनामिह सर्वशः ५२
श्रूयते हि पुराकल्पे नृणां व्रीहिमयः पशुः
येनायजन्त यज्वानः पुण्यलोकपरायणाः ५३
ऋषिभिः संशयं पृष्टो वसुश्चेदिपतिः पुरा
अभक्ष्यमिति मांसं स प्राह भक्ष्यमिति प्रभो ५४
आकाशान्मेदिनीं प्राप्तस्ततः स पृथिवीपतिः
एतदेव पुनश्चोक्त्वा विवेश धरणीतलम् ५५
प्रजानां हितकामेन त्वगस्त्येन महात्मना
आरण्याः सर्वदैवत्याः प्रोक्षितास्तपसा मृगाः ५६
क्रिया ह्येवं न हीयन्ते पितृदैवतसंश्रिताः
प्रीयन्ते पितरश्चैव न्यायतो मांसतर्पिताः ५७
इदं तु शृणु राजेन्द्र कीर्त्यमानं मयानघ
अभक्षणे सर्वसुखं मांसस्य मनुजाधिप ५८
यस्तु वर्षशतं पूर्णं तपस्तप्येत्सुदारुणम्
यश्चैकं वर्जयेन्मांसं सममेतन्मतं मम ५९
कौमुदे तु विशेषेण शुक्लपक्षे नराधिप
वर्जयेत्सर्वमांसानि धर्मो ह्यत्र विधीयते ६०
चतुरो वार्षिकान्मासान्यो मांसं परिवर्जयेत्
चत्वारि भद्राण्याप्नोति कीर्तिमायुर्यशो बलम् ६१
अथ वा मासमप्येकं सर्वमांसान्यभक्षयन्
अतीत्य सर्वदुःखानि सुखी जीवेन्निरामयः ६२
ये वर्जयन्ति मांसानि मासशः पक्षशोऽपि वा
तेषां हिंसानिवृत्तानां ब्रह्मलोको विधीयते ६३
मांसं तु कौमुदं पक्षं वर्जितं पार्थ राजभिः
सर्वभूतात्मभूतैस्तैर्विज्ञातार्थपरावरैः ६४
नाभागेनाम्बरीषेण गयेन च महात्मना

आयुषा चानरण्येन दिलीपरघुपूरुभिः ६५
कार्तवीर्यानिरुद्धाभ्यां नहुषेण ययातिना
नृगेण विष्वगश्वेन तथैव शशबिन्दुना
युवनाश्वेन च तथा शिबिनौशीनरेण च ६६
श्येनचित्रेण राजेन्द्र सोमकेन वृकेण च
रैवतेन रन्तिदेवेन वसुना सृञ्जयेन च ६७
दुःषन्तेन करूषेण रामालर्कनलैस्तथा
विरूपाश्वेन निमिना जनकेन च धीमता ६८
सिलेन पृथुना चैव वीरसेनेन चैव ह
इक्ष्वाकुणा शंभुना च श्वेतेन सगरेण च ६९
एतैश्चान्यैश्च राजेन्द्र पुरा मांसं न भक्षितम्
शारदं कौमुदं मासं ततस्ते स्वर्गमाप्नुवन् ७०
ब्रह्मलोके च तिष्ठन्ति ज्वलमानाः श्रियान्विताः
उपास्यमाना गन्धर्वैः स्त्रीसहस्रसमन्विताः ७१
तदेतदुत्तमं धर्ममहिंसालक्षणं शुभम्
ये चरन्ति महात्मानो नाकपृष्ठे वसन्ति ते ७२
मधु मांसं च ये नित्यं वर्जयन्तीह धार्मिकाः
जन्मप्रभृति मद्यं च सर्वे ते मुनयः स्मृताः
विशिष्टतां ज्ञातिषु च लभन्ते नात्र संशयः ७३
आपन्नश्चापदो मुच्येद्बद्धो मुच्येत बन्धनात्
मुच्येत्तथातुरो रोगाद्दुःखान्मुच्येत दुःखितः ७४
तिर्यग्योनिं न गच्छेत रूपवांश्च भवेन्नरः
बुद्धिमान्वै कुरुश्रेष्ठ प्राप्नुयाच्च महद्यशः ७५
एतत्ते कथितं राजन्मांसस्य परिवर्जने
प्रवृत्तौ च निवृत्तौ च विधानमृषिनिर्मितम् ७६
इति श्रीमहाभारते अनुशासनपर्वणि षोडशाधिकशततमोऽध्यायः ११६

## सप्तदशाधिक शततमोऽध्यायः

युधिष्ठिर उवाच
इमे वै मानवा लोके भृशं मांसस्य गृद्धिनः

विसृज्य भक्षान्विविधान्यथा रक्षोगणास्तथा १
नापूपान्विविधाकाराञ्शाकानि विविधानि च
षाण्डवान्रसयोगांश्च तथेच्छन्ति यथामिषम् २
तत्र मे बुद्धिरत्रैव विसर्गे परिमुह्यते
न मन्ये रसतः किंचिन्मांसतोऽस्तीह किंचन ३
तदिच्छामि गुणाञ्श्रोतुं मांसस्याभक्षणेऽपि वा
भक्षणे चैव ये दोषास्तांश्चैव पुरुषर्षभ ४
सर्वे तत्त्वेन धर्मज्ञ यथावदिह धर्मतः
किं वा भक्ष्यमभक्ष्यं वा सर्वमेतद्वदस्व मे ५
भीष्म उवाच
एवमेतन्महाबाहो यथा वदसि भारत
न मांसात्परमत्रान्यद्रसतो विद्यते भुवि ६
क्षतक्षीणाभितप्तानां ग्राम्यधर्मरताश्च ये
अध्वना कर्शितानां च न मांसाद्विद्यते परम् ७
सद्यो वर्धयति प्राणान्पुष्टिमग्र्यां ददाति च
न भक्षोऽभ्यधिकः कश्चिन्मांसादस्ति परन्तप ८
विवर्जने तु बहवो गुणाः कौरवनन्दन
ये भवन्ति मनुष्याणां तान्मे निगदतः शृणु ९
स्वमांसं परमांसैर्यो विवर्धयितुमिच्छति
नास्ति क्षुद्रतरस्तस्मान्न नृशंसतरो नरः १०
न हि प्राणात्प्रियतरं लोके किंचन विद्यते
तस्माद्दयां नरः कुर्याद्यथात्मनि तथा परे ११
शुक्राच्च तात संभूतिर्मांसस्येह न संशयः
भक्षणे तु महान्दोषो वधेन सह कल्पते १२
अहिंसालक्षणो धर्म इति वेदविदो विदुः
यदहिंस्रं भवेत्कर्म तत्कुर्यादात्मवान्नरः १३
पितृदैवतयज्ञेषु प्रोक्षितं हविरुच्यते
विधिना वेददृष्टेन तद्भुक्त्वेह न दुष्यति १४
यज्ञार्थे पशवः सृष्टा इत्यपि श्रूयते श्रुतिः
अतोऽन्यथा प्रवृत्तानां राक्षसो विधिरुच्यते १५

क्षत्रियाणां तु यो दृष्टो विधिस्तमपि मे शृणु
वीर्येणोपार्जितं मांसं यथा खादन्न दुष्यति १६
आरण्याः सर्वदैवत्याः प्रोक्षिताः सर्वशो मृगाः
अगस्त्येन पुरा राजन्मृगया येन पूज्यते १७
नात्मानमपरित्यज्य मृगया नाम विद्यते
समतामुपसंगम्य रूपं हन्यान्नवा नृप १८
अतो राजर्षयः सर्वे मृगयां यान्ति भारत
लिप्यन्ते न हि दोषेण न चैतत्पातकं विदुः १९
न हि तत्परमं किंचिदिह लोके परत्र च
यत्सर्वेष्विह लोकेषु दयाकौरवनन्दन २०
न भयं विद्यते जातु नरस्येह दयावतः
दयावतामिमे लोकाः परे चापि तपस्विनाम् २१
अभयं सर्वभूतेभ्यो यो ददाति दयापरः
अभयं तस्य भूतानि ददतीत्यनुशुश्रुमः २२
क्षतं च स्खलितं चैव पतितं क्लिष्टमाहतम्
सर्वभूतानि रक्षन्ति समेषु विषमेषु च २३
नैनं व्यालमृगा घ्नन्ति न पिशाचा न राक्षसाः
मुच्यन्ते भयकालेषु मोक्षयन्ति च ये परान् २४
प्राणदानात्परं दानं न भूतं न भविष्यति
न ह्यात्मनः प्रियतरः कश्चिदस्तीति निश्चितम् २५
अनिष्टं सर्वभूतानां मरणं नाम भारत
मृत्युकाले हि भूतानां सद्यो जायति वेपथुः २६
जातिजन्मजरादुःखे नित्यं संसारसागरे
जन्तवः परिवर्तन्ते मरणादुद्विजन्ति च २७
गर्भवासेषु पच्यन्ते क्षाराम्लकटुकै रसैः
मूत्रश्लेष्मपुरीषाणां स्पर्शैश्च भृशदारुणैः २८
जाताश्चाप्यवशास्तत्र भिद्यमानाः पुनः पुनः
पाट्यमानाश्च दृश्यन्ते विवशा मांसगृद्धिनः २९
कुम्भीपाके च पच्यन्ते तां तां योनिमुपागताः
आक्रम्य मार्यमाणाश्च भ्राम्यन्ते वै पुनः पुनः ३०

नात्मनोऽस्ति प्रियतरः पृथिव्यामनुसृत्य ह
तस्मात्प्राणिषु सर्वेषु दयावानात्मवान्भवेत् ३१
सर्वमांसानि यो राजन्यावज्जीवं न भक्षयेत्
स्वर्गे स विपुलं स्थानं प्राप्नुयान्नात्र संशयः ३२
ये भक्षयन्ति मांसानि भूतानां जीवितैषिणाम्
भक्ष्यन्ते तेऽपि तैर्भूतैरिति मे नास्ति संशयः ३३
मां स भक्षयते यस्माद्भक्षयिष्ये तमप्यहम्
एतन्मांसस्य मांसत्वमतो बुध्यस्व भारत ३४
घातको वध्यते नित्यं तथा वध्येत बन्धकः
आक्रोष्टाक्रुश्यते राजन्द्वेष्य द्वेष्यत्वमाप्नुते ३५
येन येन शरीरेण यद्यत्कर्म करोति यः
तेन तेन शरीरेण तत्तत्फलमुपाश्नुते ३६
अहिंसा परमोधर्मस्तथाहिंसा परो दमः
अहिंसा परमं दानमहिंसा परमं तपः ३७
अहिंसा परमो यज्ञस्तथाहिंसा परं बलम्
अहिंसा परमं मित्रमहिंसा परमं सुखम्
अहिंसा परमं सत्यमहिंसा परमं श्रुतम् ३८
सर्वयज्ञेषु वा दानं सर्वतीर्थेषु चाप्लुतम्
सर्वदानफलं वापि नैतत्तुल्यमहिंसया ३९
अहिंस्रस्य तपोऽक्षय्यमहिंस्रो यजते सदा
अहिंस्रः सर्वभूतानां यथा माता यथा पिता ४०
एतत्फलमहिंसाया भूयश्च कुरुपुंगव
न हि शक्या गुणा वक्तुमिह वर्षशतैरपि ४१
इति श्रीमहाभारते अनुशासनपर्वणि सप्तदशाधिकशततमोऽध्यायः ११७

## अष्टादशाधिकशततमोऽध्यायः

युधिष्ठिर उवाच
अकामाश्च सकामाश्च हता येऽस्मिन्महाहवे
कां योनिं प्रतिपन्नास्ते तन्मे ब्रूहि पितामह १
दुःखं प्राणपरित्यागः पुरुषाणां महामृधे

जानामि तत्त्वं धर्मज्ञ प्राणत्यागं सुदुष्करम् २
समृद्धे वासमृद्धे वा शुभे वा यदि वाशुभे
कारणं तत्र मे ब्रूहि सर्वज्ञो ह्यसि मे मतः ३
भीष्म उवाच
समृद्धे वासमृद्धे वा शुभे वा यदि वाशुभे
संसारेऽस्मिन्समाजाताः प्राणिनः पृथिवीपते ४
निरता येन भावेन तत्र मे शृणु कारणम्
सम्यक्चायमनुप्रश्नस्त्वयोक्तश्च युधिष्ठिर ५
अत्र ते वर्तयिष्यामि पुरावृत्तमिदं नृप
द्वैपायनस्य संवादं कीटस्य च युधिष्ठिर ६
ब्रह्मभूतश्चरन्विप्रः कृष्णद्वैपायनः पुरा
ददर्श कीटं धावन्तं शीघ्रं शकटवर्त्मनि ७
गतिज्ञः सर्वभूतानां रुतज्ञश्च शरीरिणाम्
सर्वज्ञः सर्वतो दृष्ट्वा कीटं वचनमब्रवीत् ८
कीट संत्रस्तरूपोऽसि त्वरितश्चैव लक्ष्यसे
क्व धावसि तदाचक्ष्व कुतस्ते भयमागतम् ९
कीट उवाच
शकटस्यास्य महतो घोषं श्रुत्वा भयं मम
आगतं वै महाबुद्धे स्वन एष हि दारुणः
श्रूयते न स मां हन्यादिति तस्मादपाक्रमे १०
श्वसतां च शृणोम्येवं गोपुत्राणां प्रचोद्यताम्
वहतां सुमहाभारं संनिकर्षे स्वनं प्रभो
नृणां च संवाहयतां श्रूयते विविधः स्वनः ११
सोढुमस्मद्विधेनैष न शक्यः कीटयोनिना
तस्मादपक्रमाम्येष भयादस्मात्सुदारुणात् १२
दुःखं हि मृत्युर्भूतानां जीवितं च सुदुर्लभम्
अतो भीतः पलायामि गच्छेयं नासुखं सुखात् १३
भीष्म उवाच
इत्युक्तः स तु तं प्राह कुतः कीट सुखं तव
मरणं ते सुखं मन्ये तिर्यग्योनौ हि वर्तसे १४

शब्दं स्पर्शं रसं गन्धं भोगांश्चोच्चावचान्बहून्
नाभिजानासि कीट त्वं श्रेयो मरणमेव ते १५
कीट उवाच
सर्वत्र निरतो जीव इतीहापि सुखं मम
चेतयामि महाप्राज्ञ तस्मादिच्छामि जीवितुम् १६
इहापि विषयः सर्वो यथादेहं प्रवर्तितः
मानुषास्तिर्यगाश्चैव पृथग्भोगा विशेषतः १७
अहमासं मनुष्यो वै शूद्रो बहुधनः पुरा
अब्रह्मण्यो नृशंसश्च कदर्यो वृद्धिजीवनः १८
वाक्तीक्ष्णो निकृतिप्रज्ञो मोष्टा विश्वस्य सर्वशः
मिथःकृतोऽपनिधनः परस्वहरणे रतः १९
भृत्यातिथिजनश्चापि गृहे पर्युषितो मया
मात्सर्यात्स्वादुकामेन नृशंसेन बुभूषता २०
देवार्थं पितृयज्ञार्थमन्नं श्रद्धाकृतं मया
न दत्तमर्थकामेन देयमन्नं पुनाति ह २१
गुप्तं शरणमाश्रित्य भयेषु शरणागताः
अकस्मान्नो भयात्त्यक्ता न च त्राताभयैषिणः २२
धनं धान्यं प्रियान्दारान्यानं वासस्तथाद्भुतम्
श्रियं दृष्ट्वा मनुष्याणामसूयामि निरर्थकम् २३
इर्ष्युः परसुखं दृष्ट्वा आतताय्यबुभूषकः
त्रिवर्गहन्ता चान्येषामात्मकामानुवर्तकः २४
नृशंसगुणभूयिष्ठं पुरा कर्म कृतं मया
स्मृत्वा तदनुतप्येऽह त्यक्त्वा प्रियमिवात्मजम् २५
शुभानामपि जानामि कृतानां कर्मणां फलम्
माता च पूजिता वृद्धा ब्राह्मणश्चार्चितो मया २६
सकृज्जातिगुणोपेतः संगत्या गृहमागतः
अतिथिः पूजितो ब्रह्मंस्तेन मां नाजहात्स्मृतिः २७
कर्मणा तेन चैवाहं सुखाशामिह लक्षये
तच्छ्रोतुमहमिच्छामि त्वत्तः श्रेयस्तपोधन २८
इति श्रीमहाभारते अनुशासनपर्वणि अष्टादशाधिकशततमोऽध्यायः ११८

## एकोनविंशाधिक शततमोऽध्यायः

व्यास उवाच
शुभेन कर्मणा यद्वै तिर्यग्योनौ न मुह्यसे
ममैव कीट तत्कर्म येन त्वं न प्रमुह्यसे १
अहं हि दर्शनादेव तारयामि तपोबलात्
तपोबलाद्धि बलवद्बलमन्यन्न विद्यते २
जानामि पापैः स्वकृतैर्गतं त्वां कीट कीटताम्
अवाप्स्यसि परं धर्मं धर्मस्थो यदि मन्यसे ३
कर्म भूमिकृतं देवा भुञ्जते तिर्यगाश्च ये
धर्मादपि मनुष्येषु कामोऽथश्च यथा गुणैः ४
वाग्बुद्धिपाणिपादैश्चाप्युपेतस्य विपश्चितः
किं हीयते मनुष्यस्य मन्दस्यापि हि जीवतः ५
जीवन्हि कुरुते पूजां विप्राग्र्यः शशिसूर्ययोः
ब्रुवन्नपि कथां पुण्यां तत्र कीट त्वमेष्यसि ६
गुणभूतानि भूतानि तत्र त्वमुपभोक्ष्यसे
तत्र तेऽह विनेष्यामि ब्रह्मत्वं यत्र चेच्छसि ७
स तथेति प्रतिश्रुत्य कीटो वर्त्मन्यतिष्ठत
तमृषिं द्रष्टुमगमत्सर्वास्वन्यासु योनिषु ८
श्वाविद्गोधावराहाणां तथैव मृगपक्षिणाम्
श्वपाकवैश्यशूद्राणां क्षत्रियाणां च योनिषु ९
स कीटेत्येवमाभाष्य ऋषिणा सत्यवादिना
प्रतिस्मृत्याथ जग्राह पादौ मूर्ध्ना कृताञ्जलि १०
कीट उवाच
इदं तदतुलं स्थानमीप्सितं दशभिर्गुणैः
यदहं प्राप्य कीटत्वमागतो राजपुत्रताम् ११
वहन्ति मामतिबलाः कुञ्जरः हेममालिनः
स्यन्दनेषु च काम्बोजा युक्ताः परमवाजिनः १२
उष्ट्राश्वतरयुक्तानि यानानि च वहन्ति माम्
सबान्धवः सहामात्यश्चाश्नामि पिशितौदनम् १३
गृहेषु सुनिवासेषु सुखेषु शयनेषु च

पराध्यैषु महाभाग स्वपामीह सुपूजितः १४
सर्वेष्वपररात्रेषु सूतमागधबन्दिनः
स्तुवन्ति मां यथा देवं महेन्द्रं प्रियवादिनः १५
प्रसादात्सत्यसंधस्य भवतोऽमिततेजसः
यदहं कीटतां प्राप्य संप्राप्तो राजपुत्रताम् १६
नमस्तेऽस्तु महाप्राज्ञ किं करोमि प्रशाधि माम्
त्वत्तपोबलनिर्दिष्टमिदं ह्यधिगतं मया १७
व्यास उवाच
अर्चितोऽह त्वया राजन्वाग्भिरद्य यदृच्छया
अद्य ते कीटतां प्राप्य स्मृतिर्जाताजुगुप्सिता १८
न तु नाशोऽस्ति पापस्य यत्त्वयोपचितं पुरा
शूद्रेणार्थप्रधानेन नृशंसेनाततायिना १९
मम ते दर्शनं प्राप्तं तच्चैव सुकृतं पुरा
तिर्यग्योनौ स्म जातेन मम चाप्यर्चनात्तथा २०
इतस्त्वं राजपुत्रत्वाद्ब्राह्मण्यं समवाप्स्यसि
गोब्राह्मणकृते प्राणान्हुत्वात्मीयान्रणाजिरे २१
राजपुत्रसुखं प्राप्य ऋतूंश्चैवाप्तदक्षिणान्
अथ मोदिष्यसे स्वर्गे ब्रह्मभूतोऽव्ययः सुखी २२
तिर्यग्योन्याः शूद्रतामभ्युपैति शूद्रो वैश्यत्वं क्षत्रियत्वं च वैश्यः
वृत्तश्लाघी क्षत्रियो ब्राह्मणत्वं स्वर्गं पुण्यं ब्राह्मणः साधुवृत्तः २३
इति श्रीमहाभारते अनुशासनपर्वणि एकोनविंशाधिकशततमोऽध्यायः ११९

## विंशाधिक शततमोऽध्यायः

भीष्म उवाच
क्षत्रधर्ममनुप्राप्तः स्मरन्नेव स वीर्यवान्
त्यक्त्वा स कीटतां राजंश्चचार विपुलं तपः १
तस्य धर्मार्थविदुषो दृष्ट्वा तद्विपुलं तपः
आजगाम द्विजश्रेष्ठः कृष्णद्वैपायनस्तदा २
व्यास उवाच
क्षात्रं चैव व्रतं कीट भूतानां परिपालनम्

क्षात्रं चैव व्रतं ध्यायंस्ततो विप्रत्वमेष्यसि ३
पाहि सर्वाः प्रजाः सम्यक्शुभाशुभविदात्मवान्
शुभैः संविभजन्कामैरशुभानां च पावनैः ४
आत्मवान्भव सुप्रीतः स्वधर्मचरणे रतः
क्षात्रीं तनुं समुत्सृज्य ततो विप्रत्वमेष्यसि ५
भीष्म उवाच
सोऽथारण्यमभिप्रेत्य पुनरेव युधिष्ठिर
महर्षेर्वचनं श्रुत्वा प्रजा धर्मेण पाल्य च ६
अचिरेणैव कालेन कीटः पार्थिवसत्तम
प्रजापालनधर्मेण प्रेत्य विप्रत्वमागतः ७
ततस्तं ब्राह्मणं दृष्ट्वा पुनरेव महायशाः
आजगाम महाप्राज्ञः कृष्णद्वैपायनस्तदा ८
व्यास उवाच
भो भो विप्रर्षभ श्रीमन्मा व्यथिष्ठाः कथंचन
शुभकृच्छुभयोनीषु पापकृत्पापयोनिषु
उपपद्यति धर्मज्ञ यथाधर्मं यथागमम् ९
तस्मान्मृत्युभयात्कीट मा व्यथिष्ठाः कथंचन
धर्मलोपाद्भयं ते स्यात्तस्माद्धर्मं चरोत्तमम् १०
कीट उवाच
सुखात्सुखतरं प्राप्तो भगवंस्त्वत्कृते ह्यहम्
धर्ममूलां श्रियं प्राप्य पाप्मा नष्ट इहाद्य मे ११
भीष्म उवाच
भगवद्वचनात्कीटो ब्राह्मण्यं प्राप्य दुर्लभम्
अकरोत्पृथिवीं राजन्यज्ञयूपशताङ्किताम्
ततः सालोक्यमगमद्ब्रह्मणो ब्रह्मवित्तमः १२
अवाप च परं कीटः पार्थ ब्रह्म सनातनम्
स्वकर्मफलनिर्वृत्तं व्यासस्य वचनात्तदा १३
तेऽपि यस्मात्स्वभावेन हताः क्षत्रियपुंगवाः
संप्राप्तास्ते गतिं पुण्यां तस्मान्मा शोच पुत्रक १४
इति श्रीमहाभारते अनुशासनपर्वणि विंशत्यधिकशततमोऽध्यायः १२०

## एक विंशत्यधिक शततमोऽध्यायः

युधिष्ठिर उवाच
विद्या तपश्च दानं च किमेतेषां विशिष्यते
पृच्छामि त्वा सतां श्रेष्ठ तन्मे ब्रूहि पितामह १
भीष्म उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
मैत्रेयस्य च संवादं कृष्णद्वैपायनस्य च २
कृष्णद्वैपायनो राजन्नज्ञातचरितं चरन्
वाराणस्यामुपातिष्ठन्मैत्रेयं स्वैरिणीकुले ३
तमुपस्थितमासीनं ज्ञात्वा स मुनिसत्तमम्
अर्चित्वा भोजयामास मैत्रेयोऽशनमुत्तमम् ४
तदन्नमुत्तमं भुक्त्वा गुणवत्सार्वकामिकम्
प्रतिष्ठमानोऽस्मयत प्रीतः कृष्णो महामनाः ५
तमुत्स्मयन्तं संप्रेक्ष्य मैत्रेयः कृष्णमब्रवीत्
कारणं ब्रूहि धर्मात्मन्योऽस्मयिष्ठाः कुतश्च ते
तपस्विनो धृतिमतः प्रमोदः समुपागतः ६
एतत्पृच्छामि ते विद्वन्नभिवाद्य प्रणम्य च
आत्मनश्च तपोभाग्यं महाभाग्यं तथैव च ७
पृथगाचरतस्तात पृथगात्मनि चात्मनोः
अल्पान्तरमहं मन्ये विशिष्टमपि वा त्वया ८
व्यास उवाच
अतिच्छेदातिवादाभ्यां स्मयोऽय समुपागतः
असत्यं वेदवचनं कस्माद्वेदोऽनृतं वदेत् ९
त्रीण्येव तु पदान्याहुः पुरुषस्योत्तमं व्रतम्
न द्रुह्येच्चैव दद्याच्च सत्यं चैव परं वदेत्
इदानीं चैव नः कृत्यं पुरस्ताच्च परं स्मृतम् १०
अल्पोऽपि तादृशो दायो भवत्युत महाफलः
तृषिताय च यद्दत्तं हृदयेनानसूयता ११
तृषितस्तृषिताय त्वं दत्त्वैतदशनं मम
अजैषीर्महतो लोकान्महायज्ञैरिवाभिभो

अतो दानपवित्रेण प्रीतोऽस्मि तपसैव च १२
पुण्यस्यैव हि ते गन्धः पुण्यस्यैव च दर्शनम्
पुण्यश्च वाति गन्धस्ते मन्ये कर्मविधानतः १३
अधिकं मार्जनात्तात तथैवाप्यनुलेपनात्
शुभं सर्वपवित्रेभ्यो दानमेव परं भवेत् १४
यानीमान्युत्तमानीह वेदोक्तानि प्रशंससि
तेषां श्रेष्ठतमं दानमिति मे नास्ति संशयः १५
दानकृद्भिः कृतः पन्था येन यान्ति मनीषिणः
ते हि प्राणस्य दातारस्तेषु धर्मः प्रतिष्ठितः १६
यथा वेदाः स्वधीताश्च यथा चेन्द्रियसंयमः
सर्वत्यागो यथा चेह तथा दानमनुत्तमम् १७
त्वं हि तात सुखादेव सुखमेष्यसि शोभनम्
सुखात्सुखतरप्राप्तिमाप्नुते मतिमान्नरः १८
तन्नः प्रत्यक्षमेवेदमुपलब्धमसंशयम्
श्रीमन्तमाप्नुवन्त्यर्था दानं यज्ञस्तथा सुखम् १९
सुखादेव परं दुःखं दुःखादन्यत्परं सुखम्
दृश्यते हि महाप्राज्ञ नियतं वै स्वभावतः २०
त्रिविधानीह वृत्तानि नरस्याहुर्मनीषिणः
पुण्यमन्यत्पापमन्यन्न पुण्यं न च पापकम् २१
न वृत्तं मन्यतेऽन्यस्य मन्यतेऽन्यस्य पापकम्
तथा स्वकर्मनिर्वृत्तं न पुण्यं न च पापकम् २२
रमस्वैधस्व मोदस्व देहि चैव यजस्व च
न त्वामभिभविष्यन्ति वैद्या न च तपस्विनः २३
इति श्रीमहाभारते अनुशासनपर्वणि एकविंशत्यधिकशततमोऽध्यायः १२१

## द्वाविंशत्यधिक शततमोऽध्यायः

भीष्म उवाच
एवमुक्तः प्रत्युवाच मैत्रेयः कर्मपूजकः
अत्यन्तं श्रीमति कुले जातः प्राज्ञो बहुश्रुतः १
असंशयं महाप्राज्ञ यथैवात्थ तथैव तत्

अनुज्ञातस्तु भवता किंचिद्ब्रूयामहं विभो २
व्यास उवाच
यद्यदिच्छसि मैत्रेय यावद्यावद्यथा तथा
ब्रूहि तावन्महाप्राज्ञ शुश्रूषे वचनं तव ३
मैत्रेय उवाच
निर्दोषं निर्मलं चैवं वचनं दानसंहितम्
विद्यातपोभ्यां हि भवान्भावितात्मा न संशयः ४
भवतो भावितात्मत्वाद्दायोऽय सुमहान्मम
भूयो बुद्ध्यानुपश्यामि सुसमृद्धतपा इव ५
अपि मे दर्शनादेव भवतोऽभ्युदयो महान्
मन्ये भवत्प्रसादोऽय तद्धि कर्म स्वभावतः ६
तपः श्रुतं च योनिश्चाप्येतद्ब्राह्मण्यकारणम्
त्रिभिर्गुणैः समुदितस्ततो भवति वै द्विजः ७
तस्मिंस्तृप्ते च तृप्यन्ते पितरो दैवतानि च
न हि श्रुतवतां किंचिदधिकं ब्राह्मणादृते ८
यथा हि सुकृते क्षेत्रे फलं विन्दति मानवः
एवं दत्त्वा श्रुतवति फलं दाता समश्नुते ९
ब्राह्मणश्चन्ने विद्येत श्रुतवृत्तोपसंहितः
प्रतिग्रहीता दानस्य मोघं स्याद्धनिनां धनम् १०
अदन्ह्यविद्वान्हन्त्यन्नमद्यमानं च हन्ति तम्
तं च हन्यति यस्यान्नं स हत्वा हन्यतेऽबुधः ११
प्रभुर्ह्यन्नमदन्विद्वान्पुनर्जनयतीश्वरः
स चान्नाज्जायते तस्मात्सूक्ष्म एव व्यतिक्रमः १२
यदेव ददतः पुण्यं तदेव प्रतिगृह्णतः
न ह्येकचक्रं वर्तेत इत्येवमृषयो विदुः १३
यत्र वै ब्राह्मणा सन्ति श्रुतवृत्तोपसंहिताः
तत्र दानफलं पुण्यमिह चामुत्र चाश्नुते १४
ये योनिशुद्धाः सततं तपस्यभिरता भृशम्
दानाध्ययनसंपन्नास्ते वै पूज्यतमाः सदा १५
तैर्हि सद्भिः कृतः पन्थाश्चेतयानो न मुह्यते

ते हि स्वर्गस्य नेतारो यज्ञवाहाः सनातनाः १६
इति श्रीमहाभारते अनुशासनपर्वणि द्वाविंशत्यधिकशततमोऽध्यायः १२२

## त्रयोविंशत्यधिक शततमोऽध्यायः

भीष्म उवाच
एवमुक्तः स भगवान्मैत्रेयं प्रत्यभाषत
दिष्ट्यैवं त्वं विजानासि दिष्ट्या ते बुद्धिरीदृशी
लोको ह्ययं गुणानेव भूयिष्ठं स्म प्रशंसति १
रूपमानवयोमानश्रीमानाश्चाप्यसंशयम्
दिष्ट्या नाभिभवन्ति त्वां दैवस्तेऽयमनुग्रहः
यत्ते भृशतरं दानाद्वर्तयिष्यामि तच्छृणु २
यानीहागमशास्त्राणि याश्च काश्चित्प्रवृत्तयः
तानि वेदं पुरस्कृत्य प्रवृत्तानि यथाक्रमम् ३
अहं दानं प्रशंसामिभवानपि तपःश्रुते
तपः पवित्रं वेदस्य तपः स्वर्गस्य साधनम् ४
तपसा महदाप्नोति विद्यया चेति नः श्रुतम्
तपसैव चापनुदेद्यच्चान्यदपि दुष्कृतम् ५
यद्यद्धि किंचित्संधाय पुरुषस्तप्यते तपः
सर्वमेतदवाप्नोति ब्राह्मणो वेदपारगः ६
दुरन्वयं दुष्प्रधृष्यं दुरापं दुरतिक्रमम्
सर्वं वै तपसाभ्येति तपो हि बलवत्तरम् ७
सुरापोऽसमतादायी भ्रूणहा गुरुतल्पगः
तपसा तरते सर्वमेनसश्च प्रमुच्यते ८
सर्वविद्यस्तु चक्षुष्मानपि यादृशतादृशः
तपस्विनौ च तावाहुस्ताभ्यां कार्यं सदा नमः ९
सर्वे पूज्याः श्रुतधनास्तथैव च तपस्विनः
दानप्रदाः सुखं प्रेत्य प्राप्नुवन्तीह च श्रियम् १०
इमं च ब्रह्मलोकं च लोकं च बलवत्तरम्
अन्नदानैः सुकृतिनः प्रतिपद्यन्ति लौकिकाः ११
पूजिताः पूजयन्त्येतान्मानिता मानयन्ति च

अदाता यत्र यत्रैति सर्वतः संप्रणुद्यते १२
अकर्ता चैव कर्ता च लभते यस्य यादृशम्
यद्येवोर्ध्वं यद्यवाक्च त्वं लोकामभियास्यसि १३
प्राप्स्यसे त्वन्नपानानि यानि दास्यसि कानिचित्
मेधाव्यसि कुले जातः श्रुतवाननृशंसवान् १४
कौमारदारव्रतवान्मैत्रेय निरतो भव
एतद्गृहाण प्रथमं प्रशस्तं गृहमेधिनाम् १५
यो भर्ता वासितातुष्टो भर्तुस्तुष्टा च वासिता
यस्मिन्नेवं कुले सर्वं कल्याणं तत्र वर्तते १६
अद्भिर्गात्रान्मलमिव तमोऽग्निप्रभया यथा
दानेन तपसा चैव सर्वपापमपोह्यते १७
स्वस्ति प्राप्नुहि मैत्रेय गृहान्साधु व्रजाम्यहम्
एतन्मनसि कर्तव्यं श्रेय एवं भविष्यति १८
तं प्रणम्याथ मैत्रेयः कृत्वा चाभिप्रदक्षिणम्
स्वस्ति प्राप्नोतु भगवानित्युवाच कृताञ्जलि १९
इति श्रीमहाभारते अनुशासनपर्वणि त्रयोविंशत्यधिकशततमोऽध्यायः १२३

## चतुर्विंशत्यधिक शततमोऽध्यायः

युधिष्ठिर उवाच
सत्स्त्रीणां समुदाचारं सर्वधर्मभृतां वर
श्रोतुमिच्छाम्यहं त्वत्तस्तं मे ब्रूहि पितामह १
भीष्म उवाच
सर्वज्ञां सर्वधर्मज्ञां देवलोके मनस्विनीम्
कैकेयी सुमना नाम शाण्डिलद्यं पर्यपृच्छत २
केन वृत्तेन कल्याणि समाचारेण केन वा
विधूय सर्वपापानि देवलोकं त्वमागता ३
हुताशनशिखेव त्वं ज्वलमाना स्वतेजसा
सुता ताराधिपस्येव प्रभया दिवमागता ४
अरजांसि च वस्त्राणि धारयन्ती गतक्लमा
विमानस्था शुभे भासि सहस्रगुणमोजसा ५

न त्वमल्पे न तपसा दानेन नियमेन वा
इमं लोकमनुप्राप्ता तस्मात्तत्त्वं वदस्व मे ६
इति पृष्टा सुमनया मधुरं चारुहासिनी
शाण्डिली निभृतं वाक्यं सुमनामिदमब्रवीत् ७
नाहं काषायवसना नापि वल्कलधारिणी
न च मुण्डा च जटिला भूत्वा देवत्वमागता ८
अहितानि च वाक्यानि सर्वाणि परुषाणि च
अप्रमत्ता च भर्तारं कदाचिन्नाहमब्रुवम् ९
देवतानां पितॄणां च ब्राह्मणानां च पूजने
अप्रमत्ता सदायुक्ता श्वश्रूश्वशुरवर्तिनी १०
पैशुन्ये न प्रवर्तामि न ममैतन्मनोगतम्
अद्वारे न च तिष्ठामि चिरं न कथयामि च ११
असद्वा हसितं किंचिदहितं वापि कर्मणा
रहस्यमरहस्यं वा न प्रवर्तामि सर्वथा १२
कार्यार्थे निर्गतं चापि भर्तारं गृहमागतम्
आसनेनोपसंयोज्य पूजयामि समाहिता १३
यद्यच्च नाभिजानाति यद्भोज्यं नाभिनन्दति
भक्ष्यं वाप्यथ वा लेह्यं तत्सर्वं वर्जयाम्यहम् १४
कुटुम्बार्थे समानीतं यत्किंचित्कार्यमेव तु
प्रातरुत्थाय तत्सर्वं कारयामि करोमि च १५
प्रवासं यदि मे भर्ता याति कार्येण केनचित्
मङ्गलैर्बहुभिर्युक्ता भवामि नियता सदा १६
अञ्जनं रोचनां चैव स्नानं माल्यानुलेपनम्
प्रसाधनं च निष्क्रान्ते नाभिनन्दामि भर्तरि १७
नोत्थापयामि भर्तारं सुखसुप्तमहं सदा
आतुरेष्वपि कार्येषु तेन तुष्यति मे मनः १८
नायासयामि भर्तारं कुटुम्बार्थे च सर्वदा
गुप्तगुह्या सदा चास्मि सुसंमृष्टनिवेशना १९
इमं धर्मपथं नारी पालयन्ती समाहिता
अरुन्धतीव नारीणां स्वर्गलोके महीयते २०

भीष्म उवाच
एतदाख्याय सा देवी सुमनायै तपस्विनी
पतिधर्मं महाभागा जगामादर्शनं तदा २१
यश्चेदं पाण्डवाख्यानं पठेत्पर्वणि पर्वणि
स देवलोकं संप्राप्य नन्दने सुसुखं वसेत् २२
इति श्रीमहाभारते अनुशासनपर्वणि चतुर्विंशत्यधिकशततमोऽध्यायः १२४

पञ्चविंशत्यधिक शततमोऽध्यायः

युधिष्ठिर उवाच
साम्ना वापि प्रदाने वा ज्यायः किं भवतो मतम्
प्रब्रूहि भरतश्रेष्ठ यदत्र व्यतिरिच्यते १
भीष्म उवाच
साम्ना प्रसाद्यते कश्चिद्दानेन च तथापरः
पुरुषः प्रकृतिं ज्ञात्वा तयोरेकतरं भजेत् २
गुणांस्तु शृणु मे राजन्सान्त्वस्य भरतर्षभ
दारुणान्यपि भूतानि सान्त्वेनाराधयेद्यथा ३
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
गृहीत्वा रक्षसा मुक्तो द्विजातिः कानने यथा ४
कश्चित्तु बुद्धिसंपन्नो ब्राह्मणो विजने वने
गृहीतः कृच्छ्रमापन्नो रक्षसा भक्षयिष्यता ५
स बुद्धिश्रुतसंपन्नस्तं दृष्ट्वातीव भीषणम्
सामैवास्मिन्प्रयुयुजे न मुमोह न विव्यथे ६
रक्षस्तु वाचा संपूज्य प्रश्नं पप्रच्छ तं द्विजम्
मोक्ष्यसे ब्रूहि मे प्रश्नं केनास्मि हरिणः कृशः ७
मुहूर्तमथ संचिन्त्य ब्राह्मणस्तस्य रक्षसः
आभिर्गाथाभिरव्यग्रः प्रश्नं प्रतिजगाद ह ८
विदेशस्थो विलोकस्थो विना नूनं सुहृज्जनैः
विषयानतुलान्भुङ्क्षे तेनासि हरिणः कृशः ९
नूनं मित्राणि ते रक्षः साधूपचरितान्यपि
स्वदोषादपरज्यन्ते तेनासि हरिणः कृशः १०

धनैश्वर्याधिकाः स्तब्धास्त्वद्गुणैः परमावराः
अवजानन्ति नूनं त्वां तेनासि हरिणः कृशः ११
गुणवान्विगुणानन्यान्नूनं पश्यसि सत्कृतान्
प्राज्ञोऽप्राज्ञान्विनीतात्मा तेनासि हरिणः कृशः १२
अवृत्त्या क्लिश्यमानोऽपि वृत्त्युपायान्विगर्हयन्
माहात्म्याद्व्यथसे नूनं तेनासि हरिणः कृशः १३
संपीड्यात्मानमार्यत्वात्त्वया कश्चिदुपस्कृतः
जितं त्वां मन्यते साधो तेनासि हरिणः कृशः १४
क्लिश्यमानान्विमार्गेषु कामक्रोधावृतात्मनः
मन्ये नु ध्यायसि जनांस्तेनासि हरिणः कृशः १५
प्राज्ञैः संभावितो नूनं नप्राज्ञैरुपसंहितः
ह्रीयमानमर्षी दुर्वृत्तैस्तेनासि हरिणः कृशः १६
नूनं मित्रमुखः शत्रुः कश्चिदार्यवदाचरन्
वञ्चयित्वा गतस्त्वां वै तेनासि हरिणः कृशः १७
प्रकाशार्थगतिर्नूनं रहस्यकुशलः कृती
तज्ज्ञैर्न पूज्यसे नूनं तेनासि हरिणः कृशः १८
असत्स्वभिनिविष्टेषु ब्रुवतो मुक्तसंशयम्
गुणास्ते न विराजन्ते तेनासि हरिणः कृशः १९
धनबुद्धिश्रुतैर्हीनः केवलं तेजसान्वितः
महत्प्रार्थयसे नूनं तेनासि हरिणः कृशः २०
तपःप्रणिहितात्मानं मन्ये त्वारण्यकाङ्क्षिणम्
बन्धुवर्गो न गृह्णाति तेनासि हरिणः कृशः २१
नूनमर्थवतां मध्ये तव वाक्यमनुत्तमम्
न भाति कालेऽभिहितं तेनासि हरिणः कृशः २२
दृढपूर्वश्रुतं मूर्खं कुपितं हृदयप्रियम्
अनुनेतुं न शक्नोषि तेनासि हरिणः कृशः २३
नूनमासंजयित्वा ते कृत्ये कस्मिंश्चिदीप्सिते
कश्चिदर्थयतेऽत्यर्थं तेनासि हरिणः कृशः २४
नूनं त्वा स्वगुणापेक्षं पूजयानं सुहृद्ध्रुवम्
मदार्थ इति जानाति तेनासि हरिणः कृशः २५

अन्तर्गतमभिप्रायं न नूनं लज्जयेच्छसि
विवक्तुं प्राप्तिशैथिल्यात्तेनासि हरिणः कृशः २६
नानाबुद्धिरुचीँल्लोके मनुष्यान्नूनमिच्छसि
ग्रहीतुं स्वगुणैः सर्वास्तेनासि हरिणः कृशः २७
अविद्वान्भीरुरल्पार्थो विद्याविक्रमदानजम्
यशः प्रार्थयसे नूनं तेनासि हरिणः कृशः २८
चिराभिलषितं किंचित्फलमप्राप्तमेव ते
कृतमन्यैरपहृतं तेनासि हरिणः कृशः २९
नूनमात्मकृतं दोषमपश्यन्किंचिदात्मनि
अकारणेऽभिशस्तोऽसि तेनासि हरिणः कृशः ३०
सुहृदामप्रमत्तानामप्रमोद्ध्यार्थहानिजम्
दुःखमर्थगुणैर्हीनं तेनासि हरिणः कृशः ३१
साधून्गृहस्थान्दृष्ट्वा च तथासाधून्वनेचरान्
मुक्तांश्चावसथे सक्तांस्तेनासि हरिणः कृशः ३२
धर्म्यमर्थं च काले च देशे चाभिहितं वचः
न प्रतिष्ठति ते नूनं तेनासि हरिणः कृशः ३३
दत्तानकुशलैरर्थान्मनीषी संजिजीविषुः
प्राप्य वर्तयसे नूनं तेनासि हरिणः कृशः ३४
पापान्विवर्धतो दृष्ट्वा कल्याणांश्चावसीदतः
ध्रुवं मृगयसे योग्यं तेनासि हरिणः कृशः ३५
परस्परविरुद्धानां प्रियं नूनं चिकीर्षसि
सुहृदामविरोधेन तेनासि हरिणः कृशः ३६
श्रोत्रियांश्च विकर्मस्थान्प्राज्ञांश्चाप्यजितेन्द्रियान्
मन्येऽनुध्यायसि जनांस्तेनासि हरिणः कृशः ३७
एवं संपूजितं रक्षो विप्रं तं प्रत्यपूजयत्
सखायमकरोच्चैनं संयोज्यार्थैर्मुमोच ह ३८
इति श्रीमहाभारते अनुशासनपर्वणि पञ्चविंशत्यधिकशततमोऽध्यायः १२५

## षड्विंशत्यधिक शततमोऽध्यायः

युधिष्ठिर उवाच

पितामह महाप्राज्ञ सर्वशास्त्रविशारद
आगमैर्बहुभिः स्फीतो भवान्नः प्रथितः कुले १
त्वत्तो धर्मार्थसंयुक्तमायत्यां च सुखोदयम्
आश्चर्यभूतं लोकस्य श्रोतुमिच्छाम्यरिंदम २
अयं च कालः संप्राप्तो दुर्लभज्ञातिबान्धवः
शास्ता च न हि नः कश्चित्त्वामृते भरतर्षभ ३
यदि तेऽहमनुग्राह्यो भ्रातृभिः सहितोऽनघ
वक्तुमर्हसि नः प्रश्नं यत्त्वां पृच्छामि पार्थिव ४
अयं नारायणः श्रीमान्सर्वपार्थिवसंमतः
भवन्तं बहुमानेन प्रश्रयेण च सेवते ५
अस्य चैव समक्षं त्वं पार्थिवानां च सर्वशः
भ्रातॄणां च प्रियार्थं मे स्नेहाद्भाषितुमर्हसि ६
वैशम्पायन उवाच
तस्य तद्वचनं श्रुत्वा स्नेहादागतसंभ्रमः
भीष्मो भागीरथीपुत्र इदं वचनमब्रवीत् ७
हन्त ते कथयिष्यामि कथामतिमनोरमाम्
अस्य विष्णोः पुरा राजन्प्रभावोऽय मया श्रुतः ८
यश्च गोवृषभाङ्कस्य प्रभावस्तं च मे शृणु
रुद्राण्याः संशयो यश्च दंपत्योस्तं च मे शृणु ९
व्रतं चचार धर्मात्मा कृष्णो द्वादशवार्षिकम्
दीक्षितं चागतौ द्रष्टुमुभौ नारदपर्वतौ १०
कृष्णद्वैपायनश्चैव धौम्यश्च जपतां वरः
देवलः काश्यपश्चैव हस्तिकाश्यप एव च ११
अपरे ऋषयः सन्तो दीक्षादमसमन्विताः
शिष्यैरनुगताः सर्वे देवकल्पैस्तपोधनैः १२
तेषामतिथिसत्कारमर्चनीयं कुलोचितम्
देवकीतनयः प्रीतो देवकल्पमकल्पयत् १३
हरितेषु सुवर्णेषु बर्हिष्केषु नवेषु च
उपोपविविशुः प्रीता विष्टरेषु महर्षयः १४
कथाश्चक्रुस्ततस्ते तु मधुरा धर्मसंहिताः

राजर्षीणां सुराणां च ये वसन्ति तपोधनाः १५
ततो नारायणं तेजो व्रतचर्येन्धनोत्थितम्
वक्त्रान्निःसृत्य कृष्णस्य वह्निरद्भुतकर्मणः १६
सोऽग्निर्ददाह तं शैलं सद्रुमं सलताक्षुपम्
सपक्षिमृगसंघातं सश्वापदसरीसृपम् १७
मृगैश्च विविधाकारैर्हाहाभूतमचेतनम्
शिखरं तस्य शैलस्य मथितं दीप्तदर्शनम् १८
स तु वह्निर्महाज्वालो दग्ध्वा सर्वमशेषतः
विष्णोः समीपमागम्य पादौ शिष्यवदस्पृशदत् १९
ततो विष्णुर्वनं दृष्ट्वा निर्दग्धमरिकर्शनः
सौम्यैर्दृष्टिनिपातैस्तत्पुनः प्रकृतिमानयत् २०
तथैव स गिरिर्भूयः प्रपुष्पितलताद्रुमः
सपक्षिगणसंघुष्टः सश्वापदसरीसृपः २१
तदद्भुतमचिन्त्यं च दृष्ट्वा मुनिगणस्तदा
विस्मितो हृष्टलोमा च बभूवास्राविलेक्षणः २२
ततो नारायणो दृष्ट्वा तानृषीन्विस्मयान्वितान्
प्रश्रितं मधुरं स्निग्धं पप्रच्छ वदतां वरः २३
किमस्य ऋषिपूगस्य त्यक्तसङ्गस्य नित्यशः
निर्ममस्यागमवतो विस्मयः समुपागतः २४
एतं मे संशयं सर्वं याथातथ्यमनिन्दिताः
ऋषयो वक्तुमर्हन्ति निश्चितार्थं तपोधनाः २५
ऋषय ऊचुः
भवान्विसृजते लोकान्भवान्संहरते पुनः
भवाञ्शीतं भवानुष्णं भवानेव प्रवर्षति २६
पृथिव्यां यानि भूतानि स्थावराणि चराणि च
तेषां पिता त्वं माता च प्रभुः प्रभव एव च २७
एतन्नो विस्मयकरं प्रशंस मधुसूदन
त्वमेवार्हसि कल्याण वक्तुं वह्नेर्विनिर्गमम् २८
ततो विगतसंत्रासा वयमप्यरिकर्शन
यच्छ्रुतं यच्च दृष्टं नस्तत्प्रवक्ष्यामहे हरे २९

वासुदेव उवाच
एतत्तद्वैष्णवं तेजो मम वक्त्राद्विनिःसृतम्
कृष्णवर्त्मा युगान्ताभो येनायं मथितो गिरिः ३०
ऋषयश्चार्तिमापन्ना जितक्रोधा जितेन्द्रियाः
भवन्तो व्यथिताश्चासन्देवकल्पास्तपोधनाः ३१
व्रतचर्यापरीतस्य तपस्विव्रतसेवया
मम वह्निः समुद्भूतो न वै व्यथितुमर्हथ ३२
व्रतं चर्तुमिहायातस्त्वहं गिरिमिमं शुभम्
पुत्रं चात्मसमं वीर्ये तपसा स्रष्टुमागतः ३३
ततो महात्मा यो देहे सोऽग्निर्भूत्वा विनिःसृतः
गतश्च वरदं द्रष्टुं सर्वलोकपितामहम् ३४
तेन चात्मानुशिष्टो मे पुत्रत्वे मुनिसत्तमाः
तेजसोऽधेन पुत्रस्ते भवितेति वृषध्वजः ३५
सोऽय वह्निरुपागम्य पादमूले ममान्तिकम्
शिष्यवत्परिचर्याथ शान्तः प्रकृतिमागतः ३६
एतदस्य रहस्यं वः पद्मनाभस्य धीमतः
मया प्रेम्णा समाख्यातं न भीः कार्या तपोधनाः ३७
सर्वत्र गतिरव्यग्रा भवतां दीर्घदर्शनाः
तपस्विव्रतसंदीप्ता ज्ञानविज्ञानशोभिताः ३८
यच्छ्रुतं यच्च वो दृष्टं दिवि वा यदि वा भुवि
आश्चर्यं परमं किंचित्तद्भवन्तो ब्रुवन्तु मे ३९
तस्यामृतनिकाशस्य वाङ्मधोरस्ति मे स्पृहा
भवद्भिः कथितस्येह तपोवननिवासिभिः ४०
यद्यप्यहमदृष्टं वा दिव्यमद्भुतदर्शनम्
दिवि वा भुवि वा किंचित्पश्याम्यमलदर्शनाः ४१
प्रकृतिः सा मम परा न क्वचित्प्रतिहन्यते
न चात्मगतमैश्वर्यमाश्चर्यं प्रतिभाति मे ४२
श्रद्धेयः कथितो ह्यर्थः सज्जनश्रवणं गतः
चिरं तिष्ठति मेदिन्यां शैले लेख्यमिवार्पितम् ४३
तदहं सज्जनमुखान्निःसृतं तत्समागमे

कथयिष्याम्यहरहर्बुद्धिदीपकरं नृणाम् ४४
ततो मुनिगणाः सर्वे प्रश्रिताः कृष्णसंनिधौ
नेत्रैः पद्मदलप्रख्यैरपश्यन्त जनार्दनम् ४५
वर्धयन्तस्तथैवान्ये पूजयन्तस्तथापरे
वाग्भिर्ऋग्भूषितार्थाभिः स्तुवन्तो मधुसूदनम् ४६
ततो मुनिगणाः सर्वे नारदं देवदर्शनम्
तदा नियोजयामासुर्वचने वाक्यकोविदम् ४७
यदाश्चर्यमचिन्त्यं च गिरौ हिमवति प्रभो
अनुभूतं मुनिगणैस्तीर्थयात्रापरायणैः ४८
तद्भवानृषिसंघस्य हितार्थं सर्वचोदितः
यथादृष्टं हृषीकेशे सर्वमाख्यातुमर्हति ४९
एवमुक्तः स मुनिभिर्नारदो भगवानृषिः
कथयामास देवर्षिः पूर्ववृत्तां कथां शुभाम् ५०
इति श्रीमहाभारते अनुशासनपर्वणि षड्विंशत्यधिकशततमोऽध्यायः १२६

## सप्तविंशत्यधिक शततमोऽध्यायः

भीष्म उवाच
ततो नारायणसुहृन्नारदो भगवानृषिः
शंकरस्योमया सार्धं संवादं प्रत्यभाषत १
तपश्चचार धर्मात्मा वृषभाङ्कः सुरेश्वरः
पुण्ये गिरौ हिमवति सिद्धचारणसेविते २
नानौषधियुते रम्ये नानापुष्पसमाकुले
अप्सरोगणसंकीर्णे भूतसंघनिषेविते ३
तत्र देवो मुदा युक्तो भूतसंघशतैर्वृतः
नानारूपैर्विरूपैश्च दिव्यैरद्भुतदर्शनैः ४
सिंहव्याघ्रगजप्रख्यैः सर्वजातिसमन्वितैः
क्रोष्टुकद्वीपिवदनैर्ऋक्षर्षभमुखैस्तथा ५
उलूकवदनैर्भीमैः श्येनभासमुखैस्तथा
नानावर्णमृगप्रख्यैः सर्वजातिसमन्वयैः
किंनरैर्देवगन्धर्वैर्यक्षभूतगणैस्तथा ६

दिव्यपुष्पसमाकीर्णं दिव्यमालाविभूषितम्
दिव्यचन्दनसंयुक्तं दिव्यधूपेन धूपितम्
तत्सदो वृषभाङ्कस्य दिव्यवादित्रनादितम् ७
मृदङ्गपणवोद्घुष्टं शङ्खभेरीनिनादितम्
नृत्यद्भिर्भूतसंघैश्च बर्हिणैश्च समन्ततः ८
प्रनृत्ताप्सरसं दिव्यं दिव्यस्त्रीगणसेवितम्
दृष्टिकान्तमनिर्देश्यं दिव्यमद्भुतदर्शनम् ९
स गिरिस्तपसा तस्य भूतेशस्य व्यरोचत १०
स्वाध्यायपरमैर्विप्रैर्ब्रह्मघोषैर्विनादितः
षट्पदैरुपगीतैश्च माधवाप्रतिमो गिरिः ११
तं महोत्सवसंकाशं भीमरूपधरं पुनः
दृष्ट्वा मुनिगणस्यासीत्परा प्रीतिर्जनार्दन १२
मुनयश्च महाभागाः सिद्धाश्चैवोर्ध्वरेतसः
मरुतो वसवः साध्या विश्वेदेवाः सनातनाः १३
यक्षा नागाः पिशाचाश्च लोकपाला हुताशनाः
भावाश्च सर्वे न्यग्भूतास्तत्रैवासन्समागताः १४
ऋतवः सर्वपुष्पैश्च व्यकिरन्त महाद्भुतैः
ओषध्यो ज्वलमानाश्च द्योतयन्ति स्म तद्वनम् १५
विहगाश्च मुदा युक्ताः प्रानृत्यन्व्यनदंश्च ह
गिरिपृष्ठेषु रम्येषु व्याहरन्तो जनप्रियाः १६
तत्र देवो गिरितटे दिव्यधातुविभूषिते
पर्यङ्क इव विभ्राजन्नुपविष्टो महामनाः १७
व्याघ्रचर्माम्बरधरः सिंहचर्मोत्तरच्छदः
व्यालयज्ञोपवीती च लोहिताङ्गदभूषणः १८
हरिश्मश्रुर्जटी भीमो भयकर्ता सुरद्विषाम्
अभयः सर्वभूतानां भक्तानां वृषभध्वजः १९
दृष्ट्वा तमृषयः सर्वे शिरोभिरवनीं गताः
विमुक्ताः सर्वपापेभ्यः क्षान्ता विगतकल्मषाः २०
तस्य भूतपतेः स्थानं भीमरूपधरं बभौ
अप्रधृष्यतरं चैव महोरगसमाकुलम् २१

क्षणेनैवाभवत्सर्वमद्भुतं मधुसूदन
तत्सदो वृषभाङ्कस्य भीमरूपधरं बभौ २२
तमभ्ययाच्छैलसुता भूतस्त्रीगणसंवृता
हरतुल्याम्बरधरा समानव्रतचारिणी २३
बिभ्रती कलशं रौक्मं सर्वतीर्थजलोद्भवम्
गिरिस्रवाभिः पुण्याभिः सर्वतोऽनुगता शुभा २४
पुष्पवृष्ट्याभिवर्षन्ती गन्धैर्बहुविधैस्तथा
सेवन्ती हिमवत्पार्श्वं हरपार्श्वमुपागमत् २५
ततः स्मयन्ती पाणिभ्यां नर्मार्थं चारुदर्शना
हरनेत्रे शुभे देवी सहसा सा समावृणोत् २६
संवृताभ्यां तु नेत्राभ्यां तमोभूतमचेतनम्
निर्होमं निर्वषट्कारं तत्सदः सहसाभवत् २७
जनश्च विमनाः सर्वो भयत्राससमन्वितः
निमीलिते भूतपतौ नष्टसूर्य इवाभवत् २८
ततो वितिमिरो लोकः क्षणेन समपद्यत
ज्वाला च महती दीप्ता ललाटात्तस्य निःसृता २९
तृतीयं चास्य संभूतं नेत्रमादित्यसंनिभम्
युगान्तसदृशं दीप्तं येनासौ मथितो गिरिः ३०
ततो गिरिसुता दृष्ट्वा दीप्ताग्निसदृशेक्षणम्
हरं प्रणम्य शिरसा ददर्शायतलोचना ३१
दह्यमाने वने तस्मिन्सशालसरलद्रुमे
सचन्दनवने रम्ये दिव्यौषधिविदीपिते ३२
मृगयूथैर्द्रुतैर्भीतैर्हरपार्श्वमुपागतैः
शरणं चाप्यविन्दद्भिस्तत्सदः संकुलं बभौ ३३
ततो नभःस्पृशज्ज्वालो विद्युल्लोलार्चिरुज्ज्वलः
द्वादशादित्यसदृशो युगान्ताग्निरिवापरः ३४
क्षणेन तेन दग्धः स हिमवानभवन्नगः
सधातुशिखराभोगो दीनदग्धवनौषधिः ३५
तं दृष्ट्वा मथितं शैलं सैलराजसुता ततः
भगवन्तं प्रपन्ना सा साञ्जलिप्रग्रहा स्थिता ३६

उमां शर्वस्तदा दृष्ट्वा स्त्रीभावागतमार्दवाम्
पितुर्दैन्यमनिच्छन्तीं प्रीत्यापश्यत्ततो गिरिम् ३७
ततोऽभवत्पुनः सर्वः प्रकृतिस्थः सुदर्शनः
प्रहृष्टविहगश्चैव प्रपुष्पितवनद्रुमः ३८
प्रकृतिस्थं गिरिं दृष्ट्वा प्रीता देवी महेश्वरम्
उवाच सर्वभूतानां पतिं पतिमनिन्दिता ३९
भगवन्सर्वभूतेश शूलपाणे महाव्रत
संशयो मे महाञ्जातस्तं मे व्याख्यातुमर्हसि ४०
किमर्थं ते ललाटे वै तृतीयं नेत्रमुत्थितम्
किमर्थं च गिरिर्दग्धः सपक्षिगणकाननः ४१
किमर्थं च पुनर्देव प्रकृतिस्थः क्षणात्कृतः
तथैव द्रुमसंछन्नः कृतोऽय ते महेश्वर ४२
महेश्वर उवाच
नेत्रे मे संवृते देवि त्वया बाल्यादनिन्दिते
नष्टालोकस्ततो लोकः क्षणेन समपद्यत ४३
नष्टादित्ये तथा लोके तमोभूते नगात्मजे
तृतीयं लोचनं दीप्तं सृष्टं ते रक्षता प्रजाः ४४
तस्य चाक्ष्णो महत्तेजो येनायं मथितो गिरिः
त्वत्प्रियार्थं च मे देवि प्रकृतिस्थः क्षणात्कृतः ४५
उमोवाच
भगवन्केन ते वक्त्रं चन्द्रवत्प्रियदर्शनम्
पूर्वं तथैव श्रीकान्तमुत्तरं पश्चिमं तथा ४६
दक्षिणं च मुखं रौद्रं केनोर्ध्वं कपिला जटाः
केन कण्ठश्च ते नीलो बर्हिबर्हनिभः कृतः ४७
हस्ते चैतत्पिनाकं ते सततं केन तिष्ठति
जटिलो ब्रह्मचारी च किमर्थमसि नित्यदा ४८
एतं मे संशयं सर्वं वद भूतपतेऽनघ
सधर्मचारिणी चाहं भक्ता चेति वृषध्वज ४९
एवमुक्तः स भगवाञ्शैलपुत्र्या पिनाकधृक्
तस्या वृत्या च बुद्ध्या च प्रीतिमानभवत्प्रभुः ५०

ततस्तामब्रवीद्देवः सुभगे श्रूयतामिति
हेतुभिर्यैर्ममैतानि रूपाणि रुचिरानने ५१
इति श्रीमहाभारते अनुशासनपर्वणि सप्तविंशत्यधिकशततमोऽध्यायः १२७

## अष्टाविंशत्यधिक शततमोऽध्यायः

महेश्वर उवाच
तिलोत्तमा नाम पुरा ब्रह्मणा योषिदुत्तमा
तिलं तिलं समुद्धृत्य रत्नानां निर्मिता शुभा १
साभ्यगच्छत मां देवि रूपेणाप्रतिमा भुवि
प्रदक्षिणं लोभयन्ती मां शुभे रुचिरानना २
यतो यतः सा सुदती मामुपाधावदन्तिके
ततस्ततो मुखं चारु मम देवि विनिर्गतम् ३
तां दिदृक्षुरहं योगाच्चतुर्मूर्तित्वमागतः
चतुर्मुखश्च संवृत्तो दर्शयन्योगमात्मनः ४
पूर्वेण वदनेनाहमिन्द्रत्वमनुशास्मि ह
उत्तरेण त्वया सार्धं रमाम्यहमनिन्दिते ५
पश्चिमं मे मुखं सौम्यं सर्वप्राणिसुखावहम्
दक्षिणं भीमसंकाशं रौद्रं संहरति प्रजाः ६
जटिलो ब्रह्मचारी च लोकानां हितकाम्यया
देवकार्यार्थसद्ध्यर्थं पिनाकं मे करे स्थितम् ७
इन्द्रेण च पुरा वज्रं क्षिप्तं श्रीकाङ्क्षिणा मम
दग्ध्वा कण्ठं तु तद्यातं तेन श्रीकण्ठता मम ८
उमोवाच
वाहनेषु प्रभूतेषु श्रीमत्स्वन्येषु सत्सु ते
कथं गोवृषभो देव वाहनत्वमुपागतः ९
महेश्वर उवाच
सुरभीं ससृजे ब्रह्मामृतधेनुं पयोमुचम्
सा सृष्टा बहुधा जाता क्षरमाणा पयोऽमृतम् १०
तस्या वत्समुखोत्सृष्टः फेनो मद्गात्रमागतः
ततो दग्धा मया गावो नानावर्णत्वमागताः ११

ततोऽह लोकगुरुणा शमं नीतोऽथवेदिना
वृषं चैमं ध्वजार्थं मे ददौ वाहनमेव च १२
उमोवाच
निवासा बहुरूपास्ते विश्वरूपगुणान्विताः
तांश्च संत्यज्य भगवञ्श्मशाने रमसे कथम् १३
केशास्थिकलिले भीमे कपालघटसंकुले
गृध्रगोमायुकलिले चिताग्निशतसंकुले १४
अशुचौ मांसकलिले वसाशोणितकर्दमे
विनिकीर्णामिषचये शिवानादविनादिते १५
महेश्वर उवाच
मेध्यान्वेषी महीं कृत्स्नां विचरामि निशास्वहम्
न च मेध्यतरं किंचिच्छ्मशानादिह विद्यते १६
तेन मे सर्ववासानां श्मशाने रमते मनः
न्यग्रोधशाखासंछन्ने निर्भुक्तस्त्रग्विभूषिते १७
तत्र चैव रमन्ते मे भूतसंघाः शुभानने
न च भूतगणैर्देवि विनाहं वस्तुमुत्सहे १८
एष वासो हि मे मेध्यः स्वर्गीयश्च मतो हि मे
पुण्यः परमकश्चैव मेध्यकामैरुपास्यते १९
उमोवाच
भगवन्सर्वभूतेश सर्वधर्मभृतां वर
पिनाकपाणे वरद संशयो मे महानयम् २०
अयं मुनिगणः सर्वस्तपस्तप इति प्रभो
तपोन्वेषकरो लोके भ्रमते विविधाकृतिः २१
अस्य चैवर्षिसंघस्य मम च प्रियकाम्यया
एतं ममेह संदेहं वक्तुमर्हस्यरिंदम २२
धर्मः किंलक्षणः प्रोक्तः कथं वाचरितुं नरैः
शक्यो धर्ममविन्दद्भिर्धर्मज्ञ वद मे प्रभो २३
नारद उवाच
ततो मुनिगणः सर्वस्तां देवीं प्रत्यपूजयत्
वाग्भिरृग्भूषितार्थाभिः स्तवैश्चार्थविदां वर २४

महेश्वर उवाच
अहिंसा सत्यवचनं सर्वभूतानुकम्पनम्
शमो दानं यथाशक्ति गार्हस्थ्यो धर्म उत्तमः २५
परदारेष्वसंकल्पो न्यासस्त्रीपरिरक्षणम्
अदत्तादानविरमो मधुमांसस्य वर्जनम् २६
एष पञ्चविधो धर्मो बहुशाखः सुखोदयः
देहिभिर्धर्मपरमैः कर्तव्यो धर्मसंचयः २७
उमोवाच
भगवन्संशयं पृष्टस्तं मे व्याख्यातुमर्हसि
चातुर्वर्ण्यस्य यो धर्मः स्वे स्वे वर्णे गुणावहः २८
ब्राह्मणे कीदृशो धर्मः क्षत्रिये कीदृशो भवेत्
वैश्ये किंलक्षणो धर्मः शूद्रे किंलक्षणो भवेत् २९
महेश्वर उवाच
न्यायतस्ते महाभागे संशयः समुदीरितः
भूमिदेवा महाभागाः सदा लोके द्विजातयः ३०
उपवासः सदा धर्मो ब्राह्मणस्य न संशयः
स हि धर्मार्थमुत्पन्नो ब्रह्मभूयाय कल्पते ३१
तस्य धर्मक्रिया देवि व्रतचर्या च न्यायतः
तथोपनयनं चैव द्विजायैवोपपद्यते ३२
गुरुदैवतपूजार्थं स्वाध्यायाभ्यसनात्मकः
देहिभिर्धर्मपरमैश्चर्तव्यो धर्मसंभवः ३३
उमोवाच
भगवन्संशयो मेऽत्र तं मे व्याख्यातुमर्हसि
चातुर्वर्ण्यस्य धर्मं हि नैपुण्येन प्रकीर्तय ३४
महेश्वर उवाच
रहस्यश्रवणं धर्मो वेदव्रतनिषेवणम्
व्रतचर्यापरो धर्मो गुरुपादप्रसादनम् ३५
भैक्षचर्यापरो धर्मो धर्मो नित्योपवासिता
नित्यस्वाध्यायिता धर्मो ब्रह्मचर्याश्रमस्तथा ३६
गुरुणा त्वभ्यनुज्ञातः समावर्तेत वै द्विजः

विन्देतानन्तरं भार्यामनुरूपां यथाविधि ३७
शूद्रान्नवर्जनं धर्मस्तथा सत्पथसेवनम्
धर्मो नित्योपवासित्वं ब्रह्मचर्यं तथैव च ३८
आहिताग्निरधीयानो जुह्वानः संयतेन्द्रियः
विघसाशी यताहारो गृहस्थः सत्यवाक्शुचिः ३९
अतिथिव्रतता धर्मो धर्मस्त्रेताग्निधारणम्
इष्टीश्च पशुबन्धांश्च विधिपूर्वं समाचरेत् ४०
यज्ञश्च परमो धर्मस्तथाहिंसा च देहिषु
अपूर्वभोजनं धर्मो विघसाशित्वमेव च ४१
भुक्ते परिजने पश्चाद्भोजनं धर्म उच्यते
ब्राह्मणस्य गृहस्थस्य श्रोत्रियस्य विशेषतः ४२
दंपत्योः समशीलत्वं धर्मश्च गृहमेधिनाम्
गृह्याणां चैव देवानां नित्यं पुष्पबलिक्रिया ४३
नित्योपलेपनं धर्मस्तथा नित्योपवासिता
सुसंमृष्टोपलिप्ते च साज्यधूमोद्गमे गृहे ४४
एष द्विजजने धर्मो गार्हस्थ्यो लोकधारणः
द्विजातीनां सतां नित्यं सदैवैष प्रवर्तते ४५
यस्तु क्षत्रगतो देवि त्वया धर्म उदीरितः
तमहं ते प्रवक्ष्यामि तं मे शृणु समाहिता ४६
क्षत्रियस्य स्मृतो धर्मः प्रजापालनमादितः
निर्दिष्टफलभोक्ता हि राजा धर्मेण युज्यते ४७
प्रजाः पालयते यो हि धर्मेण मनुजाधिपः
तस्य धर्मार्जिता लोकाः प्रजापालनसंचिताः ४८
तत्र राज्ञः परो धर्मो दमः स्वाध्याय एव च
अग्निहोत्रपरिस्पन्दो दानाध्ययनमेव च ४९
यज्ञोपवीतधरणं यज्ञो धर्मक्रियास्तथा
भृत्यानां भरणं धर्मः कृते कर्मण्यमोघता ५०
सम्यग्दण्डे स्थितिर्धर्मो धर्मो वेदक्रतुक्रियाः
व्यवहारस्थितिर्धर्मः सत्यवाक्यरतिस्तथा ५१
आर्तहस्तप्रदो राजा प्रेत्य चेह महीयते

गोब्राह्मणार्थे विक्रान्तः संग्रामे निधनं गतः
अश्वमेधजिताँल्लोकान्प्राप्नोति त्रिदिवालये ५२
वैश्यस्य सततं धर्मः पाशुपाल्यं कृषिस्तथा
अग्निहोत्रपरिस्पन्दो दानाध्ययनमेव च ५३
वाणिज्यं सत्पथस्थानमातिथ्यं प्रशमो दमः
विप्राणां स्वागतं त्यागो वैश्यधर्मः सनातनः ५४
तिलान्गन्धान्रसांश्चैव विक्रीणीत न वै क्वचित्
वणिक्पथमुपासीनो वैश्यः सत्पथमाश्रितः ५५
सर्वातिथ्यं त्रिवर्गस्य यथाशक्ति यथार्हतः
शूद्रधर्मः परो नित्यं शुश्रूषा च द्विजातिषु ५६
स शूद्रः संशिततपाः सत्यसंधो जितेन्द्रियः
शुश्रूषन्नतिथिं प्राप्तं तपः संचिनुते महत् ५७
त्यक्तहिंसः शुभाचारो देवताद्विजपूजकः
शूद्रो धर्मफलैरिष्टैः संप्रयुज्येत बुद्धिमान् ५८
एतत्ते सर्वमाख्यातं चातुर्वर्ण्यस्य शोभने
एकैकस्येह सुभगे किमन्यच्छ्रोतुमिच्छसि ५९
इति श्रीमहाभारते अनुशासनपर्वणि अष्टाविंशत्यधिकशततमोऽध्यायः १२८

## एकोनत्रिंशदधिक शततमोऽध्यायः

उमोवाच
उक्तास्त्वया पृथग्धर्माश्चातुर्वर्ण्यहिताः शुभाः
सर्वव्यापी तु यो धर्मो भगवंस्तं ब्रवीहि मे १
महेश्वर उवाच
ब्राह्मणा लोकसारेण सृष्टा धात्रा गुणार्थिना
लोकांस्तारयितुं कृत्स्नान्मर्त्येषु क्षितिदेवताः २
तेषामिमं प्रवक्ष्यामि धर्मकर्मफलोदयम्
ब्राह्मणेषु हि यो धर्मः स धर्मः परमो मतः ३
इमे तु लोकधर्मार्थं त्रयः सृष्टाः स्वयंभुवा
पृथिव्याः सर्जने नित्यं सृष्टास्तानपि मे शृणु ४
वेदोक्तः परमो धर्मः स्मृतिशास्त्रगतोऽपरः

शिष्टाचीर्णः परः प्रोक्तस्त्रयो धर्माः सनातनाः ५
त्रैविद्यो ब्राह्मणो विद्वान्न चाध्ययनजीवनः
त्रिकर्मा त्रिपरिक्रान्तो मैत्र एष स्मृतो द्विजः ६
षडिमानि तु कर्माणि प्रोवाच भुवनेश्वरः
वृत्त्यर्थं ब्राह्मणानां वै शृणु तानि समाहिता ७
यजनं याजनं चैव तथा दानप्रतिग्रहौ
अध्यापनमधीतं च षट्कर्मा धर्मभाग्द्विजः ८
नित्यस्वाध्यायता धर्मो धर्मो यज्ञः सनातनः
दानं प्रशस्यते चास्य यथाशक्ति यथाविधि ९
अयं तु परमो धर्मः प्रवृत्तः सत्सु नित्यशः
गृहस्थता विशुद्धानां धर्मस्य निचयो महान् १०
पञ्चयज्ञविशुद्धात्मा सत्यवागनसूयकः
दाता ब्राह्मणसत्कर्ता सुसंमृष्टनिवेशनः ११
अमानी च सदाजिह्मः स्निग्धवाणीप्रदस्तथा
अतिथ्यभ्यागतरतिः शेषान्नकृतभोजनः १२
पाद्यमर्घ्यं यथान्यायमासनं शयनं तथा
दीपं प्रतिश्रयं चापि यो ददाति स धार्मिकः १३
प्रातरुत्थाय चाचम्य भोजनेनोपमन्त्र्य च
सत्कृत्यानुव्रजेद्यश्च तस्य धर्मः सनातनः १४
सर्वातिथ्यं त्रिवर्गस्य यथाशक्ति दिवानिशम्
शूद्रधर्मः समाख्यातस्त्रिवर्णपरिचारणम् १५
प्रवृत्तिलक्षणो धर्मो गृहस्थेषु विधीयते
तमहं कीर्तयिष्यामि सर्वभूतहितं शुभम् १६
दातव्यमसकृच्छक्त्या यष्टव्यमसकृत्तथा
पुष्टिकर्मविधानं च कर्तव्यं भूतिमिच्छता १७
धर्मेणार्थः समाहार्यो धर्मलब्धं त्रिधा धनम्
कर्तव्यं धर्मपरमं मानवेन प्रयत्नतः १८
एकेनांशेन धर्मार्थश्चर्तव्यो भूतिमिच्छता
एकेनांशेन कामार्थ एकमंशं विवर्धयेत् १९
निवृत्तिलक्षणस्त्वन्यो धर्मो मोक्ष इति स्मृतः

तस्य वृत्तिं प्रवक्ष्यामि शृणु मे देवि तत्त्वतः २०
सर्वभूतदया धर्मो न चैकग्रामवासिता
आशापाशविमोक्षश्च शस्यते मोक्षकाङ्क्षिणाम् २१
न कुण्ड्यां नोदके सङ्गो न वाससि न चासने
न त्रिदण्डे न शयने नाग्नौ न शरणालये २२
अध्यात्मगतचित्तो यस्तन्मनास्तत्परायणः
युक्तो योगं प्रति सदा प्रतिसंख्यानमेव च २३
वृक्षमूलशयो नित्यं शून्यागारनिवेशनः
नदीपुलिनशायी च नदीतीररतिश्च यः २४
विमुक्तः सर्वसङ्गेषु स्नेहबन्धेषु च द्विजः
आत्मन्येवात्मनो भावं समासज्याटति द्विजः २५
स्थाणुभूतो निराहारो मोक्षदृष्टेन कर्मणा
परिव्रजति यो युक्तस्तस्य धर्मः सनातनः २६
न चैकत्र चिरासक्तो न चैकग्रामगोचरः
युक्त ह्यटति निर्मुक्तो न चैकपुलिनेशयः २७
एष मोक्षविदां धर्मो वेदोक्तः सत्पथः सताम्
यो मार्गमनुयातीमं पदं तस्य च विद्यते २८
चतुर्विधा भिक्षवस्ते कुटीचरकृतोदकः
हंसः परमहंसश्च यो यः पश्चात्स उत्तमः २९
अतः परतरं नास्ति नाधरं न तिरोऽग्रतः
अदुःखमसुखं सौम्यमजरामरमव्ययम् ३०
उमोवाच
गार्हस्थ्यो मोक्षधर्मश्च सज्जनाचरितस्त्वया
भाषितो मर्त्यलोकस्य मार्गं श्रेयस्करो महान् ३१
ऋषिधर्मं तु धर्मज्ञ श्रोतुमिच्छाम्यनुत्तमम्
स्पृहा भवति मे नित्यं तपोवननिवासिषु ३२
आज्यधूमोद्भवो गन्धो रुणद्धीव तपोवनम्
तं दृष्ट्वा मे मनः प्रीतं महेश्वर सदा भवेत् ३३
एतं मे संशयं देव मुनिधर्मकृतं विभो
सर्वधर्मार्थतत्त्वज्ञ देवदेव वदस्व मे

निखिलेन मया पृष्टं महादेव यथातथम् ३४
महेश्वर उवाच
हन्त तेऽह प्रवक्ष्यामि मुनिधर्ममनुत्तमम्
यं कृत्वा मुनयो यान्ति सिद्धिं स्वतपसा शुभे ३५
फेनपानामृषीणां यो धर्मो धर्मविदां सदा
तं मे शृणु महाभागे धर्मज्ञे धर्ममादितः ३६
उञ्छन्ति सततं तस्मिन्ब्राह्मं फेनोत्करं शुभम्
अमृतं ब्रह्मणा पीतं मधुरं प्रसृतं दिवि ३७
एष तेषां विशुद्धानां फेनपानां तपोधने
धर्मचर्याकृतो मार्गो वालखिल्यगणे शृणु ३८
वालखिल्यास्तपःसिद्धा मुनयः सूर्यमण्डले
उञ्छमुञ्छन्ति धर्मज्ञाः शाकुनीं वृत्तिमास्थिताः ३९
मृगनिर्मोकवसनाश्चीरवल्कलवाससः
निर्द्वंद्वाः सत्पथं प्राप्ता वालखिल्यास्तपोधनाः ४०
अङ्गुष्ठपर्वमात्रास्ते स्वेष्वङ्गेषु व्यवस्थिताः
तपश्चरणमीहन्ते तेषां धर्मफलं महत् ४१
ते सुरैः समतां यान्ति सुरकार्यार्थसिद्धये
द्योतयन्तो दिशः सर्वास्तपसा दग्धकिल्बिषाः ४२
ये त्वन्ये शुद्धमनसो दयाधर्मपरायणाः
सन्तश्चक्रचराः पुण्याः सोमलोकचराश्च ये ४३
पितृलोकसमीपस्थास्त उञ्छन्ति यथाविधि
संप्रक्षालाश्मकुट्टाश्च दन्तोलूखलिनस्तथा ४४
सोमपानां च देवानामूष्मपाणां तथैव च
उञ्छन्ति ये समीपस्थाः स्वभावनियतेन्द्रियाः ४५
तेषामग्निपरिष्यन्दः पितृदेवार्चनं तथा
यज्ञानां चापि पञ्चानां यजनं धर्म उच्यते ४६
एष चक्रचरैर्देवि देवलोकचरैर्द्विजैः
ऋषिधर्मः सदा चीर्णो योऽन्यस्तमपि मे शृणु ४७
सर्वेष्वेवर्षिधर्मेषु जेय आत्मा जितेन्द्रियः
कामक्रोधौ ततः पश्चाज्जेतव्याविति मे मतिः ४८

अग्निहोत्रपरिस्पन्दो धर्मरात्रिसमासनम्
सोमयज्ञाभ्यनुज्ञानं पञ्चमी यज्ञदक्षिणा ४९
नित्यं यज्ञक्रिया धर्मः पितृदेवार्चने रतिः
सर्वातिथ्यं च कर्तव्यमन्नेनोञ्छार्जितेन वै ५०
निवृत्तिरुपभोगस्य गोरसानां च वै रतिः
स्थण्डिले शयनं योगः शाकपर्णनिषेवणम् ५१
फलमूलाशनं वायुरापः शैवलभक्षणम्
ऋषीणां नियमा ह्येते यैर्जयन्त्यजितां गतिम् ५२
विधूमे न्यस्तमुसले व्यङ्गारे भुक्तवज्जने
अतीतपात्रसंचारे काले विगतभैक्षके ५३
अतिथिं काङ्क्षमाणो वै शेषान्नकृतभोजनः
सत्यधर्मरतिः क्षान्तो मुनिधर्मेण युज्यते ५४
न स्तम्भी न च मानी यो न प्रमत्तो न विस्मितः
मित्रामित्रसमो मैत्रो यः स धर्मविदुत्तमः ५५
इति श्रीमहाभारते अनुशासनपर्वणि एकोनत्रिंशदधिकशततमोऽध्यायः १२९

## त्रिंशदधिक शततमोऽध्यायः

उमोवाच
देशेषु रमणीयेषु गिरीणां निर्झरेषु च
स्रवन्तीनां च कुञ्जेषु पर्वतोपवनेषु च १
देशेषु च विचित्रेषु फलवत्सु समाहिताः
मूलवत्सु च देशेषु वसन्ति नियतव्रताः २
तेषामपि विधिं पुण्यं श्रोतुमिच्छामि शंकर
वानप्रस्थेषु देवेश स्वशरीरोपजीविषु ३
महेश्वर उवाच
वानप्रस्थेषु यो धर्मस्तं मे शृणु समाहिता
श्रुत्वा चैकमना देवि धर्मबुद्धिपरा भव ४
संसिद्धैर्नियतैः सद्भिर्वनवासमुपागतैः
वानप्रस्थैरिदं कर्म कर्तव्यं शृणु यादृशम् ५
त्रिकालमभिषेकार्थः पितृदेवार्चनं क्रिया

अग्निहोत्रपरिस्पन्द इष्टिहोमविधिस्तथा ६
नीवारग्रहणं चैव फलमूलनिषेवणम्
इङ्गुदैरण्डतैलानां स्नेहार्थं च निषेवणम् ७
योगचर्याकृतैः सिद्धैः कामक्रोधविवर्जनम्
वीरशय्यामुपासद्भिर्वीरस्थानोपसेविभिः ८
युक्तैर्योगवहैः सद्भिर्ग्रीष्मे पञ्चतपैस्तथा
मण्डूकयोगनियतैर्यथान्यायनिषेविभिः ९
वीरासनगतैर्नित्यं स्थण्डिले शयनैस्तथा
शीतयोगोऽग्नियोगश्च चर्तव्यो धर्मबुद्धिभिः १०
अब्भक्षैर्वायुभक्षैश्च शैवालोत्तरभोजनैः
अश्मकुट्टैस्तथा दान्तैः संप्रक्षालैस्तथापरैः ११
चीरवल्कलसंवीतैर्मृगचर्मनिवासिभिः
कार्या यात्रा यथाकालं यथाधर्मं यथाविधि १२
वननित्यैर्वनचरैर्वनपैर्वनगोचरैः
वनं गुरुमिवासाद्य वस्तव्यं वनजीविभिः १३
तेषां होमक्रिया धर्मः पञ्चयज्ञनिषेवणम्
नागपञ्चमयज्ञस्य वेदोक्तस्यानुपालनम् १४
अष्टमीयज्ञपरता चातुर्मास्यनिषेवणम्
पौर्णमास्यां तु यो यज्ञो नित्ययज्ञस्तथैव च १५
विमुक्ता दारसंयोगैर्विमुक्ताः सर्वसंकरैः
विमुक्ताः सर्वपापैश्च चरन्ति मुनयो वने १६
स्रुग्भाण्डपरमा नित्यं त्रेताग्निशरणाः सदा
सन्तः सत्पथनित्या ये ते यान्ति परमां गतिम् १७
ब्रह्मलोकं महापुण्यं सोमलोकं च शाश्वतम्
गच्छन्ति मुनयः सिद्धा ऋषिधर्मव्यपाश्रयात् १८
एष धर्मो मया देवि वानप्रस्थाश्रितः शुभः
विस्तरेणार्थसंपन्नो यथास्थूलमुदाहृतः १९
उमोवाच
भगवन्देवदेवेश सर्वभूतनमस्कृत
यो धर्मो मुनिसंघस्य सिद्धिवादेषु तं वद २०

सिद्धिवादेषु संसिद्धास्तथा वननिवासिनः
स्वैरिणो दारसंयुक्तास्तेषां धर्मः कथं स्मृतः २१
महेश्वर उवाच
स्वैरिणस्तापसा देवि सर्वे दारविहारिणः
तेषां मौण्डयं कषायश्च वासरात्रिश्च कारणम् २२
त्रिकालमभिषेकश्च होत्रं त्वृषिकृतं महत्
समाधिः सत्पथस्थानं यथोदितनिषेवणम् २३
ये च ते पूर्वकथिता धर्मा वननिवासिनाम्
यदि सेवन्ति धर्मांस्तानाप्नुवन्ति तपःफलम् २४
ये च दंपतिधर्माणः स्वदारनियतेन्द्रियाः
चरन्ति विधिदृष्टं तदृतुकालाभिगामिनः २५
तेषामृषिकृतो धर्मो धर्मिणामुपपद्यते
न कामकारात्कामोऽन्य संसेव्यो धर्मदर्शिभिः २६
सर्वभूतेषु यः सम्यग्ददात्यभयदक्षिणाम्
हिंसारोषविमुक्तात्मा स वै धर्मेण युज्यते २७
सर्वभूतानुकम्पी यः सर्वभूतार्जवव्रतः
सर्वभूतात्मभूतश्च स वै धर्मेण युज्यते २८
सर्ववेदेषु वा स्नानं सर्वभूतेषु चार्जवम्
उभे एते समे स्यातामार्जवं वा विशिष्यते २९
आर्जवं धर्म इत्याहुरधर्मो जिह्म उच्यते
आर्जवेनेह संयुक्तो नरो धर्मेण युज्यते ३०
आर्जवो भुवने नित्यं वसत्यमरसंनिधौ
तस्मादार्जवनित्यः स्याद्य इच्छेद्धर्ममात्मनः ३१
क्षान्तो दान्तो जितक्रोधो धर्मभूतोऽविहिंसकः
धर्मे रतमना नित्यं नरो धर्मेण युज्यते ३२
व्यपेततन्द्रो धर्मात्मा शक्त्या सत्पथमाश्रितः
चारित्रपरमो बुद्धो ब्रह्मभूयाय कल्पते ३३
उमोवाच
आश्रमाभिरता देव तापसा ये तपोधनाः
दीप्तिमन्तः कया चैव चर्ययाथ भवन्ति ते ३४

राजानो राजपुत्राश्च निर्धना वा महाधनाः
कर्मणा केन भगवन्प्राप्नुवन्ति महाफलम् ३५
नित्यं स्थानमुपागम्य दिव्यचन्दनरूषिताः
केन वा कर्मणा देव भवन्ति वनगोचराः ३६
एतं मे संशयं देव तपश्चर्यागतं शुभम्
शंस सर्वमशेषेण त्र्यक्ष त्रिपुरनाशन ३७
महेश्वर उवाच
उपवासव्रतैर्दान्ता अहिंस्राः सत्यवादिनः
संसिद्धाः प्रेत्य गन्धर्वैः सह मोदन्त्यनामयाः ३८
मण्डूकयोगशयनो यथास्थानं यथाविधि
दीक्षां चरति धर्मात्मा स नागैः सह मोदते ३९
शष्पं मृगमुखोत्सृष्टं यो मृगैः सह सेवते
दीक्षितो वै मुदा युक्तः स गच्छत्यमरावतीम् ४०
शैवालं शीर्णपर्णं वा तद्व्रतो यो निषेवते
शीतयोगवहो नित्यं स गच्छेत्परमां गतिम् ४१
वायुभक्षोऽम्बुभक्षो वा फलमूलाशनोऽपि वा
यक्षेष्वैश्वर्यमाधाय मोदतेऽप्सरसां गणैः ४२
अग्नियोगवहो ग्रीष्मे विधिदृष्टेन कर्मणा
चीर्त्वा द्वादश वर्षाणि राजा भवति पार्थिवः ४३
आहारनियमं कृत्वा मुनिर्द्वादशवार्षिकम्
मरुं संसाध्य यत्नेन राजा भवति पार्थिवः ४४
स्थण्डिले शुद्धमाकाशं परिगृह्य समन्ततः
प्रविश्य च मुदा युक्तो दीक्षां द्वादशवार्षिकीम् ४५
स्थण्डिलस्य फलान्याहुर्यानानि शयनानि च
गृहाणि च महार्हाणि चन्द्रशुभ्राणि भामिनि ४६
आत्मानमुपजीवन्यो नियतो नियताशनः
देहं वानशने त्यक्त्वा स स्वर्गं समुपाश्नुते ४७
आत्मानमुपजीवन्यो दीक्षां द्वादशवार्षिकीम्
त्यक्त्वा महार्णवे देहं वारुणं लोकमश्नुते ४८
आत्मानमुपजीवन्यो दीक्षां द्वादशवार्षिकीम्

अश्मना चरणौ भित्त्वा गुह्यकेषु स मोदते ४९
साधयित्वात्मनात्मानं निर्द्वन्द्वो निष्परिग्रहः
चीर्त्वा द्वादश वर्षाणि दीक्षामेकां मनोगताम्
स्वर्गलोकमवाप्नोति देवैश्च सह मोदते ५०
आत्मानमुपजीवन्यो दीक्षां द्वादशवार्षिकीम्
हुत्वाग्नौ देहमुत्सृज्य वह्निलोके महीयते ५१
यस्तु देवि यथान्यायं दीक्षितो नियतो द्विजः
आत्मन्यात्मानमाधाय निर्द्वंद्वो निष्परिग्रहः ५२
चीर्त्वा द्वादश वर्षाणि दीक्षामेकां मनोगताम्
अरणीसहितं स्कन्धे बद्ध्वा गच्छत्यनावृतः ५३
वीराध्वानमना नित्यं वीरासनरतस्तथा
वीरस्थायी च सततं स वीरगतिमाप्नुयात् ५४
स शक्रलोकगो नित्यं सर्वकामपुरस्कृतः
दिव्यपुष्पसमाकीर्णो दिव्यचन्दनभूषितः
सुखं वसति धर्मात्मा दिवि देवगणैः सह ५५
वीरलोकगतो वीरो वीरयोगवहः सदा
सत्त्वस्थः सर्वमुत्सृज्य दीक्षितो नियतः शुचिः
वीराध्वानं प्रपद्येद्यस्तस्य लोकाः सनातनाः ५६
कामगेन विमानेन स वै चरति च्छन्दतः
शक्रलोकगतः श्रीमान्मोदते च निरामयः ५७
इति श्रीमहाभारते अनुशासनपर्वणि त्रिंशत्यधिकशततमोऽध्यायः १३०

## एकत्रिंशदधिक शततमोऽध्यायः

उमोवाच
भगवन्भगनेत्रघ्न पूष्णो दशनपातन
दक्षक्रतुहर त्र्यक्ष संशयो मे महानयम् १
चातुर्वर्ण्यं भगवता पूर्वं सृष्टं स्वयंभुवा
केन कर्मविपाकेन वैश्यो गच्छति शूद्रताम् २
वैश्यो वा क्षत्रियः केन द्विजो वा क्षत्रियो भवेत्
प्रतिलोमः कथं देव शक्यो धर्मो निषेवितुम् ३

केन वा कर्मणा विप्रः शूद्रयोनौ प्रजायते
क्षत्रियः शूद्रतामेति केन वा कर्मणा विभो ४
एतं मे संशयं देव वद भूतपतेऽनघ
त्रयो वर्णाः प्रकृत्येह कथं ब्राह्मण्यमाप्नुयुः ५
महेश्वर उवाच
ब्राह्मण्यं देवि दुष्प्रापं निसर्गाद्ब्राह्मणः शुभे
क्षत्रियो वैश्यशूद्रौ वा निसर्गादिति मे मतिः ६
कर्मणा दुष्कृतेनेह स्थानाद्भ्रश्यति वै द्विजः
ज्येष्ठं वर्णमनुप्राप्य तस्माद्रक्षेत वै द्विजः ७
स्थितो ब्राह्मणधर्मेण ब्राह्मण्यमुपजीवति
क्षत्रियो वाथ वैश्यो वा ब्रह्मभूयाय गच्छति ८
यस्तु विप्रत्वमुत्सृज्य क्षात्रं धर्मं निषेवते
ब्राह्मण्यात्स परिभ्रष्टः क्षत्रयोनौ प्रजायते ९
वैश्यकर्म च यो विप्रो लोभमोहव्यपाश्रयः
ब्राह्मण्यं दुर्लभं प्राप्य करोत्यल्पमतिः सदा १०
स द्विजो वैश्यतामेति वैश्यो वा शूद्रतामियात्
स्वधर्मात्प्रच्युतो विप्रस्ततः शूद्रत्वमाप्नुते ११
तत्रासौ निरयं प्राप्तो वर्णभ्रष्टो बहिष्कृतः
ब्रह्मलोकपरिभ्रष्टः शूद्रः समुपजायते १२
क्षत्रियो वा महाभागे वैश्यो वा धर्मचारिणि
स्वानि कर्माण्यपाहाय शूद्रकर्माणि सेवते १३
स्वस्थानात्स परिभ्रष्टो वर्णसंकरतां गतः
ब्राह्मणः क्षत्रियो वैश्यः शूद्रत्वं याति तादृशः १४
यस्तु शुद्धः स्वधर्मेण ज्ञानविज्ञानवाञ्शुचिः
धर्मज्ञो धर्मनिरतः स धर्मफलमश्नुते १५
इदं चैवापरं देवि ब्रह्मणा समुदीरितम्
अध्यात्मं नैष्ठिकं सद्भिर्धर्मकामैर्निषेव्यते १६
उग्रान्नं गर्हितं देवि गणान्नं श्राद्धसूतकम्
घुष्टान्नं नैव भोक्तव्यं शूद्रान्नं नैव कर्हिचित् १७
शूद्रान्नं गर्हितं देवि देवदेवैर्महात्मभिः

पितामहमुखोत्सृष्टं प्रमाणमिति मे मतिः १८
शूद्रान्नेनावशेषेण जठरे यो म्रियेत वै
आहिताग्निस्तथा यज्वा स शूद्रगतिभाग्भवेत् १९
तेन शूद्रान्नशेषेण ब्रह्मस्थानादपाकृतः
ब्राह्मणः शूद्रतामेति नास्ति तत्र विचारणा २०
यस्यान्नेनावशेषेण जठरे यो म्रियेत वै
तां तां योनिं व्रजेद्विप्रो यस्यान्नमुपजीवति २१
ब्राह्मणत्वं शुभं प्राप्य दुर्लभं योऽवमन्यते
अभोज्यान्नानि चाश्नाति स द्विजत्वात्पतेत वै २२
सुरापो ब्रह्महा क्षुद्रश्चौरो भग्नव्रतोऽशुचिः
स्वाध्यायवर्जितः पापो लुब्धो नैकृतिकः शठः २३
अव्रती वृषलीभर्ता कुण्डाशी सोमविक्रयी
निहीनसेवी विप्रो हि पतति ब्रह्मयोनितः २४
गुरुतल्पी गुरुद्वेषी गुरुकुत्सारतीश्च यः
ब्रह्मद्विट्चापि पतति ब्राह्मणो ब्रह्मयोनितः २५
एभिस्तु कर्मभिर्देवि शुभैराचरितैस्तथा
शूद्रो ब्राह्मणतां गच्छेद्वैश्यः क्षत्रियतां व्रजेत् २६
शूद्रकर्माणि सर्वाणि यथान्यायं यथाविधि
शुश्रूषां परिचर्यां च ज्येष्ठे वर्णे प्रयत्नतः
कुर्यादविमनाः शूद्रः सततं सत्पथे स्थितः २७
दैवतद्विजसत्कर्ता सर्वातिथ्यकृतव्रतः
ऋतुकालाभिगामी च नियतो नियताशनः २८
चौक्षश्चौक्षजनान्वेषी शेषान्नकृतभोजनः
वृथामांसान्यभुञ्जानः शूद्रो वैश्यत्वमृच्छति २९
ऋतवागनहंवादी निर्द्वंद्वः शमकोविदः
यजते नित्ययज्ञैश्च स्वाध्यायपरमः शुचिः ३०
दान्तो ब्राह्मणसत्कर्ता सर्ववर्णबुभूषकः
गृहस्थव्रतमातिष्ठन्द्विकालकृतभोजनः ३१
शेषाशी विजिताहारो निष्कामो निरहंवदः
अग्निहोत्रमुपासंश्च जुह्वानश्च यथाविधि ३२

सर्वातिथ्यमुपातिष्ठञ्शेषान्नकृतभोजनः
त्रेताग्निमन्त्रविहितो वैश्यो भवति वै यदि
स वैश्यः क्षत्रियकुले शुचौ महति जायते ३३
स वैश्यः क्षत्रियो जातो जन्मप्रभृति संस्कृतः
उपनीतो व्रतपरो द्विजो भवति सत्कृतः ३४
ददाति यजते यज्ञैः संस्कृतैराप्तदक्षिणैः
अधीते स्वर्गमन्विच्छंस्त्रेताग्निशरणः सदा ३५
आर्तहस्तप्रदो नित्यं प्रजा धर्मेण पालयन्
सत्यः सत्यानि कुरुते नित्यं यः सुखदर्शनः ३६
धर्मदण्डो न निर्दण्डो धर्मकार्यानुशासकः
यन्त्रितः कार्यकरणे षड्भागकृतलक्षणः ३७
ग्राम्यधर्मान्न सेवेत स्वच्छन्देनार्थकोविदः
ऋतुकाले तु धर्मात्मा पत्नीं सेवेत नित्यदा ३८
सर्वोपवासी नियतः स्वाध्यायपरमः शुचिः
बर्हिष्कान्तरिते नित्यं शयानोऽग्निगृहे सदा ३९
सर्वातिथ्यं त्रिवर्गस्य कुर्वाणः सुमनाः सदा
शूद्राणां चान्नकामानां नित्यं सिद्धमिति ब्रुवन् ४०
स्वार्थाद्वा यदि वा कामान्न किंचिदुपलक्षयेत्
पितृदेवातिथिकृते साधनं कुरुते च यः ४१
स्ववेश्मनि यथान्यायमुपास्ते भैक्षमेव च
त्रिकालमग्निहोत्रं च जुह्वानो वै यथाविधि ४२
गोब्राह्मणहितार्थाय रणे चाभिमुखो हतः
त्रेताग्निमन्त्रपूतं वा समाविश्य द्विजो भवेत् ४३
ज्ञानविज्ञानसंपन्नः संस्कृतो वेदपारगः
विप्रो भवति धर्मात्मा क्षत्रियः स्वेन कर्मणा ४४
एतैः कर्मफलैर्देवि न्यूनजातिकुलोद्भवः
शूद्रोऽप्यागमसंपन्नो द्विजो भवति संस्कृतः ४५
ब्राह्मणो वाप्यसद्वृत्तः सर्वसङ्करभोजनः
ब्राह्मण्यं पुण्यमुत्सृज्य शूद्रो भवति तादृशः ४६
कर्मभिः शुचिभिर्देवि शुद्धात्मा विजितेन्द्रियः

शूद्रोऽपि द्विजवत्सेव्य इति ब्रह्माब्रवीत् स्वयम् ४७
स्वभाव कर्म च शुभं यत्र शूद्रेऽपि तिष्ठति
विशुद्धः स द्विजातिर्वै विज्ञेय इति मे मतिः ४८
न योनिर्नापि संस्कारो न श्रुतं न च संनतिः
कारणानि द्विजत्वस्य वृत्तमेव तु कारणम् ४९
सर्वोऽय ब्राह्मणो लोके वृत्तेन तु विधीयते
वृत्ते स्थितश्च शुश्रोणि ब्राह्मणत्वं निगच्छति ५०
ब्राह्मः स्वभावः कल्याणि समः सर्वत्र मे मतिः
निर्गुणं निर्मलं ब्रह्म यत्र तिष्ठति स द्विजः ५१
एते योनिफला देवि स्थानभागनिदर्शकाः
स्वयं च वरदेनोक्ता ब्रह्मणा सृजता प्रजाः ५२
ब्राह्मणो हि महत्क्षेत्रं लोके चरति पादवत्
यत्तत्र बीजं वपति सा कृषिः पारलौकिकी ५३
मिताशिना सदा भाव्यं सत्पथालम्बिना सदा
ब्राह्ममार्गमतिक्रम्य वर्तितव्यं बुभूषता ५४
संहिताध्यायिना भाव्यं गृहे वै गृहमेधिना
नित्यं स्वाध्याययुक्तेन दानाध्ययनजीविना ५५
एवंभूतो हि यो विप्रः सततं सत्पथे स्थितः
आहिताग्निरधीयानो ब्रह्मभूयाय कल्पते ५६
ब्राह्मण्यमेव संप्राप्य रक्षितव्यं यतात्मभिः
योनिप्रतिग्रहादानैः कर्मभिश्च शुचिस्मिते ५७
एतत्ते सर्वमाख्यातं यथा शूद्रो भवेद्द्विजः
ब्राह्मणो वा च्युतो धर्माद्यथा शूद्रत्वमाप्नुते ५८
इति श्रीमहाभारते अनुशासनपर्वणि एकत्रिंशदधिकशततमोऽध्यायः १३१

## द्वात्रिंशदधिक शततमोऽध्यायः

उमोवाच
भगवन्सर्वभूतेश सुरासुरनमस्कृत
धर्माधर्मे नृणां देव ब्रूहि मे संशयं विभो १
कर्मणा मनसा वाचा त्रिविधं हि नरः सदा

बध्यते बन्धनैः पाशैर्मुच्यतेऽप्यथ वा पुनः २
केन शीलेन वा देव कर्मणा कीदृशेन वा
समाचारैर्गुणैर्वाक्यैः स्वर्गं यान्तीह मानवाः ३
महेश्वर उवाच
देवि धर्मार्थतत्त्वज्ञे सत्यनित्ये दमे रते
सर्वप्राणिहितः प्रश्नः श्रूयतां बुद्धिवर्धनः ४
सत्यधर्मरताः सन्तः सर्वलिप्साविवर्जिताः
नाधर्मेण न धर्मेण बध्यन्ते छिन्नसंशयाः ५
प्रलयोत्पत्तितत्त्वज्ञाः सर्वज्ञाः समदर्शिनः
वीतरागा विमुच्यन्ते पुरुषाः सर्वबन्धनैः ६
कर्मणा मनसा वाचा ये न हिंसन्ति किंचन
ये न सज्जन्ति कस्मिंश्चिद्बध्यन्ते ते न कर्मभिः ७
प्राणातिपाताद्विरताः शीलवन्तो दयान्विताः
तुल्यद्वेष्यप्रिया दान्ता मुच्यन्ते कर्मबन्धनैः ८
सर्वभूतदयावन्तो विश्वास्याः सर्वजन्तुषु
त्यक्तहिंसासमाचारास्ते नराः स्वर्गगामिनः ९
परस्वे निर्ममा नित्यं परदारविवर्जकाः
धर्मलब्धार्थभोक्तारस्ते नराः स्वर्गगामिनः १०
मातृवत्स्वसृवच्चैव नित्यं दुहितृवच्च ये
परदारेषु वर्तन्ते ते नराः स्वर्गगामिनः ११
स्तैन्यान्निवृत्ताः सततं संतुष्टाः स्वधनेन च
स्वभाग्यान्युपजीवन्ति ते नराः स्वर्गगामिनः १२
स्वदारनिरता ये च ऋतुकालाभिगामिनः
अग्राम्यसुखभोगाश्च ते नराः स्वर्गगामिनः १३
परदारेषु ये नित्यं चरित्रावृतलोचनाः
यतेन्द्रियाः शीलपरास्ते नराः स्वर्गगामिनः १४
एष देवकृतो मार्गः सेवितव्यः सदा नरैः
अकषायकृतश्चैव मार्गः सेव्यः सदा बुधैः १५
दानधर्मतपोयुक्तः शीलशौचदयात्मनः
वृत्त्यर्थं धर्महेतोर्वा सेवितव्यः सदा नरैः

स्वर्गवासमभीप्सद्भिर्न सेव्यस्त्वत उत्तरः १६
उमोवाच
वाचाथ बध्यते येन मुच्यतेऽप्यथ वा पुनः
तानि कर्माणि मे देव वद भूतपतेऽनघ १७
महेश्वर उवाच
आत्महेतोः परार्थे वा नर्महास्याश्रयात्तथा
ये मृषा न वदन्तीह ते नराः स्वर्गगामिनः १८
वृत्त्यर्थं धर्महेतोर्वा कामकारात्तथैव च
अनृतं ये न भाषन्ते ते नराः स्वर्गगामिनः १९
श्लक्ष्णां वाणीं निराबाधां मधुरां पापवर्जिताम्
स्वागतेनाभिभाषन्ते ते नराः स्वर्गगामिनः २०
कटुकां ये न भाषन्ते परुषां निष्ठुरां गिरम्
अपैशुन्यरताः सन्तस्ते नराः स्वर्गगामिनः २१
पिशुनां ये न भाषन्ते मित्रभेदकरीं गिरम्
ऋतां मैत्रीं प्रभाषन्ते ते नराः स्वर्गगामिनः २२
वर्जयन्ति सदा सूच्यं परद्रोहं च मानवाः
सर्वभूतसमा दान्तास्ते नराः स्वर्गगामिनः २३
शठप्रलापाद्विरता विरुद्धपरिवर्जकाः
सौम्यप्रलापिनो नित्यं ते नराः स्वर्गगामिनः २४
न कोपाद्व्याहरन्ते ये वाचं हृदयदारणीम्
सान्त्वं वदन्ति क्रुद्धापि ते नराः स्वर्गगामिनः २५
एष वाणीकृतो देवि धर्मः सेव्यः सदा नरैः
शुभः सत्यगुणो नित्यं वर्जनीया मृषा बुधैः २६
उमोवाच
मनसा बध्यते येन कर्मणा पुरुषः सदा
तन्मे ब्रूहि महाभाग देवदेव पिनाकधृक् २७
महेश्वर उवाच
मानसेनेह धर्मेण संयुक्ताः पुरुषाः सदा
स्वर्गं गच्छन्ति कल्याणि तन्मे कीर्तयतः शृणु २८
दुष्प्रणीतेन मनसा दुष्प्रणीततराकृतिः

बध्यते मानवो येन शृणु चान्यच्छुभानने २९
अरण्ये विजने न्यस्तं परस्वं वीक्ष्य ये नराः
मनसापि न हिंसन्ति ते नराः स्वर्गगामिनः ३०
ग्रामे गृहे वा यद्द्रव्यं पारक्यं विजने स्थितम्
नाभिनन्दन्ति वै नित्यं ते नराः स्वर्गगामिनः ३१
तथैव परदारान्ये कामवृत्तान्रहोगतान्
मनसापि न हिंसन्ति ते नराः स्वर्गगामिनः ३२
शत्रुं मित्रं च ये नित्यं तुल्येन मनसा नराः
भजन्ति मैत्राः संगम्य ते नराः स्वर्गगामिनः ३३
श्रुतवन्तो दयावन्तः शुचयः सत्यसंगराः
स्वैरर्थैः परिसंतुष्टास्ते नराः स्वर्गगामिनः ३४
अवैरा ये त्वनायासा मैत्रचित्तपराः सदा
सर्वभूतदयावन्तस्ते नराः स्वर्गगामिनः ३५
श्रद्धावन्तो दयावन्तश्चोक्षाश्चोक्षजनप्रियाः
धर्माधर्मविदो नित्यं ते नराः स्वर्गगामिनः ३६
शुभानामशुभानां च कर्मणां फलसंचये
विपाकज्ञाश्च ये देवि ते नराः स्वर्गगामिनः ३७
न्यायोपेता गुणोपेता देवद्विजपराः सदा
समतां समनुप्राप्तास्ते नराः स्वर्गगामिनः ३८
शुभैः कर्मफलैर्देवि मयैते परिकीर्तिताः
स्वर्गमार्गोपगा भूयः किमन्यच्छ्रोतुमिच्छसि ३९
उमोवाच
महान्मे संशयः कश्चिन्मर्त्यान्प्रति महेश्वर
तस्मात्तं नैपुणेनाद्य ममाख्यातुं त्वमर्हसि ४०
केनायुर्लभते दीर्घं कर्मणा पुरुषः प्रभो
तपसा वापि देवेश केनायुर्लभते महत् ४१
क्षीणायुः केन भवति कर्मणा भुवि मानवः
विपाकं कर्मणां देव वक्तुमर्हस्यनिन्दित ४२
अपरे च महाभोगा मन्दभोगास्तथापरे
अकुलीनास्तथा चान्ये कुलीनाश्च तथापरे ४३

दुर्दर्शाः केचिदाभान्ति  नराः काष्ठमया इव
प्रियदर्शास्तथा चान्ये दर्शनादेव मानवाः ४४
दुष्प्रज्ञाः केचिदाभान्ति केचिदाभान्ति पण्डिताः
महाप्रज्ञास्तथैवान्ये ज्ञानविज्ञानदर्शिनः ४५
अल्पाबाधास्तथा केचिन्महाबाधास्तथापरे
दृश्यन्ते पुरुषा देव तन्मे शंसितुमर्हसि ४६
महेश्वर उवाच
हन्त तेऽह प्रवक्ष्यामि देवि कर्मफलोदयम्
मर्त्यलोके नराः सर्वे येन स्वं भुञ्जते फलम् ४७
प्राणातिपाती यो रौद्रो दण्डहस्तोद्यतस्तथा
नित्यमुद्यतदण्डश्च हन्ति भूतगणान्नरः ४८
निर्दयः सर्वभूतानां नित्यमुद्वेगकारकः
अपि कीटपिपीलानामशरण्यः सुनिर्घृणः ४९
एवंभूतो नरो देवि निरयं प्रतिपद्यते
विपरीतस्तु धर्मात्मा रूपवानभिजायते ५०
निरयं याति हिंसात्मा याति स्वर्गमहिंसकः
यातनां निरये रौद्रां स कृच्छ्रां लभते नरः ५१
अथ चेन्निरयात्तस्मात्समुत्तरति कर्हिचित्
मानुष्यं लभते चापि हीनायुस्तत्र जायते ५२
पापेन कर्मणा देवि बद्धो हिंसारतिर्नरः
अप्रियः सर्वभूतानां हीनायुरुपजायते ५३
यस्तु शुक्लाभिजातीयः प्राणिघातविवर्जकः
निक्षिप्तदण्डो निर्दण्डो न हिनस्ति कदाचन ५४
न घातयति नो हन्ति घ्नन्तं नैवानुमोदते
सर्वभूतेषु सस्नेहो यथात्मनि तथापरे ५५
ईदृशः पुरुषोत्कर्षो देवि देवत्वमश्नुते
उपपन्नान्सुखान्भोगानुपाश्नाति मुदा युतः ५६
अथ चेन्मानुषे लोके कदाचिदुपपद्यते
तत्र दीर्घायुरुत्पन्नः स नरः सुखमेधते ५७
एवं दीर्घायुषां मार्गः सुवृत्तानां सुकर्मणाम्

प्राणिहिंसाविमोक्षेण ब्रह्मणा समुदीरितः ५८

इति श्रीमहाभारते अनुशासनपर्वणि द्वात्रिंशदधिकशततमोऽध्यायः १३२

त्रयस्त्रिंशदधिक शततमोऽध्यायः

उमोवाच

किंशीलाः किंसमाचाराः पुरुषाः कैश्च कर्मभिः
स्वर्गं समभिपद्यन्ते संप्रदानेन केन वा १

महेश्वर उवाच

दाता ब्राह्मणसत्कर्ता दीनान्धकृपणादिषु
भक्ष्यभोज्यान्नपानानां वाससां च प्रदायकः २
प्रतिश्रयान्सभाः कूपान्प्रपाः पुष्करिणीस्तथा
नैत्यकानि च सर्वाणि किमिच्छकमतीव च ३
आसनं शयनं यानं धनं रत्नं गृहांस्तथा
सस्यजातानि सर्वाणि गाः क्षेत्राण्यथ योषितः ४
सुप्रतीतमना नित्यं यः प्रयच्छति मानवः
एवंभूतो मृतो देवि देवलोकेऽभिजायते ५
तत्रोष्य सुचिरं कालं भुक्त्वा भोगाननुत्तमान्
सहाप्सरोभिर्मुदितो रमित्वा नन्दनादिषु ६
तस्मात्स्वर्गाच्च्युतो लोकान्मानुषेषूपजायते
महाभोगे कुले देवि धनधान्यसमाचिते ७
तत्र कामगुणैः सर्वैः समुपेतो मुदा युतः
महाभोगो महाकोशो धनी भवति मानवः ८
एते देवि महाभोगाः प्राणिनो दानशीलिनः
ब्रह्मणा वै पुरा प्रोक्ताः सर्वस्य प्रियदर्शनाः ९
अपरे मानवा देवि प्रदानकृपणा द्विजैः
याचिता न प्रयच्छन्ति विद्यमानेऽप्यबुद्धयः १०
दीनान्धकृपणान्दृष्ट्वा भिक्षुकानतिथीनपि
याच्यमाना निवर्तन्ते जिह्वालोभसमन्विताः ११
न धनानि न वासांसि न भोगान्न च काञ्चनम्
न गावो नान्नविकृतिं प्रयच्छन्ति कदाचन १२

अप्रवृत्तास्तु ये लुब्धा नास्तिका दानवर्जिताः
एवंभूता नरा देवि निरयं यान्त्यबुद्धयः १३
ते चेन्मनुष्यतां यान्ति यदा कालस्य पर्ययात्
धनरिक्ते कुले जन्म लभन्ते स्वल्पबुद्धयः १४
क्षुत्पिपासापरीताश्च सर्वभोगबहिष्कृताः
निराशाः सर्वभोगेभ्यो जीवन्त्यधमजीविकाम् १५
अल्पभोगकुले जाता अल्पभोगरता नराः
अनेन कर्मणा देवि भवन्त्यधनिनो नराः १६
अपरे स्तम्भिनो नित्यं मानिनं पापतो रताः
आसनार्हस्य ये पीठं न प्रयच्छन्त्यचेतसः १७
मार्गार्हस्य च ये मार्गं न यच्छन्त्यल्पबुद्धयः
पाद्यार्हस्य च ये पाद्यं न ददत्यल्पबुद्धयः १८
अर्घार्हान्न च सत्कारैरर्चयन्ति यथाविधि
अर्घ्यमाचमनीयं वा न यच्छन्त्यल्पबुद्धयः १९
गुरुं चाभिगतं प्रेम्णा गुरुवन्न बुभूषते
अभिमानप्रवृत्तेन लोभेन समवस्थिताः २०
संमान्यांश्चावमन्यन्ते वृद्धान्परिभवन्ति च
एवंविधा नरा देवि सर्वे निरयगामिनः २१
ते वै यदि नरास्तस्मान्निरयादुत्तरन्ति वै
वर्षपूगैस्ततो जन्म लभन्ते कुत्सिते कुले २२
श्वपाकपुल्कसादीनां कुत्सितानामचेतसाम्
कुलेषु तेषु जायन्ते गुरुवृद्धापचायिनः २३
न स्तम्भी न च मानी यो देवताद्विजपूजकः
लोकपूज्यो नमस्कर्ता प्रश्रितो मधुरं वदन् २४
सर्ववर्णप्रियकरः सर्वभूतहितः सदा
अद्वेषी सुमुखः श्लक्ष्णः स्निग्धवाणीप्रदः सदा २५
स्वागतेनैव सर्वेषां भूतानामविहिंसकः
यथार्हसत्क्रियापूर्वमर्चयन्नुपतिष्ठति २६
मार्गार्हाय ददन्मार्गं गुरुं गुरुवदर्चयन्
अतिथिप्रग्रहरतस्तथाभ्यागतपूजकः २७

एवंभूतो नरो देवि स्वर्गतिं प्रतिपद्यते
ततो मानुषतां प्राप्य विशिष्टकुलजो भवेत् २८
तत्रासौ विपुलैर्भोगैः सर्वरत्नसमायुतः
यथार्हदाता चार्हेषु धर्मचर्यापरो भवेत् २९
संमतः सर्वभूतानां सर्वलोकनमस्कृतः
स्वकर्मफलमाप्नोति स्वयमेव नरः सदा ३०
उदात्तकुलजातीय उदात्ताभिजनः सदा
एष धर्मो मया प्रोक्तो विधात्रा स्वयमीरितः ३१
यस्तु रौद्रसमाचारः सर्वसत्त्वभयंकरः
हस्ताभ्यां यदि वा पद्भ्यां रज्ज्वा दण्डेन वा पुनः ३२
लोष्टैः स्तम्भैरुपायैर्वा जन्तून्बाधति शोभने
हिंसार्थं निकृतिप्रज्ञः प्रोद्वेजयति चैव ह ३३
उपक्रामति जन्तूंश्च उद्वेगजननः सदा
एवंशीलसमाचारो निरयं प्रतिपद्यते ३४
स चेन्मानुषतां गच्छेद्यदि कालस्य पर्ययात्
बह्वाबाधपरिक्लिष्टे सोऽधमे जायते कुले ३५
लोकद्वेष्योऽधमः पुंसां स्वयं कर्मकृतैः फलैः
एष देवि मनुष्येषु बोद्धव्यो ज्ञातिबन्धुषु ३६
अपरः सर्वभूतानि दयावाननुपश्यति
मैत्रदृष्टिः पितृसमो निर्वैरो नियतेन्द्रियः ३७
नोद्वेजयति भूतानि न विहिंसयते तथा
हस्तपादैः सुनियतैर्विश्वास्यः सर्वजन्तुषु ३८
न रज्ज्वा न च दण्डेन न लोष्टैर्नायुधेन च
उद्वेजयति भूतानि श्लक्ष्णकर्मा दयापरः ३९
एवंशीलसमाचारः स्वर्गे समुपजायते
तत्रासौ भवने दिव्ये मुदा वसति देववत् ४०
स चेत्कर्मक्षयान्मर्त्यो मनुष्येषूपजायते
अल्पाबाधो निरीतीकः स जातः सुखमेधते ४१
सुखभागी निरायासो निरुद्वेगः सदा नरः
एष देवि सतां मार्गो बाधा यत्र न विद्यते ४२

उमोवाच
इमे मनुष्या दृश्यन्ते ऊहापोहविशारदाः
ज्ञानविज्ञानसंपन्नाः प्रज्ञावन्तोऽथकोविदाः
दुष्प्रज्ञाश्चापरे देव ज्ञानविज्ञानवर्जिताः ४३
केन कर्मविपाकेनप्रज्ञावान्पुरुषो भवेत्
अल्पप्रज्ञो विरूपाक्ष कथं भवति मानवः
एतं मे संशयं छिन्द्धि सर्वधर्मविदां वर ४४
जात्यन्धाश्चापरे देव रोगार्ताश्चापरे तथा
नराः क्लीबाश्च दृश्यन्ते कारणं ब्रूहि तत्र वै ४५
महेश्वर उवाच
ब्राह्मणान्वेदविदुषः सिद्धान्धर्मविदस्तथा
परिपृच्छन्त्यहरहः कुशलाकुशलं तथा ४६
वर्जयन्त्यशुभं कर्म सेवमानाः शुभं तथा
लभन्ते स्वर्गतिं नित्यमिह लोके सुखं तथा ४७
स चेन्मानुषतां याति मेधावी तत्र जायते
श्रुतं प्रज्ञानुगं चास्य कल्याणमुपजायते ४८
परदारेषु ये मूढाश्चक्षुर्दुष्टं प्रयुञ्जते
तेन दुष्टस्वभावेन जात्यन्धास्ते भवन्ति ह ४९
मनसा तु प्रदुष्टेन नग्नां पश्यन्ति ये स्त्रियम्
रोगार्तास्ते भवन्तीह नरा दुष्कृतकर्मिणः ५०
ये तु मूढा दुराचारा वियोनौ मैथुने रताः
पुरुषेषु सुदुष्प्रज्ञाः क्लीवत्वमुपयान्ति ते ५१
पशूंश्च ये बन्धयन्ति ये चैव गुरुतल्पगाः
प्रकीर्णमैथुना ये च क्लीबा जायन्ति ते नराः ५२
उमोवाच
सावद्यं किं तु वै कर्म निरवद्यं तथैव च
श्रेयः कुर्वन्नवाप्नोति मानवो देवसत्तम ५३
महेश्वर उवाच
श्रेयांसं मार्गमातिष्ठन्सदा यः पृच्छते द्विजान्
धर्मान्वेषी गुणाकाङ्क्षी स स्वर्गं समुपाश्नुते ५४

यदि मानुषतां देवि कदाचित्स निगच्छति
मेधावी धारणायुक्तः प्राज्ञस्तत्राभिजायते ५५
एष देवि सतां धर्मो मन्तव्यो भूतिकारकः
नृणां हितार्थाय तव मया वै समुदाहृतः ५६
उमोवाच
अपरे स्वल्पविज्ञाना धर्मविद्वेषिणो नराः
ब्राह्मणान्वेदविदुषो नेच्छन्ति परिसर्पितुम् ५७
व्रतवन्तो नराः केचिच्छ्रद्धादमपरायणाः
अव्रता भ्रष्टनियमास्तथान्ये राक्षसोपमाः ५८
यज्वानश्च तथैवान्ये निर्होमाश्च तथापरे
केन कर्मविपाकेन भवन्तीह वदस्व मे ५९
महेश्वर उवाच
आगमाल्लोकधर्माणां मर्यादाः पूर्वनिर्मिताः
प्रामाण्येनानुवर्तन्ते दृश्यन्ते हि दृढव्रताः ६०
अधर्मं धर्ममित्याहुर्ये च मोहवशं गताः
अव्रता नष्टमर्यादास्ते प्रोक्ता ब्रह्मराक्षसाः ६१
ते चेत्कालकृतोद्योगात्संभवन्तीह मानुषाः
निर्होमा निर्वषट्कारास्ते भवन्ति नराधमाः ६२
एष देवि मया सर्वः संशयच्छेदनाय ते
कुशलाकुशलो नृणां व्याख्यातो धर्मसागरः ६३
इति श्रीमहाभारते अनुशासनपर्वणि त्रयस्त्रिंशदधिकशततमोऽध्यायः १३३

## चतुस्त्रिंशदधिक शततमोऽध्यायः

महेश्वर उवाच
परावरज्ञे धर्मज्ञे तपोवननिवासिनि
साध्वि सुभ्रु सुकेशान्ते हिमवत्पर्वतात्मजे १
दक्षे शमदमोपेते निर्ममे धर्मचारिणि
पृच्छामि त्वां वरारोहे पृष्टा वद ममेप्सितम् २
सावित्री ब्रह्मणः साध्वी कौशिकस्य शची शती
मार्तण्डजस्य धूमोर्णा ऋद्धिर्वैश्रवणस्य च ३

वरुणस्य तथा गौरी सूर्यस्य च सुवर्चला
रोहिणी शशिनः साध्वी स्वाहा चैव विभावसोः ४
अदितिः कश्यपस्याथ सर्वास्ताः पतिदेवताः
पृष्टाश्चोपासिताश्चैव तास्त्वया देवि नित्यशः ५
तेन त्वां परिपृच्छामि धर्मज्ञे धर्मवादिनि
स्त्रीधर्मं श्रोतुमिच्छामि त्वयोदाहृतमादितः ६
सहधर्मचरी मे त्वं समशीला समव्रता
समानसारवीर्या च तपस्तीव्रं कृतं च ते
त्वया ह्युक्तो विशेषेण प्रमाणत्वमुपैष्यति ७
स्त्रियश्चैव विशेषेण स्त्रीजनस्य गतिः सदा
गौर्गां गच्छति सुश्रोणि लोकेष्वेषा स्थितिः सदा ८
मम चार्धं शरीरस्य मम चार्धाद्विनिःसृता
सुरकार्यकरी च त्वं लोकसंतानकारिणी ९
तव सर्वः सुविदितः स्त्रीधर्मः शाश्वतः शुभे
तस्मादशेषतो ब्रूहि स्त्रीधर्मं विस्तरेण मे १०
उमोवाच
भगवन्सर्वभूतेश भूतभव्यभवोद्भव
त्वत्प्रभावादियं देव वाक्चैव प्रतिभाति मे ११
इमास्तु नद्यो देवेश सर्वतीर्थोदकैर्युताः
उपस्पर्शनहेतोस्त्वा समीपस्था उपासते १२
एताभिः सह संमन्त्र्य प्रवक्ष्याम्यनुपूर्वशः
प्रभवन्योऽनहंवादी स वै पुरुष उच्यते १३
स्त्री च भूतेश सततं स्त्रियमेवानुधावति
मया संमानिताश्चैव भविष्यन्ति सरिद्वराः १४
एषा सरस्वती पुण्या नदीनामुत्तमा नदी
प्रथमा सर्वसरितां नदी सागरगामिनी १५
विपाशा च वितस्ता च चन्द्रभागा इरावती
शतद्रुर्देविका सिन्धुः कौशिकी गोतमी तथा १६
तथा देवनदी चेयं सर्वतीर्थाभिसंवृता
गगनाद्गां गता देवी गङ्गा सर्वसरिद्वरा १७

इत्युक्त्वा देवदेवस्य पत्नी धर्मभृतां वरा
स्मितपूर्वमिवाभाष्य सर्वास्ताः सरितस्तदा १८
अपृच्छद्देवमहिषी स्त्रीधर्मं धर्मवत्सला
स्त्रीधर्मकुशलास्ता वै गङ्गाद्याः सरितां वराः १९
अयं भगवता दत्तः प्रश्नः स्त्रीधर्मसंश्रितः
तं तु संमन्त्र्य युष्माभिर्वक्तुमिच्छामि शंकरे २०
न चैकसाध्यं पश्यामि विज्ञानं भुवि कस्यचित्
दिवि वा सागरगमास्तेन वो मानयाम्यहम् २१
भीष्म उवाच
एवं सर्वाः सरिच्छ्रेष्ठाः पृष्टाः पुण्यतमाः शिवाः
ततो देवनदी गङ्गा नियुक्ता प्रतिपूज्य ताम् २२
बह्वीभिर्बुद्धिभिः स्फीता स्त्रीधर्मज्ञा शुचिस्मिता
शैलराजसुतां देवीं पुण्या पापापहां शिवाम् २३
बुद्ध्या विनयसंपन्ना सर्वज्ञानविशारदा
सस्मितं बहुबुद्ध्याढ्या गङ्गा वचनमब्रवीत् २४
धन्याः स्मोऽनुगृहीताः स्मो देवि धर्मपरायणा
या त्वं सर्वजगन्मान्या नदीर्मानयसेऽनघे २५
प्रभवन्पृच्छते यो हि संमानयति वा पुनः
नूनं जनमदुष्टात्मा पण्डिताख्यां स गच्छति २६
ज्ञानविज्ञानसंपन्नानूहापोहविशारदान्
प्रवक्तॄन्पृच्छते योऽन्यान्स वै ना पदमर्च्छति २७
अन्यथा बहुबुद्ध्याढ्यो वाक्यं वदति संसदि
अन्यथैव ह्यहंमानी दुर्बलं वदते वचः २८
दिव्यज्ञाने दिवि श्रेष्ठे दिव्यपुण्ये सदोत्थिते
त्वमेवार्हसि नो देवि स्त्रीधर्ममनुशासितुम् २९
भीष्म उवाच
ततः साराधिता देवी गङ्गया बहुभिर्गुणैः
प्राह सर्वमशेषेण स्त्रीधर्मं सुरसुन्दरी ३०
स्त्रीधर्मो मां प्रति यथा प्रतिभाति यथाविधि
तमहं कीर्तयिष्यामि तथैव प्रथितो भवेत् ३१

स्त्रीधर्मः पूर्व एवायं विवाहे बन्धुभिः कृतः
सहधर्मचरी भर्तुर्भवत्यग्निसमीपतः ३२
सुस्वभावा सुवचना सुवृत्ता सुखदर्शना
अनन्यचित्ता सुमुखी भर्तुः सा धर्मचारिणी ३३
सा भवेद्धर्मपरमा सा भवेद्धर्मभागिनी
देववत्सततं साध्वी या भर्तारं प्रपश्यति ३४
शुश्रूषां परिचारं च देववद्या करोति च
नान्यभावा ह्यविमनाः सुव्रता सुखदर्शना ३५
पुत्रवक्त्रमिवाभीक्ष्णं भर्तुर्वदनमीक्षते
या साध्वी नियताचारा सा भवेद्धर्मचारिणी ३६
श्रुत्वा दंपतिधर्मं वै सहधर्मकृतं शुभम्
अनन्यचित्ता सुमुखी भर्तुः सा धर्मचारिणी ३७
परुषाण्यपि चोक्ता या दृष्टा वा क्रूरचक्षुषा
सुप्रसन्नमुखी भर्तुर्या नारी सा पतिव्रता ३८
न चन्द्रसूर्यौ न तरुं पुंनाम्नो या निरीक्षते
भर्तृवर्जं वरारोहा सा भवेद्धर्मचारिणी ३९
दरिद्रं व्याधितं दीनमध्वना परिकर्शितम्
पतिं पुत्रमिवोपास्ते सा नारी धर्मभागिनी ४०
या नारी प्रयता दक्षा या नारी पुत्रिणी भवेत्
पतिप्रिया पतिप्राणा सा नारी धर्मभागिनी ४१
शुश्रूषां परिचर्यां च करोत्यविमनाः सदा
सुप्रतीता विनीता च सा नारी धर्मभागिनी ४२
न कामेषु न भोगेषु नैश्वर्ये न सुखे तथा
स्पृहा यस्या यथा पत्यौ सा नारी धर्मभागिनी ४३
कल्योत्थानरता नित्यं गुरुशुश्रूषणे रता
सुसंमृष्टक्षया चैव गोशकृत्कृतलेपना ४४
अग्निकार्यपरा नित्यं सदा पुष्पबलिप्रदा
देवतातिथिभृत्यानां निरुप्य पतिना सह ४५
शेषान्नमुपभुञ्जाना यथान्यायं यथाविधि
तुष्टपुष्टजना नित्यं नारी धर्मेण युज्यते ४६

श्वश्रूश्वशुरयोः पादौ तोषयन्ती गुणान्विता
मातापितृपरा नित्यं या नारी सा तपोधना ४७
ब्राह्मणान्दुर्बलानाथान्दीनान्धकृपणांस्तथा
विभर्त्यन्नेन या नारी सा पतिव्रतभागिनी ४८
व्रतं चरति या नित्यं दुश्चरं लघुसत्त्वया
पतिचित्ता पतिहिता सा पतिव्रतभागिनी ४९
पुण्यमेतत्तपश्चैव स्वर्गश्चैष सनातनः
या नारी भर्तृपरमा भवेद्भर्तृव्रता शिवा ५०
पतिर्हि देवा नारीणां पतिर्बन्धुः पतिर्गतिः
पत्या समा गतिर्नास्ति दैवतं वा यथा पतिः ५१
पतिप्रसादः स्वर्गो वा तुल्यो नार्या न वा भवेत्
अहं स्वर्गं न हीच्छेयं त्वय्यप्रीते महेश्वर ५२
यद्यकार्यमधर्मं वा यदि वा प्राणनाशनम्
पतिर्ब्रूयाद्दरिद्रो वा व्याधितो वा कथंचन ५३
आपन्नो रिपुसंस्थो वा ब्रह्मशापार्दितोऽपि वा
आपद्धर्माननुप्रेक्ष्य तत्कार्यमविशङ्कया ५४
एष देव मया प्रोक्तः स्त्रीधर्मो वचनात्तव
या त्वेवंभाविनी नारी सा भवेद्धर्मभागिनी ५५
भीष्म उवाच
इत्युक्तः स तु देवेशः प्रतिपूज्य गिरेः सुताम्
लोकान्विसर्जयामास सर्वैरनुचरैः सह ५६
ततो ययुर्भूतगणाः सरितश्च यथागतम्
गन्धर्वाप्सरसश्चैव प्रणम्य शिरसा भवम् ५७
इति श्रीमहाभारते अनुशासनपर्वणि चतुस्त्रिंशदधिकशततमोऽध्यायः १३४

## पञ्चत्रिंशदधिक शततमोऽध्यायः

वैशम्पायन उवाच
श्रुत्वा धर्मानशेषेण पावनानि च सर्वशः
युधिष्ठिरः शांतनवं पुनरेवाभ्यभाषत १
किमेकं दैवतं लोके किं वाप्येकं परायणम्

स्तुवन्तः कं कमर्चन्तः प्राप्नुयुर्मानवाः शुभम् २
को धर्मः सर्वधर्माणां भवतः परमो मतः
किं जपन्मुच्यते जन्तुर्जन्मसंसारबन्धनात् ३
भीष्म उवाच
जगत्प्रभुं देवदेवमनन्तं पुरुषोत्तमम्
स्तुवन्नामसहस्रेण पुरुषः सततोत्थितः ४
तमेव चार्चयन्नित्यं भक्त्या पुरुषमव्ययम्
ध्यायन्स्तुवन्नमस्यंश्च यजमानस्तमेव च ५
अनादिनिधनं विष्णुं सर्वलोकमहेश्वरम्
लोकाध्यक्षं स्तुवन्नित्यं सर्वदुःखातिगो भवेत् ६
ब्रह्मण्यं सर्वधर्मज्ञं लोकानां कीर्तिवर्धनम्
लोकनाथं महद्भूतं सर्वभूत भवोद्भवम् ७
एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः
यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरः सदा ८
परमं यो महत्तेजः परमं यो महत्तपः
परमं यो महद्ब्रह्म परमं यः परायणम् ९
पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम्
दैवतं देवतानां च भूतानां योऽव्ययः पिता १०
यतः सर्वाणि भूतानि भवन्त्यादियुगागमे
यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये ११
तस्य लोकप्रधानस्य जगन्नाथस्य भूपते
विष्णोर्नामसहस्रं मे शृणु पापभयापहम् १२
यानि नामानि गौणानि विख्यातानि महात्मनः
ऋषिभिः परिगीतानि तानि वक्ष्यामि भूतये १३
विश्वं विष्णुर्वषट्कारो भूतभव्यभवत्प्रभुः
भूतकृद्भूतभृद्भावो भूतात्मा भूतभावनः १४
पूतात्मा परमात्मा च मुक्तानां परमा गतिः
अव्ययः पुरुषः साक्षी क्षेत्रज्ञोऽक्षर एव च १५
योगो योगविदां नेता प्रधानपुरुषेश्वरः
नारसिंहवपुः श्रीमान्केशवः पुरुषोत्तमः १६

सर्वः शर्वः शिवः स्थाणुर्भूतादिर्निधिरव्ययः
संभवो भावनो भर्ता प्रभवः प्रभुरीश्वरः १७
स्वयंभूः शंभुरादित्यः पुष्कराक्षो महास्वनः
अनादिनिधनो धाता विधाता धातुरुत्तमः १८
अप्रमेयो हृषीकेशः पद्मनाभोऽमरप्रभुः
विश्वकर्मा मनुस्त्वष्टा स्थविष्ठः स्थविरो ध्रुवः १९
अग्राह्यः शाश्वतः कृष्णो लोहिताक्षः प्रतर्दनः
प्रभूतस्त्रिककुब्धाम पवित्रं मङ्गलं परम् २०
ईशानः प्राणदः प्राणो ज्येष्ठः श्रेष्ठः प्रजापतिः
हिरण्यगर्भो भूगर्भो माधवो मधुसूदनः २१
ईश्वरो विक्रमी धन्वी मेधावी विक्रमः क्रमः
अनुत्तमो दुराधर्षः कृतज्ञः कृतिरात्मवान् २२
सुरेशः शरणं शर्म विश्वरेताः प्रजाभवः
अहः संवत्सरो व्यालः प्रत्ययः सर्वदर्शनः २३
अजः सर्वेश्वरः सिद्धः सिद्धिः सर्वादिरच्युतः
वृषाकपिरमेयात्मा सर्वयोगविनिःसृतः २४
वसुर्वसुमनाः सत्यः समात्मा संमितः समः
अमोघः पुण्डरीकाक्षो वृषकर्मा वृषाकृतिः २५
रुद्रो बहुशिरा बभ्रुर्विश्वयोनिः शुचिश्रवाः
अमृतः शाश्वतः स्थाणुर्वरारोहो महातपाः २६
सर्वगः सर्वविद्भानुर्विष्वक्सेनो जनार्दनः
वेदो वेदविदव्यङ्गो वेदाङ्गो वेदवित्कविः २७
लोकाध्यक्षः सुराध्यक्षो धर्माध्यक्षः कृताकृतः
चतुरात्मा चतुर्व्यूहश्चतुर्दंष्ट्रश्चतुर्भुजः २८
भ्राजिष्णुर्भोजनं भोक्ता सहिष्णुर्जगदादिजः
अनघो विजयो जेता विश्वयोनिः पुनर्वसुः २९
उपेन्द्रो वामनः प्रांशुरमोघः शुचिरूर्जितः
अतीन्द्रः संग्रहः सर्गो धृतात्मा नियमो यमः ३०
वेद्यो वैद्यः सदायोगी वीरहा माधवो मधुः
अतीन्द्रियो महामायो महोत्साहो महाबलः ३१

महाबुद्धिर्महावीर्यो महाशक्तिर्महाद्युतिः
अनिर्देश्यवपुः श्रीमानमेयात्मा महाद्रिधृक् ३२
महेष्वासो महीभर्ता श्रीनिवासः सतां गतिः
अनिरुद्धः सुरानन्दो गोविन्दो गोविदां पतिः ३३
मरीचिर्दमनो हंसः सुपर्णो भुजगोत्तमः
हिरण्यनाभः सुतपाः पद्मनाभः प्रजापतिः ३४
अमृत्युः सर्वदृक्सिंहः संधाता संधिमान्स्थिरः
अजो दुर्मर्षणः शास्ता विश्रुतात्मा सुरारिहा ३५
गुरुर्गुरुतमो धाम सत्यः सत्यपराक्रमः
निमिषोऽनिमिषः स्रग्वी वाचस्पतिरुदारधीः ३६
अग्रणीर्ग्रामणीः श्रीमान्न्यायो नेता समीरणः
सहस्रमूर्धा विश्वात्मा सहस्राक्षः सहस्रपात् ३७
आवर्तनो निवृत्तात्मा संवृतः संप्रमर्दनः
अहः संवर्तको वह्निरनिलो धरणीधरः ३८
सुप्रसादः प्रसन्नात्मा विश्वधृग्विश्वभुग्विभुः
सत्कर्ता सत्कृतः साधुर्जह्नुर्नारायणो नरः ३९
असंख्येयोऽप्रमेयात्मा विशिष्टः शिष्टकृच्छुचिः
सिद्धार्थः सिद्धसंकल्पः सिद्धिदः सिद्धिसाधनः ४०
वृषाही वृषभो विष्णुर्वृषपर्वा वृषोदरः
वर्धनो वर्धमानश्च विविक्तः श्रुतिसागरः ४१
सुभुजो दुर्धरो वाग्मी महेन्द्रो वसुदो वसुः
नैकरूपो बृहद्रूपः शिपिविष्टः प्रकाशनः ४२
ओजस्तेजो द्युतिधरः प्रकाशात्मा प्रतापनः
ऋद्धः स्पष्टाक्षरो मन्त्रश्चन्द्रांशुर्भास्करद्युतिः ४३
अमृतांशूद्भवो भानुः शशबिन्दुः सुरेश्वरः
औषधं जगतः सेतुः सत्यधर्मपराक्रमः ४४
भूतभव्यभवन्नाथः पवनःपावनोऽनिलः
काम हाकामकृत्कान्तः कामः कामप्रदः प्रभुः ४५
युगादिकृद्युगावर्तो नैकमायो महाशनः
अदृश्यो व्यक्तरूपश्च सहस्रजिदनन्तजित् ४६

इष्टो विशिष्टः शिष्टेष्टः शिखराडी नहुषो वृषः
क्रोधहा क्रोधकृत्कर्ता विश्वबाहुर्महीधरः ४७
अच्युतः प्रथितः प्राणः प्राणदो वासवानुजः
अपां निधिरधिष्ठानमप्रमत्तः प्रतिष्ठितः ४८
स्कन्दः स्कन्दधरो धुर्यो वरदो वायुवाहनः
वासुदेवो बृहद्भानुरादिदेवः पुरंदरः ४९
अशोकस्तारणस्तारः शूरः शौरिर्जनेश्वरः
अनुकूलः शतावर्तः पद्मी पद्मनिभेक्षणः ५०
पद्मनाभोऽरविन्दाक्षः पद्मगर्भः शरीरभृत्
महर्द्धिर्ऋद्धो वृद्धात्मा महाक्षो गरुडध्वजः ५१
अतुलः शरभो भीमः समयज्ञो हविर्हरिः
सर्वलक्षणलक्षरायो लक्ष्मीवान्समितिंजयः ५२
विक्षरो रोहितो मार्गो हेतुर्दामोदरः सहः
महीधरो महाभागो वेगवानमिताशनः ५३
उद्भवः क्षोभणो देवः श्रीगर्भः परमेश्वरः
करणं कारणं कर्ता विकर्ता गहनो गुहः ५४
व्यवसायो व्यवस्थानः संस्थानः स्थानदो ध्रुवः
परर्द्धिः परमः स्पष्टस्तुष्टः पुष्टः शुभेक्षणः ५५
रामो विरामो विरतो मार्गो नेयो नयोऽनयः
वीरः शक्तिमतां श्रेष्ठो धर्मो धर्मविदुत्तमः ५६
वैकुराठः पुरुषः प्राणः प्राणदः प्रणवः पृथुः
हिररायगर्भः शत्रुघ्नो व्याप्तो वायुरधोक्षजः ५७
ऋतुः सुदर्शनः कालः परमेष्ठी परिग्रहः
उग्रः संवत्सरो दक्षो विश्रामो विश्वदक्षिणः ५८
विस्तारः स्थावरः स्थाणुः प्रमाणं बीजमव्ययम्
अर्थोऽनर्थो महाकोशो महाभोगो महाधनः ५९
अनिर्विराणः स्थविष्ठो भूर्धर्मयूपो महामखः
नक्षत्रनेमिर्नक्षत्री क्षमः क्षामः समीहनः ६०
यज्ञ इज्यो महेज्यश्च क्रतुः सत्रं सतां गतिः
सर्वदर्शी विमुक्तात्मा सर्वज्ञो ज्ञानमुत्तमम् ६१

सुव्रतः सुमुखः सूक्ष्मः सुघोषः सुखदः सुहृत्
मनोहरो जितक्रोधो वीरबाहुर्विदारणः ६२
स्वापनः स्ववशो व्यापी नैकात्मा नैककर्मकृत्
वत्सरो वत्सलो वत्सी रत्नगर्भो धनेश्वरः ६३
धर्मगुब्धर्मकृद्धर्मी सदसत्क्षरमक्षरम्
अविज्ञाता सहस्रांशुर्विधाता कृतलक्षणः ६४
गभस्तिनेमिः सत्त्वस्थः सिंहो भूतमहेश्वरः
आदिदेवो महादेवो देवेशो देवभृद्गुरुः ६५
उत्तरो गोपतिर्गोप्ता ज्ञानगम्यः पुरातनः
शरीरभूतभृद्भोक्ता कपीन्द्रो भूरिदक्षिणः ६६
सोमपोऽमृतपः सोमः पुरुजित्पुरुसत्तमः
विनयो जयः सत्यसंधो दाशार्हः सात्वतां पतिः ६७
जीवो विनयिता साक्षी मुकुन्दोऽमितविक्रमः
अम्भोनिधिरनन्तात्मा महोदधिशयोऽन्तकः ६८
अजो महार्हः स्वाभाव्यो जितामित्रः प्रमोदनः
आनन्दो नन्दनो नन्दः सत्यधर्मो त्रिविक्रमः ६९
महर्षिः कपिलाचार्यः कृतज्ञो मेदिनीपतिः
त्रिपदस्त्रिदशाध्यक्षो महाशृङ्गः कृतान्तकृत् ७०
महावराहो गोविन्दः सुषेणः कनकाङ्गदी
गुह्यो गभीरो गहनो गुप्तश्चक्रगदाधरः ७१
वेधाः स्वाङ्गोऽजितः कृष्णो दृढः संकर्षणोऽच्युतः
वरुणो वारुणो वृक्षः पुष्कराक्षो महामनाः ७२
भगवान्भगहा नन्दी वनमाली हलायुधः
आदित्यो ज्योतिरादित्यः सहिष्णुर्गतिसत्तमः ७३
सुधन्वा खण्डपरशुर्दारुणो द्रविणप्रदः
दिवःस्पृक्सर्वदृग्व्यासो वाचस्पतिरयोनिजः ७४
त्रिसामा सामगः साम निर्वाणं भेषजं भिषक्
संन्यासकृच्छमः शान्तो निष्ठा शान्तिः परायणम् ७५
शुभाङ्गः शान्तिदः स्रष्टा कुमुदः कुवलेशयः
गोहितो गोपतिर्गोप्ता वृषभाक्षो वृषप्रियः ७६

अनिवर्ती निवृत्तात्मा संक्षेप्ता क्षेमकृच्छिवः
श्रीवत्सवक्षाः श्रीवासः श्रीपतिः श्रीमतां वरः ७७
श्रीदः श्रीशः श्रीनिवासः श्रीनिधिः श्रीविभावनः
श्रीधरः श्रीकरः श्रेयः श्रीमाँल्लोकत्रयाश्रयः ७८
स्वक्षः स्वङ्गः शतानन्दो नन्दिर्ज्योतिर्गणेश्वरः
विजितात्मा विधेयात्मा सत्कीर्तिश्छिन्नसंशयः ७९
उदीर्णः सर्वतश्चक्षुरनीशः शाश्वतः स्थिरः
भूशयो भूषणो भूतिर्विशोकः शोकनाशनः ८०
अर्चिष्मानर्चितः कुम्भो विशुद्धात्मा विशोधनः
अनिरुद्धोऽप्रतिरथः प्रद्युम्नोऽमितविक्रमः ८१
कालनेमिनिहा वीरः शूरः शौरिर्जनेश्वरः
त्रिलोकात्मा त्रिलोकेशः केशवः केशिहा हरिः ८२
कामदेवः कामपालः कामी कान्तः कृतागमः
अनिर्देश्यवपुर्विष्णुर्वीरोऽनन्तो धनंजयः ८३
ब्रह्मण्यो ब्रह्मकृद्ब्रह्मा ब्रह्म ब्रह्मविवर्धनः
ब्रह्मविद्ब्राह्मणो ब्रह्मी ब्रह्मज्ञो ब्राह्मणप्रियः ८४
महाक्रमो महाकर्मा महातेजा महोरगः
महाक्रतुर्महायज्वा महायज्ञो महाहविः ८५
स्तव्यः स्तवप्रियः स्तोत्रं स्तुतिः स्तोता रणप्रियः
पूर्णः पूरयिता पुण्यः पुण्यकीर्तिरनामयः ८६
मनोजवस्तीर्थकरो वसुरेता वसुप्रदः
वसुप्रदो वासुदेवो वसुर्वसुमना हविः ८७
सद्गतिः सत्कृतिः सत्ता सद्भूतिः सत्परायणः
शूरसेनो यदुश्रेष्ठः सन्निवासः सुयामुनः ८८
भूतावासो वासुदेवो सर्वासुनिलयोऽनलः
दर्पहा दर्पदो दृप्तो दुर्धरोऽथापराजितः ८९
विश्वमूर्तिर्महामूर्तिर्दीप्तमूर्तिरमूर्तिमान्
अनेकमूर्तिरव्यक्तः शतमूर्तिः शताननः ९०
एको नैकः सवः कः किं यत्तत्पदमनुत्तमम्
लोकबन्धुर्लोकनाथो माधवो भक्तवत्सलः ९१

सुवर्णवर्णो हेमाङ्गो वराङ्गश्चन्दनाङ्गदी
वीरहा विषमः शून्यो घृताशीरचलश्चलः ९२
अमानी मानदो मान्यो लोकस्वामी त्रिलोकधृक्
सुमेधा मेधजो धन्यः सत्यमेधा धराधरः ९३
तेजो वृषो द्युतिधरः सर्वशस्त्रभृतां वरः
प्रग्रहो निग्रहोऽव्यग्रो नैकशृङ्गो गदाग्रजः ९४
चतुर्मूर्तिश्चतुर्बाहुश्चतुर्व्यूहश्चतुर्गतिः
चतुरात्मा चतुर्भावश्चतुर्वेदविदेकपात् ९५
समावर्तो निवृत्तात्मा दुर्जयो दुरतिक्रमः
दुर्लभो दुर्गमो दुर्गो दुरावासो दुरारिहा ९६
शुभाङ्गो लोकसारङ्गः सुतन्तुस्तन्तुवर्धनः
इन्द्रकर्मा महाकर्मा कृतकर्मा कृतागमः ९७
उद्भवः सुन्दरः सुन्दो रत्ननाभः सुलोचनः
अर्को वाजसनः शृङ्गी जयन्तः सर्वविज्जयी ९८
सुवर्णबिन्दुरक्षोभ्यः सर्ववागीश्वरेश्वरः
महाह्रदो महागर्तो महाभूतो महानिधिः ९९
कुमुदः कुंदरः कुन्दः पर्जन्यः पवनोऽनिलः
अमृतांशोऽमृतवपुः सर्वज्ञः सर्वतोमुखः १००
सुलभः सुव्रतः सिद्धः शत्रुजिच्छत्रुतापनः
न्यग्रोधोदुम्बरोऽश्वत्थश्चाणूरान्ध्रनिषूदनः १०१
सहस्रार्चिः सप्तजिह्वः सप्तैधाः सप्तवाहनः
अमूर्तिरनघोऽचिन्त्यो भयकृद्भयनाशनः १०२
अणुर्बृहत्कृशः स्थूलो गुणभृन्निर्गुणो महान्
अधृतः स्वधृतः स्वास्यः प्राग्वंशो वंशवर्धनः १०३
भारभृत्कथितो योगी योगीशः सर्वकामदः
आश्रमः श्रमणः क्षामः सुपर्णो वायुवाहनः १०४
धनुर्धरो धनुर्वेदो दण्डो दमयिता दमः
अपराजितः सर्वसहो नियन्ता नियमो यमः १०५
सत्त्ववान्सात्त्विकः सत्यः सत्यधर्मपरायणः
अभिप्रायः प्रियार्होऽह प्रियकृत्प्रीतिवर्धनः १०६

विहायसगतिर्ज्योतिः सुरुचिर्हुतभुग्विभुः
रविर्विरोचनः सूर्यः सविता रविलोचनः १०७
अनन्तो हुतभुग्भोक्ता सुखदो नैकदोऽग्रजः
अनिर्विण्णः सदामर्षी लोकाधिष्ठानमद्भुतम् १०८
सनात्सनातनतमः कपिलः कपिरव्ययः
स्वस्तिदः स्वस्तिकृत्स्वस्ति स्वस्तिभुक्स्वस्तिदक्षिणः १०९
अरौद्रः कुण्डली चक्री विक्रम्यूर्जितशासनः
शब्दातिगः शब्दसहः शिशिरः शर्वरीकरः ११०
अक्रूरः पेशलो दक्षो दक्षिणः क्षमिणां वरः
विद्वत्तमो वीतभयः पुण्यश्रवणकीर्तनः १११
उत्तारणो दुष्कृतिहा पुण्यो दुःस्वप्ननाशनः
वीरहा रक्षणः सन्तो जीवनः पर्यवस्थितः ११२
अनन्तरूपोऽनन्तश्रीर्जितमन्युर्भयापहः
चतुरस्रो गभीरात्मा विदिशो व्यादिशो दिशः ११३
अनादिर्भूर्भुवो लक्ष्मीः सुवीरो रुचिराङ्गदः
जननो जनजन्मादिर्भीमो भीमपराक्रमः ११४
आधारनिलयो धाता पुष्पहासः प्रजागरः
ऊर्ध्वगः सत्पथाचारः प्राणदः प्रणवः पणः ११५
प्रमाणं प्राणनिलयः प्राणकृत्प्राणजीवनः
तत्त्वं तत्त्वविदेकात्मा जन्ममृत्युजरातिगः ११६
भूर्भुवःस्वस्तरुस्तारः सविता प्रपितामहः
यज्ञो यज्ञपतिर्यज्वा यज्ञाङ्गो यज्ञवाहनः ११७
यज्ञभृद्यकृद्यज्ञी यज्ञभुग्यज्ञसाधनः
यज्ञान्तकृद्यज्ञगुह्यमन्नमन्नाद एव च ११८
आत्मयोनिः स्वयंजातो वैखानः सामगायनः
देवकीनन्दनः स्रष्टा क्षितीशः पापनाशनः ११९
शङ्खभृन्नन्दकी चक्री शार्ङ्गधन्वा गदाधरः
रथाङ्गपाणिरक्षोभ्यः सर्वप्रहरणायुधः १२०
इतीदं कीर्तनीयस्य केशवस्य महात्मनः
नाम्नां सहस्रं दिव्यानामशेषेण प्रकीर्तितम् १२१

य इदं शृणुयान्नित्यं यश्चापि परिकीर्तयेत्
नाशुभं प्राप्नुयात्किंचित्सोऽमुत्रेह च मानवः १२२
वेदान्तगो ब्राह्मणः स्यात्क्षत्रियो विजयी भवेत्
वैश्यो धनसमृद्धः स्याच्छूद्रः सुखमवाप्नुयात् १२३
धर्मार्थी प्राप्नुयाद्धर्ममर्थार्थी चार्थमाप्नुयात्
कामानवाप्नुयात्कामी प्रजार्थी चाप्नुयात्प्रजाः १२४
भक्तिमान्यः सदोत्थाय शुचिस्तद्गतमानसः
सहस्रं वासुदेवस्य नाम्नामेतत्प्रकीर्तयेत् १२५
यशः प्राप्नोति विपुलं ज्ञातिप्राधान्यमेव च
अचलां श्रियमाप्नोति श्रेयश्चाप्नोत्यनुत्तमम् १२६
न भयं क्वचिदाप्नोति वीर्यं तेजश्च विन्दति
भवत्यरोगो द्युतिमान्बलरूपगुणान्वितः १२७
रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात्
भयान्मुच्येत भीतश्च मुच्येतापन्न आपदः  १२८
दुर्गाण्यतितरत्याशु पुरुषः पुरुषोत्तमम्
स्तुवन्नामसहस्रेण नित्यं भक्तिसमन्वितः १२९
वासुदेवाश्रयो मर्त्यो वासुदेवपरायणः
सर्वपापविशुद्धात्मा याति ब्रह्म सनातनम् १३०
न वासुदेवभक्तानामशुभं विद्यते क्वचित्
जन्ममृत्युजराव्याधिभयं वाप्युपजायते १३१
इमं स्तवमधीयानः श्रद्धाभक्तिसमन्वितः
युज्येतात्मसुखक्षान्तिश्रीधृतिस्मृतिकीर्तिभिः १३२
न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः
भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे १३३
द्यौः सचन्द्रार्कनक्षत्रा खं दिशो भूर्महोदधिः
वासुदेवस्य वीर्येण विधृतानि महात्मनः १३४
ससुरासुरगन्धर्वं सयक्षोरगराक्षसम्
जगद्वशे वर्ततेदं कृष्णस्य सचराचरम् १३५
इन्द्रियाणि मनो बुद्धिः सत्त्वं तेजो बलं धृतिः
वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव च १३६

सर्वागमानामाचारः प्रथमं परिकल्प्यते
आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः १३७
ऋषयः पितरो देवा महाभूतानि धातवः
जङ्गमाजङ्गमं चेदं जगन्नारायणोद्भवम् १३८
योगो ज्ञानं तथा सांख्यं विद्याः शिल्पानि कर्म च
वेदाः शास्त्राणि विज्ञानमेतत्सर्वं जनार्दनात् १३९
एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः
त्रील्लोँकान्व्याप्य भूतात्मा भुङ्क्ते विश्वभुगव्ययः १४०
इमं स्तवं भगवतो विष्णोर्व्यासेन कीर्तितम्
पठेद्य इच्छेत्पुरुषः श्रेयः प्राप्तुं सुखानि च १४१
विश्वेश्वरमजं देवं जगतः प्रभवाप्ययम्
भजन्ति ये पुष्कराक्षं न ते यान्ति पराभवम् १४२
इति श्रीमहाभारते अनुशासनपर्वणि पञ्चत्रिंशदधिकशततमोऽध्यायः १३५

षट्त्रिंशदधिकशततमोऽध्यायः

युधिष्ठिर उवाच
के पूज्याः के नमस्कार्याः कथं वर्तेत केषु च
किमाचारः कीदृशेषु पितामह न रिष्यते १
भीष्म उवाच
ब्राह्मणानां परिभवः सादयेदपि देवताः
ब्राह्मणानां नमस्कर्ता युधिष्ठिर न रिष्यते २
ते पूज्यास्ते नमस्कार्या वर्तेथास्तेषु पुत्रवत्
ते हि लोकानिमान्सर्वान्धारयन्ति मनीषिणः ३
ब्राह्मणाः सर्वलोकानां महान्तो धर्मसेतवः
धनत्यागाभिरामाश्च वाक्संयमरताश्च ये ४
रमणीयाश्च भूतानां निधनं च धृतव्रताः
प्रणेतारश्च लोकानां शास्त्राणां च यशस्विनः ५
तपो येषां धनं नित्यं वाक्चैव विपुलं बलम्
प्रभवश्चापि धर्माणां धर्मज्ञाः सूक्ष्मदर्शिनः ६
धर्मकामाः स्थिता धर्मे सुकृतैर्धर्मसेतवः

यानुपाश्रित्य जीवन्ति प्रजाः सर्वाश्चतुर्विधाः ७
पन्थानः सर्वनेतारो यज्ञवाहाः सनातनाः
पितृपैतामहीं गुर्वीमुद्वहन्ति धुरं सदा ८
धुरि ये नावसीदन्ति विषमे सद्गवा इव
पितृदेवातिथिमुखा हव्यकव्याग्रभोजिनः ९
भोजनादेव ये लोकांस्त्रायन्ते महतो भयात्
दीपाः सर्वस्य लोकस्य चक्षुश्चक्षुष्मतामपि १०
सर्वशिल्पादिनिधयो निपुणाः सूक्ष्मदर्शिनः
गतिज्ञाः सर्वभूतानामध्यात्मगतिचिन्तकाः ११
आदिमध्यावसानानां ज्ञातारश्छिन्नसंशयाः
परावरविशेषज्ञा गन्तारः परमां गतिम् १२
विमुक्ता धुतपाप्मानो निर्द्वंद्वा निष्परिग्रहाः
मानार्हा मानिता नित्यं ज्ञानविद्भिर्महात्मभिः १३
चन्दने मलपङ्के च भोजनेऽभोजने समाः
समं येषां दुकूलं च शाणक्षौमाजिनानि च १४
तिष्ठेयुरप्यभुञ्जाना बहूनि दिवसान्यपि
शोषयेयुश्च गात्राणि स्वाध्यायैः संयतेन्द्रियाः १५
अदैवं दैवतं कुर्युर्दैवतं चाप्यदैवतम्
लोकानन्यान्सृजेयुश्च लोकपालांश्च कोपिताः १६
अपेयः सागरो येषामभिशापान्महात्मनाम्
येषां कोपाग्निरद्यापि दण्डके नोपशाम्यति १७
देवानामपि ये देवाः कारणं कारणस्य च
प्रमाणस्य प्रमाणं च कस्तानभिभवेद्बुधः १८
येषां वृद्धश्च बालश्च सर्वः संमानमर्हति
तपोविद्याविशेषात्तु मानयन्ति परस्परम् १९
अविद्वान्ब्राह्मणो देवः पात्रं वै पावनं महत्
विद्वान्भूयस्तरो देवः पूर्णसागरसंनिभः २०
अविद्वांश्चैव विद्वांश्च ब्राह्मणो दैवतं महत्
प्रणीतश्चाप्रणीतश्च यथाग्निर्दैवतं महत् २१
श्मशाने ह्यपि तेजस्वी पावको नैव दुष्यति

हविर्यज्ञेषु च वहन्भूय एवाभिशोभते २२
एवं यद्यप्यनिष्टेषु वर्तते सर्वकर्मसु
सर्वथा ब्राह्मणो मान्यो दैवतं विद्धि तत्परम् २३
इति श्रीमहाभारते अनुशासनपर्वणि षट्त्रिंशदधिकशततमोऽध्यायः १३६

## सप्तत्रिंशदधिक शततमोऽध्यायः

युधिष्ठिर उवाच
कां तु ब्राह्मणपूजायां व्युष्टिं दृष्ट्वा जनाधिप
कं वा कर्मोदयं मत्वा तानर्चसि महामते १
भीष्म उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
पवनस्य च संवादमर्जुनस्य च भारत २
सहस्रभुजभृच्छ्रीमान्कार्तवीर्योऽभवत्प्रभुः
अस्य लोकस्य सर्वस्य माहिष्मत्यां महाबलः ३
स तु रत्नाकरवतीं सद्वीपां सागराम्बराम्
शशास सर्वां पृथिवीं हैहयः सत्यविक्रमः ४
स्ववित्तं तेन दत्तं तु दत्तात्रेयाय कारणे
क्षत्रधर्मं पुरस्कृत्य विनयं श्रुतमेव च ५
आराधयामास च तं कृतवीर्यात्मजो मुनिम्
न्यमन्त्रयत संहृष्टः स द्विजश्च वरैस्त्रिभिः ६
स वरैश्छन्दितस्तेन नृपो वचनमब्रवीत्
सहस्रबाहुर्भूयां वै चमूमध्ये गृहेऽन्यथा ७
मम बाहुसहस्रं तु पश्यन्तां सैनिका रणे
विक्रमेण महीं कृत्स्नां जयेयं विपुलव्रत
तां च धर्मेण संप्राप्य पालयेयमतन्द्रितः ८
चतुर्थं तु वरं याचे त्वामहं द्विजसत्तम
तं ममानुग्रहकृते दातुमर्हस्यनिन्दित
अनुशासन्तु मां सन्तो मिथ्यावृत्तं तदाश्रयम् ९
इत्युक्तःस द्विजः प्राह तथास्त्विवति नराधिपम्
एवं समभवंस्तस्य वरास्ते दीप्ततेजसः १०

ततः स रथमास्थाय ज्वलनार्कसमद्युतिः
अब्रवीद्वीर्यसंमोहात्को न्वस्ति सदृशो मया
वीर्यधैर्ययशः शौचैर्विक्रमेणौजसापि वा ११
तद्वाक्यान्ते चान्तरिक्षे वागुवाचाशरीरिणी
न त्वं मूढ विजानीषे ब्राह्मणं क्षत्रियाद्वरम्
सहितो ब्राह्मणेनेह क्षत्रियो रक्षति प्रजाः १२
अर्जुन उवाच
कुर्यां भूतानि तुष्टोऽह क्रुद्धो नाशं तथा नये
कर्मणा मनसा वाचा न मत्तोऽस्ति वरो द्विजः १३
पूर्वो ब्रह्मोत्तरो वादो द्वितीयः क्षत्रियोत्तरः
त्वयोक्तौ यौ तु तौ हेतू विशेषस्त्वत्र दृश्यते १४
ब्राह्मणाः संश्रिताः क्षत्रं न क्षत्रं ब्राह्मणाश्रितम्
श्रितान्ब्रह्मोपधा विप्राः खादन्ति क्षत्रियान्भुवि १५
क्षत्रियेष्वाश्रितो धर्मः प्रजानां परिपालनम्
क्षत्राद्वृत्तिर्ब्राह्मणानां तैः कथं ब्राह्मणो वरः १६
सर्वभूतप्रधानांस्तान्भैक्षवृत्तीनहं सदा
आत्मसंभावितान्विप्रान्स्थापयाम्यात्मनो वशे १७
कथितं ह्यनया सत्यं गायत्र्या कन्यया दिवि
विजेष्याम्यवशान्सर्वान्ब्राह्मणांश्चर्मवाससः १८
न च मां च्यावयेद्राष्ट्रात्त्रिषु लोकेषु कश्चन
देवो मा मानुषो वापि तस्माज्ज्येष्ठो द्विजादहम् १९
अद्य ब्रह्मोत्तरं लोकं करिष्ये क्षत्रियोत्तरम्
न हि मे संयुगे कश्चित्सोढुमुत्सहते बलम् २०
अर्जुनस्य वचः श्रुत्वा वित्रस्ताभून्निशाचरी
अथैनमन्तरिक्षस्थस्ततो वायुरभाषत २१
त्यजैनं कलुषं भावं ब्राह्मणेभ्यो नमस्कुरु
एतेषां कुर्वतः पापं राष्ट्रक्षोभो हि ते भवेत् २२
अथ वा त्वां महीपाल शमयिष्यन्ति वै द्विजाः
निरसिष्यन्ति वा राष्ट्राद्धतोत्साहं महाबलाः २३
तं राजा कस्त्वमित्याह ततस्तं प्राह मारुतः

वायुर्वै देवदूतोऽस्मि हितं त्वां प्रब्रवीम्यहम् २४
अर्जुन उवाच
अहो त्वयाद्य विप्रेषु भक्तिरागः प्रदर्शितः
यादृशं पृथिवी भूतं तादृशं ब्रूहि वै द्विजम् २५
वायोर्वा सदृशं किंचिद्ब्रूहि त्वं ब्राह्मणोत्तमम्
अपां वै सदृशं ब्रूहि सूर्यस्य नभसोऽपि वा २६
इति श्रीमहाभारते अनुशासनपर्वणि सप्तत्रिंशदधिकशततमोऽध्यायः १३७

## अष्टत्रिंशदधिकशततमोऽध्यायः

वायुरुवाच
शृणु मूढ गुणान्कांश्चिद्ब्राह्मणानां महात्मनाम्
ये त्वया कीर्तिता राजंस्तेभ्योऽथ ब्राह्मणो वरः १
त्यक्त्वा महीत्वं भूमिस्तु स्पर्धयाङ्गनृपस्य ह
नाशं जगाम तां विप्रो व्यष्टम्भयत कश्यपः २
अजया ब्राह्मणा राजन्दिवि चेह च नित्यदा
अपिबत्तेजसा ह्यापः स्वयमेवाङ्गिराः पुरा ३
स ताः पिवन्क्षीरमिव नातृप्यत महातपाः
अपूरयन्महौघेन महीं सर्वां च पार्थिव ४
तस्मिन्नहं च क्रुद्धे वै जगत्त्यक्त्वा ततो गतः
व्यतिष्ठमग्निहोत्रे च चिरमङ्गिरसो भयात् ५
अभिशप्तश्च भगवान्गौतमेन पुरंदरः
अहल्यां कामयानो वै धर्मार्थं च न हिंसितः ६
तथा समुद्रो नृपते पूर्णो मृष्टेन वारिणा
ब्राह्मणैरभिशप्तः सँल्लवणोदः कृतो विभो ७
सुवर्णवर्णो निर्धूमः संहतोर्ध्वशिखः कविः
क्रुद्धेनाङ्गिरसा शप्तो गुणैरेतैर्विवर्जितः ८
मरुतश्चूर्णितान्पश्य येऽहसन्त महोदधिम्
सुवर्णधारिणा नित्यमवशप्ता द्विजातिना ९
समो न त्वं द्विजातिभ्यः श्रेष्ठं विद्धि नराधिप
गर्भस्थान्ब्राह्मणान्सम्यङ्नमस्यति किल प्रभुः १०

दण्डकानां महद्राज्यं ब्राह्मणेन विनाशितम्
तालजङ्घं महत्क्षत्रमौर्वेणैकेन नाशितम् ११
त्वया च विपुलं राज्यं बलं धर्मः श्रुतं तथा
दत्तात्रेयप्रसादेन प्राप्तं परमदुर्लभम् १२
अग्निं त्वं यजसे नित्यं कस्मादर्जुन ब्राह्मणम्
स हि सर्वस्य लोकस्य हव्यवाट्किं न वेत्सि तम् १३
अथ वा ब्राह्मणश्रेष्ठमनु भूतानुपालकम्
कर्तारं जीवलोकस्य कस्माज्जानन्विमुह्यसे १४
तथा प्रजापतिर्ब्रह्मा अव्यक्तः प्रभवाप्ययः
येनेदं निखिलं विश्वं जनितं स्थावरं चरम् १५
अण्डजातं तु ब्रह्माणं केचिदिच्छन्त्यपण्डिताः
अण्डाद्भिन्नाद्बभुः शैला दिशोऽम्भ पृथिवी दिवम् १६
द्रष्टव्यं नैतदेवं हि कथं ज्यायस्तमो हि सः
स्मृतमाकाशमण्डं तु तस्माज्जातः पितामहः १७
तिष्ठेत्कथमिति ब्रूहि न किंचिद्धि तदा भवेत्
अहंकार इति प्रोक्तः सर्वतेजोगतः प्रभुः १८
नास्त्यण्डमस्ति तु ब्रह्मा स राजँल्लोकभावनः
इत्युक्तः स तदा तूष्णीमभूद्वायुस्तमब्रवीत् १९
इति श्रीमहाभारते अनुशासनपर्वणि अष्टत्रिंशदधिकशततमोऽध्यायः १३८

## एकोनचत्वारिंशदधिक शततमोऽध्यायः

वायुरुवाच
इमां भूमिं ब्राह्मणेभ्यो दित्सुर्वै दक्षिणां पुरा
अङ्गो नाम नृपो राजंस्ततश्चिन्तां मही ययौ १
धारणीं सर्वभूतानामयं प्राप्य वरो नृपः
कथमिच्छति मां दातुं द्विजेभ्यो ब्रह्मणः सुताम् २
साहं त्यक्त्वा गमिष्यामि भूमित्वं ब्रह्मणः पदम्
अयं सराष्ट्रो नृपतिर्मा भूदिति ततोऽगमत् ३
ततस्तां कश्यपो दृष्ट्वा व्रजन्तीं पृथिवीं तदा
प्रविवेश महीं सद्यो मुक्त्वात्मानं समाहितः ४

रुद्धा सा सर्वतो जज्ञे तृणौषधिसमन्विता
धर्मोत्तरा नष्टभया भूमिरासीत्ततो नृप ५
एवं वर्षसहस्राणि दिव्यानि विपुलव्रतः
त्रिंशतं कश्यपो राजन्भूमिरासीदतन्द्रितः ६
अथागम्य महाराज नमस्कृत्य च कश्यपम्
पृथिवी काश्यपी जज्ञे सुता तस्य महात्मनः ७
एष राजन्नीदृशो वै ब्राह्मणः कश्यपोऽभवत्
अन्यं प्रब्रूहि वापि त्वं कश्यपात्क्षत्रियं वरम् ८
तूष्णीं बभूव नृपतिः पवनस्त्वब्रवीत्पुनः
शृणु राजन्नुतथ्यस्य जातस्याङ्गिरसे कुले ९
भद्रा सोमस्य दुहिता रूपेण परमा मता
तस्यास्तुल्यं पतिं सोम उतथ्यं समपश्यत १०
सा च तीव्रं तपस्तेपे माहाभागा यशस्विनी
उतथ्यं तु महाभागं तत्कृतेऽवरयत्तदा ११
तत आहूय सोतथ्यं ददावत्र यशस्विनीम्
भार्यार्थे स च जग्राह विधिवद्भूरिदक्षिणः १२
तां त्वकामयत श्रीमान्वरुणः पूर्वमेव ह
स चागम्य वनप्रस्थं यमुनायां जहार ताम् १३
जलेश्वरस्तु हृत्वा तामनयत्स्वपुरं प्रति
परमाद्भुतसंकाशं षट्सहस्रशतह्रदम् १४
न हि रम्यतरं किंचित्तस्मादन्यत्पुरोत्तमम्
प्रासादैरप्सरोभिश्च दिव्यैः कामैश्च शोभितम्
तत्र देवस्तया सार्धं रेमे राजञ्जलेश्वरः १५
अथाख्यातमुतथ्याय ततः पत्न्यवमर्दनम् १६
तच्छ्रुत्वा नारदात्सर्वमुतथ्यो नारदं तदा
प्रोवाच गच्छ ब्रूहि त्वं वरुणं परुषं वचः
मद्वाक्यान्मुञ्च मे भार्यां कस्माद्वा हृतवानसि १७
लोकपालोऽसि लोकानां न लोकस्य विलोपकः
सोमेन दत्ता भार्या मे त्वया चापहृताद्य वै १८
इत्युक्तो वचनात्तस्य नारदेन जलेश्वरः

मुञ्च भार्यामुतथ्यस्येत्यथ तं वरुणोऽब्रवीत्
ममैषा सुप्रिया भार्या नैनामुत्स्रष्टुमुत्सहे १९
इत्युक्तो वरुणेनाथ नारदः प्राप्य तं मुनिम्
उतथ्यमब्रवीद्वाक्यं नातिहृष्टमना इव २०
गले गृहीत्वा क्षिप्तोऽस्मि वरुणेन महामुने
न प्रयच्छति ते भार्यां यत्ते कार्यं कुरुष्व तत् २१
नारदस्य वचः श्रुत्वा क्रुद्धः प्राज्वलदङ्गिराः
अपिबत्तेजसा वारि विष्टभ्य सुमहातपाः २२
पीयमाने तु सर्वस्मिंस्तोये वै सलिलेश्वरः
सुहृद्भिः क्षिप्यमाणोऽपि नैवामुञ्चत तां तदा २३
ततः क्रुद्धोऽब्रवीद्भूमिमुतथ्यो ब्राह्मणोत्तमः
दर्शयस्व स्थलं भद्रे षट्सहस्रशतह्रदम् २४
ततस्तदिरिणं जातं समुद्रश्चापसर्पितः
तस्माद्देशान्नदीं चैव प्रोवाचासौ द्विजोत्तमः २५
अदृश्या गच्छ भीरु त्वं सरस्वति मरुं प्रति
अपुण्य एष भवतु देशस्त्यक्तस्त्वया शुभे २६
तस्मिन्संचूर्णिते देशे भद्रामादाय वारिपः
अददाच्छरणं गत्वा भार्यामाङ्गिरसाय वै २७
प्रतिगृह्य तु तां भार्यामुतथ्यः सुमनाभवत्
मुमोच च जगद्दुःखाद्वरुणं चैव हैहय २८
ततः स लब्ध्वा तां भार्यां वरुणं प्राह धर्मवित्
उतथ्यः सुमहातेजा यत्तच्छृणु नराधिप २९
मयैषा तपसा प्राप्ता क्रोशतस्ते जलाधिप
इत्युक्त्वा तामुपादाय स्वमेव भवनं ययौ ३०
एष राजन्नीदृशो वै उतथ्यो ब्राह्मणर्षभः
ब्रवीम्यहं ब्रूहि वा त्वमुतथ्यात्क्षत्रियं वरम् ३१
इति श्रीमहाभारते अनुशासनपर्वणि एकोनचत्वारिंशदधिक शततमोऽध्यायः
१३९

## चत्वारिंशदधिक शततमोऽध्यायः

भीष्म उवाच
इत्युक्तः स तदा तूष्णीमभूद्वायुस्ततोऽब्रवीत्
शृणु राजन्नगस्त्यस्य माहात्म्यं ब्राह्मणस्य ह १
असुरैर्निर्जिता देवा निरुत्साहाश्च ते कृताः
यज्ञाश्चैषां हृताः सर्वे पितृभ्यश्च स्वधा तथा २
कर्मेज्या मानवानां च दानवैर्हैहयर्षभ
भ्रष्टैश्वर्यास्ततो देवाश्चेरुः पृथ्वीमिति श्रुतिः ३
ततः कदाचित्ते राजन्दीप्तमादित्यवर्चसम्
ददृशुस्तेजसा युक्तमगस्त्यं विपुलव्रतम् ४
अभिवाद्य च तं देवा दृष्ट्वा च यशसा वृतम्
इदमूचुर्महात्मानं वाक्यं काले जनाधिप ५
दानवैर्युधि भग्नाः स्म तथैश्वर्याच्च भ्रंशिताः
तदस्मान्नो भयात्तीव्रात्त्राहि त्वं मुनिपुंगव ६
इत्युक्तः स तदा देवैरगस्त्यः कुपितोऽभवत्
प्रजज्वाल च तेजस्वी कालाग्निरिव संक्षये ७
तेन दीप्तांशुजालेन निर्दग्धा दानवास्तदा
अन्तरिक्षान्महाराज व्यपतन्त सहस्रशः ८
दह्यमानास्तु ते दैत्यास्तस्यागस्त्यस्य तेजसा
उभौ लोकौ परित्यज्य ययुः काष्ठां स्म दक्षिणाम् ९
बलिस्तु यजते यज्ञमश्वमेधं महीं गतः
येऽन्ये खस्था महीस्थाश्च ते न दग्धा महासुराः १०
ततो लोकाः पुनः प्राप्ताः सुरैः शान्तं च तद्रजः
अथैनमब्रुवन्देवा भूमिष्ठानसुराञ्जहि ११
इत्युक्त आह देवान्स न शक्नोमि महीगतान्
दग्धुं तपो हि क्षीयेन्मे धक्ष्यामीति च पार्थिव १२
एवं दग्धा भगवता दानवाः स्वेन तेजसा
अगस्त्येन तदा राजंस्तपसा भावितात्मना १३
ईदृशश्चाप्यगस्त्यो हि कथितस्ते मयानघ
ब्रवीम्यहं ब्रूहि वा त्वमगस्त्यात्क्षत्रियं वरम् १४

इत्युक्तः स तदा तूष्णीमभूद्वायुस्ततोऽब्रवीत्
शृणु राजन्वसिष्ठस्य मुख्यं कर्म यशस्विनः १५
आदित्याः सत्रमासन्त सरो वै मानसं प्रति
वसिष्ठं मनसा गत्वा श्रुत्वा तत्रास्य गोचरम् १६
यजमानांस्तु तान्दृष्ट्वा व्यग्रान्दीक्षानुकर्शितान्
हन्तुमिच्छन्ति शैलाभाः खलिनो नाम दानवाः १७
अदूरात्तु ततस्तेषां ब्रह्मदत्तवरं सरः
हता हता वै ते तत्र जीवन्त्याप्लुत्य दानवाः १८
ते प्रगृह्य महाघोरान्पर्वतान्परिघान्द्रुमान्
विक्षोभयन्तः सलिलमुत्थिताः शतयोजनम् १९
अभ्यद्रवन्त देवांस्ते सहस्राणि दशैव ह
ततस्तैरर्दिता देवाः शरणं वासवं ययुः २०
स च तैर्व्यथितः शक्रो वसिष्ठं शरणं ययौ
ततोऽभयं ददौ तेभ्यो वसिष्ठो भगवानृषिः २१
तथा तान्दुःखिताञ्जानन्नानृशंस्यपरो मुनिः
अयत्नेनादहत्सर्वान्खलिनः स्वेन तेजसा २२
कैलासं प्रस्थितां चापि नदीं गङ्गां महातपाः
आनयत्तत्सरो दिव्यं तया भिन्नं च तत्सरः २३
सरो भिन्नं तया नद्या सरयूः सा ततोऽभवत्
हताश्च खलिनो यत्र स देशः खलिनोऽभवत् २४
एवं सेन्द्रा वसिष्ठेन रक्षितास्त्रिदिवौकसः
ब्रह्मदत्तवराश्चैव हता दैत्या महात्मना २५
एतत्कर्म वसिष्ठस्य कथितं हि मयानघ
ब्रवीम्यहं ब्रूहि वा त्वं वसिष्ठात्क्षत्रियं वरम् २६
इति श्रीमहाभारते अनुशासनपर्वणि चत्वारिंशदधिकशततमोऽध्यायः १४०

## एक चत्वारिंशदधिकशततमोऽध्यायः

भीष्म उवाच
इत्युक्तस्त्वर्जुनस्तूष्णीमभूद्वायुस्तमब्रवीत्
शृणु मे हैहयश्रेष्ठ कर्मात्रेः सुमहात्मनः १

घोरे तमस्ययुध्यन्त सहिता देवदानवाः
अविध्यत शरैस्तत्र स्वर्भानुः सोमभास्करौ २
अथ ते तमसा ग्रस्ता निहन्यन्ते स्म दानवैः
देवा नृपतिशार्दूल सहैव बलिभिस्तदा ३
असुरैर्वध्यमानास्ते क्षीणप्राणा दिवौकसः
अपश्यन्त तपस्यन्तमत्रिं विप्रं महावने ४
अथैनमब्रुवन्देवाः शान्तक्रोधं जितेन्द्रियम्
असुरैरिषुभिर्विद्धौ चन्द्रादित्याविमावुभौ ५
वयं वध्यामहे चापि शत्रुभिस्तमसावृते
नाधिगच्छाम शान्तिं च भयात्त्रायस्व नः प्रभो ६
कथं रक्षामि भवतस्तेऽब्रुवंश्चन्द्रमा भव
तिमिरघ्नश्च सविता दस्युहा चैव नो भव ७
एवमुक्तस्तदात्रिस्तु सोमवत्प्रियदर्शनः
अपश्यत्सौम्यभावं च सूर्यस्य प्रतिदर्शनम् ८
दृष्ट्वा नातिप्रभं सोमं तथा सूर्यं च पार्थिव
प्रकाशमकरोदत्रिस्तपसा स्वेन संयुगे ९
जगद्वितिमिरं चापि प्रदीप्तमकरोत्तदा
व्यजयच्छत्रुसंघांश्च देवानां स्वेन तेजसा १०
अत्रिणा दह्यमानांस्तान्दृष्ट्वा देवा महासुरान्
पराक्रमैस्तेऽपि तदा व्यत्यघ्नन्नत्रिरक्षिताः ११
उद्भासितश्च सविता देवास्त्राता हतासुराः
अत्रिणा त्वथ सोमत्वं कृतमुत्तमतेजसा १२
अद्वितीयेन मुनिना जपता चर्मवाससा
फलभक्षेण राजर्षे पश्य कर्मात्रिणा कृतम् १३
तस्यापि विस्तरेणोक्तं कर्मात्रेः सुमहात्मनः
ब्रवीम्यहं ब्रूहि वा त्वमत्रितः क्षत्रियं वरम् १४
इत्युक्तस्त्वर्जुनस्तूष्णीमभूद्वायुस्तमब्रवीत्
शृणु राजन्महत्कर्म च्यवनस्य महात्मनः १५
अश्विनोः प्रतिसंश्रुत्य च्यवनः पाकशासनम्
प्रोवाच सहितं देवैः सोमपावश्विनौ कुरु १६

इन्द्र उवाच
अस्माभिर्वर्जितावेतौ भवेतां सोमपौ कथम्
देवैर्न संमितावेतौ तस्मान्मैवं वदस्व नः १७
अश्विभ्यां सह नेच्छामः पातुं सोमं महाव्रत
पिबन्त्वन्ये यथाकामं नाहं पातुमिहोत्सहे १८
च्यवन उवाच
न चेत्करिष्यसि वचो मयोक्तं बलसूदन
मया प्रमथितः सद्यः सोमं पास्यसि वै मखे १९
ततः कर्म समारब्धं हिताय सहसाश्विनोः
च्यवनेन ततो मन्त्रैरभिभूताः सुराभवन् २०
तत्तु कर्म समारब्धं दृष्ट्वेन्द्रः क्रोधमूर्छितः
उद्यम्य विपुलं शैलं च्यवनं समुपाद्रवत्
तथा वज्रेण भगवानमर्षाकुललोचनः २१
तमापतन्तं दृष्ट्वैव च्यवनस्तपसान्वितः
अद्भिः सिक्त्वास्तम्भयत्तं सवज्रं सहपर्वतम् २२
अथेन्द्रस्य महाघोरं सोऽसृजच्छत्रुमेव ह
मदं मन्त्राहुतिमयं व्यादितास्यं महामुनिः २३
तस्य दन्तसहस्रं तु बभूव शतयोजनम्
द्वियोजनशतास्तस्य दंष्ट्राः परमदारुणाः
हनुस्तस्याभवद्भूमावेकश्चास्यास्पृशद्दिवम् २४
जिह्वामूले स्थितास्तस्य सर्वे देवाः सवासवाः
तिमेरास्यमनुप्राप्ता यथा मत्स्या महार्णवे २५
ते संमन्त्र्य ततो देवा मदस्यास्यगतास्तदा
अब्रुवन्सहिताः शक्रं प्रणमास्मै द्विजातये
अश्विभ्यां सह सोमं च पिबामो विगतज्वराः २६
ततः स प्रणतः शक्रश्चकार च्यवनस्य तत्
च्यवनः कृतवांस्तौ चाप्यश्विनौ सोमपीथिनौ २७
ततः प्रत्याहरत्कर्म मदं च व्यभजन्मुनिः
अक्षेषु मृगयायां च पाने स्त्रीषु च वीर्यवान् २८
एतैर्दोषैर्नरो राजन्क्षयं याति न संशयः

तस्मादेतान्नरो नित्यं दूरतः परिवर्जयेत् २९
एतत्ते च्यवनस्यापि कर्म राजन्प्रकीर्तितम्
ब्रवीम्यहं ब्रूहि वा त्वं च्यवनात्क्षत्रियं वरम् ३०
इति श्रीमहाभारते अनुशासन पर्वणि एकचत्वारिंशदधिकशततमोऽध्यायः
१४१

द्विचत्वारिंशदधिकशततमोऽध्यायः

भीष्म उवाच
तूष्णीमासीदर्जुनस्तु पवनस्त्वब्रवीत्पुनः
शृणु मे ब्राह्मणेष्वेव मुख्यं कर्म जनाधिप १
मदस्यास्यमनुप्राप्ता यदा सेन्द्रा दिवौकसः
तदेयं च्यवनेनेह हृता तेषां वसुंधरा २
उभौ लोकौ हृतौ मत्वा ते देवा दुःखिताभवन्
शोकार्ताश्च महात्मानं ब्रह्माणं शरणं ययुः ३
देवा ऊचुः
मदास्यव्यतिषिक्तानामस्माकं लोकपूजित
च्यवनेन हृता भूमिः कपैश्चापि दिवं प्रभो ४
ब्रह्मोवाच
गच्छध्वं शरणं विप्रानाशु सेन्द्रा दिवौकसः
प्रसाद्य तानुभौ लोकाववाप्स्यथ यथा पुरा ५
ते ययुः शरणं विप्रांस्त ऊचुः काञ्जयामहे
इत्युक्तास्ते द्विजान्प्राहुर्जयतेह कपानिति
भूगतान्हि विजेतारो वयमित्येव पार्थिव ६
ततः कर्म समारब्धं ब्राह्मणैः कपनाशनम्
तच्छ्रुत्वा प्रेषितो दूतो ब्राह्मणेभ्यो धनी कपैः ७
स च तान्ब्राह्मणानाह धनी कपवचो यथा
भवद्भिः सदृशाः सर्वे कपाः किमिह वर्तते ८
सर्वे वेदविदः प्राज्ञाः सर्वे च क्रतुयाजिनः
सर्वे सत्यव्रताश्चैव सर्वे तुल्या महर्षिभिः ९
श्रीश्चैव रमते तेषु धारयन्ति श्रियं च ते

वृथा दारान्न गच्छन्ति वृथामांसं न भुञ्जते १०
दीप्तमग्निं जुह्वति च गुरूणां वचने स्थिताः
सर्वे च नियतात्मानो बालानां संविभागिनः ११
उपेत्य शकटैर्यान्ति न सेवन्ति रजस्वलाम्
अभुक्तवत्सु नाश्नन्ति दिवा चैव न शेरते १२
एतैश्चान्यैश्च बहुभिर्गुणैर्युक्तान्कथं कपान्
विजेष्यथ निवर्तध्वं निवृत्तानां शुभं हि वः १३
ब्राह्मणा ऊचुः
कपान्वयं विजेष्यामो ये देवास्ते वयं स्मृताः
तस्माद्वध्याः कपास्माकं धनिन्याहि यथागतम् १४
धनी गत्वा कपानाह न वो विप्राः प्रियंकराः
गृहीत्वास्त्राण्यथो विप्रान्कपाः सर्वे समाद्रवन् १५
समुदग्रध्वजान्दृष्ट्वा कपान्सर्वे द्विजातयः
व्यसृजञ्ज्वलितानग्नीन्कपानां प्राणनाशनान् १६
ब्रह्मसृष्टा हव्यभुजः कपान्भुक्त्वा सनातनाः
नभसीव यथाभ्राणि व्यराजन्त नराधिप
प्रशशंसुर्द्विजांश्चैव ब्रह्माणं च यशस्विनम् १७
तेषां तेजस्तथा वीर्यं देवानां ववृधे ततः
अवाप्नुवंश्चामरत्वं त्रिषु लोकेषु पूजितम् १८
इत्युक्तवचनं वायुमर्जुनः प्रत्यभाषत
प्रतिपूज्य महाबाहो यत्तच्छृणु नराधिप १९
जीवाम्यहं ब्राह्मणार्थे सर्वथा सततं प्रभो
ब्रह्मणे ब्राह्मणेभ्यश्च प्रणमामि च नित्यशः २०
दत्तात्रेयप्रसादाच्च मया प्राप्तमिदं यशः
लोके च परमा कीर्तिर्धर्मश्च चरितो महान् २१
अहो ब्राह्मणकर्माणि यथा मारुत तत्त्वतः
त्वया प्रोक्तानि कार्त्स्न्येन श्रुतानि प्रयतेन ह २२
वायुरुवाच
ब्राह्मणान्क्षत्रधर्मेण पालयस्वेन्द्रियाणि च
भृगुभ्यस्ते भयं घोरं तत्तु कालाद्भविष्यति २३

इति श्रीमहाभारते अनुशासनपर्वणि द्विचत्वारिंशदधिकशततमोऽध्यायः १४२

त्रिचत्वारिंशदधिकशततमोऽध्यायः

युधिष्ठिर उवाच
ब्राह्मणानर्चसे राजन्सततं संशितव्रतान्
कं तु कर्मोदयं दृष्ट्वा तानर्चसि नराधिप १
कां वा ब्राह्मणपूजायां व्युष्टिं दृष्ट्वा महाव्रत
तानर्चसि महाबाहो सर्वमेतद्वदस्व मे २
भीष्म उवाच
एष ते केशवः सर्वमाख्यास्यति महामतिः
व्युष्टिं ब्राह्मणपूजायां दृष्टव्युष्टिर्महाव्रतः ३
बलं श्रोत्रे वाङ्मनश्चक्षुषी च ज्ञानं तथा न विशुद्धं ममाद्य
देहन्यासो नातिचिरान्मतो मे न चातितूर्णं सविताद्य याति ४
उक्ता धर्मा ये पुराणे महान्तो ब्राह्मणानां क्षत्रियाणां विशां च
पौराणं यं दण्डमुपासते च शेषं कृष्णादुपशिक्षस्व पार्थ ५
अहं ह्येनं वेद्मि तत्त्वेन कृष्णं योऽय हि यच्चास्य बलं पुराणम्
अमेयात्मा केशवः कौरवेन्द्र सोऽय धर्मं वक्ष्यति संशयेषु ६
कृष्णः पृथ्वीमसृजत्खं दिवं च वराहोऽय भीमबलः पुराणः
अस्य चाधोऽथान्तरिक्षं दिवं च दिशश्चतस्रः प्रदिशश्चतस्रः
सृष्टिस्तथैवेयमनुप्रसूता स निर्ममे विश्वमिदं पुराणम् ७
अस्य नाभ्यां पुष्करं संप्रसूतं यत्रोत्पन्नः स्वयमेवामितौजाः
येनाच्छिन्नं तत्तमः पार्थ घोरं यत्तत्तिष्ठत्यर्णवं तर्जयानम् ८
कृते युगे धर्म आसीत्समग्रस्त्रेताकाले ज्ञानमनुप्रपन्नः
बलं त्वासीद्द्वापरे पार्थ कृष्णः कलावधर्मः क्षितिमाजगाम ९
स पूर्वदेवो निजघान दैत्यान्स पूर्वदेवश्च बभूव सम्राट्
स भूतानां भावनो भूतभव्यः स विश्वस्यास्य जगतश्चापि गोप्ता १०
यदा धर्मो ग्लायति वै सुराणां तदा कृष्णो जायते मानुषेषु
धर्मे स्थित्वा स तु वै भावितात्मा परांश्च लोकानपरांश्च याति ११
त्याज्यांस्त्यक्त्वाथासुराणां वधाय कार्याकार्ये कारणं चैव पार्थ
कृतं करिष्यत्क्रियते च देवो मुहुः सोमं विद्धि च शक्रमेतम् १२

स विश्वकर्मा स च विश्वरूपः स विश्वभृद्विश्वसृग्विश्वजिच्च
स शूलभृच्छोणितभृत्करालस्तं कर्मभिर्विदितं वै स्तुवन्ति १३
तं गन्धर्वा अप्सरसश्च नित्यमुपतिष्ठन्ते विबुधानां शतानि
तं राक्षसाश्च परिसंवहन्ते रायस्पोषः स विजिगीषुरेकः १४
तमध्वरे शंसितारः स्तुवन्ति रथंतरे सामगाश्च स्तुवन्ति
तं ब्राह्मणा ब्रह्ममन्त्रैः स्तुवन्ति तस्मै हविरध्वर्यवः कल्पयन्ति १५
स पौराणीं ब्रह्मगुहां प्रविष्टो महीसत्रं भारताग्रे ददर्श
स चैव गामुद्दधाराग्र्यकर्मा विक्षोभ्य दैत्यानुरगान्दानवांश्च १६
तस्य भक्षान्विविधान्वेदयन्ति तमेवाजौ वाहनं वेदयन्ति
तस्यान्तरिक्षं पृथिवी दिवं च सर्वं वशे तिष्ठति शाश्वतस्य १७
स कुम्भरेताः ससृजे पुराणं यत्रोत्पन्नमृषिमाहुर्वसिष्ठम्
स मातरिश्वा विभुरश्ववाजी स रश्मिमान्सविता चादिदेवः १८
तेनासुरा विजिताः सर्व एव तस्य विक्रान्तैर्विजितानीह त्रीणि
स देवानां मानुषाणां पितॄणां तमेवाहुर्यज्ञविदां वितानम् १९
स एव कालं विभजन्नुदेति तस्योत्तरं दक्षिणं चायने द्वे
तस्यैवोर्ध्वं तिर्यगधश्चरन्ति गभस्तयो मेदिनीं तापयन्तः २०
तं ब्राह्मणा वेदविदो जुषन्ति तस्यादित्यो भामुपयुज्य भाति
स मासि मास्यध्वरकृद्विधत्ते तमध्वरे वेदविदः पठन्ति २१
स एकयुक्चक्रमिदं त्रिनाभि सप्ताश्वयुक्तं वहते वै त्रिधामा
महातेजाः सर्वगः सर्वसिंहः कृष्णो लोकान्धारयते तथैकः
अश्नन्नाश्नंश्च तथैव धीरः कृष्णं सदा पार्थ कर्तारमेहि २२
स एकदा कक्षगतो महात्मा तृप्तो विभुः खाण्डवे धूमकेतुः
स राक्षसानुरगांश्चावजित्य सर्वत्रगः सर्वमग्नौ जुहोति २३
स एवाश्वः श्वेतमश्वं प्रयच्छत्स एवाश्वानथ सर्वांश्चकार
त्रिवन्धुरस्तस्य रथस्त्रिचक्रस्त्रिवृच्छिराश्चतुरस्त्रश्च तस्य २४
स विहायो व्यदधात्पञ्चनाभिः स निर्ममे गां दिवमन्तरिक्षम्
एवं रम्यानसृजत्पर्वतांश्च हृषीकेशोऽमितदीप्ताग्नितेजाः २५
स लङ्घयन्वै सरितो जिघांसन्स तं वज्रं प्रहरन्तं निरास
स महेन्द्रः स्तूयते वै महाध्वरे विप्रैरेको ऋक्सहस्रैः पुराणैः २६
दुर्वासा वै तेन नान्येन शक्यो गृहे राजन्वासयितुं महौजाः

तमेवाहुर्ऋषिमेकं पुराणं स विश्वकृद्विदधात्यात्मभावान् २७
वेदांश्च यो वेदयतेऽधिदेवो विधींश्च यश्चाश्रयते पुराणान्
कामे वेदे लौकिके यत्फलं च विष्वक्सेने सर्वमेतत्प्रतीहि २८
ज्योतींषि शुक्लानि च सर्वलोके त्रयो लोका लोकपालास्त्रयश्च
त्रयोऽग्नयो व्याहृतयश्च तिस्रः सर्वे देवा देवकीपुत्र एव २९
संवत्सरः स ऋतुः सोऽधमासः सोऽहोरात्रः सकला वै स काष्ठाः
मात्रा मुहूर्ताश्च लवाः क्षणाश्च विष्वक्सेने सर्वमेतत्प्रतीहि ३०
चन्द्रादित्यौ ग्रहनक्षत्रताराः सर्वाणि दर्शान्यथ पौर्णमास्यः
नक्षत्रयोगा ऋतवश्च पार्थ विष्वक्सेनात्सर्वमेतत्प्रसूतम् ३१
रुद्रादित्या वसवोऽथाश्विनौ च साध्या विश्वे मरुतां षड्गणाश्च
प्रजापतिर्देवमातादितिश्च सर्वे कृष्णादृषयश्चैव सप्त ३२
वायुर्भूत्वा विक्षिपते च विश्वमग्निर्भूत्वा दहते विश्वरूपः
आपो भूत्वा मज्जयते च सर्वं ब्रह्मा भूत्वा सृजते विश्वसंघान् ३३
वेद्यं च यद्वेदयते च वेदान्विधिश्च यश्चाश्रयते विधेयान्
धर्मे च वेदे च बले च सर्वं चराचरं केशवं त्वं प्रतीहि ३४
ज्योतिर्भूतः परमोऽसौ पुरस्तात्प्रकाशयन्प्रभया विश्वरूपः
अपः सृष्ट्वा ह्यात्मभूरात्मयोनिः पुराकरोत्सर्वमेवाथ विश्वम् ३५
ऋतूनुत्पातान्विविधान्यद्भुतानि मेघान्विद्युत्सर्वमैरावतं च
सर्वं कृष्णात्स्थावरं जङ्गमं च विश्वाख्याताद्विष्णुमेनं प्रतीहि ३६
विश्वावासं निर्गुणं वासुदेवं संकर्षणं जीवभूतं वदन्ति
ततः प्रद्युम्नमनिरुद्धं चतुर्थमाज्ञापयत्यात्मयोनिर्महात्मा ३७
स पञ्चधा पञ्चजनोपपन्नं संचोदयन्विश्वमिदं सिसृक्षुः
ततश्चकारावनिमारुतौ च खं ज्योतिरापश्च  तथैव पार्थ ३८
स स्थावरं जङ्गमं चैवमेतच्चतुर्विधं लोकमिमं च कृत्वा
ततो भूमिं व्यदधात्पञ्चबीजां द्यौः पृथिव्यां धास्यति भूरि वारि
तेन विश्वं कृतमेतद्धिराजन्स जीवयत्यात्मनैवात्मयोनिः ३९
ततो देवानसुरान्मानुषांश्च लोकानृषींश्चाथ पितॄन्प्रजाश्च
समासेन विविधान्प्राणिलोकान्सर्वान्सदा भूतपतिः सिसृक्षुः ४०
शुभाशुभं स्थावरं जङ्गमं च विष्वक्सेनात्सर्वमेतत्प्रतीहि
यद्वर्तते यच्च भविष्यतीह सर्वमेतत्केशवं त्वं प्रतीहि ४१

मृत्युश्चैव प्राणिनामन्तकाले साक्षात्कृष्णः शाश्वतो धर्मवाहः
भूतं च यच्चेह न विद्म किंचिद्विष्वक्सेनात्सर्वमेतत्प्रतीहि ४२
यत्प्रशस्तं च लोकेषु पुण्यं यच्च शुभाशुभम्
तत्सर्वं केशवोऽचिन्त्यो विपरीतमतो भवेत् ४३
एतादृशः केशवोऽय स्वयंभूर्नारायणः परमश्चाव्ययश्च
मध्यं चास्य जगतस्तस्थुषश्च सर्वेषां भूतानां प्रभवश्चाप्ययश्च ४४
इति श्रीमहाभारते अनुशासनपर्वणि त्रिचत्वारिंशदधिकशततमोऽध्यायः १४३

## चतुश्चत्वारिंशदधिक शततमोऽध्यायः

युधिष्ठिर उवाच
ब्रूहि ब्राह्मणपूजायां व्युष्टिं त्वं मधुसूदन
वेत्ता त्वमस्य चार्थस्य वेद त्वां हि पितामहः १
वासुदेव उवाच
शृणुष्वावहितो राजन्द्विजानां भरतर्षभ
यथातत्त्वेन वदतो गुणान्मे कुरुसत्तम २
प्रद्युम्नः परिपप्रच्छ ब्राह्मणैः परिकोपितः
किं फलं ब्राह्मणेष्वस्ति पूजायां मधुसूदन
ईश्वरस्य सतस्तस्य इह चैव परत्र च ३
सदा द्विजातीन्संपूज्य किं फलं तत्र मानद
एतद्ब्रूहि पितः सर्वं सुमहान्संशयोऽत्र मे ४
इत्युक्तवचनस्तेन प्रद्युम्नेन तदा त्वहम्
प्रत्यब्रुवं महाराज यत्तच्छृणु समाहितः ५
व्युष्टिं ब्राह्मणपूजायां रौक्मिणेय निबोध मे
एते हि सोमराजान ईश्वराः सुखदुःखयोः ६
अस्मिँल्लोके रौक्मिणेय तथामुष्मिंश्च पुत्रक
ब्राह्मणप्रमुखं सौख्यं न मेऽत्रास्ति विचारणा ७
ब्राह्मणप्रमुखं वीर्यमायुः कीर्तिर्यशो बलम्
लोका लोकेश्वराश्चैव सर्वे ब्राह्मणपूर्वकाः ८
तत्कथं नाद्रियेयं वै ईश्वरोऽस्मीति पुत्रक
मा ते मन्युर्महाबाहो भवत्वत्र द्विजान्प्रति ९

ब्राह्मणो हि महद्भूतमस्मिँल्लोके परत्र च
भस्म कुर्युर्जगदिदं क्रुद्धाः प्रत्यक्षदर्शिनः १०
अन्यानपि सृजेयुश्च लोकाँल्लोकेश्वरांस्तथा
कथं तेषु न वर्तेय सम्यग्ज्ञानात्सुतेजसः ११
अवसन्मद्गृहे तात ब्राह्मणो हरिपिङ्गलः
चीरवासा बिल्वदण्डी दीर्घश्मश्रुनखादिमान्
दीर्घेभ्यश्च मनुष्येभ्यः प्रमाणादधिको भुवि १२
स स्म संचरते लोकान्ये दिव्या ये च मानुषाः
इमा गाथा गायमानश्चत्वरेषु सभासु च १३
दुर्वाससं वासयेत्को ब्राह्मणं सत्कृतं गृहे
परिभाषां च मे श्रुत्वा को नु दद्यात्प्रतिश्रयम्
यो मां कश्चिद्वासयेत न स मां कोपयेदिह १४
तं स्म नाद्रियते कश्चित्ततोऽह तमवासयम् १५
स स्म भुङ्क्ते सहस्राणां बहूनामन्नमेकदा
एकदा स्माल्पकं भुङ्क्ते न वैति च पुनर्गृहान् १६
अकस्माच्च प्रहसति तथाकस्मात्प्ररोदिति
न चास्य वयसा तुल्यः पृथिव्यामभवत्तदा १७
सोऽस्मदावसथं गत्वा शय्याश्चास्तरणानि च
कन्याश्चालंकृता दग्ध्वा ततो व्यपगतः स्वयम् १८
अथ मामब्रवीद्भूयः स मुनिः संशितव्रतः
कृष्ण पायसमिच्छामि भोक्तुमित्येव सत्वरः १९
सदैव तु मया तस्य चित्तज्ञेन गृहे जनः
सर्वाण्येवान्नपानानि भक्ष्याश्चोच्चावचास्तथा
भवन्तु सत्कृतानीति पूर्वमेव प्रचोदितः २०
ततोऽह ज्वलमानं वै पायसं प्रत्यवेदयम्
तद्भुक्त्वैव तु स क्षिप्रं ततो वचनमब्रवीत्
क्षिप्रमङ्गानि लिम्पस्व पायसेनेति स स्म ह २१
अविमृश्यैव च ततः कृतवानस्मि तत्तथा
तेनोच्छिष्टेन गात्राणि शिरश्चैवाभ्यमृक्षयम् २२
स ददर्श तदाभ्याशे मातरं ते शुभाननाम्

तामपि स्मयमानः स पायसेनाभ्यलेपयत् २३
मुनिः पायसदिग्धाङ्गीं रथे तूर्णमयोजयत्
तमारुह्य रथं चैव निर्ययौ स गृहान्मम २४
अग्निवर्णो ज्वलन्धीमान्स द्विजो रथधुर्यवत्
प्रतोदेनातुदद्बालां रुक्मिणीं मम पश्यतः २५
न च मे स्तोकमप्यासीद्दुःखमीर्ष्याकृतं तदा
ततः स राजमार्गेण महता निर्ययौ बहिः २६
तद्दृष्ट्वा महदाश्चर्यं दाशार्हा जातमन्यवः
तत्राजल्पन्मिथः केचित्समाभाष्य परस्परम् २७
ब्राह्मणा इव जायेरन्नान्यो वर्णः कथंचन
को ह्येनं रथमास्थाय जीवेदन्यः पुमानिह २८
आशीविषविषं तीक्ष्णं ततस्तीक्ष्णतरं विषम्
ब्रह्माशीविषदग्धस्य नास्ति कश्चिच्चिकित्सकः २९
तस्मिन्व्रजति दुर्धर्षे प्रास्खलद्रुक्मिणी पथि
तां नामर्षयत श्रीमांस्ततस्तूर्णमचोदयत् ३०
ततः परमसंक्रुद्धो रथात्प्रस्कन्द्य स द्विजः
पदातिरुत्पथेनैव प्राधावद्दक्षिणामुखः ३१
तमुत्पथेन धावन्तमन्वधावं द्विजोत्तमम्
तथैव पायसादिग्धः प्रसीद भगवन्निति ३२
ततो विलोक्य तेजस्वी ब्राह्मणो मामुवाच ह
जितः क्रोधस्त्वया कृष्ण प्रकृत्यैव महाभुज ३३
न तेऽपराधमिह वै दृष्टवानस्मि सुव्रत
प्रीतोऽस्मि तव गोविन्द वृणु कामान्यथेप्सितान्
प्रसन्नस्य च मे तात पश्य व्युष्टिर्यथाविधा ३४
यावदेव मनुष्याणामन्ने भावो भविष्यति
यथैवान्ने तथा तेषां त्वयि भावो भविष्यति ३५
यावच्च पुण्या लोकेषु  त्वयि कीर्तिर्भविष्यति
त्रिषु लोकेषु तावच्च वैशिष्ट्यं प्रतिपत्स्यसे
सुप्रियः सर्वलोकस्य भविष्यसि जनार्दन ३६
यत्ते भिन्नं च दग्धं च यच्च किंचिद्विनाशितम्

सर्वं तथैव द्रष्टासि विशिष्टं वा जनार्दन ३७
यावदेतत्प्रलिप्तं ते गात्रेषु मधुसूदन
अतो मृत्युभयं नास्ति यावदिच्छा तवाच्युत ३८
न तु पादतले लिप्ते कस्मात्ते पुत्रकाद्य वै
नैतन्मे प्रियमित्येव स मां प्रीतोऽब्रवीत्तदा
इत्युक्तोऽह शरीरं स्वमपश्यं श्रीसमायुतम् ३९
रुक्मिणीं चाब्रवीत्प्रीतः सर्वस्त्रीणां वरं यशः
कीर्तिं चानुत्तमां लोके समवाप्स्यसि शोभने ४०
न त्वां जरा वा रोगो वा वैवर्ण्यं चापि भामिनि
स्प्रक्ष्यन्ति पुण्यगन्धा च कृष्णमाराधयिष्यसि ४१
षोडशानां सहस्राणां वधूनां केशवस्य ह
वरिष्ठा सहलोक्या च केशवस्य भविष्यसि ४२
तव मातरमित्युक्त्वा ततो मां पुनरब्रवीत्
प्रस्थितः सुमहातेजा दुर्वासा वह्निवज्ज्वलन् ४३
एषैव ते बुद्धिरस्तु ब्राह्मणान्प्रति केशव
इत्युक्त्वा स तदा पुत्र तत्रैवान्तरधीयत ४४
तस्मिन्नन्तर्हिते चाहमुपांशुव्रतमादिशम्
यत्किंचिद्ब्राह्मणो ब्रूयात्सर्वं कुर्यामिति प्रभो ४५
एतद्व्रतमहं कृत्वा मात्रा ते सह पुत्रक
ततः परमहृष्टात्मा प्राविशं गृहमेव च ४६
प्रविष्टमात्रश्च गृहे सर्वं पश्यामि तन्नवम्
यद्भिन्नं यच्च वै दग्धं तेन विप्रेण पुत्रक ४७
ततोऽह विस्मयं प्राप्तः सर्वं दृष्ट्वा नवं दृढम्
अपूजयं च मनसा रौक्मिणेय द्विजं तदा ४८
इत्यहं रौक्मिणेयस्य पृच्छतो भरतर्षभ
माहात्म्यं द्विजमुख्यस्य सर्वमाख्यातवांस्तदा ४९
तथा त्वमपि कौन्तेय ब्राह्मणान्सततं प्रभो
पूजयस्व महाभागान्वाग्भिर्दानैश्च नित्यदा ५०
एवं व्युष्टिमहं प्राप्तो ब्राह्मणानां प्रसादजाम्
यच्च मामाह भीष्मोऽय तत्सत्यं भरतर्षभ ५१

इति श्रीमहाभारते अनुशासनपर्वणि चतुश्चत्वारिंशदधिकशततमोऽध्यायः
१४४

पञ्चचत्वारिंशदधिकशततमोऽध्यायः

युधिष्ठिर उवाच
दुर्वाससः प्रसादात्ते यत्तदा मधुसूदन
अवाप्तमिह विज्ञानं तन्मे व्याख्यातुमर्हसि १
महाभाग्यं च यत्तस्य नामानि च महात्मनः
तत्त्वतो ज्ञातुमिच्छामि सर्वं मतिमतां वर २
वासुदेव उवाच
हन्त ते कथयिष्यामि नमस्कृत्वा कपर्दिने
यदवाप्तं महाराज श्रेयो यच्चार्जितं यशः ३
प्रयतः प्रातरुत्थाय यदधीये विशां पते
प्राञ्जलि शतरुद्रीयं तन्मे निगदतः शृणु ४
प्रजापतिस्तत्ससृजे तपसोऽन्ते महातपाः
शंकरस्त्वसृजत्तात प्रजाः स्थावरजङ्गमाः ५
नास्ति किंचित्परं भूतं महादेवाद्विशां पते
इह त्रिष्वपि लोकेषु भूतानां प्रभवो हि सः ६
न चैवोत्सहते स्थातुं कश्चिदग्रे महात्मनः
न हि भूतं समं तेन त्रिषु लोकेषु विद्यते ७
गन्धेनापि हि संग्रामे तस्य क्रुद्धस्य शत्रवः
विसंज्ञा हतभूयिष्ठा वेपन्ति च पतन्ति च ८
घोरं च निनदं तस्य पर्जन्यनिनदोपमम्
श्रुत्वा विदीर्येद्धृदयं देवानामपि संयुगे ९
यांश्च घोरेण रूपेण पश्येत्क्रुद्धः पिनाकधृक्
न सुरा नासुरा लोके न गन्धर्वा न पन्नगाः
कुपिते सुखमेधन्ते तस्मिन्नपि गुहागताः १०
प्रजापतेश्च दक्षस्य यजतो वितते क्रतौ
विव्याध कुपितो यज्ञं निर्भयस्तु भवस्तदा
धनुषा बाणमुत्सृज्य सघोषं विननाद च ११

ते न शर्म कुतः शान्तिं विषादं लेभिरे सुराः
विद्रुते सहसा यज्ञे कुपिते च महेश्वरे १२
तेन ज्यातलघोषेण सर्वे लोकाः समाकुलाः
बभूवुरवशाः पार्थ विषेदुश्च सुरासुराः १३
आपश्चुक्षुभिरे चैव चकम्पे च वसुंधरा
व्यद्रवन्गिरयश्चापि द्यौः पफाल च सर्वशः १४
अन्धेन तमसा लोकाः प्रावृता न चकाशिरे
प्रनष्टा ज्योतिषां भाश्च सह सूर्येण भारत १५
भृशं भीतास्ततः शान्तिं चक्रुः स्वस्त्ययनानि च
ऋषयः सर्वभूतानामात्मनश्च हितैषिणः १६
ततः सोऽभ्यद्रवद्देवान्क्रुद्धो रौद्रपराक्रमः
भगस्य नयने क्रुद्धः प्रहारेण व्यशातयत् १७
पूषाणं चाभिदुद्राव परेण वपुषान्वितः
पुरोडाशं भक्षयतो दशनान्वै व्यशातयत् १८
ततः प्रणेमुर्देवास्ते वेपमानाः स्म शंकरम्
पुनश्च संदधे रुद्रो दीप्तं सुनिशितं शरम् १९
रुद्रस्य विक्रमं दृष्ट्वा भीता देवाः सहर्षिभिः
ततः प्रसादयामासुः शर्वं ते विबुधोत्तमाः २०
जेपुश्च शतरुद्रीयं देवाः कृत्वाञ्जलि ततः
संस्तूयमानस्त्रिदशैः प्रससाद महेश्वरः २१
रुद्रस्य भागं यज्ञे च विशिष्टं ते त्वकल्पयन्
भयेन त्रिदशा राजञ्शरणं च प्रपेदिरे २२
तेन चैवातिकोपेन स यज्ञः संधितोऽभवत्
यद्यच्चापि हतं तत्र तत्तथैव प्रदीयते २३
असुराणां पुराण्यासंस्त्रिणि वीर्यवतां दिवि
आयसं राजतं चैव सौवर्णमपरं तथा २४
नाशकत्तानि मघवा भेत्तुं सर्वायुधैरपि
अथ सर्वेऽमरा रुद्रं जग्मुः शरणमर्दिताः २५
तत ऊचुर्महात्मानो देवाः सर्वे समागताः
रुद्र रौद्रा भविष्यन्ति पशवः सर्वकर्मसु

जहि दैत्यान्सह पुरैर्लोकांस्त्रायस्व मानद २६
स तथोक्तस्तथेत्युक्त्वा विष्णुं कृत्वा शरोत्तमम्
शल्यमग्निं तथा कृत्वा पुङ्खं वैवस्वतं यमम्
वेदान्कृत्वा धनुः सर्वाञ्ज्यां च सावित्रिमुत्तमाम् २७
देवान्रथवरं कृत्वा विनियुज्य च सर्वशः
त्रिपर्वणा त्रिशल्येन तेन तानि बिभेद सः २८
शरेणादित्यवर्णेन कालाग्निसमतेजसा
तेऽसुराः सपुरास्तत्र दग्धा रुद्रेण भारत २९
तं चैवाङ्कगतं दृष्ट्वा बालं पञ्चशिखं पुनः
उमा जिज्ञासमाना वै कोऽयमित्यब्रवीत्तदा ३०
असूयतश्च शक्रस्य वज्रेण प्रहरिष्यतः
सवज्रं स्तम्भयामास तं बाहुं परिघोपमम् ३१
न संबुबुधिरे चैनं देवास्तं भुवनेश्वरम्
सप्रजापतयः सर्वे तस्मिन्मुमुहुरीश्वरे ३२
ततो ध्यात्वाथ भगवान्ब्रह्मा तममितौजसम्
अयं श्रेष्ठ इति ज्ञात्वा ववन्दे तमुमापतिम् ३३
ततः प्रसादयामासुरुमां रुद्रं च ते सुराः
बभूव स तदा बाहुर्बलहन्तुर्यथा पुरा ३४
स चापि ब्राह्मणो भूत्वा दुर्वासा नाम वीर्यवान्
द्वारवत्यां मम गृहे चिरं कालमुपावसत् ३५
विप्रकारान्प्रयुङ्क्ते स्म सुबहून्मम वेश्मनि
तानुदारतया चाहमक्षमं तस्य दुःसहम् ३६
स देवेन्द्रश्च वायुश्च सोऽश्विनौ स च विद्युतः
स चन्द्रमाः स चेशानः स सूर्यो वरुणश्च सः ३७
स कालः सोऽन्तको मृत्युः स तमो रात्र्यहानि च
मासार्धमासा ऋतवः संध्ये संवत्सरश्च सः ३८
स धाता स विधाता च विश्वकर्मा स सर्ववित्
नक्षत्राणि दिशश्चैव प्रदिशोऽथ ग्रहास्तथा
विश्वमूर्तिरमेयात्मा भगवानमितद्युतिः ३९
एकधा च द्विधा चैव बहुधा च स एव च

शतधा सहस्त्रधा चैव तथा शतसहस्त्रधा ४०
ईदृशः स महादेवो भूयश्च भगवानतः
न हि शक्या गुणा वक्तुमपि वर्षशतैरपि ४१
इति श्रीमहाभारते अनुशासनपर्वणि पञ्चचत्वारिंशदधिकशततमोऽध्यायः
१४५

षट्चत्वारिंशदधिकशततमोऽध्यायः

वासुदेव उवाच
युधिष्ठिर महाबाहो महाभाग्यं महात्मनः
रुद्राय बहुरूपाय बहुनाम्ने निबोध मे १
वदन्त्यग्निं महादेवं तथा स्थाणुं महेश्वरम्
एकाक्षं त्र्यम्बकं चैव विश्वरूपं शिवं तथा २
द्वे तनू तस्य देवस्य वेदज्ञा ब्राह्मणा विदुः
घोरामन्यां शिवामन्यां ते तनू बहुधा पुनः ३
उग्रा घोरा तनूर्यास्य सोऽग्निर्विद्युत्स भास्करः
शिवा सौम्या च या तस्य धर्मस्त्वापोऽथ चन्द्रमाः ४
आत्मनोऽध तु तस्याग्निरुच्यते भरतर्षभ
ब्रह्मचर्यं चरत्येष शिवा यास्य तनुस्तथा ५
यास्य घोरतमा मूर्तिर्जगत्संहरते तया
ईश्वरत्वान्महत्त्वाच्च महेश्वर इति स्मृतः ६
यन्निर्दहति यत्तीक्ष्णो यदुग्रो यत्प्रतापवान्
मांसशोणितमज्जादो यत्ततो रुद्र उच्यते ७
देवानां सुमहान्यच्च यच्चास्य विषयो महान्
यच्च विश्वं महत्पाति महादेवस्ततः स्मृतः ८
समेधयति यन्नित्यं सर्वार्थान्सर्वकर्मभिः
शिवमिच्छन्मनुष्याणां तस्मादेष शिवः स्मृतः ९
दहत्यूर्ध्वं स्थितो यच्च प्राणोत्पत्तिः स्थितिश्च यत्
स्थिरलिङ्गश्च यन्नित्यं तस्मात्स्थाणुरिति स्मृतः १०
यदस्य बहुधा रूपं भूतं भव्यं भवत्तथा
स्थावरं जङ्गमं चैव बहुरूपस्ततः स्मृतः ११

धूम्रं रूपं च यत्तस्य धूर्जटीत्यत उच्यते
विश्वे देवाश्च यत्तस्मिन्विश्वरूपस्ततः स्मृतः १२
सहस्राक्षोऽयुताक्षो वा सर्वतोक्षिमयोऽपि वा
चक्षुषः प्रभवस्तेजो नास्त्यन्तोऽथास्य चक्षुषाम् १३
सर्वथा यत्पशून्पाति तैश्च यद्रमते पुनः
तेषामधिपतिर्यच्च तस्मात्पशुपतिः स्मृतः १४
नित्येन ब्रह्मचर्येण लिङ्गमस्य यदा स्थितम्
महयन्त्यस्य लोकाश्च महेश्वर इति स्मृतः १५
विग्रहं पूजयेद्यो वै लिङ्गं वापि महात्मनः
लिङ्गं पूजयिता नित्यं महतीं श्रियमश्नुते १६
ऋषयश्चापि देवाश्च गन्धर्वाप्सरसस्तथा
लिङ्गमेवार्चयन्ति स्म यत्तदूर्ध्वं समास्थितम् १७
पूज्यमाने ततस्तस्मिन्मोदते स महेश्वरः
सुखं ददाति प्रीतात्मा भक्तानां भक्तवत्सलः १८
एष एव श्मशानेषु देवो वसति नित्यशः
यजन्ते तं जनास्तत्र वीरस्थाननिषेविणम् १९
विषमस्थः शरीरेषु स मृत्युः प्राणिनामिह
स च वायुः शरीरेषु प्राणोऽपानः शरीरिणाम् २०
तस्य घोराणि रूपाणि दीप्तानि च बहूनि च
लोके यान्यस्य पूज्यन्ते विप्रास्तानि विदुर्बुधाः २१
नामधेयानि वेदेषु बहून्यस्य यथार्थतः
निरुच्यन्ते महत्त्वाच्च विभुत्वात्कर्मभिस्तथा २२
वेदे चास्य विदुर्विप्राः शतरुद्रीयमुत्तमम्
व्यासादनन्तरं यच्चाप्युपस्थानं महात्मनः २३
प्रदाता सर्वलोकानां विश्वं चाप्युच्यते महत्
ज्येष्ठभूतं वदन्त्येनं ब्राह्मणा ऋषयोऽपरे २४
प्रथमो ह्येष देवानां मुखादग्निरजायत
ग्रहैर्बहुविधैः प्राणान्संरुद्धानुत्सृजत्यपि २५
स मोचयति पुण्यात्मा शरण्यः शरणागतान्
आयुरारोग्यमैश्वर्यं वित्तं कामांश्च पुष्कलान् २६

स ददाति मनुष्येभ्यः स एवाक्षिपते पुनः
शक्रादिषु च देवेषु तस्य चैश्वर्यमुच्यते २७
स एवाभ्यधिको नित्यं त्रैलोक्यस्य शुभाशुभे
एश्वर्याञ्चैव कामानामीश्वरः पुनरुच्यते २८
महेश्वरश्च लोकानां महतामीश्वरश्च सः
बहुभिर्विविधै रूपैर्विश्वं व्याप्तमिदं जगत्
तस्य देवस्य यद्वक्त्रं समुद्रे वडवामुखम् २९
इति श्रीमहाभारते अनुशासनपर्वणि षट्चत्वारिंशदधिकशततमोऽध्यायः
१४६

## सप्तचत्वारिंशदधिकशततमोऽध्यायः

वैशम्पायन उवाच
इत्युक्तवति वाक्यं तु कृष्णे देवकिनन्दने
भीष्मं शांतनवं भूयः पर्यपृच्छद्युधिष्ठिरः १
निर्णये वा महाबुद्धे सर्वधर्मभृतां वर
प्रत्यक्षमागतम वेति किं तयोः कारणं भवेत् २
भीष्म उवाच
नास्त्यत्र संशयः कश्चिदिति मे वर्तते मतिः
शृणु वक्ष्यामि ते प्राज्ञ सम्यक्त्वमनुपृच्छसि ३
संशयः सुगमो राजन्निर्णयस्त्वत्र दुर्गमः
दृष्टं श्रुतमनन्तं हि यत्र संशयदर्शनम् ४
प्रत्यक्षं कारणं दृष्टं हेतुकाः प्राज्ञमानिनः
नास्तीत्येवं व्यवस्यन्ति सत्यं संशयमेव च
तदयुक्तं व्यवस्यन्ति बालाः पण्डितमानिनः ५
अथ चेन्मन्यसे चैकं कारणं किं भवेदिति
शक्यं दीर्घेण कालेन युक्तेनातन्द्रितेन च
प्राणयात्रामनेकां च कल्पयानेन भारत ६
तत्परेणैव नान्येन शक्यं ह्येतत्तु कारणम्
हेतूनामन्तमासाद्य विपुलं ज्ञानमुत्तमम्
ज्योतिः सर्वस्य लोकस्य विपुलं प्रतिपद्यते ७

तत्त्वेनागमनं राजन्हेत्वन्तगमनं तथा
अग्राह्यमनिबद्धं च वाचः संपरिवर्जनम् ८
युधिष्ठिर उवाच
प्रत्यक्षं लोकतः सिद्धं लोकाश्चागमपूर्वकाः
शिष्टाचारो बहुविधो ब्रूहि तन्मे पितामह ९
भीष्म उवाच
धर्मस्य ह्रियमाणस्य बलवद्भिर्दुरात्मभिः
संस्था यत्नैरपि कृता कालेन परिभिद्यते १०
अधर्मा धर्मरूपेण तृणैः कूपा इवावृताः
ततस्तैर्भिद्यते वृत्तं शृणु चैव युधिष्ठिर ११
अवृत्त्या ये च भिन्दन्ति श्रुतत्यागपरायणाः
धर्मविद्वेषिणो मन्दा इत्युक्तास्ते न संशयः १२
अतृप्यन्तस्तु साधूनां य एवागमबुद्धयः
परमित्येव संतुष्टास्तानुपास्स्व च पृच्छ च १३
कामार्थौ पृष्ठतः कृत्वा लोभमोहानुसारिणौ
धर्म इत्येव संबुद्धास्तानुपास्स्व च पृच्छ च १४
न तेषां भिद्यते वृत्तं यज्ञस्वाध्यायकर्मभिः
आचारः कारणं चैव धर्मश्चैव त्रयं पुनः १५
युधिष्ठिर उवाच
पुनरेवेह मे बुद्धिः संशये परिमुह्यते
अपारे मार्गमाणस्य परं तीरमपश्यतः १६
वेदाः प्रत्यक्षमाचारः प्रमाणं तत्त्रयं यदि
पृथक्त्वं लभ्यते चैषां धर्मश्चैकस्त्रयं कथम् १७
भीष्म उवाच
धर्मस्य ह्रियमाणस्य बलवद्भिर्दुरात्मभिः
यद्येवं मन्यसे राजंस्त्रिधा धर्मविचारणा १८
एक एवेति जानीहि त्रिधा तस्य प्रदर्शनम्
पृथक्त्वे चैव मे बुद्धिस्त्रयाणामपि वै तथा १९
उक्तो मार्गस्त्रयाणां च तत्तथैव समाचर
जिज्ञासा तु न कर्तव्या धर्मस्य परितर्कणात् २०

सदैव भरतश्रेष्ठ मा ते भूदत्र संशयः
अन्धो जड इवाशङ्को यद्ब्रवीमि तदाचर २१
अहिंसा सत्यमक्रोधो दानमेतच्चतुष्टयम्
अजातशत्रो सेवस्व धर्म एष सनातनः २२
ब्राह्मणेषु च वृत्तिर्या पितृपैतामहोचिता
तामन्वेहि महाबाहो स्वर्गस्यैते हि देशिकाः २३
प्रमाणमप्रमाणं वै यः कुर्यादबुधो नरः
न स प्रमाणतामर्हो विवादजननो हि सः २४
ब्राह्मणानेव सेवस्व सत्कृत्य बहुमन्य च
एतेष्वेव त्विमे लोकाः कृत्स्ना इति निबोध तान् २५
इति श्रीमहाभारते अनुशासनपर्वणि सप्तचत्वारिंशदधिकशततमोऽध्यायः
१४७

अष्टचत्वारिंशदधिकशततमोऽध्यायः

युधिष्ठिर उवाच
ये च धर्ममसूयन्ति ये चैनं पर्युपासते
ब्रवीतु भगवानेतत्क्व ते गच्छन्ति तादृशाः १
भीष्म उवाच
रजसा तमसा चैव समवस्तीर्णचेतसः
नरकं प्रतिपद्यन्ते धर्मविद्वेषिणो नराः २
ये तु धर्मं महाराज सततं पर्युपासते
सत्यार्जवपराः सन्तस्ते वै स्वर्गभुजो नराः ३
धर्म एव रतिस्तेषामाचार्योपासनाद्भवेत्
देवलोकं प्रपद्यन्ते ये धर्मं पर्युपासते ४
मनुष्या यदि वा देवाः शरीरमुपताप्य वै
धर्मिणः सुखमेधन्ते लोभद्वेषविवर्जिताः ५
प्रथमं ब्रह्मणः पुत्रं धर्ममाहुर्मनीषिणः
धर्मिणः पर्युपासन्ते फलं पक्वमिवाशयः ६
युधिष्ठिर उवाच
असतां कीदृशं रूपं साधवः किं च कुर्वते

ब्रवीतु मे भवानेतत्सन्तोऽसन्तश्च कीदृशाः ७
भीष्म उवाच
दुराचाराश्च दुर्धर्षा दुर्मुखाश्चाप्यसाधवः
साधवः शीलसंपन्नाः शिष्टाचारस्य लक्षणम् ८
राजमार्गे गवां मध्ये गोष्ठमध्ये च धर्मिणः
नोपसेवन्ति राजेन्द्र सर्गं मूत्रपुरीषयोः ९
पञ्चानामशनं दत्त्वा शेषमश्नन्ति साधवः
न जल्पन्ति च भुञ्जाना न निद्रान्त्यार्द्रपाणयः १०
चित्रभानुमनड्वाहं देवं गोष्ठं चतुष्पथम्
ब्राह्मणं धार्मिकं चैत्यं ते कुर्वन्ति प्रदक्षिणम् ११
वृद्धानां भारतप्तानां स्त्रीणां बालातुरस्य च
ब्राह्मणानां गवां राज्ञां पन्थानं ददते च ते १२
अतिथीनां च सर्वेषां प्रेष्याणां स्वजनस्य च
तथा शरणकामानां गोप्ता स्यात्स्वागतप्रदः १३
सायं प्रातर्मनुष्याणामशनं देवनिर्मितम्
नान्तरा भोजनं दृष्टमुपवासविधिर्हि सः १४
होमकाले यथा वह्निः कालमेव प्रतीक्षते
ऋतुकाले तथा नारी ऋतुमेव प्रतीक्षते
न चान्यां गच्छते यस्तु ब्रह्मचर्यं हि तत्स्मृतम् १५
अमृतं ब्राह्मणा गाव इत्येतत्त्रयमेकतः
तस्माद्गोब्राह्मणं नित्यमर्चयेत यथाविधि १६
यजुषा संस्कृतं मांसमुपभुञ्जन्न दुष्यति
पृष्ठमांसं वृथामांसं पुत्रमांसं च तत्समम् १७
स्वदेशे परदेशे वाप्यतिथिं नोपवासयेत्
कर्म वै सफलं कृत्वा गुरूणां प्रतिपादयेत् १८
गुरुभ्य आसनं देयमभिवाद्याभिपूज्य च
गुरूनभ्यर्च्य वर्धन्ते आयुषा यशसा श्रिया १९
वृद्धान्नातिवदेज्जातु न च संप्रेषयेदपि
नासीनः स्यात्स्थितेष्वेवमायुरस्य न रिष्यते २०
न नग्नामीक्षते नारीं न विद्वान्पुरुषानपि

मैथुनं सततं गुप्तमाहारं च समाचरेत् २१
तीर्थानां गुरवस्तीर्थं शुचीनां हृदयं शुचिः
दर्शनानां परं ज्ञानं संतोषः परमं सुखम् २२
सायं प्रातश्च वृद्धानां शृणुयात्पुष्कला गिरः
श्रुतमाप्नोति हि नरः सततं वृद्धसेवया २३
स्वाध्याये भोजने चैव दक्षिणं पाणिमुद्धरेत्
यच्छेद्वाङ्मनसी नित्यमिन्द्रियाणां च विभ्रमम् २४
संस्कृतं पायसं नित्यं यवागूं कृसरं हविः
अष्टकाः पितृदैवत्या वृद्धानामभिपूजनम् २५
श्मश्रुकर्मणि मङ्गल्यं क्षुतानामभिनन्दनम्
व्याधितानां च सर्वेषामायुषः प्रतिनन्दनम् २६
न जातु त्वमिति ब्रूयादापन्नोऽपि महत्तरम्
त्वंकरो वा वधो वेति विद्वत्सु न विशिष्यते
अवराणां समानानां शिष्याणां च समाचरेत् २७
पापमाचक्षते नित्यं हृदयं पापकर्मिणाम्
ज्ञानपूर्वं विनश्यन्ति गूहमाना महाजने २८
ज्ञानपूर्वं कृतं कर्म च्छादयन्ते ह्यसाधवः
न मां मनुष्याः पश्यन्ति न मां पश्यन्ति देवताः
पापेनाभिहतः पापः पापमेवाभिजायते २९
यथा वार्धुषिको वृद्धिं देहभेदे प्रतीक्षते
धर्मेणापिहितं पापं धर्ममेवाभिवर्धयेत् ३०
यथा लवणमम्भोभिराप्लुतं प्रविलीयते
प्रायश्चित्तहतं पापं तथा सद्यः प्रणश्यति ३१
तस्मात्पापं न गूहेत गूहमानं विवर्धते
कृत्वा तु साधुष्वाख्येयं ते तत्प्रशमयन्त्युत ३२
आशया संचितं द्रव्यं यत्काले नोपभुज्यते
अन्ये चैतत्प्रपद्यन्ते वियोगे तस्य देहिनः ३३
मानसं सर्वभूतानां धर्ममाहुर्मनीषिणः
तस्मात्सर्वाणि भूतानि धर्ममेव समासते ३४
एक एव चरेद्धर्मं न धर्मध्वजिको भवेत्

धर्मवाणिजका ह्येते ये धर्ममुपभुञ्जते ३५
अर्चेद्देवानदम्भेन सेवेतामायया गुरून्
निधिं निदध्यात्पारत्र्यं यात्रार्थं दानशब्दितम् ३६
इति श्रीमहाभारते अनुशासनपर्वणि अष्टचत्वारिंशदधिकशततमोऽध्यायः
१४८

एकोन पञ्चाशदधिकशततमोऽध्यायः

युधिष्ठिर उवाच
नाभागधेयः प्राप्नोति धनं सुबलवानपि
भागधेयान्वितस्त्वर्थान्कृशो बालश्च विन्दति १
नालाभकाले लभते प्रयत्नेऽपि कृते सति
लाभकालेऽप्रयत्नेन दृश्यन्ते विपुलं धनम्
कृतयत्नाफलाश्चैव दृश्यन्ते शतशो नराः २
यदि यत्नो भवेन्मर्त्यः स सर्वं फलमाप्नुयात्
नालभ्यं चोपलभ्येत नृणां भरतसत्तम ३
यदा प्रयत्नं कृतवान्दृश्यते ह्यफलो नरः
मार्गन्नयशतैरर्थानमार्गंश्चापरः सुखी ४
अकार्यमसकृत्कृत्वा दृश्यन्ते ह्यधना नराः
धनयुक्तास्त्वधर्मस्था दृश्यन्ते चापरे जनाः ५
अधीत्य नीतिं यस्माच्च नीतियुक्तो न दृश्यते
अनभिज्ञश्च साचिव्यं गमितः केन हेतुना
विद्यायुक्तो ह्यविद्यश्च धनवान्दुर्गतस्तथा ६
यदि विद्यामुपाश्रित्य नरः सुखमवाप्नुयात्
न विद्वान्विद्यया हीनं वृत्त्यर्थमुपसंश्रयेत् ७
यथा पिपासां जयति पुरुषः प्राप्य वै जलम्
दृष्टार्थो विद्ययाप्येवमविद्यां प्रजहेन्नरः ८
नाप्राप्तकालो म्रियते विद्धः शरशतैरपि
तृणाग्रेणापि संस्पृष्टः प्राप्तकालो न जीवति ९
भीष्म उवाच
ईहमानः समारम्भान्यदि नासादयेद्धनम्

उग्रं तपः समारोहेन्न ह्यनुप्तं प्ररोहति १०
दानेन भोगी भवति मेधावी वृद्धसेवया
अहिंसया च दीर्घायुरिति प्राहुर्मनीषिणः ११
तस्माद्दद्यान्न याचेत पूजयेद्धार्मिकानपि
स्वाभाषी प्रियकृच्छुद्धः सर्वसत्त्वाविहिंसकः १२
यदा प्रमाणप्रभवः स्वभावश्च सुखासुखे
मशकीटपिपीलानां स्थिरो भव युधिष्ठिर १३
इति श्रीमहाभारते अनुशासनपर्वणि एकोनपञ्चाशदधिकशततमोऽध्यायः १४९

## पञ्चाशदधिकशततमोऽध्यायः

भीष्म उवाच
कार्यते यच्च क्रियते सच्चासच्च कृतं ततः
तत्राश्वसीत सत्कृत्वा असत्कृत्वा न विश्वसेत् १
काल एवात्र कालेन निग्रहानुग्रहौ ददत्
बुद्धिमाविश्य भूतानां धर्मार्थेषु प्रवर्तते २
यदा त्वस्य भवेद्बुद्धिर्धर्म्या चार्थप्रदर्शिनी
तदाश्वसीत धर्मात्मा दृढबुद्धिर्न विश्वसेत् ३
एतावन्मात्रमेतद्धि भूतानां प्राज्ञलक्षणम्
कालयुक्तोऽप्युभयविच्छेषमर्थं समाचरेत् ४
यथा ह्युपस्थितैश्वर्याः पूजयन्ते नरा नरान्
एवमेवात्मनात्मानं पूजयन्तीह धार्मिकाः ५
न ह्यधर्मतया धर्मं दद्यात्कालः कथंचन
तस्माद्विशुद्धमात्मानं जानीयाद्धर्मचारिणम् ६
स्प्रष्टुमप्यसमर्थो हि ज्वलन्तमिव पावकम्
अधर्मः सततो धर्मं कालेन परिरक्षितम् ७
कार्यावेतौ हि कालेन धर्मो हि विजयावहः
त्रयाणामपि लोकानामालोककरणो भवेत् ८
तत्र कश्चिन्नयेत्प्राज्ञो गृहीत्वैव करे नरम्
उह्यमानः स धर्मेण धर्मे बहुभयच्छले ९
इति श्रीमहाभारते अनुशासनपर्वणि पञ्चाशदधिकशततमोऽध्यायः १५०

## एकपञ्चाशदधिकशततमोऽध्यायः

युधिष्ठिर उवाच
किं श्रेयः पुरुषस्येह किं कुर्वन्सुखमेधते
विपाप्मा स भवेत्केन किं वा कल्मषनाशनम् १
भीष्म उवाच
अयं दैवतवंशो वै ऋषिवंशसमन्वितः
द्विसंध्यं पठितः पुत्र कल्मषापहरः परः २
देवासुरगुरुर्देवः सर्वभूतनमस्कृतः
अचिन्त्योऽथाप्यनिर्देश्यः सर्वप्राणो ह्ययोनिजः ३
पितामहो जगन्नाथः सावित्री ब्रह्मणः सती
वेदभूरथ कर्ता च विष्णुर्नारायणः प्रभुः ४
उमापतिर्विरूपाक्षः स्कन्दः सेनापतिस्तथा
विशाखो हुतभुग्वायुश्चन्द्रादित्यौ प्रभाकरौ ५
शक्रः शचीपतिर्देवो यमो धूमोर्णया सह
वरुणः सह गौर्या च सह ऋद्ध्या धनेश्वरः ६
सौम्या गौः सुरभिर्देवी विश्रवाश्च महानृषिः
षट्कालः सागरो गङ्गा स्रवन्त्योऽथ मरुद्गणाः ७
वालखिल्यास्तपःसिद्धाः कृष्णद्वैपायनस्तथा
नारदः पर्वतश्चैव विश्वावसुर्हहाहुहूः ८
तुम्बरुश्चित्रसेनश्च देवदूतश्च विश्रुतः
देवकन्या महाभागा दिव्याश्चाप्सरसां गणाः ९
उर्वशी मेनका रम्भा मिश्रकेशी अलम्बुषा
विश्वाची च घृताची च पञ्चचूडा तिलोत्तमा १०
आदित्या वसवो रुद्राः साश्विनः पितरोऽपि च
धर्मः सत्यं तपो दीक्षा व्यवसायः पितामहः ११
शर्वर्यो दिवसाश्चैव मारीचः कश्यपस्तथा
शुक्रो बृहस्पतिर्भौमो बुधो राहुः शनैश्चरः १२
नक्षत्राण्यृतवश्चैव मासाः संध्याः सवत्सराः
वैनतेयाः समुद्राश्च कद्रुजाः पन्नगास्तथा १३
शतद्रूश्च विपाशा च चन्द्रभागा सरस्वती

सिन्धुश्च देविका चैव पुष्करं तीर्थमेव च १४
गङ्गा महानदी चैव कपिला नर्मदा तथा
कम्पुना च विशल्या च करतोयाम्बुवाहिनी १५
सरयूर्गण्डकी चैव लोहित्यश्च महानदः
ताम्रारुणा वेत्रवती पर्णाशा गौतमी तथा १६
गोदावरी च वेण्णा च कृष्णवेणा तथाद्रिजा
दृषद्वती च कावेरी वंक्षुर्मन्दाकिनी तथा १७
प्रयागं च प्रभासं च पुण्यं नैमिषमेव च
तच्च विश्वेश्वरस्थानं यत्र तद्विमलं सरः १८
पुण्यतीर्थैश्च कलिलं कुरुक्षेत्रं प्रकीर्तितम्
सिन्धूत्तमं तपोदानं जम्बूमार्गमथापि च १९
हिरण्वती वितस्ता च तथैवेक्षुमती नदी
वेदस्मृतिर्वेदसिनी मलवासाश्च नद्यपि २०
भूमिभागास्तथापुण्या गंगाद्वारमथापि च
ऋषिकुल्यास्तथामेध्या नदी चित्रपथा तथा २१
कौशिकी यमुना सीता तथा चर्मण्वती नदी
नदी भीमरथी चैव बाहुदा च महानदी
महेन्द्रवाणी त्रिदिवा नीलिका च सरस्वती २२
नन्दा चापरनन्दा च तथा तीर्थं महाह्रदम्
गयाथ फल्गुतीर्थं च धर्मारण्यं सुरैर्वृतम् २३
तथा देवनदी पुण्या सरश्च ब्रह्मनिर्मितम्
पुण्यं त्रिलोकविख्यातं सर्वपापहरं शिवम् २४
हिमवान्पर्वतश्चैव दिव्यौषधिसमन्वितः
विन्ध्यो धातुविचित्राङ्गस्तीर्थवानौषधान्वितः २५
मेरुर्महेन्द्रो मलयः श्वेतश्च रजताचितः
शृङ्गवान्मन्दरो नीलो निषधो दर्दुरस्तथा २६
चित्रकूटोऽञ्जनाभश्च पर्वतो गन्धमादनः
पुण्यः सोमगिरिश्चैव तथैवान्ये महीधराः
दिशश्च विदिशश्चैव क्षितिः सर्वे महीरुहाः २७
विश्वेदेवा नभश्चैव नक्षत्राणि ग्रहास्तथा

पान्तु वः सततं देवाः कीर्तिताकीर्तिता मया २८
कीर्तयानो नरो ह्येतान्मुच्यते सर्वकिल्बिषैः
स्तुवंश्च प्रतिनन्दंश्च मुच्यते सर्वतो भयात्
सर्वसंकरपापेभ्यो देवतास्तवनन्दकः २९
देवतानन्तरं विप्रांस्तपः सिद्धांस्तपोधिकान्
कीर्तितान्कीर्तयिष्यामि सर्वपापप्रमोचनान् ३०
यवक्रीतोऽथ रैभ्यश्च कक्षीवानौशिजस्तथा
भृग्वङ्गिरास्तथा कण्वो मेधातिथिरथ प्रभुः
बर्ही च गुणसंपन्नः प्राचीं दिशमुपाश्रिताः ३१
भद्रां दिशं महाभागा उल्मुचुः प्रमुचुस्तथा
मुमुचुश्च महाभागः स्वस्त्यात्रेयश्च वीर्यवान् ३२
मित्रावरुणयोः पुत्रस्तथागस्त्यः प्रतापवान्
दृढायुश्चोर्ध्वबाहुश्च विश्रुतावृषिसत्तमौ ३३
पश्चिमां दिशमाश्रित्य य एधन्ते निबोध तान्
उषद्गुः सह सोदर्यैः परिव्याधश्च वीर्यवान् ३४
ऋषिर्दीर्घतमाश्चैव गौतमः कश्यपस्तथा
एकतश्च द्वितश्चैव त्रितश्चैव महर्षयः
अत्रेः पुत्रश्च धर्मात्मा तथा सारस्वतः प्रभुः ३५
उत्तरां दिशमाश्रित्य य एधन्ते निबोध तान्
अत्रिर्वसिष्ठः शक्तिश्च पाराशर्यश्च वीर्यवान् ३६
विश्वामित्रो भरद्वाजो जमदग्निस्तथैव च
ऋचीकपौत्रो रामश्च ऋषिरौद्दालकिस्तथा ३७
श्वेतकेतुः कोहलश्च विपुलो देवलस्तथा
देवशर्मा च धौम्यश्च हस्तिकाश्यप एव च ३८
लोमशो नाचिकेतश्च लोमहर्षण एव च
ऋषिरुग्रश्रवाश्चैव भार्गवश्च्यवनस्तथा ३९
एष वै समवायस्ते ऋषिदेवसमन्वितः
आद्यः प्रकीर्तितो राजन्सर्वपापप्रमोचनः ४०
नृगो ययातिर्नहुषो यदुः पूरुश्च वीर्यवान्
धुन्धुमारो दिलीपश्च सगरश्च प्रतापवान् ४१

कृशाश्वो यौवनाश्वश्च चित्राश्वः सत्यवांस्तथा
दुःखन्तो भरतश्चैव चक्रवर्ती महायशाः ४२
पवनो जनकश्चैव तथा दृढरथो नृपः
रघुर्नरवरश्चैव तथा दशरथो नृपः ४३
रामो राक्षसहा वीरः शशबिन्दुर्भगीरथः
हरिश्चन्द्रो मरुत्तश्च जह्नुर्जाह्नविसेविता ४४
महोदयो ह्यलर्कश्च एलश्चैव नराधिपः
करंधमो नरश्रेष्ठः कध्मोरश्च नराधिपः ४५
दक्षोऽम्बरीषः कुकुरो रवतश्च महायशाः
मुचुकुन्दश्च राजर्षिर्मित्रभानुः प्रियंकरः ४६
त्रसदस्युस्तथा राजा श्वेतो राजर्षिसत्तमः
महाभिषश्च विख्यातो निमिराजस्तथाष्टकः ४७
आयुः क्षुपश्च राजर्षिः कक्षेयुश्च नराधिपः
शिबिरौशीनरश्चैव गयश्चैव नराधिपः ४८
प्रतर्दनो दिवोदासः सौदासः कोसलेश्वरः
एलो नलश्च राजर्षिर्मनुश्चैव प्रजापतिः ४९
हविध्रश्च पृषध्रश्च प्रतीपः शंतनुस्तथा
कक्षसेनश्च राजर्षिर्ये चान्ये नानुकीर्तिताः ५०
मा विघ्नं मा च मे पापं मा च मे परिपन्थिनः
ध्रुवो जयो मे नित्यं स्यात्परत्र च परा गतिः ५१
इति श्रीमहाभारते अनुशासनपर्वणि एकपञ्चाशदधिकशततमोऽध्यायः १५१

## द्विपञ्चाशदधिकशततमोऽध्यायः

वैशम्पायन उवाच
तूष्णींभूते तदा भीष्मे पटे चित्रमिवार्पितम्
मुहूर्तमिव च ध्यात्वा व्यासः सत्यवतीसुतः
नृपं शयानं गाङ्गेयमिदमाह वचस्तदा १
राजन्प्रकृतिमापन्नः कुरुराजो युधिष्ठिरः
सहितो भ्रातृभिः सर्वैः पार्थिवैश्चानुयायिभिः २
उपास्ते त्वां नरव्याघ्र सह कृष्णेन धीमता

तमिमं पुरयानाय त्वमनुज्ञातुमर्हसि ३
एवमुक्तो भगवता व्यासेन पृथिवीपतिः
युधिष्ठिरं सहामात्यमनुजज्ञे नदीसुतः ४
उवाच चैनं मधुरं ततः शांतनवो नृपः
प्रविशस्व पुरं राजन्व्येतु ते मानसो ज्वरः ५
यजस्व विविधैर्यज्ञैर्बह्वन्नैः स्वाप्तदक्षिणैः
ययातिरिव राजेन्द्र श्रद्धादमपुरःसरः ६
क्षत्रधर्मरतः पार्थ पितॄन्देवांश्च तर्पय
श्रेयसा योक्ष्यसे चैव व्येतु ते मानसो ज्वरः ७
रञ्जयस्व प्रजाः सर्वाः प्रकृतीः परिसान्त्वय
सुहृदः फलसत्कारैरभ्यर्चय यथार्हतः ८
अनु त्वां तात जीवन्तु मित्राणि सुहृदस्तथा
चैत्यस्थाने स्थितं वृक्षं फलवन्तमिव द्विजाः ९
आगन्तव्यं च भवता समये मम पार्थिव
विनिवृत्ते दिनकरे प्रवृत्ते चोत्तरायणे १०
तथेत्युक्त्वा तु कौन्तेयः सोऽभिवाद्य पितामहम्
प्रययौ सपरीवारो नगरं नागसाह्वयम् ११
धृतराष्ट्रं पुरस्कृत्य गान्धारीं च पतिव्रताम्
सह तैर्ऋषिभिः सर्वैर्भ्रातृभिः केशवेन च १२
पौरजानपदैश्चैव मन्त्रिवृद्धैश्च पार्थिवः
प्रविवेश कुरुश्रेष्ठ पुरं वारणसाह्वयम् १३
इति श्रीमहाभारते अनुशासनपर्वणि द्विपञ्चाशदधिकशततमोऽध्यायः १५२

## त्रिपञ्चाशदधिकशततमोऽध्यायः

वैशम्पायन उवाच
ततः कुन्तीसुतो राजा पौरजानपदं जनम्
पूजयित्वा यथान्यायमनुजज्ञे गृहान्प्रति १
सान्त्वयामास नारीश्च हतवीरा हतेश्वराः
विपुलैरर्थदानैश्च तदा पाण्डुसुतो नृपः २
सोऽभिषिक्तो महाप्राज्ञः प्राप्य राज्यं युधिष्ठिरः

अवस्थाप्य नरश्रेष्ठः सर्वाः स्वप्रकृतीस्तदा ३
द्विजेभ्यो बलमुख्येभ्यो नैगमेभ्यश्च सर्वशः
प्रतिगृह्याशिषो मुख्यास्तदा धर्मभृतां वरः ४
उषित्वा शर्वरीः श्रीमान्पञ्चाशन्नगरोत्तमे
समयं कौरवाग्र्यस्य सस्मार पुरुषर्षभः ५
स निर्ययौ गजपुराद्याजकैः परिवारितः
दृष्ट्वा निवृत्तमादित्यं प्रवृत्तं चोत्तरायणम् ६
घृतं माल्यं च गन्धांश्च क्षौमाणि च युधिष्ठिरः
चन्दनागरुमुख्यानि तथा कालगरूणि च ७
प्रस्थाप्य पूर्वं कौन्तेयो भीष्मसंसाधनाय वै
माल्यानि च महार्हाणि रत्नानि विविधानि च ८
धृतराष्ट्रं पुरस्कृत्य गान्धारीं च यशस्विनीम्
मातरं च पृथां धीमान्भ्रातृंश्च पुरुषर्षभः ९
जनार्दनेनानुगतो विदुरेण च धीमता
युयुत्सुना च कौरव्यो युयुधानेन चाभिभो १०
महता राजभोग्येन परिबर्हेण संवृतः
स्तूयमानो महाराज भीष्मस्याग्नीननुव्रजन् ११
निश्चक्राम पुरात्तस्माद्यथा देवपतिस्तथा
आससाद कुरुक्षेत्रे ततः शांतनवं नृपम् १२
उपास्यमानं व्यासेन पाराशर्येण धीमता
नारदेन च राजर्षे देवलेनासितेन च १३
हतशिष्टैर्नृपैश्चान्यैर्नानादेशसमागतैः
रक्षिभिश्च महात्मानं रक्ष्यमाणं समन्ततः १४
शयानं वीरशयने ददर्श नृपतिस्ततः
ततो रथादवारोहद्भ्रातृभिः सह धर्मराट् १५
अभिवाद्याथ कौन्तेयः पितामहमरिंदमम्
द्वैपायनादीन्विप्रांश्च तैश्च प्रत्यभिनन्दितः १६
ऋत्विग्भिर्ब्रह्मकल्पैश्च भ्रातृभिश्च सहाच्युतः
आसाद्य शरतल्पस्थमृषिभिः परिवारितम् १७
अब्रवीद्भरतश्रेष्ठं धर्मराजो युधिष्ठिरः

भ्रातृभिः सह कौरव्य शयानं निम्नगासुतम् १८
युधिष्ठिरोऽह नृपते नमस्ते जाह्नवीसुत
शृणोषि चेन्महाबाहो ब्रूहि किं करवाणि ते १९
प्राप्तोऽस्मि समये राजन्नग्नीनादाय ते बिभो
आचार्या ब्राह्मणाश्चैव ऋत्विजो भ्रातरश्च मे २०
पुत्रश्च ते महातेजा धृतराष्ट्रो जनेश्वरः
उपस्थितः सहामात्यो वासुदेवश्च वीर्यवान् २१
हतशिष्टाश्च राजानः सर्वे च कुरुजाङ्गलाः
तान्पश्य कुरुशार्दूल समुन्मीलय लोचने २२
यच्चेह किंचित्कर्तव्यं तत्सर्वं प्रापितं मया
यथोक्तं भवता काले सर्वमेव च तत्कृतम् २३
एवमुक्तस्तु गाङ्गेयः कुन्तीपुत्रेण धीमता
ददर्श भारतान्सर्वान्स्थितान्संपरिवार्य तम् २४
ततश्चलवलिर्भीष्मः प्रगृह्य विपुलं भुजम्
ओघमेघस्वरो वाग्मी काले वचनमब्रवीत् २५
दिष्ट्या प्राप्तोऽसि कौन्तेय सहामात्यो युधिष्ठिर
परिवृत्तो हि भगवान्सहस्रांशुर्दिवाकरः २६
अष्टपञ्चाशतं रात्र्यः शयानस्याद्य मे गताः
शरेषु निशिताग्रेषु यथा वर्षशतं तथा २७
माघोऽय समनुप्राप्तो मासः पुण्यो युधिष्ठिर
त्रिभागशेषः पक्षोऽय शुक्लो भवितुमर्हति २८
एवमुक्त्वा तु गाङ्गेयो धर्मपुत्रं युधिष्ठिरम्
धृतराष्ट्रमथामन्त्र्य काले वचनमब्रवीत् २९
राजन्विदितधर्मोऽसि सनिर्णीतार्थसंशयः
बहुश्रुता हि ते विप्रा बहवः पर्युपासिताः ३०
वेदशास्त्राणि सर्वाणि धर्मांश्च मनुजेश्वर
वेदांश्च चतुरः साङ्गान्निखिलेनावबुध्यसे ३१
न शोचितव्यं कौरव्य भवितव्यं हि तत्तथा
श्रुतं देवरहस्यं ते कृष्णद्वैपायनादपि ३२
यथा पाण्डोः सुता राजंस्तथैव तव धर्मतः

तान्पालय स्थितो धर्मे गुरुशुश्रूषणे रतान् ३३
धर्मराजो हि शुद्धात्मा निदेशे स्थास्यते तव
आनृशंस्यपरं ह्येनं जानामि गुरुवत्सलम् ३४
तव पुत्रा दुरात्मानः क्रोधलोभपरायणाः
ईर्ष्याभिभूता दुर्वृत्तास्तान्न शोचितुमर्हसि ३५
वैशम्पायन उवाच
एतावदुक्त्वा वचनं धृतराष्ट्रं मनीषिणम्
वासुदेवं महाबाहुमभ्यभाषत कौरवः ३६
भगवन्देवदेवेश सुरासुरनमस्कृत
त्रिविक्रम नमस्तेऽस्तु शङ्खचक्रगदाधर ३७
अनुजानीहि मां कृष्ण वैकुण्ठ पुरुषोत्तम
रक्ष्याश्च ते पाण्डवेया भवान्ह्येषां परायणम् ३८
उक्तवानस्मि दुर्बुद्धिं मन्दं दुर्योधनं पुरा
यतः कृष्णस्ततो धर्मो यतो धर्मस्ततो जयः ३९
वासुदेवेन तीर्थेन पुत्र संशाम्य पाण्डवैः
संधानस्य परः कालस्तवेति च पुनः पुनः ४०
न च मे तद्वचो मूढः कृतवान्स सुमन्दधीः
घातयित्वेह पृथिवीं ततः स निधनं गतः ४१
त्वां तु जानाम्यहं वीर पुराणमृषिसत्तमम्
नरेण सहितं देवं बदर्यां सुचिरोषितम् ४२
तथा मे नारदः प्राह व्यासश्च सुमहातपाः
नरनारायणावेतौ संभूतौ मनुजेष्विति ४३
वासुदेव उवाच
अनुजानामि भीष्म त्वां वसूनाप्नुहि पार्थिव
न तेऽस्ति वृजिनं किंचिन्मया दृष्टं महाद्युते ४४
पितृभक्तोऽसि राजर्षे मार्कण्डेय इवापरः
तेन मृत्युस्तव वशे स्थितो भृत्य इवानतः ४५
वैशम्पायन उवाच
एवमुक्तस्तु गाङ्गेयः पाण्डवानिदमब्रवीत्
धृतराष्ट्रमुखांश्चापि सर्वान्ससुहृदस्तथा ४६

प्राणानुत्स्रष्टुमिच्छामि तन्मानुज्ञातुमर्हथ
सत्ये प्रयतितव्यं वः सत्यं हि परमं बलम् ४७
आनृशंस्यपरैर्भाव्यं सदैव नियतात्मभिः
ब्रह्मण्यैर्धर्मशीलैश्च तपोनित्यैश्च भारत ४८
इत्युक्त्वा सुहृदः सर्वान्संपरिष्वज्य चैव ह
पुनरेवाब्रवीद्धीमान्युधिष्ठिरमिदं वचः ४९
ब्राह्मणाश्चैव ते नित्यं प्राज्ञाश्चैव विशेषतः
आचार्या ऋत्विजश्चैव पूजनीया नराधिप ५०
इति श्रीमहाभारते अनुशासनपर्वणि त्रिपञ्चाशदधिकशततमोऽध्यायः १५३

चतुःपञ्चाशदधिकशततमोऽध्यायः

वैशम्पायन उवाच
एवमुक्त्वा कुरून्सर्वान्भीष्मः शांतनवस्तदा
तूष्णीं बभूव कौरव्यः स मुहूर्तमरिंदम १
धारयामास चात्मानं धारणासु यथाक्रमम्
तस्योर्ध्वमगमन्प्राणाः संनिरुद्धा महात्मनः २
इदमाश्चर्यमासीच्च मध्ये तेषां महात्मनाम्
यद्यन्मुञ्चति गात्राणां स शंतनुसुतस्तदा
तत्तद्विशल्यं भवति योगयुक्तस्य तस्य वै ३
क्षणेन प्रेक्षतां तेषां निशल्यः सोऽभवत्तदा
तं दृष्ट्वा विस्मिताः सर्वे वासुदेवपुरोगमाः
सह तैर्मुनिभिः सर्वैस्तदा व्यासादिभिर्नृप ४
संनिरुद्धस्तु तेनात्मा सर्वेष्वायतनेषु वै
जगाम भित्त्वा मूर्धानं दिवमभ्युत्पपात च ५
महोल्केव च भीष्मस्य मूर्धदेशाज्जनाधिप
निःसृत्याकाशमाविश्य क्षणेनान्तरधीयत ६
एवं स नृपशार्दूल नृपः शांतनवस्तदा
समयुज्यत लोकैः स्वैर्भरतानां कुलोद्वहः ७
ततस्त्वादाय दारूणि गन्धांश्च विविधान्बहून्
चितां चक्रुर्महात्मानः पाण्डवा विदुरस्तथा

युयुत्सुश्चापि कौरव्यः प्रेक्षकास्त्वितरेऽभवन् ८
युधिष्ठिरस्तु गाङ्गेयं विदुरश्च महामतिः
छादयामासतुरुभौ क्षौमैर्माल्यैश्च कौरवम् ९
धारयामास तस्याथ युयुत्सुश्छत्रमुत्तमम्
चामरव्यजने शुभ्रे भीमसेनार्जुनावुभौ
उष्णीषे पर्यगृह्णीतां माद्रीपुत्रावुभौ तदा १०
स्त्रियः कौरवनाथस्य भीष्मं कुरुकुलोद्भवम्
तालवृन्तान्युपादाय पर्यवीजन्समन्ततः ११
ततोऽस्य विधिवच्चक्रुः पितृमेधं महात्मनः
याजका जुहुवुश्चाग्निं जगुः सामानि सामगाः १२
ततश्चन्दनकाष्ठैश्च तथा कालेयकैरपि
कालगरुप्रभृतिभिर्गन्धैश्चोच्चावचैस्तथा १३
समवच्छाद्य गाङ्गेयं प्रज्वाल्य च हुताशनम्
अपसव्यमकुर्वन्त धृतराष्ट्रमुखा नृपाः १४
संस्कृत्य च कुरुश्रेष्ठं गाङ्गेयं कुरुसत्तमाः
जग्मुर्भागीरथीतीरमृषिजुष्टं कुरूद्वहाः १५
अनुगम्यमाना व्यासेन नारदेनासितेन च
कृष्णेन भरतस्त्रीभिर्ये च पौराः समागताः १६
उदकं चक्रिरे चैव गाङ्गेयस्य महात्मनः
विधिवत्क्षत्रियश्रेष्ठाः स च सर्वो जनस्तदा १७
ततो भागीरथी देवी तनयस्योदके कृते
उत्थाय सलिलात्तस्माद्रुदती शोकलालसा १८
परिदेवयती तत्र कौरवानभ्यभाषत
निबोधत यथावृत्तमुच्यमानं मयानघाः १९
राजवृत्तेन संपन्नः प्रज्ञयाभिजनेन च
सत्कर्ता कुरुवृद्धानां पितृभक्तो दृढव्रतः २०
जामदग्न्येन रामेण पुरा यो न पराजितः
दिव्यैरस्त्रैर्महावीर्यः स हतोऽद्य शिखण्डिना २१
अश्मसारमयं नूनं हृदयं मम पार्थिवाः
अपश्यन्त्याः प्रियं पुत्रं यत्र दीर्यति मेऽद्य वै २२

समेतं पार्थिवं क्षत्रं काशिपुर्यां स्वयंवरे
विजित्यैकरथेनाजौ कन्यास्ता यो जहार ह २३
यस्य नास्ति बले तुल्यः पृथिव्यामपि कश्चन
हतं शिखण्डिना श्रुत्वा यन्न दीर्यति मे मनः २४
जामदग्न्यः कुरुक्षेत्रे युधि येन महात्मना
पीडितो नातियत्नेन निहतः स शिखण्डिना २५
एवंविधं बहु तदा विलपन्तीं महानदीम्
आश्वासयामास तदा साम्ना दामोदरो विभुः २६
समाश्वसिहि भद्रे त्वं मा शुचः शुभदर्शने
गतः स परमां सिद्धिं तव पुत्रो न संशयः २७
वसुरेष महातेजाः शापदोषेण शोभने
मनुष्यतामनुप्राप्तो नैनं शोचितुमर्हसि २८
स एष क्षत्रधर्मेण युध्यमानो रणाजिरे
धनंजयेन निहतो नैष नुन्नः शिखण्डिना २९
भीष्मं हि कुरुशार्दूलमुद्यतेषुं महारणे
न शक्तः संयुगे हन्तुं साक्षादपि शतक्रतुः ३०
स्वच्छन्देन सुतस्तुभ्यं गतः स्वर्गं शुभानने
न शक्ताः स्युर्निहन्तुं हि रणे तं सर्वदेवताः ३१
तस्मान्मा त्वं सरिच्छ्रेष्ठे शोचस्व कुरुनन्दनम्
वसूनेष गतो देवि पुत्रस्ते विज्वरा भव ३२
इत्युक्ता सा तु कृष्णेन व्यासेन च सरिद्वरा
त्यक्त्वा शोकं महाराज स्वं वार्यवततार ह ३३
सत्कृत्य ते तां सरितं ततः कृष्णमुखा नृपाः
अनुज्ञातास्त्या सर्वे न्यवर्तन्त जनाधिपाः ३४
इति श्रीमहाभारते अनुशासनपर्वणि चतुष्पञ्चाशदधिकशततमोऽध्यायः १५४

समाप्तं भीष्मस्वर्गारोहणपर्व समाप्तमनुशासनपर्व

अनुशासनपर्व सम्पूर्ण

श्रीगणेशाय नमः
ॐ नारायणं नमस्कृत्य नरं चैव नरोत्तमम्
देवीं सरस्वतीं चैव ततो जयमुदीरयेत्

## अथ प्रथमोऽध्यायः

वैशम्पायन उवाच
कृतोदकं तु राजानं धृतरष्ट्रं युधिष्ठिरः
पुरस्कृत्य महाबाहुरुत्तताराकुलेन्द्रियः १
उत्तीर्य च महीपालो बाष्पव्याकुललोचनः
पपात तीरे गङ्गाया व्याधविद्ध इव द्विपः २
तं सीदमानं जग्राह भीमः कृष्णेन चोदितः
मैवमित्यब्रवीच्चैनं कृष्णः परबलार्दनः ३
तमार्तं पतितं भूमौ निश्वसन्तं पुनः पुनः
ददृशुः पाण्डवा राजन्धर्मात्मानं युधिष्ठिरम् ४
तं दृष्ट्वा दीनमनसं गतसत्त्वं जनेश्वरम्
भूयः शोकसमाविष्टाः पाण्डवाः समुपाविशन् ५
राजा च धृतराष्ट्रस्तमुपासीनो महाभुजः
वाक्यमाह महाप्राज्ञो महाशोकप्रपीडितम् ६
उत्तिष्ठ कुरुशार्दूल कुरु कार्यमनन्तरम्
क्षत्रधर्मेण कौरव्य जितेयमवनिस्त्वया ७
तां भुङ्क्ष्व भ्रातृभिः सार्धं सुहृद्भिश्च जनेश्वर
न शोचितव्यं पश्यामि त्वया धर्मभृतां वर ८
शोचितव्यं मया चैव गान्धार्या च विशां पते
पुत्रैर्विहीनो राज्येन स्वप्नलब्धधनो यथा ९
अश्रुत्वा हितकामस्य विदुरस्य महात्मनः
वाक्यानि सुमहार्थानि परितप्यामि दुर्मतिः १०
उक्तवानेष मां पूर्वं धर्मात्मा दिव्यदर्शनः
दुर्योधनापराधेन कुलं ते विनशिष्यति ११
स्वस्ति चेदिच्छसे राजन्कुलस्यात्मन एव च
वध्यतामेष दुष्टात्मा मन्दो राजा सुयोधनः १२

कर्णश्च शकुनिश्चैव मैनं पश्यतु कर्हिचित्
द्यूतसंपातमप्येषामप्रमत्तो निवारय १३
अभिषेचय राजानं धर्मात्मानं युधिष्ठिरम्
स पालयिष्यति वशी धर्मेण पृथिवीमिमाम् १४
अथ नेच्छसि राजानं कुन्तीपुत्रं युधिष्ठिरम्
मेढीभूतः स्वयं राज्यं प्रतिगृह्णीष्व पार्थिव १५
समं सर्वेषु भूतेषु वर्तमानं नराधिप
अनुजीवन्तु सर्वे त्वां ज्ञातयो ज्ञातिवर्धन १६
एवं ब्रुवति कौन्तेय विदुरे दीर्घदर्शिनि
दुर्योधनमहं पापमन्ववर्तं वृथामतिः १७
अश्रुत्वा ह्यस्य वीरस्य वाक्यानि मधुराण्यहम्
फलं प्राप्य महद्दुःखं निमग्नः शोकसागरे १८
वृद्धौ हि ते स्वः पितरौ पश्यावां दुःखितौ नृप
न शोचितव्यं भवता पश्यामीह जनाधिप १९
इति श्रीमहाभारते आश्वमेधिकपर्वणि प्रथमोऽध्यायः १

## द्वितीयोऽध्यायः

वैशम्पायन उवाच
एवमुक्तस्तु राज्ञा स धृतराष्ट्रेण धीमता
तूष्णीं बभूव मेधावी तमुवाचाथ केशवः १
अतीव मनसा शोकः क्रियमाणो जनाधिप
संतापयति वैतस्य पूर्वप्रेतान्पितामहान् २
यजस्व विविधैर्यज्ञैर्बहुभिः स्वाप्तदक्षिणैः
देवांस्तर्पय सोमेन स्वधया च पितॄनपि ३
त्वद्विधस्य महाबुद्धे नैतदद्योपपद्यते
विदितं वेदितव्यं ते कर्तव्यमपि ते कृतम् ४
श्रुताश्च राजधर्मास्ते भीष्माद्भागीरथीसुतात्
कृष्णद्वैपायनाच्चैव नारदाद्विदुरात्तथा ५
नेमामर्हसि मूढानां वृत्तिं त्वमनुवर्तितुम्
पितृपैतामहीं वृत्तिमास्थाय धुरमुद्वह ६

युक्तं हि यशसा क्षत्रं स्वर्गं प्राप्तुमसंशयम्
न हि कश्चन शूराणां निहतोऽत्र पराङ्मुखः ७
त्यज शोकं महाराज भवितव्यं हि तत्तथा
न शक्यास्ते पुनर्द्रष्टुं त्वया ह्यस्मिन्रणे हताः ८
एतावदुक्त्वा गोविन्दो धर्मराजं युधिष्ठिरम्
विरराम महातेजास्तमुवाच युधिष्ठिरः ९
गोविन्द मयि या प्रीतिस्तव सा विदिता मम
सौहृदेन तथा प्रेम्णा सदा मामनुकम्पसे १०
प्रियं तु मे स्यात्सुमहत्कृतं चक्रगदाधर
श्रीमन्प्रीतेन मनसा सर्वं यादवनन्दन ११
यदि मामनुजानीयाद्भवान्गन्तुं तपोवनम्
न हि शान्तिं प्रपश्यामि घातयित्वा पितामहम्
कर्णं च पुरुषव्याघ्रं संग्रामेष्वपलायिनम् १२
कर्मणा येन मुच्येयमस्मात्क्रूरादरिंदम
कर्मणस्तद्विधत्स्वेह येन शुध्यति मे मनः १३
तमेवंवादिनं व्यासस्ततः प्रोवाच धर्मवित्
सान्त्वयन्सुमहातेजाः शुभं वचनमर्थवत् १४
अकृता ते मतिस्तात पुनर्बाल्येन मुह्यसे
किमाकाशे वयं सर्वे प्रलपाम मुहुर्मुहुः १५
विदिता क्षत्रधर्मास्ते येषां युद्धेन जीविका
यथा प्रवृत्तो नृपतिर्नाधिबन्धेन युज्यते १६
मोक्षधर्माश्च निखिला याथातथ्येन ते श्रुताः
असकृच्चैव संदेहाश्छिन्नास्ते कामजा मया १७
अश्रद्दधानो दुर्मेधा लुप्तस्मृतिरसि ध्रुवम्
मैवं भव न ते युक्तमिदमज्ञानमीदृशम् १८
प्रायश्चित्तानि सर्वाणि विदितानि च तेऽनघ
युद्धधर्माश्च ते सर्वे दानधर्माश्च ते श्रुताः १९
स कथं सर्वधर्मज्ञः सर्वागमविशारदः
परिमुह्यसि भूयस्त्वमज्ञानादिव भारत २०
इति श्रीमहाभारते आश्वमेधिकपर्वणि द्वितीयोऽध्यायः २

तृतीयोऽध्यायः

व्यास उवाच
युधिष्ठिर तव प्रज्ञा न सम्यगिति मे मतिः
न हि कश्चित्स्वयं मर्त्यः स्ववशः कुरुते क्रियाः १
ईश्वरेण नियुक्तोऽय साध्वसाधु च मानवः
करोति पुरुषः कर्म तत्र का परिदेवना २
आत्मानं मन्यसे चाथ पापकर्माणमन्ततः
शृणु तत्र यथा पापमपकृष्येत भारत ३
तपोभिः क्रतुभिश्चैव दानेन च युधिष्ठिर
तरन्ति नित्यं पुरुषा ये स्म पापानि कुर्वते ४
यज्ञेन तपसा चैव दानेन च नराधिप
पूयन्ते नरशार्दूल नरा दुष्कृतकर्मिणः ५
असुराश्च सुराश्चैव पुण्यहेतोर्मखक्रियाम्
प्रयतन्ते महात्मानस्तस्माद्यज्ञाः परायणम् ६
यज्ञैरेव महात्मानो बभूवुरधिकाः सुराः
ततो देवाः क्रियावन्तो दानवानभ्यधर्षयन् ७
राजसूयाश्वमेधौ च सर्वमेधं च भारत
नरमेधं च नृपते त्वमाहर युधिष्ठिर ८
यजस्व वाजिमेधेन विधिवद्दक्षिणावता
बहुकामान्नवित्तेन रामो दाशरथिर्यथा ९
यथा च भरतो राजा दौःषन्तिः पृथिवीपतिः
शाकुन्तलो महावीर्यस्तव पूर्वपितामहः १०
युधिष्ठिर उवाच
असंशयं वाजिमेधः पावयेत्पृथिवीमपि
अभिप्रायस्तु मे कश्चित्तं त्वं श्रोतुमिहार्हसि ११
इमं ज्ञातिवधं कृत्वा सुमहान्तं द्विजोत्तम
दानमल्पं न शक्यामि दातुं वित्तं च नास्ति मे १२
न च बालानिमान्दीनानुत्सहे वसु याचितुम्
तथैवार्द्रव्रणान्कृच्छ्रे वर्तमानान्नृपात्मजान् १३
स्वयं विनाश्य पृथिवीं यज्ञार्थे द्विजसत्तम

करमाहारयिष्यामि कथं शोकपरायणान् १४
दुर्योधनापराधेन वसुधा वसुधाधिपाः
प्रनष्टा योजयित्वास्मानकीर्त्या मुनिसत्तम १५
दुर्योधनेन पृथिवी क्षयिता वित्तकारणात्
कोशश्चापि विशीर्णोऽसौ धार्तराष्ट्रस्य दुर्मतेः १६
पृथिवी दक्षिणा चात्र विधिः प्रथमकल्पिकः
विद्वद्भिः परिदृष्टोऽय शिष्टो विधिविपर्ययः १७
न च प्रतिनिधिं कर्तुं चिकीर्षामि तपोधन
अत्र मे भगवन्सम्यक्साचिव्यं कर्तुमर्हसि १८
वैशम्पायन उवाच
एवमुक्तस्तु पार्थेन कृष्णद्वैपायनस्तदा
मुहूर्तमनुसंचिन्त्य धर्मराजानमब्रवीत् १९
विद्यते द्रविणं पार्थ गिरौ हिमवति स्थितम्
उत्सृष्टं ब्राह्मणैर्यज्ञे मरुत्तस्य महीपतेः
तदानयस्व कौन्तेय पर्याप्तं तद्भविष्यति २०
युधिष्ठिर उवाच
कथं यज्ञे मरुत्तस्य द्रविणं तत्समाचितम्
कस्मिंश्च काले स नृपो बभूव वदतां वर २१
व्यास उवाच
यदि शुश्रूषसे पार्थ शृणु कारंधमं नृपम्
यस्मिन्काले महावीर्यः स राजासीन्महाधनः २२
इति श्रीमहाभारते आश्वमेधिकपर्वणि तृतीयोऽध्यायः ३

चतुर्थोऽध्यायः

युधिष्ठिर उवाच
शुश्रूषे तस्य धर्मज्ञ राजर्षेः परिकीर्तनम्
द्वैपायन मरुत्तस्य कथां प्रब्रूहि मेऽनघ १
व्यास उवाच
आसीत्कृतयुगे पूर्वं मनुर्दण्डधरः प्रभुः
तस्य पुत्रो महेष्वासः प्रजातिरिति विश्रुतः २

प्रजातेरभवत्पुत्रः क्षुप इत्यभिविश्रुतः
क्षुपस्य पुत्रस्त्विक्ष्वाकुर्महीपालोऽभवत्प्रभुः ३
तस्य पुत्रशतं राजन्नासीत्परमधार्मिकम्
तांस्तु सर्वान्महीपालानिक्ष्वाकुरकरोत्प्रभुः ४
तेषां ज्येष्ठस्तु विंशोऽभूत्प्रतिमानं धनुष्मताम्
विंशस्य पुत्रः कल्याणो विविंशो नाम भारत ५
विविंशस्य सुता राजन्बभूवुर्दश पञ्च च
सर्वे धनुषि विक्रान्ता ब्रह्मण्याः सत्यवादिनः ६
दानधर्मरताः सन्तः सततं प्रियवादिनः
तेषां ज्येष्ठः खनीनेत्रः स तान्सर्वानपीडयत् ७
खनीनेत्रस्तु विक्रान्तो जित्वा राज्यमकण्टकम्
नाशक्नोद्रक्षितुं राज्यं नान्वरज्यन्त तं प्रजाः ८
तमपास्य च तद्राष्ट्रं तस्य पुत्रं सुवर्चसम्
अभ्यषिञ्चत राजेन्द्र मुदितं चाभवत्तदा ९
स पितुर्विक्रियां दृष्ट्वा राज्यान्निरसनं तथा
नियतो वर्तयामास प्रजाहितचिकीर्षया १०
ब्रह्मण्यः सत्यवादी च शुचिः शमदमान्वितः
प्रजास्तं चान्वरज्यन्त धर्मनित्यं मनस्विनम् ११
तस्य धर्मप्रवृत्तस्य व्यशीर्यत्कोशवाहनम्
तं क्षीणकोशं सामन्ताः समन्तात्पर्यपीडयन् १२
स पीड्यमानो बहुभिः क्षीणकोशस्त्ववाहनः
आर्तिमार्छत्परां राजा सह भृत्यैः पुरेण च १३
न चैनं परिहर्तुं तेऽशक्नुवन्परिसंक्षये
सम्यग्वृत्तो हि राजा स धर्मनित्यो युधिष्ठिर १४
यदा तु परमामार्तिं गतोऽसौ सपुरो नृपः
ततः प्रदध्मौ स करं प्रादुरासीत्ततो बलम् १५
ततस्तानजयत्सर्वान्प्रातिसीमान्नराधिपान्
एतस्मात्कारणाद्राजन्विश्रुतः स करंधमः १६
तस्य कारंधमः पुत्रस्त्रेतायुगमुखेऽभवत्
इन्द्रादनवरः श्रीमान्देवैरपि सुदुर्जयः १७

तस्य सर्वे महीपाला वर्तन्ते स्म वशे तदा
स हि सम्राडभूत्तेषां वृत्तेन च बलेन च १८
अविक्षिन्नाम धर्मात्मा शौर्येणेन्द्रसमोऽभवत्
यज्ञशीलः कर्मरतिर्धृतिमान्संयतेन्द्रियः १९
तेजसादित्यसदृशः क्षमया पृथिवीसमः
बृहस्पतिसमो बुद्ध्या हिमवानिव सुस्थिरः २०
कर्मणा मनसा वाचा दमेन प्रशमेन च
मनांस्याराधयामास प्रजानां स महीपतिः २१
य ईजे हयमेधानां शतेन विधिवत्प्रभुः
याजयामास यं विद्वान्स्वयमेवाङ्गिराः प्रभुः २२
तस्य पुत्रोऽतिचक्राम पितरं गुणवत्तया
मरुत्तो नाम धर्मज्ञश्चक्रवर्ती महायशाः २३
नागायुतसमप्राणः साक्षाद्विष्णुरिवापरः
स यक्ष्यमाणो धर्मात्मा शातकुम्भमयान्युत
कारयामास शुभ्राणि भाजनानि सहस्रश २४
मेरुं पर्वतमासाद्य हिमवत्पार्श्व उत्तरे
काञ्चनः सुमहान्पादस्तत्र कर्म चकार सः २५
ततः कुण्डानि पात्रीश्च पिठराण्यासनानि च
चक्रुः सुवर्णकर्तारो येषां संख्या न विद्यते २६
तस्यैव च समीपे स यज्ञवाटो बभूव ह
ईजे तत्र स धर्मात्मा विधिवत्पृथिवीपतिः
मरुत्तः सहितैः सर्वैः प्रजापालैर्नराधिपः २७
इति श्रीमहाभारते आश्वमेधिकपर्वणि चतुर्थोऽध्यायः ४

## पञ्चमोऽध्यायः

युधिष्ठिर उवाच
कथंवीर्यः समभवत्स राजा वदतां वरः
कथं च जातरूपेण समयुज्यत स द्विज १
क्व च तत्सांप्रतं द्रव्यं भगवन्नवतिष्ठते
कथं च शक्यमस्माभिस्तदवाप्तुं तपोधन २

व्यास उवाच
असुराश्चैव देवाश्च दक्षस्यासन्प्रजापतेः
अपत्यं बहुलं तात तेऽस्पर्धन्त परस्परम् ३
तथैवाङ्गिरसः पुत्रौ व्रततुल्यौ बभूवतुः
बृहस्पतिर्बृहत्तेजाः संवर्तश्च तपोधनः ४
तावपि स्पर्धिनौ राजन्पृथगास्तां परस्परम्
बृहस्पतिश्च संवर्तं बाधते स्म पुनः पुनः ५
स बाध्यमानः सततं भ्रात्रा ज्येष्ठेन भारत
अर्थानुत्सृज्य दिग्वासा वनवासमरोचयत् ६
वासवोऽप्यसुरान्सर्वान्निर्जित्य च निहत्य च
इन्द्रत्वं प्राप्य लोकेषु ततो वव्रे पुरोहितम्
पुत्रमङ्गिरसो ज्येष्ठं विप्रश्रेष्ठं बृहस्पतिम् ७
याज्यस्त्वङ्गिरसः पूर्वमासीद्राजा करंधमः
वीर्येणाप्रतिमो लोके वृत्तेन च बलेन च
शतक्रतुरिवौजस्वी धर्मात्मा संशितव्रतः ८
वाहनं यस्य योधाश्च द्रव्याणि विविधानि च
ध्यानादेवाभवद्राजन्मुखवातेन सर्वशः ९
स गुणैः पार्थिवान्सर्वान्वशे चक्रे नराधिपः
संजीव्य कालमिष्टं च सशरीरो दिवं गतः १०
बभूव तस्य पुत्रस्तु ययातिरिव धर्मवित्
अविक्षिन्नाम शत्रुक्षित्स वशे कृतवान्महीम्
विक्रमेण गुणैश्चैव पितेवासीत्स पार्थिवः ११
तस्य वासवतुल्योऽभून्मरुत्तो  नाम वीर्यवान्
पुत्रस्तमनुरक्ताभूत्पृथिवी सागराम्बरा १२
स्पर्धते सततं स स्म देवराजेन पार्थिवः
वासवोऽपि मरुत्तेन स्पर्धते पाण्डुनन्दन १३
शुचिः स गुणवानासीन्मरुत्तः पृथिवीपतिः
यतमानोऽपि यं शक्रो न विशेषयति स्म ह १४
सोऽशक्नुवन्विशेषाय समाहूय बृहस्पतिम्
उवाचेदं वचो देवैः सहितो हरिवाहनः १५

बृहस्पते मरुत्तस्य मा स्म कार्षीः कथंचन
दैवं कर्माथ वा पित्र्यं कर्तासि मम चेत्प्रियम् १६
अहं हि त्रिषु लोकेषु सुराणां च बृहस्पते
इन्द्रत्वं प्राप्तवानेको मरुत्तस्तु महीपतिः १७
कथं ह्यमर्त्यं ब्रह्मंस्त्वं याजयित्वा सुराधिपम्
याजयेर्मृत्युसंयुक्तं मरुत्तमविशङ्कया १८
मां वा वृणीष्व भद्रं ते मरुत्तं वा महीपतिम्
परित्यज्य मरुत्तं वा यथाजोषं भजस्व माम् १९
एवमुक्तः स कौरव्य देवराज्ञा बृहस्पतिः
मुहूर्तमिव संचिन्त्य देवराजानमब्रवीत् २०
त्वं भूतानामधिपतिस्त्वयि लोकाः प्रतिष्ठिताः
नमुचेर्विश्वरूपस्य निहन्ता त्वं बलस्य च २१
त्वमाजहर्थ देवानामेको वीर श्रियं पराम्
त्वं बिभर्षि भुवं द्यां च सदैव बलसूदन २२
पौरोहित्यं कथं कृत्वा तव देवगणेश्वर
याजयेयमहं मर्त्यं मरुत्तं पाकशासन २३
समाश्वसिहि देवेश नाहं मर्त्याय कर्हिचित्
ग्रहीष्यामि स्रुवं यज्ञे शृणु चेदं वचो मम २४
हिरण्यरेतसोऽम्भ स्यात्परिवर्तेत मेदिनी
भासं च न रविः कुर्यान्मत्सत्यं विचलेद्यदि २५
बृहस्पतिवचः श्रुत्वा शक्रो विगतमत्सरः
प्रशस्यैनं विवेशाथ स्वमेव भवनं तदा २६
इति श्रीमहाभारते आश्वमेधिकपर्वणि पञ्चमोऽध्यायः ५

## षष्ठोऽध्यायः

व्यास उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
बृहस्पतेश्च संवादं मरुत्तस्य च भारत १
देवराजस्य समयं कृतमाङ्गिरसेन ह
श्रुत्वा मरुत्तो नृपतिर्मन्युमाहारयत्तदा २

संकल्प्य मनसा यज्ञं करंधमसुतात्मजः
बृहस्पतिमुपागम्य वाग्मी वचनमब्रवीत् ३
भगवन्यन्मया पूर्वमभिगम्य तपोधन
कृतोऽभिसंधिर्यज्ञाय भवतो वचनाद्गुरो ४
तमहं यष्टुमिच्छामि संभाराः संभृताश्च मे
याज्योऽस्मि भवतः साधो तत्प्राप्नुहि विधत्स्व च ५
बृहस्पतिरुवाच
न कामये याजयितुं त्वामहं पृथिवीपते
वृतोऽस्मि देवराजेन प्रतिज्ञातं च तस्य मे ६
मरुत्त उवाच
पित्र्यमस्मि तव क्षेत्रं बहु मन्ये च ते भृशम्
न चास्म्ययाज्यतां प्राप्तो भजमानं भजस्व माम् ७
बृहस्पतिरुवाच
अमर्त्यं याजयित्वाहं याजयिष्ये न मानुषम्
मरुत्त गच्छ वा मा वा निवृत्तोऽस्म्यद्य याजनात् ८
न त्वां याजयितास्म्यद्य वृणु त्वं यमिहेच्छसि
उपाध्यायं महाबाहो यस्ते यज्ञं करिष्यति ९
व्यास उवाच
एवमुक्तस्तु नृपतिर्मरुत्तो व्रीडितोऽभवत्
प्रत्यागच्छच्च संविग्नो ददर्श पथि नारदम् १०
देवर्षिणा समागम्य नारदेन स पार्थिवः
विधिवत्प्राञ्जलिस्तस्थावथैनं नारदोऽब्रवीत् ११
राजर्षे नातिहृष्टोऽसि कच्चित्क्षेमं तवानघ
क्व गतोऽसि कुतो वेदमप्रीतिस्थानमागतम् १२
श्रोतव्यं चेन्मया राजन्ब्रूहि मे पार्थिवर्षभ
व्यपनेष्यामि ते मन्युं सर्वयत्नैर्नराधिप १३
एवमुक्तो मरुत्तस्तु नारदेन महर्षिणा
विप्रलम्भमुपाध्यायात्सर्वमेव न्यवेदयत् १४
गतोऽस्म्यङ्गिरसः पुत्रं देवाचार्यं बृहस्पतिम्
यज्ञार्थमृत्विजं द्रष्टुं स च मां नाभ्यनन्दत १५

प्रत्याख्यातश्च तेनाहं जीवितुं नाद्य कामये
परित्यक्तश्च गुरुणा दूषितश्चास्मि नारद १६
एवमुक्तस्तु राज्ञा स नारदः प्रत्युवाच ह
आविद्धितं महाराज वाचा संजीवयन्निव १७
राजन्नङ्गिरसः पुत्रः संवर्तो नाम धार्मिकः
चङ्क्रमीति दिशः सर्वा दिग्वासा मोहयन्प्रजाः १८
तं गच्छ यदि याज्यं त्वां न वाञ्छति बृहस्पतिः
प्रसन्नस्त्वां महाराज संवर्तो याजयिष्यति १९
मरुत्त उवाच
संजीवितोऽह भवता वाक्येनानेन नारद
पश्येयं क्व नु संवर्तं शंस मे वदतां वर २०
कथं च तस्मै वर्तेयं कथं मां न परित्यजेत्
प्रत्याख्यातश्च तेनापि नाहं जीवितुमुत्सहे २१
नारद उवाच
उन्मत्तवेषं बिभ्रत्स चङ्क्रमीति यथासुखम्
वाराणसीं तु नगरीमभीक्ष्णमुपसेवते २२
तस्या द्वारं समासाद्य न्यसेथाः कुणपं क्वचित्
तं दृष्ट्वा यो निवर्तेत स संवर्तो महीपते २३
तं पृष्ठतोऽनुगच्छेथा यत्र गच्छेत्स वीर्यवान्
तमेकान्ते समासाद्य प्राञ्जलि शरणं व्रजेः २४
पृच्छेत्त्वां यदि केनाहं तवाख्यात इति स्म ह
ब्रूयास्त्वं नारदेनेति संतप्त इव शत्रुहन् २५
स चेत्त्वामनुयुञ्जीत ममाभिगमनेप्सया
शंसेथा बह्निमारूढं मामपि त्वमशङ्कया २६
व्यास उवाच
स तथेति प्रतिश्रुत्य पूजयित्वा च नारदम्
अभ्यनुज्ञाय राजर्षिर्ययौ वाराणसीं पुरीम् २७
तत्र गत्वा यथोक्तं स पुर्या द्वारे महायशाः
कुणपं स्थापयामास नारदस्य वचः स्मरन् २८
यौगपद्येन  विप्रश्च स पुरीद्वारमाविशत्

ततः स कुणपं दृष्ट्वा सहसा स न्यवर्तत २९
स तं निवृत्तमालक्ष्य प्राञ्जलि पृष्ठतोऽन्वगात्
आविक्षितो महीपालः संवर्तमुपशिक्षितुम् ३०
स एनं विजने दृष्ट्वा पांसुभिः कर्दमेन च
श्लेष्मणा चापि राजानं ष्ठीवनैश्च समाकिरत् ३१
स तथा बाध्यमानोऽपि संवर्तेन महीपतिः
अन्वगादेव तमृषिं प्राञ्जलि संप्रसादयन् ३२
ततो निवृत्य संवर्तः परिश्रान्त उपाविशत्
शीतलच्छायमासाद्य न्यग्रोधं बहुशाखिनम् ३३
इति श्रीमहाभारते आश्वमेधिकपर्वणि षष्ठोऽध्यायः ६

सप्तमोऽध्यायः

संवर्त उवाच
कथमस्मि त्वया ज्ञातः केन वा कथितोऽसि ते
एतदाचक्ष्व मे तत्त्वमिच्छसे चेत्प्रियं मम १
सत्यं ते ब्रुवतः सर्वे संपत्स्यन्ते मनोरथाः
मिथ्या तु ब्रुवतो मूर्धा सप्तधा ते फलिष्यति २
मरुत्त उवाच
नारदेन भवान्मह्यमाख्यातो ह्यटता पथि
गुरुपुत्रो ममेति त्वं ततो मे प्रीतिरुत्तमा ३
संवर्त उवाच
सत्यमेतद्भवानाह स मां जानाति सत्रिणम्
कथयस्वैतदेकं मेक्व नु संप्रति नारदः ४
मरुत्त उवाच
भवन्तं कथयित्वा तु मम देवर्षिसत्तमः
ततो मामभ्यनुज्ञाय प्रविष्टो हव्यवाहनम् ५
व्यास उवाच
श्रुत्वा तु पार्थिवस्यैतत्संवर्तः परया मुदा
एतावदहमप्येनं कुर्यामिति तदाब्रवीत् ६
ततो मरुत्तमुन्मत्तो वाचा निर्भर्त्सयन्निव

रूक्षया ब्राह्मणो राजन्पुनः पुनरथाब्रवीत् ७
वातप्रधानेन मया स्वचित्तवशवर्तिना
एवं विकृतरूपेण कथं याजितुमिच्छसि ८
भ्राता मम समर्थश्च वासवेन च सत्कृतः
वर्तते याजने चैव तेन कर्माणि कारय ९
गृहं स्वं चैव याज्याश्च सर्वा गृह्याश्च देवताः
पूर्वजेन ममाक्षिप्तं शरीरं वर्जितं त्विदम् १०
नाहं तेनाननुज्ञातस्त्वामाविक्षित कर्हिचित्
याजयेयं कथंचिद्वै स हि पूज्यतमो मम ११
स त्वं बृहस्पतिं गच्छ तमनुज्ञाप्य चाव्रज
ततोऽह याजयिष्ये त्वां यदि यष्टुमिहेच्छसि १२
मरुत्त उवाच
बृहस्पतिं गतः पूर्वमहं संवर्त तच्छृणु
न मां कामयते याज्यमसौ वासववारितः १३
अमरं याज्यमासाद्य मामृषे मा स्म मानुषम्
याजयेथा मरुत्तं त्वं मर्त्यधर्माणमातुरम् १४
स्पर्धते च मया विप्र सदा वै स हि पार्थिवः
एवमस्त्विति चाप्युक्तो भ्रात्रा ते बलवृत्रहा १५
स मामभिगतं प्रेम्णा याज्यवन्न बुभूषति
देवराजमुपाश्रित्य तद्विद्धि मुनिपुङ्गव १६
सोऽहमिच्छामि भवता सर्वस्वेनापि याजितुम्
कामये समतिक्रान्तुं वासवं त्वत्कृतैर्गुणैः १७
न हि मे वर्तते बुद्धिर्गन्तुं ब्रह्मन्बृहस्पतिम्
प्रत्याख्यातो हि तेनास्मि तथानपकृते सति १८
संवर्त उवाच
चिकीर्षसि यथाकामं सर्वमेतत्त्वयि ध्रुवम्
यदि सर्वानभिप्रायान्कर्तासि मम पार्थिव १९
याज्यमानं मया हि त्वां बृहस्पतिपुरंदरौ
द्विषेतां समभिक्रुद्धावेतदेकं समर्थय २०
स्थैर्यमत्र कथं ते स्यात्स त्वं निःसंशयं कुरु

कुपितस्त्वां न हीदानीं भस्म कुर्यां सबान्धवम् २१
मरुत्त उवाच
यावत्तपेत्सहस्रांशुस्तिष्ठेरंश्चापि पर्वताः
तावल्लोकान्न लभेयं त्यजेयं संगतं यदि २२
मा चापि शुभबुद्धित्वं लभेयमिह कर्हिचित्
सम्यग्ज्ञाने वैषये वा त्यजेयं संगतं यदि २३
संवर्त उवाच
आविक्षित शुभा बुद्धिर्धीयतां तव कर्मसु
याजनं हि मामप्येवं वर्तते त्वयि पार्थिव २४
संविधास्ये च ते राजन्नक्षयं द्रव्यमुत्तमम्
येन देवान्सगन्धर्वाञ्शक्रं चाभिभविष्यसि २५
न तु मे वर्तते बुद्धिर्धने याज्येषु वा पुनः
विप्रियं तु चिकीर्षामि भ्रातुश्चेन्द्रस्य चोभयोः २६
गमयिष्यामि चेन्द्रेण समतामपि ते ध्रुवम्
प्रियं च ते करिष्यामि सत्यमेतद्ब्रवीमि ते २७

इति श्रीमहाभारते आश्वमेधिकपर्वणि सप्तमोऽध्यायः ७

## अष्टमोऽध्यायः

संवर्त उवाच
गिरेर्हिमवतः पृष्ठे मुञ्जवान्नाम पर्वतः
तप्यते यत्र भगवांस्तपो नित्यमुमापतिः १
वनस्पतीनां मूलेषु टङ्केषु शिखरेषु च
गुहासु शैलराजस्य यथाकामं यथासुखम् २
उमासहायो भगवान्यत्र नित्यं महेश्वरः
आस्ते शूली महातेजा नानाभूतगणावृतः ३
तत्र रुद्राश्च साध्याश्च विश्वेऽथ वसवस्तथा
यमश्च वरुणश्चैव कुबेरश्च सहानुगः ४
भूतानि च पिशाचाश्च नासत्यावश्विनावपि
गन्धर्वाप्सरसश्चैव यक्षा देवर्षयस्तथा ५
आदित्या मरुतश्चैव यातुधानाश्च सर्वशः

उपासन्ते महात्मानं बहुरूपमुमापतिम् ६
रमते भववांस्तत्र कुबेरानुचरैः सह
विकृतैर्विकृताकारैः क्रीडद्भिः पृथिवीपते
श्रिया ज्वलन्दृश्यते वै बालादित्यसमद्युतिः ७
न रूपं ते दृश्य तस्य संस्थानं वा कथंचन
निर्देष्टुं प्राणिभिः कैश्चित्प्राकृतैर्मांसलोचनैः ८
नोष्णं न शिशिरं तत्र न वायुर्न च भास्करः
न जरा क्षुत्पिपासे वा न मृत्युर्न भयं नृप ९
तस्य शैलस्य पार्श्वेषु सर्वेषु जयतां वर
धातवो जातरूपस्य रश्मयः सवितुर्यथा १०
रक्ष्यन्ते ते कुबेरस्य सहायैरुद्यतायुधैः
चिकीर्षद्भिः प्रियं राजन्कुबेरस्य महात्मनः ११
तस्मै भगवते कृत्वा नमः शर्वाय वेधसे
रुद्राय शितिकण्ठाय सुरूपाय सुवर्चसे १२
कपर्दिने करालाय हर्यक्ष्णे वरदाय च
त्र्यक्ष्णे पूष्णो दन्तभिदे वामनाय शिवाय च १३
याम्यायाव्यक्तकेशाय सद्वृत्ते शंकराय च
क्षेम्याय हरिनेत्राय स्थाणवे पुरुषाय च १४
हरिकेशाय मुण्डाय कृशायोत्तारणाय च
भास्कराय सुतीर्थाय देवदेवाय रंहसे १५
उष्णीषिणे सुवक्त्राय सहस्राक्षाय मीढुषे
गिरिशाय प्रशान्ताय यतये चीरवाससे १६
बिल्वदण्डाय सिद्धाय सर्वदण्डधराय च
मृगव्याधाय महते धन्विनेऽथ भवाय च १७
वराय सौम्यवक्त्राय पशुहस्ताय वर्षिणे
हिरण्यबाहवे राजन्नुग्राय पतये दिशाम् १८
पशूनां पतये चैव भूतानां पतये तथा
वृषाय मातृभक्ताय सेनान्ये मध्यमाय च १९
स्रुवहस्ताय पतये धन्विने भार्गवाय च
अजाय कृष्णनेत्राय विरूपाक्षाय चैव ह २०

तीक्ष्णदंष्ट्राय तीक्ष्णाय वैश्वानरमुखाय च
महाद्युतयेऽनङ्गाय सर्वाङ्गाय प्रजावते २१
तथा शुक्राधिपतये पृथवे कृत्तिवाससे
कपालमालिने नित्यं सुवर्णमुकुटाय च २२
महादेवाय कृष्णाय त्र्यम्बकायानघाय च
क्रोधनाय नृशंसाय मृदवे बाहुशालिने २३
दण्डिने तप्ततपसे तथैव क्रूरकर्मणे
सहस्रशिरसे चैव सहस्रचरणाय च
नमः स्वधास्वरूपाय बहुरूपाय दंष्ट्रिणे २४
पिनाकिनं महादेवं महायोगिनमव्ययम्
त्रिशूलपाणिं वरदं त्र्यम्बकं भुवनेश्वरम् २५
त्रिपुरघ्नं त्रिनयनं त्रिलोकेशं महौजसम्
प्रभवं सर्वभूतानां धारणं धरणीधरम् २६
ईशानं शङ्करं शर्वं शिवं विश्वेश्वरं भवम्
उमापतिं पशुपतिं विश्वरूपं महेश्वरम् २७
विरूपाक्षं दशभुजं तिष्यगोवृषभध्वजम्
उग्रं स्थाणुं शिवं घोरं शर्वं गौरीशमीश्वरम् २८
शितिकण्ठमजं शुक्रं पृथुं पृथुहरं हरम्
विश्वरूपं विरूपाक्षं बहुरूपमुमापतिम् २९
प्रणम्य शिरसा देवमनङ्गाङ्गहरं हरम्
शरण्यं शरणं याहि महादेवं चतुर्मुखम् ३०
एवं कृत्वा नमस्तस्मै महादेवाय रंहसे
महात्मने क्षितिपते तत्सुवर्णमवाप्स्यसि
सुवर्णमाहरिष्यन्तस्तत्र गच्छन्तु ते नराः ३१
व्यास उवाच
इत्युक्तः स वचस्तस्य चक्रे कारंधमात्मजः
ततोऽतिमानुषं सर्वं चक्रे यज्ञस्य संविधिम्
सौवर्णानि च भाण्डानि संचक्रुस्तत्र शिल्पिनः ३२
बृहस्पतिस्तु तां श्रुत्वा मरुत्तस्य महीपतेः
समृद्धिमति देवेभ्यः संतापमकरोद्भृशम् ३३

स तप्यमानो वैवर्ण्यं कृशत्वं चागमत्परम्
भविष्यति हि मे शत्रुः संवर्तो वसुमानिति ३४
तं श्रुत्वा भृशसंतप्तं देवराजो बृहस्पतिम्
अभिगम्यामरवृतः प्रोवाचेदं वचस्तदा ३५
इति श्रीमहाभारते आश्वमेधिकपर्वणि अष्टमोऽध्यायः ८

## नवमोऽध्यायः

इन्द्र उवाच
कच्चित्सुखं स्वपिषि त्वं बृहस्पते कच्चिन्मनोज्ञाः परिचारकास्ते
कच्चिद्देवानां सुखकामोऽसि विप्र कच्चिद्देवास्त्वां परिपालयन्ति १
बृहस्पतिरुवाच
सुखं शयेऽहं शयने महेन्द्र तथा मनोज्ञाः परिचारका मे
तथा देवानां सुखकामोऽस्मि शक्र देवाश्च मां सुभृशं पालयन्ति २
इन्द्र उवाच
कुतो दुःखं मानसं देहजं वा पाण्डुर्विवर्णश्च कुतस्त्वमद्य
आचक्ष्व मे तद्द्विज यावदेतान्निहन्मि सर्वांस्तव दुःखकर्तॄन् ३
बृहस्पतिरुवाच
मरुत्तमाहुर्मघवन्यक्ष्यमाणं महायज्ञेनोत्तमदक्षिणेन
तं संवर्तो याजयितेति मे श्रुतं तदिच्छामि न स तं याजयेत ४
इन्द्र उवाच
सर्वान्कामाननुजातोऽसि विप्र यस्त्वं देवानां मन्त्रयसे पुरोधाः
उभौ च ते जन्ममृत्यू व्यतीतौ किं संवर्तस्तव कर्ताद्य विप्र ५
बृहस्पतिरुवाच
देवैः सह त्वमसुरान्संप्रणुद्य जिघांससेऽद्याप्युत सानुबन्धान्
यं यं समृद्धं पश्यसि तत्र तत्र दुःखं सपत्नेषु समृद्धभावः ६
अतोऽस्मि देवेन्द्र विवर्णरूपः सपत्नो मे वर्धते तन्निशम्य
सर्वोपायैर्मघवन्संनियच्छ संवर्तं वा पार्थिवं वा मरुत्तम् ७
इन्द्र उवाच
एहि गच्छ प्रहितो जातवेदो बृहस्पतिं परिदातुं मरुत्ते
अयं वै त्वा याजयिता बृहस्पतिस्तथामरं चैव करिष्यतीति ८

अग्निरुवाच
अयं गच्छामि तव शक्राद्य दूतो बृहस्पतिं परिदातुं मरुत्ते
वाचं सत्यां पुरुहूतस्य कर्तुं बृहस्पतेश्चापचितिं चिकीर्षुः ९
व्यास उवाच
ततः प्रायाद्धूमकेतुर्महात्मा वनस्पतीन्वीरुधश्चावमृद्नन्
कामाद्धिमान्ते परिवर्तमानः काष्ठातिगो मातरिश्वेव नर्दन् १०
मरुत्त उवाच
आश्चर्यमद्य पश्यामि रूपिणं वह्निमागतम्
आसनं सलिलं पाद्यं गां चोपानय वै मुने ११
अग्निरुवाच
आसनं सलिलं पाद्यं प्रतिनन्दामि तेऽनघ
इन्द्रेण तु समादिष्टं विद्धि मां दूतमागतम् १२
मरुत्त उवाच
कच्चिच्छ्रीमान्देवराजः सुखी च कच्चिच्चास्मान्प्रीयते धूमकेतो
कच्चिद्देवाश्चास्य वशे यथावत्तद्ब्रूहि त्वं मम कार्त्स्न्येन देव १३
अग्निरुवाच
शक्रो भृशं सुसुखी पार्थिवेन्द्र प्रीतिं चेच्छत्यजरां वै त्वया सः
देवाश्च सर्वे वशगास्तस्य राजन्संदेशं त्वं शृणु मे देवराज्ञः १४
यदर्थं मां प्राहिणोत्त्वत्सकाशं बृहस्पतिं परिदातुं मरुत्ते
अयं गुरुर्याजयिता नृप त्वां मर्त्यं सन्तममरं त्वां करोतु १५
मरुत्त उवाच
संवर्तोऽयं याजयिता द्विजो मे बृहस्पतेरञ्जलिरेष तस्य
नासौ देवं याजयित्वा महेन्द्रं मर्त्यं सन्तं याजयन्नद्य शोभेत् १६
अग्निरुवाच
ये वै लोका देवलोके महान्तः संप्राप्स्यसे तान्देवराजप्रसादात्
त्वां चेदसौ याजयेद्वै बृहस्पतिर्नूनं स्वर्गं त्वं जयेः कीर्तियुक्तः १७
तथा लोका मानुषा ये च दिव्याः प्रजापतेश्चापि ये वै महान्तः
ते ते जिता देवराज्यं च कृत्स्नं बृहस्पतिश्चेद्याजयेत्त्वां नरेन्द्र १८
संवर्त उवाच
मास्मानेवं त्वं पुनरागाः कथंचिद्बृहस्पतिं परिदातुं मरुत्ते

मा त्वां धक्ष्ये चक्षुषा दारुणेन संक्रुद्धोऽह पावक तन्निबोध १९
व्यास उवाच
ततो देवानगमद्धूमकेतुर्दाहाद्भीतो व्यथितोऽश्वत्थपर्णवत्
तं वै दृष्ट्वा प्राह शक्रो महात्मा बृहस्पतेः संनिधौ हव्यवाहम् २०
यत्त्वं गतः प्रहितो जातवेदो बृहस्पतिं परिदातुं मरुत्ते
तत्किं प्राह स नृपो यक्ष्यमाणः कच्चिद्वचः प्रतिगृह्णाति तच्च २१ अग्निरुवाच
न ते वाचं रोचयते मरुत्तो बृहस्पतेरञ्जलि प्राहिणोत्सः
संवर्तो मां याजयितेत्यभीक्ष्णं पुनः पुनः स मया प्रोच्यमानः २२
उवाचेदं मानुषा ये च दिव्याः प्रजापतेर्ये च लोका महान्तः
तांश्चेल्लभेयं संविदं तेन कृत्वा तथापि नेच्छेयमिति प्रतीतः २३
इन्द्र उवाच
पुनर्भवान्पार्थिव तं समेत्य वाक्यं मदीयं प्रापय स्वार्थयुक्तम्
पुनर्यद्युक्तो न करिष्यते वचस्ततो वज्रं संप्रहर्तास्मि तस्मै २४
अग्निरुवाच
गन्धर्वराड्यात्वयं तत्र दूतो बिभेम्यहं वासव तत्र गन्तुम्
संरब्धो मामब्रवीत्तीक्ष्णरोषः संवर्तो वाक्यं चरितब्रह्मचर्यः २५
यद्यागच्छेः पुनरेवं कथंचिद्बृहस्पतिं परिदातुं मरुत्ते
दहेयं त्वां चक्षुषा दारुणेन संक्रुद्ध इत्येतदवैहि शक्रः २६
इन्द्र उवाच
त्वमेवान्यान्दहसे जातवेदो न हि त्वदन्यो विद्यते भस्मकर्ता
त्वत्संस्पर्शात्सर्वलोको बिभेत्यश्रद्धेयं वदसे हव्यवाह २७
अग्निरुवाच
दिवं देवेन्द्र पृथिवीं चैव सर्वां संवेष्टयेस्त्वं स्वबलेनैव शक्र
एवंविधस्येह सतस्तवासौ कथं वृत्रस्त्रिदिवं प्राग्जहार २८
इन्द्र उवाच
न चण्डिका जङ्गमा नो करेणुर्न वारिसोमं प्रपिबामि वह्ने
न दुर्बले वै विसृजामि वज्रं को मेऽसुखाय प्रहरेन्मनुष्यः २९
प्रव्राजयेयं कालकेयान्पृथिव्यामपाकर्षं दानवानन्तरिक्षात्
दिवः प्रह्लादमवसानमानयं को मेऽसुखाय प्रहरेत मर्त्यः ३०
अग्निरुवाच

यत्र शर्यातिं च्यवनो याजयिष्यन्सहाश्विभ्यां सोममगृह्णदेकः
तं त्वं क्रुद्धः प्रत्यषेधी पुरस्ताच्छर्यातियज्ञं स्मर तं महेन्द्र ३१
वज्रं गृहीत्वा च पुरंदर त्वं संप्राहार्षीश्च्यवनस्यातिघोरम्
स ते विप्रः सह वज्रेण बाहुमपागृह्णात्तपसा जातमन्युः ३२
ततो रोषात्सर्वतो घोररूपं सपत्नं ते जनयामास भूयः
मदं नामासुरं विश्वरूपं यं त्वं दृष्ट्वा चक्षुषी संन्यमीलः ३३
हनुरेका जगतीस्था तथैका दिवं गता महतो दानवस्य
सहस्त्रं दन्तानां शतयोजनानां सुतीक्ष्णानां घोररूपं बभूव ३४
वृत्ताः स्थूला रजतस्तम्भवर्णा दंष्ट्राश्चतस्त्रो द्वे शते योजनानाम्
स त्वां दन्तान्विदशन्नभ्यधावज्जिघांसया शूलमुद्यम्य घोरम् ३५
अपश्यस्त्वं तं तदा घोररूपं सर्वे त्वन्ये ददृशुर्दर्शनीयम्
यस्माद्भीतः प्राञ्जलिस्त्वं महर्षिमागच्छेथाः शरणं दानवघ्न ३६
क्षत्रादेवं ब्रह्मबलं गरीयो न ब्रह्मतः किंचिदन्यद्गरीयः
सोऽह जानन्ब्रह्मतेजो यथावन्न संवर्तं गन्तुमिच्छामि शक्र ३७
इति श्रीमहाभारते आश्वमेधिकपर्वणि नवमोऽध्यायः ९

## दशमोऽध्यायः

इन्द्र उवाच
एवमेतद्ब्रह्मबलं गरीयो न ब्रह्मतः किंचिदन्यद्गरीयः
आविक्षितस्य तु बलं न मृष्ये वज्रमस्मै प्रहरिष्यामि घोरम् १
धृतराष्ट्र प्रहितो गच्छ मरुत्तं संवर्तेन सहितं तं वदस्व
बृहस्पतिं त्वमुपशिक्षस्व राजन्वज्रं वा ते प्रहरिष्यामि घोरम् २
व्यास उवाच
ततो गत्वा धृतराष्ट्रो नरेन्द्रं प्रोवाचेदं वचनं वासवस्य
गन्धर्वं मां धृतराष्ट्रं निबोध त्वामागतं वक्तुकामं नरेन्द्र ३
एन्द्रं वाक्यं शृणु मे राजसिंह यत्प्राह लोकाधिपतिर्महात्मा
बृहस्पतिं याजकं त्वं वृणीष्व वज्रं वा ते प्रहरिष्यामि घोरम्
वचश्चेदेतन्न करिष्यसे मे प्राहैतदेतावदचिन्त्यकर्मा ४
मरुत्त उवाच
त्वं चैवैतद्वेत्थ पुरंदरश्च विश्वेदेवा वसवश्चाश्विनौ च

मित्रद्रोहे निष्कृतिर्वै यथैव नास्तीति लोकेषु सदैव वादः ५
बृहस्पतिर्याजयितां महेन्द्रं देवश्रेष्ठं वज्रभृतां वरिष्ठम्
संवर्तो मां याजयिताद्य राजन्न ते वाक्यं तस्य वा रोचयामि ६
गन्धर्व उवाच
घोरो नादः श्रूयते वासवस्य नभस्तले गर्जतो राजसिंह
व्यक्तं वज्रं मोक्ष्यते ते महेन्द्रः क्षेमं राजंश्चिन्त्यतामेष कालः ७
इत्येवमुक्तो धृतराष्ट्रेण राजा श्रुत्वा नादं नदतो वासवस्य
तपोनित्यं धर्मविदां वरिष्ठं संवर्तं तं ज्ञापयामास कार्यम् ८
मरुत्त उवाच
इममश्मानं प्लवमानमाराद्ध्वा दूरं तेन न दृश्यतेऽद्य
प्रपद्येऽहं शर्म विप्रेन्द्र त्वत्तः प्रयच्छ तस्मादभयं विप्रमुख्य ९
अयमायाति वै वज्री दिशो विद्योतयन्दश
अमानुषेण घोरेण सदस्यास्त्रासिता हि नः १०
संवर्त उवाच
भयं शक्राद्व्येतु ते राजसिंह प्रणोत्स्येऽहं भयमेतत्सुघोरम्
संस्तम्भिन्या विद्यया क्षिप्रमेव मा भैस्त्वमस्मद्भव चापि प्रतीतः ११
अहं संस्तम्भयिष्यामि मा भैस्त्वं शक्रतो नृप
सर्वेषामेव देवानां क्षपितान्यायुधानि मे १२
दिशो वज्रं व्रजतां वायुरेतु वर्षं भूत्वा निपततु काननेषु
आपः प्लवन्त्वन्तरिक्षे वृथा च सौदामिनी दृश्यतां मा बिभस्त्वम् १३
अथो वह्निस्त्रातु वा सर्वतस्ते कामं वर्षं वर्षतु वासवो वा
वज्रं तथा स्थापयतां च वायुर्महाघोरं प्लवमानं जलौघैः १४
मरुत्त उवाच
घोरः शब्दः श्रूयते वै महास्वनो वज्रस्यैष सहितो मारुतेन
आत्मा हि मे प्रव्यथते मुहुर्मुहुर्न मे स्वास्थ्यं जायते चाद्य विप्र १५
संवर्त उवाच
वज्रादुग्राद्व्येतु भयं तवाद्य वातो भूत्वा हन्मि नरेन्द्र वज्रम्
भयं त्यक्त्वा वरमन्यं वृणीष्व कं ते कामं तपसा साधयामि १६
मरुत्त उवाच
इन्द्रः साक्षात्सहसाभ्येतु विप्र हविर्यज्ञे प्रतिगृह्णातु चैव

स्वं स्वं धिष्ण्यं चैव जुषन्तु देवाः सूतं सोमं प्रतिगृह्णन्तु चैव १७
संवर्त उवाच
अयमिन्द्रो हरिभिरायाति राजन्देवैः सर्वैः सहितः सोमपीथी
मन्त्राहूतो यज्ञमिमं मयाद्य पश्यस्वैनं मन्त्रविस्रस्तकायम् १८
व्यास उवाच
ततो देवैः सहितो देवराजो रथे युक्त्वा तान्हरीन्वाजिमुख्यान्
आयाद्यज्ञमधि राज्ञः पिपासुराविक्षितस्याप्रमेयस्य सोमम्१९
तमायान्तं सहितं देवसंघैः प्रत्युद्ययौ सपुरोधा मरुत्तः
चक्रे पूजां देवराजाय चाग्र्यां यथाशास्त्रं विधिवत्प्रीयमाणः २०

संवर्त उवाच
स्वागतं ते पुरुहूतेह विद्वन्यज्ञोऽद्यायं संनिहिते त्वयीन्द्र
शोशुभ्यते बलवृत्रघ्न भूयः पिबस्व सोमं सुतमुद्यतं मया २१
मरुत्त उवाच
शिवेन मां पश्य नमश्च तेऽस्तु प्राप्तो यज्ञः सफलं जीवितं मे
अयं यज्ञं कुरुते मे सुरेन्द्र बृहस्पतेरवरो जन्मना यः २२
इन्द्र उवाच
जानामि ते गुरुमेनं तपोधनं बृहस्पतेरनुजं तिग्मतेजसम्
यस्याह्वानादागतोऽह नरेन्द्र प्रीतिर्मेऽद्य त्वयि मन्युः प्रनष्टः २३
संवर्त उवाच
यदि प्रीतस्त्वमसि वै देवराज तस्मात्स्वयं शाधि यज्ञे विधानम्
स्वयं सर्वान्कुरु मार्गान्सुरेन्द्र जानात्वयं सर्वलोकश्च देव २४
व्यास उवाच
एवमुक्तस्त्वाङ्गिरसेन शक्रः समादिदेश स्वयमेव देवान्
सभाः क्रियन्तामावसथाश्च मुख्याः सहस्रशश्चित्रभौमाः समृद्धाः २५
क्लृप्तस्थूणाः कुरुतारोहणानि गन्धर्वाणामप्सरसां च शीघ्रम्
येषु नृत्येरन्नप्सरसः सहस्रशः स्वर्गोद्देशः क्रियतां यज्ञवाटः २६
इत्युक्तास्ते चक्रुराशु प्रतीता दिवौकसः शक्रवाक्यान्नरेन्द्र
ततो वाक्यं प्राह राजानमिन्द्रः प्रीतो राजन्पूज्यमानो मरुत्तम् २७
एष त्वयाहमिह राजन्समेत्य ये चाप्यन्ये तव पूर्वे नरेन्द्राः

सर्वाश्चान्या देवताः प्रीयमाणा हविस्तुभ्यं प्रतिगृह्णन्तु राजन् २८
आग्नेयं वै लोहितमालभन्तां वैश्वदेवं बहुरूपं विराजन्
नीलं चोक्षाणं मेध्यमभ्यालभन्तां चलच्छिश्नं मत्प्रदिष्टं द्विजेन्द्राः २९
ततो यज्ञो ववृधे तस्य राज्ञो यत्र देवाः स्वयमन्नानि जह्रुः
यस्मिञ्शक्रो ब्राह्मणैः पूज्यमानः सदस्योऽभूद्धरिमान्देवराजः ३०
ततः संवर्तश्चित्यगतो महात्मा यथा वह्निः प्रज्वलितो द्वितीयः
हवींष्युच्चैराह्वयन्देवसंघाञ्जुहावाग्नौ मन्त्रवत्सुप्रतीतः ३१
ततः पीत्वा बलभित्सोममग्र्यं ये चाप्यन्ये सोमपा वै दिवौकसः
सर्वेऽनुज्ञाताः प्रययुः पार्थिवेन यथाजोषं तर्पिताः प्रीतिमन्तः ३२
ततो राजा जातरूपस्य राशीन्पदे पदे कारयामास हृष्टः
द्विजातिभ्यो विसृजन्भूरि वित्तं रराज वित्तेश इवारिहन्ता ३३
ततो वित्तं विविधं संनिधाय यथोत्साहं कारयित्वा च कोशम्
अनुज्ञातो गुरुणा संनिवृत्य शशास गामखिलां सागरान्ताम् ३४
एवंगुणः संबभूवेह राजा यस्य क्रतौ तत्सुवर्णं प्रभूतम्
तत्त्वं समादाय नरेन्द्र वित्तं यजस्व देवांस्तर्पयानो विधानैः ३५
वैशम्पायन उवाच
ततो राजा पाण्डवो हृष्टरूपः श्रुत्वा वाक्यं सत्यवत्याः सुतस्य
मनश्चक्रे तेन वित्तेन यष्टुं ततोऽमात्यैर्मन्त्रयामास भूयः ३६
इति श्रीमहाभारते आश्वमेधिकपर्वणि दशमोऽध्यायः १०

## एकादशोऽध्यायः

वैशम्पायन उवाच
इत्युक्ते नृपतौ तस्मिन्व्यासेनाद्भुतकर्मणा
वासुदेवो महातेजास्ततो वचनमाददे १
तं नृपं दीनमनसं निहतज्ञातिबान्धवम्
उपप्लुतमिवादित्यं सधूममिव पावकम् २
निर्विण्णमनसं पार्थं ज्ञात्वा वृष्णिकुलोद्वहः
आश्वासयन्धर्मसुतं प्रवक्तुमुपचक्रमे ३
वासुदेव उवाच
सर्वं जिह्मं मृत्युपदमार्जवं ब्रह्मणः पदम्

एतावाञ्ज्ञानविषयः किं प्रलापः करिष्यति ४
नैव ते निष्ठितं कर्म नैव ते शत्रवो जिताः
कथं शत्रुं शरीरस्थमात्मानं नावबुध्यसे ५
अत्र ते वर्तयिष्यामि यथाधर्मं यथाश्रुतम्
इन्द्रस्य सह वृत्रेण यथा युद्धमवर्तत ६
वृत्रेण पृथिवी व्याप्ता पुरा किल नराधिप
दृष्ट्वा स पृथिवीं व्याप्तां गन्धस्य विषये हृते
धराहरणदुर्गन्धो विषयः समपद्यत ७
शतक्रतुश्चुकोपाथ गन्धस्य विषये हृते
वृत्रस्य स ततः क्रुद्धो वज्रं घोरमवासृजत् ८
स वध्यमानो वज्रेण पृथिव्यां भूरितेजसा
विवेश सहसैवापो जग्राह विषयं ततः ९
व्याप्तास्वथासु वृत्रेण रसे च विषये हृते
शतक्रतुरभिक्रुद्धस्तासु वज्रमवासृजत् १०
स वध्यमानो वज्रेण सलिले भूरितेजसा
विवेश सहसा ज्योतिर्जग्राह विषयं ततः ११
व्याप्ते ज्योतिषि वृत्रेण रूपेऽथ विषये हृते
शतक्रतुरभिक्रुद्धस्तत्र वज्रमवासृजत् १२
स वध्यमानो वज्रेण सुभृशं भूरितेजसा
विवेश सहसा वायुं जग्राह विषयं ततः १३
व्याप्ते वायौ तु वृत्रेण स्पर्शेऽथ विषये हृते
शतक्रुतरभिक्रुद्धस्तत्र वज्रमवासृजत् १४
स वध्यमानो वज्रेण तस्मिन्नमिततेजसा
आकाशमभिदुद्राव जग्राह विषयं ततः १५
आकाशे वृत्रभूते च शब्दे च विषये हृते
शतक्रतुरभिक्रुद्धस्तत्र वज्रमवासृजत् १६
स वध्यमानो वज्रेण तस्मिन्नमिततेजसा
विवेश सहसा शक्रं जग्राह विषयं ततः १७
तस्य वृत्रगृहीतस्य मोहः समभवन्महान्
रथंतरेण तं तात वसिष्ठः प्रत्यबोधयत् १८

ततो वृत्रं शरीरस्थं जघान भरतर्षभ
शतक्रतुरदृश्येन वज्रेणेतीह नः श्रुतम् १९
इदं धर्मरहस्यं च शक्रेणोक्तं महर्षिषु
ऋषिभिश्च मम प्रोक्तं तन्निबोध नराधिप २०
इति श्रीमहाभारते आश्वमेधिकपर्वणि एकादशोऽध्यायः ११

द्वादशोऽध्यायः

वासुदेव उवाच
द्विविधो जायते व्याधिः शारीरो मानसस्तथा
परस्परं तयोर्जन्म निर्द्वंद्वं नोपलभ्यते १
शरीरे जायते व्याधिः शारीरो नात्र संशयः
मानसो जायते व्याधिर्मनस्येवेति निश्चयः २
शीतोष्णे चैव वायुश्च गुणा राजञ्शरीरजाः
तेषां गुणानां साम्यं चेत्तदाहुः स्वस्थलक्षणम्
उष्णेन बाध्यते शीतं शीतेनोष्णं च बाध्यते ३
सत्त्वं रजस्तमश्चेति त्रयस्त्वात्मगुणाः स्मृताः
तेषां गुणानां साम्यं चेत्तदाहुः स्वस्थलक्षणम्
तेषामन्यतमोत्सेके विधानमुपदिश्यते ४
हर्षेण बाध्यते शोको हर्षः शोकेन बाध्यते
कश्चिद्दुःखे वर्तमानः सुखस्य स्मर्तुमिच्छति
कश्चित्सुखे वर्तमानो दुःखस्य स्मर्तुमिच्छति ५
स त्वं न दुःखी दुःखस्य न सुखी सुसुखस्य वा
स्मर्तुमिच्छसि कौन्तेय दिष्टं हि बलवत्तरम् ६
अथ वा ते स्वभावोऽय येन पार्थावकृष्यसे
दृष्ट्वा सभागतां कृष्णामेकवस्त्रां रजस्वलाम्
मिषतां पाण्डवेयानां न तत्संस्मर्तुमिच्छसि ७
प्रव्राजनं च नगरादजिनैश्च विवासनम्
महारण्यनिवासश्च न तस्य स्मर्तुमिच्छसि ८
जटासुरात्परिक्लेशश्चित्रसेनेन चाहवः
सैन्धवाच्च परिक्लेशो न तस्य स्मर्तुमिच्छसि ९

पुनरज्ञातचर्यायां कीचकेन पदा वधः
याज्ञसेन्यास्तदा पार्थ न तस्य स्मर्तुमिच्छसि १०
यच्च ते द्रोणभीष्माभ्यां युद्धमासीदरिंदम्
मनसैकेन योद्धव्यं तत्ते युद्धमुपस्थितम्
तस्मादभ्युपगन्तव्यं युद्धाय भरतर्षभ ११
परमव्यक्तरूपस्य परं मुक्त्वा स्वकर्मभिः
यत्र नैव शरैः कार्यं न भृत्यैर्न च बन्धुभिः
आत्मनैकेन योद्धव्यं तत्ते युद्धमुपस्थितम् १२
तस्मिन्ननिर्जिते युद्धे कामवस्थां गमिष्यसि
एतज्ज्ञात्वा तु कौन्तेय कृतकृत्यो भविष्यसि १३
एतां बुद्धिं विनिश्चित्य भूतानामागतिं गतिम्
पितृपैतामहे वृत्ते शाधि राज्यं यथोचितम् १४
इति श्रीमहाभारते आश्वमेधिकपर्वणि द्वादशोऽध्यायः १२

## त्रयोदशोऽध्यायः

वासुदेव उवाच
न बाह्यं द्रव्यमुत्सृज्य सिद्धिर्भवति भारत
शारीरं द्रव्यमुत्सृज्य सिद्धिर्भवति वा न वा १
बाह्यद्रव्यविमुक्तस्य शारीरेषु च गृध्यतः
यो धर्मो यत्सुखं चैव द्विषतामस्तु तत्तथा २
द्व्यक्षरस्तु भवेन्मृत्युस्त्र्यक्षरं ब्रह्म शाश्वतम्
ममेति द्व्यक्षरो मृत्युर्न ममेति च शाश्वतम् ३
ब्रह्म मृत्युश्च तौ राजन्नात्मन्येव व्यवस्थितौ
अदृश्यमानौ भूतानि योधयेतामसंशयम् ४
अविनाशोऽस्य सत्त्वस्य नियतो यदि भारत
भित्त्वा शरीरं भूतानामहिंसां प्रतिपद्यते ५
लब्ध्वापि पृथिवीं सर्वां सहस्थावरजङ्गमाम्
ममत्वं यस्य नैव स्यात्किं तया स करिष्यति ६
अथ वा वसतः पार्थ वने वन्येन जीवतः
ममता यस्य द्रव्येषु मृत्योरास्ये स वर्तते ७

बाह्यान्तराणां शत्रूणां स्वभावं पश्य भारत
यन्न पश्यति तद्भूतं मुच्यते स महाभयात् ८
कामात्मानं न प्रशंसन्ति लोके न चाकामात्काचिदस्ति प्रवृत्तिः
दानं हि वेदाध्ययनं तपश्च कामेन कर्माणि च वैदिकानि ९
व्रतं यज्ञान्नियमान्ध्यानयोगान्कामेन यो नारभते विदित्वा
यद्यद्ध्ययं कामयते स धर्मो न यो धर्मो नियमस्तस्य मूलम् १०
अत्र गाथाः कामगीताः कीर्तयन्ति पुराविदः
शृणु संकीर्त्यमानास्ता निखिलेन युधिष्ठिर ११
नाहं शक्योऽनुपायेन हन्तुं भूतेन केनचित्
यो मां प्रयतते हन्तुं ज्ञात्वा प्रहरणे बलम्
तस्य तस्मिन्प्रहरणे पुनः प्रादुर्भवाम्यहम् १२
यो मां प्रयतते हन्तुं यज्ञैर्विविधदक्षिणैः
जङ्गमेष्विव कर्मात्मा पुनः प्रादुर्भवाम्यहम् १३
यो मां प्रयतते हन्तुं वेदैर्वेदान्तसाधनैः
स्थावरेष्विव शान्तात्मा तस्य प्रादुर्भवाम्यहम् १४
यो मां प्रयतते हन्तुं धृत्या सत्यपराक्रमः
भावो भवामि तस्याहं स च मां नावबुध्यते १५
यो मां प्रयतते हन्तुं तपसा संशितव्रतः
ततस्तपसि तस्याथ पुनः प्रादुर्भवाम्यहम् १६
यो मां प्रयतते हन्तुं मोक्षमास्थाय पण्डितः
तस्य मोक्षरतिस्थस्य नृत्यामि च हसामि च
अवध्यः सर्वभूतानामहमेकः सनातनः १७
तस्मात्त्वमपि तं कामं यज्ञैर्विविधदक्षिणैः
धर्मं कुरु महाराज तत्र ते स भविष्यति १८
यजस्व वाजिमेधेन विधिवद्दक्षिणावता
अन्यैश्च विविधैर्यज्ञैः समृद्धैराप्तदक्षिणैः १९
मा ते व्यथास्तु निहतान्बन्धून्वीक्ष्य पुनः पुनः
न शक्यास्ते पुनर्द्रष्टुं ये हतास्मिन्रणाजिरे २०
स त्वमिष्ट्वा महायज्ञैः समृद्धैराप्तदक्षिणैः
लोके कीर्तिं परां प्राप्य गतिमग्र्यां गमिष्यसि २१

इति श्रीमहाभारते आश्वमेधिकपर्वणि त्रयोदशोऽध्यायः १३

## चतुर्दशोऽध्यायः

वैशम्पायन उवाच
एवं बहुविधैर्वाक्यैर्मुनिभिस्तैस्तपोधनैः
समाश्वस्यत राजर्षिर्हतबन्धुर्युधिष्ठिरः १
सोऽनुनीतो भगवता विष्टरश्रवसा स्वयम्
द्वैपायनेन कृष्णेन देवस्थानेन चाभिभूः २
नारदेनाथ भीमेन नकुलेन च पार्थिव
कृष्णया सहदेवेन विजयेन च धीमता ३
अन्यैश्च पुरुषव्याघ्रैर्ब्राह्मणैः शास्त्रदृष्टिभिः
व्यजहाच्छोकजं दुःखं संतापं चैव मानसम् ४
अर्चयामास देवांश्च ब्राह्मणांश्च युधिष्ठिरः
कृत्वाथ प्रेतकार्याणि बन्धूनां स पुनर्नृपः
अन्वशासत धर्मात्मा पृथिवीं सागराम्बराम् ५
प्रशान्तचेताः कौरव्यः स्वराज्यं प्राप्य केवलम्
व्यासं च नारदं चैव तांश्चान्यानब्रवीन्नृपः ६
आश्वासितोऽह प्राग्वृद्धैर्भवद्भिर्मुनिपुंगवैः
न सूक्ष्ममपि मे किंचिद्व्यलीकमिह विद्यते ७
अर्थश्च सुमहान्प्राप्तो येन यक्ष्यामि देवताः
पुरस्कृत्येह भवतः समानेष्यामहे मखम् ८
हिमवन्तं त्वया गुप्ता गमिष्यामः पितामह
बह्वाश्चर्यो हि देशः स श्रूयते द्विजसत्तम ९
तथा भगवता चित्रं कल्याणं बहु भाषितम्
देवर्षिणा नारदेन देवस्थानेन चैव ह १०
नाभागधेयः पुरुषः कश्चिदेवंविधान्गुरून्
लभते व्यसनं प्राप्य सुहृदः साधुसंमतान् ११
एवमुक्तास्तु ते राज्ञा सर्व एव महर्षयः
अभ्यनुज्ञाप्य राजानं तथोभौ कृष्णफल्गुनौ
पश्यतामेव सर्वेषां तत्रैवादर्शनं ययुः १२

ततो धर्मसुतो राजा तत्रैवोपाविशत्प्रभुः
एवं नातिमहान्कालः स तेषामभ्यवर्तत १३
कुर्वतां शौचकर्माणि भीष्मस्य निधने तदा
महादानानि विप्रेभ्यो ददतामौर्ध्वदैहिकम् १४
भीष्मकर्णपुरोगाणां कुरूणां कुरुनन्दन
सहितो धृतराष्ट्रेण प्रददावौर्ध्वदैहिकम् १५
ततो दत्त्वा बहु धनं विप्रेभ्यः पाण्डवर्षभः
धृतराष्ट्रं पुरस्कृत्य विवेश गजसाह्वयम् १६
स समाश्वास्य पितरं प्रज्ञाचक्षुषमीश्वरम्
अन्वशाद्वै स धर्मात्मा पृथिवीं भ्रातृभिः सह १७
इति श्रीमहाभारते आश्वमेधिकपर्वणि चतुर्दशोऽध्यायः १४

पञ्चदशोऽध्यायः

जनमेजय उवाच
विजिते पाण्डवेयैस्तु प्रशान्ते च द्विजोत्तम
राष्ट्रे किं चक्रतुर्वीरौ वासुदेवधनंजयौ १
वैशम्पायन उवाच
विजिते पाण्डवेयैस्तु प्रशान्ते च विशां पते
राष्ट्रे बभूवतुर्हृष्टौ वासुदेवधनंजयौ २
विजह्राते मुदा युक्तौ दिवि देवेश्वराविव
तौ वनेषु विचित्रेषु पर्वतानां च सानुषु ३
शैलेषु रमणीयेषु पल्वलेषु नदीषु च
चङ्क्रम्यमाणौ संहृष्टावश्विनाविव नन्दने ४
इन्द्रप्रस्थे महात्मानौ रेमाते कृष्णपाण्डवौ
प्रविश्य तां सभां रम्यां विजह्राते च भारत ५
तत्र युद्धकथाश्चित्राः परिक्लेशांश्च पार्थिव
कथायोगे कथायोगे कथयामासतुस्तदा ६
ऋषीणां देवतानां च वंशांस्तावाहतुस्तदा
प्रीयमाणौ महात्मानौ पुराणावृषिसत्तमौ ७
मधुरास्तु कथाश्चित्राश्चित्रार्थपदनिश्चयाः

निश्चयज्ञः स पार्थाय कथयामास केशवः ८
पुत्रशोकाभिसंतप्तं ज्ञातीनां च सहस्रशः
कथाभिः शमयामास पार्थं शौरिर्जनार्दनः ९
स तमाश्वास्य विधिवद्विधानज्ञो महातपाः
अपहृत्यात्मनो भारं विशश्रामेव सात्वतः १०
ततः कथान्ते गोविन्दो गुडाकेशमुवाच ह
सान्त्वयञ्श्लक्ष्णया वाचा हेतुयुक्तमिदं वचः ११
विजितेयं धरा कृत्स्ना सव्यसाचिन्परंतप
त्वद्बाहुबलमाश्रित्य राज्ञा धर्मसुतेन ह १२
असपत्नां महीं भुङ्क्ते धर्मराजो युधिष्ठिरः
भीमसेनप्रभावेन यमयोश्च नरोत्तम १३
धर्मेण राज्ञा धर्मज्ञ प्राप्तं राज्यमकण्टकम्
धर्मेण निहतः संख्ये स च राजा सुयोधनः १४
अधर्मरुचयो लुब्धाः सदा चाप्रियवादिनः
धार्तराष्ट्रा दुरात्मानः सानुबन्धा निपातिताः १५
प्रशान्तामखिलां पार्थ पृथिवीं पृथिवीपतिः
भुङ्क्ते धर्मसुतो राजा त्वया गुप्तः कुरूद्वह १६
रमे चाहं त्वया सार्धमरण्येष्वपि पाण्डव
किमु यत्र जनोऽय वै पृथा चामित्रकर्शन १७
यत्र धर्मसुतो राजा यत्र भीमो महाबलः
यत्र माद्रवतीपुत्रौ रतिस्तत्र परा मम १८
तथैव स्वर्गकल्पेषु सभोद्देशेषु भारत
रमणीयेषु पुण्येषु सहितस्य त्वयानघ १९
कालो महांस्त्वतीतो मे शूरपुत्रमपश्यतः
बलदेवं च कौरव्य तथान्यान्वृष्णिपुंगवान् २०
सोऽह गन्तुमभीप्सामि पुरीं द्वारवतीं प्रति
रोचतां गमनं मह्यं तवापि पुरुषर्षभ २१
उक्तो बहुविधं राजा तत्र तत्र युधिष्ठिरः
स ह भीष्मेण यद्युक्तमस्माभिः शोककारिते २२
शिष्टो युधिष्ठिरोऽस्माभिः शास्ता सन्नपि पाण्डवः

तेन तच्च वचः सम्यग्गृहीतं सुमहात्मना २३
धर्मपुत्रे हि धर्मज्ञे कृतज्ञे सत्यवादिनि
सत्यं धर्मो मतिश्चाग्र्या स्थितिश्च सततं स्थिरा २४
तद्गत्वा तं महात्मानं यदि ते रोचतेऽजुन
अस्मद्गमनसंयुक्तं वचो ब्रूहि जनाधिपम् २५
न हि तस्याप्रियं कुर्यां प्राणत्यागेऽप्युपस्थिते
कुतो गन्तुं महाबाहो पुरीं द्वारवतीं प्रति २६
सर्वं त्विदमहं पार्थ त्वत्प्रीतिहितकाम्यया
ब्रवीमि सत्यं कौरव्य न मिथ्यैतत्कथंचन २७
प्रयोजनं च निर्वृत्तमिह वासे ममार्जुन
धार्तराष्ट्रो हतो राजा सबलः सपदानुगः २८
पृथिवी च वशे तात धर्मपुत्रस्य धीमतः
स्थिता समुद्रवसना सशैलवनकानना
चिता रत्नैर्बहुविधैः कुरुराजस्य पाण्डव २९
धर्मेण राजा धर्मज्ञः पातु सर्वां वसुंधराम्
उपास्यमानो बहुभिः सिद्धैश्चापि महात्मभिः
स्तूयमानश्च सततं बन्दिभिर्भरतर्षभ ३०
तन्मया सह गत्वाद्य राजानं कुरुवर्धनम्
आपृच्छ कुरुशार्दूल गमनं द्वारकां प्रति ३१
इदं शरीरं वसु यच्च मे गृहे निवेदितं पार्थ सदा युधिष्ठिरे
प्रियश्च मान्यश्च हि मे युधिष्ठिरः सदा कुरूणामधिपो महामतिः ३२
प्रयोजनं चापि निवासकारणे न विद्यते मे त्वदृते महाभुज
स्थिता हि पृथ्वी तव पार्थ शासने गुरोः सुवृत्तस्य युधिष्ठिरस्य ह ३३
इतीदमुक्तं स तदा महात्मना जनार्दनेनामितविक्रमोऽजुनः
तथेति कृच्छ्रादिव वाचमीरयञ्जनार्दनं संप्रतिपूज्य पार्थिव ३४

इति श्रीमहाभारते आश्वमेधिकपर्वणि पञ्चदशोऽध्यायः १५

## षोडशोऽध्यायः

जनमेजय उवाच
सभायां वसतोस्तस्यां निहत्यारीन्महात्मनोः

केशवार्जुनयोः का नु कथा समभवद्द्विज १
वैशम्पायन उवाच
कृष्णेन सहितः पार्थः स्वराज्यं प्राप्य केवलम्
तस्यां सभायां रम्यायां विजहार मुदा युतः २
ततः कंचित्सभोद्देशं स्वर्गोद्देशसमं नृप
यदृच्छया तौ मुदितौ जग्मतुः स्वजनावृतौ ३
ततः प्रतीतः कृष्णेन सहितः पाण्डवोऽजुनः
निरीक्ष्य तां सभां रम्यामिदं वचनमब्रवीत् ४
विदितं ते महाबाहो संग्रामे समुपस्थिते
माहात्म्यं देवकीमातस्तच्च ते रूपमैश्वरम् ५
यत्तु तद्भवता प्रोक्तं तदा केशव सौहृदात्
तत्सर्वं पुरुषव्याघ्र नष्टं मे नष्टचेतसः ६
मम कौतूहलं त्वस्ति तेष्वर्थेषु पुनः प्रभो
भवांश्च द्वारकां गन्ता नचिरादिव माधव ७
एवमुक्तस्ततः कृष्णः फल्गुनं प्रत्यभाषत
परिष्वज्य महातेजा वचनं वदतां वरः ८
श्रावितस्त्वं मया गुह्यं ज्ञापितश्च सनातनम्
धर्मं स्वरूपिणं पार्थ सर्वलोकांश्च शाश्वतान् ९
अबुधा यन्न गृह्णीथास्तन्मे सुमहदप्रियम्
नूनमश्रद्दधानोऽसि दुर्मेधाश्चासि पाण्डव १०
स हि धर्मः सुपर्याप्तो ब्रह्मणः पदवेदने
न शक्यं तन्मया भूयस्तथा वक्तुमशेषतः ११
परं हि ब्रह्म कथितं योगयुक्तेन तन्मया
इतिहासं तु वक्ष्यामि तस्मिन्नर्थे पुरातनम् १२
यथा तां बुद्धिमास्थाय गतिमग्र्यां गमिष्यसि
शृणु धर्मभृतां श्रेष्ठ गदतः सर्वमेव मे १३
आगच्छद्ब्राह्मणः कश्चित्स्वर्गलोकादरिंदम
ब्रह्मलोकाच्च दुर्धर्षः सोऽस्माभिः पूजितोऽभवत् १४
अस्माभिः परिपृष्टश्च यदाह भरतर्षभ
दिव्येन विधिना पार्थ तच्छृणुष्वाविचारयन् १५

ब्राह्मण उवाच
मोक्षधर्मं समाश्रित्य कृष्ण यन्मानुपृच्छसि
भूतानामनुकम्पार्थं यन्मोहच्छेदनं प्रभो १६
तत्तेऽहं संप्रवक्ष्यामि यथावन्मधुसूदन
शृणुष्वावहितो भूत्वा गदतो मम माधव १७
कश्चिद्विप्रस्तपोयुक्तः काश्यपो धर्मवित्तमः
आससाद द्विजं कंचिद्धर्माणामागतागमम् १८
गतागते सुबहुशो ज्ञानविज्ञानपारगम्
लोकतत्त्वार्थकुशलं ज्ञातारं सुखदुःखयो १९
जातीमरणतत्त्वज्ञं कोविदं पुण्यपापयोः
द्रष्टारमुच्चनीचानां कर्मभिर्देहिनां गतिम् २०
चरन्तं मुक्तवत्सिद्धं प्रशान्तं संयतेन्द्रियम्
दीप्यमानं श्रिया ब्राह्म्या क्रममाणं च सर्वशः २१
अन्तर्धानगतिज्ञं च श्रुत्वा तत्त्वेन काश्यपः
तथैवान्तर्हितैः सिद्धैर्यान्तं चक्रधरैः सह २२
संभाषमाणमेकान्ते समासीनं च तैः सह
यदृच्छया च गच्छन्तमसक्तं पवनं यथा २३
तं समासाद्य मेधावी स तदा द्विजसत्तमः
चरणौ धर्मकामो वै तपस्वी सुसमाहितः
प्रतिपेदे यथान्यायं भक्त्या परमया युतः २४
विस्मितश्चाद्भुतं दृष्ट्वा काश्यपस्तं द्विजोत्तमम्
परिचारेण महता गुरुं वैद्यमतोषयत् २५
प्रीतात्मा चोपपन्नश्च श्रुतचारित्र्यसंयुतः
भावेन तोषयच्चैनं गुरुवृत्त्या परंतपः २६
तस्मै तुष्टः स शिष्याय प्रसन्नोऽथाब्रवीद्गुरुः
सिद्धिं परामभिप्रेक्ष्य शृणु तन्मे जनार्दन २७
विविधैः कर्मभिस्तात पुण्ययोगैश्च केवलैः
गच्छन्तीह गतिं मर्त्या देवलोकेऽपि च स्थितिम् २८
न क्वचित्सुखमत्यन्तं न क्वचिच्छाश्वती स्थितिः
स्थानाच्च महतो भ्रंशो दुःखलब्धात्पुनः पुनः २९

अशुभा गतयः प्राप्ताः कष्टा मे पापसेवनात्
काममन्युपरीतेन तृष्णया मोहितेन च ३०
पुनः पुनश्च मरणं जन्म चैव पुनः पुनः
आहारा विविधा भुक्ताः पीता नानाविधाः स्तनाः ३१
मातरो विविधा दृष्टाः पितरश्च पृथग्विधाः
सुखानि च विचित्राणि दुःखानि च मयानघ ३२
प्रियैर्विवासो बहुशः संवासश्चाप्रियैः सह
धननाशश्च संप्राप्तो लब्ध्वा दुःखेन तद्धनम् ३३
अवमानाः सुकष्टाश्च परतः स्वजनात्तथा
शारीरा मानसाश्चापि वेदना भृशदारुणाः ३४
प्राप्ता विमाननाश्चोग्रा वधबन्धाश्च दारुणाः
पतनं निरये चैव यातनाश्च यमक्षये ३५
जरा रोगाश्च सततं वसनानि च भूरिशः
लोकेऽस्मिन्ननुभूतानि द्वंद्वजानि भृशं मया ३६
ततः कदाचिन्निर्वेदान्निकारान्निकृतेन च
लोकतन्त्रं परित्यक्तं दुःखार्तेन भृशं मया
ततः सिद्धिरियं प्राप्ता प्रसादादात्मनो मया ३७
नाहं पुनरिहागन्ता लोकानालोकयाम्यहम्
आ सिद्धेरा प्रजासर्गादात्मनो मे गतिः शुभा ३८
उपलब्धा द्विजश्रेष्ठ तथेयं सिद्धिरुत्तमा
इतः परं गमिष्यामि ततः परतरं पुनः
ब्रह्मणः पदमव्यग्रं मा तेऽभूदत्र संशयः ३९
नाहं पुनरिहागन्ता मर्त्यलोकं परंतप
प्रीतोऽस्मि ते महाप्राज्ञ ब्रूहि किं करवाणि ते ४०
यदीप्सुरुपपन्नस्त्वं तस्य कालोऽयमागतः
अभिजाने च तदहं यदर्थं मा त्वमागतः
अचिरात्तु गमिष्यामि येनाहं त्वामचूचुदम् ४१
भृशं प्रीऽतोस्मि भवतश्चारित्रेण विचक्षण
परिपृच्छ यावद्भवते भाषेयं यत्तवेप्सितम् ४२
बहु मन्ये च ते बुद्धिं भृशं संपूजयामि च

येनाहं भवता बुद्धो मेधावी ह्यसि काश्यप ४३
इति श्रीमहाभारते आश्वमेधिकपर्वणि षोडशोऽध्यायः १६

## सप्तदशोऽध्यायः

वासुदेव उवाच
ततस्तस्योपसंगृह्य पादौ प्रश्नान्सुदुर्वचान्
पप्रच्छ तांश्च सर्वान्स प्राह धर्मभृतां वरः १
काश्यप उवाच
कथं शरीरं च्यवते कथं चैवोपपद्यते
कथं कष्टाच्च संसारात्संसरन्परिमुच्यते २
आत्मानं वा कथं युक्त्वा तच्छरीरं विमुञ्चति
शरीरतश्च निर्मुक्तः कथमन्यत्प्रपद्यते ३
कथं शुभाशुभे चायं कर्मणी स्वकृते नरः
उपभुङ्क्ते क्व वा कर्म विदेहस्योपतिष्ठति ४
ब्राह्मण उवाच
एवं संचोदितः सिद्धः प्रश्नांस्तान्प्रत्यभाषत
आनुपूर्व्येण वार्ष्णेय यथा तन्मे वचः शृणु ५
सिद्ध उवाच
आयुःकीर्तिकराणीह यानि कर्माणि सेवते
शरीरग्रहणेऽन्यस्मिंस्तेषु क्षीणेषु सर्वशः ६
आयुःक्षयपरीतात्मा विपरीतानि सेवते
बुद्धिर्व्यावर्तते चास्य विनाशे प्रत्युपस्थिते ७
सत्त्वं बलं च कालं चाप्यविदित्वात्मनस्तथा
अतिवेलमुपाश्नाति तैर्विरुद्धान्यनात्मवान् ८
यदायमतिकष्टानि सर्वाण्युपनिषेवते
अत्यर्थमपि वा भुङ्क्ते न वा भुङ्क्ते कदाचन ९
दुष्टान्नं विषमान्नं च सोऽन्योन्येन विरोधि च
गुरु वापि समं भुङ्क्ते नातिजीर्णेऽपि वा पुनः १०
व्यायाममतिमात्रं वा व्यवायं चोपसेवते
सततं कर्मलोभाद्वा प्राप्तं वेगविधारणम् ११

रसातियुक्तमन्नं वा दिवास्वप्नं निषेवते
अपक्वानागते काले स्वयं दोषान्प्रकोपयन् १२
स्वदोषकोपनाद्रोगं लभते मरणान्तिकम्
अथ चोद्बन्धनादीनि परीतानि व्यवस्यति १३
तस्य तैः कारणैर्जन्तोः शरीराच्च्यवते यथा
जीवितं प्रोच्यमानं तद्यथावदुपधारय १४
ऊष्मा प्रकुपितः काये तीव्रवायुसमीरितः
शरीरमनुपर्येति सर्वान्प्राणान्रुणद्धि वै १५
अत्यर्थं बलवानूष्मा शरीरे परिकोपितः
भिनत्ति जीवस्थानानि तानि मर्माणि विद्धि च १६
ततः सवेदनः सद्यो जीवः प्रच्यवते क्षरन्
शरीरं त्यजते जन्तुश्छिद्यमानेषु मर्मसु
वेदनाभिः परीतात्मा तद्विद्धि द्विजसत्तम १७
जातीमरणसंविग्नाः सततं सर्वजन्तवः
दृश्यन्ते संत्यजन्तश्च शरीराणि द्विजर्षभ १८
गर्भसंक्रमणे चापि मर्मणामतिसर्पणे
तादृशीमेव लभते वेदनां मानवः पुनः १९
भिन्नसंधिरथ क्लेदमद्भिः स लभते नरः
यथा पञ्चसु भूतेषु संश्रितत्वं निगच्छति
शैत्यात्प्रकुपितः काये तीव्रवायुसमीरितः २०
यः स पञ्चसु भूतेषु प्राणापाने व्यवस्थितः
स गच्छत्यूर्ध्वगो वायुः कृच्छ्रान्मुक्त्वा शरीरिणम् २१
शरीरं च जहात्येवं निरुच्छ्वासश्च दृश्यते
निरूष्मा स निरुच्छ्वासो निःश्रीको गतचेतनः २२
ब्रह्मणा संपरित्यक्तो मृत इत्युच्यते नरः
स्रोतोभिर्यैर्विजानाति इन्द्रियार्थाञ्शरीरभृत्
तैरेव न विजानाति प्राणमाहारसंभवम् २३
तत्रैव कुरुते काये यः स जीवः सनातनः
तेषां यद्यद्भवेद्युक्तं संनिपाते क्वचित्क्वचित्
तत्तन्मर्म विजानीहि शास्त्रदृष्टं हि तत्तथा २४

तेषु मर्मसु भिन्नेषु ततः स समुदीरयन्
आविश्य हृदयं जन्तोः सत्त्वं चाशु रुणद्धि वै
ततः स चेतनो जन्तुर्नाभिजानाति किंचन २५
तमसा संवृतज्ञानः संवृतेष्वथ मर्मसु
स जीवो निरधिष्ठानश्चाव्यते मातरिश्वना २६
ततः स तं महोच्छ्वासं भृशमुच्छ्वस्य दारुणम्
निष्क्रामन्कम्पयत्याशु तच्छरीरमचेतनम् २७
स जीवःप्रच्युतः कायात्कर्मभिः स्वैः समावृतः
अङ्कितः स्वैः शुभैः पुण्यैः पापैर्वाप्युपपद्यते २८
ब्राह्मणा ज्ञानसंपन्ना यथावच्छ्रुतनिश्चयाः
इतरं कृतपुण्यं वा तं विजानन्ति लक्षणैः २९
यथान्धकारे खद्योतं लीयमानं ततस्ततः
चक्षुष्मन्तः प्रपश्यन्ति तथा तं ज्ञानचक्षुषः ३०
पश्यन्त्येवंविधाः सिद्धा जीवं दिव्येन चक्षुषा
च्यवन्तं जायमानं च योनिं चानुप्रवेशितम् ३१
तस्य स्थानानि दृष्टानि त्रिविधानीह शास्त्रतः
कर्मभूमिरियं भूमिर्यत्र तिष्ठन्ति जन्तवः ३२
ततः शभाशुभं कृत्वा लभन्ते सर्वदेहिनः
इहैवोच्चावचान्भोगान्प्राप्नुवन्ति स्वकर्मभिः ३३
इहैवाशुभकर्मा तु कर्मभिर्निरयं गतः
अवाक्स निरये पापो मानवः पच्यते भृशम्
तस्मात्सुदुर्लभो मोक्ष आत्मा रक्ष्यो भृशं ततः ३४
ऊर्ध्वं तु जन्तवो गत्वा येषु स्थानेष्ववस्थिताः
कीर्त्यमानानि तानीह तत्त्वतः संनिबोध मे
तच्छ्रुत्वा नैष्ठिकीं बुद्धिं बुद्ध्येथाः कर्मनिश्चयात् ३५
तारारूपाणि सर्वाणि यच्चैतच्चन्द्रमण्डलम्
यच्च विभ्राजते लोके स्वभासा सूर्यमण्डलम्
स्थानान्येतानि जानीहि नराणां पुण्यकर्मणाम् ३६
कर्मक्षयाच्च ते सर्वे च्यवन्ते वै पुनः पुनः
तत्रापि च विशेषोऽस्ति दिवि नीचोच्चमध्यमः ३७

न तत्राप्यस्ति संतोषो दृष्ट्वा दीप्ततरां श्रियम्
इत्येता गतयः सर्वाः पृथक्त्वे समुदीरिताः ३८
उपपत्तिं तु गर्भस्य वक्ष्याम्यहमतः परम्
यथावत्तां निगदतः शृणुष्वावहितो द्विज ३९
इति श्रीमहाभारते आश्वमेधिकपर्वणि सप्तदशोऽध्यायः १७

अष्टादशोऽध्यायः

ब्राह्मण उवाच
शुभानामशुभानां च नेह नाशोऽस्ति कर्मणाम्
प्राप्य प्राप्य तु पच्यन्ते क्षेत्रं क्षेत्रं तथा तथा १
यथा प्रसूयमानस्तु फली दद्यात्फलं बहु
तथा स्याद्विपुलं पुण्यं शुद्धेन मनसा कृतम् २
पापं चापि  तथैव स्यात्पापेन मनसा कृतम्
पुरोधाय मनो हीह कर्मण्यात्मा प्रवर्तते ३
यथा कर्मसमादिष्टं काममन्युसमावृतः
नरो गर्भं प्रविशति तच्चापि शृणु चोत्तरम् ४
शुक्रं शोणितसंसृष्टं स्त्रिया गर्भाशयं गतम्
क्षेत्रं कर्मजमाप्नोति शुभं वा यदि वाशुभम् ५
सौक्ष्म्यादव्यक्त भावाच्च न स क्वचन सज्जते
संप्राप्य ब्रह्मणः कायं तस्मात्तद्ब्रह्म शाश्वतम्
तद्बीजं सर्वभूतानां तेन जीवन्ति जन्तवः ६
स जीवः सर्वगात्राणि गर्भस्याविश्य भागशः
दधाति चेतसा सद्यः प्राणस्थानेष्ववस्थितः
ततः स्पन्दयतेऽङ्गानि स गर्भश्चेतनान्वितः ७
यथा हि लोहनिष्यन्दो निषिक्तो बिम्बविग्रहम्
उपैति तद्वज्जानीहि गर्भे जीवप्रवेशनम् ८
लोहपिण्डं यथा वह्निः प्रविशत्यभितापयन्
तथा त्वमपि जानीहि गर्भे जीवोपपादनम् ९
यथा च दीपः शरणं दीप्यमानः प्रकाशयेत्
एवमेव शरीराणि प्रकाशयति चेतना १०

यद्यच्च कुरुते कर्म शुभं वा यदि वाशुभम्
पूर्वदेहकृतं सर्वमवश्यमुपभुज्यते ११
ततस्तत्क्षीयते चैव पुनश्चान्यत्प्रचीयते
यावत्तन्मोक्षयोगस्थं धर्मं नैवावबुध्यते १२
तत्र धर्मं प्रवक्ष्यामि सुखी भवति येन वै
आवर्तमानो जातीषु तथान्योन्यासु सत्तम १३
दानं व्रतं ब्रह्मचर्यं यथोक्तव्रतधारणम्
दमः प्रशान्तता चैव भूतानां चानुकम्पनम् १४
संयमश्चानृशंस्यं च परस्वादानवर्जनम्
व्यलीकानामकरणं भूतानां यत्र सा भुवि १५
मातापित्रोश्च शुश्रूषा देवतातिथिपूजनम्
गुरुपूजा घृणा शौचं नित्यमिन्द्रियसंयमः १६
प्रवर्तनं शुभानां च तत्सतां वृत्तमुच्यते
ततो धर्मः प्रभवति यः प्रजाः पाति शाश्वतीः १७
एवं सत्सु सदा पश्येत्तत्र ह्येषा ध्रुवा स्थितिः
आचारो धर्ममाचष्टे यस्मिन्सन्तो व्यवस्थिताः १८
तेषु तद्धर्मनिक्षिप्तं यः स धर्मः सनातनः
यस्तं समभिपद्येत न स दुर्गतिमाप्नुयात् १९
अतो नियम्यते लोकः प्रमुह्य धर्मवर्त्मसु
यस्तु योगी च मुक्तश्च स एतेभ्यो विशिष्यते २०
वर्तमानस्य धर्मेण पुरुषस्य यथा तथा
संसारतारणं ह्यस्य कालेन महता भवेत् २१
एवं पूर्वकृतं कर्म सर्वो जन्तुर्निषेवते
सर्वं तत्कारणं येन निकृतोऽयमिहागतः २२
शरीरग्रहणं चास्य केन पूर्वं प्रकल्पितम्
इत्येवं संशयो लोके तच्च वक्ष्याम्यतः परम् २३
शरीरमात्मनः कृत्वा सर्वभूतपितामहः
त्रैलोक्यमसृजद्ब्रह्मा  कृत्स्नं स्थावरजङ्गमम् २४
ततः प्रधानमसृजच्चेतना सा शरीरिणाम्
यया सर्वमिदं व्याप्तं यां लोके परमां विदुः २५

इह तत्क्षरमित्युक्तं परं त्वमृतमक्षरम्
त्रयाणां मिथुनं सर्वमेकैकस्य पृथक्पृथक् २६
असृजत्सर्वभूतानि पूर्वसृष्टः प्रजापतिः
स्थावराणि च भूतानि इत्येषा पौर्विकी श्रुतिः २७
तस्य कालपरीमाणमकरोत्स पितामहः
भूतेषु परिवृत्तिं च पुनरावृत्तिमेव च २८
यथात्र कश्चिन्मेधावी दृष्टात्मा पूर्वजन्मनि
यत्प्रवक्ष्यामि तत्सर्वं यथावदुपपद्यते २९
सुखदुःखे सदा सम्यगनित्ये यः प्रपश्यति
कायं चामेध्यसंघातं विनाशं कर्मसंहितम् ३०
यच्च किंचित्सुखं तच्च सर्वं दुःखमिति स्मरन्
संसारसागरं घोरं तरिष्यति सुदुस्तरम् ३१
जातीमरणरोगैश्च समाविष्टः प्रधानवित्
चेतनावत्सु चैतन्यं समे भूतेषु पश्यति ३२
निर्विद्यते ततः कृत्स्नं मार्गमाणः परं पदम्
तस्योपदेशं वक्ष्यामि याथातथ्येन सत्तम ३३
शाश्वतस्याव्ययस्याथ पदस्य ज्ञानमुत्तमम्
प्रोच्यमानं मया विप्र निबोधेदमशेषतः ३४

इति श्रीमहाभारते आश्वमेधिकपर्वणि अष्टादशोऽध्यायः १८

## एकोनविंशोऽध्यायः

ब्राह्मण उवाच
यः स्यादेकायने लीनस्तूष्णीं किंचिदचिन्तयन्
पूर्वं पूर्वं परित्यज्य स निरारम्भको भवेत् १
सर्वमित्रः सर्वसहः समरक्तो जितेन्द्रियः
व्यपेतभयमन्युश्च कामहा मुच्यते नरः २
आत्मवत्सर्वभूतेषु यश्चरेन्नियतः शुचिः
अमानी निरभीमानः सर्वतो मुक्त एव सः ३
जीवितं मरणं चोभे सुखदुःखे तथैव च
लाभालाभे प्रियद्वेष्ये यः समः स च मुच्यते ४

न कस्यचित्स्पृहयते नावजानाति किंचन
निर्द्वंद्वो वीतरागात्मा सर्वतो मुक्त एव सः ५
अनमित्रोऽथ निर्बन्धुरनपत्यश्च यः क्वचित्
त्यक्तधर्मार्थकामश्च निराकाङ्क्षी स मुच्यते ६
नैव धर्मी न चाधर्मी पूर्वोपचितहा च यः
धातुक्षयप्रशान्तात्मा निर्द्वंद्वः स विमुच्यते ७
अकर्मा चाविकाङ्क्षश्च पश्यञ्जगदशाश्वतम्
अस्वस्थमवशं नित्यं जन्मसंसारमोहितम् ८
वैराग्यबुद्धिः सततं तापदोषव्यपेक्षकः
आत्मबन्धविनिर्मोक्षं स करोत्यचिरादिव ९
अगन्धरसमस्पर्शमशब्दमपरिग्रहम्
अरूपमनभिज्ञेयं दृष्ट्वात्मानं विमुच्यते १०
पञ्चभूतगुणैर्हीनममूर्तिमदलेपकम्
अगुणं गुणभोक्तारं यः पश्यति स मुच्यते ११
विहाय सर्वसंकल्पान्बुद्ध्या शारीरमानसान्
शनैर्निर्वाणमाप्नोति निरिन्धन इवानलः १२
विमुक्तः सर्वसंस्कारैस्ततो ब्रह्म सनातनम्
परमाप्नोति संशान्तमचलं दिव्यमक्षरम् १३
अतः परं प्रवक्ष्यामि योगशास्त्रमनुत्तमम्
यज्ज्ञात्वा सिद्धमात्मानं लोके पश्यन्ति योगिनः १४
तस्योपदेशं पश्यामि यथावत्तन्निबोध मे
यैर्द्वारैश्चारयन्नित्यं पश्यत्यात्मानमात्मनि १५
इन्द्रियाणि तु संहृत्य मन आत्मनि धारयेत्
तीव्रं तप्त्वा तपः पूर्वं ततो योक्तुमुपक्रमेत् १६
तपस्वी त्यक्तसंकल्पो दम्भाहंकारवर्जितः
मनीषी मनसा विप्रः पश्यत्यात्मानमात्मनि १७
स चेच्छक्नोत्ययं साधुर्योक्तुमात्मानमात्मनि
तत एकान्तशीलः स पश्यत्यात्मानमात्मनि १८
संयतः सततं युक्त आत्मवान्विजितेन्द्रियः
तथायमात्मनात्मानं साधु युक्तः प्रपश्यति १९

यथा हि पुरुषः स्वप्ने दृष्ट्वा पश्यत्यसाविति
तथारूपमिवात्मानं साधु युक्तः प्रपश्यति २०
इषीकां वा यथा मुञ्जात्कश्चिन्निर्हृत्य दर्शयेत्
योगी निष्कृष्टमात्मानं तथा संपश्यते तनौ २१
मुञ्जं शरीरं तस्याहुरिषीकामात्मनि श्रिताम्
एतन्निदर्शनं प्रोक्तं योगविद्भिरनुत्तमम् २२
यदा हि युक्तमात्मानं सम्यक्पश्यति देहभृत्
तदास्य नेशते कश्चित्त्रैलोक्यस्यापि यः प्रभुः २३
अन्योन्याश्चैव तनवो यथेष्टं प्रतिपद्यते
विनिवृत्य जरामृत्यू न हृष्यति न शोचति २४
देवानामपि देवत्वं युक्तः कारयते वशी
ब्रह्म चाव्ययमाप्नोति हित्वा देहमशाश्वतम् २५
विनश्यत्स्वपि लोकेषु न भयं तस्य जायते
क्लिश्यमानेषु भूतेषु न स क्लिश्यति केनचित् २६
दुःखशोकमयैर्घोरैः सङ्गस्नेहसमुद्भवैः
न विचाल्येत युक्तात्मा निस्पृहः शान्तमानसः २७
नैनं शस्त्राणि विध्यन्ते न मृत्युश्चास्य विद्यते
नातः सुखतरं किंचिल्लोके क्वचन विद्यते २८
सम्यग्युक्त्वा यदात्मानमात्मन्येव प्रपश्यति
तदैव न स्पृहयते साक्षादपि शतक्रतोः २९
निर्वेदस्तु न गन्तव्यो युञ्जानेन कथंचन
योगमेकान्तशीलस्तु यथा युञ्जीत तच्छृणु ३०
दृष्टपूर्वां दिशं चिन्त्य यस्मिन्संनिवसेत्पुरे
पुरस्याभ्यन्तरे तस्य मनश्चार्यं न बाह्यतः ३१
पुरस्याभ्यन्तरे तिष्ठन्यस्मिन्नावसथे वसेत्
तस्मिन्नावसथे धार्यं सबाह्याभ्यन्तरं मनः ३२
प्रचिन्त्यावसथं कृत्स्नं यस्मिन्कायेऽवतिष्ठते
तस्मिन्काये मनश्चार्यं न कथंचन बाह्यतः ३३
संनियम्येन्द्रियग्रामं निर्घोषे निर्जने वने
कायमभ्यन्तरं कृत्स्नमेकाग्रः परिचिन्तयेत् ३४

दन्तांस्तालु च जिह्वां च गलं ग्रीवां तथैव च
हृदयं चिन्तयेच्चापि तथा हृदयबन्धनम् ३५
इत्युक्तः स मया शिष्यो मेधावी मधुसूदन
पप्रच्छ पुनरेवेमं मोक्षधर्मं सुदुर्वचम् ३६
भुक्तं भुक्तं कथमिदमन्नं कोष्ठे विपच्यते
कथं रसत्वं व्रजति शोणितं जायते कथम्
तथा मांसं च मेदश्च स्नाय्वस्थीनि च पोषति ३७
कथमेतानि सर्वाणि शरीराणि शरीरिणाम्
वर्धन्ते वर्धमानस्य वर्धते च कथं बलम्
निरोजसां निष्क्रमणं मलानां च पृथक् पृथक् ३८
कृतो वायं प्रश्वसिति उच्छ्वसित्यपि वा पुनः
कं च देशमधिष्ठाय तिष्ठत्यात्मायमात्मनि ३९
जीवः कायं वहति चेच्चेष्टयानः कलेवरम्
किंवर्णं कीदृशं चैव निवेशयति वै मनः
याथातथ्येन भगवन्वक्तुमर्हसि मेऽनघ ४०
इति संपरिपृष्टोऽह तेन विप्रेण माधव
प्रत्यब्रुवं महाबाहो यथाश्रुतमरिंदम ४१
यथा स्वकोष्ठे प्रक्षिप्य कोष्ठं भाण्डमना भवेत्
तथा स्वकाये प्रक्षिप्य मनो द्वारैरनिश्चलैः
आत्मानं तत्र मार्गेत प्रमादं परिवर्जयेत् ४२
एवं सततमुद्युक्तः प्रीतात्मा नचिरादिव
आसादयति तद्ब्रह्म यद्दृष्ट्वा स्यात्प्रधानवित् ४३
न त्वसौ चक्षुषा ग्राह्यो न च सर्वैरपीन्द्रियैः
मनसैव प्रदीपेन महानात्मनि दृश्यते ४४
सर्वतः पाणिपादं तं सर्वतोक्षिशिरोमुखम्
जीवो निष्क्रान्तमात्मानं शरीरात्संप्रपश्यति ४५
स तदुत्सृज्य देहं स्वं धारयन्ब्रह्म केवलम्
आत्मानमालोकयति मनसा प्रहसन्निव ४६
इदं सर्वरहस्यं ते मयोक्तं द्विजसत्तम
आपृच्छे साधयिष्यामि गच्छ शिष्य यथासुखम् ४७

इत्युक्तः स तदा कृष्ण मया शिष्यो महातपाः
अगच्छत यथाकामं ब्राह्मणश्छिन्नसंशयः ४८
वासुदेव उवाच
इत्युक्त्वा स तदा वाक्यं मां पार्थ द्विजपुंगवः
मोक्षधर्माश्रितः सम्यक्तत्रैवान्तरधीयत ४९
कच्चिदेतत्त्वया पार्थ श्रुतमेकाग्रचेतसा
तदापि हि रथस्थस्त्वं श्रुतवानेतदेव हि ५०
नैतत्पार्थ सुविज्ञेयं व्यामिश्रेणेति मे मतिः
नरेणाकृतसंज्ञेन विदग्धेनाकृतात्मना ५१
सुरहस्यमिदं प्रोक्तं देवानां भरतर्षभ
कच्चिन्नेदं श्रुतं पार्थ मर्त्येनान्येन केनचित् ५२
न ह्येतच्छ्रोतुमर्होऽन्यो मनुष्यस्त्वामृतेऽनघ
नैतदद्य सुविज्ञेयं व्यामिश्रेणान्तरात्मना ५३
क्रियावद्भिर्हि कौन्तेय देवलोकः समावृतः
न चैतदिष्टं देवानां मर्त्यै रूपनिवर्तनम् ५४
परा हि सा गतिः पार्थ यत्तद्ब्रह्म सनातनम्
यत्रामृतत्वं प्राप्नोति त्यक्त्वा दुःखं सदा सुखी ५५
एवं हि धर्ममास्थाय येऽपि स्युः पापयोनयः
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ५६
किं पुनर्ब्राह्मणाः पार्थ क्षत्रिया वा बहुश्रुताः
स्वधर्मरतयो नित्यं ब्रह्मलोकपरायणाः ५७
हेतुमच्चैतदुद्दिष्टमुपायाश्चास्य साधने
सिद्धेः फलं च मोक्षश्च दुःखस्य च विनिर्णयः
अतः परं सुखं त्वन्यत्किं नु स्याद्भरतर्षभ ५८
श्रुतवाञ्श्रद्दधानश्च पराक्रान्तश्च पाण्डव
यः परित्यजते मर्त्यो लोकतन्त्रमसारवत्
एतैरुपायैः स क्षिप्रं परां गतिमवाप्नुयात् ५९
एतावदेव वक्तव्यं नातो भूयोऽस्ति किंचन
षण्मासान्नित्ययुक्तस्य योगः पार्थ प्रवर्तते ६०
इति श्रीमहाभारते आश्वमेधिकपर्वणि एकोनविंशोऽध्यायः १९

विंशोऽध्यायः

वासुदेव उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
दंपत्योः पार्थ संवादमभयं नाम नामतः १
ब्राह्मणी ब्राह्मणं कंचिज्ज्ञानविज्ञानपारगम्
दृष्ट्वा विविक्त आसीनं भार्या भर्तारमब्रवीत् २
कं नु लोकं गमिष्यामि त्वामहं पतिमाश्रिता
न्यस्तकर्माणमासीनं कीनाशमविचक्षणम् ३
भार्याः पतिकृताँल्लोकानाप्नुवन्तीति नः श्रुतम्
त्वामहं पतिमासाद्य कां गमिष्यामि वै गतिम् ४
एवमुक्तः स शान्तात्मा तामुवाच हसन्निव
सुभगे नाभ्यसूयामि वाक्यस्यास्य तवानघे ५
ग्राह्यं दृश्यं च श्राव्यं च यदिदं कर्म विद्यते
एतदेव व्यवस्यन्ति कर्म कर्मेति कर्मिणः ६
मोहमेव नियच्छन्ति कर्मणा ज्ञानवर्जिताः
नैष्कर्म्यं न च लोकेऽस्मिन्मौर्तमित्युपलभ्यते ७
कर्मणा मनसा वाचा शुभं वा यदि वाशुभम्
जन्मादिमूर्तिभेदानां कर्म भूतेषु वर्तते ८
रक्षोभिर्वध्यमानेषु दृश्यद्रव्येषु कर्मसु
आत्मस्थमात्मना तेन दृष्टमायतनं मया ९
यत्र तद्ब्रह्म निर्द्वंद्वं यत्र सोमः सहाग्निना
व्यवायं कुरुते नित्यं धीरो भूतानि धारयन् १०
यत्र ब्रह्मादयो युक्तास्तदक्षरमुपासते
विद्वांसः सुव्रता यत्र शान्तात्मानो जितेन्द्रियाः ११
घ्राणेन न तदाघ्रेयं न तदाद्यं च जिह्वया
स्पर्शेन च न तत्स्पृश्यं मनसा त्वेव गम्यते १२
चक्षुषा ना विषह्यं च यत्किंचिच्छ्रवणात्परम्
अगन्धमरसस्पर्शमरूपाशब्दमव्ययम् १३
यतः प्रवर्तते तन्त्रं यत्र च प्रतितिष्ठति
प्राणोऽपानः समानश्च व्यानश्चोदान एव च १४

तत एव प्रवर्तन्ते तमेव प्रविशन्ति च
समानव्यानयोर्मध्ये प्राणापानौ विचेरतुः १५
तस्मिन्सुप्ते प्रलीयेते समानो व्यान एव च
अपानप्राणयोर्मध्ये उदानो व्याप्य तिष्ठति
तस्माच्छयानं पुरुषं प्राणापानौ न मुञ्चतः १६
प्राणानायम्यते येन तमुदानं प्रचक्षते
तस्मात्तपो व्यवस्यन्ति तद्भवं ब्रह्मवादिनः १७
तेषामन्योन्यभक्षाणां सर्वेषां देहचारिणाम्
अग्निर्वैश्वानरो मध्ये सप्तधा विहितोऽन्तरा १८
घ्राणं जिह्वा च चक्षुश्च त्वक्च श्रोत्रं च पञ्चमम्
मनो बुद्धिश्च सप्तैता जिह्वा वैश्वानरार्चिषः १९
घ्रेयं दृश्यं च भक्ष्यं च स्पृश्यं श्रव्यं तथैव च
मन्तव्यमथ बोद्धव्यं ताः सप्त समिधो मम  २०
घ्राता भक्षयिता द्रष्टा स्प्रष्टा श्रोता च पञ्चमः
मन्ता बोद्धा च सप्तैते भवन्ति परमर्त्विजः २१
घ्रेये पेये च दृश्ये च स्पृश्ये श्रव्ये तथैव च
हवींष्यग्निषु होतारः सप्तधा सप्त सप्तसु
सम्यक्प्रक्षिप्य विद्वांसो जनयन्ति स्वयोनिषु २२
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम्
मनो बुद्धिश्च सप्तैते योनिरित्येव शब्दिताः २३
हविर्भूता गुणाः सर्वे प्रविशन्त्यग्निजं मुखम्
अन्तर्वासमुषित्वा च जायन्ते स्वासु योनिषु
तत्रैव च निरुध्यन्ते प्रलये भूतभावने २४
ततः संजायते गन्धस्ततः संजायते रसः
ततः संजायते रूपं ततः स्पर्शोऽभिजायते २५
ततः संजायते शब्दः संशयस्तत्र जायते
ततः संजायते निष्ठा जन्मैतत्सप्तधा विदुः २६
अनेनैव प्रकारेण प्रगृहीतं पुरातनैः
पूर्णाहुतिभिरापूर्णास्तेऽभिपूर्यन्ति तेजसा २७
इति श्रीमहाभारते आश्वमेधिकपर्वणि विंशोऽध्यायः २०

## एकविंशोऽध्यायः

ब्राह्मण उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
निबोध दशहोतॄणां विधानमिह यादृशम् १
सर्वमेवात्र विज्ञेयं चित्तं ज्ञानमवेक्षते
रेतः शरीरभृत्काये विज्ञाता तु शरीरभृत् २
शरीरभृद्गार्हपत्यस्तस्मादन्यः प्रणीयते
ततश्चाहवनीयस्तु तस्मिन्संक्षिप्यते हविः ३
ततो वाचस्पतिर्जज्ञे समानः पर्यवेक्षते अं
रूपं भवति वै व्यक्तं तदनुद्रवते मनः ४
ब्राह्मण्युवाच
कस्माद्वागभवत्पूर्वं कस्मात्पश्चान्मनोऽभवत्
मनसा चिन्तितं वाक्यं यदा समभिपद्यते ५
केन विज्ञानयोगेन मतिश्चित्तं समास्थिता
समुन्नीता नाध्यगच्छत्को वैनां प्रतिषेधति ६
ब्राह्मण उवाच
तामपानः पतिर्भूत्वा तस्मात्प्रेष्यत्यपानताम्
तां मतिं मनसः प्राहुर्मनस्तस्मादवेक्षते ७
प्रश्नं तु वाङ्मनसोर्मां यस्मात्त्वमनुपृच्छसि
तस्मात्ते वर्तयिष्यामि तयोरेव समाह्वयम् ८
उभे वाङ्मनसी गत्वा भूतात्मानमपृच्छताम्
आवयोः श्रेष्ठमाचक्ष्व छिन्धि नौ संशयं विभो ९
मन इत्येव भगवांस्तदा प्राह सरस्वतीम्
अहं वै कामधुक्तुभ्यमिति तं प्राह वागथ १०
स्थावरं जङ्गमं चैव विद्ध्युभे मनसी मम
स्थावरं मत्सकाशे वै जङ्गमं विषये तव ११
यस्तु ते विषयं गच्छेन्मन्त्रो वर्णः स्वरोऽपि वा
तन्मनो जङ्गमं नाम तस्मादसि गरीयसी १२
यस्मादसि च मा वोचः स्वयमभ्येत्य शोभने
तस्मादुच्छ्वासमासाद्य न वक्ष्यसि सरस्वति १३

प्राणापानान्तरे देवी वाग्वै नित्यं स्म तिष्ठति
प्रेर्यमाणा महाभागे विना प्राणमपानती
प्रजापतिमुपाधावत्प्रसीद भगवन्निति १४
ततः प्राणः प्रादुरभूद्वाचमाप्याययन्पुनः
तस्मादुच्छ्वासमासाद्य न वाग्वदति कर्हिचित् १५
घोषिणी जातनिर्घोषा नित्यमेव प्रवर्तते
तयोरपि च घोषिण्योर्निर्घोषैव गरीयसी १६
गौरिव प्रस्रवत्येषा रसमुत्तमशालिनी
सततं स्यन्दते ह्येषा शाश्वतं ब्रह्मवादिनी १७
दिव्यादिव्यप्रभावेन भारती गौः शुचिस्मिते
एतयोरन्तरं पश्य सूक्ष्मयोः स्यन्दमानयोः १८
अनुत्पन्नेषु वाक्येषु चोद्यमाना सिसृक्षया
किं नु पूर्वं ततो देवी व्याजहार सरस्वती १९
प्राणेन या संभवते शरीरे प्राणादपानं प्रतिपद्यते च
उदानभूता च विसृज्य देहं व्यानेन सर्वं दिवमावृणोति २०
ततः समाने प्रतितिष्ठतीह इत्येव पूर्वं प्रजजल्प चापि
तस्मान्मनः स्थावरत्वाद्विशिष्टं तथा देवी जङ्गमत्वाद्विशिष्टा २१
इति श्रीमहाभारते आश्वमेधिकपर्वणि एकविंशोऽध्यायः २१

## द्वाविंशोऽध्यायः

ब्राह्मण उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
सुभगे सप्तहोतॄणां विधानमिह यादृशम् १
घ्राणं चक्षुश्च जिह्वा च त्वक्श्रोत्रं चैव पञ्चमम्
मनो बुद्धिश्च सप्तैते होतारः पृथगाश्रिताः २
सूक्ष्मेऽवकाशे सन्तस्ते न पश्यन्तीतरेतरम्
एतान्वै सप्तहोतॄंस्त्वं स्वभावाद्विद्धि शोभने ३
ब्राह्मण्युवाच
सूक्ष्मेऽवकाशे सन्तस्ते कथं नान्योन्यदर्शिनः
कथंस्वभावा भगवन्नेतदाचक्ष्व मे विभो ४

ब्राह्मण उवाच
गुणाज्ञानमविज्ञानं गुणज्ञानमभिज्ञता
परस्परगुणानेते न विजानन्ति कर्हिचित् ५
जिह्वा चक्षुस्तथा श्रोत्रं त्वङ्मनो बुद्धिरेव च
न गन्धानधिगच्छन्ति घ्राणस्तानधिगच्छति ६
घ्राणं चक्षुस्तथा श्रोत्रं त्वङ्मनो बुद्धिरेव च
न रसानधिगच्छन्ति जिह्वा तानधिगच्छति ७
घ्राणं जिह्वा तथा श्रोत्रं त्वङ्मनो बुद्धिरेव च
न रूपाण्यधिगच्छन्ति चक्षुस्तान्यधिगच्छति ८
घ्राणं जिह्वा च चक्षुश्च श्रोत्रं बुद्धिर्मनस्तथा
न स्पर्शानधिगच्छन्ति त्वक्च तानधिगच्छति ९
घ्राणं जिह्वा च चक्षुश्च त्वक् श्रोत्रं बुद्धिरेव च
न शब्दानधिगच्छन्ति श्रोत्रं तानधिगच्छति १०
घ्राणं जिह्वा च चक्षुश्च त्वक्श्रोत्रं बुद्धिरेव च
संशयान्नाधिगच्छन्ति मनस्तानधिगच्छति ११
घ्राणं जिह्वा च चक्षुश्च त्वक्श्रोत्रं मन एव च
न निष्ठामधिगच्छन्ति बुद्धिस्तामधिगच्छति १२
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
इन्द्रियाणां च संवादं मनसश्चैव भामिनि १३
मन उवाच
न घ्राति मामृते घ्राणं रसं जिह्वा न बुध्यते
रूपं चक्षुर्न गृह्णाति त्वक्स्पर्शं नावबुध्यते १४
न श्रोत्रं बुध्यते शब्दं मया हीनं कथंचन
प्रवरं सर्वभूतानामहमस्मि सनातनम् १५
अगाराणीव शून्यानि शान्तार्चिष इवाग्नयः
इन्द्रियाणि न भासन्ते मया हीनानि नित्यशः १६
काष्ठानीवार्द्रशुष्काणि यतमानैरपीन्द्रियैः
गुणार्थान्नाधिगच्छन्ति मामृते सर्वजन्तवः १७
इन्द्रियाण्यूचुः
एवमेतद्भवेत्सत्यं यथैतन्मन्यते भवान्

ऋतेऽस्मानस्मदर्थांस्तु भोगान्भुङ्क्ते भवान्यदि १८
यद्यस्मासु प्रलीनेषु तर्पणं प्राणधारणम्
भोगान्भुङ्क्ष्व रसान्भुङ्क्ष्व यथैतन्मन्यते तथा १९
अथ वास्मासु लीनेषु तिष्ठत्सु विषयेषु च
यदि संकल्पमात्रेण भुङ्क्ते भोगान्यथार्थवत् २०
अथ चेन्मन्यसे सिद्धिमस्मदर्थेषु नित्यदा
घ्राणेन रूपमादत्स्व रसमादत्स्व चक्षुषा २१
श्रोत्रेण गन्धमादत्स्व निष्ठामादत्स्व जिह्वया
त्वचा च शब्दमादत्स्व बुद्ध्या स्पर्शमथापि च २२
बलवन्तो ह्यनियमा नियमा दुर्बलीयसाम्
भोगानपूर्वानादत्स्व नोच्छिष्टं भोक्तुमर्हसि २३
यथा हि शिष्यः शास्तारं श्रुत्यर्थमभिधावति
ततः श्रुतमुपादाय श्रुतार्थमुपतिष्ठति २४
विषयानेवमस्माभिर्दर्शितानभिमन्यसे
अनागतानतीतांश्च स्वप्ने जागरणे तथा २५
वैमनस्यं गतानां च जन्तूनामल्पचेतसाम्
अस्मदर्थे कृते कार्ये दृश्यते प्राणधारणम् २६
बहूनपि हि संकल्पान्मत्वा स्वप्नानुपास्य च
बुभुक्षया पीड्यमानो विषयानेव धावसि २७
अगारमद्वारमिव प्रविश्य संकल्पभोगो विषयानविन्दन्
प्राणक्षये शान्तिमुपैति नित्यं दारुक्षयेऽग्निर्ज्वलितो यथैव २८
कामं तु नः स्वेषु गुणेषु संगः कामं च नान्योन्यगुणोपलब्धिः
अस्मानृते नास्ति तवोपलब्धिस्त्वामप्यृतेऽस्मान्न  भजेत हर्षः २९
इति श्रीमहाभारते आश्वमेधिकपर्वणि द्वाविंशोऽध्यायः २२

## त्रयोविंशोऽध्यायः

ब्राह्मण उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
सुभगे पञ्चहोतॄणां विधानमिह यादृशम् १
प्राणापानावुदानश्च समानो व्यान एव च

पञ्चहोतॄनथैतान्वै परं भावं विदुर्बुधाः २
ब्राह्मण्युवाच
स्वभावात्सप्त होतार इति मे पूर्विका मतिः
यथा वै पञ्च होतारः परो भावस्तथोच्यताम् ३
ब्राह्मण उवाच
प्राणेन संभृतो वायुरपानो जायते ततः
अपाने संभृतो वायुस्ततो व्यानः प्रवर्तते ४
व्यानेन संभृतो वायुस्ततोदानः प्रवर्तते
उदाने संभृतो वायुः समानः संप्रवर्तते ५
तेऽपृच्छन्त पुरा गत्वा पूर्वजातं प्रजापतिम्
यो नो ज्येष्ठस्तमाचक्ष्व स नः श्रेष्ठो भविष्यति ६
ब्रह्मोवाच
यस्मिन्प्रलीने प्रलयं व्रजन्ति सर्वे प्राणाः प्राणभृतां शरीरे
यस्मिन्प्रचीर्णे च पुनश्चरन्ति स वै श्रेष्ठो गच्छत यत्र कामः ७
प्राण उवाच
मयि प्रलीने प्रलयं व्रजन्ति सर्वे प्राणाः प्राणभृतां शरीरे
मयि प्रचीर्णे च पुनश्चरन्ति श्रेष्ठो ह्यहं पश्यत मां प्रलीनम् ८
ब्राह्मण उवाच
प्राणः प्रलीयत ततः पुनश्च प्रचचार ह
समानश्चाप्युदानश्च वचोऽब्रूतां ततः शुभे ९
न त्वं सर्वमिदं व्याप्य तिष्ठसीह यथा वयम्
न त्वं श्रेष्ठोऽसि नः प्राण अपानो हि वशे तव
प्रचचार पुनः प्राणस्तमपानोऽभ्यभाषत १०
मयि प्रलीने प्रलयं व्रजन्ति सर्वे प्राणाः प्राणभृतां शरीरे
मयि प्रचीर्णे च पुनश्चरन्ति श्रेष्ठो ह्यहं पश्यत मां प्रलीनम् ११
व्यानश्च तमुदानश्च भाषमाणमथोचतुः
अपान न त्वं श्रेष्ठोऽसि प्राणो हि वशगस्तव १२
अपानः प्रचचाराथ व्यानस्तं पुनरब्रवीत्
श्रेष्ठोऽहमस्मि सर्वेषां श्रूयतां येन हेतुना १३
मयि प्रलीने प्रलयं व्रजन्ति सर्वे प्राणाः प्राणभृतां शरीरे

मयि प्रचीर्णे च पुनश्चरन्ति श्रेष्ठो ह्यहं पश्यत मां प्रलीनम् १४
प्रालीयत ततो व्यानः पुनश्च प्रचचार ह
प्राणापानावुदानश्च समानश्च तमब्रुवन्
न त्वं श्रेष्ठोऽसि नो व्यान समानो हि वशे तव १५
प्रचचार पुनर्व्यानः समानः पुनरब्रवीत्
श्रेष्ठोऽहमस्मि सर्वेषां श्रूयतां येन हेतुना १६
मयि प्रलीने प्रलयं व्रजन्ति सर्वे प्राणाः प्राणभृतां शरीरे
मयि प्रचीर्णे च पुनश्चरन्ति श्रेष्ठो ह्यहं पश्यत मां प्रलीनम् १७
ततः समानः प्रालिल्ये पुनश्च प्रचचार ह
प्राणापानावुदानश्च व्यानश्चैव तमब्रुवन्
समान न त्वं श्रेष्ठोऽसि व्यान एव वशे तव १८
समानः प्रचचाराथ उदानस्तमुवाच ह
श्रेष्ठोऽहमस्मि सर्वेषां श्रूयतां येन हेतुना १९
मयि प्रलीने प्रलयं व्रजन्ति सर्वे प्राणाः प्राणभृतां शरीरे
मयि प्रचीर्णे च पुनश्चरन्ति श्रेष्ठो ह्यहं पश्यत मां प्रलीनम् २०
ततः प्रालीयतोदानः पुनश्च प्रचचार ह
प्राणापानौ समानश्च व्यानश्चैव तमब्रुवन्
उदान न त्वं श्रेष्ठोऽसि व्यान एव वशे तव २१
ततस्तानब्रवीद्ब्रह्मा समवेतान्प्रजापतिः
सर्वे श्रेष्ठा न वा श्रेष्ठाः सर्वे चान्योन्यधर्मिणः
सर्वे स्वविषये श्रेष्ठाः सर्वे चान्योन्यरक्षिणः २२
एकः स्थिरश्चास्थिरश्च विशेषात्पञ्चवायवः
एक एव ममैवात्मा बहुधाप्युपचीयते २३
परस्परस्य सुहृदो भावयन्तः परस्परम्
स्वस्ति व्रजत भद्रं वो धारयध्वं परस्परम् २४
इति श्रीमहाभारते आश्वमेधिकपर्वणि त्रयोविंशोऽध्यायः २३

## चतुर्विंशोऽध्यायः

ब्राह्मण उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्

नारदस्य च संवादमृषेर्देवमतस्य च १
देवमत उवाच
जन्तोः संजायमानस्य किं नु पूर्वं प्रवर्तते
प्राणोऽपानः समानो वा व्यानो वोदान एव च २
नारद उवाच
येनायं सृज्यते जन्तुस्ततोऽन्य पूर्वमेति तम्
प्राणद्वंद्वं च विज्ञेयं तिर्यगं चोर्ध्वगं य यत् ३
देवमत उवाच
केनायं सृज्यते जन्तुः कश्चान्यः पूर्वमेति तम्
प्राणद्वंद्वं च मे ब्रूहि तिर्यगूर्ध्वं च निश्चयात् ४
नारद उवाच
संकल्पाज्जायते हर्षः शब्दादपि च जायते
रसात्संजायते चापि रूपादपि च जायते ५
स्पर्शात्संजायते चापि गन्धादपि च जायते
एतद्रूपमुदानस्य हर्षो मिथुनसंभवः ६
कामात्संजायते शुक्रं कामात्संजायते रसः
समानव्यानजनिते सामान्ये शुक्रशोणिते ७
शुक्राच्छोणितसंसृष्टात्पूर्वं प्राणः प्रवर्तते
प्राणेन विकृते शुक्रे ततोऽपानः प्रवर्तते ८
प्राणापानाविदं द्वंद्वमवाक्चोर्ध्वं च गच्छतः
व्यानः समानश्चैवोभौ तिर्यग्द्वंद्वत्वमुच्यते ९
अग्निर्वै देवताः सर्वा इति वेदस्य शासनम्
संजायते ब्राह्मणेषु ज्ञानं बुद्धिसमन्वितम् १०
तस्य धूमस्तमोरूपं रजो भस्म सुरेतसः
सर्वं संजायते तस्य यत्र प्रक्षिप्यते हविः ११
आघारौ समानो व्यानश्च इति यज्ञविदो विदुः
प्राणापानावाज्यभागौ तयोर्मध्ये हुताशनः
एतद्रूपमुदानस्य परमं ब्राह्मणा विदुः १२
निर्द्वंद्वमिति यत्त्वेतत्तन्मे निगदतः शृणु १३
अहोरात्रमिदं द्वंद्वं तयोर्मध्ये हुताशनः

एतद्रूपमुदानस्य परमं ब्राह्मणा विदुः १४
उभे चैवायने द्वंद्वं तयोर्मध्ये हुताशनः
एतद्रूपमुदानस्य परमं ब्राह्मणा विदुः १५
उभे सत्यानृते द्वंद्वं तयोर्मध्ये हुताशनः
एतद्रूपमुदानस्य परमं ब्राह्मणा विदुः १६
उभे शुभाशुभे द्वंद्वं तयोर्मध्ये हुताशनः
एतद्रूपमुदानस्य परमं ब्राह्मणा विदुः १७
सच्चासच्चैव तद्द्वंद्वं तयोर्मध्ये हुताशनः
एतद्रूपमुदानस्य परमं ब्राह्मणा विदुः १८
प्रथमं समानो व्यानो व्यस्यते कर्म तेन तत्
तृतीयं तु समानेन पुनरेव व्यवस्यते १९
शान्त्यर्थं वामदेवं च शान्तिर्ब्रह्म सनातनम्
एतद्रूपमुदानस्य परमं ब्राह्मणा विदुः २०
इति श्रीमहाभारते आश्वमेधिकपर्वणि चतुर्विंशोऽध्यायः २४

## पञ्चविंशोऽध्यायः

ब्राह्मण उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
चातुर्होत्रविधानस्य विधानमिह यादृशम् १
तस्य सर्वस्य विधिवद्विधानमुपदेक्ष्यते
शृणु मे गदतो भद्रे रहस्यमिदमुत्तमम् २
करणं कर्म कर्ता च मोक्ष इत्येव भामिनि
चत्वार एते होतारो यैरिदं जगदावृतम् ३
होतृणां साधनं चैव शृणु सर्वमशेषतः
घ्राणं जिह्वा च चक्षुश्च त्वक्च श्रोत्रं च पञ्चमम्
मनो बुद्धिश्च सप्तैते विज्ञेया गुणहेतवः ४
गन्धो रसश्च रूपं च शब्दः स्पर्शश्च पञ्चमः
मन्तव्यमथ बोद्धव्यं सप्तैते कर्महेतवः ५
घ्राता भक्षयिता द्रष्टा स्प्रष्टा श्रोता च पञ्चमः
मन्ता बोद्धा च सप्तैते विज्ञेयाः कर्तृहेतवः ६

स्वगुणं भक्षयन्त्येते गुणवन्तः शुभाशुभम्
अहं च निर्गुणोऽत्रेति सप्तैते मोक्षहेतवः ७
विदुषां बुध्यमानानां स्वं स्वं स्थानं यथाविधि
गुणास्ते देवताभूताः सततं भुञ्जते हविः ८
अदन्ह्यविद्वानन्नानि ममत्वेनोपपद्यते
आत्मार्थं पाचयन्नित्यं ममत्वेनोपहन्यते ९
अभक्ष्यभक्षणं चैव मद्यपानं च हन्ति तम्
स चान्नं हन्ति तच्चान्नं स हत्वा हन्यते बुधः १०
अत्ता ह्यन्नमिदं विद्वान्पुनर्जनयतीश्वरः
स चान्नाज्जायते तस्मिन्सूक्ष्मो नाम व्यतिक्रमः ११
मनसा गम्यते यच्च यच्च वाचा निरुद्यते
श्रोत्रेण श्रूयते यच्च चक्षुषा यच्च दृश्यते १२
स्पर्शेन स्पृश्यते यच्च घ्राणेन घ्रायते च यत्
मनः षष्ठानि संयम्य हवींष्येतानि सर्वशः १३
गुणवत्पावको मह्यं दीप्यते हव्यवाहनः
योगयज्ञः प्रवृत्तो मे ज्ञानब्रह्ममनोद्भवः
प्राणस्तोत्रोऽपानशस्त्रः सर्वत्यागसुदक्षिणः १४
कर्मानुमन्ता ब्रह्मा मे कर्ताध्वर्युः कृतस्तुतिः
कृतप्रशास्ता तच्छस्त्रमपवर्गोऽस्य दक्षिणा १५
ऋचश्चाप्यत्र शंसन्ति नारायणविदो जनाः
नारायणाय देवाय यदबध्नन्पशून्पुरा १६
तत्र सामानि गायन्ति तत्र चाहुर्निदर्शनम्
देवं नारायणं भीरु सर्वात्मानं निबोध मे १७
इति श्रीमहाभारते आश्वमेधिकपर्वणि पञ्चविंशोऽध्यायः २५

## षड्विंशोऽध्यायः

ब्राह्मण उवाच
एकः शास्ता न द्वितीयोऽस्ति शास्ता यथा नियुक्तोऽस्मि तथा चरामि
हृद्येष तिष्ठन्पुरुषः शास्ति शास्ता तेनैव युक्तः प्रवणादिवोदकम् १
एको गुरुर्नास्ति ततो द्वितीयो यो हृच्छयस्तमहमनुब्रवीमि

तेनानुशिष्टा गुरुणा सदैव पराभूता दानवाः सर्व एव २
एको बन्धुर्नास्ति ततो द्वितीयो यो हृच्छयस्तमहमनुब्रवीमि
तेनानुशिष्टा बान्धवा बन्धुमन्तः सप्तर्षयः सप्त दिवि प्रभान्ति ३
एकः श्रोता नास्ति ततो द्वितीयो यो हृच्छयस्तमहमनुब्रवीमि
तस्मिन्गुरौ गुरुवासं निरुष्य शक्रो गतः सर्वलोकामरत्वम् ४
एको द्वेष्टा नास्ति ततो द्वितीयो योहृच्छयस्तमहमनुब्रवीमि
तेनानुशिष्टा गुरुणा सदैव लोकद्विष्टाः पन्नगाः सर्व एव ५
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
प्रजापतौ पन्नगानां देवर्षीणां च संविदम् ६
देवर्षयश्च नागाश्च असुराश्च प्रजापतिम्
पर्यपृच्छन्नुपासीनाः श्रेयो नः प्रोच्यतामिति ७
तेषां प्रोवाच भगवाञ्श्रेयः समनुपृच्छताम्
ओमित्येकाक्षरं ब्रह्म ते श्रुत्वा प्राद्रवन्दिशः ८
तेषां प्राद्रवमाणानामुपदेशार्थमात्मनः
सर्पाणां दशने भावः प्रवृत्तः पूर्वमेव तु ९
असुराणां प्रवृत्तस्तु दम्भभावः स्वभावजः
दानं देवा व्यवसिता दममेव महर्षयः १०
एकं शास्तारमासाद्य शब्देनैकेन संस्कृताः
नाना व्यवसिताः सर्वे सर्पदेवर्षिदानवाः ११
शृणोत्ययं प्रोच्यमानं गृह्णाति च यथातथम्
पृच्छतस्तावतो भूयो गुरुरन्योऽनुमन्यते १२
तस्य चानुमते कर्म ततः पश्चात्प्रवर्तते
गुरुर्बोद्धा च शत्रुश्च द्वेष्टा च हृदि संश्रितः १३
पापेन विचरँल्लोके पापचारी भवत्ययम्
शुभेन विचरँल्लोके शुभचारी भवत्युत १४
कामचारी तु कामेन य इन्द्रियसुखे रतः
व्रतचारी सदैवैष य इन्द्रियजये रतः १५
अपेतव्रतकर्मा तु केवलं ब्रह्मणि श्रितः
ब्रह्मभूतश्चरँल्लोके ब्रह्मचारी भवत्ययम् १६
ब्रह्मैव समिधस्तस्य ब्रह्माग्निर्ब्रह्मसंस्तरः

आपो ब्रह्म गुरुर्ब्रह्म स ब्रह्मणि समाहितः १७
एतदेतादृशं सूक्ष्मं ब्रह्मचर्यं विदुर्बुधाः
विदित्वा चान्वपद्यन्त क्षेत्रज्ञेनानुदर्शिनः १८
इति श्रीमहाभारते आश्वमेधिकपर्वणि षड्विंशोऽध्यायः २६

## सप्तविंशोऽध्यायः

ब्राह्मण उवाच
संकल्पदंशमशकं शोकहर्षहिमातपम्
मोहान्धकारतिमिरं लोभव्यालसरीसृपम् १
विषयैकात्ययाध्वानं कामक्रोधविरोधकम्
तदतीत्य महादुर्गं प्रविष्टोऽस्मि महद्वनम् २
ब्राह्मण्युवाच
क्व तद्वनं महाप्राज्ञ के वृक्षाः सरितश्च काः
गिरयः पर्वताश्चैव कियत्यध्वनि तद्वनम् ३
ब्राह्मण उवाच
न तदस्ति पृथग्भावे किंचिदन्यत्ततः समम्
न तदस्त्यपृथग्भावे किंचिद्दूरतरं ततः ४
तस्माद्ध्रस्वतरं नास्ति न ततोऽस्ति बृहत्तरम्
नास्ति तस्माद्दुःखतरं नास्त्यन्यत्तत्समं सुखम् ५
न तत्प्रविश्य शोचन्ति न प्रहृष्यन्ति च द्विजाः
न च बिभ्यति केषांचित्तेभ्यो बिभ्यति के च न ६
तस्मिन्वने सप्त महाद्रुमाश्च फलानि सप्तातिथयश्च सप्त
सप्ताश्रमाः सप्त समाधयश्च दीक्षाश्च सप्तैतदरण्यरूपम् ७
पञ्चवर्णानि दिव्यानि पुष्पाणि च फलानि च
सृजन्तः पादपास्तत्र व्याप्य तिष्ठन्ति तद्वनम् ८
सुवर्णानि द्विवर्णानि पुष्पाणि च फलानि च
सृजन्तः पादपास्तत्र व्याप्य तिष्ठन्ति तद्वनम् ९
चतुर्वर्णानि दिव्यानि पुष्पाणि च फलानि च
सृजन्तः पादपास्तत्र व्याप्य तिष्ठन्ति तद्वनम् १०
शंकराणि त्रिवर्णानि पुष्पाणि च फलानि च

सृजन्तः पादपास्तत्र व्याप्य तिष्ठन्ति तद्वनम् ११
सुरभीण्येकवर्णानि पुष्पाणि च फलानि च
सृजन्तः पादपास्तत्र व्याप्य तिष्ठन्ति तद्वनम् १२
बहून्यव्यक्तवर्णानि पुष्पाणि च फलानि च
विसृजन्तौ महावृक्षौ तद्वनं व्याप्य तिष्ठतः १३
एको ह्यग्निः सुमना ब्राह्मणोऽत्र पञ्चेन्द्रियाणि समिधश्चात्र सन्ति
तेभ्यो मोक्षाः सप्त भवन्ति दीक्षा गुणाः फलान्यतिथयः फलाशाः १४
आतिथ्यं प्रतिगृह्णन्ति तत्र सप्त महर्षयः
अर्चितेषु प्रलीनेषु तेष्वन्यद्रोचते वनम् १५
प्रतिज्ञावृक्षमफलं शान्तिच्छायासमन्वितम्
ज्ञानाश्रयं तृप्तितोयमन्तः क्षेत्रज्ञभास्करम् १६
येऽधिगच्छन्ति तत्सन्तस्तेषां नास्ति भयं पुनः
ऊर्ध्वं चावाक्च तिर्यक्च तस्य नान्तोऽधिगम्यते १७
सप्त स्त्रियस्तत्र वसन्ति सद्यो अवाङ्मुखा भानुमत्यो जनित्र्यः
ऊर्ध्वं रसानां ददते प्रजाभ्यः सर्वान्यथा सर्वमनित्यतां च १८
तत्रैव प्रतितिष्ठन्ति पुनस्तत्रोदयन्ति च
सप्त सप्तर्षयःसिद्धा वसिष्ठप्रमुखाः सह १९
यशो वर्चो भगश्चैव विजयः सिद्धितेजसी
एवमेवानुवर्तन्ते सप्त ज्योतींषि भास्करम् २०
गिरयः पर्वताश्चैव सन्ति तत्र समासतः
नद्यश्च सरितो वारि वहन्त्यो ब्रह्मसंभवम् २१
नदीनां संगमस्तत्र वैतानः समुपह्वरे
स्वात्मतृप्ता यतो यान्ति साक्षाद्दान्ताः पितामहम् २२
कृशाशाः सुव्रताशाश्च तपसा दग्धकिल्बिषाः
आत्मन्यात्मानमावेश्य ब्रह्माणं समुपासते २३
ऋचमप्यत्र शंसन्ति विद्यारण्यविदो जनाः
तदरण्यमभिप्रेत्य यथाधीरमजायत २४
एतदेतादृशं दिव्यमरण्यं ब्राह्मणा विदुः
विदित्वा चान्वतिष्ठन्त क्षेत्रज्ञेनानुदर्शितम् २५

इति श्रीमहाभारते आश्वमेधिकपर्वणि सप्तविंशोऽध्यायः २७

## अष्टाविंशोऽध्यायः

ब्राह्मण उवाच
गन्धान्न जिघ्रामि रसान्न वेद्मि रूपं न पश्यामि न च स्पृशामि
न चापि शब्दान्विविधाञ्शृणोमि न चापि संकल्पमुपैमि किंचित् १
अर्थानिष्टान्कामयते स्वभावः सर्वान्द्वेष्यान्प्रद्विषते स्वभावः
कामद्वेषावुद्भवतः स्वभावात्प्राणापानौ जन्तुदेहान्निवेश्य २
तेभ्यश्चान्यांस्तेष्वनित्यांश्च भावान्भूतात्मानं लक्षयेयं शरीरे
तस्मिंस्तिष्ठन्नास्मि शक्यः कथंचित्कामक्रोधाभ्यां जरया मृत्युना च ३
अकामयानस्य च सर्वकामानविद्विषाणस्य च सर्वदोषान्
न मे स्वभावेषु भवन्ति लेपास्तोयस्य बिन्दोरिव पुष्करेषु ४
नित्यस्य चैतस्य भवन्ति नित्या निरीक्षमाणस्य बहून्स्वभावान्
न सज्जते कर्मसु भोगजालं दिवीव सूर्यस्य मयूखजालम् ५
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
अध्वर्युयतिसंवादं तं निबोध यशस्विनि ६
प्रोक्ष्यमाणं पशुं दृष्ट्वा यज्ञकर्मण्यथाब्रवीत्
यतिरध्वर्युमासीनो हिंसेयमिति कुत्सयन् ७
तमध्वर्युः प्रत्युवाच नायं छागो विनश्यति
श्रेयसा योक्ष्यते जन्तुर्यदि श्रुतिरियं तथा ८
यो ह्यस्य पार्थिवो भागः पृथिवीं स गमिष्यति
यदस्य वारिजं किंचिदपस्तत्प्रतिपद्यते ९
सूर्यं चक्षुर्दिशः श्रोत्रे प्राणोऽस्य दिवमेव च
आगमे वर्तमानस्य न मे दोषोऽस्ति कश्चन १०
यतिरुवाच
प्राणैर्वियोगे छागस्य यदि श्रेयः प्रपश्यसि
छागार्थे वर्तते यज्ञो भवतः किं प्रयोजनम् ११
अनु त्वा मन्यतां माता पिता भ्राता सखापि च
मन्त्रयस्वैनमुन्नीय परवन्तं विशेषतः १२
य एवमनुमन्येरंस्तान्भवान्प्रष्टुमर्हति
तेषामनुमतं श्रुत्वा शक्या कर्तुं विचारणा १३
प्राणा अप्यस्य छागस्य प्रापितास्ते स्वयोनिषु

शरीरं केवलं शिष्टं निश्चेष्टमिति मे मतिः १४
इन्धनस्य तु तुल्येन शरीरेण विचेतसा
हिंसा निर्वेष्टुकामानामिन्धनं पशुसंज्ञितम् १५
अहिंसा सर्वधर्माणामिति वृद्धानुशासनम्
यदहिंस्रं भवेत्कर्म तत्कार्यमिति विद्महे १६
अहिंसेति प्रतिज्ञेयं यदि वक्ष्याम्यतः परम्
शक्यं बहुविधं वक्तुं भवतः कार्यदूषणम् १७
अहिंसा सर्वभूतानां नित्यमस्मासु रोचते
प्रत्यक्षतः साधयामो न परोक्षमुपास्महे १८
अध्वर्युरुवाच
भूमेर्गन्धगुणान्भुङ्क्षे पिबस्यापोभयान्रसान्
ज्योतिषां पश्यसे रूपं स्पृशस्यानिलजान्गुणान् १९
शृणोष्याकाशजं शब्दं मनसा मन्यसे मतिम्
सर्वाण्येतानि भूतानि प्राणा इति च मन्यसे २०
प्राणादाने च नित्योऽसि हिंसायां वर्तते भवान्
नास्ति चेष्टा विना हिंसां किं वा त्वं मन्यसे द्विज २१
यतिरुवाच
अक्षरं च क्षरं चैव द्वैधीभावोऽयमात्मनः
अक्षरं तत्र सद्भावः स्वभावः क्षर उच्यते २२
प्राणो जिह्वा मनः सत्त्वं स्वभावो रजसा सह
भावैरेतैर्विमुक्तस्य निर्द्वंद्वस्य निराशिषः २३
समस्य सर्वभूतेषु निर्ममस्य जितात्मनः
समन्तात्परिमुक्तस्य न भयं विद्यते क्वचित् २४
अध्वर्युरुवाच
सद्भिरेवेह संवासः कार्यो मतिमतां वर
भवतो हि मतं श्रुत्वा प्रतिभाति मतिर्मम २५
भगवन्भगवद्बुद्ध्या प्रतिबुद्धो ब्रवीम्यहम्
मतं मन्तुं क्रतुं कर्तुं नापराधोऽस्ति मे द्विज २६
ब्राह्मण उवाच
उपपत्त्या यतिस्तूष्णीं वर्तमानस्ततः परम्

अध्वर्युरपि निर्मोहः प्रचचार महामखे २७
एवमेतादृशं मोक्षं सुसूक्ष्मं ब्राह्मणा विदुः
विदित्वा चानुतिष्ठन्ति क्षेत्रज्ञेनानुदर्शिना २८
इति श्रीमहाभारते आश्वमेधिकपर्वणि अष्टाविंशोऽध्यायः २८

## एकोनत्रिंशोऽध्यायः

ब्राह्मण उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
कार्तवीर्यस्य संवादं समुद्रस्य च भामिनि १
कार्तवीर्यार्जुनो नाम राजा बाहुसहस्रवान्
येन सागरपर्यन्ता धनुषा निर्जिता मही २
स कदाचित्समुद्रान्ते विचरन्बलदर्पितः
अवाकिरच्छरशतैः समुद्रमिति नः श्रुतम् ३
तं समुद्रो नमस्कृत्य कृताञ्जलिरुवाच ह
मा मुञ्च वीर नाराचान्ब्रूहि किं करवाणि ते ४
मदाश्रयाणि भूतानि त्वद्विसृष्टैर्महेषुभिः
वध्यन्ते राजशार्दूल तेभ्यो देह्यभयं विभो ५
अर्जुन उवाच
मत्समो यदि संग्रामे शरासनधरः क्वचित्
विद्यते तं ममाचक्ष्व यः समासीत मां मृधे ६
समुद्र उवाच
महर्षिर्जमदग्निस्ते यदि राजन्परिश्रुतः
तस्य पुत्रस्तवातिथ्यं यथावत्कर्तुमर्हति ७
ततः स राजा प्रययौ क्रोधेन महता वृतः
स तमाश्रममागम्य राममेवान्वपद्यत ८
स रामप्रतिकूलानि चकार सह बन्धुभिः
आयासं जनयामास रामस्य च महात्मनः ९
ततस्तेजः प्रजज्वाल रामस्यामिततेजसः
प्रदहद्रिपुसैन्यानि तदा कमललोचने १०
ततः परशुमादाय स तं बाहुसहस्रिणम्

चिच्छेद सहसा रामो बहुशाखमिव द्रुमम् ११
तं हतं पतितं दृष्ट्वा समेताः सर्वबान्धवाः
असीनादाय शक्तीश्च भार्गवं पर्यवारयन् १२
रामोऽपि धनुरादाय रथमारुह्य सत्वरः
विसृजञ्शरवर्षाणि व्यधमत्पार्थिवं बलम् १३
ततस्तु क्षत्रियाः केचिज्जमदग्निं निहत्य च
विविशुर्गिरिदुर्गाणि मृगाः सिंहार्दिता इव १४
तेषां स्वविहितं कर्म तद्भयान्नानुतिष्ठताम्
प्रजा वृषलतां प्राप्ता ब्राह्मणानामदर्शनात् १५
त एते द्रमिडाः काशाः पुण्ड्राश्च शबरैः सह
वृषलत्वं परिगता व्युत्थानात्क्षत्रधर्मतः १६
ततस्तु हतवीरासु क्षत्रियासु पुनः पुनः
द्विजैरुत्पादितं क्षत्रं जामदग्न्यो न्यकृन्तत १७
एकविंशतिमेधान्ते रामं वागशरीरिणी
दिव्या प्रोवाच मधुरा सर्वलोकपरिश्रुता १८
राम राम निवर्तस्व कं गुणं तात पश्यसि
क्षत्रबन्धूनिमान्प्राणैर्विप्रयोज्य पुनः पुनः १९
तथैव तं महात्मानमृचीकप्रमुखास्तदा
पितामहा महाभाग निवर्तस्वेत्यथाब्रुवन् २०
पितुर्वधममृष्यंस्तु रामः प्रोवाच तानृषीन्
नार्हन्तीह भवन्तो मां निवारयितुमित्युत २१
पितर ऊचुः
नार्हसे क्षत्रबन्धूंस्त्वं निहन्तुं जयतां वर
न हि युक्तं त्वया हन्तुं ब्राह्मणेन सता नृपान् २२
इति श्रीमहाभारते आश्वमेधिकपर्वणि एकोनत्रिंशोऽध्यायः २९

## त्रिंशोऽध्यायः

पितर ऊचु
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
श्रुत्वा च तत्तथा कार्यं भवता द्विजसत्तम १

अलर्को नाम राजर्षिरभवत्सुमहातपाः
धर्मज्ञः सत्यसंधश्च महात्मा सुमहाव्रतः २
स सागरान्तां धनुषा विनिर्जित्य महीमिमाम्
कृत्वा सुदुष्करं कर्म मनः सूक्ष्मे समादधे ३
स्थितस्य वृक्षमूलेऽथ तस्य चिन्ता बभूव ह
उत्सृज्य सुमहद्राज्यं सूक्ष्मं प्रति महामते ४
अलर्क उवाच
मनसो मे बलं जातं मनो जित्वा ध्रुवो जयः
अन्यत्र बाणानस्यामि शत्रुभिः परिवारितः ५
यदिदं चापलान्मूर्तेः सर्वमेतच्चिकीर्षति
मनः प्रति सुतीक्ष्णाग्रानहं मोक्ष्यामि सायकान् ६
मन उवाच
नेमे बाणास्तरिष्यन्ति मामलर्क कथंचन
तवैव मर्म भेत्स्यन्ति भिन्नमर्मा मरिष्यसि ७
अन्यान्बाणान्समीक्षस्व यैस्त्वं मां सूदयिष्यसि
तच्छ्रुत्वा स विचिन्त्याथ ततो वचनमब्रवीत् ८
अलर्क उवाच
आघ्राय सुबहून्गन्धांस्तानेव प्रतिगृध्यति
तस्माद्घ्राणं प्रति शरान्प्रतिमोक्ष्याम्यहं शितान् ९
घ्राण उवाच
नेमे बाणास्तरिष्यन्ति मामलर्क कथंचन
तवैव मर्म भेत्स्यन्ति भिन्नमर्मा मरिष्यसि १०
अन्यान्बाणान्समीक्षस्व यैस्त्वं मां सूदयिष्यसि
तच्छ्रुत्वा स विचिन्त्याथ ततो वचनमब्रवीत् ११
अलर्क उवाच
इयं स्वादून्रसान्भुक्त्वा तानेव प्रतिगृध्यति
तस्माज्जिह्वां प्रति शरान्प्रतिमोक्ष्याम्यहं शितान् १२
जिह्वोवाच
नेमे बाणास्तरिष्यन्ति मामलर्क कथंचन
तवैव मर्म भेत्स्यन्ति भिन्नमर्मा मरिष्यसि १३

अन्यान्बाणान्समीक्षस्व यैस्त्वं मां सूदयिष्यसि
तच्छ्रुत्वा स विचिन्त्याथ ततो वचनमब्रवीत् १४
अलर्क उवाच
स्पृष्ट्वा त्वग्विविधान्स्पर्शांस्तानेव प्रतिगृध्यति
तस्मात्त्वचं पाटयिष्ये विविधैः कङ्कपत्रिभिः १५
त्वगुवाच
नेमे बाणास्तरिष्यन्ति मामलर्क कथंचन
तवैव मर्म भेत्स्यन्ति भिन्नमर्मा मरिष्यसि १६
अन्यान्बाणान्समीक्षस्व यैस्त्वं मां सूदयिष्यसि
तच्छ्रुत्वा स विचिन्त्याथ ततो वचनमब्रवीत् १७
अलर्क उवाच
श्रुत्वा वै विविधाञ्शब्दांस्तानेव प्रतिगृध्यति
तस्माच्छ्रोत्रं प्रति शरान्प्रतिमोक्ष्याम्यहं शितान् १८
श्रोत्र उवाच
नेमे बाणास्तरिष्यन्ति मामलर्क कथंचन
तवैव मर्म भेत्स्यन्ति ततो हास्यसि जीवितम् १९
अन्यान्बाणान्समीक्षस्व यैस्त्वं मां सूदयिष्यसि
तच्छ्रुत्वा स विचिन्त्याथ ततो वचनमब्रवीत् २०
अलर्क उवाच
दृष्ट्वा वै विविधान्भावांस्तानेव प्रतिगृध्यति
तस्माच्चक्षुः प्रति शरान्प्रतिमोक्ष्याम्यहं शितान् २१
चक्षुरुवाच
नेमे बाणास्तरिष्यन्ति मामलर्क कथंचन
तवैव मर्म भेत्स्यन्ति भिन्नमर्मा मरिष्यसि २२
अन्यान्बाणान्समीक्षस्व यैस्त्वं मां सूदयिष्यसि
तच्छ्रुत्वा स विचिन्त्याथ ततो वचनमब्रवीत् २३
अलर्क उवाच
इयं निष्ठा बहुविधा प्रज्ञया त्वध्यवस्यति
तस्माद्बुद्धिं प्रति शरान्प्रतिमोक्ष्याम्यहं शितान् २४
बुद्धिरुवाच

नेमे बाणास्तरिष्यन्ति मामलर्क कथंचन
तवैव मर्म भेत्स्यन्ति भिन्नमर्मा मरिष्यसि २५
पितर ऊचुः
ततोऽलर्कस्तपो घोरमास्थायाथ सुदुष्करम्
नाध्यगच्छत्परं शक्त्या बाणमेतेषु सप्तसु
सुसमाहितचेतास्तु ततोऽचिन्तयत प्रभुः २६
स विचिन्त्य चिरं कालमलर्को द्विजसत्तम
नाध्यगच्छत्परं श्रेयो योगान्मतिमतां वरः २७
स एकाग्रं मनः कृत्वा निश्चलो योगमास्थितः
इन्द्रियाणि जघानाशु बाणेनैकेन वीर्यवान्
योगेनात्मानमाविश्य संसिद्धिं परमां ययौ २८
विस्मितश्चापि राजर्षिरिमां गाथां जगाद ह
अहो कष्टं यदस्माभिः पूर्वं राज्यमनुष्ठितम्
इति पश्चान्मया ज्ञातं योगान्नास्ति परं सुखम् २९
इति त्वमपि जानीहि राम मा क्षत्रियाञ्जहि
तपो घोरमुपातिष्ठ ततः श्रेयोऽभिपत्स्यसे ३०
ब्राह्मण उवाच
इत्युक्तः स तपो घोरं जामदग्न्यः पितामहैः
आस्थितः सुमहाभागो ययौ सिद्धिं च दुर्गमाम् ३१
इति श्रीमहाभारते आश्वमेधिकपर्वणि त्रिंशोऽध्यायः ३०

## एकत्रिंशोऽध्यायः

ब्राह्मण उवाच
त्रयो वै रिपवो लोके नव वै गुणतः स्मृताः
हर्षः स्तम्भोऽभिमानश्च त्रयस्ते सात्त्विका गुणाः १
शोकः क्रोधोऽतिसंरम्भो राजसास्ते गुणाः स्मृताः
स्वप्नस्तन्द्री च मोहश्च त्रयस्ते तामसा गुणाः २
एतान्निकृत्य धृतिमान्बाणसंघैरतन्द्रितः
जेतुं परानुत्सहते प्रशान्तात्मा जितेन्द्रियः ३
अत्र गाथाः कीर्तयन्ति पुराकल्पविदो जनाः

अम्बरीषेण या गीता राज्ञा राज्यं प्रशासता ४
समुदीर्णेषु दोषेषु वध्यमानेषु साधुषु
जग्राह तरसा राज्यमम्बरीष इति श्रुतिः ५
स निगृह्य महादोषान्साधून्समभिपूज्य च
जगाम महतीं सिद्धिं गाथां चेमां जगाद ह ६
भूयिष्ठं मे जिता दोषा निहताः सर्वशत्रवः
एको दोषोऽवशिष्टस्तु वध्यः स न हतो मया ७
येन युक्तो जन्तुरयं वैतृष्ण्यं नाधिगच्छति
तृष्णार्त इव निम्नानि धावमानो न बुध्यते ८
अकार्यमपि येनेह प्रयुक्तः सेवते नरः
तं लोभमसिभिस्तीक्ष्णैर्निकृन्तन्तं निकृन्तत ९
लोभाद्धि जायते तृष्णा ततश्चिन्ता प्रसज्यते
स लिप्समानो लभते भूयिष्ठं राजसान्गुणान् १०
स तैर्गुणैः संहतदेहबन्धनः पुनः पुनर्जायति कर्म चेहते
जन्मक्षये भिन्नविकीर्णदेहः पुनर्मृत्युं गच्छति जन्मनि स्वे ११
तस्मादेनं सम्यगवेक्ष्य लोभं निगृह्य धृत्यात्मनि राज्यमिच्छेत्
एतद्राज्यं नान्यदस्तीति विद्याद्यस्त्वत्र राजा विजितो ममैकः १२
इति राज्ञाम्बरीषेण गाथा गीता यशस्विना
आधिराज्यं पुरस्कृत्य लोभमेकं निकृन्तता १३
इति श्रीमहाभारते आश्वमेधिकपर्वणि एकत्रिंशोऽध्यायः३१

## द्वात्रिंशोऽध्यायः

ब्राह्मण उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
ब्राह्मणस्य च संवादं जनकस्य च भामिनि १
ब्राह्मणं जनको राजा सन्नं कस्मिंश्चिदागमे
विषये मे न वस्तव्यमिति शिष्ट्यर्थमब्रवीत् २
इत्युक्तः प्रत्युवाचाथ ब्राह्मणो राजसत्तमम्
आचक्ष्व विषयं राजन्यावांस्तव वशे स्थितः ३
सोऽन्यस्य विषये राज्ञो वस्तुमिच्छाम्यहं विभो

वचस्ते कर्तुमिच्छामि यथाशास्त्रं महीपते ४
इत्युक्तः स तदा राजा ब्राह्मणेन यशस्विना
मुहुरुष्णं च निःश्वस्य न स तं प्रत्यभाषत ५
तमासीनं ध्यायमानं राजानममितौजसम्
कश्मलं सहसागच्छद्भानुमन्तमिव ग्रहः ६
समाश्वास्य ततो राजा व्यपेते कश्मले तदा
ततो मुहूर्तादिव तं ब्राह्मणं वाक्यमब्रवीत् ७
पितृपैतामहे राज्ये वश्ये जनपदे सति
विषयं नाधिगच्छामि विचिन्वन्पृथिवीमिमाम् ८
नाध्यगच्छं यदा पृथ्व्यां मिथिला मार्गिता मया
नाध्यगच्छं यदा तस्यां स्वप्रजा मार्गिता मया ९
नाध्यगच्छं यदा तासु तदा मे कश्मलोऽभवत्
ततो मे कश्मलस्यान्ते मतिः पुनरुपस्थिता १०
तया न विषयं मन्ये सर्वो वा विषयो मम
आत्मापि चायं न मम सर्वा वा पृथिवी मम
उष्यतां यावदुत्साहो भुज्यतां यावदिष्यते ११
पितृपैतामहे राज्ये वश्ये जनपदे सति
ब्रूहि कां बुद्धिमास्थाय ममत्वं वर्जितं त्वया १२
कां वा बुद्धिं विनिश्चित्य सर्वो वै विषयस्तव
नावैषि विषयं येन सर्वो वा विषयस्तव १३
जनक उवाच
अन्तवन्त इहारम्भा विदिताः सर्वकर्मसु
नाध्यगच्छमहं यस्मान्ममेदमिति यद्भवेत् १४
कस्येदमिति कस्य स्वमिति वेदवचस्तथा
नाध्यगच्छमहं बुद्ध्या ममेदमिति यद्भवेत् १५
एतां बुद्धिं विनिश्चित्य ममत्वं वर्जितं मया
शृणु बुद्धिं तु यां ज्ञात्वा सर्वत्र विषयो मम १६
नाहमात्मार्थमिच्छामि गन्धान्घ्राणगतानपि
तस्मान्मे निर्जिता भूमिर्वशे तिष्ठति नित्यदा १७
नाहमात्मार्थमिच्छामि रसानास्येऽपि वर्ततः

आपो मे निर्जितास्तस्माद्वशे तिष्ठन्ति नित्यदा १८
नाहमात्मार्थमिच्छामि रूपं ज्योतिश्च चक्षुषा
तस्मान्मे निर्जितं ज्योतिर्वशे तिष्ठति नित्यदा १९
नाहमात्मार्थमिच्छामि स्पर्शास्त्वचि गताश्च ये
तस्मान्मे निर्जितो वायुर्वशे तिष्ठति नित्यदा २०
नाहमात्मार्थमिच्छामि शब्दाञ्श्रोत्रगतानपि
तस्मान्मे निर्जिताः शब्दा वशे तिष्ठन्ति नित्यदा २१
नाहमात्मार्थमिच्छामि मनो नित्यं मनोन्तरे
मनो मे निर्जितं तस्माद्वशे तिष्ठति नित्यदा २२
देवेभ्यश्च पितृभ्यश्च भूतेभ्योऽतिथिभिः सह
इत्यर्थं सर्व एवेमे समारम्भा भवन्ति वै २३
ततः प्रहस्य जनकं ब्राह्मणः पुनरब्रवीत्
त्वज्जिज्ञासार्थमद्येह विद्धि मां धर्ममागतम् २४
त्वमस्य ब्रह्मनाभस्य बुद्ध्यारस्यानिवर्तिनः
सत्त्वनेमिनिरुद्धस्य चक्रस्यैकः प्रवर्तकः २५

इति श्रीमहाभारते आश्वमेधिकपर्वणि द्वात्रिंशोऽध्यायः ३२

## त्रयस्त्रिंशोऽध्यायः

ब्राह्मण उवाच
नाहं तथा भीरु चरामि लोके तथा त्वं मां तर्कयसे स्वबुद्ध्या
विप्रोऽस्मि मुक्तोऽस्मि वनेचरोऽस्मि गृहस्थधर्मा ब्रह्मचारी तथास्मि १
नाहमस्मि यथा मां त्वं पश्यसे चक्षुषा शुभे
मया व्याप्तमिदं सर्वं यत्किंचिज्जगतीगतम् २
येकेचिज्जन्तवो लोके जङ्गमाः स्थावराश्च ह
तेषां मामन्तकं विद्धि दारूणामिव पावकम् ३
राज्यं पृथिव्यां सर्वस्यामथ वापि त्रिविष्टपे
तथा बुद्धिरियं वेत्ति बुद्धिरेव धनं मम ४
एकः पन्था ब्राह्मणानां येन गच्छन्ति तद्विदः
गृहेषु वनवासेषु गुरुवासेषु भिक्षुषु
लिङ्गैर्बहुभिरव्यग्रैरेका बुद्धिरुपास्यते ५

नानालिङ्गाश्रमस्थानां येषां बुद्धिः शमात्मिका
ते भावमेकमायान्ति सरितः सागरं यथा ६
बुद्ध्यायं गम्यते मार्गः शरीरेण न गम्यते
आद्यन्तवन्ति कर्माणि शरीरं कर्मबन्धनम् ७
तस्मात्ते सुभगे नास्ति परलोककृतं भयम्
मद्भावभावनिरता ममैवात्मानमेष्यसि ८
इति श्रीमहाभारते आश्वमेधिकपर्वणि त्रयस्त्रिंशोऽध्यायः ३३

## चतुस्त्रिंशोऽध्यायः

ब्राह्मण्युवाच
नेदमल्पात्मना शक्यं वेदितुं नाकृतात्मना
बहु चाल्पं च संक्षिप्तं विप्लुतं च मतं मम १
उपायं तु मम ब्रूहि येनैषा लभ्यते मतिः
तन्मन्ये कारणतमं यत एषा प्रवर्तते २
ब्राह्मण उवाच
अरणीं ब्राह्मणीं विद्धि गुरुरस्योत्तरारणिः
तपःश्रुतेऽभिमथ्नीतो ज्ञानाग्निर्जायते ततः ३

ब्राह्मण्युवाच
यदिदं ब्रह्मणो लिङ्गं क्षेत्रज्ञमिति संज्ञितम्
ग्रहीतुं येन तच्छक्यं लक्षणं तस्य तत्क्व नु ४
ब्राह्मण उवाच
अलिङ्गो निर्गुणश्चैव कारणं नास्य विद्यते
उपायमेव वक्ष्यामि येन गृह्येत वा न वा ५
सम्यगप्युपदिष्टश्च भ्रमरैरिव लक्ष्यते
कर्मबुद्धिरबुद्धित्वाज्ज्ञानलिङ्गैरिवाश्रितम् ६
इदं कार्यमिदंनेति न मोक्षेषूपदिश्यते
पश्यतः शृण्वतो बुद्धिरात्मनो येषु जायते ७
यावन्त इह शक्येरंस्तावन्तोंऽशान्प्रकल्पयेत्
व्यक्तानव्यक्तरूपांश्च शतशोऽथ सहस्रशः ८

सर्वान्नानात्वयुक्तांश्च सर्वान्प्रत्यक्षहेतुकान्
यतः परं न विद्येत ततोऽभ्यासे भविष्यति ९
वासुदेव उवाच
ततस्तु तस्या ब्राह्मण्या मतिः क्षेत्रज्ञसंक्षये
क्षेत्रज्ञादेव परतः क्षेत्रज्ञोऽन्य प्रवर्तते १०
अर्जुन उवाच
क्व नु सा ब्राह्मणी कृष्ण क्व चासौ ब्राह्मणर्षभः
याभ्यां सिद्धिरियं प्राप्ता तावुभौ वद मेऽच्युत ११
वासुदेव उवाच
मनो मे ब्राह्मणं विद्धि बुद्धिं मे विद्धि ब्राह्मणीम्
क्षेत्रज्ञ इति यश्चोक्तः सोऽहमेव धनंजय १२
इति श्रीमहाभारते आश्वमेधिकपर्वणि चतुस्त्रिंशोऽध्यायः ३४

## पञ्चत्रिंशोऽध्यायः

अर्जुन उवाच
ब्रह्म यत्परमं वेद्यं तन्मे व्याख्यातुमर्हसि
भवतो हि प्रसादेन सूक्ष्मे मे रमते मतिः १
वासुदेव उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
संवादं मोक्षसंयुक्तं शिष्यस्य गुरुणा सह २
कश्चिद्ब्राह्मणमासीनमाचार्यं संशितव्रतम्
शिष्यः पप्रच्छ मेधावी किंस्विच्छ्रेयः परंतप ३
भगवन्तं प्रपन्नोऽह निःश्रेयसपरायणः
याचे त्वां शिरसा विप्र यद्ब्रूयां तद्विचक्ष्व मे ४
तमेवंवादिनं पार्थ शिष्यं गुरुरुवाच ह
कथयस्व प्रवक्ष्यामि यत्र ते संशयो द्विज ५
इत्युक्तः स कुरुश्रेष्ठ गुरुणा गुरुवत्सलः
प्राञ्जलि परिपप्रच्छ यत्तच्छृणु महामते ६
शिष्य उवाच
कुतश्चाहं कुतश्च त्वं तत्सत्यं ब्रूहि यत्परम्

कुतो जातानि भूतानि स्थावराणि चराणि च ७
केन जीवन्ति भूतानि तेषामायुः किमात्मकम्
किं सत्यं किं तपो विप्र के गुणाः सद्भिरीरिताः
के पन्थानः शिवाः सन्ति किं सुखं किं च दुष्कृतम् ८
एतान्मे भगवन्प्रश्नान्याथातथ्येन सत्तम
वक्तुमर्हसि विप्रर्षे यथावदिह तत्त्वतः ९
वासुदेव उवाच
तस्मै संप्रतिपन्नाय यथावत्परिपृच्छते
शिष्याय गुणयुक्ताय शान्ताय गुरुवर्तिने
छायाभूताय दान्ताय यतये ब्रह्मचारिणे १०
तान्प्रश्नानब्रवीत्पार्थ मेधावी स धृतव्रतः
गुरुः कुरुकुलश्रेष्ठ सम्यक्सर्वानरिंदम ११
ब्रह्मप्रोक्तमिदं धर्ममृषिप्रवरसेवितम्
वेदविद्यासमावाप्यं तत्त्वभूतार्थभावनम् १२
भूतभव्यभविष्यादिधर्मकामार्थनिश्चयम्
सिद्धसंघपरिज्ञातं पुराकल्पं सनातनम् १३
प्रवक्ष्येऽह महाप्राज्ञ पदमुत्तममद्य ते
बुद्ध्वा यदिह संसिद्धा भवन्तीह मनीषिणः १४
उपगम्यर्षयः पूर्वं जिज्ञासन्तः परस्परम्
बृहस्पतिभरद्वाजौ गौतमो भार्गवस्तथा १५
वसिष्ठः काश्यपश्चैव विश्वामित्रोऽत्रिरेव च
मार्गान्सर्वान्परिक्रम्य परिश्रान्ताः स्वकर्मभिः १६
ऋषिमाङ्गिरसं वृद्धं पुरस्कृत्य तु मे द्विजाः
ददृशुर्ब्रह्मभवने ब्रह्माणं वीतकल्मषम् १७
तं प्रणम्य महात्मानं सुखासीनं महर्षयः
पप्रच्छुर्विनयोपेता निःश्रेयसमिदं परम् १८
कथं कर्म क्रियात्साधु कथं मुच्येत किल्बिषात्
के नो मार्गाः शिवाश्च स्युः किं सत्यं किं च दुष्कृतम् १९
केनोभौ कर्मपन्थानौ महत्त्वं केन विन्दति
प्रलयं चापवर्गं च भूतानां प्रभवाप्ययौ २०

इत्युक्तः स मुनिश्रेष्ठैर्यदाह प्रपितामहः
तत्तेऽह संप्रवक्ष्यामि शृणु शिष्य यथागमम् २१
ब्रह्मोवाच
सत्याद्भूतानि जातानि स्थावराणि चराणि च
तपसा तानि जीवन्ति इति तद्वित्त सुव्रताः २२
स्वां योनिं पुनरागम्य वर्तन्ते स्वेन कर्मणा
सत्यं हि गुणसंयुक्तं नियतं पञ्चलक्षणम् २३
ब्रह्म सत्यं तपः सत्यं सत्यं चैव प्रजापतिः
सत्याद्भूतानि जातानि भूतं सत्यमयं महत् २४
तस्मात्सत्याश्रया विप्रा नित्यं योगपरायणाः
अतीतक्रोधसंतापा नियता धर्मसेतवः २५
अन्योन्यनियतान्वैद्यान्धर्मसेतुप्रवर्तकान्
तानहं संप्रवक्ष्यामि शाश्वतान्लोकभावनान् २६
चातुर्विद्यं तथा वर्णांश्चतुरश्चाश्रमान्पृथक्
धर्ममेकं चतुष्पादं नित्यमाहुर्मनीषिणः २७
पन्थानं वः प्रवक्ष्यामि शिवं क्षेमकरं द्विजाः
नियतं ब्रह्मभावाय यातं पूर्वं मनीषिभिः २८
गदतस्तं ममाद्येह पन्थानं दुर्विदं परम्
निबोधत महाभागा निखिलेन परं पदम् २९
ब्रह्मचारिकमेवाहुराश्रमं प्रथमं पदम्
गार्हस्थ्यं तु द्वितीयं स्याद्वानप्रस्थमतः परम्
ततः परं तु विज्ञेयमध्यात्मं परमं पदम् ३०
ज्योतिराकाशमादित्यो वायुरिन्द्रः प्रजापतिः
नोपैति यावदध्यात्मं तावदेतान्न पश्यति
तस्योपायं प्रवक्ष्यामि पुरस्तात्तं निबोधत ३१
फलमूलानिलभुजां मुनीनां वसतां वने
वानप्रस्थं द्विजातीनां त्रयाणामुपदिश्यते ३२
सर्वेषामेव वर्णानां गार्हस्थ्यं तद्विधीयते
श्रद्धालक्षणमित्येवं धर्मं धीराः प्रचक्षते ३३
इत्येते देवयाना वः पन्थानः परिकीर्तिताः

सद्भिरध्यासिता धीरैः कर्मभिर्धर्मसेतवः ३४
एतेषां पृथगध्यास्ते यो धर्मं संशितव्रतः
कालात्पश्यति भूतानां सदैव प्रभवाप्ययौ ३५
अतस्तत्त्वानि वक्ष्यामि याथातथ्येन हेतुना
विषयस्थानि सर्वाणि वर्तमानानि भागशः ३६
महानात्मा तथाव्यक्तमहंकारस्तथैव च
इन्द्रियाणि दशैकं च महाभूतानि पञ्च च ३७
विशेषाः पञ्चभूतानामित्येषा वैदिकी श्रुतिः
चतुर्विंशतिरेषा वस्तत्त्वानां संप्रकीर्तिता ३८
तत्त्वानामथ यो वेद सर्वेषां प्रभवाप्ययौ
स धीरः सर्वभूतेषु न मोहमधिगच्छति ३९
तत्त्वानि यो वेदयते यथातथं गुणांश्च सर्वानखिलाश्च देवताः
विधूतपाप्मा प्रविमुच्य बन्धनं स सर्वलोकानमलान्समश्नुते ४०
इति श्रीमहाभारते आश्वमेधिकपर्वणि पञ्चत्रिंशोऽध्यायः ३५

## षट्त्रिंशोऽध्यायः

ब्रह्मोवाच
तदव्यक्तमनुद्रिक्तं सर्वव्यापि ध्रुवं स्थिरम्
नवद्वारं पुरं विद्यात्त्रिगुणं पञ्चधातुकम् १
एकादशपरिक्षेपं मनो व्याकरणात्मकम्
बुद्धिस्वामिकमित्येतत्परमेकादशं भवेत् २
त्रीणि स्रोतांसि यान्यस्मिन्नाप्यायन्ते पुनः पुनः
प्रणाड्यस्तिस्र एवैताः प्रवर्तन्ते गुणात्मिकाः ३
तमो रजस्तथा सत्त्वं गुणानेतान्प्रचक्षते
अन्योन्यमिथुनाः सर्वे तथान्योन्यानुजीविनः ४
अन्योन्यापाश्रयाश्चैव तथान्योन्यानुवर्तिनः
अन्योन्यव्यतिषक्ताश्च त्रिगुणाः पञ्च धातवः ५
तमसो मिथुनं सत्त्वं सत्त्वस्य मिथुनं रजः
रजसश्चापि सत्त्वं  स्यात्सत्त्वस्य मिथुनं तमः ६
नियम्यते तमो यत्र रजस्तत्र प्रवर्तते

निशम्यते रजो यत्र सत्त्वं तत्र प्रवर्तते ७
नैशात्मकं तमो विद्यात्त्रिगुणं मोहसंज्ञितम्
अधर्मलक्षणं चैव नियतं पापकर्मसु ८
प्रवृत्त्यात्मकमेवाहू रजः पर्यायकारकम्
प्रवृत्तं सर्वभूतेषु दृश्यतोत्पत्तिलक्षणम् ९
प्रकाशं सर्वभूतेषु लाघवं श्रद्दधानता
सात्त्विकं रूपमेवं तु लाघवं साधुसंमितम् १०
एतेषां गुणतत्त्वं हि वक्ष्यते हेत्वहेतुभिः
समासव्यासयुक्तानि तत्त्वतस्तानि वित्त मे ११
संमोहोऽज्ञानमत्यागः कर्मणामविनिर्णयः
स्वप्नः स्तम्भो भयं लोभः शोकः सुकृतदूषणम् १२
अस्मृतिश्चाविपाकश्च नास्तिक्यं भिन्नवृत्तिता
निर्विशेषत्वमन्धत्वं जघन्यगुणवृत्तिता १३
अकृते कृतमानित्वमज्ञाने ज्ञानमानिता
अमैत्री विकृतो भावो अश्रद्धा मूढभावना १४
अनार्जवमसंज्ञत्वं कर्म पापमचेतना
गुरुत्वं सन्नभावत्वमसितत्वमवाग्गतिः १५
सर्व एते गुणा विप्रास्तामसाः संप्रकीर्तिताः
ये चान्ये नियता भावा लोकेऽस्मिन्मोहसंज्ञिताः १६
तत्र तत्र नियम्यन्ते सर्वे ते तामसा गुणाः
परिवादकथा नित्यं देवब्राह्मणवैदिकाः १७
अत्यागश्चाभिमानश्च मोहो मन्युस्तथाक्षमा
मत्सरश्चैव भूतेषु तामसं वृत्तमिष्यते १८
वृथारम्भाश्च ये केचिद्वृथादानानि यानि च
वृथाभक्षणमित्येतत्तामसं वृत्तमिष्यते १९
अतिवादोऽतितिक्षा च मात्सर्यमतिमानिता
अश्रद्दधानता चैव तामसं वृत्तमिष्यते २०
एवंविधास्तु ये केचिल्लोकेऽस्मिन्पापकर्मिणः
मनुष्या भिन्नमर्यादाः सर्वे ते तामसाः जनाः २१
तेषां योनिं प्रवक्ष्यामि नियतां पापकर्मणाम्

अवाङ्नियरभावाय तिर्यङ्निरयगामिनः २२
स्थावराणि च भूतानि पशवो वाहनानि च
क्रव्यादा दन्दशूकाश्च कृमिकीटविहंगमाः २३
अण्डजा जन्तवो ये च सर्वे चापि चतुष्पदाः
उन्मत्ता बधिरा मूका ये चान्ये पापरोगिणः २४
मग्नास्तमसि दुर्वृत्ताः स्वकर्मकृतलक्षणाः
अवाक्स्रोतस इत्येते मग्नास्तमसि तामसाः २५
तेषामुत्कर्षमुद्रेकं वक्ष्याम्यहमतः परम्
यथा ते सुकृताँल्लोकाँल्लभन्ते पुण्यकर्मिणः २६
अन्यथा प्रतिपन्नास्तु विवृद्धा ये च कर्मसु
स्वकर्मनिरतानां च ब्राह्मणानां शुभैषिणाम् २७
संस्कारेणोर्ध्वमायान्ति यतमानाः सलोकताम्
स्वर्गं गच्छन्ति देवानामित्येषा वैदिकी श्रुतिः २८
अन्यथा प्रतिपन्नास्तु विवृद्धाः स्वेषु कर्मसु
पुनरावृत्तिधर्माणस्ते भवन्तीह मानुषाः २९
पापयोनिं समापन्नाश्चण्डाला मूकचूचुकाः
वर्णान्पर्यायशश्चापि प्राप्नुवन्त्युत्तरोत्तरम् ३०
शूद्रयोनिमतिक्रम्य ये चान्ये तामसा गुणाः
स्रोतोमध्ये समागम्य वर्तन्ते तामसे गुणे ३१
अभिष्वङ्गस्तु कामेषु महामोह इति स्मृतः
ऋषयो मुनयो देवा मुह्यन्त्यत्र सुखेप्सवः ३२
तमोमोहो महामोहस्तामिस्रः क्रोधसंज्ञितः
मरणं त्वन्धतामिस्रं तामिस्रं क्रोध उच्यते ३३
भावतो गुणतश्चैव योनितश्चैव तत्त्वतः
सर्वमेतत्तमो विप्राः कीर्तितं वो यथाविधि ३४
को न्वेतद्बुध्यते साधु को न्वेतत्साधु पश्यति
अतत्त्वे तत्त्वदर्शी यस्तमसस्तत्त्वलक्षणम् ३५
तमोगुणावो बहुधाः प्रकीर्तिता यथावदुक्तं च तमः परावरम्
नरो हि यो वेद गुणानिमान्सदा स तामसैः सर्वगुणैः प्रमुच्यते ३६
इति श्रीमहाभारते आश्वमेधिकपर्वणि षट्त्रिंशोऽध्यायः ३६

## सप्तत्रिंशोऽध्यायः

ब्रह्मोवाच
रजोऽह वः प्रवक्ष्यामि याथाताथ्येन सत्तमाः
निबोधत महाभागा गुणवृत्तं च सर्वशः १
संघातो रूपमायासः सुखदुःखे हिमातपौ
एश्वर्यं विग्रहः संधिर्हेतुवादोऽरतिः क्षमा २
बलं शौर्यं मदो रोषो व्यायामकलहावपि
ईर्ष्येप्सा पैशुनं युद्धं ममत्वं परिपालनम् ३
वधबन्धपरिक्लेशाः क्रयो विक्रय एव च
निकृन्त छिन्धि भिन्धीति परमर्मावकर्तनम् ४
उग्रं दारुणमाक्रोशः परवित्तानुशासनम्
लोकचिन्ता विचिन्ता च मत्सरः परिभाषणम् ५
मृषावादो मृषादानं विकल्पः परिभाषणम्
निन्दा स्तुतिः प्रशंसा च प्रतापः परितर्पणम् ६
परिचर्या च शुश्रूषा सेवा तृष्णा व्यपाश्रयः
व्यूहोऽनयः प्रमादश्च परितापः परिग्रहः ७
संस्कारा ये च लोकेऽस्मिन्प्रवर्तन्ते पृथक्पृथक्
नृषु नारीषु भूतेषु द्रव्येषु शरणेषु च ८
संतापोऽप्रत्ययश्चैव व्रतानि नियमाश्च ये
प्रदानमाशीर्युक्तं च सततं मे भवत्विति ९
स्वधाकारो नमस्कारः स्वाहाकारो वषट्क्रिया
याजनाध्यापने चोभे तथैवाहुः परिग्रहम् १०
इदं मे स्यादिदं मे स्यात्स्नेहो गुणसमुद्भवः
अभिद्रोहस्तथा माया निकृतिर्मान एव च ११
स्तैन्यं हिंसा परीवादः परितापः प्रजागरः
स्तम्भो दम्भोऽथ रागश्च भक्तिः प्रीतिः प्रमोदनम् १२
द्यूतं च जनवादश्च संबन्धाः स्त्रीकृताश्च ये
नृत्तवादित्रगीतानि प्रसङ्गा ये च केचन
सर्व एते गुणा विप्रा राजसाः संप्रकीर्तिताः १३
भूतभव्यभविष्याणां भावानां भुवि भावनाः

त्रिवर्गनिरता नित्यं धर्मोऽथ काम इत्यपि १४
कामवृत्ताः प्रमोदन्ते सर्वकामसमृद्धिभिः
अर्वाक्स्रोतस इत्येते तैजसा रजसावृताः १५
अस्मिँल्लोके प्रमोदन्ते जायमानाः पुनः पुनः
प्रेत्यभाविकमीहन्त इह लौकिकमेव च
ददति प्रतिगृह्णन्ति जपन्त्यथ च जुह्वति १६
रजोगुणा वो बहुधानुकीर्तिता यथावदुक्तं गुणवृत्तमेव च
नरो हि यो वेद गुणानिमान्सदा स राजसैः सर्वगुणैर्विमुच्यते १७
इति श्रीमहाभारते आश्वमेधिकपर्वणि सप्तत्रिंशोऽध्यायः ३७

## अष्टात्रिंशोऽध्यायः

ब्रह्मोवाच
अतः परं प्रवक्ष्यामि तृतीयं गुणमुत्तमम्
सर्वभूतहितं लोके सतां धर्ममनिन्दितम् १
आनन्दः प्रीतिरुद्रेकः प्राकाश्यं सुखमेव च
अकार्पण्यमसंरम्भः संतोषः श्रद्दधानता २
क्षमा धृतिरहिंसा च समता सत्यमार्जवम्
अक्रोधश्चानसूया च शौचं दाक्ष्यं पराक्रमः ३
मुधा ज्ञानं मुधा वृत्तं मुधा सेवा मुधा श्रमः
एवं यो युक्तधर्मः स्यात्सोऽमुत्रानन्त्यमश्नुते ४
निर्ममो निरहंकारो निराशीः सर्वतः समः
अकामहत इत्येष सतां धर्मः सनातनः ५
विश्रम्भो ह्रीस्तितिक्षा च त्यागः शौचमतन्द्रिता
आनृशंस्यमसंमोहो दया भूतेष्वपैशुनम् ६
हर्षस्तुष्टिर्विस्मयश्च विनयः साधुवृत्तता
शान्तिकर्म विशुद्धिश्च शुभा बुद्धिर्विमोचनम् ७
उपेक्षा ब्रह्मचर्यं च परित्यागश्च सर्वशः
निर्ममत्वमनाशीस्त्वमपरिक्रीतधर्मता ८
मुधा दानं मुधा यज्ञो मुधाधीतं मुधा व्रतम्
मुधा प्रतिग्रहश्चैव मुधा धर्मो मुधा तपः ९

एवंवृत्तास्तु ये केचिँल्लोकेऽस्मिन्सत्त्वसंश्रयाः
ब्राह्मणा ब्रह्मयोनिस्थास्ते धीराः साधुदर्शिनः १०
हित्वा सर्वाणि पापानि निःशोका ह्यजरामराः
दिवं प्राप्य तु ते धीराः कुर्वते वै ततस्ततः ११
ईशित्वं च वशित्वं च लघुत्वं मनसश्च ते
विकुर्वते महात्मानो देवास्त्रिदिवगा इव १२
ऊर्ध्वस्रोतस इत्येते देवा वैकारिकाः स्मृताः
विकुर्वते प्रकृत्या वै दिवं प्राप्तास्ततस्ततः
यद्यदिच्छन्ति तत्सर्वं भजन्ते विभजन्ति च १३
इत्येतत्सात्त्विकं वृत्तं कथितं वो द्विजर्षभाः
एतद्विज्ञाय विधिवल्लभते यद्यदिच्छति १४
प्रकीर्तिताः सत्त्वगुणा विशेषतो यथावदुक्तं गुणवृत्तमेव च
नरस्तु यो वेद गुणानिमान्सदा गुणान्स भुङ्क्ते न गुणैः स भुज्यते १५
इति श्रीमहाभारते आश्वमेधिकपर्वणि अष्टात्रिंशोऽध्यायः ३८

## एकोनचत्वारिंशोऽध्यायः

ब्रह्मोवाच
नैव शक्या गुणा वक्तुं पृथक्त्वेनेह सर्वशः
अविच्छिन्नानि दृश्यन्ते रजः सत्त्वं तमस्तथा १
अन्योन्यमनुषज्जन्ते अन्योन्यं चानुजीविनः
अन्योन्यापाश्रयाः सर्वे तथान्योन्यानुवर्तिनः २
यावत्सत्त्वं तमस्तावद्वर्तते नात्र संशयः
यावत्तमश्च सत्त्वं च रजस्तावदिहोच्यते ३
संहत्य कुर्वते यात्रां सहिताः संघचारिणः
संघातवृत्तयो ह्येते वर्तन्ते हेत्वहेतुभिः ४
उद्रेकव्यतिरेकाणां तेषामन्योन्यवर्तिनाम्
वर्तते तद्यथान्यूनं व्यतिरिक्तं च सर्वशः ५
व्यतिरिक्तं तमो यत्र तिर्यग्भावगतं भवेत्
अल्पं तत्र रजो ज्ञेयं सत्त्वं चाल्पतरं ततः ६
उद्रिक्तं च रजो यत्र मध्यस्रोतोगतं भवेत्

अल्पं तत्र तमो ज्ञेयं सत्त्वं चाल्पतरं ततः ७
उद्रिक्तं च यदा सत्त्वमूर्ध्वस्रोतोगतं भवेत्
अल्पं तत्र रजो ज्ञेयं तमश्चाल्पतरं ततः ८
सत्त्वं वैकारिकं योनिरिन्द्रियाणां प्रकाशिका
न हि सत्त्वात्परो भावः कश्चिदन्यो विधीयते ९
ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः
जघन्यगुणसंयुक्ता यान्त्यधस्तामसा जनाः १०
तमः शूद्रे रजः क्षत्रे ब्राह्मणे सत्त्वमुत्तमम्
इत्येवं त्रिषु वर्णेषु विवर्तन्ते गुणास्त्रयः ११
दूरादपि हि दृश्यन्ते सहिताः संघचारिणः
तमः सत्त्वं रजश्चैव पृथक्त्वं नानुशुश्रुम १२
दृष्ट्वा चादित्यमुद्यन्तं कुचोराणां भयं भवेत्
अध्वगाः परितप्येरंस्तृष्णार्ता दुःख भागिनः १३
आदित्यः सत्त्वमुद्दिष्टं कुचोरास्तु यथा तमः
परितापोऽध्वगानां च राजसो गुण उच्यते १४
प्राकाश्यं सत्त्वमादित्ये संतापो राजसो गुणः
उपप्लवस्तु विज्ञेयस्तामसस्तस्य पर्वसु १५
एवं ज्योतिःषु सर्वेषु विवर्तन्ते गुणास्त्रयः
पर्यायेण च वर्तन्ते तत्र तत्र तथा तथा १६
स्थावरेषु च भूतेषु तिर्यग्भावगतं तमः
राजसास्तु विवर्तन्ते स्नेहभावस्तु सात्त्विकः १७
अहस्त्रिधा तु विज्ञेयं त्रिधा रात्रिर्विधीयते
मासार्धमासवर्षाणि ऋतवः सन्धयस्तथा १८
त्रिधा दानानि दीयन्ते त्रिधा यज्ञः प्रवर्तते
त्रिधालोकास्त्रिधा वेदास्त्रिधा विद्यास्त्रिधा गतिः १९
भूतं भव्यं भविष्यच्च धर्मोऽथ काम इत्यपि
प्राणापानावुदानश्चाप्येत एव त्रयो गुणाः २०
यत्किंचिदिह वै लोके सर्वमेष्वेव तत्त्रिषु
त्रयो गुणाः प्रवर्तन्ते अव्यक्ता नित्यमेव तु
सत्त्वं रजस्तमश्चैव गुणसर्गः सनातनः २१

तमोऽव्यक्तं शिवं नित्यमजं योनिः सनातनः
प्रकृतिर्विकारः प्रलयः प्रधानं प्रभवाप्ययौ २२
अनुद्रिक्तमनूनं च ह्यकम्पमचलं ध्रुवम्
सदसच्चैव तत्सर्वमव्यक्तं त्रिगुणं स्मृतम्
ज्ञेयानि नामधेयानि नरैरध्यात्मचिन्तकैः २३
अव्यक्तनामानि गुणांश्च तत्त्वतो यो वेद सर्वाणि गतीश्च केवलाः
विमुक्तदेहः प्रविभागतत्त्ववित्स  मुच्यते सर्वगुणैर्निरामयः २४
इति श्रीमहाभारते आश्वमेधिकपर्वणि एकोनचत्वारिंशोऽध्यायः ३९

## चत्वारिंशोऽध्यायः

ब्रह्मोवाच
अव्यक्तात्पूर्वमुत्पन्नो महानात्मा महामतिः
आदिर्गुणानां सर्वेषां प्रथमः सर्ग उच्यते १
महानात्मा मतिर्विष्णुर्विश्वः शंभुश्च वीर्यवान्
बुद्धिः प्रज्ञोपलब्धिश्च तथा ख्यातिर्धृतिः स्मृतिः २
पर्यायवाचकैः शब्दैर्महानात्मा विभाव्यते
तं जानन्ब्राह्मणो विद्वान्न प्रमोहं निगच्छति ३
सर्वतः पाणिपादश्च सर्वतोक्षिशिरोमुखः
सर्वतःश्रुतिमाँल्लोके सर्वं व्याप्य स तिष्ठति ४
महाप्रभार्चिः पुरुषः सर्वस्य हृदि निश्रितः
अणिमा लघिमा प्राप्तिरीशानो ज्योतिरव्ययः ५
तत्र बुद्धिमतां लोकाः संन्यासनिरताश्च ये
ध्यानिनो नित्ययोगाश्च सत्यसंधा जितेन्द्रियाः ६
ज्ञानवन्तश्च ये केचिदलुब्धा जितमन्यवः
प्रसन्नमनसो धीरा निर्ममा निरहंकृताः
विमुक्ताः सर्व एवैते महत्त्वमुपयान्ति वै ७
आत्मनो महतो वेद यः पुण्यां गतिमुत्तमाम्
स धीरः सर्वलोकेषु न मोहमधिगच्छति
विष्णुरेवादिसर्गेषु स्वयंभूर्भवति प्रभुः ८
एवं हि यो वेद गुहाशयं प्रभुं नरः पुराणं पुरुषं विश्वरूपम्

हिरगमयं बुद्धिमतां परां गतिं स बुद्धिमान्बुद्धिमतीत्य तिष्ठति ६
इति श्रीमहाभारते ग्राश्वमेधिकपर्वणि चत्वारिंशोऽध्यायः ४०

## एक चत्वारिंशोऽध्यायः

ब्रह्मोवाच
य उत्पन्नो महन्पूर्वमहंकारः स उच्यते
ग्रहमित्येव संभूतो द्वितीयः सर्ग उच्यते १
ग्रहंकारश्च भूतादिर्वैकारिक इति स्मृतः
तेजसश्चेतना धातुः प्रजासर्गः प्रजापतिः २
देवानां प्रभवो देवो मनसश्च त्रिलोककृत्
ग्रहमित्येव तत्सर्वमभिमन्ता स उच्यते ३
ग्रध्यात्मज्ञाननित्यानां मुनीनां भावितात्मनाम्
स्वाध्यायक्रतुसिद्धानामेष लोकः सनातनः ४
ग्रहंकारेणाहरतो गुणानिमान्भूतादिरेवं सृजते स भूतकृत्
वैकारिकः सर्वमिदं विचेष्टते स्वतेजसा रञ्जयते जगत्तथा ५
इति श्रीमहाभारते ग्राश्वमेधिकपर्वणि एकचत्वारिंशोऽध्यायः ४१

## द्विचत्वारिंशोऽध्यायः

ब्रह्मोवाच
ग्रहंकारात्प्रसूतानि महाभूतानि पञ्च वै
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् १
तेषु भूतानि मुह्यन्ते महाभूतेषु पञ्चसु
शब्दस्पर्शनरूपेषु रसगन्धक्रियासु च २
महाभूतविनाशान्ते प्रलये प्रत्युपस्थिते
सर्वप्राणभृतां धीरा महदुत्पद्यते भयम् ३
यद्यस्माज्जायते भूतं तत्र तत्प्रविलीयते
लीयन्ते प्रतिलोमानि जायन्ते चोत्तरोत्तरम् ४
ततः प्रलीने सर्वस्मिन्भूते स्थावरजङ्गमे
स्मृतिमन्तस्तदा धीरा न लीयन्ते कदाचन ५
शब्दः स्पर्शस्तथा रूपं रसो गन्धश्च पञ्चमः

क्रियाकारणयुक्ताः स्युरनित्या मोहसंज्ञिताः ६
लोभप्रजनसंयुक्ता निर्विशेषा ह्यकिंचनाः
मांसशोणितसंघाता अन्योन्यस्योपजीविनः ७
बहिरात्मान इत्येते दीनाः कृपणवृत्तयः
प्राणापानावुदानश्च समानो व्यान एव च ८
अन्तरात्मेति चाप्येते नियताः पञ्च वायवः
वाङ्मनोबुद्धिरित्येभिः सार्धमष्टात्मकं जगत् ९
त्वग्घ्राणश्रोत्रचक्षूंषि रसनं वाक्य संयता
विशुद्धं च मनो यस्य बुद्धिश्चाव्यभिचारिणी १०
अष्टौ यस्याग्नयो ह्येते न दहन्ते मनः सदा
स तद्ब्रह्म शुभं याति यस्माद्भूयो न विद्यते ११
एकादश च यान्याहुरिन्द्रियाणि विशेषतः
अहंकारात्प्रसूतानि तानि वक्ष्याम्यहं द्विजाः १२
श्रोत्रं त्वक्चक्षुषी जिह्वा नासिका चैव पञ्चमी
पादौ पायुरुपस्थं च हस्तौ वाग्दशमी भवेत् १३
इन्द्रियग्राम इत्येष मन एकादशं भवेत्
एतं ग्रामं जयेत्पूर्वं ततो ब्रह्म प्रकाशते १४
बुद्धीन्द्रियाणि पञ्चाहुः पञ्च कर्मेन्द्रियाणि च
श्रोत्रादीन्यपि पञ्चाहुर्बुद्धियुक्तानि तत्त्वतः १५
अविशेषाणि चान्यानि कर्मयुक्तानि तानि तु
उभयत्र मनो ज्ञेयं बुद्धिर्द्वादशमी भवेत् १६
इत्युक्तानीन्द्रियाणीमान्येकादश मया क्रमात्
मन्यन्ते कृतमित्येव विदित्वैतानि पण्डिताः १७
त्रीणि स्थानानि भूतानां चतुर्थं नोपपद्यते
स्थलमापस्तथाकाशं जन्म चापि चतुर्विधम्१८
अण्डजोद्भिज्जसंस्वेदजरायुजमथापि च
चतुर्धा जन्म इत्येतद्भूतग्रामस्य लक्ष्यते १९
अचराण्यपि भूतानि खेचराणि तथैव च
अण्डजानि विजानीयात्सर्वांश्चैव सरीसृपान् २०
संस्वेदाः कृमयः प्रोक्ता जन्तवश्च तथाविधाः

जन्म द्वितीयमित्येतज्ञघन्यतरमुच्यते २१
भित्त्वा तु पृथिवीं यानि जायन्ते कालपर्ययात्
उद्भिज्ञानीति तान्याहुर्भूतानि द्विजसत्तमाः २२
द्विपादबहुपादानि तिर्यग्गतिमतीनि च
जरायुजानि भूतानि वित्त तान्यपि सत्तमाः २३
द्विविधापीह विज्ञेया ब्रह्मयोनिः सनातना
तपः कर्म च यत्पुण्यमित्येष विदुषां नयः २४
द्विविधं कर्म विज्ञेयमिज्या दानं च यन्मखे
जातस्याध्ययनं पुण्यमिति वृद्धानुशासनम् २५
एतद्यो वेत्ति विधिवत्स मुक्तः स्याद्द्विजर्षभाः
विमुक्तः सर्वपापेभ्य इति चैव निबोधत २६
आकाशं प्रथमं भूतं श्रोत्रमध्यात्ममुच्यते
अधिभूतं तथा शब्दो दिशस्तत्राधिदैवतम् २७
द्वितीयं मारुतो भूतं त्वगध्यात्मं च विश्रुतम्
स्प्रष्टव्यमधिभूतं च विद्युत्तत्राधिदैवतम् २८
तृतीयं ज्योतिरित्याहुश्चक्षुरध्यात्ममुच्यते
अधिभूतं ततो रूपं सूर्यस्तत्राधिदैवतम् २९
चतुर्थमापो विज्ञेयं जिह्वा चाध्यात्ममिष्यते
अधिभूतं रसश्चात्र सोमस्तत्राधिदैवतम् ३०
पृथिवी पञ्चमं भूतं घ्राणश्चाध्यात्ममिष्यते
अधिभूतं तथा गन्धो वायुस्तत्राधिदैवतम् ३१
एष पञ्चसु भूतेषु चतुष्टयविधिः स्मृतः
अतः परं प्रवक्ष्यामि सर्वं त्रिविधमिन्द्रियम् ३२
पादावध्यात्ममित्याहुर्ब्राह्मणास्तत्त्वदर्शिनः
अधिभूतं तु गन्तव्यं विष्णुस्तत्राधिदैवतम् ३३
अवाग्गतिरपानश्च पायुरध्यात्ममिष्यते
अधिभूतं विसर्गश्च मित्रस्तत्राधिदैवतम् ३४
प्रजनः सर्वभूतानामुपस्थोऽध्यात्ममुच्यते
अधिभूतं तथा शुक्रं दैवतं च प्रजापतिः ३५
हस्तावध्यात्ममित्याहुरध्यात्मविदुषो जनाः

अधिभूतं तु कर्माणि शक्रस्तत्राधिदैवतम् ३६
वैश्वदेवी मनः पूर्वा वागध्यात्ममिहोच्यते
वक्तव्यमधिभूतं च वह्निस्तत्राधिदैवतम् ३७
अध्यात्मं मन इत्याहुः पञ्चभूतानुचारकम्
अधिभूतं च मन्तव्यं  चन्द्रमाश्चाधिदैवतम् ३८
अध्यात्मं बुद्धिरित्याहुः षडिन्द्रियविचारिणी
अधिभूतं तु विज्ञेयं ब्रह्मा तत्राधिदैवतम् ३९
यथावदध्यात्मविधिरेष वः कीर्तितो मया
ज्ञानमस्य हि धर्मज्ञाः प्राप्तं बुद्धिमतामिह ४०
इन्द्रियाणीन्द्रियार्थाश्च महाभूतानिपञ्च च
सर्वाण्येतानि संधाय मनसा संप्रधारयेत् ४१
क्षीणे मनसि सर्वस्मिन्न जन्मसुखमिष्यते
ज्ञानसंपन्नसत्त्वानां तत्सुखं विदुषां मतम् ४२
अतः परं प्रवक्ष्यामि सूक्ष्मभावकरीं शिवाम्
निवृतिं सर्वभूतेषु मृदुना दारुणेन वा ४३
गुणागुणमनासङ्गमेकचर्यमनन्तरम्
एतद्ब्राह्मणतो वृत्तमाहुरेकपदं सुखम् ४४
विद्वान्कूर्म इवाङ्गानि कामान्संहृत्य सर्वशः
विरजाः सर्वतो मुक्तो यो नरः स सुखी सदा ४५
कामानात्मनि संयम्य क्षीणतृष्णः समाहितः
सर्वभूतसुहृन्मैत्रो ब्रह्मभूयं स गच्छति ४६
इन्द्रियाणां निरोधेन सर्वेषां विषयैषिणाम्
मुनेर्जनपदत्यागादध्यात्माग्निः समिध्यते ४७
यथाग्निरिन्धनैरिद्धो महाज्योतिः प्रकाशते
तथेन्द्रियनिरोधेन महानात्मा प्रकाशते ४८
यदा पश्यति भूतानि प्रसन्नात्मात्मनो हृदि
स्वयंयोनिस्तदा सूक्ष्मात्सूक्ष्ममाप्नोत्यनुत्तमम् ४९
अग्नी रूपं पयः स्रोतो वायुः स्पर्शनमेव च
मही पङ्कधरं घोरमाकाशं श्रवणं तथा ५०
रागशोकसमाविष्टं पञ्चस्रोतः समावृतम्

पञ्चभूतसमायुक्तं नवद्वारं द्विदैवतम् ५१
रजस्वलमथादृश्यं त्रिगुणं च त्रिधातुकम्
संसर्गाभिरतं मूढं शरीरमिति धारणा ५२
दुश्चरं जीवलोकेऽस्मिन्सत्त्वं प्रति समाश्रितम्
एतदेव हि लोकेऽस्मिन्कालचक्रं प्रवर्तते ५३
एतन्महार्णवं घोरमगाधं मोहसंज्ञितम्
विसृजेत्संक्षिपेच्चैव बोधयेत्सामरं जगत् ५४
कामक्रोधौ भयं मोहमभिद्रोहमथानृतम्
इन्द्रियाणां निरोधेन स तांस्त्यजति दुस्त्यजान् ५५
यस्यैते निर्जिता लोके त्रिगुणाः पञ्च धातवः
व्योम्नि तस्य परं स्थानमनन्तमथ लक्ष्यते ५६
कामकूलामपारान्तां मनःस्रोतोभयावहाम्
नदीं दुर्गह्रदां तीर्णः कामक्रोधावुभौ जयेत् ५७
स सर्वदोषनिर्मुक्तस्ततः पश्यति यत्परम्
मनो मनसि संधाय पश्यत्यात्मानमात्मनि ५८
सर्ववित्सर्वभूतेषु वीक्षत्यात्मानमात्मनि
एकधा बहुधा चैव विकुर्वाणस्ततस्ततः ५९
ध्रुवं पश्यति रूपाणि दीपाद्दीपशतं यथा
स वै विष्णुश्च मित्रश्च वरुणोऽग्नि प्रजापतिः ६०
स हि धाता विधाता च स प्रभुः सर्वतोमुखः
हृदयं सर्वभूतानां महानात्मा प्रकाशते ६१
तं विप्रसंघाश्च सुरासुराश्च यक्षाः पिशाचाः पितरो वयांसि
रक्षोगणा भूतगणाश्च सर्वे महर्षयश्चैव सदा स्तुवन्ति ६२
इति श्रीमहाभारते आश्वमेधिकपर्वणि द्विचत्वारिंशोऽध्यायः ४२

## त्रिचत्वारिंशोऽध्यायः

ब्रह्मोवाच
मनुष्याणां तु राजन्यः क्षत्रियो मध्यमो गुणः
कुञ्जरो वाहनानां च सिंहश्चारण्यवासिनाम् १
अविः पशूनां सर्वेषामाखुश्च बिलवासिनाम्

गवां गोवृषभश्चैव स्त्रीणां पुरुष एव च २
न्यग्रोधो जम्बुवृक्षश्च पिप्पलः शाल्मलिस्तथा
शिंशपा मेषशृङ्गश्च तथा कीचकवेणवः
एते द्रुमाणां राजानो लोकेऽस्मिन्नात्र संशयः ३
हिमवान्पारियात्रश्च सह्यो विन्ध्यस्त्रिकूटवान्
श्वेतो नीलश्च भासश्च काष्ठवांश्चैव पर्वतः ४
शुभस्कन्धो महेन्द्रश्च माल्यवान्पर्वतस्तथा
एते पर्वतराजानो गणानां मरुतस्तथा ५
सूर्यो ग्रहाणामधिपो नक्षत्राणां च चन्द्रमाः
यमः पितॄणामधिपः सरितामथ सागरः ६
अम्भसां वरुणो राजा सत्त्वानां मित्र उच्यते
अर्कोऽधिपतिरुष्णानां ज्येतिषामिन्दुरुच्यते ७
अग्निर्भूतपतिर्नित्यं ब्राह्मणानां बृहस्पतिः
ओषधीनां पतिः सोमो विष्णुर्बलवतां वरः ८
त्वष्टाऽधिराजो रूपाणां पशूनामीश्वरः शिवः
दक्षिणानां तथा यज्ञो वेदानामृषयस्तथा ९
दिशामुदीची विप्राणां सोमो राजा प्रतापवान्
कुबेरः सर्वयक्षाणां देवतानां पुरंदरः
एष भूतादिकः सर्गः प्रजानां च प्रजापतिः १०
सर्वेषामेव भूतानामहं ब्रह्ममयो महान्
भूतं परतरं मत्तो विष्णोर्वापि न विद्यते ११
राजाधिराजः सर्वासां विष्णुर्ब्रह्ममयो महान्
ईश्वरं तं विजानीमः स विभुः स प्रजापतिः १२
नरकिंनरयक्षाणां गन्धर्वोरगरक्षसाम्
देवदानवनागानां सर्वेषामीश्वरो हि सः १३
भगदेवानुयातानां सर्वासां वामलोचना
माहेश्वरी महादेवी प्रोच्यते पार्वतीति या १४
उमां देवीं विजानीत नारीणामुत्तमां शुभाम्
रतीनां वसुमत्यस्तु स्त्रीणामप्सरस्तथा १५
धर्मकामाश्च राजानो ब्राह्मणा धर्मलक्षणाः

तस्माद्राजा द्विजातीनां प्रयतेतेह रक्षणे १६
राज्ञां हि विषये येषामवसीदन्ति साधवः
हीनास्ते स्वगुणैः सर्वैः प्रेत्यावाङ्मार्गगामिनः १७
राज्ञां तु विषये येषां साधवः परिरक्षिताः
तेऽस्मिल्लोके प्रमोदन्ते प्रेत्य चानन्त्यमेव च
प्राप्नुवन्ति महात्मान इति वित्त द्विजर्षभाः १८
अत ऊर्ध्वं प्रवक्ष्यामि नियतं धर्मलक्षणम्
अहिंसालक्षणो धर्मो हिंसा चाधर्मलक्षणा १९
प्रकाशलक्षणा देवा मनुष्याः कर्मलक्षणाः
शब्दलक्षणमाकाशं वायुस्तु स्पर्शलक्षणः २०
ज्योतिषां लक्षणं रूपमापश्च रसलक्षणाः
धरणी सर्वभूतानां पृथिवी गन्धलक्षणा २१
स्वरव्यञ्जनसंस्कारा भारती सत्यलक्षणा
मनसो लक्षणं चिन्ता तथोक्ता बुद्धिरन्वयात् २२
मनसा चिन्तयानोऽथान्बुद्ध्या चैव व्यवस्यति
बुद्धिर्हि व्यवसायेन लक्ष्यते नात्र संशयः २३
लक्षणं महतो ध्यानमव्यक्तं साधुलक्षणम्
प्रवृत्तिलक्षणो योगो ज्ञानं संन्यासलक्षणम् २४
तस्माज्ज्ञानं पुरस्कृत्य संन्यसेदिह बुद्धिमान्
संन्यासी ज्ञानसंयुक्तः प्राप्नोति परमां गतिम्
अतीतोऽद्वद्वमभ्येति तमोमृत्युजरातिगम् २५
धर्मलक्षणसंयुक्तमुक्तं वो विधिवन्मया
गुणानां ग्रहणं सम्यग्वक्ष्याम्यहमतः परम् २६
पार्थिवो यस्तु गन्धो वै घ्राणेनेह स गृह्यते
घ्राणस्थश्च तथा वायुर्गन्धज्ञाने विधीयते २७
अपां धातुरसो नित्यं जिह्वया स तु गृह्यते
जिह्वस्थश्च तथा सोमो रसज्ञाने विधीयते २८
ज्योतिषश्च गुणो रूपं चक्षुषा तच्च गृह्यते
चक्षुःस्थश्च तथादित्यो रूपज्ञाने विधीयते २९
वायव्यस्तु तथा स्पर्शस्त्वचा प्रज्ञायते च सः

त्वक्स्थश्चैव तथा वायुः स्पर्शदाने विधीयते ३०
आकाशस्य गुणो घोषः श्रोत्रेण स तु गृह्यते
श्रोत्रस्थाश्च दिशः सर्वाः शब्दज्ञाने प्रकीर्तिताः ३१
मनसस्तु गुणश्चिन्ता प्रज्ञया स तु गृह्यते
हृदिस्थचेतनाधातुर्मनोज्ञाने विधीयते ३२
बुद्धिरध्यवसायेन ध्यानेन च महांस्तथा
निश्चित्य ग्रहणं नित्यमव्यक्तं नात्र संशयः ३३
अलिङ्गग्रहणो नित्यः क्षेत्रज्ञो निर्गुणात्मकः
तस्मादलिङ्गः क्षेत्रज्ञः केवलं ज्ञानलक्षणः ३४
अव्यक्तं क्षेत्रमुद्दिष्टं गुणानां प्रभवाप्ययम्
सदा पश्याम्यहं लीनं विजानामि शृणोमि च ३५
पुरुषस्तद्विजानीते तस्मात्क्षेत्रज्ञ उच्यते
गुणवृत्तं तथा कृत्स्नं क्षेत्रज्ञः परिपश्यति ३६
आदिमध्यावसानान्तं सृज्यमानमचेतनम्
न गुणा विदुरात्मानं सृज्यमानं पुनः पुनः ३७
न सत्यं वेद वै कश्चित्क्षेत्रज्ञस्त्वेव विन्दति
गुणानां गुण भूतानां यत्परं परतो महत् ३८
तस्माद्गुणांश्च तत्त्वं च परित्यज्येह तत्त्ववित्
क्षीणदोषो गुणान्हित्वा क्षेत्रज्ञं प्रविशत्यथ ३९
निर्द्वन्द्वो निर्नमस्कारो निःस्वधाकार एव च
अचलश्चानिकेतश्च क्षेत्रज्ञः स परो विभुः ४०
इति श्रीमहाभारते आश्वमेधिकपर्वणि त्रिचत्वारिंशोऽध्यायः ४३

## चतुश्चत्वारिंशोऽध्यायः

ब्रह्मोवाच
यदादिमध्यपर्यन्तं ग्रहणोपायमेव च
नामलक्षणसंयुक्तं सर्वं वक्ष्यामि तत्त्वतः १
अहः पूर्वं ततो रात्रिर्मासाः शुक्लादयः स्मृताः
श्रविष्ठादीनि ऋक्षाणि ऋतवः शिशिरादयः २
भूमिरादिस्तु गन्धानां रसानामाप एव च

रूपाणां ज्योतिरादिस्तु स्पर्शादिर्वायुरुच्यते
शब्दस्यादिस्तथाकाशमेष भूतकृतो गुणः ३
अतः परं प्रवक्ष्यामि भूतानामादिमुत्तमम्
आदित्यो ज्योतिषामादिरग्निर्भूतादिरिष्यते ४
सावित्री सर्वविद्यानां देवतानां प्रजापतिः
ओंकारः सर्ववेदानां वचसां प्राण एव च
यद्यस्मिन्त्तं लोके सर्वं सावित्रमुच्यते ५
गायत्री छन्दसामादिः पशूनामज उच्यते
गावश्चतुष्पदामादिर्मनुष्याणां द्विजातयः ६
श्येनः पतत्रिणामादिर्यज्ञानां हुतमुत्तमम्
परिसर्पिणां तु सर्वेषां ज्येष्ठः सर्पो द्विजोत्तमाः ७
कृतमादिर्युगानां च सर्वेषां नात्र संशयः
हिरण्यं सर्वरत्नानामोषधीनां यवास्तथा ८
सर्वेषां भक्ष्यभोज्यानामन्नं परममुच्यते
द्रवाणां चैव सर्वेषां पेयानामाप उत्तमाः ९
स्थावराणां च भूतानां सर्वेषामविशेषतः
ब्रह्मक्षेत्रं सदा पुण्यं प्लक्षः प्रथमजः स्मृतः १०
अहं प्रजापतीनां च सर्वेषां नात्र संशयः
मम विष्णुरचिन्त्यात्मा स्वयंभूरिति स स्मृतः ११
पर्वतानां महामेरुः सर्वेषामग्रजः स्मृतः
दिशां च प्रदिशां चोर्ध्वा दिग्जाता प्रथमं तथा १२
तथा त्रिपथगा गङ्गा नदीनामग्रजा स्मृता
तथा सरोदपानानां सर्वेषां सागरोऽग्रजः १३
देवदानवभूतानां पिशाचोरगरक्षसाम्
नरकिंनरयक्षाणां सर्वेषामीश्वरः प्रभुः १४
आदिर्विश्वस्य जगतो विष्णुर्ब्रह्ममयो महान्
भूतं परतरं तस्मात्त्रैलोक्ये नेह विद्यते १५
आश्रमाणां च गार्हस्थ्यं सर्वेषां नात्र संशयः
लोकानामादिरव्यक्तं सर्वस्यान्तस्तदेव च १६
अहान्यस्तमयान्तानि उदयान्ता च शर्वरी

सुखस्यान्तः सदा दुःखं दुःखस्यान्तः सदा सुखम् १७
सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः
संयोगा विप्रयोगान्ता मरणान्तं हि जीवितम् १८
सर्वं कृतं विनाशान्तं जातस्य मरणं ध्रुवम्
अशाश्वतं हि लोकेऽस्मिन्सर्वं स्थावरजङ्गमम् १९
इष्टं दत्तं तपोऽधीतं व्रतानि नियमाश्च ये
सर्वमेतद्विनाशान्तं ज्ञानस्यान्तो न विद्यते २०
तस्माज्ज्ञानेन शुद्धेन प्रसन्नात्मा समाहितः
निर्ममो निरहंकारो मुच्यते सर्वपाप्मभिः २१
इति श्रीमहाभारते आश्वमेधिकपर्वणि चतुश्चत्वारिंशोऽध्यायः ४४

## पञ्चचत्वारिंशोऽध्यायः

ब्रह्मोवाच
बुद्धिसारं मनस्तम्भमिन्द्रिय ग्रामबन्धनम्
महाभूतारविष्कम्भं निमेषपरिवेष्टनम् १
जराशोकसमाविष्टं व्याधिव्यसनसंचरम्
देशकालविचारीदं श्रमव्यायामनिस्वनम् २
अहोरात्रपरिक्षेपं शीतोष्ण परिमण्डलम्
सुखदुःखान्तसंक्लेशं क्षुत्पिपासावकीलनम् ३
छायातपविलेखं च निमेषोन्मेषविह्वलम्
घोरमोहजनाकीर्णं वर्तमानमचेतनम् ४
मासार्धमासगणितं विषमं लोकसंचरम्
तमोनिचयपङ्कं च रजोवेगप्रवर्तकम् ५
सत्त्वालंकारदीप्तं च गुणसंघातमण्डलम्
स्वरविग्रहनाभीकं शोकसंघातवर्तनम् ६
क्रियाकारणसंयुक्तं रागविस्तारमायतम्
लोभेप्सापरिसंख्यातं विविक्तज्ञानसंभवम् ७
भयमोहपरीवारं भूतसंमोह कारकम्
आनन्दप्रीतिधारं च कामक्रोध परिग्रहम् ८
महदादिविशेषान्तमसक्त प्रभवाव्ययम्

मनोजवनमश्रान्तं कालचक्रं प्रवर्तते ९
एतद्द्वंद्वसमायुक्तं कालचक्रमचेतनम्
विसृजेत्संक्षिपेच्चापि बोधयेत्सामरं जगत् १०
कालचक्रप्रवृत्तिं च निवृत्तिं चैव तत्त्वतः
यस्तु वेद नरो नित्यं न स भूतेषु मुह्यति ११
विमुक्तः सर्वसंक्लेशैः सर्वद्वंद्वातिगो मुनिः
विमुक्तः सर्वपापेभ्यः प्राप्नोति परमां गतिम् १२
गृहस्थो ब्रह्मचारी च वानप्रस्थोऽथ भिक्षुकः
चत्वार आश्रमाः प्रोक्ताः सर्वे गार्हस्थ्यमूलकाः १३
यः कश्चिदिह लोके च ह्यागमः संप्रकीर्तितः
तस्यान्तगमनं श्रेयः कीर्तिरेषा सनातनी १४
संस्कारैः संस्कृतः पूर्वं यथावच्चरितव्रतः
जातौ गुणविशिष्टायां समावर्तेत वेदवित् १५
स्वदारनिरतो दान्तः शिष्टाचारो जितेन्द्रियः
पञ्चभिश्च महायज्ञैः श्रद्दधानो यजेत ह १६
देवतातिथिशिष्टाशी निरतो वेदकर्मसु
इज्याप्रदानयुक्तश्च यथाशक्ति यथाविधि १७
न पाणिपादचपलो न नेत्रचपलो मुनिः
न च वागङ्गचपल इति शिष्टस्य गोचरः १८
नित्ययज्ञोपवीती स्याच्छुक्लवासाः शुचिव्रतः
नियतो दमदानाभ्यां सदा शिष्टैश्च संविशेत् १९
जितशिश्नोदरो मैत्रः शिष्टाचारसमाहितः
वैणवीं धारयेद्यष्टिं सोदकं च कमण्डलुम् २०
अधीत्याध्यापनं कुर्यात्तथा यजनयाजने
दानं प्रतिग्रहं चैव षड्गुणां वृत्तिमाचरेत् २१
त्रीणि कर्माणि यानीह ब्राह्मणानां तु जीविका
याजनाध्यापने चोभे शुद्धाच्चापि प्रतिग्रहः २२
अवशेषाणि चान्यानि त्रीणि कर्माणि यानि तु
दानमध्ययनं यज्ञो धर्मयुक्तानि तानि तु २३
तेष्वप्रमादं कुर्वीत त्रिषु कर्मसु धर्मवित्

दान्तो मैत्रः क्षमायुक्तः सर्वभूतसमोः मुनिः २४
सर्वमेतद्यथाशक्ति विप्रो निर्वर्तयञ्शुचिः
एवं युक्तो जयेत्स्वर्गं गृहस्थः संशितव्रतः २५
इति श्रीमहाभारते आश्वमेधिकपर्वणि पञ्चचत्वारिंशोऽध्यायः ४५

## षट्चत्वारिंशोऽध्यायः

ब्रह्मोवाच
एवमेतेन मार्गेण पूर्वोक्तेन यथाविधि
अधीतवान्यथाशक्ति तथैव ब्रह्मचर्यवान् १
स्वधर्मनिरतो विद्वान्सर्वेन्द्रिययतो मुनिः
गुरोः प्रियहिते युक्तः सत्यधर्मपरः शुचिः २
गुरुणा समनुज्ञातो भुञ्जीतान्नमकुत्सयन्
हविष्यभैक्ष्यभुक्चापि स्थानासनविहारवान् ३
द्विकालमग्निं जुह्वानः शुचिर्भूत्वा समाहितः
धारयीत सदा दण्डं बैल्वं पालाशमेव वा ४
क्षौमं कार्पासिकं वापि मृगाजिनमथापि वा
सर्वं काषायरक्तं स्याद्वासो वापि द्विजस्य ह ५
मेखलाच भवेन्मौञ्जी जटी नित्योदकस्तथा
यज्ञोपवीती स्वाध्यायी अलुप्तनियतव्रतः ६
पूताभिश्च तथैवाद्भिः सदा दैवततर्पणम्
भावेन नियतः कुर्वन्ब्रह्मचारी प्रशस्यते ७
एवं युक्तो जयेत्स्वर्गमूर्ध्वरेताः समाहितः
न संसरति जातीषु परमं स्थानमाश्रितः ८
संस्कृतः सर्वसंस्कारैस्तथैव ब्रह्मचर्यवान्
ग्रामान्निष्क्रम्य चारण्यं मुनिः प्रव्रजितो वसेत् ९
चर्मवल्कलसंवीतः स्वयं प्रातरुपस्पृशेत्
अरण्यगोचरो नित्यं न ग्रामं प्रविशेत्पुनः १०
अर्चयन्नतिथीन्काले दद्याच्चापि प्रतिश्रयम्
फलपत्रावरैर्मूलैः श्यामाकेन च वर्तयन् ११
प्रवृत्तमुदकं वायुं सर्व वानेयमा तृणात्

प्राश्नीयादानुपूर्व्येण यथादीक्षमतन्द्रितः १२
आमूलफलभिक्षाभिरर्चेदतिथिमागतम्
यद्भक्षः स्यात्ततो दद्याद्भिक्षां नित्यमतन्द्रितः १३
देवतातिथिपूर्वं च सदा भुञ्जीत वाग्यतः
अस्कन्दितमनाश्चैव लघ्वाशी देवताश्रयः १४
दान्तो मैत्रः क्षमायुक्तः केशश्मश्रु च धारयन्
जुह्वन्स्वाध्यायशीलश्च सत्यधर्मपरायणः १५
त्यक्तदेहः सदादक्षो वननित्यः समाहितः
एवं युक्तो जयेत्स्वर्गं वानप्रस्थो जितेन्द्रियः १६
गृहस्थो ब्रह्मचारी च वानप्रस्थोऽथवा पुनः
य इच्छेन्मोक्षमास्थातुमुत्तमां वृत्तिमाश्रयेत् १७
अभयं सर्वभूतेभ्यो दत्त्वा नैष्कर्म्यमाचरेत्
सर्वभूतहितो मैत्रः सर्वेन्द्रिययतो मुनिः १८
अयाचितमसंक्लृप्तमुपपन्नं यदृच्छया
जोषयेत सदा भोज्यं ग्रासमागतमस्पृहः १९
यात्रामात्रं च भुञ्जीत केवलं प्राणयात्रिकम्
धर्मलब्धं तथा श्नीयान्न काममनुवर्तयेत् २०
ग्रासादाच्छादनाच्चान्यन्न गृह्णीयात्कथंचन
यावदाहारयेत्तावत्प्रतिगृह्णीत नान्यथा २१
परेभ्यो न प्रतिग्राह्यं न च देयं कदाचन
दैन्यभावाच्च भूतानां संविभज्य सदा बुधः २२
नाददीत परस्वानि न गृह्णीयादयाचितम्
न किंचिद्विषयं भुक्त्वा स्पृहयेत्तस्य वै पुनः २३
मृदमापस्तथाश्मानं पत्रपुष्पफलानि च
असंवृतानि गृह्णीयात्प्रवृत्तानीह कार्यवान् २४
न शिल्पजीविकां जीवेद्द्विरन्नं नोत कामयेत्
न द्वेष्टा नोपदेष्टा च भवेच्च निरुपस्कृतः
श्रद्धापूतानि भुञ्जीत निमित्तानि विवर्जयेत् २५
मुधावृत्तिरसक्तश्च सर्वभूतैरसंविदम्
कृत्वा वह्निं चरेद्भैक्ष्यं विधूमे भुक्तवज्जने २६

वृत्ते शरावसंपाते भैक्ष्यं लिप्सेत मोक्षवित्
लाभे न च प्रहृष्येत नालाभे विमना भवेत् २७
मात्राशी कालमाकांक्षंश्चरेद्भैक्ष्यं समाहितः
लाभं साधारणं नेच्छेन्न भुञ्जीताभिपूजितः
अभिपूजितलाभाद्धि विजुगुप्सेत भिक्षुकः २८
शुक्तान्यम्लानि तिक्तानि कषायकटुकानि च
नास्वादयीत भुञ्जानो रसांश्च मधुरांस्तथा
यात्रामात्रं च भुञ्जीत केवलं प्राणयात्रिकम् २९
असंरोधेन भूतानां वृत्तिं लिप्सेत मोक्षवित्
न चान्यमनुभिक्षेत भिक्षमाणः कथंचन ३०
न संनिकाशयेद्धर्मं विविक्ते विरजाश्चरेत्
शून्यागारमरण्यं वा वृक्षमूलं नदीं तथा
प्रतिश्रयार्थं सेवेत पार्वतीं वा पुनर्गुहाम् ३१
ग्रामैकरात्रिको ग्रीष्मे वर्षास्वेकत्र वा वसेत्
अध्वा सूर्येण निर्दिष्टः कीटवच्च चरेन्महीम् ३२
दयार्थं चैव भूतानां समीक्ष्य पृथिवीं चरेत्
संचयांश्च न कुर्वीत स्नेहवासं च वर्जयेत् ३३
पूतेन चाम्भसा नित्यं कार्यं कुर्वीत मोक्षवित्
उपस्पृशेदुद्धृताभिरद्भिश्च पुरुषः सदा ३४
अहिंसा ब्रह्मचर्यं च सत्यमार्जवमेव च
अक्रोधश्चानसूया च दमो नित्यमपैशुनम् ३५
अष्टास्वेतेषु युक्तः स्याद्व्रतेषु नियतेन्द्रियः
अपापमशठं वृत्तमजिह्मं नित्यमाचरेत् ३६
आशीर्युक्तानि कर्माणि हिंसायुक्तानि यानि च
लोकसंग्रहधर्मं च नैव कुर्यान्न कारयेत् ३७
सर्वभावानतिक्रम्य लघुमात्रः परिव्रजेत्
समः सर्वेषु भूतेषु स्थावरेषु चरेषु च ३८
परं नोद्वेजयेत्कंचिन्न च कस्यचिदुद्विजेत्
विश्वास्यः सर्वभूतानामग्र्यो मोक्षविदुच्यते ३९
अनागतं च न ध्यायेन्नातीतमनुचिन्तयेत्

वर्तमानमुपेक्षेत कालाकाङ्क्षी समाहितः ४०
न चक्षुषा न मनसा न वाचा दूषयेत्क्वचित्
न प्रत्यक्षं परोक्षं वा किंचिद्दुष्टं समाचरेत् ४१
इन्द्रियाण्युपसंहृत्य कूर्मोऽङ्गानीव सर्वशः
क्षीणेन्द्रियमनोबुद्धिर्निरीक्षेत निरिन्द्रियः ४२
निर्द्वंद्वो निर्नमस्कारो निःस्वाहाकार एव च
निर्ममो निरहंकारो निर्योगक्षेम एव च ४३
निराशीः सर्वभूतेषु निरासङ्गो निराश्रयः
सर्वज्ञः सर्वतो मुक्तो मुच्यते नात्र संशयः ४४
अपाणिपादपृष्ठं तमशिरस्कमनूदरम्
प्रहीणगुणकर्माणं केवलं विमलं स्थिरम् ४५
अगन्धरसमस्पर्शमरूपाशब्दमेव च
अत्वगस्थ्यथ वामज्ञममांसमपि चैव ह ४६
निश्चिन्तमव्ययं नित्यं हृदिस्थमपि नित्यदा
सर्वभूतस्थमात्मानं ये पश्यन्ति न ते मृताः ४७
न तत्र क्रमते बुद्धिर्नेन्द्रियाणि न देवताः
वेदा यज्ञाश्च लोकाश्च न तपो न पराक्रमः
यत्र ज्ञानवतां प्राप्तिरलिङ्गग्रहणा स्मृता ४८
तस्मादलिङ्गो धर्मज्ञो धर्मव्रतमनुव्रतः
गूढधर्माश्रितो विद्वानज्ञातचरितं चरेत् ४९
अमूढो मूढरूपेण चरेद्धर्ममदूषयन्
यथैनमवमन्येरन्परे सततमेव हि ५०
तथावृत्तश्चरेद्धर्मं सतां वर्त्माविदूषयन्
यो ह्येवं वृत्तसंपन्नः स मुनिः श्रेष्ठ उच्यते ५१
इन्द्रियाणीन्द्रियार्थांश्च महाभूतानि पञ्च च
मनोबुद्धिरथात्मानमव्यक्तं पुरुषं तथा ५२
सर्वमेतत्प्रसंख्याय सम्यक्संत्यज्य निर्मलः
ततः स्वर्गमवाप्नोति विमुक्तः सर्वबन्धनैः ५३
एतदेवान्तवेलायां परिसंख्याय तत्त्ववित्
ध्यायेदेकान्त मास्थाय मुच्यतेऽथनिराश्रयः ५४

निर्मुक्तः सर्व सङ्गेभ्यो वायुराकाशगो यथा
क्षीणकोशो निरातङ्कः प्राप्नोति परमं पदम् ५५
इति श्रीमहाभारते आश्वमेधिकपर्वणि षट्चत्वारिंशोऽध्यायः ४६

## सप्तचत्वारिंशोऽध्यायः

ब्रह्मोवाच
संन्यासं तप इत्याहुर्वृद्धा निश्चितदर्शिनः
ब्राह्मणा ब्रह्मयोनिस्था ज्ञानं ब्रह्म परं विदुः १
अविदूरात्परं ब्रह्म वेदविद्याव्यपाश्रयम्
निर्द्वंद्वं निर्गुणं नित्यमचिन्त्यं गुह्यमुत्तमम् २
ज्ञानेन तपसा चैव धीराः पश्यन्ति तत्पदम्
निर्णिक्ततमसः पूता व्युत्क्रान्तरजसोऽमलाः ३
तपसा क्षेममध्वानं गच्छन्ति परमैषिणः
संन्यासनिरता नित्यं ये ब्रह्मविदुषो जनाः ४
तपः प्रदीप इत्याहुराचारो धर्मसाधकः
ज्ञानं त्वेव परं विद्म संन्यासस्तप उत्तमम् ५
यस्तु वेद निराबाधं ज्ञानं तत्त्वविनिश्चयात्
सर्वभूतस्थमात्मानं स सर्वगतिरिष्यते ६
यो विद्वान्सहवासं च विवासं चैव पश्यति
तथैवैकत्वनानात्वे स दुःखात्परिमुच्यते ७
यो न कामयते किंचिन्न किंचिदवमन्यते
इहलोकस्थ एवैष ब्रह्मभूयाय कल्पते ८
प्रधानगुणतत्त्वज्ञः सर्वभूतविधानवित्
निर्ममो निरहंकारो मुच्यते नात्र संशयः ९
निर्द्वंद्वो निर्नमस्कारो निःस्वधाकार एव च
निर्गुणं नित्यमद्वंद्वं प्रशमेनैव गच्छति १०
हित्वा गुणमयं सर्वं कर्म जन्तुः शुभाशुभम्
उभे सत्यानृते हित्वा मुच्यते नात्र संशयः ११
अव्यक्तबीजप्रभवो बुद्धिस्कन्धमयो महान्
महाहंकारविटप इन्द्रियान्तरकोटरः १२

महाभूतविशाखश्च विशेषप्रतिशाखवान्
सदापर्णः सदापुष्पः शुभाशुभफलोदयः
आजीवः सर्वभूतानां ब्रह्मवृक्षः सनातनः १३
एतच्छित्त्वा च भित्त्वा च ज्ञानेन परमासिना
हित्वा चामरतां प्राप्य जह्याद्वै मृत्युजन्मनी
निर्ममो निरहंकारो मुच्यते नात्र संशयः १४
द्वावेतौ पक्षिणौ नित्यौ सखायौ चाप्यचेतनौ
एताभ्यां तु परो यस्य चेतनावानिति स्मृतः १५
अचेतनः सत्त्वसंघातयुक्तः सत्त्वात्परं चेतयतेऽन्तरात्मा
स क्षेत्रज्ञः सत्त्वसंघातबुद्धिर्गुणातिगो मुच्यते मृत्युपाशात् १६
इति श्रीमहाभारते आश्वमेधिकपर्वणि सप्तचत्वारिंशोऽध्यायः ४७

## अष्टचत्वारिंशोऽध्यायः

ब्रह्मोवाच
केचिद्ब्रह्ममयं वृक्षं केचिद्ब्रह्ममयं महत्
केचित्पुरुषमव्यक्तं केचित्परमनामयम्
मन्यन्ते सर्वमप्येतदव्यक्तप्रभवाव्ययम् १
उच्छ्वासमात्रमपि चेद्योऽन्तकाले समो भवेत्
आत्मानमुपसंगम्य सोऽमृतत्वाय कल्पते २
निमेषमात्रमपि चेत्संयम्यात्मानमात्मनि
गच्छत्यात्मप्रसादेन विदुषां प्राप्तिमव्ययाम् ३
प्राणायामैरथ प्राणान्संयम्य स पुनः पुनः
दशद्वादशभिर्वापि चतुर्विंशात्परं ततः ४
एवं पूर्वं प्रसन्नात्मा लभते यद्यदिच्छति
अव्यक्तात्सत्त्वमुद्रिक्तममृतत्वाय कल्पते ५
सत्त्वात्परतरं नान्यत्प्रशंसन्तीह तद्विदः
अनुमानाद्विजानीमः पुरुषं सत्त्वसंश्रयम्
न शक्यमन्यथा गन्तुं पुरुषं तमथो द्विजाः ६
क्षमा धृतिरहिंसा च समता सत्यमार्जवम्
ज्ञानं त्यागोऽथ संन्यासः सात्त्विकं वृत्तमिष्यते ७

एतेनैवानुमानेन मन्यन्तेऽथ मनीषिणः
सत्त्वं च पुरुषश्चैकस्तत्र नास्ति विचारणा ८
आहुरेके च विद्वांसो ये ज्ञाने सुप्रतिष्ठिताः
क्षेत्रज्ञसत्त्वयोरैक्यमित्येतन्नोपपद्यते ९
पृथग्भूतस्ततो नित्यमित्येतदविचारितम्
पृथग्भावश्च विज्ञेयः सहजश्चापि तत्त्वतः १०
तथैवैकत्वनानात्वमिष्यते विदुषां नयः
मशकोदुम्बरे त्वैक्यं पृथक्त्वमपि दृश्यते ११
मत्स्यो यथान्यः स्यादप्सु संप्रयोगस्तथानयोः
संबन्धस्तोयबिन्दूनां पर्णे कोकनदस्य च १२
गुरुरुवाच
इत्युक्तवन्तं ते विप्रास्तदा लोकपितामहम्
पुनःसंशयमापन्नाः पप्रच्छुर्द्विजसत्तमाः १३
ऋषय ऊचुः
किंस्विदेवेह धर्माणामनुष्ठेयतमं स्मृतम्
व्याहतामिव पश्यामो धर्मस्य विविधां गतिम् १४
ऊर्ध्वं देहाद्वदन्त्येके नैतदस्तीति चापरे
केचित्संशयितं सर्वं निःसंशयमथापरे १५
अनित्यं नित्यमित्येके नास्त्यस्तीत्यपि चापरे
एकरूपं द्विधेत्येके व्यामिश्रमिति चापरे
एकमेके पृथक्चान्ये बहुत्वमिति चापरे १६
मन्यन्ते ब्राह्मणा एवं प्राज्ञास्तत्त्वार्थदर्शिनः
जटाजिनधराश्चान्ये मुण्डाः केचिदसंवृताः १७
अस्नानं केचिदिच्छन्ति स्नानमित्यपि चापरे
आहारं केचिदिच्छन्ति केचिच्चानशने रताः १८
कर्म केचित्प्रशंसन्ति प्रशान्तिमपि चापरे
देशकालावुभौ केचिन्नैतदस्तीति चापरे
केचिन्मोक्षं प्रशंसन्ति केचिद्भोगान्पृथग्विधान् १९
धनानि केचिदिच्छन्ति निर्धनत्वं तथापरे
उपास्यसाधनंत्वेके नैतदस्तीति चापरे २०

अहिंसानिरताश्चान्ये केचिद्धिंसापरायणाः
पुण्येन यशसेत्येके नैतदस्तीति चापरे २१
सद्भावनिरताश्चान्ये केचित्संशयिते स्थिताः
दुःखादन्ये सुखादन्ये ध्यानमित्यपरे स्थिताः २२
यज्ञमित्यपरे धीराः प्रदानमिति चापरे
सर्वमेके प्रशंसन्ति न सर्वमिति चापरे २३
तपस्त्वन्ये प्रशंसन्ति स्वाध्यायमपरे जनाः
ज्ञानं संन्यासमित्येके स्वभावं भूतचिन्तकाः २४
एवं व्युत्थापिते धर्मे बहुधा विप्रधावति
निश्चयं नाधिगच्छामः संमूढाः सुरसत्तम २५
इदं श्रेय इदं श्रेय इत्येवं प्रस्थितो जनः
यो हि यस्मिन्रतो धर्मे स तं पूजयते सदा २६
तत्र नो विहता प्रज्ञा मनश्च बहुलीकृतम्
एतदाख्यातुमिच्छामः श्रेयः किमिति सत्तम २७
अतः परं च यद्गुह्यं तद्भवान्वक्तुमर्हति
सत्त्वक्षेत्रज्ञयोश्चैव संबन्धः केन हेतुना २८
एवमुक्तः स तैर्विप्रैर्भगवाँल्लोकभावनः
तेभ्यः शशंस धर्मात्मा याथातथ्येन बुद्धिमान् २९
इति श्रीमहाभारते आश्वमेधिकपर्वणि अष्टचत्वारिंशोऽध्यायः ४८

एकोन पञ्चाशोऽध्यायः

ब्रह्मोवाच
हन्त वः संप्रवक्ष्यामि यन्मां पृच्छथ सत्तमाः
समस्तमिह तच्छ्रुत्वा सम्यगेवावधार्यताम् १
अहिंसा सर्वभूतानामेतत्कृत्यतमं मतम्
एतत्पदमनुद्विग्नं वरिष्ठं धर्मलक्षणम् २
ज्ञानं निःश्रेय इत्याहुर्वृद्धा निश्चयदर्शिनः
तस्माज्ज्ञानेन शुद्धेन मुच्यते सर्वपातकैः ३
हिंसापराश्च ये लोके ये च नास्तिकवृत्तयः
लोभमोहसमायुक्तास्ते वै निरयगामिनः ४

आशीर्युक्तानि कर्माणि कुर्वते ये त्वतन्द्रिताः
तेऽस्मिल्लोके प्रमोदन्ते जायमानाः पुनः पुनः ५
कुर्वते ये तु कर्माणि श्रद्दधाना विपश्चितः
अनाशीर्योगसंयुक्तास्ते धीराः साधुदर्शिनः ६
अतः परं प्रवक्ष्यामि सत्त्वक्षेत्रज्ञयोर्यथा
संयोगो विप्रयोगश्च तन्निबोधत सत्तमाः ७
विषयो विषयित्वं च संबन्धोऽयमिहोच्यते
विषयी पुरुषो नित्यं सत्त्वं च विषयः स्मृतः ८
व्याख्यातं पूर्वकल्पेन मशकोदुम्बरं यथा
भुज्यमानं न जानीते नित्यं सत्त्वमचेतनम्
यस्त्वेव तु विजानीते यो भुङ्क्ते यश्च भुज्यते ९
अनित्यं द्वंद्वसंयुक्तं सत्त्वमाहुर्गुणात्मकम्
निर्द्वंद्वो निष्कलो नित्यः क्षेत्रज्ञो निर्गुणात्मकः १०
समः संज्ञागतस्त्वेवं यदा सर्वत्र दृश्यते
उपभुङ्क्ते सदा सत्त्वमापः पुष्करपर्णवत् ११
सर्वैरपि गुणैर्विद्वान्व्यतिषक्तो न लिप्यते
जलबिन्दुर्यथा लोलः पद्मिनीपत्रसंस्थितः
एवमेवाप्यसंसक्तः पुरुषः स्यान्न संशयः १२
द्रव्यमात्रमभूत्सत्त्वं पुरुषस्येति निश्चयः
यथा द्रव्यं च कर्ता च संयोगोऽप्यनयोस्तथा १३
यथा प्रदीपमादाय कश्चित्तमसि गच्छति
तथा सत्त्वप्रदीपेन गच्छन्ति परमैषिणः १४
यावद्द्रव्यगुणस्तावत्प्रदीपः संप्रकाशते
क्षीणद्रव्यगुणं ज्योतिरन्तर्धानाय गच्छति १५
व्यक्तः सत्वगुणस्त्वेवं पुरुषोंऽव्यक्त इष्यते
एतद्विप्रा विजानीत हन्त भूयो ब्रवीमि वः १६
सहस्रेणापि दुर्मेधा न वृद्धिमधिगच्छति
चतुर्थेनाप्यथांशेन बुद्धिमान्सुखमेधते १७
एवं धर्मस्य विज्ञेयं संसाधनमुपायतः
उपायज्ञो हि मेधावी सुखमत्यन्तमश्नुते १८

यथाध्वानमपाथेयः प्रपन्नो मानवः क्वचित्
क्लेशेन याति महता विनश्यत्यन्तरापि वा १९
तथा कर्मसु विज्ञेयं फलं भवति वा न वा
पुरुषस्यात्मनिःश्रेयः शुभाशुभनिदर्शनम् २०
यथा च दीर्घमध्वानं पद्भ्यामेव प्रपद्यते
अदृष्टपूर्वं सहसा तत्त्वदर्शनवर्जितः २१
तमेव च यथाध्वानं रथेनेहाशुगामिना
यायादश्वप्रयुक्तेन तथा बुद्धिमतां गतिः २२
उच्चं पर्वतमारुह्य नान्ववेक्षेत भूगतम्
रथेन रथिनं पश्येत्क्लिश्यमानमचेतनम् २३
यावद्रथपथस्तावद्रथेन स तु गच्छति
क्षीणे रथपथे प्राज्ञो रथमुत्सृज्य गच्छति २४
एवं गच्छति मेधावी तत्त्वयोगविधानवित्
समाज्ञाय महाबुद्धिरुत्तरादुत्तरोत्तरम् २५
यथा महार्णवं घोरमप्लवः संप्रगाहते
बाहुभ्यामेव संमोहाद्वधं चर्च्छत्यसंशयम् २६
नावा चापि यथा प्राज्ञो विभागज्ञस्तरित्रया
अक्लान्तः सलिलं गाहेत्क्षिप्रं संतरति ध्रुवम् २७
तीर्णो गच्छेत्परं पारं नावमुत्सृज्य निर्ममः
व्याख्यातं पूर्वकल्पेन यथा रथिपदातिनौ २८
स्नेहात्संमोहमापन्नो नावि दाशो यथा तथा
ममत्वेनाभिभूतः स तत्रैव परिवर्तते २९
नावं न शक्यमारुह्य स्थले विपरिवर्तितुम्
तथैव रथमारुह्य नाप्सु चर्या विधीयते ३०
एवं कर्म कृतं चित्रं विषयस्थं पृथक्पृथक्
यथा कर्म कृतं लोके तथा तदुपपद्यते ३१
यन्नैव गन्धिनो रस्यं न रूपस्पर्शशब्दवत्
मन्यन्ते मुनयो बुद्ध्या तत्प्रधानं प्रचक्षते ३२
तत्र प्रधानमव्यक्तमव्यक्तस्य गुणो महान्
महतः प्रधानभूतस्य गुणोऽहकार एव च ३३

अहंकारप्रधानस्य महाभूतकृतो गुणः
पृथक्त्वेन हि भूतानां विषया वै गुणाः स्मृताः ३४
बीजधर्मं यथाव्यक्तं तथैव प्रसवात्मकम्
बीजधर्मा महानात्मा प्रसवश्चेति नः श्रुतम् ३५
बीजधर्मा त्वहंकारः प्रसवश्च पुनः पुनः
बीजप्रसवधर्माणि महाभूतानि पञ्च वै ३६
बीजधर्मिण इत्याहुः प्रसवं च न कुर्वते
विशेषाः पञ्चभूतानां तेषां वित्तं विशेषणम् ३७
तत्रैकगुणमाकाशं द्विगुणो वायुरुच्यते
त्रिगुणं ज्योतिरित्याहुरापश्चापि चतुर्गुणाः ३८
पृथ्वी पञ्चगुणा ज्ञेया त्रसस्थावरसंकुला
सर्वभूतकरी देवी शुभाशुभनिदर्शना ३९
शब्दः स्पर्शस्तथा रूपं रसो गन्धश्च पञ्चमः
एते पञ्च गुणा भूमेर्विज्ञेया द्विजसत्तमाः ४०
पार्थिवश्च सदा गन्धो गन्धश्च बहुधा स्मृतः
तस्य गन्धस्य वक्ष्यामि विस्तरेण बहून्गुणान् ४१
इष्टश्चानिष्टगन्धश्च मधुरोऽम्ल कटुस्तथा
निर्हारी संहतः स्निग्धो रूक्षो विशद एव च
एवं दशविधो ज्ञेयः पार्थिवो गन्ध इत्युत ४२
शब्दः स्पर्शस्तथा रूपं रसश्चापां गुणाः स्मृताः
रसज्ञानं तु वक्ष्यामि रसस्तु बहुधा स्मृतः ४३
मधुरोऽम्ल कटुस्तिक्तः कषायो लवणस्तथा
एवं षड्विधविस्तारो रसो वारिमयः स्मृतः ४४
शब्दः स्पर्शस्तथा रूपं त्रिगुणं ज्योतिरुच्यते
ज्योतिषश्च गुणो रूपं रूपं च बहुधा स्मृतम् ४५
शुक्लं कृष्णं तथा रक्तं नीलं पीतारुणं तथा
ह्रस्वं दीर्घं तथा स्थूलं चतुरस्राणु वृत्तकम् ४६
एवं द्वादशविस्तारं तेजसो रूपमुच्यते
विज्ञेयं ब्राह्मणैर्नित्यं धर्मज्ञैः सत्यवादिभिः ४७
शब्दस्पर्शौ च विज्ञेयौ द्विगुणो वायुरुच्यते

वायोश्चापि गुणः स्पर्शः स्पर्शश्च बहुधा स्मृतः ४८
उष्णः शीतः सुखो दुःखः स्निग्धो विशद एव च
कठिनश्चिक्कणः श्लक्ष्णः पिच्छिलो दारुणो मृदुः ४९
एवं द्वादशविस्तारो वायव्यो गुण उच्यते
विधिवद्ब्रह्मणैः सिद्धैर्धर्मज्ञैस्तत्त्वदर्शिभिः ५०
तत्रैकगुणमाकाशं शब्द इत्येव च स्मृतः
तस्य शब्दस्य वक्ष्यामि विस्तरेण बहून्गुणान् ५१
षड्जर्षभौ च गान्धारो मध्यमः पञ्चमस्तथा
अतः परं तु विज्ञेयो निषादो धैवतस्तथा ५२
इष्टोऽनिष्टश्च शब्दस्तु संहतः प्रविभागवान्
एवं बहुविधो ज्ञेयः शब्द आकाशसंभवः ५३
आकाशमुत्तमं भूतमहंकारस्ततः परम्
अहंकारात्परा बुद्धिर्बुद्धेरात्मा ततः परः ५४
तस्मात्तु परमव्यक्तमव्यक्तात्पुरुषः परः
परावरज्ञो भूतानां यं प्राप्यानन्त्यमश्नुते ५५
इति श्रीमहाभारते आश्वमेधिकपर्वणि एकोनपञ्चाशोऽध्यायः४९

## पञ्चाशोऽध्यायः

ब्रह्मोवाच
भूतानामथ पञ्चानां यथैषामीश्वरं मनः
नियमे च विसर्गे च भूतात्मा मन एव च १
अधिष्ठाता मनो नित्यं भूतानां महतां तथा
बुद्धिरैश्वर्यमाचष्टे क्षेत्रज्ञः सर्व उच्यते २
इन्द्रियाणि मनो युङ्क्ते सदश्वानिव सारथिः
इन्द्रियाणि मनो बुद्धिं क्षेत्रज्ञो युञ्जते सदा ३
महाभूतसमायुक्तं बुद्धिसंयमनं रथम्
तमारुह्य स भूतात्मा समन्तात्परिधावति ४
इन्द्रियग्रामसंयुक्तो मनःसारथिरेव च
बुद्धिसंयमनो नित्यं महान्ब्रह्ममयो रथः ५
एवं यो वेत्ति विद्वान्वै सदा ब्रह्ममयं रथम्

स धीरः सर्वलोकेषु न मोहमधिगच्छति ६
अव्यक्तादि विशेषान्तं त्रसस्थावरसंकुलम्
चन्द्रसूर्यप्रभालोकं ग्रहनक्षत्रमण्डितम् ७
नदीपर्वतजालैश्च सर्वतः परिभूषितम्
विविधाभिस्तथाद्भिश्च सततं समलंकृतम् ८
आजीवः सर्वभूतानां सर्वप्राणभृतां गतिः
एतद्ब्रह्मवनं नित्यं यस्मिंश्चरति क्षेत्रवित् ९
लोकेऽस्मिन्यानि भूतानि स्थावराणि चराणि च
तान्येवाग्रे प्रलीयन्ते पश्चाद्भूतकृता गुणाः
गुणेभ्यः पञ्चभूतानि एष भूतसमुच्छ्रयः १०
देवा मनुष्या गन्धर्वाः पिशाचासुरराक्षसाः
सर्वे स्वभावतः सृष्टा न क्रियाभ्यो न कारणात् ११
एते विश्वकृतो विप्रा जायन्ते ह पुनः पुनः
तेभ्यः प्रसूतास्तेष्वेव महाभूतेषु पञ्चसु
प्रलीयन्ते यथाकालमूर्मयः सागरे यथा १२
विश्वसृग्भ्यस्तु भूतेभ्यो महाभूतानि गच्छति
भूतेभ्यश्चापि पञ्चभ्यो मुक्तो गच्छेत्प्रजापतिम् १३
प्रजापतिरिदं सर्वं मनसैवासृजत्प्रभुः
तथैव  वेदानृषयस्तपसा प्रतिपेदिरे १४
तपसश्चानुपूर्व्येण फलमूलाशिनस्तथा
त्रैलोक्यं तपसा सिद्धाः पश्यन्तीह समाहिताः १५
औषधान्यगदादीनि नानाविद्याश्च सर्वशः
तपसैव प्रसिध्यन्ति तपोमूलं हि साधनम् १६
यद्दुरापं दुराम्नायं दुराधर्षं दुरन्वयम्
तत्सर्वं तपसा साध्यं तपो हि दुरतिक्रमम् १७
सुरापो ब्रह्महा स्तेयी भ्रूणहा गुरुतल्पगः
तपसैव सुतप्तेन मुच्यन्ते किल्बिषात्ततः १८
मनुष्याः पितरो देवाः पशवो मृगपक्षिणः
यानि चान्यानि भूतानि त्रसानि स्थावराणि च १९
तपः परायणा नित्यं सिध्यन्ते तपसा सदा

तथैव तपसा देवा महाभागा दिवं गताः २०
आशीर्युक्तानि कर्माणि कुर्वते ये त्वतन्द्रिताः
अहंकारसमायुक्तास्ते सकाशे प्रजापतेः २१
ध्यानयोगेन शुद्धेन निर्ममा निरहंकृताः
प्राप्नुवन्ति महात्मानो महान्तं लोकमुत्तमम् २२
ध्यानयोगादुपागम्य प्रसन्नमतयः सदा
सुखोपचयमव्यक्तं प्रविशन्त्यात्मवत्तया २३
ध्यानयोगादुपागम्य निर्ममा निरहंकृताः
अव्यक्तं प्रविशन्तीह महान्तं लोकमुत्तमम् २४
अव्यक्तादेव संभूतःसमयज्ञो गतः पुनः
तमोरजोभ्यां निर्मुक्तः सत्त्वमास्थाय केवलम् २५
विमुक्तः सर्वपापेभ्यः सर्वं त्यजति निष्कलः
क्षेत्रज्ञ इति तं विद्याद्यस्तं वेद स वेदवित् २६
चित्तं चित्तादुपागम्य मुनिरासीत संयतः
यच्चित्तस्तन्मना भूत्वा गुह्यमेतत्सनातनम् २७
अव्यक्तादि विशेषान्तमविद्यालक्षणं स्मृतम्
निबोधत यथा हीदं गुणैर्लक्षणमित्युत २८
द्व्यक्षरस्तु भवेन्मृत्युस्त्र्यक्षरं ब्रह्म शाश्वतम्
ममेति च भवेन्मृत्युर्न ममेति च शाश्वतम् २९
कर्म केचित्प्रशंसन्ति मन्दबुद्धितरा नराः
ये तु बुद्धा महात्मानो न प्रशंसन्ति कर्म ते ३०
कर्मणाजायते जन्तुर्मूर्तिमान्षोडशात्मकः
पुरुषं सृजतेऽविद्या अग्राह्यममृताशिनम् ३१
तस्मात्कर्मसु निःस्नेहा ये केचित्पारदर्शिनः
विद्यामयोऽय पुरुषो न तु कर्ममयः स्मृतः ३२
अपूर्वममृतं नित्यं य एनमविचारिणम्
य एनं विन्दतेऽत्मानमग्राह्यममृताशिनम्
अग्राह्योऽमृतो भवति य एभिः कारणैर्ध्रुवः ३३
अपोह्य सर्वसंकल्पान्संयम्यात्मानमात्मनि
स तद्ब्रह्म शुभं वेत्ति यस्माद्भूयो न विद्यते ३४

प्रसादेनैव सत्त्वस्य प्रसादं समवाप्नुयात्
लक्षणं हि प्रसादस्य यथा स्यात्स्वप्नदर्शनम् ३५
गतिरेषा तु मुक्तानां ये ज्ञानपरिनिष्ठिताः
प्रवृत्तयश्च याः सर्वाः पश्यन्ति परिणामजाः ३६
एषा गतिरसक्तानामेष धर्मः सनातनः
एषा ज्ञानवतां प्राप्तिरेतद्वृत्तमनिन्दितम् ३७
समेन सर्वभूतेषु निस्पृहेण निराशिषा
शक्या गतिरियं गन्तुं सर्वत्र समदर्शिना ३८
एतद्वः सर्वमाख्यातं मया विप्रर्षिसत्तमाः
एवमाचरत क्षिप्रं ततः सिद्धिमवाप्स्यथ ३९
गुरुरुवाच
इत्युक्तास्ते तु मुनयो ब्रह्मणा गुरुणा तथा
कृतवन्तो महात्मानस्ततो लोकानवाप्नुवन् ४०
त्वमप्येतन्महाभाग यथोक्तं ब्रह्मणो वचः
सम्यगाचर शुद्धात्मंस्ततः सिद्धिमवाप्स्यसि ४१
वासुदेव उवाच
इत्युक्तः स तदा शिष्यो गुरुणा धर्ममुत्तमम्
चकार सर्वं कौन्तेय ततो मोक्षमवाप्तवान् ४२
कृतकृत्यश्च स तदा शिष्यः कुरुकुलोद्वह
तत्पदं समनुप्राप्तो यत्र गत्वा न शोचति ४३
अर्जुन उवाच
को न्वसौ ब्राह्मणः कृष्ण कश्च शिष्यो जनार्दन
श्रोतव्यं चेन्मयैतद्वै तत्त्वमाचक्ष्व मे विभो ४४
वासुदेव उवाच
अहं गुरुर्महाबाहो मनः शिष्यं च विद्धि मे
त्वत्प्रीत्या गुह्यमेतच्च कथितं ते धनंजय ४५
मयि चेदस्ति ते प्रीतिर्नित्यं कुरुकुलोद्वह
अध्यात्ममेतच्छ्रुत्वा त्वं सम्यगाचर सुव्रत ४६
ततस्त्वं सम्यगाचीर्णे धर्मेऽस्मिन्कुरुनन्दन
सर्वपापविशुद्धात्मा मोक्षं प्राप्स्यसि केवलम् ४७

पूर्वमप्येतदेवोक्तं युद्धकाल उपस्थिते
मया तव महाबाहो तस्मादत्र मनः कुरु ४८
मया तु भरतश्रेष्ठ चिरदृष्टः पिता विभो
तमहं द्रष्टुमिच्छामि संमते तव फल्गुन ४९
वैशम्पायन उवाच
इत्युक्तवचनं कृष्णं प्रत्युवाच धनंजयः
गच्छावो नगरं कृष्ण गजसाह्वयमद्य वै ५०
समेत्य तत्र राजानं धर्मात्मानं युधिष्ठिरम्
समनुज्ञाप्य दुर्धर्ष स्वां पुरीं यातुमर्हसि ५१
इति श्रीमहाभारते आश्वमेधिकपर्वणि पञ्चाशोऽध्यायः ५०

## एक पञ्चाशत्तमोऽध्यायः

वैशम्पायन उवाच
ततोऽभ्यचोदयत्कृष्णो युज्यतामिति दारुकम्
मुहूर्तादिव चाचष्ट युक्तमित्येव दारुकः १
तथैव चानुयात्राणि चोदयामास पाण्डवः
सज्जयध्वं प्रयास्यामो नगरं गजसाह्वयम् २
इत्युक्ताः सैनिकास्ते तु सज्जीभूता विशां पते
आचख्युः सज्जमित्येव पार्थायामिततेजसे ३
ततस्तौ रथमास्थाय प्रयातौ कृष्णपाण्डवौ
विकुर्वाणौ कथाश्चित्राः प्रीयमाणौ विशां पते ४
रथस्थं तु महातेजा वासुदेव धनंजयः
पुनरेवाब्रवीद्वाक्यमिदं भरतसत्तम ५
त्वत्प्रसादाज्जयः प्राप्तो राज्ञा वृष्णिकुलोद्वह
निहताः शत्रवश्चापि प्राप्तं राज्यमकण्टकम् ६
नाथवन्तश्च भवता पाण्डवा मधुसूदन
भवन्तं प्लवमासाद्य तीर्णाः स्म कुरुसागरम् ७
विश्वकर्मन्नमस्तेऽस्तु विश्वात्मन्विश्वसंभव
यथाहं त्वा विजानामि यथा चाहं भवन्मनाः ८
त्वत्तेजःसंभवो नित्यं हुताशो मधुसूदन

रतिः क्रीडामयी तुभ्यं माया ते रोदसी विभो ९
त्वयि सर्वमिदं विश्वं यदिदं स्थाणुजङ्गमम्
त्वं हि सर्वं विकुरुषे भूतग्रामं सनातनम् १०
पृथिवीं चान्तरिक्षं च तथा स्थावरजङ्गमम्
हसितं तेऽमला ज्योत्स्ना ऋतवश्चेन्द्रियान्वयाः ११
प्राणो वायुः सततगः क्रोधो मृत्युः सनातनः
प्रसादे चापि पद्मा श्रीर्नित्यं त्वयि महामते १२
रतिस्तुष्टिर्धृतिः क्षान्तिस्त्वयि चेदं चराचरम्
त्वमेवेह युगान्तेषु निधनं प्रोच्यसेऽनघ १३
सुदीर्घेणापि कालेन न ते शक्या गुणा मया
आत्मा च परमो वक्तुं नमस्ते नलिनेक्षण १४
विदितो मेऽसि दुर्धर्ष नारदाद्देवलात्तथा
कृष्णद्वैपायनाच्चैव तथा कुरुपितामहात् १५
त्वयि सर्वं समासक्तं त्वमेवैको जनेश्वरः
यच्चानुग्रहसंयुक्तमेतदुक्तं त्वयानघ १६
एतत्सर्वमहं सम्यगाचरिष्ये जनार्दन
इदं चाद्भुतमत्यर्थं कृतमस्मत्प्रियेप्सया १७
यत्पापो निहतः संख्ये कौरव्यो धृतराष्ट्रजः
त्वया दग्धं हि तत्सैन्यं मया विजितमाहवे १८
भवता तत्कृतं कर्म येनावाप्तो जयो मया
दुर्योधनस्य संग्रामे तव बुद्धिपराक्रमैः १९
कर्णस्य च वधोपायो यथावत्संप्रदर्शितः
सैन्धवस्य च पापस्य भूरिश्रवस एव च २०
अहं च प्रीयमाणेन त्वया देवकिनन्दन
यदुक्तस्तत्करिष्यामि न हि मेऽत्र विचारणा २१
राजानं च समासाद्य धर्मात्मानं युधिष्ठिरम्
चोदयिष्यामि धर्मज्ञ गमनार्थं तवानघ २२
रुचितं हि ममैतत्ते द्वारकागमनं प्रभो
अचिराच्चैव दृष्ट्वा त्वं मातुलं मधुसूदन
बलदेवं च दुर्धर्षं तथान्यान्वृष्णिपुंगवान् २३

एवं संभाषमाणौ तौ प्राप्तौ वारणसाह्वयम्
तथा विविशतुश्चोभौ संप्रहृष्टनराकुलम् २४
तौ गत्वा धृतराष्ट्रस्य गृहं शक्रगृहोपमम्
ददृशाते महाराज धृतराष्ट्रं जनेश्वरम् २५
विदुरं च महाबुद्धिं राजानं च युधिष्ठिरम्
भीमसेनं च दुर्धर्षं माद्रीपुत्रौ च पाण्डवौ
धृतराष्ट्रमुपासीनं युयुत्सुं चापराजितम् २६
गान्धारीं च महाप्राज्ञां पृथां कृष्णां च भामिनीम्
सुभद्राद्याश्च ताः सर्वा भरतानां स्त्रियस्तथा
ददृशाते स्थिताः सर्वा गान्धारीं परिवार्य वै २७
ततः समेत्य राजानं धृतराष्ट्रमरिंदमौ
निवेद्य नामधेये स्वे तस्य पादावगृह्णताम् २८
गान्धार्याश्च पृथायाश्च धर्मराज्ञस्तथैव च
भीमस्य च महात्मानौ तथा पादावगृह्णताम् २९
क्षत्तारं चापि संपूज्य पृष्ट्वा कुशलमव्ययम्
तैः सार्धं नृपतिं वृद्धं ततस्तं पर्युपासताम् ३०
ततो निशि महाराज धृतराष्ट्रः कुरूद्वहान्
जनार्दनं च मेधावी व्यसर्जयत वै गृहान् ३१
तेऽनुज्ञाता नृपतिना ययुः स्वं स्वं निवेशनम्
धनंजयगृहानेव ययौ कृष्णस्तु वीर्यवान् ३२
तत्रार्चितो यथान्यायं सर्वकामैरुपस्थितः
कृष्णः सुष्वाप मेधावी धनंजयसहायवान् ३३
प्रभातायां तु शर्वर्यां कृतपूर्वाह्णिकक्रियौ
धर्मराजस्य भवनं जग्मतुः परमार्चितौ
यत्रास्ते स सहामात्यो धर्मराजो महामनाः ३४
ततस्तौ तत्प्रविश्याथ ददृशाते महाबलौ
धर्मराजानमासीनं देवराजमिवाश्विनौ ३५
तौ समासाद्य राजानं वार्ष्णेयकुरुपुंगवौ
निषीदतुरनुज्ञातौ प्रीयमाणेन तेन वै ३६
ततः स राजा मेधावी विवक्षू प्रेक्ष्य तावुभौ

प्रोवाच वदतां श्रेष्ठो वचनं राजसत्तमः ३७
विवक्षू हि युवां मन्ये वीरौ यदुकुरूद्वहौ
ब्रूत कर्तास्मि सर्वं वां न चिरान्मा विचार्यताम् ३८
इत्युक्ते फल्गुनस्तत्र धर्मराजानमब्रवीत्
विनीतवदुपागम्य वाक्यं वाक्यविशारदः ३९
अयं चिरोषितो राजन्वासुदेवः प्रतापवान्
भवन्तं समनुज्ञाप्य पितरं द्रष्टुमिच्छति ४०
स गच्छेदभ्यनुज्ञातो भवता यदि मन्यसे
आनर्तनगरीं वीरस्तदनुज्ञातुमर्हसि ४१
युधिष्ठिर उवाच
पुण्डरीकाक्ष भद्रं ते गच्छ त्वं मधुसूदन
पुरीं द्वारवतीमद्य द्रष्टुं शूरसुतं प्रभुम् ४२
रोचते मे महाबाहो गमनं तव केशव
मातुलश्चिरदृष्टो मे त्वया देवी च देवकी ४३
मातुलं वसुदेवं त्वं बलदेवं च माधव
पूजयेथा महाप्राज्ञ मद्वाक्येन यथार्हतः ४४
स्मरेथाश्चापि मां नित्यं भीमं च बलिनां वरम्
फल्गुनं नकुलं चैव सहदेवं च माधव ४५
आनर्तानवलोक्य त्वं पितरं च महाभुज
वृष्णींश्च पुनरागच्छेर्हयमेधे ममानघ ४६
स गच्छ रत्नान्यादाय विविधानि वसूनि च
यच्चाप्यन्यन्मनोज्ञं ते तदप्यादत्स्व सात्वत ४७
इयं हि वसुधा सर्वा प्रसादात्तव माधव
अस्मानुपगता वीर निहताश्चापि शत्रवः ४८
एवं ब्रुवति कौरव्ये धर्मराजे युधिष्ठिरे
वासुदेवो वरः पुंसामिदं वचनमब्रवीत् ४९
तवैव रत्नानि धनं च केवलं धरा च कृत्स्ना तु महाभुजाद्य वै
यदस्ति चान्यद्द्रविणं गृहेषु मे त्वमेव तस्येश्वर नित्यमीश्वरः ५०
तथेत्यथोक्तः प्रतिपूजितस्तदा गदाग्रजो धर्मसुतेन वीर्यवान्
पितृष्वसामभ्यवदद्यथाविधि संपूजितश्चाप्यगमत्प्रदक्षिणम् ५१

तया स सम्यक्प्रतिनन्दितस्तदा तथैव सर्वैर्विदुरादिभिस्ततः
विनिर्ययौ नागपुराद्गदाग्रजो रथेन दिव्येन चतुर्युजा हरिः ५२
रथं सुभद्रामधिरोप्य भामिनीं युधिष्ठिरस्यानुमते जनार्दनः
पितृष्वसायाश्च तथा महाभुजो विनिर्ययौ पौरजनाभिसंवृतः ५३
तमन्वगाद्वानरवर्यकेतनः ससात्यकिर्माद्रवतीसुतावपि
अगाधबुद्धिर्विदुरश्च माधवं स्वयं च भीमो गजराजविक्रमः ५४
निवर्तयित्वा कुरुराष्ट्रवर्धनांस्ततः स सर्वान्विदुरं च वीर्यवान्
जनार्दनो दारुकमाह सत्वरः प्रचोदयाश्वानिति सात्यकिस्तदा ५५
ततो ययौ शत्रुगणप्रमर्दनः शिनिप्रवीरानुगतो जनार्दनः
यथा निहत्यारिगणाञ्शतक्रतुर्दिवं तथानर्तपुरीं प्रतापवान् ५६
इति श्रीमहाभारते आश्वमेधिकपर्वणि एकपञ्चाशत्तमोऽध्यायः ५१

## द्विपञ्चाशोऽध्यायः

वैशम्पायन उवाच
तथा प्रयान्तं वार्ष्णेयं द्वारकां भरतर्षभाः
परिष्वज्य न्यवर्तन्त सानुयात्राः परंतपाः १
पुनः पुनश्च वार्ष्णेयं पर्यष्वजत फल्गुनः
आ चक्षुर्विषयाच्चैनं ददर्श च पुनः पुनः २
कृच्छ्रेणैव च तां पार्थो गोविन्दे विनिवेशिताम्
संजहार तदा दृष्टिं कृष्णश्चाप्यपराजितः ३
तस्य प्रयाणे यान्यासन्निमित्तानि महात्मनः
बहून्यद्भुतरूपाणि तानि मे गदतः शृणु ४
वायुर्वेगेन महता रथस्य पुरतो ववौ
कुर्वन्निःशर्करं मार्गं विरजस्कमकण्टकम् ५
ववर्ष वासवश्चापि तोयं शुचि सुगन्धि च
दिव्यानि चैव पुष्पाणि पुरतः शार्ङ्गधन्वनः ६
स प्रयातो महाबाहुः समेषु मरुधन्वसु
ददर्शाथ मुनिश्रेष्ठमुत्तङ्कममितौजसम् ७
स तं संपूज्य तेजस्वी मुनिं पृथुललोचनः
पूजितस्तेन च तदा पर्यपृच्छदनामयम् ८

स पृष्टः कुशलं तेन संपूज्य मधुसूदनम्
उत्तङ्को ब्राह्मणश्रेष्ठस्ततः पप्रच्छ माधवम् ९
कच्चिच्छौरे त्वया गत्वा कुरुपाण्डवसद्म तत्
कृतं सौभ्रात्रमचलं तन्मे व्याख्यातुमर्हसि १०
अभिसंधाय तान्वीरानुपावृत्तोऽसि केशव
संबन्धिनः सुदयितान्सततं वृष्णिपुंगव ११
कच्चित्पाण्डुसुताः पञ्च धृतराष्ट्रस्य चात्मजाः
लोकेषु विहरिष्यन्ति त्वया सह परंतप १२
स्वराष्ट्रेषु च राजानः कच्चित्प्राप्स्यन्ति वै सुखम्
कौरवेषु प्रशान्तेषु त्वया नाथेन माधव १३
या मे संभावना तात त्वयि नित्यमवर्तत
अपि सा सफला कृष्ण कृता ते भरतान्प्रति १४
वासुदेव उवाच
कृतो यत्नो मया ब्रह्मन्सौभ्रात्रे कौरवान्प्रति
न चाशक्यन्त संधातुं तेऽधर्मरुचयो मया १५
ततस्ते निधनं प्राप्ताः सर्वे ससुतबान्धवाः
न दिष्टमभ्यतिक्रान्तुं शक्यं बुद्ध्या बलेन वा
महर्षे विदितं नूनं सर्वमेतत्तवानघ १६
तेऽत्यक्रामन्मतिं मह्यं भीष्मस्य विदुरस्य च
ततो यमक्षयं जग्मुः समासाद्येतरेतरम् १७
पञ्च वै पाण्डवाः शिष्टा हतमित्रा हतात्मजाः
धार्तराष्ट्राश्च निहताः सर्वे ससुतबान्धवाः १८
इत्युक्तवचने कृष्णे भृशं क्रोधसमन्वितः
उत्तङ्कः प्रत्युवाचैनं रोषादुत्फाल्य लोचने १९
यस्माच्छक्तेन ते कृष्ण न त्राताः कुरुपाण्डवाः
संबन्धिनः प्रियास्तस्माच्छप्स्येऽह त्वामसंशयम् २०
न च ते प्रसभं यस्मात्ते निगृह्य निवर्तिताः
तस्मान्मन्युपरीतस्त्वां शप्स्यामि मधुसूदन २१
त्वया हि शक्तेन सता मिथ्याचारेण माधव
उपचीर्णाः कुरुश्रेष्ठा यस्त्वेतान्समुपेक्षथाः २२

वासुदेव उवाच
शृणु मे विस्तरेणेदं यद्वक्ष्ये भृगुनन्दन
गृहाणानुनयं चापि तपस्वी ह्यसि भार्गव २३
श्रुत्वा त्वमेतदध्यात्मं मुञ्चेथाः शापमद्य वै
न च मां तपसाल्पेन शक्तोऽभिभवितुं पुमान् २४
न च ते तपसो नाशमिच्छामि जपतां वर
तपस्ते सुमहद्दीप्तं गुरवश्चापि तोषिताः २५
कौमारं ब्रह्मचर्यं ते जानामि द्विजसत्तम
दुःखार्जितस्य तपसस्तस्मान्नेच्छामि ते व्ययम् २६
इति श्रीमहाभारते आश्वमेधिकपर्वणि द्विपञ्चाशोऽध्यायः ५२

त्रिपञ्चाशोऽध्यायः

उत्तङ्क उवाच
ब्रूहि केशव तत्त्वेन त्वमध्यात्ममनिन्दितम्
श्रुत्वा श्रेयोऽभिधास्यामि शापं वा ते जनार्दन १
वासुदेव उवाच
तमो रजश्च सत्त्वं च विद्धि भावान्मदाश्रयान्
तथा रुद्रान्वसूंश्चापि विद्धि मत्प्रभवान्द्विज २
मयि सर्वाणि भूतानि सर्वभूतेषु चाप्यहम्
स्थित इत्यभिजानीहि मा तेऽभूदत्र संशयः ३
तथा दैत्यगणान्सर्वान्यक्षराक्षसपन्नगान्
गन्धर्वाप्सरसश्चैव विद्धि मत्प्रभवान्द्विज ४
सदसच्चैव यत्प्राहुरव्यक्तं व्यक्तमेव च
अक्षरं च क्षरं चैव सर्वमेतन्मदात्मकम् ५
ये चाश्रमेषु वै धर्माश्चतुर्षु विहिता मुने
दैवानि चैव कर्माणि विद्धि सर्वं मदात्मकम् ६
असच्च सदसच्चैव यद्विश्वं सदसतः परम्
ततः परं नास्ति चैव देवदेवात्सनातनात् ७
ओंकारप्रभवान्वेदान्विद्धि मां त्वं भृगूद्वह
यूपं सोमं तथैवेह त्रिदशाप्यायनं मखे ८

होतारमपि हव्यं च विद्धि मां भृगुनन्दन
अध्वर्युः कल्पकश्चापि हविः परमसंस्कृतम् ९
उद्गाता चापि मां स्तौति गीतघोषैर्महाध्वरे
प्रायश्चित्तेषु मां ब्रह्मञ्शान्तिमङ्गलवाचकाः
स्तुवन्ति विश्वकर्माणं सततं द्विजसत्तमाः १०
विद्धि मह्यं सुतं धर्ममग्रजं द्विजसत्तम
मानसं दयितं विप्र सर्वभूतदयात्मकम् ११
तत्राहं वर्तमानैश्च निवृत्तैश्चैव मानवैः
बह्वीः संसरमाणो वै योनीर्हि द्विजसत्तम १२
धर्म संरक्षणार्थाय धर्म संस्थापनाय च
तैस्तैर्वेषैश्च रूपैश्च त्रिषु लोकेषु भागर्व १३
अहं विष्णुरहं ब्रह्मा शक्रोऽथ प्रभवाप्ययः
भूतग्रामस्य सर्वस्य स्रष्टा संहार एव च १४
अधर्मे वर्तमानानां सर्वेषामहमप्युत
धर्मस्य सेतुं बध्नामि चलिते चलिते युगे
तास्ता  योनीः प्रविश्याहं प्रजानां हितकाम्यया १५
यदा त्वहं देवयोनौ वर्तामि भृगुनन्दन
तदाहं देववत्सर्वमाचरामि न संशयः १६
यदा गन्धर्वयोनौ तु वर्तामि भृगुनन्दन
तदा गन्धर्ववच्चेष्टाः सर्वाश्चेष्टामि भार्गव १७
नागयोनौ यदा चैव तदा वर्तामि नागवत्
यक्षराक्षसयोनीश्च यथावद्विचराम्यहम् १८
मानुष्ये वर्तमाने तु कृपणं याचिता मया
न च ते जातसंमोहा वचो गृह्णन्ति मे हितम् १९
भयं च महदुद्दिश्य त्रासिताः कुरवो मया
क्रुद्धेव भूत्वा च पुनर्यथावदनुदर्शिताः २०
तेऽधर्मेणेह संयुक्ताः परीताः कालधर्मणा
धर्मेण निहता युद्धे गताः स्वर्गं न संशयः २१
लोकेषु पाण्डवाश्चैव गताः ख्यातिं द्विजोत्तम
एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि २२

इति श्रीमहाभारते आश्वमेधिकपर्वणि त्रिपञ्चाशोऽध्यायः ५३

## चतुःपञ्चाशोऽध्यायः

उत्तङ्क उवाच
अभिजानामि जगतः कर्तारं त्वां जनार्दन
नूनं भवत्प्रसादोऽयमिति मे नास्ति संशयः १
चित्तं च सुप्रसन्नं मे त्वद्भावगतमच्युत
विनिवृत्तश्च मे कोप इति विद्धि परंतप २
यदि त्वनुग्रहं कंचित्त्वतोऽहोऽह जनार्दन
द्रष्टुमिच्छामि ते रूपमैश्वरं तन्निदर्शय ३
वैशम्पायन उवाच
ततः स तस्मै प्रीतात्मा दर्शयामास तद्वपुः
शाश्वतं वैष्णवं धीमान्ददृशे यद्धनंजयः ४
स ददर्श महात्मानं विश्वरूपं महाभुजम्
विस्मयं च ययौ विप्रस्तद्दृष्ट्वा रूपमैश्वरम् ५
उत्तङ्क उवाच
विश्वकर्मन्नमस्तेऽस्तु यस्य ते रूपमीदृशम्
पद्भ्यां ते पृथिवी व्याप्ता शिरसा चावृतं नभः ६
द्यावापृथिव्योर्यन्मध्यं जठरेण तदावृतम्
भुजाभ्यामावृताश्चाशास्त्वमिदं सर्वमच्युत ७
संहरस्व पुनर्देव रूपमक्षय्यमुत्तमम्
पुनस्त्वां स्वेन रूपेण द्रष्टुमिच्छामि शाश्वतम् ८
वैशम्पायन उवाच
तमुवाच प्रसन्नात्मा गोविन्दो जनमेजय
वरं वृणीष्वेति तदा तमुत्तङ्कोऽब्रवीदिदम् ९
पर्याप्त एष एवाद्य वरस्त्वत्तो महाद्युते
यत्ते रूपमिदं कृष्ण पश्यामि प्रभवाप्ययम् १०
तमब्रवीत्पुनः कृष्णो मा त्वमत्र विचारय
अवश्यमेतत्कर्तव्यममोघं दर्शनं मम ११
उत्तङ्क उवाच

अवश्यकरणीयं वै यद्येतन्मन्यसे विभो
तोयमिच्छामि यत्रेष्टं मरुष्वेतद्धि दुर्लभम् १२
वैशम्पायन उवाच
ततः संहृत्य तत्तेजः प्रोवाचोत्तङ्कमीश्वरः
एष्टव्ये सति चिन्त्योऽहमित्युक्त्वा द्वारकां ययौ १३
ततः कदाचिद् भगवानुत्तङ्कस्तोयकाङ्क्षया
तृषितः परिचक्राम मरौ सस्मार चाच्युतम् १४
ततो दिग्वाससं धीमान्मातङ्गं मलपङ्किनम्
अपश्यत मरौ तस्मिञ्श्वयूथपरिवारितम् १५
भीषणं बद्धनिस्त्रिंशं बाणकार्मुकधारिणम्
तस्याधः स्रोतसोऽपश्यद्वारि भूरि द्विजोत्तमः १६
स्मरन्नेव च तं प्राहमातङ्गः प्रहसन्निव
एह्युत्तङ्क प्रतीच्छस्व मत्तो वारि भृगूद्वह
कृपा हि मे सुमहती त्वां दृष्ट्वा तृट्समाहतम् १७
इत्युक्तस्तेन स मुनिस्तत्तोयं नाभ्यनन्दत
चिक्षेप च स तं धीमान्वाग्भिरुग्राभिरच्युतम् १८
पुनः पुनश्च मातङ्गः पिबस्वेति तमब्रवीत्
न चापिबत्स सक्रोधः क्षुभितेनान्तरात्मना १९
स तथा निश्चयात्तेन प्रत्याख्यातो महात्मना
श्वभिः सह महाराज तत्रैवान्तरधीयत २०
उत्तङ्कस्तं तथा दृष्ट्वा ततो व्रीडितमानसः
मेने प्रलब्धमात्मानं कृष्णेनामित्रघातिना २१
अथ तेनैव मार्गेण शङ्खचक्रगदाधरः
आजगाम महाबाहुरुत्तङ्कश्चैनमब्रवीत् २२
न युक्तं तादृशं दातुं त्वया पुरुषसत्तम
सलिलं विप्रमुख्येभ्यो मातङ्गस्रोतसा विभो २३
इत्युक्तवचनं धीमान्महाबुद्धिर्जनार्दनः
उत्तङ्कं श्लक्ष्णया वाचा सान्त्वयन्निदमब्रवीत् २४
यादृशेनेह रूपेण योग्यं दातुं वृतेन वै
तादृशं खलु मे दत्तं त्वं तु तन्नावबुध्यसे २५

मया त्वदर्थमुक्तो हि वज्रपाणिः पुरंदरः
उत्तङ्कायामृतं देहि तोयरूपमिति प्रभुः २६
स मामुवाच देवेन्द्र न मर्त्योऽमर्त्यतां व्रजेत्
अन्यमस्मै वरं देहीत्यसकृद्भृगुनन्दन २७
अमृतं देयमित्येव मयोक्तः स शचीपतिः
स मां प्रसाद्य देवेन्द्रः पुनरेवेदमब्रवीत् २८
यदि देयमवश्यं वै मातङ्गोऽह महाद्युते
भूत्वामृतं प्रदास्यामि भार्गवाय महात्मने २९
यद्येवं प्रतिगृह्णाति भार्गवोऽमृतमद्य वै
प्रदातुमेष गच्छामि भार्गवायामृतं प्रभो
प्रत्याख्यातस्त्वहं तेन न दद्यामिति भार्गव ३०
स तथा समयं कृत्वा तेन रूपेण वासवः
उपस्थितस्त्वया चापिप्रत्याख्यातोऽमृतं ददत्
चण्डालरूपी भगवान्सुमहांस्ते व्यतिक्रमः ३१
यत्तु शक्यं मया कर्तुं भूय एव तवेप्सितम्
तोयेप्सां तव दुर्धर्ष करिष्ये सफलामहम् ३२
येष्वहःसु तव ब्रह्मन्सलिलेच्छा भविष्यति
तदा मरौ भविष्यन्ति जलपूर्णाः पयोधराः ३३
रसवच्च प्रदास्यन्ति ते तोयं भृगुनन्दन
उत्तङ्कमेघा इत्युक्ताः ख्यातिं यास्यन्ति चापि ते ३४
इत्युक्तः प्रीतिमान्विप्रः कृष्णेन स बभूव ह
अद्याप्युत्तङ्कमेघाश्च मरौ वर्षन्ति भारत ३५
इति श्रीमहाभारते आश्वमेधिकपर्वणि चतुःपञ्चाशोऽध्यायः ५४

## पञ्चपञ्चाशोऽध्यायः

जनमेजय उवाच
उत्तङ्कः केन तपसा संयुक्तः सुमहातपाः
यः शापं दातुकामोऽभूद्विष्णवे प्रभविष्णवे १
वैशम्पायन उवाच
उत्तङ्को महता युक्तस्तपसा जनमेजय

गुरुभक्तः स तेजस्वी नान्यं कंचिदपूजयत् २
सर्वेषामृषिपुत्राणामेष चासीन्मनोरथः
औत्तङ्कीं गुरुवृत्तिं वै प्राप्नुयामिति भारत ३
गौतमस्य तु शिष्याणां बहूनां जनमेजय
उत्तङ्केऽभ्यधिका प्रीतिः स्नेहश्चैवाभवत्तदा ४
स तस्य दमशौचाभ्यां विक्रान्तेन च कर्मणा
सम्यक्चैवोपचारेण गौतमः प्रीतिमानभूत् ५
अथ शिष्यसहस्राणि समनुज्ञाय गौतमः
उत्तङ्कं परया प्रीत्या नाभ्यनुज्ञातुमैच्छत ६
तं क्रमेण जरा तात प्रतिपेदे महामुनिम्
न चान्वबुध्यत तदा स मुनिर्गुरुवत्सलः ७
ततः कदाचिद्राजेन्द्र काष्ठान्यानयितुं ययौ
उत्तङ्कः काष्ठभारं च महान्तं समुपानयत् ८
स तु भाराभिभूतात्मा काष्ठभारमरिंदम
निष्पिपेष क्षितौ राजन्परिश्रान्तो बुभुक्षितः ९
तस्य काष्ठे विलग्नाभूज्जटा रूप्यसमप्रभा
ततः काष्ठैः सह तदा पपात धरणीतले १०
ततः स भारनिष्पिष्टः क्षुधाविष्टश्च भार्गवः
दृष्ट्वा तां वयसोऽवस्थां रुरोदार्तस्वरं तदा ११
ततो गुरुसुता तस्य पद्मपत्रनिभेक्षणा
जग्राहाश्रूणि सुश्रोणी करेण पृथुलोचना
पितुर्नियोगाद्धर्मज्ञा शिरसावनता तदा १२
तस्या निपेततुर्दग्धौ करौ तैरश्रुबिन्दुभिः
न हि तानश्रुपातान्वै शक्ता धारयितुं मही १३
गौतमस्त्वब्रवीद्विप्रमुत्तङ्कं प्रीतमानसः
कस्मात्तात तवाद्येह शोकोत्तरमिदं मनः
स स्वैरं ब्रूहि विप्रर्षे श्रोतुमिच्छामि ते वचः १४
उत्तङ्क उवाच
भवद्गतेन मनसा भवत्प्रियचिकीर्षया
भवद्भक्तिगतेनेह भवद्भावानुगेन च १५

जरेयं नावबुद्धा मे नाभिज्ञातं सुखं च मे
शतवर्षोषितं हि त्वं न मामभ्यनुजानथाः १६
भवता ह्यभ्यनुज्ञाताः शिष्याः प्रत्यवरा मया
उपपन्ना द्विजश्रेष्ठ शतशोऽथ सहस्रशः१७
गौतम उवाच
त्वत्प्रीतियुक्तेन मया गुरुशुश्रूषया तव
व्यतिक्रामन्महाकालो नावबुद्धो द्विजर्षभ१८
किं त्वद्य यदि ते श्रद्धा गमनं प्रति भार्गव
अनुज्ञां गृह्य मत्तस्त्वं गृहान्गच्छस्व मा चिरम् १९
उत्तङ्क उवाच
गुर्वर्थं कं प्रयच्छामि ब्रूहि त्वं द्विजसत्तम
तमुपाकृत्य गच्छेयमनुज्ञातस्त्वया विभो २०
गौतम उवाच
दक्षिणा परितोषो वै गुरूणां सदिभरुच्यते
तव ह्याचरतो ब्रह्मंस्तुष्टोऽह वै न संशयः २१
इत्थं च परितुष्टं मां विजानीहि भृगूद्वह
युवा षोडशवर्षो हि यदद्य भविता भवान् २२
ददामि पत्नीं कन्यां च स्वां ते दुहितरं द्विज
एतामृते हि नान्या वै त्वत्तेजोऽहति सेवितुम् २३
ततस्तां प्रतिजग्राह युवाभूत्वा यशस्विनीम्
गुरुणा चाभ्यनुज्ञातोगुरुपत्नीमथाब्रवीत् २४
किं भवत्यै प्रयच्छामि गुर्वर्थं विनियुङ्क्ष्व माम्
प्रियं हि तव काङ्क्षामि प्राणैरपि धनैरपि २५
यद्दुर्लभं हि लोकेऽस्मिन्रत्नमत्यद्भुतं भवेत्
तदानयेयं तपसा न हि मेऽत्रास्ति संशयः २६
अहल्योवाच
परितुष्टास्मि ते पुत्र नित्यं भगवता सह
पर्याप्तये तद्भद्रं ते गच्छ तात यथेच्छकम् २७
वैशम्पायन उवाच
उत्तङ्कस्तु महाराज पुनरेवाब्रवीद्वचः

आज्ञापयस्व मां मातः कर्तव्यं हिप्रियं तव २८
अहल्योवाच
सौदासपत्न्या विदिते दिव्ये वै मणिकुण्डले
ते समानय भद्रं ते गुर्वर्थः सुकृतो भवेत् २९
स तथेति प्रतिश्रुत्य जगाम जनमेजय
गुरुपत्नीप्रियार्थं वै ते समानयितुं तदा ३०
स जगाम ततः शीघ्रमुत्तङ्को ब्राह्मणर्षभः
सौदासं पुरुषादं वै भिक्षितुं मणिकुण्डले ३१
गौतमस्त्वब्रवीत्पत्नीमुत्तङ्को नाद्य दृश्यते
इति पृष्टा तमाचष्ट कुण्डलार्थं गतं तु वै ३२
ततः प्रोवाच पत्नीं स न ते सम्यगिदं कृतम्
शप्तः स पार्थिवो नूनं ब्राह्मणं तं वधिष्यति ३३
अहल्योवाच
अजानन्त्या नियुक्तः स भगवन्ब्राह्मणोऽद्य मे
भवत्प्रसादान्न भयं किंचित्तस्य भविष्यति ३४
इत्युक्तः प्राह तां पत्नीमेवमस्त्विति गौतमः
उत्तङ्कोऽपि वने शून्ये राजानं तं ददर्श ह ३५
इति श्रीमहाभारते आश्वमेधिकपर्वणि पञ्चपञ्चाशोऽध्यायः ५५

## षट्पञ्चाशोऽध्यायः

वैशम्पायन उवाच
स तं दृष्ट्वा तथाभूतं राजानं घोरदर्शनम्
दीर्घश्मश्रुधरं नृणां शोणितेन समुक्षितम् १
चकार न व्यथां विप्रो राजा त्वेनमथाब्रवीत्
प्रत्युत्थाय महातेजा भयकर्ता यमोपमः २
दिष्ट्या त्वमसि कल्याण षष्ठे काले ममान्तिकम्
भक्ष्यं मृगयमाणस्य संप्राप्तो द्विजसत्तम ३
उत्तङ्क उवाच
राजन्गुर्वर्थिनं विद्धि चरन्तं मामिहागतम्
न च गुर्वर्थमुद्युक्तं हिंस्यमाहुर्मनीषिणः ४

राजोवाच
षष्ठे काले ममाहारो विहितो द्विजसत्तम
न च शक्यः समुत्स्रष्टुं क्षुधितेन मयाद्य वै ५
उत्तङ्क उवाच
एवमस्तु महाराज समयः क्रियतां तु मे
गुर्वर्थमभिनिर्वर्त्य पुनरेष्यामि ते वशम् ६
संश्रुतश्च मया योऽथो गुरवे राजसत्तम
त्वदधीनः स राजेन्द्र तं त्वा भिक्षे नरेश्वर ७
ददासि विप्रमुख्येभ्यस्त्वं हि रत्नानि सर्वशः
दाता त्वं च नरव्याघ्र पात्रभूतः क्षिताविह
पात्रं प्रतिग्रहे चापि विद्धि मां नृपसत्तम ८
उपाकृत्य गुरोरर्थं त्वदायत्तमरिंदम
समयेनेह राजेन्द्र पुनरेष्यामि ते वशम् ९
सत्यं ते प्रतिजानामि नात्र मिथ्यास्ति किंचन
अनृतं नोक्तपूर्वं मे स्वैरेष्वपि कुतोऽन्यथा १०
सौदास उवाच
यदि मत्तस्त्वदायत्तो गुर्वर्थः कृत एव सः
यदि चास्मि प्रतिग्राह्यः सांप्रतं तद्ब्रवीहि मे ११
उत्तङ्क उवाच
प्रतिग्राह्यो मतो मे त्वं सदैव पुरुषर्षभ
सोऽह त्वामनुसंप्राप्तो भिक्षितुं मणिकुण्डले १२
सौदास उवाच
पत्न्यास्ते मम विप्रर्षे रुचिरे मणिकुण्डले
वरयार्थं त्वमन्यं वै तं ते दास्यामि सुव्रत १३
उत्तङ्क उवाच
अलं ते व्यपदेशेन प्रमाणं यदि ते वयम्
प्रयच्छ कुण्डले मे त्वं सत्यवाग्भव पार्थिव १४
वैशम्पायन उवाच
इत्युक्तस्त्वब्रवीद्राजा तमुत्तङ्कं पुनर्वचः
गच्छ मद्वचनाद्देवीं ब्रूहि देहीति सत्तम १५

सैवमुक्ता त्वया नूनं मद्वाक्येन शुचिस्मिता
प्रदास्यति द्विजश्रेष्ठ कुण्डले ते न संशयः १६
उत्तङ्क उवाच
क्व पत्नी भवतः शक्या मया द्रष्टुं नरेश्वर
स्वयं वापि भवान्पत्नीं किमर्थं नोपसर्पति १७
सौदास उवाच
द्रक्ष्यते तां भवानद्य कस्मिंश्चिद्वननिर्झरे
षष्ठे काले न हि मया सा शक्या द्रष्टुमद्य वै १८
उत्तङ्कस्तु तथोक्तः स जगाम भरतर्षभ
मदयन्तीं च दृष्ट्वा सोऽज्ञापयत्स्वं प्रयोजनम् १९
सौदासवचनं श्रुत्वा ततः सा पृथुलोचना
प्रत्युवाच महाबुद्धिमुत्तङ्कं जनमेजय २०
एवमेतन्महाब्रह्मन्नानृतं वदसेऽनघ
अभिज्ञानं तु किंचित्त्वं समानेतुमिहार्हसि २१
इमे हि दिव्ये मणिकुण्डले मे देवाश्च यक्षाश्च महोरगाश्च
तैस्तैरुपायैः परिहर्तुकामाश्छिद्रेषु नित्यं परितर्कयन्ति २२
निक्षिप्तमेतद्भुवि पन्नगास्तु रत्नं समासाद्य परामृषेयुः
यक्षास्तथोच्छिष्टधृतं सुराश्च निद्रावशं त्वा परिधर्षयेयुः २३
छिद्रेष्वेतेषु हि सदा ह्यधृष्येषु द्विजर्षभ
देवराक्षसनागानामप्रमत्तेन धार्यते २४
स्यन्देते हि दिवा रुक्मं रात्रौ च द्विजसत्तम
नक्तं नक्षत्रताराणां प्रभामाक्षिप्य वर्तते २५
एते ह्यामुच्य भगवन्क्षुत्पिपासाभयं कुतः
विषाग्निश्वापदेभ्यश्च भयं जातु न विद्यते २६
ह्रस्वेन चैते आमुक्ते भवतो ह्रस्वके तदा
अनुरूपेण चामुक्ते तत्प्रमाणे हि जायतः २७
एवंविधे ममैते वै कुण्डले परमार्चिते
त्रिषु लोकेषु विख्याते तदभिज्ञानमानय २८
इति श्रीमहाभारते आश्वमेधिकपर्वणि षट्पञ्चाशोऽध्यायः ५६

सप्तपञ्चाशोऽध्यायः

वैशम्पायन उवाच
स मित्रसहमासाद्य त्वभिज्ञानमयाचत
तस्मै ददावभिज्ञानं स चेक्ष्वाकुवरस्तदा १
सौदास उवाच
न चैवैषा गतिः क्षेम्या न चान्या विद्यते गतिः
एतन्मे मतमाज्ञाय प्रयच्छ मणिकुण्डले २
वैशम्पायन उवाच
इत्युक्तस्तामुत्तङ्कस्तु भर्तुर्वाक्यमथाब्रवीत्
श्रुत्वा च सा ततः प्रादात्तस्मै ते मणिकुण्डले ३
अवाप्य कुण्डले ते तु राजानं पुनरब्रवीत्
किमेतद्गुह्यवचनं श्रोतुमिच्छामि पार्थिव ४
सौदास उवाच
प्रजा निसर्गाद्विप्रान्वै क्षत्रियाः पूजयन्ति ह
विप्रेभ्यश्चापि बहवो दोषाः प्रादुर्भवन्ति नः ५
सोऽह द्विजेभ्यः प्रणतो विप्राद्दोषमवाप्तवान्
गतिमन्यां न पश्यामि मदयन्तीसहायवान्
स्वर्गद्वारस्य गमने स्थाने चेह द्विजोत्तम ६
न हि राज्ञा विशेषेण विरुद्धेन द्विजातिभिः
शक्यं नृ लोके संस्थातुं प्रेत्य वा सुखमेधितुम् ७
तदिष्टे ते मयैवैते दत्ते स्वे मणिकुण्डले
यः कृतस्तेऽद्य समयः सफलं तं कुरुष्व मे ८
उत्तङ्क उवाच
राजंस्तथेह कर्तास्मि पुनरेष्यामि ते वशम्
प्रश्नं तु कंचित्प्रष्टुं त्वां व्यवसिष्ये परंतप ९
सौदास उवाच
ब्रूहि विप्र यथाकामं प्रतिवक्तास्मि ते वचः
छेत्तास्मि संशयं तेऽद्य नमेऽत्रास्ति विचारणा १०
उत्तङ्क उवाच
प्राहुर्वाक्संगतं मित्रं धर्मनैपुणदर्शिनः

मित्रेषु यश्च विषमः स्तेन इत्येव तं विदुः ११
स भवान्मित्रतामद्य संप्राप्तो मम पार्थिव
स मे बुद्धिं प्रयच्छस्व समां बुद्धिमतां वर १२
अवाप्तार्थोऽहमद्येह भवांश्च पुरुषादकः
भवत्सकाशमागन्तुं क्षमं मम न वेति वा १३
सौदास उवाच
क्षमं चेदिह वक्तव्यं मया द्विजवरोत्तम
मत्समीपं द्विजश्रेष्ठ नागन्तव्यं कथंचन १४
एवं तव प्रपश्यामि श्रेयो भृगुकुलोद्वह
आगच्छतो हि ते विप्र भवेन्मृत्युरसंशयम् १५
वैशम्पायन उवाच
इत्युक्तः स तदा राज्ञा क्षमं बुद्धिमता हितम्
समनुज्ञाप्य राजानमहल्यां प्रति जग्मिवान् १६
गृहीत्वा कुण्डले दिव्ये गुरुपत्न्याः प्रियंकरः
जवेन महता प्रायाद्गौतमस्याश्रमं प्रति १७
यथा तयो रक्षणं च मदयन्त्याभिभाषितम्
तथा ते कुंडले बद्ध्वा तथा कृष्णाजिनेऽनयत् १८
स कस्मिंश्चित्क्षुधाविष्टः फलभारसमन्वितम्
बिल्वं ददर्श कस्मिंश्चिदारुरोह क्षुधान्वितः १९
शाखास्वासज्य तस्यैव कृष्णाजिनमरिंदम
यस्मिंस्ते कुण्डले बद्धे तदा द्विजवरेण वै २०
विशीर्णबन्धने तस्मिन्गते कृष्णाजिने महीम्
अपश्यद्भुजगः कश्चित्ते तत्र मणिकुण्डले २१
एरावतकुलोत्पन्नः शीघ्रो भूत्वा तदा स वै
विदश्यास्येन वल्मीकं विवेशाथ स कुण्डले २२
ह्रियमाणे तु दृष्ट्वा स कुण्डले भुजगेन ह
पपात वृक्षात्सोद्वेगो दुःखात्परमकोपनः २३
स दण्डकाष्ठमादाय वल्मीकमखनत्तदा
क्रोधामर्षाभितप्ताङ्गस्ततो वै द्विजपुंगवः २४
तस्य वेगमसह्यं तमसहन्ती वसुंधरा

दराडकाष्ठाभिनुन्नाङ्गी चचाल भृशमातुरा २५
ततः खनत एवाथ विप्रर्षेर्धरणीतलम्
नागलोकस्य पन्थानं कर्तुकामस्य निश्चयात् २६
रथेन हरियुक्तेन तं देशमुपजग्मिवान्
वज्रपाणिर्महातेजा ददर्श च द्विजोत्तमम् २७
स तु तं ब्राह्मणो भूत्वा तस्य दुःखेन दुःखितः
उत्तङ्कमब्रवीत्तात नैतच्छक्यं त्वयेति वै २८
इतो हि नागलोको वै योजनानि सहस्रशः
न दराडकाष्ठसाध्यं च मन्ये कार्यमिदं तव २९
उत्तङ्क उवाच
नागलोके यदि ब्रह्मन्न शक्ये कुराडले मया
प्राप्तुं प्राणान्विमोक्ष्यामि पश्यतस्ते द्विजोत्तम ३०
यदा स नाशकत्तस्य निश्चयं कर्तुमन्यथा
वज्रपाणिस्तदा दराडं वज्रास्त्रेण युयोज ह ३१
ततो वज्रप्रहारैस्तैर्दार्यमाणा वसुंधरा
नागलोकस्य पन्थानमकरोज्जनमेजय ३२
स तेन मार्गेण तदा नागलोकं विवेश ह
ददर्श नागलोकं च योजनानि सहस्रशः ३३
प्राकारनिचयैर्दिव्यैर्मणिमुक्ताभ्यलंकृतैः
उपपन्नं महाभाग शातकुम्भमयैस्तथा ३४
वापीः स्फटिकसोपाना नदीश्च विमलोदकाः
ददर्श वृक्षांश्च बहून्नानाद्विजगणायुतान् ३५
तस्य लोकस्य च द्वारं ददर्श स भृगूद्वहः
पञ्चयोजनविस्तारमायतं शतयोजनम् ३६
नागलोकमुत्तङ्कस्तु प्रेक्ष्य दीनोऽभवत्तदा
निराशश्चाभवत्तात कुराडलाहरणे पुनः ३७
तत्र प्रोवाच तुरगस्तं कृष्णश्वेतवालधिः
ताम्रास्यनेत्रः कौरव्य प्रज्वलन्निव तेजसा ३८
धमस्वापानमेतन्मे ततस्त्वं विप्र लप्स्यसे
एरावतसुतेनेह तवानीते हि कुराडले ३९

मा जुगुप्सां कृथाः पुत्र त्वमत्रार्थे कथंचन
त्वयैतद्धि समाचीर्णं गौतमस्याश्रमे तदा ४०
उत्तङ्क उवाच
कथं भवन्तं जानीयामुपाध्यायाश्रमं प्रति
यन्मया चीर्णपूर्वं च श्रोतुमिच्छामि तद्ध्यहम् ४१
अश्व उवाच
गुरोर्गुरुं मां जानीहि ज्वलितं जातवेदसम्
त्वया ह्यहं सदा वत्स गुरोरर्थेऽभिपूजितः ४२
सततं पूजितो विप्र शुचिना भृगुनन्दन
तस्माच्छ्रेयो विधास्यामि तवैवं कुरु मा चिरम् ४३
इत्युक्तः स तथाकार्षीदुत्तङ्कश्चित्रभानुना
घृतार्चिः प्रीतिमांश्चापि प्रजज्वाल दिधक्षया ४४
ततोऽस्य रोमकूपेभ्यो ध्मायमानस्य भारत
घनः प्रादुरभूद्धूमो नागलोकभयावहः ४५
तेन धूमेन सहसा वर्धमानेन भारत
नागलोके महाराज न प्रज्ञायत किंचन ४६
हाहाकृतमभूत्सर्वमैरावतनिवेशनम्
वासुकिप्रमुखानां च नागानां जनमेजय ४७
न प्रकाशन्त वेश्मानि धूमरुद्धानि भारत
नीहारसंवृतानीव वनानि गिरयस्तथा ४८
ते धूमरक्तनयना वह्नितेजोभितापिताः
आजग्मुर्निश्चयं ज्ञातुं भार्गवस्यातितेजसः ४९
श्रुत्वा च निश्चयं तस्य महर्षेस्तिग्मतेजसः
संभ्रान्तमनसः सर्वे पूजां चक्रुर्यथाविधि ५०
सर्वे प्राञ्जलयो नागा वृद्धबालपुरोगमाः
शिरोभिः प्रणिपत्योचुः प्रसीद भगवन्निति ५१
प्रसाद्य ब्राह्मणं ते तु पाद्यमर्घ्यं निवेद्य च
प्रायच्छन्कुण्डले दिव्ये पन्नगाः परमार्चिते ५२
ततः संपूजितो नागैस्तत्रोत्तङ्कः प्रतापवान्
अग्निं प्रदक्षिणं कृत्वा जगाम गुरुसद्म तत् ५३

स गत्वा त्वरितो राजन्गौतमस्य निवेशनम्
प्रायच्छत्कुराडले दिव्ये गुरुपत्न्यै तदानघ ५४
एवं महात्मना तेन त्रील्लोँकाञ्जनमेजय
परिक्रम्याहृते दिव्ये ततस्ते मणिकुराडले ५५
एवंप्रभावः स मुनिरुत्तङ्को भरतर्षभ
परेण तपसा युक्तो यन्मां त्वं परिपृच्छसि ५६
इति श्रीमहाभारते आश्वमेधिकपर्वणि सप्तपञ्चाशोऽध्यायः ५७

## अष्टपञ्चाशोऽध्यायः

जनमेजय उवाच
उत्तङ्काय वरं दत्त्वा गोविन्दो द्विजसत्तम
अत ऊर्ध्वं महाबाहुः किं चकार महायशाः १
वैशम्पायन उवाच
दत्त्वा वरमुत्तङ्काय प्रायात्सात्यकिना सह
द्वारकामेव गोविन्दः शीघ्रवेगैर्महाहयैः २
सरांसि च नदीश्चैव वनानि विविधानि च
अतिक्रम्य ससादाथ रम्यां द्वारवतीं पुरीम् ३
वर्तमाने महाराज महे रैवतकस्य च
उपायात्पुराडरीकाक्षो युयुधानानुगस्तदा ४
अलंकृतस्तु स गिरिर्नानारूपविचित्रितैः
बभौ रुक्ममयैः काशैः सर्वतः पुरुषर्षभ ५
काञ्चनस्त्रग्भिरग्र्याभिः सुमनोभिस्तथैव च
वासोभिश्च महाशैलः कल्पवृक्षैश्च सर्वशः ६
दीपवृक्षैश्च सौवर्णैरभीक्ष्णमुपशोभितः
गुहानिर्झरदेशेषु दिवाभूतो बभूव ह ७
पताकाभिर्विचित्राभिः सघराटाभिः समन्ततः
पुंभिः स्त्रीभिश्च संघुष्टः प्रगीत इव चाभवत्
अतीव प्रेक्षणीयोऽभून्मेरुर्मुनिगणैरिव ८
मत्तानां हृष्टरूपाणां स्त्रीणां पुंसां च भारत
गायतां पर्वतेन्द्रस्य दिवस्पृगिव निःस्वनः ९

प्रमत्तमत्तसंमत्तक्ष्वेडितोत्कृष्टसंकुला
तथाकिलकिलाशब्दैर्भूरभूत्सुमनोहरा १०
विपणापणवान्रम्यो भक्ष्यभोज्यविहारवान्
वस्त्रमाल्योत्करयुतो वीणावेणुमृदङ्गवान् ११
सुरामैरेयमिश्रेण भक्ष्यभोज्येन चैव ह
दीनान्धकृपणादिभ्यो दीयमानेन चानिशम्
बभौ परमकल्याणो महस्तस्य महागिरेः १२
पुण्यावसथवान्वीर पुण्यकृद्भिर्निषेवितः
विहारो वृष्णिवीराणां महे रैवतकस्य ह
स नगो वेश्मसंकीर्णो देवलोक इवाबभौ १३
तदा च कृष्णसांनिध्यमासाद्य भरतर्षभ
शक्रसद्मप्रतीकाशो बभूव स हि शैलराट् १४
ततः संपूज्यमानः स विवेश भवनं शुभम्
गोविन्दः सात्यकिश्चैव जगाम भवनं स्वकम् १५
विवेश च स हृष्टात्माचिरकालप्रवासकः
कृत्वा नसुकरं कर्म दानवेष्विव वासवः १६
उपयातं तु वार्ष्णेयं भोजवृष्ण्यन्धकास्तदा
अभ्यगच्छन्महात्मानं देवा इव शतक्रतुम् १७
स तानभ्यर्च्य मेधावी पृष्ट्वा च कुशलं तदा
अभ्यवादयत प्रीतः पितरं मातरं तथा १८
ताभ्यां च संपरिष्वक्तः सान्त्वितश्च महाभुजः
उपोपविष्टस्तैः सर्वैर्वृष्णिभिः परिवारितः १९
स विश्रान्तो महातेजाः कृतपादावसेचनः
कथयामास तं कृष्णः पृष्टः पित्रा महाहवम् २०

इति श्रीमहाभारते आश्वमेधिकपर्वणि अष्टपञ्चाशोऽध्यायः ५८

## एकोनषष्टितमोऽध्यायः

वसुदेव उवाच
श्रुतवानस्मि वार्ष्णेय संग्रामं परमाद्भुतम्
नराणां वदतां पुत्र कथोद्घातेषु नित्यशः १

त्वं तु प्रत्यक्षदर्शी च कार्यज्ञश्च महाभुज
तस्मात्प्रब्रूहि संग्रामं याथातथ्येन मेऽनघ २
यथा तदभवद्युद्धं पाण्डवानां महात्मनाम्
भीष्मकर्णकृपद्रोणशल्यादिभिरनुत्तमम् ३
अन्येषां क्षत्रियाणां च कृतास्त्राणामनेकशः
नानावेषाकृतिमतां नानादेशनिवासिनाम् ४
इत्युक्तः पुण्डरीकाक्षः पित्रा मातुस्तदन्तिके
शशंस कुरुवीराणां संग्रामे निधनं यथा ५
वासुदेव उवाच
अत्यद्भुतानि कर्माणि क्षत्रियाणां महात्मनाम्
बहुलत्वान्न संख्यातुं शक्यान्यब्दशतैरपि ६
प्राधान्यतस्तु गदतः समासेनैव मे शृणु
कर्माणि पृथिवीशानां यथावदमरद्युते ७
भीष्मः सेनापतिरभूदेकादशचमूपतिः
कौरव्यः कौरवेयाणां देवानामिव वासवः ८
शिखण्डी पाण्डुपुत्राणां नेता सप्तचमूपतिः
बभूव रक्षितो धीमान्धीमता सव्यसाचिना ९
तेषां तदभवद्युद्धं दशाहानि महात्मनाम्
कुरूणां पाण्डवानां च सुमहद्रोमहर्षणम् १०
ततः शिखण्डी गाङ्गेयमयुध्यन्तं महाहवे
जघान बहुभिर्बाणैः सह गाण्डीवधन्वना ११
अकरोत्स ततः कालं शरतल्पगतो मुनिः
अयनं दक्षिणं हित्वा संप्राप्ते चोत्तरायणे १२
ततः सेनापतिरभूद्द्रोणोऽस्त्रविदुषां वरः
प्रवीरः कौरवेन्द्रस्य काव्यो दैत्यपतेरिव १३
अक्षौहिणीभिः शिष्टाभिर्नवभिर्द्विजसत्तमः
संवृतः समरश्लाघी गुप्तः कृपवृषादिभिः १४
धृष्टद्युम्नस्त्वभून्नेता पाण्डवानां महास्त्रवित्
गुप्तो भीमेन तेजस्वी मित्रेण वरुणो यथा १५
पञ्चसेनापरिवृतो द्रोणप्रेप्सुर्महामनाः

पितुर्निकारान्संस्मृत्य रणे कर्माकरोन्महत् १६
तस्मिंस्ते पृथिवीपाला द्रोणपार्षतसंगरे
नानादिगागता वीराः प्रायशो निधनं गताः १७
दिनानि पञ्च तद्युद्धमभूत्परमदारुणम्
ततो द्रोणः परिश्रान्तो धृष्टद्युम्नवशं गतः १८
ततः सेनापतिरभूत्कर्णो दौर्योधने बले
अक्षौहिणीभिः शिष्टाभिर्वृतः पञ्चभिराहवे १९
तिस्रस्तु पाण्डुपुत्राणां चम्वो बीभत्सुपालिताः
हतप्रवीरभूयिष्ठा बभूवुः समवस्थिताः २०
ततः पार्थं समासाद्य पतंग इव पावकम्
पञ्चत्वमगमत्सौतिर्द्वितीयेऽहनि दारुणे २१
हते कर्णे तु कौरव्या निरुत्साहा हतौजसः
अक्षौहिणीभिस्तिसृभिर्मद्रेशं पर्यवारयन् २२
हतवाहनभूयिष्ठाः पाण्डवास्तु युधिष्ठिरम्
अक्षौहिण्या निरुत्साहाः शिष्टया पर्यवारयन् २३
अवधीन्मद्रराजानं कुरुराजो युधिष्ठिरः
तस्मिंस्तथार्धदिवसे कर्म कृत्वा सुदुष्करम् २४
हते शल्ये तु शकुनिं सहदेवो महामनाः
आहर्तारं कलेस्तस्य जघानामितविक्रमः २५
निहते शकुनौ राजा धार्तराष्ट्रः सुदुर्मनाः
अपाक्रामद्गदापाणिर्हतभूयिष्ठसैनिकः २६
तमन्वधावत्संक्रुद्धो भीमसेनः प्रतापवान्
ह्रदे द्वैपायने चापि सलिलस्थं ददर्श तम् २७
ततः शिष्टेन सैन्येन समन्तात्परिवार्य तम्
उपोपविविशुर्हृष्टा ह्रदस्थं पञ्च पाण्डवाः २८
विगाह्य सलिलं त्वाशु वाग्बाणैर्भृशविक्षतः
उत्थाय स गदापाणिर्युद्धाय समुपस्थितः २९
ततः स निहतो राजा धार्तराष्ट्रो महामृधे
भीमसेनेन विक्रम्य पश्यतां पृथिवीक्षिताम् ३०
ततस्तत्पाण्डवं सैन्यं संसुप्तं शिबिरे निशि

निहतं द्रोणपुत्रेण पितुर्वधममृष्यता ३१
हतपुत्रा हतबला हतमित्रा मया सह
युयुधानद्वितीयेन पञ्च शिष्टाः स्म पाण्डवाः ३२
सहैव कृपभोजाभ्यां द्रौणिर्युद्धादमुच्यत
युयुत्सुश्चापि कौरव्यो मुक्तः पाण्डवसंश्रयात् ३३
निहते कौरवेन्द्रे च सानुबन्धे सुयोधने
विदुरः संजयश्चैव धर्मराजमुपस्थितौ ३४
एवं तदभवद्युद्धमहान्यष्टादश प्रभो
यत्र ते पृथिवीपाला निहताः स्वर्गमावसन् ३५
वैशम्पायन उवाच
शृण्वतां तु महाराज कथां तां रोमहर्षणीम्
दुःखहर्षपरिक्लेशा वृष्णीनामभवंस्तदा ३६
इति श्रीमहाभारते आश्वमेधिकपर्वणि एकोनषष्टितमोऽध्यायः ५९

## षष्टितमोऽध्यायः

वैशम्पायन उवाच
कथयन्नेव  तु तदा वासुदेवः प्रतापवान्
महाभारतयुद्धं तत्कथान्ते पितुरग्रतः १
अभिमन्योर्वधं वीरः सोऽत्यक्रामत भारत
अप्रियं वसुदेवस्य मा भूदिति महामनाः २
मा दौहित्रवधं श्रुत्वा वसुदेवो महात्ययम्
दुःखशोकाभिसंतप्तो भवेदिति महामतिः ३
सुभद्रा तु तमुत्क्रान्तमात्मजस्य वधं रणे
आचक्ष्व कृष्ण सौभद्रवधमित्यपतद्भुवि ४
तामपश्यन्निपतितां वसुदेवः क्षितौ तदा
दृष्ट्वैव च पपातोर्व्यां सोऽपि दुःखेन मूर्छितः ५
ततः स दौहित्रवधाद्दुःखशोकसमन्वितः
वसुदेवो महाराज कृष्णं वाक्यमथाब्रवीत् ६
ननु त्वं पुण्डरीकाक्ष सत्यवाग्भुवि विश्रुतः
यद्दौहित्रवधं मेऽद्य न ख्यापयसि शत्रुहन् ७

तद्भागिनेयनिधनं तत्त्वेनाचक्ष्व मे विभो
सदृशाक्षस्तव कथं शत्रुभिर्निहतो रणे ८
दुर्मरं बत वार्ष्णेय कालेऽप्राप्ते नृभिः सदा
यत्र मे हृदयं दुःखाच्छतधा न विदीर्यते ९
किमब्रवीत्त्वा संग्रामे सुभद्रां मातरं प्रति
मां चापि पुण्डरीकाक्ष  चपलाक्षः प्रियो मम १०
आहवं पृष्ठतः कृत्वा कच्चिन्न निहतः परैः
कच्चिन्मुखं न गोविन्द तेनाजौ विकृतं कृतम् ११
स हि कृष्ण महातेजाः श्लाघन्निव ममाग्रतः
बालभावेन विजयमात्मनोऽकथयत्प्रभुः १२
कच्चिन्न विकृतो बालो द्रोणकर्णकृपादिभिः
धरण्यां निहतः शेते तन्ममाचक्ष्व केशव १३
स हि द्रोणं च भीष्मं च कर्णं च रथिनां वरम्
स्पर्धते स्म रणे नित्यं दुहितुः पुत्रको मम १४
एवंविधं बहु तदा विलपन्तं सुदुःखितम्
पितरं दुःखिततरो गोविन्दो वाक्यमब्रवीत् १५
न तेन विकृतं वक्त्रं कृतं स्त्रंगाममूर्धनि
न पृष्ठतः कृतश्चापि संग्रामस्तेन दुस्तरः १६
निहत्य पृथिवीपालान्सहस्रशतसंघशः
खेदितो द्रोणकर्णाभ्यां दौःशासनिवशं गतः १७
एको ह्येकेन सततं युध्यमानो यदि प्रभो
न स शक्येत संग्रामे निहन्तुमपि वज्रिणा १८
समाहूते तु संग्रामे पार्थे संशप्तकैस्तदा
पर्यवार्यत संक्रुद्धैः स द्रोणादिभिराहवे १९
ततः शत्रुक्षयं कृत्वा सुमहान्तं रणे पितुः
दौहित्रस्तव वार्ष्णेय दौःशासनिवशं गतः २०
नूनं च स गतः स्वर्गं जहि शोकं महामते
न हि व्यसनमासाद्य सीदन्ते सन्नराः क्वचित् २१
द्रोणकर्णप्रभृतयो येन प्रतिसमासिताः
रणे महेन्द्रप्रतिमाः स कथं नाप्नुयाद्दिवम् २२

स शोकं जहि दुर्धर्ष मा च मन्युवशं गमः
शस्त्रपूतां हि स गतिं गतः परपुरंजयः २३
तस्मिंस्तु निहते वीरे सुभद्रेयं स्वसा मम
दुःखार्ताथो पृथां प्राप्य कुररीव ननाद ह २४
द्रौपदीं च समासाद्य पर्यपृच्छत दुःखिता
आर्ये क्व दारकः सर्वे द्रष्टुमिच्छामि तानहम् २५
अस्यास्तु वचनं श्रुत्वा सर्वास्ताः कुरुयोषितः
भुजाभ्यां परिगृह्यैनां चुक्रुशुः परमार्तवत् २६
उत्तरां चाब्रवीद्भद्रा भद्रे भर्ता क्व ते गतः
क्षिप्रमागमनं मह्यं तस्मै त्वं वेदयस्व ह २७
ननु नाम स वैराटि श्रुत्वा मम गिरं पुरा
भवनान्निष्पतत्याशु कस्मान्नाभ्येति ते पतिः २८
अभिमन्यो कुशलिनो मातुलास्ते महारथाः
कुशलं चाब्रुवन्सर्वे त्वां युयुत्सुमिहागतम् २९
आचक्ष्व मेऽद्य संग्रामं यथापूर्वमरिंदम
कस्मादेवं विलपतीं नाद्येह प्रतिभाषसे ३०
एवमादि तु वार्ष्णेय्यास्तदस्याः परिदेवितम्
श्रुत्वा पृथा सुदुःखार्ता शनैर्वाक्यमथाब्रवीत् ३१
सुभद्रे वासुदेवेन तथा सात्यकिना रणे
पित्रा च पालितो बालः स हतः कालधर्मणा ३२
ईदृशो मर्त्यधर्मोऽय मा शुचो यदुनन्दिनी
पुत्रो हि तव दुर्धर्षः संप्राप्तः परमां गतिम् ३३
कुले महति जातासि क्षत्रियाणां महात्मनाम्
मा शुचश्चपलाक्षं त्वं पुण्डरीकनिभेक्षणे ३४
उत्तरां त्वमवेक्षस्व गर्भिणीं मा शुचः शुभे
पुत्रमेषा हि तस्याशु जनयिष्यति भामिनी ३५
एवमाश्वासयित्वैनां कुन्ती यदुकुलोद्वह
विहाय शोकं दुर्धर्षं श्राद्धमस्य ह्यकल्पयत् ३६
समनुज्ञाप्य धर्मज्ञा राजानं भीममेव च
यमौ यमोपमौ चैव ददौ दानान्यनेकशः ३७

ततः प्रदाय बह्वीर्गा ब्राह्मणेभ्यो यदूद्वह
समहृष्यत वार्ष्णेयी वैराटीं चाब्रवीदिदम् ३८
वैराटि नेह संतापस्त्वया कार्यो यशस्विनि
भर्तारं प्रति सुश्रोणि गर्भस्थं रक्ष मे शिशुम् ३९
एवमुक्त्वा ततः कुन्ती विरराम महाद्युते
तामनुज्ञाप्य चैवेमां सुभद्रां समुपानयम् ४०
एवं स निधनं प्राप्तो दौहित्रस्तव माधव
संतापं जहि दुर्धर्ष मा च शोके मनः कृथाः ४१
इति श्रीमहाभारते आश्वमेधिकपर्वणि षष्टितमोऽध्यायः ६०

## एक षष्टितमोऽध्यायः

वैशम्पायन उवाच
एतच्छ्रुत्वा तु पुत्रस्य वचः शूरात्मजस्तदा
विहाय शोकं धर्मात्मा ददौ श्राद्धमनुत्तमम् १
तथैव वासुदेवोऽपि स्वस्त्रीयस्य महात्मनः
दयितस्य पितुर्नित्यमकरोदौर्ध्वदेहिकम् २
षष्टिं शतसहस्राणि ब्राह्मणानां महाभुजः
विधिवद्भोजयामास भोज्यं सर्वगुणान्वितम् ३
आच्छाद्य च महाबाहुर्धनतृष्णामपानुदत्
ब्राह्मणानां तदा कृष्णस्तदभूद्रोमहर्षणम् ४
सुवर्णं चैव गाश्चैव शयनाच्छादनं तथा
दीयमानं तदा विप्राः प्रभूतमिति चाब्रुवन् ५
वासुदेवोऽथ दाशार्हो बलदेवः ससात्यकिः
अभिमन्योस्तदा श्राद्धमकुर्वन्सत्यकस्तदा
अतीव दुःखसंतप्ता न शमं चोपलेभिरे ६
तथैव पाण्डवा वीरा नगरे नागसाह्वये
नोपगच्छन्ति वै शान्तिमभिमन्युविनाकृताः ७
सुबहूनि च राजेन्द्र दिवसानि विराटजा
नाभुङ्क्त पतिशोकार्ता तदभूत्करुणं महत्
कुक्षिस्थ एव तस्यास्तु स गर्भः संप्रलीयत ८

आजगाम ततो व्यासो ज्ञात्वा दिव्येन चक्षुषा
आगम्य चाब्रवीद्धीमान्पृथां पृथुललोचनाम्
उत्तरां च महातेजाः शोकः संत्यज्यतामयम् ९
जनिष्यति महातेजाः पुत्रस्तव यशस्विनि
प्रभावाद्वासुदेवस्य मम व्याहरणादपि
पाण्डवानामयं चान्ते पालयिष्यति मेदिनीम् १०
धनंजयं च संप्रेक्ष्य धर्मराजस्य पश्यतः
व्यासो वाक्यमुवाचेदं हर्षयन्निव भारत ११
पौत्रस्तव महाबाहो जनिष्यति महामनाः
पृथ्वद्यं सागरपर्यन्तां पालयिष्यति चैव ह १२
तस्माच्छोकं कुरुश्रेष्ठ जहि त्वमरिकर्शन
विचार्यमत्र न हि ते सत्यमेतद्भविष्यति १३
यच्चापि वृष्णिवीरेण कृष्णेन कुरुनन्दन
पुरोक्तं तत्तथा भावि मा तेऽत्रास्तु विचारणा १४
विबुधानां गतो लोकानक्षयानात्मनिर्जितान्
न स शोच्यस्त्वया तात न चान्यैः कुरुभिस्तथा १५
एवं पितामहेनोक्तो धर्मात्मा स धनंजयः
त्यक्त्वा शोकं महाराज हृष्टरूपोऽभवत्तदा १६
पितापि तव धर्मज्ञ गर्भे तस्मिन्महामते
अवर्धत यथाकालं शुक्लपक्षे यथा शशी १७
ततः संचोदयामास व्यासो धर्मात्मजं नृपम्
अश्वमेधं प्रति तदा ततः सोऽन्तर्हितोऽभवत् १८
धर्मराजोऽपि मेधावी श्रुत्वा व्यासस्य तद्वचः
वित्तोपनयने तात चकार गमने मतिम् १९
इति श्रीमहाभारते आश्वमेधिकपर्वणि एकषष्टितमोऽध्यायः ६१

## द्विषष्टितमोऽध्यायः

जनमेजय उवाच
श्रुत्वैतद्वचनं ब्रह्मन्व्यासेनोक्तं महात्मना
अश्वमेधं प्रति तदा किं नृपः प्रचकार ह १

रत्नं च यन्मरुत्तेन निहितं पृथिवीतले
तदवाप कथं चेति तन्मे ब्रूहि द्विजोत्तम २
वैशम्पायन उवाच
श्रुत्वा द्वैपायनवचो धर्मराजो युधिष्ठिरः
भ्रातॄन्सर्वान्समानाय्य काले वचनमब्रवीत्
अर्जुनं भीमसेनं च माद्रीपुत्रौ यमावपि ३
श्रुतं वो वचनं वीराः सौहृदाद्यन्महात्मना
कुरूणां हितकामेन प्रोक्तं कृष्णेन धीमता ४
तपोवृद्धेन महता सुहृदां भूतिमिच्छता
गुरुणा धर्मशीलेन व्यासेनाद्भुतकर्मणा ५
भीष्मेण च महाप्राज्ञ गोविन्देन च धीमता
संस्मृत्य तदहं सम्यक्कर्तुमिच्छामि पाण्डवाः ६
आयत्यां च तदात्वे च सर्वेषां तद्धि नो हितम्
अनुबन्धे च कल्याणं यद्वचो ब्रह्मवादिनः ७
इयं हि वसुधा सर्वा क्षीणरत्ना कुरूद्वहाः
तच्चाचष्ट बहु व्यासो मरुत्तस्य धनं नृपाः ८
यद्येतद्वो बहुमतं मन्यध्वं वा क्षमं यदि
तदानयामहे सर्वे कथं वा भीम मन्यसे ९
इत्युक्तवाक्ये नृपतौ तदा कुरुकुलोद्वह
भीमसेनो नृपश्रेष्ठं प्राञ्जलिर्वाक्यमब्रवीत् १०
रोचते मे महाबाहो यदिदं भाषितं त्वया
व्यासाख्यातस्य वित्तस्य समुपानयनं प्रति ११
यदि तत्प्राप्नुयामेह धनमाविक्षितं प्रभो
कृतमेव महाराज भवेदिति मतिर्मम १२
ते वयं प्रणिपातेन गिरीशस्य महात्मनः
तदानयाम भद्रं ते समभ्यर्च्य कपर्दिनम् १३
तं विभुं देवदेवेशं तस्यैवानुचरांश्च तान्
प्रसाद्यार्थमवाप्स्यामो नूनं वाग्बुद्धिकर्मभिः १४
रक्षन्ते ये च तद्द्रव्यं किंकरा रौद्रदर्शनः
ते च वश्या भविष्यन्ति प्रसन्ने वृषभध्वजे १५

श्रुत्वैवं वदतस्तस्य वाक्यं भीमस्य भारत
प्रीतो धर्मात्मजो राजा बभूवातीव भारत
अर्जुनप्रमुखाश्चापि तथेत्येवाब्रुवन्मुदा १६
कृत्वा तु पाण्डवाः सर्वे रत्नाहरणनिश्चयम्
सेनामाज्ञापयामासुर्नक्षत्रेऽहनि च ध्रुवे १७
ततो ययुः पाण्डुसुता ब्राह्मणान्स्वस्ति वाच्य च
अर्चयित्वा सुरश्रेष्ठं पूर्वमेव महेश्वरम् १८
मोदकैः पायसेनाथ मांसापूपैस्तथैव च
आशास्य च महात्मानं प्रययुर्मुदिता भृशम् १९
तेषां प्रयास्यतां तत्र मङ्गलानि शुभान्यथ
प्राहुः प्रहृष्टमनसो द्विजाग्र्या नागराश्च ते २०
ततः प्रदक्षिणीकृत्य शिरोभिः प्रणिपत्य च
ब्राह्मणानग्निसहितान्प्रययुं पाण्डुनन्दनाः २१
समनुज्ञाप्य राजानं पुत्रशोकसमाहतम्
धृतराष्ट्रं सभार्यं वै पृथां पृथुललोचनाम् २२
मूले निक्षिप्य कौरव्यं युयुत्सुं धृतराष्ट्रजम्
संपूज्यमानाः पौरैश्च ब्राह्मणैश्च मनीषिभिः २३
इति श्रीमहाभारते आश्वमेधिकपर्वणि द्विषष्टितमोऽध्यायः ६२

## त्रिषष्टितमोऽध्यायः

वैशम्पायन उवाच
ततस्ते प्रययुर्हृष्टाः प्रहृष्टनरवाहनाः
रथघोषेण महता पूरयन्तो वसुंधराम् १
संस्तूयमानाः स्तुतिभिः सूतमागधबन्दिभिः
स्वेन सैन्येन संवीता यथादित्याः स्वरश्मिभिः २
पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्धनि
बभौ युधिष्ठिरस्तत्र पौर्णमास्यामिवोडुराट् ३
जयाशिषः प्रहृष्टानां नराणां पथि पाण्डवः
प्रत्यगृह्णाद्यथान्यायं यथावत्पुरुषर्षभः ४
तथैव सैनिका राजन्राजानमनुयान्ति ये

तेषां हलहलाशब्दो दिवं स्तब्ध्वा व्यतिष्ठत ५
स सरांसि नदीश्चैव वनान्युपवनानि च
अत्यक्रामन्महाराजो गिरिं चैवान्वपद्यत ६
तस्मिन्देशे च राजेन्द्र यत्र तद्द्रव्यमुत्तमम्
चक्रे निवेशनं राजा पाण्डवः सह सैनिकैः
शिवे देशे समे चैव तदा भरतसत्तम ७
अग्रतो ब्राह्मणान्कृत्वा तपोविद्यादमान्वितान्
पुरोहितं च कौरव्य वेदवेदाङ्गपारगम् ८
प्राङ्निवेशात्तु राजानं ब्राह्मणाः सपुरोधसः
कृत्वा शान्तिं यथान्यायं सर्वतः पर्यवारयन् ९
कृत्त्वा च मध्ये राजानममात्यांश्च यथाविधि
षट्पथं नवसंस्थानं निवेशं चक्रिरे द्विजाः १०
मत्तानां वारणेन्द्राणां निवेशं च यथाविधि
कारयित्वा स राजेन्द्रो ब्राह्मणानिदमब्रवीत् ११
अस्मिन्कार्ये द्विजश्रेष्ठा नक्षत्रे दिवसे शुभे
यथा भवन्तो मन्यन्ते कर्तुमर्हथ तत्तथा १२
न नः कालात्ययो वै स्यादिहैव परिलम्बताम्
इति निश्चित्य विप्रेन्द्राः क्रियतां यदनन्तरम् १३
श्रुत्वैतद्वचनं राज्ञो ब्राह्मणाः सपुरोधसः
इदमूचुर्वचो हृष्टा धर्मराजप्रियेप्सवः १४
अद्यैव नक्षत्रमहश्च पुण्यं यतामहे श्रेष्ठतमं क्रियासु
अम्भोमिरद्येह वसाम राजन्नुपोष्यतां चापि भवद्भिरद्य १५
श्रुत्वा तु तेषां द्विजसत्तमानां कृतोपवासा रजनीं नरेन्द्राः
ऊषुः प्रतीताः कुशसंस्तरेषु यथाध्वरेषु ज्वलिता हव्यवाहाः १६
ततो निशा सा व्यगमन्महात्मनां संशृण्वतां विप्रसमीरिता गिरः
ततः प्रभाते विमले द्विजर्षभा वचोऽब्रुवन्धर्मसुतं नराधिपम् १७
इति श्रीमहाभारते आश्वमेधिकपर्वणि त्रिषष्टितमोऽध्यायः ६३

## चतुःषष्टितमोऽध्यायः

ब्राह्मणा ऊचुः

क्रियतामुपहारोऽद्य त्र्यम्बकस्य महात्मनः
कृत्वोपहारं नृपते ततः स्वार्थे यतामहे १
वैशम्पायन उवाच
श्रुत्वा तु वचनं तेषां ब्राह्मणानां युधिष्ठिरः
गिरीशस्य यथान्यायमुपहारमुपाहरत् २
आज्येन तर्पयित्वाग्निं विधिवत्संस्कृतेन ह
मन्त्रसिद्धं चरुं कृत्वा पुरोधाः प्रययौ तदा ३
स गृहीत्वा सुमनसो मन्त्रपूता जनाधिप
मोदकैः पायसेनाथ मांसैश्चोपाहरद्बलिम् ४
सुमनोभिश्च चित्राभिर्लाजैरुच्चावचैरपि
सर्वं स्विष्टकृतं कृत्वा विधिवद्वेदपारगः
किंकराणां ततः पश्चाच्चकार बलिमुत्तमम् ५
यक्षेन्द्राय कुबेराय मणिभद्राय चैव ह
तथान्येषां च यक्षाणां भूताधिपतयश्च ये ६
कृसरेण समांसेन निवापैस्तिलसंयुतैः
शुशुभे स्थानमत्यर्थं देवदेवस्य पार्थिव ७
कृत्वा तु पूजां रुद्रस्य गणानां चैव सर्वशः
ययौ व्यासं पुरस्कृत्य नृपो रत्ननिधिं प्रति ८
पूजयित्वा धनाध्यक्षं प्रणिपत्याभिवाद्य च
सुमनोभिर्विचित्राभिरपूपैः कृसरेण च ९
शङ्खादींश्च निधीन्सर्वान्निधिपालांश्च सर्वशः
अर्चयित्वा द्विजाग्र्यान्स स्वस्ति वाच्य च वीर्यवान् १०
तेषां पुण्याहघोषेण तेजसा समवस्थितः
प्रीतिमान्स कुरुश्रेष्ठः खानयामास तं निधिम् ११
ततः पात्र्यः सकरकाः साश्मन्तकमनोरमाः
भृङ्गाराणि कटाहानि कलशान्वर्धमानकान् १२
बहूनि च विचित्राणि भाजनानि सहस्रशः
उद्धारयामास तदा धर्मराजो युधिष्ठिरः १३
तेषां लक्षणमप्यासीन्महान्करपुटस्तथा
त्रिलक्षं भाजनं राजंस्तुलार्धमभवन्नृप १४

वाहनं पाण्डुपुत्रस्य तत्रासीत्तु विशां पते
षष्टिरुष्ट्रसहस्राणि शतानि द्विगुणा हयाः १५
वारणाश्च महाराज सहस्रशतसंमिताः
शकटानि रथाश्चैव तावदेव करेणवः
खराणां पुरुषाणां च परिसंख्या न विद्यते १६
एतद्वित्तं तदभवद्यदुद्दध्रे युधिष्ठिरः
षोडशाष्टौ चतुर्विंशत्सहस्रं भारलक्षणम् १७
एतेष्वाधाय तद्द्रव्यं पुनरभ्यर्च्य पाण्डवः
महादेवं प्रति ययौ पुरं नागाह्वयं प्रति १८
द्वैपायनाभ्यनुज्ञातः पुरस्कृत्य पुरोहितम्
गोयुते गोयुते चैव न्यवसत्पुरुषर्षभः १९
सा पुराभिमुखी राजञ्जगाम महती चमूः
कृच्छ्राद्द्रविणभारार्ता हर्षयन्ति कुरूद्वहान् २०
इति श्रीमहाभारते आश्वमेधिकपर्वणि चतुःषष्टितमोऽध्यायः ६४

पञ्चषष्टितमोऽध्यायः

वैशम्पायन उवाच
एतस्मिन्नेव काले तु वासुदेवोऽपि वीर्यवान्
उपायाद्वृष्णिभिः सार्धं पुरं वारणसाह्वयम् १
समयं वाजिमेधस्य विदित्वा पुरुषर्षभः
यथोक्तो धर्मपुत्रेण व्रजन्स स्वपुरीं प्रति २
रौक्मिणेयेन सहितो युयुधानेन चैव ह
चारुदेष्णेन साम्बेन गदेन कृतवर्मणा ३
सारणेन च वीरेण निशठेनोल्मुकेन च
बलदेवं पुरस्कृत्य सुभद्रासहितस्तदा ४
द्रौपदीमुत्तरां चैव पृथां चाप्यवलोककः
समाश्वासयितुं चापि क्षत्रिया निहतेश्वराः ५
तानागतान्समीक्ष्यैव धृतराष्ट्रो महीपतिः
प्रत्यगृह्णाद्यथान्यायं विदुरश्च महामनाः ६
तत्रैव न्यवसत्कृष्णः स्वर्चितः पुरुषर्षभः

विदुरेण महातेजास्तथैव च युयुत्सुना ७
वसत्सु वृष्णिवीरेषु तत्राथ जनमेजय
जज्ञे तव पिता राजन्परिक्षित्परवीरहा ८
स तु राजा महाराज ब्रह्मास्त्रेणाभिपीडितः
शवो बभूव निश्चेष्टो हर्षशोकविवर्धनः ९
हृष्टानां सिंहनादेन जनानां तत्र निस्वनः
आविश्य प्रदिशः सर्वाः पुनरेव व्युपारमत् १०
ततः सोऽतित्वरः कृष्णो विवेशान्तःपुरं तदा
युयुधानद्वितीयो वै व्यथितेन्द्रियमानसः ११
ततस्त्वरितमायान्तीं ददर्श स्वां पितृष्वसाम्
क्रोशन्तीमभिधावेति वासुदेवं पुनः पुनः १२
पृष्ठतो द्रौपदीं चैव सुभद्रां च यशस्विनीम्
सविक्रोशं सकरुणं बान्धवानां स्त्रियो नृप १३
ततः कृष्णं समासाद्य कुन्ती राजसुता तदा
प्रोवाच राजशार्दूल बाष्पगद्गदया गिरा १४
वासुदेव महाबाहो सुप्रजा देवकी त्वया
त्वं नो गतिः प्रतिष्ठा च त्वदायत्तमिदं कुलम् १५
यदुप्रवीर योऽय ते स्वस्त्रीयस्यात्मजः प्रभो
अश्वत्थाम्ना हतो जातस्तमुज्जीवय केशव १६
त्वया ह्येतत्प्रतिज्ञातमैषीके यदुनन्दन
अहं संजीवयिष्यामि मृतं जातमिति प्रभो १७
सोऽय जातो मृतस्तात पश्यैनं पुरुषर्षभ
उत्तरां च सुभद्रां च द्रौपदीं मां च माधव १८
धर्मपुत्रं च भीमं च फल्गुनं नकुलं तथा
सहदेवं च दुर्धर्ष सर्वान्नस्त्रातुमर्हसि १९
अस्मिन्प्राणाः समायत्ताः पाण्डवानां ममैव च
पाण्डोश्च पिण्डो दाशार्ह तथैव श्वशुरस्य मे २०
अभिमन्योश्च भद्रं ते प्रियस्य सदृशस्य च
प्रियमुत्पादयाद्य त्वं प्रेतस्यापि जनार्दन २१
उत्तरा हि प्रियोक्तं वै कथयत्यरिसूदन

अभिमन्योर्वचः कृष्ण प्रियत्वात्ते न संशयः २२
अब्रवीत्किल दाशार्ह वैराटीमार्जुनिः पुरा
मातुलस्य कुलं भद्रे तव पुत्रो गमिष्यति २३
गत्वा वृष्ण्यन्धककुलं धनुर्वेदं ग्रहीष्यति
अस्त्राणि च विचित्राणि नीतिशास्त्रं च केवलम् २४
इत्येतत्प्रणयात्तात सौभद्रः परवीरहा
कथयामास दुर्धर्षस्तथा चैतन्न संशयः २५
तास्त्वां वयं प्रणम्येह याचामो मधुसूदन
कुलस्यास्य हितार्थं त्वं कुरु कल्याणमुत्तमम् २६
एवमुक्त्वा तु वार्ष्णेयं पृथा पृथुललोचना
उच्छ्रित्य बाहू दुःखार्ता ताश्चान्याः प्रापतन्भुवि २७
अब्रुवंश्च महाराज सर्वाः सास्राविलेक्षणाः
स्वस्रीयो वासुदेवस्य मृतो जात इति प्रभो २८
एवमुक्ते ततः कुन्तीं प्रत्यगृह्णाज्जनार्दनः
भूमौ निपतितां चैनां सान्त्वयामास भारत २९
इति श्रीमहाभारते आश्वमेधिकपर्वणि पञ्चषष्टितमोऽध्यायः ६५

षट्षष्टितमोऽध्यायः

वैशम्पायन उवाच
उत्थितायां पृथायां तु सुभद्रा भ्रातरं तदा
दृष्ट्वा चुक्रोश दुःखार्ता वचनं चेदमब्रवीत् १
पुण्डरीकाक्ष पश्यस्व पौत्रं पार्थस्य धीमतः
परिक्षीणेषु कुरुषु परिक्षीणं गतायुषम् २
इषीका द्रोणपुत्रेण भीमसेनार्थमुद्यता
सोत्तरायां निपतिता विजये मयि चैव ह ३
सेयं ज्वलन्ती हृदये मयि तिष्ठति केशव
यन्न पश्यामि दुर्धर्ष मम पुत्रसुतं विभो ४
किं नु वक्ष्यति धर्मात्मा धर्मराजो युधिष्ठिरः
भीमसेनार्जुनौ चापि माद्रवत्याः सुतौ च तौ ५
श्रुत्वाभिमन्योस्तनयं जातं च मृतमेव च

मुषिता इव वार्ष्णेय द्रोणपुत्रेण पाण्डवाः ६
अभिमन्युः प्रियः कृष्ण पितॄणां नात्र संशयः
ते श्रुत्वा किं नु वक्ष्यन्ति द्रोणपुत्रास्त्रनिर्जिताः ७
भवितातः परं दुःखं कि न मन्ये जनार्दन
अभिमन्योः सुतात्कृष्ण मृताज्जातादरिंदम ८
साहं प्रसादये कृष्ण त्वामद्य शिरसा नता
पृथेयं द्रौपदी चैव ताः पश्य  पुरुषोत्तम ९
यदा द्रोणसुतो गर्भान्पाण्डूनां हन्ति माधव
तदा किल त्वया द्रौणिः क्रुद्धेनोक्तोऽरिमर्दन १०
अकामं त्वा करिष्यामि ब्रह्मबन्धो नराधम
अहं संजीवयिष्यामि किरीटितनयात्मजम् ११
इत्येतद्वचनं श्रुत्वा जानमाना बलं तव
प्रसादये त्वा दुर्धर्ष जीवतामभिमन्युजः १२
यद्येवं त्वं प्रतिश्रुत्य न करोषि वचः शुभम्
सफलं वृष्णिशार्दूल मृतां मामुपधारय १३
अभिमन्योः सुतो वीर न संजीवति यद्ययम्
जीवति त्वयि दुर्धर्ष किं करिष्याम्यहं त्वया १४
संजीवयैनं दुर्धर्ष मृतं त्वमभिमन्युजम्
सदृशाक्षसुतं वीर सस्यं वर्षन्निवाम्बुदः १५
त्वं हि केशव धर्मात्मा सत्यवान्सत्यविक्रमः
स तां वाचमृतां कर्तुमर्हसि त्वमरिंदम १६
इच्छन्नपि हि लोकांस्त्रीञ्जीवयेथा मृतानिमान्
किं पुनर्दयितं जातं स्वस्त्रीयस्यात्मजं मृतम् १७
प्रभावज्ञास्मि ते कृष्ण तस्मादेतद्ब्रवीमि ते
कुरुष्व पाण्डुपुत्राणामिमं परमनुग्रहम् १८
स्वसेति वा महाबाहो हतपुत्रेति वा पुनः
प्रपन्ना मामियं वेति दयां कर्तुमिहार्हसि १९
इति श्रीमहाभारते आश्वमेधिकपर्वणि षट्षष्टितमोऽध्यायः ६६

## सप्तषष्टितमोऽध्यायः

वैशम्पायन उवाच
एवमुक्तस्तु राजेन्द्र केशिहा दुःखमूर्छितः
तथेति व्याजहारोच्चैर्ह्लादयन्निव तं जनम् १
वाक्येन तेन हि तदा तं जनं पुरुषर्षभः
ह्लादयामास स विभुर्घर्मार्तं सलिलैरिव २
ततः स प्राविशत्तूर्णं जन्मवेश्म पितुस्तव
अर्चितं पुरुषव्याघ्र सितैर्माल्यैर्यथाविधि ३
अपां कुम्भैः सुपूर्णैश्च विन्यस्तैः सर्वतोदिशम्
घृतेन तिन्दुकालातैः सर्षपैश्च महाभुज ४
शस्त्रैश्च विमलैर्न्यस्तैः पावकैश्च समन्ततः
वृद्धाभिश्चाभिरामाभिः परिचारार्थमच्युतः ५
दक्षैश्च परितो वीर भिषग्भिः कुशलैस्तथा
ददर्श च स तेजस्वी रक्षोघ्नान्यपि सर्वशः
द्रव्याणि स्थापितानि स्म विधिवत्कुशलैर्जनैः ६
तथायुक्तं च तद्दृष्ट्वा जन्मवेश्म पितुस्तव
हृष्टोऽभवद्धृषीकेशः साधु साध्विति चाब्रवीत् ७
तथा ब्रुवति वार्ष्णेये प्रहृष्टवदने तदा
द्रौपदी त्वरिता गत्वा वैराटीं वाक्यमब्रवीत् ८
अयमायाति ते भद्रे श्वशुरो मधुसूदनः
पुराणर्षिरचिन्त्यात्मा समीपमपराजितः ९
सापि बाष्पकलां वाचं निगृह्याश्रूणि चैव ह
सुसंवीताभवद्देवी देववत्कृष्णमीक्षती १०
सा तथा दूयमानेन हृदयेन तपस्विनी
दृष्ट्वा गोविन्दमायान्तं कृपणं पर्यदेवयत् ११
पुण्डरीकाक्ष पश्यस्व बालाविह विनाकृतौ
अभिमन्युं च मां चैव हतौ तुल्यं जनार्दन १२
वार्ष्णेय मधुहन्वीर शिरसा त्वां प्रसादये
द्रोणपुत्रास्त्रनिर्दग्धं जीवयैनं ममात्मजम् १३
यदि स्म धर्मराज्ञा वा भीमसेनेन वा पुनः

त्वया वा पुण्डरीकाक्ष वाक्यमुक्तमिदं भवेत् १४
अजानतीमिषीकेयं जनित्रीं हन्त्विति प्रभो
अहमेव विनष्टा स्यां नेदमेवंगतं भवेत् १५
गर्भस्थस्यास्य बालस्य ब्रह्मास्त्रेण निपातनम्
कृत्वा नृशंसं दुर्बुद्धिर्द्रौणिः किं फलमश्नुते १६
सा त्वा प्रसाद्य शिरसा याचे शत्रुनिबर्हण
प्राणांस्त्यक्ष्यामि गोविन्द नायं संजीवते यदि १७
अस्मिन्हि बहवः साधो ये ममासन्मनोरथाः
ते द्रोणपुत्रेण हताः किं नु जीवामि केशव १८
आसीन्मम मतिः कृष्ण पूर्णोत्सङ्गा जनार्दन
अभिवादयिष्ये दिष्ट्येति तदिदं वितथीकृतम् १९
चपलाक्षस्य दायादे मृतेऽस्मिन्पुरुषर्षभ
विफला मे कृताः कृष्ण हृदि सर्वे मनोरथाः २०
चपलाक्षः किलातीव प्रियस्ते मधुसूदन
सुतं पश्यस्व तस्येमं ब्रह्मास्त्रेण निपातितम् २१
कृतघ्नोऽय नृशंसोऽय यथास्य जनकस्तथा
यः पाण्डवीं श्रियं त्यक्त्वा गतोऽद्य यमसादनम् २२
मया चैतत्प्रतिज्ञातं रणमूर्धनि केशव
अभिमन्यौ हते वीर त्वामेष्याम्यचिरादिति २३
तच्च नाकरवं कृष्ण नृशंसा जीवितप्रिया
इदानीमागतां तत्र किं नु वक्ष्यति फाल्गुनिः २४
इति श्रीमहाभारते आश्वमेधिकपर्वणि सप्तषष्टितमोऽध्यायः ६७

## अष्टषष्टितमोऽध्यायः

वैशम्पायन उवाच
सैवं विलप्य करुणं सोन्मादेव तपस्विनी
उत्तरा न्यपतद्भूमौ कृपणा पुत्रगृद्धिनी १
तां तु दृष्ट्वा निपतितां हतबन्धुपरिच्छदाम्
चुक्रोश कुन्ती दुःखार्ता सर्वाश्च भरतस्त्रियः २
मुहूर्तमिव तद्राजन्पाण्डवानां निवेशनम्

अप्रेक्षणीयमभवदार्तस्वरनिनादितम् ३
सा मुहूर्तं च राजेन्द्र पुत्रशोकाभिपीडिता
कश्मलाभिहता वीर वैराटी त्वभवत्तदा ४
प्रतिलभ्य तु सा संज्ञामुत्तरा भरतर्षभ
अङ्कमारोप्य तं पुत्रमिदं वचनमब्रवीत् ५
धर्मज्ञस्य सुतः संस्त्वमधर्ममवबुध्यसे
यस्त्वं वृष्णिप्रवीरस्य कुरुषे नाभिवादनम् ६
पुत्र गत्वा मम वचो ब्रूयास्त्वं पितरं तव
दुर्मरं प्राणिनां वीर काले प्राप्ते कथंचन ७
याहं त्वया विहीनाद्य पत्या पुत्रेण चैव ह
मर्तव्ये सति जीवामि हतस्वस्तिरकिंचना ८
अथ वा धर्मराज्ञाहमनुज्ञाता महाभुज
भक्षयिष्ये विषं तीक्ष्णं प्रवेक्ष्ये वा हुताशनम् ९
अथ वा दुर्मरं तात यदिदं मे सहस्रधा
पतिपुत्रविहीनाया हृदयं न विदीर्यते १०
उत्तिष्ठ पुत्र पश्येमां दुःखितां प्रपितामहीम्
आर्तामुपप्लुतां दीनां निमग्नां शोकसागरे ११
आर्यां च पश्य पाञ्चालद्यं सात्वतीं च तपस्विनीम्
मां च पश्य सुदुःखार्तां व्याधविद्धां मृगीमिव १२
उत्तिष्ठ पश्य वदनं लोकनाथस्य धीमतः
पुण्डरीकपलाशाक्षं पुरेव चपलेक्षणम् १३
एवं विप्रलपन्तीं तु दृष्ट्वा निपतितां पुनः
उत्तरां ताः स्त्रियः सर्वाः पुनरुत्थापयन्त्युत १४
उत्थाय तु पुनर्धैर्यात्तदा मत्स्यपतेः सुता
प्राञ्जलि पुण्डरीकाक्षं भूमावेवाभ्यवादयत् १५
श्रुत्वा स तस्या विपुलं विलापं पुरुषर्षभः
उपस्पृश्य ततः कृष्णो ब्रह्मास्त्रं संजहार तत् १६
प्रतिजज्ञे च दाशार्हस्तस्य जीवितमच्युतः
अब्रवीच्च विशुद्धात्मा सर्वं विश्रावयञ्जगत् १७
न ब्रवीम्युत्तरे मिथ्या सत्यमेतद्भविष्यति

एष संजीवयाम्येनं पश्यतां सर्वदेहिनाम् १८
नोक्तपूर्वं मया मिथ्या स्वैरेष्वपि कदाचन
न च युद्धे परावृत्तस्तथा संजीवतामयम् १९
यथा मे दयितो धर्मो ब्राह्मणाश्च विशेषतः
अभिमन्योः सुतो जातो मृतो जीवत्वयं तथा २०
यथाहं नाभिजानामि विजयेन कदाचन
विरोधं तेन सत्येन मृतो जीवत्वयं शिशुः २१
यथा सत्यं च धर्मश्च मयि नित्यं प्रतिष्ठितौ
तथा मृतः शिशुरयं जीवतामभिमन्युजः २२
यथा कंसश्च केशी च धर्मेण निहतौ मया
तेन सत्येन बालोऽय पुनरुज्जीवतामिह २३
इत्युक्तो वासुदेवेन स बालो भरतर्षभ
शनैः शनैर्महाराज प्रास्पन्दत सचेतनः २४
इति श्रीमहाभारते आश्वमेधिकपर्वणि अष्टषष्टितमोऽध्यायः ६८

## एकोनसप्ततितमोऽध्यायः

वैशम्पायन उवाच
ब्रह्मास्त्रं तु यदा राजन्कृष्णेन प्रतिसंहृतम्
तदा तद्वेश्म ते पित्रा तेजसाभिविदीपितम् १
ततो रक्षांसि सर्वाणि नेशुस्त्यक्त्वा गृहं तु तत्
अन्तरिक्षे च वागासीत्साधु केशव साध्विति २
तदस्त्रं ज्वलितं चापि पितामहमगात्तदा
ततः प्राणान्पुनर्लेभे पिता तव जनेश्वर
व्यचेष्टत च बालोऽसौ यथोत्साहं यथाबलम् ३
बभूवुर्मुदिता राजंस्ततस्ता भरतस्त्रियः
ब्राह्मणान्वाचयामासुर्गोविन्दस्य च शासनात् ४
ततस्ता मुदिताः सर्वाः प्रशशंसुर्जनार्दनम्
स्त्रियो भरतसिंहानां नावं लब्ध्वेव पारगाः ५
कुन्ती द्रुपदपुत्री च सुभद्रा चोत्तरा तथा
स्त्रियश्चान्या नृसिंहानां बभूवुर्हृष्टमानसाः ६

तत्र मल्ला नटा झल्ला ग्रन्थिकाः सौखशायिकाः
सूतमागधसंघाश्चाप्यस्तुवन्वै जनार्दनम्
कुरुवंशस्तवाख्याभिराशीर्भिर्भरतर्षभ ७
उत्थाय तु यथाकालमुत्तरा यदुनन्दनम्
अभ्यवादयत प्रीता सह पुत्रेण भारत
ततस्तस्यै ददौ प्रीतो बहुरत्नं विशेषतः ८
तथान्ये वृष्णिशार्दूला नाम चास्याकरोत्प्रभुः
पितुस्तव महाराज सत्यसंधो जनार्दनः ९
परिक्षीणे कुले यस्माज्जातोऽयमभिमन्युजः
परिक्षिदिति नामास्य भवत्वित्यब्रवीत्तदा १०
सोऽवर्धत यथाकालं पिता तव नराधिप
मनः प्रह्लादनश्चासीत्सर्वलोकस्य भारत ११
मासजातस्तु ते वीर पिता भवति भारत
अथाजग्मुः सुबहुलं रत्नमादाय पाण्डवाः १२
तान्समीपगताञ्श्रुत्वा निर्ययुर्वृष्णिपुंगवाः
अलंचक्रुश्च माल्यौघैः पुरुषा नागसाह्वयम् १३
पताकाभिर्विचित्राभिर्ध्वजैश्च विविधैरपि
वेश्मानि समलंचक्रुः पौराश्चापि जनाधिप १४
देवतायतनानां च पूजा बहुविधास्तथा
संदिदेशाथ विदुरः पाण्डुपुत्रप्रियेप्सया १५
राजमार्गाश्च तत्रासन्सुमनोभिरलंकृताः
शुशुभे तत्पुरं चापि समुद्रौघनिभस्वनम् १६
नर्तकैश्चापि नृत्यद्भिर्गायनानां च निस्वनैः
आसीद्वैश्रवणस्येव निवासस्तत्पुरं तदा १७
बन्दिभिश्च नरै राजन्स्त्रीसहायैः सहस्रशः
तत्र तत्र विविक्तेषु समन्तादुपशोभितम् १८
पताका धूयमानाश्च श्वसता मातरिश्वना
अदर्शयन्निव तदा कुरून्वै दक्षिणोत्तरान् १९
अघोषयत्तदा चापि पुरुषो राजधूर्गतः
सर्वरात्रिविहारोऽद्य रत्नाभरणलक्षणः २०

इति श्रीमहाभारते आश्वमेधिकपर्वणि एकोनसप्ततितमोऽध्यायः ६९

सप्ततितमोऽध्यायः

वैशम्पायन उवाच
तान्समीपगताञ्श्रुत्वा पाण्डवाञ्शत्रुकर्शनः
वासुदेवः सहामात्यः प्रत्युद्यातो दिदृक्षया १
ते समेत्य यथान्यायं पाण्डवा वृष्णिभिः सह
विविशुः सहिता राजन्पुरं वारणसाह्वयम् २
महतस्तस्य सैन्यस्य खुरनेमिस्वनेन च
द्यावापृथिव्यौ खं चैव शब्देनासीत्समावृतम् ३
ते कोशमग्रतः कृत्वा विविशुः स्वपुरं तदा
पाण्डवाः प्रीतमनसः सामात्याः ससुहृद्गणाः ४
ते समेत्य यथान्यायं धृतराष्ट्रं जनाधिपम्
कीर्तयन्तः स्वनामानि तस्य पादौ ववन्दिरे ५
धृतराष्ट्रादनु च ते गान्धारीं सुबलात्मजाम्
कुन्तीं च राजशार्दूल तदा भरतसत्तमाः ६
विदुरं पूजयित्वा च वैश्यापुत्रं समेत्य च
पूज्यमानाः स्म ते वीरा व्यराजन्त विशां पते ७
ततस्तत्परमाश्चर्यं विचित्रं महदद्भुतम्
शुश्रुवुस्ते तदा वीराः पितुस्ते जन्म भारत ८
तदुपश्रुत्य ते कर्म वासुदेवस्य धीमतः
पूजार्हं पूजयामासुः कृष्णं देवकिनन्दनम् ९
ततः कतिपयाहस्य व्यासः सत्यवतीसुतः
आजगाम महातेजा नगरं नागसाह्वयम् १०
तस्य सर्वे यथान्यायं पूजां चक्रुः कुरूद्वहाः
सह वृष्ण्यन्धकव्याघ्रैरुपासांचक्रिरे तदा ११
तत्र नानाविधाकाराः कथाः समनुकीर्त्य वै
युधिष्ठिरो धर्मसुतो व्यासं वचनमब्रवीत् १२
भवत्प्रसादाद्भगवन्यदिदं रत्नमाहृतम्
उपयोक्तुं तदिच्छामि वाजिमेधे महाक्रतौ १३

तदनुज्ञातुमिच्छामि भवता मुनिसत्तम
त्वदधीना वयं सर्वे कृष्णस्य च महात्मनः १४
व्यास उवाच
अनुजानामि राजंस्त्वां क्रियतां यदनन्तरम्
यजस्व वाजिमेधेन विधिवद्दक्षिणावता १५
अश्वमेधो हि राजेन्द्र पावनः सर्वपाप्मनाम्
तेनेष्ट्वा त्वं विपाप्मा वै भविता नात्र संशयः १६
वैशम्पायन उवाच
इत्युक्तः स तु धर्मात्मा कुरुराजो युधिष्ठिरः
अश्वमेधस्य कौरव्य चकाराहरणे मतिम् १७
समनुज्ञाप्य तु स तं कृष्णद्वैपायनं नृपः
वासुदेवमथामन्त्र्य वाग्मी वचनमब्रवीत् १८
देवकी सुप्रजा देवी त्वया पुरुषसत्तम
यद्ब्रूयां त्वां महाबाहो तत्कृथास्त्वमिहाच्युत १९
त्वत्प्रभावार्जितान्भोगानश्नीम यदुनन्दन
पराक्रमेण बुद्ध्या च त्वयेयं निर्जिता मही २०
दीक्षयस्व त्वमात्मानं त्वं नः परमको गुरुः
त्वयीष्टवति धर्मज्ञ विपाप्मा स्यामहं विभो
त्वं हि यज्ञोऽक्षरः सर्वस्त्वं धर्मस्त्वं प्रजापतिः २१
वासुदेव उवाच
त्वमेवैतन्महाबाहो वक्तुमर्हस्यरिंदम
त्वं गतिः सर्वभूतानामिति मे निश्चिता मतिः २२
त्वं चाद्य कुरुवीराणां धर्मेणाभिविराजसे
गुणभूताः स्म ते राजंस्त्वं नो राजन्मतो गुरुः २३
यजस्व मदनुज्ञातः प्राप्त एव क्रतुर्मया
युनक्तु नो भवान्कार्ये यत्र वाञ्छसि भारत
सत्यं ते प्रतिजानामि सर्वं कर्तास्मि तेऽनघ २४
भीमसेनार्जुनौ चैव तथा माद्रवतीसुतौ
इष्टवन्तो भविष्यन्ति त्वयीष्टवति भारत २५

इति श्रीमहाभारते आश्वमेधिकपर्वणि सप्ततितमोऽध्यायः ७०

## एक सप्ततितमोऽध्यायः

वैशम्पायन उवाच
एवमुक्तस्तु कृष्णेन धर्मपुत्रो युधिष्ठिरः
व्यासमामन्त्र्य मेधावी ततो वचनमब्रवीत् १
यथा कालं भवान्वेत्ति हयमेधस्य तत्त्वतः
दीक्षयस्व तदा मा त्वं त्वय्यायत्तो हि मे क्रतुः २
व्यास उवाच
अहं पैलोऽथ कौन्तेय याज्ञवल्क्यस्तथैव च
विधानं यद्यथाकालं तत्कर्तारो न संशयः ३
चैत्र्यां हि पौर्णमास्यां च तव दीक्षा भविष्यति
संभाराः संभ्रियन्तां ते यज्ञार्थं पुरुषर्षभ ४
अश्व विद्या विदश्चैव सूता विप्राश्च तद्विदः
मेध्यमश्वं परीक्षन्तां तव यज्ञार्थसिद्धये ५
तमुत्सृज्य यथाशास्त्रं पृथिवीं सागराम्बराम्
स पर्येतु यशो नाम्ना तव पार्थिव वर्धयन् ६
वैशम्पायन उवाच
इत्युक्तः स तथेत्युक्त्वा पाण्डवः पृथिवीपतिः
चकार सर्वं राजेन्द्र यथोक्तं ब्रह्मवादिना
संभाराश्चैव राजेन्द्र सर्वे संकल्पिताभवन् ७
स संभारान्समाहृत्य नृपो धर्मात्मजस्तदा
न्यवेदयदमेयात्मा कृष्णद्वैपायनाय वै ८
ततोऽब्रवीन्महातेजा व्यासो धर्मात्मजं नृपम्
यथाकालं यथायोगं सज्जाः स्म तव दीक्षणे ९
स्फ्यश्च कूर्चश्च सौवर्णो यच्चान्यदपि कौरव
तत्र योग्यं भवेत्किंचित्तद्रौक्मं क्रियतामिति १०
अश्वश्चोत्सृज्यतामद्य पृथ्व्यामथ यथाक्रमम्
सुगुप्तश्च चरत्वेष यथाशास्त्रं युधिष्ठिर ११
युधिष्ठिर उवाच
अयमश्वो मया ब्रह्मन्नुत्सृष्टः पृथिवीमिमाम्
चरिष्यति यथाकामं तत्र वै संविधीयताम् १२

पृथिवीं पर्यटन्तं हि तुरगं कामचारिणम्
कः पालयेदिति मुने तद्भवान्वक्तुमर्हति १३
वैशम्पायन उवाच
इत्युक्तः स तु राजेन्द्र कृष्णद्वैपायनोऽब्रवीत्
भीमसेनादवरजः श्रेष्ठः सर्वधनुष्मताम् १४
जिष्णुः सहिष्णुर्धृष्णुश्च स एनं पालयिष्यति
शक्तः स हि महीं जेतुं निवातकवचान्तकः १५
तस्मिन्ह्यस्त्राणि दिव्यानि दिव्यं संहननं तथा
दिव्यं धनुश्चेषुधी च स एनमनुयास्यति १६
स हि धर्मार्थकुशलः सर्वविद्याविशारदः
यथाशास्त्रं नृपश्रेष्ठ चारयिष्यति ते हयम् १७
राजपुत्रो महाबाहुः श्यामो राजीवलोचनः
अभिमन्योः पिता वीरः स एनमनुयास्यति १८
भीमसेनोऽपि तेजस्वी कौन्तेयोऽमितविक्रमः
समर्थो रक्षितुं राष्ट्रं नकुलश्च विशां पते १९
सहदेवस्तु कौरव्य समाधास्यति बुद्धिमान्
कुटुम्बतन्त्रं विधिवत्सर्वमेव महायशाः २०
तत्तु सर्वं यथान्यायमुक्तं कुरुकुलोद्वहः
चकार फल्गुनं चापि संदिदेश हयं प्रति २१
युधिष्ठिर उवाच
एह्यर्जुन त्वया वीर हयोऽय परिपाल्यताम्
त्वमर्हो रक्षितुं ह्येनं नान्यः कश्चन मानवः २२
ये चापि त्वां महाबाहो प्रत्युदीयुर्नराधिपाः
तैर्विग्रहो यथा न स्यात्तथा कार्यं त्वयानघ २३
आख्यातव्यश्च भवता यज्ञोऽय मम सर्वशः
पार्थिवेभ्यो महाबाहो समये गम्यतामिति २४
एवमुक्त्वा स धर्मात्मा भ्रातरं सव्यसाचिनम्
भीमं च नकुलं चैव पुरगुप्तौ समादधत् २५
कुटुम्बतन्त्रे च तथा सहदेवं युधां पतिम्
अनुमान्य महीपालं धृतराष्ट्रं युधिष्ठिरः २६

इति श्रीमहाभारते आश्वमेधिकपर्वणि एकसप्ततितमोऽध्यायः ७१

द्विसप्ततितमोऽध्यायः

वैशम्पायन उवाच
दीक्षाकाले तु संप्राप्ते ततस्ते सुमहर्त्विजः
विधिवद्दीक्षयामासुरश्वमेधाय पार्थिवम् १
कृत्वा स पशुबन्धांश्च दीक्षितः पाण्डुनन्दनः
धर्मराजो महातेजाः सहर्त्विग्भिर्व्यरोचत २
हयश्च हयमेधार्थं स्वयं स ब्रह्मवादिना
उत्सृष्टः शास्त्रविधिना व्यासेनामिततेजसा ३
स राजा धर्मजो राजन्दीक्षितो विबभौ तदा
हेममाली रुक्मकण्ठः प्रदीप्त इव पावकः ४
कृष्णाजिनी दण्डपाणिः क्षौमवासाः स धर्मजः
विबभौ द्युतिमान्भूयः प्रजापतिरिवाध्वरे ५
तथैवास्यर्त्विजः सर्वे तुल्यवेषा विशां पते
बभूवुरर्जुनश्चैव प्रदीप्त इव पावकः ६
श्वेताश्वः कृष्णसारं तं ससाराश्वं धनंजयः
विधिवत्पृथिवीपाल धर्मराजस्य शासनात् ७
विक्षिपन्गाण्डिवं राजन्बद्धगोधाङ्गुलित्रवान्
तमश्वं पृथिवीपाल मुदा युक्तः ससार ह ८
आकुमारं तदा राजन्नागमत्तत्पुरं विभो
द्रष्टुकामं कुरुश्रेष्ठं प्रयास्यन्तं धनंजयम् ९
तेषामन्योन्यसंमर्दादूष्मेव समजायत
दिदृक्षूणां हयं तं च तं चैव हयसारिणम् १०
ततः शब्दो महाराज दशाशाः प्रतिपूरयन्
बभूव प्रेक्षतां नृणां कुन्तीपुत्रं धनंजयम् ११
एष गच्छति कौन्तेयस्तुरगश्चैव दीप्तिमान्
यमन्वेति महाबाहुः संस्पृशन्धनुरुत्तमम् १२
एवं शुश्राव वदतां गिरो जिष्णुरुदारधीः
स्वस्ति तेऽस्तु व्रजारिष्टं पुनश्चैहीति भारत १३

अथापरे मनुष्येन्द्र पुरुषा वाक्यमब्रुवन्
नैनं पश्याम संमर्दे धनुरेतत्प्रदृश्यते १४
एतद्धि भीमनिर्ह्रादं विश्रुतं गाण्डिवं धनुः
स्वस्ति गच्छत्वरिष्टं वै पन्थानमकुतोभयम्
निवृत्तमेनं द्रक्ष्यामः पुनरेवं च तेऽब्रुवन् १५
एवमाद्या मनुष्याणां स्त्रीणां च भरतर्षभ
शुश्राव मधुरा वाचः पुनः पुनरुदीरिताः १६
याज्ञवल्क्यस्य शिष्यश्च कुशलो यज्ञकर्मणि
प्रायात्पार्थेन सहितः शान्त्यर्थं वेदपारगः १७
ब्राह्मणाश्च महीपाल बहवो वेदपारगाः
अनुजग्मुर्महात्मानं क्षत्रियाश्च विशोऽपि च १८
पाण्डवैः पृथिवीमश्वो निर्जितामस्त्रतेजसा
चचार स महाराज यथादेशं स सत्तम १९
तत्र युद्धानि वृत्तानि यान्यासन्पाण्डवस्य ह
तानि वक्ष्यामि ते वीर विचित्राणि महान्ति च २०
स हयः पृथिवीं राजन्प्रदक्षिणमरिंदम
ससारोत्तरतः पूर्वं तन्निबोध महीपते २१
अवमृद्नन्स राष्ट्राणि पार्थिवानां हयोत्तमः
शनैस्तदा परिययौ श्वेताश्वश्च महारथः २२
तत्र संकलना नास्ति राज्ञामयुतशस्तदा
येऽयुध्यन्त महाराज क्षत्रिया हतबान्धवाः २३
किराता विकृता राजन्बहवोऽसिधनुर्धराः
म्लेच्छाश्चान्ये बहुविधाः पूर्वं विनिकृता रणे २४
आर्याश्च पृथिवीपालाः प्रहृष्टनरवाहनाः
समीयुः पाण्डुपुत्रेण बहवो युद्धदुर्मदाः २५
एवं युद्धानि वृत्तानि तत्र तत्र महीपते
अर्जुनस्य महीपालैर्नानादेशनिवासिभिः २६
यानि तूभयतो राजन्प्रतप्तानि महान्ति च
तानि युद्धानि वक्ष्यामि कौन्तेयस्य तवानघ २७
इति श्रीमहाभारते आश्वमेधिकपर्वणि द्विसप्ततितमोऽध्यायः ७२

त्रिसप्ततितमोऽध्यायः

वैशम्पायन उवाच
त्रिगर्तैरभवद्युद्धं कृतवैरैः किरीटिनः
महारथसमाज्ञातैर्हतानां पुत्रनप्तृभिः १
ते समाज्ञाय संप्राप्तं यज्ञियं तुरगोत्तमम्
विषयान्ते ततो वीरा दंशिताः पर्यवारयन् २
रथिनो बद्धतूणीराः सदश्वैः समलंकृतैः
परिवार्य हयं राजन्ग्रहीतुं स्त्रंप्रचक्रमुः ३
ततः किरीटी संचिन्त्य तेषां राज्ञां चिकीर्षितम्
वारयामास तान्वीरान्सान्त्वपूर्वमरिंदमः ४
तमनादृत्य ते सर्वे शरैरभ्यहनंस्तदा
तमोरजोभ्यां संछन्नांस्तान्किरीटी न्यवारयत् ५
अब्रवीच्च ततो जिष्णुः प्रहसन्निव भारत
निवर्तध्वमधर्मज्ञाः श्रेयो जीवितमेव वः ६
स हि वीरः प्रयास्यन्वै धर्मराजेन वारितः
हतबान्धवा न ते पार्थ हन्तव्याः पार्थिवा इति ७
स तदा तद्वचः श्रुत्वा धर्मराजस्य धीमतः
तान्निवर्तध्वमित्याह न न्यवर्तन्त चापि ते ८
ततस्त्रिगर्तराजानं सूर्यवर्माणमाहवे
वितत्य शरजालेन प्रजहास धनंजयः ९
ततस्ते रथघोषेण खुरनेमिस्वनेन च
पूरयन्तो दिशः सर्वा धनंजयमुपाद्रवन् १०
सूर्यवर्मा ततः पार्थे शराणां नतपर्वणाम्
शतान्यमुञ्चद्राजेन्द्र लघ्वस्त्रमभिदर्शयन् ११
तथैवान्ये महेष्वासा ये तस्यैवानुयायिनः
मुमुचुः शरवर्षाणि धनंजयवधैषिणः १२
स ताञ्ज्यापुङ्खनिर्मुक्तैर्बहुभिः सुबहूञ्शरान्
चिच्छेद पाण्डवो राजंस्ते भूमौ न्यपतंस्तदा १३
केतुवर्मा तु तेजस्वी तस्यैवावरजो युवा
युयुधे भ्रातुरर्थाय पाण्डवेन महात्मना १४

तमापतन्तं संप्रेक्ष्य केतुवर्माणमाहवे
अभ्यघ्नन्निशितैर्बाणैर्बीभत्सुः परबीरहा १५
केतुवर्मण्यभिहते धृतवर्मा महारथः
रथेनाशु समावृत्य शरैर्जिष्णुमवाकिरत् १६
तस्य तां शीघ्रतामीक्ष्य तुतोषातीव वीर्यवान्
गुडाकेशो महातेजा बालस्य धृतवर्मणः १७
न संदधानं ददृशे नाददानं च तं तदा
किरन्तमेव स शरान्ददृशे पाकशासनिः १८
स तु तं पूजयामास धृतवर्माणमाहवे
मनसा स मुहूर्तं वै रणे समभिहर्षयन् १९
तं पन्नगमिव क्रुद्धं कुरुवीरः स्मयन्निव
प्रीतिपूर्वं महाराज प्राणैर्न व्यपरोपयत् २०
स तथा रक्ष्यमाणो वै पार्थेनामिततेजसा
धृतवर्मा शरं तीक्ष्णं मुमोच विजये तदा २१
स तेन विजयस्तूर्णमस्यन्विद्धः करे भृशम्
मुमोच गाण्डीवं दुःखात्तत्पपाताथ भूतले २२
धनुषः पततस्तस्य सव्यसाचिकराद्विभो
इन्द्रस्येवायुधस्यासीद्रूपं भरतसत्तम २३
तस्मिन्निपतिते दिव्ये महाधनुषि पार्थिव
जहास सस्वनं हासं धृतवर्मा महाहवे २४
ततो रोषान्वितो जिष्णुः प्रमृज्य रुधिरं करात्
धनुरादत्त तद्दिव्यं शरवर्षं ववर्ष च २५
ततो हलहलाशब्दो दिवस्पृगभवत्तदा
नानाविधानां भूतानां तत्कर्मातीव शंसताम् २६
ततः संप्रेक्ष्य तं क्रुद्धं कालान्तकयमोपमम्
जिष्णुं त्रैगर्तका योधास्त्वरिताः पर्यवारयन् २७
अभिसृत्य परीप्सार्थं ततस्ते धृतवर्मणः
परिवव्रुर्गुडाकेशं तत्राक्रुध्यद्धनंजयः २८
ततो योधाञ्जघानाशु तेषां स दश चाष्ट च
महेन्द्रवज्रप्रतिमैरायसैर्निशितैः शरैः २९

तांस्तु प्रभग्नान्संप्रेक्ष्य त्वरमाणो धनंजयः
शरैराशीविषाकारैर्जघान स्वनवद्धसन् ३०
ते भग्नमनसः सर्वे त्रैगर्तकमहारथाः
दिशो विदुद्रुवुः सर्वा धनंजयशरार्दिताः ३१
त ऊचुः पुरुषव्याघ्रं संशप्तकनिषूदनम्
तव स्म किंकराः सर्वे सर्वे च वशगास्तव ३२
आज्ञापयस्व नः पार्थ प्रह्वान्प्रेष्यानवस्थितान्
करिष्यामः प्रियं सर्वं तव कौरवनन्दन ३३
एतदाज्ञाय वचनं सर्वांस्तानब्रवीत्तदा
जीवितं रक्षत नृपाः शासनं गृह्यतामिति ३४
इति श्रीमहाभारते आश्वमेधिकपर्वणि त्रिसप्ततितमोऽध्यायः ७३

## चतुःसप्ततितमोऽध्यायः

वैशम्पायन उवाच
प्राग्ज्योतिषमथाभ्येत्य व्यचरत्स हयोत्तमः
भगदत्तात्मजस्तत्र निर्ययौ रणकर्कशः १
स हयं पाण्डुपुत्रस्य विषयान्तमुपागतम्
युयुधे भरतश्रेष्ठ वज्रदत्तो महीपतिः २
सोऽभिनिर्याय नगराद्भगदत्तसुतो नृपः
अश्वमायान्तमुन्मथ्य नगराभिमुखो ययौ ३
तमालक्ष्य महाबाहुः कुरूणामृषभस्तदा
गाण्डीवं विक्षिपंस्तूर्णं सहसा समुपाद्रवत् ४
ततो गाण्डीवनिर्मुक्तैरिषुभिर्मोहितो नृपः
हयमुत्सृज्य तं वीरस्ततः पार्थमुपाद्रवत् ५
पुनः प्रविश्य नगरं दंशितः स नृपोत्तमः
आरुह्य नागप्रवरं निर्ययौ युद्धकाङ्क्षया ६
पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्धनि
दोधूयता चामरेण श्वेतेन च महारथः ७
ततः पार्थं समासाद्य पाण्डवानां महारथम्
आह्वयामास कौरव्यं बाल्यान्मोहाच्च संयुगे ८

स वारणं नगप्रख्यं प्रभिन्नकरटामुखम्
प्रेषयामास संक्रुद्धस्ततः श्वेतहयं प्रति ९
विक्षरन्तं यथा मेघं परवारणवारणम्
शास्त्रवत्कल्पितं संख्ये त्रिसाहं युद्धदुर्मदम् १०
प्रचोद्यमानः स गजस्तेन राज्ञा महाबलः
तदाङ्कुशेन विबभावुत्पतिष्यन्निवाम्बरम् ११
तमापतन्तं संप्रेक्ष्य क्रुद्धो राजन्धनंजयः
भूमिष्ठो वारणगतं योधयामास भारत १२
वज्रदत्तस्तु संक्रुद्धो मुमोचाशु धनंजये
तोमरानग्निसंकाशाञ्शलभानिव वेगितान् १३
अर्जुनस्तानसंप्राप्तान्गाण्डीवप्रेषितैः शरैः
द्विधा त्रिधा च चिच्छेद ख एव खगमैस्तदा १४
स तान्दृष्ट्वा तथा छिन्नांस्तोमरान्भगदत्तजः
इषूनसक्तांस्त्वरितः प्राहिणोत्पाण्डवं प्रति १५
ततोऽजुनस्तूर्णतरं रुक्मपुङ्खानजिह्मगान्
प्रेषयामास संक्रुद्धो भगदत्तात्मजं प्रति १६
स तैर्विद्धो महातेजा वज्रदत्तो महाहवे
भृशाहतः पपातोर्व्यां न त्वेनमजहात्स्मृतिः १७
ततः स पुनरारुह्य वारणप्रवरं रणे
अव्यग्रः प्रेषयामास जयार्थी विजयं प्रति १८
तस्मै बाणांस्ततो जिष्णुर्निर्मुक्ताशीविषोपमान्
प्रेषयामास संक्रुद्धो ज्वलितानिव पावकान् १९
स तैर्विद्धो महानागो विस्रवन्रुधिरं बभौ
हिमवानिव शैलेन्द्रो बहुप्रस्रवणस्तदा २०
इति श्रीमहाभारते आश्वमेधिकपर्वणि चतुःसप्ततितमोऽध्यायः ७४

पञ्चसप्ततितमोऽध्यायः

वैशम्पायन उवाच
एवं त्रिरात्रमभवत्तद्युद्धं भरतर्षभ
अर्जुनस्य नरेन्द्रेण वृत्रेणेव शतक्रतोः १

ततश्चतुर्थे दिवसे वज्रदत्तो महाबलः
जहास सस्वनं हासं वाक्यं चेदमथाब्रवीत् २
अर्जुनार्जुन तिष्ठस्व न मे जीवन्विमोक्ष्यसे
त्वां निहत्य करिष्यामि पितुस्तोयं यथाविधि ३
त्वया वृद्धो मम पिता भगदत्तः पितुः सखा
हतो वृद्धोऽपचायित्वाच्छिशुं मामद्य योधय ४
इत्येवमुक्त्वा संक्रुद्धो वज्रदत्तो नराधिपः
प्रेषयामास कौरव्य वारणं पाण्डवं प्रति ५
संप्रेष्यमाणो नागेन्द्रो वज्रदत्तेन धीमता
उत्पतिष्यन्निवाकाशमभिदुद्राव पाण्डवम् ६
अग्रहस्तप्रमुक्तेन शीकरेण स फल्गुनम्
समुक्षत महाराज शैलं नील इवाम्बुदः ७
स तेन प्रेषितो राज्ञा मेघवन्निनदन्मुहुः
मुखाडम्बरघोषेण समाद्रवत फल्गुनम् ८
स नृत्यन्निव नागेन्द्रो वज्रदत्तप्रचोदितः
आससाद द्रुतं राजन्कौरवाणां महारथम् ९
तमापतन्तं संप्रेक्ष्य वज्रदत्तस्य वारणम्
गाण्डीवमाश्रित्य बली न व्यकम्पत शत्रुहा १०
चुक्रोध बलवच्चापि पाण्डवस्तस्य भूपतेः
कार्यविघ्नमनुस्मृत्य पूर्ववैरं च भारत ११
ततस्तं वारणं क्रुद्धः शरजालेन पाण्डवः
निवारयामास तदा वेलेव मकरालयम् १२
स नागप्रवरो वीर्यादर्जुनेन निवारितः
तस्थौ शरैर्वितुन्नाङ्गः श्वाविच्छललितो यथा १३
निवारितं गजं दृष्ट्वा भगदत्तात्मजो नृपः
उत्ससर्ज शितान्बाणानर्जुने क्रोधमूर्छितः १४
अर्जुनस्तु महाराज शरैः शरविघातिभिः
वारयामास तानस्तांस्तदद्भुतमिवाभवत् १५
ततः पुनरतिक्रुद्धो राजा प्राग्ज्योतिषाधिपः
प्रेषयामास नागेन्द्रं बलवच्छ्वसनोपमम् १६

तमापतन्तं संप्रेक्ष्य बलवान्पाकशासनिः
नाराचमग्निसंकाशं प्राहिणोद्वारणं प्रति १७
स तेन वारणो राजन्मर्मण्यभिहतो भृशम्
पपात सहसा भूमौ वज्ररुग्ण इवाचलः १८
स पतञ्शुशुभे नागो धनंजयशराहतः
विशन्निव महाशैलो महीं वज्रप्रपीडितः १९
तस्मिन्निपतिते नागे वज्रदत्तस्य पाण्डवः
तं न भेतव्यमित्याह ततो भूमिगतं नृपम् २०
अब्रवीद्धि महातेजाः प्रस्थितं मां युधिष्ठिरः
राजानस्ते न हन्तव्या धनंजय कथंचन २१
सर्वमेतन्नरव्याघ्र भवत्वेतावता कृतम्
योधाश्चापि न हन्तव्या धनंजय रणे त्वया २२
वक्तव्याश्चापि राजानः सर्वैः सह सुहृज्जनैः
युधिष्ठिरस्याश्वमेधो भवद्भिरनुभूयताम् २३
इति भ्रातृवचः श्रुत्वा न हन्मि त्वां जनाधिप
उत्तिष्ठ न भयं तेऽस्ति स्वस्तिमान्गच्छ पार्थिव २४
आगच्छेथा महाराज परां चैत्रीमुपस्थिताम्
तदाश्वमेधो भविता धर्मराजस्य धीमतः २५
एवमुक्तः स राजा तु भगदत्तात्मजस्तदा
तथेत्येवाब्रवीद्वाक्यं पाण्डवेनाभिनिर्जितः २६
इति श्रीमहाभारते आश्वमेधिकपर्वणि पञ्चसप्ततितमोऽध्यायः ७५

## षट्सप्ततितमोऽध्यायः

वैशम्पायन उवाच
सैन्धवैरभवद्युद्धं ततस्तस्य किरीटिनः
हतशेषैर्महाराज हतानां च सुतैरपि १
तेऽवतीर्णमुपश्रुत्य विषयं श्वेतवाहनम्
प्रत्युद्ययुरमृष्यन्तो राजानः पाण्डवर्षभम् २
अश्वं च तं परामृश्य विषयान्ते विषोपमाः
न भयं चक्रिरे पार्थाद्भीमसेनादनन्तरात् ३

तेऽविदूराद्धनुष्पाणिं यज्ञियस्य हयस्य च
बीभत्सुं प्रत्यपद्यन्त पदातिनमवस्थितम् ४
ततस्ते तु महावीर्या राजानः पर्यवारयन्
जिगीषन्तो नरव्याघ्राः पूर्वं विनिकृता युधि ५
ते नामान्यथ गोत्राणि कर्माणि विविधानि च
कीर्तयन्तस्तदा पार्थं शरवर्षैरवाकिरन् ६
ते किरन्तः शरांस्तीक्ष्णान्वारणेन्द्रनिवारणान्
रणे जयमभीप्सन्तः कौन्तेयं पर्यवारयन् ७
तेऽसमीक्ष्यैव तं वीरमुग्रकर्माणमाहवे
सर्वे युयुधिरे वीरा रथस्थास्तं पदातिनम् ८
ते तमाजघ्निरे वीरं निवातकवचान्तकम्
संशप्तकनिहन्तारं हन्तारं सैन्धवस्य च ९
ततो रथसहस्रेण हयानामयुतेन च
कोष्ठकीकृत्य कौन्तेयं संप्रहृष्टमयोधयन् १०
संस्मरन्तो वधं वीराः सिन्धुराजस्य धीमतः
जयद्रथस्य कौरव्य समरे सव्यसाचिना ११
ततः पर्जन्यवत्सर्वे शरवृष्टिमवासृजन्
तैः कीर्णःशुशुभे पार्थो रविर्मेघान्तरे यथा १२
स शरैः समवच्छन्नो ददृशे पाण्डवर्षभः
पञ्जरान्तरसंचारी शकुन्त इव भारत १३
ततो हाहाकृतं सर्वं कौन्तेये शरपीडिते
त्रैलोक्यमभवद्राजन्रविश्चासीद्रजोरुणः १४
ततो ववौ महाराज मारुतो रोमहर्षणः
राहुरग्रसदादित्यं युगपत्सोममेव च १५
उल्काश्च जघ्निरे सूर्यं विकीर्यन्त्यः समन्ततः
वेपथुश्चाभवद्राजन्कैलासस्य महागिरेः १६
मुमुचुःश्वासमत्युष्णं दुःखशोकसमन्विताः
सप्तर्षयो जातभयास्तथा देवर्षयोऽपि च १७
शशश्चाशु विनिर्भिद्य मण्डलं शशिनोऽपतत्
विपरीतस्तदा राजंस्तस्मिन्नुत्पातलक्षणे १८

रासभारुणसंकाशा धनुष्मन्तः सविद्युतः
आवृत्य गगनं मेघा मुमुचुर्मांसशोणितम् १९
एवमासीत्तदा वीरे शरवर्षाभिसंवृते
लोकेऽस्मिन्भरतश्रेष्ठ तदद्भुतमिवाभवत् २०
तस्य तेनावकीर्णस्य शरजालेन सर्वशः
मोहात्पपात गाण्डीवमावापश्च करादपि २१
तस्मिन्मोहमनुप्राप्ते शरजालं महत्तरम्
सैन्धवा मुमुचुस्तूर्णं गतसत्त्वे महारथे २२
ततो मोहसमापन्नं ज्ञात्वा पार्थं दिवौकसः
सर्वे वित्रस्तमनसस्तस्य शान्तिपराभवन् २३
ततो देवर्षयः सर्वे तथा सप्तर्षयोऽपि च
ब्रह्मर्षयश्च विजयं जेपुः पार्थस्य धीमतः २४
ततः प्रदीपिते देवैः पार्थतेजसि पार्थिव
तस्थावचलवद्धीमान्संग्रामे परमास्त्रवित् २५
विचकर्ष धनुर्दिव्यं ततः कौरवनन्दनः
यन्त्रस्येवेह शब्दोऽभून्महांस्तस्य पुनः पुनः २६
ततः स शरवर्षाणि प्रत्यमित्रान्प्रति प्रभुः
ववर्ष धनुषा पार्थो वर्षाणीव सुरेश्वरः २७
ततस्ते सैन्धवा योधाः सर्व एव सराजकाः
नादृश्यन्त शरैः कीर्णाः शलभैरिव पावकाः २८
तस्य शब्देन वित्रेसुर्भयार्ताश्च विदुद्रुवुः
मुमुचुश्चाश्रु शोकार्ताः सुषुपुश्चापि सैन्धवाः २९
तांस्तु सर्वान्नरश्रेष्ठ सर्वतो विचरन्बली
अलातचक्रवद्राजञ्शरजालैः समर्पयत् ३०
तदिन्द्रजालप्रतिमं बाणजालममित्रहा
व्यसृजद्दिक्षु सर्वासु महेन्द्र इव वज्रभृत् ३१
मेघजालनिभं सैन्यं विदार्य स रविप्रभः
विबभौ कौरवश्रेष्ठः शरदीव दिवाकरः ३२

इति श्रीमहाभारते आश्वमेधिकपर्वणि षट्सप्ततितमोऽध्यायः ७६

सप्तसप्ततितमोऽध्यायः

वैशम्पायन उवाच

ततो गाण्डीवभृच्छूरो युद्धाय समवस्थितः
विबभौ युधि दुर्धर्षो हिमवानचलो यथा १
ततः सैन्धवयोधास्ते पुनरेव व्यवस्थितः
विमुञ्चन्तः सुसंरब्धाः शरवर्षाणि भारत २
तान्प्रसह्य महावीर्यः पुनरेव व्यवस्थितान्
ततः प्रोवाच कौन्तेयो मुमूर्षूञ्श्लक्ष्णया गिरा ३
युध्यध्वं परया शक्त्या यतध्वं च वधे मम
कुरुध्वं सर्वकार्याणि महद्वो भयमागतम् ४
एष योत्स्यामि वः सर्वान्निवार्य शरवागुराम्
तिष्ठध्वं युद्धमनसो दर्पं विनयितास्मि वः ५
एतावदुक्त्वा कौरव्यो रुषा गाण्डीवभृत्तदा
ततोऽथ वचनं स्मृत्वा भ्रातुर्ज्येष्ठस्य भारत ६
न हन्तव्या रणे तात क्षत्रिया विजिगीषवः
जेतव्याश्चेति यत्प्रोक्तं धर्मराज्ञा महात्मना
चिन्तयामास च तदा फल्गुनः पुरुषर्षभः ७
इत्युक्तोऽह नरेन्द्रेण न हन्तव्या नृपा इति
कथं तन्न मृषेह स्याद्धर्मराजवचः शुभम् ८
न हन्येरंश्च राजानो राज्ञश्चाज्ञा कृता भवेत्
इति संचिन्त्य स तदा भ्रातुः प्रियहिते रतः
प्रोवाच वाक्यं धर्मज्ञः सैन्धवान्युद्धदुर्मदान् ९
बालान्स्त्रियो वा युष्माकं न हनिष्ये व्यवस्थितान्
यश्च वक्ष्यति संग्रामे तवास्मीति पराजितः १०
एतच्छ्रुत्वा वचो मह्यं कुरुध्वं हितमात्मनः
अतोऽन्यथा कृच्छ्रगता भविष्यथ मयार्दिताः ११
एवमुक्त्वा तु तान्वीरान्युयुधे कुरुपुंगवः
अत्वरावानसंरब्धः संरब्धैर्विजिगीषुभिः १२
ततः शतसहस्राणि शराणां नतपर्वणाम्
मुमुचुः सैन्धवा राजंस्तदा गाण्डीवधन्वनि १३

स तानापततः क्रूरानाशीविषविषोपमान्
चिच्छेद निशितैर्बाणैरन्तरैव धनंजयः १४
छित्त्वा तु तानाशुगमान्कङ्कपत्राञ्शिलाशितान्
एकैकमेष दशभिर्बिभेद समरे शरैः १५
ततः प्रासांश्च शक्तीश्च पुनरेव धनंजये
जयद्रथं हतं स्मृत्वा चिक्षिपुः सैन्धवा नृपाः १६
तेषां किरीटी संकल्पं मोघं चक्रे महामनाः
सर्वांस्तानन्तरा छित्त्वा मुदा चुक्रोश पाण्डवः १७
तथैवापततां तेषां योधानां जयगृद्धिनाम्
शिरांसि पातयामास भल्लैः संनतपर्वभिः १८
तेषां प्रद्रवतां चैव पुनरेव च धावताम्
निवर्ततां च शब्दोऽभूत्पूर्णस्येव महोदधेः १९
ते वध्यमानास्तु तदा पार्थेनामिततेजसा
यथाप्राणं यथोत्साहं योधयामासुरर्जुनम् २०
ततस्ते फल्गुनेनाजौ शरैः संनतपर्वभिः
कृता विसंज्ञा भूयिष्ठाः क्लान्तवाहनसैनिकाः २१
तांस्तु सर्वान्परिग्लानान्विदित्वा धृतराष्ट्रजा
दुःशला बालमादाय नप्तारं प्रययौ तदा
सुरथस्य सुतं वीरं रथेनानागसं तदा २२
शान्त्यर्थं सर्वयोधानामभ्यगच्छत पाण्डवम्
सा धनंजयमासाद्य मुमोचार्तस्वरं तदा
धनंजयोऽपि तां दृष्ट्वा धनुर्विससृजे प्रभुः २३
समुत्सृष्टधनुः पार्थो विधिवद्भगिनीं तदा
प्राह किं करवाणीति सा च तं वाक्यमब्रवीत् २४
एष ते भरतश्रेष्ठ स्वस्त्रीयस्यात्मजः शिशुः
अभिवादयते वीर तं पश्य पुरुषर्षभ २५
इत्युक्तस्तस्य पितरं स पप्रच्छार्जुनस्तदा
क्वासाविति ततो राजन्दुःशला वाक्यमब्रवीत् २६
पितृशोकाभिसंतप्तो विषादार्तोऽस्य वै पिता
पञ्चत्वमगमद्वीर यथा तन्मे निबोध ह २७

स पूर्वं पितरं श्रुत्वा हतं युद्धे त्वयानघ
त्वामागतं च संश्रुत्य युद्धाय हयसारिणम्
पितुश्च मृत्युदुःखार्तोऽजहात्प्राणान्धनंजय २८
प्राप्तो बीभत्सुरित्येव नाम श्रुत्वैव तेऽनघ
विषादार्तः पपातोर्व्यां ममार च ममात्मजः २९
तं तु दृष्ट्वा निपतितं ततस्तस्यात्मजं विभो
गृहीत्वा समनुप्राप्ता त्वामद्य शरणैषिणी ३०
इत्युक्त्वार्तस्वरं सा तु मुमोच धृतराष्ट्रजा
दीना दीनं स्थितं पार्थमब्रवीच्चाप्यधोमुखम् ३१
स्वसारं मामवेक्षस्व स्वस्रीयात्मजमेव च
कर्तुमर्हसि धर्मज्ञ दयां मयि कुरूद्वह
विस्मृत्य कुरुराजानं तं च मन्दं जयद्रथम् ३२
अभिमन्योर्यथा जातः परिक्षित्परवीरहा
तथायं सुरथाज्जातो मम पौत्रो महाभुज ३३
तमादाय नरव्याघ्र संप्राप्तास्मि तवान्तिकम्
शमार्थं सर्वयोधानां शृणु चेदं वचो मम ३४
आगतोऽय महाबाहो तस्य मन्दस्य पौत्रकः
प्रसादमस्य बालस्य तस्मात्त्वं कर्तुमर्हसि ३५
एष प्रसाद्य शिरसा मया सार्धमरिंदम
याचते त्वां महाबाहो शमं गच्छ धनंजय ३६
बालस्य हतबन्धोश्च पार्थ किंचिदजानतः
प्रसादं कुरु धर्मज्ञ मा मन्युवशमन्वगाः ३७
तमनार्यं नृशंसं च विस्मृत्यास्य पितामहम्
आगस्कारिणमत्यर्थं प्रसादं कर्तुमर्हसि ३८
एवं ब्रुवत्यां करुणं दुःशलाया धनंजयः
संस्मृत्य देवीं गान्धारीं धृतराष्ट्रं च पार्थिवम्
प्रोवाच दुःखशोकार्तः क्षत्रधर्मं विगर्हयन् ३९
धिक्तं दुर्योधनं क्षुद्रं राज्यलुब्धं च मानिनम्
यत्कृते बान्धवाः सर्वे मया नीता यमक्षयम् ४०
इत्युक्त्वा बहु सान्त्वादि प्रसादमकरोज्जयः

परिष्वज्य च तां प्रीतो विससर्ज गृहान्प्रति ४१
दुःशला चापि तान्योधान्निवार्य महतो रणात्
संपूज्य पार्थं प्रययौ गृहान्प्रति शुभानना ४२
ततः सैन्धवकान्योधान्विनिर्जित्य नरर्षभः
पुनरेवान्वधावत्स तं हयं कामचारिणम् ४३
ससार यज्ञियं वीरो विधिवत्स विशां पते
तारामृगमिवाकाशे देवदेवः पिनाकधृक् ४४
स च वाजी यथेष्टेन तांस्तान्देशान्यथासुखम्
विचचार यथाकामं कर्म पार्थस्य वर्धयन् ४५
क्रमेण स हयस्त्वेवं विचरन्भरतर्षभ
मणिपूरपतेर्देशमुपायात्सहपाण्डवः ४६
इति श्रीमहाभारते आश्वमेधिकपर्वणि सप्तसप्ततितमोऽध्यायः ७७

## अष्टसप्ततितमोऽध्यायः

वैशम्पायन उवाच
श्रुत्वा तु नृपतिर्वीरं पितरं बभ्रुवाहनः
निर्ययौ विनयेनार्यो ब्राह्मणार्घ्यपुरःसरः १
मणिपूरेश्वरं त्वेवमुपयातं धनंजयः
नाभ्यनन्दत मेधावी क्षत्रधर्ममनुस्मरन् २
उवाच चैनं धर्मात्मा समन्युः फल्गुनस्तदा
प्रक्रियेयं न ते युक्ता बहिस्त्वं क्षत्रधर्मतः ३
संरक्ष्यमाणं तुरगं यौधिष्ठिरमुपागतम्
यज्ञियं विषयान्ते मां नायोत्सीः किं नु पुत्रक ४
धिक्त्वामस्तु सुदुर्बुद्धिं क्षत्रधर्मविशारदम्
यो मां युद्धाय संप्राप्तं साम्नैवाथो त्वमग्रहीः ५
न त्वया पुरुषार्थश्च कश्चिदस्तीह जीवता
यस्त्वं स्त्रीवद्युधा प्राप्तं साम्ना मां प्रत्यगृह्णथाः ६
यद्यहं न्यस्तशस्त्रस्त्वामागच्छेयं सुदुर्मते
प्रक्रियेयं ततो युक्ता भवेत्तव नराधम ७
तमेवमुक्तं भर्त्रा तु विदित्वा पन्नगात्मजा

अमृष्यमाणा भित्त्वोर्वीमुलूपी तमुपागमत् ८
सा ददर्श ततः पुत्रं विमृशन्तमधोमुखम्
संतर्ज्यमानमसकृद्भर्त्रा युद्धार्थिना विभो ९
ततः सा चारुसर्वाङ्गी तमुपेत्योरगात्मजा
उलूपी प्राह वचनं क्षत्रधर्मविशारदा १०
उलूपीं मां निबोध त्वं मातरं पन्नगात्मजाम्
कुरुष्व वचनं पुत्र धर्मस्ते भविताः परः ११
युध्यस्वैनं कुरुश्रेष्ठं धनंजयमरिंदम
एवमेष हि ते प्रीतो भविष्यति न संशयः १२
एवमुद्धर्षितो मात्रा स राजा बभ्रुवाहनः
मनश्चक्रे महातेजा युद्धाय भरतर्षभ १३
संनह्य काञ्चनं वर्म शिरस्त्राणं च भानुमत्
तूणीरशतसंबाधमारुरोह महारथम् १४
सर्वोपकरणैर्युक्तं युक्तमश्वैर्मनोजवैः
सुचक्रोपस्करं धीमान्हेमभाण्डपरिष्कृतम् १५
परमार्चितमुच्छ्रित्य ध्वजं सिंहं हिरण्मयम्
प्रययौ पार्थमुद्दिश्य स राजा बभ्रुवाहनः १६
ततोऽभ्येत्य हयं वीरो यज्ञियं पार्थरक्षितम्
ग्राहयामास पुरुषैर्हयशिक्षाविशारदैः १७
गृहीतं वाजिनं दृष्ट्वा प्रीतात्मा स धनंजयः
पुत्रं रथस्थं भूमिष्ठः संन्यवारयदाहवे १८
ततः स राजा तं वीरं शरव्रातैः सहस्रशः
अर्दयामास निशितैराशीविषविषोपमैः १९
तयोः समभवद्युद्धं पितुः पुत्रस्य चातुलम्
देवासुररणप्रख्यमुभयोः प्रीयमाणयोः २०
किरीटिनं तु विव्याध शरेण नतपर्वणा
जत्रुदेशे नरव्याघ्रः प्रहसन्बभ्रुवाहनः २१
सोऽभ्यगात्सह पुङ्खेन वल्मीकमिव पन्नगः
विनिर्भिद्य च कौन्तेयं महीतलमथाविशत् २२
स गाढवेदनो धीमानालम्ब्य धनुरुत्तमम्

दिव्यं तेजः समाविश्य प्रमीत इव संबभौ २३
स संज्ञामुपलभ्याथ प्रशस्य पुरुषर्षभः
पुत्रं शक्रात्मजो वाक्यमिदमाह महीपते २४
साधु साधु महाबाहो वत्स चित्राङ्गदात्मज
सदृशं कर्म ते दृष्ट्वा प्रीतिमानस्मि पुत्रक २५
विमुञ्चाम्येष बाणांस्ते पुत्र युद्धे स्थिरो भव
इत्येवमुक्त्वा नाराचैरभ्यवर्षदमित्रहा २६
तान्स गाण्डीवनिर्मुक्तान्वज्राशनिसमप्रभान्
नाराचैरच्छिनद्राजा सर्वानेव त्रिधा त्रिधा २७
तस्य पार्थः शरैर्दिव्यैर्ध्वजं हेमपरिष्कृतम्
सुवर्णतालप्रतिमं क्षुरेणापाहरद्रथात् २८
हयांश्चास्य महाकायान्महावेगपराक्रमान्
चकार राज्ञो निर्जीवान्प्रहसन्पाण्डवर्षभः २९
स रथादवतीर्याशु राजा परमकोपनः
पदातिः पितरं कोपाद्योधयामास पाण्डवम् ३०
संप्रीयमाणः पाण्डूनामृषभः पुत्रविक्रमात्
नात्यर्थं पीडयामास पुत्रं वज्रधरात्मजः ३१
स हन्यमानो विमुखं पितरं बभ्रुवाहनः
शरैराशीविषाकारैः पुनरेवार्दयद्बली ३२
ततः स बाल्यात्पितरं विव्याध हृदि पत्रिणा
निशितेन सुपुङ्खेन बलवद्बभ्रुवाहनः ३३
स बाणस्तेजसा दीप्तो ज्वलन्निव हुताशनः
विवेश पाण्डवं राजन्मर्म भित्त्वातिदुःखकृत् ३४
स तेनातिभृशं विद्धः पुत्रेण कुरुनन्दनः
महीं जगाम मोहार्तस्ततो राजन्धनंजयः ३५
तस्मिन्निपतिते वीरे कौरवाणां धुरंधरे
सोऽपि मोहं जगामाशु ततश्चित्राङ्गदासुतः ३६
व्यायम्य संयुगे राजा दृष्ट्वा च पितरं हतम्
पूर्वमेव स बाणौघैर्गाढविद्धोऽर्जुनेन सः ३७
भर्तारं निहतं दृष्ट्वा पुत्रं च पतितं भुवि

चित्राङ्गदा परित्रस्ता प्रविवेश रणाजिरम् ३८
शोकसंतप्तहृदया रुदती सा ततः शुभा
मणिपूरपतेर्माता ददर्श निहतं पतिम् ३९
इति श्रीमहाभारते आश्वमेधिकपर्वणि अष्टसप्ततितमोऽध्यायः ७८

## एकोनाशीतितमोऽध्यायः

वैशम्पायन उवाच
ततो बहुविधं भीरुर्विलप्य कमलेक्षणा
मुमोह दुःखाद्दुर्धर्षा निपपात च भूतले १
प्रतिलभ्य च सा संज्ञां देवी दिव्यवपुर्धरा
उलूपीं पन्नगसुतां दृष्ट्वेदं वाक्यमब्रवीत् २
उलूपि पश्य भर्तारं शयानं निहतं रणे
त्वत्कृते मम पुत्रेण बालेन समितिंजयम् ३
ननु त्वमार्ये धर्मज्ञा ननु चासि पतिव्रता
यत्त्वत्कृतेऽय पतितः पतिस्ते निहतो रणे ४
किं तु सर्वापराधोऽय यदि तेऽद्य धनंजयः
क्षमस्व याच्यमाना मे संजीवय धनंजयम् ५
ननु त्वमार्ये धर्मज्ञा त्रैलोक्यविदिता शुभे
यद्घातयित्वा भर्तारं पुत्रेणेह न शोचसि ६
नाहं शोचामि तनयं निहतं पन्नगात्मजे
पतिमेव तु शोचामि यस्यातिथ्यमिदं कृतम् ७
इत्युक्त्वा सा तदा देवीमुलूपीं पन्नगात्मजाम्
भर्तारमभिगम्येदमित्युवाच यशस्विनी ८
उत्तिष्ठ कुरुमुख्यस्य प्रियकाम मम प्रिय
अयमश्वो महाबाहो मया ते परिमोक्षितः ९
ननु नाम त्वया वीर धर्मराजस्य यज्ञियः
अयमश्वोऽनुसर्तव्यः स शेषे किं महीतले १०
त्वयि प्राणाः समायत्ताः कुरूणां कुरुनन्दन
स कस्मात्प्राणदोऽन्येषां प्राणान्संत्यक्तवानसि ११
उलूपि साधु संपश्य भर्तारं निहतं रणे

पुत्रं चैनं समुत्साह्य घातयित्वा न शोचसि १२
कामं स्वपितु बालोऽय भूमौ प्रेतगतिं गतः
लोहिताक्षो गुडाकेशो विजयः साधु जीवतु १३
नापराधोऽस्ति सुभगे नराणां बहुभार्यता
नारीणां तु भवत्येतन्मा ते भूद्बुद्धिरीदृशी १४
सख्यं ह्येतत्कृतं धात्रा शाश्वतं चाव्ययं च ह
सख्यं समभिजानीहि सत्यं संगतमस्तु ते १५
पुत्रेण घातयित्वेमं पतिं यदि न मेऽद्य वै
जीवन्तं दर्शयस्यद्य परित्यक्ष्यामि जीवितम् १६
साहं दुःखान्विता भीरु पतिपुत्रविनाकृता
इहैव प्रायमाशिष्ये प्रेक्षन्त्यास्ते न संशयः १७
इत्युक्त्वा पन्नगसुतां सपत्नीं चैत्रवाहिनी
ततः प्रायमुपासीना तूष्णीमासीज्जनाधिप १८
इति श्रीमहाभारते आश्वमेधिकपर्वणि एकोनाशीतितमोऽध्यायः ७९२२२०

अशीतितमोऽध्यायः
वैशम्पायन उवाच
तथा विलप्योपरता भर्तुः पादौ प्रगृह्य सा
उपविष्टाभवद्देवी सोच्छ्वासं पुत्रमीक्षती १
ततः संज्ञां पुनर्लब्ध्वा स राजा बभ्रुवाहनः
मातरं तामथालोक्य रणभूमावथाब्रवीत् २
इतो दुःखतरं किं नु यन्मे माता सुखैधिता
भूमौ निपतितं वीरमनुशेते मृतं पतिम् ३
निहन्तारं रणेऽरीणां सर्वशस्त्रभृतां वरम्
मया विनिहतं संख्ये प्रेक्षते दुर्मरं बत ४
अहोऽस्या हृदयं देव्या दृढं यन्न विदीर्यते
व्यूढोरस्कं महाबाहुं प्रेक्षन्त्या निहतं पतिम् ५
दुर्मरं पुरुषेणेह मन्ये ह्यध्वन्यनागते
यत्र नाहं न मे माता विप्रयुज्येत जीवितात् ६
अहो धिक्कुरुवीरस्य ह्युरःस्थं काञ्चनं भुवि

व्यपविद्धं हतस्येह मया पुत्रेण पश्यत ७
भो भो पश्यत मे वीरं पितरं ब्राह्मणा भुवि
शयानं वीरशयने मया पुत्रेण पातितम् ८
ब्राह्मणाः कुरुमुख्यस्य प्रयुक्ता हयसारिणः
कुर्वन्तु शान्तिकां त्वद्य रणे योऽय मया हतः ९
व्यादिशन्तु च किं विप्राः प्रायश्चित्तमिहाद्य मे
सुनृशंसस्य पापस्य पितृहन्तू रणाजिरे १०
दुश्चरा द्वादश समा हत्वा पितरमद्य वै
ममेह सुनृशंसस्य संवीतस्यास्य चर्मणा ११
शिरः कपाले चास्यैव भुञ्जतः पितुरद्य मे
प्रायश्चित्तं हि नास्त्यन्यद्धत्वाद्य पितरं मम १२
पश्य नागोत्तमसुते भर्तारं निहतं मया
कृतं प्रियं मया तेऽद्य निहत्य समरेऽजुनम् १३
सोऽहमप्यद्य यास्यामि गतिं पितृनिषेविताम्
न शक्नोम्यात्मनात्मानमहं धारयितुं शुभे १४
सा त्वं मयि मृते मातस्तथा गाण्डीवधन्वनि
भव प्रीतिमती देवि सत्येनात्मानमालभे १५
इत्युक्त्वा स तदा राजा दुःखशोकसमाहतः
उपस्पृश्य महाराज दुःखाद्वचनमब्रवीत् १६
शृण्वन्तु सर्वभूतानि स्थावराणि चराणि च
त्वं च मातर्यथा सत्यं ब्रवीमि भुजगोत्तमे १७
यदि नोत्तिष्ठति जयः पिता मे भरतर्षभः
अस्मिन्नेव रणोद्देशे शोषयिष्ये कलेवरम् १८
न हि मे पितरं हत्वा निष्कृतिर्विद्यते क्वचित्
नरकं प्रतिपत्स्यामि ध्रुवं गुरुवधार्दितः १९
वीरं हि क्षत्रियं हत्वा गोशतेन प्रमुच्यते
पितरं तु निहत्यैवं दुस्तरा निष्कृतिर्मया २०
एष ह्येको महातेजाः पाण्डुपुत्रो धनंजयः
पिता च मम धर्मात्मा तस्य मे निष्कृतिः कुतः २१
इत्येवमुक्त्वा नृपते धनंजयसुतो नृपः

उपस्पृश्याभवत्तूष्णीं प्रायोपेतो महामतिः २२
इति श्रीमहाभारते आश्वमेधिकपर्वणि अशीतितमोऽध्यायः ८०

## एकाशीतितमोऽध्यायः

वैशम्पायन उवाच
प्रायोपविष्टे नृपतौ मणिपूरेश्वरे तदा
पितृशोकसमाविष्टे सह मात्रा परंतप १
उलूपी चिन्तयामास तदा संजीवनं मणिम्
स चोपातिष्ठत तदा पन्नगानां परायणम् २
तं गृहीत्वा तु कौरव्य नागराजपतेः सुता
मनः प्रह्लादनीं वाचं सैनिकानामथाब्रवीत् ३
उत्तिष्ठ मा शुचः पुत्र नैष जिष्णुस्त्वया हतः
अजेयः पुरुषैरेष देवैर्वापि सवासवैः ४
मया तु मोहिनी नाम मायैषा संप्रयोजिता
प्रियार्थं पुरुषेन्द्रस्य पितुस्तेऽद्य यशस्विनः ५
जिज्ञासुर्ह्येष वै पुत्र बलस्य तव कौरवः
संग्रामे युध्यतो राजन्नागतः परवीरहा ६
तस्मादसि मया पुत्र युद्धार्थं परिचोदितः
मा पापमात्मनः पुत्र शङ्केथास्त्वण्वपि प्रभो ७
ऋषिरेष महातेजाः पुरुषः शाश्वतोऽव्ययः
नैनं शक्तो हि संग्रामे जेतुं शक्रोऽपि पुत्रक ८
अयं तु मे मणिर्दिव्यः समानीतो विशां पते
मृतान्मृतान्पन्नगेन्द्रान्यो जीवयति नित्यदा ९
एतमस्योरसि त्वं तु स्थापयस्व पितुः प्रभो
संजीवितं पुनः पुत्र ततो द्रष्टासि पाण्डवम् १०
इत्युक्तः स्थापयामास तस्योरसि मणिं तदा
पार्थस्यामिततेजाः स पितुः स्नेहादपापकृत् ११
तस्मिन्न्यस्ते मणौ वीर जिष्णुरुज्जीवितः प्रभुः
सुप्तोत्थित इवोत्तस्थौ मृष्टलोहितलोचनः १२
तमुत्थितं महात्मानं लब्धसंज्ञं मनस्विनम्

समीक्ष्य पितरं स्वस्थं ववन्दे बभ्रुवाहनः १३
उत्थिते पुरुषव्याघ्रे पुनर्लक्ष्मीवति प्रभो
दिव्याः सुमनसः पुण्या ववृषे पाकशासनः १४
अनाहता दुन्दुभयः प्रणेदुर्मेघनिस्वनाः
साधु साध्विति चाकाशे बभूव सुमहान्स्वनः १५
उत्थाय तु महाबाहुः पर्याश्वस्तो धनंजयः
बभ्रुवाहनमालिङ्ग्य समाजिघ्रत मूर्धनि १६
ददर्श चाविदूरेऽस्य मातरं शोककर्शिताम्
उलूप्या सह तिष्ठन्तीं ततोऽपृच्छद्धनंजयः १७
किमिदं लक्ष्यते सर्वं शोकविस्मयहर्षवत्
रणाजिरममित्रघ्न यदि जानासि शंस मे १८
जननी च किमर्थं ते रणभूमिमुपागता
नागेन्द्रदुहिता चेयमुलूपी किमिहागता १९
जानाम्यहमिदं युद्धं त्वया मद्वचनात्कृतम्
स्त्रीणामागमने हेतुमहमिच्छामि वेदितुम् २०
तमुवाच ततःपृष्टो मणिपूरपतिस्तदा
प्रसाद्य शिरसा विद्वानुलूपी पृच्छ्यतामिति २१
इति श्रीमहाभारते आश्वमेधिकपर्वणि एकाशीतितमोऽध्यायः ८१

## द्व्यशीतितमोऽध्यायः

अर्जुन उवाच
किमागमनकृत्यं ते कौरव्यकुलनन्दिनि
मणिपूरपतेर्मातुस्तथैव च रणाजिरे १
कच्चित्कुशलकामासि राज्ञोऽस्य भुजगात्मजे
मम वा चञ्चलापाङ्गे कच्चित्त्वं शुभमिच्छसि २
कच्चित्ते पृथुलश्रोणि नाप्रियं शुभदर्शने
अकार्षमहमज्ञानादयं वा बभ्रुवाहनः ३
कच्चिच्च राजपुत्री ते सपत्नी चैत्रवाहिनी
चित्राङ्गदा वरारोहा नापराध्यति किंचन ४
तमुवाचोरगपतेर्दुहिता प्रहसन्त्यथ

न मे त्वमपराद्धोऽसि न नृपो बभ्रुवाहनः
न जनित्री तथास्येयं मम या प्रेष्यवत्स्थिता ५
श्रूयतां यद्यथा चेदं मया सर्वं विचेष्टितम्
न मे कोपस्त्वया कार्यः शिरसा त्वां प्रसादये ६
त्वत्प्रीत्यर्थं हि कौरव्य कृतमेतन्मयानघ
यत्तच्छृणु महाबाहो निखिलेन धनंजय ७
महाभारतयुद्धे यत्त्वया शांतनवो नृपः
अधर्मेण हतः पार्थ तस्यैषा निष्कृतिः कृता ८
न हि भीष्मस्त्वया वीर युध्यमानो निपातितः
शिखण्डिना तु संसक्तस्तमाश्रित्य हतस्त्वया ९
तस्य शान्तिमकृत्वा तु त्यजेस्त्वं यदि जीवितम्
कर्मणा तेन पापेन पतेथा निरये ध्रुवम् १०
एषा तु विहिता शान्तिः पुत्राद्यां प्राप्तवानसि
वसुभिर्वसुधापाल गङ्गया च महामते ११
पुरा हि श्रुतमेतद्वै वसुभिः कथितं मया
गङ्गायास्तीरमागम्य हते शांतनवे नृपे १२
आप्लुत्य देवा वसवः समेत्य च महानदीम्
इदमूचुर्वचो घोरं भागीरथ्या मते तदा १३
एष शांतनवो भीष्मो निहतः सव्यसाचिना
अयुध्यमानः संग्रामे संसक्तोऽन्येन भामिनि १४
तदनेनाभिषङ्गेण वयमप्यर्जुनं शुभे
शापेन योजयामेति तथास्त्विति च साब्रवीत् १५
तदहं पितुरावेद्य भृशं प्रव्यथितेन्द्रिया
अभवं स च तच्छ्रुत्वा विषादमगमत्परम् १६
पिता तु मे वसून्गत्वा त्वदर्थं समयाचत
पुनः पुनः प्रसाद्यैनांस्त एनमिदमब्रुवन् १७
पुनस्तस्य महाभाग मणिपूरेश्वरो युवा
स एनं रणमध्यस्थं शरैः पातयिता भुवि १८
एवं कृते स नागेन्द्र मुक्तशापो भविष्यति
गच्छेति वसुभिश्चोक्तो मम चेदं शशंस सः १९

तच्छ्रुत्वा त्वं मया तस्माच्छापादसि विमोक्षितः
न हि त्वां देवराजोऽपि समरेषु पराजयेत् २०
आत्मा पुत्रः स्मृतस्तस्मात्तेनेहासि पराजितः
नात्र दोषो मम मतः कथं वा मन्यसे विभो २१
इत्येवमुक्तो विजयः प्रसन्नात्माब्रवीदिदम्
सर्वं मे सुप्रियं देवि यदेतत्कृतवत्यसि २२
इत्युक्त्वाथाब्रवीत्पुत्रं मणिपूरेश्वरं जयः
चित्राङ्गदायाः शृण्वन्त्याः कौरव्यदुहितुस्तथा २३
युधिष्ठिरस्याश्वमेधः परां चैत्रीं भविष्यति
तत्रागच्छेः सहामात्यो मातृभ्यां सहितो नृप २४
इत्येवमुक्तः पार्थेन स राजा बभ्रुवाहनः
उवाच पितरं धीमानिदमस्राविलेक्षणः २५
उपयास्यामि धर्मज्ञ भवतः शासनादहम्
अश्वमेधे महायज्ञे द्विजातिपरिवेषकः २६
मम त्वनुग्रहार्थाय प्रविशस्व पुरं स्वकम्
भार्याभ्यां सह शत्रुघ्न मा भूत्तेऽत्र विचारणा २७
उषित्वेह विशल्यस्त्वं सुखं स्वे वेश्मनि प्रभो
पुनरश्वानुगमनं कर्तासि जयतां वर २८
इत्युक्तः स तु पुत्रेण तदा वानरकेतनः
स्मयन्प्रोवाच कौन्तेयस्तदा चित्राङ्गदासुतम् २९
विदितं ते महाबाहो यथा दीक्षां चराम्यहम्
न स तावत्प्रवेक्ष्यामि पुरं ते पृथुलोचन ३०
यथाकामं प्रयात्येष यज्ञियश्च तुरंगमः
स्वस्ति तेऽस्तु गमिष्यामि न स्थानं विद्यते मम ३१
स तत्र विधिवत्तेन पूजितः पाकशासनिः
भार्याभ्यामभ्यनुज्ञातः प्रायाद्भरतसत्तमः ३२

इति श्रीमहाभारते आश्वमेधिकपर्वणि द्व्यशीतितमोऽध्यायः ८२

त्र्यशीतितमोऽध्यायः

वैशम्पायन उवाच

स तु वाजी समुद्रान्तां पर्येत्य पृथिवीमिमाम्
निवृत्तोऽभिमुखो राजन्येन नागाह्वयं पुरम् १
ऋनुगच्छंश्च तेजस्वी निवृत्तोऽथ किरीटभृत्
यदृच्छया समापेदे पुरं राजगृहं तदा २
तमभ्याशगतं राजा जरासंधात्मजात्मजः
क्षत्रधर्मे स्थितो वीरः समरायाजुहाव ह ३
ततः पुरात्स निष्क्रम्य रथी धन्वी शरी तली
मेघसंधिः पदातिं तं धनंजयमुपाद्रवत् ४
ऋासाद्य च महातेजा मेघसंधिर्धनंजयम्
बालभावान्महाराज प्रोवाचेदं न कौशलात् ५
किमयं चार्यते वाजी स्त्रीमध्य इव भारत
हयमेनं हरिष्यामि प्रयतस्व विमोक्षणे ६
ऋदत्तानुनयो युद्धे यदि त्वं पितृभिर्मम
करिष्यामि तवातिथ्यं प्रहर प्रहरामि वा ७
इत्युक्तः प्रत्युवाचैनं पाण्डवः प्रहसन्निव
विघ्नकर्ता मया वार्य इति मे व्रतमाहितम् ८
भ्रात्रा ज्येष्ठेन नृपते तवापि विदितं ध्रुवम्
प्रहरस्व यथाशक्ति न मन्युर्विद्यते मम ९
इत्युक्तः प्राहरत्पूर्वं पाण्डवं मगधेश्वरः
किरञ्शरसहस्राणि वर्षाणीव सहस्रदृक् १०
ततो गाण्डीवभृच्छूरो गाण्डीवप्रेषितैः शरैः
चकार मोघांस्तान्बाणानयत्नाद्भरतर्षभ ११
स मोघं तस्य बाणौघं कृत्वा वानरकेतनः
शरान्मुमोच ज्वलितान्दीप्तास्यानिव पन्नगान् १२
ध्वजे पताकादण्डेषु रथयन्त्रे हयेषु च
ऋन्येषु च रथाङ्गेषु न शरीरे च सारथौ १३
संरक्ष्यमाणः पार्थेन शरीरे फल्गुनस्य ह
मन्यमानः स्ववीर्यं तन्मागधः प्राहिणोच्छरान् १४
ततो गाण्डीवभृच्छूरो मागधेन समाहतः
बभौ वासन्तिक इव पलाशः पुष्पितो महान् १५

अवध्यमानः सोऽभ्यघ्नन्मागधः पाण्डवर्षभम्
तेन तस्थौ स कौरव्य लोकवीरस्य दर्शने १६
सव्यसाची तु संक्रुद्धो विकृष्य बलवद्धनुः
हयांश्चकार निर्देहान्सारथेश्च शिरोऽहरत् १७
धनुश्चास्य महच्चित्रं क्षुरेण प्रचकर्त ह
हस्तावापं पताकां च ध्वजं चास्य न्यपातयत् १८
स राजा व्यथितो व्यश्वो विधनुर्हतसारथिः
गदामादाय कौन्तेयमभिदुद्राव वेगवान् १९
तस्यापतत एवाशु गदां हेमपरिष्कृताम्
शरैश्चकर्त बहुधा बहुभिर्गृध्रवाजितैः २०
सा गदा शकलीभूता विशीर्णमणिबन्धना
व्याली निर्मुच्यमानेव पपातास्य सहस्रधा २१
विरथं तं विधन्वानं गदया परिवर्जितम्
नैच्छत्ताडयितुं धीमानर्जुनः समराग्रणीः २२
तत एनं विमनसं क्षत्रधर्मे समास्थितम्
सान्त्वपूर्वमिदं वाक्यमब्रवीत्कपिकेतनः २३
पर्याप्तः क्षत्रधर्मोऽय दर्शितः पुत्र गम्यताम्
बह्वेतत्समरे कर्म तव बालस्य पार्थिव २४
युधिष्ठिरस्य संदेशो न हन्तव्या नृपा इति
तेन जीवसि राजंस्त्वमपराद्धोऽपि मे रणे २५
इति मत्वा स चात्मानं प्रत्यादिष्टं स्म मागधः
तथ्यमित्यवगम्यैनं प्राञ्जलि प्रत्यपूजयत् २६
तमर्जुनः समाश्वास्य पुनरेवेदमब्रवीत्
आगन्तव्यं परां चैत्रीमश्वमेधे नृपस्य नः २७
इत्युक्तः स तथेत्युक्त्वा पूजयामास तं हयम्
फल्गुनं च युधां श्रेष्ठं विधिवत्सहदेवजः २८
ततो यथेष्टमगमत्पुनरेव स केसरी
ततः समुद्रतीरेण वङ्गान्पुण्ड्रान्सकेरलान् २९
तत्र तत्र च भूरीणि म्लेच्छसैन्यान्यनेकशः
विजिग्ये धनुषा राजन्गाण्डीवेन धनंजयः ३०

इति श्रीमहाभारते आश्वमेधिकपर्वणि त्र्यशीतितमोऽध्यायः ८३

## चतुरशीतितमोऽध्यायः

वैशम्पायन उवाच
मागधेनार्चितो राजन्पाण्डवः श्वेतवाहनः
दक्षिणां दिशमास्थाय चारयामास तं हयम् १
ततः स पुनरावृत्य हयः कामचरो बली
आससाद पुरीं रम्यां चेदीनां शुक्तिसाह्वयाम् २
शरभेणार्चितस्तत्र शिशुपालात्मजेन सः
युद्धपूर्वेण मानेन पूजया च महाबलः ३
तत्रार्चितो ययौ राजंस्तदा स तुरगोत्तमः
काशीनन्ध्रान्कोसलांश्च किरातानथ तङ्गणान् ४
तत्र पूजां यथान्यायं प्रतिगृह्य स पाण्डवः
पुनरावृत्य कौन्तेयो दशार्णानगमत्तदा ५
तत्र चित्राङ्गदो नाम बलवान्वसुधाधिपः
तेन युद्धमभूत्तस्य विजयस्याति भैरवम् ६
तं चापि वशमानीय किरीटी पुरुषर्षभः
निषादराज्ञो विषयमेकलव्यस्य जग्मिवान् ७
एकलव्यसुतश्चैनं युद्धेन जगृहे तदा
ततश्चक्रे निषादैः स संग्रामं रोमहर्षणम् ८
ततस्तमपि कौन्तेयः समरेष्वपराजितः
जिगाय समरे वीरो यज्ञविघ्नार्थमुद्यतम् ९
स तं जित्वा महाराज नैषादिं पाकशासनिः
अर्चितः प्रययौ भूयो दक्षिणं सलिलार्णवम् १०
तत्रापि द्रविडैरन्ध्रै रौद्रैर्माहिषकैरपि
तथा कोल्लगिरेयैश्च युद्धमासीत्किरीटिनः ११
तुरगस्य वशेनाथ सुराष्ट्रानभितो ययौ
गोकर्णमपि चासाद्य प्रभासमपि जग्मिवान् १२
ततो द्वारवतीं रम्यां वृष्णिवीराभिरक्षिताम्
आससाद हयः श्रीमान्कुरुराजस्य यज्ञियः १३

तमुन्मथ्य हयश्रेष्ठं यादवानां कुमारकाः
प्रययुस्तांस्तदा राजन्नुग्रसेनो न्यवारयत् १४
ततः पुर्या विनिष्क्रम्य वृष्ण्यन्धकपतिस्तदा
सहितो वसुदेवेन मातुलेन किरीटिनः १५
तौ समेत्य कुरुश्रेष्ठं विधिवत्प्रीतिपूर्वकम्
परया भरतश्रेष्ठं पूजया समवस्थितौ
ततस्ताभ्यामनुज्ञातो ययौ येन हयो गतः १६
ततः स पश्चिमं देशं समुद्रस्य तदा हयः
क्रमेण व्यचरत्स्फीतं ततः पञ्चनदं ययौ १७
तस्मादपि स कौरव्य गान्धारविषयं हयः
विचचार यथाकामं कौन्तेयानुगतस्तदा १८
तत्र गान्धारराजेन युद्धमासीन्महात्मनः
घोरं शकुनिपुत्रेण पूर्ववैरानुसारिणा १९
इति श्रीमहाभारते आश्वमेधिकपर्वणि चतुरशीतितमोऽध्यायः ८४

पञ्चाशीतितमोऽध्यायः

वैशम्पायन उवाच
शकुनेस्तु सुतो वीरो गान्धाराणां महारथः
प्रत्युद्ययौ गुडाकेशं सैन्येन महता वृतः
हस्त्यश्वरथपूर्णेन पताकाध्वजमालिना १
अमृष्यमाणास्ते योधा नृपतेः शकुनेर्वधम्
अभ्ययुः सहिताः पार्थं प्रगृहीतशरासनाः २
तानुवाच स धर्मात्मा बीभत्सुरपराजितः
युधिष्ठिरस्य वचनं न च ते जगृहुर्हितम् ३
वार्यमाणास्तु पार्थेन सान्त्वपूर्वममर्षिताः
परिवार्य हयं जग्मुस्ततश्चुक्रोध पाण्डवः ४
ततः शिरांसि दीप्ताग्रैस्तेषां चिच्छेद पाण्डवः
क्षुरैर्गाण्डीवनिर्मुक्तैर्नातियत्नादिवार्जुनः ५
ते वध्यमानाः पार्थेन हयमुत्सृज्य संभ्रमात्
न्यवर्तन्त महाराज शरवर्षार्दिता भृशम् ६

वितुद्यमानस्तैश्चापि गान्धारैः पाण्डवर्षभः
आदिश्यादिश्य तेजस्वी शिरांस्येषां न्यपातयत् ७
वध्यमानेषु तेष्वाजौ गान्धारेषु समन्ततः
स राजा शकुनेः पुत्रः पाण्डवं प्रत्यवारयत् ८
तं युध्यमानं राजानं क्षत्रधर्मे व्यवस्थितम्
पार्थोऽब्रवीन्न मे वध्या राजानो राजशासनात्
अलं युद्धेन ते वीर न तेऽस्त्यद्य पराजयः ९
इत्युक्तस्तदनादृत्य वाक्यमज्ञानमोहितः
स शक्रसमकर्माणमवाकिरत सायकैः १०
तस्य पार्थः शिरस्त्राणमर्धचन्द्रेण पत्रिणा
अपाहरदसंभ्रान्तो जयद्रथशिरो यथा ११
तद्दृष्ट्वा विस्मयं जग्मुर्गान्धाराः सर्व एव ते
इच्छता तेन न हतो राजेत्यपि च ते विदुः १२
गान्धारराजपुत्रस्तु पलायनकृतक्षणः
बभौ तैरेव सहितस्त्रस्तैः क्षुद्रमृगैरिव १३
तेषां तु तरसा पार्थस्तत्रैव परिधावताम्
विजहारोत्तमाङ्गानि भल्लैः संनतपर्वभिः १४
उच्छ्रितांस्तु भुजान्केचिन्नाबुध्यन्त शरैर्हतान्
शरैर्गाण्डीवनिर्मुक्तैः पृथुभिः पार्थचोदितैः १५
संभ्रान्तनरनागाश्वमथ तद्विद्रुतं बलम्
हतविध्वस्तभूयिष्ठमावर्तत मुहुर्मुहुः १६
न ह्यदृश्यन्त वीरस्य केचिदग्रेऽग्र्यकर्मणः
रिपवः पात्यमाना वै ये सहेयुर्महाशरान् १७
ततो गान्धारराजस्य मन्त्रिवृद्धपुरःसरा
जननी निर्ययौ भीता पुरस्कृत्यार्घ्यमुत्तमम् १८
सा न्यवारयदव्यग्रा तं पुत्रं युद्धदुर्मदम्
प्रसादयामास च तं जिष्णुमक्लिष्टकारिणम् १९
तां पूजयित्वा कौन्तेयः प्रसादमकरोत्तदा
शकुनेश्चापि तनयं सान्त्वयन्निदमब्रवीत् २०
न मे प्रियं महाबाहो यत्ते बुद्धिरियं कृता

प्रतियोद्धुममित्रघ्न भ्रातैव त्वं ममानघ २१
गान्धारीं मातरं स्मृत्वा धृतराष्ट्रकृतेन च
तेन जीवसि राजंस्त्वं निहतास्त्वनुगास्तव २२
मैवं भूः शाम्यतां वैरं मा ते भूद्बुद्धिरीदृशी
आगन्तव्यं परां चैत्रीमश्वमेधे नृपस्य नः २३
इति श्रीमहाभारते आश्वमेधिकपर्वणि पञ्चाशीतितमोऽध्यायः ८५

## षडशीतितमोऽध्यायः

वैशम्पायन उवाच
इत्युक्त्वानुययौ पार्थो हयं तं कामचारिणम्
न्यवर्तत ततो वाजी येन नागाह्वयं पुरम् १
तं निवृत्तं तु शुश्राव चारेणैव युधिष्ठिरः
श्रुत्वार्जुनं कुशलिनं स च हृष्टमनाभवत् २
विजयस्य च तत्कर्म गान्धारविषये तदा
श्रुत्वान्येषु च देशेषु स सुप्रीतोऽभवन्नृपः ३
एतस्मिन्नेव काले तु द्वादशीं माघपाक्षिकीम्
इष्टं गृहीत्वा नक्षत्रं धर्मराजो युधिष्ठिरः ४
समानाय्य महातेजाः सर्वान्भ्रातॄन्महामनाः
भीमं च नकुलं चैव सहदेवं च कौरवः ५
प्रोवाचेदं वचः काले तदा धर्मभृतां वरः
आमन्त्र्य वदतां श्रेष्ठो भीमं भीमपराक्रमम् ६
आयाति भीमसेनासौ सहाश्वेन तवानुजः
यथा मे पुरुषाः प्राहुर्ये धनंजयसारिणः ७
उपस्थितश्च कालोऽयमभितो वर्तते हयः
माघी च पौर्णमासीयं मासः शेषो वृकोदर ८
तत्प्रस्थाप्यन्तु विद्वांसो ब्राह्मणा वेदपारगाः
वाजिमेधार्थसिद्ध्यर्थं देशं पश्यन्तु यज्ञियम् ९
इत्युक्तः स तु तच्चक्रे भीमो नृपतिशासनम्
हृष्टः श्रुत्वा नरपतेरायान्तं सव्यसाचिनम् १०
ततो ययौ भीमसेनः प्राज्ञैः स्थपतिभिः सह

ब्राह्मणानग्रतः कृत्वा कुशलान्यज्ञकर्मसु ११
तं सशालचयग्रामं संप्रतोलीविटङ्किनम्
मापयामास कौरव्यो यज्ञवाटं यथाविधि १२
सदः सपत्नीसदनं साग्नीध्रमपि चोत्तरम्
कारयामास विधिवन्मणिहेमविभूषितम् १३
स्तम्भान्कनकचित्रांश्च तोरणानि बृहन्ति च
यज्ञायतनदेशेषु दत्त्वा शुद्धं च काञ्चनम् १४
अन्तःपुराणि राज्ञां च नानादेशनिवासिनाम्
कारयामास धर्मात्मा तत्र तत्र यथाविधि १५
ब्राह्मणानांच वेश्मानि नानादेशसमेयुषाम्
कारयामास भीमः स विविधानि ह्यनेकशः १६
तथा संप्रेषयामास दूतान्नृपतिशासनात्
भीमसेनो महाराज राज्ञामक्लिष्टकर्मणाम् १७
ते प्रियार्थं कुरुपतेराययुर्नृपसत्तमाः
रत्नान्यनेकान्यादाय स्त्रियोऽश्वानायुधानि च १८
तेषां निविशतां तेषु शिविरेषु सहस्रशः
नर्दतः सागरस्येव शब्दो दिवमिवास्पृशत् १९
तेषामभ्यागतानां स राजा राजीवलोचनः
व्यादिदेशान्नपानानि शय्याश्चाप्यतिमानुषाः २०
वाहनानां च विविधाः शालाः शालीक्षुगोरसैः
उपेताः पुरुषव्याघ्र व्यादिदेश स धर्मराट् २१
तथा तस्मिन्महायज्ञे धर्मराजस्य धीमतः
समाजग्मुर्मुनिगणा बहवो ब्रह्मवादिनः २२
ये च द्विजातिप्रवरास्तत्रासन्पृथिवीपते
समाजग्मुः सशिष्यांस्तान्प्रतिजग्राह कौरवः २३
सर्वांश्चताननुययौ यावदावसथादिति
स्वयमेव महातेजा दम्भं त्यक्त्वा युधिष्ठिरः २४
ततः कृत्वा स्थपतयः शिल्पिनोऽन्ये च ये तदा
कृत्स्नं यज्ञविधिं राजन्धर्मराज्ञे न्यवेदयन् २५
तच्छ्रुत्वा धर्मराजः स कृतं सर्वमनिन्दितम्

हृष्टरूपोऽभवद्राजा सह भ्रातृभिरच्युतः २६
इति श्रीमहाभारते आश्वमेधिकपर्वणि षडशीतितमोऽध्यायः ८६

सप्ताशीतितमोऽध्यायः

वैशम्पायन उवाच
तस्मिन्यज्ञे प्रवृत्ते तु वाग्मिनो हेतुवादिनः
हेतुवादान्बहून्प्राहुः परस्परजिगीषवः १
ददृशुस्तं नृपतयो यज्ञस्य विधिमुत्तमम्
देवेन्द्रस्येव विहितं भीमेन कुरुनन्दन २
ददृशुस्तोरणान्यत्र शातकुम्भमयानि ते
शय्यासनविहारांश्च सुबहून्रत्नभूषितान् ३
घटान्पात्रीः कटाहानि कलशान्वर्धमानकान्
न हि किंचिदसौवर्णमपश्यंस्तत्र पार्थिवाः ४
यूपांश्च शास्त्रपठितान्दारवान्हेमभूषितान्
उपक्लृप्तान्यथाकालं विधिवद्भूरिवर्चसः ५
स्थलजा जलजा ये च पशवः केचन प्रभो
सर्वानेव समानीतांस्तानपश्यन्त ते नृपाः ६
गाश्चैव महिषीश्चैव तथा वृद्धाः स्त्रियोऽपि च
औदकानि च सत्त्वानि श्वापदानि वयांसि च ७
जरायुजान्यण्डजानि स्वेदजान्युद्भिदानि च
पर्वतानूपवन्यानि भूतानि ददृशुश्च ते ८
एवं प्रमुदितं सर्वं पशुगोधनधान्यतः
यज्ञवाटं नृपा दृष्ट्वा परं विस्मयमागमन्
ब्राह्मणानां विशां चैव बहुमृष्टान्नमृद्धिमत् ९
पूर्णे शतसहस्रे तु विप्राणां तत्र भुञ्जताम्
दुन्दुभिर्मेघनिर्घोषो मुहुर्मुहुरताड्यत १०
विननादासकृत्सोऽथ दिवसे दिवसे तदा
एवं स ववृते यज्ञो धर्मराजस्य धीमतः ११
अन्नस्य बहवो राजन्नुत्सर्गाः पर्वतोपमाः
दधिकुल्याश्च ददृशुः सर्पिषश्च ह्रदाञ्जनाः १२

जम्बुद्वीपो हि सकलो नानाजनपदायुतः
राजन्नदृश्यतैकस्थो राज्ञस्तस्मिन्महाक्रतौ १३
तत्र जातिसहस्राणि पुरुषाणां ततस्ततः
गृहीत्वा धनमाजग्मुर्बहूनि भरतर्षभ १४
राजानः स्रग्विणश्चापि सुमृष्टमणिकुण्डलाः
पर्यवेषन्द्विजाग्र्यांस्ताञ्शतशोऽथ सहस्रशः १५
विविधान्यन्नपानानि पुरुषा येऽनुयायिनः
तेषां नृपोपभोज्यानि ब्राह्मणेभ्यो ददुः स्म ते १६
इति श्रीमहाभारते आश्वमेधिकपर्वणि सप्ताशीतितमोऽध्यायः ८७

## अष्टाशीतितमोऽध्यायः

वैशम्पायन उवाच
समागतान्वेदविदो राज्ञश्च पृथिवीश्वरान्
दृष्ट्वा युधिष्ठिरो राजा भीमसेनमथाब्रवीत् १
उपयाता नरव्याघ्रा य इमे जगदीश्वराः
एतेषां क्रियतां पूजा पूजार्हा हि नरेश्वराः २
इत्युक्तः स तथा चक्रे नरेन्द्रेण यशस्विना
भीमसेनो महातेजा यमाभ्यां सह भारत ३
अथाभ्यगच्छद्गोविन्दो वृष्णिभिः सह धर्मजम्
बलदेवं पुरस्कृत्य सर्वप्राणभृतां वरः ४
युयुधानेन सहितः प्रद्युम्नेन गदेन च
निशठेनाथ साम्बेन तथैव कृतवर्मणा ५
तेषामपि परां पूजां चक्रे भीमो महाभुजः
विविशुस्ते च वेश्मानि रत्नवन्ति नरर्षभाः ६
युधिष्ठिरसमीपे तु कथान्ते मधुसूदनः
अर्जुनं कथयामास बहुसंग्रामकर्शितम् ७
स तं पप्रच्छ कौन्तेयः पुनः पुनररिंदमम्
धर्मराड् भ्रातरं जिष्णुं समाचष्ट जगत्पतिः ८
आगमद्द्वारकावासी ममाप्तः पुरुषो नृप
योऽद्राक्षीत्पाण्डवश्रेष्ठं बहुसंग्रामकर्शितम् ९

समीपे च महाबाहुमाचष्ट च मम प्रभो
कुरु कार्याणि कौन्तेय हयमेधार्थसिद्धये १०
इत्युक्तः प्रत्युवाचैनं धर्मराजो युधिष्ठिरः
दिष्ट्या स कुशली जिष्णुरुपयाति च माधव ११
तव यत्संदिदेशासौ पाण्डवानां बलाग्रणीः
तदाख्यातुमिहेच्छामि भवता युदनन्दन १२
इत्युक्ते राजशार्दूल वृष्ण्यन्धकपतिस्तदा
प्रोवाचेदं वचो वाग्मी धर्मात्मानं युधिष्ठिरम् १३
इदमाह महाराज पार्थवाक्यं नरः स माम्
वाच्यो युधिष्ठिरः कृष्ण काले वाक्यमिदं मम १४
आगमष्यिन्ति राजानः सर्वतः कौरवान्प्रति
तेषामेकैकशः पूजा कार्येत्येतत्क्षमं हि नः १५
इत्येतद्वचनाद्राजा विज्ञाप्यो मम मानद
न तदात्ययिकं हि स्याद्यदर्घ्यानयने भवेत् १६
कर्तुमर्हति तद्राजा भवांश्चाप्यनुमन्यताम्
राजद्वेषाद्विनश्येयुर्नेमा राजन्प्रजाः पुनः १७
इदमन्यच्च कौन्तेय वचः स पुरुषोऽब्रवीत्
धनंजयस्य नृपते तन्मे निगदतः शृणु १८
उपयास्यति यज्ञं नो मणिपूरपतिर्नृपः
पुत्रो मम महातेजा दयितो बभ्रुवाहनः १९
तं भवान्मदपेक्षार्थं विधिवत्प्रतिपूजयेत्
स हि भक्तोऽनुरक्तश्च मम नित्यमिति प्रभो २०
इत्येतद्वचनं श्रुत्वा धर्मराजो युधिष्ठिरः
अभिनन्द्यास्य तद्वाक्यमिदं वचनमब्रवीत् २१
इति श्रीमहाभारते आश्वमेधिकपर्वणि अष्टाशीतितमोऽध्यायः ८८

एकोननवतितमोऽध्यायः

युधिष्ठिर उवाच
श्रुतं प्रियमिदं कृष्ण यत्त्वमर्हसि भाषितुम्
तन्मेऽमृतरस प्रख्यं मनो ह्लादयते विभो १

बहूनि किल युद्धानि विजयस्य नराधिपैः
पुनरासन्हृषीकेश तत्र तत्रेति मे श्रुतम् २
मन्निमित्तं हि स सदा पार्थः सुखविवर्जितः
अतीव विजयो धीमानिति मे दूयते मनः ३
संचिन्तयामि वार्ष्णेय सदा कुन्तीसुतं रहः
किं नु तस्य शरीरेऽस्ति सर्वलक्षणपूजिते
अनिष्टं लक्षणं कृष्ण येन दुःखान्युपाश्नुते ४
अतीव दुःख भागी स सततं कुन्तिनन्दनः
न च पश्यामि बीभत्सोर्निन्द्यं गात्रेषु किंचन
श्रोतव्यं चेन्मयैतद्वै तन्मे व्याख्यातुमर्हसि ५
इत्युक्तः स हृषीकेशो ध्यात्वा सुमहदन्तरम्
राजानं भोजराजन्यवर्धनो विष्णुरब्रवीत् ६
न ह्यस्य नृपते किंचिदनिष्टमुपलक्षये
ऋते पुरुषसिंहस्य पिण्डिकेऽस्यातिकायतः ७
ताभ्यां स पुरुषव्याघ्रो नित्यमध्वसु युज्यते
न ह्यन्यदनुपश्यामि येनासौ दुःख भाग्जयः ८
इत्युक्तः स कुरुश्रेष्ठस्तथ्यं कृष्णेन धीमता
प्रोवाच वृष्णिशार्दूलमेवमेतदिति प्रभो ९
कृष्णा तु द्रौपदी कृष्णं तिर्यक्सासूयमैक्षत
प्रतिजग्राह तस्यास्तं प्रणयं चापि केशिहा
सख्युः सखा हृषीकेशः साक्षादिव धनंजयः १०
तत्र भीमादयस्ते तु कुरवो यादवास्तथा
रेमुः श्रुत्वा विचित्रार्था धनंजयकथा विभो ११
तथा कथयतामेव तेषामर्जुनसंकथाः
उपायाद्वचनान्मर्त्यो विजयस्य महात्मनः १२
सोऽभिगम्य कुरुश्रेष्ठं नमस्कृत्य च बुद्धिमान्
उपायातं नरव्याघ्रमर्जुनं प्रत्यवेदयत् १३
तच्छ्रुत्वा नृपतिस्तस्य हर्षबाष्पाकुलेक्षणः
प्रियाख्याननिमित्तं वै ददौ बहु धनं तदा १४
ततो द्वितीये दिवसे महाञ्शब्दो व्यवर्धत

आयाति पुरुषव्याघ्रे पाण्डवानां धुरंधरे १५
ततो रेणुः समुद्भूतो विबभौ तस्य वाजिनः
अभितो वर्तमानस्य यथोच्चैःश्रवसस्तथा १६
तत्र हर्षकला वाचो नराणां शुश्रुवेऽर्जुनः
दिष्ट्यासि पार्थ कुशली धन्यो राजा युधिष्ठिरः १७
कोऽन्यो हि पृथिवीं कृत्स्नामवजित्य सपार्थिवाम्
चारयित्वा हयश्रेष्ठमुपायायादृतेऽर्जुनम् १८
ये व्यतीता महात्मानो राजानः सगरादयः
तेषामपीदृशं कर्म न किंचिदनुशुश्रुम १९
नैतदन्ये करिष्यन्ति भविष्याः पृथिवीक्षितः
यत्त्वं कुरुकुलश्रेष्ठ दुष्करं कृतवानिह २०
इत्येवं वदतां तेषां नृणां श्रुतिसुखा गिरः
शृण्वन्विवेश धर्मात्मा फल्गुनो यज्ञसंस्तरम् २१
ततो राजा सहामात्यः कृष्णश्च यदुनन्दनः
धृतराष्ट्रं पुरस्कृत्य ते तं प्रत्युद्ययुस्तदा २२
सोऽभिवाद्य पितुः पादौ धर्मराजस्य धीमतः
भीमादींश्चापि संपूज्य पर्यष्वजत केशवम् २३
तैः समेत्यार्चितस्तान्स प्रत्यर्च्य च यथाविधि
विशश्रामाथ धर्मात्मा तीरं लब्ध्वेव पारगः २४
एतस्मिन्नेव काले तु स राजा बभ्रुवाहनः
मातृभ्यां सहितो धीमान्कुरूनभ्याजगाम ह २५
स समेत्य कुरून्सर्वान्सर्वैस्तैरभिनन्दितः
प्रविवेश पितामह्याः कुन्त्या भवनमुत्तमम् २६
इति श्रीमहाभारते आश्वमेधिकपर्वणि एकोननवतितमोऽध्यायः ८९

## नवतितमोऽध्यायः

वैशम्पायन उवाच
स प्रविश्य यथान्यायं पाण्डवानां निवेशनम्
पितामहीमभ्यवदत्साम्ना परमवल्गुना १
तथा चित्राङ्गदा देवी कौरव्यस्यात्मजापि च

पृथां कृष्णां च सहिते विनयेनाभिजग्मतुः
सुभद्रां च यथान्यायं याश्चान्याः कुरुयोषितः २
ददौ कुन्ती ततस्ताभ्यां रत्नानि विविधानि च
द्रौपदी च सुभद्रा च याश्चाप्यन्या ददुः स्त्रियः ३
ऊषतुस्तत्र ते देव्यौ महार्हशयनासने
सुपूजिते स्वयं कुन्त्या पार्थस्य प्रियकाम्यया ४
स च राजा महावीर्यः पूजितो बभ्रुवाहनः
धृतराष्ट्रं महीपालमुपतस्थे यथाविधि ५
युधिष्ठिरं च राजानं भीमादींश्चापि पाण्डवान्
उपगम्य महातेजा विनयेनाभ्यवादयत् ६
स तैः प्रेम्णा परिष्वक्तः पूजितश्च यथाविधि
धनं चास्मै ददुर्भूरि प्रीयमाणा महारथाः ७
तथैव स महीपालः कृष्णं चक्रगदाधरम्
प्रद्युम्न इव गोविन्दं विनयेनोपतस्थिवान् ८
तस्मै कृष्णो ददौ राज्ञे महार्हमभिपूजितम्
रथं हेमपरिष्कारं दिव्याश्वयुजमुत्तमम् ९
धर्मराजश्च भीमश्च यमजौ फल्गुनस्तथा
पृथक्पृथगतीवैनं मानार्हं समपूजयन् १०
ततस्तृतीये दिवसे सत्यवत्याः सुतो मुनिः
युधिष्ठिरं समभ्येत्य वाग्मी वचनमब्रवीत् ११
अद्य प्रभृति कौन्तेय यजस्व समयो हि ते
मुहूर्तो यज्ञियः प्राप्तश्चोदयन्ति च याजकाः १२
अहीनो नाम राजेन्द्र क्रतुस्तेऽय विकल्पवान्
बहुत्वात्काञ्चनस्यास्य ख्यातो बहुसुवर्णकः १३
एवमेव महाराज दक्षिणां त्रिगुणां कुरु
त्रित्वं व्रजतु ते राजन्ब्राह्मणा ह्यत्र कारणम् १४
त्रीनश्वमेधानत्र त्वं संप्राप्य बहुदक्षिणान्
ज्ञातिवध्याकृतं पापं प्रहास्यसि नराधिप १५
पवित्रं परमं ह्येतत्पावनानां च पावनम्
यदश्वमेधावभृथं प्राप्स्यसे कुरुनन्दन १६

इत्युक्तः स तु तेजस्वी व्यासेनामिततेजसा
दीक्षां विवेश धर्मात्मा वाजिमेधाप्तये तदा
नराधिपः प्रायजत वाजिमेधं महाक्रतुम् १७
तत्र वेदविदो राजंश्चक्रुः कर्माणि याजकाः
परिक्रमन्तः शास्त्रज्ञा विधिवत्साधुशिक्षिताः १८
न तेषां स्खलितं तत्र नासीदपहुतं तथा
क्रमयुक्तं च युक्तं च चक्रुस्तत्र द्विजर्षभाः १९
कृत्वा प्रवर्ग्यं धर्मज्ञा यथावद्द्विजसत्तमाः
चक्रुस्ते विधिवद्राजंस्तथैवाभिषवं द्विजाः २०
अभिषूय ततो राजन्सोमं सोमपसत्तमाः
सवनान्यानुपूर्व्येण चक्रुः शास्त्रानुसारिणः २१
न तत्र कृपणः कश्चिन्न दरिद्रो बभूव ह
क्षुधितो दुःखितो वापि प्राकृतो वापि मानवः २२
भोजनं भोजनार्थिभ्यो दापयामास नित्यदा
भीमसेनो महातेजाः सततं राजशासनात् २३
संस्तरे कुशलाश्चापि सर्वकर्माणि याजकाः
दिवसे दिवसे चक्रुर्यथाशास्त्रार्थचक्षुषः २४
नाषडङ्गविदत्रासीत्सदस्यस्तस्य धीमतः
नाव्रतो नानुपाध्यायो न च वादाक्षमो द्विजः २५
ततो यूपोच्छ्रये प्राप्ते षड्बैल्वान्भरतर्षभ
खादिरान्बिल्वसमितांस्तावतः सर्ववर्णिनः २६
देवदारुमयौ द्वौ तु यूपौ कुरुपतेः क्रतौ
श्लेष्मातकमयं चैकं याजकाः समकारयन् २७
शोभार्थं चापरान्यूपान्काञ्चनान्पुरुषर्षभ
स भीमः कारयामास धर्मराजस्य शासनात् २८
ते व्यराजन्त राजर्षे वासोभिरुपशोभिताः
नरेन्द्राभिगता देवान्यथा सप्तर्षयो दिवि २९
इष्टकाः काञ्चनीश्चात्र चयनार्थं कृताभवन्
शुशुभे चयनं तत्र दक्षस्येव प्रजापतेः ३०
चतुश्चित्यः स तस्यासीदष्टादशकरात्मकः

स रुक्मपक्षो निचितस्त्रिगुणो गरुडाकृतिः ३१
ततो नियुक्ताः पशवो यथाशास्त्रं मनीषिभिः
तं तं देवं समुद्दिश्य पक्षिणः पशवश्च ये ३२
ऋषभाः शास्त्रपठितास्तथा जलचराश्च ये
सर्वांस्तानभ्ययुञ्जंस्ते तत्राग्निचयकर्मणि ३३
यूपेषु नियतं चासीत्पशूनां त्रिशतं तथा
अश्वरत्नोत्तरं राज्ञः कौन्तेयस्य महात्मनः ३४
स यज्ञः शुशुभे तस्य साक्षाद्देवर्षिसंकुलः
गन्धर्वगणसंकीर्णः शोभितोऽप्सरसां गणैः ३५
स किंपुरुषगीतैश्च किंनरैरुपशोभितः
सिद्धविप्रनिवासैश्च समन्तादभिसंवृतः ३६
तस्मिन्सदसि नित्यास्तु व्यासशिष्या द्विजोत्तमाः
सर्वशास्त्रप्रणेतारः कुशला यज्ञकर्मसु ३७
नारदश्च बभूवात्र तुम्बुरुश्च महाद्युतिः
विश्वावसुश्चित्रसेनस्तथान्ये गीतकोविदाः ३८
गन्धर्वा गीतकुशला नृत्तेषु च विशारदाः
रमयन्ति स्म तान्विप्रान्यज्ञकर्मान्तरेष्वथ ३९
इति श्रीमहाभारते आश्वमेधिकपर्वणि नवतितमोऽध्यायः ९०

## एकनवतितमोऽध्यायः

वैशम्पायन उवाच
शमयित्वा पशूनन्यान्विधिवद्द्विजसत्तमाः
तुरगं तं यथाशास्त्रमालभन्त द्विजातयः १
ततः संज्ञाप्य तुरगं विधिवद्याजकर्षभाः
उपसंवेशयन्राजंस्ततस्तां द्रुपदात्मजाम्
कलाभिस्तिसृभी राजन्यथाविधि मनस्विनीम् २
उद्धृत्य तु वपां तस्य यथाशास्त्रं द्विजर्षभाः
श्रपयामासुरव्यग्राः शास्त्रवद्भरतर्षभ ३
तं वपाधूमगन्धं तु धर्मराजःसहानुजः
उपाजिघ्रद्यथान्यायं सर्वपाप्मापहं तदा ४

शिष्टान्यङ्गानि यान्यासंस्तस्याश्वस्य नराधिप
तान्यग्नौ जुहुवुर्धीराः समस्ताः षोडशर्त्विजः ५
संस्थाप्यैवं तस्य राज्ञस्तं क्रतुं शक्रतेजसः
व्यासः सशिष्यो भगवान्वर्धयामास तं नृपम् ६
ततो युधिष्ठिरः प्रादात्सदस्येभ्यो यथाविधि
कोटीसहस्रं निष्काणां व्यासाय तु वसुंधराम् ७
प्रतिगृह्य धरां राजन्व्यासः सत्यवतीसुतः
अब्रवीद्भरतश्रेष्ठं धर्मात्मानं युधिष्ठिरम् ८
पृथिवी भवतस्त्वेषा संन्यस्ता राजसत्तम
निष्क्रयो दीयतां मह्यं ब्राह्मणा हि धनार्थिनः ९
युधिष्ठिरस्तु तान्विप्रान्प्रत्युवाच महामनाः
भ्रातृभिः सहितो धीमान्मध्ये राज्ञां महात्मनाम् १०
अश्वमेधे महायज्ञे पृथिवी दक्षिणा स्मृता
अर्जुनेन जिता सेयमृत्विग्भ्यः प्रापिता मया ११
वनं प्रवेक्ष्ये विप्रेन्द्रा विभजध्वं महीमिमाम्
चतुर्धा पृथिवीं कृत्वा चातुर्होत्रप्रमाणतः १२
नाहमादातुमिच्छामि ब्रह्मस्वं मुनिसत्तमाः
इदं हि मे मतं नित्यं भ्रातॄणां च ममानघाः १३
इत्युक्तवति तस्मिंस्ते भ्रातरो द्रौपदी च सा
एवमेतदिति प्राहुस्तदभूद्रोमहर्षणम् १४
ततोऽन्तरिक्षे वागासीत्साधु साध्विति भारत
तथैव द्विजसंघानां शंसतां विबभौ स्वनः १५
द्वैपायनस्तथोक्तस्तु पुनरेव युधिष्ठिरम्
उवाच मध्ये विप्राणामिदं संपूजयन्मुनिः १६
दत्तैषा भवता मह्यं तां ते प्रतिददाम्यहम्
हिरण्यं दीयतामेभ्यो द्विजातिभ्यो धरास्तु ते १७
ततोऽब्रवीद्वासुदेवो धर्मराजं युधिष्ठिरम्
यथाह भगवान्व्यासस्तथा तत्कर्तुमर्हसि १८
इत्युक्तः स कुरुश्रेष्ठः प्रीतात्मा भ्रातृभिः सह
कोटिकोटिकृतां प्रादाद्दक्षिणां त्रिगुणां क्रतोः १९

न करिष्यति तल्लोके कश्चिदन्यो नराधिपः
यत्कृतं कुरुसिंहेन मरुत्तस्यानुकुर्वता २०
प्रतिगृह्य तु तद्द्रव्यं कृष्णद्वैपायनः प्रभुः
ऋत्विग्भ्यः प्रददौ विद्वांश्चतुर्धा व्यभजंश्च ते २१
पृथिव्या निष्क्रयं दत्त्वा तद्धिरण्यं युधिष्ठिरः
धूतपाप्मा जितस्वर्गो मुमुदे भ्रातृभिः सह २२
ऋत्विजस्तमपर्यन्तं सुवर्णनिचयं तदा
व्यभजन्त द्विजातिभ्यो यथोत्साहं यथाबलम् २३
यज्ञवाटे च यत्किंचिद्धिरण्यमपि भूषणम्
तोरणानि च यूपांश्च घटाः पात्रीस्तथेष्टकाः
युधिष्ठिराभ्यनुज्ञाताः सर्वं तद्व्यभजन्द्विजाः २४
अनन्तरं ब्राह्मणेभ्यः क्षत्रिया जह्रिरे वसु
तथा विट्शूद्रसंघाश्च तथान्ये म्लेच्छजातयः
कालेन महता जह्रुस्तत्सुवर्णं ततस्ततः २५
ततस्ते ब्राह्मणाः सर्वे मुदिता जग्मुरालयान्
तर्पिता वसुना तेन धर्मराज्ञा महात्मना २६
स्वमंशं भगवान्व्यासः कुन्त्यै पादाभिवादनात्
प्रददौ तस्य महतो हिरण्यस्य महाद्युतिः २७
श्वशुरात्प्रीतिदायं तं प्राप्य सा प्रीतिमानसा
चकार पुण्यं लोके तु सुमहान्तं पृथा तदा २८
गत्वा त्ववभृथं राजा विपाप्मा भ्रातृभिः सह
सभाज्यमानः शुशुभे महेन्द्रो दैवतैरिव २९
पाण्डवाश्च महीपालैः समेतैः संवृतास्तदा
अशोभन्त महाराज ग्रहास्तारागणैरिव ३०
राजभ्योऽपि ततः प्रादाद्रत्नानि विविधानि च
गजानश्वानलंकारान्स्त्रियो वस्त्राणि काञ्चनम् ३१
तद्धनौघमपर्यन्तं पार्थः पार्थिवमण्डले
विसृजञ्शुशुभे राजा यथा वैश्रवणस्तथा ३२
आनाय्य च तथा वीरं राजानं बभ्रुवाहनम्
प्रदाय विपुलं वित्तं गृहान्प्रास्थापयत्तदा ३३

दुःशलायाश्च तं पौत्रं बालकं पार्थिवर्षभ
स्वराज्ये पितृभिर्गुप्ते प्रीत्यासमभिषेचयत् ३४
राज्ञश्चैवापि तान्सर्वान्सुविभक्तान्सुपूजितान्
प्रस्थापयामास वशी कुरुराजो युधिष्ठिरः ३५
एवं बभूव यज्ञः स धर्मराजस्य धीमतः
बह्वन्नधनरत्नौघः सुरामैरेयसागरः ३६
सर्पिःपङ्का ह्रदा यत्र बहवश्चान्नपर्वताः
रसालाकर्दमाः कुल्या बभूवुर्भरतर्षभ ३७
भक्ष्यषाण्डवरागाणां क्रियतां भुज्यतामिति
पशूनां वध्यतां चापि नान्तस्तत्र स्म दृश्यते ३८
मत्तोन्मत्तप्रमुदितं प्रगीतयुवतीजनम्
मृदङ्गशङ्खशब्दैश्च मनोरममभूत्तदा ३९
दीयतां भुज्यतां चेति दिवारात्रमवारितम्
तं महोत्सवसंकाशमतिहृष्टजनाकुलम्
कथयन्ति स्म पुरुषा नानादेशनिवासिनः ४०
वर्षित्वा धनधाराभिः कामै रत्नैर्धनैस्तथा
विपाप्मा भरतश्रेष्ठः कृतार्थःप्राविशत्पुरम् ४१
इति श्रीमहाभारते आश्वमेधिकपर्वणि एकनवतितमोऽध्यायः ९१

द्विनवतितमोऽध्यायः

जनमेजय उवाच
पितामहस्य मे यज्ञे धर्मपुत्रस्य धीमतः
यदाश्चर्यमभूत्किंचित्तद्भवान्वक्तुमर्हति १
वैशम्पायन उवाच
श्रूयतां राजशार्दूल महदाश्चर्यमुत्तमम्
अश्वमेधे महायज्ञे निवृत्ते यदभूद्विभो २
तर्पितेषु द्विजाग्र्येषु ज्ञातिसंबन्धिबन्धुषु
दीनान्धकृपणे चापि तदा भरतसत्तम ३
घुष्यमाणे महादाने दिक्षु सर्वासु भारत
पतत्सु पुष्पवर्षेषु धर्मराजस्य मूर्धनि ४

बिलान्निष्क्रम्य नकुलो रुक्मपार्श्वस्तदानघ
वज्राशनिसमं नादममुञ्चत विशां पते ५
सकृदुत्सृज्य तं नादं त्रासयानो मृगद्विजान्
मानुषं वचनं प्राह धृष्टो बिलशयो महान् ६
सक्तुप्रस्थेन वो नायं यज्ञस्तुल्यो नराधिपाः
उञ्छवृत्तेर्वदान्यस्य कुरुक्षेत्रनिवासिनः ७
तस्य तद्वचनं श्रुत्वा नकुलस्य विशां पते
विस्मयं परमं जग्मुः सर्वे ते ब्राह्मणर्षभाः ८
ततः समेत्य नकुलं पर्यपृच्छन्त ते द्विजाः
कुतस्त्वं समनुप्राप्तो यज्ञं साधुसमागमम् ९
किं बलं परमं तुभ्यं किं श्रुतं किं परायणम्
कथं भवन्तं विद्याम यो नो यज्ञं विहर्गसे १०
अविलुप्यागमं कृत्स्नं विधिज्ञैर्याजकैः कृतम्
यथागमं यथान्यायं कर्तव्यं च यथाकृतम् ११
पूजार्हाः पूजिताश्चात्र विधिवच्छास्त्रचक्षुषा
मन्त्रपूतं हुतश्चाग्निर्दत्तं देयममत्सरम् १२
तुष्टा द्विजर्षभाश्चात्र दानैर्बहुविधैरपि
क्षत्रियाश्च सुयुद्धेन श्राद्धैरपि पितामहाः१३
पालनेन विशस्तुष्टाः कामैस्तुष्टा वरस्त्रियः
अनुक्रोशैस्तथा शूद्रा दानशेषैः पृथग्जनाः १४
ज्ञातिसंबन्धिनस्तुष्टाः शौचेन च नृपस्य नः
देवा हविर्भिः पुण्यैश्च रक्षणैः शरणागताः १५
यदत्र तथ्यं तद्ब्रूहि सत्यसंध द्विजातिषु
यथाश्रुतं यथादृष्टं पृष्टो ब्राह्मणकाम्यया १६
श्रद्धेयवाक्यः प्राज्ञस्त्वं दिव्यं रूपं बिभर्षि च
समागतश्च विप्रैस्त्वं तत्त्वतो वक्तुमर्हसि १७
इति पृष्टो द्विजैस्तैः स प्रहस्य नकुलोऽब्रवीत्
नैषानृता मया वाणी प्रोक्ता दर्पेण वा द्विजाः १८
यन्मयोक्तमिदं किंचिद्युष्माभिश्चाप्युपश्रुतम्
सक्तुप्रस्थेन वो नायं यज्ञस्तुल्यो नराधिपाः

उञ्छवृत्तेर्वदान्यस्य कुरुक्षेत्रनिवासिनः १९
इत्यवश्यं मयैतद्वो वक्तव्यं द्विजपुंगवाः
शृणुताव्यग्रमनसः शंसतो मे द्विजर्षभाः २०
अनुभूतं च दृष्टं च यन्मयाद्भुतमुत्तमम्
उञ्छवृत्तेर्यथावृत्तं कुरुक्षेत्रनिवासिनः २१
स्वर्गं येन द्विजः प्राप्तः सभार्यः ससुतस्नुषः
यथा चार्धं शरीरस्य ममेदं काञ्चनीकृतम् २२
इति श्रीमहाभारते आश्वमेधिकपर्वणि द्विनवतितमोऽध्यायः ९२

## त्रिनवतितमोऽध्यायः

नकुल उवाच
हन्त वो वर्तयिष्यामि दानस्य परमं फलम्
न्यायलब्धस्य सूक्ष्मस्य विप्रदत्तस्य यद्द्विजाः १
धर्मक्षेत्रे कुरुक्षेत्रे धर्मज्ञैर्बहुभिर्वृते
उञ्छवृत्तिर्द्विजः कश्चित्कापोतिरभवत्पुरा २
सभार्यः सह पुत्रेण सस्नुषस्तपसि स्थितः
वधूचतुर्थो वृद्धः स धर्मात्मा नियतेन्द्रियः ३
षष्ठे काले तदा विप्रो भुङ्क्ते तैः सह सुव्रतः
षष्ठे काले कदाचिच्च तस्याहारो न विद्यते
भुङ्क्तेऽन्यस्मिन्कदाचित्स षष्ठे काले द्विजोत्तमः ४
कपोतधर्मिणस्तस्य दुर्भिक्षे सति दारुणे
नाविद्यत तदा विप्राः संचयस्तान्निबोधत
क्षीणौषधिसमावायो द्रव्यहीनोऽभवत्तदा ५
काले कालेऽस्य संप्राप्ते नैव विद्येत भोजनम्
क्षुधापरिगताः सर्वे प्रातिष्ठन्त तदा तु ते ६
उञ्छंस्तदा शुक्लपक्षे मध्यं तपति भास्करे
उष्णार्तश्च क्षुधार्तश्च स विप्रस्तपसि स्थितः
उञ्छमप्राप्तवानेव सार्धं परिजनेन ह ७
स तथैव क्षुधाविष्टः स्पृष्ट्वा तोयं यथाविधि
क्षपयामास तं कालं कृच्छ्रप्राणो द्विजोत्तमः ८

अथ षष्ठे गते काले यवप्रस्थमुपार्जयत्
यवप्रस्थं च ते सक्तूनकुर्वन्त तपस्विनः ९
कृतजप्याह्निकास्ते तु हुत्वा वह्निं यथाविधि
कुडवं कुडवं सर्वे व्यभजन्त तपस्विनः १०
अथागच्छद्द्विजः कश्चिदतिथिर्भुञ्जतां तदा
ते तं दृष्ट्वातिथिं तत्र प्रहृष्टमनसोऽभवन् ११
तेऽभिवाद्य सुखप्रश्नं पृष्ट्वा तमतिथिं तदा
विशुद्धमनसो दान्ताः श्रद्धादमसमन्विताः १२
अनसूयवो गतक्रोधाः साधवो गतमत्सराः
त्यक्तमाना जितक्रोधा धर्मज्ञा द्विजसत्तमाः १३
सब्रह्मचर्यं स्वं गोत्रं समाख्याय परस्परम्
कुटीं प्रवेशयामासुः क्षुधार्तमतिथिं तदा १४
इदमर्घ्यं च पाद्यं च बृसी चेयं तवानघ
शुचयः सक्तवश्चेमे नियमोपार्जिताः प्रभो
प्रतिगृह्णीष्व भद्रं ते मया दत्ता द्विजोत्तम १५
इत्युक्तः प्रतिगृह्याथ सक्तूनां कुडवं द्विजः
भक्षयामास राजेन्द्र न च तुष्टिं जगाम सः १६
स उञ्छवृत्तिः तं प्रेक्ष्य क्षुधापरिगतं द्विजम्
आहारं चिन्तयामास कथं तुष्टो भवेदिति १७
तस्य भार्याब्रवीद्राजन्मद्भागो दीयतामिति
गच्छत्वेष यथाकामं संतुष्टो द्विजसत्तमः १८
इति ब्रुवन्तीं तां साध्वीं स धर्मात्मा द्विजर्षभः
क्षुधापरिगतां ज्ञात्वा सक्तूंस्तान्नाभ्यनन्दत १९
जानन्वृद्धां क्षुधार्तां च श्रान्तां ग्लानां तपस्विनीम्
त्वगस्थिभूतां वेपन्तीं ततो भार्यामुवाच ताम् २०
अपि कीटपतंगानां मृगाणां चैव शोभने
स्त्रियो रक्ष्याश्च पोष्याश्च नैवं त्वं वक्तुमर्हसि २१
अनुकम्पितो नरो नार्या पुष्टो रक्षित एव च
प्रपतेद्यशसो दीप्तान्न च लोकानवाप्नुयात् २२
इत्युक्ता सा ततः प्राह धर्मार्थौ नौ समौ द्विज

सक्तुप्रस्थचतुर्भागं गृहाणेमं प्रसीद मे २३
सत्यं रतिश्च धर्मश्च स्वर्गश्च गुणनिर्जितः
स्त्रीणां पतिसमाधीनं काङ्क्षितं च द्विजोत्तम २४
ऋतुर्मातुः पितुर्बीजं दैवतं परमं पतिः
भर्तुः प्रसादात्स्त्रीणां वै रतिः पुत्रफलं तथा २५
पालनाद्धि पतिस्त्वं मे भर्तासि भरणान्मम
पुत्रप्रदानाद्वरदस्तस्मात्सक्तून्गृहाण मे २६
जरापरिगतो वृद्धः क्षुधार्तो दुर्बलो भृशम्
उपवासपरिश्रान्तो यदा त्वमपि कर्शितः २७
इत्युक्तः स तया सक्तून्प्रगृह्येदं वचोऽब्रवीत्
द्विज सक्तूनिमान्भूयः प्रतिगृह्णीष्व सत्तम २८
स तान्प्रगृह्य भुक्त्वा च न तुष्टिमगमद्द्विजः
तमुञ्छवृत्तिरालक्ष्य ततश्चिन्तापरोऽभवत् २९
पुत्र उवाच
सक्तूनिमान्प्रगृह्य त्वं देहि विप्राय सत्तम
इत्येवं सुकृतं मन्ये तस्मादेतत्करोम्यहम् ३०
भवान्हि परिपाल्यो मे सर्वयत्नैर्द्विजोत्तम
साधूनां काङ्क्षितं ह्येतत्पितुर्वृद्धस्य पोषणम् ३१
पुत्रार्थो विहितो ह्येष स्थाविर्ये परिपालनम्
श्रुतिरेषा हि विप्रर्षे त्रिषु लोकेषु विश्रुता ३२
प्राणधारणमात्रेण शक्यं कर्तुं तपस्त्वया
प्राणो हि परमो धर्मः स्थितो देहेषु देहिनाम् ३३
पितोवाच
अपि वर्षसहस्री त्वं बाल एव मतो मम
उत्पाद्य पुत्रं हि पिता कृतकृत्यो भवत्युत ३४
बालानां क्षुद्बलवती जानाम्येतदहं विभो
वृद्धोऽह धारयिष्यामि त्वं बली भव पुत्रक ३५
जीर्णे न वयसा पुत्र न मा क्षुद्बाधतेऽपि च
दीर्घकालं तपस्तप्तं न मे मरणतो भयम् ३६
पुत्र उवाच

अपत्यमस्मि ते पुत्रस्त्राणात्पुत्रो हि विश्रुतः
आत्मा पुत्रः स्मृतस्तस्मात्त्राह्यात्मानमिहात्मना ३७
पितोवाच
रूपेण सदृशस्त्वं मे शीलेन च दमेन च
परीक्षितश्च बहुधा सक्तूनादद्मि ते ततः ३८
इत्युक्त्वादाय तान्सक्तून्प्रीतात्मा द्विजसत्तमः
प्रहसन्निव विप्राय स तस्मै प्रददौ तदा ३९
भुक्त्वा तानपि सक्तून्स नैव तुष्टो बभूव ह
उञ्छवृत्तिस्तु सव्रीडो बभूव द्विजसत्तमः ४०
तं वै वधूः स्थिता साध्वी ब्राह्मणप्रियकाम्यया
सक्तूनादाय संहृष्टा गुरुं तं वाक्यमब्रवीत् ४१
संतानात्तव संतानं मम विप्र भविष्यति
सक्तूनिमानतिथये गृहीत्वा त्वं प्रयच्छ मे ४२
तव प्रसवनिर्वृत्या मम लोकाः किलाक्षयाः
पौत्रेण तानवाप्नोति यत्र गत्वा न शोचति ४३
धर्माद्या हि यथा त्रेता बह्नित्रेता तथैव च
तथैव पुत्रपौत्राणां स्वर्गे त्रेता किलाक्षया ४४
पितॄंस्त्राणात्तारयति पुत्र इत्यनुशुश्रुम
पुत्र पौत्रैश्च नियतं साधुलोकानुपाश्नुते ४५
श्वशुर उवाच
वातातपविशीर्णाङ्गीं त्वां विवर्णां निरीक्ष्य वै
कर्शितां सुव्रताचारे क्षुधाविह्वलचेतसम् ४६
कथं सक्तून्ग्रहीष्यामि भूत्वा धर्मोपघातकः
कल्याणवृत्ते कल्याणि नैवं त्वं वक्तुमर्हसि ४७
षष्ठे काले व्रतवतीं शीलशौचसमन्विताम्
कृच्छ्रवृत्तिं निराहारां द्रक्ष्यामि त्वां कथं न्वहम् ४८
बाला क्षुधार्ता नारी च रक्ष्या त्वं सततं मया
उपवासपरिश्रान्ता त्वं हि बान्धवनन्दिनी ४९
स्नुषोवाच
गुरोर्मम गुरुस्त्वं वै यतो दैवतदैवतम्

देवातिदेवस्तस्मात्त्वं सक्तूनादत्स्व मे विभो ५०
देहः प्राणश्च धर्मश्च शुश्रूषार्थमिदं गुरोः
तव विप्र प्रसादेन लोकान्प्राप्स्याम्यभीप्सितान् ५१
अवेक्ष्या इति कृत्वा त्वं दृढभक्त्येति वा द्विज
चिन्त्या ममेयमिति वा सक्तूनादातुमर्हसि ५२
श्वशुर उवाच
अनेन नित्यं साध्वी त्वं शीलवृत्तेन शोभसे
या त्वं धर्मव्रतोपेता गुरुवृत्तिमवेक्षसे ५३
तस्मात्सक्तून्ग्रहीष्यामि वधूर्नार्हसि वञ्चनाम्
गणयित्वा महाभागे त्वं हि धर्मभृतां वरा ५४
इत्युक्त्वा तानुपादाय सक्तून्प्रादाद्द्विजातये
ततस्तुष्टोऽभवद्विप्रस्तस्य साधोर्महात्मनः ५५
प्रीतात्मा स तु तं वाक्यमिदमाह द्विजर्षभम्
वाग्मी तदा द्विजश्रेष्ठो धर्मः पुरुषविग्रहः ५६
शुद्धेन तव दानेन न्यायोपात्तेन यत्नतः
यथाशक्ति विमुक्तेन प्रीतोऽस्मि द्विजसत्तम ५७
अहो दानं घुष्यते ते स्वर्गे स्वर्गनिवासिभिः
गगनात्पुष्पवर्षं च पश्यस्व पतितं भुवि ५८
सुरर्षिदेवगन्धर्वा ये च देवपुरःसराः
स्तुवन्तो देवदूताश्च स्थिता दानेन विस्मिताः ५९
ब्रह्मर्षयो विमानस्था ब्रह्मलोकगताश्च ये
काङ्क्षन्ते दर्शनं तुभ्यं दिवं गच्छ द्विजर्षभ ६०
पितृलोकगताः सर्वे तारिताः पितरस्त्वया
अनागताश्च बहवः सुबहूनि युगानि च ६१
ब्रह्मचर्येण यज्ञेन दानेन तपसा तथा
अगह्वरेण धर्मेण तस्माद्गच्छ दिवं द्विज ६२
श्रद्धया परया यस्त्वं तपश्चरसि सुव्रत
तस्माद्देवास्तवानेन प्रीता द्विजवरोत्तम ६३
सर्वस्वमेतद्यस्मात्ते त्यक्तं शुद्धेन चेतसा
कृच्छ्रकाले ततः स्वर्गो जितोऽय तव कर्मणा ६४

क्षुधा निर्णुदति प्रज्ञां धर्म्यां बुद्धिं व्यपोहति
क्षुधापरिगतज्ञानो धृतिं त्यजति चैव ह ६५
बुभुक्षां जयते यस्तु स स्वर्गं जयते ध्रुवम्
यदा दानरुचिर्भवति तदा धर्मो न सीदति ६६
अनवेक्ष्य सुतस्नेहं कलत्रस्नेहमेव च
धर्ममेव गुरुं ज्ञात्वा तृष्णा न गणिता त्वया ६७
द्रव्यागमो नृणां सूक्ष्मः पात्रे दानं ततः परम्
कालः परतरो दानाच्छ्रद्धा चापि ततः परा ६८
स्वर्गद्वारं सुसूक्ष्मं हि नरैर्मोहान्न दृश्यते
स्वर्गार्गलं लोभबीजं रागगुप्तं दुरासदम् ६९
तत्तु पश्यन्ति पुरुषा जितक्रोधा जितेन्द्रियाः
ब्राह्मणास्तपसा युक्ता यथाशक्तिप्रदायिनः ७०
सहस्रशक्तिश्च शतं शतशक्तिर्दशापि च
दद्यादपश्च यः शक्त्या सर्वे तुल्यफलाः स्मृताः ७१
रन्तिदेवो हि नृपतिरपः प्रादादकिंचनः
शुद्धेन मनसा विप्र नाकपृष्ठं ततो गतः ७२
न धर्मः प्रीयते तात दानैर्दत्तैर्महाफलैः
न्यायलब्धैर्यथा सूक्ष्मैः श्रद्धापूतैः स तुष्यति ७३
गोप्रदानसहस्राणि द्विजेभ्योऽदान्नृगो नृपः
एकां दत्त्वा स पारक्यां नरकं समवाप्तवान् ७४
आत्ममांसप्रदानेन शिबिरौशीनरो नृपः
प्राप्य पुण्यकृताँल्लोकान्मोदते दिवि सुव्रतः ७५
बिभवे न नृणां पुण्यं स्वशक्त्या स्वर्जितं सताम्
न यज्ञैर्विविधैर्विप्र यथान्यायेन संचितैः ७६
क्रोधो दानफलं हन्ति लोभात्स्वर्गं न गच्छति
न्यायवृत्तिर्हि तपसा दानवित्स्वर्गमश्नुते ७७
न राजसूयैर्बहुभिरिष्ट्वा विपुलदक्षिणैः
न चाश्वमेधैर्बहुभिः फलं सममिदं तव ७८
सक्तुप्रस्थेन हि जितो ब्रह्मलोकस्त्वयानघ
विरजो ब्रह्मभवनं गच्छ विप्र यथेच्छकम् ७९

सर्वेषां वो द्विजश्रेष्ठ दिव्यं यानमुपस्थितम्
आरोहत यथाकामं धर्मोऽस्मि द्विज पश्य माम् ८०
पावितो हि त्वया देहो लोके कीर्तिः स्थिरा च ते
सभार्यः सहपुत्रश्च सस्नुषश्च दिवं व्रज ८१
इत्युक्तवाक्यो धर्मेण यानमारुह्य स द्विजः
सभार्यः ससुतश्चापि सस्नुषश्च दिवं ययौ ८२
तस्मिन्विप्रे गते स्वर्गे ससुते सस्नुषे तदा
भार्याचतुर्थे धर्मज्ञे ततोऽह निःसृतो बिलात् ८३
ततस्तु सक्तुगन्धेन क्लेदेन सलिलस्य च
दिव्यपुष्पावमर्दाच्च साधोर्दानलवैश्च तैः
विप्रस्य तपसा तस्य शिरो मे काञ्चनीकृतम् ८४
तस्य सत्याभिसंधस्य सूक्ष्मदानेन चैव ह
शरीरार्धं च मे विप्राः शातकुम्भमयं कृतम्
पश्यतेदं सुविपुलं तपसा तस्य धीमतः ८५
कथमेवंविधं मे स्यादन्यत्पार्श्वमिति द्विजाः
तपोवनानि यज्ञांश्च हृष्टोऽभ्येमि पुनः पुनः ८६
यज्ञं त्वहमिमं श्रुत्वा कुरुराजस्य धीमतः
आशया परया प्राप्तो न चाहं काञ्चनीकृतः ८७
ततो मयोक्तं तद्वाक्यं प्रहस्य द्विजसत्तमाः
सक्तुप्रस्थेन यज्ञोऽय संमितो नेति सर्वथा ८८
सक्तुप्रस्थलवैस्तैर्हि तदाहं काञ्चनीकृतः
न हि यज्ञो महानेष सदृशस्तैर्मतो मम ८९
वैशम्पायन उवाच
इत्युक्त्वा नकुलः सर्वान्यज्ञे द्विजवरांस्तदा
जगामादर्शनं राजन्विप्रास्ते च ययुर्गृहान् ९०
एतत्ते सर्वमाख्यातं मया परपुरंजय
यदाश्चर्यमभूत्तस्मिन्वाजिमेधे महाक्रतौ ९१
न विस्मयस्ते नृपते यज्ञे कार्यः कथंचन
ऋषिकोटिसहस्राणि तपोभिर्ये दिवं गताः ९२
अद्रोहः सर्वभूतेषु संतोषः शीलमार्जवम्

तपो दमश्च सत्यं च दानं चेति समं मतम् ९३
इति श्रीमहाभारते आश्वमेधिकपर्वणि त्रिनवतितमोऽध्यायः ९३

## चतुर्नवतितमोऽध्यायः

जनमेजय उवाच
यज्ञे सक्ता नृपतयस्तपः सक्ता महर्षयः
शान्तिव्यवसिता विप्राः शमो दम इति प्रभो १
तस्माद्यज्ञफलैस्तुल्यं न किंचिदिह विद्यते
इति मे वर्तते बुद्धिस्तथा चैतदसंशयम् २
यज्ञैरिष्ट्वा हि बहवो राजानो द्विजसत्तम
इह कीर्तिं परां प्राप्य प्रेत्य स्वर्गमितो गताः ३
देवराजः सहस्राक्षः क्रतुभिर्भूरिदक्षिणैः
देवराज्यं महातेजाः प्राप्तवानखिलं विभुः४
यथा युधिष्ठिरो राजा भीमार्जुनपुरःसरः
सदृशो देवराजेन समृद्ध्या विक्रमेण च ५
अथ कस्मात्स नकुलो गर्हयामास तं क्रतुम्
अश्वमेधं महायज्ञं राज्ञस्तस्य महात्मनः ६
वैशम्पायन उवाच
यज्ञस्य विधिमग्र्यं वै फलं चैव नरर्षभ
गदतः शृणु मे राजन्यथावदिह भारत ७
पुरा शक्रस्य यजतः सर्व ऊचुर्महर्षयः
ऋत्विक्षु कर्मव्यग्रेषु वितते यज्ञकर्मणि ८
हूयमाने तथा वह्नौ होत्रे बहुगुणान्विते
देवेष्वाहूयमानेषु स्थितेषु परमर्षिषु ९
सुप्रतीतैस्तदा विप्रैः स्वागमैः सुस्वनैर्नृप
अश्रान्तैश्चापि लघुभिरध्वर्युवृषभैस्तथा १०
आलम्भसमये तस्मिन्गृहीतेषु पशुष्वथ
महर्षयो महाराज संबभूवुः कृपान्विताः ११
ततो दीनान्पशून्दृष्ट्वा ऋषयस्ते तपोधनाः
ऊचुः शक्रं समागम्य नायं यज्ञविधिः शुभः १२

अपविज्ञानमेतत्ते महान्तं धर्ममिच्छतः
न हि यज्ञे पशुगणा विधिदृष्टाः पुरंदर १३
धर्मोपघातकस्त्वेष समारम्भस्तव प्रभो
नायं धर्मकृतो धर्मो न हिंसा धर्म उच्यते १४
आगमेनैव ते यज्ञं कुर्वन्तु यदि हेच्छसि
विधिदृष्टेन यज्ञेन धर्मस्ते सुमहान्भवेत् १५
यज बीजैः सहस्राक्ष त्रिवर्षपरमोषितैः
एष धर्मो महाञ्शक्र चिन्त्यमानोऽधिगम्यते १६
शतक्रतुस्तु तद्वाक्यमृषिभिस्तत्त्वदर्शिभिः
उक्तं न प्रतिजग्राह मानमोहवशानुगः १७
तेषां विवादः सुमहाञ्जज्ञे शक्रमहर्षिणाम्
जङ्गमैः स्थावरैर्वापि यष्टव्यमिति भारत १८
ते तु खिन्ना विवादेन ऋषयस्तत्त्वदर्शिनः
ततः संधाय शक्रेण पप्रच्छुर्नृपतिं वसुम् १९
महाभाग कथं यज्ञेष्वागमो नृपते स्मृतः
यष्टव्यं पशुभिर्मेध्यैरथो बीजैरजैरपि २०
तच्छ्रुत्वा तु वचस्तेषामविचार्य बलाबलम्
यथोपनीतैर्यष्टव्यमिति प्रोवाच पार्थिवः २१
एवमुक्त्वा स नृपतिः प्रविवेश रसातलम्
उक्त्वेह वितथं राजंश्चेदीनामीश्वरः प्रभुः २२
अन्यायोपगतं द्रव्यमतीतं यो ह्यपण्डितः
धर्माभिकाङ्क्षी यजते न धर्मफलमश्नुते २३
धर्मवैतंसिको यस्तु पापात्मा पुरुषस्तथा
ददाति दानं विप्रेभ्यो लोकविश्वासकारकम् २४
पापेन कर्मणा विप्रो धनं लब्ध्वा निरङ्कुशः
रागमोहान्वितः सोऽन्ते कलुषां गतिमाप्नुते २५
तेन दत्तानि दानानि पापेन हतबुद्धिना
तानि सत्त्वमनासाद्य नश्यन्ति विपुलान्यपि २६
तस्याधर्मप्रवृत्तस्य हिंसकस्य दुरात्मनः
दाने न कीर्तिर्भवति प्रेत्य चेह च दुर्मतेः २७

अपि संचयबुद्धिर्हि लोभमोहवशंगतः
उद्वेजयति भूतानि हिंसया पापचेतनः २८
एवं लब्ध्वा धनं लोभाद्यजते यो ददाति च
स कृत्वा कर्मणा तेन न सिध्यति दुरागमात् २९
उञ्छं मूलं फलं शाकमुदपात्रं तपोधनाः
दानं विभवतो दत्त्वा नराः स्वर्यान्ति धर्मिणः ३०
एष धर्मो महांस्त्यागो दानं भूतदया तथा
ब्रह्मचर्यं तथा सत्यमनुक्रोशो धृतिः क्षमा
सनातनस्य धर्मस्य मूलमेतत्सनातनम् ३१
श्रूयन्ते हि पुरा विप्रा विश्वामित्रादयो नृपाः
विश्वामित्रोऽसितश्चैव जनकश्च महीपतिः
कक्षसेनार्ष्टिषेणौ च सिन्धुद्वीपश्च पार्थिवः ३२
एते चान्ये च बहवः सिद्धिं परमिकां गताः
नृपाः सत्यैश्च दानैश्च न्यायलब्धैस्तपोधनाः ३३
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा ये चाश्रितास्तपः
दानधर्माग्निना शुद्धास्ते स्वर्गं यान्ति भारत ३४
इति श्रीमहाभारते आश्वमेधिकपर्वणि चतुर्नवतितमोऽध्यायः ९४

## पञ्चनवतितमोऽध्यायः

जनमेजय उवाच
धर्मागतेन त्यागेन भगवन्सर्वमस्ति चेत्
एतन्मे सर्वमाचक्ष्व कुशलो ह्यसि भाषितुम् १
तोदुञ्छवृत्तेर्यद्वृत्तं सक्तुदाने फलं महत्
कथितं मे महद्ब्रह्मंस्तथ्यमेतदसंशयम् २
कथं हि सर्वयज्ञेषु निश्चयः परमो भवेत्
एतदर्हसि मे वक्तुं निखिलेन द्विजर्षभ ३
वैशम्पायन उवाच
अत्राप्युदाहरन्तीममितिहासं पुरातनम्
अगस्त्यस्य महायज्ञे पुरावृत्तमरिंदम ४
पुरागस्त्यो महातेजा दीक्षां द्वादशवार्षिकीम्

प्रविवेश महाराज सर्वभूतहिते रतः ५
तत्राग्निकल्पा होतार आसन्सत्रे महात्मनः
मूलाहारा निराहाराः साश्मकुट्टा मरीचिपाः ६
परिघृष्टिका वैघसिकाः संप्रक्षालास्तथैव च
यतयो भिक्षवश्चात्र बभूवुः पर्यवस्थिताः ७
सर्वे प्रत्यक्षधर्माणो जितक्रोधा जितेन्द्रियाः
दमे स्थिताश्च ते सर्वे दम्भमोहविवर्जिताः ८
वृत्ते शुद्धे स्थिता नित्यमिन्द्रियैश्चाप्यवाहिताः
उपासते स्म तं यज्ञं भुञ्जानास्ते महर्षयः ९
यथाशक्त्या भगवता तदन्नं समुपार्जितम्
तस्मिन्सत्रे यत्किंचिदयोग्यं तत्र नाभवत्
तथा ह्यनेकैर्मुनिभिर्महान्तः क्रतवः कृताः १०
एवंविधेस्त्वगस्त्यस्य वर्तमाने महाध्वरे
न ववर्ष सहस्राक्षस्तदा भरतसत्तम ११
ततः कर्मान्तरे राजन्नगस्त्यस्य महात्मनः
कथेयमभिनिर्वृत्ता मुनीनां भावितात्मनाम्  १२
अगस्त्यो यजमानोऽसौ ददात्यन्नं विमत्सरः
न च वर्षति पर्जन्यः कथमन्नं भविष्यति १३
सत्रं चेदं महद्विप्रा मुनेर्द्वादशवार्षिकम्
न वर्षिष्यति देवश्च वर्षाण्येतानि द्वादश १४
एतद्भवन्तः संचिन्त्य महर्षेरस्य धीमतः
अगस्त्यस्यातितपसः कर्तुमर्हन्त्यनुग्रहम् १५
इत्येवमुक्ते वचने ततोऽगस्त्यः प्रतापवान्
प्रोवाचेदं वचो वाग्मी प्रसाद्य शिरसा मुनीन् १६
यदि द्वादशवर्षाणि न वर्षिष्यति वासवः
चिन्तायज्ञं करिष्यामि विधिरेष सनातनः १७
यदि द्वादशवर्षाणि न वर्षिष्यति वासवः
व्यायामेनाहरिष्यामि यज्ञानन्यानतिव्रतान् १८
बीजयज्ञो मयायं वै बहुवर्षसमाचितः
बीजैः कृतैः करिष्ये च नात्र विघ्नो भविष्यति १९

नेदं शक्यं वृथा कर्तुं मम सत्रं कथंचन
वर्षिष्यतीह वा देवो न वा देवो भविष्यति २०
अथ वाभ्यर्थनामिन्द्रः कुर्यान्न त्विह कामतः
स्वयममिन्द्रो भविष्यामि जीवयिष्यामि च प्रजाः २१
यो यदाहारजातश्च स तथैव भविष्यति
विशेषं चैव कर्तास्मि पुनः पुनरतीव हि २२
अद्येह स्वर्णमभ्येतु यच्चान्यद्वसु दुर्लभम्
त्रिषु लोकेषु यच्चास्ति तदिहागच्छतां स्वयम् २३
दिव्याश्चाप्सरसां संघाः सगन्धर्वाः सकिंनराः
विश्वावसुश्च ये चान्ये तेऽप्युपासन्तु वः सदा २४
उत्तरेभ्यः कुरुभ्यश्च यत्किंचिद्वसु विद्यते
सर्वं तदिह यज्ञे मे स्वयमेवोपतिष्ठतु
स्वर्गं स्वर्गसदश्चैव धर्मश्च स्वयमेव तु २५
इत्युक्ते सर्वमेवैतदभवत्तस्य धीमतः
ततस्ते मुनयो दृष्ट्वा मुनेस्तस्य तपोबलम्
विस्मिता वचनं प्राहुरिदं सर्वे महार्थवत् २६
प्रीताः स्म तव वाक्येन न त्विच्छामस्तपोव्ययम्
स्वैरेव यज्ञैस्तुष्टाः स्मो न्यायेनेच्छामहे वयम् २७
यज्ञान्दीक्षास्तथा होमान्यच्चान्यन्मृगयामहे
तन्नोऽस्तु स्वकृतैर्यज्ञैर्नान्यतो मृगयामहे २८
न्यायेनोपार्जिताहाराः स्वकर्मनिरता वयम्
वेदांश्च ब्रह्मचर्येण न्यायतः प्रार्थयामहे २९
न्यायेनोत्तरकालं च गृहेभ्यो निःसृता वयम्
धर्मदृष्टैर्विधिद्वारैस्तपस्तप्स्यामहे वयम् ३०
भवतः सम्यगेषा हि बुद्धिर्हिंसाविवर्जिता
एतामहिंसां यज्ञेषु ब्रूयास्त्वं सततं प्रभो ३१
प्रीतास्ततो भविष्यामो वयं द्विजवरोत्तम
विसर्जिताः समाप्तौ च सत्रादस्माद्व्रजामहे ३२
वैशम्पायन उवाच
तथा कथयतामेव देवराजः पुरंदरः

ववर्ष सुमहातेजा दृष्ट्वा तस्य तपोबलम् ३३
असमाप्तौ च यज्ञस्य तस्यामितपराक्रमः
निकामवर्षी देवेन्द्रो बभूव जनमेजय ३४
प्रसादयामास च तमगस्त्यं त्रिदशेश्वरः
स्वयमभ्येत्य राजर्षे पुरस्कृत्य बृहस्पतिम् ३५
ततो यज्ञसमाप्तौ तान्विससर्ज महामुनीन्
अगस्त्यः परमप्रीतः पूजयित्वा यथाविधि ३६
इति श्रीमहाभारते आश्वमेधिकपर्वणि पञ्चनवतितमोऽध्यायः ९५

षण्णवतितमोऽध्यायः

जनमेजय उवाच
कोऽसौ नकुलरूपेण शिरसा काञ्चनेन वै
प्राह मानुषबद्वाचमेतत्पृष्टो वदस्व मे १
वैशम्पायन उवाच
एतत्पूर्वं न पृष्टोऽह न चास्माभिः प्रभाषितम्
श्रूयतां नकुलो योऽसौ यथा वागस्य मानुषी २
श्राद्धं संकल्पयामास जमदग्निः पुरा किल
होमधेनुस्तमागाच्च स्वयं चापि दुदोह ताम् ३
तत्क्षीरं स्थापयामास नवे भाण्डे दृढे शुचौ
तच्च क्रोधः स्वरूपेण पिठरं पर्यवर्तयत् ४
जिज्ञासुस्तमृषिश्रेष्ठं किं कुर्याद्विप्रिये कृते
इति संचिन्त्य दुर्मेधा धर्षयामास तत्पयः ५
तमाज्ञाय मुनिः क्रोधं नैवास्य चुकुपे ततः
स तु क्रोधस्तमाहेदं प्राञ्जलिर्मूर्तिमान्स्थितः ६
जितोऽस्मीति भृगुश्रेष्ठ भृगवो ह्यतिरोषणाः
लोके मिथ्याप्रवादोऽय यत्त्वयास्मि पराजितः ७
सोऽह त्वयि स्थितो ह्यद्य क्षमावति महात्मनि
बिभेमि तपसः साधो प्रसादं कुरु मे विभो ८
जमदग्निरुवाच
साक्षाद्दृष्टोऽसि मे क्रोध गच्छ त्वं विगतज्वरः

न ममापकृतं तेऽद्य न मन्युर्विद्यते मम ९
यानुद्दिश्य तु संकल्पः पयसोऽस्य कृतो मया
पितरस्ते महाभागास्तेभ्यो बुध्यस्व गम्यताम् १०
इत्युक्तो जातसंत्रासः स तत्रान्तरधीयत
पित्रणामभिषङ्गात्तु नकुलत्वमुपागतः ११
स तान्प्रसादयामास शापस्यान्तो भवेदिति
तैश्चाप्युक्तो यदा धर्मं क्षेप्स्यसे मोक्ष्यसे तदा १२
तैश्चोक्तो यज्ञियान्देशान्धर्मारण्यानि चैव ह
जुगुप्सन्परिधावन्स यज्ञं तं समुपासदत् १३
धर्मपुत्रमथाक्षिप्य सक्तुप्रस्थेन तेन सः
मुक्तः शापात्ततः क्रोधो धर्मो ह्यासीद्युधिष्ठिरः १४
एवमेतत्तदा वृत्तं तस्य यज्ञे महात्मनः
पश्यतां चापि नस्तत्र नकुलोऽन्तर्हितस्तदा १५

इति श्रीमहाभारते आश्वमेधिकपर्वणि षण्णवतितमोऽध्यायः ९६

आश्वमेधिकपर्व समाप्त

श्रीगणेशाय नमः
ॐ नारायणं नमस्कृत्य नरं चैव नरोत्तमम्
देवीं सरस्वतीं चैव ततो जयमुदीरयेत्

## अथ प्रथमोऽध्यायः

जनमेजय उवाच
प्राप्य राज्यं महाभागाः पाण्डवा मे पितामहाः
कथमासन्महाराजे धृतराष्ट्रे महात्मनि १
स हि राजा हतामात्यो हतपुत्रो निराश्रयः
कथमासीद्धतैश्वर्यो गान्धारी च यशस्विनी २
कियन्तं चैव कालं ते पितरो मम पूर्वकाः
स्थिता राज्ये महात्मानस्तन्मे व्याख्यातुमर्हसि ३
वैशम्पायन उवाच
प्राप्य राज्यं महात्मानः पाण्डवा हतशत्रवः
धृतराष्ट्रं पुरस्कृत्य पृथिवीं पर्यपालयन् ४
धृतराष्ट्रमुपातिष्ठद्विदुरः संजयस्तथा
युयुत्सुश्चापिमेधावी वैश्यापुत्रः स कौरवः ५
पाण्डवाः सर्वकार्याणि संपृच्छन्ति स्म तं नृपम्
चक्रुस्तेनाभ्यनुज्ञाता वर्षाणि दश पञ्च च ६
सदा हि गत्वा ते वीराः पर्युपासन्त तं नृपम्
पादाभिवन्दनं कृत्वा धर्मराजमते स्थिताः
ते मूर्ध्नि समुपाघ्राताः सर्वकार्याणि चक्रिरे ७
कुन्तिभोजसुताचैव गान्धारीमन्ववर्तत
द्रौपदी च सुभद्रा च याश्चान्याः पाण्डवस्त्रियः
समां वृत्तिमवर्तन्त तयोः श्वश्रोर्यथाविधि ८
शयनानि महार्हाणि वासांस्याभरणानि च
राजार्हाणि च सर्वाणि भक्ष्यभोज्यान्यनेकशः
युधिष्ठिरो महाराज धृतराष्ट्रेऽभ्युपाहरत् ९
तथैव कुन्ती गान्धार्यां गुरुवृत्तिमवर्तत
विदुरः संजयश्चैव युयुत्सुश्चैव कौरवः

उपासते स्म तं वृद्धं हतपुत्रं जनाधिपम् १०
श्यालो द्रोणस्य यश्चैको दयितो ब्राह्मणो महान्
स च तस्मिन्महेष्वासः कृपः समभवत्तदा ११
व्यासश्च भगवान्नित्यं वासं चक्रे नृपेण ह
कथाः कुर्वन्पुराणर्षिर्देवर्षिनृपरक्षसाम् १२
धर्मयुक्तानि कार्याणि व्यवहारान्वितानि च
धृतराष्ट्राभ्यनुज्ञातो विदुरस्तान्यकारयत् १३
सामन्तेभ्यः प्रियाण्यस्य कार्याणि सुगुरूण्यपि
प्राप्यन्तेऽथै सुलघुभिः प्रभावाद्विदुरस्य वै १४
अकरोद्बन्धमोक्षांश्च वध्यानां मोक्षणं तथा
न च धर्मात्मजो राजा कदाचित्किंचिदब्रवीत् १५
विहारयात्रासु पुनः कुरुराजो युधिष्ठिरः
सर्वान्कामान्महातेजाः प्रददावम्बिकासुते १६
आरालिकाः सूपकारा रागखाण्डविकास्तथा
उपातिष्ठन्त राजानं धृतराष्ट्रं यथा पुरा १७
वासांसि च महार्हाणि माल्यानि विविधानि च
उपाजह्रुर्यथान्यायं धृतराष्ट्रस्य पाण्डवाः १८
मैरेयं मधु मांसानि पानकानि लघूनि च
चित्रान्भक्ष्यविकारांश्च चक्रुरस्य यथा पुरा १९
ये चापि पृथिवीपालाः समाजग्मुः समन्ततः
उपातिष्ठन्त ते सर्वे कौरवेन्द्रं  यथा पुरा २०
कुन्ती च द्रौपदी चैव सात्वती चैव भामिनी
उलूपी नागकन्या च देवी चित्राङ्गदा तथा २१
धृष्टकेतोश्च भगिनी जरासन्धस्य चात्मजा
किंकराः स्मोपतिष्ठन्ति सर्वाः सुबलजां तथा २२
यथा पुत्रवियुक्तोऽय न किंचिद्दुःखमाप्नुयात्
इति राजान्वशाद्भ्रात्रन्नित्यमेव युधिष्ठिरः २३
एवं ते धर्मराजस्य श्रुत्वा वचनमर्थवत्
सविशेषमवर्तन्त भीममेकं विना तदा २४
न हि तत्तस्य वीरस्य हृदयादपसर्पति

धृतराष्ट्रस्य दुर्बुद्धेर्यद्वृत्तं द्यूतकारितम् २५
इति श्रीमहाभारते आश्रमवासपर्वणि प्रथमोऽध्यायः १

द्वितीयोऽध्यायः

वैशम्पायन उवाच
एवं संपूजितो राजा पाण्डवैरम्बिकासुतः
विजहार यथापूर्वमृषिभिः पर्युपासितः १
ब्रह्मदेयाग्रहारांश्च प्रददौ स कुरूद्वहः
तच्च कुन्तीसुतो राजा सर्वमेवान्वमोदत २
आनृशंस्यपरो राजा प्रीयमाणो युधिष्ठिरः
उवाच स तदा भ्रात्रनमात्यांश्च महीपतिः ३
मया चैव भवद्भिश्च मान्य एष नराधिपः
निदेशे धृतराष्ट्रस्य यः स्थास्यति स मे सुहृत्
विपरीतश्च मे शत्रुर्निरस्यश्च भवेन्नरः ४
परिदृष्टेषु चाहःसु पुत्राणां श्राद्धकर्मणि
ददातु राजा सर्वेषां यावदस्य चिकीर्षितम् ५
ततः स राजा कौरव्यो धृतराष्ट्रो महामनाः
ब्राह्मणेभ्यो महार्हेभ्यो ददौ वित्तान्यनेकशः ६
धर्मराजश्च भीमश्च सव्यसाची यमावपि
तत्सर्वमन्ववर्तन्त धृतराष्ट्रव्यपेक्षया ७
कथं नु राजा वृद्धः सन्पुत्रशोकसमाहतः
शोकमस्मत्कृतं प्राप्य न म्रियेतेति चिन्त्यते ८
यावद्धि कुरुमुख्यस्य जीवत्पुत्रस्य वै सुखम्
बभूव तदवाप्नोतु भोगांश्चेति व्यवस्थिताः ९
ततस्ते सहिताः सर्वे भ्रातरः पञ्च पाण्डवाः
तथाशीलाः समातस्थुर्धृतराष्ट्रस्य शासने १०
धृतराष्ट्रश्च तान्वीरान्विनीतान्विनये स्थितान्
शिष्यवृत्तौ स्थितान्नित्यं गुरुवत्पर्यपश्यत ११
गान्धारी चैव पुत्राणां विविधैः श्राद्धकर्मभिः
आनृण्यमगमत्कामान्विप्रेभ्यः प्रतिपाद्य वै १२

एवं धर्मभृतां श्रेष्ठो धर्मराजो युधिष्ठिरः
भ्रातृभिः सहितो धीमान्पूजयामास तं नृपम् १३
इति श्रीमहाभारते आश्रमवासपर्वणि द्वितीयोऽध्यायः २

तृतीयोऽध्यायः

वैशम्पायन उवाच
स राजा सुमहातेजा वृद्धः कुरुकुलोद्वहः
नापश्यत तदा किंचिदप्रियं पाण्डुनन्दने १
वर्तमानेषु सद्वृत्तिं पाण्डवेषु महात्मसु
प्रीतिमानभवद्राजा धृतराष्ट्रोऽम्बिकासुतः २
सौबलेयी च गान्धारी पुत्रशोकमपास्य तम्
सदैव प्रीतिमत्यासीत्तनयेषु निजेष्विव ३
प्रियाण्येव तु कौरव्यो नाप्रियाणि कुरूद्वह
वैचित्रवीर्ये नृपतौ समाचरति नित्यदा ४
यद्यद् ब्रूते च किंचित्स धृतराष्ट्रो नराधिपः
गुरु वा लघु वा कार्यं गान्धारी च यशस्विनी ५
तत्स राजा महाराज पाण्डवानां धुरंधरः
पूजयित्वा वचस्तत्तदकार्षीत्परवीरहा ६
तेन तस्याभवत्प्रीतो वृत्तेन स नराधिपः
अन्वतप्यच्च संस्मृत्य पुत्रं मन्दमचेतसम् ७
सदा च प्रातरुत्थाय कृतजप्यः शुचिर्नृपः
आशास्ते पाण्डुपुत्राणां समरेष्वपराजयम् ८
ब्राह्मणान्वाचयित्वा च हुत्वा चैव हुताशनम्
आयुष्यं पाण्डुपुत्राणामाशास्ते स नराधिपः ९
न तां प्रीतिं परामाप पुत्रेभ्यः स महीपतिः
यां प्रीतिं पाण्डुपुत्रेभ्यः समवाप तदा नृपः १०
ब्राह्मणानां च वृद्धानां क्षत्रियाणां च भारत
तथा विट्शूद्रसंघानामभवत्सुप्रियस्तदा ११
यच्च किंचित्पुरा पापं धृतराष्ट्रसुतैः कृतम्
अकृत्वा हृदि तद्राजा तं नृपं सोऽन्ववर्तत १२

यश्च कश्चिन्नरः किंचिदप्रियं चाम्बिकासुते
कुरुते द्वेष्यतामेति स कौन्तेयस्य धीमतः १३
न राज्ञो धृतराष्ट्रस्य न च दुर्योधनस्य वै
उवाच दुष्कृतं किंचिद्युधिष्ठिरभयान्नरः १४
धृत्या तुष्टो नरेन्द्रस्य गान्धारी विदुरस्तथा
शौचेन चाजातशत्रोर्न तु भीमस्य शत्रुहन् १५
अन्ववर्तत भीमोऽपि निष्टनन्धर्मजं नृपम्
धृतराष्ट्रं च संप्रेक्ष्य सदा भवति दुर्मनाः १६
राजानमनुवर्तन्तं धर्मपुत्रं महामतिम्
अन्ववर्तत कौरव्यो हृदयेन पराङ्मुखः १७
इति श्रीमहाभारते आश्रमवासपर्वणि तृतीयोऽध्यायः ३

## चतुर्थोऽध्यायः

वैशम्पायन उवाच
युधिष्ठिरस्य नृपतेर्दुर्योधनपितुस्तथा
नान्तरं ददृशू राजन्पुरुषाः प्रणयं प्रति १
यदा तु कौरवो राजा पुत्रं सस्मार बालिशम्
तदा भीमं हृदा राजन्नपध्याति स पार्थिवः २
तथैव भीमसेनोऽपि धृतराष्ट्रं जनाधिपम्
नामर्षयत राजेन्द्र सदैवातुष्टवद्धृदा ३
अप्रकाशान्यप्रियाणि चकारास्य वृकोदरः
आज्ञां प्रत्यहरच्चापि कृतकैः पुरुषैः सदा ४
अथ भीमः सुहृन्मध्ये बाहुशब्दं तथाकरोत्
संश्रवे धृतराष्ट्रस्य गान्धार्याश्चाप्यमर्षणः ५
स्मृत्वा दुर्योधनं शत्रुं कर्णदुःशासनावपि
प्रोवाचाथ सुसंरब्धो भीमः स परुषं वचः ६
अन्धस्य नृपतेः पुत्रा मया परिघबाहुना
नीता लोकममुं सर्वे नानाशस्त्रात्तजीविताः ७
इमौ तौ परिघप्रख्यौ भुजौ मम दुरासदौ
ययोरन्तरमासाद्य धार्तराष्ट्राः क्षयं गताः ८

ताविमौ चन्दनेनाक्तौ वन्दनीयौ च मे भुजौ
याभ्यां दुर्योधनो नीतः क्षयं ससुतबान्धवः ९
एताश्चान्याश्च विविधाः शल्यभूता जनाधिपः
वृकोदरस्य ता वाचः श्रुत्वा निर्वेदमागमत् १०
सा च बुद्धिमती देवी कालपर्यायवेदिनी
गान्धारी सर्वधर्मज्ञा तान्यलीकानि शुश्रुवे ११
ततः पञ्चदशे वर्षे समतीते नराधिपः
राजा निर्वेदमापेदे भीमवाग्बाणपीडितः १२
नान्वबुध्यत तद्राजा कुन्तीपुत्रो युधिष्ठिरः
श्वेताश्वो वाथ कुन्ती वा द्रौपदी वा यशस्विनी १३
माद्रीपुत्रौ च भीमस्य चित्तज्ञावन्वमोदताम्
राज्ञस्तु चित्तं रक्षन्तौ नोचतुः किंचिदप्रियम् १४
ततः समानयामास धृतराष्ट्रः सुहृज्जनम्
बाष्पसंदिग्धमत्यर्थमिदमाह वचो भृशम् १५
इति श्रीमहाभारते आश्रमवासपर्वणि चतुर्थोऽध्यायः ४

## पञ्चमोऽध्यायः

धृतराष्ट्र उवाच
विदितं भवतामेतद्यथा वृत्तः कुरुक्षयः
ममापराधात्तत्सर्वमिति ज्ञेयं तु कौरवाः १
योऽह दुष्टमतिं मूढं ज्ञातीनां भयवर्धनम्
दुर्योधनं कौरवाणामाधिपत्येऽभ्यषेचयम् २
यच्चाहं वासुदेवस्य वाक्यं नाश्रौषमर्थवत्
वध्यतां साध्वयं पाप सामात्य इति दुर्मतिः ३
पुत्रस्नेहाभिभूतश्च हितमुक्तो मनीषिभिः
विदुरेणाथ भीष्मेण द्रोणेन च कृपेण च ४
पदे पदे भगवता व्यासेन च महात्मना
सञ्जयेनाथ गान्धार्या तदिदं तप्यतेऽद्य माम् ५
यच्चाहं पाण्डुपुत्रेण गुणवत्सु महात्मसु
न दत्तवाञ्श्रियं दीप्तां पितृपैतामहीमिमाम् ६

विनाशं पश्यमानो हि सर्वराज्ञां गदाग्रजः
एतच्छ्रेयः स परमममन्यत जनार्दनः ७
सोऽहमेतान्यलीकानि निवृत्तान्यात्मनः सदा
हृदये शल्यभूतानि धारयामि सहस्रशः ८
विशेषतस्तु दह्यामि वर्षं पञ्चदशं हि वै
अस्य पापस्य शुद्ध्यर्थं नियतोऽस्मि सुदुर्मतिः ९
चतुर्थे नियते काले कदाचिदपि चाष्टमे
तृष्णाविनयनं भुञ्जे गान्धारी वेद तन्मम १०
करोत्याहारमिति मां सर्वः परिजनः सदा
युधिष्ठिरभयाद्वेति भृशं तप्यति पाण्डवः ११
भूमौ शये जप्यपरो दर्भेष्वजिनसंवृतः
नियमव्यपदेशेन गान्धारी च यशस्विनी १२
हतं पुत्रशतं शूरं संग्रामेष्वपलायिनम्
नानुतप्यामि तच्चाहं क्षत्रधर्मं हि तं विदुः
इत्युक्त्वा धर्मराजानमभ्यभाषत कौरवः १३
भद्रं ते यादवीमातर्वाक्यं चेदं निबोध मे
सुखमस्म्युषितः पुत्र त्वया सुपरिपालितः १४
महादानानि दत्तानि श्राद्धानि च पुनः पुनः
प्रकृष्टं मे वयः पुत्र पुण्यं चीर्णं यथाबलम्
गान्धारी हतपुत्रेयं धैर्येणोदीक्षते च माम् १५
द्रौपद्या ह्यपकर्तारस्तव चैश्वर्यहारिणः
समतीता नृशंसास्ते धर्मेण निहता युधि १६
न तेषु प्रतिकर्तव्यं पश्यामि कुरुनन्दन
सर्वे शस्त्रजिताँल्लोकान्गतास्तेऽभिमुखं हताः १७
आत्मनस्तु हितं मुख्यं प्रतिकर्तव्यमद्य मे
गान्धार्याश्चैव राजेन्द्र तदनुज्ञातुमर्हसि १८
त्वं हि धर्मभृतां श्रेष्ठः सततं धर्मवत्सलः
राजा गुरुः प्राणभृतां तस्मादेतद्ब्रवीम्यहम् १९
अनुज्ञातस्त्वया वीर संश्रयेयं वनान्यहम्
चीरवल्कलभृद्राजन्गान्धार्या सहितोऽनया

तवाशिषः प्रयुञ्जानो भविष्यामि वनेचरः २०
उचितं नः कुले तात सर्वेषां भरतर्षभ
पुत्रेष्वैश्वर्यमाधाय वयसोऽन्ते वनं नृप २१
तत्राहं वायुभक्षो वा निराहारोऽपि वा वसन्
पत्न्या सहानया वीर चरिष्यामि तपः परम् २२
त्वं चापि फलभाक्तात तपसः पार्थिवो ह्यसि
फलभागो हि राजानः कल्याणस्येतरस्य वा २३
इति श्रीमहाभारते आश्रमवासपर्वणि पञ्चमोऽध्यायः ५

## षष्ठोऽध्यायः

युधिष्ठिर उवाच
न मां प्रीणयते राज्यं त्वय्येवं दुःखिते नृप
धिङ्मामस्तु सुदुर्बुद्धिं राज्यसक्तं प्रमादिनम् १
योऽह भवन्तं दुःखार्तमुपवासकृशं नृप
यताहारं क्षितिशयं नाविन्दं भ्रातृभिः सह २
अहोऽस्मि वञ्चितो मूढो भवता गूढबुद्धिना
विश्वासयित्वा पूर्वं मां यदिदं दुःखमश्नुथाः ३
किं मे राज्येन भोगैर्वा किं यज्ञैः किं सुखेन वा
यस्य मे त्वं महीपाल दुःखान्येतान्यवाप्तवान् ४
पीडितं चापि जानामि राज्यमात्मानमेव च
अनेन वचसा तुभ्यं दुःखितस्य जनेश्वर ५
भवान्पिता भवान्माता भवान्नः परमो गुरुः
भवता विप्रहीणा हि क्व नु तिष्ठामहे वयम् ६
औरसो भवतः पुत्रो युयुत्सुर्नृपसत्तम
अस्तु राजा महाराज यं चान्यं मन्यते भवान् ७
अहं वनं गमिष्यामि भवान्राज्यं प्रशास्त्विदम्
न मामयशसा दग्धं भूयस्त्वं दग्धुमर्हसि ८
नाहं राजा भवान्राजा भवता परवानहम्
कथं गुरुं त्वां धर्मज्ञमनुज्ञातुमिहोत्सहे ९
न मन्युर्हृदि नः कश्चिद्दुर्योधनकृतेऽनघ

भवितव्यं तथा  तद्धि वयं ते चैव मोहिताः १०
वयं हि पुत्रा भवतो यथा दुर्योधनादयः
गान्धारी चैव कुन्ती च निर्विशेषे मते मम ११
स मां त्वं यदि राजेन्द्र परित्यज्य गमिष्यसि
पृष्ठतस्त्वानुयास्यामि सत्येनात्मानमालभे १२
इयं हि वसुसंपूर्णा मही सागरमेखला
भवता विप्रहीणस्य न मे प्रीतिकरी भवेत् १३
भवदीयमिदं सर्वं शिरसा त्वां प्रसादये
त्वदधीनाः स्म राजेन्द्र व्येतु ते मानसो ज्वरः १४
भवितव्यमनुप्राप्तं मन्ये त्वां तज्जनाधिप
दिष्टया शुश्रूषमाणस्त्वां मोक्ष्यामि मनसो ज्वरम् १५
धृतराष्ट्र उवाच
तापस्ये मे मनस्तात वर्तते कुरुनन्दन
उचितं हि कुलेऽस्माकमरण्यगमनं प्रभो १६
चिरमस्म्युषितः पुत्र चिरं शुश्रूषितस्त्वया
वृद्धं मामभ्यनुज्ञातुं त्वमर्हसि जनाधिप १७
वैशम्पायन उवाच
इत्युक्त्वा धर्मराजानं वेपमानः कृताञ्जलिम्
उवाच वचनं राजा धृतराष्ट्रोऽम्बिकासुतः १८
सञ्जयं च महामात्रं कृपं चापि महारथम्
अनुनेतुमिहेच्छामि भवद्भिः पृथिवीपतिम् १९
ग्लायते मे मनो हीदं मुखं च परिशुष्यति
वयसा च प्रकृष्टेन वाग्व्यायामेन चैव हि २०
इत्युक्त्वा स तु धर्मात्मा वृद्धो राजा कुरूद्वहः
गान्धारीं शिश्रिये धीमान्सहसैव गतासुवत् २१
तं तु दृष्ट्वा तथासीनं निश्चेष्टं कुरुपार्थिवम्
आर्तिं राजा ययौ तूर्णं कौन्तेयः परवीरहा २२
युधिष्ठिर उवाच
यस्य नागसहस्रेण दशसंख्येन वै बलम्
सोऽय नारीमुपाश्रित्य शेते राजा गतासुवत् २३

आयसी प्रतिमा येन भीमसेनस्य वै पुरा
चूर्णीकृता बलवता स बलार्थी श्रितः स्त्रियम् २४
धिगस्तु मामधर्मज्ञं धिग्बुद्धिं धिक्च मे श्रुतम्
यत्कृते पृथिवीपालः शेतेऽयमतथोचितः २५
अहमप्युपवत्स्यामि यथैवायं गुरुर्मम
यदि राजा न भुङ्क्तेऽय गान्धारी च यशस्विनी २६
वैशम्पायन उवाच
ततोऽस्य पाणिना राजा जलशीतेन पाण्डवः
उरो मुखं च शनकैः पर्यमार्जत धर्मवित् २७
तेन रत्नौषधिमता पुण्येन च सुगन्धिना
पाणिस्पर्शेन राज्ञस्तु राजा संज्ञामवाप ह २८
इति श्रीमहाभारते आश्रमवासपर्वणि षष्ठोऽध्यायः ६

## सप्तमोऽध्यायः

धृतराष्ट्र उवाच
स्पृश मां पाणिना भूयःपरिष्वज च पाण्डव
जीवामीव हि संस्पर्शात्तव राजीवलोचन १
मूर्धानं च तवाघ्रातुमिच्छामि मनुजाधिप
पाणिभ्यां च परिस्प्रष्टुं प्राणा हि न जहुर्मम २
अष्टमो ह्यद्य कालोऽयमाहारस्य कृतस्य मे
येनाहं कुरुशार्दूल न शक्नोमि विचेष्टितुम् ३
व्यायामश्चायमत्यर्थं कृतस्त्वामभियाचता
ततो ग्लानमनास्तात नष्टसंज्ञ इवाभवम् ४
तवामृतसमस्पर्शं हस्तस्पर्शमिमं विभो
लब्ध्वा संजीवितोऽस्मीति मन्ये कुरुकुलोद्वह ५
वैशम्पायन उवाच
एवमुक्तस्तु कौन्तेयः पित्रा ज्येष्ठेन भारत
पस्पर्श सर्वगात्रेषु सौहार्दात्तं शनैस्तदा ६
उपलभ्य ततः प्राणान्धृतराष्ट्रो महीपतिः
बाहुभ्यां संपरिष्वज्य मूर्ध्न्याजिघ्रत पाण्डवम् ७

विदुरादयश्च ते सर्वे रुरुदुर्दुःखिता भृशम्
अतिदुःखाच्च राजानं नोचुः किंचन पाण्डवाः ८
गान्धारी त्वेव धर्मज्ञा मनसोद्वहती भृशम्
दुःखान्यवारयद्राजन्मैवमित्येव चाब्रवीत् ९
इतरास्तु स्त्रियः सर्वाः कुन्त्या सह सुदुःखिताः
नेत्रैरागतविक्लेदैः परिवार्य स्थिताभवन् १०
अथाब्रवीत्पुनर्वाक्यं धृतराष्ट्रो युधिष्ठिरम्
अनुजानीहि मां राजंस्तापस्ये भरतर्षभ ११
ग्लायते मे मनस्तात भूयो भूयः प्रजल्पतः
न मामतः परं पुत्र परिक्लेष्टुमिहार्हसि १२
तस्मिंस्तु कौरवेन्द्रे तं तथा ब्रुवति पाण्डवम्
सर्वेषामवरोधानामार्तनादो महानभूत् १३
दृष्ट्वा कृशं विवर्णं च राजानमतथोचितम्
उपवासपरिश्रान्तं त्वगस्थिपरिवारितम् १४
धर्मपुत्रः स पितरं परिष्वज्य महाभुजः
शोकजं बाष्पमुत्सृज्य पुनर्वचनमब्रवीत् १५
न कामये नरश्रेष्ठ जीवितं पृथिवीं तथा
यथा तव प्रियं राजंश्चिकीर्षामि परंतप १६
यदि त्वहमनुग्राह्यो भवतो दयितोऽपि वा
क्रियतां तावदाहारस्ततो वेत्स्यामहे वयम्१७
ततोऽब्रवीन्महातेजा धर्मपुत्रं स पार्थिवः
अनुज्ञातस्त्वया पुत्र भुञ्जीयामिति कामये १८
इति ब्रुवति राजेन्द्रे धृतराष्ट्रे युधिष्ठिरम्
ऋषिः सत्यवतीपुत्रो व्यासोऽभ्येत्य वचोऽब्रवीत् १९
इति श्रीमहाभारते आश्रमवासपर्वणि सप्तमोऽध्यायः ७

अष्टमोऽध्यायः

व्यास उवाच
युधिष्ठिर महाबाहो यदाह कुरुनन्दनः
धृतराष्ट्रो महात्मा त्वां तत्कुरुष्वाविचारयन् १

अयं हि वृद्धो नृपतिर्हतपुत्रो विशेषतः
नेदं कृच्छ्रं चिरतरं सहेदिति मतिर्मम २
गान्धारी च महाभागा प्राज्ञा करुणवेदिनी
पुत्रशोकं महाराज धैर्येणोद्वहते भृशम् ३
अहमप्येतदेव त्वां ब्रवीमि कुरु मे वचः
अनुज्ञां लभतां राजा मा वृथेह मरिष्यति ४
राजर्षीणां पुराणानामनुयातु गतिं नृपः
राजर्षीणां हि सर्वेषामन्ते वनमुपाश्रयः ५
वैशम्पायन उवाच
इत्युक्तः स तदा राजा व्यासेनाद्भुतकर्मणा
प्रत्युवाच महातेजा धर्मराजो युधिष्ठिरः ६
भगवानेव नो मान्यो भगवानेव नो गुरुः
भगवानस्य राज्यस्य कुलस्य च परायणम् ७
अहं तु पुत्रो भगवान्पिता राजा गुरुश्च मे
निदेशवर्ती च पितुः पुत्रो भवति धर्मतः ८
इत्युक्तः स तु तं प्राह व्यासो धर्मभृतां वरः
युधिष्ठिरं महातेजाः पुनरेव विशां पते ९
एवमेतन्महाबाहो यथा वदसि भारत
राजायं वृद्धतां प्राप्तः प्रमाणे परमे स्थितः १०
सोऽय मयाभ्यनुज्ञातस्त्वया च पृथिवीपते
करोतु स्वमभिप्रायं मास्य विघ्नकरो भव ११
एष एव परो धर्मो राजर्षीणां युधिष्ठिर
समरे वा भवेन्मृत्युर्वने वा विधिपूर्वकम् १२
पित्रा तु तव राजेन्द्र पाण्डुना पृथिवीक्षिता
शिष्यभूतेन राजायं गुरुवत्पर्युपासितः १३
क्रतुभिर्दक्षिणावद्भिरन्न पर्वतशोभितैः
महद्भिरिष्टं भोगाश्च भुक्ताः पुत्राश्च पालिताः १४
पुत्रसंस्थं च विपुलं राज्यं विप्रोषिते त्वयि
त्रयोदशसमा भुक्तं दत्तं च विविधं वसु १५
त्वया चायं नरव्याघ्र गुरुशुश्रूषया नृपः

आराधितः सभृत्येन गान्धारी च यशस्विनी १६
अनुजानीहि पितरं समयोऽस्य तपोविधौ
न मन्युर्विद्यते चास्य सुसूक्ष्मोऽपि युधिष्ठिर १७
एतावदुक्त्वा वचनमनुज्ञाप्य च पार्थिवम्
तथास्त्विति च तेनोक्तः कौन्तेयेन ययौ वनम् १८
गते भगवति व्यासे राजा पाण्डुसुतस्ततः
प्रोवाच पितरं वृद्धं मन्दं मन्दमिवानतः १९
यदाह भगवान्व्यासो यच्चापि भवतो मतम्
यदाह च महेष्वासः कृपो विदुर एव च २०
युयुत्सुः संजयश्चैव तत्कर्तास्म्यहमञ्जसा
सर्वे ह्येतेऽनुमान्या मे कुलस्यास्य हितैषिणः २१
इदं तु याचे नृपते त्वामहं शिरसा नतः
क्रियतां तावदाहारस्ततो गच्छाश्रमं प्रति २२
इति श्रीमहाभारते आश्रमवासिकपर्वणि अष्टमोऽध्यायः ८

## नवमोऽध्यायः

वैशम्पायन उवाच
ततो राज्ञाभ्यनुज्ञातो धृतराष्ट्रः प्रतापवान्
ययौ स्वभवनं राजा गान्धार्यानुगतस्तदा १
मन्दप्राणगतिर्धीमान्कृच्छ्रादिव समुद्धरन्
पदातिः स महीपालो जीर्णो गजपतिर्यथा २
तमन्वगच्छद्विदुरो विद्वान्सूतश्च संजयः
स चापि परमेष्वासः कृपः शारद्वतस्तथा ३
स प्रविश्य गृहं राजा कृतपूर्वाह्णिकक्रियः
तर्पयित्वा द्विजश्रेष्ठानाहारमकरोत्तदा ४
गान्धारी चैव धर्मज्ञा कुन्त्या सह मनस्विनी
वधूभिरुपचारेण पूजिताभुङ्क्त भारत ५
कृताहारं कृताहाराः सर्वे ते विदुरादयः
पाण्डवाश्च कुरुश्रेष्ठमुपातिष्ठन्त तं नृपम् ६
ततोऽब्रवीन्महाराज कुन्तीपुत्रमुपह्वरे

निषण्णं पाणिना पृष्ठे संस्पृशन्नम्बिकासुतः ७
अप्रमादस्त्वया कार्यः सर्वथा कुरुनन्दन
अष्टाङ्गे राजशार्दूल राज्ये धर्मपुरस्कृते ८
तत्तु शक्यं यथा तात रक्षितुं पाण्डुनन्दन
राज्यं धर्मं च कौन्तेय विद्वानसि निबोध तत् ९
विद्यावृद्धान्सदैव त्वमुपासीथा युधिष्ठिर
शृणुयास्ते च यद्ब्रूयुः कुर्याश्चैवाविचारयन् १०
प्रातरुत्थाय तान्राजन्पूजयित्वा यथाविधि
कृत्यकाले समुत्पन्ने पृच्छेथाः कार्यमात्मनः ११
ते तु संमानिता राजंस्त्वया राज्यहितार्थिना
प्रवक्ष्यन्ति हितं तात सर्वं कौरवनन्दन १२
इन्द्रियाणि च सर्वाणि वाजिवत्परिपालय
हितायवै भविष्यन्ति रक्षितं द्रविणं यथा १३
अमात्यानुपधातीतान्पितृपैतामहाञ्शुचीन्
दान्तान्कर्मसु सर्वेषु मुख्यान्मुख्येषु योजयेः १४
चारयेथाश्च सततं चारैरविदितैः परान्
परीक्षितैर्बहुविधं स्वराष्ट्रेषु परेषु च १५
पुरं च ते सुगुप्तं स्याद्दृढप्राकारतोरणम्
अट्टाट्टालकसंबाधं षट्पथं सर्वतोदिशम् १६
तस्य द्वाराणि कार्याणि पर्याप्तानि बृहन्ति च
सर्वतः सुविभक्तानि यन्त्रैरारक्षितानि च १७
पुरुषैरलमर्थज्ञैर्विदितैः कुलशीलतः
आत्मा च रक्ष्यः सततं भोजनादिषु भारत १८
विहाराहारकालेषु माल्यशय्यासनेषु च
स्त्रियश्च ते सुगुप्ताः स्युर्वृद्धैराप्तैरधिष्ठिताः
शीलवद्भिः कुलीनैश्च विद्वद्भिश्च युधिष्ठिर १९
मन्त्रिणश्चैव कुर्वीथा द्विजान्विद्याविशारदान्
विनीतांश्च कुलीनांश्च धर्मार्थकुशलानृजून् २०
तैः सार्धं मन्त्रयेथास्त्वं नात्यर्थं बहुभिःसह
समस्तैरपि च व्यस्तैर्व्यपदेशेन केनचित् २१

सुसंवृतं मन्त्रगृहं स्थलं चारुह्य मन्त्रयेः
अरण्ये निःशलाके वा न च रात्रौ कथंचन २२
वानराः पक्षिणश्चैव ये मनुष्यानुकारिणः
सर्वे मन्त्रगृहे वर्ज्या ये चापि जडपुङ्गकाः २३
मन्त्रभेदे हि ये दोषा भवन्ति पृथिवीक्षिताम्
न ते शक्याः समाधातुं कथंचिदिति मे मतिः २४
दोषांश्च मन्त्रभेदेषु ब्रूयास्त्वं मन्त्रिमण्डले
अभेदे च गुणान्राजन्पुनःपुनररिंदम २५
पौरजानपदानां च शौचाशौचं युधिष्ठिर
यथा स्याद्विदितं राजंस्तथा कार्यमरिंदम २६
इति श्रीमहाभारते आश्रमवासपर्वणि नवमोऽध्यायः ९

## दशमोऽध्यायः

धृतराष्ट्र उवाच
व्यवहाराश्च ते तात नित्यमाप्तैरधिष्ठिताः
योज्यास्तुष्टैर्हितै राजन्नित्यं चारैरनुष्ठिताः १
परिमाणं विदित्वा च दण्डं दण्ड्येषु भारत
प्रणयेयुर्यथान्यायं पुरुषास्ते युधिष्ठिर २
आदानरुचयश्चैव परदाराभिमर्शनः
उग्रदण्डप्रधानाश्च मिथ्या व्याहारिणस्तथा ३
आक्रोष्टारश्च लुब्धाश्च हन्तारः साहसप्रियाः
सभाविहारभेत्तारो वर्णानां च प्रदूषकाः
हिरण्यदण्ड्या वध्याश्च कर्तव्या देशकालतः ४
प्रातरेव हि पश्येथा ये कुर्युर्व्ययकर्म ते
अलंकारमथो भोज्यमत ऊर्ध्वं समाचरेः ५
पश्येथाश्च ततो योधान्सदा त्वं परिहर्षयन्
दूतानां च चराणां च प्रदोषस्ते सदा भवेत् ६
सदा चापररात्रं ते भवेत्कार्यार्थनिर्णये
मध्यरात्रे विहारस्ते मध्याह्ने च सदा भवेत् ७
सर्वे त्वात्ययिकाः कालाः कार्याणां भरतर्षभ

तथैवालंकृतः काले तिष्ठेथा भूरिदक्षिणः
चक्रवत्कर्मणां तात पर्यायो ह्येष नित्यशः ८
कोशस्य संचये यत्नं कुर्वीथा न्यायतः सदा
द्विविधस्य महाराज विपरीतं विवर्जयेः ९
चारैर्विदित्वा शत्रूंश्च ये ते राज्यान्तरायिणः
तानाप्तैः पुरुषैर्दूराद्घातयेथाः परस्परम् १०
कर्मदृष्ट्याथ भृत्यांस्त्वं वरयेथाः कुरूद्वह
कारयेथाश्च कर्माणि युक्तायुक्तैरधिष्ठितैः ११
सेनाप्रणेता तु भवेत्तव तात दृढव्रतः
शूरः क्लेशसहश्चैव प्रियश्च तव मानवः १२
सर्वे जानपदाश्चैव तव कर्माणि पाण्डव
पौरोगवाश्च सभ्याश्च कुर्युर्ये व्यवहारिणः १३
स्वरन्ध्रं पररन्ध्रं च स्वेषु चैव परेषु च
उपलक्षयितव्यं ते नित्यमेव युधिष्ठिर १४
देशान्तरस्थाश्च नरा विक्रान्ताः सर्व कर्मसु
मात्राभिरनुरूपाभिरनुगाह्या हितास्त्वया १५
गुणार्थिनां गुणः कार्यो विदुषां ते जनाधिप
अविचाल्याश्च ते ते स्युर्यथा मेरुर्महागिरिः १६
इति श्रीमहाभारते आश्रमवासपर्वणि दशमोऽध्यायः १०

## एकादशोऽध्यायः

धृतराष्ट्र उवाच
मण्डलानि च बुध्येथाः परेषामात्मनस्तथा
उदासीनगुणानां च मध्यमानां तथैव च १
चतुर्णां शत्रुजातानां सर्वेषामाततायिनाम्
मित्रं चामित्रमित्रं च बोद्धव्यं तेऽरिकर्शन २
तथामात्या जनपदा दुर्गाणि विषमाणि च
बलानि च कुरुश्रेष्ठ भवन्त्येषां यथेच्छकम् ३
ते च द्वादश कौन्तेय राज्ञां वै विविधात्मकाः
मन्त्रिप्रधानाश्च गुणाः षष्टिर्द्वादश च प्रभो ४

एतन्मण्डलमित्याहुराचार्या नीतिकोविदाः
अत्र षाड्गुण्यमायत्तं युधिष्ठिर निबोध तत् ५
वृद्धिक्षयौ च विज्ञेयौ स्थानं च कुरुनन्दन
द्विसप्तत्या महाबाहो ततः षाड्गुण्यचारिणः ६
यदा स्वपक्षो बलवान्परपक्षस्तथाबलः
विगृह्य शत्रून्कौन्तेय यायात्क्षितिपतिस्तदा
यदा स्वपक्षोऽबलवांस्तदा संधिं समाश्रयेत् ७
द्रव्याणां संचयश्चैव कर्तव्यः स्यान्महांस्तथा
यदा समर्थो यानाय नचिरेणैव भारत ८
तदा सर्वं विधेयं स्यात्स्थानं च न विभाजयेत्
भूमिरल्पफला देया विपरीतस्य भारत ९
हिरण्यं कुप्यभूयिष्ठं मित्रं क्षीणमकोशवत्
विपरीतान्न गृह्णीयात्स्वयं संधिविशारदः १०
संध्यर्थं राजपुत्रं च लिप्सेथा भरतर्षभ
विपरीतस्तु तेऽदेयः पुत्र कस्यांचिदापदि
तस्य प्रमोक्षे यत्नं च कुर्याः सोपायमन्त्रवित् ११
प्रकृतीनां च कौन्तेय राजा दीनां विभावयेत्
क्रमेण युगपद्द्वंद्वं व्यसनानां बलाबलम् १२
पीडनं स्तम्भनं चैव कोशभङ्गस्तथैव च
कार्यं यत्नेन शत्रूणां स्वराष्ट्रं रक्षता स्वयम् १३
न च हिंस्योऽभ्युपगतः सामन्तो वृद्धिमिच्छता
कौन्तेय तं न हिंसेत यो महीं विजिगीषते १४
गणानां भेदने योगं गच्छेथाः सह मन्त्रिभिः
साधुसंग्रहणाच्चैव पापनिग्रहणात्तथा १५
दुर्बलाश्चापि सततं नावष्टभ्या बलीयसा
तिष्ठेथा राजशार्दूल वैतसीं वृत्तिमास्थितः १६
यद्येवमभियायाच्च दुर्बलं बलवान्नृपः
सामादिभिरुपायैस्तं क्रमेण विनिवर्तयेत् १७
अशक्नुवंस्तु युद्धाय निष्पतेत्सह मन्त्रिभिः
कोशेन पौरैर्दण्डेन ये चान्ये प्रियकारिणः १८

असंभवे तु सर्वस्य यथामुख्येन निष्पतेत्
क्रमेणानेन मोक्षः स्याच्छरीरमपि केवलम् १९
इति श्रीमहाभारते आश्रमवासपर्वणि एकादशोऽध्यायः ११

## द्वादशोऽध्यायः

धृतराष्ट्र उवाच
संधिविग्रहमप्यत्र पश्येथा राजसत्तम
द्वियोनिं त्रिविधोपायं बहुकल्पं युधिष्ठिर १
राजेन्द्र पर्युपासीथाश्छित्त्वा द्वैविध्यमात्मनः
तुष्टपुष्टबलः शत्रुरात्मवानिति च स्मरेत् २
पर्युपासनकाले तु विपरीतं विधीयते
आमर्दकाले राजेन्द्र व्यपसर्पस्ततो वरः ३
व्यसनं भेदनं चैव शत्रूणां कारयेत्ततः
कर्शनं भीषणं चैव युद्धे चापि बहुर्लयम् ४
प्रयास्यमानो नृपतिस्त्रिविधं परिचिन्तयेत्
आत्मनश्चैव शत्रोश्च शक्तिं शास्त्रविशारदः ५
उत्साहप्रभुशक्तिभ्यां मन्त्रशक्त्या च भारत
उपपन्नो नरो यायाद्विपरीतमतोऽन्यथा ६
आददीत बलं राजा मौलं मित्रबलं तथा
अटवीबलं भृतं चैव तथा श्रेणीबलं च यत् ७
तत्र मित्रबलं राजन्मौलेन न विशिष्यते
श्रेणीबलं भृतं चैव तुल्य एवेति मे मतिः ८
तथा चारबलं चैव परस्परसमं नृप
विज्ञेयं बलकालेषु राज्ञा काल उपस्थिते ९
आपदश्चापि बोद्धव्या बहुरूपा नराधिप
भवन्ति राज्ञां कौरव्य यास्ताः पृथगतः शृणु १०
विकल्पा बहवो राजन्नापदां पाण्डुनन्दन
सामादिभिरुपन्यस्य शमयेत्तान्नृपः सदा ११
यात्रां यायाद्बलैर्युक्तो राजा षड्भिः परंतप
संयुक्तो देशकालाभ्यां बलैरात्मगुणैस्तथा १२

तुष्टपुष्टबलो यायाद्राजा वृद्ध्युदये रतः
आहूतश्चाप्यथो यायादनृतावपि पार्थिवः १३
स्थूणाश्मानं वाजिरथप्रधानां ध्वजद्रुमैः संवृतकूलरोधसम्
पदातिनागैर्बहुकर्दमां नदीं सपत्ननाशे नृपतिः प्रयायात् १४
अथोपपत्त्या शकटं पद्मं वज्रं च भारत
उशना वेद यच्छास्त्रं तत्रैतद्विहितं विभो १५
सादयित्वा परबलं कृत्वा च बलहर्षणम्
स्वभूमौ योजयेद्युद्धं परभूमौ तथैव च १६
लब्धं प्रशमयेद्राजा निक्षिपेद्धनिनो नरान्
ज्ञात्वा स्वविषयं तं च सामादिभिरुपक्रमेत् १७
सर्वथैव महाराज शरीरं धारयेदिह
प्रेत्येह चैव कर्तव्यमात्मनिःश्रेयसं परम् १८
एवं कुर्वञ्शुभावाचो लोकेऽस्मिञ्शृणुते नृपः
प्रेत्य स्वर्गं तथाप्नोति प्रजा धर्मेण पालयन् १९
एवं त्वया कुरुश्रेष्ठ वर्तितव्यं प्रजाहितम्
उभयोर्लोकयोस्तात प्राप्तये नित्यमेव च २०
भीष्मेण पूर्वमुक्तोऽसि कृष्णेन विदुरेण च
मयाप्यवश्यं वक्तव्यं प्रीत्या ते नृपसत्तम २१
एतत्सर्वं यथान्यायं कुर्वीथा भूरिदक्षिण
प्रियस्तथा प्रजानां त्वं स्वर्गे सुखमवाप्स्यसि २२
अश्वमेधसहस्रेण यो यजेत्पृथिवीपतिः
पालयेद्वापि धर्मेण प्रजास्तुल्यं फलं लभेत् २३
इति श्रीमहाभारते आश्रमवासपर्वणि द्वादशोऽध्यायः १२

## त्रयोदशोऽध्यायः

युधिष्ठिर उवाच
एवमेतत्करिष्यामि यथात्थ पृथिवीपते
भूयश्चैवानुशास्योऽह भवता पार्थिवर्षभ १
भीष्मे स्वर्गमनुप्राप्ते गते च मधुसूदने
विदुरे संजये चैव कोऽन्यो मां वक्तुमर्हति २

यत्तु मामनुशास्तीह भवानद्य हिते स्थितः
कर्तास्म्येतन्महीपाल निर्वृतो भव भारत ३
वैशम्पायन उवाच
एवमुक्तः स राजर्षिर्धर्मराजेन धीमता
कौन्तेयं समनुज्ञातुमियेष भरतर्षभ ४
पुत्र विश्रम्यतां तावन्ममापि बलवाञ्श्रमः
इत्युक्त्वा प्राविशद्राजा गान्धार्या भवनं तदा ५
तमासनगतं देवी गान्धारी धर्मचारिणी
उवाच काले कालज्ञा प्रजापतिसमं पतिम् ६
अनुज्ञातः स्वयं तेन व्यासेनापि महर्षिणा
युधिष्ठिरस्यानुमते कदारण्यं गमिष्यसि ७
धृतराष्ट्र उवाच
गान्धार्यहमनुज्ञातः स्वयं पित्रा महात्मना
युधिष्ठिरस्यानुमते गन्तास्मि नचिराद्वनम् ८
अहं हि नाम सर्वेषां तेषां दुर्द्यूतदेविनाम्
पुत्राणां दातुमिच्छामि प्रेत्यभावानुगं वसु
सर्वप्रकृतिसांनिध्यं कारयित्वा स्ववेश्मनि ९
वैशम्पायन उवाच
इत्युक्त्वा धर्मराजाय प्रेषयामास पार्थिवः
स च तद्वचनात्सर्वं समानिन्ये महीपतिः १०
ततो निष्क्रम्य नृपतिस्तस्मादन्तःपुरात्तदा
सर्वं सुहृज्जनं चैव सर्वाश्च प्रकृतीस्तथा
समवेतांश्च तान्सर्वान्पौरजानपदानथ ११
ब्राह्मणांश्च महीपालान्नानादेशसमागतान्
ततः प्राह महातेजा धृतराष्ट्रो महीपतिः १२
शृण्वन्त्येकाग्रमनसो ब्राह्मणाः कुरुजाङ्गलाः
क्षत्रियाश्चैव वैश्याश्च शूद्राश्चैव समागताः १३
भवन्तः कुरवश्चैव बहुकालं सहोषिताः
परस्परस्य सुहृदः परस्परहिते रताः १४
यदिदानीमहं ब्रूयामस्मिन्काल उपस्थिते

तथा भवद्भिः कर्तव्यमविचार्य वचो मम १५
अरण्यगमने बुद्धिर्गान्धारीसहितस्य मे
व्यासस्यानुमते राज्ञस्तथा कुन्तीसुतस्य च
भवन्तोऽप्यनुजानन्तु मा वोऽन्या भूद्विचारणा १६
अस्माकं भवतां चैव येयं प्रीतिर्हि शाश्वती
न चान्येष्वस्ति देशेषु राज्ञामिति मतिर्मम १७
श्रान्तोऽस्मि वयसानेन तथा पुत्रविनाकृतः
उपवासकृशश्चास्मि गान्धारीसहितोऽनघाः १८
युधिष्ठिरगते राज्ये प्राप्तश्चास्मि सुखं महत्
मन्ये दुर्योधनैश्वर्याद्विशिष्टमिति सत्तमाः १९
मम त्वन्धस्य वृद्धस्य हतपुत्रस्य का गतिः
ऋते वनं महाभागास्तन्मानुज्ञातुमर्हथ २०
तस्य तद्वचनं श्रुत्वा सर्वे ते कुरुजाङ्गलाः
बाष्पसंन्दिग्धया वाचा रुरुदुर्भरतर्षभ २१
तानविब्रुवतः किंचिद्दुःखशोकपरायणान्
पुनरेव महातेजा धृतराष्ट्रोऽब्रवीदिदम् २२
इति श्रीमहाभारते आश्रमवासपर्वणि त्रयोदशोऽध्यायः १३

## चतुर्दशोऽध्यायः

धृतराष्ट्र उवाच
शान्तनुः पालयामास यथावत्पृथिवीमिमाम्
तथा विचित्रवीर्यश्च भीष्मेण परिपालितः
पालयामास वस्तातो विदितं वो न संशयः १
यथा च पाण्डुर्भ्राता मे दयितो भवतामभूत्
स चापि पालयामास यथावत्तच्च वेत्थ ह २
मया च भवतां सम्यक्छुश्रूषा या कृतानघाः
असम्यग्वा महाभागास्तत्क्षन्तव्यमतन्द्रितैः ३
यच्च दुर्योधनेनेदं राज्यं भुक्तमकण्टकम्
अपि तत्र न वो मन्दो दुर्बुद्धिरपराद्धवान् ४
तस्यापराधाद्दुर्बुद्धेरभिमानान्महीक्षिताम्

विमर्दः सुमहानासीदनयान्मत्कृतादथ ५
तन्मया साधु वापीदं यदि वासाधु वै कृतम्
तद्वो हृदि न कर्तव्यं मामनुज्ञातुमर्हथ ६
वृद्धोऽय हतपुत्रोऽय दुःखितोऽय जनाधिपः
पूर्वराज्ञां च पुत्रोऽयमिति कृत्वानुजानत ७
इयं च कृपणा वृद्धा हतपुत्रा तपस्विनी
गान्धारी पुत्रशोकार्ता तुल्यं याचति वो मया ८
हतपुत्राविमौ वृद्धौ विदित्वा दुःखितौ तथा
अनुजानीत भद्रं वो व्रजावः शरणं च वः ९
अयं च कौरवो राज् कुन्तीपुत्रो युधिष्ठिरः
सर्वैर्भवद्भिर्द्रष्टव्यः समेषु विषमेषु च
न जातु विषमं चैव गमिष्यति कदाचन १०
चत्वारः सचिवा यस्य भ्रातरो विपुलौजसः
लोकपालोपमा ह्येते सर्वे धर्मार्थदर्शिनः ११
ब्रह्मेव भगवानेष सर्वभूतजगत्पतिः
युधिष्ठिरो महातेजा भवतः पालयिष्यति १२
अवश्यमेव वक्तव्यमिति कृत्वा ब्रवीमि वः
एष न्यासो मया दत्तः सर्वेषां वो युधिष्ठिरः
भवन्तोऽस्य च वीरस्य न्यासभूताः मया कृताः १३
यद्येव तैः कृतं किंचिद्व्यलीकं वा सुतैर्मम
यद्यन्येन मदीयेन तदनुज्ञातुमर्हथ १४
भवद्भिर्हि न मे मन्युः कृतपूर्वः कथंचन
अत्यन्तगुरुभक्तानामेषोऽञ्जलिरिदं नमः १५
तेषामस्थिरबुद्धीनां लुब्धानां कामचारिणाम्
कृते याचामि वः सर्वान्गान्धारीसहितोऽनघाः १६
इत्युक्तास्तेन ते राज्ञा पौरजानपदा जनाः
नोचुर्बाष्पकलाः किंचिद्वीक्षांचक्रुः परस्परम् १९

इति श्रीमहाभारते आश्रमवासपर्वणि चतुर्दशोऽध्यायः १४

## पञ्चदशोऽध्यायः

वैशम्पायन उवाच
एवमुक्तास्तु ते तेन पौरजानपदा जनाः
वृद्धेन राज्ञा कौरव्य नष्टसंज्ञा इवाभवन् १
तूष्णींभूतांस्ततस्तांस्तु बाष्पकण्ठान्महीपतिः
धृतराष्ट्रो महीपालः पुनरेवाभ्यभाषत २
वृद्धं मां हतपुत्रं च धर्मपत्न्या सहानया
विलपन्तं बहुविधं कृपणं चैव सत्तमाः ३
पित्रा स्वयमनुज्ञातं कृष्णद्वैपायनेन वै
वनवासाय धर्मज्ञा धर्मज्ञेन नृपेण च ४
सोऽह पुनः पुनर्याचे शिरसावनतोऽनघाः
गान्धार्या सहितं तन्मां समनुज्ञातुमर्हथ ५
श्रुत्वा तु कुरुराजस्य वाक्यानि करुणानि ते
रुरुदुः सर्वतो राजन्समेताः कुरुजाङ्गलाः ६
उत्तरीयैः करैश्चापि संछाद्य वदनानि ते
रुरुदुः शोकसंतप्ता मुहूर्तं पितृमातृवत् ७
हृदयैः शून्यभूतैस्ते धृतराष्ट्रप्रवासजम्
दुःखं संधारयन्तः स्म नष्टसंज्ञा इवाभवन् ८
ते विनीय तमायासं कुरुराजवियोगजम्
शनैः शनैस्तदान्योन्यमब्रुवन्स्वमतान्युत ९
ततः संधाय ते सर्वे वाक्यान्यथ समासतः
एकस्मिन्ब्राह्मणे राजन्नावेश्योचुर्नराधिपम् १०
ततः स्वचरणे वृद्धः संमतोऽथविशारदः
साम्बाख्यो बह्वृचो राजन्वक्तुं समुपचक्रमे ११
अनुमान्य महाराजं तत्सदः संप्रभाष्य च
विप्रः प्रगल्भो मेधावी स राजानमुवाच ह १२
राजन्वाक्यं जनस्यास्य मयि सर्वं समर्पितम्
वक्ष्यामि तदहं वीर तज्जुषस्व नराधिप १३
यथा वदसि राजेन्द्र सर्वमेतत्तथा विभो
नात्र मिथ्या वचः किंचित्सुहृत्त्वं नः परस्परम् १४

न जात्वस्य तु वंशस्य राज्ञां कश्चित्कदाचन
राजासीद्यः प्रजापालः प्रजानामप्रियो भवेत् १५
पितृवद्भ्रातृवच्चैव भवन्तः पालयन्ति नः
न च दुर्योधनः किंचिदयुक्तं कृतवान्नृप १६
यथा ब्रवीति धर्मज्ञो मुनिः सत्यवतीसुतः
तथा कुरु महाराज स हि नः परमो गुरुः १७
त्यक्ता वयं तु भवता दुःखशोकपरायणाः
भविष्यामश्चिरं राजन्भवद्गुणशतैर्हृताः १८
यथा शंतनुना गुप्ता राज्ञा चित्राङ्गदेन च
भीष्मवीर्योपगूढेन पित्रा च तव पार्थिव १९
भवद्बुद्धियुजा चैव पाण्डुना पृथिवीक्षिता
तथा दुर्योधनेनापि राज्ञा सुपरिपालिताः २०
न स्वल्पमपि पुत्रस्ते व्यलीकं कृतवान्नृप
पितरीव सुविश्वस्तास्तस्मिन्नपि नराधिपे
वयमास्म यथा सम्यग्भवतो विदितं तथा २१
तथा वर्षसहस्राय कुन्तीपुत्रेण धीमता
पाल्यमाना धृतिमता सुखं विन्दामहे नृप २२
राजर्षीणां पुराणानां भवतां वंशधारिणाम्
कुरुसंवरणादीनां भरतस्य च धीमतः २३
वृत्तं समनुयात्येष धर्मात्मा भूरिदक्षिणः
नात्र वाच्यं महाराज सुसूक्ष्ममपि विद्यते २४
उषिताः स्म सुखं नित्यं भवता परिपालिताः
सुसूक्ष्मं च व्यलीकं ते सपुत्रस्य न विद्यते २५
यत्तु ज्ञातिविमर्देऽस्मिन्नात्थ दुर्योधनं प्रति
भवन्तमनुनेष्यामि तत्रापि कुरुनन्दन २६
इति श्रीमहाभारते आश्रमवासपर्वणि पञ्चदशोऽध्यायः १५

## षोडशोऽध्यायः

ब्राह्मण उवाच
न तद्दुर्योधनकृतं न च तद्भवता कृतम्

न कर्णसौबलाभ्यां च कुरवो यत्क्षयं गताः १
दैवं तत्तु विजानीमो यन्न शक्यं प्रबाधितुम्
दैवं पुरुषकारेण न शक्यमतिवर्तितुम् २
अक्षौहिण्यो महाराज दशाष्टौ च समागताः
अष्टादशाहेन हता दशभिर्योधपुंगवैः ३
भीष्मद्रोणकृपाद्यैश्च कर्णेन च महात्मना
युयुधानेन वीरेण धृष्टद्युम्नेन चैव ह ४
चतुर्भिः पाण्डुपुत्रैश्च भीमार्जुनयमैर्नृप
जनक्षयोऽय नृपते कृतो दैवबलात्कृतैः ५
अवश्यमेव संग्रामे क्षत्रियेण विशेषतः
कर्तव्यं निधनं लोके शस्त्रेण क्षत्रबन्धुना ६
तैरियं पुरुषव्याघ्रैर्विद्याबाहुबलान्वितैः
पृथिवी निहता सर्वा सहया सरथद्विपा ७
न स राजापराध्नोति पुत्रस्तव महामनाः
न भवान्न च ते भृत्या न कर्णो न च सौबलः ८
यद्विनष्टाः कुरुश्रेष्ठा राजानश्च सहस्रशः
सर्वं दैवकृतं तद्वै कोऽत्र किं वक्तुमर्हति ९
गुरुर्मतो भवानस्य कृत्स्नस्य जगतः प्रभुः
धर्मात्मानमतस्तुभ्यमनुजानीमहे सुतम् १०
लभतां वीरलोकान्स ससहायो नराधिपः
द्विजाग्र्यैः समनुज्ञातस्त्रिदिवे मोदतां सुखी ११
प्राप्स्यते च भवान्पुण्यं धर्मे च परमां स्थितिम्
वेद पुण्यं च कार्त्स्न्येन सम्यग्भरतसत्तम १२
दृष्टापदानाश्चास्माभिः पाण्डवाः पुरुषर्षभाः
समर्थास्त्रिदिवस्यापि पालने किं पुनः क्षितेः १३
अनुवत्स्यन्ति चापीमाः समेषु विषमेषु च
प्रजाः कुरुकुलश्रेष्ठ पाण्डवाञ्शीलभूषणान् १४
ब्रह्मदेयाग्रहारांश्च परिहारांश्च पार्थिव
पूर्वराजातिसर्गांश्च पालयत्येव पाण्डवः १५
दीर्घदर्शी कृतप्रज्ञः सदा वैश्रवणो यथा

अक्षुद्रसचिवश्चायं कुन्तीपुत्रो महामनाः १६
अप्यमित्रे दयावांश्च शुचिश्च भरतर्षभ
ऋजु पश्यति मेधावी पुत्रवत्पाति नः सदा १७
विप्रियं च जनस्यास्य संसर्गाद्धर्मजस्य वै
न करिष्यन्ति राजर्षे तथा भीमार्जुनादयः १८
मन्दा मृदुषु कौरव्यास्तीक्ष्णेष्वाशीविषोपमाः
वीर्यवन्तो महात्मानः पौराणां च हिते रताः १९
न कुन्ती न च पाञ्चाली न चोलूपी न सात्वती
अस्मिञ्जने करिष्यन्ति प्रतिकूलानि कर्हिचित् २०
भवत्कृतमिमं स्नेहं युधिष्ठिरविवर्धितम्
न पृष्ठतः करिष्यन्ति पौरजानपदा जनाः २१
अधर्मिष्ठानपि सतः कुन्तीपुत्रा महारथाः
मानवान्पालयिष्यन्ति भूत्वा धर्मपरायणाः २२
स राजन्मानसं दुःखमपनीय युधिष्ठिरात्
कुरु कार्याणि धर्म्याणि नमस्ते पुरुषर्षभ २३
वैशम्पायन उवाच
तस्य तद्वचनं धर्म्यमनुबन्धं गुणोत्तरम्
साधु साध्विति सर्वः स जनः प्रतिगृहीतवान् २४
धृतराष्ट्रश्च तद्वाक्यमभिपूज्य पुनः पुनः
विसर्जयामास तदा सर्वास्तु प्रकृतीः शनैः २५
स तैः संपूजितो राजा शिवेनावेक्षितस्तदा
प्राञ्जलि पूजयामास तं जनं भरतर्षभ २६
ततो विवेश भवनं गान्धार्या सहितो नृपः
व्युष्टायां चैव शर्वर्यां यच्चकार निबोध तत् २७
इति श्रीमहाभारते आश्रमवासपर्वणि षोडशोऽध्यायः १६

## सप्तदशोऽध्यायः

वैशम्पायन उवाच
व्युषितायां रजन्यां तु धृतराष्ट्रोऽम्बिकासुतः
विदुरं प्रेषयामास युधिष्ठिरनिवेशनम् १

स गत्वा राजवचनादुवाचाच्युतमीश्वरम्
युधिष्ठिरं महातेजाः सर्वबुद्धिमतां वरः २
धृतराष्ट्रो महाराज वनवासाय दीक्षितः
गमिष्यति वनं राजन्कार्तिकीमागतामिमाम् ३
स त्वा कुरुकुलश्रेष्ठ किंचिदर्थमभीप्सति
श्राद्धमिच्छति दातुं स गाङ्गेयस्य महात्मनः ४
द्रोणस्य सोमदत्तस्य बाह्लीकस्य च धीमतः
पुत्राणां चैव सर्वेषां ये चास्य सुहृदो हताः
यदि चाभ्यनुजानीषे सैन्धवापसदस्य च ५
एतच्छ्रुत्वा तु वचनं विदुरस्य युधिष्ठिरः
हृष्टः संपूजयामास गुडाकेशश्च पाण्डवः ६
न तु भीमो दृढक्रोधस्तद्वचो जगृहे तदा
विदुरस्य महातेजा दुर्योधनकृतं स्मरन् ७
अभिप्रायं विदित्वा तु भीमसेनस्य फल्गुनः
किरीटी किंचिदानम्य भीमं वचनमब्रवीत् ८
भीम राजा पिता वृद्धो वनवासाय दीक्षितः
दातुमिच्छति सर्वेषां सुहृदामौर्ध्वदेहिकम् ९
भवता निर्जितं वित्तं दातुमिच्छति कौरवः
भीष्मादीनां महाबाहो तदनुज्ञातुमर्हसि १०
दिष्ट्या त्वद्य महाबाहो धृतराष्ट्रः प्रयाचति
याचितो यः पुरास्माभिः पश्य कालस्य पर्ययम् ११
योऽसौ पृथिव्याः कृत्स्नाया भर्ता भूत्वा नराधिपः
परैर्विनिहतापत्यो वनं गन्तुमभीप्सति १२
मा तेऽन्यत्पुरुषव्याघ्र दानाद्भवतु दर्शनम्
अयशस्यमतोऽन्यत्स्यादधर्म्यं च महाभुज १३
राजानमुपतिष्ठस्व ज्येष्ठं भ्रातरमीश्वरम्
अर्हस्त्वमसि दातुं वै नादातुं भरतर्षभ
एवं ब्रुवाणं कौन्तेयं धर्मराजोऽभ्यपूजयत् १४
भीमसेनस्तु सक्रोधः प्रोवाचेदं वचस्तदा
वयं भीष्मस्य कुर्मेह प्रेतकार्याणि फल्गुन १५

सोमदत्तस्य नृपतेर्भूरिश्रवस एव च
बाह्लीकस्य च राजर्षेर्द्रोणस्य च महात्मनः १६
अन्येषां चैव सुहृदां कुन्ती कर्णाय दास्यति
श्राद्धानि पुरुषव्याघ्र मादात्कौरवको नृपः १७
इति मे वर्तते बुद्धिर्मा वो नन्दन्तु शत्रवः
कष्टात्कष्टतरं यान्तु सर्वे दुर्योधनादयः
यैरियं पृथिवी सर्वा घातिता कुलपांसनैः १८
कुतस्त्वमद्य विस्मृत्य वैरं द्वादशवार्षिकम्
अज्ञातवासगमनं द्रौपदीशोकवर्धनम्
क्व तदा धृतराष्ट्रस्य स्नेहोऽस्मास्वभवत्तदा १९
कृष्णाजिनोपसंवीतो हृताभरणभूषणः
सार्धं पाञ्चालपुत्र्या त्वं राजानमुपजग्मिवान्
क्व तदा द्रोणभीष्मौ तौ सोमदत्तोऽपि वाभवत् २०
यत्र त्रयोदश समा वने वन्येन जीवसि
न तदा त्वा पिता ज्येष्ठः पितृत्वेनाभिवीक्षते २१
किं ते तद्विस्मृतं पार्थ यदेष कुलपांसनः
दुर्वृत्तो विदुरं प्राह द्यूते किं जितमित्युत २२
तमेवंवादिनं राजा कुन्तीपुत्रो युधिष्ठिरः
उवाच भ्रातरं धीमाञ्जोषमास्वेति भर्त्सयन् २३
इति श्रीमहाभारते आश्रमवासपर्वणि सप्तदशोऽध्यायः १७

## अष्टादशोऽध्यायः

अर्जुन उवाच
भीम ज्येष्ठो गुरुर्मे त्वं नातोऽन्यद्वक्तुमुत्सहे
धृतराष्ट्रो हि राजर्षिः सर्वथा मानमर्हति १
न स्मरन्त्यपराद्धानि स्मरन्ति सुकृतानि च
असंभिन्नार्थमर्यादाः साधवः पुरुषोत्तमाः २
इदं मद्वचनात्क्षत्तः कौरवं ब्रूहि पार्थिवम्
यावदिच्छति पुत्राणां दातुं तावद्ददाम्यहम् ३
भीष्मादीनां च सर्वेषां सुहृदामुपकारिणाम्

मम कोशादिति विभो मा भूद्भीमः सुदुर्मनाः ४
वैशम्पायन उवाच
इत्युक्ते धर्मराजस्तमर्जुनं प्रत्यपूजयत्
भीमसेनः कटाक्षेण वीक्षांचक्रे धनंजयम् ५
ततः स विदुरं धीमान्वाक्यमाह युधिष्ठिरः
न भीमसेने कोपं स नृपतिः कर्तुमर्हति ६
परिक्लिष्टो हि भीमोऽय हिमवृष्ट्यातपादिभिः
दुःखैर्बहुविधैर्धीमानरण्ये विदितं तव ७
किं तु मद्वचनाद्ब्रूहि राजानं भरतर्षभम्
यद्यदिच्छसि यावच्च गृह्यतां मद्गृहादिति ८
यन्मात्सर्यमयं भीमः करोति भृशदुःखितः
न तन्मनसि कर्तव्यमिति वाच्यः स पार्थिवः ९
यन्ममास्ति धनं किंचिदर्जुनस्य च वेश्मनि
तस्य स्वामी महाराज इति वाच्यः स पार्थिवः १०
ददातु राजा विप्रेभ्यो यथेष्टं क्रियतां व्ययः
पुत्राणां सुहृदां चैव गच्छत्वानृण्यमद्य सः ११
इदं चापि शरीरं मे तवायत्तं जनाधिप
धनानि चेति विद्धि त्वं क्षत्तर्नास्त्यत्र संशयः १२
इति श्रीमहाभारते आश्रमवासपर्वणि अष्टादशोऽध्यायः १८

## एकोनविंशोऽध्यायः

वैशम्पायन उवाच
एवमुक्तस्तु राज्ञा स विदुरो बुद्धिसत्तमः
धृतराष्ट्रमुपेत्येदं वाक्यमाह महार्थवत् १
उक्तो युधिष्ठिरो राजा भवद्वचनमादितः
स च संश्रुत्य वाक्यं ते प्रशशंस महाद्युतिः २
बीभत्सुश्च महातेजा निवेदयति ते गृहान्
वसु तस्य गृहे यच्च प्राणानपि च केवलान् ३
धर्मराजश्च पुत्रस्ते राज्यं प्राणान्धनानि च
अनुजानाति राजर्षे यच्चान्यदपि किंचन ४

भीमस्तु सर्वदुःखानि संस्मृत्य बहुलान्युत
कृच्छ्रादिव महाबाहुरनुमन्ये विनिःश्वसन् ५
स राज्ञा धर्मशीलेन भ्रात्रा बीभत्सुना तथा
अनुनीतो महाबाहुः सौहृदे स्थापितोऽपि च ६
न च मन्युस्त्वया कार्य इति त्वां प्राह धर्मराट्
संस्मृत्य भीमस्तद्वैरं यदन्यायवदाचरेत् ७
एवंप्रायो हि धर्मोऽय क्षत्रियाणां नराधिप
युद्धे क्षत्रियधर्मे च निरतोऽय वृकोदरः ८
वृकोदरकृते चाहमर्जुनश्च पुनः पुनः
प्रसादयाव नृपते भवान्प्रभुरिहास्ति यत् ९
प्रददातु भवान्वित्तं यावदिच्छसि पार्थिव
त्वमीश्वरो नो राज्यस्य प्राणानां चेति भारत १०
ब्रह्मदेयाग्रहारांश्च पुत्राणां चौर्ध्वदेहिकम्
इतो रत्नानि गाश्चैव दासीदासमजाविकम् ११
आनयित्वा कुरुश्रेष्ठो ब्राह्मणेभ्यः प्रयच्छतु
दीनान्धकृपणेभ्यश्च तत्र तत्र नृपाज्ञया १२
बह्वन्नरसपानाढ्याः सभा विदुर कारय
गवां निपानान्यन्यच्च विविधं पुण्यकर्म यत् १३
इति मामब्रवीद्राजा पार्थश्चैव धनंजयः
यदत्रानन्तरं कार्यं तद्भवान्वक्तुमर्हति १४
इत्युक्तो विदुरेणाथ धृतराष्ट्रोऽभिनन्द्य तत्
मनश्चक्रे महादाने कार्तिक्यां जनमेजय १५
इति श्रीमहाभारते आश्रमवासपर्वणि एकोनविंशोऽध्यायः १९

## विंशोऽध्यायः

वैशम्पायन उवाच
विदुरेणैवमुक्तस्तु धृतराष्ट्रो जनाधिपः
प्रीतिमानभवद्राजा राज्ञो जिष्णोश्च कर्मणा १
ततोऽभिरूपान्भीष्माय ब्राह्मणानृषिसत्तमान्
पुत्रार्थे सुहृदां चैव स समीक्ष्य सहस्रशः २

कारयित्वान्नपानानि यानान्याच्छादनानि च
सुवर्णमणिरत्नानि दासीदासपरिच्छदान् ३
कम्बलाजिनरत्नानि ग्रामान्क्षेत्रानजाविकम्
अलंकारान्गजानश्वान्कन्याश्चैव वरस्त्रियः
आदिश्यादिश्य विप्रेभ्यो ददौ स नृपसत्तमः ४
द्रोणं संकीर्त्य भीष्मं च सोमदत्तं च बाह्लिकम्
दुर्योधनं च राजानं पुत्रांश्चैव पृथक्पृथक्
जयद्रथपुरोगाश्च सुहृदश्चैव सर्वशः ५
स श्राद्धयज्ञो ववृधे बहुगोधनदक्षिणः
अनेकधनरत्नौघो युधिष्ठिरमते तदा ६
अनिशं यत्र पुरुषा गणका लेखकास्तथा
युधिष्ठिरस्य वचनात्तदापृच्छन्ति तं नृपम् ७
आज्ञापय किमेतेभ्यः प्रदेयं दीयतामिति
तदुपस्थितमेवात्र वचनान्ते प्रदृश्यते ८
शते देये दशशतं सहस्रे चायुतं तथा
दीयते वचनाद्राज्ञः कुन्तीपुत्रस्य धीमतः ९
एवं स वसुधाराभिर्वर्षमाणो नृपाम्बुदः
तर्पयामास विप्रांस्तान्वर्षन्भूमिमिवाम्बुदः १०
ततोऽनन्तरमेवात्र सर्ववर्णान्महीपतिः
अन्नपानरसौघेन प्लावयामास पार्थिवः ११
सवस्त्रफेनरत्नौघो मृदङ्गनिनदस्वनः
गवाश्वमकरावर्तो नारीरत्नमहाकरः १२
ग्रामाग्रहारकुल्याढ्यो मणिहेमजलार्णवः
जगत्संप्लावयामास धृतराष्ट्रदयाम्बुधिः १३
एवं स पुत्रपौत्राणां पितृणामात्मनस्तथा
गान्धार्याश्च महाराज प्रददावौर्ध्वदेहिकम् १४
परिश्रान्तो यदासीत्स ददद्दानान्यनेकशः
ततो निर्वर्तयामास दानयज्ञं कुरूद्वहः १५
एवं स राजा कौरव्यश्चक्रे दानमहोत्सवम्
नटनर्तकलास्याढ्यं बह्वन्नरसदक्षिणम् १६

दशाहमेवं दानानि दत्त्वा राजाम्बिकासुतः
बभूव पुत्रपौत्राणामनृणो भरतर्षभ १७
इति श्रीमहाभारते आश्रमवासपर्वणि विंशोऽध्यायः २०

एकविंशोऽध्यायः

वैशम्पायन उवाच
ततः प्रभाते राजा स धृतराष्ट्रोऽम्बिकासुतः
आहूय पाण्डवान्वीरान्वनवासकृतक्षणः १
गान्धारीसहितो धीमानभिनन्द्य यथाविधि
कार्त्तिक्यां कारयित्वेष्टिं ब्राह्मणैर्वेदपारगैः २
अग्निहोत्रं पुरस्कृत्य वल्कलाजिनसंवृतः
वधूपरिवृतो राजा निर्ययौ भवनात्ततः ३
ततः स्त्रियः कौरवपाण्डवानां याश्चाप्यन्याः कौरवराजवंश्याः
तासां नादः प्रादुरासीत्तदानीं वैचित्रवीर्ये  नृपतौ प्रयाते ४
ततो लाजैः सुमनोभिश्च राजा विचित्राभिस्तद्गृहं पूजयित्वा
संयोज्यार्थैर्भृत्यजनं च सर्वं ततः समुत्सृज्य ययौ नरेन्द्रः ५
ततो राजा प्राञ्जलिर्वेपमानो युधिष्ठिरः सस्वनं बाष्पकण्ठः
विलप्योच्चैर्हा महाराज साधो क्व गन्तासीत्यपतत्तात भूमौ ६
तथार्जुनस्तीव्रदुःखाभितप्तो मुहुर्मुहुर्निःश्वसन्भारताग्र्यः
युधिष्ठिरं मैवमित्येवमुक्त्वा निगृह्याथोदीधरत्सीदमानः ७
वृकोदरः फल्गुनश्चैव वीरौ माद्रीपुत्रौ विदुरः संजयश्च
वैश्यापुत्रः सहितो गौतमेन धौम्यो विप्राश्चान्वयुर्बाष्पकण्ठाः ८
कुन्ती गान्धारीं बद्धनेत्रां व्रजन्तीं स्कन्धासक्तं हस्तमथोद्वहन्ती
राजा गान्धार्याः स्कन्धदेशेऽवसज्य पाणिं ययौ धृतराष्ट्रः प्रतीतः ९
तथा कृष्णा द्रौपदी यादवी च बालापत्या चोत्तरा कौरवी च
चित्राङ्गदा याश्च काश्चित्स्त्रियोऽन्या सार्धं राज्ञा प्रस्थितास्ता वधूभिः १०
तासां नादो रुदतीनां तदासीद्राजन्दुःखात्कुररीणामिवोच्चैः
ततो निष्पेतुर्ब्राह्मणक्षत्रियाणां विट्शूद्राणां चैव नार्यः समन्तात् ११
तन्निर्याणे दुःखितः पौरवर्गो गजाह्वयेऽतीव बभूव राजन्
यथा पूर्वं गच्छतां पाण्डवानां द्यूते राजन्कौरवाणां सभायाम् १२

या नापश्यच्चन्द्रमा नैव सूर्यो रामाः कदाचिदपि तस्मिन्नरेन्द्रे
महावनं गच्छति कौरवेन्द्रे शोकेनार्ता राजमार्गं प्रपेदुः १३
इति श्रीमहाभारते आश्रमवासपर्वणि एकविंशोऽध्यायः २१

## द्वाविंशोऽध्यायः

वैशम्पायन उवाच
ततः प्रासादहर्म्येषु वसुधायां च पार्थिव
स्त्रीणां च पुरुषाणां च सुमहान्निःस्वनोऽभवत् १
स राजा राजमार्गेण नृनारीसंकुलेन च
कथंचिन्निर्ययौ धीमान्वेपमानः कृताञ्जलि २
स वर्धमानद्वारेण निर्ययौ गजसाह्वयात्
विसर्जयामास च तं जनौघं स मुहुर्मुहुः ३
वनं गन्तुं च विदुरो राज्ञा सह कृतक्षणः
संजयश्च महामात्रः सूतो गावल्गणिस्तथा ४
कृपं निवर्तयामास युयुत्सुं च महारथम्
धृतराष्ट्रो महीपालः परिदाय युधिष्ठिरे ५
निवृत्ते पौरवर्गे तु राजा सान्तःपुरस्तदा
धृतराष्ट्राभ्यनुज्ञातो निवर्तितुमियेष सः ६
सोऽब्रवीन्मातरं कुन्तीमुपेत्य भरतर्षभ
अहं राजानमन्विष्ये भवती विनिवर्तताम् ७
वधूपरिवृता राज्ञि नगरं गन्तुमर्हसि
राजा यात्वेष धर्मात्मा तपसे धृतनिश्चयः ८
इत्युक्ता धर्मराजेन बाष्पव्याकुललोचना
जगादैवं तदा कुन्ती गान्धारीं परिगृह्य ह ९
सहदेवे महाराज मा प्रमादं कृथाः क्वचित्
एष मामनुरक्तो हि राजंस्त्वां चैव नित्यदा १०
कर्णं स्मरेथाः सततं संग्रामेष्वपलायिनम्
अवकीर्णो हि मया वीरो दुष्प्रज्ञया तदा ११
आयसं हृदयं नूनं मन्दाया मम पुत्रक
यत्सूर्यजमपश्यन्त्याः शतधा न विदीर्यते १२

एवंगते तु किं शक्यं मया कर्तुमरिंदम
मम दोषोऽयमत्यर्थं ख्यापितो यन्न सूर्यजः
तन्निमित्तं महाबाहो दानं दद्यास्त्वमुत्तमम् १३
सदैव भ्रातृभिःसार्धमग्रजस्यारिमर्दन
द्रौपद्याश्च प्रिये नित्यं स्थातव्यमरिकर्शन १४
भीमसेनार्जुनौ चैव नकुलश्च कुरूद्वह
समाधेयास्त्वया वीर त्वय्यद्य कुलधूर्गता १५
श्वश्रूश्वशुरयोः पादाञ्शुश्रूषन्ती वने त्वहम्
गान्धारीसहितो वत्स्ये तापसी मलपङ्किनी १६
एवमुक्तः स धर्मात्मा भ्रातृभिः सहितो वशी
विषादमगमत्तीव्रं न च किंचिदुवाच ह १७
स मुहूर्तमिव ध्यात्वा धर्मपुत्रो युधिष्ठिरः
उवाच मातरं दीनश्चिन्ताशोकपरायणः १८
किमिदं ते व्यवसितं नैवं त्वं वक्तुमर्हसि
न त्वामभ्यनुजानामि प्रसादं कर्तुमर्हसि १९
व्यरोचयः पुरा ह्यस्मानुत्साह्य प्रियदर्शने
विदुराया वचोभिस्त्वमस्मान्न त्यक्तुमर्हसि २०
निहत्य पृथिवीपालान्राज्यं प्राप्तमिदं मया
तव प्रज्ञामुपश्रुत्य वासुदेवान्नरर्षभात् २१
क्व सा बुद्धिरियं चाद्य भवत्या या श्रुता मया
क्षत्रधर्मे स्थितिं ह्युक्त्वा तस्याश्चलितुमिच्छसि २२
अस्मानुत्सृज्य राज्यं च स्नुषां चेमां यशस्विनीम्
कथं वत्स्यसि शून्येषु वनेष्वम्ब प्रसीद मे २३
इति बाष्पकलां वाचं कुन्ती पुत्रस्य शृगवती
जगामैवाश्रुपूर्णाक्षी भीमस्तामिदमब्रवीत् २४
यदा राज्यमिदं कुन्ति भोक्तव्यं पुत्रनिर्जितम्
प्राप्तव्या राजधर्माश्च तदेयं ते कुतो मतिः २५
किं वयं कारिताः पूर्वं भवत्या पृथिवीक्षयम्
कस्य हेतोः परित्यज्य वनं गन्तुमभीप्ससि २६
वनाच्चापि किमानीता भवत्या बालका वयम्

दुःखशोकसमाविष्टौ माद्रीपुत्राविमौ तथा २७
प्रसीद मातर्मा गास्त्वं वनमद्य यशस्विनि
श्रियं यौधिष्ठिरीं तावद्भुङ्क्ष्व पार्थबलार्जिताम् २८
इति सा निश्चितैवाथ वनवासकृतक्षणा
लालप्यतां बहुविधं पुत्राणां नाकरोद्वचः २९
द्रौपदी चान्वयाच्छ्वश्रूं विषण्णवदना तदा
वनवासाय गच्छन्तीं रुदती भद्रया सह ३०
सा पुत्रान्रुदतः सर्वान्मुहुर्मुहुरवेक्षती
जगामैव महाप्राज्ञा वनाय कृतनिश्चया ३१
अन्वयुः पाण्डवास्तां तु सभृत्यान्तःपुरास्तदा
ततः प्रमृज्य साश्रूणि पुत्रान्वचनमब्रवीत् ३२
इति श्रीमहाभारते आश्रमवासपर्वणि द्वाविंशोऽध्यायः २२

## त्रयोविंशोऽध्यायः

कुन्त्युवाच
एवमेतन्महाबाहो यथा वदसि पाण्डव
कृतमुद्धर्षणं पूर्वं मया वः सीदतां नृप १
द्यूतापहृतराज्यानां पतितानां सुखादपि
ज्ञातिभिः परिभूतानां कृतमुद्धर्षणं मया २
कथं पाण्डोर्न नश्येत संततिः पुरुषर्षभाः
यशश्च वो न नश्येत इति चोद्धर्षणं कृतम् ३
यूयमिन्द्रसमाः सर्वे देवतुल्यपराक्रमाः
मा परेषां मुखप्रेक्षाः स्थेत्येवं तत्कृतं मया ४
कथं धर्मभृतां श्रेष्ठो राजा त्वं वासवोपमः
पुनर्वने न दुःखी स्या इति चोद्धर्षणं कृतम् ५
नागायुतसमप्राणः ख्यातविक्रमपौरुषः
नायं भीमोऽत्ययं गच्छेदिति चोद्धर्षणं कृतम् ६
भीमसेनादवरजस्तथायं वासवोपमः
विजयो नावसीदेत इति चोद्धर्षणं कृतम् ७
नकुलः सहदेवश्च तथेमौ गुरुवर्तिनौ

क्षुधा कथं न सीदेतामिति चोद्धर्षणं कृतम् ८
इयं च बृहती श्यामा श्रीमत्यायतलोचना
वृथा सभातले क्लिष्टा मा भूदिति च तत्कृतम् ९
प्रेक्षन्त्या मे तदा हीमां वेपन्तीं कदलीमिव
स्त्रीधर्मिणीमनिन्द्याङ्गीं तथा द्यूतपराजिताम् १०
दुःशासनो यदा मौढ्याद्दासीवत्पर्यकर्षत
तदैव विदितं मह्यं पराभूतमिदं कुलम् ११
विषण्णाः कुरवश्चैव तदा मे श्वशुरादयः
यदैषा नाथमिच्छन्ती व्यलपत्कुररी यथा १२
केशपक्षे परामृष्टा पापेन हतबुद्धिना
यदा दुःशासनेनैषा तदा मुह्याम्यहं नृप १३
युष्मत्तेजोविवृद्ध्यर्थं मया ह्युद्धर्षणं कृतम्
तदानीं विदुरावाक्यैरिति तद्वित्त पुत्रकाः १४
कथं न राजवंशोऽय नश्येत्प्राप्य सुतान्मम
पाण्डोरितिमया पुत्र तस्मादुद्धर्षणं कृतम् १५
न तस्य पुत्रः पौत्रो वा कुत एव स पार्थिवः
लभते सुकृताँल्लोकान्यस्माद्वंशः प्रणश्यति १६
भुक्तं राज्यफलं पुत्रा भर्तुर्मे विपुलं पुरा
महादानानि दत्तानि पीतः सोमो यथाविधि १७
साहं नात्मफलार्थं वै वासुदेवमचूचुदम्
विदुरायाः प्रलापैस्तैः प्लावनार्थं च तत्कृतम् १८
नाहं राज्यफलं पुत्र कामये पुत्रनिर्जितम्
पतिलोकानहं पुण्यान्कामये तपसा विभो १९
श्वश्रूश्वशुरयोः कृत्वा शुश्रूषां वनवासिनोः
तपसा शोषयिष्यामि युधिष्ठिर कलेवरम् २०
निवर्तस्व कुरुश्रेष्ठ भीमसेनादिभिः सह
धर्मे ते धीयतां बुद्धिर्मनस्ते महदस्तु च २१

इति श्रीमहाभारते आश्रमवासपर्वणि त्रयोविंशोऽध्यायः २३

चतुर्विंशोऽध्यायः

वैशम्पायन उवाच
कुन्त्यास्तु वचनं श्रुत्वा पाण्डवा राजसत्तम
व्रीडिताः संन्यवर्तन्त पाञ्चाल्या सहितानघाः १
ततः शब्दो महानासीत्सर्वेषामेव भारत
अन्तःपुराणां रुदतां दृष्ट्वा कुन्तीं तथागताम् २
प्रदक्षिणमथावृत्य राजानं पाण्डवास्तदा
अभिवाद्य न्यवर्तन्त पृथां तामनिवर्त्य वै ३
ततोऽब्रवीन्महाराजो धृतराष्ट्रोऽम्बिकासुतः
गान्धारीं विदुरं चैव समाभाष्य निगृह्य च ४
युधिष्ठिरस्य जननी देवी साधु निवर्त्यताम्
यथा युधिष्ठिरः प्राह तत्सर्वं सत्यमेव हि ५
पुत्रैश्वर्यं महदिदमपास्य च महाफलम्
का नु गच्छेद्वनं दुर्गं पुत्रानुत्सृज्य मूढवत् ६
राज्यस्थया तपस्तप्तं दानं दत्तं व्रतं कृतम्
अनया शक्यमद्येह श्रूयतां च वचो मम ७
गान्धारि परितुष्टोऽस्मि वध्वाः शुश्रूषणेन वै
तस्मात्त्वमेनां धर्मज्ञे समनुज्ञातुमर्हसि ८
इत्युक्ता सौबलेयी तु राज्ञा कुन्तीमुवाच ह
तत्सर्वं राजवचनं स्वं च वाक्यं विशेषवत् ९
न च सा वनवासाय देवीं कृतमतिं तदा
शक्नोत्युपावर्तयितुं कुन्तीं धर्मपरां सतीम् १०
तस्यास्तु तं स्थिरं ज्ञात्वा व्यवसायं कुरुस्त्रियः
निवृत्तांश्च कुरुश्रेष्ठान्दृष्ट्वा प्ररुरुदुस्तदा ११
उपावृत्तेषु पार्थेषु सर्वेष्वन्तःपुरेषु च
ययौ राजा महाप्राज्ञो धृतराष्ट्रो वनं तदा १२
पाण्डवा अपि दीनास्ते दुःखशोकपरायणाः
यानैः स्त्रीसहिताः सर्वे पुरं प्रविविशुस्तदा १३
तदहृष्टमिवाकूजं गतोत्सवमिवाभवत्
नगरं हास्तिनपुरं सस्त्रीवृद्धकुमारकम् १४

सर्वे चासन्निरुत्साहाः पाण्डवा जातमन्यवः
कुन्त्या हीनाः सुदुःखार्ता वत्सा इव विनाकृताः १५
धृतराष्ट्रस्तु तेनाह्ना गत्वा सुमहदन्तरम्
ततो भागीरथीतीरे निवासमकरोत्प्रभुः १६
प्रादुष्कृता यथान्यायमग्नयो वेदपारगैः
व्यराजन्त द्विजश्रेष्ठैस्तत्र तत्र तपोधनैः
प्रादुष्कृताग्निरभवत्स च वृद्धो नराधिपः १७
स राजाग्नीन्पर्युपास्य हुत्वा च विधिवत्तदा
संध्यागतं सहस्रांशुमुपातिष्ठत भारत १८
विदुरः संजयश्चैव राज्ञः शय्यां कुशैस्ततः
चक्रतुः कुरुवीरस्य गान्धार्याश्चाविदूरतः १९
गान्धार्याः संनिकर्षे तु निषसाद कुशेष्वथ
युधिष्ठिरस्य जननी कुन्ती साधुव्रते स्थिता २०
तेषां संश्रवणे चापि निषेदुर्विदुरादयः
याजकाश्च यथोद्देशं द्विजा ये चानुयायिनः २१
प्राधीतद्विजमुख्या सा संप्रज्वालितपावका
बभूव तेषां रजनी ब्राह्मीव प्रीतिवर्धनी २२
ततो रात्र्यां व्यतीतायां कृतपूर्वाह्णिकक्रियाः
हुत्वाग्निं विधिवत्सर्वे प्रययुस्ते यथाक्रमम्
उदङ्मुखा निरीक्षन्त उपवासपरायणाः २३
स तेषामतिदुःखोऽभून्निवासः प्रथमेऽहनि
शोचतां शोच्यमानानां पौरजानपदैर्जनैः २४
इति श्रीमहाभारते आश्रमवासपर्वणि चतुर्विंशोऽध्यायः २४

## पञ्चविंशोऽध्यायः

वैशम्पायन उवाच
ततो भागीरथीतीरे मेध्ये पुण्यजनोचिते
निवासमकरोद्राजा विदुरस्य मते स्थितः १
तत्रैनं पर्युपातिष्ठन्ब्राह्मणा राष्ट्रवासिनः
क्षत्रविट्शूद्रसंघाश्च बहवो भरतर्षभ २

स तैः परिवृतो राजा कथाभिरभिनन्द्य तान्
अनुजज्ञे सशिष्यान्वै विधिवत्प्रतिपूज्य च ३
सायाह्ने स महीपालस्ततो गङ्गामुपेत्य ह
चकार विधिवच्छौचं गान्धारी च यशस्विनी ४
तथैवान्ये पृथक्सर्वे तीर्थेष्वाप्लुत्य भारत
चक्रुः सर्वाः क्रियास्तत्र पुरुषा विदुरादयः ५
कृतशौचं ततो वृद्धं श्वशुरं कुन्तिभोजजा
गान्धारीं च पृथा राजन्गङ्गातीरमुपानयत् ६
राज्ञस्तु याजकैस्तत्र कृतो वेदीपरिस्तरः
जुहाव तत्र वह्निं स नृपतिः सत्यसंगरः ७
ततो भागीरथीतीरात्कुरुक्षेत्रं जगाम सः
सानुगो नृपतिर्विद्वान्नियतः संयतेन्द्रियः ८
तत्राश्रमपदं धीमानभिगम्य स पार्थिवः
आससादाथ राजर्षिः शतयूपं मनीषिणम् ९
स हि राजा महानासीत्केकयेषु परंतपः
स पुत्रं मनुजैश्वर्ये निवेश्य वनमाविशत् १०
तेनासौ सहितो राजा ययौ व्यासाश्रमं तदा
तत्रैनं विधिवद्राजन्प्रत्यगृह्णात्कुरूद्वहम् ११
स दीक्षां तत्र संप्राप्य राजा कौरवनन्दनः
शतयूपाश्रमे तस्मिन्निवासमकरोत्तदा १२
तस्मै सर्वं विधिं राजन्राजाचख्यौ महामतिः
आरण्यकं महाराज व्यासस्यानुमते तदा १३
एवं स तपसा राजा धृतराष्ट्रो महामनाः
योजयामास चात्मानं तांश्चाप्यनुचरांस्तदा १४
तथैव देवी गान्धारी वल्कलाजिनवासिनी
कुन्त्या सह महाराज समानव्रतचारिणी १५
कर्मणा मनसा वाचा चक्षुषा चापि ते नृप
संनियम्येन्द्रियग्राममास्थिताः परमं तपः १६
त्वगस्थिभूतः परिशुष्कमांसो जटाजिनी वल्कलसंवृताङ्गः
स पार्थिवस्तत्र तपश्चचार महर्षिवत्तीव्रमपेतदोषः १७

क्षत्ता च धर्मार्थविदग्र्यबुद्धिः ससंजयस्तं नृपतिं सदारम्
उपाचरद्घोरतपो जितात्मा तदा कृशो वल्कलचीरवासाः १८
इति श्रीमहाभारते आश्रमवासपर्वणि पञ्चविंशोऽध्यायः २५

षड्विंशोऽध्यायः

वैशम्पायन उवाच
ततस्तस्मिन्मुनिश्रेष्ठा राजानं द्रष्टुमभ्ययुः
नारदः पर्वतश्चैव देवलश्च महातपाः १
द्वैपायनःसशिष्यश्च सिद्धाश्चान्ये मनीषिणः
शतयूपश्च राजर्षिर्वृद्धः परमधार्मिकः २
तेषां कुन्ती महाराज पूजां चक्रे यथाविधि
ते चापि तुतुषुस्तस्यास्तापसाः परिचर्यया ३
तत्र धर्म्याः कथास्तात चक्रुस्ते परमर्षयः
रमयन्तो महात्मानं धृतराष्ट्रं जनाधिपम् ४
कथान्तरे तु कस्मिंश्चिद्देवर्षिर्नारदस्तदा
कथामिमामकथयत्सर्वप्रत्यक्षदर्शिवान् ५
पुरा प्रजापतिसमो राजासीदकुतोभयः
सहस्रचित्य इत्युक्तः शतयूपपितामहः ६
स पुत्रे राज्यमासज्य ज्येष्ठे परमधार्मिके
सहस्रचित्यो धर्मात्मा प्रविवेश वनं नृपः ७
स गत्वा तपसः पारं दीप्तस्य स नराधिपः
पुरंदरस्य संस्थानं प्रतिपेदे महामनाः ८
दृष्टपूर्वः स बहुशो राजन्संपतता मया
महेन्द्रसदने राजा तपसा दग्धकिल्बिषः ९
तथा शैलालयो राजा भगदत्तपितामहः
तपोबलेनैव नृपो महेन्द्रसदनं गतः १०
तथा पृषध्रो नामासीद्राजा वज्रधरोपमः
स चापि तपसा लेभे नाकपृष्ठमितो नृपः ११
अस्मिन्नरण्ये नृपते मान्धातुरपि चात्मजः
पुरुकुत्सो नृपः सिद्धिं महतीं समवाप्तवान् १२

भार्या समभवद्यस्य नर्मदा सरितां वरा
सोऽस्मिन्नरण्ये नृपतिस्तपस्तप्त्वा दिवं गतः १३
शशलोमा च नामासीद्राजा परमधार्मिकः
स चाप्यस्मिन्वने तप्त्वा तपो दिवमवाप्तवान् १४
द्वैपायनप्रसादाच्च त्वमपीदं तपोवनम्
राजन्नवाप्य दुष्प्रापां सिद्धिमग्र्यां गमिष्यसि १५
त्वं चापि राजशार्दूल तपसोऽन्ते श्रिया वृतः
गान्धारीसहितो गन्ता गतिं तेषां महात्मनाम् १६
पाण्डुः संस्मरति नित्यं  बलहन्तुः समीपतः
त्वां सदैव महीपाल स त्वां श्रेयसि योद्यति १७
तव शुश्रूषया चैव गान्धार्याश्च यशस्विनी
भर्तुः सलोकतां कुन्ती गमिष्यति वधूस्तव १८
युधिष्ठिरस्य जननी स हि धर्मः सनातनः
वयमेतत्प्रपश्यामो नृपते दिव्यचक्षुषा १९
प्रवेक्ष्यति महात्मानं विदुरश्च युधिष्ठिरम्
संजयस्त्वदनुध्यानात्पूतः स्वर्गमवाप्स्यति २०
एतच्छ्रुत्वा कौरवेन्द्रो महात्मा सदैव  पत्न्या प्रीतिमान्प्रत्यगृह्णात्
विद्वान्वाक्यं नारदस्य प्रशस्य चक्रे पूजां चातुलां नारदाय २१
तथा सर्वे नारदं विप्रसंघाः संपूजयामासुरतीव राजन्
राज्ञः प्रीत्या धृतराष्ट्रस्य ते वै पुनः पुनः समहृष्टास्तदानीम् २२
इति श्रीमहाभारते आश्रमवासपर्वणि षड्विंशोऽध्यायः २६

## सप्तविंशोऽध्यायः

वैशम्पायन उवाच
नारदस्य तु तद्वाक्यं प्रशशंसुर्द्विजोत्तमाः
शतयूपस्तु राजर्षिर्नारदं वाक्यमब्रवीत् १
अहो भगवता श्रद्धा कुरुराजस्य वर्धिता
सर्वस्य च जनस्यास्य मम चैव महाद्युते  २
अस्ति काचिद्विवक्षा तु मम तां गदतः शृणु
धृतराष्ट्रं प्रति नृपं देवर्षे लोकपूजित ३

सर्ववृत्तान्ततत्त्वज्ञो भवान्दिव्येन चक्षुषा
युक्तः पश्यसि देवर्षे गतीर्वै विविधा नृणाम् ४
उक्तवान्नृपतीनां त्वं महेन्द्रस्य सलोकताम्
न त्वस्य नृपतेर्लोकाः कथितास्ते महामुने ५
स्थानमस्य क्षितिपतेः श्रोतुमिच्छाम्यहं विभो
त्वत्तः कीदृक्कदा वेति तन्ममाचक्ष्व पृच्छतः ६
इत्युक्तो नारदस्तेन वाक्यं सर्वमनोनुगम्
व्याजहार सतां मध्ये दिव्यदर्शी महातपाः ७
यदृच्छया शक्रसदो गत्वा शक्रं शचीपतिम्
दृष्टवानस्मि राजर्षे तत्र पाण्डुं नराधिपम् ८
तत्रेयं धृतराष्ट्रस्य कथासमभवन्नृप
तपसो दुश्चरस्यास्य यदयं तप्यते नृपः ९
तत्राहमिदमश्रौषं शक्रस्य वदतो नृप
वर्षाणि त्रीणि शिष्टानि राज्ञोऽस्य परमायुषः १०
ततः कुबेरभवनं गान्धारीसहितो नृपः
विहर्ता धृतराष्ट्रोऽय राजराजाभिपूजितः ११
कामगेन विमानेन दिव्याभरणभूषितः
ऋषिपुत्रो महाभागस्तपसा दग्धकिल्बिषः १२
संचरिष्यति लोकांश्च देवगन्धर्वरक्षसाम्
स्वच्छन्देनेति धर्मात्मा यन्मां त्वं परिपृच्छसि १३
देवगुह्यमिदं प्रीत्या मया वः कथितं महत्
भवन्तो हि श्रुतधनास्तपसा दग्धकिल्बिषाः १४
इति ते तस्य तच्छ्रुत्वा देवर्षेर्मधुरं वचः
सर्वे सुमनसः प्रीता बभूवुः स च पार्थिवः १५
एवं कथाभिरन्वास्य धृतराष्ट्रं मनीषिणः
विप्रजग्मुर्यथाकामं ते सिद्धगतिमास्थिताः १६

इति श्रीमहाभारते आश्रमवासपर्वणि सप्तविंशोऽध्यायः २७

## अष्टाविंशोऽध्यायः

वैशम्पायन उवाच

वनं गते कौरवेन्द्रे दुःखशोकसमाहताः
बभूवुः पाण्डवा राजन्मातृशोकेन चार्दिताः १
तथा पौरजनः सर्वः शोचन्नास्ते जनाधिपम्
कुर्वाणाश्च कथास्तत्र ब्राह्मणा नृपतिं प्रति २
कथं नु राजा वृद्धः स वने वसति निर्जने
गान्धारी च महाभागा सा च कुन्ती पृथा कथम् ३
सुखार्हः स हि राजर्षिर्न सुखं तन्महावनम्
किमवस्थः समासाद्य प्रज्ञाचक्षुर्हतात्मजः ४
सुदुष्करं कृतवती कुन्ती पुत्रानपश्यती
राज्यश्रियं परित्यज्य वनवासमरोचयत् ५
विदुरः किमवस्थश्च भ्रातुः शुश्रूषुरात्मवान्
स च गावल्गणिर्धीमान्भर्तृपिण्डानुपालकः ६
आकुमारं च पौरास्ते चिन्ताशोकसमाहताः
तत्र तत्र कथाचक्रुः समासाद्य परस्परम् ७
पाण्डवाश्चैव ते सर्वे भृशं शोकपरायणाः
शोचन्तो मातरं वृद्धामूषुर्नातिचिरं पुरे ८
तथैव पितरं वृद्धं हतपुत्रं जनेश्वरम्
गान्धारीं च महाभागां विदुरं च महामतिम् ९
नैषां बभूव संप्रीतिस्तान्विचिन्तयतां तदा
न राज्ये न च नारीषु न वेदाध्ययने तथा १०
परं निर्वेदमगमंश्चिन्तयन्तो नराधिपम्
तच्च ज्ञातिवधं घोरं संस्मरन्तः पुनः पुनः ११
अभिमन्योश्च बालस्य विनाशं रणमूर्धनि
कर्णस्य च महाबाहोः संग्रामेष्वपलायिनः १२
तथैव द्रौपदेयानामन्येषां सुहृदामपि
वधं संस्मृत्य ते वीरा नाति प्रमनसोऽभवन् १३
हतप्रवीरां पृथिवीं हतरत्नां च भारत
सदैव चिन्तयन्तस्ते न निद्रामुपलेभिरे १४
द्रौपदी हतपुत्रा च सुभद्रा चैव भामिनी
नातिप्रीतियुते देव्यौ तदास्तामप्रहृष्टवत् १५

वैराटयास्तु सुतं दृष्ट्वा पितरं ते परिक्षितम्
धारयन्ति स्म ते प्राणांस्तव पूर्वपितामहाः १६
इति श्रीमहाभारते आश्रमवासपर्वणि अष्टाविंशोऽध्यायः २८

## एकोनत्रिंशोऽध्यायः

वैशम्पायन उवाच
एवं ते पुरुषव्याघ्राः पाण्डवाः मातृनन्दनाः
स्मरन्तो मातरं वीरा बभूवुर्भृशदुःखिताः १
ये राजकार्येषु पुरा व्यासक्ता नित्यशोऽभवन्
ते राजकार्याणि तदा नाकार्षुः सर्वतः पुरे २
आविष्टा इव शोकेन नाभ्यनन्दन्त किंचन
संभाष्यमाणा अपि ते न किंचित्प्रत्यपूजयन् ३
ते स्म वीरा दुराधर्षा गाम्भीर्ये सागरोपमाः
शोकोपहतविज्ञाना नष्टसंज्ञा इवाभवन् ४
अनुस्मरन्तो जननीं ततस्ते कुरुनन्दनाः
कथं नु वृद्धमिथुनं वहत्यद्य पृथा कृशा ५
कथं च स महीपालो हतपुत्रो निराश्रयः
पत्न्या सह वसत्येको वने श्वापदसेविते ६
सा च देवी महाभागा गान्धारी हतबान्धवा
पतिमन्धं कथं वृद्धमन्वेति विजने वने ७
एवं तेषां कथयतामौत्सुक्यमभवत्तदा
गमने चाभवद्बुद्धिर्धृतराष्ट्रदिदृक्षया ८
सहदेवस्तु राजानं प्रणिपत्येदमब्रवीत्
अहो मे भवतो दृष्टं हृदयं गमनं प्रति ९
न हि त्वा गौरवेणाहमशकं वक्तुमात्मना
गमनं प्रति राजेन्द्र तदिदं समुपस्थितम् १०
दिष्ट्या द्रक्ष्यामि तां कुन्तीं वर्तयन्तीं तपस्विनीम्
जटिलां तापसीं वृद्धां कुशकाशपरिक्षताम् ११
प्रासादहर्म्य संवृद्धामत्यन्तसुखभागिनीम्
कदा तु जननीं श्रान्तां द्रक्ष्यामि भृशदुःखिताम् १२

अनित्याः खलु मर्त्यानां गतयो भरतर्षभ
कुन्ती राजसुता यत्र वसत्यसुखिनी वने १३
सहदेववचः श्रुत्वा द्रौपदी योषितां वरा
उवाच देवी राजानमभिपूज्याभिनन्द्य च १४
कदा द्रक्ष्यामि तां देवीं यदि जीवति सा पृथा
जीवन्त्या ह्यद्य नः प्रीतिर्भविष्यति नराधिप १५
एषा तेऽस्तु मतिर्नित्यं धर्मे ते रमतां मनः
योऽद्य त्वमस्मान्राजेन्द्र श्रेयसा योजयिष्यसि १६
अग्रपादस्थितं चेमं विद्धि राजन्वधूजनम्
काङ्क्षन्तं दर्शनं कुन्त्या गान्धार्याः श्वशुरस्य च १७
इत्युक्तः स नृपो देव्या पाञ्चाल्या भरतर्षभ
सेनाध्यक्षान्समानाय्य सर्वानिदमथाब्रवीत् १८
निर्यातयत मे सेनां प्रभूतरथकुञ्जराम्
द्रक्ष्यामि वनसंस्थं च धृतराष्ट्रं महीपतिम् १९
स्त्र्यध्यक्षांश्चाब्रवीद्राजा यानानि विविधानि मे
सज्जीक्रियन्तां सर्वाणि शिबिकाश्च सहस्रशः २०
शकटापणवेशाश्च कोशशिल्पिन एव च
निर्यान्तु कोशपालाश्च कुरुक्षेत्राश्रमं प्रति २१
यश्च पौरजनः कश्चिद्द्रष्टुमिच्छति पार्थिवम्
अनावृतः सुविहितः स च यातु सुरक्षितः २२
सूदाः पौरोगवाश्चैव सर्वं चैव महानसम्
विविधं भक्ष्यभोज्यं च शकटैरुह्यतां मम २३
प्रयाणं घुष्यतां चैवं श्वोभूत इति मा चिरम्
क्रियन्तां पथि चाप्यद्य वेश्मानि विविधानि च २४
एवमाज्ञाप्य राजा स भ्रातृभिः सह पाण्डवः
श्वोभूते निर्ययौ राजा सस्त्रीबालपुरस्कृतः २५
स बहिर्दिवसानेवं जनौघं परिपालयन्
न्यवसन्नृपतिः पञ्च ततोऽगच्छद्वनं प्रति २६
इति श्रीमहाभारते आश्रमवासपर्वणि एकोनत्रिंशोऽध्यायः २९

त्रिंशोऽध्यायः

वैशम्पायन उवाच
आज्ञापयामास ततः सेनां भरतसत्तमः
अर्जुनप्रमुखैर्गुप्तां लोकपालोपमैर्नरैः १
योगो योग इति प्रीत्या ततः शब्दो महानभूत्
क्रोशतां सादिनां तत्र युज्यतां युज्यतामिति २
केचिद्यानैर्नरा जग्मुः केचिदश्वैर्मनोजवैः
रथैश्च नगराकारैः प्रदीप्तज्वलनोपमैः ३
गजेन्द्रैश्च तथैवान्ये केचिदुष्ट्रैर्नराधिप
पदातिनस्तथैवान्ये नखरप्रासयोधिनः ४
पौरजानपदाश्चैव यानैर्बहुविधैस्तथा
अन्वयुः कुरुराजानं धृतराष्ट्रदिदृक्षया ५
स चापि राजवचनादाचार्यो गौतमः कृपः
सेनामादाय सेनानी प्रययावाश्रमं प्रति ६
ततो द्विजैर्वृतः श्रीमान्कुरुराजो युधिष्ठिरः
संस्तूयमानो बहुभिः सूतमागधबन्दिभिः ७
पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्धनि
रथानीकेन महता निर्ययौ कुरुनन्दनः ८
गजैश्चाचलसंकाशैर्भीमकर्मा वृकोदरः
सज्जयन्त्रायुधोपेतैः प्रययौ मारुतात्मजः ९
माद्रीपुत्रावपि तथा हयारोहैः सुसंवृतौ
जग्मतुः प्रीतिजननौ संनद्धकवचध्वजौ १०
अर्जुनश्च महातेजा रथेनादित्यवर्चसा
वशी श्वेतैर्हयैर्युक्तैर्दिव्येनान्वगमन्नृपम् ११
द्रौपदीप्रमुखाश्चापि स्त्रीसंघाः शिबिकागताः
स्त्र्यध्यक्षयुक्ताः प्रययुर्विसृजन्तोऽमितं वसु १२
समृद्धनरनागाश्वं वेणुवीणानिनादितम्
शुशुभे पाण्डवं सैन्यं तत्तदा भरतर्षभ १३
नदीतीरेषु रम्येषु सरित्सु च विशां पते
वासान्कृत्वा क्रमेणाथ जग्मुस्ते कुरुपुंगवाः १४

युयुत्सुश्च महातेजा धौम्यश्चैव पुरोहितः
युधिष्ठिरस्य वचनात्पुरगुप्तिं प्रचक्रतुः १५
ततो युधिष्ठिरो राजा कुरुक्षेत्रमवातरत्
क्रमेणोत्तीर्य यमुनां नदीं परमपावनीम् १६
स ददर्शाश्रमं दूराद्राजर्षेस्तस्य धीमतः
शतयूपस्य कौरव्य धृतराष्ट्रस्य चैव ह १७
ततः प्रमुदितः सर्वो जनस्तद्वनमञ्जसा
विवेश सुमहानादैरापूर्य भरतर्षभ १८
इति श्रीमहाभारते आश्रमवासपर्वणि त्रिंशोऽध्यायः ३०

एकत्रिंशोऽध्यायः

वैशम्पायन उवाच
ततस्ते पाण्डवा दूरादवतीर्य पदातयः
अभिजग्मुर्नरपतेराश्रमं विनयानताः १
स च पौरजनः सर्वो ये च राष्ट्रनिवासिनः
स्त्रियश्च कुरुमुख्यानां पद्भिरेवान्वयुस्तदा २
आश्रमं ते ततो जग्मुर्धृतराष्ट्रस्य पाण्डवाः
शून्यं मृगगणाकीर्णं कदलीवनशोभितम् ३
ततस्तत्र समाजग्मुस्तापसा विविधव्रताः
पाण्डवानागतान्द्रष्टुं कौतूहलसमन्विताः ४
तानपृच्छत्ततो राजा क्वासौ कौरववंशभृत्
पिता ज्येष्ठो गतोऽस्माकमिति बाष्पपरिप्लुतः ५
तमूचुस्ते ततो वाक्यं यमुनामवगाहितुम्
पुष्पाणामुदकुम्भस्य चार्थे गत इति प्रभो ६
तैराख्यातेन मार्गेण ततस्ते प्रययुस्तदा
ददृशुश्चाविदूरे तान्सर्वानथ पदातयः ७
ततस्ते सत्वरा जग्मुः पितुर्दर्शनकाङ्क्षिणः
सहदेवस्तु वेगेन प्राधावद्येन सा पृथा ८
सस्वनं प्ररुदन्धीमान्मातुः पादावुपस्पृशन्
सा च बाष्पाविलमुखी प्रददर्श प्रियं सुतम् ९

बाहुभ्यां संपरिष्वज्य समुन्नाम्य च पुत्रकम्
गान्धार्याःकथयामास सहदेवमुपस्थितम् १०
अनन्तरं च राजानं भीमसेनमथार्जुनम्
नकुलं च पृथा दृष्ट्वा त्वरमाणोपचक्रमे ११
सा ह्यग्रेऽगच्छत तयोर्दंपत्योर्हतपुत्रयोः
कर्षन्ती तौ ततस्ते तां दृष्ट्वा संन्यपतन्भुवि १२
तान्राजा स्वरयोगेन स्पर्शेन च महामनाः
प्रत्यभिज्ञाय मेधावी समाश्वासयत प्रभुः १३
ततस्ते बाष्पमुत्सृज्य गान्धारीसहितं नृपम्
उपतस्थुर्महात्मानो मातरं च यथाविधि १४
सर्वेषां तोयकलशाञ्जगृहुस्ते स्वयं तदा
पाण्डवा लब्धसंज्ञास्ते मात्रा चाश्वासिताः पुनः १५
ततो नार्यो नृसिंहानां स च योधजनस्तदा
पौरजानपदाश्चैव ददृशुस्तं नराधिपम् १६
निवेदयामास तदा जनं तं नामगोत्रतः
युधिष्ठिरो नरपतिः स चैनान्प्रत्यपूजयत् १७
स तैः परिवृतो मेने हर्षबाष्पाविलेक्षणः
राजात्मानं गृहगतं पुरेव गजसाह्वये १८
अभिवादितो वधूभिश्च कृष्णाद्याभिः स पार्थिवः
गान्धार्या सहितो धीमान्कुन्त्या च प्रत्यनन्दत १९
ततश्चाश्रममागच्छत्सिद्धचारणसेवितम्
दिदृक्षुभिः समाकीर्णं नभस्तारागणैरिव २०
इति श्रीमहाभारते आश्रमवासपर्वणि एकत्रिंशोऽध्यायः ३१

## द्वात्रिंशोऽध्यायः

वैशम्पायन उवाच
स तैः सह नरव्याघ्रैर्भ्रातृभिर्भरतर्षभ
राजा रुचिरपद्माक्षैरासांचक्रे तदाश्रमे १
तापसैश्च महाभागैर्नानादेशसमागतैः
द्रष्टुं कुरुपतेः पुत्रान्पाण्डवान्पृथुवक्षसः २

तेऽब्रुवञ्ज्ञातुमिच्छामः कतमोऽत्र युधिष्ठिरः
भीमार्जुनयमाश्चैव द्रौपदी च यशस्विनी ३
तानाचख्यौ तदा सूतः सर्वान्नामाभिनामतः
संजयो द्रौपदीं चैव सर्वाश्चान्याः कुरुस्त्रियः ४
य एष जाम्बूनदशुद्धगौरतनुर्महासिंह इव प्रवृद्धः
प्रचण्डघोणः पृथुदीर्घनेत्रस्ताम्रायतास्यः कुरुराज एषः ५
अयं पुनर्मत्तगजेन्द्रगामी प्रतप्तचामीकरशुद्धगौरः
पृथ्वायतांसः पृथुदीर्घबाहुर्वृकोदरः पश्यत पश्यतैनम् ६
यस्त्वेष पार्श्वेऽस्य महाधनुष्माञ्श्यामो युवा वारणयूथपाभः
सिंहोन्नतांसो गजखेलगामी पद्मायताक्षोऽजुन एष वीरः ७
कुन्तीसमीपे पुरुषोत्तमा तु यमाविमौ विष्णुमहेन्द्रकल्पौ
मनुष्यलोके सकले समोऽस्ति ययोर्न रूपे न बले न शीले ८
इयं पुनःपद्मदलायताक्षी मध्यं वयः किंचिदिव स्पृशन्ती
नीलोत्पलाभा पुरदेवतेव कृष्णा स्थिरा मूर्तिमतीव लक्ष्मीः ९
अस्यास्तु पार्श्वे कनकोत्तमाभा यैषा प्रभा मूर्तिमतीव गौरी
मध्ये स्थितैषा भगिनी द्विजाग्र्या चक्रायुधस्याप्रतिमस्य तस्य १०
इयं स्वसा राजचमूपतेस्तु प्रवृद्धनीलोत्पलदामवर्णा
पस्पर्ध कृष्णेन नृपः सदा यो वृकोदरस्यैष परिग्रहोऽग्र्य ११
इयं च राज्ञो मगधाधिपस्य सुता जरासन्ध इति श्रुतस्य
यवीयसो माद्रवतीसुतस्य भार्या मता चम्पकदामगौरी १२
इन्दीवरश्यामतनुः स्थिता तु यैषापरासन्नमहीतले च
भार्या मता माद्रवतीसुतस्य ज्येष्ठस्य सेयं कमलायताक्षी १३
इयं तु निष्टप्तसुवर्णगौरी राज्ञो विराटस्य सुता सपुत्रा
भार्याभिमन्योर्निहतो रणे यो द्रोणादिभिस्तैर्विरथो रथस्थैः १४
एतास्तु सीमन्तशिरोरुहा या शुक्लोत्तरीया नरराजपत्न्यः
राज्ञोऽस्य वृद्धस्य परंशताख्याः स्नुषा विवीरा हतपुत्रनाथाः १५
एता यथामुख्यमुदाहृता वो ब्राह्मण्यभावादृजुबुद्धिसत्त्वाः
सर्वा भवद्भिः परिपृच्छ्यमाना नरेन्द्रपत्न्यः सुविशुद्धसत्त्वाः १६
एवं स राजा कुरुवृद्धवर्यः समागतस्तैर्नरदेवपुत्रैः
प्रपच्छ सर्वान्कुशलं तदानीं गतेषु सर्वेष्वथ तापसेषु १७

योधेषु चाप्याश्रममण्डलं तं मुक्त्वा निविष्टेषु विमुच्य पत्रम्
स्त्रीवृद्धबाले च सुसंनिविष्टे यथार्हतः कुशलं पर्यपृच्छत् १८
इति श्रीमहाभारते आश्रमवासपर्वणि द्वात्रिंशोऽध्यायः ३२

## त्रयस्त्रिंशोऽध्यायः

धृतराष्ट्र उवाच
युधिष्ठिर महाबाहो कच्चित्तात कुशल्यसि
सहितो भ्रातृभिः सर्वैः पौरजानपदैस्तथा १
ये च त्वामुपजीवन्ति कच्चित्तेऽपि निरामयाः
सचिवा भृत्यवर्गाश्च गुरवश्चैव ते विभो २
कच्चिद्वर्तसि पौराणीं वृत्तिं राजर्षिसेविताम्
कच्चिद्दायाननुच्छिद्य कोशस्तेऽभिप्रपूर्यते ३
अरिमध्यस्थमित्रेषु वर्तसे चानुरूपतः
ब्राह्मणानग्रहारैर्वा यथावदनुपश्यसि ४
कच्चित्ते परितुष्यन्ति शीलेन भरतर्षभ
शत्रवो गुरवः पौरा भृत्या वा स्वजनोऽपि वा ५
कच्चिद्यजसि राजेन्द्र श्रद्धावान्पितृदेवताः
अतिथींश्चान्नपानेन कच्चिदर्चसि भारत ६
कच्चिच्च विषये विप्राः स्वकर्मनिरतास्तव
क्षत्रिया वैश्यवर्गा वा शूद्रा वापि कुटुम्बिनः ७
कच्चित्स्त्रीबालवृद्धं ते न शोचति न याचते
जामयः पूजिताः कच्चित्तव गेहे नरर्षभ ८
कच्चिद्राजर्षिवंशोऽय त्वामासाद्य महीपतिम्
यथोचितं महाराज यशसा नावसीदति ९
वैशम्पायन उवाच
इत्येवंवादिनं तं स न्यायवित्प्रत्यभाषत
कुशलप्रश्नसंयुक्तं कुशलो वाक्यकर्मणि १०
कच्चित्ते वर्धते राजंस्तपो मन्दश्रमस्य ते
अपि मे जननी चेयं शुश्रूषुर्विगतक्लमा
अप्यस्याः सफलो राजन्वनवासो भविष्यति ११

इयं च माता ज्येष्ठा मे वीतवाताध्वकर्शिता
घोरेण तपसा युक्ता देवी कच्चिन्न शोचति १२
हतान्पुत्रान्महावीर्यान्क्षत्रधर्मपरायणान्
नापध्यायति वा कच्चिदस्मान्पापकृतः सदा १३
क्व चासौ विदुरो राजन्नैनं पश्यामहे वयम्
संजयः कुशली चायं कच्चिन्नु तपसि स्थितः १४
इत्युक्तः प्रत्युवाचेदं धृतराष्ट्रो जनाधिपम्
कुशली विदुरः पुत्र तपो घोरं समास्थितः १५
वायुभक्षो निराहारः कृशो धमनिसंततः
कदाचिद्दृश्यते विप्रैः शून्येऽस्मिन्कानने क्वचित् १६
इत्येवं वदतस्तस्य जटी वीटामुखः कृशः
दिग्वासा मलदिग्धाङ्गो वनरेणुसमुक्षितः १७
दूरादालक्षितः क्षत्ता तत्राख्यातो महीपतेः
निवर्तमानः सहसा जनं दृष्ट्वाश्रमं प्रति १८
तमन्वधावन्नृपतिरेक एव युधिष्ठिरः
प्रविशन्तं वनं घोरं लक्ष्यालक्ष्यं क्वचित्क्वचित् १९
भो भो विदुर राजाहं दयितस्ते युधिष्ठिरः
इति ब्रुवन्नरपतिस्तं यत्नादभ्यधावत २०
ततो विविक्त एकान्ते तस्थौ बुद्धिमतां वरः
विदुरो वृक्षमाश्रित्य कंचित्तत्र वनान्तरे २१
तं राजा क्षीणभूयिष्ठमाकृतीमात्रसूचितम्
अभिजज्ञे महाबुद्धिं महाबुद्धिर्युधिष्ठिरः २२
युधिष्ठिरोऽहमस्मीति वाक्यमुक्त्वाग्रतः स्थितः
विदुरस्याश्रवे राजा स च प्रत्याह संज्ञया २३
ततः सोऽनिमिषो भूत्वा राजानं तमुदैक्षत
संयोज्य विदुरस्तस्मिन्दृष्टिं दृष्ट्या समाहितः २४
विवेश विदुरो धीमान्गात्रैर्गात्राणि चैव ह
प्राणान्प्राणेषु च दधदिन्द्रियाणीन्द्रियेषु च २५
स योगबलमास्थाय विवेश नृपतेस्तनुम्
विदुरो धर्मराजस्य तेजसा प्रज्वलन्निव २६

विदुरस्य शरीरं तत्तथैव स्तब्धलोचनम्
वृक्षाश्रितं तदा राजा ददर्श गतचेतनम् २७
बलवन्तं तथात्मानं मेने बहुगुणं तदा
धर्मराजो महातेजास्तच्च सस्मार पाण्डवः २८
पौराणमात्मनः सर्वं विद्यावान्स विशां पते
योगधर्मं महातेजा व्यासेन कथितं यथा २९
धर्मराजस्तु तत्रैनं संचस्कारयिषुस्तदा
दग्धुकामोऽभवद्विद्वानथ वै वागभाषत ३०
भो भो राजन्न दग्धव्यमेतद्विदुरसंज्ञकम्
कलेवरमिहैतत्ते धर्म एष सनातनः ३१
लोकाः सन्तानका नाम भविष्यन्त्यस्य पार्थिव
यतिधर्ममवाप्तोऽसौ नैव शोच्यः परन्तप ३२
इत्युक्तो धर्मराजः स विनिवृत्य ततः पुनः
राज्ञो वैचित्रवीर्यस्य तत्सर्वं प्रत्यवेदयत् ३३
ततः स राजा द्युतिमान्स च सर्वो जनस्तदा
भीमसेनादयश्चैव परं विस्मयमागताः ३४
तच्छ्रुत्वा प्रीतिमान्राजा भूत्वा धर्मजमब्रवीत्
आपो मूलं फलं चैव ममेदं प्रतिगृह्यताम् ३५
यदन्नो हि नरो राजंस्तदन्नोऽस्यातिथिः स्मृतः
इत्युक्तः स तथेत्येव प्राह धर्मात्मजो नृपम्
फलं मूलं च बुभुजे राज्ञा दत्तं सहानुजः ३६
ततस्ते वृक्षमूलेषु कृतवासपरिग्रहाः
तां रात्रिं न्यवसन्सर्वे फलमूलजलाशनाः ३७
इति श्रीमहाभारते आश्रमवासपर्वणि त्रयस्त्रिंशोऽध्यायः ३३

## चतुस्त्रिंशोऽध्यायः

वैशम्पायन उवाच
एवं सा रजनी तेषामाश्रमे पुण्यकर्मणाम्
शिवा नक्षत्रसंपन्ना सा व्यतीयाय भारत १
तत्र तत्र कथाश्चासंस्तेषां धर्मार्थलक्षणाः

विचित्रपदसंचारा नानाश्रुतिभिरन्विताः २
पाण्डवास्त्वभितो मातुर्धरण्यां सुषुपुस्तदा
उत्सृज्य सुमहार्हाणि शयनानि नराधिप ३
यदाहारोऽभवद्राजा धृतराष्ट्रो महामनाः
तदाहारा नृवीरास्ते न्यवसंस्तां निशां तदा ४
व्यतीतायां तु शर्वर्यां कृतपूर्वाह्णिकक्रियः
भ्रातृभिः सह कौन्तेयो ददर्शाश्रममण्डलम् ५
सान्तःपुरपरीवारः सभृत्यः सपुरोहितः
यथासुखं यथोद्देशं धृतराष्ट्राभ्यनुज्ञया ६
ददर्श तत्र वेदीश्च संप्रज्वलितपावकाः
कृताभिषेकैर्मुनिभिर्हुताग्निभिरुपस्थिताः ७
वानेयपुष्पनिकरैराज्यधूमोद्गमैरपि
ब्राह्मेण वपुषा युक्ता युक्ता मुनिगणैश्च ताः ८
मृगयूथैरनुद्विग्नैस्तत्र तत्र समाश्रितैः
अशङ्कितैः पक्षिगणैः प्रगीतैरिव च प्रभो ९
केकाभिर्नीलकण्ठानां दात्यूहानां च कूजितैः
कोकिलानां च कुहरैः शुभैः श्रुतिमनोहरैः १०
प्राधीतद्विजघोषैश्च क्वचित्क्वचिदलंकृतम्
फलमूलसमुद्वाहैर्महद्भिश्चोपशोभितम् ११
ततः स राजा प्रददौ तापसार्थमुपाहृतान्
कलशान्काञ्चनान्राजंस्तथैवौदुम्बरानपि १२
अजिनानि प्रवेणीश्च स्रुक्स्रुवं च महीपतिः
कमण्डलूस्तथा स्थालद्यः पिठराणि च भारत १३
भाजनानि च लौहानि पात्रीश्च विविधा नृप
यद्यदिच्छति यावच्च यदन्यदपि काङ्क्षितम् १४
एवं स राजा धर्मात्मा परीत्याश्रममण्डलम्
वसु विश्राण्य तत्सर्वं पुनरायान्महीपतिः १५
कृताह्निकं च राजानं धृतराष्ट्रं मनीषिणम्
ददर्शासीनमव्यग्रं गान्धारीसहितं तदा १६
मातरं चाविदूरस्थां शिष्यवत्प्रणतां स्थिताम्

कुन्तीं ददर्श धर्मात्मा सततं धर्मचारिणीम् १७
स तमभ्यर्च्य राजानं नाम संश्राव्य चात्मनः
निषीदेत्यभ्यनुज्ञातो बृस्यामुपविवेश ह १८
भीमसेनादयश्चैव पाण्डवा कौरवर्षभम्
अभिवाद्योपसंगृह्य निषेदुः पार्थिवाज्ञया १९
स तैः परिवृतो राजा शुशुभेऽतीव कौरवः
बिभ्रद्ब्राह्मीं श्रियं दीप्तां देवैरिव बृहस्पतिः २०
तथा तेषूपविष्टेषु समाजग्मुर्महर्षयः
शतयूपप्रभृतयः कुरुक्षेत्रनिवासिनः २१
व्यासश्च भगवान्विप्रो देवर्षिगणपूजितः
वृतः शिष्यैर्महातेजा दर्शयामास तं नृपम् २२
ततः स राजा कौरव्यः कुन्तीपुत्रश्च वीर्यवान्
भीमसेनादयश्चैव प्रत्युत्थायाभ्यपूजयन् २३
समागतस्ततो व्यासः शतयूपादिभिर्वृतः
धृतराष्ट्रं महीपालमास्यतामित्यभाषत २४
नवं तु विष्टरं कौश्यं कृष्णाजिनकुशोत्तरम्
प्रतिपेदे तदा व्यासस्तदर्थमुपकल्पितम् २५
ते च सर्वे द्विजश्रेष्ठा विष्टरेषु समन्ततः
द्वैपायनाभ्यनुज्ञाता निषेदुर्विपुलौजसः २६
इति श्रीमहाभारते आश्रमवासपर्वणि चतुस्त्रिंशोऽध्यायः ३४

## पञ्चत्रिंशोऽध्यायः

वैशम्पायन उवाच
तथा समुपविष्टेषु पाण्डवेषु महात्मसु
व्यासः सत्यवतीपुत्रः प्रोवाचामन्त्र्य पार्थिवम् १
धृतराष्ट्र महाबाहो कच्चित्ते वर्धते तपः
कच्चिन्मनस्ते प्रीणाति वनवासे नराधिप २
कच्चिद्धृदि न ते शोको राजन्पुत्रविनाशजः
कच्चिज्ज्ञानानि सर्वाणि प्रसन्नानि तवानघ ३
कच्चिद्बुद्धिं दृढां कृत्वा चरस्यारण्यकं विधिम्

कच्चिद्वधूश्च गान्धारी न शोकेनाभिभूयते ४
महाप्रज्ञा बुद्धिमती देवी धर्मार्थदर्शिनी
आगमापायतत्त्वज्ञा कच्चिदेषा न शोचति ५
कच्चित्कुन्ती च राजंस्त्वां शुश्रूषुरनहंकृता
या परित्यज्य राज्यं स्वं गुरुशुश्रूषणे रता ६
कच्चिद्धर्मसुतो राजा त्वया प्रीत्याभिनन्दितः
भीमार्जुनयमाश्चैव कच्चिदेतेऽपि सान्त्विताः ७
कच्चिन्नन्दसि दृष्ट्वैतान्कच्चित्ते निर्मलं मनः
कच्चिद्विशुद्धभावोऽसि जातज्ञानो नराधिप ८
एतद्धि त्रितयं श्रेष्ठं सर्वभूतेषु भारत
निर्वैरता महाराज सत्यमद्रोह एव च ९
कच्चित्ते ननुतापोऽस्ति वनवासेन भारत
स्वदते वन्यमन्नं वा मुनिवासांसि वा विभो १०
विदितं चापि मे राजन्विदुरस्य महात्मनः
गमनं विधिना येन धर्मस्य सुमहात्मनः ११
माण्डव्यशापाद्धि स वै धर्मो विदुरतां गतः
महाबुद्धिर्महायोगी महात्मा सुमहामनाः १२
बृहस्पतिर्वा देवेषु शुक्रो वाप्यसुरेषु यः
न तथा बुद्धिसंपन्नो यथा स पुरुषर्षभः १३
तपोबलव्ययं कृत्वा सुमहच्चिरसंभृतम्
माण्डव्येनर्षिणा धर्मो ह्यभिभूतः सनातनः १४
नियोगाद्ब्रह्मणः पूर्वं मया स्वेन बलेन च
वैचित्रवीर्यके क्षेत्रे जातः स सुमहामतिः १५
भ्राता तव महाराज देवदेवः सनातनः
धारणाच्छ्रेयसो ध्यानाद्यं धर्मं कवयो विदुः १६
सत्येन संवर्धयति दमेन नियमेन च
अहिंसया च दानेन तपसा च सनातनः १७
येन योगबलाज्जातः कुरुराजो युधिष्ठिरः
धर्म इत्येष नृपते प्राज्ञेनामितबुद्धिना १८
यथा ह्यग्निर्यथा वायुर्यथापः पृथिवी यथा

यथाकाशं तथा धर्म इह चामुत्र च स्थितः १९
सर्वगश्चैव कौरव्य सर्वं व्याप्य चराचरम्
दृश्यते देवदेवः स सिद्धैर्निर्दग्धकिल्बिषैः २०
यो हि धर्मः स विदुरो विदुरो यः स पाण्डवः
स एव राजन्वश्यस्ते पाण्डवः प्रेष्यवत्स्थितः २१
प्रविष्टः स स्वमात्मानं भ्राता ते बुद्धिसत्तमः
दिष्ट्या महात्मा कौन्तेयं महायोगबलान्वितः २२
त्वां चापि श्रेयसा योक्ष्ये नचिराद्भरतर्षभ
संशयच्छेदनार्थाय प्राप्तं मां विद्धि पुत्रक २३
न कृतं यत्पुरा कश्चित्कर्म लोके महर्षिभिः
आश्चर्यभूतं तपसः फलं संदर्शयामि वः २४
किमिच्छसि महीपाल मत्तः प्राप्तुममानुषम्
द्रष्टुं स्प्रष्टुमथ श्रोतुं वद कर्तास्मि तत्तथा २५
इति श्रीमहाभारते आश्रमवासपर्वणि पञ्चत्रिंशोऽध्यायः ३५

समाप्तमाश्रमवासपर्व

षट्त्रिंशोऽध्यायः
जनमेजय उवाच
वनवासं गते विप्र धृतराष्ट्रे महीपतौ
सभार्ये नृपशार्दूले वध्वा कुन्त्या समन्विते १
विदुरे चापि संसिद्धे धर्मराजं व्यपाश्रिते
वसत्सु पाण्डुपुत्रेषु सर्वेष्वाश्रममण्डले २
यत्तदाश्चर्यमिति वै करिष्यामीत्युवाच ह
व्यासः परमतेजस्वी महर्षिस्तद्वदस्व मे ३
वनवासे च कौरव्यः कियन्तं कालमच्युतः
युधिष्ठिरो नरपतिर्न्यवसत्सजनो द्विज ४
किमाहाराश्च ते तत्र ससैन्या न्यवसन्प्रभो
सान्तःपुरा महात्मान इति तद्ब्रूहि मेऽनघ ५
वैशम्पायन उवाच
तेऽनुज्ञातास्तदा राजन्कुरुराजेन पाण्डवाः

विविधान्यन्नपानानि विश्राम्यानुभवन्ति ते ६
मासमेकं विजह्रुस्ते ससैन्यान्तःपुरा वने
अथ तत्रागमद्व्यासो यथोक्तं ते मयानघ ७
तथा तु तेषां सर्वेषां कथाभिर्नृपसंनिधौ
व्यासमन्वासतां राजन्नाजग्मुर्मुनयोऽपरे ८
नारदः पर्वतश्चैव देवलश्च महातपाः
विश्वावसुस्तुम्बुरुश्च चित्रसेनश्च भारत ९
तेषामपि यथान्यायं पूजां चक्रे महामनाः
धृतराष्ट्राभ्यनुज्ञातः कुरुराजो युधिष्ठिरः १०
निषेदुस्ते ततः सर्वे पूजां प्राप्य युधिष्ठिरात्
आसनेष्वथ पुण्येषु बर्हिष्केषु वरेषु च ११
तेषु तत्रोपविष्टेषु स तु राजा महामतिः
पाण्डुपुत्रैः परिवृतो निषसाद कुरूद्वहः १२
गान्धारी चैव कुन्ती च द्रौपदी सात्वती तथा
स्त्रियश्चान्यास्तथान्याभिः सहोपविविशुस्ततः १३
तेषां तत्र कथा दिव्या धर्मिष्ठाश्चाभवन्नृप
ऋषीणां च पुराणानां देवासुरविमिश्रिताः १४
ततः कथान्ते व्यासस्तं प्रज्ञाचक्षुषमीश्वरम्
प्रोवाच वदतां श्रेष्ठः पुनरेव स तद्वचः
प्रीयमाणो महातेजाः सर्ववेदविदां वरः १५
विदितं मम राजेन्द्र यत्ते हृदि विवक्षितम्
दह्यमानस्य शोकेन तव पुत्रकृतेन वै १६
गान्धार्याश्चैव यद्दुःखं हृदि तिष्ठति पार्थिव
कुन्त्याश्च यन्महाराज द्रौपद्याश्च हृदि स्थितम् १७
यच्च धारयते तीव्रं दुःखं पुत्रविनाशजम्
सुभद्रा कृष्णभगिनी तच्चापि विदितं मम १८
श्रुत्वा समागममिमं सर्वेषां वस्ततो नृप
संशयच्छेदनायाहं प्राप्तः कौरवनन्दन १९
इमे च देवगन्धर्वाः सर्वे चैव महर्षयः
पश्यन्तु तपसो वीर्यमद्य मे चिरसंभृतम् २०

तदुच्यतां महाबाहो कं कामं प्रदिशामि ते
प्रवणोऽस्मि वरं दातुं पश्य मे तपसो बलम् २१
एवमुक्तः स राजेन्द्रो व्यासेनामितबुद्धिना
मुहूर्तमिव संचिन्त्य वचनायोपचक्रमे २२
धन्योऽस्म्यनुगृहीतोऽस्मि सफलं जीवितं च मे
यन्मे समागमोऽद्येह भवद्भिः सह साधुभिः २३
अद्य चाप्यवगच्छामि गतिमिष्टामिहात्मनः
भवद्भिर्ब्रह्मकल्पैर्यत्समेतोऽह तपोधनाः २४
दर्शनादेव भवतां पूतोऽह नात्र संशयः
विद्यते न भयं चापि परलोकान्ममानघाः २५
किं तु तस्य सुदुर्बुद्धेर्मन्दस्यापनयैर्भृशम्
दूयते मे मनो नित्यं स्मरतः पुत्रगृद्धिनः २६
अपापाः पाण्डवा येन निकृताः पापबुद्धिना
घातिता पृथिवी चेयं सहया सनरद्विपाः २७
राजानश्च महात्मानो नानाजनपदेश्वराः
आगम्य मम पुत्रार्थे सर्वे मृत्युवशं गताः २८
ये ते पुत्रांश्च दाराश्च प्राणांश्च मनसः प्रियान्
परित्यज्य गताः शूराः प्रेतराजनिवेशनम् २९
का नु तेषां गतिर्ब्रह्मन्मित्रार्थे ये हता मृधे
तथैव पुत्रपौत्राणां मम ये निहता युधि ३०
दूयते मे मनोऽभीक्ष्णं घातयित्वा महाबलम्
भीष्मं शान्तनवं वृद्धं द्रोणं च द्विजसत्तमम् ३१
मम पुत्रेण मूढेन पापेन सुहृदद्विषा
क्षयं नीतं कुलं दीप्तं पृथिवीराज्यमिच्छता ३२
एतत्सर्वमनुस्मृत्य दह्यमानो दिवानिशम्
न शान्तिमधिगच्छामि दुःखशोकसमाहतः
इति मे चिन्तयानस्य पितः शर्म न विद्यते ३३

इति श्रीमहाभारते आश्रमवासपर्वणि षट्त्रिंशोऽध्यायः ३६

सप्तत्रिंशोऽध्यायः

वैशम्पायन उवाच

तच्छ्रुत्वा विविधं तस्य राजर्षेः परिदेवितम्
पुनर्नवीकृतः शोको गान्धार्या जनमेजय १
कुन्त्या द्रुपदपुत्र्याश्च सुभद्रायास्तथैव च
तासां च वरनारीणां वधूनां कौरवस्य ह २
पुत्रशोकसमाविष्टा गान्धारी त्विदमब्रवीत्
श्वशुरं बद्धनयना देवी प्राञ्जलिरुत्थिता ३
षोडशेमानि वर्षाणि गतानि मुनिपुंगव
अस्य राज्ञो हतान्पुत्राञ्शोचतो न शमो विभो ४
पुत्रशोकसमाविष्टो निःश्वसन्ह्येष भूमिपः
न शेते वसतीः सर्वा धृतराष्ट्रो महामुने ५
लोकानन्यान्समर्थोऽसि स्रष्टुं सर्वांस्तपोबलात्
किमु लोकान्तरगतान्राज्ञो दर्शयितुं सुतान् ६
इयं च द्रौपदी कृष्णा हतज्ञातिसुता भृशम्
शोचत्यतीव साध्वी ते स्नुषाणां दयिता स्नुषा ७
तथा कृष्णस्य भगिनी सुभद्रा भद्रभाषिणी
सौभद्रवधसंतप्ता भृशं शोचति भामिनी ८
इयं च भूरिश्रवसो भार्या परमदुःखिता
भर्तृव्यसनशोकार्ता न शेते वसतीः प्रभो ९
यस्यास्तु श्वशुरो धीमान्बाह्लीकः स कुरूद्वहः
निहतः सोमदत्तश्च पित्रा सह महारणे १०
श्रीमच्चास्य महाबुद्धेः संग्रामेष्वपलायिनः
पुत्रस्य ते पुत्रशतं निहतं यद्रणाजिरे ११
तस्य भार्याशतमिदं पुत्रशोकसमाहतम्
पुनः पुनर्वर्धयानं शोकं राज्ञो ममैव च
तेनारम्भेण महता मामुपास्ते महामुने १२
ये च शूरा महात्मानः श्वशुरा मे महारथाः
सोमदत्तप्रभृतयः का नु तेषां गतिः प्रभो १३
तव प्रसादाद्भगवन्विशोकोऽय महीपतिः

कुर्यात्कालमहं चैव कुन्ती चेयं वधूस्तव १४
इत्युक्तवत्यां गान्धार्यां कुन्ती व्रतकृशानना
प्रच्छन्नजातं पुत्रं तं सस्मारादित्यसंभवम् १५
तामृषिर्वरदो व्यासो दूरश्रवणदर्शनः
अपश्यद्दुःखितां देवीं मातरं सव्यसाचिनः १६
तामुवाच ततो व्यासो यत्ते कार्यं विवक्षितम्
तद्ब्रूहि त्वं महाप्राज्ञे यत्ते मनसि वर्तते १७
ततः कुन्ती श्वशुरयोः प्रणम्य शिरसा तदा
उवाच वाक्यं सव्रीडं विवृण्वाना पुरातनम् १८
इति श्रीमहाभारते आश्रमवासपर्वणि सप्तत्रिंशोऽध्यायः ३७

## अष्टत्रिंशोऽध्यायः

कुन्त्युवाच
भगवञ्श्वशुरो मेऽसि दैवतस्यापि दैवतम्
स मे देवातिदेवस्त्वं शृणु सत्यां गिरं मम १
तपस्वी कोपनो विप्रो दुर्वासा नाम मे पितुः
भिक्षामुपागतो भोक्तुं तमहं पर्यतोषयम् २
शौचेन त्वागसस्त्यागैः शुद्धेन मनसा तथा
कोपस्थानेष्वपि महत्स्वकुप्यं न कदाचन ३
स मे वरमदात्प्रीतः कृतमित्यहमब्रुवम्
अवश्यं ते गृहीतव्यमिति मां सोऽब्रवीद्वचः ४
ततः शापभयाद्विप्रमवोचं पुनरेव तम्
एवमस्त्विति च प्राह पुनरेव स मां द्विजः ५
धर्मस्य जननी भद्रे भवित्री त्वं वरानने
वशे स्थास्यन्ति ते देवा यांस्त्वमावाहयिष्यसि ६
इत्युक्त्वान्तर्हितो विप्रस्ततोऽहं विस्मिताभवम्
न च सर्वास्ववस्थासु स्मृतिर्मे विप्रणश्यति ७
अथ हर्म्यतलस्थाहं रविमुद्यन्तमीक्षती
संस्मृत्य तदृषेर्वाक्यं स्पृहयन्ती दिवाकरम्
स्थिताहं बालभावेन तत्र दोषमबुध्यती ८

अथ देवः सहस्रांशुर्मत्समीपगतोऽभवत्
द्विधा कृत्वात्मनो देहं भूमौ च गगनेऽपि च
ततापलोकानेकेन द्वितीयेनागमच्च माम् ९
स मामुवाच वेपन्तीं वरं मत्तो वृणीष्व ह
गम्यतामिति तं चाहं प्रणम्य शिरसावदम् १०
स मामुवाच तिग्मांशुर्वृथाह्वानं न ते क्षमम्
धक्ष्यामि त्वां च विप्रं च येन दत्तो वरस्तव ११
तमहं रक्षती विप्रं शापादनपराधिनम्
पुत्रो मे त्वत्समो देव भवेदिति ततोऽब्रुवम् १२
ततो मां तेजसाविश्य मोहयित्वा च भानुमान्
उवाच भविता पुत्रस्तवेत्यभ्यगमद्दिवम् १३
ततोऽहमन्तर्भवने पितुर्वृत्तान्तरक्षिणी
गूढोत्पन्नं सुतं बालं जले कर्णमवासृजम् १४
नूनं तस्यैव देवस्य प्रसादात्पुनरेव तु
कन्याहमभवं विप्र यथा प्राह स मामृषिः १५
स मया मूढया पुत्रो ज्ञायमानोऽप्युपेक्षितः
तन्मां दहति विप्रर्षे यथा सुविदितं तव १६
यदि पापमपापं वा तदेतद्विवृतं मया
तन्मे भयं त्वं भगवन्व्यपनेतुमिहार्हसि १७
यच्चास्य राज्ञो विदितं हृदिस्थं भवतोऽनघ
तं चायं लभतां काममद्यैव मुनिसत्तम १८
इत्युक्तः प्रत्युवाचेदं व्यासो वेदविदां वरः
साधु सर्वमिदं तथ्यमेवमेव यथात्थ माम् १९
अपराधश्च ते नास्ति कन्याभावं गता ह्यसि
देवाश्चैश्वर्यवन्तो वै शरीराण्याविशन्ति वै २०
सन्ति देवनिकायाश्च संकल्पाज्जनयन्ति ये
वाचा दृष्ट्या तथा स्पर्शात्संघर्षेणेति पञ्चधा २१
मनुष्यधर्मो दैवेन धर्मेण न हि युज्यते
इति कुन्ति व्यजानीहि व्येतु ते मानसो ज्वरः २२
सर्वं बलवतां पथ्यं सर्वं बलवतां शुचि

सर्वं बलवतां धर्मः सर्वं बलवतां स्वकम् २३
इति श्रीमहाभारते आश्रमवासपर्वणि अष्टात्रिंशोऽध्यायः ३८

## एकोनचत्वारिंशोऽध्यायः

व्यास उवाच
भद्रे द्रक्ष्यसि गान्धारि पुत्रान्भ्रातॄन्सखींस्तथा
वधूश्च पतिभिः सार्धं निशि सुप्तोत्थिता इव १
कर्णं द्रक्ष्यति कुन्ती च सौभद्रं चापि यादवी
द्रौपदी पञ्च पुत्रांश्च पितॄन्भ्रातॄंस्तथैव च २
पूर्वमेवैष हृदये व्यवसायोऽभवन्मम
यथास्मि चोदितो राज्ञा भवत्या पृथयैव च ३
न ते शोच्या महात्मानः सर्व एव नरर्षभाः
क्षत्रधर्मपराः सन्तस्तथा हि निधनं गताः ४
भवितव्यमवश्यं तत्सुरकार्यमनिन्दिते
अवतेरुस्ततः सर्वे देवभागैर्महीतलम् ५
गन्धर्वाप्सरसश्चैव पिशाचा गुह्यराक्षसाः
तथा पुण्यजनाश्चैव सिद्धा देवर्षयोऽपि च ६
देवाश्च दानवाश्चैव तथा ब्रह्मर्षयोऽमलाः
त एते निधनं प्राप्ताः कुरुक्षेत्रे रणाजिरे ७
गन्धर्वराजो यो धीमान्धृतराष्ट्र इति श्रुतः
स एव मानुषे लोके धृतराष्ट्रः पतिस्तव ८
पाण्डुं मरुद्गणं विद्धि विशिष्टतममच्युतम्
धर्मस्यांशोऽभवत्क्षत्ता राजा चायं युधिष्ठिरः ९
कलिं दुर्योधनं विद्धि शकुनिं द्वापरं तथा
दुःशासनादीन्विद्धि त्वं राक्षसाञ्शुभदर्शने १०
मरुद्गणाद्भीमसेनं बलवन्तमरिंदमम्
विद्धि च त्वं नरमृषिमिमं पार्थं धनंजयम्
नारायणं हृषीकेशमश्विनौ यमजावुभौ ११
द्विधा कृत्वात्मनो देहमादित्यं तपतां वरम्
लोकांश्च तापयानं वै विद्धि कर्णं च शोभने

यश्च वैरार्थमुद्भूतः संघर्षजननस्तथा १२
यश्च पाण्डवदायादो हतः षड्भिर्महारथैः
स सोम इह सौभद्रो योगादेवाभवद्द्विधा १३
द्रौपद्या सह संभूतं धृष्टद्युम्नं च पावकात्
अग्नेर्भागं शुभं विद्धि राक्षसं तु शिखण्डिनम् १४
द्रोणं बृहस्पतेर्भागं विद्धि द्रौणिं च रुद्रजम्
भीष्मं च विद्धि गाङ्गेयं वसुं मानुषतां गतम् १५
एवमेते महाप्राज्ञे देवा मानुष्यमेत्य हि
ततः पुनर्गताः स्वर्गं कृते कर्मणि शोभने १६
यच्च वो हृदि सर्वेषां दुःखमेनच्चिरं स्थितम्
तदद्य व्यपनेष्यामि परलोककृताद्भयात् १७
सर्वे भवन्तो गच्छन्तु नदीं भागीरथीं प्रति
तत्र द्रक्ष्यथ तान्सर्वान्ये हतास्मिन्रणाजिरे १८
वैशम्पायन उवाच
इति व्यासस्य वचनं श्रुत्वा सर्वो जनस्तदा
महता सिंहनादेन गङ्गामभिमुखो ययौ १९
धृतराष्ट्रश्च सामात्यः प्रययौ सह पाण्डवैः
सहितो मुनिशार्दूलैर्गन्धर्वैश्च समागतैः २०
ततो गङ्गां समासाद्य क्रमेण स जनार्णवः
निवासमकरोत्सर्वो यथाप्रीति यथासुखम् २१
राजा च पाण्डवैः सार्धमिष्टे देशे सहानुगः
निवासमकरोद्धीमान्सस्त्रीवृद्धपुरःसरः २२
जगाम तदहश्चापि तेषां वर्षशतं यथा
निशां प्रतीक्षमाणानां दिदृक्षूणां मृतान्नृपान् २३
अथ पुण्यं गिरिवरमस्तमभ्यगमद्रविः
ततः कृताभिषेकास्ते नैशं कर्म समाचरन् २४
इति श्रीमहाभारते आश्रमवासपर्वणि एकोनचत्वारिंशोऽध्यायः ३९

## चत्वारिंशोऽध्यायः

वैशम्पायन उवाच

ततो निशायां प्राप्तायां कृतसायाह्निकक्रियाः
व्यासमभ्यगमन्सर्वे ये तत्रासन्समागताः १
धृतराष्ट्रस्तु धर्मात्मा पाराडवैः सहितस्तदा
शुचिरेकमनाःसार्धमृषिभिस्तैरुपाविशत् २
गान्धार्या सह नार्यस्तु सहिताः समुपाविशन्
पौरजानपदश्चापि जनः सर्वो यथावयः ३
ततो व्यासो महातेजाः पुरायं भागीरथीजलम्
ग्रवगाह्याजुहावाथ सार्वाल्लौँकान्महामुनिः ४
पाराडवानां च ये योधाः कौरवाणां च सर्वशः
राजानश्च महाभागा नानादेशनिवासिनः ५
ततः सुतुमुलः शब्दो जलान्तर्जनमेजय
प्रादुरासीद्यथा पूर्वं कुरुपाराडवसेनयोः ६
ततस्ते पार्थिवाः सर्वे भीष्मद्रोणपुरोगमाः
ससैन्याः सलिलात्तस्मात्समुत्तस्थुः सहस्रशः ७
विराटद्रुपदौ चोभौ सपुत्रौ सहसैनिकौ
द्रौपदेयाश्च सौभद्रौ राक्षसश्च घटोत्कचः ८
कर्णदुर्योधनौ चोभौ शकुनिश्च महारथः
दुःशासनादयश्चैव धार्तराष्ट्रा महारथाः ९
जारासंधिर्भगदत्तो जलसंधश्च पार्थिवः
भूरिश्रवाः शलः शल्यो वृषसेनश्च सानुजः १०
लक्ष्मणो राजपुत्रश्च धृष्टद्युम्नस्य चात्मजाः
शिखरिडपुत्राः सर्वे च धृष्टकेतुश्च सानुजः ११
ग्रचलो वृषकश्चैव राक्षसश्चाप्यलायुधः
बाह्लीकः सोमदत्तश्च चेकितानश्च पार्थिवः १२
एते चान्ये च बहवो बहुत्वाद्ये न कीर्तिताः
सर्वे भासुरदेहास्ते समुत्तस्थुर्जलात्ततः १३
यस्य वीरस्य यो वेषो यो ध्वजो यच्च वाहनम्
तेन तेन व्यदृश्यन्त समुपेता नराधिपाः १४
दिव्याम्बरधराः सर्वे सर्वे भ्राजिष्णुकुराडलाः
निर्वैरा निरहङ्कारा विगतक्रोधमन्यवः १५

गन्धर्वैरुपगीयन्तः स्तूयमानाश्च बन्दिभिः
दिव्यमाल्याम्बरधरा वृताश्चाप्सरसां गणैः १६
धृतराष्ट्रस्य च तदा दिव्यं चक्षुर्नराधिप
मुनिः सत्यवतीपुत्रः प्रीतः प्रादात्तपोबलात् १७
दिव्यज्ञानबलोपेता गान्धारी च यशस्विनी
ददर्श पुत्रांस्तान्सर्वान्ये चान्येऽपि रणे हताः १८
तदद्भुतमचिन्त्यं च सुमहद्रोमहर्षणम्
विस्मितः स जनः सर्वो ददर्शानिमिषेक्षणः १९
तदुत्सवमहोदग्रं हृष्टनारीनराकुलम्
ददृशे बलमायान्तं चित्रं पटगतं यथा २०
धृतराष्ट्रस्तु तान्सर्वान्पश्यन्दिव्येन चक्षुषा
मुमुदे भरतश्रेष्ठ प्रसादात्तस्य वै मुनेः २१
इति श्रीमहाभारते आश्रमवासपर्वणि चत्वारिंशोऽध्यायः ४०

## एक चत्वारिंशोऽध्यायः

वैशम्पायन उवाच
ततस्ते भरतश्रेष्ठा समाजग्मुः परस्परम्
विगतक्रोधमात्सर्याः सर्वे विगतकल्मषाः १
विधिं परममास्थाय ब्रह्मर्षिविहितं शुभम्
संप्रीतमनसः सर्वे देवलोक इवामराः २
पुत्रः पित्रा च मात्रा च भार्या च पतिना सह
भ्राता भ्रात्रा सखा चैव सख्या राजन्समागताः ३
पाण्डवास्तु महेष्वासं कर्णं सौभद्रमेव च
संप्रहर्षात्समाजग्मुर्द्रौपदेयांश्च सर्वशः ४
ततस्ते प्रीयमाणा वै कर्णेन सह पाण्डवाः
समेत्य पृथिवीपालाः सौहृदेऽवस्थिताभवन् ५
ऋषिप्रसादात्तेऽन्ये च क्षत्रिया नष्टमन्यवः
असौहृदं परित्यज्य सौहृदे पर्यवस्थिताः ६
एवं समागताः सर्वे गुरुभिर्बान्धवैस्तथा
पुत्रैश्च पुरुषव्याघ्राः कुरवोऽन्ये च मानवाः ७

तां रात्रिमेकां कृत्स्नां ते विहृत्य प्रीतमानसाः
मेनिरे परितोषेण नृपाः स्वर्गसदो यथा ८
नात्र शोको भयं त्रासो नारतिर्नायशोऽभवत्
परस्परं समागम्य योधानां भरतर्षभ ९
समागतास्ताः पितृभिर्भ्रातृभिः पतिभिः सुतैः
मुदं परमिकां प्राप्य नार्यो दुःखमथात्यजन् १०
एकां रात्रिं विहृत्यैवं ते वीरास्ताश्च योषितः
आमन्त्र्यान्योन्यमाश्लिष्य ततो जग्मुर्यथागतम् ११
ततो विसर्जयामास लोकांस्तान्मुनिपुंगवः
क्षणेनान्तर्हिताश्चैव प्रेक्षतामेव तेऽभवन् १२
अवगाह्य महात्मानः पुण्यां त्रिपथगां नदीम्
सरथाः सध्वजाश्चैव स्वानि स्थानानि  भेजिरे १३
देवलोकं ययुः केचित्केचिद्ब्रह्मसदस्तथा
केचिच्च वारुणं लोकं केचित्कौबेरमाप्नुवन् १४
तथा वैवस्वतं लोकं केचिच्चैवाप्नुवन्नृपाः
राक्षसानां पिशाचानां केचिच्चाप्युत्तरान्कुरून् १५
विचित्रगतयः सर्वे या अवाप्यामरैः सह
आजग्मुस्ते महात्मानः सवाहाः सपदानुगाः १६
गतेषु तेषु सर्वेषु सलिलस्थो महामुनिः
धर्मशीलो महातेजाः कुरूणां हितकृत्सदा
ततः प्रोवाच ताः सर्वाः क्षत्रिया निहतेश्वराः १७
या याः पतिकृताँल्लोकानिच्छन्ति परमस्त्रियः
ता जाह्नवीजलं क्षिप्रमवगाहन्त्वतन्द्रिताः १८
ततस्तस्य वचः श्रुत्वा श्रद्दधाना वराङ्गनाः
श्वशुरं समनुज्ञाप्य विविशुर्जाह्नवीजलम् १९
विमुक्ता मानुषैर्देहैस्ततस्ता भर्तृभिः सह
समाजग्मुस्तदा साध्व्यः सर्वा एव विशां पते  २०
एवं क्रमेण सर्वास्ताः शीलवत्यः कुलस्त्रियः
प्रविश्य तोयं निर्मुक्ता जग्मुर्भर्तृसलोकताम् २१
दिव्यरूपसमायुक्ता दिव्याभरणभूषिताः

दिव्यमाल्याम्बरधरा यथासां पतयस्तथा २२
ताः शीलसत्त्वसंपन्ना वितमस्का गतक्लमाः
सर्वाः सर्वगुणैर्युक्ताः स्वं स्वं स्थानं प्रपेदिरे २३
यस्य यस्य च यः कामस्तस्मिन्कालेऽभवत्तदा
तं तं विसृष्टवान्व्यासो वरदो धर्मवत्सलः २४
तच्छ्रुत्वा नरदेवानां पुनरागमनं नराः
जहृषुर्मुदिताश्चासन्नन्यदेहगता अपि २५
प्रियैः समागमं तेषां य इमं शृणुयान्नरः
प्रियाणि लभते नित्यमिह च प्रेत्य चैव ह २६
इष्टबान्धव संयोगमनायासमनामयम्
य इमं श्रावयेद्विद्वान्संसिद्धिं प्राप्नुयात्पराम् २७
स्वाध्याययुक्ताः पुरुषाः क्रियायुक्ताश्च भारत
अध्यात्मयोगयुक्ताश्च धृतिमन्तश्च मानवाः
श्रुत्वा पर्व त्विदं नित्यमवाप्स्यन्ति परां गतिम् २८
इति श्रीमहाभारते आश्रमवासपर्वणि एकचत्वारिंशोऽध्यायः ४१

## द्विचत्वारिंशोऽध्यायः

सूत उवाच
एतच्छ्रुत्वा नृपो विद्वान्हृष्टोऽभूज्जनमेजयः
पितामहानां सर्वेषां गमनागमनं तदा १
अब्रवीच्च मुदा युक्तः पुनरागमनं प्रति
कथं नु त्यक्तदेहानां पुनस्तद्रूपदर्शनम् २
इत्युक्तः स द्विजश्रेष्ठो व्यासशिष्यः प्रतापवान्
प्रोवाच वदतां श्रेष्ठस्तं नृपं जनमेजयम् ३
अविप्रणाशः सर्वेषां कर्मणामिति निश्चयः
कर्मजानि शरीराणि तथैवाकृतयो नृप ४
महाभूतानि नित्यानि भूताधिपतिसंश्रयात्
तेषां च नित्यसंवासो न विनाशो वियुज्यताम् ५
अनाशाय कृतं कर्म तस्य चेष्टः फलागमः
आत्मा चैभिः समायुक्तः सुखदुःखमुपाश्नुते ६

अविनाशी तथा नित्यं क्षेत्रज्ञ इति निश्चयः
भूतानामात्मभावो यो ध्रुवोऽसौ संविजानताम् ७
यावन्न क्षीयते कर्म तावदस्य स्वरूपता
संक्षीणकर्मा पुरुषो रूपान्यत्वं नियच्छति ८
नानाभावास्तथैकत्वं शरीरं प्राप्य संहताः
भवन्ति ते तथा नित्याः पृथग्भावं विजानताम् ९
अश्वमेधे श्रुतिश्चेयमश्वसंज्ञपनं प्रति
लोकान्तरगता नित्यं प्राणा नित्या हि वाजिनः १०
अहं हितं वदाम्येतत्प्रियं चेत्तव पार्थिव
देवयाना हि पन्थानः श्रुतास्ते यज्ञसंस्तरे ११
सुकृतो यत्र ते यज्ञतत्र देवा हितास्तव
यदा समन्विता देवाः पशूनां गमनेश्वराः
गतिमन्तश्च तेनेष्ट्वा नान्ये नित्या भवन्ति ते १२
नित्येऽस्मिन्पञ्चके वर्गे नित्ये चात्मनि यो नरः
अस्य नानासमायोगं यः पश्यति वृथामतिः
वियोगे शोचतेऽत्यर्थं स बाल इति मे मतिः १३
वियोगे दोषदर्शी यः संयोगमिह वर्जयेत्
असंगे संगमो नास्ति दुःखं भुवि वियोगजम् १४
परापरज्ञस्तु नरो नाभिमानादुदीरितः
अपरज्ञः परां बुद्धिं स्पृष्ट्वा मोहाद्विमुच्यते १५
अदर्शनादापतितः पुनश्चादर्शनं गतः
नाहं तं वेद्मि नासौ मां न च मेऽस्ति विरागता १६
येन येन शरीरेण करोत्ययमनीश्वरः
तेन तेन शरीरेण तदवश्यमुपाश्नुते
मानसं मनसाप्नोति शारीरं च शरीरवान् १७
इति श्रीमहाभारते आश्रमवासपर्वणि द्विचत्वारिंशोऽध्यायः ४२

## त्रिचत्वारिंशोऽध्यायः

वैशम्पायन उवाच
अदृष्ट्वा तु नृपः पुत्रान्दर्शनं प्रतिलब्धवान्

ऋषिप्रसादात्पुत्राणां स्वरूपाणां कुरूद्वह १
स राजा राजधर्मांश्च ब्रह्मोपनिषदं तथा
अवाप्तवान्नरश्रेष्ठो बुद्धिनिश्चयमेव च २
विदुरश्च महाप्राज्ञो ययौ सिद्धिं तपोबलात्
धृतराष्ट्रः समासाद्य व्यासं चापि तपस्विनम् ३
जनमेजय उवाच
ममापि वरदो व्यासो दर्शयेत्पितरं यदि
तद्रूपवेषवयसं श्रद्दध्यां सर्वमेव ते ४
प्रियं मे स्यात्कृतार्थश्च स्यामहं कृतनिश्चयः
प्रसादादृषिपुत्रस्य मम कामः समृध्यताम् ५
सूत उवाच
इत्युक्तवचने तस्मिन्नृपे व्यासः प्रतापवान्
प्रसादमकरोद्धीमानानयच्च परीक्षितम् ६
ततस्तद्रूपवयसमागतं नृपतिं दिवः
श्रीमन्तं पितरं राजा ददर्श जनमेजयः ७
शमीकं च महात्मानं पुत्रं तं चास्य शृङ्गिणम्
अमात्या ये बभूवुश्च राज्ञस्तांश्च ददर्श ह ८
ततः सोऽवभृथे राजा मुदितो जनमेजयः
पितरं स्नापयामास स्वयं सस्नौ च पार्थिवः ९
स्नात्वा च भरतश्रेष्ठः सोऽस्तीकमिदमब्रवीत्
यायावरकुलोत्पन्नं जरत्कारुसुतं तदा १०
आस्तीक विविधाश्चर्यो यज्ञोऽयमिति मे मतिः
यदद्यायं पिता प्राप्तो मम शोकप्रणाशनः ११
आस्तीक उवाच
ऋषिर्द्वैपायनो यत्र पुराणस्तपसो निधिः
यज्ञे कुरुकुलश्रेष्ठ तस्य लोकावुभौ जितौ १२
श्रुतं विचित्रमाख्यानं त्वया पाण्डवनन्दन
सर्पाश्च भस्मसान्नीता गताश्च पदवीं पितुः १३
कथंचित्तक्षको मुक्तः सत्यत्वात्तव पार्थिव
ऋषयः पूजिताः सर्वे गतिं दृष्टा महात्मनः १४

प्राप्तः सुविपुलो धर्मः श्रुत्वा पापविनाशनम्
विमुक्तो हृदयग्रन्थिरुदारजनदर्शनात् १५
ये च पक्षधरा धर्मे सद्वृत्तरुचयश्च ये
यान्दृष्ट्वा हीयते पापं तेभ्यः कार्या नमस्क्रियाः १६
सूत उवाच
एतच्छ्रुत्वा द्विजश्रेष्ठात्स राजा जनमेजयः
पूजयामास तमृषिमनुमान्य पुनः पुनः १७
पप्रच्छ तमृषिं चापि वैशम्पायनमच्युतम्
कथावशेषं धर्मज्ञो वनवासस्य सत्तम १८
इति श्रीमहाभारते आश्रमवासपर्वणि त्रिचत्वारिंशोऽध्यायः ४३

## चतुश्चत्वारिंशोऽध्यायः

जनमेजय उवाच
दृष्ट्वा पुत्रांस्तथा पौत्रान्सानुबन्धाञ्जनाधिपः
धृतराष्ट्रः किमकरोद्राजा चैव युधिष्ठिरः १
वैशम्पायन उवाच
तद्दृष्ट्वा महदाश्चर्यं पुत्राणां दर्शनं पुनः
वीतशोकः स राजर्षिः पुनराश्रममागमत् २
इतरस्तु जनः सर्वस्ते चैव परमर्षयः
प्रतिजग्मुर्यथाकामं धृतराष्ट्राभ्यनुज्ञया ३
पाण्डवास्तु महात्मानो लघुभूयिष्ठसैनिकाः
अनुजग्मुर्महात्मानं सदारं तं महीपतिम् ४
तमाश्रमगतं धीमान्ब्रह्मर्षिर्लोकपूजितः
मुनिः सत्यवतीपुत्रो धृतराष्ट्रमभाषत ५
धृतराष्ट्र महाबाहो शृणु कौरवनन्दन
श्रुतं ते ज्ञानवृद्धानामृषीणां पुण्यकर्मणाम् ६
ऋद्धाभिजनवृद्धानां वेदवेदाङ्गवेदिनाम्
धर्मज्ञानां पुराणानां वदतां विविधाः कथाः ७
मा स्म शोके मनः कार्षीर्दिष्टेन व्यथते बुधः
श्रुतं देवरहस्यं ते नारदाद्देवदर्शनात् ८

गतास्ते क्षत्रधर्मेण शस्त्रपूतां गतिं शुभाम्
यथा दृष्टास्त्वया पुत्रा यथाकामविहारिणः ९
युधिष्ठिरस्त्वयं धीमान्भवन्तमनुरुध्यते
सहितो भ्रातृभिः सर्वैः सदारः ससुहृज्जनः १०
विसर्जयैनं यात्वेष स्वराज्यमनुशासताम्
मासः समधिको ह्येषामतीतो वसतां वने ११
एतद्धि नित्यं यत्नेन पदं रक्ष्यं परंतप
बहुप्रत्यर्थिकं ह्येतद्राज्यं नाम नराधिप १२
इत्युक्तः कौरवो राजा व्यासेनामितबुद्धिना
युधिष्ठिरमथाहूय वाग्मी वचनमब्रवीत् १३
अजातशत्रो भद्रं ते शृणु मे भ्रातृभिः सह
त्वत्प्रसादान्महीपाल शोको नास्मान्प्रबाधते १४
रमे चाहं त्वया पुत्र पुरेव गजसाह्वये
नाथेनानुगतो विद्वन्प्रियेषु परिवर्तिना १५
प्राप्तं पुत्रफलं त्वत्तः प्रीतिर्मे विपुला त्वयि
न मे मन्युर्महाबाहो गम्यतां पुत्र मा चिरम् १६
भवन्तं चेह संप्रेक्ष्य तपो मे परिहीयते
तपोयुक्तं शरीरं च त्वां दृष्ट्वा धारितं पुनः १७
मातरौ ते तथैवेमे शीर्णपर्णकृताशने
मम तुल्यव्रते पुत्र नचिरं वर्तयिष्यतः १८
दुर्योधनप्रभृतयो दृष्टा लोकान्तरं गताः
व्यासस्य तपसो वीर्याद्भवतश्च समागमात् १९
प्रयोजनं चिरं वृत्तं जीवितस्य च मेऽनघ
उग्रं तपः समास्थास्ये त्वमनुज्ञातुमर्हसि २०
त्वय्यद्य पिण्डः कीर्तिश्च कुलं चेदं प्रतिष्ठितम्
श्वो वाद्य वा महाबाहो गम्यतां पुत्र मा चिरम् २१
राजनीतिः सुबहुशः श्रुता ते भरतर्षभ
संदेष्टव्यं न पश्यामि कृतमेतावता विभो २२
इत्युक्तवचनं तात नृपो राजानमब्रवीत्
न मामर्हसि धर्मज्ञ परित्यक्तुमनागसम् २३

कामं गच्छन्तु मे सर्वे भ्रातरोऽनुचरास्तथा
भवन्तमहमन्विष्ये मातरौ च यतव्रते २४
तमुवाचाथ गान्धारी मैवं पुत्र शृणुष्व मे
त्वय्यधीनं कुरुकुलं पिण्डश्च श्वशुरस्य मे २५
गम्यतां पुत्र पर्याप्तमेतावत्पूजिता वयम्
राजा यदाह तत्कार्यं त्वया पुत्र पितुर्वचः २६
इत्युक्तः स तु गान्धार्या कुन्तीमिदमुवाच ह
स्नेहबाष्पाकुले नेत्रे प्रमृज्य रुदतीं वचः २७
विसर्जयति मां राजा गान्धारी च यशस्विनी
भवत्यां बद्धचित्तस्तु कथं यास्यामि दुःखितः २८
न चोत्सहे तपोविघ्नं कर्तुं ते धर्मचारिणी
तपसो हि परं नास्ति तपसा विन्दते महत् २९
ममापि न तथा राज्ञि राज्ये बुद्धिर्यथा पुरा
तपस्येवानुरक्तं मे मनः सर्वात्मना तथा ३०
शून्येयं च मही सर्वा न मे प्रीतिकरी शुभे
बान्धवा नः परिक्षीणा बलं नो न यथा पुरा ३१
पाञ्चालाः सुभृशं क्षीणाः कन्यामात्रावशेषिताः
न तेषां कुलकर्तारं कंचित्पश्याम्यहं शुभे ३२
सर्वे हि भस्मसान्नीता द्रोणेनैकेन संयुगे
अवशेषास्तु निहता द्रोणपुत्रेण वै निशि ३३
चेदयश्चैव मत्स्याश्च दृष्टपूर्वास्तथैव नः
केवलं वृष्णिचक्रं तु वासुदेवपरिग्रहात्
यं दृष्ट्वा स्थातुमिच्छामि धर्मार्थं नान्यहेतुकम् ३४
शिवेन पश्य नः सर्वान्दुर्लभं दर्शनं तव
भविष्यत्यम्ब राजा हि तीव्रमारप्स्यते तपः ३५
एतच्छ्रुत्वा महाबाहुः सहदेवो युधां पतिः
युधिष्ठिरमुवाचेदं बाष्पव्याकुललोचनः ३६
नोत्सहेऽहं परित्यक्तुं मातरं पार्थिवर्षभ
प्रतियातु भवान्क्षिप्रं तपस्तप्स्याम्यहं वने ३७
इहैव शोषयिष्यामि तपसाहं कलेवरम्

पादशुश्रूषणे युक्तो राज्ञो मात्रोस्तथानयोः ३८
तमुवाच ततः कुन्ती परिष्वज्य महाभुजम्
गम्यतां पुत्र मैव त्वं वोचः कुरु वचो मम ३९
आगमा वः शिवाः सन्तु स्वस्था भवत पुत्रकाः
उपरोधो भवेदेवमस्माकं तपसः कृते ४०
त्वत्स्नेहपाशबद्धा च हीयेयं तपसः परात्
तस्मात्पुत्रक गच्छ त्वं शिष्टमल्पं हि नः प्रभो ४१
एवं संस्तम्भितं वाक्यैः कुन्त्या बहुविधैर्मनः
सहदेवस्य राजेन्द्र राज्ञाश्चैव विशेषतः ४२
ते मात्रा समनुज्ञाता राज्ञा च कुरुपुङ्गवाः
अभिवाद्य कुरुश्रेष्ठमामन्त्रयितुमारभन् ४३
राजन्प्रतिगमिष्यामः शिवेन प्रतिनन्दिताः
अनुज्ञातास्त्वया राजन्गमिष्यामो विकल्मषाः ४४
एवमुक्तः स राजर्षिर्धर्मराज्ञा महात्मना
अनुजज्ञे जयाशीर्भिरभिनन्द्य युधिष्ठिरम् ४५
भीमं च बलिनां श्रेष्ठं सान्त्वयामास पार्थिवः
स चास्य सम्यङ्मेधावी प्रत्यपद्यत वीर्यवान् ४६
अर्जुनं च समाश्लिष्य यमौ च पुरुषर्षभौ
अनुजज्ञे स कौरव्यः परिष्वज्याभिनन्द्य च ४७
गान्धार्या चाभ्यनुज्ञाताः कृतपादाभिवन्दनाः
जनन्या समुपाघ्राताः परिष्वक्ताश्च ते नृपम्
चक्रुः प्रदक्षिणं सर्वे वत्सा इव निवारणे ४८
पुनः पुनर्निरीक्षन्तः प्रजग्मुस्ते प्रदक्षिणम्
तथैव द्रौपदी साध्वी सर्वाः कौरवयोषितः ४९
न्यायतः श्वशुरे वृत्तिं प्रयुज्य प्रययुस्ततः
श्वश्रूभ्यां समनुज्ञाताः परिष्वज्याभिनन्दिताः
संदिष्टाश्चेतिकर्तव्यं प्रययुर्भर्तृभिः सह ५०
ततः प्रजज्ञे निनदः सूतानां युज्यतामिति
उष्ट्राणां क्रोशतां चैव हयानां हेषतामपि ५१
ततो युधिष्ठिरो राजा सदारः सहसैनिकः

नगरं हास्तिनपुरं पुनरायात्सबान्धवः ५२
इति श्रीमहाभारते आश्रमवासिकपर्वणि चतुश्चत्वारिंशोऽध्यायः ४४
समाप्तं पुत्रदर्शनपर्व

पञ्चचत्वारिंशोऽध्यायः

वैशम्पायन उवाच
द्विवर्षोपनिवृत्तेषु पाण्डवेषु यदृच्छया
देवर्षिर्नारदो राजन्नाजगाम युधिष्ठिरम् १
तमभ्यर्च्य महाबाहुः कुरुराजो युधिष्ठिरः
आसीनं परिविश्वस्तं प्रोवाच वदतां वरः २
चिरस्य खलु पश्यामि भगवन्तमुपस्थितम्
कच्चित्ते कुशलं विप्र शुभं वा प्रत्युपस्थितम् ३
के देशाः परिदृष्टास्ते किं च कार्यं करोमि ते
तद्ब्रूहि द्विजमुख्य त्वमस्माकं च प्रियोऽतिथिः ४
नारद उवाच
चिरदृष्टोऽसि मे राजन्नागतोऽस्मि तपोवनात्
परिदृष्टानि तीर्थानि गङ्गा चैव मया नृप ५
युधिष्ठिर उवाच
वदन्ति पुरुषा मेऽद्य गङ्गातीरनिवासिनः
धृतराष्ट्रं महात्मानमास्थितं परमं तपः ६
अपि दृष्टस्त्वया तत्र कुशली स कुरूद्वहः
गान्धारी च पृथा चैव सूतपुत्रश्च संजयः ७
कथं च वर्तते चाद्य पिता मम स पार्थिवः
श्रोतुमिच्छामि भगवन्यदि दृष्टस्त्वया नृपः ८
नारद उवाच
स्थिरीभूय महाराज शृणु सर्वं यथातथम्
यथा श्रुतं च दृष्टं च मया तस्मिंस्तपोवने ९
वनवासनिवृत्तेषु भवत्सु कुरुनन्दन
कुरुक्षेत्रात्पिता तुभ्यं गङ्गाद्वारं ययौ नृपः १०
गान्धार्या सहितो धीमान्वध्वा कुन्त्या समन्वितः

संजयेन च सूतेन साग्निहोत्रः सयाजकः ११
आतस्थे स तपस्तीव्रं पिता तव तपोधनः
वीटां मुखे समाधाय वायुभक्षोऽभवन्मुनिः १२
वने स मुनिभिः सर्वैः पूज्यमानो महातपाः
त्वगस्थिमात्रशेषः स षण्मासानभवन्नृपः १३
गान्धारी तु जलाहारा कुन्ती मासोपवासिनी
संजयः षष्ठभक्तेन वर्तयामास भारत १४
अग्नींस्तु याजकास्तत्र जुहुवुर्विधिवत्प्रभो
दृश्यतोऽदृश्यतश्चैव वने तस्मिन्नृपस्य ह १५
अनिकेतोऽथ राजा स बभूव वनगोचरः
ते चापि सहिते देव्यौ संजयश्च तमन्वयुः १६
संजयो नृपतेर्नेता समेषु विषमेषु च
गान्धार्यास्तु पृथा राजंश्चक्षुरासीदनिन्दिता १७
ततः कदाचिद्गङ्गायाः कच्छे स नृपसत्तमः
गङ्गायामाप्लुतो धीमानाश्रमाभिमुखोऽभवत् १८
अथ वायुं समुद्भूतो दावाग्निरभवन्महान्
ददाह तद्वनं सर्वं परिगृह्य समन्ततः १९
दह्यत्सु मृगयूथेषु द्विजिह्वेषु समन्ततः
वराहाणां च यूथेषु संश्रयत्सु जलाशयान् २०
समाविद्धे वने तस्मिन्प्राप्ते व्यसन उत्तमे
निराहारतया राजा मन्दप्राणविचेष्टितः
असमर्थोऽप सरणे सुकृशौ मातरौ च ते २१
ततः स नृपतिर्दृष्ट्वा वह्निमायान्तमन्तिकात्
इदमाह ततः सूतं संजयं पृथिवीपते २२
गच्छ संजय यत्राग्निर्न त्वां दहति कर्हिचित्
वयमत्राग्निना युक्ता गमिष्यामः परां गतिम् २३
तमुवाच किलोद्विग्नः संजयो वदतां वरः
राजन्मृत्युरनिष्टोऽय भविता ते वृथाग्निना २४
न चोपायं प्रपश्यामि मोक्षणे जातवेदसः
यदत्रानन्तरं कार्यं तद्भवान्वक्तुमर्हति २५

इत्युक्तः संजयेनेदं पुनराह स पार्थिवः
नैष मृत्युरनिष्टो नो निःसृतानां गृहात्स्वयम् २६
जलमग्निस्तथा वायुरथ वापि विकर्शनम्
तापसानां प्रशस्यन्ते गच्छ संजय माचिरम् २७
इत्युक्त्वा संजयं राजा समाधाय मनस्तदा
प्राङ्मुखः सह गान्धार्या कुन्त्या चोपाविशत्तदा २८
संजयस्तं तथा दृष्ट्वा प्रदक्षिणमथाकरोत्
उवाच चैनं मेधावी युङ्क्ष्वात्मानमिति प्रभो २९
ऋषिपुत्रो मनीषी स राजा चक्रेऽस्य तद्वचः
संनिरुध्येन्द्रियग्राममासीत्काष्ठोपमस्तदा ३०
गान्धारी च महाभागा जननी च पृथा तव
दावाग्निना समायुक्ते स च राजा पिता तव ३१
संजयस्तु महामात्रस्तस्माद्दावादमुच्यत
गङ्गाकूले मया दृष्टस्तापसैःपरिवारितः ३२
स तानामन्त्र्य तेजस्वी निवेद्यैतच्च सर्वशः
प्रययौ संजयः सूतो हिमवन्तं महीधरम् ३३
एवं स निधनं प्राप्तः कुरुराजो महामनाः
गान्धारी च पृथा  चैव जनन्यौ ते नराधिप ३४
यदृच्छयानुव्रजता मया राज्ञः कलेवरम्
तयोश्च देव्योरुभयोर्दृष्टानि भरतर्षभ ३५
ततस्तपोवने तस्मिन्समाजग्मुस्तपोधनाः
श्रुत्वा राज्ञस्तथा निष्ठां न त्वशोचन्गतिं च ते ३६
तत्राश्रौषमहं सर्वमेतत्पुरुषसत्तम
यथा च नृपतिर्दग्धो देव्यौ ते चेति पाण्डव ३७
न शोचितव्यं राजेन्द्र स्वन्तः स पृथिवीपतिः
प्राप्तवानग्निसंयोगं गान्धारी जननी च ते ३८
वैशम्पायन उवाच
एतच्छ्रुत्वा तु सर्वेषां पाण्डवानां महात्मनाम्
निर्याणं धृतराष्ट्रस्य शोकः समभवन्महान् ३९
अन्तःपुराणां च तदा महानार्तस्वरोऽभवत्

पौराणां च महाराज श्रुत्वा राज्ञस्तदा गतिम् ४०
अहो धिगिति राजा तु विक्रुश्य भृशदुःखितः
ऊर्ध्वबाहुः स्मरन्मातुः प्ररुरोद युधिष्ठिरः
भीमसेनपुरोगाश्च भ्रातरः सर्व एव ते ४१
अन्तःपुरेषु च तदा सुमहान्रुदितस्वनः
प्रादुरासीन्महाराज पृथां श्रुत्वा तथागताम् ४२
तं च वृद्धं तथा दग्धं हतपुत्रं नराधिपम्
अन्वशोचन्त ते सर्वे गान्धारीं च तपस्विनीम् ४३
तस्मिन्नुपरते शब्दे मुहूर्तादिव भारत
निगृह्य बाष्पं धैर्येण धर्मराजोऽब्रवीदिदम् ४४
इति श्रीमहाभारते आश्रमवासपर्वणि पञ्चचत्वारिंशोऽध्यायः ४५

षट्चत्वारिंशोऽध्यायः

युधिष्ठिर उवाच
तथा महात्मनस्तस्य तपस्युग्रे च वर्ततः
अनाथस्येव निधनं तिष्ठत्स्वस्मासु बन्धुषु १
दुर्विज्ञेया हि गतयः पुरुषाणां मता मम
यत्र वैचित्रवीर्योऽसौ दग्ध एवं दवाग्निना २
यस्य पुत्रशतं श्रीमदभवद्बाहुशालिनः
नागायुतबलो राजा स दग्धो हि दवाग्निना ३
यं पुरा पर्यवीजन्त तालवृन्तैर्वरस्त्रियः
तं गृध्राः पर्यवीजन्त दावाग्निपरिकालितम् ४
सूत मागध संघैश्च शयानो यः प्रबोध्यते
धरण्यां सः नृपः शेते पापस्य मम कर्मभिः ५
न तु शोचामि गान्धारीं हतपुत्रां यशस्विनीम्
पतिलोकमनुप्राप्तां तथा भर्तृव्रते स्थिताम् ६
पृथामेव तु शोचामि या पुत्रैश्वर्यमृद्धिमत्
उत्सृज्य सुमहद्दीप्तं वनवासमरोचयत् ७
धिग्राज्यमिदमस्माकं धिग्बलं धिक्पराक्रमम्
क्षत्रधर्मं च धिग्यस्मान्मृता जीवामहे वयम् ८

सुसूक्ष्मा किल कालस्य गतिर्द्विजवरोत्तम
यत्समुत्सृज्य राज्यं सा वनवासमरोचयत् ९
युधिष्ठिरस्य जननी भीमस्य विजयस्य च
अनाथवत्कथं दग्धा इति मुह्यामि चिन्तयन् १०
वृथा संतोषितो वह्निः खाण्डवे सव्यसाचिना
उपकारमजानन्स कृतघ्न इति मे मतिः ११
यत्रादहत्स भगवान्मातरं सव्यसाचिनः
कृत्वा यो ब्राह्मणच्छद्म भिक्षार्थी समुपागतः
धिगग्निं धिक्च पार्थस्य विश्रुतां सत्यसंधताम् १२
इदं कष्टतरं चान्यद्भगवन्प्रतिभाति मे
वृथाग्निना समायोगो यदभूत्पृथिवीपतेः १३
तथा तपस्विनस्तस्य राजर्षेः कौरवस्य ह
कथमेवंविधो मृत्युः प्रशास्य पृथिवीमिमाम् १४
तिष्ठत्सु मन्त्रपूतेषु तस्याग्निषु महावने
वृथाग्निना समायुक्तो निष्ठां प्राप्तः पिता मम १५
मन्ये पृथा वेपमाना कृशा धमनिसंतता
हा तात धर्मराजेति समाक्रन्दन्महाभये १६
भीम पर्याप्नुहि भयादिति चैवाभिवाशती
समन्ततः परिक्षिप्ता माता मेऽभूद्दवाग्निना१७
सहदेवः प्रियस्तस्याः पुत्रेभ्योऽधिक एव तु
न चैनां मोक्षयामास वीरो माद्रवतीसुतः १८
तच्छ्रुत्वा रुरुदुः सर्वे समालिङ्ग्य परस्परम्
पाण्डवाः पञ्च दुःखार्ता भूतानीव युगक्षये १९
तेषां तु पुरुषेन्द्राणां रुदतां रुदितस्वनः
प्रासादाभोगसंरुद्धो अन्वरौत्सीत्स रोदसी २०

इति श्रीमहाभारते आश्रमवासिकपर्वणि षट्चत्वारिंशोऽध्यायः ४६

## सप्तचत्वारिंशोऽध्यायः

नारद उवाच
नासौ वृथाग्निना दग्धो यथा तत्र श्रुतं मया

वैचित्रवीर्यो नृपतिस्तत्ते वक्ष्यामि भारत १
वनं प्रविशता तेन वायुभक्षेण धीमता
अग्नयः कारयित्वेष्टिमुत्सृष्टा इति नः श्रुतम् २
याजकास्तु ततस्तस्य तानग्नीन्निर्जने वने
समुत्सृज्य यथाकामं जग्मुर्भरतसत्तम ३
स विवृद्धस्तदा वह्निर्वने तस्मिन्नभूत्किल
तेन तद्वनमादीप्तमिति मे तापसाब्रुवन् ४
स राजा जाह्नवीकच्छे यथा ते कथितं मया
तेनाग्निना समायुक्तः स्वेनैव भरतर्षभ ५
एवमावेदयामासुर्मुनयस्ते ममानघ
ये ते भागीरथीतीरे मया दृष्टा युधिष्ठिर ६
एवं स्वेनाग्निना राजा समायुक्तो महीपते
माशोचिथास्त्वं नृपतिं गतः स परमां गतिम् ७
गुरुशुश्रूषया चैव जननी तव पाण्डव
प्राप्ता सुमहतीं सिद्धिमिति मे नात्र संशयः ८
कर्तुमर्हसि कौरव्य तेषां त्वमुदकक्रियाम्
भ्रातृभिः सहितः सर्वैरेतदत्र विधीयताम् ९
वैशम्पायन उवाच
ततः स पृथिवीपालः पाण्डवानां धुरन्धरः
निर्ययौ सह सोदर्यैः सदारो भरतर्षभः १०
पौरजानपदाश्चैव राजभक्तिपुरस्कृताः
गङ्गां प्रजग्मुरभितो वाससैकेन संवृताः ११
ततोऽवगाह्य सलिले सर्वे ते कुरुपुङ्गवाः
युयुत्सुमग्रतः कृत्वा ददुस्तोयं महात्मने १२
गान्धार्याश्च पृथायाश्च विधिवन्नामगोत्रतः
शौचं निवर्तयन्तस्ते तत्रोषुर्नगराद्बहिः १३
प्रेषयामास स नरान्विधिज्ञानाप्तकारिणः
गङ्गाद्वारं कुरुश्रेष्ठो यत्र दग्धोऽभवन्नृपः १४
तत्रैव तेषां कुल्यानि गङ्गाद्वारेऽन्वशात्तदा
कर्तव्यानीति पुरुषान्दत्तदेयान्महीपतिः १५

द्वादशेऽहनि तेभ्यः स कृतशौचो नराधिपः
ददौ श्राद्धानि विधिवद्दक्षिणावन्ति पाण्डवः १६
धृतराष्ट्रं समुद्दिश्य ददौ स पृथिवीपतिः
सुवर्णं रजतं गाश्च शय्याश्च सुमहाधनाः १७
गान्धार्याश्चैव तेजस्वी पृथायाश्च पृथक् पृथक्
संकीर्त्य नामनी राजा ददौ दानमनुत्तमम् १८
यो यदिच्छति यावच्च तावत्स लभते द्विजः
शयनं भोजनं यानं मणिरत्नमथो धनम् १९
यानमाच्छादनं भोगान् दासीश्च परिचारिकाः
ददौ राजा समुद्दिश्य तयोर्मात्रोर्महीपतिः २०
ततः स पृथिवीपालो दत्त्वा श्राद्धान्यनेकशः
प्रविवेश पुनर्धीमान्नगरं वारणाह्वयम् २१
ते चापि राजवचनात्पुरुषा ये गताभवन्
संकल्प्य तेषां कुल्यानि पुनः प्रत्यागमंस्ततः २२
माल्यैर्गन्धैश्च विविधैः पूजयित्वा यथाविधि
कुल्यानि तेषां संयोज्य तदाचख्युर्महीपतेः २३
समाश्वास्य च राजानं धर्मात्मानं युधिष्ठिरम्
नारदोऽप्यगमद्राजन्परमर्षिर्यथेप्सितम् २४
एवं वर्षाण्यतीतानि धृतराष्ट्रस्य धीमतः
वनवासे तदा त्रीणि नगरे दश पञ्च च २५
हतपुत्रस्य संग्रामे दानानि ददतः सदा
ज्ञातिसंबन्धिमित्राणां भ्रातृणां स्वजनस्य च २६
युधिष्ठिरस्तु नृपतिर्नातिप्रीतमनास्तदा
धारयामास तद्राज्यं निहतज्ञातिबान्धवः २७
इति श्रीमहाभारते आश्रमवासपर्वणि सप्तचत्वारिंशोऽध्यायः ४७

नारदागमनपर्व समाप्तम्

आश्रमवासिकपर्व समाप्त

श्रीगणेशाय नमः
ॐ नारायणं नमस्कृत्य नरं चैव नरोत्तमम्
देवीं सरस्वतीं चैव ततो जयमुदीरयेत्

## अथ प्रथमोऽध्यायः

वैशम्पायन उवाच
षट्त्रिंशे त्वथ संप्राप्ते वर्षे कौरवनन्दनः
ददर्श विपरीतानि निमित्तानि युधिष्ठिरः १
ववुर्वाताः स निर्घाता रूक्षाः शर्करवर्षिणः
अपसव्यानि शकुना मण्डलानि प्रचक्रिरे २
प्रत्यगूहूर्महानद्यो दिशो नीहारसंवृताः
उल्काश्चाङ्गारवर्षिण्यः प्रपेतुर्गगनाद्भुवि ३
आदित्यो रजसा राजन्समवच्छन्नमण्डलः
विरश्मिरुदये नित्यं कबन्धैः समदृश्यत ४
परिवेषाश्च दृश्यन्ते दारुणाः चन्द्रसूर्ययोः
त्रिवर्णाः शामरूक्षान्तास्तथा भास्मारुणप्रभाः ५
एते चान्ये च बहव उत्पाता भयशंसिनः
दृश्यन्तेऽहरहो राजन्हृदयोद्वेगकारकाः ६
कस्यचित्त्वथ कालस्य कुरुराजो युधिष्ठिरः
शुश्राव वृष्णिचक्रस्य मौसले कदनं कृतम् ७
विमुक्तं वासुदेवं च श्रुत्वा रामं च पाण्डवः
समानीयाब्रवीद्भ्रातॄन्किं करिष्याम इत्युत ८
परस्परं समासाद्य ब्रह्मदण्डबलात्कृतान्
वृष्णीन्विष्टांस्ते श्रुत्वा व्यथिताः पाण्डवाभवन् ९
निधनं वासुदेवस्य समुद्रस्येव शोषणम्
वीरा न श्रद्दधुस्तस्य विनाशं शार्ङ्गधन्वनः १०
मौसलं ते परिश्रुत्य दुःखशोकसमन्विताः
विषण्णा हतसङ्कल्पाः पाण्डवाः समुपाविशन् ११

इति श्रीमहाभारते मौसलपर्वणि प्रथमोऽध्यायः १

द्वितीयोऽध्यायः

जनमेजय उवाच
कथं विनष्टा भगवन्नन्धका वृष्णिभिः सह
पश्यतो वासुदेवस्य भोजाश्चैव महारथाः १
वैशम्पायन उवाच
षट्त्रिंशेऽथ ततो वर्षे वृष्णीनामनयो महान्
अन्योन्यं मुसलैस्ते तु निजघ्नुः कालचोदिताः २
जनमेजय उवाच
केनानुशप्तास्ते वीराः क्षयं वृष्ण्यन्धका ययुः
भोजाश्च द्विजवर्य त्वं विस्तरेण वदस्व मे ३
वैशम्पायन उवाच
विश्वामित्रं च कण्वं च नारदं च तपोधनम्
सारणप्रमुखा वीरा ददृशुर्द्वारकागतान् ४
ते वै साम्बं पुरस्कृत्य भूषयित्वा स्त्रियं यथा
अब्रुवन्नुपसंगम्य दैवदण्डनिपीडिताः ५
इयं स्त्री पुत्रकामस्य बभ्रोरमिततेजसः
ऋषयः साधु जानीत किमियं जनयिष्यति ६
इत्युक्तास्ते तदा राजन्विप्रलम्भप्रधर्षिताः
प्रत्यब्रुवंस्तान्मुनयो यत्तच्छृणु नराधिप ७
वृष्ण्यन्धकविनाशाय मुसलं घोरमायसम्
वासुदेवस्य दायादः साम्बोऽय जनयिष्यति ८
येन यूयं सुदुर्वृत्ता नृशंसा जातमन्यवः
उच्छेत्तारः कुलं कृत्स्नमृते रामजनार्दनौ ९
सुमद्रं यास्यति श्रीमांस्त्यक्त्वा देहं हलायुधः
जरा कृष्णं महात्मानं शयानं भुवि भेत्स्यति १०
इत्यब्रुवन्त ते राजन्प्रलब्धास्तैर्दुरात्मभिः
मुनयः क्रोधरक्ताक्षाः समीक्ष्याथ परस्परम् ११
तथोक्त्वा मुनयस्ते तु ततः केशवमभ्ययुः १२
अथाब्रवीत्तदा वृष्णीञ्श्रुत्वैवं मधुसूदनः
अन्तज्ञो मतिमांस्तस्य भवितव्यं तथेति तान् १३

एवमुक्त्वा हृषीकेशः प्रविवेश पुनर्गृहान्
कृतान्तमन्यथा नैच्छत्कर्तुं स जगतः प्रभुः १४
श्वोभूतेऽथ ततः साम्बो मुसलं तदसूत वै
वृष्ण्यन्धकविनाशाय किङ्करप्रतिमं महत् १५
प्रसूतं शापजं घोरं तच्च राज्ञे न्यवेदयन्
विषण्णरूपस्तद्राजा सूक्ष्मं चूर्णमकारयत् १६
प्राक्षिपन्सागरे तच्च पुरुषा राजशासनात्
अघोषयंश्च नगरे वचनादाहुकस्य च १७
अद्य प्रभृति सर्वेषु वृष्ण्यन्धकगृहेष्विह
सुरासवो न कर्तव्यः सर्वैर्नगरवासिभिः १८
यश्च नोऽविदितं कुर्यात्पेयं कश्चिन्नरः क्वचित्
जीवन्स शूलमारोहेत्स्वयं कृत्वा सबान्धवः १९
ततो राजभयात्सर्वे नियमं चक्रिरे तदा
नराः शासनमाज्ञाय तस्य राज्ञो महात्मनः २०
इति श्रीमहाभारते मौसलपर्वणि द्वितीयोऽध्यायः २

## तृतीयोऽध्यायः

वैशम्पायन उवाच
एवं प्रयतमानानां वृष्णीनामन्धकैः सह
कालो गृहाणि सर्वेषां परिचक्राम नित्यशः १
करालो विकटो मुण्डः पुरुषः कृष्णपिङ्गलः
गृहाण्यवेक्ष्य वृष्णीनां नादृश्यत पुनः क्वचित् २
उत्पेदिरे महावाता दारुणाश्च दिने दिने
वृष्ण्यन्धकविनाशाय बहवो रोमहर्षणाः ३
विवृद्धमूषका रथ्या विभिन्नमणिकास्तथा
चीचीकूचीति वाश्यन्त्यः सारिका वृष्णिवेश्मसु
नोपशाम्यति शब्दश्च स दिवारात्रमेव हि ४
अनुकुर्वन्नुलूकानां सारसा विरुतं तथा
अजाः शिवानां च रुतमन्वकुर्वत भारत ५
पाण्डुरा रक्तपादाश्च विहगाः कालचोदिताः

वृष्ण्यन्धकानां गेहेषु कपोता व्यचरंस्तदा ६
व्यजायन्त खरा गोषु करभाश्वतरीषु च
शुनीष्वपि बिडालाश्च मूषका नकुलीषु च ७
नापत्रपन्त पापानि कुर्वन्तो वृष्णयस्तदा
प्राद्विषन्ब्राह्मणांश्चापि पितॄन्देवांस्तथैव च ८
गुरूंश्चाप्यवमन्यन्त न तु रामजनार्दनौ
पत्न्यः पतीन्व्युच्चरन्त पत्नीश्च पतयस्तथा ९
विभावसुः प्रज्वलितो वामं विपरिवर्तते
नीललोहितमाञ्जिष्ठा विसृजन्नर्चिषः पृथक् १०
उदयास्तमने नित्यं पुर्यां तस्यां दिवाकरः
व्यदृश्यतासकृत्पुंभिः कबन्धैः परिवारितः ११
महानसेषु सिद्धेऽन्ने संस्कृतेऽतीव भारत
आहार्यमाणे कृमयो व्यदृश्यन्त नराधिप १२
पुण्याहे वाच्यमाने तु जपत्सु च महात्मसु
अभिधावन्तः श्रूयन्ते न चादृश्यत कश्चन १३
परस्परं च नक्षत्रं हन्यमानं पुनः पुनः
ग्रहैरपश्यन्सर्वे ते नात्मनस्तु कथंचन १४
नदन्तं पाञ्चजन्यं च वृष्ण्यन्धकनिवेशने
समन्तात्प्रत्यवाश्यन्त रासभा दारुणस्वराः १५
एवं पश्यन्हृषीकेशः संप्राप्तं कालपर्ययम्
त्रयोदश्याममावास्यां तान्दृष्ट्वा प्राब्रवीदिदम् १६
चतुर्दशी पञ्चदशी कृतेयं राहुणा पुनः
तदा च भारते युद्धे प्राप्ता चाद्य क्षयाय नः १७
विमृशन्नेव कालं तं परिचिन्त्य जनार्दनः
मेने प्राप्तं स षट्त्रिंशं वर्षं वै केशिसूदनः १८
पुत्रशोकाभिसंतप्ता गान्धारी हतबान्धवा
यदनुव्याजहारार्ता तदिदं समुपागतम् १९
इदं च तदनुप्राप्तमब्रवीद्यद्युधिष्ठिरः
पुरा व्यूढेष्वनीकेषु दृष्ट्वोत्पातान्सुदारुणान् २०
इत्युक्त्वा वासुदेवस्तु चिकीर्षन्सत्यमेव तत्

आज्ञापयामास तदा तीर्थयात्रामरिंदम २१
अघोषयन्त पुरुषास्तत्र केशवशासनात्
तीर्थयात्रा समुद्रे वः कार्येति पुरुषर्षभाः २२
इति श्रीमहाभारते मौसलपर्वणि तृतीयोऽध्यायः ३

चतुर्थोऽध्यायः

वैशम्पायन उवाच
काली स्त्री पाण्डुरैर्दन्तैः प्रविश्य हसती निशि
स्त्रियः स्वप्नेषु मुष्णन्ती द्वारकां परिधावति १
अलंकाराश्च छत्रं च ध्वजाश्च कवचानि च
ह्रियमाणान्यदृश्यन्त रक्षोभिः सुभयानकैः २
तच्चाग्निदत्तं कृष्णस्य वज्रनाभमयस्मयम्
दिवमाचक्रमे चक्रं वृष्णीनां पश्यतां तदा ३
युक्तं रथं दिव्यमादित्यवर्णं हयाहरन्पश्यतो दारुकस्य
ते सागरस्योपरिष्टादवर्तन्मनोजवाश्चतुरो वाजिमुख्याः ४
तालः सुपर्णश्च महाध्वजौ तौ सुपूजितौ रामजनार्दनाभ्याम्
उच्चैर्जह्रुरप्सरसो दिवानिशं वाचश्चोचुर्गम्यतां तीर्थयात्रा ५
ततो जिगमिषन्तस्ते वृष्ण्यन्धकमहारथाः
सान्तःपुरास्तदा तीर्थयात्रामैच्छन्नरर्षभाः ६
ततो भोज्यं च भक्ष्यं च पेयं चान्धकवृष्णयः
बहु नानाविधं चक्रुर्मद्यं मांसमनेकशः ७
ततः सीधुषु सक्ताश्च निर्ययुर्नगराद्बहिः
यानैरश्वैर्गजैश्चैव श्रीमन्तस्तिग्मतेजसः ८
ततः प्रभासे न्यवसन्यथोद्देशं यथागृहम्
प्रभूतभक्ष्यपेयास्ते सदारा यादवास्तदा ९
निविष्टांस्तान्निशम्याथ समुद्रान्ते स योगवित्
जगामामन्त्र्य तान्वीरानुद्धवोऽथविशारदः १०
तं प्रस्थितं महात्मानमभिवाद्य कृताञ्जलिम्
जानन्विनाशं वृष्णीनां नैच्छद्वारयितुं हरिः ११
ततः कालपरीतास्ते वृष्ण्यन्धकमहारथाः

अपश्यन्नुद्धवं यान्तं तेजसावृत्य रोदसी १२
ब्राह्मणार्थेषु यत्सिद्धमन्नं तेषां महात्मनाम्
तद्वानरेभ्यः प्रददुः सुरागन्धसमन्वितम् १३
ततस्तूर्यशताकीर्णं नटनर्तकसंकुलम्
प्रावर्तत महापानं प्रभासे तिग्मतेजसाम् १४
कृष्णस्य संनिधौ रामः सहितः कृतवर्मणा
अपिबद्युयुधानश्च गदो बभ्रुस्तथैव च १५
ततः परिषदो मध्ये युयुधानो मदोत्कटः
अब्रवीत्कृतमर्माणमवहस्यावमन्य च १६
कः क्षत्रियो मन्यमानः सुप्तान्हन्यान्मृतानिव
न तन्मृष्यन्ति हार्दिक्य यादवा यत्त्वया कृतम् १७
इत्युक्ते युयुधानेन पूजयामास तद्वचः
प्रद्युम्नो रथिनां श्रेष्ठो हार्दिक्यमवमन्य च १८
ततः परमसंक्रुद्धः कृतवर्मा तमब्रवीत्
निर्दिशन्निव सावज्ञं तदा सव्येन पाणिना १९
भूरिश्रवाश्छिन्नबाहुर्युद्धे प्रायगतस्त्वया
वधेन सुनृशंसेन कथं वीरेण पातितः २०
इति तस्य वचः श्रुत्वा केशवः परवीरहा
तिर्यक्सरोषया दृष्ट्या वीक्षांचक्रे स मन्युमान् २१
मणिः स्यमन्तकश्चैव यः स सत्राजितोऽभवत्
तां कथां स्मारयामास सात्यकिर्मधुसूदनम् २२
तच्छ्रुत्वा केशवस्याङ्कमगमद्रुदती तदा
सत्यभामा प्रकुपिता कोपयन्ती जनार्दनम् २३
तत उत्थाय सक्रोधः सात्यकिर्वाक्यमब्रवीत्
पञ्चानां द्रौपदेयानां धृष्टद्युम्नशिखण्डिनोः २४
एष गच्छामि पदवीं सत्येन च तथा शपे
सौप्तिके ये च निहताः सुप्तानेन दुरात्मना २५
द्रोणपुत्रसहायेन पापेन कृतवर्मणा
समाप्तमायुरस्याद्य यशश्चापि सुमध्यमे २६
इतीदमुक्त्वा खड्गेन केशवस्य समीपतः

अभिद्रुत्य शिरः क्रुद्धश्चिच्छेद कृतवर्मणः २७
तथान्यानपि निघ्नन्तं युयुधानं समन्ततः
अभ्यधावद्धृषीकेशो विनिवारयिषुस्तदा २८
एकीभूतास्ततः सर्वे कालपर्यायचोदिताः
भोजान्धका महाराज शैनेयं पर्यवारयन् २९
तान्दृष्ट्वा पततस्तूर्णमभिक्रुद्धाञ्जनार्दनः
न चुक्रोध महातेजा जानन्कालस्य पर्ययम् ३०
ते तु पानमदाविष्टाश्चोदिताश्चैव मन्युना
युयुधानमथाभ्यघ्नन्नुच्छिष्टैर्भाजनैस्तदा ३१
हन्यमाने तु शैनेये क्रुद्धो रुक्मिणिनन्दनः
तदन्तरमुपाधावन्मोक्षयिष्यञ्शिनेः सुतम् ३२
स भोजैः सह संयुक्तः सात्यकिश्चान्धकैः सह
बहुत्वान्निहतौ तत्र उभौ कृष्णस्य पश्यतः ३३
हतं दृष्ट्वा तु शैनेयं पुत्रं च यदुनन्दनः
एरकाणां तदा मुष्टिं कोपाज्जग्राह केशवः ३४
तदभून्मुसलं घोरं वज्रकल्पमयोमयम्
जघान तेन कृष्णस्तान्येऽस्य प्रमुखतोऽभवन् ३५
ततोऽन्धकाश्च भोजाश्च शैनेया वृष्णयस्तथा
जघ्नुरन्योन्यमाक्रन्दे मुसलैः कालचोदिताः ३६
यस्तेषामेरकां कश्चिज्जग्राह रुषितो नृप
वज्रभूतेव सा राजन्नदृश्यत तदा विभो ३७
तृणं च मुसलीभूतमपि तत्र व्यदृश्यत
ब्रह्मदण्डकृतं सर्वमिति तद्विद्धि पार्थिव ३८
आविध्याविध्य ते राजन्प्रक्षिपन्ति स्म यत्तृणम्
तद्वज्रभूतं मुसलं व्यदृश्यत तदा दृढम् ३९
अवधीत्पितरं पुत्रः पिता पुत्रं च भारत
मत्ताः परिपतन्ति स्म पोथयन्तः परस्परम् ४०
पतंगा इव चाग्नौ ते न्यपतन्कुकुरान्धकाः
नासीत्पलायने बुद्धिर्वध्यमानस्य कस्यचित् ४१
तं तु पश्यन्महाबाहुर्जानन्कालस्य पर्ययम्

मुसलं समवष्टभ्य तस्थौ स मधुसूदनः ४२
साम्बं च निहतं दृष्ट्वा चारुदेष्णं च माधवः
प्रद्युम्नं चानिरुद्धं च ततश्चुक्रोध भारत ४३
गदं वीक्ष्य शयानं च भृशं कोपसमन्वितः
स निःशेषं तदा चक्रे शार्ङ्गचक्रगदाधरः ४४
तं निघ्नन्तं महातेजा बभ्रुः परपुरंजयः
दारुकश्चैव दाशार्हमूचतुर्यन्निबोध तत् ४५
भगवन्संहृतं सर्वं त्वया भूयिष्ठमच्युत
रामस्य पदमन्विच्छ तत्र गच्छाम यत्र सः ४६
इति श्रीमहाभारते मौसलपर्वणि चतुर्थोऽध्यायः ४

पञ्चमोऽध्यायः

वैशम्पायन उवाच
ततो ययुर्दारुकः केशवश्च बभ्रुश्च रामस्य पदं पतन्तः
अथापश्यन्राममनन्तवीर्यं वृक्षे स्थितं चिन्तयानं विविक्ते १
ततः समासाद्य महानुभावः कृष्णस्तदा दारुकमन्वशासत्
गत्वा कुरूञ्शीघ्रमिमं महान्तं पार्थाय शंसस्व वधं यदूनाम् २
ततोऽर्जुनः क्षिप्रमिहोपयातु श्रुत्वा मृतान्यादवान्ब्रह्मशापात्
इत्येवमुक्तः स ययौ रथेन कुरूंस्तदा दारुको नष्टचेताः ३
ततो गते दारुके केशवोऽथ दृष्ट्वान्तिके बभ्रुमुवाच वाक्यम्
स्त्रियो भवान्रक्षतु यातु शीघ्रं नैता हिंस्युर्दस्यवो वित्तलोभात् ४
स प्रस्थितः केशवेनानुशिष्टो मदातुरो ज्ञातिवधार्दितश्च
तं वै यान्तं संनिधौ केशवस्य त्वरन्तमेकं सहसैव बभ्रुम्
ब्रह्मानुशप्तमवधीन्महद्वै कूटोन्मुक्तं मुसलं लुब्धकस्य ५
ततो दृष्ट्वा निहतं बभ्रुमाह कृष्णो वाक्यं भ्रातरमग्रजं तु
इहैव त्वं मां प्रतीक्षस्व राम यावत्स्त्रियो ज्ञातिवशाः करोमि ६
ततः पुरीं द्वारवतीं प्रविश्य जनार्दनः पितरं प्राह वाक्यम्
स्त्रियो भवान्रक्षतु नः समग्रा धनंजयस्यागमनं प्रतीक्षन्
रामो वनान्ते प्रतिपालयन्मामास्तेऽद्याहं तेन समागमिष्ये ७
दृष्टं मयेदं निधनं यदूनां राज्ञां च पूर्वं कुरुपुंगवानाम्

नाहं विना यदुभिर्यादवानां पुरीमिमां द्रुष्टुमिहाद्य शक्तः ८
तपश्चरिष्यामि निबोध तन्मे रामेण सार्धं वनमभ्युपेत्य
इतीदमुक्त्वा शिरसास्य पादौ संस्पृश्य कृष्णस्त्वरितो जगाम ९
ततो महान्निनदः प्रादुरासीत्सस्त्रीकुमारस्य पुरस्य तस्य
अथाब्रवीत्केशवः संनिवर्त्य शब्दं श्रुत्वा योषितां क्रोशतीनाम् १०
पुरीमिमामेष्यति सव्यसाची स वो दुःखान्मोचयिता नराग्र्यः
ततो गत्वा केशवस्तं ददर्श रामं वने स्थितमेकं विविक्ते ११
अथापश्यद्योगयुक्तस्य तस्य नागं मुखान्निःसरन्तं महान्तम्
श्वेतं ययौ स ततः प्रेक्ष्यमाणो महार्णवो येन महानुभावः १२
सहस्रशीर्षः पर्वताभोगवर्ष्मा रक्ताननः स्वां तनुं तां विमुच्य
सम्यक्च तं सागरः प्रत्यगृह्णान्नागा दिव्याः सरितश्चैव पुण्याः १३
कर्कोटको वासुकिस्तक्षकश्च पृथुश्रवा वरुणः कुञ्जरश्च
मिश्री शङ्खः कुमुदः पुण्डरीकस्तथा नागो धृतराष्ट्रो महात्मा १४
ह्रादः क्राथः शितिकण्ठोऽग्रतेजास्तथा नागौ चक्रमन्दातिषण्डौ
नागश्रेष्ठो दुर्मुखश्चाम्बरीषः स्वयं राजा वरुणश्चापि राजन्
प्रत्युद्गम्य स्वागतेनाभ्यनन्दंस्तेऽपूजयंश्चार्घ्यपाद्यक्रियाभिः १५
ततो गते भ्रातरि वासुदेवो जानन्सर्वा गतयो दिव्यदृष्टिः
वने शून्ये विचरंश्चिन्तयानो भूमौ ततः संविवेशाग्र्यतेजाः १६
सर्वं हि तेन प्राक्तदा वित्तमासीद्गान्धार्या यद्वाक्यमुक्तः स पूर्वम्
दुर्वाससा पायसोच्छिष्टलिप्ते यच्चाप्युक्तं तच्च सस्मार कृष्णः १७
स चिन्तयानोऽन्धकवृष्णिनाशं कुरुक्षयं चैव महानुभावः
मेने ततः संक्रमणस्य कालं ततश्चकारेन्द्रियसंनिरोधम् १८
स संनिरुद्धेन्द्रियवाङ्मनास्तु शिश्ये महायोगमुपेत्य कृष्णः
जराथ तं देशमुपाजगाम लुब्धस्तदानीं मृगलिप्सुरुग्रः १९
स केशवं योगयुक्तं शयानं मृगाशङ्की लुब्धकः सायकेन
जराविध्यत्पादतले त्वरावांस्तं चाभितस्तज्जिघृक्षुर्जगाम
अथापश्यत्पुरुषं योगयुक्तं पीताम्बरं लुब्धकोऽनेकबाहुम् २०
मत्वात्मानमपराद्धं स तस्य जग्राह पादौ शिरसा चार्तरूपः
आश्वासयत्तं महात्मा तदानीं गच्छन्नूर्ध्वं रोदसी व्याप्य लक्ष्म्या २१
दिवं प्राप्तं वासवोऽथाश्विनौ च रुद्रादित्या वसवश्चाथ विश्वे

प्रत्युद्ययुर्मुनयश्चापि सिद्धा गन्धर्वमुख्याश्च सहाप्सरोभिः २२
ततो राजन्भगवानुग्रतेजा नारायणः प्रभवश्चाव्ययश्च
योगाचार्यो रोदसी व्याप्य लक्ष्म्या स्थानं प्राप स्वं महात्माप्रमेयम् २३
ततो देवैर्ऋषिभिश्चापि कृष्णः समागतश्चारणैश्चैव राजन्
गन्धर्वाग्र्यैरप्सरोभिर्वराभिः सिद्धैः साध्यैश्चानतैः पूज्यमानः २४
ते वै देवाः प्रत्यनन्दन्त राजन्मुनिश्रेष्ठा वाग्भिरानर्चुरीशम्
गन्धर्वाश्चाप्युपतस्थुः स्तुवन्तः प्रीत्या चैनं पुरुहूतोऽभ्यनन्दत् २५
इति श्रीमहाभारते मौसलपर्वणि पञ्चमोऽध्यायः ५

## षष्ठोऽध्यायः

वैशम्पायन उवाच
दारुकोऽपि कुरून्गत्वा दृष्ट्वा पार्थान्महारथान्
आचष्ट मौसले वृष्णीनन्योन्येनोपसंहृतान् १
श्रुत्वा विनष्टान्वार्ष्णेयान्सभोजकुकुरान्धकान्
पाण्डवाः शोकसंतप्ता वित्रस्तमनसोऽभवन् २
ततोऽर्जुनस्तानामन्त्र्य केशवस्य प्रियः सखा
प्रययौ मातुलं द्रष्टुं नेदमस्तीति चाब्रवीत् ३
स वृष्णिनिलयं गत्वा दारुकेण सह प्रभो
ददर्श द्वारकां वीरो मृतनाथामिव स्त्रियम् ४
याः स्म ता लोकनाथेन नाथवत्यः पुराभवन्
तास्त्वनाथास्तदा नाथं पार्थं दृष्ट्वा विचुक्रुशुः ५
षोडशस्त्रीसहस्राणि वासुदेवपरिग्रहः
तासामासीन्महान्नादो दृष्ट्वैवार्जुनमागतम् ६
तास्तु दृष्ट्वैव कौरव्यो बाष्पेण पिहितोऽर्जुनः
हीनाः कृष्णेन पुत्रैश्च नाशकत्सोऽभिवीक्षितुम् ७
तां स वृष्ण्यन्धकजलां हयमीनां रथोडुपाम्
वादित्ररथघोषौघां वेश्मतीर्थमहाग्रहाम् ८
रत्नशैवलसंघाटां वज्रप्राकारमालिनीम्
रथ्यास्रोतोजलावर्तां चत्वरस्तिमितह्रदाम् ९
रामकृष्णमहाग्राहां द्वारकासरितं तदा

कालपाशग्रहां घोरां नदीं वैतरणीमिव १०
तां ददर्शार्जुनो धीमान्विहीनां वृष्णिपुंगवैः
गतश्रियं निरानन्दां पद्मिनीं शिशिरे यथा ११
तां दृष्ट्वा द्वारकां पार्थस्ताश्च कृष्णस्य योषितः
सस्वनं बाष्पमुत्सृज्य निपपात महीतले १२
सात्राजिती ततः सत्या रुक्मिणी च विशां पते
अभिपत्य प्ररुरुदुः परिवार्य धनंजयम् १३
ततस्ताः काञ्चने पीठे समुत्थाप्योपवेश्य च
अब्रुवन्त्यो महात्मानं परिवार्योपतस्थिरे १४
ततः संस्तूय गोविन्दं कथयित्वा च पाण्डवः
आश्वास्य ताः स्त्रियश्चापि मातुलं द्रष्टुमभ्यगात् १५
इति श्रीमहाभारते मौसलपर्वणि षष्ठोऽध्यायः ६

सप्तमोऽध्यायः

वैशम्पायन उवाच
तं शयानं महात्मानं वीरमानकदुन्दुभिम्
पुत्रशोकाभिसंतप्तं ददर्श कुरुपुंगवः १
तस्याश्रुपरिपूर्णाक्षो व्यूढोरस्को महाभुजः
आर्तस्यार्ततरः पार्थः पादौ जग्राह भारत २
समालिङ्ग्यार्जुनं वृद्धः स भुजाभ्यां महाभुजः
रुदन्पुत्रान्स्मरन्सर्वान्विललाप सुविह्वलः
भ्रात्रन्पुत्रांश्च पौत्रांश्च दौहित्रांश्च सखीनपि ३
वसुदेव उवाच
यैर्जिता भूमिपालाश्च दैत्याश्च शतशोऽजुन
तान्दृष्ट्वा नेह पश्यामि जीवाम्यर्जुन दुर्मरः ४
यौ तावर्जुन शिष्यौ ते प्रियौ बहुमतौ सदा
तयोरपनयात्पार्थ वृष्णयो निधनं गताः ५
यौ तौ वृष्णिप्रवीराणां द्वावेवातिरथौ मतौ
प्रद्युम्नो युयुधानश्च कथयन्कत्थसे च यौ ६
नित्यं त्वं कुरुशार्दूल कृष्णश्च मम पुत्रकः

तावुभौ वृष्णिनाशस्य मुखमास्तां धनंजय ७
न तु गर्हामि शैनेयं हार्दिक्यं चाहमर्जुन
अक्रूरं रौक्मिणेयं च शापो ह्येवात्र कारणम् ८
केशिनं यस्तु कंसं च विक्रम्य जगतः प्रभुः
विदेहावकरोत्पार्थ चैद्यं च बलगर्वितम् ९
नैषादिमेकलव्यं च चक्रे कालिङ्गमागधान्
गान्धारान्काशिराजं च मरुभूमौ च पार्थिवान् १०
प्राच्यांश्च दाक्षिणात्यांश्च पार्वतीयांस्तथा नृपान्
सोऽभ्युपेक्षितवानेतमनयं मधुसूदनः ११
ततः पुत्रांश्च पौत्रांश्च भ्रातॄनथ सखीनपि
शयानान्निहतान्दृष्ट्वा ततो मामब्रवीदिदम् १२
स्त्रंपाप्तोऽद्यायमस्यान्तः कुलस्य पुरुषर्षभ
आगमिष्यति बीभत्सुरिमां द्वारवतीं पुरीम् १३
आख्येयं तस्य यद्वृत्तं वृष्णीनां वैशसं महत्
स तु श्रुत्वा महातेजा यदूनामनयं प्रभो
आगन्ता क्षिप्रमेवेह न मेऽत्रास्ति विचारणा १४
योऽह तमर्जुनं विद्धि योऽजुनः सोऽहमेव तु
यद्ब्रूयात्तत्तथा कार्यमिति बुध्यस्व माधव १५
स स्त्रीषु प्राप्तकालं वः पाण्डवो बालकेषु च
प्रतिपत्स्यति बीभत्सुर्भवतश्चौर्ध्वदेहिकम् १६
इमां च नगरीं सद्यः प्रतियाते धनंजये
प्राकाराट्टालकोपेतां समुद्रः प्लावयिष्यति १७
अहं हि देशे कस्मिंश्चित्पुण्ये नियममास्थितः
कालं कर्ता सद्य एव रामेण सह धीमता १८
एवमुक्त्वा हृषीकेशो मामचिन्त्यपराक्रमः
हित्वा मां बालकैः सार्धं दिशं कामप्यगात्प्रभुः १९
सोऽह तौ च महात्मानौ चिन्तयन्भ्रातरौ तव
घोरं ज्ञातिवधं चैव न भुञ्जे शोककर्शितः २०
न च भोक्ष्ये न जीविष्ये दिष्ट्या प्राप्तोऽसि पाण्डव
यदुक्तं पार्थ कृष्णेन तत्सर्वमखिलं कुरु २१

एतत्ते पार्थ राज्यं च स्त्रियो रत्नानि चैव ह
इष्टान्प्राणानहं हीमांस्त्यक्ष्यामि रिपुसूदन २२
इति श्रीमहाभारते मौसलपर्वणि सप्तमोऽध्यायः ७

अष्टमोऽध्यायः

वैशम्पायन उवाच
एवमुक्तः स बीभत्सुर्मातुलेन परंतपः
दुर्मना दीनमनसं वसुदेवमुवाच ह १
नाहं वृष्णिप्रवीरेण मधुभिश्चैव मातुल
विहीनां पृथिवीं द्रष्टुं शक्तश्चिरमिह प्रभो २
राजा च भीमसेनश्च सहदेवश्च पाण्डवः
नकुलो याज्ञसेनी च षडेकमनसो वयम् ३
राज्ञः संक्रमणे चापि कालोऽय वर्तते ध्रुवम्
तमिमं विद्धि संप्राप्तं कालं कालविदां वर ४
सर्वथा वृष्णिदारांस्तु बालवृद्धांस्तथैव च
नयिष्ये परिगृह्याहमिन्द्रप्रस्थमरिंदम ५
इत्युक्त्वा दारुकमिदं वाक्यमाह धनंजयः
अमात्यान्वृष्णिवीराणां द्रष्टुमिच्छामि माचिरम् ६
इत्येवमुक्त्वा वचनं सुधर्मां यादवीं सभाम्
प्रविवेशार्जुनः शूरः शोचमानो महारथान् ७
तमासनगतं तत्र सर्वाः प्रकृतयस्तथा
ब्राह्मणा नैगमाश्चैव परिवार्योपतस्थिरे ८
तान्दीनमनसः सर्वान्निभृतान्गतचेतसः
उवाचेदं वचः पार्थः स्वयं दीनतरस्तदा ९
शक्रप्रस्थमहं नेष्ये वृष्ण्यन्धकजनं स्वयम्
इदं तु नगरं सर्वं समुद्रः प्लावयिष्यति १०
सज्जीकुरुत यानानि रत्नानि विविधानि च
वज्रोऽय भवतां राजा शक्रप्रस्थे भविष्यति ११
सप्तमे दिवसे चैव रवौ विमल उद्गते
बहिर्वत्स्यामहे सर्वे सज्जीभवत मा चिरम् १२

इत्युक्तास्तेन ते पौराः पार्थेनाक्लिष्टकर्मणा
सज्जमाशु ततश्चक्रुः स्वसिद्ध्यर्थं समुत्सुकाः १३
तां रात्रिमवसत्पार्थः केशवस्य निवेशने
महता शोकमोहेन सहसाभिपरिप्लुतः १४
श्वोभूतेऽथ ततः शौरिर्वसुदेवः प्रतापवान्
युक्त्वात्मानं महातेजा जगाम गतिमुत्तमाम् १५
ततः शब्दो महानासीद्वसुदेवस्य वेश्मनि
दारुणः क्रोशतीनां च रुदतीनां च योषिताम् १६
प्रकीर्णमूर्धजाः सर्वा विमुक्ताभरणस्रजः
उरांसि पाणिभिर्घ्नन्त्यो व्यलपन्करुणं स्त्रियः १७
तं देवकी च भद्रा च रोहिणी मदिरा तथा
अन्वारोढुं व्यवसिता भर्तारं योषितां वराः १८
ततः शौरिं नृयुक्तेन बहुमाल्येन भारत
यानेन महता पार्थो बहिर्निष्क्रामयत्तदा १९
तमन्वयुस्तत्र तत्र दुःखशोकसमाहताः
द्वारकावासिनः पौराः सर्व एव नरर्षभ २०
तस्याश्वमेधिकं छत्रं दीप्यमानाश्च पावकाः
पुरस्तात्तस्य यानस्य याजकाश्च ततो ययुः २१
अनुजग्मुश्च तं वीरं देव्यस्ता वै स्वलंकृताः
स्त्रीसहस्रैः परिवृता वधूभिश्च सहस्रशः २२
यस्तु देशः प्रियस्तस्य जीवतोऽभून्महात्मनः
तत्रैनमुपसंकल्प्य पितृमेधं प्रचक्रिरे २३
तं चिताग्निगतं वीरं शूरपुत्रं वराङ्गनाः
ततोऽन्वारुरुहुः पत्न्यश्चतस्रः पतिलोकगाः २४
तं वै चतसृभिः स्त्रीभिरन्वितं पाण्डुनन्दनः
अदाहयच्चन्दनैश्च गन्धैरुच्चावचैरपि २५
ततः प्रादुरभूच्छब्दः समिद्धस्य विभावसोः
सामगानां च निर्घोषो नराणां रुदतामपि २६
ततो वज्रप्रधानास्ते वृष्णिवीरकुमारकाः
सर्व एवोदकं चक्रुः स्त्रियश्चैव महात्मनः २७

अलुप्तधर्मस्तं धर्मं कारयित्वा स फल्गुनः
जगाम वृष्णयो यत्र विनष्टा भरतर्षभ २८
स तान्दृष्ट्वा निपतितान्कदने भृशदुःखितः
बभूवातीव कौरव्यः प्राप्तकालं चकार च २९
यथाप्रधानतश्चैव चक्रे सर्वाः क्रियास्तदा
ये हता ब्रह्मशापेन मुसलैरेरकोद्भवैः ३०
ततः शरीरे रामस्य वासुदेवस्य चोभयोः
अन्विष्य दाहयामास पुरुषैराप्तकारिभिः ३१
स तेषां विधिवत्कृत्वा प्रेतकार्याणि पाण्डवः
सप्तमे दिवसे प्रायाद्रथमारुह्य सत्वरः
अश्वयुक्तै रथैश्चापि गोखरोष्ट्रयुतैरपि ३२
स्त्रियस्ता वृष्णिवीराणां रुदत्यः शोककर्शिताः
अनुजग्मुर्महात्मानं पाण्डुपुत्रं धनंजयम् ३३
भृत्यास्त्वन्धकवृष्णीनां सादिनो रथिनश्च ये
वीरहीनं वृद्धबालं पौरजानपदास्तथा
ययुस्ते परिवार्याथ कलत्रं पार्थशासनात् ३४
कुञ्जरैश्च गजारोहा ययुः शैलनिभैस्तथा
सपादरक्षैः संयुक्ताः सोत्तरायुधिकाययुः ३५
पुत्राश्चान्धकवृष्णीनां सर्वे पार्थमनुव्रताः
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव महाधनाः ३६
दश षट्च सहस्राणि वासुदेवावरोधनम्
पुरस्कृत्य ययुर्वज्रं पौत्रं कृष्णस्य धीमतः ३७
बहूनि च सहस्राणि प्रयुतान्यर्बुदानि च
भोजवृष्ण्यन्धकस्त्रीणां हतनाथानि निर्ययुः ३८
तत्सागरसमप्रख्यं वृष्णिचक्रं महर्धिमत्
उवाह रथिनां श्रेष्ठः पार्थः परपुरंजयः ३९
निर्याते तु जने तस्मिन्सागरो मकरालयः
द्वारकां रत्नसंपूर्णां जलेनाप्लावयत्तदा ४०
तदद्भुतमभिप्रेक्ष्य द्वारका वासिनोजनाः
तूर्णात्तूर्णतरं जग्मुरहो दैवमिति ब्रुवन् ४१

काननेषु च रम्येषु पर्वतेषु नदीषु च
निवसन्नानयामास वृष्णिदारान्धनंजयः ४२
स पञ्चनदमासाद्य धीमानतिसमृद्धिमत्
देशे गोपशुधान्याढ्ये निवासमकरोत्प्रभुः ४३
ततो लोभः समभवद्दस्यूनां निहतेश्वराः
दृष्ट्वा स्त्रियो नीयमानाः पार्थेनैकेन भारत ४४
ततस्ते पापकर्माणो लोभोपहतचेतसः
आभीरा मन्त्रयामासुः समेत्याशुभदर्शनाः ४५
अयमेकोऽजुनो योद्धा वृद्धबालं हतेश्वरम्
नयत्यस्मानतिक्रम्य योधाश्चेमे हतौजसः ४६
ततो यष्टिप्रहरणा दस्यवस्ते सहस्रशः
अभ्यधावन्त वृष्णीनां तं जनं लोप्त्रहारिणः ४७
महता सिंहनादेन द्रावयन्तः पृथग्जनम्
अभिपेतुर्धनार्थं ते कालपर्यायचोदिताः ४८
ततो निवृत्तः कौन्तेयः सहसा सपदानुगः
उवाच तान्महाबाहुरर्जुनः प्रहसन्निव ४९
निवर्तध्वमधर्मज्ञा यदि स्व न मुमूर्षवः
नेदानीं शरनिर्भिन्नाः शोचध्वं निहता मया ५०
तथोक्तास्तेन वीरेण कदर्थीकृत्य तद्वचः
अभिपेतुर्जनं मूढा वार्यमाणाः पुनः पुनः ५१
ततोऽजुनो धनुर्दिव्यं गाण्डीवमजरं महत्
आरोपयितुमारेभे यत्नादिव कथंचन ५२
चकार सज्यं कृच्छ्रेण संभ्रमे तुमुले सति
चिन्तयामास चास्त्राणि न च सस्मार तान्यपि ५३
वैकृत्यं तन्महद्दृष्ट्वा भुजवीर्ये तथा युधि
दिव्यानां च महास्त्राणां विनाशाद्व्रीडितोऽभवत् ५४
वृष्णियोधाश्च ते सर्वे गजाश्वरथयायिनः
न शेकुरावर्तयितुं ह्रियमाणं च तं जनम् ५५
कलत्रस्य बहुत्वात्तु संपतत्सु ततस्ततः
प्रयत्नमकरोत्पार्थो जनस्य परिरक्षणे ५६

मिषतां सर्वयोधानां ततस्ताः प्रमदोत्तमाः
समन्ततोऽवकृष्यन्त कामाच्चान्याः प्रवव्रजुः ५७
ततो गाण्डीवनिर्मुक्तैः शरैः पार्थो धनञ्जयः
जघान दस्यून्सोद्वेगो वृष्णि भृत्यैः सह प्रभुः ५८
क्षणेन तस्य ते राजन्क्षयं जग्मुरजिह्मगाः
अक्षया हि पुरा भूत्वा क्षीणाः क्षतजभोजनाः ५९
स शरक्षयमासाद्य दुःखशोकसमाहतः
धनुष्कोट्या तदा दस्यूनवधीत्पाकशासनिः ६०
प्रेक्षतस्त्वेव पार्थस्य वृष्ण्यन्धकवरस्त्रियः
जग्मुरादाय ते म्लेच्छाः समन्ताज्जनमेजय ६१
धनंजयस्तु दैवं तन्मनसाचिन्तयत्प्रभुः
दुःखशोकसमाविष्टो निःश्वासपरमोऽभवत् ६२
अस्त्राणां च प्रणाशेन बाहुवीर्यस्य संक्षयात्
धनुषश्चाविधेयत्वाच्छराणां संक्षयेण च ६३
बभूव विमनाः पार्थो दैवमित्यनुचिन्तयन्
न्यवर्तत ततो राजन्नेदमस्तीति चाब्रवीत् ६४
ततः स शेषमादाय कलत्रस्य महामतिः
हृतभूयिष्ठरत्नस्य कुरुक्षेत्रमवातरत् ६५
एवं कलत्रमानीय वृष्णीनां हृतशेषितम्
न्यवेशयत कौरव्यस्तत्र तत्र धनंजयः ६६
हार्दिक्यतनयं पार्थो नगरं मार्तिकावतम्
भोजराजकलत्रं च हृतशेषं नरोत्तमः ६७
ततो वृद्धांश्च बालांश्च स्त्रियश्चादाय पाण्डवः
वीरैर्विहीनान्सर्वांस्ताञ्शक्रप्रस्थे न्यवेशयत् ६८
यौयुधानिं सरस्वत्यां पुत्रं सात्यकिनः प्रियम्
न्यवेशयत धर्मात्मा वृद्धबालपुरस्कृतम् ६९
इन्द्रप्रस्थे ददौ राज्यं वज्राय परवीरहा
वज्रेणाक्रूरदारास्तु वार्यमाणाः प्रवव्रजुः ७०
रुक्मिणी त्वथ गान्धारी शैब्या हैमवतीत्यपि
देवी जाम्बवती चैव विविशुर्जातवेदसम् ७१

सत्यभामा तथैवान्या देव्यः कृष्णस्य संमताः
वनं प्रविविशू राजंस्तापस्ये कृतनिश्चयाः ७२
द्वारकावासिनो ये तु पुरुषाः पार्थमन्वयुः
यथार्हं संविभज्यैनान्वज्रे पर्यददज्जयः ७३
स तत्कृत्वा प्राप्तकालं बाष्पेणापिहितोऽजुनः
कृष्णद्वैपायनं राजन्ददर्शासीनमाश्रमे ७४
इति श्रीमहाभारते मौसलपर्वणि अष्टमोऽध्यायः ८

## नवमोऽध्यायः

वैशम्पायन उवाच
प्रविशन्नर्जुनो राजन्नाश्रमं सत्यवादिनः
ददर्शासीनमेकान्ते मुनिं सत्यवतीसुतम् १
स तमासाद्य धर्मज्ञमुपतस्थे महाव्रतम्
अर्जुनोऽस्मीति नामास्मै निवेद्याभ्यवदत्ततः २
स्वागतं तेऽस्त्विति प्राह मुनिः सत्यवतीसुतः
आस्यतामिति चोवाच प्रसन्नात्मा महामुनिः ३
तमप्रतीतमनसं निःश्वसन्तं पुनः पुनः
निर्विण्णमनसं दृष्ट्वा पार्थं व्यासोऽब्रवीदिदम् ४
अवीरजोभिघातस्ते ब्राह्मणो वा हतस्त्वया
युद्धे पराजितो वासि गतश्रीरिव लक्ष्यसे ५
न त्वा प्रत्यभिजानामि किमिदं भरतर्षभ
श्रोतव्यं चेन्मया पार्थ क्षिप्रमाख्यातुमर्हसि ६
अर्जुन उवाच
यः स मेघवपुः श्रीमान्बृहत्पङ्कजलोचनः
स कृष्णः सह रामेण त्यक्त्वा देहं दिवं गतः ७
मौसले वृष्णिवीराणां विनाशो ब्रह्मशापजः
बभूव वीरान्तकरः प्रभासे रोमहर्षणः ८
ये ते शूरा महात्मानः सिंहदर्पा महाबलाः
भोजवृष्ण्यन्धका ब्रह्मन्नन्योन्यं तैर्हतं युधि ९
गदापरिघशक्तीनां सहाः परिघबाहवः

त एरकाभिर्निहताः पश्य कालस्य पर्ययम् १०
हतं पञ्चशतं तेषां सहस्रं बाहुशालिनाम्
निधनं समनुप्राप्तं समासाद्येतरेतरम् ११
पुनः पुनर्न मृश्यामि विनाशममितौजसाम्
चिन्तयानो यदूनां च कृष्णस्य च यशस्विनः १२
शोषणं सागरस्येव पर्वतस्येव चालनम्
नभसः पतनं चैव शैत्यमग्नेस्तथैव च १३
अश्रद्धेयमहं मन्ये विनाशं शार्ङ्गधन्वनः
न चेह स्थातुमिच्छामि लोके कृष्णविनाकृतः १४
हतः कष्टतरं चान्यच्छृणु तद्वै तपोधन
मनो मे दीर्यते येन चिन्तयानस्य वै मुहुः १५
पश्यतो वृष्णिदाराश्च मम ब्रह्मन्सहस्रशः
आभीरैरनुसृत्याजौ हृताः पञ्चनदालयैः १६
धनुरादाय तत्राहं नाशकं तस्य पूरणे
यथा पुरा च मे वीर्यं भुजयोर्न तथाभवत् १७
अस्त्राणि मे प्रनष्टानि विविधानि महामुने
शराश्च क्षयमापन्नाः क्षणेनैव समन्ततः १८
पुरुषश्चाप्रमेयात्मा शङ्खचक्रगदाधरः
चतुर्भुजः पीतवासा श्यामः पद्मायतेक्षणः १९
यः स याति पुरस्तान्मे रथस्य सुमहाद्युतिः
प्रदहन्रिपुसैन्यानि न पश्याम्यहमद्य तम् २०
येन पूर्वं प्रदग्धानि शत्रुसैन्यानि तेजसा
शरैर्गाण्डीवनिर्मुक्तैरहं पश्चाद्व्यनाशयम् २१
तमपश्यन्विषीदामि घूर्णामीव च सत्तम
परिनिर्विण्णचेताश्च शान्तिं नोपलभेऽपि च २२
विना जनार्दनं वीरं नाहं जीवितुमुत्सहे
श्रुत्वैव हि गतं विष्णुं ममापि मुमुहुर्दिशः २३
प्रनष्टज्ञातिवीर्यस्य शून्यस्य परिधावतः
उपदेष्टुं मम श्रेयो भवानर्हति सत्तम २४
व्यास उवाच

ब्रह्मशापविनिर्दग्धा वृष्ण्यन्धकमहारथाः
विनष्टाः कुरुशार्दूल न ताञ्शोचितुमर्हसि २५
भवितव्यं तथा तद्धि दिष्टमेतन्महात्मनाम्
उपेक्षितं च कृष्णेन शक्तेनापि व्यपोहितुम् २६
त्रैलोक्यमपि कृष्णो हि कृत्स्नं स्थावरजङ्गमम्
प्रसहेदन्यथा कर्तुं किमु शापं मनीषिणाम् २७
रथस्य पुरतो याति यः स चक्रगदाधरः
तव स्नेहात्पुराणर्षिर्वासुदेवश्चतुर्भुजः २८
कृत्वा भारावतरणं पृथिव्याः पृथुलोचनः
मोक्षयित्वा जगत्सर्वं गतः स्वस्थानमुत्तमम् २९
त्वया त्विह महत्कर्म देवानां पुरुषर्षभ
कृतं भीमसहायेन यमाभ्यां च महाभुज ३०
कृतकृत्यांश्च वो मन्ये संसिद्धान्कुरुपुङ्गव
गमनं प्राप्तकालं च तद्धि श्रेयो मतं मम ३१
बलं बुद्धिश्च तेजश्च प्रतिपत्तिश्च भारत
भवन्ति भवकालेषु विपद्यन्ते विपर्यये ३२
कालमूलमिदं सर्वं जगद्बीजं धनञ्जय
काल एव समादत्ते पुनरेव यदृच्छया ३३
स एव बलवान्भूत्वा पुनर्भवति दुर्बलः
स एवेशश्च भूत्वेह परैराज्ञाप्यते पुनः ३४
कृतकृत्यानि चास्त्राणि गतान्यद्य यथागतम्
पुनरेष्यन्ति ते हस्तं यदा कालो भविष्यति ३५
कालो गन्तुं गतिं मुख्यां भवतामपि भारत
एतच्छ्रेयो हि वो मन्ये परमं भरतर्षभ ३६
एतद्वचनमाज्ञाय व्यासस्यामिततेजसः
अनुज्ञातो ययौ पार्थो नगरं नागसाह्वयम् ३७
प्रविश्य च पुरीं वीरः समासाद्य युधिष्ठिरम्
आचष्ट तद्यथावृत्तं वृष्ण्यन्धकजनं प्रति ३८

इति श्रीमहाभारते मौसलपर्वणि नवमोऽध्यायः ९

मौसलपर्व समाप्तम्

श्रीगणेशाय नमः
ॐ नारायणं नमस्कृत्य नरं चैव नरोत्तमम्
देवीं सरस्वतीं चैव ततो जयमुदीरयेत्

## अथ प्रथमोऽध्यायः

जनमेजय उवाच
एवं वृष्ण्यन्धककुले श्रुत्वा मौसलमाहवम्
पाण्डवाः किमकुर्वन्त तथा कृष्णे दिवं गते १
वैशम्पायन उवाच
श्रुत्वैव कौरवो राजा वृष्णीनां कदनं महत्
प्रस्थाने मतिमाधाय वाक्यमर्जुनमब्रवीत् २
कालः प्रचति भूतानि सर्वाण्येव महामते
कर्मन्यासमहं मन्ये त्वमपि द्रष्टुमर्हसि ३
इत्युक्तः स तु कौन्तेयः कालः काल इति ब्रुवन्
अन्वपद्यत तद्वाक्यं भ्रातुर्ज्येष्ठस्य वीर्यवान् ४
अर्जुनस्य मतं ज्ञात्वा भीमसेनो यमौ तथा
अन्वपद्यन्त तद्वाक्यं यदुक्तं सव्यसाचिना ५
ततो युयुत्सुमानाय्य प्रव्रजन्धर्मकाम्यया
राज्यं परिददौ सर्वं वैश्यापुत्रे युधिष्ठिरः ६
अभिषिच्य स्वराज्ये तु तं राजानं परीक्षितम्
दुःखार्तश्चाब्रवीद्राजा सुभद्रां पाण्डवाग्रजः ७
एष पुत्रस्य पुत्रस्ते कुरुराजो भविष्यति
यदूनां परिशेषश्च वज्रो राजा कृतश्च ह ८
परीक्षिद्धास्तिनपुरे शक्रप्रस्थे तु यादवः
वज्रो राजा त्वया रक्ष्यो मा चाधर्मे मनः कृथाः ९
इत्युक्त्वा धर्मराजः स वासुदेवस्य धीमतः
मातुलस्य च वृद्धस्य रामादीनां तथैव च १०
भ्रातृभिः सह धर्मात्मा कृत्वोदकमतन्द्रितः
श्राद्धान्युद्दिश्य सर्वेषां चकार विधिवत्तदा ११
ददौ रत्नानि वासांसि ग्रामानश्वान्रथानपि

स्त्रियश्च द्विजमुख्येभ्यो गवां शतसहस्रशः १२
कृपमभ्यर्च्य च गुरुमर्थमानपुरस्कृतम्
शिष्यं परीक्षितं तस्मै ददौ भरतसत्तमः १३
ततस्तु प्रकृतीः सर्वाः समानाय्य युधिष्ठिरः
सर्वमाचष्ट राजर्षिश्चिकीर्षितमथात्मनः १४
ते श्रुत्वैव वचस्तस्य पौरजानपदा जनाः
भृशमुद्विग्नमनसो नाभ्यनन्दन्त तद्वचः १५
नैवं कर्तव्यमिति ते तदोचुस्ते नराधिपम्
न च राजा तथाकार्षीत्कालपर्यायधर्मवित् १६
ततोऽनुमान्य धर्मात्मा पौरजानपदं जनम्
गमनाय मतिं चक्रे भ्रातरश्चास्य ते तदा १७
ततः स राजा कौरव्यो धर्मपुत्रो युधिष्ठिरः
उत्सृज्याभरणान्यङ्गाज्जगृहे वल्कलान्युत १८
भीमार्जुनौ यमौ चैव द्रौपदी च यशस्विनी
तथैव सर्वे जगृहुर्वल्कलानि जनाधिप १९
विधिवत्कारयित्वेष्टिं नैष्ठिकीं भरतर्षभ
समुत्सृज्याप्सु सर्वेऽग्नीन्प्रतस्थुर्नरपुंगवाः २०
ततः प्ररुरुदुः सर्वाः स्त्रियो दृष्ट्वा नरर्षभान्
प्रस्थितान्द्रौपदीषष्ठान्पुरा द्यूतजितान्यथा २१
हर्षोऽभवच्च सर्वेषां भ्रातॄणां गमनं प्रति
युधिष्ठिरमतं ज्ञात्वा वृष्णिक्षयमवेक्ष्य च २२
भ्रातरः पञ्च कृष्णा च षष्ठी श्वा चैव सप्तमः
आत्मना सप्तमो राजा निर्ययौ गजसाह्वयात्
पौरैरनुगतोदूरं सर्वैरन्तःपुरैस्तथा २३
न चैनमशकत्कश्चिन्निवर्तस्वेति भाषितुम्
न्यवर्तन्त ततः सर्वे नरा नगरवासिनः २४
कृपप्रभृतयश्चैव युयुत्सुं पर्यवारयन्
विवेश गङ्गां कौरव्य उलूपी भुजगात्मजा २५
चित्राङ्गदा ययौ चापि मणिपूरपुरं प्रति
शिष्टाः परीक्षितं त्वन्या मातरः पर्यवारयन् २६

पाराडवाश्च महात्मानो द्रौपदी च यशस्विनी
कृतोपवासाः कौरव्य प्रययुः प्राङ्मुखास्ततः २७
योगयुक्ता महात्मानस्त्यागधर्ममुपेयुषः
अभिजग्मुर्बहून्देशान्सरितः पर्वतांस्तथा २८
युधिष्ठिरो ययावग्रे भीमस्तु तदनन्तरम्
अर्जुनस्तस्य चान्वेव यमौ चैव यथाक्रमम् २९
पृष्ठतस्तु वरारोहा श्यामा पद्मदलेक्षणा
द्रौपदी योषितां श्रेष्ठा ययौ भरतसत्तम ३०
श्वा चैवानुययावेकः पाराडवान्प्रस्थितान्वने
क्रमेण ते ययुर्वीरा लौहित्यं सलिलार्णवम् ३१
गाराडीवं च धनुर्दिव्यं न मुमोच धनंजयः
रत्नलोभान्महाराज तौ चाक्षय्यौ महेषुधी ३२
अग्निं ते ददृशुस्तत्र स्थितं शैलमिवाग्रतः
मार्गमावृत्य तिष्ठन्तं साक्षात्पुरुष विग्रहम् ३३
ततो देवः स सप्तार्चिः पाराडवानिदमब्रवीत्
भो भो पाराडुसुता वीराः पावकं मां विबोधत ३४
युधिष्ठिर महाबाहो भीमसेन परंतप
अर्जुनाश्विसुतौ वीरौ निबोधत वचो मम ३५
अहमग्निः कुरुश्रेष्ठा मया दग्धं च खाराडवम्
अर्जुनस्य प्रभावेण तथा नारायणस्य च ३६
अयं वः फल्गुनो भ्राता गाराडीवं परमायुधम्
परित्यज्य वनं यातु नानेनार्थोऽस्ति कश्चन ३७
चक्ररत्नं तु यत्कृष्णे स्थितमासीन्महात्मनि
गतं तच्च पुनर्हस्ते कालेनैष्यति तस्य ह ३८
वरुणादाहृतं पूर्वं मयैतत्पार्थकारणात्
गाराडीवं कार्मुकश्रेष्ठं वरुणायैव दीयताम् ३९
ततस्ते भ्रातरः सर्वे धनंजयमचोदयन्
स जले प्राक्षिपत्तत्तु तथाक्षय्यौ महेषुधी ४०
ततोऽग्निर्भरतश्रेष्ठ तत्रैवान्तरधीयत
ययुश्च पाराडवा वीरास्ततस्ते दक्षिणामुखाः ४१

ततस्ते तूत्तरेणैव तीरेण लवणाम्भसः
जग्मुर्भरतशार्दूल दिशं दक्षिणपश्चिमम् ४२
ततः पुनः समावृत्ताः पश्चिमां दिशमेव ते
ददृशुर्द्वारकां चापि सागरेण परिप्लुताम् ४३
उदीचीं पुनरावृत्त्य ययुर्भरतसत्तमाः
प्रादक्षिण्यं चिकीर्षन्तः पृथिव्या योगधर्मिणः ४४
इति श्रीमहाभारते महाप्रस्थानिकपर्वणि प्रथमोऽध्यायः १

द्वितीयोऽध्यायः

वैशम्पायन उवाच
ततस्ते नियतात्मान उदीचीं दिशमास्थिताः
ददृशुर्योगयुक्ताश्च हिमवन्तं महागिरिम् १
तं चाप्यतिक्रमन्तस्ते ददृशुर्वालुकार्णवम्
अवैक्षन्त महाशैलं मेरुं शिखरिणां वरम् २
तेषां तु गच्छतां शीघ्रं सर्वेषां योगधर्मिणाम्
याज्ञसेनी भ्रष्टयोगा निपपात महीतले ३
तां तु प्रपतितां दृष्ट्वा भीमसेनो महाबलः
उवाच धर्मराजानं याज्ञसेनीमवेक्ष्य ह ४
नाधर्मश्चरितः कश्चिद्राजपुत्र्या परंतप
कारणं किं नु तद्राजन्यत्कृष्णा पतिता भुवि ५
युधिष्ठिर उवाच
पक्षपातो महानस्या विशेषेण धनंजये
तस्यैतत्फलमद्यैषा भुङ्क्ते पुरुषसत्तम ६
वैशम्पायन उवाच
एवमुक्त्वानवेक्ष्यैनां ययौ धर्मसुतो नृपः
समाधाय मनो धीमान्धर्मात्मा पुरुषर्षभः ७
सहदेवस्ततो धीमान्निपपात महीतले
तं चापि पतितं दृष्ट्वा भीमो राजानमब्रवीत् ८
योऽयमस्मासु सर्वेषु शुश्रूषुरनहंकृतः
सोऽय माद्रवतीपुत्रः कस्मान्निपतितो भुवि ९

युधिष्ठिर उवाच
आत्मनः सदृशं प्राज्ञं नैषोऽमन्यत कंचन
तेन दोषेण पतितस्तस्मादेष नृपात्मजः १०
वैशम्पायन उवाच
इत्युक्त्वा तु समुत्सृज्य सहदेवं ययौ तदा
भ्रातृभिः सह कौन्तेयः शुना चैव युधिष्ठिरः ११
कृष्णां निपतितां दृष्ट्वा सहदेवं च पाण्डवम्
आर्तो बन्धुप्रियः शूरो नकुलो निपपात ह १२
तस्मिन्निपतिते वीरे नकुले चारुदर्शने
पुनरेव तदा भीमो राजानमिदमब्रवीत् १३
योऽयमक्षतधर्मात्मा भ्राता वचनकारकः
रूपेणाप्रतिमो लोके नकुलः पतितो भुवि १४
इत्युक्तो भीमसेनेन प्रत्युवाच युधिष्ठिरः
नकुलं प्रति धर्मात्मा सर्वबुद्धिमतां वरः १५
रूपेण मत्समो नास्ति कश्चिदित्यस्य दर्शनम्
अधिकश्चाहमेवैक इत्यस्य मनसि स्थितम् १६
नकुलः पतितस्तस्मादागच्छ त्वं वृकोदर
यस्य यद्विहितं वीर सोऽवश्यं तदुपाश्नुते १७
तांस्तु प्रपतितान्दृष्ट्वा पाण्डवः श्वेतवाहनः
पपात शोकसंतप्तस्ततोऽनु परवीरहा १८
तस्मिंस्तु पुरुषव्याघ्रे पतिते शक्रतेजसि
म्रियमाणे दुराधर्षे भीमो राजानमब्रवीत् १९
अनृतं न स्मराम्यस्य स्वैरेष्वपि महात्मनः
अथ कस्य विकारोऽय येनायं पतितो भुवि २०
युधिष्ठिर उवाच
एकाह्ना निर्दहेयं वै शत्रूनित्यर्जुनोऽब्रवीत्
न च तत्कृतवानेष शूरमानी ततोऽपतत् २१
अवमेने धनुर्ग्राहानेष सर्वांश्च फल्गुनः
यया चोक्तं तथा चैव कर्तव्यं भूतिमिच्छता २२
वैशम्पायन उवाच

इत्युक्त्वा प्रस्थितो राजा भीमोऽथ निपपात ह
पतितश्चाब्रवीद्भीमो धर्मराजं युधिष्ठिरम् २३
भो भो राजन्नवेक्षस्व पतितोऽहं प्रियस्तव
किंनिमित्तं च पतनं ब्रूहि मे यदि वेत्थ ह २४
युधिष्ठिर उवाच
अतिभुक्तं च भवता प्राणेन च विकत्थसे
अनवेक्ष्य परं पार्थ तेनासि पतितः क्षितौ २५
वैशम्पायन उवाच
इत्युक्त्वा तं महाबाहुर्जगामानवलोकयन्
श्वा त्वेकोऽनुययौ यस्ते बहुशः कीर्तितो मया २६
इति श्रीमहाभारते महाप्रस्थानिकपर्वणि द्वितीयोऽध्यायः २

## तृतीयोऽध्यायः

वैशम्पायन उवाच
ततः संनादयञ्शक्रो दिवं भूमिं च सर्वशः
रथेनोपययौ पार्थमारोहेत्यब्रवीच्च तम् १
स भ्रातॄन्पतितान्दृष्ट्वा धर्मराजो युधिष्ठिरः
अब्रवीच्छोकसंतप्तः सहस्राक्षमिदं वचः २
भ्रातरः पतिता मेऽत्र आगच्छेयुर्मया सह
न विना भ्रातृभिः स्वर्गमिच्छे गन्तुं सुरेश्वर ३
सुकुमारी सुखार्हा च राजपुत्री पुरंदर
सास्माभिः सह गच्छेत तद्भवाननुमन्यताम् ४
इन्द्र उवाच
भ्रातॄन्द्रक्ष्यसि पुत्रांस्त्वमग्रतस्त्रिदिवं गतान्
कृष्णया सहितान्सर्वान्मा शुचो भरतर्षभ ५
निक्षिप्य मानुषं देहं गतास्ते भरतर्षभ
अनेन त्वं शरीरेण स्वर्गं गन्ता न संशयः ६
युधिष्ठिर उवाच
अयं श्वा भूतभव्येश भक्तो मां नित्यमेव ह
स गच्छेत मया सार्धमानृशंस्या हि मे मतिः ७

इन्द्र उवाच
अमर्त्यत्वं मत्समत्वं च राजञ्श्रियं कृत्स्नां महतां चैव कीर्तिम्
संप्राप्तोऽद्य स्वर्गसुखानि च त्वं त्यज श्वानं नात्र नृशंसमस्ति ८
युधिष्ठिर उवाच
अनार्यमार्येण सहस्रनेत्र शक्यं कर्तुं दुष्करमेतदार्य
मा मे श्रिया संगमनं तयास्तु यस्याः कृते भक्तजनं त्यजेयम् ९
इन्द्र उवाच
स्वर्गे लोके श्ववतां नास्ति धिष्ण्यमिष्टापूर्तं क्रोधवशा हरन्ति
ततो विचार्य क्रियतां धर्मराज त्यज श्वानं नात्र नृशंसमस्ति १०
युधिष्ठिर उवाच
भक्तत्यागं प्राहुरत्यन्तपापं तुल्यं लोके ब्रह्मवध्याकृतेन
तस्मान्नाहं जातु कथंचनाद्य त्यक्ष्याम्येनं स्वसुखार्थी महेन्द्र ११
इन्द्र उवाच
शुना दृष्टं क्रोधवशा हरन्ति यद्दत्तमिष्टं विवृतमथो हुतं च
तस्माच्छुनस्त्यागमिमं कुरुष्व शुनस्त्यागात्प्राप्स्यसे देवलोकम् १२
त्यक्त्वा भ्रात्न्दयितां चापि  कृष्णां प्राप्तो लोकः कर्मणा स्वेन वीर
श्वानं चैनं न त्यजसे कथं नु त्यागं कृत्स्नं चास्थितो मुह्यसेऽद्य १३
युधिष्ठिर उवाच
न विद्यते संधिरथापि विग्रहो मृतैर्मर्त्यैरिति लोकेषु निष्ठा
न ते मया जीवयितुं हि शक्या तस्मात्त्यागस्तेषु कृतो न जीवताम् १४
प्रतिप्रदानं शरणागतस्य स्त्रिया वधो ब्राह्मणस्वापहारः
मित्रद्रोहस्तानि चत्वारि शक्र भक्तत्यागश्चैव समो मतो मे १५
वैशम्पायन उवाच
तद्धर्मराजस्य वचो निशम्य धर्मस्वरूपी भगवानुवाच
युधिष्ठिरं प्रीतियुक्तो नरेन्द्रं श्लक्ष्णैर्वाक्यैः संस्तवसंप्रयुक्तैः १६
अभिजातोऽसि राजेन्द्र पितुर्वृत्तेन मेधया
अनुक्रोशेन चानेन सर्वभूतेषु भारत १७
पुरा द्वैतवने चासि मया पुत्र परीक्षितः
पानीयार्थे पराक्रान्ता यत्र ते भ्रातरो हताः १८
भीमार्जुनौ परित्यज्य यत्र त्वं भ्रातरावुभौ

मात्रोः साम्यमभीप्सन्वै नकुलं जीवमिच्छसि १९
अयं श्वा भक्त इत्येव त्यक्तो देवरथस्त्वया
तस्मात्स्वर्गे न ते तुल्यः कश्चिदस्ति नराधिप २०
अतस्तवाक्षया लोकाः स्वशरीरेण भारत
प्राप्तोऽसि भरतश्रेष्ठ दिव्यां गतिमनुत्तमाम् २१
ततो धर्मश्च शक्रश्च मरुत्तश्चाश्विनावपि
देवा देवर्षयश्चैव रथमारोप्य पाण्डवम् २२
प्रययुः स्वैर्विमानैस्ते सिद्धाः कामविहारिणः
सर्वे विरजसः पुण्याः पुण्यवाग्बुद्धिकर्मिणः २३
स तं रथं समास्थाय राजा कुरुकुलोद्वहः
ऊर्ध्वमाचक्रमे शीघ्रं तेजसावृत्य रोदसी २४
ततो देवनिकायस्थो नारदः सर्वलोकवित्
उवाचोच्चैस्तदा वाक्यं बृहद्वादी बृहत्तपाः २५
येऽपि राजर्षयः सर्वे ते चापि समुपस्थिताः
कीर्तिं प्रच्छाद्य तेषां वै कुरुराजोऽधितिष्ठति २६
लोकानावृत्य यशसा तेजसा वृत्तसंपदा
स्वशरीरेण संप्राप्तं नान्यं शुश्रुम पाण्डवात् २७
नारदस्य वचः श्रुत्वा राजा वचनमब्रवीत्
देवानामन्त्र्य धर्मात्मा स्वपक्षांश्चैव पार्थिवान् २८
शुभं वा यदि वा पापं भ्रातॄणां स्थानमद्य मे
तदेव प्राप्तुमिच्छामि लोकानन्यान्न कामये २९
राज्ञस्तु वचनं श्रुत्वा देवराजः पुरंदरः
आनृशंस्यसमायुक्तं प्रत्युवाच युधिष्ठिरम् ३०
स्थानेऽस्मिन्वस राजेन्द्र कर्मभिर्निर्जिते शुभैः
किं त्वं मानुष्यकं स्नेहमद्यापि परिकर्षसि ३१
सिद्धिं प्राप्तोऽसि परमां यथा नान्यः पुमान्क्वचित्
नैव ते भ्रातरः स्थानं संप्राप्ताः कुरुनन्दन ३२
अद्यापि मानुषो भावः स्पृशते त्वां नराधिप
स्वर्गोऽय पश्य देवर्षीन्सिद्धांश्च त्रिदिवालयान् ३३
युधिष्ठिरस्तु देवेन्द्रमेवंवादिनमीश्वरम्

पुनरेवाब्रवीद्धीमानिदं वचनमर्थवत् ३४
तैर्विना नोत्सहे वस्तुमिह दैत्यनिबर्हण
गन्तुमिच्छामि तत्राहं यत्र मे भ्रातरो गताः ३५
यत्र सा बृहती श्यामा बुद्धिसत्त्वगुणान्विता
द्रौपदी योषितां श्रेष्ठा यत्र चैव प्रिया मम ३६
इति श्रीमहाभारते महाप्रस्थानिकपर्वणि तृतीयोऽध्यायः ३

महाप्रस्थानिकपर्व समाप्तम्

श्रीगणेशाय नमः
ॐ नारायणं नमस्कृत्य नरं चैव नरोत्तमम्
देवीं सरस्वतीं चैव ततो जय मुदीरयेत्

## अथ प्रथमोऽध्यायः

जनमेजय उवाच
स्वर्गं त्रिविष्टपं प्राप्य मम पूर्वपितामहाः
पाण्डवा धार्तराष्ट्राश्च कानि स्थानानि भेजिरे १
एतदिच्छाम्यहं श्रोतुं सर्वविच्चासि मे मतः
महर्षिणाभ्यनुज्ञातो व्यासेनाद्भुतकर्मणा २
वैशम्पायन उवाच
स्वर्गं त्रिविष्टपं प्राप्य तव पूर्वपितामहाः
युधिष्ठिरप्रभृतयो यदकुर्वत तच्छृणु ३
स्वर्गं त्रिविष्टपं प्राप्य धर्मराजो युधिष्ठिरः
दुर्योधनं श्रिया जुष्टं ददर्शासीनमासने ४
भ्राजमानमिवादित्यं वीरलक्ष्म्याभिसंवृतम्
देवैर्भ्राजिष्णुभिः साध्यैः सहितं पुण्यकर्मभिः ५
ततो युधिष्ठिरो दृष्ट्वा दुर्योधनममर्षितः
सहसा संनिवृत्तोऽभूच्छ्रियं दृष्ट्वा सुयोधने ६
ब्रुवन्नुच्चैर्वचस्तान्वै नाहं दुर्योधनेन वै
सहितः कामये लोकाँल्लुब्धेनादीर्घदर्शिना ७
यत्कृते पृथिवी सर्वा सुहृदो बान्धवास्तथा
हतास्माभिः प्रसह्याजौ क्लिष्टैः पूर्वं महावने ८
द्रौपदी च सभामध्ये पाञ्चाली धर्मचारिणी
परिक्लिष्टानवद्याङ्गी पत्नी नो गुरुसंनिधौ ९
स्वस्ति देवा न मे कामः सुयोधनमुदीक्षितुम्
तत्राहं गन्तुमिच्छामि यत्र ते भ्रातरो मम १०
मैवमित्यब्रवीत्तं तु नारदः प्रहसन्निव
स्वर्गे निवासो राजेन्द्र विरुद्धं चापि नश्यति ११
युधिष्ठिर महाबाहो मैवं वोचः कथंचन

दुर्योधनं प्रति नृपंत्त शृणु चेदं वचो मम १२
एष दुर्योधनो राजा पूज्यते त्रिदशैः सह
सद्भिश्च राजप्रवरैर्य इमे स्वर्गवासिनः १३
वीरलोकगतिं प्राप्तो युद्धे हुत्वात्मनस्तनुम्
यूयं सर्वे सुर समा येन युद्धे समासिताः १४
स एष क्षत्रधर्मेण स्थानमेतदवाप्तवान्
भये महति योऽभीतो बभूव पृथिवीपतिः १५
न तन्मनसि कर्तव्यं पुत्र यद्द्यूतकारितम्
द्रौपद्याश्च परिक्लेशं न चिन्तयितुमर्हसि १६
ये चान्येऽपि परिक्लेशा युष्माकं द्यूतकारिताः
संग्रामेष्वथ वान्यत्र न तान्संस्मर्तुमर्हसि १७
समागच्छ यथान्यायं राज्ञा दुर्योधनेन वै
स्वर्गोऽय नेह वैराणि भवन्ति मनुजाधिप १८
नारदेनैवमुक्तस्तु कुरुराजो युधिष्ठिरः
भ्रातॄन्पप्रच्छ मेधावी वाक्यमेतदुवाच ह १९
यदि दुर्योधनस्यैते वीरलोकाः सनातनाः
अधर्मज्ञस्य पापस्य पृथिवीसुहृदद्रुहः २०
यत्कृते पृथिवी नष्टा सहया सरथद्विपा
वयं च मन्युना दग्धा वैरं प्रतिचिकीर्षवः २१
ये ते वीरा महात्मानो भ्रातरो मे महाव्रताः
सत्यप्रतिज्ञा लोकस्य शूरा वै सत्यवादिनः २२
तेषामिदानीं के लोका द्रष्टुमिच्छामि तानहम्
कर्णं चैव महात्मानं कौन्तेयं सत्यसंगरम् २३
धृष्टद्युम्नं सात्यकिं च धृष्टद्युम्नस्य चात्मजान्
ये च शस्त्रैर्वधं प्राप्ताः क्षत्रधर्मेण पार्थिवाः २४
क्व नु ते पार्थिवा ब्रह्मन्नैतान्पश्यामि नारद
विराटद्रुपदौ चैव धृष्टकेतुमुखांश्च तान् २५
शिखण्डिनं च पाञ्चाल्यं द्रौपदेयांश्च सर्वशः
अभिमन्युं च दुर्धर्षं द्रष्टुमिच्छामि नारद २६
इति श्रीमहाभारते स्वर्गारोहणपर्वणि प्रथमोऽध्यायः १

## द्वितीयोऽध्यायः

युधिष्ठिर उवाच
नेह पश्यामि विबुधा राधेयममितौजसम्
भ्रातरौ च महात्मानौ युधामन्यूत्तमौजसौ १
जुहुवुर्ये शरीराणि रणवह्नौ महारथाः
राजानो राजपुत्राश्च ये मदर्थे हता रणे २
क्व ते महारथाः सर्वे शार्दूलसमविक्रमाः
तैरप्ययं जितो लोकः कच्चित्पुरुषसत्तमैः ३
यदि लोकानिमान्प्राप्तास्ते च सर्वे महारथाः
स्थितं वित्त हि मां देवाः सहितं तैर्महात्मभिः ४
कच्चिन्न तैरवाप्तोऽय नृपैर्लोकोऽव्ययः शुभः
न तैरहं विना वत्स्ये ज्ञातिभिर्भ्रातृभिस्तथा ५
मातुर्हि वचनं श्रुत्वा तदा सलिलकर्मणि
कर्णस्य क्रियतां तोयमिति तप्यामि तेन वै ६
इदं च परितप्यामि पुनः पुनरहं सुराः
यन्मातुः सदृशौ पादौ तस्याहममितौजसः ७
दृष्ट्वैव तं नानुगतः कर्णं परबलार्दनम्
न ह्यस्मान्कर्णसहिताञ्जयेच्छक्रोऽपि संयुगे ८
तमहं यत्रतत्रस्थं द्रष्टुमिच्छामि सूर्यजम्
अविज्ञातो मया योऽसौ घातितः सव्यसाचिना ९
भीमं च भीमविक्रान्तं प्राणेभ्योऽपि प्रियं मम
अर्जुनं चेन्द्रसंकाशं यमौ तौ च यमोपमौ १०
द्रष्टुमिच्छामि तां चाहं पाञ्चालद्यं धर्मचारिणीम्
न चेह स्थातुमिच्छामि सत्यमेतद्ब्रवीमि वः ११
किं मे भ्रातृविहीनस्य स्वर्गेण सुरसत्तमाः
यत्र ते स मम स्वर्गो नायं स्वर्गो मतो मम १२
देवा ऊचुः
यदि वै तत्र ते श्रद्धा गम्यतां पुत्र माचिरम्
प्रिये हि तव वर्तामो देवराजस्य शासनात् १३
वैशम्पायन उवाच

इत्युक्त्वा तं ततो देवा देवदूतमुपादिशन्
युधिष्ठिरस्य सुहृदो दर्शयेति परंतप १४
ततः कुन्तीसुतो राजा देवदूतश्च जग्मतुः
सहितौ राजशार्दूल यत्र ते पुरुषर्षभाः १५
अग्रतो देवदूतस्तु ययौ राजा च पृष्ठतः
पन्थानमशुभं दुर्गं सेवितं पापकर्मभिः १६
तमसा संवृतं घोरं केशशैवलशाद्वलम्
युक्तं पापकृतां गन्धैर्मांसशोणितकर्दमम् १७
दंशोत्थानं सझिल्लीकं मक्षिकामशकावृतम्
इतश्चेतश्च कुणपैः समंतात्परिवारितम् १८
अस्थिकेशसमाकीर्णं कृमिकीटसमाकुलम्
ज्वलनेन प्रदीप्तेन समन्तात्परिवेष्टितम् १९
अयोमुखैश्च काकोलैर्गृध्रैश्च समभिद्रुतम्
सूचीमुखैस्तथा प्रेतैर्विन्ध्यशैलोपमैर्वृतम् २०
मेदोरुधिरयुक्तैश्च च्छिन्नबाहूरुपाणिभिः
निकृत्तोदरपादैश्च तत्र तत्र प्रवेरितैः २१
स तत्कुणपदुर्गन्धमशिवं रोमहर्षणम्
जगाम राजा धर्मात्मा मध्ये बहु विचिन्तयन् २२
ददर्शोष्णोदकैः पूर्णां नदीं चापि सुदुर्गमाम्
असिपत्रवनं चैव निशितक्षुरसंवृतम् २३
करम्भवालुकास्तप्ता आयसीश्च शिलाः पृथक्
लोहकुम्भीश्च तैलस्य क्वाथ्यमानाः समन्ततः २४
कूटशाल्मलिकं चापि दुस्पर्शं तीक्ष्णकण्टकम्
ददर्श चापि कौन्तेयो यातनाः पापकर्मिणाम् २५
स तं दुर्गन्धमालक्ष्य देवदूतमुवाच ह
कियदध्वानमस्माभिर्गन्तव्यमिदमीदृशम् २६
क्व च ते भ्रातरो मह्यं तन्ममाख्यातुमर्हसि
देशोऽयं कश्च देवानामेतदिच्छामि वेदितुम् २७
स संनिववृते श्रुत्वा धर्मराजस्य भाषितम्
देवदूतोऽब्रवीच्चैनमेतावद्गमनं तव २८

निवर्तितव्यं हि मया तथास्म्युक्तो दिवौकसैः
यदि श्रान्तोऽसि राजेन्द्र त्वमथागन्तुमर्हसि २९
युधिष्ठिरस्तु निर्विरणस्तेन गन्धेन मूर्च्छितः
निवर्तने धृतमनाः पर्यावर्तत भारत ३०
स संनिवृत्तो धर्मात्मा दुःखशोकसमन्वितः
शुश्राव तत्र वदतां दीना वाचः समन्ततः ३१
भो भो धर्मज राजर्षे पुरयाभिजन पारडव
अनुग्रहार्थमस्माकं तिष्ठ तावन्मुहूर्तकम् ३२
आयाति त्वयि दुर्धर्षे वाति पुरयः समीरणः
तव गन्धानुगस्तात येनास्मान्सुखमागमत् ३३
ते वयं पार्थ दीर्घस्य कालस्य पुरुषर्षभ
सुखमासादयिष्यामस्त्वां दृष्ट्वा राजसत्तम ३४
संतिष्ठस्व महाबाहो मुहूर्तमपि भारत
त्वयि तिष्ठति कौरव्य यातनास्मान्न बाधते ३५
एवं बहुविधा वाचः कृपणा वेदनावताम्
तस्मिन्देशे स शुश्राव समन्ताद्वदतां नृप ३६
तेषां तद्वचनं श्रुत्वा दयावान्दीनभाषिणाम्
अहो कृच्छ्रमिति प्राह तस्थौ स च युधिष्ठिरः ३७
स ता गिरः पुरस्ताद्वै श्रुतपूर्वाः पुनः पुनः
ग्लानानां दुःखितानां च नाभ्यजानत पारडवः ३८
अबुध्यमानस्ता वाचो धर्मपुत्रो युधिष्ठिरः
उवाच के भवन्तो वै किमर्थमिह तिष्ठथ ३९
इत्युक्तास्ते ततः सर्वे समन्तादवभाषिरे
कर्णोऽह भीमसेनोऽहमर्जुनोऽहमिति प्रभो ४०
नकुलः सहदेवोऽह धृष्टद्युम्नोऽहमित्युत
द्रौपदी द्रौपदेयाश्च इत्येवं ते विचुक्रुशुः ४१
ता वाचः स तदा श्रुत्वा तद्देशसदृशीर्नृप
ततो विममृशे राजा किं न्विदं दैवकारितम् ४२
किं नु तत्कलुषं कर्म कृतमेभिर्महात्मभिः
कर्णेन द्रौपदेयैर्वा पाञ्चाल्या वा सुमध्यया ४३

य इमे पापगन्धेऽस्मिन्देशे सन्ति सुदारुणे
न हि जानामि सर्वेषां दुष्कृतं पुण्यकर्मणाम् ४४
किं कृत्वा धृतराष्ट्रस्य पुत्रो राजा सुयोधनः
तथा श्रिया युतः पापः सह सर्वैः पदानुगैः ४५
महेन्द्र इव लक्ष्मीवानास्ते परमपूजितः
कस्येदानीं विकारोऽय यदिमे नरकं गताः ४६
सर्वधर्मविदः शूराः सत्यागमपरायणाः
क्षात्रधर्मपराः प्राज्ञा यज्वानो भूरिदक्षिणाः ४७
किं नु सुप्तोऽस्मि जागर्मि चेतयानो न चेतये
अहो चित्तविकारोऽय स्याद्वा मे चित्तविभ्रमः ४८
एवं बहुविधं राजा विममर्श युधिष्ठिरः
दुःखशोकसमाविष्टश्चिन्ताव्याकुलितेन्द्रियः ४९
क्रोधमाहारयच्चैव तीव्रं धर्मसुतो नृपः
देवांश्च गर्हयामास धर्मं चैव युधिष्ठिरः ५०
स तीव्रगन्धसंतप्तो देवदूतमुवाच ह
गम्यतां भद्र येषां त्वं दूतस्तेषामुपान्तिकम् ५१
न ह्यहं तत्र यास्यामि स्थितोऽस्मीति निवेद्यताम्
मत्संश्रयादिमे दूत सुखिनो भ्रातरो हि मे ५२
इत्युक्तः स तदा दूतः पाण्डुपुत्रेण धीमता
जगाम तत्र यत्रास्ते देवराजः शतक्रतुः ५३
निवेदयामास च तद्धर्मराजचिकीर्षितम्
यथोक्तं धर्मपुत्रेण सर्वमेव जनाधिप ५४
इति श्रीमहाभारते स्वर्गारोहणपर्वणि द्वितीयोऽध्यायः २

## तृतीयोऽध्यायः

वैशम्पायन उवाच
स्थिते मुहूर्तं पार्थे तु धर्मराजे युधिष्ठिरे
आजग्मुस्तत्र कौरव्य देवाः शक्रपुरोगमाः १
स्वयं विग्रहवान्धर्मो राजानं प्रसमीक्षितुम्
तत्राजगाम यत्रासौ कुरुराजो युधिष्ठिरः २

तेषु भास्वरदेहेषु पुण्याभिजनकर्मसु
समागतेषु देवेषु व्यगमत्तत्तमो नृप ३
नादृश्यन्त च तास्तत्र यातनाः पापकर्मिणाम्
नदी वैतरणी चैव कूटशाल्मलिना सह ४
लोहकुम्भ्यः शिलाश्चैव नादृश्यन्त भयानकाः
विकृतानि शरीराणि यानि तत्र समन्ततः
ददर्श राजा कौन्तेयस्तान्यदृश्यानि चाभवन् ५
ततो वायुः सुखस्पर्शः पुण्यगन्धवहः शिवः
ववौ देवसमीपस्थः शीतलोऽतीव भारत ६
मरुतः सह शक्रेण वसवश्चाश्विनौ सह
साध्या रुद्रास्तथादित्या ये चान्येऽपि दिवौकसः ७
सर्वे तत्र समाजग्मुः सिद्धाश्च परमर्षयः
यत्र राजा महातेजा धर्मपुत्रः स्थितोऽभवत् ८
ततः शक्रः सुरपतिः श्रिया परमया युतः
युधिष्ठिरमुवाचेदं सान्त्वपूर्वमिदं वचः ९
युधिष्ठिर महाबाहो प्रीता देवगणास्तव
एह्येहि पुरुषव्याघ्र कृतमेतावता विभो
सिद्धिः प्राप्ता त्वया राजँल्लोकाश्चाप्यक्षयास्तव १०
न च मन्युस्त्वया कार्यः शृणु चेदं वचो मम
अवश्यं नरकस्तात द्रष्टव्यः सर्वराजभिः ११
शुभानामशुभानां च द्वौ राशी पुरुषर्षभ
यः पूर्वं सुकृतं भुङ्क्ते पश्चान्निरयमेति सः
पूर्वं नरकभाग्यस्तु पश्चात्स्वर्गमुपैति सः १२
भूयिष्ठं पापकर्मा यः स पूर्वं स्वर्गमश्नुते
तेन त्वमेवं गमितो मया श्रेयोर्थिना नृप १३
व्याजेन हि त्वया द्रोण उपचीर्णः सुतं प्रति
व्याजेनैव ततो राजन्दर्शितो नरकस्तव १४
यथैव त्वं तथा भीमस्तथा पार्थो यमौ तथा
द्रौपदी च तथा कृष्णा व्याजेन नरकं गताः १५
आगच्छ नरशार्दूल मुक्तास्ते चैव किल्विषात्

स्वपक्षाश्चैव ये तुभ्यं पार्थिवा निहता रणे
सर्वे स्वर्गमनुप्राप्तास्तान्पश्य भरतर्षभ १६
कर्णश्चैव महेष्वासः सर्वशस्त्रभृतां वरः
स गतः परमां सिद्धिं यदर्थं परितप्यसे १७
तं पश्य पुरुषव्याघ्रमादित्यतनयं विभो
स्वस्थानस्थं महाबाहो जहि शोकं नरर्षभ १८
भ्रातृंश्चान्यांस्तथा पश्य स्वपक्षांश्चैव पार्थिवान्
स्वं स्वं स्थानमनुप्राप्तान्व्येतु ते मानसो ज्वरः १९
अनुभूय पूर्वं त्वं कृच्छ्रमितः प्रभृति कौरव
विहरस्व मया सार्धं गतशोको निरामयः २०
कर्मणां तात पुण्यानां जितानां तपसा स्वयम्
दानानां च महाबाहो फलं प्राप्नुहि पाण्डव २१
अद्य त्वां देवगन्धर्वा दिव्याश्चाप्सरसो दिवि
उपसेवन्तु कल्याणं विरजोम्बरवाससः २२
राजसूयजिताँल्लोकानश्वमेधाभिवर्धितान्
प्राप्नुहि त्वं महाबाहो तपसश्च फलं महत् २३
उपर्युपरि राज्ञां हि तव लोका युधिष्ठिर
हरिश्चन्द्रसमाः पार्थ येषु त्वं विहरिष्यसि २४
मान्धाता यत्र राजर्षिर्यत्र राजा भगीरथः
दौःषन्तिर्यत्र भरतस्तत्र त्वं विहरिष्यसि २५
एषा देवनदी पुण्या पार्थ त्रैलोक्यपावनी
आकाशगङ्गा राजेन्द्र तत्राप्लुत्य गमिष्यसि २६
अत्र स्नातस्य ते भावो मानुषो विगमिष्यति
गतशोको निरायासो मुक्तवैरो भविष्यसि २७
एवं ब्रुवति देवेन्द्रे कौरवेन्द्रं युधिष्ठिरम्
धर्मो विग्रहवान्साक्षादुवाच सुतमात्मनः २८
भो भो राजन्महाप्राज्ञ प्रीतोऽस्मि तव पुत्रक
मद्भक्त्या सत्यवाक्येन क्षमया च दमेन च २९
एषा तृतीया जिज्ञासा तव राजन्कृता मया
न शक्यसे चालयितुं स्वभावात्पार्थ हेतुभिः ३०

पूर्वं परीक्षितो हि त्वमासीर्द्वैतवनं प्रति
अरणीसहितस्यार्थे तच्च निस्तीर्णवानसि ३१
सोदर्येषु विनष्टेषु द्रौपद्यां तत्र भारत
श्वरूपधारिणा पुत्र पुनस्त्वं मे परीक्षितः ३२
इदं तृतीयं भ्रातृणामर्थे यत्स्थातुमिच्छसि
विशुद्धोऽसि महाभाग सुखी विगतकल्मषः ३३
न च ते भ्रातरः पार्थ नरकस्था विशां पते
मायैषा देवराजेन महेन्द्रेण प्रयोजिता ३४
अवश्यं नरकस्तात द्रष्टव्यः सर्वराजभिः
ततस्त्वया प्राप्तमिदं मुहूर्तं दुःखमुत्तमम् ३५
न सव्यसाची भीमो वा यमौ वा पुरुषर्षभौ
कर्णो वा सत्यवाक्शूरो नरकार्हाश्चिरं नृप ३६
न कृष्णा राजपुत्री च नरकार्हा युधिष्ठिर
एह्येहि भरतश्रेष्ठ पश्य गङ्गां त्रिलोकगाम् ३७
एवमुक्तः स राजर्षिस्तव पूर्वपितामहः
जगाम सह धर्मेण सर्वैश्च त्रिदशालयैः ३८
गङ्गां देवनदीं पुण्यां पावनीमृषिसंस्तुताम्
अवगाह्य तु तां राजा तनुं तत्याज मानुषीम् ३९
ततो दिव्यवपुर्भूत्वा धर्मराजो युधिष्ठिरः
निर्वैरो गतसंतापो जले तस्मिन्समाप्लुतः ४०
ततो ययौ वृतो देवैः कुरुराजो युधिष्ठिरः
धर्मेण सहितो धीमान्स्तूयमानो महर्षिभिः ४१
इति श्रीमहाभारते स्वर्गारोहणपर्वणि तृतीयोऽध्यायः ३

## चतुर्थोऽध्यायः

वैशम्पायन उवाच
ततो युधिष्ठिरो राजा देवैः सर्षिमरुद्गणैः
पूज्यमानो ययौ तत्र यत्र ते कुरुपुंगवाः १
ददर्श तत्र गोविन्दं ब्राह्मेण वपुषान्वितम्
तेनैव दृष्टपूर्वेण सादृश्येनोपसूचितम् २

दीप्यमानं स्ववपुषा दिव्यैरस्त्रैरुपस्थितम्
चक्रप्रभृतिभिर्घोरैर्दिव्यैः पुरुषविग्रहैः
उपास्यमानं वीरेण फल्गुनेन सुवर्चसा ३
अपरस्मिन्नथोद्देशे कर्णं शस्त्रभृतां वरम्
द्वादशादित्यसहितं ददर्श कुरुनन्दनः ४
अथापरस्मिन्नुद्देशे मरुद्गणवृतं प्रभुम्
भीमसेनमथापश्यत्तेनैव वपुषान्वितम् ५
अश्विनोस्तु तथा स्थाने दीप्यमानौ स्वतेजसा
नकुलं सहदेवं च ददर्श कुरुनन्दनः ६
तथा ददर्श पाञ्चालद्यं कमलोत्पलमालिनीम्
वपुषा स्वर्गमाक्रम्य तिष्ठन्तीमर्कवर्चसम् ७
अथैनां सहसा राजा प्रष्टुमैच्छद्युधिष्ठिरः
ततोऽस्य भगवानिन्द्रः कथयामास देवराट् ८
श्रीरेषा द्रौपदीरूपा त्वदर्थे मानुषं गता
अयोनिजा लोककान्ता पुण्यगन्धा युधिष्ठिर ९
द्रुपदस्य कुले जाता भवद्भिश्चोपजीविता
रत्यर्थं भवतां ह्येषा निर्मिता शूलपाणिना १०
एते पञ्च महाभागा गन्धर्वाः पावकप्रभाः
द्रौपद्यास्तनया राजन्युष्माकममितौजसः ११
पश्य गन्धर्वराजानं धृतराष्ट्रं मनीषिणम्
एनं च त्वं विजानीहि भ्रातरं पूर्वजं पितुः १२
अयं ते पूर्वजो भ्राता कौन्तेयः पावकद्युतिः
सूर्यपुत्रोऽग्रजः श्रेष्ठो राधेय इति विश्रुतः
आदित्यसहितो याति पश्यैनं पुरुषर्षभ १३
साध्यानामथ देवानां वसूनां मरुतामपि
गणेषु पश्य राजेन्द्र वृष्ण्यन्धकमहारथान्
सात्यकिप्रमुखान्वीरान्भोजांश्चैव महारथान् १४
सोमेन सहितं पश्य सौभद्रमपराजितम्
अभिमन्युं महेष्वासं निशाकरसमद्युतिम् १५
एष पाण्डुर्महेष्वासः कुन्त्या माद्र्या च संगतः

विमानेन सदाभ्येति पिता तव ममान्तिकम् १६
वसुभिः सहितं पश्य भीष्मं शान्तनवं नृपम्
द्रोणं बृहस्पतेः पार्श्वे गुरुमेनं निशामय १७
एते चान्ये महीपाला योधास्तव च पाण्डव
गन्धर्वैः सहिता यान्ति यक्षैः पुण्यजनैस्तथा १८
गुह्यकानां गतिं चापि केचित्प्राप्ता नृसत्तमाः
त्यक्त्वा देहं जितस्वर्गाः पुण्यवाग्बुद्धिकर्मभिः १९
इति श्रीमहाभारते स्वर्गारोहणपर्वणि चतुर्थोऽध्यायः ४

## पञ्चमोऽध्यायः

जनमेजय उवाच
भीष्मद्रोणौ महात्मानौ धृतराष्ट्रश्च पार्थिवः
विराटद्रुपदौ चोभौ शङ्खश्चैवोत्तरस्तथा १
धृष्टकेतुर्जयत्सेनो राजा चैव स सत्यजित्
दुर्योधनसुताश्चैव शकुनिश्चैव सौबलः २
कर्णपुत्राश्च विक्रान्ता राजा चैव जयद्रथः
घटोत्कचादयश्चैव ये चान्ये नानुकीर्तिताः ३
ये चान्ये कीर्तितास्तत्र राजानो दीप्तमूर्तयः
स्वर्गे कालं कियन्तं ते तस्थुस्तदपि शंस मे ४
आहो स्विच्छाश्वतं स्थानं तेषां तत्र द्विजोत्तम
अन्ते वा कर्मणः कां ते गतिं प्राप्ता नरर्षभाः
एतदिच्छाम्यहं श्रोतुं प्रोच्यमानं त्वया द्विज ५
सूत उवाच
इत्युक्तः स तु विप्रर्षिरनुज्ञातो महात्मना
व्यासेन तस्य नृपतेराख्यातुमुपचक्रमे ६
वैशम्पायन उवाच
गन्तव्यं कर्मणामन्ते सर्वेण मनुजाधिप
शृणु गुह्यमिदं राजन्देवानां भरतर्षभ
यदुवाच महातेजा दिव्यचक्षुः प्रतापवान् ७
मुनिः पुराणः कौरव्य पाराशर्यो महाव्रतः

अगाधबुद्धिः सर्वज्ञो गतिज्ञः सर्वकर्मणाम् ८
वसूनेव महातेजा भीष्मः प्राप महाद्युतिः
अष्टावेव हि दृश्यन्ते वसवो भरतर्षभ ९
बृहस्पतिं विवेशाथ द्रोणो ह्यङ्गिरसां वरम्
कृतवर्मा तु हार्दिक्यः प्रविवेश मरुद्गणम् १०
सनत्कुमारं प्रद्युम्नः प्रविवेश यथागतम्
धृतराष्ट्रो धनेशस्य लोकान्प्राप दुरासदान् ११
धृतराष्ट्रेण सहिता गान्धारी च यशस्विनी
पत्नीभ्यां सहितः पाण्डुर्महेन्द्रसदनं ययौ १२
विराटद्रुपदौ चोभौ धृष्टकेतुश्च पार्थिवः
निशठाक्रूरसाम्बाश्च भानुः कम्पो विडूरथः १३
भूरिश्रवाः शलश्चैव भूरिश्च पृथिवीपतिः
उग्रसेनस्तथा कंसो वसुदेवश्च वीर्यवान् १४
उत्तरश्च सह भ्रात्रा शङ्खेन नरपुंगवः
विश्वेषां देवतानां ते विविशुर्नरसत्तमाः १५
वर्चा नाम महातेजाः सोमपुत्रः प्रतापवान्
सोऽभिमन्युर्नृसिंहस्य फल्गुनस्य सुतोऽभवत् १६
स युद्ध्वा क्षत्रधर्मेण यथा नान्यः पुमान्क्वचित्
विवेश सोमं धर्मात्मा कर्मणोऽन्ते महारथः १७
आविवेश रविं कर्णः पितरं पुरुषर्षभ
द्वापरं शकुनिः प्राप धृष्टद्युम्नस्तु पावकम् १८
धृतराष्ट्रात्मजाः सर्वे यातुधाना बलोत्कटाः
ऋद्धिमन्तो महात्मानः शस्त्रपूता दिवं गताः
धर्ममेवाविशत्क्षत्ता राजाचैव युधिष्ठिरः १९
अनन्तो भगवान्देवः प्रविवेश रसातलम्
पितामहनियोगाद्धि यो योगाद्गामधारयत् २०
षोडशस्त्रीसहस्राणि वासुदेवपरिग्रहः
न्यमज्जन्त सरस्वत्यां कालेन जनमेजय
ताश्चाप्यप्सरसो भूत्वा वासुदेवमुपागमन् २१
हतास्तस्मिन्महायुद्धे ये वीरास्तु महारथाः

घटोत्कचादयः सर्वे देवान्यक्षांश्च भेजिरे २२
दुर्योधनसहायाश्च राक्षसाः परिकीर्तिताः
प्राप्तास्ते क्रमशो राजन्सर्वलोकाननुत्तमान् २३
भवनं च महेन्द्रस्य कुबेरस्य च धीमतः
वरुणस्य तथा लोकान्विविशुः पुरुषर्षभाः २४
एतत्ते सर्वमाख्यातं विस्तरेण महाद्युते
कुरूणां चरितं कृत्स्नं पाण्डवानां च भारत २५
सूत उवाच
एतच्छ्रुत्वा द्विजश्रेष्ठात्स राजा जनमेजयः
विस्मितोऽभवदत्यर्थं यज्ञकर्मान्तरेष्वथ २६
ततः समापयामासुः कर्म तत्तस्य याजकाः
आस्तीकश्चाभवत्प्रीतः परिमोक्ष्य भुजंगमान् २७
ततो द्विजातीन्सर्वांस्तान्दक्षिणाभिरतोषयत्
पूजिताश्चापि ते राज्ञा ततो जग्मुर्यथागतम् २८
विसर्जयित्वा विप्रांस्तान्राजापि जनमेजयः
ततस्तक्षशिलायाः स पुनरायाद्गजाह्वयम् २९
एतत्ते सर्वमाख्यातं वैशम्पायनकीर्तितम्
व्यासाज्ञया समाख्यातं सर्पसत्रे नृपस्य ह ३०
पुण्योऽयमितिहासाख्यः पवित्रं चेदमुत्तमम्
कृष्णेन मुनिना विप्र नियतं सत्यवादिना ३१
सर्वज्ञेन विधिज्ञेन धर्मज्ञानवता सता
अतीन्द्रियेण शुचिना तपसा भावितात्मना ३२
ऐश्वर्ये वर्तता चैव सांख्ययोगविदा तथा
नैकतन्त्रविबुद्धेन दृष्ट्वा दिव्येन चक्षुषा ३३
कीर्तिं प्रथयता लोके पाण्डवानां महात्मनाम्
अन्येषां क्षत्रियाणां च भूरिद्रविणतेजसाम् ३४
य इदं श्रावयेद्विद्वान्सदा पर्वणि पर्वणि
धूतपाप्मा जितस्वर्गो ब्रह्मभूयाय गच्छति ३५
यश्चेदं श्रावयेच्छ्राद्धे ब्राह्मणान्पादमन्ततः
अक्षय्यमन्नपानं वै पितॄंस्तस्योपतिष्ठते ३६

अज्ञा यदेनः कुरुते इन्द्रियैर्मनसापि वा
महाभारतमाख्याय पश्चात्संन्ध्यां प्रमुच्यते ३७
धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित् ३८
जयो नामेतिहासोऽय श्रोतव्यो भूतिमिच्छता
राज्ञा राजसुतैश्चापि गर्भिरया चैव योषिता ३९
स्वर्गकामो लभेत्स्वर्गं जयकामो लभेज्जयम्
गर्भिणी लभते पुत्रं कन्यां वा बहुभागिनीम् ४०
अनागतं त्रिभिर्वर्षैः कृष्णद्वैपायनः प्रभुः
सन्दर्भं भारतस्यास्य कृतवान्धर्मकाम्यया ४१
नारदोऽश्रावयद्देवानसितो देवलः पितॄन्
रक्षो यक्षाञ्शुको मर्त्यान्वैशम्पायन एव तु ४२
इतिहासमिमं पुरयं महार्थं वेदसंमितम्
श्रावयेद्यस्तु वर्णांस्त्रीन्कृत्वा ब्राह्मरामग्रतः ४३
स नरः पापनिर्मुक्तः कीर्तिं प्राप्येह शौनक
गच्छेत्परमिकां सिद्धिमत्र मे नास्ति संशयः ४४
भारताध्ययनात्पुरयादपि पादमधीयतः
श्रद्दधानस्य पूयन्ते सर्वपापान्यशेषतः ४५
महर्षिर्भगवान्व्यासः कृत्वेमां संहितां पुरा
श्लेकैश्चतुर्भिर्भगवान्पुत्रमध्यापयच्छुकम् ४६
मातापितृसहस्राणि पुत्रदारशतानि च
संसारेष्वनुभूतानि यान्ति यास्यन्ति चापरे ४७
हर्षस्थानसहस्राणि भयस्थानशतानि च
दिवसे दिवसे मूढमाविशन्ति न परिडतम् ४८
ऊर्ध्वबाहुर्विरौम्येष न च कश्चिच्छृणोति मे
धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते ४९
न जातु कामान्न भयान्न लोभाद्धर्मं त्यजेज्जीवितस्यापि हेतोः
नित्यो धर्मः सुखदुःखे त्वनित्ये जीवो नित्यो हेतुरस्य त्वनित्यः ५०
इमां भारतसावित्रीं प्रातरुत्थाय यः पठेत्
स भारतफलं प्राप्य परं ब्रह्माधिगच्छति ५१

यथा समुद्रो भगवान्यथा च हिमवान्गिरिः
ख्यातावुभौ रत्ननिधी तथा भारतमुच्यते ५२
महाभारतमाख्यानं यः पठेत्सुसमाहितः
स गच्छेत्परमां सिद्धिमिति मे नास्ति संशयः ५३
द्वैपायनोष्ठपुटनिःसृतमप्रमेयं पुण्यं पवित्रमथ पापहरं शिवं च
यो भारतं समधिगच्छति वाच्यमानं किं तस्य पुष्करजलैरभिषेचनेन ५४

इति श्रीमहाभारते स्वर्गारोहणपर्वणि पञ्चमोऽध्यायः ५

इति स्वर्गारोहणपर्व समाप्तम्

इति श्रीमहाभारतं सम्पूर्णम्